अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनंजयः ।
कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ॥ ५३ ॥
बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः ।
आशयाशो बृहद्भानुः कृशानुः पावकोऽनलः ॥ ५४ ॥
रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः ।
हिरण्यरेता हुतभुग्दहनो हव्यवाहनः ॥ ५५ ॥
सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ।
शुचिरप्पित्तमौर्वस्तु वाडवो वडवानलः ॥ ५६ ॥
वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम् ।
त्रिषु स्फुलिङ्गोऽग्निकणः संतापः संज्वरः समौ ॥ ५७ ॥
धर्मराजः पितृपतिः समवर्ती परेतराट् ।
कृतान्तो यमुनाभ्राता शमनो यमराड् यमः ॥ ५८ ॥

ऽनपादिति (सू०) नञ् प्रकृत्या ॥ ५३ ॥ बर्हिःशुष्मेति व्यस्तं समस्तं वा नाम, बर्हिर्दर्भः शुष्म बलमस्येति, बर्हति वर्धते बर्हिः, यथा बर्हिर्मुखा देवाः । शुष्यन्त्यनेन शुष्मा, यल्लक्ष्यम्— शुष्मणि प्रणयनाभिसंस्थि-( स्कृ )ते ( शिशु० ) । बर्हिरुत्थ इत्यमरमाला, यथा— दृशां बर्हणो बर्हिरुत्थः ( वा० रा० ) । कृष्णो धूमो वर्त्मास्य ( कृष्णवर्त्मा ) । शोचींषि ज्वालाः केशा अस्य शोचिष्केशः । उषसि रात्रौ बुध्यते प्रकाशते – उषर्बुधः, अहरादीनांपत्यादिषु ( वा० ) इति रेफः । आशेतेऽत्रेत्याशयमाधारमश्नाती-त्याशयाशः, आश्रयाश इत्येके । बृहतो भानवो रश्मयोऽस्य बृहद्भानुः । कृशयति कृशानुः, कृशोऽप्यनितिवर्ध[ वर्त ]ते वा । पुनाति पावकः । अनित्यनेन लोक इत्यनलः ॥ ५४ ॥ रोहिताख्यो मृगोऽश्वो वाहनमस्येति रोहिताश्वः, यदि वा रोहिता लोहिता अश्वा अस्येति । वायुः सखानुचरो[ वा ]ऽस्य वायुसखः । आशोशु-मिच्छत्याशुशुक्षणिः, आङिशुषेःसनश्छन्दसि ( उ० ) इत्यनिः । हिरण्यं रेतोऽस्य हिरण्यरेताः, यत्स्मृ-[ च्छ ]तिः— अग्नेरपत्यं प्रथमं सुवर्णमिति । हव्यं वाहयति देवान्नयति हव्यवाहनः, हव्य( कव्य )-पुरीषपुरीष्येषुञ्युट् ( सू० ) ॥ ५५ ॥ दाम्यति शाम्यति विनश्यत्यन्नं दमुनाः, औणादिक उनस्, दमूना इत्येके, दमेरूनसिः ( उ० ) । शुक्रं तेजोऽस्त्यस्य शुक्रः, अर्शआदित्वादच् ( सू० ) । विभैव वसु धनमस्य विभावसुः । शुचिः शोधकत्वात् । अपां पित्तं सारं धूमयोनित्वादप्पित्तम् । उदार्चिश्च । क्षारस्तु भस्मितं भस्मेति वाच्यम् । उर्वस्यापत्यमौर्वः, वरुणभयान्मात्रा— ऊर्वोर्गोपितत्वादित्येके । वाडवोऽश्वमुखत्वात् ॥ ५६ ॥ ज्वलति ज्वालः ( ज्वाला वा ), ज्वलितिकसन्तेभ्योणः ( सू० ) । ( कीलः ) कील बन्धे । प्रायेणार्चिः स्त्री, ज्वाला भासो न पुंस्यर्चिरिति हि वक्ष्यते, अर्च्यतेऽर्चिः । हिनोति हेतिः । शिनोति शेते वा शिखा । स्फुलति चलति स्फुलिङ्गः, जातावपि न ङीप् कन्दरावत् । संतापयति संतापः । संज्वरयति संज्वरः ॥ ५७ ॥ धर्मस्य राजा धर्मराजः । समवर्ती रिपौ मित्रे च समवर्तनात् । परेतराट् प्रेता-धिपः । कृतोऽन्तो विनाशोऽनेन कृतान्तः । शमयतीति शमनः । यमेन राजते यमराट् । यमयतीति यमः, यमलजातत्वाद्वा ॥ ५८ ॥ कलयत्यायुः कालः । श्राद्धदेवः पितृपतित्वात्, श्राद्धे देवत्वाद्वा । यद्वा विवस्वदपत्यसामान्यान्मनुवत्, यद्गुणः— श्राद्धदेवोऽर्कजो मनुः । अन्तं करोतीति, अन्तयत्यन्तकः, ण्वुल् । रक्ष एव राक्षसः, स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपीति पुंस्त्वम् । कुणपमत्ति कौणपः, शेषे ( सू० ) इत्यण् । क्रव्यमाममांसमत्ति ( क्रव्याद् ), क्रव्येचेति ( सू० ) क्विप् ( विट् ) अण् च । अस्रं रक्तं पिबत्यस्रपः, आतोऽनुपसर्गेकः ( सू० ), न श्रपयति क्रव्यात्त्वादश्रप इत्येके । आशृणाति हिनस्त्याशरः

कालो दण्डधरः श्राद्धदेवो वैवस्वतोन्तकः ।
राक्षसः कौणपः क्रव्यात्क्रव्यादोस्रप आशरः ॥ ५९ ॥
रात्रिंचरो रात्रिचरः कर्बुरो निकषात्मजः ।
यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी ॥ ६० ॥
प्रचेता वरुणः पाशी यादसांपतिरप्पतिः ।
श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ॥ ६१ ॥
पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः ।
समीरमारुतमरुज्जगत्प्राणसमीरणाः ॥ ६२ ॥
नभस्वद्वातपवनपवमानप्रभञ्जनाः ।
प्राणोपानः समानश्चोदानो व्यानश्च वायवः ॥ ६३ ॥
शरीरस्था इमे रंहस्तरसी तु रयः स्यदः ।
जवोथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम् ॥ ६४ ॥
सत्वरं चपलं तूर्णमविलम्बितमाशु च ।
सततानारताश्रान्तसंततविरतानिशम् ॥ ६५ ॥

---

॥ ५९ ॥ रात्रौ चरतीति रात्रिंचरः, चरेष्टः ( सू० ), रात्रेःकृतिविभाषा ( सू० ) इति पक्षे नुम् । कर्बुरो वर्णेन, कर्ब हिंसायां वा । निकषा रक्षसां मातेति [नाम] माला, अतो नैकषेयभ्रान्त्या कैकसेयमाहुः । यातूनि यातना धीयन्तेस्मिन् यातुधानः । पुण्यजनो विपरीतलक्षणया । निर्ऋतेर्दिक्पालस्यापत्यं नैर्ऋतः । यातयति व्यथयतीति यातुशब्दो भीमवत् । रक्षन्त्यस्माद्रक्षः । विधुरोपि । कीनाशो नानार्थे ॥ ६० ॥ प्रचेतयते प्रचेताः, असुन् । वृणोति वरुणः । यादसां जलचराणां पतिः, यादःपतिरिति वाच्ये पक्षे वाक्याभ्यनुज्ञानम् । अपां पतिरप्पतिः । श्वसन्त्यनेन श्वसनः । स्पृशति स्पर्शनः । वाति वायुः, कृवापाजीत्युण् (उ०)। मातरि खे श्वयति मातरिश्वा ॥ ६१ ॥ पृषन्मृगविशेषोश्वोस्य पृषदश्वः, पृषन्त्यम्बुकणाः सन्त्यश्वा अस्येत्येके । गन्धस्य वहः । अकारादनुपपदात्कर्मोपपदो ( भवति ) विप्रतिषेधेन ( वा० ) इत्यस्य प्रायिकत्वात्पक्षे कर्मण्यणि ( सू० ) गन्धवाहः । अनन्त्यनेनानिलः, न निलति वा, णिल गहने । समीरयतीत्यचि चलनशब्दार्थेति ( सू० ) युचि च समीरसमीरणौ, समेति समि( मी )र इत्यप्येकदेशविकृतस्यानन्यत्वात् । म्रियन्तेनेन मरुत् । मरुदेव मारुतः, स्वार्थे- अण् ॥ ६२ ॥ नभोस्यास्तीति नभस्वान्, तसौमत्वर्थे ( सू० ) इति भसंज्ञा । पवते पवनः, युच् । तथा पवमानः, पूङ्यजोःशानन् ( सू० )। प्रभनक्ति प्रभञ्जनः । प्रकम्पनो महाबलश्च । वृष्ट्याकुलश्चण्डस्तु झञ्झामरुत् । प्रसरणेन-अपसरणेन-आसमन्तात्-ऊर्ध्व-व्याप्तया च – अनित्यनेनेति, घञ् । आनयतेर्डोन्तस्यैतानि रूपाणीति योगशास्त्रम् । एते शरीरे व्यापका अपि नियतस्थानस्थाः, यदाहुः- हृदि प्राणो गुदेपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ॥६३॥ वायोर्धर्मानाह । रंहत्यनेन रंहः । तरन्त्यनेन तरः, असुन् । रिणाति रयते वानेन रयः, अच् । स्यन्दतेनेन स्यदः, स्यदोजवइति ( सू० ) साधुः । जवनं जवः, जुङ् गतौ, ऋदोरप् ( सू० ) । वाजोपि । वेगो नानार्थे । शिङ्घति व्याप्नोति शीघ्रम् । त्वरते स्म त्वरितं तूर्णं च, विभाषाभावादिकर्मणोः ( सू० ) इतीट्, ज्वरत्वरेति (सू०) उपधाया ऊठ् । लङ्घ्यते लघु । क्षिपति क्षिप्रम् । अरमव्ययं, अर्तेरचि वा नामेत्यन्ये, यच्छाश्वतः- अरमङ्गेरथाङ्गस्य शीघ्रशीघ्रगयोरपि । द्रवति स्म द्रुतम् ॥६४॥ सह त्वरया वर्तते सत्वरम् । न विलम्बते स्माविलम्बितम् । अश्नुत आशु, कृवापाजीत्युण् (उ०)। सवेगगतिवचनो जवः धर्मवचनास्तु शीघ्रादय इति – अर्थभेदः । सदागतिप्रस्तावादाह। संतन्यते स्म सततं, समोवाहिततयोरिति ( का० ) पक्षे मलुक् । आरतविरतावरतशब्दा. विरामार्थास्ततो नञ्समासः । न श्राम्यति स्माश्रान्तम् । अविद्यमाना निशात्रानिशम्, सा हि विरतिस्थानम् ॥ ६५ ॥

नित्यानवरताजस्रमप्यथातिशयो भरः ।
अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ॥ ६६ ॥
तीव्रैकान्तनितान्तानि गाढबाढदृढानि च ।
क्लीबे शीघ्राद्यसत्त्वेस्यात्त्रिष्वेषां सत्त्वगामि यत् ॥ ६७ ॥
कुवे-वे-रस्त्र्यम्बकसखो यक्षराड्गुत्यकेश्वरः
मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥ ६८ ॥
किंनरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।
यक्षैकपिङ्गैडविडश्रीदपुण्यजनेश्वराः ॥ ६९ ॥
अस्योद्यानं चैत्ररथं पुत्रस्तु नलकूवरः ।
कैलासः स्थानमलका पूर्विमानं तु पुष्पकम् ॥ ७० ॥
स्यात्किनरः किंपुरुषस्तुरंगवदनो मयुः ।
निधिर्ना शेवधिर्भेदाः पद्मशंखादयो निधेः ॥ ७१ ॥

इति स्वर्वर्गः । १ ।

---

नियतं भवं नित्यम् । न जस्यति तच्छीलमजस्रं, नमिकम्पीति ( सू० ) रः । [ संसक्तमासक्तं च । ] अतिशेते जयत्यनेनातिशयः । भरः पूर्णता, भृ भरणे, ऋदोरप् ( सू० )। अतिक्रान्तं वेलामर्थं मात्रां च । बिभर्ति भृशम् । उद्गाहते स्मोद्गाढम् । निःशेषेण भरोत्र निर्भरम् ॥ ६६ ॥ तीवति तीव्रं, तीव स्थौल्ये, रक् । एको निश्चितोन्तोत्रैकान्तम् निताम्यति स्म नितान्तम् । बाहते बाढम्, क्षुब्धस्वान्तध्वान्तेति ( सू० ) बाढं भृशे साधु । दृढःस्थूलबलयोरिति ( सू० ) दृढं बलवति साधु । अतिमर्यादं दरं च । सततमविच्छेदः प्रकर्षस्त्वतिशय इत्यर्थभेदः । असत्त्वे गुणक्रियाविशेषणत्वादद्रव्यवृत्तित्वे सति शीघ्राद्या नपुंसके, यथा – भृशं मूर्खः, भृशं याति । एतन्मध्याद्यत्सत्त्वगामि द्रव्यवृत्ति तत्त्रिलिङ्गं, यथा– शीघ्रा स्त्री, शीघ्रोश्वः, शीघ्रं कुलम् । सत्त्वगामीति किं— भरोयं, गुणातिशयोयम् ॥ ६७ ॥ कुत्सितं वे-बेरं देहोस्येति कुवे-बे-रः, कुष्ठित्वात् । त्र्यम्बकस्य सखा त्र्यम्बकसखः, राजाहःसखिभ्यष्टच्(सू०)। मनुष्यस्येव धर्मः श्मश्रुलत्वादिरस्य मनुष्यधर्मा, धर्मादनिच्केवलात्( सू० ) । धनं दयते रक्षति धनदः, एवं श्रीदः । राज्ञां यक्षाणां राजा राजराजः ॥ ६८ ॥ विश्रवसोपत्यं वैश्रवणः, विश्रवसा विप्रहो विश्रवणेन वृत्तिरविरविकन्यायेन, शिवादिभ्योऽण ( सू० )। पुलस्तेरपत्यं गोत्रं पौलस्त्यः । नरो वाहनमस्य नरवाहनः, वाहनमाहितात् ( सू० ) इत्यनेन नरस्यानाहितवाचित्वाद्-णत्वं नास्ति, पूर्वपदात्संज्ञायां ( सू० ) इत्यपि नास्ति क्षुभ्नादित्वात् ( सू० ) । किंनरादिस्वाम्येपि जात्या यक्षः, यजेर्यक्षेर्वा रूपम् । एकपिङ्गः पिङ्गलैकनेत्रत्वात, अतो **भागुरिणा** हर्यक्ष उक्तः । इडविडा मातास्येति, ऐलविलोपि डलयोरेकत्वस्मरणात् ॥ ६९ ॥ अस्येति प्रत्येकं संबध्यते । उद्यान्त्यस्मिन्नुद्यानम् । चित्ररथेन गन्धर्वराजेन निर्वृत्तं चैत्ररथम् । नडः कूवरं रथावयवोस्य नडकूवरः । केल्योर्जलभूम्योरास्ते, के ( जले ) लसनमस्य वा कैलासः स्फटिकस्तस्यायं स्फाटिकोद्रिः ( कैलासः ) । अलत्यलका, अल भूषणे, क्षिपकादित्वात् ( वा० ) इत्वाभावः । पुष्पमिव पुष्पकम्, इवेप्रतिकृतौ ( सू० ) कन् ॥ ७० ॥ किंचिन्नरोश्वमुखत्वात्किंनरः, कुत्सितो नरो वा, किंक्षेपे ( सू० ) इति समासः । मयते मयुः । नियतं धीयते निधिः, किः । शेव्यते शेवं स्थाप्यधनं धीयतेस्मिञ्शेवधिः । ना पुंलिङ्ग इति काकाक्षिवत् । उक्तं च– महापद्मश्च पद्मश्च शंखो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव ॥ ७१ ॥ इति स्वर्वर्गः । १ ।

द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् ।
नभोन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् ॥ १ ॥
वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ।
दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ॥ २ ॥
प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः ॥
उत्तरा दिगुदीची स्याद्दिश्यं तु त्रिषु दिग्भवे ॥ ३ ॥
इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ।
कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ॥ ४ ॥
ऐरावतः पुण्डरीको वामनः कुमुदोञ्जनः ।
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥ ५ ॥
क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम् ।
अभ्यन्तरं त्वन्तरालं चक्रवालं तु मण्डलम् ॥ ६ ॥
अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ।
धाराधरो जलधरस्तडित्वान् वारिदोम्बुभृत् ॥ ७ ॥

---

न भ्राजतेऽभ्रम्, डः । व्यवति व्योम, ज्वरत्वरस्रिव्यवीति ( सू० ) ऊत्वम् । पुष्कं वारि राति ( च्यवति ) पुष्करम् । अम्बते शब्दायतेम्बरम् । न बभस्ति भाति नभः । अन्तर्ऋक्षाण्यत्रान्तरिक्षम्, पृषोदरादित्वात् ( सू० ) इत्वम्, द्यावापृथिव्योरन्तरीक्ष्यते वा, छान्दसमित्वम् । गच्छन्त्यनेन गगनं [ वर्त्मविकारो गमेर्गश्चेति ( उ० ) गः ] । नास्त्यन्तोस्यानन्तम् । खन्यते खम् ॥ १ ॥ वियच्छति विरमति वियत् । विष्णोः पदं क्रमोत्र विष्णुपदम् । आकाशन्ते सूर्यादयोत्राकाशम्, न काशते वा, छान्दसो दीर्घः । विजहाति सर्वं विहायः । तारापथो मेघाध्वा च । महाबिलं देश्याम् । दिशत्यवकाशं दिक्, ऋत्विग्दधृक्स्रग्दिगुष्णिगिति ( सू० ) साधुः । कं स्कुभ्नाति विस्तारयति ककुप् । काशते काष्ठा । अश्नुते आशा । हरन्त्यनया हरित् ॥२॥ यथासंख्येन प्राची पूर्वा, अवाची दक्षिणा, प्रतीची पश्चिमा, सर्वनाम्नोवृत्तिमात्रेपूर्वपदस्यपुंवद्भावः ( वा० ) । प्राग्मध्ये पश्चाच्चार्कोञ्चत्यस्याम्, अवो मध्यार्थे । अपाचीति कात्यः, जपादित्वात्पक्षे वत्वं च । भवार्थे प्राचीनाद्याः । उत्तरत्यतिशयेनोच्चैस्त्रा– उत्तरा । उत्तरमञ्चत्यर्कोस्यामुदीची । ( दिश्यं ) दिगादिभ्योयत् (सू०) ॥३॥ विदिगपि प्रसिद्धया दिक् । [ एते क्रमात्पूर्वादीनां दिशां विदिशां च पतयः ] । रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः । बुधो बृहस्पतिश्चैव दिशामीशास्तथा ग्रहाः ॥४॥ दिशां धारका गजा दिग्गजाः क्रमात्, ऐरावतः पुण्डरीकः कुमुदोञ्जनवामना इति भागुरिः क्रमं व्यत्यस्तवान् । मालापि– ऐरावतः सुप्रतीक इति । पुण्डरीकादिवर्णाकृतिभ्यां संज्ञा एताः । शोभनानि प्रतीकान्यङ्गान्यस्य सुप्रतीकः । करिण्योभ्रमुकपिलापिङ्गलानुपमाः क्रमात् । ताम्रकर्णी शुभ्रदन्ती चाङ्गना [ वामना ] चाञ्जनावती ॥५॥ दिशोरिदमपदिशम्, विभक्त्यर्थेव्ययीभावः, अव्ययीभावे शरत्प्रभृतिभ्यः (सू०) समासान्तः, अव्ययीभावश्च ( सू० ) इति नपुंसकाव्ययत्वे । विशिष्टा दिग्विदिक्, उभयव्यपदेशात्, यदाहुः– यान्यासामन्तरालानि विदिशः प्रादिशश्च ताः ( अमरमाला ) । अन्तरमवकाशमालात्यन्तरालम् । चक्राकारेण वलते चक्रवालं, वाडते वा, वाडृ आप्लाव्ये । मण्ड[ ण्ड्य ]ते मण्डलम् । सूत्रद्वये दिशामित्यनुवर्तयन्ति प्रसङ्गात्सामान्येनेति सभ्यः ॥ ६ ॥ अभ्रत्यपो राति वाभ्रम्, अभ्र गत्यर्थः, न भ्रश्यन्त्यापोस्मादित्येके, यदुक्तं– न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्यतः ( पुराणं ) । मेहति सिञ्चति मेघः, न्यङ्क्वादित्वाद् ( सू० ) घः । ( स्तनयित्नुः ) स्तनेश्चौरादिकात् स्तनिहृषिपुषिगदिमादिभ्योणेरित्नुच् ( उ० ) । बलाकाभिर्ह्रीयते बलाहकः, वारिवाहको वा ॥ ७ ॥ हन्यते वायुना घनः, मूर्तौघनः ( सू० )

घनजीमूतमुदिरजलमुग्धूमयोनयः ।
कादम्बिनी मेघमाला त्रिषु मेघभवेऽभ्रियम् ॥ ८ ॥
स्तनितं गर्जितं मेघनिर्घोषे रसितादि च ।
शंपाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा ॥ ९ ॥
तडित्सौदामनी विद्युच्चञ्चला चपलापि च ।
स्फूर्जथुर्वज्रनिष्पेषे मेघज्योतिरिरंमदः ॥ १० ॥
इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितम् ।
वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ ॥ ११ ॥
धारासंपात आसारः शीकरोऽम्बुकणाः स्मृताः ।
वर्षोपलस्तु करका मेघच्छन्नेऽह्नि दुर्दिनम् ॥ १२ ॥
अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् ।
अपिधानतिरोधानपिधानाच्छादनानि च ॥ १३ ॥
हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ।
विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः ॥ १४ ॥

---

इति साधुः । जीवनस्य जलस्य मूतः पुटबन्धो जीमूतः । मोदन्तेऽनेन मुदिरः । धूमो योनिरस्य धूमयोनिः । कमाददते कादम्बा मेघास्ते सन्त्यस्यां कादम्बिनी, कदम्बे विकाशो वास्त्यस्याम् । मेधिका देश्याम् । ( अभ्रियं ) समुद्राभ्राद्घः ( सू॰ ), छान्दसत्वमतन्त्रम् ॥ ८ ॥ आदिशब्दाद् ध्वानितगर्जादि । शं पिबति शम्पा, शम्बेति प्राच्याः– शम्ब( य )ति नायनं तेज इति व्याख्यन् । शतह्रदोर्चिर्विद्यतेस्याः शतह्रदा, वाडवज्योतिष्वत् । ऐरावतोऽभ्रगो नागस्तस्य स्त्री– ऐरावती । क्षणप्रभा– अचिरद्युतिः ॥ ९ ॥ ताडयति तडित्, ताडेर्णिलुक्च ( उ॰ ) । सुदाम्नाद्रिणैकदिक्सौदामनी, तेनैकदिक् (सू॰) इत्यण् । विद्योतते विद्युत् । चटुला [ वज्रज्वाला च ] देश्याम् । स्फूर्जनं स्फूर्जथुः, ट्वितोऽथुच् (सू॰) । निष्पेषः संघट्टस्तत्थ शब्दः, अशन्याघात इत्येके । एतेन वज्राशन्योस्ताडिद्भेद[द्भव]त्वं मन्यते । इरयाम्भसा माद्यति– इरंमदः, उग्रंपश्येरंमदेति ( सू॰ ) साधुः । [ धूमज्योतिःसलिलमरुतां संघ एव मेघस्तत्त्यं ज्योतिराविर्भवन्मेघज्योतिरित्युच्यते । विद्युदाख्यं वडवानलज्योतिरेव न मेघज्योतिस्तेन शम्पा शतह्रदेत्यादिशब्दा अभिलषिता इति ] ॥ १० ॥ मेघप्रतिफलिता हि सूर्यरश्मयो धनुराकारेण दृश्यन्ते तदेवेन्द्रधनुरुत्पाते ऋज्ववक्रं रोहितम्, रोहः संजातोऽस्येति, लोहितत्वाद्वा, ऋत्यकः ( सू॰ ) इति प्रकृतिभावः । वर्षम्, अज्विधौ भयादीनामुपसंख्यानंनपुंसकेक्तादिनिवृत्त्यर्थम् ( वा॰ ) । तद्विघाते तस्य वर्षस्य विघाते निरोधे ( अवग्राहः, अवग्रहः ), अवेग्रहोवर्षप्रतिबन्धइति ( सू॰ ) घञ् ( विभाषा ) ॥ ११ ॥ बद्धधाराणां संततं पतनं धारासंपातः । आसरणमासारः, स्स्थिरे ( सू॰ ) इति घञ् भावे । शीकते सिञ्चति शीकरः । सृता वातेरिताः, यत्कात्यः– आसारो वेगवद्वर्षं वातास्तं वारि शीकरः । कृणोति हिनस्ति कीर्यते वा करका, क्षिपकादिः ( वा॰ ), कमण्डलौ च करक इति पुंस्यपि वक्ष्यति । अहरत्राहर्निशोपलक्षणम् । अह्नि मेघेन च्छन्नमाच्छादनमिति व्यधिकरणे सप्तम्यौ वा, यद्भागुरिः– दुर्दिनं त्वन्धकारेऽब्दैः । वार्दलं देश्याम् ॥ १२ ॥ अन्तर्धानमन्तर्धा, अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वात् (वा॰), आतश्चोपसर्गे (सू॰) इत्यङ् । (अन्तर्धिः) उपसर्गे घोः किः (सू॰) । वष्टिभागुरिरल्लोपमिति (का॰) पक्षे पिधानम् । तिरोन्तर्धाविति (सू॰) गतित्वात्समासः ॥ १३ ॥ आह्लादनाच्चन्द्रश्चासौ मिमीते कालं मस्यति परिणमते वा माश्च चन्द्रमाः । मा अप्युच्यते सत्यभामाभामेतिवत् । उनत्तीन्दुः, उन्देरिच्चादेः (उ॰) । विधयन्त्येनं सुरा विधुः, धेट् पाने । शुभ्रांशुः सितकरः । ओषधीरीष्ट आप्यायकत्वादोषधीशः ॥ १४ ॥ अद्भ्यो जातोऽब्जः । जीवयति जैवातृकः, जीवेरातृकन्वृद्धिश्च (उ॰) । सुतेमृतं

अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः ।
द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ॥ १५ ॥
कला तु षोडशो भागो बिम्बोऽस्त्री मण्डलं त्रिषु ।
भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके ॥ १६ ॥
चन्द्रिका कौमुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता ।
कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् ॥ १७ ॥
सुषमा परमा शोभा शोभा कान्तिर्द्युतिश्छविः ॥ १८ ॥
अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ।
प्रालेयं मिहिका चाथ हिमानी हिमसंहतिः ॥ १९ ॥
शीतं गुणे तद्वदर्थाः सुशी( षी )मः शिशिरो जडः ।
तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः ॥ २० ॥
ध्रुव औत्तानपादिः स्यादगस्त्यः कुम्भसंभवः ।
मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी ॥ २१ ॥

---

सोमः, सूयते वा, नवो नवो भवति जायमान इति श्रुतेः । ग्लायति क्षीयते ग्लौः, ग्लानुदिभ्यांडौः (उ०)। (द्विजराजः) यतः सोमो राजा द्विजातीनाम् । क्षपां करोत्युद्द्योतयति क्षपाकरः । सुधामूर्तिः [ सुधाभृतिः ] आत्रेयो रोहिणीश [सख] श्च । अमृतनिर्गमः, समुद्रनवनीतं देश्याम् ॥ १५ ॥ चन्द्रस्येति शेषः । षड्भिरधिका दश षोडश, षषउत्वंदतृदशधासूत्तरपदादेष्टुत्वंच (वा०), षोडशानां पूरणः, तस्यपूरणेड्ट् ( सू० ) । कलयति संख्याति कला । बिम्बति भाति बिम्बमाभोगः, सौत्रोयम् । भिद्यते स्म भीत्तं शकले साधुः (भित्तंशकलं) । शक्यते भेत्तुं शकलं शकलो वा । खण्डयते खण्डं खण्डो वा । खण्डलं भागच्छेदौ च । ऋध्नोति-अर्धो भागो निर्देशात्पुंसि, वाच्यलिङ्ग इत्येके, यट्टीका- खण्डमात्रवृत्तितायामभिधेयलिङ्ग इति । समप्रविभागे त्वर्धं नपुंसकम् । [ सामि ] दलं नेमोपि ॥ १६ ॥ चन्द्रोऽस्त्यस्यां चन्द्रिका । कुमुदानामियं विकाशहेतुत्वात्कौमुदी । ज्योतिरस्त्यस्यां ज्योत्स्ना, ज्योत्स्नातमिस्रेति (सू०) साधुः । प्रसादो नैर्मल्यम् । कल्यते लक्ष्यतेनेन कलङ्कः । अकि लक्षणे ( अङ्क्यतेनेनाङ्कः ) । ( लाञ्छनं ) लाछि लक्षणे । चह्यति चिह्नं, चह परिकल्कने । लाञ्छनसाहचर्याच्चिह्नादि क्लीबे । अभिज्ञानं च ॥ १७ ॥प्रकृष्टा कान्तिः सुषमा, सुष्ठु समेति, सुषामादित्वात् ( सू० ) षत्वम् । काम्यते कान्तिः । छ्यति छिनत्त्यसारं छविः ॥ १८ ॥ अवश्यायतेऽवश्यायः, श्याद्व्यधेतिणः ( सू० ) । निह्रियते नीहारः । तुष्यन्त्यनेन तुषारः । तोहत्यर्दयाति तुहिनं, तुहिरर्दने । हिनोति वर्धते जलमनेनेति हिमम् । प्रलयादागतं प्रालेयं, केकयमित्रयुप्रलयानांयादेरियः ( सू० ) । मेहति मिहिका नीहारः, [ महिकापि ] । नीहाराख्या त्वन्या धूममहिषी । धूमिका च देश्याम् । ( हिमानी ) हिमारण्ययोर्महत्वे ( वा० ) ङीषानुक् च ॥ १९ ॥ गुणे जाड्ये शीतं क्लीबे, श्यैङो भावेक्तः ( सू० ), द्रवमूर्तिस्पर्शयोःश्यइति ( सू० ) संप्रसारणं, संप्रसारणस्येति (सू०) दीर्घः । तद्वदर्थाः शीतवत्पर्याया अभिधेयलिङ्गाः । सुष्ठु श्यायते सुशीमः । शिनोत्यर्थं श्यायते वा शिशिरः । जलति जडः, जल जाड्ये । शीतं लाति शीतलः । ( हिमः ) हिमादेः- अर्शआदित्वादच् ( सू० ) ॥ २० ॥ चन्द्रप्रसङ्गादागतमुक्त्वा प्रस्तुतमाह । ध्रुवति ध्रुवः, कः । उत्तानपादस्यापत्यं, ऋषित्वाद् ऋष्यन्धकेति ( सू० ) अणि प्राप्ते, बाह्वादित्वादिञ् ( सू० ) । अगं स्त्यायति स्तम्भितवानगस्त्यः । मित्रावरुणयोरपत्यं मैत्रावरुणिः, ऋषिसमुदायस्यानृषित्वादिञ्, देवताद्वन्द्वेचानङ् ( सू० ) । पतिशुश्रूषालोपेष्वमुद्रा, न मुदं राति, लोपामुद्रा । समानो धर्मोऽस्त्यस्याः सधर्मिणी पत्नी ॥ २१ ॥ न क्षरति नक्षत्रं, क्षर गतिहिंसनयोः, नभ्रा-

नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम् ।
दाक्षायण्योऽश्विनीत्यादितारा अश्वयुगश्विनी ॥ २२ ॥
राधा विशाखा पुष्ये तु सिध्यतिष्यौ श्रविष्ठया ।
समा धनिष्ठाः स्युः प्रोष्ठपदा भाद्रपदाः स्त्रियाम् ॥ २३ ॥
मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी ।
इन्वकास्तच्छिरोदेशे तारका निवसन्ति याः ॥ २४ ॥
बृहस्पतिः सुराचार्यो गीर्ष्-गीष्प-तिर्धिषणो गुरुः ।
जीव आङ्गीरसो वाचस्पतिश्चित्रशिखण्डिजः ॥ २५ ॥
शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः ।
अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः ॥ २६ ॥
रौहिणेयो बुधः सौम्यः समौ सौरिशनैश्चरौ ।
तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुंतुदः ॥ २७ ॥

---

ण्नपादिति ( सू० ) नञ् प्रकृत्या । ऋषति गच्छति, ऋक्ष्णोति तमो वा- ऋक्षम् । भा विद्यतेस्य भम् । तरन्त्यनया तारा । ( तारका ) स्वार्थे कन्, तारकाज्योतिषीति ( वा० ) इत्वाभावः, क्लीबेपि **यच्छाश्वतः**- नक्षत्रे चाक्षिमध्ये च तारकं तारकापि च, लक्ष्यं च- द्वित्रैर्व्योम्नि पुराणमौक्तिकघन( मणि )-च्छायैः स्थितं तारकैः (विद्धशाल०) । अवतेरुडुः, उड गतौ वा । दाक्षायण्योश्विनीत्यादितारा: सप्तविंशतिर्भानि । दक्षस्यापत्यं दाक्षयणी, अतइञ् ( सू० ) अनन्तरापत्येपि द्वैपायनवत्, यञिञोश्चेति ( सू० ) फक्, यद्वा- इतोमनुष्यजातेः ( सू० ) इत्यत्र- इञ उपसंख्यानाद् ङीष्, कौरव्यमाण्डूकाभ्यांच ( सू० ) इति चकारादासुरायणवत् ष्फः- तद्धितः । अश्वान् युङ्क्तेश्वयुक्, अश्वकर्मण्याम्नानात् ॥ २२ ॥ राध्नोति कार्यं राधा । विशाखति व्याप्नोति विशाखा, शाखृ व्याप्तौ । पुष्यसिध्यौनक्षत्रे (सू०) साधू, पुष्णात्यर्थान्पुष्यः, सिध्यन्त्यनेनार्थाः सिध्यः । त्वेषति तिष्यः, त्विष दीप्तौ, अघ्न्यादिः ( उ० ) । श्रूयते शुभकर्मणि श्रविष्ठा । दधान्ति धनं करोति धनिष्ठा, श्रविधनिभ्यामिष्ठन् ( सू० )। प्रोष्ठौ सारौ पदावस्याः प्रोष्ठपदा, अर्थग्रहणाद् भद्रपदा, सुप्रातःसुश्वेति ( सू० ) साधुः, फल्गुनीप्रोष्ठपदानांचनक्षत्रे ( सू० ) इति वा बहुत्वम् ॥२३॥ मृगस्येव शीर्षं शिरोस्य, खे ताराणां तथावस्थानात्, शीर्षं प्रकृत्यन्तरम् । अग्रे हायनोस्या आग्रहायणी, मार्गशीर्षादारभ्य संवत्सरप्रवृत्तेः, आग्रहायण्यश्वत्थाट्ठक् ( सू० ) इति निर्देशादण् । इन्वका इति पञ्च ताराः, इन्वन्ति प्रीणन्तीन्वकाः, मरुतो देवता इन्वका नक्षत्रमिति श्रुतेः । इल्वलास्तारका इल्वलोसुर इति- उणादौ श्री**भोजदेवो** व्याकरोत् ॥ २४ ॥[ बृहतां पतिर्बृहस्पतिः ] तद्बृहतोःकरपत्योश्चोरदेवतयोरिति ( वा० ) सुट्तलोपौ । गीर्पतिः- गीष्पतिः, अहरादीनांपत्यादिषु ( वा० ) इति वा रेफः, पक्षे कस्कादिदर्शनात् ( सू० ) षत्वम् । धिषणास्यास्तीति धिषणः । गृणात्युपादिशाति गुरुः, कृग्रोरुच्च (उ०) । जीव्यतेनेन मृतसंजीवनीज्ञत्वाज्जीवः । अङ्गिरसोपत्यत्वादाङ्गिरसः । चित्रशिखण्डिजः सप्तर्षिजः, समुदायेषु हि वृत्ताः शब्दा ( अवयवेषु वर्तन्ते ) इति । वाचस्पतिः, अलुकि षष्ठयाःपतिपुत्रेति ( सू० ) सत्वम् ॥ २५ ॥ शुक्रो रुद्रस्य शुक्रद्वारेण निर्गतत्वात् । कवेरपत्यं काव्यः, कुर्वादिभ्योण्यः ( सू० ), कविस्त्वभेदाद्यथा- जमदग्निर्वै पञ्चममवदानमवाद्यत्, चातुर्वर्ण्यात्ष्यञ् ( चतुर्वर्णादीनांस्वार्थउपसंख्यानम् ) इत्येके । वष्टीत्युशना, ऋदुशनइति ( सू० ) सावनङ् । भृगोरपत्यं भार्गवः । अङ्गानियर्ति पीनत्वादङ्गारकः, आरस्तु भीमवत् । कौ जायते कुजः । भूमेरपत्यं भौमः, शिवादित्वादण् ( सू० ) । वक्रोपि ॥२६॥ रोहिण्या अपत्यम् । सोमः पितापि देवतास्येति, सोमाट्ट्यण् ( सू० ) । ज्ञश्चान्द्रमसायानिश्च । सूरस्यार्कस्यापत्यं सौरिः, सौरस्तु तस्येदम् ( सू० ) इत्यणि । शनिमन्दौपङ्गुकालौ छायापुत्रोसितश्च सः ।

सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः ।
राशीनामुदयो लग्नं ते तु मेषवृषादयः ॥ २८ ॥
सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः ।
भास्कराहस्करब्रध्नप्रभाकरविभाकराः ॥ २९ ॥
भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः ।
विकर्तनार्कमार्तण्डमिहिरारुणपूषणः ॥ ३० ॥
द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ।
विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ॥ ३१ ॥
भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ।
माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्विकाः ॥ ३२ ॥
सूरसूतोरुणोनूरुः काश्यपिर्गरुडाग्रजः ।
परिवेषस्तु परिधिरुपसूर्यकमण्डले ॥ ३३ ॥

---

तमस्करित्वात्तमः, सान्तत्वात्क्लीबे । रहयति भुक्त्वा चन्द्रार्कौ राहुः । स्वर्भाति स्वर्भानुः, पूर्वपदात्संज्ञायां(सू०) न णत्वम् । सिंहिकाया अपत्यं सैंहिकेयः । विधुं तुदति विधुंतुदः, विध्वरुषोस्तुदः (सू० ) इति खश् । अभ्रपिशाचो ग्रहकल्लोलश्च देश्याम् । केतुः शिखीति वाच्यम् ॥ २७ ॥ सप्त च ते ऋषयश्च, दिक्संख्ये-संज्ञायामिति ( सू० ) द्विगुः । मुखशब्दात्क्रत्वङ्गिरोवसिष्ठपुलस्त्यपुलहाः । चित्रः शिखण्डश्चूडास्त्येषाम् । सप्तर्षिरित्येकत्वं रूढेः । ( ते राशयः ) मेषो वृषोथ मिथुनं कर्कटः सिंहकन्यके । तुलाथ वृश्चिको धन्वी मकरः कुम्भमीनकौ ॥ २८ ॥ सुवति सूरः । सूयते सूर्यः, राजसूयसूर्येति ( सू० ) साधुः । इयर्ति-अर्यमा । अदितेरपत्यमादित्यः । द्वादशात्मानो रूपाण्यस्य ( द्वादशात्मा ) । दिवा दिनं करोति दिवाकरः, दिवाविभाप्रभेति(सू०) टः । भास्कराहस्करौ कस्कादित्वात्(सू०) ब्रध्नते ब्रध्नः । भासः सन्त्यस्य भास्वान्॥२९॥ विवस्तेजोस्यास्तीति विवस्वान्, तसौमत्वर्थइति ( सू० ) भसंज्ञायां पदकार्यं रुत्वं नास्ति । हरितो नीला अश्वा अस्य ( हरिदश्वः ) । विकृन्तत्यात्मानं विकर्तनः, भ्रमेण तेजःशातनात् । अर्कयति तपत्यर्कः, अर्च्यते वा । मृतण्डस्यापत्यं मार्तण्डः, मृताण्डमजाययेति मार्ताण्डो वा । मेहति मिहिरः, आदित्याज्जायते वृष्टिरिति स्मृतिः ( मनु० ) । अरुणोस्त्यस्यारुणः, वर्णेन वा । पूषति पर्व( वर्ध )ते पूषा, इन्-हन्पूषार्यम्णांशौ ( सू० ), सौच ( सू० ) इति नियमाद्दीर्घाभावः ॥ ३० ॥ दिवि मणिरिव द्युमणिः, अत एवाम्बरमणिर्गगनमाणिक्यादयोपि । तरन्त्यनेन तमस्तरणिः । मेद्यति मित्रः । विरोचते विरोचनः, अनुदात्तेतश्च ( सू० ) इति युच् । विभा दीप्तिर्वसु धनमस्य विभावसुः । अह्नः पतिरहर्पतिः, अहरादीनांपत्यादिषु ( सू० ) इति वा रेफः ॥ ३१ ॥ भाति भानुः । हन्ति तमो हंसः । सूयते सविता । रूयते स्तूयते रविः । कर्मसाक्षी जगच्चक्षुरंशुमाली [ लोकबन्धुः ] त्रयीतनुः । [ इनो भगो ] धामनिधिः [ अ-ब्जिनीपतिरिति ज्ञेयम् ] । प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः । शूरोंशुसत्तमः प्रोक्तः पद्मिनीकान्त इष्यते । मठरस्यापत्यं माठरः । दण्डोस्यास्तीति दण्डः । इन्द्रादयो ह्यष्टादश नामान्तरेणार्कपरिचारकाः, यत्सौर( तन्त्र )म्– तत्र शक्रो वामपार्श्वे दण्डाख्यो दण्डनायकः । वह्निस्तु दक्षिणे पार्श्वे पिङ्गलो वामन[ नामत ]श्च सः । यमोपि दक्षिणे पार्श्वे भवेन्माठरसंज्ञया । एवमन्येयावाद्याः ( पाताद्याः ) [गुह-हरराहुखरादयः । तेषु प्राधान्यात्त्रय एवोक्ताः ] । परितः पार्श्वे वर्तन्ते पारिपार्श्विकाः, परिमुखंच ( सू० ) इति चकाराट्ठक् ॥ ३२ ॥ सूतः सारथिः । ( कश्यपस्यापत्यं काश्यपिः ) ऋष्यन्धकेत्यण् ( सू० ), काश्यप इति सभ्यः पाठः, बाह्वादित्वाद्वा ( सू० ) । परितो ( विष्यते ) व्याप्यतेनेन परिवेषः । परितो धीयते परिधिः । समीपे सूर्यस्य प्रतिकृतिरुपसूर्यकम् , सूर्यमण्डलं च ॥ ३३ ॥ कीर्यते किरणः । वस-

किरणोस्रमयूखांशुगभस्तिघृणिपृश्न( रश्म )यः ।
भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ॥ ३४ ॥
स्युः प्रभा रुग्रुचिस्त्विड् भा भाश्छविद्युतिदीप्तयः ।
रोचिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः ॥ ३५ ॥
कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति ।
तिग्मं तीक्ष्णं खरं तद्वन्मृगतृष्णा मरीचिका ॥ ३६ ॥
इति व्योमादिग्वर्गः । २ ।

कालो दिष्टोप्यनेहापि समयोप्यथ पक्षतिः ।
प्रतिपद् द्वे इमे स्त्रीत्वे तदाद्यास्तिथयो द्वयोः ॥ १ ॥
घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ ।
प्रत्यूषोहर्मुखं कल्यमुषःप्रत्युषसी अपि ॥ २ ॥
प्रभातं च दिनान्ते तु सायं संध्या पितृप्रसूः ।
प्राह्णापराह्णमध्याह्नास्त्रिसंध्यमथ शर्वरी ॥ ३ ॥

---

न्यास्मिन् रसा उस्राः । मिनोति क्षिपति तमो मयूखः । अश्नुते— अंशुः । गां बभस्ति दीपयति गभस्तिः, पृषोदरादिः ( सू० )। जिघर्ति घृणिः । पिपर्ति स्पृशति वा क्ष्मां पृश्निः, भुवं वृष्ट्यै प[ व ]र्षति सिञ्चति पृ[ वृ ]ष्णिरित्येके । कीर्यते करः । म्रियतेऽस्मिंस्तमो मरीचिः । दीधीते दीप्यते दीधितिः ॥ ३४॥ प्रभादीनामादित्यरश्मित्वाभावात्पृथक्पाठः, द्युतिच्छव्योरिन्दुप्रस्तावोक्तेः पुनरिहोपादानं सामान्यार्थम् । दीप्त्यातपादयो ह्यसाधारणा अपि कविभिः साधारणीकृताः, यथा मुखदीप्तिः, चन्द्रातपः । रोचनं रुक् । भाभासौ धातुभेदात् । शोचिर्नैर्मल्यार्थोत्र ॥ ३५ ॥ कवंचोष्णे ( सू० ) इति का–कव–कत्समुदायात् त्रैरूप्यम् । एषां धर्ममात्रे क्लीबत्वं, धर्मिवृत्तित्वेभिधेयलिङ्गत्वम् । तेजनात्तिग्मतीक्ष्णौ । खं राति खरति वा खरम् । तद्वदिति ध क्लीबत्वं धर्मिणि त्रिष्विति दिश्यते । अत्युष्णार्थं चैतत्, यदाहुः— तिग्मं तीक्ष्णं कटूष्णं स्यात् । अन्यत्र तूपचारात्— तीक्ष्णोसिः । मृगाणां तृष्णास्याम् ( मृगतृष्णा ) । मरीचिप्रतिकृतिर्मरीचिका । ग्रीष्मे सिकतास्तर्कराः प्रतिफलिता जलत्वेनाभान्ति, अत एव मरुमरीचिकोच्यते ॥ ३६॥ इति व्योमदिग्वर्गः । २ ।

कलयति कालयति वा सर्वं कालः । दिश्यते स्म दिष्टः । न– ईहतेत्रानेहा, अपुन्, ऋदुशनस्पुरुदंशोनेहसांच ( सू० ) इति सावनङ् । समेति समयः । पक्षस्य मूलं प्रारम्भदिनं पक्षतिः । प्रतिपद्यते उपक्रम्यतेनय प्रतिपत् । सा प्रतिपदाद्या यासां ताः, तन्यते तिथिः स्त्रीपुंलिङ्गः ॥ १ ॥ घसति तमो घस्यते- ( अद्यते )स्मिन् वा घस्रः । द्यति तमो दिनम् । न जहाति कालमहः, नाञिजहातेः ( उ० ) इति कनिन् । दीव्यति दिवसम् । वसन्त्यस्मिन् वासरम् । प्रत्यूषति निशां प्रतिरुजति, प्रतिगता– उषा यदा तदा प्रत्यूषः । काले साधु काल्यं, शाश्वतः कल्यमप्याह– कल्यं प्रभातं सज्जं च कल्यो नीरोगदक्षयोः । उष( ओष )त्यर्ककरैरुषः, कसुन् । एवं प्रत्युषः ॥ २ ॥ भातुं प्रवृत्तं प्रभातं, आदिकर्मणिक्तः(सू०) । विभातं व्युष्टं च । गोसर्गो देश्याम् । प्रातः प्रगेव्ययम् । सायमव्ययम् । सायाह्नादिदर्शनात्, स्यादवधेति(सू०)णान्तोपि, स्यति दिनं सायः, सायमोह्ने मलोपश्चेति भाष्यं त्वनिष्टनिवृत्त्यर्थम् । संध्यायन्त्यस्यां संधीयेते अहोरात्रौ वास्यां संध्या । पितॄन् प्रसूते पितृप्रसूः, ब्रह्मणो ह्येषा पितृप्रसवित्री तनुः । प्रारम्भाऽपरं मध्यं वाह्नः, राजाहःसखिभ्यष्टच् ( सू० ), अह्नोह्नएतेभ्यः ( सू० ) । तिस्रः संध्याः समाहृतास्त्रिसंध्यम् । आबन्तोवा( वा० ) इति पक्षे स्त्रीत्वं नेष्टं, यन्माला— त्रिसंध्यं तु नपुंसकम् । शृणाति चेष्टाः शर्वरी ॥ ३ ॥ निश्यति तनूकरोति चेष्टा निशा, आतश्चोपसर्गे । ( सू० ) इति कः।

निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ।
विभावरीतमस्विन्यौ रजनी यामिनी तमी ॥ ४ ॥
तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयान्विता ।
आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी ॥ ५ ॥
गणरात्रं निशा बह्व्यः प्रदोषो रजनीमुखम् ।
अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ ॥ ६ ॥
स पर्व संधिः प्रतिपत्पञ्चदश्योर्यदन्तरम् ।
पक्षान्तौ पञ्चदश्यौ द्वे पौर्णमासी तु पूर्णिमा ॥ ७ ॥
कलाहीने सानुमतिः पूर्णे राका निशाकरे ।
अमावास्या त्वमावस्या दर्शः सूर्येन्दुसंगमः ॥ ८ ॥
सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः ।
उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च ॥ ९ ॥
सोपप्लवोपरक्तौ द्वावग्न्युत्पात उपाहितः ।
एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ॥ १० ॥

---

निशीथोस्त्यस्यां निशीथिनी, महानिशाख्या । राति सुखं रात्रिः । आद्यन्तयोरर्धयामयोर्दिनव्यवहारात्त्रियामा । क्षणमवसरं ददाति क्षणदा विश्रान्तिप्रदेत्यर्थः । क्षप्यते क्षपा, भिदाद्यङ् (सू० ) । विभाति विभावरी, क्वनिप्, वनोरच ( सू० ) इति ङीप्– रश्च । रञ्जयति तमसा रजनी । यामाः सन्त्यस्यां यामिनी । ताम्यन्त्यस्यां तमी । ( के भूषयन्ति स्तनमण्डलानि कीदृश्युमा चन्द्रमसः कुतःश्री। किमाह सीता दशवक्त्रनीता) हारा महादेवरता तमातः ( विदग्ध० ) इति तमापि । वासतेयी **मालायाम्** ॥ ४ ॥ रात्रिः काकाक्षिवत् । तमोस्त्यस्यां तमिस्रा, ज्योत्स्नातमिस्रेति (सू० )साधुः । ज्यौत्स्नी तामसीत्यण्प्रकरणे ज्योत्स्नादिभ्यउपसंख्यानं ( वा० ), **शाश्वतस्तु**–ज्योत्स्ना ज्योतिष्मती रात्रिर्ज्योत्स्ना चन्द्रमसः प्रभेति । पूर्वापराह्नयोः पक्षयोरिव मध्ये वर्तमानत्वात् ,वर्तमानाह्नो यदीया निशा– निशामध्येपि दिवसः– पक्षिणीत्याहुः ॥५॥ गणानां रात्रीणां समाहारः, अहःसर्वैकदेशेति ( सू० ) संख्यात्वादच् समासान्तः, रात्राह्नाहाःपुंसीति ( सू० ) असमाहारे हि पुंस्त्वम् यन्**माला**– गणरात्रं नपुंसकम् । प्रारब्धा दोषा यस्मिन् ( प्रदोषः ) । समावित्येव । अर्धं रात्रेरर्धरात्रः, अर्धंनपुंसकमिति ( सू० ) तत्पुरुषः । नियतं शेरतेस्मिन् भूतानि निशीथः, अत एव **कात्यो** निशीथं सुप्तजनमाह । याति यामः । प्राह्रियतेस्मिन् प्रहरः, पुंसिसंज्ञायांघः ( सू० ) ॥ ६ ॥ स सन्धिः पर्वेति संबन्धः, **दुर्गो**पि–प्रतिपत्पञ्चदश्योस्तु संधिः पर्व प्रादिक् ककुप् । **प्राच्यास्तु** पर्वसन्ध्याख्यमाख्यन् , रूपभेदात्क्लीबे । पक्षान्त इति योगकालसंज्ञा । पूर्णो माश्चन्द्रः पूर्णमास्तत्र भवा पौर्णमासी। पूर्णो मासो वर्तते वास्यां, पूर्णमासादण् । पूरणं पूर्णिः, ॠल्वादिभ्यःक्तिन्निष्ठावत् ( वा० ) इति नत्वं, पूर्णिं मिमीते पूर्णिमा, कः ॥ ७ ॥ सा पूर्णिमा कलाहीने निशाकरे, अनुमन्यतेनुमतिः । पूर्णे, राति सुखं राका । ( अमावास्या ) अमा सह वसतोस्यां चन्द्रार्कौ । ( अमावस्या ) अमावस्यदन्यतरस्यां ( सू० ) इति ण्यति पक्षे वृध्यभावो निपात्यते । दृश्यते याज्ञिकैर्दर्शः, न दृश्यते चन्द्रोस्मिन् विपरीतलक्षणया । ८ ॥ सिनी सिता बाला कलास्याम् । कुहूर्विस्मापिकेत्यर्थः, कुं हन्ति तमसा वा । उपरज्यते छाद्यतेनेनोपरागः । ग्रहणं ग्रहः, ग्रहवृद ( सू० ) इत्यप् ॥ ९ ॥ इन्दू राहुग्रस्तः सोपप्लव उपरक्तश्च । एवं पूषापि। अग्निकृत उपसर्गः, उप– आसन्नमहितमस्योपाहितः, धूमकेत्वाख्य उत्पात इत्येके । एकयोक्त्या– अपृथग्वचनेन रोदसीवत्, न तु पुष्पवानिन्दुः सूर्यो वोच्यते, पुष्पं विकाशः प्रकाश इत्यर्थः ॥ १० ॥ निमेषोक्षिस्पन्दकालः । काशते काष्ठा । ताः काष्ठास्त्रिंशत्कलयति कालं कला । ताः कलास्त्रिंशत्क्षणनात्क्षणः,

अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला ।
तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् ॥ ११ ॥
ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च ।
पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ ॥ १२ ॥
द्वौ द्वौ माघादिमासौ स्यादृतुस्तैरयनं त्रिभिः ।
अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ॥ १३ ॥
समरात्रिंदिवे काले विषुवद्विषुवं च तत् ।
मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ॥ १४ ॥
पौषे तैषसहस्यौ द्वौ तपा माघेथ फाल्गुने ।
स्यात्तपस्यः फाल्गुनिकः स्याच्चैत्रे चैत्रिको मधुः ॥ १५ ॥
वैशाखे माधवो राधो ज्यैष्ठे शुक्रः शुचिस्त्वयम् ।
आषाढे श्रावणे तु स्यान्नभाः श्रावणिकश्च सः ॥ १६ ॥
स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः ।
स्यादाश्विन इषोप्याश्वयुजोपि स्यात्तु कार्त्तिके ॥ १७ ॥
बाहुलोर्जौ कार्त्तिकिको हेमन्तः शिशिरोस्त्रियाम् ।
वसन्ते पुष्पसमयः सुरभिर्ग्रीष्म ऊष्मकः ॥ १८ ॥

---

क्षणु हिंसायाम् । ते क्षणा द्वादश, मुहुरियर्ति मुहूर्तो द्विघटिकम् ॥ ११ ॥ ते मुहूर्तास्त्रिंशदह्ना सहिता रात्रिरहोरात्रः, अहःसर्वैकदेशेत्यच्(सू०), द्वन्द्वे त्वहोरात्राविमौ पुण्यौ । तेहोरात्राः पञ्चदश, पचति भूतानीति पक्षः, पक्ष परिग्रहे वा । शुक्लो मासस्य पूर्वपक्षः कृष्णस्त्वपरः, यतश्चैत्रसिताद्या मासाः । तौ पक्षौ माश्चन्द्रस्तस्यायं मास इति निर्वचनेन चान्द्रेण मानेनायम् । सौरसावननाक्षत्रमानैस्त्वन्यथा, मस्यति मिमीते वा ( मास ) ॥१२॥ इयर्ति ऋतुः । माघाद्युपक्रमस्ततोयनारम्भात् । यदाह तैर्ऋतुभिस्त्रिभिः, अयतेर्कोनेनायनम् । उत्तरा दाक्षिणा च यार्कस्य गतिः, ते द्वे अयने मिलिते वत्सरो वर्षम् ॥१३॥ समौ रात्रिंदिवौ यत्र, अचतुर–(सू०) इत्यादिना साधुः । विषु साम्येव्ययम्, तद्विद्यतेस्य विषुवत्, विषुवं च, वो मत्वर्थे लिङ्गात् ( अन्येभ्योपि दृश्यते ) । विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः (वा०) इति हि विषुव(ण)शब्दो युक्तः । मृगशीर्षेण युक्ता मार्गशीर्षी पौर्णमास्यास्मिन्, सास्मिन्पौर्णमासी ( सू० ) इत्यण् । सहोस्त्यस्मिन् सहाः, मत्वर्थेमासतन्वोरिति ( सू० ) यत, तस्य लुगकारेकाररेफाश्चेति ( वा० ) पक्ष लुक्, पुंस्त्वं लोकात्, सहश्च सहस्यश्च हैमन्तिकावृतू इति छान्दसम् । एवं तपाः– नभाः । भीमवन्मृगशीर्षस्य मृगत्वान्मार्गः । आग्रहायणी पौर्णमास्यास्मिन्नाग्रहायणिकः, आग्रहायण्यश्वत्थाट्ठक् ( सू० ) ॥ १४ ॥ ( पौषः– तैषः ) प्रागवदण्– द्वयम् । तथा च– पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा । नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे –इति क्वचित्पाठोस्ति । सहोस्यास्तीति सहस्यः, मत्वर्थेमासतन्वोरिति ( सू० ) यत् । एवं तपस्यनभस्यौ । तपोस्यास्तीति तपाः । ( फाल्गुनिकः ) विभाषाफाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यष्ठक् (सू०) मधुर्वसन्तोस्यास्तीति मधुः, मधोर्ञ्च ( सू० ) इति ञस्य वा लुक् ॥ १५ ॥ राधया युक्ता पौर्णमासो– अस्मिन् राधः । शुग्विद्यतेस्य शुक्रः, लुगकारेकाररेफाश्च ( वा० ) इति रेफः । शुग्विद्यतेस्य शुचिः, इकारः । न भासनं मेघच्छन्नत्वादस्त्यस्य नभाः ॥ १६ ॥ भीमवद्भद्र( या )युक्ता भाद्री पौर्णमास्यस्मिन् भाद्रः । इष्यते– इडन्नं विद्यतेस्य– इषः, अकारः ॥१७॥ बहुलाभिर्युक्ता बाहुली पौर्णमास्यस्मिन् बाहुलः । ऊर्क्–अन्नं बलं वास्यास्तीति–ऊर्जः । हिमान्तोस्य हेमन्तः, पृषोदरादिः ( सू० ) । ( शिशिरः ) शिनोत्यर्थं शीतेन, शिञ् निशाने । वसन्त्यस्मिन् सुखं, वस्ते भुवं वा वसन्तः, झच् । सुरु

**निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः ।**
**स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत्स्त्रियाम् ॥ १९ ॥**
**षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् ।**
**संवत्सरो वत्सरोऽब्दो हायनः स्त्री शरत्समाः ॥ २० ॥**
**मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः ।**
**दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम् ॥ २१ ॥**
**मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः ।**
**संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ॥ २२ ॥**
**अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम् ।**
**कलुषं वृजिनैनोघमंहो दुरितदुष्कृतम् ॥ २३ ॥**

---

रभते सुरभति वा सुरभिः । फल्गुर्देश्याम् । गिरन्त्यम्बु ग्रीष्मः । ऊष्मप्रतिकृतिरूष्मकः ॥१८॥ निदह्यतेऽस्मिन् निदाघः, घञ्, न्यङ्क्वादित्वात्कुत्वम् (सू० ) । उष( ओष )ति– उष्णः । तपति तपः, अच्, यल्लक्ष्यम्– तपेन वर्षाः शरदा हिमागमः ( शिशु० ) । प्रवर्षति प्रावृट्, नहिवृतिवृषीति ( सू० ) दीर्घः। भूम्नि बहुत्वे, वर्षमस्त्यासां वर्षन्ति वा वर्षाः । शीर्यन्तेऽस्यां पाकेनौषधयः शरत् ॥ १९ ॥ **यत्कात्यः**— आदाय मार्गशीर्षाच्च द्वौ द्वौ मासावृतुः स्मृतः । हेमन्ताद्धि वत्सरस्यारम्भः । ऋतुः पुंलिङ्गः । संवसन्ति ऋतवोऽस्मिन् संवत्सरः, ऋतुपरिवर्तात्मा ह्यसौ, यद् **भागुरिः**— सर्वर्तुपरिवर्तस्तु स्मृतः संवत्सरो बुधैः । परिवत्सरोऽपि । इदावत्सर इद्वत्सरोऽनुवत्सरश्च ज्योतिषे । आप्यतेऽब्दः । जहाति--ऋतून् हायनः, हश्चव्रीहिकालयोः ( सू० ) इति ण्युट् । समन्ति समाः, सह मान्ति वर्तन्ते ऋतवो यासां वा, स्त्रीबहुत्वेयं यथा-- जीव्यात्सहस्रं समाः । समांसमांविजायते ( सू० ) इत्येकत्वेऽपि दृश्यते ॥ २० ॥ मासेन पौरुषेणेति शेषः। पितॄणामयं पैत्रः, देवतार्थे पित्र्यः स्यात् । तत्र कृष्णः पक्षोऽहः शुक्लो रात्रिः । वर्षेण पौरुषेणेति शेषः ।[देवतानामयं देवतोऽहोरात्रः ] तत्रोत्तरायणमहः– दक्षिणायनं रात्रिः । [ ब्रह्मणोऽयं ब्राह्मः ] अहोरात्र इत्येव । दैवैर्हि सषाष्टैः (षष्ट्यधिकैः) त्रिभिरहोरात्रशतैर्दिव्यं वर्षं, तैर्द्वादशभिः सहस्रैर्लौकिकं चतुर्युगं, तच्च देवानामेकं युगं, तत्सहस्रं ब्रह्मणो दिनं भूतानां स्थितिकालः, तावत्येव रात्रिर्भूतानां प्रलयकालः । [ **यन्मनुः**]– चत्वार्याहुः सहस्राणि वर्षाणां तु कृतं युगम् । तस्य तावच्छती संध्या संध्यांशश्च तथाविधः ॥ इतरेषु ससंध्येषु ससंध्यांशेषु च त्रिषु । एकापायेन वर्तन्ते सहस्राणि शतानि च ॥ यदेतत्परिसंख्यातमादावेव चतुर्युगम् । एतद् द्वादशसाहस्रं देवानां युगमुच्यते ॥ [ दैविकानां युगानां तु सहस्रं परिसंख्यया । ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरुच्यते ॥ ] ये द्वे दैवे युगसहस्रे तौ नृणां कल्पौ, सर्वनाम्नां विधीयमानानूद्यमानलिङ्गग्रहणे कामचारः । एकः स्थितिं कल्पयति, द्वितीयः क्षयं कल्पयति ( अतः कल्प इत्युच्यते ) ॥२१॥ मनूनां स्वायंभुव[ स्वारोचिषौत्तमितामसिरैवत ]चाक्षुषवैवस्वतादीनां प्रजापतीनामन्तरमवकाशोऽवधिर्वा । तैर्हि चतुर्दशभिर्मन्वन्तरैर्ब्रह्मणो दिनम् । संवर्तते प्रलीयते कल्पते क्षीयतेऽस्मिन् वा जगत् । कल्पस्यान्तोऽवधिः कल्पान्तः । एकः कल्पोऽत्र क्षयार्थोऽन्यो ब्रह्मदिनार्थः, **यच्छाश्वतः**– कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने । संहारो युगात्ययः परिवर्तश्च ॥ २२ ॥ क्षयहेतुं पापमाह । पञ्चयते पङ्कः । पात्यस्मात्पाप्मा पापं च । केलयति किल्बिषम् कलयति कल्मषं कलुषं च । वर्ज्यते वृजिनम् । एत्येनः । न जहात्यघम् । अंहत्यंहः । दुरेति दुरितम् । दुष्क्रियते स्म दुष्कृतम् । एनोंहश्च सान्तौ । **मालायां** किण्वम् । मलोऽनेकार्थेषु ॥ २३ ॥ धारणाद्धर्मः,

स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः ।
मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः ॥ २४ ॥
स्यादानन्दथुरानन्दः शर्मशातसुखानि च ।
श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ॥ २५ ॥
भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् ।
शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च ॥ २६ ॥
मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ ।
प्रशस्तवाचकान्यमून्ययः शुभावहो विधिः ॥ २७ ॥
दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः
हेतुर्ना कारणं वी-बीजं निदानं त्वादिकारणम् ॥ २८ ॥
क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः स्त्रियाम् ।
विशेषः कालिकोवस्था गुणाः सत्त्वं रजस्तमः ॥ २९ ॥
जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ।
प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः ॥ ३० ॥

---

यागाङ्गे नपुंसकं- तानि धर्माणि प्रथमान्यासन् ( श्रुतिः ), फले तु पुमान्- एष धर्मः सनातनः ( मनु० ) इति विशेषोऽस्य नेष्टः । लोकधर्मा नाव्यधर्मेति पारिभाषिको धर्मञ्शब्दोऽप्यस्ति । पुनाति पुण्यं पुण्यकर्मणि शुभे च । अतिशयेन प्रशस्यं श्रेयः । ईयसुनि प्रशस्यस्यश्रः ( सू० ) । सुक्रियते स्म सुकृतम् । वर्षति वृषः, कः । प्रमदसंमदौहर्षे ( सू० ) साधू ॥ २४ ॥ आनन्दनमानन्दथुः, ट्वितोथुच् ( सू० ) । शृणाति क्लेशं शर्म । श्यति दुःखं शातं, शो तनूकरणे, तन् । शोभनानि खानीन्द्रियाण्यस्मिन् सुखयति वा सुखम् । श्व आगामि श्रेयोत्र श्वःश्रेयसं, श्वोवसीयं च, श्वसोवसीयःश्रेयसः ( सू० ) इत्यच् । भन्दते भद्रं, भदि कल्याणे । कल्यं नीरुजत्वमणति कल्याणम् । मङ्ग्यते मङ्गलम् । शोभते शुभम् ॥ २५ ॥ भवनशीलं भावुकं, ( लषपतपद )स्थाभूवृषेति ( सू० ) उकञ् । प्रशस्तो भवोस्यास्ति भविकम् । भवनार्हं भव्य, भव्यगेयेति ( सू० ) साधुः । कुशान्- लाति कुत्सितं श्यति वा कुशलम् । क्षिणोति क्लेशान् क्षेमः । शस्यते स्म शस्तम् । प्रशस्तं च । निःश्रेयसं **मालायाम्** । सूनृतं **कात्यः** । द्रव्य इति विशेष्यालिङ्गतायामभिधेयालिङ्गम् । आदिशब्दात्कलुषश्रेयःशिवभद्रादयः ॥ २६ ॥ निरस्तावयवा एवैते प्रशंसार्थाः, अत एव प्रशंसावचनैश्च ( सू० ) इति नित्यसमासः । प्रशस्तो गौर्गोमतल्लिका, ब्राह्मणमचर्चिका, गोप्रकाण्डम्, कठोद्घः, कुमारतिल्लजः, तल्लजक इति तु लक्ष्यम् । संघोद्घौगणप्रशंसयोरिति ( सू० ) उद्घोऽसमासेपि । एत्ययः ॥ २७ ॥ देवस्यात्मन इदं दैवं पूर्वकर्म । दिश्यते स्म दिष्टम् । भगस्यैश्वर्यादेरिदं भागं, भागमेव भागधेयम्, भागरूपनामभ्योधेयः ( वा० ) । भागाद्यच्च ( सू० ) भाग्यम् । नियम्यतेनया नियतिः । विधीयतेनेन विधिः । भविष्यद् भवितव्यता च । हिनोति हेतुः । कार्यतेनेन कारणम् । वीज्यतेनेन वेति वा वीजम् । निदीयते जन्यतेनेन निदानम् । आदावारम्भे कारणमुपादानकारणम्, सहकारिकारणमन्यत् ॥ २८ ॥ ( क्षेत्रं ) देहमात्रं चेतयते क्षेत्रज्ञः । अतति संचरत्यात्मा । पुरि शयनात्पुरणाद्वा पुरुषः । प्रधत्तेन्तः सर्वं प्रधानम् । प्रारम्भात्क्रियतेनया प्रकृतिः, सत्त्वरजस्तमसां साम्यावस्था- अव्यक्ताख्या । कालकृतो देहादेर्भेदोवस्था- अन्यथास्थितिर्यौवनादिः । गुणाः प्रकृतेर्धर्माः । सत्त्वं साधुत्वप्रकाशकं ज्ञानसुखहेतुः । रजो रागात्मकं दुःखहेतुः । ताम्यत्यनेन तम आवरकं मोहहेतुः ॥ २९ ॥ जननं जनुः, जनेरुसिः ( उ० ) । उत्पत्तिसाहचर्याज्जनिः स्त्री, इक्( ण् ) । जन्मी, व्रीह्यादित्वात् ( सू० ) । जायते जन्युः ॥ ३० ॥ ( व्यक्तिः ) विशेषाख्या । चेतति चित्तं, क्तः,

जातिर्जातं च सामान्यं व्यक्तिस्तु पृथगात्मता।
चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः॥ ३१॥

इति कालवर्गः। ३।

बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः।
प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः॥ १॥
धीर्धारणावती मेधा संकल्पः कर्म मानसम्।
चित्ताभोगो मनस्कारश्चर्चा संख्या विचारणा॥ २॥
अध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः।
संदेहद्वापरौ चाथ समौ निर्णयनिश्चयौ॥ ३॥
मिथ्यादृष्टिर्नास्तिकता व्यापादो द्रोहचिन्तनम्।
समौ सिद्धान्तराद्धान्तौ भ्रान्तिर्मिथ्यामतिर्भ्रमः॥ ४॥
संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः।
अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः॥ ५॥

---

असुनि चेतः। ह्रियते विषयैर्हृदयम्। स्वनति स्वान्तं, क्षुब्धस्वान्तेति (सू०) साधुः। ह्रियते हृद् दान्तं प्रकृत्यन्तरमस्ति, तदाधारोपि हृत्पुण्डरीकम्। मन्यते मनः मन। एव मानसम्, स्वार्थेऽण्॥ ३१॥
इति कालवर्गः। ३।

मन्नुते मनीषा, मनस एव- ईषा वा। दे( दि )धेष्टि धिषणा, धिष शब्दे। ध्यायति धीयते वास्यां धीः। शेते शेः- मोहस्तं मुष्णाति शेमुषी, शमेः कसावेत्वाभ्यासलोपे ङीब्वा। उपलब्धिर्बा- हुलकात्क्तिन्, षित्वादङि तूपलम्भा स्यात्। प्रतिपत्तिः प्रतिपत्, सर्वे गत्यर्था ज्ञानार्थाः। ज्ञप्तिः, कथं- चित्तोषणार्थे, मितांहस्वः (सू०)। सांख्ये बुद्धिधर्मस्यैते पर्यायाः, वैशेषिकादौ चतुर्दशापि बुध्यर्थाः॥ १॥ मेधते संगच्छतेस्यां मेधा। मनसो व्यापारः संकल्पः। विकल्पोपि। पूर्वोक्तस्य चित्तस्य संतानद्वारेण स्थै[ धे ]र्यमाभोग इति बौद्धाः। पुनःपुनर्मनसि करणं मनस्कारः, अतः- कृकमेति (सू०) सत्वम्। समाधानमवधानं प्रणिधानं च। चर्चनं संख्यानं विचारश्च। विमर्शो वासना भावना, संस्कारोनुभूताद्यविस्मृतिरिति वक्तव्यम्॥ २॥ अध्याहरणमपूर्वोत्प्रेक्षणम्। तरत्यनेन संशयविपर्ययौ तर्कः, तर्कणं वा, तर्क भाषार्थः। उभयकोटिस्पृग्ज्ञानं विचिकित्सा- एकत्रानारूढेः, कितः संशये सन्। शीङ्दिहोर्नानार्थयोः संशब्देनैषोर्थो द्योत्यते, उपसर्गस्य वा सोर्थो धातुपाधिवशात्प्रकाशते। एवं सर्वत्र। द्वौ पक्षौ परौ यत्र द्वापरः, पृषोदरादित्वात् (सू०) आत्वम्॥ ३॥ मिथ्यादृष्टिः परलोकाभावबुद्धिः। नास्ति परलोक इति मतिर्यस्य, अस्तिनास्तिदिष्टंमतिः (सू०) इति ठक्। व्यापादनं व्यापादः, ण्यन्तादच्। राद्धः सिद्धान्तो निश्चयोस्य राद्धान्तः। मिथ्यामतिरतस्मिंस्तदिति ज्ञानम्॥ ४॥ पक्षोक्तिः प्रथिताङ्गीकारश्चेत्युभयीह प्रतिज्ञा। संविज्ज्ञानं, यथा- सत्संवित्करणातीता, नियमोपि, यथा- संविदं लङ्घयेच्च सः। धातूनामनेकार्थत्वादुपसर्गवशाद्वा तत्तदर्थत्वम्। आगमनमागूः, भ्रमेश्च डूः (उ०) इति चकाराड् डूः॥ ५॥ मोक्षविषया मोक्षफला वा धीः (ज्ञानम्)। मोक्ष [ प्रतिपादक ]शास्त्रादन्यत्र शिल्पे चित्रादौ शास्त्रे च धीर्विज्ञानम्। मोचनं मुक्ति- र्मोक्षः पाशेभ्य आत्मनः पृथग्भावः। अत एव कैवल्याख्या। निर्वात्यस्मिन्निति निर्वाणं, निर्वाणोऽवात इति (सू०) साधुः, पैओवै शोषणे। अतिशयेन प्रशस्यं श्रेयः। निश्चितं श्रेयो निःश्रेयसम्, अचतुरेति

मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः ।
मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ॥ ६ ॥
मोक्षोपवर्गोथाज्ञानमविद्याहंमतिः स्त्रियाम् ।
रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी ॥ ७ ॥
गोचरा इन्द्रियार्थाश्च हृषीकं विषयीन्द्रियम् ।
कर्मेन्द्रियं तु पाय्वादि मनोनेत्रादि धीन्द्रियम् ॥ ८ ॥
तुवरस्तु कषायोस्त्री मधुरो लवणः कटुः ।
तिक्तोम्ब्लश्च रसाः पुंसि तद्वत्सु षडमी त्रिषु ॥ ९ ॥
विमर्दोत्थे परिमलो गन्धे जनमनोहरे ।
आमोदः सोतिनिर्हारी वाच्यलिङ्गत्वमागुणात् ॥ १० ॥
समाकर्षी तु निर्हारी सुरभिर्घ्राणतर्पणः ।
इष्टगन्धः सुगन्धिः स्यादामोदी मुखवासनः ॥ ११ ॥
पूतिगन्धिस्तु दुर्गन्धो विस्रं स्यादामगन्धि यत् ।
शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः ॥ १२ ॥

---

( सू० ) साधुः । अविद्यमानं मृतमत्रामृतम् ॥ ६ ॥ भावेभ्योपवर्जनमपवर्गः । महानन्दोपुनर्भवश्च । विरुद्धं वेदनमविद्या, अधर्मानर्थवद् विपर्यये नञ्, यदाह– अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या । अहमित्यस्य मननमहंमतिः, अनात्मन्यात्माभिमानात्, अहमिति विभक्तिप्रतिरूपको निपातः । रूपाद्याः पञ्च, विसिन्वन्ति बध्नन्ति विषयाः, पचाद्यच् (सू०), परिनिविभ्यः सेवसितसयेति (सू०) षत्वम् ॥ ७ ॥ गाव इन्द्रियाणि चरन्त्येषु गोचराः, गोचरसंचरेति ( सू० ) साधुः । इन्द्रियैरर्थ्यन्त इन्द्रियार्थाः । अर्थाश्च । हृष्यत्यनेन हृषीकम् । विषयोस्यास्तीति विषयि । इन्द्रस्यात्मनो लिङ्गमिन्द्रियं, इन्द्रियमिन्द्रलिङ्गं ( सू० ) इति साधु । वाक्पाणिपादपायूपस्थाख्यं वचनादानगत्युत्सर्गानन्दरूपकर्मसाधनमिन्द्रियम् । मनःषष्ठानि नेत्रजिह्वाघ्राणत्वक्श्रोत्राणि धीहेतवो बुद्धीन्द्रियाणीत्यर्थः ॥ ८ ॥ तु इति सौत्रादावरणार्थादौणादिको वरच् । कषति कण्ठं कषायः । मधु माधुर्यमस्यास्तीति मधुरः, ऊषसुषीति ( सू० ) रः । लुनाति जाड्यं लवणः, नन्द्यादित्वात् ( सू० ) ल्युः, णत्वं च । कटत्यावृणोति कटुः । तेजति स्म तिक्तः । अम्बत्यम्ब्लः, अमेर्ल इत्येके– अम्लमाहुः । तुवराद्याः षट्, रस्यन्त इति रसाः । गुणमात्रे रसः पुंसि, गुणवद्वृत्तित्वे तेभिधेयलिङ्गाः ॥ ९ ॥ सुरभिमाल्यगन्धादिपरिमर्दनोत्पन्नो हृद्यो गन्धः परिमलः । स गन्धोतिदूरव्यापी मनोहारी वा, समन्तान्मोदन्तेनेनामोदः । वाच्यलिङ्गत्व मागुणात्– अधिकारोयम्, ( अधिकारार्थः ) गुणाः शुक्लादय इत्येतस्मात्प्रागभिधेयलिङ्गाः ॥ १० ॥ अत्र यो यं प्रति प्रसिद्धस्तदनुवादे नान्यविधिः । निर्हरत्यवश्यं निर्हारी । सुष्ठु रभते सुरभिः । शोभनो गन्धोस्य सुगन्धिः, गन्धस्येदुत्पूतीति ( सू० ) इत् । मुखं वासयत्यनुलिम्पति मुखवासनः, मुखवासयोग्य इत्येके, मुखवासस्यागुरुवासन इति भागुरिः, यतः–आमोदो नित्योस्यास्ति अन्ये द्वौ द्वौ भिन्नावाहुः ॥ ११ ॥ पूयी विस( श )रणे दुर्गन्धे च, पूतिर्विस्रः पूतेरिव वा गन्धोस्य । विस्यति विस्रं, विस उत्सर्गे । आमोपक्वो मलस्तस्येव गन्धोस्यामगन्धि, उपमानाच्च ( सू० ) इतीत् । शोकति मनोस्मिञ्शुक्लः, शुक गतौ । शोभते शुभ्रः । शुच्यति शुचिः । श्विता वर्णे, श्वेतते श्वेतः । विशीयते विशदः, विशति चित्ते वा । श्यायते श्येतः । पण्डते याति मनोस्मिन्पाण्डरः– उणादौ ( अरः ) ॥ १२ ॥ अवदायते शोध्यतेवदातः । सिनोति मनः सितः, षिञ् बन्धने । गो( गु )रते मनोस्मिन्गौरः, गुरी उद्यमे,

अवदातः सितो गौरोवलक्षो धवलोर्जुनः ।
हरिणः पाण्डुरः पाण्डुरीषत्पाण्डुस्तु धूसरः ॥ १३ ॥
कृष्णे नीलासितश्यामकालश्यामलमेचकाः ।
पीतो गौरो हरिद्राभः पालाशो हरितो हरित् ॥ १४ ॥
लोहितो रोहितो रक्तः शोणः कोकनदच्छविः ।
अव्यक्तरागस्त्वरुणः श्वेतरक्तस्तु पाटलः ॥ १५ ॥
श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते ।
कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ ॥ १६ ॥
चित्रं किर्मीरकल्माषशव-ब-लैताश्च कर्बु-र्बु-रे ।
गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति ॥ १७ ॥

इति धीवर्गः । ४ ।

ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती ।
व्याहार उक्तिर्लपितं भाषितं वचनं वचः ॥ १ ॥

---

गौर एव गौरः । अवलक्ष्यतेवलक्षः । धूयते मलोस्य धवलः, धावेर्हस्वश्चेति **श्रीभोजः** । अर्ज्यतेर्जुनः । हरति हरिणः । पाण्डुः पाण्डुत्वमस्यास्तीति पाण्डुरः, नगपांसुपाण्डुभ्योरः ( वा० ) । ईषदव्यक्तः पाण्डुः, धूनोति चेतो धूसरः ॥ १३ ॥ वर्णान् कर्षति कृष्णः । नील वर्णे, कः । सितविरुद्धोसितः । श्यायते श्यामः । श्यामं श्यामत्वं लाति श्यामलः । कालयति मनः कालः । मेचयति ( मचति ) मिश्रीभवति मेचकः, मेचकः शिखिकण्ठाभ इति **दुर्गः** । पीयते वर्णात् पीतः । पलाशस्य वर्णस्यायं पालाश : पीतरक्तकृष्णः, **शाश्वतः** पलाश इत्याह– राक्षसे किंशुके पर्णे पलाशाख्यं हरित्यपि । हरति हरितः ॥ १४ ॥ रोहति रोहितः, रलयोरेकत्वम् । शोणति शोणः, शोणृ वर्णे । कोकनदच्छविः पद्माभः । पीतरक्तस्तु पिञ्जरः । रागोत्र लौहित्यम् । इयर्त्यरुणः । पाटलवर्णः ( पाटलः ), पाटेरलज्वा ॥ १५ ॥ श्यायते श्यावो धूसरारुणः । कपेर्मर्कटस्येव वर्णोस्त्यस्य कपिशः, लोमादित्वात् ( सू० ) शः । धूनोति धूमं राति वा धूम्रः । धूमवर्णं लाति धूमलः । कडति कडारः । कपिवर्णं लाति कपिलः । पिञ्जति पिङ्गलः । पिशति पिशङ्गः । कन्दते कद्रुः । पिङ्गं लाति पिङ्गलः । बभ्रुरनेकार्थे । पिशङ्गो रोचनापाण्डुरिति **कात्यः** ॥ १६ ॥ चीयते चित्रम् । कीर्यते किर्मीरः । कलयति वर्णान् कल्माषः । शवति याति वर्णाञ्शवलः । एति वर्णानेतः । क्रियते वर्णैः कर्बुरः, कर्वति वा । गुणमात्रे वर्तमाना गुणाः पुंसि, पटस्य शुक्लः । गुणवद्वृत्तितायां त्वभिधेयलिङ्गाः, शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रम् । वर्णादनुदात्तात्तोपधात्तोनः ( सू० ) इति श्येनी श्येता, लोहिनी लोहिता ॥ १७ ॥ इति धीवर्गः । ४ ।

रूपभेदानुक्त्वा शब्दभेदानाह ब्राह्मीत्विति । ब्रह्मण इयं ब्राह्मी, ब्राह्मोजाताविति ( सू० ) साधुः । अत एव शब्दब्रह्मणोधिष्ठात्र्याः पर्याया एते । व्याहारादयस्त्वधिष्ठेयाः । बिभर्ति भारती । भाष्यते भाषा । गृणाति गीः । उच्यते वाक्, क्विब्वचिप्रच्छीति ( वा० ) क्विप्, दीर्घोसंप्रसारणं च । वाण्यते शब्द्यते वाणी । सरः प्रसरणमस्त्यस्याः सरस्वती । उच्यते वचः, असुन् ॥ १ ॥ संस्कृतादपभ्रश्यत इत्यपभ्रंशः । अपभ्रष्टः शब्दोपशब्दः, गावी गोणी गोपोतालिकादिः । शास्त्रे व्याकरणतर्कशास्त्रादौ यो वाचकः स शब्दः, लोके समुद्रघोषादिरपि । वक्तव्यं वाक्यं, चजोःकुघिण्यतोः ( सू० ), वचोऽशब्दसंज्ञायां ( सू० ) इत्यन्यत्र वाच्यम् । तिङन्तसमूहो यथा– पचति भवति– पाको भवतीत्यर्थः । सुबन्तचयो यथा– प्रकृतिसि-

अपभ्रंशोपशब्दः स्याच्छास्त्रे शब्दस्तु वाचकः ।
तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता ॥ २ ॥
श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः ।
स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी ॥ ३ ॥
शिक्षेत्यादि श्रुतेरङ्गमोङ्कारप्रणवौ समौ ।
इतिहासः पुरावृत्तमुदात्ताद्यास्त्रयः स्वराः ॥ ४ ॥
आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः ।
आख्यायिकोपलब्धार्था पुराणं पञ्चलक्षणम् ॥ ५ ॥
प्रबन्धकल्पना कथा प्रवह्लिका प्रहेलिका ।
स्मृतिस्तु धर्मसंहिता समाहृतिस्तु संग्रहः ॥ ६ ॥

---

भिदं हि महात्मनाम् ( भर्तृ० ), भवत्यध्याहारस्तत्र हि वाचकमात्रम् । कारकैरन्विता संबद्धार्था वा क्रिया वाक्यम्– देवदत्त गामभ्याज शुक्लां दण्डेन । सर्वत्राकाङ्क्षायोग्यतावशादन्वितत्वं लक्षणं, यज्जैमिनिः— अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् । भट्टोपि— साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम् । कर्मप्रधानं गुणवदेकार्थं वाक्यमुच्यते ॥ एकं शब्दात्मनोन्यदर्थात्मकस्य वाक्यस्य लक्ष्मेत्येके ॥ २ ॥ श्रूयते श्रुतिः । विदन्त्यनेन धर्मं वेदः । आम्नायते पारंपर्येणाम्नायः । त्रयोवयवास्त्रयी, अथर्वणत्रय्युद्धारः । त्रय्यनुवादाच्छ्रुत्यादिविधिरिति लिङ्गसंकरदोषो नोद्भावनीयः । निगमोनेकार्थे । वैदिको विधिः– चोदनालक्षणोर्थो धर्मः, यद् गौतमः— श्रुतिस्मृतिविहितो धर्मः । स्मृत्युक्तोपि वैदिक एव, वेदमूलत्वात्स्मृतेः । तद्विधिरिष्टाख्यस्त्रयीधर्मोन्यः पूर्ताख्य इत्येके । ऋच्यते स्तूयतेनया ऋक् । स्यति पापं साम । इज्यतेनेन यजुः ॥ ३ ॥ अङ्ग्यते ज्ञायतेनेनाङ्गमुपकारकम्, शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः । छन्दोविचितिरित्येतैः षडङ्गो वेद उच्यते । ( ओङ्कारः ) स्वार्थे कारः, वर्णात्कारः ( वा० ) इत्यत्र निर्णीतत्वात् । प्रणूयते प्रणवः । इति ह आसीदित्रेतीतिहासः, इतिरेवमर्थे, हः किलार्थे । पुरावृत्तं पूर्वचरितम् । उदात्तानुदात्तस्वरिताः, ऊर्ध्वमादीयत इत्युदात्तः । एकश्रुतिस्तु स्वराविभागः ॥४॥ प्रत्यक्षागमाभ्यामीक्षितस्य पश्चादीक्षणमन्वीक्षा, सा प्रयोजनं यस्याः सान्वीक्षिकी तर्कविद्या । दम्यतेनेन दमनं वा दण्डः, स नीयते दम्यं प्रति प्राप्यते यया सा दण्डनीतिरर्थशास्त्रम् । वार्त्ता वैश्यवर्गे वक्ष्यते । आचष्टे–आख्यायिका वृत्तार्थकथनाद्धर्षचरितादिः । पुरापि नवं ( भवं ) पुराणं यतः– सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ( विष्णुपु० ) ॥ ५ ॥ प्रबन्धस्य कल्पना कथा कादम्बर्यादिरुत्पाद्यत्वात् । प्रवह्लते प्राधान्यं भजते प्रवह्लिका । प्रहेलयत्यभिप्रायं सूचयति प्रहेलिका, हिल हावकरणे । शाब्दी प्रहेलिका यथा– पानीयं पातुमिच्छामि त्वत्तः कमललोचने । यदि दास्यसि नेच्छामि नो चेद् दास्यसि देहि मे ॥ आर्थी यथा– जइ सासुआइ भणिआ पइवासहरम्मि दीवअं देसु । ता की समुद्धऊ[ अ ]मुही हिअअम्मि णिवेसए[ अ ]दि ( दिं )ट्ठिम् ॥ ( यदि श्वश्र्वा भणिता पतिवासगृहे दीपकं देहि । तत् किं समुद्[ द्ध ]तमुखो हृदये निवेशयाति दृष्टिम् ॥ ) उत्सन्नविप्रकीर्णशाखानां मन्वादिभिः स्मरणं स्मृतिः । धर्मः संधीयतेस्यां धर्मसंहिता । समाहरणं संक्षेपः ॥ ६ ॥ अपूर्णत्वाद्विक्षिप्तं[ द्विवाक्षितं ] समस्यते संक्षिप्यतेनया समस्या, संज्ञायांसमजेति ( सू० ) बाहुलकात्क्यप्, ऋहलोर्ण्यति ( सू० ) वा, संज्ञापूर्वकत्वाद् वृध्यभावः, समात्क्यचि सर्वप्रातिपदिकेभ्यः ( वा० ) सुक् इत्येके, ततः अप्रत्ययात् ( सू० ), यथा– दामोदरकराघात विह्वलीकृतचेतसा । दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम् ॥ किं वदन्तीति किंवदन्ती लोकप्रवादः । वृत्तिर्लोकवृत्तं विद्यतेस्यां वार्त्ता, प्रज्ञाश्रद्धार्चावृत्तिभ्योणः (सू०)। वृत्तस्य चरितस्यान्तो वृत्तान्तः । उद्यते– उदन्तः, वदेर्झच् (सू०)।

समस्या तु समासार्था किंवदन्ती जनश्रुतिः ।
वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वयः ॥ ७ ॥
आख्याह्वे अभिधानं च नामधेयं च नाम च ।
हूतिराकारणाह्वानं संहूतिर्बहुभिः कृता ॥ ८ ॥
विवादो व्यवहारः स्यादुपन्यासस्तु वाङ्मुखम् ।
उपोद्घात उदाहारः शपनं शपथः पुमान् ॥ ९ ॥
प्रश्नोनुयोगः पृच्छा च प्रतिवाक्योत्तरे समे ।
मिथ्याभियोगोभ्याख्यानमथ मिथ्याभिशंसनम् ॥ १० ॥
अभिशापः प्रणादस्तु शब्दः स्यादनुरागजः ।
यशः कीर्तिः समा(म)ज्ञा च स्तवः स्तोत्रं स्तुतिर्नुतिः ॥ ११ ॥
आम्रेडितं द्विस्त्रिरुक्तमुच्चैर्घुष्टं तु घोषणा ।
काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः ॥ १२ ॥
अवर्णाक्षेपनिर्वादपरीवादापवादवत् ।
उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ॥ १३ ॥
पारुष्यमतिवादः स्याद् भर्त्सनं त्वपकारगीः ।
यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् ॥ १४ ॥
तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति ।
स्यादाभाषणमालापः प्रलापोनर्थकं वचः ॥ १५ ॥

---

आहूयतेनेनाह्वयः, बाहुलकाद् घः ॥ ७ ॥ नमत्यनेन नाम । ( नामधेयं ) भागरूपनामभ्योधेयः (वा०) स्वार्थे । आकारणमाकारणा, युच्, ल्युडन्तेन समाहारो वा । बहुभिः कृता या हूतिः सा संहूतिः, स्वद्शाह्वय इति **भागुरिः** ॥८॥ विविधो वादः ( विवादः ) । ऋणादानादिर्व्यवहारः, यत्स्मृतिः (याज्ञव०) —वि नानार्थेव संदेहे हरणं हार उच्यते। नानासंदेहहरणाद् व्यवहारः प्रकीर्तितः॥ वाचो मुखमारम्भः। उप समीप उध्दृत्य हन्यत उपोद्घातः, यदाहुः– चिन्तां प्रकृतसिद्धयर्थामुपोद्घातं प्रचक्षते । उध्दृत्याह्रियत उदाहारः । वाचा शरीरस्पर्शनं ( शपनं ) । शापोपीत्य**मरमाला** ॥ ९ ॥ प्रच्छनं प्रश्नः, यजयाचेति ( सू० ) नङ्, च्छ्वोःशूडिति ( सू० ) शः । अनुयोगः पर्यनुयोगः । पृच्छा भिदादौ (षिद्भिदादीति) । उत्तरन्त्यनेनोत्तरं, उदो वा तरप् । मिथ्याभियोगोसत्याक्षेपः । मिथ्यादूषणमभिशाप इत्येके ॥ १० ॥ शब्दनं शब्दः प्रसिद्धः ( प्रणादः ), यत्कात्यः– शब्दो गुणानुरागोत्थः प्रणादः । यात्यश्नुते वा दिशो यशः । ऊतियूतीति ( सू० ) कीर्तिः साधुः । समाज्ञायतेनया समाज्ञा । श्लोकाभिख्ये अनेकार्थे ॥ ११ ॥ ( आम्रेडितं ) द्विर्भूते पूर्वाचार्यसंज्ञैषा, अतश्च म्रेडृ उन्माद इति पेठुः । द्वौ वारौ त्रीन् वारान्वेति, द्वित्रिचतुर्भ्यःसुच् ( सू० ) । विशब्दनाविवक्षातो घुषिरविशब्दने ( सू० ) इति नेट् । ( घोषणा ) ण्यासश्रन्थोयुच ( सू० ) । कायति काकुः । आदिशब्दात्कामादिः ॥ १२ ॥ अवर्णो विपरितवर्णनम् । निष्क्रान्तो वादान्निर्वादः । उपक्रोशवदवर्णादयः पुंसीति वाच्ये प्रौढिम्नान्यथोक्तिः ॥ १३ ॥ ( पारुष्यं ) मैवं कृथाः ( इति ) वाच्यतेत्यर्थः ॥ १४ ॥ मैथुनमुद्दिश्य गाली इत्यर्थः, दूषणमित्येके। क्षारणापि, क्षारणाक्षारणाक्रोशाः साभिशापाभिमैथुना इति **दुर्गः** ॥ १५ ॥ ( अनुलापः ) पौनःपुन्येनोक्तिः । ( विलापः ) अनुशोचनमित्यर्थः । ( विप्रलापः ) विरुद्धं प्रलपनम् । मिथोन्योन्यमुक्तिप्रत्युक्ती संलापः ।

अनुलापो मुहुर्भाषा विलापः परिदेवनम् ।
विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः ॥ १६ ॥
सुप्रलापः सुवचनमपलापस्तु निह्नवः ।
संदेशवाग्वाचिकं स्याद्वाग्भेदास्तु त्रिषूत्तरे ॥ १७ ॥
रुष(श)ती वागकल्याणी स्यात्कल्या तु शुभात्मिका ।
अत्यर्थमधुरं सान्त्वं संगतं हृदयंगमम् ॥ १८ ॥
निष्ठुरं परुषे ग्राम्यमश्लीले सूनृतं प्रिये ।
सत्येऽथ संकुलक्लिष्टे परस्परपराहते ॥ १९ ॥
लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदितम् ।
अम्बूकृतं सनिष्ठेवमबद्धं स्यादनर्थकम् ॥ २० ॥
अनक्षरमवाच्यं स्यादाहतं तु मृषार्थकम् ।
अथ म्लिष्टमविस्पष्टं वितथं त्वनृतं वचः ॥ २१ ॥
सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति ॥ २२ ॥
शब्दे निनादनिनदध्वनिध्वानरवस्वनाः ।
स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः ॥ २३ ॥
आरवारावसंरावविरावा अथ मर्मरः ।
स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितम् ॥ २४ ॥

---

संकथापि ॥ १६ ॥ चोद्यमाक्षेपाभियोगौ शापाक्रोशौ दुरेषणा । अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्या विकत्थनं- इति वक्तव्यम् । दुरेषणा दुरभिध्यानम् । ( चाटु, चटु ) प्रेम्णा श्लाघनं, चटतीति चटेः णुण्, उन् च । के, चाटुकम् । असत्या तु श्लाघा विरुद्धं कत्थनं ( विकत्थनम् ) । लेखादिनाधिगतेऽर्थे मुखस्वरूपं वाचिकं, वाचोव्याहृतार्थायां( सू० )इति ठक् । उत्तरे वक्ष्यमाणा, यथा- रुषती वाक्, रुषच्छब्दः, रुषद्वचः॥ १७॥ ( रुषती ) हिंस्रेत्यर्थः, न तां वदेद्रुषतीं (गां) पापलोक्याम् । अत उषतीत्यसभ्यः पाठः। कलासु साधुः कल्या, काल्येति कात्यायनः। सान्त्व्यतेऽनेनेति सान्त्वं, सामयतेर्वा-औणादिकस्त्वत् । ( हृदयंगमं ) गमेःसुपिवक्तव्यात् ( वा० ) खच् ॥ १८ ॥ निशितं तिष्ठति निष्ठुरम् । विकुष्टं च । ग्रामे भवं ग्राम्यं, ग्रामाद्यखञौ( सू० )। असभ्यस्मृतिहेतुश्चाश्लीलं- अश्रीप्रदं भाण्डादि । प्रियं सत्यं वचनं सूनृतं, सुष्ठून्यते सून, सूनं च तदृतं च सूनृतम् । अन्योन्यविरुद्धं संकुलं क्लिष्टं च, यथा- अन्धो मणिमुपाविध्यत्तमनङ्गुलिरावयत् । तमग्रीवः प्रत्यमुञ्चत्तमजिह्वोऽभ्यपूजयत् ॥ १९ ॥ ( ग्रस्तं ) असंपूर्णोच्चारितम् । अनम्बुनोऽम्बुनः करणमम्बूकृतं, च्वौ च ( सू० ) इति दीर्घः। निष्ठेवस्थूत्कारः, ष्ठिवुष्ठिवोर्वादीर्घः ( चान्द्रसू० ), पक्षे सनिष्ठीवम् । असंबद्धं दशदाडिमादि वाक्यं समुदायार्थशून्यम् ॥ २० ॥ ( अनक्षरं ) विरोधे नञ् । ( आहतं ) यथा-एष वन्ध्यासुतो याति खपुष्पकृतशेखरः । मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः ॥ सोल्लुण्ठनं तु सोत्प्रासं मणितं रतिकूजितम् । श्रव्यं हृद्यं मनोहारि विस्पष्टं प्रकटोदितमिति क्वचित्पाठः । म्लेच्छेर्म्लिष्टं, क्षुब्धस्वान्तध्वान्तेति ( सू० ) साधुः । विगतं तथा सत्यं यत्र वितथम् ॥ २१ ॥ सति साधु सत्यम् । तथा साधु तथ्यम् । समञ्चति सम्यक्, तदेव समीचीनं, समीची समीचीना वाक्, समःसमि ( सू० ) इत्यञ्चतावप्रत्यये समिः, नामैतत्, सम्यक्त्वव्ययम् । वाग्भेदास्त्रिषूक्ताः, ( यथा ) सत्याशीः, सत्यः शब्दः, सत्यं वचः । यदा तु सत्यवाक्त्वादिना तद्वति वर्तन्ते तदापि त्रिषु, यथा सत्यं कुलं, सत्या स्त्री, सत्यः पुमान् । एवं ग्राम्यनिष्ठुरादयः ॥२२॥ ( निनाद इ० ) नौगदनदाति ( सू० ) वा, स्वनहसोर्वा ( सू० ), विभाषाङिरुप्लुवोः ( सू० ), उपसर्गेरुवः ( सू० ) इति च यथास्वं घञपौ ॥ २३ ॥ मर्मरेति शब्दानुकरणम् । स्वनित इत्येव ( भूषणानाम् ), शिञ्जापि ॥ २४ ॥

निक्काणो निक्कणः क्काणः क्कणः क्कणनमित्यपि ।
वीणायाः क्कणिते प्रादेः प्रक्काणप्रक्कणादयः ॥ २५ ॥
कोलाहलः कलकलस्तिरश्चां वासि-शि-तं रुतम् ।
स्त्री प्रतिश्रुत् प्रतिध्वाने गीतं गानमिमे समे ॥ २६ ॥

इति शब्दादिवर्गः । ५ ।

निषादर्षभगान्धारषड्जमध्यमधैवताः ।
पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठात्थिताः स्वराः ॥ १ ॥
काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे ।
कलो मन्द्रस्तु गम्भीरे तारोत्युच्चैस्त्रयस्त्रिषु ॥ २ ॥
समन्वितलयस्त्वेकतालो वीणा तु वल्लकी ।
विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी ॥ ३ ॥
ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् ।
वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥ ४ ॥

---

एते क्कणितमात्रे वीणायामवीणायां च, क्कणोवीणायांच ( सू० ) इति चकारेण नावित्यनुपसर्गे इति( च ) सामान्येनानुकर्षणात् । उपसर्गात्क्कणो वीणायामेव घञो विकल्पात्सोपसर्गार्थं हि तत्र वीणाग्रहणम् । एवं सुक्काणसुक्कणादिः ॥ २५ ॥ कोलान् सूकरानाहलते त्रासयति कोलाहलः । कलोव्यक्तः, आभीक्ष्ण्ये द्विर्भावः । रुतमनूद्य वासि-शि-तविधिः, तिर्यञ्चो मृगपक्ष्यादयः, तिर्यग्योनिश्च पञ्चधा भवतीति । प्रतीपं श्रूयते प्रतिश्रुत् । पदस्वरतालावधानात्मकं गान्धर्वरागगीत्यादिकं गीतं, प्रावेशिक्यादि ध्रुवारूपं गानमिति **भरता**द्युक्तो विशेषो नाश्रितः ॥ २६ ॥ इति शब्दादिवर्गः । ५ ।

निषीदन्त्यस्मिन् रागो निषादः, निषदोपि । ऋषभो गोरुतसंवादित्वात्, यदाहुः-- षड्जं मयूरा ब्रुवते गावस्त्वृषभभाषिणः । अजाविकं तु गान्धारं क्रौञ्चः क्कणति मध्यमम् ॥ पुष्पसाधारणे काले पिकः कूजति पञ्चमम् । धैवतं हेषते वाजी निषादं बृंहते गजः ॥ गां धयति [ गां वाचं धारयति ] इति गान्धारः । षड्भ्यो जातः षड्जः, यदाहुः-- नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संस्पृशन् । षड्भ्यः संजायते यस्मात्तस्मात्षड्ज इति स्मृतः । धीवतामयं धैवतः । दारवी गात्रवीणा च द्वे वीणे स्वराधारौ, वंशमुरजाद्योनुकरणमात्रेणेति नोक्ताः ॥ १ ॥ ध्वनावित्येव, मधुरेल्पे शब्दे काकली, ईषत्कलोस्याम् । कलति कलयतीति वा कलः । मन्दते मन्द्रः, मद्रोपि । ध्वनावित्येव, तारयति स्वनं स्थानेभ्यस्तारः, यद्दन्तिलः-- नृणामुरसि मन्द्रस्तु द्वाविंशतिविधो ध्वनिः । स एव कण्ठे मध्यः स्यात्तारः शिरसि गीयते ॥ कलमन्द्रतारा गुणिलिङ्गाः ॥२॥ समन्वितोनुगतो लयो द्रुतादिर्यत्र, एकः समस्तालो मानमस्यैकतालः, अभिन्नकालमान इत्यर्थः। एकं तननमस्यैकतानो वा, एकतानमनाकुलमिति **दुर्गः**। वेति जायते स्वरोस्यां वीणा । वलते (वल्लते) स्वरोस्यां वल्लकी, वलतिः (वल्लिः)सौत्रो वा हृद्यार्थः। विपञ्च्यते स्वरोस्यां विपञ्ची। घोषवती च। ( परिवादिनी ) परिवदत्यवश्यं सप्तस्वरत्वात् ॥ ३ ॥ तन्त्रीतननात्ततम् । आदिशब्दात्सैरन्ध्रीरावणहस्तकिन्नर्यादि । आनह्यते स्म चर्मणानद्धम् । अवनद्धं च । आदिशब्दाद् दर्दुरकरटादि । सुषिश्छिद्रं विद्यतेस्य सुषिरम्, शुषिरमिति **प्राच्याः**, ऊषसुषीति ( सू० ) रः । कांस्यमयस्तालो वादित्रम् । आदिशब्दाच्छम्यादि । हन्यते घनं, मूर्तौघनः(सू०) ॥४॥ वाद्यते ( वाद्यं, वादित्रं ), आतुद्यते च, यद्भरतः-- ततं चैवावनद्धं च घनं सुषिरमेव च । चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम् ॥ मृद्यन्ते मृदङ्गाः, मृद्-अङ्गं वैषाम् । मुरात्संवेष्टनाज्जाता मुरजाः । भेदा एषां विशेषाः । अङ्कोस्यास्त्यङ्की[ क्यः ]

चतुर्विधमिदं वाद्यवादित्रातोद्यनामकम् ।
मृदङ्गा मुरजा भेदास्त्वङ्क्यालिङ्ग्यू-ग्यो-र्ध्वकास्त्रयः ॥ ५ ॥
स्याद्यशःपटहो ढक्का भेरी स्त्री दुन्दुभिः पुमान् ।
आनकः पटहोऽस्त्री स्यात्कोणो वीणादिवादनम् ॥ ६ ॥
वीणादण्डः प्रवालः स्यात्ककुभस्तु प्रसेवकः ।
कोलम्बकस्तु कायोऽस्या उपनाहो निबन्धनम् ॥ ७ ॥
वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः ।
मर्दलः पणवोऽन्ये च नर्तकीलासिके समे ॥ ८ ॥
विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ।
तालः कालक्रियामानं लयः साम्यमथास्त्रियाम् ॥ ९ ॥
ताण्डवं नटनं नाट्यं लास्यं नृत्यं-त्तं च नर्तने ।
तौर्यत्रिकं नृत्य-त्त-गीतवाद्यं नाट्यमिदं त्रयम् ॥ १० ॥

---

उत्सङ्गस्थत्वात् । आलिङ्ग्योऽस्यास्त्यालिङ्गी[ ग्यः ] आलिङ्ग्य वादनात् । ऊर्ध्वीकृत्यैकेन मुखेन वादनादूर्ध्वे कायति- ऊर्ध्वक आ॰ोगिकाख्यः, आहुश्च- हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वकः । आलिङ्ग्यश्चैव गोपुच्छो मध्यदक्षिणवामगाः ॥ नाट्ये चैतत् ॥ ५ ॥ यात्रादौ यशोर्थे पटहो हन्यते स यशःपटहः । ढगित्यव्यक्तं कायति ढक्का । बिभ्यत्यस्या रणे भेरी । भम्भापि । दुन्दुशब्देन भाति भासयति वा दुन्दुभिः । आ-अनित्यानकः । द्वौ द्वौ भिन्नार्थावाहुः । कुणत्यनेन कोणो वादनकाष्ठं ढक्काद्युपयोगी, कुण शब्दे । शततन्त्रीरप्यनेन वाद्यते, अत एव कोणो वादित्रवादनमित्याहुः ॥ ६ ॥ कुब्जवीणादण्डः प्रवालः, ज्वलादित्वाण्णः ( ज्वलितिकसन्तेभ्योणः ), यच्छाश्वतः- प्रवालो वल्लकीदण्डे विद्रुमे नवपल्लवे । कङ्कते ककुभः, दण्डाधः शब्दगाम्भीर्यार्थं दारुमयं भाण्डं यद् भस्त्रयाच्छाद्यते । केवलम्बन्ते तन्त्र्योऽत्रेत्यपभ्रंशे कोलम्बकः, कुल संस्त्यान इत्यस्माद्वा-अम्बच् । येन चर्मणा ( ! ) उपनह्यते ( उपनाहः ), यत्र तन्त्र्यो निबध्यन्ते च ( निबन्धनम् ) ॥ ७ ॥ डमित्यव्यक्तं शब्दमियर्ति डमरुः । मड्डु कायति मड्डूच्चारणात्, मड्डुकं जलवाद्यमाहुः । डिण्डिमझर्झरौ शब्दानुकारात् । झर्झरः करटेत्येके । मर्द्यते मर्दलः, मर्दं लाति मर्दल इति तु कवयः । पणायत्यन्तस्तन्त्रीकः पणवः । अन्ये हुडुक्कागोमुखादयः । नृत्यति नर्तकी, शिल्पिनि ष्वुन् ( सू॰ ), नृतिखनिरञ्जिभ्यःपरिगणनं ( वा॰ ) । लसति संनमति लासिका ॥ ८ ॥ विलम्बितादीनां लयानां तत्त्वाद्याः पर्याया इत्यभिधानकारः, नाट्ये तु विलम्बितानुसारेण क्रमात्तत्त्वाद्या वाद्यप्रकाराः । कालस्य क्रियया- आवापनिष्क्रमादिकया मानं परिच्छेदकं प्रतिष्ठाहेतुस्तालः- बद्धपुटादि ( ? ), मे[ गे ]याया मा[ गा ]नक्रियायाः कालनियमहेतुरित्येके, यद् दन्तिलः- तत्र ज्ञेयाः कलापाताः पादभागा[ पादमान ]स्तथैव च । मात्रा च परिवर्तश्च वस्तु चैव विशेषतः ॥ मा[ गा ]नमे[ गे ]ययोरन्यूनाधिक्ये श्लिष्टता लयो द्रुतादिः, वाद्यादीनामन्योन्यं समत्वमिति यावत् । तालविशेषस्तु लयोऽन्यः ॥ ९ ॥ [ नाट्यशास्त्रे प्रत्येकं भेदोऽस्ति । तत्रोद्धतकरणाङ्गहारनिर्वर्त्यमारभटीवृत्तिप्रधानं गीतकानुसारित्वादादौ तण्डु( मुनि )ना प्रणीतं ताण्डवम् । ललिताङ्गहाराभिनयं कैशिकीवृत्तिप्रधानं वासकसज्जादिनायिकाचरितं डोचिलि[ ल्लि ]कादिनिबद्धं श्लिष्टत्वाल्लास्यम् । नृत्यं[ त्तं ] त्वङ्गविक्षेपमात्रं विवाहाभ्युदयादौ । ] नाट्यं तु सर्वरसं पञ्चसंधि चतुर्वृत्ति दशरूपकाश्रयं नटकर्म, तदाह- नृत्या[ त्ता ]दि त्रयं समुदितं- तूर्यस्येदं त्रिप्रमाणं तौर्यत्रिकं नाट्यं च । आभ्यामन्यल्लुठनमात्रम् ॥ १० ॥ भ्रुवः कुंसनं भासनमस्य, इकोहस्वोऽङ्‍योगालवस्य ( सू॰ )

भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः ।
स्त्रीवेषधारी पुरुषो नाट्योक्तौ गणिकाज्जुका ॥ ११ ॥
भगिनीपतिरावुत्तो भावो विद्वानथावुकः ।
जनको युवराजस्तु कुमारो भर्तृदारकः ॥ १२ ॥
राजा भट्टारको देवस्तत्सुता भर्तृदारिका ।
देवी कृताभिषेकायामितरासु तु भट्टिनी ॥ १३ ॥
अब्रह्मण्यमवध्योक्तौ राजश्यालस्तु राष्ट्रियः ।
अम्बा माताथ बाला स्याद्वासूरार्यस्तु मारिषः ॥ १४ ॥
अत्तिका भगिनी ज्येष्ठा निष्ठानिर्वहणे समे ।
हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति ॥ १५ ॥
अङ्गहारोङ्गविक्षेपो व्यञ्जकाभिनयौ समौ ।
निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके ॥ १६ ॥
शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ।
वीभत्सरौद्रौ च रसाः शृङ्गारः शुचिरुज्ज्वलः ॥ १७ ॥

---

इति ह्रस्वः, अभ्रुकुंसादीनां ( वा० ) इति च पक्षे– अत्वम् । एवं भ्रुकुट्यादि । गणयतीश्वरान्– ईश्वरो गणः पेटकोस्त्यस्या वा गणिका वारमुख्या । अज्जुका– असत्प्रकृतिप्रत्ययविभागा देशीयपदप्राया । नाट्योक्तौ नाट्यविद्यायां नान्यत्रेत्यधिकारः ॥ ११ ॥ भावयति भाव इत्यवगमान्नाट्यादन्यत्राप्येषां प्रयोगे न दोषः, यद्भरतः– मान्ये भावोपि वक्तव्यः किञ्चिदूनेषु मारिषः ॥१२॥ ( देवी ) श्रीमहादेव्यां वासवदत्तादौ । अकृताभिषेकराज्ञीमध्यादेकैका भट्टिनी पद्मावत्यादिः ॥ १३ ॥ वधानर्हस्य ब्राह्मणस्य पूत्करणे, न ब्रह्मणि साधु ( अब्रह्मण्यं ), साध्वर्थेयत् ( तत्रसाधुः ) । नाट्यादन्यत्र राष्ट्राधिकृतो राष्ट्रियः, राष्ट्रावारपारेतिघः ( सू० ) । अम्ब्यते शब्द्यते बालैः, लोकेप्यम्बा ह्रस्वविधेः ( अम्बार्थनद्योर्ह्रस्वः ) । वास्यते प्रीत्या वासूः । आरात्पापकेभ्यः कर्मभ्यो जात आर्योरणीयोभिगम्यो वा । मर्षणात्सहनान्मारिषः । मार्षोपि यथा परिषत्पर्षत् ॥ १४ ॥ अत्ता मातेवात्तिका । नियतं स्थानं निष्ठा । निःशेषेण वहनं समाप्तिर्निर्वहणम् । मुखप्रतिमुखगर्भावमर्षनिर्वहणाख्या हि पञ्च संधयः । नाट्योक्तौ नीचां प्रति हण्डे आह्वानं, चेटीं प्रति हञ्जे, सखीं प्रति हला ॥ १५ ॥ अङ्गस्य स्थानात्स्थानान्तरानयनमङ्गहारः स्थिरहस्तादिर्द्वात्रिंशद्वा । व्यनक्ति व्यञ्जकः । आभिमुख्यं नीयतेर्थोनेनाभिनयः, वाचिकाङ्गिकाहार्यसात्त्विकाख्यो भावसूचकः । अङ्गेन सन्निर्वृत्तं तत् ( आङ्गिकं ), तत्र भवत्येवेति– अध्यात्मादित्वात् ( वा० ) ठञ् , निर्वृत्तेक्षद्यूतादिभ्यः ( सू० ) इति योगविभागाट्ठग्वा । सत्त्वं मनो गुणो वा तेन निर्वृत्तः सात्त्विकः, यदाह– सत्त्वोत्कटे मनसि ये प्रभवन्ति भावास्ते सात्त्विका इति, समाहितमनस्कत्वाद्धानुकर्तुर्जायन्ते ॥ १६ ॥ रत्यादयो भावा अनुक्रियमाणाः सामाजिकैः– रस्यन्त इति रसाः, यदाहुः— विभावैरनुभावैश्च युक्तोथ व्यभिचारिभिः । आस्वाद्यत्वात्प्रधानत्वात्स्थाय्येव तु रसीभवेत् ॥ वत्सलः पुत्रादिस्नेहात्मा रतिभेद एव । शान्तस्त्वलौकिकत्वान्नोक्तः, चशब्दात्संगृहीतो वा । शृङ्गमुत्तमत्वमियर्ति शृङ्गारः । उत्तमयुवप्रकृतित्वेन जुगुप्सादिरहितत्वाच्छुचिः (शुद्धः) । उज्ज्वलो वेषौचित्येन च । लक्षणमेतन्न त्वेतौ शृङ्गारपर्यायौ ॥ १७ ॥ उत्साहो हि वीररसस्य स्थायी भावः, एवं स्थायी भावः स्फीततयैवास्वाद्यत इति सर्वरसलक्षणं कटाक्षितम् । शोकस्थायिप्रभवः करुणो रसो धर्मद्वारेणोक्तः । [ घृण्यतेनया ] घृणा । दय्यन्तेनया दया, दय रक्षणे, भिदाद्यङ्

उत्साहवर्धनो वीरः कारुण्यं करुणा घृणा ।
कृपा दयानुकम्पा स्यादनुक्रोशोप्यथो हसः ॥ १८ ॥
हासो हास्यं च बीभत्सं विकृतं त्रिष्विदं द्वयम् ।
विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम् ॥ १९ ॥
दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् ।
भयंकरं प्रतिभयं रौद्रं तूग्रममी त्रिषु ॥ २० ॥
चतुर्दश दरस्त्रासो भीतिर्भीः साध्वसं भयम् ।
विकारो मानसो भावोनुभावो भावबोधकः ॥ २१ ॥
गर्वोभिमानोहंकारो मानश्चित्तसमुन्नतिः ।
अनादरः परिभवः परीभावस्तिरस्क्रिया ॥ २२ ॥
रीढावमाननावज्ञावहेलनमसूक्षणम् ।
मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः ॥ २३ ॥

---

( षिद्भिदादिभ्योङ् )। कृपेः कृपा, भिदादित्वादङ् (सू०)। अनुक्रोशन्ति समदुःखा भवन्त्यनेनानुक्रोशः ॥१८॥ स्थाय्येव तु रसीभवेदिति भावरसयोः पर्यायत्वेन ध्वनति । ( हसः, हासः ) स्वनहसोर्वेत्यप् ( सू० ) । हसनीयं हासे साधु वा हास्यम् । बधेर्निन्दायां सन्, बीभत्सास्य बीभत्सः, अप्रत्ययात् ( सू० ), अर्श आदिभ्योच् ( सू० )। जुगुप्साप्रभवत्वाद्विकृतः, यद्दाह– विष्ठाकृमिज उद्वेगी क्षोभणो रुधिरादिभिः । बीभत्सो द्विविध इति, रसे तु पुमान्– तद्वति त्रिलिङ्गः । ( बीभत्सं, विकृतं ) द्वयमित्यनयोः पर्यायतामाह। प्राग्वद्भावरसयोः पर्यायत्वम्, अद्भुतस्य विस्मयस्थायिभावात्मकत्वात्, विपूर्वः स्मिङ् अद्भुतार्थः। अत्– आश्चर्यार्थेव्ययम्, तस्य भवनमद्भुतम्, अदिभवोडुतच् ( उ० )। आचरणीयं, आश्चर्यमनित्ये ( सू० ) इति साधुः । चित्र कदाचिद्दर्शने, अच् ॥ १९ ॥ भीरोरयं त्रासनकृद् भैरवः । दारयति चित्तं दारुणः । भीषयते भीषणः । बिभ्यत्यस्माद् भीष्मः । ( भीमः ) भीमादयोपादाने ( सू० )। ( घोरः ) घुर भीमार्थे । बिभ्यत्यस्माद्भयानकः, आनकःशीङ्भियः ( उ० )। भयं करोति भयंकरः, मेघर्तिभयेषुकृञः ( सू० ) खच् । प्रतिगतं भयेन प्रतिभयम्, कुगतिप्रादयः ( सू० ) इति समासः । रुद्रस्यायं रौद्रः क्रोधात्मा । अमी अद्भुताद्या उग्रान्ता रसेषु पुंलिङ्गास्तद्वति त्रिलिङ्गाः । रौद्रादिकं तु रसे नपुंसकमिति **नारायणः** ॥ २० ॥ रसानुक्त्वोच्चावचभावानाह दरेति । दीर्यन्तेस्मादृरः, लिङ्गभेदेर्थभेदाद् द्विलिङ्गः, दरी गुहा । साधूनस्यति साध्वसम् । भयं भीः, संपदादिभ्यःक्विप् ( वा० ) । भीतिर्भयं, अज्विधौ– भयादीनामुपसंख्यानंनपुंसकेक्तादिनिवृत्त्यर्थम् ( वा० )। चेतसा भाव्यते सुखादिः स्वकारणाद्भवतीति वा चित्तवृत्तिविशेषो भावः, भावयति करोति रसान्वा, यद्भरतः– नानाभिनयसंबद्धान्भावयन्ति रसानिमान् । यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ॥ ते च– रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्साविस्मयशमाः स्थायिभावा रसोद्भवाः ॥ भावं योनुभावयति मुखरागादिः, यदुक्तं– अनुभावस्त्वभिनयः पश्चादर्थप्रकाशनम् ॥ २१ ॥ व्यभिचार्यादीनाह । मत्समो नास्तीति मननं मानः । ममताहंता दर्पोवलेपोपि । ( परिभव इत्यादि ) परौभुवोवज्ञाने (सू०) इति वा घञ् । (तिरस्क्रिया) तिरोन्तर्धौ ( सू० ) गतिः, परिभवेन्तर्ध्युपचारात्, अतः– तिरसोगताविति ( चान्द्रसू० ) सत्वम् ॥ २२॥ रिह कत्थनादौ, रेहणं रीढा, क्तः, होढः (सू०), ढ्रलोपेपूर्वस्यदीर्घोणः (सू०)। अवहेलनमवहेलं, हेडृ अनादरे, डलयोरैक्यम् । अवहेलापि । न सुष्ठु– उक्षणमसूक्षणमिति लक्षणयावज्ञा गम्यते, यत्कौटिल्यः– अयमुच्चैः सिञ्चतीति दीर्घश्चारायणः प्राव्राजीत् । असूर्क्षणमित्येके, सूर्क्ष्यतेः– यस्यहलः ( सू० ) इति यलोपात् । निकारोभिभवः पराभवो न्यक्कारश्च ।

क्षान्तिस्तितिक्षाभिध्या तु परस्य विषये स्पृहा ।
अक्षान्तिरीर्ष्यासूया तु दोषारोपो गुणेष्वपि ॥ २४ ॥
वैरं विरोधो विद्वेषो मन्युशोकौ तु शुक् स्त्रियाम् ।
पश्चात्तापोनुतापश्च विप्रतीसार इत्यपि ॥ २५ ॥
कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियाम् ।
शुचौ तु चरिते शीलमुन्मादश्चित्तविभ्रमः ॥ २६ ॥
प्रेमा ना प्रियता हार्दं प्रेम स्नेहोथ दोहदम् ।
इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छालिप्सा मनोरथः ॥ २७ ॥
कामोभिलाषस्तर्षश्च सोत्यर्थं लालसा द्वयोः ।
उपाधिर्ना धर्मचिन्तापुंस्याधिर्मानसी व्यथा ॥ २८ ॥
स्याच्चिन्ता स्मृतिराध्यानमुत्कण्ठोत्कलिके समे ।
उत्साहोध्यवसायः स्यात्स वीर्यमतिशक्तिभाक् ॥ २९ ॥
कपटोस्त्री व्याजदंभोपधयश्छद्मकैतवे ।
कुसृतिर्निकृतिः शाठ्यं प्रमादोनवधानता ॥ ३० ॥

---

मन्दमाक्षि यत्र तन्मन्दाक्षम् । व्रीडावनम्रवक्त्रेन्दुरिति स्वोत्थलज्जावशाद्विवक्षुरवनमति मुखमिति मन्दास्य- मित्येके । ( व्रीडा ) व्रीडादमुं देवमुदीक्ष्येति पुंस्यपि । सा लज्जा परस्माल्लज्जावहे जा( य )तेपत्रपा ॥ २३ ॥ ( क्षान्तिः ) बाहुलकात्क्तिन् । ( तितिक्षा ) गुप्तिज्किद्भ्यः- ( सू० ), निन्दाक्षमाव्याधि- प्रतीकारेष्विति ( वा० ) सन् । क्षमा मर्षः सहनं च । अभिचारेण ध्यानमभिध्या, परस्वविषयस्पृहेत्येके, दोषचिन्तापूर्वं परस्वे लिप्सेत्यर्थः, यत्कात्यः- विषयप्रार्थनाभिध्या । भार्यादेः परदर्शनासहने रूढाऽक्षा- न्तिरीर्ष्या, अयं तु परोत्कर्षासहनं मात्सर्यमीर्ष्यां मन्यते य ईर्ष्युः परवित्तेष्वितिवत् । ( असूया ) असूञ् कण्ड्वादिः ॥ २४ ॥ वीरस्य कर्म वैरं, द्वन्द्वाद्वुन्वैरमैथुनिकयोः ( सू० ) इति लिङ्गादण् । इत्थमीर्ष्या- सूयाद्वेषाणां भेदाद्- द्वेषो ना स्यादसूयेर्ष्येति मालाकारो भ्रान्तः । मन्यते मन्युर्दैन्यमिह, यच्छा- श्वतः- निगदन्ति क्रुधं मन्युं मन्युरध्वरदैन्ययोः । शोचनं शुक् । ( विप्रतीसारः ) उपसर्गस्यघञ्यम- नुष्येबहुलं ( सू० ) इति दीर्घः, पक्षे विप्रतिसारः । अनुशयो वक्ष्यते ॥ २५ ॥ प्रतिहन्यतेनेन प्रतिघः, करणेहनः ( सू० ), परौघः ( सू० ) इति बाहुलकाद् घत्वं च । शुचौ शुद्धे, तृतीयादिषुभाषितपुंस्कात् ( सू० ) वाल पुम् । ( शीलं ) शील समाधाने । चर्यतेनेन चरितम् । चरित्रं च । ( उन्मादः ) चित्ता- नवस्थितिर्भूताद्यावेशात् ॥ २६ ॥ प्रियस्य भावः प्रेमा, प्रियस्थिरेति ( सू० ) प्रादेशः । हृदयस्य कर्म हार्दम्, युवादित्वादण् ( हायनान्तयुवादिभ्योण् ), हृदयस्यहृल्लेखयदण्लासेषु ( सू० ) । प्रीतिः प्रेम, प्रीञो मनिन् ( अन्येभ्योपिदृश्यन्ते ) । दोहमाकर्षणं ददाति दोहदम् । मन एव रथो दूरगामि यत्र मनो- रथः । मनोमवी च ॥ २७ ॥ सातिशयेनेच्छा भृशं लसनं लालसा, लल इप्सायां वा । उप समीपे- आधिरस्य, उपपन्न आधिर्वा- उपाधिः । आधीयते चिन्तानेनेत्याधिः ॥ २८ ॥ ( आध्यानं ) ध्यै चिन्ता- याम् । चिन्ति ( त्ति )श्च । स्त्रीत्वेनापि साम्यं ( उत्कण्ठोत्कलिकयोः ), आध्यानमिह संबध्नन्ति, यत्का- शिका- आध्यानमुत्कण्ठापूर्वक स्मरणम् । उद्यमोद्योगौ च ( अध्यवसायार्थौ ) । उत्साहः सातिशयो वीर्यं, वीरस्य कर्म, वीरवीर्यौच ( सू० ) इति गण-( सूत्र- )पाठात्साधुः ॥२९॥ के मूर्ध्नि पट इवाच्छा- दकः कपटः । उपधीयते स्फटिकस्येव सिन्दूरमुपधिः । छाद्यतेनेन रूपं छद्म, इस्मन्त्रन्क्विषुचेति ( सू० ) ह्रस्वः । कितवस्य कर्म कैतवम् । कुत्सिता सृतिर्हिंसार्थे कुसृतिः, पूर्ववत् तु वञ्चना फलम् । निकृष्टा कृतिर्निकृतिः । शठस्य कर्म शाठ्यम् । अनवाहितत्वं कार्येवलेपः ॥ ३० ॥ कुर्भूमिस्तुद्यतेनेन कुत्सितं

कौतूहलं कौतुकं च कुतुकं च कुतूहलम् ॥ ३१ ॥
स्त्रीणां विलासविब्बोकविभ्रमा ललितं तथा ।
हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः ॥ ३२ ॥
द्रवकेलिपरीहासाः क्रीडा ली(खे)ला च नर्म च ।
व्याजोऽपदेशो लक्ष्यं च क्रीडाखेला च कूर्दनम् ॥ ३३ ॥
घर्मो निदाघः स्वेदः स्यात्प्रलयो नष्टचेष्टता ।
अवहित्थाकारगुप्तिः समौ संवेगसंभ्रमौ ॥ ३४ ॥
स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक् स्मितम् ।
मध्यमः स्याद्विहसितं रोमाञ्चो रोमहर्षणम् ॥ ३५ ॥

---

तन्यते वा ( कुतुकं ), प्रज्ञादित्वात् ( सू० ) स्वार्थे वाण् , तुलैकिको वा ॥३१॥ शृङ्गारभावेभ्यो रत्यादिभ्यो मनोविकारेभ्यो जाताः क्रियाश्चेष्टा अलंकाराख्या लीलादयः (हावाः), ह्वयन्त्यनेनेति हावः, यदाह— स्याद् भावसूचको हावो हेलास्यैवानुभावनम् । हिल हावकरणे, हेलृ अनादरे वा । इतिशब्दात्प्रकारार्थात्किलकिञ्चितादयोपि । अत्र **भरतः**– अलंकाराश्च नाट्यज्ञैर्ज्ञेया भावरसाश्रयाः । यौवनेभ्यधिकाः स्त्रीणां विकारा वक्त्रगात्रजाः । देहात्मकं भवेत्सत्त्वं सत्त्वाद्भावः समुत्थितः । भावात्समुत्थितो हावो हावाद्धेला समुत्थिता ॥ तथा– हावः शृङ्गारभावाप्तौ रम्योक्तिस्मितवीक्षितम् । शृङ्गारप्रौढिमा हेला हेवाको यौवने हि यः ॥ किं च– लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् । मोट्टायितं कुट्टमितं विब्बोको ललितं तथा । विहृतं चेति मन्तव्या दश स्त्रीणां स्वभावजाः ॥ प्रियस्यानुकृतिर्लीला श्लिष्टा वाग्वेषचेष्टितैः, लीङ् श्लेषणे । विलासोङ्गे विशेषो यः प्रियाप्तावासनादिषु, लस श्लेषणे । मण्डनानादरन्यासो विच्छित्ती रूपदर्पतः, विश्लिष्टा छित्तिर्भङ्गिरित्यर्थः । चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मतः । हर्षाद्रुदितगीतादिव्यामिश्रं किल[ लि ]किञ्चितं, अलीकं किञ्चितमित्यर्थः, किलीति कण्ठकूजितं वा, यथा किलिकिलारावः । मोट्टायितं प्रियं स्मृत्वा साङ्गभङ्गविजृम्भणम् , मुट्ट प्रमर्दने । दुःखोपचारः सौख्येपि हर्षात्कुट्टमितं मतम्, कुट्ट च्छेदनादौ, तेन मितं, इत्वं लक्ष्यात् । विब्बोकोभिमतप्राप्तावपि गर्वादनादरः, विवु क्षेपे, विपूर्वस्य वुक्कतेर्वापभ्रंशो विब्बोकः । अनाचार्योपदिष्टं स्याल्ललितं रतिचेष्टितम् । वक्तव्याभाषणं व्याजाद्विहृतं दर्शितेङ्गितम्, अवसरागतं वचनं व्याजादिना हृतं विहृतम् ॥ ३२ ॥ द्रवति हृदयमनेन द्रवः । किलन्त्यनेन केलिः, किल क्रीडायां, केलृ चलने वा । नृणाति नर्म । वर्करोपि । व्यज्यत इति व्याजोत्र स्वरूपाच्छादनं, यथा– ध्यानव्याजमुपेत्य चिन्तयसि काम् ( नागा० ) । अपदिश्यतेपदेशः, अतद्रूपस्य ताद्रूप्यं क्रीडार्थं वञ्चनेयम् । स इव लक्ष्यते लक्ष्यम् । निभच्छलच्छद्मादयोप्युपचारात् । एते केलिपरिष्वङ्किते रूढाः, क्रीडया खेलनं, लुक्का( वालुका ! )मणिकादीत्येके । ( कूर्दनं ) कुर्दनमित्येके, कुर्द क्रीडायां, उपधायांच ( सू० ) इति दीर्घाभावश्चिन्त्यः ॥ ३३ ॥ जिघर्त्यनेनाङ्गं घर्मः । निदह्यतेनेन निदाघः, न्यङ्क्वादिः ( सू० ) । प्रलीयते क्रियात्र प्रलयः सात्त्विको भावः, मूर्च्छेत्यर्थः, यदाहुः– स्तम्भे विचेतनत्वं प्रलये गतचेतनत्वमत एव । सहसैव निपतनं भुवि भवति महाभूतशैथिल्यात् ॥ ( अवहित्था ) अङ्गवैकृतस्य रोमाञ्चादेश्छादनादबहिःस्थितत्वम् , अवहित्थमित्येके । ( संवेगः ) भयादिना कर्मस्वावेगः ॥ ३४ ॥ उत्प्रास्यते सामर्षोन्यः क्रियतेनेन, सोपहास इत्यर्थः । आच्छुरणं परच्छेदनम्, अवच्छुरितमिति कात्यः । स हास ईषत्स्मिताख्यः । रोम्णामञ्चनं रोमाञ्चः । रोमाणि हृष्यन्त्यनेन रोमहर्षणम् । पुलको रोमविक्रियापि ॥ ३५ ॥ ( क्रन्दितं ) भावे क्तः ( नपुंसके भावेक्तः ) । ( जृम्भः ) मुखादिविकासः, घञि पुमान्, अप्रत्यये (सू०) स्त्री, क्लीबत्वं त्वज्ञिघो भयादिष्व-

क्रन्दितं रुदितं क्रुष्टं जृम्भस्तु त्रिषु जृम्भणम् ।
विप्रलम्भो विसंवादो रिङ्खणं स्खलनं समे ॥ ३६ ॥
स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ।
तन्द्री प्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम् ॥ ३७ ॥
अदृष्टिः स्यादसौम्येक्षिण सांसिद्धिप्रकृती त्विमे ।
स्वरूपं च स्वभावश्च निसर्गश्चाथ वेपथुः ॥ ३८ ॥
कम्पोथ क्षण उद्धर्षो मह उद्धव उत्सवः ॥ ३९ ॥

इति नाट्यवर्गः । ६ ।

अधोभुवनपातालबलिसद्मरसातलम् ।
नागलोकोथ कुहरं सु( शु )षिरं विवरं बिलम् ॥ १ ॥
छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा सु( शु )षिः ।
गर्तावटौ भुवि श्वभ्रे सरन्ध्रे सु( शु )षिरं त्रिषु ॥ २ ॥
अन्धकारोस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः ।
ध्वान्ते गाढेन्धतमसं क्षीणेवतमसं तमः ॥ ३ ॥

---

दर्शनान्नेष्टम् । अङ्गीकृतासंपादनं ( विसंवादः ) । स्वधर्मादेः स्खलनं ( रिङ्खणं ), रिखिलांकिकः, रिङ्गणमित्येके ॥ ३६ ॥ नियतं द्रात्येतस्यां निद्रा । संविशन्तीन्द्रियाण्यत्र संवेशः । स्वपनं स्वप्नः, स्वपोनन् ( सू० ) । इन्द्रियाणां तननं द्रात्यस्यां तन्द्री, निद्रा तन्द्रेत्याबन्तोपि । प्रमीलन्तीन्द्रियाण्यस्यां प्रमीला । भ्रूकौटिल्ये भ्रकुंसवत्त्रैरूप्यम् । अन्ये त्वदृष्टिरित्येतेन संबध्नन्ति, यदाहुः– भ्रुकुटिर्दृगसौम्या स्यात् ॥३७॥ सोमदेवताकत्वेन लक्षणयाधिकृतं सौम्यं, सोमाट्ट्यण् ( सू० ), शाखादित्वात् ( सू० ) सोम्य इत्याहुः । असौम्ये विरुद्धे दर्शन इत्यर्थः । इमे द्वे स्त्रियौ स्वरूपादेः पर्यायौ ॥३८॥ ( वेपथुः ) ट्वितोथुच् ( सू० ) । क्षणुते दुःखं क्षणः । महः– अकारान्तः, सान्तस्तु तेजोर्थः क्लीबे । उद्धुनाति दुःखमुद्धवः । उत्सूते सुखमुत्सवः । उद्धर्षणमुल्लसनं नैश्चिन्त्यं निर्वृतिः । प्रयोगार्थे संगीतकं गुणनिका । प्राङ् नाट्यात्पूर्वरङ्गः स्यात् । नाट्यार्थोपक्षेपः पूर्वं प्रस्तावना मुखं च स्यात् ॥ ३९ ॥ इति नाट्यवर्गः । ६ ।

पतन्त्यस्मिन् पातालम् । रसायास्तलमधः, रसा भूस्तलं पृष्ठं वास्य । कुत्सितं कृत्वा हरति विस्मापकं वा कुहरम् । सुषिर्धर्ममात्रेपि मधुवत्, ऊषसुषीतिरः ( सू० ) । शाश्वतस्तु निरस्तावयवौ सुषिरसुषी मन्यते, यदाहुः– गर्ते गर्तान्विते वाद्यविशेषे सुषिरं त्रिषु । विव्रियते विवरम् । बिलति बिलं, बिल भेदने ॥ १ ॥ छिद्य( द्य )ते छिद्रम् । निर्व्यथतेनेन निर्व्यथनम् । रोचते प्रकाशतेनेन रौति वा रोकम् । रगति रन्ध्रम् । श्वाभिर्भाति [ भ्रान्तं ] श्वभ्रम् । उप्यतेस्यां वपा, भिदादित्वादङ् ( सू० ) । सुष्ठु स्यति सुषिः । गिरति गर्तः, गर्तापि । अवन्त्यस्मादवटः । सिद्धस्यानुवादाच्छ्वभ्रं भूरन्ध्रमेव, यत्कात्यः– श्वभ्रगर्तावटागाधा भुवो विवरवाचकाः ॥ २ ॥ अन्धं करोत्यन्धकारः । क्षुब्धस्वान्तेति ( सू० ) ध्वान्तं साधुः । तमोस्यास्तीति तमिस्रं, ज्योत्स्नातमिस्रेति ( सू० ) साधुः, स्त्रीत्वमतन्त्रम् । तिम्यतीव तिमिरम् । ताम्यन्त्यनेन तमः, असुन् । भूमिच्छायं च । अन्धयत्यन्धं च तत्तमश्चान्धतमसम्, अवसमन्धेभ्यस्तमसः (सू०) इत्यच् । क्षीणे ध्वान्तेवहीनं च तत्तमश्चावतमसम् ॥३॥ ( संतमसम् ) समन्तात्तमः । न–अगा नागाः, नभ्राडिति ( सू० ) नञ् प्रकृत्या । कद्र्वा अपत्यानि काद्रवेयाः, शुभ्रादित्वात् ( सू० ) ढक्, न तु– स्त्रीभ्योढक् ( सू० ) कद्रुकमण्डल्वोश्छन्दस्यूङ्विधेः ( सू० ), सर्पेभ्योन्ये देवयोनयोमी ।

त्रिष्वक्संतमसं नागाः काद्रवेयास्तदीश्वरः ।
शेषोनन्तो वासुकिस्तु सर्पराजोथ गोनसे ॥ ४ ॥
तिलित्सः स्यादजगरे शयुर्वाहस इत्युभौ ।
अलगर्दो जलव्यालः समौ राजिलडुण्डुभौ ॥ ५ ॥
मालुधानो मातुलाहिर्निर्मुक्तो मुक्तकञ्चुकः ।
सर्पः पृदाकुर्भुजगो भुजंगोहिर्भुजंगमः ॥ ६ ॥
आशीविषो विषधरश्चक्री व्यालः सरीसृपः ।
कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥ ७ ॥
दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः ।
उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥ ८ ॥
त्रिष्वाहेयं विषास्थ्यादि स्फटायां तु फणा द्वयोः ।
समौ कञ्चुकनिर्मोकौ क्ष्वेडस्तु गरलं विषम् ॥ ९ ॥

---

( शेषः ) शेते हरिरस्मिन् शिष्यते वा । वसुकस्यापत्यं वासुकिः । गोरिव नासिकास्य, अञ्नासिकायाः संज्ञायांनसंचास्थूलात् ( सू० ), गोनासाय नियोजितागदरजाः ( विद्धशाल० ) इति गोनासोपि ॥ ४ ॥ ( तिलित्सः ) तिल गतौ । चरीन्द्रोपि । अजां गिरत्यजगरः, अजो नित्यो गरोस्य वा । शेतेत्यर्थे शयुः । वाहं गतिं स्यति वाहसः– अचलः । चक्रमण्डली च । न लगन्नर्दयाति निर्विषत्वात्, अलीव गर्दत्यालिगर्द इत्येके । राजिं देहे लाति राजिलः । डुण्डति डुण्डुभः, डुडि हुडि निमज्जने, डुण्डु[ डु ] भाषते डुण्डु[ डु ]भ इत्येके, निर्विषो द्विमुखोहिः, लक्ष्यं च– किं महोरगविसर्पिविक्रमो राजिलेषु गरुडः प्रवर्तते ( रघु० ) ॥ ५ ॥ मालुर्मातुलाख्योषधिस्तत्र धानमस्य मालुधानः । सर्पभेदा एते । ( मुक्त-कञ्चुकः ) सर्प इति शेषः । सर्पति सर्पः । प्रियते व्यायच्छति पृदाकुः । भुजेन कौटिल्येन गच्छति, गमेः सुपि ( वा० ), खच्चाडिद्वा ( वा० ), गमश्च ( सू० ) इति डः खच्च, एवं त्रैरूप्यम् । अंहत्यहिः ॥ ६ ॥ आश्यां विषमस्य, आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति, पृषोदरादित्वात् ( सू० ) रेफलोपे आशीशब्दोयामिति **सभ्याः** । चक्रं मण्डलाकारतास्यास्ति चक्री । व्याडनं हन्तुमुद्यमोस्यास्ति व्यालः, अड उद्यमे । कुटिलं सर्पति सरीसृपः, नित्यंकौटिल्येगतौ ( सू० ) इति यङ्, ( यङोचिचेति ) लुक्, पचाद्यच् ( नन्दिग्रहिपचादीति ), रीङृकतः ( सू० ) । गूढाः पादा अस्य गूढपात् । चक्षुषी श्रवसी अस्य चक्षुःश्रवाः, अत एव गोकर्णः । काकस्येवोदरमस्य काकोदरः, काकोलं विषमुदरेस्य वा ॥ ७ ॥ दर्वीरूपः फण एव करोस्य प्रहारादौ दर्वीकरः । गर्हितं दशति दन्दशूकः, लुपसदचरेति ( सू० ) यङ्, यजजपदशांयङः ( सू० ) इत्यूकः, जपजभदहेति ( सू० ) अनुस्वारः । बिले शेते बिलेशयः, शयवास-वासिष्वकालात् ( सू० ) इति सप्तम्या अलुक् । उरसा गच्छत्युरगः, उरसोलोपश्च ( वा० ) इति डः । पद्भ्यां न गच्छति ( पन्नगः ), नभ्राण्नपाद्– ( सू० ) इत्यस्योपलक्षणत्वान्नञ् प्रकृत्या । भोगः सर्पदेहः कुटिला गतिर्वास्यास्ति भोगी । जिह्मं वक्रं गच्छति जिह्मगः । कुम्भीनसः कञ्चुकी लेलिहानश्च । राज-सर्पो भुजंगभुक् ॥ ८ ॥ अहौ भवमाहेयं, दृतिकुक्षीति ( सू० ) ढञ् । स्फटन्ति विशीर्यन्तेनया स्फटा, द्वयोर्वर्तमानायां स्फटायां फणापि द्वयोः, फटेत्येके । फण गतौ ( फणा ) । दर्विः कफेलुश्च । कञ्चुकमिव कञ्चयते बध्यतेनेन (कञ्चुकः) । निर्मुच्यते निर्मोकोहित्वक् । निर्ल्वयनी च । क्ष्वेडते मोहयति क्ष्वेडः । गिरति जीवं गरः, गरं लाति गरलं श्यामश्यामलवत् ॥९॥ नवामी विषप्रकाराः । काकमेचकः काकोलः, ईषत्कोलति संस्त्यायति वा । कालस्य वर्णस्य कूटोत्र कालकूटः, मृत्युसंबन्धी व्याजो वा । हलति विलि-खति जठरं न विलिखति च हलाहलः, हालेव हलतीति लक्ष्ये हालाहलो हालहलश्च, यथा– स्निग्धं भव-

पुंसि क्लीबे च काकोलकालकूटहलाहलाः ।
सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः ॥ १० ॥
दारदो वत्सनाभश्च विषभेदा अमी नव ।
विषवैद्यो जाङ्गुलिको व्यालग्राह्यहितुण्डिकः ॥ ११ ॥

इति पातालभोगिवर्गः । ७ ।

स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् ।
तद्भेदास्तपनावीचिमहारौरवरौरवाः ॥ १ ॥
संहारः कालसूत्रं चेत्याद्याः सत्त्वास्तु नारकाः ।
प्रेता वैतरणी सिन्धुः स्यादलक्ष्मीस्तु निर्ऋतिः ॥ २ ॥
विष्टिराजूः कारणा तु यातना तीव्रवेदना ।
पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम् ॥ ३ ॥
स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत् ॥ ४ ॥

इति नरकवर्गः । ८ ।

---

त्यमृततुल्यमहो कलत्रं हालाहलं विषमिवाप्रगुणं तदेव, यथा— काममपायि मयेन्द्रियकुण्डैर्यद्यपि दुष्कृतहालहलौघः, यथा वा— मधु तिष्ठति वाचि योषितां हृदये हालहलं महाविषम् (भर्तृ०शृङ्गा० ) । सुराष्ट्रशुक्तिकदरत्सु देशेषु भवाः सौराष्ट्रिकादयः । ब्रह्मणः पुत्रः [ यद् **याज्ञवल्क्यः**— त्वं विष ब्रह्मणः पुत्रः सत्ये धर्मे व्यवस्थितः ] ॥ १० ॥ वत्सस्येव नाभिरस्य वत्सनाभः । ( जाङ्गुलिकः ) वसन्तादित्वात् ( सू० ) ठक्, जाङ्गुलिको विषभिषगिति **भागुरिः** । आहितुण्डेन दीव्यति ( आहितुण्डिकः ) ॥ ११ ॥ इति पातालभोगिवर्गः । ७ ।

नराः कायन्त्यस्मिन् नरकः । ( नारकः ) अन्येषामपि ( अन्येभ्योऽपि दृश्यते ) इति बाहुलकाद्वा दीर्घः । निष्क्रान्तः— अयान्निरयः, अयोऽनुकूलं दैवम् । तपति संतापयति तपनः, तपन्त्यनेन वा । अवन्त्यस्मादवीचिः, विरुद्धा वीचयोऽत्र वा, स्त्रियामपि । रुरुर्हिंस्रः क्रन्दश्च तत्र भवो रौरवः ॥ १ ॥ संह्रियन्तेऽत्र संहारः, संघात इत्येके । कालान्ययोमयानि सूत्राण्यत्र कालसूत्रम् । आद्यशब्दात्तामिस्रान्धतामिस्रादयः । सत्त्वाः प्राणिनः, सीदन्तीति । प्रकर्षेणेताः प्रेताः । परेता अतिवाहिका( ता )श्च । नारकी नदी, विगततरणौ व्यर्के पाताले भवा वैतरणी, विगततरणिर्विनौका वा । निष्क्रान्ता ऋतेः सन्मार्गान्निर्ऋतिः ॥२॥ विशति क्लेशं विष्टिर्नरके हठात्क्षेपः । आजवते—आजूः, क्विब्वचिप्रच्छीति (वा०) क्विब्दीर्घौ, आ— अज्यते वा, आजूर्वेतनयोर्विष्टिः कर्मकृत्कर्मणोरपीति **शाश्वतः** । ( कारणा ) कृञ् हिंसायां, णिच् । यत निकारादौ, णिच्, यातयति यातना नारकरुक् । दुष्टानि खान्यस्मिन् दुःखम् । प्रसूतेर्जातं दुःखं, ( आमनस्यं ) अमनसो भावः, वैमनस्यमित्यर्थः । षडपि मनःपीडार्था इति **सभ्याः**, यन्माला— दुःखं प्रसूतिजे क्लीबे पीडा बाधा च वेदना, दुःखमाधिः प्रसूतिजमिति **कात्यः** ॥ ३ ॥ कषिष्यति कष्टं कष्टंभविष्यतीत्याहुः ( का० ), कृच्छ्रगहनयोःकषः ( सू० ) इति नेट् । कर्षति कृन्तति वा कृच्छ्रम्, आसमन्ताद्भियं लातीति—आभीलम् । एतानि शरीरपीडार्थानि, लक्ष्ये तु नवाप्येकार्थाः । एषां दुःखादीनां मध्याद्विशेष्यनिष्ठा दुःखकष्टकृच्छ्रास्त्रिलिङ्गाः, यथा— सेयं दुःखा च दुरुपपादा च, दुःखः सुतो निर्गुणः, सर्वं दुःखं विवेकिनः ॥ ४ ॥ इति नरकवर्गः । ८ ।

समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः ।
उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः ॥ १ ॥
रत्नाकरो जलनिधिर्यादःपतिरपांपतिः ।
तस्य प्रभेदाः क्षीरोदो लवणोदस्तथापरे ॥ २ ॥
आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ।
पयः कीलालममृतं जीवनं भुवनं वनम् ॥ ३ ॥
कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।
अम्भोर्णस्तोयपानीयनीरक्षीराम्बुशं( सं )वरम् ॥ ४ ॥
मेघपुष्पं घनरसस्त्रिषु द्वे आप्यमम्मयम् ।
भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु ॥ ५ ॥
महत्सूल्लोलकल्लोलौ स्यादावर्तोम्भसां भ्रमः ।
पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम् ॥ ६ ॥
चक्राणि पुटभेदाश्च भ्रमाश्च जलनिर्गमाः ।
कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ॥ ७ ॥

---

समुनत्ति समुद्रः । अप्- उदकं धीयतेऽस्मिन्नब्धिरुदधिश्च, कर्मण्यधिकरणे च ( सू० ) इति किः, पेषवासवाहनधिषु च ( सू० ) इत्युदकस्योदः । न कुं पृणाति मर्यादापालनादकूपारः । पारमावृणोति पारावारः, पारमिवावारमस्य वा दुस्तरत्वात् । उदकमस्त्यस्योदन्वान् , उदन्वानुदधौ च ( सू० ) इति साधुः । स्यन्दते सिन्धुः । सरांसि सन्त्यस्य सरस्वान् । सगरैः खातः सागरः । अर्णोस्यास्त्यर्णवः, अर्णसो लोपश्च ( वा० ) इति वः सलोपश्च ॥ १ ॥ यादांसि पाति यादःपतिः, पाथःपतिरित्येके । सुगममेव हि मध्यमपांपतेः— इति दर्शनात्समासे षष्ठ्या अलुक् । वीचिमाली सर[ शर ]ध्वजोऽवारपारश्च । ( क्षीरोदः ) उदकस्योदःसंज्ञायाम् ( सू० ) । अपरे दध्युदघृतोदसुरोदेक्षूदस्वादूदाः ॥२॥ आप्नुवन्त्यापः स्त्रियां बहुत्वे । वृणोति वार्वारि च । सरति सलिलं, रलयोरैक्यम् । काम्यते कमलम् । जडति जलम् । पयते पीयते वा पयः, पय गतौ, पीङ् पाने । कीला ज्वाला अलति वारयति कीलालम् । भवत्यस्मात्सर्वं भुवनम् ॥ ३ ॥ कं बध्नाति कबन्धं, यच्छाश्वतः— कबन्धं सलिले रुण्डे । कमन्धमिति द्वे नाम्नी इत्येके । उनत्त्युदकम् । पीयते पाति वा पाथः । पुष्णाति पुष्करम् । सर्वतोमुखं सर्वदिग्गतेः । अमत्यम्भः । ऋणोत्यर्णः । तुदति तौति वा तोयं, तुः सौत्र आवरणार्थो वा । नयति नीरम् । [ घस्यते क्षियति वा क्षीरम् ] । अम्बति( ते ) अम्बु । शं वृणोति शंवरम् ॥ ४ ॥ मेघानां पुष्पं प्रसवः । दकं जीवनीयं च, यथा दकलावणिकाः । ( अपां विकारोम्मयम् ) एकाचो नित्यं ( वा० ) इति मयट् । आप्यं तु लक्ष्यात् , अत एव आप्यं वेति **चान्द्रं** सूत्रम् । ( भङ्ग इ० ) भज्यते तरत्यूर्वति चेति वाक्यानि, ऊर्मिर्वा स्त्रियामिति काकाक्षिवत् । वीची तु नित्यं स्त्री ॥ ५ ॥ ऊर्ध्वं लोलः [ लोलयति ] उल्लोलः । कलन्तेऽनेन नद्य इति कल्लोलः, कुत्सितो लोल इत्येके । लहरी- ओघश्च । आवर्तते मण्डलेन भ्रमत्यावर्तः । पर्षति सिञ्चति पृषत् , रूपभेदात्क्लीबे । बिन्दति बिन्दुः, बिदि अवयवे । विगतः प्रोषो दाहोस्या विप्रुट् ॥ ६ ॥ चक्राकारेण यान्त्यधः ( चक्राणि ) । पुटं भित्त्वा निर्यान्तीत्युपध्यायोत्प्रेक्षा । वक्राणीति **माला** । नदीवङ्काख्या इति च **गौडो** भ्रान्तः । तेनातोऽन्ये भ्रमाः प्रणाल्याद्या जलपथाः । कूलति कूलं, कूल आवरणे । रुणध्यम्भो रोधः । तरन्त्यस्मात्तीरम् । तीरप्रतीरे दीपप्रदीपवत् । तट्यत आहन्यतेम्भसा तटम् ॥ ७ ॥ ( नद्याः ) परे पार्श्वे कूलं पारं, पार्यते समाप्यतेऽस्मिन्निति वा । अर्वाक् पार्श्वे कूलमवारम् , यदाह— अर्वाक्

पारावारे परार्वाची तीरे पात्रं तदन्तरम् ।
द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ॥ ८ ॥
तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम् ।
निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ ॥ ९ ॥
जलोच्छ्वासाः परीवाहाः कूपकास्तु विदारकाः ।
नाव्यं त्रिलिङ्गं नौतार्ये स्त्रियां नौस्तरणिस्तरीः-रिः ॥ १० ॥
उडुपस्तु(पं तु) प्लवः कोलः स्रोतोम्बुसरणं स्वतः ।
आतरस्तरपण्यं स्याद् द्रोणी काष्ठाम्बुवाहिनी ॥ ११ ॥
सांयात्रिकः पोतवणिक्कर्णधारस्तु नाविकः ।
नियामकाः पोतवाहाः कूपको गुणवृक्षकः ॥ १२ ॥
नौकादण्डः क्षे(क्षि)पणी स्यादरित्रं केनिपातकः ।
अभ्रिः स्त्री काष्ठकुद्दालः सेकपात्रं तु सेचनम् ॥ १३ ॥

---

कूलमवारं स्यात् । परावाची इत्येके, अर्वाक्शब्दस्याव्ययत्वात् । न वार्व्रियतेस्यावारं न त्रियते वा । तयोः कूलयोर्मध्यं, पीयते पात्रं प्रवाहः । द्विधा गता आपोत्र द्वीपम् । अन्तरपामन्तरीपं, द्व्यन्तरुपसर्गेभ्योपईत् (सू०), ऋक्पूरब्धूरिति (सू०) अः समासान्तः ॥८॥ तत्तटं तोयात्क्रमेणोत्थितं पुलिनं, पुलो महत्त्वमस्यास्तीति, तद् द्वीपमिति **माला**–वा ना द्वीपं च पुलिनम् । तदेव प्रकृतं पुलिनं, सिकतास्यास्ति सैकतं, देशेलुबिलचौच ( सू० ) इत्यण् । [ निषीदन्त्यस्मिन् निषीदन्तं वृणोति वा निषद्वरः । जमति ग्रसते जम्बालः । पञ्च्यते पङ्कः । शीयन्तेस्मिञ्शादः । कृणोति कर्दमः ] । चिखल्लश्च ॥ ९ ॥ जलं प्रवृद्धमुच्छ्वसीति परिवहति यैर्निर्गममार्गैस्ते परीवाहाः, यल्लक्ष्यं– उपार्जितानामर्थानां त्याग एव हि रक्षणम् । तटाको(तडागो)दरसंस्थानां परीवाह इवाम्भसाम् ( पंचतन्त्र ) ( चाणक्यश० ) ॥ परिवाहोपि । कूपप्रतिकृतिः कूपकः, शुष्कनद्यादौ जलार्थं गर्ताः क्रियन्ते, यत्कात्यः– विवरान् कूपकानाहुः । विदारयति क्ष्मां विदारकः, **मालाच**– चुण्डी ( ण्डा ) विवरोत्साश्च कूपकाः । ( नाव्यं ) नौवयोधर्मेति ( सू० ) यत् । नुद्यते नौः, ग्लानुदिभ्यांडौः ( उ० ) । तरन्त्यनया तरणिस्तरीश्च ॥ १० ॥ उडुप्यते– उडुपस्तृणप्लवः । प्लवन्तेनेन कोलः, कोलति संस्त्यायति वा कोलः, **यच्छाश्वतः**– पोतप्लवकयोः कोलः कोलं तु बदरीफलम् । स्वतोकृत्रिमम् । आतरन्त्यनेनातरः, आवाप इत्येके । पणन्तेनेन पणः, पणे साधु पण्यं मूल्यं, साधौ ( तत्रसाधु ) यत् । काष्ठमुपलक्षणं, काष्ठाश्मादिमयी जलधारिणी द्रोणी, द्रवत्यम्भोस्याम्, द्रोणिका त्वम्बुवाहिनीत्येके पेठुः ॥ ११ ॥ समुदितानां यानं संयात्रा, सा प्रयोजनमस्य ( प्रयोजनम् ) सांयात्रिकः । पवते वातेन पोतो वाहनम् । कर्णोरित्रं, कर्णः श्रोत्रमरित्रं चेति **दुर्गः** । नावा तरति नाविकः, नौद्व्यचष्ठन् ( सू० ) । नियन्तुं शक्ता नियामकाः । निया( र्या )माश्च । गुणवृक्षो यत्र नौरज्ज्वा बध्यते, पोते ध्वजपटाद्याधार इत्येके । कूपे– आधारगर्ते कायति कूपकः, **गौडस्तु** जलान्तस्तरून्कूपकानाह ॥ १२ ॥ येन नौर्वाह्यतेसौ नौकादण्डः । क्षिप्यतेनया क्षेपणी, क्षोपण्यपभ्रंशः, क्षिपेत्युपाध्यायः । के जले नावो येन निपातयन्ति स केनिपातः, हलदन्तादिति ( सू० ) अलुक् । इयर्त्यनेनारित्रम्, स्फ्यादि कोटिपात्रं वा । न बिभर्त्यभ्रिः । काष्ठे कुद्दालः काष्ठमयो वा, येन निखन्यते भग्नं पोतादिकं कुथेन पूर्यते । ( सेचनं ) येन नावो जलमुध्द्रियते ॥ १३ ॥ क्वचित्– यानपात्रं तु पोतोब्धिभवे त्रिषु समुद्रियम् । सामुद्रिको मनुष्योब्धिजातादौ नौः समुद्रिका [ जाता सामुद्रिका च नौः ] ॥ अर्धं नावोर्धनावं, नावोद्विगोः ( सू० ), अर्धाच्च ( सू० ) इति टच् । नावमतिक्रान्तमतिनु जलम्, अतिनौः पुमान् स्त्री वा । त्रिष्वागाधात्–

क्लीबेर्धनावं नावोर्धेतीतनौकेतिनु त्रिषु ।
त्रिष्वागाधात्प्रसन्नोच्छः कलुषोनच्छ आविलः ॥ १४ ॥
निम्नं गभीरं गम्भीरमुत्तानं तद्विपर्यये ।
अगाधमतलस्पर्शं कैवर्ते दाशधीवरौ ॥ १५ ॥
आनायः पुंसि जालं स्याच्छणसूत्रं पवित्रकम् ।
मत्स्याधानी कुवेणी स्याद्बडिशं मत्स्यवेधनम् ॥ १६ ॥
पृथुरोमा झषो मत्स्यो मीनो वैसारिणोण्डजः ।
विसारः शकली चाथ गडकः शकुलार्भकः ॥ १७ ॥
सहस्रदंष्ट्रः पाठीन उलूपी शिशुकः समौ ।
नलमीनश्चिलिचिमः प्रोष्ठी तु शफरी द्वयोः ॥ १८ ॥
क्षुद्राण्डमत्स्यसंघातः पोताधानमथो झषाः ।
रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ॥ १९ ॥
तिमिंगिलादयश्चाथ यादांसि जलजन्तवः ।
तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः ॥ २० ॥

---

अधिकारोयम्, अभिविधावाङ् । अच्छयते न च्छाद्यते वाच्छः । कं लुषति हिनस्ति कलुषः । आ-अव- एलयत्याविलः, आविल्यते- आभिद्यते वा, विल भेदने ॥ १४ ॥ नमति निमनति वा निम्नं, म्ना अभ्यासे । गमे भियं राति गभीरं गंभीरं वा । ऊर्ध्वं तन्यते- उत्तानं गभीरादन्यत् । नास्ति गाधः प्रतिष्ठास्यागाधम् । नास्ति तलेधःस्पर्शोस्यातलस्पर्शम् । के( जले ) वर्तते कैवर्तो मत्स्यादिस्तस्यायं (घातकः) । दाति दशति दाश्नोति वा मत्स्यान्दाशः । धीयते- आध्रियते धीवरः ॥१५॥ कुत्सितं वेणन्तेस्यां मत्स्याः कुवेणी, वेणृ गतौ, मत्स्यबन्धनीत्यर्थः । मत्स्यकरण्डिका च । बलिनः (मत्स्यान्) श्यति बालिशम् । विध्यतेनेन वेधनं, विध विधान इत्यस्मात्, व्यधेर्व्यधनमिति स्यात् ॥ १६ ॥ रोम पक्षोत्र । झषति झषः । माद्यति मत्स्यः, मच्छोपि । मीनाति मीनः । ग्रह्यादौ ( नन्दिग्रहेति ) विसारी, ततो वैसारिणः, विसारिणोमत्स्ये ( सू० ) इति स्वार्थेऽण् । सृस्थिरे ( सू० ), व्याधिमत्स्यबलेषु ( वा० ) इति कर्तरि विसारः । शकलानि पृष्ठे सन्त्यस्य शकली, सशल्क इत्यर्थः । शल्की च । गडति पुच्छाच्छोटनात्सिञ्चति गडकः । शकुलोत्र मत्स्यमात्रे ॥ १७ ॥ विशेषानाह । सहस्रदंष्ट्रो वादालो नाम मत्स्यः । पाठीनश्चित्रवल्लिः, बहुदंष्ट्रत्वात्पाटयतीति, भक्ष्यत्वेन पठ्यते वा । एतौ सादृश्यात्पर्यायौ । शिशुमारप्रतिकृतिः ( शिशुकः ) । उलुपीन्नन्तः, उल्लुम्पतीति । सुषिर-तृणान्तश्चारी नलमीनः नडाभो वा । चीयते मीयते च चिलिचिमः, चिलिचिमस्त्रिदोषकृदिति वैद्याः । प्रोषति पित्तकारित्वात्प्रोष्ठी । शफान् राति शीघ्रगत्वाच्छफरी ॥ १८ ॥ सूक्ष्माश्चाण्डान्निःसृताश्च मत्स्याः क्षुद्राण्डमत्स्याः । पोता आधीयन्तेत्र पोताधानम् । झषा मत्स्यविशेषा अमी । रोहितो रक्तत्वात् । मज्जति मद्गुरः । शलति शालते वा शालः । राज्यः सन्त्यस्य राजीवो वज्राभः । शक्नोति गन्तुं शकुलः । तिम्यति तिमिः ॥१९॥ तिमिं गिलति तिमिंगिलः, गिलेऽगिलस्य (वा०) इति मुम् । आदिशब्दात्तिमिंगिलगिलनन्द्या[ न्दी ]वर्तादयः । याति यादः । जलजन्तुर्जलचरः । उनत्युद्रः । शङ्कतेस्माच्छङ्कुः । मा कुर्यात्किंचिदिति त्रस्यन्त्यस्मान्मकरः । आदिशब्दाज्जलहस्तिग्राहाद्याः ॥ २० ॥ कौ लीयते कुलीरः, कुलिनमीरयति वा, जनकभक्षकत्वात्, यत्कौटिल्यः- कर्कटसधर्माणो हि राजपुत्रा जनकभक्षाः । कृणोति कर्कटकः । कुरति कुमूर्वति वा कूर्मः । काम्यते यज्ञार्थे के मठति वा कमठः । कच्छेन पिबति कच्छपः ।

स्यात्कुलीरः कर्कटकः कूर्मे कमठकच्छपौ ।
ग्राहोवहारो नक्रस्तु कुम्भीरोथ महीलता ॥ २१ ॥
गण्डूपदः किंचुलुको निहाका गोधिका समे ।
रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ॥ २२ ॥
मुक्तास्फोटः स्त्रियां शुक्तिः शंखः स्यात्कम्बुरस्त्रियाम् ।
क्षुद्रशंखाः शंखनखाः(काः) शम्बूका जलशुक्तयः ॥ २३ ॥
भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः ।
शिली गण्डुपदी भेकी वर्षाभ्वी कमठी डुलिः ॥ २४ ॥
मद्गुरस्य प्रिया शृङ्गी दुर्नामा दीर्घकोशिका ।
जलाशया जलाधारास्तत्रागाधजलो ह्रदः ॥ २५ ॥
आहावस्तु निपानं स्यादुपकूपजलाशये ।
पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा ॥ २६ ॥
नेमिस्त्रिकास्य वीनाहो मुखबन्धनमस्य यत् ।
पुष्करिण्यां तु खातं स्यादखातं देवखातकम् ॥ २७ ॥

---

गृह्णाति ग्राहस्तन्तुनागाख्यः, विभाषाग्रहः ( सू० ) इति णः । अवह्रियतेनेनेति, गोचरादिसूत्रेऽवहारोपी-स्युपसंख्यानात् ( वा० ) घञ्, पुंसिसंज्ञायांघःप्रायेण ( सू० ), अवहरति वा, श्याद्व्यधेति ( सू० ) णः । न क्रामति नक्रः । कुम्भिनमीरयाति कुम्भीरः । ( महीलता ) भूमिसूर्नाम कृमिः ॥ २१ ॥ गण्ड्वो ग्रन्थयः पदान्यस्य गण्डूपदः । किंचिच्चुलुम्पति किंचुलुकः, लकान्तो वा । निजहाति गुध्यति च ( निहाका, इ० ), बिलेशयादन्योयं जलचरः प्राणी । टकः ( गापोष्टक् ) पिबतेःसुराशीध्वोरिति ( वा० ) नियमाद्रक्तपा, टक्, क इत्येके । आ– उच्यते, ओकउचःके ( सू० ), उणादौ सान्तोन्यः । शालूकादि-वज्जलूकेति **श्रीभोजः** ॥ २२ ॥ मुक्ता स्फुटन्त्यस्मान्मुक्तास्फोटः । शोकति शुक्तिः, शुक गतौ, क्तिच् । शं खनति शाम्यति वा शङ्खः । काम्यते कम्बुः । सूक्ष्मनद्यादिजाः कृमयः, शंकनका इत्यसत् । क्षुल्लकाश्च । शं वान्ति शंबूका जलमात्रजाः ॥ २३ ॥ बिभेति भेकः । मण्डति मण्डते वा सरो मण्डूकः । वर्षासु भवति वर्षाभूः । शलति शालते वा शालूरः, सालूर इत्येके । प्लवते प्लवः । दृणाति शब्दैः कर्णौ दर्दुरः । शिनोति शिलति वा शिली । गण्डूपदाज्जातौ पुंयोगे वा ङीष् । ( वर्षाभ्वी ) भुवश्चेति ( उ० ) छान्दसो ङीष् । दोलयति डुलिः । कूर्मी च ॥ २४ ॥ मद्गुराख्यो मत्स्यः । शृणाति शृङ्गी, सादृश्यायोग्यतया प्रिया । जलूकाकारेयं दीर्घकोशत्वात्, दुष्टो नामो नमनमस्या दुर्नामा, दुःसंज्ञेत्येके । जलमाशयो हृदयमस्य जला-शयः, जलमाशेतेत्र वा । सामान्येनोपक्रमोयम् तत्र जलाशयेष्वमी विशेषाः संगमान्ताः । ( ह्रदः ) ह्रादेः ह्रस्वः ॥ २५ ॥ नियतं पिबन्त्यत्र निपानम् । आहूयन्तेस्मिन्गाव आहावः, निपानमाहावः ( सू० ) इति साधुः, कूपसमीपे शिलादिनिबद्धं पशुपानार्थं कूपोध्दृताम्बुस्थानम् । अनन्त्यनेनान्धयाति वान्धुः । प्रज-हात्यम्बु प्रहिः । कुत्सिताः कोर्वा– आपोत्र कूपः । उदकं पीयतेस्मिन्नुदपानम् ॥२६॥ अस्य कूपस्यान्ते रज्ज्वादिधारणार्थं दारुयन्त्रं त्र्यंशं त्रिका । कूपस्योर्ध्वे- इष्टिकाभिर्विनह्यते वीनाहो नान्दीपट्टाख्यः । पुष्क-रादिभ्योदेशे ( सू० ) इतीनिः । नागादिकुण्डमकृत्रिममखातमित्येके ॥ २७ ॥ ( तडागः ) तड आघाते, तडाक इत्येके, तटान्यकाति तटाकमित्यन्ये । पद्माकरो योग्यत्वात् । कमासरत्यत्र कासारः, कासमृच्छति वा नड्वलाम्बुत्वात् । महत्सरः सरसी, गौरादित्वाद्ङीष् ( षिद्गौरादिभ्यश्च ) । विशन्ति मज्जन्त्यस्मिन्वे-शन्तः, झच् । पलयते पल्वलः, पल गतौ । उप्यतेस्यां वापी । दीर्घैव दीर्घिका, संज्ञायांकन् ( सू० )

पद्माकरस्तडागोस्त्री कासारः सरसी सरः ।
वेशन्तः पल्वलं चाल्पसरो वापी तु दीर्धिका ॥ २८ ॥
खेयं तु परिखाधारस्त्वम्भसां यत्र धारणम् ।
स्यादालवालमावालमावापोथ नदी सरित् ॥ २९ ॥
तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी ।
स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा ॥ ३० ॥
गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा ।
भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ॥ ३१ ॥
कालिन्दी सूर्यतनया यमुना शमनस्वसा ।
रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ॥ ३२ ॥
करतोया सदानीरा बाहुदा सैतवाहिनी ।
शुतुद्रिस्तु शतद्रुः स्याद्विपाशा तु विपाट् स्त्रियाम् ॥ ३३ ॥
शोणो हिरण्यवाहः स्यात्कुल्याल्पा कृत्रिमा सरित् ।
शरावती वेत्रवती चन्द्रभागा( गी ) सरस्वती ॥ ३४ ॥
कावेरी सरितोन्याश्च संभेदः सिन्धुसंगमः ।
द्वयोः प्रणाली पयसः पदव्यां त्रिषु तूत्तरौ ॥ ३५ ॥

---

॥ २८ ॥ ( खेयं ) ईचखनः ( सू० ) इति यत्, दुर्गवेष्टनखातिका । परिखन्यते परिखा, डः । ( आधारः ) क्षेत्रादिसेकार्थे यत्र संचीयतेम्भः । वृक्षसेकार्थे तले द्रवतोम्भसः स्थानं, यदाहुः– आलवालं विदुर्धीरा धारणं द्रवतोम्भसः, **मुनिश्च**– अपां धारणमाधारस्तदल्पं चालवालकम्, आलूयते लून्यते– आलवालम् । आवलते बहिर्निर्गमादम्भोत्रावालम् । आ– उप्यतेम्भोत्रावापः ॥२९॥ नदट् पचादिः, ङीप् । सरति सरित् । ह्रादोस्त्यस्याः, ह्रदिनीत्येके । धुनोति धुनी । आ– अपगच्छति, अप्संबन्धिना वेगे( गे )नापेन च गच्छति वापगा । कूलंकषा निर्झरिणी रोधोवक्रा सरस्वती च ॥ ३० ॥ गां गाते गच्छति गङ्गा, अगं गच्छति वा । विष्णुपदाद्योतथा विष्णुपदी, कुम्भपदीषुच ( सू० ) इति साधुः । जह्नुना पीता श्रोत्रेण त्यक्तेति जाह्नवी । भगीरथावतारिता भागीरथी ॥ ३१ ॥ ( कालिन्दी ) कलिन्ददेशजा । यमेन यमजा यमुना, यमी च । ( रेवा ) रेवृ प्लवगतौ । नर्मार्थं सोमवंश्येन पुरूरवसावतारिता ( नर्मदा ) । मेकलोद्रिः प्रभवोस्याः ॥३२॥ गौरीविवाहे हस्तात्प्रदानतोयाज्जाता ( करतोया ) । सितैव सैती ( वाहिनी ), **यन्माला**– मन्तव्या बाहुदार्जुनी । बाहुभिर्दीयते तीर्यते बाहुदा, बहुदेन कार्तवीर्यार्जुनेनावतारितेत्या**गमः** । शु पूजितमाशु वा तुदति शुतुद्रिः, एतदबुध्यमानाः शितद्रुः सितद्रुर्वेत्याहुः, इमं मे गङ्गे यमुने सरस्वति शुतुद्रीति हि श्रुतिः । वसिष्ठशापभयाच्छतधा द्रुता शतद्रुः । वसिष्ठं विपाशितवती विपाट् ॥ ३३ ॥ ( शोणः ) नदोयम्, शोणृ वर्णगत्योः । हिरण्यं वहति ( हिरण्यवाहः ) । कृत्रिमाल्पा च क्षेत्रसेकार्था कुल्या, कुले कुटुम्बे साध्वी, यदाहुः– कुल्याधीनं कुलं विद्यादित्या– ( ? ) व्यवस्थिताः । दांपत्यं कुलमित्यन्ये कुलं वा हलमुच्यते ॥ सारणी च । शरादीनांच ( सू० ) इति दीर्घे शरावती । ( चान्द्रभागा ) चन्द्रभागाभ्यां गिरिभ्यां प्रवहति, चन्द्रभागान्नद्यामिति ( ग० ) साधुः, चन्द्रेण भागतोभ्यस्ता चन्द्रभागेत्येके । सरांसि सन्त्यस्यां सरस्वती ॥ ३४ ॥ कवेरस्य जलदेहस्येयं कावेरी । सरिद्विशेषा एते, अन्याः सरयूदेविकागोदावरीवेण्याद्याः । संगमो भिन्नयोः संभेदो नदीमेलः । प्रणडत्यम्भोनया प्रणाली जलनिर्गमनमार्गो मकरमुखादिः, (अन्ये) स्त्रीनपुंसकयोराहुः ॥ ३५ ॥ तत्रभवः ( सू० ) इत्यण्, देविकाशिंशपेति ( सू० ) आत्वम्, दाण्डिनायनेति ( सू० ) सारवः साधुः । सुगन्धि( न्ध )प्रयोजनं

देविकायां सरय्वां च भवे दाविकसारवौ ।
सौगन्धिकं तु कह्लारं हल्लकं रक्तसंध्यकम् ॥ ३६ ॥
स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च ।
इन्दीवरं च नीलेऽस्मिन् सिते कुमुदकैरवे ॥ ३७ ॥
शालूकमेषां कन्दः स्याद्वारिपर्णी तु कुम्भिका ।
जलनीली तु शेवालं शैवलोऽथ कुमुद्वती ॥ ३८ ॥
कुमुदिन्यां नलिन्यां तु वि-बि-सिनी पद्मिनीमुखाः ।
वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ॥ ३९ ॥
सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ।
पङ्केरुहं तामरसं सारसं सरसीरुहम् ॥ ४० ॥
वि-बि-सप्रसूनराजीवपुष्कराम्भोरुहाणि च ।
पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहे ॥ ४१ ॥
रक्तोत्पलं कोकनदं नाला नालमथास्त्रियाम् ।
मृणालं वि-बि-समब्जादिकदम्बे षण्डमस्त्रियाम् ॥ ४२ ॥
करहाटः शिफा कन्दः किञ्जल्कः केसरोऽस्त्रियाम् ।
संवर्तिका नवदलं बीजकोशो( षो ) वराटकः ॥ ४३ ॥

इति वारिवर्गः । ९ ।

---

सौगन्धिकाख्यम् । के ह्लादते कह्लारं, शारदं शुक्लं चैतत् । हल्लति घूर्णते हल्लकम् । रक्तान् संधीनकति रक्तसंध्यकं, रक्तं संध्येव वा, रक्तोत्पलं चैतत् ॥ ३६ ॥ उत्पाल्यते उत्पलति वा उत्पलम् । कौ वलते प्राणिति कुवलयम्, कुत्सितो बाह्यवलयः पत्त्रवेष्टनमस्येति श्रीभोजः । विशेषानस्याह । इन्दतीन्दीवरं कुवलयदलनीलेति सामान्यस्य विशेषवृत्तेः । अस्मिन् सिते, कौ मोदते कुमुदं, कः । के रौति केरवो हंसस्तस्येदं प्रियं कैरवम् ॥ ३७ ॥ शालते शालूकं, कन्दो मूलमेषामुत्पलादीनाम् । ।( वारिपर्णी ) वारि पिपर्ति, फङ्गा नाम शाकं, शूषत्येके । कुम्भोऽस्त्यस्याः कुम्भिका, कुम्भीको वारिपर्णः स्यादित्येके । नीलिकाख्या जलशूकोपि, शेते जले शेवलं शेवालं च, शीङो- वलञ्वलन्वालनः ( उ० ), शैवलं शैवालमिति तु द्रविडाः । कुमुदिन्यां (लतायां) कुमुद्वती, कुमुदनडवेतसेभ्योड्मतुप् (सू०)॥३८॥ नडाः सन्त्यस्यां नलिनी, पुष्करादिभ्यो देशे ( सू० ) इतीनिः । मुखशब्दात्पुटकिन्यब्जिन्यम्भोजिन्याद्याः । पद्यते लक्ष्मीरत्र पद्मम् । नलाः सन्त्यस्य नलिनम् । अरान् राजीर्विन्दत्यरविन्दम्, अनुपसर्गाल्लिम्पविन्देति ( सू० ) शः ॥ ३९ ॥ शतसहस्रे बहूपलक्षणम् । कमम्भोलाति भूषयति कमलम्, केन मल्यते वा कमलम् । कुशे जले शेते कुशेशयम् । तामः प्रकर्षो रसोस्य तामरसम्, तामः प्रकर्षार्थस्तारतम्यवत्, ताम्यद्भी रस्यते वा ॥ ४० ॥ राज्यः सन्त्यस्य राजीवम् । पुष्णाति पुष्करम् । नालीकं च । पुणति मङ्गल्यत्वात्पुण्डरीकम् ॥ ४१ ॥ कोकाश्चक्राह्वा नदन्त्यस्मिन्, आहुश्च- रक्ताब्जे रक्तकुमुदे बुधैः कोकनदं स्मृतम् । पद्मादिश्चन्तस्य द्विलिङ्गार्थपाठः, ( नाला ) णल बन्धे । मृद्यतेद्यते मृणालम् । विस्यते- उत्कृष्यते विसम् । षनोतेर्डे षण्डः, सत्वाभावोबाहुलकात् ॥ ४२ ॥ कं रहयतीति, करहान् कूलोत्थान् पद्मादीनटति करहाटः । शिनोति दारयति क्ष्मां शिफा । कन्धति कन्दं पद्मादिमूलं, कन्द्यतेऽन्विष्यते वा, कन्दोऽस्त्री । किंचिज्जलति जडीभवति किञ्जल्कः । के सरति केसरम् । संवर्तयति वेष्टयाति संवर्तिका, पद्मादीनां नवोद्भिन्नं दलं शरच्चन्द्रिकाख्यम् । बीजानां पद्माक्षाणां कोशो बीजकोशः । वरमटाति वराटकः, कर्णिकेत्यर्थः, यच्छाश्वतः- बीजकोशे सरोजस्य कपर्दे च वराटकः ॥ ४३ ॥ इति वारिवर्गः । ९ ।

उक्तं स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकम् ।
पातालभोगि नरकं वारि चैषां च संगतम् ॥ १ ॥

## द्वितीयं काण्डम् ।

वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः ।
नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥ १ ॥
भूर्भूमिरचलानन्ता रसा विश्वंभरा स्थिरा ।
धरा धरित्री धरणी क्षोणी ज्या काश्यपी क्षितिः ॥ २ ॥
सर्वसहा वसुमती वसुधोर्वी वसुंधरा ।
गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही ॥ ३ ॥
मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका ।
उर्वरा सर्वसस्याढ्या स्यादूषः क्षारमृत्तिका ॥ ४ ॥
ऊषवानूषरो द्वावप्यन्यलिङ्गौ स्थलं स्थली ।
समानौ मरुधन्वानौ द्वे खिलाप्रहते समे ॥ ५ ॥

---

अथोक्तान्वर्गान् संग्रहेणोपसंहरति । एषां स्वर्गादीनां संगतं प्रसक्तानुप्रसक्तिक्रयानुगतं देवासुरमेघादिकं चोक्तम् । शब्दादीति रसगन्धादिग्रहणम् ॥१॥ [ इत्यमरसिंहकृतौ नामलिङ्गानुशासने । स्वरादिकाण्डः प्रथमः साङ्ग एव समर्थितः ॥ ] इति श्रीभट्टक्षीरस्वाम्युत्प्रेक्षितेमरकोशोद्घाटने स्वर्गादि काण्डं प्रथमं संपूर्णम् ।

---

श्रीगणेशाय नमः । अथ द्वितीयकाण्डे वर्गान् संगृह्णाति । अङ्गैर्मृदादिभिरुपाङ्गैश्च खिलादिभिः सह वर्तमानैः पृथ्यादिभिः संपादिता वर्गा इह वक्ष्यमाणे काण्डे वदितुमारब्धा उदिताः, आदिकर्मणि क्तः (सू०), आशंसायांभूतवच्च ( सू० ) इति क्तः ॥१॥ भवत्यस्मात्सर्वं भूः, रेफान्तं त्वव्ययं, यथा भूर्भुवःस्वः । रसाः सन्त्यस्यां रस्यते वा रसा । विश्वं बिभर्ति विश्वंभरा, संज्ञायांभृतॄवृजीति ( सू० ) खच् । क्षौतिभ्( रू )पं क्षोणी । जिनाति जायते वा ज्या, इज्येति मूर्खव्याख्या, यच्छाश्वतः– ज्या मौर्वी ज्या वसुन्धरा, ज्येति निघण्टुः । कश्यपस्येयं काश्यपी, भार्गवेण जित्वा ह्यस्मै दत्ता । क्षियन्त्येतां क्षितिः, क्षि निवासे ॥ २ ॥ वसु धनं धत्ते वसुधा । उर्वी विस्तीर्णत्वात् । वसु धारयति वसुंधरा । गोत्राः शैलाः सन्त्यस्यां गोत्रा, गास्त्रायते वा । कायति कूयते वा कुः । प्रथते पृथुनावतारिता वा पृथिवी, प्रथेःषिवन्संप्रसारणं च ( उ० ) । पृथ्वीति, वोतोगुणवचनाद् ( सू० ) ङीष् । क्षमते भारं क्ष्मा । अवति प्रजा अव्यते वा नृपैरवनिः । दैत्यमेदोयोगान्मेदिनी । महति मही । भूतधात्री रत्नगर्भा विपुला सागराम्बरा च, रत्नवतीति भागुरिः । क्षमा, इला च नानार्थे ॥ ३ ॥ मृयते मृत् । ( मृत्तिका ) मृदस्तिकन् ( सू० ) स्वार्थे । ( मृत्सा, इ० ) स्वार्थे सस्नौप्रशंसायाम् ( सू० ) । कृष्णभूमः कृष्णमृत्तिकोदग्भूम उदङ्मृदि । पाण्डुभूमः पाण्डुमृच्च, कृष्णोदक्पाण्डुसंख्यापूर्वायाभूमेरच् ( वा० ) । उर्वति क्षुधमुर्वेमियर्ति वा ( उर्वरा ) । ( ऊषः ) ऊष रुजायाम् ॥ ४ ॥ ( ऊषरः ) ऊषसुषीतिरः ( सू० ) । स्थलति ( स्थलम् ) । स्थल्यकृत्रिमा चेत्, जानपदकुण्डगोणस्थलेति ( सू० ) ङीष्, कृत्रिमा तु स्थला । म्रियन्ते तृषार्ता अस्मिन्मरुः । दधन्ति धन्वति वा धन्वा । खिलं शून्यं लाति खिलम् । न प्रहन्यते हलादिभिरप्रहतमकृष्टं क्षेत्रादि ॥५ ॥ जङ्गम्यते जगत्, वर्तमानेपृषद्बृहदिति (उ०) साधुः, शत्रन्तत्वाद् ङीप् । विशन्त्यस्मिन् विष्टपति वा विष्टपम्, ष्टपस्तप प्रतिघाते । अयं जम्बुद्वीपनवमांशो भरतस्य क्षत्रियस्येदं

त्रिष्वथो जगती लोको विष्टपं भुवनं जगत् ।
लोकोयं भारतं वर्षं शरावत्यास्तु योवधेः ॥ ६ ॥
देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः ।
प्रत्यन्तो म्लेच्छदेशः स्यान्मध्यदेशस्तु मध्यमः ॥ ७ ॥
आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोः ।
नीवृज्जनपदो देशविषयौ तूपवर्तनम् ॥ ८ ॥
त्रिष्वागोष्ठान्नडप्राये नड्वान्नड्वल इत्यपि ।
कुमुद्वान्कुमुदप्राये वेतस्वान्बहुवेतसे ॥ ९ ॥
शाद्वलः शादहरिते सजम्बाले तु पङ्किलः ।
जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः ॥ १० ॥
स्त्री शर्करा शर्करिलः शार्करः शर्करावति ।
देश एवादिमावेवमुन्नेयाः सिकतावति ॥ ११ ॥
देशो नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः ।
स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥ १२ ॥

---

भारतं नाम ( वर्षं ) भूम्येकदेशः, वृष्यते सिच्यते वर्षम्, तथा च– हिमवान्हेमकूटश्च निषधो मेरुरन्तरे । नीलः श्वेतश्च शृङ्गीवान् गन्धमादनमष्टममिति सीमाविच्छिन्नान्यन्यानीलावृत्तादीन्यष्टौ वर्षाणि । शरावत्या नद्या मर्यादायाः प्राक्सहचरितो दक्षिणो देशः प्राच्यः ॥ ६ ॥ शरावत्या अवधेः पश्चिमेन सहचरित उत्तरो देशः ( उदीच्यः ), यदाह–प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा । विदुषां शब्दसिध्द्यर्थं सा नः पातु शरावती (**काशिका**)॥ प्रतिगतोन्तमुक्तावधेः सुटादिदेशः (?) प्रत्यन्तः । ( मध्यमः ) यन्मनुः– हिमवद्विन्ध्ययोरन्तर्यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥ ७ ॥ आर्या आवर्तन्तेस्मिन्नार्यावर्तः, **यन्मनुः**– आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् । तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥ नियतं वर्ततेस्मिन् नीवृत्, नहिवृतिवृषीति (सू०) दीर्घः । जनानां पदं जनपदः, पुंस्त्वं लोकात्, जनैर्वास्यमानो राष्ट्राख्योयम् । दिश्यते देशः स्थानमात्रम् । विसिनोति विषयः । उपवर्ततेस्मिन्नुपवर्तनं, उपावर्तनमिति **कात्यः** । पञ्चैकार्थानाहुः ॥ ८ ॥ गोष्ठसंशब्दनात्प्राग्वाच्यलिङ्गाः । तदस्मिन्नस्तीतिदेशेतन्नाम्नि ( सू० ), कुमुदनडवेतसेभ्योड्मतुप् ( सू० ), नडशादाड्ड्वलच् ( सू० ) ॥ ९ ॥ शादेन शष्पेण नीलः, यच्छाश्वतः– शष्पकर्दमयोः शादः । शीयते स्मिन् शादः, शादोस्त्यस्मिञ्शाद्वलो देशः, ड्वलच्, यथा– न हि कोटरसंस्थेग्नौ तरुर्भवति शाद्वलः, शाद्वला दूर्वेति च नीलत्वोपचारात् । पङ्कोस्यास्ति पङ्किलः, पिच्छादित्वादिलच् ( लोमादियामादीति ) । अनुगता आपोत्रानूपम्, ऊदनोर्देशे ( सू० ) आकारस्य–ऊकारः, ततो दीर्घः, अप्रत्ययश्च । कषन्त्यापो यं स कच्छः, तथाविधोनूपप्रायः, कच्छमिति **माला** ॥ १० ॥ देशेलुचिलच्चौच ( सू० ), सिकताशर्कराभ्यांच ( सू० ) इत्यण्मतुपौ तु सार्वत्रिकौ । तदाह– मध्यान्मः ( सू० ) इत्यत्रादेरित्युपसंख्यानात् ( आदेश्चेतिवक्तव्यम् ) आदिमौ शर्कराशर्करिलौ देशे नियमात् । शर्कराश्मप्राया मृत् । सिकतासिकतिलौ देशे, सर्वत्र तु सैकतः सिकतावांश्च ॥ ११ ॥ नद्यम्बुजातसस्यसंवर्धितो नदीमातृकः । वर्षजव्रीहिवर्धितश्च देशो देवमातृकः, देवोभ्रं मातास्येति ॥ १२ ॥ नपूजनात् ( सू० ) इति सुराज्ञीति समासान्ताभावः, राजन्वान्सौराज्ये ( सू० ) इति साधुः । देशो विषयोपलक्षणम्, यथा– राजन्वाँल्लोक उच्यते । राजमात्रयुक्ते देशे ( राजवान् ) । गावस्तिष्ठन्त्यत्र गोष्ठं, घञर्थेकविधानम् ( वा० ), अम्बाम्बगो-

सुराज्ञि देशे राजन्वान्स्यात्ततोन्यत्र राजवान् ।
गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम् ॥ १३ ॥
पर्यन्तभूः परिसरः सेतुरालौ स्त्रियां पुमान् ।
ग्रामल्लूरश्च नाकुश्च वल्मीकं पुंनपुंसकम् ॥ १४ ॥
अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः ।
सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ॥ १५ ॥
अतिपन्थाः सुपन्थाश्च सत्पथश्चार्चितेध्वनि ।
व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः ॥ १६ ॥
अपन्थास्त्वपथं तुल्ये शृङ्गाटकचतुष्पथे ।
प्रान्तरं दूरशून्योध्वा कान्तारं वर्त्म दुर्गमम् ॥ १७ ॥
गव्यूतिः स्त्री क्रोशयुगं नल्वः किष्कुचतुःशतम् ।
घण्टापथः संसरणं तत्पुरस्योपनिष्करम् ॥ १८ ॥

इति भूमिवर्गः । १ ।

पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् ।
स्थानीयं निगमोन्यत्तु यन्मूलनगरात्पुरम् ॥ १ ॥

---

भूर्मात्यादिना (सू०) षत्वम् । यत्र गावः प्रागासन् (गौष्ठीनं), गोष्ठात्खञ्भूतपूर्वे (सू०) इति खञ् ॥१३॥ परितः सरन्त्यस्मिन्परिसरो ग्रामादेः परिच्छेदभूः । सिन्वन्ति बध्नन्ति तं सेतुः पुलिङ्गः । आलय( ल्य )-तेम्भोत्रालिः स्त्रीलिङ्गः, सस्यार्थं जलाधारणोयम् । संक्रमस्तु तरणार्थो यन्माला– संक्रमो दुर्गसंचरः । वामं लूयते वामैर्वा वामलूरः । न– अकति नाकुः । वलन्ते प्राणिनोत्र वल्मीकम् ॥ १४ ॥ [ अयन्ते ] वर्तन्ते मार्गन्ति– अतन्ति पद्यन्ते सरन्ति वानेनेति वाक्यानि । पद्भ्यां हन्यते पद्धतिः, हिमकाषिहतिषुच ( सू० ) इति पत् । पदमस्मिन्दृश्यं ( सू० ) इति यति पद्या, पद्यत्यतदर्थे ( सू० ) । एके पादा अस्यामेकपदी, कुम्भपद्यादौ ( कुम्भपदीषुच ) साधुः ॥ १५ ॥ ( अतिपन्था, इ० ) नपूजनात् ( सू० ) इत्यत्र स्वातिग्रहणाद् , ऋक्पूरब्धूरिति ( सू० ) सामासान्तो न भवति । संश्चासौ पन्थाश्च सत्पथः, समासान्तोऽच् । विरुद्धोध्वा व्यध्वः, उपसर्गादध्वनः (सू०) इत्यच् । विरुद्धः पन्था विपथः । कुत्सितोध्वा पन्थाश्च ( कदध्वा, इ० ), कोःकत्तत्पुरुषेचि ( सू० ), कापथ्यक्षयोः ( सू० ) । विपथं कापथं च क्लीबमाहुः, यद्वामनः– ( पथःसंख्याव्ययादेः ) संख्याव्ययपूर्वकस्य पथः ( क्लीवता ) इति ॥ १६ ॥ ( अपन्थाः ) पथोविभाषा (सू०) इत्यत्र , अपथंनपुंसकम् ( सू० ) । शृङ्गैरटन्ति– अस्मिञ्शृङ्गाटकम् । संस्थानकं ( संस्थानं ) चत्वरं च । प्रगता अन्तरेस्मात्प्रान्तरं दूरशून्यो मार्गः । कस्याम्भसोन्तमृच्छति कान्तारम् । कान्तार-प्रान्तरे एकार्थे आहुः ॥ १७ ॥ ( गव्यूतिः ) गोर्यूतौछन्दस्युपसंख्यानं ( वा० ), अध्वपरिमाणेच ( वा० ) इत्यवादेशः । ( नल्वः ) णल गन्धे ( बन्धे ), किष्कुर्हस्तस्तेषां चतुःशती नल्वमिति **माला, कात्यस्तु** नल्वं [ विंश ]हस्तशतमाह । घण्टोपलक्षितानां हस्तिनां पन्था घण्टापथः, **चाणक्योक्ता**ऽष्टदण्डः । सम्यक्सरन्त्यनेन संसरणं, यद्दुर्गः– बुधैः संसरणं वर्त्म गजादीनामसंकुलम् । पुरोपनिष्करं चोक्तम्– । तत्संसरणं पुरं राजधानी तस्या उपनिष्कराख्यमुपनिष्कीर्यतेत्र सैन्यमिति ॥ १८ ॥ द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी । द्विवस्पृथिव्यौ गञ्जा तु [ दिवः पृथिव्याः संज्ञेयं ] रुमा स्याल्लवणाकरः ॥ इति भूमिवर्गः । १ ।

पक्षे तु पुरं नगरं च वाशब्दात्पत्तनसाहचर्यात्क्लीबे । पूर्यते पूः । नगाः सन्त्यस्य नगरं, नगपांसु-पाण्डुभ्योरः ( वा० ) । पतन्त्यस्मिन्पत्तनम् । पुटा भाण्डवासनानि भिद्यन्तेस्मिन् पुटभेदनम् । तिष्ठन्त्य-

तच्छाखानगरं वेशो वेश्याजनसमाश्रयः ।
आपणस्तु निषद्यायां विपणिः पण्यवीथिका ॥ २ ॥
रथ्या प्रतोली विशिखा स्याच्चयो वप्रमस्त्रियाम् ।
प्राकारो वरणः सालः प्राचीनं प्रान्ततो वृतिः ॥ ३ ॥
भित्तिः स्त्री कुड्यमेडूकं यदन्तर्न्यस्तकीकसम् ।
गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ॥ ४ ॥
निशान्तप( व )स्त्यसदनं भवनागारमन्दिरम् ।
गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः ॥ ५ ॥
वासः कुटी द्वयोः शाला सभा संजवनं त्विदम् ।
चतुःशालं मुनीनां तु पर्णशालोटजोऽस्त्रियाम् ॥ ६ ॥
चैत्यमायतनं तुल्ये वाजिशाला तु मन्दुरा ।
आवेशनं शिल्पिशाला प्रपा पानीयशालिका ॥ ७ ॥

---

स्मिन्नित्यष्टशतग्रामीमध्ये स्थानीयम् । नियतं गच्छन्त्यस्मिन्निगमः, गोचरसंचरेति ( सू० ) साधुः । नानार्थोधिष्ठानं, दुर्गकोट्टौ राजधानी च । मूलनगरं राजधानी ततोन्यत्समुदायस्थानं ( शाखानगरं ), शाखेत्युपाङ्गोपलक्षणम् ॥ १ ॥ [ स्यात्साकेतमयोध्यायां विदेहा मिथिला पुरी । महोदया कन्यकुब्जा कान्यकुब्जं महोदयम् ॥ काशी वाराणस्यवन्ती विदिशा चोज्जयिन्यपि । प्राग्ज्योतिषं कामरूपं द्वारका द्वारवत्यपि ॥ ] विशन्त्यस्मिन्कामुका वेशः । आपणन्तेस्मिन्नापणः, गोचरसंचरेति ( सू० ) साधुः । निषीदन्त्यस्यां निषद्या, संज्ञायांसमजनिषदेति ( सू० ) क्यप् । विपण्यन्तेस्यां विपणिः, पणिग्वीथी । आद्यौ वणिक्स्थानेन्यौ हट्टवर्तन्यामाहुः, यच्छाश्वतः– आपणः पण्यवीथी च द्वयं विपणिसंज्ञकम् ॥ २ ॥ रथं वहति रथ्या, तद्वहतिरथयुगेति ( सू० ) यत् । प्रतोल्यते प्रतोली । विगताशिखा मुण्डितेव समन्ताद्विशीर्यते जनसंमर्देन वा विशिखा । विपण्यादीन्पञ्चैकार्थानाहुः, यत्कौटिल्यः– विशिखायां सौवर्णिकप्रचारः । चीयते चयः प्राकाराधारः । उप्यतेस्मिन्वप्रः । प्रक्रियते प्राकारः, सादकारयोःकृत्रिमइति ( वा० ) दीर्घः । वृणोति वरणः । स्यति पर्यन्तं करोति सालः । प्रागेव प्राचीनं विभाषाञ्चेरदिक्स्त्रियाम् ( सू० ) इति खः, प्राचीरमित्येके । व्रियतेनया वृतिः । वाटो वाटी– आवेष्टकोपि ॥ ३ ॥ भिद्यते भित्तिः । कुड्यां साधु कुड्यं, पृषोदरादित्वात् ( सू० ) डत्वम् । तत्कुड्यमन्तर्न्यस्तास्थि, एडयत एडूकम् । गृह्णाति गृहं, गेहेकः ( सू० ) । उदवसिनोति स्मोर्ध्वमवसीयते वोदवसितम् । विशन्त्यस्मिन् वेश्म । सीदन्त्यस्मिन्सद्म सदनम् । निकेत्यतेस्मिन्निकेतनम् ॥ ४ ॥ निशाम्यन्त्यास्मिन् निशान्तं, निशाया अन्तोत्रेत्येके । अपस्त्यायाति संघातीभवति परस्त्यम् । भवन्त्यस्मिन् भवनम् । अग्यतेस्मिन्नगारं, अगान्वृक्षान्नियर्ति वा । मन्द्यते सुप्यतेत्र मन्दिरम् । ( गृहाः ) भूम्नि बहुत्वे, गृहाणीत्यप्याहुः । निचीयते निकाय्यः, पाय्यसान्नाय्यनिकाय्येति ( सू० ) साधुः । निलीयन्तेस्मिन्निलयः । आलीयन्तेस्मिन्नालयः, पुंसिसंज्ञायांघः ( सू० ) ॥ ५ ॥ उष्यतेस्मिन्वासः । कुट्यतेस्यां कुटी । शा( श )लन्त्यस्यां शाला, शालते वा । सह भान्त्यस्यां सभा । वसतिर्वासतेयी निवेशनमावसथः संस्त्यायोपि । सजन्ति संजवन्ते वास्मिन्संजवनम् । चतस्रः शालाः समाहृताश्चतुःशालम् । इदं गृहं मुनिसंबन्धि पर्णशालाख्यम् । उटैर्दैर्ध्यां तृणपर्णैर्जायत उटजम् ॥६॥ चित्याया इदं चैत्यं देवकुले[ ल ]महावृक्षोध्वगा[ वृक्षाद्युपा ]श्रयः । आयतन्तेस्मिन्नायतनम् । मन्दन्तेत्र मन्दुरा । आविशन्त्यावेशनं गृहादन्यत्कारूणां कर्मस्थानं, तेन शिल्पशालेति सभ्यः पाठः । प्रपिबन्त्यस्यां प्रपा, घञर्थेकविधानम्( वा० ) ॥ ७ ॥ मठ्यतेस्मिन्मठः, मठ निवासे । छत्त्रशीला

मठश्छात्रादिनिलयो गञ्जा तु मदिरागृहम् ।
गर्भागारं वासगृहमरिष्टं सूतिकागृहम् ॥ ८ ॥
वातायनं गवाक्षोथ मण्डपोस्त्री जनाश्रयः ।
हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम् ॥ ९ ॥
सौधोस्त्री राजसदनमुपकार्योपकारिका ।
स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोपि च ॥ १० ॥
विच्छर्दकप्रभेदा हि भवन्तीश्वरसद्मनाम् ।
स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् ॥ ११ ॥
शुद्धान्तश्चावरोधश्च स्यादट्टः क्षोममस्त्रियाम् ।
प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ॥ १२ ॥
गृहावग्रहणी देहल्यङ्गनं चत्वराजिरे ।
अधस्ताद्दारुणि शिला नासा दारूपरि स्थितम् ॥ १३ ॥
प्रच्छन्नमन्तर्द्वारं स्यात्पक्षद्वारं तु पक्षकः ।
वलीकनीध्रे पटलप्रान्तेथ पटलं छदिः ॥ १४ ॥

---

विद्यार्थिनश्छात्राः, छत्त्रेण गुरुसेवा लक्ष्यते, छत्त्रादिभ्योणः ( सू० )। सत्त्रशाला प्रतिश्रयश्च । बौद्धानां तु विहारोस्त्री । गञ्जन्ति रटन्त्यस्यां क्षीबा गञ्जा । वासाय वासमध्ये वा गृहम्, अपवरकं कोष्ठम् । [ कुट्टिमोस्त्री निबद्धा भूश्चन्द्रशाला शिरोगृहम् ] । न रिष्यते हिंस्रैः कृतरक्षत्वादरिष्टम् ॥ ८ ॥ गवामिवाक्षीणि यत्रेति गवाक्षः, इन्द्राक्षयोःसमासेचेत्यवङ् (!) । इन्द्रकोशो मतङ्गकः, [ मत्तालम्बोपाश्रयः स्यात्प्रग्रीवो मत्तवारणः ] । मण्ड्यते नानालोकैर्मण्डपः । हरति मनो हर्म्यम् । आदिशब्दाद्वासगृहादि । वास इत्येव, प्रसीदन्त्यस्मिन्प्रासादः, सादकारयोःकृत्रिमइति ( वा० ) दीर्घः ॥ ९ ॥ सुधाशुभ्रं सौधम् । उपक्रियत उपकरोति वा पटमण्डपादि राजसदनम् । स्वस्ति कायति स्वस्तिकः । नन्दी– आवर्तोत्र नन्द्यावर्तः । आदिशब्दाद्रुचकवर्धमानाद्याः ॥१०॥ विच्छर्दकप्रभेदा रचनाविशेषाः, उच्छृदिर्दीप्तौ, विशिष्टेच्छानिर्मितो विच्छन्दक इत्येके । स्त्रीणामगारं, अवरुध्यन्तेस्मिन्नवरोधनम् ॥ ११ ॥ शुद्धाः सुरक्षा अन्ता अत्र शुद्धान्तः । एते महिष्यामपि तात्स्थ्याद्वर्तन्ते । अट्टन्त्यट्टत्य[ ट्यते ]त्र वाट्टोट्टालकः, अट्ट अतिक्रमहिंसयोः, प्राकाराग्रे रणगृहमिति **कौटिल्यः** । ( क्षोमः ) क्षुवन्ति शब्दायन्ते योधाः ( अत्र ), अतः क्षौमः प्राकारधारणार्थोभ्यन्तरः क्षोमाख्य इत्येके । प्रहण्यते प्रघणः प्रघाणः, अगारैकदेशेप्रघणःप्रघाणश्च (सू०)। अल्यते भूष्यतेलिन्दः । द्वारप्रकोष्ठाद्बहिर्द्वाराग्रवर्तिचतुष्किकान्ते– उपालिन्दकाख्या ॥ १२ ॥ द्वाराग्रं गृह्यते यया, वीथ्याख्येत्येके, बुध्नोदुम्बरमिति सभ्योर्थः । अवगृह्यते द्वारशाखानयावग्रहणी । दिह्यते देहली । अङ्गत्यत्राङ्गनम् । चत्यते चत्वरम् । अजन्त्यत्राजिरम् । स्तम्भादीनामाधारदारु शिलाख्यं, स्तम्भोर्ध्वे दार्वन्तरस्थापनार्थं यदासज्यते सा शिलेति **गौडः** । स्तम्भादेरित्यर्थः, द्वारशाखाधऊर्ध्वदारुणी शिलानासे इति **माला**, यदाह– नासा दारूपरि द्वारस्याधो दारु शिला स्त्रियाम् । ऊर्ध्वोदुम्बरमुत्तरासङ्गोधउदुम्बरं देहलीत्याचार्याः ॥ १३ ॥ ( प्रच्छन्नं ) खडक्किकाख्यम् । पार्श्वद्वारमेकमंतदिति **कात्यः**, यदाह– प्रच्छन्नमन्तर्द्वारं यत्पक्षद्वारं तदुच्यते । छादनान्तो वलीकाख्यः, वलति संवृणोतीति, कुड्याद्बहिर्वीथी येन च्छाद्यते । नियतमिन्द्ध नीयते वाम्भोनेन नीध्रम् । पटं लाति पटलम् । छाद्यतेनेनेति छदिः, इसन्तः क्लीबे, इस्मन्त्रन्क्विषु च ( सू० ) इति ह्रस्वः ॥ १४ ॥ गोपायति गोपानसी । पटलाधारो वंशपञ्जरो वलभी वलभ्याश्चूडा वा, वल संवरणे । विशिष्टं टङ्क्यते विटङ्कः, पक्षिवि-

गोपानसी तु वलभीछादने वक्रदारुणि ।
कपोतपालिकायां तु विटङ्कं पुंनपुंसकम् ॥ १५ ॥
स्त्री द्वार्द्वारं प्रतीहारः स्याद्वितर्दिस्तु वेदिका ।
तोरणोस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरम् ॥ १६ ॥
कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्नथ त्रिषु ।
कवाटमररं तुल्ये तद्विष्कम्भोर्गलं न ना ॥ १७ ॥
आरोहणं स्यात्सोपानं निश्रेणिस्त्वधिरोहणी ।
संमार्जनी शोधनी स्यात्संकरोवकरस्तया ॥ १८ ॥
क्षिप्तं मुखं निःसरणं संनिवेशो निकर्षणः ।
समौ संवसथग्रामौ वेश्मभूर्वास्तुरस्त्रियाम् ॥ १९ ॥
ग्रामान्त उपशल्यं स्यात्सीमसीमे स्त्रियामुभे ।
घोष आभीरपल्ली स्यात्पक्कणः शवरालयः ॥ २० ॥

इति पुरवर्गः । २ ।

महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः ।
अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ॥ १ ॥

---

श्रामार्थं बहिर्निर्गमितं दारु, वक्रदार्वाधारः, पक्षिपङ्क्तिर्हि तत्रोत्कीर्यते ॥१५॥ प्रतिह्रियन्ते प्रतिरुध्यन्तेनेन प्रतीहारः । नानार्थे वलजम् । दारुपरिष्कृता चतुरस्रा विश्रान्तिभूः, विगतं तर्दनं यत्रेति वितर्दिः । विदन्त्यस्यां वेदी । मङ्गलार्थं तुरन्त्यत्र तोरणं द्वाराग्रे स्तम्भोपरि रचितं सिंहद्वाराख्यम् । मङ्गलस्रक्तोरणोर्ध्वे भवेद्वन्दनमालिका । गोप्यते गोपुरं प्रतोली ॥ १६ ॥ दुर्गद्वारावतरणार्थः क्रमनिम्नो हस्तिनखाभो मृत्कूटः– अपसोपानाह्वयः ( कूटम् ), बहिरतटमन्तःसोपानयुक्तं युद्धार्थमित्येके । कं शिरः पाटयति प्रविशतां कवाटो द्वारपट्टः, जपादित्वाद्धत्वम् ( ग० )। इयर्त्यररं, अररि च । विष्कम्भो बन्धनिमित्तं, विष्कम्भनात्यवष्टम्भनात्यवश्यम् । विष्कम्भीत्येके पेठुः । अरेणाकर्षणेन गलत्यर्गलं दारुमयो लौहो वा दण्डः । न ना पुमान्न भवति । परिघश्च ॥ १७ ॥ आरुह्यतेवरुह्यते वानेनारोहणम् । सहोपानमस्त्यस्मिन् सोपानम् । निश्रयति भित्तिं नियता श्रेणिः सोपानपङ्क्तिर्वात्र निश्रेणिः । अधिरोहन्त्यवरोहन्ति च यया दारुमय्या साधिरोहणी । बहुलाख्या रजोवारणी, मार्जन्या पूतं हि बहुलीकृतं धान्याद्याहुः । समूहनी पवनीति स्मार्ताः । बहुकरी वर्धनी च । ( क्षिप्ते ) धूल्यादाविति शेषः । अवकीर्यतेवकरः ॥ १८ ॥ गृहादेर्निःस्रियते प्रविश्यते च येन तन्मुखं, यत्कौटिल्यः– मुखसमः संक्रमो मुखानुवादेन निःसरणविधिर्वा । समन्तान्निविशन्तेत्र संनिवेशः पुरादेर्बहिर्विहरणभूः । निवृत्तं कर्षणमत्र निकर्षणः । संवसन्त्यत्र संवसथः । ग्रस्यते भोगिभिर्ग्रामः । द्रंगं ग्रामधानं खेटकं च । वसन्त्यस्मिन्वास्तुः, वसेस्तुन्न- गारेणिच्च ( उ० ) ॥ १० ॥ अन्ते चिह्नार्थं शल्यप्रक्षेपादुपशल्यं, उपशलने समीपभ्रपणे साधु वा । सीयते बध्यते सीमा, [मनः] (सू०) डाबुभाभ्यामन्यतरस्याम् (सू०) । सीम्न्याघाटकटौ ( ? ) मालकोस्त्री ग्रामान्तराटवी । घोषन्ति गावोत्र घोषः । आबिभ्यत्यभित ईरयन्ति वा गा आभीरा गोपाः । पल्लयते पल्लिः– गृहालिः, कुटीग्रामकयोः पल्लिरिति तु **शाश्वतः** । पच्यतेस्मिन् पक्कणः । शवन्ति भ्रमन्ति शवरा आरण्यचाण्डालाः ॥ २० ॥ इति पुरवर्गः । २ ।

मही धारयति महीध्रः, मूलविभुजादित्वात्कः ( कप्रकरणेमूलविभुजादिभ्यउपसंख्यानम् )। हर्तुमशक्योहार्यः । ध्रियते धरः । पर्वाणि सन्त्यस्य पर्वतः, तप्पर्महद्भ्याम् ( वा० ) । अद्यतेद्रिः । गां त्रायते गोत्रः । गीर्यते गिरिः । शिलानामयं शैलः, मत्वर्थेवाण् ( अणूच ) ॥ १ ॥ अन्तर्लोक्यते बहिश्च न लो-

लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत्समौ ।
अस्तस्तु चरमक्ष्माभृदुदयः पूर्वपर्वतः ॥ २ ॥
हिमवान् निषधो विन्ध्यो माल्यवान्पारियात्रि( त्र )कः ।
गन्धमादनमन्ये च हेमकूटादयो नगाः ॥ ३ ॥
पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ।
कूटोस्त्री शिखरं शृङ्गं प्रपातस्त्वतटो भृगुः ॥ ४ ॥
कटकोस्त्री नितम्बोद्रेः स्नुः प्रस्थः सानुरस्त्रियौ ।
उत्सः प्रस्रवणं वारिप्रवाहे निर्झरो झरः ॥ ५ ॥
दरी तु कन्दरो वा स्त्री देवखातबिले गुहा ।
गह्वरं गण्डशैलास्तु च्युताः स्थूलोपला गिरेः ॥ ६ ॥
खनिः स्त्रियामाकरः स्यात्पादाः प्रत्यन्तपर्वताः ।
उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ॥ ७ ॥

---

क्यतेनर्केत्वाल्लोकालोकः । चक्राकारेण वलते वाडते वा चक्रवाडः, वाडृ आप्लाव्ये, आवेष्टय द्वीपान् स्थितो ह्यसौ । त्रिककुत्पर्वते ( सू० ) इति साधुः । अस्यत्यर्कादीनस्यते वास्तः । चरन्त्यत्र चरमः पश्चिमो मन्दराख्यः । उदयन्तेस्माद् ग्रहा उदयः ॥ २ ॥ नियतं सीदन्त्यस्मिन् निषधः । वि-इध्यते विन्ध्यः, अघ्न्यादिः (उ०) । माल्याकारतास्यास्ति माल्यवान् । परियात्रायां भवः पारियात्रिकः स्वारोहत्वात् । गन्धेन मादयति गन्धमादनम्, [ प्रयोगे च पुंलिङ्गता दृश्यते, सुगन्धिर्गन्धमादन इति कालिदासः ] । आदिशब्दान्मलयमन्दराद्याः । हिमाचलोद्रिराजः स्यान्मलयश्चन्दनाचलः ॥ ३ ॥ पिनष्टि, प्रस्तृणाति, गिरति, उपलाति, अश्नाति, शिनोति, दृणातीति वाक्यानि । कूट( य )ति कूटं, कूट्यते वार्कदावाभ्याम्, कूट दाहे । शिखास्यास्ति शिखरं, शिखायाहस्वश्चेतिरः ( वा० ) । शृणाति शृङ्गम् । प्रपतत्यस्मात्प्रपातः । तटशून्योतटः । प्रपातस्तु तटो भृगुरिति पाठे प्रपत्यते यतस्तटास्य भृगुः । बिभर्ति भृज्ज्यते वा भृगुः ॥ ४ ॥ कटत्यावृणोति कटको मध्यभागो मेखलाख्यः । स्नौत्यम्भः स्नुः । प्रतिष्ठतेस्मिन्समभूभागत्वात्प्रस्थः, घञर्थेकविधानम् ( वा० ) । सनोति ददाति सुखं सानुः । द्वित्वात्प्रस्थोप्यस्त्री । उनत्त्यम्भसा—उत्सः । प्रस्रवत्यस्मात्प्रस्रवणम् । निर्झीर्यते निर्झरः । प्रपाताम्बु [ -नि ] झीर्यते निर्झरझरावित्येके ॥५॥ दीर्यते दरी, पचादित्वादच् ( नान्दिग्रहीति ) । कुत्सितं दीर्यते कं दृणाति वा कन्दरा, पक्षे रूपात्पुमान् कन्दरोपि । समे इत्यर्थः, देवखातमकृतकं, ( बिलं ) बिल भेदने । गूहति गुहा । अगे ह्वरति गाह्यते वा गह्वरम् । अकृतकबिलविषये गुहा गह्वरं चेत्येके पूर्वेण सह संबध्नन्ति, यत्कात्यः— देवखाते बिले गुहा, शाश्वतोप्याह— गह्वरं बिलदम्भयोः । गण्डाः शैला इव स्थूलत्वाद् गण्डशैलाः, ( च्युताः ) भूकम्पादिना गलिताः ॥६॥ [ दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः ] । खन्यन्ते लोहादयोस्याः खनिः खानिश्च । आकीर्यन्ते धातवोस्मिन्नाकरः । गञ्जापि, यच्छाश्वतः— भाण्डागारं विदुर्गञ्जं खनौ गञ्जा सुरागृहे । मुख्यपर्वतान्ते क्षुद्रपर्वताः पादा इवाधःस्थत्वाच्चरणाच्च । अद्रेर्भूमिरित्येव, उपाधिभ्यांत्यकन्नासन्नारूढयोः ( सू० ), नयासयोः ( सू० ) इत्यत्र त्यकनः— ( त्यकनश्चनिषेधः ) उपसंख्यानादित्वाभावः ॥७॥ धत्ते धातुः । आदिशब्दाद्धिङ्गुलादिः, यदाहुः— सुवर्णरूप्यताम्राणि हरितालं मनःशिला ॥ गैरिकाञ्जनकासीसलोहसीसाः सहिङ्गुलाः ॥ गन्धकोभ्रकमित्याद्या धातवो गिरिसंभवाः ॥ विशेषेण धातुर्धातुशब्देनैव प्रसिद्धेः, गैरिकं हेम-

धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः।
निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ॥ ८ ॥
इति शैलवर्गः । ३ ।

अटव्यरण्यं विपिनं गहनं काननं वनम्।
महारण्यमरण्यानी गृहारामास्तु निष्कुटाः ॥ १ ॥
आरामः स्यादुपवनं कृत्रिमं वनमेव यत्।
अमात्यगणिकागेहोपवने वृक्षवाटिका ॥ २ ॥
पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम्।
स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ॥ ३ ॥
वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः।
वन्या वनसमूहे स्यादङ्कुरोऽभिनवोद्भिदि ॥ ४ ॥
वृक्षो महीरुहः शाखी विटपी पादपस्तरुः।
अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः ॥ ५ ॥
वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः।
ओषधिः फलपाकान्ता स्यादवन्ध्यः फलेग्रहिः ॥ ६ ॥

---

त्येके, गिरौ भवामिति गिरिणाविग्रहोगिरिकादण्। स्थान इति शेषः। कुञ्जिरावरणार्थो लोकात्। व्यधिकरणे सप्तम्यौ ॥ ८ ॥ इति शैलवर्गः । ३ ।

अटन्त्यस्यामटवी। इअति भ्राम्यन्त्यत्रारण्यम्। वेपन्ते भयेनात्र विपिनं, वेपितुह्योर्ह्रस्वश्च ( उ० ) इतीनन्। गाह्यते गहनम्। कन्यते गम्यतेऽस्मिन्काननम्। वन्यते सेव्यते वनं वृक्षबहुलं स्थानम्। पूर्वैः सहानयोरैक्यमाहुः। सत्रं नानार्थे। हिमारण्ययोर्महत्वेङीषानुकौ ( वा० ) । कुटाद् गृहान्निष्कान्ता निष्कुटाः ॥ १ ॥ आरमन्त्यस्मिन्नारामः। करणेन निर्वृत्तः कृत्रिमो वृक्षसमूहः। समीपं वनस्योपवनम्, तुल्यत्वेन नैकव्यात्। अमात्यगणिकयोरुपलक्षणार्थत्वात्सार्थवाहादीनामपि ॥ २ ॥ आक्रीडन्त्यस्मिन्नाक्रीडः। उद्यान्त्यस्मिन्नुद्यानम्। साधारणं राज्ञीभिः सह। प्रमदार्थं वनं प्रमदानां वा प्रमदवनम्, ङ्यापोः संज्ञाछन्दसोर्बहुलं ( सू० ) इति ह्रस्वः। अन्तःपुरं तत्स्था देव्यः ॥ ३ ॥ वियन्त्यनया वीथिः। आलात्यालिः। आवलत्यावलिः। पच्यते पङ्क्तिः। श्रीयते श्रेणिः। सान्तरा पङ्क्तिर्निरन्तरा लेखा, यदाह मूले– लेखास्तु राजय इति। लिख्यन्ते लेखाः। राजन्ते राजयः, पङ्क्त्यपङ्क्तिसाधारणाः। ( वन्या ) पाशादिभ्योयः ( सू० )। अङ्क्यतेऽङ्कुरः, अकि लक्षणे। उद्भियत उद्भित्। प्ररोहोऽपि ॥ ४ ॥ वृश्च्यते छिद्यते वृक्षः, वृक्षति वृणोति वा। शाखी, व्रीह्यादौ ( व्रीह्यादिभ्यश्च )। पादैर्मूलैः पिबति पादपः, एवमङ्घ्रिपः [ चरणपश्च प्रसिद्धः ]। [ तरन्त्यनेनातपं तरुः। अनसः शकटस्याकं गतिं हन्ति– अनोकहो निर्वचनात् ]। द्रुर्वृक्षैकदेशोऽस्यास्ति द्रुमः, द्युद्रुभ्यांमः ( सू० )। द्रुशब्दोऽपि, अवयवेषु हि वृत्ताः शब्दाः समुदायेष्वपि वर्तन्त इति। न गच्छत्यगमः। अगनगौ नानार्थे। कुजोऽगच्छोऽपि ॥ ५ ॥ वनस्यपतिर्वनस्पतिः, पारस्करादित्वात् ( सू० ) सुट्, भवेऽर्थे दित्यदित्येति ( सू० ) ण्यः। पुष्पेभ्यो जातैः फलैर्हेतुभिः ( वानस्पत्यः )। पुष्पं विना तैः फलैः ( वनस्पतिः )। ओषं रुजं धयत्योषधिः, फलपाक एवान्तो यस्याः। फलानि गृह्णातीति, फलेग्रहिरात्मंभरिश्च ( सू० ) इति साधुः ॥ ६ ॥ बध्नाति फलं बन्ध्यः। अवके शून्ये– ईष्टेवकेशी। फलं बह्वस्यातीति, फलबर्हाभ्यामिनच् (वा०)। प्रफलति स्म प्रफुल्तः, ञिफला विशरणे, क्ते– उत्परस्यातः ( सू० ) इत्युत्वम् ( तिचेत्युत्वम् )। अनुपसर्गात्फुल्लक्षीबेति

वन्ध्योफलोवकेशी च फलवान्फलिनः फली ।
प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ॥ ७ ॥
फुल्लश्चैते विकसिते स्युरवन्ध्यादयस्त्रिषु ।
स्थाणुर्वा ना ध्रुवः शङ्कुर्ह्रस्वशाखाशिफः क्षुपः ॥ ८ ॥
अप्रकाण्डे स्तम्बगुल्मौ वल्ली तु व्रततिर्लता ।
लता प्रतानिनी वीरुद् गुल्मिन्युलप इत्यपि ॥ ९ ॥
नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ।
अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः ॥ १० ॥
समे शाखालते स्कन्धशाखाशाले शिफाजटे ।
शाखाशिफावरोहः स्यान्मूलाच्चाग्रं गता लता ॥ ११ ॥
शिरोग्रं शिखरं वा ना मूलं बुध्नोङ्घ्रिनामकः ।
सारो मज्जा नरि त्वक्स्त्री वल्कं वल्कलमास्त्रियाम् ॥ १२ ॥

---

( सू० ) फुल्लः साधुः । उत्फुल्लसंफुल्लयोरुपसंख्यानम् ( वा० ), प्रफुल्लेति पाठे फुल्ल विकसने, अच् । विगत आकोशः संकोचोस्य व्याकोशः । विशेषेण कचति विकचः । स्फुटति स्फुटः ॥ ७ ॥ ( त्रिषु ) वाच्यलिङ्गत्वात् । ( स्थाणुः, इ० ) तिष्ठति ध्रुवति शङ्कतेस्मात् । ह्रस्वाः शाखाः शिफामूलानि चास्य, क्षुप्यते क्षुपः सूक्ष्मलतादिप्रतानः ॥ ८ ॥ प्रकाण्डो गण्डस्तद्रहिते, उद्भिद्विशेषः स्तम्बस्तृणसंघातो वा, तिष्ठतीति स्थः, स्थःस्तोम्बजबकौ ( उ० ) । गुडति गुल्मः । नानार्थे विटपः । वलते वेष्टते वल्ली शुद्ध्यादिर्माधव्यादिश्च । वृक्षशाखापि ( लता ), यच्छाश्वतः– लता प्रततिराख्याता लता शाखा च शाखिनाम् । प्रकृष्टा तातिरस्याः प्रततिव्रतती च, जपादित्वाद्वत्वं ( ग० ) । लाति ( लताति ) लता । लतानां प्रतानोस्त्यस्याः प्रतानिनी वा लता विरुत्, यत्कात्यः– वीरुत्स्वपर्णजटिला प्रतानशतगामिनी । विरोहति [ चते ] वीरुत्, वीरुदिति निपातनादुपसर्गस्य दीर्घः, नहिवृतीति ( सू० ) दीर्घः, न्यङ्क्वादित्वाद्धत्वम् ( सू० ) । विरुणद्धि वा, ( वीरुत् ), अन्येषामपिदृश्यते ( सू० ) इति दीर्घः । उल्यते उलपः, उलः सौत्रो दीप्त्यर्थः आवरणार्थो वा, उलप्यते वा ( उलपः ) ॥ ९ ॥ आरुह्यते आरोह औन्नत्यम् । उच्छ्रयणमुच्छ्रायः, उदिश्रयतियौतीति ( सू० ) अनित्यो घञ्, यल्लक्ष्यं– पतनान्ताः समुच्छ्रयाः । उत्सेध उन्नतिः, यच्छाश्वतः– उत्सेधो वपुरुन्नतिः । प्रकाम्यते प्रकाण्डो वृक्षजङ्घा । स्कन्यत आरुह्यते स्कन्धः ॥ १० ॥ ( शाखा ) शाखृ व्याप्तौ, श्यत्येनां वा । शिखापि । समे इत्येव । शाल्मति शाला शायते वा, यच्छाश्वतः– शाला तरुस्कन्धशाखा शाला भवननिष्यते । शिनोति शेते वा शिफा । जटति जटनं वा जटा वृक्षादिमूलं, जट संघाते, भिदाद्यङ् ( षिद्भिदादिभ्योङ् ) । एवं शिफालतयोः पर्यायानुक्त्वा स्वरूपमाह । अधो रोहन्ति शाखा( याः )शिफाः, शिफारूपा शाखावरोहेश्वत्थादेरित्युपाध्यायः । बुध्नादूर्ध्वं गता लता( पि ), यदाह मूले– मूलाच्चाग्रं गता लतेति ॥११॥ वृक्षादेर्मूर्धाग्राह्वयः । शिखरं तु वा ना पक्षे पुमान्, रूपात्पक्षे क्लीबे । ( मूलं ) मूल रोहणे । बुध्यतेनेन बुध्नो वृक्षादेः पादपर्यायः । सरति सारः, सृस्थिरे ( सू० ) इति घञ् । मज्जति मज्जा, [ नरि पुंसि ] । त्वच संवरणे । वल्यते छाद्यतेनेन वल्कं, वल संवरणे । वल्कं लाति वल्कलं, श्यामलवत् ॥ १२ ॥ काश्यते काष्ठम् । दीर्यते दारु । विशेषमाह– इन्धनं त्रिति । इन्द्धेनेनाग्निरिन्धनामिध्मं च, इषियुधीन्धीति ( उ० ) मक् । आद्यमेध एधेरसुनि दाह्यदार्वर्थे, अपर एधः– अवोदैधौद्मेति ( सू० ) इन्धेर्घञि साधुः । होमार्थे समिध्यतेनया समित् । निष्कुष्यते निष्कुह्यते वा निष्कुहः, निष्कुट इत्येके । कुटति कोटरो

काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम् ।
निष्कुहः कोटरं वा ना वल्लरिर्मञ्जरी स्त्रियौ ॥ १३ ॥
पत्त्रं पलाशं छदनं दलं पर्णं छदः पुमान् ।
पल्लवोऽस्त्री किसलयं विस्तारो विटपोऽस्त्रियाम् ॥ १४ ॥
वृक्षादीनां फलं सस्यं वृन्तं प्रसवबन्धनम् ।
आमे फले शलाटुः स्याच्छुष्के वानमुभे त्रिषु ॥ १५ ॥
क्षारको जालकं क्लीबे कलिका कोरकः पुमान् ।
स्याद्गुच्छ( त्स )कस्तु स्तवकः कुड्मलो मुकुलोऽस्त्रियाम् ॥ १६ ॥
स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं स( सु )मम् ।
मकरन्दः पुष्परसः परागः सुमनोरजः ॥ १७ ॥
द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम् ।
आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले ॥ १८ ॥

---

वृक्षगर्तः, ना पुमान्, रूपात्पक्षे क्लीबे । वल्लते वल्लरिः । मन्यते मञ्जरी चूतादेर्नवोद्गित् ॥ १३ ॥ पतति पत्त्रम् । अपलश्यते शात्यते पलाशम् । छाद्यतेऽनेन छदनं छदश्च छादेर्घेऽद्व्युपसर्गस्य ( सू० ) इति ह्रस्वः । दलति दलम् । पिपर्ति पर्णम् । माढिः पत्त्रशिरा । पलति पल्लवः । किंचित्सरति किसलयम्, विकसति लीयमानं वा । नवपत्त्रं प्रवालाख्यम् । शाखादेर्विस्तृतिर्विस्तारः, प्रथने वावशब्दे ( सू० ) इति घञ् । विटान्पाति विटपः, यत्कात्यः– स्कन्धादूर्ध्वं तरोः शाखा कटप्रो विटपो मतः, विटन्त्याक्रोशन्त्यस्माद्वा ॥ १४ ॥ वृक्षादीनामिति पूर्वेणापि संबध्नन्ति । वृणोति वृन्तम् । प्रसवः पुष्पादिः, यत्कात्यः– बन्धनं पुष्पफलयोर्वृन्तमाहुः । शलति शलाटुः । फल इत्येव, ( वानं ) पैओवै शोषणे, ओदितश्च ( सू० ) इति निष्ठा नत्वम् । शलाटुवाने अभिधेयलिङ्गे ॥ १५ ॥ क्षरति प्रसूयते क्षारकः । जालमिव जालकं नवकलिकावृन्दम् । सूक्ष्मा कलिः कलिका, कल्यते शब्द्यते कलिका । कुर्यते (शब्द्यते) कोरकः । पुष्पसंघातो रम्यत्वाद् गूयते गुच्छः, गुङ् शब्दे । स्तूयते स्तवकः । गुलुञ्छोऽपि । ईषद्विकसिता कलिका, कुटति कुड्मलं । [ मुञ्चति कलिकात्वं मुकुलः ] । दुर्गाद्यास्त्ववान्तरभेदं न मन्यन्ते– मुकुलाख्या तु कलिका कुड्मलं जालकं तथा ॥ १६ ॥ सुष्ठु मन्यते सुमनसः, रूपाद्बहुत्वम् । पुष्यति पुष्पम् । प्रसूयते प्रसूनम् । कुस्यति कुसुमम् । मध्वाख्यः, मङ्क्यते मण्ड्यतेऽनेन पुष्पं मकरन्दः । परागच्छति परागः पुष्पधूलिः ॥ १७ ॥ वक्ष्यमाणं बदर्यश्वत्थादि वृक्षलतौषधिजातीयं स्त्रीपुंसादिलिङ्गमपि प्रसूयमाने पुष्पे फले मूले च वर्तमानं द्वाभ्यां हीनं नपुंसकलिङ्गं ज्ञेयमित्यर्थः । अवयवे चप्राण्योषधिवृक्षेभ्यः ( सू० ) इति विकारावयवोरुत्पन्नस्य प्रत्ययस्य लुप्प्रकरणे पुष्पमूलेषुबहुलं ( वा० ) इति लुप् । क्वचिद् अनुदात्तादेश्च ( सू० ) इत्यञो लुप् । कदम्बस्य विकारः कदम्बं पुष्पमशोकं करवीरं, बदर्याः फलं बदरं कोलं नालिकेरमाम्रं फलमामलकमिति वृक्षलक्षणस्य मयटः फलेलुक् ( सू० ) । सूरणस्यावयवः सूरणः कन्दः लुपियुक्तिवद्व्यक्तिवचने ( सू० ) इति स्त्रीपुंसौ प्राप्तौ । हरीतक्याः फलं हरीतकी, अवयवे च प्राण्योषधीति (सू०) अणः– अनुदात्तादेश्च (सू०) इत्यञश्च हरीतक्यादिभ्यश्च (सू०) इति लुप्, लुपि युक्तिवद्व्यक्तिवचने ( सू० ) इत्यत्र च हरीतक्यादिषु व्यक्तिरिति युक्तिवद्भावात्स्त्रीत्वम् । आदिशब्दात्कोशातकीद्राक्षाबदर्यादिः । अश्वत्थादेः प्लक्षादिभ्योऽञ् ( सू० ) इति पुनर्विधेः फले लुम्नास्ति । वेणोः बिल्वादिभ्योऽण् ( सू० ) । नैयग्रोधमिति, न्यग्रोधस्यचकेवलस्य ( सू० ) इत्यैजागम ॥ १८ ॥ बृहत्याः फलं बार्हतम् । फलति फलं, फल निष्पत्तौ । जम्ब्वावा ( सू० ) इत्यणि जाम्बवम्, पक्षे ओरञ् (सू०) तस्य लुकि फलं जम्बु ( फलेलुक् ), लुप्च (सू० ) इति जम्बूः– लुपि युक्तिवद्व्यक्तिवचनत्वात् (सू०)

बार्हतं च फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम् ।
पुष्पे जातिप्रभृतयः स्वलिङ्गा व्रीहयः फले ॥ १९ ॥
विदार्याद्यास्तु मूलेऽपि पुष्पे क्लीबेऽपि पाटला ।
बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः ॥ २० ॥
अश्वत्थोऽथ कपित्थे स्युर्दधित्थग्राहिमन्मथाः ।
तस्मिन्दधिफलः पुष्पफलदन्तशठावपि ॥ २१ ॥
उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ।
कोविदारे चमरिकः कुद्दालो युगपत्रकः ॥ २२ ॥

---

स्त्रीत्वम् । पुष्पविकाशे जातेर्लतायाः पुष्पं जातिर्मालती शेफालिका यूथिका, चम्पकं बकुलं शिरीषं, अनुदात्तादेश्च ( सू० ) इत्यञोऽणश्च पुष्पमूलेषुबहुलं ( वा० ) इत्येभ्यः पुष्प एव लुप् । व्रीहीणां फल एव, तदाह– व्रीहयः फले स्वलिङ्गा इत्येव, व्रीणाति व्रीहिः, व्री श्री भरणे । यवानां फलं यवाः, माषा मुद्गास्तिलाः, व्रीहिमुद्गाभ्यां बिल्वादिभ्योऽण् ( सू० ), अन्यत्र अवयवेचप्राण्योषधीत्यण् ( सू० ), तस्य फलपाकशुषां ( वा० ) इति लुप् , युक्तिवद्भावः, स्वलिङ्गा इत्येव ॥१९॥ ( विदार्याद्यास्तु मूले ) स्वलिङ्गा इत्येव । विदार्य भुज्यते ( विदारी ), विदार्या मूलं विदारी, मूल प्रतिष्ठायाम् । ( पाटला ) अनुदात्तादेश्च (सू०) इत्यञ्, पुष्पमूलेषुबहुलं (वा०) इति लुप् , लुपि युक्तिवत्त्वम् । आद्यशब्दाद्गम्भारीबृहत्यंशुमत्याद्याः । पाटलायाः पुष्पं पाटलं, अञो बाहुलकत्वाल्लुगभावः, यच्छाश्वतः– पाटलं कुसुमे वर्णेप्याशुव्रीहिश्च पाटलः । अपिशब्दात्पाटला, बिल्वाद्यणा पाटलीत्यपि । पुष्प इति किं पाटलो नाम व्रीहिः । बोधिद्रुमो बोधिसत्त्वाख्यः सर्वोपकारित्वात् । तनुवृन्तत्वाद गुरुपर्णत्वात्स्वल्पेपि वाते चलदलः । पिप्पलानि देयां पत्राणि, तानि सन्त्यस्य, अर्शआदित्वादच् ( सू० ), अपत्ल इति नैरुक्ताः । एवमाद्याः प्राकृता अपीति **धन्वन्तरिः**, यदाह -प्रायो जनाः सन्ति वनेचराद्या गोपादयः प्राकृतनामतज्ज्ञाः । प्रयोजनार्थो वचनप्रवृत्तिर्यतस्ततः प्राकृत इत्यदोषः ॥ किं च– रसवीर्यविपाकेभ्यो मूलात्पुष्पात्फलाद्दलात् । आकाराद्देशकालादेर्वनौषध्यर्थमुन्नयेत् ॥२०॥ अश्वेषु तिष्ठत्यश्वत्थोऽश्वाश्रयः, पृषोदरादित्वात् ( सू० ) सस्य तत्वम् । आह **धन्वन्तरिः**– पिप्पली केशवावासश्चलपत्रः पवित्रकः । मङ्गल्यः श्यामलोऽश्वत्थो बोधिसत्त्वो गजाशनः ॥ केशवावासमङ्गल्यादयोऽत्राल्पप्रयोगत्वान्नोक्ताः । एवमुत्तरत्र । कपिषु तिष्ठति कपित्थः कपिप्रियत्वात् । दध्नि तिष्ठति दधित्थो दधिफलत्वात् । ग्राही विष्टम्भकारित्वात् । मन्मथो मदनाख्यः पर्यायेणोक्तः । दन्तेषु शठोम्ललत्वात् । आह च– कपित्थोथ दधित्थस्तु ग्राही फलसुगन्धकः । अक्षस्यदो दधिफलश्चिरपाकी कपिप्रियः ॥ द्व्यर्थे पुष्पफलः कूष्माण्डः कपित्थश्च, तथा दन्तशठो जम्भीरः कपित्थश्च । त्र्यर्थे मदनः पिण्डीतकः कपित्थो धत्तूरकश्च ॥ २१ ॥ उल्लङ्घिताम्बर उदुम्बरः, उत्वं लक्ष्यात् । मशकगर्भाणि फलान्यस्य जन्तुफलः, कृमिफलः पर्यायेणोक्तः । आह च– क्षीरवृक्षे हेमदुग्ध उदुम्बरसदाफलौ । अपुष्पफलसम्बद्धो यज्ञाङ्गी श्वेतवल्कलः ॥ आहेन्दुः– उदुम्बरस्तु यज्ञाङ्गः सुचक्षुः श्वेतवल्कलः । हेमदुग्धः कृमिफलः क्षीरवृक्षः स काञ्चनः ॥ कोभूमेर्विदारणात्कोविदारः, अत एव कुद्दालः । चमरोस्यास्ति चमरिकः । आह च– कोविदारेथ कुद्दालः कुद्दारः कुण्डली कुली । ताम्रपुष्पश्चमरिको महायमलपत्रकः ॥ युगपत्त्रक इति यमलपत्त्रपर्यायेणोक्तः ॥ २२ ॥ शरदि पुष्यति शारदः, शारदीत्येके । आह च– सप्तपर्णः शक्तिपर्णस्त्रिपर्णस्तु सुपर्णकः । सप्तच्छदो गुल्फपुष्पस्तथा शाल्मलिपर्णकः ॥ आहुश्च–सप्तपर्णो बृहत्त्वक्कः सप्ताह्वो गुच्छपुष्पकः । सप्तच्छदः सप्तपत्रो युग्मपत्रो बहुच्छदः ॥ आसमन्ताद्रुजां वधोऽत्रारग्वधः, आरमत्र जयन्त्यारजो मलास्तेषां वधोऽनेनेति वा । राजा चासौ वृक्षश्च, रोगराजं वृश्चति वा राजवृक्षः । शम्पां शिम्बिमकति श-

सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ।
आरग्वधे राजवृक्षशम्याकचतुरङ्गुलाः ॥ २३ ॥
आरेवतव्याधिघातकृतमालसुवर्णकाः ।
स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ॥ २४ ॥
वरणे वरुणः सेतुस्तिक्तशाकः कुमारकः ।
पुन्नागे पुरुषस्तुङ्गः केसरो देववल्लभः ॥ २५ ॥
पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ।
तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ॥ २६ ॥
वञ्जुलश्चित्रकृच्चाथ द्वौ पीतनकपीतनौ ।
आम्रातके मधूके तु गुडपुष्पमधुद्रुमौ ॥ २७ ॥
वानप्रस्थमधुष्ठीलौ जलजेत्र मधूलकः ।
पीलौ गुडफलः स्रंसी तस्मिंस्तु गिरिसंभवे ॥ २८ ॥

---

म्याकः । चतुरङ्गुलपर्वा ॥२३॥ रेवती रोगदेवता, अरेवत्यां भव आरेवतः, आरेवते ज्वरोनेन वा, रेवृ प्लवगतौ । कृता मालास्य कृतमालः, उत्तम्भित इव सकर्णिकत्वात् । आह च– कर्णिकारो राजवृक्षः प्रग्रहः कृतमालकः । आरोग्यशिम्बी शम्याको व्याधिघातोपघातकः ॥ आरग्वधो दीर्घफलो व्याघातश्चतुरङ्गुलः । आरेवतस्तथा कर्णी कर्णीवान् स च रेवतः ॥ जम्भमें [मैं]हनार्थस्यैतानि रूपाणि । दन्तशठोम्ब्लत्वात् । आह च– जम्भीरो जम्भलो जम्भः प्रोक्तो दन्तशठस्तथा । गम्भीरो वक्तशोधी( षी ) च रोचनो दन्तहर्षणः ॥ २४ ॥ वृणोति वरुणो वरणश्च पर्णिकवृक्षत्वात् । अत एव पर्यन्ते रक्षाहेतुत्वात्सेतुः । तिक्तरसः शाकश्च, शाकमध्ये पाठात् । कुमारको नित्यतरुणः । आह च– वरुणः श्वेतपुष्पश्च तिक्तशाकः कुमारकः । सेतुद्रुमः साधुवृक्षस्तमालो मारुतापहः ॥ पूजितः पुमान् पुन्नागः स इव प्राधान्यात् । प्रशस्ताः केसरा अस्य केसरः । आहेन्दुः– तुङ्गः पुष्कसंज्ञः स्यात्पुंनामा रक्तकेसरः । पुंनागः पुरुषाह्वश्च केषांचित्पद्मकेसरः ॥ २५ ॥ पारि पारं प्राप्तं भद्रमस्य पारिभद्रः । नियमनान्निम्बः । आह च– निम्बो नियमनो नेता पिचुमन्दः सुतिक्तकः । लिम्बोथ सर्वतोभद्रः प्रभद्रः पारिभद्रकः ॥ त्र्यर्थे पारिभद्रः कोलिः पारिजातो देवदारुश्च । अतिक्रान्तो निशास्तिनिशः, चिरकालित्वात् । स्यन्दनः स्यन्दने पटुः, रथोपयोगित्वात् । रथचक्रान्ते नयति नेमिः । अतिमुक्तो विस्तीर्णत्वात् ॥ २६ ॥ वन्यते प्रथते वञ्जुलः । चित्रकृल्लघुत्वेपि दाढर्यदैर्घ्याभ्यामाश्चर्यकारी । आहुश्च– तिनिशश्चित्रकृन्नेमिः स्यन्दनो रथसाधकः । तथारण्यो रथद्रुश्चाप्यतिमुक्तक इत्यपि ॥ त्र्यर्थे वञ्जुलो वेतसः स्यन्दनोशोकश्च । पीतीक्रियतेनेन पीतनः । कपींस्तनोति कपीतनः कपिप्रियत्वात् । आम्रमतत्याम्रातकः कपिचूतत्वात् । आह च– आम्रातकः पीतनकः कपिचूतोम्ब्लवातकः । शृङ्गी कपिरदाव्यश्च (?) नडः कीरः कपिप्रियः ॥ त्र्यर्थे कपीतन आम्रातकः प्लक्षः शिरीषश्च । कपीतनशब्दस्य पीतनोपभ्रंश इत्येके । गुडवन्मधुराणि पुष्पाण्यस्य गुडपुष्पः । मधुप्रधानो द्रुमो मधुद्रुमः ॥ २७ ॥ वनप्रस्थे भवो वानप्रस्थः स्थलजत्वात् । मधु ष्ठीवति मधुष्ठीलः, मधु माधुर्यमष्ठीले गर्भेस्य मध्वष्ठीलो वा । यदाह– मधूको मधुवृक्षश्च मध्वष्ठीलो मधुस्रवः । गुडपुष्पा रोध्रपुष्पो वानप्रस्थोथ माधवः ॥ अत्र मधूके, यदाह– मधूकोन्यो मधूलस्तु जलजो दीर्घपत्त्रकः । ह्रस्वपुष्पः फलस्वादुर्गैरिकाख्यो मधूलकः ॥ पीयते मधुर्यात्पीलुः पोड्यते वा । स्रंसते स्रंसयति वा स्रंसी । आह च– पीलुः शीतफलः स्रंसी धारी गुडफलोपि च ॥ २८ ॥ अक्ष्णोत्यक्षोटः । कन्दरास्यास्तीति कन्दरावेष्टनात्कन्दरालः, कर्पराल इत्येके । आह च– अक्षोटः पर्वतीयश्च फलस्नेहो गुहाशयः । कीरेष्टः कन्दरालश्च स्वादुमज्जो मृदुच्छदः ॥ अङ्क्यते कीलकैर्लक्ष्यतेङ्कोटः, अङ्कोलोपि, प्राकृतेऽङ्कोलः । निकुच्यतेस्मा-

अक्षोटकन्दरालौ द्वावङ्कोटे तु निकोचकः ।
पलाशे किंशुकः पर्णो वातपोथोऽथ वेतसे ॥ २९ ॥
रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः ।
द्वौ परिव्याधविदुलौ नादेयी चाम्बुवेतसे ॥ ३० ॥
सौ( शो )भाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः ।
रक्तोऽसौ मधुशिग्रुः स्यादरिष्टः फेनिलः समौ ॥ ३१ ॥
बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि ।
प्लक्षो जटी पर्कटी स्यान्न्यग्रोधो बहुपाद्वटः ॥ ३२ ॥

---

त्कण्टकित्वान्निकोचकः । आह च– अङ्कोटाङ्कोलकौ रेची निर्दिष्टो दीर्घकीलकः । पीतसारस्ताम्रफलो गन्धपुष्पो निकोचकः ॥ प्रशस्तानि पलाशानि सन्त्यस्य पलाशः, पलमश्नुते रक्तपुष्पत्वाद्वा । किंचिच्छुको नीलः किंशुकः । वातं पोथयति वातपोथः । **चन्द्रोऽत्र**– पलाशः किंशुकः पर्णो यज्ञियो रक्तपुष्पकः । क्षारश्रेष्ठो वातपोथो ब्रह्मवृक्षः समिद्वरः ॥२९॥ वेत्यम्भोऽनुवर्तते वितस्यत वा वेतसः । रमन्तेऽस्मिन्रथः । अभ्राणीव पुष्पाण्यस्याभ्रपुष्पः । विदोल्यते वेगेन विदुलः । शीतो वीर्येण लेपाद्दाहशमनात् । वनति भजत्यम्बु वानीरो वञ्जुलश्च । परिविध्यतेऽम्भसा परिव्याधः । नद्यां भवा नादेयी, नित्यं स्त्री, वेतसी तु द्वयोः । त्रिष्वर्थेष्विन्दुर्नादेयी तर्कारी जलवेतसी भूमिजम्बूश्च । **चन्द्राद्या** विभागेनाहुः– वेतसो विदुलो नम्रो वञ्जुलो दीर्घपत्रकः । नादेयी गन्धपत्रश्च जलौकाः सभृतस्तथा ॥ नदीकूलप्रियस्त्वन्यः सुशीतो घनपुष्पकः । जलजातस्तोयकामो विदुलो जलवेतसः । निचुलो वेतसादन्यो वक्ष्यते ( स्थलवेतसः ) ॥३०॥ सुष्ठु भनक्ति मुखं सौभाञ्जनः । शिनोति तैक्ष्ण्याच्छिग्रुः । न क्षीवन्त्यनेन वृष्य [ क्ष ] त्वादक्षीवः । मुञ्चति गन्धं मोचकः । आहुश्च– शिग्रुः स्याच्छ्वेतमरिचं मुखभञ्जोऽतितीक्ष्णकः । सौभाञ्जनस्तीक्ष्णगन्धः सुतीक्ष्णो घनपल्लवः ॥ शिग्रुर्हरितशाकोऽन्यो मतो मूलकपल्लवः । घनच्छदस्तीक्ष्णगन्धो मु[ म ]रङ्गी दंशनक्षमः ॥ तृतीयो मधुशिग्रुः स्यात्– । त्र्यर्थे मोचकः कदली शाल्मलिः सौभाञ्जनश्च । चतुर्ष्वर्थेष्विन्दुरक्षीवः समुद्रलवणं नीली महानिम्बः सौभाञ्जनश्च । मधुप्रधानः शिग्रुः ( मधुशिग्रुः ) । न रिष्यन्त्यनेनारिष्टो रक्षाहेतुः । फेनाः सन्त्यस्य फेनिलः । **चन्द्रोऽत्र**– अरिष्टस्तु सुमङ्गल्यः कृष्णबीजोऽर्थसाधनः । रक्षाबीजः शीतफेनः फेनिलो गर्भपातनः ॥ ३१ ॥ बिलति भिनत्ति बिल्वः । शण्डिलपौत्रः शिलूषज इत्यागमाद्यण्णौ, शाण्डिल्य इव ब्राह्मणमन्यत्वात्, शैलूष इव नानारूपपरिवर्तनाद्वा । मलते मलान्मालूरः, मां लक्ष्मीं लाति वा । श्रीप्रदानि फलान्यस्य श्रीफलः । आह च– बिल्वः शलाटुः शाण्डिल्यो हृद्यगन्धः सदाफलः । शैलूषः श्रीफलस्त्र्याह्वः कङ्कटः पूतिमारुतः ॥ प्लक्षत्यधो गच्छति मूलैः प्लक्षः, प्लुष्यते ( प्लक्ष्यते ) वा । जटाः सन्त्यस्य जटी । अत एव पृच्यते पर्कटी, इन्नन्तोऽयं, ईदन्तोऽप्यस्ति, यच्छाश्वतः– विज्ञेया पर्कटी प्लक्षः प्लक्षः पिप्पलपादपः । न्यक् तिर्यग्रुणाद्धि मार्गं मूलैर्न्यग्रोहति वा न्यग्रोधः, न्यङ्क्वादित्वात् ( सू० ) धत्वम् । बहवः पादा मूलान्यस्य बहुपात्, संख्यासुपूर्वस्येति ( सू० ) अन्तलोपः । वट[ य ]ति वेष्टयति मूलैर्वटः । आह च– वटो रक्तफलः शृङ्गी न्यग्रोधः कुन्दजो ध्रुवः । क्षीरी वैश्रवणावासो बहुपादो वनस्पतिः ॥ ३२ ॥ आद्यौ श्वेतलोध्रे तिरीटाद्या रक्तलोध्रे । गालयति स्रावयत्यक्षि गालवः । शाबरः शबरवृक्षः । रुणद्धि व्रणं रोध्रः, रलयोरैक्याल्लोध्रोऽपि । तिरयति रोगांस्तिरीटः । तिलति स्निह्यत्यङ्गमनेन तिल्वः । मार्ष्टि उद्वर्तयत्यङ्गं मार्जनः, अत एवो न्मा( त्सा )दनः । आह च– लोध्रो रोध्रः शाबरकश्चिल्लकस्तिल्वकस्तरः । तिरीटः कालहीनश्च चिल्ली शबरपादपः ॥ द्वितीयः पट्टिकारोध्रो गालवः स्थूलवल्कलः । जीर्णबुध्नो बृहत्त्वकः पट्टी लाक्षाप्रसादनः ॥ **इन्दुश्च**– रोध्रः

गालवः शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ ।
आम्रश्चूतो रसालोसौ सहकारोतिसौरभः ॥ ३३ ॥
कामाङ्गो मधुदूतश्च माकन्दः पिकवल्लभः ।
कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः ॥ ३४ ॥
शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ।
राजादनं पियालः स्यात्सन्नकद्रुर्धनुःपटः ॥ ३५ ॥
गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका ।
श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः ॥ ३६ ॥
कर्कन्धु( न्धू )र्बदरी कोलिर्घोण्टा कुवलफेनिले ।
सौवीरं बदरं कोलमथ स्यात्स्वादुकण्टकः ॥ ३७ ॥

---

कषायकृद्व्रणश्लिष्टको मधुपुष्पकः । व्रणौषधं कालहीनो हिमपुष्पोक्षिभेषजम् ॥ उत्सादनो घनत्वक्कस्तरः शबरपादपः । रोध्रः शाबरकः श्वेतत्वगतीसारभेषजम् ॥ द्वितीयः पट्टिकारोध्रो बृहत्पत्त्रस्तिरीटकः । उत्तालकस्तिल्वकश्च पट्टी लाक्षाप्रसादनः ॥ अम्यतेभिलष्यत आम्रः, अमितम्योर्दीर्घश्च ( उ० ) इति रक् । च्योतति रसं चूतः, चूष्यत इति **श्रीभोजो** निरवोचत् । रसमलति रसालः । सहकारयति मेलयति स्त्रीपुंसौ सहकारः, सुरासखत्वाद्वा । यदाह– आम्रश्चूतो रसालश्च सचेष्टो मदिरासखः । कामाङ्गः सहकारश्च परपुष्टमहोत्सवः ॥ ३३ ॥ कुम्भोलूखलाकाराद् वृक्षकोशान्निर्याति कुम्भोलूखलकम् । कोशे भवः कौशिकः, उलूकाख्यैव नक्तंचरत्वात् । गुडति रक्षति वातरोगाद् गुग्गुलुः । पिपर्ति पुरः, इगुपधेति ( सू० ) कः, उदोष्ठ्यपूर्वस्य ( सू० ) इत्युत् । आह च– गुग्गुलुः कालनिर्यासो जटायुः कौशिकः पुरः । नक्तंचरः शिवो दुर्गो महिषाक्षः फ( प )लंकषः ॥ ३४ ॥ शिलति शिनोति रोगान्वा शेलुः शेलुकश्च । श्लेष्माणमतति शीतवीर्यत्वाच्छ्लेष्मातकः, अत एव शीतः । उद्दालयत्यङ्गमुद्दालकः स्पर्शेन स्फोटकारित्वात् । बहु वृणोति स्रोतांसि बहुवारः । आहेन्दुः– शेलुः श्लेष्मातकः शीतो वसन्तकुसुमस्तथा । उद्दालकः कर्बुरटः शेलुको भूतवृक्षकः ॥ पिच्छिलः शापितः शेलुस्तथासद्बीजकुत्सितः ॥ लेखवाटो बहुवार इति । राज्ञामदनं मिष्टत्वात् । पियति सरलत्वात्पियालः, रि पि गतौ, अपियालेके । सन्नकः खरोद्रुः स्कन्धोस्य सन्नकद्रुः । धनुष इव पटो विस्तारोस्य धनुःपटः, धनुरुकारान्तो व्यस्त इति **गौडो** भ्रान्तः, यदाहुः– पियालोथ खरस्कन्धश्चारो बहुलवल्कलः । सन्नकद्रुश्चापपटो लस्त[ ल ]नस्तापसप्रियः ॥ द्व्यर्थे राजादनः पियालः क्षीरिका च ॥ ३५ ॥ गभे सरसत्वाद् भारोस्या गम्भारी । कृश्यति तनूकरोति काश्मरी काश्मर्यश्च । मधूनि मिष्टानि पर्णान्यस्या मधुपर्णी, पाककर्णपर्णेति ( सू० ) ङीष् । आह च– काश्मर्यः काश्मरी हीरा कश्मरी मधुपर्ण्यपि । श्रीपर्णी सर्वतोभद्रा गम्भारी कृष्णवृन्तिका ॥ ३६ ॥ कर्को लोहितोन्धुः कर्कन्धुः, शकन्ध्वादित्वात्पररूपम् ( वा० ) । बदति बदरी, बद स्थैर्ये । कोलिः, कुल संस्त्याने, कुल( ड ) बाल्येस्माद्वा । घुणति वृक्ष[ त्त ]त्वाद् भ्रमति घोण्टा । को भूमौ वलति कुवलम् । फेनिलं कफवर्धनात् । सुवीरदेशे भवं सौवीरम् । अत्राद्यास्त्रयो वृक्षार्थाः, अन्ये फलार्थाः, घोण्टा तूभयस्पृक्, यथेन्दुः– बदरी स्निग्धपत्त्रा च राष्ट्रवृद्धिकरी तथा । फलं तस्याः स्मृतं कोलं कोकिलं फेनिलं कुहम् ॥ लोलं सूक्ष्मफलं तत्तु ज्ञेयं कर्कन्धु कन्दुकम् । स्वादुः कटुः सिञ्चतिका तच्च कोलं फलं मतम् ॥ **धन्वन्तरिः** सामान्येनाह– बदरं कोविलं कोलं सौवीरं फेनिलं कुलम् । कर्कन्धुः कन्दुकं स्वादुः कटु सिञ्चतिका गुडा ॥ द्व्यर्थे कुवलं नीलाब्जे बदरं च । कोलिफलत्वात्कोलिकमिति च सभ्यः पाठः, कोकिलमिति तु **वैद्याः** । **चन्द्रो**पि– बदरी गोपघोण्टा च घोण्टा घुण्टाथ कोकिला । स्निग्धच्छदा कोलफला राष्ट्रवृद्धिकरी तथा ॥३७॥ विकङ्कते प्रसरति विकङ्कतः, कङ्किर्गत्यर्थः । स्रुवा स्रुक्, सा हि वैकङ्कती

विकङ्कतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि ।
ऐरावतो नागरङ्गो नादेयी भूमिजम्बुका ॥ ३८ ॥
तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ।
काकेन्दुः कुलकः काकतिन्दुकः काकपीलुके ॥ ३९ ॥
गोलिहो झाटलो घण्टा पाटलिर्मोक्षमुष्ककौ ।
तिलकः क्षुरकः श्रीमान्समौ पिचुलझावुकौ ॥ ४० ॥
श्रीपर्णिका कुमुदिका कुम्भी कैड(ट)र्यकट्फलौ ।
क्रमुकः पट्टिकाख्यः स्यात्पट्टी लाक्षाप्रसादनः ॥ ४१ ॥
तू( नू )दस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ।
तूलं च नीपप्रियककदम्बास्तु हलिप्रिये ॥ ४२ ॥

---

आम्नाता । आह च– विकङ्कतः पृथुफलो ग्रन्थिलः स्वादुकण्टकः । गोपकण्टः काकपादो व्याघ्रपादोथ किङ्करी ॥ इरावत्या विद्युत इवायं रक्तत्वादैरावतः । नागस्य सिन्दूरस्येव रङ्गोस्य नागरङ्गः, नागच्छति सहसा रङ्गोस्य वा । आह च– नागरङ्गस्त्वक्सुगन्धो नागरङ्गो मुखप्रियः । स चैरावतकः प्रोक्तः सुधातक्राधिवासनः ॥ नादेयी नदीजाता । भूमौ जम्यतेद्यते भूमिजम्बूः । चत्वारो नागरङ्गार्था इति गौडः । आह च– जम्बूः सुरभिपत्त्रा च राजजम्बूर्महाफला । काकजम्बूर्मेघवर्णा नादेयी चेदिशोल्यकः ( ? ) ॥ ३८ ॥ तिम्यति तिन्दुकः । शितिः कालः सारो मज्जास्य शितिसारः । आह च– तिन्दुको नीलसारश्च कालस्कन्धोसिमत्सरु । स्फूर्जकः स्फूर्जशब्दोपीति । काकवर्णस्तिन्दुः काकेन्दुः । कुत्सितैर्लक्यते कुलकः, लक आस्वादने । द्व्यर्थे कुलकः काकतिन्दुकः पटोलोपि । आह च– तिन्दुकोन्यो द्वितीयस्तु स्फूर्जकः काकतिन्दुकः । काकेन्दुकश्च विख्यातः कुपीलुः काकपीलुकः ॥ मर्कटतिन्द्वाख्यः ॥३९॥ गोभिर्लिह्यते गोलिहः, गोलीढोपि । झाटं संघातं लाति झाटलः । हन्यते घण्टा । पाटं विस्तारं लाति पाटलिः । मोक्षति सहते मोक्षः । मुष्णाति रोगान् क्षारकत्वान्मुष्ककः । आह च– मुष्ककौ मोक्षको घण्टा मूषको रञ्जकस्तथा । क्षारश्रेष्ठो गोलिहश्च द्विविधः श्वेतकृष्णकः ॥ तिलाभपुष्पस्तिलकः । क्षुरति परुषत्वात्क्षुरकः । आह च– तिलकः पुरुषः श्रीमान् क्षुरकश्छत्रपुष्पकः । पिचुं तूलं लाति पिचुलः । ध्यायतेर्झावुकोपभ्रष्टः ॥४०॥ श्रीपर्णी सुपर्णत्वात्, पाककर्णपर्णेति (सू०) ङीष् । [ कुमुदप्रतिकृतिः कुमुदिका, कौ मोदते वा ] । कुम्भी रसाधारत्वात् । कं रसमीट्टे कैडर्यः, अविभावितप्रकृतिप्रत्ययार्थोयं वा । कटत्यावृणोति कषायत्वात्फलमस्य कट्फलः । आह च– कट्फलः सोमवल्कश्च श्रीपर्णी कुमुदा तथा । महाकुम्भी च कुम्भी च भद्रा भद्रवतीति च ॥ द्व्यर्थे कैडर्ये कट्फलो मदनफलं च । क्रामति क्रमुकः । पट्टोस्यास्ति पट्टी पट्टिका, रोध्रोयम् । लाक्षां प्रसादयति, रोध्रप्रस्तावे व्याख्यातमेतत् ॥४१॥ तुद्यते तूदः । यूपप्रतिकृतित्वाद्यूपः । ब्रह्मणि वैदिके ... धुर्ब्रह्मण्यः, अत एव ब्रह्मदारु । तूल्यते तूलं, तूलीति गौडः, तूल निष्कर्षे । आह च– तूलं तूदं च यूपं च क्रमुकं ब्रह्मकाष्ठकम् । ब्रह्मदारु ब्रह्मनिष्ठं ब्रह्मण्यं ब्रह्मचारि च ॥ नयति सुखं नीपः । प्रीणाति प्रियकः । के दाम्यति कदम्बः । हलिनः प्रियः सुराधिवासनात् । धाराकदम्बो राजकदम्बश्चासौ, धूलीकदम्बोन्यः । आह च– परः कदम्बः प्रावृषेण्यः कादम्बर्यो हलिप्रियः । नीपो धूलिकदम्बोन्यः सुवासावृत्त[ त ]पुष्पकः ॥ ४२ ॥ विशेषेणेरयति वीराणां वा वृक्षो दुःस्पर्शत्वात् । अरूंषि स्फोटैर्व्रणान् करोति– अरुष्करः, दिवाविभेति (सू०) टः । अग्निवन्मुखमस्या दाहकत्वादग्निमुखी । भल्ल इवातति दृणाति ( भल्लातकः ) । आह च– भल्लातकः स्मृतो दुःखो दहनस्तपनोग्निकः । अरुष्करो वीरतरुर्भल्ली चाग्निमुखी धनुः ॥ गर्दभ इवाण्डमस्य गर्दभाण्डः, गर्द

वीरवृक्षोरुष्करोग्निमुखी भल्लातकी त्रिषु ।
गर्दभाण्डे कन्दरालकपीतनसुपार्श्वकाः ॥ ४३ ॥
प्लक्षश्च तिन्तिडी चिञ्चाम्लिकाथो पीतसालके ।
सर्जकासनबन्धूकपुष्पप्रियकजीवकाः ॥ ४४ ॥
साले तु सर्जकार्श्या( र्ष्या )श्वकर्णकाः सस्यसंवरः ।
नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोर्जुनः ॥ ४५ ॥
राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः ।
इङ्गुदी तापसतरुर्भूर्जे चर्मिमृदुत्वचौ ॥ ४६ ॥
पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ।
पिच्छा तु शाल्मलीवेष्टे रोचनः कूटशाल्मलिः ॥ ४७ ॥

---

सशब्दं भाण्डमस्येति युक्तं कन्दरालत्वात् । कं पीतयति कपीतनः, कपीते[ ने ]ति वा । आह च– प्लक्षः कपीतनः शु( शृ )ङ्गी सुपार्श्वश्चारुदर्शनः । प्लवको गर्दभाण्डश्च कमण्डलु पटः प्लवः ॥ ४३ ॥ तिम्यति तिन्तिडी । चिञ्चिमायतेम्ब्लत्वान्मुखं ययासौ चिञ्चा, फलतश्चुक्रिका । आह च( चन्द्रः )– आम्लिका चुक्रिका चुक्रा साम्ब्ला शुक्ताथ शुक्तिका । आम्लिका चाम्बि[म्बि]का चिञ्चा तिन्तिडीकं च तिन्तिडी ॥ पीतवर्णः सालः (पीतसालः) । सृजति निर्यासं सर्जः । अस्यत्यसनः । बन्धूकस्येव रक्तानि पुष्पाण्यस्य बन्धूकपुष्पः । काम्यत्वात्प्रियत्वात्प्रियकः । जीवयति जीवकः । बीजक इति तु **निघण्टुः**, संज्ञया बीजको ज्ञेयो बीजपूरस्तथासनः । आहुश्च– बीजकस्त्वसनः काम्यः सौरिः कृष्णोलव[ क ]प्रियः । तिष्यपुष्पः पीतसालः प्रियकः प्रियसालकः ॥ सुगन्धिनीलनिर्यासस्तथा बन्धूकपुष्पकः । स स्यात्प्रियकसालश्च महासर्जश्च नामतः॥४४॥ स्यति सालः । कृश्यति कार्श्यः । अश्वकर्णाभपत्त्रः ( अश्वकर्णकः ) । सस्यं फलं संवृणोति सस्यसंवरः । आह च– सर्जकश्चाश्वकर्णश्च कषायी दीर्घपत्रकः । सस्यसंवरणः शूरः सर्जकः साल उच्यते ॥ वीरतरुर्जुननामसाम्यात् । ककुभः सन्त्यस्य दिग्व्यापकत्वात्ककुभः, कंस्कुभ्नातीत्यहृद्या व्याख्या । अर्जुनः शौक्ल्यात्, इन्द्रप्रियत्वादित्येके । आहेन्दुः– ककुभस्त्वर्जुनः पार्थो नदीसर्जो धनंजयः । अश्रीफलश्चित्रयोगी वीरो वीरान्तकस्तथा ॥ व्यर्थे– इन्द्रद्रुः कुटजोर्जुनो देवदारु च ॥ ४५ ॥ क्षीरिका क्षीरस्वादुत्वात्, आद्ये तु मिष्टान्नत्वान्नामनी । आह च– क्षीरिकोक्ता च राजन्यः क्षीरी मृत्सूय[ प ]को नृपः । राजादनो दृढस्कन्धः कपीष्टः प्रियदर्शनः ॥ इङ्गतीङ्गुदः । तापसा ह्यरण्येस्याः स्नेहमुपभु( यु )ञ्जत । भृणाति भूर्जः, भूर्जातो वा । आहुश्च– भूर्जो भृजो बहुपटो बहुत्वक्को मृदुच्छदः ॥ ४६ ॥ पिच्छास्त्यस्याः पिच्छिला । पूरयति पूरणी । मुञ्चति रसं मोचा । स्थिरायुः कालसहत्वात् । शालते दैर्घ्याच्छलति वा शाल्मली शाल्मलिश्च । आह च– शाल्मली रक्तपुष्पा च कुक्कुटी स्थिरजीविता । पिच्छिला तूलिनी मोचा कण्टकारी च पूरणी ॥ मोचनीति च । पिच्छेव पिच्छा, आचामवदङ्गुलिसंगित्वात् । शाल्मल्या वेष्टे निर्यासः । आह च– शाल्मलीवेष्टकः पिच्छा निर्यासः स च शाल्मलः । मोचसारो मोचरसो मोचनिर्यासकस्तथा ॥ रोचते रोचनः शाल्मलिविशेषः । कूटेन कुत्सितत्वं द्योत्यते, दुर्गादेर्हि परसैन्यदलनार्थे सा क्षिप्यते । आह च– कुशाल्मलिः शाल्मलिको रोचनः कूटशाल्मलिः ॥ ४७ ॥ चिरिणं बिलति भिनत्ति चिरिबिल्वः । नक्तं रात्रावालमस्मान्नक्तमालो भूताश्रयत्वात्, रक्तमाल इत्येके । कं रञ्जयति करञ्जः ( करजश्च ) । प्रकीर्यते प्रकीर्यः । पूतिको दुर्गन्धः । कलेर्मारकः कलहहृत्, यदिन्दुः– करञ्जो रक्तमालश्च पूतिकश्चिरिबिल्वकः । घृतपूर्णकरञ्जोन्यः प्रकीर्यो गौर एव च ॥ पूतीकरञ्जः सुमनास्तथा कलहनाशनः ॥

चिरि( र )बिल्वो नक्तमालः करजश्च करञ्जके ।
प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः ॥ ४८ ॥
करञ्जभेदाः षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ।
रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ॥ ४९ ॥
गायत्री बालतनयः खदिरो दन्तधावनः ।
अरिमेदो विट्खदिरे कदरः खदिरे सिते ॥ ५० ॥
सोमवल्कोऽप्यथ व्याघ्रपुच्छगन्धर्वहस्तकौ ।
एरण्ड उरुबूकश्च रुचकश्चित्रकश्च सः ॥ ५१ ॥
चञ्चुः पञ्चाङ्गुलामण्डवर्धमानव्यडम्बराः ।
अल्पा शमी शमीरः स्याच्छमी सक्तुफला शिवा ॥ ५२ ॥
पिण्डीतको मरुवकः श्वसनः करहाटकः ।
शल्यश्च मदने शक्रपादपः पारिभद्रकः ॥ ५३ ॥

---

द्व्यर्थे करजः करञ्जो नखश्च ॥ ४८ ॥ षड् ग्रन्थयोऽस्य हस्तिवारणाख्यः । मर्चत्यङ्गपाटनान्मर्कटी वल्लीकरञ्जः । अङ्गारा इव वल्लर्योऽस्या अङ्गारवल्लरी । आह च– उदकीर्यस्तृतीयोऽन्यः षड्ग्रन्थो हस्तिवारणी । अङ्गारवल्ली शादस्था काकघ्नी करभालिका ॥ त्र्यर्थे मर्कटी– आत्मगुप्तापामार्गौ वल्लीकरञ्जश्च । रोहयति रोहितः, रोहन्तीत्येके छिन्नरूढत्वात् । **चन्द्रश्च**– रोहितको रोचनकः प्लीहघ्नो रक्तपुष्पकः । रक्तघ्नो रोहितो रक्तो रोही दाडिमपुष्पकः ॥ ४९ ॥ गायतो विप्रांस्त्रायतेऽवश्यं गायत्री । बालपत्त्रो यवासः खदिरश्चेति द्व्यर्थेषु **धन्वन्तरि**पाठमदृष्ट्वा बालपुत्रभ्रान्त्या ग्रन्थकृद्बालतनयमाह । सूक्ष्मपर्णोऽप्यसौ । खदति खदिरः, खद स्थैर्ये । आह च– खदिरो रक्तसारश्च गायत्री दन्तधावनः । कण्टकी बालपत्रश्च जिह्मशल्यः क्षितिक्षमः ॥ अरिर्दुःसहो मेदः सारो[ स्रावो ]स्यारिमेदः । विड्गन्धिः खदिरः पूतिखदिराख्यः । आह च– परिमेदोरिमेदश्च गोधास्कन्धोरिमेदकः । अहिमेदोहिमारश्च रिभः पूत्यरिमेदकः ॥ कं दृणाति कफघ्नत्वात्कदरः ॥ ५० ॥ सोमवल्कोऽकण्टकित्वात्– शुक्लत्वाद्वा । आह च– कदरः श्वेतसारोऽन्यः सोमवल्कः पथिद्रुमः । त्र्यर्थे सोमवल्कः खदिरः कट्फला करञ्जश्च । व्याघ्रस्येव पुच्छमस्य व्याघ्रपुच्छः । गन्धर्वस्य भूतविशेषस्येव मृगविशेषस्येव वा हस्तोऽस्य गन्धर्वहस्तः पञ्चाङ्गुलिपर्णत्वात् । एरयति वायुमेरण्डः । उरु वात्युरुबूकः । रोचते रुचकः ॥ ५१ ॥ चञ्चति चञ्चः, चञ्चुरित्येके । पञ्चाङ्गुलयोऽस्य पञ्चाङ्गुलः । आमण्डयतीत्यामण्डः, आदण्ड इत्येके दीर्घदण्डत्वात् । व्यडतिव्यडम्बरः, अड उद्यमे, व्यडम्बक[ न ]इत्येके । आह च– एरण्डस्तरुणः शुक्लश्चित्रो गन्धर्वहस्तकः । पञ्चाङ्गुलो वर्धमान आमण्डो दीर्घदण्डकः ॥ रक्तोपरो हस्तिकर्णो व्याघ्रो व्याघ्रतलो रुबुः[ बुः ] । उरुबूको हस्तिपर्णश्चञ्चुरुत्तानपत्त्रकः ॥ अल्पेर्थे, कुटीशमीशुण्डाभ्यो रः ( सू० )। शमयति दोषाञ्शमी शिवात्वात् । सक्तव इव फलान्यस्याः । आह च– शमी सक्तुफला तुङ्गा केशहन्त्रिफला शिवा ॥५२॥ पिण्डीमितः पिण्डीतकः । म्रियन्तेऽनेन विषपुष्पत्वान्मरुवकः, मरौ वाति वा । श्वसन्त्यनेन श्वसनः । करं हन्ति दुःस्पर्शत्वात्कं रहयति वा करहाटकः । शल्यमस्यास्ति शल्यः । मदयति मदनः । आह च– मदनः शल्यको राकः [ वाथ ] पिण्डी पिण्डीतकस्तथा । तरकरः करहाटश्च श्वसनो विषपुष्पकः ॥ द्व्यर्थे मरुवको जम्भीरो मदनश्च, **यच्छाश्वतः**– पिण्डीतके पद्मकन्दे करहाटपदं विदुः । पारि निष्ठाप्राप्तं भद्रमस्य पारिभद्रकः॥५३॥ द्रौ स्कन्धे किलिमं निर्यासोऽस्य द्रुकिलिमम् । पूतिरुग्रगन्धं काष्ठमस्य पूतिकाष्ठम् । सप्तग्रहणं द्रुकिलिमस्यैकार्थ्यं, यदाह– देवदारु स्मृतं दारु सुराह्वं किलिमं च तत् । स्नेहविद्धं महादारु भद्रदार्विन्द्रदारु च ॥

भद्रदारु द्रुकिलिमं पीतदारु च दारु च ।
पूतिकाष्ठं च सप्त स्युर्देवदारुण्यथ द्वयोः ॥ ५४ ॥
पाटलिः पाटलामोघा काला स्थाली फलेरुहा ।
कृष्णवृन्ता कुबेराक्षी श्यामा तु महिलाह्वया ॥ ५५ ॥
लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली ।
विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सा ॥ ५६ ॥
मण्डूकपर्णपत्त्रोर्णनटकट्वङ्गदुन्दु( टुण्टु )काः ।
स्योनाकः शुकनासर्क्षदीर्घवृन्तकुटन्नटाः ॥ ५७ ॥
शोनकश्चारलौ तिष्यफला त्वामलकी त्रिषु ।
अमृता च वयस्था च त्रिलिङ्गस्तु बिभीतकः ॥ ५८ ॥

---

देवकाष्ठं भद्रकाष्ठं पूतिकाष्ठं च दारु च । सुरदार्विन्द्रवृक्षश्च तथैवामरदारु च ॥ त्र्यर्थे पारिभद्रः कोलिः पारिजातो देवदारु च, तथा पीतदारुर्दारुहरिद्रा देवदारु पूतिकाष्ठं च । किलिमं च तदिति पदैकदेशत्वाद्भीमवत् ॥ ५४ ॥ पाटला ताम्रपुष्पत्वात् । अमोघा बहुफलत्वात् । काला कालवृन्तत्वात् । स्थाली रसाधारः कुम्भीत्वात् । काचस्थालीत्येके । फले रोहति ( फलेरुहा ) साङ्कुरफलत्वात् । कुबेराक्षी यक्षाक्षितुल्यपुष्पत्वात् । आह च– पाटलोक्ता तु कुम्भीका ताम्रपुष्पाम्बुवासिनी । स्थाली वसन्तदूती स्यादमोघा कालवृन्तिका ॥ द्वितीया पाटला श्वेता निर्दिष्टा काष्ठपाटला । सा चैव श्वेतकुम्भी स्यात्कुबेराक्षी फलेरुहा ॥ पाटली कृष्णवृन्तेति ने[नि] मिः । पाटला पाटलिर्वा नेति **माला** । श्यामा श्यामगौरवर्णात् । महिलाह्वया वनितापर्याया श्याम( मा ) त्वात् ॥ ५५ ॥ गवि भूमौ वन्द्यते गोवन्दनी । गुद्यते क्रीडयते गुन्द्रा । प्रीणाति प्रियङ्गुः । फलति विशीर्यते फली । विष्वक् सिनोति सर्वतो बध्नाति विष्वक्सेना । ईषद्रम्भाकारा कारम्भा । आह च– प्रियङ्गुः प्रियवल्ली च फलिनी कुञ्जिनी ( ? ) प्रिया । वृक्षा गोवन्दनी श्यामा कारम्भा वर्णभेदिनी ॥ **इन्दुर्गोवन्दनी**ति भिनत्ति, यदाह– वन्दनी पुष्पशोभना । गन्धप्रियङ्गुः कारम्भा लता गौर्वर्णभेदिनीति ॥ त्र्यर्थे गुन्द्रा– एरका प्रियङ्गुः श[ स ]रा च, तथा प्रियकोसनः प्रियङ्गुः कदम्बश्चेति । द्व्यर्थे गन्धफलिनी प्रियङ्गुश्चम्पककलिका च ॥ ५६ ॥ मण्डूक इव पर्णान्यस्य( मण्डूकपर्णः ) । पत्त्रेषूर्णास्य पत्त्रोर्णः । नटति वातेन नटः । कटून्यङ्गान्यस्य रौक्ष्यात्कट्वङ्गः । दुन्द्विति शिम्बिभिः कायति दुन्दुकः । स्योनमुखमकति स्योनाकः । शुकनासेव पुष्पाण्यस्य ( शुकनासः ) । ऋक्ष्णोति हिनस्ति ऋक्षः, अत एव भालूकः । कुटन्वक्रीभवन् नटति स्पन्दते कुटन्नटः ॥ ५७ ॥ शवति शोनकः, **गौडाः** शोणकमाहुः, शोणृ वर्णे । इयर्त्यरलुः । आह च– स्योनाकः शुकनासश्च कट्वङ्गोथ कटम्भरः । मयूरजङ्घोरलुकः प्रियजीवः कुटन्नटः ॥ सप्रोक्तः पृथुशिम्बिश्च दुन्दुको दीर्घवृन्तकः । भालूकः शल्ककोफल्गुवृन्तको जम्बुको नटः ॥ तिष्यं मङ्गल्यं फलमस्यास्तिष्यफला, नित्यमामलके लक्ष्मीरिति । आमलते गुणानामलकी, अमला च । अमृता वयस्था च रसायनत्वात् । धात्री नानार्थे । आह च– वयस्थामलकं तिष्यं जातीफलरसं शिवम् । धात्रीफलं श्रीफलं च तच्चामृतफलं स्मृतम् ॥ बिभेत्यस्माद् बिभीतकः ॥ ५८ ॥ अक्ष्णोति व्याप्नोत्यक्षः, ना पुमान्– फले पुंलिङ्गः । पु( तु )ष्यति तुषः, इति **निघण्टुषु** न संवादस्तेषु तु मूलवर्गपाठात् । कर्षफलोक्षसामान्यात्, कर्षो बिभीतके पलचतुर्भागे च वर्तते । भूतानामावासः । कलेराश्रयो द्रुमः। आह च– बिभीतक कर्षफलो वसन्तोक्षः कलिद्रुमः । संवर्तको भूतवासः कर्षोऽहार्यो बिभीतकः ॥ **इन्दुश्च**– आ( अ )हार्ये बहुवीर्यं च तुमुलं च विभेदकम् । नास्ति भयमस्या अभया । न व्यथयत्यव्यथा । पथि साधुः पथ्या, हितेत्यर्थः । काये तिष्ठति निष्फला न भवति कायस्था, वयस्थेत्येके । पूतं करोति पूतना विरेचनीत्वात्, पूतनेत्येके

नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ।
अभया त्वव्यथा पथ्या कायस्था पूतनामृता ॥ ५९ ॥
हरीतकी हैमवती चेतकी श्रेयसी शिवा ।
पीतद्रुः सरलः पूतिकाष्ठं चाथ द्रुमोत्पलः ॥ ६० ॥
कर्णिकारः परिव्याधे लकुचो लिकुचो डहुः ।
पनसः कण्टकिफलो निचुलो हिज्जलोम्बुजः ॥ ६१ ॥
काकोदुम्बरिका फल्गुर्मलपूर्जघनेफला ।
अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः ॥ ६२ ॥
पिचुमर्दश्च निम्बेथ पिच्छिलागुरुशिंशपा ।
कपिला भस्मगर्भा सा शिरीषस्तु कपीतनः ॥ ६३ ॥
भण्डिलोप्यथ चाम्पेयश्चम्पको हेमपुष्पकः ।
एतस्य कलिका गन्धफली स्यादथ केसरे ॥ ६४ ॥

---

॥ ५९ ॥ हरति रोगान् हरीतकी । चेत्यतेनया स्रोतःशुद्धेश्चेतकी । आह च– हरीतक्यभया पथ्या प्रपथ्या पूतनामृता । जयाव्यथा हैमवती कायस्था चेतकीति च ॥ द्व्यर्थे श्रेयसी रास्ना हरीतकी हस्तिपिप्पली च। शिवाव्यथा पूतनेति **चन्द्रः** । सरलः, ऋजुत्वात्, आह च– सरलः पूतिकाष्ठं च चित्रा पीतद्रुरुच्छ्रितः । द्रुमोत्पलानीव पुष्पाण्यस्य द्रुमोत्पलः, सुरभिश्चायम्, अन्यो निर्गन्धः ॥ ६० ॥ कर्णिकामियर्ति कर्णिकारः । द्व्यर्थे परिव्याधो जलवेतसः कर्णिकारश्च । लक्यत आस्वाद्यते लकुचः । दह्यते डहुः । पन्यते स्तूयते पनसः, पणस इति **दुर्गः** । लोकोक्त्या कण्टकयुक्तफलः । महासर्गोपि । निचोल्यतेम्बुना निचोलः ( निचुलः ) । हितजलस्यापभ्रंशो हिज्जलोम्बुवेतसविशेषत्वात् ॥ ६१ ॥ काकप्रियोदुम्बरी । फलति फल्गुः । मलं श्वित्रं पावयति मलपूः श्वित्रभेषजम्, ( मलयूः ) यु जुगुप्सायाम् । जघने बुध्ने फला न्यस्या जघनेफला, आह च– काकोदुम्बरिका फल्गुरराजी फल्गुवाटिका । फल्गुनः फलभारी च मलयूः श्वित्रभेषजम् ॥ हिङ्गुगन्धिनिर्यासोस्य । माल्यते वेष्ट्यते काकैर्मालकः, शुकमालकैकदेशश्चायम् ॥६२॥ पिचुं मर्दयति पिचुमर्दः, अरोगत्वात्, पिचुमन्द इत्येके । पवनेष्टोपीति **सौश्रुताः** । **शाश्वतस्तु**– हिङ्गुनिर्यासशब्दोयं निम्बे हिङ्गुरसेपि च । **चन्द्रनन्दनस्तु** शुकमालकमाह । अगुरुतुल्यसारा शिंशपा अगुरुशिंशपा, यदाह– शिंशपा तु महाश्यामा कृष्णसारः स्मृतोऽगुरुः । अगुरुर्धूपद्रव्यं शिंशपासारं चाहुः। द्व्यर्थे पिच्छिला शाल्मलिः शिंशपा च, यदाह– कुशिंशपान्या कपिला भस्मगर्भा च सादिनी । शिरसीष्यते शिरीषः, शीर्यते वा सौकुमार्यात् ॥ ६३ ॥ भण्ड्यते भण्डिलः, भण्डिरोपि, आह च– शिरीषो मृदुपुष्पश्च भण्डिरः शंखिनीफलः । कपीतनः शुकतरुः श्यामवल्कः शुकप्रियः ॥ भण्डीत्येके । चम्पादेशे भवश्चाम्पेयः । चम्प्यतेयतेऽभिश्चम्पकः, चाम्पकोपि । आह च– चम्पकः सुकुमारश्च सुरभिः शीतलश्च सः । चाम्पेयो हेमपुष्पश्च काञ्चनः षट्पदातिथिः ॥ गन्धः फलमस्या गन्धफली । प्रियङ्गुश्चम्पककलिकाचेति द्व्यर्थे गन्धफली । के सरति केसरः सन्त्यस्य वा केसरः ॥६४॥ उच्यते वकुलः । आह च– वकुलः सीधुगन्धश्च मद्यगन्धोथ शारदः । मधुगन्धो गूढपुष्पः शिम्बी केसरकस्तथा ॥ अश्नुतेऽशोकः, शोकनाशकत्वाद्वा । यदाह– अशोकः शोकनाशश्च विचित्रः कर्णपूरकः । द्व्यर्थे वञ्जुलो वेतसः स्यन्दनोशोकश्च । किरति कणान्करकः । दाल्यते दाडिमः । आह च– दाडिमो दालिमः सारः कुट्टिमः फलषा(शा)डवः । स्वाद्वम्लौ रक्तबीजस्तु करकः शुकवल्लभः ॥ नागप्रियाणि केसरवन्ति पुष्पाण्यस्य नागकेसरः । आह च– नागपुष्पो

व-ब-कुली वञ्जुलोऽशोके समौ करकदाडिमौ ।
चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः ॥ ६५ ॥
जया जयन्ती तर्कारी नादेयी वैजयन्तिका ।
श्रीपर्णमग्निमन्थः स्यात्कणिका गणिकारिका ॥ ६६ ॥
जयोऽथ कुटजः शक्रो वत्सको गिरिमल्लिका ।
एतस्यैव कलिङ्गेन्द्रयवभद्रयवं फले ॥ ६७ ॥
कृष्णपाकफलाविग्नसुषेणाः करमर्दके ।
कालस्कन्धस्तमालः स्यात्तापिच्छोऽप्यथ सिन्दुकः ॥ ६८ ॥
सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ।
वेणी ग( ख )रागरी देवताडो जीमूत इत्यपि ॥ ६९ ॥
श्रीहस्तिनी तु भूरुण्डी तृणशूल्यं( न्यं ) तु मल्लिका ।
भूपदी शीतभीरुश्च सैवास्फोता वनोद्भवा ॥ ७० ॥

---

मतो नागः केसरोः नागकेसरः। चाम्पेयो नागकिञ्जल्कः कनकं हेम काञ्चनम् ॥६५॥ जयतीति जया। तर्कमियर्ति तर्कारी केतुत्वात्। अग्निं मथ्नाति दीपनत्वादग्निमन्थः, अत एवारणिः । कणाः सन्त्यस्याः कणिका । गणिकासमूहमियर्ति गणिकारी, स्वार्थेकन्, गणिं तर्कं करोति वा। त्र्यर्थे नादेयी जलजम्बूर्जलवेतसस्तर्कारी च। लिङ्गसांकर्याज्जयेत्यर्धेन जयन्तं( न्तीं ) श्रीपर्णमिति चार्धेन जयपर्यायमाहुः, तन्न, वनोषधिवर्गे तस्यानादृतत्वात्, यदिन्दुः– अग्निमन्थोऽग्निमथनस्तर्कार्यरणिको जयः । अरणिः कणिका सैव तपनो वैजयन्तिकः ॥ **चन्द्रनन्दन**श्चाह– अग्निमन्थोऽग्निमथनस्तर्कारी वैजयन्तिका । वह्निमन्थोऽरणिः केतुर्जयः पावकमन्थनः ॥ तर्कार्या वैजयन्ती च वह्निनिर्मथनी जया । अरणिका जयन्ती च विजया च जयावहा ॥ ६६ ॥ कुटिस्तो ( कुटे ) जायते कुटजः । शक्र इन्द्रवृक्षः । वस्ते त्वचं वत्सकः । आह च– कुटजः कौटजः कोटी वत्सको गिरिमल्लिका । कलिङ्गो मल्लिकापुष्प इन्द्रवृक्षोऽथ वृक्षकः ॥ कलिं गायति कलिंगं, कलिङ्गदेशजं वा, अत एव कालिङ्गं कालिङ्गी च । इन्द्रयवं कुटजफलं, भद्रयवं तु कुटजबीजं, यदाह– फलानि तस्येन्द्रयवा बीजं भद्रयवास्तथा ॥ ६७ ॥ कृष्णं पाके फलमस्य । आविजते स्माविग्नः । सुषेणकपिमुखाभः । करेण मृद्यते करमर्दः, कराम्ब्लोऽपि । आह च– करमर्दकमाविग्नं सुषेणं पाणिमर्दकम् । कराम्ब्लं करमर्दं च– ॥ [ कालः स्कन्धः प्रकाण्डोऽस्य ] । त्र्यर्थे कालस्कन्धस्तिन्दुकः श्यामखदिरस्तमालश्च । ताम्यति तमालः । तापिनश्छादयति तापिच्छः ॥६८॥ स्यन्दते सिन्दुकः । स्यन्दं वृणोति सिन्दुवारः । इन्द्रस्य सुरसो यस्मिन्, दिव्य इत्यर्थः । अत एवेन्द्राणी । निष्क्रान्ता गुडाद्वेष्टनान्निर्गुंडी निर्गुण्डी च । आह च– सिन्दुवारः श्वेतपुष्पः सिन्दुकः सिन्दुवारकः । तिलपुष्पः शीतसहो निर्गुण्डी नीलसिन्दुकः । वेणीव वेणी । गरमागिरति गरागरी मूषिकाविषघ्नत्वात् । कर्णं ताडयति ताडः, मुख्यत्वाद्देवताडो राजताडवत् । जीमूतो ह्लादकत्वात् । आह च– जीमूतको देवताडो वृत्तकोशो गरागरी । प्रोक्ताखुविषहा वेणी देवताली च ताडकः ॥ ६९ ॥ भुवि रोहति भूरुण्डी । हस्तिकर्णपत्त्रा शाकविशेषः । इतो धत्तूरान्तानि पुष्पाणि । तृणशूले गुल्मे साधु तृणशूल्यम् । मल्लयते मूर्ध्नि मल्लिका । भुवि पदमस्या भूपदी । शीतभीरुर्ग्रैष्मकत्वात् । आह च– मल्लिका शीतभीरुश्च मदयन्ती प्रमोदनी । मदनीया गवाक्षी च भूपद्यष्टपदी तथा ॥ द्विपुटासौ विचकिलम्– । आस्फुटत्यास्फोता गिरिमल्लिका ॥७०॥ शेरते शेफा अल-

शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ।
सितासौ श्वेतसुरसा भूतवेश्यथ मागधी ॥ ७१ ॥
गणिका यूथिकाम्बष्ठा सा पीता हेमपुष्पिका ।
अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता ॥ ७२ ॥
सुमना मालती जातिः सप्तला नवमालिका ।
माघ्यं कुन्दं रक्तकस्तु बन्धुको बन्धुजीवकः ॥ ७३ ॥
सहा कुमारी तरणिरम्लानस्तु महासहा ।
तत्र शोणे कुरवकस्तत्र पीते कुरण्टकः ॥ ७४ ॥
नीला झिण्टी द्वयोर्बाणा दासी चार्तगलश्च सा ।
सैरेयकस्तु झिण्टी स्यात्तस्मिन्कुरवकोऽरुणे ॥ ७५ ॥
पीता कुरण्टको झिण्टी तस्मिन्सहचरी द्वयोः ।
ओड्रपुष्पं जपा( वा ) पुष्पं वज्रपुष्पं तिलस्य यत् ॥ ७६ ॥

---

योस्यां शेफालिका । सुष्ठु वहत्यामोदं सुवहा । नीलवर्णा ( नीलिका ) । आह च– शेफालिका तु निर्गुण्डी यमक्रो नीलमञ्जरी । त्र्यर्थे सुवहा रास्ना शेफालिका गन्धनाकुली च । भूतानि विशत्याह्लादयति भूतवेशी। मगधदेशे भवा मागधी ॥७१॥ गणिका चित्ताकर्षणात् । यूथो जालकमस्या यूथिका । अम्बे शब्दे तिष्ठत्यम्बष्ठा । आह च– यूथिका बालपुष्पा च पुण्यगन्धा गुणोज्ज्वला । गणिकाचारमोटा च शिखण्डी श्वेतयूथिका ॥ आह च– सुवर्णपुष्पा हरिणी पीतका पीतयूथिका । त्र्यर्थे हेमपुष्पा बिम्बो दुःस्पर्शा पीतयूथिका च । अतिक्रान्तो मुक्तान्विरक्तानतिमुक्तः । पुण्ड्रदेशे भवः पुण्ड्रकः, मण्डकोयमिति **निघण्टुश्च** । मधौ वसन्ते भवा माधवी । आह च– अतिमुक्ता माधवी च सुवसन्तो वनाश्रयः । अतिमुक्तः कामुकश्च मण्डको भ्रमरोत्सवः ॥७२॥ सुष्ठु मन्यते सुमना मनोज्ञात्वात् । मालयत्यामोदैर्मालती । जायतेनया प्रीतिर्जातिः । आह च– जातिर्मनोज्ञा सुमना राजपुत्री प्रियंवदा । मालती हृद्यगन्धा च वैदिका (?) तैलभागि(वि)नी । सप्त मनोबुध्यन्तानीन्द्रियाणि लाति सप्तला, सपति समवैति वा । नवा स्तुत्या मालास्या नवमालिका । माघे मासि भवं माघ्यम् । कुन्याति कुन्दं, कुन्द इति **माला** । बध्नाति चित्तं बन्धूकः । बन्धुर्जीवानां बन्धुजीवकः ॥७३॥ सहते परिमलं सहा । कुं भूमिष्ठान्मारयति कुमारी, कुत्सितो मारोस्या इति वा, जरां न यातीत्येके । तरत्यनया[ दुःखं ]तरणिः, यच्चन्द्रनन्दनः– कुर्यकस्तरणिर्वल्ली कुमार्यलिकुलप्रिया । त्र्यर्थे सहा मुद्गपर्णी ववा( चा ) तरणी च । कुरण्टको हि म्लानिं न गच्छति तेनाम्लानः, **वात्स्यायनो**त एव कूर्चकस्थाने कुरण्टकमालाश्चेत्याह । वर्णपुष्पोपि । महतो विमर्दस्य सहा महासहा, आबन्तः, यन्**माला**– अम्लानस्तु कुरण्टकः । तत्राम्लाने, कौ रूयतेर्च्यते कुरवकः । कौ रम्यते कुरण्टकः, कुरण्डकोपि । आह च– अविम्लानोऽपरिम्लानस्तथैवाम्लानकः स्मृतः । रक्तपुष्पः कुरवकः पीतपुष्पः कुरण्टकः ॥ किंकिरातोसौ ॥ ७४ ॥ या नीलपुष्पा झिण्टी, शुष्का झिं रटतीति । बाणो हि द्विलिङ्गः, वण शब्दे । दस्यति क्षीयते दासी । आर्तः क्षीणो गलत्यार्तगलः । सीरे भवा सैरेयाख्या झिण्टी– अरुणपुष्पा चेत्कुरवकोसौ ॥ ७५ ॥ सहचाराख्या झिण्टी पीतपुष्पा चेत्कुरण्टकोसौ । आह च– सैरेयकः सहचरः सैरेयश्च सहाचरः । पीतो रक्तोथ नीलश्च कुसुमैस्तं विभावयेत् ॥ पीतः कुरण्टको ज्ञेयो रक्तः कुरवकः स्मृतः । नील आर्तगलो दासी बाण ओदनपाक्यपि ॥ ओड्रदेशोद्भवं पुष्पं, जपतीति जपा । वज्रमिव दारकं वज्रपुष्पम् ॥ ७६ ॥ प्रतीपो-

प्रतिहासशतप्रासचण्डातहयमारकाः ।
करवीरे करीरे तु ककरग्रन्थिलावुभौ ॥ ७७ ॥
उन्मत्तः कितवो धूर्तो धत्तूरः काञ्चनाह्वयः ।
मातुलो मदनश्चास्यफले मातुलपुत्रकः ॥ ७८ ॥
फलपूरो बीजपूरो रुचको मातुलुङ्गके ।
समीरणो मरुवकः प्रस्थपुष्पः फणिज्झकः ॥ ७९ ॥
जम्बीरोप्यथ पर्णासे कठिञ्जरकुठेरकौ ।
सितेर्जकोत्र पाठी तु चित्रको वह्निसंज्ञकः ॥ ८० ॥
अर्काह्वयसुकास्फोट( त )गणरूपविकीरणाः ।
मन्दारश्चार्कपर्णोत्र शुक्लेलर्कप्रतापसौ ॥ ८१ ॥

---

श्वघ्नत्वाद्धासो विकासोस्य प्रतिहासः । शतं बहूनि प्रासाः कुन्ता इव पुष्पाण्यस्य शतप्रासः, श्वेतश्चासौ । चण्डय( मत )ति तीक्ष्णत्वाच्चण्डातः, रक्तोसौ । करवीर इव मारकत्वात्कराः कर्तारो वीरा अत्रेति । आह च– शतकुन्तः श्वेतपुष्पः प्रतिहासोश्वरोहकः । द्वितीयो रक्तपुष्पस्तु चण्डातो लगुडस्तथा ॥ चण्डातको गुल्मकश्च प्रचण्डः करवीरकः । करिण ईरयति कण्टकैः करीरो मरुवृक्षः । केति करोति ककरः, तीक्ष्णत्वात् । आह च– करीर गूढपत्रं च शाकपत्रं मृदूफलम् । ग्रन्थिलं तीक्ष्णसारं च ककरं तीक्ष्णकण्टकम् ॥ ७७ ॥ उन्मत्त उन्मादकत्वात् । धूर्वति हिनस्ति धूर्तः, अत एव कितवः । धराति धातून् धर्तूरः ( धत्तूरः ), धत्तूरमिति **प्राच्याः** । काञ्चनाह्वो भुक्तेस्मिन् हेमवर्णपृथ्वीदर्शनात्, **यदिन्दुः**– संज्ञया हेमनामभिः । नास्ति तुलास्य मातुलः, अमानोनाः प्रतिषेधे । मदयति मदनः । आह च– धर्तूरकः स्मृतो धूर्तो देविता कितवः शठः । उन्मत्तको मदनकस्तूरी चलतलस्तथा ॥ यतो **धन्वन्तरि**-र्मातुलं धत्तूरं मातुलपुत्रकं तत्फलमाह ॥ ७८ ॥ रोचयति रुचकः । आह च– फलपूरो बीजपूरः केमरी बीजपूरकः । बीजकः केसराम्ब्लश्च मातुलुङ्गस्तु पूरकः ॥ **अनेकार्थे**– सौवर्चलं मातुलुङ्गं शिला चन्दनपेषणी । ग्रीवाभरणकं चैषु चतुर्षु रुचकं स्मृतम् । समीरयत्यामोदं समीरणः । मरौ वाति मरुवकः । प्रस्थे सानौ पुष्प्यति जाङ्गलत्वात्प्रस्थपुष्पः । खरत्वेन फणाभपत्रत्वाद्दृश्यः फाणिज्झकः ॥७९॥ जम्यते जम्बीरः, जम्भीरोपि । आह च– जम्बीरः खरपत्रश्च फणी चोक्तः फणिज्झकः । मरुतको मरुवको मरुन्मरिचकस्तथा ॥ पर्णान्यस्यति पर्णासः । कठिनं जरयति कठिञ्जरः । कुण्ठाति कुठेरकः कृष्णार्जकाख्यः । ( शुक्लः कुठेरोर्जकः ), अर्जयतीति । आह च– कुठेरकस्तु वैकुण्ठः क्षुद्रपत्त्रोर्जकः सितः । ष( व )टपत्त्रः कुठेरोन्यः पर्णासो बिल्वगन्धकः । पाठोस्यातीति पाठी । चेतति चित् चितो जन्तूंस्त्रायते चित्रकः, नानारूपो वा । वह्निपर्यायो दीपनत्वात् । आह च– चित्रको दहनो व्यालः पाठीनो दारुणोग्निकः । ज्योतिष्को वल्लरी वह्निः पाठी पाली कुटः शिखी ॥ ८० ॥ अर्काह्वोर्कपर्यायी । वसत्यस्मिंस्तेजो वसुकः । आस्फुटत्यास्फोटः । गणा बहवः ( बहूनि ) रूपाण्यस्य गणरूपः । विकिरति पुष्पाणि विकीरणः । मन्दानियर्ति मन्दारकः, मन्दा आरा अस्य वा । अर्काभानि पर्णान्यस्यार्कपर्णः । शुक्लार्कोलर्कः, अलति भूषयतीति । प्रतापं स्यति प्रतापसः, प्रकृष्टास्तापसा येन वा । आह च– अर्कः सूर्याह्वयः पुष्पी विट्छूरश्च विकीरणः । जम्भलः क्षीरपर्णः स्यादास्फोतो भास्करो रविः ॥ राजार्को वसुको व्यर्को मन्दारो गणरूपकः । एकाष्ठीलः सदापुष्पी स चालर्कः प्रतापसः ॥ ८१ ॥ शिवप्रिया

शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः ।
वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि ॥ ८२ ॥
वत्सादनी छिन्नरुहा गुडूची तन्त्रिकामृता ।
जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि ॥ ८३ ॥
मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा ।
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ॥ ८४ ॥
पाठाम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा ।
एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ॥ ८५ ॥
कटुः कटंभ( व )राशोकरोहिणी कटुरोहिणी ।
मत्स्यपित्ता कृष्णभेदा चक्राङ्गी शकुलादनी ॥ ८६ ॥

---

मल्लिका शिवमल्ली, उक्तं च– बुकं बिल्वं सधत्तूरं सुमना पाटला तथा । पद्ममुत्पलगोसूर्यमष्टौ पुष्पाणि शंकरे ॥ पशुपतेरयं प्रियो वा पाशुपतः । एकोष्ठीलो मज्जारत्वस्य । वाति बुकः, बक इति **प्राच्याः** । वस्ते छादयति वसुः । आह च– वसुर्वसुक इत्युक्तः शिवार्कः[ द्रुकः ] शिवशेखरः । महापाशुपतश्चैव सुव्रतः शिवमल्लिका ॥ [ जन्मवृक्षमत्ति नाशयति वृक्षादनी । वृक्षे रोहति वृक्षरुहा, वृक्षरोहेति वनेचराः ] । आह च– वन्दाकः स्याद्वृक्षरुहा शेखरी कामवृक्षकः । वृक्षादनी नटरुहा कामिन्यङ्घ्रिपरोहणी ॥ त्र्यर्थे जीवन्ती गुडूची वृक्षरुहा शाकविशेषश्च ॥ ८२ ॥ वत्सानामदनं वत्सादनी । छिन्ना रोहति छिन्नरुहा । गुडति रक्षति गुडूची । तन्त्रयते धारयत्यायुस्तान्त्रिका । जीवयति जीवन्तिका । सोमवल्ल्यमृतत्वात् । मधूनि पर्णान्यस्या मधुपर्णी । आह च– गुडूच्यमृतवल्ली च छिन्ना छिन्नरुहामृता । छिन्नोद्भवामृतलता वरा वत्सादनी स्मृता ॥ सेवोक्ता सोमवल्ली च कुण्डली चक्रलक्षणा । जीवन्ती मधुपर्णी च तन्त्रिका देवनिर्मिता ॥ त्र्यर्थे विशल्या लाङ्गली दन्ती गुडूची च ॥ ८३ ॥ मूर्वति बध्नाति मूर्वा, अत एवास्या विकारो मौर्वी । मधुरो रसोऽस्या मधुरसा । मुरति संवेष्टयति मोरटा । तेजयत्यग्निं तेजनी । स्रवति रसं स्रवा, स्रुवेत्येके । मधूलिका माधुर्यात् । मधुनः श्रेणी पङ्क्तिर्मधुश्रेणी । गोकर्णी गोकर्णाभपत्त्रा, पाककर्णपर्णेति ( सू० ) ङीष् । पीलोरिव पर्णान्यस्याः पीलुपर्णी । आह च– मूर्वा मधुरसा देवी पृथुत्वक् पीलुपर्ण्यपि । स्व(मधु)श्रेणी स्वादुरसा स्निग्धपर्णी च मोरटा ॥ द्व्यर्थे तेजनी तेजोवती मूर्वा च । आहेन्दुः– स्निग्धच्छदा मधुश्रेणी पृथुत्वप्रसवाहिनी । रदश्रेणी मधुमती मुरङ्गी द्विजमेखला ॥ आलोलनी योगवहा मोरटा च मधुस्रवा । सुयो[ खो ]षिता स्निग्धपर्णी गोकर्णी सा मधूलिका ॥ पीलुपर्णी कर्मकरी प्रमथा मधुमतीति च ॥ ८४ ॥ [ पठ्यते पाठा ] । विद्धौ कर्णौ यया विद्धकर्णी, शास्त्रे श्रूयमाणत्वात् । स्थापनी वस्तिकर्मोपयोग्या । रस्यते रसा । पापचेली वृकीत्वात् । प्राचीभवा प्राचीना । वने तिक्तरसा वनतिक्ता । आह च– पाठाम्बष्ठाम्बष्ठकी च प्राचीना पापचेलिका । वृकतिक्ता वनोतिक्ता पापिका स्थापकी वृकी ॥ त्र्यर्थे रसा रास्ना सल्लकी पाठा च ॥ ८५ ॥ कटत्यावृणोति गलं कटंमरा । शोकहन्त्री रोहत्यगं वाशोकरोहिणी । मत्स्यपित्तास्वादा, मत्स्यानां पित्तं जीवितं वा । कृष्णो भेदश्छेदोऽस्याः कृष्णभेदा । शकुलानामदनं शकुलादनं शकुलादनी वा । आह च( निघण्टुः )– कटुका मत्स्यशकुला मत्स्यपित्ता च रोहिणी । कृष्णभेदा चण्डरुहा रास्ना कटुकरोहिणी । अशोकरोहिणी तिक्ता चक्राङ्गी शकुलादनी । कटुरोहिण्यरिष्टा च प्रोक्ता तिक्तकरोहिणी ॥ द्व्यर्थे कटंभरा कटुङ्गः कटुकी च ॥ ८६ ॥ आत्मना गुप्ता स्पर्शाविषयत्वात् । न जहाति शूकानजहा । न विगताङ्गाव्यङ्गा कण्डू

आत्मगुप्ताजहाव्यङ्गा कण्डूरा प्रावृषायणी ।
ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छूश्च मर्कटी ॥ ८७ ॥
चित्रोपचित्रा न्यग्रोधी द्रवन्ती शंवरी वृषा ।
प्रत्यक्श्रेणी सुतश्रेणी चण्डा मूषिकपर्ण्यपि ॥ ८८ ॥
अपामार्गः शैखरिको धामार्गवमयूरकौ ।
प्रत्यक्पर्णी के( की )शपर्णी किणिही खरमञ्जरी ॥ ८९ ॥
हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ।
अङ्गारवल्ली बालेयशाकबर्बरवर्धकाः ॥ ९० ॥
मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषि( शि )का ।
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ॥ ९१ ॥

---

राति कण्डूरा । प्रावृषि भवा प्रावृषायणी । ऋष्यैर्मृगैः प्रोक्ता दर्शिता ऋष्यप्रोक्ता, ऋषिभिरप्रोक्ता हेय-त्वादित्येके । शूकप्रधाना सकण्टका शिम्बिरस्याः शूकशिम्बिः । कपीन् कषति कपिकच्छूः । मर्कटी कपिरोमफलत्वात् । आहेन्दुः– ऋष्यप्रोक्ता स्वयंगुप्ता कपिकच्छूश्च कण्डुरा । आत्मगुप्ता दुरालम्भा जाङ्गलिर्दुरभिग्रहा ॥ अव्यङ्गा वृषभी गुप्ता कण्डूरा शूकशिम्बिका । कपिरोमफला चैव समाना प्रावृषायणी ॥ ज्ञेया जाङ्गालिका सैव साजहा प्रावृषायणी ॥ ८७ ॥ चित्तानेकवर्णपत्त्रा । न्यग्रोहति रुणद्धि वा बहुमूलत्वान्न्यग्रोधी । द्रवति द्रवन्ती । शं वृणोति शंवरी । वर्षति वृणोति वा वृषा । प्रतीची श्रेण्यस्याः प्रत्यक्श्रेणी । सुतानां मूलानां श्रेण्यस्याः सुतश्रेणी । चण्ड्यते चण्डा । मूषिकपर्णी– आखु-कर्णाभपत्त्रा । आह च ( निघण्टुः )– द्रवन्ती शंवरी चित्रा न्यग्रोधी मूषिकाह्वया । प्रत्यक्श्रेणी वृषा चण्डा पुत्रश्रेण्याखुपर्णिका ॥ द्व्यर्थे– उपचित्रा दन्ती पृश्निपर्णी चेति, दन्त्यां द्रवन्तीभ्रान्त्या ग्रन्थकृदुप-चित्तामाह ॥८८॥ अपकृष्टः( आ )समन्तान्मार्गोऽस्यापामार्गः, अधःशय्या(ल्या)ह्यत्वाद् । शिखरे भवः शैखरिकः । अधमं मार्गं वाति धामार्गवः, धाम अर्जति वा । मयूरप्रतिकृतिर्मयूरकः । प्रत्यञ्चि पर्णान्यस्याः प्रत्यक्पर्णी । केशपर्णी कपिलोमत्वात्, अत एव केशवल्लीत्येके । किणिनो जिहीते याति किणिही, स्पर्शात्किणोत्पादनात् । आह च– अपामार्गस्तु शिखरी प्रत्यक्पुष्पी मयूरकः । अधःशल्याथ किणिही दुर्ग्रहः खरमञ्जरी ॥ स एवोक्तः शैखरिको मर्कटी दुरभिग्रहः । पत्त्रपुष्पी च शिखरः कूटो मर्कटपिप्पली ॥ द्व्यर्थे धामार्गवोपामार्गः कोशातकी च ॥ ८९ ॥ हन्ति रोगं हञ्जी । ब्राह्मणी पवित्र-त्वात् । पद्मा पद्माभपुष्पा । भृज्जति भार्गी, भृगुजेत्येके, अत एव ब्राह्मी । अङ्गाराभा वल्ल्यस्या अङ्गारवल्ली । बालेयशाको गर्दभभोग्यत्वात् । वृणोति वर्बरो वर्चश्च, वर्बराकृतिपत्त्रो वा । आह च– भार्गी गर्दभशाकश्च पद्मा ब्राह्मणयष्टिका । अङ्गारवल्ली हञ्जी च वर्चो वर्बरकस्तथा ॥ द्व्यर्थे ब्राह्मी स्पृक्का भार्गी च । आहेन्दुः– ब्रह्मरीतिस्तथा स्पृक्का भार्गी च ब्राह्मणी मता ॥९०॥ मञ्जौ मनोज्ञे वर्णे तिष्ठति मञ्जिष्ठा, अम्बाम्बगोभूमीति (सू०) षत्वम् । विकसति दूरं विकसा । जिङ्गति प्रसरति जिङ्गी । समन्ततोऽङ्गति सम-ङ्गा । काले मिष्य(श्य)ते शब्द्यते कालमेषी(शी) । भण्ड्यते भण्डीरी भण्डी च । योजनवल्ली दूरप्रसरा । आह च (निघण्टुः)– मञ्जिष्ठा कालमेषी च समङ्गा विकसारुणा । मञ्जुका रक्तयष्टिश्च भण्डी योजनवल्ल्यपि ॥ आ-हेन्दुः– विकसा कालमेषी तु कालगोष्ठी च जिङ्गिका । रक्ता भण्डीरिका चेति– ॥९१॥ याति प्रसरति

यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ।
रोदनी कच्छुरानन्ता समुद्रान्ता दुरालभा ॥ ९२ ॥
पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिपर्णिका ।
क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनिर्गुहा ॥ ९३ ॥
निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ।
प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि ॥ ९४ ॥
नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ।
रञ्जनी श्रीफला तुत्था द्रोणी दोला च नीलिनी ॥ ९५ ॥
अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ।
कालमेषी कृष्णफला वाकुची पूतिफल्यपि ॥ ९६ ॥

---

यासः । यौति यवासः । दुःस्पर्शः कण्टकित्वात् । धन्वयासो मरूद्भवत्वात् । कुं नाशयति कण्टकित्वात्कुनाशः । रोदयति खेदयति रोदनी, चोदनीति सभ्याः । कच्छूं रोगं राति कच्छुरा । अनन्ता समुद्रान्ता च दूरव्याप्तेः । कृच्छ्रेण लभ्यते दृश्यते दुरालभा। आह च– यासो यवासकोनन्तो बालपत्रो विकण्टकः । चीरमूलः समुन्द्रातो दीर्घमूलो मरूद्भवः ॥ धन्वयासो दुरालम्भा ताम्रमूली च कच्छुरा । दुरालभा च दुःस्पर्शा यासो धन्वयवासकः ॥ ९२ ॥ पृश्निश्चित्रगत्रीव पर्णान्यस्याः पृश्निपर्णी, सूक्ष्मपर्णा वा, यदाह पृश्निरल्पतनौ । अङ्घ्रेर्बुध्नादारभ्य पर्णान्यस्या अङ्घ्रिपर्णी । क्रोष्टुनिर्विन्ना दत्तेव, क्रोष्टुपुच्छीत्वात् । सिंहस्येव पुच्छमस्याः सिंहपुच्छी, लोकोक्त्या सिंहपुच्छकः । कलशिर्गर्गरी पृथुलत्वात् । धावति प्रसरति धावनिः । गूहति रसं गुहा । आह च– पृश्निपर्णी पृथक्पर्णी कलशिर्धावनी गुहा । शृगालविन्नाघृ( ङ्घ्रि )तिलापर्णी क्रोष्टुकपुच्छिका ॥ ९३ ॥ निदिह्यते निदिग्धिका । स्पृशति कण्टकैरुपतपति स्पृशी । व्याघ्री हिंस्रत्वात् । कण्टकबाहुल्याद् बृहती । कण्टकानियर्ति कण्टकारी । प्रचोदयति कण्टकैः प्रेरयति प्रचोदनी । कोलति कुली । क्षुणत्ति क्षुद्रा हिंस्रा, क्षुद्रवार्ताक्येकदेशो वा । राष्ट्रमस्त्यस्या राष्ट्रिका । बृहती तु निदिग्धिकेति **भागुरि**वाक्याद् ग्रन्थकृद् भ्रान्तः, यतोनयोर्महान्भेदः । आह च– कण्टकारी तु दुःस्पर्शा क्षुद्रा व्याघ्री निदिग्धिका । कण्टालिका कण्टकारी धावनी दुःप्रधर्षिणीति ॥ यथा– बृहती सिंह्यनाक्रान्ता वार्ताकी राष्ट्रिका कुली । विशदा स्थूलभण्टाकी महती तु महोटिका ॥ **भागुरि**र्हि द्वयोर्बृहतीत्वं मन्यते, यच्छा**श्वतः**– क्षुद्रायां क्षुद्रवार्ताक्यां बृहती छन्दसि क्वचित् । द्व्यर्थे प्रचोदनी कण्टकारिका दुरालभा च ॥ ९४ ॥ नीली काला च वर्णे, नीलात्प्राण्योषध्योर्ङीष् ( वा० ) । क्लीतकं विनिमयोस्त्यस्याः क्लीतकिका । ग्रामे भवा ग्रामीणा । रञ्जयति नीलीकरोति रञ्जनी । श्रीफला रम्यफला । तुद्यते तुत्था । द्रवत्यस्याः स्पर्शाज्जनो द्रोणी, तूणीत्येके । दोल्यते दोला, मेलेत्येके । नीलोस्त्यस्या नीलिनी । आह च– नीलिनी नीलिका काला ग्राम्या तूणी विशोधनी । तुत्था श्रीफलिका मेला सारवाही च रञ्जनी ॥ त्र्यर्थे मधुपर्णी गुडूची काश्मरी नीलिका चेति, द्व्यर्थे क्लीतकिका मधुयष्टी नीलिका च ॥ ९५ ॥ अवल्गोररम्याज्जातोवल्गुजः । सोमेनाह्लादनेन राजते सोमराजी । कालेन मिष्यते शब्दयते कालमेषी कृष्णफलत्वात् । वातं संकोचयतीति निर्वचनाद्वाकुची । पूतिः फलमस्याः पूतिफली, पाककर्णोति ( सू० ) ङीष् । त्र्यर्थे कालमेषी मञ्जिष्ठा बृहती वाकुचिका च ॥ ९६ ॥ कर्षति कृष्णा, श्यामलत्वाद्वा ।

कृष्णोपकुल्या वैदेही मागधी चपला कणा ।
ऊषणा पिप्पली शौण्डी कोलाथ करिपिप्पली ॥ ९७ ॥
कपिवल्ली कोलवल्ली श्रेयसी वसिरः पुमान् ।
चव्यं तु चविका काकचिञ्चीगुञ्जे तु कृष्णला ॥ ९८ ॥
पलंकषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ।
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ॥ ९९ ॥
विश्वा विषा प्रतिविषातिविषोपविषारुणा ।
शृङ्गी महौषधं चाथ क्षीरावी दुग्धिका समे ॥ १०० ॥
शतमूली बहुसुताभीरुरिन्दीवरी वरा( री ) ।
ऋष्यप्रोक्ताभीरुपत्रीनारायण्यः शतावरी ॥ १०१ ॥

---

उपकोलति संस्त्यायत्युपकुल्या । विदेहदेशे भवा वैदेही । मगधभवत्वान्मागधी । चपति चपला । कणाः सन्त्यस्या कणा । ऊषत्यूषणा, ऊष रुजायाम् । उषणापि, उष दाहे, तीक्ष्णतण्डुलत्वात् । पिपर्ति पिप्पली । शौण्डी शक्तत्वात् । कोला, कुल संस्त्याने । आह च– पिप्पली मागधी कृष्णा चपला तीक्ष्णतण्डुला । उपकुल्या कणा श्यामा कोला शौण्डी तथोषणा ॥ **इन्दुश्च**– पिप्पली तण्डुलफला वैदेही कृष्णतण्डुला । करिपिप्पली बृहत्त्वाद् गजयोग्या वा ॥९७॥ कपिवल्ली मर्कटरोमत्वात् । एवं कोलवल्ली । वस्यते छाद्यते रोमभिर्वसिरः । चव्यं, फलं चैतत्, चव्यते चव्यं च्यवते वा । आह च– चविका कोलवल्ली तु चव्यं चवनमेव च ॥ तस्याः फलं विनिर्दिष्टं श्रेयसी हस्तिपिप्पली ॥ **चन्द्रनन्दनः** सामान्येनाह चव्या कोला च चविका श्रेयसी गजपिप्पली । चवना कोलवल्ली तु चव्यं कुञ्जरपिप्पली । त्र्यर्थे मर्कटवल्ली– अपामार्गो हस्तिपिप्पली स्वयंगुप्ता चेति, तथा वसिरोपामार्गः समुद्रलवणं हस्तिपिप्पली चेति । काकवर्णो चिञ्ची प्रान्तोस्याः काकचिञ्ची । गुञ्जति शिम्ब्यां गुञ्जा । कृष्णं प्रान्तं लाति कृष्णला । रक्तिकापि ॥ ९८ ॥ पलं मांसं कषति पलंकषा । इक्षोरिव गन्धोस्याः स्वादुकण्टकत्वादिक्षुगन्धा । शुनो दंष्ट्रेव हिंस्रत्वाच्छ्वदंष्ट्रा । गवां कण्टको वेधको गोकण्टको गोक्षुरत्वात् । गौर्महीति तु युक्तं, अत एव वनशृङ्गाटो भूक्षुरश्चायम् । आह च– गोक्षुरः स्याद् गोक्षुरको भक्षकः स्वादुकण्टकः । गोकण्टको भक्षक[ ट ]कः षडङ्गः क्षुरकः क्षुरः ॥ गोकण्टो गोक्षुरः कण्टी षडङ्गस्त्रिकटस्त्रिकः । त्रिकण्टकः कण्टफलः श्वदंष्ट्रव्यालदंष्ट्रकः ॥ द्व्यर्थे पलंकषो लाक्षा गोक्षुरो गुग्गुलुश्च, तथा– इक्षुगन्धा विदारी कोकिलो गोक्षुरश्च ॥९९॥ विशत्यन्तर्विश्वा । वेवेष्टि विषा । प्रतीपा विषस्य प्रतिविषा, अगदत्वात् । शृङ्गयुक्तत्वाच्छृङ्गी । आह च– अतिविषा शुक्लकन्दा ज्ञेया विश्वा च भङ्गुरा । श्यामकन्दा प्रतिविषा शृङ्गी चोपविषा विषा[ तथा ] ॥ महौषधं तु विषं नातिविषा । त्र्यर्थे तु हि महौषधं ( विषं ) शुण्ठी लशुनं चेति विषा(ष)शब्दं बुद्ध्वा भ्रान्तोयम् । क्षीरमवति क्षीरावी । दुग्धमस्त्यस्या दुग्धिका क्षीरकाकोलीयम् । आह च– द्वितीया क्षीरकाकोली क्षीरशुक्ला पयस्विनी । पयस्या [ वयस्था ] क्षीरमधुरा वीरा क्षीराविकारिका । अत्र क्षीरावी विकारिकेति च ग्रन्थकृन्मन्यते, क्षीरेति विकारिकेति तु **वैद्याः** ॥ १०० ॥ शतं बहूनि मूलान्यस्याः शतमूली । बहुधा सुवति बहुसुता । अभीरुः स्थिरपत्त्रा रसायनत्वाद्वा । इन्दीवर्युत्पलपुष्पा । वृणोति वरा । ऋष्यैः प्रोक्ताश्रिता द्वीपिशत्रुत्वात् । नारायणी विष्णुजाता । शतेन वृणोति शतावरी । न हिनोत्यहेरुः, अभीरोरपभ्रंशोयं वा । हरमेखलो निघण्टौ दृष्टः, यदाह– सहस्रमूली सहस्रावरी– अहेरुरिति । आह च– शतवीर्या शतपदी पीवरीन्दीवरी वरी । सहस्रवीर्याऽभीरुश्च तुङ्गिनी बहुपत्रिका ॥ ऋष्यप्रोक्ता द्वीपिशत्रुर्दी[ द्वी ]पिका वरकण्टकः । मता पुरुषदन्ता च शतावर्यूर्ध्वकण्टकः ॥ १०१ ॥ कालयति दोषान्कालीयकः ।

अहेरुरथ पीतद्रुकाली( ले )यकहरिद्रवः।
दार्वी पचंपचा दारुहरिद्रा पर्जनीत्यपि ॥ १०२ ॥
वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका।
शुक्ला हैमवती वैद्यमातृसिंह्यौ तु वाशिका ॥ १०३ ॥
वृषोऽटरूषः सिंहास्यो वासको वाजिदन्तकः।
आस्फोता गिरिकर्णी स्याद्विष्णुक्रान्तापराजिता ॥ १०४ ॥
इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः।
शालेयः स्याच्छीतशिवश्छत्त्रा मधुरिका मिसिः ॥ १०५ ॥
मिश्रेयाप्यथ सीहुण्डो वज्रः स्नुक् स्त्री स्नुही गुडा।
समन्तदुग्धाथो वेल्लममोघा चित्रतण्डुला ॥ १०६ ॥
तण्डुलश्च कृमिघ्नश्च विडङ्गं पुंनपुंसकम्।
व-ब-ला वाट्यालको घण्टारवा तु शणपुष्पिका ॥ १०७ ॥

---

हरिः पीतो द्रुः स्कन्धोऽस्य हरिद्रुः। दार्वी दारुहरिद्रा च पिण्डहरिद्रातोऽन्या। अत्यर्थं पचति पचंपचा। पिपर्ति रोगेभ्यः पर्जनी। आह च– हरिद्रा पीतिका पिण्डा रजनी रञ्जनी निशा। गौरी वर्णवती पीता हरिता[ द्रा ] वरवर्णिनी ॥ अन्या दारुहरिद्रापि हरिद्रुः पीतचन्दनम्। निर्दिष्टा वै कटंकिनी स च कालेयकः स्मृतः ॥ कालीयको दारुनिशा दार्वीपीतद्रुपीतकाः। कटंकटेरी पर्जन्या पीतदारु पचंपचा ॥ १०२ ॥ वक्त्यनया वचा, वाक्पाटवकृत्। षड् ग्रन्थयः पर्वाण्यस्याः षड्ग्रन्था। गोरिव लोमान्यस्या लोमशत्वाद् गोलोमी। शुक्ला कृष्णा च द्वेधासौ, यदाह– वचोग्रगन्धा गोलोमी जटिलोग्रा च लोमशा। अन्या श्वेतवचा मेध्या षड्ग्रन्था हैमवत्यपि। त्र्यर्थे शतपर्वा दूर्वा वशा वचा च। वैद्यानां मातेव रोगजित्त्वात्। हिनस्ति रोगान् सिंही। उश्यते काम्यते वाशिका ॥ १०३ ॥ वर्षति मधु वृषः। अटान् गच्छतो रूषत्यटरूषः। सिंहास्याकारपुष्पत्वात्सिंहास्यः। वाजिदन्ता इव केसराण्यस्य वाजिदन्तकः। आह च– वासकः सिंहपर्णी च वृषो वासोऽथ सिंहिका। अटरूषः सिंहमुखी भिषङ्मातारूषकः ॥ आस्फुटत्यास्फोता। गिरि( रे )रश्मवत्कर्णिकास्य( स्या ) गिरिकर्णी। विष्णुनाक्रान्ता। अत एव रक्षाहेतुत्वान्न पराजिता। आह च– अश्वक्षुरा श्वेतपुष्पा श्वेता च गिरिकर्णिका। कटभी श्वेतसारा च श्वेताख्या चापराजिता ॥ द्व्यर्थे आस्फोता सारिवा गिरिकर्णिका च ॥ १०४ ॥ इक्षोरिव गन्धास्याः, स्वाद्वीत्यर्थः। इक्षुसदृक्काण्डत्वात् ( काण्डेक्षुः )। कोकिलस्येवाक्षीण्यस्य कोकिलाक्षः। इक्षुं रातीक्षुरः। स एव लोकोक्त्या क्षुरः, पारुष्याद्वा। आह च– तथान्य इक्षुगन्धः स्यादिक्षुरः कोकिलाक्षकः। कामः[ सः ] काण्डेक्षुरुद्दिष्टः काकेक्षुर्वायसेक्षुकः ॥ शालायां भवः शालेयः, गुप्तत्वात्, अत एव शालीनः। शीतः शिवश्च। ( छत्त्रा ) छत्त्रातपत्रा। मस्यति परिणमति मिसिः। आह च– मिश्रेया तालपत्त्री च तालपर्णी मिसिस्तथा। शालेयः स च शालीनो नाम्ना शीतशिवो मतः ॥ १०५ ॥ सीहुण्डः सिंहतुण्डापभ्रंशः, यन्मेखलाकुलिशतरू सीहुण्डौ। वज्रो भेदकत्वात्। स्नौ( स्नुह्य )ति क्षीरं स्नुक् स्नुही च, स्नुहेति वैद्याः। गुडा वृत्तत्वात्, गुहेत्यपपाठः, यच्छाश्वतः– गुडौ गोलेक्षुविकृती स्नुही गुडिकयोर्गुडा। सुधापि। आह च– स्नुक् सुधा च महावृक्षो गुडा निस्त्रिंशपत्त्रकः। समन्तदुग्धा गण्डीरा सीहुण्डो वज्रकण्टकः ॥ वज्रद्रुः स्नुक् स्नुहीत्येके पेठुः। वेल्लति वेल्लम् ॥ १०६ ॥ बिलति भिनत्ति विडङ्गं विलङ्गति वा। आह च– विडङ्गा जन्तुहन्त्री च कृमिघ्नी चित्रतण्डुला। तण्डुलः कृमिहामोघा केश[ केस ]ला मृगगामिनी ॥ वलन्त्यनया वला, बलकृद्वा। वटति वाट्यालकः। चन्द्रनन्दनो बला भद्रौदनी ह्या तथा वाट्यालक इत्याह। घण्टेवारौति घण्टारवा। शणस्येव पुष्पाण्यस्याः शणपुष्पी, पाककर्णपर्णेति ( सू० ) ङीष्। आह च– शणपुष्पी बृहत्पुष्पी स चोक्तः शणघण्टकः ॥ १०७ ॥ मृद्वीका सौकुमार्यात्। गोस्तनाभा

मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ।
सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ॥ १०८ ॥
त्रिभण्डी रोचनी श्यामापालिन्द्यौ तु सुषेणिका ।
काला मसूरविदलार्धचन्द्रा कालमेषिका ॥ १०९ ॥
मधुकं क्लीतकं यष्टीमधुकं मधुयष्टिका ।
विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री तु या सिता ॥ ११० ॥
अन्या क्षीरविदारी स्यान्महाश्वेतर्ष्य( र्क्ष )गन्धिका ।
लाङ्गली शारदी तोयपिप्पली शकुलादनी ॥ १११ ॥
खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः ।
गोपी श्यामा शारिवा स्याच्चन्दनोत्पलशारिवा ॥ ११२ ॥

---

गोस्तनीति विशेषोपि सामान्यवृत्तिः । द्राति सरसत्वाद् द्राक्षा । आह च– द्राक्षा चारुफला कृष्णा पियाला कालमोषिका । स्वाद्वी गुडा मधुरसा मृद्वीका गोस्तनी स्मृता ॥ हारहूरा च । सर्वा अनुभूतयोस्याः सर्वानुभूतिः, नानारसेत्यर्थः । सरति सरला विरोचनीत्वात्, सरडेत्येके । त्रयः पुटाश्छादका अस्यास्त्रिपुटा, त्रिपुटी च, त्र्यस्रेत्येके । त्रिभिर्व्रियते त्रिभिर्वर्यते छाद्यते वा त्रिवृता त्रिवृत्, त्रिपुटात्वाद्वा ॥ १०८ ॥ त्रिभिर्भण्ड्यत उद्घाट्यते त्रिभण्डी । रोचनी रुचिकर्त्री, रेचनीत्येके । शुक्लेयं, कृष्णामाह । पालयति पालिन्दी । सुषिणोति सुषेणी । आह च– श्यामा त्रिवृन्मालविका मसूरविदला च सा । कालार्धचन्द्रा पालिन्दी सुषेणी कालमेष्यपि ॥ शुक्ला चापि त्रिभण्डीस्यात्काकाक्षी सरला त्रिवृत् । सर्वानुभूतिस्त्रिपुटा त्र्यस्रा कूटरवृंहिणी ॥ आम्भसी रेचनी चैव कण्ठविक्षोभणी तथा ॥ १०९ ॥ यष्टीरूपं मधुकं यष्टीमधुकम् । एकदेशान्मधुकम् । क्लीबत्वं तकति प्रतिहन्ति वृष्यत्वात्क्लीतकं, क्लीतसंज्ञं वा । आह च– मधुयष्टी च यष्टी च यष्टीमधु मधुस्रवा । यष्टीमधूकं मधुकं यष्ट्याह्वं मधुयष्टिका ॥ तल्लक्षणं क्लीतकं च– इति । विदार्यं भक्ष्यते विदारी । क्षीरेण शुक्ला । इक्षुगन्धा माधुर्यात्, क्षीरविदारीयं कृष्णो भूकूष्माण्डोयं वा [प्राक्षु देशेषु] । शुक्लो भूकूष्माण्डः सृगाली, रसं सृजतीति, क्रोष्ट्री तु लक्षणया । आह च– विदारिका मता शुक्ला स्वादुकन्दा शृगालिका । ऋष्यगन्धा विदारी च ऋष्यवल्ली विदारिका ॥ त्र्यर्थे– इक्षुगन्धा विदारी कोकिलाक्षको गोक्षुरश्च ॥११०॥ ऋष्यान्गन्धयत्यर्दयति ऋष्यगन्धा । आह च– अन्या क्षीरविदारी स्यादिक्षुगन्धेक्षुवल्ल्यपि । क्षीरवल्ली क्षीरकन्दा क्षीरशुक्ला पयस्विनी ॥ त्र्यर्थे महाश्वेता नीलस्यन्दा यवशर्करा क्षीरविदारी च, तथा ऋष्यगन्धा मूलकं रक्तालुकं क्षीरविदारी च, तथा क्षीरशुक्ला क्षीरविदारी क्षीरकाकोली नीलस्यन्दा च । लाङ्गली हलाकारा । शकुलादनी मत्स्यभक्षणात् । आह च– जलपिप्पल्याभिहिता शारदी तोयपिप्पली । मत्स्यादनी मत्स्यगन्धा लाङ्गली शकुलादनी ॥ १११ ॥ खरमश्नुते खराश्वा । कारोरियं कारवी कर्मण्येत्यर्थः । दीप्योग्निदीपनः । मीनात्यग्निमान्द्यं मयूरः । लोच्यते लुच्यते वा मस्तकोस्य वर्वराकारत्वाल्लोचमस्तकः, लोचमर्कट इत्येके । आह च– अजमोदा वस्तमोदा दीप्यको लोचमस्तकः । खराश्वा कारवी वल्ली मोचा हस्तिमयूरकः ॥ त्र्यर्थे मयूरकोपामार्गोजमोदा तुत्थकश्च । गोपायति गोपी । (श्यामा )श्यामवर्णा । यच्छाश्वतः– शारिवायां निशि श्यामा श्यामौ च हरितासितौ । शीर्यन्तेनया दोषाः शारिवा । चन्दनाह्लादनत्वात्, अनन्तेत्येके । उत्पलाभपत्त्रोत्पलशारिवा । आहुश्च– शारिवा फणिजिह्वा च गोप्यास्फोता च चन्दना ॥ ११२ ॥ योजनीयं योगे साधु वा योग्यम् । ऋध्नोति ऋद्धिः । वृद्धेरोषधिविशेषस्यापि योग्यादीनि नामानि । आह च– ऋद्धिर्वृद्धिः सुखं सिद्धी रथाङ्गं मङ्गलं वसु । ऋद्धिपुष्टा[ सृष्टा ] युगं योग्यं लक्ष्मीः सर्वजनप्रिया ॥ केन वायुना दल्यते कदली । वारणानां बुसो घासः, वारणवि(बु)षेत्येके । रम-

योग्यमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे ।
कदली वारणवुसा रम्भा मोचांशुमत्फला ॥ ११३ ॥
काष्ठीला मुद्गपर्णी तु काकमुद्गा सहेत्यपि ।
वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणी ॥ ११४ ॥
नाकुली सुरसा नाग(रास्ना)सुगन्धा गन्धनाकुली ।
नकुलेष्टा भुजंगाक्षी छत्त्राकी सुवहा च सा ॥ ११५ ॥
विदारिगन्धांशुमती शा( सा )लपर्णी स्थिरा ध्रुवा ।
तुण्डिकेरी समुद्रान्ता कर्पासी बदरेति च ॥ ११६ ॥
भारद्वाजी तु सा वन्या शृङ्गी तु वृ-ऋ-षभो वृषः ।
गाङ्गेरुकी नागबला झषा ह्रस्वा गवेधुका ॥ ११७ ॥
धामार्गवो घोषकः स्यान्महाजाली स पीतकः ।
ज्यौत्स्नी पटोलिका जाली नादेयी भूमिजम्बुका ॥ ११८ ॥

---

तेस्या रम्भा । मुञ्चति रसं मोचा। अंशुमानिव फलान्यस्या अंशुमत्फला, भानुफलाख्या ॥११३॥ ईषदष्ठीलमस्याः काष्ठीला, कार्ष्णी[ ष्ठी ]रस इत्येके । आह च ( धन्वन्तरिः )– कदली सुकुमारा च रम्भा भानुफला मता । कार्ष्णी[ ष्ठी ]रसश्च निःसारा मोचा हस्तिवि(वु)षा तथा ॥ सहा क्षुद्रा, सहाख्यात्र । त्र्यर्थे हि सहा मुद्गपर्णी बला नाकुली च, यतो महासहा माषपर्ण्युच्यते । वार्ताकं देरयाम् । भण्टाकी कण्टकार्यो अन्येयमित्ययं मन्यते, वैद्यास्त्वभिन्ना प्राहुः, यदाह– हिङ्गुली बृहतीति च ॥ ११४ ॥ नकुलानां प्रिया नाकुली । नागसुगन्धा सर्पसुगन्धत्वात् । छत्राकी छत्राभपर्णा । सुष्ठु वहत्यामेदं सुवहा । अर्धेन रास्नार्धेन सर्पाक्षीति गौडाः, वैद्यास्तु नाकुलीगन्धनाकुल्यौ विदारीक्षीरविदारीवद् भिन्ने मन्यन्ते । आह च– नाकुली सर्पगन्धा च सुगन्धा भोगिगन्धिका । सैव सर्पसुगन्धेति– । तथा– अन्या महासुगन्धा च सुवहा गन्धनाकुली । सर्पाक्षी नकुलेष्टा च छत्राकी विषमर्दनी ॥ ११५ ॥ विदार्या गन्धोस्या विदारिगन्धा । अंशवः सन्त्यस्या अंशुमती दीर्घमूलत्वात् । शालस्येव पर्णान्यस्याः शालपर्णी । आह च– शालपर्णी स्थिरा सौम्या त्रिपर्ण्यतिगुहा ध्रुवा । विदारिगन्धांशुमती दीर्घमूला च पीतनी ॥ तुण्डिकान् गन्धादीनीरयति कण्टकित्वात्तुण्डिकेरी । समुद्रः कण्टकैः कृतरक्षोन्तेस्याः समुद्रान्ता, दूरप्रसरत्वाद्वा । कल्पते कर्पासी । बदराणीव फलानि सन्त्यस्या बदरा, यन्माला– कर्पासो बदरः प्रोक्तो बादरः पिचवश्च ह । द्व्यर्थे तुण्डिकेरी चिञ्चा कर्पासी च, त्र्यर्थे समुद्रान्ता कर्पासी यवासकः स्पृक्का च ॥ ११६ ॥ वने भवा वन्या । सा कर्पासी । ( भारद्वाजी )भरद्वाजस्येष्टेत्यागमः । भद्रापि । शृङ्गाणि सन्त्यस्य शृङ्गी । अत एव वृषाख्यः । आह च– ऋषभो धूर्वहो वी[ धी ]रो मातृको वृषभो वृषः । वितानी ककुदिन्द्राक्षो बन्धुरो गोपतिः स्मृतः ॥ गाङ्गमीरयति पवित्रत्वात् गाङ्गेरुकी । नागानां बलकृन्नागबला । झषति हिनस्ति गन्धेन झषा । गवि जले–इन्द्धे ( एधते ) गवेधुका । आह च– गाङ्गेरुकी नागबला खरगन्धनिका झषा । विश्वदेवा तथारिष्टा ख[ च ]ण्डा ह्रस्वा गवेधुका ॥ ११७ ॥ धामार्जति धामार्गवः । घोषति शब्दायते घोषकः । स धामार्गवः पीतपुष्पो महाजाली, जालं वितानः । आह च– धामार्गवः कोशफलो राजकोशातकी फला । कर्कोटकी पीतपुष्पा महाजाली तथोच्यते ॥ ज्यौत्स्नी रात्रौ भासनात् । पटति विस्तीर्यते पटोली । जाली सविताना । ऐरावतो नागरङ्गो नादेयी भूमिजम्बुकेत्युक्तत्रापि भ्रान्त्याप्रोक्ता ॥ ११८ ॥ लाङ्गलवद् भेदनाल्लाङ्गली । अग्निशिखा स्प्रष्टुमशक्यत्वात्, अग्निमुखीत्येके । आह च– कलिकारी तु फलिनी विशल्या गर्भपातनी । लाङ्गल्यग्निमुखी सौरी दीप्तानन्तेन्द्रपुष्प्यपि ॥ द्व्यर्थे– अग्निमुखी भल्लातकी लाङ्गली च । काकस्येवाङ्गं नासारूपं फलमस्याः काकाङ्गी, काकजङ्घेत्येके ।

स्याल्लाङ्गलिक्यग्निशिखा काकाङ्गी काकनासिका ।
गोधापदी तु सुवहा मुसली तालमूलिका ॥ ११९ ॥
अजशृङ्गी विषाणी स्याद् गोजिह्वादार्विके समे ।
ताम्बूलवल्ली ताम्बूली नागवल्ल्यप्यथ द्विजा ॥ १२० ॥
हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ।
एला-ल-वालुकमैलेयं सुगन्धि हरिवालुकम् ॥ १२१ ॥
वालुकं चाथ पालङ्क्यां मुकुन्दः कुन्दकुन्दुरू ।
वालं ह्रीवेरबर्हिष्ठोदीच्यं केशाम्बुनाम च ॥ १२२ ॥
कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु ।
शैलेयं तालपर्णी तु दैत्या गन्धकुटी मुरा ॥ १२३ ॥
गन्धिनी गजभक्ष्या तु सुवहा सुरभी रसा ।
महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ॥ १२४ ॥

---

आह च– काकनासा ध्वाङ्क्षनासा काकतुण्डफला च सा । गोधाया इव पदान्यस्या गोधापदी, कुम्भपद्यादिः (सू॰ ) । हंसपदी च । मुष्णा( स्य )ति खण्डयति दोषान्मुसली । द्व्यर्थे तालपत्री मुसली मिश्रेया च ॥ ११९ ॥ अजस्येव शृङ्गाण्यस्या अजशृङ्गी, कर्कटशृङ्गीत्यर्थः । विषाणी शृङ्गीत्वात् । आह च– शृङ्गी कर्कटशृङ्गी च कुरङ्गी कर्कटाह्वया । कुलीरशृङ्गी वक्रा च महाप्येषा नताङ्ग्यपि ॥ गोजिह्वाभपत्त्रा । दारयति रोगान् दार्वी, ओषधिविशेषः । नागवल्ली फणिलता पातालानीतत्वात् । द्विर्जायते द्विजा ॥ १२० ॥ हरति हरेणुः । रेणुका भस्मयोगात् । कुन्त्या दुर्वाससा दत्ता कौन्ती । भस्मना धूल्या गन्धयति भस्मगन्धिनी । आह च– रेणुका राजपुत्री च नान्दिनी कपिला द्विजा । भस्मगर्भा पाण्डुफला भस्मगन्धा हरेणुका ॥ गन्धद्रव्यं चैतत् । एला-ल-वद्वलति– एला-ल-वालुकम् । हरि पिङ्गं वालुकं हरिवालुकम् । त्र्यर्थे सुरभिः सल्लकी सुरा– एलावालुका च ॥ १२१ ॥ पाल्यते पालङ्क्या । मुखात्कुन्द इव मुकुन्दः, मुञ्चति रसं वा । कुन्यति कुन्दुरुः । आह च– कुन्दुरुः स्यात्कुन्दुरुकः कुन्दश्चासौ विड[द]-ङ्ख्यपि । मुकुन्दस्तीक्ष्णगन्धश्च पालिन्दो( लङ्क्यो )भीषणो बली ॥ वलते वालम् । जिह्रेति च ह्रीवेरम् । बर्हते वर्धते बर्हिष्ठम् । उदीचीभवमुदीच्यम् । केशपर्यायं वालत्वात् । अम्बुनाम तृड्घ्नत्वात् । आह च– वालकं वारि तोयं च ह्रीवेरं जलमम्बु च । केशं बज्रमुदीच्यं च पिङ्गमावपनं कचम् ॥ १२२ ॥ कालमनुसरति शीतोष्णाभ्यां कालानुसार्यम् । वृद्धं कालस्थायि । अश्मनः पुष्पं, अश्मानं पुष्णाति वा, तदूर्ध्वजत्वात् । शीतत्वेन शिवं शीतशिवम् । द्व्यर्थे शीतशिवं सैन्धवं मिश्रेया चेत्याहुः । तानि तु शैलेयं, शिलायां भवं शैलेयम् । आह च– शैलेयं पलितं वृद्धं जीर्णं कालानुसार्यकम् । स्थविरं च शिलादद्रु शिलापुष्पं शिलाभवम् ॥ दैत्या मुराख्यदैत्यनामत्वात् । ( मुरा ) मुर संवेष्टने । आह च– मुरा गन्धवती दैत्या गन्धाढ्या गन्धमालिनी । सुरभिः श्रुतगन्धा च कुटी गन्धकुटी स्मृता ॥ १२३ ॥ गजैर्भक्ष्यते गजभक्ष्या । सुष्ठु वहति स्रवति सुवहा, सुस्रवेति वैद्याः । महदीरणमस्या महेरणा । सत्कृत्य लक्यते स्वाद्यते गजैः सल्लकी [शल्लकी] । ह्लादोऽस्त्यस्या ह्लादिनी । आह च– सल्लकी शल्लकी ह्लादा सुरभिः सुस्रवा रसा । अश्वमूत्री कुन्दुरुकी गजभक्ष्या महेरणा ॥ १२४ ॥ अग्नेर्ज्वालेव रक्ता, मद्यपावनीत्वाद्वा । सुभिक्षा सुलभा । धातुरक्ता धातुकी, धातुपुष्पीत्वात् । आह च– धातुकी ताम्रपुष्पी च कुञ्जरा मद्यपावनी । पर्वतीया सुभिक्षा च वह्निपुष्पा च शब्दिता ॥ पृथ्वीका बहुफला पत्त्रैलात्वाद्वा । एवं बहुला । चन्द्रस्य कर्पूरस्य बाला पुत्रीव चमत्कारात् । एलयति मुखदौर्गन्ध्यमित्येला । निष्क्रान्ता कुटेः कोशान्निष्कुटिः । आह च– पत्त्रैला बृहदेला च त्रिदिवा त्रिदिवोद्भवा । स्थूलैला त्वक्सुगन्धा च पृथ्वीका चन्द्रकन्यका ॥ त्रिपुटे(टी)तीन्दुः । त्र्यर्थे

अग्निज्वालासुभिक्षे तु धातुकी धातुपुष्पिका ।
पृथ्वीका चन्द्रवालैला निष्कुटिर्बहुलाथ सा ॥ १२५ ॥
सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः ।
व्याधिः कुष्ठं पारिभ(भा)व्यं वाप्यं पाकलमुत्पलम् ॥ १२६ ॥
शंखिनी चोरपुष्पी स्यात्केशिन्यथ वितुन्नकः ।
झटामलाज्झटा ताली शिवा तामलकीति च ॥ १२७ ॥
प्रपौण्डरीकं पुण्डर्यमथ तुन्नः कुवेरकः ।
तुणिः कच्छः कान्तलको नन्दिवृक्षोथ राक्षसी ॥ १२८ ॥
चण्डा धनहरी क्षेमदुष्पु( ष्प )त्रगणहासकाः ।
व्यालायुधं व्याघ्रनखं करजं चक्रकारकम् ॥ १२९ ॥
सु( शु )षिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली ।
धमन्यञ्जनकेशी च हनुर्हट्टविलासिनी ॥ १३० ॥

---

पृथ्वीका हिङ्गुपत्रिकोपकुञ्चिका सूक्ष्मैला चेत्याहुः । द्वयर्थे तु त्रिपुटा त्रिवृत्सूक्ष्मैला चेति लक्ष्याच्चाग्रेव विनिश्चयः ॥ १२५ ॥ सा– एला सूक्ष्मा, उपकुञ्चयत्युपकुञ्चिका । तुत्था चाल्पत्वात् । कुरति शब्दायते कोरङ्गी । त्रिपुटा त्र्यश्रिः । त्रुट्यति त्रुटिः, सूक्ष्मत्वाद्वा । आह च– सूक्ष्मैला द्रामि[ वि ]डी तुत्था कोरङ्गी बहुला त्रुटिः । एला कपोतवर्णा च चन्द्रबाला च निष्कुटिः ॥ द्वयर्थे त्रिपुटा त्रिवृत्सूक्ष्मैला च । व्याधिपर्यायं कुष्ठत्वात् । कौ तिष्ठति कुष्ठम्, अम्बाम्बगोभूमीति ( सू० ) षत्वं, कुष्णाति रोगान्वा । पारिषु तोयाशयेषु भवति पारिभव्यं, भव्यगेयेति ( सू० ) साधुः । वाप्यां भवं वाप्यम्, व्याप्यमित्येके । पाकलं व्याधित्वात्, पाकं लाति वा । उत्पलं दाहहृत्त्वादुत्पलपुष्पत्वाद्वा । आह च– कुष्ठो रोगो गदो व्याधिरुत्पलं पाकलं रुजा । वाप्यं वानीरजं रामं कौवीरं पारिभव्यकम् ॥१२६॥ शंखिनी शौक्ल्यात् । चोरपुष्पी धनहरीत्वात्, रात्रौ विकाशाद्वा । केशाः सन्त्यस्याः केशिनी । **चन्द्रनन्दनोक्त**– चण्डा धनहरी चौरी चोरपुष्पा च तस्करी । तथा निशाचरी च स्यात्केशिनी ग्रन्थिकेत्यपि ॥ वितुद्यते वितुन्नकः । झटः संघातोस्या झटा । आमला– आमलकीत्वात् । अज्झटाश्चर्यकारिसंघाता, अद् आश्चर्येद्भुतवत् । ताडयति मलांस्ताडी( ली ) । आमलकीत्वाच्छिवा । ताम्यति तामलकी । आह च– तामलक्युत्तमा ताली तमलं( कं ) तु पुलाकिनी । वितुन्नकस्त्वज्झटा च झटा चामलकीति च ॥ १२७॥ प्रकर्षेण पुण्डरीकस्येदं दाहहरत्वात्प्रपौण्डरीकम् । अस्यैकदेशानुकाराल्लोके पुण्डर्यम् । आह च– प्रपौण्डरीकं चक्षुष्यं पौण्डर्यं पुण्डरीयकम् । स्थलपद्ममिति **गौडाः** । तुद्यते तुन्नः । कुवेरः कुत्सितदेहः । अत एव तुणिस्थाने कुणिं पेठुः । कच्छय( च्य )ते कच्छः । आह च– तुणिस्तुन्नक आपीतस्तुणिकः कच्छकस्तथा । कुवेरकः कान्तलको नन्दिवृक्षोथ नन्दकः ॥ अश्वत्थाकारोयम् ॥ १२८ ॥ रक्ष्यतेस्या राक्षसी । क्षियति वसत्यास्मिन्गन्धः क्षेमकः । दुष्पुत्रश्चोरकत्वात् । गणं हासयति गणहासकः कोहनत्वात् । आह च– चोरकः शङ्कितश्चण्डा दुष्पुत्रः क्षेमको रिपुः । गणहासः कोहनकः कितवः फलको(चो)रकः ॥ गन्धद्रव्यं चैतत् । व्याडायुधं नखत्वात् । चक्रमेलं धूपद्रव्यैः करोति चक्रकारकम् ॥ १२९ ॥ नखीयं, विद्रुमलताभा । कपोताङ्घ्रिर्नालिकात्वात् । नटति वायुना नर्तकीत्वान्नटी । धमनी शौषिर्यात् । अञ्जनाभकेशा ( अञ्जनकेशी ) । आह च– नालिका विद्रुमलता कपोतचरणा नली । शुषिरा धमनी शून्या निर्मथ्या नर्तकी नटी ॥ हन्ति हनुस्तीक्ष्णाग्रत्वात् । हट्टे विलसति हट्टविलासिनी वेश्येव वा ॥ १३० ॥ शुक्त्याकृतिः । अत एव शंखः । खुरति विलिखति खुरः, प्राणिशफत्वाद्वा । कोलदलं बदरीपत्त्राख्ययेन्दुनोक्तम् । न खनति नखम् । आह च– नखः कररुहः शिल्पी करजोथ खुरः शफः । शुक्तिः शंखः ख[ च ]लः कोशी[ ली ] हनु-

शुक्तिः शंखः खुरः कोलदलं नखमथाढकी।
काक्षी मृत्स्ना तुवरिका मृतालकसुराष्ट्रजे ॥ १३१ ॥
कुटन्नटं दाशपुरं वानेयं परिपेलवम्।
प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च ॥ १३२ ॥
ग्रन्थिपर्णं शुकबर्हं पुष्पं स्थौणेयकुक्कुरे।
मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः ॥ १३३ ॥
समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि।
तपस्विनी जटा मांसी जटिला लोमशामिषी ॥ १३४ ॥
त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम्।
कर्चूरको द्राविडकः काल्य( ल्प )को वेधमुख्यकः ॥ १३५ ॥

---

नागहनुः सहः ॥ आढकीसंज्ञा धानाख्या तुवरीत्वात्, तुवरो हि कषायो रसः। कषति काक्षी। प्रशस्ता मृद् मृत्स्ना, सस्नौप्रशंसायाम् ( सू० )। म्रियतेनेन हेम मृतालकम्। सुराष्ट्रदेशे जातम्। आह च– सौराष्ट्री च मृतासङ्गः काक्षी कामी सुराष्ट्रजा। अजिता तुवरी स्तुत्या मृत्स्ना मृत्या( त्सा ) मृतालकम् ॥ १३१ ॥ कुटन्ती नटति, कुटन्नटापि। दशपुरे भवं दाशपुरं, दाशान्पिपर्ति वा, कैवर्तीमुस्तत्वात्। वने जातं वानेयं, नद्यादिभ्योढक् ( सू० )। प्लवते लघुत्वात्प्लवः। गाः पिपर्ति गोपुरम्। अत एव गोनर्दम्। आह च– परिपेलवं प्लवं वन्यं गोपुरं स्यात्कुटन्नटम्। सितपुष्पं दाशपुरं गोनर्दं जीर्णबुध्नकम् ॥ १३२ ॥ ग्रन्थिप्रधानानि पर्णान्यस्य ग्रन्थिपर्णं, ग्रन्थीन्वा पिपर्ति ग्रन्थिमत्त्वात्। शुकस्येव बर्हाणि पर्णान्यस्य शुकबर्हं, शुकं बर्हमिति पदैकदेशत्वाद्वा द्वे संज्ञे। पुष्यति पुष्पं विकचाख्यम्। स्थूणाया इदं रूपेण स्थौणेयम्। कुक्कुरं श्वाकृति। आह च– स्थौणेयकं वह्निचूडं शुकगुच्छं शुकच्छदम्। विकचं शुकबर्हं च हरितं शीर्णलोमकम् ॥ मरुन्माले मारुतस्रगाख्ये द्वे संज्ञे एते, अयं तु तुशब्दादेकां मन्यते, मरुत्सहिता माला वा। पिशुना गन्धसूचनात्। स्पृशति गन्धैः स्पृक्का। देवी देवपुत्रीत्वात् ॥ १३३ ॥ वधूराशावधूत्वात्। कोटिभिर्वर्षति मधु कोटिवर्षा। लङ्कासूप्यते लङ्कोपी, समुद्रान्तत्वात्। इन्द्राद्याः– स्पृक्का माला पङ्कमुष्टिर्नीला देवी लतागुरुः। देवपुत्री च लङ्कोपी शीता पङ्कजमुष्टिका ॥ स्रग्मारुता कोटिवर्षा निर्माल्याशावधूः स्मृता। धन्वन्तरिश्च– स्पृक्का स्रग्ब्राह्मणी देवी लता लङ्कोपिकेत्यपि। पङ्कमुष्टिर्देवपुत्री निर्माल्या पिशुना वधूः। त्र्यर्थे समुद्रान्ता कर्पासी यवासकः स्पृक्का च। जटाः सन्त्यस्या जटा। अत एव तपस्विनी। समांसत्वान्मांसी। अत एवामिषी। गन्धमांसी चेयम्, यदाह– मांसी कृष्णजटा हिंस्रा नलदा जटिलामिषी। जटा च पिशिता मेषी क्रव्यादा च तपस्विनी ॥ द्वितीया गन्धमांस्यन्या भूतकेशी जटा स्मृता। पिशाची पूतना केशी भूतकेशी च लोमशा ॥१३४॥ त्वग्वृक्षशकलत्वात्। पत्राकृति पत्त्रम्। उत्कटं चमत्कारात्। भृङ्गं कार्ष्ण्यतैक्ष्ण्याभ्याम्। चोचमग्निचोदकम्। वरमङ्गं त्वग्रूपमस्य वराङ्गकम्। आह च– त्वचं वराङ्गं भृङ्गं त्वक् चोचं शकलमुत्कटम्। कृन्तति त्वग्दोषं कर्चूरः, हरिद्राभः। द्रावयति द्राविडः। कल्यकारी काल्यः। आह च– कर्चूरको गन्धमूलो द्राविडः काल्य एव च। वेधमुख्यो दुर्लभश्च कस्य चित्संमता शटी ॥ १३५ ॥ ओषं धयत्योषधी फलपाकान्ता जातिः। सैवौषधं रोगहृत्। सर्वमिति क्षौद्रघृततैलाद्यमप्यौषधं, ओषधेरजातौ ( सू० ) इत्यण्। तद्विशेषाच्छाकादीनाह। शक्यतेनेन भोक्तुं श्यति देहं वा शाकम्। पत्त्रं निम्बादेः, पुष्पं कोविदारादेः। आदिशब्दात्फलं वार्ताक्यादेः, मूलं मूलकविशादेः, कन्दः सूरणादेः, अङ्कुरो वंशादेः। आह च– मूलपत्त्रकरीराग्रफलकाण्डविरूढकाः। त्वक्पुष्पं कवकं चेति शाकं दशविधं स्मृतम् ॥ विरूढकं तालास्थिमज्जेति गौडः, वयं तु क्षेत्रोप्त( द्र )तस्य फलमूलादेः सेकान्नवोद्भिन्नानङ्कुरान्विरूढान्मन्यामहे। कवकं छत्रिका। शाकविशेषानाह। ताडयति

ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् ।
शाकाख्यं पत्रपुष्पादि तण्डुलीयोल्पमारिषः ॥ १३६ ॥
विशल्याग्निशिखानन्ता फलिनी शक्रपुष्प्यपि ।
स्यादृक्षगन्धा छगलाण्डया( न्त्या )वेगी वृद्धदारकः ॥ १३७ ॥
जुङ्गो ब्राह्मी तु मत्स्याक्षी वयस्था सोमवल्लरी ।
पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती ॥ १३८ ॥
हयपुच्छी तु काम्बोजी माषपर्णी महासहा ।
तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि ॥ १३९ ॥
वर्वरा कवरी तुङ्गी खरपुष्पाजगन्धिका ।
एलापर्णी तु सुवहा रास्ना युक्तरसा च सा ॥ १४० ॥
चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाम्ब्ललोणिका ।
सहस्रवेधी चुक्रोम्ब्लवेतसः शतवेध्यपि ॥ १४१ ॥

---

दोषांस्तण्डुलीयकः, लघुतण्डुलाभबीजो वा । अल्पं मृष( ०र )त्यल्पमारिषः । आह च– तण्डुलीयक उहिः ख[ च ]टाला (?) तण्डुलेरकः । भण्डीरस्तण्डुलीबीजो मेघनादो घनस्वनः ॥१३६॥ लाङ्गलिकीयं पूर्वोक्तापि शाकत्वादिहोपात्ता । ऋक्षवद्गन्धयति ऋक्षगन्धा, ऋष्यगन्धा वृक्षगन्धेति च पाठभेदः । छगलस्येवाण्डान्यस्थीन्यस्याश्छगलाण्डी। आवेगी वृक्षत्वात्, उद्वेजको वा । वृद्धं वृद्धत्वं दारयति वृद्धदारकः, वृद्धं दारकीकुरुते वा । जुङ्गति वृङ्क्ते दोषाञ्जुङ्गः, जुगि वर्जने । आह च– वृद्धदारक आवेगी जुङ्गको जीर्णबालकः । अन्तःकोटक(र)पुष्पा स्यादजाङ्गी छगलाण्डयपि ॥ त्र्यर्थे वृक्षगन्धा वृद्धदारकः पिण्डालुकं विदारी च ॥ १३७ ॥ ब्राह्मी पावनीत्वात् । मत्स्याक्षी मत्स्यपुष्पा । वयस्था वयसः स्थैर्यकृत् । त्र्यर्थे सोमवल्ली वाकुची गुडूची ब्राह्मी च । हिमावती हिमजातत्वात् । आह च– क्षीरिणी काञ्चनक्षीरी पटुपर्णी च कर्शिनी । तिक्तदुग्धा हैमवती हेमदुग्धा हिमावती ॥ स्वर्णक्षीरी स्वर्णवती सुवर्णक्षीरिकापि च । त्र्यर्थे हैमवती हिमावती हरीतकी श्वेतवचा च ॥ १३८ ॥ हयपुच्छाकृतिः । कम्बोजदेशे भवा काम्बोजी । महासहेति मुद्गपर्ण्याः सहाया भिन्नेयम् । आह च– माषपर्णी तु काम्बोजी कृष्णवृन्ता महासहा । आर्द्रमाषा सिंहवृन्ता माष[ मांस ]माषाश्वपुच्छिका ॥ तुण्डिकेरी– ओष्ठोपमफलत्वात् । बिम्बमिव बिम्बिका । आह च– बिम्बी रक्तफला तुण्डी तुण्डिकेरफला च सा । ओष्ठोपमफला गोह्वा (?) पीलुपर्णी च तुण्डिका ॥ द्व्यर्थे तुण्डिकेरी बिम्बी कर्पासी च ॥ १३९ ॥ शाकोयम्, वर्वरा कुटिलह्रस्वकेशाभा, अत एव कवरी । आह च– अजगन्धा खरपुष्पा वस्त्रगन्धामगन्धिका । कवरी वर्वरागन्धा तुङ्गी पीतमयूरकः ॥ रस्यते रास्ना । आह च– रास्ना युक्तरसा रस्या श्रेयसी रसनी रसा । सुगन्धमूला विरसा सैव युक्ताफला मता ॥ त्र्यर्थे सुवहा रास्ना शेफालिका नाकुली च ॥ १४० ॥ चाङ्गं दन्तपटुत्वमीरयति चाङ्गेरी । चुक्रयते व्यथतेस्याश्चुक्रिका । अम्बे तिष्ठत्यम्बष्ठा । अम्ब्लेव लुनात्यम्ब्ललोणिका, अपभ्रष्टोयम् । आह च– क्षुद्राम्ब्लीका तु चाङ्गेरी लोणिका चाम्ब्ललोणिका । त्र्यर्थे– अम्बष्ठा पाठा मोचिका चाङ्गेरी च, तथा चुक्रिकाम्लिका चाङ्गेरी भण्डाकी च । आह च– अम्ब्लोम्ब्लवेतसो भीमो रसाम्ब्लोम्लितवेतसः । रक्तस्रवो वेतसाम्ब्लः शतवेधी च वेधकः ॥ त्र्यर्थे चुक्रको वृक्षाम्ब्लोम्ब्लवेतसश्चुक्रश्च, तथा सहस्रवेधी– अम्ब्लवेतसो हिङ्गुलता कस्तूरी च ॥ १४१ ॥ नमस्कारी अञ्जलिरूपपत्रत्वात् । गण्डेषु ग्रन्थिषु कृष्णा गण्डकाली । समान्यङ्गान्यस्याः समाङ्गा । खदिरा कृष्णसूक्ष्मपत्रत्वात् । आह च– रक्तपाठी शमीपत्रा समङ्गाञ्जलिकारिका । नमस्कारी गण्डकाली रास्ना खदिरकेत्यपि ॥ जीवन्त्यनया जीवनी ।

नमस्कारी गण्डकाली समा( म )ङ्गा खदिरेत्यपि ।
जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ॥ १४२ ॥
कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः ।
किराततिक्तो भूनिम्बोनार्यतिक्तोथ सप्तला ॥ १४३ ॥
विमला शा[ सा ]तला भूरिफेना चर्मकसेत्यपि ।
वायसोली स्वादुरसा का( व )यस्थाथ मकूलकः ॥ १४४ ॥
निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि ।
अजमोदा तूग्रगन्धा ब्रह्मदर्भा यमा[वा]निका ॥ १४५ ॥
मूले पुष्करकाश्मीरपद्मपत्त्राणि पौष्करे ।
अव्यथातिचरा पद्मा चारटी पद्मचारिणी ॥ १४६ ॥
काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि ।
प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः ॥ १४७ ॥

---

आह च– जीवन्ती जीवनीया च जीवा जीवनवर्धनी । मङ्गल्यनामधेया च शाकश्रेष्ठा यशस्करी ॥१४२॥ कूर्चः शीर्षेस्य कूर्चशीर्षः । शृङ्गः शृङ्गाभः । जीवयति जीवकः, जीवतीति वा दीर्घायुष्ट्वात् । आह च– जीवकः शृङ्गकः सर्जो दीर्घायुः कूर्चशीर्षकः । ह्रस्वाङ्गो मधुरः स्वादुः प्राणदश्चिरजीव्यपि ॥ किरात-देशे भवस्तिक्तः किराततिक्तः । अनार्यः किरातः । आह च– किराततिक्तको हैमकाण्डतिक्तः किरा-तकः । भूनिम्बोनार्यतिक्तश्च कैरातो रामसेनकः ॥ १४३ ॥ सपति समवैति सप्तला । शा[ सा ]तं सुखं लाति शा[ सा ]तला । भूरयः फेनाभा बिन्दवोस्या भूरिफेना । चर्मे कसति वर्धते चर्मकसा, चर्मकषे-त्येके । आह च– शातला सप्तला सारा विन्दुला विमलामला । बहुफेना चर्मकसा फेना दीप्ता सना-लिका ॥ वायसवद्वलीयते वायसोली काकोल्याह्वया । कायेे तिष्ठति कायस्था, किं ज्ञाने । आह च– का-कोली मधुरा शुक्ला क्षीरा(री) ध्वाङ्क्षोष्टि( लि )का मता। कायस्था स्वादुमांसी च वायसोली च कारि(लि) का॥ द्व्यर्थे स्वादुरसा पृथ्वीका शतावरी काकोली( ली ) च ॥ १४४ ॥ मङ्कते चित्रत्वान्मकूलकः । नियतः कुम्भो निकुम्भः । दन्ताभा दाम्यन्त्यनया दोषा वा दन्ती । आह च– दन्ती शीघ्रा निकुम्भा स्यादुप-चित्रा मकूलकः । तथोदुम्बरपर्णी च विसल्या च घुणप्रिया ॥ द्व्यर्थे प्रत्यक्श्रेणी द्रवन्ती दन्ती च । अज-वन्मोदो गन्धोस्या अजमोदा । ब्रह्मदर्भाभा । यच्छत्यग्निमान्द्यं यमानी, पूर्वोक्तापीह शाकत्वात् पुनरुक्ता, यवानीं मत्वा वा ग्रन्थकृद् भ्रान्तः । आह च– यवानी दीप्यको दीप्यो यवसाह्वयनामकः । यमानिकोग्र-गन्धा च दीपनीया च दीपनी ॥ पूर्वोक्ता हि खराश्वैवाजमोदा ब्रह्मकुशा च । तथा चेन्दुरायाः– अज-मोदा ब्रह्मकुशा खराश्वा लोचमर्कटः । वल्लीमोदा वस्तमोदा सैव हस्तिमयूरकः ॥ १४५ ॥ पुष्करमूले त्रीणि नामानि । पद्मपत्त्रमिति ग्रन्थकृद् भ्रान्तः, पद्मवर्णेति लिपिभ्रान्त्या पद्मपर्णमिति बुद्धवान्, यदाह– मूलं पुष्करमूलं च पौष्करं पुष्कराह्वयम् । काश्मीरं पुष्करजटा धीरं तत्पद्मवर्णकम् ॥ अत्यर्थं चरति– अ-तिचरा । पद्माभा । चरति चारटी । आह च– पद्मचारिण्यतिचरा पद्मा पद्मावतीति च । चारटी गन्ध-मूला च लक्ष्मीः श्रेष्ठा सुपुष्करा ॥ द्व्यर्थे– अव्यथा हरीतकी महाश्रमणी पद्मचारिणी च॥ १४६ ॥ कम्पि-लदेशे भवः काम्पिल्यः । चन्द्रोह्लादनात्क्षैण्याद्वा । ( रोचनी ) रेचनीति सभ्यः पाठः, यदाह– काम्पिल्य-कोथ रक्ताङ्गो रेचनी रेचकस्तथा । रञ्जनो लोहिताङ्गश्च कर्कशो रक्तचूर्णकः ॥ आहेन्दुः– कर्कश स्यः करंजः[ भः ] स्यात्तु काम्पिल्यः पटोलकः । प्रपुनाति प्रपुणति वा प्रपुन्नाडः । एडवन्मेषाक्षवद् गज्यते शब्द्यत एडगजः ॥ चक्राणि दद्रुमण्डलानि मृद्नाति चक्रमर्दकः ॥ १४७ ॥ पद्मवदटति पद्माटः । उरणव-

पद्माट उरणाक्षश्च पलाण्डुस्तु सुकन्दकः ।
लतार्कदुर्द्रुमौ तत्र हरितेथ महौषधम् ॥ १४८ ॥
लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ।
पुनर्नवा तु शोथघ्नी वितुन्नं सुनिषण्णकम् ॥ १४९ ॥
स्याद्वातकः शीतलोपराजिता शणपर्ण्यपि ।
पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ॥ १५० ॥
वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका ।
विष्वक्सेनप्रिया घृ(गृ)ष्टिर्वाराही बदरेत्यपि ॥ १५१ ॥
मार्कवो भृङ्गराजः स्यात्काकमाची तु वायसी ।
शतपुष्पा सितच्छत्त्रातिच्छत्त्रा मधुरा मिसिः ॥ १५२ ॥

---

न्मेषवदक्षीण्यस्योरणाक्षः । इन्दुरायाः– चक्रमर्दः स्मृतश्चक्री प्रपुन्नाडश्च नामतः । एकरेतो दद्रुहरो मेषाक्षै-डगजश्च सः ॥ पिपर्ति धातूनपलाण्डुः । तत्र हरिते तत्र नीले पलाण्डौ लतार्कौ लवतर्काख्यः । दुष्टो द्रुमो-पवित्रत्वात् । धन्वन्तरिस्त्वभेदेनाह– पलाण्डुर्भ(र्य)वनेष्टश्च मुकुन्दो मुखदूषकः । हरिणोन्य पलाण्डुस्तु लतार्कौ दुर्द्रुमश्च सः ॥ १४८ ॥ सुश्रुतस्त्वाह– लशुनो दीर्घपत्त्रश्च पिच्छगन्धो महौषधम् । फरणश्च पलाण्डुश्च लवतर्कोपराजितः ॥ गृञ्जनं यवनेष्टश्च पलाण्डोर्दश जातयः । महौषधं सर्वरोगजित्त्वात् । लशति छिनत्ति रोगान्– लशुनम् । गृञ्जति कुत्सितं शब्यते गृञ्जनः । न रिष्यत्यरिष्टः । रसोनः पञ्चरस-त्वात् । आह च– रसोनो लशुनोरिष्टो म्लेच्छकन्दो महौषधम् । महाकन्दो रसाख्योन्यो गृञ्जनो दीर्घ-पत्त्रकः । महौषधगृञ्जनादीनामाकृतिभेदेपि रसैक्यादभेदं मन्यते । पुनर्नवेव ( छिन्नापि ) विशाख-त्वात् । आह च– पुनर्नवो विशाखश्च कठिल्लः स शिलाटकः । वृश्चीवः क्षुद्रवर्षाभूर्दीर्घपत्त्रः कठिल्लकः ॥ वितुद्यते वितुन्नकं नाम शाकम् । सुष्ठु निषीदन्त्यमस्मिन्गुणाः सुनिषण्णकम् । आह च– शितिवा[ सा ]-रः सूतपुत्रस्तुल्या(?) च सुनिषण्णकः। शाकभेदोयम्, यदाह– पाठा शुषा शटी शाकं वास्तुकं सुनिषण्णकम्। विघन्वघ्नमवस्रंसि वर्चोभिदि तु वास्तुकम् ॥ १४९ ॥ शीतलवातक इत्येका संज्ञा, यद्धन्वन्तरिः शणपर्णी शीतलवातक इत्याह । द्वयर्थेऽपराजिता शीतलवातको गिरिकर्णिका च । कटत्यावृणोति कटभी । पण्या स्तुत्या । ज्योतिष्मती– अग्न्याभत्वात् । लता दूरप्रसरात् । आह च– ज्योतिष्मती तु कटभी स्या-त्सुवर्णलतेति च । ज्योतिष्का चाग्निभासा च लवणोत्का च दुर्दिना ॥ त्र्यर्थे लता प्रियङ्गुर्ज्योतिष्मती सारिवा च । द्वयर्थे पारावतपदी काकजङ्घा ज्योतिष्मती च ॥ १५० ॥ वर्षासु भवं वार्षिकम् । आह च– त्रायमाणा कृतत्राणा त्रायन्ती त्रायमाणिका । बलभद्रा बलदेवा वार्षिकं गिरिसानुजम् ॥ वाराही वराहक्रान्ता, ( अत एव विष्णुवल्लभा ) । अत एव घृ[ गृ ]ष्टिर्घ[ र्व ]र्षणात् । त्र्यर्थे बदरा सुवर्चला अश्वगन्धा वाराही च ॥ १५१ ॥ मर्वति संपृच्यते मार्कवः । भृङ्गवद्राजते रञ्जयति कृष्णी-करोति च भृङ्गराजः, भृङ्गरजोपि । आह च– भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च । अङ्गारकस्त्वेकरजो भृङ्गारः केशरञ्जनः ॥ काकवन्मचति( ते ) वर्णेन संपृच्यते काकमाची । अत एव वायसी, काचमाच्यपि । आह च– काचमाची ध्वाङ्क्षमाची काकसाह्वा च वायसी । शतपुष्पा बहु-पुष्पा । सितच्छत्त्राभा ॥ १५२ ॥ अत्राञ्च्यधोमुखानि पुष्पाण्यस्या अवाक्पुष्पी ॥ कारोरियं कारवी

अवाक्पुष्पी कारवी च सरणा तु प्रसारिणी ।
तस्यां कटंभरा राजबला भद्रबलेति च ॥ १५३ ॥
जनी जतूका जन(रज)नी जतुकृच्चक्रवर्तिनी ।
संस्पर्शाथ शटी गन्धमूली षड्ग्रन्थिकेत्यपि ॥ १५४ ॥
कर्चूरोपि पलाशोथ कारवेल्लः कटिल्लकः ।
सुषवी चाथ कुलकं पटोलस्तिक्तकः पटुः ॥ १५५ ॥
कूष्मांडकस्तु कर्कारुरे(री)र्वारुः कर्कटी स्त्रियौ ।
इक्ष्वाकुः कटुतुम्बी स्यात्तुम्ब्यलाबूरुभे समे ॥ १५६ ॥
चित्रा गवाक्षी गोतुम्बा विशाला त्विन्द्रवारुणी ।
अर्शोघ्नः सू(शू)रणः कन्दो गण्डीरस्तु समष्ठिला ॥ १५७ ॥

---

कर्मण्या । आह च– शतपुष्पा मिसिर्घोषाषाढका माधवी शफा । अतिच्छत्रा त्ववाक्पुष्पी शताह्वा कारवी स्मृता ॥ सराते वातसंकोचान्निर्वर्ततेऽङ्गमनया सरणा, सरणी तु युक्तः पाठः । कटं बिभर्ति कटंभरा । राजरूपा मुख्या बला बलकृत् । आह च– प्रसारणी तु प्रसरा सरणी सारणी च सा । चारुपर्णी राजबला भद्रपर्णी प्रसारिका ॥ १५३ ॥ जायतेस्या जन्तुर्जनी । जतु करोति जतूका । संगतः स्पर्शोस्याः संस्पर्शा । आह च– जतुकारा तु जतुकृज्जतुकारी जनी स्मृता । जननी चैव संकर्णा जतूका चक्रवर्तिनी ॥ शटति शटी, षड्ग्रन्थिकैकदेशः षटीति मूर्धन्यादिमाहुः ॥ १५४ ॥ पलाशाः सन्त्यस्य पलाशः । आह च– शटी षटी पलाशश्च ज्ञेया पृथुपलाशिका । सुगन्धमूला गन्धाली षड्ग्रन्था सुव्रता वधूः ॥ कस्य चित्संमता षटीति कर्चूरस्य षटीत्वं षट्याः कर्चूरत्वं चेतीह कर्चूरोपादानम् ॥ द्व्यर्थे चाह षटी गन्धपलाशः कर्चूरश्चेति । कारेण वेल्लति कारवेल्लः । कटिं लाति कटिल्लः, कटत्यावृणोति वा । सुष्ठु सूयते सुषवी । कोलति संस्त्यायते कुलकं, कुत्सितं लक्यत आस्वाद्यते वा । पटति सरलत्वात्पटोलः । तिक्तो रसेन । पटुर्देहपटुत्वकृत्, लवणानुसर इत्येके । आह च– पटोलः कुलकस्तिक्तः पटुकः कर्कशश्छदी । राजीफलः पाण्डुफलो राजिमानमृताफला ॥ १५५ ॥ कोरूष्मणानिति, कुत्सितोष्माण्डेषु बीजेष्वस्य वा पित्तकारित्वात्कूष्माण्डः, कुष्यते करोति तृप्तिं वा । कर्कश्चासावियर्ति– अरुर्वस्तिशोधनः सरणत्वात्कर्कारुः । आ– ईर्यते– एर्वारुः कटुचिर्भटी, उर्वारुकमिव बन्धनादिति श्रुतेः–उर्वारुकं स्वादुचिर्भटीमाहुः । ह्रस्वः कर्कः कर्कटी, ग्रामटीवल्लौकिकष्टप्रत्ययः । इष्यत इक्ष्वाकुः, क्षत्रियधनत्वाद्वा । कटुका तुम्बी, तुबि अर्दने । आह च–कटुकालाबुनी तुम्बी ल(तु)म्बा पिण्डफला तथा । इक्ष्वाकुः क्षत्रियधनस्तिक्तबीजो महाफलः ॥ न लम्बतेलाबूः, काक्वा नञ्, न लाति वान्तर्जलम् । समे इति स्त्रीत्वेनापि । अत्रेन्द्वाद्याः– अलाबूस्तुम्बकः प्रोक्तो जलालाबूरलाम्बुनी । भक्षलाम्बुमहातुम्बीति– ॥१५६॥ गोतुम्बा, अपभ्रंशोयं गवाक्षीत्वात् । आह च– ऐन्द्रीन्द्रवारुणी द्राक्षा इन्द्रेर्वारुवृषादनी । गवादनी क्षुद्रफला वृषभाक्षी गवाक्ष्यपि ॥ द्व्यर्थे चित्रा विशाला द्रवन्ती चेति विशालायाश्चित्रात्वाद् भ्रान्तो ग्रन्थकृत् । गवाक्षीविशेषो वा विशालेति न दोषः । विशाला महाफलत्वात् । इन्द्रवदक्षैर्वृणोतीन्द्रवारुणी । आह च– अन्येन्द्रवारुणी प्रोक्ता विशाला तु महाफला । आत्मरक्षा चित्रफला तुवसी त्रपुषी च सा ॥ सूर्यते प्रेर्यते सूरणः । कन्द्यतेन्विष्यते कन्दो मूलविशेषः । गण्डीन् ग्रन्थीनीरयति गण्डीरः, पुंसि । सम्यगस्थीनि लाति समष्ठिला सान्द्रत्वात्, समष्ठिला नाम शाकं, यन्माला–गण्डीरो ना समष्ठिला ॥ १५७॥ कलम्बमस्याः कलम्बी । अपगतोदका जाङ्गलत्वात्, अपोदकामत्स्यकालीति धन्वन्तरिः ।

कलम्ब्यपोदकास्त्री तु मूलकं हिलमोचिका।
वास्तुकं शाकभेदाः स्युर्दूर्वा तु शतपर्विका ॥ १५८ ॥

सहस्रवीर्याभार्गव्यौ रुहानन्ताथ सा सिता।
गोलोमी शतवीर्या च गण्डाली शकुलाक्षकः ॥ १५९ ॥

कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्।
स्याद् भद्रमुस्तको गुन्द्रा चूडाला चक्रलोचटा ॥ १६० ॥

वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः।
शतपर्वा यवफलो वेणुमस्करतेजनाः ॥ १६१ ॥

वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः।
ग्रन्थिर्ना पर्वपरुषी गुन्द्रस्तेजनकः शरः ॥ १६२ ॥

नडस्तु धमनः पोटगलोथो काशमस्त्रियाम्।
इक्षुगन्धा पोटगलः पुंभूमनि तु वल्वजाः ॥ १६३ ॥

---

संज्ञितं मूलं मूलकः,अवदंशत्वेप्यस्य शाकत्वं, यो त्युभयोर्भवति लभते सोन्यतरतो व्यपदेशमिति । हिला-द्वीर्यान्मोचयति हिलमोचिका। वसन्त्यस्मिन्गुणा वास्तुकं क्षारपत्राख्यम्।कलम्ब्याद्याः पञ्चैते शाकप्रकाराः, शाकाख्यं पुष्पमूला( पत्रपुष्पा )दीत्यत आरभ्य वा(पृ०७८) यन्माला-मण्डूकपर्णी पालङ्क्या चिल्लिका चाप्यपोदका । चाङ्गेरी हिल्मोचा च कलम्बी शाकजातयः ॥ दूरं वाति दूर्व्यते वा पशुभिर्दूर्वा ॥१५८॥ भृगोरियं भार्गवी । सहस्रवीर्या बहुपर्वा महाप्रभावा वा। रोहति मूले रुहा । अनन्ता दूरप्रसरणात्, नीलदूर्वेयं, यदाह–नीलदूर्वा स्मृता शष्पं शाद्वलं हरिता तथा। शतपर्वा शतवीर्या शतवल्लयसिता लता ॥ सहस्रवीर्या-नन्ता च दुर्मरा भार्गवी रुहा । गोरिव लोमान्यस्या गोलोमी । आह च– गोलोमी श्वेतदूर्वा च श्वेतगर्भा सिता लता । नीलश्वेतयोः पर्यायविपर्यासोन्वेष्यः । श्वेतदूर्वाविशेषोयम् । गण्डैर्ग्रन्थिभिरल्यते गण्डाली । मत्स्याक्षितुल्यग्रन्थिः (शकुलाक्षकः) । आह च– गण्डदूर्वा तु गण्डाली तीव्रा मत्स्याक्षिकापि च । वह्नि-नाडी कलापश्च वारणी शकुलाक्षकः ॥ १५९ ॥ कुरुदेशं विन्दति कुरुविन्दः । मेघपर्यायोम्बुधरत्वात् । मुस्यति खण्डयति रोगान् मुस्ता, लक्ष्ये त्रिलिङ्गा । गुन्द्रन्ति रोगा अस्या गुन्द्रा। **धन्वन्तरि**र्भेदेनाह–मुस्तमम्बुधरो मेघो घनो राजकशेरुकः । भद्रमुस्तो वराहोब्दो गाङ्गेयः कुरुविन्दकः ॥ उच्चटत्युत्फलत्युच्चटा, चक्राङ्केयम् ॥ १६० ॥ वन्यते वंशः । त्वचि सरति त्वक्सारः, सृस्थिरे (सू०) इति घञ् । (त्वचिसारः) तत्पुरुषेकृतिबहुलम् (सू०) इति सप्तम्या अलुक् । कर्म इयर्ति कर्मारः । तृणानां ध्वजो मुख्यः । यवाभं फलमस्य यवफलः । वेणन्ति व(वि)यन्ति वानेन वेणुः । मा क्रियतेनेन मस्करः, मस्कर मस्करिणौवेणुपरिव्राजकयोः(सू०)। तेजयति तेजनः । द्व्यर्थे तेजनः शरो वेणुश्च ॥१६१॥ कीति चकति कीचकः,कीचेति कायति वा। ग्रन्थते ग्रन्थिः। पर्वति पर्व। पिपर्ति परुः। गुन्द्रो दर्भविशेषे रूढः, यदाहुः–दर्भाणां स्थाने शरैः प्रस्तरितव्यम्। तेजयति निशिनोति तेजनकः । शृणाति पारुष्याच्छरः । काशास्त्विषीका च॥१६२॥ नडयत्यर्दयति नडः, नल गन्धे । धमनोन्तःसुषिरत्वात्, धमिः सौत्रः, यथा धान्तो धान्तः काञ्चनस्येव राशिः । पोटेन संश्लेषेण गलति पोटगलः । आह च– नलो नटो नडश्चैव स च पोटगलः स्मृतः । धमनोनन्तकश्चेति नडस्तु शर उच्यते ॥ काशते काशः । कोकिलाक्षपर्याय इक्षुगन्धेत्येके । द्व्यर्थे पोटगलः काशो नडश्च । वल्न्ते वल्वजास्तृणविशेषाः ॥ १६३ ॥ रस्यते रसालः । इष्यत इक्षुः ।

**रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः ।**
**स्याद्वीरणं वीरतरं मूलेस्योशीरमस्त्रियाम् ॥ १६४ ॥**
**अभयं नलदं सेव्यममृणालं जलाशयम् ।**
**लामज्जकं लघुलयमवदाहेष्टकापथे ॥ १६५ ॥**
**नलादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ।**
**अस्त्री कुशं कुथो दर्भः पवित्रमथ कत्तृणम् ॥ १६६ ॥**
**पौरसौगन्धिकध्यामदेवजग्धकरौहिषम् ।**
**छत्रातिच्छत्रपालघ्नौ मालातृणकभूस्तृणौ ॥ १६७ ॥**
**शष्पं बालतृणं घासो यवसं तृणमर्जुनम् ।**
**तृणानां संहतिस्तृण्यर नड्या तु नडसंहतिः ॥ १६८ ॥**

---

पुण्ड्रदेशजत्वात्( पुण्ड्रः ), पौण्ड्रोपि । कान्तमुखामियर्ति कान्तारः, कान्ता अरका भागा अस्य वा । आदिशब्दात्कोशकाराद्याः । आह च– इक्षुः कर्कटको वंशः कान्तारो वेणुनिः सृतः । इक्षुरन्यः पौण्ड्रकश्च रसालः सुकुमारकः ॥ अन्यः करङ्कशालिः स्यादिक्षुयोनीक्षुबालिका । तथान्य इक्षुगन्धा स्यादिक्षुरः कोकिलाक्षकः ॥ वीरयते वीरणं वीरतरं च तृणभेदः । अस्य वीरणस्य मूलं उश्यते काम्यत इत्युशीरम् ॥ १६४ ॥ अभयं रोगहृत्त्वात् । आह च– उशीरममृणालं स्यादभयं समगन्धिकम् । रणप्रियं वीरतरं वीरं वीरणमूलिका ॥ नलं द्यति नलदं अपारुष्यात्, नलति वा । अत एवामृणालमहिंस्रम् । जल आशेते जलाशयं, शीतवीर्यत्वाद्वा । लाति दोषान्–ला, ला मज्जासारोस्य लामज्जकम् । लघुगुणेन लीयते लघुलयम् । अवली[ दी ]यते दाहोनेनावदाहम् । इष्टं कापथमस्याधोवातकृत्त्वादिष्टकापथम् । आह च– लामज्जकं सुनालं[ वासं ] स्यादमृणालं लयं लघु । इष्टकापथकं शीघ्रं दीर्घमूलं जलाशयम् ॥ द्व्यर्थेऽमृणालं लामज्जकमुशीरं च, तथा सेव्यं लामज्जकमुशीरं चेति । अवदाहमवदत्तमाहुस्तच्चोशीरं नलदं, यदिन्दुः– अवदत्तं रणप्रियम् । ग्रन्थकृत्तु सेव्यामृणालयोर्नलदोशीरैकार्थत्वाद् भ्रान्तः ॥ १६५ ॥ ( नलादयः ) तृणजातीया इत्यर्थः । तृण्यतेद्यते पशुभिस्तृणम् । गर्मुच्छ्यामाकौ तृणधान्यविशेषौ । गीर्यते गर्मुत् । श्यामं वर्णमकति श्यामाकः । प्रमुखशब्दान्नीवाराद्याः । तृणगर्मुती एकार्थे इत्येके । कौ शेते कुशः । कु( कौ )थति कुथः । दृणाति पारुष्याद्दर्भः, दृभ्यते वा । पूयतेनेन पवित्रं, सग्रन्थि तु पवित्रकमिति **स्मृतिः** । कुत्सितं तृणं कत्तृणं, तृणेचजाताविति ( सू० ) कोः कत् ॥ १६६ ॥ पुरे भवं पौरम् । सुगन्धप्रयोजनं सुरभिः ( सौगन्धिकम् ) । ध्यायते पशुभिर्ध्यामं धूसरवर्णं वा । देवैर्जग्धमिव जर्जरत्वात् । यत्र तत्र रोहति रौहिषं, रुहेर्वृद्धिश्च ( उ० ) इति टिषच् । आह च– कत्तृणं शकलिर्भूरिभूतिकं रौहिषं ततम् । ध्यामकं भूमकं पौरं मुद्गलं देवजग्धकम् ॥ त्र्यर्थे सौगन्धिकं नीलपद्मं कत्तृणं गन्धपाषाणश्च । छत्राकारस्तृणविशेषश्छत्रा । अतिक्रान्तश्छत्रामतिच्छत्रः, छत्रातिच्छत्रामित्येके । पारुष्यात्पालं हन्ति पालघ्नः । मालारूपाणि तृणान्यस्य मालातृणकः । भुवस्तृणं भूस्तृणः, पारस्करादित्वात् ( सू० ) सुट्, भूरव्ययं वा । आह च– भूस्तृणो रौहिणो भूतिर्भूमिकोथ कुटुम्बकः । मालातृणश्च पालघ्नश्छत्रातिच्छत्रकस्तथा ॥ १६७ ॥ शस्यते शष्पं, शसु हिंसायाम् । बालं नवं तृणम् । घस्यतेद्यते घासः । यूयते यवसं तृणजातिः । अर्ज्यतेर्जुनं, सर्वं च तृणमर्जुनमिति **भागुरिः** । ( तृण्या ) पाशादित्वाद्यत् ( पाशादिभ्योयः ) । ( नड्या ) प्राग्वद्यत् ॥ १६८ ॥ तृणराजाह्वयस्तृणद्रुममध्ये मुख्यत्वात् । तलति

तृणराजाह्वयस्तालो नालिकेरस्तु लाङ्गली।
घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु ॥ १६९ ॥
फलमुद्वेगमेते च हिन्तालसहितास्त्रयः।
खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः ॥ १७० ॥

इति वनौषधिवर्गः । ४ ।

सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः।
शार्दूलद्वीपिनौ व्याघ्रे तरक्षुस्तु मृगादनः ॥ १ ॥
वराहः सूकरो घृष्टिः कोलः पोत्री किरः( रिः ) किटिः।
दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ॥ २ ॥
कपिप्लवंगप्लवगशाखामृगवलीमुखाः।
मर्कटो वानरः कीशो वनौका अथ भल्लुके ॥ ३ ॥

---

प्रतितिष्ठति बहुमूलत्वात्तालः। भूमिपिशाचो देश्याम्। नालिकान्नलयुक्तान्पुष्पादीनीरयति नालिकेरः। हलाकारपत्रशाखत्वाल्लाङ्गली। तत्फलं चोचम्। घुणति ( घोणते ) भ्रमति– अनया घोण्टा। पवते पूगः। क्रामति क्रमुकः। गुवत्यनेन संसक्तत्वाद्गुवाकः। खानि पृणाति खपुरः कारपत्रशाखः ॥१६९॥ अस्य पूगस्य फलमुद्गतो वेगोऽस्योद्वेगं संसक्तत्वात्। पूगादयो हि फलवृत्तयः क्लीबे, फलेलुक् ( सू० ), घोण्टा तु, हरीतक्यादिभ्यश्च ( सू० ) इति लुपा, लुपियुक्तवद्व्यक्तिवचने ( सू० ) इति वृक्षे फले च स्त्रियामेव। एते तालनालिकेरपूगास्त्रयो हिन्तालेन चतुर्थेन सहिताः खर्जूराद्याश्चत्वारस्तृणप्रधाना वृक्षाः, ताली जात्यन्तरम्। एवं खर्जूरी भूमिखर्जूरः। हिनोति वर्धते हिन्तालः। खर्जूरः, खर्ज व्यथने। केत्यते ज्ञायते गन्धेन केतकी। तालयति ताली ॥ १७० ॥ इति वनौषधिवर्गः। ४।

हिनस्ति सिंहः। मृगाणां द्वीप्यादिशशकान्तानामिन्द्रः। पञ्चास्यो विस्तृतास्यः, पचि विस्तारवचने, कर्मणि घञर्थेकविधानम् ( वा० ), मुखपादैर्योऽधृत्वाद्वा। हर्यक्षः कपिलाक्षः। अत एव हरिः, हरत्याकर्षति वा। कण्ठीरवो देश्याम्। शृणाति शार्दूलः। द्वौ वर्णावीयते द्वीपोऽस्त्यस्य वा तन्निवासित्वाद् द्वीपी। व्याजिघ्रन् हन्ति व्याघ्रः। चित्रकायः पञ्चशिखश्च। तरं क्षिणोति मार्गं रुणद्धि तरक्षुः– आरण्यः श्वा, तरक्ष इत्येके। वृकोपि ॥ १ ॥ वरमाहन्ति वराहः। सूयतेऽत्यर्थं सूकरः। घर्षति घृष्टिः। पीनत्वात्कोलः, कुल संस्त्याने। पोत्रं मुखाग्रमस्यास्तीति पोत्री। किरति क्ष्मां किरः, इगुपधेति ( सू० ) कः। केटति किटिः, किट गतौ। कुड घनत्वेस्मात्क्रोडः, क्रोडः कुद्दालो मुस्तादौ दंष्ट्रास्त्रो मुखलाङ्गल इति दुर्गः ॥ २ ॥ कम्पते चलति कपिः। प्लवैर्गच्छति प्लवगः प्लवंगोपि, गमेःसुपि ( वा० ), खच्डित् ( वा० )इति प्लवंगः, अन्यत्रापिदृश्यते ( वा० ) इति डे प्लवगः, गमश्च ( सू० ) इति खचि प्लवंगमोपि। शाखा-संचारी मृगः ( शाखामृगः )। वलयः( ल्यः ) मुखेऽस्य वलीमुखः। म्रियते मर्कटः कुम्भकर्णनिगीर्णत्वात्। वने रमते वनरस्तस्यायं वानरः, पक्षे नरो वा। चिकेति जानाति कीशः, कींशब्दमीष्टे वा। वने– ओ-कोऽस्य वनौकाः। हरिर्नानार्थे। कृष्णमुखो गोलाङ्गूलः। कापेयं चापलादिकम् ॥ ३ ॥ भल्लति( ते )

ऋक्षाच्छभल्लभालूका गण्डके खड्गखड्गिनौ ।
लुलायो( पो ) महिषो वाहद्विषत्कासरसैरिभाः ॥ ४ ॥

स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः ।
सृ( शृ )गालो वञ्चकः क्रोष्टुफेरुफेरवजंम्बुकाः ॥ ५ ॥

ओतुर्विडालो मार्जारो वृषदंशक आखुभुक् ।
त्रयो गौधेरगौधारगौधेया गोधिकात्मजे ॥ ६ ॥

श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् ।
वातप्रमीर्वातमृगः कोक ईहामृगो वृकः ॥ ७ ॥

मृगे कुरङ्गवातायुहरिणाजिनयोनयः ।
ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु ॥ ८ ॥

कदली कन्दली चीनश्चमूरुप्रियकावपि ।
समूरुश्चेति हरिणा अमी अजिनयोनयः ॥ ९ ॥

---

ह्निस्ति भल्लुकः, लक्ष्ये तु ( भल्लूकः ), दधति कुहरभाजामत्र भल्लूकयूनामिति ( उ० राम० ) । ऋक्षति ( ऋक्ष्णोति ) ऋक्षः । अच्छ आभिमुख्येन भल्लति(ते) अच्छभल्लः, अच्छेत्याभिमुख्यार्थेव्ययम् । भालयति-( ते ) भालूकः । भल्लकोपि । गण्डति संहन्यते गण्डकः । खडति भिनत्ति खड्गः । खड्गं शृङ्गमस्यास्तीति खड्गी । वार्ध्राणसोपि । लुलति पङ्के लुलायः । महति मह्यां शेते वा महिषः । महोपि । वाहं हयसमूहं द्वेष्टि वाहद्विषत्, द्विषोमित्रे ( सू० ) इति शतृप्रत्ययः । वाहद्विषन्नित्येके । घर्मार्तः कं जलमासरति कासारः, ईषत्सरति वा महाकायत्वात् । सीरिभिर्दन्तैर्भाति सीरिभः कुटुम्बी तस्यायं सैरिभः । रजस्वलोपि ॥ ४ ॥ शिनोति शिवा, शकुनावेदिनी वा, शृगालेपि स्त्रीलिङ्गः, **यच्छाश्वतः**— शिवः कीलः शिवा क्रोष्टा भवेदामलकी शिवा । गां मिनोति मीनाति वा गोमायुः । मृगान् धूर्वति मृगधूर्तः । असृग्गालाति सृगालः, सरति सृजति वा । क्रोशति क्रोष्टा । फे— इत्यव्यक्तं रौति फेरुः फेरवश्च । जमति जम्बुकः सर्वभक्षत्वात् । फेरण्डोपि ॥५॥ अवत्याखुभ्य ओतुः । विशन्— आलात्याखून् विडालः, विलालो वा, बिलान्यलति पर्याप्नोति वा, बिलति भिनत्ति— आखून्वा, विड् आक्रमस्योशुचित्वाद्वा, विड आक्रोश इत्यस्माद्वा । आखुभ्यो गृहं मार्ष्टि मार्जारः । वृषानाखून्दशति वृषदंशः । जलेशयादन्या बिलेशया गोधेयम्, अहेर्गोधायां जातो जात्यन्तरमित्येके । ( गौधेर इ० ) गोधायाढ्रक् ( सू० ), आरगुदीचाम् ( सू० ), शुभ्रादित्वाड्ढक् ( सू० ) ॥ ६ ॥ श्वानं विध्यतीति श्वावित्, नहिवृतिवृषिव्यधीति ( सू० ) दीर्घः । शलति शल्यानि किरति वा शल्यको बिलेशयः । शलको[ लो ]पि । तस्य लोम्नि शलोकाख्ये, **यन्माला**-श्वाविच्छलाकां शलली, शल गतौ । वातं प्रमिमीते ( वातप्रमीः ), वाताभिमुखधावनात् । कोकते गृह्णाति कंवते याति वा कोकः । ईहा मृगस्येवास्य ईहामृगः, ईहां मृग्यते वा । ईहां वर्कते— ईहावृक एवेकदेशेन वृक इत्युक्तः । आरण्यः श्वेत्येके । कुक वृक आदाने ॥ ७ ॥ मृग्यते व्याधैर्मृगः । कौ रङ्गति कुरङ्गः । वातमयते वातायुः, वानं शुष्कमयते वानायुरित्येके । ह्रियते गीतेन हरिणः । अजिनस्य योनिः । ( ऐणेयं, विकारेवयवे वा, एण्याढञ् ( सू० ) । ( ऐणं ) विकारादौ, प्राणिरजतादिभ्योऽञ् ( सू० ) । ऐणेयमैणं च वाच्यलिङ्गौ ॥ ८ ॥ के दलति कदली, कन्दे लीयते कन्दली, इन्नन्तौ । चिनोतीति चीनः । चमति चमूरुः । प्रीयते प्रियकः । समूर्य( र्व्य )ते समूरुश्चित्रवर्णः । एते चर्मण्युपयुक्ताः ॥ ९ ॥ अमी

कृष्णसाररुरुन्यङ्कुरङ्कुशंबररौहिषाः ।
गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ॥ १० ॥
गन्धर्वः शरभो रामः सृमरो गवयः शशः ।
इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः ॥ ११ ॥
उन्दुरुर्मूषिकोप्याखुर्गिरिका बालमूषिका ।
[ छुछुन्दरी गन्धमुखी दीर्घतुण्डी दिवान्धिका ॥ १२ ॥ ]
सरटः कृकलासः स्यान्मुसली गृहगोधिका ।
लूता स्त्री तन्त्र[ न्तु ]वायोर्णनाभमर्कटकाः समाः ॥ १३ ॥
नीला[ ल ]ङ्गुस्तु कि[ कृ ]मिः कर्णजलौकाः शतपद्युभे ।
वृश्चिकः शूककीटः स्यादालिद्रुणौ तु वृश्चिके ॥ १४ ॥
पारावतः कलरवः कपोतोथ शशादनः ।
पत्त्री श्येन उलूके तु वायसारातिपेचकौ ॥ १५ ॥

---

मृगविशेषाः । कृष्णेन सारः शबलः कृष्णसारः । रौति रुरुः । न्यञ्चति न्यङ्कुः, न्यङ्क्वादित्वात् ( सू० ) कुत्वम् । रमते रम्यते वा रङ्कुः । शं वृणोति शंबरः । रोहिषाख्ये तृणे भवो रौहिषः । पृषतो बिन्दुचित्रः, मत्वर्थीये– अच् । एत्येणः । इयर्ति ऋश्यः, ऋशी गतावित्यस्मान्मूर्धन्यः षः स्यात् । रोहितो रक्तत्वात् । चमति चमरः ॥ १० ॥ गन्धमस्यार्दयति गन्धर्वः । शृणाति शरभः । रमन्तेस्मिन् रामः । सरति सृमरः । गुवति गवते वा गवयः । शशति लुत्या गच्छति शशः । आदिशब्दान्नुहजा[ या ]दयः (?) । मृगेन्द्राद्यो उक्ताः । गवाद्याश्च वक्ष्यमाणाः पाश्यन्ते पाशैः पशवः, तिर्यञ्चोपि । श्वापदा हिंस्रपशवः ॥ ११ ॥ उनत्त्युन्दुरुः, अदन्तोपि । मूषति मूषिकः । आखनत्याखुः । पुंध्वजोपि । खनको गुहाशयो गर्ताश्रयश्च । वृषो नानार्थे । गिरति गिरिका, खर्वाखुर्बालमूषिकेति दुर्गः । [ गन्धज्ञापि त्रियाम् ] ॥ १२ ॥ सरति सरटः । कृकं शिरोग्रीवं लासयति कृकलासः, कृकिलास इत्यपि( प )ाठः । प्रतिपूर्वः शयानकश्च । जाहको गात्रसंकोची हलाहलोञ्जलिकेति वाच्यम् । मुस्यति भिनत्ति मुसली, मुस खण्डने, मुशलीति गौडः । गृहगोलिकेति सभ्यः पाठः, यस्या घरगोळीति प्रसिद्धिः । लूयते लूता । तन्त्रं तन्तुन्वयति तन्त्रवायः [ तन्तुवायः ] । ऊर्णा नाभावस्योर्णनाभः । मर्कट इव रोहणावरोहणान्मर्कटकः । जालिको जालकारश्च ॥ १३ ॥ नीलति नील[ ल ]ङ्गुः । क्रामति कि[ कृ ]मिः, क्रमितमिगमितिस्तम्भामतइच ( उ० ) । चु( पु )लकोपि । शतं पदानामस्याः शतपदी, कुम्भपदीषुच ( सू० ) इति साधुः । उभे द्वे स्त्रियाम् । वृश्चति वृश्चिकः । शूकः कण्टकस्तत्प्रधानः कीटः ( शूककीटः ), भ्रमरभेदोयम् । आलमनर्थोत्रास्त्याली, ज्यौतिषेऽली । द्रुणति द्रुणः, द्रुण हिंसायां, कः, द्रोण इत्येके, विषकीटोयम् ॥१४॥ पा( प )रावत-स्यायं पारावतः, जवादित्वात् ( ग० ) वत्वम् । रक्तकश्च । केन पवते कपोतः, कस्य वायोः पोत इवागमः, आरण्योयं, आयस्तु गृहकपोतः, अत्र तद्भेदं मन्यते । पत्त्रीति सामान्यं विशेषे वर्तते, यदुक्तमुत्पलः– श्येनाख्यो विहगः पत्त्री पत्त्रिणो शरपक्षिणौ, माला– श्येनः पत्त्रिशशादनौ । श्यायते श्येनः । उलति नेत्राभ्यां दहत्युलूकः, ऊर्ध्वोलोकनादीति निरुक्तम् । पचति पीयते वा पेचकः । घूको निशाटश्च ॥ १५ ॥ व्याजिघ्रति व्याघ्रादः । भरद्वाजापत्यं भरद्वाजोस्त्यस्य वा भरद्वाजश्चाटके-

व्याघ्राटस्तु भरद्वाजः खञ्जरीटस्तु खञ्जनः ।
लोहपृष्ठस्तु कङ्कः स्यादथ चाषः किकीदिविः( वः ) ॥ १६ ॥
कलिङ्गभृङ्गधूम्याटा अथ स्याच्छतपत्रकः ।
दार्वाघाटोथ सा( शा )रङ्गः स्तोककश्चातकः समाः ॥ १७ ॥
कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ १८ ॥
चटकः कलविङ्कः स्यात्तस्य स्त्री चटका तयोः ।
पुमपत्ये चाटकैरः स्त्र्यपत्ये चटकैव सा ॥ १९ ॥
कर्करेटुः करेटुः स्यात्कृकणक्रकरौ समौ ।
वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥ २० ॥
काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः ।
ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥ २१ ॥
द्रोणकाकस्तु काकोलो दात्यूहः कालकण्ठकः ।
आतापि( यि )चिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ ॥ २२ ॥

---

राख्यः । खञ्जतीति खञ्जनः । लोहवर्णं पृष्ठमस्य । कङ्कते कङ्कः । चषति चाषः । किकीति दीव्यति वाशते किकीदिविः, द्वे नामनी इत्येके, किकिदीविरित्यन्ये ॥ १६ ॥ के लिङ्गं चुडास्य कलिङ्गः । भृङ्गवत्कृष्णपक्षी ( भृङ्गः ) । धूमवानिवाटति धूम्याटः, धूम्र आटश्च पदैकदेशत्वात् । शतं बहवः पत्त्राणि पक्षा अस्य शतपत्त्रः । दार्वाहन्ति दार्वाघाटः, दारावाहनोऽणन्त्यस्यचटःसंज्ञायाम् ( वा० ) । सरति सारङ्गः, सह– आरङ्गति वा यूथका( चा )रित्वात् । स्तोकं कायति वाशते याचते वा स्तोककः । चतते( ति ) याचते चातकः । जलरङ्कोपि ॥ १७ ॥ कृकेण शिरोग्रीवेण वक्ति कृकवाकुः । कुगुचारणेन कुटति कुक्कुटः । शिखी कालज्ञश्च ॥ १८ ॥ चटति भिनत्ति– आहारं चटकः । कं शिरो लुनाति वलयति कलविङ्कः । ( चटका ) आजाद्यतष्टाप् ( सू० ), क्षिपकादित्वाभावः ( क्षिपकादीनांच ) । ( तयोः ) चटकस्य चटकायाश्चापत्यं पुमान्– चाटकैरः, चटकायाएरक् ( सू० ), चटकाचेत्युपसंख्यानं ( चटकस्येति वाच्यम् ) । स्त्री च तदपत्यं च तत्र, स्त्रियामपत्येलुग्वक्तव्यः ( वा० ), लुक्तद्धितलुकि ( सू० ) इति टापो लुक्यपि स्त्रीत्वात्पुनष्टाप् ॥ १९ ॥ कर्केति रेटते । केति च रेटते वाशते ( करेटुः ) । कृ इति कणति कृकं नयति वा कृकणः । क्रेति करोति वाशते क्रकरः । परभृतः काकीपुष्टत्वात् । कोकते चित्तं गृह्णाति कोकिलः । अपिकायति पिकः । कलकण्ठस्ताम्राक्षश्च ॥ २० ॥ काशब्दं कायति ककते वा लौल्यात्काकः । केति रटति करटः । नास्ति रिष्टं हिंसास्यामृतभुक्त्वादरिष्टः । बलिभिः पुष्टो वैश्वदेवभागाहर( गार्ह )त्वाद् बलिपुष्टः । सकृत्प्रजायते सकृत्प्रजः, एकाण्डप्रसवात् । ध्वाङ्क्षति ध्वाङ्क्षः । आत्मनः स्वनाम्नो घोषोस्यात्मघोषः, काकेति वाशनात् । परान् पिकान् बिभर्ति परभृत् । वय एव वायसः, प्रज्ञादित्वादण् ( सू० ), वयते वा । एकदृष्टिश्चिरजीवी मौकुलिर्द्विकश्च ॥२१॥ ( द्रोणकाकः ) वृद्धकाकोद्रिकाको वा, यदाहुः– द्रोणकाको दग्धकाको वृद्धकाको वनाश्रयः, द्रुण हिंसायां, द्रोणोपि । द्वितीयं तृतीयं वा रूपं वहति दित्यवाट्, तस्यापत्यं दात्यूहः, देविकाशिंशपेत्यात्वम् ( सू० ) । कालः कण्ठोस्य कालाः कण्टका रोमोद्भेदा वास्य कालकण्ठः कालकण्टकः । जलरक्षो( ङ्को )पि । सिंहावलोकितेन समावित्येव । आतपत्यातापी । चिल्लति चिल्लः, चिल्ल शैथिल्ये । दक्षते दक्षाय्यः, श्रुदक्षिस्पृहिगृहिभ्यआय्यः ( उ० ), ततोपत्येऽण् ( तस्येदम् ) । गृध्यति मांसं गृध्रः । कीशब्दमीरयति कीरः । शुको नीलत्वात्, शवतीत्येके । प्रियदर्शनोपि ॥ २२ ॥ क्रुञ्चति क्रुङ् । ( क्रौञ्चः ) प्रज्ञादित्वादण् ( सू० ),

कुङ् क्रौ( क्रु )ञ्चोथ बकः कह्वः पुष्कराह्वस्तु सारसः।
कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥ २३ ॥
कादम्बः कलहंसः स्यादुत्क्रोशकुररौ समौ।
हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥ २४ ॥
राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः।
मलिनैर्मल्लिकाक्षा( ख्या )स्ते धार्तराष्ट्राः सितेतरैः ॥ २५ ॥
शरारिराटिराटि( डि )श्च बलाका बिसकण्ठिका।
हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा ॥ २६ ॥
जतुकाजिनपत्त्रा स्यात्परोष्णी तैलपायिका।
वर्वणा मक्षिका नीला सरघा मधुमक्षिका ॥ २७ ॥
पतङ्गिका पुत्तिका स्याद्दंशस्तु वनमक्षिका।
दंशी तज्जातिरल्पा स्याद्गन्धोली वरटा द्वयोः ॥ २८ ॥
भृङ्गारी चीरुका चीरी झिल्लिका च स्त्रियामिमाः।
समौ पतङ्गशलभौ खद्योतो ज्योतिरिङ्गणः ॥ २९ ॥

---

स्त्रियामजादित्वात्क्रौञ्चा। वक्ति बकः, न्यङ्क्वादिः ( सू० )। बकोटोपि। केन के जले वा ह्वयते कह्वः। सरति भवः सारसो लक्ष्मणाख्यः। विलीनाङ्गो दीर्घजङ्घश्च। कोकते वाशते कोकः। चकते चक्रः। चक्रेति वाक्– आख्यास्य चक्रवाकः। रथाङ्गं चक्रमाह्वयो नाम चास्य रथाङ्गाह्वयो रथाङ्गनामा च॥२३॥ कदम्बस्यायं संघचारित्वात्कादम्बः। कलो मधुरवाग्हंसः ( कलहंसः )। उच्चैः क्रोशत्युत्क्रोशः। कुरति कुररः, कुर शब्दे, कुरेति शब्दं राति वा। हन्ति गच्छति हंसः। श्वेता गरुतः पक्षा अस्य श्वेतगरुत्। चक्राकाराङ्गो वृत्तत्वात्, चक्राङ्क इत्येके। मानसाख्ये देवसरस्योकोस्य मानसौकाः ॥ २४ ॥ चञ्चुसहितैश्चरणैरिति लक्षणे तृतीया। मलिनैश्चञ्चुचरणैस्ते सिता मल्लिकाक्षाः, [ मल्लिकाकाराक्षाः ] शुक्लापाङ्गत्वात्। कृष्णैश्चञ्चुचरणैर्धृतराष्ट्रे– अमात्ये भवा धार्तराष्ट्राः, राजहंसेभ्यो न्यूनत्वात् ॥ २५ ॥ शृणन्त्येनां शरारिः। अतत्याटिः। अटत्याटिः। एताः स्त्रियाम्, बलाद्कान् कायति बलेनाकति याति वा बलाका। बिसमिव कण्ठोस्याः, बिसकण्ठिकेत्येके। शारिका गोराटी पीतपादेति च वाच्यम्। व्रियते वरटा, स्त्रीविषयत्वाज्जातेर्ङीष् नास्ति, वरलापि। योषिदित्येव, लक्ष्मणीत्येके, अत एव लक्ष्मणाख्योसौ ॥ २६ ॥ जत्विव कृष्णपिङ्गलत्वाज्जतुका। अजिनं पत्त्राणि पक्षा अस्या अजिनपत्त्रा चर्मचटकत्वात्। परमुष्णत्वमस्याः शीतापहतत्वात्, परं विरुद्धं वा तेजसोन्धकारात् ( परोष्णी )। तैलं पिबतीति तैलपायिका, नित्यमास्यविकासात्। चतुःसंज्ञे( ज्ञी )त्येके, तैलाख्या– अजिनपक्षत्वात्। मुखविष्ठा वल्गुलिका निशाटनी च। वृणोति वर्वणा। मक्षन्ति रुष्यन्त्यस्यै मक्षिका। सरन्ती घातयति सरघा ॥ २७ ॥ पतति– अपतङ्गति वा पतङ्गिका। पुत्कुत्सितं तनोति पुत्तिका, मधुमक्षिकाभेदोयं, यन्निमिः– माक्षिकं तैलवर्णं स्याद् घृतवर्णं तु पौत्तिकम्। भ्रामरं तु भवेच्छुक्लं क्षौद्रं तु कपिलं भवेत्॥ दशति दंशः। (दंशी) दंशजातीया, जातेरिति ( सू० ) ङीष्। गन्धयतेऽर्दयति गन्धोली, गन्धालीत्येके। वृणोति वरटा तैलाटाख्या ॥ २८ ॥ आकृत्या भृङ्गामियर्ति भृङ्गारी। चीति रौति चीरुका। चीति रिणाति चीरी। झिल्ली वाद्यभेदस्तत्तुल्यशब्दा झिल्लिका चक्राख्या, केऽणः ( सू० ) इति ह्रस्वः, झिल्लिकार्ति( र्त्तां )कृतीनामिति तु लक्ष्यम्। शलति शमं लभते वाग्नौ शलभः। खे द्योतते खद्योतः। ज्योतिषेङ्गति चलति ज्योतिरिङ्गणः। इन्द्रगोपको ज्योतिर्माली कीटमाणिक्यं च [–मणिश्च ] ॥ २९ ॥ मधु व्रतयति भुङ्क्ते

मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ।
द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥ ३० ॥
मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् ।
शिखावलः शिखी केकी मेघनादानुलास्यपि ॥ ३१ ॥
केका वाणी मयूरस्य समौ चन्द्रकमेचकौ ।
शिखा चूडा शिखण्डस्तु पिच्छबर्हे नपुंसके ॥ ३२ ॥
खगे विहंगविहगविहंगमविहायसः ।
शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ॥ ३३ ॥
पतत्त्रि(त्रि)पत्त्रिपतगपतत्पत्त्ररथाण्डजाः ।
नगौकोवाजिविकिरविविष्किरपतत्त्रयः ॥ ३४ ॥
नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमाः ।
तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ॥ ३५ ॥

---

मधुव्रतः । अलत्यली, अलिश्च । द्वौ रेफौ नाम्न्यस्य द्विरेफः । भृज्जति बिभर्ति वा भृङ्गः । षट् पदानि चरणा अस्य षट्पदः । भ्रमति भ्रमरः । चञ्चरीकभसले( ने )न्दिन्दिररोलम्या देश्याम् ॥ ३० ॥ मीनात्यहीन् मयूरः। बर्हमस्यास्ति ( बर्हिणः ), फलबर्हाभ्यामिनन् ( वा० ) । शिखास्त्यस्य शिखावलः, दन्ताशिखात्संज्ञायां ( सू० ) वलच् । शिखी, व्रीह्यादित्वात् ( सू० ) । मेघनादमनुलसति नृत्यति– अवश्यं मेघनादानुलासी । चन्द्रकी शुक्लापाङ्गश्च ॥ ३१ ॥ के मूर्ध्नि कायति केका । चन्द्रप्रतिकृतेश्चन्द्रकः । मेचको मिश्रवर्णत्वात्, यत्कात्यः– बर्हिकण्ठसमं वर्णं मेचकं ब्रुवते बुधाः । मयूरस्येत्येव, अन्यत्रोपचारात् । शिखाभिर्डयते शिखण्डः । पिच्छ[ य ]ति पिच्छम् । बर्हति नृत्येनोर्ध्वीभवति बर्हम् । प्रचलाकोपि । कलापो नानार्थे ॥ ३२ ॥ खे गच्छति खगः, अन्यत्रापिदृश्यते ( वा० ) इति डः । विहायसा गच्छति, गमेःसुपिवाच्यः ( वा० ) खच्वक्तव्यः, विहायसोविहइति ( वा० ) डे, खच्डिद्वा ( वा० ) । विजिहीते विहायाः, यच्छाश्वतः– विदुर्विहायसं व्योम पक्षिणश्च विहायसः । शक्नोतीति, शकेरुनोन्तोन्त्युनयः ( उ० ) । पक्षाः सन्त्यस्य पक्षी । द्विर्जायत इति द्विजः ॥ ३३ ॥ पतत्त्राणि विद्यन्ते येषु ते पतत्त्रिणः । पतन्त्यनेनेति पतः पक्षः, पुंसिसंज्ञायांघः ( सू० ), पतैर्गच्छति पतगः । पतति पतन् । पत्त्राणि पक्षा रथोस्य पत्त्ररथः । नगे– ओकोस्य नगौकाः। वाजो वेगोस्यास्तीति वाजी । विकिरति भक्ष्यं विकिरः– विष्किरः, विष्किरःशकुनिर्विकिरोवा ( सू० ) । वाति वयति वा विः, वेञोडित् ( उ० ) । पतत्त्राणि सन्त्यस्य पतति वा पतत्त्री, पतेरत्रिन् ( उ० ), पतेरत्रिरिति भ्रान्त्या पतत्रिं ग्रन्थकृदिदन्तं मन्यते ॥ ३४ ॥ पतितुमिच्छन् पित्सन्, सनिमिमेति ( सू० ) इस्–इडभ्यासलोपौ । नभसा गच्छति नभसंगमः, गमेःसुप्युपसंख्यानात्खच् ( वा० ), वाचंयमपुरंदरौच ( सू० ) इति चकारादमागमः, अत्यविचमितमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसजिति ( उ० ) नभः(भस)शब्दोस्तीत्येके । पतङ्गो नानार्थे । एते पक्षिविशेषाः । हरिणं वर्णमितो हारीतः । मज्जति मद्गुर्जलकाकः, न्यङ्क्वादिः ( सू० ) । करण्डे भवं कारण्डं पञ्जरबन्धं वाति कारण्डवः । प्लवते प्लवः ॥ ३५ ॥

तित्तिरिः कुक्कुभो लावो जीवंजीवश्चकोरकः ।
कोयष्टिष्टिट्टिभः कोकः क्रकरो( वर्तको ) वर्त( र्ति )कादयः ॥ ३६ ॥
गरुत्पक्षच्छदाः पत्त्रं पतत्त्रं च तनूरुहम् ।
स्त्री पक्षतिः पक्षमूलं चञ्चुस्त्रोटिरुभे स्त्रियौ ॥ ३७ ॥
प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः ।
पेशीकोशो द्विहीनेण्डं कुलायो नीडमस्त्रियाम् ॥ ३८ ॥
पोतः पाकोर्भको डिम्भः पृथुकः शावकः शिशुः ।
स्त्रीपुंसौ मिथुनं द्वन्द्वं युग्मं तु युगलं युगम् ॥ ३९ ॥
समूहनिवहव्यूहसंदोहविसरव्रजाः ।
स्तोमौघनिकरव्रातवारसंघातसंचयाः ॥ ४० ॥
समुदायः समुदयः समवायश्चयो गणः ।
स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥ ४१ ॥
वृन्दभेदाः समैर्वर्गः संघसार्थौ तु जन्तुभिः ।
सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसकम् ॥ ४२ ॥

---

तित्तिशब्दं राति तित्तिरिः । कुक्कुशब्दं करोति (भाषते) कुक्कुभः । लाति [ लावयति ] लूयते वा लावः । जीवेन सहचरेण जीवति जीवंजीवः, बाहुलकात्खच् । चकत( ति ) ज्योत्स्नया तृप्यति चकोरः । ओको यजति कोयष्टिः शिखरी । टिट्टिशब्दं भाषते टिट्टिभः । कुकति [ कोकते ] कोकः । क्रेति करोति क्रकरः । वर्तत इति ( वर्तकः ), वर्तकाशकुनौप्राचां ( वा० ) इति साधुः, पक्षे वर्तिका । आदिशब्दात्कपिञ्जलादयः ॥ ३६ ॥ गिरति खं गरुत् । ( पक्षः ) पक्ष परिग्रहे । छाद्यतेऽनेनाङ्गं छदः, छादेर्घे ( सू० ) इति ह्रस्वः । पतत्यनेन पत्त्रम् । पतन्तं त्रायते पतत्त्रम् । मूले, पक्षात्तिः ( सू० ) । चञ्चति चलति चञ्चुः । त्रोटयति त्रोटिः । तुण्डं च ॥ ३७ ॥ प्रकृष्टमूर्ध्वं संहतं वा डयनं, स्वादयओदितः ( ग० सू० ), ( ओदितश्च ) इति निष्ठानत्वम् । एता इति हि डीनाद्युपलक्षणार्थे । पेशीनां मांसखण्डानां कोशः । अमति निःसरत्यस्मादण्डम् । तिस्रः संज्ञा इति **गौडाः** । कौ लीयते कुल्यते कुलमेति वा कुलायः । निलीयतेऽस्मिन् नीडः ॥ ३८ ॥ पुनाति पोतः । पान्त्येनं पिबति स्तनौ वा पाकः । ऋभ्यते( अर्यते ) वृद्धिं प्राप्यतेऽर्भकः । डयति( ते ) डिम्भः । प्रथते वर्धते पृथु कायति वा पृथुकः । श्यति शवति वा शावकः । शिनोति स्नेहेन शेते वात्यर्थं शिशुः । स्त्री च पुमांश्च स्त्रीपुंसौ, अचतुरविचतुरेति ( सू० ) साधुः । मेथते संगच्छते मिथुनम्, मिथृमेथृ संगमने । द्वन्द्वमिति, द्वन्द्वंरहस्यमर्यादेति ( सू० ) साधुः, यत्**कालिदासः**– द्वन्द्वानि भावं क्रियया विवव्रुः । युज्यते धर्मिवृत्त्या युगम् । धर्मवृत्तौ तु युगं लाति युगलं, मत्वर्थीयो वा लच् ( सिध्मादिभ्यश्च ) ॥ ३९ ॥ समूह्यते ढौक्यते समूहः । निवहति निवहः । व्यूहते व्यूहः । संदुह्यते प्रपूर्यते संदोहः । विस्रियते विसरः । व्रज्यते व्रजः, गोचरसंचरवहव्रजेति (सू०) साधुः । स्तूयते स्तोमः । ओह्यते– ओघः, न्यङ्क्वादिः ( सू० ) । निकीर्यते निकरः । व्रियते वारः । संहन्यते संघातः, होहन्तेरिति ( सू० ) घः । संचीयते संचयः ॥ ४० ॥ समुदयनं समुदायः, अयते-र्घञ् । समुदयः, इणोऽच् । समवेयते समवायः । चीयते चयः । गण्यते गणः । वृणोति वृन्दम् । निकुरति निकुरम्बम् । कदम्बप्रतिकृतिः केसरसंचयात्मकत्वात् ( कदम्बकम् ), कुत्सितमम्बते वा ॥ ४१ ॥

पशूनां समजोन्येषां समाजोथ सधर्मिणाम् ।
स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम् ॥ ४३ ॥
कापोतशौकमायूरतैत्तिरादीनि तद्गणे ।
गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ॥ ४४ ॥

इति सिंहादिवर्गः । ५ ।

मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।
स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ १ ॥
स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥ २ ॥
विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ।
प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥ ३ ॥

---

समूहविशेषा वक्ष्यन्त इति शेषः । सजातीयैः प्राणिभिरप्राणिभिश्च समूहो वर्गः, वृज्यते विजातीयेभ्य इति । प्राणिभिः समूहः ( संघः ), संहन्यते संघः, संघोद्घौगणप्रशंसयोः ( सू० ) इति साधुः, यथा गोसंघः, मेघसंघाद्युपचारात् । सरति सार्थोध्वगवृन्दम् । जन्तुभिरित्येव, कुल संस्त्याने बन्धुषु च, (यथा) विप्रकुलम् । वृन्दमित्येव, यथा मृगयूथः, यु मिश्रणे ॥ ४२ ॥ संव्रीयते समजः, समुदोरजःपशुष्विति ( सू० ) अप् । पशुभ्योन्येषां वृन्दं ( समाजः ), यथा श्रोत्रियसमाजः । ( सधर्मिणां ) समूह इत्येव, यथा श्रमणनिकायः, निचीयते निकायः, निवासचितिशरीरोपसमाधानेष्विति ( सू० ) घञ् कत्वं च । धान्यादेरुच्छ्रितं वृन्दं, पुञ्ज्यते पुञ्जः पूर्यते वा । रश्यते राशिः, राशिः सौत्रो दीप्त्यर्थः । उत्कीर्यत उत्किरः । कुट्यते कूटः ॥ ४३ ॥ कपोतादिसमूह एतानि वर्तन्ते, अनुदात्तादेरञ् ( सू० ) । आदिशब्दात्काकादि । छायन्ते छेकाः पञ्जरादौ स्थाप्यन्ते । गृह्यन्ते गृह्यकाः, पदास्वैरीति ( सू० ) क्यप्, स्वार्थे कन् ॥ ४४ ॥
इति सिंहादिवर्गः । ५ ।

मनोरपत्यं मनुष्यो मानुषश्च, मनोर्जातावञ्यतौषुक्च ( सू० ) । म्रियते मर्त्यः, स्वार्थे यत् । मानवः, तस्येदमर्थेऽण्, अपत्यार्थे अञ्यद्भ्यां बाधितत्वात् । नृणाति नरः, नृ नये । पाति पुमान् । पञ्चभिर्भूतैर्जातः पञ्चजनः । पुरि पुरि शयनात्पूरणाद्वा पुरुषः । ( पूरुषः ) अन्येषामपीति ( सू० ) वा दीर्घः । नयति ना, नयतेर्डिच्च ( उ० ) इति ऋः ॥ १ ॥ स्त्यायतेस्यां गर्भः स्त्री । यौति पुंसा [ योषति ] योषित्, हसृरुहियुषिभ्यइतिः ( उ० ) । युष्य( योष )त्यन्यं यौति वा योषा । नारीति, नृनरयोर्वृद्धिश्च ( ग० सू० ) इति शार्ङ्गरवादिपाठान्ङीन् । सीमन्तः केशवेशोस्त्यस्याः सीमन्तिनी । उह्यतेसौ भर्त्रा, बध्यतेनया भर्ता वा वधूः । प्रतीपं वक्रं पश्यति, अपाङ्गनिरीक्षणात् । वामा विपरीतलक्षणया शृङ्गारवेदनाद्वा । वनति भजति वनिता । मह्यते महिला । तथाशब्दान्महेलापि, यल्लक्ष्यम्— अजयद् द्विषतः प्रशमनयः परमहेलया । स्वप्नेपि मनसि स्पृष्टो न यः परमहेलया ॥ २ ॥ प्रशस्तान्यङ्गान्यस्या अङ्गना, अङ्गात्कल्याणे ( ग० सू० ) इति पामादित्वान्नः ( लोमादिपामादीति ) । बिभेति तच्छीला भीरुः, भियःक्रुक्लुकनौ ( सू० ) । कामयते कामिनी । वामे बाधके लोचने अस्या वामलोचना । प्रकृष्टो मदः कामवेगोस्याः प्रमदा । मानः प्रणयकोपोस्या मानिनी । काम्यते कान्ता । लडति ला-( ल )ल्यते वा ललना, लड विलासे, लल ईप्सायां वा । नितम्बिनी गुरुनितम्बा ॥ ३ ॥ विशेषा

सुन्दरी रमणी रामा कोपना सैव भामिनी ।
वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ ४ ॥
कृताभिषेका महिषी भोगिन्योन्या नृपस्त्रियः ।
पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५ ॥
भार्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी ।
पुरन्ध्री सुचरित्रा तु सती साध्वी पतिव्रता ॥ ६ ॥
कृतसापत्न( त्नि )काध्यूढाधिविन्नाथ स्वयंवरा ।
पतिंवरा च वर्या च कुलस्त्री कुलपालिका ॥ ७ ॥
कन्या कुमारी गौरी तु नग्निकानागतार्तवा ।
स्यान्मध्यमा दृष्टरजास्तरुणी युवतिः समे ॥ ८ ॥
समाः स्नुषा जनी वध्वश्चिरण्टी तु सुवासिनी ।
इच्छावती कामुका स्याद् वृषस्यन्ती तु कामुकी ॥ ९ ॥

---

इत्येव । सुष्ठु– आद्रियते सुन्दरी । रमन्तेस्यां रमणी । रमते रामा, ज्वलादित्वाण्णः ( सू० ) । कुप्यति तच्छीला कोपना, क्रुधमण्डार्थेभ्यश्च ( सू० ) इति युच् । भामिनी, भाम क्रोधे । उत्तमा स्त्रीपर्याया । आरुह्यतेऽस्मिन्नारोहो नितम्बः, स वरोस्या वरारोहा । मत्ता क्षीवेव काशते भाति मत्तकाशिनी, कर्तर्युपमाने ( सू० ) णिनिः । वरो वर्णोस्या वरवर्णिनी ॥ ४ ॥ नृपस्त्रीत्येव । श्रीमहादेवीत्वे कृताभिषेका, यथा वासवदत्ता, मह्यते पूज्यते महिषी । पद्मावत्याद्याः, भोगोस्त्यासां भोगिन्यः । पत्युर्नोयज्ञसंयोगे ( सू० ) इति पत्नी । पाणिर्गृहीतोस्याः, बहुव्रीहेश्चान्तोदात्तात् ( सू० ) इत्यत्र पाणिगृहीतीत्यादिना ( वा० ) विशेष इति ङीष् । द्वितीया धर्मसहाया । सह धर्मोस्त्यस्याः सहधर्मिणी, यज्ञादौ सहाधिकारात् ॥ ५ ॥ भरणीया भार्या, संज्ञायां भृञः– ऋहलोर्ण्यत् ( सू० ) । जायतेस्यां पतिर्जाया, यन्मनुः– जायायास्तद्धि जायात्वं यदस्यां जायते पुनः । दारयन्ति दाराः, दारजारौकर्तरिणिलुक्च ( वा० ) । अथशब्दात्पुंभूम्नोर्न पूर्वभाक्त्वम् । सहचरी च । कुटुम्बं पुत्रभृत्याद्यस्त्यस्याः कुटुम्बिनी । पुरं धत्ते पुरंध्री । पतिसेवैव व्रतं यस्याः सा पतिव्रता, यत्स्मृतिः– नास्ति स्त्रीणां पृथग्यज्ञो न व्रतमिति ॥ ६ ॥ कृतं सापत्नकं सपत्नीभावोस्याः ( कृतसापत्नका ) । अध्युपर्युह्यते द्वितीया( अन्या )स्या अध्यूढा । अधिविन्दत्यस्यामधिविन्ना । स्वयं वृणीते स्वयंवरा, संज्ञायांभृतॄवृजिधारि ( सू० ) खच् । पतिं वृणीते पतिंवरा, खच् । व्रियतेनया वर्या, अवद्यपण्येति ( सू० ) साधुः, वरमर्हति वा । कुलस्य संपादयित्री स्त्री( कुलस्त्री ) ॥ ७ ॥ कनति कन्या, कनी दीप्तौ, अघ्न्यादिः ( उ० ), कन्यायाःकनीनच ( सू० ) इति लिङ्गाद् ङीप्– नास्ति । कुमारयति क्रीडति कुमारी कुत्सितो मारोस्या वा, अनूढत्वात् । अष्टवर्षा भवेद् गौरी दशमे नग्निका भवेदिति स्मार्तो विशेषो नादृतः । गौ( गु )रते गौरी । नजते नग्ना, ओणजी ओलजी व्रीडे । ऋतौ भवमार्तवं रजः । ( मध्यमा ) अजाद्यतष्टाप् ( सू० ) । ( तरुणी ) वयसिप्रथमे ( सू० ) इति ङीप् स्यात्, नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानात् ( वा० ) वा ङीप् । ( युवतिः ) यूनस्तिः ( सू० ) ॥ ८ ॥ स्नौति स्नुषा । जायतेस्यां जनी । वधूटी च ग्रामटिकावत् । चिरिणोति चिरिण्टी, चरति चरण्टीत्येके, वयस्यचरमे ( वा० ) इति ङीप् । सुष्ठु वसति सुवासिनी, स्ववासिनीति द्रवि-[ मि ]डाः । ( कामुका ) लषपतपदेत्युकञ् ( सू० ) । वृषमिच्छति, सुप आत्मनःक्यच् ( सू० ), अश्वक्षीरवृषलवणानामात्मप्रीतौक्यचि ( सू० ) इत्यात्राश्ववृषयोर्मैथुनेच्छायामिति ( वा० ) असुक् । जानपदकुण्डेति ( सू० ) मैथुनेच्छायां ङीषि कामुकी ॥ ९ ॥ यच्छ्रुरतः– हित्वा लज्जाभये श्लिष्टा मदनेन

कान्तार्थिनी तु या याति संकेतं साभिसारिका ।
पुंश्चली चर्षणी बन्धक्यसती कुलटेत्वरी ॥ १० ॥
स्वैरिणी पांशुला च स्यादशिश्वी शिशुना विना ।
अवीरा निष्पतिसुता विश्वस्ताविधवे समे ॥ ११ ॥
आलिः सखी वयस्या च पतिवत्नी सभर्तृका ।
वृद्धा पलिक्नी प्राज्ञी तु प्रज्ञा प्राज्ञा तु धीमती ॥ १२ ॥
शूद्री शूद्रस्य भार्या स्याच्छूद्रा तज्जातिरेव च ।
आभीरी तु महाशूद्री जातिपुंयोगयोः समा ॥ १३ ॥
अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि ।
उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः ॥ १४ ॥
आचार्यानी तु पुंयोगे स्यादर्यी क्षत्रियी तथा ।
उपाध्यायान्युपाध्यायी पोटा स्त्रीपुंसलक्षणा ॥ १५ ॥

---

मदेन च । अभिसारयते कान्तं सा भवेदभिसारिका ॥ ण्वुलन्तोयं ( अभिसारिका )। वासकसज्जा विरहोत्कण्ठिता खण्डिता विप्रलब्धा कलहान्तरिता तथा प्रोषितभर्तृका स्वाधीनदयितेत्यन्या सप्तान्वर्थत्वान्न दर्शिताः । पुमांसं चलयति पुंश्चली । कर्षति चेतश्चर्षणी, कृषेरादेश्चचः ( उ० )। बध्नाति बन्धकी । कुलान्यटति कुलटा शकन्ध्वादिः ( वा० ), कुत्सितं लटतीत्येके । एति तच्छीला– इत्वरी चपला, इण्नश्जिसर्तिभ्यः क्वरप् ( सू० ) ॥ १० ॥ स्वेनेर्ते तच्छीला स्वैरिणी, स्वादीरेरिणोः ( वा० ) इति वृद्धिः । पांशुर्मालिन्यहेतुरस्त्यस्याः पांशुला । ( अशिश्वी ), सख्यशिश्वीतिभाषायां ( सू० ) इति साधुः । न विद्येते वीरौ पतिपुत्रावस्या अवीरा । विश्वसिति स्म विश्वस्ता । विगतो धवो भर्तास्या विधवा ॥ ११ ॥ अल( आलय )त्यालिः, यच्छाभ्वतः– आलिः सखी सेतुरालिरालिरावलिरिष्यते। समानं ख्याति सखी । वयसा तुल्या वयस्या, नौवयोधर्मेति ( सू० ) यत् । सध्रीची च । ( पतिवत्नी ) अन्तर्वत्पतिवतोर्नुक् ( सू० ), ङीप् च । ( पलिक्नी ) असितपलितयोर्न ( वा० ), छन्दसिक्नमेके ( वा० ), भाषायामपीष्यत इति ङीप् च । प्रजानातीति प्रज्ञा, इगुपधेतिकः ( सू० ) । ( प्राज्ञी ) प्रज्ञादिभ्यश्चेति ( सू० ) स्वार्थेण् । प्रज्ञास्त्यस्याः (प्राज्ञा), प्रज्ञाश्रद्धार्चावृत्तिभ्योणः ( सू० ) ॥१२॥ (शूद्री) पुंयोगादाख्यायां ( सू० ) इति ङीष् । शूद्रजातीया स्त्री शूद्रा, शूद्राचामहत्पूर्वाजातिः ( वा० ) इति– अजादित्वाट्टाप् । आभीरजातीया महाशूद्रस्य स्त्री च, जातिलक्षणे पुंयोगे च ङीप् । वैश्यभेद एवाभीरो गवाद्युपजीवी । अन्यत्र महती चासौ शूद्रा च महाशूद्रा ॥ १३ ॥ स्वयं पुंयोगं विना । अर्यक्षत्रियाभ्यांवास्वार्थे ( वा० ) इति ङीषानुकौ, पक्षे टाप्, योपधत्वाज्जातिलक्षणो ङीप्– नास्ति । स्वयमित्येव । उपेत्याधीयतेस्याः, अपादाने स्त्रियामुपसंख्यानंतदन्ताच्चवाङीष् ( वा० ) इति घञ् वा च ङीष् । स्वयं मन्त्रव्याख्याकृदाचार्या । स्वतो जाताविस्यर्थः, योपधत्वाज्जातेर्ङीष्–नास्ति ॥ १४ ॥ ( आचार्यानी ) इन्द्रवरुणेति ( सू० ) ङीषानुकौ आचार्यादणत्वंचेति वक्तव्यम् ( वा० ) । पुंयोग इत्येव, ( उपाध्यायानी ) उपाध्यायमातुलाभ्यांवेति ( मातुलोपाध्याययोरानुग्वा ) पक्षे ङीषानुकौ । पुट संश्लेषणे, उभयव्यञ्जना पोटा नपुंसकाख्या ॥ १५ ॥

वीरपत्नी वीरभार्या वीरमाता तु वीरसूः ।
जातापत्या प्रजाता च प्रसूता च प्रसूतिका ॥ १६ ॥
स्त्री नग्निका कोटवी स्याद् दूतीसंचारिके समे ।
कात्यायन्यर्धवृद्धा या का( क )षायवसनाधवा ॥ १७ ॥
सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।
असिक्नी स्यादवृद्धा या प्रैष्यान्तःपुरचारिणी ॥ १८ ॥
वारस्त्री गणिका वेश्या रूपाजीवाथ सा जनैः ।
सत्कृता वारमुख्या स्यात्कुट्टनी शम्भली समे ॥ १९ ॥
विप्रश्निका त्वीक्षणिका दैवज्ञाथ रजस्वला ।
स्त्रीधर्मिण्यपि चात्रेयी मलिनी पुष्पवत्यपि ॥ २० ॥
ऋतुमत्यप्युदक्यापि स्याद्रजः पुष्पमार्तवम् ।
श्रद्धालुर्दोहदवती निष्कला विगतार्तवा ॥ २१ ॥

---

( वीरपत्नी ) नित्यंसपत्न्यादिषु ( सू० ) इति नान्तत्वाद्–ऋन्नेभ्योङीप् ( सू० )। वीरं सूतवती वीरसूः सत्सूद्विषेति ( सू० ) क्विप् । वीरप्रसूर्जगति भार्गवरेणुकैव ( बा० रा० ) वीरस्य प्रसूर्मातेत्यर्थः । जीव-त्तोका तु जीवसूः । कोटा तु कटहारिणी । जनयितुं प्रवृत्ता सा प्रजाता । ( प्रसूतिका ) सूतकापुत्रिका-वृन्दारकाणांवा ( वा० ) इति पक्षे– इत्वम्, आख्याग्रहणात्पुंयोगेपि ङीष् नास्ति ॥ १६ ॥ विवस्त्रा योषिन्मुक्तकेशीत्यागमः । कोटेन लज्जावशात्कुटिलत्वेन वेति याति कोटवी । दूयन्तेस्या मौखर्याद् दूती । संचारयति ( संदेशं ) प्रापयति संचारिका । कतस्यापत्यमिव कात्यायनी, ऋषिपत्न्याकारत्वात् त्रिलक्षणेयं, कषायेण रक्तं वस्त्रं शुद्धत्वादस्याः काषायवसना, अधवा– अपुंस्का रण्डेत्यर्थः ॥ १७ ॥ शिल्पं प्रसाधनादि तेन या परवेश्मान्युपजीवति, स्ववशा स्वायत्ता, एकायत्ता न भवतीत्यर्थः । सह–एरं प्रेरणं धरते सैरन्ध्री, चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी । प्रसाधनोपचारज्ञा सैरन्ध्री स्ववशेति चेति **कात्यः** । असितपलितयोः क्नम् ङीप् च । प्रादेषैष्ययोर्वृद्धिः ( प्रादूहोढोढयेषैष्येषु ) । द्वे वाक्ये इत्येके तन्न, **यन्मुनिः**– असिक्नी स्यादवृद्धा या प्रैष्यान्तःपुरयोषिता ॥ १८ ॥ वारे राजदेवादिसेवाक्रमे स्त्री वारस्त्री । गणः पेटकोस्त्यस्याः, गणयतीश्वरानीश्वरौ वा गणिका । वेशे वेश्यावाटे भवा वेश्या । पण्यस्त्री पणस्त्री च । वारे सेवाक्रमे मुख्या ( वारमुख्या ) । कुट्टयति कुट्टनी । शं श्रेयो भालयति शंभं श्रेयोयुक्तं लाति वा शंभली । चुन्दी देश्याम् ॥ १९ ॥ विप्रश्नो दैवप्रच्छनं शुभाशुभेक्षणं वास्त्यस्याः ( विप्रश्निका )। दैवं शुभाशुभं कर्म जानाति दैवज्ञा, अन्तःपुरस्यापुंस्प्रवेश्यत्वात् । रजोस्त्यस्या रजस्वला, रजःकृष्या-सुतीति ( सू० ) वलच् । स्त्रीधर्मो रजोस्त्यस्याः स्त्रीधर्मिणी । अत्रेरपत्यमात्रेयी । ( मलिनी ) मलिना-द्रजसिङीप् ( वा० ), मलादिन्नन्ताद्वा ङीप् ॥ २० ॥ ऋतू रजोस्त्यस्या ऋतुमती । उदकात्संज्ञायां यति उदक्या, उदकर्महतीति । पुष्पितेति **माला** । पुष्पवत्यवीरिति **प्राच्याः** पेठुः, अव्यते रक्ष्यतेन्येभ्योऽ-वीः, अवितृस्तृतन्त्रिभ्यईः ( उ० ) । अविरात्रेयीत्येके, यत्**कात्यः**– अविं स्त्रीधर्मिणीं विद्यादिति । पुष्पं सुतफलहेतुत्वाद्रजः । ऋतुरेवार्तवम्, ऋतुः स्त्रीरजोत्र, ऋतौ गर्भग्रहणकाले भवं वा, ऋतुः प्राप्तोस्य वा । ( स्पृहिगृहिपतिदयि )निद्रातन्द्राश्रद्धाभ्यआलुच् ( सू० ) । दोहदं गर्भिण्यभिलाषोस्त्यस्या दोहदवती । निष्क्रान्ता कलाभ्योऽशुद्धिभ्यो निष्कला जीर्णर्तुः ॥ २१ ॥ आपन्नं गृहीतं सत्त्वं गर्भोनयापन्नसत्त्वा । गुर्व-

आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी ।
गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे ॥ २२ ॥
पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषूः पतिः ।
स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी ॥ २३ ॥
कानीनः कन्यकाजातः सुतोथ सुभगासुतः ।
सौभागिनेयः स्यात्पारस्त्रैणेयस्तु परस्त्रियाः ॥ २४ ॥
पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः ।
सुतो मातृष्वसुश्चैवं वैमात्रेयो विमातृजः ॥ २५ ॥
अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः ।
कौलटेयः कौलटेरो भिक्षुकी तु सती यदि ॥ २६ ॥
तदा कौलटिनेयोस्याः कौलटेयोपि चात्मजः ।
आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ॥ २७ ॥

---

गर्भोस्या गुर्विणी, व्रीह्यादित्वादिनिः ( सू० ) । गुर्वीति च भागुरिः । अन्तर्विद्यतेस्याः ( अन्तर्वत्नी ), अन्तर्वत्पतिवतोर्नुक् ( सू० ) । गणिकानां समूहो गाणिक्यं, गणिकायायञितिवक्तव्यं (वा० ) इति यञ् । गर्भिणीनां समूहो गार्भिणं, इनण्यनपत्ये ( सू० ) इति प्रकृतिभावः ( नस्तद्धित इति टिलोपे प्राप्ते ) । युवतीनां समूहो यौवतं, युवत्या अपुंवदिति गणपाठात् ( भिक्षादिषु ), भस्याढेतद्धिते ( वा० ) इति पुंवद्भावो नास्ति ॥ २२ ॥ पुनर्भवति पुनर्भूः । दिधेष्टि वाच्या भवति दिधिषूः । द्वौ वारौ द्विरूढा संस्कृता, यदाहुः– अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः (याज्ञ०) । मनुस्त्वन्यथाह– ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेनुजा । सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता ॥ तस्याः पुनर्भ्वाः पतिः, किं च– पुनर्भूपतिरुक्तश्च पुनर्भूर्दिधिषूस्तथेत्येषोप्यूदन्तः, दिधिषूमिच्छत्यात्मन इति क्यच् ( सुपआत्मनःक्यच् ), क्विप् ( अन्येभ्योपिदृश्यते ) । अग्रेनन्यभार्यत्वात्प्रधानं दिधिषूर्यस्य सोग्रेदिधिषूः, समासान्तविधिरनित्यः ॥ २३ ॥ ( कानीनः ) कन्यायाःकनीनचेत्यण् ( सू० ) । ( सौभागिनेयः ) कल्याण्यादीनामिनङ् ( सू० ) इति ढगिनङौ । एवं दौर्भागिनेय इत्याद्युन्नेयं, हृद्भगसिन्ध्वन्तेपूर्वपदस्यच ( सू० ) इत्युभयपदवृद्धिः, उत्तरत्र-अनुशतिकादीनांचेति ( सू० ) । सुत इत्येव, परस्त्री कल्याण्यादिः ॥ २४ ॥ ( पैतृष्वस्रीयः ) पितृष्वसुश्छण् ( सू० ) । ( पैतृष्वसेयः ) ढकिलोपः ( सू० ) इति ज्ञापकाद्– ढक्– अन्त्यलोपश्च । सुत इत्येव, मातृष्वसुश्च ( सू० ) इति छणि मातृष्वस्रीयः, ढकिलोपः ( सू० ) इति ढकि मातृष्वसेयः । विरुद्धाया मातुरपत्यं वैमात्रेयोऽसोदर्यो भ्राता, शुभ्रादित्वात् ( सू० ) ढक्, स्त्रीभ्योढक् ( सू० ) इत्यत्र स्त्रीप्रत्ययग्रहणात् । सांमातुरस्तूभयमातृकः ॥ २५ ॥ बन्धक्या अपत्यं, कल्याणादीनामिनङ् ( सू० ) इति ढगिनङादेशः । बन्धून्– लाति बन्धुला । कुलटाया अपत्यं, स्त्रीभ्योढक् ( सू० ) । ( कौलटेरः ) क्षुद्राभ्योवा ( सू० ) इति ढ्रक् ॥ २६ ॥ सा हि भिक्षार्थिनी कुलान्यटति, कुलटायावा ( सू० ) इति ढगिनङौ, पक्षे ढगेव क्षुद्रात्वाभावात्, अङ्गशीलहीना हि क्षुद्रा । तनोति कुलं तनयः । सूयते सूनुः । सुवति सुनः । पुन्नरकात्त्रायते पुत्त्रः, पुनाति वा, पुवोह्रस्वश्च ( उ० ) इति क्त्रः । दारकदायादौ च ॥ २७ ॥ आत्मजादयः स्त्रियां वृत्ता दुहितृवाचकाः । गौरादौ पुत्री । दोग्धि पितरौ दुहिता । ( तयोः

आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ।
स्वजाते त्वौरसोरस्यौ तातस्तु जनकः पिता ॥ २८ ॥
जनयित्री प्रसूर्माता जननी भगिनी स्वसा ।
ननन्दा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा ॥ २९ ॥
भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।
प्रजावती भ्रातृजाया मातुलानी तु मातुली ॥ ३० ॥
पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः ।
पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः ॥ ३१ ॥
श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ ।
स्वस्रीयो भागिनेयः स्याज्जामाता दुहितुः पतिः ॥ ३२ ॥
पितामहः पितृपिता तत्पिता प्रपितामहः ।
मातुर्मातामहाद्येवं सपिण्डास्तु सनाभयः ॥ ३३ ॥
समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ।
सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥ ३४ ॥

---

समे ) पुत्रे दुहितरि च सामान्येन वर्तेते । अपतनमपत्, अपति साध्वपत्यम् । स्तूयते तोकम् । संततिः संतानः, नन्दनोद्वहप्रजाः, [ तन्तुश्च ] । उरसा निर्मिते यञ्चेति- अण्यतौ ( उरसोयच्च, उरसोण्च ) । तनोति कुलं तातः, स्वार्थेऽण् । जनयति जनकः । पाति पिता । वप्ता च ॥२८॥ या जनित्री त्रिलोक्या इति त्वन्तर्भावितण्यर्थत्वात् । प्रसूयते प्रसूः । मात्यस्यां गर्भो माता । भगं कल्याणमस्त्यस्या भगिनी । सुष्ठ्वस्यते स्वसा, सावसेर्ऋन् ( उ० ), नषट्स्वस्रादिभ्यः ( सू० ) इति ङीप् नास्ति । न नन्दति भ्रातृजायां ननन्दा, नञिचनन्देः ( उ० ) इति ऋन् । न पतत्यनया कुलं नप्त्री । पुत्रस्यापत्यं पौत्री सुतस्यात्मजा ॥ २९ ॥ यतते स्पर्धया याता, यतेर्वृद्धिश्च ( उ० ) इति ऋन् । ( भ्रातृजाया ) ऋतोविद्यायोनिसंबन्धेभ्यः ( सू० ) इति षष्ठ्या अलुग्नास्ति, सप्तमीसमासात्, यथा- द्रक्ष्यसि भ्रातृजायाम् ( मेघ० ) । ( मातुलानी ) इन्द्रवरुणेति ( सू० ) ङीषानुकौ । उपाध्यायमातुलाभ्यां वा ( मातुलोपाध्याययोरानुग्वा ) इति पक्षे ङीष् ॥३०॥ पत्युर्माता पत्न्याः श्वश्रूः, पत्न्या माता पत्युः श्वश्रूः, श्वशुरस्योकाराकारलोपश्च ( वा० ) इत्यूङ् । तयोः पतिपत्न्योः पितान्योन्यं श्वशुरः, शु पूजितं कृत्वाश्नुते । ( पितृव्यः ) पितृव्यमातुलमातामहपितामहाः (सू०) इति साधुः । ( मातुलः ) प्राग्वत् ॥३१॥ श्यायते श्यालः, स्यम वितर्केस्माद्वा ( स्यालः ), पत्युः श्याला इत्यर्थः । स्वामिनः पत्युः- भ्राता कनिष्ठः पत्न्याः, दीव्यति देवा, दिवेर्ऋः (उ०) । अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चिदित्यरः (उ०) देवरः । स्वसुरपत्यं स्वस्रीयः, स्वसुश्छः (सू०) । जायां मिमीते जामाता ॥३२॥ प्रगतः पितामहात् ( प्रपितामहः ) । मातुः पिता मातामहः, [ तत्पिता प्रमातामहः ] । समानः पिण्ड एषां, यत्स्मृतिः-सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । सप्तमादूर्ध्वं सगोत्राः । समानो नाभिर्मूलमेषां सनाभयः, ज्योतिर्जनपदेति ( सू० ) समानस्य सत्वम् ॥ ३३ ॥ समान उदरे शयितः समानोदर्यः, समानोदरेशयितः ( सू० ) इति यत् । सोदरशब्दात्- सोदराद्यः ( सू० ), विभाषोदर इति ( सू० ) समानस्य सत्वं वा । समाने गर्भे भवः सगर्भ्यः, सगर्भसयूथसनुताद्यन् ( सू० ), छान्दसोपि लोकेभिधानात् । सह जायते सहजो भ्राता । समानं गोत्रमेषां सगोत्राः, ज्योतिर्जनपदेति (सू०) सत्वम् । ज्ञायते ज्ञातिः । बध्नाति बन्धुः । ( बान्धवः ) स्वार्थेऽण् । एकः स्वो ज्ञातिवचनः, अन्य आत्मीयार्थः ॥ ३४ ॥ ज्ञाते-

ज्ञातेयं बन्धुता तेषां क्रमाद् भावसमूहयोः ।
धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ ॥ ३५ ॥
अमृते जारजः कुण्डो मृते भर्तरि गोलकः ।
भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ भ्रातरावुभौ ॥ ३६ ॥
मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।
श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च ॥ ३७ ॥
दंपती जंपती जायापती भार्यापती च तौ ।
गर्भाशयो जरायुः स्यादुल्वं च कललोऽस्त्रियाम् ॥ ३८ ॥
सूतिमासो वैजननो गर्भो भ्रूण इमौ समौ ।
तृतीयाप्रकृतिः शण्ढः क्लीबः पण्डो नपुंसकम् ॥ ३९ ॥
शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं समे ।
स्यात्स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्धकम् ॥ ४० ॥

---

भावो ज्ञातेयं, कपिज्ञात्योर्ढक् ( सू० ) । बन्धूनां समूहो बन्धुता, ग्रामजनबन्धु( सहाये )भ्यस्तल् ( सू० ), तलि स्त्रीलिङ्गवचनम् । धुनोति धवः । प्रीणाति प्रियः, इगुपधेति ( सू० ) कः । पाति पतिः, पातेर्डतिः ( उ० ) । सेक्ता वरयिता वरश्च । जारयति जारः, दारजारौकर्तरिणिलुक् च ( वा० ) । उपजातः पतिरुपपतिः ॥ ३५ ॥ भर्तरीत्येव । कुण्डयते कुलमनेन कुण्डः, कुडि दाहे । जारज इत्येव । गुह्यते लज्जाकरत्वाद् गोप्यते गोलकः, परनार्यां प्रजायेते द्वौ सुतौ कुण्डगोलकौ । पत्यौ जीवति कुण्डस्तु मृते भर्तरि गोलक इति स्मृतिः । भ्रातुरपत्यं भ्रात्रीयः, भ्रातुर्व्यच्च ( सू० ) इति वा छः । भ्रातृव्यो नानार्थे । भ्राता च भगिनी चेति ( भ्रातरौ ), भ्रातृपुत्रौस्वसृदुहितृभ्याम् ( सू० ) इत्येकशेषः । [ एवं पुत्रौ ] ॥ ३६ ॥ माता च पिता च मातापितरौ, आनङृतोद्वन्द्वे ( सू० ) । ( पितरौ ) पितामात्रा ( सू० ) इत्येकशेषो वा । मातरपितरावुदीचां ( सू० ) इति– अन्यः साधुः । प्रसूर्माता जनयिता चेति द्वौ त्रिसंज्ञौ । ( श्वशुरौ ) श्वशुरःश्वश्र्वा ( सू० ) इत्येकशेषो वा । [ पुत्रश्च दुहिता च प्रागुक्तम् ] ॥३७॥ राजदन्तादौ ( सू० ) जायापत्योर्जायाशब्दस्य दंभावो जंभावो वा निपात्यते, दं भार्येति **निघण्टुः** । गर्भ आशेतेऽत्र गर्भाशयः । जरामेति जरायुः । उलति वृणोत्युल्वः । कलयति के ललति वा कललः शुक्रशोणितसमवायः, प्रसिध्यास्य पर्यायो नोक्तः, अस्त्रीत्वविधानार्थे तु विधिः । उल्वपर्यायः कलल इत्येके, **यन्मुनिः**– तदुल्वं कललं च तत् ॥ ३८ ॥ दशमे मासि सूतव इति **श्रुतेः**, नवमे दशमे मासि प्रबलैः सूतिमारुतैः ॥ निःसार्यते बाण इव यन्त्रच्छिद्रेण सत्वर इति **स्मृतेश्च** नवमो दशमो वा मासो, विजनने भवो वैजननः । गीर्यते गर्भः । भ्रियते भ्रूणः कुक्षिस्थः । स्त्रीपुंसाभ्यामन्या तृतीया प्रकृतिः, लिङ्गान्तरत्वात् । शाम्यति शण्ढः, [ षण्ढोऽपि ] । क्लीबते क्लीबः । पण्डते पण्डः, पिण्डोऽपि । न स्त्रीपुंसौ नपुंसकं, नभ्राणनपादिति ( सू० ) साधुः, स नपुंसको भवेदिति भाष्यात्पुंस्यपि ॥ ३९ ॥ शिशोर्भावः शैशवं, प्राणभृज्जातीत्यञ् ( सू० ) । यूनो भावो यौवनं, हायनान्तयुवादिभ्योण् ( सू० ) । ( वार्धकं ) गोत्रोक्षोष्ट्रेत्यत्र ( सू० ) वृद्धाच्चेतिवक्तव्यात् ( वा० ) वुञ्, मनोज्ञादित्वात् ( द्वन्द्वमनोज्ञादिभ्यश्च ) भावकर्मणोरप्याहुः, यथा– वार्धके मुनिवृत्तीनाम् ( रघु० ) ॥४०॥ पलति शोभतेऽनेन पलितं, पल गतौ ।

पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा।
स्यादुत्तानशया डिम्भा स्तनपा च स्तनंधयी ॥ ४१ ॥

बालस्तु स्यान्माणवको वयस्थस्तरुणो युवा।
प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥ ४२ ॥

वर्षीयान्दशमी ज्यायान्पूर्वजस्त्वग्रियोऽग्रजः।
जघन्यजे स्युः कनिष्ठयवीयो वरजानुजाः ॥ ४३ ॥

अमांसो दुर्बलश्छातो बलवान्मांसलोंऽसलः।
तुन्दिलस्तुन्दिभ(क)स्तुन्दी बृहत्कुक्षिः पिच( चि )ण्डिलः ॥४४॥

अवटीटोवनाटश्चावभ्रटो नतनासिके।
केशवः केशिकः केशी वलिनो वलिभः समौ ॥ ४५ ॥

---

आदिशब्दाद्रोमादौ च। विस्रंसतेनया कचाङ्गं विस्रसा। जीर्यन्त्यनया जरा, षिद्भिदादिभ्योऽङ् (सू०)। उत्ताना शेते–उत्तानशया, अधिकरणेशेतेः (सू०) इत्यत्र–उत्तानादिषुकर्तृषु (वा०) इत्यच्। डिम्भेति प्राक् पक्षिक्रमेणोक्तं इह मानुषक्रमात्। स्तनं पिबति स्तनपा, (सुपिस्थ इत्यत्र) सुपीति योगविभागात्कः। स्तनं धयति स्तनंधयी, नासिकास्तनयोर्ध्मा धेटोः (सू०) इति खश्, धेटष्टित्वादृङीप्। स्त्रीलिङ्गेन निर्देशः स्त्रीप्रत्ययप्रदर्शनार्थः ॥ ४१ ॥ बलति( ते ) प्राणिति बालः, ज्वलादित्वाण्णः (सू०), वाड् आप्लावेस्माद्वा। अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः। नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः ॥ स्वार्थे कन् (माणवकः)। वयसि प्रसग्रे तिष्ठति वयस्थः। तरति तरुणः। यौति मिश्रीभवति स्त्रिया युवा। प्रगतं वयोस्य प्रवयाः। तिष्ठति स्थविरः। वर्धते स्म वृद्धः, एवमादौ गड्डरिकाप्रवाहेण भूते क्तः, वर्तमाने युक्तः शीलितादिवत्। जिनाति स्म जीनः, ग्रहिज्यावयीति (सू०) संप्रसारणं, संप्रसारणस्येति (सू०) दीर्घः, ल्वादित्वात् (सू०) निष्ठा नत्वम्। जीर्यति स्म जीर्णः, श्र्युकः–किति (सू०) इत्यनिट्। (जरन्) जीर्यतेरतृन् (सू०) ॥ ४२ ॥ अतिशयेन वृद्धो वर्षीयान्, ईयसुनि प्रियस्थिरेति (सू०) वर्षादेशः। दशमोवस्थाविशेषोस्यास्ति दशमी, वयसिपूरणात् (सू०) इतीनिः, यन्मुनिः– इष्टो वयोदशांपेतः सप्तमी दशमीति च। अतिशयेन वृद्धो ज्यायान्, ज्यच (सू०), वृद्धस्य–च (सू०) इति ज्यादेशः, ज्यादादीयसः (सू०) इत्यात्वम्। अग्रे जातोऽग्रियः, अग्राद्यत् (सू०), घच्छौच (सू०) इति घः। अग्र्याग्रीयौ च। अग्रिमपाठे, अग्रादिपश्चाड्डिमच् (वा०)। जघन्यजः पश्चाज्जातः। अत्यर्थं युवा कनिष्ठो यवीयांश्च, युवाल्पयोः कनन्यतरस्यां (सू०), स्थूलदूरेति (सू०) यणादिलोपः पूर्वस्य गुणः। एवं कनीयान् यविष्ठश्च। अवरे जायतेवरजः ॥ ४३ ॥ छयति स्म छातः, छो छेदने। मांसमस्यास्ति मांसलः, सिध्मादित्वात् (सू०) लच्। अंसावस्य स्तः (अंसलः), वत्सांसाभ्यांकामबले (सू०) इति लच्। तुन्दं पिचण्डश्चास्यास्ति, तुन्दादिभ्यइलच्च (सू०) इति चादिनिठनौ। उदरिलोपि। तुन्दिरस्यास्ति तुन्दिभः, तुन्दिवलिवटेर्भः (सू०) ॥ ४४ ॥ नतेनासिकायाःसंज्ञायांटीटञ्नाटज्भ्रटचः (सू०)। नतनासिकश्चिपिटघोणः। नतायां नासिकायां नासानमनेप्येते वर्तन्ते। प्रशस्ताः केशाः सन्त्यस्य केशवः, केशाद्वोन्यतरस्याम् (सू०)। वलिस्त्वक्संकोचोस्यास्ति, पामादित्वान्नः (लोमादिपामादीति)। (वलिभः) तुन्दिवलिवटेर्भः (सू०) ॥ ४५ ॥ पूयतेपसार्यते पोगण्डः। खर्वति खर्वः।

विकलाङ्गस्तु पोगण्डः खर्वो ह्रस्वश्च वामनः ।
खरणाः स्यात्खरणसो विग्रस्तु गतनासिकः ॥ ४६ ॥
खुरणाः स्यात्खुरणसः प्रज्ञुः प्रगतजानुकः ।
ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्संज्ञुः संहतजानुकः ॥ ४७ ॥
स्यादेडे बधिरः कुब्जे गडुलः कुकरे कुणिः ।
पृश्निरल्पतनौ श्रोणः पङ्गौ मुण्डस्तु मुण्डिते ॥ ४८ ॥
वलिरः केकरे खोडे खञ्जस्त्रिषु जरावराः ।
जडुलः कालकः पिप्लुस्तिलकस्तिलकालकः ॥ ४९ ॥
अनामयं स्यादारोग्यं चिकित्सा रुक्प्रतिक्रिया ।
भेषजौषधभैषज्यान्यगदो जायुरित्यपि ॥ ५० ॥
स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः ।
पुमान्यक्ष्मा क्षयः शोषः प्रतिश्यायस्तु पीनसः ॥ ५१ ॥

---

ह्रसति ह्रस्वः । वामोस्यातीति वामनः । निखर्वः खट्टरः[ नः ] खर्व इति **नाममाला** । खरा तीक्ष्णा खरस्येव वा नासास्य खरणाः, खुरखराभ्यांवानस्वक्तव्यः ( वा० ), पक्षे– अञ्नासिकायाःसंज्ञायांनसंचास्थूलात् ( सू० ), पूर्वपदात्संज्ञायामगः ( सू० ) इति णत्वम् । नःक्षुद्रः क्षुद्रनासिकः । ( विग्रः ) वेर्ग्रोवक्तव्यः (वा०) ॥ ४६ ॥ खुराकारा नासिकास्य खुरणाः–विकटघोणः । प्रगते विरले वातादिदोषात्तथोर्ध्वे संहते च जानुनी अस्य, प्रसंभ्यांजानुनोर्ज्ञुः ( सू० ), ऊर्ध्वाद्विभाषा ( सू० ) ॥ ४७ ॥ एडपशुरिव –एडः । बद्धौ कर्णावस्य बधिरः । कुत्सित उब्जः कुब्जः, पृषोदरादिः ( सू० ) । गडुरस्यास्ति गडुलः, सिध्मादित्वात् ( सू० ) लच् । कुण शब्दे, कुपाणिः कुणिरिति **नैरुक्ताः** । कलंवकस्त्ववाक्कर्णः खलतिस्त्विन्द्रलुप्तकः । स्पृश्यते पृच्छति वा पृश्निः । ( श्रोणः ) श्रोणृ संघाते, कुटिलजङ्घापादः । मुण्ड्यते मुण्डः ॥ ४८ ॥ वलते चेष्टते वलिरं नेत्रं तद्योगाद्वलिरः । के मूर्ध्नि करोत्याक्षिणी चलत्तारकत्वात्केकरः, एनमुपाध्यायः काच[त्र]र इत्याख्यत् । ( खोडः ) खुड प्रतिघाते । ( खञ्जः ) खजि वैकल्ये । दण्डो दुश्चर्मा द्विनग्नोपि । जराशब्दादुत्तरा उत्तानशयादयः खञ्जान्तास्त्रिलिङ्गाः । जडति जडुलः, जडुलो जडत्वाद्वा । काल एव कालकः । अपिप्लवते पिप्लुः । तिलप्रतिकृतिस्तिलकः । तिल इव कालकस्तिलकालकः, देहे कृष्णं लक्ष्म ॥ ४९ ॥ आमयस्यभावोनामयं, अव्ययंविभक्तिसमीपेति (सू०) अर्थाभावेव्ययीभावः । कितेर्व्याधिप्रतीकारे सन् । भिषज्यत्यनेन भेषजं, भिषज कण्ड्वादिः, अनन्तावसथेतिहभेषजाद्दिति ( सू० ) निर्देशाद् गुणः, भेषं रोगं जयतीति **दुर्गः** । ( औषधं ) ओषधेरजाताविति ( सू० ) स्वार्थेण् । ( भैषज्यं ) अनन्तावसथेतिहभेषजाञ्ञ्यः ( सू० ) स्वार्थे । अविद्यमानो गदोस्मिन्नगदः । जयति रोगाञ्जायुः, कृवापाजिमिस्वदिसाध्यशूभ्य उण् ( उ० ) ॥ ५० ॥ रुज्यतेनया रुक्, क्विप् । ( रुजा ) भिदादयङ् ( षिद्भिदादिभ्योङ् ) । व्याधीयतेऽपथ्यैर्व्याधिः । गदति व्यथां गदः । आमीनात्यामयः, अम रोगेऽस्माद्वा । आमोपि । यक्ष्यते पूज्यते रोगराजत्वाद्यक्ष्मा । राजयक्ष्मापि । क्षीयतेनेन क्षयः । शुष्यत्यनेन शोषः । प्रतिश्यायते स्रवति प्रतिश्यायः, श्याद्व्यधेति ( सू० ) णः । पीनं स्यत्यन्तं नयति पीनसः ॥ ५१ ॥ क्षवणं क्षुत्, क्विप्, क्तः, अप् । काशतेनेन काशः । क्षौत्यनेन क्षवथुः । शवति विसर्पति

स्त्री क्षुत्क्षुतं क्षवः पुंसि काश( स )स्तु क्षवथुः पुमान् ।
शोफस्तु श्वयथुः शोथः पादस्फोटो विपादिका ॥ ५२ ॥
किलाससिध्मे कच्छ्वां तु पामा पामा विचर्चिका ।
कण्डूः खर्जूश्च कण्डूया विस्फोटः पिटकस्त्रिषु ॥ ५३ ॥
व्रणो स्त्रियामीर्ममरुः क्लीबे नाडीव्रणः पुमान् ।
कोठो मण्डलकं कुष्ठश्वित्रे दुर्नामकार्शसी ॥ ५४ ॥
आनाहस्तु विबन्धः स्याद् ग्रहणी रुक्प्रवाहिका ।
प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः ॥ ५५ ॥
व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगंदराः ।
अश्मरी मूत्रकृच्छ्रं स्यात्पूर्वे शुक्रावधेस्त्रिषु ॥ ५६ ॥
रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके ।
वान्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ॥ ५७ ॥

---

शोफः शोथश्च । श्वयतेनेन श्वयथुः । विपद्यतेनया विपादिका, पादशतस्य ( सू० ) इत्यत्रान्यत्रापीति वक्तव्याद् वुन्– लोपो वा ॥ ५२ ॥ समे इति शेषः । किलमस्यति किलासम् । सिध्यति सिध्मं मलश्वित्राख्यम् । कषति कच्छूः । पिबत्यङ्गं पामा । ( पामा ) डाबुभाभ्यामन्यतरस्यां ( सू० ) । विचर्चयति विचर्चिका, अङ्गुल्यादिसंधिषु सूक्ष्माः पिटकाः, खर्जूविशेष इत्येके । कण्डूयति कण्डूः, भावेक्विप् ( संपदादिभ्यः क्विप् ) । ( कण्डूया ) अप्रत्ययात् ( सू० ) । खर्जति खर्जूः, कर्ज खर्ज व्यथने । विस्फोटयति विस्फोटः । पटति संश्लिष्यति पेटति वा पिटका ॥ ५३ ॥ व्रणयति व्रणः । ईरयत्यङ्गमीर्मम् । इयर्त्यरुः, उस् । नाड्या व्रणं, समासे पुंस्त्वम् । नालिश्च । कूयते शब्दते कोठः । ( मण्डलकं ) मण्डलाकृति कुष्ठम् । समे इति शेषः । कुष्णात्यङ्गं कुष्ठं, कुत्सितं तिष्ठति वा, अम्बाम्बगोभूमीति (सू०) षत्वम् । श्वेतते श्वित्रं श्वेतकुष्ठम् । पापरोगत्वाद् दुर्नामकम् । इयर्त्यर्शः । गुदजं गुदकीलकं च ॥ ५४ ॥ आनहनं विण्मूत्रनिरोधः । गृह्णाति ग्रहणी, जाठरोग्निर्गृह्यतेनया वा तच्छैथिल्यात् । रुग्रोगः । मलप्रवहणं प्रवाहिका, रोगाख्यायांण्वुल् ( सू० ) । प्रच्छर्दनं प्रच्छर्दिका, रोगाख्यायांण्वुल् ( सू० ) । वमनं वमिः । छर्दिश्छर्दी च ॥ ५५ ॥ विद्रात्यनया विद्रधिः, विद्रो धीयतेस्यां वा । मेहति मूत्रयतेनेन मेहः । प्रमेहोपि, दीपप्रदीपवत् । भगं दारयति भगंदरः स्फिक्संधौ पिटकं, पूःसर्वयोर्दारिसहोः ( सू० ) इत्यत्र भगेच दारेर्वक्तव्यात् ( वा० ) खच् । श्लीपदं पादवल्मीकं केशघ्नं त्विन्द्रलुप्तकम् । व्याधिभेद इत्येव । अश्मानं शुक्रं रात्यश्मरी । शुक्रात्पूर्वे मूर्च्छितान्ता वाच्यलिङ्गा ॥ ५६ ॥ अगदः क्रियतेनेनागदंकारः, कारेसत्यागदस्य ( सू० ) इति मुम् । भिषज्यति भिषक् । विद्यामधीते वेद वा वैद्यः । आद्यौ सामान्येनौषधादावपीत्येके । वमति वान्तः, वार्त्त इति तु युक्तं, यद्वक्ष्यति– वार्त्तं फल्गुन्यरोगे च त्रिषु, वृत्तिरस्यास्ति, प्रज्ञाश्रद्धार्चावृत्तिभ्योणः ( सू० ) । कलासु साधुः कल्यः । उल्लाघ्यते स्मोल्लाघः, क्तः, अनुपसर्गात्फुल्लेति ( सू० ) साधुः ॥ ५७ ॥ ग्लायति स्म ग्लानः, संयोगादेरातोधातोः ( सू० ) इति निष्ठा नत्वम् ।

ग्लानग्लास्नू आमयावी विकृतो व्याधितोऽपटुः ।
आतुरोऽभ्यमितोऽभ्यान्तः समौ पामनकच्छुरौ ॥ ५८ ॥
दद्रुणो दद्रुरोगी स्यादर्शोरोगयुतोऽर्शसः ।
वातकी वातरोगी स्यात्सातिसारोऽतिसारकी ॥ ५९ ॥
स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेक्षिण चाप्यमी ।
उन्मत्त उन्मादवति श्लेष्मलः श्लेष्मणः कफी ॥ ६० ॥
न्युब्जो भुग्ने रुजा वृद्धनाभौ तुण्डि(न्दि)लतुण्डि(न्दि)भौ ।
किलासी सिध्मलोऽन्धोऽदृग्मूर्च्छालो मूर्तमूर्च्छितौ ॥ ६१ ॥
शुक्रं तेजोरेतसी च वीजवीर्येन्द्रियाणि च ।
मायुः पित्तं कफः श्लेष्मा स्त्रियां तु त्वगसृग्धरा ॥ ६२ ॥

---

ग्लायति तच्छीलो ग्लास्नुः, ग्लाजिस्थश्चग्स्नुः (सू०)। आमयोऽस्यास्त्यामयावी, सर्वत्रा–आमयस्योपसंख्यानाद्विनिर्दीर्घश्च (वा०)। व्याधिः संजातोऽस्य व्याधितः। अपटुर्मन्दः। आतोरत्यातुरः, आतरति रोगं वा। अभितोम्यते स्माभ्यान्तः (अभ्यमितश्च), रुष्यमत्वरेति (सू०) वेट्। संवातमृत्युर्मरकं[ को ] मारिर्मारी च देवतेति **श्रीहर्षः**। पामास्यास्ति पामनः, पामर इत्येके, द्वावपीति **श्रीभोजः**। [ कच्छूरस्यास्ति ] कच्छुरः, कच्छ्वाहस्वत्वंच (वा०) इति रः ॥ ५८ ॥ (दद्रुणः) पामादित्वाच्छाकीपलालीदद्रूणांह्रस्वश्च (ग०) इति नः। दीर्यन्तेनया दद्रूः। अर्शांसि सन्त्यस्यार्शसः, अर्शआदिभ्योच् (सू०)। वातो वियतेऽस्य वातकी, वातातिसाराभ्यांकुक्च (सू०) इतीनिः। एकदेशे विकृतत्वादतीसारक्यपि ॥ ५९ ॥ क्लिन्नस्यचुल्चिल्पिल्लश्चास्यचक्षुर्षीति वक्तव्यात् (वा०) साधवः। चक्षुःक्लेदेपि, तेन चक्षुर्गतः क्लेदश्चुल्लो नाम रोगः, तद्योगाच्चुल्लं चक्षुः, चुल्लचक्षुर्योगाच्चुल्लः पुमान्। उन्मादो वातभूतादिदोषाच्चित्तविभ्रमः। श्लेष्मास्यास्ति, सिध्मादित्वाल्लच् (सू०)। (श्लेष्मणः) पामादित्वान्नः (लोमादिपामादीति ॥६०॥ न्युब्जनं न्युब्जः, घञ्, भुजन्युब्जौपाण्युपतापयोः (सू०) इति साधुः। भुग्नः कुब्जः, न्युब्जेन पाणिगतेन भुग्नत्वेन योगाद न्युब्जः पुमान्, यच्छाश्वतः– विद्याद्धोगतं न्युब्जं न्युब्जः कुब्ज उदाहृतः। तुण्डिरुन्नतनाभिः, तुन्दिस्तु जठरं, इलच् (तुन्दादिभ्यइलच्)। (तुण्डिभः) तुन्दिवलीति (सू०) भश्च, एकदेशविकृतत्वात्। (सिध्मलः) सिध्मादित्वाल्लच् (सू०)। अन्धोऽदृक्, अन्ध दृष्टयुपसंहारे। नास्ति दृगस्यादृक्। मूर्च्छाऽस्त्यस्येति (मूर्च्छालः), प्राणिस्थादातोलच् (सू०), क्षुद्रजन्तूपतापाच्चेष्यते (ग०)। मूर्च्छति मूर्तः, राल्लोपः (सू०) इति छलोपः, नध्याख्येति (सू०) नत्वाभावः। मूर्च्छा संजातास्य मूर्च्छितः, चुरादिमूर्च्छेः क्तो वा ॥ ६१ ॥ शोकति स्रवति शुक्रम्। तेजयति तेजः असुन्। रीयते रेतः, रीङ् स्रवणे। वीज्यते वेति वा वीजं, वीजिर्लौकिकः। वीरेऽक्लीबे साधु वीर्यम्। इन्द्रस्यात्मनो लिङ्गमितीन्द्रियं, इन्द्रियमिन्द्रलिङ्गमिति (सू०) साधुः। मिनोति मलान् स्रंसकत्वान्मायुः। पतति स्रंसते पित्तम्। कात्फलति कफः। श्लिष्यति श्लेष्मा। (त्वक्) त्वच संवरणे। असृजो धरा (असृग्धरा) ॥ ६२ ॥ (पिशितं) पिश अवयवे। तरो बलमस्त्यस्य तरसं, तरन्स्वने

पिशितं तरसं मांसं पललं क्रव्यमामिषम् ।
उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम् ॥ ६३ ॥
रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम् ।
बुक्काग्रमांसं हृदयं हृन्मेदस्तुवपा वसा ॥ ६४ ॥
पश्चाद्ग्रीवासिरा मन्या नाडी तु धमनिः सिरा ।
तिलकं क्लोम मस्तिष्कं गोर्दं किट्टं मलोऽस्त्रियाम् ॥ ६५ ॥
अन्त्रं पुरीतद् गुल्मस्तु प्लीहा पुंस्यथ वस्नसा ।
स्नायुः स्त्रियां कालखण्डयकृती तु समे इमे ॥ ६६ ॥
सृणिका स्यन्दिनी लाला दूषिका नेत्रयोर्मलम् ।
मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत् ॥ ६७ ॥
पुरीषं गूथं वर्चस्कमस्त्री विष्ठाविषौ समौ ।
स्यात्कर्परः कपालोऽस्त्री कीकसं कुल्यमस्थि च ॥ ६८ ॥

---

कार्श्यं वा । मन्यते मांसं, मांसभक्षयितामुत्रेति **नैरुक्ताः** [ मांसभक्षयितामुत्र यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वे निरुक्तं मुनिरब्रवीदिति नैरुक्ताः ]। पाल्यतेनेन देहः पललं, **यच्छाश्वतः**– पललं तिलमिश्रे स्यात्पलल पिशितेपि च । क्रवते ( क्रूयते ) क्रव्यं, कुङ् गतौ । आमिष्यत आमिषम् । जाङ्गलं च, पलं नानार्थे । उत्तप्यते शोष्यते– उत्तप्तम् । वलं लुनाति वल्लूरं, वल्लिः सौत्रो वा ॥ ६३ ॥ रुणद्धि स्रोतांसि रुधिरम् । अस्यते न सज्यते वासृक् । लोहितं रक्तं च वर्णतः । अस्यतेस्रम् । शोणति शोणितं, शोणृ वर्णे । वुक्क्यते स्वादुत्वान्मृग्यते वुक्का, नान्तः पुंस्ययं, स्त्रीत्येके, वृक्केति **वैद्याः** । अग्रं मुख्यम् । ह्रियते हृत्– जीवाधारं पद्मं, दान्तं प्रकृत्यन्तरम् । मेद्यति स्निह्यति मेदः, असन्तत्वात्क्लीबे । उप्यते वपा । वस्ते मांसं वसा, शुद्धमांसस्य यः स्नेहः सा वसेति **वैद्याः** ॥ ६४ ॥ पश्चाद्भागे ग्रीवायाः कृकाटिकायां सिरा, मन्यते मन्या, संज्ञायांसमजनिषदेति ( सू० ) क्यप् । नडस्येयं नाडी सौषीर्यात् । धमति धमनिः, धमिः सौत्रः । सिनोति कायं सिरा, षिञ् बन्धने । तिलति तिलकम् । क्लाम्यति क्लोम, उदर्यो जलाधारः । हृदयस्य दक्षिणे यकृत्क्लोम वामे प्लीहा पुप्फुसश्चेति **वैद्याः**। मस्तकमज्जा, मस्तकमिष्यतीति मस्तिष्कं, इष गतौ ।गुर्द्यते गोर्दं, गुर्द परिवेष्टने। केटति ।किट्टम्, किट गतौ । मलते धारयति कायं मलः ॥६५॥ अमत्यनेनाम्रमन्त्रम् । पूर्यते पुरीतत् , तान्तोयम् । गुड्यते रक्ष्यते मा बाधिष्टेति गुल्मः । प्लेहते प्लीहा, नान्तः । वस्ते छादयति कायं वस्नसा । स्नसा ह[न]हारुश्च । स्नायत्यङ्गं स्नायुः, ष्णै वेष्टने । महास्नायुश्च कण्डरा, स्नायुसंघात इति **वैद्याः** । दक्षिणपार्श्वे कृष्णमांसांशः कालखण्डम्, कालखञ्जमित्येके । यमं करोति यकृत् ॥ ६६ ॥ सरति सृणिका । स्यन्दते स्यन्दिनी । ललति लाति वा लाला । दूषयत्यक्षि दूषिका, दूषीकापि । ( प्रस्रावः ) प्रेद्रुस्तुस्रुवइति ( सू० ) घञ् । उच्चार्यते प्रेर्यते– उच्चारः । अवाधः कीर्यत इति, वर्चस्केवस्करइति ( सू० ) साधुः । शाम्यति शमलम् । शक्नोत्यनेन शकृत् ॥ ६७ ॥ पिपर्त्यन्त्रं पुरीषम् । गूयत उत्सृज्यते गूथम् । वर्च एव वर्चस्कम् । वितिष्ठतेनया विष्ठा । वेवेष्टि विट्, विशतीति **सभ्याः** । कल्पते कर्परः, कृपे रो लो नास्ति बाहुलकात् । कं पालयति कपालं मूर्ध्नोस्थि, घटादिखण्डोप्युपचारात् । कीति कसति कीकसम् । कुले शरीरे साधु कुल्यं, कोलति संस्त्यायते वा । अस्यतेस्थि ॥ ६८ ॥ कं कालयति कङ्कानलति वा कंकालः, देहारम्भकोस्थिपञ्जरः । करङ्कोपि । कशारुकेति

स्याच्छरीरास्थि कङ्कालः पृष्ठास्थ्नि तु कशेरुका ।
शिरोस्थनि करोटिः स्त्री पार्श्वास्थनि तु पर्शुका ॥ ६९ ॥
अङ्गं प्रतीकोवयवोपघनोथ कलेवरम् ।
गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ७० ॥
कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।
पादाग्रे प्रपदं पादः पदङ्घ्रिश्चरणोऽस्त्रियाम् ॥ ७१ ॥
तद्ग्रन्थी घुटिके गुल्फौ पुमान् पार्ष्णिरधस्तयोः ।
जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम् ॥ ७२ ॥
सक्थि क्लीबे पुमानूरुस्तत्संधिः पुंसि वङ्क्षणः ।
गुदं त्वपानं पायुर्ना वस्तिर्नाभेरधो द्वयोः ॥ ७३ ॥
कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती ।
पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः ॥ ७४ ॥
कूपकौ तु नितम्बस्थौ द्वयहीने कुकुन्दरे ।
स्त्रियां स्फिचौ कटिप्रोथावुपस्थो वक्ष्यमाणयोः ॥ ७५ ॥

---

**मुनिः**, कश्यत इति । पृष्ठग्रन्थौ गडुः पुमान् । के रटति करोटिः करोटी च । पूर्यते पर्शुः, पर्शुरेव पर्शुका ॥ ६९ ॥ अङ्गत्यङ्गम् । प्रत्येति प्रतीकः । अवयौत्यवयवः । अपहन्यतेपघनः, अपघनोङ्ग । मिति (सू०) साधुः । कल्यते कलेवरम् । गाते गच्छति गात्रम् । उप्यते वपुः । संहन्यते संघात्यन्तास्मि-न्नङ्गानि संहननम् । शीर्यते शरीरम् । वृष्यते सिच्यते वर्षति मलान्वा वर्ष्म । विगृह्यते विग्रहः, ग्रहवृद-इति ( सू० ) अप् ॥ ७० ॥ चीयते कायः, निवासचितिशरीरोपसमाधानेष्वादेश्चकः ( सू० ) । दिह्यते देहः । मूर्च्छति वर्धते मूर्तिः । तन्यते तनुः । प्रारम्भः पदस्य प्रपदं, पदशब्दः पादपर्यायोस्ति । पद्यतेनेन पादः । पदिति लक्ष्यलक्षणयार्नास्ति, यस्तु गौः पदा न स्प्रष्टव्या, पद्भ्यामेव यथातथेत्यादौ स पद्दन्नो-मासिति ( सू० ) पदादेशः, अतः पदोङ्घ्रिरिति पाठ्यम्, क्रमे तु पदम् । अंहत्यनेनाङ्घ्रिः । चरत्यनेन चरणः ॥ ७१ ॥ पादग्रन्थी पार्श्वनिःसृते, घोटते घुटिका, घुट परिवर्तने । गुञ्यते गुल्फः । गुल्फाधः पश्चाद्भागः पार्ष्णिः, पुमानिति प्रायिकं, पृष्यते स्नेह्यते विपादिका चिकित्सार्थं पार्ष्णिः । जङ्घन्यते कुटिलं गच्छति जङ्घा । प्रसरति प्रसृता । जायते जानु । ऊर्वोः पर्व ग्रन्थिः । अस्थि विद्यतेत्राष्ठीवत्, आसन्दीवदष्ठीवदिति ( सू० ) साधुः ॥ ७२ ॥ सजति सक्थि । ऊर्वत्यूरुः । वस्त्यध ऊरुसंधिः, वङ्क्षते वङ्क्षणः । गवते गूयते वानेन गुदम्, गुद परिवेष्टने वा । अपानित्यनेनापानम् । पाति मलोत्सर्गात्पायुः, पिबति वा स्नेहम् । वसत्यस्मिन्मूत्रं वस्तिर्मूत्रपुटकम् ॥ ७३ ॥ कट्यत आव्रियते कटः, शवे श्रोणौ कालिञ्जे च गजगण्डे भृशे कट इति **शाश्वतः** । कटीरोपि । श्रोण्यते संहन्यते श्रोणिः, तस्याः फलकमिव-ककुत्पार्श्वनिःसृतांशोस्त्यस्याः ककुद्मती । कट्याः पश्चाद्भागः, नितम्यति सुरतसंमर्दान्नितम्बः । स्त्रीकट्याः पुरो भागः, हन्यते जघनम् ॥ ७४ ॥ कुत्सितं कुं दृणाति कुकुन्दरं, द्वयहीने क्लीबे । स्फायते स्फिक् । प्रथत उद्धियते प्रोथः । प्रोहोपि । ( उपस्थः ) वक्ष्यमाणौ भगशिश्नौ ॥ ७५ ॥ भज्यते भगं,

भगं योनिर्द्वयोः शिश्नो मेढ्रं मेहनशेफसी ।
मुष्कोण्डकोशो वृषणः पृष्ठवंशाधरे त्रिकम् ॥ ७६ ॥
पिच(चि)ण्डकुक्षी जठरोदरतुन्दं स्तनौ कुचौ ।
चु(चू)चुकं तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम् ॥ ७७ ॥
उरो वत्सं च वक्षश्च पृष्ठं तु चरमं तनोः ।
स्कन्धो भुजाशिरोंसोस्त्री संधी तस्यैव जत्रुणी ॥ ७८ ॥
बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरधः ।
मध्यमं चावलग्नं च मध्योस्त्री द्वौ परौ द्वयोः ॥ ७९ ॥
भुजबाहू प्रवेष्टो दोः स्यात्कफो( पो )णिस्तु कूर्परः ।
अस्योपरि प्रगण्डः स्यात्प्रकोष्ठस्तस्य चाप्यधः ॥ ८० ॥
मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।
पञ्चशाखः शयः पाणिस्तर्जनी स्यात्प्रदेशिनी ॥ ८१ ॥
अङ्गुल्यः करशाखाः स्युः पुंस्यङ्गुष्ठः प्रदेशिनी ।
मध्यमानामिका चापि कनिष्ठा चेति ताः क्रमात् ॥ ८२ ॥

---

(खनोघचेत्यत्र) खलो भगःपदमितिवक्तव्याद्घः (ज्ञा०) । यौति योनि । स्त्रीचिह्नं स्मरगृहं च । शिनोति घर्षति भगं शिश्नः, शेफ[प] श्च । मेहत्यनेन मेढ्रम् । मुष्णाति गोपायति शुक्रं मुष्कः । अण्डयोः कोशोण्डकोशः । वर्षति शुक्रं वृषणः । पेलश्च । पृष्ठास्थ्नोध ऊर्वोः संधौ त्रिसंघट्टस्त्रिकम् ॥ ७६ ॥ पचत्यन्नं पिचण्डः, अपिचमत्याहारं वा । कुष्यते कुक्षिः । जमत्याहारं जठरम् । उदीर्यति(दियर्ति) उदरम् । तुदति तुन्दं, तुन्दिश्च । स्तन्यते बालैः स्तनौ । कूयेते कुच्येते वा कुचौ । वक्षोरुहौ उरसिजौ च । चुच्चित्यव्यक्तं कायति पीयमानं चुचुकम् । ( क्रोडं ) कुड घनत्वे, ना पुंलिङ्गं न भवति । वक्षोमध्याद्भिन्नास्थि क्राडा ॥ ७७ ॥ उरस्यति सहते– उरः, उरस् कण्डवादिः । वस्यते छाद्यते वत्सम् । ( वक्षः ) वक्ष संघाते, असुन् । पञ्च ( क्रोडादयः ) एकार्था इत्येके । पृष्यते सिच्यते पृष्ठं देहस्य पश्चाद्भागः, पश्चान्मात्रे तूपचारात् । स्कन्यते भारेण स्कन्धः । अस्यते भारेणांसः । अंसकक्षयोः सन्धिरुद्भिन्नास्थि, जायते जत्रु ॥ ७८ ॥ कष्येते कक्षौ, यान्तावपि कक्ष्यौ । ( पार्श्व ) पर्श्वाणसवक्तव्यः ( वा० ), पार्श्वे इति द्विवचनं न्याय्यम् । मध्ये भवं मध्यमं, मध्यान्मः ( सू० ) । अवलगत्यवलग्नमतिकृशत्वात् । विलग्नं च । मन्यते मध्यम् । परौ भुजो बाहुश्च ॥ ७९ ॥ भुज्यतेनया भुजा, भुजन्युब्जाविति ( सू० ) साधुः । वहति वाहते प्रयतते वा बाहुः, बाहृ प्रयत्ने । प्रवेष्टते प्रवेष्टः । द्यति ददाति वा दोः, सान्तः । कं फणति कफोणिः । कुरति कूर्परः, बाहूपबाहुसंधेररत्निसंज्ञस्य पश्चाद्भागः, तथा च– कफोणिः कूर्परोऽरत्नेः पृष्ठमिति **नाममाला** । अस्य कूर्परस्योर्ध्वे, प्रगण्यते प्रगण्डयते वा प्रगण्डो बाहुः । कूर्परस्याधः, प्रकुष्यते प्रकोष्ठ उपबाहुः, यत्कात्यः– प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोः ॥ ८० ॥ मणेर्बन्धोत्र मणिबन्धो भुजपाण्योः संधिः । तस्मादारभ्याकनिष्ठायाः करभः, करे भातीति आङ्भिविधौ ( सू० ) । शेतेस्मिन्सर्वं शयः, शम इत्येके, **नाममाला** तूभयं पपाठ– पाणिः शमः शयो हस्त इति । पणन्तेनेन पाणिः । हस्तकरौ नानार्थे । मणिबन्धः पाणिमूले । तर्जयत्यनया तर्जनी । प्रदिशत्यवश्यं प्रदेशिनी ॥ ८१ ॥ अङ्गुं पाणिपादं लात्यङ्गुली । अङ्गौ तिष्ठत्यङ्गुष्ठः, सुपिस्थइति ( सू० ) कः, अम्बाम्बगोभूमीति ( सू० ) षत्वम् । अनामिका नामग्रहणायोग्या, ब्रह्मणोनया शिरश्छेदनादत एवास्यां पवित्रं क्रियते । कनिष्ठाल्पत्वा । ता अङ्गुष्ठाद्याः पञ्चाङ्गुल्यः ॥ ८२ ॥ नास्ति खमस्य नखः, नभ्राणनपादिति

पुनर्भवः कररुहो नखोस्त्री नखरोस्त्रियाम् ।
प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ॥ ८३ ॥
अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः ।
पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ॥ ८४ ॥
द्वौ संहतौ सिंहतलप्रतलौ वामदक्षिणौ ।
पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान् ॥ ८५ ॥
प्रकोष्ठे विस्तृतकरे हस्तो मुष्ट्या तु बद्धया ।
स रत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥ ८६ ॥
व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् ।
ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु ॥ ८७ ॥
कण्ठो गलोथ ग्रीवायां शिरोधिः कन्धरेत्यपि ।
कम्बुग्रीवा त्रिरेखा सावटुर्घाटा कृकाटिका ॥ ८८ ॥
वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।
क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ॥ ८९ ॥

---

( सू० ) साधुः, न खनति याति वा । नखं राति नखरः, न खन्यते वा, डडरेकवका ( खनेर्डडरेकेकव-कावाच्याः ) । पुनर्नवः कररुह इत्येके पेठुः । त्रिभुवनचरणत्वाभावः । कामाङ्कुशोपि । तर्जन्या युते तते प्रसारितेङ्गुष्ठे मध्यं, प्रादिश्यते प्रादेशः । मध्यमया युतेङ्गुष्ठे तते तालः, तल प्रतिष्ठायाम् । अना-मिकया युते ततेङ्गुष्ठे, गोकर्णाकृतिर्गोकर्णः ॥ ८३ ॥ सह कनिष्ठया ततेङ्गुष्ठे वितस्तिः, वितस्यतीति । दिष्टिश्च । द्वादशाङ्गुल इति सिद्धस्यानुवादः । चप्यतेनेन चपेटः, चपेटापि । प्रसृतं तलमस्य प्रतलः । प्रसृतो हस्तोस्य प्रहस्तः ॥ ८४ ॥ द्वौ प्रसृततलौ संहतौ सिंहतलाख्यौ, सिंहो हि मिलिताभ्यां चपेटाभ्यां हन्ति, संहतलो वा- इत्येके संहतं संघट्टं लातीति । संकुचितो हस्तस्तालादिना, प्रक्षियत इति प्रसृतः. प्रसृतिश्च । निकुञ्ज इत्यपपाठः । प्रकुब्जस्त्वर्धप्रसृतिः । तौ युतौ प्रसृतौ पार्श्वश्लिष्टौ लौकिकोञ्जलिः, अङ्क्ते( अज्यते )नेनेति, अम्यते जलमनेनेति **नैरुक्ताः** । नाट्ये तु- पताकाभ्यां तु हस्ता-भ्यां संश्लेषादञ्जलिः स्मृतः ॥ ८५ ॥ बाहौ( प्रकोष्ठे ) प्रसारितपाणौ हस्तश्चतुर्विंशत्यङ्गुलं मानम् । स हस्तः, रत्नेः पुंस्त्वार्थो वा । रमन्तेस्मिन्मल्ला रत्निः, सह रत्न्या मुष्ट्या वर्तत इत्येके । नास्ति रत्निर्मु-ष्टिरस्यारत्निः, निष्क्रान्ता कनिष्ठास्मिन्निष्कनिष्ठो मुष्टिस्तेनोपलक्षितः स हस्तोऽरत्न्याख्यः ॥ ८६ ॥ व्यामीयते रज्ज्वाद्यनेन व्यमति वा व्यामः. स्व स्व पार्श्वे प्रसारितयोर्बाह्वोर्मध्यम् । ऊर्ध्वं विस्तृतो दोः पाणिश्च नुः पुंसो यत्र तन्मानमध्ये पौरुषं नाम मानम्, पुरुषोर्ध्वमानं तत्पौरुषमित्येके, पुरुषहस्तिभ्यामण्च ( सू० ) । द्वादशाङ्गुलं तु पौरुषं छायामानम् ॥ ८७ ॥ कणति कण्ठते वा कण्ठः । गिलति गलो ग्रीवाग्रभागः । गृणाति गिरति वा ग्रीवा । शिरो धीयतेस्यां शिरोधिः । कं धारयति कंधरा, संज्ञायां भृतॄवृजीति ( सू० ) खच् । शंखाकृतिर्ग्रीवा कम्बुग्रीवाख्या, असौ त्रिवलया चेति । न वदत्यवति वावटुः । घटयति घाटा । कृकं शिरोग्रीवमटति कृकाटिका ग्रीवापश्चाद्भागः ॥ ८८ ॥ उच्यतेनेन वक्त्रम् । अस्यन्ते-स्मिन्नास्यम्, कृत्यल्युटोबहुलं (सू०) इति ण्यत्, मुखं मुखान्तरालं च द्वयमास्यमिति **शाश्वतः** । उद्यतेनेन वदनम् । तुण्ड्यतेनेन तुण्डं, तुडि तोडने । अनिति श्वसित्यनेनाननम् । लप्यतेनेन लपनम् । खन्यतेनेन मुखं, डित्खनेर्मुट्सचोदात्तः ( उ० ), मुदितानि खान्यत्रेत्येके । जिघ्रत्यनेन घ्राणम् । घोणति भ्रमति गन्धार्थं घोणा । नासते नासिका, कुल्या गन्धवहा घोणा घ्राणं नासा च नासिकेति **मुनिः** कुल्यामप्याह । सिङ्घा[ घि ]णी च ॥ ८९ ॥ उच्यते तीक्ष्णाहारेणौष्ठ इत्युभयार्थोपि- अधरस्याग्निष्याद्दुत्तरौ-

ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ।
अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परो हनुः ॥ ९० ॥
रदना दशना दन्ता रदास्तालु तु काकुदम् ।
रसज्ञा रसना जिह्वा प्रान्तावोष्ठस्य सृक्किणी ॥ ९१ ॥
ललाटमलिकं गोधिरूर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियाम् ।
कूर्चमस्त्री भ्रुवोर्मध्यं तारकाक्ष्णः कनीनिका ॥ ९२ ॥
लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।
दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमश्रु च ॥ ९३ ॥
अपाङ्गौ नेत्रयोरन्तौ कटाक्षोपाङ्गदर्शने ।
कर्णशब्दग्रहौ पुंसि श्रुतिः स्त्री श्रवणं श्रवः ॥ ९४ ।
उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ।
चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ॥ ९५ ॥
तद्वृन्दे कैशिकं कैश्यमलकाश्चूर्णकुन्तलाः ।
ते ललाटे भ्रमरकाः काकपक्षः शिखण्डकः ॥ ९६ ॥

---

ष्ठेत्र वर्तते । अधो भवोऽधरः । ओष्ठाभ्यां सहितावधरौ वा, अधरोप्योष्ठमात्रे वर्तते । ओष्ठाधः, चीव्यते चिबुकं हन्वग्रसंधिः । गण्डति संहन्यते गण्डः । कम्पते कपोलः । तदधो गल्लः । तत्परस्तत्पश्चाद्भागे कपोलाधः, हन्त्याहारं हनुः, पुंस्यपि ॥९०॥ रद्यते विलिख्यतेमीभी रदनाः । दश्यते दम्यते चामीभिर्दशना दन्ताश्च । रदन्ति लिखन्ति रदाः । तलत्याहारोऽस्मिंस्तालु । ईषत्कवते काकुं ददाति वा काकुदम् । रस्यतेनया रसना । लेढि जिह्वा । लोला च । घण्टिकान्तर्गलशुण्डिका । ओष्ठस्येति जातावेकवचनम् । सृजति लालां सृक्कि, सृक्कणी इत्यपि क्वचित्कन्नन्तत्वात् ॥ ९१ ॥ ललत्यत्रालंकारः, ललश्चटुलस्तिलकोऽत्यत्र वा ललाटम् । अल्यते भूष्यतेलिकं, अलीकं च । गुध्यते पट्टादिना वेष्ट्यते गोधिः । भालं च । भ्रमति भ्रूः, नेत्रोर्ध्वे रोमराजिः । कूर्ममिति भागुरिः, तन्न, लक्ष्यादर्शनात्, एवं कूर्चम् । तारयति तमसस्तारका, तारकाज्योतिषीतीत्वाभावः ( वा० ) । अक्ष्ण इति खेचरीव्यवच्छेदः । ( कनीनिका ) कनी दीप्तौ ॥९२॥ लोच्यतेनेन लोचनं विलोचनं च । नीयतेनेन दृश्यं नयनं नेत्रं च । ईक्ष्यतेनेनेक्षणम् । चष्टे वक्ति चक्षुः । अक्ष्णोत्यक्षि, द्वन्द्वाच्चक्षुः क्लीबे । दृश्यतेनया दृक्, द्वन्द्वात्स्त्रियाम् । अस्यतेस्रु, अस्रं च । अश्नुत आकण्ठमश्रु । बाष्पो नानार्थे ॥ ९३ ॥ बाह्याविति शेषः । अपकृष्टावङ्गादपाङ्गौ । कटे क्षिपति कटाक्षः, अपाङ्गेन दर्शनं यत्र, नेत्रविभागाख्यम् । कीर्यते शब्दोऽस्मिन्कर्णः । शब्दस्य ग्रहोनेन शब्दग्रहः । श्रूयतेनया श्रुतिः । शृणोति श्रवः, असन्त. क्लीबे । श्रोत्रं च ॥ ९४ ॥ शीर्यते जरसा शिरः । एवं कुमारशीर्षयोर्णिनिः ( सू० ) इति लिङ्गाच्छीर्षं प्रकृत्यन्तरम् । मूर्च्छति मूर्धा, पुमान् । मस्यति परिणमते मस्तकम् । कं वराङ्गं च नानार्थे । चीयते चिकुरः, चिहुरः प्राकृते कस्य हादेशात्, संस्कृतेपीति दुर्गः— कुन्तला मूर्धजाः स्रस्ताश्चिकुराश्चिहुराः कचा इति । कुन्ताकारं लाति कुणति वा कुन्तलः । वल्यते वालः, ज्वलादित्वण्णो वा ( ज्वलितिकसन्तेभ्योणः ) । कचति कचः । के शेते केशः । शिरसिजश्च ॥ ९५ ॥ केशानां समूहे, अचित्तहस्तिधेनोष्ठक् ( सू० ), केशाश्वाभ्यांयञ्छावन्यतरस्याम् ( सू० ) । अल्यन्ते भूष्यन्तेलकाः । चूर्णकाख्याः केशाः ( चूर्णकुन्तलाः ), चर्चराख्याः । कुरलाश्च । भ्राम्यन्ति भ्रमरप्रतिकृतयो वा (भ्रमरकाः) । काकस्येव पक्षः । शिखेव डयते शिरसि खण्डयते वा शिखण्डकः । क्षत्रियाणां चूडा काकपक्ष इति गौडः ॥ ९६ ॥ कृणवर्णा,कं शृणोति वा कवरी, जानपदकुण्डगोणेति ( सू० ) ङीष् । वेषो रचना ।

कबरी केशवेषो(शो)थ धमिल्लः संयताः कचाः ।
शिखा चूडा केशपाशी व्रतिनस्तु सटा जटा ॥ ९७ ॥
वेणिः प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे ।
पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥ ९८ ॥
तनूरुहं रोम लोम तद्वृद्धौ स्म(श्म)श्रु पुंमुखे ।
आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥ ९९ ॥
दशैते त्रिष्वलंकर्तालंकरिष्णुश्च मण्डितः ।
प्रसाधितोलंकृतश्च भूषितश्च परिष्कृतः ॥ १०० ॥
विभ्राड् भ्राजिष्णुरोचिष्णू भूषा तु स्यादलंक्रिया ।
अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ॥ १०१ ॥
मण्डनं चाथ मुकुटं किरीटं पुंनपुंसकम् ।
चूडामणिः शिरोरत्नं तरलो हारमध्यगः ॥ १०२ ॥
वालपाश्या पारितथ्या पत्त्रपाश्या ललाटिका ।
कर्णिका तालपत्त्रं स्यात्कुण्डलं कर्णवेष्टनम् ॥ १०३ ॥

---

संयता बद्धाः । ऊर्ध्वे मिलति धम्मिल्लो जूटाख्यः, धमिः सौत्रो वा । धम्मेर्ल इति सभ्याः । शेते मूर्ध्नि शीय( शय्य )ते वा शिखा, शीङोह्रस्वश्च ( उ० ) । चोड्यते चूडा । प्रशस्ताः केशाः केशपाशी । शिखेत्येव, ( सटा ) षट अवयवे । (जटा) जट संघाते ॥ ९७ ॥ ( वेणिः ) वेणृ गतौ । शिरसि भवः शीर्षण्यः, शरीरावयवाच्च ( सू० ) इति यत्, येचतद्धिते ( सू० ) इत्यत्र वाकेशेष्विति ( वा० ) शिरसः शीर्षन् वक्तव्यः । विशदेन्योन्यासंपृक्ते–अविकृते स्नानादिनिर्मले वा, शद्ऌ शातने । कचादित्यर्थनिर्देशः, केशपाशः, केशपक्षः, केशहस्तः, प्रशंसावचनैश्च ( सू० ) इति समासः ॥ ९८ ॥ शिरसोन्यत्र रोहति रोम । रलयोरैक्याल्लोम, लूयते वा । पुरुषमुखे रोमवृद्धिः, समश्नुते स्मश्रु । दाढिकापि । व्यञ्जनं नानार्थे । आकल्प्यत आकल्पः । वेवेष्टयङ्गं वेषः, विशति चेतसीत्येके तालव्यं शमाहुः, कर्मवेशाद्यत् (सू०) इत्यत्र तथा विचारात् । नेत्रयोः पथ्यं ( नेपथ्यं ) वस्त्रादिशोभा । प्रत्यङ्गं कर्म प्रतिकर्म । प्रसाध्यतेनेनाङ्गं प्रसाधनम् । पञ्चैकार्था इत्येके तच्चासत्, वेषो हि वस्त्रालंकारमाल्यप्रसाधनैरङ्गशोभा, प्रसाधनं तु समालम्भनं तिलकपत्त्रभङ्गादिना ॥ ९९ ॥ एते वक्ष्यमाणा रोचिष्ण्वताः । ( अलंकरिष्णुः ) अलंकृञ्-निराकृञ्इति ( सू० ) इष्णुच् । परिष्क्रियते स्म, संपर्युपेभ्यइति ( सू० ) सुट् ॥ १०० ॥ भ्राजते तच्छीलो भ्राजिष्णुः, भुवश्च ( सू० ) इति चाद् ( भ्राजतेः ) इष्णुच् । ( अलंक्रिया ) अलंकारसाध्या शोभा । करणे घञ्ल्युटौ ॥ १०१ ॥ मौलिर्नानार्थे । मुखे कुव्यते मुकुटं, मङ्क्यतेनेन वा ( मकुटं ) । कीर्यते किरीटम् । कोटीरं च । मणिरिति शेषः, तरतीव तरलः । नायको नानार्थे ॥ १०२ ॥ वालपाशे साधुर्वालपाश्या, वालबन्धनार्थं मुक्तावलयः, उत्फुल्ललतिकादि, वालेषु पाशसमूहो वा । परितस्तथा भवा पारितथ्या, पार्यो तथ्या वा, सीमन्तादिः । पत्त्रपाशानां समूहः पत्त्रपाश्या । ललाटस्यालंकारो ललाटिका, कर्णललाटात्कनलंकारे ( सू० ) । कर्णालंकारस्तालपत्त्रवत्सौवर्णोपि । कुण्डं लाति वृत्तत्वात्कुण्डलम् । कर्णौ वेष्ट्यतेनेन कर्णवेष्टनम् । भिन्नरूपास्त्रयः कर्णालंकारा इत्येके ॥ १०३ ॥ ग्रीवाया अलंकारो ग्रैवेयकं,

ग्रैवेयकं कण्ठभूषा लम्बनं स्याल्ललन्तिका ।
स्वर्णैः प्रालम्बिकाथोरःसूत्रिका मौक्तिकैः कृता ॥ १०४ ॥
हारो मुक्तावली देवच्छन्दोसौ शतयष्टिकः ।
हारभेदा यष्टिभेदाद् गुच्छ(त्स)गुच्छा(त्सा)र्धगोस्तनाः ॥ १०५ ॥
अर्धहारो माणवक एकावल्येकयष्टिका ।
सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ॥ १०६ ॥
आवापकः पारिहार्यः कटको वलयोस्त्रियाम् ।
केयूरमङ्गदं तुल्ये अङ्गुलीयकमूर्मिका ॥ १०७ ॥
साक्षराङ्गुलिमुद्रा सा कङ्कणं करभूषणम् ।
स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना स्त्रियाम् ॥ १०८ ॥
क्लीबे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु ।
पादाङ्गदे तुलाकोटिर्मञ्जीरो नूपुरोस्त्रियाम् ॥ १०९ ॥
हंसकः पादकटकः किंकणी क्षुद्रघण्टिका ।
त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दश त्रिषु ॥ ११० ॥
वाल्कं क्षौमादि फालं तु कार्पासं बादरं च तत् ।
कौशेयं कृमिकोशोत्थं राङ्कवं मृगरोमजम् ॥ १११ ॥

---

कुक्षिग्रीवाभ्यइति (सू० ) ढकञ् । लडल्यलंकारान्ते ललन्तिका । सिंहावलोकितेन कृतेत्येव । स्वर्णमयी कण्ठभूषा प्रालम्बिकेत्येव ॥ १०४ ॥ ह्रियतेनेन चित्तं हारः । देवानां छन्दोभिप्रायोत्र । यष्टिर्लता सरः सरिरित्येकार्थाः, यदाहुः– चतुःषष्टिलतो हारोथाष्टहीना म्योत्तरम् । रश्मिः कलापो माणवकोर्धहारोर्धगुच्छकः । कलापच्छन्दो मन्दरश्च गुच्छः सप्ततियष्टिकः । अन्ये त्वाख्यन्– द्वात्रिंशल्लतो गुच्छो, गुह्याच्छादनात् । चत्वारिंशल्लतो गोस्तनो लम्बमानात्, गोपुच्छोपि ॥ १०५ ॥ चतुःपञ्चाशल्लतोर्धहारो देवच्छन्दार्धत्वात् । विंशतिलतो माणवकोल्पत्वात् । एका– आवलते (अत्र ) । सैव– एकावली ॥ १०६ ॥ हस्तसूत्राह्वयः, आ–उप्यत आवापकः । परिह्रियते परिहारे भवो वा पारिहार्यः । कटति कटकः । वलते वलयः । के बाहुशीर्षे यौति केयूरम् । अङ्गं दयतेङ्गदम् । अङ्गुल्यां भवमङ्गुलीयकं, जिह्वामूलाङ्गुलेश्छः ( सू० ), स्वार्थे कन् । ऊर्मिप्रतिकृतिरूर्मिका ॥ १०७ ॥ अङ्गुल्या मोदयते मुद्रयति वाङ्गुलिमुद्रा, सा– ऊर्मिका । आहुश्च– कङ्कणं स्यात्प्रातिसरः, कं शुभं कणति कङ्कते सराति वा । मीयते प्रक्षिप्यते मेखला । कञ्च्यते बध्यते काञ्ची । सपति समवैति सप्तकी । रशन्ति तां ( रशना ), रश कान्तौ सौत्रः । सिञ्जिनी च । कलापो नानार्थे ॥ १०८ ॥ सारं सनोति सारसनं स्त्रीकट्यां वस्त्रग्रन्थनम् । उच्चयो नीवी च । पुंस्कट्यां या काञ्ची सा शृङ्खला, शृङ्गैः खलतीति । पादेङ्गदमिव पादाङ्गदम् । तुलाकृतेर्जङ्घायाः कोटिरिव तुलाकोटिः । मञ्जु मधुरमीरयति मञ्जीरः । नुवति नूपुरः,णू स्तवने ॥ १०९ ॥ हंसवत्कायति हंसकः । अवान्तरभेदस्त्वेषां भरतोक्तो ज्ञेयः । किञ्चित्क्वणति किंकणी, किंकिणील्येके । क्षुद्राल्पा घण्टिका घुघुरकाख्या । प्रह्वणकवाक्यमिदम् ( त्वक्फलकृमिरोमाणीति ) । त्वगादयो वस्त्रस्य योनिरुपादानकारणं, आविष्टलिङ्गत्वम् । वाल्कक्षौमफालकार्पासबादरकौशेयराङ्कवानाहतनिष्प्रवाणितन्त्रकाणि वाच्यलिङ्गानि ॥ ११० ॥ वल्कस्य त्वचो विकारो वाल्कम् । क्षुमाया विकारः क्षौमम् । आदिशब्दाद् भ(भा)ङ्गादि । फलस्य विकारः फालम् । कोशस्येदं कौशेयं नेत्रपट्टादि, कोशाड्ढञ् ( सू० ) । रङ्कुर्मृगविशेषः, कच्छादिभ्यश्च ( सू० ) इत्यण् ॥ १११ ॥

अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे ।
तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ॥ ११२ ॥
पत्त्रोर्णं धौतकौशेयं बहुमूल्यं महाधनम् ।
क्षौमं दुकूलं स्याद् द्वे तु निवीतं प्रावृतं त्रिषु ॥ ११३ ॥
स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयो द्वयोः ।
दैर्घ्यमायाम आनाहः परिणाहो विशालता ॥ ११४ ॥
पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ ।
वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम् ॥ ११५ ॥
सुचेलकः पटोऽस्त्री ना वराशिः( सिः ) स्थूलशाटकः ।
निचोलः प्रच्छदपटः समौ रल्लककम्बलौ ॥ ११६ ॥
अन्तरीयोपसंव्यानपरिधानान्यधोंशुके ।
द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥ ११७ ॥
संव्यानमुत्तरीयं च चोलः कूर्पासकोऽस्त्रियाम् ।
नीशारस्तु प्रावरणे हिमानिलनिवारणे ॥ ११८ ॥

---

छेद: क्षालनं भोगश्चाहननं तद्रहितमनाहतम् । प्रोयतेस्यां प्रवाणी तन्तुवायशलाका सा निर्गताऽस्य ( निष्प्रवाणि ), निष्प्रवाणिश्च ( सू० ) इति साधुः । तन्त्रादचिरापहृते ( सू० ) इति कनि तन्त्रकः । उद्गम्यतेभिलष्यते– उद्गमनीयम् । युगमविवक्षितं, यल्लक्ष्यम्– गृहीतपत्युद्गमनीयवस्त्रेति ( कु० सं० ) ॥ ११२ ॥ लकुचवटादिपत्त्रेषु कृमिलालोर्णाकृतं पत्त्रोर्णम्, पृषोदरादित्वात् ( समासः ) । क्षुमाया विकारः क्षौमम् । दुह्यते क्षुमाया आकृष्यते दुकूलम् । निवीयत आच्छाद्यते निवीतम्, व्येञ् संवरणे, निवृतमिति **मुनिः** ॥ ११३ ॥ दश्यन्ते दशाः, पुंसीत्येके । वस्यते याभिस्ता वस्तयः, अच्छिन्नदशस्य वस्त्रस्याच्छादनाम्नानात्, वर्तय इत्येके । आनह्यतेनेनानाहः, सर्वत्रेदम् । (परिणाहो विशालता) विस्ताराख्या ॥ ११४ ॥ पट इवाचरति पटति, सर्वप्रातिपदिकेभ्यःक्विब्वा (वा०) इत्येके, ततः शत्रन्ताद् भूतपूर्वेचरट् ( सू० ) । नक्तं भवो नक्तकः, नजते वा, ओणजी व्रीडे, द्रवद्रव्यं येन पूयते तत्र रूढोयं तत्तुल्येपि वस्त्रे वर्तते । कल्पते कर्पटः । वस्यतेनेनाङ्गं वासः, असन्तं क्लीबे । चिल्यते चेलम्, चैलमित्यसत्, चिल वसने । अंशूंस्तन्तून्कायत्यंशुकम् । प्रोतः सिचयश्चीरं च ॥११५॥ पटति विस्तीर्यते पटम्, अस्त्रीति चिन्त्यं द्वयोर्दर्शनात् । वृणोत्यङ्गं वराशिः, ना पुंलिङ्गः । चत्वार एकार्था इत्येके । निचोल्यतेनेन निचोलः येन तूलशय्यादि प्रच्छाद्यते, चुलिः सौत्रश्चुडेर्लत्वं वा । रमतेस्मिन् रल्लकः । काम्यते कम्बलः, कम्बलः कमनीयो भवतीति निर्वचनात् ॥११६॥ अन्तरे भवमन्तरीयं, गहादित्वाच्छः (सू०) । उपसंवीयतेनेनाङ्गमुपसंव्यानम् । प्राव्रियतेनेनाङ्गं प्रावारः, वृणोतेराच्छादने (सू०) घञ् । उत्तर ऊर्ध्वाङ्ग आसज्यत उत्तरासङ्गः । (बृहतिका) बृहत्याआच्छादने ( सू० ) कन् ॥ ११७ ॥ संवीयतेनेन संव्यानम् । उत्तर ऊर्ध्वे भवमुत्तरीयम् । चोल्यते छाद्यतेनेन चोलः, आप्रपदीनं कञ्चुकम् । कूर्परेस्यते कूर्पासः स्त्रीणां कञ्चुलिकाख्यः । निशीर्यते शीतायनेन नीशारः, शृवायुवर्णनिवृतेष्विति ( वा० ) घञ्, यल्लक्ष्यम्– गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः ॥११८॥ ऊर्वोरर्धाच्छादकमंशुकमर्धोरुकम् । चण्डं भगमतति चण्डातकं, यस्य चलनकोपभ्रंशः । पादाग्रं प्रपदं,

अधोंरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम् ।
स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ॥ ११९ ॥
अस्त्री वितानमुल्लोचो दूष्याद्यं वस्त्रवेश्मनि ।
प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा ॥ १२० ॥
परिकर्माङ्गसंस्कारः स्यान्मार्ष्टिर्मार्जना मृजा ।
उद्वर्तनोत्सादने द्वे क्लीबे आप्लाव आप्लवः ॥ १२१ ॥
स्नानं चर्चा तु चार्चिक्यं स्थासकोऽथ प्रबोधनम् ।
अनुबोधः पत्त्रलेखा पत्त्राङ्गुलिरिमे स्त्रियौ ॥ १२२ ॥
तमालपत्त्रतिलकचित्रकाणि विशेषकम् ।
द्वितीयं च तुरीयं च न स्त्रियामथ कुङ्कुमम् ॥ १२३ ॥
काश्मीरजन्माग्निशिखं वरं वाह्लीकपीतनम् ।
रक्तसंकोचपिशुनं वी( धी )रलोहितचन्दनम् ॥ १२४ ॥
लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः ।
लवङ्गं देवकुसुमं श्रीसंज्ञमथ जायकम् ॥ १२५ ॥

---

आ प्रपदादाप्रपदं, आप्रपदंप्राप्नोति ( सू० ) इति खः ॥ ११९ ॥ वितन्यते वितानः । उपरि लोच्यत उल्लोचः, उल्लोच्यतेपनीयतेनेनातपादि वा, चन्द्रकाख्यः । कदर्कोपि । दूष्यतेनेनान्यदर्शनं दूष्यम् । आद्य-शब्दात्पटकुटी । पटकुडयं गुणशालि[ लय ]नी स्थूला[ लं ] च । प्रतिसिनोति प्रतिबध्नाति प्रतिसीरा । जवन्त्यस्यां जवनिका । तिरस्करोति छादयति तिरस्करिणी काण्डपटाख्या । क्वचित्– पर्यङ्किका परिकरः पर्यङ्कश्चावसक्थिका । अञ्चलं त्वंशुकान्ते नीवी सारसनमुच्चयः ॥ १२० ॥ मलपरिमार्जनार्थे क्रिया परि-कर्म स्नानोद्वर्तनादि । मार्जनं मार्ष्टिः शुद्धिमात्रम्, वसेस्तिः ( उ० ) इति बाहुलकात्तिः, व्रश्चभ्रस्जेति ( सू० ) षः, मृजेर्वृद्धिः ( सू० ) । मृजति षिद्भिदादित्वादङ् ( सू० ) । उत्साद्यते मलोनेनोत्सादनम् । छद अपवारणे, उच्छादनमिति तु सभ्याः । ( आप्लवः, आप्लवः ) विभाषाङिरुप्लुवोरिति ( सू० ) वा घञ् । मज्जनं च ॥ १२१ ॥ चर्च्यतेनयाङ्गं चर्चा । चर्चिकायां चर्चने साधु चार्चिक्यं चन्दनादिना पुण्ड्रादि । तिष्ठत्यङ्गे स्थासकः । चर्चिक्यं त्वपभ्रष्टम् । अनुबोधः, यथा कस्तूरिकादेर्मेद्यादिना । पत्त्राकृ-तिर्लेखा ( पत्त्रलेखा ) । (पत्त्राङ्गुलिः) द्राविडकादि( षु ) लिङ्गादिभेदेन कपोले पत्त्रभङ्गः ॥ १२२ ॥ तमालपत्त्राकृति कस्तूर्या ललाटे तमालपत्त्रम् । तिलकाकृति तिलकम् । चित्रकं नानावर्णम् । विशिनष्टि विशेषकम् । इत्थं तिलकभेदा एते, पर्यायत्वं त्वदूरविप्रकर्षात् । अत्र द्वितीयचतुर्थौ तिलकविशेषकौ पुंन-पुंसकयोः । पुण्ड्रं च । कुं कौति कुङ्कुमम् ॥ १२३ ॥ अग्नेरिव शिखा केसरोस्याग्निशिखम् । व्रियते वरं, प्रहवृद– इत्यप् ( सू० ) । वह्लीकदेशजं ( वाह्लीकं ), यद्रघोरुत्तरदिग्विजये– दुधुवुर्वाजिनः स्कन्धाल्लग्न-कुङ्कुमकेसरान् । पीतयत्यङ्गं पीतनम् । रञ्जनाद्रक्तम्, अत एवासृक्संज्ञम् । संकोचस्य पिशुनं सूचकम् । वीरं स्थिररागम् । लोहितं चन्दनमिव । वर्ण्यं च । घुसृणं देश्यम् ॥ १२४ ॥ लक्ष्यते लाक्षा । रक्षति देहं राक्षा, रातिलात्योर्वा । जायते जतु । यौति यावकः । न लजते स्म– अलक्तकः, अलति वा । द्रुमस्या-मय इव निर्यासः । **धन्वन्तरिस्तु**– लाक्षा पलंकषा राक्षा दीप्तिश्च कृमिजं जतु । कृतघ्नानङ्गमाता च द्रुमव्याधिरलक्तकः ॥ लूयते लवङ्गम् । देवद्युतिमत्कुसुमं देवानां वा । ( श्रीसंज्ञं ) श्रीपर्यायम् । ( जा-यकं जायकाख्यपर्वतभवम् ॥ १२५ ॥ ( कालीयकं ) कालवर्णसारम् । वंशाभं वंशकम्, वंशिकेत्येके ।

कालीयकं च कालानुसार्यं चाथ समार्थकम् ।
वंशकागुरुराजार्हलोहकृमिजजोङ्गकम् ॥ १२६ ॥
कालागुर्वगुरु स्यात्तु मङ्गल्या मल्लिगन्धि यत् ।
यक्षधूपः सर्जरसो रालसर्वरसावपि ॥ १२७ ॥
बहुरूपोऽप्यथ वृकधूपकृत्रिमधूपकौ ।
तुरुष्कः पिण्डकः सिह्लो यावनोऽप्यथ पायसः ॥ १२८ ॥
श्रीवासो वृकधूपोऽपि श्रीवेष्ट( पिष्ट )सरलद्रवौ ।
मृगनाभिर्मृगमदः कस्तूरीचाथ कोलकम् ॥ १२९ ॥
कक्कोलकं कोशफलमथ कर्पूरमस्त्रियाम् ।
घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका ॥ १३० ॥
गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्
तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ॥ १३१ ॥
तिलपर्णी तु पत्त्राङ्गं रञ्जनं रक्तचन्दनम् ।
कुचन्दनं चाथ जातीकोशजातीफले समे ॥ १३२ ॥
कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः ।
गात्रानुलेपनी वर्तिर्वर्णकोऽस्त्री विलेपनम् ॥ १३३ ॥

---

न गुरु–अगुरु । कालागुरु काकतुण्डाख्यम् । रोहति लोहम् । कृमिभिर्जन्यते कृमिजम् । जोङ्गकं गिरिजम् । आहुश्च– अगुरु प्रवरं लोहं कृमिजगधमनार्यजमिति (शाश्वतः) ॥१२६॥ मल्लिकापुष्पगन्ध्यगुरु मङ्गल्याख्यम् । यक्षान्धूपयति यक्षधूपः । सर्जवृक्षस्य रसः सर्जरसः । राति प्रीतिं रालः, रालापि ॥ १२७ ॥ बहुरूपो नानाकृतिगन्धः । वृकान्धूपयाति वृकधूपः । तुरुष्को यवनदेशजः । पिण्डको द्रव्यान्तरैः सह पिण्डितः स्वरूपान्न च्यवते । सिह्लाख्यो वृक्षः, षिल उञ्छे, सुगन्धिप्रस्तावात्पुनरिहोक्तः। पयसो द्रुमक्षीरस्य विकारः स्रुतिः पायसः ॥ १२८ ॥ श्रिया वासो वेष्टश्च निर्यासः, वेष्टते वेष्टः । सरलस्य देवदारुभेदस्य द्रवो निर्यासः । विकसति सौगन्ध्यमस्याः कस्तूरी, के स्तूयते वा । कोलमिव कोलकम् ॥ १२९ । ककन्ते कक्, ( ककं ) कोलति संस्त्यायति कक्कोलकम् । कोशे फलान्यस्य कोशफलम् । कल्पते कर्पूरः । घनस्येव सारोऽस्य शैत्यात् सिताभ्रत्वाच्च । चन्द्रपर्यायो ह्लादकत्वात् । हिमा शीतला चासौ वालुका च हिमवालुका ॥ १३० ॥ भद्रा श्रीरस्य । चन्द्यते ह्लाद्यतेनेन चन्दनम् । तैलपर्णगोशीर्षौ गिरी आकरावस्य । हरेरिन्द्रस्य चन्दनं, हरि कपिलं वा, तच्चातिशीतलं पीतमाहुः । श्रीखण्डं च ॥ १३१ ॥ तिलस्येव पर्णान्यस्याः तिलपर्णी नदी– आकरोऽस्या इत्येके । पत्त्रेष्वङ्गति पत्त्राङ्गम् । पतङ्गं च पत्त्राङ्गापभ्रंशोऽयम् । ( कुचन्दनं ) कौ चन्दनम् । जातीलतायाः कोशं जातीसस्याख्यम् ॥ १३२ ॥ एतैः पिण्डीकृतैर्यक्षप्रियः पङ्कः । सकुङ्कुमैरित्यागमः, **धन्वन्तरिस्तु**– कुङ्कुमागुरुकस्तूरीकर्पूरं चन्दनं तथा । महासुगन्धमित्युक्तं नामतो यक्षकर्दमः ॥ द्वौ द्वौ भिन्नार्थावित्येके । वर्तिर्हि नटादौ प्रसिद्धा ॥ १३३ ॥ चूर्णं पटवा-

चूर्णानि वासयोगाः स्युर्भावितं वासितं त्रिषु ।
संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् ॥ १३४ ॥
माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः ।
प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ललामकम् ॥ १३५ ॥
प्रालम्बमृजुलम्बि स्यात्कण्ठाद्वैकक्षकं तु तत् ।
यत्तिर्यक् क्षिप्तमुरसि शिखास्वापीडशेखरौ ॥ १३६ ॥
रचना स्यात्परिस्यन्द आभोगः परिपूर्णता ।
उपधानं तूपबर्हः शय्यायां शयनीयवत् ॥ १३७ ॥
शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समा ।
गेन्दुकः कन्दुको दीपः प्रदीपः पीठमासनम् ॥ १३८ ॥
समुद्गकः संपुटकः प्रतिग्राहः पतद्ग्रहः ।
प्रसाधनी कङ्कतिका पिष्टातः पटवासकः ॥ १३९ ॥
दर्पणे मु(म)कुरादर्शौ व्यञ्जनं तालवृन्तकम् ॥ १४० ॥

इति नृवर्गः । ६

---

सादिक्षोदः । वास्यते सुगन्धीक्रियते यैर्युज्यमानैर्मिश्रैस्ते वासयोगाः । भाव्यते मल्यते भावितं, भुवोऽवकल्कने णिच् (धा० सू० ) । वास्यते छाद्यते स्म, वस स्नेहच्छेदापहरणेषु । गन्धद्रव्यैर्भावितं पुष्पाद्यैर्वासितमित्येके । संस्कारास्तिलादीनां गुणाधानम् । आद्यशब्दाद्धूपादिभिः । मालैव माल्यं, चातुर्वर्ण्यादित्वात्ष्यञ् ( चतुर्वर्णादीनांस्वार्थउपसंख्यानम् ) । माल्यते धार्यते माला । सृज्यते स्रक्, ऋत्विग्दधृगिति ( सू० ) साधुः । माल्यमित्येव, गर्भस्थत्वाद्गर्भकः । माल्यमित्येव, मध्यात्प्रभ्रष्टकम् । ललत्यग्रे ललामकं मुण्डमालाह्वयम् ॥ १३५ ॥ कण्ठाद्वक्षस्यवलम्बमानं माल्यं प्रालम्बम् । विकक्षायां भवं वैकक्षकं, यज्ञोपवीतन्यायेन माल्यम् । माल्यमित्येव, आपीड्यत आपीडः । शेते शिरसि शेखरः । उत्तंसोऽपि ॥ १३६ ॥ शिल्पादिना रचना, अन्यापि । आभुज्यतेनेनाभोगः । उपधीयतेऽस्मिन् शिर उपधानम् । उपवृह्यतेनेनोपबर्हते वा– उपबर्हः शिरोनिवेशनम् । शेरतेत्र शय्या, संज्ञायांसमजेतिक्यप् ( सू० ) । ( शयनीयं ) कृत्यल्युटोबहुलम् ( सू० ) इत्यधिकरणेऽनीयर् । तूलिकापि ॥ १३७ ॥ मञ्च्यते धार्यतेनेन मञ्चः । पर्यङ्क्यते पल्यङ्कः, परेश्चघाङ्कयोरिति ( सू० ) वा लत्वम् । खटत्येनां श्रान्तः खट्वा । गाते गाः, गच्छन्निन्दुको गुडको गेन्दुकः, गिन्दुक इत्येके, ( गे ) गगने– इन्दुरिवेति वा । कन्द्यतेर्थ्यते क्रीडार्थिभिः कन्दुकः, कं शिरो दुनोति वा नमनोन्नमनेक्षणात् । बांटा भारते । च्युतादानक्रीडायां गुलिका गिरिकश्च तौ । ( प्रदीपः ) प्रः स्वार्थे मेरुसुमेरुवत् । [ कज्जलध्वजः, दशेन्धनो गृहमणिः स्नेहाशश्च ] । पीयत उपवेशनेन ग्रस्यते पीठम् ॥ १३८ ॥ समुद्यते समुद्गच्छति वा समुद्गकः । संपुट्यते श्लेष्यते संपुटकः, भूषणाद्यावपनम् । प्रतिगृह्णात्यविलकादि प्रतिग्राहः, विभाषाग्रहः ( सू० ) इति णः । पतद् गृह्णाति पतद्ग्रहः । कर्षण्याख्या, प्रसाध्यन्तेनया केशाः । कङ्कते कङ्कती, कङ्कान्दन्तांस्तनोति वा । पिष्टेन कुङ्कुमचूर्णादिनाताति पिष्टातः । पटो वास्यतेनेन पटवासः ॥ १३९ ॥ दृप्यन्त्यनेन सुवेषा दर्पणः । मङ्क्यते मण्ड्यतेनेन मु(म)कुरः । आदृश्यते रूपमस्मिन्नादर्शः । आत्मदर्शोऽपि । व्यजति वातोनेन विक्षिप्यते वा व्यजनम् , तालस्येव वृन्तमस्य तालवृन्तम् । तालस्यवृन्तैरुम्भ्यत इत्येके [ तालवृन्ताभास्त्यस्येत्येके ] ॥ १४० ॥ इति नृवर्गः । ६

संततिर्गोत्रजननकुलान्यभिजनान्वयौ ।
वंशोन्ववायः सन्तानो वर्णाः स्युर्ब्राह्मणादयः ॥ १ ॥
विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् ।
राजबीजी राजवंश्यो बीज्यस्तु कुलसंभवः ॥ २ ॥
महाकुलकुलीनार्यसभ्यसज्जनसाधवः ।
ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥ ३ ॥
आश्रमोस्त्री द्विजात्यग्रजन्मभूदेववाडवाः ।
विप्रश्च ब्राह्मणासौ षट्कर्मा यागादिभिर्युतः ॥ ४ ॥
विद्वान् विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः ।
धीरो मनीषी ज्ञः प्राज्ञः संख्यावान्पण्डितः कविः ॥ ५ ॥
धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ।
दूरदर्शी दीर्घदर्शी श्रोत्रियश्छान्दसः समौ ॥ ६ ॥

---

संतन्यतेनया संततिः । गूयते जन्यते कुल्यते वानेन । अन्वीयतेन्वयः । वश्य[न्य]ते जन्यते वंशः । अन्ववैत्यन्ववायः । व्रियन्ते वर्ण्यन्ते वा वर्णाः ॥ १ ॥ चत्वार एव वर्णाः, स्वार्थे ष्यञ् ( चतुर्वर्णादीनां स्वार्थउपसंख्यानम् ) । राजबीजमस्यास्ति राजबीजी । राजवंशे साधुर्भवो वा राजवंश्यः । बीजे साधुर्भवो वा यथा, सूर्यबीज्यो रामः, यप्रकरणे– अन्येभ्योपिदृश्यते (वा०) ॥ २ ॥ कुलस्यापत्यं कुलीनः । आरात्पापकेभ्यः कर्मभ्यो यात आर्यः, अरणीयो गम्यो वा । सभायां साधुः सभ्यः । संश्चासौ जनश्च सज्जनयते वा सज्जनः । साध्नोति परकार्यं साधुः । आमुष्यायणोमुष्यपुत्रश्च । ब्रह्म वेदा ब्रह्म तपो ब्रह्म ज्ञान च शाश्वतं, तच्चरत्यर्जयत्यवश्यं ब्रह्मचारी वर्णी । गृही गृहमेधी गृहाश्रमी ज्येष्ठाश्रमी । प्रतिष्ठन्तेस्मिन्प्रस्थः, वनप्रस्थे भवो वानप्रस्थो वैखानसाख्यः । भिक्षते तच्छीलो भिक्षुर्यतिः, सनाशंसभिक्षउः ( सू० ) । अस्मिंश्चतुष्के, आश्राम्यन्ति तपस्यन्त्यस्मिन्नाश्रमं प्रत्येकं वर्तते ॥ ३ ॥ मातुर्यदग्रे जननं द्वितीयं मौञ्जीबन्धनादिति द्विजातिः । अग्रे– आदौ– अग्रान्मुखाद्वा जन्मास्य, यच्छ्रुतिः– ब्राह्मणोस्य मुखमासीत् । वाडव इवातृप्तः । विशेषेण प्राति पूरयति विप्रः, विपाति विपति पापं वा विप्रः, विप क्षेपे । ब्रह्मणोपत्यं ब्राह्मणः । जातिमात्रोपजीवी स्याद्विप्रस्तु ब्राह्मणब्रुवः । षट् कर्माणि ब्राह्मणस्य– अध्ययनमध्यापनं यजनं याजनं दानं प्रतिग्रहश्चेति ॥ ४ ॥ वेत्ति विद्वान्, विदेःशतुर्वसुः ( सू० ) । विपश्यंश्चिन्तयते विपश्चित् । दोषाञ्जानाति ज्ञात्वा जह्यादिति दोषज्ञः । सन् विद्यमान उत्तम इत्यर्थः, अन्ये ह्यसत्कल्पाः । शोभनं ध्यायति सुधीः, अन्येभ्योपिदृश्यते ( सू० ) इति क्विप् संप्रसारणं च । ओकः स्थानं वेत्ति कोविदः, कुङ् शब्देस्माद्वा । धियमीरयति धीरः । मनस ईष्टे, मनीषास्त्यस्य वा मनीषी । जानातीति ज्ञः, इगुपधेति ( सू० ) कः । प्रज्ञ एव प्राज्ञः, प्रज्ञादिभ्यश्च ( सू० ) इत्यण्, प्रज्ञास्त्यस्य वा, प्रज्ञाश्रद्धेति ( सू० ) णः । सम्यक् ख्यानं ज्ञानमस्त्यस्य संख्यावान्, संख्या विचारणा वा । पण्डते जानाति पण्डितः, पडि गतौ, सर्वे गत्यर्था ज्ञानार्था इति, पण्डा धीः संजातास्य वा । कवते वर्णयति कविः, कवितापि ॥ ५ ॥ सुवति सूरिः । कृतमस्यास्तीति कृती कृतकृत्यः । कर्षति विविङ्क्ते कृष्टिः । लब्धं वर्णनं प्रसिद्धिर्येन स लब्धवर्णः । विचष्टे विचक्षणः । ( दूरदर्शी ) अप्रत्यक्षमूहत इत्यर्थः । ( श्रोत्रियः ) श्रोत्रियंश्छन्दोधीते ( सू० ), श्रोत्राभ्यां कृतकर्मेति । छन्दोधीते छान्दसः । मीमांसको जैमिनीये वेदान्ती ब्रह्मवादिनि । वैशेषिके स्यादौलूक्यः सौगतः शून्यवादिनि ॥ नैय्यायिकस्त्वाक्षपादः स्यात्स्याद्वादिक आर्हतः । चार्वाकलौकायतिकौ सत्कार्यौ साङ्ख्यकापिलौ ॥ ६ ॥ उपेत्याधीयतेस्मादुपाध्यायः, इङ-

उपाध्यायोऽध्यापकोऽथ स्यान्निषेकादिकृद् गुरुः ।
मन्त्रव्याख्याकृदाचार्य आदेष्टा त्वध्वरे व्रती ॥ ७ ॥
यष्टा च यजमानश्च स सोमवति दीक्षितः ।
इज्याशीलो यायजूको यज्वा तु विधिनेष्टवान् ॥ ८ ॥
स गीष्प( र्प )तीष्ट्या स्थपतिः सोमपीथी तु सोमपाः ।
सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥ ९ ॥
अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः ।
लब्धानुज्ञः समावृत्तः सुत्वात्वभिषवे कृते ॥ १० ॥
छात्रान्तेवासिनौ शिष्ये शैक्षाः प्राथमकल्पिकाः ।
एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ॥ ११ ॥
सतीर्थ्यास्त्वेकगुरवश्चितवानग्निमग्निचित् ।
पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ॥ १२ ॥

---

श्चेति ( सू० ) घञ् । गृणात्युपदिशति गुरुः, यन्मनुः– निषेकादीनि कर्माणि यः करोति यथाविधि । संभावयति चान्नेन स विप्रो गुरुरुच्यते ॥ निषेको गर्भाधानविधिः । आदिशब्दात्पुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौडोपनयनादीनि । आचरणीयः सेव्य आचार्यः, आचारं ग्राहयतीति **नैरुक्ताः**, मन्त्र( व्याख्या )कृद्वेदाध्यापनाद्विशिष्टाख्याकृदुपनयनेन द्विजत्वापादनात्, यदाह– उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ स्वाम्येनादिशत्यादेष्टा, आदिष्टीति पाठे– आदिष्टमनेनेति, इष्टादिभ्यश्च ( सू० ) इतीनिः, क्तस्येन्विषयस्यकर्मण्युपसंख्यानात् ( वा० ) सप्तमी । व्रती सनियमः ॥ ७ ॥ यजते यजमानः, पूङ्यजोःशानन् ( सू० ) । स व्रती सोमवत्यध्वरे दीक्षिताख्यः, दीक्षा संजातास्येति । सोमयागनग्निष्टोमादिक्रतुः, यद् **गौतमः**– अग्निष्टोमोत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सोमसंस्था । यजनमिज्या, व्रजयजोर्भावेक्यप् (सू०) । अत्यर्थं यजति तच्छीलो यायजूकः, यजजपदशांयङः ( सू० ) इत्यूकः । ( यज्वा ) सुयजोर्ङ्वनिप् ( सू० ) ॥ ८ ॥ स यज्वा बृहस्पतिसवनहेतुना, स्थापयतीति स्थपतिः । पानं पीथः, पातॄतुदिवचीतिथक् ( उ० ), घुमास्थेतीत्वम् ( सू० ), सोमपीती तु प्राच्याः पेठुः । सर्वदायं, दीक्षितस्तु तत्कालम् । सर्वं विन्दत्यस्मात्सर्ववेदाः, असुन् ॥ ९ ॥ अनूक्तवान्, उपेयिवाननाश्वाननूचानश्च ( सू० ) इति कानचि साधुः । प्रोच्यते प्रवचनं वेदः । अधीतमनेनाधीती, इष्टादिभ्यश्च ( सू० ) इतीनिः, क्तस्येन्विषयस्यकर्मण्युपसंख्यानात्सप्तमी ( वा० ) । अधीत्य गुर्वाज्ञया गुरुगृहाद्यः समावर्तते स समावृत्तः– स्नातकाख्यः, गुरुगेहादनावृत्तस्नातको हि न कथ्यते ॥ सुनोति सुत्वा सुयजोर्ङ्वनिप् ( सू० ) । अभिषवः सोमकुट्टनसंधानम् ॥ १० ॥ छत्रमिव शीलमस्य छात्रः, छत्रादिभ्योणः ( सू० ), छत्रेण गुरुसेवा लक्ष्यते । गुरोरन्ते वसत्यन्तेवासी– शयवासवासिष्विति ( सू० ) सप्तम्या अलुक् । शासनीयः शिष्यः । शिक्षायां भवाः शैक्षाः । प्रथमकल्प आद्यारम्भः प्रयोजनमेषां तमधीयते वा प्राथमकल्पिकाः । तुल्यवेदास्तुल्यव्रतास्तुल्याचाराश्चान्योन्यं, समानं ब्रह्म चरन्ति सब्रह्मचारिणः, ब्रह्म वेदो ब्रह्म तपो ब्रह्म ज्ञानं च शाश्वतमिति, एकस्मिन्वेदे व्रतमाचरन्ति वा, व्रते ( सू० ) इति णिनिः, चरणेब्रह्मचारिणि ( सू० ) इति समानस्य सः ॥ ११ ॥ ( सतीर्थ्याः ) समानतीर्थेवासी ( सू० ) इति यत्, तीर्थेये ( सू० ) इति सत्वम् । तरन्त्यनेनाविद्यां तीर्थं गुरुः । अग्निं चितवानग्निचित्, अग्नौ चेरिति ( सू० ) क्विप् । इत्येवं ह किलेति मुखपारंपर्यं स्थितमितिह, ततः स्वार्थे पक्षे– अनन्तावसथेतिहभेषजाञ्ञ्यः ( सू० ) ॥ १२ ॥ उपज्ञायत इत्युपज्ञा, इदं प्रथमतया ज्ञानं, चन्द्रस्योपज्ञा

उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वारम्भ उपक्रमः ।
यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ॥ १३ ॥
पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः ।
एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः ॥ १४ ॥
समज्या परिषद् गोष्ठी सभासमितिसंसदः ।
आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥ १५ ॥
प्राग्वंशः प्राग्घविर्गेहात्सदस्या विधिदर्शिनः ।
सभासदः सभास्तारा: सभ्याः सामाजिकाश्च ते ॥ १६ ॥
अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् ।
आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते ॥ १७ ॥
वेदिः परिष्कृता भूमिः समे स्थण्डिलचत्वरे ।
चषालो यूपकटकः कुम्बा सुगहना वृतिः ॥ १८ ॥

---

चन्द्रोपज्ञसंज्ञकं व्याकरणम् । उपज्ञाय– आरम्भणमुपक्रमः, यत्कात्यः– यस्मात्प्रवृत्त आरम्भः स उपक्रमः, नन्दस्योपक्रमः– नन्दोपक्रमाणि मानानि, उपज्ञोपक्रमंतदाद्याचिख्यासायाम् ( सू० ) इति नपुंसकत्वम् । इज्यते यज्ञः, यजयाचेति ( सू० ) नङ् । सूयते सोमोऽस्मिन्सवः । अध्वानं रात्यध्वरः, न ध्वरति वा, ध्वृ हूर्छने । सप्ततन्तुः सप्तभिश्छन्दोभिस्तन्यत इति । मखति धर्मे मखः । क्रियते क्रतुः ॥ १३ ॥ स्वाध्यायो ब्रह्मयज्ञः, होमो देवयज्ञः, अतिथिपूजनं नृयज्ञः, तर्पणं श्राद्धाख्यं पितृयज्ञः, बलिर्भूतयज्ञः, यन्मनुः– अध्याप( य )नं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ १४ ॥ समजन्ति मिलन्त्यस्यां समज्या, संज्ञायांसमजनिषदेति ( सू० ) क्यप् । परिषीदन्त्यस्यां परिषद्, पर्षच्च । गावो नानोक्तयस्तिष्ठन्त्यस्यां गोष्ठी । सह भान्त्यस्यां सभा । संयन्त्यस्यां समितिः । संसीदन्त्यस्यां संसद् । आतिष्ठन्त्यस्यामास्थानी । सीदन्त्यस्मिन् सदः, असुन्, सान्तः क्लीबे ॥ १५ ॥ वंशः कुलं स्थूणा वा । प्राग्वंशोऽत्र प्राग्वंशः पत्नीशालाख्योऽग्निशालायाः प्राग्यो भागः । सदसि साधवः, ऊनाधिक्यजागरूका ऋत्विग्भेदाः सदस्याः । सभायां सीदन्ति सभासदः । सभां स्तृण्वन्ति सभास्ताराः । समाजं समवयन्ति सामाजिकाः, समवायान्समवैतीति ( सू० ) ठक् । पार्षद्याः पारिषद्याः सभाशूराश्च ॥ १६ ॥ ऋत्विज इत्येव । अध्वरं याति न ध्वरति वाध्वर्युर्नामर्त्विग्विशेषः, स यजुर्वित्कठः स्यात् । उद्गायत्युद्गाता छन्दोगः स्यात् । जुहोति होता बह्वृचः स्यात् । अग्नीनिन्द्धेऽग्नीद्, तस्य ( अग्नीधः ) शरणमाग्नीध्रः, अग्नीधःशरणेरञ्भंच ( वा० ) इति रञ् । आद्यशब्दात्पोतृप्रशास्तृब्राह्मणाच्छंस्यच्छावाग्ग्रावस्तुद्ब्रह्ममैत्रावरुणप्रतिप्रस्थातृप्रतिहन्तृनेष्टृनेतृसुब्रह्मण्याः । इत्थं सदस्याः सप्तदशर्त्विजः । एतिस्तुशास्वृदृजुषइति ( सू० ) वृञो ग्रहणाद् वृङोपि, व्रियन्त इति वार्याः, ऋहलोर्ण्यत् ( सू० ) । वृताः कुर्वन्ति ये यज्ञमृत्विजस्त इति कात्यः । ऋतौ यजतीति ऋत्विक्, ऋत्विग्दधृगिति ( सू० ) साधुः ॥ १७ ॥ विदन्त्येनां वेदिः, परिष्कृता चातुरस्रेण भूषिता यागार्थम् । अपरिष्कृतां त्वाह, तिष्ठन्त्यस्मिन्स्थण्डिलम् । चत्यते चत्वरम्, यागार्थमसंस्कृता भूमिः । तक्ष्णा घटितो यूपाग्रे कटकाकृतिः, चष्यत उत्कीर्यते चषालः । ( कुम्बा ) कुबि छादने, चिन्तिपूजिकथिकुम्बीचर्चश्च (सू०) । व्रियतेऽनया वृतिः, यज्ञवाटे पर्णिका ॥ १८ ॥

यूपाग्रं तर्म निर्मन्थ्यदारुणि त्वरणिर्द्वयोः ।
दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥ १९ ॥
अग्नित्रयमिदं त्रेता प्रणीतः संस्कृतोनलः ।
समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः ॥ २० ॥
योगार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ।
तस्मिन्नानाय्योथाग्नायी स्वाहा च हुतभुक्प्रिया ॥ २१ ॥
ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने ।
गायत्रीप्रमुखं छन्दो हव्यपाके चरुः पुमान् ॥ २२ ॥
आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः ।
धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा ॥ २३ ॥
पृषदाज्यं सदध्याज्ये परमान्नं तु पायसम् ।
हव्यकव्ये दैवपित्र्ये अन्ने पात्रं स्रुवादिकम् ॥ २४ ॥
ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः ।
उपाकृतः पशुरसौ योभिमन्त्र्य क्रतौ हतः ॥ २५ ॥

---

तरन्त्यनेन यूपं तर्म । निर्मन्थनीयं दारु यतोग्निर्जायते, इयर्त्यग्निर्यतः सोऽरणिः । दक्षिणोग्निर्दक्षिणाग्निः । गृहपतिना संयुक्तो गार्हपत्यः, गृहपतिनासंयुक्तेञ्यः ( सू० ) । आहोतव्य आहवनीयः ॥ १९ ॥ त्रीनि-ता त्रेता, पृषोदरादित्वादेत्वम् ( सू० ) । प्रणयनं मन्त्रादिना संस्कारैः प्रादुष्करणम् । अग्नौपरिचाय्योपचाय्यसमूह्याः ( सू० ) इति निपात्यन्ते, समूह्यते ढौक्यत इत्यग्निः समूह्यः परिचीयते परिचाय्य उपचीयत उपचाय्य इत्यग्निनामधेयानि प्रयोगविषयाणि ॥ २० ॥ आनाय्योऽनित्यइति ( सू० ) साधुः, आनीयत आनाय्यः, प्रणीयते दाक्षिणाग्नित्वेन संस्क्रियते । ( अग्नायी ) वृषाकप्यग्निकुसीदेति ( सू० ) ङीप्प्रसङ्गे- ऐत्वम् । सुष्ठु- आहूयते स्वाह, स्वाहास्त्यस्या वा ॥ २१ ॥ समिधामाधानी सामिधेनी, समिधामाधानेषेण्यण् ( वा० ) । धीयतेनया धाय्या, पाय्यसान्नाय्यनिकाय्येति ( सू० ) साधुः । गायन्तं त्रायते गायत्री । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टिधृत्यतिधृतिकृतिविकृतिसंकृत्यतिकृत्युत्कृत्याख्यं षडक्षरादारभ्य षड्विंशत्यक्षरं यावत्, छन्दति (चन्दते) छन्दः । अक्षरनियमात्मकं लघुगुरुनियमात्मकं च वृत्तं तनुमध्यादि । हव्यस्य पाको हव्यपाकः । पक्कं होतव्यं, चरुः चर्यते भक्ष्यते[रध्यते] इति । स्थाल्यपि चरुः, हव्यकव्यपाकोत्रेति ॥ २२ ॥ पक्के तप्ते च क्षीरे दधियोजनादामिक्षा, पक्के पयसि दध्यानयति सा वैश्वदेव्यामिक्षेति श्रुतिः, आमीयते प्रक्षिप्यते दध्यत्रेति । धूयतेग्निर्येनेति धवित्रं, आर्तिलूधूस्वितीत्रः ( सू० ) ॥ २३ ॥ पृषद्भिर्दधिबिन्दुभिः सहितमाज्यं पृषदाज्यम् । पयसि संस्कृतं पायसम् । अग्निमुखेन देवेभ्योन्नं हव्यं, ब्राह्मणमुखेन पितृभ्योन्नं कव्यं, कूयते शब्द्यते पितृभिः कव्यम् । उभयमुभयत्रेति तु श्रुतिज्ञाः । पिबन्त्यस्मात्पात्रम् । आदिग्रहणात्स्रुग्ग्रहादि ॥ २४ ॥ ध्रुवति ध्रुवा । [ उपाभ्रियतेनया ] उपभृत् । हूयतेनया जुहूः । एते च स्रुचो विशेषाः स्त्रीलिङ्गाः । स्रवत्यस्मात्स्रुवस्तु स्रुग्विशेषः पुंलिङ्गः । उपामन्त्र्य क्रियते हन्यते स्म ( उपाकृतः ), यज्ञ इति शेषः ॥ २५ ॥ परंपरामकति परंपराकम् । शसनमिति तु युक्तः पाठः, शसु

परंपराकं शमनं प्रोक्षणं तत्र यो वधः ।
वाच्यलिङ्गाः प्रमीतोपसंपन्नप्रोक्षिता हते ॥ २६ ॥
सान्नाय्यं हविरग्नौ तु हुतं त्रिषु वषट्कृतम् ।
दीक्षान्तोवभृथो यज्ञस्तत्कर्मार्हं तु यज्ञियम् ॥ २७ ॥
त्रिष्वथ क्रतुकर्मेष्टं पूर्तं खातादिकर्मणि ।
अमृतं विघसो यज्ञशेषभोजनशेषयोः ॥ २८ ॥
त्यागो विहापितं दानमुत्सर्जनविसर्जने ।
विश्राणनं वितरणं स्पर्शनं प्रतिपादनं ॥ २९ ॥
प्रादेशनं निर्वपणमपवर्जनमंहतिः ।
मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदै(दे)हिकम् ॥ ३० ॥
पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः ।
अन्वाहार्यं मासिकेंशोष्टमोह्नः कुतपोस्त्रियाम् ॥ ३१ ॥
पर्येषणा परीष्टिश्चान्वेषणा च गवेषणा ।
सनिस्त्वध्येषणा याच्ञाभिषस्तिर्याचनार्थना ॥ ३२ ॥

---

हिंसायाम् । प्रोक्षणं लक्षणया वधः, प्रोक्ष्य हि यज्ञे पशुर्हन्यते । यज्ञ इति शेषः । ( प्रमीतः ) मीञ् हिंसायाम् ॥ २६ ॥ संनीयते ( सान्नाय्यं ), पाय्यसान्नाय्येति ( सू० ) साधुः । हूयते हविः । वषण्मन्त्रलिङ्गेन कृतं हुतं वषट्कृतम् । अवाभ्रियते पूर्यतेनेनावभृथः । यज्ञकर्मार्हतीति यज्ञियं, यज्ञर्त्विग्भ्यांघखञौ ( सू० ), यज्ञर्त्विग्भ्यांतत्कर्मार्हतीत्युपसंख्यानात् ( वा० ) घः ॥ २७ ॥ इज्यते स्मेष्टं यागादि, यदाह– एकाग्निकर्म हवनं त्रेतायां यच्च हूयते । अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते । पिपर्ति स्म पूर्तं, नध्याख्यापॄमूर्च्छिमदामिति ( सू० ) निष्ठानत्वाभावः । खातं वाप्यादि, आह च– वापीकूपतडागानि देवतायतनानि च । अन्नप्रदानमारामः पूर्तमार्याः प्रचक्षते ॥ न म्रियते न नश्यत्यमृतम् । विशिष्टमदनं विघसः, उपसर्गेऽदः ( सू० ) इत्यप्, घञपोश्च ( सू० ) इति घस्लादेशः, यन्मुनिः– विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः । विघसो भुक्तशेषं स्याद्यज्ञशिष्टमथामृतम् ॥ २८ ॥ स्वत उपसर्गवशाच्चैते दानार्थाः । स्पर्शनं तूपचाराद्दानं, पुच्छादौ गवादि स्पृष्ट्वा हि दीयते । ओहाक् त्यागे । श्रण दाने ॥ २९ ॥ अंहयतेंहतिः । उत्सर्गोऽप्यपि । तदहे प्रेतदिने मृतमुद्दिश्य दानं पिण्डोदकादि, ऊर्ध्वदेहाद्भवमौर्ध्वदैहिकं, ऊर्ध्वदमाच्चदेहाच्चेति ( ग० ) ठञ्, अनुशतिकादित्वात् ( सू० ) उभयपदवृद्धिमाहुः ॥ ३० ॥ पितृभ्यो दानं, न्युप्यते निवापः । श्रद्धास्त्यत्र श्राद्धं पितृकर्म, प्रज्ञाश्रद्धार्चेति ( सू० ) णः । अन्वाह्रियतेन्वाहार्यममावास्याश्राद्धम् । कुं तपति सूर्योत्रेति कुतपो मध्याह्नात्प्रवृत्तः श्राद्धकालः, यत्स्मृतिः– दिवसस्याष्टमे भागे मन्दीभवति भास्करे । स कालः कुतपो यत्र पितृभ्यो दत्तमक्षयम् ॥ ३१ ॥ श्राद्धे द्विजशुश्रूषा ( पर्येषणा ), इषेरनिच्छार्थस्य ( वा० ) युज्वक्तव्यः, परेर्वा ( सू० ) । गवेष मार्गणे । गुर्वादेः क्वचिदर्थे प्रार्थनया नियोजनं सनिः, षणु दाने । याचनं याच्ञा, यजयाचेति ( सू० ) नङ् । (याचना ) ण्यासश्रन्थइति ( सू० ) बाहुलकाद्युच् । अभिशसनमभिशस्तिः, षस स्वप्ने ॥ ३२ ॥ आगन्त्वन्ताः षट्

षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि ।
क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि ॥ ३३ ॥
स्युरावेशिक आगन्तुरतिथिर्ना गृहागते ।
पूजा नमस्यापचितिः सपर्याचार्हणाः समाः ॥ ३४ ॥
वरिवस्या तु शुश्रूषा परिचर्याप्युपासनम् ।
व्रज्याटाट्या पर्यटनं चर्या त्वीर्यापथे स्थितिः ॥ ३५ ॥
उपस्पर्शस्त्वाचमनमथ मौनमभाषणम् ।
आनुपूर्व्यं स्त्रियां वावृत्परिपाटी अनुक्रमः ॥ ३६ ॥
पर्यायश्चातिपातस्तु स्यात्पर्यय उपात्ययः ।
नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम् ॥ ३७ ॥
औपवस्त्रं तूपवासो विवेकः पृथगात्मता ।
स्याद् ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिरथाञ्जलिः ॥ ३८ ॥

---

त्रिलिङ्गाः । वारिणीत्येव, पादार्घाभ्यांच (सू०) इति यत् । अतिथय इदमातिथ्यं, अतिथेर्ञ्यः (सू०) । अतिथौ साधु– आतिथेयं, पथ्यतिथीति (सू०) ढञ् । **कात्यस्त्वाह**– आवेशिकं विदश्चिद्भिरातिथ्यमभिधीयते, आतिथ्योतिथिरागन्तुरिति च **माला**, **शाश्वतोत** एवोभयमाह– आतिथ्यं स्यादतिथ्यर्थ आतिथ्यमतिथिं विदुः ॥ ३३ ॥ अवेशे– अप्रतिवेशे भव आवेशिकः, नैकग्रामीणमतिथिं विप्रं सांगतिकं तथेति स्मृतेः । नास्ति तिथिरस्यातिथिः, अतति सततं गच्छति वा, यत्स्मृतिः– अध्वनीनोतिथिर्ज्ञेयः, किं च– तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना । अतिथिः स हि विज्ञेयः शेषः प्राघूर्णकः स्मृतः । प्राघूर्णिकः प्राघुणकोप्यभ्युत्थानं तु गौरवम् ॥ (नमस्या) नमोवरिवश्चित्रङः क्यजिति (सू०) नमः पूजायां क्यच्, अप्रत्ययात् (सू०) । अपचायनमपचितिः, अपचितश्च (सू०) इत्यत्र चायतेः क्तिनि (तित्वं) चिभावोऽनिट्त्वं च वक्तव्यात् (वा०)। सपरे साधुः सपर्या, सह पर्यायक्रमेण वर्तते वा ॥ ३४ ॥ वरिवसः परिचर्यायां क्यच् (नमोवरिवश्चित्रङः क्यच्) । शुश्रूषा गुरुसेवात्र लक्षणया । परिचरणं (परिचर्या), परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम् (वा०), परिचर्या तु पर्येष्टिरिति **भागुरिः** । परिव्रज्या तपस्याथ रुद्रांकुशो विशाखिका । व्रजनं व्रज्या, व्रजयजोर्भावे क्यप् (सू०) । कुटिलमटनमटाट्या, सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनामुपसंख्यानाद्यङ्ण्यन्तात् (वा०), अट्यापि, यन्**मनुः**– तौर्यत्रिकं वृथाट्या च कामजो दशमो गुणः, स्त्रीत्वं च निवरा कन्येतिवत् । एवं गदमदचरेति (सू०) चर्या । ईर्यापथे ध्यानमौनादिके संबोधमार्गाख्ये भिक्षुव्रते स्थितिरनुष्ठानम्, चर्या त्वीर्या विदुर्बुधा इति **मुनिः** ॥ ३५ ॥ उपस्पृश्यन्तेऽद्भिः खान्यत्रोपस्पर्शः । आचम्यतेम्भोऽत्राचमनम् । मुनेर्भावः कर्म वा मौनं, इगन्ताच्चलघुपूर्वात् (सू०) इत्यण् । प्राचेतसस्त्वादिकविः स्यान्मैत्रावरुणश्च सः । वाल्मीकिश्चाथ गाधेयो विश्वामित्रश्च कौशिकः ॥ व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः ॥ पूर्वानुक्रमेणानुपूर्वं तस्य भावश्चानुपूर्व्यं, ष्यञ्, षित्वाद्वा स्त्रीत्वम् । आवर्तनमावृत् । उणादौ, परिपाटनं परिपाटिः, इञ्, आवृत्परिपाट्योर्द्वन्द्वात्स्त्रीत्वम् । ॥३६॥ पर्ययणं पर्यायः, परावनुपात्ययइणः (सू०) इति घञ । विपर्ययः क्रमोल्लङ्घनमतिक्रमश्च । व्र[वृ]ज्यते वर्ज्यतेऽन्नादि यत्रेति (व्रतम्) । तद्व्रतमुपवासकृच्छ्रचान्द्रायणादिकं पुण्यपर्यायम् (पुण्यकम्), संज्ञायांकन् (सू०) ॥३७॥ उपवस्ता प्राप्तोस्यौपवस्त्रं, उपवस्त्रादिभ्यः (सू०) इत्यण्, उपवस्तुस्येदमौपवस्तमित्येके, वसु स्तम्भे, क्तः, उपवस्तुरिदमित्यन्नाद्यपि, यत्स्मृतिः– माषान्मधु मसूरांश्च वर्जयेदौपवस्त्रके । प्रकृतिपुरुषयोः पृथग्ज्ञानं विवेकः, भावानां पृथक्स्वरूपत्वमित्येके, विचिर् पृथग्भावे । ब्रह्मणस्तपःस्वाध्यायादेर्वर्चस्तेजो ब्रह्मवर्चसं, ब्रह्महस्तिभ्यां वर्चसः (सू०) इत्यच् ॥ ३८ ॥ ब्रह्मणे वेदायाञ्जलिः, यन्**मनुः**– संहृत्य हस्तावध्येयं

पाठे ब्रह्माञ्जलिः पाठे विप्रुषो ब्रह्मबिन्दवः ।
ध्यानयोगासने ब्रह्मासनं कल्पे विधिक्रमौ ॥ ३९ ॥
मुख्यः स्यात्प्रथमः कल्पोनुकल्पस्तु ततोधमः ।
संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः ॥ ४० ॥
समे तु पादग्रहणमभिवादनमित्युभे ।
भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ॥ ४१ ॥
तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः ।
तपःक्लेशसहो दान्तो वर्णिनो ब्रह्मचारिणः ॥ ४२ ॥
ऋषयः सत्यवचसः स्नातकस्त्वाप्लुतो व्रती ।
ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ॥ ४३ ॥
यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ ।
स्थाण्डिलश्चाथ विरजस्तमसः स्युर्द्वयातिगाः ॥ ४४ ॥

---

स हि ब्रह्माञ्जलिः स्मृतः । वेदपाठे— आस्यनिर्गता जलकणा ब्रह्मबिन्दवः । ( ब्रह्मासनं ) ध्यानयोगयोरास्यतेनेन । ध्यानमेकाग्र( तया )चिन्तनं, यदाह— तत्र प्रत्ययैकतानता ध्यानम् । योगश्चित्तवृत्तिनिरोधः । कल्पते विधीयते प्रक्रम्यते वानेन विनियोगशास्त्रेणेति ॥ ३९ ॥ ( मुख्यः ) आद्यो विधिरित्यर्थः । ( अनुकल्पः ) मुख्याभावे प्रतिनिधिसंज्ञः । उपाक्रियतेनेनेत्युपाकर्म वेदपाठारम्भे विशिष्टो विधिः, रोहिण्यां छन्दांस्युपाकुर्यादिति हि श्रुतिः ॥ ४० ॥ वामेन वामः स्प्रष्टव्यो दक्षिणेन तु दक्षिण इति पादोपसंग्रहणम् । अभिवाद्यते— आशिषं कार्यतेनेनेत्यभिवादनम्, अत एवाभिवाद्योपसंग्राह्यः । भिक्षते भिक्षुः, सनाशंसभिक्षउः ( सू० ) । परिवर्ज्य सर्वं संन्यस्य व्रजति परिव्राट्, परौव्रजेःषश्चपदान्ते ( उ० ) इति क्विप् ( क्विर् ) षत्वं च । कर्मन्देन पाराशर्येण प्रोक्तं भिक्षुतन्त्रमधीते, कर्मन्दकृशाश्वादिनिः ( सू० ), पाराशर्यशिलालिभ्यांभिक्षुनटसूत्रयोः ( सू० ) इति णिनिः । मा कृ(कुरु)त कर्माणि मुक्ति[ शान्ति ]र्वः श्रेयसीति मस्करी, मस्करमस्करिणौवेणुपारिव्राजकयोः ( सू० ) इति साधुः ॥ ४१ ॥ तपोस्यास्तीति, तपःसहस्राभ्यांविनीनौ ( सू० ), अण्च ( सू० ) । अन्येषामपिदृश्यते ( सू० ) इति दीर्घात्पारिकाङ्क्षी । पारिराक्ष( क्ष )कः सांन्यासिकश्च । वाचं यच्छति मौनेनास्ते वाचंयमः, वाचियमोव्रते ( सू० ) इति खच् । मन्यते मुनिः । भिक्षुपर्यायावेतावित्येके । दाम्यति दान्तस्तपःक्लेशानुद्विग्नः, वादान्तशान्तेति ( सू० ) साधुः । वर्णोस्यास्तीति वर्णी, वर्णाद्ब्रह्मचारिणि ( सू० ) इतीनिः । ब्रह्म चरति तच्छीलो वा ब्रह्मचारी ॥४२॥ दर्शनाहृषेराविसंवादिवाक् (सत्यवचाः) । ( स्नातकः )स्नातवेदसमाप्तौ (ग०) इति यावादित्वात् ( सू० ) कन् । यो व्रतवांस्तीर्थेष्वाप्लवते स्नातीत्याप्लुतः स स्नातकः, यत्स्मृतिः— गुरवे तु धनं दत्त्वा स्नायाद्वा तदनुज्ञया । वेदव्रतानि वा पारं नीत्वा ह्युभयमेव च । यतं यमनमस्यास्तीति यती । यच्छत्युपरमति यतः ॥ ४३ ॥ आद्यस्य( स्थण्डिलशायिनः ), व्रते ( सू० ) इति णिनिः । परस्य ( स्थाण्डिलस्य ), स्थण्डिलाच्छयितरिव्रते ( सू० ) इत्यण् । विगते रजस्तमसी येभ्यः, सात्त्विका इत्यर्थः । द्वयमतिगच्छन्त्यतिक्रामन्ति द्वयातिगाः ॥ ४४ ॥ पूयतेनेन पवित्रः । प्रयतते प्रयच्छत्युपरमति वा

पवित्रः प्रयतः पूतः पाषण्डाः सर्वलिङ्गिनः ।
पालाशो दण्ड आषाढो व्रते राम्भस्तु वैणवः ॥ ४५ ॥
अस्त्री कमण्डलुः कुण्डी व्रतिनामासनं बृषी ।
अजिनं चर्म कृत्तिः स्त्री भैक्षं भिक्षाकदम्बकम् ॥ ४६ ॥
स्वाध्यायः स्याज्जपः सुत्याभिषवः सवनं च सा ।
सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ॥ ४७ ॥
दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् ॥ ४८ ॥
शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः ।
नियमस्तु स यत्कर्मानित्यमागन्तुसाधनम् ॥ ४९ ॥
उपवीतं यज्ञसूत्रं प्रोध्दृते दक्षिणे करे ।
प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम् ॥ ५० ॥

---

प्रयतः । शुचिः पुण्यः पावनश्च । पाष(प)मणन्ति पाषण्डा वेदबाह्यव्रताः सर्वलिङ्गिनः क्षपणकाद्याः । सर्वाणि लिङ्गानि सन्त्येषां, भग्नव्रता इत्येके, आहुश्च– नानाव्रतधरा नानावेषाः पाषण्डिनो मताः । आषाढासु जात आषाढः, विशाखाषाढादण्मन्थदण्डयोः ( सू० ), यदाह– आषाढो व्रतिनां दण्डः । व्रत इत्येव, रम्भो वेणुपर्यायः ॥ ४५ ॥ कं जलमण्डे मध्ये लाति कमण्डलुः । कुण्डात् जानपदकुण्डेत्यमत्रे ( सू० ) ङीष् । ब्रुवन्तोस्यां सीदन्ति बृषी । अज्यते क्षिप्यतेजिनम् । चरितं चर्म । कृत्यते कृत्तिः । ( भैक्षं ) भिक्षादिभ्योऽण् ( सू० ) ॥ ४६ ॥ स्वस्य वेदस्याध्ययनं स्वाध्यायः, इङश्चेति ( सू० ) घञ् । जपनं जपः, व्यधजपोरनुपसर्गे ( सू० ) इत्यप् । सोमं सुन्वन्त्यद्भिः परिस्रावयन्त्यस्यां सुत्या, संज्ञायांसमजेति ( सू० ) क्यप् । अभिषवणमभिषवः, उपसर्गात्सुनोतीति ( सू० ) षत्वम् । अघं मृष्यते शोध्यतेनेनाघमर्षणं, अब्दैवत्यो मन्त्रस्तद्रूपो वा, करणाधिकरणयोश्च ( सू० ) इति ल्युट्, त्रिरात्रोपवासादिस्तूपचारात् ॥ ४७ ॥ अमावास्या( यां ) दर्शः, दृश्यते चन्द्रोत्रेति, यागस्तूपचारात् । पूर्णिमायां पौर्णमासः, पूर्णो माश्चन्द्रस्तत्र भवः ॥ ४८ ॥ शरीरमात्रेणैव यत्क्रियते तत्, यम्यतेनेन चित्तं यमः, यमःसमुपानिविषुचेत्यप् ( सू० ), आह च– अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः । आगन्तु बाह्यं नृज्जलादि साधनं यत्रेति, अत एव कृत्रिमं कर्म नियमः, यदाह– शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ ४९ ॥ शैव ऊर्ध्वस्रोतासिकः सिद्धान्ती शुद्धमार्गिकः [ शुद्धान्ती सिद्धमार्गिकः ] । पाश्चार्थिकः पाशुपतो लाकुलेथ महाव्रती ॥ कापाली सोमसिद्धान्ती तान्त्रिकः स्याद्विशेषदृक् । यामलोद्वयमार्गी स्यात्त्रिकभेदी षडर्धिकः ॥ पूर्वाम्नायी महामार्गो भैरवी दाक्षिणागमः । शाक्तो वामस्रोतसिकः कौल आन्वयिको मतः । एकायनः शाश्व[सात्व]तश्च वैष्णवः पाञ्चरात्रिकः । रक्ताम्बरो भदन्तश्च शाक्यः श्रमणवन्दकौ । भिक्षुः श्वेतः श्वेतपटः क्षपणार्थीर्दिगम्बरः( र्दिगीश्वरः ) । नग्नाटः श्रावकोऽर्हाको निर्ग्रन्थो जीवजीवकौ ॥ [क्षौरं तु भद्राकरणं मुण्डनं वपनं त्रिषु । कक्षापटी च कौपीनं शाटी च स्त्रीति लक्ष्यतः ॥] उपवीयते प्राव्रियते स्मोपवीतम् [ यज्ञोपवीतं च ] । अन्यस्मिन्वामे करे प्रोध्दृते प्राचीनावीतं, प्रागेव प्राचीनं, विभाषाञ्चेरदिक्स्त्रियाम् (सू०) इति खः, आव्रीयते स्मावीतम् । यज्ञसूत्रमित्येव, नियतं वीयते स्म निवीतं, यन्मनुः– प्रोध्दृते दक्षिणे पाणावुपवीत्युच्यते द्विजः । सव्ये प्राचीनमावीती निवीती कण्ठसज्जने ॥ ५० ॥ देवेभ्य-

अङ्गुल्यग्रे तीर्थं दैवं स्वल्पाङ्गुल्योर्मूले कायम् ।
मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं मूले त्वङ्गुष्ठस्य ब्राह्मम् ॥ ५१ ॥
स्याद् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ।
देवभूयादिकं तद्वत्कृच्छ्रं सान्तपनादिकम् ॥ ५२ ॥
संन्यासवत्यनशने पुमान्प्रायोऽथ वीरहा ।
नष्टाग्निः कुहनालोभान्मिथ्येर्यापथकल्पना ॥ ५३ ॥
व्रात्यः संस्कारहीनः स्यादस्वाध्यायो निराकृतिः ।
धर्मध्वजी लिङ्गवृत्तिरवकीर्णी क्षतव्रतः ॥ ५४ ॥
सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।
अंशुमानभिनिर्मुक्ताभ्युदितौ तौ यथाक्रमम् ॥ ५५ ॥
परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ।
परिवित्तिस्तु तज्ज्यायान् विवाहोपयमौ समौ ॥ ५६ ॥

---

स्तीर्यते दीयते तीर्थम् । स्वल्पा कनिष्ठाङ्गुलिः, द्वित्वमञ्जलिमध्येन प्रजापतिभ्यो जलदानाम्नानात् । कः प्रजापतिर्देवतास्य कायं, कस्येत् (सू०) इत्यण्– इत्वं च । अङ्गुलिस्तर्जन्यत्र, पितरो देवतास्य पित्र्यं तीर्थं, वाय्वृतुपित्रुषसो यत् ( सू० ) । ब्रह्मा देवतास्य ब्राह्मं तीर्थं, ब्राह्मोजातौ ( सू० ) इति साधुः, **यद्याज्ञवल्क्यः**– कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ करमध्य सौम्यं त्वाहुः ॥ ५१ ॥ ब्रह्मणो ज्ञानस्य भवनं ब्रह्मभूयं, ब्रह्मणैकध्यं( कात्म्यं ) मोक्ष इत्यर्थः, भुवोभावे ( सू० ) इति क्यप् । सह युनक्ति सयुक्, तस्य भावः सायुज्यम् । तद्वदिति देवत्वं देवसायुज्यं च । आदिशब्दान्मूर्खभूयादि । कृन्तति पापं कृच्छ्रं नाम तपः । संतपने भवं सांतपनं, यत्स्मृतिः– त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम् । त्र्यहं परं च नाश्नीयात्कृच्छ्रं सांतपनं स्मृतम् ॥ आदिशब्दात्पराकादि ॥ ५२ ॥ संन्यसनं सर्वत्यागः, ( तद्युक्तः ) मरणाध्यवसायः ( प्रायः ) । पुमानिति प्रायस्य सान्तत्वं माविज्ञायीति, प्रायोपवेशनमतिर्नृपतिर्बभूव ( रघु० ) । नष्टाग्निः, वीरयते वीरोऽग्निस्तमुपेक्षया हन्ति ( वीरहा ) । ईर्यापथाख्यस्य भिक्षुव्रतस्य दम्भेन परविस्मापनार्थं मिथ्याकल्पना कुहना, कुह विस्मापने स्माद्युच् । अर्थलिप्सया विज्ञानदर्शनं वा कुहनिकाख्यम् । **शाश्वतस्त्वाह** –ईर्ष्यालुर्दम्भचर्या च कुहनः कुहना क्रमात् ॥ ५३ ॥ व्रते साधुः कालो व्रत्यः, तत्र भवो व्रात्यः प्रायश्चित्तार्हः, संस्कारोत्रोपनयनम्, यत्स्मृतिः– सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः, व्रतेऽसाधुरित्येके, पृथग्व्यपदेशेनेत्यर्थः । निराक्रियते वेदहीनत्वान्निराकृतिः, आकृतेर्जातेर्वा निष्क्रान्तः, **यत्स्मृतिः**– अनधीत्य तु यो वेदमन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ धर्मो ध्वजश्चिह्नमिवास्त्यस्य धर्मध्वजी । लिङ्गाज्जटादेर्वृत्तिर्जीविकास्य, भिक्षिष्य इत्यस्य जटा इति यावत् । अत्रान्तरे कीर्णं रेतोऽस्यावकीर्णी, **यत्स्मृतिः**– ब्रह्मचार्यवकीर्णी स्यात्कामतस्तु स्त्रियं व्रजेत् ॥ ५४ ॥ अभिभूय निर्मुक्तोऽस्तमितोऽर्कोऽस्याभिनिर्मुक्तः । अभिभूयोदितोऽर्कोऽस्याभ्युदितः ॥ ५५ ॥ ज्येष्ठे भ्रातर्यकृतविवाहे कनिष्ठो विवाहाद्धेतोः, परिवर्ज्य विन्दति परिवेत्ता, **यत्स्मृतिः**– येऽग्रजेष्वकलत्रेषु कुर्वते दारसंग्रहम् । ज्ञेयास्ते परिवेत्तारः परिवित्तिस्तु पूर्वजः ॥ उपलक्षणं चैतद्यतोऽग्निहोत्रव्रतादावपि परिवेदनव्यवहारोऽस्ति । तस्य ज्यायानग्रजः, परिवर्ज्य विन्दति स परिवित्तिः ॥ ५६ ॥ विवहनं विवाहः । उपयमनमुपयमः, यमः समुपनिविषु च ( सू० ) इति पक्षे– अप् ।

तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ।
व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ॥ ५७ ॥
त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः ।
सबलैस्तैश्चतुर्भद्रं जन्याः स्निग्धा वरस्य ये ॥ ५८ ॥

इति ब्रह्मवर्गः । ७ ।

मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ।
राज्ञि राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः ॥ १ ॥
राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः ।
चक्रवर्ती सार्वभौमो नृपोन्यो मण्डलेश्वरः ॥ २ ॥
येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।
शास्ति यश्चाज्ञया राज्ञः स सम्राडथ राजकम् ॥ ३ ॥

---

व्यवयनं व्यवायः । मिथुनस्य स्त्रीपुंसयोरिदं मैथुनम् । निधूयन्तेङ्गान्यस्मिन्निधुवनम् । रमणं रतम् । रतिः संवेशनं रहः सुरतं संमोहनं संप्रयोगोपि ॥ ५७ ॥ त्रिसंख्याको वर्गः, धर्मकामार्थैरित्येव । चतुर्णां भद्राणां समाहारश्चतुर्भद्रं, पात्रादिः ( पात्राद्यन्तस्य न ) । तैर्धर्मकामार्थैः, यत्कात्यः– आहुश्चत्वारि भद्राणि बलं धर्मं सुखं धनम् । जनीं वधूमर्हन्ति ( वहन्ति ), संज्ञायां जन्याः ( सू० ) इति साधुः । जामातुर्वयस्याः, जनीवोढारोपि, यल्लक्ष्यम्– यातेति जन्यानवदत्कुमारी ( रघु० ) ॥ ५८ ॥ इति ब्रह्मवर्गः । ७ ।

मूर्धन्यभिषिच्यते स्म, मूर्धावसिक्तोपि । राज्ञोपत्यं राजन्यः, राजश्वशुराद्यत् (सू०) इत्यत्र राज्ञोपत्ये जातिग्रहणम् । हिरण्यगर्भबाहुभ्यां जातो बाहुजः, बाहू राजन्यः कृत इति श्रुतेः । क्षत्त्रस्यापत्यं जातिः क्षत्त्रियः, क्षत्त्राद्घः ( सू० ) । क्षत्त्रं च क्षतत्राणात् । राजते राट्, व्रश्चभ्रस्जसृजमृजेति ( सू० ) षत्वं, झलांजशोन्ते ( सू० ) डत्वं, वावसाने ( सू० ) चर्त्वम् । पृथिव्या राजा पार्थिवः, सर्वभूमिपृथिवीभ्यामणञौ ( सू० ) । महीं क्षियत्यधिवसति महीक्षित् । [ नराधिपश्च ] ॥ १ ॥ अध्युपरीष्टे तच्छीलोधीश्वरः । अप्रतिरथोपि । नृपचक्रे राजके वर्तते स्वाम्येन, चक्रं राष्ट्रं वर्तयति वा चक्रवर्ती । सर्वस्या भूमेरीश्वरः सार्वभौमः, अनुशतिकादित्वात् ( सू० ) उभयपदवृद्धिः । अत्राहुः– रामो दाशरथी रावणारिकाकुत्स्थराघवाः । सौमित्रिर्लक्ष्मणो लङ्कापतिर्पौलस्त्यरावणाः ॥ दशास्योपीन्द्राजिन्मेघनादो मन्दोदरीसुतः । आञ्जनेयस्तु हनुमान्हनूमान्मारुतात्मजः । किष्किन्धाधिपसुग्रीवौ द्वौ जटायुजटायुषौ ॥ अजातशत्रुः शल्यारिर्धर्मपुत्रो युधिष्ठिरः । राधेयोङ्गाधिपः कर्णो भीमसेनो हिडिम्बजित् ॥ मारुतिः कीचकारातिर्बकवैरी वृकोदरः । धनंजयोर्जुनः पार्थो विजयः शक्रनन्दनः ॥ गाण्डीवी फाल्गुनः सव्यसाची मध्यमपाण्डवः । जिष्णुः किरीटी बीभत्सुः श्वेतवाजी कपिध्वजः ॥ पृथा कुन्ती च कृष्णा तु पाञ्चाली याज्ञसेन्यपि । द्रौपदी विक्रमादित्यः साहसाङ्कः शकान्तकः ॥ शूद्रकस्त्वग्निमित्रो वा हालः स्याच्छालिवाहनः [ सातवाहनः ] । वैरोचनो बलिः कार्तवीर्योर्जुनः सहस्रदोः ॥ अन्यो भूम्येकदेशे यो नृपः ( स मण्डलेश्वरः ) ॥ २ ॥ इज्यते स्मेष्टम् । मण्डलस्य द्वादशराजकस्य, समुदितं लक्षणं चैतत् । सम्यग्राजति सम्राट्, मोराजिसमःक्वौ ( सू० ) इति मस्य मः ॥ ३ ॥ राज्ञां समूहो राजकम्, राज-

राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात् ।
मन्त्री धीसचिवोमात्योन्ये कर्मसचिवास्ततः ॥ ४ ॥
महामात्राः प्रधानानि पुरोधास्तु पुरोहितः ।
द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ ॥ ५ ॥
प्रति(ती)हारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः ।
रक्षिवर्गस्त्वनीकस्थोथाध्यक्षाधिकृतौ समौ ॥ ६ ॥
स्थायुकोधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु ।
भौरिकः कनकाध्यक्षो रूप्याध्यक्षस्तु नैष्किकः ॥ ७ ॥
अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः ।
सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥ ८ ॥
श( ष )ण्ढो वर्षवरस्तुल्यौ सेवकार्थ्यनुजीविनः ।
विषयानन्तरो राजा शत्रुर्मित्रमतः परम् ॥ ९ ॥

---

न्यानां समूहो राजन्यकम्, गोत्रोक्षोष्ट्रेति ( सू० ) वुञ् । मन्त्रः कर्तव्यावधारणमस्त्यस्य मन्त्री । धिया सचति समवैति धीसचिवः । अमा सह समीपे वा भवोमात्यः । सामवायिकोपि । ततो मन्त्रणे-न्येमात्याः कर्मसहाया नियोग्याख्याः ॥ ४ ॥ अमात्या इत्येव । महती मात्रा परिच्छद एषां महामात्राः । प्रदधाति प्रधानमाविष्टलिङ्गकम् । पुरो धीयते हिनोति वा पुरोहितः । सौवस्तिकोपि । द्रष्टा निर्णेता । व्यवहार ऋणादानादिन्यायः, यत्स्मृतिः– वि नानार्थेव संदेहे हरणं हार उच्यते । नानासंदेहहरणाद् व्यवहारः प्रकीर्तितः ॥ पृच्छतीति प्राट्, क्विब्वाचिप्रच्छिश्रीति ( उ० ) क्विपि दीर्घोऽसंप्रसारणं च । प्राट् चासौ विविधं वक्ति (विवाकश्च) प्राड्विवाकः । अक्षाण्याश्रमुखानि रूप्याणि वा पश्यति (अक्षदर्शकः), आक्षदर्शकोपि । धर्माधिकरणिकोक्षपटलिकश्च ॥ ५ ॥ प्रतिह्रियन्ते वार्यन्तेनेन प्रतिहारः । द्वारि तिष्ठति द्वाःस्थः । द्वारि स्थितं दर्शयत्यावेदयति ( द्वाःस्थितदर्शकः ), द्वे संज्ञे इत्येके, द्वाःस्थित एव हि दर्शयति, द्वाःस्थोपस्थितदर्शका इत्येके पठुः । दण्डी दौवारिको वेत्री, उत्सारकश्च । अङ्गरक्षकवृन्दं, अनीके तिष्ठत्यनीकस्थः । राजाशिक्षाविचक्षणो वेति **शाश्वतः** । अधिकृतोक्षेष्वायमुखेष्वध्यक्षः, अध्यक्ष्णोति वा, अक्षू व्याप्तौ, अधिकान्यक्षाणीन्द्रियाण्यस्य वा । अधिक्रियते– उपरि नियुज्यते स्माधिकृतः ॥ ६ ॥ तिष्ठति तच्छीलः स्थायुकः, लषपतपदस्थाभूवृषेत्युकञ् (सू०) । अधिकृत इत्येव, गां भुवं पाति गोपायति वा गोपः । भूरिणि हेम्नि नियुक्तो भौरिकः । हैरिक इति पाठे हिरण्ये नियुक्तः । रूपमाहतमस्य रूप्यं दीनारादि, रूपादाहतप्रशंसयोर्यप् ( सू० ), निष्के दीनारादौ नियुक्तो नैष्किकः ॥ ७ ॥ वंशस्यान्तरन्तर्वंशं कुलं, स्त्रियस्ताः सन्त्यस्यान्तर्वंशिकः, अन्तःपूर्वपदाट्ठञ् ( सू० ) इत्येके । जनः कुब्जवामनादिसमूहः । सुविदन्तं विवाहं जानन्तं लान्ति सुविदल्लाः ऊढाः स्त्रियः, तत्र भवाः सौविदल्लाः । कञ्चुकं विनीतवेषार्थ-मस्त्यस्य( कञ्चुकी ) । कुलस्त्रीव्यवस्थायां स्थापयन्ति स्थापत्याः, यद्वा तिष्ठन्त्यस्मिन्वेशाः स्थः, घञर्थेकः ( वा० ), स्थश्चासौ पतिः स्थपतिः, तत्र भवा इति, दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ( सू० ) । सुविदस्योद्वहत इमे सौविदाः ॥ ८ ॥ शाम्यति शण्ढः, अत एवान्तःपुरपालकः । वर्षं रेतःसेकं वृणोत्या-च्छादयति वर्षवरः, वृञ् शक्तिप्रतिबन्धे वा । अर्थयते तच्छीलोर्थी, अर्थाच्चासंनिहिते ( वा० ) इतीनिर्वा । विजिगीषुविषयादव्यवहितः ( शत्रुः ) । अतः शत्रोः परभूमिस्थं विजिगीषोर्मित्रम् ॥ ९ ॥ ऊर्ध्वमासीन

उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः ।
रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥ १० ॥
द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः ।
अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ॥ ११ ॥
वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत् ।
सख्यं साप्तपदीनं स्यादनुरोधोनुवर्तनम् ॥ १२ ॥
यथार्हवर्णः प्रणिधिरव( प )सर्पश्चरः स्पशः ।
चारश्च गूढपुरुषश्चाप्तः प्रत्ययितास्त्रिषु ॥ १३ ॥
सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि ।
स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि ॥ १४ ॥
तान्त्रिको ज्ञातसिद्धान्तः सत्री गृहपतिः समौ ।
लिपि( पिं )करोक्षरचणोक्षरचुञ्चुश्च लेखके ॥ १५ ॥

---

इवोदासीनः शत्रुमित्रभूमिभ्यो बाह्योत एव तटस्थः। ने( जे )तुः पश्चात्स्थितो राजा, पार्ष्णिमिव पार्ष्णिं गृह्णात्यवष्टभ्नाति ( पार्ष्णिग्राहः ) । पञ्चस्वेतेषु द्वादशराजकमण्डलं परिसमाप्तं, यदाहुः— अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् । तथारिमित्रमित्रं च विजिगीषोः पुरः स्मृताः ॥ पार्ष्णिग्राहस्तथाक्र[ क ]न्द आसारश्च तयोः पृथक् । मध्यमोथाप्युदासीन इति द्वादशराजकम् ॥ रेपयति रिपुः, रेपृ गतौ । समानं पतत्येकार्थाभिनिवेशात्सपत्नः । इयर्त्यरिः । द्वेष्टि द्विषन्, द्विषोमित्रे ( सू० ) इति शतृ । द्वेष्टि तच्छीलो द्वेषणः, क्रुधमण्डार्थेभ्यश्च ( सू० ) इति युच् । दुष्टं हृदयमस्य दुर्हृत्, सुहृद्दुर्हृदौमित्रामित्रयोः ( सू० ) इति साधुः ॥ १० ॥ विरुद्धः पक्षो विपक्षः । अमत्र्यमित्रः । शातयति शत्रुः । ( शात्रवः ) प्रज्ञादिभ्यश्च ( सू० ) इति पक्षेऽण् । अभिहन्यतेभिघाती । प्रियते परः, पृङ् व्यायामे । इयर्त्यरातिः । प्रतीपमर्थयते प्रत्यर्थी । परिपन्थयति परिपन्थी, छन्दसिपरिपन्थिपरिपरिणौपर्यवस्थातरि ( सू० ) इति साधुः । प्रत्यवस्थाता प्रत्यनीकः परिपन्थकोपि । [ भ्रातृव्यासहनद्वेषिजिघांसुप्रत्यनीकिनः ] ॥ ११ ॥ वयसा तुल्यो वयस्यः, नौवयोधर्मेति ( सू० ) यत् । समानं वयोस्य सवयाः । मेद्यति स्निह्यति मित्त्रम् । समानं ख्याति सखा, समानेख्यःसचोदात्तः ( उ० ) इतीण् ( स ) डिच्च यलोपश्च । सख्युर्भावः सख्यं, सख्युर्यः (सू०) । सप्त पदानि क्रमाः सुप्तिङन्तानि वा व्याप्नोति (साप्तपदीनं), साप्तपदीनंसख्यं (सू०) इति साधुः । तद्योगात्सखापि साप्तपदीनः । सौहृदं सौहार्दं सौहृदीयमजर्यं च । इच्छानुवर्तनमित्यर्थः, अनुरुध कामे ॥ १२ ॥ देशकालोचितो वर्ण आकारो जातिवर्णनं वास्य यथार्हवर्णः । प्रकर्षेण गुप्तो धीयते परेषु प्रणिधिः । अवच्छन्नं सर्पत्यवसर्पः । चरति चरश्चारश्च, ज्वलादित्वाण्णो वा ( ज्वलितिकसन्तेभ्योणः ) । स्पशति बाधते परान्स्पशः । आप्यते स्माप्तः, अविसंवादिवाक् । प्रत्यय आश्वासोस्य प्रत्ययितः ॥ १३ ॥ संवत्सरः कालोपलक्षणं, तद्वेद सांवत्सरः. तदधीतेतद्वेद ( सू० ) इत्यण् । ज्योतींषि ग्रहादीनधिकृत्य कृतो ग्रन्थो ज्योतिषः, ज्योतिषं वेद ज्यौतिषिकः, क्रतूक्थादिसूत्रान्ताट्ठक् ( सू० ) । दैवं पूर्वकृतं कर्म जानाति दैवज्ञः । मुहूर्तं वेद मौहूर्तिकः, क्रतूक्थादित्वात् ( सू० ) ठग्वा । कालादिज्ञानमस्यास्तीति ज्ञानी। कृतान्तं वेद कार्तान्तिकः ॥ १४ ॥ तन्त्र्यते तन्यतेनेन वा तन्त्रं पारमेश्वरवैद्यकज्योतिषादि, तद्वेद तान्त्रिकः । सिद्धो निवारितविप्रतिपत्तिरन्तो निष्ठात्र सिद्धान्तः । सीदत्यस्मिन्सत्त्रं गृहं सदादानं च । लिपिं करोति, दिवाविभेति ( सू० ) टः । अक्षरैर्वित्तोक्षरचणः, तेनवित्तश्चुञ्चुप्चणपौ ( सू० ) ॥ १५ ॥

लिखिताक्षरविन्यासे लिपिर्लिविरुभे स्त्रियौ ।
स्यात्संदेशहरो दूतो दूत्यं तद्भावकर्मणी ॥ १६ ॥
अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ॥ १७ ॥
स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ।
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥ १८ ॥
सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ।
षड् गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः ॥ १९ ॥
क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ।
स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम् ॥ २० ॥
भेदो दण्डः साम दानमित्युपायचतुष्टयम् ।
साहसं तु दमो दण्डः साम सान्त्वमथो समौ ॥ २१ ॥
भेदोपजापावुपधा धर्माद्यैर्यत्परीक्षणम् ॥ २२ ॥

---

अक्षरविन्यासे त्रयं वर्तते । लिख्यते स्म लिखिता (-तम्) । लिप्यतेनया पत्रं लिपिः । (लिविः) जपादित्वात् (ग०) पक्षे वत्वम् । संदिश्यते संदेशो मुखस्वरूपम् । दूयतेनेन यथोक्तवादित्वात्पर इति दूतः । (दूत्यं) दूतवणिग्भ्यां च तत्कर्तव्यात् (वा०) यः ॥ १६ ॥ अध्वानं गच्छत्यध्वनीनः, अध्वनोयत्खौ (सू०) । पन्थानं गच्छति पथिकः, पथःष्कन् (सू०) । पन्थानं नित्यं गच्छति पान्थः, पन्थोणनित्यं (सू०) इति णः पन्थादेशश्च । अदूरविप्रकर्षात्त्वनयोः पर्यायत्वम् । दे(दे)-शिकोऽपि । पाथेयं शम्बलम् ॥ १७ ॥ स्वं विद्यतेस्य स्वामी, स्वामिन्नैश्वर्ये (सू०) इति साधुः । अमा सह समीपे वा भवोऽमात्यः, अमेहक्कतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात्स्मृतः (का०) इत्यप् (अव्ययात्त्यप्) । कूयते मृग्यत इति कोशः, कुष्णातेः कोष इत्येके । राजते राष्ट्रम् । दुःखेन गम्यतेऽस्मिन्दुर्गं, सुदुरोरधिकरणे चेति (वा०) डः । वलन्त्यनेनेति बलम् । अङ्गान्यारम्भकाणि । प्रक्रियतेनया प्रकृतिः । एकमुख्यः सजातीयसमूहः श्रेणिः । प्रकृतयो राज्याङ्गानीत्येव, यत्कात्यः- अमात्याद्याश्च पौराश्च सद्भिः प्रकृतयः स्मृताः ॥ १८ ॥ संधानं संधिः, एकत्वमित्यर्थः । विरुद्धं ग्रहणं स्वस्थानात्परमण्डल द हविलोदिर्विग्रहः । यानं यातव्यं प्रति यात्रा । आसनं विग्रहादिनिवृत्तिः । द्वौ प्रकारौ द्वैधं, द्वित्र्योश्चधमुञ् (सू०), एकेन संधायान्यत्र यात्रेत्यर्थः, यद्वा- बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन् । द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥ अशक्त्या बलवदाश्रयणमाश्रयः । गुणा राज्योपकारकाः । शक्यते जतुमाभिः शक्तयः । कोशदण्डर्द्धिः प्रभुशक्तिः । उद्यम्य सहनमुत्साहशक्तिः । मन्त्रः पञ्चाङ्गो मन्त्रशक्तिः ॥ १९ ॥ प्रागवस्थानतः शक्तिसिद्ध्यं ऽपचयः क्षयः, साम्यं स्थानं, उपचयो वृद्धिः । नीतेरन्यत्र धर्मादिस्त्रिवर्गः[ एतत्त्रयं नीतिवेदिनां राज्ञां त्रिवर्ग इत्युच्यते ] । प्रतपन्त्यनेन प्रतापः । प्रभवन्त्यनेन प्रभावः । तेज उत्कटत्वं, यद्भरतः- अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेप्यसहनं तत्तेजः समुदाहृतम् ॥ २० ॥ उपेत्यनेनोपायः । मायोपेक्षेन्द्रजालान्यत्रैवान्तर्भूतानि । सहसि बले भवं साहसम् । स्यति वैरं सामयति वा साम प्रियवचनादि, साम सान्त्वने । सान्त्व सामप्रयोगे ॥ २१ ॥ संहतयोर्भेदनं भेदः । उपांशु जपनमुपजापः । उपधीयते समीपे ढौक्यते परीक्षार्थमुपधा, धर्मकामार्थभयान्यापेनाशयान्वेषणं, यत्कौटिल्यः- उपधाभिः शौचाशौचपरिज्ञानममात्यानाम् ॥ २२ ॥ पञ्च(-शब्दाः)निःशलाकान्ता वक्ष्यमाणा वाच्यलिङ्गाः । न षडक्षीणि यत्रावड-

पञ्च त्रिष्वषडक्षीणो यस्तृतीयाद्यगोचरः ।
विविक्तविजनच्छन्ननिःशलाकास्तथा रहः ॥ २३ ॥
रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु ।
समौ विश्र( स्र )म्भविश्वासौ भ्रेषो भ्रंशो यथोचितात् ॥ २४ ॥
अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् ।
युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ॥ २५ ॥
न्याय्यं च त्रिषु षट् संप्रधारणा तु समर्थनम् ।
अववादस्तु निर्देशो निदेशः शासनं च सः ॥ २६ ॥
शिष्टिश्चाज्ञा च संस्था तु मर्यादा धारणा स्थितिः ।
आगोपराधो मन्तुश्च समे तूद्दानबन्धने ॥ २७ ॥
द्विपाद्यो द्विगुणो दण्डो भागधेयः करो बलिः ।
घट्टादिदेयं शुल्कोस्त्री प्राभृतं तु प्रदेशनम् ॥ २८ ॥
उपायनमुपग्राह्यमुपहारस्तथोपदा ।
यौतकादि तु यद्देयं सुदायो हरणं च तत् ॥ २९ ॥

---

क्षीणो मन्त्रः, अषडक्षाशितंग्वलंकर्मीति ( सू० ) स्वार्थे खः, यदाहुः– षट्कर्णो भिद्यते मन्त्रः ! विविच्यते पृथक् क्रियते स्म विविक्तम् । विगतो जनो( यतः ) विजनम् । छाद्यते स्म छन्नम् । निर्गता शलाका व्यथकोत्र निःशलाकम् । रहयति रह इत्येको रहःशब्दः सान्तः क्लीबे ॥ २३ ॥ अन्योऽव्ययम् । अव्यये अलिङ्गे द्वे ( रहश्चोपांशु च ) । अनुरहसं च । रहसि भवं रहस्यं, दिगादित्वाद्यत् ( सू० ) । विश्रम्भणं विश्रम्भ आश्वसः । यथोचितात्भ्रशाद्भ्रङ्गो( भ्रंशो )धःपातो भ्रेषः, भ्रेषृ चलने ॥ २४ ॥ नियतमीयते न्यायः, परिन्योर्नीणोः ( सू० ) इति घञ् । कल्पनं कल्पः सामर्थ्यम् । दिश्यमानस्योचितस्य रूपं देशरूपं, प्रशस्तं देशनं वा । सम्यगञ्जसा सत्यमत्र समञ्जसम् । उपाय एवौपयिकं, विनयादित्वात्– उपायो ह्रस्वत्वंच ( ग० ) इति ठक् । अभिनीयते स्माभिनीतम् ॥ २५ ॥ तद्वन्न्याय्यं, न्यायादनपेतं, धर्मपथ्यर्थेति (सू०) यत् । उचितं सांप्रतं च । संप्रधार्यते भ्रशं स्वरूपमापद्यते ययेति संप्रधारणा युक्तायुक्तपरीक्षा । अवनम्य वदनमववादो मुखस्वरूपम् । निःशेषेण देशनं निर्देशः । नियतं देशनं निदेशः ॥२६॥ शासनं नियोजनं शिष्टिः । आज्ञापनमाज्ञा । संतिष्ठतेनया संस्था । मर्येति समीपार्थ( सीमार्थ )मव्ययं, तत्र दीयते मर्यादा । आ– अगति कुटिलं गच्छति– आगः, असन्तः क्लीबे । मन्यते हृदि मन्तुः । उद्दीयतेस्मिन्नुद्दानं, दोऽवखण्डने, देङ् रक्षणे वा ॥ २७ ॥ द्वौ पादौ प्रमाणमस्य द्विपाद्यः, पणपादमाषशताद्यत् ( सू० ), प्राण्यङ्गत्वाभावात् पद्यत्यतदर्थे ( सू० ) इति पद्भावाभावः । भागोंश एव भागधेयः, नामरूपभागेभ्यो-धेयः ( वा० ) । कीर्यते प्रत्येकं करः । वलन्तेनेन बलिः, राजग्राह्यः षड्भागादिर्भोगः । प्रत्येकं स्थावरजङ्गमादिदेयः करः । नियोज्योपजीव्यो बलिरित्यवान्तरभेदोर्थशास्त्रोक्तो नाश्रितः । घट्टन्तेनेन घट्टयति वा घट्टो नदीतरस्थानम् । आदिशब्दाद् गुल्मप्रतोल्यादौ प्रावेश्यनैष्का( ष्क )म्यद्रव्येभ्यो राजग्राह्यो भागः शुल्कः, शवति शलति वा सुखेन यात्यनेनेति । प्रकर्षेणाराधनार्थमाभ्रियते ढौक्यते स्म प्राभृतम् । प्रदिश्यते प्रदीयते प्रदेशनम् ॥ २८ ॥ उप समीपेऽयतेनेनोपायनम् । उपगृह्यत उपग्राह्यम् । उपह्रियत उपहारः । उपदीयत उपदा । कौशलिकं ढौकनं च । उपदोत्कोच इत्येके, उपप्रदानमुत्कोच उपदा लञ्चया समाः । युतयोर्वधूवरयोरिदं यौतकम् । आदिशब्दाद् बन्धुदत्तादि । सुष्ठु दीयते सुदायः, स दाय इत्येके, यच्छाश्वतः– यौतकादि धनं दायो दायो दानं च कथ्यते । ह्रियते हरणम् ॥२९॥ स चासौ कालश्च

तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः ।
सांदृष्टिकं फलं सद्य उदर्कः फलमुत्तरम् ॥ ३० ॥
अदृष्टं वह्नितोयादि दृष्टं स्वपरचक्रजम् ।
महीभुजामहिभयं स्वपक्षप्रभवं भयम् ॥ ३१ ॥
प्रक्रिया त्वधिकारः स्याच्चामरं तु प्रकीर्णकम् ।
नृपासनं तु यद्भद्रासनं सिंहासनं तु तत् ॥ ३२ ॥
हैमं छत्त्रं त्वातपत्रं राज्ञस्तु नृपलक्ष्म तत् ।
भद्रकुम्भः पूर्णकुम्भो भृङ्गारः कनकालुका ॥ ३३ ॥
निवेशः शिबिरं षण्ढे सज्जनं तूपरक्षणम् ।
हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥ ३४ ॥
दन्ती दन्तावलो हस्ती द्विरदोनेकपो द्विपः ।
मतङ्गजो गजो नागः कुञ्जरो वारणः करी ॥ ३५ ॥
इभः स्तम्बेरमः पद्मी यूथनाथस्तु यूथपः ।
मदोत्कटो मदकलः कलभः करिशावकः ॥ ३६ ॥

---

तत्कालः । तदेत्यस्य भावस्तदात्वम् । एष्यत्यायतिरागामी कालः । संदृष्टं प्रत्यक्षं प्रयोजनमस्य सांदृष्टिकम् । समानेहनि सद्यस्तात्कालिकं फलं, सद्यःपरुत्परारीति ( सू० ) साधुः । उदृच्यतेभिलाषात्स्तूयत उदर्कः ॥ ३० ॥ भयमित्युत्तरेण योज्यम् । आदिशब्दात्पिशाचाशन्यादि । स्वराष्ट्राच्चौराटविकादिभयम्, परराष्ट्राद्दाहविलोपादिभयं च । स्वपक्षाद्राजपुत्रादेरहेरिव गृहस्थिताद्भयम् ॥ ३१ ॥ प्रारम्भात्करणं प्रक्रिया। अधिक्रियते प्रस्तूयतेधिकारः, व्यवस्थास्थापनमित्यर्थः । चमर्या इदं चामरम् । प्रकीर्यते विक्षिप्यते प्रकीर्णम् । भद्रस्यासनं, भद्रं रूप्यादिमयं वासनं भद्रासनम् । हेम्न इदं हैमं सिंहोपलक्षितमासनम् ॥ ३२ ॥ छाद्यतेनेन च्छत्त्रम् । आतपात्त्रायत आतपत्रम् । तच्छत्त्रम्, यल्लक्ष्यं– नृपातिककुदं दत्त्वा यूने सितातपवारणम् ( रघु० ) । भद्रार्थे भद्रो वा कुम्भः । भृज्यते भ्रियते वा भृङ्गारः । सौवर्ण आलुः ( कनकालुका ) ॥ ३३ ॥ निवेश्यते संनिवेशेन स्थाप्यते निवेशः सैन्यावासः । शेरतेस्मिञ्शिबिरम् । स्कन्धावारोपि । सच्छोभनं जन्यतेनेन सज्जनं सज्ज्यतेनेन वा । उपरक्ष्यतेनेनोपरक्षणं सैन्यस्य प्रगुणीकरणं गुल्मको वा । चतुरङ्गा हि सा( सेना ), पदातीनां समूहः पादातं, भिक्षादित्वात् ( सू० ) अण् ॥३४॥ दन्तौ स्तोस्य दन्ती दन्तावलः, दन्तशिखात्संज्ञायां ( सू० )इति वलच्, वले ( सू० ) इति दीर्घः । हस्ती, हस्ताज्जातौ ( सू० ) इतीनिः । द्वौ रदावस्य द्विरदः । न एकेन पिबत्यनेकपः । द्वाभ्यां पिबति द्विपः । मतङ्गादृषेर्जातो मतङ्गजः । गजति माद्यति गजः । नगे भवो नागः, न– अगो वा । कुञ्जौ कुम्भाधोगतौ दंष्ट्रे वा स्तोस्य कुञ्जरः, ( रप्रकरणे ) खमुखकुञ्जेभ्योरोवक्तव्यः ( वा० ), कुञ्जेषु रमते, वा । वारयत्यरीन्वारणः ॥ ३५ ॥ एतीभः । स्तम्बे तृणे रमते स्तम्बेरमः, स्तम्बकर्णयोरमिजपोः (सू०) इत्यच् । पद्मानि यौवने रक्तबिन्दवोस्य सन्ति पद्मी । सामजः सिन्धुरः कुम्भी च । इतोश्वेभ्यः प्रागगजवर्गः । मदेन दानाम्बुना कलो मनोज्ञः । कलो भाति कं लभते वा कलभः ॥ ३६॥ प्रभिद्यते स्म प्रभिन्नः । गर्जो

प्रभिन्नो गर्जितो मत्तः समावुद्वान्तनिर्मदौ ।
हास्तिकं गजता वृन्दे करिणी धेनुका वशा ॥ ३७ ॥
गण्डः कटो मदो दानं वमथुः करशीकरः ।
कुम्भौ तु पिण्डौ शिरसस्तयोर्मध्ये विदुः पुमान् ॥ ३८ ॥
अवग्रहो ललाटं स्यादीषिका त्वक्षिकूटकम् ।
अपाङ्गदेशो निर्याणं कर्णमूलं तु चूलिका ॥ ३९ ॥
अधः कुम्भस्य वाहित्थं प्रतिमानमधोस्य यत् ।
आसनं स्कन्धदेशः स्यात्पद्मकं बिन्दुजालकम् ॥ ४० ॥
पक्षभागः पार्श्वभागो दन्तभागस्तु योग्रतः ।
द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात् ॥ ४१ ॥
तोत्रं वैणुकमालानं बन्धस्तम्भेथ शृङ्खले( ला ) ।
अन्दुको निगडोस्त्री स्यादङ्कुशोस्त्री सृणिः स्त्रियाम् ॥ ४२ ॥
दूष्या कक्ष्या वरत्रा स्यात्कल्पना सज्जना समे ।
प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ॥ ४३ ॥

---

संजातास्य गर्जितः । उद्वमति स्मोद्वान्तः, टुवम ( उद्गिरणे )। राजवाह्यस्त्वौपवाह्यः सन्नाह्यः समरोचितः । हस्तिनां समूहो हास्तिकं, अचित्तहस्तिधेनोष्ठक् ( सू० )। गजानां समूहो गजता, गजाच्चेति वक्तव्या-त्तल ( गजसहायाभ्यांचेतिवक्तव्यम् )। धयत्येनां धेनुका । वष्टि कामयते वशा ॥ ३७ ॥ ( गण्डति ) गडि वदनैकदेशे । कटति वर्षति मदं कटः । माद्यत्यनेन मदः, मदोनुपसर्गे ( सू० ) इत्यप् । द्यति खण्डयत्यनेनेति दानम्, दत्तिर्वा । वम्यते वमथुः, ट्वितोथुच् ( सू० )। कुम्भाकृती मांससंघातौ । वेत्ति संज्ञां यस्मादङ्कुशस्थानात्स विदुः, यत्पालकाप्यः– तत्र रक्षावितानं द्वे विदू द्वौ श्रवणे गतौ । प्राक्च पश्चाच्च तिर्यक्च षड्भेदाङ्कुशवारणा ॥ ३८ ॥ अवगृह्यतेङ्कुशेनावग्रहः । ईषा लाङ्गलकीलेव– ईषिका । निर्यात्यनेनाश्रु निर्याणम् । चोल्यते पार्श्वगमनायाङ्कुशेनास्यां चूलिका ॥ ३९ ॥ वाह्यतेनेनाङ्कुश-चोदनया वाहित्थम्, मदवाहिनि स्थाने तिष्ठति वा, वाह्यस्यापभ्रंशोयम् । अस्य वाहित्थस्याधः प्रतिमानं, प्रतिमीयतेनेनेति, डुमिञ् प्रक्षेपणे, मीनातिमिनोतिदीङांल्यपिच ( सू० )इत्यात्वम् । आस्यतेस्मिन्नासनम् । पद्मप्रतिकृति रक्तत्वात्पद्मकं, तारुण्ये हि हस्तिनां देहे रक्तबिन्दवः स्युः ॥ ४० ॥ हस्तिनां योग्रतो भागः ( दन्तभागः )। हस्तिनः पूर्वः पादजङ्घादिभागो गात्रम्, पश्चाद्भागोऽवरम् ॥ ४१ ॥ तुद्यतेनेन वेणुमयेन प्रेषणेनेति तोत्रम् । आलायते बध्यतेत्रालानं, ला– आदाने । शृणाति बन्धनेन शृङ्खलम् । अन्दति बध्नाति– अन्दुः, अदि बन्धने, स्वार्थे कन्, इकोहस्वोङ्योगालवस्य ( सू० )। निगल्यते बध्यतेनेन निगडः । अङ्क्यते गम्यतेनेनाङ्कुशः । सरत्यनया सृणिः ॥ ४२ ॥ दूष्यते दूयते वानया दूष्या । कक्षायां मध्यदेशे भवा कक्ष्या । व्रियतेनया वरत्रा मध्यबन्धनं चर्मरज्जुः । ( कल्पना ) हस्तिनः सज्जीकरणं, मक्कोलगैरिकादिना शृङ्गारेणेत्येके । प्रवयत्येनां प्रवेणी । आस्तीर्यते हस्तिपृष्ठ आस्तरणम् । वर्णो वर्णकम्बलो भीमवत् । परिस्तोम्यते प्रस्तीर्यते परिस्तोमः, वर्णपरिस्तोम इत्येके । कुथ्यते कुथा ॥ ४३ ॥ वेति स्म याति भुङ्क्ते च वीतं, विशेषणेतं नष्टं वा । ( हस्त्यश्वं ) सेनाङ्गत्वात्समाहारः ।

वीतं त्वसारं हस्त्यश्वं वारी तु गजबन्धनी ।
घोटके वी( पी )तितुरगतुरंगाश्वतुरंगमाः ॥ ४४ ॥
वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।
आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिनः ॥ ४५ ॥
वा( व )नायुजाः पारसीकाः काम्बोजा वाह्लिका हयाः ।
ययुरश्वोश्वमेधीयो जवनस्तु जवाधिकः ॥ ४६ ॥
पृष्ठ्यः स्थौरी सितः कर्को रथ्यो वोढा रथस्य यः ।
बालः किशोरो वाम्यश्वा वडवा वाडवं गणे ॥ ४७ ॥
त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते ।
कश्यं तु मध्यमश्वानां हेषा ह्रेषा च निस्वनः ॥ ४८ ॥
निगालस्तु गलोद्देशे वृन्दे त्वश्वीयमाश्ववत् ।
आस्कन्दितं धोरितकं रेचितं वल्गितं प्लुतम् ॥ ४९ ॥

---

वार्यतेनया वारी गजदानभूः । घोटते भूमौ परिवर्तते घोटकः । वेति याति वीतिः । तुरं त्वरितं गच्छति तुरगः, डः । ( तुरङ्गः ) खच्चडिद्वाच्यः (वा०)। (तुरंगमः) गमश्चेति ( सू० ) खच् । अश्नुतेध्वानमश्वः ॥ ४४ ॥ वजति तच्छीलो वाजी, वाजाः पक्षा अभूवन्नस्येति वा । वाह्यते वाहः । अर्वति यात्यर्वा । गन्ध्यतेऽर्द्यते गन्धर्वः । हयति याति हयः । सिन्धौ भवः सैन्धवः, विशेषोपि सामान्यवृत्तिः । सपति समवैति सप्तिः । इतो रथप्रकरणात्प्रागश्वपरिकरः । आजेन क्षेपेणानेयाः ( आजानेयाः ), आयत्ता इत्यर्थः । विनीयन्ते विनीताः सुशिक्षाः ॥ ४५ ॥ वनायुजादिषु देशेषु- एते जाता हयविशेषाः । एवं तुरुक्खारादयोपि । लक्ष्ये वाह्लीकोश्वः । याति- अत्यर्थं ययुः । अश्वमेधाय हितोश्वमेधीयः, अश्वमेधाच्छ- च ( सू० ) । जवते तच्छीलो जवनः, जुचङ्क्रम्येति ( सू० ) युच् । मृगादिरपि । प्रजोरिनिः ( सू० ) इति प्रजवीति च ॥ ४६ ॥ यत्पृष्ठे जलादिकमुह्यतेसौ पृष्ठ्यः, साधौ यत् ( तत्रसाधुः ) । स्थूराणां पश्चाज्जङ्घादिभागानामिदं स्थौरं बलमस्त्यस्य स्थौरी । कर्कः शुक्लोश्वः, क्रियन्ते वर्णान्तराण्यस्येति । रथं वहति रथ्यः, तद्वहतिरथयुगेतियत् ( सू० ) । कीयते बोध्यते कश्यते वा किशोरः । वाम्यते गर्भे वामी, यल्लक्ष्यम्- अथोष्ट्रवामीशतहारि( वाहि )तार्थम् ( रघु० ) । वडं बलं हयं वा वाति वडवा, स्त्रीविषयत्वाद् ङीष् नास्ति । अश्वा त्वजादिः । प्रमूर्नार्थे । वडवानां समूहो वाडवं, खण्डिकादिभ्यश्च ( सू० ) इत्यञ् ॥ ४७ ॥ ( आश्वीनं ) अश्वस्यैकाहगम इति ( सू० ) खञ् । कशामर्हति कश्यम् । हेषृ ह्रेषृ अव्यक्ते शब्दे, गुरोश्चहलइति ( सू० ) अः ॥ ४८ ॥ निगलन्त्यनेन निगालः, गलो जत्रुसन्धिः, उन्योर्ग्र इति (सू०) घञ् । गलस्योद्देशः प्रदेशः देवमणेरावर्तस्य स्थानम् । अश्वानां समूहः ( आश्वीय, आश्वं ), केशाश्वाभ्यांयञ्छावन्तरस्याम् ( सू० ), पक्षे तु- अनुदात्तादेरञ् ( सू० ) । अश्वानां धाराख्या इमाः पञ्च गतयः, धार्यते गतौ स्थाप्यतेनया धारा, भिदादित्वात्साधुः ( षिद्भिदादिभ्योङ् ) । आस्कन्दन- मास्कन्दितं, उत्तेरिताख्योतिवेगः । धोरणं धोरितं, धोऋ गतिचातुर्ये । रेचितमुत्तेजिताख्यम् । क्रमस्त्वन्यथा, यदाहुः- धोरितं वल्गितं धारा प्लुतमुत्तेजितं क्रमात् । उत्तेरितं चेति पञ्च शिक्षयेत्तुरगं गतम् ॥ धोरितं गतिमात्रे यद्योजनं वल्गितं पुरः । अग्रकायसमुल्लासात् कुञ्चितास्यं नत- त्रिकम् ॥ पूर्वापरोन्नमनतः क्रमादारोपणं प्लुतम् ॥ उत्तेजितं मध्यवेगं योजनं श्लथवल्गया । उत्तेरितेति- वेगान्धो न शृणोति न पश्यति ॥ ४९ ॥ घोणते श्वासेन वलते घोणा । प्रवते चलति प्रोथः, वृत्तो

गतयोमूः पञ्च धारा घोणा तु प्रोथमस्त्रियाम् ।
कविका तु खलीनोऽस्त्री शफं क्लीबे खुरः पुमान् ॥ ५० ॥
पुच्छोऽस्त्री लूमलाङ्गूले वालहस्तश्च बालधिः ।
त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि ॥ ५१ ॥
याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः ।
असौ पुष्य(ष्प)रथश्चक्रयानं न समराय यत् ॥ ५२ ॥
कर्णीरथः प्रवहणं डयनं च समं त्रयम् ।
क्लीबेऽनः शकटोऽस्त्री स्याद्गन्त्री कम्बलिवाह्यकम् ॥ ५३ ॥
शिबिका याप्ययानं स्याद्दोला प्रेङ्खादिका स्त्रियाम् ।
उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे ॥ ५४ ॥
पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बली ।
रथे काम्बलवास्त्राद्याः कम्बलादिभिरावृते ॥ ५५ ॥
त्रिषु द्वैपादयो रथ्या रथकट्या रथव्रजे ।
धूः स्त्री क्लीबे यानमुखं स्याद्रथाङ्गमपस्करः ॥ ५६ ॥
चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान् ।
पिण्डिका नाभिरक्षाग्रकीलके तु द्वयोराणिः ॥ ५७ ॥

---

नासान्तःप्रदेशः । कवते दन्तचर्वणाच्छब्दायत इति कविका । खलति चलति खलीनं, खे तालुनि लीनं वा । शप्यते भुवा घृष्यते शफम् । खुरति विलिखति क्ष्मां खुरः ॥ ५० ॥ पूयते दंशादीनुत्सारयति पुच्छं, पूतौ छादयति वा । लूयते लूमम् । लङ्गति चलति लाङ्गूलम् । वालो हस्त इव दंशवारणाद् वालहस्तः, प्रशस्ता वाला वा । बाला धीयन्तेऽस्मिन्बालधिः । उपावर्तते स्मोपावृत्तोऽश्वः । लुठति स्म लुठितः ॥ ५१ ॥ यात्यनेन यानं साम्परायिकाख्यम् । शताङ्गो बह्वरकः । स्यन्दते याति स्यन्दनः । रमन्तेऽस्मिन् रथः । इतो भटादेः प्राप्रथप्रकरणम् । पुष्ये यात्रोत्सवादौ मङ्गल्यो रथः पुष्यरथः । चक्रयुक्तं यानं ( चक्रयानम् ) ॥ ५२ ॥ कर्णिषु स्कन्धेषु रथः कर्णीरथः, दीर्घो लक्ष्यात्, पुंस्कन्धोह्यमानो रथः । प्रवहन्त्यनेन प्रवहणम् । डयन्ते विहायसा यान्तीवानेन ( डयनम् ) विमानाख्यम् । अनिति चीत्करोत्यनः, असुन् । शक्नोति भारं वोढुं शकटम् । गच्छति तच्छीला गन्त्री शकटिका । कम्बलिभिर्दान्तैर्वोढव्यं (कम्बलिवाह्यकम्) ॥५३॥ (शिबिका) शिवा श्रेयस्करी, संज्ञायांकन् (सू०) । याप्यस्याशक्तस्य यानं, युगाख्यं यानमिति गौडः । दोल्यते दोला काष्ठमयी रज्जुप्रालम्बश्च । प्रेङ्ख्यते प्रेङ्खा हिन्दोलाख्या । आदिशब्दाच्छया[य]नकादि याप्ययानानुवृत्तेः । द्वीपिनश्चर्मणावृतो रथः, द्वैपवैयाघ्रादञ् ( सू० ) ॥ ५४ ॥ पाण्डुकम्बलेन प्रावृतो रथः, पाण्डुकम्बलादिनिः ( सू० ) । ( काम्बलवास्त्राद्याः ) परिवृतोरथः ( सू० ) इत्यण् । आदिशब्दाद् दुकूलाद्याः ॥ ५५ ॥ वाच्यलिङ्गत्वाद् द्वैपी गन्त्री, द्वैपो रथः, द्वैपमनः । शकटाद्यपि रथत्वेन मन्यन्ते । रथानां समूहे, खलगोरथात् ( सू० ), इनित्रकट्यचश्च ( सू० ) इति यत्कट्यचौ । धूर्वति हिनस्ति वोढारं धूः, यस्या अग्रे वोढारो बध्यन्ते । यानमुखं रथादेरग्रम् । रथारम्भकं चक्रादन्यत्, अपकरोति( कीर्यते ) अपस्करः, अपस्करोरथाङ्गमिति ( सू० ) साधुः ॥ ५६ ॥ रथस्य यच्चक्रं तद्रूढ्या रथाङ्गम् । तस्य चक्रस्यान्ते नेमिः, नयतीति । प्रान्ते धीयत इति प्रधिः । पिण्ड्यतेऽरा यस्यां सा पिण्डिका । नभ्यते हिंस्यतेऽक्षेण नाभिः । अक्षस्य नाभिक्षेप्यकाग्रस्यान्ते बन्धार्थं कीलकः, अणति शब्दायतेऽणिः, लक्ष्ये त्वाणी ॥ ५७ ॥ त्रियते गुप्त्यर्थं रथो येन स

रथगुप्तिर्वरूथो ना कूबरस्तु युगंधरः ।
अनुकर्षो दार्वधःस्थं प्रासङ्गो ना युगाद्युगः( न्तरम् ) ॥ ५८ ॥
सर्वं स्याद्वाहनं यानं युग्यं पत्त्रं च धोरणम् ।
परंपरावाहनं यत्तद्वैनीतकमस्त्रियाम् ॥ ५९ ॥
आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ।
नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः । ६० ॥
सव्येष्ठृ(ष्ठ)दक्षिणस्थौ च संज्ञा रथकुटुम्बिनः ।
रथिनः स्यन्दनारोहा अश्वारोहास्तु सादिनः ॥ ६१ ॥
भटा योधाश्च योद्धारः सेनारक्षास्तु सैनिकाः ।
सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ॥ ६२ ॥
बलिनो ये सहस्रेण साहस्रास्ते सहस्रिणः ।
परिधिस्थः परिचरः सेनानीर्वाहिनीपतिः ॥ ६३ ॥
कञ्चुको वारवाणोऽस्त्री यत्तु मध्ये सकञ्चुकाः ।
बध्नन्ति तत्सारसनमधिकाङ्गोऽथ शीर्षकम् ॥ ६४ ॥

---

वरूथो लोहादिमयी वृतिः । कूयते शब्दायते कूबरः । युगं वोढृस्कन्धकाष्ठं धारयति युगंधरः, संज्ञायां भृतॄवृजीति ( सू० ) खच् । अनुकृष्यतेऽनुकर्षः । प्रसज्यते वोढृस्कन्धे प्रासङ्गः । युगेनाततिं युगाद्यथादित्तस्य युगो ना पुमान्, अन्यस्तु क्लीबे युगं कालो युग्मं वा । युगाद्युगान्तरं वत्सदमनार्थमिति **गौडः**, यत्कात्यः[ **मुनिः** ]– युगं द्वितीयं प्रासङ्गः ॥ ५८ ॥ सर्वं हस्त्यश्वरथादि दोलान्तम् । योक्तव्यं युग्यं, युग्यंचपत्त्रे ( सू० ) इति साधुः । पतन्त्यनेन पत्त्रं, दाम्नीशसेति ( सू० ) ष्ट्रन् । धोर्यतेऽत्र धोरणम् । वोढृभिः परम्परया वाह्यते, प्राबन्धिकमभ्यासास्थितम् । विनीता( तका )नामिदं (वैनीतकं) याप्ययानादि ॥ ५९ ॥ आधोर्यते हस्ती यैराधोरणाः । हस्तिनः पान्ति हस्तिपकाः । हस्तिनमारोहन्ति हस्त्यारोहाः । निषीदन्त्यवश्यं निषादिनः । द्वौ द्वौ भिन्नार्थावित्येके, आद्यौ द्वौ पालकौ परौ द्वौ योद्धारौ । नियच्छति नियन्त्रयति नियन्ता । प्राजयति ( प्राजति ) प्राजिता, वानुवृत्तेर्वीभावो नास्ति ( इ० ) । सुवति सूतः, षू प्रेरणे । क्षदति क्षत्ता । सरथस्यापत्यं सारयति वाहान्वा सारथिः ॥ ६० ॥ सव्ये तिष्ठति सव्येष्ठः(ष्ठा), सव्येस्थश्छन्दसीति ( उ० ) ऋन् (ऋः)– डिच्च, स्थास्थिन्स्थृणामितिवक्तव्यात् ( वा० ) षत्वम् । रथस्य कुटुम्बी वाहकः । (रथिनः ) रथे योद्धारः । ( अश्वारोहाः ) अश्ववाराख्याः । सीदन्त्यवश्यं सादी ॥ ६१ ॥ भटन्ति काङ्क्षन्ति युद्धं भटाः । युध्यते योधः, पचाद्यच् (नन्दिग्रहीति) । (सैनिकाः) रक्षतीति ( सू० ) ठक्, प्राहरिकाद्याः । सेनां समवयन्ति श्लिष्यन्ति ( सैन्याः ), सेनायावा ( सू० ) इति ण्यः, पक्षे ठक् ॥ ६२ ॥ बलं सैन्यं, सहस्रं योद्धारः सन्त्यस्य, तपःसहस्राभ्यांविनीनौ ( सू० ), अण्च ( सू० ) । परिधौ सेनान्ते तिष्ठति परिधिस्थः । परितः समन्ताच्चरति रक्षितुं परिचरः । सेनां नयति नियुङ्क्ते सेनानीः ॥ ६३ ॥ कञ्च्यते बध्यते कञ्चुकः । वारमाच्छादकं वानमस्य वारवाणः, पूर्वपदात्संज्ञायाम् ( सू० ) इति णत्वम् । वाणवारस्य व्यत्ययेन मयूरव्यंसकादित्वादिति **श्रीभोजः** । सारं सनोति ददाति सारसनम् । अधिकमङ्गादधिकाङ्गः । सारसनाधिपाङ्गा इत्येके पेठुः, यन्**मुनिः**– अधिपाङ्गं सारसनम्, **दुर्गस्तु**– तस्य सारसनं ज्ञेयं धिपाङ्गं च निबन्धनम् ॥ ६४ ॥ शीर्षप्रतिकृतिः

शीर्षण्यं च शिरस्त्रेथ तनुत्रं वर्म दंशनम् ।
उरश्छदः कङ्कटको जगरः कवचोस्त्रियाम् ॥ ६५ ॥
आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ।
संनद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ॥ ६६ ॥
त्रिष्वामुक्तादयो वर्मभृतां कावचिकं गणे ।
पदातिपत्तिपदगपादातिकपदाजयः ॥ ६७ ॥
पद्गश्च पदिकश्चाथ पादातं पत्तिसंहतिः ।
शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः ॥ ६८ ॥
कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् ।
अपराद्धपृषत्कोसौ लक्ष्याद्यश्च्युतसायकः ॥ ६९ ॥
धन्वी धनुष्मान्धानुष्को निषङ्ग्यस्त्री धनुर्धरः ।
स्यात्काण्डवांस्तु काण्डीरः शाक्तीकः शक्तिहेतिकः ॥ ७० ॥
याष्टीकपारश्वधिकौ यष्टिपर्श्वधहेतिकौ ।
नैस्त्रिंशिकोसिहेतिः स्यात्समौ प्रासिककौन्तिकौ ॥ ७१ ॥

---

शीर्षकम् । शिरसि भवं शीर्षण्यं, शरीरावयवाद्यत् ( सू० ), शीर्षश्छन्दसि ( सू० ), येचतद्धिते ( सू० ) । शिरस्त्रायते शिरस्त्रम् । वृणोत्यङ्गं वर्म । दंश्यते बध्यते दंशनम् । कङ्कटत्याच्छादयति कङ्कते वा ( कङ्कटकः ) । जागर्तेरचि ह्रस्वाउजगरः, यन्माला– उरश्छदोथ जगरः । कवते कवचः, कं वञ्चयति वा ॥ ६५ ॥ आमुच्यते बध्यते स्मामुक्तः । अपिनह्यते स्मापिनद्धः । ( पिनद्धः ) वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ( का० ) इति पक्षेऽल्लोपः । संनह्यते स्म संनद्धः । वर्म संजातमस्य वर्मितः । सज्जायते सज्जति वा सज्जः । व्यूढो धृतः कङ्कटोनेन व्यूढकङ्कटः ॥ ६६ ॥ नवेत्यर्थः । ( कावचिकं ) ठञ्कवचिनश्च ( सू० ) इति ठञ् । पादाभ्यामतति गच्छति पदातिः । पादाभ्यामजति पदाजिः, पादस्यपदाज्यातिगोपहतेषु (सू०) इति पदः । हलन्तपक्षे पद्गः, यल्लक्ष्यं– पद्गा भरद्वाजमुनिं सशिष्यम् (भट्टि०) । पादाभ्यामतति पादातिकः, औणादिक इकः, विनयादित्वात्स्वार्थेठग्वा ( सू० ) । पतति (पद्यते) पत्तिः ॥ ६७ ॥ पादाभ्यां चरति पदिकः, पर्पादिभ्यष्ठन् ( सू० ), इकेचरतौपद्वक्तव्यात् ( वा० ) । पदातीनां समूहः पादातं, भिक्षादिभ्योण् (सू०) । काण्डानि पृष्ठेस्य काण्डपृष्ठः । आयुधेन जीवति, आयुधाच्छचेति ( सू० ) ठन्–छौ ॥ ६८ ॥ कृतो सिद्धो हस्तावस्य कृतहस्तः । कृताः पुङ्खोनेनेति कृतपुङ्खः । अपराद्धा अलब्धलक्ष्या बाणा अस्यापराद्धपृषत्कः ॥ ६९ ॥ धन्व– अस्यास्ति धन्वी, व्रीह्यादित्वादिनिः ( सू० ) । धनुः प्रहरणमस्य धानुष्कः, तदस्य– प्रहरणमिति ( सू० ) ठक्, इसुसुक्तान्तात्कः ( सू० ) । निषङ्गस्तूणोस्यास्ति निषङ्गी । अस्त्राणि सन्त्यस्यास्त्री । ( काण्डीरः काण्डाण्डादीरन्नीरचौ ( सू० ) । शक्तिः प्रहरणमस्य शाक्तीकः, शक्तियष्ट्योरीकक् ( सू० ) ॥ ७० ॥ पर्श्वधः परशौ न दृष्टः, अतो यष्टिस्वधितिहेतिकाविति **काश्मीराः** पठन्ति, यन्**मुनिः**– परश्वधः कुठारश्च स्वधितिः, तदस्य– प्रहरणमिति ( सू० ) परश्वधाट्ठञ् च । निस्त्रिंशासिः प्रहरणमस्य नैस्त्रिंशिकः । ( प्रासिककौन्तिकौ ) प्रासः कुन्तश्च प्रहरणमस्य ॥ ७१ ॥ चर्मफरास्यास्ति चर्मी । फलति विशीर्यते घातैः फलकः, रलयोरैक्या-

चर्मी फलकपाणिः स्यात्पताकी वैजयन्तिकः।
अनुप्लवः सहायश्चानुचरोभिच(स)रः समाः ॥ ७२॥
पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः।
पुरोगमः पुरोगामी मन्दगामी तु मन्थरः॥ ७३ ॥
जङ्घालोतिजवस्तुल्यौ जङ्घाकरिकजाङ्घिकौ।
तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥ ७४ ॥
जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके।
जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति ॥ ७५ ॥
सोभ्यमित्र्योभ्यमित्रीयोप्यभ्यमित्रीण इत्यपि।
ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जातिशयान्वितः ॥ ७६ ॥
स्यादुरस्वानुरसिलो रथिको रथिरो रथी।
कामंगाम्यनुकामीनो ह्यत्यन्तीनस्तथा भृशम् ॥ ७७ ॥
शूरो वीरश्च विक्रान्तो जेता जिष्णुश्च जित्वरे।
सांयुगीनो रणे साधुः शस्त्राजीवादयस्त्रिषु ॥ ७८ ॥

---

स्फरकोपि। वैजयन्त्या चरति वैजयन्तिकः, चरतीति (सू०) ठक् ॥ अनु पश्चात्प्लवतेऽनुप्लवः। सह-अयते सहायः ॥ ७२ ॥ पुरो गच्छति पुरोगमः। (पुरोगः) गमश्च (सू०) इति डः। अग्रे सरत्यग्रेसरः, पुरोग्रतोग्रेषुसर्तेः (सू०) इति टः। प्रातिष्ठते प्रष्ठः, प्रष्ठोग्रगामिनीति (सू०) साधुः। मध्नाति पादौ मन्थरः ॥ ७३ ॥ जङ्घे स्तोस्य जङ्घालः। जङ्घे एव करौ राजदेयौशोस्य जङ्घा-करिकः। जङ्घाभ्यां जीवति जाङ्घिकः। तरोस्यास्तीति तरस्वी, अस्मायामेधेति (सू०) विनिः। त्वरते स्म त्वरितः। प्रजवते प्रजवी, प्रजोरिनिः (सू०)। जवते तच्छीलो जवनः, जुचङ्क्रम्येति (सू०) युच्। जवते जवः, पचाद्यच् (नंदिग्रहीति) ॥७४॥ क्षय्यजय्यौशक्यार्थे (सू०) इति साधुः। (जेयः) शक्यादन्यत्रेत्यर्थः। जेतैव जैत्रः, तृन्नन्तत्वात्– प्रज्ञादित्वात् (सू०) अण्, जेतुरयं वा, फलतस्तुल्यार्थ-त्वम् ॥ ७५ ॥ आभिमुख्येनामित्रानलं गामी, अध्वनोयत्खौ (सू०), अभ्यमित्राच्छचेति (सू०) छः, चकाराद्यत्खौ च। अभ्यमित्रश्च। ऊर्ज ऊर्जो वास्त्यस्येति, ज्योत्स्नातमिस्रेति (सू०) साधुः। ऊर्जोऽ-सन्तं मन्यते, असन्तोत्रेति तु युक्तं, अन्यथोर्जस्वीति निपातनं व्यर्थं स्यात्, अस्मायामेधेति (सू०) विनिना सिद्धत्वात् ॥ ७६ ॥ उरसा बलं लक्ष्यते, तदस्यास्ति, पिच्छादित्वादिलच् (लोमादिपामादीति)। रथोस्यास्ति रथिकः, अतइनिठनौ (सू०)। (रथिरः) मेधारथाभ्यामिरन्निरचौ (वा०), रथिन इत्यपपाठः। अनुकामं यथेच्छं गामी– अनुकामीनः, अवारपारात्यन्तानुकामंगामीति (सू०) खः। अत्यन्तं भृशं कृत्वा गामी– अत्यन्तीनः, खः ॥ ७७ ॥ विक्रमते स्मोत्सहते विक्रान्तः। जयनशीलः (जेता), तृन्। (जिष्णुः) ग्लाजिस्थश्चग्स्नुः (सू०)। (जित्वरः) इण्नशजिसर्तिभ्यः क्वरप् (सू०)। संयुगे साधुः सांयुगीनः, प्रतिजनादिभ्यः खञ् (सू०)। (त्रिषु) वाच्यलिङ्गत्वात् ॥ ७८ ॥ बाह्याः सन्त्यस्यां

ध्वजिनी वाहिनी सेना पृतनानीकिनी चमूः ।
वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥ ७९ ॥
व्यूहस्तु बलविन्यासो भेदा दण्डादयो युधि ।
प्रत्यासारो व्यूहपार्ष्णिः सैन्यपृष्ठे प्रतिग्रहः ॥ ८० ॥
एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ।
पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ ८१ ॥
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।
अनीकिनी दशानीकिन्योक्षौहिण्यथ संपदि ॥ ८२ ॥
संपत्तिः श्रीश्च लक्ष्मीश्च विपत्त्यां विपदापदौ ।
आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ ॥ ८३ ॥
धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ।
इष्वासोप्यथ कर्णस्य कालपृष्ठं शरासनम् ॥ ८४ ॥

---

वाहिनी । सिनोति सेना, सह- इनेन वर्तते वा । प्रियते पृतना, पृङ् व्यायामे । चमत्यरींश्चमूः । वरूथो रथगुप्तिरस्त्यस्या वरूथिनी । बलति प्राणिति बलम् । सेनैव सैन्यम्, चतुर्वर्णादित्वात् (सू०) ष्यञ् । करोति च क्रत चक्रम् । अनित्यनीकम्, न नीयते वा, सैन्यैकदेशोयम् ॥७९॥ व्यूह्यते रच्यते व्यूहः । व्यूहस्येति शेषः, यदाहुः- दण्डो मण्डलभोगौ चाप्युत्सन्नश्चाचलो दृढः । व्यूहास्तेषां विशेषाः स्युश्चक्रव्यूहादयोपि च ॥ प्रत्यासरति भग्नान् प्रत्यासारः, सृस्थिरइति ( सू० ) घञ् । पार्ष्णिः पश्चाद्भागः । (प्रतिग्रहः) प्रतिगृह्यतेवष्टभ्यतेनेन सैन्यम् ॥ ८० ॥ पतति( पद्यते )पत्तिः सेनांशः, यद् **भारतं**- एको गजो रथश्चैको नराः पञ्च पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ पत्तिस्त्रिगुणा सेनामुखं- गजत्रयं ३, रथत्रयं ३, अश्वनवकं ९, पदातयः पञ्चदश १५ ॥ ८१ ॥ तत्त्रिगुणं गुडति गुल्मः- गजाः ९, रथाः ९, अश्वाः २७, पदातयः ४५ । स त्रिगुणो गण्यते गणः- गजाः २७, रथाः २७, अश्वाः ८१, पदातयः १३५ । स त्रिगुणो वाह्यते वाहिनी- गजाः ८१, रथाः ८१, अश्वाः २४३, पदातयः ४०५ । सा त्रिगुणा पृतना- गजाः २४३, रथाः २४३, अश्वाः ७२९, पदातयः १२१५ । सा त्रिगुणा चमूः- गजाः ७२९, रथाः ७२९, अश्वाः २१८७, पदायतः ३६४५ । सा त्रिगुणानीकिनी- गजाः २१८७, रथाः २१८७, अश्वाः ६५६१, पदातयः १०९३५ । अक्षाणां रथकाष्ठानामूहोस्त्यस्यां, अक्षाद्दहिन्यामिति ( वा० ) वृद्धिः ॥ ८२ ॥ ( संपद् ) संपदादिभ्यः क्विप् ( वा० ) । श्रयन्ति तां श्रीः, क्विब्वचिप्रच्छिश्रीति ( उ० ) क्विप्- दीर्घश्च । विपत्तिर्दारिद्र्यम् । आयुध्यन्तेनेनायुधं, घञर्थेकविधानं ( वा० ), स्थास्नापाव्यधिहनियुध्यर्थम् । शस्यतेनेन शस्त्रं, दाम्नीशसेति ( सू० ) ष्ट्रन् । अस्यतेस्त्रम् । हेतिर्नानार्थे ॥ ८३ ॥ धन्यतेर्थ्यते धनुः, अर्धर्चादिः ( सू० ) । चपस्य वेणोर्विकारश्चापम् । धन्वति ( धन्व ), कनिन् ( उ० ) । शरा अस्यन्तेनेन शरासनम् । कुदृ( द्रि ) अनृतभाषणे, अस्मादण्डन्, कुर्देर्वा रेफलोपे कोदण्डम् । कर्मणे प्रभवति कार्मुकम्, कर्मणउकञ् ( सू० ) । इषवोस्यन्तेनेन- इष्वासः । आसोपि ॥ ८४ ॥ गाण्डिः पर्वा-

कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसके ।
कोटिरस्याटनी गोधे तले ज्याघातवारणे ॥ ८५ ॥
लस्तकस्तु धनुर्मध्यं मौर्वी ज्या शिञ्जिनी गुणः ।
स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ॥ ८६ ॥
लक्षं लक्ष्यं शरव्यं च शराभ्यास उपासनम् ।
पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ ८७ ॥
कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः ।
प्रक्ष्वेडनास्तु नाराचाः पक्षो वाजस्त्रिषूत्तरे ॥ ८८ ॥
निरस्तः प्रहिते बाणे विषाक्ते दिग्धलिप्तकौ ।
तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ॥ ८९ ॥
तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिऋष्टयः ।
कौक्षेयको मण्डलाग्रः करवा( पा )लः कृपाणवत् ॥ ९० ॥

---

स्यास्ति गाण्डीवं, गाण्ड्यजगात्संज्ञायामिति ( सू० ) वः, गाण्डिरिदन्त ईदन्तश्चात्र प्रश्लिष्य निर्दिष्टः । पुंनपुंसके इति प्रथमाद्विवचनमजहल्लिङ्गम् । अस्य धनुषः प्रान्ते कोटिः, कुटतीति । अटत्यटनी, अर्त्यटनी इत्येके । गोधा च गोधा च गोधे द्वे, सव्यसाचित्वात् , गुध परिवेष्टने । तलं चर्मादिमयो ज्याघाताधारः ॥ ८५ ॥ ( लस्तकः ) लस श्लेषणे । मूर्वाख्यतृणस्य विकारो मौर्वी । जिनाति ज्या । जीवापि । शिङ्क्ते शब्दायते शिञ्जिनी । गुण्यतेभ्यस्यते गुणः । जङ्घयोश्चारि( वि )निवृत्तौ स्थितिः स्थानकमिति तु विशेषः । आलेढि भुवमालीढम् । आदिशब्दात्समपादं वैशाखं मण्डलं च धनुर्वेदप्रसिद्धम् । **भरतस्त्वन्यथाह**– वैष्णवं समपादं च वैशाखं मण्डलं तथा । प्रत्यालीढमथालीढं स्थानान्येतानि षड् नृणाम् ॥ ८६ ॥ लक्ष्यत इति ( लक्षं ), घञ् ण्यच्च । शृणाति शरुर्हिंस्रस्तस्मै हितं शरव्यं, उगवादिभ्योयत् ( सू० ), शरैर्वीयते छाद्यते वा । ( उपासनं ) असु क्षेपणे । पर्षति सिञ्चति– असृजा पृषत्कः, पृथक्षट्कमस्येति **धनुर्वेदः**– पुङ्खः शरस्तथा शल्यं पक्षस्नायुजतूनि षट् । वणति वण्यतेनेन वा बाणः । विशीयते विशिखः, शिञ् निशाने, विविधशिखो वा । अजिह्मग ऋजुगामी ॥ ८७ ॥ कल्यते क्षिप्यते कलम्बः । मार्गयति लक्ष्यं मार्गणः । शृणाति शरः । रोप्यते निखन्यते रोपः । इष्यति– इषुः, इष गतौ । प्रदरो नानार्थे । प्रक्ष्वेडते प्रक्ष्वेडनः, क्ष्विदे रूपं, क्ष्वेडिर्वोन्नेयः । नरमञ्चति, नराच एव नाराचः, स्वार्थेऽण् , सर्वलोहोयम् । ( पक्षः ) पक्ष परिग्रहे । वजति गच्छत्यनेन वाजः, न्यङ्क्वादेः ( सू० ) अकुत्वम् ॥ ८८ ॥ लिप्तान्ता वाच्यलिङ्गाः । निरस्यते स्म प्रहीयते स्म, क्षिप्त इत्यर्थः । विषेणाक्ते म्रक्षिते, दिह्यते स्म लिप्यते स्म । तूण्यते पूर्यते शरैस्तूणः, तूणीति लिङ्गरूपभेदार्थम् । उपासज्यन्ते निषज्यन्ते च बाणा यत्रेत्युपासङ्गनिषङ्गौ । इषवो धीयन्तेत्रेषुधिः । कलापो नानार्थे ॥ ८९ ॥ खड( ण्ड )ति भिनत्ति खड्गः । निष्क्रान्तास्त्रिंशतोङ्गुलिभ्यो निस्त्रिंशः । चन्द्रवद् हासः प्रभास्य चन्द्रहासः । अस्यतेसिः । ऋषेर्गत्यर्थाद् ऋष्टिः, ऋत्यकः ( सू० ) इति प्रकृतिः, हिंसार्थाद्रिषेस्तु रिष्टिः । कुक्षौ भवः कौक्षेयकः, कुलकुक्षीति ( सू० ) ढकञ् । मण्डलाकृत्यग्रमस्य मण्डलाग्रः । करे वलनमस्य करवालः । कल्पते कृपाणः, वतिः पूरणार्थः ॥ ९० ॥ ( त्सरुः ) त्सर छद्मगतौ । मीयते मणिबन्धे प्रक्षिप्यते मेखला, यथा प्रहरतो

त्सरुः खड्गादिमुष्टौ स्यान्मेखला तन्निबन्धनम् ।
फलकोऽस्त्री फलं चर्म संग्राहो मुष्टिरस्य यः ॥ ९१ ॥
द्रुघणो मुद्गरघनौ स्यादीली करवा( पा )लिका ।
भिन्दिपालः सृगस्तुल्यौ परिघः परिघातनः ॥ ९२ ॥
द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ।
स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका ॥ ९३ ॥
वा पुंसि शल्यं शङ्कुर्ना स( श )र्वला तोमरोऽस्त्रियाम् ।
प्रासस्तु कुन्तः कोणस्तु स्त्रियः पाल्यश्रिकोटयः ॥ ९४ ॥
सर्वाभिसारः सर्वौघः सर्वसंनहनार्थकः ।
लोहाभिसा( हा )रोऽस्त्रभृतां राज्ञां नीराजनो विधिः ॥ ९५ ॥
यत्सेनयाभिगमनमरौ तदभिषेणनम् ।
यात्रा व्रज्याभिनिर्याणं प्रस्थानं गमनं गमः ॥ ९६ ॥

---

हस्तान्न निर्याति । फलति विशीर्यते प्रहारैः (फलं,फलकं) फलं, **मुनिना** खड्गाद्यग्रे दृष्टं, अयं तु लोकात् फलकं मन्यते, **यच्छाश्वतः**– लाभे शस्ये शराद्यग्रे व्युष्टौ च फलके फलम् । चर्ममयत्वाच्चर्म । संगृह्यतेनेनेति संग्राहः, समिमुष्टाविति ( सू० ) घञ्, अस्य चर्मणो मुष्टिर्ग्रहणस्थानम् ॥९१॥ द्रुं वृक्षाङ्गं हन्ति द्रुघणः, द्रोर्घनो वा, अयोघनोन्यः । मुदं गिरति ग्रसते मुद्गरः । हन्यतेनेन घनः, मूर्तौघनइति ( सू० ) साधुः, **यच्छाश्वतः**– वाद्ये मुस्तेम्बुदे सान्द्रे घनः स्याल्लोहमुद्गरे । ईड्यत ईली, एकधारोसिस्तुरुष्कायुधम् । करवालात्, अल्पे ( सू० ) कन्, तरवालिकेत्येके । भिन्दतः पालयति भिन्दिपालः, भिण्डिपालो वा हस्तक्षेप्यो लगुडः । सृज्यते सरति वा सृगः । परितो हन्ति परिघः, परौघ इति ( सू० ) डे घत्वम्, लोहबद्धो लगुडः ॥ ९२ ॥ कुठान्वृक्षानियर्ति कुठारः । स्वं धियति बिभर्ति स्वधितिः । पराञ्शृणाति परशुः परश्वधश्च, पर्श्वधोपि, यदाह– याष्टीकपारश्वधिकौ यष्टिपर्श्वधहेतिकौ । शस्यतेनया शस्त्री । असेः पुत्रीवाल्पत्वात् । छुरति छिनत्ति छुरिका, क्षुरिकापि ॥ ९३ ॥ शलति विशत्यन्तः शल्यः । शङ्कतेस्माच्छङ्कुरायुधविशेषः, **यच्छाश्वतः**– संख्याकीलकयोः शङ्कुः शङ्कुः प्रहरणान्तरे । अन्यत्रोपचाराच्छल्यम् । सर्वान्–लाति सर्वला । स्तोम्यते प्रश्लाघ्यते तोमरः, तुः सौत्रो वा । प्रास्यते प्रासो हस्तक्षेप्यः शल्यः । कुणति कुन्तः । कोणो गृहादेर्विदिक्– अस्त्र्याख्या, कुण शब्दोपकरणयोः । पाति पालिः । अश्नुतेश्रिः । कुटति कोटिः ॥ ९४ ॥ सर्वेण सैन्येनाभिसरणं सर्वाभिसारः । सर्वेषामोघो वहनं सर्वौघः । सर्वे संनह्यन्तेत्र सर्वसंनहनम् । शस्त्रभृतां राज्ञां यः शान्तिको विधिः प्रस्थानात्प्राक् स लोहाभिसारः, लोहं शस्त्रमभिसार्यते प्रस्थानेत्रेति । नीरस्य शान्त्युदकस्याजनं क्षेपोत्र नीराजनं, मन्त्रोक्त्या वाहनायुधादेर्निःशेषेण राजनं वात्र । नीराजनादनन्तरं कर्म लोहाभिसार इति **मुनिः**– विधिर्लोहाभिसारस्तु राज्ञां नीराजनोत्तरः, **दुर्गोपि**– लोहाभिसारस्तु विधिः परो नीराजनान्नृपैः । दशम्यां दंशितैः कार्य इति । अत एव नीराजनाद्विधिरित्येके पठन्ति ॥ ९५ ॥ ( अभिषेणनं ) सत्यापपाशेति ( सू० ) णिच्, उपसर्गात्सुनोतीति ( सू० ) षत्वम् । यान्त्यस्यां यात्रा । व्रजनं व्रज्या, व्रजयजोर्भावेक्यप् ( सू० ) । ( प्रस्थानं ) प्रपूर्वात्तिष्ठतेर्गत्यर्थः । गमेः– प्रहवृद ( सू० ) इत्यपि गमः ॥ ९६ ॥ सैन्यस्य सर्वतो व्याप्तिरासारः, आक्षि

स्यादासारः प्रसरणं प्रचक्रं चलितार्थकम् ।
अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः ॥ ९७ ॥
वैतालिका बोधकराश्चाक्रिका घाण्टिकाः समाः ।
स्युर्मागधास्तु मगधा वन्दिनः स्तुतिपाठकाः ॥ ९८ ॥
संशप्तकास्तु समयात्संग्रामादनिवर्तिनः ॥ ९९ ॥
रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः ।
चूर्णे क्षोदः समुत्पिञ्जपिञ्जलौ भृशमाकुले ॥ १०० ॥
पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् ।
सा वीराशंसनं युद्धभूमिर्यातिभयप्रदा ॥ १०१ ॥
अहंपूर्वमहंपूर्वमित्यहंपूर्विका स्त्रियाम् ।
आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि ॥ १०२ ॥
अहमहमिका तु सा स्यात्परस्परं यो भवत्यहंकारः ।
द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च ॥ १०३ ॥
शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता ।
वीरपानं तु यत्पानं वृत्ते भाविनि वा रणे ॥ १०४ ॥

---

यते येनेत्यासारोऽन्यागच्छद्बलम् । प्रसारस्तु सैन्याद्बहिस्तृणजलाद्यर्थं प्रसरणमिति **कौटिल्यः**, यल्लक्ष्यं– निरुद्धवीवधासारप्रसारा गा इव व्रजम् ( शिशु० ) । प्रस्थितं चक्रं सैन्यं प्रचक्रम् । आभिमुख्येनाभिभूयारीन्वा यानमभिक्रमः ॥ ९७ ॥ वितालः शब्दः प्रयोजनमेषां वैतालिका राज्ञोवसरपाठका मङ्गला- [ मङ्खा ]ख्याः, प्रातर्बोधका इत्येके । ( चाक्रिकाः ) चक्रं राष्ट्रं घण्टाघातेन देवताद्यग्रे ये शंसन्ति ते, श्रावकाख्याः । ( मागधाः ) वंशोदीरणेन ये याचन्ते, आहुश्च– वैतालिकाश्च कथ्यन्ते कविभिः सौखशायिकाः । राज्ञः प्रबोधसमये घण्टाशिल्पास्तु घाण्टिकाः । मागधाः स्तुतिवंशज्ञा इति, मगधेति याच्ञार्थः कण्ड्वादिः, यच्छ्रीभोजः– कमर्थिनः कुषुभ्यन्तु कं मगध्यन्तु मागधाः । कमिषुध्यन्तु यज्वा[युध्वा]नो रामेरण्यं तुरण्यति ॥ वन्दन्ते स्तुवन्ति तच्छीलाः ( वन्दिनः ) । चत्वार एकार्था इत्येके ॥ ९८ ॥ संशपन्ति पलायमानं, सशपथं वा युध्यन्ते दृढनिश्चयाः संशप्तकाः ॥ ९९ ॥ रीयते रेणुः, रीङ् गतौ । धूयते धूलिः । पंशयति वस्त्रादि पांशुः, पशि नाशने । रज्यते वस्त्राद्यनेन रजः क्लीबे, रजनरजकरजःसूपसंख्यानं ( वा० ) इति नलोपः । ( क्षोदः ) क्षुदिर् संपेषणे, धूलिप्रायोयं, यच्छाश्वतः– चूर्णानि वासयोगाः स्युश्चूर्णो धूलिः सशर्करा । पिजि हिंसायां, आह च– समुत्पिञ्जोतिसंकुलः ॥ १०० ॥ पतति धूयते पताका । विजयते विजयन्तः, औणादिको झच् ( तॄभूवहीति ), तस्येयं वैजयन्ती । केत्यते संज्ञायतेऽनेन केतनम् । ध्वजति धूयते ध्वजः, पताकादण्डो ध्वज इत्येके । केतुर्नानार्थे । वीरा आशंस्यन्तेत्र ( वीराशंसनम् ) ॥ १०१ ॥ अहं पूर्वमस्यां क्रियायामिति सर्वे यत्र ब्रुवते साहंपूर्विका, स्वार्थे कन्– मत्वर्थीयो वा ठन् ( अतइनिठनौ ) । अहो पुरुषोहमित्यस्य भावः ( आहोपुरुषिका ), मनोज्ञादित्वाद्वुञ् ( द्वन्द्वमनोज्ञादिभ्यश्च ) ॥ १०२ ॥ अहं शक्तोहं शक्त इत्यस्यामहमहमिका, ठन् ( व्रीह्यादिभ्यश्च ), अहंशब्दो निपातः । द्रवत्यनेनारिं द्रविणम् । तरत्यनेनापदं तरः । सहतेनेनारिं सहः, असन्तौ द्वौ । शूरस्य भावः शौर्यम् । तिष्ठत्यनेन स्थाम । शुष्यत्यतेनारिः शुष्मम्, शुष्मेत्येके ॥ १०३ ॥ शकनं शक्तिः । प्राणनं प्राणः । विक्रमन्तेनेन विक्रमः । वीराणां मद्यपानं वीरपानम् ॥ १०४ ॥ जायते जन्यं, भव्यगेयेति ( सू० ) साधुः । प्रद्धान्ति प्रधनम्, धनिर्मारणार्थोत्र निधनवत् । म्रियन्तेऽस्मिन् मृधम् । आस्क-

युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ।
मृधमास्कन्दनं संख्यं समीकं सांपरायि( संपराय )कम् ॥ १०५ ॥
अस्त्रियां समरानीकरणाः कलहविग्रहौ ।
संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ॥ १०६ ॥
अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः ।
समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ॥ १०७ ॥
नियुद्धं बाहुयुद्धेऽथ तुमुलं रणसंकुले ।
क्ष्वेडा तु सिंहनादः स्यात्करिणां घटना घटा ॥ १०८ ॥
क्रन्दनं योधसंरावो बृंहितं करिगर्जितम् ।
विस्फारो धनुषः स्वानः पटहाडम्बरौ समौ ॥ १०९ ॥
प्रसभं तु बलात्कारो हठोऽथ स्खलितं छलम् ।
अजन्यं क्लीब उत्पात उपसर्गः समं त्रयम् ॥ ११० ॥
मूर्च्छा तु कश्मलं मोहोऽप्यवमर्दस्तु पीडनम् ।
अभ्यवस्कन्दनं त्वभ्यासादनं विजयो जयः ॥ १११ ॥

---

न्यतेत्रास्कन्दनम् । संचक्षतेऽस्मिन् संख्यं, संपूर्वश्चक्षिर्वधार्थः । समीयन्तेऽस्मिन् समीकं, ईङ् गतौ । संपरायो मृत्युः प्रयोजनमस्य सांपरायिकं, [ ठञ् ], विनयादित्वात्स्वार्थे ( सू० ) ठग्वा ॥ १०५ ॥ सम्यग्राति ( ते )संघट्टन्तेऽस्मिन् समरः । न नीयन्ते चाल्यन्तेत्रानीकम्, अनिकमस्त्यत्र वा । रणन्ति दुन्दुभयोऽत्र रणं, वाशिरण्योश्चेतिवक्तव्यादप् ( वा० ) । कल्यते क्षिप्यतेऽत्र कलहः, कलं हीनबलं हन्ति वा । विगृह्णन्त्यत्र विग्रहः, ग्रहवृदृ- इति ( सू० ) अप् । संप्रहरन्तेऽन्योन्यं घ्नन्त्यत्र संप्रहारः । अभिसंपतन्त्यत्राभिसंपातः । कल्यतेत्र कलिः । संस्फुटन्त्यत्र संस्फोटः, संस्फेट इति युक्तः पाठः, स्फिट अनादरे, भरते तु संफेटः । संयुज्यतेऽत्र संगता रथयुगा अत्र वा संयुगः ॥ १०६ ॥ अभ्यामृद्नन्त्यत्राभ्यामर्दः । समाघ्नन्त्यत्र समाघातः । संग्रामयन्तेऽस्मिन् संग्रामः । अभ्यागच्छन्त्यत्राभ्यागमः । आह्वयन्तेत्राहवः, आङि युद्धे ( सू० ) इत्यप्, संप्रसारणम् । समुदीयन्ते मिलन्त्यत्र समुदायः । संयतन्ते संयच्छन्ति वास्यां संयत् । संयन्ति संगच्छन्तेऽत्र समितिः । आ- अज्यन्ते क्षिप्यन्तेऽत्राजिः । युध्यन्तेऽस्यां युत्-द् ॥ १०७ ॥ नियत युद्धं ( नियुद्धं ) । ताम्यन्त्यत्र तुमुलं, तुमुः शीलो वा । ( क्ष्वेडा ) क्ष्वेदृ अव्यक्ते शब्दे- इति दुर्गः । सिंहानामिव नदनं भटानां सिंहनादः । क्ष्वेला वा । ( घटा ) घटादयःषितः ( ग० ) इति षिद्भिदादिभ्योऽङ् ( सू० ) ॥ १०८ ॥ समन्ताद्रवणं संरावः, उपसर्गेरुवः ( सू० ) इति घञ् । ( बृंहितं ) बृहि शब्दे । ( विस्फारः ) स्फुर संचलने । पटो हन्यतेऽस्य पटहः । आदम्यते- आडम्बरः, डमरुवद्दस्य डत्वम् ॥ १०९ ॥ प्रगता सभात्र प्रसभं, सभया युक्तायुक्तविचारो लक्ष्यते, प्रस[ प्रसभ ]प्रसवे वा । बलादिति निपातो हठार्थः । ( हठः ) हठ प्लुतिशठत्वयोः । स्खलनं मार्गाचलनम् । छयति छिनत्ति छलम् । न जने साधु- अजन्यम् । उत्पतत्यकस्मादायाति- उत्पातः, ज्वलादित्वाण्णः ( ज्वलितिकसन्तेभ्योणः ) । उपसृज्यत उपद्रूयतेऽनेनोपसर्गः ॥ ११० ॥ कशति( ते ) वैचित्यात्कश्मलम् । ( पीडनं ) पीड अवगाहने । ( अभ्यवस्कन्दनं ) छलादाक्रमणमित्यर्थः । धाटी च । रात्रौ च सौप्तिकम् । ( विजयः ) विः स्वार्थे लोचनाविलोचनवत् ॥ १११ ॥ प्रतीपं करणं प्रतीकारः शुद्धिः । निर्यातनं शोधनं, यत निकारोपस्कारयोः । निर्जितकाशी जिताहवः । एतेऽत्रौ प्रख्यापनार्थकाः, प्रेद्रुस्तुस्रुवः, ( सू० ), उदिश्रयतियौतिपूद्रुवः ( सू० ),

वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ।
प्रद्रावोद्द्रावसंद्रावसंदावा विद्रवो द्रवः ॥ ११२ ॥
अपक्रमोपयानं च रणे भङ्गः पराजयः ।
पराजितपराभूतौ त्रिषु नष्टतिरोहितौ ॥ ११३ ॥
प्रमापणं निबर्हणं निकारणं विशारणम् ।
प्रवासनं परासनं निषूदनं निहिंसनम् ॥ ११४ ॥
निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ।
निस्तर्हणं निहननं क्षणनं परिवर्जनम् ॥ ११५ ॥
निर्वापणं विशसनं मारणं प्रतिघातनम् ।
उद्वासनप्रमथनक्रथनोज्जासनानि च ॥ ११६ ॥
आलम्भपिञ्जविशरघातोन्माथ( न्मन्थ )वधा अपि ।
स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ॥ ११७ ॥
अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ।
परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः ॥ ११८ ॥
मृतप्रमीतौ त्रिष्वेते चिता चित्या चितिः स्त्रियाम् ।
कबन्धोऽस्त्री क्रियायुक्तमपमूर्ध कलेवरम् ॥ ११९ ॥

---

सनियुद्रुदुवः ( सू० ) इति घञ् ॥ ११२ ॥ अपद्वारेण क्रमणं ( अपक्रमः ) । भङ्गोपसरणं, अन्यत्रोपचारात् । परिभूतोऽभिभूतोऽपि । त्रिष्वित्येव, नश्यति स्म नष्टम्– अदृश्यम् । तिरोधीयते स्म तिरोहितं गृहीतदिक्कम् ॥ ११३ ॥ अत्राहिंसार्था अप्युपसर्गवशाद् हिंसार्था ज्ञेयाः, अकर्मकाश्च णिचा सकर्मकाः । प्रमापणं, मीञ् हिंसायां णिच्, मीनातिमिनोतीति ( सू० ) आत्वं, युच् । निपूर्वाद् बर्हेर्वृहेर्वा निबर्हणम् । निकारणं, कॄञ् हिंसायाम् । विशारणं, शॄ हिंसायाम् । प्रवसतः प्रयुक्तिः प्रवासनम्, एवं निर्वासनम् । असु क्षेपणेऽस्मात्परासनमपासनं च । षूद क्षरणेऽस्मान्निषूदनं जीवाच्चालनम् ॥ ११४ ॥ ( संज्ञपनं ) ज्ञपेर्मारणतोषणेति मित्त्वाद् ह्रस्वः ( मितां ह्रस्वः ) । निर्ग्रन्थनं, ग्रथि कौटिल्ये । निस्तर्हणं, तृहेर्हिंसार्थान्निःपूर्वात्, स्तृहेर्वा निपूर्वात् । क्षणनं, क्षणु हिंसायाम् ॥ ११५॥ निर्वापणं, पै ओवै शोषणे । विशसनं, शसु हिंसायाम् । क्रथनं, क्रथ हिंसायाम् । उज्जसनं, जसु हिंसायाम् ॥ ११६ ॥ आलम्भः, लभिराङ्पूर्वो हिंसार्थः, ( लभेः ) उपसर्गात्खल्घञोरिति (सू०) नुम् । पिञ्जः, पिञ्जिर्हिंसार्थः । विशरणं हिंसनं विशरः । हननं वधः, हनश्चवधइति ( सू० ) अप्, वधादेशश्च, पक्षे घञि घातः । ( उन्माथः ) मथ संक्लेशने । व्यापादनं विशमनं कदनं च निशुम्भनम् । ( पञ्चता ) देहस्तावन्महाभूतारब्धः, मरणं त्वेतस्य पञ्चभावः प्रत्येकं स्वांशसंक्रमात् । कालो मृत्युद्यूतलक्षणः, क्षयाद्यात्मको वा यदाहुः– कालः संहरति प्रजाः, तस्य धर्मः कालधर्मः संहारः । दिष्टस्य कालस्य जीवितावधेरन्तो दिष्टान्तः ॥ ११७ ॥ अमत्यन्तः पर्यन्तः । मरणं मृत्युः, द्वयोः स्त्रीपुंसयोः । निवृत्तं धनमत्र निधनं, निपूर्वो धनिर्मरणार्थं इति **सभ्याः** । प्रमयोऽपि दीर्घनिद्रा हिंसा संस्था प्रमालनम् । परागता असवोऽस्य परासुः । संतिष्ठते स्म संस्थितः, संपूर्वास्तिष्ठतिर्मरणे वर्तते । सर्वेते वाच्यलिङ्गाः ॥ ११८ ॥ चीयते स्म चिता । चेतव्या चित्या, चित्याग्निचित्येचेति ( सू० ) साधुः । चीयते चितिः । एते प्रेतदाहार्थेऽग्न्याधाने वर्तन्ते । कस्य शिरसो बन्धोऽत्र कबन्धः, केन बन्धो वा । क्रियया युक्तं नृत्यदपगतो मूर्धास्यापमूर्ध यत्कलेवरम् । रुण्डोऽपि ॥ ११९ ॥ शवशयनं श्मशानम् । पितॄन्प्रेतान्वनति भजति पितृवनम् । प्रेतवनं करवीरं च । कुणं शब्दं पाति कुणपः, धन-

श्मशानं स्यात्पितृवनं कुणपः शवमस्त्रियाम् ।
प्रग्रहोपग्रहौ वन्द्यां कारा स्याद्बन्धनालये ॥ १२० ॥
पुंसि भूम्न्यसवः प्राणाश्चैवं जीवोऽसुधारणम् ।
आयुर्जीवितकालो ना जीवातुर्जीवनौषधम् ॥ १२१ ॥

इति क्षत्त्रियवर्गः । ८ ।

ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः ।
आजीवो जीविका वार्त्ता वृत्तिर्वत( वर्त )नजीवने ॥ १ ॥
स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः ।
सेवा श्ववृत्तिरनृतं कृषिरुञ्छशिलं त्वृतम् ॥ २ ॥
द्वे याचितायाचितयोर्यथासंख्यं मृतामृते ।
सत्यानृतं वणिग्भावः स्यादृणं पर्युदञ्चनम् ॥ ३ ॥

---

जयाख्यस्य वायोः शवे संभवात् । शवति यात्यस्माज्जीवः शवः । प्रगृह्यते बध्यते प्रग्रहः । वन्यते याच्यते वन्दी हठहृता स्त्री, बलवतो हस्ताक्षिप्तो राजपुत्रादिश्च, यदाहुः– वन्दी स्यात्पणबन्धस्थः । कीर्यते क्षिप्यतेऽस्यां कारा, भिदाद्यङ् ( षिद्भिदादीति )॥ १२० ॥ अस्यन्तेऽसवः, स्वभावाद्बहुत्वे पुंलिङ्गः । प्राणन्त्यमीभिः प्राणाः, एवं शब्दात्पुंसि भूम्नि । प्राणो नाम वायुरित्येकत्वमजीवार्थत्वात् । जीवनं जीवः प्राणधारणम् । जीवापि । आयत्यायुर्जीवितावधिः, उसन्तः क्लीबे, छन्दस्युदन्तोऽपि । जीवत्यनेन जीवातुः, जीवनायौषधं जीवनरक्षोपायः, यथा– जीवातवे विसृज शूद्रमुनौ कृपाणम् ( उ० ), जीवितमौषधं चेत्युपाध्यायः ॥ १२१ ॥ इति क्षत्त्रियवर्गः । ८ ।

ऊर्वोर्भवा ऊरव्याः, शरीरावयवाच्चेति ( सू० ) यत्, यच्छ्रुतिः– ऊरू तदस्य यद्वैश्यः । अरणीयोऽर्यः, अर्यःस्वामिवैश्ययोः ( सू० ) इति साधुः । विशोऽपत्यं जातिर्वैश्यः, गर्गादिभ्योयञ् (सू०) । भूमिं स्पृशति कृष्यादिना भूमिस्पृक् । विशतीति विट् । ( आजीवः ) आजीवन्त्यनेनेति करणे भावे वा साध्यः । जीवनं जीविका, रोगाख्यायां ( सू० ) इत्यत्र धातुमात्राद् भावे ण्वुल् वक्तव्यः ( धात्वर्थनिर्देशेण्वुल् ) । कृष्यादिस्तूपचारात् । वर्तनं वृत्तिरस्त्यस्यां वार्त्ता, प्रज्ञाश्रद्धार्चावृत्तिभ्योणः ( सू० ) । वर्तन्तेऽनया वृत्तिः । वेति खादत्यनेन वेतनम् ॥ १ ॥ कर्षणं कृषिः, इक्कृष्यादिभ्यः ( वा० ) । पशुपालस्य कर्म पाशुपाल्यम् । वणिजः कर्म वाणिज्यम्, ब्राह्मणादित्वात्ष्यञ् ( गुणवचनब्राह्मणादिभ्यःकर्मणिच ) । दूतवणिग्भ्यांचेतिवक्तव्यात् ( वा० ) वणिज्यापि । चात्कुसीदम् । ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा । सत्यानृताभ्यामपि वा न श्ववृत्त्या कथंचनेति ये षड्वृत्तिभेदास्तानाह । ( सेवा ) शुन इव वृत्तिः परपिण्डोपजीवितत्वादधमेत्यर्थः । न ऋतमनृतं पापिष्ठत्वात्, प्रमृतमिति तु **सभ्यः** पाठः । उञ्छा धान्यकणोच्चयः– शिलं धान्यमञ्जरी, समस्तं व्यस्तं विपर्यस्तं वैतत्, वन्यत्वादृतं सत्यम् ॥ २ ॥ मृतं निर्जीवमिव । अमृतमनश्वरम् । किंचित्सत्यं किंचिच्चासत्यं, अत्र **मनुः**– ऋतमुञ्छशिलं ज्ञेयं स्यादयाचितममृतम् । मृतं तु याचितं भैक्ष्यं प्रमृतं कर्षणं स्मृतम् ॥ सत्यानृतं तु वाणिज्यं तेनापि खलु जीव्यते । सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ॥ अर्यते स्म ऋणं, ऋणमाधमर्ण्ये इति ( सू० ) साधुः । ( पर्युदञ्चनं ) परित उदञ्चनमुत्तमर्णामुद्धारत्वेन ग्रहणम् ॥ ३ ॥ अर्थस्य प्रयोगः कलान्तरेण दानम् । कुत्सितं सीदन्त्यत्र कुसीदम् । ( याचितकं ) अपमित्ययाचिताभ्यांकक्नौ ( सू० ) । विनिमयाद् भाण्डपरिवर्तनादागतमापमित्यक, मेङ् प्रणिदाने, उदीचांमाङोव्यतीहारे ( सू० ), मयतेरिदन्यतरस्यां ( सू० )

उद्धारोऽर्थप्रयोगस्तु कुसीदं वृद्धिजीविका ।
याच्ञयाप्तं याचितकं निमयादापमित्यकम् ॥ ४ ॥
उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् ।
कुसीदिको वार्धुषिको वृध्याजीवश्च वार्धुषिः ॥ ५ ॥
क्षेत्राजीवः कर्षकश्च कृषिकश्च कृषीवलः ।
क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम् ॥ ६ ॥
यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि तत् ।
तिल्यतैलीनवन्माषोमाणुभङ्गाद् द्विरूपता ॥ ७ ॥
मौद्गीनकौद्रवीणादि शेषधान्योद्भवक्षमम् ।
बीजाकृतं तूप्तकृष्टं सीत्यं कृष्टं च हल्यवत् ॥ ८ ॥
त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपि तस्मिन् ।
द्विगुणाकृते तु सर्वं पूर्वं शम्बाकृतमपीह ॥ ९ ॥
द्रोणाढकादिवापादौ द्रौणिकाढकिकादयः ।
खारीवापस्तु खारीक उत्तमर्णादयस्त्रिषु ॥ १० ॥

---

इति ल्यप्– तुक्, तत आगतेर्थे, अपनित्ययाचिताभ्यांकक्नौ ( सू० ) । **मुनिस्तु**– निमयः परिवर्तः स्यादुद्धारोप्यापामित्यकः ॥ ४ ॥ उत्तम ऋणे उत्तमर्णः प्रयोक्ता, अधम ऋणे– अधमर्णो ग्राहकः, सुप्सुपेति ( सू० ) समासः । कुसीदं गृह्णाति कुसीदिकः, कुसीददशैकादशात्ष्ठन्ष्ठचौ ( सू० ) । वृद्धिं गर्ह्यां प्रयच्छति वार्धुषिकः, प्रयच्छतिगर्ह्यमिति ( सू० ) ठक्, वृद्धेर्वृधुषिभावः ( वा० ) । ( वार्धुषिः ) लक्ष्यादिभ्रन्तोपि, यन्म**नुः**– श्रोत्रियस्य कदर्यस्य वदान्यस्यापि वार्धुषी । वृद्धिमाजीवति वृध्याजीवः । द्वैगुणिकश्च । वृद्धिर्लाभः कलान्तरम् ॥ ५ ॥ कर्षति कृषिकः, औणादिक इकः ( वृश्चिकृष्योःकिकन् ) । कार्षकोपि । कृषिरस्त्यस्य कृषीवलः, रजःकृष्यासुतीति ( सू० ) वलच्, वले ( सू० ) इति दीर्घः । व्रीहीणां भवनं क्षेत्रं व्रैहेयं, व्रीहिशाल्योर्ढक् ( सू० ) ॥६॥ यवानां भवनं क्षेत्रं यव्यं, यवयवकषष्टिकाद्यत् (सू०)। यवकोल्पयवः । षष्टिकाः षष्टिरात्रेण पच्यन्ते। **उपाध्यायो** यवादिभवने हितमिति पाठं परिकल्प्य प्रस्तावात्– चोद्यमित्यशुद्धं पठति । तिलानां भवनं क्षेत्रं, विभाषातिलमाषोमाभङ्गाणुभ्यः ( सू० ) इति यत्खञौ । एवं माषादीनां द्विरूपता– माष्यं माषीणं, उम्यमौमीनं ( उमा–अतसी ), अणव्यमाणवीनं, भङ्ग्यं भाङ्गीनम् ॥ ७ ॥ मुद्गानां कोद्रवाणां च भवनं क्षेत्रं, धान्यानांभवनेक्षेत्रेखञ् ( सू० ) । आदिशब्दान्मासूरीणादि । शेषाणि व्रीह्यादिभ्योन्यानि । शाकक्षेत्रे द्वयं– शाकशाकटं शाकशाकिनं, भवनेक्षेत्रेशाकटशाकिनौवक्तव्यात् (वा०) । अबीजं सबीजं संपन्नं बीजाकृतं, कृञोद्वितीयतृतीयशम्बबीजात्कृषौ ( सू० ) इति डाच् । आदावुप्तं पश्चात्कृष्टं ( उप्तकृष्टं ), पूर्वकालेकेति ( सू० ) समासः । सीतया हललेखया समितं संगतं सीत्यं, नौवयोधर्मेति ( सू० ) सीतया समिते यत् । हलेन कृष्टं हल्यं, मतजनहलात्करणजल्पकर्षेषु ( सू० ) इति यत् ॥ ८ ॥ त्रिगुणं कृष्टं क्षेत्रं त्रिगुणाकृतं, संख्यायाश्चगुणान्तायाः ( सू० ) इति डाच् । त्रिहल्यं त्रिसीत्यमपि प्राग्वद्यत्, रथसीताहलेभ्यो यद्विधौ तदन्तविधिः ( येनाविधिस्तदन्तस्य ) । सर्वं पूर्वं डाच्–यच्च, द्वितीयाकृतं द्विहल्यं द्विसीत्यम् । शम्बकृतं हि सम्यक् कृष्ट्वा तिर्यक् कृष्टमाहुः ॥ ९ ॥ द्रोणस्य वापः क्षेत्रं द्रौणिकं, उप्यतेस्मिन्वापः, तस्यवापइति ( सू० ) ठञ् । आदिशब्दात्प्रस्थादिभ्यः, संभवत्यवहरतिपचतीति ( सू० ) ठनि प्रास्थिकादयः । ( खारीकः ) खार्या ईकन् ( सू० ) । वाच्यलिङ्गत्वात्क्षेत्रम् ॥ १० ॥ उप्यतेस्मिन्वप्रम् । के जले दार्यते केदारः । क्षीयते धान्यै-

पुंनपुंसकयोर्वप्रः केदारः क्षेत्रमस्य तु ।
कैदारकं स्यात्कैदार्यं क्षैत्रं कैदारिकं गणे ॥ ११ ॥
लोष्टानि लेष्टवः पुंसि कोटिशो लोष्टभेदनः ।
प्राजनं तोदनं तोत्त्रं खनित्रमवदारणम् ॥ १२ ॥
दात्रं लवित्रमाबन्धो योत्रं योक्त्रमथो हलम् ।
निरीषं कुटकं फालः कृषको लाङ्गलं हलम् ॥ १३ ॥
गोदारणं च सीरोथ शम्या स्त्री युगकीलकः ।
ईषा लाङ्गलदण्डः स्यात्सीता लाङ्गलपद्धतिः ॥ १४ ॥
पुंसि मेथिः( धिः ) खलेदारु न्यस्तं यत्पशुबन्धने ।
आशुर्व्रीहिः पाटलः स्याच्छितशूकयवौ समौ ॥ १५ ॥
तोक्मस्तु तत्र हरिते कलायस्तु सतीनकः ।
हरेणुखण्डिकौ चास्मिन्कोरदूषस्तु कोद्रवः ॥ १६ ॥
मङ्गल्यको मसूरोथ मकुष्ठ(ष्ट)कमयुष्टकौ ।
वनमुद्गे सर्षपे तु द्वौ तुन्तुभकदम्बकौ ॥ १७ ॥

---

क्ष्यतेत्र, फलैर्हीय( हिंस्य )ते वा क्षेत्रं, क्षि निवासे, क्षिणु हिंसायां वा । अस्य क्षेत्रस्य समूहेर्थे– एते स्युः। (कैदार्यं, इ०) केदाराद्यञ्चेति (सू०) यञ्वुञ्. ( कैदारिकं ) ठञ्कवचिनश्चेति (सू०) ठञ्। ( क्षैत्रं ) क्षेत्रात्– अचित्तहस्तीति ( सू० ) ठकि प्राप्ते भिक्षादित्वात् ( सू० ) अण् ॥ ११ ॥ लुप्यते लुप्यति वा लोष्टम् । लेष्टुश्च मृत्खण्डः । कोटिभिः कोणैः श्यति भिनत्ति कोटिशः । प्राज्यते ( प्रवीयते ) प्रेर्यतेनेन प्राजनं, वायाविति ( सू० ) पक्षेऽजेर्वी, प्रवयणं च । तुद्यतेनेनेति तोत्त्रम् । प्रेषणं च । खन्यतेनेन खनित्रं कुद्दालादि ॥ १२ ॥ द्य( दा )न्ति लुनन्ति चानेन, दाम्नीतिष्ट्रन् ( सू० )। (लवित्रं) अर्तिलूधूसूखनसहचरइत्रः (सू०)। आबध्यते यूयते युज्यते चानेनेति, चर्मरज्जुः । इतो हलप्रकरणमारब्धमित्यर्थः । निष्क्रान्ता– ईषास्मान्निरीषम् । कुटति कुटकं यस्याग्रे फालो बध्यते । फलति विशीर्यते भूमिरनेन फालः । कृषति क्ष्मां कृषकः, क्वुन्–शिल्पिसंज्ञयोः (उ०)। कृषिकः फलं च । लङ्गति लाङ्गलम् । हलति विलिखति हलम् ॥१३॥ गौर्भूमिर्दार्यतेनेन गोदारणम् । सीयते बध्यतेनेन सीरः । शाम्यति शम्या । ईषति– ईषा, ईष उञ्छे । स्यति भुवं सीता हललेखा ॥ १४ ॥ मीयते क्षिप्यते मेथिः, मेधन्ते (सं)गम्यन्तेस्मिन्वा, खलेदार्वीति हलदन्तात्सप्तम्याः ( सू० ) इत्यलुक् , पशुबन्धननिमित्तम् । खलेवाली च । खलं तु खलवान[ धान्य ]कम् । अश्यतेश्नुते वा– आशुः, शीघ्रपाका वा, यद् दुर्गः– आश्वाख्या शालिशीघ्रयोः । व्रीणाति व्रीहिः षष्टिकादिधान्यविशेषः, व्री भरणे, यतः– व्रीहिर्यवो मसूरो गोधूमो मुद्गमाषतिलचणकाः । अणवः प्रियङ्गुकोद्रवमयुष्टकाः ( शालिगाढक्यः )॥ द्वौ च कलायकुलत्थौ शणसप्तदशानि धान्यानि । शितस्तीक्ष्णः शूकः किंशारुरस्य शितशूकः । यूयते यवः ॥ १५ ॥ तत्र नीले यवे, तुज्यते तोक्मः, तुजिर्हिंसार्थः । कल[म]यति सारमयते कलायः, कं लाति वा । सीदन्त्यनेन सतीनकः, सातीनकोपि । ह्रियते हरेणुः । खण्ड्यत खण्डिकः । कोरं भक्तं दूषयति कोरदूषः कदन्नत्वात् । केनाम्भसा– उद्यते कोद्रवः ॥ १६ ॥ ( मसूरः ) मसी परिणामे । मङ्क्यतेनेन मकुष्टः । मीयते मयुष्टकः । सरति सर्षपः । तुदति तुन्तुभः । कुत्सितमम्बते कदम्बः ॥ १७ ॥ ( सिद्धार्थः ) सिद्धप्रयोजनो रक्षोघ्नत्वात् , एष सर्षपः । गुध्यति परिवेष्टयति गोधूमः, गां धुनोति वा । सुष्ठु मन्यते सुमनः, अकारान्तः । यूयतेम्भसा यावकः । कोलति कुलेन मस्यति परिणमति वा कुल्माषः, अर्धस्विन्नो यवादिः, धान्यविशेष इत्येके। चण्यते दीयते चणकः । हरिभि-

सिद्धार्थस्त्वेष धवलो गोधूमः सुमनः समौ ।
स्याद्यावकस्तु कुल्माषश्चणको हरिमन्थकः ॥ १८ ॥
द्वौ तिले तिलपेजश्च तिलपिञ्जश्च निष्फले ।
क्षवः क्षुताभिजननो राजिका कृष्णिकासुरी ॥ १९ ॥
स्त्रियौ कङ्गुप्रियङ्गू द्वे अतसी स्यादुमा क्षुमा ।
मातुलानी तु भङ्गायां व्रीहिभेदस्त्वणुः पुमान् ॥ २० ॥
किंशारुः शस्यशूकं स्यात्कणिशं शस्यमञ्जरी ।
धान्यं व्रीहिः स्तम्बकरिः स्तम्बो गुच्छस्तृणादिनः ॥ २१ ॥
नाडी नालं च काण्डोऽस्य पलालोऽस्त्री स निष्फलः ।
कडङ्गरो बुसं क्लीबे धान्यत्वचि पुमांस्तुषः ॥ २२ ॥
शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे शमी शिम्बा त्रिपूत्तरे ।
रिद्धमावसितं धान्यं पूतं तु बहुलीकृतम् ॥ २३ ॥
माषादयः शमीधान्ये शूकधान्ये यवादयः ।
शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी ॥ २४ ॥

---

मथ्यते हरिमन्थः ॥ १८ ॥ तिलान्निष्फलात्पिञ्जपेजौ वक्तव्यौ ( वा० ) । जर्तिलः स्याद्वनतिलः । क्षौत्यनेन क्षवः । क्षुतमभिजनयति क्षुताभिजननः । कृष्णसर्षपोयं राजसर्षपाख्यः । राजते राजिका । कृष्णवर्णेन, कर्षति विलिखति वा । अस्यते– आसुरी, असुरस्त्रीव वा ॥ १९ ॥ कुत्सितं कृत्वाङ्ग्यते कङ्गुः, कङ्गुः कङ्गुश्चेत्येके । प्रीणाति प्रियङ्गुः । न तस्यते– अतसी । अवते– उमा. ऊङ् शब्दे । क्षौत्यनया भुक्तया क्षुमा । न तोल्यते मातुलानी । भज्यते भङ्गा । शणोपि । अणुरल्पकणत्वात् , अणति पर्दत्यनेनेति वा । तुवरी त्वरके वल्लो निष्पावे श्यामाकः श्यामके च ॥ २० ॥ कुत्सितं शृणाति किंशारुः । श्यति शूकम् । कणाः सन्त्यस्य कणिशम् । धान्ययवादिशिलः, शिलं च । धन्यतेर्ध्यते धान्यम् । स्तम्बं करोति स्तम्बकरिः, स्तम्बशकृतोरिन् ( सू० ) । शी[ सी ]त्यं च । कुसूलो वलजः कोष्ठागारं धान्यादिकोष्ठकः । तृणादेर्यः स्तम्बो नालं, स गुध्यतेनेनेति गुच्छः । यं प्रति स्तम्बोऽप्रसिद्धस्तं प्रत्यन्यथाविध्यनुवादौ कार्यौ । एवं सर्वत्रोह्येयम् ॥ २१ ॥ अस्य गुच्छस्य यः काण्डः– कण्ड( य )त्यनेन– सा नाडी, नड( ता )ति । ( नालं ) णल गन्धे । स काण्डः पलालः, पलतीति । कटत्वात्वृणोति, कट( ड् ) अङ्गं रूपमस्य कडङ्गरः । बुस्यते– उत्सृज्यते बुस तृणादिक्षोदः । तुष्यत्यनेनाग्निस्तुषः ॥ २२ ॥ श्यति शूकम् , श्लक्ष्णं च तीक्ष्णाग्रं च तत् । सस्यादेरन्यत्र वृश्चिकादिकण्टकोपि शूक इति किंशारोरन्यत्र निर्दिष्टः, शूकधान्यशमीधान्यभेदार्थं वा पुनरुक्तः । शाम्यत्यस्यां सस्यं शमी । शिनोति शिम्बा । शामः शिम्बिरित्यपि । रिद्धाद्याश्चत्वारो वाच्यलिङ्गाः । रिद्धं संसिद्धं राधेः, ऋद्धं संपन्नमित्यके ऋधेः । आवसितं रक्षार्थमाच्छादितं, वस आच्छादने, आ– अवसितं निष्पन्नमित्येके । पूयते स्म पूतं निर्बुसीकृतम् । बहु लाति बहुलं सारं, ततश्च्विः, मार्जनीशोधितमित्येके ॥ २३ ॥ वर्तन्त इति शेषः । ( माषादयः ) आदिशब्दान्मुद्गमसूरादयः । ( यवादयः ) आदिशब्दाद् गोधूमशालयः । शाल्यते शालिः । कल्यते कलमः । आद्यशब्दाद्राजशाल्याद्या जलजाः । षष्टिकाः षष्टिरात्रेण पच्यन्ते । आद्यशब्दात्कक्कोलाद्याः स्थलजाः । अमी इति पुंलिङ्गनिर्देशान्माषाद्याः शाल्यन्ताः पुंसि ॥ २४ ॥ नियतैर्व्रियन्ते नीवाराः, मुन्यन्नत्वात् , नौवृधान्य इति ( सू० ) घञ् । बहुवचनाच्छ्यामाकादयोपि । गवे( वि )अम्भसि निधीयते गवेधुर्नाम मुन्यन्नम् । अयोग्रेस्य– अयोग्रं, अयोनिरित्येके पेटुः । मुस्यते खण्ड्यतेनेन मुसलम् । ऊर्ध्वे खं लाति ( उदूखलमुलूखलं )

तृणधान्यानि नीवाराः स्त्री गवेधुर्गवेधुका ।
अयोग्रं मुसलोस्त्री स्यादुदूखलमुलूखलम् ॥ २५ ॥
प्रस्फोटनं शूर्पमस्त्री चालनी तितउः पुमान् ।
स्यूतप्रसेवौ कण्डोलपिण्डौ कटकिलिञ्जकौ ॥ २६ ॥
समानौ रसवत्यां तु पाकस्थानमहानसे ।
पौरोगवस्तदध्यक्षः सूपकारास्तु वल्लवाः ॥ २७ ॥
आरालिका आन्धसिकाः सूदा औदनिका गुणाः ।
आपूपिकः कान्दविको भक्ष्यकार इमे त्रिषु ॥ २८ ॥
अश्मन्तमुद्धा( द्धा )नमधिश्रयणी चुल्लिरन्तिका ।
अङ्गारधानिकाङ्गारशकट्यपि हसन्त्यपि ॥ २९ ॥
हसन्यप्यथ न स्त्री स्यादङ्गारोलातमुल्मुकम् ।
क्लीबेम्बरीषं भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियाम् ॥ ३० ॥
अलं लिं )जरः स्यान्मणिकः कर्कर्यालूर्गलन्तिका ।
पिठरः स्थाल्युखा कुण्डं कलशस्तु त्रिषु द्वयोः ॥ ३१ ॥

---

उद्वणोल्वणवत् पृषोदरादित्वात् ( सू० ) उभयम् ॥ २५ ॥ प्रस्फोट्यतेऽसारं बहिः क्रियतेनेन प्रस्फोटनम् । शीयते शीर्यते वानेन शूर्पं, शूर्प माने वा । चाल्यतेनेनेति चालनं, कात्यः– क्षुद्रच्छिद्रसमोपेतं चालनं तितउः स्मृतः । तनोति सारं तितउः, तनोतेर्डउःसन्वच्च ( उ० ) । परिपवनं च । समानाविल्येव । सीव्यते स्म स्यूतः, वस्त्रावापनं च । प्रसीव्यते प्रसेवकः । कण्ड्यते कण्डोलः । पिण्ड्यते पिण्डः; वंशदलादिमयं भाण्डम् । पिटकोपि । कटत्यावृणोति कटः । किल्यते क्षिप्यतेऽस्मिन् किलिञ्जः, वीरणतृणादिमयं कुणालाख्यम् ॥ २६ ॥ रस आस्वादोस्त्यस्यां रसवती । महदनोस्य महानसं, अनसापकरणं लक्ष्यते, अनोश्मायःसरसामिति ( सू० ) समासान्तश्च । पुरो गौर्मांसं जल वास्याः पुरोगुस्तस्या रसवत्या अयं पौरोगवः । सूपं कुर्वन्तीत्युपलक्षणं मांसशाकादेः । ( वल्लवः )वल्लिः सौत्रः प्रीत्यर्थः ॥ २७ ॥ ( आरालिकाः, इ० ) अरालमन्ध ओदनं च पण्यमेषाम् । सूदयन्ति तण्डुलान्सूदाः । गुणयन्ति गुणाः । भक्तकाराश्च । अपूपाः कन्दुश्च पण्यमस्य, इसुसुक्तान्तात् ( सू० ) के, कान्दुक इति न्याय्यम् । खरविशदमभ्यवहार्यं भक्ष्यम् । पौरोगवाद्या वाच्यलिङ्गाः ॥ २८ ॥ अश्नुतेश्मन्तम् । उद्व(द्ध)यते( ति) उद्धा (ध्मा)नम् । अधिश्रीयतेऽनयाधिश्रयणी, श्रीञ् पाके । चुल्ल भावकरणेस्माच्चुदेर्वा चुल्लिः । अन्तोस्त्यस्यामन्तिका, अन्त्याधिश्रयणी भवेदिति माला । अङ्गारा धीयन्तेस्यामङ्गारधानी मन्नाग्निः । हसन्त्यङ्गारैर्हसनी ॥ २९ ॥ अङ्गत्यङ्गारः, लिङ्गार्थं विधिः । अलन्ति वारयन्त्यतदवाते न लान्ति वा ( अलातम् ) । उल्कां मुञ्चत्युल्मुकमर्धदग्धं काष्ठं, उलति वा, उलिः सौत्रः । अम्ब्यतेर्ध्यतेम्बरीषम् । भृज्ज्यतेत्र भ्राष्ट्रम् । वेत्येव विकल्पेन कन्दुर्ना पुमान्, पक्षे स्त्री, कन्दत्यनां कन्दुः । स्वेदयति स्वेदनी ॥ ३० ॥ अलं जीर्यत्यलंजरो महाकुम्भः । मणत्यञ्जसा भ्रियमाणो मणिकः । किरत्यम्बु कर्करी । आलात्यालूः, अङ उद्यमेस्मादाङ्यूर्वा । गलत्यम्भोस्या गलन्तिका, वर्धनीत्यर्थः । पि( पे )ठति पिठरः पिटरी च, पिठ अवयवे । तिष्ठत्यस्यां स्थाली । स्थालं कुम्भी च । ओखत्युखा । कुण्डयते पच्यतेस्मिन्कुण्डं कुण्डी च । कं लाति कलयति वा कलशः ॥ ३१ ॥ घटते घटः । कुटति कौटत्यम्भसा वा कुटः । निपिबन्त्यस्मान्निपः । शीर्यमाणमवति शरावः । वर्धते मृत्पिण्डाद्वर्ध्यते छिद्यते वा चक्राद्वर्धमानकः । शलाजिरोपि । अर्च्यते पाकोत्कर्षाद्दर्वीकं, ऋजीषमिति तान्त्रिकाः, ऋजिभृजी भर्जने । पिष्टकृतं भक्ष्यं पच्यतेस्मिन् पिष्टपचनम् । काम्यतेस्मात्कंसः ।

घटः कुटनिपावस्त्री शरावो वर्धमानकः ।
ऋचीकं पिष्टपचनं कंसोस्त्री पानभाजनम् ॥ ३२ ॥
कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमान् ।
सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम् ॥ ३३ ॥
दर्विः कम्बिः खजाका च स्यात्तन्दू( र्दू )र्दारुहस्तकः ।
अस्त्री शाकं हरितकं शिग्रुरस्य तु नाडिका ॥ ३४ ॥
कडम्बश्च कलम्बश्च वेषवार उपस्करः ।
तिन्तिडीकं च चुक्रं च वृक्षाम्ब्लमथ वेल्लजम् ॥ ३५ ॥
मरीचं कोलकं कृष्णमूषणं धार्मपत्तनम् ।
जीरको जरणोजाजी कणा कृष्णे तु जीरके ॥ ३६ ॥
सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्चिका ।
आर्द्रकं शृङ्गवेरं स्यादथ छत्रा वितुन्नकम् ॥ ३७ ॥
कुस्तुम्बरु च धान्याकमथ शुण्ठी महौषधम् ।
स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम् ॥ ३८ ॥

---

चषको मल्लिका पारी च ॥ ३२ ॥ कुत्सितं तन्यते कुतूः । कृत्तेश्चर्मणः ( स्नेहपात्रम् ) । ह्रस्वा कुतूः कुतुपः, कुत्वाड्डुपच् ( सू॰ ) । आ- उप्यते- आधेयमस्मिन्नावपनम् । भण्ड[ य ]त्याधेयं भाण्डम्, भडि परिभाषणे । पात्याधेयं पीयतेस्माद्वा पात्रम् । अमत्याधेयमत्रामत्रम् । भज्यतेस्मिन्नाधेयं भाजनम् । भाण्डावपने पृथगाहुः, यन्मुनिः- उष्ट्रिकादि तु यद्भाण्डं सर्वमावपनं विदुः ॥ ३३ ॥ दृणाति पाक्यं दर्विः । काम्यते कम्बिः । खजति मथ्नाति खजाका । ततं दुनोति खण्डयति तन्दूः, तनोति वा । दारुमयो हस्तप्रतिकृतिर्दारुहस्तकः, दर्वीभेदोयम् । श्यति देहं शक्यतेनेन वा भोक्तुं शाकम् । हरितकं नीलत्वात् । शिनोति शिग्रुः, द्वयर्थे शिग्रुः शोभाञ्जनं हरितकविशेषश्च ॥ ३४ ॥ अस्य शाकस्य नाडी, कडति के लम्बते वा कडम्बः ( कलम्बः ), शाकविशेष इत्येके, प्राकृते दस्य(श्च) लडात्कदम्ब इत्याहुः । कडंवो वा । वेषं व्याप्तिं वृणीते वेषवारः । कासमर्दकसुरसादिर्येन मांसान्युपस्क्रियन्तेसावुपस्करः, समवायेच ( सू॰ ) इति सुट् । तद्भेदानाह । तिन्तिडिशैलजं तिन्तिडीकम् । चुक्रं, चुक्र व्यथने । वृक्षस्याम्ब्लमम्ब्लवेतसमाहुः । वेल्ले वेल्लातटे जायते वेल्लजं, वेल्लाख्यः शाखीत्येके ॥ ३५ ॥ म्रियते जिह्वानेन मरीचम् । सौक्ष्म्यात्कोलकं, कुड बाल्ये । कृष्णं वर्णेन कर्षति तैक्ष्ण्याद्वा । ऊषति रुजति- ऊषणम् । धर्मपत्तने भवं धार्मपत्तनम् । आह च- मरीचं वलितं श्यामं वेल्लकं( जं ) कृष्णमूषणम् । यवनेष्टं सितवृन्तं कोलकं धार्मपत्तनम् ॥ जीर्यतेनेनान्नं जीरकः । जरयतीति जरण इति सभ्याः । अजं स्वाभाविकं मन्दाग्नित्वमजति- अजाजी, स्त्री । कणाः सन्त्यस्याः कणा, अर्शआदिभ्योच् ( सू॰ ) । कणा कृष्णा तु पिप्पलीत्येके पेठुः ॥ ३६ ॥ सुष्ठु सुवति प्रेरयति दोषान् सुषवी । कारोरियं कारवी । पृथ्वी बृहत्कणा । काला वर्णेन । उपकुञ्चयत्यल्पीकरोति दोषानुपकुञ्चिका । आह च- उपकुञ्चिकोपकुञ्ची च कालिका चोपकालिका । सुषवी कुञ्चिका कुञ्ची पृथ्वीका कृष्णजीरके ॥ ( आर्द्रकं ) आर्द्रात्संज्ञायांकन् ( सू॰ ) । शृङ्गोपलक्षितं वेरं देहोस्य शृङ्गवेरम् । आह च- महौषधं शृङ्गवेरं कटुभद्रं तथार्द्रकम् । छत्त्रातपत्रा, छादयति दोषान्वा छत्त्रा । वितुदति मन्दाग्नित्वं वितुन्नकम् ॥ ३७ ॥ कुत्सितं तुम्बति कुस्तुम्बरु, तुबि तुचि अर्दने, पारस्करादित्वात्सुट् ( सू॰ ) । धान्यमकति धान्याकं, अल्लुका धान्यकं च । शुण्ठति शुष्यति शुण्ठी । नागराख्ये देशे भवं नागरम् । विश्वभेषजमनेकदोषजित् । विश्वं विश्वा च भीमवत् ॥ ३८ ॥ आरनालो भक्तं तज्जमारनालम् । सुवीरेषु प्रायो

आरनालकसौवीरकुल्माषाभिषुतानि तु ।
अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्चि( ञ्जि )के ॥३९॥
सहस्रवेधि जतुकं बाह्लीकं हिङ्गु रामठम् ।
तत्पत्त्री कारवी पृथ्वी बाष्पिका कबरी पृथुः ॥ ४० ॥
निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी ।
सामुद्रं यत्तु लवणमक्षीवं वशि( सि )रं च तत् ॥ ४१ ॥
सैन्धवोऽस्त्री शीतशिवं माणिबन्धं च सिन्धुजे ।
रौमकं वस्त( सु )कं पाक्यं बिडं च कृतके द्वयम् ॥ ४२ ॥
सौवर्चलेऽक्षरुचकं तिलकं तत्र मेचके ।
मत्स्यण्डी फाणितं खण्डविकारे शर्करा सिता ॥ ४३ ॥

---

भवं सौवीरम् । ( अभिषुतं ) षुञ् अभिषवे, अस्माद्वा पृथक् कुल्माषाख्या नास्ति, चेद् भीमवत् स्यात् । कुल्माषैर्यवादिभिरर्धस्विन्नैरभिषूयत परिवास्यते स्म कुल्माषाभिषुतम् । अवन्तिषु सूयते– अवन्तिसोमम् । कुञ्जं लाति कुत्सितं जलमस्य वा कुञ्जलम् । कञ्ज( ञ्च )यति दीपयत्यग्निं बध्नाति दोषान्वा काञ्चिकं, काञ्च्या पुरि भवं वा । आह च ( **धन्वन्तरिः** )– काञ्चिकं कञ्जिकं वीरं कुल्माषाभिषुतं तथा । अवन्तिसामं धान्याम्लमारनालं महारसम् ॥ सौवीरकं सुवीराम्लं तथा शुक्तं तुषोदकम् ॥३९॥ सहस्रं बहु विध्यति सहस्रवेधि । जायते जतुकम् । बाह्लीकरामठ बुरगदेशौ । हिनोति हिङ्गु । अत्युग्रं भूतनाशनमगूढगन्धं च । तस्य हिङ्गोः पत्त्रा, करोरियं कारवी संस्कर्त्री । बाष्पं स्रवति बाष्पिका । कबर्याकृतिः कबरी, कर्वरीति च पाठभेदः ॥ ४० ॥ निशाख्या रात्रिपर्याया नानार्थे रजनीत्वात् । काञ्चनवर्णा काञ्चनी । हरि पीतं वर्णं द्रति ( गच्छति ) हरिद्रा । वरो वर्णोऽस्त्यस्या वरवर्णिनी । आह च– हरिद्रा पीतिका पिण्डा र( रं )जनी रजनी[ काञ्चनी ] निशा । गौरी वर्णवती पीता हरिता वरवर्णिनी ।, लुनाति जाड्यं लवणं, नन्द्यादित्वाल्ल्युः (सू०), णत्वं च । अक्ष्णोति व्याप्नोति– अक्षीवम् । उश्यते वशिरं, वश कान्तौ ॥ ४१ ॥ सिन्धुनद्युपलक्षिते देशे भवं सैन्धवम् । शीतं शिनोति शीतशिवं, उष्णवीर्यत्वात् । मणिबन्धगिरौ भवं माणिबन्धम् । मणिमन्त( न्थं ) माणिमन्थं बाहुः । आह च– सैन्धवं साधु सिन्धूत्थं नादेयी( यं ) सिन्धुजं शिवं । शुद्धं शीताशिवं चान्यन्माणिबन्धं शिलातकम् ॥ रुमायामाकरे भवं रौमकम् । वस्तगन्धि वस्तकं नाम लवणं, रौमके वस्तकं वदन्तीति **माला** । पाके साधु पाक्यं पक्तव्यं वा कल्लराख्यम् । बिलति भिनत्ति मलं बिडम् । कृतकस्य लवणस्य द्वे नामनी, पाक्यबिडलवणयोर्भेदेऽपि कृतकत्वादैक्यम् । स्यर्थे पाक्यं बिडलवणं यवक्षारः काचश्चेति ॥ ४२ ॥ सुवर्चलाकरे भवं सौवर्चलं, सुवर्चस्येदमग्निदीपनं लाति वा, वर्च दीप्तौ, अच् । अक्ष्णोति व्याप्नोत्यक्षम् । रोचतेऽनेन रुचकम् । ह्यगन्धं च । तिलति स्निह्यति तिलकम् । तत्र तस्मिन्मेचके कृष्णे लवणे वर्तते, पूर्वं तु मधु( र )लवणम् । अगन्धं कृष्णलवणं तिलकमित्येके, यद्वैद्याः– कृष्णे सौवर्चलगुणा लवणे गन्धवर्जित । मदं स्यन्दते मत्स्यण्डी सामान्यशर्करा, मत्स्यानमति रुजति मत्स्य( स्या )ण्डीति **वैद्याः**, यद्धन्वन्तरिः– शर्करोक्ता तु मीनाण्डी श्वेता मत्स्यण्डिका सिता । मत्स्यण्डिफाखण्डसिताः क्रमेण गुणवत्तरा इति तु **वाह( भ )टः** । फाण्यते द्रवत्वात्फाणितं खण्डश्वेता । क्षौद्रकं त्विक्षुरसविकारः खण्डवत् । शीर्यत शर्करा । सायते सिता खण्डशर्कराख्या ॥४३॥ कूर्चस्तत्(क)मस्तु तदस्त्यस्याः कूर्चिका, कुचति कुचिका कुचीकेत्यके किलाटिकाख्या । रसमलति रसाला । मार्ज्यते मार्जिता दधिसितामरीचादिकृतं लेह्य, यत्सूदशास्त्रम्– अर्धा·

कूर्चिका क्षीरविकृतिः स्याद्रसाला तु मार्जिता ।
स्यात्तेमनं तु निष्ठानं त्रिलिङ्गा वासितावधेः ॥ ४४ ॥
शूलाकृतं भटित्रं च शूल्यमुख्यं तु पैठरम् ।
प्रणीतमुपसंपन्नं प्रयस्तं स्यात्सुसंस्कृतम् ॥ ४५ ॥
स्यात्पिच्छिलं तु विजिलं संमृष्टं शोधितं समे ।
चिक्कणं मसृणं स्निग्धं तुल्ये भावितवासिते ॥ ४६ ॥
आपक्कं पौलिरभ्यूषो लाजाः पुंभूम्नि चाक्षताः ।
पृथुकः स्याच्चिपिटको धाना भृष्टयवे स्त्रियः ॥ ४७ ॥
पूपापूपः पिष्टकः स्यात्करम्भो दधिसक्तवः ।
भिस्सा स्त्री भक्तमन्धोन्नमोदनोस्त्री स दीदिविः ॥ ४८ ॥

---

ढकं सुचिर[ दृढ ]पर्युषितस्य दध्नः खण्डस्य षोडश पलानि शशिप्रभस्य । सर्पिष्पलं मधुपलं मरिचद्वि-कर्षं शुण्ठ्याः पलार्धमपि वा[ चा ]र्धपलं चतुर्णाम् । श्लक्ष्णे पटे ललनया मृदुपाणिमृष्टा कर्पूरधूलिसुरभी-कृतभाण्डसंस्था । एषा वृकोदरकृता सु[ स ]रसा रसाला या स्वादिता भगवता मधुसूदनेन ॥ तिम्यत्या-र्द्रीभवत्यन्नमनेन तेमनमुपसेचनं क्नोपनाख्यम् । नितिष्ठत्यन्नमनेन निष्ठानम् । व्यञ्जनं च सूपाद्युपचा-रात् ॥ ४४ ॥ इतः प्रभृति वासितान्ता वाच्यलिङ्गाः । ( शूलाकृतं ) शूलात्पाके ( सू० ) इति डाच् । भटत्यनेन भटित्रं, भट भृतौ । शूले संस्कृतं शूल्यं, शूलोखाद्यत् ( सू० ) । भारुटकं भृष्टं च । संस्कृतं सर्पिषा दध्ना सार्पिष्कं दाधिकं क्रमात् । उदलावणिकं तत्स्याद्यत्सिद्धं लवणाम्भसा ॥ उखायां स्थाल्यां संस्कृत— उख्यम् । पिठरे संस्कृतं पैठरं, संस्कृतंभक्षाः ( सू० ) इत्यण् । रूपरसादिनिष्पन्नमन्नं, प्रणीयते स्म प्रणीतम् । परिव्ययपाकादिना प्रयत्ननिष्पन्नं प्रयस्तम् । संस्कृतम् (सू०) अनित्ये साधुः ॥४५॥ ( पिच्छिलं ) पिच्छादित्वादिलच् ( लोमादिपामादीति ) । विजते चलति विजिलं, विज्जलमिति **वैद्याः** । वालमक्षि-कादिरहितं संमृष्टं, मृजू शुद्धौ । चिगित्यव्यक्तं कणति चिक्कणम् । मसृयति मसृणम् । भाव्यते मिश्रीक्रियते स्म भावितं, भुवोऽवकल्कने ( धा० सू० ) णिच् । वास्यते द्रव्यान्तरेण मेल्यते, धूपपुष्पादिना वाधिवास्यते वासितं, यन्मुनिः— धूपितं वासितं विदुः ॥४६॥ ईषद्भृष्टं कलायादि— आपक्कं खलभर्जिताख्यम् । पु(पो)-लति वर्धते पौलिः, पुल महत्त्वे । ऊषरुजार्थादभ्यूषः, उषेर्दाहार्थादभ्योष इत्येके । लज्यन्ते लाजाः, लज भर्जने । न क्षण्यन्तेऽक्षताः, चाद्भिन्नक्रमात्तेपि पुंसि बहुत्वे च । अक्षता यवा इति **पुराणं** तन्मते पुंबहुत्वार्थो विधिः । आर्द्रं भृष्टं सस्यं तद्विपाकात्पृथूभवति चिपिटीभवति च. नीऊधान्यं वा भृष्टमुलूखल-क्षोदाच्चिपिटीभूततण्डुलम् । धीयन्ते धानाः । भृष्टयव इति जात्याख्यायामेकत्वम् । धानाचूर्णं सक्तवः स्युर्बुस्तिः स्यान्मांसशष्कुली, भूस्तिरिति द्रवि[ मि ]डाः ॥ ४७ ॥ पुनाति पूः । न पूय[ य्य ]तेऽपूपः पिष्टातकमयो मण्डकाख्यः, पूयी विशरणे, अद्भिरुप्यत इति **नैरुक्ताः** । ( पिष्टकः ) पिष्टाच्चसंज्ञायां ( सू० ) कन् । **मुनिस्तु**— अपूपः पिष्टपूपः स्यात्पूपा भक्ष्याः प्रकीर्तिताः । केन रभ्यते मील्यते कीर्यते वा करम्भः । दध्युपसिक्ताः सक्तवः ( दधिसक्तव ) । भस्यते भक्ष्यते भिस्सा, भ्यसेः संप्रसारणं वा, ब्राह्मणभिस्सेति **भाष्यम्** । भज्यते भक्तम् । अनित्यनेना-न्धः सान्तम् । अद्यतेऽन्नम् । उनत्ति क्लिद्यत्योदनम् । भृशं दीव्यत्यनेन दीदिविः, स इति विशेषणात्पुंसि ॥४८॥ कुत्सिता भिस्सा भिस्सटा, यथौदनभिस्सटा, लक्ष्यानुरोधः— यथा स्वर्गग्रामटिका, वधूटिका । सर्वद्रव-द्रव्याणामग्रं मुख्यं, मण्डयति मण्डः । मस्यति परिणमते मासरः । आचम्यत आचामः । निस्राव्यते

भिस्सटा दग्धिका सर्वरसाग्रे मण्डमस्त्रियाम् ।
मासराचामनिस्रावा मण्डे भक्तसमुद्भवे ॥ ४९ ॥
यवागूरुष्णिका श्राणा विलेपी तरला च सा ।
गव्यं त्रिषु गवां सर्वं गोविड् गोमयमस्त्रियाम् ॥ ५० ॥
तत्तु शुष्कं करीषोऽस्त्री दुग्धं क्षीरं पयः समम् ।
पयस्यमाज्यदध्यादि द्रप्सं दधि घनेतरत् ॥ ५१ ॥
घृतमाज्यं हविः सर्पिर्नवनीतं नवोद्धृतम् ।
तत्तु हैयंगवीनं यद् ह्योगोदोहोद्भवं घृतम् ॥ ५२ ॥
दण्डाहतं कालशेयमरिष्टमपि गोरसः ।
तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ॥ ५३ ॥
मण्डं दधिभवं मस्तु पीयूषोऽभिनवं पयः ।
अशनाया बुभुक्षा क्षुद् ग्रासस्तु कवलः पुमान् ॥ ५४ ॥

---

निस्रावः ॥ ४९ ॥ यूयते पिष्टादिना यवागूः, सृयुवचिभ्यइत्यागूच् ( उ० ) । संज्ञितोष्ण:– उष्णिका, ब्राह्मणकोष्णिकेसंज्ञायाम् ( सू० ) । श्रायते श्राणा, श्रा पाके । विलिम्पति विलेपी । तरला लेह्यत्वाच्चपला । म्रङ्क्षणाभ्यञ्जने तैलं कृश[ स ]रस्तु तिलौदनः । गोरिदं गवि भवमित्यादिष्वर्थेषु गव्यं क्षीरादि, सर्वत्रगोरजादिप्रसंगेयत् ( वा० ) । गोर्विष्ठा गोविट् गोमयं च, गोश्चपुरीषे ( सू० ) मयट् ॥ ५० ॥ करोत्यग्निं करीषं शुष्कगोमयम् । दुह्यते दुग्धम् । घस्यते( अद्यते ) क्षीरम्, घसेःकिच्च ( उ० ) इतीरन्, गमहनजनेति ( सू० ) उपधालोपः, खरिच ( सू० ) इति चर्त्वम्, शासिवसिघसीनांच ( सू० ) षत्वम् । पीयते पयते वा रसत्वात्पयः, असुन् । सममिति पयसो नपुंसकत्वार्थम् । पयसो विकारः पयस्यं, गोपयसोर्यत् ( सू० ) । आदिशब्दान्नवनीतादि । दृप्यति( अनेन ) द्रप्सम् । घनादन्यदघनमित्यर्थः, यन्माला द्रप्सं दध्यघनं तथा । एतच्च द्रप्सं शरामिति **भागुरि**पाठे सरमिति बुद्ध्वा **मालाकारो** भ्रान्तः । केचिन्नष्टैस्तु नाशिता इत्ययमपि **माला**पाठेन विप्रलब्धः, यदाह दुर्गः– बाणद्रप्सौ शराविति । इत्थं तु समर्थ्यं, तरन्– उपरि प्लवमानं घनं दधि द्रप्सम् ॥ ५१ ॥ जिघर्ति घृतम् । आ– अञ्जनीयमाज्यं, आङ्पूर्वादञ्जेःसंज्ञायांक्यप् ( वा० ) । हूयते हविः, हविष्यं च । सर्पति सर्पिः, इसन्तौ । दध्नो मथितान्नवं तत्कालं नीतमुध्दृतं नवनीतं घृतयोनिः । ह्योगोदोहस्य विकारो हैयङ्गवीनं, हैयङ्गवीनंसंज्ञायां ( सू० ) इति साधुः । **कात्यो** नवनीतमित्याह ॥ ५२ ॥ मन्थदण्डेनाहतं दण्डाहतम् । कलश्यां गर्गर्यां भवं कालशेयम् । न रिष्यति हिनस्ति– अरिष्टं, सर्वरोगजित्त्वात् । तद्विशेषमाह । तच्यति द्रुतं गच्छति तक्रं चतुर्भागाम्बु । उदकेन श्वयति– उदश्विदर्धाम्बु । दध्नो मथनमात्रसाध्यं मथितं निर्जलम् । द्विगुणाम्बु श्वेतरसमर्धोदकमुदश्वितम् । तक्रं त्रिभागभिन्नाम्बु केवलं मथितं स्मृतमिति **धन्वन्तरिः** ॥५३॥ दध्नो मण्डं द्रवो भागः, मस्यति परिणमते मस्तु । पीयते पीयूषः, नवप्रसूतगवीक्षीरं क्वथितं सत् । अशनेच्छा– अशनाया, अशनायोदन्येति ( सू० ) साधुः । भोक्तुमिच्छा बुभुक्षा । क्षुत्, क्षुध बुभुक्षायाम् । रोचकोऽस्त्री रुचिश्च । ग्रस्यते ग्रासः । के तालुनि वलते कवलः ॥ ५४ ॥ सहपानं सपीतिः । सहादनं सग्धिः, क्तिन्, बहुलंछन्दसि ( सू० ) इति घस्लृ, घसिभसोर्हलिच ( सू० ) इत्युपधालोपः, झलोझलि ( सू० ) इति सलोपः, झषस्तथोर्धोऽधः ( सू० ), झलांजश्झशि ( सू० ) । उदकेच्छा उदन्या, अशनायोदन्येति ( सू० ) साधुः । तर्षणं तृट् तर्षश्च, ञितृष पिपासायाम् । तृष्णा नानार्थे । अदनं जग्धिः अदोज-

सपीतिः स्त्री तुल्यपानं सग्धिः स्त्री सहभोजनम् ।
उदन्या तु पिपासा तृट् तर्षो जग्धिस्तु भोजनम् ॥ ५५ ॥
जेमनं लेह आहारो निघसो न्याद इत्यपि ।
सौहित्यं तर्पणं तृप्तिः फेला भुक्तसमुज्झितम् ॥ ५६ ॥
कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ।
गोपे गोपालगोसंख्यगोधुगाभीरवल्लवाः ॥ ५७ ॥
गोमहिष्यादिकं पादबन्धनं द्वौ गवीश्वरौ ।
गोमान्गोमी गोकुलं तु गोधनं स्याद्गवां व्रजे ॥ ५८ ॥
त्रिष्वाशितंगवीनं तद् गावो यत्राशिताः पुरा ।
उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ॥५९॥
अनड्वान्सौरभेयो गौरुक्ष्णां संहतिरौक्षकम् ।
गव्या गोत्रा गवां वत्सधेन्वोर्वात्सकधैनुके ॥ ६० ॥
वृषो( उक्षा )महान्महोक्षः स्याद् वृद्धोक्षस्तु जरद्गवः ।
उत्पन्न उक्षा जातोक्षः सद्योजातस्तु तर्णकः । ६१ ॥

---

ग्धिर्ल्यप्तिकिति ( सू० ) ॥ ५५ ॥ जमेर्जेमनमाहुः, जमनं जवनं वा, यद् दुर्गः– जवनं भोजनं क्वचित् । न्यदनं निघसः, नौणच ( सू० ) इत्यप्, घञपोश्च ( सू० ) इति घस्लादेशः । णे ( नौणच ) न्यादः । प्रत्यवसानमभ्यवहारश्च । सुहितस्य भावः सौहित्यम् । फलति विशीर्यते फेला, फेल्ल चलने-स्मिंद्वा ॥५६॥ काम्यते कामम् । पर्याप्तिः पर्याप्तम् । इष्यत इष्टम् । ईप्सितमनतिक्रम्य यथेप्सितम् । प्रायः क्रियाविशेषणान्येतानि अत एवाव्ययत्वे- एतेषां **श्रीभोजो** भ्रान्तः, यच्छाश्वतः– कामे निकामे कामा-र्हया । गाः पाति गोपः । गाः संख्याति गोसंख्यः । गा दोग्धि गोधुक् । आ–अभित ईरयति–आभीरः । वल्लयाति गा बल्लवः, वल्लिः सौत्रो वा ॥ ५७ ॥ पादे बन्धनमस्य पादबन्धनम् । आदिशब्दात्खरादे । यादवं धनमित्येके पेठुः । गावः सन्त्यस्य गोमी, ज्योत्स्नातमिस्रेति ( सु० ) साधुः । व्रजन्त्यस्मिन्व्रजः-गोसंबन्धी समूहः, गोचरसंचरेति ( सू० ) साधुः । धनं च ॥ ५८ ॥ अशिता भोजिता गावो यत्राशितं-गवीनं, अषडक्षाशितंग्वित्ते ( सू० ) स्वार्थे खः । आषितंगवीनमिति **प्राच्यानां** भ्रमः यद्याख्यन्-गावो यत्रोषिताः पुरेति ।| उक्षति– उक्षा । भन्दते भद्रः । बलीन्वृदते बलीवर्दः । ऋषति गच्छति ऋषभः ॥ ५९ ॥ अनोवहत्यनड्वान् , अनसिवहेःक्विबनसोडश्च ( उ० ) । सुरभेरपत्यं सौरभेयः । गच्छति गौः । अवान्तरभेदोस्य नविवक्षितः । शङ्करशाङ्करौ वाडवेयः शाङ्करश्च । ( औक्षकं ) गोत्रोक्षोष्ट्रेति (सू०) वुञ् । संहतिरित्येव । (गव्या, गोत्रा) खलगोरथादिति ( सू० )यः, इनित्रकट्यचश्चेति ( सू० ) त्रः । वत्सानां समूहो वात्सकं, गोत्रोक्षोष्ट्रेति ( सू० ) वुञ् । धेनूनां समूहो धैनुकम् , अचित्तहस्तिधेनोष्ठक् (सू०)॥६०॥ महांश्चासावुक्षा च महोक्षः, अचतुरविचतुरेति (सू०) साधुः । एवं वृद्धोक्षजातोक्षौ । **माला** च – महोक्षः स्यादुक्षतरे स्कन्धिकः स्कन्धवाहकः । षोडन् षड्दशनो वत्सः कूटो भग्नविषाणकः ॥ जरंश्चासौ गौश्च जरद्गवः, गोरतद्धितलुकि ( सू० ) इति टच् । तृणोत्यात्ति केवलं तर्णकः ॥ ६१ ॥ शकृत्करोति शकृत्करिः, स्तम्बशकृतोरिन् ( सू० ), व्रीहिवत्सयोरुपसंख्यानात् ( वा० ) । वसति वत्सः । दमार्हो दम्यः । वत्सत्वं तनुत्वमस्य वत्सतरः, वत्सोक्षाश्वर्षभेभ्यश्च ( सू० ) इति ष्टरच्, तनुत्वं द्वितीयवयः-प्राप्तिः । ( आर्षभ्यः ) अण्डकर्षणोचितः, षण्डतेत्येके, अत एव ऋषभस्य प्रतिकृतिरार्षभ्यः, ऋषभोपन्न-

शकृत्करिस्तु वत्सः स्याद्दम्यवत्सतरौ समौ ।
आर्षभ्यः षण्डतायोग्यः षण्डो गोपतिरिट्चरः ॥ ६२ ॥
स्कन्धप्रदेशस्तु वहः सास्ना तु गलकम्बलः ।
स्यान्नस्तितस्तु नस्योतः प(ष्ठ)वाड् युगपार्श्वगः ॥ ६३ ॥
युगादीनां तु वोढारो युग्यप्रासङ्ग्यशाकटाः ।
खनन्ति तेन तद्वोढास्येदं हालिकसैरिकौ ॥ ६४ ॥
धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः ।
उभावेकधुरीणैकधुरावेकधुरावहे ॥ ६५ ॥
स तु सर्वधुरीणो यो भवेत्सर्वधुरावहः ।
माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी ॥ ६६ ॥
अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा गोषु नैचिकी ।
वर्णादिभेदात्संज्ञाः स्युः शबलीधवलादयः ॥ ६७ ॥
द्विहायनी द्विवर्षा गौरेकाब्दा त्वेकहायनी ।
चतुरब्दा चतुर्हायण्येवं त्र्यब्दा त्रिहायणी ॥ ६८ ॥

---

होर्भ्यः ( सू० ) । सन्यत उत्सृज्यते षण्डः । एषणमिट्, इषा चरति– इट्चरः स्वेच्छचारी, इत्वर इत्येके पेठुः ॥ ६२ ॥ वहत्यनेनेति वहः, गोचरसंचरेति ( सू० ) साधुः । स स्ते स्वपितीव व्याप्रियमाणत्वात् सीयते वा सास्ना, षस स्वप्ने, षो न्तकर्मणि । नासायां नस्तः, नस्नासिकायायत्तःक्षुद्रेष्विति ( वा० ) नस् । नस्तः क्रियते स्म नस्तितः, प्रातिपदिकाद्धात्वर्थे इति ( ग० ) णिजन्तन्निष्ठा, नासायां कृतच्छिद्रो गौरित्यर्थः । नासिकायां भवे नस्ये नासाकृते रन्ध्रे रज्ज्वादिना– उत उत्तम्भितो नस्योतः । पञ्चमं षष्ठं वा वर्षं वहति पष्ठवाड् युवा गौः, वहश्च ( सू० ) इति ण्विः । युगस्य स्कन्धकाष्ठस्य पार्श्वे गच्छति युगपार्श्वगो हलवोढेत्यर्थः । दमनाय योजित इत्यर्थः लक्षणविचक्षणेनापि ग्रन्थकृता वहंलिहाद्या नोक्ताः ॥ ६३ ॥ ( युग्य इ० ) युगं प्रासङ्गं शकटं च वहति, तद्वहतिरथयुगप्रासङ्गम्–( सू० ) इति यत्, शकटादण् ( सू० ) । ( हालिक इ० ) हलेन खनति, तेनदीव्यतिखनतीति ( सू० ) ठक् । हलं वहति हलस्येदं वेति, हलसीराट्ठक् ( सू० ) ॥ ६४ ॥ ( धुर्य इ० ) धुरं वहति, धुरो यड्ढकौ ( सू० ), खः सर्वधुरादिति ( सू० ) योगविभागात्खः । धुरं धारयति धुरंधरः, क्वचित्संज्ञात्वात्खच् ( संज्ञायांभृतॄवृजीति ), धूर्धरोऽन्यथा स्यात् । ( एकधुरीण इ० ) एकधुराल्लुक्च ( सू० ) इति खो लुक्च, लुक्पक्षे, ऋक्पूरब्धूरिति ( सू० ) अः समासान्तः ॥ ६५ ॥ ( सर्वधुरीणः ) खःसर्वधुरात् ( सू० ) । मह्यते पूज्यते मही, तस्या अपत्यं माहेयी । वसति क्षीरमस्यामुस्रा । शृङ्गिण्यादयः सामान्यान्यपि विशेषे वर्तन्ते ॥ ६६ ॥ अर्जुनीति शुक्लगवी । न हन्त्यघ्न्या, अघ्न्यादयश्च ( उ० ) इति साधुः । रोहिणी शबला । अनड्वाही गौरनडुही, प्रशस्ता गोमतल्लिका । सुरभिर्नानार्थे । नीचैश्चरति नैचिकी, ठक्, अव्ययानांभमात्रेटिलोपोवक्तव्यः (वा०) । इतो गवाधिकारः प्रागुष्ट्रात् । शबलीति, अन्यतो ङीष् ( सू० ) । धवला, अन्तोदात्तत्वानुदात्तत्वाभावाद् ङीष् नास्ति । आद्यादिशब्दाच्चण्डामुण्डाद्याः, द्वितीयाकृष्णाकपिलाद्याः ॥ ६७ ॥ द्वौ हायनौ वयःप्रमाणमस्याः इत्यार्हीयस्य ठञः– अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्– ( सू० ) लुक्, दामहायनान्ताच्च ( सू० ) इत्यत्र हायनाद् वयसि प्रथमे ( सू० ) इति ङीप् । द्वे वर्षे प्रमाणमस्या द्विवर्षा ( गौः ), वर्षाल्लुक्च ( सू० ), चित्तवतिनित्यम् ( सू० ), अपरिमाणबिस्ताचितेति ( सू० ) ङीप्– नास्ति, कालसंख्या च न परिमाणमिति । त्रिचतुर्भ्यांहायनस्यणत्वंवाच्यं ( वा० ) वयसि ॥ ६८ ॥ वाति कामयते परं वशा । वध्नाति

वशा बन्ध्यावतोका तु स्रवद्गर्भाथ सन्धिनी ।
आक्रान्ता वृषभेणाथ वेहद्गर्भोपघातिनी ॥ ६९ ॥
काल्योपसर्या प्रजने प्रष्ठौही बालगर्भिणी ।
स्यादचण्डी तु सुकरा बहुसूतिः परेष्टुका ॥ ७० ॥
चिरसूता बष्कयिणी धेनुः स्यान्नवसूतिका ।
सुव्रता सुखसंदोह्या पीनोध्नी पीवरस्तनी ॥ ७१ ॥
द्रोणक्षीरा द्रोणदुघा धेनुष्या बन्धके स्थिता ।
समांसमीना सा यैव प्रतिवर्षं प्रसूयते ॥ ७२ ॥
ऊधस्तु क्लीबमापीनं समौ शिवककीलकौ ।
न पुंसि दाम संदानं पशुरज्जुस्तु दामनी ॥ ७३ ॥
वैशाखमन्थमन्थानमन्थानो मन्थदण्डके ।
कुट( ठ )रो दण्डविष्कम्भो मन्थनी गर्गरी समे ॥ ७४ ॥

---

प्रसूतिं बन्ध्या बन्धनीया वा । अवस्रुतं तोकमपत्यमस्या अवतोका, अप( व )स्रवन्ती च, मृतवत्सा स्रवद्गर्भेति **माला** । संधानं संधा गर्भग्रहणमस्त्यस्याः संधिनी, अदुग्धा दोहकाले तु संधिनीति **कात्यः**, संधिन्द-कालदुग्धा गौर्वृषाक्रान्ता च संधिनीति **शाश्वतः** । विहन्ति गर्भं वेहत्, वेह प्रयत्नेस्म द्वा, वेहद्वृषोपग-तेति **भागुरिः** ॥ ६९ ॥ प्रजने गर्भग्रहणं ( काल्या )प्राप्तकाला, वृषेणोपसरणीयोपसर्या, उपसर्याकाल्या-प्रजने ( सू० ) इति साधुः । प्रष्ठं वहति प्रष्ठौही, वहश्च ( सू० ) इति ण्विः, वाहइति ( सू० ) ङीष्, वाहऊठ् ( सू ), एत्येधत्यूठ्सु ( सू० ) इति वृद्धिः । प्रष्ठौही गर्भिणीति सर्वे, असिक्नी बालगर्भिणीति **भागुरिः**, पलिक्नी बालगर्भिणीति **माला** । अचण्डा– अकोपनेत्यर्थः, बाह्वादित्वात् ( सू० ) वा ङीष् । सुखेन क्रियते सुकरा, सुखकरीत्यागमः । परमिच्छति परेष्टुका । सकृत्प्रसूता गृष्टिः ॥ ७० ॥ बष्कतेतिक्रामति बष्कयश्चिरकालः, औणादिकत्वात् ( अयन् ), सोस्त्यस्याः ( बष्कयिणी ), बष्कयणीति **सभ्याः** । धयत्येनां धेनुः । ( सुव्रता ) सुशीलेत्यर्थः । पीनमूधोस्याः पीनोध्नी, ऊधसोनङ् ( सू० ), बहुव्रीहेरूधसोङीष् ( सू० )। पीवरस्तनी, स्वाङ्गाच्चोपसर्जनादिति ( सू० ) ङीष् ॥ ७१ ॥ द्रोणं दोग्धि द्रोणदुघा, दुहःकब्घश्च ( सू० ) । धेनुष्या ) संज्ञायांधेनुष्येति ( सू० ) साधुः, आ ऋणशुद्धेर्या बन्धके स्थापिता पीतदुग्धास्या । ( समांसमीना ) समांसमांविजायते ( सू० ) इति खः ॥ ७२ ॥ उनत्त्यूधः । आप्यायत आपीनं, प्यायःपी ( सू० ), सोपसर्गान्न ( वा० ), आङ्य( आङ्पूर्वस्या )न्धूधसोर्वक्तव्यात् ( वा० ), ओदित्वात् ( ओदितश्चेति ) निष्ठानत्वम् । हम्भा( म्बा )रावो गवां ध्वनिः । शिवात्कन्, शिनोति वा शिवकः । कील्यते बध्यतेस्मिन्कीलकः । दीयते रक्ष्यतेनेनेति संदानं बन्धनरज्जुः । ( दामनी ) नित्यंसंज्ञाछन्दसोः ( सू० ) इति ङीष् ॥ ७३ ॥ विशाखासु जातो वैशाखः, विशाखाषाढादण्मन्थदण्डयोः ( सू० ), विशाखस्यायं वा । मथ्यतेनेन मन्थः, पुंसिसंज्ञायांघःप्रायेण ( सू० ) । मथ्नाति मन्थानः, शानच् । ( मन्थाः ) मथिन्– शब्दस्य– इतोत्सर्वनामस्थाने ( सू० ), थोन्थः ( सू० ) । मन्थानार्थो दण्डो मन्थनदण्डः । खजकः क्षुब्धोपि । कुटति कुटरः, कुटको वा दण्डकटके वर्तते । दण्डं विष्क-भ्नाति दण्डविष्कम्भः, यस्मिन्बद्ध्वा दण्ड आकृष्यते । मञ्जीरोपि, दण्डकोटकमित्येके । मथ्य-तेस्यां मन्थनी । गिरति दधिगर्गरी । कलशश्च ॥ ७४ ॥ उष्यते दह्यते मरौ– उष्ट्रः । क्रमानेलयति क्रमेलकः । मीनत्यर्हन्मयः, मयते गच्छति वा, मयेत इत्येके । दासेरको दीर्घ-जङ्घो ग्रीवी रवणधूम्रको । कं शिरो रभत उत्तम्भयति करभो बालोष्ट्रः । ( शृङ्खलकः ) शृङ्खल-

उष्ट्रे क्रमेलकमयमहाङ्गाः करभः शिशुः ।
करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः ॥ ७५ ॥
अजा छागी शुभ( स्तभ )छागवस्तच्छगलका अजे ।
मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके ॥ ७६ ॥
उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम् ।
चक्रीवन्तस्तु बालेया रासभा गर्धभाः खराः ॥ ७७ ॥
वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् ।
पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः ॥ ७८ ॥
विक्रेता स्याद्विक्रयिकः क्रायकः क्रयिकः समौ ।
वाणिज्यं तु वणिज्या स्यान्मूल्यं वस्नोप्यवक्रयः ॥ ७९ ॥
नीवी परिपणो मूलधनं लाभोधिकं फलम् ।
परिदानं परीवर्तो नैमेयनिमयावपि ॥ ८० ॥

---

ल्मस्यबन्धनंकरभइति ( सू० ) कन् । विकारे नित्यंवृद्धशरादिभ्यः ( सू० ) इति मयटा दारुमयैरिति भवितुं युक्तम् ॥ ७५ ॥ अजति गच्छति व्यायामशीलत्वादजा, अजाद्यतष्टाप् ( सू० )। छयति रोगं छागी, जातेरस्त्रीविषयादयोपधात् ( सू० ) इति ङीष् । स्त्रीविषयप्रत्ययार्थे पृथक्पाठः । शोभते शुभः, शु( तु )भो निघण्टुषु । वस्ते वस्तः । छयति रोगांश्छागः, छगलश्च । छागोपि । मेहति मेढ्रः । उरु भ्राम्यति– उरभ्रः, उच्चै रभते वा, उः स्वरप्रतिरूपको निपातः । एवमुच्चै रणोस्येत्युरणः, उरण्यति देवताः प्रीणातीति **श्रीभोजः** कण्ड्वादिपाठात् । ऊर्णास्त्यस्योर्णायुः, ऊर्णाया युस् ( सू० ) । मेषति वाशते मेषः, पचाद्यच् ( नन्दिग्रहीति ) । वर्षति वृष्णिः । आ–ईड्यन्ते देवा अनेन- एडकः । हुडुश्च । अविर्नानार्थे ॥ ७६ ॥ ( औष्ट्रकं, इ० ) गोत्रोक्षोष्ट्रोरभ्रेतिवुञ् ( सू० )। चक्रमस्त्यस्य तैलिकादिचक्रभ्रमणाच्च, आसन्दीवदष्ठीवच्चक्रीवदिति ( सू० ) साधुः । चक्रवालस्तु बालेय इति **माला** । बालेभ्यो हितो बालेयः, बाले वा[ च ]रूने भवो वा । रासते रासभः, रासृ शब्दे । गर्दति गर्दभः, गर्द शब्दे । खं शब्दं राति खरः, खमस्त्यस्य वा, ( रप्रकरणे ) खमुखकुञ्जेभ्योरः ( वा० ) । क्रूरोपि, शङ्कुकर्णोपि । षड्-द्वित्वयोः पशुभ्यः षड्गवमथ गोयुगं च परं, यथा मेषषड्गवं गोगोयुगम्, पशुनामभ्योद्वित्वेगोयुगच् ( वा० ), षट्त्वेषड्गवच् ( वा० ) । अविसोढमविमरीसं तथाविदुसं पयो मेष्याः, अवेर्दुग्धे-सोढदूसमरीसचोवक्तव्याः ( वा० ) ॥ ७७ ॥ विदेहे– उपचये भवो वैदेहकः । सार्थान्सधनान्सरतो वा पान्थान्वहति सार्थवाहः । निगमे– आपणे भवो नैगमः । पणते वणिक् । वणिगेव वाणिजः, प्रज्ञादित्वा-त्स्वार्थेऽण् ( सू० ) । आपणः प्रयोजनमस्त्यस्यापणिकः । क्रयविक्रयाभ्यां जीवति क्रयविक्रयिकः, वस्नक्र-यविक्रयाट्ठन् ( सू० ) इति संघातविगृहीताट्ठन् ॥ ७८ ॥ विक्रीणीते भाण्डेन मूल्यं गृह्णाति विक्रेता । क्रीणाति मूल्येन भाण्डं क्रायकः । क्रयेण जीवति क्रयिकः । वणिजो भावो वाणिज्यं, ब्राह्मणादित्वात्ष्यञ् ( गुणवचनंब्राह्मणादिभ्यः कर्मणिच ) । ( वणिज्या ) दूतवणिग्भ्यांचेतिवक्तव्याद्यच्च ( वा० ) । मूले-नानाम्यं मूल्यं, नौवयोधर्मेति ( सू० ) यत् । वसत्यास्मिन्पण्यं वस्नः । अवक्रीयतेनेनावक्रयः ॥ ७९ ॥ नीवीव परहस्तेर्प्यमाणत्वात् । परिपण्यते वृद्धर्थे प्रयुज्यते परिपणः । मूलं लाभकारणम् । मूलधनादधिकं निष्पन्नं स लाभः फलं च । कलान्तरादि । परिवर्तादानं परिदानम् । निमेये परिवर्तनीये भवो नैमेयः । निमानं निमयः, मेङ् प्रणिदाने ॥ ८० ॥ उपसृत्य समीप निधीयते गुप्तं स्थाप्यते– उपनिधिः, उप

पुमानुपनिधिर्न्यासः प्रतिदानं तदर्पणम् ।
क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके ॥ ८१ ॥
विक्रेयं पणितव्यं च पण्यं क्रय्यादयस्त्रिषु ।
क्लीबे सत्यापनं सत्यंकारः सत्याकृतिः स्त्रियाम् ॥ ८२ ॥
विपणो विक्रयः संख्याः संख्येये ह्यादश त्रिषु ।
विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः ॥ ८३ ॥
संख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः ।
पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम् ॥ ८४ ॥
पौ( यौ )तवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् ।
मानं तुलाङ्गुलिप्रस्थैर्गुञ्जाः पञ्चाद्यमाषकः ॥ ८५ ॥

---

समीपे निधेर्वा । न्यस्यते निक्षिप्यते न्यासः । निक्षेपोपि । स्मार्ते( **याज्ञव०** )त्वेषां भेदोस्ति— वासनस्थमनाख्याय हस्तेन्यस्य यदर्पितम् । द्रव्यमुपनिधिर्न्यासः प्रकाश्य स्थापितं तु यत् ॥ निक्षेपः शिल्पिहस्ते तु भाण्डं संस्कर्तुमर्पितम् ॥ तस्य न्यासस्य निक्षेप्त्रे प्रतीपं दानं प्रतिदानं, परिदानमित्येके । प्रत्यक्षादानं स्वीकारोवक्रयः [वक्तव्यः] कृत्तकं च तत् । क्रयनिमित्तमापणे न्यस्तं ( क्रय्यं), क्रय्यस्तदर्थ इति ( सू० ) साधुः । ( क्रेयं ) यथा क्रेयो गौर्वर्तते न च क्रय्योस्ति ॥ ८१ ॥ ( पण्यं ) अवद्यपण्यवर्येति ( सू० ) साधुः । ( त्रिषु ) वाच्यलिङ्गा इत्यर्थः । अवश्यं मयैतद्विक्रेयमिति सत्यस्य करणं सत्यापनं, सत्यापपाशरूपेति ( सू० ) णिच्, अर्थवेदसत्यानामापुक् ( वक्तव्यः ) ( वा० ) । ( सत्यंकारः ) कारेसत्यागदस्येति ( सू० ) मुम् । ( सत्याकृतिः ) सत्यादशपथ इति ( सू० ) डाच् ॥ ८२ ॥ विपणनं विपणः, चुराद्यदन्तादच् (नन्दिग्रहीति), अन्यतो विपाणः स्यात् । एकाद्या दशान्ताः संख्याः संख्येयेषु वर्तमानास्त्रलिङ्गाः, एका शाटी, एकः पटः, एकं कुण्डं, दश स्त्रियः, दश पटाः, दश कुण्डानि । आदशेत्यष्टादशान्ताः । विंशत्याद्याः सर्वा एव संख्याः संख्येये संख्यायां च नित्यमेकवचनान्ता एव वर्तन्ते, यद् **भाष्यम्**— आदशभ्यः संख्या संख्येये वर्तते, ऊर्ध्वं संख्याने संख्येये च, विंशतिः पटाः, विंशतिः पटानां, शतं गावः, शतं गवाम् । [ अत्र विंशतिशब्देनैकान्नविंशतिशब्दोपि ज्ञेयः ]॥ ८३ ॥ संख्यामात्रार्थे वर्तमानाया विंशत्यादेः संख्याया द्विवचनबहुवचने अपि स्तः [ भवतः ] एकशेषात्, द्वे विंशती, तिस्रो विंशतयः, गवां विंशती, गवां विंशतयः । विंशत्याद्या नवत्यन्ताः स्त्रीलिङ्गाः । द्वौ( द्वे ) पञ्चतौ पङ्क्तिर्दशाख्या, पङ्क्तिविंशतित्रिंशदिति ( सू० ) साधुः । दश पङ्क्तयः शतम् । दश शतानि सहस्रम् । दश सहस्राण्ययुतम् । इत्थं परार्धान्तान्यष्टादश गणितस्थानानि, यदाहुः— एकदशशतसहस्राण्ययुतं प्रयुताख्यलक्षमथ नियुतम् । अर्बुदकोटिन्यर्बुदपद्मं खर्वं निखर्वमिति दशभिः ॥ गुणनान्महाब्जशङ्कू समुद्रमध्यान्तमथ परार्धं च । स्वहतं परार्धममितं तत्स्वहतं पूर्यते संख्येति । प्रयुतसंज्ञं लक्षमर्बुदसंज्ञा कोटिरित्यर्थः ॥ ८४ ॥ पुनाति पोतुः— मानभाण्डशोधकः पौतवाध्यक्षः, तस्येदं पौतवम् । द्रोर्विकारो द्रुवयं, द्रोश्च ( सू० ), मानेवयः ( सू० ) । माति पाय्यं, पाय्यसान्नाय्येति ( सू० ) साधुः । मीयतेनेनेति मानम् । पौतवं तुलादि, द्रुवयं प्रस्थादि, पाय्यं हस्तादीति गौडो भ्रान्तः । मितिर्मानं मीयतेनेन च । तत्र तुलाद्युन्मानं, अङ्गुल्यादि प्रमाणं, प्रस्थादि परिमाणं, यदाहुः— उर्ध्वं मानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्संख्या भिन्ना तु सर्वतः ॥ गुञ्जा रक्तिकाः । आद्यो मुख्यः । धान्यकणा दश माषकः । तथा द्वे कृष्णले रूप्यमाष इत्यपि दर्शनात् । अस्मिन्काले— अद्य— इत्येके, यदाहुः— माषकं सप्त कृष्णलाः ॥ ८५ ॥ अक्ष्णोत्यक्षः । कर्षति कर्षः । ( पलं ) पल रक्षायाम् । सुवर्णमस्त्यस्य सुवर्णः, अर्शआदित्त्व-

ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् ।
सुवर्णविस्तौ हेम्नोऽक्षे कुरुविस्तस्तु तत्पले ॥ ८६ ॥
तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः ।
आचितो दश भाराः स्युः शाकटो भार आचितः ॥ ८७ ॥
कार्षापणः कार्षिकः स्यात्कार्षिके ताम्रिके पणः ।
अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चकः ॥ ८८ ॥
कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ।
अंशस्तुरीयः पादः स्यादंशभागौ च वण्टकः ॥ ८९ ॥
द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ।
हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ॥ ९० ॥
स्यात्कोश( ष )श्च हिरण्यं च हेमरूप्ये कृताकृते ।
ताभ्यां यदन्यत्तत्कुप्यं रूप्यं तद् द्वयमाहतम् ॥ ९१ ॥

---

दच् ( सू० ) । विस्यते विस्तः, विस उत्सर्गे । अक्षे षोडशमाषके माने द्वौ वर्तेते, यत्स्मृतिः– पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश । कुरुदेशे प्रसिद्धो विस्तो हेमपलम्, यन्माला– पलेन हि सुवर्णस्य कुरुविस्तः ॥ ८६ ॥ तोल्यते तुला, चिन्तिपूजीति ( सू० ) चकारादङ्, ङित्करणसामर्थ्याद् गुणाभावः । भ्रियते भारः, पुसा हि द्वे पलसहस्रे वोढुं शक्येते । आचीयत आचितः स च शकटेन वोढुं शक्यः । अन्ये तु विंशतिः पलसहस्राण्याचितमाहुः । शाकटभारस्तु नोतिरिक्तो वाप्याचित एव । अत एव शाकटाख्योप्याचित इति पुनराचितशब्देन द्योत्यते ॥ ८७ ॥ कर्षसंबन्धिना पण्यते व्यवह्रियतेनेन रूप्यरूपकेण कार्षापणः । कर्षः प्रमाणमस्य कार्षिकः । ताम्रमयं कर्षप्रमाणं तु रूप्यं पणः । तन्मूल्यं चोपचारादशीतिः श्वेतकाः । पृथगित्येषामपर्यायत्वम् । परिमाणविशेषा एते, यदाहुः– पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम् । चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम् ॥ अष्टाढको भवेद् द्रोणो द्विद्रोणः शूर्प उच्यते । सार्धशूर्पो भवेत्खारी द्विशूर्पा गोण्युदाहृता ॥ तामेव भारं जानीयाद्वाहो भारचतुष्टयम् । शुष्कमेये त्विदं मानं द्विगुणं तद् द्रवेषु तु ॥ तत्र देशभेदात्संख्यान्यथात्वं, तथा क्वचिच्चतुराढको भवेद् द्रोणः, षोडशद्रोणा खारी, विंशतिद्रोणः कुम्भः, दशकुम्भो वाहः ॥ ८८ ॥ रूपकादेश्चतुर्थोंशः पादः, पदरुजेति ( सू० ) कर्तरि घञ् । अंश्यतेंशः । भज्यते भागः । वण्ट्यते विभज्यते वण्टः ॥ ८९ ॥ ( द्रव्यं ) द्रव्यंचभव्य इति ( सू० ) साधुः । विन्द(द्य)ते तद्वित्तं, वित्तोभोगप्रत्यययोरिति ( सू० ) साधुः । स्वपतौ साधु स्वापतेयं, पथ्यतिथिवसतिस्वपतेर्ढञ् ( सू० ) । ऋच्यते स्तूयते ऋक्थम् । रिच वियोजनेस्माद्वा- ( द् ), रिच्यते विभज्यते रिक्थम् । दधन्ति धनम् । वस्ते छादयति वसु, वसतीश्वरगृहे वा वसु । ह्रियते हिरण्यम् । द्रवति द्रविणम् । द्यूयते द्युम्नं, द्यु अभिगमने । अर्थ्यतेर्थः । रात्येनं राः, स्त्रीत्येके । विभवति विभवः ॥ ९० ॥ कूयते शब्द्यते कोशः, कुष्यत आकृष्यत आयस्थानेभ्यः कोष इत्येके । हेम कृताकृतं घटिताघटितं, रूप्यं चैवम् । हेमरूप्याभ्यामन्यत्तैजसं कुप्यं, राजसूयसूर्यमृषोद्यरुच्यकुप्येति ( सू० ) साधुः । आहन्यत आहतम् । रूप्यं, रूपादाहतप्रशंसयोर्यप् ( सू० ) । तद् द्वयं कुप्याकुप्यम् ॥ ९१ ॥ गरुत्मत इदं जातं विषं हन्तुं गारुत्मतम् । मरकं तरन्त्यनेन मरकतम् । अश्मगर्भोश्मयोनिः ।

गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः ।
शोणरत्नं लोहितकः पद्मरागोथ मौक्तिकम् ॥ ९२ ॥
मुक्ताथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम् ।
रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेपि च ॥ ९३ ॥
स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् ।
तपनीयं शातकौम्भं गाङ्गेयं भर्म कर्वुरम् ॥ ९४ ॥
चामीकरं जातरूपं महारजतकाञ्चने ।
रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोस्त्रियाम् ॥ ९५ ॥
अलंकारसुवर्णं यच्छृङ्गीकनकमित्यदः ।
दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ॥ ९६ ॥
रीतिः स्त्रियामारकूटो न स्त्रियामथ ताम्रकम् ।
शुल्वं म्लेच्छमुखं द्व्यष्टवरिष्ठोदुम्बराणि च ॥ ९७ ॥
लोहोस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी ।
अश्मसारोथ मण्डूरं सिंहान( शिंघाण )मपि तन्मले ॥ ९८ ॥

---

हरिन्नीलवर्णो मणिः । शोणं च तद्रत्नं च । लोहित एव लोहितकः, लोहितान्मणौ ( सू० ) इति कन् । मुच्यते शुक्तिभिर्मुक्ता । ( मौक्तिकं ) विनयादित्वात् ( सू० ) स्वार्थे ठक् ॥ ९२ ॥ विशिष्टो द्रुमो विद्रुमः, विद्रवत्यब्धौ वा । प्रवलते प्लु( प्र )वते वा– अब्धेरूर्ध्वं प्रवालम् । सूर्यकान्तस्त्वग्निमणिर्वैडू( दू )र्यं बालवायजम् । रमन्तेस्मिन् रत्नम् । मण्यते शब्द्यते मणिः पुंस्त्रीलिङ्गः । अश्मजातीयं मरकतेन्द्रनीलादि । आदिशब्दाद्विद्रुमादि, वज्रपद्मरागादि वा पानीयभाण्डत्वात् ॥ ९३ ॥ शोभनो वर्णोस्य स्वर्णं, समासे वर्णस्य वा वलोपमाहुः– यथा पञ्चार्णो मन्त्रः । कनति कनकं, कनी दीप्तिकान्तिगतिषु । हिनोति हेम । हटति हाटकं, हट दीप्तौ । तपति तपनीयम् । शतकुम्भे गिरौ भवं शातकौम्भं, अनुशतिकादित्वात् ( सू० ) उभयपदवृद्धिः, शातकुम्भमित्येके । गङ्गाया अपत्यं गाङ्गेयम् । भ्रियते धार्यते भर्म । कर्वति लोकमध्ये दृप्यति कर्वुरं, नानारूपं वा ॥ ९४ ॥ चमीकरकृतस्वरावाकरौ, तत्रभवइति ( सू० ) अण् । जातरूपमकृतकरूपं, भोट्टदेशजम् । महच्च तद्रजतं रञ्जकं ( महारजतं ) । कञ्चति( ते ) काञ्चनं, कचि दीप्तौ । रोचते रुक्मम् । जम्बूद्वीपे जम्बूफलरसोत्थनद्यां जातं जाम्बूनदम् । अष्टसु लोहेषु पदं प्रतिष्ठास्याष्टापदं, अष्टनःसंज्ञायां ( सू० ) इति दीर्घः । कल्याणमर्जुनं कलधौतं गैरिकं [ भूरि ]चन्द्रं वसु च वा ॥ ९५ ॥ शृङ्ग्यलंकारमकरिका, तदर्थं कनकम् । दुर्वर्णं स्वर्णापेक्षया । रज्यते हेम्ना रजतम् । रुप्यति रूप्यं( रुप्यं ), रुप लुप विमोहने । खर्जति खर्जूरं, कर्ज खर्ज व्यथने । इति शब्दात्सितादि । अपिशब्दात्तारं कलधौतं च ॥ ९६ ॥ रीयते स्रवति रीतिः, इयर्ति– आरस्तस्य कूटं पित्तलाख्यम् । आरोपि, कपिलोहं च । ब्राह्मी पिङ्गा ब्रह्मरीतिः कांस्यं घोषो द्विलोहकम् । ताम्यति ताम्रम् । शवति द्रवति शुल्वम् । म्लेच्छदेशो मुखमुत्पत्तिरस्य । द्वे हेमरूप्ये अश्नुते द्व्यष्टम् । अतिशयेन वरं वरिष्ठम् । कालिकानिवृत्तौ स्वर्णं हि तत्, अत एवोदुम्बरं, उद्गताम्बरमिति नैरुक्ताः । औदुम्बरमित्येके । रक्तधातुकं च । सौराष्ट्रकं पञ्चलोहे वर्तलोहे तु वर्तकम् ॥ ९७ ॥ लुनाति लोहम्, लुह कत्थनादौ वा । शस्यतेनेन शस्त्रं, शसु हिंसायाम् । तेज्यते तेजयति वा तीक्ष्णं, शस्त्रान्तरच्छेदकत्वाद्वैकृतकाख्यं तत्, तिज निशाने । पिण्ड्यते पिण्डम् । कालं च तदयश्च कालायसम्, अनोश्मायःसरसामिति ( सू० ) टच् । अयते भेद्यमयः । अश्मनः सारोश्मसारः, यत्स्मृतिः– अश्मभ्यो लोहमुत्थितम् । पारशवं घनं च । मण्डते मण्डूरम् । हिनस्ति सिंहानं ध्मायमानस्यायसो मलः ॥ ९८ ॥ तेजसो विकारस्तैजसं हेमाद्यपि लोहं, यदाहुः–

सर्वं च तैजसं लोहं विकारस्त्वयसः कुशी ।
क्षारः काचोऽथ चपलो रसः सूतश्च पारते( दे ) ॥ ९९ ॥
गवलं माहिषं शृङ्गमभ्रकं गिरिजामले ।
स्रोतोऽञ्जनं तु सौवीरं कापोताञ्जनयामुने ॥ १०० ॥
तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके ।
कर्परी दार्विकाक्काथोद्भवं तुत्थरसाञ्जनम् ॥ १०१ ॥
रसगर्भं तार्क्ष्यशैलं गन्धाश्मनि तु गन्धिकः ।
सौगन्धिकश्च चक्षुष्याकुलाल्यौ तु कुलत्थिका ॥ १०२ ॥
रीतिपुष्पं पुष्पके तु पौष्पकं कुसुमाञ्जनम् ।
पिञ्जरं पीतनं तालमालं च हरितालके ॥ १०३ ॥
गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु ।
बोलगन्धरसप्राणपिण्डगोप(स)रसाः समाः ॥ १०४ ॥

---

सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु । सीसं च वीमरं ( कालायसं ) चैव ह्यष्टौ लोहानि चक्षते ॥ शस्त्रं तु विशेषाल्लोहम् । कुत्सितं श्यति कुशी फालः, यच्छाश्वतः– कुशो दर्भः कुशी फालः, जानपदकुण्डेति ( सू० ) अयोविकारे कुशाद् ङीष् । क्षरति गलति क्षारः । कचाते( ते ) काचः । चपलोऽस्थैर्यात् । रस्यते रसायनार्थिभी रसः । सूते हेम युधी सूतः, शिवात्प्रसूतो वा । पिपर्ति पारतः, पारं तनोति वा ॥ ९९ ॥ गा अलति वारयत्यनेन गवलं, गवते वा । अभ्रप्रतिकृतिरभ्रकम् । गिरिजं च तदमलं च गिरिजामलं, गौर्या मलमिति धातुविदः । अज्यतेनेनाक्षि– अञ्जनं, यमुनास्रोतसो जातम् । सुवीरदेशे भवं सौवीरम् । कपोतवर्णं कापोताञ्जनम् । धन्वन्तरिस्तु– अञ्जनं मेचकं कृष्णं सौवीरं स्यात्सुवीरजम् । कापोतं यामुनं तच्च स्रोतोञ्जनमुदाहृतम् ॥ १०० ॥ तुदत्यक्षिरोगं तुत्थम् । शिखिग्रीवं मयूरग्रीवाभम् । वितुदति रोगान् वितुन्नकम् । मयूरप्रतिकृतिर्मयूरकम् । कल्पते रोगाञ्जेतुं कर्परी । दारुहरिद्राक्काथोत्थं, तुत्थं च तद्रसाञ्जनं च तुत्थरसाञ्जनम् ॥ १०१ ॥ दार्वीरसस्य गर्भो रसगर्भम् । तार्क्ष्यशैले कुलूतायां भवं (तार्क्ष्यशैलं) । रसजातं रसाग्र्यं च । गन्धोस्यास्तीति गन्धिको गन्धपाषाणः, रसग्रन्थे गन्धकोयम् । चक्षुषे हिता चक्षुष्या दृक्प्रसादाख्या । कुलमलति कुलाली । कुले तिष्ठति कुलत्था, कुलत्थप्रतिकृतिर्वा, लोकोक्तौ ताड[तर्क्ष]काख्या, आह च– कुलाली लोचनहिता दृक्प्रसादा कुलत्थिका ॥ १०२ ॥ रीतेर्ध्मायमानस्य पुष्पाभं मलं रीतिपुष्पम् । पुष्पप्रतिकृतिः पुष्पकं, पक्षे स्वार्थेऽण् । पिजि हिंसादौ, पिज्यते पिञ्जरम् । पीयते पीतनं, पीतं वर्णं नयति वा । आलति शोभामालं, अलति भूषयति वा । हरेः पीतवर्णस्य तालः प्रतिष्ठास्मिन् हरितालं, हरितमलति भूषयति वा । तालं च भीमवत्, यद्धन्वन्तरिः– हरितालं च गोदन्तं पीतकं नटमण्डनम् । आलं च तालं गौरं च पिञ्जरं विस्रगन्धिकम् ॥ १०३ ॥ गिरेरिदं गैरेयम् । अर्थ्यते रसायनार्थिभिरर्थ्यम् । शिलातः स्रवज्जत्वाकृति शिलाजतु । बोल्यते बोलः, बुल निमज्जने । गन्धप्रधानो रसोस्य गन्धरसः, [ रसगन्धोपि ] । प्राणित्यनेन प्राणः । पिण्ड्यते द्रव्यान्तरैः पिण्डः, पिण्डसहत्वात् । पिष्ट इत्येके । गां पाति रसोस्य गोपरसः, गोपो रसोपि भीमवत् ॥ १०४ ॥ डिण्डीति शब्दमीरयति डिण्डीरः, दादिर्वा डि( दि )ण्डिमवत् । अब्धेः कफ इवा–

डि(हि)ण्डीरोऽब्धिकफः फेनः सिन्दूरं नागसंभवम् ।
नागसीसकयोगेष्टवप्राणि त्रपु पिच्चटम् ॥ १०५ ॥
रङ्गवङ्गे अथ पिचुस्तूलोऽथ कमलोत्तरम् ।
स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि ॥ १०६ ॥
मेषकम्बल ऊर्णायुः शशोर्णं शशलोमनि ।
मधु क्षौद्रं माक्षिकादि मधूच्छिष्टं तु सिक्थकम् ॥ १०७ ॥
मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका ।
नैपाली कुनटी गोला यवक्षारो यवाग्रजः ॥ १०८ ॥
पाक्योऽथ स्वर्जिकाक्षारः कापोतः सुखवर्चकः ।
सौवर्चलं स्याद्रुचकं त्वक्क्षीरी वंशरोचना ॥ १०९ ॥

---

धिक्येन बहिःप्रसारादब्धिकफः सागरमलाख्यः, नद्यादौ तूपचारात् । स्फायते फेनः । सिनोति बध्नाति चेतः स्यन्दते वा सिन्दूरम् । नागात्सीसात्संभवोऽस्य नागसंभवम् । चीनपिष्टं गान्धारपिष्टो[पङ्को]पि । धन्वन्तरिस्तु– सिन्दूरं रक्तरेणुश्च रागरक्तं च नागजम् । शृङ्गारभूषणं श्रीमद्वसन्तोत्सवमण्डनम् ॥ हंसपादो हिङ्गुलके– । न न गच्छति चलत्वान्नागम् । सिनोति बध्नाति पारतं सीसं सीसपत्त्रं च । हेम्नो वर्णोत्कर्षार्थे योगे श्लेषे– इष्टं ( योगेष्टम् ) । उप्यते वप्रं वर्णोत्कर्षे बीजत्वात् । त्रपत इवाग्नेराशु द्रवते(ति) त्रपु । पिच्चयते कुव्यते पिच्चटम् ॥ १०५ ॥ रज्यतेऽनेन रङ्गम् । वङ्गति वङ्गम् । आलीनमपि । पञ्च्यते सूत्रमस्य पिचुः पिचयति वा, पिचि गतौ । तूल्यते फलात्तूलः, तूल निष्कर्षे, निर्बीजः कार्पासोऽयम् । रङ्गवङ्गेऽथ पिचुल इति प्रगृह्यसंज्ञाविस्मृतेः पाठः । कमलेभ्य उत्तरं वर्णाधिक्यात्कमलोत्तरम् । कुस्यति कुसुम्भं, कुस श्लेषणे, कौ सुम्भ्यते निकुट्यते वा, सुम्भिः सौत्रः । वह्नेरिव शिखास्य वह्निशिखम् । महच्च तद्रजनं च, रज्यतेऽनेनेति रजनं, रजकरजनरजःसूपसंख्यानात् ( वा० ) नलोपः ॥१०६॥ काम्यते शीतार्तैः कम्बलः, कम्बलः कमनीयो भवतीति निरुक्तम् । ऊर्णस्यास्ति– ऊर्णायुः । शशस्योर्णा शशोर्णं, गृहस्थूणवत्क्लीबे । मन्यतेऽभिलष्यते मधु पुष्परसाख्यम् । क्षुद्राभिर्मक्षिकाभिश्च कृतं ( क्षौद्रं माक्षिकं च ), क्षुद्राभ्रमरेति ( सू० ) अञ् । सारघं च । आदिशब्दात्पौत्तिकभ्रामरादि । अगणितावान्तरभेदा गजनिर्मालिकेत्येते, यद्ग्निमिः– माक्षिकं तैलवर्णं स्याद् घृतवर्णं तु पौत्तिकम् । विज्ञेयं भ्रामरं श्वेतं क्षौद्रं तु कपिलं मतम् । मधुनोच्छिष्यते त्यज्यते मधूच्छिष्टम् । सिञ्चाति सिक्थकम् ॥ १०७ ॥ मनोवाच्या शिला मनःशिला । मनःशब्देन हूयते मनोह्वा । नागजिह्वाकृतिर्नागजिह्विका । शिला च । नेपालदेशे भवा मनःशिला नेपाली द्विसंज्ञा, अभेदान्नपाली पाली वा । कौ नटति कुनटी । गां लाति गोला, गुडति वा । सप्तैकार्था इत्येके । दग्ध्वायवाङ्कुराज्जन्यते यवक्षारः ॥ १०८ ॥ पचनीयः पाक्यः । स्वर्जिका दग्ध्वा क्षार्यते स्वर्जिकाक्षारः । कापोतः कपोतवर्णः, कपोतस्यायमिति वा, ईषत्पूयते वा । ( सुखवर्चकः ) वर्च दीप्तौ । सुवर्चलाह्वयाकरस्येदं सौवर्चलम् । रुच्यते दीप्यते जाठराग्निरनेन रुचकं, क्षारप्रसङ्गात्पुनरुक्तम् । एवं ग्रन्थिकपत्त्राङ्गादि । त्वचो वंशात्क्षीरमस्यास्त्वक्क्षीरी, त्वक्क्षीरं च । वंशोत्था रोचना वंशरोचना, आह च ( शाश्वतः )– स्याद्वंशरोचना वांशी तुकाक्षीरी तुका शुभा । त्वक्क्षीरी वंशजा शुभ्रा वंशक्षीरी तु वैणवी ॥ १०९ ॥ शिनोति तैक्ष्ण्याच्छिग्रुः, ( तस्माज्जातं ) शोभा-

शिग्रुजं श्वेतमरिचं मोरटं मूलमैक्षवम् ।
ग्रन्थिकं पिप्पलीमूलं चटकाशिर इत्यपि ॥ ११० ॥
गोलोमी भूतकेशो ना पत्राङ्गं रक्तचन्दनम् ।
त्रिकटु त्र्यूषणं व्योषं त्रिफला तु फलत्रिकम् ॥ १११ ॥

इति वैश्यवर्गः । ९ ।

शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः ।
आचाण्डालात्तु संकीर्णा अम्बष्ठकरणादयः ॥ १ ॥
शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः ।
शूद्राक्षत्रिययोरुग्रो मागधः क्षत्रियाविशोः ॥ २ ॥
माहिष्योऽर्याक्षत्रिययोः क्षत्तार्याशूद्रयोः सुतः ।
ब्राह्मण्यां क्षत्रियात्सूतस्तस्यां वैदेहको विशः ॥ ३ ॥
रथकारस्तु माहिष्यात्करण्यां यस्य संभवः ।
स्याच्चाण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः ॥ ४ ॥

---

ञ्जनबीजम् । मुरति मोरटं, मुर संवेष्टने । ग्रन्थिप्रतिकृतिर्ग्रन्थिकम् । चटकाशिरोरूपत्वाच्चटकाशिरः ॥११०॥ गोरिव लोमान्यस्या गोलोमी । भूताः केशा अस्य भूतकेशः, भूतस्येव केशा अस्य वा । ना पुमान् । पत्राण्यङ्गं(गे) पत्राङ्गम् । त्रीणि कटून्यूषणानि च शुण्ठीपिप्पलीमरीचानि समाहृतानि ( त्रिकटु, त्र्यूषणम् ) । विशेषेण षाने दहति व्योषम् । कटु तिक्तं च । त्रयाणां फलानां हरीतक्यामलक-बिभीतकानां समाहारस्त्रिफला, अजाद्यतष्टाप् ( सू० ) । वरा च ॥१११॥ इति वैश्यवर्गः । ९ ।

शु पूजितं कृत्वोन्दन्ति सूरीन् क्लेदयन्ति शूद्राः, शीयन्ते वा । वृषं न्- लुनन्ति वृषलाः, नारदस्तु —वृषो हि भगवान्धर्मस्तस्य यः कुरुते लवम् । वृषलं तं विजानीयात्— । जघन्याज्जाता जघन्यजाः यच्छ्रुतिः— पद्भ्यां शूद्रा अजायत । पद्याः पज्जाश्च । चाण्डालो ब्राह्मण्यां शूद्राज्जातोऽत्र । संकीर्णाः प्रतिलोमानुलोमजत्वान्मिश्राः, यत्स्मृतिः ( याज्ञव० )— विप्रान्मूर्धावसिक्तस्तु क्षत्रियायां विशः स्त्रियाम् । जातोऽम्बष्ठस्तु शूद्रायां निषादः पारशवोऽपि वा ॥ माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात् । शूद्रायां करणो वैश्याद्विन्नास्वेष विधिः स्मृतः ॥ ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकः स्मृतः । शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः ॥ क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च । शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥ माहिष्येण करण्यां तु रथकारः प्रजायते । असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ॥ १ ॥ सिंहावलोकितन्यायेन सुत इत्येव । शूद्रायां वैश्याज्जातः, करोति प्रेष्यकर्माणीति करणः, ल्युट् । एवं सर्वत्राध्याहारानुषङ्गादि । अम्बायां तिष्ठतीत्यम्बष्ठः, अम्बाम्बगोभूमीति ( सू० ) षत्वम्, ह्रस्वो निर्देशात् । द्विजन्मात्र विप्रः । वैश्येति, यञश्च ( सू० ) इति ङीप्— नास्ति लक्ष्यात् । शूद्रा चामहत्पूर्वेति ( ग० ) अजादित्वाट्टाप् । उच्यत उग्रः, उच समवाये । मगधयति स्तौति मागधः ॥ २ ॥ महिष्यां साधुर्माहिष्यः, स हि— अन्तःपुररक्षीति हरदत्तः । अर्या वैश्या । क्षदति द्वाःस्थत्वात्क्षत्ता. तृन्तृचौ शंसिक्षदादिभ्यः ( उ० ) इत्यनिट् तृच्, क्षदस्संवरणादिको धातुः क्षदादिपाठात् । सुवति प्रेरयत्यश्वान् सूतः । ब्राह्मण्यां वैश्याज्जातो [ वैदेहको ] वणिक्करी ॥ ३ ॥ माहिष्याद्वैश्याक्षत्रियजातात् करण्यां शूद्रावैश्यजातायां सुतो रथकारस्तक्षा । चण्डमुग्रं कर्मास्यास्तीति चण्डः, चण्ड एव चाण्डालः ॥ ४ ॥ करोति कारुः, कृवापाजीति ( उ० )

कारुः शिल्पी संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः ।
कुलकः स्यात्कुलश्रेष्ठी मालाकारस्तु मालिकः ॥ ५ ॥
कुम्भकारः कुलालः स्यात्पलगण्डस्तु लेपकः ।
तन्त्र(न्तु)वायः कुविन्दः स्यात्तुन्नवायस्तु सौचिकः ॥ ६ ॥
रङ्गाजीवश्चित्रकरः शस्त्रमार्जोसिधावकः ।
पादूकृच्चर्मकारः स्याद् व्योकारो लोहकारकः ॥ ७ ॥
नाडिंधमः स्वर्णकारः कलादो रुक्मकारके ।
स्याच्छाङ्खिकः काम्बविकः शौल्बिकस्ताम्रकुट्टकः ॥ ८ ॥
तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट् ।
ग्रामाधीनो ग्रामतक्षः कौटतक्षोनधीनकः ॥ ९ ॥
क्षुरिमुण्डिदिवाकीर्तिनापितान्तावसायिनः ।
निर्णेजकः स्याद्रजकः शौण्डिको मण्डहारकः ॥ १० ॥
जाबालः स्यादजाजीवो देवाजीवो तु देवलः ।
स्यान्माया शाम्बरी मायाकारस्तु प्रातिहारिकः ॥ ११ ॥

---

उण् । शिल्पं कलास्त्यस्य शिल्पी । समानजातीयकारुसंघः, श्रीयत इति श्रेणिर्द्विलिङ्गः । कुलं कायति कुलकः, कुलिक इत्यन्ये, श्रेण्यादौ श्रेष्ठार्थः । कुले वणिग्वृन्दे श्रेष्ठत्वमस्त्यस्य कुलश्रेष्ठी । ( मालिकः ) तदस्यपण्यमिति ( सू० ) ठक् ॥ ५ ॥ कुलानि गृहाण्यलति कुलालः, कुं मृदं लाडयति मृद्नाति वा । पलेन मांसेनेव मृदादिना गण्डति संहन्ति पलगण्डो लेप्यकृत् । तन्त्रं तन्त्वातानं वयति तन्त्रवायः, ह्वावामश्चेत्यण् ( सू० ) । कु विन्दति कुविन्दः । तुन्नं विद्धं वयति तुन्नवायः । सूचिवानं शिल्पमस्य सौचिकः ॥ ६ ॥ रङ्गान् रक्तवर्णतान्याजीवति रङ्गाजीवः । चित्रंकरोति चित्रकरः, दिवाविभेत्यादिना ( सू० ) टः । शस्त्रं मार्ष्टि तेजयति शस्त्रमार्जः । असीन्धावति शोधयति–असिधावकः । पादूः पादत्राणानि करोति पादूकृत्, पादकृदित्येके । विशेषणैकं समवायमियर्ति व्योकारः, व्यो रित्ययःपर्याय इति **श्रीभोजः** ॥७॥ नाडीं धमति नाडिंधमः, नाडीमुष्टयोश्च ( सू० ) इति खश् । कला आदत्ते कलादः, कलं सुवर्णकालिकामाद्यत्याखण्ड[य]ति वा, अत एव कलं धौतं यत्रेति कलधौतं रुक्मम् । हेममुष्टिकोपि । कम्बुघटनं शिल्पमस्य काम्बविकः शङ्खवलयादिकृत्, लक्ष्यादस्य कदेशाभावः । शुल्बघटनं शिल्पमस्य शौल्बिकः । मणिकारो वैकटिकः ॥ ८ ॥ तक्ष्णोति तक्षा । वर्धयति वर्धकिः, वर्ध छेदने । त्वक्षति तनूकरोति दारु त्वष्टा । काष्ठं तक्ष्णोति काष्ठतट् । स्थपतिश्च । ग्रामस्यायत्तस्तक्षा ग्रामतक्षः, ग्रामकौटाभ्यांचतक्ष्णः ( सू० ) इति टच् । कुट्यां भवः कौटः स्वतन्त्रः । नास्त्यध्युपरि– इनः स्वाम्यस्यानधीनः ॥ ९ ॥ क्षुरोस्यास्ति क्षुरी । मुण्डयति मुण्डी । दिवा कीर्त्यते दिवाकीर्तिः, रात्रौ क्षुरकर्मनिषेधात् । नाप्यते नापितः, नञ् प्रकृत्या । अन्तमवस्यत्यन्तावसायी । चण्डिलोपि । संवाहकोङ्गमर्दः स्यात् । निर्णेनेक्ति क्षालयति निर्णेजकः । रञ्जयति रजकः, शिल्पिनि क्वुन् ( क्वुन्शिल्पिसंज्ञयोरिति ), रजकरजनरजःसूपसंख्यानात् ( वा० ) नलोपः । क्वचित्तु य एव धावकः स एव रजकः, **स्मार्ते** तु भिन्नावेतौ । शुण्डा पानमदस्थानं सुरा वा पण्यमस्य शौण्डिकः । मण्डमच्छसुरां हरति मण्डहारकः । सुराजीवी कल्यपालाख्यः ॥ १० ॥ जवमलति जवालश्छागस्तस्यायं जाबालः, अजपालापभ्रंशो वा । देवान् - लाति देवलः । मात्यस्यां विश्वं माया । शम्बराख्यस्यासुरस्येयं शाम्बरी, शं वृणोति शंवरो व्याज इति तु युक्तम् । इन्द्रजालं तु कुसृतिः कुहकं कुहिका च । प्रतिहरणं व्याजः प्रयोजनमस्य प्रातिहारिक ऐन्द्रजालिकः ॥ ११ ॥ शिलालिना कृशाश्वेन

शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः ।
भरता इत्यपि नटाश्चारणास्तु कुशीलवाः ॥ १२ ॥
मार्दङ्गिका मौरजिकाः पाणिवादास्तु पाणिघाः ।
वेणुध्माः स्युर्वैणविका वीणावादास्तु वैणिकाः ॥ १३ ॥
जीवान्तकः शाकुनिको द्वौ वागुरिकजालिकौ ।
वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ॥ १४ ॥
भृतको भृतभुक्कर्मकरो वैतनिकोऽपि सः ।
वार्त्तावहो वैवधिको भारवाहस्तु भारिकः ॥ १५ ॥
विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः ।
निहीनोपश(स)दो जाल्मः क्षुल्लकश्चेतरश्च सः ॥ १६ ॥
भृत्ये दासेरदासेयदासगोप्यकचेटकाः ।
नियोज्यकिंकरप्रैष्यभुजिष्यपरिचारकाः ॥ १७ ॥
पराचितपरास्कन्दपरजातपरैधिताः ॥ १८ ॥

---

च प्रोक्तं नटसूत्रमधीते शैलाली कृशाश्वी च, पाराशर्यशिलालिभ्याम् ( सू० ) इति णिनिः, कर्मन्दकृशाश्वात् ( सू० ) इनिः । शिलूषस्यर्षेरपत्यं शैलूषः । भरतस्यापत्यं, बिदाद्यञि बहुत्वे लुक् ( यञञोश्च ) । नटति नटः । चरणस्य भ्रमणस्यायं चारणः, यतो देशान्तरभ्रमणाज्जीवति । कुत्सितं शीलं वाति कुशीलवः ॥ १२ ॥ मृदङ्गमुरजवादनं शिल्पमेषां ( मार्दङ्गिका मौरजिकाः ) । पाणी हन्ति पाणिघः, पाणिघताडघौशिल्पिनीति ( सू० ) साधुः । वेणुं धमति वेणुध्मा वांशिकः । वीणावादनं शिल्पमस्य वैणिकः ॥ १३ ॥ शकुनान् हन्ति शाकुनिकः, पक्षिमत्स्यमृगान्हन्तीति ( सू० ) ठक् । एकार्थाविति शेषः । वागुरया मृगबन्धनरज्ज्वा चराति वागुरिकः । वितन्यते वीतंसः प्राणिबन्धोपकरणं, कूटः कूटयन्त्रं, ताभ्यां जीवति चराति वेति ठक् ( चरतीति ) । मांसं पण्यमस्य मांसिकः । सौनिकार्था इत्येके ॥ १४ ॥ भ्रियते भृतकः, स्वार्थे कन् । भृतिं वेतनं भुङ्क्ते भृतिभुक् । कर्मकरः, कर्मणिभृतौ ( सू ) इति टः । वेतनेन जीवति वैतनिकः, वेतनादिभ्योजीवति ( सू० ) इति ठक् । वृत्तिर्जीविकास्त्यस्यां वार्त्ता– अन्नाद्यं, प्रज्ञाश्रद्धार्चेति ( सू० ) णः, वार्त्ताया वहो वार्त्तावहः । विवध्यते विवधो भारः पर्याहारो वा, वध संयमने, पुंसिसंज्ञायांघःप्रायेण ( सू० ), तं वहति वैवधिकः, विभाषाविवधवीवधात् ( सू० ) इति ठन् । भारोऽस्त्यस्य भारिकः ॥ १५ ॥ विरुद्धो वर्णोऽस्य विवर्णः, वर्णान्तराऽलत्वात् । पामाः सन्त्यस्याधमत्वात् पामरः, पामा(नं) राति वा । निम्नमञ्चतीति नीचः । प्रकृतौ भवः प्राकृतो गुणासंस्कृतः । पृथग्जनेभ्यः पृथग्जनः । नियतं हीयते निहीनः । अपशीयतेपशदः । जलति जाल्मः, जल घातने । क्षुधं लाति क्षुल्लस्तुच्छत्वात् । इतं रात्येति वा–इतरः । वर्वरोऽपि [यथाजातोऽपि] । भारतादौ रेफशकारौ ॥ १६ ॥ भरणीयो भृत्यः, भृञोऽसंज्ञायां ( सू० ) इति क्यप् । दासस्यापत्यं दासेरो दासेयश्च, क्षुद्राभ्योवा ( सू० ) इति ढक्–ढ्रकौ । दीयते दासः, दस्यते(ति) वा, दसु उपक्षये । गोपनीयो गोप्यः । चेटति चेटः, चिट प्रेष्ये । ( नियोज्यः ) प्रयोज्यनियोज्यौशक्यार्थेसाधू ( सू० ) । किं करोमीत्याज्ञाप्रतीक्षकः किंकरः, दिवाविभानिशेति ( सू० ) टः । प्रेषणीयः प्रेष्यः, प्रादूहोढोढ्येषैष्येष्विति ( वा० ) वृद्धिः, ईष उञ्छे– इत्यस्मात्तु प्रेष्यः । भुङ्क्ते स्वाम्युच्छिष्टं भुजिष्यः ॥ १७ ॥ परैराचीयते वर्ध्यते पराचितः । परिस्कन्द्यते– आक्रम्य नियुज्यते परिस्कन्दः, परिस्कन्दःप्राच्यभरतेषु ( सू० ) । परैरेध्यते वर्ध्यते परैधितः ॥ १८ ॥ मन्दते

मन्दस्तुन्दपरिमृज आलस्यः शीतकोलसोनुष्णः ।
दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च ॥ १९ ॥
चण्डालप्लवमातङ्गदिवाकीर्तिजनंगमाः ।
निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः ॥ २० ॥
भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः ।
व्याधो मृगवधाजीवो मृगयुर्लुब्धकोपि सः ॥ २१ ॥
कौलेयकः सारमेयः कुक्कुरो मृगदंशकः ।
शुनको भषकः श्वा स्यादलर्कस्तु स योगितः ॥ २२ ॥
श्वा विश्वकद्रुर्मृगयाकुशलः सरमा शुनी ।
विड्चरः सू( शू )करो ग्राम्यो वर्करस्तरुणः पशुः ॥ २३ ॥
आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् ।
दाक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा कुरङ्गकः ॥ २४ ॥

---

स्वपितीव मन्दः, अत एव मदि जाड्य इति **चान्द्रो** धातुः । तुन्दं परिमार्ष्टि तुन्दपरिमृजः, तुन्दशोकयोःपरिमृजापनुदोः ( सू० ) इति सूत्रे– आलस्यसुखाहरणयोरितिवक्तव्यात् ( वा० ) कः । आलस्यमस्त्यस्यालस्यः, अर्शआदित्वात् ( सू० ) अच् । ( शीतकः ) शीतादलसे, शीतोष्णाभ्यांकारिणीति ( सू० ) कन् । न लसत्यलसः । दक्षते दक्षः । चतते कर्म चतुरः । पिशति पियति वा पेशलः, पिश अवयवे, रि पि गतौ । पटति पाटयति वा पटुः । सुष्ठूत्थानमुद्योगास्य सूत्थानः । उषति दहतीवोष्णः । उष्णलोपि ॥ १९ ॥ चण्डते चण्डालः । प्लवते प्लवः । मा निषिद्धं तङ्गति मातङ्गः, अमानोनाः प्रतिषेधे, मतङ्गस्यापत्यमिति पौराणिकाः । दिवा कीर्त्यते दिवाकीर्तिः, रात्रौ भयदत्वात् । जनं गच्छति जनंगमः, गमश्च ( सू० ) इति खच् । निषण्णमस्मिन्पातकमिति निषादः, निषीदति वा, ज्वलादित्वाण्णः ( ज्वलितिकसन्तेभ्योणः ) । श्वानं पचति श्वपचः, पचादित्वादणे पचादोच् ( नन्दिग्रहीति ) । ग्रामान्ते वसति– अन्तेवासी, अन्तावसायी च । (चण्डालः) कुलालवरुड(कर्मार)निषादचण्डालमित्रामित्रेभ्यश्छन्दस्युपसंख्यानात् (वा०) स्वार्थेऽण् । पुत्कुत्सितं कसति पुक्कसः, पुल्कस इत्येके । अवान्तरभेदोत्र नादृतः, यतः श्वपचो[श्वपो] डोम्बः[मः] पुक्कसो मृतपः ॥ २० ॥ किराताद्यास्तथा म्लेच्छजातीयाः– दरद्भुट्टभेदादयश्चाण्डालभेदाः । किरति शरान् किरातः । शबत्यरण्यं शबरः । पोलति भ्रमति पुलिन्दः । एतेरण्यचरा देशभेदाद् भिन्नाः । म्लेच्छत्यव्यक्तं वक्ति म्लेच्छः । रिष्टया मालभटा भिल्ला नाहलाश्चान्त्यजाः पृथक् । विध्यति व्याधः, श्याद्व्यधेति ( सू० ) णः । मृगान् याति मृगयते वा मृगयुः । लुभ्यते (स्म) गृध्यति मांसं लुब्धकः ॥ २१ ॥ कुले गृहे भवः कौलेयकः, कुलकुक्षीति ( सू० ) ढकञ् । सरमाया अपत्यं सारमेयः । कोकते कुक्, चोरग्राहिकुक्शब्दं वा कुरति ( कुक्कुरः ), कुर शब्दे । मृगान्दशति मृगदंशकः । शुनति शुनकः, शुन गतौ । भषति कुत्सितं वाशते भषकः । शवति श्वयति वा श्वा । मण्डली च । रथ्यामृगो देश्याम् । स श्वा संजातगरण्ये गोल्यते वार्यते दशनभयादलर्क उन्मत्तः श्वा ॥ २२ ॥ विश्वं कन्दत्याह्वयते विश्वकद्रुः, विगतं श्वकदनमस्येत्येके, विश्वकं द्रवति वा । सरति सरमा देवशुनी, विशेषवृत्तिरपि सामान्येभिधानात् । विषं गूथं चरति( अत्ति ) विड्चरः । सूयते बहून् सूकरः । वर्कतेन्नीन् वर्करः, वृक आदाने ॥ २३ ॥ आचोद्यन्ते त्रास्यन्ते प्राणिनोत्रेत्याच्छोदनं, चुदेश्छत्वम् । मृगान्व्ययति मृगव्यं, मृगव्येति **मुनिः**, व्येञ् संवरणे । आखेट्यन्ते प्राणिनोत्राखेटः, खिट उत्त्रासने । मृग्यन्ते प्राणिनोस्यां मृगया, मृगयाटाव्येत्यङ् ( परिचर्यापरिसर्येति ) । पापर्द्धिश्च । लुब्ध[ क ]संबन्धाद् दक्षिणे पार्श्वेरुर्व्रणमस्य दक्षिणारुः ( दक्षिणेर्मा ), दक्षिणेर्मालुब्धकयोगइति ( सू० ) साधुः, व्रणोस्त्रिया-

चौरैकागारिकस्तेनदस्युतस्करमोषकाः ।
प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः ॥ २५ ॥
चौरिका स्तैन्यचौर्ये च स्तेयं लोप्त्रं तु तद्धनम् ।
वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम् ॥ २६ ॥
उन्माथः कूटयन्त्रं स्याद्वागुरा मृगबन्धनी ।
शुम्बं वटाकरः ( वराटकः ) स्त्री तु रज्जुस्त्रिषु वटी गुणः ॥ २७ ॥
उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः ।
पुंसि वेमा वापदण्डः सूत्राणि नरि तन्तवः ॥ २८ ॥
वाणिर्व्यूतिः स्त्रियौ तुल्ये पुस्तं लेप्यादिकर्मणि ।
पा( प )ञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता ॥ २९ ॥

---

मीर्ममरुरित्युक्तम् ॥ २४ ॥ चोरयति चोरः, स्वार्थेण् ( चौरः ), चुराशीलो वा, छत्रादित्वाण्णः (सू०) । एकस्मिन्नसहायेऽगारे भव ऐकागारिकः, ऐकागारिकट्चौरे ( सू० ) । स्तेनयति स्तेनः, स्तेन चौर्ये, स्यास्त्याहृञविभ्य इति ( उ० ) इनचि स्येनः स्यात् । दस्यत्युपक्षिणोति दस्युः । तत्करोति तस्करः, तद्बृहतोःकरपत्योश्चोरदेवतयोःसुट्तलोपश्च ( ग० ) । मुष्णाति मोषकः । प्रतिरुणद्धि प्रतिरोधी । परानास्कन्दति परास्कन्दी । पाटयंश्चरति पाटच्चरः, पटच्चरे जीर्णवस्त्रे भवो वा । मलिनैर्म्लोचयति मलिम्लुचः, म्लुच स्तेयकरणे । पारिपन्थिकः पश्यतोहरश्च, वाग्दिक्पश्यद्भ्योयुक्तिदण्डहरेष्विति ( सू० ) षष्ठ्या अलुक् । व्यलीकं चातिसंधानं व्यञ्जनं च प्रतारणम् ॥ २५ ॥ चोरस्य भावश्चौरिका, मनोज्ञादित्वात् ( द्वन्द्वमनोज्ञादिभ्यश्च ) वुञ् । ब्राह्मणादित्वात्ष्यञि ( गुणवचनब्राह्मणादिभ्यःकर्मणिच ) चौर्यम् । स्तेनस्य भावः कर्म वा स्तैन्यं, स्तेनादितियोगविभागात्ष्यञ् ( इ० )। स्तेनान्नलोपश्च ( सू० ) इति स्तेयम् । लुप्यते लोप्त्रं चौर्यधनम् । मृगादिबन्धनानिमित्तं जालवागुरादिसाधनं, वितन्यते इति वीतंसः, वितस्यते बध्यतेऽनेन वा, तसिः सौत्रः ॥ २६ ॥ ऊर्ध्वपातान्मथ्यतेनेनोन्माथः । छलेन यम्यतेनेन कूटयन्त्रं, पाशयन्त्रमित्येके । ( मृगबन्धनी ) रज्जुरिति शेषः । अवागुरयति मृगान् वागुरा जालाकृतिः । शु[ सु ] पूजार्थेऽव्ययं, पूजितं मीयते शु[ सु ]म्बं, शुल्वं वा । वञ्यते वेष्टयते वटाकरः, वटी च । सृज्यते रज्जुः । गुण्यतेऽभ्यस्यते गुणः । वटो गुण इति पृथगाहुः । यैर्वेष्टनैर्द्विगुणा त्रिगुणा वा रज्जुर्वेष्ट्यते वटीगुण इत्येके ॥ २७ ॥ उद्घाट्यते प्रकाश्यतेऽम्भोनेनोद्घाटनं, ऊर्ध्वं हन्य[ घात्य ]तेनेनेत्युद्घातनमिति **कौटिल्यः** । प्रहेररघट्टादेर्जलमूर्ध्वं वाह्यतेननोद्वाहनम् । पादावर्तोऽपि । वयन्त्यनेन वेमा । उप्यते पीड्यते यन्त्रे सूत्रं येनेति वापस्तदर्थो दण्डो वापदण्डः, वायदण्ड इति तु युक्तम् । सूयते सूत्र्यते वा पटोऽनेन सूत्रम् । तन्यतेनेन तन्तुः । नरि पुंसि ॥ २८ ॥ व( वा )णनं वाणिः, वयनं वा, अत एव निष्प्रवाणिर्नवः पटः । विवयनं व्यूतिः, ऊतियूतीति ( सू० ) साधुः । तुल्या च तुल्या च तुल्ये । पुस्यतेऽभिमर्द्यते मृदत्र पुस्तं, पुस्त आदरे वा । पञ्चालदेशे भवा पाञ्चालिका यया बालाः खेलन्ति । ( पुत्रिका ) पुत्रात्कृत्रिमइति ( ग० ) कन् ( यावादिभ्यःकन् ) । आदिशब्दाच्चर्मलेराद्यैः, स्यात्सालभञ्जिका स्तम्भे लेप्येनाञ्जलिकारिका । जतुत्रपुविकारे तु जातुषं त्रापुषं त्रिषु ॥ त्रपुजतुनोःषुक् ( सू० ) ॥ २९ ॥ पेटति पिटः, पिट

पिटकः पेटकः पीडा मञ्जूषाथ विहङ्गिका ।
भारयष्टिस्तदालम्बि शिक्यं काचोऽथ पादुका ॥ ३० ॥
पादूरुपानत्स्त्री सैवानुपदीना पदायता ।
नध्री वध्री वरत्रा स्यादश्वादेस्ताडनी कशा ॥ ३१ ॥
चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी ।
नाराची स्यादेषणिका शाणस्तु निकषः कषः ॥ ३२ ॥
व्र( वृ )श्चनः पत्त्रपरशुरेषिका तूलिका समे ।
तैजसावर्तनी मूषा भस्त्रा चर्मप्रसेविका ॥ ३३ ॥
आस्फोटनी वेधनिका कृपाणी कर्तरी समे ।
वृक्षादनो वृक्षभेदी टङ्कः पाषाणदारकः( णः ) ॥ ३४ ॥
क्रकचः करपत्त्रं स्यादारा चर्मप्रभेदिका ।
सूर्मी स्थूणायःप्रतिमा शिल्पं कर्म कलादिकम् ॥ ३५ ॥

संघाते, कः । ष्वुलि पेटकः । पीड गहने ( अवगाहने ),अस्मात्पीडा, पीङ् पानेस्मात्पेटेति **श्रीभोजः** । मञ्जु मनोज्ञं कृत्वा वस्त्राद्यैरुष्यतेत्र मञ्जूषा । आद्यौ पेटारिकायां परौ महत्याम् । विहंगप्रतिकृतिश्चर्मादिमयी, या भित्त्यादौ लम्बमाना स्थाप्यते प्रयाणके च संचार्यते ( विहंगिका ) । भारोद्वहनाय यष्टिः, चतुर्दण्डिकेति सभ्याः, शिक्याधारस्कन्धग्राह्यो लगुड इति **द्रवि[ मि ]डाः**, विहंगमेत्येके । तदालम्बो भारालम्बः, तस्या आलम्बते वा । शक्नोति वोढुं शिक्यं, अघ्न्यादिः ( उ० ) । कच्यतेनेनेति काचः, कच बन्धने, यत्र रज्जुपञ्जरे वोढव्यमास्ते ॥ ३० ॥ पद्यतेनया पादूः, णित्कसिपद्यर्तेरित्यूः ( उ० ) । ( पादुका ) स्वार्थे कन्, केऽणइति ( सू० ) ह्रस्वः । उपनह्यति पादमुपानत्, नहिवृतिवृषीति ( सू० ) दीर्घः । पादत्राणं च । अनुपदं पादायामेन बद्धानुपदीना, अनुपदसर्वान्नेति ( सू० ) खः । नह्यति बध्नाति नध्री । वर्धते दीर्घीभवति चर्मरज्ज्वादिर्वध्री । व्रियतेनया वरत्रा, वरत्रा वैलवैणवीति तु **चाणक्यः** सूत्राध्यक्षे( ? ) उपचारादाहयत् । कशति कशा चर्मयष्टिः ॥ ३१ ॥ चण्डालस्येयं चाण्डालिका । कण्य( ड्य )ते तन्त्रीभिराव्रियते कटो( ण्डो )लवीणा किन्नर्याख्या । नरमञ्चति नराङ्, तस्येयं, नाराची । अन्विष्यते वर्णोनयेत्येषणिका, स्वर्णतुलेतीह युक्तम् । श्यति तनूकरोति शाणः । निकष्यतेत्र निकषः, गोचरसंचरेति ( सू० ) चकारात्साधुः , पुंसिसंज्ञायांघो वा ( सू० ) । एवं कषः, निकषोपल इत्येके, पचाद्यच् ( नन्दिग्रहीति ), मणिकारादिभाण्डमाहुः, **यन्मुनिः**— शाणस्तु निकषोपलः ॥ ३२ ॥ वृश्चति छिनत्ति व्रश्चनः । पत्त्राकारः पत्त्राणां वा परशुः ( पत्त्रपरशुः ) । एषःयेषिका, ईष उञ्छे । काष्ठलोहमयी शलका तूलिका, तूल निष्कर्षे । ईषिकेत्येके, शलाकेषिकयोस्तूलिरिति **दुर्गो** भेदेनाह । तैजसं हेमादि— आवर्त्यते द्रवीक्रियतेस्याम् । मूयते मूषा, मूङ् बन्धने । बभस्ति भक्षयतीव स्थाप्यं भस्त्रा । चर्ममयी, प्रसीव्यते प्रसेविका, प्रसेवकोपि ॥ ३३ ॥ आस्फोट्यते विध्यते चानया मौक्तिकादि ( आस्फोटनी, इ० ) । कल्प्यते छिद्यतेनया कृपाणी । कर्त्यतेनया कर्तरी । वृक्षोऽद्यते छेद्यतेनेन शस्त्रकेण वृक्षादनः । टङ्क्यतेनेन टङ्कः, टकि बन्धने, हन्यमानः— टंशब्दं कायति वा ॥ ३४ ॥ क्रशब्दोच्चारणेन कचति क्रकचः । करसंचार्यं शस्त्रपत्त्रं करपत्त्रं, करशब्दोच्चारणेन पतति वा । इयर्त्यनयेत्यारा, भिदादौ— आराशस्त्र्यां ( ग० ) साधुः । चर्मजीवनी च । सुवति सूर्मी, शोभनोर्मिरित्येके । तिष्ठति स्थूणा, **यच्छाश्वतः**— स्थूणा स्तम्भेथ सूर्म्यां च । अयोमयी प्रतिकृतिः ( अयःप्रतिमा ), **यत्स्मृतिः**— सूर्मीं ज्वलन्तीमालिङ्गेन्मृत्यवे गुरुतल्पगः । शिनोति शिल्पं, शिञ् निशाने, शिल उञ्छेस्माद्वा । कला गीताद्याश्चतुःषष्टिः । आदिशब्दः प्रकारे ॥ ३५ ॥ प्रतिमीयतेनेनेति प्रतिमानं, प्रतिमा च । प्रतिबिम्ब्य—

प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ।
प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात् ॥ ३६ ॥
वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक् ।
साधारणः समानश्च स्युरुत्तरपदे त्वमी ॥ ३७ ॥
निभसंकाशनीकाशप्रतीकाशोपमादयः ।
कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् ॥ ३८ ॥
भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ।
सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा ॥ ३९ ॥
गन्धोत्तमा प्रसन्नेरा कादम्बर्यः परिस्रुता ।
मदिरा कश्यमद्ये चाप्यवदंशस्तु भक्षणम् ॥ ४० ॥
शुण्डा पानमदस्थानं मधुवारा मधुक्रमाः ।
मध्वासवो माधवको मधुमाद्धीकमद्ययोः ॥ ४१ ॥

---

ते प्रतिबिम्बं, बिम्बसदृशं वा । प्रतियात्यतेनया प्रतियातना, यत निकारोपस्कारयोः । अर्च्यतेऽर्चा । प्रतिनिधीयते प्रतिनिधिर्मुख्यसदृशः । प्रतिरूपं [प्रतिच्छन्दः प्रतिकायश्च । उपमितिरुपमा । केचिदेतत्पूर्वैः सबध्नन्ति ॥ ३६ ॥ समति समः । तुलया संमितस्तुल्यः नौवयोधर्मेति ( सू० ) यत् । ( सदृक्ष इ० ) समान इव दृश्यते, त्यदादिषुदृशोरनालोचनेकञ्च ( सू० ) इत्यत्र समानान्ययोश्चेतिवक्तव्यात् ( वा० ) क्सः कञ् क्विन् च, दृग्दृशवतुष्विति ( सू० ) समानस्य सः । समानमाधारणं मानं चास्य साधारणः समानश्च ॥ ३७ ॥ वाच्यलिङ्गास्तुल्यार्थाश्चैते, यथा चन्द्रनिभं मुखं, पद्मसंकाशम् । नियतं भाति निभम् । समं काशते संकाशः । आदिशब्दाच्चन्द्रप्रतिमः, पितृरूपः आयासभूत इत्यादि । चन्द्रेण निभ इत्यादौ न भवति समास एवोत्तरपदत्वस्य रूढेः । कर्मणि साधु कर्मण्या, भर्मण्या वा । विधीयतेनया विधा, लक्ष्ये भोजनपिण्डे रूढा । ( भृत्या, इ० ) भ्रियतेनयेति, संज्ञायांसमजेति ( सू० ) क्यप्, स्त्रियां क्तिन्, मनिन्, ल्युट् । वीयतेद्यते वेतनं, वी गत्यादौ ॥ ३८ ॥ भरणे साधु भरण्यम् । मूलेनानाम्यं मूल्यं, नौवयोधर्मेतियत् ( सू० ) । निर्विश्यते भुज्यते निर्वेशः । पण्यते- आभाष्यते पणः, नित्यंपणः-परिमाण इति ( सू० ) साधुः । सूयते परिवास्यते सुरा । हलिनो बलस्य प्रिया । जहाति लज्जामनयेति हाला, हलति विलिखत्यङ्गं वा, ज्वलादित्वाण्णः ( ज्वलितिकसन्तेभ्यो णः ) । परिस्रवति परिस्रुत्, परिस्रुता च । वरुणात्मजा वारुणी समुद्रोत्थत्वात् ॥ ३९ ॥ गन्धेनोत्तमा । प्रसीदति प्रसन्ना, अच्छसुरा । एति भ्राम्यत्यनया- इरा । कुत्सिताम्बरस्य नीलवाससः इयं कादम्बरी. स्वार्थे तृतीया । माद्यत्यनया मदिरा । कशादेशे भवं कश्यम् । मदे साधु मद्यं, माद्यन्त्यनेन वा, कृत्यल्युटोबहुलं ( सू० ) इति करणे गदमदचरेति ( सू० ) यत् । स्वादुरसा मदिष्ठा कल्यं हारहूरं कापिशायनं च । अवदश्यत पानरुचिजननार्थमवदंशः, खरविशदमभ्यवहार्यम् । चर्वणमुपदंशश्च ॥ ४० ॥ शुण्य(न्य)ते शुण्डा, शुण(न) गतौ । दानमदयोरास्पदं कल्यपालगृहैकदेशः । शाश्वतस्तु- कुञ्जराणां करः शुण्डा शुण्डा कादम्बरी मता । ( मधुवारा इ० ) क्रमेण मधुपानावसराः । गौडी पैष्टी च माध्वी च फलोत्था च सुरा स्मृतेति सुराया भेदानाह । माक्षिकमिश्र आसूयते मध्वासवः । मधुनो विकारो मधुना कृतो वा माधवकः, कुलालादित्वाद्वुञ् ( सू० ) । मन्यते मधु, माद्यन्त्यनेन वा । मृद्वीकाया विकारो माद्वीकं, माध्वीकमित्युपाध्यायः । मद्यस्योक्तत्वाद्- अद्वयोरित्येके पेठुः, तन्न- सामान्यविशेषरूपत्वात् ॥ ४१ ॥ मिरायां देशे भवो गौल्याः

मैरेयमासवः शीधुर्मेदको जगलः समौ ।
संधानं स्यादभिषवः किण्वं पुंसि तु नग्नहूः ॥ ४२॥
कारोत्तमः(रः) सुरामण्ड आपानं पानगोष्ठिका ।
चषकोस्त्री पानपात्रं सरकोप्यनुतर्षणम् ॥ ४३ ॥
धूर्तोक्षदेवी कितवोक्षधूर्तो द्यूतकृत्समाः ।
स्युर्लग्नकाः प्रतिभुवः सभिका द्यूतकारकाः ॥ ४४ ॥
द्यूतोस्त्रियामक्षवती कैतवं पण इत्यपि ।
पणोक्षेषु ग्लहोक्षास्तु देवनाः पाशकाश्च ते ॥ ४५ ॥
परिणायस्तु शारीणां समन्तान्नयनेऽस्त्रियाम् ।
अष्टापदं शारिफलं प्राणिद्यूतं समाह्वयः ॥ ४६ ॥
उक्ता भूरिप्रयोगत्वादेकस्मिन्येत्र यौगिकाः ।
ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गान्तरेपि ते ॥ ४७ ॥

इति शूद्रवर्गः । १० ।

---

सुराया विशेषो मैरेयः । शेरतेनेन शीधुः, शीङोधुक्- ( उ० ) । शीधोरित्येके पठित्वा शीधुप्रतिकृतिक इति व्याख्यन् । यदाहुः- मध्वासवस्तु मैरेयं, तन्न- यन्**माला**- मैरेयो गदितः शीधुः, (इक्षोः) [अ]पक्वरसोपि । मेद्यति स्निह्यत्यनेन मेदकः । भृशं गलति जगलः स्वच्छः सुरासंधानद्रव्यपङ्कः । संधीयते संधानं, वंशांकुरफलादीन् बहुकालं संधाय क्रियते । अभिषूयते चिरं क्लिद्यतेऽभिषवः । भावसाधनौ वा द्वौ सुरासंधौ वर्तेते । कि(क)णति कीयते वा सुरानेन किण्वं माषदलन्या(ला)दि सुराबीजाख्यम् । नग्नेनाह्वयते स्पर्धते सुराच्छादनाभावान्नग्नहूः, नग्नहु**र्मालायाम्** ॥ ४२ ॥ कारेण क्रियावशान्मुख्यः कारोत्तमः । सुरोर्ध्वे स्वच्छो भागः ( सुरामण्डः ) । आपीयतेस्मिन्नापानम् । पानाय गोष्ठी- आसनबन्धः पानगोष्ठी, गावो नानाविधा वाचास्तिष्ठन्त्यत्रेति । चषन्त्यनेन चषकम् । गल्वर्कोपि, स्फाटिके पात्रेयं रूढः, विवक्षातो विध्यनुवादौ । सरति सरकः । अनुतृष्यन्त्यनेनानुतर्षणं सुरापरिवेषणम् । चषकपर्यायावेतावित्येके, यन्**मुनिः**- चषकश्चानुतर्षश्च सरकश्चेति ॥ ४३ ॥ धूर्वति हिनास्ति धूर्तः । अक्षैर्दीव्यति विजिगीषते तच्छीलोक्षदेवी । किं तवास्तीति पणते कितवः । लगति लग्नकः । प्रतिनिधिर्भवति प्रतिभूः । सभा द्यूतशालास्त्यस्य सभिकः । द्यूतं कारयति द्यूतकारकः । द्वौ द्वौ भिन्नार्थौ, आद्ययोः सर्वसामान्यात् ॥ ४४ ॥ दीव्यतेस्मिन् द्यूतम् । कितवस्य कर्म कैतवम् । पणनं पणः । दुरोदरं नानार्थे । पण्यते पणो बन्धकः । गृह्यते ग्लहः, अक्षेषुग्लहः ( सू० ) इत्यप् । अक्ष्णोत्यक्षः । दीव्यत्यनेन देवनः । पाश्यते बध्यतेनेन पाशकः, प्राशक इत्येके ॥ ४५ ॥ वामदक्षिणयोः शारीणां परिणयनं परिणायः, परिन्योर्नीणोर्द्यूताभ्रेषयोः ( सू० ) इति घञ् । शृणातीति शारी खेलनी । अष्टौपदान्यस्याष्टापदम् । शारयः फलन्त्यत्र शारिफलं खेलनाधारः, चतुरङ्गफलकादि । आकर्षो नानार्थे । प्राणिभिर्मेषकुक्कुटादिभिर्द्यूतं प्राणिद्यूतम् । संघर्षेणाह्वयन्तेत्र समाह्वयः ॥ ४६ ॥ येत्र संबन्धिशब्दा लक्ष्यबाहुल्यादेकस्मिन्- लिङ्गे- उक्तास्ते तद्गुणयोगादन्यत्र वर्तमाना लिङ्गान्तरेप्युत्प्रेक्ष्याः, यथा कर्मण्या भृतिः, कर्मण्यं वेतनं, हालिप्रिया सुरा, हालिप्रियं मद्यं, अक्षवती सभा, अक्षवद् द्यूतम् । एवं मालाकारी स्त्री, अक्षदेविनी स्त्री । तथानुपदीनं पादत्राणम् ॥ ४७ ॥ इति शूद्रवर्गः । १० । इति श्रीक्षीरस्वाम्युत्प्रेक्षितेमरकोशोद्घाटने भूम्यादिकाण्डो द्वितीयः समाप्तः ।

# तृतीयं काण्डम्।

विशेष्यनिघ्नैः संकीर्णैर्नानार्थैरव्ययैरपि।
लिङ्गादिसंग्रहैर्वर्गाः सामान्ये वर्गसंश्रयाः॥ १॥
स्त्रीदाराद्यैर्यद्विशेष्यं यादृशं प्रस्तुतं पदैः।
गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः॥ २॥
सुकृती पुण्यवान्धन्यो महेच्छस्तु महाशयः।
हृदयालुः स(सु)हृदयो महोत्साहो महोद्यमः॥ ३॥
प्रवीणनिपुणाभिज्ञविज्ञनिष्णातशिक्षिताः।
वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि॥ ४॥
पूज्यः प्रतीक्ष्यः सांशयिकः संशयापन्नमानसः।
दक्षिणी(णे)यो दक्षिणार्हस्तत्र द(दा)क्षिण्य इत्यपि॥ ५॥

---

श्रीगणेशाय नमः। विशेष्यनिघ्नो विशेषणम्। विशेषणादिभिर्हेतुभूतैर्ये पञ्च वर्गास्ते काण्डद्वयोक्त-साधारण्यात्सामान्यकाण्डेऽस्मिंस्तृतीयेवान्तरवर्गान् संश्रयन्ति, यथा नानार्थे कान्तादिवर्गाः, अव्ययवर्गेनेकार्थैकार्थवर्गौ, लिङ्गशेषवर्गे स्त्रीलिङ्गादिवर्गाः। वर्गसंग्रह इत्येके पेठुः, सामान्यकाण्डे ये पञ्च वर्गाः स वर्गसंग्रह इति योजना। आदिशब्दः प्रकारे॥ १॥ स्त्र्यादिभिः पदैर्यादृग्लिङ्गैर्यादृग्वचनैश्च विशेषणैर्यद्विशेष्यं भेद्यं प्रस्तुतं तस्य गुणादिशब्दास्तथा तादृग्लिङ्गास्तादृग्वचनाश्च भेदका विशेषणानि भवन्ति। गुणशब्दा यथा प्रवीणा स्त्री, प्रवीणा दाराः, प्रवीणं कलत्रम्। द्रव्यशब्दा यथा दण्डिनी स्त्री, दण्डिनो दाराः, दण्डि कलत्रम्। क्रियाशब्दा यथा पाचिका स्त्री, पाचका दाराः, पाचकं कलत्रम्। दाराद्यमिति पाठो युक्तः। स्त्रीनराद्यैरित्येके, स्त्रीपुंनपुंसकैरित्यर्थः। क्षेमंकरोऽरिष्टतातिः शिवतातिः शिवंकर इति वक्तव्यम्॥ २॥ धने साधुर्धन्यः। महानाशयोस्य महाशय उदाराभिलाषः। उदीर्ण उद्भटोदारावुदात्तश्च महामनाः। प्रशस्तं हृदयमस्त्यस्य हृदयालुः, हृदयादेरा(ला)लुरन्यतरस्याम् (वा॰)। स एव हि हृदयेन सह वर्तते, अन्ये मांसखण्डे सत्यप्यहृदयाः, यन्ममैव– हृदयं तद्विविङ्क्ते यद्भावमन्यच्चलं पलम्। शतैकीयाः सहृदया गण्यन्ते कथमन्यथा॥ विद्रूपोपि। (महोत्साहः) उद्यमवानित्यर्थः॥ ३॥ प्रकृष्टा वीणास्येति प्रवीणः, मुख्यार्थं परित्यज्य निपुणे रूढः, यदाहुः (**कुमारिलभ॰**)– निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत्। क्रियन्तेद्यतनैः काश्चित्काश्चिन्नैव त्वशक्तित इति। एवं निष्णातकुशलौ। निपुणति निपुणः, शोभनकर्मत्वात्। अभितो जानात्यभिज्ञः। विजानाति विज्ञः, इगुपधज्ञेति कः (सू॰)। निष्णा(स्ना)ति निष्णातः, निनदीभ्यांस्नातेःकौशले (सू॰) इति षत्वम्। शिक्षा संजातास्येति शिक्षितः। विज्ञानं प्रयोजनमस्येति वैज्ञानिकः। कृतं संस्कृतं मुखमस्येति कृतमुखः। प्रशस्तं कृतं कर्मास्येति कृती। कुशान्– लाति कुशलः, ते हि व्युत्पन्नैरादातुं शक्याः। कृतकर्मा कृतकृत्यः कृतार्थश्च॥ ४॥ प्रतीक्षणीयो मुख्यत्वात् (प्रतीक्ष्यः)। (सांशयिकः) संशयमापन्नइति (सू॰) ठक्। (दाक्षिणीय इ॰) दक्षिणामर्हति, कडङ्गरदक्षिणाच्छचेति (सू॰) छयतौ। तत्र दाक्षिणार्हे॥ ५॥ वदति दीयतामिति वदान्यः, वदेरान्यः (उ॰)। वदन्योपि,

स्युर्वदान्यस्थूललक्ष(क्ष्य)दानशौण्डा बहुप्रदे ।
जैवातृकः स्यादायुष्मानन्तर्वाणिस्तु शास्त्रवित् ॥ ६ ॥
परीक्षकः कारणिको वरदस्तु समर्धु(र्ध)कः ।
हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः ॥ ७ ॥
दुर्मना विमना अन्तर्मनाः स्यादुत्क उन्मनाः ।
दक्षिणे सरलोदारौ सुकलो दातृभोक्तरि ॥ ८ ॥
तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः ।
प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः ॥ ९ ॥
गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ ।
इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता ॥ १० ॥
अधिभूर्नायको नेता प्रभुः परिवृढोधिपः ।
अधिकर्द्धिः समृद्धः स्यात्कुटुम्बव्यापृतस्तु यः ॥ ११ ॥
स्यादभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयम् ।
वराङ्गरूपोपेतो यः सिंहसंहननो हि सः ॥ १२ ॥

---

साधो यत् ( तत्रसाधुः ) । ( स्थूललक्षः ) स्थूलं लक्षयत्यालोचयति ददातीति यावत् । दाने शौण्डः शक्त उपचारात्, शुण्डा हि पानमदस्थानं तत्र भवः शौण्डः । जीवति जैवातृकः, जीवेरातृकन्वृद्धिश्च ( उ० ) । ( अन्तर्वाणिः ) अन्तर्वाण्यस्य ॥ ६ ॥ करणं प्रयोजनमस्य कारणिकः, मठादौ दानार्थे ब्राह्मणपरीक्षिता । आक्षपटलिकोपि । करणेनाधिकार(रि)वर्गेण चरतीति वा । समृध्नोति संवर्धयति समर्धुकः । हृष्यति हर्षमाणः, ताच्छील्यवयोवचनशक्तिषुचानश् ( सू० ) । हर्षाद्विकारं याति विकुर्वाणः । प्रकृष्टं मनोस्य प्रमनाः ॥ ७ ॥ अन्तर्लीनं मनोस्यान्तर्मनाः । उद्गतं मनोस्योत्कः, येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितामिति धर्ममात्रेपि, उत्कउन्मनाइति ( सू० ) साधुः । सोत्कण्ठश्च । ( दक्षिण इ० ) दक्षते, सरति, उदियर्ति च । शोभना कलास्य सुकलः, दाता भोक्ता च यः ॥ ८ ॥ तत्परं यंस्यं स तत्परस्तान्निष्ठः । प्रासिनोति स्म प्रासितः, षिञ् बन्धने । आसजति स्मासक्तः । प्रियमर्थं प्रेप्सुः, उच्छब्द उद्योगार्थः सुशब्दः शोभनार्थः, उत्कादिवत्कन् ( शा० ) । प्रत्येकमेति प्रतीतः । प्रथते प्रथितः । ख्यायते ख्यातः । विद्यते प्रतीयते वित्तः, वित्तोभोगप्रत्यययोः ( सू० ) इति साधुः ॥ ९ ॥ कृताः प्रसिद्धा लक्षणरूपा गुणा यस्यासौ कृतलक्षणः । आहतान्युद्घोषितानि लक्षणानि यस्यासावाहतलक्षणः । इभमर्हति- इभ्यः, दण्डादित्वाद्यत् ( सू० ) । आध्यायन्ति तमाढ्यः, कः, पृषोदरादिः ( सू० ) । स्वमस्त्यस्य स्वामी, स्वामिन्नैश्वर्ये ( सू० ) इति साधुः । ईष्टे तच्छील ईश्वरः, स्थेशभासेति ( सू० ) वरच् । पातीति पतिः ॥ १० ॥ अध्युपरि भवत्यधिभूः । नयति नियुङ्क्ते नायकः । प्रभवति प्रभुः, विप्रसंभ्यइति ( सू० ) डुः । परिवृंहति परिवृढः, प्रभौपरिवृढइति ( सू० ) साधुः । ग्रामणीरग्रणीश्च ॥ ११ ॥ कुटुम्बे कलत्रादौ व्यापृतः, तत्पोषणोद्युक्तः, अभितोगारे भवोभ्यागारिकः । उपाधीयत उपाधिः । सिंहस्येव संहननं देहोस्य सिंहसंहननः ॥ १२ ॥

निर्धा( र्वा )र्यः कार्यकर्ता यः संपन्नः( तन्न ) सत्त्वसंपदा ।
अवाचि मूकोऽथ मनोजवसः( वः स ) पितृसंनिभः ॥ १३ ॥
सत्कृत्यालंकृतां कन्यां यो ददाति स कूकुदः ।
लक्ष्मीवाँल्लक्ष्मणः श्रीलः श्रीमान् स्निग्धस्तु वत्सलः ॥ १४ ॥
स्याद्दयालुः कारुणिकः कृपालुः सूरतः समाः ।
स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः ॥ १५ ॥
परतन्त्रः पराधीनः परवान्नाथवानपि ।
अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ ॥ १६ ॥
खलपूः स्याद्बहुकरो दीर्घसूत्रश्चिरक्रियः ।
जाल्मोऽसमीक्ष्यकारी स्यात्कुण्ठो मन्दः क्रियासु यः ॥ १७ ॥
कर्मक्षमोऽलंकर्मीणः क्रियावान्कर्मसूद्यतः ।
स कार्मः कर्मशीलो यः कर्मशूरस्तु कर्मठः ॥ १८ ॥
कर्म( भर )ण्यभुक्कर्मकरः कर्मकारस्तु तत्क्रियः ।
अपस्नातो मृतस्नात आमिषाशी तु शौष्कलः ॥ १९ ॥

---

निर्धार्यः समुदायाद् गुणैः पृथग्व्यपदेश्यः । सत्त्वसंपच्चित्तोत्कर्षः, तया सपंतन्( न्नः ) संपद्यमानः । नास्ति वागस्य– अवाक् । मूयते बध्यते वागस्य मूकः, मूङ् बन्धने । मनो जवतेस्मिन् पितायामिति धावति मनोजवसः, औणादिकोऽसः– चमसादिवत्, मनोजेभिलाषे वसति वा । पितेव सम्यङ् निभाति पितृसंनिभः ॥ १३ ॥ कोकत आदत्ते धर्मं कूकुदः, कूङ् शब्द इत्यस्य वा रूपमाकूतवत्, ब्राह्मे विवाहे दाता, यन्मनुः– आच्छाद्य चार्हयित्वा च श्रुतशीलवते स्वयम् । आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः ॥ लक्ष्मीरस्त्यस्य लक्ष्मणः, पामादित्वात् ( लोमादिपामादीति ) लक्ष्म्याअच्चेतिगः ( वा० ) । श्रियं लाति श्रीलः, सिध्मादित्वाल्लज्वा ( सू० ) । रलयोरेकत्वस्मरणात्– श्लीलः । वत्सोऽस्यास्तीति वत्सलः, वत्सांसाभ्यांकामबले ( सू० ) इति लच् ॥१४॥ ( दयालुः, इ० ) दया कृपा चास्त्यस्य । करुणाप्रयोजनमस्त्यस्य कारुणिकः । सुष्ठु रमते सूरतः, सूरोऽर्क इव तपति वा, डः । स्व आत्मा तन्त्रं मुख्योऽस्य स्वतन्त्रः । अपगतमावरणं नियन्तास्येत्यपावृतः । स्वेन– ईर्ते तच्छीलः स्वैरी, स्वादीरेरिणोः ( वा० ) इति वृद्धिः । स्वश्छन्दोभिप्रायोऽस्य स्वच्छन्दः । निष्क्रान्तोऽवग्रहान्नियन्त्रणातो निरवग्रहः । निर्यन्त्रणो निरङ्कुशो यथाकामी च ॥ १५ ॥ परोध्युपर्यस्य पराधीनः, अषडक्षाशितेति ( सू० ) खः । परो नियन्तास्त्यस्य परवान् । अधि– उपरीनोऽस्याधीनः । निहन्यते निघ्नः, घञर्थेकविधानम् ( वा० ) । आयत्यते नियुज्यते– आयत्तः । गृह्यते गृह्यकः, पदास्वैरिबाह्येति ( सू० ) क्यप् ॥ १६ ॥ खलं पुनाति खलपूः । बहु करोति बहुकरः, दिवाविभेति ( सू० ) टः, अत एव बहुकरी मार्जनी, बहुधान्यार्जक इत्येके । दीर्घे चीरेण सुवति सूत्रयते वा दीर्घसूत्रः । जडति जाल्मः । ( कुण्ठः ) कुठि आलस्ये । मन्दोऽलसः ॥ १७ ॥ अलं कर्मणेऽलंकर्मीणः, पर्यादयोग्लानाद्यर्थेचतुर्थ्येति ( वा० ) समासः, अषडक्षाशितेति ( सू० ) खः । ( क्रियावान् ) नित्ययोगत्र( म )तुप् ( का० ) । ( कार्मः ) कार्मस्ताच्छील्ये ( सू० ) इति साधुः । कर्मणि घटते कर्मठः, कर्मणघटोठच् ( सू० ) ॥ १८ ॥ कर्मणि साधु कर्मण्यं वेतनं भुङ्क्ते कर्मण्यभुक् । कर्म करोति कर्मकरः, कर्मणिभृतौ ( सू० ) इति टः । ( कर्मकारः ) कर्मण्यण् ( सू० ), विना भृतिं कर्मसंपादकः । ( अपस्नातः ) अपेति विरुद्धार्थः । ( मृतस्नातः ) मृतसंस्कारार्थं स्नापितः । शुष्कली मांसोपलक्षणं, तामत्ति शौष्कलः [ शाष्कलः ], शेषे ( सू० ) इत्यण् ॥ १९ ॥ बुभुक्षा संजातास्य ( बुभु-

बुभुक्षितः स्यात्क्षुधितो जिघत्सुरशनायितः ।
परान्नः परपिण्डादो भक्षको घस्मरोऽद्मरः ॥ २० ॥
आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते ।
उभावात्मंभरिः कुक्षिंभरिः स्वोदरपूरके ॥ २१ ॥
सर्वान्नीनस्तु सर्वान्नभोजी गृध्नुस्तु गर्धनः ।
लुब्धोऽभिलाषुकस्तृष्णक्समौ लोलुपलोलुभौ ॥ २२ ॥
सोन्माद( उन्मद )स्तून्मादिष्णुः स्यादविनीतः समुद्धतः ।
मत्ते शौण्डोत्कटक्षीबाः कामुके कमितानुकः ॥ २३ ॥
कम्रः कामयिताभीकः कमनः कामनोऽभिकः ।
विधेयो विनयग्राही वचने स्थित आश्रवः ॥ २४ ॥
वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः ।
धृष्टे धृष्णुर्वि( धृष्णग्वि )यातश्च प्रगल्भः प्रतिभान्विते ॥ २५ ॥

---

क्षितः ) । क्षुध्यति स्म क्षुधितः । अत्तुमिच्छति जिघत्सुः । अशनमिच्छति, सुप आत्मनः क्यच् ( सू० ), अशनायोदन्येति ( सू० ) साधुः, ततः क्ते, इट् । परादन्नमस्य परान्नः । अत्ति तच्छीलोऽद्मरः, सृघस्यदः क्मरच् ( सू० ), निर्देशात्पक्षे घस्लादेशः, घस्लृ अदने वा ॥ २० ॥ आ– ईषद्दीव्यति स्म– आद्यूनः, दिवोऽविजीगीषायां ( सू० ) इति नत्वम् । उदरेण भृतः ( उदरे प्रसितः ) औदरिकः, उदराट्ठगाद्यूने ( सू० ) । आत्मानं बिभर्त्यात्मंभरिः, आत्मोदरयोर्भृञः ( सू० ) इति खिः । उदरंभरिरपि । ( कुक्षिंभरिः ) कुक्षौचेतिवक्तव्यात् ( वा० ) खि( च ) । स्वोदरयोः क्रमादात्मोदरयोः पूरकः ॥ २१ ॥ सर्वाण्यन्नानि भक्षयति सर्वान्नीनः, अनुपदसर्वान्नायानयामिति ( सू० ) खः । ( गृध्नुः ) त्रसिगृधीति ( सू० ) क्नुः । ( गर्धनः ) जुचङ्क्रम्येति ( सू० ) युच् । अभिलषति तच्छीलोऽभिलाषुकः, लषपतपदेत्युकञ् ( सू० ) । तृष्यति तच्छीलस्तृष्णक्, स्वपितृषोर्नजिङ् ( सू० ), तृष्णगजान्तः, लुब्धे– उपचारः । तृषितस्तर्षितः पिपासितश्च । भृशं लुम्पति भृशं लुभ्यति (लोलुप इ० ), यङ्लुगन्तादच् । केचित्पूर्वैः संबध्नन्ति । लालसो लम्पटश्च ॥ २२ ॥ उन्माद्यति तच्छील उन्मादिष्णुः– भूताद्याविष्टः, अलंकृञ्निराकृञिति ( सू० ) इष्णुच् । ( अविनीतः ) निर्मर्यादोऽपि । मद्येन माद्यति स्म मत्तः । शुण्डायां भवः शौण्डः शुण्डास्त्यस्य वा, अण्प्रकरणे ज्योत्स्नादिभ्यउपसंख्यानात् ( वा० ) । उत्क्रान्तः कटीछादनादुत्कटः, उद्रिक्तो वा, संप्रोदश्चकटच् ( सू० ) । क्षीवते स्म क्षीबः, क्षीबृ मदे, अनुपसर्गात्फुल्लक्षीबेति ( सू० ) साधुः । कामयते तच्छीलः ( कामुक इ० ), लषपतपदेत्युकञ् ( सू० ), तृन् ( सू० ) ॥ २३ ॥ ( कम्रः ) नमिकम्पीति ( सू० ) रः । ( कमनः ) अनुदात्तेतश्चेति ( सू० ) युच्, औणादिकस्त्वपरः । कामनः कमनोभिक इति तु युक्तः पाठः, आयादयआर्धधातुकेवा ( सू० ) इति पक्षे कमेर्णिङ् । अनुकाभिकाभीकःकमितेति ( सू० ) अन्वभिभ्यां के ( कनि ) साधवः । [ छेको विदग्धे व्यसनिपञ्चभद्रावुपप्लुते । वेश्यापतिर्भुजंगः स्यात्षिड्गः पल्लविको विटः ॥ ] विधातव्यो विधेयो यथेष्टं विनियोज्यः । विनयः शास्त्रजः संस्कार इन्द्रियजयो वा । आशृणोति वाक्यमाश्रवः॥ २४ ॥ ( वश्यः ) वशंगतः ( सू० ) इति यत् । प्रणेतव्य आयत्तः ( प्रणेयः ) । प्रणेयान्ताः षडेकार्था इत्येके । निभृतोऽचपलः । प्रश्रयाति प्रश्रितः । धृष्णोति स्म धृष्टः, धृषिशसीवैयात्ये ( सू० ) इतीडभावः । धृष्णोति तच्छीलो धृष्णुः, त्रसिगृधीति ( सू० ) क्नुः । धृषेश्चेतिवक्तव्यात् ( वा० ) नजिङि धृष्णक् । विरुद्धं याति स्म वियातः । प्रगल्भते प्रगल्भः । प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता ( रुद्रः ), प्रतिभाऽस्त्यस्यामिति ( प्रतिभा ) । प्रत्युत्पन्नमतिस्तत्कालधीश्च ॥ २५ ॥ शालां प्रवेष्टुमर्हति शालीनः, शालीन-

स्याददृष्टे तु शालीनो विलक्षो विस्मयान्विते ।
अधीरे कातरस्त्रस्नौ भीरुभीरुकभीलुकाः ॥ २६ ॥
आशंसुराशंसितरि गृहयालुर्ग्रहीतरि ।
श्रद्धालुः श्रद्धया युक्ते पतयालुस्तु पातुके ॥ २७ ॥
लज्जाशीलेऽपत्रपिष्णुर्वन्दारुरभिवादके ।
शरारुर्घातुको हिंस्रः स्याद्वर्धिष्णुस्तु वर्धनः ॥ २८ ॥
उत्पतिष्णुस्तूत्पतितालंकरिष्णुस्तु मण्डनः ।
भूष्णुर्भविष्णुर्भविता वर्तिष्णुर्वर्तनः समौ ॥ २९ ॥
निराकरिष्णुः क्षिप्नुः स्यात्सान्द्रस्निग्धस्तु मेदुरः ।
ज्ञाता तु विदुरो विन्दुर्विकासी तु विकस्वरः ॥ ३० ॥
विसृत्वरो विसृमरः प्रसारी च विसारिणि ।
सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी ॥ ३१ ॥
क्रोधनोऽमर्षणः कोपी चण्डस्त्वत्यन्तकोपनः ।
जागरूको जागरिता घूर्णितः प्रचलायितः ॥ ३२ ॥

---

कौपीनइति ( सू० ) साधुः । विरुद्धं लक्षयते विरुद्धं लक्षमस्य वा विलक्षः, निष्प्रतिपत्तिरित्यर्थः । ईषत्तरति कातरः, कतरस्यायं वा, अत्र कातरा स्त्रीति न स्यात् । इतो निद्रालुन्तासनाच्छील्ये । त्रस्यति त्रस्नुः, त्रसिगृधीति ( सू० ) क्नुः । ( भीरुः, इ० ) बिभेति तच्छीलः, भियःक्रुक्लुकनौ ( सू० ), क्रुकन्नपि वक्तव्यश्च ( वा० ) । दरितो भीतस्त्रस्तश्चकितश्च ॥ २६ ॥ ( आशंसुः ) सनाशंसभिक्ष उः ( सू० ) । गृहयते गृहयालुः, स्पृहिगृहीति ( सू० ) आलुच् । श्रद्धधाति तच्छीलः श्रद्धालुः । आद्यः पतिश्चौरादिकोऽदन्तः, पतयति पतयालुः, स्पृहिगृहीति ( सू० ) आलुच् । पतति तच्छीलः पातुकः, लषपतपदेत्युकञ् ( सू० ) ॥ २७ ॥ ( अपत्रपिष्णुः ) अपत्रपते तच्छीलः, भ्राज्यलंकृञिति वक्तव्यात् ( वा० ) इष्णुच् । वन्दते तच्छीलः ( वन्दारुः ), शृवन्द्योरारुः ( सू० ) । ( शरारुः, इ० ) शृणाति हन्ति हिनस्ति च तच्छीलः, शृवन्द्योरारुः ( सू० ), लषपतपदेत्युकञ् ( सू० ), नमिकम्पीति ( सू० ) रश्च । ( वर्धिष्णुः, इ० ) अलंकृञिति ( सू० ) इष्णुच्, अनुदात्तेतश्चेति ( सू० ) युच् । भवति तच्छीलः ( भूष्णुः ), ग्लाजिस्थश्च ग्स्नुः । ( भविष्णुः, इ० ) भुवश्चेति ( सू० ) इष्णुच्, तृन् ( सू० ) । ( वर्तिष्णुः, इ० ) इष्णुच्, युच ॥ २९ ॥ क्षिपति तच्छीलः क्षिप्नुः, त्रसिगृधीति ( सू० ) क्नुः । [ सान्द्रशब्दोऽत्यन्तार्थो भवति ] सान्द्रः पीनः स्निग्धश्च ( सान्द्रस्निग्धः ) । मेद्यति मेदुरः, भञ्जभासमिदो घुरच् ( सू० ) । वेत्ति तच्छीलो विदुरः, विदिभिदिच्छिदेः कुरच् ( सू० ) । वेत्ति विन्दुः, विन्दुरिच्छुः ( सू० ) इति साधुः । ( विकासी ) विकसति तच्छीलः, वौकस( ष )लसेति घिनुण् ( सू० ) । ( विकस्वरः ) स्थेशभासपिसकसो वरच् ( सू० ) ॥ ३० ॥ ( विसृत्वरः ) विसरति तच्छीलः, इण्नश्जीति ( सू० ) क्वरप् । ( विसृमरः ) सृघस्यदः क्मरच् ( सू० ) । ( प्रसारी ) प्रेलपसृद्रुमथेति ( सू० ) घिनुण् । ( सहिष्णुः, इ० ) सहेरिष्णुच्, युच । ( क्षन्ता ) क्षमेस्तृन्, ऊदित्वाद्वेट् । ( तितिक्षुः ) तिजेःक्षमायाम् ( वा० ), गुप्तिजीति ( सू० ) सन्, सनाशंसेति ( सू० ) उः । ( क्षमी ) शमित्यष्टाभ्यो घिनुण् ( सू० ) ॥ ३१ ॥ ( क्रोधनः ) क्रुधमण्डार्थेभ्यश्चेति ( सू० ) युच् । कोपनो रोषणश्च । ( चण्डः ) चडि कोपे । ( जागरूकः ) जागरूकश्च ( सू० ) इति ऊकञ्, ( जागरिता ) चकारात्तृन् । प्रचल इवाचरन् प्रचलायितः, य उपविष्टो निद्रया घूर्णितः

स्वप्नक् शयालुर्निद्रालुर्निद्राणशयितौ समौ ।
पराङ्मुखः पराचीनः स्यादवाङप्यधोमुखः ॥ ३३ ॥
देवानञ्चति देवद्र्यङ् विष्वद्र्यङ् विष्वगञ्चति ।
यः सहाञ्चति सध्र्यङ् स स तिर्यङ् यस्तिरोञ्चति ॥ ३४ ॥
वदो वदावदो वक्ता वागीशो वाक्पतिः समौ ।
वाचोयुक्तिपटुर्वाग्ग्मी वावदूकोतिवक्तरि ॥ ३५ ॥
स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् ।
दुर्मुखे मुखराबद्धमुखौ शक्तः( क्तः ) प्रियंवदे ॥ ३६ ॥
लोहलः स्यादस्फुटवाग्गर्ह्यवादी तु कद्वदः ।
समौ कुवादकुचरौ स्यादसौम्यस्वरोऽस्वरः ॥ ३७ ॥
रवणः शब्दनो नान्दीवादी नान्दीकरः समौ ।
जडोज्ञेऽनेडमूकस्तु( जडोज्ञ ए )डमूकस्तु वक्तुं श्रोतुमशिक्षिते ॥ ३८ ॥
तूष्णींशीलस्तु तूष्णीको नग्नोऽवासा दिगम्बरः ।
निष्कासितोवकृष्टः स्यादपध्वस्तस्तु धिक्कृतः ॥ ३९ ॥

---

॥ ३२ ॥ ( स्वप्नक् ) स्वपितृषोर्नजिङ् ( सू० ) । ( शयालुः ) शीङश्चेतिवक्तव्यादालुच् ( शीङो॰ वाच्यः ) । ( निद्रालुः ) निद्राति तच्छीलः, निद्रातन्द्रेस्यालुच् ( स्पृहिगृहिपतिदयीति ) । निद्राति स्म निद्राणः, संयोगादेरातोधातो ( सू० ) इति निष्ठा नत्वम् । पराञ्चतीति पराङ् ( पराचीनः ), विभाषाञ्चेरादिक्स्त्रियाम् ( सू० ) इति स्वार्थे खः । संमुखीनस्त्वभिमुखः । अवाञ्चत्यवाङ् , अवाचीनोपि ॥ ३३ ॥ ( देवद्र्यङ्, इ० ) विष्वग्देवयोश्चटेरद्र्यञ्चतावप्रत्यये ( सू० ), विष्वक्सर्वतोर्थेव्ययम् । ( सध्र्यङ् ) सहस्य सध्रिः ( सू० ) इत्यञ्चतौ परे सध्र्यादेशः । ( तिर्यङ् ) तिरसस्तिर्यलोपे ( सू० ) ॥ ३४ ॥ वदतीति ( वदः ) वदावदः, चरिचलिपतिवदिभ्योद्वित्वमभ्यासस्याग्वेत्वा ( वा० ) । वाचो युक्तौ पटुः, वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु ( वा० ) इति षष्ठ्या अलुक् । प्रशस्ता वागस्त्यस्य वाग्ग्मी, वाचोग्मिनिः (सू०) । वावद्यते तच्छीलो वावदूकः, यजजप- (सू०) इत्यत्र वदेरनु[ प ]देशः कार्य इति पदकारवाक्यादूकः । वक्तरीति, तृन् ( सू० )। प्रवाक् प्रगल्भः सुमुखश्च॥३५॥ ( जल्पाकः ) जल्पभिक्षेति ( सू० ) ताच्छील्ये षाकन् । ( वाचाल इ० ) आलजाटचौबहुभाषिणि ( सू० )। गर्ह्यजापी जजपूकः । मुखेन वागलक्ष्यते, निन्दितं मुखमस्त्यस्य मुखरः, ( रप्रकरणे ) खमुखकुञ्जेभ्योरोवक्तव्यः ( वा० ) । अबद्धमनियन्त्रितं मुखमस्त्यस्याबद्धमुखः । शक्नोति वक्तुं शक्तः । ( प्रियंवदः ) प्रियवशेवदःखच् ( सू० ) ॥ ३६ ॥ ( लोहलः ) लुह कत्थनादौ । कुत्सितं वदतीति कद्वदः, रथवदयोश्च ( सू० ) इति कोः कत् । अनुत्तरो यद्वदश्च । कुत्सितो वादोस्य कुवादः । कुत्सितं चरति कुचरः, पचाद्यच् ( नन्दिग्रहीति ) । विपरीतः स्वरोस्य- अस्वरः, नञ् तद्विरुद्धनर्थवत् ॥ ३७ ॥ ( रवणः, इ० ) रौति शब्दायतीति, चलनशब्दार्थात् ( सू० ) इति युच् । नान्दीं मङ्गलपाठं करोति नान्दीकरः, दिवाविभेति ( सू० ) टः । ( जडः ) जल धान्ये ( चान्द्रोधातुः ), डलयोरेकत्वम् । अज्ञोऽतीक्ष्णधीः । मातृमुखो मातृशासितश्च । तीक्ष्णधीस्तु कुशाग्रीयः । न- एडोपि ( अ )वर्करोपि मूकः- एडमूकसदृशो वा- अनेडमूकः, नञिवयुक्तमन्यसदृशाधिकरणेतथाह्यर्थः ( भाष्यव० ), एडो हि बधिरः ॥ ३८ ॥ ( तूष्णीकः ) तूष्णीमः शीलेकोमलोपश्चवक्तव्यः ( वा० ) । ओणजी व्रीडे, नजते स्म नग्नः । अविद्यमानं वासोस्य- अवासाः । अवकृष्यते दूरीक्रियते स्मावकृष्टः, निःसारित इत्यर्थः ॥ ३९ ॥ आत्तो गृहीतो गन्धोभिमानोस्यात्तगन्धः ।

आत्तगन्धो( र्वो )भिभूतः स्याद्दापितः साधितः समौ ।
प्रत्यादिष्टो निरस्तः स्यात्प्रत्याख्यातो निराकृतः ॥ ४० ॥
निः( नि )कृतः स्याद्विप्रकृतो विप्रलब्धस्तु वञ्चितः ।
मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः ॥ ४१ ॥
अधिक्षिप्तः प्रतिक्षिप्तो बद्धे कीलितसंयतौ ।
आपन्न आपत्प्राप्तः स्यात्कान्दिशीको भयद्रुतः ॥ ४२ ॥
आक्षारितः क्षारितोभिशस्ते संकसुकोस्थिरे ।
व्यसनार्तोपरक्तौ द्वौ विहस्तव्याकुलौ समौ ॥ ४३ ॥
विक्लवो विह्वलः स्यात्तु विवशोरिष्टदुष्टधीः ।
कश्यः कशार्हे सन्नद्धे त्वाततायी वधोद्यते ॥ ४४ ॥
द्वेष्ये त्वक्षिगतो वध्यः शीर्षच्छेद्य इमौ समौ ।
विष्यो विषेण यो वध्यो मुसल्यो मुसलेन यः ॥ ४५ ॥
शिश्विदानोकृष्णकर्मा चपलश्चिकुरः समौ ।
दोषैकदृक् पुरोभागी निकृतस्त्वनृजुः शठः ॥ ४६ ॥

---

चत्वार एकार्था इत्येके । ( समौ ) दण्डितार्थे । प्रत्यादिश्यते स्म प्रत्यादिष्टः, अनङ्गीकृत इत्यर्थः । अपविद्धोपि ॥ ४० ॥ निःक्रियते खलीक्रियते स्म निःकृतः । मनसि हतो मनोहतः । प्रतिबन्धः प्रवृत्तिनिवारणार्थः ॥४१॥ प्रतिक्षिप्यते न्यक्क्रियते स्म प्रतिक्षिप्तः । ( कीलितः ) कील बन्धने । प्राप्त आपदं आपत्प्राप्तः, प्राप्तापन्नेचद्वितीययेति ( सू० ) समासः । ( कांदिशीकः ) कां दिशं व्रजामीति व्याकुलः, पृषोदरादिः ( सू० ) । भयाद् द्रुतः पलायितः ॥ ४२ ॥ आक्षार्यते स्वरूपाच्चाल्यते– आक्षारितः, अलीकोत्पन्नपातकव्यपदेशः । अभिशस्तोभिदूषितः, मैथुनं प्रतीत्येके । ( संकसुकः ) समिकसउकन् ( उ० ), आनैश्चित इत्येके । समावित्येव । व्यस्यति श्रेयोमार्गाद्व्यसनं तेन ऋतो व्यसनार्तः, ऋतेचतृतीयासमासे ( सू० ) इति वृद्धिः । उपरज्यते स्मोपरक्तः । विगतो हस्तो यस्य स विहस्तः, किंकर्तव्यतामूढत्वात् ॥ ४३ ॥ विक्लवते कातरीभवति विक्लवः, क्लविधातुगणापरिसमाप्तेर्लौकिकः । विरुद्धं ह्वलति विह्वलः । विरुद्धं वष्टि कामयते विवशः । अरिष्टेन मरणचिह्नेन श्वासादिना दुष्टा धीर्यस्य । कशा चर्मयष्टिस्तद्धातोप्युपचारात्, तामर्हति कश्यः–अश्वादिः, दण्डादित्वाद्यः ( सू० ) । सन्नद्धः सन् यो वधार्थमुद्यतः स आततः सोद्योगः सन्नेति वधार्थं धावति अवश्यं, आर्तं पलायमानं तायते वा– आततायी । वध उपलक्षणं यत्स्मृतिः– अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते त्वाततायिनः ॥ ४४ ॥ अक्षिगतो यथा किंशारुकादिः खेदकृत् । वधं शीर्षच्छेदं चार्हति । ( विष्यः ) नौवयोधर्मेति ( सू० ) यत् । ( मुसल्यः ) मुसलेन वध्य इत्यर्थः ॥४५॥ ( शिश्विदानः ) श्विदि श्वैत्ये, लिटःकानज्वा (सू०) । अकृष्णं निष्पापत्वाच्छुक्लं कर्म स्याकृष्णकर्मा । चप्यते चपलः. चप सान्त्वने । चिनोति चिकुरः, चकेर्वा रूपं, लक्ष्यं च– तां वीक्ष्य लीलाचिकुरामनङ्गः स्वचापसौन्दर्यमदं मुमोच ( कु० सं० ) । चलाचले स्यात्तरलश्चापलश्चञ्चलश्चलः । दोष एकस्मिन्नेव दृग्ज्ञानमस्य, यत्कात्यः– दोषैकग्राहिहृदयः पुरोभागीति कथ्यते । पुरोग्रे भजते पूर्वं[ सूर्प ]वत्पुरोभागी । निकृणोति हिनस्ति स्म निकृतः । ( शठः ) शठ कैतवे ॥ ४६ ॥ कर्णे जपति सूचयति कर्णेजपः, स्तम्बकर्णयोरमि

कर्णेजपः सूचकः स्यात्पिशुनो दुर्जनः खलः।
नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वञ्चकः॥ ४७॥
अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः।
कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः॥ ४८॥
निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोपि सः।
वनीयको याचनको मार्गणो याचकार्थिनौ॥ ४९॥
अहंकारवानहंयुः शुभंयुस्तु शुभान्वितः।
दिव्योपपादुका देवा नृगवाद्या जरायुजाः॥ ५०॥
स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोण्डजाः।
उद्भिदस्तरुगुल्माद्या उद्भिदुद्भिज्जमुद्भिदम्॥ ५१॥
सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्।
कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम्॥ ५२॥

---

जपोः (सू०) इत्यच्। पेशयत्येकदेशेन सूचयति पिशुनः, पिश अवयवे, अपिश्यति खण्डयतीति श्रीभोजः। दुष्टो जनः, दुष्टं जनयति वा दुर्जनः। खं शून्यं लाति खलः, खलति चलति वा। नॄञ्शंसति नृशंसः। हन्ति तच्छीलो घातुकः, लषपतपदेति (सू०) उकञ्। क्रुङ् गतिकौटिल्ये (अस्मात्) क्रूरः, कृणाति वा। पिबति धर्मं पापः, पापं वास्त्यस्य। धूर्वते (धुर्वति स्म) धूर्तः॥४७॥ मुह्यति मूढः। यथैव जातस्तथैव स्थितोऽसंस्कृतत्वाद्यथाजातः। मुह्यति मूर्खः, मुहेःखोमूर्च (उ०)। विधाया भोजनस्यापत्यमिव वैधेयः, विधेयात्स्वार्थेऽण् वा। वाल्यते वालिशः, वाडृ आप्लाव्ये, बडिशाच्छेपेऽण् वा। मातृशासितश्च। यद्भविष्यो दैवपरः। कुत्सितोर्यः स्वामी कदर्यः। कल्पते कृपणः। क्षुद्यतेल्पत्वात्क्षुद्रः। किंचित्पचति किंपचानः, औणादिक आनच्। मितं पचति मितंपचः, मितनखेच (सू०) इति पचः खच्। कीनाशोपि॥ ४८॥ दुष्टा विधा प्रकारो भोजनं वास्य दुर्विधः। दीयते दीनः, दीङ् क्षये, स्वादयओदितः (ग०)। दुःस्थः कीकटश्च। (वनीयकः) वनु याचने। याचते याचनः, युच् कन्। मार्गति मार्गणः। अर्थयते तच्छीलोऽर्थी, अर्थाच्चासनिहितइति (सू०) इनिर्वा। तर्कु[र्क]कश्च॥ ४९॥ अहमिति विभक्तिप्रतिरूपको निपातः, अहमस्त्यस्य– अहंयुः, अहंशुभमोर्युस् (सू०), निपातनान्मान्तत्वम्। दिवि भवा दिव्या उपपा[प]द्यन्ते दिव्योपपादुकाः, द्युप्रागपागिति (सू०) यत्, लषपतपदेत्युकञ् (सू०)। अदृष्टसंहतेभ्यः परमाणुभ्यो जायन्ते सद्य इत्यर्थः। अयोनिजत्वार्थं पुनरिहोक्ताः। नरो गोमहिष्याद्याश्च जरायुजाः, जरायुर्गर्भशय्या॥ ५०॥ आद्यशब्दान्मशकयूकाद्याः। आदिशब्दः प्रकारे व्यवस्थायां वा पिपीलिकाद्यर्थः। आद्यशब्दात्तृणाद्याः। उद्भिनत्ति भुवमुद्भित्– उद्भिदं च, क्विप्, कश्च। उद्भेदनमुद्भित्ततो जायत इत्युद्भिज्जं, डः। इत्थमयोनिजजरायुजस्वेदजाण्डजोद्भिज्जत्वेन पञ्चधा भूतसर्गः। एषामेवा(वा)न्तरभेदाच्चतुर्दशविधत्वं, यदाहुः– अष्टविकल्पो दैवास्तिर्यग्योनिश्च पञ्चधा भवति। मानुष्य एकविधः स समासाद् भौतिकः सर्गः॥ पैशाचो राक्षसो याक्षो गान्धर्वः शाक्र एव च। सौम्यश्च प्राजापत्यश्च ब्राह्मोष्टौ देवयोनयः॥ ५१॥ सुन्दरं सुष्ठु नन्दयतीति नैरुक्ताः। रोचते रुचिरं, रुचिं राति वा। चरति मनोस्मिन्श्चारु। सुष्ठु समं शोभना समाप्नोति वा सुषमं, लक्षणया चारु। साध्नोति साधु। शोभते शोभनं, युच्। काम्यते कान्तम्। रोचते रुच्यं, राजसूयसूर्यमृषोद्यरुच्येति (सू०) कर्तरि साधुः। जानातीति ज्ञं, इगुपधज्ञेति (सू०) कः, मन एव ज्ञं यत्र तन्मनोज्ञम्। सर्वैर्मन्यते मञ्जु, धर्मि। (मञ्जुलं) धर्ममात्रवृत्त्या तु मत्वर्थीयो लः श्यामलपिङ्गलादिवत्। हारि वल्गु मनोहारि च॥ ५२॥ आसिच्यत

तद्दा( द )सेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् ।
अभीष्टेभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ॥ ५३ ॥
निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः ।
कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः ॥ ५४ ॥
मलीमसं तु मलिनं कच्चरं मलदूषितम् ।
पूतं पवित्रं मेध्यं च वीध्र तु विमलार्थ( त्म )कम् ॥ ५५ ॥
निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम् ।
असारं फल्गु शून्ये तु वाशिकं तुच्छरिक्तके ॥ ५६ ॥
क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः ।
मुख्यवर्यवरेण्याश्च प्रवर्हानवरार्ध्यवत् ॥ ५७ ॥
परार्ध्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम् ।
श्रेयाञ्श्रेष्ठः पुष्कलः स्यात्सत्तमश्चातिशोभने ॥ ५८ ॥
स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः ।
सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥ ५९ ॥

---

आप्याय्यते दृगनेन– आसेचनकं, यस्य दर्शनाद् दृग्न तृप्यति । आभिमुख्येनेष्यतेभीष्टम् । अभ्याप्तुमिष्टमभीप्सितम् । हृदयस्य प्रियं हृद्यं, हृदयस्यप्रियइति ( सू० ) यत्, हृदयस्यहृल्लेखेति ( सू० ) हृत् । दयते चित्तमादत्ते दयितम् । ( वल्लभं ) वल्लति सौत्रः प्रीत्यर्थः । प्रीणाति प्रियं, कः ॥ ५३ ॥ निकृष्यते निकृष्टः । एवं प्रतिकृष्टः । अर्वत्यर्वा । रिफति हिनस्ति रेफः । यापिता गुणा अस्मायाप्यः, जपादित्वाद्वत्वे (ग०) याव्योपि । अवोभवोवमः । अधोभवोधमः, अवोधसोर्लोपश्च (सू०) इति मः सलोपश्च । कुत्सितं पूयते कुपूयः । नोद्यतेवद्यः, अवद्यपण्यवर्यागर्ह्येति ( सू० ) साधुः । खेटति त्रस्यतीति खेटः, खिट उत्त्रासने । अणति रटतीत्यणकः, अन् कुत्सायां कन् ( कुत्सिते ) । कट्वरोपि ॥ ५४ ॥ ( मलिनं, मलीमसं ) मलोस्त्यस्येति, ज्योत्स्नातमिस्रेति ( सू० ) साधुः । कुत्सितं चरति कच्चरम् । म्लानं कल्मषं च । पुनाति पूतम् । पूयतेनेनेति पवित्रम् । मेधनीयं मेध्यं, मेधायां साधु वा । विशेषेणेन्द्धे वीध्रं, रक् ॥५५॥ ( निर्णिक्तं ) णिजिर् शौचे । ( मृष्टं ) मृजू( ष् ) शुद्धौ । निष्क्रान्तं शोध्यान्निःशोध्यम् । अविद्यमानोवस्करो वर्चस्कोस्यानवस्करम् । फलति विशीर्यते फल्गु, ञिफला विशरणे । शुने हितं शून्यं शुन्यं च, उगवादिभ्योयत् ( सू० ) इत्यत्र शुनःसंप्रसारणंवाचदीर्घत्वम् ( ग० ) । उश्यते काम्यतेनावृतत्वाद्वाशिकम् । तुद्यते स्म तुच्छम् । रिच्यते रिक्तं, रिच वियोजने ॥ ५६ ॥ प्रधीयते प्रधानम् । प्रकृष्टं मुखमस्य प्रमुखः । प्रकृष्टो वेकः पृथक्त्वमस्य प्रवेकः । नास्त्युत्तमोस्मादनुत्तमः । अतिशयेनोद्गत उत्तमः । मुखमिव मुख्यः, शाखादिभ्योयः ( सू० ) । वरणीयो वर्यः । व्रियते वरेण्यः, वृञएण्यः ( उ० ) । प्रकृष्टो वर्हः परिच्छदोस्य ( प्रवर्हः ), वृह वृद्धौ वर्ह प्राधान्ये वा, प्रवृहत्युद्यच्छते वा प्रवर्हः, वृह उद्यमे । अनवरार्धे मुख्ये भागे भवोऽनवरार्ध्यः ॥५७॥ परार्धे भवः परार्ध्यः, परावराधमोत्तमपूर्वाच्चेति ( सू० ) यत् । अगति न गच्छति वा–अग्रं [ म्रः ] । प्रकृष्टमग्रं हरति प्राग्रहरः । प्राग्रे भवः प्राग्र्यः । ( अग्र्यः, इ० ) अग्राद्यत् ( सू० ), घच्छौच ( सू० ) । अग्रणीर्ग्रामणीः शालीवरश्च । ( श्रेयान्, इ० ) अतिशयेन प्रशस्यः, इष्ठन्नीयसुनौ, प्रशस्यस्यश्रः ( सू० ) । पुष्यति पुष्कलः । अतिशयेन सन् सत्तमः ॥ ५८ ॥ पुरुषो व्याघ्र इव शूरः पुरुषव्याघ्रः, गोनागः । आद्यशब्दान्मुखचन्द्रपादपद्माद्याः, उपमितंव्याघ्रादिभिः ( सू० ) इति समासः । श्रेष्ठस्यार्थो गोचरो विषय एषाम् ॥ ५९ ॥ उपसृज्यते नियुज्यत उपसर्जनं, आविष्टलिङ्गत्वा-

अप्राग्र्यं द्वयहीने द्वे अप्रधानोपसर्जने ।
विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् ॥ ६० ॥
वड्रोरुविपुलं पीनपीव्नी तु स्थूलपीवरे ।
स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु ॥ ६१ ॥
स्त्रियां मात्रात्रुटी पुंसि लवलेशकणाणवः ।
अत्यल्पेऽल्पिष्ठमल्पीयः कनीयोऽणीय इत्यपि ॥ ६२ ॥
प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ।
पुरुहु( हं ) पुरु भूयिष्ठं स्फिरं भूयश्च भूरि च ॥ ६३ ॥
परःशताद्यास्ते येषां परा संख्या शतादिकात् ॥ ६४ ॥
गणनीये तु गणेयं संख्याते गणितमथ समं सर्वम् ।
विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम् ॥ ६५ ॥
समग्रसकलाखण्डपूर्णादि स्यादनूनके ।
घनं निरन्तरं सान्द्रं पेलवं विरलं तनु ॥ ६६ ॥

---

क्लीबे, यथा— उपसर्जनं भार्या । अप्राग्र्यस्तु वाच्यलिङ्गः । उपाग्रं च । विशी( स्ती )र्यते विशङ्कटः, वेःशालच्-शङ्कटचौ ( सू० ) । प्रथते पृथुः । गुणमात्रवृत्तेर्लः ( पृथुलः ) । बृंहते ( बर्हति ) बृहत् । महति महत्, वर्तमानेपृषद्बृहन्महदिति (उ०) निपात्यते ॥ ६० ॥ वलते वड्रम् । अवते— उरु, उङ् शब्दे । विपोलति विपुलं, पुल महत्वे, कः । विकटं च । प्यायते पीनः, क्तः, प्यायःपी ( सू० ), ओदितश्च ( सू० ) इति निष्ठा नत्वम् । ( पीवन्, पीवरं ) कनिप्क्वरपच् । ( स्थूलं ) स्थूल परिबृंहणे । घनो बहलश्च । स्तौति स्तोकम् । अल्यते— अल्पम् । क्षुयते क्षुद्रः । सुष्ठु— उक्ष्यत आप्याय्यते सूक्ष्मम् । दभ्यते दभ्रम् । ( कृशं ) कृश तनूकरणे । तन्यते तनु ॥ ६१ ॥ मीयतेऽल्पत्वान्मात्रा । त्रुटति त्रुटिः । लूयते लवः । लिश अल्पीभावे, लिश्यते लेशः । कणति निमीलति कणः । अणत्यणुः । अतिशयेनाल्पं ( अल्पीय इ० ), इष्ठन्नीयसुनौ । ( कनीयः ) युवाल्पयोःकनन्यतरस्याम् ( सू० ) । अतिशयेनाणु— अणीयः, तुरिष्ठेमेयस्सु ( सू० ), टेः ( सू० ) इति टेर्लोपः ॥ ६२ ॥ प्रभवति प्रभूतम् । प्रचीयते प्रचोर्यते वा प्रचुरम् । प्राज्यते प्राज्यं, प्रकर्षेणाजी( वी )यते वा । न दभ्रमदभ्रम् । बंहते बहु । ( बहुलं ) प्राण्यन्मत्वर्थीयो लः । पूर्वते पुरु । पुर्विति हूयते पुरुहु । अतिशयेन बहु भूयिष्ठं, बहोर्लोपोभूचबहोः ( सू० ), इष्ठस्ययिट्च ( सू० ) इति भूरादेशो यिडागमश्च । स्फायते स्फिरम् । भवति भूरि ॥ ६३ ॥ शतात्परं परःशतं ( परःशता अपि ), यत्— ब्रह्मर्षयो ब्रह्महिताय तप्त्वा परःसहस्राः शरदस्तपांसि ( उ० रा० ), पारस्करादित्वात्सुट् । श्रीभोजस्तु परःशब्दं निपातं मन्यते, यथा परोवरः, परोक्षम् ॥ ६४ ॥ ( गणेयं ) उणादौ गणेरेयः । ( गणितं ) कर्मणि क्तः । समति समं सर्वार्थे सर्वनाम, यथा— सूर्यः समेषां समः । सर्वति सरति वा सर्वम् । वेवेष्टि विश्वम् । नास्ति शेषमस्याशेषम् । कृती वेष्टने, कृत्यते व्याप्यतेनेन कृत्स्नम् । समस्यते— एकीक्रियते समस्तम् । निवृत्तं खिलाच्छून्यान्निखिलम् । नास्ति खिलमस्याखिलम् । निष्क्रान्तं शेषान्निःशेषम् ॥ ६५ ॥ संगतमग्रमस्य समग्रं, समं ग्रसते वा । सह कलाभिर्भागैर्वर्तते सकलम् । न खण्डं भिन्नमखण्डम् । पिपर्ति पूरीति वा पूर्णम् । पूर्णमित्येके । आदिशब्दादभिन्नादि । नास्त्यूनमस्यानूनम् । ( घनं ) मूर्तौघनः ( सू० ) इति साधुः । निर्गतमन्तरं व्यवधानमस्य निरन्तरम् । सह्यान्यते बध्यते सान्द्रम् । निबिडं निविरीशं( सं ) गाढं [ निरन्तरे ] च । पेल्यते क्षिप्यते पेलवम् । विरात्यन्तरं विरलम् । तन्यते तनु । शिथिलं श्लथं च ॥ ६६ ॥ संभूता आपोऽत्रेत्युपचारात्समीपं, द्व्यन्तरुप-

समीपे निकटासन्नसंनिकृष्टसनीडवत् ।
सदेशाभ्यास( श )सविधसमर्यादसवेशवत् ॥ ६७ ॥
उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् ।
संसक्ते त्वव्यवहितमपदान्तरमित्यपि ॥ ६८ ॥
नेदिष्ठमन्तिकतमं स्याद् दूरं विप्रकृष्टकम् ।
दवीयश्च दविष्ठं च सुदूरे दीर्घमायतम् ॥ ६९ ॥
वर्तुलं निस्तलं वृत्तं बन्धुरं तून्नतानतम् ।
उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ वामने ॥ ७० ॥
न्यङ्नीचखर्वह्रस्वाः स्युरवाग्रेऽवनतानतम् ।
अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् ॥ ७१ ॥
आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ।
ऋजावजिह्मप्रगुणौ व्यस्ते त्वप्रगुणाकुलौ ॥ ७२ ॥
शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः ।
स्थास्नुः स्थिरतरः स्थेयानेकरूपतया तु यः ॥ ७३ ॥

---

सर्गेभ्योपईत् ( सू० )। निबध्नाति निकटं, संप्रोदश्चेति ( सू०-) कटच् । आसीदति स्मासन्नः । संनिकृष्यते स्म संनिकृष्टः । समानं नीडमस्य सनीडं, सविधसनीडसमर्यादसवेशसदेशेषुसामीप्ये ( सू० ) इति सामीप्यं लक्षणयात्र । समानो देशोस्य सदेशः । अभ्यस्यतेवाप्यतेभ्यासः । ( सविध इ० ) समाना विधा मर्यादा वेशश्चास्य ॥ ६७ ॥ कण्ठस्य समीपमुपकण्ठम् । अन्तोस्यास्तीत्यन्तिकः । अभ्यर्द्यतेभ्यर्णः, अभेश्चाविदूर्ये ( सू० ) इतीडभावः । अभिमुखमग्रमस्याभ्यग्रम् । अभित इति निपातः, अभेस्तसिर्वा । नास्ति पटेन तिरस्करिण्यान्तरं व्यवधानमपटान्तरम् ॥ ६८ ॥ अतिशयेनान्तिकं नेदिष्ठं, नेदीयोपि, अन्तिकबाढयोर्नेदसाधौ ( सू० ) । दूयतेत्र दूरम् । अतिशयेन दूरं दवीयः, स्थूलदूरेति ( सू० ) यणादि परं लुप्यते पूर्वस्य च गुणः । दृणाति दीर्घम् । आयम्यत आयतं, आयतते वा ॥ ६९ ॥ वर्तते भ्रमति वर्तुलम् । निर्गतं तलं प्रतिष्ठास्य निस्तलं, भूमौ नास्ते तत्र वा रजो न तिष्ठति । बध्नाति गतिं बन्धुरम् । ( उन्नतानतं )उन्नतं सदुपाधिवशादीषन्नतं, यथा– कण्ठस्य तस्याः स्तनबन्धुरस्य (कु० सं०) । उच्चीयत उच्चम्, डः, उदश्चो वा, आचपराचादिवत्– मयूरव्यंसकादिर्वा ( सू० ) । प्राश्नुते प्रांशु । उन्नमति स्मोन्नतम् । ऊर्ध्वमग्रमस्योदग्रम् । ऊर्ध्वं श्रयति स्मोच्छ्रितम् । तुजत्यादत्ते तुङ्गम् । उत्तुङ्गमुन्दुरं च । वमति वामोस्त्यस्य वा वामनः ॥ ७० ॥ नियतमञ्चति न्यक् । निम्नं चीयते नीचं, नीचैर्विद्यतेस्य वा । खर्वति खर्वः । ह्रसति ह्रस्वः । अवनतमग्रमस्यावाग्रं, अधोमुखमित्यर्थः । अवनमति स्मावनतम् । आनमति स्मानतम् । इयर्ति– अराः सन्ति वास्य– अरालम् । वर्ज्यते वृजिनम् । जी( ह्री )यते जहाति वा जिह्मम् । ( ऊर्मिमत् )ऊर्मयो भङ्गाः सन्त्यस्य । ( कुञ्चितं ) कुञ्च गतिवैकल्ये । नमति स्म नतम् ॥ ७१ ॥ आविध्यत आविद्धम् । भुजो कौटिल्ये, भुग्नम् । वेल्लति वेल्लितम् । वञ्चति वक्रं, रक् । भङ्गुरं च । इयर्ति ऋज्यते वा ऋजुः । प्रकृष्टो गुणोस्य सदृशो गुणेन मौर्व्या वा प्रगुणः । व्यस्यते विपर्यस्यते स्म व्यस्तम् । आकोलत्येकीभवति– आकुलम् ॥ ७२ ॥ शश्वद्भवः शाश्वतः, अव्ययानांभमात्रेटिलोपः ( वा० ), आराच्छश्वतोर्नेष्यते ( इ० ) । शाश्वतिकोपि । ध्रुवः, ध्रुव स्थैर्ये । नियतं भवं नित्यं, त्यब्नेर्ध्रुवे ( वा० ) इति त्यप् । ( सदातन इ० ) सदाभवः सनाभवश्चेति, सायंचिरमिति ( सू० ) ट्युट्युलौ तुट् च । तिष्ठति तच्छीलः स्थास्नुः, ग्लाजिस्थश्चग्स्नुः ( सू० )। अतिशयेन स्थिरः स्थेयान्, प्रियस्थिरेति ( सू० ) स्थादेशः ॥ ७३ ॥ एकरूपो निर्विकारः । निरवधिं कालं

कालव्यापी स कूटस्थः स्थावरो जङ्गमेतरः ।
चरिष्णुजङ्गमचरं त्रसमिङ्गं चराचरम् ॥ ७४ ॥
चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम् ।
चञ्चलं तरलं चैव पारिप्लवपरिप्लवे ॥ ७५ ॥
अतिरिक्तः समधिको दृढसन्धिस्तु संहतः ।
खक्खटं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ॥ ७६ ॥
जरठं मूर्तिमन्मूर्तं प्रवृद्धं प्रौढमेधितम् ।
पुराणे प्रतनप्रत्नपुरातनचिरंतनाः ॥ ७७ ॥
प्रत्यग्रोभिनवो नव्यो नवीनो नूतनो नवः ।
नूत्नश्च सुकुमारं तु कोमलं मृदुलं मृदु ॥ ७८ ॥
अन्वगन्वक्षमनुगेनुपदं क्लीबमव्ययम् ।
प्रत्यक्षं स्यादैन्द्रियकमत्यध्य( प्रत्य )क्षमतीन्द्रियम् ॥ ७९ ॥

---

व्याप्नोति स्थिरत्वात् ( कालव्यापी ) । कूटेनाचलत्वेन तिष्ठति कूटस्थः, आत्माकाशादिः । तिष्ठति तच्छीलः स्थावरः शैलादिः, स्थेशभासेति ( सू० ) वरच् । जङ्गमात्प्राणिनोन्यः ( जङ्गमेतरः ) । ( चरिष्णुः ) चरेस्ताच्छील्ये– इष्णुच् । भृशं गच्छति जङ्गमः, अकौटिल्येप्यभिधानाद्यङ् (ज्ञा०) । ( चरं ) चरेरचि चरिचलिपतीति ( वा० ) वा द्विर्भाव आगागमश्च । त्रस्यति चलत्वात्त्रसम् । इङ्गतीङ्गं, इगि गत्यर्थः ॥ ७४ ॥ चलति तच्छीलश्चलन, चलनशब्दार्थाद्युच् ( सू० ) । ( कम्पनः ) कम्पते तच्छीलः, युच् । ( कम्प्रः ) नमिकम्पीति ( सू० ) रश्च । लुड विलोडनेस्मल्लोलम् । ( चलाचलं ) चरिचलीति ( वा० ) द्वित्वमागागमश्च ॥ ७५ ॥ अतिरिच्यतेतिरिक्तः । सम्यगध्युपरिभवः समधिकः । संहन्यते स्म संहतोऽच्छिद्रः । खक्ख हसने, कक्खटमित्येके । ( कठिनं, कठोरं ) कठ कृच्छ्रजीवनेऽस्मादिनच्– ओरंश्चौणादिकौ । कृणाति क्रूरम् । नियतं तिष्ठति निष्ठुरम् । ( दृढं ) दृह वृद्धौ, क्ते, दृढो बलवति साधुः ( दृढःस्थूलबलयोः ) ॥ ७६ ॥ जीर्यति जरठम् । मूर्च्छति मूर्तम् । नवैकार्था इत्येके । प्रोह्यते स्म प्रौढम्, प्रादूहोढोढिष्यिति ( वा० ) वृद्धिः । ( एधितं ) एध वृद्धौ । पुरापि नवं( भवं )पुराणम्, नश्चपुराणे ( वा० ) । ( प्रतनं, इ० ) पुरात्– त्नतनौ प्रादेशश्च भवार्थे ( नश्चपुराणेप्रात् ) । पुराभवं चिरंभवं, सायंचिरमिति ( सू० ) ट्युस्तुट्च, निर्देशान्मान्तत्वम् ॥ ७७ ॥ प्रतिनवमग्रमस्य प्रत्यग्रः । अभिनूयतेभिनवं, णु स्तुतौ । नव एव नव्यः । ( नवीन इ० ) नवस्यनूभावे त्नप्तनप्खाश्चप्रत्ययाः ( वा० ), यच्च । स्वार्थेकश्च । सुष्ठु कुत्सितं म्रियते म्लायति वा सुकुमारं, कुमार क्रीडायामित्यस्माद्वा । मृद्यते मृदु । ( मृदुलं ) गुणमात्रवृत्तित्वे लच् ॥ ७८ ॥ अन्वञ्चत्यन्वक्– कान्तोव्ययत्वात्प्रागादिवत् अक्षस्य पश्चादन्वक्षम्, अक्षेण रथो लक्ष्यते । पदस्य क्रमस्य पश्चादनुपदं, पश्चादर्थेव्ययीभावः । अनुगच्छत्यनुगं, डः । तत्रैतत्त्रयं ( अन्वक्, अन्वक्षं, अनुपदं च ) अव्ययं वर्तते, क्लीबत्वं तु द्वयोः ( अन्वक्षं, अनुपदं च ) । अक्षिणी प्रतिगतं प्रत्यक्षं, अत्यादयःक्रान्ताद्यर्थेद्वितीयया ( वा० ) इति समासः । इन्द्रियेषु भवमैन्द्रियकम् । अक्षेष्वधिकृतमध्यक्षं, तदतिक्रान्तमत्यध्यक्षम् ॥ ७९ ॥ एकं तननम-

एकतानोनन्यवृत्तिरे( रै )काग्र्यैकायनावपि ।
अप्येकसर्ग एकाग्र्योप्येकायनगतोपि सः ॥ ८० ॥
पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्या अथास्त्रियाम् ।
अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमम् ॥ ८१ ॥
मोघं निरर्थकं स्पष्टं स्फुटं प्रव्यक्तमुल्वणम् ।
साधारणं तु सामान्यमेकाकी त्वेक एककः ॥ ८२ ॥
भिन्नार्थका अन्यतर एकस्त्वोन्येतरावपि ।
उच्चावचं नैकभेदमुच्चण्डमवलम्बितम् ॥ ८३ ॥
अरुंतुदं तु मर्मस्पृगबाधं तु निरर्गलम् ।
प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च ॥ ८४ ॥
वामं शरीरे सव्यं स्यादपसव्यं तु दक्षिणम् ।
संकटं ना तु संबाधः कलिलं गहनं समे ॥ ८५ ॥

---

विच्छिन्नो विस्तारोस्यैकतानः । अनन्यैकरूपा वृत्तिर्व्यापारोस्यानन्यवृत्तिः । एकमग्रं पुरोगतं ज्ञेयमस्यैकाग्रः, स्वार्थेऽण्वा । एकमयनं गतिरस्यैकायनः । एकः सर्गो निश्चयोस्यैकसर्गः । एकमयनं गतः ( एकायनगतः ) ॥ ८० ॥ आदीयते प्रथममित्यादिः, धर्मिवृत्तित्वेप्यजहल्लिङ्गं, यथा– आदिर्गर्गकुलम् । धर्मवृत्तित्वे भवे यत्, आद्यो वाच्यलिङ्गः– अन्त्यवत् । पूर्वति पूर्वः । पुरो भवः पौरस्त्यः, दक्षिणापश्चात्पुरसस्त्यक् ( सू० ) । प्रथते प्रथमः । आदिमोग्रिमश्च । अमत्यन्तः, धर्मे( र्मि )वृत्तित्वेप्यस्त्रीलिङ्गः, यथा– कुलस्यान्तः प्रभु स्त्रियः । जघने भवो जघन्यः, दिगादिभ्योयत् ( सू० ) । चरति चरमः । पश्चाद्भवः पाश्चात्यः– पश्चिमः, दक्षिणापश्चात्पुरसस्त्यक् ( सू० ), अग्रादिपश्चाड्डिमच् ( सू० ) । अन्तिमोपि ॥८१॥ मुह्यन्त्यस्मिन्मोघः, न्यङ्क्वादित्वात् ( सू० ) कुत्वम् । ( स्पष्टं ) स्पश बाधनस्पर्शनयोः । स्फुटति बहिः प्रकाशते स्फुटम् । प्रकृष्टं व्यज्यते स्म प्रव्यक्तम् । उद्वणत्युल्वणं, पृषोदरादित्वात् ( सू० ) पक्षे लः । एतौ पूर्वत्र संबध्नंति । उद्धतमुत्कटमुद्रिक्तं च । समानमाधारणमस्य साधारणम् । समानं मानमस्य सामान्यं, भावे( स्वार्थे ) ष्यञ् । ( एकाकी, इ० ) एकादाकिनिच्चासहाये ( सू० ), चात्कन्लुकौ च ॥ ८२ ॥ भिन्न इत्यर्थे । त्वोन्यार्थः सर्वनाम, यथा– उत त्वः पश्यन्न ददर्श वाचं[ च्यं ] ( निरुक्तं ) । एत्येकः, यथा– इत्येके मन्यन्ते, यत्कात्यः– प्रधानान्यासहायेषु संख्यायां चैक इष्यते । अनित्यन्यः, अघ्न्यादिः ( उ० ) । ( अन्यतरः ) तरप्स्वार्थे– अल्पाच्तरवत् ( सू० ) । एति– इतरः । उदक्चावाक्चोच्चावचं, उन्नतं चावनतं च वा, मयूरव्यंसकादिः ( सू० ) । नैकशब्दः सुप्सुपेति ( सू० ) समासात्, नानाप्रकारमित्यर्थः । उच्चण्डते– उच्चण्डम् । अवलम्बतेवलम्बित[ म्बन ]म् । अत एव उच्चण्डं जानुलम्बि चेति पेठुः । केचित्त्वविलम्बितमित्याशुकार्यमाहुः, उच्चण्डमुत्तालमिति हि सभ्याः ॥ ८३ ॥ अरूंषि तुदत्यरुंतुदं, विध्वरुषोस्तुदः ( सू० ) इति खच् । ( मर्मस्पृक् ) स्पृश उपतापे, मर्मव्यथकमित्यर्थः । निष्कान्तमर्गलाया निरर्गलमानियन्त्रणम् । उद्दाममुच्छृङ्खलं च । ( प्रसव्यं, अपसव्यं ) प्रगतं– अपगतं सव्याद्वामादित्यर्थः, सव्यशब्दो हि– आराच्छब्दवद्वामदक्षिणार्थः । प्रतीपं कूलात्प्रतिकूलं, लक्षणया विरुद्धार्थं प्रतिलोमवत् । अपतिष्ठत्यपष्ठु, कुः, सुषामादित्वात् ( सू० ) षत्वम् । विपरीतं विलोमं च ॥ ८४ ॥ वम्यते वामम् । सूयते सव्यं, षु प्रसवे । शरीर इत्येव । अपक्रान्तं सव्यादपसव्यम् । दक्षिणं, दक्ष वृद्धौ । संकटत्यावृणोति संकटं, संप्रोदश्चकटच्वा ( सू० ), विशेष्यलिङ्गम् । पुंलिङ्गस्तु संघट्टाद्बाध्यन्तेस्मिन् संबाधः । कल्यते क्षिप्यतेत्रान्यत्कलिलम् । गाह्यते व्याप्यत्वाद्गहनम् ॥८५॥

संकीर्णं संकुलाकीर्णे मुण्डितं परिवापितम् ।
ग्रन्थितं संदितं दृब्धं विसृतं विस्तृतं ततम् ॥ ८६ ॥
अन्तर्गतं विस्मृतं स्यात्प्राप्तप्रणिहिते समे ।
वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते ॥ ८७ ॥
नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः ।
परिक्षिप्तं तु निवृतं मूषितं मुषितार्थकम् ॥ ८८ ॥
प्रवृद्धप्रसृते न्यस्तनिसृष्टे गुणिताहते ।
निदिग्धोपचिते गूढगुप्ते गुण्ठितरूषिते ॥ ८९ ॥
द्रुतावदीर्णे उद्गूर्णोद्यते कारितशिक्षिते( काचितशिक्यिते )।
घ्राणघ्राते दिग्धलिप्ते समुदक्तोद्धृते समे ॥ ९० ॥
वेष्टितं स्याद्वलयितं संवीतं रुद्धमावृतम् ।
रुग्णं भुग्नेथ निशितक्ष्णुतशातानि तेजिते ॥ ९१ ॥
स्याद्विनाशोन्मुखं पक्वं ह्रीणह्रीतौ तु लज्जिते ।
वृत्ते तु वृतवावृत्तौ संयोजित उपाहितः ॥ ९२ ॥

---

संकीर्यते संकीर्णं निरन्तरं व्याप्तम् । संकोलति निरन्तरीभवति संकुलम् । एतान्पूर्वत्र संबध्नन्ति व्याप्त्यर्थत्वात् । ( मुण्डितं ) मुडि खण्डने । ( परिवापितं ) परिपूर्वो वपिर्मुण्डनार्थः, यथा– मद्रात्परिवापणे ( सू० )। संहितं दितं यत्रेति संदितं, दोवखण्डने । संदानितं संयमितं बद्धं निगडितं च । दृब्धं, दृभी ग्रन्थे । विसरति स्म विस्तीर्यते स्म तन्यते स्म ( विसृतं, इ० ) ॥ ८६ ॥ स्मृतेर्व्यवहितमन्तर्गतम् । प्रणिधीयते स्म प्रणिहितम् । ( वेल्लितं ) वेल्ल चलने । ( प्रेङ्खित ) इखि गत्यर्थः । धूञ् धुञ् वेत्युभयः पाठः । प्रेङ्खोलितस्तरलितो लुलितान्दोलितावपि ॥ ८७ ॥ ( नुत्तं, नुन्नं ), नुदविदेति ( सू० ) वा निष्ठा नत्वम् । अस्यते स्मास्तम् । निष्ठीव्यते स्म निष्ठ्यूतम् । आविध्यते स्माविद्धम् । परिक्षिप्यते समन्ताद्वेष्ट्यते स्म परिक्षिप्तम् । नियतं व्रियते स्म निवृतम् । परीतं परिवेष्टितं वलितं परिकृतं परिचारितं च । मुषिः क्र्यादिः, मूषिर्भ्वादिः ॥ ८८ ॥ आहन्यते स्म– एकादिरङ्कोङ्कान्तरेणाभ्यस्यते– आहतम् । द्वे द्वे तुल्यार्थे । गुण्ठितं गुण्डितमाहुः । रूषिर्लौकिको व्याप्त्यर्थः, यथा– अन्तर्गिरिरेणुरूषितः ( किरा० ) । प्रवर्धते, प्रसरति, न्यस्यते, निसृज्यते, गुण्यते, आहन्यते, निदिह्यते, उपचीयते, गुह्यते, गुप्यते, गुण्ठ्यते, रूष्यते ॥ ८९ ॥ द्रूयते, अवदीर्यते, उद्गूर्यते । द्रुतमत्र विभिन्नम् । ( उद्गूर्णे ) गुरी उद्यमे । कार्यते शिक्षां कारितः । घ्रायते स्म घ्राणं, नुदविदोन्देति ( सू० ) वा निष्ठा नत्वम् । समुदच्यते समुदक्तं, अञ्चोनपादाने ( सू ) इतीण्नास्ति ॥ ९० ॥ वलयः संजातोस्य वलयितम् । ( संवीतं ) व्येञ् संवरणे । ( रुग्णं ) रुजो भङ्गे । ( भुग्नं ) भुज कौटिल्ये । ( शातं, निशितं )शो तनूकरणे, शाच्छोरन्यतरस्याम् ( सू० ) इति वेत्वम्, उपसर्गप्राधान्यात् । शितनिशातौ च । ( क्ष्णुतं ) क्ष्णु तेजने । ( तेजितं )तिज निशाने ॥ ९१ ॥ पच्यते स्म पक्वं फलादि, पचोवः ( सू० ) इति निष्ठा वत्वम्, आहुश्च– ओषध्यः फलपाकान्ताः (धन्व०)। जिह्रेति स्म ( ह्रीणह्रीतौ ), नुदविदोन्द्रेति ( सू० ) वा नत्वम् । व्रियते वृतः । वर्तते वृत्यते वा वृत्तः । वावृत्तः, वृतु– वावृतु वरणे[ वर्तने ], इत्थमबुद्ध्वा वृत्तव्यावृत्ताविति पेठुः, लक्ष्येपि– ततो वावृत्तमानसेति(–त्यमाना सेति ) भट्टिः । उपाधीयते स्मोपाहितः ॥ ९२ ॥ ( स्यन्नं ) स्यन्दू स्रवणे । ( रीणं )रीङ् स्रवणे, स्वादय ओदितः ( ग० ) । ( स्नुतं )ष्णु उद्रि-

प्राप्यं गम्यं समासाद्यं स्यन्नं रीणं स्नुतं स्रुतम् ।
संगूढः स्यात्संकलितोवगीतः ख्यातगर्हणः ॥ ९३ ॥
विविधः स्याद्बहुविधो नानारूपः पृथग्विधः ।
अवरीणो धिक्कृतश्चाप्यवध्वंस्तोवचूर्णितः ॥ ९४ ॥
अनायासकृतं फाण्टं स्वनितं ध्वनितं समे ।
बद्धे संदानितं मूतमुद्दितं संदितं सितम् ॥ ९५ ॥
निष्पक्के क्कथितं पाके क्षीराज्यहविषां शृतम् ।
निर्वाणो मुनिवह्न्यादौ निर्वातस्तु गतेनिले ॥ ९६ ॥
पक्कं परिणते गूनं हन्ने मीढं तु मूत्रिते ।
पुष्टे तु पुषितं सोढे क्षान्तमुद्वान्तमुद्गते ॥ ९७ ॥
दान्तस्तु दमिते शान्तः शमिते प्रार्थितेर्दितः ।
ज्ञप्तस्तु ज्ञपिते छन्नश्छादिते पूजितेञ्चितः ॥ ९८ ॥
पूर्णस्तु पूरिते क्लिष्टः क्लिशितेवसिते सितः ।
प्रुष्टप्लुष्टोषिता दग्धे तष्टत्वष्टौ तनूकृते ॥ ९९ ॥
वेधितच्छिद्रितौ विद्धे विन्नवित्तौ विचारिते ।
निष्प्रभे विगतारोकौ विलीने विद्रुतद्रुतौ ॥ १००॥

---

रणे । विरुद्धमवगीयतेवगीतः ॥ ९३ ॥ विचित्रा विधा प्रकारोस्य विविधः । बहुरूपः पृथग्रूपो नानाविधश्च । ( अवरीणः ) अवेति विरुद्धार्थः । चूर्णेनावध्वस्तोवचूर्णितः, सत्यापपाशेति ( सू० )णिचि क्तः ॥ ९४ ॥ क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानीति ( सू० ) फणः फाण्टं साधुः, त्रिफलाकषायादिसारम् । ( स्वनितं, ध्वनितं ) मनस्तमसोरन्यत्रेट् । ( संदानितं ) दान अवखण्डने । ( मूतं ) मूङ् बन्धने । द्यतिस्यतीति ( सू० ) इत्वे– उद्दितं संदितं च । षिञ् बन्धने, सितः ॥ ९५ ॥ निःशेषेण पक्कं निष्पक्कम् । श्रातेः श्रपेश्च शृतंपाके ( सू० ) इति साधुः । निर्वाति स्म निर्वाणः, वातादन्यत्र शान्त्यर्थे साधुः ( निर्वाणोऽवाते ) । आदिशब्दान्निर्वाणं मुक्तिर्निर्वृतिश्च, यथा– प्रिय[ या ]दर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः । निर्वाणमाप्यते येन सरागेणापि चेतसा ॥ निर्वाति निर्वातः, गतो वात इत्यर्थः ॥९६॥ परिणमतेवस्थान्तरं प्राप्नोति स्म, यथा– परिपक्कधीः । ( गूनं )गु पुरीषोत्सर्गे, दुग्वोर्दीर्घश्च ( वा० ) । ( मीढं ) मिह सेचने, ढ्लोपेपूर्वस्यदीर्घोणः ( सू० ) । पुष्यति स्म पुष्टम् । पोषति स्म पुषितम् । सह्यते स्म सोढं, सहिवहोरोदवर्णस्य ( सू० ) । ( उद्वान्तः ) टुवम उद्गिरणे ॥ ९७ ॥ ( दान्तः ) वादान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ( सू० ) इति ण्यन्तात्क्ते वा साधुः । एवं शान्तादयः । अर्द गतौ याचने च, अर्दितः । मारणादन्यत्र मित्वेपि ज्ञप्तः सामान्येन निपातनात्, यथा– आज्ञापितः, आज्ञप्तः । ( अञ्चितः ) अञ्चेःपूजायाम् ( सू० ) इतीड् नलोपाभावश्च ॥ ९८ ॥ ( क्लिष्टः ) क्लिशःक्त्वानिष्ठयोः ( सू० ) इति वेट् । ( सितः ) षोन्तकर्मणि, द्यतिस्यति मास्थेति (सू०) इत्त्वम् । ( प्रुष्ट इ० ) प्रुषु प्लुषु उष दाहे । ( तष्ट इ ) तक्षू त्वक्षू तनूकरणे ॥ ९९ ॥ ( वेधितः ) विध विधानेनेकार्थः । छिद्र्यते स्म छिद्रितः, छिद्रं संजातं वास्य । व्यधेः क्तः, विद्धः । विद विचारणे, नुदविदोन्द्रेति ( सू० ) नत्वं, यदाह– वेत्तेर्विन्नश्चवित्तश्च ( भाष्य इ० ) । नास्ति रोको रोचनमस्यारोकः । ( विलीनः ) लीङ् द्रवीकरणे ॥ १०० ॥

सिद्धे निर्वृत्तनिष्पन्नौ दारिते भिन्नभेदितौ ।
ऊतं स्यूतमुतं चेति त्रितयं तन्तुसंतते ॥ १०१ ॥
स्यादर्हिते नमस्यितनमसितमपचायितार्चितापचितम् ।
वरिवसिते वरिवस्यितमुपासितं चोपचरितं च ॥ १०२ ॥
संतापितस्तु तप्तो धूपितधूपायितौ च दूनश्च ।
हृष्टो मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः ॥ १०३ ॥
छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम् ।
स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं च गलितं च ॥ १०४ ॥
लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च ।
अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम् ॥ १०५ ॥
आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च ।
त्राणं त्रातं रक्षितमवितं गोपायितं च गुप्तं च ॥ १०६ ॥
अवगणितमवमतावज्ञाते अवमानिते च परिभूतम् ।
न्यस्तं त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टे ॥ १०७ ॥

---

(भिन्न इ० ) भिदिः— रुधादिश्चुरादिश्चेति वा— इट् । ऊतं, ऊयी तन्तुसंताने, क्तः, लोपोव्योर्वलि ( सू० )। स्यूतं, षिवु तन्तुसंताने, च्छ्वोःशूडिति ( सू० ) वस्योत्वम् । उतं, वेञ् तन्तुसंताने, क्तः, संप्रसारणम् । तन्तुभिः संतते विस्तृते ॥ १०१ ॥ ( नमस्यितं, इ० ) नमोवरिवइति ( सू० ) नमसः पूजायां क्यच्, क्यस्यविभाषा ( सू० ) इति यस्य वा लोपः । ( अपचायितं, इ० ) अपचितश्च ( सू० ) इति चायेर्वा साधुः । पूजितं च । वरिवसः परिचर्यायां क्यच् ॥ १०२ ॥ ( संतापित इ० ) तपिश्चुरादिर्भ्वादिश्च । ( धूपित इ० ) गुपूधूपेति ( सू० ) आयः, आयादयआर्धधातुकेवा ( सू० ) । ( दूनः ) दूङ् परितापे, स्वादयओदितः ( ग० ) इति निष्ठा नत्वम् । प्रह्लादते स्म प्रह्लन्नः, ह्लादोनिष्ठायाम् ( सू० ) इति ह्रस्वः ॥ १०३ ॥ ल्वादिभ्यश्च ( सू० ) इति नत्वे लूनम् । छो छेदने, शाच्छोरन्यतरस्याम् ( सू० ) इतीत्वं वा ( छातं, छितं ) । दाप् लवने, अस्माद्दातम् । दो अवखण्डने, अस्माद् द्यतिस्यतीति ( सू० ) इत्वे दितम् । वृश्च्यते स्म वृक्णं, ओव्रश्चू छेदने । स्कन्नं, स्कन्दिर् गतिशोषणयोः । पन्नं, पद गतौ । एते हस्तादेः पतितेऽर्थे वर्तन्ते ॥ १०४ ॥ प्राप्तं कर्मणि, प्राप्तप्रणिहिते समे इति कर्तरि । विन्नं, विद्लृ लाभे । भावितं, भू प्राप्तौ, आधृषाद्वा ( ग० ) इत्यस्य वा णिच्, पक्षे भूतं, यथा— इत्थंभूतम् । आसादितं, आङः षद पद्यर्थे णिच् । अन्वेषितं, जेषृ णेषृ एषृ गतौ । अन्विष्टं, इषेः तीषसहेति ( सू० ) वेट् । गवेष मार्गणे । मार्ग अन्वेषणे । मृग अन्वेषणे ॥ १०५ ॥ आ—अर्द्यते— आर्द्रः पटादिः । सहार्द्रेण गुणेन वर्तत इति सार्द्रः । तिम ष्टिम आर्द्रीभावे । ( समुन्नं, इ० ) उन्दी क्लेदने, नुदविदोन्देति ( सू० ) वा नत्वम् । ( गोपायितं, इ० ) गुपेः, आयादयआर्धधातुकेवा ( सू० ) ॥ १०६ ॥ ( अवगणितं ) अवेति विपर्ययेऽर्थे । अवमतं, मन ज्ञाने । अवमानितं, मनिश्चुरादिः, मान पूजायां वा । अनादृतं च । हीयते हीनम्, ओहाक् त्यागे, निष्ठा नत्वं ( ओदितश्च ), घुमास्थागेति ( सू० ) इत्वम् ॥ १०७ ॥ ( उक्तं, उदितं ) क्ते वचिवदोः संप्रसारणम् । ( अभिहितं ) अभिपूर्वो धाञ्— उक्तयर्थः, दधातेर्हिः ( सू० )। ( बुद्धं ) बुध अवगमने— अनिट् । ( बुधितं ) बुधिरवबोधने सेट् । मनु अवबोधनेस्मान्मनितं, कृती-चृतीनृतीनामीदित्करणेन सेऽसिचिकृतचृतछृदतृदनृतः ( सू० ) इति विकल्पे, यस्यविभाषा ( सू० ) इति

उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपिते ।
बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगते ॥ १०८ ॥
ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् ।
संगीर्णविदितसंश्रुतसमाहितोपश्रुतोपगतम् ॥ १०९ ॥
ईलितशस्तपणायितपनायितप्रणुतपणितपनितानि ।
अपि गीर्णवर्णिताभिष्टुतेडितानि स्तुतार्थानि ॥ ११० ॥
भक्षितचर्वितलिप्तप्रत्यवसितागिलितखादितप्सातम् ।
अभ्यवहृतान्नजग्धग्रस्तग्लस्ताशितं भुक्ते ॥ १११ ॥
क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः ।
क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुप्रकर्षार्थाः ॥ ११२ ॥
साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः ।
बाढव्यायतबहुगुरुवामनवृन्दारकातिशये ॥ ११३ ॥

इति विशेष्यनिघ्नवर्गः । १ ।

---

निषेधस्यानित्यत्वज्ञापनात् । मतं तु मन्यतेः । वेत्तेस्तु विदितं, निष्ठा । प्रतिपन्नं, पद गतौ, सर्वे गत्यर्था ज्ञानार्था इति ॥ १०८ ॥ ऊर्यूररीरी तु विस्तारेङ्गीकारे च गतिसंज्ञाः ( ऊर्यादिच्विडाचश्च ), तेन ऊररीकृतमपि । ( संगीर्णं ) समःप्रतिज्ञाने ( सू० ) इति संगीरङ्गीकारार्थः, गॄ शब्दे ॥ १०९ ॥ ईलितं, ईड स्तुतौ, डलयोरेकत्वम् । ( शस्तं ) शंसु स्तुतौ । ( पणायितं, इ० ) पण व्यवहारे स्तुतौ च, पन च. आयादयआर्धधातुकेवा ( सू० ) । अपि स्वार्थे, उपसर्ग इत्येके । गीर्णं, गॄ शब्दे ॥ ११० ॥ लिप्तस्थाने लीढं पेठुः । ( प्रत्यवसितं ) प्रत्यवपूर्वः स्यतिर्भोजने वर्तते । ( गिलितं ) गॄ निगरणे, अचिविभाषा ( सू० ) इति लत्वम् । ( प्सातं ) प्सा भक्षणे । ( अभ्यवहृतं ) अभ्यववपूर्वो हृञ् भोजने । अद्यते स्मान्नं, अदोनन्ने ( सू० ) इति निपातनात्साधुः । ( जग्धं ) अबाधकान्यपि निपातनानि भवन्तीति पक्षे जग्धिः । वाच्यं चात्र– ब्रह्मण्यो ब्राह्मणहितो वीतदम्भस्त्वकल्मषः । असंमतः प्रणाय्यः स्याच्चक्षुष्यः प्रियदर्शनः ॥ वैरागिको विरागार्हः शंसितस्तु सुनिश्चितः । ईर्ष्यालुः कुहनो गोष्ठश्वोन्यद्वेष्टा स्वगेहगः ॥ [ गोष्ठश्वः, अचतुरेति ( सू० ) साधुः ] । तीक्ष्णोपायेन योन्विच्छेत्स आयःशूलिको जनः । गेहेशूरो गृहे-नर्दी पिण्डीशूरोथ संस्कृतः ॥ व्युत्पन्नप्रहतक्षुण्णा अन्वेष्टानुपदी समौ ॥ नीलीरागः स्थिरस्नेहो हरिद्रारागकोन्यथा ॥ आसीन उपविष्टः स्यादूर्ध्वस्थोर्ध्वंदमो स्थिते । उत्पश्य उन्मुखे गृह्यः पक्षे(क्ष्ये) न्युब्जस्त्वधो-मुखे ॥ १११ ॥ अतिशयेन क्षिप्रः क्षेपिष्ठः । एवं क्षुद्रः क्षोदिष्ठः । अतिशयेन प्रियः प्रेष्ठः । एवमुरु-र्वरिष्ठः, प्रियस्थिरास्फिरोर्वीति ( सू० ) प्रस्थस्फवर्बंहादेशाः । स्थूलः स्थविष्ठः, स्थूलदूरयुवेति ( सू० ) यणादिर्लुप्यते पूर्वस्य च गुणः । बहुलो बंहिष्ठः ॥ ११२ ॥ अतिशयेन बाढं साधिष्ठं, अन्तिकबाढयोर्नेद-साधौ ( सू० ) । एवं दीर्घो द्राघिष्ठः । स्फिरः ( बहुः ) स्फेष्ठः । गुरुर्गरिष्ठः । ह्रस्वो ह्रसिष्ठः । वृन्दारको वृन्दिष्ठः, प्रियस्थिरेति ( सू० ) आदेशः । वाच्यं चात्र–ग्राम्ये ग्रामेयकग्रामीणावाच्छिन्नो बलाद्धृते । चोरिते मुषितं मुष्टं स्थपुटं तु नतोन्नतम् ॥ उत्पाटितोन्मूलितार्थमुद्धृतं वर्हितं वृढम् । आचितं निचितं पूर्णं पूरितं निभृते भृतम् ॥ प्रतिश्रितं प्रविष्टं स्यादन्तर्गड्डु निरर्थके । न्याचितं स्यादधः क्षिप्तं क्षिप्तमूर्ध्वमुद-ञ्चितम् ॥ स्पष्टेऽञ्चितं चतुर्थे तु तुरीयं तुर्यमास्थिते । आकारे श्लिष्टसंपृक्तः खचिते क्षुरित( ? )भूषितौ ॥ प्रचर्चितं प्रतीष्टं द्वेष्यामृष्याक्षिगताः समाः । स्यानं शीनेन्वितेन्वीतं प्रकाशप्रकटौ स्फुटे ॥ ११३ ॥ इति विशेष्यनिघ्नवर्गः । १ ।

प्रकृतिप्रत्ययार्थाद्यैः संकीर्णे लिङ्गमुन्नयेत् ।
कर्म क्रिया तत्सातत्ये गम्ये स्युरपरस्पराः ॥ १ ॥
साकल्यासङ्गवचने पारायणतुरायणे ।
यदृच्छा स्वैरिता हेतुशून्या त्वास्या( स्था ) विलक्षणम् ॥ २ ॥
शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः ।
अवदानं कर्म वृत्तं कामदानं प्रवारणम् ॥ ३ ॥
वशक्रिया संवननं मूलकर्म तु कार्मणम् ।
विधूननं विधुवनं तर्पणं प्रीणनावनम् ॥ ४ ॥
पर्याप्तिः स्यात्परित्राणं हस्तधा( वा )रणमित्यपि ।
सेवनं सीवनं स्यूतिर्विदरः स्फुटनं भिदा ॥ ५ ॥
आक्रोशनमभीषङ्गः संवेदो वेदना न ना ।
संमूर्च्छनमभिव्याप्तिर्याच्ञा भिक्षार्थनार्दना ॥ ६ ॥

---

प्रकृत्याद्यैः प्रकीर्णकेत्र लिङ्गमुत्प्रेक्षेत । प्रकृत्या ( यथा )– अपरस्पराः सार्था यान्ति, अपरस्पराणि क्षणानि वहन्ति [ अक्षराणि वदन्ति ] । प्रत्ययेन ( यथा )– क्तिन्, शान्तिः, नपुंसके भावे क्तः ( सू० ) ल्युट् च– आसितं, तर्पणम् । अर्थेन तु ( यथा )– कर्मैव कार्मणम् । आ द्यशब्दाद्रूपभेदराहचर्यादिना ( यथा )– यदृच्छा स्वैरिता, शमथस्तु शमः । ( कर्म, क्रिया ) भावकर्मणोर्मनिन् ( सर्वधातुभ्योमनिन् ), कृञः शच ( सू० ) । क्रियासंततत्वे गम्यमाने, अपरे च परे च– अपरस्पराः सार्था यान्ति, अपरे च परे च यत्र तदपरस्परं कृत्वा वा, अपरस्पराःक्रियासातत्ये ( सू० ) इति साधुः ॥ १ ॥ पारमयन्ते येन सकलं व्याप्नुवन्ति पारायणम् । त्वरण तुरणं वा तूः, तया हेतुभूतया– अयन्ते येनासक्त गच्छन्ति तत्तुरायणम् । या या– इच्छा यदृच्छा, यदृच्छाशक्तिजानुकरणेति ( भाष्यव० ) वाक्यलिङ्गात्साधुः । स्वेन– ईर्ते तच्छीलः स्वैरी, भावे तल् ( तस्यभावस्त्वतलौ ), स्वैरस्य भावो वा । आसनमास्या, ण्यासश्रन्थेति ( सू० ) युचि प्राप्ते, वाऽसरूपेण ( वासरूपोस्त्रियां ) ऋहलोर्ण्यत् ( सू० ), अस्त्रियामिति निषेधो द्वयोरेवोत्सर्गापवादयोर्न त्वेकस्य । विगतं लक्षणमालोचनं यत्रेति विलक्षणमप्रतिपत्तिरित्यर्थः ॥ २ ॥ ( शमथः, इ० ) औणादिकोऽथच्, घञि तु नोदात्तोपदेशस्येति ( सू० ) वृद्ध्यभावः । कामक्रोधाद्यभावः शान्तिस्तपःक्लेशसहिष्णुता दान्तिः । अवदीयतेनेन– अवदानं सोत्कर्षचरितं, वृत्तं परिशुद्धं, निर्व्यूढमित्येके । ( कामदानं ) कामनापूर्वं दानं स्वेच्छात्याग इत्यर्थः । काम्यदानमिति तु युक्तः पाठः ॥ ३ ॥ ( वशक्रिया ) वशीकरणम् । वनुचनोच्यते ( ग० ) इत्यनेकार्थत्वात्संवननं, वनु याचने वा । मूलैरौषधिभिर्यद्वशीकरणं तत्, कर्मैव कार्मणं, तद्युक्तात्कर्मणोऽण् ( सू० ) । ( विधूननं ) धूञ् णिच्, धूञ्प्रीञोर्नुक् ( वा० ), ल्युट् । विधुवनमिति धू विधूनने, कुटादित्वाद्ङित् ( गाङ्कुटादिभ्योञ्णिन्ङित् ) । ( अवनं ) अव प्रीतौ ॥ ४ ॥ प्रहर्तुमुद्यतस्य हस्तधारणं रोधः, रक्ष्यस्य पृष्ठे हस्तस्थापनं वा । ( ष्ठीवनं ) ष्ठिविसिव्योर्दीर्घश्च ( चान्द्रसू० ) इति वा दीर्घः । सेवनं स्यूतिः, छ्वोःशूडिति ( सू० ) ऊठ् । ( विदरः ) दॄ विदारणे, ऋदोरप् ( सू० ) । ( स्फुटनं ) स्फुटः कुटादिः । भेदनं भिदा, षिद्भिदादिभ्योऽङ् ( सू० ) ॥ ५ ॥ अभिषञ्जनं पराभिमुख्येन वाच्ययोजनमभीषङ्गः, उपसर्गस्यघञीति ( सू० ) दीर्घः । वेदना, विद चेतने, णिच्, ण्यासश्रन्थेति ( सू० ) युच्, वेत्तेर्वा, घट्टिवन्दिविदिभ्यश्चोपसंख्यानात् ( वा० ) । ल्युटि तु वेदनम् । ( संमूर्च्छनं ) मुर्च्छा मोहसमुच्छ्राययोः । अभिव्यापनं सर्वतो वृद्धिः । याचनं याच्ञा, यजयाचेति ( सू० ) नङ् । ( अर्दना ) अर्द याचनेस्मात् स्वार्थेणिच्, युच् ॥ ६ ॥ ( वर्धनं ) वर्ध छेदनपूरणयोः । ( सभाजनं )

वर्धनं छेदनेऽथ द्वे आनन्दनसभाजने ।
आप्रच्छनमथाम्नायः संप्रदायः क्षये क्षिया ॥ ७ ॥
ग्रहे ग्राहो वशः कान्तौ रक्षणस्त्राणे रणः क्वणे ।
व्यधो वेधे पचा पाके हवो हूतौ वरो वृतौ ॥ ८ ॥
ओषः प्लोषे नयो नाये ज्यानिर्जीर्णौ भ्रमो भ्रमौ ।
स्फातिर्वृद्धौ प्रथा ख्यातौ स्पृष्टिः पृक्तौ स्नवः स्रवे ॥ ९ ॥
एधा समृद्धौ स्फुरणे स्फुरणा प्रमितौ प्रमा ।
प्रसूतिः प्रसवे श्च्योते प्राघारः क्लमथः क्लमे ॥ १० ॥
उत्कर्षोऽतिशये संधिः श्लेषे विषय आश्र( श )ये ।
क्षिपायां क्षेपणं गीर्णिर्गिरौ गूरणमुद्यमे ॥ ११ ॥
उन्नाय उन्नये श्रायः श्रयणे जप( य )ने जपः( यः ) ।
निगादो निगदे मादो मद उद्वेग उद्भ्रमे ॥ १२ ॥

---

सभाज प्रीतिदर्शने । ( आप्रच्छनं ) आङ्पूर्वः प्रच्छिरालिङ्गनादिनानन्दनार्थः, यथा— आपृच्छस्व प्रियसखममुम् ( मेघ० ) । वृद्धपारंपर्येणाम्नानमाम्नायः । ( क्षयः ) क्षि क्षये, एरच् ( सू० ) । ( क्षिया ) क्षीष् हिंसायां, अङ् ॥ ७ ॥ ( ग्रहः ) ग्रहवृदिति ( सू० ) अप् । ( ग्राहः ) बाहुलकाद् घञ् ( भावे ) । ( वशः ) वशिरण्योरुपसंख्यानादप् ( वा० ) । ( रक्षणः ) यजयाचेति ( सू० ) भावे नङ् । रक्ष इत्यपपाठः, गुरोश्चहलः ( सू० ) इत्यकारः स्यात् । रणनं रणः, अप् । ( क्वणः ) क्वणोवीणायांच ( सू० ) । व्यधनं व्यधः, व्यधजपोरनुपसर्गे ( सू० ) इत्यप् । वेधनं वेधः, विध विधाने । पचनं पचा, षित्वादङ् ( षिद्भिदादिभ्योङ् ) । पक्तिर्बाहुलकात् । ( हवः ) ह्वःसंप्रसारणंच ( सू० ) इत्यप् । वरणं वरः, व्रियते वा, यत्कात्यः— तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः, वृञ् वरणे, वृङ् संभक्तौ च ॥ ८ ॥ ( ओषः ) उष दाहे । ( नायः ) श्रिणीभुवोनुपसर्गे ( सू० ) इति घञ् । ( ज्यानिः ) ग्लाम्लाज्याहाभ्योनिः (वा०)। जरणं जीर्णिः, ऋल्वादिभ्यःक्तिन्निष्ठावत् (वा०) । (भ्रमः) घञ् । भ्रमणं भ्रमिः, इक्कृष्यादिभ्यः (वा०)। ( स्फातिः ) स्फायी वृद्धौ । प्रथनं प्रथा, घटादयःषितः ( ग० ) इत्यङ् । पृक्तिः, पृची संपर्के । ( स्नवः )ष्णु प्रस्रवणे ॥ ९ ॥ विधा समृद्धावित्येके पेठुः । एधनमेधा, षिद्भिदादिभ्योङ् (सू०) । स्फुरणं स्फुरणा, स्फुर चलने कुटादिः । ( प्रमितिः ) माङ् माने, क्तिन्, यतिस्यतीति ( सू० ) इत्वम् । ( प्रमा ) आतश्चोपसर्गे ( सू० ) इत्यङ् । ( प्रसूतिः, इ० ) षूङ् प्राणिगर्भविमोचने, षू प्रसवे वा । ( श्च्योतः ) श्च्युतिर् क्षरणे । ( प्राघारः ) घृ क्षरणदीप्त्योः । ( क्लमथः ) औणादिकोप्यथच्, क्लमथुरित्यपपाठः ॥ १० ॥ ऊर्ध्वं कर्षणं ( उत्कर्षः ) । ( संधिः ) उपसर्गेघोःकिः ( सू० ) । विषीयतेऽत्र विषयः, विषिणोति वा, आश्रयस्थानम् । ( क्षिपा ) भिदादित्वादङ् ( षिद्भिदादीति ) । गिरणं गिरिः, इक्कृष्यादिभ्यः ( सू० ) । कुटादित्वाद् गुरणमाहुः, चुरादेर्गोरणमपि । अडउद्यमे ( ग० ) इति निपातनादुद्यमः ॥ ११ ॥ ऊर्ध्वं नयनमनुसरणं वोन्नायः, अवोदोर्नियः ( सू० ) इति घञ् । ( उन्नयः ) बाहुलकाद्— एरच् ( सू० ) ( श्रायः ) श्रिणीभुवोनुपसर्गे ( सू० ) इति घञ् । ( जपः ) व्यधजपोरनुपसर्गे ( सू० ) इत्यप् । ( निगाद इ० ) गद व्यक्तकथने, नौगदनदेति ( सू० ) वा घञ् । ( मदः ) मदोनुपसर्गे ( सू० ) इत्यप् । ( मादः ) सधमादस्थयोश्छन्दसि ( सू० ) इति निपातनाद् घञ् । ( उद्वेगः ) ओविजी भयचलनयोः, घञ् ॥ १२ ॥ ( परिमलः ) संज्ञापूर्वकत्वाद् वृध्यभावः । अभ्यु-

विमर्दनं परिमलोऽभ्युपपत्तिरनुग्रहः ।
निग्रहस्तु विरोधः स्यादभियोगस्त्वभिग्रहः ॥ १३ ॥
मुष्टिबन्धस्तु संग्राहो डिम्बे डमरविप्लवौ ।
बन्धनं प्रसितिः स्वारः( तिश्चारः ) स्पर्शः स्प्रष्टोपतप्तरि ॥ १४ ॥
विकारो विप्रकारः स्यादाकारस्त्विङ्ग इङ्गितम् ।
परिणामो विकारे द्वे समे विकृतिविक्रिये ॥ १५ ॥
अपहारस्त्वपचयः समाहारः समुच्चयः ।
प्रत्याहार उपादानं विहारस्तु परिक्रमः ॥ १६ ॥
अभिहारोऽभिग्रहणं निर्हारोऽभ्यवकर्षणम् ।
अनुहारोऽनुकारः स्यादर्थस्यापगमे व्ययः ॥ १७ ॥
प्रवाहस्तु प्रवृत्तिः स्यात्प्रवहो गमनं बहिः ।
वियामो वियमो यामो यमः संयामसंयमौ ॥ १८ ॥
हिंसाकर्माभिचारः स्याज्जागर्या जागरा द्वयोः ।
विघ्नोऽन्तरायः प्रत्यूहः स्यादुपघ्नोऽन्तिकाश्रये ॥ १९ ॥

---

पपत्त्यादिर्दानादिभिः स्वीकारे वर्तते । ( अनुग्रहः ) ग्रहेः– ग्रहवृदृ– ( सू० ) इत्यप् । नियमनाय ग्रहणं निग्रहः, निरोध इति पाठ्यम्, विग्रहो विरोध इति वा । आभिमुख्येनोद्यमः ( अभियोगः ) ॥१३॥ समिमुष्टौ ( सू० ) इति घञ्, संग्राहो मल्लस्य । डयनं विद्रवो डिम्बः, डीङ् गतौ, अशस्त्रकलहः, लुण्ठ्यादिरित्येके । डयनं डमरः । ( प्रसितिः ) षिञ् बन्धने । स्वृ शब्दोपतापयोः, स्वरति स्वारः । ( स्पर्शः ) पदरुज– ( सू० ) इत्यत्र स्पृशउपतापएव ( वा० ) इति कर्तरि घञ् । ( स्प्रष्टा ) वाऽसरूपात्तृच् ( वासरूपोऽस्त्रियाम् ) ॥ १४ ॥ निकृष्टं करणं निकारः खलीकारः । ( इङ्गः, इङ्गितं ) भावे घञ्क्तौ । इङ्गिताकाराभ्यां भावज्ञानमित्यादौ गोबलीवर्दन्यायेन– इङ्गितं चेष्टितम् । आकृतिग्रहणमाकारो मुखरागादिरिति **कौटिल्यो** व्याख्यत्, अयं त्वनयोराशयज्ञापकत्वादैक्यं मन्यते । विकारेऽर्थे त्रयो वर्तन्ते, द्वयोस्तु साम्यं स्त्रीत्वात् ॥ १५ ॥ ( अपहारः ) हानिरित्यर्थः । उपसर्गवैचित्र्यादर्थभेदः । ( समाहारः ) अनेकस्यैकत्राध्यावापः । ( प्रत्याहारः ) एकत्र ढौकनं– अन्नादिकविषयेभ्य इन्द्रियाणामाकर्षणं च । ( विहारः ) क्रीडासंचारः ॥ १६ ॥ ( अभिहारः ) आभिमुख्येन हरणम् । ( निर्हारः ) युक्त्या निःसाराकर्षणम् । अनु सादृश्ये । ( व्ययः ) व्यय वित्तसमुत्सर्गे ॥ १७ ॥ प्रारम्भो वहनस्य प्रवाहः कार्यारम्भः, अविच्छिन्ना जलादेः प्रवृत्तिर्वा । ( प्रवहः ) गोचरसंचरेति ( सू० ) साधुः, बाहुलकादज्वा । द्वौ द्वौ भिन्नार्थौ, विविधं यमनं वियामः, उपरतिमात्रं यमः, संयमनं संयमः, यमःसमुपनिविषुचेति ( सू० ) वा घञ् ॥ १८ ॥ अभिभवितुं चरणं मारणोच्चाटनादिकृत्यासाधनम् । ( जागर्या ) इच्छा ( सू० ) इत्यत्र जागर्तेरकारोवावक्तव्यः (वा०) पक्षे क्यप्, जाग्रोविचिण्णल्ङित्सु ( सू० ) इति गुणः, घञि तु जागरः । विहन्त्यस्मिन् विघ्नः, घञर्थेकविधानम् ( वा० ), विहन्यते कार्यमनेन वा । अन्तरायनं कार्यव्यवधानमन्तरायः । प्रतीपमूहनं प्रत्यूहः । उप समीपे हन्यते गम्यतेस्मिन्नुपघ्नः, उपघ्न आश्रये ( सू० ) इति साधुः ॥ १९ ॥ निःपूर्वो विशिरुपभोगार्थे । सर्वत्रात्र प्रत्यये तन्त्रम् , अतो निर्वेशनमुपभुक्तिः, उपसर्पणं, परिकर इत्याद्युन्नेयम् । समन्तात्सर्पणं परिसर्पः । विघटि[ हि ]ता धूः कार्यभारोऽत्र विधुरमिति **प्रतीच्याः**, विरुद्धं धान( ? )मित्युदीच्याः । ( अभिप्रायः ) प्रीङ् कान्तौ ।

निर्वेश उपभोगः स्यात्परिसर्पः परिक्रिया ।
विधुरं तु प्रविश्लेषेऽभिप्रायश्छन्द आशयः ॥ २० ॥
संक्षेपणं समसनं पर्यवस्था विरोधनम् ।
परिसर्या परीसारः स्यादास्या त्वासना स्थितिः ॥ २१ ॥
विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः ।
संवाहनं मर्दनं स्याद्विनाशः स्याददर्शनम् ॥ २२ ॥
संस्तवः स्यात्परिचयः प्रसरस्तु विसर्पणम् ।
नीवाकस्तु प्रयामः स्यात्सन्निधिः सन्निकर्षणम् ॥ २३ ॥
लवोऽभिलावो लवने निष्पावः पवने पवः ।
प्रस्तावः स्यादवसरस्त्रसरः सूत्रवेष्टनम् ॥ २४ ॥
प्रजनः स्यादुपसरः प्रसरः प्रणयः ( प्रश्रयप्रणयौ ) समौ ।
धीशक्तिर्निष्क्रमोऽस्त्री तु संक्रामो दुर्गसंचरः ॥ २५ ॥
प्रत्युत्क्रमः प्रयोगा( युद्धा )र्थः प्रक्रमः स्यादुपक्रमः ।
स्यादभ्यादानमुद्घात आरम्भः संभ्रमस्त्वरा ॥ २६ ॥
प्रतिबन्धः प्रतिष्टम्भोऽवनायस्तु निया( पा )तनम् ।
उपलम्भस्त्वनुभवः समालम्भो विलेपनम् ॥ २७ ॥

---

छन्दयति– आह्लादयते छन्दः, अच् । आशेरतेऽस्मिन् भावा इत्याशयः ॥ २० ॥ संगृहीतो [ वि ]क्षेपो विप्रकीर्णता संक्षेपणम् । एवं समसनम् । पर्यवस्थानं ( पर्यवस्था ) । पर्यन्ते समन्ताद्वा सरणं परिसर्या, परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानात् ( वा० ) क्यप् । ( आस्या ) वासरूपत्वात् ( वाऽसरूपोऽस्त्रियाम् )ण्यत् । ( आसना ) ण्यासश्रन्थेति ( सू० ) युच् ॥ २१ ॥ ( विस्तारः ) प्रथनेवावशब्दे ( सू० ) इति घञ् । विस्तीर्णं ग्रहणं विग्रहः । विविधमसनं व्यासः । ( विस्तरः ) घञः शब्दे निषेधाद् ( अप् ) । संवाहनं स्पर्शसुखमिति तु लक्ष्यम् ॥ २२ ॥ संगतं स्तवनं संस्तवः, धातोरनेकार्थस्य चोपसर्गेणषोर्थो द्योत्यते । समन्ताच्चयनं परिचयः । प्रकर्षेण निकटे सरणं प्रसरः, बाहुलकादप् । नियत वचनं नीवाकः, तुलाकृतं न्यूनाधिक्यं क्रयादरो वा । संनिपूर्वो धाञ् नैकट्यार्थे ॥ २३ ॥ ( अभिलावः ) निरभ्योःपूल्वोः ( सू० ) इति घञ् । ( निष्पावः ) धान्यादर्निर्बुसीकरणम् । प्रसङ्गेन स्तवनं प्रस्तावः, प्रद्रस्तुस्रुवः ( सू० ) इति घञ् । त्रस्यति चलति त्रसरः, सूत्रं वेश्यते यत्र वानार्थम् ॥ २४ ॥ प्रजायतेऽस्मिन् प्रजनः पशूनां गर्भग्रहणकालः, जनिवध्योश्च ( सू० ) इति वृध्द्यभावः । ( उपसरः ) प्रजने सर्तेः ( सू० ) इत्यप् । ( प्रसरः ) प्रीत्या प्रार्थनम् । धीशक्तिः प्रज्ञासामर्थ्यमष्टधा । संक्रामन्त्यनेन संक्रामः, संक्रम इत्येके, सेत्वादिः, यत्कौटिल्यः– मुखसमः संक्रमः । दुर्गं संचरन्त्यनेन, गोचरसंचरेति ( सू० ) साधुः, घञि तु संचारः ॥२५॥ प्रयुक्तिः कर्मारम्भे प्रयोगः, प्रकृष्टो युद्धार्थो (योगः) ( प्रत्युत्क्रमः ), [ प्रकृष्टार्थे प्रत्युदौ प्रार्थौ ], प्रत्युत्क्रान्तिर्वा । ( प्रक्रम इ० ) प्रोपौ– आरम्भार्थे । आभिमुख्येनादानमभ्यादानम् । उद्धननमुद्घातः, उपोद्घातोऽपि, यदाहुः– चिन्तां प्रकृतसिध्द्यर्थामुपोद्घातं प्रचक्षते । ( त्वरा ) त्वरेर्घटादित्वात् षित्त्वादङ् ( षिद्भिदादीति ) ॥ २६ ॥ प्रतिष्टम्भनं रोधः, प्रतेस्तम्भः ( सू० ) इति षत्वम् । अवनयनमवनायः खलीकारः, अवोदोर्नियः ( सू० ) इति घञ् । नियातनं, यत निकारोपस्कारयोः । उपलब्धिरुपलम्भः, उपसर्गात्खल्घञोः ( सू० ) इति नुम् । समाङ्पूर्वो लभिश्चर्चार्थे ॥ २७ ॥ विरहो विसंवादो वा । ( विलम्भः ) दानार्थे । ( विश्रावः ) वौक्षुश्रुवः ( सू० )

विप्रलम्भो विप्रयोगो विलम्भस्त्वतिसर्जनम् ।
विश्रावस्तु प्रविख्यातिरवेक्षा प्रतिजागरः ॥ २८ ॥
निपाठनिपठौ पाठे तेमस्तेमौ समुन्दने ।
आदीनवास्रवौ क्लेशे मेलके सङ्गसंगमौ ॥ २९ ॥
संवीक्षणं विचयनं मार्गणं मृगणा मृगः ।
परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम् ॥ ३० ॥
निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् ।
प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ॥ ३१ ॥
उपशायो विशायश्च पर्यायशयनार्थकौ ।
अर्तनं च ऋतीया च हृणीया च घृणार्थके ॥ ३२ ॥
स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये ।
पर्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्ययः ॥ ३३ ॥
प्रेषणं यत्समाहूय तत्र स्यात्प्रतिशासनम् ।
स संस्तावः क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम् ॥ ३४ ॥
निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः ।
स्तम्बघ्नस्तु स्तम्बघनः स्तम्बो येन निहन्यते ॥ ३५ ॥
आविधो विध्यते येन तत्र विष्वक्समे निघः ।
उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ ॥ ३६ ॥

---

इति घञ्, प्रसिध्यर्थे । ( अवेक्षा ) अवधानार्थे ॥ २८ ॥ ( निपाठ इ० ) नौगदनदेति ( सू० ) वा घञ् । ( तेम इ० ) तिम ष्टिम ष्टीम आर्द्रीभावे । ( समुन्दनं ) उन्दी क्लेदने । ( आदीनवः ) दीङ् क्षये । आस्रवन्तीन्द्रियाण्यनेनास्रवः, यज्जैनाः– जीवाजीवास्रवसंवरनिर्जरबन्धमुक्तयः सप्त पदार्थाः । मेलनं मेलः, मिलिर्लौकिकः । सञ्जनं सङ्गः, घञ् । संगतिः संगमः, ग्रहवृदृनिश्चिगमश्च ( सू० ) इत्यप् ॥ २९ ॥ अन्वीक्षणमन्वेषणामित्येके पेठुः । ( मार्गणं ) मार्ग अन्वेषणे, ल्युट् । ( मृगणा ) मृग अन्वेषणे, युच्, अदन्तत्वाद् गुणाभावः । मृगः, एरच् ( सू० ), एरजण्यन्तानाम् ( ज्ञा० ) इत्यस्य प्रायिकत्वात् । गवेषणं च । ( परिरम्भः ) रभेरशब्लिटोः ( सू० ) इत्याचि नुम्, आलिङ्गनार्थे ॥ ३० ॥ ( प्रत्याख्यानं, इ० ) निराकरणार्थे ॥ ३१ ॥ ( उपशायः ) व्युपयोःशेतेःपर्याये ( सू० ) इति घञ् । पर्यायः क्रमः, ( यथा )– तवाद्यराजोपशायः । ऋतिः सौत्रो घृणार्थः, ऋतेरीयङ् ( सू० ) । हृणीङ् कण्ड्वादिः, यक्, अप्रत्ययात् (सू०) ॥३२॥ व्यतिक्रम्यासनं व्यत्यासः । विपरीतासनं विपर्यासः, अस्यतेर्घञ् । विपरीतायनमितीणोऽचि विपर्ययः, परावनुपात्ययइणः ( सू० ) इत्यपि विपर्ययः । परित्यज्यायनं पर्ययः, परावनुपात्ययइणः ( सू० ) इति– उपात्यये क्रमोल्लङ्घने घञ् नास्ति । अतिक्रम्य पतनं यथा– कालातिपातः । उपपन्नस्यात्ययोऽतिक्रमणमुपात्ययः ॥ ३३ ॥ आकारणं कृत्वा यद् भृत्यानां कार्येषु विसर्जनं तत्प्रतिशासनम् । समं स्तूयतेऽस्मिंश्छन्दोगैः संस्तावः, यज्ञेसमिस्तुवः ( सू० ) इति घञ् ॥३४॥ उद्धन्यतेऽस्मिन्नुद्घनः, उद्घनोऽत्याधानम् ( सू० ) इति साधुः । ( स्तम्बघ्नः ) स्तम्बेकच ( सू० ) इति कः, स्तम्बस्तृणं विहच्च । ( स्तम्बघनः ) अप् च ॥ ३५ ॥ ( आविधः ) व्यधेः, घञर्थेकविधानम् ( वा० ) । समन्तात्समः, समस्तुल्यारोहपरिणाहः । नियतं हन्यते निघः, निघोनिमितम् ( सू० ) इति साधुः । ( उत्कारः ) कृधान्ये ( सू० ) इति घञ्, उरुयोरित्यनुवृत्तेः ( उरुयोर्ग्रः ) । ऊर्ध्वं क्षेपो

निगारोद्गारविक्षावोद्ग्राहास्तु गरणादिषु ॥ ३७ ॥
आरत्यवरतिविरतय उपरामेऽथास्त्रियां तु निष्ठेवः ।
निष्ठ्यूतिर्निष्ठेवनं निष्ठीवनमित्यभिन्नानि ॥ ३८ ॥
जवने जूतिः सातिस्त्ववसाने स्यादथ ज्वरे जूर्तिः ।
उदजस्तु पशुप्रेरणमकरणिरित्यादयः शापे ॥ ३९ ॥
गोत्रान्तेभ्यस्तस्य वृन्दमित्यौपगवकादिकम् ।
आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम् ॥ ४० ॥
माणवानां तु माणव्यं सहायानां सहायता ।
हल्या हलानां ब्राह्मण्यवाडव्ये तु द्विजन्मनाम् ॥ ४१ ॥
द्वे पर्शुकानां पृष्ठानां पार्श्वं पृष्ठ्यमनुक्रमात् ।
खलानां खलिनी खल्याप्यथ मानुष्यकं नृणाम् ॥ ४२ ॥
ग्रामता जनता धूम्या पाश्या गल्या पृथक् पृथक् ।
अपि साहस्रकारीषवा( चा )र्मणाथर्वणादिकम् ॥ ४३ ॥

इति संकीर्णवर्गः । २ ।

---

राशीकरणं वा ॥ ३६ ॥ ( निगार इ० ) निगरणमुद्गरणं च, उन्योर्ग्रः ( सू० ) इति घञ् । विक्षावः काशे[ से ], वौक्षुश्रुवः ( सू० ) इति घञ् ।( उद्ग्राहः ) उद्ग्रहणं, उदिग्रहः ( सू० ) इति घञ् ॥ ३७॥ ( उपरामः ) निवृत्त्यर्थे, नोदात्तोपदेशस्यमान्तस्यानाचमेः ( सू० ) इति वृद्धिनिषेधो नास्ति– अनुदात्तोपदेशत्वात्, यमउपरमे ( ग० ) इति निपातनात्तूपरमः । ( निष्ठीवनं ) ष्ठिविसिव्योर्ल्युटिवादीर्घः ( चान्द्रसू० ) ॥ ३८ ॥ ( जूतिः ) ऊतियूतिजूतिसातिहेतीति ( सू० ) साधुः, जवनमित्येके । ( सातिः ) षोन्तकर्मणि । ( जूर्तिः ) ज्वरत्वरस्रिव्यतीति ( सू० ) ऊत्वम् । ( उदजः ) समुदोरजः पशुषु ( सू० ) इत्यप्, अघञपोः ( सू० ) इति वी नास्ति । न करणं ( अकरणिः ), यथा– अकरणिरिह भूयादप्रशस्तस्य धातुः, तस्याजननिरेवास्तु ( शिशु० ), आक्रोशेनञ्यनिः ( सू० ) । तथा– आक्रोशेऽवन्योर्ग्रहः ( सू० ), निग्राहस्ते वृषल भूयात्, अवग्राहः ॥ ३९ ॥ औपगवानां समूहः ( औपगवकम् )। आदिशब्दाद् गार्ग्यकं, दाक्षकं, गोत्रोक्षोष्ट्रेति (सू०) वुञ् । तस्य वृन्दमित्येव– आ वर्गसमाप्तेः । अपूपानां समूह आपूपिकम्, अचित्तहस्तिधेनोष्ठक् (सू०) । आदिशब्दात्शाष्कुलिकादिः [वण्डकादिः] ॥४० ॥ ( माणव्यं ) ब्राह्मणमाणववाडवाद्यत् ( सू० ) । ( सहायता ) ग्रामजनबन्धुसहायेभ्यस्तल् ( सू० ) । ( हल्या ) पाशादिभ्योयः ( सू० ) ॥ ४१ ॥ पर्शूनां समूहः पार्श्वम्, पर्श्वाणसवक्तव्यः ( वा० ) । ( पृष्ठ्यं ) पृष्ठादुपसंख्यानात् ( वा० ) यत्, यज्ञविषयेऽदः स्मरन्ति । ( खलिनी, इ० ) खलगोरथात् ( सू० ), इनित्रकट्यचश्च ( सू० ) इति– इनिर्यश्च । मनुष्याणां समूहः ( मानुष्यकं ), गोत्रोक्षोष्ट्रेति ( सू० ) वुञ्, प्रकृत्याकेराजन्यमनुष्ययुवानः ( वा० ) इति यलोपाभावः ॥ ४२ ॥ ग्रामादिसमूह एते वर्तन्ते, ग्रामजनेति ( सू० ) तल्, पाशादिभ्यश्चेति ( सू० ) यः, भिक्षादिभ्योऽण् ( सू० ) । पृथक्पृथगिति परस्परं पर्यायत्वाभावः । वर्मिणां समूहो वार्मणम् । आदिशब्दाच्चार्मणाङ्गारादि । वाच्यं चात्र– परभागो गुणोत्कर्षः प्रतिपत्तिः प्रगल्भता । श्रन्थनं ग्रन्थनं गुम्फः संदर्भो रचना न ना ॥ प्रणिपातस्त्वनुनयः प्रणयः सान्त्वना न ना । दवथुः परितापः स्यादनुतापो विसूरितम् ॥ क्रीडा विनोदः खेदस्तु निर्वेदश्चावसन्नता । आप्लवः प्लवनं गर्धो धनायाकूतमाशयः ॥ अङ्कपाली परिष्वङ्ग आसारं त्वासरद्वलम् । विगानं वचनीयत्वमत्याधानमतिक्रमः ॥ ह्वानं त्यागस्तुला कक्षा क्रिया चेष्टा विकल्पनम् । वितर्कस्तर्क आलस्यं कौसीद्यमजिगीषुता ॥ ४३ ॥ इति संकीर्णवर्गः । २ ।

नानार्थाः केपि कान्तादिवर्गेष्वेवात्र कीर्तिताः ।
भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते ॥ १ ॥
आकाशे त्रिदिवे नाको लोकस्तु भुवने जने ।
पद्ये यशसि च श्लोकः शरे खड्गे च सायकः ॥ २ ॥
जम्बुकौ क्रोष्टुवरुणौ पृथुकौ चिपिटार्भकौ ।
आलोकौ दर्शन( नोद् )द्योतौ भेरी पटहमाण( न )कौ ॥ ३ ॥
उत्सङ्गचिह्नयोरङ्कः कलङ्कोङ्कापवादयोः ।
तक्षको नागवर्धक्योरर्कः स्फटिकसूर्ययोः ॥ ४ ॥
मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोम्बुनोः ।
स्यात्पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके ॥ ५ ॥
उलूके करिणः पुच्छमूलोपान्ते च पेचकः ।
कमण्डलौ च करकः सुगते च विनायकः ॥ ६ ॥
किष्कुर्हस्ते वितस्तौ च शूककीटे च वृश्चिकः ।
प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम् ॥ ७ ॥
स्याद्भूतिकं तु भूनिम्बे कट्फले भूस्तृणेपि च ।
ज्योत्स्निकायां च घोषे च कोशातक्यथ कट्फले ॥ ८ ॥
सिते च खदिरे सोमवल्कः स्यादथ सिह्लके ।
तिलकल्के च पिण्याको वाह्लिकं रामठेपि च ॥ ९ ॥

---

इह तावत्कान्तखान्तादिवर्गेष्वेव नानार्थाः कीर्तिताः । तन्मध्याच्च ये केपि येष्वर्थेषु भूरिप्रयोगाः प्रचुरव्यवहारास्ते तत्पर्यायेष्वपि कथिता इति पौनरुक्त्यादिदोषो नोद्भावनीयः । कान्ता इतो वक्ष्यन्ते । एवं खान्तगान्तादौ द्रष्टव्यम् ॥ १ ॥ व्योम्नि स्वर्गे च नाको वर्तते, नास्त्यकमश्रेयोत्रेति । लोक्यते लोकः, यथा— ब्रह्मलोकः, गतानुगतिको लोकः । पद्ये पदबद्धे वृत्ते, श्लोक्यते श्लोकः, श्लोकृ संघाते । स्यति— अन्तं करोति सायकः ॥ २ ॥ ( जम्बुकः ) जमु अदने । पर्थते वर्धते पृथुकः । चिपिट आर्द्रसस्याभ्योषः । ( आलोकः ) भावे करणे च घञ्, अवलोकनप्रकाशार्थौ । अन्तस्तन्त्रीका ढक्का भेरी । पटहो दुन्दुभिः, समन्तादणत्याणकः ॥ ३ ॥ अमन्त्यस्मिन्बालादय इत्यङ्कः, अङ्क्यतेनेन च, अकि, लक्षणे, यथा मृगाङ्कः । कल्यते क्षिप्यते कलङ्कः । अङ्कोत्र चिह्नम् । नागो नागविशेषः । वर्धकिस्तक्षा । अर्च्यतेर्कः, वृक्षेपि ॥ ४ ॥ आत्मन्यपि कः । कं सुखेपि च, कायति काम्यते कचति( ते ) वा । पुलं विस्तारमकति पुलाकः, यथा— पुलाका इव धान्येषु । संक्षेपे क्षिप्रे, यथा— पुलाककारी विपुलाशयः स्यात् । सिक्थे, यथा— स्थालीपुलाकन्यायेन ॥ ५ ॥ ( पेचकः ) पिचि गतौ पचिर्वा । ( करकः ) चशब्दाद्वर्षोपले दाडिमे च, कॄ विक्षेपे । ( विनायकः ) चशब्दाद् गणपतौ धर्मराजे च विनेतृत्वात् ॥ ६ ॥ कीयते ज्ञायतेनेन किष्कुः, चतुर्विंशत्यङ्गुलं द्वादशाङ्गुलं च मानम् । वृश्चतीति ( वृश्चिकः ) शूकवान्कीटः कण्टकी च कृमिः । चाद्राशौ मदन्तिकायां च ( वृश्चिकः ) । प्रतीपमेति प्रतीकः । एकदेशोंऽशः, यथा सप्रतीकः श्लोकः । द्वीपेपि ( प्रतीकः ) ॥ ७ ॥ एते वनौषधिवर्गे व्याख्याताः । तथा भूनिम्बः किराततिक्तकः । कट्फलः श्रीपर्णी । भूस्तृणं छत्त्रा । यवान्यां च ( भूतिकं ) । ज्योत्स्निका पटोलिका । घोषेपामार्गः ॥ ८ ॥ पीड्यते पिण्याकः । वाह्लीकमित्येके । अपिशब्दाद्वह्लीकदेशोत्पन्नेश्वादौ हिङ्गौ कुङ्कुमे च ॥ ९ ॥ कुशिकस्यापत्यं, कोशो वा प्रयोजनमस्य कौशिकः । ( आत-

महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः ।
रुक्तापशङ्कास्वातङ्कः स्वल्पेऽपि क्षुल्लकस्त्रिषु ॥ १० ॥
जैवातृकः शशाङ्केऽपि खुरेऽप्यश्वस्य वर्तकः ।
व्याघ्रेऽपि पुण्डरीको ना यवान्यामपि दीपकः ॥ ११ ॥
सा( शा )लावृकाः कपिक्रोष्टुश्वानः स्वर्णेऽपि गैरिकम् ।
पीडार्थेऽपि व्यलीकं स्यादलीकं त्वप्रियेऽनृते ॥ १२ ॥
शीलान्वयावनूके द्वे शल्के शकलवल्कले ।
साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले ॥ १३ ॥
दीनारेऽपि च निष्कोऽस्त्री कल्कोऽस्त्री शमलैनसोः ।
दम्भेऽप्यथ पिनाकोऽस्त्री शूलशंकरधन्वनोः ॥ १४ ॥
धेनुका तु करेण्वां च मेघजाले च कालिका ।
कारिकायातनाकृत्योः कर्णिका कर्णभूषणे ॥ १५ ॥
करिहस्ताङ्गुलौ पद्मबीजकोश्यां त्रिषूत्तरे ।
वृन्दारकौ रूपिमुख्यावेके मुख्यान्यकेवलाः ॥ १६ ॥

---

ङ्कः ) तकि कृच्छ्रजीवने । स्वल्पः खलः । अपिशब्दाद्दरिद्रे कनिष्ठेऽपि, क्षोदः क्षुत्– क्षुदं क्षुधं च लाति क्षुल्लकः ॥ १० ॥ जीवेरातृकन्वृद्धिश्च ( उ० ) । अपिशब्दादायुष्मति ( जैवातृकः ) । अपिशब्दात्पक्षिविशेषे ( वर्तकः ) । ( पुण्डरीकः ) पुणेः पुण्डेश्च रूपम् । अपिशब्दाद्दिग्गजे, सिताम्बुजसितच्छत्त्रयोस्तु नपुंसकं ( पुण्डरीकम् ) । यवान्यजमोदा । अपिशब्दाद्दीपेऽलंकारे जीरकेऽपि ( दीपकः ) ॥ ११ ॥ स्यन्ति साला आवृण्वन्ति ( सालावृकाः ) । धातुविशेषेऽपिशब्दात् ( गैरिकं ), गिरौ भवं गैरिकं, गिरिणा विग्रहो गिरिकात्प्रत्ययोऽव्यविकन्यायेन । अपिशब्ददप्रियाकार्यविलक्षाविपर्ययेषु ( व्यलीकं ) । कामजेऽपराधेऽपि, विशेषेणालीकं, व्यलीकमपि च व्यङ्गमिति च **माला** । अल्यते वार्यतेऽलीकं न लीयते वा, अलीकमहितं विदुरिति **कात्यः** । ( अलीकं ) ललाटेऽप्याहुः ॥ १२ ॥ अनूच्यति समवैत्यनूकं, उच समवाये, न्यङ्क्वादिः ( सू० ) । द्वे इत्येव, शलति पृथग्भवाति शल्कं खण्डः । वल्कलं वार्क्षी त्वक् । सहाष्टाभिर्वर्तते साष्टं, बहुव्रीहौसंख्येयेडजबहुगणात् ( सू० ) । सुवर्णं षोडश माषकाः । पलं सुवर्णाश्चत्वारः । दीनैरयंते दीनारं रूपकम् । निःशेषेण काम्यते निष्कः, आकर्षेऽपि ॥ १३ ॥ कल्यते कल्कं द्रवाधश्चूर्णं विनीयाख्यं, शमलं विष्ठेत्येके । एनः पापं, यथा– तपो न कल्कोऽध्ययनं न कल्कः । अपिनह्यते पिनाकं त्रिशूलं शांकरमेवात ॥ १४ ॥ चकारान्नवप्रसूतायां गवादौ ( धेनुका ), हस्तिन्यां तु नामैतत् । कृपाणीधेनुसमाभवानीषु च ( धेनुका ) । चात्सुवर्णादेर्दोषे सुरायां च, कालो वर्णः समयश्चास्त्यस्याः कालिका, कृष्णा वृद्धि[ ष्टि ]श्च । कृञ् हिंसायां, कारिका नारकी व्यथा । करणं कृतिश्च कारिका, पर्यायार्हणोत्पत्तिषु च ( सू० ) इति ण्वुच् । कारिका यातनावृत्त्योरित्येके, वृत्तिः श्लोकैर्विवरणं, कारिके वृत्ति यातने इति **दुर्गः** । कर्णस्यालंकारः कर्णिका, कर्णललाटात्कनलंकारे ( सू० ), द्वयोस्त्विवार्थे ( इवेप्रतिकृतौ, संज्ञायांच ) ॥ १५ ॥ खान्तेभ्यः प्राग्वाच्यलिङ्गाः । वृन्दमस्त्यस्येति ( वृन्दारकः ), शृङ्गवृन्दाभ्यामारकन् ( वा० ) । रूपमस्त्यस्य रूपी । देवोऽप्युपचारात् ( वृन्दारकः ) । संख्यायां च, **यत्कात्यः**– प्रधानान्यासहायेषु संख्यायां चैक इष्यते ॥ १६ ॥ दम्भः प्रयोजनमस्त्यस्य दाम्भिकः । यतः कुक्कुटी

स्याद्दाम्भिकः कौक्कुटिको यश्चादूरेरितेक्षणः।
ललाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः॥ १७॥
मयूखस्त्विट्करज्वालास्वलिवाणौ शिलीमुखौ।
शङ्खो निधौ ललाटास्थ्नि कम्बौ न स्त्रीन्द्रियेपि खम्॥ १८॥
घृणिज्वाले अपि शिखे शैलवृक्षौ नगावगौ।
आशुगौ वायुविशिखौ शरार्कविहगाः खगाः॥ १९॥
पतंगौ पक्षिसूर्यौ च पूगः क्रमुकवृन्दयोः।
पशवोपि मृगा वेगः प्रवाहजवयोरपि॥ २०॥
परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि।
गजेपि नागमातङ्गावपाङ्गस्तिलकेपि च॥ २१॥
सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु।
योगः संनहनोपायध्यानसंगतियुक्तिषु॥ २२॥

---

माया कुक्कुटीपादपातश्च, तौ पश्यति कौक्कुटिकः, संज्ञायांललाटकुक्कुट्यौ पश्यति (सू०) इति ठक्। ललाटं कोपप्रसादचिह्नं पश्यति, ललाटमेव वा दूरात्कार्येष्वलितः सन् पश्यति लालाटिकः। भालं ललाटं, भालदर्शीत्येके पेठुः॥ १७॥ भूभृन्नितम्बवलयचक्रेषु कटकोस्त्रियाम्। सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः॥ पाकौ पक्षिशिशू मध्यरत्ने नेतरि नायकः। पर्यङ्कः स्यात्परिकरेप्यादर्यामपि लुब्धकः॥ पेटकस्त्रिषु वृन्देपि गुरौ देश्ये च देशिकः। खेटकौ ग्रामफलकौ धीवरेपि च जालिकः॥ पुष्परेणौ च किञ्जल्कः शुल्कोस्त्री स्त्रीधनेपि च। स्यात्कल्लोलेप्युत्कलिका वार्धकं भाववृन्दयोः॥ करिण्यां चापि गणिका दारकौ बालभेदकौ। अन्धेप्यनेडमूकः स्याट्टङ्कौ दर्पाश्मदारणौ॥ मृद्भाण्डेप्युष्ट्रिका मन्थे खजको रसदर्वके॥ इतः खान्ताः। मिनोत्यन्धकारं मयूखः। त्विड् दीप्तिः। करो रश्मिः। शिली शल्यं मुखेस्य (शिलीमुखः)। शं खनति शाम्यति वा शंखः। शंखपद्मौ वैश्रवणनिधी। ललाटप्रान्तास्थि शंखः, कम्बौ तु, अर्धर्चादिः (सू०)। खन्यते खम्। अपिशब्दात्स्वर्व्योम्नोः (खं), शून्ये तूपचारात्॥१८॥ अपिशब्दाच्चूडाशाखाग्रमात्रे मयूरचूडा च, शिनोति शीयते वा शिखा। उपलेपेपि गोमुखम्। अथ गान्ताः। न गच्छति नगः, नगोऽप्राणिष्वन्यतरस्यां (सू०) इति नञ् प्रकृत्या। (आशुगः) विशिखो बाणः। खे गच्छन्ति खगाः॥ १९॥ पदद्गच्छति पतति वा पतंगः। चशब्दाच्छलभः (पतंगः), शालिविशेषश्च। पूयते पूगः। क्रमुकः पूगवृक्षः। अपिशब्दाद्धरिणो हस्तिविशेषो मृगशीर्षे मार्गणा च (मृगः)। वेति वेगः, विजतेनेन वा, घञ्। प्रवाहे यथा– नदी वेगेन शुध्यति (चाणक्यः)। जवे यथा– वायुवेगः। अपिशब्दान्मूत्रादिप्रवृत्तौ यथा– वेगान्न धा[ वा ]रयेद्वातविण्मूत्रक्षवतृट्क्षुधाः। मलोत्सर्गे प्रभावे शृङ्गारभावे च यथा– चण्डवेगो मन्दवेगः॥ २०॥ परागच्छति परागः। स्नात्यनेन स्नानीयं चूर्णम्। रजो धूलिः (परागः)। अपिशब्दात्काद्रवेये सीसे नागकेसरे नागदन्त्यां गजाह्वये जलदे रङ्गे च, न– अगो नागः। चण्डालेपि मातङ्गः। मा तङ्गति, मतङ्गापत्यं वा। अपगतोऽङ्गादपाङ्गः, अपिशब्दान्नेत्रान्ते॥ २१॥ स्वभावे यथा– निसर्गः। निर्मोक्षे त्यागे (यथा)– विसर्गः, मोक्षाभावे वा, सर्गः संसारः। निश्चये यथा– गृहाण शस्त्रं यदि सर्ग एष ते (रघु०)। अधीयतेऽध्यायोत्र महाकाव्यादौ विश्रान्तिस्थानं, सर्गबन्धो महाकाव्यम् (काव्यादर्शे)। सृष्टौ यथा– सर्गश्च प्रतिसर्गश्चेति (विष्णुपु०)। उत्साहेपि सर्गः। (योगः) संनहनं कवचादि, उपायः सामादिः, संनहनाङ्गं कवचादिरित्येके। ध्यानं चित्तवृत्तिनिरोधः, संगतिः श्लेषः (योगः)। युक्तिर्योजनम्। अपूर्वार्थप्राप्तिर्भेषजं विश्रम्भघाती चरश्च योगः॥ २२॥ भुजेरभ्यवहारार्थात्कौटिल्यार्थाच्च घञ्। पण्यस्त्रीणां भृतिर्भाटिः

भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ।
चातके हरिणे पुंसि सारंगः शबले त्रिषु ॥ २३ ॥
कपौ च प्लवगः शापे त्वभिषङ्गः पराभवे ।
यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु ॥ २४ ॥
स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले ।
लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर्लिङ्गं चिह्नशेफसोः ॥ २५ ॥
शृङ्गं प्राधान्यसान्वोश्च वराङ्गं मूर्धगुह्ययोः ।
भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ॥ २६ ॥
परिघः परिघातेऽस्त्रेप्योघो वृन्देम्भसां रये ।
मूल्ये पूजाविधावर्घोऽहोदुःखव्यसनेष्वघम् ॥ २७ ॥
त्रिष्विष्टेऽपि( ल्पे ) लघुः काचाः शिक्यमृद्भेददृग्रुजः ।
विपर्यासे विस्तरे च प्रपञ्चः पावके शुचिः ॥ २८ ॥

---

( भोगः ) । आदिशब्दात्कर्मकृद्वेतनं, यच्छाश्वतः– पालनेभ्यवहारे च निर्वेशे च पणे स्त्रियाः । भोगः सुखे भुजंगानां शरीरफणयोरपि ॥ चातकस्तोककाख्यः पक्षी, सरति सारं गच्छति सहारङ्गेण वा वर्तते सारङ्गः । **गौडः** स( श )बलः सारङ्ग इति व्याख्यत् ॥ २३ ॥ चशब्दाद्भेके पक्षिभेदे च ( प्लवगः ) । शापो मिथ्याभिशंसनमनिष्टावधारणं च, आहुश्च– अभिषङ्गाख्याः शापाक्रोशपराभवाः । ( अभिषङ्गः ) कर्मणि भावे च घञ् । यानं रथशकटादि । आदिशब्दाद्धलम् । तदङ्गं दान्तादियोजनकाष्ठं, पुंसि यथा– अनोयुगः शकटयुगः । आदिशब्दात्त्रेतादि । हस्तचतुष्कं च यथा– विचरेद्युगमात्रदृक् ॥ २४ ॥ इषुर्बाणः । वागादौ स्त्रीलिङ्गो गौः स्वर्गादौ पुंलिङ्गः पशौ तूभयं, यथा– इयं गौर्धेनुः, अयं गौर्दान्तः । इत्थं जलाक्षणोः क्लीबे– इत्येके । लीनं गमयति लिङ्गति चित्रीकरोति वा लिङ्गम् । चिह्नं धूमादिः शेफः साधनम् ॥ २५ ॥ शीर्यते शृणाति च शृङ्गम् । प्रधानमेव प्राधान्यं, यथा– शृङ्गग्राहिकया । सानुरत्र गिरिशिखरं, **कात्यस्तु**– शृङ्गं शिखरं सान्वपीत्याह । चशब्दाद्विषाणं क्रीडाम्बुपात्रं च ( शृङ्गम् ) । गुह्यं योनिः । भज्यते सेव्यते मर्द्य[ द्य ]ते च भगं, खलोभगःपदंचेति ( वा० ) वक्तव्याद् घः । कामोत्र योनिः । सूर्यविशेषो भगः पुंसि मित्रवत् । धर्मो मोक्षश्च भगः, यदाहुः– ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्याथ मोक्षस्य षण्णां भग इति स्मृतः ॥ २६ ॥ अथ घान्ताः । परिहननं परिहन्यतेनेन वा परिघः, परौघः ( सू० ) इत्यप्प्रत्यये हन्तेर्घत्वं, करणेऽयोविद्रुषु ( सू० ) इत्यतः करणानुवृत्त्या भावादौ नेच्छन्ति । अस्यतेस्त्रमायुधविशेषः । अपिशब्दादर्गलेपि ( परिघः ) । उह्यते वहति वा– ओघः, न्यङ्क्वादौ ( सू० ) साधुः । मूल्यं पणः, यथा– अनर्घा गुणाः, अर्घिर्धात्वन्तरं, पूजार्थे रवर्हे न्यङ्क्वादित्वात् ( सू० ) कुत्वम् ॥ २७ ॥ ( लघुः ) इष्टे यथा– दर्शनेन लघुना यथा तयोः प्रीतिमापुरुभयोस्तपस्विनः ( रघु० ) । अपिशब्दात्क्षिप्राल्पागुरुनिःसारेषु ( लघुः ) । निदाघस्त्वातपे स्वेदे ग्रीष्मे चैव ( प्रकीर्तितः ) । अथ चान्ताः । कमञ्चति कचति वा काचः । शिक्यं रज्जुयन्त्रम् । मृद्भेदो धातुविशेषः, यथा– काचः काचो मणिर्मणिः ( वृद्धचाणक्यः ) । दृग्रोगः काचाख्यः । विपर्यासो माया । विपर्यासे च विस्तारे– इति पाठो युक्तः, प्रथनेवावशब्दे ( सू० ) इत्यपो निषेधात् । शुचिः शोधकोग्निविशेषः , यच्छ्रुतिः– अग्नये शुचये च द्वितीयायाम् ॥ २८ ॥ मासोत्राषाढः, यच्छ्रुतिः–

मास्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु ।
अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम् ॥ २९ ॥
ककिताक्ष्यौवहिभुजौ दन्तविप्राण्डजा द्विजाः ।
अजा विष्णुहरच्छागा गोष्ठाध्वनिवहा व्रजाः ॥ ३० ॥
धर्मराजौ जिनयमौ कुञ्जो दन्तेपि न स्त्रियाम् ।
वलजे क्षेत्रपूर्द्वारे वलजा वल्गुदर्शना । ३१ ॥
समे क्ष्मांशे रणेप्याजिः प्रजा स्यात्संततौ जने ।
अब्जौ शंखशशाङ्कौ च स्वके नित्ये निजं त्रिषु ॥ ३२ ॥
पुंस्यात्मनि प्रधाने( वीणे ) च क्षेत्रज्ञो वाच्यलिङ्गकः ।
संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना ॥ ३३ ॥
काकेभगण्डौ करटौ गजगण्डकटी कटौ ।
शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे ॥ ३४ ॥
देवशिल्पिन्यपि त्वष्टा दिष्टं दैवेपि न द्वयोः ।
रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः ॥ ३५ ॥
रिष्टं क्षेमाशुभाभावेष्वरिष्टे तु शुभाशुभे ।
मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ॥ ३६ ॥

---

शुक्रश्च शुचिश्च ग्रैष्मिकावृतू । उपधा धर्मार्थकामभयमुखेन सचिवपरीक्षा, तामतिक्रान्तोत्युपधः, यत्कौटिल्यः– उपधाभिः शौचाशौचपरिज्ञानममात्यानाम् । ( रुचिः ) अभिष्वङ्गो रागः, गभस्तिर्दीप्तिः ॥ २९ ॥ अथ जान्ताः । मयूरगरुडौ ( अहिभुजौ ) । विप्रः क्षत्रियवैश्योपलक्षणम्, यत्स्मृतिः– विप्रक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः । अण्डजाः पक्षिसर्पाद्याः । न जायते अजति वा– अजः । गावस्तिष्ठन्त्यस्मिन् गोष्ठम् । व्रजन्त्यस्मिन् व्रजोऽध्वा, गोचरसंचरेति ( सू० ) साधुः । निवहः समूहः, यथा– द्विजव्रजः ॥ ३० ॥ ( धर्मराजौ ) समवर्तित्वात् । दन्ते हस्तिदन्ते, यथा– कुञ्जरः । अपिशब्दाल्लतादिपिहितोदरे ( कुञ्जः ) । वलन्तेनेन वले जायते वा वलजं क्षेत्रं पुरद्वारं च । वल्गुदर्शने भद्राकृतौ त्रिलिङ्गम् ॥३१॥ आनिम्नोन्नतो भूभागो रणश्चाजिः, अज्यतेत्राजिः । अपिशब्दात्क्षणेपि, यद्दुर्गः– युद्धभागक्षणेप्याजिः । संततौ यथा– शोच्यं मिथुनमप्रजम् ( चाणक्यश० ) । जनो लोको यथा– प्रजापतिः । चकारात्पद्मम् ( अब्जम् ) । नियतं जायते निजम् । अग्रजौ विप्रपूर्वजौ– इति दुर्गः ॥ ३२ ॥ अथ ज्ञान्ताः । क्षेत्रं शरीरं पात्रं जानाति क्षेत्रज्ञः, आत्मा मुख्यश्च । संज्ञानं संज्ञा संज्ञायतेनया च । आद्यशब्दादक्षिनिकोचनाद्यैः, अर्थः प्रयोजनम् । दोषज्ञौ वैद्यविद्वांसौ ज्ञो विद्वान् सोमजोपि च ॥ ३३ ॥ इतष्टान्ताः । केति रटति करो( किर )ति मदं च करटः । कटति वर्षति मदं कटः । श्मशानं कलिञ्जोपि, कटत्यावृणोतीति, यथा– वर्जयेत्कटधूमं तु, कटे– आस्ते । शिपिश्चर्म विष्टं दोषव्याप्तमस्येति, दुश्चर्मा षण्ढः, आहुश्च– शिपिविष्टः शिवः शौरिर्दुश्चर्मा खलतिस्तथा ॥ ३४ ॥ देवशिल्पी विश्वकर्मा । अपिशब्दात्सूर्ये तक्षिण च त्वष्टा, त्वक्षति त्वक्ष्यते वा । स्वमणेस्तेजःशातनात्त्वष्टा । दिशति शुभाशुभं फलं दिष्टं, दैवं पुराकृतं कर्म । अपिशब्दात्काले ( दिष्टः ) । कटत्यावृणोति कटुः, दुर्गन्धे चाप्रिये चोपचारात् ॥ ३५ ॥ रिष हिंसायां, नास्ति रिष्टमशुभं क्षेमं वा– अरिष्टं, आहुश्च– तक्रे मरणचिह्ने चारिष्टं वृक्षे च फेनिले । सुरायां च शुभेपि स्यात्काके निम्बे च पुंस्ययम् ॥ माया– इन्द्रजालं, निश्चले यथा– कूटस्थोक्षर उच्यते ( भगवद्गीता ), निश्चलं व्योमेति गौडः । यन्त्रं मृगादिवधार्थं छलं यथा– छित्त्वा पाशमपास्य कूटरचनाम्

अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ।
सूक्ष्मैलायां त्रुटिः स्त्री स्यात्कालेल्पे संशयेपि सा ॥ ३७ ॥
अत्त्र्युत्कर्षाश्रयः कोट्यो मूले लग्नकचे जटा ।
व्युष्टिः फले समृद्धौ च दृष्टिर्ज्ञानेक्षिण दर्शने ॥ ३८ ॥
इष्टिर्यागेच्छयोः सृष्टं( ष्टिः ) निश्चिते बहुनि त्रिषु ।
कष्टं तु कृच्छ्रगहने दक्षामन्दागदेषु तु ।
पटुर्द्वौ वाच्यलिङ्गौ च नीलकण्ठः शिवेपि च ॥ ३९ ॥
पुंसि कोष्ठोन्तर्जठरं कुशूलोन्तर्गृहं तथा ॥ ४० ॥
निष्ठा निष्पत्तिनाशान्ताः काष्ठोत्कर्षे स्थितौ दिशि ।
त्रिषु ज्येष्ठोतिशस्तेपि कनिष्ठोतियुवाल्पयोः ॥ ४१ ॥
दण्डोस्त्री लगुडेपि स्याद् गुडो गोलेक्षुपाकयोः ।
सर्पमांसात्पशू व्याडौ गोभूवाचस्त्विडा इलाः ॥ ४२ ॥

---

( पंचतं० ) । कैतवं व्याजः ( कूटं ) । राशिर्धान्यादिपुञ्जः ( कूटः ) ॥ ३६ ॥ अयोमयो घनः, आघातार्थमयःसारं भाण्डं कूटं नाराचो वा, कूटशाल्मलिरित्येके । सीराङ्गं फालाधारः कूटाख्यः, यद्दुर्गः— कूटं घटहलाङ्गयोः । त्रुटति त्रुटिः, कालेल्पे क्षणद्वयाख्ये । संशय यथा— त्रुटिं प्राप्तो रोगी ॥ ३७ ॥ अर्त्तिश्चापकोटिरटनिर्यथा— धनुःकोट्या नुदति । उत्कर्षे यथा— परां कोटिमारूढः । अश्रिर्धारा कोणो वा यथा— शतकोटिर्वज्रः । संख्यापि कोटिः, यद् भागुरिः— अत्त्यर्बुदाश्रयः कोट्यः, स्त्रीत्वार्थे ङीप् । वृक्षादिमूलं जटा । लग्नाः श्लिष्टाश्च कचा जटाः, जट संघाते । व्युच्छनं व्युष्टिः, उच्छी विवासे, फलं प्रयोजनम् । चशब्दात्स्तुतौ ( व्युष्टिः ) । ( दृष्टिः ) भावे करणे च क्तिन् ॥ ३८ ॥ यजेरिषेश्च क्तिन् ( इष्टिः ) । मुक्तनिर्मितयोश्च ( सृष्टम् ) । कषिष्यतीति कष्टं, यथा— कष्टं प्राप्तः क्लेशमित्यर्थः । कष्टानि सामानि गहनानीत्यर्थः, कृच्छ्रगहनयोःकषः ( सू० ) इत्यनिट् । ( पटुः ) दक्षोनलसः, अमन्दो धृष्टः, अगदो नीरुक् । चशब्दाल्लवणो रसः पटुः ॥ ३९ ॥ द्वौ कष्टपटू । पोटा दासी द्विलिङ्गा च घृष्टी घर्षणसूकरौ । घटा गोष्ठ्यां हस्तिपङ्क्तौ कूपीटमुदरे जले । इतष्ठान्ताः । अपिशब्दान्मयूरः ( नीलकण्ठः ) । कुष्यते कोष्ठो जठराभ्यन्तरं, यथा— मृदुकोष्ठः । कुशूलो धान्याधारः ( कोष्ठः ) । कोष्ठागारं गृहस्याभ्यन्तरमपवरकाख्यम् ॥ ४० ॥ निर्व्यूढं निर्वृत्तं नियतं च स्थानं निष्ठा । क्लेशतपोयाच्ञानिर्वहं( र्वह )णपरमगतयोपि ( निष्ठाः ) । काशनं काशते वा काष्ठा, स्थितिर्मर्यादा । कालविशेषेपि अष्टादश निमेषास्तु काष्ठेति । काष्ठं दारु च । इष्टनि प्रशस्यस्यश्रः ( सू० ), ज्यच ( सू० ) । अपिशब्दादग्रजे वृद्धेपि ( ज्येष्ठः ) । युवाल्पयोःकनन्यतरस्याम् ( सू० ), अतियुवात्यल्पश्च ॥ ४१ ॥ अथ डान्ताः । दम्यतेनेन दण्डः, अपिशब्दाच्चतुरङ्गं बलं चतुर्थोपायो दमो मन्थश्च । गोलो वृत्तो मृदादिगुडकः, यथा - भक्षिता वाप्ययोगुडाः ( चरक० ) । लत्वेन गुलिका स्नुही गुलिका निशा । सन्नाहश्च गुडः । मांसमत्तीति मांसात् सिंहादिः । व्यडति हन्तुं व्याडः, व्यड उद्यमे, विविधमाल( ड )मस्माद्वा व्याडः । इल क्षेपणे, बुधभार्यापि— इडा यस्या अपत्यमैडः पुरूरवाः ॥ ४२ ॥ क्ष्वेडिः शब्दार्थ उन्नयः, अपिशब्दात्सिंहनादो दन्तोष्ठवाद्यम् ( क्ष्वेडा ) । क्ष्वेडस्तु विषं ध्वनिश्च । षड्भिः क्षणैश्च षट्क्षण इति नाडीव नालिकात्र, अपिशब्दात्सुषिरं वृक्षादि धमनिश्च । नाडो नालश्च जलनिर्गमः । डलयोरैक्यात्मणालो नालः कण्ठः पद्मादिवृन्तं

क्ष्वेडा वंशशलाकापि नाडी कालेपि षट्क्षणे ।
काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ॥ ४३ ॥
स्याद् भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने ।
भृशप्रतिज्ञयोर्बाढं प्रगाढं भृशकृच्छ्रयोः ॥ ४४ ॥
शक्तस्थूलौ त्रिषु दृढौ व्यूढौ विन्यस्तसंहतौ ।
भ्रूणोऽर्भके स्त्रैणगर्भे बाणो बलिसुते शरे ॥ ४५ ॥
कणोऽतिसूक्ष्मे धान्यांशे संघाते प्रमथे गणः ।
पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेपि च ॥ ४६ ॥
मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसंध्यादिके गुणः ।
निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ॥ ४७ ॥
वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु चाक्षरे ।
अरुणो भास्करेपि स्याद्वर्णभेदेपि स त्रिषु ॥ ४८ ॥
स्थाणुः शर्वेप्यथ द्रोणः काकेप्यथ रवे रणः ।
ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ॥ ४९ ॥

---

च । दण्डो नालं यथा— उद्व( त्का )ण्डैः पुण्डरीकैः । अर्वा कुत्सितः, यथा— काण्डपृष्ठः ( महावीर० ) । वर्गे यथा— बालकाण्डं, श्राद्धक[ का ]ण्डिका । काण्डस्यावसरस्याभावोऽकाण्डम् । लतावृक्षस्कन्धयोश्च ( काण्डः ) । प्रकाण्डं तु वृक्षादिस्कन्धः, प्रशंसार्थे च यथा— पुरुषप्रकाण्डम् ॥ ४३ ॥ अश्वस्याभरण-मायानं पर्याणादि. यथा— भाण्डत्रासी हयः । अमत्रे यथा— प्रकीर्णभाण्डामनवेक्ष्यकारिणीम् । मूलं क्रय्यं वणिजो धनं वा, यथा— भाण्डपतिः । संघातग्रासयोः पिण्डी द्वयोः पुंसि कलेवरे । गण्डौ कपोलविस्फोटौ मुण्डक त्रिषु मुण्डिते ॥ इक्षुभेदेपि खण्डोऽस्त्री शिखण्डो बर्हचूडयोः । अथ ढान्ताः । बाहेः क्ते( बाढं ), क्षुब्धस्वान्तध्वान्तेति ( सू० ) साधुः । ( बाढं ) प्रतिज्ञानेऽङ्गीकारेऽव्ययम् । ( प्रगाढं ) दृढेऽपि, यदाहुः— प्रगाढ कृच्छ्रमिच्छन्ति प्रगाढं बलवद् दृढम् ॥ ४४ ॥ दृहि वृद्धौ क्त दृढः, दृढःस्थूलबलयोः ( सू० ) इति साधुः । अत्यर्थे च यथा— दृढं शान्तोस्मि । त्रिष्वित्येव । विन्यस्तं रचितं यथा— व्यूढां द्रुपदपुत्रेण तव शिष्येण ( भगवद्गीता ) । संहतो घनो यथा— व्यूढोरस्कः ( रघु० ) । अथ णान्ताः । भ्रियते भ्रूणः । बलिसुतो बाणासुरः । दासीकुरण्टकेपि बाणशब्दार्थः ॥४५॥ अतिसूक्ष्मे मुक्तादिगुलके ( कणः ) । धान्यस्यांशः कणिका यथा— कणादो मुनिः । गण्यते गणः, संख्यायां सैन्यांशेपि । नित्यंपणःपरिमाणे ( सू० ) इति साधुः । द्यूतादावुत्सृष्टं जय्यत्वे स्थापितं ( पणः ) । आदिशब्दात्समाह्वयपणादौ । भृति-र्वेतनम् । आदिशब्दात्क( त्का )र्षिकस्ताम्रिकः पणः, यच्छाश्वतः— ग्लहे माने श्वेतकानां मूल्ये कार्षापणे धने । द्यूतादौ कल्पिते चैव बद्धमुष्टौ भृतौ पणः ॥ ४६ ॥ द्रव्याश्रिते पटादेः शुक्लादिर्गुणः, आत्मनो बुद्धिसुखादिः, रूपादिचतुर्विंशतेर्गुणत्वात् । सत्त्वेनिविशतेपैतीतिच (गुणः) ( का० ) । सत्त्वादीनि सत्त्वरजस्तमांसि, शौर्यौदार्यादयो गुणाः । संधिविग्रहयानासनद्वैधीभावसंश्रयाः षड् गुणाः । तेजोबलवीर्यै-श्वर्यवैराग्यशक्तयश्च षट् पराश्रितत्वात् , तेन गुणोऽप्रधानमित्यपि च वाच्यम् । शौर्यादयस्तूत्कर्षाद गुणाः । रज्ज्वप्रधानसूदेन्द्रियभोगेष्वपि ( गुणः ) । निर्व्यापारासने यथा— क्षणो नास्ति रहो नास्ति ( पंचतं० ) । कालविशेषो नाडिकाषष्ठांशः ( क्षणः ) । उत्सवे यथा— क्षणे रक्ष्याः कुलस्त्रियः । नृत्ते तूत्सवत्वाद्यथा— क्षणपरपुरजिद्दत्तशूलप्रहारान्, क्षणोति क्षणः ॥ ४७ ॥ वृणोति व्रियते वा, वर्ण्यते वर्णनं वा वर्णः । षड्जादिगतौ तालविशेषे गुणयशोविलेपनब्रह्मचर्येष्वपि ( वर्णः ) ॥ ४८ ॥ ( ग्रामणीः ) ग्रामः खेटको

ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवौ ।
हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ॥ ५० ॥
त्रिषु पाण्डौ च हरिणः स्थूणा स्तम्भेऽपि वेश्मनः ।
तृष्णे स्पृहापिपासे द्वे जुगुप्साकरुणे घृणे ॥ ५१ ॥
वणिक्पथेऽपि विपणिः सुरा प्रत्यक्च वारुणी ।
करेणुरिभ्यां स्त्री नेभे द्रविणं तु बलं धनम् ॥ ५२ ॥
शरणं गृहरक्षित्रोः श्रीपर्णं कमलेऽपि च ।
विषाभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु ॥ ५३ ॥
प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ।
करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ॥ ५४ ॥
प्राण्युत्पादे संसरणमसंबाधचमूगतौ ।
घण्टापथेऽथ वान्ताने समुद्धरणमुन्नये ॥ ५५ ॥
स्वतस्त्रिषु विषाणं स्यात्पशुशृङ्गेभदन्तयोः ।
प्रवणं क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ॥ ५६ ॥

---

श्वन्दं च ॥ ४९ ॥ ऊर्णोत्यूर्णा । आवर्तश्चक्रवर्तिचिह्नं यथा– ऊर्णेयमन्तर्भ्रुवोः, अन्तरा भ्रुवाविति– अन्तरान्तरेणयुक्ते ( सू० ) द्वितीया । हराति हरिणी मृगी हेम्नो वा प्रतिमा । हरिं पीतं वर्णं नयतीति, हरिता नीला, वर्णादनुदात्तात्तोपधात्तोनः ( सू० ) इति वा ङीप् । यूथिका पाण्डुरा च ( हरिणी ) ॥ ५० ॥ चशब्दान्मृगे ( हरिणः ) । तिष्ठति स्थूणा । अपिशब्दाल्लोहप्रतिमाव्याधिविशेषयोश्च ( स्थूणा ) । तर्षणं तृष्णा, स्पृहा निरूढलक्षणत्वात् । एवं तृट्तर्षावपि स्पृहापिपासार्थे । जिघर्ति क्षरति मनोनया घृणा, घृणु दीप्तौ वा ॥ ५१ ॥ वणिक्पथो हट्टः ( विपणिः ) । अपिशब्दात्पण्यवीथ्यां, विपण्यतेस्यां विपणिः । सुरा वरुणादब्धेर्जाता । प्रत्यक् प्रतीची दिक्, वरुणस्येयमिति । के मूर्ध्नि रेणुरस्य करेणुः । इभ्यां हस्तिन्यां स्त्री, इभे तु ना पुमान् । द्रवत्यनेन द्रवति वा द्राविणम् ॥ ५२ ॥ शीर्यते शृणाति च परं शरणं, श्रयन्ति तदिति **नैरुक्ताः** । श्रीः पर्णेष्वस्य श्रियं पिपर्ति च श्रीपर्णम् । अपिशब्दादग्निमन्थे ( श्रीपर्णम् ) । अभिमरो मरकं युद्धं च ( तीक्ष्णं ), लोहं शस्त्रम् । ये द्रव्यहेतोर्व्याडं हस्तिनं वा योधयेयुस्ते तीक्ष्णा इति **कौटिल्यः** । तेज्यते तीक्ष्णं, अतिक्ष्णोतीति **नैरुक्ताः** ॥ ५३ ॥ यथयोगं करणादौ ल्युट्, हेतुर्ज्ञप्तिनिमित्तं यथाग्न्यादेर्धूमादि ( प्रमाणं ) । मर्यादावधिः, यथा– कौटिल्यः राजानं मां च प्रमाणं कृत्वा यद्यस्याः कुशलं पश्यतीति । इयत्ता परिच्छेदः, यथा– कियत्प्रमाणमुदकम् । प्रमाता यथा– अत्रार्थे प्रभुः प्रमाणम् । ( करणं ) गात्रे यथा– उपमानमभूद्विलासिनां करणं यत्तव कान्तिमत्तया (कु० सं०)। (करणं)अपिशब्दात्कारणिकानां कायस्थाध्यक्षादीनां समूहे कृतौ क्रियाभेदे कामशास्त्रनाट्यशास्त्रोक्ते च ॥ ५४ ॥ प्राण्युत्पाद आजीवंजीविभावः संसाराख्यः । असंबाधेन[ असंकटेन ] सेनागमने ( संसरणम् ) । घण्टापथः पुरः सन्दीपे विश्रामभूरुपनिष्कराख्या ( संसरणम् ) । ( समुद्धरणं ) कर्मणि भावे च ल्युट्, उन्नय ऊर्ध्वनयनं कूपादिभ्यो जलादेः ॥ ५५ ॥ स्वतो न तु वाच्यलिङ्गतया । वेवेष्टि विषाणम् । प्रवणाति प्रवणः [ अनुकूले ], वण शब्दार्थः । त्रिष्वित्येव संकीर्णे यावत् । क्रमेण निम्नायां भुवि यथा– श्राद्धे दक्षिणप्रवणा भूः । प्रह्वे यथा– भक्तिप्रवणः । अनुकूले तूपचारात् । चतुष्पथे, प्रवन्तेनेन प्रवणः ॥ ५६ ॥ निचितं संकीर्णं व्याप्तम् । अशुद्धे संकीर्णे यतो मिश्रीभवतीति । ईरति– ईरणं,

संकीर्णौ निचिताशुद्धावीर( रि )णं शून्यमूषरम् ।
देवसूर्यौ विवस्वन्तौ सरस्वन्तौ नदार्णवौ ॥ ५७ ॥
पक्षिताक्ष्यौं गरुत्मन्तौ शकुन्तौ भासपक्षिणौ ।
अग्न्युत्पातौ धूमकेतू जीमूतौ मेघपर्वतौ ॥ ५८ ॥
हस्तौ तु पाणिनक्षत्रे मरुतौ पवनामरौ ।
यन्ता हस्तिपके सूते भर्ता धातरि पोष्टरि ॥ ५९ ॥
यानपात्रे शिशौ पोतः प्रेतः प्राण्यन्तरे मृते ।
ग्रहभेदे ध्वजे केतुः पार्थिवे तनये सुतः ॥ ६० ॥
स्थपतिः कारुभेदेपि भूभृद् भूमिधरे नृपे ।
मूर्धाभिषिक्तो भूपेपि ऋतुः स्त्रीकुसुमेपि च ॥ ६१ ॥
विष्णावप्यजिताव्यक्तौ सूतस्त्वष्टरि सारथौ ।
व्यक्तः प्राज्ञेपि दृष्टान्तावुभे शास्त्रनिदर्शने ॥ ६२ ॥
क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे ।
वृत्तान्तः स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः ॥ ६३ ॥
आनर्तः समरे नृत्यस्थाननीवृद्विशेषयोः ।
कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु ॥ ६४ ॥

---

ईर गतौ । शून्यं निराश्रयो देशः, ऊषः क्षारमृत्तिकास्यास्ति– इत्यूषरः, ऊषसुषीति ( सू० ) रः ( ईरणम् ) । सेतौ च वरणो वेणी नदीवाहे कचोच्चये । अथ तान्ताः । विवस्ते छादयति विवस्तेजोस्यास्तीति विवस्वान् । सरस्वान्नाम नदः ॥ ५७ ॥ गरुतः पक्षाः सन्त्यस्य गरुत्मान् । भासः पक्षिविशेष । कीटोपि, शक्नोति शकुन्तः । धूमः केतुर्लिङ्गमस्य धूमकेतुर्वह्निः । धूमप्रधानश्च केतुरुत्पातग्रहः । जीवनस्याम्भसो मूतः पुटबन्धः ( जीमूतः ) ॥ ५८ ॥ जहाति हस्तः पाणिः । हसति व्योम्नि हस्तो नक्षत्रम् । प्रशंसार्थेश्च ( यथा )– केशहस्तः । म्रियतेनेन मरुत् । यमयतीत्यन्तर्भावितण्यर्थो यमिः, सूतः सारथिः । यज्ञस्य [ वज्रस्य ] भर्ता, स्त्रिया भर्ता ॥ ५९ ॥ पवते पुनाति च पोतः । प्रैति स्म प्रेतः, प्राण्यन्तरं नारकम् । ग्रहभेदो नवमः ( केतुः ), कित ज्ञाने । षु प्रसवैश्वर्ययोः ( सुतः ) ॥ ६० ॥ स्थापयति, स्थश्चासौ पतिश्च वा, तिष्ठन्त्यस्मिन्नायत्ताः स्थः, घञर्थेकः ( वा० ) । कारुविशेषो मुख्यतक्षा ( स्थपतिः ) । अपिशब्दात् स (यज्वा) गोष्पतीष्टया स्थपतिः (पृ० ११४), कञ्चुकी च । ( भूभृत् ) धारणात्पोषणाच्च । ( मूर्धाभिषिक्तः ) अपिशब्दाद्विप्रात्क्षत्रियायां जाते, मुख्येपि । ऋच्छत्यायाति ऋतुः स्त्रीणामार्तवं रजः । अपिशब्दाद्वसन्तादौ ( ऋतुः ) ॥ ६१ ॥ अपिशब्दादजितोऽपरिभूतो बुद्धश्च । अव्यक्तोऽस्फुटः । मूर्खश्च ( अव्यक्तः ) । प्रकृतिस्त्वव्यक्तम् । षू प्रेरणे, त्वष्टा रथकारः, तथा ब्राह्मण्यां क्षत्रियात्सूतः । प्रजाते पारदे च ( सूतः ) । व्यनक्ति व्यज्यते च ( व्यक्तः ) । अपिशब्दात् पुरोबुध्या[ दि ]निश्चितः, यथा– व्यक्तं मूर्खोयम् । दृष्टोन्तो निश्चयोस्य दृष्टान्तः, निदर्शनमुदाहरणं यथा– अग्निरत्र धूमान्महानसवत् ॥ ६२ ॥ क्षदति क्षत्ता, द्वास्थः प्रतीहारः । क्षत्रियायां शूद्राज्जातः क्षत्ता, क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च ( पृ० १५८ ) । स्मृतौ क्षत्तशब्दोप्यास्ति । वृत्तोन्तोस्य वृत्तान्तः, वृत्तस्यान्तश्च । तथा प्रकारो विशेषः । वार्ता जनश्रुतिराख्यायिका च ॥ ६३ ॥ आनृत्यन्त्यत्रानर्तः । नीवृद्विशेषो जनपदः,

श्लेष्मादिरस्थि( स )रक्तादिर्महाभूतानि तद्गुणाः ।
इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः ॥ ६५ ॥
कक्षान्तरेपि शुद्धान्तो नृपस्यासर्वगोचरे ।
कासूसामर्थ्ययोः शक्तिर्मूर्तिः काठिन्यकाययोः ॥ ६६ ॥
विस्तारवल्ल्योर्व्रततिर्वसती रात्रिवेश्मनोः ।
क्षयार्चयोरपचितिः सातिर्दानावसानयोः ॥ ६७ ॥
अर्त्तिः पीडाधनुष्कोट्योर्जातिः सामान्यजन्मनोः ।
प्रचारः स्यन्दयोरीतिरीतिर्डिम्बप्रवासयोः ॥ ६८ ॥
उदयेधिगमे प्राप्तिस्त्रेताग्नित्रितये युगे ।
वीणाभेदेपि महती भूतिर्भस्मनि संपदि ॥ ६९
नदीनगर्योर्नागानां भोगवत्यथ संगरे ।
सङ्गे सभायां समितिः क्षयवासावपि क्षिती ॥ ७० ॥
रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः ।
जगती जगति च्छन्दोविशेषेपि क्षितावपि ॥ ७१ ॥

---

जलेपि ( आनर्तम् ) । कृतोन्तोनेन कृतान्तः, कृतः सिद्धान्तो निष्ठा यस्य, कृतस्यान्तश्च । शास्त्रेप्युपचारात्कृतान्तः ॥ ६४ ॥ श्लेष्मा वातः पित्तं च, धारणात्तु धातवः । अस्थिरक्तादीनि, व( र )सासृङ्मांसमेदोस्थिमज्जाशुक्राणि धातवः ( वाग्भट० ) । महाभूतानि पृथिव्यादीनि, तद्गुणाः शब्दादयः, अश्मविकृतिर्हरितालादिः, शब्दयोनिर्भ्वादिः ( धातवः ) । चशब्दाद् गैरिकं मनःशिलादिर्हेमादिश्च ( धातुः ) ॥ ६५ ॥ कक्षान्तरे राजधानीस्थानविशेषे वासगृहाह्वये ( शुद्धान्तः ) । अपिशब्दाद्राजदारेषु, अशौचप्रशमे च, शुद्धो रक्षितोन्तोस्य शुद्धान्तः । कासूर्नामायुधं सर्वलाख्यं, शक्यतेनया जेतुं शक्तिः । शकन उत्साहादौ च (शक्तिः) । मूर्च्छनं मूर्च्छति च मूर्तिः ॥ ६६ ॥ व्रजन्ती ततिरस्यां व्रततिः, व्रतव्रातव्रतत्यादिसिध्यर्थं व्रतिर्धातुरुन्नेय इति श्रीभोजः । वसन्त्यस्यां वसतिः, स्थितौ च । चिनश्चायतेश्च,( चायतेः)क्तिनि नित्यंचिभावः ( वा० ) अपचितश्च ( सू० ) इत्यत्र वक्तव्यात् । विकृतौ व्यत्यये च ( निष्कृतौ व्यये च ) ( अपचितिः ) । सनोतेः क्तिनि जनसनेति ( सू० ) आत्वम्, स्यतेः– ऊतियूतिजूतीति ( सू० ) साधुः ॥ ६७ ॥ अर्दनमर्त्तिः, अर्द्यतेनया च, अर्द गतौ याचने च । जायतेनया, भिन्नेष्वभिन्नाभिधानप्रत्ययो जातिः, जननं च । छन्दोलंकारविशेषयोः ( जातिः ), मालतीगोत्रयोश्च । प्रचारः शैली (रीतिः), री गतौ रीङ् स्रवणे । आरकूटे मर्यादायां वैदर्भ्यादौ ( रीतिः ) । ईङ् गतौ, डिम्ब उपद्रवः, यदाहुः– अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥ ६८ ॥ उदयो लाभः, अधिगम आसादनं ( प्राप्तिः ) । त्रेता, पृषोदरादिः ( सू० ) । शततन्त्री वीणा महती । अपिशब्दाद् बृहत्यां ( महती ) । भवति भूयतेनया च भूतिः, भवनं च ॥ ६९ ॥ भोग उपभोगः सर्पकायश्चास्त्यस्याः ( भोगवती ) । समयनं सयन्ति संगच्छन्त्यस्यां वा समितिः । वासो निवासः ( क्षितिः ) । अपिशब्दाद् भूः, क्षि क्षये, क्षि निवासगत्योः ॥ ७० ॥ शस्त्रमायुधं, हिनोति हेतिः, ऊतियूतीति (सू०) साधुः । गच्छति जगती, छन्दो द्वादशाक्षरपादम् ॥ ७१ ॥ उक्तात्युक्ता मध्या प्रतिष्ठा सुप्रतिष्ठा गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तिस्त्रिष्टुबिति दशमं दशाक्षरपादं वा । अपिशब्दाच्छ्रेणिर्दशसंख्या च ( पङ्क्तिः ),

पङ्क्तिश्छन्दोऽपि दशमं स्यात्प्रभावेऽपि चायतिः ।
पत्तिर्गतौ च मूले तु पक्षतिः पक्षभेदयोः ॥ ७२ ॥
प्रकृतिर्योनिलिङ्गे च कैशिक्याद्याश्च वृत्तयः ।
सिकताः स्युर्वालुकापि वेदे श्रवसि च श्रुतिः ॥ ७३ ॥
वनिता जनितात्यर्थानुरागायां च योषिति ।
गुप्तिः क्षितिव्युदासेऽपि धृतिर्धारणधैर्ययोः ॥ ७४ ॥
बृहती क्षुद्रवार्ताकी छन्दोभेदे महत्यपि ।
वाशि( सि )ता स्त्रीकरिण्योश्च वार्ता वृत्तौ जनश्रुतौ ॥ ७५ ॥
वार्त्तं फल्गुन्यरोगे च त्रिष्वप्सु च घृतामृते ।
कलधौतं रूप्यहेम्नोर्निमित्तं हेतुलक्ष्मणोः ॥ ७६ ॥
श्रुतं शास्त्रावधृतयोर्युगपर्याप्तयोः कृतम् ।
अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ॥ ७७ ॥
युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु ।
वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ॥ ७८ ॥

---

पञ्चतौ वर्गौ पङ्क्तिः, पङ्क्तिविंशतित्रिंशदिति ( सू० ) साधुः, पञ्चते च । अपिशब्दादागामिनि काल दैर्घ्ये च, आयतन्तेऽनयायतिः, आयमनं च । पदनं पद्यते च पत्तिः । चशब्दात्सेनांशे पदातौ च (पत्तिः) । पक्षविशेषयोर्मूलं प्रतिपदादिः पक्षांशश्च पक्षतिः, पक्षात्तिः ( सू० ) ॥ ७२ ॥ योनिरुपादानकारणं यथा– मूलप्रकृतिरविकृतिः ( सांख्यकारिका ) । लिङ्गं स्त्रीपुंनपुंसकं यथा– तृतीयाप्रकृतिः शण्ढः ( पृ० ९७ ) । चशब्दात्स्वाम्यमात्यादिः ( प्रकृतिः ) । प्रत्ययात्पूर्वः स्वभावश्च ( प्रकृतिः ) । कैशिकीभारतीसात्वत्यारभव्यः ( वृत्तयः ) । चशब्दाद् ग्राम्या परुषोपनागरिका ( वृत्तिः ), कृष्यादिर्जीविकाप्रवृत्तिश्च, वर्तनं वृत्तिः, वर्तनेनया च । सिच्यन्ते सिकताः, नित्यं बहुत्वेयम् । अपिशब्दात्सिकतिले देशे, देशेलुबिलचोच ( सू० ) इत्यणो लुप् । श्रवः श्रोत्रम् । चशब्दात्किंवदन्त्यां षड्जाद्यारम्भिकायामाकर्णने च, श्रूयते शृणोत्यनय श्रवणं श्रुतिः ॥ ७३ ॥ वनु याचने । चशब्दात्स्त्रीमात्रे ( वनिता ) । गोप्यते गोपनं गुप्तिः, क्षितिव्युदासो भूगर्तः । अपिशब्दात्कारायां रक्षायां च ( गुप्तिः ), यच्छाश्वतः– गुप्तिः कारा च रक्षा च जीर्णं च विवरं भुवः । ( धृतिः ) भावे करणे च क्तिन्, सौख्येप्युपचारात् ॥ ७४ ॥ क्षुद्रवार्ताकी कण्टकारिका, छन्दोविशेषो नवाक्षरपादः (बृहती) । वाश्यते काम्यते वशे स्थाप्यते वाशते वा वाशिता । वासितेति गौडाः पेठुः, कृतवासेति च व्याख्यन् । वर्ततेनया वर्तते वा, वृत्तिर्जीविका वास्त्यस्या वार्ता । वृत्तिः कृषिपाशुपाल्यवणिज्याख्यात्वाभेदोपचारात् । जनश्रुतिर्वृत्तान्तः ( वार्ता ) । वर्तनं[ च ] वार्ता ॥ ७५ ॥ फल्गु तुच्छं यथा– वार्त्तमेतत् । चशब्दात्सर्पिषि घृतं, पीयूषे हुतशेषेऽयाचिते भैक्ष्ये मोक्षे चामृतम् । कलः कालिका धौतास्येति । निमेयति निमित्तं, हेतुः कारणं, लक्ष्म चक्षुःस्पन्दनादि ॥ ७६ ॥ श्रूयते श्रवणं श्रुतं, अवधृतमाकर्णितम् । युगं कालभेदः ( कृतम् ) । पर्याप्तं यथा– कृतमतिविस्तरेण । क्रियाशब्दस्तु कृतस्त्रिलिङ्गः । अतीवाहितमाहितं वात्याहितं, जीवानपेक्षि कर्म साहसाख्यम् ॥ ७७ ॥ युक्ते यथा– यथाभूतवादी प्रामाणिकः स्यात् । क्ष्मादौ यथा– महाभूतानि । ऋतं सत्यं यथा– भूतमप्यनुपन्यस्तं हीयते व्यवहारतः । प्राणिनि यथा– भूतग्रामः । अतीते यथा– भूते लुङ् । समस्तुल्यो यथा– सुहृद्भूतोयम् । ग्रहेपि यथा– भूतमियं ब्राह्मणी । प्राप्ते यथा– इत्थंभूतं, भवति स्म भावयते स्मेति, भू प्राप्तौ । ( वृत्तं ) पद्यं पादबन्धः श्लोकादिः । चरित्रं शीलं ( वृत्तम् )। अतीते यथा– वृत्तोत्सवं पुरम् ( मुद्राराक्ष० ) । दृढे यथा– वृत्तदेहः स्नायुसारः । निस्तलं वर्तुलं, अधीतेपि

महद्राज्यं चावगीतं जन्ये स्याद्गर्हिते त्रिषु ।
श्वेतं रूप्येपि रजतं हेम्नि रूप्ये सिते त्रिषु ॥ ७९ ॥
त्रिष्वितो जगदिङ्गेपि रक्तं नील्यादिरागि च ।
अवदातः सिते पीते शुद्धे बद्धार्जुनौ सितौ ॥ ८० ॥
युक्तेतिसंस्कृते मर्षिण्यभिनीतोथ संस्कृतम् ।
कृत्रिमे लक्षणोपेतेप्यनन्तोनवधावपि ॥ ८१ ॥
ख्याते हृष्टे प्रतीतोभिजातस्तु कुलजे बुधे ।
विविक्तौ पूतविजनौ मूर्च्छितौ मूढसोच्छ्रयौ ॥ ८२ ॥
द्वौ चाम्लपरुषौ शुक्तौ शिती धवलमेचकौ ।
सत्ये साधौ विद्यमाने प्रशस्तेभ्यर्हिते च सत् ॥ ८३ ॥
पुरस्कृतः पूजितेरात्यभियुक्तेग्रतः कृते ।
निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् ॥ ८४ ॥
जातोर्ध्वक( ग्रद्ध )प्रवृद्धाः स्युरुच्छ्रिता उत्थितास्त्वमी ।
वृद्धिमत्प्रोद्यतोत्पन्ना आदृतौ सादरार्चितौ ॥ ८५ ॥

---

( वृत्तम् ) ॥ ७८ ॥ महति मग्नते च महत् । चशब्दाद् बृहद् बुद्धितत्त्वं च ( महत् ) । विरुद्धं गीयते-वगीतम् । जननीयो जन्यः, जनस्य जल्पो वा, मतजनहलात्करणजल्पकर्षेषु ( सू० ) इति यत् । मुहुर्दृष्टेपि ( अवगीतम् ) । श्वेतते श्वेतं, अपिशब्दाच्छुक्ले । रज्यते रजतम् । हेम्नि महारजताख्यम् ॥ ७९ ॥ इतस्तान्ता वाच्यलिङ्गाः । गच्छति जगत्, इङ्गे जङ्गमे । अपिशब्दाद् भुवने ( जगत् ) । रज्यते रक्तं, नील्यादिरागोस्त्यस्य । चशब्दादसृक् ( रक्तम् ), कुङ्कुमं ताम्रमनुरक्तं च । ( अवदातः ) दैप शोधने । ( सितः ) अर्जुनः शुक्लः, षिञ् बन्धने ॥ ८० ॥ ( अभिनीतः ) मर्षिण्यक्रोधे । संस्कृतं ( सू० ) अनित्ये साधु, संलक्षणेन प्रकृत्यादिविभागेन सिद्धे शब्दे, संपर्युपेभ्यः ( सू० ) इति सुट् । अपिशब्दात्सतो गुणाधाने पक्वे च । अपिशब्दान्नागराजे ( अनन्तः ), विष्णौ व्योम्नि च । अनन्ता च भूः ॥ ८१ ॥ प्रतीयते प्रत्येति वा ( प्रतीतः ), ज्ञातेपि । सुकुमारे न्याय्ये चोपचारात् ( अभिजातः ) । विचिर्विरेचने, विजिर् पृथग्भावे, असंयुक्तो[ पृक्तो ]पि ( विविक्तः ) । मूर्च्छा मोहसमुच्छ्राययोः ॥ ८२ ॥ अम्लं चुक्रं, यदाहुः- यन्मूलादि शुचौ भाण्डे सक्षौद्रगुडकाञ्जिकं । धान्यराशौ त्रिरात्रस्थं चुक्रं शुक्तं तदुच्यते ( वैद्यकम् ) ॥ परुषे शुक्त उपचारात्, यथा- शुक्तां वाचं ( न ) वदेत् । चशब्दात्पूतिगन्धे, ईशुचिर् पूतीभावे ( शुक्तः ) । शिञ् निशाने, मेचकः कृष्णः ( शितिः ) । अस्तेः शतृप्रत्ययः, सत्त्वे च सत् ॥ ८३ ॥ ( पुरस्कृतः ) पुरोव्ययमिति ( सू० ) गतित्वात्सत्वम् । अरातिनाभियुक्तोभिषेणितः, अभिषिक्तोपि ( पुरस्कृतः ) । निवायते गम्यते निवातः, निवृत्तो वातोत्र । शस्त्राभेद्यं च वर्म, यथा- निवातकवचाः ॥ ८४ ॥ ऊर्ध्वक उच्चकः ( उच्छ्रितः ) । प्रोद्यतः सोद्यमः ( उत्थितः ) । कर्तृकर्मणोः क्तः ( आदृतः ) ॥ दुर्गश्चाह- कर्मविपाकेपि गतिर्गर्मुद् हेम्न्युल्बणे तृणे । ऋतमुञ्छशिले सत्ये शोभनेपि विवक्षितम् ॥ उदास्थितः प्रतीहारे चरभेदे समाहितः । ध्यानस्थे चाप्यनीकस्थो गजलक्षणवेदिनि ॥ श्रद्धारचनयोर्भक्तिर्गौण्यां वृत्तौ च सेवने । आप्तौ लब्धप्रत्यायितौ नप्ता पुत्रश्च पुत्रयोः ॥ भ्रातृपुत्रौस्वसृदुहितृभ्यां ( सू० ) इत्येकशेषोत्र । समूहोत्पन्नयोर्जातमहिजिच्छ्रीपतीन्द्रयोः । सौप्तिकेपि प्रपातोथावपातावतटावटौ ॥ समित्सङ्गे रणेपि स्त्री व्यवस्थायामपि स्थितिः ॥ ८५ ॥ इतस्थान्ताः । अर्यतेर्थ्यते वार्थः । अभिधेयः शब्दार्थः । रा धनं

अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ।
निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ ॥ ८६ ॥
समर्थस्त्रिषु शक्तिस्थे संबद्धार्थे हितेऽपि च ।
दशमीस्थौ क्षीणरागवृद्धौ वीथी पदव्यपि ॥ ८७ ॥
आस्थानीयत्नयोरास्था प्रस्थोऽस्त्री सानुमानयोः ।
अभिप्रायवशौ छन्दावब्दौ जीमूतवत्सरौ ॥ ८८ ॥
अपवादौ तु निन्दाज्ञे दायादौ सुतबान्धवौ ।
पादा रश्म्यङ्घ्रितुर्यांशा अग्नीन्द्वर्कास्तमोनुदः ॥ ८९ ॥
निर्वादो जनवादेऽपि शादो जम्बालशष्पयोः ।
साराव रुदिते त्रातर्याक्रन्दो दारुणे रणे ॥ ९० ॥
स्यात्प्रसादोऽनुरोधेऽपि सूदः स्याद्व्यञ्जनेऽपि च ।
गोष्ठाध्यक्षेऽपि गोविन्दो हर्षेऽप्यामोदवन्मदः ॥ ९१ ॥
प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम् ।
स्त्री संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु ॥ ९२ ॥

---

( अर्थः ) । वस्तुनि पदार्थे । निवृत्तौ यथा— मशकार्थोऽयं धूमः । इन्द्रियविषये कारणे च ( अर्थः ) । निपानं जलाशयः, आगमः शास्त्रं ( तीर्थम् ) । ऋषिजुष्टं प्रभासपुष्करादि, यदध्यासितमर्हद्भिस्तद्धि तीर्थमिति । गुरौ यथा— तीर्था( दा )प्तविद्यः । जलावतरणमार्गे सत्त्रिण्यध्वरे पुण्यक्षेत्रे पात्रेऽपि यथा— तीर्थं तद्धव्यकव्ययोः, तरत्यनेन तीर्थम् ॥ ८६ ॥ समर्थयते समर्थ्यते संगतार्थोऽस्येति ( वा ) समर्थः दशम्यां कामावस्थायां वयोवस्थायां च तिष्ठति दशमीस्थः, क्षीणो रागेण क्षीणरागः, मरणावस्थां प्राप्तो नष्टबीजो वा । वेतेर्विथेश्च वीथी, पदवी मार्गः । अपिशब्दाद् गृहप्रान्तः पङ्क्तिश्च ( वीथी ) ॥ ८७ ॥ आतिष्ठन्त्यस्यामास्थानी । आलम्बनं वाऽऽस्था । प्रतिष्ठन्तेऽस्मिन् प्रस्थो गिरेः समा भूः । मानमाढकचतुर्भागोऽत्र ( प्रस्थः ) । शास्त्रद्रविणयोर्ग्रन्थः संस्थाधारे स्थितौ मृतौ । अथ दान्ताः । ( अभिप्रायवशौ ) यथा— छन्दानुवर्ती, स्वच्छन्दः, छदेः— रूपम् । अपो ददात्यब्दः, आप्नोति च ॥ ८८ ॥ आज्ञामपवाद, माहुः । दायं रिक्थमादत्ते दायादः, बान्धवः सपिण्डः । ( पादः ) कर्तरि पदरुजति ( सू० ) घञ्- कर्मकरणादौ च । तुर्यांशो रूपकादेश्चतुर्भागः, कुलाद्रेः प्रत्यन्तपर्वतोऽपि पादः ॥ ८९ ॥ अपिशब्दादाभाषा निश्चितवादश्च ( निर्वादः ) । शीयन्तेऽवसीदन्त्यनेन शादः पङ्कः । शाद्य( त्य )ते छिद्यते शादस्तृणम् । आक्रन्दनमाक्रन्दयते— आक्रन्दन्त्यस्मिंश्चाक्रन्दः । त्राता पार्ष्णिग्राहाक्रान्तस्य विजिगीषो रक्षिता, आहुश्च— पार्ष्णिग्राहस्तथाक्रन्दः ( मनुः ) ॥ ९० ॥ ( अनुरोधे ) यथा— प्रसादे वर्तस्व ( शार्ङ्गधरप० )। अपिशब्दान्नैर्मल्ये प्रीतिदाने च ( प्रसादः ), काव्यगुणे तूपचारात् । सूयते पच्यते सूदयति च सूदः, व्यञ्जन सूपोऽत्र । अपिशब्दात्सूपकारे ( सूदः ) । अपिशब्दाद्विष्णौ, गां विन्दति गोविन्दः, अनुपसर्गाल्लिम्पविन्देति ( सू० ) शः । अपिशब्दाद् गन्धेऽप्यामोदः । गर्वे क्षैव्ये गजदाने च मदः, मदोऽनुपसर्गे ( सू० ) इत्यप् ॥ ९१ ॥ प्रधानमेव प्राधान्यं, राजलिङ्गं छत्रादि, कङ्कते कं कौति वा ककुदम् । शैलशृङ्गे ककुच्छब्दोऽप्यस्ति, यथा— ककुद्मान् । संवेदनं संवेद्यतेऽस्यां संविदन्ति( ते ) अनया च संविद् । ज्ञाने यथा— एकमेवेदं संविद्रूपम् । संभाषा संकेतो यथा— प्रवृत्तौ च निवृत्तौ च संविदं स्थापयेद्रणे । क्रियाकारो व्यवस्थापनं यथा— संविदं लङ्घयेच्च यः (याज्ञवल्क्य० ) । आजिर्युद्धं, नाम संज्ञा । तोषणाचारप्रतिज्ञास्वप्याहुः (संविद्) ॥९२॥ उपनिषीदन्त्यस्यामुपनिषद् , वेदान्तोऽपि रहस्यत्वात् । तत्त्वेऽपि यथा— धर्मस्योपनिषत्परा ।

धर्मे रहस्युपनिषत्स्यादृतौ वत्सरे शरद् ।
पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ॥ ९३ ॥
गोष्पदं सेविते माने प्रतिष्ठा कृत्यमास्पदम् ।
त्रिष्विष्टमधुरौ स्वादू मृदू चातीक्ष्णकोमलौ ॥ ९४ ॥
मूढाल्पापटुनिर्भाग्या मन्दाः स्युर्द्वौ तु शारदौ ।
प्रत्यग्राप्रतिभौ विद्वत्सुप्रगल्भौ विशारदौ ॥ ९५ ॥
व्यामो वटश्च न्यग्रोधावुत्सेधः काय उन्नतिः ।
पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ ॥ ९६ ॥
परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ।
बन्धकं व्यसनं चेतःपीडाधिष्ठानमाधयः ॥ ९७ ॥
स्युः समर्थननीवाकनियमाश्च समाधयः ।
दोषोत्पादेनुबन्धः स्यात्प्रकृत्यादिविनश्वरे ॥ ९८ ॥

---

ऋतुरत्राश्वयुजकार्त्तिकौ ( शरद् )। वत्सरं यथा— जीवेच्च शरदां शतम्। शीर्यन्तेस्यामोषधयः शरत्, स्त्री। ( पदं ) खलेभगःपदेचेतिवक्तव्यात् ( वा० ) खः। त्राणं शरणं यथा— पदमापदि माधवः। स्थानं यथा— सूर्यांशवः शशिनि लब्धपदा यथैव। लक्ष्म यथा— नवनखपदलेखालाञ्छितं बाहुमूलम्। अङ्घ्रिर्यथा— पादाग्रे प्रपदम् ( पृ० १०३ )। वस्तु यथा— पदार्थः। पादन्यासे पादमुद्रायां सुप्तिङन्ते च, यथा— कुरु घनोरु पदानि शनैः शनैः ( वेणिसंहार० ), पदं तुषारस्रुतिधौतरक्तम् ( कु० सं० ), पदसमूहो वाक्यम् ( न्यायभ०व्य० ) ॥९३॥ गोभिः सेवितं गोष्पदं, गोष्पदंसेवितासेवितप्रमाणेषु (सू०) इति साधुः। माने गोखुरश्वभ्रे, यथा— गोष्पदं प्रविष्टो देवः। आस्पदंप्रतिष्ठायाम् ( सू० ) साधुः, कृत्य उपचारात्। इष्टो मृष्टः, मधुरो रसः, यथा— रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः, स्वदते स्वादु। मृद्यते मृदुः, अतीक्ष्णोत्वाहिंस्रः ॥ ९४ ॥ मूढो यथा— मन्दः कवियशःप्रार्थी ( रघु० )। अल्पे यथा— मन्दोदरी। अपटुः सरुक्, यथा— मन्दं विचिकित्सति भिषक्। निर्भाग्ये यथा— मन्दभाग्यः। स्वैरेप्यल्पत्वाद्यथा— [ मन्द ]मन्दपदगामी[ चारी ], भद्रो मन्दो मृगश्चेति। हस्तिविशेषः सौरिश्च ( मन्दः )। शरदि भवः शारदः, लक्षणयाभिनवः, अधृष्टोप्रतिभः। शुद्धौ वर्षे च ( शारदः )। विगतो शारदोप्रतिभत्वदोषोस्य विशारदः ॥९५॥ अथ धान्ताः। व्यामस्तिर्यक्कृतबाह्वन्तरम्, न्यग्रुणाद्धि न्यग्रोधः न्यग्रोहति च, न्यङ्कादिः ( सू० )। ऊर्ध्वं सिध्यत्यनेनोत्सेधः, ऊर्ध्वे सेच( ध )नं च। परित आहरणं व्रीहितृणादेः पर्याहारो भाराख्यः ( विवधः )। विशिष्टो वधो गमनमत्रेति विवधः, बाहुलकाद्वा दीर्घः ( उपसर्गस्येति ) ॥ ९६ ॥ परितोग्नेश्चातुर्दिक्कं ( चतुर्दिशं ) धीयते बर्हिस्तरणवत् परिधिः, यदाहुः— बाहुप्रमाणं परिधिरच्छिन्नाग्रोतिपत्रलः। उपसूर्यकं सूर्यमण्डलं प्रतिसूर्याख्यम्। चक्रप्रान्तेपि ( परिधिः )। बन्धकं यदुत्तमर्णाय भूम्याद्याधीयते, यथा— आधिर्विनश्येद् द्विगुणे धने यदि न मोक्ष्यते ( मनुः )। व्यसनं यथा— आधिं प्राप्तो यो न मुह्येत्स धीरः। आध्यानमाधिर्मानसी पीडा। आधीयतेस्मिन्नाधिराधारः ॥ ९७ ॥ समर्थनं चोद्यपरिहारः, यथा— अत्रायं समाधिः। नीवाको वचनाभावः समाधिरिव। चशब्दाच्चित्तैकाग्र्यं समाधानं ( च ), समाधीयते मनोस्मिन्समाधिः। दोषोत्पादे यथा— अनुबन्धमवस्थां च ज्ञात्वा दण्डं निपातयेत्। प्रकृतिप्रत्ययागमादेशानां यः कार्यार्थमासज्यते विनश्वर उच्चरितप्रध्वंसी सोनुबन्धः ॥ ९८ ॥

मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ।
विधुर्विष्णौ चन्द्रमसि परिच्छेदे बिलेवधिः ॥ ९९ ॥
विधिर्विधाने दैवेपि प्रणिधिः प्रार्थने चरे ।
बुधवृद्धौ पण्डितेपि स्कन्धः समुदयेपि च ॥ १०० ॥
देशे नदविशेषेब्धौ सिन्धुर्ना सरिति स्त्रियाम् ।
विधा विधौ प्रकारे च साधू रम्येपि च त्रिषु ॥ १०१ ॥
वधूर्जाया स्नुषा स्त्री च सुधा लेपोमृतं स्नुही ।
संधा प्रतिज्ञा मर्यादा श्रद्धा संप्रत्ययः स्पृहा ॥ १०२ ॥
मधु मद्ये पुष्परसे क्षौद्रेप्यन्धं तमस्यपि ।
अतस्त्रिषु समुन्नद्धौ पण्डितंमन्यगर्वितौ ॥ १०३ ॥
ब्रह्मबन्धुरधिक्षेपे निर्देशेथावलम्बितः ।
अविदूराप्यवष्टब्धः प्रसिद्धौ ख्यातभूषितौ ॥ १०४ ॥
सूर्यवह्नी चित्रभानू भानू रश्मिदिवाकरौ ।
भूतात्मानौ धातृदेहौ मूर्खनीचौ पृथग्जनौ ॥ १०५ ॥

---

मुख्यानुयायी यथा– अनुबन्धी( न्धः ) शिशुः स्नेहेनानुबध्नातीति । प्रकृतानुवर्तने यथा– वैरानुबन्धः । विधति विदधाति विधत्ते वा विधुः, विध विधाने, विधीयते सुरैः पीयते वा, धेट् पाने । पर्यन्तेवधीयतेवधिः । उपचारादवधाने कालेपि ( अवधिः ) ॥ ९९ ॥ ( विधिः ) भावकरणादौ किः ( उपसर्गेघोः किः ) । अपिशब्दात्काले धातरि कल्पे प्रकारे विधायके च वाक्ये ( विधिः ) । ( प्रणिधिः ) भावे कर्मणि च किः । अवधानेपि ( प्रणिधिः ) । अपिशब्दाज्जिने स्थविरे च ( बुधवृद्धौ ) । स्कन्धति( ? )स्कन्धः । समुदये यथा– सप्त वातस्कन्धाः । अपिशब्दात्सैन्यभागे यथा– स्कन्धावारः । अंसे राशि समूहे वृक्षजङ्घायां च ( स्कन्धः ) । बौद्धे च यथा– संज्ञारूपसंवेदनासंस्कारसमुदायाख्याः [ विज्ञानलक्षणाः ] पञ्च स्कन्धाः ॥ १०० ॥ देशे यथा– सिन्धुर्देशः, स्यन्दते सिन्धुः, सरित्सामान्ये, विशेषे च यथा– सिन्धोः परमपूरुषम् । विधौ विधाने ( विधा ) । प्रकारे यथा– द्विविधाः । चशब्दाद्धस्त्यश्वादिभोजने वेतने च ( विधा ) । साध्नोति साधुः । अपिशब्दात्सज्जने ( साधुः ) । युक्ते रम्यत्वात्, यथा– साधु दृष्टं यद् द्रव्यम् ॥ १०१ ॥ उह्यते बध्नाति वा वधूः, स्त्रीति स्त्रीमात्रम् । सुष्ठु धीयते धयन्ति वैतां सुधा । लिप्यतेनेनेति लेपो मल्लोलादिः, स्नुही वज्रकन्दा यथा– सुधाक्षीरम् । मूर्वापि ( सुधा ) । ( प्रतिज्ञा ) यथा– सत्यसन्धः । संधारणं च ( संधा ) । संप्रत्ययो भक्त्यतिशयो यथा– श्रद्धया परयोपेताः ( भगवद्गीता ) । स्पृहा यथा– भोजने श्रद्धालुः ॥ १०२ ॥ माद्यन्त्यनेन मन्यते च मधु । क्षुद्राभिः कृतं क्षौद्रं, क्षुद्राभ्रमरवटरेति ( सू० ) अञ् । अपिशब्दाद्दैत्ये चैत्रे मधूके वसन्ते च पुंलिङ्गः ( मधुः ) । अपिशब्दादचक्षुषि जले च ( अन्धम् ) । इतो धान्ता वाच्यलिङ्गाः । ऊर्ध्वंबद्धोपि ( समुन्नद्धः ) ॥ १०३ ॥ ब्रह्मणो ब्राह्मणस्य बन्धुः, परमनुष्ठानाभावाज्जातिब्राह्मणः । एवं क्षत्रबन्धुः । निर्देशे यथा– व्यवस्थिताख्याने ब्रह्मणो बन्धुर्ज्ञातिरिति । अवलम्बितो वस्त्रादौ रुद्धः ( अवष्टब्धः ) । अविदूरे यथा– अवष्टब्धे सेने, अवाच्चालम्बनाविदूर्ययोः ( सू० ) इति षत्वम् । अपिशब्दाद्बद्धोपि ( अवष्टब्धः ) । प्रसिध्यति प्रसाध्यते च प्रसिद्धः । लेशेपि गन्धः संबाधो गुह्यसंकुलयोरपि । बाधा निषेधे दुःखे च ज्ञातृचान्द्रिसुरा बुधाः ॥ १०४ ॥ अथ नान्ताः । चित्रा भानवो रश्मयोनयोः । भाति भानुः । भूतानामात्मा भूतान्येवात्मास्य वा भूतात्मा । पृथक्कार्यो जनः– असभ्यत्वात्पृथग्जनः ॥ १०५ ॥ गिरति गृणाति

ग्रावाणौ शैलपाषाणौ पत्त्रिणौ शरपक्षिणौ ।
तरुशैलौ शिखरिणौ शिखिनौ वह्निबर्हिणौ ॥ १०६ ॥
प्रतियत्नावुभौ लिप्सोपग्रहावथ सादिनौ ।
द्वौ सारथिहयारोहौ वाजिनोऽश्वेषुपक्षिणः ॥ १०७ ॥
कुलेऽप्यभिजनो जन्मभूम्यामप्यथ हायनाः ।
वर्षार्चिर्व्रीहिभेदाश्च चन्द्राग्न्यर्का विरोचनाः ॥ १०८ ॥
केशेऽपि वृजिनो विश्वकर्मार्कसुरशिल्पिनोः ।
आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ॥ १०९ ॥
शक्रो घातुकमत्तेभो वर्षुकाब्दो घनाघनः ।
अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः ॥ ११० ॥
घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे ।
इनः सूर्ये प्रभौ राजा मृगाङ्के क्षत्रिये नृपे ॥ १११ ॥
वाणिन्यौ नर्तकीदूत्यौ स्रवन्त्यामपि वाहिनी ।
ह्रादिन्यौ वज्रतडितौ वन्दायामपि कामिनी ॥ ११२ ॥
त्वग्देहयोरपि तनुः सूनाधोजिह्विकापि च ।
क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके ॥ ११३ ॥

---

वा ग्रावा । पत्त्राणि पक्षाः सन्त्यस्य पत्त्री । श्येनोऽपि ( पत्त्री ) । वृक्षकुक्कुटौ च ( शिखिनौ ), दुर्गश्च- शिख्याख्या वह्निबर्हिद्रुद्विजकुक्कुटशार्ङ्गकाः, शार्ङ्गको मन्दपालसुतः पक्षी च ॥ १०६ ॥ उपग्रहो बन्दि- ग्रहणादिः ( प्रतियत्नः ) । सतो गुणान्तराधानं संस्कारश्च ( प्रतियत्नः ) । सीदत्यवश्यं सादयति वा सादी । वाजाः पक्षाः सन्त्यस्य वाजी । अश्वाः पूर्वं सपक्षा अभवन्, इषुः शरः ( वाजी ) ॥ १०७ ॥ अभिजायतेऽस्मादभिजनः, जनिवध्योश्च ( सू० ) इति ह्रस्वः । वर्षेऽर्चिषि च क्लीबे ( हायनं ) आहुः । व्रीहिविशेषः ( हायनः ) षष्टिकाख्यः । जहाति जलं हायनः, हश्चव्रीहिकालयोः ( सू० ) ण्युट् । विरो- चते विरोचनः, अनुदात्तेतश्च ( सू० ) इति युच् ॥ १०८ ॥ अपिशब्दाच्चर्मपापयोः क्लीबे, वर्ज्यत इति वृजिनम् । विश्वस्य कर्मास्माद्विश्वं च कर्मास्य विश्वकर्मा । यत्ने यथा– महात्मा । स्वभावे यथा– दुष्टात्मा । ब्रह्मणि यथा– आत्मैवेदं सर्वमिदं नेह नानास्ति किंचन ( कठोपानष० ) । वर्ष्म शरीरं यथा– कृशात्मा । चशब्दात्क्षेत्रज्ञः ( आत्मा ) ॥ १०९ ॥ हन्ति तच्छीलो घातुकः, स चासौ मत्तेभश्च ( घनाघनः ) । वर्षति तच्छीलो वर्षुकोऽब्दो मेघः, हन्तीति घनाघनः, चरिचलिपतिवदीनां वा द्वित्वमच्या- क्चाभ्यासस्य ( वा० ), हन्तेर्घत्वं च ( वा० ) इति सिद्धिः । प्रणयः प्रार्थना, मानेर्मन्यतेश्च भावे रूपम् । हिंसायां तु मीनातेर्ल्युड्व्याहुः, मीनातिमिनोतिदीङामिति ( सू० ) आत्वम् ॥ ११० ॥ हन्यतेऽनेन हन्ति वा घनः, मूर्तौ घनः ( सू० ) इति साधुः । मूर्तिगुणः काठिन्यं, असर्वगतद्रव्यपरिमाणं मूर्तिः सैव गुणो वा, दर्शनं च स्पर्शनं च मूर्तिः । निरंतरं निबिडं ( घनं ) । मुस्ते लोहमुद्गरे बाहुल्ये च ( घनः ) । घनं तु कांस्यवाद्यम् । एतीति– इनः, प्रभुः स्वामी । सोमो राजा द्विजातीनामिति श्रुतिः ॥ १११ ॥ वनुते तच्छीला वाणिनी, वणेः शब्दार्थाद्वाणिनीति सभ्यः । विदग्धापि ( वाणिनी ) । स्रवन्त्यां नद्यां ( वाहिनी ) । अपिशब्दात्सेनायां, वहति वाहते वा तच्छीला वाहिनी, वाहृ प्रयत्ने । वन्दा वृक्षरुहा, अपिशब्दात्स्त्रीविशेषे ( कामिनी ) ॥ ११२ ॥ अपिशब्दात्कृशाल्पविरलेषु, तन्यते तनुः । ( सूना )[ षू प्रेरणे ], अपिशब्दाद् भक्ष्यप्राणिवधस्थानम् । पञ्च सूना गृहस्थस्येति तूपचारात् । पुष्पं तु सूनम् । वितन्यते वितानं, विगतं तननं वात्र । शून्ये कदर्क[ र्ये ]के च ( वितानम् ) ॥ ११३ ॥

मन्देथ केतनं कृत्ये केतावुपनिमन्त्रणे ।
वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः ॥ ११४ ॥
उत्साहने च हिंसार्थसूचने चापि गन्धनम् ।
आतञ्चनं प्रतीवापजवनाप्यायनार्थकम् ॥ ११५ ॥
व्यञ्जनं लाञ्छनश्मश्रुनिष्ठानावयवेष्वपि ।
स्यात्कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम् ॥ ११६ ॥
स्यादुद्यानं निःसरणे वनभेदे प्रयोजने ।
अवकाशे स्थितौ स्थानं क्रीडादावपि देवनम् ॥ ११७ ॥
उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेपि च ।
व्युत्थानं प्रतिरोधे च विरोधाचरणेपि च ॥ ११८ ॥
मारणे मृतसंस्कारे गतौ द्रव्येर्थदापने ।
निर्वर्तनोपकरणानुव्रज्यासु च साधनम् ॥ ११९ ॥
निर्यातनं वैरशुद्धौ दाने न्यासार्पणेपि च ।
व्यसनं विपदि भ्रंशे दोषे कामजकोपजे ॥ १२० ॥
पक्ष्माक्षिलोम्नि किञ्जल्के तन्त्वाद्यंशेप्यणीयसि ।
तिथिभेदे क्षणे पर्व वर्त्म नेत्रच्छदेध्वनि ॥ १२१ ॥

---

केत्यतेनेन केतनं, कित ज्ञाने । कृत्येवश्यंकार्ये यथा– कार्यकेतनम् । केतौ ध्वजे यथा– मीनकेतनः । उपनिमन्त्रणे यथा– ब्राह्मणो निकेतनं नातिक्रामेत् । तत्त्वं ज्ञानं, ब्रह्म वेदा ब्रह्म तपो ब्रह्म ज्ञानं च शाश्वतम् । बृह वृद्धौ, विप्रे यथा– ब्रह्महत्या । त्रिष्वर्थेषु क्लीबे द्वयोः पुंसि ॥ ११४ ॥ हिंसार्थे यत्सूचनं मतदर्शनं, यदाहुः– गन्धनं हिंसाप्रयुक्तं सूचनं, हिंसायामित्येके पेठुः । अपिशब्दात्प्रकाशने ( गन्धनम् )। तञ्चु गतौ, प्रतीवापः स्वर्णादेर्द्रुतस्य द्रव्यान्तरेणावचूर्णनं विपरीतावपनम् ( आतञ्चनम् )॥११५॥ व्यज्यतेनेन व्यञ्जनं निष्ठानं भक्ताद्युपसेचनं दध्यादि, अवयवः स्त्र्यादिचिह्नम् । आपिशब्दात्ककारादि ( व्यञ्जनम् )। कुलीने भवं कौलीनं, कुलस्येदं वा । लोकवादोऽपवादः, यथा– मा कौलीनादसितनयने मय्यविश्वासिनी भूः ( मेघ० ) ॥ ११६ ॥ ( उद्यानं ) भावेधिकरणे च ल्युट् । वनभेद उपवनं ( उद्यानं )। अधिकरणे भावे च ल्युट् ( स्थानं )। आदिशब्दाद्विजिगीषादौ ( देवनं )। अपिशब्दात्परिदेवने द्यूते च ( देवनं )॥ ११७ ॥ पौरुषमुद्योगः, तन्त्रं सैन्यं स्वमण्डलचिन्ता च ( उत्थानम् )। सन्निविष्टोद्गम उपविष्टस्योर्ध्वीभावः । अपिशब्दान्मलोत्सर्गे चैत्यगृहे वास्त्वन्तरे च ( उत्थानं )। प्रतिरोधे, विगतमुत्थानमत्रेति । अपिशब्दात्समाधिनिवृत्तौ ( व्युत्थानम् ) ॥ ११८ ॥ यथाक्रमं भावादौ ल्युट् ( साधनम् ) । चशब्दाल्लिङ्गे कारके सैन्ये– उपह्वरणे– उपाये सिद्धौ मेधे च ( साधनम् ) ॥ ११९ ॥ न्यासार्पणं निक्षेपप्रतिदानं ( निर्यातनम् ), अपिशब्दादृणादिसंशुद्धौ । व्यस्यति श्रेयोमार्गाद् व्यसनं, व्यस्तिश्च । कामजो दोषो मृगयाक्षपानस्त्रियः, क्रोधजो वाक्पारुष्यदण्डपारुष्यार्थदूषणानि । अशुभे पापे दैवानिष्टफले, अशक्तौ चोपचारात् ( व्यसनम् )॥ १२० ॥ पक्ष परिग्रहे, तन्तुतूलादीनां भागेल्पतरे ( पक्ष्म )। गरुति च ( पक्ष्म )। तिथिविशेषः षष्ठ्यष्टमी– अमावास्यादिः, यथा– पर्ववर्जं व्रजेच्चैनाम् । प्रतिपत्पञ्चदश्योः संधिश्च ( पर्व ) । क्षणः प्रस्ताव उत्सवश्च ( पर्व )। ग्रंथौ चरिते च ( पर्व ), यथा– आदिपर्व । वर्तते वर्त्म, वर्तन्ते यान्त्यनेन च । नेत्रच्छदोक्षिपुटः ( वर्त्म )॥ १२१ ॥

अकार्यगुह्ये कौपीनं मैथुनं संगतौ रते ।
प्रधानं परमात्माधीः प्रज्ञानं बुद्धिचिह्नयोः ॥ १२२ ॥
प्रसूनं पुष्पफलयोर्निधनं कुलनाशयोः ।
क्रन्दने रोदनाह्वाने वर्ष्म देहप्रमाणयोः ॥ १२३ ॥
गृहदेहत्विट्प्रभावा धामान्यथ चतुष्पथे ।
संनिवेशे च संस्थानं लक्ष्म चिह्नप्रधानयोः ॥ १२४ ॥
आच्छादने संविधानमपवारणमित्युभे ।
आराधनं साधने स्यादवाप्तौ तोषणेपि च ॥ १२५ ॥
अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि ।
रत्नं स्वजातिश्रेष्ठेपि वने सलिलकानने ॥ १२६ ॥
तलिनं विरले स्तोके वाच्यलिङ्गं तथोत्तरे ।
समानाः सत्समैके स्युः पिशुनौ खलसूचकौ ॥ १२७ ॥
हीनन्यूनावूनगर्ह्यौ वेगिशूरौ तरस्विनौ ।
अभिपन्नोपराद्धोभिग्रस्तव्यापद्गतावपि ॥ १२७ ॥
कलापो भूषणे बर्हे तूणीरे संहतेपि च ।
परिच्छदे परीवापः पर्युप्तौ सलिलस्थितौ ॥ १२९ ॥

---

कूपं प्रवेष्टुमर्हति– इति कौपीनं, शालीनकौपीनेअधृष्टाकार्ययोः ( सू० ) इति साधुः । लक्षणया लिङ्गं तदाच्छादनं च ( कौपीनं ) । मिथुनं युग्मं स्त्रीपुंसौ च तस्येदं मैथुनम् । प्रधीयतेस्मिन्प्रवर्तते च प्रधानम्, अजहल्लिङ्गम् । प्रकृतिर्महामात्रो मुख्यश्च ( प्रधानं ) । ( प्रज्ञानं ) भावे करणे च ल्युट् ॥ १२२ ॥ प्रसूयते प्रसूनम् । नियतं धनं यत्र, निवृत्तिश्च धनस्य निधनम् । अन्तेपि ( निधनम् ) । ( क्रन्दनं ) भावे ल्युट् । वर्षति वृष्यते वर्ष्म । प्रमाणमत्रोन्नतिः, यथा– व्याप्तं व्योमनि वर्ष्मणा ॥ १२३ ॥ त्विट् तेजः, धीयतेत्र धत्ते च धाम, जन्मापि । संनिवेशो रचना ( संस्थानं ), आकृतौ मृत्यौ च । लक्ष्यतेनेन लक्ष्म, लक्ष्ये च । आच्छादने द्वे, संपिधानमिति सभ्यः पाठः । अपवारणं स्थगनं, वस्त्रं तूपचारात् ( आच्छादनम् ) । ( आराधनं ) करणे भावे च ल्युट् ॥ १२५ ॥ ( अधिष्ठानं ) अधिकरणे भावे च ल्युट् । चक्रं रथाङ्गं, अपिशब्दादारोपणे व्यवस्थापने च ( अधिष्ठानं ) । ( रत्नं ) यदाहुः– जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते ( चाणक्यश० ) । अपिशब्दान्मणौ, रमन्तेस्मिन् रत्नम् । वने द्वे, वनु याचने ॥ १२६ ॥ तलमस्यास्ति तलिनं, अधस्तनेपि । पान्तेभ्यः प्राक् त्रिलिङ्गाः । सह मानेन वर्तते समानं मानं चास्य समानः । अपिश्यति तक्ष्णोति पिशुनः, पिश अवयवे वा ॥ १२७ ॥ हीयते हीनः, ऊन परिहाणे । ऊनोल्पः, गर्ह्यस्तूपचारात् । तरो जवो बलं वास्त्यस्य तरस्वी । अपराध्यत्यपराद्धः, अभिद्रुतोपि ( अभिपन्नः ) ॥ १२८ ॥ दुर्गश्चाह– लेख्यं भूम्यादिदानार्थे यातनाज्ञा च शासनम् । निदानमवसानेपि सार्थे वार्धुषिके धनी ॥ कक्षापटेपि कौपीनं न ना [ ज्ञाने ] खेदेपि बाधना [ वेदना ] । द्युम्नं बलेथ भार्यापि जनी दोषेपि लाञ्छनम् ॥ अथ पान्ताः । कला आप्नोति कल्पते च कलापः, भूषणे काञ्च्यादौ । संहते यथा– केशकलापः । तूणे[ रूपे ]पि ( कलापः ) । परिच्छदः परिवारः, पर्युप्तिः परितो बीजत्यागः ( परीवापः ), स्थितिरचलत्वं, सलिलस्थितिर्जलाधार इत्येके ॥ १२९ ॥ गोष्ठपतिर्गोष्ठाध्यक्षः, देशकुलस्वामी च, गाः पाति गोपायति च गोपः । वृषेण दान्तेन धर्मेण वा कपति याति वृषाकपिः,

गोधुग्गोष्ठपती गोपौ हरो विष्णुर्वृषाकपिः ।
बाष्पमूष्माश्रु कशिपु त्वन्नमाच्छादनं द्वयम् ॥ १३० ॥
तल्पं शय्याट्टदारेषु स्तम्बेऽपि विटपोऽस्त्रियाम् ।
प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः ॥ १३१ ॥
भेद्यलिङ्गा अमी कूर्मी वीणाभेदश्च कच्छपी ।
अन्तराभवसत्त्वेऽश्वे गन्धर्वो दिव्यगायने ॥ १३२ ॥
कम्बुर्ना वलये शंखे द्विजिह्वौ सर्पसूचकौ ।
पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वेऽपि पूर्वजान् ॥ १३३ ॥
कुम्भौ घटेभमूर्धांशौ डिम्भौ तु शिशुबालिशौ ।
स्तम्भौ स्थूणाजडीभावौ शंभू ब्रह्मत्रिलोचनौ ॥ १३४ ॥
कुक्षिभ्रूणार्भका गर्भा विश्रम्भः प्रणयेऽपि च ।
स्याद् भेर्यां दुन्दुभिः पुंसि स्यादक्षे दुन्दुभिः स्त्रियाम् ॥ १३५ ॥

---

अग्निश्च । वाययति शोपयाति स्रवति च वाष्पः । कशति क्लेशं कशिपु, द्वयं युगपत्पृथङ् नैव । कशिपू इत्यपपाठः ॥ १३० ॥ तल प्रतिष्ठायां, अट्टो दुर्गप्राकारः, रणमण्डप इत्येके, यथा– विशीर्णतल्पा-( ट्टशता ) पूः ( रघु० ) । शय्या यथा– तल्पं भूः स्तरणं तृणानि ( भर्तृहरि० ) । दारा यथा– गुरु-तल्पगः ( मनुः ) । स्तम्बो गुल्मः (विटपः) । अपिशब्दात्स्कन्धादूर्ध्वं तरोः शाखा विटपः ( **कात्यः** ) । कटप्रे विस्तारे तूपचारात्, विट आक्रोशे । बुधे लक्षणया ( प्राप्तरूप इ० ) ॥ १३१ ॥ कूर्मी कमठी, वीणाविशेषः सारस्वताख्यः, कच्छेन पिबति कच्छं पाति वा कच्छपी । कुतपो मृगरोमोत्थपटे चाह्नो-ऽष्टमेंशके । इतः फान्ताः । रवर्णे पुंसि रेफः स्यात् कुत्सिते वाच्यलिङ्गकः । शिफा शिखायां सरिति मांसिकायां च मातरि ॥ शफं मूले तरूणां स्याद्गवादीनां खुरेपि च । गुम्फः स्याद् गुम्फने बाहोरलंकारे च कीर्तितः । अथ बान्ताः [ वान्ताश्च ] । ( गन्धर्वः ) अन्तरा मरणजन्मनोर्मध्ये भवं सत्त्वं यातना-शरीरम् । यदाहुः– अन्तराभवदेहो हि नेष्यते विन्ध्यवासिना ( कुमारिलभट्ट० ), तन्न, लक्ष्यविरोधात् । तस्मादन्तरिक्षवासिनो गन्धर्वाख्या भूताः, यद् **व्यासः**– अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम् । गन्ध्यते गन्धर्वः, पशुभेदेपि ॥ १३२ ॥ काम्यते कम्बुः, शम्बूकेपि । ( द्विजिह्वः ) जिह्वात्र वचनमुपचा-रात् । पूर्वो वाच्यलिङ्गः । प्रागिति दिशं देशं कालं चाह, तत्स्थं च वस्तु ( पूर्वम् ) । पूर्वजा आदि-पुरुषाः । आद्यर्थे तु क्लीबे यथा– क्षत्त्रत्येनः कृतं पूर्वम् ॥ १३३ ॥ चित्रपुङ्खेपि कादम्बो नितम्बोऽद्रितटे कटौ । दर्वी फणापि चिम्बोष्ठी मण्डले चाकृतौ फले ॥ अथ भान्ताः । इभस्य मूर्धांशः शिरोभागः ( कुम्भः ) । डयते डिम्भ्यते वा डिम्भः, बालिशो मूर्खः । ष्टभि प्रतिबन्धे, स्तम्भुः सौत्रो वा, स्तभ्नाति गृहं चेष्टितं च स्तम्भः । ( शंभुः ) अर्हन्नपि ॥ १३४ ॥ भ्रूण उदरस्थो जन्तुः ( गर्भः ) । कुक्षौ यथा– गर्भस्थेन समस्तदा । अन्तर्भवे तूपचारात्, यथा– रम्भागर्भमृदुः । भ्रूणे यथा– भर्तृगर्भद्रुहां चैव । अर्भके यथा– गर्भरूपः, गीर्यते गृणाति च गर्भः । प्रणयः शृङ्गारप्रार्थना ( विश्रम्भः ) । अपि-शब्दाद्विसंवादे विश्वासे च ( विश्रम्भः ) । दुन्दु भाषते दुन्दुभिः, दुनोति भीरूनिति **नैरुक्ताः** । भेर्यां यथा– दुन्दुभिस्ताडितोयम् ( वेणीसंहार० ) । अक्षोत्र पाशकः, यथा– दुन्दुभ्या किल तत्कृतं पतितया यद द्रौपदी हारिता ॥ १३५ ॥ महारजनं पद्मकम् । करकः कमण्डलुः, कुस्यति कुसुम्भाति मृद्नाति

स्यान्महारजने क्लीबं कुसुम्भं करके पुमान् ।
क्षत्रियेपि च नाभिर्ना सुरभिर्गवि च स्त्रियाम् ॥ १३६ ॥
सभा संसदि सभ्ये च त्रिष्वध्यक्षेपि वल्लभः ।
किरणप्रग्रहौ रश्मी कपिभेकौ प्लवंगमौ ॥ १३७ ॥
इच्छामनोभवौ कामौ शक्त्युद्योगौ पराक्रमौ ।
धर्माः पुण्ययमन्यायस्वभाचारसोमपाः ॥ १३८ ॥
उपायपूर्व आरम्भ उपधा चाप्युपक्रमः ।
वणिक्पथः पुरं वेदो निगमा नागरो वणिक् ॥ १३९ ॥
नैगमौ द्वौ बले रामो नीलचारुसिते त्रिषु ।
शब्दादिपूर्वो वृन्देपि ग्रामः क्रान्तौ च विक्रमः ॥ १४० ॥
स्तोमः स्तोत्रेध्वरे वृन्दे जिह्मस्तु कुटिलेलसे ।
उष्णेपि घर्मश्चेष्टालंकारे भ्रान्तौ च विभ्रमः ॥ १४१ ॥
गुल्मा रुक्स्तम्बसेनाश्च जामिः स्वसृकुलस्त्रियोः ।
क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु ॥ १४२ ॥

---

कुसुम्भं, सुम्भ ( शुम्भ ) भासने हिंसायां च । अपिशब्दाद्विजिगीषौ राज्ञि ( नाभिः ), ना पुमान् चक्रमध्ये तुन्दौ च स्त्री, नभते नभ्यते वा नाभिः । सुष्ठु रभते सुरभिः, चशब्दाद्वसन्ते पुमान्, सुगन्धौ च त्रिषु । मनोज्ञे तूपचारात् ( सुरभिः ) ॥ १३६ ॥ सह भान्त्यस्यां सभा, सभ्यास्तु तात्स्थ्यात् । समूहे शालायां द्यूते च ( सभा ) । अध्यक्षोत्र गो[ त्रा ]ध्यक्षः ( वल्लभः ) । अपिशब्दात् प्रिये ( वल्लभः ) । करभौ करपार्श्वोष्ट्रौ । इतो मान्ताः । ( रश्मिः ) प्रग्रहो वल्गादिः, राशिः सौत्रः । प्लवेन गच्छतीति, गमश्च ( सू० ) इति खच् ॥ १३७ ॥ काम्यंपि ( कामः ) । कामं तु बाढार्थे । शक्तिरत्र प्रभुमन्त्रोत्साहलक्षणा, उद्योगोरीन् प्रति बलोत्साहः ( पराक्रमः ) । धरते धर्मः, पुण्यं यागादि- अहिंसा च । यमो धर्मराजः, धर्मस्तु भीमवत् । न्याये यथा- धर्माधिकरणम् । स्वभावे यथा- क्रूरधर्मा । आचारे यथा- धर्मशास्त्रम् । सोमपे यथा- एष धर्मः सनातनः ( मनुः ) । युधिष्ठिरपिता च ( धर्मः ) । वेदे च ( धर्मः ) । धर्मसाधने यागादौ क्लीबे, यच्छ्रुतिः- तानि धर्माणि प्रथमान्यासन् ॥ १३८ ॥ उपधा- मात्यपरीक्षा ( उपक्रमः ) । अपिशब्दात्तदाद्याचिख्यासा यथा- नन्दोपक्रमं मानानि । ( उपक्रमः ) चिकित्सा- उपायपूर्वारम्भत्वात् । निगम्यते निगमः, गोचरसंचरेति ( सू० ) साधुः । निगमे भवो नैगमः, द्वाविति ब्राह्मणस्य नैगमत्वे निषेधः ॥ १३९ ॥ बले हलधरे, रमते रामः, णः । भार्गवे काकुत्स्थे च ( रामः ) । वृन्दे यथा- शब्दग्रामः, गुणग्रामः । अपिशब्दाद्विषयैकदेशे षड्जग्रामादौ च, यदाहुः- सप्त स्वरास्त्रयो ग्रामा मूर्च्छनास्त्वेकविंशतिः । गिरन्ति गृणान्ति च यं स ग्रामः । क्रान्तौ पादादिभिराक्रमण ( विक्रमः ), चशब्दाच्छौर्ये क्वचित् ॥ १४० ॥ ष्टुञ् स्तुतौ, अर्तिस्तुसु ( उ० ) इति मन् । जहाति सतां वृत्तिं जिह्मः । घर्मः, घृणु दीप्तौ ॥ १४१ ॥ गुड रक्षणे, गुड्यतेनेन गुल्मः, रुक्- उदर्यो व्याधिः । स्तम्बोत्र लताप्रतानतृणादिसमूहः, सेनाक्षौहिण्यङ्गं ( गुल्मः ) । चशब्दाद् दुर्गादौ रक्षास्थानं ( गुल्मः ), बलानां सज्जनं विटपसंघातोपि । जमति विरुद्धं जामिः, यथा- जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः । क्षमते क्षमणं क्षम्यते च ( क्षमा, क्षमं ) ॥ १४२ ॥ ( श्यामः ) श्यैङ् गतौ, हरि-

त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशा ।
ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु ॥ १४३ ॥
सूक्ष्ममध्यात्ममप्याद्ये प्रधाने प्रथमस्त्रिषु ।
वामौ वल्गुप्रतीपौ द्वावधमौ न्यूनकुत्सितौ ॥ १४४ ॥
जीर्णं च परिभुक्तं च यातयाममिदं द्वयम् ।
तुरंगगरुडौ तार्क्ष्यौ निलयापचयौ क्षयौ ॥ १४५ ॥
श्वशुर्यौ देवरश्यालौ भ्रातृव्यौ भ्रातृजद्विषौ ।
पर्जन्यौ रसदब्देन्द्रौ स्यादर्यः स्वामिवैश्ययोः ॥ १४६ ॥
तिष्यः पुष्ये कलियुगे पर्यायोवसरे क्रमे ।
प्रत्ययोधीनशपथज्ञानविश्वासहेतुषु ॥ १४७ ॥
रन्ध्रे शब्देथानुशयो दीर्घद्वेषानुतापयोः ।
स्थूलोच्चयस्त्वसाकल्ये गजानां मध्यमे गते ॥ १४८ ॥
समयाः शपथाचारकालसिद्धान्तसंविदः ।
व्यसनान्यशुभं दैवं विपदित्यनयास्त्रयः ॥ १४९ ॥

---

नीले वर्णः । शारिवा नामौषधिः ( श्यामा ), गन्धप्रियङ्गुश्च । ललति लालयति लल्यते च ललामं, पुण्ड्रोश्वमुखेल्पवर्णं चिह्नम् । अश्वभूषा ललामाख्या । प्रधानेपि प्राधान्यान्वयात्, यथा– नृपललामः । केतौ यथा– कपिलल्लामोर्जुनः । प्रभावे शृङ्गे च ( ललामम् ) । नान्तोप्यस्ति यथा– कन्याललाम कमनीयमजस्य लिप्सोः ( रघु० ) ॥ १४३ ॥ सुष्ठु– उक्ष्यते सूक्ष्मं, आत्मनि–अधि– अध्यात्मम् । अपिशब्दादल्पेपि त्रिषु ( सूक्ष्मम् ) । प्रथतेस्मात्प्रथते च प्रथमः । वमेर्वातेर्वा रूपं, ( वामो वल्गुः ) यथा– वामलोचना । ( वामः प्रतीपः ) यथा– विधौ वामारम्भे ( मालतीमा० ) । चशब्दाद्वामं दक्षिणेतरत् । वामा स्त्री, अश्वा तु वामी । अधोभवोधमः, अवोधसोर्लोपश्च ( सू० ) इति मः सलोपश्च । तुच्छेपि ( अधमः ) ॥ १४४ ॥ जीर्णं यथा– यातयामं गतरसं पूति पर्युषितं च यत् ( भगवद्गीता ) । परिभुक्तं यथा– दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः । अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥ याता यामाः क्षणांशा अस्येति । दुर्गश्चाह– भ्रमो मूर्च्छा तक्षभाण्डमजिराम्बुविनिर्गमः । ध्यामौ धूम्रास्फुटौ भीमा रुद्रभीषणपाण्डवाः ॥ इतो यान्ताः । तृक्षस्यापत्यं तार्क्ष्यः । क्षि निवासे, क्षिञ् हिंसायाम्, यक्ष्मा कल्पान्तश्च ( क्षयः ) ॥१४५॥ श्वशुरस्यापत्यं श्वशुर्यः, क्रमाद्दम्पत्योः । भ्रातुरपत्यं भ्रातृव्यः, भ्रातुर्व्यच्च ( सू० ), व्यन्सपत्ने ( सू० ), योगविभागाद् भ्रातृजे । पिपर्ति जनं पर्जन्यः, परोम्भःपूरे जन्यतेनेन वा । रसदब्दो गर्जन्मेघः, अगर्जत्यपि योग्यत्वात् ( पर्जन्यः ) । अरणीयोर्यः ॥ १४६ ॥ त्वेषति तिष्यः, त्विष दीप्तौ, अघ्न्यादिः ( उ० ) । ( पर्यायः ) परावनुपात्ययइणः ( सू० ) इति घञ् । ( प्रत्ययः ) यथायथं कर्तृभावकरणेष्वच् । अधीन आयत्तः, यथा– राजप्रत्ययाः प्रजाः । विश्वासे यथा– न शत्रौ प्रत्ययं गच्छेत् । हेतौ यथा– स्त्रीप्रत्ययः कलहः । रन्ध्रे यथा– रिपोः प्रत्ययमासाद्य प्रहरेत् । शब्दोत्र कृत्तद्धितादिः, प्रथितत्वे च ( प्रत्ययः ) ॥ १४७ ॥ देशविशेषेपि ( अनुशयः ) । स्थूलस्य मुख्यस्योच्चयनमन्यस्यासंग्रहात्, स्थूलावलोकनेनेत्यर्थः । हस्तिनां मध्यमगतौ, यत्पालकाप्यः– नीचैर्गतं स्थूलोच्चयो वीचिमार्ग इति तिस्रो गतयः ॥ १४८ ॥ शपथे यथा– कृतसमयः । आचारे यथा– समयाच्छ्रावयेच्छिष्यम् । काले यथा– संध्यासमयः । सिद्धान्ते यथा– बौद्धसमयः । संविदि यथा–

अत्ययोतिक्रमे कृच्छ्रे दोषे दण्डेप्यथापदि ।
युद्धायत्योः संपरायः पूज्यस्तु श्वशुरेपि च ॥ १५० ॥
पश्चादवस्थायि बलं समवायश्च संनयौ ।
संघाते संनिवेशे च संस्त्यायः प्रणयास्त्वमी ॥ १५१ ॥
विस्र( श्र )म्भयाच्ञाप्रेमाणो विरोधेपि समुच्छ्रयः ।
विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि ॥ १५२ ॥
निर्यासेपि कषायोस्त्री स्यात्सभायां प्रतिश्रयः ।
प्रायो भून्म्यन्तगमने मन्युर्दैन्ये क्रतौ क्रुधि ॥ १५३ ॥
रहस्योपस्थयोर्गुह्यं सत्यं शपथतथ्ययोः ।
वीर्यं बलं प्रभावश्च द्रव्यं भव्ये गुणाश्रये ॥ १५४ ॥
धिष्ण्यं स्थाने गृहे भेऽग्नौ भाग्यं कर्म शुभाशुभम् ।
कसे( शे )रुहेम्नोर्गाङ्गेयं विशल्या दन्तिकापि च ॥ १५५ ॥

---

अन्योन्यसमयः । संकेतोवसरो नियमश्चोपचारात्, यथा– न समयपरिरक्षणं क्षमं ते ( किरातार्जु० )। विरुद्धो नयो व्यसनं ( अनयः ), षाड्गुण्यस्यायथावत्प्रयोगात् । न श्रेयः ( अयः ) अनुकूलं दैवमनयः । विरुद्धं नयनं विपद् ( अनयः ) ॥ १४९ ॥ अतिक्रम उल्लङ्घनं यथा– धर्मस्यात्ययः । कृच्छ्रे यथा – प्राणात्ययः । दोषे यथा– गुणिनां नात्ययं कुर्यात् । दण्डे यथा– वाक्पारुष्येत्ययः शतम् । सम्यक्परागमनं यत्रेति ( संपरायः ), यथा– सांपरायिकं दुर्गं कुर्यात् । श्वशुरः पूज्य इति स्मृतेः, सर्वस्यैव हि दानस्य प्रहीता गुरुरुच्यते । कन्यायाश्चैव विद्यायाः प्रदाता पूज्यते गुरुः ॥ अपिशब्दान्मान्यः ( पूज्यः ) ॥ १५० ॥ पश्चादवस्थायि बलमनुबलाख्यं, समवायो मेलः, संनयति संनयनं च संनयः । स्त्यै संघाते, चशब्दाद् गृहे, यथा– विश्रम्य लौकिकान् संस्त्यायान् प्रविशेयुः । परिचयोपि ( प्रणयः ) ॥ १५१ ॥ विरोधो वैरं, अपिशब्दादुन्नतौ ( समुच्छ्रयः ), समुल्लङ्घ्य श्रयणं– ऊर्ध्वश्रयणं च. उदिश्रयतीति ( सू० ) यत्र् बाहुलकादत्व नास्ति । विषिणोति बध्नाति विषयः, यस्य मत्स्यादेर्यो जलादिर्ज्ञातः प्रसिद्धस्तत्र वर्तते । शब्दस्पर्शरूपरसगन्धाश्चेति विषयाः । अपिशब्दाद् ग्रामसमूहे गोचरे देशे च ( विषयः) ॥१५२॥ निर्यासः क्वाथरसः, यथा– त्रिफलाकषायः । अपिशब्दात्कषायस्तुवराख्यो रसः । रागविशेषेपि, यथा– परिपक्वकषायो मुनिः । रक्तपीतवर्णयोगेपि, यथा– कषायवस्त्रः । आस्पदे च ( प्रतिश्रयः ) । भूम्नि बाहुल्ये यथा– प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते जनः । अन्तगमनेऽनशने यथा– प्रायोपवेशनमतिर्नृपतिर्बभूव ( रघु० ) । तुल्ये च यथा– मूर्खप्रायः, अत्रापि वा मूर्खः प्रायेणेति व्युत्पत्तिः । मन्यते मन्युः, क्रतौ यथा– शतमन्युरिन्द्रः ॥ १५३ ॥ रहस्यं गोप्यं, उपस्थो योन्यादिः, गूहनीयं गुह्यं, शंसिदुहिगुहिभ्योवाक्यप्– वक्तव्यः (वा० ) । सति साधु सत्यं, शपथे यथा– सत्येन शापयेद्विप्रम् (मनुः) । तथ्ये यथा– सत्यवादी । बलं प्राणसामर्थ्यं यथा– सत्त्ववान् वीर्यसंपन्नः । प्रभावो द्रव्यशक्तिर्यथा– रसवीर्यविपाकाः (पृ० ५६) । चशब्दाद्रेतो वीरकर्म च ( वीर्यम् ) । भव्ये योग्ये, द्रव्यंचभव्ये (सू०) साधुः, यथा– क्रिया हि द्रव्यं विनयति नाद्रव्यम् ( कौटिल्यः ) । गुणाश्रये यथा – क्रियावद्गुणवत्समवायि कारणं द्रव्यं पृथिव्यादि (वैशेषिकसू० ) । धनमौषधं च द्रव्यम् ॥१५४॥ धिष शब्दे, भं नक्षत्रं ( धिष्ण्यं ) । अग्निविशेषे पुमान् ( धिष्ण्यः ) । भागायत् ( सू० ), शुभमशुभं शुभाशुभं पुरा कृतं कर्म ( भाग्यम् ) । राजकसेरुर्जलजः कन्दोत्र न पार्श्वास्थि ( गाङ्गेयम् ) । दन्तिका नामौषधी, अपिशब्दाल्लाङ्गली विगतशल्या च ( विशल्या ) ॥ १५५ ॥ वृषाकपेः स्त्री वृषाकपायी, वृषाकप्यग्नीति ( सू० ) ङीष् ऐत्वम् । स्वाहा च, शचीमप्याहुः,

वृषाकपायी श्रीगौर्योरभिख्या नामशोभयोः॥ १५६ ॥
आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् ।
उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः॥ १५७ ॥
छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः ॥ १५८ ॥
कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभवन्धने ।
कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः ॥ १५९ ॥
जन्यः स्याज्जनवादेपि जघन्योन्त्ये( न्ते )धमेपि च ।
गर्ह्याधीनौ च वक्तव्यौ कल्यौ सज्जनिरामयौ ॥ १६० ।
आत्मवाननपेतोर्थादर्थ्यौ पुण्यं तु चार्वपि ।
रूप्यं प्रशस्तरूपेपि वदान्यो वल्गुवागपि ॥ १६१ ॥

---

यथा– वृषाकपार्यमभ्येति सत्रपः किं न गोत्रभिद् । अभिख्यायतेनयाभिख्या संज्ञा, यथा– चैत्राभिख्या । शोभायां यथा– काप्यभिख्या तयोरासीत् ( रघु० ) । कीर्तौ च ( अभिख्या ) ॥ १५६ ॥ भावादौ कृञःशच ( सू० ), आरम्भे यथा– सर्वाः क्रिया मन्त्रमूला नृपाणाम् । निष्कृतिर्यथा– महापातकिनां पुंसां भवेत्प्राणान्तिका क्रिया। शिक्षा यथा– क्रिया हि द्रव्यं विनयति नाद्रव्यम् ( कौटिल्यः )। पूजनं यथा– गुरुदेवक्रियारतः । संप्रधारणं विचारः, यथा– क्रियां विना को हि जानाति कृत्यम् । उपायो यथा– सामादिकाः क्रियाः । कर्म यथा– पाकक्रिया । चेष्टा यथा– स्तम्भे स्यान्निष्क्रियो जन्तुः प्रलये गतचेतनः । चिकित्सा यथा– पुनर्ज्वरे समुत्पन्ने क्रिया पूर्वज्वरानुगा ( चरकसं० )। धात्वर्थेपि, यथा– क्रियाभावो धातुः । आख्यातं तूपचारात्, यथा– क्रिया वा कारकान्विता ( पृ० २८ ) । गर्भाधानादिसंस्कारेपि यथा– स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति । और्ध्वदेहिकं यथा– अतो न रोदितव्यं हि क्रियाः कार्याः प्रयत्नतः ॥ १५७ ॥ छयति संतापं छाया, छो छेदने । छायाख्यार्कभार्या । कान्तौ यथा– विच्छायः पुरुषो भवेत् । प्रतिबिम्बे यथा– संक्रान्तच्छाय आदर्शः । आतपाभावे यथा– नष्टच्छायो मध्याह्नः ॥ १५८ ॥ राजगृहादेः प्रारम्भकोष्ठके यथा– सप्त कक्ष्या अतिक्रम्य । काञ्चीबन्धनदाम यथा– परिधानाद्बहिः कक्ष्या निबद्धा ह्यासुरी भवेत् । मध्ये– इभस्य बन्धने यथा– हेमकक्ष्या गजाः । उद्योगे लक्षणया यथा– परार्थे बद्धकक्ष्याणां त्वादृशामुद्भवः कुतः । क्रियायां करणे कृत्या यथा– कां कृत्यामकार्षीः, प्रश्नाख्यानयोरिञ्च ( चान्द्रसू० ) इति क्यप्– वा । देवता मारी नाम, यथा– तानि कृत्याहतानीव । धनादिना यः शत्रोर्भेद्यते स कृत्यः, यत्कौटिल्यः– क्रुद्धलुब्धभीतावमानिताः परेषां कृत्याः । कार्ये च कृत्यम् ॥ १५९ ॥ जनस्य जल्पो जन्यः, मतजनहलात्करणजल्पकर्षेषु ( सू० )। अपिशब्दादुत्पातः संग्रामोपि ( जन्यः )। जननीयः पितरौ च, तथा संज्ञायांजन्याः ( सू० ) जनीं वहन्तीति । अपिशब्दाज्जघनभवे, शरीरावयवाद्यत् ( सू० ) । चशब्दाद्वाच्यः, वाच्यशब्दोपि गर्ह्यार्थवाची । कलासु साधुः कल्यः, रुज्जोनुगुणः । दक्षोपि ( कल्यः ) । कल्यं ह्यस्तनं श्वस्तनं वाहः, प्रभातं च । कल्या कादम्बिनी ॥ १६० ॥ आत्मवानर्थनीयोर्थे साधुर्वा, अन्नवानिति पाठे धार्मिकोर्थ्यः । ( अर्थ्यः ) धर्मपथ्यर्थेनि ( सू० ) यत् । पुणाति पुण्यं, अघ्न्यादिः ( उ० ) । अपिशब्दात्सुकृतं धर्मश्च ( पुण्यम् )। अपिशब्दादाहते हेमरूप्ये, रूपादाहतप्रशंसयोः ( सू ) इति यप् । वदति वदान्यः, वदेरान्यः ( उ० )। अपिशब्दाद्दाता, वदन्यश्च– एकदेशविकृतः ॥ १६१ ॥ ( न्याय्ये ) यथा– मध्यस्थः । अपिशब्दा

न्याय्येपि मध्यं सौम्यं तु सुन्दरे सोमदैवते ।
निवहावसरौ वारौ संस्तरौ प्रस्तराध्वरौ ॥ १६२ ॥
गुरू गीष्पतिपित्राद्यौ द्वापरौ युगसंशयौ ।
प्रकारौ भेदसादृश्ये आकाराविङ्गिताकृती ॥ १६३ ॥
किंशारू धान्यशूकेषू मरू धन्वधराधरौ ।
अद्रयो द्रुमशैलार्काः स्त्रीस्तनाब्दौ पयोधरौ ॥ १६४ ॥
ध्वान्तारिदानवा वृत्रा बलिहस्तांशवः कराः ।
प्रदरा भङ्गनारीरुग्बाणा अस्राः कचा अपि ॥ १६५ ॥
अजातशृङ्गो गौः कालेप्यश्मश्रुर्ना च तूवरौ ।
स्वर्णेपि राः परिकरः पर्यङ्कपरिवारयोः ॥ १६६ ॥
मुक्ताशुद्धौ च तारः स्याच्छारो वायौ स तु त्रिषु ।
कर्बुरेथ प्रतिज्ञाजिसंविदापत्सु संगरः ॥ १६७ ॥

---

दन्तरे युक्ते प्रमाणेवलग्ने च, मन्यते मध्यः । सोमो देवतास्येति सौम्यं, सोमाट्यण् ( सू० ), सुन्दरे तूपचारात् । चन्द्रजे च ( सौम्यः ) । दुर्गस्तु– सर्वज्ञभिषजौ वैद्यावात्मा कामश्च हृच्छयौ । फलकल्याणयोर्भव्यं योग्यं सांप्रतिके त्रिषु ॥ क्रियाचारातिक्रमेपि जलाधारेपि चाशयः । दैत्याचार्योपि धिष्ण्यो ना काषायः सुरभावपि ॥ चन्द्रोदयो वितानेपि स्यादाम्नायोन्वये श्रुतौ । शीताशिते शिते शैत्यं जात्यं कुलजकान्तयोः ॥ व्यवायो व्यवधौ च स्यात्कुल्या कुलवधूः सरित् ॥ अथ रान्ताः । निवहो यथा– ग्रामवारः । अवसरो यथा– वारंवारमुदारसंगरमुखे । सेवाक्रमेपि यथा– वारस्त्री । वारः सूर्यादिदिवसः । संस्तीर्यते संस्तरः शय्या । संस्तीर्यन्ते दर्भा अत्र संस्तरो यज्ञः ॥ १६२ ॥ गृणाति गुरुः । गीष्पतिर्जीवः ( गुरुः ) । आद्यशब्दात्स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति । तथा गुरु दुर्वहं, अलघु च । द्वाभ्यां कृतत्रेताभ्यां परं द्वापरं युगम् । संशये द्वौ परौ मुख्यावत्रेत्युभयकोटिस्पृक्त्वात्, पृषोदरादित्वात् ( सू० ) आत्वम् । भेदो विशेषः, यथा– पलाण्डुप्रकारा गृञ्जनादयः । सादृश्ये यथा– विषप्रकारः पिशुनः । इङ्गितं भावसूचकं चेष्टितम्, आकृतिर्वैवर्ण्यादिः संनिवेशश्च ( आकारः ) । १६३ ॥ किंचित्कुत्सितं वा शृणाति किंशारुः, इषुः शरः । म्रियन्तेस्मिन्दुर्गमत्वान्मरुः, धन्वा निर्जलो देशः । अद्यतेत्ति वाद्रिः । अब्दो मेघः ( पयोधरः ) ॥ १६४ ॥ वृणोति वृत्रः । कीर्यते करोति वा करः, बलिः– राजग्राह्यम् । मेघोपलस्तु करकः । हस्तिशुण्डापि करः, उपचारात् । प्रदीर्यतेनेनेति प्रदरः, नारीरुगतिरजःस्रावः । अस्यन्ते– अस्राः । अपिशब्दाद्बाष्पोसृक् चास्रम् ॥ १६५ ॥ कालेपीति गवि नरि च काकाक्षिवद्योज्यम् । तनोति तूः– लक्षणं, भ्रनेश्चडूः ( उ० ) बाहुलकात्, तुं वृणोति छादयति तूवरः । रातेर्डैः ( उ० ), अपिशब्दाद्वित्ते मेघे च । परिक्रियते परिकीर्यते च परिकरः । समूहारम्भयोः प्रगाढगात्रिकाबन्धे च ( परिकरः ) ॥ १६६ ॥ मुक्तानां शुद्धिस्तारो नाम गुणः, लक्षणया शुद्धमौक्तिके । चशब्दात्कनीनिकातारकयोश्च तारावत् । अत्युच्चस्वरे रूप्ये च ( तारः ) । शॄवायुवर्णनिवृतेषु ( वा० ) इति कर्तरि घञ् । कर्बुरो नानावर्णः ( शारः ) । प्रतिज्ञायां यथा– सत्यसंगरः । आजौ यथा– संगरो विक्रियाकरः । संविदि यथा– अन्योन्यं वृत्तसंगरौ । आपदि यथा– संगरे शरणं सुहृत्, संगरणं संगिरन्तेत्र च संगरः । शमीफले तु संगरम् ॥ १६७ ॥ मन्त्रब्राह्मणात्मको हि वेदः । गुप्तवादो रहसि कर्त-

वेदभेदे गुप्तवादे मन्त्रो मित्रो रवावपि ।
मखेषुयूपखण्डेपि स्वरुर्गुह्येप्यवस्करः ॥ १६८ ॥
आडम्बरस्तूर्यरवे गजेन्द्राणां च गर्जिते ।
( अभिहारोभियोगे च चौर्ये संनहनेपि च ॥ १६९ ॥ )
स्याज्जङ्गमे परीवारः खड्गकोशे परिच्छदे ।
विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम् ॥ १७० ॥
द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे ।
विपुले नकुले विष्णौ बभ्रुः स्यात्पिङ्गले त्रिषु ॥ १७१ ॥
सारो बले स्थिरांशे च न्याये( य्ये ) क्लीबं वरे त्रिषु ।
दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम् ॥ १७२ ॥
महारण्ये दुर्गपथे कान्तारः पुंनपुंसकम् ।
मत्सरोन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ॥ १७३ ॥
देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक् प्रिये ।
वंशाङ्कुरे करीरोस्त्री तरुभेदे घटे च ना ॥ १७४ ॥
ना चमूजघने हस्तसूत्रे प्रतिसरोस्त्रियाम् ॥ १७५ ॥

---

व्यावधारणं ( मन्त्रः ), मायाबीजादिश्च । मेद्यति स्निह्यति मित्रः । अपिशब्दान्मित्रं सुहृत् । मखादिषु चतुर्ष्वर्थेषु ( स्वरुः ) । अपिशब्दाद्वज्रे, स्वरति स्वरुः । अन्ये तु सान्तमाहुः, शोभनान्यरूंषि यस्येति, खण्डस्थाने खड्गं पेठुः । अपिशब्दाद्वर्चस्के, अवकीर्यत इति, वर्चस्केवस्करइति ( सू० ) साधुः ॥१६८॥ आदम्य[ डम्ब्य ]न्ते भीरवोनेनेत्याडम्बरः । संरम्भेपि, यथा– आडम्बराणि पूज्यन्ते स्त्रीषु राजकुलेषु च ॥ १६९ ॥ परिवार्यतेनेनेति, परिवारोपि । परिच्छदः परिजनादिः ( परीवारः ) । विस्तीर्यते विष्टरः, वृषासनयोर्विष्टरः ( सू० ) साधुः । दर्भमुष्टिरप्ययामः[ परिमाणं ] तस्य विष्टरत्वं श्राद्धादौ ब्राह्मणासनत्वे- नाम्नानात् । पीठाद्यमासनविशेषणम् ॥ १७० ॥ प्रतिह्रियते निवार्यते प्रवेशोनेनात्र च प्रतीहारः । अन- न्तरे द्वाःस्थे स्त्रियां प्रतीहारी, अपिशब्दो द्वाःस्थापेक्षः । बिभर्ति बभ्रुः ॥ १७१ ॥ सृस्थिरेति ( सू० ) कर्तरि घञ् ( सारः ) । बले यथा– सुसारः, घृतान्मांसं तु सारकृत् । स्थिरांशे यथा– चन्दनसारः, मज्जासारः । न्याये यथा– नैतत्सारम् । वरे यथा– जये धरित्र्याः पुरमेव सारम् । दुष्टमासमन्तादुदरमस्य दुरोदरम् ॥ १७१ ॥ कस्याम्भसोन्तं नाशमृच्छति कान्तारः, कान्ता आरा धारा अत्र(स्य) वा । माद्यति परकृच्छ्रे मदात्सरति वा मत्सरः, तद्वान् मत्सरवान् ॥ १७२ ॥ देवादिभ्यो वृते याचिते, रूपात्पुंसि, यदाहुः– तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः ( कात्यः ) । श्रेष्ठे यथा– वरं कूपशताद्वापी, अव्य- यमित्येके । विवाह्योपि वरः । करोति करिणमीरयति किय[ कीर्य ]ते च करीरः । चशब्दाद्वंशविशेषेपि ॥ १७३ ॥ चमूजघनं सेनापश्चाद्भागः, हस्तसूत्रं विवाहादौ कौतुकं मङ्गलार्थमूर्णामयं मणिबन्धसूत्रं ( प्रतिसरः ), यागादौ तूपचारात् । नियोज्येपि ( प्रतिसरः ) ॥ १७४ ॥ कपिले पीतवर्णे पुमान्, तद्वति त्रिषु, हरति हरिः । शीर्यते शर्करा, कर्परांशो मृत्कपालखण्डः । अपिशब्दादिक्षुविकारे शर्करिलदेशे च ( शर्करा ) । याप्यतेनया [ यात्रा ], यापनं भोजनादिवर्तनं यथा– प्राणयात्रा । गतिर्यानं यथा– विजययात्रा । देवोत्सवेपि, यान्त्यत्रेति ( यात्रा )॥१७५॥ इण इरतेश्च रूपं, इरान्नमलमन्नरसश्च, दुर्गश्च– इरा

यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ।
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥
शर्करा कर्परांशेपि यात्रा स्याद्यापने गतौ ॥ १७६ ॥
इरा भूवाक्सुराप्सु स्यात्तन्द्री निद्राप्रमीलयोः ।
धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि ॥ १७७ ॥
क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका ।
त्रिषु क्रूरेऽधनेल्पेपि क्षुद्रं मात्रा परिच्छदे ॥ १७८ ॥
अल्पे च परिमाणे सा मात्रं कार्त्स्न्येवधारणे ।
आलेख्याश्चर्ययोश्चित्रं कलत्रं श्रोणिभार्ययोः ॥ १७९ ॥
योग्यभाजनयोः पात्रं पत्त्रं वाहनपक्षयोः ।
निदेशग्रन्थयोः शास्त्रं शस्त्रमायुधलोहयोः ॥ १८० ॥
स्याज्जटांशुकयोर्नेत्रं क्षेत्रं पत्नीशरीरयोः ।
मुखाग्रे क्रोडहलयोः पोत्रं गोत्रं तु नाम्नि च ॥ १८१ ॥
सत्त्रमाच्छादने यज्ञे सदादाने वनेपि च ।
अजिरं विषये कायेप्यम्बरं व्योम्नि वाससि ॥ १८२ ॥
चक्रं राष्ट्रेप्यक्षरं तु मोक्षेपि क्षीरमप्सु च ।
स्वर्णेपि भूरिचन्द्रौ द्वौ द्वारमात्रेपि गोपुरम् ॥ १८३ ॥

---

भूवाक्सुराण्यापः । तननं द्रात्यस्यां तन्द्री, तन्द्रापि । प्रमीला– इन्द्रियग्लानता । धयन्त्येनां धत्ते च धात्री, उपमाता क्षीरदात्री ॥ १७६ ॥ क्षुणत्ति क्षुद्यते च क्षुद्रम् । व्यङ्गा हीनाङ्गी, वेश्या शीलहीनोपलक्षणं, सरघा मधुमक्षिका ( क्षुद्रा ) । अधनो निःस्वः ( क्षुद्रः ) । अपिशब्दात्कृपणः ( क्षुद्रः ) ॥ १७७ ॥ परिच्छदे यथा– महामात्रः । अल्पे यथा– मात्रया विलेपनं ताम्बूलं चोपयुज्य । परिमाणे यथा– मात्राशी सर्वकालं स्यात् । धने कर्णभूषणेऽक्षिनिमेषकाले तालाङ्गे च ( मात्रा ) । कार्त्स्न्ये यथा– हस्तमात्रम-भिकुण्डम् । अवधारणे यथा– न स्नानमात्रगमनोत्सवभूषणानाम् ( शिशु० ) । स्वार्थेपि यथा– तावन्मा-त्रम् । चीयते चित्र्यते वा चित्रम् । नानावर्णे च ( चित्रम् ) । चित्रकं तु तिलकम् । चित्रा सुभद्रानक्षत्रयोः । कलं दुर्बलं त्रायते कलत्रं कलयति वा ॥ १७८ ॥ पाति पीयतेनेन च पात्रम् । नदीकूलान्तरे यज्ञभाण्डे नाट्यानुकर्तरि ( पात्रम् ) । पतन्ति यान्त्यनेन पत्त्रम्, पर्णेपि । निदेश आज्ञा, शासनं शास्यतेनेन शास्त्रम् । शस्यतेनेन शस्त्रम् ॥ १७९ ॥ जटा वृक्षमूलं, अंशुकं पटोत्र, नयति नीयतेनेन नेत्रम् । मन्था-नरज्जौ बस्तिनाड्यामक्ष्णि च ( नेत्रम् ) । क्षिणोति क्षीयते वा क्षेत्रम् । केदारे सिद्धस्थाने गणितव्यवहारे च ( क्षेत्रम् ) । क्रोडः सूकरः, तस्य मुखाग्रं घोणा, पुनन्त्यनेन पोत्रं, हलसूकरयोःपुवः ( सू० ) ष्ट्रन् । गूयते शब्दयतेनेन गां त्रायते च गोत्रं, चशब्दात्कुले शैले च । गोत्रा तु भूः, गोसमूहश्च ॥ १८१ ॥ सीदन्त्यत्र सत्त्रं, दम्भे साधने चशब्दात् । अजन्त्यत्राजिरं, विषये रूपादौ । अपिशब्दात्प्राङ्गणे ( अजि-रम् ) । अम्बतेम्ब्यते वाम्बरम् । सुगन्धद्रव्यभेदेपि ( अम्बरम् ) ॥१८२॥ करोतेश्चकतेश्च रूपं ( चक्रम् ) । अपिशब्दादायुधे रथाङ्गे सैन्ये राष्ट्रे तैलिककुलालाद्युपकरणे च ( चक्रम् ) । चक्रस्तु चक्रवाके । दुरुद्योगगु-णावर्तयोश्चाक्रिका । न क्षरत्यक्षरम् । अपिशब्दाद् ब्रह्मपरब्रह्मणोः ( अक्षरं ) । घस्यते क्षीरम्, चशब्दाद् दुग्धे । अपिशब्दात्प्रभूतेन्द्वोः ( भूरिचन्द्रौ ), भवति भूरि । अपिशब्दात्पुरद्वारे, गोप्यते गोपुरम् ॥ १८३ ॥

गुहादम्भौ गह्वरे द्वे रहोन्तिकमुपह्वरे ।
पुरोधिकमुपर्यग्राण्यगारे नगरे पुरम् ॥ १८४ ॥
मन्दिरं चाथ राष्ट्रोस्त्री विषये स्यादुपद्रवे ।
दरोस्त्रियां भये श्वभ्रे वज्रोस्त्री हीरके पवौ ॥ १८५ ॥
तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे ।
औशीरं चामरे दण्डेप्यौशीरं शयनासने ॥ १८६ ॥
पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले ।
व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ॥ १८७ ॥
अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये ।
छिद्रात्मीयविनाबहिरवसरमध्येन्तरात्मनि च ॥ १८८ ॥
मुस्तेपि पिठरं राजकशेरुण्यपि नागरम् ।
शार्वरं त्वन्धतमसे घातुकेभे नृ( -द्य )लिङ्गकम् ॥ १८९ ॥

---

गुह्यते गुहा, भिदादिः ( षिद्भिदादीति ) । गाहनं गाह्यते वा गह्वरं, निकुञ्जेपि । रहो निर्जनं. उपह्वरन्तेत्रोपह्वरम् । पुरो यथा– अग्रेसरः । अधिकं यथा– साग्रं शतम् । उपरि यथा– वृक्षाग्रम्, अगत्यग्रम् । भिक्षाभेदेपि ( अग्रं ), यत्स्मृतिः– ग्रासप्रमाणं भिक्षा स्यादग्रं ग्रासचतुष्टयम् । अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः ॥ मुख्ये तूपचारात्, यथा– अग्रहारः । चशब्दः पुरापेक्षः, सर्वतोभद्रादियागे देहेपि पुरम्, पिपर्ति पूर्यते च, मन्दतेत्र मन्दिरम् ॥ १८४ ॥ राजते राष्ट्रं, विषयो जनपदः । उपद्रवे यथा– परराष्ट्रभयम् । दृ भये, दृ विदारणे, श्वभ्रे दर्यपि । दरेति– ईषदर्थेव्ययं देश्यं पदं वा, यथा– दरदलितहरिद्रापिञ्जराण्यङ्गकानि ( राजशेखरः ) । वजत्येव न प्रतिहन्यते वज्रं, हीरको मणिव्यधकं रत्नम् । वज्रोशनिश्च ॥ १८५ ॥ तन्यते तन्त्र्यते वा तन्त्रम् । प्रधाने यथा– द्वित्वमतन्त्रम् । सिद्धान्ते यथा– चतुःपीठमिदं तन्त्रम् । सूत्रवाये यथा– तन्त्रवायः । परिच्छदे यथा– तन्त्रपतिः । अत एव स्वमण्डलचिन्ता तन्त्रम् । आयत्तेपि यथा– स्वतन्त्रः । शास्त्रप्रक्रियाशब्दव्युत्पत्तिरौषधादि च, यथा– साधारणं भवेत्तन्त्रं यथा श्वेतो धावति (भाष्य०) । उश्यते काम्यत इत्यगमात्, दण्डो यष्टिः । शयनासनयोः समुदितयोः संज्ञेयम् ( औशीरं ) । अपिशब्दादुशीरस्येदं ( औशीरम् ) ॥ १८६ ॥ वाद्यभाण्डे मुरजस्य मुखे, तीर्थविशेषे यथा– पुष्करं दुष्करं गन्तुम् । औषधविशेषे यथा– पुष्करमूलानि ॥ १८७ ॥ अन्तं रात्यन्तरम् । अवकाशे यथा– अन्तरं देहि ( बा० रा० ) । अवधौ यथा– मासान्तरे देयम् । परिधाने यथा– अन्तरे शाटका अन्तःपरिधानीया इत्यर्थः ( काशिका० ) । अन्तर्धौ यथा– पर्वतान्तरिताः स्त्रियः । भेदो विशेषः, यथा– अन्तरज्ञो भव सदा धनस्य च जनस्य च । तादर्थ्ये यथा– ओदनान्तरस्तण्डुलः । छिद्रे यथा– अन्तरं लब्ध्वारिः प्रहरेत् । आत्मीये यथा– अयमभ्य[ त्य ]न्तरो मम । विनार्थे यथा– अन्तरेण पुरुषकारं न किञ्चित्सिध्यति । बहिरर्थे यथा– अन्तरे चाण्डालगृहा बाह्या इत्यर्थः । अवसरे यथा– अन्तरज्ञः सेवकः । मध्ये यथा– आवयोरन्तरे जाताः पर्वताः सरितो द्रुमाः ( महानाट० ) । अन्तरात्मनि यथा– अन्तरात्मा, तथा च, दृष्ट्वान्तरं ज्योतिरुपारराम । चशब्दादन्यार्थे यथा– वस्त्वन्तरम् ॥ १८८ ॥ अपिशब्दात्स्थाल्यां ( पिठरं ), पिठ अवयवे । राजकशेरुर्जलजकन्दविशेषः ( नागरम् ) । अपिशब्दाच्छुण्ठी, नगरभवं च ( नागरम् ) । शर्वर्यां भवं शृणाति वा शार्वरं, घातुकश्चासाविभो हस्ती च ॥ १८९ ॥ गोर एव गौरः । अपिशब्दाद् भल्लातकः ( अरुष्करः ) । जठति ( जायते )

गौरोऽरुणे सिते पीते व्रणकार्यप्यरुष्करः ।
जठरः कठिनेपि स्यादधस्तादपि चाधरः ॥ १९० ॥
अनाकुलेपि चैकाग्रो व्यग्रो व्यासक्त आकुले ।
उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः स्यादनुत्तरः ॥ १९१ ॥
एषां विपर्यये श्रेष्ठे दूरानात्मोत्तमाः पराः ।
स्वादुप्रियौ च मधुरौ क्रूरौ कठिननिर्दयौ ॥ १९२ ॥
उदारो दातृमहतोरितरस्त्वन्यनीचयोः ।
मन्दस्वच्छन्दयोः स्वैरः शुभ्रमुद्दीप्तशुक्लयोः ॥ १९३ ॥
चूडा किरीटं केशाश्च संयता मौलयस्त्रयः ।
द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलवः ॥ १९४ ॥
कृतान्तानेहसोः कालश्चतुर्थेपि युगे कलिः ।
स्यात्कुरङ्गेपि कमलः प्रावारेपि च कम्बलः ॥ १९५ ॥
करोपहारयोः पुंसि ब(व)लिः प्राण्यङ्गजे स्त्रियाम् ।
स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः ॥ १९६ ॥
वातूलः पुंसि वात्यायामपि वातासहे त्रिषु ।
भेद्यलिङ्गः शठे व्यालः पुंसि श्वापदसर्पयोः ॥ १९७ ॥

---

जठरं, अपिशब्दात्कुक्षौ । अपिशब्दादोष्ठे हीने दुर्धरे च ( अधरः ) ॥ १९० ॥ अपिशब्दादवहिते, एकमग्रं चिन्तनीयमस्यैकाग्रः । विविधमग्रमस्य व्यग्रः, विशेषेणागति वा । उपरि यथा– इत उत्तरम् । उदीच्ये यथा– उत्तरे कुरवः । श्रेष्ठे यथा– लोकोत्तरम् । अपिशब्दाद्वाक्ये यथा– निरुत्तरीकृतः । प्रतिवाक्ये यथा– प्रश्नश्चोद्यधिया पृच्छा तस्य भञ्जनमुत्तरम् । अतिशयेनोद्गतमुत्तरम् । नास्त्युत्तरमत्रानुत्तरम् ॥ १९१ ॥ एषामुपर्यादीनां विपर्यये बुध्ने दक्षिणेऽधमे वचनाभावे च ( अनुत्तरः ) । अनात्मात्मनोन्यः ( परः ) । उत्तमोत्रोत्तरतः, पूर्वादन्यः शत्रुश्च ( परः ), पिपर्तीति परः । मधु माधुर्यमस्यास्ति मधुरः, ऊषसुषीतिरः, ( सू० ) । कृणाति कृन्तति वा क्रूरः ॥ १९२ ॥ उच्चैरारात्युदारः, अनाकुलेपि । इतं राति– एति वा– इतरः । स्वेनेर्ते स्वस्य– ईरो वा स्वैरः, स्वादीरेरिणोः ( वा० ) इति वृध्द्येकादेशौ । शोभते शुभ्रम् ॥ १९३ ॥ आसारो वेगवद्वर्षे सैन्यप्रसरणं तथा । धाराम्बुपाते चोत्कर्षेस्त्री कटाहे तु कर्परः । बन्धुरं सुन्दरे नम्रे गिरिर्गेन्दुकशैलयोः । चरुः स्थाल्यां हविःपक्तावधीरः कातरे चले ॥ अथ लान्ताः । संयता बद्धाः केशा मौलिः, मूल प्रतिष्ठायां, मूङ् बन्धने वा । द्रुमविशेषः पीलुः । मातङ्गोत्र हस्ती. पील गतौ ॥ १९४ ॥ अनेहा कालः क्षणत्रुट्यादिः, कलयति भूतानि कलयत्यायुर्वा कालः । महाकाले मृत्यौ कृष्णवर्णे च ( कालः )। अपिशब्दात्कलहे, निरर्थके रणे तूपचारात् ( कलिः ), कल क्षेपे । अपिशब्दात्पद्माम्भसोः कमलम् । कमला तु श्रीः । कमलते कुत्सितमलति च ( कमलम् ) । अपिशब्दात्सास्नायां नागविशेषे च, काम्यते कुत्सितं बलति च कम्बलः ॥ १९५ ॥ करो राजप्राह्यः, पूजोपकरणमुपहारः, प्राण्यगजस्त्वक्संकोचः ( वलिः ) । आद्य ओष्ठयादिरन्त्यो दन्त्योष्ठ्यादिरिति विशेषो न गणितः । बल प्राणने, वल संवरणे, दैत्येपि बलिः । स्थौल्यादौ रूपात्क्लीबे ( बलं ), काकहलधरयोस्तु ना पुंलिङ्गः ( बलः ) ॥१९६॥ वातात्समूहेच (वा०), तं न सहत इति– ऊलः । उन्मत्तेप्याहुः, वातुलवातलौ च दृश्येते । विविधमालमनर्थोस्माद्व्यालः । अड उद्यमे, व्याडोपि । स्त्रियां तु व्याली ॥ १९७ ॥

मलोऽस्त्री पापविट्किट्टान्यस्त्री शूलं रुगायुधम् ।
शङ्कावपि द्वयोः कीलः पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु ॥ १९८ ॥
कला शिल्पे कालभेदे चाली सख्यावली अपि ।
अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि ॥ १९९ ॥
बहुलाः कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिषु ।
लीला विलासक्रिययोरुपला शर्करापि च ॥ २०० ॥
शोणितेऽम्भसि कीलालं मूलमाद्ये शिफाभयोः ।
जालं समूह आनायो गवाक्षक्षारकावपि ॥ २०१ ॥
शीलं स्वभावे सद्वृत्ते सस्ये हेतुकृते फलम् ।
छदिर्नेत्ररुजोः क्लीबं समूहे पटलं न ना ॥ २०२ ॥

---

मलयति मलते वा देहं च मलः, विड् गूथं, किट्टं कलङ्कः । स्मृतौ तु– वसा शुक्रमसृङ् मज्जा मूत्रं विट् कर्णविण्नखाः । श्लेष्माश्रु दूषिका स्वेदो द्वादशैते मला नृणाम् ॥ शूल रुजायां, रुग्वातदोषः, यदाहुः– शूलं वर्ततेऽनिलात् । शङ्कौ कीलके ( कीलः ), अपिशब्दाज्ज्वालायां, कील बन्धे । क्षतौ प्रहरणविशेषे कीला, यद्वात्स्यायनः– कीला उरसि कर्तरी शिरसि विद्धा कपोलयोः । पाल्यतेनया पालिः स्त्रीलिङ्गा, अश्रिर्धारा । अङ्के यथा– कपोलपाली, कपोलोत्सङ्ग इत्यर्थः । अङ्कपालीत्यत्राङ्को वक्षः, यच्छाश्वतः– मुखाङ्कनाभिमेढ्रमातालमानेति । पङ्क्तौ यथा– पालीयं चम्पकानाम् । प्रान्ते यथा– कर्णपाली, तथा सितपटच्छन्नपालीं कपालीम् । लोकाः कल्पितभोजनेप्याहुः ॥ १९८ ॥ शिल्पे गीतादौ, कालविशेषे, यदवोचत्– अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला ( पृ० २२ ) । चशब्दादंशे यथा– चन्द्रकला, निष्कलः । निवृत्त्यां[ त्या]द्याश्चाष्टत्रिंशत्कलाः । तालेषु गुरुः कला । आ– अलति भूषय- त्याली, आलाति च । अपिशब्दादालिरनर्थः । जलधिजलविकारे वेला, तटेप्युपचारात्, वेल चलने । कालोवसरः, मर्यादायां यथा– उद्वेलः ॥ १९९ ॥ बहुलाः कृत्तिका नाम नक्षत्रं, बहुत्वं तारकाणां बहु- त्वात्, शितौ कृष्णवर्णे, वहन्ति वहुलाः, बहु लाति च । वहति हव्यं वहुलाख्योऽग्निः । बहुलं प्रभूतं प्रायिकं च । बहलशब्दोऽप्यस्ति घनतार्थो बहुत्वार्थश्च । लीङ् श्लेषणे, विलासश्चेष्टालंकारोपलक्षणम्, इष्टजनस्यानुकृतिर्लीलेति भरतोक्तो भेदो नात्र विवक्षितः । क्रिया कायिकः परिस्पन्दः ( लीला ) । उपलाति– उप्यते वा– उपला शर्करा– अश्मरूपा मृत्, अश्मखण्डिका वा । अपिशब्दादिक्षुविकारः, यथा– सिकतोपला । उपलस्त्वश्मा ॥ २०० ॥ कील्यते बध्यते कीलालम् । मूल प्रतिष्ठायां, मूङ् बन्धने, आद्ये यथा– मूलप्रकृतिरविकृतिः ( सांख्यकारिका ), मूलं धनम् । शिफा वृक्षजटा, भं नक्ष- त्रविशेषः ( मूलम् ) । अन्तिकेपि यथा– वृक्षमूलम् । जल घान्ये, आनायो रज्जुवितानः ( जालम् ) । गवाक्षे यथा– जालान्तरगते भानौ ( मनुः ) । क्षारको मुकुलवृन्दम् । अपिशब्दाद् दम्भे, इन्द्रजाले च ( जालम् ) ॥ २०१ ॥ शील समाधौ, स्वभावे यथा– हरणशीलः । शोभने वृत्ते ( यथा )– शीलधनः साधुः । सस्ये ( फलं ) यथा– ओषध्यः फलपाकान्ताः ( धन्वतरिः ) । हेतुना कृते यथा– अधिश्रय- णादेः पाकः फलम् । आयुधाग्रे लाभे फलके, आम्रादौ धान्यादिकणे च ( फलम् ), मुक्तादौ तूपचारात् । छदिर्गृहाच्छादनं, नेत्ररुजि यथा– तिमिरं काचतां याति पटलं तदुपेक्षया ( चरक० ) । समूहे यथा– पयोदपटली, पटं विस्तारं लाति पटलम् ॥ २०२ ॥ अधो यथा– पादतलम् । स्वरूपे यथा– तनुतलो-

अधःस्वरूपयोरस्त्री तलं स्यादामिषे पलम् ।
और्वानलेपि पातालं चेलं वस्त्रेधमे त्रिषु ॥ २०३ ॥
कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले ।
निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः ॥ २०४ ॥
पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु ।
प्रवालमङ्कुरेप्यस्त्री त्रिषु स्थूलं जडेपि च ॥ २०५ ॥
करालो दन्तुरे तुङ्गे चारौ दक्षे च पेशलः ।
मूर्खेर्भकेपि बालः स्याल्लोलश्चलसतृष्णयोः ॥ २०६ ॥
दवदावौ वनारण्यवह्नी जन्महरौ भवौ ।
मन्त्री सहायः सचिवौ पतिशाखिनरा धवाः ॥ २०७ ॥

---

दरी । पृष्ठेपि यथा– भूतलम् । चपेटेपि यथा– तलप्रहारः । वितस्तौ तलः, यथा– षड्युग्मकस्तलस्तालो वितस्तिः शङ्कुराननम् । तलं च प्रकोष्ठे ज्याघातरक्षार्थं चर्म । चशब्दात्कर्षचतुष्टये ( पलं ), आमिषे मांसे, पल रक्षणे । अपिशब्दाद्रसातले ( पातालं ), पतति[ पिबति ] पातमालाति च । चिल वसने, अधमे चेलट् पचादिः ( चेलखेटकटुकेति ), यथा– ब्राह्मणिचेली ॥ २०३ ॥ कोः कूलं कुत्सितं वा कूलं कुकूलम् । इतिशब्देन मान्तमव्ययमिति ध्वनितं, यथा– साधुश्चैतः केवलं मूर्खः, केवृ सेचने । एकोत्रासहायः ( केवलः ) । कृत्स्ने यथा– न केवलं भुवो भर्ता ॥ २०४ ॥ पर्याप्तिः सामर्थ्यं यथा– कुशलं कटकरणे । क्षेमे यथा– कुशलं ते भूयात् । पुण्ये यथा– कुशलकृद्याजकः, कुशान्–लातीति । (कुशलः) शिक्षितत्वेन नैपुण्यं लक्ष्यते । प्रवते प्रवालं, वातेर्वलतेर्वा रूपम् । अङ्कुरोत्र किसलयः ( प्रवालम् ) । अपिशब्दाद् विद्रुमे वीणादण्डे च ( प्रवालः ) । स्थूल परिबृंहणे, जडः स्थूलोतीक्ष्णप्रज्ञत्वात् । अपिशब्दात्पीवरे ( स्थूलः ) ॥ २०५ ॥ करोति कृणोति च करालः । चशब्दान्मृदौ ( पेशलः ), पीङ् पाने पिश अवयवे वा । अपिशब्दात्केशे ह्रीवेरे वालधौ च ( वालः ), वाड़ आप्लावे वल संवरणे च । लुड विलोडने, सतृष्णो लौल्यात् ॥ २०६ ॥ कुलं गृहेपि तालाङ्के कुवेरे चैककुण्डलः । स्त्रीभावावज्ञयोर्हेला हेलिः सूर्ये रणे हिलिः ॥ हालः स्यान्नृपतौ मद्ये शकलच्छदयोर्दलम् । तूलिश्चित्रोपकरणशलाकातूलशय्ययोः ॥ तुमुलं व्याकुले शब्दे शष्कुली कर्णपाल्यपि ॥ अथ वान्ताः । दूयन्तेनेनेति, दुञोविभाषा (सू० ) इति घञ्, यत्कात्यः– दवो वनगतो वह्निर्दावश्च वनमुच्यते । हरो रुद्रः (भवः), भावेपादाने च– अप् । प्राप्तिसंसारसत्ताकल्याणेष्वपि ( भवः ) । मन्त्री बुद्धिसचिवः, सह– अयते सहायः कर्मसचिवः, सचति समवैति सचिवः । पतिर्भर्ता, शाखी वृक्षविशेषः, धवति धूयते वा धवः ॥ २०७ ॥ अवत्यविः । ह्वयनं हवः, भावेनुपसर्गस्येति ( सू० ) ह्वः संप्रसारणं, अप् च । हूयतेस्मिन्हवोध्वरः । षट्सु ( अर्थेषु ) कर्तरि भावे चार्थानुगुण्यात् ( घञ् ) । सत्तायां यथा– कालभावयोः सप्तमी– गोषु दुह्यमानासु गतः । स्वभावे यथा– भावानुरक्तवनितासुरतैः शपेयम् ( घटखर्परः ) । अभिप्राये यथा– भावानुवर्ती भृत्यः । तात्पर्येत एव ( यथा )– अयमत्र भावार्थः । चेष्टा क्रिया यथा– धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते । लीलापि चेष्टैव ( यथा )– भावालसा विलासिन्यः । आत्मनि यथा– स्वं भावं भावयेद्योगी । जन्मनि यथा– नासतो विद्यते भावः ( भगवद्गीता ) । वस्तुनि च यथा– भावाश्चित्तजया भवन्ति भवता भाव्यन्त एते यथा । रतिवेगे च यथा– प्रमाणकालभावेभ्यो रतावस्थापनम् । प्रवृत्तिनिमित्ते च, भवतोस्मादभिधानप्रत्ययाविति भावः । विभूतियोनित्वप्रसिद्धे स्थाय्यादौ च, यदाहुः– विभावः स्थायिसंज्ञश्च सानुभावोथ

अवयः शैलमेषार्का आज्ञाह्वानाध्वरा हवाः ।
भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ॥ २०८ ॥
स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने ।
अविश्वासेपह्नवेपि निकृतावपि निह्नवः ॥ २०९ ॥
उत्सेकामर्षयोरिच्छाप्रसवे मह उत्सवः ।
अनुभावः प्रभावे च सतां च मतिनिश्चये ॥ २१० ॥
स्याज्जन्महेतुः प्रभवः स्थानं चाद्योपलब्धये ।
शूद्रायां विप्रतनये शस्त्रे पारशवो मतः ॥ २११ ॥
ध्रुवो भभेदे क्लीबे तु निश्चिते शाश्वते त्रिषु ।
स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोस्त्रियां धने ॥ २१२ ॥
स्त्रीकटीवस्त्रबन्धेपि नीवी( विः ) परिपणेपि च ।
शिवा गौरीफेरवयोर्द्वन्द्वं कलहयुग्मयोः ॥ २१३ ॥
द्रव्यासुव्यवसायेपि सत्त्वमस्त्री तु जन्तुषु ।
क्लीबं नपुंसकं षण्ढे वाच्यलिङ्गमविक्रमे ॥ २१४ ॥

---

सात्त्विकः । व्यभिचारी च पञ्चैते भावभेदा व्यवस्थिताः ॥ पूज्ये च यथा— मान्यो भावेति वक्तव्यः किञ्चिदूनस्तु मारिषः ( भरतः ) ॥ २०८ ॥ प्रसवनं प्रसूयते च प्रसवः । अपत्ये च ( प्रसवः ) ॥२०९॥ उत्सेक उद्रेकः, इच्छायाः प्रसव उत्पत्तिः ( उत्सवः ) । मह इति सप्तमी, षु प्रसवैश्वर्ययोः, षू प्रेरणे च । प्रभावे यथा— महानुभावः । चशब्दाद् भावसूचके, यदाहुः— अनुभावस्त्वभिनयः पश्चादर्थप्रकाशनात् ॥ २१० ॥ जन्महेतुः पित्रादिः, प्रभवत्यस्मात्प्रभवः । प्रथममुपलब्ध्यर्थो देशश्च प्रभवः, यथा— हिमवान् गङ्गायाः ॥ २११ ॥ भविशेषे यथा— औत्तानपादिः ( ध्रुवः ) । निश्चिते क्लीबं ( यथा )— ध्रुवं मूर्खोयम् । शाश्वते यथा— जातस्य च ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ( भगवद्गीता ) । कीले निश्चले च ( ध्रुवः ) । क्वचित्तु ध्रुवा गाने च, यदाह— ध्रुवा हि नाट्यस्य प्रथमे प्राणाः । आत्मात्मीयज्ञातिधनवचनो हि स्वशब्दः, स्यति सीयते वा स्वः । ज्ञातौ यथा— उल्मुकानीव भान्ति स्वाः । आत्मनि यथा— हृदि स्वमवलोकयन् । आत्मीये यथा— स्वदारनिरतः । धने यथा— प्रभूताः स्वा न दीयन्ते ॥ २१२ ॥ स्त्रियाः कटीवस्त्रस्य बन्धनं, यत्कात्यः— नीविराग्रन्थनं नार्या जघनस्थस्य वाससः । परिपणो राजपुत्रादिबन्धकः ( नीविः ) । अपिशब्दादायव्ययविशुद्धं धनं कारा च ( नीविः ) । शिनोति शिवा, फेरवः शृगाली । हरीतकी, आमलकी च ( शिवा ) । शिवस्तु रुद्रः, शिवं भद्रम् । द्वौ द्वौ द्वन्द्वं, द्वन्द्वंरहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ( सू० ) इति साधुः । मिथुने च ( द्वन्द्वम् ) ॥ २१३ ॥ द्रव्यं पारिभाषिकं विशेष्याख्यं, यदाहुः— वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते । द्रव्यमित्युच्यते सोर्थो भेद्यत्वेन व्यवस्थितः ॥ यथा— सत्त्वे निविशतेपैति (का०) । असुषु यथा— उत्क्रान्तसत्त्वो मृगः । व्यवसायोतिशयवद्वीर्यं यथा— सत्त्ववाञ्शीलसंपन्नः । जन्तौ यथा— सत्त्वहितः । अपिशब्दाद् गुणे बले स्वभावे पिशाचे, आत्मलाभे सत्तायां सारे च ( सत्त्वम् ), यत्कौटिल्यः— सत्त्ववन्तो मृद्भागाः । क्लीबृ अधार्ष्ट्ये, षण्ढे— उभयव्यञ्जने नपुंसकलिङ्गम् ॥ २१४ ॥ क्वापि च— अत्यध्वगातिप्रणतौ प्राध्वो प्राध्वं च बन्धने । अथ शान्ताः । ( वैश्ये ) यथा— विप्रक्षत्रियविट्शूद्राः (पृ० ११३) । मनुजे यथा— विशां-

द्वौ विशौ वैश्यमनुजौ द्वौ चराभिमरौ स्पशौ ।
द्वौ राशी पुञ्जमेषाद्यौ द्वौ वंशौ कुलमस्करौ ॥ २१५ ॥
रहःप्रकाशौ वीकाशौ निर्वेशो भृतिभोगयोः ।
कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु ॥ २१६ ॥
पदे लक्ष्ये निमित्तेपदेशः स्यात्कुशमप्सु च ।
दशावस्थानेकविधाप्याशा तृष्णापि चायता ॥ २१७ ॥
वशा स्त्री करिणी च स्याद् दृग्ज्ञाने ज्ञातरि त्रिषु ।
स्यात्कर्कशः साहसिकः कठोरामसृणावपि ॥ २१८ ॥
प्रकाशोतिप्रसिद्धेपि शिशावज्ञे च बालिशः ।
सुरमत्स्यावनिमिषौ पुरुषावात्ममानवौ ॥ २१९ ॥
काकमत्स्यात्खगौ ध्वाङ्क्षौ कक्षौ च तृणवीरुधौ ।
अभीषुः प्रग्रहे रश्मौ प्रैषः प्रेषणमर्दने ॥ २२० ॥

---

पतिर्विश्टरभाजमारात् ( रघु० ) । विड् गूथे, षान्त इत्येके । अभिम्रियतेभिमरः प्राणनिरपेक्षस्तीक्ष्णाख्यः, यो द्रव्यहेतोर्व्याडं हस्तिनं वा योधयति । रणेभिमर इत्येके, स्पश बाधनस्पर्शनयोः । बन्धे तु घञ्, यथा– सेयमुभयतःस्पाशा रज्जुः । राति राशयति वा राशिः । पुञ्जे यथा– धान्यराशिः । मेषवृषाद्या द्वादश राशयः । वनुते वंशः, मस्करो वेणुः । ( वंशः ) समूहस्तूपचारात् ॥ २१५ ॥ विकाशनं वीकाशः, उपसर्गस्यघञीति ( सू० ) दीर्घः, विर्विगतार्थे विशेषार्थे च । निर्विश्यते भुज्यते निर्वेशः । भृतौ यथा– प्रतिग्रहजप[ य ]विक्रय[ म ]निर्वेशाधिगतैरर्थैः । भोगे यथा– स्त्र्यन्नपानं निर्वेशः । कुत्सितं नाशयतीति कीनाशः । कीशकीकटकीचकाद्यर्थः की निपात इति **श्रीभोजः** । मर्कटेपि ( कीनाशः ) ॥ २१६ ॥ अपदिश्यतेपदेशः, पदं स्थानं यथा– त्यक्तापदेशो यतिः । लक्ष्ये यथा– सापदेशः । निमित्ते यथा– केनाप्यपदेशेनागतः । प्रसिद्धौ च यथा– लब्धव्यपदेशः । कौ शेते कुश्यति च कुशम् । चशब्दा-द्दर्भे ( कुशः ) । फाले तु कुशी, जानपदकुण्डेति ( सू० ) अयोविकारे ङीष् । दशति दश्यते च दशा । अपिशब्दाद्वर्तिः, पटान्ते तु दशाः पुंबहुत्वे । आशासनमाशा महान्गर्धः । अपिशब्दाद्दिक् ( आशा ) ॥ २१६ ॥ चशब्दाद्वन्ध्यगवी सुता वश्या च ( वशाः ) । वश स्वायत्तः, इच्छा यन्त्रणा प्रभुत्वं च । भावे कर्तरि करणे च क्विप् ( दृश् ), दर्शनेक्षिण च । कृणाति कर्कशः, अमसृणः परुषः ॥ २१८ ॥ प्रकाशते प्रकाशनं च प्रकाशः । अपिशब्दात्प्रकटे– उद्द्योते च ( प्रकाशः ) । बालते बालिशः, बाडृ आप्लावे । दुर्गस्तु– कोशोस्त्री कुड्मले खड्गपिधानेर्थौघदिव्ययोः । नाशः क्षये तिरोधाने जीवितेशः प्रिये यमे ॥ नृशंसखड्गौ निस्त्रिंशावंशुः सूर्यैशवः कराः । आश्वाख्या शालिर्श्चाग्रार्थे पाशो बन्धनशस्त्रयोः ॥ लक्ष्यं च– अग्रतो बाहुपाशेन केशपाशेन पृष्ठतः । पार्श्वयोः कर्णपाशेन सर्वतो बन्धनं प्रिया [ ये ] ॥ अथ षान्ताः । न निमिषत्यनिमिषः । पुरि पुरि शयनात्पूरणात्पालनाच्च पुरुषः ॥ २१९ ॥ मत्स्यानत्ति मत्स्याद्बकः, ध्वाक्षि काङ्क्षायाम् । कषति कक्षः, वीरुलता । चशब्दात्पापे पार्श्वे भित्तौ च ( कक्षः ) पापे यथा– कक्षाय क्रमते कक्षायते, सत्रकक्षकष्टकृच्छ्रगहनेभ्यः( कण्वाचिकीर्षायामिति ) ( वा० ) पापे क्रमणे क्यङ् । पार्श्वेङ्गविशेषे यथा– त्व[ म ]द्दन्ताङ्कितपालिकक्षरुधिरक्लिन्नाग्रपुङ्खं शरम् । भित्तौ यथा– सप्तकक्षान्तरा राजधानी । ईष उञ्छे, प्रग्रहो वल्गादिः, रश्मिर्मरीचिः । ( प्रैषः ) प्रादूहोढोढ्येषैष्येष्विति ( वा० ) वृद्धिः ॥ २२० ॥ पक्ष परिग्रहे । अपिशब्दात्– केशे पक्षः समूहार्थः पक्षः साध्य-

पक्षः सहायेऽप्युष्णीषः( पं ) शिरोवेष्टकिरीटयोः ।
शुक्रले मूषिके श्रेष्ठे सुकृते वृषभे वृषः ॥ २२१ ॥
कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः ।
द्यूतेऽक्षे शारिफलकेऽप्याकर्षोऽथाक्षमिन्द्रिये ॥ २२२ ॥
ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे ।
कर्षूर्वार्त्ता करीषाग्निः कर्षूः कुल्याभिधायिनी ॥ २२३ ॥
पुंभावे तत्क्रियायां च पौरुषं विषमप्सु च ।
उपादानेऽप्यामिषं स्यादपराधेऽपि किल्बिषम् ॥ २२४ ॥
स्याद् वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम् ।
प्रेक्षा नृत्तेक्षणं प्रज्ञा भिक्षा सेवार्थना भृतिः ॥ २२५ ॥
त्विट् शोभापि त्रिषु परे न्यक्षं कात्स्न्येनिकृष्टयोः ।
प्रत्यक्षेऽधिकृतेऽध्यक्षो रूक्षस्त्वप्रेम्ण्यचिक्कणे ॥ २२६ ॥
रविश्वेतच्छदौ हंसौ सूर्यवह्नी विभावसू ।
वत्सौ तर्णकवर्षौ द्वौ सारङ्गाश्च दिवौकसः ॥ २२७ ॥

---

विरोधयोः । बले काले पतत्त्रे च रुचौ पार्श्वे विकल्पिते ॥ उष्यते उष्णीषः । शुक्रले यथा– वृष्याः प्रयोगाः । मूषिके यथा– वृषदंशः । श्रेष्ठे यथा– पुरुषवृषः । सुकृते यथा– वृषो हि भगवान्धर्मः ( नारदः ), वर्षति वर्षयते च वृषः ॥ २२१ ॥ कुष्यति कुष्णाति च कोषः, कुड्मले कलिकामध्ये, अर्थौघो भाण्डागारं, दिव्यं शपथः । योन्यां पात्रविशेषेपि यथा– मूत्रकोषः, नेत्रकोषः । लोके तालव्यः शान्तोयम् । अपिशब्दादाकर्षणे, आकर्षणमाकृष्यते– आकर्षत्यस्मिन्वाकर्षः । अक्ष्णोत्यक्षं चक्षुरादि ॥ २२२ ॥ द्यूताङ्गे यथा– स्त्रियोक्षा मृगया पानम् । कर्षे यथा– अक्षः षोडश माषकाः । चक्रं रथकाष्ठोपलक्षणम् ( अक्षः )। व्यवहार आयव्ययादिन्यायः, यथा– अक्षपटलम् । कलिद्रुमो बिभीतकः ( अक्षः )। श्रोतोमूलेपि ( अक्षः )। कर्षणं कर्षति कृष्यते वा कर्षूः, वार्त्ता कृषिः, करीषं शुष्कगोमयम् । कुल्या यथा– चतस्रः कर्षूः पितृभ्यः कुर्यात् ॥ २२३ ॥ पुरुषस्य भावः कर्म चेति, भावे ( प्राणभृज्जाति )वयोवचनेति ( सू० ) अञ् । विष्लृ व्याप्तौ । चशब्दाद्गरले ( विषम् )। उपादानमुत्कोचः ( आमिषम् )। अपिशब्दान्मांसादौ, आमिष्यत आमिषम् । अपिशब्दात्पापे किल्बिषं, किल क्षेपे ॥२२४॥ लोकं धत्ते लोकधातुर्जम्बुद्वीपस्तस्यांशो भूखण्डो नवधेलावृत्तादिः, वर्षणं वर्षं, अज्विधौ भयादीनामुपसंख्यानम् ( वा० )। अन्यत्र वर्षयत्याप्याययतीति वर्षः, दुर्गस्तु– वर्षाख्या लोकधातुश्च षण्ढवत्सरवृष्टयः । षण्ढो वर्षवरः । नृत्तादिप्रेक्षणकं, प्रेक्ष्यत इति प्रेक्षा । प्रेक्ष्यतेनयेति प्रेक्षा धीः, प्रेक्षणे च । अतो नृत्तेक्षणप्रज्ञाश्चेति युक्तः पाठः ॥ २२५ ॥ अधिगतोक्षैरध्यक्षो घटादिः । अक्षेष्वायस्थानेष्वधिकृतोध्यक्षः, अधिकान्यक्षीण्यस्य, अध्यक्ष्णोति वाध्यक्षो नियुक्तः । रूक्ष पारुष्ये, अचिक्कणे निःस्नेहे ॥ २२६ ॥ तथा– व्याजसंख्याशरव्येषु लक्षं घोषौ रवव्रजौ । कपिशीर्षं भित्तिशृङ्गेनुतर्षश्चषकः सुरा ॥ दोषो वातादिके दोषा रात्रौ दक्षोपि कुक्कुटे । शुण्डाग्रभागे गण्डूषो द्वयोश्च मूत्रपूरणे ॥ इतः सान्ताः । हन्ति गच्छतीति हंसः, आद्यदेहहानादुत्तरदेहसंपरिग्रहाच्च हंस आत्मा प्राणो यतिविशेषश्च । विभा त्विड् वसु यस्य विभावसुः । वसति वसन्त्यस्मिन्वत्सः । वत्सं तु वक्षः । सरन्ति सारङ्गाः, सहारङ्गेण गत्या वर्णेन च वर्तन्ते वा । चशब्दान्मृगाश्चातका [ हस्तिनो ] भ्रमराश्च ॥ २२७ ॥ आदिशब्दात्करुणादौ ( रसः )। विषे यथा–

शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः ।
पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेपि शेखरे ॥ २२८ ॥
देवभेदेनले रश्मौ वसू रत्ने धने वसु ।
विष्णौ च वेधाः स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः ॥ २२९ ॥
लालसे प्रार्थनौत्सुक्ये हिंसा चौर्यादिकर्म च ।
प्रसूरश्वापि भूद्यावौ रोदस्यौ रोदसी च ते ॥ २३० ॥
ज्वालाभासौ नपुंस्यर्चिर्ज्योतिर्भद्योतदृष्टिषु ।
पापापराधयोरागः खगबाल्यादिनोर्वयः ॥ २३१ ॥
तेजःपुरीषयोर्वर्चो महश्चोत्सवतेजसोः ।
रजो गुणे च स्त्रीपुष्पे राहौ ध्वान्ते गुणे तमः ॥ २३२ ॥
छन्दः पद्येभिलाषे च तपः कृच्छ्रादिकर्म च ।
सहो बलं सहा मार्गो नभः खं श्रावणो नभाः ॥ २३३ ॥

---

तीक्ष्णरसान् भिक्षुकांश्च रिपौ युञ्जीत । वीर्ये यथा– रसस्यातिरसः सर्पिः । गुणे यथा– रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः । रागे यथा– रसिकः पुरुषादिः । द्रवे यथा– हरीतकीरसः । आद्यदेहधातौ च यथा– रसासृङ्मांसमेदोस्थिमज्जाशुक्राणि धातवः । पारदे च यथा– रसवादी । रसा तु भूः । तंसिः सौत्रो भूषणार्थः, वतंसोपि ॥ २२८ ॥ देवभेदे यथा– अष्टौ वसवः । अनलोऽग्निः, रश्मिस्तेजः, वसति सर्वत्रोष्यते वा । तेजश्च वसु, आहुश्च– वसु रत्नं वसु धनं वसु तेजो निगद्यते । चशब्दाद्विद्वद्वात्रोः, विधाति विधत्ते वा वेधाः । वेधश्च हिंसामाहुः । आशासनमाशीः, आशं( श )सति हिनस्ति च, यदाहुः– आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति । आशीविषः, पृषोदरादित्वात् ( सू० ) सलोपः ॥ २२९ ॥ लल ईप्सायामित्यस्माल्लसेर्यङन्ताद्वा लालसा । चशब्दाद्वधः ( हिंसा ) । वडवाख्या प्रसूः । अपिशब्दान्माता ( प्रसूः ) । गोतोणिदित्यत्रौतोणिदिति पाठाद् द्योशब्दस्य सर्वनामस्थाने वृद्धिः । आद्य ईदन्तो भुवि दिवि च वर्तते, अन्योऽसन्तः क्लीबे द्वयमाह, यथा– रोदोरन्ध्रमजिह्लदत्[ न् ] । रुणद्धि सर्वं रोदः । रोदसीत्यव्ययमप्यस्ति, यथा– द्यावापृथिव्यौ रोदस्यौ रोदसी रोदसीति च ॥ २३० ॥ इंदमियं वा, अर्च्यतेर्चिः । ज्योतते ज्योतिः, भं तारका, द्योतः प्रकाशः, दृष्टिः कनीनिकामध्यम्, यन्मनुः– तारा नेत्रात्रि[ वि ]भागः स्याज्ज्योतिस्तत्पञ्चमांशकम् । आगच्छत्यागः । वयते याति [ वाति वा ] वयः, असुन्, नुमा क्लीबे ॥ २३१ ॥ रूपेपि ( वर्चः ) । उत्सवे ( महः ), अकारान्तोपि, मह पूजायाम् । गुणे सत्त्वात्परे यथा– उपष्टम्भकं बलं च रजः । चशब्दाध्दूलौ ( रजः ) । स्त्रीपुष्पे यथा– रजस्वला । गुणे यथा– गुरुवरणकमेव तमः, ताम्यन्त्यनेन तमः ॥ २३२ ॥ छन्दति छन्दः, पद्ये गायत्र्यादौ । अभिलाषे– अकारान्तोपि यथा– छन्दानुवर्ती । चकाराद्वेदे यथा– युक्तश्छन्दांस्यधीयीत । आदिशब्दाच्चान्द्रायणादि ( तपः ) । चशब्दात्तपा माघः, अदन्तोपि ग्रीष्मार्थः, यथा– तपेन वर्षा शरदा हिमागमः ( शिशु० ) । सहते सहः । मार्गो मार्गशीर्षः, द्विः पाठो लिङ्गभेदार्थः । एवं नभसोः– ओकसोः, पयसोस्त्वेकं लिङ्गं क्षीराम्भसोः क्लीबत्वात् । न बभस्ति नभाः, एकं शून्यत्वादन्यो मेघच्छन्नत्वात्, नभ हिंसायां वा ॥२३३॥ उच समवाये, ओकउचःके (सू०) इति– अदन्तोपि । पीङ् पाने, पय गतौ च (पयः) । उब्जेरसुनि साध्यं ( ओजः ) । विषमसंख्यावाची त्वोजोदन्तः, ओजेनौजः समः पादो युग्युजाव[ र्ध ]समस्य

ओकः सद्माश्रयश्चौकाः पयः क्षीरं पयोम्बु च ।
ओजो दीप्तौ बले स्रोत इन्द्रिये निम्नगारये ॥ २३४ ॥
तेजः प्रभावे दीप्तौ च बले शुक्रेप्यतस्त्रिषु ।
विद्वान् विदंश्च बीभत्सो हिंस्रोप्यतिशये त्वमी ॥ २३५ ॥
वृद्धप्रशस्ययोर्ज्यायान् कनीयांस्तु युवाल्पयोः ।
वरीयांस्तूरुवरयोः साधीयान्साधुबाढयोः ॥ २३६ ॥
दलेपि बर्हं निर्बन्धोपरागार्कादयो ग्रहाः ।
द्वार्यापीडे क्वाथरसे निर्यूहो नागदन्तके ॥ २३७ ॥
तुलासूत्रेश्वादिरश्मौ प्रग्राहः प्रग्रहोपि च ।
पत्नीपरिजनादानमूलशापाः परिग्रहाः ॥ २३८ ॥
दारेषु च गृहाः श्रोण्यामप्यारोहो वरस्त्रियाः ।
व्यूहो वृन्देप्यहिर्वृत्रेप्यग्नीन्द्वर्कास्तमोपहाः ॥ २३९ ॥
परिच्छदे नृपार्हेर्थे परिबर्होव्ययाः परे ।
आङीषदर्थेभिव्याप्तौ सीमार्थे धातुयोगजे ॥ २४० ॥

---

तु ( भरत० ) । स्रवति स्रोतः, इन्द्रियमिन्द्रियद्वारम् । रयः प्रवाहो लक्षणया ( स्रोतः ) ॥ २३४ ॥ तिज निशाने ( तेजः ) । अपिशब्दादसहनत्वे यद्भरतः– अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेप्यसहनं तत्तेजः समुदाहृतम् ॥ सान्ता यावद्वाच्यलिङ्गाः । विदेःशतुर्वसुः ( सू० ) । चशब्दात्पण्डितात्मज्ञौ ( विद्वान् ) । मान्बधेति ( सू० ) सन्नभ्यासदीर्घश्च, ततो अप्रत्ययात् ( सू० ), बीभत्सास्यास्तीति बीभत्सः । चशब्दाज्जुगुप्सितोर्जुनश्च । वक्ष्यमाणाश्चत्वार ईयसुन्नन्ताः ॥ २३५ ॥ प्रशस्यस्यश्रः ( सू० ), वृद्धस्यच ( सू० ), ज्यच ( सू० ) इति ज्यादेशः । युवाल्पयोःकनन्यतरस्याम् (सू०)। अतिशयेनोरुर्वरश्च वरीयान्, प्रियस्थिरस्फिरोर्वीति ( सू० ) उरोर्वरादेशः । अतिशयेन साधु बाढं च साधीयः, अन्तिकबाढयोर्नेदसाधौ ( सू० ) ॥ २३६ ॥ इतो हान्ताः । दलं पर्णं, परिवारश्च ( बर्हम् ) । अपिशब्दान्मयूरपिच्छे ( बर्हं ), बृह वृद्धौ, वर्ह प्राधान्ये च । उपरागो राहुग्रहणं, भावे ग्रहवृदृनिश्चिगमश्चेति ( सू० ) अप्, कर्तरि विभाषाग्रहः ( सू० ) इत्यच् । भूतोपि ( ग्रहः ) । आपीडो बहिर्निःसृतं दारु, निर्यान्त्यनेन निर्यौति निर्योति च निर्यूहः, यूहिर्लौकिको धातुर्वा । नागदन्तको भित्तिस्थः कीलकः ( निर्यूहः ) ॥ २३७ ॥ प्रगृह्यतेनेन, प्रेवणिजाम् ( सू० ), रश्मौच ( सू० ) इति वा घञ् । परिगृह्यते परिग्रहणं च परिग्रहः, ग्रहवृदृनिश्चिगमश्च ( सू० ) इत्यप्, परिगृह्णातीति– अच् । शापः शपथः ( परिग्रहः ) ॥ २३८ ॥ दारेषु तात्स्थ्यात् । चशब्दाद्वेश्मनि, गृह्णन्ति गृहाः, नित्यं बहुत्वे, गेहेकः ( सू० ) । श्रोण्यां यथा– वरारोहा । अपिशब्दाच्छैलाद्यारोहणेश्ववारे च ( आरोहः ), अधिकरणे भावे च घञ्, कर्तर्यच् । व्यूह्यते रच्यते व्यूहः, अपिशब्दात्सैन्यविन्यासे यथा– चक्रव्यूहः । अंहत्याहिः, अपिशब्दात्सर्पे वप्रे च । अपहन्तेर्डः ( अपक्लेशतमसोः ) ॥ २३९ ॥ नृपार्हे छत्रचामरादौ, अर्थे वस्तुनि धने वा ( परिबर्हः ) । इति नानार्थवर्गः । अत ऊर्ध्वमव्ययवर्गो वक्ष्यते, ततः प्रस्तावान्नानार्थाव्ययवर्गस्तावत् । ईषत्पिङ्गलः– आपिङ्गलः । अभिव्याप्तिरभिविधिः– आकुमारं यशः पाणिनेः । सीमार्थो मर्यादा, यथा– आ– उदकान्तात्प्रियं प्रोषितमनुव्रजेत् । धातुयोगजे धात्वर्थेन क्रियया योगजे संबन्धोत्थे द्योतकत्वे, यथा– आरोहति । उपसर्गोपि खुरनखन्यायेनात्रोक्तः ॥ २४० ॥ स्मृतिः सूचनं, यथा– आ एवं

आ प्रगृह्यः स्मृतौ वाक्येऽप्यास्तु स्यात्कोपपीडयोः ।
पापकुत्सेषदर्थे कु धिङ् निर्भर्त्सननिन्दयोः ॥ २४१ ॥
चान्वाचयसमाहारेतरेतरसमुच्चये ।
स्वस्त्याशीःक्षेमपुण्यादौ प्रकर्षे लङ्घनेऽप्यति ॥ २४२ ॥
स्वित्प्रश्ने च वितर्के च तु स्याद्भेदेऽवधारणे ।
सकृत्सहैकवारे चाप्याराद् दूरसमीपयोः ॥ २४३ ॥
प्रतीच्यां चरमे पश्चादुताप्यर्थविकल्पयोः ।
पुनः सहार्थयोः शश्वत्साक्षात्प्रत्यक्षतुल्ययोः ॥ २४४ ॥
खेदानुकम्पासंतोषविस्मयामन्त्रणे बत ।
हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ॥ २४५ ॥

---

किलैतत् । वाक्यपूरणे पूर्वोक्तस्यान्यथात्वे द्योत्ये, यथा– आ एवं नु मन्यसे, पूर्वं नैवममंस्थाः– अद्य तु मन्यस इत्यर्थः । निपातएकाजनाङ् ( सू० ) इति प्रगृह्यत्वात्, प्लुतप्रगृह्या अचीति ( सू० ) प्रकृतिभावः, यदाहुः– ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ( का० ) । समुच्चयेऽपिशब्दात्– देवेभ्यश्च पितृभ्य आ ( निरुक्त० ) । कोपे– आः रक्षस्तिष्ठति । पीडायां– विद्यामातरमाः प्रदर्श्य नृपशून् भिक्षामहे निस्त्रपाः ( उद्भट० ) । पापे यथा– पापो ब्रह्मा कुब्रह्मः । कुत्सायां– कुपुरुषः । ईषन्मधुरं कामधुरम् । निर्भर्त्सने– धिक् तार्किकान् । निन्दायां– धिक् कृतोयम् ॥ २४१ ॥ अन्वाचयो मुख्यसिद्धावप्रधाननिष्पत्तिः, यथा– भिक्षामट गां चानय । समाहारे संहतिप्राधान्ये, यथा– पाणी च पादौ च पाणिपादम् । इतरेतरयोगे संहन्यमानप्राधान्ये, यथा– [ प्लक्षश्च न्यग्रोधश्च ] प्लक्षन्यग्रोधौ । समुच्चय एकत्रानेकप्रचयः, यथा– गार्ग्यो वात्स्यश्चागतौ, पचति च पठति च चैत्रः । विनियोगतुल्ययोगिताहेतुषु च । विनियोगे– अहं च त्वं च वृत्रहन् संयुज्याव सनिभ्य आ ( निरुक्त० ) । तुल्ययोगितायां– ध्यातश्चोपस्थितश्च । हेतौ– ग्रामश्च गन्तव्यः शीतं च, शीतात्कथं गम्यत इत्यर्थः । स्वस्तीत्यविनाशनाम[ य ]– स्वस्ति तेऽस्तु लतया सह वृक्ष । क्षेमे– स्वस्ति प्रजाभ्यः । पुण्ये– काममिदं ते स्वस्ति । आदिशब्दान्मङ्गलादौ– स्वस्ति श्रीकुसुमपुरात् ( मुद्राराक्षस० ) । प्रकर्षे– अतिवृद्धः । लङ्घनमतिक्रमणं यथा– सर्वान् गुणानेष गुणोऽति भाति, अतिक्रम्य भातीत्यर्थः ॥ २४२ ॥ प्रश्ने– कः स्विदेकाकी चरति । वितर्को नानापक्षावमर्शः– अधः स्विदासीदुपरि स्विदासीत् ( वाजसनेयीसंहिता ) । भेदो विशेषः, यथा– क्षीरान्मांसं तु पुष्टिकृत् । अवधारणे– भीमस्तु पाण्डवानां रौद्रः । हेतुव्यावृत्ती त्वनयोर्भेदौ– गृह्णीयां चे[ वे ]दं दुर्जन त्वं तु किं करिष्यसि । सहार्थे– सकृद्यान्ति । एकवारे– सकृदंशो निपतति ( मनुः ) । अपिशब्दात्सदार्थे– सकृद्युवानो गीर्वाणाः ॥ दूरे– आराच्छत्रोः सदा वसेत् । समीपे– संप्रीतान् स्थापयेदारात् ॥ २४३ ॥ प्रतीच्यां– पश्चादस्ताद्रिः । चरमे– पश्चायाति । अप्यर्थः समुच्चयप्रश्नौ । समुच्चये– उत भीम उतार्जुनः । प्रश्ने– उत दण्डः पतिष्यति । विकल्पे– उत पर्वतं भिन्द्या– उत त्रुट्येद्वज्रः । वितर्केऽपि– स्थाणुरुत पुरुषः । पुनरर्थे पौनःपुन्ये– शश्वद्याति । सहार्थे– शश्वद् भुञ्जते । नित्येऽपि– शाश्वतं वैरम् । प्रत्यक्षे– साक्षाद् द्रष्टा साक्षी । तुल्ये– इयं साक्षाल्लक्ष्मीः ॥ २४४ ॥ खेदे– अहो बत महत्कष्टम् । अनुकम्पायां– बत निःस्वोऽसि । संतोषे– बत प्राप्ता सीता । विस्मये– अहो बतासि स्पृहणीयवीर्यः ( कु० सं० ) । आमन्त्रणे– बत वितरत तोयं तोयवाहा हिमान्तं [ नितान्तं ] । हर्षे– हन्त जीविताः स्मः । अनुकम्पायां– पुत्रक हन्त मे बालकाः [ ते धानाकाः ] । वाक्यारम्भे– हन्त ते कथयिष्यामि ( भगवद्गीता ) । विषादे– हन्त हताः पथिकगेहिन्यः । दाने निश्चये च– हन्तकारः ( वा० रा० ), हन्त गच्छामः ॥ २४५ ॥ प्रतिनिधौ– अभि-

प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ।
इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु ॥ २४६ ॥
प्राच्यां पुरस्तात्प्रथमे पुरार्थेऽग्रत इत्यपि ।
यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ॥ २४७ ॥
मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ।
वृथा निरर्थकाविध्योर्नानानेकोभयार्थयोः ॥ २४८ ॥
नु पृच्छायां विकल्पे च पश्चात्सादृश्ययोरनु ।
प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ॥ २४९ ॥

---

मन्युरर्जुनतः[ नं ] प्रति । वीप्सायां– वृक्षं वृक्षं प्रति सिञ्चति । लक्षणे– वृक्षं प्रति विद्योतते विद्युत् । आदिशब्दादित्थंभूताख्यानादौ– साधुश्चैत्रो मातरं प्रति । भागे– यदत्र मां प्रति स्यात्सोंशो दीयताम् । प्रतिदाने– माषानस्मै तिलेभ्यः प्रति प्रयच्छति । हेतौ– हन्तीति पलायते । प्रकरणं प्रकारः– गौरश्वो हस्तीति जातिः ( भाष्य० ) । प्रकर्षे– इति पाणिनिः, पाणिनिशब्दः प्रकर्षात्प्रसिद्ध इत्यर्थः । अत एव प्रकारा( शा )दीति पेठुः । आदिशब्दादेवमर्थे– क्रमादमुं नारद इत्यबोधि सः ( शिशु० ) । मते– इत्यापिशलिः । विवक्षानियमे– तदस्यास्त्यस्मिन्निति मतुप् ( पाणिनिसूत्रं ) । स्वरूपे– वृद्धिरित्येव या वृद्धिः । समाप्तौ यथा– अ अ इति । प्रत्यक्षे संनिधावत्रधारणे च ॥ २४६ ॥ प्राच्यां– पुरस्तात्सूर्य उदेति । प्रथमे– पुरस्ताद् भुङ्क्ते । पुरार्थेऽतीते– पुरस्ताद्रामोऽभूत् । अग्रतोर्थे– पुरस्तात्सेनानीर्याति । अपिशब्दात्पूर्वदेशे काले च– पुरस्ताद् द्वारम्, पुरस्तात्कृतम् । साकल्ये यथा– यावत्कार्यं तावत्कुरु, सकलं कुर्वित्यर्थः । अवधौ– यावद् गन्ता तावत्तिष्ठ । माने– यावद्दत्तं तावद् भुक्तम् । अवधारणे– यावदमत्रं ब्राह्मणानामन्त्रयस्व ॥ २४७ ॥ मङ्गले– अथ परस्मैपदानि । अनन्तरे– स्नातोथ भुङ्क्ते । आरम्भे– अथ शब्दानुशासनम् । प्रश्ने– अथ शक्तोसि भोक्तुम् । कार्त्स्न्ये– अथ कतून् ब्रूमः । अधिकारेपि– अथ स्नानविधिः । प्रतिज्ञायां– गौडोभवानथेति ब्रूमः । अन्वादेशेपि– अथो इमं वेदमध्यापय, अथो एनं छन्दोपि । समुच्चये द्वौ– अथो खल्वाहुः, भीमोथार्जुनः । निरर्थके– वृथा दुग्धोनड्वान् । अविधौ– प्रातिभाव्यं वृथा दानमाक्षिकं सौरिकं च यत् ( मनुः ) । अनेकार्थे– नानाविधा जनाः । उभयार्थे– नानापक्षावमर्शः संशयः । विनार्थेपि– नाना नारीर्निष्फला लोकयात्रा ॥ २४८ ॥ प्रश्ने– को नु धावति । विकल्पेपि– भीमो नु फाल्गुनो नु योद्धा । वितर्के– अहिर्नु रज्जुर्नु । पश्चादर्थे– तमनु धावति। सादृश्ये अनुकारः । लक्षणादौ च– वृक्षमनु द्योतते । तत्त्वाख्याने– साधुश्चैत्रो मातरमनु । भागे– यदत्र मामनु स्यात्तद् दीयताम् । वीप्सायां– वृक्षं वृक्षमनु सिञ्चति । दैर्घ्ये– अनुगङ्गं वाराणसी । प्रश्ने– नन्वध्येष्यसे । अवधारणे– नन्वद्य गच्छामः । अनुज्ञायां– नन्वादिश । अनुनयामन्त्रणे– ननु चण्डि प्रसीद मे । वाक्यारम्भादौ च– नन्वपोहः प्रस्तू( सू )यते । आक्षेपे– ननु किमर्थमागतोसि । प्रत्युक्तौ– अकार्षीः कटं चैत्र, ननु करोमि भोः ॥ २४९ ॥ गर्हायां– अपि सिञ्चेत्पलाण्डुम् । समुच्चये– भीमोर्जुनोपि । प्रश्ने– अपि यासि । इष्टप्रश्नेपि– अपि क्रियार्थं सुलभं समित्कुशम् ( कु० सं० ) । शङ्कायां– अपि प्रसीदेत् । संभावनायां– पर्वतमपि शिरसा भिन्द्यात् । अपेक्षादौ च– अपि गृह्णीयां चे[ वे ]दम् । पदार्थे– सर्पिषोपि स्यात्, मात्रा स्तोकं वा । उपमायां आशीविषो वा संक्रुद्धः सूर्यो वाभ्रविनिर्गतः । भीमोन्तको वा समरे गदापाणिरदृश्यत ॥ विकल्पे– यवैर्व्रीहिभिर्वा यजेत् । द्वे द्वे समुच्चयेत एव– सा वा शम्भोस्तदीया वा मूर्तिर्जलमयी मम ( कु० सं० ), न तृतीयेत्यर्थः, वायुर्वाग्य मेरुर्वाग्य

गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ।
उपमायां विकल्पे वा सामि त्वर्धे जुगुप्सिते ॥ २५० ॥
अमा सह समीपे च कं वारिणि च मूर्ध्नि च ।
इवेत्थमर्थयोरेवं नूनं तर्केऽर्थनिश्चये ॥ २५१ ॥
तूष्णीमर्थे सुखे जोषं किं पृच्छायां जुगुप्सने ।
नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ॥ २५२ ॥
अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ।
हुं वितर्के परिप्रश्ने समयान्तिकमध्ययोः ॥ २५३ ॥
पुनरप्रथमे भेदे निर्निश्चयनिषेधयोः ।
स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा ॥ २५४ ॥
ऊरर्यूरी चोररी च विस्तारेऽङ्गीकृतौ त्रयम् ।
स्वर्गे परे च लोके स्ववार्तासंभाव्ययोः किल ॥ २५५ ॥

---

दहनो वा । अर्धे- सामि संमीलिताक्षी । जुगुप्सिते- सामि कृतमकृतं स्यात् ॥ २५० ॥ सहार्थे- पुत्रेणामा भुङ्क्ते । समीपे- अमा भवोमात्यः । जले- कंजं पद्मम् । मूर्ध्नि- कंजाः केशाः । निन्दासुखयोश्च- कंदर्पः, कंयुः । इवार्थे- अग्निरेवं विप्रः । इत्यमर्थे- एवंवादिनि देवर्षौ ( कु० सं० ) । उपदेशादौ च- एवं पठ । निर्देशे- एवं तावत् । निश्चये- एवमेतत् । अङ्गीकारे- एवं कुर्मः । तर्के- नूनं शरत्फुल्ला हि काशाः । अर्थनिश्चये- नूनं हन्तास्मि रावणम् ॥ २५१ ॥ तूष्णीमर्थे- जोषमास्स्व । सुखे- जोषमास्ते जितेन्द्रियः । प्रश्ने- किं गतोसि । जुगुप्सने- किंराजा यो न रक्षति, किमःक्षेपे ( सू० ) इति समासान्ताभावः । प्राकाश्ये- हिमालयो नाम नगाधिराजः ( कु० सं० ) । संभाव्ये- कथं नाम समेष्यति । स्मृतिः संभावनैव- स नामायं बन्धुः । क्रोधे- ममापि नाम दशानस्य परैः परिभवः । उपगमः सासूयोङ्गीकारः- एवमस्तु नाम । कुत्सने- को नामायं सावितुरुदयः । अलीकविस्मययोश्च- दष्टेधरे रोदिति नाम तन्वी, अन्धो नाम पर्वतमारोहति ॥ २५२ ॥ भूषणे- अलंकारः । पर्याप्तौ- अलमस्त्यस्य धनं, बह्वित्यर्थः । शक्तौ- अलं मल्लो मल्लाय । वारणे- अलमतिप्रसङ्गेन । अलंखल्वोःप्रतिषेधयोः ( सू० ) इति निषेधेपि- आलप्यालमिदं बभ्रोर्यत्स दारानपाहरत् ( शिशु० ), न वक्तव्यमेतदित्यर्थः । वितर्के- चैत्रो हुं मैत्रो हुं । परिप्रश्ने- हुं स त्वं सुहृत् । भयादौ च- हुं राक्षसोयम् । भर्त्सने- हुं निर्लज्जः । अनिच्छायां हुं हुं मुञ्च । त्वां समयास्ते, त्वत्समीप इत्यर्थः । ग्रामं समयास्ते, ग्राममध्य इत्यर्थः ॥ २५३ ॥ अप्रथमे —पुनरुक्तम् । ( भेदे ) विशेषे- किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ( भगवद्गीता ) । निश्चये- निष्पन्नः । निषेधे- निर्मर्यादः । प्रबन्धे- उपाध्यायेन स्म पुराधीयते, अविरतमपाठीत्यर्थः । चिरातीते —पुरापि न नवं पुराणम् । निकटागामिके भविष्यदासन्ने- गच्छ पुरा देवो वर्षति, यावत्पुरानिपातयोर्लट् ( सू० ), समनन्तरं वर्षिष्यतीत्यर्थः ॥ २५४ ॥ उररीकृत्य पटं, विस्तीर्येत्यर्थः । आज्ञामुररीकृत्य याति, अङ्गीकृत्येत्यर्थः । स्वर्गे- एहि जाये स्वरारोहाव ( वाजसनेयीसंहिता ) । परलोके- स्वर्गतस्य ह्यपुत्रस्य । वार्तायां- जघान कंसं किल वासुदेवः ( भाष्य० ) । संभाव्ये- अर्जुनः किल विजेष्यते कुरून् । हेत्वादौ च- स किल काविरेवमुक्तवान् ( वा० रा० ) । अलीके- गोत्रस्खलितं किलाश्रुतं कृत्वा । अरुचौ- त्वं किल योत्स्यसे ॥ २५५ ॥ निषेधे- खलु कृत्वा, निषिद्धं करणमित्यर्थः । वाक्यालंकारे- अथो

निषेधवाक्यालंकारजिज्ञासानुनये खलु ।
समीपोभयतःशीघ्रसाकल्याभिमुखेभितः ॥ २५६ ॥
नामप्राकाश्ययोः प्रादुर्मिथोन्योन्यं रहस्यपि ।
तिरोन्तर्धौ तिर्यगर्थे हा विषादशुगार्त्तिषु ॥ २५७ ॥
अहहेत्यद्भुते खेदे हि हेताववधारणे ॥ २५८ ॥

इति नानार्थवर्गः । ३ ।

चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः ।
मुहुः पुनःपुनः शश्वदभीक्षणमसकृत्समाः ॥ १ ॥
स्राग्झगित्यञ्जसाह्नाय सपदि द्राङ् मङ्क्षु [ च ]द्रुते ।
बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे ॥ २ ॥

---

खल्वाहुः । जिज्ञासायां– स खल्वधीते वेदम् । अनुनये– न खलु न खलु मुग्धे साहसं कार्यमेतत् ( नागानन्द० ) । अभितो ग्रामं वसति, समीप उभयत्र वेत्यर्थः । शीघ्रे– गच्छाभितः । साकल्ये– व्याप्नोत्यभितो रजः, समन्तादित्यर्थः । आभिमुख्ये– आपतन्तमभितोरिमपश्यत् ॥ २५६ ॥ नाम्नि– विष्णोर्दश प्रादुर्भावाः, मत्स्यकूर्मादीनि दश नामानीत्यर्थः । प्राकाश्ये– प्रादुरासीत् । अन्योन्यार्थे– मिथः प्रहरतः । रहसि– मिथो मन्त्रयते । अन्तर्धौ– तिरोहितः । परिभूतेन्तर्ध्युपचारात्– तिरस्कृतोरिः । तिर्यगर्थे– तिरः काष्ठं कुरु । विषादे– हा रमणीनां[ यो ] गतः कालः । शोके– हा प्रिये जनकराजपुत्रि ( उ० रा० ) । अर्त्तौ– हा हतोस्मि । निन्दायां च– हा श्रोत्रियान् ॥ २५७ ॥ अद्भुते– अहह प्रज्ञाप्रकर्षो राज्ञः । खेदे– अहह हता विरहिणी बाला । दीर्घान्तोपि– भिक्षित्वापि बुभुक्षिता यदहहा । हेतौ– अग्निरत्र धूमो हि दृश्यते । अवधारणे– को हि हस्तगतं पादगतं कुर्यात् ॥ २५८ ॥ इत्यव्ययेष्वनेकार्थवर्गः । इति नानार्थवर्गः । ३ ।

चिराय निर्धनो भूत्वा भवत्यह्ना( ह्ना ) महाधनः । चिररात्राय जायते [ यजते ] । चिरस्य भूतले धावति । आद्यशब्दाच्चिरेण चिराच्चिरमपि– चिरंजीवी, चिरंतन. । कान्तं[ न्तां ] मुहुर्ध्यायति । पुनः पुनर्वारि पिबेद्भूरि । शश्वद्वक्ति कुशिक्षितः । अभीक्ष्णमास्फालयतीभकुम्भम् । असकृद्वक्ति ॥ १ ॥ स्राक्सरत्यभिसारिका । झगिति कुचतटादेनमो मन्मथाय (विद्धशाल०) । यज्वाञ्जसा जयति ब्रह्मलोकम् । अह्नाय सा नियमजं क्लममुत्ससर्ज ( कु० सं० ) । सपदि प्रदहत्युपेक्षितोग्निः । द्राग्विद्रुतं कातरैः । मङ्क्षूदपाति परितः पटलैरलीनाम् ( शिशु० ) । झटित्याशु तरसादि च– झटिति घटयति विधिरभिमतमभिमुखीभूतः ( रत्नावली० ), आश्वपेहि मम सीधुभाजनात् , तरसोदिता सह जलेषु । तूर्णं द्रुतं क्षिप्रं शीघ्रं लघ्विति क्रियाविशेषणम् । बलवत्पिपासितोस्मि । सुष्ठु खल्विदमुच्यते । किमुत ब्रह्मविन्निभिः । सुसिक्त आम्रः फलति, अतिसिक्तश्च । अतीव क्षुत्पिपासि( सादि )तः ॥ २ ॥ पृथग्देवदत्तादयं [ त्वत्तः पृथङ् नास्ति बन्धुः ] । विना ग्रामं वृष्टो देवः [ विना वातं विना वर्षम् ] । अन्तरेण पुरुषकारं न किंचित्सिध्यति । ऋते कृशानोर्न हि मन्त्रपूतम् (कु० सं० ) । हिरुक् कर्मणां[ णो ] मोक्षः, कर्मक्षये[ यो ] मोक्ष इत्यर्थः । नाना नारीर्निष्फला लोकयात्रा । अन्तरान्यत्रापि– त्वामन्तरा तामरसायताक्षि, अ( आ )रोगिभावादन्यत्र । यत्सभासु प्रगल्भसे तत्पूज्योसि । यतो विद्वांस्ततो मान्यः । येन तेनादि च– वितर

पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने ।
यत्तद्यतस्ततो हेतावसाकल्ये तु चिच्चन ॥ ३ ॥
कदाचिज्जातु सार्धं तु साकं सत्रा समं सह ।
आनुकूल्यार्थकं प्राध्वं व्यर्थके तु वृथा मुधा ॥ ४ ॥
आहो उताहो किमुत विकल्पे किं किमुत च ।
तु हि च स्म ह वै पादपूरणे पूजने स्वति ॥ ५ ॥
दिवाह्नीत्यथ दोषा च नक्तं च रजनाविति ॥ ६ ॥
तिर्यगर्थे साचि तिरोऽप्यथ संबोधनार्थकाः ।
स्युः प्याट् पाडङ्ग हे है भोः समया निकषा हिरुक् ॥ ७ ॥
अतर्किते तु सहसा स्यात्पुरः पुरतोऽग्रतः ॥ ८ ॥
स्वाहा देवहविर्दाने श्रौषड् वौषड् वषट् स्वधा ।
किंचिदीषन्मनागल्पे प्रेत्यामुत्र भवान्तरे ॥ ९ ॥
वद्वा( वा ) यथा तथैवैवं साम्येऽहो हीति विस्मये ।
मौने तु तूष्णीं तूष्णीकां सद्यः सपदि तत्क्षणे ॥ १० ।

---

गिरमुदारां येन मूकाः पिकाः स्युः, नदीं तेन गतः, गमने नदी हेतुः । द्वितयो लक्ष्यते– येन दाता [ वोढा ] तेन श्लाघ्यः । ( ऊने ) किंचिद् ब्रूते । पद्भ्यां याति कुतश्चन । प्रायः किंवृत्तात्परौ, क्वचित्– कुत्रचित्– कथंचित् ॥ ३ ॥ अन्योन्यपर्यायावेतौ– कदाचिच्छूरतां याति मरणे कृतनिश्चयः, न जातु कामः कामानामुपभोगेन शाम्यति ( मनुः )। सार्धं धनैर्महान् । पुत्रेण साकं याति । सत्रा कलत्रैर्गार्हस्थ्यम् । भ्रात्रा समं युध्यते । पुत्रैः सहास्ते । सङ्गो द्विजिह्वैः सजूरिति सजूर्गतिप्रतिरूपको निपातः । प्राध्वं कुरुध्वं बुधाः, प्राध्वंबन्धने ( सू० ) इति गतिसंज्ञा– प्राध्वंकृत्य । वृथा दुग्धोनड्वान् । मुग्धे मुधा ताम्यसि ॥ ४ ॥ विकल्पः पक्षान्तरं– स्थाणुराहो पुरुषः, उताहोस्विद् भवेद्राजा नलः परपुरंजयः, किमुत रज्जुः किमुत सर्पः [ किं रज्जुः किं सर्पः ], किमु खेदयेत्किमु मानयेत् , एकमेव वरं पुंसामुत राज्यमुताश्रमः । आख्यामि तु तत्त्वं ते । न हि न हि महिमानं प्राप्य तुष्यन्ति भूपाः । भीमः पार्थस्तथैव च । इति ह स्माहुराचार्याः । यो वै युवाप्यधीयानः । खल्वादयोऽपि– अहो न( नु ) खलु भोः । पूजने– सुस्तुतं, अतिस्तुतम् ॥ ५ ॥ दिवातनं, इतिशब्देन सप्तम्यन्ते दिनार्थेऽयमिति द्योत्यते । अह्नेप्येवम् । दोषा- मन्यमहः । नक्तंचरः । तथा– उषापि– उषातनो वायुः ॥ ६ ॥ साचि लोचनयुगं नमयन्ती । तिरः काष्ठं कुरु । प्याट् पाठकाः । पाट् पान्थाः । अङ्गानङ्ग, इष्टाह्वाने चैतत् । हे चैत्र । है वातूल । भो भार्गव । हंहो, अरेरे, अयि– हंहो काम, रे चोर, अरे चेट, अयि प्रिये । एते समीपार्थेऽन्योन्यं पर्यायाः– समया ग्रामं, लङ्कां निकषा हनिष्यति ( शिशु० ) । सभ्यान् हिरुक् ॥ ७ ॥ सहसा विदधीत न क्रियाम् (किरातार्जु०) । अग्रार्थो एते– पुरःसरः । नासीरधूलिधवलाः पुरतः प्रयान्ति । अग्रतो धावति श्रीः ॥८॥ सोमाय स्वाहा । अस्तु श्रौषट् । व्रीही वौषट् । वषडिन्द्राय । पितृभ्यः स्वधा । किंचित्कुञ्चितमूर्धजाः । ईषत्स्मेरः । ब्रूते मनाक्समार्दवम् । अन्यो धनं प्रेत्य गतस्य भुङ्क्ते । अमुत्र भविता यत्ते तच्चिन्तय शुभाशुभम् ॥९॥ पचतीति[ स्रवन्ती ]वत् । पद्मिनीं[ नी ] वान्यरूपां[ पा ] ( मेघ० ) । यथा चैत्रस्तथा मैत्रः । शारदा- भ्रमिव पेलवमायुः । यथार्क एवं कर्णः । अहो आश्चर्यम् । हतविधिललि( सि )तानां ही विचित्रो विपाकः ( शिशु० ) । मुनिस्तूष्णीमास्ते । अकच्प्रकरणेतूष्णीमःकाम्वक्तव्यः( वा० ) इत्यज्ञाताद्यर्थे विशिष्टे मौने तूष्णीकां, मौनमात्रे तूष्णीम् । सद्यः पतति मांसेन । सपदि प्रदहत्युपेक्षितोऽग्निः ॥ १० ॥

दिष्ट्या समुपजोषं चेत्यानन्देऽथान्तरेऽन्तरा ।
अन्तरेण च मध्ये स्युः प्रसह्य तु हठार्थकम् ॥ ११ ॥
युक्ते द्वे सांप्रतं स्थानेऽभीक्ष्णं शश्वदनारते ।
अभावे नह्य नो नापि मास्म मालं च वारणे ॥ १२ ॥
पक्षान्तरे चेद्यदि च तत्त्वे त्वद्धाञ्जसा द्वयम् ।
प्रकाशे प्रादुराविः स्यादोमेवं परमं मते ॥ १३ ॥
समन्ततस्तु परितः सर्वतो विष्वगित्यपि ।
अकामानुमतौ काममसूयोपगमेऽस्तु च ॥ १४ ॥
ननुच स्याद्विरोधोक्तौ कच्चित्कामप्रवेदने ।
निष्षमं दुष्षमं गर्ह्ये यथास्वं तु यथायथम् ॥ १५ ॥
मृषा मिथ्या च वितथे यथार्थं तु यथातथम् ।
स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः ॥ १६ ॥
प्रागतीतार्थकं नूनमवश्यं निश्चये द्वयम् ।
संवद्वर्षेऽवरे त्वर्वागामेवं स्वयमात्मना ॥ १७ ॥

---

दिष्ट्या पुत्रो जातः । समुपजोषं वर्तते । आवयोरन्तरे जाताः पर्वताः सरितो द्रुमाः ( महानाट० ) । अन्तरा त्वां च मां च कमण्डलुः । यतो भवन्तमन्तरेणान्यथा भूमिर्निर्ग्राहितः, भवन्मध्येनेत्यर्थः । प्रसह्य वित्तानि हरन्ति चौराः ॥ ११ ॥ न सांप्रतं यतः स्त्री नेता । हन्त स्थाने प्रश्नः । अभीक्ष्णं वक्ति । शश्वद्याति, आविरतमित्यर्थः । नहि प्रेम प्रयोजनापेक्षम् । अविप्र इव भाषसे, विप्रवन्न ब्रूष इत्यर्थः । नो जानीमः । नैकः सुप्तेषु जागृयात् । मास्म करोः । मा कार्षीः । अलं बाले रोदनेन ॥ १२ ॥ सन्तश्चेदमृतेन किम् । यदि खलास्तत्कालकूटं मृषा । अरे अद्धा पुरुषः । अञ्जसा वक्ति साधुः । प्रादुरासीत् । आविर्भूतः । मतमभ्युपगमः– ओं कुरु, एवं कुरु, परमं तत्रावसम् । एवं बाढमित्यादि च ॥ १३ ॥ एते सर्वतोदिक्कार्थे– समन्ततो धावति, परितः प्रपतन्ति दुष्कृतां( तो ) विपदः, सर्वतः संपदः सताम्, विष्वगञ्चति विष्वद्र्यङ् । इतिशब्दात्समन्तादित्यादि– समन्ताद्भवः सामन्तः । आदावनिच्छायां पश्चादङ्गीकारे– कामं करोमि । अस्तुशब्दोऽसूयापूर्वेऽङ्गीकारे– अस्तुकारः; एवमस्तु को दोषः । चशब्दाद्भवतु नाम ॥ १४ ॥ ननुच कः शब्दः । कामप्रवेदनमिष्टपरिप्रश्नः– कच्चिज्जीवति मे माता । निष्क्रान्ताः समा दुष्टाः समा वत्सरा अत्रेति, तिष्ठद्गुप्रभृतीनिच ( सू० ) इत्यव्ययीभावादव्ययत्वम्, गर्ह्यमात्रे तूपचारात्, समेन समासो वा– निःषमं वक्ति मूर्खः, कालानुचितमित्यर्थः । एवं दुःषमं वर्तते । सर्वेषां तु यथायथम्, यथास्वी[ त्मी ]यमित्यर्थः, यथास्वेयथायथमिति ( सू० ) साधुः ॥ १५ ॥ मृषोद्यम् ( उ० रा० ) । मिथ्यावादी । तथेति सत्यमनतिक्रम्य– यथातथं वक्ति सभासु विद्वान् । एवमेतत् । आत्मा सर्वं तु पश्यति । विप्रः पुनः पूज्यः । गुरुर्वा वक्ति भीष्मो वा । त्वमेव देव सर्वं जानासि ॥ १६ ॥ प्राक् कृतम् । नूनं हन्तास्मि रावणम् । अवश्यं यातारश्चिरतरमुषित्वापि विषयाः ( भर्तृहरि० ) । संवत्सरः, संवत्तृतीये । अवरः पारादन्यः– वर्षात्षोडशादर्वाक्, अर्वाक्कालीनः । अङ्गीकारार्थे– आं कुर्मः, एवं कुर्मः । स्वयंभूः, आत्मनेति तृतीयान्तार्थे ॥ १७ ॥ नीचैर्मरुद्वाति । उच्चैरुच्चरितुं चिरम् । सन्तः प्रायो विवेक्तारः, भूम्नि बाहुल्यार्थे । अशीघ्रार्थे– शनैर्याति पिपीलिका । क्रमेपि ( शनैः ) अद्रुतार्थान्वयात्–

अल्पे नीचैर्महत्युच्चैः प्रायो भूम्न्यद्रुते शनैः ।
सना नित्ये बहिर्बाह्ये स्मातीतेस्तमदर्शने ॥ १८ ॥
अस्ति सत्त्वे रुषोक्तावुं ( वु ) ऊं प्रश्नेनुनये त्वयि ।
तर्के स्यात् ( हुं तर्के ) स्यादुषा रात्रेरवसाने नमो नतौ ॥ १९ ॥
पुनरर्थेङ्ग निन्दायां दुष्ठु सुष्ठु प्रशंसन ।
सायं सायें प्रगे प्रातः प्रभाते निकषान्तिके ॥ २० ॥
परुत्परार्यैषमोब्दे पूर्वे पूर्वतरे यति ।
अद्यात्राह्न्यथ पूर्वेह्नीत्यादौ पूर्वोत्तरापरात् ॥ २१ ॥
तथाधरान्यान्यतरेतरात्पूर्वेद्युरादयः ।
उभयद्युश्चोभयेद्युः परे त्वह्नि परेद्यवि ॥ २२ ॥
ह्यो गतेनागतेह्नि श्वः परःश्वस्तु परेहनि ।
तदा तदानीं युगपदेकदा सर्वदा सदा ॥ २३ ॥
एतर्हि संप्रतीदानीमधुना सांप्रतं तथा ।
दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ॥ २४ ॥

इत्यव्ययवर्गः । ४ ।

---

शनैः शनैर्व्युपरमेत् । सनातनः । सनत्सनाच्च- सनत्कुमारः, सनात्कुमारश्च । बहिर्भूतः । वक्ति स्म व्यासः, अवोचदित्यर्थः । अस्तं गतः ॥ १८ ॥ अस्तिक्षीरा स्त्री, अस्ति परलोके मतिरस्यास्तिकः । कोपनोक्तौ- उं सैवास्मि तव प्रिया । रुषेत्येव- ऊं न जानासि स्वार्थम् । अप्ययि साहसकारिणि । स्याद्वादिनो जैनाः । उषातनो वायुः । नमो देवेभ्यः ॥ १९ ॥ अमानुगुण्ये स्मरणे हुं फड् विघ्ननिराकृतौ । अङ्गीकृतौ स्यादर्थे हूं हीनसंबोधने त्वरे ॥ मूर्खोपि नावमन्तव्यः किमङ्ग विद्वान् । दुष्ठुवादी खलः । सुष्ठूक्तम् । सीयते क्षीयते सायो निशामुखं, घञ्- सायंतनो वायुः, सायमासीनः संध्यां वन्देत । प्रगेतनो वायुः । प्रातः संध्यामुपासीत । मित्रं निकषास्ते ॥ २० ॥ पूर्वे वर्षे परुत् । पूर्वतरे वर्षे परारि । यति गच्छति वर्तमाने वर्षे- ऐषमः, सद्यःपरुत्परार्यैषमइति ( सू० ) साधवः । एवमग्रिमाः । अस्मिन्नहन्यद्य, वर्तमानतामात्रेप्याहुः- नरो लोकेद्य दुर्लभः( बलः ), तदद्यत्वेन तथा । पूर्वेह्नि पूर्वेद्युः । आदिशब्दादुत्तरेद्युः, अधरेद्युः, अपरेद्युः, अन्येद्युः, अन्यतरेद्युः, इतरेद्युः । द्युर्दिनमिति **श्रीभोजः**, यथा- द्युश्चन्द्रो द्योतते कथम् ॥ २१ ॥ उभयोरह्नोः- उभयेद्युः, उभयद्युः, द्युश्चोभयाद्वक्तव्यः ( वा० ) । **स्मार्ते** पाक्षिणयिं रात्रिरुदिता । तं हन्तास्मि परेद्यवि ॥ २२ ॥ अतीतेह्नि ह्यः- ह्योऽकरोत् । आनागतेह्नि श्वः- श्वो गन्ता । श्वोदिनात्परमहः परःश्वः, पारस्करादित्वात् ( सू० ) परःसहस्रादिवत्सुट् । तस्मिन्काले तदा, तदोदाचेति ( सू० ) तदा, तदानीं च । एतौ तुल्यकालार्थौ । युगपत्प्राप्ताः । एकस्मिन्काले- एकदा मिलन्ति । एकपदे च- अयमेकपदे तया वियोगः ( विक्रमोर्वशी० ) । सर्वस्मिन्कालेर्थे, सर्वैकान्यकिंयत्तदःकालेदा ( सू० ), सर्वस्यसोन्यतरस्यांदि ( सू० ) ॥ २३ ॥ अस्मिन्कालेर्थे, इदमोर्हिल् ( सू० ), एतेतौरथोः ( सू० ) इत्येतादेशः, ( एतर्हि )- भवन्तमेतर्हि मनस्विगर्हिते विवर्तमानं नरदेववर्त्मनि ( रघु० ), अधुना, इदानीं च । संप्रत्येव सांप्रतं, स्वार्थेऽण् । प्राच्यां दिशि प्राचि देशे काले वा- प्रागवसति । प्राच्या दिशः प्राचो देशात्कालाद्वा- प्रागागतः । प्राची दिक् प्राङ् देशः कालो वा- प्राप्रम्यम् । दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्योदिग्देशकालेष्वस्तातिः ( सू० ), अञ्चेर्लुक् ( सू० ) । आदिशब्दादुदगवागादि । एवं पूर्वादिभ्यः पुरस्तादधस्तादादि ॥ २४ ॥ इत्यव्ययवर्गः । ४ ।

सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासजैः ।
अनुक्तैः संग्रहे लिङ्गं संकीर्णवदिहोन्नयेत् ॥ १ ॥
लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः ।
स्त्रियामीदूद्विरामैकाच् सयोनिप्राणिनाम च ॥ २ ॥
नाम विद्युन्निशावल्लीवीणादिग्भूनदीह्रियाम् ।
अदन्तैर्द्विगुरेकार्थो न स पात्रयुगादिभिः ॥ ३ ॥

---

इह लिङ्गसंग्रहवर्गे वक्ष्यमाणलिङ्गानुशासनसहितैः सुब्धातुवृत्त्यादिजातैः ( शब्दैः ) प्रागनुक्तैर्लिङ्गमुन्नयेदूहेत । लक्षणेन तत्त्वतो ज्ञानार्थं सन्नाद्युपादानम् । लिङ्गशास्त्रेण यथा– स्त्रियामीदूद्विरामैकाच् । सुब्धातुवृत्तिजैर्यथा– अप्रयाद् ( सू० ), ण्यासश्रन्थोयुच् ( सू० )। कृद्वृत्तिजैर्यथा– स्त्रियांक्तिन् ( सू० ), पुंसिसंज्ञायांघःप्रायेण ( सू० ), नपुंसकेभावेक्तः ( सू० ) । गोबलीवर्दन्यायेनात्र सुब्धातुवृत्तिवर्जं कृद्वृत्तिरुदाहार्या । तद्धितवृत्तिजैर्यथा– तत्क्रीडायां प्रहरणं चेन्मौष्टादि । समासवृत्तिजैर्यथा– अदन्तैर्द्विगुरेकार्थं इत्यादि । कथमुन्नयेदित्याह– प्रागुक्तसंकीर्णवर्गवत्, वचनमात्रेणेत्यर्थः । उक्तं च प्राक्– प्रकृतिप्रत्ययार्थाद्यैः संकीर्णे लिङ्गमुन्नयेत् ( पृ० १८३ ) । प्रकृत्या यथा– अर्धर्चाःपुंसिच ( सू० )। प्रत्ययेन यथा– स्त्रियांक्तिन् ( सू० ) । अर्थद्वारेण च यथा– मातृस्वस्रादीनाम् । आद्यशब्दात्क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च वक्तव्येति । तथा– अर्थस्य नित्यसमासवचनं सर्वलिङ्गता चेत्यादि ॥ १ ॥ अयं लिङ्गानां प्रागुक्तानां शेषविधिसंज्ञो वर्ग उत्सर्गत्वाद् व्यापको भवत्यपवादैर्यद्यबाधितः स्यात् । यथा– असन्नन्ता अबाधिताः पुंसि, तथा त्रान्तं सलोपधं शिष्टमिति, यथा– चन्द्रमाः, पुरूरवाः, सविमा प्रसवः, भरिमा कल्पः । अत्रापवादः– द्व्यच्कमसिसुसन्नतं तृतीये– इदं यशः, तेजः, नाम, धाम । ईदन्तमूदन्तं चैकस्वरं स्त्रीलिङ्गं भवति– इयं स्त्री, श्रीः, धीः, ह्रीः, भ्रूः, भूः, सूः, द्रुः, जूः । पुंलिङ्गात्प्राक् स्त्रियामित्यधिकारोयम् । स्त्रीध्वजयुक्तानां प्राणिनां संज्ञा च स्त्रियाम्, यथा– इयं माता, स्वसा, प्रसूः, योषित्, इयं गौः सुरभिः, इयं कपिर्वानरी, इयमहिर्भुजंगी, इयं करेणुर्हस्तिनी । दारादौ तु स्त्रीत्वं पुंभूम्नि दाराः ( पृ० ९२ ) इत्याद्यपवादाद्बाध्यते । एवं सर्वत्रोन्नेयम् ॥ २ ॥ एषां नामपर्यायाः स्त्रियाम्– इयं विद्युत्तडिदशनिः, इयं निशा रात्रिः, इयं वल्ली वीरुत्, इयं वीणा परिवादिनी, इयं दिक् ककुप्, इयं भूः कुः, इयं नदी सरित्, इयं ह्रीर्लज्जा । अकारान्तैः शब्दैः सहैकार्थैः समाहारो यो द्विगुः स स्त्रियां, यदिष्टिः– अकारान्तोत्तरपदोद्विगुःस्त्रियांभाष्यते, ( यथा ) त्रयाणां लोकानां समाहारस्त्रिलोकी, पञ्चमूलीशृतं पयः । स द्विगुः पात्राद्युत्तरपदैरदन्तैर्न स्त्रियां, पात्रादिभ्यः प्रतिषेध इति ( पात्राद्यन्तस्यन ), अतः स नपुंसकमिति क्लीबे– पञ्चपात्रं, चतुर्युगं, त्रिभुवनं, त्रिपुरं, भाष्ये तु त्रिपुरी ॥३॥ तल्प्रत्ययान्ताः स्त्रियां, तस्यभावस्त्वतलौ ( सू० )– गोर्भावो गोता, अश्वता । ग्रामजनबन्धुसहायेभ्यस्तल् ( सू० )– ग्रामाणां समूहो ग्रामता, जनता । देवात्तल् ( सू० )– देव एव देवता । समूहे यादिप्रत्ययान्ताः स्त्रियां, पाशादेर्यत् ( यः ) ( पाशादिभ्योयः )– पाशानां समूहः पाश्या । खलगोरथात् (सू०) यत् ( यः ), इनित्रकट्यचश्च ( सू० ) चकाराद्यत् ( यः )– खलिनी, गोत्रा, रथकट्या । वैराद्यर्थे वुञन्तः स्त्रियां ( द्वन्द्वाद्वुन्वैरमैथुनिकयोः )– अश्वमहिषयोर्वैरमश्वमहिषिका, काकोलूकिका । अत्रिभरद्वाजयोर्मैथुनप्रयोजने विवाहे वैरमत्रिभरद्वाजिका, वसिष्ठकुशिका । आदिशब्दात् पादशतस्यसंख्यादेर्वीप्सायां वुन्लोपश्च ( सू० ), दण्डव्यवसर्गयोश्च ( सू० )– द्वौ द्वौ पादौ द्विपदिकां ददाति, द्वे द्वे शते दण्डितो

तल्लृन्दे येनिकस्त्यत्रा वैरमैथुनिकादिवुन् ।
स्त्रीभावादावनिक्तिण्ण्वुल्ण्णच्ण्वुचूक्यव्युजिञङ्( इनि )शाः ॥४॥
उणादिषु निरूरीश्च ङ्याबूङन्तं चलं स्थिरम् ।
तत्क्रीडायां प्रहरणं चेन्मौष्टा पाल्लवा णदिक् ॥ ५ ॥
घञो ञः सा क्रियास्यां चेद् दाण्डपाता हि फाल्गुनी ।
श्यैनंपाता च मृगया तैलंपाता स्वधेति दिक् ॥ ६ ॥
स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि ।
लङ्का शेफालिका टीका धातकी पञ्जिकाढकी ॥ ७ ॥
सिध्रका शा( सा )रिका हिक्का प्राचिकोल्का पिपीलिका ।
तिन्दुकी कणिका भङ्गिः सुरङ्गासूचिमाढयः ॥ ८ ॥

---

द्विशतिकां ददाति । उपलक्षणत्वाद् वुञन्तोपि, द्वन्द्वमनोज्ञादिभ्यश्च ( सू० ) इति वुञ्- शैष्योपाध्यायिका । गोत्रचरणाच्छ्लाघादौवुञ् ( सू० )- गार्ग्यस्य भावः कर्म चेति गार्गिकया श्लाघते, काठिकया श्लाघते । स्त्रियामित्यधिकृत्य भावे वा कर्तरि च कारके- अन्यादिप्रत्ययान्ताः स्त्रियाम्, आक्रोशेनञ्यनिः ( सू० )- अजननिस्ते वृषल भूयात्, अकरणिः । स्त्रियांक्तिन् ( सू० )- कृतिः, भक्तिः । रोगाख्यायांण्वुल्बहुलम् ( सू० )- प्रच्छर्दिका, विचर्चिका । धात्वर्थनिर्देशेण्वुल्वक्तव्यः ( वा० )- कारिका, जीविका । कर्मव्यतिहारेणच्स्त्रियाम् ( सू० )- अन्योन्यं व्याक्रोशनं व्यावक्रोशी वर्तते, व्यावभाषी[ हासी ], णचःस्त्रियामञ् ( सू० ) स्वार्थे । पर्यायार्हणो पत्तिषुण्वुच् ( सू० )- भवतः शायिका, इक्षुभक्षिकोत्पन्ना । व्रजयजोर्भावेक्यप् ( सू० )- व्रज्या, इज्या । संज्ञायांसमजेति (सू०) क्यप्- समज्या, निषद्या । हनस्तच ( सू० ) इति क्यप्- ब्रह्महत्या । ण्यासश्रन्थोयुच् ( सू० )- मण्डना, आसना । प्रश्नाख्यानयोरिञ ( चान्द्रसू० )- कां कारिमकार्षीः, इमां कारिमकार्षम् । षिद्भिदादिभ्योङ् ( सू० )- घटा, मृजा, भिदा । अप्रत्ययात् ( सू० )- चिकीर्षा, पुत्रीया । कृञःशच ( सू० )- क्रिया, इच्छा ॥ ४ ॥ उणादौ न्यन्त ऊदन्त ईदन्तश्च स्त्रियां- अरणिः, धमनिः, हानिः, ज्यानिः, ग्लानिः, अलाबूः, जम्बूः, लक्ष्मीः, तन्त्रीः । ङ्यन्तमाबन्तमूङन्तं चाभिधेयलिङ्गं रूढलिङ्गं च स्त्रियां- पुंस इयं पौंस्नी बुद्धिः, हिमानी, अजा, बलाका, श्वश्रूः, ब्रह्मबन्धूः । मुष्टिः प्रहरणं यस्यां क्रिडायां मौष्टा, पल्लवाः प्रहरणमस्यां पाल्लवा, तदस्यां प्रहरणमितिक्रीडायांणः (सू०), णदिक्- णप्रत्ययोदाहरणमित्यर्थः ॥५॥ दण्डपातोस्यां फाल्गुन्यां वर्तते, श्येनपातोस्यां मृगयायां वर्तते, तिलपातोस्यां स्वधायां वर्तते, घञःसास्यांक्रियेति ( सू० ) ञः, श्येनतिलयोः पातेञे ( सू० ) इति मुक्, स्वधास्त्यस्यां स्वधा श्राद्धम् ॥ ६ ॥ अपचयेल्पत्वे यदि वक्तुमिच्छा तदा मृणाल्यादयः स्त्रीलिङ्गाः स्युः । अपचयेपचयस्थानलक्षणानि हि स्त्रीपुंनपुंसकानि । आदिशब्दाद्गमाली, तटी, मठी, छत्रिका, गृह्यकाण्डी । काचिदिति यत्र लोके पुंनपुंसकयोः स्त्रीत्वं दृश्यते, न सुखादौ । लङ्का राक्षसपुरी । शेफालिका पुष्पविशेषः । टीका वृत्तिः । धातकी नामौषधिः । पञ्जिका न्यासः । आढकी व्रीहिभेदः, स्वल्पाढकं च ॥ ७ ॥ सिध्रकाशारिके वृक्षभेदौ । हिक्का- ऊर्ध्वं वातप्रवृत्तौ शब्दः । प्राचिका पक्षिविशेषः । उल्का ज्वाला । पिपीलिका वल्मीककृमिः । योत्राप्रसिद्धः प्रागनुक्तो वा स प्रातिपदिकेनोच्यते, अतः शनैर्यातिं पिपीलिक इति पुंस्त्वमनिषिद्धम् । एवं सर्वत्र । तिन्दुकी नाम वृक्षः फलं च । कणिका- अल्पकणः- गोधूमपिष्टं च । भङ्गिर्विच्छित्तिः । सुरङ्गा तिर्यग्भूखातः । सूचिः सीवनी । माढिर्नाम देशः कवचं च ॥८॥ पिच्छा-आचामः । वितण्डा स्वपक्षस्थापना( नो ) हीनो जल्पः ।

पिच्छावितण्डाकाकिण्यश्चूर्णिः शाणी द्रुणी दरद् ।
सातिः कन्था तथासन्दी नाभी राजसभापि च ॥ ९ ॥
झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला ।
लाक्षा लिक्षा च गण्डूषा गृध्रसी चमसी मसी ॥ १० ॥
पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः ।
स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः ॥ ११ ॥
करगण्डौष्ठदोर्दन्तकण्ठकेशनखस्तनाः ।
अह्नाहान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः ॥ १२ ॥

---

काकिणी नाम माषकचतुर्थभागः, पणचतुर्थभाग इत्येके । काकिनीति सभ्याः । चूर्णिर्भाष्यम् । शाणी निकषः, शाण इत्येके, काणीपाठे संकोचोर्थः । द्रुणी कर्णजलौका । दरद् म्लेच्छजातिः । सातिः प्रावारविशेषः । कन्था खण्डैः स्यूतं वासः । आसन्दी पीठिका । नाभी तुन्दिः । राज्ञः सभा राजसभा, सभाराजामनुष्यपूर्वेति ( सू० ) राजनिषेधात्स्त्रीत्वम् ॥ ९ ॥ झल्लरी वाद्यविशेषः । चर्चरी हर्षक्रीडा । पारी पानभाण्डम् । होरा लग्नं जातकं च । लट्वा–अलका भ्रमरकाश्च । सिध्मला पामा मलः श्वित्रं च । लाक्षा जतुः । लिक्षा यूकागर्भः । गण्डूषा– आस्यचुलुकं, गण्डूषोपि । गृध्रसी– ऊरुसंधौ वातरुक् । चमसी मसूरादिपिष्टं स्वल्पचमसश्च । मसी रजनी । इति स्त्रीलिङ्गशेषः ॥ १० ॥ सुरा असुरास्तद्विशेषास्तदनुचराश्च पर्यायैः सह पुंसि । सुरा दिवौकसः, सुरविशेषाः–इन्द्रो बिडौजाः शक्रः, आदित्यः सूर्यो रविः, ब्रह्मा स्वयंभूः, विष्णुः शौरिः, रुद्रः शंभुः । विष्णोरनुचराः– चण्डः प्रचण्डः, जयो विजयः, विष्वक्सेनः । रुद्रानुचराः– नन्दी महाकालो भृङ्गी, गणाः प्रथमाः । एवं सर्वत्र । असुराः पूर्वदेवा दैत्या दानवाः, तद्विशेषाः– विरोचनो बलिर्नमुचिः प्रह्लादः । प्राङ् नपुंसकाधिकारात्पुंलिङ्गाधिकारः । एते सभेदाः सपर्यायाः पुंसि । स्वर्गो नाकस्त्रिदिवः । यागः क्रतुः सप्ततन्तुः, तद्विशेषाः– अग्निष्टोम उक्थ्योतिरात्रः– अप्तोर्यामः । अद्रिः पर्वतः शैलः, तद्विशेषाः– मेरुर्हिमवानुर्हिमवान् सह्यो विन्ध्यः पारियात्रः । मेघस्तडित्वान् घनः, तद्विशेषः पुष्करावर्तकः । अब्धिः समुद्र उदन्वान्, तद्विशेषः क्षीरोदः । द्रुस्तरुः पादपः, तद्विशेषाः– आम्रस्तालश्चम्पकः । कालः समयः, तद्विशेषाः– क्षणो लवः, मुहूर्तः, मासश्चैत्रः, संवत्सरः । असिः करवालः, तद्विशेषाः– नन्दकश्चन्द्रहासः । शरः सायकः पृषत्कः क्षुरप्रः । अरिर्द्विड्मित्रः ॥ ११ ॥ करः पाणिर्हस्तः । गण्डः कपोलः । ओष्ठो दन्तच्छदोधरः । दोर्बाहुः । दन्तो रदनः । कण्ठो गलः । केशो वालश्चिकुरः । नखः कररुहः । स्तनः पयोधरः । कृतसमासान्ताहःशब्दोत्तरपदाः पुंसि, रात्राह्नाहाःपुंसि ( सू० ) इति– पूर्वाह्णः, मध्याह्नः, सायाह्नः । द्व्यहः, त्र्यहः, उत्तमाहः, परमाहः, राजाहःसखिभ्यष्टच् ( सू० ), अह्नोह्नएतेभ्यः ( सू० ) इत्यह्नादेशः । विषविशेषाः पुंसि– क्ष्वेडो गरलः कालकूटो हलाहलः । पुंसि क्लीबे च प्रागुक्तत्वात्पुंसि प्रचुरप्रयोगार्थं विधिः । एवं सर्वत्र । विषं तु क्लीबे । असंख्यापूर्वाः कृतसमासान्ता रात्रान्ताः पुंसि– अहोरात्रः, दीर्घरात्रः, वर्षारात्रः, अहःसर्वैकदेशसंख्यातपुण्याच्चरात्रेः ( सू० ) इत्यच्, नेह– त्रिरात्रं, षड्रात्रम् ॥ १२ ॥ श्रीवेष्टः सर्जरसः कर्चूरः । निर्यासो वृक्षद्रवः । असन्ता अनन्ताश्चाबाधिता अनसोदि[ हि ]ताः पुंसि– पुरोधाः, उशना, मज्जा, ह्लीहा । अबाधिता इति किं– इदं यादो जलचरः, इदं लोम, इदं साम । व्यञ्जनसिसुसन्नन्तमित्यपवादो वक्ष्यते । कशेर्वादीनि वर्जयित्वा त्वन्ता रुशब्दान्ताश्च पुंसि– अयं वास्तुर्गृहाधारः, मस्तुः, सक्तुः, धातुः, किंशारुर्धान्यशूकः, त्सरुः खड्गादिमुष्टिः, मरुर्धन्वा, ऊरुः सक्थि । नेह– इदं कशेरु जलजः कन्दः, जतु लाक्षा,

श्रीवेष्टाद्याश्च निर्यासा असन्नन्ता अबाधिताः ।
कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः ॥ १३ ॥
कषणभमरोपान्ता यद्यदन्ता अमी अथ ।
पथनयसटोपान्ता गोत्राख्याश्चरणाह्वयाः ॥ १४ ॥
नाम्न्यकर्तरि भावे च घञजब्नङ्णघाथुचः ।
ल्युः कर्तरीमनिज्भावे को घोः किः प्रादितोन्यतः ॥ १५ ॥
द्वन्द्वेश्ववडवावश्ववडवान समाहृते ।
कान्तः सूर्येन्दुपर्यायपूर्वोयःपूर्वकोपि च ॥ १६ ॥
वटकश्चानुवाकश्च रल्लकश्च कुडङ्गकः ।
पुङ्खो न्युङ्खः समुद्गश्च विटपट्टघटाः खटः ॥ १७ ॥
कोट्टारघट्टहट्टाश्च पिण्डगौड( गोण्ड )पिचण्डवत् ।
गडुः करण्डो लगुडो वरण्डश्च किणो घुणः ॥ १८ ॥

---

वस्तु पदार्थः ॥१३॥ ककरादिद्वादशाक्षरोपधा अकारान्ताः पुंसि । क- शल्कः, वृकः, श्वेतकः, वराटकः । ष - वृक्षः, कक्षः, निकषः । ण- गणः, शणः, बाणः, कणः । भ- कुम्भः, शलभः । म- आचामः, धूमः, ग्रामः । र- अङ्कुरः, करः, दरः, समीरः । प- सर्पः, सूपः, कलापः, बाष्पः । थ- सार्थः, शपथः, नाथः । न- फेनः, हायनः, स्तनः, जनः । य- तनयः, व्ययः, तन्तुवायः । स- रसः, दासः, कुसः, वत्सः । ट- सरटः, पटः, कटः । अपत्यप्रत्ययान्ताः शाखाध्यायिनश्च पुंसि- गार्ग्यः, वासिष्ठः, दाक्षिः, कठः, बह्वृचः, छन्दोगः ॥ १४ ॥ अकर्तरि च कारके संज्ञायां भावे चार्थे घञन्तादयः पुंसि । घञ्- प्र( प्रा )सीदन्त्यस्मिन्नयनमनांसीति प्र( प्रा )सादः, प्रक्रियते प्रकारः, पाकः, त्यागः, अकर्तरिचकारकेसंज्ञायां ( सू० ) घञ् । अच्- पचः चयः, नयः, पचाद्यच् ( नन्दिग्रहीति ), एरच् ( सू० ) । अप्- करः, भरः, स्तवः, लवः, प्लवः, ऋदोरप् ( सू० ) । नङ्- यज्ञः, यत्नः, प्रश्नः, यजयाचयतविच्छप्रच्छरक्षो नङ् ( सू० ) नङ् । उपलक्षणत्वात्- स्वपानन् ( सू० ) । णः- न्यदनं न्यादः, नौणवेति ( सू० ) णः । घः- प्रहरः, निगमः, गोचरः, पुंसिसंज्ञायांघःप्रायेण ( सू० ) । अथुच्- आनन्दथुः, श्वयथुः, वेपथुः, ट्वितोथुच् ( सू० ) । कर्तरि ल्युः पुंसि- नन्दयति नन्दनः, रमयाति रमणः, नन्दिग्रहिपचेति ( सू० ) ल्युः । इमनिजन्ताः पुंसि- पृथोर्भावः प्रथिमा, लघिमा, पृथ्वादिभ्यइमनिज्वा ( सू० ) । भाव इति किं- तरिमा पृथ्वी, च[ व ]रिमा तपस्वी, औणादिक इमनिच् । भावे कप्रत्ययान्तः पुंसि- आखूनामुत्थानमाखूत्थो वर्तते, सुपिस्थः ( सू० ) इति योगविभागात्कः । घञर्थेकविधानं ( वा० )- प्रस्थः, प्रघ्नः । प्रादित उपसर्गादन्यतः सुबन्ताच्च पराद् घुसंज्ञकात्परो यः किप्रत्ययस्तदन्तः पुंसि- निधिः, प्रधिः, आधिः, आदिः, उपसर्गेघोःकिः ( सू० ), अब्धिः, इषुधिः, कर्मण्यधिकरणेच ( सू० ) इति किः ॥ १५ ॥ समाहारादन्यत्र द्वन्द्वेश्ववडवौ- अश्ववडवाः पुंसि, द्वित्वबहुत्वयोरुदाहरणम् । नेह- अश्ववडवं, विभाषावृक्षमृगेति ( सू० ) समाहारविकल्पः । सूर्यादिपूर्वः कान्तशब्दः पुंसि- सूर्यकान्तः, भास्वत्कान्तः, इन्दुकान्तः, चन्द्रकान्तः, अयस्कान्तः ॥ १६ ॥ वटको भक्ष्यविशेषः । अनुवाक ऋग्यजुसमूहः । रल्लकः पक्ष्मकम्बलः । कुडङ्गको वृक्षलतागहनम् । पुङ्खः काण्डमूलम् । न्युङ्खः ओंकाराः षोडश । समुद्गः करण्डकः । विटः कामुकानुचरः । पट्ट उष्णीषादिः । घटो दारुतुला । खटस्तृणम् ॥ १७ ॥ कोट्टो दुर्गः । अरघट्टो महाकूपः । हट्ट आपणः । पिण्डो ग्रासः । गौडो गुडको देशविशेषो वा । पिचण्ड उदरम् ।

दृतिसीमन्तहरितो रोमन्थोद्गीथबुद्बुदाः ।
कासमर्दोऽर्बुदः कुन्दः फेनस्तूपौ सयू( पू )पकौ ॥ १९ ॥
आतपः क्षत्रिये नाभिः कणपक्षुरकेदराः ।
पूरक्षुरप्रचुक्राश्च गोलहिङ्गुलुपुद्गलाः ॥ २० ॥
वेतालभल्लमल्लाश्च पुरोडाशापि पट्टिशः ।
कुल्माषो रभसश्चैव सकटाहः पतद्ग्रहः ॥ २१ ॥
द्विहीनेऽन्यश्च( च ) खारण्यपर्णश्वभ्रहिमोदकम् ।
शीतोष्णमांसरुधिरमुखाक्षिद्रविणं बलम् ॥ २२ ॥
फलहेमशुल्बलोहं सुखदुःखशुभाशुभम् ।
जलपुष्पाणि लवणव्यञ्जनान्यनुलेपनम् ॥ २३ ॥

---

गडुर्गण्डः ( कपोलः ) । करण्डः समुद्गः । लगुडो यष्टिः । वरण्डः समूहः । किण्वो मांसग्रन्थिः । घुणो दारुकृमिः ॥ १८ ॥ दृतिर्भस्त्रा । सीमन्तः केशसीमोन्तः, शकन्ध्वादित्वात्पररूपम् ( वा० ) । हरितो वर्णः, दिक्पर्यायस्तु स्त्रीलिङ्गः प्रागवचनात् । रोमन्थस्तिरश्चां चर्वितचर्वणम् । उद्गीथ ओंकारः । बुदबुदोम्बुस्फोटः । कासमर्दो वेसवारभेदः । अर्बुदादिर्व्याधेः संख्याभेदश्च । कुन्दो माघ्यं पुष्पम् । फेनो डिण्डीरः । स्तूपो मृदादिकूटः । यूपो यज्ञपशुबन्धनकाष्ठम् ॥ १९ ॥ आतपोऽर्कद्योतः । क्षत्रियपर्याया नाभिः, नहद्द्व नाभिस्तुन्दिः । कणाः प्राणविशेषाः । क्षुरो नापितभाण्डम् । केदरो रूपकम् । पूरस्तोयोत्प्लवः । क्षुरप्रः काण्डभेदः । चुक्रम्लव्यञ्जनम् । गोलो वर्तुलः पिण्डः, यथा भूगोलः । हिङ्गुलुः– रागद्रव्यम्, अकारान्तमप्येके । पुद्गलो जीवः ॥ २० ॥ वेतालो भूताविष्टः शवः । भल्लः काण्डभेदः । पुरोडाशो यज्ञे पिष्टपूरः । पट्टिशो नामायुधम् । कुल्माषोऽर्धस्विन्नमाषादिः । रभसः पौर्वापर्यविचारः । कटाहो द्रव्यपाचनभाण्डम् । पतद्ग्रहः– अवोष्ठकपात्रः ॥ २१ ॥ इति पुंलिङ्गशेषः । द्विहीने तृतीये नपुंसके, उक्तादन्यः शेषो वक्ष्यत इत्यर्थः । खादि मत्वर्थविशेषं तृतीये । खमिन्द्रियमाकाशं चोच्यते– खमिन्द्रियं हृषीकं करणं, खं गगनमन्तरिक्षम् । अरण्यं विपिनं कान्तारम् । पर्णं पलाशं दलम् । श्वभ्रं विवरं सु- । हिमं प्रालेयं तुहिनम् । उदकं पानीयं तोयम् । शीतं शिशिरम् । उष्णं घर्मम् । मांसं तरसं पलम् । रुधिरं रक्तमसृक् । मुखं तुण्डमास्यम् । अक्षि नयनं लोचनम् । द्रविणं धनं स्वापतेयम् । बलं सैन्यमनीकम् ॥ २२ ॥ फलविशेषाः– आम्रं पनसं कापित्थम् । हेम सुवर्णं कार्तस्वरम् । शुल्बं ताम्रमौदुम्बरम् । लोहमश्मसारम् । सुखमनुराजोषं शान्तम् । दुःखमाभीलं कृच्छ्रम् । शुभं पुण्यं सुकृतम् । अशुभं पापं दुष्कृतम् । जलपुष्पभेदाः– अम्बुजं कुमुदमिन्दीवरं कह्लारम् । लवणभेदाः– सैन्धवमौद्भिदं बिडं रुचकम् । व्यञ्जनभेदाः– व्यञ्जनं सुरसवनं दधि दुग्धमुदश्विन्मस्तु । अनुलेपनभेदाः– [ अनुलिप्यते ] अनुलेपनं कुङ्कुममग्निशिखं काश्मीरं चन्दनं श्रीखण्डम् ॥ २३ ॥ भयानृ[ मृ ]तशकृद्वस्त्र( स्तु )चापाभरणलाङ्गलम् । दावौषधमृधापत्यह्रदयोदरकाकुदम् ॥ पत्तनाजिरशृङ्गाग्रद्वारबर्होडुमानसम् । ध्वान्तं चाव्यक्तलिङ्गं च भणितो यत्प्रयुज्यते ॥ कोटेरन्या शतादिका संख्या तृतीये– शतं सहस्रमयुतं, नेह– इयं कोटिर्लक्षशतम् । शतादेरिति किं– इयं त्रिंशत्, इयं नवतिः । लक्षशब्दस्तृतीये वा, पक्षे स्त्रियां निर्देशात्, यथा– कियती पञ्चसहस्री कियती लक्षाथ कोटिरपि कियती । औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥ इदं लक्षं तदेव प्रयुताख्यमित्यभिधानशेषोऽपि । असन्तमिसन्नमुसन्तमनन्तं च यद् द्विस्वरं तत्तृतीये– इदं यशस्तेजः पयः सर्पिर्बर्हिर्यजुर्धनुः, इदं नाम रोम नर्म पर्व । अकर्तरि यदनप्रत्ययान्तं तत्तृतीये– साध्यतेऽनेनेति साधनं, अधिक्रियतेऽस्मिन्नधिकरणं, पाकः पचनम् । कर्तरि तु मधुसूदनः, रमणः,

कोट्याः शतादिः संख्यान्या वा लक्षा नियुतं च तत् ।
द्व्यचकमसिसुसन्नन्तं यदनान्तमकर्तरि ॥ २४ ॥
त्रान्तं सनो( लो )पधं शिष्टं रात्रं प्राक्संख्यायान्वितम् ।
पात्राद्यदन्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः ॥ २५ ॥
द्वन्द्वैकत्वाव्ययीभावौ पथः संख्याव्ययात्परः ।
षष्ठ्याश्छाया बहूनां चेद्विच्छायं संहतौ सभा ॥ २६ ॥
शालार्थापि परा राजामनुष्यार्थादराजकात् ।
दासीसभं नृपसभं रक्षःसभमिमा दिशः ॥ २७ ॥
उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने ।
कोपज्ञकोपक्रमादि कन्थोशीनरनामसु ॥ २८ ॥

---

मदनः । कथमास्थानमास्थानी, करणं करणी, प्रमाणं प्रमाणी, अधिकरणमधिकरणी, राजधानं राजधानी' ल्युटष्टित्वात्, किं च, कृत्यल्युटोबहुलम् ( सू० ) इत्यनान्तानां त्रिलिङ्गत्वं स्म[ स्व ]रन्ति– राजभोजनी क्षैरेयी, राजभोजनः शालिः, राजभोजनं भक्तम्, इध्मव्रश्चनी शस्त्री, इध्मव्रश्चनः परशुः, इध्मव्रश्चनं शस्त्रम्, पलाशशातनी, पलाशशातनः, पलाशशातनम्, पूरणी, पूरणः, पूरणम्, गोदोहनी घटी, गोदोहनो घटः, गोदोहनं भाण्डम् ॥ २४ ॥ केवलं त्रान्तं, सकारनकारोपधं त्रशब्दान्तं च, शिष्टं प्रागुक्तादन्यच्छब्दरूपं तृतीये– पात्रं, अमत्रं, दात्रं, कलत्रं, शस्त्रं, वस्त्रं, शास्त्रं, अन्त्रं, तन्त्रं, यन्त्रम् । शिष्टमिति किं– पुत्रः, औपवस्त्रः, मन्त्रः । संख्यापूर्वं रात्रान्तं तृतीये, रात्राह्नाहाःपुंसीति ( सू० ) पुंस्त्वं प्राप्तम्– तिसृणां रात्रीणां समाहारस्त्रिरात्रम्, एवं पञ्चरात्रं, षड्रात्रम् । संख्ययेति किं– वर्षारात्रः । पात्रादिभिरकारान्तै- रुत्तरपदैः समाहारे लक्ष्यानुसारेण यो द्विगुः स तृतीये– पञ्चपात्रं, त्रिभुवनं, त्रिपुरदाहमुमापतिसेविनः ( किरातार्जु० ), चतुर्युगम् । पात्रादीति किं– त्रिलोकी, त्रिवेदी । एकार्थ इति किं– पञ्चकपालः पुरोडाशः । लक्ष्यानुसारत इति किं– त्रिपुरी, पञ्चमूलीश्रृतं पयः ॥ २५ ॥ द्वन्द्वस्य यदेकत्वं समाहारोऽव्ययीभावश्च समासस्तृतीये– इदं पाणिपादं, मार्दङ्गिकपाणविकं, स्त्रीषु कथा वर्तत इदमधिस्त्रि, इदं तिष्ठद्गु कालः, इदमुन्मत्तगङ्गं देशः । संख्याव्ययाभ्यां परः कृतसमासान्तः पथिशब्दस्तृतीये– त्रयाणां पथां समाहारास्त्रिपथं, विरुद्धः पन्था विपथं, कुत्सितः पन्थाः कापथम् । संख्याव्ययादिति किं– धर्मपथः । षष्ठ्यन्तात्परा कृतसमासान्ता छाया तृतीये बहूनां चेत्– गृध्राणां छाया गृध्रच्छायं, वीनां छाया विच्छायं, शलभच्छायं, छायाबाहुल्ये ( सू० ) इति नपुंसकम् । बहूनामिति किं– वृक्षस्य च्छाया वृक्षच्छाया । षष्ठ्याः परा समासे समूहार्था सभा तृतीये– दासीनां सभा दासीसभं दासीसमूह इत्यर्थः, ब्राह्मणसभं, अशाला च ( सू० ) इति नपुंसकम् । संहताविति किं– दास्याः सभा गृहं दासीसभा ॥ २६ ॥ राजार्थे- भ्योऽमनुष्यार्थेभ्यश्च षष्ठ्यन्तेभ्यः परा समूहार्था शालार्थापि सभा तृतीये, राजशब्दपरा चेन्न स्यात्– नृपस्य सभा गृहं नृपाणां समूहो वा नृपसभं, ईश्वरसभं, रक्षःसभं, पिशाचसभम् । अराजकादिति किं– राजसभा, सभाराजामनुष्यपूर्वा ( सू० ) इति नपुंसकम् । इमा दिश इमान्युदाहरणानीत्यर्थः ॥ २७ ॥ उपज्ञायत इत्युपज्ञा, उपक्रम्यत इत्युपक्रमः, तदन्तः शब्दः षष्ठीसमासे तदादिकथने द्योत्ये तृतीये– यथा कस्योपज्ञा कोपज्ञं सर्गः, चन्द्रोपज्ञमसंज्ञकं व्याकरणं, पाणिन्युपज्ञमकालं( लकं ) व्याकरणं, कस्योपक्रमः कोपक्रमं सृष्टिः, नन्दोपक्रमाणि मानानि । तदादित्व इति किं– डित्थोपज्ञो रथः, चैत्रोपक्रमो घटः, उपज्ञोपक्रमंतदाद्याचिख्यासायाम् ( सू० ) इति नपुंसकम् । उशीनरदेशे या कन्था षष्ठ्याः परा सा संज्ञायां गम्यमानायां तृतीये– सौशमीनां कन्था सौशमिकन्थम् । उशीनरेति किं– दाक्षिकन्था । नाम-

भावे नणकचिद्भ्योन्ये समूहे भावकर्मणोः ।
अदन्तप्रत्ययाः पुण्यसुदिनाभ्यां त्वहः परः ॥ २९ ॥
क्रियाव्ययानां भेदकान्येकत्वेप्युक्थतोटके ।
चोचमुक्तं गृहस्थूणं तिरीटं मर्मयोजने ॥ ३० ॥
राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः ।
माणिक्यभाष्यसिन्दूरचीरचीवरपञ्जरम् ॥ ३१ ॥
लोकायतं हरितालं विदलस्थालबाह्लव( ह्लिक )म् ।
पुंनपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः ॥ ३२ ॥
मोदकस्तण्डकष्टङ्कः शाटकः खर्वटोऽर्बुदः ।
पातकोद्योगचरकतमालामलका नडः ॥ ३३ ॥

---

स्त्विति किं– चैत्रकन्था, संज्ञायांकन्थोशीनरेषु ( सू० ) इति नपुंसकम् ॥ २८ ॥ नणकेभ्यश्चकारानुबन्धेभ्यश्च येन्ये भावेर्थे कृतस्तथा समूहेर्थे भावकर्मणोश्च ये तद्धितास्ते ते प्रत्यया येषां ते शब्दास्तृतीये– समन्ताद्रावः सांराविणं वर्तते, सांकूटिनं वर्तते, अभिविधौभावइनुण् ( सू० ), अणिनुणः ( सू० ) इति स्वार्थेऽण् । ब्रह्मणो भवनं ब्रह्मभूयं गतः, भुवोभावे ( सू० ) इति क्यप् । नणकचिद्भ्योन्य इति किं– ( न )– प्रश्नः, यत्नः, ( ण )– न्यदनं न्यादः, नौणचेति ( सू० ), ( क )– आखूनामुत्थानमाखूत्थः, सुपिस्थः ( सू० ) इति योगविभागात्कः, ( चित् )– श्वयनं श्वयथुः, ट्वितोथुच् ( सू० ), आसनमासना, भावना, ण्यासश्रन्थोयुच् ( सू० ) । समूहादौ तद्धिताः खल्वपि– भिक्षाणां समूहो भैक्षं, यौवतं, राजकं, औक्षकं, गोर्भावो गोत्वं, शुक्लस्य भावः कर्म वा शौक्ल्यं, मार्दवं, मानोज्ञकं, स्तेयम् । पुण्यसुदिनाभ्यां परः कृतसमासान्तोहःशब्दस्तृतीये– पुण्यं च तदहश्च पुण्याहं, सुदिनशब्दोत्र शोभनवाची, यथा– सुदिनासु सभासु कार्यमेतत्, पुण्यसुदिनाभ्यामह्नोवक्तव्यात् ( वा० ) नपुंसकत्वम् ॥ २९ ॥ क्रियाविशेषणान्यव्ययविशेषणानि च तृतीये– एकवचनान्तानि च भवन्ति– मृदु पचति, शोभनं पचति, पूर्वस्यां दिशि देशे काले वा पुरस्ताद्रम्यं, श्वः शोभनम् । एते शब्दास्तृतीये– उक्थं सामविशेषः, तोटकं वृत्तभेदो दशरूपकभेदश्च, चोचं भुक्तोच्छिष्टा फेला, नारिकेरफलस्य फलत्वात्सिद्धं, उक्तमेकाक्षरं छन्दः, अत्युक्तं च द्व्यक्षरम् । गृहस्य स्थूणा गृहस्थूणम् । तिरीटं शिरोवेष्टनम् । मर्म संधिस्थानम् । योजनं चतुःक्रोशी ॥ ३० ॥ राजसूयवाजपेये यज्ञविशेषौ । कविकर्मण्येते द्वे तृतीये– गद्यं दण्डकबन्धः, पद्यं श्लोकबन्धः । कृतौ कवेरिति किं– गद्या स्त्री, पद्या शर्करा । मणिरेव माणिक्यम् । भाष्यं चूर्णिः । सिन्दूरं चीनपिष्टम् । चीरं वार्क्षी त्वक् । चीवरं मुनिवासः । पञ्जरं पक्ष्यादिबन्धनगृहम् ॥ ३१ ॥ लोकायतं नाम तर्कः । हरितालं धातुभेदः । विदलं दाडिमकणः, फल[ ले ]स्य सिद्धम् । स्थालं भोजनपात्रम् । बाह्लवं देशः । इति नपुंसकलिङ्गशेषः । अयमिदं वार्धमृचोऽर्धर्चः । पिण्याकं खलिः । कण्टकं लतारोम ॥ ३२ ॥ मोदकं भक्ष्यविशेषः । तण्डकं परिष्कारः, दण्डको वायम् । टङ्कोश्मदारणः । शाटकं पटः । खर्वटश्चतुःशतग्रामाणां संग्रहस्थानम् । अर्बुदोक्षिरोगः संख्याविशेषश्च, पर्वते तु पुंलिङ्गः । पातको गोहत्यादिः । उद्योग उत्साहः । चरकं शास्त्रविशेषः । तमालं वृक्षभेदः । आमलको धात्रीफलं, वृक्षे त्वामलकी । नडोन्तः– सुषिरं तृणम् ॥ ३३ ॥ कुष्ठं त्वग्रोगः, द्रव्यं च । मुण्डं शिरः, मुण्डिते तु वाच्यलिङ्गम् । शीधुर्मद्यम् । बुस्तं मांसशष्कुली । क्ष्वेडितं मुखध्वनिभेदः । क्षेमं कुशलम् । कुट्टेन निर्वृत्तः कुट्टिमो मणिभूः । संगमो

कृतः कर्तर्यसंज्ञायां कृत्याः कर्तरि कर्मणि ।
अणाद्यन्तास्तेनरक्ताद्यर्थे नानार्थभेदकाः ॥ ४५ ॥
षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम् ।
परं विरोधे शेषं तु ज्ञेयं शिष्टप्रयोगतः ॥ ४६ ॥

इति लिङ्गसंग्रहवर्गः । ६ ।

---

कार्त्तिकमहः । इन्द्रो देवतास्या ऐन्द्री ( ऋक् ), ऐन्द्रो मन्त्रः, ऐन्द्रं हविः । असंज्ञायामित्येव– श्रवण पौर्णमासी, अश्वत्था पौर्णमासी, संज्ञायांश्रवणाश्वत्थाभ्याम् ( सू० ) इत्यणो लुप् । नानाविधार्थविशेषा येषां ते वाच्यलिङ्गाः– को ब्रह्मा, कं शिरः, नभः खं, नभाः श्रावणः । नानार्था विशेषणानि वेत्येके– मूर्खा, मूर्खः, मूर्खं, विदुषी, विद्वान्, विद्वत् ॥ ४५ ॥ ष्णान्ताषट् ( सू० ) इति षट्संज्ञकाः, तथा युष्मदस्मच्छब्दौ, आख्यातान्यव्ययानि च त्रिलिङ्ग्यां समानि लिङ्गकृतविशेषरहितानीत्यर्थः । षट् स्त्रियः, षड्रसाः, षट् कुलानि, पञ्च स्त्रियः, पञ्च शराः, पञ्चेन्द्रियाणि, त्वं स्त्री, त्वं पुमान्, त्वं कुलं, अहं स्त्री, अहं पुमान्, अहं कुलं, ब्रूते स्त्री, ब्रूते पुमान्, ब्रूते कुलं, नानास्त्रियः, नानादेशाः, नानाकुलानि, उच्चैः स्त्री, उच्चैस्तरुः, उच्चैर्वनं, तत्र पुरि, तत्र देशे, तत्र वने, एवं कति स्त्रियः, कति जनाः, कति खानि । लिङ्गविशेषविधौ पूर्वापरविरोधे परं लिङ्गं भवति । असुरपर्यायाः पुंस्त्व इत्यस्य विषये– नैर्ऋतः, राक्षसः । द्व्यच्कमसिसुसन्नन्तमिति तृतीय इत्यस्य विषये– इदं तेजः, यशः । इहोभयं प्राप्नोति– इदं रक्षः, परत्वात्क्लीबे । इह यन्नोक्तं तल्लक्ष्यतो द्रष्टव्यं, यथा– गोधा पुंध्वजापि स्त्री, तथा पोटा नपुंसकमपि स्त्री । तथाव्यक्ते गुणसंदेहे नपुंसकलिङ्गं प्रयुज्यते– किं तस्या जातं स्त्री पुमान्वा, शक्यं स्वमांसादिभिरपि क्षुत्प्रतिहन्तुम् । तथा तयप्प्रत्ययान्तं धर्मवृत्ति स्त्रीनपुंसकयोः– वर्णानां चतुष्टयी, वर्णानां चतुष्टयम्, वेदानां त्रयी, वेदत्रयम् । धर्मिवृत्ति तु वाच्यलिङ्गं– त्रय्यः स्थितयः, त्रये लोकाः, त्रयाणि जगन्ति । तथा छान्दसोऽण् स्वार्थे क्लीबे– गायत्र्येव गायत्रं, अनुष्टुबेवानुष्टुभम् । तथा इक्-श्तिपन्तः पुंसि– अयं वृद्धिः, अयं पचतिः । तथा दरद् ह्रस्वेकश्च स्त्रियां– इयं दरद्देशः, गृह्यकण्डिका, छत्त्रिका, दण्डिका, नालिका, नासिका । तथा प्रमाणाद्या अजहल्लिङ्गवचनाः– वेदाः प्रमाणं, स्मृतयः प्रमाणं, भूतमियं ब्राह्मणी, विप्राशिषो भद्रम् ॥ ४६ ॥ इति लिंङ्गसंग्रहवर्गः । ५ । [ इत्यमरसिंहकृतौ नामलिङ्गानुशासने । सामान्यकाण्डस्तृतीयः साङ्ग एव समर्थितः ॥ ]

इति श्रीभट्टक्षीरस्वाम्युत्प्रेक्षितेऽमरकोशोद्घाटने सामान्यकाण्डस्तृतीयः समाप्तः ।

# APPENDIX I.

An alphabetical list of authors and works quoted by Kshîrasvâmin in his commentary on Amarakosha.

(The figures refer to pages).

अनेकार्थः ( अनेकार्थकोशः )–A lexicon, 67.

अभिधानकारः–Author of Abhidhânakosha, 32.

अभिधानशेषः–A supplement to Abhidhânakosha, 235.

अमरमाला–A lexicon, 12, 15, 29.

अश्वतन्त्रम्–A work on horses (by some writer like *S*âlihotra ?) (see Notes ), 129.

आचार्याः–A commentator ( कोहलः ? ), 50.

इन्दुः–Author of a medical Nigha*nt*u, 56, 57, 58, 59, 61, 63, 65, 67, 68, 69, 71, 75, 76, 77, 79, 80, 81, &c.

उत्तररामचरितम्–A drama by Bhavabhûti, 85, 140, 175, 227, 229.

उदीच्याः–The Northern school of grammarians, 185.

उद्भटः–A writer on Rhetoric (of Kâ*s*mere), 224.

उपाध्यायः–A commentator on Amarakosha, 2, 41, 54, 99, 140, 141, 164.

कात्यः–A very ancient lexicographer, (see Introduction), 8, 10, 15, 16, 21, 23, 24, 27, 29, 30, 35, 36, 37, 39, 41, 47, 48, 50, 52, 54, 55, 89, 94, 104, 115, 118, 122, 125, 131, 144, 148, 151, &c.

कादम्बरी–A prose work by Bâ*n*abha*tt*a, 28.

कालिदासः–Author of Raghuvam*s*a, Kumârasambhava, &c., 52, 90.

काव्यादर्शः–A work on Rhetoric by Da*nd*in, 191.

काशिका–A complete commentary on Pâ*n*ini, 35, 47, 118, 215, &c.

काश्मीराः–The Kâ*s*mere recension of Amarakosha, 132.

किरातार्जुनीयम्–A poem by Bhâravi, 179, 210, 228, 236, &c.

कुमारसंभवम्–A poem by Kâlidâsa, 9, 52, 90, 109, 176, 196, 202, 224, 225, 226, 227, &c.

कुमारिलभट्टः–Author of the Mîmâmsâ-Vârttikas, 28, 166, 207.

कौटिल्यः–Author of a work on Artha*s*âstra, 34, 42, 49, 50, 51, 125, 137, 162, 185, 186, 193, 196, 210, 211, &c.

गौडः–A commentator on Amarakosha, 2, 3, 40, 41, 50, 59, 60, 77, 86, 106, 130, 131, 153, 192, 193, &c.

गौडा:-The Gau*d*a school of *S*âbdikas, 63, 74, 76, 90, 199, &c.
गौतम:-The reputed author of the Dharma*s*âstra named after him, 28, 114.
घटख( क )र्परः:-Author of the Yamaka-Kâvya, 218.
चन्द्र:-Author of a medical Nigha*nt*u, 58, 59, 62, 64, &c.
चन्द्र: ( चन्द्रगोमि )-The well-known Buddhist grammarian, 115, 236, ( see Introduction ).
चन्द्रकः:-A poet to whom certain Subhâshitas are attributed in शार्ङ्गधरपद्धति, 201.
चन्द्रनन्दन:-Author of the medical Nigha*nt*u called गणनिघण्टु, 64, 65, 66, 71, 72, 76, &c.
चरकसंहिता-A well-known medical work, 194, 211, 217, etc.
चाणक्य:- The same as Kau*t*ilya q. v., 48, 163, &c.
चाणक्यशतकम्-A work on Nîti, 41, 191, 193, 206.
चान्द्रम्-The grammar of Chandragomin, 30, 34, 40, 161, 171, 188, 211, &c.
जना:-The followers of Jaina doctrines, 187.
जैमिनि:-The Author of the Pûrva-Mîmâmsâ, 28.
ज्योतिषम् ( ज्यौतिषम् )-A work on astronomy, 23, 86.
टीका-A commentary, 17.
तान्त्रिका:-Followers of Tantra doctrines, 144.
दन्तिल:-An old writer on the science of music, 31, 32.
दुर्ग:-A lexicographer, 7, 12, 21, 27, 29, 31, 41, 55, 64, 84, 86, 99, 106, 131, 136, 142, 148, &c.
द्रवि( मि )डा:-The Dravi*d*ian school of *S*âbdikas, 45, 92, 147, 163.
धनुर्वेद:-A work on archery, 135.
धन्वन्तरि:-Author of a well-known medical Nigha*nt*u named after him, ( see Introduction ), 56, 59, 62, 67, 74, 77, 80, 81, 82, 110, 111, 148, 156, 157, 179, &c.
धातुविद:-Metallurgists, 156.
नागानन्दम्-A drama by *S*rîharsha, 36, 196, 211, 227.
नाममाला-A lexicon, 13, 99, 104, &c.
नारद:-Author of a *S*m*ri*ti, 158
नारायण:-A commentator, 34.
निघण्टु:-The medical Nigha*nt*u by Dhanvantari, 61, 63, 66, 68, 69, 71, &c.
निघण्टु:-Vedic vocabulary explained by Yâska, 46, 97.
निमि:-A medical writer, 63, 88, 157.

पञ्चतन्त्रम्–A well-known work containing moral stories and fables, **41**, 126, 193, 195, &c.

पदकारः–A grammarian (?), 171.

पाणिनिः–The great Sanskrit grammarian, 225, 236, &c.

पातञ्जलम्–Patanjali's system of Yogaphilosophy, 4.

पालकाप्यः–A very old writer on elephants, 128, 203, 209.

पाश्चात्याः (प्रतीच्या):–The Western school of S'âbdikas or grammarians, 8, 185.

प्राच्याः–The Eastern school of grammarians, 3, 5, 8, **11**, 16, 21, 94, 114, 149, etc.

बाणः–Author of Kâdambarî, Harshacharita, etc. (see Notes), 28.

बालरामायणम्–A drama by Râja*s*ekhara, **10**, **12**, 94, 215, 224, 226, etc.

बौद्धः ( आगमः )–Buddhistic philosophy or doctrines, 4, 203.

बौद्धाः–The followers of Buddhistic doctrines, 4, 25.

भगवद्गीता–A celebrated sacred work being an extract from Mahâbhârata, 193, 195, 203, 209, 218, **219**, 224, 226, **230**, etc.

भट्टः–The same as Kumârilabha*tt*a q. *v.* 28.

भट्टिः–A poet of the 6th century or his work, 132, 179, etc.

भरतः–Author of Na*t*ya*s*âstra ( a work on dramaturgy, etc.), 31, 33, 34, 36, 92, 108, 125, 135, 138, 160, 219, 223, etc.

भर्तृहरिः–Author of the well-known *S*atakas, 28, 39, 207, 229, etc.

भागुरिः–A very old lexicographer, (see Introduction), **4**, **7**, **8**, **11**, **14**, 15, 16, 23, 26, 29, 39, 46, 70, 83, 95, 106, **118**, 148, **151**, etc.

भारतम् ( महाभारतम् )–The well-known Indian Epic, 54, **112**, 134, etc.

भाष्यम्–Patanjali's Mahâbhâshya, 20, 97, 147, 153, 180, 182, 226, 231, etc.

भोजः ( श्रीभोजः )–A lexicographer, grammarian and commentator, 2, 11, 18, 27, 43, 45, 49, 101, 131, 137, 149, 152, 159, 163 173, 175, 198, 230, &c.

मनुः–A celebrated Sm*r*iti-writer, 23, 24, 47, 92, 95, 114, 115, 118, 120, 140, 141, 168, &c.

महानाटकम्–A work by Dâmodarmi*s*ra ( also called Hanumannâ*t*aka ), (see Notes), 147, 215, &c.

महावीरचरितम्— A drama by Bhavabhûti, 195.

मालतीमाधवम्–A drama by Bhavabhûti, 209.

माला–A lexicon, (see Introduction), 13, 15, 20, 21, 23, 24, 39, 40, 41, 44, 47, 48, 50, 63, 66, 74, 81, 82, 85, 86, 94, 118, 132, 144, 146, 148, 149, 151, 152, 154, &c.

मालाकार:–Author of the lexicon Mâlâ, 20, 35, 148, &c.

मुद्राराक्षसम्–A drama by Visâkhadatta, 199, 224.

मुनि:–An old lexicographer, (see Introduction), 44, 94, 97, 98, 103, 105, 109, 117, 118, 131, 132, 136, 141, 145, 147, &c.

मेघदूतम्–A poem by Kâlidâsa, 96, 184, 205, 228.

याज्ञवल्क्य:–A well-known Smriti-writer, 39, 95, 121, 153, 158, 199, 201, &c.

योगशास्त्रम्–A work on Yoga-philosophy, 13, 119, 191, &c.

रघुवंशम्–A well-known poem by Kâlidâsa, 11, 38, 97, 110, 121, 122, 127, 129, 191, 192, 195, 202, 209, 211, 230, &c.

रत्नावली–A drama by S'rîharsha, 217, 227.

राजशेखर:–Author of Bâlarâmâyana, Viddhasâlabhanjikâ, &c. 215.

रुद्र:–A lexicographer, (see Notes), 72, 75, 169.

वाजसनेयिसंहिता–The Samhitâ of the S'ukla Yajurveda, 224, 226.

वात्स्यायन:–A writer on erotics, 66, 217.

वामन:–Author of Kâvyâlankârasûtravritti, (see Notes), 38, 45, 219, 224, 227, &c.

वामन:–One of the joint authors of Kâsikâ, 48.

वायुपुराणम्–One of the 18 Purânas, (see Notes), 203.

वाह( ग्भ )ट:–A well-known medical writer, 146, 200, 198, &c.

विक्रमोर्वशीयम्–A drama by Kâlidâsa, 11, 230.

विदग्धमुखमण्डनम्–A work by Dharmadâsa, 21.

विद्धसालभञ्जिका–A drama by Râjasekhara, 18, 38, 227.

विष्णुपुराणम्–One of the 18 Purânas, (see Notes), 4, 28, 191, 192.

वृद्धचाणक्य:–A work on Nîti, 192.

वेणीसंहारम्–A drama by Bhatta Nârâyana, 202, 207.

वैद्यकम्–A medical work probably of Vâgbhata, 200.

वैद्या:–Medical writers, 42, 59, 71, 72, 74, 75, 102, 146, 147, &c.

वैशेषिकम्–A system of philosophy founded by Kanâda, 25, 210.

व्यास:–An ancient sage to whom Mahâbhârata and many other works are ascribed, 207.

शातातप:–Author of a Smriti, (see Notes), 117.

शारीरभाष्यम्–A well-known work by S'ankarâchârya, (see Notes), 7.

शाश्वत:–An old lexicon, ( see Introduction ), 5, 8, 13, 18, 20, 21, 23, 27, 32, 35, 37, 39, 40, 41, 45, 46, 47, 49, 51, 52, 54, 56, 58,

62, 64, 70, 72, 73, 85, 86, 89, 93, 101, 102, 103, 105, 111, 118, 121, 123, 126, 136, 137, 149, 151, &c.

शिशुपालवधम्–A poem by Mâgha, 12, 15, 29, 137, 188, 222, 225, 226· 227, 228, etc.

श्रीहर्षः– A lexicographer ( probably author of द्विरूपकोश ), 101.

संहिताः–Some unspecified literary works, (see Notes), 5, 7, etc.

सांख्यम्–One of the six systems of philosophy (by Kapila), 24, 25, etc

सांख्यकारिका–A work by *Is*varakr*ish*n*a*, 199, 217.

सुभाषितानि–Sanskrit anthologies, (see Notes), 31, 201,

सुश्रुतः–A well-known medical writer, 80, 83.

सूदशास्त्रम्–A work on cookery, 146.

सौन्दरानन्दम्–A poem by A*s*vaghosha, (see Notes), 39.

सौरतन्त्रम्–A treatise (about the solar deity), 19.

सौश्रुताः–Followers of the Sus*r*uta school, 64.

स्मार्तम्–The Sm*r*iti-literature, 92, 153, 159, 230.

स्मार्ताः–A sect of ritualists so called, 51, 158.

हरमेखलम्–An old medical work, (see Notes), 71.

हर्षचरितम्–A biographical work by Bâ*n*abha*tt*a, 28.

हारीतः–A Sm*r*iti-writer, (see Notes), 139.

Note—References to श्रुति, स्मृति, पुराण, निरुक्त, आगम, ect., are not included in this list.

---

## List of Unverified Quotations, &c.

Page

11 गन्धर्वौ च हाहा हूहूः

18 जमदग्निर्वै पञ्चममवदानमवाद्यत्

20 ब्रह्मणो ह्येषा पितृप्रसवित्री तनुः

22 अहोरात्राविमौ पुण्यौ

23 जीव्यात्सहस्रं समाः

25 सत्संवित्करणातीता

30 न तां वदेद्रुषतीं (गां) पापलोक्याम्

35 व्रीडावनम्रवक्त्रेन्दुः
व्रीडादमुं देवमुदीक्ष्य
य ईर्ष्युः परवित्तेषु

39 काममपायि मयेन्द्रियकुण्डैर्यद्यपि दुष्कृतहालहलीयः

Page

सेयं दुःखा च दुरुपपादा च
दुःखः सुतो निर्गुणः
सर्वं दुःखं विवेकिनः

40 सुगममेव हि मध्यमपांपतेः

47 न हि कोटरसंस्थेग्नौ तरुर्भवतिशाद्वलः
राजन्वान्-लोक उच्यते

67,161 अ मा नो नाः प्रतिषेधे

82 दर्भाणां स्थाने शरैः प्रस्तरितव्यम्
धान्तो धान्तः काञ्चनस्येव राशिः

88 झिल्लिकार्ति(र्झा)कृतनिाम्

91 अजयद् द्विषतः प्राप्तनयः परमेहलया।
स्वप्नेपि मनसि स्पृष्टो न यः परमेहलया॥

96 या जनित्री त्रिलोक्याः

Page

98 अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः ॥

103 पद्भ्यामेव यथातथेति

119 अभिवाद्योपसंग्राह्यः

162 निष्प्रवाणिर्नवः पटः

167 येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम्

175 सूर्यः समेषां समः

178 कुलस्यान्तः प्रभु स्त्रियः

180 प्रिय[या]दर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः ।
निर्वाणमाप्यते येन सरागेणापि चेतसा ॥

186 संवाहनं स्पर्शसुखम्

188 अकरणिरिह भूयादप्रशस्तस्य धातुः

189 पुलाका इव धान्येषु
पुलाककारी विपुलाशयः स्यात्

190 तपो न कल्कोध्ययनं न कल्कः

192 विचरेद्युगमात्रदृक्

193 वर्जयेत्कटधूमं तु

195 प्रकीर्णभाण्डामनवेक्ष्यकारिणीम्
क्षणे रक्ष्याः कुलस्त्रियः
क्षणपरपुराजिद्दत्तशूलप्रहारान्

199 वृत्तदेहः स्नायुसारः

201 यदध्यासितमर्हद्भिस्तद्धि तीर्थम्
तीर्थे तद्व्यकव्ययोः
एकमेवेदं संविद्रूपम्
प्रवृत्तौ च निवृत्तौ च संविदं स्थापयेद्गणे
धर्मस्योपनिषत्परा

202 जीवेच्च शरदां शतम्
पदमापदि माधवः
सूर्यांशवः शशिनि लब्धपदा यथैव
नवनखपदलेखालाञ्छितं बाहुमूलम्
बाहुप्रमाणं परिधिरच्छिन्नाप्रोतिपत्रलः
आधिं प्राप्तो यो न मुह्येत्स धीरः
अनुबन्धमवस्थां च ज्ञात्वा दण्डं निपातयेत्

203 सिन्धोः परमपुरुषम्

205 पर्ववर्जं व्रजेच्चैनाम्

206 व्याप्तं व्योमनि वर्ष्मणा

Page

207 क्षरत्येनः कृतं पूर्वम्
गर्भस्थेन समः सदा
रम्भागर्भमृदुः
भर्तृगर्भद्रुहां चैव
दुन्दुभ्या किल तत्कृतं पतितया यद्
द्रौपदी हारिता

208 जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः

209 दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥
न शत्रोः प्रत्ययं गच्छेत्
समयाञ्श्रावयेच्छिष्यम्

210 गुणिनां नात्ययं कुर्यात्
वाक्पारुष्येत्ययः शतम्
सर्वस्यैव हि दानस्य ग्रहीता गुरुरुच्यते ।
कन्यायाश्चैव विद्यायाः प्रदाता पूज्यते गुरुः ॥
प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते जनः

211 वृषाकपायीमभ्येति सत्वपः किं न गोत्रभिद्
सर्वाः क्रिया मन्त्रमूला नृपाणाम्
महापातकिनां पुंसां भवेत्प्राणान्तिका क्रिया
गुरुदेवक्रियारतः
क्रियां विना को हि जानाति कृत्यम्
अतो न रोदितव्यं हि क्रियाः कार्याः प्रयत्नतः
विच्छायः पुरुषो भवेत्
संक्रान्तच्छाय आदर्शः
सप्त कक्ष्या अतिक्रम्य
परिधानाद्बहिः कक्ष्या निबद्धा ह्यासुरीभवेत्
तानि कृत्याहतानीव

212 वारं वारमुदारसंगरमुखे
संगरो विक्रियाकरः
अन्योन्यं वृत्तसंगरौ
संगरे शरणं सुहृत्

213 आडम्बराणि पूज्यन्ते स्त्रीषु राजकुलेषु च
जये धरित्र्याः पुरमेव सारम्
वरं कूपशताद्वापी

214 मात्राशी सर्वकालं स्यात्

215 चतुःपीठमिदं तन्त्रम्
साधारणं भवेत्तन्त्रम्

Page

दुष्करं पुष्करं गन्तुम्
पर्वतान्तरिताः स्त्रियः
अन्तरज्ञो भव सदा धनस्य च जनस्य च
अयमभ्य( त्य )न्तरो मम
दृष्ट्वान्तरं ज्योतिरुपारराम
216 प्रश्नश्चोद्यधिया पृच्छा तस्य भजनमुत्तरम्
217 सितपटच्छन्नपालीं कपालीम्
शीलधनः साधुः
218 षड्युग्मकरतलस्तालो वितस्तिः शङ्कुराननम्
न केवलं भुवो भर्ता
धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते
भावालसा विलासिन्यः
स्वं भावं भावयेद्योगी
भावाश्चित्तजया भवन्ति भवता भाव्यन्त एते यथा
219 उल्मुकानीव भान्ति स्वाः
हृदि स्वमवलोकयन्
प्रभूताः स्वा न दीयन्ते
वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन व्यवस्थितः ॥
उत्क्रान्तसत्त्वो मृगः
220 त्यक्तापदेशो यतिः
अग्रतो बाहुपाशेन केशपाशेन पृष्ठतः ।
पार्श्वयोः कर्णपाशेन सर्वतो बन्धनं प्रिया [ये ] ॥
त्व[ म ]द्धन्ताङ्कितपालिकक्षरुधिरक्लिन्नाग्रपुङ्खं शरम्
221 चतस्रः कर्षूः पितृभ्यः कुर्यात्
222 रसस्यातिरसः सर्पिः
रोदोरन्ध्रमजिह्वदत् [ न् ]
उपष्टम्भकं बलं च रजः
युक्तश्छन्दांस्यधीयीत
224 सर्वान्गुणानेष गुणोऽतिभाति
सक्रुयुवानो गीर्वाणाः
आराच्छत्रोः सदा वसेत्
संप्रीतान्स्थापयेदारात्

Page

अहो बत महत्कष्टम्
बत वितरत तोयं तोयवाहा हिमान्तं [ नितान्तं ]
225 वृद्धिरित्येव या वृद्धिः
नाना नारीर्निष्फला लोकयात्रा
ननु चण्डि प्रसीद मे
आशीविषो वा संक्रुद्धः सूर्यो वाभ्राद्विनिर्गतः ।
भीमोऽन्तको वा समरे गदापाणिरदृश्यत ॥
226 सामिसंमीलिताक्षी
नूनं हन्तास्मि रावणम्
जोषमास्ते जितेन्द्रियः
को नामायं सवितुरुदयः
दष्टेऽधरे रोदिति नाम तन्वी
स्वर्गतस्य ह्यपुत्रस्य
गोत्रस्खलितं किलाश्रुतं कृत्वा
227 आपतन्तमभितोऽरिमपश्यत्
भिक्षित्वापि बुभुक्षिता यदहहा
अहह प्रज्ञाप्रकर्षो राज्ञः
चिराय निर्धनो भूत्वा भवत्यह्ना (ह्ना) महाधनः
कान्तं [ न्तां ] मुहुर्ध्यायति
पुनः पुनर्वारि पिबेदभूरि
शश्वद्भक्ति कुशिक्षितः
अभीक्ष्णमास्फालयतीभकुम्भम्
स्राक्सरत्यभिसारिका
सपदि प्रदहत्युपेक्षितोऽग्निः
द्राग्विद्रुतं कातरैः
तरसोदिता सह जलेषु
किमुत ब्रह्मविन्निभिः
सुसिक्तं आम्रः फलति
विना वातं विना वर्षम्
त्वामन्तरा तामरसायताक्षि
228 वितर गिरमुदारां येन मूकाः पिकाः स्युः
पद्भ्यां याति कुतश्चन
कदाचिच्छूरतां याति मरणे कृतनिश्चयः
सत्रा कलत्रैर्गार्हस्थ्यम्
सङ्गो द्विजिह्वैः सजूः

Page

प्राध्वं कुरुध्वं बुधाः
मुग्धे मुधा ताम्यसि
उताहोस्विद्भवेद्राजा नलः परपुरंजयः
एकमेव वरं पुंसामुत राज्यमुताश्रमः
आख्यामि तु तत्त्वं ते
न हि न हि महिमानं प्राप्य तुष्यन्ति भूपाः
भीमः पार्थस्तथैव च
इति ह स्माहुराचार्याः
नासीरधूलिधवलाः पुरतः प्रयान्ति
अग्रतो धावति श्रीः
किंचित्कुञ्चितमूर्धजाः
अन्यो धनं प्रेत्य गतस्य भुङ्क्ते
अमुत्र भविता यत्ते तच्चिन्तय शुभाशुभम्
शारदाभ्रमिव पेलवमायुः
सद्यः पतति मांसेन

229 प्रसह्य वित्तानि हरन्ति चौराः
यतो भवन्तमन्तरेणान्यथा भूपतिर्ग्राहितः
न हि प्रेम प्रयोजनापेक्षम्
नैकः सुप्तेषु जागृयात्

Page

अञ्जसा वक्ति साधुः
परितः प्रपतन्ति दुष्कृतां [ तो ] विपदः
सर्वतः संपदः सताम्
कच्चिज्जीवति मे माता
यथातथं वक्ति सभासु विद्वान्
आत्मा सर्वं तु पश्यति
गुरुर्वा वक्ति भीष्मो वा
उच्चैरुच्चरितुं चिरम्
सन्तः प्रायो विवेक्तारः
शनैर्याति पिपीलिका

230 उं सैवास्मि तव प्रिया
नरो लोकेष दुर्लभः ( बैलः )
द्युश्चन्द्रो द्योतते कथम्
तं हन्तास्मि परेद्यवि

235 कियती पञ्चसहस्री कियती लक्षाथ कोटिरपि कियती । औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥

237 सुदिनासु सभासु कार्यमेतत्

*Vide* Notes for the verification of some unverified passages in the Commentary.

# NOTES.

PAGE.

1. भग्ना अभिधानकृतो &c.—Compare भग्नाः पारायणिकाश्चण्डाद्या अपि च यत्र विश्रान्ताः। तान्धातून् विवरीतुं गहनमहोध्यवसिताः स्मः ॥ in the Kshîrataranginî.

,, जाता विश्वसृजः क्रमेण &c.—This verse ends the introduction to the Kshîrataranginî also. The six works or commentaries ( षड्वृत्तयः ) of Kshîrasvâmin are : (1) नामपारायण or अमरकोषोद्घाटन; (2) क्षीरतरङ्गिणी or धातुवृत्ति; (3) निपाताव्ययोपसर्गवृत्ति; (4) अमृततरङ्गिणी referred to in the Kshîrataranginî ; (5) निघण्टुवृत्ति mentioned by Devarâja in his Niruktanirvachana ; and (6) गणवृत्ति referred to by Vardhamâna in his Ganaratnamahodadhi and containing probably the *Japâdigana* not found elsewhere.

2. समाहृत्यान्यतन्त्राणि &c.—The works alluded to here ought to be the large *Koshas* of Kâtya, Muni, Bhâguri, Dhanvantari, etc. who were anterior to Amarasimha. (See Introduction).

4. देववददष्टसंहतेभ्यः &c.—See comment. on दिव्योपपादुक p. 173.

,, सर्वे गत्यर्था ज्ञानार्थाः—This remark repeated on page 182 is well-known amongst Grammarians.

,, ऐश्वर्यस्य समग्रस्य &c.—This verse from Vishnupurâna is repeated on page 192.

5. तापी च—This ought to be तायी च. Buddha is styled तायिन् (not तापिन् ). The letters प and य, which are similar in form, are often mistaken one for the other. Hence the above error met with in Dictionaries also.

6. बलस्त्वनुनिष्पादिन्यायेन— बल is *short* for बलभद्र after the manner of an echo by dropping भद्र, as भीम for भीमसेन.

7. संहितासु त्वेकं ब्रह्म &c.—The *Samhitâ* referred to here is the पञ्चरात्रसंहिता of Nârada. This passage is a quotation from S'ankarâchârya's शारीरभाष्य.

14. विश्रवसा विग्रहो &c.—The *Nyâya* or principle of the words अवि & अविक occurs in Patanjali's Mahâbhâshya on IV. 1. 88 (Vârt. 2 ) as follows :—तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहोपरस्मादुत्पत्तिर्भविष्यत्यविरविकन्यायेन। तद्यथा– अवेर्मांसमिति विगृह्य– अविकशब्दादुत्पत्तिर्भवति– आविकमिति। The inaccurate compound ( अविरविक ) is attacked by Kumâ-

अभ्यन्तरं त्वन्तरालं चक्रवालं तु मण्डलम् ॥
अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ॥ ६ ॥
धाराधरो जलधरस्तडित्वान्वारिदोऽम्बुभृत् ॥
घनजीमूतमुदिरजलमुग्धूमयोनयः ॥ ७ ॥
कादम्बिनी मेघमाला त्रिषु मेघभवेऽभ्रियम् ॥
स्तनितं गर्जितं मेघनिर्घोषे रसितादि च ॥ ८ ॥
शम्पाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा ॥
तडित्सौदामनी विद्युच्चञ्चला चपला अपि ॥ ९ ॥
स्फूर्जथुर्वज्रनिर्घोषो मेघज्योतिरिरंमदः ॥
इन्द्रायुधं शक्रधनुस्तदेव ऋजुरोहितम् ॥ १० ॥
वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ ॥
धारासंपात आसारः शीकरोऽम्बुकणाः स्मृताः ॥ ११ ॥

स्त्रियांम्। यान्यासामन्तरालानि प्रदिशो विदिशश्च ताः" इत्यमरमालायाम् ॥५॥ अभ्यन्तरं अन्तरालं द्वे अन्तरवकाशस्य। चक्रवालं मण्डलं द्वे मण्डलस्य। अभ्रं मेघः वारिवाहः स्तनयित्नुः बलाहकः ॥ ६ ॥ धाराधरः जलधरः तडित्वान् वारिदः अम्बुभृत् घनः जीमूतः मुदिरः। "मुदिरः कामुकाभ्रयोः" इति विश्वमेदिन्यौ। जल-मुक् धूमयोनिः इति पञ्चदश मेघस्य ॥ ७ ॥ कादम्बिनी मेघमाला द्वे मेघवृन्दस्य। अभ्रियमित्येकं मेघभवे तत्त्रिषु। यथा अभ्रिया आपः। अभ्रिय आसारः। अभ्रियं जलम्। स्तनितं गर्जितं रसितं आदिशब्दात् ध्वनितादि त्रयं मेघनिर्घोषे ॥ ८ ॥ शम्पा शतह्रदा ह्रादिनी ऐरावती क्षणप्रभा तडित् सौदामनी। सुदाम्नाऽद्रिणा एकदिक्। अथवा सुदाम्नि मेघे वा भवा। अण् प्रत्ययः। "सुदामा तु पुमान्वा-रिधरपर्वतभेदयोः" इत्युक्तत्वात्। "सौदामिनी" विद्युत् चञ्चला चपला दशकं विद्युल्लतायाः। चपलापि चेति पाठः ॥ ९ ॥ स्फूर्जथुः वज्रनिर्घोषः "वज्रनि-ष्पेषः" द्वयमशनिनिर्घोषस्य। मेघज्योतिः इरंमदः द्वे मेघज्योतिषः "वीज इति प्रसिद्धस्य"। इन्द्रायुधं शक्रधनुः ऋजुरोहितम्। ऋजु च तत् रोहितं च इति त्रीणि मेघप्रतिफलिता रविरश्मयो धनुराकारेण भान्ति तस्य धनुषः ॥ १० ॥ वृष्टिः वर्षं द्वयं मेघवर्षणस्य। अवग्राहः अवग्रहः। "अवे ग्रहो०" इति वा घञ्। पक्षे अप्। द्वयं

वर्षोपलस्तु करका मेघच्छन्नेऽह्नि दुर्दिनम् ॥
अन्तर्धा व्यवधा पुंसि त्वन्तर्द्धिरपवारणम् ॥ १२ ॥
अपिधानतिरोधानपिधानाच्छादनानि च ॥
हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ॥ १३ ॥
विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः ॥
अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः ॥ १४ ॥
द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ॥
कला तु षोडशो भागो बिम्बोऽस्त्री मण्डलं त्रिषु ॥ १५ ॥
भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके ॥
चन्द्रिका कौमुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता ॥ १६ ॥
कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् ॥
सुषमा परमा शोभा शोभा कान्तिर्द्युतिश्छविः ॥ १७ ॥

तद्विघाते वर्षनिरोधे । धारासंपातः आसारः द्वयं मेघधाराणां निरन्तरपतनस्य । शीकर इत्येकं अम्बुकणानाम् । दन्त्यादिरप्ययम् ॥ ११ ॥ वर्षोपलः करका द्वे यत्प्रथमवृष्टौ मेघोदकं कठिनं सदुपलवत्पतति तस्य । दुर्दिनमित्येकं मेघच्छन्ने दिने । रात्रेरप्युपलक्षणम् । अन्तर्धा व्यवधा अन्तर्द्धिः अपवारणम् ॥ १२ ॥ अपिधानं तिरोधानं पिधानं आच्छादनं अष्टकमाच्छादनस्य । तत्र अन्तर्धाव्यवधे स्त्रियाम् । अन्तर्द्धिः पुंसि । हिमांशुः चन्द्रमाः चन्द्रः इन्दुः कुमुदबान्धवः ॥ १३ ॥ विधुः सुधांशुः शुभ्रांशुः ओषधीशः निशापतिः अब्जः जैवातृकः । जीवयतीति अन्तर्भावितण्यर्थः । आतृकन् प्रत्ययः । सोमः "सोमा" ग्लौः मृगाङ्कः कलानिधिः ॥ १४ ॥ द्विजराजः शशधरः नक्षत्रेशः क्षपाकरः इति विंशति नामानि चन्द्रस्य । चन्द्रमण्डलस्य षोडशो भागः कलासंज्ञः । एकम् । बिम्बः मण्डलं द्वे बिम्बस्य ॥ १५ ॥ भित्तादिचतुष्कं शकलस्य । तत्र भित्तं नपुंसकम् । शकलखण्डे क्लीबपुंसोः । अर्धः पुंस्येव । यथा कम्बलस्यार्धः खण्ड इत्यर्थः । वाच्यलिङ्गोऽपि । यथा अर्धा शाटी अर्धः पटः अर्धं वस्त्रम् । अर्धमित्येकं समे विभागे तन्नपुंसकमेव । चन्द्रिका कौमुदी जोत्स्ना त्रयं चन्द्रप्रभायाम् । प्रसादः प्रसन्नता द्वयं नैर्मल्यस्य ॥ १६ ॥ कलङ्कः अङ्कः लाञ्छनं चिह्नं लक्ष्म लक्षणं षट्कं चिह्नस्य । सुषमेत्येकं परमायाः शोभायाः । शोभा कान्तिः

अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ॥
प्रालेयं मिहिका चाथ हिमानी हिमसंहतिः ॥ १८ ॥
शीतं गुणे तद्वदर्थाः सुषीमः शिशिरो जडः ॥
तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः ॥ १९ ॥
ध्रुव औत्तानपादिः स्यादगस्त्यः कुम्भसंभवः ॥
मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी ॥ २० ॥
नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम् ॥
दाक्षायण्योऽश्विनीत्यादितारा अश्वयुगश्विनी ॥ २१ ॥
राधा विशाखा पुष्ये तु सिध्यतिष्यौ श्रविष्ठया ॥
समा धनिष्ठा स्युः प्रोष्ठपदा भाद्रपदाः स्त्रियः ॥ २२ ॥

द्युतिः छविः चत्वारि शोभामात्रस्य । शोभा कान्तिरित्यत्राभिख्या कान्तिरित्यपि पाठः ॥ १७ ॥ अवश्यायः नीहारः तुषारः तुहिनं हिमं प्रालेयं मिहिका (महिका) सप्तकं हिमस्य । हिमानी हिमसंहतिः द्वे महतो हिमस्य । एवमुक्तलिङ्गा अवश्यायादयः ॥ १८ ॥ नपुंसकलिङ्गः शीतशब्दश्च गुणे स्पर्शविशेषे एव नतु गुणिनि । सुषीमः (सुषिमः सुशीमः) शिशिरः जडः तुषारः शीतलः शीतः हिमः एते सप्त तद्वदर्थाः तद्वान् शीतगुणवानर्थो येषां ते तथा ते चान्यलिङ्गकाः विशेष्यनिघ्नाः । तुषारहिमशीतशब्दा निरूढलक्षणया गुणिन्यपि वर्तन्त इत्युभयत्र पठिताः ॥ १९ ॥ ध्रुवः । औत्तानपादिः द्वे उत्तानपादपुत्रस्य । अगस्त्यः कुम्भसंभवः मैत्रावरुणिः । "मैत्रावरुणः" । "और्वशेयागस्त्यमैत्रावरुणास्त्वाग्निमारुताः" इति नामनिधानात् । त्रयमगस्त्यस्य । अगस्तिरित्यपि । "अथागस्त्यः कुम्भयोनिरगस्तिः कलशीसुतः" इति शब्दार्णवः । अस्यागस्त्यस्य सधर्मिणी पत्नी लोपामुद्रा एकम् ॥ २० ॥ नक्षत्रं ऋक्षं भं तारा तारका उडु इति षट्कं नक्षत्रमात्रस्य । उडु स्त्रीनपुंसकयोः । अपिशब्दात्तारकापि तथा । "नक्षत्रे चाक्षिमध्ये च तारकं तारकापि च" इति शाश्वतः । अश्विनीत्यादितारा अश्विन्यादिसप्तविंशतिर्नक्षत्राणि दाक्षायणीसंज्ञकानि । एकम् । अश्वयुक् अश्विनी द्वे अश्विन्याः ॥ २१ ॥ राधा विशाखा द्वे विशाखायाः । पुष्यः सिध्यः तिष्यः त्रयं पुष्ये । श्रविष्ठा धनिष्ठा द्वे धनिष्ठायाः । श्रविष्ठया समा श्रविष्ठा तुल्येत्यर्थः । प्रोष्ठपदाः भाद्रपदाः द्वयं पूर्वाभाद्रपदोत्तराभाद्रपदासु । पूर्वे

मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी ॥
इल्वलास्तच्छिरोदेशे तारका निवसन्ति याः ॥ २३ ॥
बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः ॥
जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः ॥ २४ ॥
शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः ॥
अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः ॥ २५ ॥
रौहिणेयो बुधः सौम्यः समौ सौरिशनैश्चरौ ॥
तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुंतुदः ॥ २६ ॥
सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः ॥
राशीनामुदयो लग्नं ते तु मेषवृषादयः ॥ २७ ॥

प्रोष्ठपदे द्वे उत्तरे च द्वे एवं चतुःसंख्याकत्वाद्बहुवचनम् । स्त्रियः स्त्रीलिङ्गाः स्युः ॥ २२ ॥ मृगशीर्षं "शीर्षे" इत्यपि पाठः । मृगशिरः आग्रहायणी त्रयं मृगशीर्षस्य । तस्य मृगशीर्षस्य शिरोदेशे याः पञ्च तारा निवसन्ति ता इल्वलाः ( इन्वकाः ) एकम् ॥ २३ ॥ बृहस्पतिः सुराचार्यः गीष्पतिः धिषणः गुरुः जीवः आङ्गिरसः वाचस्पतिः चित्रशिखण्डिजः नवकं बृहस्पतेः । चित्रशिखण्डी अङ्गिराः तज्जः ॥ २४ ॥ शुक्रः दैत्यगुरुः काव्यः उशना भार्गवः कविः षट्कं शुक्रस्य । उशनेति सान्तम् "ऋदुशन" इत्यनङ् । अङ्गारकः कुजः भौमः लोहिताङ्गः महीसुतः पञ्चकं मङ्गलस्य ॥ २५ ॥ रौहिणेयः बुधः सौम्यः त्रयं बुधस्य । सौरिः "शौरिरपि" "सौरः" शनैश्चरः द्वे शनेः । तमः राहुः स्वर्भानुः सैंहिकेयः विधुंतुदः पञ्च राहोः । तमः सान्तं क्लीबे पुंसि च क्वचित् । अदन्तः । "स्वर्भानुस्तु तमो राहुः" इति पुंस्काण्डे रत्नकोशामरमालयोर्दर्शनात् ॥ २६ ॥ मरीच्यत्रिमुखाः सप्तर्षयश्चित्रशिखण्डिसंज्ञाः एकम् । मुखशब्दात्पुलहपुलस्त्यादयः सप्तर्षयः । ते यथा । "मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः" ॥ राशीनामुदयो लग्नमित्युच्यते । एकम् । मेषवृषादयो राशयः स्युः एकम् । आदिना मिथुनकर्कटकादयः । "मेषो वृषोऽथ मिथुनं कर्कटः सिंहकन्यके । तुला च वृश्चिको धन्वी मकरः कुम्भमीनकौ" ॥ २७ ॥ सूरः ( शूरः ) सूर्यः अर्यमा आदित्यः द्वादशात्मा दिवाकरः

सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः ॥
भास्कराहस्करब्रध्नप्रभाकरविभाकराः ॥ २८ ॥
भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः ॥
विकर्तनार्कमार्तण्डमिहिरारुणपूषणः ॥ २९ ॥
द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ॥
विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ॥ ३० ॥
भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ॥
("पद्माक्षस्तेजसां राशिश्छायानाथस्तमिस्रहा ॥
कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः ॥ १ ॥
प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः ॥
इनो भगो धामनिधिश्चांशुमाल्यब्जिनीपतिः" ॥ २ ॥) (१)
माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्वकाः ॥ ३१ ॥
सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः ॥
परिवेषस्तु परिधिरुपसूर्यकमण्डले ॥ ३२ ॥

भास्करः अहस्करः ब्रध्नः प्रभाकरः विभाकरः ॥ २८ ॥ भास्वान् विवस्वान् सप्ताश्वः हरिदश्वः उष्णरश्मिः विकर्तनः अर्कः मार्तण्डः ( मार्ताण्डः ) मिहिरः ( मिहिरः ) अरुणः पूषा ॥ २९ ॥ द्युमणिः तरणिः मित्रः चित्रभानुः विरोचनः विभावसुः ग्रहपतिः त्विषांपतिः अहर्पतिः ॥ ३० ॥ भानुः हंसः सहस्रांशुः तपनः ( तापनः ) सविता रविः इति सप्तत्रिंशत्सूर्यस्य । "चण्डांशुरपि । चण्डांशोः पारिपार्श्वकाः" इति वक्ष्यमाणत्वात् । माठरः पिङ्गलः दण्डः इति चण्डांशोः पारिपार्श्वकाः परितः पार्श्वे विद्यमानाः । यत उक्तं सौरतन्त्रे । "शक्रोऽस्य वामपार्श्वे तु दण्डाख्यो दण्डनायकः । वह्निस्तु दक्षिणे पार्श्वे पिङ्गलो वामभागतः ॥ यमोऽपि दक्षिणे पार्श्वे भवेन्माठरसंज्ञया" इति । एकैकम् ॥ ३१ ॥ सूरसूतः अरुणः अनूरुः काश्यपिः गरुडाग्रजः पञ्चकं अरुणस्य । परिवेषः तालव्यान्तोऽपि । "वेष्टने परिवेशः स्याद्भानोः सविधमण्डल" इति रभसे । परिधिः उपसूर्यकं मण्डलं चत्वारि परिवेषस्य सूर्यमभितः कदाचिद्दृश्यमानस्य कुण्डला-

१ इदं पद्यद्वयं तालपत्रपुस्तकेऽपि नास्ति ॥

किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः ॥
भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ॥ ३३ ॥
स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ॥
रोचिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः ॥ ३४ ॥
कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति ॥
तिग्मं तीक्ष्णं खरं तद्वन्मृगतृष्णा मरीचिका ॥ ३५ ॥

॥ इति दिग्वर्गः ॥ ३ ॥

कालो दिष्टो ऽप्यनेहाऽपि समयोऽप्यथ पक्षतिः ॥
प्रतिपद्वे इमे स्त्रीत्वे तदाद्यास्तिथयो द्वयोः ॥ १ ॥

कारतेजोविशेषस्य । परिवेषसाहचर्यात्परिधिः पुंसि ज्ञेयः । "मण्डलं परिवेषश्च परिधिश्चोपसूर्यकम्" इति भागुरिः ॥ ३२ ॥ किरणः उस्रः मयूखः अंशुः गभस्तिः घृणिः । जिघर्ति इति घृणिः । "घृ क्षरणदीप्त्योः" "घृ सेचने" वा । रश्मिः [घृष्णिः वृष्णिः पृश्निः] भानुः करः मरीचिः दीधितिः एकादश किरणस्य । मरीचिः स्त्रीपुंसयोः । "द्वयोर्मरीचिः किरणो भानुरुस्रः करः पदम्" इति शब्दार्णवः । "मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम्" इति मेदिनी च । दीधितिः स्त्रियाम् । स्त्रियामित्यस्य काकाक्षिगोलकन्यायेनोत्तरश्लोकेऽप्यन्वयः ॥ ३३ ॥ प्रभा रुक् रुचिः त्विट् भा भाः छविः द्युतिः दीप्तिः रोचिः शोचिः इत्येकादश प्रभामात्रस्य । तत्र दीप्त्यन्तानि स्त्रियां स्युः । रोचिः शोचिः सान्ते क्लीबे । द्विवचनं तु रोचिषी शोचिषी । भाः सान्तः । प्रकाशः द्योतः आतपः इति त्रयं सूर्यप्रभायाः । प्रभामात्रस्येत्येके ॥३४॥ कोष्णं कवोष्णं मन्दोष्णं कदुष्णं चतुष्टयमीषदुष्णे । इदं धर्ममात्रे रूपभेदात्क्लीबे । तद्वति धर्मिणि त्रिषु वाच्यलिङ्गमित्यर्थः । तिग्मं तीक्ष्णं खरं त्रयमत्युष्णस्य । तद्वत्कोष्णवत् । धर्मे क्लीबं । धर्मिणि त्रिषु । मृगतृष्णा मरीचिका द्वयं मृगजलस्य । मरुदेशादौ सिकतासु प्रतिच्छुरिताः सूर्यकिरणाः जलाकारेण भान्ति तस्य जलाभासस्येत्यर्थः ॥३५॥ इति दिग्वर्गः ॥३॥ कालः । "कालो मृत्यौ महाकाले समये यमकृष्णयोः" इति कोशान्तरे । अन्यार्थेऽपि कालशब्दः । दिष्टः अनेहा समयः चत्वारि कालस्य । अनेहा सान्तः । "ऋदुशन" इत्यनङ् । पक्षतिः पक्षस्य मूलम् । "पक्षतिस्तु भवेत्पक्षमूले च प्रतिपत्तिथौ" इति । प्रतिपत् इमे द्वे प्रथमतिथेः । तदाद्याः प्रतिपदाद्यास्तिथय इत्युच्यन्ते एकम् ।

घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ ॥
प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि ॥ २ ॥
("व्युष्टं विभातं द्वे क्लीबे पुंसि गोसर्ग इष्यते" ॥) (१)
प्रभातं च दिनान्ते तु सायं सन्ध्या पितृप्रसूः ॥
प्राह्णापराह्णमध्याह्नास्त्रिसन्ध्यमथ शर्वरी ॥ ३ ॥
निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ॥
विभावरीतमस्विन्यौ रजनी यामिनी तमी ॥ ४ ॥
तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयान्विता ॥
आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी ॥ ५ ॥

तिथिशब्दः द्वयोः स्त्रीपुंसयोः । तथा च प्रयोगः । "सकलो निशि पूर्णिमातिथीनुपतस्थेऽतिथिरेकिका तिथिः" इति ॥ १ ॥ घस्रः दिनं अहः दिवसः वासरः पञ्चकं दिवसस्य । तत्र दिवसवासरौ क्लीबपुंसोः । प्रत्यूषः अहर्मुखं कल्यं (काल्यं) उषः (ऊषः उषा) "उषा प्रभातं गोसर्गः" इति त्रिकाण्डशेषः । प्रत्युषः (प्रत्यूषः) "उषः प्रत्युषसि क्लीबं पितृप्रस्वां च योषिति" प्रभातं षट्कं प्रभातस्य । तत्राद्यः प्रत्यूषोऽदन्तः पुंसि क्लीबे च । "प्रत्यूषोऽहर्मुखे वसौ" इति मेदिनी । कल्यं तालव्यान्तम् ॥२॥ दिनान्तः सायं "सायः" सन्ध्या "सन्धा"। "सन्ध्या पितृप्रसूः सन्धा" इति शब्दार्णवः। सम्यक् ध्यायन्त्यस्यामिति सन्ध्या । पितृप्रसूः चत्वारि दिनान्ते। तत्र सायमित्यव्ययं नपुंसकलिङ्गं वा । "सायः काण्डे दिनान्ते च" इति मेदिन्यादिषु साय इत्युक्तत्वात्सायमिति मान्ताव्ययस्याव्ययवर्गे वक्ष्यमाणत्वादत्र सायोऽदन्तः पुंस्येव । प्राह्णादयः समाहृताः त्रिसन्ध्यं ज्ञेयम् । "आवन्तो वेति पाक्षिकी क्लीबता। पक्षे त्रिसन्ध्यी" एकम् । तत्र प्राह्णः पूर्वाह्णः । शर्वरी (शार्वरी) ॥ ३ ॥ निशा निशीथिनी रात्रिः (रात्री) "रात्री रात्रिस्तमस्विनी" इति शब्दर्णवः। त्रियामा क्षणदा क्षणमुत्सवं निर्व्यापारस्थितिं वा ददाति। क्षपा विभावरी तमस्विनी रजनी (रजनिरपि) यामिनी तमी "तमा तमिः" द्वादश निशायाः ॥ ४ ॥ या तामसी तमोयुक्ता रात्रिः सा तमिस्रा एकम् । या चन्द्रिकया चन्द्रप्रकाशेन अन्विता युक्ता रात्रिः सा ज्यौत्स्नी एकम् ।"ज्यौत्स्नी ज्योतिष्मती रात्रिर्ज्यौत्स्ना चन्द्रमसः प्रभा" इति शाश्वतः । पूर्वापरदिनाभ्यां युक्तायां

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

5-9



गणरात्रं निशा बह्व्यः प्रदोषो रजनीमुखम् ॥
अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ ॥ ६ ॥
स पर्वसन्धिः प्रतिपत्पञ्चदश्योर्यदन्तरम् ॥
पक्षान्तौ पञ्चदश्यौ द्वे पौर्णमासी तु पूर्णिमा ॥ ७ ॥
कलाहीने सानुमतिः पूर्णे राका निशाकरे ॥
अमावास्या त्वमावस्या दर्शः सूर्येन्दुसंगमः ॥ ८ ॥
सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः ॥
उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च ॥ ९ ॥

रात्रौ पक्षिणीति नामैकम् । पक्षाविव पक्षौ पूर्वोत्तरदिवसौ यस्याः सा पक्षिणी । "पक्षिणी पक्षतुल्याभ्यामहोभ्यां वेष्टिता निशा" इति स्मरणात् ॥५॥ बह्व्यो निशाः गणरात्रं स्यात् । एकं रात्रिसमुदायस्य । प्रदोषः रजनीमुखं द्वे रात्रेः पूर्वभागस्य । अर्धरात्रः निशीथ इति द्वे रात्रिमध्यसमयस्य । यामः प्रहरः द्वे अहोरात्राष्टमांशस्य ॥६॥ प्रतिपत्पञ्चदश्योर्यदन्तरं स सन्धिः पर्वेत्यन्वयः । यदाह रुद्रः । "दर्शप्रतिपदोः सन्धौ ग्रन्थिप्रस्तावयोरपि । पर्व क्लीबे विजानीयाद्विषुवत्प्रभृतिष्वपि" इति ॥ पर्वसन्धिरिति चतुरक्षरं वा एकम् । द्वे अमापूर्णिमे पक्षान्तौ पञ्चदश्यौ द्वयं पक्षान्ततिथ्योः । द्वित्वाद्विवचनम् । नतु नित्यम् । पौर्णमासी पूर्णिमा । द्वे शुक्लपक्षान्त्यतिथौ ॥ ७ ॥ सा पूर्णिमा कलाहीने चन्द्रे सति अनुमतिरित्युच्यते एकम् । सैव पूर्णिमा पूर्णे निशाकरे सति राका एकम् । या पूर्वा पौर्णमासी सा अनुमतिर्योत्तरा सा राकेति श्रुतिः । अमावास्या अमावस्या । "अमावस्यदन्यतरस्याम्" । पा० । अमा सह वसतः अस्यां चन्द्रार्कौ । अमोपपदाद्वसेरधिकरणे ण्यत् । वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते । "अमावसी अमावासी अमामासी अमामसी । अप्यमावस्यमावासी चामामास्यप्यमामसी" इति शब्दार्णवः । नामैकदेशे नामग्रहणादमापि । दर्शः सूर्येन्दुसंगमः चत्वारि कृष्णपक्षान्त्यतिथेः ॥ ८ ॥ सा अमावास्या दृष्टेन्दुश्चेद्दृष्ट इन्दुर्यस्यां सा सिनीवाली एकम् । सैव नष्टेन्दुकला नष्टा इन्दुकला यस्यां सा कुहूः "कुहुः" एकम् । या पूर्वामावास्या सिनीवाली योत्तरा सा कुहूरिति श्रुतिः । अयमर्थः । चतुर्दश्या अन्तिमप्रहरः अमावास्याया अष्टौ प्रहराश्चेति नवप्रहरात्मकश्चन्द्रक्षयकालः शास्त्रसिद्धः । तत्राद्यप्रहरद्वये चन्द्रस्य सूक्ष्मता । अन्तिमप्रहरद्वये कृत्स्नक्षयः । अतोऽमावास्याया आद्यप्रहरः सिनीवालीसंज्ञः । अन्त्यप्रहरद्वयं कुहूसंज्ञम् । मध्यमप्रहरपञ्चकं

सोपप्लवोपरक्तौ द्वावग्न्युत्पात उपाहितः ॥
एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ॥ १० ॥
अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला ॥
तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् ॥ ११ ॥
ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च ॥
पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ ॥ १२ ॥
द्वौ द्वौ मार्गादिमासौ स्यादृतुस्तैरयनं त्रिभिः ॥
अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ॥ १३ ॥

दर्शसंज्ञमिति । राहुणा चन्द्रे सूर्ये च ग्रस्ते सति तस्य ग्रासस्योपरागः ग्रह इति नामद्वयम् ॥ ९ ॥ सोपप्लवः उपरक्तः इति द्वे राहुग्रस्तस्येन्दोः सूर्यस्य वा । अग्न्युत्पातः उपाहितः इति द्वे वह्निकृतोपसर्गस्य । ग्रहणे सति कदाचिदाग्नेयमण्डलादुत्पन्नो भवति तस्येत्येके । धूमकेत्वाख्यस्योत्पातस्येत्यपरे । एकयोक्त्याऽपृथग्वचनेन पुष्पवन्तावित्युक्तौ सूर्याचन्द्रमसौ ज्ञेयौ एकम् । एकयोक्त्येति वचनात्पुष्पवन्त इति पुष्पवानिति वा सूर्यः चन्द्रो वा न वक्तव्यः । यथा रोदसी इत्येकयोक्त्या द्यावापृथिव्यौ उच्येते। पुष्पवन्तशब्दो मतुबन्तोऽकारान्तश्च । "धरणीधरशिखरस्थितपुष्पवन्ताभ्याम्"इत्यादिप्रयोगदर्शनात् ॥ १० ॥ निमेषोऽक्षिस्पन्दकालः। "अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्तितः" इत्युक्तम्। अष्टादश निमेषा मिलित्वा एका काष्ठा भवति । त्रिंशत्काष्ठाः मिलित्वा एका कला । ताः कलास्त्रिंशन्मिलित्वा एकः क्षणः । ते क्षणाः द्वादश मिलित्वा एको मुहूर्तः क्लीबपुंसोः ॥ ११ ॥ ते त्रिंशन्मुहूर्ता एकोऽहोरात्रः । अह्ना सहिता रात्रिरहोरात्रः । अत्र अहश्च रात्रिश्च तयोः समाहार इति विग्रहः साधुः । अन्यथा अजभावप्रसङ्गात् । अहःपूर्वाद्रात्रिशब्दाद्वन्द्व एवाज्विधानात् । तेऽहोरात्राः पञ्चदशसंख्याका एकः पक्षः । पक्षो द्विविधः शुक्लः कृष्णश्चेति । तत्र मासस्य पूर्वः शुक्लः कृष्णस्त्वपरः । यतः शुक्लादिक्रमेण प्रायशो मासप्रवृत्तिः । तावुभौ पक्षावेको मासः । चान्द्रेण मानेनेदमुक्तम् ॥ १२ ॥ मार्गादी द्वौ द्वौ मासौ ऋतुरेकः स च हेमन्तादिसंज्ञः । माघादीत्यपि पाठः । माघाद्युपक्रमस्तु अयनारम्भवशाज्ज्ञेयः । तैरृतुभिस्त्रिभिरेकमयनम् । तद्द्विधा सूर्यगतिभेदात् । अर्कस्योदग्गतिः उत्तरायणम् अयते गच्छति अर्कः अनेन। अय गतौ ल्युट्, "पूर्वपदात्संज्ञायामग"

13-17.



समरात्रिंदिवे काले विषुवद्विषुवं च तत् ॥
("पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा ॥
नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे ॥ १ ॥") (१)
मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ॥ १४ ॥
पौषे तैषसहस्यौ द्वौ तपा माघेऽथ फाल्गुने ॥
स्यात्तपस्यः फाल्गुनिकः स्याच्चैत्रे चैत्रिको मधुः ॥ १५ ॥
वैशाखे माधवो राधो ज्येष्ठे शुक्रः शुचिस्त्वयम् ॥
आषाढे श्रावणे तु स्यान्नभाः श्रावणिकश्च सः ॥ १६ ॥
स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः ॥
स्यादाश्विन इषोप्याश्वयुजोऽपि स्यात्तु कार्तिके ॥ १७ ॥
बाहुलोर्जौ कार्तिकिको हेमन्तः शिशिरोऽस्त्रियाम् ॥

इति णत्वम्। दक्षिणा गतिस्तु दक्षिणायनम्। एवं द्वे अयने एको वत्सरः ॥ १३ ॥ विषुवत् विषुवं "विषुपं विषुणः विषुवः"। "विषुवान्समरात्रिवासरः" इति पुंस्काण्डे बोपालितः। द्वयं समं रात्रिंदिवं यस्मिंस्तस्मिन्काले तुलासंक्रान्तौ मेषसंक्रान्तौ च दिनरात्री समे भवतः तस्य कालस्येत्यर्थः। रात्रिंदिवशब्दः "अचतुरविचतुर" इत्यादिना साधुः। पुष्यनक्षत्रयुक्ता पौर्णमासी पौषी ज्ञेया सा पौषी यस्मिन्मासे वर्तते स नाम्ना पौषः मघायुक्ता पौर्णमासी यत्र स माघः स आद्यो येषां ते। अपरे पौषादन्ये एकादश मासा एवमुक्तरीत्या ज्ञेयाः। एकैकम्। मार्गशीर्षः सहाः मार्गः आग्रहायणिकः चत्वारि मार्गशीर्षस्य ॥ १४ ॥ पौषः तैषः सहस्यः त्रीणि पौषस्य। तपाः माघः द्वे माघस्य। फाल्गुनः तपस्यः फाल्गुनिकः त्रयम्। चैत्रः चैत्रिकः मधुः त्रयम् ॥ १५ ॥ वैशाखः माधवः राधः त्रीणि। ज्येष्ठः शुक्रः द्वे। शुचिः आषाढः द्वे। श्रावणः नभाः सान्तः। श्रावणिकः त्रीणि ॥ १६ ॥ नभस्यः प्रौष्ठपदः भाद्रः भाद्रपदः चत्वारि। आश्विनः इषः आश्वयुजः त्रीणि। कार्तिकः ॥ १७ ॥ बाहुलः ऊर्जः कार्तिकिकः चत्वारि। ऋतुभेदानाह। हेमन्त इत्येक ऋतुः। शिशिर इत्यपरः। स च पुन्नपुंसकलिङ्गः एकैकम्। वसन्तः पुष्प-

१ इदं पद्यं तालपत्रपुस्तकेऽस्ति ॥

वसन्ते पुष्पसमयः सुरभिर्ग्रीष्म उष्मकः ॥ १८ ॥
निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः ॥
स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत्स्त्रियाम् ॥ १९ ॥
षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् ॥
संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः ॥ २० ॥
मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः ॥
दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम् ॥ २१ ॥
मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः ॥

समयः सुरभिः त्रीणि वसन्तस्य । ग्रीष्मः उष्मकः (ऊष्मकः) ॥१८॥ निदाघः नितरां दह्यन्तेऽत्र । "दह भस्मीकरणे" । "हलश्च" इति घञ् । न्यङ्क्वादित्वात्कुत्वम् । उष्णोपगमः उष्णः ऊष्मागमः "उष्मागमः" तपः इति सप्तकं ग्रीष्मस्य । तपोऽकारान्तः पुंसि । प्रावृट् वर्षणं वृट् प्रकृष्टा वृट् यत्र "वृषु सेचने" "नहिवृति" इति दीर्घः । वर्षाः द्वे वर्षर्तोः । तत्र प्रावृट्शब्दः षान्तः स्त्रियाम् । वर्षाशब्दस्तु स्त्रीलिङ्गो भूम्नि नित्यं बहुवचनान्त इत्यर्थः । शरदित्येक ऋतुः स स्त्रीलिङ्गो दकारान्तः ॥१९॥ अमी हेमन्तादयः षडपि ऋतवः ऋतुसंज्ञकाः । ऋतुशब्दः पुल्लिङ्गः । ते च हेमन्तादयः मार्गशीर्षादिमासानां षड्भिर्युग्मैः क्रमाद्भवन्ति । उक्तं च । "आदाय मार्गशीर्षाच्च द्वौ द्वौ मासावृतुर्मतः" इति । संवत्सरः वत्सरः अब्दः हायनः शरत् समाः षट्कं वर्षस्य । तत्र हायनः अस्त्रियाम् । समाः स्त्रियां बहुत्वे च । समां समां विजायते इत्येकत्वेऽपि दृश्यते ॥ २० ॥ मानुषेण मासेन एकः पैत्रोऽहोरात्रः । तत्र कृष्णाष्टम्या उत्तरार्धे दिनारम्भः शुक्लाष्टम्या उत्तरार्धे रात्र्यारम्भः । तथा मानुषेण वर्षेण दैवतः देवानामहोरात्रः । तत्रोत्तरायणं दिनम् । दक्षिणायनं रात्रिः । मानुषाणां यत्कृतादि युगचतुष्टयं तद्दैवं युगं ज्ञेयम् । एवं दैवे द्वे युगसहस्रे ब्राह्मोऽहोरात्रः । अयमर्थः—उक्तानां देवताहोरात्राणां षष्ट्यधिकशतत्रयेण दिव्यं वर्षम् । दिव्यैर्द्वादशभिर्वर्षसहस्रैर्मानुषचतुर्युगं तच्च देवानामेकं युगं तत्सहस्रं ब्रह्मणो दिनं तत्तु भूतानां स्थितिकालस्तावत्येव रात्रिर्भूतानां प्रलयकाल इति । अत उक्तं तौ कल्पाविति । ये द्वे दैवे युगसहस्रे तौ नृणां कल्पौ स्थितिप्रलयकालावित्यर्थः ॥ २१ ॥ दिव्यानां युगानां या एकसप्ततिरेकाधिका सप्ततिः तन्मन्वन्तरम् । मनूनां स्वायंभुवचाक्षुषादीनामन्तरमवकाशोऽवधिर्वा । तैश्चतुर्दशभिर्ब्रह्मणो दिनं भवति एकम् ।

22-26



संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ॥ २२ ॥
अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषम् ॥
कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम् ॥ २३ ॥
स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः ॥
मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः ॥ २४ ॥
स्यादानन्दथुरानन्दः शर्मशातसुखानि च ॥
श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ॥ २५ ॥
भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् ॥
शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च ॥ २६ ॥
मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ ॥

संवर्तः प्रलयः कल्पः क्षयः कल्पान्तः पञ्च प्रलयस्य ॥ २२ ॥ पङ्कं पाप्मा पापं किल्बिषं कल्मषं कलुषं वृजिनं एनः अघं अंहः "अन्धः" दुरितं दुष्कृतं द्वादश पापस्य । तत्र पङ्कं क्लीबपुंसोः । पाप्मा नकारान्तःपुंसि । शेषं क्लीबे ॥२३॥ धर्मं पुण्यं श्रेयः सुकृतं वृषः पञ्चकं सुकृतस्य । तत्र धर्मःक्लीबपुंसोः। वृषः पुंसि । मुत् प्रीतिः प्रमदः हर्षः प्रमोदः आमोदः संमदः ॥२४॥ आनन्दथुः "टुनदि समृद्धौ" "द्वितोऽथुच्" । आनन्दः शर्म शातं "दन्त्यादिर्वा" सुखं द्वादश हर्षस्य । तत्र प्रीति-साहचर्यान्मुदपि स्त्रियां दकारान्तः। श्वःश्रेयसम् । श्वः आगामि श्रेयो यत्र । "श्वसो वसीयःश्रेयसः" इत्यच् । शिवम् । शिवं च मोक्षे क्षेमे च महादेवे सुखे जले । "शिवो योगान्तरे वेदे गुग्गुलौ बालके हरे" इति विश्वः । भद्रं (भन्दं) "भन्दं भद्रं शिवं तथा" इति त्रिकाण्डशेषः । कल्याणं मङ्गलं शुभम् ॥२५॥ भावुकं भविकं भव्यं कुशलं क्षेमं शस्तं द्वादश कल्याणमात्रस्य। तत्र क्षेमं शस्तं च पुन्नपुंसकयोः । श्वःश्रेयसमिति चतुरक्षरम् । पापपुण्यशब्दौ तथा सुखादिशब्दाः श्वःश्रेयःशिव-भद्रादयः शस्तान्ताः द्रव्ये विशेष्ये वर्तमानास्त्रिषु विशेष्यलिङ्गा इत्यर्थः । यथा पापा स्त्री । पापः पुमान् । पापं कुलमित्यादि ॥ २६ ॥ मतल्लिका मचर्चिका प्रकाण्डं "प्रकाण्डः" पुंस्यपि । "प्रकाण्डो न स्त्री विटपे मूलशाखान्तरे तरोः । शस्तः" इति मेदिनी । "अस्त्री प्रकाण्डो विटपे तरुस्कन्धप्रशस्तयोः" इति रभसः । उद्धः तल्लजः अमूनि पञ्च प्रशस्तवाचकानि । एते तु पञ्च नित्यं द्रव्ये एव लिङ्गा-

प्रशस्तवाचकान्यमून्ययः शुभावहो विधिः ॥ २७ ॥
दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ॥
हेतुर्ना कारणं बीजं निदानं त्वादिकारणम् ॥ २८ ॥
क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः स्त्रियाम् ॥
विशेषः कालिकोऽवस्था गुणाः सत्त्वं रजस्तमः ॥ २९ ॥
जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ॥
प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः ॥ ३० ॥
(जातिर्जातं च सामान्यं व्यक्तिस्तु पृथगात्मता ॥) (१)
चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ॥ ३१ ॥

॥ इति कालवर्गः ॥ ४ ॥

न्तरेण सामानाधिकरण्येऽपि स्वलिङ्गं न जहति। "प्रशंसावचनैश्च" इति कृष्णसर्पवाप्यश्वादिवत् नित्यसमासः। यथा प्रशस्तो ब्राह्मणो ब्राह्मणमतल्लिका। प्रशस्ता गौर्गोमचर्चिका। गोप्रकाण्डम्। ब्राह्मणोद्धः। कुमारीतल्लजः। अयः एत्यनेन सुखम्। "इण् गतौ" घप्रत्ययः। शुभावहो विधिः शुभोत्पादकं दैवं सोऽय उच्यते अयोऽकारान्तः॥एकम् ॥२७॥ दैवं दिष्टं भागधेयं भाग्यं नियतिः। नियम्यतेऽनया क्तिन्। "नियतिर्नियमे दैवे" इति विश्वः। विधिः। षट्कं प्राक्तनकर्मणः। नियतिः स्त्री। विधिः पुंसि। हेतुः कारणं बीजं त्रयं हेतुमात्रस्य। हेतुः पुंसि। यदादिकारणं तन्निदानं एकमुपादानकारणस्य ॥२८॥ क्षेत्रज्ञः क्षीयते इति क्षेत्रं शरीरं तज्जानाति। "ज्ञा अवबोधने" "आतो नुप" इति कः। "आत्मा पुंसि स्वभावेऽपि प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि" ॥ १ ॥ पुरुषः त्रयं शरीराधिदैवतस्य। प्रधानं प्रकृतिः द्वे सत्त्वादिगुणसाम्यावस्थायाः। यः कालिको विशेषः कालकृतो देहादेर्विशेषः यौवनादिरवस्थोच्यते एकम्। सत्त्वं रजः तमः एते गुणाः प्रकृतेर्धर्माः एकैकम्। रजस्तमसी सान्ते ॥ २९ ॥ जनुः जननं जन्म जनिः उत्पत्तिः उद्भवः षट्कं जन्मनः। जनुः सान्तम्। जनिः स्त्री। प्राणी चेतनः जन्मी जन्तुः जन्युः शरीरी षट्कं प्राणिनः ॥३०॥ जातिरित्यादि पद्यं केचिदत्र पठन्ति इति टीकाकारेण लिखितं परंतु मूल एवैतत्पद्यं दृश्यते। जातिः जातं सामान्यं त्रयं घटत्वादिजातेः। व्यक्तिः व्यज्यतेऽनया व्यक्तिः। "अञ्जू व्यक्त्यादौ"

१ इदमर्धं तालपत्रपुस्तके नास्ति ॥

बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ॥
प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः ॥ १ ॥
धीर्धारणावती मेधा संकल्पः कर्म मानसम् ॥
("अवधानं समाधानं प्रणिधानं तथैव च ॥") (१)
चित्ताभोगो मनस्कारश्चर्चा संख्या विचारणा ॥ २ ॥
("विमर्शो भावना चैव वासना च निगद्यते ॥") (२)
अध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः ॥
संदेहद्वापरौ चाथ समौ निर्णयनिश्चयौ ॥ ३ ॥
मिथ्यादृष्टिर्नास्तिकता व्यापादो द्रोहचिन्तनम् ॥
समौ सिद्धान्तराद्धान्तौ भ्रान्तिर्मिथ्यामतिर्भ्रमः ॥ ४ ॥

क्तिन् । पृथगात्मता द्वे घटादिव्यक्तेः। चित्तं चेतः हृदयं स्वान्तं हृत् मानसं मनः सप्तकं चित्तस्य। हृत् दकारान्तः ॥३१॥ इति कालवर्गः ॥४॥ बुद्धिः मनीषा मनस ईषा। ईष गत्यादिषु, शकन्ध्वादिः। धिषणा धीः प्रज्ञा शेमुषी शेः मोहस्तं मुष्णाति। "मुष स्तेये"। श्रीङो विच्। "मूलविभुज" इति मुषेः कः । मतिः प्रेक्षा उपलब्धिः चित् संवित् प्रतिपत् ज्ञप्तिः चेतना चतुर्दश बुद्धेः । तत्र चित् तान्तः । संवित् प्रतिपत् च दान्तः ॥१॥ या धारणावती धीः सा मेधा एकम् । यन्मानसं कर्म मनोव्यापारः स संकल्पः एकम् । अवधानादि त्रयं समाधानस्य । चित्ता भोगः मनस्कारः द्वे मनसः सुखादौ तत्परतायाः । चर्चा संख्या विचारणा त्रयं प्रमाणैरर्थपरीक्षणस्य ॥ २ ॥ विमर्शादित्रयं पूर्वानुभूताविस्मरणस्य । अध्याहारः तर्कः ऊहः त्रयं तर्कस्य। अपूर्वोत्प्रेक्षणं तर्कः । विचिकित्सा विपूर्वात् कितेः सन्नन्तादकारः। संशयः संदेहः द्वापरः द्वौ परौ प्रकारौ यस्य पृषोदरादित्वादात्वम् । चत्वारि संशयज्ञानस्य। यथा स्थाणुर्वा पुरुषो वेति संशयः। निर्णयः निश्चयः द्वे निश्चयज्ञानस्य ॥३॥ मिथ्यादृष्टिः नास्तिकता द्वे परलोकाभाववादिज्ञानस्य । नास्ति परलोक इति मतिर्यस्य तस्य भावो नास्तिकता । व्यापादः द्रोहचिन्तनम् द्वे परद्रोहचिन्तनस्य। सिद्धान्तः राद्धान्तः द्वे सिद्धान्तस्य । सिद्धः अन्तो निर्णयो यस्य स सिद्धान्तः । भ्रान्तिः मिथ्यामतिः भ्रमः त्रयमयथार्थज्ञानस्य । स्थाणौ पुरुषोऽयमिति ज्ञानं भ्रान्तिः । स्थाणुर्वा पुरुषो वायमित्य-

---

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥ २ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः ॥
अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः ॥ ५ ॥
मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः ॥
मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ॥ ६ ॥
मोक्षोऽपवर्गोऽथाज्ञानमविद्याहंमतिः स्त्रियाम् ॥
रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी ॥ ७ ॥
गोचरा इन्द्रियार्थाश्च हृषीकं विषयीन्द्रियम् ॥
कर्मेन्द्रियं तु पाय्वादि मनोनेत्रादि धीन्द्रियम् ॥ ८ ॥

नेककोटिकं ज्ञानं संशयः । स्थाणौ स्थाणुरिति ज्ञानं निश्चयः ॥ ४ ॥ संवित् आगूः प्रतिज्ञानं नियमः आश्रवः संश्रव अङ्गीकारः अभ्युपगमः प्रतिश्रवः समाधिः दशकं अङ्गीकारस्य । तत्र संवित् आगूश्च स्त्रियाम् । आगूर्वधूवत् । आग्वौ आग्व इत्यादि । पक्षे धूर्वत् आगुरौ आगुर इत्यादि ॥ ५ ॥ मोक्षविषये या धीर्बुद्धिः तत् ज्ञानं एकम् । मोक्षशास्त्रादन्यत्र शास्त्रे शिल्पे चित्रादौ च धीर्विज्ञानमुच्यते । मोक्षनिमित्तं शिल्पशास्त्रयोर्धीर्ज्ञानम् । अन्यनिमित्तं या तयोर्धीः सा विज्ञानमिति वा । "विज्ञानं कर्मणि ज्ञाने" इति हैमः । एकम् । मुक्तिः जन्ममरणाभ्यां मोचनं "मुच्लृ मोक्षणे" क्तिन् । "मुक्तिर्मोचनमोक्षयोः" इति हैमः । कैवल्यं निर्वाणं श्रेयः । अतिशयेन प्रशस्यं ईयसुनि "प्रशस्यस्य" इति श्रादेशः । निःश्रेयसम् । "अचतुर" इति निपातनादच् । अमृतम् ॥ ६ ॥ मोक्षः अपवर्गः अष्टकं मोक्षस्य । अज्ञानं अविद्या अहंमतिः । अहं प्रधाना मतिः । अहमिति विभक्तिप्रतिरूपकमव्ययं अहंकारार्थकम् । त्रयमज्ञानस्य । रूपं शब्दः गन्धः रसः स्पर्शः एते पञ्च विषया इति गोचरा इति इन्द्रियार्था इति चोच्यन्ते त्रयम् ॥ ७ ॥ हृषीकं विषयि इन्द्रियं इन्द्रस्यात्मनो लिङ्गम् । त्रयं चक्षुरादेरिन्द्रियस्य । विषयि नान्तम् । पायूपस्थादि कर्मेन्द्रियमुच्यते । आदिना वागादि । तद्यथा । "पायूपस्थं पाणिपादौ वाक्येतींद्रियसंग्रहः । उत्सर्ग आनन्दादानगत्यालापाश्च तत्क्रिया" इति । मनोनेत्रादि धीन्द्रियमुच्यते । आदिना श्रोत्रादि । " मनः कर्णस्तथा नेत्रं रसना च त्वया सह ॥ नासिका चेति षट् तानि धीन्द्रियाणि प्रचक्षते " एकम् ॥ ८ ॥ रसभेदानाह । तुवरः "दीर्घादिरपि कुवरोऽपि" कषायः द्वे तुवरस्य प्राकृतभाषया तुरट इति ख्यातस्य । मधुराद्याः पृथक् पृथक् ज्ञेया । एवं तुव-

तुवरस्तु कषायोऽस्त्री मधुरो लवणः कटुः ॥
तिक्तोऽम्लश्च रसाः पुंसि तद्वत्सु षडमी त्रिषु ॥ ९ ॥
विमर्दोत्थे परिमलो गन्धे जनमनोहरे ॥
आमोदः सोऽतिनिर्हारी वाच्यलिङ्गत्वमागुणात् ॥ १० ॥
समाकर्षी तु निर्हारी सुरभिर्घ्राणतर्पणः ॥
इष्टगन्धः सुगन्धिः स्यादामोदी मुखवासनः ॥ ११ ॥
पूतिगन्धिस्तु दुर्गन्धो विस्रं स्यादामगन्धि यत् ॥
शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः ॥ १२ ॥

राद्याः षडपि रसा उच्यन्ते । तत्र तुवरो हरीतक्यादौ प्रसिद्धः । मधुरो जलादौ प्रसिद्धः । लवणः सैन्धवादौ प्रसिद्धः । कटुर्मरीचादौ प्रसिद्धः । एवं तिक्तो निम्बादौ । अम्लस्तिन्तिड्यादौ "अम्लं" । रस्यन्ते आस्वाद्यन्ते इति रसाः । कर्मणि घञ् । अमी तुवराद्याः षडपि रसमात्रे वर्तमानाः पुंसि । तद्वत्सु रसवत्सु वर्तमानास्त्रिषु वाच्यलिङ्गा इत्यर्थः । "तुवरकषायौ नपुंसकावपि अस्त्रीत्युक्तत्वात्" ॥ ९ ॥ विमर्दोत्थे संघर्षणादिनोत्पन्ने जनमनोहरे गन्धे परिमल इत्येकम् । विमर्दग्रहणेन जातिपत्रादेर्निरासः । योऽतिनिर्हारी अत्यन्तसमाकर्षी स गन्ध आमोद उच्यते । "कस्तूरिकायामामोदः कर्पूरे मुखवासनः । बकुले स्यात्परिमलश्चम्पके सुरभिस्तथा" इति शब्दार्णवः । एकम् । इतः परं आगुणाद्गुणाः शुक्लादय इति वक्ष्यमाणाद्गुणशब्दात्प्राक् वाच्यलिङ्गत्वं अभिधेयानुसारेण त्रिलिङ्गत्वम् ॥ १० ॥ समाकर्षी निर्हारी द्वे दूरनिपातिनो गन्धद्रव्यस्य । निर्हरत्यवश्यं मनो निर्हारी । सुरभिः घ्राणतर्पणः इष्टगन्धः सुगन्धिः चत्वारि शोभनगन्धयुक्तस्य । शोभनो गन्धोऽस्य सुगन्धिः । आमोदी मुखवासनः इति द्वे यन्मुखं वासयति तस्य ताम्बूलादेः ॥ ११ ॥ पूतिगन्धिः दुर्गन्धः द्वे अनिष्टगन्धयुक्तस्य । पूतिर्दुष्टः गन्धो यस्य सः । यदामगन्धि तद्विस्रं एकं अपक्वमांसादिगन्धस्य । आमोऽपक्वमलस्तस्येव गन्धो यस्य तत् । "उपमानाच्च" इतीत् । शुक्लः शुभ्रः शुचिः श्वेतः विशदः श्येतः पाण्डरः ॥ १२ ॥ अवदातः सितः गौरः अवलक्षः "वलक्षोऽपि" "वष्टिभागुरिः" इत्यनेनाल्लोपपक्षे । धवलः अर्जुनः हरिणः पाण्डुरः । "नगपांसुपाण्डुभ्यश्च" इति रः । पाण्डुः षोडश नामानि शुक्लस्य । तत्रार्जुनान्तानि त्रयोदश नामानि शुक्लस्य । हरिणादीनि त्रीणि पीत-

अवदातः सितो गौरोऽवलक्षो धवलोऽर्जुनः ॥
हरिणः पाण्डुरः पाण्डुरीषत्पाण्डुस्तु धूसरः ॥ १३ ॥
कृष्णे नीलासितश्यामकालश्यामलमेचकाः ॥
पीतो गौरो हरिद्राभः पालाशो हरितो हरित् ॥ १४ ॥
लोहितो रोहितो रक्तः शोणः कोकनदच्छविः ॥
अव्यक्तरागस्त्वरुणः श्वेतरक्तस्तु पाटलः ॥ १५ ॥
श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते ॥
कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ ॥ १६ ॥

मिश्रशुक्लस्येति विभागः साधुः । शब्दार्णवे तु "श्वेतस्तु समपीतोऽसौ रक्तेतरजपारुचिः। वलक्षस्तु सितः शावः कदलीकुसुमोपमः" ॥ "अर्जुनस्तु सितः कृष्णलेशवान् कुमुदच्छविः । पाण्डुस्तु पीतभागार्धः केतकीधूलिसन्निभः" इत्युक्तम्। "हरिणौ पाण्डुसारङ्गौ" इति हैमः। ईषत्पाण्डुः धूसरः । "धूसरस्तु सितः पीतलेशवान् बकुलच्छविः" इति शब्दार्णवः । द्वे ईषद्धवलस्य ॥ १३ ॥ कृष्णः नीलः असितः श्यामः कालः श्यामलः मेचकः । "मेचकः कृष्णनीलः स्यादतसीपुष्पसन्निभः" इति शब्दार्णवः । सप्तकं नील्यादिगतवर्णस्य । पीतः गौरः हरिद्राभः त्रयं पीतस्य । पालाशः "पलाशोऽपि" हरितः हरित् त्रयं शिरीषादिपत्रगतवर्णस्य । हरित्तान्तः ॥ १४ ॥ लोहितः रोहितः रक्तः त्रयं रक्तस्य । यः कोकनदच्छविः रक्तोत्पलाभः स शोण इत्येकम् । योऽव्यक्तराग ईषद्रक्तः सोऽरुणः। "अरुणः कृष्णलोहितः" इत्यमरमाला एकम् । यः श्वेतमिश्रो रक्तः स पाटल इत्येकम् ॥ १५ ॥ श्यावः कपिशः द्वे धूसरारुणवर्णस्य । कपिर्मर्कटः तद्वद्वर्णोऽस्त्यस्य कपिशः । धूम्रः धूमलः कृष्णलोहितः त्रयं कृष्णमिश्रलोहितवर्णस्य । कडारः कपिलः पिङ्गः पिशङ्गः कद्रुः पिङ्गलः षट्कं पिङ्गलवर्णस्य । अयमत्यन्तगौरबालकस्य केशेषु प्रसिद्धः। "पिङ्गा गोरोचना पाण्डुः" इति कात्यः । शब्दार्णवे तु "सितपीतहरिद्रक्तः कडारस्तृणवह्निवत् । अयं तद्रक्तपीताङ्गः कपिलो गोविभूषणः । हरितांशेऽधिकेऽसौ तु पिशङ्गः पद्मधूलिवत् । पिशङ्गस्त्वासितावेशात्पिङ्गो दीपशिखादिषु । पिङ्गलस्तु परच्छायः पिङ्गे शुक्लाङ्गखण्डवत्" इत्युक्तम् ॥ १६ ॥ चित्रं किर्मीरः "कर्मीरः" कल्माषः शबलः एतः कर्बुरः षट्कं कर्बुरस्य विचित्रवर्णस्येत्यर्थः । शुक्लादयः गुणे गुणमात्रे वर्तमानाः पुंसि । चित्रं तु रूप-

चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ॥
गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तुतद्वति ॥ १७ ॥

इति धीवर्गः ॥ ५ ॥

ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती ॥
व्याहार उक्तिर्लपितं भाषितं वचनं वचः ॥ १ ॥
अपभ्रंशोऽपशब्दः स्याच्छास्त्रे शब्दस्तु वाचकः
तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता ॥ २ ॥
श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः ॥

भेदान्नपुंसकम् । यथास्य पटस्य शुक्लं रूपम् । तद्वति गुणवति वस्तुनि वर्तमाना गुणिलिङ्गाः अभिधेयलिङ्गाः । "गुणवचनेभ्यो मतुपो लुक्" इति गुणिनि वर्तमानत्वम् । तत्प्रत्याख्याने "गुणगुणिनोरभेदान्निर्वाहः" इति महाभाष्ये । यथा शुक्ला शाटी शुक्लः पटः शुक्लं वस्त्रम् । रोहितादीनां स्त्रीत्वे तु "वर्णादनुदात्तात्तोपधात्तो नः" इति ङीष्वा तकारस्य नकारश्च । यथा श्येनी श्येता । रोहिणी रोहिता । लोहिनी लोहितेत्यादि ॥१७॥ इति धीवर्गः ॥५॥ ब्राह्मी ब्रह्मण इयम् । "ब्राह्मोऽजातौ" इति टिलोपः ङीप् । भारती भाषा गीः गिरापि । "ब्रह्माणी वचनं वाचा जल्पितं गदितं गिरा" इति शब्दार्णवः। "गीर्भणितिर्गिरा" इति त्रिकाण्डशेषः। तत्र गिरा वाणीति पाठः । वाक् वाणी सरस्वती व्याहारः उक्तिः लपितं भाषितं वचनं वचः त्रयोदश नामानि वचनस्य । तत्रापि सरस्वत्यन्तानि वचनाधिष्ठात्र्या देवताया अपि । व्याहारादीनि त्वधिष्ठेयस्यैव । गीः रेफान्तः ॥ १ ॥ अपभ्रष्टः शब्दः गावीगोणीत्यादिः अपशब्दः सोऽपभ्रंश इत्युच्यते एकम् । शास्त्रे व्याकरणादौ यो वाचकः स शब्द इत्युच्यते एकम् । यथा ओतप्रोततन्तूनां वाचकः पट इति । तिङ्सुबन्तचयः तिङन्तसुबन्तपदसमूहो वाक्यम् । वचेर्ण्यत् "वचोऽशब्दसंज्ञायाम्" इति कुत्वम् । तिङन्तचयो यथा पचति भवति पाको भवतीत्यर्थः। सुबन्तचयो यथा। "प्रकृतिसिद्धमिदं हि महात्मनाम्" कारकान्विता कारकैः संबद्धा क्रिया वाक्यमुच्यते । यथा देवदत्त गामभिरक्ष शुक्लदण्डेन । अत्रान्वितत्वं आकांक्षायोग्यतासन्निधिवशाज्ज्ञेयम् ॥ २ ॥ श्रुतिः वेदः आम्नायः त्रयी चत्वारि वेदस्य । अत्र लिङ्गसंकरो न दोषाय स्त्रीति विशेषविधानात् त्रय्या व्याख्यायमानत्वाच्च । तद्विधिः वैदिको विधिर्यागादिः धर्म इत्युच्यते । वेदमू-

स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी ॥ ३ ॥
शिक्षेत्यादि श्रुतेरङ्गमोंकारप्रणवौ समौ ॥
इतिहासः पुरावृत्तमुदात्ताद्यास्त्रयः स्वराः ॥ ४ ॥
आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः ॥
आख्यायिकोपलब्धार्था पुराणं पञ्चलक्षणम् ॥ ५ ॥ (१)
प्रबन्धकल्पना कथा प्रवह्लिका प्रहेलिका ॥

लत्वात्स्मृत्युक्तोऽपि विधिर्धर्म एव। यदाह गौतमः। "श्रुतिस्मृतिविहितो धर्मः" इति । केचित्तु लिङ्गसंकरो मा भूदिति त्रयीधर्म इति समस्तं पदमाहुः । "विधानमृग्यजुः साम्नां त्रयीधर्मं विदुर्बुधाः" ॥ त्रयीशब्दे विशेषं दर्शयन्वेदभेदानभिधत्ते। ऋक् ऋच्यन्ते स्तूयन्ते देवा अनया। "ऋच् स्तुतौ" संपदादित्वात् क्विप्। साम यजुः इति त्रयो वेदा मिलितास्त्रयी ज्ञेया। तत्र ऋक् शब्दः स्त्रीलिङ्गः ॥३॥ शिक्षा कल्पो व्याकरणमित्यादि वेदस्याङ्गं ज्ञेयम् । "शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः॥ छन्दोविचितिरित्येष षडङ्गो वेद उच्यते" ॥ प्रसङ्गादिदमप्युच्यते । वेदानामष्टौ विकृतयः। "जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः॥ अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः" ॥ षट् शास्त्राण्याह । "गौतमस्य कणादस्य कपिलस्य पतञ्जलेः । व्यासस्य जैमिनेश्चापि दर्शनानि षडेव हि" ॥ चतुर्दश विद्याः। "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश" ॥ कल्पः कल्पसूत्रम् । ओंकारः प्रणवः द्वे । इतिहासः इतिहेति पारंपर्योपदेशेऽव्ययं तदास्तेऽस्मिन् । "आस उपवेशने" अधिकरणे घञ् । पुरावृत्तं द्वे पूर्वचरितस्य महाभारतादेः । उदात्तः अनुदात्तः स्वरितः इति त्रयः स्वरा उच्यन्ते एकम् ॥ "उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः । चतुर्थः प्रचितो नोक्तो यतोऽसौ छान्दसः स्मृतः" ॥ ४ ॥ आन्वीक्षिकीत्येकं तर्कविद्यायां गौतमादिप्रणीतायाम् । दंडनीतिरित्येकं अर्थशास्त्रे बृहस्पत्यादिप्रणीते । अर्थस्य भूम्यादेः शास्त्रम् । आख्यायिका उपलब्धार्था द्वयं अनुभूतार्थप्रतिपादकस्य वासवदत्तादेः । यत्पञ्चलक्षणं तत्पुराणमुच्यते । " सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ॥ वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम्" ॥५॥ प्रबन्धस्य वाक्यविस्तरस्य या कल्पना रचना सा कथा एकं नाटकरामायणादेः । प्रवह्लिका "प्रब-

---

१ सर्गश्चेति टीकास्थं पद्यं तालपत्रपुस्तके मूल एवास्ति ॥

स्मृतिस्तु धर्मसंहिता समाहृतिस्तु संग्रहः ॥ ६ ॥
समस्या तु समासार्था किंवदन्ती जनश्रुतिः ॥
वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वयः ॥ ७ ॥
आख्याह्वे अभिधानं च नामधेयं च नाम च ॥
हूतिराकारणाह्वानं संहूतिर्बहुभिः कृता ॥ ८ ॥
विवादो व्यवहारः स्यादुपन्यासस्तु वाङ्मुखम् ॥
उपोद्घात उदाहारः शपनं शपथः पुमान् ॥ ९ ॥

ह्लिका" प्रहेलिका द्वयं यथापरैः संदिह्यते तादृशगुप्ताभिधानस्य। यथा। "पानीयं पातुमिच्छामि त्वत्तः कमललोचने॥ यदि दास्यसि नेच्छामि नो दास्यसि पिबाम्यहमिति"। यदुक्तम्। "व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपना। यत्र बाह्यार्थसंबद्धं कथ्यते सा प्रहेलिकेति"। या मन्वादिभिः प्रणीता धर्मसंहिता धर्मबोधार्थं रचिता संहिता सा स्मृतिः। वेदार्थस्मरणपूर्वकं रचितत्वात्स्मृतिरित्यर्थोऽपि। स्मरतेः क्तिन् एकम्। समाहृतिः संग्रहः। "विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः। निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः" द्वयं संग्रहग्रन्थस्य ॥६॥ या समासार्था पूरणीयार्था कविशक्तिपरीक्षणार्थमपूर्णतयैव पठ्यमानार्था वा सा समस्या। "यथा शतचन्द्रं नभस्तलम्"। तत्पूरणं यथा। "दामोदरकराघातविह्वलीकृतचेतसा। दृष्टं चाणूरमल्लेन" इति। समस्या त्वसमासार्थेति पाठे तु अपरिपूर्णार्थेत्यर्थः। किं वदन्ती "किंवदन्तिः" जनश्रुतिः जनेभ्यः श्रूयते। कर्मणि क्तिन्। द्वे चतुरक्षरे नामनी लोकप्रवादस्य। वार्ता प्रवृत्तिः वृत्तान्तः उदन्तः चत्वारि यथास्थितलोकवृत्तकथनस्य। आह्वयः ॥ ७ ॥ आख्या आह्वा अभिधानं नामधेयम्। भागरूपेति नामशब्दात् धेयप्रत्ययः। नाम षट्कं नाम्नः। हूतिः आकारणा आह्वानं त्रयं आह्वानस्य। या बहुभिः कृता हूतिः सा संहूतिः एकम् ॥ ८ ॥ विरुद्धो वादः विवादः व्यवहारः। "वि नानाऽर्थेऽव संदेहे हरणं हार उच्यते। नानासंदेहहरणाद्व्यवहारः प्रकीर्तितः" इति कात्यायनः। द्वे ऋणदानादिनिमित्तविविधवादस्य। उपन्यासः वाङ्मुखं वाचोमुखमिव मुखमुपक्रमः द्वे वचनारंभस्य। उपोद्घातः उदाहारः द्वे प्रकृतसिद्ध्यर्थचिंतनस्य। तदुक्तम्। "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते" इति। उपोद्घातादि द्वे वक्ष्यमाणोपयोग्यर्थवर्णनस्येतिवा। शपनं शपथः द्वयम् ॥ ९ ॥ प्रश्नः अनुयोगः पृच्छा त्रयं प्रश्नस्य। प्रतिवाक्यं उत्तरं

प्रश्नोऽनुयोगः पृच्छा च प्रतिवाक्योत्तरे समे ॥
मिथ्याभियोगोऽभ्याख्यानमथ मिथ्याभिशंसनम् ॥ १० ॥
अभिशापः प्रणादस्तु शब्दः स्यादनुरागजः ॥
यशः कीर्तिः समज्ञा च स्तवः स्तोत्रं स्तुतिर्नुतिः ॥ ११ ॥
आम्रेडितं द्विस्त्रिरुक्तमुच्चैर्घुष्टं तु घोषणा ॥
काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः ॥ १२ ॥
अवर्णाक्षेपनिर्वादपरीवादापवादवत् ॥
उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ॥ १३ ॥
पारुष्यमतिवादः स्याद्भर्त्सनं त्वपकारगीः ॥
यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् ॥ १४ ॥

द्वे प्रतिवचनस्य। मिथ्याभियोगः अभ्याख्यानं द्वे "शतं मे धारयसि" इत्याद्यसत्याक्षेपस्य। मिथ्याभिशंसनम् ॥ १० ॥ अभिशापः द्वे सुरापानादिमिथ्यापापोद्भावनस्य। अनुरागजः गुणानुरागोत्थः शब्दः प्रणाद इत्युच्यते एकम्। यशः कीर्तिः। "कीर्तिः प्रसादयशसोर्विस्तारे कर्दमेऽपि च" इति हैमः। समज्ञा "समज्या समाज्ञा चेति पाठान्तरम्" त्रयं कीर्तेः। स्तवः स्तोत्रं स्तुतिः नुतिः चत्वारि स्तुतेः ॥ ११ ॥ द्विवारं त्रिवारं चोक्तं आम्रेडितमुच्यते। यथा "सर्पः सर्प इति" एकम्। उच्चैर्घुष्टं घोषणा द्वे उच्चैर्घोषस्य। शोकभीतिकामादिभिर्ध्वनेर्यो विकारः सा काकुः एकम् ॥ १२ ॥ अवर्णः "वर्णः प्रशंसा तद्विरुद्धोऽवर्णः" आक्षेपः निर्वादः। परीवादः "परिवादः" अपवादः उपक्रोशः जुगुप्सा कुत्सा निन्दा गर्हणं दश निन्दायाः। अपवादवदिति वत्प्रत्ययेन अवर्णादीनामुपक्रोशस्य चैकलिङ्गत्वं ज्ञापितम्। उपक्रोशान्ता अवर्णादयः पुंसीति तात्पर्यम् ॥ १३ ॥ पारुष्यं परुषो निष्ठुरभाषणं परुष एव पारुष्यम्। स्वार्थे ष्यञ्। अतिवादः द्वे निष्ठुरभाषणस्य। अपकारगीः अपकारार्थकं भाषणं "चौरोऽसि त्वां घातयिष्यामि" इत्यादि तद्भर्त्सनमुच्यते एकम्। कस्यांचित् व्यक्तौ क्रोधपूर्वकं दोषप्रतिपादनमुपालम्भः यः सनिन्दः निन्दायुक्त उपालम्भस्तत्र परिभाषणमित्येकम्। उपालम्भो द्वेधा। गुणाविष्करणपूर्वको निन्दापूर्वकश्च। आद्यो यथा। महाकुलीनस्य तव किमुचितमिदम्। द्वितीयस्तु बन्धकीसुतस्य तवोचितमेवेदमिति। तत्र यो द्वितीयः स परिभाषणम्

तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति ॥
स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः ॥ १५ ॥
अनुलापो मुहुर्भाषा विलापः परिदेवनम् ॥
विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः ॥ १६ ॥
सुप्रलापः सुवचनमपलापस्तु निह्नवः ॥
("चोद्यमाक्षेपाभियोगौ शापाक्रोशौ दुरेषणा ॥
अस्त्रीचाटुचटुश्लाघा प्रेम्णामिथ्याविकत्थनम् ॥१॥")(१)
संदेशवाग्वाचिकं स्याद्वाग्भेदास्तु त्रिषूत्तरे ॥ १७ ॥
रुशती वागकल्याणी स्यात्कल्या तु शुभात्मिका ॥
अत्यर्थमधुरं सान्त्वं संगतं हृदयंगमम् ॥ १८ ॥

॥ १४ ॥ मैथुनं प्रति परस्त्रीपुरुषसंयोगेन निमित्तेन य आक्रोशस्तत्र आक्षारणेत्येकम् । आक्षारणमिति क्लीबमपि । आभाषणं आलापः द्वे अन्योन्यसंबोधनपूर्वकभाषणस्य । यदनर्थकं वचः स प्रलापः इत्येकम् ॥ १५ ॥ अनुलापः मुहुर्भाषा द्वे बहुशो भाषणस्य । विलापः परिदेवनं द्वे रोदनपूर्वकभाषणस्य । विप्रलापः विरोधोक्तिः द्वे अन्योन्यविरुद्धभाषणस्य । मिथः परस्परं उक्तिप्रत्युक्तियुक्तं यद्भाषणं स संलापः । आलापस्तु एकेनापि क्रियते ॥ १६ ॥ सुप्रलापः सुवचनं द्वे सुभाषितस्य । अपलापः निह्नवः द्वे गोपनकारिवचनस्य । यथा तन्मिथ्येति प्रतिवादिनि निह्नवः । चोद्यादित्रयमद्भुतप्रश्नस्य । शापादित्रयं शापवचनस्य । चाद्विति त्रयं प्रेम्णा मिथ्याभाषणस्य । संदेशवाक् वाचिकं द्वे दूतादिमुखेन संदिश्यमानवचनस्य । उत्तरे अतः परं वक्ष्यमाणाः वाग्भेदाः रुशत्यादयः सम्यगन्तास्त्रिषु त्रिलिङ्गाः ॥ १७ ॥ यथा रुशन् शब्दः रुशद्वचनम् । या अकल्याणी वाक् सा रुशती एकं तान्तम् । या शुभात्मिका वाक् सा कल्या "काल्यापि" एकं तालव्यान्तम् । यदतिशयेन मधुरं तत्सान्त्वं एकम् । संगतं हृदयंगमं द्वे संबद्धवचनस्य ॥ १८ ॥ निष्ठुरं परुषं द्वे कर्कशवचनस्य । ग्राम्यं अश्लीलं द्वे शिथिलवचसः । अश्रीकारकभण्डादिवचस इत्यर्थः । यत्प्रियं सत्यं वचनं तत्र सूनृतमित्येकम् । तदुक्तं रभसे । "सूनृतं मङ्गलेऽपि स्यात्प्रियसत्ये वचस्यपि । यत्पर-

---

१ इदं पद्यं ताळपत्रपुस्तकेऽपि नास्ति ॥

निष्ठुरं परुषं ग्राम्यमश्लीलं सूनृतं प्रिये ॥
सत्येऽथ संकुलक्लिष्टे परस्परपराहते ॥ १९ ॥
लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदितम् ॥
अम्बूकृतं सनिष्ठीवमबद्धं स्यादनर्थकम् ॥ २० ॥
अनक्षरमवाच्यं स्यादाहतं तु मृषार्थकम् ॥
("सोल्लुण्ठनं तु सोत्प्रासं भणितं रतिकूजितम् ॥
श्राव्यं हृद्यं मनोहारि विस्पष्टं प्रकटोदितम् ॥ १ ॥") (१)
अथ म्लिष्टमविस्पष्टं वितथं त्वनृतं वचः ॥ २१ ॥
सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति ॥

स्परेण पराहतं "माता मे वन्ध्येतिवत्" पूर्वापरविरुद्धं तत्र संकुलं क्लिष्टमिति नामद्वयम्। "यथा पश्यत्यचक्षुः स शृणोत्यकर्णः"॥१९॥ यत् लुप्तवर्णपदं असंपूर्णोच्चारितं वचस्तद् ग्रस्तमित्येकम्। "ग्रस्तं ग्रासीकृतेऽपि स्याल्लुप्तवर्णपदोदिते" इत्युक्तम्। यत्त्वरितोदितं तन्निरस्तं एकम्। सनिष्ठीवं लालायुक्तं तदम्बूकृतमुच्यते। अम्बू इति च्व्यन्तम्। सनिष्ठेवमपि एकम्। यदनर्थकं अर्थशून्यं तदबद्धं स्यात् एकम्। अवध्यमपि। "अवध्यमवधार्हे स्यादनर्थकवचस्यपि" इति दर्शनात्॥२०॥ अनक्षरं न प्रशस्ताक्षराणि यस्मिन्। अक्षराणामप्राशस्त्यं चार्थद्वारकं तच्च वचनानर्हम् अवाच्यं द्वे वक्तुमनर्हस्य वचसः। मृषार्थकं अत्यन्ताभूतार्थकं तत् आहतं ज्ञेयम्। यथा। "एष वन्ध्यासुतो याति खपुष्पकृतशेखरः। मृगतृष्णांभसि स्नातः शशशृङ्गधनुर्धरः" इति। एकम्। सोल्लुण्ठनादि द्वे सोपहासवचनस्य। भणितादि द्वे रतिसमयकूजितस्य। मणितमित्यपि पाठः। श्राव्यादि पञ्च स्पष्टवचनस्य। म्लिष्टम्। क्षुब्धस्वान्तेति निपातनादिडभावः। अविस्पष्टम्। अत्र म्लिष्टमित्योष्ठ्यादिपाठः एव दृश्यते। "म्लिष्टं त्रिष्वव्यक्तवाचि" इति मेदिनी। द्वे अव्यक्तवचनस्य। यदनृतं वचः। यथा सत्यपि धने नास्ति धनमिति तद्वितथमित्युच्यते एकम्॥ २१॥ सत्यम्। "सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वति" इति रभसः। तथ्यं ऋतं सम्यक् चत्वारि सत्यस्य। सम्यक् चकारान्तः। पूर्वे वाग्भेदास्तु त्रिषूत्तर इति वचनवृत्तित्वेन सत्यादीनां त्रिलिङ्गत्वमुक्तम्। यथा सत्यः शब्दः सत्या वाक् सत्यं वचनमिति। इदानीं वक्तृवृत्तित्वेन एषां त्रिलिङ्गत्वमाह अमूनीति।

---

१ इदं पद्यं तालपत्रपुस्तकेऽपि नास्ति ॥

22-25. 1.



शब्दे निनादनिनदध्वनिध्वानरवस्वनाः ॥ २२ ॥
स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः ॥
आरवारावसंरावविरावा अथ मर्मरः ॥ २३ ॥
स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितम् ॥
निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि ॥ २४ ॥
वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः ॥
कोलाहलः कलकलस्तिरश्चां वाशितं रुतम् ॥
स्त्री प्रतिश्रुत्प्रतिध्वाने गीतं गानमिमे समे ॥ २५ ॥

॥ इति शब्दादिवर्गः ॥ ६ ॥

निषादर्षभगान्धारषड्जमध्यमधैवताः ॥
पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥ १ ॥

तद्वति सत्यवति त्रिषु । यथा सत्या स्त्री सत्यः पुमान् सत्यं कुलमिति । शब्दः निनादः निनदः ध्वनिः ध्वानः रवः स्वनः ॥ २२ ॥ स्वानः निर्घोषः निर्ह्रादः नादः निस्वानः निस्वनः आरवः आरावः संरावः विरावः सप्तदश शब्दमात्रस्य। वस्त्रपर्णानां स्वनिते शब्दे मर्मर इत्येकम् । "मर्मरो वस्त्रभेदे च शुष्कपर्णध्वनौ तथा । पुंसि स्त्रियां पुनः प्रोक्ता मर्मरी पीतदारुणि" इति मेदिनी ॥२३॥ भूषणानां नूपुरादीनां स्वनिते शिञ्जितमित्येकम्। "तालव्यादि"। निक्वाणः निक्वणः क्वाणः क्वणः क्वणनं पञ्च वीणादिस्वनितस्य ॥ २४ ॥ प्रादेरुपसर्गात् ये प्रक्वाणः प्रक्वण इत्यादयस्ते वीणाया एव क्वणिते नान्यत्र । आदिशब्दादुपक्वणादयः। कोलाहलः कलकलः द्वे बहुभिः कृतस्य स्पष्टशब्दस्य । तिरश्चां पक्षिणां रुतं शब्दः वाशितं एकम् । तालव्यमध्योऽयम् । प्रतिश्रुत् प्रतिध्वानः द्वे प्रतिशब्दस्य । गीतं गानं द्वे गायनस्य॥२५॥ इति शब्दादिवर्गः॥६॥ स्वरभेदानाह। निषादः। "निषादःस्वरभेदेऽपि चण्डाले धीवरान्तरे" इति विश्वः। ऋषभः गान्धारः षड्जः। "नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संस्पृशन्। षड्जः स जायते यस्मात्तस्मात्षड्ज इति स्मृतः"। मध्यमः धैवतः पञ्चमः इत्यमी तन्त्रीभ्यः कण्ठेभ्यश्चोत्थिताः सप्त स्वरा ज्ञेयाः एकैकम् । तत्र निषादं नर्दन्ति गजाः । ऋषभं गावः। गान्धारं अजादयः । षड्जं मयूराः ।

काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे ॥
कलो मन्द्रस्तु गम्भीरे तारोऽत्युच्चैस्त्रयस्त्रिषु ॥ २ ॥
("नृणामुरसि मध्यस्थो द्वाविंशतिविधो ध्वनिः ॥
स मन्द्रः कण्ठमध्यस्थस्तारः शिरसि गीयते ॥१॥") (१)
समन्वितलयस्त्वेकतालो वीणा तु वल्लकी ॥
विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी ॥ ३ ॥
ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् ॥
वंश्यादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥ ४ ॥

मध्यमं क्रौञ्चाः । धैवतमश्वाः। पञ्चमं कोकिलाः। तदुक्तं नारदेन। "षड्जं रौति मयूरस्तु गावो नर्दन्ति चर्षभम् । अजाविकौ तु गान्धारं क्रौञ्चो नर्दति मध्यमम् ॥ १ ॥ पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् । अश्वस्तु धैवतं रौति निषादं रौति कुञ्जरः" इति ॥२॥ सूक्ष्मे कले काकलीत्येकं स्त्रीलिङ्गम् । ईषत् कलः काकली। "ईषदर्थे च" इति कोः कादेशः। गौरादिः। "काकलिरपि" कलेरिन्। "साधूदितं काकलिभिः कुलीनैः" इति प्रयोगः। मधुरः श्रुतिसुखः । स चासौ अस्फुटोऽव्यक्ताक्षरः एतादृशे ध्वनौ कल इत्येकम्। गम्भीरे ध्वनौ मन्द्र इत्येकम् । अत्युच्चैर्ध्वनौ तार इत्येकम् । त्रयः कलमन्द्रतारास्त्रिषु ॥ २ ॥ यः समन्वितलयः सम्यगन्वितोऽनुगतो लयो गीतादिसाम्यं यत्र स एकताल उच्यते। "एकः समस्तालो मानमस्येत्येकतालः" एकम् । वीणा वल्लकी विपञ्ची त्रयं वीणायाः । सा वीणा तु सप्तभिस्तन्त्रीभिरुपलक्षिता परिवादिनी । "सुप्यजातौ" इति णिनिः । परिवदत्यवश्यम् ॥ ३ ॥ यद्वीणादिकं वाद्यं तत्ततमुच्यते । आदिना सैरन्ध्रीरावणहस्तकिन्नर्यादि । हेमचन्द्रकोशेऽपि । "शिवस्य वीणा नालम्बी सरस्वत्यास्तु कच्छपी । नारदस्याथ महती गणानां तु प्रभावती । विश्वावसोस्तु बृहती तुम्बरोस्तु कलावती" इत्यादि । यन्मुरजादिकं मृदङ्गादिकं आदिना पटहादि । आनह्यते मुखे चर्मणा बध्यते तदानद्धमुच्यते । वंश्यादिकं "वंशी वेणुस्तेन वंश्यादिकमित्येव (२) ।" आदिना शङ्खादि । तत्सुषिरं ज्ञेयम् ॥ सुषिरशब्दो दन्त्यादिः । प्राचीनास्तु तालव्यादिरपीत्याहुः । यत्कांस्यमयतालादिकं आदिना घण्टाझल्लर्यादि तद्घनं ज्ञेयं एकैकम् ॥ ४ ॥

---

१ इदं पद्यं तालपत्रपुस्तकेऽपि नास्ति ॥ २ अतएव 'वंशीरवः'—इति 'वंशीकलेन बडिशेन'–इति च प्रयोगः । वंशादिकमिति पाठस्तु रामाश्रमीसम्मतः ॥

चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ॥
मृदङ्गा मुरजा भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयः ॥ ५ ॥
स्याद्यशःपटहो ढक्का भेरी स्त्री दुन्दुभिः पुमान् ॥
आनकः पटहोऽस्त्री स्यात्कोणो वीणादिवादनम् ॥ ६ ॥
वीणादण्डः प्रवालः स्यात्ककुभस्तु प्रसेवकः ॥
कोलम्बकस्तु कायोऽस्या उपनाहो निबन्धनम् ॥ ७ ॥
वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः ॥

इदं ततादिकं चतुर्विधं वाद्यं वादित्रातोद्यनामकम् । वादित्रं आतोद्यं च नाम यस्य तत् । यदाह भरतः "ततं चैवावनद्धं च घनं सुषिरमेव च । चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम्" इति । मृदङ्गाः मुरजाः "मुरात् वेष्टनाज्जाताः" द्वे मृदङ्गस्य । बहुविधत्वाद्बहुवचनम् । अङ्क्यः आलिङ्ग्यः ऊर्ध्वकः । "निर्वकारमपि" एते त्रयः मृदङ्गस्य भेदाः । अङ्क एव निधाय वादनादङ्क्यः । आलिङ्ग्य वादनादालिङ्ग्यः । ऊर्ध्वीकृतेन मुखेन वादनादूर्ध्वकः । किंच । "हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वकः । आलिङ्ग्यश्चैव गोपुच्छसमानः परिकीर्तितः" इति ॥ ५ ॥ यशसे य आदौ पटहो वाद्यते स यशःपटहः । स एव ढक्केत्युच्यते । द्वे ढक्कायाः । भेरी "भेरिः" दुन्दुभिः । दुन्दुं इति शब्देन भाति । द्वे दुन्दुभेः । "भेर्यामानकदुन्दुभी" इत्यपि पाठः । आनकः पटहः द्वे पटहस्य । अस्त्रीति पूर्वान्वयि । "पटहो ना समारम्भे आनके पुन्नपुंसकम्" इति मेदिनी । वीणादि वाद्यते येन तद्धनुराकृति काष्ठं कोण उच्यते । "कोणो वाद्यप्रभेदे स्याद्वीणादीनां च वादने । एकदेशे गृहादीनामस्त्रे च लगुडेऽपि च" इति मेदिनी ॥ ६ ॥ वीणाया दण्डः प्रवालः एकम् । ककुभः प्रसेवकः द्वे वीणादण्डादधो दारुमयं भाण्डं शब्दगाम्भीर्यार्थं यच्चर्मणाच्छाद्यते तस्य । वीणाप्रान्तस्थवक्रकाष्ठविशेषस्येत्यन्ये । अस्या वीणायाः कायः तन्त्रीरहितो दण्डादिसमुदायः कोलम्बक इत्युच्यते एकम् । यत्र वीणाप्रान्ते तन्त्र्यो निबध्यन्ते तत् निबन्धनं उपनाह इत्युच्यते एकम् ॥ ७ ॥ डमरुप्रभृतयो वाद्यविशेषा ज्ञेयाः । तत्र डमरुः कापालिकादीनां वाद्यम् । स एव विपुलो मड्डुः । डिण्डिमः दंवडी इति प्रसिद्धः । झर्झरः झांगड इति प्रसिद्धः । मर्दलो मृदङ्गसदृशो वाद्यभेदः । पणवोऽप्येकः । अन्ये च हुडुकगोमुखादयः सन्ति । नर्तकी

मर्द्दलः पणवोऽन्ये च नर्तकीलासिके समे ॥ ८ ॥

विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ॥
तालः कालक्रियामानं लयः साम्यमथास्त्रियाम् ॥ ९ ॥

ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने ॥
तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् ॥ १० ॥

भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः ॥
स्त्रीवेषधारी पुरुषो नाट्योक्तौ गणिकाज्जुका ॥ ११ ॥

भगिनीपतिरावुत्तो भावो विद्वानथावुकः ॥
जनको युवराजस्तु कुमारो भर्तृदारकः ॥ १२ ॥

लासिका । "वाच्यलिङ्गत्वात् नर्तको लासकः समाविति पुंस्त्वनिर्देशे कर्तव्ये स्त्रीलिङ्गनिर्देशो ङीप्टापोर्विवेकार्थः" द्वे नर्तक्याः ॥ ८ ॥ करचरणादिभिर्यद्विलम्बितं नृत्यादिकं तत्तत्त्वमित्युच्यते एकम् । यत् द्रुतं शीघ्रं नृत्यादिकं तत् ओघ इत्युच्यते एकम् । यन्मध्यं न विलम्बितं नापि द्रुतं तद्धनमित्युच्यते एकम् । कालक्रिययोर्मानं नियमहेतुस्ताल इत्युच्यते एकम् । गीतवाद्यपादादिन्यासानां क्रियाकालयोः साम्यं लय इत्युच्यते एकम् ॥ ९ ॥ ताण्डवं तण्डुना प्रोक्तम् । अण् "ओर्गुणः" । नटनं नाट्यं लास्यं नृत्यं "नृत्तं" नर्तनं षट्कं नृत्यस्य । तत्र ताण्डवं क्लीबपुंसोः । नृत्यगीतवाद्यमितीदं त्रयं मिलित्वा तौर्यत्रिकमिति नाट्यमिति चोच्यते । "तूर्यं मुरजादि तत्र भवं तौर्यम् । तौर्योपलक्षितं त्रिकमिति विग्रहः" द्वे ॥ १० ॥ यः स्त्रीवेषधारी नर्तकः पुरुषः तत्र भ्रकुंसः भ्रुकुंसः भ्रूकुंसः भ्रुवोर्भ्रुवा वा कुंसो भाषणं शोभा वा यस्य इति त्रयमित्यर्थः । नाट्योक्तौ नाट्यप्रकरणे । अधिकारोऽयम् । प्रागङ्गहारात् । अज्जुकादिसंज्ञायाः नाट्यादन्यत्र प्रयोगो नास्तीत्यर्थः । या गणिका सा अज्जुका एकम् ॥ ११ ॥ भगिन्याः पतिः आवुत्त इत्युच्यते "आवृत्तोऽपि" एकम् । यो विद्वान्स भाव इत्युच्यते । भावयतीति भाव इति योगव्युत्पत्त्या नाट्यादन्यत्राप्येतादृशानां प्रयोगे न दोषः । एकम् । जनकस्तु आवुक इत्युच्यते । एकम् । युवराजस्तु कुमारः भर्तृदारकः द्वयम् ॥ १२ ॥ राजा । भट्टारकः देवः द्वयं राज्ञः । तस्य राज्ञः सुता

राजा भट्टारको देवस्तत्सुता भर्तृदारिका ॥
देवी कृताभिषेकायामितरासु तु भट्टिनी ॥ १३ ॥
अब्रह्मण्यमवध्योक्तौ राजशालस्तु राष्ट्रियः ॥
अम्बा माताऽथ बाला स्याद्वासूरार्यस्तु मारिषः॥ १४ ॥
अत्तिका भगिनी ज्येष्ठा निष्ठानिर्वहणे समे॥
हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति ॥ १५ ॥

भर्तृदारिका एकम् । कृतोऽभिषेको यस्यास्तस्यां राज्ञ्यां देवीत्येकम् । इतरासु राज्ञीषु भट्टिनीत्येकम् । "भट्टिनी द्विजभार्यायां नाट्योक्त्यां राजयोषिति" इति रभसः । अत्र विशेषः शब्दार्णवे । "गणिकानुचरैरज्जुकेति नाम्ना नृपेण सा । युवराजस्तु सर्वेण कुमारो भर्तृदारकः । भट्टारको वा देवो वा वाच्यो भृत्यजनेन सः । ब्राह्मणेन तु नाम्नैव राजन्नित्यृषिभिः स च । वयस्य राजन्निति वा विदूषक इमं वदेत् । अभिषिक्ता तु राज्ञाऽसौ देवीत्यन्या तु भोगिनी । भट्टिनीत्यपरैरन्या नीचैर्गोस्वामिनीति सा" इति ॥ १३ ॥ अवध्यस्य वधानर्हस्य ब्राह्मणादेरुक्तौ दोषोक्तिकरणे अब्रह्मण्यमित्येकम् । राज्ञः शालः राष्ट्रिय उच्यते एकम् । अम्बा माता द्वे नाट्योक्तावित्यधिकारस्य प्रायिकत्वादम्बादीनामन्यत्रापि प्रयोगो ज्ञेयः । बाला वासूरिति द्वे कुमार्याः । आर्यः । " कर्तव्यमाचरन् काममकर्तव्यमनाचरन् । तिष्ठति प्राकृताचारो यः स आर्य इति स्मृतः" इति वसिष्ठः । मारिषः मर्षणात्सहनान्मारिषः । हिंसानिवारकत्वाद्वा । " मार्षकः " । "आर्ये मारिषमार्षकौ" इति शब्दार्णवः । द्वे आर्यस्य ॥ १४ ॥ या ज्येष्ठा भगिनी सा अत्तिका । अत्ता माता सैव । " अन्तिका " । "अत्तिका चान्तिका तथा" इति द्विरूपकोशः एकम् । निष्ठा निर्वहणं द्वे " मुखप्रतिमुखेगर्भावमर्शनिर्वहणाख्याः " पञ्च नाटके सन्धयः तत्र पञ्चमस्य सन्धेः । प्रस्तुतकथासमाप्तेरित्यन्ये । " निर्वहणं तु स्त्री संहारश्च समापने" इति शब्दार्णवः । समे इति समानार्थे । न तु समानलिङ्गे शब्दार्णवे लिङ्गभेददर्शनात् । नीचां प्रत्याह्वाने हण्डे इत्येकम् । चेटीं प्रति आह्वाने हञ्जे इत्येकम् । सखीं प्रत्याह्वाने हला । हलधातोर्बाहुलकादाप्रत्ययः । हलाशब्दष्टा-बन्तोऽपि सखीपर्यायः । तत्र पचाद्यच् । "बाला वासूः सखी हला" इति त्रिकाण्डे बोपालितात् । अमूनि त्रीण्यव्ययानि ॥ १५ ॥ "अङ्गस्य स्थानात्स्थानान्तरे

अङ्गहारोऽङ्गविक्षेपो व्यञ्जकाभिनयौ समौ ॥
निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके ॥ १६ ॥
शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ॥
बीभत्सरौद्रौ च रसाः शृङ्गारः शुचिरुज्ज्वलः ॥ १७ ॥
उत्साहवर्द्धनो वीरः कारुण्यं करुणा घृणा ॥
कृपा दयाऽनुकम्पा स्यादनुक्रोशोऽप्यथो हसः ॥ १८ ॥
हासो हास्यं च बीभत्सं विकृतं त्रिष्विदं द्वयम् ॥
विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम् ॥ १९ ॥
दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् ॥

नयनं" अङ्गहारः "अङ्गुल्यादिविन्यासः" अङ्गविक्षेपः द्वे नृत्यविशेषस्य । व्यञ्जकः अभिनयः द्वे हस्तादिभिर्मनोगतार्थप्रकाशनस्य । अङ्गेन निर्वृत्ते निष्पन्ने कर्मणि आङ्गिकम् । "भ्रूविक्षेपादि" । सत्त्वेन अन्तःकरणेन निर्वृत्ते सात्त्विकम् । "निर्वृत्तेऽक्षद्यूतादिभ्यः" इत्यनेन आङ्गिकसात्त्विकशब्दौ ठगन्तौ । तद्यथा "स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका गणाः" । इमे द्वे अपि त्रिषु ॥ १६ ॥ नाटके हि रसाः अष्टावेवोक्तास्तानाह । शृङ्गारः । "शृङ्गारो गजमण्डने । सुरते रसभेदे च शृङ्गारं नागसंभवे" इति हैमः । वीरः करुणः अद्भुतः हास्यः भयानकः बीभत्सः रौद्रः एतेऽष्टौ रसा ज्ञेयाः । रस्यन्ते इति रसाः । "रस आस्वादने" । चशब्दाच्छान्तोऽपि नवमः । वात्सल्यं दशमः । शृङ्गारः शुचिः उज्ज्वलः त्रयं शृङ्गारस्य ॥ १७ ॥ उत्साहवर्द्धनः । उत्साहेन वर्धते उत्साहं वर्धयति वा नन्द्यादिः । वीरः द्वे वीरस्य । कारुण्यं करुणा घृणा । "घृणा तु स्याज्जुगुप्सायां करुणायाम्" इति हैमः । कृपा दया अनुकम्पा अनुक्रोशः सप्तकं करुणस्य । हसः ॥ १८ ॥ हासः हास्यं त्रयं हासस्य । बीभत्सं विकृतम् । "वैकृतोऽपि" । "विकृतोऽप्याग्रहायण्यामग्रहायणम्" इति शब्दार्णवः । द्वे बीभत्सस्य । इदं द्वयं रसे पुंसि तद्वति त्रिषु । विस्मयः अद्भुतम् । इदमव्ययम् । आश्चर्यं चित्रं चत्वारि अद्भुतस्य । भैरवम् ॥ १९ ॥ दारुणं भीषणं भीष्मम् । "भीष्मो रुद्रे च गाङ्गेये राक्षसे च भयंकरः" इति हैमः । घोरं भीमं भयानकं भयंकरं प्रतिभयं नवकं भयानकस्य । रौद्रं उग्रं द्वे रौद्रस्य । अमी अद्भुतादय उग्रान्ताश्चतुर्दश शब्दाः रसे पुंसि । शृङ्गारवीरेत्या-

20-23



भयंकरं प्रतिभयं रौद्रं तूग्रममी त्रिषु ॥ २० ॥
चतुर्दश दरस्त्रासो भीतिर्भीः साध्वसं भयम् ॥
विकारो मानसो भावोऽनुभावो भावबोधकः ॥ २१ ॥
गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नतिः ॥
("दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः ॥") (१)
अनादरः परिभवः परीभावस्तिरस्क्रिया ॥ २२ ॥
रीढावमाननावज्ञावहेलनमसूक्षणम् ॥
मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जासाऽपत्रपाऽन्यतः ॥ २३ ॥
क्षान्तिस्तितिक्षाऽभिध्या तु परस्य विषये स्पृहा ॥

दिश्लोके पुंस्त्वदर्शनात् । अभिन्नलिङ्गानामेव द्वन्द्वप्रतिज्ञानात् । तद्वति तु त्रिषु वाच्यलिङ्गाः ॥ २० ॥ रसानुक्त्वा तदनुगुणत्वेनोच्चावचान् भावानभिधत्ते । दरः । "दरः स्याद्भयगर्तयोः" इति । त्रासः भीतिः भीः साध्वसं भयम् । "भिया" । "स्यादर्तनमृतीया च गर्हा चाथ भयं भिया" इति शब्दार्णवः ।" षट्कं भयस्य । मानसः मनःसंबन्धिविकारः भाव उच्यते एकम् । "भावयति करोति रसानिति भावः ।" यो भावबोधकः चित्तविकारस्य प्रकाशकः कटाक्षादिः सोऽनुभाव इत्युच्यते एकम् ॥ २१ ॥ गर्वः अभिमानः अहंकारः त्रयं गर्वस्य । अहमिति करण-महंकारः । चित्तस्य समुन्नतिः परस्मादुत्कर्षचिन्तनेनौन्नत्यं मान उच्यते एक-म् । गर्वादयः पञ्चापि पर्याया इति तु युक्तम् । दर्पादि षट्कं मदस्य । अना-दरः परिभवः परीभावः । उपसर्गेति घञि बहुलं दीर्घः । तिरस्क्रिया ॥ २२ ॥ रीढा अवमानना अवज्ञा अवहेलनं असूक्षणं ( असूर्क्षणमित्यपि ) नवकमना-दरस्य । मन्दाक्षं ह्रीः त्रपा व्रीडा लज्जा पञ्च लज्जायाः । घञि व्रीडोऽपि । "गण्डू-षगर्जभुजजागरहारकीलज्वालाझटारभसवर्तकगर्द्धशङ्काः । व्रीडादयश्च वरटश्च वराटकश्च उत्कण्ठबाणकरकाश्च समावयाश्च" इति स्त्रीपुल्लिङ्गकथने रभसः । सा लज्जाऽन्यतः परस्मात् चेदपत्रपा एकम् ॥ २३ ॥ क्षान्तिः तितिक्षा । तिजेः क्षमायां सन् अप्रत्ययः टाप् । द्वे पराभ्युदयसहनस्य । परस्य विषये परकीयधने स्पृहाऽभिध्या । परस्य विषयस्पृहेत्यपि पाठः । तत्र परस्य विषयविषयि-णीच्छेत्यर्थः एकम् । अभिचारेण ध्यानं अभिध्या । अक्षान्तिः ईर्ष्या

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

अक्षान्तिरीर्ष्याऽसूया तु दोषारोपो गुणेष्वपि ॥ २४ ॥
वैरं विरोधो विद्वेषो मन्युशोकौ तु शुक् स्त्रियाम् ॥
पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि ॥ २५ ॥
कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ ॥
शुचौ तु चरिते शीलमुन्मादश्चित्तविभ्रमः ॥ २६ ॥
प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदम् ॥
इच्छा काङ्क्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः ॥ २७ ॥
कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयोः ॥
उपाधिर्ना धर्मचिन्ता पुंस्याधिर्मानसी व्यथा ॥ २८ ॥
स्याच्चिन्ता स्मृतिराध्यानमुत्कण्ठोत्कलिके समे ॥

द्वे पराभ्युदयासहनस्य । गुणेष्वपि दोषारोपः असूया । कण्ड्वादियगन्तादकारः । एकम् ॥ २४ ॥ वैरं विरोधः विद्वेषः त्रयं वैरस्य । मन्युः शोकः शुक् त्रयं शोकस्य । शुक् चान्ता । पश्चात्तापः अनुतापः विप्रतीसारः त्रयं पश्चात्तापस्य ॥ २५ ॥ कोपः क्रोधः अमर्षः रोषः प्रतिघः रुट् क्रुध् सप्तकं क्रोधस्य । तत्र रुट् षान्ता स्त्रियौ स्त्रीलिङ्गे । रुट्क्रुधौ टाबन्तावपि । "क्रोधो भामः क्रुधा रुषा" इति शब्दार्णवः ॥ शुचौ शुद्धे चरिते आचरणे शीलं एकम् । उन्मादः चित्तविभ्रमः द्वे चेतसोऽनवस्थितेः ॥२६॥ प्रेमा प्रियता हार्दं प्रेम स्नेहः पञ्च प्रेम्णः । तत्र प्रेमा ना पुमान् स्नेहश्च । लिङ्गस्योक्तत्वात् संकरो न दोषाय । प्रेम क्लीबे । दोहदं इच्छा काङ्क्षा स्पृहा ईहा तृट् वाञ्छा लिप्सा मनोरथः ॥ २७ ॥ कामः अभिलाषः तर्षः द्वादश स्पृहायाः । तत्र दोहदं गर्भिणीच्छायामिच्छामात्रेऽपि दोहदम् । तृट् षान्ता । स तर्षो महांश्चेल्लालसा । द्वयोः स्त्रीपुंसयोः । उपाधिः धर्मचिन्ता द्वे धर्मचिन्तनस्य । तत्रोपाधिः पुंसि । आधिः मानसी व्यथा द्वे मनःपीडायाः । आधिरुच्यते पुंसि ॥ २८ ॥ चिन्ता स्मृतिः आध्यानं त्रयं स्मरणस्य । उत्कण्ठा उत्कलिका द्वे उत्कण्ठायाः । "चिन्ता तु स्मृतिराध्यानं स्मरणं सस्पृहे पुनः । उत्कण्ठोत्कलिके तस्मिन्नभिध्या तूभयोरपि" इति शब्दार्णवः । उत्साहः अध्यवसायः द्वे उत्साहस्य । येन कृत्वा असाध्यसाधनेऽप्युद्यतो भवति । स

29-31



उत्साहोऽध्यवसायः स्यात्सवीर्यमतिशक्तिभाक् ॥ २९ ॥
कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे ॥
कुसृतिर्निकृतिः शाठ्यं प्रमादोऽनवधानता ॥ ३० ॥
कौतूहलं कौतुकं च कुतुकं च कुतूहलम् ॥
स्त्रीणां विलासविब्बोकविभ्रमा ललितं तथा ॥ ३१ ॥
हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः ॥

उत्साहोऽतिशक्तिभाक् सातिशक्तिश्चेद्वीर्यमुच्यते । "अतिशयशक्तिर्वीर्या" इति त्वमरमालायां स्त्रीत्वम् एकम् ॥ २९ ॥ कपटः व्याजः दम्भः उपधिः छद्म कैतवम् । कितवस्य कर्म । युवादित्वादण् । "कैतवं द्यूतदम्भयोः" इति हैमः । कुसृतिः निकृतिः शाठ्यं नव शाठ्यस्य । "शठ कैतवे" । कपटः पुन्नपुंसकयोः । प्रमादः अनवधानता द्वे कर्तव्यानवधानस्य ॥ ३० ॥ कौतूहलं कौतुकं कुतुकं कुतूहलं चत्वारि कौतुकस्य । विलासः विव्वोकः विभ्रमः ललितम् ॥ ३१ ॥ हेला लीला अमी स्त्रीणां शृङ्गारभावजाः शृङ्गाररससमुद्भूताः क्रियाश्चेष्टाः षडमी हावा उच्यन्ते एकैकम् । तत्र रामानयनवदनभ्रूप्रभृतीनां यः कश्चिदुत्पद्यते विशेषः स विलासः । गर्वाभिमानसंभूतो विकारोऽनादरात्मको विव्वोकः । वाग्वस्त्रभूषणादीनां स्थानविपर्यासो विभ्रमः । सकलाङ्गसमीचीनविन्यासो ललितम् । अवगणनापूर्वकमभिनयप्रदर्शनं हेला । प्रियभूषणवचनाद्यनुकृतिर्लीला । तत्र रामादिलीलान्तस्य मूलं त्वेवम् । "विलासोऽङ्गे विशेषो यः प्रियाप्तावासनादिषु । विव्वोकोऽभिमतप्राप्तावपि गर्वादनादरः । चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मतः । अनाचार्योपदिष्टं स्याल्ललितं रतिचेष्टितम् । स्याद्भावसूचको हावो हेलास्यैवानुभावनम् । प्रौढेच्छा सुरते हेलेति वा । प्रियस्यानुकृतिर्लीला श्लिष्टा वाग्वेषचेष्टितैः" । इतिशब्दात्प्रकारार्थादन्येऽपि ज्ञेयाः । "लीला विलासो विच्छित्तिर्विभ्रमः किलकिंचितम् । मोट्टायितं कुट्टमितं विव्वोको ललितं तथा । विहृतं चेति मन्तव्या दश स्त्रीणां स्वभावजाः" इति नाटकरत्नकोशः । विच्छित्तिः । मण्डनानादरन्यासो विच्छित्ती रूपदर्पतः । किलकिंचितम् । हर्षादुदितगीतादिव्यामिश्रं किलकिंचितम् । मोट्टायितम् । मोट्टायितं प्रियं स्मृत्वा साङ्गभङ्गं विजृम्भणम् । कुट्टमितम् । दुःखोपचारः सौख्येऽपि हर्षात्कुट्टमितं

द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च ॥ ३२॥
व्याजोऽपदेशो लक्ष्यं च क्रीडा खेला च कूर्दनम् ॥
घर्मो निदाघः स्वेदः स्यात्प्रलयो नष्टचेष्टता ॥ ३३ ॥
अवहित्थाकारगुप्तिः समौ संवेगसंभ्रमौ ॥
स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक् स्मितम् ॥३४॥
मध्यमः स्याद्विहसितं रोमाञ्चो रोमहर्षणम् ॥
क्रन्दितं रुदितं क्रुष्टं जृम्भस्तु त्रिषु जृम्भणम् ॥ ३५ ॥

मतम् । विहृतम् । वक्तव्याभाषणव्याजाद्विहृतं दर्शितेङ्गितम् ।" द्रवः केलिः परीहासः । "परिहासः" ।"उपसर्गस्य घञि" इति बहुलं दीर्घः । क्रीडा लीला "लीलेत्यत्र खेलेति केचित्" नामषट्कं क्रीडामात्रस्य । केलिः पुंसि । भिन्नलिङ्गानां द्वन्द्वाभावात् ॥ ३२ ॥ अभीप्सितार्थसिद्ध्यर्थमर्थान्तरानुष्ठानं व्याजः । घञ् । अजेर्वीभावो न । तत्र व्याजः अपदेशः लक्ष्यमिति त्रयं स्वरूपाच्छादनस्य । लक्षमपि । "लक्ष्यं स्यादपदेशेऽपि शरव्येऽपि नपुंसकम्" इत्युक्तम् । व्याख्यायां च न ना लक्षं क्लीबं व्याजशरव्ययोरिति मूर्द्धन्यान्ते रभसः । क्रीडा खेला कूर्दनं त्रयं बाललीलायाः । घर्मः निदाघः नितरां दह्यतेऽनेनेति । स्वेदः त्रयं स्वेदस्य । प्रलयः नष्टचेष्टता द्वे परिस्पन्दनाशस्य ॥ ३३ ॥ अवहित्था आकारगुप्तिः द्वे शोकादिजनितमुखग्लान्यादेः आकारगोपनस्य । संवेगः संभ्रमः द्वे हर्षादिना कर्मसु त्वरणस्य । सोत्प्रासः साभिप्रायो हासः । उत्प्रासेनाधिक्येन क्षपणेन वा सहित इति वा । आच्छुरितकमुच्यते एकं "परमस्यामर्षजनकसशब्दहासस्य ।" स हासो मनाक् ईषत् चेत्स्मितमुच्यते । " ईषद्विकसितैर्दन्तैः कटाक्षैः सौष्ठवान्वितम् । अवेक्षितद्विजद्वारमुत्तमानां स्मितं भवेत् " ॥ ३४ ॥ स हासो मध्यमश्चेदनल्पाधिकस्तर्हि विहसितं स्यात् । " आकुञ्चितकपोलाक्षं सस्वनं निःस्वनं तथा । प्रस्तावोत्थं सानुरागमाहुर्विहसितं बुधाः" ॥ एकम् । रोमाञ्चः रोमहर्षणम् । पुलककण्ठकरोमविक्रियारोमोद्गमाश्चात्रैव । द्वे रोमोद्गमस्य । क्रन्दितं रुदितं क्रुष्टं त्रीणि रुदितस्य । जृम्भः जृम्भणं द्वे जृम्भिकायाः । जांभई इति ख्यातायाः । तत्र जृम्भस्त्रिषु ॥ ३५ ॥ विप्रलम्भः विसंवादः द्वे वञ्चनायुक्तभाषणस्य । अङ्गीकृतासंपादनस्येति वा । रिङ्गणं " रिङ्खणं " स्खलनं द्वे स्वधर्मादेश्चलनस्य ।

विप्रलम्भो विसंवादो रिङ्गणं स्खलनं समे ॥
स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ॥ ३६ ॥

तन्द्री प्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम् ॥
अदृष्टिः स्यादसौम्येऽक्ष्णि संसिद्धिप्रकृती त्विमे ॥ ३७ ॥

स्वरूपं च स्वभावश्च निसर्गश्चाथ वेपथुः ॥
कम्पोऽथ क्षण उद्धर्षो मह उद्धव उत्सवः ॥ ३८ ॥

॥ इति नाट्यवर्गः ॥ ७ ॥

अधोभुवनपातालं बलिसद्म रसातलम् ॥
नागलोकोऽथ कुहरं सुषिरं विवरं बिलम् ॥ १ ॥
छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा सुषिः ॥

बालानां हस्तपादगमनस्येत्यन्ये । राङ्गणे इति लौकिकभाषायां प्रसिद्धम् । निद्रा शयनं स्वापः स्वप्नः संवेशः पञ्चकं निद्रायाः ॥ ३६ ॥ तन्द्री "तन्द्रिः तन्द्रा" प्रमीला द्वे निद्राया आदौ अन्ते च यदालस्यं तस्य । अत्यन्तश्रमादिना सर्वेन्द्रियासामर्थ्यस्येति वा । भ्रकुटिः भ्रुकुटिः भ्रूकुटिः । भ्रुवोः कुटिः कौटिल्यम् । पृषोदरादित्वादिकारे भृकुटीत्यपि । त्रयं क्रोधादिजनितभ्रूवक्रतायाः । भ्रकुंसवत् त्रैरूप्यम् । असौम्येऽक्ष्णि सरोषे चक्षुषि अदृष्टिरित्येकम् । असौम्ये असुन्दरे वा विरुद्धा दृष्टिरदृष्टिः क्रूरदृष्टिरित्यर्थः । संसिद्धिः प्रकृतिः ॥ ३७ ॥ स्वरूपं स्वभावः निसर्गः पञ्च स्वभावस्य । इमे इति द्वयोः स्त्रीत्वबोधनार्थमुक्तम् । वेपथुः कम्पः द्वे कम्पस्य । क्षणः । "क्षणः कालविशेषे स्यात्पर्वण्यवसरे मदे । व्यापारविकलत्वे च परतन्त्रत्वमध्ययोः" इति हैमः । उद्धर्षः महः उद्धवः उत्सवः पञ्च उत्सवस्य । महोऽदन्तः ॥ ३८ ॥ इति नाट्यवर्गः ॥ ७ ॥ अधोभुवनं अधश्च तद्भुवनं च । पातालं बलिसद्म रसातलं नागलोकः पञ्च पातालस्य । कुहरं सुषिरं तालव्यादिरपि । विवरं बिलम् ॥ १ ॥ छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं तालव्यादि । वपा उप्यते यत्र । भिदादित्वादङ् । स्त्रियाम् । सुषिः "शुषिः" एकादश छिद्रमात्रस्य । सुषिः स्त्री । भुवि यत् श्वभ्रं तत्र गर्तोऽवट इति द्वयम् । "गर्तो-

गर्तावटौ भुवि श्वभ्रे सरन्ध्रे सुषिरं त्रिषु ॥ २ ॥
अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः ॥
ध्वान्ते गाढेऽन्धतमसं क्षीणेऽवतमसं तमः ॥ ३ ॥
विष्वक् संतमसं नागाः काद्रवेयास्तदीश्वरः ॥
शेषोऽनन्तो वासुकिस्तु सर्पराजोऽथ गोनसे ॥ ४ ॥
तिलित्सः स्यादजगरे शयुर्वाहस इत्युभौ ॥
अलगर्दो जलव्यालः समौ राजिलडुण्डुभौ ॥ ५ ॥
मालुधानो मातुलाहिर्निर्मुक्तो मुक्तकञ्चुकः ॥
सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजंगमः ॥ ६ ॥

ऽवटे कुकुन्दरे" इति हैमः। गर्तेत्यपि। "शठकुसरगर्तशृंगाः" इति स्त्रीपुंसप्रकरणे रभसात्। अवटिरितीदन्तोऽपि। सुषिरमित्येकं सरन्ध्रे रन्ध्रयुक्ते वस्तुनि। "शुषिरमपि" तत् त्रिषु वाच्यलिङ्गम् ॥ २ ॥ अन्धकारः ध्वान्तं तमिस्रं तिमिरं तमः पञ्चकमन्धकारस्य। तत्रान्धकारः क्लीबपुंसोः। गाढे ध्वान्ते सातिशये तमसि अन्धतमसमित्येकम्। क्षीणे ध्वान्तेऽवतमसमित्येकम् ॥ ३ ॥ विष्वक् तमः सर्वव्यापि ध्वान्तं संतमसमुच्यते। अन्धतमसावतमससंतमसशब्दा अकारान्ताः। "अवसमन्धेभ्यः" इत्यनेन समासान्तोऽच्। एकम्। नागाः काद्रवेयाः द्वे नागानाम्। तदीश्वरः नागानामीशः शेषोऽनन्त इति चोच्यते द्वयम्। वासुकिः सर्पराजः द्वे नागराजस्य। गोनसः "गोनासगोनसौ" इति त्रिकाण्डशेषः ॥ ४ ॥ तिलित्सः द्वे पाणस इति प्रसिद्धस्य। अजगरः शयुः वाहसः इति त्रयं अजगरस्य आर इति ख्यातस्य। अलगर्दः "अलगर्द्धः" जलव्यालः द्वे जलसर्पस्य। पाणसर्प, विरोळें इत्यादिप्रसिद्धस्य। राजिलः "राजीलः" डुण्डुभः तवर्गतृतीयादिरपि द्वे निर्विषस्य द्विमुखसर्पस्य मालुण्ड महांण्डुळ दुतोंडें इति ख्यातस्य। "निर्मुक्तो निर्विषः सर्पो राजिलः परिकीर्तितः" इत्यभिधानात् ॥ ५ ॥ मालुधानः मातुलाहिः द्वे खट्वाकारचित्रसर्पस्य आधोळें दिवड इति ख्यातस्य। निर्मुक्तः "निर्मुक्तस्त्यक्तसङ्गे स्यान्मुक्तकञ्चुकभोगिनि" इति कोशान्तरेऽपि। मुक्तकञ्चुकः द्वे त्यक्तकञ्चुकस्य। अत्र कञ्चुकस्त्वक्। सर्पः पृदाकुः भुजगः। भुजेन कौटिल्येन गच्छति। भुजङ्गः अहिः भुजङ्गमः ॥ ६ ॥ आशीविषः "आशीर्विषोऽपि" आशीस्तालु-

आशीविषो विषधरश्चक्री व्यालः सरीसृपः ॥
कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥ ७ ॥
दर्वीकरो दीर्घपृष्ठो दंदशूको बिलेशयः ॥
उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥ ८ ॥
( " लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा ॥
कुम्भीनसः फणधरो हरिर्भोगधरस्तथा ॥ १ ॥
अहेः शरीरं भोगः स्यादाशीरप्यहिदंष्ट्रिका ॥ १ ॥" (१)
त्रिष्वाहेयं विषास्थ्यादि स्फटायां तु फणा द्वयोः ॥
समौ कञ्चुकनिर्मोकौ क्ष्वेडस्तु गरलं विषम् ॥ ९ ॥
पुंसि क्लीबे च काकोलकालकूटहलाहलाः ॥
सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः ॥ १० ॥
दारदो वत्सनाभश्च विषभेदा अमी नव ॥

गता दंष्ट्रा तया विद्धो न जीवति । तत्र विषमस्येति विषधरः चक्री व्यालः । "व्यालो दुष्टगजे सर्पे खले श्वापदसिंहयोः" इति विश्वमेदिन्यौ । " व्याडोपि " सरीसृपः कुण्डली गूढपात् चक्षुःश्रवाः काकोदरः फणी ॥ ७ ॥ दर्वीकरः दीर्घपृष्ठः दंदशूकः बिलेशयः उरगः पन्नगः भोगी जिह्मगः पवनाशनः पञ्चविंशतिः सर्पस्य ॥ ८ ॥ लेलिहानाद्यष्टौ सर्पमात्रस्य । भोग इति सर्पशरीरस्यैकम् । आशीरित्यादि द्वे सर्पदंष्ट्रायाः । यद्विषास्थ्यादि अहिभवं तत् आहेयमुच्यते एकम् । स्त्रियाम् आहेयी । स्फटा "फटा" फणा द्वे फणायाः । द्वे अपि स्त्रीपुंसयोः । कञ्चुकः निर्मोकः । निश्चयेन मुच्यते इति द्वे सर्पत्वचः । क्ष्वेडः गरलं विषं पुंलिङ्गमपि पुंसि क्लीबे चेति विषेणापि संबध्यत इत्युक्तत्वात् त्रयं विषमात्रस्य ॥ ९ ॥ काकोलः कालकूटः हलाहलः सौराष्ट्रिकः शौक्लिकेयः ब्रह्मपुत्रः प्रदीपनः ॥ १० ॥ दारदः वत्सनाभः अमी काकोलाद्या नव स्थावरविषभेदाः । तत्र काकोलादि त्रयं क्लीबपुंसोः । काकोलः काकमेचकः । कालकूटः पृथुमालिदैत्यरक्तोद्भवः । हलाहलस्तालपत्राकृतिः । हालाहलं हालहलं हलाहलमित्यपि तत्-

१ इदं सार्धं पद्यं तालपत्रपुस्तकेऽपि नास्ति ॥

विषवैद्यो जाङ्गुलिको व्यालग्राह्यहितुण्डिकः ॥ ११ ॥

इति पातालभोगिवर्गः ॥ ८ ॥

स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् ॥
तद्भेदास्तपनावीचिमहारौरवरौरवाः ॥ १ ॥
संघातः कालसूत्रं चेत्याद्याः सत्त्वास्तु नारकाः ॥
प्रेता वैतरणी सिन्धुः स्यादलक्ष्मीस्तु निर्ऋतिः ॥ २ ॥

र्यायाः। "हालाहलं हालहलं वदन्त्यपि हलाहलम्" इति द्विरूपकोशः। "गोनास-गोनसौ हालाहलं हालहलं विषम्" इति त्रिकाण्डशेषः। सुराष्ट्रदेशे भवः सौराष्ट्रिकः। "सारोष्ट्रिक इत्यपि"। शुक्तिकायां भवः शौक्तिकेयः सोमल इति प्रसिद्धः। ब्रह्मणः पुत्रः ब्रह्मपुत्रः। यद्याज्ञवल्क्यः। "त्वं विष ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः" इति। प्रदीपयति जठरमिति प्रदीपनः। दरदि देशे भवो दारदः वत्सनाभः "बचनाग इति प्रसिद्धः"। विषवैद्यः जाङ्गुलिकः द्वे विषहारवैद्यस्य। जाङ्गुलीं विषविद्यामधीते वेद वा। उक्तं च। "परीक्षितं समश्नीयाज्जाङ्गुलीभिर्भिषग्वृतः" इति। व्यालग्राही अहितुण्डिकः अहेस्तुण्डं मुखं "तेन दीव्यति" इति ठक्। इति द्वे सर्पग्राहिणः "गारुडीति प्रसिद्धस्य"। "व्यालग्राह्याहितुण्डिक" इति पाठः। तत्र आहितुण्डिक इति ॥११॥ इति पातालभोगिवर्गः ॥ ८ ॥ नारकः नरकः निरयः दुर्गतिः चत्वारि नरकस्य। नरकभेदानाह। तपनः अवीचिः न विद्यते "वीचिः सुखं यत्र। "वीचिः स्वल्पतरङ्गे स्यादवकाशे सुखेऽपि च" इति विश्वः। महारौरवः रौरवः ॥ १ ॥ संघातः (संहार इत्यपि पाठः) कालसूत्रं इत्याद्यास्तपनादिनरकभेदाः। आद्यशब्दात्तामिस्रकुम्भीपाकादयः। तप्यते अनेन तपनः। जलवत् भासमानोऽप्यश्मपृष्ठरूपत्वान्न वीचयो यत्र सोऽवीचिः। रुरवो नाम क्रव्यादा अतिक्रूरास्तत्संबन्धी महानरको महारौरवः। रुरवः सर्पेभ्योऽतिहिंस्रा जन्तुविशेषास्तत्संबन्धी रौरवः। सम्यक् हन्यते यत्र संघातः। कालरूपाणि सूत्राणि यत्र तत्कालसूत्रं एकैकम्। नारकाः नरके भवाः सत्त्वाः प्राणिनः प्रेता उच्यन्ते एकम्। नारकी सिन्धुर्नदी वैतरणी ज्ञेया। विगतस्तरणिर्यत्र तत्र भवा। विगता तरणिर्नौर्यत्र वा एकम्। नारक्यलक्ष्मीरशोभा निर्ऋतिः उच्यते। निर्गता ऋतिर्घृणा यस्याः। "ऋतिर्गतौ घृणायां च श्रद्धायां च शुभेऽपि च" इति रभसः।

विष्टिराजूः कारणा तु यातना तीव्रवेदना ॥
पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम् ॥ ३ ॥
स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत् ॥

इति नरकवर्गः ॥ ९ ॥

समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः ॥
उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः ॥ १ ॥
रत्नाकरो जलनिधिर्यादःपतिरपांपतिः ॥
तस्य प्रभेदाः क्षीरोदो लवणोदस्तथाऽपरे ॥ २ ॥

एकम् ॥ २ ॥ विष्टिः आजूः द्वे नरके हठात्प्रक्षेपस्य । "निर्मूल्यकर्मकरणे" इति मुकुटः । मद्राख्यकरणस्येत्यन्ये । "विष्टिः कर्मकरेऽमूल्ये भद्राजूप्रेरणेषु च" इति हैमः । "आजूवेतनयोर्विष्टिः" इति शाश्वतः । कारणा यातना तीव्रवेदना त्रयं नरकपीडायाः । पीडा बाधा । आबाधेति वा छेदः । "आबाधा वेदना दुःखम्" इति हलायुधः । व्यथा दुःखं आमनस्यं "अमानस्यम्" । "प्रसूतिजममानस्यं कृच्छ्र-कष्टं कलाकुलम्" इति वाचस्पतिः । अत्र अमनसो भाव इति । मानस्याभिन्न-मिति वा विग्रहः । प्रसूतिजम् ॥ ३ ॥ कष्टं कृच्छ्रं आभीलं नव दुःखस्य । अत्र नवापि दुःखस्येत्येके । पीडादिचतुष्कं मनःपीडायाः । आमनस्यादि द्वयं वैमनस्यस्य । कष्टादि त्रयं शरीरपीडाया इति भेदः । एषां मध्ये यद्दुःखादिकं भेद्यगामि विशेष्यवृत्ति तत् त्रिषु । यथा । "सेयं सेवा दुःखा च बहुरूपा" । "सोऽयं दुःखः सुतोऽगुणः" । "सर्वं दुःखं विवेकिन" इति । भेद्यगामित्वाभावे तदुक्तलिङ्गमेव ॥ इति नरकवर्गः ॥ ९ ॥ समुद्रः । समीचीना उद्रा जलचरवि-शेषा यस्मिन् । सह मुद्रया मर्यादया वर्तते इति वा । "वोपसर्जन" इति सहस्य सः । अब्धिः अकूपारः पारावारः "परापारः" सरित्पतिः उदन्वान् उदधिः सिन्धुः । "सिन्धुर्वमथुदेशाब्धिनदे ना सरिति स्त्रियाम्" इति विश्वमेदिन्यौ ।" सरस्वान् सागरः अर्णवः । अर्णांसि उदकानि यत्र सन्ति । "अर्णसो लोपश्च" इति ॥ १ ॥ रत्नाकरः जलनिधिः यादःपतिः अपांपतिः पञ्चदश समुद्रमात्रस्य । तस्य समुद्रस्य प्रभेदाः । क्षीरोदः लवणोदः । तथा अपरे दध्युदघृतोदसुरो-देक्षूदस्वादूदाः । "लवणेक्षुसुरासर्पिर्दधिक्षीरजलाः समाः" इत्याद्युक्तेः

आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ॥
पयः कीलालममृतं जीवनं भुवनं वनम् ॥ ३ ॥
कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ॥
अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् ॥ ४ ॥
मेघपुष्पं घनरसस्त्रिषु द्वे आप्यमम्मयम् ॥
भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु ॥ ५ ॥
महत्सूल्लोलकल्लोलौ स्यादावर्तोऽम्भसां भ्रमः ॥
पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम् ॥ ६ ॥

एकैकम् ॥ २ ॥ आपः वाः वारि "वारं" सलिलं "सरिलं"। "सरिलं सलिलं जलम्" इति वाचस्पतिः। कमलं जलं पयः कीलालम्। "कीलालं रुधिरे तोये" इति कोशान्तरम्। अमृतं जीवनं भुवनं वनम्॥३॥ कबन्धं "कमन्धमिति वा" उदकं "दकमित्यपि"। "प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं दकंवा" इति हलायुधः। "कं दकं जलम्" इति त्रिकाण्डशेषः। अस्मिन्पक्षे कबन्धं च दकं पाथ इति पाठः। पाथः पुष्करं सर्वतोमुखम्। सर्वतो मुखानि यत्र सर्वदिग्गमनत्वात्। अम्भः अर्णः तोयं पानीयं नीरं "नारं" क्षीरं अम्बु शंबरं "संबरमिति दन्त्यादि" ॥ ४ ॥ मेघपुष्पं घनरसः सप्तविंशतिर्जलस्य। तत्र आपः स्त्रियां बहुत्वे च नित्यम्। वाः रेफान्ता। पूर्वोत्तरसाहचर्यात्स्त्रियां क्लीबे च। घनरसः पुंसि। शेषं क्लीबे। असुनि आपः सान्तं क्लीबे च। वारं नारमित्युभयमक्लीबम्। अत्र सर्वत्र संसारावर्तः प्रमाणम्। "नारं घनरसः पुमान्" इति शब्दार्णवः। घनरसमिति क्लीबमपि। "घनरसमम्बु क्षीरम्" इति रत्नकोशात्। "कृपीटं काण्डमस्त्री स्याज्जीवनीयं कुशं विषम्" इत्यपि। आप्यं अम्मयं द्वे जलविकारस्य त्रिषु। आप्या अम्मयी इत्यादि। भङ्गः तरङ्गः ऊर्मिः वीचिः चत्वारि लहर्याः। वा स्त्रियामिति ऊर्मिणा वीचिना च संबध्यते काकाक्षिवत्। ऊर्मिरेव स्त्रीपुंसयोः वीचिस्तु नित्यं स्त्रीत्येके ॥ ५ ॥ महत्सु ऊर्मिषु उल्लोलः कल्लोल इति द्वयम्। अम्भसां भ्रमः मण्डलाकारेण भ्रमणं आवर्तः स्यात् एकम्। भोंवरा इति लौकिकभाषायाम्। पृषन्ति बिन्दवः पृषतः विप्रुषः चत्वारि जलबिन्दूनाम्। तत्र पृषत् क्लीबे बिन्दुपृषतौ पुंसि। विप्रुट् स्त्री ॥ ६ ॥ चक्राणि। "वक्राण्यपि"। "वक्रः शनैश्चरे पुंसि पुटभेदे

चक्राणि पुटभेदाः स्युर्भ्रमाश्च जलनिर्गमाः ॥
कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ॥ ७ ॥

पारावारे परार्वाची तीरे पात्रं तदन्तरम् ॥
द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ॥ ८ ॥

तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम् ॥
निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ ॥ ९ ॥

जलोच्छ्वासाः परीवाहाः कूपकास्तु विदारकाः ॥

नपुंसकम्" । पुटभेदाः भ्रमाः जलनिर्गमाः चत्वारि यानि चक्राकारेण जलान्यधो यान्ति तेषाम् । "चक्रादिद्वयं चक्राकारेण जलानामधो यानस्य । भ्रमादि द्वयं जलनिःसरणजालकस्य । नद्यादौ अधःस्थजलस्योर्ध्वनिःसरणस्येति वा मतम् । कूलं रोधः तीरं प्रतीरं तटं पञ्च तीरस्य । रोधः सान्तम् । अदन्तोऽपि । "रोधः प्रोक्तश्च रोधसि" इति संसारावर्तः । तटं त्रिलिङ्गम् ॥७॥ परं च अर्वाक् च परार्वाची तीरे क्रमेण पारावारे उच्येते । नद्याः परतीरं पारं अवाक्तीरं आवारमित्यर्थः । एकैकम् । तयोः पारावारयोः अन्तरं मध्यं पात्रमुच्यते । "पात्रं तु कूलयोर्मध्ये पर्णे नृपतिमन्त्रिणि । योग्यभाजनयोर्यज्ञभाण्डे नाट्यानुकर्तरि" इति हैमः । एकम् । वारिणोऽन्तर्मध्ये यत्तटं तत् द्वीप इति अन्तरीपमिति चोच्यते । अस्त्रियामित्यु-भाभ्यां संबध्यते । द्वे । द्विर्गता आपोऽत्र स द्वीपः । अपां अन्तर्गतं अन्तरीपम् । द्वीपान्तरीपशब्दयोः समासान्तोऽच् । उभयत्रापि "द्व्यन्तरुप" इतीकारः । (बेट इति प्रसिद्धम् ) ॥ ८ ॥ तोयोत्थितं तोयक्रमेणोत्थं तत्पुलिनमुच्यते एकम् । सैकतं सिकतामयं द्वे वालुकाप्रचुरस्थानस्य । निषद्वरः जम्बालः पङ्कः शादः कर्दमः पञ्च कर्दमस्य । तत्र पङ्कः पुन्नपुंसकयोः ॥ ९ ॥ जलोच्छ्वासाः परीवाहाः "परिवाहाः" । द्वयं निर्गममार्गैः प्रवृद्धं जलं परिवहति तेषाम् । तथा च प्रयोगः । "उपार्जितानां वित्तानां त्याग एव हि रक्षणम् । तडागोदरसंस्थानां परीवाहा इवाम्भसाम्" इति । जलप्रवृद्धिरेव परीवाह इत्येके । कूपका विदारकाः द्वे शुष्कनद्यादौ हि जलार्थं गर्ताः क्रियन्ते तेषाम् । स्रोतोद्विधाकारिणः शिला-दयः कूपका इत्येके । नौतार्यं नावा तारितुमर्हं जलादौ नाव्यम् । एकम् । तत् त्रिषु । नौः तरणिः तरिः त्रयं नौकायाः । तरीरित्यपि लक्ष्मीवत् ।

नाव्यं त्रिलिङ्गं नौतार्ये स्त्रियां नौस्तरणिस्तरिः ॥ १० ॥
उडुपं तु प्लवः कोलः स्रोतोऽम्बुसरणं स्वतः ॥
आतरस्तरपण्यं स्याद्द्रोणी काष्ठाम्बुवाहिनी ॥ ११ ॥
सांयात्रिकः पोतवणिक्कर्णधारस्तु नाविकः ॥
नियामकाः पोतवाहाः कूपको गुणवृक्षकः ॥ १२ ॥
नौकादण्डः क्षेपणी स्यादरित्रं केनिपातकः ॥
अभ्रिः स्त्री काष्ठकुद्दालः सेकपात्रं तु सेचनम् ॥ १३ ॥ (१)

"कृदिकारात्" इति ङीषि तरणी तरी इत्यपि । "तरणी तरी" इति हैमः ॥१०॥ उडुपं प्लवः कोलः त्रयमल्पनौकायाः "होडी पडांव" इति ख्यातायाः । स्वतो यदम्बुसरणं जलगमनं तत्स्रोत उच्यते । सान्तमेकम् । "तालव्यादिरपि।" आतरः तरपण्यं द्वे नद्यादितरणे देयमूल्यस्य । काष्ठाम्बुवाहिनी काष्ठमयी जलवाहिनी सा द्रोणी उच्यते । "द्रुणिः द्रोणिः" काष्ठमुपलक्षणं पाषाणादेः । एकं "डोणी" इति ख्यातस्य ॥ ११ ॥ सांयात्रिकः । समुदितानां गमनं द्वीपान्तरगमनं वा संयात्रा सा प्रयोजनमस्यास्तीति । प्रयोजने ठक् इकादेशः । पोतवणिक् पोतेनोपलक्षितो वणिक् । मध्यमपदलोपी समासः । द्वे नौकया वाणिज्यकारिणः । कर्णधारः नाविकः द्वे अरित्रं धृत्वा यस्तारयति तस्य । नियामकाः पोतवाहाः द्वे पोतमध्यस्थितकाष्ठाग्रे दुष्टजन्त्वादिज्ञानाय स्थित्वा ये नियन्तुं शक्तास्तेषाम् । कूपकः गुणवृक्षकः गुणानां रज्जूनां वृक्षः द्वे रज्ज्वाद्याधारमध्यस्तम्भस्य "कुवा, डोलकाठी" इति ख्यातस्य ॥ १२ ॥ नौकादण्डः क्षेपणी "क्षेपणिः क्षिपणीरिति च" द्वे नौकावाहकदण्डस्य "वल्हें" इति ख्यातस्य । अरित्रं केनिपातकः । के जले निपातो यस्य । "हलदन्त" इति सप्तम्याः अलुक् । द्वे कर्णस्य "सुकाणू" इति ख्यातस्य । अभ्रिः "अभ्रीत्यपि" काष्ठकुद्दालः "काष्ठकूद्दालः" द्वे पोतादेर्मलापनयनार्थं काष्ठकुद्दालस्य "कुडती" इति ख्यातस्य । सेकपात्रं सेचनं द्वे चर्मादिरचितस्य जलोत्सर्जनपात्रस्य "बालदी" डोल इति ख्यातस्य। "यानपात्रं तु पोतोऽब्धिभवे त्रिषु समुद्रियम् । सामुद्रिको मनुष्योऽब्धिजाता सामुद्रिका च नौः" इति क्वचित् ॥१३॥ नावोऽर्धं अर्धनावमित्येकम् । तत्क्लीबे । "नावो द्विगोः" "अर्धाच्च" इति टच् ।

१ टीकास्थं यानपात्रं त्विति पद्यं ताळपत्रपुस्तकेऽत्रैव ( मूल पा॰ ) अस्ति ॥

क्लीबेऽर्धनावं नावोऽर्धेऽतीतनौकेऽतिनु त्रिषु ॥
त्रिष्वागाधात्प्रसन्नोऽच्छः कलुषोऽनच्छ आविलः ॥ १४ ॥
निम्नं गभीरं गम्भीरमुत्तानं तद्विपर्यये ॥
अगाधमतलस्पर्शे कैवर्ते दाशधीवरौ ॥ १५ ॥
आनायः पुंसि जालं स्याच्छणसूत्रं पवित्रकम् ॥
मत्स्याधानी कुवेणी स्याद्बडिशं मत्स्यवेधनम् ॥ १६ ॥
पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः ॥
विसारः शकुली चाथ गडकः शकुलार्भकः ॥ १७ ॥
सहस्रदंष्ट्रः पाठीन उलूपी शिशुकः समौ ॥
नलमीनश्चिलिचिमः प्रोष्ठी तु शफरी द्वयोः ॥ १८ ॥

अतीतनौके नौकामतीत्य वर्तमाने मनुष्यादौ अतिनु। अतीता नौर्येन । नपुंसकह्रस्वः। एकम्। त्रिलिङ्गम्। अतः परं अगाधात् अगाधशब्दमभिव्याप्य त्रिषु वाच्यलिङ्गा इत्यर्थः। प्रसन्नः अच्छः द्वे निर्मलस्य । कलुषः अनच्छः आविलः त्रयं मलमिश्रस्य ॥ १४॥ निम्नं गभीरं गम्भीरं त्रीणि गम्भीरस्य "खोल" इति ख्यातस्य । तद्विपर्यये गम्भीरादितरस्मिन् उत्तानमित्येकम् । उद्गतस्तानो विस्तारो यस्मात्। अगाधं अतलस्पर्शं द्वे अत्यन्तगम्भीरस्य । कैवर्तः दाशः " दासः " धीवरः त्रयं कैवर्तस्य ॥ १५ ॥ आनायः। आनीयन्ते मत्स्या अनेन। "जालमानाय" इति निपातनात् घञ्। जालं द्वे जालस्य । शणसूत्रं पवित्रकं द्वे शणसूत्रजालस्य। मत्स्याधानी कुवेणी द्वे मत्स्यबन्धनकरण्डिकायाः। बडिशं "बडिशा बडिशी। त्रयोऽपि लमध्या वा"। मत्स्यवेधनं द्वे मत्स्यवेधनस्य "गळ" इति ख्यातस्य ॥ १६ ॥ पृथुरोमा झषः मत्स्यः मीनः वैसारिणः अण्डजः विसारः शकुली अष्टौ मत्स्यस्य । गडकः "गण्डकः" शकुलार्भकः द्वे मत्स्यविशेषस्य। "गर" इति प्रसिद्धस्य ॥१७॥ सहस्रदंष्ट्रः पाठीनः द्वे बहुदंष्ट्रस्य मत्स्यविशेषस्य। उलूपी शिशुकः द्वे शिशुमाराकारमत्स्यस्य । नलमीनः "डलयोरभेदाड्डमीनोऽपि" । चिलिचिमः "चिलिचिमिः"। "नलमीनश्चिलिचिमिः" इति गोपालितः द्वे जलतृणचारिमत्स्यविशेषस्य "वेगसा" इति प्रसिद्धस्य। प्रोष्ठी शफरी द्वे "सहरी" इति ख्यातस्य क्षुद्रमत्स्य-

क्षुद्राण्डमत्स्यसंघातः पोताधानमथो झषाः ॥
रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ॥ १९ ॥
तिमिंगिलादयश्चाथ यादांसि जलजन्तवः ॥
तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः ॥ २० ॥
स्यात्कुलीरः कर्कटकः कूर्मे कमठकच्छपौ ॥
ग्राहोऽवहारो नक्रस्तु कुम्भीरोऽथ महीलता ॥ २१ ॥
गण्डूपदः किञ्चुलको निहाका गोधिका समे ॥

विशेषस्य । पुंसि तु प्रोष्ठः शफरः ॥ १८ ॥ क्षुद्राश्च ते अण्डमत्स्याश्च तेषां संघातः पोताधानमुच्यते एकम् । अथो झषा मत्स्यविशेषा वक्ष्यन्ते न तु पर्यायाः । रोहितः "रोही" इति प्रसिद्धस्य । मद्गुरः "मङ्गरा" इति प्रसिद्धः । शालः "सालोऽपि" चक्राङ्कितो मत्स्यः । राजीवः "राया" इति प्रसिद्धः । शकुलः "अतिवेगान् "सौरा" इति प्रसिद्धः" । तिमिः ॥ १९ ॥ तिमिंगिलः । आदिशब्दात्संघावर्तादयोऽन्ये । एकैकम् । यादांसि जलजन्तवः द्वे जलचरमात्रस्य । तद्भेदाः जलजन्तूनां विशेषाः । शिशुमारः "शिरस" इति ख्यातः । "शिशुमारोऽम्बुसंभूतजन्तौ तारात्मकेऽच्युत" इति विश्वमेदिन्यौ । उद्रः "हूद" इति प्रसिद्धः । शङ्कुः । "सफू" इति प्रसिद्धः । मकरो "मगर" इति प्रसिद्धः । आदिशब्दाज्जलहस्त्यादयः ॥ २० ॥ कुलीरः "कुलिरः" कर्कटकः करकटः कर्कटः कर्कडः । "कर्कडः कुलिरे" इति हैमः द्वे "कुरलें खेंकडा" इति ख्यातस्य । कूर्मः कमठः कच्छपः "अन्यत्र कच्छपीत्यपि पाठः" । "कच्छपी वल्लकीभेदे तुलौ क्षुद्रगदान्तरे । पुंसि निध्यन्तरे कूर्मे मल्लबन्धान्तरेऽपि च" इति विश्वमेदिन्यौ । त्रीणि "कांसव" इति प्रसिद्धस्य । ग्राहः अवहारः द्वे गोह "नाडेसावज" इति ख्यातस्य । अवह्रियतेऽनेनेति । "अवहाराधारावाया-नामुपसंख्यानम्" इति घञ् । कर्तरि णो वा । अत्र अवराह इति पर्यायान्तरं दृश्यते तत् अवपूर्वकाद्रह त्याग इत्यस्मात् घञि बोध्यम् । "अवहारस्तु युद्धादिविश्रान्तौ ग्राहचोरयोः" इति हैमः । नक्रः कुम्भीरः द्वे नक्रस्य ग्राहविशेषस्य "सुसर" इति ख्यातस्य । कुम्भी हस्ती तमीरयति कुम्भीरः । महीलता ॥ २१ ॥ गण्डूपदः किञ्चुलकः "किंचिलिकः किंचुलुकः" त्रीणि जलचरभेदस्य "केंचू कादू, दानवार, गांडोळ" इति ख्यातस्य । गण्डो ग्रन्थयः पदान्यस्य गण्डू-

22-25



रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ॥ २२ ॥
मुक्तास्फोटः स्त्रियां शुक्तिः शंखः स्यात्कम्बुरस्त्रियौ ॥
क्षुद्रशंखाः शंखनखाः शम्बूका जलशुक्तयः ॥ २३ ॥
भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः ॥
शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः ॥ २४ ॥
मद्गुरस्य प्रिया शृङ्गी दुर्नामा दीर्घकोशिका ॥
जलाशया जलाधारास्तत्रागाधजलो ह्रदः ॥ २५ ॥
आहावस्तु निपानं स्यादुपकूपजलाशये ॥

पदः निहाका गोधिका द्वे जलगोधिकायाः "पाण्यांतील घोरपड" इति ख्यातायाः । रक्तपा जलौका जलौकसः त्रीणि "जळू" इति ख्यातस्य । तत्र जलौकसः स्त्रीत्वे बहुत्वे च नित्यम् । "ओक उचः के" इति निपातितोऽदन्त ओकशब्दः । "जलौका तु जलौकाः स्याज्जलूका च जलौकसि" इति संसारावर्तोद्बहुवचनं प्रायिकम् । "जलौकापि जलौकाः स्याज्जलूका जलजन्तुका" इति तारपालोऽपि ॥ २२ ॥ मुक्तास्फोटः मुक्ताः मौक्तिकानि स्फुटन्ति यत्र । "स्फुट विकसने" । शुक्तिः ` शुक्तिकायाः । शंखः कम्बुः द्वे शंखस्य । पुन्नपुंसकौ । क्षुद्रशंखाः शंखनखाः "शंखनकाः" द्वे सूक्ष्मशंखानाम् । जलशुक्तयः जलमात्रजाः शुक्तयः शम्बूका उच्यन्ते । "शम्बुकः शाम्बुकः शम्बुः" एकं क्षुद्रशुक्तिकानाम् । शम्बूकः स्त्रीपुंसयोः । "शम्बुका न नपुंसके" इति मेदिनी । "शम्बूकः शम्बुकः शम्बुपूर्वः कान्तस्तु सर्वदा । ककारेण विना शेषो दृश्यते ग्रन्थविस्तरः" इत्युत्पलिनी ॥ २३ ॥ भेकः मण्डूकः वर्षाभूः शालूरः । "परिसरकृकलासस्वेदसालूर इत्यूष्मविवेकाद्दन्त्यादिरपि ।" प्लवः दर्दुरः षट् भेकस्य । शिली गण्डूपदी द्वे स्वल्पगण्डूपदजातेः । भेकी वर्षाभ्वी "वर्षाभूः" द्वे क्षुद्रभेकजातेः । कमठी डुलिः द्वे कूर्म्याः ॥ २४ ॥ मद्गुराख्यस्य मत्स्यविशेषस्य प्रिया स्त्री शृङ्गीत्युच्यते एकम् । दुर्नामा "दुर्नाम्नी" दीर्घकोशिका द्वे जलूकाकारस्य जलचरविशेषस्य । जलाशयाः जलाधाराः द्वे तडागादीनाम् । तत्र जलाशयेष्वेव वक्ष्यमाणा विशेषाः । अगाधमतलस्पर्शं जलं यस्य स जलाशयो ह्रद उच्यते एकम् ॥ २५ ॥ उपकूपजलाशये कूपसमीपे यो जलाशयः कूपोद्धृताम्बुस्थापनीयशिलादिरचितो गर्तः यत्रत्यं जलं सुखेन

पुंस्येवाऽन्धुः प्रहिः कूप उदपानं तु पुंसि वा ॥ २६ ॥
नेमिस्त्रिकाऽस्य वीनाहो मुखबन्धनमस्य यत् ॥
पुष्करिण्यां तु खातं स्यादखातं देवखातकम् ॥ २७ ॥
पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः ॥
वेशन्तः पल्वलं चाल्पसरो वापी तु दीर्घिका ॥ २८ ॥
खेयं तु परिखाधारस्त्वंभसां यत्र धारणम् ॥
स्यादालवालमावालमावापोऽथनदी सरित् ॥ २९ ॥

गावः पिबन्ति तत्र आहावः निपानं इति द्वे । अन्धुः प्रहिः कूपः उदपानं चत्वारि "विहीर" इति ख्यातस्य । तत्रोदपानं पुंसि वा ॥२६॥ अस्य कूपस्य नेमिः अन्ते रज्ज्वादिधारणार्थं दारुयन्त्रं सा त्रिका । "त्रिका कूपस्य नेमौ स्यात्त्रिकं पृष्ठधरेऽस्त्रियाम्" इति विश्वमेदिन्यौ । एकं "हातराहाट" इति ख्यातस्य। अस्य कूपस्य पाषाणादिभिर्यन्मुखनिबन्धनं "नन्दीपट" इति ख्यातं स वीनाह उच्यते । "विनाहः" एकम् । पुष्करिणी खातं द्वे पुष्करिण्याः । अखातं देवखातकं "अखातो देवखातकः" इति पुंस्काण्डेऽमरदत्तात्पुंस्यपि द्वे अकृत्रिमखातस्य । देवद्वारस्थजलाशयस्येत्यन्ये ॥ २७ ॥ पद्माकरः तडागः कासारः सरसी सरः पञ्च तडागस्य । तत्र तडागे तटाक इति पाठः । स पुंनपुंसकयोः । "तटाकतडागावपि" । अत्र पद्मादि द्वे सपद्मागाधजलाशयस्य । कासारादित्रयं कृत्रिमपद्माकरस्येत्यपि मतम् । सरसी स्त्री । सरः सान्तम् । वेशन्तः पल्वलं "पल्वलः" । "वेशन्तः पल्वलोऽस्त्री" इति वाचस्पतिः । अल्पसरः त्रीणि स्वल्पसरसः । वापी "वापिः" । "वाप्यां वापिरपि स्मृता" इति द्विरूपकोशः । दीर्घिका द्वे "दीर्घी" इति ख्यातायाः अवरोहणवापिकायाः ॥ २८ ॥ खेयं परिखा द्वे दुर्गाद्बहिर्यत्परितः खातं क्रियते तस्य "चर" इति प्रसिद्धस्य ( खंदक इत्यपि प्रसिद्धिः ) । यत्र अम्भसां धारणं क्षेत्रादिसेकार्थं जलानां संग्रहणं स आधार उच्यते एकम् "धरण बांद" इति ख्यातस्य । यदुक्तम् । "अपां धारणमाधारस्तदल्पं चालवालकम्" इति । आलवालं "अलवालं" आवालं आवापः त्रीणि वृक्षादिमूले समन्ततोऽम्भसो धारणार्थं यद्वेष्टनं तस्य "अळें" इति ख्यातस्य । नदी सरित् ॥ २९ ॥ तरङ्गिणी शैवलिनी तटिनी ह्रादिनी "ह्रदिनी" धुनी स्रोतस्विनी "स्रोतस्वती" द्वीप-

29-33.



तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी ॥
स्रोतस्विनी द्वीपवती स्रवन्ती निम्नगापगा ॥ ३० ॥
("कूलंकषा निर्झरिणी रोधोवक्रा सरस्वती" ॥
गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा ॥ ) ( १ )
भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ॥ ३१ ॥
कालिन्दी सूर्यतनया यमुना शमनस्वसा ॥
रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ॥ ३२ ॥
करतोया सदानीरा बाहुदा सैतवाहिनी ॥
शतद्रुस्तु शुतुद्रिः स्याद्विपाशा तु विपाट् स्त्रियाम् ॥ ३३ ॥

वती स्रवन्ती निम्नगा आपगा । अपां समूहो आपं तेन गच्छति । समूहे अण् । गमेर्डः अपगेति ह्रस्वादिरपि । "विद्यादगारमागारमपगामापगामपि" इति द्विरूपकोशः । द्वादश नद्याः ॥ ३० ॥ कूलंकषादिसरस्वत्यन्तानि चत्वार्यपि नद्याः । गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा भागीरथी त्रिपथगा त्रिस्रोताः भीष्मसूः अष्टौ भागीरथ्याः । त्रिस्रोताः सान्ता ॥ ३१ ॥ कालिन्दी सूर्यतनया यमुना शमनस्वसा चत्वारि यमुनायाः । शमनस्वसा ऋदन्ता । रेवा नर्मदा सोमोद्भवा । सोमात् सोमवंशजात्पुरूरवस उद्भवति । अच् । तेनावतारितत्वात् । अथवा सोमाद्रुद्राद्भवति । मेकलकन्यका "मेखलकन्यका" चत्वारि नर्मदायाः । मेकलो ऋषिरद्रिर्वा तस्य कन्यका ॥ ३२ ॥ करतोया सदानीरा द्वे गौरीविवाहे कन्यादानोदकाज्जातायाः । यदुक्तम् । "प्रथमं कर्कटे देवी त्र्यहं गङ्गा रजस्वला । सर्वा रक्तवहा नद्यः करतोयाम्बुवाहिनी" इति । बाहुदा सैतवाहिनी द्वे कार्तवीर्यार्जुनेन याऽवतारिता तस्याः । बाहुदस्य कार्तवीर्यस्येयं बाहुदा । शतद्रुः शुतुद्रिः । द्वे शतरुद्रेति देशभाषया प्रसिद्धायाः । शुतुद्रीत्यपि पाठः । शुतुद्रि (२) स्तोममिति श्रुतेः पाठात् । वसिष्ठशापभयाच्छतधा द्रुता शतद्रुः । विपाशा विपाट् द्वे पाशमोचिनीति ख्यातायाः । वसिष्ठं विपाशयतीति विपाट् शकारान्ता ॥ ३३ ॥ शोणः हिरण्यवाहः द्वे नदविशेषस्य "शोणानदीति प्रसिद्धस्य ।"

---

१ इदं पद्यमपि तालपत्रपुस्तके नास्ति ॥ २ हे शुतुद्रि—इति संबोधनमिदम् ॥

शोणो हिरण्यवाहः स्यात्कुल्याऽल्पा कृत्रिमा सरित् ॥
शरावती वेत्रवती चन्द्रभागा सरस्वती ॥ ३४ ॥
कावेरी सरितोऽन्याश्च संभेदः सिन्धुसंगमः ॥
द्वयोः प्रणाली पयसः पदव्यां त्रिषु तूत्तरौ ॥ ३५ ॥
देविकायां सरय्वां च भवे दाविकसारवौ ॥
सौगन्धिकं तु कह्लारं हल्लकं रक्तसन्ध्यकम् ॥ ३६ ॥
स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च ॥
इन्दीवरं च नीलेऽस्मिन्सिते कुमुदकैरवे ॥ ३७ ॥
शालूकमेषां कन्दः स्याद्वारिपर्णी तु कुम्भिका ॥
जलनीली तु शेवालं शैवलोऽथ कुमुद्वती ॥ ३८ ॥

याऽल्पा कृत्रिमा सरित्सा कुल्या । तालव्यान्तम् । एकम् । "कुल्या नदी कुल्यमस्थि कुल्या वारिप्रणालिकेति धरणेर्नदीमात्रेऽपि । शरावती वेत्रवती चन्द्रभागा "चान्द्रभागा चान्द्रभागी चन्द्रभागी" । "चन्द्रभागा चान्द्रभागा चान्द्रभागी च सा मता। चन्द्रभागी च सैवोक्ता" इति द्विरूपकोशः । सरस्वती ॥३४॥ कावेरी एते पञ्च सरिद्विशेषाः । एकैकम् । अन्याश्च सरितः कौशिकीगण्डकीचर्मण्वतीगोदावेण्याद्याः सन्तीति शेषः । संभेदः सिन्धुसंगमः । द्वे नदीमेलकस्य नदीसंगमस्य । संभिद्यन्ते मिलन्त्यत्र संभेदः । पयसो जलस्य पदव्यां निर्गमनमार्गे मकरमुखादिरूपा प्रणालीत्येकम् । तत् द्वयोः पुंसि तु प्रणालः ॥ ३५ ॥ उत्तरौ दाविकसारवौ त्रिषु । देविकायां नद्यां भवं दाविकम् । सरय्वां नद्यां भवं सारवम् । "दाण्डिनायन" इति निपातनात्सारवशब्दः साधुः । एकैकम् । स्त्रियां तु दाविकी सारवी । सौगन्धिकं कह्लारं "कल्हारं" सन्ध्याविकासिनः शुक्लसरोजस्य । हल्लकं रक्तसन्ध्यकं द्वे रक्तकह्लारस्य । रक्तान्सन्धीन् अकति रक्तसन्ध्यकम् ॥ ३६ ॥ उत्पलं कुवलयं द्वे कुमुदस्य । कमलसाधारणस्येत्यन्ये । "कुवलं तूत्पलं कुवम्" इति त्रिकाण्डशेषः । नीलेऽस्मिन्नुत्पले नीलाम्बुजन्म इन्दीवरं इति द्वे । "इन्दिवरं इन्दीवारं इत्यपि ।" सिते शुभ्रेऽस्मिन्नुत्पले कुमुदं कैरवं द्वे । केरवस्य हंसस्येदं प्रियं कैरवम् ॥ ३७ ॥ एषां उत्पलविशेषाणां कन्दः शालूकं स्यात् एकम् । वारिपर्णी कुम्भिका द्वे जलकुम्भीति ख्यातायाः । जलनीली शेवालं शेवलः "शैवालः ।

38-42



कुमुदिन्या नलिन्यां तु बिसिनी पद्मिनीमुखाः ॥
वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ॥ ३९ ॥
सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ॥
पङ्केरुहं तामरसं सारसं सरसीरुहम् ॥ ४० ॥
बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च ॥
पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहे ॥ ४१ ॥
रक्तोत्पलं कोकनदं नालो नालमथास्त्रियाम् ॥
मृणालं बिसमब्जादिकदम्बे खण्डमस्त्रियाम् ॥ ४२ ॥
करहाटः शिफाकन्दः किञ्जल्कः केसरोऽस्त्रियाम् ॥

शेवालश्चापि शैवालः शेवलो जलनीलिका । त्रयं शेवाळ इति ख्यातस्य । कुमुद्वती ॥ ३८ ॥ कुमुदिनी द्वे कुमुदिन्याः कुमुदयुक्तदेशस्य च । नलिनी "नडिन्यपि" । नडाः सन्त्यत्रेति नडिनी । बिसिनी पद्मिनी त्रयं कमलिन्याः । मुखशब्दात्सरोजिनीप्रभृतयः । पद्मं नलिनं अरविन्दं महोत्पलम् ॥३९॥ सहस्रपत्रं कमलं शतपत्रं कुशेशयं पङ्केरुहं तामरसं सारसं । सरसीरुहम् ॥ ४० ॥ बिसप्रसूनं राजीवं पुष्करं अम्भोरुहं षोडश कमलस्य । वा पुंसीति षोडशभिरपि संबध्यते । तत्र पुण्डरीकं सिताम्भोजं द्वे सितकमलस्य । रक्तसरोरुहम् ॥४१॥ रक्तोत्पलं कोकनदं त्रयं रक्तकमलस्य । कोकनदमिति रक्तकुन्देऽपि वर्तते । यदाहुः । "रक्ताब्जे रक्तकुन्दे च बुधैः कोकनदं स्मृतम्" इति । नालः नालम् । "नाला नाली च" द्वे पद्मादिदण्डस्य । मृणालं बिसम् । मृणाली मृणालः बिशम् । "मृणालं नलदे क्लीबं पुन्नपुंसकयोर्विशः" इति विश्वः ॥ "मृणाले तु विशं बिसम्" इति द्विरूपकोशः । द्वे मृणालस्य "भिसें" इति ख्यातस्य ॥ अस्त्रियां क्लीबपुंसोः । अब्जादिकदम्बे कमलादीनां समूहे खण्डमित्येकमस्त्रियाम् । शण्डः षण्डः । "तालव्यो मूर्द्धन्योऽब्जादिकदम्बे षण्डशब्दोऽयम् । मूर्द्धन्य एव वृषभे पूर्वाचार्यैर्विनिर्दिष्टः" इत्यूष्मविवेकः ॥ ४२ ॥ करहाटः शिफाकन्दः द्वे पद्ममूलस्य । शिफा मूलतरुप्ररोहस्तत्सहितः कन्दः । कन्दो मूलमित्यर्थः । शिफेति च कन्दमिति च पृथक् नामनी इत्येके । किञ्जल्कः केसरः "केशरः" द्वे केसरस्य । संवर्तिका नवदलं द्वे पद्मादीनां नवपत्रस्य । बीजकोशः वराटकः ।

संवर्तिका नवदलं बीजकोशो वराटकः ॥ ४३ ॥

इति वारिवर्गः ॥ १० ॥

---

उक्तं स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकम् ॥
पातालभोगि नरकं वारि चैषां च संगतम् ॥ १ ॥
इत्यमरसिंहकृतौ नामलिङ्गानुशासने ॥
स्वरादिकाण्डः प्रथमः साङ्ग एव समर्थितः ॥ २ ॥

"वराटकः पद्मबीजकोशे रज्जौ कपर्दके" इति कोशान्तरम् । द्वे बीजकोशस्य । बीजानां कमलाक्षाणां कोशः पात्रं अथवा आधारः बीजकोशः ॥ ४३ ॥ इति वारिवर्गः ॥ १० ॥ उक्तान् वर्गान्संग्रहेणोपसंहरति उक्तमिति । मया स्वर्व्योमादिकमुक्तम् । शब्दादीति । रसगन्धादिग्रहणार्थमादिशब्दः । एषां स्वर्गादीनां संगतं संबन्धवशात्प्राप्तं देवासुरमेघादिकं तच्चोक्तम् ॥ १ ॥ इतीति । एवममरसिंहस्य कृतौ नाम्नां लिङ्गानां चानुशासने स्वरादिशब्दानां काण्डः समूहः साङ्गः अङ्गोपाङ्गसहितः प्रथमः समर्थितः कथितः ॥ २ ॥ श्रीमत्यमरविवेके महेश्वरेण विरचिते एवं प्रथमः स्वरादिकाण्डः समाप्तः ॥ १ ॥

इति सटीकामरकोशस्य

प्रथमं काण्डं समाप्तम् ॥

# अमरकोशप्रथमकाण्डस्य वर्गानुक्रमेण श्लोकसंख्या.

| वर्गाङ्काः | वर्गनामानि. | मूलश्लोकाः | क्षेपकश्लोकाः | |
|---|---|---|---|---|
| | आदौ परिभाषायाः श्लोकाः ... | ५ | ० | |
| १ | स्वर्गवर्गस्य .............. | ६९॥ | ३॥ | मूलश्लोकाः, २८२ |
| | | | | क्षेपकश्लोकाः, १८ |
| २ | व्योमवर्गस्य .............. | २ | ०॥० | एवम्, ३०० |
| ३ | दिग्वर्गस्य .............. | ३५ | ४॥ | |
| ४ | कालवर्गस्य .............. | ३१ | १॥ | |
| ५ | धीवर्गस्य.................. | १७ | २॥ | |
| ६ | शब्दादिवर्गस्य ........... | २५ | २ | |
| ७ | नाट्यवर्गस्य .............. | ३८ | १॥ | |
| ८ | पातालभोगिवर्गस्य ......... | ११ | १॥ | |
| ९ | नरकवर्गस्य .............. | ३॥ | ० | |
| १० | वारिवर्गस्य .............. | ४३ | ०॥० | |
| | अनुक्रमश्लोकौ ........... | २ | ० | |

अथ

# सटीकामरकोशस्य

## द्वितीयं काण्डम्.

वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः ॥
नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥ १ ॥
भूर्भूमिरचलाऽनन्ता रसा विश्वंभरा स्थिरा ॥
धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः ॥ २ ॥
सर्वंसहा वसुमती वसुधोर्वी वसुंधरा ॥
गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही ॥ ३ ॥
("विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा ॥
भूतधात्री रत्नगर्भा जगती सागराम्बरा ॥ १ ॥") (१)

श्रीगणेशाय नमः ॥ वर्गा इति । इह वक्ष्यमाणेऽस्मिन्काण्डे अङ्गैर्मृच्छाखानगरादिभिरुपाङ्गैर्मृत्स्नावेशादिभिः सहितैः पृथ्वीपुरादिशब्दैर्वर्गा उदिताः । वक्तुमारब्धा इत्यर्थः । तत्र क्ष्माभृच्छैलः । मृगादिभिरित्यादिशब्देन पक्षिणां संग्रहः । "यद्वा मृगानत्ति पुनः पुनः स मृगादी सिंहः । अस्मिन्नर्थे ताच्छील्ये णिनिः" ॥ १ ॥ भूः भूमिः अचला न चलतीत्यचला । अथवा अचलाः पर्वताः सन्ति अस्याम् । अर्शआद्यच् । अनन्ता रसा विश्वंभरा स्थिरा धरा धरित्री धरणिः क्षोणिः "क्षोणी क्षौणिः क्षौणी" ज्या काश्यपी क्षितिः ॥ २ ॥ सर्वंसहा वसुमती वसुधा उर्वी वसुंधरा गोत्रा कुः पृथिवी। "पृथवी"। "पृथवी पृथिवी पृथ्वी" इति शब्दार्णवः । पृथ्वी क्ष्मा अवनिः "अवनी" मेदिनी मही "महिः" इति सप्तविंशतिर्नामानि भूमेः । अत्र भूमी—धरणीत्यादयो ङीषन्ता अपि । "कृदिकारादक्तिनः" इति गणसूत्रात् ॥ ३ ॥ विपुलेत्येकादश भूमेश्च ॥ १ ॥ मृत् मृत्तिका । "मृदस्तिकन्" । द्वे मृदः । मृत्सा मृत्स्ना ।

---

१ इदं पद्यं तालपत्रपुस्तकेऽपि नास्ति ।

मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका ॥
उर्वरा सर्वसस्याढ्या स्यादूषः क्षारमृत्तिका ॥ ४ ॥

ऊषवानूषरो द्वावप्यन्यलिङ्गौ स्थलं स्थली ॥
समानौ मरुधन्वानौ द्वे खिलाप्रहते समे ॥ ५ ॥

त्रिष्वथो जगती लोको विष्टपं भुवनं जगत् ॥
लोकोऽयं भारतं वर्षं शरावत्यास्तु योऽवधेः ॥ ६ ॥

देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः ॥

सस्नौ प्रशंसायाम् । द्वे प्रशस्तमृदः । प्रशस्ता मृत्तिका त्वित्यन्वयः । "कृष्णभूमः कृष्णमृत्स्यादुदग्भूम उदङ्मृदि । पाण्डुभूमः पाण्डुमृच्च" इत्यपि पठ्यते । सर्वैः सस्यैराढ्या मृत्तिका उर्वरेत्युच्यते एकम् । ऊषः क्षारमृत्तिका द्वे क्षारमृत्तिकायाः । ऊषोऽदन्तः ॥ ४ ॥ ऊषवान् ऊषरः द्वयं क्षारमृद्विशिष्टस्य । द्वावप्यन्यलिङ्गौ । यथा ऊषवती ऊषरा वा स्थली । ऊषरं स्थलमित्यादि । स्थली अकृत्रिमस्थानस्य । "कृत्रिमा तु स्थला । स्थलमुभयसाधारणम् ।" मरुः धन्वा द्वे मरुदेशस्य । निर्जलोऽयम् । म्रियते पिपासया यस्मिन्मरुः । खिलं अप्रहतं द्वे अकृष्टस्य क्षेत्रादेः । न प्रहन्यते हलादिभिरप्रहतम् । "समे समानार्थे" त्रिषु लिङ्गेषु इत्यर्थः ॥५॥ जगती लोकः विष्टपं "पिष्टपम्" । "जगत्स्यात्पिष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु । जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च" । "लोकस्तु भुवने जने" इति मेदिनी । "विष्टपः पुमान्" इति गोपालितः । भुवनं जगत् पञ्च भूतलस्य । "एकं महाभूतं पृथिवी । पञ्चमहाभूतविषयेन्द्रियात्मकं जगदिति पृथ्वीजगतोर्भेदः" । अयं जम्बुद्वीपवर्ती दृश्यमानो लोकः भारतनामकं वर्षं ज्ञेयम् । उक्तं च । "उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यत्र सन्ततिः" इति । भरतस्य राज्ञ इदं भारतम् । वर्षशब्दः पुंलिङ्गोऽपि । "पुंनपुंसकयोर्वर्षं जम्बुद्वीपाब्दवृष्टिषु" इति रुद्रः । "वर्षोऽस्त्री भारतादौ च जम्बुद्वीपाब्दवृष्टिषु" इति मेदिनी । एकम् । एवमिलावृतादीन्यष्टौ वर्षाण्यन्यान्यपि । शरावत्या अवधेः ॥ ६ ॥ यः प्राग्दक्षिणः प्राक्सहितो दक्षिणो देशः स प्राच्य इत्येकम् । शरावत्या अवधेर्यः पश्चिमोत्तरः पश्चिमसहित उत्तरो देशः स उदीच्य इत्येकम् ॥ प्रत्यन्तः अन्तं प्रतिगतः म्लेच्छदेशः द्वे शिष्टाचाररहितस्य कामरूपादेः । यदुक्तम् । "चातुर्वर्ण्यव्यवस्थानं

प्रत्यन्तो म्लेच्छदेशः स्यान्मध्यदेशस्तु मध्यमः ॥ ७ ॥

आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः ॥
नीवृज्जनपदो देशविषयौ तूपवर्तनम् ॥ ८ ॥

त्रिष्वागोष्ठान्नडप्राये नड्वान्नड्वल इत्यपि ॥
कुमुद्वान्कुमुदप्राये वेतस्वान्बहुवेतसे ॥ ९ ॥

शाद्वलः शादहरिते सजम्बाले तु पङ्किलः ॥
जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः ॥ १० ॥

यस्मिन्देशे न विद्यते । तं म्लेच्छविषयं प्राहुरार्यावर्तमतः परम्" इति । मध्यदेशः मध्यमः द्वे । एतत्परिमाणं तु । "हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः" इति ॥ विनशनं तीर्थभेदः । "कुरुक्षेत्रम्" ॥ ७ ॥ आर्यावर्तः पुण्यभूमिः द्वे विन्ध्यहिमाचलयोरन्तरस्य । उक्तं च "आसमुद्राच्च वै पूर्वादासमुद्राच्च पश्चिमात् ॥ तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः" इति । हिमप्रधानोऽगः हिमागः । हिमेनाल्यते हिमालः । अल भूषणादौ घञ् । हिमागयोरित्यपि पाठः । नीवृत् जनपदः द्वे जनैर्वास्यमानराष्ट्रस्य मगधादेः । नीवृत्पुंसि साहचर्यात् नियतं वर्ततेऽस्मिन्नीवृत् । "नहिवृति" इति दीर्घः । जनः पदं वस्तु यत्र । "जानपदोऽपि" । "भवेज्जनपदो जानपदोऽपि जनदेशयोः" इति विश्वमेदिन्यौ" । देशः विषयः उपवर्तनं त्रीणि ग्रामसमुदायलक्षणस्य देशमात्रस्य ॥ ८ ॥ अथ गोष्ठशब्दमभिव्याप्य वक्ष्यमाणाः त्रिषु । त्रिषु लिङ्गेषु इत्यर्थः । नड्वान् नड्वलः द्वे नडप्राये नडबहुले देशे । कुमुद्वानित्येकं कुमुदप्राये । वेतस्वानित्येकं बहुवेतसे । बहवो वेतसा वानीरा यत्र तस्मिन् देशे । तदस्मिन्नस्तीत्यर्थे "कुमुदनडवेतसेभ्यो ड्मतुप्" ॥ ९ ॥ शादैर्बालतृणैर्हरिते देशे शाद्वल इत्येकम् । शादाः सन्त्यस्मिन् शाद्वलः । एतौ मध्यटवर्गीयौ । "वैडूर्यमणिशाड्वलौ" इति द्विरूपकोशात् । शाड्वल इत्यपि पाठः । सजम्बाले कर्दमयुक्ते देशे पङ्किल इत्येकम् । जलप्रायं अनूपं द्वे जलबहुलदेशस्य । अनुगता आपोऽत्र अनूपम् । अनूपदेशलक्षणम् । "नानाद्रुमलतावीरुन्निर्झरप्रान्तशीतलैः ॥ वनैर्व्याप्तमनूपं तत् सस्यैर्व्रीहियवादिभिः" ॥ तथाविधः अनूपलक्षणः कश्चिन्नद्यादेरुपान्तदेशः कच्छ इत्युच्यते । एकम् । कच्छशब्दस्य पुंसीति विशेषविधिरिति पूर्वोक्तस्य बाधनार्थः । कच्छ इत्यनूपस्यैव

स्त्री शर्करा शर्करिलः शार्करः शर्करावति ॥
देश एवादिमावेवमुन्नेयाः सिकतावति ॥ ११ ॥

देशो नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः ॥
स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥ १२ ॥

सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र राजवान् ॥
गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम् ॥ १३ ॥

पर्यन्तभूः परिसरः सेतुरालौ स्त्रियां पुमान् ॥
वामलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकम् ॥ १४ ॥

अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः ॥

पर्याय इति केचित् । कच्छम् । "कच्छमनूप" इति बोपालितः ॥ १० ॥ शर्करा शर्करिलः द्वे वालुकायुक्तदेशे । तत्र शर्करा स्त्री । शार्करः शर्करावान् द्वे वालुकायुक्तस्य देशादेः । आदिमौ शर्कराशर्करिलौ देशे एव, "देशे लुबिलचौ च" इति नियमात् । एवं सिकतावत्युन्नेया ऊहनीयाः । तथाहि । सिकताः सिकतिल इति द्वे सिकतायुक्तस्य देशस्य । सैकतः सिकतावान् द्वे वालुकायुक्तस्य देशादेः । तत्र सिकताः नित्यं स्त्रियां बहुत्वे च । "अत्र शर्करासिकताशब्दौ द्वावपि बहुवचनान्ताविति केचित्" ॥ ११ ॥ देश इति । नद्यम्बुभिर्वृष्ट्यम्बुभिश्च संपन्नैर्व्रीहिभिः पालितो देशः क्रमेण नदीमातृको देवमातृकश्च स्यात् । नद्यम्बुजातसस्यर्द्धितो नदीमातृकः । वृष्ट्यम्बुजातसस्यर्द्धितो देवमातृक इत्यर्थः । "देवो मेघे सुरे राज्ञि" इति विश्वः । एकैकम् ॥१२॥ धर्मशीलः शोभनो राजा यत्र स सुराजा तस्मिन्देशे राजन्वान् एकम् । "राजन्वान्सौराज्ये" इति निपातितो राजन्वान्शब्दः । ततोऽन्यत्र राजमात्रयुक्ते देशे राजवान् एकम् । गोष्ठं गोस्थानकं द्वे गवां स्थानस्य । तत् गोष्ठं भूतपूर्वकं चेत् गौष्ठीनमित्युच्यते । पूर्वं यत्र गाव आसन् तत्स्थानं गौष्ठीनमित्यर्थः । "गोष्ठात्खञ् भूतपूर्वे" इति खञ् । एकम् ॥१३ ॥ पर्यन्तभूः परिसरः द्वे नदीपर्वतादीनामुपान्तभुवः । सेतुः आलिः "आली" द्वे सेतोः "पूल इति ख्यातस्य । " स्त्रीलिङ्गायामालौ सेतुः पुमानित्यन्वयः । वामलूरः नाकुः वल्मीकं त्रीणि वल्मीकस्य ॥ १४ ॥ अयनम् । अयतेऽनेन । "अय गतौ" ।

सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ॥ १५ ॥

अतिपन्थाः सुपन्थाश्च सत्पथश्चार्चितेऽध्वनि ॥
व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः ॥ १६ ॥

अपन्थास्त्वपथं तुल्ये शृङ्गाटकचतुष्पथे ॥
प्रातरं दूरशून्योऽध्वा कान्तारं वर्त्म दुर्गमम् ॥ १७ ॥

गव्यूतिः स्त्री क्रोशयुगं नल्वः किष्कुचतुःशतम् ॥
घण्टापथः संसरणं तत्पुरस्योपनिष्करम् ॥ १८ ॥

अयनं पथि गेहेऽर्कस्योदग्दक्षिणतो गतौ" इति हैमः । वर्त्म मार्गः अध्वा पन्थाः पथः । "वाटः पथश्च मार्गश्च" इति त्रिकाण्डशेषः । पदवी "पदविः" सृतिः सरणिः । "शरणिः पथि चावलौ" इति तालव्यादावजयात्तालव्यादिरपि । ङीषन्तोऽपि । पद्धतिः "पद्धती" पद्या पादाय हिता पद्या । "तस्मै हितम्" इति यत् । वर्तनी वर्तनिः वर्त्मनिः । "वर्त्मनिर्वर्त्मनी पथि" इति हैमः । एकपदी द्वादश मार्गस्य ॥ १५ ॥ अतिपन्थाः सुपन्थाः सत्पथः त्रयं अर्चितेऽध्वनि शोभने मार्गे । व्यध्वः दुरध्वः विपथः कदध्वा कापथः "कुपथोऽपि" पञ्च दुर्मार्गस्य । तत्र कदध्वा नान्तः ॥ १६ ॥ अपन्थाः अपथं द्वे अमार्गस्य । शृङ्गाटकं चतुष्पथं द्वे चव्हाटा इति ख्यातस्य । दूरश्चासौ शून्यश्च दूरशून्यः । छायाजलादिवर्जितो दूरस्थोऽध्वा मार्गः प्रान्तरमित्युच्यते । एकम् । यद्दुर्गमं चोरकण्टकाद्युपद्रवयुक्तं वर्त्म मार्गः कान्तारमित्युच्यते । पुंसि कान्तारः । "कान्तारोऽस्त्री महारण्ये विले दुर्गमवर्त्मनि" इति मेदिनी । एकम् ॥१७॥ क्रोशयुगं गव्यूतिरित्युच्यते । "क्रोशो धनुः सहस्रे द्वे धनुर्हस्तचतुष्टयम् । द्वाभ्यां धनुःसहस्राभ्यां गव्यूतिः पुंसि भाषितम्" इति शब्दार्णवात्पुंस्यपि । क्लीबे तु गव्यूतम् । "धन्वन्तरसहस्रं तु क्रोशः क्रोशद्वयं पुनः । गव्यूतं स्त्री तु गव्यूतिर्गोरुतं गोमतं च तत्" इति वाचस्पतिः । किष्कूणां हस्तानां चतुःशतं "चतुःशती वा" नल्व इत्युच्यते । चतुःशतहस्तमितं स्थानं नल्वसंज्ञकमित्यर्थः । एकम् । घण्टापथः संसरणं द्वे राजपथमात्रस्य । घण्टोपलक्षितगजादीनां पन्थाः घण्टापथः । "दशधन्वन्तरो राजमार्गो घण्टापथः स्मृतः" इति चाणक्यः । तत्संसरणं पुरस्य नगरस्य चेदुपनिष्करमित्येकम् । बुधैः संसरणं वर्त्म गजा-

("द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी ॥
दिवस्पृथिव्यौ गञ्जा तु रुमा स्याल्लवणाकरः ॥१॥") (१)

इति भूमिवर्गः ॥ १ ॥

पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् ॥
स्थानीयं निगमोऽन्यत्तु यन्मूलनगरात्पुरम् ॥ १ ॥

तच्छाखानगरं वेशो वेश्याजनसमाश्रयः ॥
आपणस्तु निषद्यायां विपणिः पण्यवीथिका ॥ २ ॥

दीनामसंकुलम् । पुरस्योपस्करं चोक्तमिति भ्रमः ॥ १८ ॥ "द्यावेत्यादीनि पञ्च द्विवचननामानि द्यावाभूम्योः । गञ्जेत्यादि त्रयं क्षारसमुद्रस्य । "गञ्जा खनौ सुरागृहे । रुमा सुग्रीवदारेषु विशिष्टलवणाकरे" इति मेदिनी । "भञ्जारुमे स्त्रियाम् ।" ॥ १ ॥ अङ्गोपाङ्गापेक्षया भूमिरेवात्र प्रधानमिति भूमिवर्ग इति व्यपदेशः । एवमन्यत्रापि मन्तव्यम् ॥ इति भूमिवर्गः ॥ १ ॥ पूः पुरी "पुरिः" नगरी पत्तनं "पट्टनं" पुटभेदनं स्थानीयं निगमः सप्तकं नगरस्य । पूः पुरी । पुरीनगर्यौ वा स्त्रियौ । पक्षे पुरं नगरम् । केचिदत्र भेदं चक्रुर्यथा । यत्रानेकशिल्पिनोऽनेकवणिगादिव्यवहारस्तत्पुरादिसंज्ञम् । यत्र राजा तदनुचराश्च सन्ति तत्पुरं पत्तनादिसंज्ञम् । यत्प्राकारादिवेष्टितं विस्तीर्णं पुरं तत्स्थानीयादिनामकमिति । यन्मूलनगरादन्यत्पुरं तच्छाखानगरमित्यन्वयः । एकम् । मूलनगरं राजधानी ॥ १ ॥ वेश्याजनस्य समाश्रयो निवेशस्थानं वेश इत्युच्यते । द्वे वेश्यानिवासस्य । तालव्यान्तम् । "नेपथ्ये गृहमात्रे च वेशो वेश्यागृहेऽपि च" इति तालव्यान्ते रभसः । "गृहमात्रे गणिकायाः सद्मनि वेशो भवेत्तु तालव्यः । तालव्यो मूर्द्धन्योऽलंकरणे कथित आचार्यैः" इत्यूष्मविवेकः । आपणः निषद्या द्वे क्रय्यवस्तुशालायाः । हट्टवणिक्पथपण्याजिरादिकमपि । विपणिः "विपणी" पण्यवीथिका द्वे क्रय्यवस्तुशालापङ्क्तेः । चत्वार्यपि हट्टस्येत्यन्ये । विपणिः स्त्री । "आपणादि द्वयं हट्टस्य बाजार इति प्रसिद्धस्य । विपणीति द्वयं हट्टशून्यविक्रयस्थानस्येत्यपि मतम्" ॥ २ ॥ रथ्या । रथं वहतीति "तद्वहति रथयुग" इति यत् । प्रतोली विशिखा त्रीणि

---

(१) इदं पद्यं तालपत्रपुस्तकेऽपि नास्ति ।

रथ्या प्रतोली विशिखा स्याच्चयो वप्रमस्त्रियाम् ॥
प्राकारो वरणः सालः प्राचीनं प्राततो वृतिः ॥ ३ ॥

भित्तिः स्त्री कुड्यमेडूकं यदन्तर्न्यस्तकीकसम् ॥
गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ॥ ४ ॥

निशान्तपस्त्यसदनं भवनागारमन्दिरम् ॥
गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः ॥ ५ ॥

वासः कुटी द्वयोः शाला सभा संजवनं त्विदम् ॥
चतुःशालं मुनीनां तु पर्णशालोटजोऽस्त्रियाम् ॥ ६ ॥

ग्रामाभ्यन्तरमार्गस्य । चयः वप्रं द्वे परिखोद्धृतमृत्तिकाकूटस्य । प्राकाराधारस्य वा । प्राकारः वरणः सालः "शालः" । "तालव्यो नृपझषयोः शालो वृक्षे वृतौ द्रुमभेदे च । तालव्यदन्त्य उक्तस्तथा स्त्रियां वृक्षशाखायाम्" इत्यूष्मविवेकः । "सालो वरणसर्जयोः" इति रभसः । अयं यष्टिकाकण्टकादिरचितवेष्टनस्य । नगरादेः प्रान्तभागे या वृतिः वेष्टनं वेणुकण्टकादीनां तत्प्राचीनमित्युच्यते । "प्राचीरमित्यपि" । एकम् ॥ ३ ॥ भित्तिः कुड्यं द्वे भित्तेः । तत्कुड्यं अन्तर्न्यस्तकीकसं चेदेडूकसंज्ञम् । एडुकं एडोकम् । "भवेदेडोकमेडुकम्" इति द्विरूपकोशः । एकम् । अन्तर्न्यस्तानि कीकसानि अस्थीनि दार्ढ्यार्थं यत्र तत् । कीकसं कठिनद्रव्यस्योपलक्षणम् । गृहं गेहं उदवसितं वेश्म सद्म निकेतनम् ॥ ४ ॥ निशान्तं पस्त्यं वस्त्यं वसेस्तिः "तत्र साधुः" इति यत् । सदनं "सादनम् ।" "सदनं सादनं समम्" इति द्विरूपकोशः । भवनं अगारम् आगारम् । "विद्यादगारमागारमपगामापगामपि" इति द्विरूपकोशः । मन्दिरं गृहाः निकाय्यः निलयः आलयः षोडश गृहस्य । तत्र गृहशब्दः बहुत्वे नित्यं पुंसि च । "क्लीबेऽपि ।" ॥ ५ ॥ वासः कुटी शाला सभा चत्वारि सभागृहस्य । तत्र कुटो द्वयोः स्त्रियां तु कुटी कुटिश्च । "कुटः कोटे पुमानस्त्री घटे स्त्रीपुंसयोर्गृहे" इति मेदिनी । गृहादिसभान्तानि विंशतिर्नामानि गृहस्येत्यन्ये । संजवनं चतुःशालम् । चतसृणां शालानां समाहारः । द्वे अन्योन्याभिमुखशालाचतुष्कस्य "चौसोपी, चौपट, चौक इति प्रसिद्धस्य" । पर्णशाला उटजः द्वे मुनिगृहस्य । "उटजस्तृणपर्णादिः" इति देशिकोशः ॥ ६ ॥ चैत्यं आय-

6-10



चैत्यमायतनं तुल्ये वाजिशाला तु मन्दुरा ॥
आवेशनं शिल्पिशाला प्रपा पानीयशालिका ॥ ७ ॥
मठश्छात्रादिनिलयो गञ्जा तु मदिरागृहम् ॥
गर्भागारं वासगृहमरिष्टं सूतिकागृहम् ॥ ८ ॥
("कुट्टिमोऽस्त्री निबद्धा भूश्चन्द्रशाला शिरोगृहम्"॥)(१)
वातायनं गवाक्षोऽथ मण्डपोऽस्त्री जनाश्रयः ॥
हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम् ॥ ९ ॥
सौधोऽस्त्री राजसदनमुपकार्योपकारिका ॥
स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ॥ १० ॥

तनं द्वे यज्ञायतनभेदस्य । वाजिशाला मन्दुरा द्वे अश्वशालायाः "पागा" इति ख्यातायाः । आवेशनं शिल्पिशाला शिल्पशालेत्यपि पाठः । तत्र शिल्पस्य शालेति । द्वे स्वर्णकारादीनां शालायाः । प्रपा पानीयशालिका द्वे जलशालायाः "पाणपोही इति प्रसिद्धायाः" ॥ ७ ॥ छात्रादिनिलयः शिष्यादीनां गृहं मठ इत्युच्यते । "छात्रोऽन्तेवास्यादिर्येषां परिव्राजकक्षपणकादीनां तेषां निलय इति वा" । आदिना कापालादिसंग्रहः । गञ्जादिद्वयं मद्यस्थानस्य । गर्भागारं वासगृहं द्वे गृहमध्यभागस्य माजघर इति प्रसिद्धस्य । अरिष्टं सूतिकागृहम् । "सूतकादीनामत्वविकल्पात्सूतकागृहम्" । द्वे प्रसवस्थानस्य । चत्वारोऽपि पर्याया इत्यन्ये । पाषाणादिनिबद्धा भूः स कुट्टिम इत्येकम् । फरसबंदी, भूमिगृह, तळघर इति प्रसिद्धस्य । चन्द्रादिद्वयं गृहोपरितनगृहस्य उपरमाडी, अटाळी, गच्ची इत्यादिप्रसिद्धस्य ॥ ८ ॥ वातायनं गवाक्षः द्वे गवाक्षस्य झरोका इति प्रसिद्धस्य । मण्डपः जनाश्रयः द्वे मण्डपस्य । तत्र मण्डपः क्लीबपुंसोः । धनिनां धनवतां वासः गृहं तत् हर्म्यादि । आदिना स्वस्तिकाट्टालिकादेर्ग्रहः । देवानां राज्ञां च गृहं प्रासाद इत्येकम् ॥ ९ ॥ सौधः । सुधया लिप्तः । सुधा तु भित्त्यादिरञ्जनार्थं यत् श्वेतद्रव्यम् । राजसदनं उपकार्या उपकारिका चत्वारि राजगृहस्य । स्वस्तिकादय ईश्वरसद्मनां राजगृहाणां प्रभेदाः स्युः । तत्र चतुर्द्वारतोरणः स्वस्तिकः । उपर्युपरिगृहं सर्वतोभद्रः । वर्तुलाकृतिर्नन्द्यावर्तः ॥ १० ॥ विस्तीर्णः सुन्दरो विच्छ-

---

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम् ॥
स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् ॥ ११ ॥
शुद्धान्तश्चावरोधश्च स्यादट्टः क्षौममस्त्रियाम् ॥
प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ॥ १२ ॥
गृहावग्रहणी देहल्यङ्गणं चत्वराजिरे ॥
अधस्ताद्दारुणि शिला नासा दारूपरि स्थितम् ॥ १३ ॥
प्रच्छन्नमन्तर्द्वारं स्यात्पक्षद्वारं तु पक्षकम् ॥
वलीकनीध्रे पटलप्रान्तेऽथ पटलं छदिः ॥ १४ ॥

न्दकः । "विच्छर्दकः" आदिना रुचकवर्द्धमानादिग्रहः । भूभुजां राज्ञां स्त्र्यगारं स्त्रीगृहं तत् अन्तःपुरं अवरोधनम् ॥ ११ ॥ शुद्धान्तः अवरोधः चत्वारि । अट्टः क्षौमं "क्षोमं" द्वे हर्म्यादिपृष्ठस्य "उपरिगृहस्य माडी इत्यादिख्यातस्य" । गृहविशेषस्येत्येके । प्रघाणः प्रघणः । प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते स प्रघणः प्रघाणश्च । हन्धातुः । अलिन्दः आलिन्दः । "गृहैकदेशे आलिन्दः प्रघाणः प्रघणस्तथा" इत्यमरमाला । त्रीणि द्वाराद्बहिर्यः प्रकोष्ठकस्तत्र ओटा इति प्रसिद्धस्य । "द्वारप्रकोष्ठाद्बहिर्द्वाराग्रवर्तिचतुष्कस्येति वा पाहिरी इति ख्यातस्य" ॥ १२ ॥ गृहावग्रहणी देहली द्वे गृहद्वाराधोभागस्य उंबरा इति प्रसिद्धस्य । "देहं गोमयाद्युपलेपं लातीति विगृहीतत्वाद्गृहद्वाराधोभागस्य उंबरओठा उंबरठा इति ख्यातस्य ।" अङ्गणं अङ्गनम् । "अङ्गनं प्राङ्गणे याने कामिन्यामङ्गना मता" इति नान्तवर्गे विश्वः । चत्वरं अजिरं त्रीणि प्राङ्गणस्य । शिलेत्येकं द्वारस्तम्भाधः स्थितकाष्ठस्य । "शिली" । "तलदारु शिल्यधोऽपि नासा दारूर्ध्वमस्य यत्" इति बोपालितात् । नासेत्येकं "दन्त्यान्तम्" द्वारस्तम्भोपरि स्थितस्य दारुणः "मस्तकपट्टी गणेशपट्टी इति प्रसिद्धस्य" ॥ १३ ॥ प्रच्छन्नं अन्तर्द्वारं द्वे गुप्तद्वारस्य खिडकीसंज्ञस्य । पक्षद्वारं पक्षकं द्वे पार्श्वद्वारस्य । मागिलदार इति लोकप्रसिद्धिः । "प्रच्छन्नमन्तर्द्वारं स्यात्पक्षद्वारं तदुच्यते" इति कात्यात् पक्षद्वारं पूर्वान्वयीत्यन्ये । वलीकम् । "वलीकः पटलं प्रान्तः" इति बोपालितात्पुंस्त्वमपि । नीध्रं द्वे पटलप्रान्ते गृहच्छादनस्य "भित्तिबहिर्भागीयस्य वळचण पडवी इति ख्यातस्य" । पटलं छदिः द्वे छादनस्य "आकार इति ख्यातस्य" । छदिः सान्तं स्त्रियाम् ।

गोपानसी तु वलभी छादने वक्रदारुणि ॥
कपोतपालिकायां तु विटङ्कं पुन्नपुंसकम् ॥ १५ ॥
स्त्री द्वार्द्वारं प्रतीहारः स्याद्वितर्दिस्तु वेदिका ॥
तोरणोऽस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरम् ॥ १६ ॥
कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्नथ त्रिषु ॥
कपाटमररं तुल्ये तद्विष्कम्भोऽर्गलं न ना ॥ १७ ॥
आरोहणं स्यात्सोपानं निश्रेणिस्त्वधिरोहिणी ॥
संमार्जनी शोधनी स्यात्संकरोऽवकरस्तथा ॥ १८ ॥

छदिषौ ॥ १४ ॥ गोपानसी वलभी "वलभिः" । वडभीति मूर्धन्यमध्योऽपि। "शुद्धान्ते वडभीचन्द्रशाले सौधोर्ध्ववेश्मनि" इति रभसः। "ओको गृहं पिटं चालो वडभी चन्द्रशालिका" इति त्रिकाण्डशेषः। द्वे छादनार्थं यद्वक्रदारु तत्र। पटलाधारभूतवक्रकाष्ठे इत्यर्थः। पटलाधारवंशपञ्जरस्य ओमण कडणी वांसा इति प्रसिद्धस्य। सञ्जा इत्यपि मतम्। कपोतपालिका विटङ्कं द्वे सौधादौ काष्ठादिरचितपक्षिगृहस्य ॥ १५ ॥ द्वाः द्वारं प्रतीहारः "प्रतिहारः" त्रयं द्वारस्य। तत्र द्वाः स्त्रियां रेफान्तः। वितर्दिः "वितर्दी" वेदिका द्वे वेद्याः। "अङ्गणादिषु कृतस्योपवेशस्थानस्येति वा।" वितर्दिः स्त्री। तोरणः बहिर्द्वारं द्वे तोरणस्य "द्वारबाह्यभागस्य।" पुरद्वारं गोपुरं द्वे नगरद्वारस्य ॥ १६ ॥ पूर्द्वारि नगरद्वारे सुखेनावतारणार्थं "क्रमनिम्नं" यन्मृत्कूटं क्रियते तत्र हस्तिनख इत्येकम्। कपाटं "कवाटम्"। "कवाटश्च कपाटश्च त्रिषु स्यादररं न ना" इति वाचस्पतिः। "कवाटश्चाररम्" इति त्रिकाण्डशेषः। अररं द्वे कवाड इति ख्यातस्य। ते त्रिषु। तत्र स्त्रियां कपाटी अररी। तद्विष्कम्भः तस्य कपाटस्यावष्टम्भकं यन्मुसलं तदर्गलमित्युच्यते। अडसर इति लौकिकप्रसिद्धिः। तत्स्त्रीनपुंसकयोः। स्त्रियां त्वर्गला। "तद्विष्कम्भ्यर्गलमिति पाठः" ॥ १७ ॥ आरोहणं सोपानं द्वे सोपानस्य। पायरी इति ख्यातस्य। निश्रेणिः। "निश्रेणी इत्यपि। नियता श्रेणिः पङ्क्तिरत्रेति निश्रेणिः।" अधिरोहिणी द्वयं निसणी "शिडी" इति ख्यातस्य। संमार्जनी शोधनी द्वे "सारणी" केरसुणी इति ख्यातस्य। संमार्जन्या विक्षिप्ते निरस्ते केर इति ख्याते संकरः। "संकार इति पाठे कर्मणि घञ्"। अवकरः इति द्वयम् ॥ १८ ॥ मुखं निःस-

क्षिप्ते मुखं निःसरणं संनिवेशो निकर्षणम् ॥
समौ संवसथग्रामौ वेश्मभूर्वास्तुरस्त्रियाम् ॥ १९ ॥

ग्रामान्त उपशल्यं स्यात्सीमसीमे स्त्रियामुभे ॥
घोष आभीरपल्ली स्यात्पक्कणः शबरालयः ॥ २० ॥

इति पुरवर्गः ॥ २ ॥

महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः ॥
अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ॥ १ ॥

लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत्समौ ॥
अस्तस्तु चरमक्ष्माभृदुदयः पूर्वपर्वतः ॥ २ ॥

र्षणं द्वे गृहादेर्मुखभूतस्य द्वारप्रदेशस्य "उसदार, पुढीलदार इति ख्यातस्य । निःसरन्त्यनेन निःसरणम्" संनिवेशः निकर्षणं द्वे समीचीनवासस्थानस्य । "पुरादौ गृहादिरचनापरिच्छिन्नदेशस्येत्यर्थः । संवसथः ग्रामः द्वे ग्रामस्य । वेश्मभूर्गृहभूमिः वास्तुरित्युच्यते द्वे "गृहरचनावच्छिन्नभूमेः" ॥ १९ ॥ ग्रामान्ते ग्रामस्य समीपप्रदेशे उपशल्यमित्येकम् । ग्रामान्तमुपशल्यमित्यपि पाठः । "तत्र ग्रामस्यान्तं समीपम्" सीमा सीमा द्वे ग्रामादेर्मर्यादायाम् । नामन् सीमन्नित्यादि निपातनात् पूर्वो नकारान्तः । "उभे द्वे स्त्रियाम्"। घोषः आभीरपल्ली "आभीरपल्लिः" द्वे गोपालग्रामस्य तद्गृहस्य वा । "कुटीकुग्रामयोः पल्लिः" इति शाश्वतः । शबरस्यालयः पक्कण इत्युच्यते द्वे भिल्लग्रामस्य । शबरो वनचाण्डालः ॥ २० ॥ इति पुरवर्गः ॥ २ ॥ महीध्रः शिखरी क्ष्माभृत् अहार्यः धरः पर्वतः अद्रिः गोत्रः गिरिः ग्रावा अचलः शैलः शिलोच्चयः त्रयोदश पर्वतसामान्यस्य ॥ १ ॥ लोकालोकः । लोकालोकौ प्रकाशान्धकारावत्र स्तः । "लोकृ दर्शने"। चक्रवालः "चक्रवाडः" द्वे सप्तद्वीपवत्या भूमेः प्राकारभूते गिरौ । त्रिकूटः त्रिककुत् द्वे त्रिकूटाचलस्य । "त्रिकूटं सिन्धुलवणे त्रिकूटः पर्वतान्तरे" इति हैमः । दान्तः त्रिककुत् । अस्तः चरमक्ष्माभृत् द्वे अस्ताचलस्य । "अस्तं क्षिप्तेऽप्यवसिते त्रिषु ना पश्चिमाचले" इति विश्वमेदिन्यौ । उदयः पूर्वपर्वतः द्वे उदयाचलस्य ॥ २ ॥ हिमवानित्यादयः सप्त

2-5



हिमवान्निषधो विन्ध्यो माल्यवान्पारियात्रिकः ॥
गन्धमादनमन्ये च हेमकूटादयो नगाः ॥ ३ ॥
पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ॥
कूटोऽस्त्री शिखरं शृङ्गं प्रपातस्त्वतटो भृगुः ॥ ४ ॥
कटकोऽस्त्री नितम्बोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियाम् ॥
उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः ॥ ५ ॥
दरी तु कन्दरो वा स्त्री देवखातबिले गुहा ॥

पर्वतविशेषाः । आदिना मलयचित्रकूटमन्दरादयः । "रजताद्रिस्तु कैलास इन्द्रकीलस्तु मन्दरः । अपि किष्किन्धकिष्किन्ध्यौ वानराणां गिरौ द्वयम्" इत्यपि ज्ञेयाः ॥ १ ॥ एकैकम् । पारियात्रिकः । ठक् । "पारियात्रक इत्यपि पाठः" । गन्धमादन इति पुंलिङ्गोऽप्यन्यत्र । "स्याद्गन्धमादनो भृङ्गे गन्धके वानरान्तरे । स्त्री सुरायां नगे न स्त्री" इति मेदिनी ॥ ३ ॥ पाषाणः प्रस्तरः ग्रावा उपलः अश्मा शिला दृषत् सप्त पाषाणस्य । शिलादृषदौ स्त्रियाम् । कूटः शिखरं शृङ्गं त्रयमपि पुंनपुंसकलिङ्गं पर्वताग्रस्य । अस्त्रीति पूर्वोत्तराभ्यां संबध्यते । शिखरवाची शृङ्गशब्दः क्लीब एव दृश्यते । प्रपातः अतटः भृगुः त्रयं पर्वतात्पतनस्थानस्य । प्रपतत्यस्मिन्प्रपातः । न विद्यते तटोऽत्रेत्यतटः । प्रपातस्तु तटो भृगुरित्यपि पाठः । तत्र प्रपत्यते यतस्तटात् स तटो भृगुरिति ॥ ४ ॥ अद्रेर्नितम्बो मध्यभागः कटक इत्युच्यते एकम् । स्नुः प्रस्थः सानुः त्रीणि पुंनपुंसकलिङ्गानि समभूभागे पर्वतैकदेशे । तत्र स्नुः पुमानेवेति सर्वधरः । स्नौति प्रस्रवत्यम्भः स्नुः । प्रतिष्ठन्तेऽस्मिन्प्रस्थः । सनोति ददाति सुखं सानुः । "सानुरस्त्रियौ इत्यपि पाठान्तरम्" । उत्सः प्रस्रवणं द्वे यत्र पानीयं निपत्य बहुलीभवति तस्य स्थानस्य । प्रस्रवत्यस्मिन्प्रस्रवणम् । वारिप्रवाहः निर्झरः झरः "झृषो दैवादिकात् षित्वादङि झरा" । "अच इः झरिः" । "ङीषि झरी च" त्रीणि झरा इति ख्यातस्य । पञ्चापि पर्याया इत्यन्ये ॥ ५ ॥ दरी कन्दरः द्वे पर्वतस्य गृहाकारकृत्रिमविवरस्य । पक्षे कन्दरा । गुहा गह्वरं द्वे देवखाते अकृत्रिमे बिले बिलविषये । केचिद्देवखातादि पर्यायचतुष्टयमाहुः । यत्काल्यः । "देवखाते बिलं गुहा" इति । "गह्वरं बिलदम्भयोः" इति च । केचित्तु

गह्वरं गण्डशैलास्तु च्युताः स्थूलोपला गिरेः ॥ ६ ॥
("दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः ॥") (१)
खँनिः स्त्रियामाकरः स्यात्पादाः प्रत्यन्तपर्वताः ॥
उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ॥ ७ ॥
धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः ॥
निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ॥ ८ ॥

इति शैलवर्गः ॥ ३ ॥

अटव्यरण्यं विपिनं गहनं काननं वनम् ॥
महारण्यमरण्यानी गृहारामास्तु निष्कुटाः ॥ १ ॥

सूक्ष्मस्थूलभेदेन द्वाभ्यां द्वाभ्यां भेदमाहुः । गिरेः सकाशाच्च्युताः पतिता ये स्थूलपाषाणास्ते गण्डशैला इत्युच्यन्ते । गिरेस्तिर्यक्प्रदेशाद्बहिर्निर्गताः शूलाकारपाषाणास्ते दन्तका इत्येकम् ॥ ६ ॥ खनिः खानी खानिः । "खनिरेव मता खानिः" इति द्विरूपकोशः । आकरः द्वे रत्नाद्युत्पत्तिस्थानस्य खाण इति ख्यातस्य । पादाः प्रत्यन्तपर्वताः द्वे पर्वतसमीपस्थाल्पपर्वतानाम् । अद्रेरधः सन्निहिता भूमिरुपत्यकेत्युच्यते एकम् । अद्रेरूर्ध्वा या भूमिः साऽधित्यका एकम् । "उपाधिभ्यां त्यकन्नासन्नारूढयोः" इति पाणिनिसूत्रेण सिद्धावेतौ शब्दौ ॥ ७ ॥ अद्रेर्यन्मनःशिलादि स धातुरित्युच्यते । आदिना हरितालस्वर्णताम्रादिग्रहः । तदुक्तम् । "सुवर्णरौप्यताम्राणि हरितालं मनःशिला । गैरिकाञ्जनकासीसलोहवङ्गाः सहिङ्गुलाः । गन्धकोऽभ्रक इत्याद्या धातवो गिरिसंभवाः" इति । गैरिकं विशेषतो धातुः विशेषेण धातुरित्येव प्रसिद्धमित्यर्थः । एकं गेरू "काव" इति ख्यातस्य । निकुञ्जः कुञ्जः द्वे लतादिपिहितोदरे लताद्याच्छादितगर्भे स्थाने । "विकल्पेन द्वे क्लीबे अपि" । आदिना तृणादिग्रहः ॥ ८ ॥ इति शैलवर्गः ॥ ३ ॥ अटवी अरण्यं विपिनं गहनं काननं वनं षट्कमरण्यस्य । तत्राटवी स्त्रियाम् । "कृदिकारात्" इति ङीष्वा । तेनान्यत्राटविरित्यपि । महारण्यं अरण्यानी । "हिमारण्ययोर्महत्त्वे" एव आनुगागमः ङीष् च । द्वे महतो वनस्य । अरण्यानी स्त्रियाम् । गृहारामाः

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

आरामः स्यादुपवनं कृत्रिमं वनमेव यत् ॥
अमात्यगणिकागेहोपवने वृक्षवाटिका ॥ २ ॥
पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम् ॥
स्यादेतदेव प्रमदवनमन्तः पुरोचितम् ॥ ३ ॥
वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः ॥
वन्या वनसमूहे स्यादङ्कुरोऽभिनवोद्भिदि ॥ ४ ॥
वृक्षो महीरुहः शाखी विटपी पादपस्तरुः ॥
अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः ॥ ५ ॥
वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः ॥

निष्कुटाः द्वे गृहसमीपकृत्रिमवनेषु । "कुटाद्गृहान्निष्क्रान्ता निष्कुटाः" ॥ १ ॥ यत्कृत्रिमं कृत्या निर्वृत्तं वनं तत्र आरामः उपवनं इति द्वे । वृक्षवाटिकेत्येकम् अमात्यानां वेश्यानां च यद्गृहोपवनं तत्र ॥ २ ॥ यद्राज्ञः साधारणं प्रमदाभिरन्यैर्वा सह क्रीडाद्यर्थं वनं तत्र आक्रीडः उद्यानमिति द्वे । "क्लीबमाक्रीडमुद्यानम्" इत्यमरमालायामाक्रीडस्यापि क्लीबत्वमुक्तम् । अत उद्यानं अन्तःपुरोचितं राज्ञीनामेव क्रीडायामुचितं चेत्प्रमदवनं स्यात् । "ङ्यापोः संज्ञाछन्दसोः" इति । ह्रस्वः । एकम् ॥ ३ ॥ वीथी "ङीषो विकल्पादन्यत्र वीथिरित्यपि ।" आलिः आवलिः पङ्क्तिः श्रेणी पञ्चकं पङ्क्तेः । "आल्यादित्रीणि ङीपि दीर्घान्तान्यपि । श्रेणी ह्रस्वान्तोऽपि ।" लेखाः "रेखाः" राजयः द्वे लेखानाम् । "सान्तरा पङ्क्तिः । निरन्तरा लेखा । यथा विप्रपङ्क्तिः मसलेखा" । वनानां समूहे वन्येत्येकम् । अभिनवोद्भिदि नूतनप्ररोहे अङ्कुरः इत्येकम् । अङ्कूरः । "अङ्कूरश्चाङ्कुरः प्रोक्तः" इति हलायुधः ॥ ४ ॥ वृक्षः महीरुहः शाखी विटपी पादपः तरुः अनोकहः कुटः शालः सालः । "सालः सर्जतरौ वृक्षमात्रप्राकारयोरपि" इति । सालः पादपमात्रे स्यात्प्राकारः" इति मेदिनीविश्वकोशौ । पलाशी द्रुः द्रुमः अगमः त्रयोदश वृक्षस्य ॥ ५ ॥ पुष्पाज्जातैः फलैरुपलक्षितो वृक्षो वानस्पत्यः । एकं आम्रादेः । अपुष्पात्पुष्पं विना जातैः फलैरुपलक्षितो वृक्षो वनस्पतिः एकं पनसोदुम्बरादेः । द्रुममात्रेऽपि वनस्पतिः । "वनस्पतिर्ना द्रुमात्रे विना पुष्पं फलिद्रुमे" इति मेदिनीकोशात् । फलपाक एवान्तो यासां ताः ओषध्यः स्युः । एकं व्रीहियवादेः । "ओषधिः फलपाकान्ता स्यात्" इति वा पाठः । ङीषि ओषधी । अवन्ध्यः

ओषध्यः फलपाकान्ताः स्युरवन्ध्यः फलेग्रहिः ॥ ६ ॥

वन्ध्योऽफलोऽवकेशी च फलवान्फलिनः फली ॥
प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ॥ ७ ॥

फुल्लश्चैते विकसिते स्युरवन्ध्यादयस्त्रिषु ॥
स्थाणुर्वा ना ध्रुवः शङ्कुर्ह्रस्वशाखाशिफः क्षुपः ॥ ८ ॥

अप्रकाण्डे स्तम्बगुल्मौ वल्ली तु व्रततिर्लता ॥
लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि ॥ ९ ॥

नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ॥

"अवन्ध्यः" फलेग्रहिः फलानि गृह्णातीति फलेग्रहिः । "फलेग्रहिरात्मंभरिश्च" इति सूत्रेणोपपदस्यैत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते । द्वे यथाकालं फलधरस्य ॥६॥ इति वन्ध्यः । "बन्ध्यः"। बन्धे साधुः यत् अफलः अवकेशी त्रयं ऋतावपि फलरहितस्य । फलवान् फलिनः फली त्रीणि सफलस्य । फलिनोऽदन्तः । प्रफुल्लः उत्फुल्लः संफुल्लः व्याकोशः "मूर्द्धन्यान्तो वा" विकचः स्फुटः ॥७॥ फुल्लः एतेऽष्टौ विकसिते पुष्पिते स्युः । अवन्ध्यादयः अवन्ध्योऽफल इत्यादयो विकसितान्ताः त्रिषु त्रिलिङ्गाः स्युः । स्थाणुः ध्रुवः शङ्कुः त्रीणि छिन्नविटपस्य प्रकाण्डे वा ना स्थाणुशब्दो विकल्पेन पुंसीत्यर्थः । रूपभेदात्क्लीबत्वम् । स्थाणुरस्त्रीति वा पाठः। "स्थाणुः कीले हरे पुमान् । अस्त्री ध्रुवः" इति मेदिनी । शाखा प्रसिद्धा । शिफा वृक्षमूलम् । ह्रस्वे शाखाशिफे यस्य स क्षुप इत्युच्यते एकम् ॥ ८ ॥ न विद्यते प्रकाण्डो यस्य तस्मिन् स्तम्बः गुल्मः इति द्वयम्। वल्ली "सर्वधातुभ्य इन्" । वल्लिः वेल्लिः । "वल्ली तु वेल्लीः सरणः" इति वाचस्पतिः । व्रततिः "प्रततिः व्रतती । प्रततिर्व्रततिस्तथा" इति हलायुधः। लता त्रयं लतायाः । वीरुत् गुल्मिनी उलपः इति त्रयं या प्रतानिनी शाखादिभिर्विस्तृता लता तत्रेत्यर्थः । तत्र वीरुच्छब्दो धान्तः स्त्रियाम् ॥ ९ ॥ नगाद्यारोहो वृक्षादीनामुच्चत्वं तत्र उच्छ्रायः उत्सेधः उच्छ्रयः इति त्रयम् । "आरोहो दैर्घ्येऽपि । आरोहो दैर्घ्य उच्छ्राये स्त्रीकट्यां मानभिद्यपि । आरोहणे गजारोहे" इति हैमः । नगाद्यारोह इत्यादिना गिरिदेवालयादिग्रहः । उत्सेधमित्यपि । "उत्सेधस्तूच्छ्रये न स्त्री क्लीबं संहननेऽपि च" इति मेदिनी। प्रकाण्डः

अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः ॥ १० ॥

समे शाखालते स्कन्धशाखाशाले शिफाजटे ॥
शाखाशिफाऽवरोहः स्यान्मूलाच्चाग्रं गता लता ॥ ११ ॥

शिरोऽग्रं शिखरं वा ना मूलं बुध्नोऽङ्घ्रिनामकः ॥
सारो मज्जा नरि त्वक् स्त्री वल्कं वल्कलमस्त्रियाम् ॥ १२ ॥

काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम् ॥
निष्कुहः कोटरं वा ना वल्लिरिर्मञ्जरिः स्त्रियौ ॥ १३ ॥

स्कन्धः इति द्वे तरोर्मूलमारभ्य शाखापर्यन्तो यो भागस्तत्र । मूलाच्छाखावधेस्तरोरित्यपि पाठः । "तरोर्मूलस्कन्धयोरन्तरं प्रकाण्डः" ॥ १० ॥ शाखा लता द्वे शाखायाः । स्कन्धशाखा शाला द्वे प्रधानशाखायाः । स्कन्धात्प्रथमोत्पन्नशाखाया इत्यर्थः । शिफा जटा द्वे तरुमूलस्य "पाळ इति प्रसिद्धस्य"। शाखायाः शिफा मूलं अवरोह इत्युच्यते एकं "पारोगा पारंबी इति प्रसिद्धस्य" । मूलाद्वृक्षमूलमारभ्याग्रपर्यन्तं गता लता गुडूच्यादिरप्यवरोह इत्युच्यते एकम् । "मूलादूर्ध्वं गता शिफा लता स्यादित्यपि" ॥ ११ ॥ शिरसोऽग्रं शिरोऽग्रं तत् शिखरमित्युच्यते । शिरआदयस्त्रयोऽपि पर्याया इति केचित् । शिखरं वा ना पक्षे पुंसीत्यर्थः । मूलं बुध्नः ( ब्रध्न इत्यपि ) अङ्घ्रिनामकः पादमूलपर्यायसंज्ञकः त्रीणि वृक्षादेर्मूलस्य । सारः मज्जा द्वयं वृक्षादेः स्थिरांशे "गाभा, नार इति ख्याते"। तत्र मज्जा नान्तः । नरि पुंसि । क्वचिट्टाबन्तोऽपि दृश्यते । सारो मज्जा समौ त्वक् स्त्रीति पाठः । समौ समानलिङ्गौ । त्वक् वल्कं वल्कलं त्रयं त्वचः । तत्र वल्कादिद्वयं क्लीबपुंसोः ॥ १२ ॥ काष्ठं दारु । दारुरित्यन्यत्र । पुन्नपुंसकयोर्दारुरित्युक्तेः । द्वे काष्ठमात्रस्य । इन्धनं एधः इध्मं एधः समित् पञ्चकं शुष्कस्य तृणकाष्ठादेः । आद्यत्रयं अग्निसंदीपनतृणकाष्ठादेः जळण इति प्रसिद्धस्य । "अन्त्यद्वयं यागादौ हूयमानसमिधादेरिति मतम् ।" तत्र आद्य एधःशब्दः सान्तः क्लीबे । अन्यस्त्वदन्तः पुंसि । समिद्धान्तः । निष्कुहः कोटरं द्वे वृक्षगतविवरस्य । कोटरं वा ना पक्षे पुमान् । वल्लरिः मञ्जरिः "कृदिकारादक्तिन" इति गणसूत्रात् वल्लरी मञ्जरी इत्यपि । द्वे तुलस्यादेरभिनवोद्भिदि "केंसर इति ख्यातस्य" ॥ १३ ॥ पत्रं पलाशं छदनं दलं पर्णं छदः षट्कं पत्रस्य । तत्र छदोऽदन्तः पुंसि । "पर्णस्त्रिपत्रे

पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् ॥
पल्लवोऽस्त्री किसलयं विस्तारो विटपोऽस्त्रियाम् ॥ १४ ॥

वृक्षादीनां फलं सस्यं वृन्तं प्रसवबन्धनम् ॥
आमे फले शलाटुः स्याच्छुष्के वानमुभे त्रिषु ॥ १५ ॥

क्षारको जालकं क्लीबे कलिका कोरकः पुमान् ॥
स्याद्गुच्छकस्तु स्तबकः कुड्मलो मुकुलोऽस्त्रियाम् ॥ १६ ॥

स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम् ॥

पर्णं तु पत्रे इति हैमः" । पल्लवः किसलयं "किशलयमपि" द्वे पत्रादियुक्ते शाखायाः पर्वणि । तत्र किसलयं पुंसि क्लीबे च । "पुंसि क्लीबे च पल्लवः" इति तु व्याडिः । विस्तारः शाखापल्लवसमुदायलक्षण आभोगः विटप उच्यते एकम् । "विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे" इति मेदिनीकोशात् । "शाखायां पल्लवे स्तम्बे विस्तारे विटपोऽस्त्रियाम्" इति रभसाच्च । पल्लवादिचतुष्टयमेकार्थकं वा । अत्र यदुक्तं कात्येन । "स्कन्धादूर्ध्वं तरोः शाखा कटको विटपो मतः" इति ॥ १४ ॥ वृक्षादीनामिति पूर्वेणापि संबध्यते । वृक्षादीनां फलं सस्यमित्युच्यते । "तालव्याद्यपि" एकम् । प्रसवः पुष्पादिः बध्यते येन तत् वृन्तमुच्यते एकम् । देंठ, "डेंख" इति ख्यातस्य । बन्धनं पुष्पयोर्वृन्तमाह कात्यः । आमे अपक्वे फले शलाटुरित्येकम् । शुष्के फले वानमित्येकम् । उभे शलाटुर्वानं च त्रिषु त्रिलिङ्गाम् ॥ १५ ॥ क्षारकः जालकं द्वे नूतनकलिकायाः । तद्वृन्तस्येत्येके । तत्र जालकं क्लीबे एव । कलिका कोरकः द्वे अस्फुटितपुष्पस्य कळी इति ख्यातस्य । गुच्छकः स्तबकः द्वे कलिकादिभिराकीर्णस्य पल्लवग्रन्थेः । विकासोन्मुखकलिकाया इति केचित् । "स्तबके हारभेदे च गुत्सः स्तम्बेऽपि कीर्तितः" इति दन्त्यान्ते रुद्रः । "पुष्पादिस्तबके गुच्छः" इति तालव्यान्ते रन्तिदेवः । कुड्मलः मुकुलः द्वे ईषद्विकसितकलिकायाम् ॥ १६ ॥ सुमनसः पुष्पं प्रसूनं कुसुमं समम् । "सर्वसाधुसमानेषु समं स्यादाभिधेयवत्" इति मेदिनी । चत्वारि पुष्पस्य । कुसुमं सुममित्यपि पाठः । तत्र पुष्पस्य पञ्च नामानि । "भूम्नि स्त्रियां सुमनसः" इति रत्नकोशः । "सुमनाः पुष्पमालत्योः स्त्रियाम्" इति मेदिनीकोशः । मकरन्दः पुष्परसः द्वे पुष्पमधुनि । परागः सुमनोरजः द्वे पुष्परेणोः । "परागः कौसुमे रेणौ

मकरन्दः पुष्परसः परागः सुमनोरजः ॥ १७ ॥

द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम् ॥
आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले ॥ १८ ॥

बार्हतं च फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम् ॥
पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले ॥ १९ ॥

विदार्याद्यास्तु मूलेऽपि पुष्पे क्लीबेऽपि पाटला ॥
बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः ॥ २० ॥

अश्वत्थेऽथ कपित्थे स्युर्दधित्थग्राहिमन्मथाः ॥

धूलिस्नानीययोरपि ॥ गिरिप्रभेदे विख्यातावुपरागे च चन्दने" इति कोशान्तरम् ॥ १७ ॥ सर्वं वक्ष्यमाणं वृक्षलतौषधिजातीयं स्त्रीपुंलिङ्गमपि । अश्वत्थकपित्थादीनामभिधानं प्रसवे पुष्पे फले मूले च वर्तमानं तद्विहीनं ज्ञेयम् । द्वाभ्यां स्त्रीपुंसाभ्यां हीनं नपुंसकलिङ्गमित्यर्थः । यथा चम्पकं आम्रं सूरणमित्यादि । तत्र विशेषमाह । हरीतक्याः फलं हरीतकी । आदिना कोशातकी कर्कटी द्राक्षेत्यादि । अश्वत्थस्य फलं आश्वत्थम् । वेणोः फलं वैणवम् । प्लक्षस्य फलं प्लाक्षम् । न्यग्रोधस्य फलं नैयग्रोधम् । इङ्गुद्याः फलं ऐङ्गुदम् । बृहत्याः फलं बार्हतम् । एकैकम् । "प्लक्षादिभ्योऽण्" इति पुनरण्विधानात् । अश्वत्थादिशब्देभ्यः फले लुङ् नास्तीत्यर्थः ॥ १८ ॥ जम्बूः जम्बु जाम्बवं त्रीणि जम्ब्वाः फले। जातीयूथिकामल्लिकेत्यादयः पुष्पे वर्तमानाः स्वलिङ्गा एव स्युर्न तु क्लीबे । तथा जात्याः पुष्पं जाती स्त्री । व्रीहयः फले स्वलिङ्गाः । यथा व्रीहीणां फलानि व्रीहयः पुंसि । एवं माषमुद्गयवादयोऽपि ज्ञेयाः । यथा माषाणां फलं माषाः ॥१९॥ विदारी बृहत्यंशुमतीत्याद्या मूलेऽपि स्वलिङ्गाः । यथा विदार्या मूलं विदारी । अपिशब्दात्पुष्पेऽपि स्वलिङ्गा । पाटला पुष्पे वर्तमाना क्लीबे । यथा पाटलायाः पुष्पं पाटलम् । अपिशब्दात्स्वलिङ्गा । "पाटलः कुसुमे वर्णेऽप्याशुव्रीहिश्च पाटलः" इति शाश्वतात्पुंलिङ्गोऽपि । बोधिद्रुमः चलदलः पिप्पलः कुञ्जराशनः । कुञ्जरेण अश्यते । "अश भोजने" । कर्मणि ल्युट् ॥ २० ॥ अश्वत्थः पञ्च पिप्पलवृक्षस्य । कपित्थः "अमरमालायां पवर्गतृतीयमध्योऽपि ।" दधित्थः ग्राही मन्मथः दधिफलः पुष्पफलः दन्तशठः सप्तकं

तस्मिन्दधिफलः पुष्पफलदन्तशठावपि ॥ २१ ॥

उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ॥
कोविदारे चमरिकः कुद्दालो युगपत्रकः ॥ २२ ॥

सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ॥
आरग्वधे राजवृक्षशम्याकचतुरङ्गुलाः ॥ २३ ॥

आरेवतव्याधिघातकृतमालसुवर्णकाः ॥
स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ॥ २४ ॥

वरुणो वरणः सेतुस्तिक्तशाखः कुमारकः ॥
पुन्नागे पुरुषस्तुङ्गः केसरो देववल्लभः ॥ २५ ॥

कपित्थस्य "कवठ इति प्रसिद्धस्य" ॥ २१ ॥ उदुम्बरः "मेदिन्यां टवर्गतृतीयमध्यः । त्रिकाण्डशेषेऽप्येवमेव" । जन्तुफलः यज्ञाङ्गः हेमदुग्धकः चत्वारि उदुम्बरस्य उम्बर इति ख्यातस्य । उदुम्बरे जन्तुफल इति सप्तम्यन्तपाठोऽपि । कोविदारः चमरिकः कुद्दालः युगपत्रकः चत्वारि काञ्चन इति ख्यातस्य ॥ २२ ॥ सप्तपर्णः काण्डे काण्डे सप्त पर्णानि अस्य । विशालत्वक् शारदः श्यन्तोऽपि । "शारदी तोयपिप्पल्यां सप्तपर्णे च" इति दन्त्यान्तेषु रुद्रः। "शारदोऽब्दे स्त्रियां तोयपिप्पलीसप्तपर्णयोः" इति मेदिनी । विषमच्छदः चत्वारि सान्तवण इति ख्यातस्य । दुरधिगमवस्तुनः प्राकृतसंज्ञयापि व्याख्याने न दोषः । यदुक्तम् । प्रयोजनार्था वचनप्रवृत्तिर्यतस्ततः प्राकृतमित्यदोष इति । किंच । "रसवीर्यविपाकेभ्यो मूलात्पुष्पात्फलाद्दलात् । आकाराद्देशकालादेर्वनौषध्यर्थमुन्नयेत्" इति । आरग्वधः अरग्वधः अर्ग्वधः । "अरग्वधोऽथ शंपाकः कृतमालस्तथाऽर्ग्वधः" इति रत्नकोशः । राजवृक्षः वृक्षाणां राजा राजवृक्षः राजदन्तादिवत् परनिपातः । शम्याकः संपाकः शंपाकश्च । "संपाकस्तर्कके धृष्टे त्रिषु ना चतुरङ्गुले" इति मेदिनी । चतुरङ्गुलः ॥ २३ ॥ आरेवतः व्याधिघातः कृतमालः सुवर्णकः "सुपर्णकः" अष्टौ बाहवा इति ख्यातस्य । जम्बीरः "जम्बिरः" दन्तशठः जम्भः जम्भीरः जम्भलः "जम्भरः" पञ्चकं जांबेर "लघु ईडनिंबू" इति ख्यातस्य ॥ २४ ॥ वरुणः वरणः सेतुः तिक्तशाखः कुमारकः पञ्च वायवर्णा इति ख्यातस्य । पुन्नागः पुरुषः तुङ्गः केसरः "केशरः"

25-29



पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ॥
तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ॥ २६ ॥
वञ्जुलश्चित्रकृच्चाथ द्वौ पीतनकपीतनौ ॥
आम्रातके मधूके तु गुडपुष्पमधुद्रुमौ ॥ २७ ॥
वानप्रस्थमधुष्ठीलौ जलजेऽत्र मधूलकः ॥
पीलौ गुडफलः स्रंसी तस्मिंस्तु गिरिसंभवे ॥ २८ ॥
अक्षोटकन्दरालौ द्वावङ्कोटे तु निकोचकः ॥
पलाशे किंशुकः पर्णो वातपोथोऽथ वेतसे ॥ २९ ॥
रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः ॥

देववल्लभः पञ्चकं उंडी "उंडणी, उंडली" इति ख्यातस्य ॥ २५ ॥ पारिभद्रः निम्बतरुः मन्दारः पारिजातकः चत्वारि निम्बतरोः "कडूनिंब इति ख्यातस्य"। तिनिशः स्यन्दनः नेमी नेमिः । "पुंलिङ्गस्तिनिशे नेमिश्चक्रप्रान्ते स्त्रियामपि" इति रुद्रः । रथद्रुः अतिमुक्तकः ॥ २६ ॥ वञ्जुलः चित्रकृत् सप्त तिवस इति ख्यातस्य । अयं खदिरसदृशः कण्टकरहितः । पीतनः कपीतनः आम्रातकः "अम्रातकः । कपिचूतोऽम्रातकोऽस्य फले पशुहरीतकीति त्रिकाण्डशेषः ।" त्रयं अंबाडा इति ख्यातस्य । मधूकः "मधुकः मधूलः मधुलः" गुडपुष्पः मधुद्रुमः ॥ २७ ॥ वानप्रस्थः मधुष्ठीलः पञ्चकं मोहा इति ख्याते । जलजेऽत्र मधूके मधूलक इत्येकम् । अयं पूर्वस्माद्दीर्घपत्रः । गिरिजेऽत्र मधूलक इत्यपि पाठः । "गौरशाको मधूकोऽन्यो गिरिजः सोऽल्पपत्रकः" इति माधवः । "मधूकोऽन्यो मधूलस्तु जलजो दीर्घपत्रकः" इति स्वामी । पीलुः गुडफलः स्रंसी त्रीणि पीलुवृक्षस्य "अक्रोड इति प्रसिद्धस्य" । अयं गुर्जरदेशे प्रसिद्धः । गिरिसंभवे तस्मिन्पीलौ ॥ २८ ॥ अक्षोटः "अक्षोडः आक्षोडः आक्षोटः आखोटः" कन्दरालः "कर्पराल:" इति द्वयं पर्वतपीलोः "डोंगरी आक्रोड इति ख्यातस्य"। अङ्कोटः "अङ्कोठः अङ्कोलः" निकोचकः "निकोटकः" द्वे अङ्कोटस्य "पिस्ते इति ख्यातस्य ।" पलाशः किंशुकः । किंचित् शुक इव शुकतुण्डाभपुष्पत्वात् । पर्णः वातपोथः चत्वारि पलाशस्य । वेतसः ॥ २९ ॥ रथः अभ्रपुष्पः विदुलः शीतः "शीतम्"। "शीतं तुषारवानीरबहु-

द्वौ परिव्याधविदुलौ नादेयी चाम्बुवेतसे ॥ ३० ॥
सोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः ॥
रक्तोऽसौ मधुशिग्रुः स्यादरिष्टः फेनिलः समौ ॥ ३१ ॥
बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि ॥
प्लक्षो जटी पर्कटी स्यान्न्यग्रोधो बहुपाद्वटः ॥ ३२ ॥
गालवः शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ ॥
आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः ॥ ३३ ॥
कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः ॥

वारद्रुमेषु च" इत्यजयात् । वानीरः वञ्जुलः सप्तकं वेतसस्य "वेत इति ख्यातस्य" । परिव्याधः विदुलः नादेयी अम्बुवेतसः चत्वारि जलवेतसस्य । नादेयी स्त्री ॥ ३० ॥ सोभाञ्जनः "सौभाञ्जनः शोभाञ्जनः शौभाञ्जनः" शिग्रुः तीक्ष्णगन्धकः अक्षीवः "आक्षीवः" मोचकः पञ्चकं शेगूल "शेवगा, शेगट" इति ख्यातस्य । असौ सोभाञ्जनो रक्तो रक्तपुष्पश्चेन्मधुशिग्रुरित्युच्यते एकम् । अरिष्टः फेनिलः द्वे रिठा इति ख्यातस्य । "अन्यत्र रिष्टमित्यपि । रिष्टं क्षेम शुभाभावे पुंसि खड्गे च फेनिले" इति मेदिनी ॥ ३१ ॥ बिल्वः शाण्डिल्यः शैलूषः मालूरः श्रीफलः पञ्चकं बिल्वस्य । प्लक्षः जटी "जटिः" पर्कटी "पर्कटिः" त्रयं पिंपरी इति ख्यातस्य । अयं गोमान्तकभाषया केळा इति ख्यातः । तत्र जटीपर्कटिनाविन्नन्तौ । पर्कटी ङीषन्तेति कश्चित् । न्यग्रोधः बहुपात् वटः त्रयं वटस्य ॥ ३२ ॥ गालवः शाबरः "सावरः" लोध्रः तिरीटः तिल्वः मार्जनः षट्कं लोध्रस्य । तत्राद्यौ श्वेतलोध्रे शेषा रक्तलोध्रे इत्येके । आम्रः चूतः रसालः त्रयं आम्रस्य । असौ आम्रोऽतिसौरभश्चेत्सहकार इत्येकम् ॥ ३३ ॥ कुम्भः उलूखलकम् । कुम्भेति संघातविगृहीतम् । कुम्भमिति क्लीबमपि । "कार्मुके वारनार्यां च कुम्भं क्लीबं तु गुग्गुलौ" इति रभसः । "कुम्भं त्रिवृत्तिगुग्गुलौ" इति विश्वप्रकाशः । उदूखलमित्यपि । "उदूखलं गुग्गुलौ स्यादुलूखलेऽपि न द्वयोः" इति मेदिनी । "उलूखले गुग्गुलौ च क्लीबमुक्तमुदूखलम्" इति रुद्रः । अत्र पक्षे कुम्भं चोदूखलमिति पाठः कर्त्तव्यः । कुम्भोलूः खलकम् । कुम्भोलूखलकम् । कुम्भोलूखलाकाराद्वृक्षकोशान्निर्यातम् । "कुम्भोलूखलकं कुम्भं कुम्भोलूखलकं वरम्" इति वाचस्पतिः । कौशिकः गुग्गुलुः "गुग्गुलः" पुरः पञ्च गुग्गुलवृक्षस्य । पुरोऽदन्तः । शेलुः "सेलुः"

शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ॥ ३४ ॥
राजादनं प्रियालः स्यात्सन्नकद्रुर्धनुःपटः ॥
गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका ॥ ३५ ॥
श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः ॥
कर्कन्धूर्बदरी कोलिः कोलं कुवलफेनिले ॥ ३६ ॥
सौवीरं बदरं घोण्टाऽप्यथ स्यात्स्वादुकण्टकः ॥
विकङ्कतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि ॥ ३७ ॥
ऐरावतो नागरङ्गो नादेयी भूमिजम्बुका ॥
तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ॥ ३८ ॥

श्लेष्मातकः शीतः उद्दालः बहुवारकः पञ्च शेलट "भोंकरी" इति ख्यातस्य ॥ ३४ ॥ राजादनं राजातनः राजादनः । "राजादनं प्रसरको राजातनः" इति वाचस्पतिः ॥ प्रियालः "प्रियालश्च प्रियालकः" इति माधवः । सन्नकद्रुः धनुःपटः चत्वारि चार इति ख्यातस्य । धनुः पट इति व्यस्तमपि । "धनुः प्रियाले ना न स्त्री राशिभेदे शरासने" इति मेदिनी । "पटः प्रियालवृक्षे ना सुचेले पुन्नपुंसकम्" इति रभसः । गम्भारी "कम्भारी" सर्वतोभद्रा काश्मरी मधुपर्णिका ॥ ३५ ॥ श्रीपर्णी भद्रपर्णी काश्मर्यः सप्त शिवणी इति ख्यातस्य । काश्मर्योऽदन्तः पुंसि । कर्कन्धूः "कर्कन्धुः" बदरी कोलिः "कोली केला" त्रीणि बोर इति ख्यातस्य । तत्र कर्कन्धूर्द्वयोः स्त्रीपुंसयोः । कोलं कुवलं फेनिलम् ॥ ३६ ॥ सौवीरम् । यत्रि सौवीर्यम् । बदरं घोंटा षट्कं बदरीफलस्य । घोण्टाशब्दो बदरीसदृशे वृक्षभेदेऽपि वर्तते । "बदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत् । अटव्यामेव सा घोण्टा गोपघण्टेति चोच्यते" इति सुभूत्युक्तेः स्वादुकण्टकः विकङ्कतः "वैकङ्कतः" स्रुवावृक्षः स्रुवायाः वृक्षः स्रुवा नाम होमपात्रभेदः । ग्रन्थिलः व्याघ्रपात् पञ्च विकङ्कतस्य "वेहळी इति ख्यातस्य" । अयं यज्ञियवृक्षभेदः करनाटकभाषया हलुमाणिका इति ख्यातः ॥ ३७ ॥ ऐरावतः नागरङ्गः नादेयी भूमिजम्बुका चत्वारि नागरङ्गस्य नारिंग इति ख्यातस्य । अत्र पूर्वद्वयं नागरङ्गाः अपरद्वयं भूमिजम्ब्वा इत्यपि मतम् । तिन्दुकः "तिन्दुकी" स्फूर्जकः कालस्कन्धः शितिसारकः चत्वारि तेण्डू टेंभुरणी इति ख्यातस्य ॥ ३८ ॥ काकेन्दुः

काकेन्दुः कुलकः काकतिन्दुकः काकपीलुके ॥
गोलीढो झाटलो घण्टापाटलिर्मोक्षमुष्ककौ ॥ ३९ ॥

तिलकः क्षुरकः श्रीमान्समौ पिचुलझावुकौ ॥
श्रीपर्णिका कुमुदिका कुम्भी कैडर्यकट्फलौ ॥ ४० ॥

क्रमुकः पट्टिकाख्यः स्यात्पट्टी लाक्षाप्रसादनः ॥
तूदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ॥ ४१ ॥

तूलं च नीपप्रियककदम्बास्तु हरिप्रियः ॥
वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु ॥ ४२ ॥
गर्दभाण्डे कन्दरालकपीतनसुपार्श्वकाः ॥

कुलकः काकतिन्दुकः काकपीलुकः चत्वारि काकतेण्डू "काकटेम्भुरणी कडुटेम्भुरणी इति, कुचला, काजरा" इति ख्यातस्य । गोलीढः झाटलः घण्टापाटलिः मोक्षः मुष्ककः पञ्च घण्टापाटलेः मोरवा इति प्रसिद्धस्य । घण्टा पाटलिरिति नामद्वयं वा ॥ ३९ ॥ तिलकः क्षुरकः श्रीमान् । "श्रीमान् तिलकवृक्षे स्यान्मनोज्ञे धनिके त्रिषु" इति कोशान्तरम् । अयं तिळवा "तिलकपुष्प" इति ख्यातस्य । पिचुलः झावुकः द्वे झावुकस्य । तिलकभेदोऽयम् । "कोवी इति ख्यातेयमिति केचित्" । श्रीपर्णिका कुमुदिका कुम्भी कैडर्यः कट्फलः पञ्च कुम्भल "कुंभ्या इति, कायफल" इति ख्यातस्य । कुम्भी स्त्री ॥ ४० ॥ क्रमुकः पट्टिकाख्यः पट्टी लाक्षाप्रसादनः । लाक्षा प्रसीदति अनेन । करणे ल्युट् । लोध्रचूर्णेन लाक्षारङ्गोऽतितरां रज्यत इत्यनुभवसिद्धम् । चत्वारि लोहितलोध्रस्य । पट्टिका आख्या यस्य सः । पट्टोऽस्यास्तीति पट्टी । इन्नन्तः । ङीषन्तो वा ॥ तूदः "नूदः" यूपः क्रमुकः ब्रह्मण्यः ब्रह्मदारु ॥ ४१ ॥ तूलं "तूलोऽपि" षट्कं अश्वत्थाकारे वृक्षभेदे । "पारसा पिम्पळ इति ख्यातस्य" । नीपः प्रियकः कदम्बः हरिप्रियः । हलिप्रिय इत्यपि पाठः । हलिनः प्रियः । सुराया अधिवासनात् । चत्वारि कळंब इति ख्यातस्य । वीरवृक्षः अरुष्करः अग्निमुखी भल्लातकी चत्वारि "बिबवा, भिलावा इति ख्यातस्य" ॥ ४२ ॥ गर्दभाण्डः कन्दरालः कपीतनः सुपार्श्वकः प्लक्षः पञ्च गजहंड "लाखी पिंपरी" इति ख्यातस्य । तिन्तिडी तिन्तिली । "अम्लिका

43-46



प्लक्षश्च तिन्तिडी चिञ्चाऽम्लिकाऽथो पीतसारके ॥ ४३ ॥
सर्जकासनबन्धूकपुष्पप्रियकजीवकाः ॥
साले तु सर्जकार्श्याश्वकर्णकाः सस्यसम्बरः ॥ ४४ ॥
नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः ॥
राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः ॥ ४५ ॥
इङ्गुदी तापसतरुर्भूर्जे चर्मिमृदुत्वचौ ॥
पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ॥ ४६ ॥
पिच्छा तु शाल्मलीवेष्टे रोचनः कूटशाल्मलिः ॥

चाम्लिका चिञ्चा तिन्तिडीका च तिन्तिली" इति चन्द्रः । चिञ्चा अम्लिका आम्लीका "आम्लिका । तिन्तिडी त्वाम्लिका चिञ्चा तिन्तिडीका कपिप्रिया" इति वाचस्पतिः । अयं चिञ्चायाः । पीतसारकः ॥ ४३ ॥ सर्जकः असनः "आसनः" । "पीठेभस्कन्धयोः क्लीबमासनं ना तु जीवक इति रुद्ररभसौ ।" बन्धूकपुष्पः प्रियकः जीवकः षट्कं असणा इति ख्यातस्य । "तत्र कांटेअसण, पालेअसण इति द्वौ भेदौ ख्यातौ" । सालः "श्यालः" सर्जः कार्श्यः "कार्ष्यः" अश्वकर्णकः अश्वस्य कर्ण इव पत्रमस्य । सस्यसम्बरः "शस्यसंवरः" पञ्च शालवृक्षस्य सालई इति प्रसिद्धस्य ॥ ४४ ॥ नदीसर्जः वीरतरुः इन्द्रद्रुः ककुभः अर्जुनः पञ्चकं अर्जुनवृक्षस्य । "अर्जुनसादडा इत्यपि वदन्ति" । राजादनः "राजादनम्" । "राजादनं क्षीरिकायां प्रियाले किंशुकेऽपि च" इति मेदिनी । फलाध्यक्षः क्षीरिका अयं खिरणी इति ख्यातस्य ॥ ४५ ॥ इङ्गुदी तापसतरुः । तापसस्य तरुः । तपस्विन् उपयुक्ततरुत्वात् । द्वे इङ्गुद्याः हिंगणबेट इति ख्यातायाः । द्वयोरित्युक्तत्वात्पुंसि तु इङ्गुदः । भूर्जः चर्मी मृदुत्वक् त्रीणि भूर्जवृक्षस्य । पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिः "शाल्मली शाल्मलः" पञ्च सांवरी इति ख्यातस्य । द्वयोः स्त्रीपुंसयोः । स्थिरमायुर्यस्याः स्थिरायुः । "षष्टिवर्षसहस्राणि वने जीवति शाल्मलिः" इति वचनात् ॥ ४६ ॥ शाल्मल्या वेष्टे निर्यासे पिच्छेत्येकम् । सांवरीचा डीक इति ख्यातस्य । "क्वाथः कषायो निर्यूषो निर्यासो वेष्टकस्तथा" इति रभसः । रोचनः कूटशाल्मलिः द्वे काळी सांवरी इति ख्यातस्य । चिरिबिल्वः "चिरबिल्वः" नक्तमालः "रक्तमालः" करजः करञ्जकः चत्वारि

चिरिबिल्वो नक्तमालः करजश्च करञ्जके ॥ ४७ ॥
प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः ॥
करञ्जभेदाः षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ॥ ४८ ॥
रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ॥
गायत्री बालतनयः खदिरो दन्तधावनः ॥ ४९ ॥
अरिमेदो विट्खदिरे कदरः खदिरे सिते ॥
सोमवल्कोऽप्यथ व्याघ्रपुच्छगन्धर्वहस्तकौ ॥ ५० ॥
एरण्ड उरुबूकश्च रुचकश्चित्रकश्च सः ॥
चञ्चुः पञ्चाङ्गुलो मण्डवर्धमानव्यडम्बकाः ॥ ५१ ॥

करञ्जवृक्षस्य ॥ ४७ ॥ प्रकीर्यः पूतिकरजः "पूतीकरजः पूतीकरञ्जः" । "पूतीकरञ्जः सुमनास्तथा कलहनाशने" इति रुद्रः । पूतिकः "पूतीकः" कलिमारकः "कलिकारक इत्यपि पाठः" । चत्वारि काण्टेकरञ्ज "घाणेरा करञ्ज" इति ख्यातस्य । षड्ग्रन्थः मर्कटी अङ्गारवल्लरी एते त्रयः करञ्जभेदाः । "अङ्गारवर्णपर्णा वल्लरी अङ्गारवल्लरी" ॥ ४८ ॥ रोही रोहितकः प्लीहशत्रुः दाडिमपुष्पकः चत्वारि रक्तरोहिडा इति ख्यातस्य । गायत्री "वह्निगायत्रिणा तथा" इति वैद्यकादिग्रन्तोऽपि । बालतनयः खदिरः दन्तधावनः चत्वारि खदिरस्य । "गायत्री स्त्रियाम्" । "गायत्री खदिरे स्त्री स्यात्" इति रभसः । बालपत्रश्चेति प्राचां पाठः । यदाह । "खदिरो रक्तसारश्च गायत्री दन्तधावनः । कण्टकी बालपत्रश्च जिह्मशल्यः क्षतिः क्षयः" इति त्रिकाण्डशेषेऽप्येवमेव पाठः ॥४९ ॥ अरिमेदः विट्खदिरः द्वे दुर्गंधिखदिरस्य । विड्गन्धिः खदिरो विट्खदिरः । सिते शुक्लसारे खदिरे कदरः सोमवल्कः इति द्वयम् । व्याघ्रपुच्छः गन्धर्वहस्तकः ॥५०॥ एरण्डः उरुबूकः "ऊरुबुकः रूबूकः रूबुकः" रुचकः चित्रकः चञ्चुः पञ्चाङ्गुलः मण्डः वर्धमानः व्यडम्बकः "व्यडम्बनोऽपि" एकादश एरण्डस्य । मण्डयतीति मण्डः कश्चिदमण्ड इति पदमाह । आमण्ड इत्यपि । "गन्धर्वहस्तको मण्ड आमण्डो व्याघ्रपुच्छकः" इति तारपालः ॥ ५१ ॥ याऽल्पा स्वल्पाकारा शमी स शमीर इत्येकम् । "कुटीशमीशुण्डाभ्योरः" इति सूत्रेण अल्पार्थे शमीशब्दात् रप्रत्ययः । शमी सक्तुफला "सक्तुफली" शिवा त्रयं

अल्पा शमी शमीरः स्याच्छमी सक्तुफला शिवा ॥
पिण्डीतको मरुबकः श्वसनः करहाटकः ॥ ५२ ॥

शल्यश्च मदने शक्रपादपः पारिभद्रकः ॥
भद्रदारु द्रुकिलिमं पीतदारु च दारु च ॥ ५३ ॥

पूतिकाष्ठं च सप्त स्युर्देवदारुण्यथ द्वयोः ॥
पाटलिः पाटला मोघा काचस्थाली फलेरुहा ॥ ५४ ॥

कृष्णवृन्ता कुबेराक्षी श्यामा तु महिलाह्वया ॥
लता गोवन्दिनी गुन्द्रा प्रियङ्गुः फलिनी फली ॥ ५५ ॥

विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सा ॥
मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः ॥ ५६ ॥

स्योनाकशुकनासर्क्षदीर्घवृन्तकुटंनटाः ॥

शम्याः । पिण्डीतकः मरुबकः श्वसनः करहाटकः ॥ ५२ ॥ शल्यः मदनः षड्रं गोळा इति ख्यातस्य । शक्रपादपः पारिभद्रकः । "पारिभद्रस्तु निम्बद्रौ मन्दारे देवदारुणि" । भद्रदारु द्रुकिलिमं पीतदारु दारु ॥ ५३ ॥ पूतिकाष्ठं एतानि सप्त देवदारुणि । पाटलिः "पाटली" पाटला मोघा "अमोघा" । "अलिप्रिया विशालाग्राऽप्यमोघा पाटलिर्द्वयोः" इति वाचस्पतिः । काच-स्थाली । काला स्थाली फलेरुहेत्यपि पाठस्तत्र काला स्थाली इति पदद्वयम् । "काला तु कृष्णवृन्ताख्या मञ्जिष्ठा नीलिकासु च" इति मेदिनी । "स्थाली स्यात्पाटलोखयोः" इति मेदिनीविश्वप्रकाशौ । फलेरुहा ॥ ५४ ॥ कृष्णवृन्ता कुबेराक्षी सप्त पाटलायाः "पाडळी इति ख्याताया: " । तत्र पाटलिर्द्वयोः । श्यामा महिलाह्वया लता गोवन्दिनी गुन्द्रा प्रियङ्गुः फलिनी फली ॥ ५५ ॥ विष्वक्सेना गन्धफली कारम्भा प्रियकः द्वादश प्रियङ्गुवृक्षे "वाघांटी इति ख्याते" । महिलायाः स्त्रियाः आह्वय इव आह्वयो यस्याः सा । महिलायाः समग्रनामभिरधीयत इत्यर्थः । तत्र प्रियकः पुंसि । शेषं स्त्रियाम् । मण्डूकपर्णः पत्रोर्णः नटः कट्वङ्गः टुण्टुकः ॥ ५६ ॥ स्योनाकः "श्योनाकः शोणाकः" शुकनासः ऋक्षः दीर्घवृन्तः कुटंनटः शोणकः "शोनकः" अरलुः "अरडुः"

शोणकश्चारलौ तिष्यफला त्वामलकी त्रिषु ॥ ५७ ॥
अमृता च वयस्था च त्रिलिङ्गस्तु विभीतकः ॥
नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ॥ ५८ ॥
अभया त्वव्यथा पथ्या कायस्था पूतनाऽमृता ॥
हरीतकी हैमवती चेतकी श्रेयसी शिवा ॥ ५९ ॥
पीतद्रुः सरलः पूतिकाष्ठं चाथ द्रुमोत्पलः ॥
कर्णिकारः परिव्याधो लकुचो लिकुचो डहुः ॥ ६० ॥
पनसः कण्टकिफलो निचुलो हिज्जलोऽम्बुजः ॥
काकोदुम्बरिका फल्गुर्मलयूर्जघनेफला ॥ ६१ ॥

द्वादश दण्डिका "दिंडा" इति ख्यातस्य । क्वचिदयं टेंटू इति ख्यातः । तिष्यफला आमलकी ॥ ५७ ॥ अमृता वयस्था चत्वारि आमलक्याः । त्रिष्वित्युक्तेः आमलकः आमलकम् । विभीतकः अक्षः तुषः कर्षफलः भूतावासः कलिद्रुमः षट्कं घाटिंग इति ख्यातस्य । क्वचिदयं बेहडा इति ख्यातः । त्रिलिङ्गत्वाद्विभीतकी विभीतकमिति च ॥ ५८ ॥ अभया अव्यथा पथ्या कायस्था "अत्र वयस्थेत्यपि पाठः" पूतना । यस्याः सेवनेनाभ्यन्तरस्थमलनाशे मनुष्यः पूतो भवति । अमृता हरीतकी हैमवती चेतकी श्रेयसी शिवा एकादश हिरडा इति ख्यातायां हरीतक्याम् ॥ ५९ ॥ पीतद्रुः सरलः पूतिकाष्ठं त्रयं सरलस्य "देवदार इति ख्यातस्य" । द्रुमोत्पलः कर्णिकारः परिव्याधः त्रयं कर्णिकारस्य "पांगारा इति च ख्यातस्य" । लकुचः लिकुचः डहुः "डहू" त्रयं ओंट इति ख्यातस्य । "क्षुद्रपनसस्येत्यपि मतम्" ॥ ६० ॥ पनसः "फलसः" कण्टकिफलः "कण्टकफलः" द्वे पनस इति प्रसिद्धस्य । निचुलः हिज्जलः "इज्जलः" । "निचुलेज्जलहिज्जला" इति रभसः । अम्बुजः त्रीणि इजर इति ख्यातस्य जलवेतसभेदस्य । "स्थलवेतसस्येत्यपि क्वचित् । निचूलः स्थलवेतसः" इति शब्दार्णवात् । समुद्रफलस्येत्यपि मतम् । काकोदुम्बरिका फल्गुः मलयूः "मलपूः मलात्पापात्पुनाति । मलापूरित्यपि । मलधारणे बाहुलकादापूः" जघनेफला चत्वारि काळा उम्बर "बोखाडा, खर्वत" इति ख्यातस्य । जघने बुध्ने फलान्यस्या जघनेफला । पूर्वोत्तरसाहचर्यात्फ-

61-65



अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः ॥
पिचुमन्दश्च निम्बेऽथ पिच्छिलाऽगुरुशिंशपा ॥ ६२ ॥

कपिला भस्मगर्भा सा शिरीषस्तु कपीतनः ॥
भण्डिलोऽप्यथ चाम्पेयश्चम्पको हेमपुष्पकः ॥ ६३ ॥

एतस्य कलिका गन्धफली स्यादथ केसरे ॥
वकुलो वञ्जुलोऽशोके समौ करकदाडिमौ ॥ ६४ ॥

चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः ॥
जया जयन्ती तर्कारी नादेयी वैजयन्तिका ॥ ६५ ॥

ल्गुरपि स्त्री । मलयूरिति तालव्यान्तम् ॥ ६१ ॥ अरिष्टः सर्वतोभद्रः हिङ्गुनिर्यासः मालकः पिचुमन्दः “पिचुमर्दः” निम्बः षट्कं निम्बस्य । हिङ्गुगन्धिनिर्यासोऽयम् । “हिङ्गुनिर्यास इत्येष निम्बे हिङ्गुरसेऽपि च” इति मेदिनी । पिच्छिला अगुरुशिंशपा ॥ ६२ ॥ कपिला भस्मगर्भा चत्वारि शिसवा इति ख्यातस्य । अगुरु इति पृथक्पदं वा । तत्पुंनपुंसकम् । “अगुरु क्लीबे शिंशपायाम्” इति रुद्रः । “अगुरुः स्याच्छिंशपायाम्” इति विश्वप्रकाशः । शिंशपान्तं त्रयं शिसवा इति ख्यातस्य । या कपिला कृष्णवर्णपुष्पा सा भस्मगर्भेत्येकमित्यन्ये । काळा शिसवा इति प्रसिद्धस्य । शिरीषः कपीतनः भण्डिलः “भण्डिरः भण्डीलः” । “भण्डीलो भण्डिरो ना” इति वाचस्पतिः । त्रयं शिरस इति ख्यातस्य । चाम्पेयः चम्पकः हेमपुष्पकः त्रयं कुडचांपा “सोनचांपा” इति ख्यातस्य ॥ ६३ ॥ एतस्य चम्पकस्य कलिका गन्धफलीत्येकम् । तथा च प्रयोगः । “न षट्पदो गन्धफलीमजिघ्रत्” इति । केसरः “तालव्यमध्योऽपि” बकुलः द्वे ओंवळ “बकूळ” इति ख्यातस्य । वञ्जुलः अशोकः द्वे अशोकस्य । करकः दाडिमः “दाडिम्बः दालिमः डालिमः” । “दाडिमसारपिण्डीरस्वाद्वम्लशुकवल्लभा” इति रभसः । त्रिकाण्डशेषोऽप्येवम् । द्वे दाडिमस्य दाळिंब इति ख्यातस्य ॥ ६४ ॥ चाम्पेयः केशरः नागकेशरः । “स्वर्णभसर्पाख्यो नागकेशरः षट्पदप्रियः” इति रभसः । काञ्चनाह्वयः चत्वारि नागचांपा इति ख्यातस्य । काञ्चनाह्वयः स्वर्णपर्यायनामक इत्यर्थः । जया जयन्ती तर्कारी नादेयी वैजयन्तिका पञ्च टाहाकळ “थोर ऐराण” इति ख्यातायाः ॥ ६५ ॥ श्रीपर्णी

श्रीपर्णमग्निमन्थः स्यात्कणिका गणिकारिका ॥
जयोऽथ कुटजः शक्रो वत्सको गिरिमल्लिका ॥ ६६ ॥

एतस्यैव कलिङ्गेन्द्रयवभद्रयवं फले ॥
कृष्णपाकफलाविग्नसुषेणाः करमर्दके ॥ ६७ ॥

कालस्कन्धस्तमालः स्यात्तापिच्छोऽप्यथ सिन्दुके ॥
सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ॥ ६८ ॥

वेणी गरा गरी देवताडो जीमूत इत्यपि ॥
श्रीहस्तिनी तु भूरुण्डी तृणशून्यं तु मल्लिका ॥ ६९ ॥

अग्निमन्थः कणिका गणिकारिका जयः पञ्च नरवेल इति ख्यातस्य । दशाप्येकस्य पर्याया इत्येके । कुटजः शक्रः वत्सकः गिरिमल्लिका चत्वारि कुडा इति प्रसिद्धस्य ॥ ६६ ॥ एतस्यैव कुटजस्य फले कलिङ्गं इन्द्रयवं भद्रयवमिति त्रीणि । कलिङ्गः इन्द्रयवः । "कलिङ्गेन्द्रयवः पुमान्" इत्यमरमाला । कलिङ्गा । तत्रैव स्त्रीकाण्डे पाठात् । कृष्णपाकफलः अविग्नः "आविग्नः" सुषेणः करमर्दकः चत्वारि करमर्दकस्य "करवन्द" इति ख्यातस्य । कृष्णपाकं फलमस्य कृष्णपाकफलः ॥ ६७ ॥ कालस्कन्धः तमालः तापिच्छः "तापिञ्जः" त्रयं तमालस्य । सिन्दुकः "सिन्धुकः" सिन्दुवारः इन्द्रसुरसः "इन्द्रसुरिसः" निर्गुण्डी "निर्गुण्ठी" इन्द्राणिका पञ्च सिन्धुवारस्य सिन्धुआरी, निगडी, निर्गुडी इति ख्यातस्य ॥ ६८ ॥ वेणी गरा गरी खरेत्यपि अगरीत्यपि । "देवताडे खरा तीक्ष्णे त्रिषु स्याद्गर्दभे पुमान्" इति रभसः । खरागरीति समस्तमपि । मूषिकाविषघ्नत्वाद्गरमागिरतीति गरागरीत्येकं पदमपि । तदुक्तम् । "जीमूतको देवताडो वृत्रकेशो गरागरी" इति । देवताडः जीमूतः पञ्च देवतालस्य देवताली "देवडङ्गरी" इति ख्यातस्य । श्रीहस्तिनी भूरुण्डी द्वे हस्तिकर्णाभपत्रस्य शाकभेदस्य सिरिहस्तिनी "थोर कुरडू" इति ख्यातस्य । तृणशून्यं तृणशूने गुल्मे साधु । "तत्र साधुः" इति यत् । "मल्लिको हंसभेदे स्यात्तृणशून्येऽपि मल्लिका" इति रुद्रः । मल्लिका ॥ ६९ ॥ भूपदी शीतभीरुः शतभीरुः । "मल्लिका शतभीरुश्च गवाक्षी भद्रमल्लिका । शीतभीरुर्मदायन्ती भूपदी तृणशून्यकम्" इति

1-9-'72



भूपदी शीतभीरुश्च सैवास्फोटा वनोद्भवा ॥
शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ॥ ७० ॥

सिताऽसौ श्वेतसुरसा भूतवेश्यथ मागधी ॥
गणिका यूथिकाऽम्बष्ठा सा पीता हेमपुष्पिका ॥ ७१ ॥

अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता ॥
सुमना मालती जातिः सप्तला नवमालिका ॥ ७२ ॥
माघ्यं कुन्दं रक्तकस्तु बन्धूको बन्धुजीवकः ॥

वाचस्पतिः । चत्वारि मल्लिकायाः मोगरी इति ख्यातायाः । सैव मल्लिका वनोद्भवा आस्फोटेत्युच्यते । एकं रानमोगरी इति ख्यातस्य । आस्फोतेत्यपि । "आस्फोता गिरिकर्ण्यां च वनमल्ल्यां च योषिति" इति मेदिनी । शेफालिका "शीफालिका" सुवहा निर्गुण्डी नीलिका चत्वारि कृष्णपुष्पायाः निर्गुण्ड्याः "राननिर्गुण्डी इति ख्यातायाः । इयं श्वेतपुष्पा" ॥ ७० ॥ असौ निर्गुण्डी सिता श्वेतसुरसा भूतवेशी इति चोच्यते। "इयं कातरी निर्गुंडी इति ख्याता"। मागधी गणिका यूथिका अम्बष्ठा चत्वारि यूथिकायाः जुई इति ख्यातायाः । सा यूथिका पीता पीतपुष्पा चेत् हेमपुष्पिका स्यात् एकम् ॥ ७१ ॥ अतिमुक्तः पुण्ड्रकः । वासन्ती वसन्ते पुष्प्यति कालादित्यण् । एवं माधवीत्यपि ज्ञेयम् । माधवी लता पञ्च कुन्दभेदस्य कुसरी इति "कस्तुरमोगरा, मधुमाधवी इति च ख्यातस्य" । अतिमुक्तादिद्वयं मल्लिकाभेदस्येत्येके । माधवीलतेत्येकं पदमपि । सुमनाः मालती जातिः "जाती"। "जाती फले च मालत्याम्" इति मेदिनी। त्रीणि जातेः जाई "चमेली" मोठी श्वेतजाई, पीतवर्ण जाई" इति ख्यातायाः । तत्र सुमनाः सान्तः । टाबन्तोऽपि । सुमनायाश्च पत्रेणेति सुश्रुते दर्शनात् । सप्तला नवमालिका "नवमल्लिका" द्वे नेवाळी "थोर मोगरा, बटमोगरा बेलमोगरा" इति ख्यातायाः ॥७२॥ माघ्यं कुन्दं" "कुन्दः । कुन्दो माघ्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु च" इति मेदिनी । द्वे कुन्दस्य । रक्तकः बन्धूकः "बन्धुक" बन्धुजीवकः त्रीणि बंधुकस्य "दुपारी इति ख्यातस्य" । सहा कुमारी तरणिः । "द्युमणौ तरणिः पुंसि कुमारी नौकयोः स्त्रियाम्" इति रत्नः । त्रीणि कुमारी इति "कांटेशेंवती, लघुरानशेंवती, शेंवतीगुलाब" इति ख्यातायाः कुमार्याः ।

सहा कुमारी तरणिरम्लानस्तु महासहा ॥ ७३ ॥
तत्र शोणे कुरवकस्तत्र पीते कुरण्टकः ॥
नीली झिण्टी द्वयोर्बाणा दासी चार्तगलश्च सा ॥ ७४ ॥
सैरेयकस्तु झिण्टी स्यात्तस्मिन्कुरवकोऽरुणे ॥
पीता कुरण्टको झिण्टी तस्मिन्सहचरी द्वयोः ॥ ७५ ॥
ओण्ड्रपुष्पं जपापुष्पं वज्रपुष्पं तिलस्य यत् ॥
प्रतिहासशतप्रासचण्डातहयमारकाः ॥ ७६ ॥
करवीरे करीरे तु क्रकरग्रन्थिलावुभौ ॥

अम्लानः महासहा द्वे आबोली इति ख्यातायाः । तत्राम्लान इत्येकं कुरण्टकमात्रस्य । कांटेशेंवती, थोर रानशेंवती, इत्याख्याताया इति केचित् ॥ ७३ ॥ तत्राम्लाने शोणे रक्ते कुरवक इत्येकम् । "कुरुवक इत्यपि"। तत्राम्लाने पीतपर्णे कुरण्टक इत्येकम् । "कुरण्डक इत्यपि" । नीली नीलवर्णा या झिण्टी तत्र बाणा दासी आर्तगलः "अन्तर्गलः" इति त्रयम् । द्वयोरित्युक्तेर्बाण इत्यपि । "नीला झिण्टी नीलझिण्टी चेत्यपि पाठः" ॥ ७४ ॥ सैरेयकः "सैरीयकः" । "सैरीयकः सहचरः सैरेयश्च सहाचरः ॥ पीतो रक्तोऽथ नीलश्च कुसुमैस्तं विभावयेत् ॥ पीतः कुरण्टको ज्ञेयो रक्तः कुरबकः स्मृतः ॥ नील आर्तगलो दासी बाण औदनपाक्यपि" इत्युक्तम् । झिण्टी द्वयं झिण्टीमात्रस्य कोराण्टी इति ख्यातस्य । तस्मिन्सैरेयकेऽरुणे रक्तवर्णे कुरबक इत्येकम् । या पीतपुष्पा झिण्टी सा कुरण्टक इत्युच्यते । तस्मिन्कुरण्टके सहचरीत्यपि । द्वयोरित्युक्तेः । सहचर इत्यपि ॥ ७५ ॥ ओंड्रपुष्पं जपापुष्पं द्वे जास्वन्द इति ख्याते । जवेत्यपि । " जवायां तु जपा स्त्रियाम्" इति धर्मदासः । "औण्ड्रपुष्पेऽपि वृक्षेऽपि जवाशब्दः प्रकीर्तितः" इति त्रिकाण्डशेषात् । ओण्ड्रपुष्पस्य वृक्षस्यापि च जवेत्यभिधानम् । ओण्ड्रपुष्पं जवापुष्पं वज्रपुष्पमिति पाठान्तरम् । यत्तिलस्य पुष्पं तद्वज्रपुष्पसंज्ञकं एकम् । प्रतिहासः "प्रतीहासः" शतप्रासः चण्डातः हयमारकः ॥ ७६ ॥ करवीरः पञ्चकं करवीरस्य कण्हेर इति ख्यातस्य । करीरः क्रकरः ग्रन्थिलः त्रीणि करीरस्य कारवी "नेबती" इति ख्यातस्य । उन्मत्तः कितवः धूर्तः धत्तूरः । "धुस्तूरः धुस्तुरः धूस्तूरः धुतूरः । धुस्तूरस्तु

77--81



उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः ॥ ७७ ॥
मातुलो मदनश्चास्य फले मातुलपुत्रकः ॥
फलपूरो बीजपूरो रुचको मातुलुङ्गके ॥ ७८ ॥
समीरणो मरुबकः प्रस्थपुष्पः फणिज्जकः ॥
जम्बीरोऽप्यथ पर्णासे कठिञ्जरकुठेरकौ ॥ ७९ ॥
सितेऽर्जकोऽत्र पाठी तु चित्रको वह्निसंज्ञकः ॥
अर्काह्ववसुकाऽऽस्फोटगणरूपविकीरणाः ॥ ८० ॥
मन्दारश्चार्कपर्णोऽत्र शुक्लेऽलर्कप्रतापसौ ॥
शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः ॥ ८१ ॥

पुण्डरीशो धुस्तुरः कनकाह्वयः" इति शब्दार्णवः। "उन्मत्त उन्मादवति धुतूरमुचुकुन्दयोः" इति विश्वप्रकाशः। "मदनः स्मरवसन्तद्रुमिद्धूस्तूरसिक्थकः" इति मेदिनी। कनकाह्वयः॥ ७७॥ मातुलः मदनः सप्तकं धत्तूरस्य धोतरा इति ख्यातस्य। कनकाह्वयः स्वर्णपर्यायनामकः। अस्य धत्तूरस्य फले मातुलपुत्रक इत्येकम्। फलपूरः बीजपूरः रुचकः मातुलुङ्गकः चत्वारि मातुलिङ्गस्य महाळुंग इति ख्यातस्य ॥ ७८ ॥ समीरणः मरुबकः प्रस्थपुष्पः फणिज्जकः जम्बीरः "जम्भीरः" पञ्च देशान्तरे जंबीर इति ख्यातस्य । स्वल्पपर्णस्य पर्णासभेदस्य श्वेतमरवा इति च ख्यातस्य । पर्णासः कठिञ्जरः कुठेरकः त्रीणि पर्णासस्य । आजवलेति बावरी इति च ख्यातस्य ॥ ७९ ॥ अत्र पर्णासे सिते काण्डपुष्पाभ्यां श्वेते अर्जक इत्येकम् । पाठी चित्रकः वह्निसंज्ञकः । त्रयं चित्रकस्य चिता इति ख्यातस्य। तत्र पाठी इन्नन्तः। वह्निसंज्ञको वह्निपर्यायनामकः। अर्काह्वः वसुकः "वसूकः" आस्फोटः "आस्फोतः"। "आस्फोतस्तु पुमानर्के पर्णे स्यात्कोविदारकः" इति मेदिनी । गणरूपः गणाः बहूनि रूपाणि यस्य। नानात्वात् । विकीरणः "विकिरणः" ॥ ८० ॥ मन्दारः अर्कपर्णः सप्तकं अर्कस्य रुई इति ख्यातस्य। अर्काह्वयः सूर्यपर्यायनामकः । अत्रार्के शुक्ले अलर्कः प्रतापसः इति द्वे शिवमल्ली पाशुपतः एकाष्ठीलः बुकः "बकः"। "बकस्तु बकपुष्पे स्यात्कङ्के श्रीदे च रक्षसि" इति विश्वप्रकाशः । वसुः पञ्च बुकस्य "रुईमन्दार

वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि ॥
वत्सादनी छिन्नरुहा गुडूची तन्त्रिकाऽमृता ॥ ८२ ॥
जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि ॥
मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा ॥ ८३ ॥
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ॥
पाठाऽम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा ॥ ८४ ॥
एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ॥
कटुः कटम्भराऽशोकरोहिणी कटुरोहिणी ॥ ८५ ॥
मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी ॥
आत्मगुप्ताऽजहाऽव्यण्डा कण्डुरा प्रावृषायणी ॥ ८६ ॥

इति ख्यातस्य थोर बकुळी इति ख्यातस्येत्यपि मतम् ॥ ८१ ॥ वन्दा वृक्षादनी वृक्षरुहा जीवन्तिका चत्वारि वृक्षोपरि जातलताविशेषस्य वेद्लें "वेटागुळी, बांवें" इति ख्यातस्य । बाण्डगुळ इत्यपि लौकिकभाषायाम् । वत्सादनी छिन्नरुहा गुडूची "गुडुची" तन्त्रिका अमृता ॥ ८२ ॥ जीवन्तिका सोमवल्ली विशल्या मधुपर्णी नव गुडूच्याः "गुळवेल" इति ख्यातायाः । मूर्वा "मूर्वी" देवी मधुरसा मोरटा तेजनी स्रवा "स्रुवा" ॥ ८३ ॥ मधूलिका मधुश्रेणी गोकर्णी पीलुपर्णी दश मूर्वायाः मूर इति ख्यातायाः । इयं धनुर्गुणोपयोगिनी । इयं मोरवेल इति प्रसिद्धेत्येके । पाठा अम्बष्ठा विद्धकर्णी "अविद्धकर्ण्यपि" स्थापनी श्रेयसी रसा ॥ ८४ ॥ एकाष्ठीला पापचेली प्राचीना वनतिक्तिका दश पाठायाः पाडळी "पाहाडमूळ" इति ख्यातायाः । कटुः कटंभरा "कटम्बरा" अशोकरोहिणी व्यस्तमपीदं नाम । "अशोका कटुरोहिण्यामशोको वञ्जुलद्रुमः" इति रभसः । "रोहिणी कटुरोहिण्याम्" इति रुद्रः । कटुरोहिणी ॥ ८५ ॥ मत्स्यपित्ता कृष्णभेदी "कृष्णभेदा" "कृष्णभेदा चण्डरुहा" इति निघण्टुः । चक्राङ्गी शकुलादनी अष्टौ केदारकुटकी इति ख्यातायाः । आत्मगुप्ता अजहा "जहा" अव्यण्डा कण्डुरा "कण्डूरा" । "कपिकच्छूश्च कण्डुरा" इतीन्दुः । प्रावृषायणी ॥ ८६ ॥ ऋष्यप्रोक्ता शूकशिंबिः । शश्वच्छशांकशिशिराणि च शूकशिम्बिरित्यूष्मविवे-

ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छुश्च मर्कटी ॥
चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा ॥ ८७ ॥
प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि ॥
अपामार्गः शैखरिको धामार्गवमयूरकौ ॥ ८८ ॥
प्रत्यक्पर्णी केशपर्णी किणिही खरमञ्जरी ॥
हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ॥ ८९ ॥
अङ्गारवल्ली बालेयशाकबर्बरवर्धकाः ॥
मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ॥ ९० ॥
मण्डूकपर्णी मण्डीरी भण्डी योजनवल्ल्यपि ॥
यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ॥ ९१ ॥
रोदनी कच्छुराऽनन्ता समुद्रान्ता दुरालभा ॥

काद्दितालव्या । शूकशिम्बापि । "मर्कटी शूकशिम्बा च" इति वाचस्पतिः । कपिकच्छुः "कपिकच्छूः" मर्कटी नव कुवली "कुहिरी" इति ख्यातायाम् । मर्कटतुल्यलोमयुक्तत्वान्मर्कटी । यत्स्पर्शेन कण्डूरुत्पद्यतेऽतः कण्डूरा । चित्रा उपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा ॥ ८७ ॥ प्रत्यक्श्रेणी सुतश्रेणी रण्डा "चण्डा"। "प्रत्यक्श्रेणी वृषा चण्डा पुत्रश्रेण्याखुपर्णिका" इति निघण्टुः । मूषिकपर्णी दश मूषिकपर्ण्याः उंदीरकानी इति ख्यातायाः । अपामार्गः शैखरिकः धामार्गवः "अधामार्गवः"। "अधामार्गवोऽपामार्गः कोशातकी च" इति ग्रर्थे। मयूरकः ॥ ८८ ॥ प्रत्यक्पर्णी केशपर्णी "कीशपर्णी"। कपिलोमतुल्यानि लोमशानि पर्णान्यस्याः । किणिही खरमञ्जरि अष्टकं अपामार्गस्य आघाडा इति ख्यातस्य । हञ्जिका "फञ्जिका" ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ॥ ८९ ॥ अङ्गारवल्ली बालेयशाकः बर्बरः वर्धकः नवकं भार्ग्याः भारंग इति ख्यातायाः । मञ्जिष्ठा विकसा "विकषा" जिङ्गी समङ्गा कालमेषिका "कालमेशिका" ॥ ९० ॥ मण्डूकपर्णी मण्डीरी "मण्डिरी"। "रक्ता मण्डिरिका च" इतीन्दुः भण्डी योजनवल्ली नवकं मञ्जिष्ठायाः । योजनपर्ण्यपीति पाठः । यासः यवासः दुःस्पर्शः धन्वयासः "धनुर्यासः" कुनाशकः ॥ ९१ ॥ रोदनी "चोदनी" कच्छुरा अनन्ता समुद्रान्ता दुरालभा दशकं

पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिवल्लिका ॥ ९२ ॥
क्रोष्टुविन्ना सिंहपुच्छी कलशी धावनी गुहा ॥
निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ॥ ९३ ॥
प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि ॥
नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ॥ ९४ ॥
रञ्जनी श्रीफली तुत्था द्रोणी दोला च नीलिनी ॥
अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ॥ ९५ ॥
कालमेषी कृष्णफला बाकुची पूतिफल्यपि ॥
कृष्णोपकुल्या वैदेही मागधी चपला कणा ॥ ९६ ॥
उषणा पिप्पली शौण्डी कोलाऽथ करिपिप्पली ॥
कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान् ॥ ९७ ॥

धन्वयासस्य धमासा इति ख्यातस्य । पृश्निपर्णी पृथक्पर्णी चित्रपर्णी अङ्घ्रिवल्लिका "अङ्घ्रिपर्णिकेति पाठः" ॥ ९२ ॥ क्रोष्टुविन्ना सिंहपुच्छी कलशी "कलशिः" धावनी "धावनिः" गुहा नवकं सिंहपुच्छयाः डवला "पिठवण" इति ख्यातायाः । निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ॥ ९३ ॥ प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिका दशकं कण्टकारिकायाः रिङ्गणी इति ख्यातायाः । नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ॥ ९४ ॥ रञ्जनी श्रीफली तुत्था द्रोणी "तूणी" । "तूणीनील्यां निषङ्गे ना" इति मेदिनी । "तूणी तु नील्यां तूणा निषङ्के' इति विश्वप्रकाशः । दोला "मेला" । "तुत्था श्रीफलिका मेला सारवाही च रञ्जनी" इति निघण्टुः नीलिनी एकादश नील्याः । इयं वस्त्रादिरञ्जनकारिणी कृष्णवर्णा । अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ॥ ९५ ॥ कालमेषी "कालमेशी" कृष्णफला बाकुची "वागुजी" पूतिफली अष्टकं बाकुच्याः, बावंची इति ख्यातायाः । सोमराजीशब्दः ङीषन्त इन्नन्तश्च । कृष्णा उपकुल्या वैदेही मागधी चपला कणा ॥ ९६ ॥ उषणा "ऊषणा" पिप्पली "पिप्पलिः" शौण्डी कोला दशकं पिप्पल्याः । करिपिप्पली कपिवल्ली कोलवल्ली श्रेयसी वशिरः । "दन्त्यमध्योऽपि" पञ्च गजपिप्पल्याः ॥ ९७ ॥ चव्यं "चव्या

चव्यं तु चविका काकचिञ्चीगुञ्जे तु कृष्णला ॥
पलंकषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ॥ ९८ ॥
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ॥
विश्वा विषा प्रतिविषाऽतिविषोपविषाऽरुणा ॥ ९९ ॥
शृङ्गी महौषधं चाथ क्षीरावी दुग्धिका समे ॥
शतमूली बहुसुताऽभीरुरिन्दीवरी वरी ॥ १०० ॥
ऋष्यप्रोक्ताऽभीरुपत्रीनारायण्यः शतावरी ॥
अहेरुरथ पीतद्रुकालीयकहरिद्रवः ॥ १०१ ॥
दार्वी पचंपचा दारुहरिद्रा पर्जनीत्यपि ॥
वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ॥ १०२ ॥
शुक्ला हैमवती वैद्यमातृसिंह्यौ तु वाशिका ॥

कोला च चविका" इति हेमचन्द्रः । चविका "चविक इति पुंलिङ्गोऽपि" । द्वे चव्यस्य चवक इति ख्यातस्य । केचित् चव्यादिद्वयं पूर्वान्वयीत्याहुः । अत्र पक्षे तुस्थाने चः पाठ्यः । काकचिञ्ची "काकचिञ्चिः" । काकचिञ्चा । "गुञ्जा तु काकचिञ्चायां पटहे च कलध्वनौ" इति मेदिनी । गुञ्जा कृष्णला त्रीणि गुञ्जायाः । पलंकषा इक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ॥ ९८ ॥ गोकण्टकः गोक्षुरकः वनशृङ्गाटः सप्तकं गोक्षुरस्य सराण्टा इति ख्यातस्य । विश्वा विषा प्रतिविषा अतिविषा उपविषा अरुणा ॥ ९९ ॥ शृङ्गी महौषधं अष्टकं अतिविषायाः अतिविख इति ख्यातायाः । क्षीरावी दुग्धिका द्वे दुग्धी इति ख्यातायाः । शतमूली बहुसुता अभीरुः इन्दीवरी वरी ॥ १०० ॥ ऋष्यप्रोक्ता अभीरुपत्री नारायणी शतावरी अहेरुः दशकमपि स्त्रीलिङ्गं सहस्रमूल्याः शतावरीति ख्यातायाः । पीतद्रुः कालीयकः "कालेयकः" हरिद्रुः ॥ १०१ ॥ दार्वी पचंपचा "पचंबचेत्यपि" दारुहरिद्रा पर्जनी सप्तकं दारुहळद इति ख्यातस्य । वचा उग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका पञ्चकं वचायाः वेखण्ड इति ख्यातायाः ॥ १०२ ॥ या शुक्ला वचा सा हैमवतीत्येकम् । वैद्यमाता सिंही वाशिका "दन्त्यमध्यापि" वृषः अटरूषः "अटरुषः"

वृषोऽटरूषः सिंहास्यो वासको वाजिदन्तकः ॥ १०३ ॥
आस्फोटा गिरिकर्णी स्याद्विष्णुक्रान्ताऽपराजिता ॥
इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः ॥ १०४ ॥
शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः ॥
मिश्रेयाप्यथ सीहुण्डो वज्रः स्नुक् स्त्री स्नुही गुडा ॥ १०५ ॥
समन्तदुग्धाऽथो वेल्लममोघा चित्रतण्डुला ॥
तण्डुलश्च कृमिघ्नश्च विडङ्गं पुंनपुंसकम् ॥ १०६ ॥
बला वाट्यालका घण्टारवा तु शणपुष्पिका ॥
मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ॥ १०७ ॥

सिंहास्यः वासकः वाजिदन्तकः अष्टकं अटरूषस्य अडुळसा इति ख्यातस्य ॥ १०३ ॥ आस्फोटा "आस्फोता"। "आस्फोता गिरिकर्ण्या च वनमल्ल्यां च योषिति" इति मेदिनी गिरिकर्णी विष्णुक्रान्ता अपराजिता चत्वारि विष्णुक्रान्तायाः । इक्षुगन्धा काण्डेक्षुः कोकिलाक्षः इक्षुरः क्षुरः पञ्च कोकिलाक्षस्य कोळसुन्दा "तालिमखान्यांचें बीं कोलिस्ता" इति ख्यातस्य ॥ १०४ ॥ शालेयः शीतशिवः छत्रा मधुरिका मिसिः । "मिसी मिशिः मिशी" । मिशी मिशिरिति तालव्यांत आह सोमनन्दी । मिश्रेया षट्कं मधुरिकायाः "बडिशेप" इति ख्यातायाः । सीहुण्डः । "वज्रद्रुमः सिहुण्डोऽथ" इति रभसात् ह्रस्वादिरपि । शीहुण्ड इति तालव्यादिरपि । वज्रः स्नुक् स्नुही स्नुहिः स्नुहा । "स्नुही स्नुहा स्नुग्" इत्यमरदत्तः । गुडा "गुडी" । "गुडो गोलेक्षुविकृती स्नुहीगुडिकयोर्गुडा" इति रुद्रः ॥ १०५ ॥ समन्तदुग्धा षट् वज्रद्रुमस्य "शेरनिवडुङ्ग" इति ख्यातस्य । तत्र स्नुक् हकारान्तः स्त्री । "वज्रद्रुः स्नुक् स्नुही गुडेति पाठः" । वेल्ल अमोघा "मोघापि" । "कृमिघ्नं तण्डुलं मोघा" इति वाचस्पतिः । चित्रतण्डुला तण्डुलः तन्तुलः । तन्तुं कृमिसूत्रं लाति । कृमिघ्नः विडङ्गं षट्कं विडङ्गस्य, वावडिंग इति ख्यातस्य ॥ १०६ ॥ बला वाट्यालका द्वे तुपकडी "चिकणा" इति ख्यातस्य । घण्टारवा शणपुष्पिका द्वे शणपुष्पिकायाः । "लघुताग इति घागरी इति चेत्येके" मृद्वीका गोस्तनी "गोस्तना" द्राक्षा स्वाद्वी मधुरसा पञ्च द्राक्षायाः ॥ १०७ ॥ सर्वानुभूतिः

सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ॥
त्रिभण्डी रोचनी श्यामापालिन्द्यौ तु सुषेणिका ॥ १०८ ॥
काला मसूरविदलाऽर्धचन्द्रा कालमेषिका ॥
मधुकं क्लीतकं यष्टिमधुकं मधुयष्टिका ॥ १०९ ॥
विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री तु या सिता ॥
अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका ॥ ११० ॥
लाङ्गली शारदी तोयपिप्पली शकुलादनी ॥
खरश्वा कारवी दीप्यो मयूरो लोचमस्तकः ॥ १११ ॥

सरला "सरणा" त्रिपुटा "त्रिपुटी"। "सर्वानुभूतिः सरणा त्रिपुटा रोचनी सरा । त्रिपुटी महती श्यामा" इति वाचस्पतिः । त्रिवृता त्रिवृत् त्रिभण्डी रोचनी "रेचनी त्रिवृतादन्त्योः" इति मेदिनी । सप्त त्रिवृतायाः "तेंडू, श्वेत-निशोत्तर इति च ख्यातायाः" । श्यामा पालिन्दी "पालिन्धी" सुषेणिका ॥ १०८ ॥ काला मसूरविदला अर्धचन्द्रा कालमेषिका सप्त कृष्णवर्णायांन्वितायाः "काळा तेंडू, निशोत्तर, निगडी, तिधारें इति ख्यातायाः" "मधु"। क्लीतकं यष्टिमधुकं "यष्टीमधुकं" मधुयष्टिका चत्वारि यष्टिमधुकस्य गोडे-कोष्ट "ज्येष्ठमध" इति ख्यातस्य ॥ १०९ ॥ विदारी क्षीरशुक्ला इक्षुगन्धा क्रोष्ट्री चत्वारि शुक्लभूमिकोहोळें इति ख्यातस्य । या सिता शुक्ला विदारी-त्यन्वयः । क्षीरविदारी महाश्वेता ऋक्षगन्धिका । ऋक्षान् गन्धयति । "गन्ध अर्दने" । यद्वा ऋक्षस्येव गन्धो यस्याः । त्रीणि कृष्णभूमिकूष्माण्डस्य । अन्येति सितायाः अन्या कृष्णेत्यर्थः । "क्रोष्ट्री शृगालिका कृष्णविदारी लाङ्ग-लीषु च" इति मेदिन्यां कृष्णविदारीत्युक्तत्वात् । या सितेत्यत्रासितेति पदच्छेदे मेदिन्यविरोधेन पूर्वं नामचतुष्कं कृष्णभूकूष्माण्डस्य । क्षीरेति त्रयं शुक्लभूकू-ष्माण्डस्येति वा । असिताया अन्या शुक्लेत्यर्थः ॥ ११० ॥ लाङ्गली शारदी तोयपिप्पली शकुलादनी चत्वारि शाकभेदस्य "मोगुड जळपिंपळी" इति ख्यातस्य । खराश्वा कारवी दीप्यः मयूरः लोचमस्तकः "लोचमर्कटः" पञ्च मयूरशिखायाः मोरशेंडा इति ख्यातायाः । "अजमोदा इत्यपि मतम्" ॥ १११ ॥ गोपी अजादित्वाट्टाप् । गोपा । "गोपी श्यामा गोपवल्ली गोपा गोपालिका च सा" इति वाचस्पतिः । श्यामा शारिवा "सारिवा"

गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा ॥
योग्यमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे ॥ ११२ ॥
कदली [illegible] रम्भा मोचांशुमत्फला ॥
काष्ठी[illegible] काकमुद्गा सहेत्यपि ॥ ११३ ॥
[illegible] सिंही भण्टाकी दुष्प्रधर्षिणी ॥
[illegible]सा रास्ना सुगन्धा गन्धनाकुली ॥ ११४ ॥
[illegible] भुजङ्गाक्षी छत्राकी सुवहा च सा ॥
[illegible]रिगन्धांशुमती सालपर्णी स्थिरा ध्रुवा ॥ ११५ ॥
[illegible]केरी समुद्रान्ता कार्पासी बदरेति च ॥

[illegible] त्पलशारिवा पञ्च उत्पलशारिवायाः उपरसाळ "उपलसरी" इति [illegible] । योग्यं ऋद्धिः सिद्धिः लक्ष्मीः चत्वारि ऋद्धिनामकस्य औष[illegible] "केवणी, मुरुडशेंग" इति च ख्यातस्य । इमे योग्यादयश्च[illegible]द्धिनामकौषधेरप्याह्वयाः स्युः ॥ ११२ ॥ कदली अजादित्वा[illegible] । कदलोऽपि । "कदलश्च कदल्यसौ" इति व्याडिः । वारण[illegible]बुषा" रम्भा मोचा अंशुमत्फला काष्ठीला षट् कदल्याः । मुद्ग[illegible]द्गा सहा त्रयं काकमूग "रानमूग" इति ख्यातायाः काकमुद्गा[illegible] ॥ वार्ताकी । पुंस्यपि वार्ताक इति । वार्ता वार्ताकुः । [illegible] वार्ताङ्गो वार्ताकः शाकबिल्वकः" इति रभसः । "वार्ता वार्तिगणे[illegible] विश्वः । "वर्ताकुरेषा गुणसप्तयुक्ता" इति वैद्यकाच्च । हिङ्गुली सिंही [illegible]धर्षिणी पञ्च वार्ताक्याः रानवाङ्गी "डोरली" इति ख्यातायाः । [illegible] रास्ना सुगन्धा गन्धनाकुली ॥ ११४ ॥ नकुलेष्टा भुजङ्गाक्षी [illegible] नव रास्नायाः मुङ्गसी "मुंगसवेल" इति ख्यातायाः । [illegible]ः स्थाने नागसुगंधेति पाठः । विदारिगन्धा (१) "विदा[illegible]शुमती सालपर्णी "शालपर्णी" स्थिरा ध्रुवा पञ्च सालपर्ण्याः [illegible] सालवण" इति ख्यातायाः ॥ ११५ ॥ तुण्डिकेरी समुद्रान्ता [illegible]सी" बदरा चत्वारि कार्पास्याः । सा कार्पासी वन्या वने [illegible]वीत्युच्यते एकम् । शृङ्गी ऋषभः वृषः त्रयं ऋषभाख्यौषधि-

---

[illegible]न्धः विदारिगन्धः । "ङ्यापोः संज्ञाछन्दसोर्बहुलम्',–इति ह्रस्वः ।

116-120



भारद्वाजी तु सा वन्या शृङ्गी तु ऋषभो वृषः ॥ ११६ ॥
गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका ॥
धामार्गवो घोषकः स्यान्महाजाली स पीतकः ॥ ११७ ॥
जोत्स्नी पटोलिका जाली नादेयी भूमिजम्बुका ॥
स्याल्लाङ्गलिक्यग्निशिखा काकाङ्गी काकनासिका ॥ ११८ ॥
गोधापदी तु सुवहा मुसली तालमूलिका ॥
अजशृङ्गी विषाणी स्याद्गोजिह्वादार्विके समे ॥ ११९ ॥
ताम्बूलवल्ली ताम्बूली नागवल्ल्यप्यथ द्विजा ॥
हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ॥ १२० ॥

विशेषस्य "बैलघांटी" इति ख्यातस्य । शृङ्गीशब्द इन्नन्तः ॥ ११६ ॥ गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका चत्वारि बलाविशेषस्य "ह्रस्वचिकणा" इति च ख्यातस्य । धामार्गवः घोषकः द्वे घोषवल्ल्याः "घोसाळी, दोडकी" इति च ख्यातायाः । सः घोषकः पीतकः पीतपुष्पश्चेत् महाजालीत्युच्यते एकम् । स्त्रीलिङ्गम् ॥ ११७ ॥ जोत्स्नी "ज्योत्स्ना ।" "जोत्स्नी पटोली ज्योत्स्ना" इति हैमः। पटोलिका जाली त्रयं पटोलिकायाः "पडवळी" इति ख्यातायाः । नादेयी भूमिजम्बुका द्वे भूजम्ब्वाः "भुइजांभळी" इति ख्यातायाः । "नादेयी नागरङ्गे स्याज्जयायां जलवेतसे । भूमिजम्ब्वां वायां च व्यक्रुष्ठेऽपि च योषिति" इति मेदिनी । लाङ्गलिकी अग्निशिखा द्वे लाङ्गल्याः वागचबका "कळलावी" इति च ख्यातायाः । काकाङ्गी काकनासिका द्वे काकजङ्घाख्यौषधिविशेषस्य "कावळी इति ख्यातस्य" ॥ ११८ ॥ गोधापदी सुवहा द्वे हंसपादिकायाः "रक्तलाजाळू इति ख्यातायाः" । मुसली तालमूलिका द्वे मुसल्याकन्द, मुसलकन्द इति ख्यातायाः । अजशृङ्गी विषाणी द्वे मेढशिंगी इति ख्यातायाः ओषधेः । इयं त्वजशृङ्गाकारफला बहुशाखा सकण्टका नेत्रौषधिरिति सुभूतिराह । गोजिह्वा दार्विका "दर्विका" द्वे दर्वी "पाथरी" इति ख्यातस्य क्षेत्रजन्यशाकभेदस्य ॥११९॥ ताम्बूलवल्ली ताम्बूली नागवल्ली त्रीणि नागवल्ल्याः "पानवेल इति ख्यातायाः" । द्विजा हरेणुः रेणुका कौन्ती कपिला भस्मगन्धिनी षट्कं रेणुकाख्यगन्धद्रव्यस्य "रेणुबीज" इति प्रसिद्धस्य ॥ १२० ॥ एलावालुकं ऐलेयंसुगन्धि हरिवालुकं वालु पक्व

एलावालुकमैलेयं सुगन्धि हरिवालुकम् ॥
वालुकं चाथ पालङ्क्यां मुकुन्दः कुन्दकुन्दुरू ॥ १२१ ॥
बालं ह्रीबेरबर्हिष्ठोदीच्यं केशाम्बुनाम च ॥
कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु ॥ १२२ ॥
शैलेयं तालपर्णी तु दैत्या गन्धकुटी मुरा ॥
गन्धिनी गजभक्ष्या तु सुवहा सुरभी रसा ॥ १२३ ॥
महेरुणा कुन्दुरुकी सल्लकी ह्लादिनीति च ॥
अग्निज्वालासुभिक्षे तु धातकी धातुपुष्पिका ॥ १२४ ॥

वालुकाख्यगन्धद्रव्यस्य । "वाळुक, कांकडी" इति ख्यातस्येत्यपि मतम् । पालङ्की मुकुन्दः कुन्दः कुन्दुरुः "मुकुन्दः कुन्दुः कुन्दरः" चत्वारि पालकी "पोईशाक वस्तुकाकारा पालख" इति च ख्यातस्य ॥ १२१ ॥ बालं ह्रीबेरं बर्हिष्ठं उदीच्यं केशाम्बुनाम पञ्च वाळा इति ख्यातस्य । "बालः" । "बालो ना कुन्तलेऽश्वस्य गजस्यापि च वालधौ ॥ वाच्यलिङ्गोऽर्भके मूर्खे ह्रीबेरे पुंनपुंसकम्" इति मेदिनी । केशश्चाम्बु च तयोर्नाम यस्य तत्केशाम्बुनाम । यावत्केशस्याम्बुनश्च नामानि तानि सर्वाणि बालस्यापीत्यर्थः । कालानुसार्यं वृद्धं अश्मपुष्पं शीतशिवम् ॥ १२२ ॥ शैलेयं पञ्च शैलेयस्य फूल "शिलाजित" इति ख्यातस्य । तालपर्णी दैत्या गन्धकुटी मुरा गन्धिनी पञ्च मुरायाः तालिसपत्र "मोरमांशी" इति ख्यातायाः । गजभक्ष्या "गजभक्षा" सुवहा सुरभी "सुरभीः" । "सुरभिः सल्लकीमातृभिन्मुरागोषु योषिति" इति मेदिनी । सुरभीरसेत्येकमपि पदम् । रसा ॥ १२३ ॥ महेरुणा "महेरणा" कुन्दुरुकी सल्लकी "शल्लकी सिल्लकी" । "श्वाविद्द्रुभेदौ शल्लक्यौ" इति तालव्यादौ रभसः । सल्लकी सिल्लकी ह्लादेति रुद्रः । ह्लादिनी "ह्रादिनी" अष्ट सालई इति ख्यातायाः । अग्निज्वाला "अग्नेर्ज्वालेव, रक्तपुष्पत्वात् ।" सुभिक्षा धातकी धातुपुष्पिका "धातृपुष्पिका" चत्वारि धातक्याः धायफूल "धायटी" इति ख्यातायाः ॥ १२४ ॥ पृथ्वीका चन्द्रवाला एला निष्कुटिः "निष्कुटी" बहुला पञ्चकं एलायाः । सा एला सूक्ष्मा सूक्ष्मपरिमाणा चेत् उपकुञ्चिका तुत्था

पृथ्वीका चन्द्रवालैला निष्कुटिर्बहुलाऽथ सा ॥
सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः ॥ १२५ ॥

व्याधिः कुष्ठं पारिभाव्यं वाप्यं पाकलमुत्पलम् ॥
शंखिनी चोरपुष्पी स्यात्केशिन्यथ वितुन्नकः १२६ ॥

झटामलाऽज्झटा ताली शिवा तामलकीति च ॥
प्रपौण्डरीकं पौंडर्यमथ तुन्नः कुबेरकः ॥ १२७ ॥

कुणिः कच्छः कान्तलको नन्दिवृक्षोऽथ राक्षसी ॥
चण्डा घनहरी क्षेमदुष्पत्रगणहासकाः ॥ १२८ ॥

व्याडायुधं व्याघ्रनखं करजं चक्रकारकम् ॥
सुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली ॥ १२९ ॥

कोरङ्गी त्रिपुटा त्रुटिः "त्रुटी" इति पञ्च नामानि ॥ १२५ ॥ व्याधिः कुष्ठं पारिभाव्यं वाप्यं "व्याप्यं· आप्यं" पाकलं उत्पलं षट्कं कडू कोष्ठ "गोडें कोष्ठ" इति ख्यातस्य । शंखिनी चोरपुष्पी केशिनी त्रयं चोर-वल्ल्याः "चोर शंखाहुली, सांखवेल" इति ख्यातायाः । वितुन्नकः ॥१२६॥ झटामला अज्झटा ताली शिवा तामलकी षट्कं भूम्यामलक्याः । झटामलेत्यत्र झटेति पृथक् पदं वा । अमलेति छेदः । आह च । तामलक्यामला तालीति । झटा तामलकीति चेति । प्रपौण्डरीकं पौण्डर्यं "पुण्डर्यं" द्वे पौण्डर्यस्य । इदं शालपर्णीतुल्यपत्रं ज्ञेयम् । स्थलपद्ममिति गौडाः । तुन्नः कुबेरकः ॥ १२७ ॥ कुणिः "तुणिः" कच्छः कान्तलकः नन्दिवृक्षः "नन्दीवृक्षः" षट्कं नन्दिवृक्षस्य "नान्दरुखी इति ख्यातस्य" । अयमश्वत्थाकारपत्रः । राक्षसी चण्डा घनहरी क्षेमः दुष्पत्रः गणहासकः षट्कं चोराख्यगन्धद्रव्यस्य "चोरओंवा, किरमाणी ओंवा, गठोना, गाठीवनमूळ इति ख्यातस्य । गण इत्यप्यस्य नाम" ॥१२८॥ व्याडायुधं "व्यालायुधं" व्याघ्रनखं करजं चक्रकारकं चत्वारि व्याघ्रनख-नामकगन्धद्रव्यस्य "लघुनखला, वाघनख इति ख्यातस्य ।" सुषिरा विद्रु-मलता कपोताङ्घ्रिः नटी नली ॥ १२९ ॥ धमनी अञ्जनकेशी सप्त नली-नामकगन्धद्रव्यस्य पवारीति लोके प्रसिद्धस्य । इयं उत्तरपथे प्रसिद्धा ।

129- 133



घमन्यञ्जनकेशी च हनुर्हट्टविलासिनी ॥
शुक्तिः शंखः खुरः कोलदलं नखमथाढकी ॥ १३० ॥

काक्षी मृत्स्ना तुवरिका मृत्तालकसुराष्ट्रजे ॥
कुटन्नटं दाशपुरं वानेयं परिपेलवम् ॥ १३१ ॥

प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च ॥
ग्रन्थिपर्णं शुकं बर्हपुष्पं स्थौणेयकुकुरे ॥ १३२ ॥

मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः ॥
समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि ॥ १३३ ॥

हनुः हट्टविलासिनी शुक्तिः शंखः खुरः कोलदलं नखं "नखी" सप्त नखाख्यगन्धद्रव्यस्य "नखला" इति ख्यातस्य । अत्र हनुरुदन्तः स्त्री, साहचर्यात् । बदरीतुल्यपत्रत्वात्कोलदलम् । आढकी ॥ १३० ॥ काक्षी मृत्स्ना तुवरिका । "वार्षिका मूलिका तूवर्याढकी कुच्छुरा शटी" इति बोपालितात् तूवरिका । मृत्तालकं "मृतालकं" सुराष्ट्रजं षट् तुवरिकायाः तूर इति ख्यातायाः । कुटन्नटं दाशपुरम् । "दशपुरमिति दशपूरमिति दाशपूरमिति च" । "दशपूरं दशपुरं प्लवनं जीविताहयम्" इति वाचस्पतिः । वानेयं परिपेलवम् ॥ १३१ ॥ प्लवं गोपुरं गोनर्दं कैवर्तीमुस्तकं "कैवर्तिमुस्तकं कैवर्तमुस्तकं" अष्टकं कैवर्तीमुस्तकस्य केवडी, "जलमुस्ता, क्षुद्रमोक्षा, मोथा" इति ख्यातस्य । ग्रन्थिपर्णं शुकम् । "शुको व्याससुते कीरे रावणस्य च मन्त्रिणि । शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम्" । बर्हपुष्पम् . शुकबर्हमित्येकमपि नाम । बर्हिपुष्पं बर्हिः पुष्पं बर्हं पुष्पं चेति पृथगपि । स्थौणेयं कुकुरं पञ्च गण्ठीवन "भटोरा" इति ख्यातस्य ॥ १३२ ॥ मरुन्माला पिशुना स्पृक्का "पृषोदरादित्वात्सलोपे पृकापि" देवी लता लघुः समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिका दशकं पिण्डकेति ख्यातायाः स्पृक्कायाः । अत्र मरुन्मालेति संघातविग्रहीतम् । यदाह वाचस्पतिः । "स्पृक्का तु ब्राह्मणी देवी मरुन्माला लता लघुः । समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिका मरुत् । मुनिर्माल्यवती माला मोहना कुटिला लता" इति ॥ १३३ ॥ तपस्विनी जटामांसी जटिला लोमशा मिशी "मिसिः मिषिः मिषी मसिः मषिः मषी मसी" पञ्च जटामांस्याः ।

तपस्विनी जटामांसी जटिला लोमशा मिशी ॥
त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम् ॥ १३४ ॥
कर्चूरको द्राविडकः काल्पको वेधमुख्यकः ॥
ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् ॥ १३५ ॥
शाकाख्यं पत्रपुष्पादि तण्डुलीयोऽल्पमारिषः ॥
विशल्याग्निशिखानन्ता फलिनी शक्रपुष्पिका ॥ १३६ ॥
स्याद्दक्षगन्धा छगलांत्र्यावेगी वृद्धदारकः ॥

जटेति पृथक्पदं वा । यदाह । मांसी कृष्णजटा हिंस्रा नलदा जटिला मिसिः । जटा च पिशिनी पेशी क्रव्यादी च तपस्विनीति । त्वक्पत्रं उत्कटं भृङ्गं त्वचं चोचं वराङ्गकं षट् त्वक्पत्रस्य "दालचिनी" तज इति ख्यातस्य । "त्वक्त्वचचोचशब्दाः स्युर्वल्के चर्मणि पत्रके" इति धरणिः ॥ १३४ ॥ कर्चूरकः "कर्बूरकः" द्राविडकः द्रविडदेशे जातः । तत्र जात इत्यण् । स्वार्थेकः । काल्पकः वेधमुख्यकः चत्वारि कचर इति ख्यातस्य हरिद्राभस्य । कल्पे भवः काल्पकः ओष्ठ्यमध्यः । "तालव्यमध्योऽपि ।" ओषध्य इति फलपाकान्तानां व्रीह्यादीनां जातावेव ओषध्यः स्युः । ओषधिशब्दप्रयोगः स्यादित्यर्थः । बहुत्वविवक्षायां बहुवचनं न तु नित्यम् । यदा तु ओषधेः रोगहारित्वमात्रं प्रतीयते न त्वन्यत् तदा औषधशब्दप्रयोगः । "ओषधेरजातौ" इत्यण् । न केवलमोषधिरेवौषधशब्दवाच्या किंतु रोगहरत्वेन घृतक्षौद्रत्रिफलाकल्कादि चौषधमिति सर्वमिति विशेषणाज्ज्ञेयम् ॥ १३५ ॥ यत्पत्रपुष्पादि तच्छाकसंज्ञकं एकं भोजनसाधनस्य पुष्पादेः । आदिना मूलादिग्रहः । उक्तं च । "मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् ॥ त्वक् पुष्पं कवचं चैव शाकं दशविधं स्मृतम्" इति । तत्र करीरं वंशांकुरः । काण्डमिक्षुदण्डादि । अधिरूढकं बीजांकुरः । कवचं छत्राकम् । शेषं स्पष्टम् । तण्डुलीयः अल्पमारिषः द्वे तान्दळी "तांदुळजा" इति ख्यातस्य । विशल्या अग्निशिखा अनन्ता फलिनी शक्रपुष्पिका पञ्चकमग्निशिखायाः "कळलावी इति ख्यातायाः" । शक्रोऽर्जुनतरुः तत्पुष्पमिव पुष्पं अस्याः शक्रपुष्पी ॥ १३६ ॥ ऋक्षगन्धा "ऋष्यगन्धा" छगलांत्री "छगलांघ्री छगलाण्डी छगलेति पृथक्पदं वा । "छागे तु छगलश्छागी वृद्धादारकयोः स्त्रियाम्" इत्यनेकार्थकोशः । आवेगी

जुङ्गो ब्राह्मी तु मत्स्याक्षी वयस्था सोमवल्लरी ॥ १३७ ॥
पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती ॥
हयपुच्छी तु काम्बोजी माषपर्णी महासहा ॥ १३८ ॥
तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि ॥
बर्बरा कबरी तुङ्गी खरपुष्पाऽजगन्धिका ॥ १३९ ॥
एलापर्णी तु सुवहा रास्ना युक्तरसा च सा ॥
चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाम्ललोणिका ॥ १४० ॥
सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि ॥
नमस्कारी गण्डकारी समङ्गा खदिरेत्यपि ॥ १४१ ॥

वृद्धदारकः । वृद्धो दारकोऽस्मात् । वृद्धत्वं दारयति वा वृद्धदारकः । वृद्धेति भावप्रधानम् । जुङ्गः पञ्च वृद्धदारकस्य "वरधारा, जीर्णफञ्जी इति ख्यातस्य ।" ब्राह्मी मत्स्याक्षी वयस्था सोमवल्लरी "सोमवल्लरिः" चत्वारि सोमलतायाः । "यस्याः शुक्लपक्षे पर्णान्युद्भवंति कृष्णे च पतन्ति सा सोमवल्ली । सैव सोमवल्लरी" ॥ १३७ ॥ पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती चत्वारि स्वर्णक्षीर्याः "पिसोळा इति ख्यातायाः" । हयपुच्छी काम्बोजी माषपर्णी महासहा चत्वारि माषपर्ण्याः रानउडीद इति ख्यातायाः ॥ १३८ ॥ तुण्डिकेरी "तुण्डिकेशी" रक्तफला बिंबिका पीलुपर्णी चत्वारि तुण्डिकेर्याः तोंडली इति ख्यातायाः । बर्बरा "वर्बरा वर्वरी" । "वर्वरः पामरे केशे चक्रले नीवृदन्तरे । फञ्जिकायां पुमान् शाकभेदपुष्पभिदोः स्त्रियाम्" इति मेदिनी । कबरी "कवरी" तुंगी खरपुष्पा अजगंधिका "अजगंधेत्यन्यत्र" । पञ्च बर्बरी "तिळवणी कानफोडी" इति ख्यातस्य शाकभेदस्य ॥ १३९ ॥ एलापर्णी सुवहा रास्ना युक्तरसा चत्वारि एलापर्ण्याः कोलिंदण इति ख्यातायाः । चाङ्गेरी चुक्रिका दन्तशठा अम्बष्ठा अम्ललोणिका "अम्ललोलिका" पञ्च अम्ललोणिकायाः चुका इति ख्यातायाः ॥ १४० ॥ सहस्रवेधी चुक्रः अम्लवेतसः शतवेधी चतुष्कमम्लवेतसस्य । चाङ्गेर्यादयो नव पर्याया इत्यपि मतम् । नमस्कारी गण्डकारी "गण्डकाली" समङ्गा खदिरा चत्वारि लज्जालु "लाजाळू" इति प्रसिद्धायाः ओषधेः ॥ १४१ ॥ जीवन्ती

जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ॥
कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः ॥ १४२ ॥
किराततिक्तो भूनिंबोऽनार्यतिक्तोऽथ सप्तला ॥
विमला शातला भूरिफेना चर्मकषेत्यपि ॥ १४३ ॥
वायसोली स्वादुरसा वयस्थाऽथ मकूलकः ॥
निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि ॥ १४४ ॥
अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका ॥
मूले पुष्करकाश्मीरपद्मपत्राणि पौष्करे ॥ १४५ ॥
अव्यथाऽतिचरा पद्मा चारटी पद्मचारिणी ॥

जीवनी जीवा जीवनीया मधुस्रवा मधुः स्रवेति पदद्वयमपि । "मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति" इति मेदिनी । विश्वप्रकाशोऽप्येवम् । पञ्च जीवन्त्याः "हरणवेल हरणदोडी" इति ख्यातायाः । कूर्चशीर्षः मधुरकः शृङ्गः ह्रस्वाङ्गः जीवकः, पञ्च जीवकस्य ॥ १४२ ॥ किराततिक्तः चिरतिक्तश्चिरातिक्तश्च । "किरातश्चिरतिक्तश्च भूनिम्बहिमकावपि" इति रभसः । भूनिम्बः अनार्यतिक्तः अयं किराईत इति ख्यातस्य । सप्तला विमला शातला "सातला" । "विमला सातलायां स्यात्" इति विश्वप्रकाशः । भूरिफेना चर्मकषा पञ्च सप्तलायाः "शिकेकाई इति प्रसिद्धायाः" ॥ १४३ ॥ वायसोली स्वादुरसा वयस्था अयं लहानकावळी, काकोली इति च ख्यातस्य । मकूलकः "पृषोदरादित्वादुत्वे मुकूलकोऽपि" निकुम्भः दन्तिका "दन्तिजा" प्रत्यक्श्रेणी उदुम्बरपर्णी "ऊडुंम्बरपर्णी उदुम्बरपर्णी" पञ्च दन्त्याः "दांती इति ख्यातायाः" । यस्याः बीजं जेपाळ इति ख्यातम् ॥ १४४ ॥ अजमोदा उग्रगन्धा ब्रह्मदर्भा यवानिका "यमानिका" द्वे यवान्याः ओंवा इति ख्यातायाः । "यवानीद्वयस्य द्वे द्वे नामनी इत्यपि मतम्" । पुष्करं काश्मीरं पद्मपत्रं पद्मवर्णमिति पाठः । त्रीणि पौष्करमूले पुष्करमोषधिविशेषस्तस्य मूले इत्यर्थः ॥ १४५ ॥ अव्यथा अतिचरा पद्मा चारटी पद्मचारिणी पञ्च उत्तरदेशे प्रसिद्धायाः पद्मचारिण्याः "स्थलकमलिनी इति

कांपिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि ॥ १४६ ॥
प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः ॥
पद्माट उरणाख्यश्च पलाण्डुस्तु सुकन्दकः ॥ १४७ ॥
लतार्कदुद्रुमौ तत्र हरितेऽथ महौषधम् ॥
लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ॥ १४८ ॥
पुनर्नवा तु शोथघ्नी वितुन्नं सुनिषण्णकम् ॥
स्याद्वातकः शीतलोऽपराजिता शणपर्ण्यपि ॥ १४९ ॥
पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ॥
वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका ॥ १५० ॥

ख्यातायाः ।" कांपिल्यः "कांपिल्लः"। "चन्द्रः कर्पूरकांपिल्लसुधांशुस्वर्णवारिषु" इति मेदिनी। कर्कशः चन्द्रः रक्ताङ्गः रोचनी "रेचनी" पञ्च शुण्डारोचनीति ख्याताया रोचन्याः ॥ १४६ ॥ प्रपुन्नाडः "प्रपुन्नालः प्रपुनालः प्रपुनाडः प्रपुन्नडः" एडगजः "एलगजः" दद्रुघ्नः "दद्रूघ्नः" चक्रमर्दकः पद्माटः उरणाख्यः "उरणाक्षः" षट्कं टाकला इति ख्यातस्य । पलाण्डुः सुकन्दः द्वे पलाण्डोः "कान्दा इति प्रसिद्धस्य" ॥ १४७ ॥ हरिते हरिद्वर्णे तत्र पलाण्डौ लतार्कः दुद्रुमः इति द्वे। महौषधं लशुनं "लशूनं" गृञ्जनं अरिष्टः महाकन्दः रसोनकः षट् लशुनस्य । रसे आस्वादने ऊन्यते पातकहेतुत्वात् रसोनकः । "ऊन परिहाणे" एरच् घञ् वा। णिलोपः। स्वार्थे कन्। लशुनगृञ्जनयोराकृतिभेदेऽपि रसैक्यात् अभेद इति बहवो मन्यंते ॥ १४८ ॥ पुनर्नवा शोथघ्नी द्वे पुनर्नवायाः "घेटुळी इति देशे प्रसिद्धायाः"। वितुन्नं सुनिषण्णकं द्वे सुषुन "कुरडु" इति ख्यातस्य शाकभेदस्य । वातकः शीतलः अपराजिता शणपर्णी "सनपर्णी असनपर्णी आसनपर्णी"। "भवेदसनपर्ण्यां च शीतलः शिशिरेऽन्यवत्" इति विश्वप्रकाशः। "शीतलं पुष्पकाशीसे शैलजे मलयोद्भवे। पुमानासनपर्ण्यां स्याच्छिशिरे वाच्यलिङ्गकम्" इति मेदिनी । चत्वारि शणपर्ण्याः गोकर्णी इति ख्यातायाः । "शीतलवातक इत्येकं पदमिति धन्वन्तरिराह" ॥ १४९ ॥ पारावताङ्घ्रिः "पारावताङ्घ्री" कटभी पण्या ज्योतिष्मती लता पञ्च ज्योतिष्मत्याः मालकाङ्गोणी इति ख्यातायाः । पारावताङ्घ्रि स्त्री । वार्षिकं त्रायमाणा त्रायन्ती बलभद्रिका चतुष्कं त्रायमाणायाः॥ १५० ॥

150 - 154



विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेत्यपि ॥
मार्कवो भृङ्गराजः स्यात्काकमाची तु वायसी ॥ १५१ ॥
शतपुष्पा सितच्छत्राऽतिच्छत्रा मधुरा मिसिः ॥
अवाक्पुष्पी कारवी च सरणा तु प्रसारिणी ॥ १५२ ॥
तस्यां कटंभरा राजबला भद्रबलेत्यपि ॥
जनी जतूका रजनी जतुकृच्चक्रवर्तिनी ॥ १५३ ॥
संस्पर्शाऽथ शटी गन्धमूली षड्ग्रन्थिकेत्यपि ॥
कर्चूरोऽपि पलाशोऽथ कारवेल्लः कठिल्लकः ॥ १५४ ॥
सुषवी चाथ कुलकं पटोलस्तिक्तकः पटुः ॥

विष्वक्सेनप्रिया गृष्टिः "घृष्टिः" वाराही बदरा चतुष्कं वाराह्याः "वाराहीकन्द डुकरकन्द इति ख्यातायाः" । मार्कवः भृङ्गराजः " भृङ्गरजाः" । भृङ्ग इव रजोऽस्य । सांतोऽदंतोऽपि । "स्यान्मार्कवो भृङ्गरजो भृङ्गराजः सुजागरः" इति रभसात् । द्वे माका इति ख्यातस्य । काकमाची वायसी द्वे कावळी "काकजंघा" इति ख्यातायाः ॥ १५१ ॥ शतपुष्पा सितच्छत्रा अतिच्छत्रा मधुरा मिसिः "मिसी" अवाक्पुष्पी कारवी सप्तकं शोप इति ख्यातायां शतपुष्पायाम् । सरणा "सरणी सारणी" । "सरणा सरणी चार्वी कटंभरा महावला" इति रुद्रः । "रुग्भेदे ना प्रसारण्यां स्वल्पनद्यां च सारणी" इति मेदिनी । प्रसारिणी ॥१५२॥ कटंभरा "कटंबरा" राजबला भद्रबला पञ्च प्रसारण्याः (चांदवेल) "कुब्जप्रसारिणी" इति ख्यातायाः । जनी "जनिः" जतूका "जतुका" प्रसारजनी "रजनिः" जतुकृत् चक्रवर्तिनी ॥ १५३ ॥ संस्पर्शा षट् चक्रवर्तिन्याः चाकवत इति ख्यातायाः । शटी गन्धमूली "गन्धमूला" षड्ग्रन्थिका कर्चूरः "कर्बूरः कर्बुरः" पलाशः पञ्च शम्याः "कापूरकाचरी, आंबेहळद इति ख्यातायाः" । कारवेल्लः कठिल्लकः "कटल्लकः" ॥ १५४ ॥ सुषवी "सुसवी सुशवी" त्रीणि कारवेल्लस्य कारली इति ख्यातस्य । कुलकं पटोलः तिक्तकः पटुः चत्वारि पटोल "पडवळ" इति ख्यातस्य । कूष्माण्डकः कर्कारुः द्वे कूष्माण्डस्य "कोहळा इति ख्यातस्य" । उर्वारुः "ईर्वारुः इर्वारुः ईर्वालुः

कूष्माण्डकस्तु कर्कारुरुर्वारुः कर्कटी स्त्रियौ ॥ १५५ ॥
इक्ष्वाकुः कटुतुम्बी स्यात्तुंब्यलाबूरुभे समे ॥
चित्रा गवाक्षी गोडुम्बा विशाला त्विन्द्रवारुणी ॥ १५६ ॥
अर्शोघ्नः सूरणः कन्दो गण्डीरस्तु समष्ठिला ॥
कलंब्युपोदिका स्त्री तु मूलकं हिलमोचिका ॥ १५७ ॥
वास्तुकं शाकभेदाः स्युर्दूर्वा तु शतपर्विका ॥

एर्वारुः" । "उन्मत्तो धुस्तुरिर्वारुः कर्कटिः स्यात्" इति पुंस्काण्डे रत्नकोशात् । कर्कटी "कर्कटिः" द्वे कर्कट्याः कांकडी इति ख्यातायाः ॥ १५५ ॥ इक्ष्वाकुः कटुतुम्बी द्वे कटुतुंब्याः "दुध्या कडुभोपळा इति ख्यातायाः" । अत्र इक्ष्वाकुशब्दः कट्वकटुतुंब्युभयसाधारणः । "इक्ष्वाकुः कटुतुंब्यां स्त्री सूर्यवंशे नृपे पुमान्" इति कोशान्तरेऽप्युक्तम् । तुम्बी "तुंबिः तुंबा" अलाबूः "अलांबूः आलाबूः आलाबुः लाबुः लाबूः" । "अलाबुः स्त्री पिण्डफला तुंबिस्तुंबी महाफला । तुंबा तु वर्तुलाऽलाबुर्निंबे तुंबी तु लाबुका" इति वाचस्पतिः । "अलाबूस्तुंबकः प्रोक्तः" इति चन्द्रः । लाबुकेत्यन्यकोशे । द्वे काळा भोपळा इति ख्यातस्य । अलाबुर्ह्रस्वान्तोऽपि क्वचित् । चित्रा गवाक्षी गोडुम्बा त्रीणि गोडुम्बायाः "कंवडळ इति ख्यातायाः" । "चित्राऽऽखुपर्णी गोडुम्बा सुभद्रा दन्तिकासु च । मायायां सर्पनक्षत्रे नदीभेदेषु च स्त्रियाम्" इति मेदिनी । "गवाक्षी त्विद्रवारुण्यां गवाक्षो जालके कपौ" इति हैमः । गोदुग्धेति पाठो न दृश्यते कोशेषु । गोदुग्धेति चिभूड इति प्रसिद्धिर्वैद्यके । विशाला इन्द्रवारुणी द्वे इन्द्रवारुण्याः मोठी कंवडळ इति ख्यातायाः ॥ १५६ ॥ अर्शोघ्नः सूरणः तालव्यादिरपि । कन्दः त्रीणि सूरणस्य । गण्डीरः समष्ठिला द्वे गण्डीराख्यशाकभेदस्य कडू सूरण इति ख्यातस्य । कलंब्यादयः पञ्च शाकभेदाः स्युः एकैकम् । तत्र कलम्बी वेण्वाकृतिः । "कलम्बी तु शतपर्वा कलंबूर्वा सुवीरुधः" इति वाचस्पतिः । "कलम्बी शाकभेदेऽपि स्याद्दण्डशरयोः पुमान्" इति मेदिनी । उपोदिका "उपोदीकापि" ( वाळी ) "थोरमयाळ पोईमाण्डवीवेल" इति प्रसिद्धा । मूलकं मुळा इति ख्यातम् । हिलमोचिका देशान्तरे हलहंची "चाकवत" इति प्रसिद्धा ॥ १५७ ॥ वास्तुकं "बथुवा" "चन्दनबटुवा" इति प्रसिद्धम् । "वास्तूकमपि" । दूर्वा शतपर्विका "शतपर्णिका" सहस्रवीर्या

158 - 162



सहस्रवीर्याभार्गव्यौ रुहाऽनन्ताऽथ सा सिता ॥ १५८ ॥
गोलोमी शतवीर्या च गण्डाली शकुलाक्षका ॥
कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम् ॥ १५९ ॥
स्याद्भद्रमुस्तको गुन्द्रा चूडाला चक्रलोच्चटा ॥
वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः ॥ १६० ॥
शतपर्वा यवफलो वेणुमस्करतेजनाः ॥
वेणवः कीचकास्ते स्युर्ये स्वनंत्यनिलोद्धताः ॥ १६१ ॥
ग्रन्थिर्ना पर्वपरुषी गुन्द्रस्तेजनकः शरः ॥
नडस्तु धमनः पोटगलोऽथो काशमस्त्रियाम् ॥ १६२ ॥

भार्गवी रुहा अनंता षट् दूर्वायाः ॥ १५८ ॥ सा दूर्वा सिता शुक्ला चेत् तत्र गोलोमी शतवीर्या गण्डाली शकुलाक्षका इति चत्वारि । कुरुविन्दः मेघनामा मुस्ता मुस्तकं चत्वारि मुस्तायाः "मोथ इति ख्यातायाः" मेघनामा मेघ-पर्यायनामकः । "मुस्तकं पुंसि क्लीबे च" ॥ १५९ ॥ भद्रमुस्तकः । भद्र-मिति पृथगपि नाम । "भद्रं स्यान्मङ्गले हेम्नि मुस्तके करणान्तरे" इति रुद्रः । गुन्द्रा द्वे मुस्ताविशेषस्य भद्रमुस्तकस्य "नागरमोथा इति ख्यातस्य" । अस्त्रि-यामिति मुस्तकभद्रमुस्तकाभ्यां संबध्यते । धन्वन्तरिरिमं भेदमाह । "मुस्तकों-ऽबुधरो मेघो घनो राजीवशेरुकः । भद्रमुस्तो वराहोऽब्दो गांगेयः कुरुविन्दकः" इति । चूडाला चक्रला उच्चटा त्रीणि उच्चटामूलस्य "फुरडी इति कोंकणे ख्यातस्य मुस्ताविशेषस्य" । वंशः त्वक्सारः कर्मारः त्वचिसारः तृणध्वजः ॥ १६० ॥ शतपर्वा यवफलः वेणुः मस्करः तेजनः दशकं वेणोः । ये वेणवः अनिलोद्धताः अनिलेन कीटादिकृतरंध्रगतवायुनोद्धताः स्वनन्ति शब्दं कुर्वन्ति ते कीचकाः स्युरित्येकम् ॥ १६१ ॥ ग्रन्थिः पर्व परुः "परुरुदन्तोऽपि । "मज्जा सारो, ग्रन्थिः परुः, परागः कुसुमरेणुः"—इति पुंस्काण्डे रत्नकोशात् । त्रीणि वंशा-दिग्रन्थेः पेरें इति ख्यातस्य । तत्र ग्रन्थिर्ना पुमान् । गुन्द्रः तेजनकः शरः "सरः" । "सरस्तु मुञ्जो बाणाख्यो गुन्द्रस्तेजनकः शरः" इति वाचस्पतेर्दन्त्यादिश्च । त्रीणि शरस्य । नडः "नलः" । "अथ पोटगलः पुंसि नले च काशमत्स्ययोः" इति मेदि-नी । धमनः पोटगलः त्रीणि देनवळ इति ख्यातस्य । काशं "कासम्" ॥ १६२ ॥

इक्षुगन्धा पोटगलः पुंसि भूम्नि तु बल्वजाः ॥
रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः ॥ १६३ ॥

स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम् ॥
अभयं नलदं सेव्यममृणालं जलाशयम् ॥ १६४ ॥

लामज्जकं लघुलयमवदाहेष्टकापथे ॥
नडादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ॥ १६५ ॥

अस्त्री कुशं कुथो दर्भः पवित्रमथकत्तृणम् ॥
पौरसौगन्धिकध्यामदेवजग्धकरौहिषम् ॥ १६६ ॥

इक्षुगन्धा पोटगलः त्रीणि काशस्य "काशं पुन्नपुंसकम्"। बल्वजा इत्येकं पुंलिङ्गं बहुवचनान्तम् "मोळ, लहाळे, लवा इति ख्यातस्य"। एको बल्वज इति भाष्यकारवचनादेकत्वेऽपि। रसालः इक्षुः द्वे इक्षोः। पुण्ड्रः कान्तारकः इत्यादयस्तस्येक्षोर्भेदाः। आदिना कोशकारादिग्रहः। स च। "इक्षुः कर्कटको वंशः कान्तारो वेणुनिस्रुतिः। इक्षुरसः पौण्ड्रकश्च रसालः कुसुमारकः" इति एकैकम् ॥ १६३ ॥ वीरणं वीरतरं द्वे तृणभेदस्य "काळा वाळा इति ख्यातस्य"। अस्य वीरणस्य मूले उशीरं अभयं नलदं सेव्यं अमृणालं जलाशयम् ॥ १६४ ॥ लामज्जकं लघुलयं अवदाहं इष्टकापथं इति दश नामानि स्युः। लघु लयं इति पृथगपि। "लामज्जकं सुवासं स्यादमृणालं लयं लघु" इति सुश्रुतः। अवदाहेष्टमिति अवदाहेष्टकापथमिति चैकैकं पदमिति। नडादयः नडकाशादयः तृणं तृणजातीया इत्यर्थः। "नलादय इत्यपि पाठः। ये च गर्मुच्छ्यामाकप्रमुखाः। गर्मुच्छ्यामाकौ तृणधान्यविशेषौ। प्रमुखशब्दाद्वक्ष्यमाणाः कुशादयः कङ्गुकोद्रवाद्याश्च। तेऽपि तृणजातीयाः। अत्र प्रमुखशब्दान्नीवाराद्या ग्रहीतव्याः। अन्यथा कोद्रवादीनां हविष्यत्वापातात्। "श्यामाकः श्यामकोऽपि च" इति हलायुधाच्छ्यामकोऽपि। एकम् ॥ १६५ ॥ कुशं कुथः दर्भः पवित्रं चत्वारि कुशस्य। तत्र कुशं क्लीबपुंसोः। कत्तृणं पौरं सौगंधिकं ध्यामं देवजग्धकं रौहिषं षट् गङ्गाण "रोहिसगवत" इति ख्यातस्य तृणभेदस्य ॥ १६६ ॥ छत्रा अतिच्छत्रः पालघ्नः। पालं क्षेत्रं हन्तीति पालघ्नः। मालातृणकं "मालाकाराणि तृणान्यस्य"।

छत्राऽतिच्छत्रपालघ्नौ मालातृणकभूस्तृणे ॥
शष्पं बालतृणं घासो यवसं तृणमर्जुनम् ॥ १६७ ॥
तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः ॥
तृणराजाह्वयस्तालो नालिकेरस्तु लाङ्गली ॥ १६८ ॥
घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु ॥
फलमुद्वेगमेते च हिन्तालसहितास्त्रयः ॥ १६९ ॥
खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः ॥
॥ इति वनौषधिवर्गः ॥ ४ ॥

---

सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ॥

भूस्तृणं पञ्च वचाकृतेर्जलतृणभेदस्य । "अत्र आद्यत्रयं शेतगवत इति ख्यातस्य । अन्त्यद्वयं मालाकारतृणस्येत्यपि मतम् ।" शष्पं "शस्पं" बालतृणं द्वे कोमलतृणस्य । घासः यवसं द्वे गवादीनां भक्ष्यतृणस्य । तृणं अर्जुनं द्वे तृणमात्रस्य ॥ १६७ ॥ तृणानां संहतिः समूहस्तृण्येत्युच्यते एकम् । नडानां संहतिर्नड्येत्युच्यते एकम् । तृणराजः तालः द्वे तालस्य । तृणराजाह्वयस्तृणराजनामकः । नालिकेरः "नारिकेरः नारिकेलः नाडिकेरः नारीकेलः नारिकेलिः नारीकेली" लाङ्गली द्वे नारिकेलस्य "नारळ" इति ख्यातस्य । लांगली स्त्री ङीषन्तः । इन्नन्तः पुंसीत्येके ॥ १६८ ॥ घोण्टा पूगः क्रमुकः गुवाकः "गूवाकः" । गुवाकोऽपि च गूवाक इति तारपालः । खपुरः पञ्च पूगवृक्षस्य "सुपारी, पोफळी इति ख्यातस्य" । अस्य फलं उद्वेगमित्युच्यते एकम् । एते तालनालिकेरपूगास्त्रयः । हिन्तालस्तालभेदः स तु अल्पपरिमाणः तत्सहिताः एवं चत्वारः खर्जूरादयश्चत्वारश्च एवमष्टौ एते तृणद्रुमा इत्युच्यन्ते ॥ १६९ ॥ तत्र खर्जूरः खजूर इति ख्यातः । केतकी ङीषन्ता केगत "केतक" इति ख्याता । एवं ताली तालीभेदः । खर्जूरी खर्जूरभेदः ॥ इति वनौषधिवर्गः ॥ ४ ॥ ॥ सिंहः । हिनस्ति इति सिंहः । "हिंसि हिंसायाम्" । मयूरव्यंसकादिः । "भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्यया-त्" इत्युक्तम् । मृगेन्द्रः पञ्चास्यः हर्यक्षः केसरी । केसरी तुरगे सिंहे पुन्नागे

("कण्ठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशनः ॥
पुण्डरीकः पञ्चनखचित्रकायमृगद्विषः ॥ १ ॥") (१)
शार्दूलद्वीपिनौ व्याघ्रे तरक्षुस्तु मृगादनः ॥ १ ॥
वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः ॥
दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ॥ २ ॥
कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः ॥
मर्कटो वानरः कीशो वनौका अथ भल्लुके ॥ ३ ॥
ऋक्षाऽच्छभल्लभल्लूका गण्डके खड्गखड्गिनौ ॥
लुलायो महिषो वाहद्विषत्कासरसैरिभाः ॥ ४ ॥

नागकेसर इत्युक्तम् । हरिः षट् सिंहस्य । केसरी इन्नन्तः । तालव्यमध्योऽपि । पञ्चं विस्तृतमास्यमस्य पञ्चास्यः । "पचि विस्तारे" । मुखं पादाश्च पञ्चास्यानीव यस्येति वा । कण्ठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशन इत्यादयोऽप्यस्य पर्यायाः ॥ १ ॥ शार्दूलः द्वीपी व्याघ्रः त्रीणि व्याघ्रस्य । तरक्षुः "तरक्षः" मृगादनः द्वे कुक्कुराकृतेः कृष्णरेखाचित्रितस्य मृगविशेषस्य तरस इति ख्यातस्य ॥ १ ॥ वराहः सूकरः घृष्टिः "गृष्टिः" कोलः पोत्री । पोत्रं मुखाग्रं अस्ति यस्य । "पोत्रं वस्त्रे मुखाग्रे च सूकरस्य हलस्य च" इति । किरिः "किरः" किटिः दंष्ट्री घोणी स्तब्धरोमा क्रोडः भूदारः द्वादश सूकरस्य । तालव्यादिरपि शूकरः । साहचर्याद्घृष्टिः पुंसि । पोत्रिणौ । दंष्ट्रिणौ । घोणिनौ । स्तब्धरोमाणौ ॥ २ ॥ कपिः प्लवङ्गः प्लवगः शाखामृगः वलीमुखः "बलिमुखः बलीमुखः" मर्कटः वानरः कीशः वनौकाः नवकं वानरस्य । वनौकसौ । "शाखाचारी मृगः शाखामृगः" । भल्लुकः ॥ ३ ॥ ऋक्षः अच्छभल्लः भल्लुकः· "भाल्लूकः भालूकः" चतुष्कमच्छभल्लस्य आस्वल, रीस इति ख्यातस्य । "केचन भालु इति ख्यातायाः नामचतुष्कमिति वदन्ति" ह्रस्वमध्योऽपि । भल्लक इति । अच्छभल्लपरिषद्विरहतीति प्रयोगः । अच्छ इति च । "अच्छः स्फटिकभल्लूकनिर्मलेषु" इति मेदिनी । गण्डकः खड्गः खड्गी । खड्गं शृङ्गं यस्यास्ति । त्रीणि गण्डशृङ्ग "गेंडा" इति ख्यातस्य । लुलायः "लुलाप इति ओष्ठ्यान्तोऽपि" महिषः वाहद्विषन् । वाहानां हयानां द्विषन् । कासरः

---

१ इदं पद्यं तालपत्रपुस्तकेऽपि नास्ति ।

स्त्रियां शिवा भूरिमायगोमायुमृगधूर्त्तकाः ॥
शृगालवञ्चुकक्रोष्टुफेरुफेरवजम्बुकाः ॥ ५ ॥
ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक् ॥
त्रयो गौधेरगौधारगौधेया गोधिकात्मजे ॥ ६ ॥
श्वावित्तु शल्यस्तल्लोम्नि शललो शललं शलम् ॥
वातप्रमीर्वातमृगः कोकस्त्वीहामृगो वृकः ॥ ७ ॥
मृगे करङ्गवातायुहरिणाजिनयोनयः ॥
ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु ॥ ८ ॥

सैरिभः पञ्च महिषस्य "गवा इति ख्यातस्य" ॥ ४ ॥ शिवा भूरिमायः गोमायुः मृगधूर्त्तकः शृगालः "सृगालः" वञ्चुकः "वञ्चकः"। "वञ्चकस्तु खले धूर्त्ते गृहबभ्रौ च जम्बुकः" इति कोशान्तरात्। क्रोष्टा फेरुः फेरवः जम्बुकः दश जम्बुकस्य कोल्हा इति ख्यातस्य। स्त्रियामिति। पुंव्यक्तावपि शिवाशब्दो नित्यं स्त्रीलिङ्ग इत्यर्थः। चतुष्पदां द्विलिङ्गता वक्ष्यते तदपवादोऽयम्। सृगालो दन्त्यादिरपि। क्रोष्टुशब्दस्य रूपाणि तु क्रोष्टा क्रोष्टारौ क्रोष्टारः। क्रोष्टारं क्रोष्टारौ क्रोष्टून्। क्रोष्ट्रा क्रोष्टुनेत्यादि। दीर्घमध्योऽपि जम्बूक इति ॥ ५ ॥ ओतुः विडालः "विडालः" मार्जारः वृषदंशक आखुभुक् पञ्च मार्जारस्य। गौधेरः गौधारः गौधेयः एते त्रयः शब्दा गोधिकात्मजे स्थलगोधिकाया अपत्येऽङ्गार इति ख्याते। "अयं कृष्णसर्पाद्गोधायां घोरपड इति ख्यातायां चतुष्पाज्जायते। अस्य सर्पस्य दंशेन मानवोऽवश्यं म्रियते" ॥ ६ ॥ श्वावित् शल्यः द्वे शल्यस्य साळई "साळी" इति ख्यातस्य। श्वानं विध्यति लोम्ना श्वावित् श्वाविधौ। तस्य शल्यस्य लोम्नि शलली शललं शलं इति त्रीणि। शलली स्त्रियाम्। इदं सीमंतोन्नयनादावुपयुज्यते। वातप्रमीः वातमृगः द्वे वातमृगस्य वाघूळ इति ख्यातस्य। वातप्रमीरीदन्तः पुंसि। रूपाणि तु। वातप्रमीः वातप्रम्यौ वातप्रम्यः। वातप्रमीं वातप्रम्यौ वातप्रमीन्। सप्तम्येकवचने तु सवर्णदीर्घः। वातप्रमी। स्त्रियां तु लक्ष्मीवत्। कोकः ईहामृगः वृकः त्रीणि वृकस्य "लांडगा इति ख्यातस्य"। कोक ईहामृगः इत्यपि पाठः ॥ ७ ॥ मृगः कुरङ्गः वातायुः "वानायुः" वनायुः। हरिणः अजिनयोनिः पञ्च हरिणस्य। एण्या हरिण्याश्चर्माद्यं आद्यशब्दात् मांसादि ऐणेयमित्युच्यते एकम्। प्राणिरजतादिभ्योऽञ् इत्यञ्। एणस्य तु चर्माद्यं

कदली कन्दली चीनश्चमूरुप्रियकावपि ॥
समूरुश्चेति हरिणा अमी अजिनयोनयः ॥ ९ ॥
कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः ॥
गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ॥ १० ॥
गन्धर्वः शरभो रामः सृमरो गवयः शशः ॥
इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः ॥ ११ ॥

ऐणमित्युच्यते एकम् । उभे ऐणेयं ऐणं च त्रिषु स्पष्टम् ॥ ८ ॥ कदली कन्दली चीनः चमूरः प्रियकः समूरुः एते षट् हरिणभेदाः एकैकम् । कदलीकन्दल्यौ ङीषन्ते स्त्रियाम् । स्वामिमते तु इबन्तौ पुंसि । अमी षट् हरिणाः वक्ष्यमाणाः कृष्णसारादयश्च अजिनयोनय उच्यन्ते । यत एते चर्मण्युपयुक्ताः ॥ ९ ॥ कृष्णसारः "कृष्णशारः" । कृष्णश्चासौ सारश्च । "वर्णो वर्णेन" इति समासः । शारः शबलवातयोरिति तालव्यादौ रभसः । रुरुः न्यङ्कुः रङ्कुः शम्बरः शंवरः संवरः । शं वृणोति । वृञ् वरणे । रौहिषः "रोहिषः" । "रोहिषं कत्तृणे ज्ञेयं रोहिषो हरिणान्तरे" इति विश्वप्रकाशः । गोकर्णः । "गोकर्णोऽश्वतरे सर्पे मृगभेदे गणान्तरे" इति हेमचन्द्रः । पृषतः एणः ऋश्यः "ऋष्यः । एणः कुरंगमो रिष्यः स्यादृश्यश्चारुलोचने" इति त्रिकाण्डशेषात् तत्र रिष्योऽपि । रोहितः "लोहितः" चमरः एते द्वादश मृगाः मृगभेदाः एकैकम् । तत्र कृष्णसारः कृष्णवर्णेन मिश्रः कृष्णमृग इति ख्यातः । रुरुर्देशान्तरभाषायां म्रुवार "रोहें" इति ख्यातः । न्यङ्कुर्नागुण इति ख्यातः "शम्बरभेदः" । रङ्कुः चिता चितळ जंडियार मृगविशेष इति ख्यातः । शम्बरः साम्बा "सांवर" इति ख्यातः । रौहिषः रोही इति ख्यातः । गोकर्णः गोंव इति ख्यातः । पृषतः बिन्दुविशिष्टः पुषिव इति ख्यातः । एणश्चारुनेत्रः । ऋष्यः शीघ्रगामी । रोहितो रक्तवर्णः चमरश्चामरोपयोगिपुच्छः ॥ १० ॥ गन्धर्वः शरभः रामः सृमरः गवयः शशः एते षट् मृगभेदाः । "शरभस्तालव्यादिः" । तत्र गन्धर्वो गन्धविशिष्टः । शरभो लडीसरा इति प्रसिद्धः । रामो रमणीयरूपो मृगभेदः । सृमरः सरणशीलः । गवयः गवा इति ख्यातः । शशः ससा इति ख्यातः एकैकम् । इत्यादयः गन्धर्वादयः आदिशब्दादत्रानुक्ता वनपोतादयो ये च पूर्वोक्ता मृगेन्द्राद्याः सिंहाद्या श्चमरान्ताः ये च वर्गान्तरे वक्ष्यमाणा गवाद्याः गोहस्त्यश्वादयः ते सर्वे पशुजातयः पशुशब्द-

( "अधोगन्ता तु खनको वृकः पुंध्वज उन्दुरः ॥" ) (१)
उन्दुरुर्मूषकोऽप्याखुर्गिरिका बालमूषिका ॥
सरटः कृकलासः स्यान्मुसली गृहगोधिका ॥ १२ ॥
लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः ॥
नीलङ्गुस्तु कृमिः कर्णजलौकाः शतपद्युभे ॥ १३ ॥
वृश्चिकः शूककीटः स्यादलिद्रोणौ तु वृश्चिके ॥

वाच्या इत्यर्थः एकम् ॥ ११ ॥ अधोगन्ता खनकः वृकः पुंध्वजः उन्दुरः पञ्च क्षेपकश्लोकगतनामानि मूषकस्य । उन्दुरुः मूषकः "ह्रस्वोपधदीर्घोपधमुषमूषधातुभ्यां कनि मुषकः मूषक इति द्वयम्" आखुः त्रयं मूषकस्य । "उन्दुरुंदुरुरुन्दरः" इति शब्दार्णवे। गिरिका बालमूषिका द्वे स्वल्पमूषकजातेः । "खर्वाखुर्बालमूषिका" इति दुर्गः। छुछुन्दरी गन्धमुखी दीर्घतुण्डी दिवान्धिकेति श्लोकार्धं केचिदत्र पठन्ति । एतन्नामचतुष्टयं मूषकसदृशजातिविशिष्टस्य चिचुंद्रीति ख्यातस्य । सरटः कृकलासः "कृकलाशः कृकुलासः । कृकं शिरो ग्रीवा कण्ठं च लासयति" द्वे सरडा इति ख्यातस्य । मुसली गृहगोधिका "गृहगोलिकेत्यपि पाठः" द्वे गृहगोधायाः "पाल इति ख्यातायाः" । मुसति संशयं खण्डयति शुभाशुभसूचकत्वात् । मुसली ङीषन्ता । मुशलीति तालव्यमध्यापि। ज्येष्ठा स्त्री कुड्यमत्स्या च गृहगोधा गृहालिकेति कोशान्तरम् ॥ १२ ॥ लूता तन्तुवायः "तन्त्रवायः" ऊर्णनाभः ऊर्णेव तन्तुर्नाभौ यस्य । मर्कटकः चत्वारि ऊर्णनाभस्य "कोष्ठी कोळी इति ख्यातस्य । तत्र लूता नित्यं स्त्री । नीलङ्गुः कृमिः क्रिमिः । "क्रिमिर्ना कृमिवत्कीटे लाक्षायां कृमिले खरे" इति मेदिनी । "द्रुमामये भवेत्पुंसि कीटे च कृमिवत्क्रिमिः" इति रभसः । द्वे अपि पुंसि क्षुद्रकीटमात्रस्य "कुसुरडा घुले इति ख्यातस्य" । नीलाङ्गुरिति दीर्घमध्योऽपि । "नीलङ्गुरपि नीलाङ्गुः" इति द्विरूपकोशः । कर्णजलौकाः शतपदी द्वे स्त्रीलिङ्गे । "कर्णजलूका" घोण, गोम वळोंजी इति ख्यातायाः । शतं पादा यस्याः सा । कर्णजलौकाः सान्ता । कर्णजलूका कर्णजलौकेति च टाबन्तापि ॥ १३ ॥ वृश्चिकः शूककीटः द्वे शूककीटस्य ऊर्णादिभक्षकस्य कसर इति ख्यातस्य। शूकं शूकाकारं लोम तद्युक्तसर्वाङ्गः कीटः शूककीटः । अलिः "आलिः"। "वृश्चिको द्रुण आलिः स्यात्" इति बोपालितः । आली। "अथाली

१ इदमर्धं तालपत्रपुस्तकेऽपिनास्ति ॥

पारावतः कलरवः कपोतोऽथ शशादनः ॥ १४ ॥
पत्री श्येन उलूकस्तु वायसारातिपेचकौ ॥
("दिवान्धः कौशिको घूको दिवाभीतो निशाटनः ॥") (१)
व्याघ्राटः स्याद्भरद्वाजः खञ्जरीटस्तु खञ्जनः ॥ १५ ॥
लोहपृष्ठस्तु कङ्कः स्यादथ चाषः किकीदिविः ॥
कलिङ्गभृङ्गधूम्याटा अथ स्याच्छतपत्रकः ॥ १६ ॥
दार्वाघाटोऽथ सारङ्गस्तोककश्चातकः समाः ॥
कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ १७ ॥

स्याद्वृश्चिके भ्रमरे पुमान्" इति कोशान्तरम् । द्रोणः "द्रुणः" वृश्चिकः त्रीणि विंचू इति ख्यातस्य विषकीटस्य । तत्रालिरिदन्त इभन्तश्च । पारावतः "पारापतः" । "पारापतः कलरवः पत्री श्येनः शशादनः" इति रभसः । कलरवः कपोतः त्रीणि पारावतस्य पारवा "खबूतर" इति ख्यातस्य । "पारावतः कपोतः स्यात्कपोतो विहगान्तरे" इति विश्वः । शशादनः ॥ १४ ॥ पत्री श्येनः अयं ससाणा इति ख्यातस्य । उलूकः वायसारातिः पेचकः अयमुलूकस्य घूक "घुबड पेंचापक्षी" इति ख्यातस्य । "दिवान्धः कौशिकः घूकः दिवाभीतः निशाटनः" पञ्चकमप्युलूकस्य । व्याघ्राटः भरद्वाजः द्वे भरद्वाजस्य पक्षिणः "कुकुडकोंबा कुंभारकोंबा इति ख्यातस्य" । खञ्जरीटः खञ्जनः द्वे चलत्पक्षस्य पक्षिविशेषस्य "ताजवा तय्यर इति ख्यातस्य" ॥ १५ ॥ लोहपृष्ठः कङ्कः । "कङ्कश्छद्मद्विजे ख्यातो लोहपृष्ठकृतान्तयोः" इत्युक्तत्वात् । द्वे बाणोपयोगिपत्रस्य पक्षिभेदस्य । चाषः "चासः" । "इक्षुपक्षिभिदोश्चासः" इति दन्त्या तेषु रुद्रः । किकीदिविः "किकीदिविः किकिदिविः किकिदिवः किकीदिवीः किकीदिवः किकिः किकी दिवः । चाषो दिविः किकिः स्मृतः" इति व्याडिः । द्वे चारगा "चाष, चास, तास," इति ख्यातस्य । कलिङ्गः भृङ्गः धूम्याटः त्रीणि फेंचुहार "मस्तकचूड पक्षी" इति ख्यातस्य । धूमसमूह इवाटतीति धूम्याटः । शतपत्रकः ॥ १६ ॥ दार्वाघाटः द्वे वटफोरा "सुतार पक्षी, काष्ठकुट्ट, टांकारी" इति ख्यातस्य । सारङ्गः "शारङ्गः" । "शारङ्गश्चातके ख्यातः शबले हरिणेऽपि च" इति तालव्यादावजयः तोककः

---

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

17-20



चटकः कलविङ्कः स्यात्तस्य स्त्री चटका तयोः ॥
पुमपत्ये चाटकैरस्त्र्यपत्ये चटकैव सा ॥ १८ ॥
कर्करेटुः करेटुः स्यात्कृकणक्रकरौ समौ ॥
वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥ १९ ॥
काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः ॥
ध्वांक्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥ २० ॥
("स एव च चिरंजीवी चैकदृष्टिश्च मौकुलिः ॥")
द्रोणकाकस्तु काकोलो दात्यूहः कालकण्ठकः ॥

चातकः त्रीणि चातकस्य । कृकवाकुः ताम्रचूडः कुक्कुटः चरणायुधः चत्वारि कुक्कुटस्य "कोंबडें इति ख्यातस्य" ॥ १७ ॥ चटकः कलविङ्कः द्वे चटकस्य "चिमणी इति ख्यातस्य" । तस्य चटकस्य स्त्री चटकेत्येकम् । तयोश्चटकस्य चटकायाश्च पुमपत्ये चाटकैर इत्येकम् । तयोस्त्र्यपत्ये स्त्रीरूपेऽपत्ये चटकेत्येकम् ॥ १८ ॥ कर्करेटुः "कर्कराटुः" करेटुः "करटुः" द्वे अशुभवादिनि पक्षिभेदे कंकरेट "करढोंक पक्षी" इति ख्याते । "करेटुः कर्करेटुः स्यात्करटुः कर्कराटुकः" इति रभसः । कृकणः क्रकरः द्वे क्ररक इति ख्यातस्य करेटुभेदस्य । "कृ इति कणति शब्दं करोति कृकेण कण्ठेन अणति शब्दं करोति वा" । वनप्रियः परभृतः कोकिलः पिकः चत्वारि कोकिलस्य ॥ १९ ॥ काकः करटः अरिष्टः बलिपुष्टः सकृत्प्रजाः ध्वांक्षः आत्मघोषः परभृत् बलिभुक् वायसः दश काकस्य । "चिरंजीवी एकदृष्टिः मौकुलिः मौकलिरपि" । एतदपि त्रयं काकस्य । परभृतौ । बलिभुजौ ॥ २० ॥ द्रोणकाकः काकोलः द्वे काकभेदस्य "डोंबकावळा कृष्णकावळा इति ख्यातस्य" । "द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे" इति मेदिनी । "द्रोणः कृपीपतौ कृष्णकाके" इति विश्वप्रकाशः । "द्रोणकाको दग्धकाको वृद्धकाको वनाश्रयः" इति त्रिकाण्डशेषः । दात्यूहः "दात्यौहः" कालकंठकः द्वे डाहद "अन्धकाक जलकाक" इति ख्यातस्य । काले वर्षाकाले कण्ठोऽस्य कालकण्ठकः आतापी आतायी इन्नन्तः । "आतापिनि भवेच्चिल्लः" इति विश्वप्रकाशः । चिल्लः द्वे चिल्लस्य घार इति प्रसिद्धस्य ।

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

आतापिचिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ ॥ २१ ॥
क्रुङ् क्रौञ्चोऽथ बकः कह्वः पुष्कराह्वस्तु सारसः ॥
कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥ २२ ॥
कादम्बः कलहंसः स्यादुत्क्रोशकुररौ समौ ॥
हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥ २३ ॥
राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ॥
मलिनैर्मल्लिकाक्षास्ते धार्तराष्ट्राः सितेतरैः ॥ २४ ॥
शरारिराटिराडिश्च बलाका बिसकण्ठिका ॥

दाक्षाय्यः गृध्रः द्वे गृध्रस्य गीध इति ख्यातस्य । दाक्षाय्य इति द्वितालव्ययसंयुक्तान्त्यपाठः सर्वत्र दृश्यते । "दक्ष वृद्धौ शीघ्रार्थे च" । "श्रुदक्षिस्पृहिगृहि" इत्याय्यः । दक्षाय्यः । "दक्षाय्यस्यायं अण् दाक्षाय्यः" । कीरः शुकः द्वे कीरस्य "रावा, राघु, पोपट इति ख्यातस्य" ॥ २१ ॥ क्रुङ् क्रौञ्चः "क्रुञ्चः" द्वे ठेक "कुरकुंचा" इति ख्यातस्य । तत्र क्रुङ् चान्तः । क्रुञ्चौ । बकः कह्वः द्वे बकस्य "बगळा इति ख्यातस्य" । के जले ह्वयते शब्दं कुरुते कह्वः । कङ्क इति पाठः अयं पाठः कुत्रास्तीति न दृश्यते । किंतु सर्वत्र कह्व इत्येव । पुष्कराह्वः सारसः द्वे सारसस्य । पुष्कराह्वः पद्मपर्यायनामकः । कोकः "क्रुकः" चक्रः चक्रवाकः रथाङ्गः चत्वारि चक्रवाकस्य । रथाङ्गस्य चक्रस्य ये आह्वयाः नामानि तन्नामकः ॥ २२ ॥ कादम्बः कलहंसः द्वे कलो मधुरवाक् च चासौ हंसश्च तस्य बदक इति प्रसिद्धस्य । उत्क्रोशः कुररः द्वे कुररस्य कुररी इति प्रसिद्धस्य । हंसः । "भवेद्वर्णागमाद्धंसः" । पृषोदरादिः । श्वेतगरुत् चक्राङ्गः मानसौकः चत्वारि हंसस्य । बहुत्वविवक्षायां बहुवचनम् ॥ २३ ॥ ये सिताः देहेन शुक्लाः चञ्चुचरणैर्लोहितैरुपलक्षिता हंसास्ते राजहंसाः स्युरित्येकम् । चञ्चुसहिताश्चरणास्तैरिति विग्रहः । अन्यथा प्राण्यङ्गत्वादेकवचनं दुर्वारम् । लक्षणे तृतीया । हंसानां राजा राजहंसः । राजदन्तादिषु पाठात् परनिपातः । मलिनैरीषद्धूम्रैश्चञ्चुचरणैस्ते सिता हंसा मल्लिकाक्षा इत्युच्यन्ते । एकम् । मल्लिकाकाराणि अक्षीणि येषां ते । मलिकाख्या इत्यपि । सितेतरैः कृष्णवर्णैः चञ्चुचरणैरुपलक्षितास्ते धार्तराष्ट्राः स्युः । धृतराष्ट्रे भवाः । "धृतराष्ट्रः सुराज्ञि स्यात्पक्षिक्षत्रियभेदयोः" इति रभसः । एकम् ॥ २४ ॥ शरारिः

25-27



हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा ॥ २५ ॥
जतुकाऽजिनपत्रा स्यात्परोष्णी तैलपायिका ॥
वर्वणा मक्षिका नीला सरघा मधुमक्षिका ॥ २६ ॥
पतङ्गिका पुत्तिका स्याद्दंशस्तु वनमक्षिका ॥
दंशी तज्जातिरल्पा स्याद्गन्धोली वरटा द्वयोः ॥ २७ ॥
भृङ्गारी झीरुका चीरी झिल्लिका च समा इमाः ॥

"शरातिः शरालिः शराली शराटिः शराडिः । आडिः शरालिर्वरटी गन्धोली वानरी कपी" इति स्त्रीलिङ्गकाण्डे रत्नकोशः । आटिः "आटी" आडिः "आडी" त्रयं स्त्रीलिङ्गम् । आडीति ख्यातस्य पक्षिणः । आटिः पुंलिङ्गोऽपि क्वचित् । बलाका बिसकण्ठिका द्वे बालढोंक "बगळा" इति ख्यातस्य बकभेदस्य । बिसमिव दीर्घः कण्ठोऽस्याः बिसकण्ठिका । हंसस्य योषित् स्त्री वरटा स्यादित्येकम् । सारसस्य स्त्री तु लक्ष्मणेत्युच्यते । निर्मकारोऽपि । "लक्ष्मणश्चैव सारसः" इत्यमरमाला । "लक्ष्मणं नाम्नि चिह्ने च सारसस्य तु लक्ष्मणा" इति विश्वः । एकम् ॥ २५ ॥ जतुका "जतूका" अजिनपत्रा द्वे बटुरी "चामचिराई" इति ख्याते पक्षिभेदे । अजिनं चर्म तद्रूपे पत्रे पक्षौ यस्याः सा । परोष्णी "परोष्टी" । तैलपायिका द्वे पक्षयुक्ते कीटकविशेषे तेंलडुवा "वाघूळ" इति ख्याते । तैलं पिबतीव तैलपायिका । चत्वार्यपि जतुकाया इत्येके । वर्वणा "बर्बणा" मक्षिका "मक्षीका" नीला त्रयं मक्षिकायाः । सरघा मधुमक्षिका द्वे मक्षिकाभेदस्य "मधमाशी इति ख्यातस्य" ॥ २६ ॥ पतङ्गिका पुत्तिका द्वे मधुमक्षिकाभेदस्य । इयं तु सरघातः क्षुद्रा यन्निमित्तो मधुभेदः । माक्षिकं तैलवर्णं स्याद्घृतवर्णं तु पौत्तिकमिति । दंशः वनमक्षिका द्वे "मोठी डांस रानमाशी" इति ख्यातस्य । तेषां दंशानां जातिर्याऽल्पा सा दंशीत्युच्यते । एकं डांस इति ख्यातस्य । गन्धोली वरटा "वरटी" । "वरटा वरटी हंस्योस्तत्पतौ वरटः स्मृतः" इति तारपालः । द्वे वरटी "गांधीणमाशी" इति ख्यातस्य । तत्र गन्धोली ङीषन्ता । वरटा स्त्रीपुंसयोः ॥ २७ ॥ भृङ्गारी झीरुका "झीरिका झिरुका झिरिका झिरीका" चीरी झिल्लिका "झिल्लीका झिल्लुका चीलिका चिल्लुका" चत्वारि झिल्ली झुरकुट चिलट इत्यादिख्यातस्य । झी इति रौति झीरुका । ची इति रौति चीरी । या हि

समौ पतङ्गशलभो खद्योतो ज्योतिरिङ्गणः ॥ २८ ॥

मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ॥

द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥ २९ ॥

मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् ॥

शिखावलः शिखी केकी मेघनादानुलास्यपि ॥ ३० ॥

केका वाणी मयूरस्य समौ चन्द्रकमेचकौ ॥

शिखा चूडा शिखण्डस्तु पिच्छबर्हे नपुंसके ॥ ३१ ॥

खगे विहङ्गविहगविहङ्गमविहायसः ॥

शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ॥ ३२ ॥

पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः ॥

रात्रौ अदृश्या सती स्वनति । तथा च प्रयोगः । "अदृश्यझिल्लीस्वनकर्णशूलैः" इति ।·समा इत्यनेन चतुष्टयमेककार्यकमित्युक्तम् । इमा इति स्त्रीत्वनिश्चयः । पतंगः शलभः द्वे टोळ "दीपपतंग" इति ख्यातस्य । खद्योतः ज्योतिरिङ्गणः द्वे खद्योतस्य "काजवा इति ख्यातस्य" ॥ २८ ॥ मधुव्रतः मधुकरः मधुलिट् मधुपः अली द्विरेफः द्वौ रेफौ नाम्नि यस्य । भ्रमरशब्दे प्रसिद्धिः । पुष्पलिट् भृङ्गः षट्पदः भ्रमरः अलिः एकादश भ्रमरस्य । अमधुकरे मधुकरशब्दो रूढः । मधु किरति विक्षिपतीति वा । मधुलिहौ । पुष्पलिहौ ॥ २९ ॥ मयूरः बर्हिणः बर्ही नीलकण्ठः भुजङ्गभुक् शिखावलः शिखी केकी मेघनादानुलासी नव मयूरस्य । बर्हिणोऽदन्तः । बर्ही इन्नन्तः । भुजंगभुजौ । शिख्यादित्रयमिन्नन्तम् । मेघनादमनुलसत्यवश्यं मघनादानुलासी ॥ ३० ॥ मयूरवाणी केकेत्युच्यते एकम् । चन्द्रकः मेचकः द्वे पिच्छस्य नेत्राकारचिह्नस्य । "बर्हिकण्ठसमं वर्णं मेचकं ब्रुवते बुधाः" इति कात्यः । शिखा चूडा द्वे मयूरशिखायाम् । शिखण्डः पिच्छं बर्हं त्रीणि मयूरपिच्छस्य ॥ ३१ ॥ खगः । "खगः सूर्यग्रहे देवे मार्गणे च विहंगमे" इति कोशान्तरम् । विहंगः विहगः विहंगमः विहायाः शकुन्तिः पक्षी शकुनिः शकुन्तः शकुनः द्विजः ॥ ३२ ॥ पतत्री पत्री पतगः । पतेन पक्षेण गच्छति । पतन् पत्ररथः अण्डजः नगौकाः वाजी ।

नगौकोवाजिविकिरविविष्किरपतत्त्रयः ॥ ३३ ॥
नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमाः ॥
तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ॥ ३४ ॥
तित्तिरिः कुक्कुभो लावो जीवंजीवश्चकोरकः ॥
कोयष्टिकष्टिट्टिभको वर्तको वर्त्तिकादयः ॥ ३५ ॥
गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम् ॥
स्त्री पक्षतिः पक्षमूलं चञ्चुस्त्रोटिरुभे स्त्रियौ ॥ ३६ ॥

वाजाः पक्षाः सन्ति अस्य । विकिरः विः विष्करः पतत्रिः ॥ ३३ ॥ नीडोद्भवः गरुत्मान् पित्सन् नभसंगमः सप्तविंशतिः पक्षिमात्रस्य । शकुन्तिरिदन्तः । शकुन्तोऽदन्तः । विरित्येकाक्षरं नाम । नभसंगम इति पञ्चाक्षरम् । अथ तेषां विशेषा वक्ष्यन्त इति शेषः । हारीतो देशान्तरभाषया हरिल "तिलगिरू पक्षी" इति ख्यातः । हारितः इतीकारह्रस्वोऽपि । मद्गुः जलकाकः पाणकावळा इति ख्यातः । कारण्डवः करडुवा इति ख्यातः । अयं काकतुण्डो दीर्घपादः कृष्णवर्णः । प्लवः पुडेरी "पाणकोंबडा" इति ख्यातः । प्लवः प्लक्षे प्लुतौ कपौ । शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयोः । क्रमनिम्नमहीभागे कुलके जलवायसे । जलान्तरे प्लवं गन्धतृणे मुस्तकभिद्यपि" इति हेमचन्द्रः ॥ ३४ ॥ तित्तिरिः "तित्तिरः" । "कपोतलावतित्तिराः" इति वाचस्पतिः । तित्तिर पक्षी इति प्रसिद्धः । कुकुभो वनकुक्कुटः लावो लता "लावा पक्षी" इति प्रसिद्धः । जीवंजीवो मयूरतुल्यपत्रकः जीवं जीवयतीति जीवंजीवः । तद्दर्शनेन विषनाशनात् । जीवजीवो जिवाजिवश्चेत्यपि । चकोरकश्चकोरः । योऽयं चन्द्रिकया तृप्यति । कोयष्टिकः कोंढा इति ख्यातः । टिट्टिभकः टिटिभकः टिट्टभ इत्यपि । टिटवी इति ख्यातः । वर्तकश्चित्रपक्षः पक्षिभेदः "गांजीण पक्षी इति ख्यातः" । वर्तिका वटई "वनचटक" इति प्रसिद्धा । स्त्रियां वर्तकेत्यपि । आदिशब्दात् सारिका कपिञ्जलादयः । एकैकम् ॥ ३५ ॥ गरुत् पक्षः छदः पत्रं पतत्रं तनूरुहं षट् पक्षस्य । गरुतौ पक्षौ छदौ । "पक्षसी च स्मृतौ पक्षौ" इति शुभांकः । "गरुत्पक्षेतरौ छदम्" इति क्लीबकाण्डे बोपालितः । पक्षस्य मूलं पक्षतिरित्युच्यते । पक्षतीति ङीषन्तोऽपि एकम् । चञ्चुः त्रोटिः द्वे पक्षितुण्डस्य । "चञ्चूश्चञ्चुस्तथा त्रोटिः" इति हलायुधः ॥ ३६ ॥

प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः ॥
पेशी कोशो द्विहीनेऽण्डं कुलायो नीडमस्त्रियाम् ॥ ३७ ॥

पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ॥
स्त्रीपुंसौ मिथुनं द्वन्द्वं युग्मं तु युगलं युगम् ॥ ३८ ॥

समूहो निवहव्यूहसंदोहविसरव्रजाः ॥
स्तोमौघनिकरव्रातवारसंघातसंचयाः ॥ ३९ ॥

समुदायः समुदयः समवायश्चयो गणः ॥
स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥ ४० ॥

प्रडीनं उड्डीनं संडीनं एतास्तिस्रः खगानां गतिक्रियाः गमनव्यापाराः गतिविशेषा इत्यर्थः । तत्र प्रडीनं तिर्यग्गमनम् । उड्डीनं ऊर्ध्वगमनम् । संडीनं संगतगमनम् । पेशी "पेशिः" कोशः "कोषः" अण्डं त्रयमण्डस्य । तत्र पेशी स्त्री । कोशोऽस्त्रियाम् । अण्डं द्विहीने क्लीबे इत्यर्थः । रूपभेदेनैव क्लीबत्वे सिद्धे द्विहीन इत्युक्तिः साहचर्येण प्राप्तमस्त्रीत्वं वारयति । "पेशीनां मांसखण्डानां कोशो भाण्डागारमिति नामैक्यम्" इति स्वामी । कुलायः कुलं पक्षिसंतानः अयते यत्र । नीडं द्वे पक्षिगृहस्य "घरटा, खोंपा, कोठें इति प्रसिद्धस्य" ॥ ३७ ॥ पोतः पाकः अर्भकः डिम्भः पृथुकः शावकः शिशुः सप्तकं शिशुमात्रस्य । स्त्रियां तु पोती डीबन्ता । पाका अर्भका डिम्भा पृथुका एते च टाबन्ताः । स्त्रीपुंसौ मिथुनं द्वन्द्वं त्रीणि स्त्रीपुरुषरूपयुग्मस्य । स्त्री च पुमांश्च स्त्रीपुंसौ । "अचतुरविचतुर" इति साधुः । द्वन्द्वशब्दस्य स्त्रीपुंसपरत्वे कालिदासप्रयोगः । "द्वन्द्वानि भावं क्रियया विवव्रुः" इति । युग्मं युगलं युगं त्रयं युग्मस्य । केचित्तु द्वन्द्वयुग्मे इति समस्तं पठित्वा द्वन्द्वादिचतुष्टयं समानमाहुः ॥ ३८ ॥ समूहः निवहः व्यूहः संदोहः विसरः व्रजः स्तोमः ओघः निकरः व्रातः वारः संघातः संचयः ॥ ३९ ॥ समुदायः समुदयः समवायः चयः गणः संहतिः वृन्दं निकुरम्बं कदम्बकं द्वाविंशतिः समूहस्य । तत्र संहतिः स्त्रियाम् । "वारः सूर्यादिदिवसे द्वारेऽवसरवृन्दयोः । कुब्जवृक्षे हरे वारो वारं मद्यस्य भाजनम्" इति विश्वप्रकाशः ॥ ४० ॥ वृन्दभेदाः समुदायविशेषा वक्ष्यन्त इति शेषः । समैः सजातीयैः प्राणिभिरप्राणिभिर्वा समूहो वर्ग इत्युच्यते एकम् । यथा

वृन्दभेदाः समैर्वर्गः संघसार्थौ तु जन्तुभिः ॥
सजातीयैः कुलं यूथं तिरश्चां पुन्नपुंसकम् ॥ ४१ ॥

पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम् ॥
स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम् ॥ ४२ ॥

कापोतशौकमायूरतैत्तिरादीनि तद्गणे ॥
गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ॥ ४३ ॥

इति सिंहादिवर्गः ॥ ५ ॥

मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ॥
स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ १ ॥

मनुष्यवर्गः शैलवर्गः । सजातीयैर्विजातीयैरपि जन्तुभिः प्राणिभिरेव समूहः संघः सार्थ इति चोच्यते द्वे । यथा पशुसंघः वणिक्सार्थः । सजातीयैर्जंतुभिरेव कुलम् । यथा विप्रकुलम् । "कुलं जनपदे गोत्रे सजातीये गणेऽपि च" इति एकम् । तिरश्चामेव सजातीयानां समूहे यूथम् । यथा मृगयूथम् । एकम् ॥ ४१ ॥ पशूनामेव वृन्दं समज इत्युच्यते एकम् । अन्येषां पश्वतिरिक्तानां वृन्दं समाजः । यथा श्रोत्रियसमाजः एकम् । सधर्मिणां एकधर्मवतां समूहो निकायः । यथा श्रोत्रियनिकायः । पुञ्जः "पिञ्जः" राशिः उत्करः कूटं चत्वारि धान्यादिराशेः । "कूटं पुन्नपुंसकम्" ॥ ४२ ॥ तद्गणे तेषां कपोतादीनां समूहे कापोतादीनि स्युः । यथा कपोतानां समूहः कापोतम् । शुकानां समूहः शौकम् । एवं मयूराणां समूहः मायूरम् । तित्तिराणां समूहस्तैत्तिरम् । कपोतादिभ्यः "अनुदात्तादेरञ्" । आदिशब्दात् काकमित्यादि । ये गृहासक्ताः क्रीडार्थं पञ्जरादौ स्थापिता इति यावत् । ते पक्षिमृगाः छेका गृह्यका इति च स्युः द्वे । गृह्या एव गृह्यकाः स्वार्थे कन् ॥ ४३ ॥ इति सिंहादिवर्गः ॥ ५ ॥ मनुष्याः मनोरपत्यानि पुमांसः "मनोर्जातौ" इति पाणिनिसूत्रेण यत् प्रत्ययः पुगागमश्च । मानुषाः मर्त्याः मनुजाः मानवाः नराः पुमांसः पञ्चजनाः पञ्चभिः पृथिव्यादिमहाभूतैर्जन्यते प्रादुर्भवतीति । पुरुषाः पूरुषाः नरः एकादश मनुष्याणाम् । नृशब्दस्यैकवचनं तु ना । पुमांस इत्यादि पञ्चकं तु पुंव्यक्तावपि प्रायेण प्रयुज्यते ।

स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ॥
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥ २ ॥
विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ॥
प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥ ३ ॥
सुन्दरी रमणी रामा कोपना सैव भामिनी ॥
वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ ४ ॥
कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः ॥

यथा पुंस्कोकिलाः ॥१॥ स्त्री स्त्यायतः शुक्रशोणिते यस्याम्। "स्त्यै संघाते"। योषित् जोषित् जोषिता योषितेत्यपि। "स्त्री वधूर्योषिताङ्गना" इति त्रिकाण्डशेषः। अबला अल्पं बलं यस्याः । अल्पार्थे नञ् । अनुदरा कन्येतिवत्। योषा "जोषेति चवर्गतृतीयादिः" नारी सीमन्तिनी वधूः प्रतीपदर्शिनी । प्रतीपं द्रष्टुं शीलमस्याः अपाङ्गनिरीक्षणत्वात् । वामा वनिता महिला "महस्योत्सवस्य इला भूमिरिति विग्रहे महेला । महं उत्सवं लातीति महलापि" एकादश स्त्रियाः। स्त्रियौ। योषितौ। वध्वौ ॥ २ ॥ विशेषाः स्त्रीणां भेदा वक्ष्यन्त इति शेषः। अङ्गनेत्येकं प्रशस्ताङ्गाः। एवं रामापर्यन्तमेकैकम् । तत्र भीरुर्भयशीला। भीरूरिति दीर्घोकारान्ता। भीलुर्भीलूश्च कामिनी कामयमाना। वामलोचना चारुनेत्रा। प्रमदा प्रकृष्टकामवेगा। मानिनी प्रणयकोपवती। "स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये" इति। कान्ता मनोहरा। ललना ललनयुक्ता। नितम्बिनी ॥ ३ ॥ सुन्दरी शोभनावयवा। "सुन्दरापि"। रमणी रमयन्ती। "रमणापि" रामा रममाणा। कोपना "कोपनी कोपिनी" भामिनी द्वे कोपशीलायाः । वरारोहा "वरः आरोहो नितम्बोऽस्याः" मत्तकाशिनी मत्ता क्षीबेव काशते भाति । उपपदार्थः कर्ता प्रत्ययार्थस्य कर्तुरुपमानं "कर्तर्युपमाने" इति णिनिः। "मत्तकासिनी"। उत्तमा वरवर्णिनी "वरः वर्णोऽस्त्यस्याः"। चत्वारि गुणैरुत्कृष्टायाः स्त्रियाः। "वद्वा उत्तमेति न पर्यायः"। किंतु उत्तमा स्त्री सैतत्पर्याया ज्ञेयेति तदर्थः। "शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला। भर्तृभक्ता च या नारी विज्ञेया वरवर्णिनी" इति रुद्रः॥ ४ ॥ या कृताभिषेका नृपपत्नी सा महिषीत्येकम्। अन्या अकृताभिषेका नृपस्त्रियो भोगिन्य इत्युच्यन्ते एकम् । पत्नी पाणिगृहीती

पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५ ॥
भार्या जायाऽथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी ॥
पुरंध्री सुचरित्रा तु सती साध्वी पतिव्रता ॥ ६ ॥
कृतसापत्निकाऽध्यूढाधिविन्नाथ स्वयंवरा ॥
पतिंवरा च वर्याऽथ कुलस्त्री कुलपालिका ॥ ७ ॥
कन्या कुमारी गौरी तु नग्निकाऽनागतार्तवा ॥

द्वितीया द्वयोः पूरणी द्वितीया । "द्वितीया तिथिगेहिन्योर्द्वितीयः पूरणे द्वयोः" इति हेमचन्द्रः । सहधर्मिणी सह धर्मोऽस्ति यस्याः । पत्न्या सह कर्मस्वधिकारात् । सधर्मिणीत्यपि ॥ ५ ॥ भार्या जाया जायतेऽस्याम् । "जायायास्तद्धि जायात्वं यदस्यां जायते पतिः" इति मनुः । दाराः दारयन्ति भ्रातॄन् "दॄ विदारणे" णिजन्तः । सप्त परिणीतायाः स्त्रियाः । तत्र दारशब्दो नित्यं पुंसि बहुवचनान्तश्च । दारशब्दष्टाबन्तोऽपि । "क्रोडा हारा तथा दारा अथ एते यथाक्रमम् । क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिः" इति हेमचन्द्रात् । पाणिर्गृहीतोऽस्याः पाणिगृहीती ङीषन्ता । कुटुम्बिनी कुटुम्बमस्ति यस्याः सा । "कुटुम्बं पोष्यवर्गे च" इत्यमरमाला । पुरन्ध्री " पुरन्ध्रिः " द्वे पतिपुत्रादिमत्याः । सुचरित्रा सती साध्वी पतिव्रता चत्वारि पतिसेवातत्परायाः ॥ ६ ॥ कृतसापत्निका अध्यूढा अधिविन्ना त्रीणि कृतानेकविवाहस्य पुंसो या प्रथमोढा स्त्री तस्याः । कृतं सापत्निकं सपत्नीभावोऽस्याः सा । कृतसापत्नकेति पाठः । स्वयंवरा पतिंवरा वर्या त्रीणि स्वेच्छया पतिवरणोद्युक्तायाः । स्वयं वृणुते स्वयंवरा । कुलस्त्री कुलपालिका द्वे कुलवत्याः ॥ ७ ॥ कन्या कुमारी द्वे प्रथमवयसि वर्तमानायाः । गौरी नग्निका अनागतार्तवा त्रीणि अदृष्टरजस्कायाः । अनागतं अप्राप्तं आर्तवं रजो यस्याः सा । "अष्टवर्षा भवेद्गौरी दशमे नग्निका भवेत्" इति तस्या अवान्तरभेदः । "अष्टवर्षा भवेत्कन्या नववर्षा च रोहिणी ॥ दशवर्षा भवेद्गौरी चात ऊर्ध्वं रजस्वला" इति स्मृतिवचनम् । "यावत् षोडशसंख्यमब्दमुदिता बाला ततस्त्रिंशतं तावत्स्यात्तरुणीति बाणविशिखैः संख्या तु यावद्भवेत् ॥ सा प्रौढेत्यभिधीयते कविवरैर्वृद्धा तदूर्ध्वं स्मृता निन्द्या कामकलाकलापविधिषु त्याज्या सदा कामिभिः" ॥ "बालेति गीयते नारी यावद्वर्षाणि षोडश" ॥ "श्यामा षोडशवार्षिकी" इति । "गौरी त्वसंजातरजाः" इत्यप्युक्तं भवति । मध्यमा दृष्टरजाः द्वे प्रथमप्राप्तरजोयोगायाः । तरुणी

स्यान्मध्यमा दृष्टरजास्तरुणी युवतिः समे ॥ ८ ॥
समाः स्नुषाजनीवध्वश्चिरिंटी तु सुवासिनी ॥
इच्छावती कामुका स्याद्वृषस्यन्ती तु कामुकी ॥ ९ ॥
कान्तार्थिनी तु या याति संकेतं साऽभिसारिका ॥
पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी ॥ १० ॥
स्वैरिणी पांशुला च स्यादशिश्वी शिशुना विना ॥
अवीरा निष्पतिसुता विश्वस्ताविधवे समे ॥ ११ ॥

"तॄ प्लवनतरणयोः" त्रो रश्च लो वेत्यनन् । तलुनी । तरुणतलुनशब्दौ यौवनवाचिनौ । "वयसि प्रथमे" इति ङीप् । "तलुनः पवने यूनि युवत्यां तलुनी स्मृता" इति मेदिनी । युवतिः "युवतीति ङीषन्तेति केचित् । यूनीति ङीषन्तोऽन्यत्र" द्वे मध्यमवयसि वर्तमानायाः ॥ ८ ॥ स्नुषा जनी "जनिः" वधूः त्रयं पुत्रादिभार्यायाः । "वधू पत्न्यां स्नुषानार्योः स्पृक्कासारिवयोरपि । नवपरिणीतायां च" इति हैमात् । वधूरित्येकं नवोढायाः स्त्रिया अपि । चिरिण्टी "चिरण्टी" । "चिरण्टी तु सुवासिन्यां स्याद्द्वितीयवयःस्त्रियाम्" इति विश्वप्रकाशः । सुवासिनी द्वे किंचिल्लब्धयौवनायां परिणीतायाम् । सुष्ठु वसति सुवासिनी । स्ववासिनीत्यपि पाठः । तत्र स्वेषु पित्रादिषु वस्तुं शीलमस्या इति विग्रहः । "स्ववासिन्यां चिरिण्टी स्याद्द्वितीयवयसि स्त्रियाम्" इति रुद्रः । इच्छावती कामुका द्वे यमनादीच्छावत्याः । वृषस्यन्ती वृषं नरं आत्मनः इच्छति । क्यचि सुगागमः शतृप्रत्ययः उगितश्चेति ङीप् । कामुकी द्वे "अश्ववृषवत्" मैथुनेच्छावत्याम् ॥ ९ ॥ या कान्तार्थिनी भर्तुः संकेतस्थानं गच्छति साऽभिसारिका । यदुक्तम् । "हित्वा लज्जाभये श्लिष्टा मदेन मदनेन या । अभिसारयते कान्तं सा भवेदभिसारिका" इति । एकम् । पुंश्चली पुंसो भर्तुः सकाशाच्चलति पुरुषान्तरं गच्छति । धर्षिणी "धर्षणी कृषधातोरनिः कर्षणिः" । बन्धकी असती कुलटा इत्वरी ॥ १० ॥ स्वैरिणी पांशुला अष्ट स्वैरिण्याः । या शिशुना रहिता सा अशिश्वी एकम् । निष्पतिसुता पतिपुत्ररहिता सा अवीरा एकम् । "पतिपुत्रवती वीरा" इति नाममाला । विश्वस्ता विफलं श्वसिति स्म । "श्वस प्राणने" । "विश्वस्तो जातविश्वासो विश्वस्ता विधवा स्त्रियाम्" इति विश्वः । विधवा द्वे रण्डायाः । पांसुलाऽथ स्यादित्यपि पाठः ॥ ११ ॥ आलिः सखी वयस्या त्रयं सख्याः ।

आलिः सखी वयस्याऽथ पतिवत्नी सभर्तृका ॥
वृद्धा पलिक्नी प्राज्ञी तु प्रज्ञा प्राज्ञा तु धीमती ॥ १२ ॥
शूद्री शूद्रस्य भार्या स्याच्छूद्रा तज्जातिरेव च ॥
आभीरी तु महाशूद्री जातिपुंयोगयोः समा ॥ १३ ॥
अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि ॥
उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः ॥ १४ ॥
आचार्यानी तु पुंयोगे स्यादर्यी क्षत्रियी तथा ॥
उपाध्यायान्युपाध्यायी पोटा स्त्रीपुंसलक्षणा ॥ १५ ॥

"आलिः सखी सेतुरालिरालिरावलिरिष्यते" इति शाश्वतः । पतिवत्नी सभर्तृका द्वे जीवद्भर्तृकायाः । वृद्धा पलिक्नी । पलितं केशशौक्ल्यं अस्ति यस्याः । द्वे पक्वकेश्याम् । प्राज्ञी प्रज्ञा द्वे या यत्किमपि स्वयं प्रकर्षेण जानाति तस्याः । प्राज्ञा धीमती द्वे बुद्धिमत्याः ॥ १२ ॥ या शूद्रस्य भार्या सा विजातीयाऽपि शूद्रीत्युच्यते एकम् । तज्जातिः शूद्रजातिः "अन्यभार्यापि" शूद्रेत्युच्यते । आभीरी महाशूद्री द्वे गोपालिकायाः । जातिपुंयोगयोः महाशूद्रस्य जातौ महाशूद्रस्य स्त्रीत्येवंरूपं पुंयोगे च समा । उभयत्रापि नामद्वयं ङीष्प्रत्ययान्तमेवेत्यर्थः ॥ १३ ॥ अर्याणी अर्या द्वे वैश्यजात्युत्पन्नायाः स्त्रियाः । स्वयं वैश्यजातिः भार्या तु यस्य कस्यचिदस्तु इत्यर्थो बोध्यः । एवं क्षत्रिया क्षत्रियाणी द्वे स्वयं क्षत्रियजातिः भार्या तु यस्य कस्यचित् । उपाध्याया उपाध्यायी द्वे स्वयं या अध्यापिका तस्याम् । उपेत्याधीयते यस्याः सकाशादित्युपाध्याया । "पुराकल्पे तु नारीणां व्रतबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवचनं तथा" इति पाराशरमाधवीये यमः । तथा स्वतः स्वयं मन्त्रव्याख्याकृदाचार्या स्यात् एकम् । त्रयमपि समानार्थमित्येके ॥ १४ ॥ पुंयोगे आचार्यस्य स्त्रीत्येवंरूपेऽर्थे आचार्यानीत्येकम् । "आचार्यादणत्वं च" इति णत्वाभावः । तथा अर्यस्य स्त्रीत्यर्थे अर्यीत्येकम् । एवं क्षत्रियस्य स्त्रीत्यर्थे क्षत्रियी एकम् । उपाध्यायानी उपाध्यायस्य स्त्री उपाध्यायी द्वे उपाध्यायस्य भार्यायाम् । स्त्रीपुंसलक्षणा स्तनश्मश्रुरूपेण स्त्रीपुंसचिह्नेन युक्ता पोटेत्युच्यते ॥ १५ ॥ वीरपत्नी वीरः पतिर्यस्याः सा । वीरभार्या द्वे

वीरपत्नी वीरभार्या वीरमाता तु वीरसूः ॥
जातापत्या प्रजाता च प्रसूता च प्रसूतिका ॥ १६ ॥
स्त्री नग्निका कोटवी स्याद्दूतीसंचारिके समे ॥
कात्यायन्यर्धवृद्धा या काषायवसनाऽधवा ॥ १७ ॥
सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ॥
असिक्नी स्यादवृद्धा या प्रेष्याऽन्तःपुरचारिणी ॥ १८ ॥
वारस्त्री गणिका वेश्या रूपाजीवाऽथ सा जनैः ॥
सत्कृता वारमुख्या स्यात्कुट्टनी शंभली समे ॥ १९ ॥
विप्रश्निका त्वीक्षणिका दैवज्ञाऽथ रजस्वला ॥

वीरस्य भार्यायाः । वीरमाता वीरसूः द्वे वीरस्य मातरि । जातापत्या प्रजाता प्रसूता प्रसूतिका चत्वारि प्रसूतायाः ॥ १६ ॥ या नग्निका नग्ना स्त्री कोटवीत्येकम् । "कोट्टवीत्यपि" दूती "बाहुलकात् क्तिन् दूतिः" संचारिका द्वे दूतिकायाः । संचारयति प्रापयति स्वामिसंदेशमिति संचारिका । अर्धवृद्धा काषायवस्त्राऽधवेति विशेषणत्रयविशिष्टा या सा कात्यायनीत्युच्यते एकम् । अर्धवृद्धेति धर्मप्रधानत्वादर्धवृद्धत्वेन युक्तेत्यर्थः ॥ १७ ॥ या परवेश्मस्था स्वतन्त्रा केशप्रसाधनादिशिल्पकारिणी चेति विशेषणत्रयोपेता तस्यां सैरन्ध्रीति नामैकम् । "सैरिन्ध्रीतीकारमध्यपाठः" इति रभसः । उक्तं तु कात्येन । "चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी । प्रसाधनोपचारज्ञा सैरन्ध्री परिकीर्तिता" इति । अवृद्धा प्रेष्याऽन्तःपुरचारिणीति च विशेषणत्रयोपेता या साऽसिक्नी स्यादित्येकम् । प्रेष्यते राज्ञीभिरिति प्रेष्या ॥ १८ ॥ वारस्त्री गणिका वेश्या "मूर्धन्यमध्यपाठोऽपि" । रूपाजीवा चत्वारि वेश्यायाः । वारस्य वृन्दस्य स्त्री वारस्त्री । रूपमाजीवो जीविका यस्याः सा रूपाजीवा । सा वेश्या गुणवत्त्वाज्जनैः सत्कृता सती वारमुख्या स्यात् एकम् । "वारे वेश्यावृन्दे मुख्या वारमुख्या" । कुट्टनी शंभली । संभलीति दन्त्यादिरपि । द्वे परनारीं पुंसा योजयित्र्याम् । "शं सुखं भलते वदतीति शंभली" ॥ १९ ॥ विप्रश्निका ईक्षणिका दैवज्ञा त्रयं शुभाशुभनिरूपिण्याः ।

20-22



स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि ॥ २० ॥
ऋतुमत्यप्युदक्यापि स्याद्रजः पुष्पमार्तवम् ॥
श्रद्धालुर्दोहदवती निष्कला विगतार्तवा ॥ २१ ॥
आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी ॥
गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे ॥ २२ ॥
पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः ॥

रजस्वला स्त्रीधर्मिणी अविः आत्रेयी मलिनी पुष्पवती ॥ २० ॥ ऋतुमती उदक्या अष्ट रजस्वलायाः । "द्वादशाद्वत्सरादूर्ध्वमापञ्चाशत्समाः स्त्रियाः । मासि मासि भगद्वारात्प्रकृत्यैवार्तवं स्रवेत्" इति वैद्यशास्त्रे। "द्वादशाब्दे व्यतीते तु यदि पुष्पं बहिर्न हि। अन्तः पुष्पं भवत्येव पनसोदुम्बरादिवत्" इति वात्स्यायनः। स्त्रीधर्मो रजः सोऽस्ति अस्याः सा स्त्रीधर्मिणी । "अविं स्त्रीधर्मिणीं विद्यात्" इति कात्यः । अवीति दीर्घान्तापि । आत्रेयीवदगम्यत्वादात्रेयी । आत्रेयिकेत्यन्यत्र । रजः पुष्पं आर्तवं त्रीणि स्त्रीरजसः । ऋतुरेवार्तवं प्रज्ञाद्यण् । ऋतुर्नाम शोणितदर्शनोपलक्षितो गर्भधारणयोग्यः स्त्रीणामवस्थाविशेष उच्यते । श्रद्धालुः दोहदवती द्वे गर्भवशादन्नादिविशेषाभिलाषिण्याः । "दोहदं गर्भिण्यभिलाषोऽस्त्यस्याः" निष्कला "निष्कली" विगतार्तवा द्वे हीनरजस्कायाः । "निर्गतं कलं शुक्रमस्याः निष्कला" ॥ २१ ॥ आपन्नसत्त्वा आपन्नं सत्त्वं जंतुरनयाऽस्यां वा । गुर्विणी अन्तर्वत्नी गर्भिणी चत्वारि गर्भिण्याः । अन्तरस्त्यस्यां गर्भोऽन्तर्वत्नी । गणिकादेर्गणे समूहे गाणिक्यादि । यथा गणिकानां समूहो गाणिक्यम् । गर्भिणीनां समूहो गार्भिणम् । युवतीनां समूहो यौवतम् । एकैकम् ॥ २२ ॥ या द्विरूढा द्विवारं वृता तत्र पुनर्भूः दिधिषूः दिधीषूः दिधिषुरपि । द्वे । पूर्वमेकस्य भूत्वा पुनरन्यस्य भवतीति पुनर्भूः । "अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः" इत्युक्तम् । मनुस्तु । "ज्येष्ठायां यद्यनूढायां कन्यायामूह्यतेऽनुजा । सा चाग्रेदिधिषुर्ज्ञेया पूर्वा तु दिधिषुर्मता" इत्याह । दिधिष्वौ । तस्या द्विरूढायाः पतिर्दिधिषुरित्युच्यते एकम् । "पुनर्भूः पतिरुक्तश्च पुनर्भूर्दिधिषुस्तथा" इत्येषोऽप्युदन्त इति स्वामी । सा पुनर्भूर्यस्य द्विजस्य कुटुम्बिनी कुटुम्बं पुत्रादिपोष्यवर्गस्तद्वती सोऽग्रेदिधिषूरित्येकम् । अग्रेदिधिषुरिति ह्रस्वान्तोऽपि ।

स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी ॥ २३ ॥
कानीनः कन्यकाजातः सुतोऽथ सुभगासुतः ॥
सौभागिनेयः स्यात्पारस्त्रैणेयस्तु परस्त्रियाः ॥ २४ ॥
पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः ॥
सुतो मातृष्वसुश्चैवं वैमात्रेयो विमातृजः ॥ २५ ॥
अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः ॥
कौलटेरः कौलटेयो भिक्षुकी तु सती यदि ॥ २६ ॥
तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः ॥
आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ॥ २७ ॥
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ॥

दिधिषूः परपूर्वाग्रेदिधिषुस्तत्पुरन्ध्रिकः" इति नाममाला। द्विजशब्देन वर्णत्रयस्यापि ग्रहणम् ॥ २३ ॥ कन्यकाया अनूढाया जातः सुतः कानीन इत्युच्यते कर्णः व्यासश्च । एकम् । सुभगासुतः सौभागिनेयः द्वे सुभगापुत्रस्य। यः परस्त्रियाः सुतः पारस्त्रैणेयः एकम् ॥ २४ ॥ पितृष्वसुः पितृभगिन्याः सुतः पैतृष्वसेयः पैतृष्वस्रीयः द्वे । मातृष्वसुः सुतोऽप्येवम् । यथा मातृष्वसेयः मातृष्वस्रीयः द्वे । विमाता मातुः सपत्नी तस्याः पुत्रो वैमात्रेय इत्युच्यते एकम्। "वैमात्रोऽप्यन्यत्र" ॥ २५ ॥ बान्धकिनेयः बन्धुलः असतीसुतः कौलटेरः कौलटेयः पञ्च कुलटापुत्रस्य ॥ २६ ॥ यदि तु सती भिक्षुकी भिक्षार्थिनी तर्हि तस्या आत्मजः कौलटिनेयः कौलटेयः द्वे। कुलानि भिक्षार्थं अटति न तु जारार्थं तस्याः कुलटायाः पुत्रः कौलटिनेयः । इतरस्याः कौलटेर इति भेदः। "कुलं जनपदे गृहे" इति विश्वः। आत्मजः तनयः सूनुः सुतः पुत्रः पञ्चकं पुत्रस्य। "पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः। तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा" इति। अमी आत्मजादयः सर्वे स्त्रियां वर्तमानाः ॥ २७ ॥ दुहितरं आहुः । यथा आत्मजा तनया सूनुः सुता पुत्री दुहितेत्यपि ऋदन्तम्। अपत्यं तोकं द्वे तयोः समे पुत्रे दुहितरि च क्लीबलिङ्गे एवेत्यर्थः। औरसः उरस्यः "औरस्य इत्यपि" द्वे स्वजाते सवर्णायामूढायां स्वसाज्जाते पुत्रे न तु दत्त्रिमादौ । तातः जनकः पिता त्रीणि

स्वजाते त्वौरसोरस्यौ तातस्तु जनकः पिता ॥ २८ ॥
जनयित्री प्रसूर्माता जननी भगिनी स्वसा ॥
ननान्दा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा ॥ २९ ॥
भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ॥
प्रजावती भ्रातृजाया मातुलानी तु मातुली ॥ ३० ॥
पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः ॥
पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः ॥ ३१ ॥
श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ ॥
स्वस्रीयो भागिनेयः स्याज्जामाता दुहितुः पतिः ॥ ३२ ॥
पितामहः पितृपिता तत्पिता प्रपितामहः ॥

पितुः ॥ २८ ॥ जनयित्री । अन्तर्भावितण्यर्थाज्जनित्री । प्रसूः माता जननी "जननिः" चत्वारि जनन्याः । भगिनी स्वसा द्वे स्वसुः । या पत्युः स्वसा सा ननान्देत्येकम् । ऋदन्तमिदम् । "ननन्देत्यपि" । "ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सा" इति रभसः । नप्त्री पौत्री द्वे सुतस्य सुतायाश्चात्मजा तत्र ॥ २९ ॥ भ्रातृवर्गस्य भार्याः परस्परं यातरः स्युः एकम् । प्रजावती भ्रातृजाया द्वे भ्रातुर्जायायाम् । मातुलानी मातुली "मातुलेत्यपि" द्वे मातुलभार्यायाः ॥ ३० ॥ पत्युः पत्न्याश्च प्रसूर्माता श्वश्रूरित्युच्यते एकम् । तयोः पतिपत्न्योः पिता श्वशुर इत्युच्यते । श्वश्रूशिशुश्वशुरा इति शभेदाद्वितालव्याः । एकम् । पितुः भ्राता पितृव्यः एकम् । मातुः भ्राता मातुल इत्युच्यते एकम् ॥ ३१ ॥ पत्न्याः भ्रातरः श्याला इत्येकम् । श्यालशब्दस्तालव्यादिर्दन्त्यादिर्वा । "उच्छिष्टमधुपर्कवाची श्याशब्दः । श्यां लातीति श्यालः ।" स्वामिनः पत्युर्भ्रातरि कनिष्ठे देवा देवरः । देवृशब्दस्य देवा देवरौ इत्यादि । "देवृदेवरदेवानः" इति शब्दार्णवादन्यत्र नान्तोऽपि देवेति ।" स्वस्रीयः "घे कृते स्वस्रियः । ढकि स्वस्रेयः" भागिनेयः द्वे भगिन्याः पुत्रे । दुहितुः पतिः जामाता स्यात् । एकम् ॥ ३२ ॥ पितामहः पितृपिता द्वे पितुः पितरि । तस्य पितामहस्य पिता प्रपितामह इत्येकम् । एवं मातुः पित्रादौ मातामहादिः । यथा मातुः पिता मातामहः एकम् । तत्पिता

मातुर्मातामहाद्येवं सपिण्डास्तु सनाभयः ॥ ३३ ॥
समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ॥
सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥ ३४ ॥
ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः ॥
धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ ॥ ३५ ॥
अमृते जारजः कुण्डो मृते भर्तरि गोलकः ॥
भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ भ्रातरावुभौ ॥ ३६ ॥
मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ॥

प्रमातामहः एकम् । सपिण्डाः सनाभयः द्वे सप्तपुरुषावधिज्ञातिषु । "सपिण्डता तु पुरुषे सप्तमे विनिवर्तते" इति स्मृतेः । "समान एकः पिण्डो देहो मूलपुरुषो निर्वाप्यो वाऽस्य । सह पिण्डेन वर्तत इति वा सपिण्डः । समानो नाभिर्मूलपुरुषोऽस्य सनाभिः" ॥ ३३ ॥ समानोदर्यः सोदर्यः सगर्भ्यः सहजः चत्वारि एकोदरस्य भ्रातुः । सगोत्रः बान्धवः ज्ञातिः बन्धुः स्वः स्वजनः षट् सगोत्रस्य । समानमेकं गोत्रमस्य सगोत्रः । अत्र स्वशब्दस्य स्वरूपं स्वः स्वौ स्वाः इत्यादि ॥ ३४ ॥ तेषां भावसमूहयोः क्रमात् ज्ञातेयं बन्धुता स्यात् । यथा ज्ञातीनां भावो ज्ञातेयं एकम् । बन्धूनां समूहो बन्धुता एकम् । धवः प्रियः पतिः भर्ता चत्वारि पत्युः । जारः उपपतिः । द्वे मुख्यादन्यस्य भर्तुः । "उपमितः पत्या, उपसृष्टः पतिरनेन वा उपपतिः । "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपश्च" इति समासः ॥ ३५ ॥ अमृते भर्तरि जाराज्जातः कुण्ड इत्युच्यते एकम् । कुण्ड्यते कुलमनेन कुण्डः । "कुडि दाहे" । स्त्रिया तु कुण्डी । "कुण्डमग्न्यालये मानभेदे देवजलाशये । कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान्" । मृते भर्तरि जाराज्जातो गोलक इत्येकम् । भ्रात्रीयः "भ्रातृव्यः" भ्रातृजः द्वे भ्रातृपुत्रस्य । भ्रातृभगिन्यौ भ्रातराविति स्यातां एकम् । उभाविति सहोक्तौ सत्यामिति सूचनार्थम् । भ्राता च स्वसा च भ्रातरौ । "भ्रातृपुत्रौ स्वसृदुहितृभ्याम्" इत्येकशेषः ॥ ३६ ॥ मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ चत्वारि द्विवचनान्तानि मात्रा सहोक्ते पितरि । माता च पिता च पितरौ । "पिता मात्रा" इत्येकशेषः । मातरपितराविस्यत्र ऋकारयोररङ्भावो निपात्यते । तेन मातरपितराभ्यामिति प्रयोग

37-40



श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च ॥ ३७ ॥
दम्पती जम्पती जायापती भार्यापती च तौ ॥
गर्भाशयो जरायुः स्यादुल्बं च कललोऽस्त्रियाम् ॥ ३८ ॥
सूतिमासो वैजननो गर्भो भ्रूण इमौ समौ ॥
तृतीयाप्रकृतिः षण्ढः क्लीबः पण्डो नपुंसके ॥ ३९ ॥
शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं समे ॥
स्यात्स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्धकम् ॥ ४० ॥

इति न्यासः । श्वश्रूश्वशुरौ श्वशुरौ द्वे सहोक्तयोः श्वश्रूश्वशुरयोः । पुत्रश्च दुहिता च एकशेषे पुत्रौ स्यातामित्यर्थः । एकम् ॥ ३७ ॥ दम्पती जम्पती जायापती भार्यापती चत्वारि दंपत्योः । जायाशब्दस्य जंभावो दंभावश्च वा निपात्यते । तावित्यनेनैते शब्दा द्विवचनान्ताः पुंसीति सूचितम् । "शाल्मली मैथिली मैत्री दम्पती जम्पती च सा" इति वाचस्पतौ स्त्रीत्वमप्युक्तम् । गर्भाशयः जरायुः उल्बं त्रीणि येन वेष्टितो गर्भः कुक्षौ तिष्ठति तस्य चर्मणः । गर्भ आशेतेऽत्र गर्भाशयः । जरायुरुदन्तः । कलल इत्येकम् । शुक्रशोणितसन्निपातस्य प्रसिद्धत्वादस्य पर्यायो नोक्तः किंतु अस्त्रीत्वमात्रं विधीयते । उल्बपर्यायः कलल इत्येके । यदाहुः । तदुल्बं कललं च तदिति ॥ ३८ ॥ सूतिमासः वैजननः द्वे प्रसवमासस्य । यत्र नवमे वा दशमे मासि प्रसूयते तस्येत्यर्थः । "विजायतेऽस्मिन्विजननः" विजनन एव वैजननः । स्वार्थेऽण् । गर्भः भ्रूणः द्वे कुक्षिस्थस्य प्राणिनः । तृतीयाप्रकृतिः षण्ढः क्लीबः पण्डः नपुंसकः पञ्च नपुंसकस्य । तृतीयाप्रकृतिरिति षडक्षरं नाम । "संज्ञापूरण्योश्च" इति निषेधान्न पुंवद्भावः । तृतीयप्रकृतिरित्यपि । नञ्घटितमनित्यमिति न्यायेन उक्तनिषेधानित्यत्वात्पुंवद्भावः । षण्ढः स्यात्पुंसि गोपतौ । "आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि" इति कोशान्तरात् । तत्र प्रथमा प्रकृतिः स्त्री । द्वितीया पुमान् । तृतीया क्लीब इति । षण्ढो मूर्द्धन्यादिस्तालव्यादिर्वा ॥ ३९ ॥ शिशुत्वं शैशवं बाल्यं त्रयं बालत्वे । तारुण्यं यौवनं द्वे । स्थाविरं वृद्धत्वं वार्धकम् वार्धक्यमित्यपि । "वार्धक्यं वार्धके वृद्धसंघाते वृद्धकर्मणि" इति विश्वः । त्रीणि वृद्धत्वे । तत्र वार्धकमित्येकं वृद्धसंघेऽपि वृद्धानां समूहेऽपि ॥ ४० ॥ केशादौ जरसा यत् शौक्ल्यं धवलिमा तत्पलितमुच्यते । आदिना लोम्नां ग्रहणम् । विस्रसा जरा

पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा ॥
स्यादुत्तानशया डिम्भा स्तनपा च स्तनंधयी ॥ ४१ ॥
बालस्तु स्यान्माणवको वयस्थस्तरुणो युवा ॥
प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥ ४२ ॥
वर्षीयान्दशमी ज्यायान्पूर्वजस्त्वग्रियोऽग्रजः ॥
जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः ॥ ४३ ॥
अमांसो दुर्बलश्छातो बलवान्मांसलोंऽसलः ॥
तुन्दिलस्तुन्दिभस्तुन्दी बृहत्कुक्षिः पिचण्डिलः ॥ ४४ ॥

द्वे जरायाः। विस्रस्यतेऽनया विस्रसा। जीर्यत्यङ्गमनया जरा। उत्तानशया डिम्भा स्तनपा स्तनंधयी चत्वारि स्तनंधयस्य। त्रिषु वक्ष्यन्ते। स्त्रीत्वेन निर्देशः स्त्रीत्वे रूपभेदप्रदर्शनार्थः। डिम्भशब्दः सिंहादिवर्गे उक्तोऽपि स्त्रियां टाबन्तत्वप्रदर्शनाय पुनरिहोक्तः ॥ ४१ ॥ बालः माणवकः द्वे बालस्य। आषोडशाद्बालः। वयस्थः। वयसि तिष्ठतीति। "वयस्थ इत्यपि"। "वयः पक्षिणि बाल्यादौ वयो यौवनमात्रके" इति विश्वः। तरुणः युवा त्रयं यूनः। प्रवयाः स्थविरः वृद्धः जीनः जीर्णः जरन् षट्कं वृद्धस्य। प्रवयसौ। जरन्तौ ॥ ४२ ॥ वर्षीयान् दशमी ज्यायान् त्रीण्यतिवृद्धस्य। अतिशयेन वृद्धो वर्षीयान् वर्षीयांसौ। दशमोऽवस्थाविशेषोऽस्यास्तीति दशमी। वयसि पूरणादिनिः। दशमिनौ। ज्यायांसौ। पूर्वजः अग्रियः "अग्रीयः" अग्रजः त्रीणि ज्येष्ठभ्रातुः। पूर्वस्मिन्काले जातः पूर्वजः। जघन्यजः कनिष्ठः "कनीयानित्यपि" यवीयान् यविष्ठः "अतिशायन" इतीष्ठन्। अवरजः अनुजः पञ्चकं कनिष्ठभ्रातुः। जघन्येऽवरकाले जातः जघन्यजः। अवरस्मिन्काले जातः अवरजः ॥ ४३ ॥ अमांसः दुर्बलः छातः त्रीणि अबलस्य। छातश्चवर्गादिः। "छो छेदने"। शात इति पाठः। बलवान् मांसलः अंसलः त्रीणि बलवतः। अंसो बलमस्यास्तीत्यंसलः। तुन्दिलः तुण्डिलः। तुन्दिकः तुन्दितः। तुन्दिभः "तुण्डिभः" तुन्दी "तुण्डी" बृहत्कुक्षिः पिचण्डिलः "पिचिण्डिलः" पञ्च बृहदुदरस्य। तुन्दमस्यास्तीति तुन्दिलः। तुन्दादिभ्य इलच् मत्वर्थे तुन्दिबलि इति भप्रत्ययश्च। तुण्डिभौ ॥ ४४ ॥

44-47



अवटीटोऽवनाटश्चावभ्रटो नतनासिके ॥
केशवः केशिकः केशी बलिनो बलिभः समौ ॥ ४५ ॥
विकलाङ्गस्त्वपोगण्डः खर्वो ह्रस्वश्च वामनः ॥
खरणाः स्यात्खरणसो विग्रस्तु गतनासिकः ॥ ४६ ॥
खुरणाः स्यात्खुरणसः प्रज्ञुः प्रगतजानुकः ॥
ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्संज्ञुः संहतजानुकः ॥ ४७ ॥
स्यादेडे बधिरः कुब्जे गडुलः कुकरे कुणिः ॥

अवटीटः अवनाटः अवभ्रटः नतनासिकः चत्वारि चिपिटनासिकस्य । विग्र-हस्तु नासिकायाः नतं अवनाटमित्यादि । तद्युक्तत्वात् पुरुषोऽवटीटः । अर्श-आद्यच् । केशवः केशिकः "केशवान्" केशी त्रयं प्रशस्तकेशस्य । प्रशस्ताः केशाः सन्त्यस्य केशवः । बलिनः बलिभः द्वे जरया श्लथचर्मणः । बलि-स्त्वक्संकोचोऽस्ति यस्य स बलिनः ॥ ४५ ॥ विकलाङ्गः अपोगण्डः द्वे निस-र्गतो न्यूनावयवस्य । अपकृष्टं गच्छतीत्यपोगण्डः । पृषोदरादिः । पौगण्ड एकदेशोऽस्य पोगण्डः पौगण्डश्चेत्यपि । "पोगण्डो विकलाङ्गकः" इति रत्नकोशः । "पौगण्डो विकलाङ्गः स्यात्" इति हलायुधश्च । खर्वः ह्रस्वः वामनः त्रयं ह्रस्वस्य "खुजा इति ख्यातस्य ।" खरणाः खरणसः द्वे तीक्ष्णनासिकस्य "सर-ळनाकील इति ख्यातस्य" । खरणाः सान्तः । विग्रः विख्नः विख्नुः विख्यः । विगता नासिका यस्येति विग्रहः । नासिकाशब्दस्य ग्रादेशः ख्यश्चेति । "विग्रो विख्नुर्विनासिकः" इति रभसः । गतनासिकः द्वे गतनासिकस्य "नकटा इति ख्यातस्य" ॥ ४६ ॥ खुरणाः सान्तः । खुरणसः अदन्तः द्वे विकटनासिकस्य । खुरः शफं तद्वन्नासिकाऽस्य । खुरणसौ । प्रज्ञुः "प्रज्ञः" प्रग-तजानुकः प्रगते विरले जानुनी यस्येति विग्रहः । शेषे कप् । द्वे यस्य जानुनो-र्महदन्तरालं वर्तते तस्य "फेंगडा इति ख्यातस्य" । ऊर्ध्वज्ञुः "ऊर्ध्वज्ञः" ऊर्ध्वजानुः द्वे तिष्ठतो यस्य जानुनी ऊर्ध्वे भवतस्तस्य । संज्ञुः "संज्ञः" संहत-जानुकः द्वे संलग्नजानुकस्य । "प्रज्ञुः प्रगतजानुः स्यात्प्रज्ञोऽप्यत्रैव दृश्यते । संज्ञुः संहतजानौ च भवेत्संज्ञोऽपि तत्र हि । ऊर्ध्वज्ञुरूर्ध्वजानुः स्यादूर्ध्वज्ञोऽप्यू-र्ध्वजानुकः" इति साहसाङ्कः ॥ ४७ ॥ एडः बधिरः द्वे श्रवणेन्द्रियहीनस्य "बहिरा इति ख्यातस्य ।" कुब्जः न्युब्जः । "कुब्जो वृक्षप्रभेदे ना

बवयोरभेदात् बलिनः वलिभः—इत्यपि बोध्यम् ॥

पृश्निरल्पतनौ श्रोणः पङ्गौ मुण्डस्तु मुण्डिते ॥ ४८ ॥
बलिरः केकरे खोडे खञ्जस्त्रिषु जरावराः ॥
जडुलः कालकः पिप्लुस्तिलकस्तिलकालकः ॥ ४९ ॥
अनामयं स्यादारोग्यं चिकित्सा रुक्प्रतिक्रिया ॥
भेषजौषधभैषज्यान्यगदो जायुरित्यपि ॥ ५० ॥
स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः ॥
क्षयः शोषश्च यक्ष्मा च प्रतिश्यायस्तु पीनसः ॥ ५१ ॥

न्युब्जः स्याद्वाच्यलिङ्गकः" इति मेदिनी। गडुलः "गडुरः"। "गडुः पृष्ठगडे कुब्जे" इति मेदिन्याम्। द्वे कुब्जस्य "कुबडा इति ख्यातस्य।" कुकरः कुत्सितौ करौ यस्य सः। कुणिः "कूणिः"। "निसर्गतः कुणिपङ्गुपौगण्डाः" इति नाममाला। द्वे रोगादिना दूषितकरस्य। पृश्निः "पृष्णिः" अल्पतनुः द्वे अल्पा तनुर्यस्य तस्य अमानुषप्रायस्य। श्रोणः पङ्गुः द्वे जंघाविकलस्य। मुण्डः मुण्डितः द्वे कृतवपनस्य ॥ ४८ ॥ बलिरः केकरः द्वे नेत्रवियुक्तस्य "काणा, कैरा, तिरवा इति ख्यातस्य"। के मूर्ध्नि कर्तुं शीलमस्येति केकरः खोडः खोरः खोलः। "अथ खञ्जके खोडखोरौ" इति रभसः। खञ्जः द्वे गतिविकलस्य "लङ्गडा इति ख्यातस्य।" त्रिष्विति। जरावराः जराशब्दादवराः अर्वाक्पठिताः उत्तानशयाद्याः खञ्जान्तास्त्रिषु वाच्यलिङ्गा इत्यर्थः। जडुलः "जठुलः" कालकः पिप्लुः त्रयं कृष्णवर्णस्य देहगतचिह्नविशेषस्य "लासें इति ख्यातस्य।" तिलकः तिलकालकः द्वे आकृतितो वर्णतश्च कृष्णतिलतुल्यस्य देहगतचिह्नस्य। तिल इव कालकः ॥ ४९ ॥ अनामयं आरोग्यं द्वे रोगाभावस्य। "आमयस्याभावः अनामयम्। अर्थाभावेऽव्ययीभावः।" चिकित्सा रुक्प्रतिक्रिया द्वे रोगप्रतीकारस्य। "रुजः प्रतिक्रिया निरसनं रुक्प्रतिक्रिया।" भेषजं औषधं भैषज्यं "भेषजं भेषं रोगं जयति भेषजम्।" अगदः जायुः पञ्चौषधस्य। अगदसाहचर्याज्जायुरुदन्तः पुंसि ॥ ५० ॥ रुक् रुजा उपतापः रोगः व्याधिः गदः आमयः सप्त रोगमात्रस्य। तत्र रुक् जकारान्ता। रुजा टाबन्ता। उभे स्त्रियौ। क्षयः शोषः यक्ष्मा त्रीणि क्षयरोगस्य। प्रतिश्यायः पीनसः द्वे पीनसरोगस्य पडसें इति ख्यातस्य। अयं मुहुर्नासाजलस्रावी। "आपीनसः प्रतिश्या स्यात्" इति रभ-

51 – 54



स्त्री क्षुत् क्षुतं क्षवः पुंसि कासस्तु क्षवथुः पुमान् ॥
शोफस्तु श्वयथुः शोथः पादस्फोटो विपादिका ॥ ५२ ॥
किलाससिध्मे कच्छ्वां तु पामपामे विचर्चिका ॥
कण्डूः खर्जूश्च कण्डूया विस्फोटः पिटकः स्त्रियाम् ॥ ५३ ॥
व्रणो स्त्रियामीर्ममरुः क्लीबे नाडीव्रणः पुमान् ॥
कोठो मण्डलकं कुष्ठश्वित्रे दुर्नामकार्शसी ॥ ५४ ॥
आनाहस्तु निबन्धः स्याद्ग्रहणीरुक् प्रवाहिका ॥

सात् प्रतिश्येत्यपि नाम ॥ ५१ ॥ क्षुत् क्षुतं क्षवः त्रीणि क्षुतः शिंकेति ख्यातायाः । कासः क्षवथुः द्वे कासरोगस्य "खोकला इति ख्यातस्य ।" शोफः श्वयथुः शोथः त्रीणि शोथस्य "सूज इति ख्यातस्य" । पादस्फोटः विपादिका द्वे पादस्फोटस्य "खोंटा फुटण्याचा रोग इति ख्यातस्य" ॥ ५२ ॥ किलासं सिध्मं द्वे सिध्मस्य शिबें "श्वेतकुष्ठ" इति ख्यातस्य । कच्छूः पामा पामा विचर्चिका चतुष्कं स्त्रीलिङ्गं खर्जूविशेषस्य । "ओली खरूज" इति ख्यातस्य । अत्र पामेत्येकं नान्तम् । पामानौ । अपरं टाबन्तम् । पामे । कण्डूः "कण्डुः" । "खर्जूः खर्जूरीकीटकण्डुषु" इति हैमः । खर्जूः कण्डूया त्रयं स्त्रीलिङ्गं खर्ज्वाः "सुकी खरूज इति ख्यातायाः ।" विस्फोटः पिटकः । "विस्फोटा वटिका स्त्रियाम्" इत्यमरमालायां । वकारादिरपि विटिकेति । द्वे फोड इति ख्यातस्य । स्त्रियां तु पिटका क्षिपकावत् ॥ ५३ ॥ व्रणः ईर्मं अरुः त्रीणिं व्रणस्य । ईर्मे । अरुषी । यो व्रणः सदा गलति तत्र नाडीव्रण इत्येकम् । पुमानिति पुंस्त्वावधारणार्थं निर्देशः । कोठः मण्डलकं कुष्ठं श्वित्रं चत्वारि कुष्ठस्य । कोठादिद्वयं मण्डलाकृतिकुष्ठस्य "गजकर्ण इति प्रसिद्धस्य ।" कुष्टादिद्वयं श्वेतकुष्ठस्येत्येके । दुर्नामकं अर्शः द्वे अर्शोरोगस्य "मूळव्याध, अर्श" इति ख्यातस्य । "अर्शमिति क्लीबमप्यन्यत्र" ॥ ५४ ॥ आनाहः निबन्धः द्वे मलमूत्रनिरोधस्य "मलबद्धरोग इति ख्यातस्य ।" ग्रहणीरुक् प्रवाहिका द्वे संग्रहणीरोगस्य । प्रकर्षेण वहति बहु स्रवति गुदमस्यां सा प्रवाहिका । "मलप्रवहणं प्रवाहिका" इति स्वामी । प्रवाहिका रुक् रोगः ग्रहणी स्यादित्यन्वयो वा । ग्रहणिरितीकारह्रस्वोऽपि । प्रच्छर्दिका वमिः

प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः ॥ ५५ ॥
व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगंदराः ॥
"श्लीपदं पादवल्मीकं केशघ्नस्त्विन्द्रलुप्तकः ॥" (१)
अश्मरी मूत्रकृच्छ्रं स्यात्पूर्वे शुक्रावधेस्त्रिषु ॥ ५६ ॥
रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके ॥
वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ॥ ५७ ॥
ग्लानग्लास्नू आमयावी विकृतो व्याधितोऽपटुः ॥
आतुरोऽभ्यमितोऽभ्यान्तः समौ पामनकच्छुरौ ॥ ५८ ॥

"वमी वम इति पुंलिङ्गोऽपि" वमथुः त्रीणि वमनरोगस्य । तत्राद्यं द्वयं स्त्रियाम् । वमथुः पुंसीत्यर्थः । समाः समानार्थाः ॥ ५५ ॥ अथ व्याधिभेदा वक्ष्यन्ते । विद्रधिरुदरादौ गण्डभेदः । विद्रं दधातीति विद्रधिः स्त्रियाम् । "आदिशब्देन कपालकर्णप्रमेहानां पिटका ज्ञेयाः" । ज्वरः प्रसिद्धः । मेहति मूत्रयतेऽनेन मेहः । स च रक्तमेहः शुभ्रमेह इत्यादिभेदेन बहुविधः । भगंदरो गुह्यसमीपे विस्फोटविशेषः । श्लीपदं पादवल्मीकम् । पादयोः वल्मीकमिव रोग उत्पद्यते । द्वयं श्लीपदरोगस्य वारुळ इति ख्यातस्य । केशघ्नः इन्द्रलुप्तकः द्वयं मस्तककेशरोगस्य चाई इति प्रसिद्धस्य । अश्मरी मूत्रकृच्छ्रं द्वे अश्मर्याः । अश्माकारं शुक्रं राति ददातीत्यश्मरी । स्यादित्यनेन मूत्रकृच्छ्रमित्यश्मर्याः पर्याय इति सूचितम् । मूत्रविघ्नमात्रे मूत्रकृच्छ्रमिति नायमश्मर्याः पर्याय इति केचित् । इतः परं शुक्रावधेः वक्ष्यमाणात् शुक्रशब्दात्पूर्वे मूर्छितान्तास्त्रिषु वाच्यलिङ्गा इत्यर्थः ॥ ५६ ॥ रोगहारी अगदंकारः भिषक् वैद्यः चिकित्सकः पञ्च वैद्यस्य । रोगहारिणौ । भिषजौ । वार्तः निरामयः कल्यः त्रीणि रोगरहितस्य । कल्यस्तालव्यान्तः । "कल्यं प्रभाते मधुनि सज्जे दक्षे निरामये । कल्या कल्याणवाचि स्यात्" इति हैमः । उल्लाघ इत्येकं रोगान्मुक्तस्य । अयमपि पूर्वस्यैव पर्याय इत्येके ॥ ५७ ॥ ग्लानः ग्लास्नुः द्वे रोगादिवशात् हर्षरहितस्य । आमयावी विकृतः व्याधितः अपटुः आतुरः अभ्यमितः अभ्यान्तः सप्तकं रोगिणः । पामनः कच्छुरः द्वे पामायुक्तस्य ॥ ५८ ॥ दद्रुणः "दद्रूणः दर्द्रुणः दर्द्रूणः" दद्रुरोगी द्वे दद्रुयुक्तस्य ।

१ इदमर्धं तालपत्रपुस्तकेऽस्ति वा नास्ति वेति न निश्चीयते, तत्पत्रस्यातिशैथिल्यात् ॥

दद्रुणो दद्रुरोगी स्यादर्शोरोगयुतोऽर्शसः ॥
वातकी वातरोगी स्यात्सातिसारोऽतिसारकी ॥ ५९ ॥
स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी ॥
उन्मत्त उन्मादवति श्लेष्मलः श्लेष्मणः कफी ॥ ६० ॥
न्युब्जो भुग्ने रुजा वृद्धनाभौ तुन्दिलतुन्दिभौ ॥
किलासी सिध्मलोऽन्धोऽदृक् मूर्छाले मूर्तमूर्च्छितौ ॥ ६१ ॥
शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च ॥
मायुः पित्तं कफः श्लेष्मा स्त्रियां तु त्वगसृग्धरा ॥ ६२ ॥

दद्रुः खर्जूभेदः "दाद इति प्रसिद्धा"। अर्शोरोगेण युतः अर्शस इत्युच्यते एकम्। वातकी वातोऽतिशयितोऽस्य। वातातीति कुगागमः इनिप्रत्ययश्च। रोगे चायमिष्यते । नेह वातवती गुहा। वातरोगी द्वे वातरोगयुक्तस्य। सातिसारः अतिसारकी द्वे अतिसारयुक्तस्य ॥ ५९ ॥ क्लिन्नाक्षः चुल्लः चिल्लः पिल्लः चत्वारि क्लेदयुक्ते अक्षिणी यस्य तस्य पुंसः "चिपडा इति ख्यातस्य"। अमी चुल्लचिल्लपिल्लास्त्रयः क्लिन्नेऽक्ष्णि च क्लेदयुक्ते नेत्रेऽपि वर्तन्ते "चिपडे डोळे इति ख्यातेषु"। उन्मत्तः उन्मादवान् द्वे उन्मादयुक्तस्य। उन्मादो वातपित्तादिकृतश्चित्तविभ्रमः। श्लेष्मलः श्लेष्मणः कफी त्रीणि कफयुक्तस्य ॥ ६० ॥ रुजा रोगेण भुग्नो वक्रपृष्ठोऽधोमुखस्तत्र न्युब्ज इत्येकम्। वृद्धनाभिः तुन्दिलः "तुण्डिलः" तुन्दिभः "तुण्डिभः" त्रीणि वातादिनोन्नतनाभेः॥किलासी सिध्मलः द्वे सिध्मयुक्तस्य "शिब्या इति ख्यातस्य"॥ अन्धः अदृक् द्वे दृष्टिहीनस्य "अंधळा इति ख्यातस्य"। अदृशौ। मूर्छालः मूर्तः मूर्छितः त्रीणि मूर्छायुक्तस्य ॥ ६१ ॥ शुक्रं तेजः रेतः बीजं वीर्यं इन्द्रियं षट् रेतसः । मायुः पित्तं द्वे पित्तस्य। मायुरुदन्तः पुंसि। कफः श्लेष्मा द्वे कफस्य। श्लेष्माणौ। त्वक् असृग्धरा "असृग्धारेत्येके" द्वे चर्मणः। त्वचौ। त्वच इत्यदन्तः। त्वचेति टाबन्तश्चान्यत्र ॥ ६२ ॥ पिशितं तरसं मांसं पललं क्रव्यं आमिषं षट्कं मांसस्य। उत्तप्तं शुष्कमांसं वल्लूरं "वल्लुरमिति ह्रस्वोकारमपि" त्रीणि शुष्कमांसस्य । तत्र वल्लूरं त्रिषु। वल्लूरा ॥ ६३ ॥ रुधिरं असृक् लोहितं अस्रं रक्तं क्षतजं शोणितं सप्त रक्तस्य। असृजी । बुक्का "बूक्का" अग्रमांसं द्वे हृदयान्तर्गतपद्माकारमांसभेदस्य काळीज इति ख्यातस्य। तदेव हृदयम्। उक्तं

पिशितं तरसं मासं पललं क्रव्यमामिषम् ॥
उत्तप्तं शुष्कमासं स्यात्तद्वल्लूरं त्रिलिङ्गकम् ॥ ६३ ॥
रुधिरेऽसृक्लोहितास्त्ररक्तक्षतजशोणितम् ॥
बुक्काग्रमांसं हृदयं हृन्मेदस्तु वपा वसा ॥ ६४ ॥
पश्चाद्ग्रीवाशिरा मन्या नाडी तु धमनिः शिरा ॥
तिलकं क्लोम मस्तिष्कं गोर्दं किट्टं मलोऽस्त्रियाम् ॥ ६५ ॥
अन्त्रं पुरीतत् गुल्मस्तु प्लीहा पुंस्यथ वस्नसा ॥
स्नायुः स्त्रिया कालखण्डयकृती तु समे इमे ॥ ६६ ॥

च । "पद्मकोशप्रतीकाशं रुचिरं चाप्यधोमुखम् । हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्" इति । बुक्का स्त्री । बुक्काग्रमांसमिति समस्तमपि । हृदयं हृत् द्वे हृदयाख्यनिम्नदेशस्य । बुक्कादिचतुष्कं समानार्थमित्येके । हृदी हृन्दि । मेदः वपा वसा त्रीणि मांसजन्यस्नेहस्य । चरबी मांदे इति ख्यातस्य । मेदसी ॥ ६४ ॥ ग्रीवायाः शिरो ग्रीवाशिरा । या पश्चात्स्थिता ग्रीवाशिरा सा मन्येत्युच्यते एकम् । नाडी धमनिः शिरा त्रयं शिरायाः "नाडी इति ख्यातायाः" सिरेति दन्त्यादिरपि । "कृदिकारादक्तिनः" इति ङीषि धमनीत्यपि । तिलकं क्लोम द्वे मांसपिण्डविशेषस्य पुप्फुस इति ख्यातस्य । क्लोममित्यदन्तमपि । मस्तिष्कं "मस्तिकम् । "अथ मस्तिको मस्तुलिङ्गोऽपि" इति त्रिकाण्डशेषः । गोर्दं "गोदः" द्वे मस्तकसंभूतघृताकारस्नेहस्य "गोद मेंदू" इति ख्यातस्य । किट्टं मलः द्वे कर्णादिगतमलस्य । "वसा शुक्रमसृक् मज्जा कर्णविण्मूत्रविण्नखाः । श्लेष्माश्रुदूषिकाः स्वेदो द्वादशैते नृणां मलाः" ॥ ६५ ॥ अन्त्रं "आन्त्रमित्यपि मनोरमायुक्तम्" । पुरीतत् पुरीं शरीरं तनोतीति । द्वे अन्त्रस्य "आंतडें इति ख्यातस्य" । पुरीतती पुरीतन्ति । "पुरीतदस्त्रियाम्" इति वाचस्पतिकोशात्पुंस्यपि । गुल्मः प्लीहा द्वे वामकुक्षिस्थमांसपिण्डविशेषस्य । प्लीहानौ । "प्लीहाशब्दष्टाबन्तोऽपि" । वस्नसा स्नायुः द्वे अङ्गप्रत्यङ्गसन्धिबन्धनरूपायाः स्नायोः शिरा इति ख्यातायाः । कालखण्डं यकृत् द्वे दक्षिणकुक्षिगतमांसपिण्डस्य ॥ ६६ ॥ सृणिका "सृणीका" स्यन्दिनी लाला त्रीणि लालायाः लाळ इति ख्यातायाः । स्यन्दिनी दन्त्यादिः ।

66 - 70



सृणिका स्यन्दिनी लाला दूषिका नेत्रयोर्मलम् ॥
( "नासामलं तु सिंघाणं पिञ्जूषं कर्णयोर्मलम् ॥" )(१)
मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत् ॥ ६७ ॥
पुरीषं गूथवर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ ॥
स्यात्कर्परः कपालोऽस्त्री कीकसं कुल्यमस्थि च ॥ ६८ ॥
स्याच्छरीरास्थि कङ्कालः पृष्ठास्थि तु कशेरुका ॥
शिरोस्थनि करोटिः स्त्री पार्श्वास्थनि तु पर्शुका ॥ ६९ ॥
अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम् ॥
गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ७० ॥
कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ॥

"दूषिकेत्येकं नेत्रयोर्मलस्य" उकीर पू इति ख्यातस्य । दूषीका दीर्घमध्यापि । दूषिर्दूषी चेत्यप्यन्यत्र । सिंघाणमित्येकं नासामलस्य । सिंहाणं सिंहानं चेत्यपि । "पिञ्जूष इत्येकं कर्णमलस्य" । मूत्रं प्रस्रावः द्वे मूत्रस्य । उच्चारः अवस्करः शमलं शकृत् ॥ ६७ ॥ पुरीषं गूथं वर्चस्कं विष्ठा विट् नव विष्ठायाः । "उच्चार्यते त्यज्यते इत्युच्चारः । अवकीर्यते अधः क्षिप्यत इत्यवस्करः ।" गूथं वर्चस्कं पुंसि क्लीबे च । शकृती । "विट् तालव्यमूर्धन्यान्त्यः । विशौ । विषौ । गूथं पूरीषं वर्चस्कमित्यपि पाठः" । कर्परः कपालः द्वे शिरोस्थिखण्डस्य । कपालमस्त्रियाम् । कीकसं कुल्यं अस्थि त्रीणि अस्थिमात्रस्य ॥ ६८ ॥ कङ्काल इत्येकं शरीरगतास्थिपञ्जरस्य "सांगाडा, पिंजरा इति ख्यातस्य" । कशेरुकेत्येकं पृष्ठमध्यगतास्थिदण्डस्य "कणा इति ख्यातस्य" । करोटिरित्येकं शिरोगतास्थिसंघस्य । करोटीति ङीषन्तापि । यदाह पुष्पदन्तः । "नृकरोटीपरिकरः" इति पर्शुकेत्येकं पार्श्वगतास्थनि "बर्गडी इति ख्याते" ॥ ६९ ॥ अङ्गं प्रतीकः अवयवः अपघनः चतुष्कं देहावयवस्य । कलेवरं गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः । विविधं सुखादि गृह्णाति । विविधैर्व्याधिभिर्गृह्यते वा ॥ ७० ॥ कायः देहः मूर्तिः तनुः तनूः द्वादश देहस्य । वपुषी । वर्ष्मणी । तन्वौ । पादाग्रं प्रपदं द्वे पादाग्रस्य चवडा इति ख्यातस्य । पादः । "पादो बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे च" इति कोशा-

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

पादाग्रं प्रपदं पादः पदङ्घ्रिश्चरणोऽस्त्रियाम् ॥ ७१ ॥
तद्ग्रन्थी घुटिके गुल्फौ पुमान्पार्ष्णिस्तयोरधः ॥
जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम् ॥ ७२ ॥
सक्थि क्लीबे पुमानूरुस्तत्सन्धिः पुंसि वंक्षणः ॥
गुदं त्वपानं पायुर्ना वस्तिर्नाभेरधो द्वयोः ॥ ७३ ॥
कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती ॥
पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः ॥ ७४ ॥
कूपकौ तु नितम्बस्थौ द्वयहीने कुकुन्दरे ॥

न्तरे । पत् अङ्घ्रिः चरणः चत्वारि चरणस्य । दान्तः पत् । "पदोऽङ्घ्रिरिति पाठे अदन्तः पदशब्दः" ॥ ७१ ॥ तद्ग्रन्थी पादस्य पार्श्वस्थौ ग्रन्थिविशेषौ घुटिके गुल्फाविति चोच्येते द्वयं "पायांचा घोंटा इति ख्यातस्य।" घुटिके स्त्रियाम् । द्वित्वाद्विवचनम् । न तु नित्यम् । तयोः गुल्फयोरधः प्रदेशः पार्ष्णिरित्येकं खोंट इति ख्यातस्य । "पार्ष्णिः स्त्रीपुंसयोः पादमूले स्यात् ध्वजिनीकटौ" इति तु रन्तिदेवः । जङ्घा प्रसृता द्वे जङ्घायाः पोटरी इति प्रसिद्धायाः । जानु ऊरुपर्व अष्ठीवत् त्रयं जानूरुसन्धेः "ढोंपर गुडघा इति ख्यातस्य"। तत्राष्ठीवदस्त्रियाम् । जानुनी । ऊरुपर्वणी । अष्ठीवन्तौ ॥ ७२ ॥ सक्थि ऊरुः द्वे जानूपरिभागस्य "मांडी इति ख्यातस्य।" ऊरोरुपरिभागः सक्थीति क्वचिद्भेदो दृश्यते । तस्योरोः सन्धिः वंक्षण इत्येकम् । गुदं अपानं पायुः त्रीणि विष्ठानिर्गमद्वारस्य । पायुरुदन्तः ना पुमान् । वस्तिरित्येकं स्त्रीपुंसलिङ्गं नाभेरधो मूत्राशयस्य ॥ ७३ ॥ श्रोणिः कटिस्तस्याः फलकं कट इत्युच्यते स पुमान् । एकम् । कटिः "कटीति ङीषन्तापि ।" श्रोणिः "श्रोणी" ककुद्मती त्रयं स्त्रीलिङ्गं कट्याः । "ककुद्वृषांस इव मांसपिण्डः सोऽतिशयितोऽस्यां ककुद्मती ।" स्त्रियाः कटिः स्त्रीकटिः तस्याः पश्चाद्भागो नितम्ब इत्येकम् । निभृतं तम्यते कामुकैः नितम्बः । "तमु कांक्षायाम्" । जघनमित्येकं स्त्रीकट्याः पुरोभागे । "जघनं स्यात् स्त्रियाः श्रोणिपुरोभागे कटावपि" इति । "वांदन ओंटी इति ख्याते" ॥ ७४ ॥ नितम्बस्थौ पृष्ठवंशादधोभागे विद्यमानौ कूपकौ गर्तौ ककुन्दरे स्याताम् । "ककारादिरपि" एकम् । द्वयहीने क्लीबे । द्वित्वमनित्यम् । स्फिचौ कटिप्रोथौ द्वे कटिस्थमांसपिण्डयोः ।

75-78



स्त्रियां स्फिचौ कटिप्रोथावुपस्थो वक्ष्यमाणयोः ॥ ७५ ॥
भगं योनिर्द्वयोः शिश्नो मेंढ्रो मेहनशेफसी ॥
मुष्कोऽण्डकोशो वृषणः पृष्ठवंशाधरे त्रिकम् ॥ ७६ ॥
पिचण्डकुक्षी जठरोदरं तुन्दं स्तनौ कुचौ ॥
चूचुकं तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम् ॥ ७७ ॥
उरो वत्सं च वक्षश्च पृष्ठं तु चरमं तनोः ॥
स्कन्धो भुजशिरोंऽसोऽस्त्री सन्धी तस्यैव जत्रुणी ॥ ७८ ॥
बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरधः ॥

"कुले इति ख्यातयोः । कटिः तस्याः प्रोथौ मांसपिण्डौ कटिप्रोथौ । "स्त्रियां स्फिचौ कटिप्रोथौ कटिप्रोथौ च पूलका" इति रभसः । कटिप्रोथाविति नामद्वयं वा । "प्रोथोऽश्वघोणाध्वगयोः कट्याम्" इति हैमः । वक्ष्यमाणयोर्भगे शिश्ने च उपस्थ इत्येकम् ॥ ७५ ॥ भगं योनिः द्वे स्त्रीणामुपस्थस्य । द्वयोरित्यस्य योनिनान्वयः । शिश्नः मेंढ्रः मेहनं शेफः "शेपः" चत्वारि शिश्नस्य । मेंढ्रमित्यपि पाठः । मुष्कः अण्डकोशः "मूर्धन्यान्तोऽपि"। वृषणः त्रीण्यण्डकोशस्य "आण्डकुली इति ख्यातस्य" । पृष्ठवंशाधरे त्रिभिरस्थिभिर्घटितं स्थानं त्रिकं इत्येकं "माकडहाड इति ख्यातस्य" ॥ ७६ ॥ पिचण्डः "पिचिण्डः" कुक्षिः जठरं उदरं तुन्दं पञ्च जठरस्य । तत्र पिचण्डकुक्षी पुंसि । जठरं विकल्पेन पुंसि । "जठरो न स्त्रियां कुक्षौ वृद्धकर्कटयोस्त्रिषु" इति मेदिनी । स्तनः कुचः द्वे वक्षोजस्य । चूचुकं कुचाग्रं द्वयं स्तनाग्रस्य । "चूचुको ना कुचाननम्" इति रत्नकोशः । "चूष्यते पीयत इति चूचुकम् ।" क्रोडं भुजान्तरम् ॥ ७७ ॥ उरः वत्सम् । "पुत्रादौ तर्णके वर्षे वत्सो वत्सं तु वक्षसि" इति रुद्रः । वक्षः पञ्च वक्षसि । तत्र क्रोडं न ना किंतु स्त्रीनपुंसकयोः । स्त्रियां तु क्रोडा । तनोः शरीरस्य चरमं पश्चाद्भागः पृष्ठमित्येकम् । स्कन्धः । "स्कन्धः प्रकाण्डे कायेऽसे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च" इति हैमः । भुजशिरः अंसः त्रीणि भुजशिरसः "खांदा इति ख्यातस्य ।" तस्य स्कन्धस्य संधी जत्रुशब्दवाच्यौ एकं "नपुंसकम्" ॥ ७८ ॥ बाहुमूलं कक्षः द्वे कक्षस्य । तयोरधोभागः पार्श्वमित्येकम् । मध्यमं अवलग्नं मध्यः

मध्यमं चावलग्नं च मध्योऽस्त्री द्वौ परौ द्वयोः ॥ ७९ ॥
भुजबाहू प्रवेष्टो दोः स्यात्कफोणिस्तु कूर्परः ॥
अस्योपरि प्रगण्डः स्यात्प्रकोष्ठस्तस्य चाप्यधः ॥ ८० ॥
मणिबन्धादाकनिष्ठं करस्य करभो बहिः ॥
पञ्चशाखः शयः पाणिस्तर्जनी स्यात्प्रदेशिनी ॥ ८१ ॥
अङ्गुल्यः करशाखाः स्युः पुंस्यङ्गुष्ठः प्रदेशिनी ॥
मध्यमाऽनामिका चापि कनिष्ठा चेति ताः क्रमात् ॥ ८२ ॥
पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ॥

त्रीणि तनुमध्यस्य माज, कमर इति ख्यातस्य । अस्त्रीति मध्यमादिशब्दत्रयेऽप्यन्वेति । परौ द्वौ भुजबाहुशब्दौ स्त्रीपुंसयोः ॥ ७९ ॥ भुजः बाहुः बाहः । "बाहोऽश्वभुजयोः पुमान्" इति दामोदरः । "बाहो बाहुरिति स्मृतः" इति देशिकोशः । प्रवेष्टः दोः चत्वारि भुजस्य । "स्त्रियां तु भुजा बाहा ।" दोषौ । शसादौ दोषः दोष्णेत्यादि । "दोर्दोषा च भुजो बाहुः पाणिर्हस्तः करस्तथा " इति धनंजयात् । दोषेति टाबन्तोऽपि वर्तते । कफोणिः कफणिः । "कफोणिः कफणिर्द्वयोः" इति शब्दार्णवः । कूर्परः "कर्परः" द्वे कोंपर इति ख्यातस्य । अस्य कूर्परस्योपरिभागे प्रगण्ड इत्येकम् । तस्य कूर्परस्याधोभागे प्रकोष्ठ इत्येकम् ॥ ८० ॥ पाणिप्रकोष्ठसन्धिर्मणिबन्धः तमारभ्य कनिष्ठापर्यन्तं करस्य मांसलो बहिर्भागः करभ इत्युच्यते एकम् । पञ्चशाखः पञ्च शाखा इवाङ्गुलयोऽस्य । शयः शमः । "पाणिः शमः शयो हस्तः" इत्यमरमाला । पाणिः त्रीणि करस्य । तर्जनी प्रदेशिनी "प्रदेशनीत्यपि" द्वे अङ्गुष्ठसमीपाङ्गुल्याः ॥ ८१ ॥ अङ्गुली करशाखा द्वे अङ्गुलीमात्रस्य । ता अङ्गुल्यः क्रमेण अङ्गुष्ठः प्रदेशिनी मध्यमा अनामिका । न नामग्रहणं योग्यमस्याः । ब्रह्मणोऽनया शिरश्छेदनात् । अत एवास्यां पवित्रीक्रियते । कनिष्ठिका इति संज्ञाभिरुच्यन्ते एकैकम् । तत्राङ्गुष्ठः पुंसि । प्रागुक्तापि प्रदेशिनी तत्स्वरूपदर्शनार्थमिह पुनरुक्तेति न दोषः ॥ ८२ ॥ पुनर्भवः "पुनर्नवः" कररुहः नखः नखरः चत्वारि नखस्य । नखरः पुंसि क्लीबे च । "नखरं त्रिषु" इति अमरमाला । तर्जन्यादिभिस्तिसृभिरङ्गुलीभिर्युतेऽङ्गुष्ठे विस्तृते प्रादेशादयः क्रमात्स्युः । "प्रदेश इति ह्रस्वादिरपि" एकैकम् । तथा हि ।

प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ॥ ८३ ॥
अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः ॥
पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ॥ ८४ ॥
द्वौ संहतौ संहतलः प्रतलौ वामदक्षिणौ ॥
पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान् ॥ ८५ ॥
प्रकोष्ठे विस्तृतकरे हस्तो मुष्ट्या तु बद्धया ॥
स रत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥ ८६ ॥
व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् ॥

तर्जनीसहिताङ्गुष्ठे विस्तृते प्रादेशः । एवं मध्यमासहिताङ्गुष्ठविस्तारे तालः । अनामिकायुतेऽङ्गुष्ठे गोकर्णः ॥ ८३ ॥ कनिष्ठासहितेऽङ्गुष्ठे विस्तृते वितस्तिः द्वादशाङ्गुलः । द्वादश अङ्गुलयः प्रमाणमस्य । "प्रमाणे मात्रच्" । "द्विगोर्नित्यम्" इति तस्य लुक् । "तत्पुरुषस्याङ्गुलेः" इत्यच् प्रत्ययः । द्वे । साहचर्याद्वितस्तिः पुंसि । स्त्रियामिति सुभूतिः । चपेटः चर्पटः । "चर्पटः स्फारविपुले चपेटे चर्पटेऽपि च" इति मेदिनीविश्वप्रकाशौ । प्रतलः प्रहस्तः त्रीणि विस्तृताङ्गुलिके पाणौ ॥ ८४ ॥ वामदक्षिणौ द्वौ प्रतलौ संहतौ चेत्संहतलः स्यात् । सिंहतल इत्यपि पाठः । संहतलः प्रतलश्चेति नामद्वयं वा । तत्र संहतलप्रतलावित्यविसर्गपाठः । प्रतते प्रश्लिष्टे वा तलेऽत्र प्रतलः । निकुब्जो निःशेषेण कुब्जीकृतः पाणिः प्रसृतिः स्यात् । प्रसृत इति पाठः । तत्र प्रकृष्टं सृतमस्येति विग्रहः । "प्रसृतः सप्रसारे स्याद्विनीते वेङ्गिते त्रिषु । अर्धाञ्जलौ तु पुल्लिङ्गो जङ्घायां प्रसृता मता" इति मेदिनी । एकम् । द्वौ द्वौ प्रसृती संहतौ चेदञ्जलिरित्येकं पुंसि ॥ ८५ ॥ विस्तृतः करो यत्र तादृशे प्रकोष्ठे कूर्पराधोभागे हस्त इत्येकम् । अयं चतुर्विंशत्यङ्गुलमितो ज्ञेयः । स तु बद्धया मुष्ट्योपलक्षितः रत्निरित्येकं "मुंढा हात इति ख्यातस्य । सरत्निरित्यपि स्त्रियामपि ।" निष्कनिष्ठेन विस्तृतकनिष्ठेन मुष्टिनोपलक्षितो हस्तः अरत्निरित्येकं स्त्रियाम् । अरत्निः पुमानपि । "नारत्निः कफणौ हस्ते प्रकोष्ठे विततागुलौ" इति रुद्रविश्वप्रकाशौ । मुष्ट्या मुष्टिनेति निर्देशेन मुष्टिर्द्वयोरिति ज्ञापितम् ॥ ८६ ॥ तिर्यक्ततयोर्विस्तृतयोः करसहितयोर्बाह्वोरन्तरं व्यामः । ऊर्ध्व-

ऊर्ध्वविस्तृतदोष्पाणिनृमाने पौरुषं त्रिषु ॥ ८७ ॥
कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्दरेत्यपि ॥
कम्बुग्रीवा त्रिरेखा साऽवटुर्घाटा कृकाटिका ॥ ८८ ॥
वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ॥
क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ॥ ८९ ॥
ओष्ठाधरौ तु रदनच्छदौ दशनवाससी
अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परा हनुः ॥ ९० ॥
रदना दशना दन्ता रदास्तालु तु काकुदम् ॥

विस्तृतदोषौ भुजौ पाणी च येन तस्य नुः पुंसो यन्मानं तत्र पौरुषमित्येकं त्रिषु । स्त्रियां तु पौरुषी । दोःपाणिरिति सविसर्गपाठोऽपि ॥ ८७ ॥ कण्ठः गलः द्वे "ग्रीवाग्रभागस्य गोंकनळी गोंकटी नरडी इति ख्यातस्य ।" ग्रीवा शिरोधिः । शिरः धीयतेऽस्याम् । "कर्मण्यधिकरणे च" इति अधिकरणे किप्रत्ययः । कन्धरा त्रीणि "मान इति ख्यातस्य ।" शिरोधिरपि स्त्री । सा ग्रीवा तिसृभी रेखा भिर्विशिष्टा कम्बुग्रीवा स्यादित्येकम् । अवटुः घाटा कृकाटिका त्रीणि ग्रीवाशिरःसन्धेः पश्चाद्भागस्य । "ग्रीवायामुन्नतभागस्य घांटी इति ख्यातस्येति केचित् ।" तत्रावटुः पुंसि ॥ ८८ ॥ वक्त्रं आस्यं वदनं तुण्डं आननं लपनं मुखं सप्त मुखस्य । आस्यन्ते वर्णा येन अस्यते ग्रासो वाऽस्मिन् तदास्यम् । ण्यत् । "मुखं मुखान्तरालं च द्वयमास्यमितीरितम्" इति शाश्वतः । घ्राणं गन्धवहा घोणा नासा । नासा तु नासिकायां च द्वारोर्ध्वे दारुणि स्त्रियाम् । नसा नस्या । "घ्राणं गन्धवहा नासा नसा नस्या च नासिका" इति साहसाङ्कः । नासिका । पञ्च नासिकायाः ॥ ८९ ॥ ओष्ठः अधरः रदनच्छदः दशनवासः चत्वारि ओष्ठस्य । ओष्ठाभ्यां सहितावधरौ । केचिदुपरिवर्त्योष्ठः अधोवर्त्यधर इति मन्यन्ते तदयुक्तम् । अधरोष्ठः बिम्बोष्ठीत्यादिप्रयोगदर्शनात् । चिबुकमित्येकं अधस्तात् अधराधोभागे । गण्डः कपोलः द्वे कपोलस्य "गाल इति ख्यातस्य ।" तत्रापि नेत्रकपोलमध्यदेशो गण्ड इति ग्रंथान्तरम् । ताभ्यां कपोलाभ्यां परा चिबुकस्याधो हनुरित्येकम् । हनुः पुंस्यपि । प्रायेण स्त्रियाम् । तत्परो हनुरिति ओकारघटितपाठोऽपि ॥९०॥ रदनः दशनः दन्तः रदः चत्वारि दन्तस्य । तालु काकुदं द्वे तालुनः ।

रसज्ञा रसना जिह्वा प्रान्तावोष्ठस्य सृक्किणी ॥ ९१ ॥

ललाटमलिकं गोधिरूर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ ॥
कूर्चमस्त्री भ्रुवोर्मध्यं तारकाक्ष्णः कनीनिका ॥ ९२ ॥

लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ॥
दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमश्रु च ॥ ९३ ॥

अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने ॥
कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ॥ ९४ ॥

उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ॥

रसज्ञा रसना । तालव्या अपि दन्त्याश्चेत्यादौ जिह्वायां रसना तथेत्युक्तेः रसनाशब्दो दन्त्यतालव्यमध्यः । रसनमिति क्लीबमपि । "रसनं स्वदने ध्वनौ जिह्वायां तु न पुंसि स्यात्" इति मेदिनी । जिह्वा त्रीणि जिह्वायाः । प्रान्ताविति ओष्ठद्वयस्य वामदक्षिणौ प्रान्तौ सृक्किणी स्याताम् । ईबन्तस्य स्त्रियामेकवचनम् । नान्तस्य क्लीबे वा द्विवचनमेतत् । सृक्कि इति इदन्तस्य क्लीबे द्विवचनं वा । सृक्किण्यां सृक्कि सृक्क चेति शब्दभेदात् । "सृक्केति नान्तस्य क्लीबे सृक्कणीति पाठः । कवयुक्तमिति मते तु । यथा सृक्किणी स्त्रियाम् । सृक्कि नान्तमिदन्तं च । सृक्केति नान्तम् । सृकसृकमदन्तं चेत्यन्यत्र" एकम् ॥ ९१ ॥ ललाटं अलिकं गोधिः त्रीणि भालस्य । "अलिकं ह्रस्वदीर्घमध्यम्" इति राजदेवः । गोधिः पुंसि । दृग्भ्यामूर्ध्वभागौ भ्रुवौ एकम् । भ्रूः । नासोपरि भ्रुवोर्मध्ये कूर्चं इत्येकम् । "कूर्चमस्त्री भ्रुवोर्मध्ये कत्थनश्मश्रुकैतवे" इति कोशान्तरम् । अक्ष्णः कनीनिका मध्यगतकृष्णमण्डलं तारकेत्युच्यते एकम् ॥ ९२ ॥ लोचनं नयनं नेत्रं ईक्षणं चक्षु अक्षि दृक् दृष्टिः अष्टौ नेत्रस्य । चक्षुषी । दृशौ । अस्रु नेत्राम्बु रोदनं अस्रं अश्रु पञ्च नेत्रोदकस्य । अस्रु दन्त्यमध्यम् । अन्त्यं तालव्यमध्यम् । अस्रमदन्तं दन्त्यमध्यम् । "तालव्यमध्यमपि" ॥ ९३ ॥ नेत्रयोरन्तौ अपाङ्गौ एकम् । अपाङ्गेन दर्शने चेष्टायां कटाक्ष इत्युच्यते । "अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च" इति विश्वः । कर्णः शब्दग्रहः श्रोत्रं श्रुतिः श्रवणं श्रवः षट् कर्णस्य । स्त्रीति विशेषविधानात् संकरो निर्दोषाय । श्रवसी ॥ ९४ ॥ उत्तमाङ्गं शिरः शीर्षं मूर्धा मस्तकः

चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ॥ ९५ ॥
तद्वृन्दे कैशिकं कैश्यमलकाश्चूर्णकुन्तलाः ॥
ते ललाटे भ्रमरकाः काकपक्षः शिखण्डकः ॥ ९६ ॥
कबरी केशवेशोऽथ धम्मिलः संयताः कचाः ॥
शिखा चूडा केशपाशी व्रतिनस्तु सटा जटा ॥ ९७ ॥
वेणिः प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे ॥
पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥ ९८ ॥
तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुंमुखे ॥

पञ्च शिरसः। ना पुमान्। चिकुरः चिकूरः। "कुन्तला मूर्द्धजास्त्वस्नाश्चिकूराश्चिकुराः कचाः" इति दुर्गः। कुन्तलः वालः कचः केशः शिरोरुहः षट् केशस्य ॥ ९५ ॥ कैशिकं कैश्यं द्वे तद्वृन्दे केशानां समूहे। अलकाः चूर्णकुन्तलाः द्वे कुटिलकेशानाम्। ते अलकाः ललाटे लम्बमानाः भ्रमरकाः स्युः। काकपक्षः शिखण्डकः शिखण्डिकः शिखाण्डकः। "शिखाण्डकशिखण्डिकौ" इति वाचस्पतिसुभूती। "शिखण्डो बर्हचूडयोः" इति मेदिन्याम्। द्वे कुमारचूडायाः ॥ ९६ ॥ कबरी केशवेशः द्वे केशबन्धरचनायाः। कबरी स्त्री। संयताः मौक्तिकदामादिबद्धाः कचाः केशसमूहो धम्मिल्ल इत्येकं "बुचडा इति ख्यातस्य।" शिखा चूडा केशपाशी त्रीणि शिखायाः। केशपाश्यौ। सटा जटा द्वे व्रतिनः शिखायाम् ॥ ९७ ॥ वेणिः प्रवेणी द्वे सर्पाकाररचितकेशवेशस्य। वेणीत्यपि। प्रवेणिरित्यपि। "प्रवेणिः स्त्री कुथावेण्योः" इति मेदिनी। शीर्षण्यः शिरस्यः द्वे विशदे निर्मले केशे। कचादित्यर्थप्रधानो निर्देशः। तेन कचपर्यायात् परे पाशादयस्त्रयः कलापार्थाः केशसमूहवाचिन इत्यर्थः। यथा कचपाशः। केशपाशः। केशपक्षः। कुन्तलहस्तः ॥ ९८ ॥ तनूरुहं रोम लोम त्रयं रोम्णः। पुंमुखे पुंसो वक्त्रे तस्य रोम्णो वृद्धौ सत्यां तद्रोम श्मश्रु स्यात् एकं "दाढी इति ख्यातस्य"। श्मश्रुणी। आकल्पः वेषः। वेश इति तालव्यान्तोऽपि। "वेशो वेश्यागृहे गृहे। नेपथ्ये च" इति मेदिनी। नेपथ्यं प्रतिकर्म प्रसाधनं पञ्च अलङ्कृतस्य शोभायाम्। "नेपथ्यं तु प्रसाधने। रङ्गभूमौ वेषभेदे" इति हैमः। नेपथ्यशब्दः पुंस्यपि। "नेपथ्यः

आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥ ९९ ॥
दशैते त्रिष्वलङ्कर्ताऽलङ्करिष्णुश्च मण्डितः ॥
प्रसाधितोऽलङ्कृतश्च भूषितश्च परिष्कृतः ॥ १०० ॥
विभ्राट् भ्राजिष्णुरोचिष्णू भूषणं स्यादलङ्क्रिया ॥
अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् ॥ १०१ ॥
मण्डनं चाथ मुकुटं किरीटं पुन्नपुंसकम् ॥
चूडामणिः शिरोरत्नं तरलो हारमध्यगः ॥ १०२ ॥
वालपाश्या पारितथ्या पत्रपाश्या ललाटिका ॥
कर्णिका तालपत्रं स्यात्कुण्डलं कर्णवेष्टनम् ॥ १०३ ॥
ग्रैवेयकं कण्ठभूषा लम्बनं स्याल्ललन्तिका ॥

स्यादलङ्कारे रज्ज्वायां नपुंसकम्" इति मेदिनीकोशात् । प्रतिकर्मादि द्वयमलङ्करणस्य वा ॥ ९९ ॥ एते अलङ्कर्तादयः वक्ष्यमाणा दश शब्दास्त्रिषु वाच्यलिङ्गाः । अलङ्कर्ता अलङ्करिष्णुः द्वे अलङ्कर्तरि । अलङ्कर्तुं शीलमस्यालंकरिष्णुः । मण्डितः प्रसाधितः अलङ्कृतः भूषितः परिष्कृतः "परिस्कृतः" पञ्च अलङ्कृतस्य ॥ १०० ॥ विभ्राट् भ्राजिष्णुः रोचिष्णुः त्रयमतिशयेन शोभमानस्य । विभ्राजौ । भूषणं अलङ्क्रिया द्वे भूषणक्रियायाः । "भूषा तु स्यादलङ्क्रियेत्यपि पाठः ।" अलङ्कारः आभरणं परिष्कारः "परिस्कारः" विभूषणम् ॥ १०१ ॥ मण्डनं पञ्चालङ्कारस्य । मुकुटं "मकुटं" किरीटं द्वे किरीटस्य । "तत्र किरीटं पुंसि क्लीबे च ।" चूडामणिः शिरोरत्नं द्वे शिरोमणेः । हारमध्यगः हारमध्यगतो नायकमणिः तरलः स्यात् पदक इत्यादिख्यातस्य एकम् ॥ १०२ ॥ वालपाश्या पारितथ्या द्वे सीमन्तभूषणस्य । "स्वामी तु प्रथमं वालं बंधनं मुक्तावलीनामित्याह । परितस्तथाभूतैव पारितथ्या ।" पत्रपाश्या ललाटिका द्वे ललाटभूषणस्य । कर्णिका कर्णस्यालङ्कारेऽर्थे । "कर्णललाटात्कनलङ्कारे" इति कन् । कर्णिका कर्णभूषणमिति । तालपत्रं "ताडपत्रं" द्वे ताटङ्कस्य तानवड इति ख्यातस्य । कुण्डलं कर्णवेष्टनं द्वे कुण्डलस्य । तत्र कर्णिका स्त्रीभिरेव धार्यते । इदं पुरुषैरपि ॥ १०३ ॥ ग्रैवेयकं कण्ठभूषा द्वे ग्रीवाभरणस्य । "ग्रैवेयं ग्रैवं चेत्यन्यत्र" । लम्बनं ललन्तिका

स्वर्णैः प्रालम्बिकाऽथोरः सूत्रिका मौक्तिकैः कृता ॥ १०४ ॥
हारो मुक्तावली देवच्छन्दोऽसौ शतयष्टिका ॥
हारभेदा यष्टिभेदाद्गुच्छगुच्छार्धगोस्तनाः ॥ १०५ ॥
अर्धहारो माणवक एकावल्येकयष्टिका ॥
सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ॥ १०६ ॥
आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् ॥
केयूरमङ्गदं तुल्ये अङ्गुलीयकमूर्मिका ॥ १०७ ॥
साक्षराऽङ्गुलिमुद्रा स्यात्कङ्कणं करभूषणम् ॥
स्त्रीकट्या मेखला काञ्ची सप्तकी रशना तथा ॥ १०८ ॥
क्लीबे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु ॥

द्वे आनाभिलम्बितकण्ठिकायाम् । सैव ललन्तिका स्वर्णैः कृता प्रालम्बिका स्यात् एकम् । सैव ललंतिका मौक्तिकै रचिता चेदुरःसूत्रिकेत्येकम् ॥ १०४ ॥ हारः । ह्रियते मनोऽनेनेति । अथवा हारयति मनः । मुक्तावली "द्वे मुक्ताहारस्य ।" असौ मुक्तावली शतयष्टिका शतलतिका चेत् देवच्छन्दः एकम् । देवच्छन्दौ । यष्टिभेदाल्लतानां भेदात् गुच्छादयो हारभेदाः स्युः । "गुत्सगुत्सार्धगोस्तना इत्यपि पाठः ।" ते यथा । द्वात्रिंशद्यष्टिको गुच्छः । चतुर्विंशतियष्टिको गुच्छार्धः । चतुर्यष्टिको गोस्तनः ॥ १०५ ॥ द्वादशयष्टिकोऽर्धहारः । विंशतियष्टिको माणवकः । एकयष्टिका एकावली । सैवैकावली सप्तविंशतिमौक्तिकैः कृता नक्षत्रमाला स्यात् एकैकम् ॥ १०६ ॥ आवापकः पारिहार्यः कटकः वलयः चत्वारि प्रकोष्ठाभरणस्य "पोंची इत्यादिख्यातस्य ।" केयूरं अङ्गदं द्वे प्रगण्डभूषणस्य "बाहुवटे, बाजुबंद इति ख्यातस्य ।" के बाहुशिरसी यौति केयूरम् । "यु मिश्रणे" । अङ्गुलीयकं ऊर्मिका द्वे अङ्गुल्याभरणस्य आंगुठी इति ख्यातस्य ॥ १०७ ॥ ऊर्मिकैव रामनामाद्यक्षरयुता चेदङ्गुलिमुद्रेत्येकम् । कङ्कणं करभूषणं द्वे मणिबन्धभूषणस्य "कांकणें इति ख्यातस्य" । "कङ्कणो ना प्रतिसरः" इति रत्नकोशः । मेखला कांची "कांचिः" सप्तकी रशना "दन्त्यमध्यापि" ॥ १०८ ॥ सारसनं पञ्च स्त्रीणां कटिभूषणस्य "दाब, कंबरपट्टा" इति ख्यातस्य । "एक-

पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ॥ १०९ ॥
हंसकः पादकटकः किङ्किणी क्षुद्रघण्टिका ॥
त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दश त्रिषु ॥ ११० ॥
वाल्कं क्षौमादि फालं तु कार्पासं बादरं च तत् ॥
कौशेयं कृमिकोशोत्थं राङ्कवं मृगरोमजम् ॥ १११ ॥
अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरम् ॥
तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ॥ ११२ ॥
पत्त्रोर्णं धौतकौशेयं बहुमूल्यं महाधनम् ॥

यष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिका । रसना षोडश ज्ञेया कलापः पञ्चविंशक इति भेदास्त्विह नोक्ताः ।" शृङ्खलमित्येकं पुंसः कटिभूषणस्य "कडदोरा इति ख्यातस्य ।" शृङ्खला शृङ्खलः । पादाङ्गदं तुलाकोटिः "तुलाकोटी" मञ्जीरः "मञ्जीलः" नूपुरः ॥ १०९ ॥ हंसकः पादकटकः षट्कं नूपुरस्य "तोरड्या पैंजण इति ख्यातस्य । हंसकादिद्वयं पादकटकस्य वाळे इति ख्यातस्येति मतम् ।" तुलाकोटिः स्त्री । मञ्जीरो न स्त्रियाम् । किङ्किणी किङ्किणिः कङ्कणी । "कङ्कणः स्यात्प्रतिसरः कङ्कणी क्षुद्रघण्टिका" इति भागुरिः । क्षुद्रघण्टिका द्वे घागरी "घुंगुर" इति ख्यातायाः । त्वगादिचतुष्कं वस्त्राणां योनिः कारणम् । कारणचातुर्विध्यात् वस्त्राणां चातुर्विध्यमिति भावः । क्षौमादित्येतद्विना वाल्कफालादयो निष्प्रवाण्यन्ता दश त्रिषु । तन्त्रकं चेति चकारादेकादशं तन्त्रकं च त्रिषु । वक्ष्यमाणदुकूलसाहचर्यात्क्षौमं क्लीबमेव । त्रिष्वित्येके ॥ ११० ॥ त्वगादिजन्यादिक्रमेणाभिहितानि । क्षौमादि वस्त्रं वाल्कं ज्ञेयम् । क्षुमा अतसी तद्विकारः क्षौमम् । आदिना शाणमित्यादि एकं त्वङ्मयस्य । फालं कार्पासं बादरं त्रीणि फलविकारस्य कार्पासवस्त्रस्य । कृमीणामपाननिर्गतसूत्रकृतः कुड्मलाकारः कोशः कृमिकोशस्तस्मादुत्थं कौशेयं स्यात् । मृगरोमजं वस्त्रं राङ्कवमित्येकम् । "अत्र मृगशब्देन पशुमात्रं ग्राह्यं तेन कम्बलाद्यपि" ॥ १११ ॥ अनाहतं निष्प्रवाणि तन्त्रकम् । तन्त्रादचिरापहृतम् । नवाम्बरं चत्वारि नूतनवस्त्रस्य कोरें वस्त्र इति प्रसिद्धस्य । निर्गता प्रवाणी तन्तुवायशलाकाऽस्मात् निष्प्रवाणि । धौतयोर्वस्त्रयोर्युगं यत्तदुद्गमनीयमित्येकम् । "युगमित्यविवक्षितम्" ॥ ११२ ॥ यद्धौतं कौशेयं

क्षौमं दुकूलं स्याद्द्वे तु निवीतं प्रावृतं त्रिषु ॥ ११३ ॥
स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयोर्द्वयोः ॥
दैर्घ्यमायाम आरोहः परिणाहो विशालता ॥ ११४ ॥
पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ ॥
वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम् ॥ ११५ ॥
सुचेलकः पटोऽस्त्री स्याद्वराशिः स्थूलशाटकः ॥
निचोलः प्रच्छदपटः समौ रल्लककम्बलौ ॥ ११६ ॥
अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके ॥

तत्पत्रोर्णं एकम् । बहुमूल्यं यद्वस्त्रादिकं तन्महाधनमित्येकम् । त्रिलिङ्गम् । क्षौमं दुकूलं द्वे पट्टवस्त्रस्य "पाटाव इति ख्यातस्य ।" निवीतं प्रावृतं द्वे प्रावृतवस्त्रस्य ॥ ११३ ॥ वस्त्रस्य द्वयोर्वस्तयोः प्रान्तयोः दशाः स्युः । एकं स्त्रीलिङ्गं बहुवचनान्तं च नित्यम् । वस्तयो द्वयोरिति पाठे तु दशाः वस्तयः द्वे वस्त्रप्रान्तयोः । तत्र स्त्रियां बहुत्वे दशाः । स्त्रीपुंसयोर्बहुत्वे च वस्तयः । "दशावस्थादीपवर्त्योर्वस्त्रान्ते भूम्नि योषिति । वस्तिर्द्वयोर्निरूहे नाभ्यधो भूम्नि दशासु च" इति मेदिनी । दैर्घ्यं आयामः आरोहः "आनाह इति रामाश्रमीकारः ।" त्रयं वस्त्रादेर्दैर्घ्यस्य "लांबी इति ख्यातस्य ।" परिणाहः विशालता द्वे विस्तरस्य "रुंदी" इति ख्यातस्य ॥ ११४ ॥ पट्टच्चरं जीर्णवस्त्रं द्वे जीर्णवस्त्रस्य । नक्तकः "लक्तक इत्यपि" कर्पटः द्वे जीर्णवस्त्र-खण्डस्य "फडके, छाटी इति ख्यातस्य ।" वस्त्रं आच्छादनं वासः चैलं "चेलं । चेलोऽधमे त्रिषु । नपुंसकं तु वसन इति विश्वः ।" वसनं अंशुकं षट् वस्त्रस्य । "अंशुकं शुक्लवस्त्रे स्याद्वस्त्रमात्रोत्तरीययोः" इति रभसः ॥ ११५ ॥ सुचेलकः पटः द्वे शोभनवस्त्रस्य । तत्र पटोऽस्त्री । वराशिः "वरासिः । वरासिः स्यात्खड्गवरे वरासिः स्थूलशाटक इति दंत्यान्तेषु रभसः ।" स्थूल-शाटकः द्वे स्थूलवाससः । निचोलः निचुलोऽपि । "निचुलस्तु निचोले स्यात्" इति मेदिनी । प्रच्छदपटः द्वे येन वीणाडोलिकादिकं किमपि पिधी-यते तस्य । रल्लकः कम्बलः द्वे कम्बलस्य ॥ ११६ ॥ अन्तरीयं उपसंव्यानं परिधानं अधोंऽशुकं चत्वारि परिहिते वाससि । "अधोदेहभागस्यांशुकं अधोंऽशुकम् ।" प्रावारः "प्रावरः" उत्तरासङ्गः बृहतिका ॥ ११७ ॥

द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥ ११७ ॥

संव्यानमुत्तरीयं च चोलः कूर्पासकोऽस्त्रियाम् ॥
नीशारः स्यात्प्रावरणे हिमानिलनिवारणे ॥ ११८ ॥

अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमस्त्रियाम् ॥
स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ॥ ११९ ॥

अस्त्री वितानमुल्लोचो दूष्याद्यं वस्त्रवेश्मनि ॥
प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा ॥ १२० ॥

परिकर्माङ्गसंस्कारः स्यान्मार्ष्टिर्मार्जना मृजा ॥
उद्वर्तनोत्सादने द्वे समे आप्लाव आप्लवः ॥ १२१ ॥

संव्यानं उत्तरीयं पञ्च वामस्कन्धे यद्धार्यते तस्य उत्तरीयस्य । "उत्तरस्मिन् देहभागे आसज्जत इत्युत्तरासङ्गः" । चोलः कूर्पासकः द्वे स्त्रीणां स्तनादि-पिधायकस्य कञ्चुकीति प्रसिद्धस्य । गौरादित्वात् ङीषि चोलीत्यपि । कूर्परे आस्ते कूर्पासकः । पुंसि क्लीबे च । "कूर्पासस्त्वर्धचोलकः" इति हारावलिः । हिमानिलयोर्निवारणं यस्मात्तादृशे प्रावरणे नीशार इत्येकं "रजई दुलई दुलई लेप इत्यादिख्यातस्य" । नितरां शीर्यते हिमानिलावत्रानेन वा । "गौरिवा-कृतनीशार इति" प्रयोगः ॥ ११८ ॥ यद्वरस्त्रीणां अर्धोरुकं अर्धोरुपिधायिकं वस्त्रं तच्चण्डातकं स्यात् एवं "परकर, लहंगा इति ख्यातस्य" । ऊर्वोरर्धमर्धोरु तत्र स्थितत्वाल्लक्षणया वस्त्रमप्यर्धोरु । स्वार्थे कन् । यत् आप्रपदं पादाग्रपर्यन्तं प्राप्नोति वस्त्रादि तत् आप्रपदीनम् । त्रिषु एकम् ॥ ११९ ॥ वितानं उल्लोचः द्वे आतपाद्यपनयार्थमुपरिबद्धस्य चन्द्रकाख्यस्य वाससः "चांदवा इति ख्यातस्य ।" पुंसि वितानः । दूष्यमित्यादिकं वस्त्रवेश्मनि वस्त्ररचितगृहे एकम् । "दूश्यमिति तालव्यमध्यमपि" । आद्यशब्दात्पटकुटी "डेरा राहुटी तंबु" इत्यादि । प्रतिसीरा जवनिका "यमनिका" तिरस्करिणी । "तिर-स्कारिणी तिरस्क्रियतेऽनया ।" त्रयं जवनिकायाः पडदा "कनाथ" इति ख्यातायाः ॥ १२० ॥ परिकर्म अङ्गसंस्कारः द्वे कङ्कुमादिना शरीरे संस्कारमा-त्रस्य । परिमलवर्जनार्था क्रिया परिकर्म । प्रतिकर्मेति क्वचित्पाठः । मार्ष्टिः मार्जना मृजा प्रोक्षणादिना देहनिर्मलीकरणस्य । उद्वर्तनं उत्सादनं द्वे पिष्टा-

स्नानं चर्चा तु चार्चिक्यं स्थासकोऽथ प्रबोधनम् ॥
अनुबोधः पत्रलेखा पत्राङ्गुलिरिमे समे ॥ १२२ ॥

तमालपत्रतिलकचित्रकाणि विशेषकम् ॥
द्वितीयं च तुरीयं च न स्त्रियामथ कुङ्कुमम् ॥ १२३ ॥

काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतने ॥
रक्तसङ्कोचपिशुनं धीरं लोहितचन्दनम् ॥ १२४ ॥

लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः ॥
लवङ्गं देवकुसुमं श्रीसंज्ञमथ जायकम् ॥ १२५ ॥

दिना शरीरमलापकरणस्य । आप्लावः आप्लवः ॥ १२१ ॥ स्नानं त्रीणि स्नानस्य । चर्चा चार्चिक्यं स्थासकः त्रीणि चन्दनादिना देहविलेपविशेषस्य उटी इति ख्यातस्य । "चर्चिकैव चार्चिक्यम् । स्वार्थे ष्यञ्" । प्रबोधनं अनुबोधः द्वयं गतगन्धस्य पुनर्गन्धव्यक्तीकरणे । यथा कस्तूरिकादेर्मेद्यादिना । पत्रलेखा पत्राङ्गुलिः द्वे कस्तूरिकाकेशरादिना कपोलादौ रचितपत्रवल्ल्याः । पत्राकृतिर्लेखा पत्रपलेखा । कलिङ्गादिदेशेषु प्रसिद्धेयम् ॥ १२२ ॥ तमालपत्रम् । तमालस्य पत्रमिव तमालपत्रम् । "तमालपत्रं तापिच्छे तिलके पत्रकेऽपि च" इति विश्वः। तिलकं चित्रकं विशेषकं चत्वारि ललाटे कस्तूर्यादिना कृततिलकस्य । "तमालस्तिलके खड्गे' इति विश्वात्तमाल इत्यप्यन्यत्र । अत्र द्वितीयं तिलकमिति तुरीयं विशेषकमिति च द्वे न स्त्रियां किंतु पुनपुंसकयोः । कुङ्कुमम् ॥ १२३ ॥ काश्मीरजन्म अग्निशिखं वरं बाह्लीकं "बाह्लिकम् । बाह्लीकं बाह्लिकं धीरहिङ्गुनोर्नाश्वदेशयोः" इति त्रिकाण्डशेषः । पीतनं रक्तं संकोचं पिशुनं धीरं लोहितचन्दनं एकादश कुङ्कुमस्य । "रक्तं नील्यादिरञ्जिते । कुङ्कुमे" इति हैमः । "सङ्कोचो मीनभेदे च बन्धे क्लीबं तु कुङ्कुमे" इति विश्वमेदिन्यौ । "पिशुनं कुङ्कुमेऽपि च" इति मेदिनी ॥ १२४ ॥ लाक्षा राक्षा जतु यावः अलक्तः द्रुमामयः षट्कं लाक्षायाः । न लक्तोऽस्मादलक्तः । द्रुमाणामामयो द्रुमामयः । लवङ्गं देवकुसुमं श्रीसंज्ञं त्रीणि लवङ्गस्य । देवानां कुसुमम् । कुसुमेषु देव इव । देवयोग्यं कुसुमं वा । श्रीसंज्ञं लक्ष्मीपर्यायनामकम् । जायकम् ॥ १२५ ॥ कालीयकं कालानुसार्यं त्रयं जायकाख्यगन्धद्रव्यस्य पीतचन्दन इति

125- 125



कालीयकं च कालानुसार्यं चाथ समार्थकम् ॥
वंशिकागुरुराजार्हलोहं कृमिजजोङ्गकम् ॥ १२६ ॥
कालागुर्वगुरु स्यात्तु मङ्गल्या मल्लिगन्धि यत् ॥
यक्षधूपः सर्जरसो रालसर्वरसावपि ॥ १२७ ॥
बहुरूपोऽप्यथ वृकधूपकृत्रिमधूपकौ ॥
तुरुष्कः पिण्डकः सिह्लो यावनोऽप्यथ पायसः ॥ १२८ ॥
श्रीवासो वृकधूपोऽपि श्रीवेष्टसरलद्रवौ ॥

ख्यातस्य । जयति गन्धान्तरं जायकम् । "कालीयकं च कालेयं वर्णकं कान्तिदायकम्" इति व्याडिः । वंशिकं "वंशकं" अगुरु राजार्हं लोहं कृमिजं जोङ्गकम् ॥ १२६ ॥ कालागुरु सप्तकं समार्थकम् । कृष्णागुरुणः पर्याया इत्यर्थः । न गुरुर्यस्मात्तदगुरु । "अगुरुर्जोङ्गके लघौ" इति हैमादगुरुः पुंस्यपि । अगरुरिति क्वचित् । "लोहोऽस्त्री शस्त्रके लौहे जोङ्गके सर्वतैजसे" इति मेदिनीकोशाल्लोहं पुंस्यपि । अगुरु इत्यस्य यच्छब्देन संबन्धः । स्यादित्यस्य त्वन्तत्वादुत्तरेण संबन्धः । यदगुरु मल्लिगन्धि सा मङ्गल्या स्यादित्येकम् । "अत्र जोङ्गकान्तानि अगुरुणः । कालागुर्वादि द्वयं कृष्णागुरुणः । त्वित्यत्र तदिति पाठस्तत्र यदगुरु मल्लिगन्धि तन्मङ्गल्येत्यर्थः" । यक्षधूपः सर्जरसः रालः सर्वरसः ॥ १२७ ॥ बहुरूपः पञ्च धूपस्य "राळ" इति ख्यातस्य । अराल इति वा । "रालः सर्जरसोऽरालो धूपको वह्निवल्लभः" इति रभसः । वृकधूपः कृत्रिमधूपकः द्वे अनेकपदार्थकृतधूपस्य । तुरुष्कः पिण्डकः सिह्लः यावनः चत्वारि सिह्लाख्यगन्धद्रव्यस्य "ऊद" लोबान इति ख्यातस्य । "तुरुष्कः सिह्लके म्लेच्छजातौ देशान्तरेऽपि च" इति विश्वमेदिन्यौ । पायसः ॥ १२८ ॥ श्रीवासः वृकधूपः श्रीवेष्टः श्रीपिष्टः । "सरलद्रवश्रीपिष्टदधिक्षीरघृताह्वये" इति रभसः । सरलद्रवः पञ्च सरलद्रवस्य "विशेषनामकधूप इति ख्यातस्य" । पयसो द्रुमस्य क्षीरस्य वा विकारः पायसः । सरलस्य देवदारोर्द्रवः सरलद्रवः । "पायसस्तु क्लीबपुंसोः श्रीवासपरमान्नयोः" इति मेदिनी । मृगनाभिः मृगमदः कस्तूरी त्रयं कस्तूर्याः । मृगनाभिः पुंसि । "मृगनाभिर्मृगमदो मृगः कस्तूरिकापि च" इति माधवः । "मदो रेतसि कस्तूर्याम्" इति मेदिनी । "मुख्यराट्क्षत्रयोर्नाभिः पुंसि

मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम् ॥ १२९ ॥
कङ्कोलकं कोशफलमथ कर्पूरमस्त्रियाम् ॥
घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका ॥ १३० ॥
गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ॥
तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ॥ १३१ ॥
तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ॥
कुचन्दनं चाथ जातीकोशजातीफले समे ॥ १३२ ॥
कर्पूरागरुकस्तूरीकङ्कोलैर्यक्षकर्दमः ॥

प्राण्यङ्गके द्वयोः । चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे" इति रभसः । कोलकं कोरकम् । "कोरकोऽस्त्री कुड्मले स्यात्कङ्कोलकमृणालयोः" इति मेदिनी ॥ १२९ ॥ कङ्कोलकं कोशफलं त्रीणि कंकोळ, गवला इति ख्यातस्य । कर्पूरं घनसारः चन्द्रः सिताभ्रः सिताभ इत्यपि । हिमवालुका पञ्च कर्पूरस्य । चन्द्रसंज्ञश्चन्द्रपर्यायनामकः पुंसि कर्पूरः ॥ १३० ॥ गन्धसारः मलयजः भद्रश्रीः चन्दनः चत्वारि चन्दनस्य "मलयागरु मैलागिरि इति ख्यातस्य ।" भद्रश्रियौ । तैलपर्णिकमित्येकं धवलशीतलचन्दनविशेषस्य । गोशीर्षमित्येकं उत्पलगन्धिचन्दनस्य । हरिचन्दनमित्येकं कपिलवर्णचन्दनस्य । एवं त्रयो भेदाः। तिलपर्णे वृक्षभेदे जाता तैलपर्णी । स्वार्थे कन् । "तैलपर्णगोशीर्षौ गिरी आकरावस्य" इति स्वामी ॥ १३१ ॥ तिलपर्णी पत्राङ्गं रञ्जनं रक्तचन्दनं कुचन्दनं पञ्च रक्तचन्दनस्य । "तिलपर्णी नदी आकरोऽस्यास्ति । अच् ङीष् च ।" जातीकोशं जातीफलम् । जातिकोशं जातिफलमित्यपि पाठः । जातिः जाती वा । कोशं फलं इति पृथगपि । "जातिर्जातिफलेऽपि च" इति रभसः । "कोशोऽस्त्री कुड्मले पत्रे दिव्ये खड्गपिधानके । जातिकोशे" इति मेदिनीविश्वप्रकाशौ । "फलं लाभे जातिकोशे बाणाग्रे फलकेऽपि च" इति रुद्रः । द्वे जायफळ इति ख्यातस्य ॥ १३२ ॥ कर्पूरादिभिः समभागैः पिण्डीकृतो लेपविशेषो यक्षकर्दम इत्येकम् । " कर्पूरागरुकस्तूरीकङ्कोलघुसृणानि च । एकीकृतमिदं सर्वं यक्षकर्दम इष्यते" इति व्याडिः । घुसृणं केशरम् । अन्यत्स्पष्टम् । "कुङ्कुमागरुकस्तूरी कर्पूरं चन्दनं तथा । महासुगन्धिरित्युक्तं नामतो

133-137



गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम् ॥ १३३ ॥
चूर्णानि वासयोगाः स्युर्भावितं वासितं त्रिषु ॥
संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् ॥ १३४ ॥
माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः ॥
प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ललामकम् ॥ १३५ ॥
प्रालम्बमृजुलम्बि स्यात्कण्ठाद्वैकक्षिकं तु तत् ॥
यत्तिर्यक्क्षिप्तमुरसि शिखास्वापीडशेखरौ ॥ १३६ ॥
रचना स्यात्परिस्यन्द आभोगः परिपूर्णता ॥
उपधानं तूपबर्हः शय्यायां शयनीयवत् ॥ १३७ ॥

यक्षकर्दमः" इति धन्वन्तरिः ॥ गात्रानुलेपनी वर्तिः वर्णकं विलेपनं चत्वारि गात्रानुलेपयोग्यस्य पिष्टघृष्टसुगन्धिद्रव्यस्य उटणें इति ख्यातस्य । "गात्रानुलेपनी वर्तिर्विगन्ध्यथ विलेपनम् । वर्णकं चाथ विच्छित्तिः स्त्री कषायोऽङ्गरागकः" इति रभसात् । आद्यद्वयमुक्तार्थमेव । वर्णकादिद्वयं घृष्टचन्दनादिलेपमात्रस्य । कर्पूरागुरुरित्यपि पाठः ॥ १३३ ॥ चूर्णं वासयोगः द्वे पटवासादिचूर्णमात्रस्य । "वासे सुगन्धिकरणे योग उपायो वासयोगः ।" भावितं वासितं द्वे गन्धद्रव्येण वासितस्य वस्तुनः । त्रिषु । गन्धमाल्यधूपादिभिर्यः संस्कारः वस्त्रताम्बूलादीनां सौरभाधानं तदधिवासनमित्युच्यते । एकम् ॥ १३४ ॥ माल्यं माला स्रक् त्रयं मूर्ध्नि धृतायाः कुसुमावलेः उपचाराद्न्यत्रापि प्रयोगः । केशमध्ये धृता माला गर्भक इत्युच्यते एकम् । यन्माल्यं शिखायां लम्बमानं तत्प्रभ्रष्टकमित्येकम् । पुरो न्यस्तं ललाटपर्यन्तं क्षिप्तं ललामकमित्येकम् ॥ १३५ ॥ यन्माल्यं कण्ठादृजुलम्बि सरलं लम्बमानं तत्प्रालम्बमित्येकम् । यन्माल्यं तिर्यगुपवीतमनृजु उरसि क्षिप्तं तत् वैकक्षिकमित्येकं चतुरक्षरम् । "विकक्षमुरस्तत्र भवं वैकक्षकमित्यपि ।" आपीडः शेखरः द्वे शिखासु न्यस्तमाल्यमात्रस्य ॥ १३६ ॥ रचना परिस्यन्दः द्वे माल्यादिरचनायाः । "परिस्पन्द इत्यपि पाठः" । आभोगः परिपूर्णता द्वे सर्वोपचारपरिपूर्णतायाः । उपधानं उपबर्हः द्वे उच्छीर्षस्य "उशी इति ख्यातस्य" । उपधीयते आरोप्यते शिरोऽत्र उपधानम् । शय्या शयनीयं ॥ १३७ ॥ शयनं त्रीणि शय्यायाः । वदिति उच्चरेण समत्वद्योतनाय । मञ्चः

शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः ॥
गेन्दुकः कन्दुको दीपः प्रदीपः पीठमासनम् ॥ १३८ ॥
समुद्गकः संपुटकः प्रतिग्राहः पतद्ग्रहः ॥
प्रसाधनी कङ्कतिका पिष्टातः पटवासकः ॥ १३९ ॥
दर्पणे मुकुरादर्शौ व्यजनं तालवृन्तकम् ॥
इति मनुष्यवर्गः ॥ ६ ॥

---

सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ ॥
वंशोऽन्ववायः संतानो वर्णाः स्युर्ब्राह्मणादयः ॥ १ ॥

पर्यङ्कः पल्यङ्कः खट्वा चत्वारि खट्वायाः "पलंग, बाज इति ख्यातायाः"। गेन्दुकः "गेण्डुकः गण्डूकः" कन्दुकः द्वे चेंडू इति ख्यातस्य क्रीडाकारणस्य । "गिरदी, गालउशी इति ख्यातस्येति केचित् ।" दीपः प्रदीपः द्वे दीपस्य । पीठं आसनं द्वे आसनस्य । "विष्टरः पीठमस्त्रियाम्" इति त्रिकाण्डशेषः ॥ १३८ ॥ समुद्गकः संपुटकः द्वे संपुटस्य "डबा चौफुला इत्यादिख्यातस्य"। प्रतिग्राहः प्रतिग्रहः । "प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे । विप्रेभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे" इति मेदिनी । पतद्ग्रहः द्वे "पिकदाणी इति ख्यातस्य ।" प्रसाधनी कङ्कतिका द्वे गजदन्तादिरचितायाः केशमार्जन्याः फणी इति ख्यातायाः। "कङ्कतं तु प्रसाधनम्" इति क्लीबकाण्डेऽमरमाला। पिष्टातः पटवासकः द्वे बुका इति ख्यातस्य चूर्णविशेषस्य ॥ १३९ ॥ दर्पणः मुकुरः मकुरः । "मकुरः स्यान्मुकुरवद्दर्पणे बकुलद्रुमे । कुलालदण्डे" इति मेदिनी । मकूर इत्यपि केचित् । आदर्शः त्रीणि दर्पणस्य "आरसा इति ख्यातस्य" । साहचर्याद्दर्पणः पुंस्येव। "आदर्शो दर्पणः प्रोक्तः" इत्यमरमाला। व्यजनं तालवृन्तकं द्वे तालपत्रादिनिर्मितव्यजनस्य । व्यजति वायुरनेन व्यजनम् ॥ इति मनुष्यवर्गः ॥ ६ ॥ संततिः गोत्रं जननं कुलम् । "कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीबम्" इति कोशान्तरे। अभिजन अन्वयः वंशः अन्ववायः संतानः नव वंशस्य । तत्र संततिः स्त्री । ब्राह्मणादयो वर्णाः स्युः एकम् ॥ १ ॥ ब्राह्मणक्षत्रियवैश्यशूद्राः वर्णाश्चातुर्वर्ण्यमित्येकम् । राजबीजी

1-6



( विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् ॥ ) (१)
राजबीजी राजवंश्यो बीज्यस्तु कुलसंभवः ॥ २ ॥
महाकुलकुलीनार्यसभ्यसज्जनसाधवः ॥
ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥ ३ ॥
आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाडवाः ॥
विप्रश्च ब्राह्मणोऽसौ षट्कर्मा यागादिभिर्वृतः ॥ ४ ॥
विद्वान् विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः ॥
धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः ॥ ५ ॥
धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ॥
दूरदर्शी दीर्घदर्शी श्रोत्रियश्छान्दसौ समौ ॥ ६ ॥

राजवंश्यः द्वे राजवंशोत्पन्नस्य । राजबीजिनौ । बीज्यः कुलसंभवः द्वे कुलमात्रोत्पन्नस्य ॥ २ ॥ महाकुलः "महाकुलः" कुलीनः । महत्कुलमस्य महाकुलः महाकुले भवो माहाकुलः । कुले भवः कुलीनः । आर्यः सभ्यः सज्जनः साधुः षट् सज्जनस्य । ब्रह्मचार्यादयश्चत्वारोऽपि आश्रमशब्दवाच्या इत्यर्थः । "कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ॥ सर्वत्र मैथुनत्यागो ब्रह्मचर्यं तदुच्यते" इति । एकम् । वनमेव प्रस्थः प्रदेशस्तत्र भवः वानप्रस्थः । अत्र भिक्षुर्यतिः ॥ ३ ॥ द्विजातिः अग्रजन्मा भूदेवः वाडवः विप्रः ब्राह्मणः षट् ब्राह्मणस्य । वडवायां जातो वाडवः । "वडवा द्विजयोषिति" इति मेदिनी । असौ ब्राह्मणो यागादिभिर्यजनादिभिर्युक्तः षट्कर्मा स्यात् । तदुक्तम् । "इज्याध्ययनदानानि याजनाध्यापने तथा । पतिग्रहश्च तैर्युक्तः षट्कर्मा विप्र उच्यते" इति । एकम् ॥ ४ ॥ विद्वान् विपश्चित् दोषज्ञः सन् सुधीः कोविदः बुधः धीरः मनीषी ज्ञः प्राज्ञः प्रज्ञः । "प्रज्ञस्तु पण्डिते वाच्यलिङ्गो बुद्धौ तु योषिति" इति मेदिनी । संख्यावान् पण्डितः कविः ॥ ५ ॥ धीमान् सूरिः कृती कृष्टिः लब्धवर्णः विचक्षणः दूरदर्शी दीर्घदर्शी द्वाविंशतिः पण्डितस्य । विद्वांसौ । विपश्चितौ । सन्तौ । ज्ञौ । संख्यावन्तौ । कृतिनौ । "संख्या विचारणास्त्यस्य संख्यावान् । लब्धो वर्णः स्तुतिर्येन लब्धवर्णः दूरान्दूराद्वा पश्यतीति दूर-

१ इदमर्धं तालपत्रपुस्तके एव नास्ति ॥

("मीमांसको जैमिनीये वेदान्ती ब्रह्मवादिनि ॥
वैशेषिके स्यादौलूक्यः सौगतः शून्यवादिनि" ॥ १ ॥
"नैयायिकस्त्वक्षपादः स्यात्स्याद्वादिक आर्हकः ॥
चार्वाकलौकायतिकौ सत्कार्ये सांख्यकापिलौ"॥२॥) (१)
उपाध्यायोऽध्यापकोऽथ स्यान्निषेकादिकृद्गुरुः ॥
मन्त्रव्याख्याकृदाचार्य आदेष्टा त्वध्वरे व्रती ॥ ७ ॥
यष्टा च यजमानश्च स सोमवति दीक्षितः ॥

दर्शी"। श्रोत्रियः छान्दसः द्वे वेदाध्यायिनः ॥ ६ ॥ मीमांसकमित्यादिपद्यद्वयमत्र केचित्पठन्ति । तदत्रत्यं नेत्युपेक्षितम् । तस्येयं बालबोधार्थं व्याख्या । मीमांसकः जैमिनीयः द्वे मीमांसाशास्त्रवेत्तुः । वेदान्ती ब्रह्मवादी द्वे वेदान्तशास्त्रज्ञस्य । वैशेषिकः औलूक्यः द्वे सप्तपदार्थवादिनः । ते च पदार्थाः । द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तेति कणादमतम् । सौगतः शून्यवादी द्वे जगत्कारणं शून्यमिति मतावलम्बिनो नास्तिकस्य ॥ १ ॥ नैयायिकः अक्षपदः आक्षपादो वा द्वे न्यायशास्त्रज्ञस्य । प्रमाणप्रमेयसंशयविपर्ययतर्केत्यादिषोडशपदार्थवादिनः गोतमस्य । स्याद्वादिकः आर्हकः द्वे मोक्षोऽस्ति स्यान्नास्ति स्यादिति वादिनः । चार्वाकः लौकायतिकः लोकायतिको वा द्वे देहात्मवादिनो बौद्धस्य । सांख्यः कापिलः द्वे तदेवेदं कार्यं जगदिति मानिनः सांख्यशास्त्रज्ञस्य ॥ २ ॥ उपाध्यायः अध्यापकः द्वे "उपेत्याधीयतेऽस्मादुपाध्यायः । अध्यापयतीत्यध्यापकः"। निषेको गर्भाधानं आदिना पुंसवनादि । तस्य कर्मणः कर्ता पित्रादिर्गुरुः स्यात् एकम् । मन्त्रो वेदस्तस्य व्याख्याकृत् आचार्यः स्यात् । "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षते" इति । एकम् । व्याख्यालक्षणं तु । "पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं मतम्" इत्युक्तम् । अध्वरे यागविषये य ऋत्विजामादेष्टा स व्रती ॥ ७ ॥ यष्टा यजमानः इति त्रयेणोच्यते । "आदिष्टीत्यपि पाठः" । व्रतिनौ । यष्टारौ । स यजमानः सोमवति यागे आदेष्टा दीक्षित इत्युच्यते एकम् । इज्याशीलः यायजूकः द्वे यजनशीलस्य । "पुनः पुनः भृशं वा यजते यायजूकः"।

---

इदं पद्यद्वयं तालपत्रपुस्तकेऽपि नास्ति ॥

8—11



इज्याशीलो यायजूको यज्वा तु विधिनेष्टवान् ॥ ८ ॥
स गीष्पतीष्ट्या स्थपतिः सोमपीथी तु सोमपाः ॥
सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥ ९ ॥
अनूचानः प्रवचने साङ्गेऽधिती गुरोस्तु यः ॥
लब्धानुज्ञः समावृत्तः सुत्वा त्वभिषवे कृते ॥ १० ॥
छात्रान्तेवासिनौ शिष्ये शैक्षाः प्राथमकल्पिकाः ॥
एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ॥ ११ ॥
सतीर्थ्यास्त्वेकगुरवश्चित्तवानभिमभिचित् ॥

विधिना "सोमेन यजेत" इत्यादियागविधायकविधिमात्रेणेष्टवान् यागं कृतवान् स यज्वा स्यात् एकम् । यज्वानौ ॥ ८ ॥ यः गीष्पतीष्ट्या बृहस्पतिसवविधिना इष्टवान् स स्थपतिरित्युच्यते । वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति तद्विधिः एकम् । सोमपीथी "सोमपीती सोमपीवी" सोमपाः "सोमपः" द्वे सोमयाजिनः । सोमपीथिनौ "सर्वदाऽयम्, दीक्षितस्तु तत्कालम्" येन सर्वस्वदक्षिणो विश्वजिन्नामा याग इष्टः स सर्ववेदाः स्यात् एकम् । "सर्वस्वं दक्षिणा यत्र । सर्वं वेदयति सर्ववेदाः । विद्लृ लाभे" । सर्ववेदसौ ॥ ९ ॥ साङ्गे शिक्षाद्यङ्गोपेते प्रवचने वेदे अधिती कृताध्ययनोऽनूचान इत्येकम् । योऽनूचानो गुरोः सकाशात् गृहस्थाद्याश्रमान्तरप्राप्तये लब्धानुज्ञः स समावृतः स्यात् एकम् । अभिषवे स्नाने कृते सति सुत्वा स्यात् । "सुयजोर्ङ्वनिप्" इति सुनोतेर्भूते ङ्वनिप् । सुत्वन् । सुत्वा सुत्वानौ । अभिषवः स्नपने पीडने स्नाने सुरासन्धाने च ॥१०॥ छात्रः अन्तेवासी "अन्तवासीत्यपि" शिष्यः त्रीणि । गुरोर्दोषाच्छादनं छत्रं तच्छीलमस्य छात्रः । शीलमित्यनुवर्तमाने "छत्रादिभ्यो णः" इति णप्रत्ययः । अन्ते समीपे वस्तुं शीलमस्यान्तेवासी । शैक्षाः प्राथमकल्पिकाः द्वे आरब्धाध्ययनानां बटूनाम् । शिक्षां लभन्ते ते शैक्षाः । प्रथमकल्पः आद्यारम्भः प्रयोजनं येषां ते प्राथमकल्पिकाः । एकः समानो ब्रह्मव्रताचारो वेदव्रताचरणं येषां ते । एकशाखास्वाध्यायिनो ब्रह्मचारिणस्ते मिथः परस्परं सब्रह्मचारिण इत्युच्यन्ते । "चरणे ब्रह्मचारिणि" इति समानस्य सभावः । एकम् ॥ ११ ॥ एकः समानो गुरुर्येषां ते परस्परं सतीर्थ्याः स्युः । "समानतीर्थे

पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ॥ १२ ॥
उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वारम्भ उपक्रमः ॥
यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ॥ १३ ॥
पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः ॥
एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः ॥ १४ ॥
समज्या परिषद्गोष्ठी सभासमितिसंसदः ॥
आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥ १५ ॥
प्राग्वंशः प्राक् हविर्गेहात्सदस्या विधिदर्शिनः ॥

भासी" इति यत्प्रत्ययः । "तीर्थे ये" इति समानस्य सः । एकम् । योऽग्निं चितवान् सोऽग्निचित् एकं कृताग्निचयनस्य । ऐतिह्यं इतिह द्वयं पारम्पर्येण लोकपरम्परया य उपदेशस्तस्मिन् । इतिहेत्यव्ययं इतिहेति निपातसमुदायस्तत्र भवमैतिह्यम् ॥ १२ ॥ यत्प्रथमं ज्ञानं सा उपज्ञा स्यात् । यथा ग्रन्थस्य पाणिनेरुपज्ञा एकम् । ज्ञात्वा य आरम्भः स उपक्रमः । यथा ग्रन्थस्योपक्रमः ज्ञानपूर्वक आरम्भ इत्यर्थः । एकम् । यज्ञः सवः अध्वरः यागः सप्ततन्तुः मखः क्रतुः सप्त यज्ञस्य ॥ १३ ॥ पाठादयः पञ्च ब्रह्मयज्ञादिनामका महायज्ञाः स्युः एकम् । तत्र पाठो विधिना वेदादेः पठनं स ब्रह्मयज्ञः । होमो वैश्वदेवहोमः स देवयज्ञः । अतिथीनां गृहागतानां सपर्या अन्नादिना तोषणं स मनुष्ययज्ञः । तर्पणं पितॄणामन्नोदकादिना तृप्तिसंपादनं स पितृयज्ञः । बलिः बलिहरणं स भूतयज्ञः । पठनं पाठः । भावे घञ् । मनुः । "अध्यायनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्" इति ॥ १४ ॥ समज्या परिषत् गोष्ठी सभा समितिः संसत् आस्थानी आस्थानं सदः नव सभायाः । परिषदौ । गोष्ठ्यौ । संसदौ । आस्थान्यौ । सदः सान्तं क्लीबे । स्त्रीत्वे तु सदाः । "समजन्ति गच्छन्त्यस्यां समज्या । गावोऽनेका वाचस्तिष्ठन्त्यस्यां गोष्ठी । सह समाना वा भान्त्यस्यां सभा । सभालक्षणं मनुः । "यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः । राज्ञश्चाधिकृतो विद्वान् ब्राह्मणस्तां सभां विदुः" इति । संयन्ति गच्छन्त्यस्यां समितिः । संसीदन्त्यस्यां संसत् । आतिष्ठन्त्यस्यामास्थानी । सीदन्त्यस्यां सदः ॥ १५ ॥ हविर्गेहात्प्राक् पूर्वदेशे सदस्यादीनां यद्गृहं स प्राग्वंश इत्येकम् । यज्ञशालायाः पूर्वपश्चिमस्तम्भयोरर्पितं दीर्घ-

16-20



सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते ॥ १६ ॥

अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् ॥
आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते ॥ १७ ॥

वेदिः परिष्कृता भूमिः समे स्थण्डिलचत्वरे ॥
चषालो यूपकटकः कुम्बा सुगहना वृतिः ॥ १८ ॥

यूपाग्रं तर्म निर्मन्थ्यदारुणि त्वरणिर्द्वयोः ॥
दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥ १९ ॥

अग्नित्रयमिदं त्रेता प्रणीतः संस्कृतोऽनलः ॥
समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः ॥ २० ॥

काष्ठं प्राग्वंश इति क्वचित् । यज्ञकर्मणि विधिं वेदोक्तक्रियाकलापं ये पश्यन्ति ते सदस्याः । ऋत्विग्विशेषा इत्यर्थः । एकम् । सभासदः सभास्ताराः सभ्याः सामाजिकाः चत्वारि सभ्येषु । सभां स्तृणन्ति सभास्ताराः । "स्तृञ् आच्छादने" । सभायां साधवः सभ्याः । समाजं रक्षन्ति सामाजिकाः ॥ १६ ॥ यजुर्विदृत्विगध्वर्युः एकम् । सामविदुद्गाता एकम् । ऋग्वेदवित् होता एकम् । धनैर्वार्याः यजमानेन धनादि दत्त्वा वरणीया ये आग्नीध्राद्यास्ते ऋत्विजः याजकाः द्वे । आग्नीध्र आद्यो येषाम् । आद्यशब्दाद्ब्रह्मोद्गातृहोत्रध्वर्य्वादयः षोडश । ऋतौ यजन्ति ते ऋत्विजः । कात्यस्तु । "वृताः कुर्वन्ति ये यज्ञमृत्विजो याजकाश्च ते" इति ॥ १७ ॥ परिष्कृता यज्ञार्थं साधिता डमरुकाकारा भूमिर्वेदिरित्युच्यते एकम् । वेदीत्यपि । स्थण्डिलं चत्वरं द्वे यथार्थं संस्कृतस्य भूभागस्य । यूपकटकः यूपस्य शिरसि वलयाकारः काष्ठविकारश्चषालः स्यात् एकम् । यागभूमावन्त्यजादिदर्शनवारणाय सुगहना वृतिर्वेष्टनं कुम्बा स्यात् एकम् । स्त्रियाम् ॥ १८ ॥ यूपाग्रं तर्म द्वे यूपाग्रे । तर्मणी । निर्मन्थ्यदारुणि अग्निसिद्ध्यर्थं निर्मन्थनीये काष्ठे अरणिरित्येकम् । स्त्रीपुंसयोः । अरणीति स्त्रियाम् । दक्षिणाग्निः गार्हपत्यः आहवनीयः एते त्रयोऽग्नयः अग्निविशेषाः स्युः एकैकम् । "क्वचित्तु त्रयाणां द्वंद्वः पठ्यते" । ॥ १९ ॥ इदमग्नित्रयं त्रेता स्यात् एकम् । "त्रित्वं इता" त्रेता । स्त्री । त्रेते । मन्त्रादिना संस्कृतोऽग्निः प्रणीत इत्येकम् । समूह्यः परिचाय्यः उपचाय्यः

योो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ॥
तस्मिन्नानाय्योऽथाग्नायी स्वाहा च हुतभुक्प्रिया ॥ २१ ॥

ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धने ॥
गायत्रीप्रमुखं छन्दो हव्यपाके चरुः पुमान् ॥ २२ ॥

आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः ॥
धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा ॥ २३ ॥

पृषदाज्यं सदध्याज्ये परमान्नं तु पायसम् ॥
हव्यकव्ये दैवपित्र्ये अन्ने पात्रं स्रुवादिकम् ॥ २४ ॥

एते त्रयः अग्नौ प्रयोगोऽस्ति येषां ते । अग्निधारणार्थे स्थलविशेषे प्रयुक्ताः ॥ २० ॥ गार्हपत्यादानीयोद्धृत्य यो दक्षिणाग्निः प्रणीयते प्रवेश्यते तत्र आनाय्य इत्येकम् । अग्नायी स्वाहा हुतभुक्प्रिया त्रयमग्नेः प्रियायाम् । अस्य स्वाहाशब्दस्य नाव्ययत्वं द्रव्यवाचित्वात् । अत एव "स्वाहां तु दक्षिणे पार्श्वे" इति प्रयोगः संगच्छते ॥ २१ ॥ अग्निसमिन्धने समित्प्रक्षेपेण वह्निज्वलने या ऋक् प्रयुज्यते सा सामिधेनी धाय्या च स्यात् द्वे । गायत्र्युष्णिगित्यादि छन्दः स्यात् एकम् । सान्तं क्लीबम् । हव्यपाकेऽग्निमुखे हूयमानेऽन्ने चरुरित्येकम् । हव्यस्य पाकः हव्यपाकः । "अनवस्रावितान्तरूष्मपाक ओदनश्चरुः" इति याज्ञिकाः । चर्यते भक्ष्यते इति चरुः । मीमांसकैरपि त्रिवृच्चर्वधिकरणेऽन्नपरत्वं चरुशब्दस्याभ्युपगतम् । विश्वप्रकाशे तु । "चरुर्भाण्डे च हव्यान्ने" इत्यनेकार्थतोक्ता । "अथ पुमान् चरुर्हव्यान्नभाण्डयोः" इति मेदिनी च ॥ २२ ॥ शृतं पक्वं च तदुष्णं च तस्मिन् क्षीरे दधियोगतो या विकृतिः सा आमिक्षा स्यात् एकम् । मृगचर्मणा रचितं यद्व्यजनं तद्धवित्रमित्येकम् । "धुवित्रमित्यपि" ॥ २३ ॥ दधियुक्ते घृते पृषदाज्यमित्येकम् । पृषातकम् । "पृषातकं सदध्याज्ये पृषदाज्यं तदुच्यते" इति हेमचन्द्रः । परमान्नं पायसं द्वे क्षीरान्नस्य । दैवपित्र्ये देवपितृसंबन्धिनि अन्ने क्रमेण हव्यकव्ये स्याताम् । हूयन्ते प्रीण्यन्ते देवा येन हव्यम् । कूयते पितृभ्यः कव्यम् । कु शब्दे । देवेभ्यो दीयमानमन्नं हव्यम् । पितृभ्यो दीयमानमन्नं कव्यमित्यर्थः । अग्निमुखेन देवेभ्योऽन्नं दीयते । विप्रमुखेन पितृभ्योऽन्नमिति । पैत्रमित्यपि । "तस्येद-

ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः ॥
उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः ॥ २५ ॥

परंपराकं शमनं प्रोक्षणं च वधार्थकम् ॥
वाच्यलिङ्गाः प्रमीतोपसंपन्नप्रोक्षिता हते ॥ २६ ॥

सान्नाय्यं हविरग्नौ तु हुतं त्रिषु वषट्कृतम् ॥
दीक्षान्तोऽवभृथो यज्ञे तत्कर्मार्हं तु यज्ञियम् ॥ २७ ॥

त्रिष्वथ क्रतुकर्मेष्टं पूर्तं खातादि कर्म यत् ॥
अमृतं विघसो यज्ञशेषभोजनशेषयोः ॥ २८ ॥

म्" इत्यण् एकैकम् । स्रुवचमसादिकं पात्रं स्यात् एकम् ॥ २४ ॥ ध्रुवा उपभृत् जुहूः एते त्रयः स्रुचो भेदाः । स्त्रियः । स्रुवः एकं पुंसि । "अत्र यथा स्रुवशब्दस्य रूपभेदात्पुंस्त्वे सिद्धे नेति पुंस्त्वविधिस्तथा पूर्वत्र स्त्रिय इति स्त्रीत्वविधिरपि बोध्यः । "स्रुवा द्वयोर्होमपात्रे शल्लकीमूर्वयोः स्त्रियाम्' इति मेदिनीकोशे स्त्रीलिङ्गोऽपि दृश्यते । क्रतौ यः पशुरभिमन्त्र्य हतः असौ उपाकृतः स्यात् एकम् । "उपाक्रियते हिंस्यत इत्युपाकृतः ।" ॥ २५ ॥ परंपराकं शमनं "शसनं ससनं चेत्यपि" प्रोक्षणं त्रयं वधार्थकं यज्ञियपशुहननवाचीत्यर्थः । प्रमीतः उपसंपन्नः प्रोक्षितः त्रीणि यागार्थं हते पशुमात्रे । वाच्यलिङ्गानि ॥ २६ ॥ हविर्विशेषः सान्नाय्यं स्यात् एकम् । अग्नौ हुतं याज्यादि वषट्कृतं स्यात् तत्त्रिषु वाच्यलिङ्गं एकम् । "वषडिति मन्त्रोपलक्षणम् । वषण्मन्त्रेण कृतं प्रक्षिप्तम्" । यज्ञे दीक्षान्तः दीक्षायाः समापकः इष्टिपूर्वकस्नानविशेषः अवभृथः एकम् । तत्कर्मार्हं यज्ञकर्मयोग्यं वस्तु "द्विजद्रव्यादि" यज्ञियं एकं त्रिषु ॥२७॥ यत्क्रतुकर्म तदिष्टं स्यात् । क्रतुर्यज्ञः कर्म दानम् । "एकाग्निकर्महवनं त्रेतायां यच्च हूयते । अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते" इति मनुः । एकम् । खातं वापीकूपादि । आदिना देवालयादि यत्कर्म तत्पूर्तं स्यात् एकम् । "पुष्करिण्यः सभा वापी देवतायतनानि च । आरामश्च विशेषेण पूर्तं कर्म विनिर्दिशेत्" इति स्मृतिः । यज्ञशेषे पुरोडाशादौ अमृतमित्येकम् । भोजनशेषे देवपित्रादि भुक्तशेषे विघस इत्येकम् । यन्मनुः । "विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः । विघसो भुक्तशेषं स्यादग्निशेषमथामृतम्" इति ॥ २८ ॥ त्यागः

त्यागो विहापितं दानमुत्सर्जनविसर्जने ॥
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥ २९ ॥
प्रादेशनं निर्वपणमपवर्जनमंहतिः ॥
मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदेहिकम् ॥ ३० ॥
पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः ॥
अन्वाहार्यं मासिकेऽशोऽष्टमोऽह्नः कुतपोऽस्त्रियाम् ॥ ३१ ॥
पर्येषणा परीष्टिश्चान्वेषणा च गवेषणा ॥
सनिस्त्वध्येषणा याच्ञाऽभिशस्तिर्याचनार्थना ॥ ३२ ॥
षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि ॥

विहापितं दानं उत्सर्जनं विसर्जनं विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥२९॥ प्रादेशनं निर्वपणं अपवर्जनं अंहतिः त्रयोदश दानस्य । तत्र अंहतिः स्त्री । मृतार्थे मृताय तदहे दानं मरणदिनमारभ्य दशाहपर्यन्तं पिण्डादिदानं और्ध्वदेहिकं स्यात् । "और्ध्वदैहिकमित्युभयपदवृद्धिरपि ।" तत्त्रिषु । स्त्रियां तु और्ध्वदेहिकी क्रिया । "तदहर्दानमित्यपि पाठः" ॥ ३० ॥ पितृदानं निवापः द्वे पितॄनुद्दिश्य यद्दानं क्रियते तत्र । शास्त्रतस्तत्कर्म पितृसंबन्धिकर्म श्राद्धं स्यात् । श्रद्धाऽस्ति यत्र तच्छ्राद्धम् । "प्रज्ञाश्रद्धा' इति णः । मासिकेऽमावास्याश्राद्धेऽन्वाहार्यमित्येकम् । "पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्" इति मनुः । अह्नोऽष्टमोंऽशः कुतपः स्यात् । अंशशब्दोऽत्र मुहूर्तपरः । "मुहूर्तात्सप्तमादूर्ध्वं मुहूर्तान्नवमादधः । स कालः कुतपो ज्ञेयः" इत्युक्तेः । "दिवसस्याष्टमे भागे मन्दीभवति भास्करे । स कालः कुतपो ज्ञेयः" इति शातातपः । "क्लीबे तु कुतपम् । शब्दरत्नावल्यां तु कुतुप इति उकारोऽपि" ॥ ३१ ॥ पर्येषणा परीष्टिः द्वे श्राद्धे द्विजभक्तिशुश्रूषायाः । अन्वेषणा गवेषणा द्वे धर्मादिमार्गणस्य । "चतुष्कमपि धर्मान्वेषणस्येत्यपि मतम्" । सनिः अध्येषणा द्वे यत् गुर्वादेः क्वचिदर्थे प्रार्थनया नियोजनं तत्र । याच्ञा अभिशस्तिः "अभिषस्तिः" याचना अर्थना चत्वारि याचनायाः । याच्ञेत्यत्र चकारञकारसंयोगः ॥ ३२ ॥ षडिति अर्घ्यपाद्यातिथ्यातिथेयौवेशिकागंतव इति षड् शब्दा वाच्यलिङ्गा इत्यर्थः । अर्घः पूजोपचारस्तदर्थे वारिणि जले

33-36



क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि ॥ ३३ ॥
स्युरावेशिक आगन्तुरतिथिर्ना गृहागते ॥
प्राघूर्णिकः प्राघुणकश्चाभ्युत्थानं तु गौरवम् ॥ ३४ ॥
पूजा नमस्याऽपचितिः सपर्यार्चार्हणाः समाः ॥
वरिवस्या तु शुश्रूषा परिचर्याप्युपासनाँ ॥ ३५ ॥
व्रज्याऽटाट्या पर्यटनं चर्या त्वीर्यापथे स्थितिः ॥
उपस्पर्शस्त्वाचमनमथ मौनमभाषणम् ॥ ३६ ॥
( " प्राचेतसश्चादिकविः स्यान्मैत्रावरुणिश्च सः ॥

अर्घ्यमित्येकम् । पादाय पादार्थे वारिणि पाद्यं एकम् । अतिथ्यर्थे आतिथ्यमित्येकम् । अत्रातिथौ यत्साधु तत्र आतिथेयमित्येकम् ॥ ३३ ॥ आवेशिकः आगन्तुः अतिथिः गृहागतः चत्वारि गृहागतस्य । ना पुमान् । "त्रिकाण्डशेषे तु प्राघुणस्त्वतिथिर्द्वयोरित्युक्तम् । स्त्रियां तु अतिथी" । "दूराच्चोपगतं श्रान्तं वैश्वदेव उपस्थितम् । अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः" इति व्यासः । प्राघूर्णिकः प्राघुणकः द्वे अभ्यागतस्य । "तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना । सोऽतिथिः सर्वभूतानां शेषानभ्यागतान्विदुः" इति यमः । अभ्युत्थानं गौरवं द्वे उत्थानपूर्वकसत्कारस्य ॥ ३४ ॥ पूजा नमस्या अपचितिः सपर्या अर्चा अर्हणा षट् पूजायाः । वरिवस्या शुश्रूषा परिचर्या उपासना उपासनमित्यपि । "उपासनं शराभ्यासेऽप्युपास्तावासनेऽपि च" इति विश्वमेदिन्यौ । चतुष्कमुपासनस्य । तत्र शुश्रूषाशब्दो गुरुसेवायां लाक्षणिकः । "परिचर्या तूपचर्येति भागुरिः" ॥ ३५ ॥ व्रज्या अटा अट्या पर्यटनं चत्वारि पर्यटनस्य । "अटा पर्यटनं भ्रमः" इति रत्नकोशः । अट्येत्यत्र मूर्धन्यतालव्यसंयोगः । वृथाट्या खलु सा तस्येति प्रयोगः । ईर्यापथे ध्यानमौनादिके योगमार्गे स्थितिः चर्या स्यात् एकम् । "चर्या त्वीर्या विदुर्बुधाः" इति ग्रन्थान्तरे । उपस्पर्शः आचमनं द्वे "उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपि" इति मेदिनी । मौनं अभाषणं द्वे ॥ ३६ ॥ प्राचेतस इत्यादिसार्धश्लोकः क्वचिदस्ति तत्र प्राचेतसादिचतुष्कं वाल्मीकस्य । मैत्रावरुण इत्यपि । वाल्मीकिः "वल्मिकिरिति द्विरूपकोशे । वल्मीकः । अपि वाल्मीकवल्मी-

वाल्मीकश्चाथ गाधेयो विश्वामित्रश्च कौशिकः ॥ १ ॥
व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः ") (१)

आनुपूर्वी स्त्रियां वाऽऽवृत्परिपाटी अनुक्रमः ॥
पर्यायश्चातिपातस्तु स्यात्पर्यय उपात्ययः ॥ ३७ ॥

नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम् ॥
औपवस्तं तूपवासो विवेकः पृथगात्मता ॥ ३८ ॥

स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिरथाञ्जलिः ॥
पाठे ब्रह्माञ्जलिः पाठे विप्रुषो ब्रह्मबिन्दवः ॥ ३९ ॥

काविति त्रिकाण्डशेषः । वल्मिक इति शब्दरत्नावल्याम् ।" गाधेयादित्रयं विश्वामित्रस्य । "तत्र कौषिक इत्यपि" ॥ १ ॥ व्यासादिचतुष्कं व्यासस्य । आनुपूर्वी आवृत् परिपाटिः "परिपाटीति ङीषन्तापि" अनुक्रमः पर्यायः पञ्चकमनुक्रमस्य । आनुपूर्व्यमिति पाठो वा "आनुपूर्वमिति च । स्त्रियां वेति पक्षे क्लीबता ।" आवृतः परिपाटेश्च स्त्रीत्वम् । "परिपाटी अनुक्रम इत्यत्र द्विवचनत्वात्प्रगृह्यसंज्ञायां न यण्" । अतिपातः पर्ययः उपात्ययः त्रीण्यतिक्रमस्य ॥ ३७ ॥ नियमः व्रतं द्वे व्रतमात्रस्य । तच्च व्रतं उपवासचान्द्रायणादि यत्पुण्यकं तज्ज्ञेयम् । "अथवा उपवास आदिर्यस्य कृच्छ्रचान्द्रायणप्राजापत्यनक्तभोजनादेस्तदुपवासादि व्रतं पुण्यमित्येकमिति" । औपवस्तं उपवस्तमित्यपि । क्वचिदौपवस्त्रमिति पाठः । तत्र तृच्प्रत्ययान्तादुपवस्तुरिदं कर्मेत्यर्थे "तस्येदम्" इत्यण् । उपोषणं उपोषितमित्यपि । भावे क्तः । उपवासः द्वे उपवासस्य । "माषान्मधुमसूरांश्च वर्जयेदौपवस्तकः" इति प्रयोगः । पृथगात्मता पृथक्स्वरूपत्वं विवेकः स्यात् एकम् । यथा चिज्जडयोर्विवेक इति ॥ ३८ ॥ वृत्तं सदाचारपालनं अध्ययनं वेदाभ्यासः तयोर्ऋद्धिः संपत्तिः ब्रह्मवर्चसं एकम् । ब्रह्मणः तपःस्वाध्यायादेर्वर्चस्तेजो ब्रह्मवर्चसमिति स्वामी । पाठे वेदपठने योऽञ्जलिः स ब्रह्माञ्जलिः । अध्ययनस्यादौ हस्तयोर्हि प्रणवोच्चारपूर्वकमञ्जलिः क्रियते एकम् । वेदपाठे विप्रुषो मुखात् निर्गतजलकणा ब्रह्मबिन्दवः स्युः । "विप्लुष इत्यपि पाठः" एकम् ॥ ३९ ॥ ध्यानयोगयो-

---

इदं सार्धं पद्यं तालपत्रपुस्तकेऽपि नास्ति ॥

39-43



ध्यानयोगासने ब्रह्मासनं कल्पे विधिक्रमौ ॥
मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः ॥ ४० ॥
संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः ॥
समे तु पादग्रहणमभिवादनमित्युभे ॥ ४१ ॥
भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ॥
तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः ॥ ४२ ॥
तपःक्लेशसहो दान्तो वर्णिनो ब्रह्मचारिणः ॥
ऋषयः सत्यवचसः स्नातकस्त्वाप्लुतो व्रती ॥ ४३ ॥
ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ॥

रासने ब्रह्मासनमित्येकम् । "एकतानेन मनसा स्मरणं ध्यानमुच्यते । चित्तवृत्तिनिरोधस्तु सद्भिर्योगः इति स्मृतः" । कल्पः विधिः क्रमः त्रयं नियोगशास्त्रस्य । यः प्रथमः कल्पः आद्यो विधिः स मुख्यः स्यात् । यथा व्रीहिभिर्यजेत । ततो मुख्यादधमो गौणः अनुकल्पः स्यात् । यथा व्रीह्यभावे नीवारैर्यजेत ॥ ४० ॥ संस्कारपूर्वकं श्रुतेर्ग्रहणं उपाकरणं स्यात् एकम् । उपाकर्मणि "संस्कार उपनयनम्" । पादग्रहणं अभिवादनं द्वे नामगोत्रोक्तिपूर्वकस्य नमस्कारविशेषस्य ॥ ४१ ॥ भिक्षुः परिव्राट् कर्मन्दी पाराशरी मस्करी पञ्च संन्यासिनः । परिव्राजौ, कर्मन्देन प्रोक्तं भिक्षुसूत्रमधीते कर्मन्दी । पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीते पाराशरी । मस्करो ज्ञानं वेणुर्वास्यास्ति मस्करी । "मस्करमस्करिणौ वेणुपरिव्राजकयोः" इति निपातनात्सुडागमः । तपस्वी तापसः पारिकाङ्क्षी त्रयं तपोयुक्तस्य । "पारि ब्रह्मज्ञानं काङ्क्षति पारिकाङ्क्षी" । वाचंयमः मुनिः द्वे वाग्यतस्य ॥ ४२ ॥ तपसः क्लेशेऽनुद्विग्नो दान्तः स्यात् एकम् । वर्णी ब्रह्मचारी द्वे ब्रह्मचारिणः । ब्रह्म वेदः तदध्ययनार्थं व्रतमपि ब्रह्म तच्चरतीति णिनिः । ऋषिः सत्यवचः द्वे ऋषिसामान्यस्य । तद्भेदास्तु महर्षिदेवर्षिब्रह्मर्षिप्रभृतयः । यो व्रती देवव्रतवान् आप्लुतः स्नातः कृतसमावर्तन इति यावत् सः स्नातक इत्युच्यते । "आप्लवव्रतीति पाठो वा" । यदाहुः "गुरवे तु वरं दत्वा स्नायाद्वा तदनुज्ञया । वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा" इति ॥ ४३ ॥ निर्जितः स्ववशस्थ इन्द्रियसमूहो यैस्ते यतिनः यतयः द्वे । यो नियमवशात् भूमिविशेषे

यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ ॥ ४४ ॥
स्थाण्डिलश्चाथ विरजस्तमसः स्युर्द्वयातिगाः ॥
पवित्रः प्रयतः पूतः पाखण्डाः सर्वलिङ्गिनः ॥ ४५ ॥
पालाशो दण्ड आषाढो व्रते राम्भस्तु वैणवः ॥
अस्त्री कमण्डलुः कुण्डी व्रतिनामासनं वृषी ॥ ४६ ॥
अजिनं चर्म कृत्तिः स्त्री भैक्षं भिक्षाकदम्बकम् ॥
स्वाध्यायः स्याज्जपः सुत्याऽभिषवः सवनं च सा ॥ ४७ ॥
सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ॥
दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् ॥ ४८ ॥

शेते असौ स्थण्डिलशायी ॥ ४४ ॥ स्थाण्डिलः द्वे । विरजस्तमाः द्वयातिगः द्वे सत्त्वैकनिष्ठेषु व्यासादिषु । "रजस्तमोभ्यां विगतः विरजस्तमाः" । पवित्रः प्रयतः पूतः त्रयं पवित्रस्य । पाखण्डः सर्वलिङ्गी द्वे बौद्धक्षपणकादिषु दुःशास्त्रवर्तिषु । "तत्र पाखण्डः कवर्गद्वितीयमध्यः । पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते । तं खण्डयन्ति ते तस्मात्पाखण्डास्तेन हेतुना" इति ॥ ४५॥ व्रते ब्रह्मचारिणः पलाशसंबन्धी दण्ड आषाढ इत्युच्यते एकम् । वेणुसंबन्धी दण्डो राम्भ इत्येकम् । रम्भशब्दो वेणुवाचकः तस्य विकारः। "रम्भा कदल्यप्सरसोर्ना वेणौ वानरान्तरे" इति विश्वः । कमण्डलुः कुण्डी द्वे व्रतिनां जलपात्रस्य । "क्लीबे कमण्डलु । कुण्डी स्त्रियाम् । जानपदेति ङीष्" । कुण्ड्यौ । व्रतिनां यदासनं सा वृषी एकम् । वृसीति पाठान्तरम् । वृवन्तोऽस्यां सीदन्तीति ॥४६॥ अजिनं चर्म कृत्तिः त्रीणि मृगादेश्चर्मणि । भिक्षाणां समूहो भैक्षम् । स्वाध्यायः जपः द्वे वेदाभ्यासस्य । "सु अतीवावृत्त्या स्वार्थं वाध्ययनं स्वाध्यायः" । सुत्या अभिषवः सवनं त्रीणि सोमाभिषवस्य । तत्र सुत्या टाबन्ता । सुवन्ति सोममस्यां सुत्या । सञ्ज्ञायां समजेति क्यप् ॥ ४७ ॥ सर्वैनसां सर्वपापानां नाशकं जप्यं ऋगादि अघमर्षणं स्यात् एकम् । स्त्रियां त्वघमर्षणी । पक्षान्तयोरमावास्यायां पौर्णमास्यां च विहितौ यागौ क्रमेण दर्शः पौर्णमासश्च स्यातां एकैकम् ॥ ४८ ॥ शरीरसाधनापेक्षं शरीरमात्रेण साध्यं नित्यं यत्कर्म तद्यमः । आह च । "अहिंसा सत्यमस्तेयं ब्रह्मचर्यपरिग्रहौ" । यमा इति एकम् ।

45-52



शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः ॥
नियमस्तु स यत्कर्म नित्यमागन्तुसाधनम् ॥ ४९ ॥
("क्षौरं तु भद्राकरणं मुण्डनं वपनं त्रिषु" ॥) (१)
उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे ॥
प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम् ॥ ५० ॥
अङ्गुल्यग्रे तीर्थं दैवं स्वल्पाङ्गुल्योर्मूले कायम् ॥
मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं मूले त्वङ्गुष्ठस्य ब्राह्मम् ॥ ५१ ॥
स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ॥
देवभूयादिकं तद्वत्कृच्छ्रं सान्तपनादिकम् ॥ ५२ ॥

यत्कर्म आगन्तुसाधनं आगन्तु बाह्यं साधनं यत्र तत् । मृज्जलादिना साध्यमित्यर्थः । नित्यं कृत्रिमं यत्कर्म स नियमः । यदाह । "शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधाना नियमाः" इति । एकम् । "क्वचित्पुस्तके क्षौरं तु इत्यादि दृश्यते तदत्रत्यं नेत्युपेक्षितम् । क्षौरादिचतुष्कं मुण्डनस्येत्युपेक्षितसङ्ग्रहः" ॥ ४९ ॥ दक्षिणे करे प्रोद्धृते सति यद्ब्रह्मसूत्रं तदुपवीतं स्यात् एकम् । अन्यस्मिन्वामे करे प्रोद्धृते प्राचीनावीतं स्यात् एकम् । कण्ठे लम्बितं ऋजुभावेन विन्यस्तं तत् ब्रह्मसूत्रं निवीतमित्येकम् ॥ ५० ॥ अङ्गुलीनामग्रे दैवं तीर्थं ज्ञेयम् । अतो दैवतीर्थेन तर्पयेदित्यत्राङ्गुल्यग्रेणेति बोध्यम् । स्वल्पाङ्गुल्योरनामिकायाः कनिष्ठिकायाश्च मूले कायम् । कः प्रजापतिर्देवताऽस्य कार्यं प्राजापत्यमित्यर्थः । अङ्गुष्ठतर्जन्योर्मध्यभागे पित्र्यम् । "पैत्र्यमित्यपि पैत्रमिति च" । अङ्गुष्ठस्य मूले तु ब्राह्मं तीर्थम् । यद्याज्ञवल्क्यः । "कनिष्ठातर्जन्यङ्गुष्ठमूलान्यग्रं करस्य च । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्" । एकैकम् ॥ ५१ ॥ ब्रह्मभूयादि त्रयं ब्रह्मभावस्य । "ब्रह्मणो भावः ब्रह्मभूयम्" । तद्वत् देवभूयं देवत्वं देवसायुज्यमिति त्रयं देवभावस्य । सान्तपनादिकं कृच्छ्रं स्यात् एकम् । तदुक्तम् । "गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम्" इति । आदिना प्राजापत्यादिग्रहः ॥ ५२ ॥ संन्यासपूर्वके

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

संन्यासवत्यनशने पुमान्प्रायोऽथ वीरहा ॥
नष्टाग्निः कुहना लोभान्मिथ्येर्यापथकल्पना ॥ ५३ ॥
व्रात्यः संस्कारहीनः स्यादस्वाध्यायो निराकृतिः ॥
धर्मध्वजी लिङ्गवृत्तिरवकीर्णी क्षतव्रतः ॥ ५४ ॥
सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ॥
अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् ॥ ५५ ॥
परिवेत्ताऽनुजोऽनूढे ज्येष्ठे दारपरिग्रहात्
परिवित्तिस्तु तज्ज्यायान् विवाहोपयमौ समौ ॥ ५६ ॥
तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ॥
व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ॥ ५७ ॥

भोजनत्यागे प्राय इत्येकम् । अदन्तः पुंसि । वीरहा नष्टाग्निः द्वे नष्टोऽग्निर्यस्य तस्य । "वीरोऽग्निस्तं हन्तीति वीरहा" । वीरहणौ । लोभात्परधनाद्यभिलाषात् या मिथ्येर्यापथकल्पना दम्भेन ध्यानमौनादिसंपादनं सा कुहनेत्येकम् ॥५३॥ संस्कारेणोपनयनेन गौणकालोत्तरं हीनो व्रात्य इत्यर्थः एकम् । अस्वाध्यायः स्वशाखाध्ययनशून्यो निराकृतिः एकम् । "आकृतेरध्ययनचेष्टाया निर्गतो निराकृतिः" । धर्मध्वजी लिङ्गवृत्तिः द्वे जीविकार्थे जटादिधारणवतः । लिङ्गं धर्मचिह्नं वृत्तिर्जीविका यस्य सः । अवकीर्णी क्षतव्रतः द्वे नष्टब्रह्मचर्यस्य । "अवकीर्णं विक्षिप्तं व्रतमनेनावकीर्णी" अवकीर्णिनौ ॥ ५४ ॥ अंशुमान् रविर्यस्मिन् सुप्तेऽस्तमेति सोऽभिनिर्मुक्तः एकम् । "अभि सर्वतः सायन्तनं कर्म निश्चयेन मुक्तं येन" । यस्मिन्सुप्तेंऽशुमानुदेति सोऽभ्युदितः । "अभि सर्वतः उदतिशयेन इतं गतं प्रातस्तनं कर्मास्य" ॥ ५० ॥ ज्येष्ठे भ्रातर्यकृतदारपरिग्रहे सति कृतदारपरिग्रहः कनिष्ठः परिवेत्ता स्यात् एकम् । परिविन्दति ज्येष्ठं परित्यज्य भार्यां लभते । "विदॢ लाभे" । तस्य परिवेत्तुर्ज्यायान् ज्येष्ठः परिवित्तिः स्यात् एकम् । विवाहः उपयमः ॥ ५६ ॥ परिणयः उद्वाहः उपयामः पाणिपीडनं षट् विवाहस्य । व्यवायः ग्राम्यधर्मः मैथुनं निधुवनं रतं पञ्च मैथुनस्य । "नितरां धुवनं हस्तपादादिचालनमत्र निधुवनम् । व्यवायो ग्राम्यधर्मश्च रतं निधुवनं च सेति उत्तरार्धं अन्यथा केचित् पठन्ति"

त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः ॥
सबलैस्तैश्चतुर्भद्रं जन्याः स्निग्धा वरस्य ये ॥ ५८ ॥

इति ब्रह्मवर्गः ॥ ७ ॥

---

मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ॥
राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः ॥ १ ॥
राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः ॥
चक्रवर्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः ॥ २ ॥
येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ॥
शास्ति यश्चाज्ञया राज्ञः स सम्राडथ राजकम् ॥ ३ ॥
राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात् ॥

॥ ५७ ॥ धर्मो वेदविहितो यागादिः । कामो यथाविधि स्त्रीसेवनम् । अर्थो धनम् । एभिस्त्रिभिः समुदितस्त्रिवर्गः एकम् । समोक्षकैः धर्मार्थकाममोक्षैरित्यर्थः । एतैः समुदितश्चतुर्वर्ग इत्येकम् । तैर्धर्मादिभिः सबलैश्चतुर्भद्रमित्येकम् । "चत्वारि भद्राणि श्रेष्ठानि अत्र" । वरस्य जामातुर्ये स्निग्धा वयस्याः जन्याः स्युरित्येकम् । जनीं वधूं वहन्ति प्रापयन्ति ते ॥ ५८ ॥ इति ब्रह्मवर्गः ॥ ७ ॥ मूर्धाभिषिक्तः राज्यदानसमये मूर्धन्यभिषिच्यते इति प्रसिद्धमेतत् । राजन्यः बाहुजः क्षत्रियः । क्षतात् दुःखात् त्रायते । विराट् पञ्च क्षत्रियस्य । विराजौ । राजा राट् पार्थिवः क्ष्माभृत् । "क्ष्माभुक्" नृपः भूपः महीक्षित् सप्त राज्ञः । राजानौ । राजौ । क्ष्माभृतौ । महीक्षितौ । राज्ञि राडिति सप्तम्यन्तपाठः क्वचित् दृश्यते ॥ १ ॥ प्रणता अशेषसामन्ता अखिलदेशान्तरनृपा यस्य स राजा अधीश्वर इत्येकम् । चक्रवर्ती सार्वभौमः द्वे आसमुद्रक्षितीशस्य । तदन्यो नृपो मण्डलेश्वर इत्येकम् ॥ २ ॥ राजसूयाख्यक्रतुविशेषेण येनेष्टं द्वादशमण्डलस्येश्वरश्च यः यश्च स्वाज्ञया सर्वभूपान् शास्ति ईदृशविशेषणत्रयेण विशिष्टो राजा सम्राट् स्यात् । "एकैकविशेषणविशिष्टोऽपि सम्राट् इति केचित् । एकम्" ॥ ३ ॥ नृपतीनां गणे राजकमित्येकम् । क्षत्रियाणां गणे राजन्यकमित्येकम् । मन्त्री धीसचिवः अमात्यः त्रयं बुद्धिसहायस्य ।

मन्त्री धीसचिवोऽमात्योऽन्ये कर्मसचिवास्ततः ॥ ४ ॥
महामात्राः प्रधानानि पुरोधास्तु पुरोहितः ॥
द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ ॥ ५ ॥
प्रतीहारो द्वारपालद्वास्थद्वास्थितदर्शकाः ॥
रक्षिवर्गस्त्वनीकस्थोऽथाध्यक्षाधिकृतौ समौ ॥ ६ ॥
स्थायुकोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु ॥
भौरिकः कनकाध्यक्षो रूपाध्यक्षस्तु नैष्किकः ॥ ७ ॥

धीप्रधानः सचिवो धीसचिवः। अमा सह समीपे वा भवः अमात्यः। "अमांतिकसहार्थयोः" इति कोशान्तरम्। "अन्ययात्यप्"। ततो धीसचिवादन्ये कर्मोपयुक्ताः सचिवाः कर्मसचिवाः स्युरित्येकम् ॥ ४ ॥ महामात्राः प्रधानानि द्वे मुख्यानां राजसहायानाम्। "प्रधान इत्यपि"। "महामात्रः प्रधानः स्यात्" इति पुंसकाण्डे बोपालितात्। महती मात्रा येषां ते महामात्राः। "मात्रा कर्णविभूषायां वित्ते माने परिच्छदे" इति मेदिनी। पुरोधाः पुरोहितः द्वे। व्यवहाराणां ऋणादिविषये वादिप्रतिवादिनिमितविवादानां द्रष्टरि निर्णेतरि प्राड्विवाकः अक्षदर्शकः इति द्वे "न्यायाधीश" इति ख्यातस्य। प्राट् च विवाकश्च प्राड्विवाकौ प्रश्नविवेकावस्य स्तः प्राड्विवाकः। यदुक्तम्। "विवादानुगतं पृष्ट्वा पूर्ववाक्यं प्रयत्नतः। विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः" इति। अक्षाणां व्यवहाराणां दर्शकः। "अक्षः कर्षे तुषे चक्रे शकटव्यवहारयोः" इति विश्वः ॥ ५ ॥ प्रतीहारः "प्रतिहारः" द्वारपालः द्वास्थः द्वास्थितः दर्शकः पञ्च द्वारपालस्य। "द्वाःस्थः द्वाःस्थित इति सविसर्गोऽपि पाठः। द्वाःस्थितदर्शक इति समस्तमपि"। प्रतीहारेऽपि दर्शक इति रुद्रः। द्वारपो "द्वास्थितादर्शी" इति रभसः। रक्षिवर्गः अनीकस्थः द्वे राजरक्षकगणस्य। अध्यक्षः अधिकृतः द्वे अधिकारी इति ख्यातस्य। "अधि अधिकं उपरि वा क्रियतेऽस्मात् अधिकृतः" ॥ ६ ॥ एकस्मिन् ग्रामे अधिकृतः स्थायुकः स्यात् "शेखदार इति ख्यातस्य"। भूरिषु बहुषु ग्रामेष्वधिकृतो गोप इत्येकम् "गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि। "ग्रामौघाधिकृते पुंसि शारिवाख्यौषधौ स्त्रियाम्" इति मेदिनी। भौरिकः कनकाध्यक्षः द्वे स्वर्णाध्यक्षस्य। रूपाध्यक्षः नैष्किकः द्वे रूप्याधिकृतस्य ॥ ७ ॥

7-11



अन्तःपुरे त्वधिकृतः स्यादन्तर्वेशिको जनः ॥
सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥ ८ ॥

षण्ढो वर्षवरस्तुल्यौ सेवकार्थ्यनुजीविनः ॥
विषयानन्तरो राजा शत्रुर्मित्रमतः परम् ॥ ९ ॥

उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः ॥
रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥ १० ॥

द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः ॥
अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ॥ ११ ॥

अन्तःपुरेऽधिकृतो जनः अन्तर्वेशिकः स्यात् एकम् । "अन्तर्वेशे नियुक्तः अन्तर्वेशिकः" । सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाः चत्वारि राजसन्निधौ "राज्ञां स्त्र्यगारे वा" वेत्रधराः कञ्चुकिनः पुरुषास्तिष्ठन्ति तेषाम् । "सुष्ठु विदं विद्वांसमपि लान्ति वशं कुर्वन्ति सुविदल्लास्तासामिमे रक्षकाः सौविदल्लाः । तिष्ठन्त्येषु पुरुषाः तेषां स्थानां दाराणां पतयः पालकाः स्थापत्याः । सुविदश्चतुरास्त्रियस्तासां रक्षकाः सौविदाः । "तस्येदम्" इत्यण् ॥ ८ ॥ षण्ढः "शण्ढः शण्डः षण्डः" । वर्षवरः द्वे अन्तःपुरचारिणः क्लीबमात्रस्य "खोजा इति ख्यातस्य" । यदुक्तम् । "ये त्वल्पसत्त्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः । जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः" इति । सेवकः अर्थी अनुजीवी त्रीणि सेवकस्य । विषयात्स्वदेशादनन्तरोऽव्यवहितो राजा शत्रुः स्यात् एकम् । अतः शत्रोः परं मित्रम् । राजान्तरेण व्यवहितो राजा मित्रं स्यादित्यर्थः एकम् ॥ ९ ॥ परतरः शत्रुमित्राभ्यां परो राजा उदासीनः स्यात् । अतिव्यवहित उदासीन इत्यर्थः एकम् । पृष्ठतः पश्चाद्देशे वर्तमानो राजा पार्ष्णिग्राहः । राज्ञि शत्रुजयार्थं पुरतो गते यस्तद्राष्ट्रं जिघृक्षति स पृष्ठवर्ती पार्ष्णिग्राह इत्यर्थः एकम् । रिपुः वैरी सपत्नः अरिः द्विषन् द्वेषणः दुर्हृदः ॥ १० ॥ द्विट् विपक्षः अहितः अमित्रः दस्युः शात्रवः शत्रुः अभिघाती अभियाती अभियातिश्चापि । "द्वेष्योऽभियातिरमित्रः" इति रत्नकोशः । परः अरातिः प्रत्यर्थी परिपन्थी एकोनविंशतिर्नामानि शत्रोः । "सपत्नारिरिति समस्तमपि" । द्विषन्तौ । दुर्हृदौ । द्विषौ । अभिघातिनौ

वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत् ॥
सख्यं साप्तपदीनं स्यादनुरोधोऽनुवर्तनम् ॥ १२ ॥
यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः ॥
चारश्च गूढपुरुषश्चाप्तप्रत्ययितौ समौ ॥ १३ ॥
सांवत्सरो ज्योतिषिको दैवज्ञगणकावपि ॥
स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि ॥ १४ ॥
तान्त्रिको ज्ञातसिद्धान्तः सत्री गृहपतिः समौ ॥
लिपिकरोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके ॥ १५ ॥
लिखिताक्षरसंस्थाने लिपिर्लिबिरुभे स्त्रियौ ॥

॥ ११ ॥ वयस्यः स्निग्धः सवयाः सान्तः त्रयं तुल्यवयसः प्रियस्य । मित्रं सखा सुहृत् । "अत्यागसहनो बन्धुः सदैवानुगतः सुहृत् । एकक्रियं भवेन्मित्रं सप्रमाणः सखा मतः" इति । त्रीणि मित्रस्य । सखेदन्तः । सखायौ । सुहृदौ । सख्यं साप्तपदीनम् । सप्तभिः पदैरवाप्यते यत् द्वे मैत्र्याः । अनुरोधः अनुवर्तनं द्वे आनुकूल्यस्य ॥ १२ ॥ यथार्हवर्णः प्रणिधिः अपसर्पः चरः स्पशः चारः गूढपुरुषः सप्त चारपुरुषस्य गुप्त, बातमीदार, हेर इति ख्यातस्य । यथार्हः वर्ण आकारो यस्य यथार्हवर्णः । स्पशते बाधते परान्स्पशः । आप्तः प्रत्ययितः द्वे विसंवादरहितस्य । प्रत्ययो विश्वासः संजातोऽस्य प्रत्ययितः विश्वासुक इति लोकप्रसिद्धस्य ॥ १३ ॥ सांवत्सरः ज्योतिषिकः दैवज्ञः गणकः मौहूर्तिकः मौहूर्तः ज्ञानी कार्तान्तिकः अष्टौ ज्योतिषिकस्य "जोशी इति ख्यातस्य" ॥ १४ ॥ तान्त्रिकः ज्ञातसिद्धान्तः द्वे शास्त्रवेत्तुः । "ज्ञातः सिद्धान्तो येन ज्ञातसिद्धान्तः" । सत्री गृहपतिः द्वे गृहपतेः "सदान्नादिदानकर्तुः" । लिपिकरः "लिबिकरः लिपिकार इत्यपि । लिपिङ्कर इति च । लिबिङ्कर इति भानुदीक्षितटीकायाम्" । अक्षरचणः अक्षरचुञ्चुः लेखकः चत्वारि लेखकस्य । अक्षरैर्वित्तोऽक्षरचणः । "तेन वित्तश्चुञ्चुप्चणपौ" ॥ १५ ॥ लिखितं अक्षरसंस्थानं लिपिः "लिपी" लिबिः चत्वारि लिखिताक्षरस्य । लिखिताक्षरविन्यास इति पाठे लिखितानामक्षराणां यो विन्यासस्तत्रेत्यर्थः । संदेशहरः दूतः द्वे । संदिश्यत इति संदेशो निरूपणं तद्धरति इति संदेश-

16-18



स्यात्संदेशहरो दूतो दूत्यं तद्भावकर्मणी ॥ १६ ॥
अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ॥
स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥ १७ ॥
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥
सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ॥ १८ ॥
षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः ॥

हरः । तस्य दूतस्य भावे कर्मणि च दूत्यमित्येकम् । "दौत्यमपि । तद्भागकर्मणी इति त्वपपाठः" । दूतस्य भागकर्मणी इति यतश्छान्दसत्वात् ॥१६॥ अध्वनीनः अध्वगः अध्वन्यः पान्थः पथिकः पञ्च पान्थस्य । "स्त्रियां तु पान्था पथिकी । पथष्कन् षित्वात् ङीप्" । स्वामी राजा । अमात्यो मन्त्री । सुहृन्मित्रम् । कोशो धनागारम् । राष्ट्रं जनपदवर्तिभूमिः । दुर्गं दुर्गमस्थानम् "पर्वतादि" । बलं सेना ॥ १७ ॥ एतानि सप्त राज्याङ्गानि स्युः । राज्ञः कर्म राज्यं तस्याङ्गानि आरम्भकाणि । "स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् । परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते" इति कामन्दकीये । एतान्येव प्रकृतिशब्दवाच्यानि स्युः द्वे । प्रकृष्टं कुर्वन्ति राज्यं प्रकृतयः । पौराणां श्रेणयोऽपि प्रकृतयः स्युः । "पौरश्रेणिभिः सहाष्टाङ्गमपि राज्यमित्यर्थः" । यत्कात्यः । "अमात्यश्च तथा पौराः सद्भिः प्रकृतयः स्मृताः" इति । एकम् । शिल्पोपजीविनां पङ्क्तिरत्र श्रेणिः । मुख्यः सजातीयसमूहः श्रेणिरित्यन्ये । सन्धिः संधानं स्वर्णादिना शत्रूणां प्रीत्युत्पादनमिति । संधिशब्दः पुमान् । परमण्डले दाहलुण्ठनादिग्रहणं विग्रहः । शत्रुं प्रति विजिगीषोर्गमनं यानम् । शक्तिप्रतिबन्धे सति कालं प्रतीक्ष्यादिति दुर्गादिकं निर्माय तत्रावस्थानमासनम् । बलिना सह संधिः अबलेन सह विग्रहः इति प्रकारद्वयं द्वैधम् । अरिणा पीड्यमानस्य बलवद्भूपालाद्याश्रयणं आश्रयः । एतेषां भेदास्तु कामन्दकीयादौ द्रष्टव्याः ॥ १८ ॥ एते संध्यादयः षट् गुणाः स्युः एकम् । प्रभावोत्साहमन्त्रजास्तिस्रः शक्तयः स्युः एकम् । तत्र कोशदण्डजं तेजः प्रभावशक्तिः । विक्रमादिनोन्नतिरुत्साहशक्तिः । संधिविग्रहादीनां मन्त्रेण यथावत्स्थापनं मन्त्रशक्तिः । पञ्चाङ्गमन्त्रो मन्त्रशक्तिरित्यन्ये । क्षयः स्थानं वृद्धिरिति त्रयं नीतिवेदिनां त्रिवर्गः स्यात् । नीतिशास्त्रोक्तत्रिवर्गः इत्यर्थः एकम् ।

क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥ १९ ॥
स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम् ॥
सामदाने भेददण्डावित्युपायचतुष्टयम् ॥ २० ॥
साहसं तु दमो दण्डः साम सान्त्वमथो समौ ॥
भेदोपजापावुपधा धर्माद्यैर्यत्परीक्षणम् ॥ २१ ॥
पञ्च त्रिष्वषडक्षीणो यस्तृतीयाद्यगोचरः ॥
विविक्तविजनच्छन्ननिःशलाकास्तथा रहः ॥ २२ ॥

अष्टवर्गस्यापचयः क्षयः । तस्यैवोपचयो वृद्धिः । उपचयापचयराहित्येनावस्थानं स्थानम् । अष्टवर्गस्तु । "कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्यिर्बलं करादानम्" इत्युक्तः ॥ १९ ॥ कोशः अर्थौघः । दण्डः दमः । सेना तज्जन्यं तेजः प्रतापः प्रभावश्च स्यात् द्वे । "अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम्" इति भरतः । साम प्रियवचनादि । तदुक्तम् । "परस्परोपकाराणां दर्शनं गुणकीर्तनम् । संबन्धस्य समाख्यानमायत्याः संप्रकाशनम् ॥ वाचा पेशलया साधु तवाहमिति चार्पणम् । इति सामविधानज्ञैः साम पञ्चविधं स्मृतम्" इति । दानं धनादेः समर्पणम् । भेदः संहतानां शत्रूणां भेदनेनात्मसात्करणम् । दण्डनं दण्डः । एतच्चतुष्कं उपायचतुष्टयं स्यात् । अन्यत्र सप्तोपाया अप्युक्ताः । "साम दानं च भेदश्च दण्डश्चेति चतुष्टयम् । मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः" इति । भेदो दण्डः साम दानमिति पाठांतरम् ॥ २० ॥ साहसं दमः दण्डः त्रीणि दण्डस्य । साम सान्त्वं "द्वे सलूख इति ख्यातस्य" । भेदः उपजापः द्वे संहतयोर्द्वैधीकरणस्य फितूर इति लौकिकप्रसिद्धस्य । धर्मार्थकामैर्भयेन च परीक्षणम् अमात्यादीनामाशान्वेषणं उपधा स्यात् । तद्यथा । भावज्ञानाय राज्ञा प्रेरितेनाप्तेन दुष्टोऽयं राजा तदेनमुत्सृज्यान्यमभिषेचयामोऽन्यं वा साधुं नृपं व्रजाम इत्युक्तोऽमात्यादिर्यदि तद्भाषणं न मन्येत तर्हि सत्यं धार्मिकोऽयमिति निश्चयो धर्मपरीक्षणम् । एवमर्थपरीक्षणादि बुद्ध्यादाहर्तव्यम् । एकम् ॥ २१ ॥ अथाषडक्षीणादिनिःशलाकान्ताः पञ्च शब्दास्त्रिषु वाच्यलिङ्गाः । यस्तृतीयाद्यगोचरः तृतीयादिना न ज्ञायते किंतु द्वाभ्यामेव क्रियते स मन्त्रादिरषडक्षीण इत्येकम् । अविद्यमानानि षडक्षीण्यत्र स अषड-

22-26



रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु ॥
समौ विस्रम्भविश्वासौ भ्रेषो भ्रंशो यथोचितात् ॥ २३ ॥
अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् ॥
युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ॥ २४ ॥
न्याय्यं च त्रिषु षट् संप्रधारणा तु समर्थनम् ॥
अववादस्तु निर्देशो निदेशः शासनं च सः ॥ २५ ॥
शिष्टिश्चाज्ञा च संस्था तु मर्यादा धारणा स्थितिः ॥
आगोऽपराधो मन्तुश्च समे तूद्दानबन्धने ॥ २६ ॥
द्विपाद्यो द्विगुणो दण्डो भागधेयः करो बलिः ॥

क्षीणः। विविक्तः विजनः छन्नः निःशलाकः रहः ॥ २२ ॥ रहः उपांशु सप्त विजनस्य। उपगताः अंशवः किरणाः यत्र। "उपांशुर्जपदेशे स्यादुपांशु विजनेऽव्ययम्" इति। तत्रैकं रहः सान्तं क्लीबम्। द्वितीयं रह उपांशु इति च द्वे अलिङ्गे अव्यये इत्यर्थः। तद्भवे रहोभवे रहस्यमित्येकम्। विस्रम्भः "ताल-व्यमध्योऽपि। विश्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च" इति मेदिनी। विश्वासः द्वे। यथोचितात्स्वरूपाद्भ्रंशः पतनं भ्रेष इत्येकम् ॥ २३ ॥ अभ्रेषः न्यायः कल्पः देशरूपं समञ्जसं पञ्चकं नीतेः। "प्रशस्तं देशनं देशरूपम्। प्रशंसायां रूपप्"। युक्तं औपयिकं लभ्यं भजमानं अभिनीतम् ॥ २४ ॥ न्याय्यं षट् न्यायादनपेतस्य द्रव्यादेः। अभिनीतवदिति वच्छब्दो युक्ता-दीनां पर्यायत्वद्योतनार्थः। एते षडपि त्रिषु। संप्रधारणा समर्थनं द्वे युक्ता-युक्तपरीक्षायाः। अववादःनिर्देशः निदेशःशासनम् ॥ २५ ॥ शिष्टिः आज्ञा षट् कर्माज्ञापनस्य। "कार्यमवलम्ब्य वदनमत्राववादः।" संस्था मर्यादा। मर्येति सीमार्थेऽव्ययम् तत्रादीयते सा। धारणा स्थितिः चत्वारि न्यायमार्गस्थितेः। आगः अपराधः मन्तुः त्रीण्यपराधस्य। आगः सान्तं क्लीबे। मन्तुः पुंसि। उद्दानं बन्धनं द्वे बन्धनस्य ॥२६॥ द्विगुणो दण्डो द्विपाद्यः स्यात् एकम्। "द्वौ पादौ परिमाणमस्य द्विपाद्यः।" भागधेयः करः बलिः त्रीणि कर्षकादिभ्यो राजग्राह्यभागस्य "धारा, पट्टी, वसूल इति ख्यातस्य"। भाग एव भागधेयः "रूपनामभागेभ्यो धेयः" इत्यनेन स्वार्थे भागशब्दाद्धेय-प्रत्ययः। घट्टो नदीतीरादिस्थानं कट्टा इति ख्यातम्। आदिना गुल्म-

घट्टादिदेयं शुल्कोऽस्त्री प्राभृतं तु प्रदेशनम् ॥ २७ ॥
उपायनमुपग्राह्यमुपहारस्तथोपदा ॥
यौतकादि तु यद्देयं सुदायो हरणं च तत् ॥ २८ ॥
तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः ॥
सांदृष्टिकं फलं सद्य उदर्कः फलमुत्तरम् ॥ २९ ॥
अदृष्टं वह्नितोयादि दृष्टं स्वपरचक्रजम् ॥
महीभुजामहिभयं स्वपक्षप्रभवं भयम् ॥ ३० ॥
प्रक्रिया त्वधिकारः स्याच्चामरं तु प्रकीर्णकम् ॥
नृपासनं यत्तद्भद्रासनं सिंहासनं तु तत् ॥ ३१ ॥

गुल्मप्रतोल्यादि । तत्र यद्देयं नेतव्यानेतव्यवस्तुसंबन्धी राजग्राह्यो भागः स शुल्कः स्यात् । लमध्योऽयम् । एकं "जकात इति ख्यातस्य । क्लीबं शुल्कम्" प्राभृतं प्रदेशनम् ॥ २७ ॥ उपायनं उपग्राह्यं उपहारः उपदा षट् नृपगुर्वादिदर्शनादौ समर्प्यमाणस्य वस्तुनः भेट नजराणा इति ख्यातस्य । तत्रोपदा स्त्रियाम् । युतकयोर्वधूवरयोरिदं यौतकम् । आदिना बन्धुदेयादि । यद्देयं तत्सुदायः हरणं च स्यात् द्वे कन्यादानकाले व्रतभिक्षादौ च दीयमानद्रव्यस्य । "यौतकमपि । यौतकं यौतकं च तद्" इति वाचस्पतिः। सुदायः पुंसि ॥ २८ ॥ तत्कालः तदात्वं द्वे "वर्तमानकालस्य" । स चासौ कालश्च तत्कालः । उत्तर आगामी कालः आयतिः स्यात् एकम् । स्त्री । यत्सद्यः फलं तत्सांदृष्टिकं एकम् । उत्तरं भावि फलं उदर्कः स्यात् एकम् ॥ २९ ॥ वह्निरग्न्युत्पातः तोयमतिवृष्ट्यादिः तत्कृतं यद्भयं तत् अदृष्टमित्येकम् । "आदिना हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा । अतिवृष्टिरनावृष्टिर्मूषकाः शलभादयो गृह्यन्ते" । स्वपरराष्ट्रजन्यं चोरादि यद्भयं तत् दृष्टं एकम् । राज्ञां स्वपक्षप्रभवं स्वसहायजन्यं भयं अहिभयं स्यात् । एकम् ॥ ३० ॥ प्रक्रिया अधिकारः द्वे व्यवस्थास्थापनस्य । चामरं चमरमपि चामरेत्यपि । "चमरं चामरे स्त्री तु मञ्जरीमृगभेदयोः" इति मेदिनी । "चामरा चमरे वालव्यजने रोमगुच्छके" इति रभसः । प्रकीर्णकं द्वे "चवरी इति ख्यातस्य" । नृपासनं भद्रासनं द्वे मण्यादिकृतराजासनस्य । तन्नृपासनं स्वर्णनिर्मितं चेत्सिंहासनं स्यात् सिंहाकारमासनमित्यर्थः । एकम् ॥ ३१ ॥ छत्रं आतपत्रं द्वे "छत्रस्य" ।

हैमं छत्रं त्वातपत्रं राज्ञस्तु नृपलक्ष्म तत् ॥
भद्रकुम्भः पूर्णकुम्भो भृङ्गारः कनकालुका ॥ ३२ ॥
निवेशः शिबिरं षण्ढे सज्जनं तूपरक्षणम् ॥
हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥ ३३ ॥
दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः ॥
मतङ्गजो गजो नागः कुञ्जरो वारणः करी ॥ ३४ ॥
इभः स्तम्बेरमः पद्मी यूथनाथस्तु यूथपः ॥
मदोत्कटो मदकलः कलभः करिशावकः ॥ ३५ ॥
प्रभिन्नो गर्जितो मत्तः समा उद्वान्तनिर्मदौ ॥
हास्तिकं गजता वृन्दे करिणी धेनुका वशा ॥ ३६ ॥

राज्ञश्चेच्छत्रं तर्हि नृपलक्ष्म स्यात् एकम् । भद्रकुम्भः पूर्णकुम्भः द्वे पूर्णघटस्य । भृङ्गारः बिभर्ति जलमिति । कनकालुका द्वे स्वर्णरचितपात्रविशेषस्य "झारी इति ख्यातस्य" ॥ ३२ ॥ निवेशः शिबिरं द्वे सैन्यवासस्थानस्य "सेनेचा तळ इति ख्यातस्य । गोट इति ख्यातस्येति केचित्" । शवन्ति गच्छन्ति सैनिका अस्मिन् शिबिरम् । सज्जनं उपरक्षणं द्वे सैन्यरक्षणाय नियुक्तप्रहरिकादिविन्यासस्य "पाहरा, गस्त इति ख्यातस्य" । हस्त्यादिचतुष्टयं सेनाङ्गं स्यात् एकम् । अत्र पादातं पदातिसमूहः । "नाविकाटविकादीनां पदातावन्तर्भावः । नौकानां रथेष्वन्तर्भावः । महिषादीनां गजेष्वन्तर्भाव इति मुकुटः" ॥ ३३ ॥ दन्ती दन्तावलः हस्ती द्विरदः अनेकपः द्विपः मतङ्गजः गजः नागः । "नागो मतङ्गजे सर्पे पुंनागे नागकेसरे" इति कोशान्तरे । कुञ्जरः वारणः करी ॥ ३४ ॥ इभः स्तम्बेरमः पद्मी पञ्चदश हस्तिनः । "अतिशयितः कुञ्जो हनुरस्य कुञ्जरः" । यूथनाथः यूथपः द्वे यूथमुख्यस्य गजस्य । मदोत्कटः मदकलः द्वे मदोन्मत्तस्य । कलभः "करभ इत्यपि" करिशावकः द्वे करिपोतस्य "छावा इति ख्यातस्य" ॥ ३५ ॥ प्रभिन्नः गर्जितः मत्तः त्रीणि क्षरन्मदस्य । उद्वान्तः निर्मदः द्वे गतमदस्य । उद्वमति स्म मदं उद्वान्तः । हास्तिकं गजता द्वे हस्तिनां वृन्दे । करिणी धेनुका वशा त्रीणि हस्तिन्याः । "वशा तालव्यान्ता" । वशा नार्यां वन्ध्यगव्यां हस्तिन्यां

गण्डः कटो मदो दानं वमथुः करशीकरः ॥
कुम्भौ तु पिण्डौ शिरसस्तयोर्मध्ये विदुः पुमान् ॥ ३७ ॥
अवग्रहो ललाटं स्यादीषिका त्वक्षिकूटकम् ॥
अपाङ्गदेशो निर्याणं कर्णमूलं तु चूलिका ॥ ३८ ॥
अधः कुम्भस्य वाहित्थं प्रतिमानमधोऽस्य यत् ॥
आसनं स्कन्धदेशः स्यात्पद्मकं बिन्दुजालकम् ॥ ३९ ॥
पार्श्वभागः पक्षभागो दन्तभागस्तु योऽग्रतः ॥
द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात् ॥ ४० ॥
तोत्रं वेणुकमालानं बन्धस्तम्भेऽथ शृङ्खले ॥

दुहितर्यपीति कोशान्तरम् ॥ ३६ ॥ हस्तिनो गण्डः कपोलः कटः स्यात् । एकम् । मदः दानं द्वे "मदोदकस्य" । वमथुः करशीकरः द्वे करिकरानिर्गतजलकणस्य । शिरसः पिण्डौ कुम्भौ स्यातां एकम् । तयोः कुम्भयोर्मध्ये आकाशस्थानं विदुः स्यात् एकम् ॥ ३७ ॥ गजस्य ललाटं अवग्रहः "अवग्राह इत्यपि" एकम् । ईषिका "इषीका ईषीका इषिका" अक्षिकूटकं द्वे नेत्रगोलकस्य । हस्तिनः अपाङ्गदेशो निर्याणं एकम् । कर्णस्य मूलं चूलिका स्यात् एकम् । चूलिका नाटकस्याङ्गे कर्णमूले तु हस्तिनाम् ॥ ३८ ॥ कुम्भस्याधोभागे वाहित्थम् । इदं ललाटस्याप्यधो ज्ञेयं एकम् । अस्य वाहित्थस्याधोभागे दन्तयोर्मध्यं प्रतिमानं स्यात् एकम् । गजस्य स्कन्धदेश आसनं एकम् । "आसनं द्विरदस्कन्धे पीठे यात्रानिवेशने" इति विश्वः । बिन्दुजालकं बिन्दुसमूहः पद्मकं स्यात् एकम् । पद्ममिव रक्तत्वात्पद्मकम् । हस्तिनो देहे हि प्रायश आरक्तबिन्दवः सन्ति ॥ ३९ ॥ गजस्य पार्श्वभागः पक्षभागः स्यात् एकम् । अग्रतो यो भागः स दन्तभागः स्यात् एकम् । हस्तिनः पूर्वजङ्घादिदेशो गात्रं स्यात् । पश्चाज्जङ्घादिदेशोऽवरं स्यात् । "पवर्गादिमध्यमपि । अपरं तूत्तरार्धे स्यात्पश्चाद्भागे च दन्तिनाम्" इति विश्वविश्वप्रकाशौ एकैकम् ॥ ४० ॥ "तोत्रं वेणुकं "वैणुकम्" । वेणुना निर्वृत्तम् । निर्वृत्तेऽक्षद्यूतादिभ्य इति ठक् । "तोत्रं तु प्राजने वैणुकेऽपि च" इति मेदिनीविश्वप्रकाशौ द्वे तोदनदण्डस्य चाबूक पराणा इत्यादिलौकिकप्रसिद्धस्य । बन्धनाधारस्तम्भे आलानमित्येकम् ।

अन्दुको निगडोऽस्त्री स्यादङ्कुशोऽस्त्री सृणिः स्त्रियाम् ॥ ४१ ॥
दूष्या कक्ष्या वरत्रा स्यात्कल्पना सज्जना समे ॥
प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ॥ ४२ ॥
वीतं त्वसारं हस्त्यश्वं वारी तु गजबन्धनी ॥
घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः ॥ ४३ ॥
वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ॥
आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिनः ॥ ४४ ॥

शृङ्खलं अन्दुकः अन्द्यतेऽनेन। "अदि बन्धने"। निगडः त्रीणि शृङ्खलस्य। "शृङ्खला पुंस्कटीवस्त्रबन्धे च निगडे त्रिषु" इति मेदिनी। अन्दूरित्यप्यन्यत्र। "अन्दूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च" इति मेदिनी। अङ्कुशः सृणिः "ताल-व्यादिरपि। शृणिरङ्कुशवाची च काचश्च तृणवाचक" इति शब्दभेदः। द्वे अङ्कु-शस्य। सृणिः स्त्रियाम्। आरक्षमग्रमवपत्य सृणिं शिताग्रमिति तु माघस्य प्रमादः" ॥ ४१ ॥ दूष्या "चूष्येति मुकुटः" कक्ष्या वरत्रा त्रयं मध्यबन्ध-नोपयोगिन्याश्चर्मरज्ज्वाः। कक्षायां मध्यदेशे भवा कक्ष्या। कल्पना सज्जना द्वे नायकारोहणार्थं गजसज्जीकरणे। प्रवेणी आस्तरणं वर्णः परिस्तोमः कुथः पञ्च गजपृष्ठवर्तिनः आस्तरणस्य। हत्तीची झूल इति लौकिकभाषायां प्रसिद्धम्। स्त्रियां तु कुथा। "स्त्री प्रवेणी कुथं त्रिषु" इति बोपालितः। प्रवेणी स्त्रियाम्। "प्रवेणी स्त्री कुथावेण्योः" इति मेदिनी ॥ ४२ ॥ असारं युद्धाद्यक्षमं हस्त्यश्वं हस्ती चाश्वश्च तद्वीतमुच्यते। सेनाङ्गत्वात्समाहारः। गजबन्धनी गजालानभूः वारी स्यात्। वार्यतेऽनया वारी एकं गज बन्धनस्था-नस्य गजशाला इति ख्यातस्य। घोटकः घोट इत्यपि। "घोटसैन्धवगन्धर्वा हयवाजितुरङ्गमाः" इति रभसः। वीतिः पीतिरित्यपि। "पीतिर्नाश्वे स्त्रियां पाने" इति मेदिनी। "पीतिः पाने तुरङ्गे च" इति विश्वप्रकाशः। तुरगः तुरङ्गः अश्वः तुरङ्गमः ॥ ४३ ॥ वाजी वाहः अर्वा गन्धर्वः हयः सैन्धवः सप्तिः त्रयोदश घोटकस्य। वीतिरिदन्तः। अर्वा नकारान्तः। अर्वन्तौ। वाजिनौ। ये कुलीनाः प्रशस्तजातिभवा अश्वास्ते आजानेयाः एकम्। आजेन क्षेपेणानेयाः प्रापणीया आजानेयाः। अश्वशास्त्रे तु। "शक्तिभि-र्भिन्नहृदयाः स्खलन्तश्च पदे पदे। आजानंति यतः संज्ञामाजानेयास्ततः स्मृताः"

वनायुजाः पारसीकाः काम्बोजा बाह्लिका हयाः ॥
ययुरश्वोऽश्वमेधीयो जवनस्तु जवाधिकः ॥ ४५ ॥
पृष्ठ्यः स्थौरी सितः कर्को रथ्यो वोढा रथस्य यः ॥
बालः किशोरो वाम्यश्वा वडवा वाडवं गणे ॥ ४६ ॥
त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते ॥
कश्यं तु मध्यमश्वानां हेषा ह्रेषा च निस्वनः ॥ ४७ ॥
निगालस्तु गलोद्देशो वृन्दे त्वश्वीयमाश्ववत् ॥

इति । ये साधुवाहिन शोभनं वहन्ति ते विनीताः स्युः एकम् ॥ ४४ ॥ वनायुदेशे जाताः वनायुजाः । एवं पारसीकाः । विदेशजाताः पारसीकादयो हयभेदाः स्युः एकैकम् । "वनायुजः पारसीक उक्तः" इति रत्नकोशात् । "श्वेताश्वं कर्काख्यं वनायुजमपि पारसीकम्" इति नाममालायाश्च वनायुजपारसीकौ पर्यायशब्दावपि । बाह्लीकं बाह्लिकं धीरहिङ्गुनोर्नाश्वदेशयोरिति त्रिकाण्डशेषाद्दीर्घमध्योऽपि बाह्लीक इति । योऽश्वमेधीयः अश्वमेधाय हितोऽश्वः स ययुरित्येकम् । यो जवेन वेगेनाधिकः स जवनः एकम् ॥ ४५ ॥ पृष्ठ्यः प्रशस्तमतिशयितं पृष्ठमस्य । गुण्यवत् । स्थौरी स्थूलस्येदं स्थौरम् । रलयोः सावर्ण्यम् । स्थौरं बलमस्यास्ति । स्थोरीत्यपि द्वे जलादिभारवाहिनोऽश्वस्य । सितः शुक्लोऽश्वः कर्क इत्येकम् । यो रथस्य वोढा स रथ्य इत्येकम् अस्य । बालः किशोर एकं "शिंगरूं इति ख्यातस्य" । उपचारादन्यत्रापि प्रयोगः । वामी अश्वा वडवा । वडवा द्विजयोषिति । अश्वायां कुम्भदास्यां च नारीजात्यन्तरेऽपि चेति । त्रीण्यश्वायाः "घोडी इति ख्यातायाः" । गणे वडवानां समूहे वाडवं एकम् ॥ ४६ ॥ अश्वेन एकेन दिनेन गम्यते यद्वर्त्म तदाश्वीनं त्रिषु । "अश्वस्यैकाहगमे" इति खञ्प्रत्ययः । एकम् । अश्वानां मध्यं कश्यं एकम् । कशामर्हति कश्यम् । अश्वस्य निस्वनः शब्दः हेषा ह्रेषा च स्यात् द्वे ॥ ४७ ॥ गलोद्देशः गलजत्रुसन्धिः निगालः स्यात् एकम् । "घण्टाबन्धसमीपस्थो निगालः कीर्तितो बुधैः । तस्मिन्नेव मणिर्नाम रोमजः शुभकृन्मतः" इत्यश्वशास्त्रम् । अश्वीयं आश्वं द्वे अश्वानां वृन्दे । वता निर्देशो द्वयोस्तुल्यत्वद्योतनाय । अमूः आस्कन्दिताद्याः अश्वानां पञ्च गतयः धाराख्याः एकम् । यत्र वेगार्तोऽश्वो न शृणोति न पश्यति तादृशी गतिरास्कन्दितम् । "भरपल्ला, भरधांव चाल इतिप्रसिद्धम् । केवलगत्यर्थे गृहीते चवडचाल

48-51



आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ॥ ४८ ॥
गतयोऽमूः पञ्च धारा घोणा तु प्रोथमस्त्रियाम् ॥
कविका तु खलीनोऽस्त्री शफं क्लीबे खुरः पुमान् ॥ ४९ ॥
पुच्छोऽस्त्री लूमलाङ्गूले वालहस्तश्च वालधिः ॥
त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि ॥ ५० ॥
याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः ॥
असौ पुष्यरथश्चक्रयानं न समराय यत् ॥ ५१ ॥

इति प्रसिद्धे आस्कन्दितमित्यपि मतम्" । चातुर्येण युक्ता सरला गतिर्धौरितकम् । "धीरितकम्" इति हेमचन्द्रः । तुरकी गामचाल इति प्रसिद्धम्" । मध्यमवेगेन चक्रवद्भ्रमणं रेचितं "दुडकी चाल इति प्रसिद्धम्" । अग्रकायं समुल्लस्य कुस्तितस्खलादौ कुञ्चितास्यं विचलनं वल्गितं "वाजी चाल इति प्रसिद्धम्" पूर्वापरोन्नमनतः क्रमादारोपणं प्लुतं "चौक चाल इति प्रसिद्धम्" ॥ ४८ ॥ अश्वस्य घोणा नासिका प्रोथमित्येकम् । "पुंसि क्लीबे च" । कविका खलीनः "खलीनमित्यपि" द्वे लोहादिनिर्मितस्य मुखमध्ये निहितस्य कडियालि "लगाम" इति ख्यातस्य । "कवीत्यप्यन्यत्र । क्लीबे खलीनम्" । कवते दन्तेन शब्दायते कविका । खे मुखे लीनः खलीनः । शफं खुरः "क्षुर इति भरतमालायां" द्वे "सुंभ इति ख्यातस्य" । खुरति विलिखति क्ष्मां खुरः ॥ ४९ ॥ पुच्छः लूमं लाङ्गूलं "लाङ्गुलमित्यपि" त्रीणि "दांडी इति ख्यातस्य । पुच्छः अस्त्री पुन्नपुंसकम्" । लूममदन्तम् । वालहस्तः वालाः हस्त इव दंशादिनिवारकत्वात् । वालधिः द्वे केशसमूहयुक्तस्य पुच्छाग्रभागस्य । वालधिः पुमान् । उपावृत्तः लुठितः द्वे श्रमशान्त्यर्थं मुहुर्भुवि पार्श्वाभ्यां परावृत्तस्य लुठितस्याश्वस्य ॥ ५० ॥ युद्धमर्थः प्रयोजनं यस्य तस्मिन् चक्रयुक्ते याने शताङ्गः स्यन्दनः रथः इति त्रयम् । यच्चक्रयुतं यानं समराय युद्धार्थं न भवति असौ पुष्यरथः स्यात् एकं संग्रामं विना यात्रोत्सवादौ सुखेन भ्रमणार्थं क्रीडारथस्य । यथा पुष्यनक्षत्रं सुखकर्तं तद्वद्रथोपीति पुष्यरथः । अन्तस्थमध्यः । पकारमध्यपाठोऽपि । तत्र कुसुमाकारत्वात्पुष्पमिव रथ इति विग्रहः ॥ ५१ ॥ कर्णीरथः प्रवहणं डयनं हयनमित्यपि । "हय गतौ" त्रयं स्त्रीणां वाहनार्थं कृतस्योपरिकक्षा-

कर्णीरथः प्रवहणं डयनं च समं त्रयम् ॥
क्लीबेऽनः शकटोऽस्त्री स्याद्गन्त्री कम्बलिवाह्यकम् ॥ ५२ ॥
शिबिका याप्ययानं स्याद्दोला प्रेङ्खादिका स्त्रियाम् ॥
उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे ॥ ५३ ॥
पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बली ॥
रथे काम्बलवास्त्राद्याः कम्बलादिभिरावृते ॥ ५४ ॥
त्रिषु द्वैपादयो रथ्या रथकट्या रथव्रजे ॥
धूः स्त्री क्लीबे यानमुखं स्याद्रथाङ्गमपस्करः ॥ ५५ ॥

दिना पिहितस्य रथविशेषस्य "बुरख्याची गाडी इति प्रसिद्धस्य"। यद्रु-ष्यम्। कर्णीरथस्थां रघुनाथपत्नीम्। अनः शकटः द्वे "गाडा इति ख्यातस्य। शकटः पुंसि क्लीबे च। शक्नोति भारं वोढुं शकटः"। अनः सान्तम्। "अनः क्लीबं जले शोके मातृस्यन्दनयोरपि" इति रभसकोशः। कम्बलिभिर्वृषैर्वाह्यं वोढव्यं यच्छकटं सा गन्त्री "गान्त्रीति मुकुटः" एकं "गाडी इति ख्यातस्य"। स्त्रियाम् ॥ ५२ ॥ शिबिका याप्ययानं याप्यैरधमैर्वाह्यं यानं द्वे पुरुषवाह्यस्य यानविशेषस्य "पालखी इति ख्यातस्य"। दोला "ङीषि दोली" प्रेङ्खा द्वे दोलायाः हिंदोळा इति ख्यातायाः। "डोली इति ख्याताया वा"। आदि-शब्दात् शयनखट्वावाह्यादि दोला। द्वीपी व्याघ्रस्तच्चर्मणा प्रावृते रथे द्वैपः वैयाघ्रः इति द्वयम् ॥ ५३ ॥ पाण्डुकम्बलेन प्रावृतो रथः पाण्डुकम्बलीत्येकम्। "पाण्डुकम्बलादिनिः"। वास्त्रः दौकूल इत्यादौ सर्वत्र "परिवृतो रथः" इत्यनेन सामान्योऽण् प्रत्ययः। कम्बलादिभिरादिशब्दाद्वस्त्रदुकूलादिभिरावृते रथे काम्बलः वास्त्रः "दौकूलः चार्मः क्षौमः" इत्यादयः एकैकम् ॥ ५४ ॥ द्वैप-वैयाघ्रादयस्त्रिषु वाच्यलिङ्गत्वात् यद्वैपी रथ्या। द्वैपो रथः। रथ्या रथ-कट्या द्वयं रथसमूहे। धूः यानमुखं द्वे रथादेरग्रभागस्य "धूर इति ख्यातस्य"। धूः स्त्री। धुरौ। रथाङ्गं अपस्करः द्वे रथावयवमात्रस्य ॥ ५५ ॥ चक्रं रथाङ्गं द्वे चक्रस्य "चाक इति ख्यातस्य"। नेमिः "नेमीत्यपि" प्रधिः द्वे तस्य चक्र-स्यान्ते भूस्पर्शिभागे "चाकाची धांव इति लौकिकप्रसिद्धस्य"। पिण्डिका "पिण्डीकेत्यपि" नाभिः "नामीत्यपि" द्वे चक्रकाष्ठाधारभूतस्य मण्डलाकारस्य चक्रमध्यस्य। नभ्यते हिंस्यतेऽक्षोऽनया नाभिः स्त्री। अक्षस्य नाभिक्षेपस्य

चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान् ॥
पिण्डिका नाभिरक्षाग्रकीलके तु द्वयोरणिः ॥ ५६ ॥
रथगुप्तिर्वरूथो ना कूबरस्तु युगन्धरः ॥
अनुकर्षो दार्वधःस्थं प्रासङ्गो ना युगाद्युगः ॥ ५७ ॥
सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम् ॥
परम्परावाहनं यत्तद्वैनीतकमस्त्रियाम् ॥ ५८ ॥
आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ॥
नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः ॥ ५९ ॥

काष्ठस्याग्रे चक्रधारणार्थं यत्कीलकमारोप्यते तत्र अणिरित्येकम् । स्त्रीपुंसयोः । "अणिराणिवदक्षाग्रकीलाश्रीसीमसु द्वयोः" इति मेदिनी ॥ ५६ ॥ रथगुप्तिः वरूथः द्वे शस्त्रादिभ्यः परिरक्षणार्थं रथस्य लोहादिमयं यदावरणं क्रियते तस्य । ना पुमान् । "व्रियते रथोऽनेन वरूथः" । कूबरः युगन्धरः द्वे यत्र रथस्याश्वा बध्यन्ते तस्य काष्ठस्य "दांडी इति ख्यातस्य । युगकाष्ठबन्धनस्थानस्यापि च । युगं वोढुर्बन्धनकाष्ठं धारयतीति युगन्धरः" । रथाधःस्थं काष्ठं अनुकर्षः । अनुकर्षेति नान्तोऽप्ययम् । "अनुकर्षा नाऽक्षतलदारु" इति बोपालितात् । एकं रथस्याधःस्थलभागदारुणः । युगेन अतति युगाद्रथाश्वादिः तस्य युगो युगाद्युगः प्रासङ्ग इति स्यात् । ना पुमान् । काकाक्षिवत् युगाद्युगइत्यस्यापि विशेषणम् । अयमेव युगशब्दः पुंसि न तु युग्मादिवाचीति प्रदर्शनार्थम् । युगान्तरमिति पाठे शकटसन्धियुगादन्यो युगः वृषादीनां स्कन्धे आसज्जमानः स प्रासङ्ग इत्यर्थः । एकं "जूं जोकड इति ख्यातस्य" । युगं द्वितीयं प्रासङ्ग इति कात्यः ॥ ५७ ॥ सर्वं हस्त्यश्वादिवाहनं यानादिशब्दवाच्यम् । यानं युग्यं पत्रं धोरणं चत्वारि यत्परम्परावाहनं नरादिवोढृपरम्परया वाह्यते शिबिकादि तद्वैनीतकं स्यात् । विनीतानां शिक्षितानामिदम् । "पुंसि वैनीतकः । विनीतकमित्यपि" ॥५८॥ आधोरणाः "अधोरणाः इत्यपि" हस्तिपकाः हस्त्यारोहाः निषादिनः चत्वारि हस्तिपकेषु माहात इति ख्यातेषु । द्वे द्वे भिन्नार्थे इत्येके । तदा आद्ये महामात्रस्य । परे गजारोहस्य । नियन्ता प्राजिता यन्ता सूतः क्षत्ता सारथिः ॥ ५९ ॥ सव्येष्ठः दक्षिणस्थः एता अष्टौ संज्ञा आख्याः "रथकुटुम्बिनः रथं कुटुम्बयितुं शीलमस्य यद्वा रथ एव कुटुम्बं यस्य

सव्येष्ठदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः ॥
रथिनः स्यन्दनारोहा अश्वारोहास्तु सादिनः ॥ ६० ॥
भटा योधाश्च योद्धारः सेनारक्षास्तु सैनिकाः ॥
सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ॥ ६१ ॥
बलिनो ये सहस्रेण साहस्रास्ते सहस्रिणः ॥
परिधिस्थः परिचरः सेनानीर्वाहिनीपतिः ॥ ६२ ॥
कञ्चुको वारबाणोऽस्त्री यत्तु मध्ये सकञ्चुकाः ॥
बध्नन्ति तत्सारसनमधिकाङ्गोऽथ शीर्षकम् ॥ ६३ ॥

सारथेरित्यर्थः । प्राजितारौ । सव्ये वामे तिष्ठति सव्येष्ठः" । सव्येष्ठेति अदन्त इति केचित् । रथिनः स्यन्दनारोहाः द्वे रथानारुह्य युध्यताम् । अश्वारोहाः सादिनः द्वे अश्ववार "स्वार" इति प्रसिद्धानाम् ॥ ६० ॥ भटः योधः योद्धा त्रयं योद्धुः । सेनारक्षाः सैनिकाः द्वे सेनारक्षकाणां प्रहरिकादीनां "पाहरेकरी, गस्तकरी इत्यादिख्यातानाम्" । सेनां रक्षन्ति सैनिकाः । ये सेनायां समवेताः संगतास्ते सैन्याः सैनिका इति च स्युः द्वे ॥ ६१ ॥ ये सहस्रेण बलिनः सैन्यवन्तः ते साहस्राः सहस्रिणश्च स्युः द्वे । बलं सैन्यं तदस्ति येषां ते । सहस्रं योद्धारः सन्त्येषां नायकानां ते । परिधिस्थः परिचरः द्वे सेनानियन्तुर्यः समन्ताच्चरति तस्य दण्डनायकस्य "तलावेदार इति ख्यातस्य" । परिधौ सेनान्ते तिष्ठति परिधिस्थः । सेनानीः वाहिनीपतिः द्वे सेनापतेः । सेनान्यौ ॥ ६२ ॥ कञ्चुकः वारबाणः बाणं वारयति ण्यन्तादण् वृणोति वा । राजदन्तादित्वात्परनिपातः । "बाणवार इत्यपि" द्वे सन्नाहस्य चोलकादेः । "क्लीबे तु वारबाणम्" । सकञ्चुकाः पुरुषा मध्ये मध्यभागे दार्ढ्यार्थं कञ्चुकोपरि यद्बध्नन्ति तत्सारसनं अधिकाङ्गः द्वे "पचंग पाचंगी वा इति ख्यातस्य । क्वचित्सारसनाधिपाङ्ग इति पाठः । "तच्च सारसनं ज्ञेयमधिपाङ्गं निबन्धनम्" इति दुर्गः । "अधिपाङ्गं सारसनम्" इति कात्यश्च । शीर्षकम् ॥ ६३ ॥ शीर्षण्यं शिरस्त्रं त्रीणि टोप इति ख्यातस्य । "शीर्षे कं सुखमस्माच्छीर्षकम्" । तनुत्रं वर्म दंशनं उरश्छदः कङ्कटकः जगरः "जागर इत्यपि" [illegible] सप्तकं कवचस्य चिलखत इति लोकप्रसिद्धस्य । "क्लीबे तु कवचम्" ॥ ६४ ॥ आमुक्तः प्रतिमुक्तः पिनद्धः अपिनद्धः । वष्टि भागुरीरल्लोपवि-

शीर्षण्यं च शिरस्त्रेऽथ तनुत्रं वर्म दंशनम् ॥
उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् ॥ ६४ ॥

आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ॥
सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ॥ ६५ ॥

त्रिष्वामुक्तादयो वर्मभृतां कावचिकं गणे ॥
पदातिपत्तिपदगपादातिकपदाजयः ॥ ६६ ॥

पद्गश्च पदिकश्चाथ पादातं पत्तिसंहतिः ॥
शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः ॥ ६७ ॥

कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् ॥
अपराद्धपृषत्कोऽसौ लक्ष्याच्च्युतसायकः ॥ ६८ ॥

कल्पः । चत्वारि परिहितकञ्चुकादेः । आमुच्यते बध्यते स आमुक्तः । सन्नद्धः वर्मितः सज्जः दंशितः व्यूढकङ्कटः पञ्च कवचभृतः । सन्नह्यति स सन्नद्धः ॥ ६५ ॥ आमुक्तादयस्त्रिषु । यथा आमुक्ता शाटी । आमुक्तः कञ्चुकः । आमुक्तं वस्त्रम् । एवं सन्नद्धा सज्येत्यादि । वर्मभृतां कवचिनां गणे कावचिकमित्येकम् । पदातिः “पदातः पादातिः पादातः । पदातिपत्तिपादातपादाविकपदाजयः” इत्यमरमाला । पत्तिः पदगः पादातिकः “पादातिगः । स्वार्थे कन् । पादाविक इत्यपि पाठः । पादाभ्यां अवति । अव रक्षणादौ” पदाजिः ॥ ६६ ॥ पद्गः पदिकः सप्त पदातेः । पादाभ्यां अतति गच्छति न तु वाहनेन स पदातिः । “पादस्य पदाज्याति” इति पदादेशः । पत्तिसंहतिः पदातिसमूहः पादातमित्येकम् । शस्त्राजीवः काण्डपृष्ठः “काण्डस्पृष्ट इति राजमुकुटः । तत्र स्पृष्टं गृहीतं काण्डं शस्त्रं येन । वाहिताग्न्यादिष्विति परनिपातः” । आयुधीयः आयुधिकः चत्वारि आयुधजीविनः ॥ ६७ ॥ कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खः त्रीणि शरनिक्षेपनिष्णातस्य । “कृतोऽभ्यस्तो हस्तो यस्य कृतहस्तः” । लक्ष्याद्वेध्यात् च्युतः सायको यस्य सोऽपराद्धपृषत्कः स्यात् एकम् ॥ ६८ ॥ धन्वी धनुष्मान् धानुष्कः निषङ्गी अस्त्री धनुर्धरः षट् धनुर्धरस्य । धनुष्मन्तौ । काण्डवान् काण्डीरः द्वे शरधारिणः अयं केवलकाण्डव-

धन्वी धनुष्मान्धानुष्को निषङ्ग्यस्त्री धनुर्धरः ॥
स्यात्काण्डवांस्तु काण्डीरः शाक्तीकः शक्तिहेतिकः ॥६९॥

याष्टीकपारश्वधिकौ यष्टिपार्श्वधहेतिकौ ॥
नैस्त्रिंशिकोऽसिहेतिः स्यात्समौ प्रासिककौन्तिकौ ॥ ७० ॥

चर्मी फलकपाणिः स्यात्पताकी वैजयन्तिकः ॥
अनुप्लवः सहायश्चानुचरोऽभिचरः समाः ॥ ७१ ॥

परोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः ॥
पुरोगमः पुरोगामी मन्दगामी तु मन्थरः ॥ ७२ ॥

जङ्घालोऽतिजवस्तुल्यौ जङ्घाकरिकजाङ्घिकौ ॥

स्यादुपाधिभेदाद्वा धनुर्धरतो भिन्नः । शाक्तीकः शक्तिहेतिकः "द्वे शक्त्यायुधधारकस्य" । शक्तिः प्रहरणमस्य शाक्तीकः । "शक्तियष्ट्योरीकक्" ॥६९॥ यष्टिहेतिको याष्टीकः एकं "दांडेवाला इति ख्यातस्य" । परश्वधः परशुः स हेतिर्यस्य सः पारश्वधिकः स्यात् एकं "फरशीकरी गडासेकरी इतिख्यातस्य" । यष्टिस्वधितिहेतिकावित्यपि पाठः । असिः खड्गः हेतिः शस्त्रमस्य स नैस्त्रिंशिकः एकं "निमचेकरी इति ख्यातस्य" । प्रासिकः "एकं प्रासायुधहेतिकस्य बल्लमकरी विटेकरी सांगकरी इति ख्यातस्य" । कौन्तिकः कुन्तहेतिकस्य "भालेकरी इति ख्यातस्यैकम्" कुन्तो भल्लः ॥ ७० ॥ चर्मी फलकपाणिः द्वे चर्मधारिणः "ढालाईत इति ख्यातस्य" फलति विशीर्यते फलकश्चर्म पाणौ यस्य । पताकी वैजयन्तिकः द्वे पताकां बिभ्रतः "निशाणकरी, जरीपटकेकरी इति ख्यातस्य" । वैजयन्त्या चरति वैजयन्तिकः । अनुप्लवः सहायः अनुचरः अभिचरः चत्वारि अनुचरस्य ॥ ७१ ॥ पुरोगः अग्रेसरः "अग्रसरोऽपि" प्रष्ठः अग्रतःसरः पुरःसरः पुरोगमः पुरोगामी" सप्त पुरोगामिनः । प्रतिष्ठते प्रष्ठः । मन्दगामी मन्थरः द्वे "शनैर्गामिनः" ॥७२॥ जङ्घालः जङ्घिलः । "प्रज्ञालप्रज्ञिलौ तुल्यौ जङ्घालजङ्घिलादयः" इति वाचस्पतिः । अतिजवः "अतिबल इत्यपि" द्वयमतिवेगवतः । जङ्घाकरिकः जाङ्घिकः "जङ्घासाध्यत्वादुपचाराद्गतिर्जङ्घा" । यो जङ्घाबलेन जीवति तत्र द्वयम् । तरस्वी त्वरितः वेगी प्रजवी जवनः जवः षट्कं त्वरितमात्रस्य ॥ ७३ ॥ यो जेतुं

तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥ ७३ ॥
जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके ॥
जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति ॥ ७४ ॥
सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि ॥
ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जोतिशयान्वितः ॥ ७५ ॥
स्यादुरस्वानुरसिलो रथिनो रथिको रथी ॥
कामङ्गाम्यनुकामीनो ह्यत्यन्तीनस्तथा भृशम् ॥ ७६ ॥
शूरो वीरश्च विक्रान्तो जेता जिष्णुश्च जित्वरः ॥
सांयुगीनो रणे साधुः शस्त्राजीवादयस्त्रिषु ॥ ७७ ॥
ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः ॥
वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥ ७८ ॥

शक्यते स जय्यः । यथा रामेण रावणो जय्यः । रावणं जेतुं रामः शक्नोत्येवेत्यर्थः । एकम् । जेय इत्येकं । जेतव्यमात्रे । यथा जेयं मनः न तु जय्यम् । जैत्रः जेता द्वे जेतुः ॥ ७४ ॥ यो विद्विषतः शत्रून् प्रति अलं सामर्थ्येन योद्धुं संमुखं गच्छति सः अभ्यमित्र्यः अमित्रीयः अभ्यमित्रीण इति च स्यात् त्रीणि । य ऊर्जस्य पराक्रमस्यातिशयेन युक्तः स ऊर्जस्वलः ऊर्जस्वी इति च स्यात् द्वे । "ऊर्जशब्दोऽदन्तः सान्तश्च । ऊर्जोऽतिशयान्वित इत्यपि पाठः" । ॥ ७५ ॥ उरस्वान् उरसिलः द्वे "विशालवक्षसः" उरस्वन्तौ । रथिनः "रथिर इत्यपि" रथिकः रथी त्रीणि रथस्वामिनः । रथोऽस्यास्तीति रथिनोऽदन्तः । यः कामङ्गामी यथेच्छं गच्छति तच्छीलः सोऽनुकामीनः स्यात् । "कामगामीत्यपि" एकम् । तथेति गामिसमुच्चये । यो भृशंगामी अत्यर्थं गमनशीलः सोऽत्यन्तीनः एकम् ॥ ७६ ॥ शूरः वीरः विक्रान्तः त्रीणि शूरस्य । जेता जिष्णुः जित्वरः त्रीणि जयनशीलस्य । रणे संयुगे साधुः सांयुगीनः एकं "युद्धकुशलस्य" । शस्त्राजीवे काण्डपृष्ठेति यत्प्रागुक्तं तदादयः "सांयुगीनान्ताः" त्रिषु । वाच्यलिङ्गत्वात् ॥ ७७ ॥ ध्वजिनी वाहिनी सेना पृतना अनीकिनी चमूः वरूथिनी बलं सैन्यं चक्रं अनीकं एकादश सेनायाः । "पुंसि

व्यूहस्तु बलविन्यासो भेदा दण्डादयो युधि ॥
प्रत्यासारो व्यूहपार्ष्णिः सैन्यपृष्ठे प्रतिग्रहः ॥ ७९ ॥

एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ॥
पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ ८० ॥

अनीकः" ॥ ७८ ॥ बलस्य सैन्यस्य विन्यासो युद्धार्थे रचनाविशेषेण स्थापनं व्यूह इत्येकं "विहू इति ख्यातस्य" । व्यूहलक्षणम् । "मुखे रथा हयाः पृष्ठे तत्पृष्ठे च पदातयः ॥ पार्श्वयोश्च गजाः कार्या व्यूहोऽयं परिकीर्तितः" इति । युधि दण्डादयो भेदाः विशेषाः व्यूहस्येति शेषः । सैन्यस्य दण्डवत्तिर्यगवस्थानं दण्डः । अदिना भोगमण्डलादयः । यदाह कामन्दकः । "तिर्यग्वृत्तिस्तु दण्डः स्याद्भोगोऽन्वावृत्तिरेव च । मण्डलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः" इति । "तत्र अन्योन्यानुगता वृत्तिर्भोगः सर्पशरीरवदवस्थानं मण्डलः । गजादीनां विजातीयैरमिश्रितानां स्थानमसंहतः । एतेषां च शकटमकरपताकासर्वतोभद्रदुर्जयादयो भेदाः प्रत्येकं सन्ति" । प्रत्यासारः व्यूहपार्ष्णिः द्वे व्यूहपश्चाद्भागस्य । प्रत्यासारयति भग्नान्प्रत्यासारः । "प्रत्यासर इत्यपि" सैन्यपृष्ठः प्रतिग्रहः "परिग्रहः पतद्ग्रहः इत्यपि" द्वे सेनायाः पश्चाद्भागस्य । प्रतिगृह्यतेऽवष्टभ्यते सैन्यमनेन प्रतिग्रहः ॥ ७९ ॥ एक इभो यस्यां सा एकेभा । एको रथो यस्यां सा । त्रयोऽश्वा यस्यां सा । पञ्च पदातयो यत्र सा । एतद्विशेषणचतुष्टयविशिष्टा सेना पत्तिः स्यात् । यदुक्तम् । "एको रथो गजश्चैको नराः पञ्च पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते" इति । एकम् । पत्त्यङ्गैः पत्तेरवयवैर्गजादिभिस्त्रिगुणैर्यथोत्तरं क्रमात्सेनामुखादय आख्याः स्युः ॥ ८० ॥ तद्यथा । तिसृभिः पत्तिभिः सेनामुखम् । त्रिभिः सेनामुखैर्गुल्मः । गुल्मत्रयेण गणः । त्रिभिर्गणैर्वाहिनी । तिसृभिः वाहिनीभिः पृतना । पृतनात्रयेण चमूः । एतत्त्रयेणाऽनीकिनी । तत्त्रयेण दशानीकिन्यः । तत्त्रयेण अक्षौहिणी । तथा च । अक्षौहिण्यामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः । संयुक्तानि सहस्राणि गजानामेकविंशतिः २१८७० । एवमेव रथानां तु सङ्ख्यानं कीर्तितं बुधैः २१८७० । पञ्चषष्टिः सहस्राणि षट् शतानि दशैव तु सङ्ख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरङ्गमैः ६५६१० । नृणां शतसहस्राणि सहस्राणि तथा नव । शतानि त्रीणि चान्यानि पञ्चाशच्च पदातयः १०९३५० । इत्येकैकस्य । भारते

सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ॥
अनीकिनी दशानीकिन्योऽक्षौहिण्यथ संपदि ॥ ८१ ॥

संपत्तिः श्रीश्च लक्ष्मीश्च विपत्त्यां विपदापदौ ॥
आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ ॥ ८२ ॥

धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ॥
इष्वासोऽप्यथ कर्णस्य कालपृष्ठं शरासनम् ॥ ८३ ॥

कपिध्वजस्य गाण्डीवगाण्डिवौ पुन्नपुंसकौ ॥
कोटिरस्याटनी गोधे तले ज्याघातवारणे ॥ ८४ ॥

अक्षौहिणीप्रमाणम् । अक्षौहिण्याः प्रमाणं तु खाङ्गाष्टैकद्विकैर्गजैः । रथैरेतैर्हयैस्त्रिघ्नैः पञ्चघ्नैश्च पदातिभिः । गजाः २१८७०, रथाः २१८७०, अश्वाः ६५६१०, नराः १०९३५० सर्वमेकीकृत्य २१८७०० अक्षौहिणी भवति । महाक्षौहिणीप्रमाणं तु । खद्वयं ०० निधि ९ वेदा ४ क्षि २ चन्द्रा १ क्ष्य २ ग्नि ३ हिमांशुभिः १ । महाक्षौहिणिका प्रोक्ता सङ्ख्या गणितकोविदैः । सर्वमेकीकृत्य १३२१२४९०० । एतन्महाक्षौहिणीप्रमाणम् । संपत् ॥ ८१ ॥ संपत्तिः श्रीः लक्ष्मीः चत्वारि संपदः । "संपदेत्यन्यत्र" । विपत्तिः विपत् आपत् त्रीणि आपदः । "आपत्तिः आपदा इत्यन्यत्र" । आयुधं प्रहरणं शस्त्रं अस्त्रं चत्वारि शस्त्रमात्रस्य ॥ ८२ ॥ धनुः चापः धन्व शरासनं कोदण्ड कार्मुकं इष्वासः सप्त धनुषः । तत्र धनुश्चापे क्लीबे पुंसि च धन्व नान्तं धन्वनी । "धन्वमिति अदन्तमपि" । धनुरुदन्तोऽपि । "शरावापो धनुः स्त्री स्याद्" इति त्रिकाण्डशेषात् । कर्णस्य धनुः कालपृष्ठं स्यात् "एकम् । कालो यम इव पृष्ठमस्य" ॥ ८३ ॥ गाण्डीवः गाण्डिवः द्वे अर्जुनस्य धनुषि । "गाण्डिर्ग्रन्थिरस्यास्ति । क्लीबे गाण्डीवं गाण्डिवं च गाण्ड्यजगात्संज्ञायामिति मत्वर्थीयो वप्रत्ययः । गाण्ड्येत्यत्र यणा तन्त्रेण ह्रस्वदीर्घयोर्निर्देशः" । कोटिः "कोटी" अटनी "अटनिः" द्वे अस्य धनुषः प्रान्ते । गोधा तलं द्वे ज्या मौर्वी तस्या आघातस्ताडनं तद्वारणे चर्मादिकृतबाहुबन्धविशेषे । "गोधे तले इति व्यक्तिद्वयाद्वित्वम्" ॥ ८४ ॥ धनुषो मध्यं लस्तक इत्येकम् । मौर्वी ज्या शिञ्जिनी गुणः चत्वारि धनुर्गुणस्य "चिल्ला" इति ख्यातस्य । शिञ्जिनीशब्दस्ताल-

84--88.



लस्तकस्तु धनुर्मध्यं मौर्वी ज्या शिञ्जिनी गुणः ॥
स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ॥ ८५ ॥
लक्षं लक्ष्यं शरव्यं च शराभ्यास उपासनम् ॥
पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ ८६ ॥
कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः ॥
प्रक्ष्वेडनास्तु नाराचाः पक्षो वाजस्त्रिषूत्तरे ॥ ८७ ॥
निरस्तः प्रहिते बाणे विषाक्ते दिग्धलिप्तकौ ॥
तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ॥ ८८ ॥
तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः ॥

व्यादिः" मूर्वाख्यस्य तृणस्य विकारो मौर्वी । प्रत्यालीढं आलीढं इत्यादयः पञ्च धनुर्धराणां स्थितिभेदा इत्यर्थः एकैकम् । आदिना समपदं वैशाखं मण्डलं च । तत्र वामजङ्घाप्रसारपूर्वकदक्षिणजङ्घासङ्कोचे प्रत्यालीढम् । दक्षिणजङ्घाप्रसारपूर्वकवामजङ्घासङ्कोचे आलीढम् । पादयोः समत्वेन स्थितिः समपदम् । वितस्त्यन्तरेण स्थिते पादद्वये वैशाखम् । मण्डलाकारेण पादद्वयधारणं मण्डलकम् ॥ ८५ ॥ लक्षं लक्ष्यं शरव्यं त्रीणि वेध्यस्य "निशाण इति ख्यातस्य" । शराभ्यासः उपासनं द्वे शरक्षेपाभ्यासस्य । "शरस्य शरमोक्षस्याभ्यासः शराभ्यासः" । पृषत्कः बाणः विशिखः अजिह्मगः खगः आशुगः ॥ ८६ ॥ कलम्बः मार्गणः शरः सरः । "चित्रपङ्खः सरः शरः" इति त्रिकाण्डशेषात् । पत्री रोपः इषुः द्वादश बाणस्य । तत्रेषुः स्त्रीपुंसयोः । प्रक्ष्वेडनः "प्रक्ष्वेदन इत्यपि" नाराचः द्वे लोहमयस्य बाणस्य । "नरानाचामति नाराचः । अन्येभ्योऽपीति डः । प्रज्ञाद्यण्" । पक्षः वाजः द्वे कङ्कादिपक्षस्य । उत्तरे निरस्तादिलिप्तकान्तास्त्रिषु ॥ ८७ ॥ प्रहिते क्षिप्ते बाणे निरस्त इत्येकम् । विषाक्तः दिग्धः लिप्तकः त्रीणि विषाक्ते बाणे । तूणः उपासङ्गः तूणीरः निषङ्गः इषुधिः ॥ ८८ ॥ तूणी पञ्चमिषुधेः बाणठेवण्याचा भाता इति ख्यातस्य । इषवो धीयन्ते यस्यां भस्त्रायां सा इषुधिः स्त्रीपुंसयोः । तूणी स्त्री । "तूणेषुधी उपासङ्गः" इति रत्नकोशे । खड्गः निस्त्रिंशः चन्द्रहासः असिः रिष्टिः ऋष्टिरित्यपि ।

कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् ॥ ८९ ॥
त्सरुः खड्गादिमुष्टौ स्यान्मेखला तन्निबन्धनम् ॥
फलकोऽस्त्री फलं चर्म संग्राहो मुष्टिरस्य यः ॥ ९० ॥
द्रुघणो मुद्गरघनौ स्यादीली करवालिका ॥
भिन्दिपालः सृगस्तुल्यौ परिघः परिघातिनः ॥ ९१ ॥
द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ॥
स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका ॥ ९२ ॥

"ऋष्टिः खड्गस्तरवारी" इति त्रिकाण्डशेषः। कौक्षेयकः मण्डलाग्रः करवालः "करपालः इत्यपि" कृपाणः नव खड्गस्य। "तरवार इति ख्यातस्य" खण्डयति परं खड्गः ८९ ॥ खड्गस्य मुष्टौ त्सरुरित्येकं "थरू, मूठ इति ख्यातस्य"। तकारादिकं पुंसि। आदिना "कटार खंजीर इत्यादिनामक" छुरिकादिग्रहः। तस्य खड्गस्य मुष्टेः चर्मवर्ध्रिकया निबन्धनं मेखला स्यात् "एकं डाली इति ख्यातस्य"। यया प्रहरतो हस्तात् न निर्याति खड्गः। फलकः फलं चर्म त्रीणि ढाल इति ख्यातस्य चर्मणः। "क्लीबे फलकम्"। अस्य फलकस्य यो मुष्टिर्ग्रहणस्थानं स संग्राहः एकं "मूठ इति ख्यातस्य" ॥ ९० ॥ द्रुघणः "द्रुघन इत्यपि" मुद्गरः घनः त्रयं मुद्गरस्य "मुद्गल इति ख्यातस्य"। द्रुघणे इति सप्तम्यन्तपाठोऽपि। ईली "इली ईलिः" करवालिका "करपालिकेत्यपि" द्वे ह्रस्वखड्गाकृतेरेकधारस्य शस्त्रस्य "खांडा इति ख्यातस्य। गुप्ती इति केचित्"। भिन्दिपालः सृगः द्वे अश्मप्रक्षेपसाधनस्य रज्जुमयस्य यन्त्रविशेषस्य "गोफण इति ख्यातस्य। भिन्दिर्द्वादशतालं तु दश कुन्तोऽभिधीयत इति। तदवच्छिन्नः कालोऽपि भिन्दिः तं पालयतीति भिन्दिपालः"। परिघः परिघातिनः द्वे लोहबद्धहस्तप्रमाणलगुडस्य ॥ ९१ ॥ कुठारः स्वधितिः परशुः परश्वधः परश्वं दधाति। "परस्वध इत्यपि" चत्वारि कुठारस्य "कुह्राड इति ख्यातस्य"। तत्र कुठारः स्त्रीपुंसयोः। तत्र स्त्रियां कुठारी। "कुठारकः पर्शुरथ च्छुरिका कोशशायिका" इति रभसः। स्वधितिः पुंसि। शस्त्री असिपुत्री छुरिका असिधेनुका चत्वारि छुरिकायाः "सुरी इति ख्यातायाः" ॥ ९२ ॥ शल्यं शङ्कुः। द्वे बाणाग्रस्य आयुधविशेषस्य "फल इति

वा पुंसि शल्यं शङ्कुर्ना सर्वला तोमरोऽस्त्रियाम् ॥
प्रासस्तु कुन्तः कोणस्तु स्त्रियः पाल्यश्रिकोटयः ॥ ९३ ॥
सर्वाभिसारः सर्वौघः सर्वसन्नहनार्थकः ॥
लोहाभिसारोऽस्त्रभृतां राज्ञां नीराजनाविधिः ॥ ९४ ॥
यत्सेनयाभिगमनमरौ तदभिषेणनम् ॥
यात्रा व्रज्याऽभिनिर्याणं प्रस्थानं गमनं गमः ॥ ९५ ॥
स्यादासारः प्रसरणं प्रचक्रं चलितार्थकम् ॥
अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः ॥ ९६ ॥

ख्यातस्य। शलति शल्यम् । "शल गतौ" । यच्छाश्वतः । सज्ञाकीलकयोः शङ्कुः शङ्कुः प्रहरणान्तर इति । ना पुमान् । सर्वला "शर्वला । शार्दूलशर्वलाशला-ट्ठुरिति शभेदात् ।" तोमरः "द्वे गुरगुंज इति प्रसिद्धस्य मन्थदण्डाकारशस्त्रभेद-स्य । तौर्गन्ता म्रियतेऽनेन तोमरः । शल्यादिचतुष्कमपि तोमरस्येत्येके । तत्र सर्वला स्त्री ।" प्रासः कुन्तः "द्वे भाला इति ख्यातस्य ।" कोणः पालिः "पाली" अश्रिः "अश्रीः" कोटिः "कोटी" चत्वारि खड्गादिप्रान्तभागस्य "टोंक इति ख्यातस्य । तत्र पाल्यादयः स्त्रियाम्" ॥ ९३ ॥ सर्वाभिसारः सर्वौघः सर्व-सन्नहनं त्रीणि चतुरङ्गसैन्यसन्नहनस्य "जमाव इति ख्यातस्य । सर्वसन्नहन-मर्थो यस्य" । सर्वेषामभिसरणं सर्वाभिसारः । अस्त्रभृतां राज्ञां महानवम्यां दशम्यां वा नीराजनासमये शस्त्रादिसमर्पणलक्षणः यो विधिः स लोहाभि-सार इत्युच्यते एकम् । लोहं शस्त्रं अभिसार्यते प्रस्थाप्यतेऽत्र लोहाभिसारः । लोहाभिहारोऽपि । लोहस्य शस्त्रस्याभितो हरणम् । "लोहाभिहार इत्युक्तो विधिर्नीराजनोत्तरः" इत्यमरमाला । नीराजनो विधिरिति पाठे निःशेषेण राजनमत्रेति बहुव्रीहिर्बोध्यः ॥ ९३ ॥ अरौ शत्रुसमीपे यत्सेनया सहाभिगमनं तदभिषेणनं स्यात् एकम् । यात्रा व्रज्या अभिनिर्याणं प्रस्थानं गमनं गमः षट्कं प्रयाणस्य ॥ ९५ ॥ आसारः प्रसरणं "प्रसरणीत्यपि पाठः । प्रसरणि-रित्यपि" द्वे सैन्यस्य सर्वतो व्याप्तेः । प्रचक्रं चलितं द्वे प्रस्थितसैन्यस्य । "प्रचक्रं चलितं त्रिषु" इत्यमरमाला । रणे अहितान्प्रति भयरहितस्य शूरस्य यद्गमनं सोऽभिक्रम इत्येकम् । "अतिक्रम इत्यपि" ॥ ९६ ॥ वैतालिकाः

हंपूर्वमित्यहंपूर्विका स्त्रियाम् ॥ १०० ॥
षिका दर्पाद्या स्यात्संभावनात्मनि ॥
मिका तु सा स्यात्परस्परं यो भवत्यहंकारः ॥ १०१ ॥
तरः सहोबलशौर्याणि स्थाम शुष्मं च ॥
ः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता ॥ १०२ ॥
ानं तु यत्पानं वृत्ते भाविनि वा रणे ॥
मायोधनं जन्यं प्रधनं प्रविदारणम् ॥ १०३ ॥
ास्कन्दनं संख्यं समीकं सांपरायिकम् ॥
स्त्रियां समरानीकरणाः कलहविग्रहौ ॥ १०४ ॥
प्रहाराभिसंपातकलिसंस्फोटसंयुगाः ॥

। स्त्रियाम् ॥ १०० ॥ दर्पादात्मविषये या संभावना सामर्थ्याविष्करणं ाहो पुरुषिकेत्युच्यते । अहंपुरुष इत्यहंकारवानहोपुरुषस्तद्भाव आहो- ्पिका एकम् । यः परस्परमहं शक्तोऽहं शक्त इत्यहंकारः सा अहमहमिका न् । अहमहंशब्दोऽस्त्यत्र । वीप्सायां द्विर्वचनम् । एकं षडक्षरम् ॥ १०१ ॥ ेर्ण तरः सहः बलं शौर्यं स्थाम शुष्मं शक्तिः पराक्रमः प्राणः दश परा- मस्य । तरसी । सहसी । स्थामनी । शुष्ममदन्तम् । सह इत्यदन्तोऽपि । "सहोऽस्त्रियां बले न स्त्री" इति रभसः । "सहो बले न स्त्रियां स्यात्" इति मे- दिनी च । विक्रमः अतिशक्तिता द्वे अतितराक्रमस्य ॥ १०२ ॥ रणे वृत्ते सति तच्छ्रमशान्त्यर्थं अथवा भाविनि भविष्यति रणे तदुत्साहवृद्ध्यर्थं यद्वीराणां मद्यपानं तद्वीरपानं स्यात् । वीरपाणमित्यपि । "वा भावकरणयोः" इति णत्वम् । युद्धं आयोधनं जन्यं प्रधनं प्रविदारणम् ॥ १०३ ॥ मृधं आस्कन्दनं संख्यं समीकं सांपरायिकं "संपरायिकं" कन् । समरः अनीकः रणः कलहः विग्रहः ॥ १०४ ॥ संप्रहारः अभिसंपातः कलिःसंस्फोटः "संस्फेटः" संयुगः अभ्यामर्दः "अभिमर्द इत्यपि" । "अभिमर्दस्तु पुंसि स्यादवमर्दे संपराये च" इति मेदिनी । समाघातः संग्रामः अभ्यागमः आहवः ॥ १०५॥ समुदायः संयत् समितिः आजिः समित् युत् एकत्रिंशद्युद्धस्य । संख्यं सानुस्वारम् ।

शीर्षण्यं च शिरस्त्रेऽथ तनुत्रं वर्म दंशनम् ॥
उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् ॥ ६४ ॥

आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ॥
सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ॥ ६५ ॥

त्रिष्वामुक्तादयो वर्मभृतां कावचिकं गणे ॥
पदातिपत्तिपदगपादातिकपदाजयः ॥ ६६ ॥

पद्गश्च पदिकश्चाऽथ पादातं पत्तिसंहतिः ॥
शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः ॥ ६७ ॥

कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् ॥
अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः ॥ ६८ ॥

कल्पः । चत्वारि परिहितकञ्चुकादेः । आमुच्यते बध्यते स आमुक्तः । सन्नद्धः वर्मितः सज्जः दंशितः व्यूढकङ्कटः पञ्च कवचभृतः । सन्नह्यति स सन्नद्धः ॥ ६५ ॥ आमुक्तादयस्त्रिषु । यथा आमुक्ता शाटी । आमुक्तः कञ्चुकः । आमुक्तं वस्त्रम् । एवं सन्नद्धा सज्येत्यादि । वर्मभृतां कवचिनां गणे कावचिकमित्येकम् । पदातिः "पदातः पादातिः पादातः । पदातिपत्तिपादातपादाविकपदाजयः" इत्यमरमाला । पत्तिः पदगः पादातिकः "पादातिगः । स्वार्थे कन् । पादाविक इत्यपि पाठः । पादाभ्यां अवति । अव रक्षणादौ" पदाजिः ॥ ६६ ॥ पद्गः पदिकः सप्त पदातेः । पादाभ्यां अतति गच्छति न तु वाहनेन स पदातिः । "पादस्य पदाज्याति" इति पदादेशः । पत्तिसंहतिः पदातिसमूहः पादातमित्येकम् । शस्त्राजीवः काण्डपृष्ठः "काण्डस्पृष्ट इति राजमुकुटः । तत्र स्पृष्टं गृहीतं काण्डं शस्त्रं येन । वाहिताग्न्यादिष्विति परनिपातः" । आयुधीयः आयुधिकः चत्वारि आयुधजीविनः ॥ ६७ ॥ कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खः त्रीणि शरनिक्षेपनिष्णातस्य । "कृतोऽभ्यस्तो हस्तो यस्य कृतहस्तः" । लक्ष्याद्वेध्यात् च्युतः सायको यस्य सोऽपराद्धपृषत्कः स्यात् एकम् ॥ ६८ ॥ धन्वी धनुष्मान् धानुष्कः निषङ्गी अस्त्री धनुर्धरः षट् धनुर्धरस्य । धनुष्मन्तौ । काण्डवान् काण्डीरः द्वे शरधारिणः अयं केवलकाण्डव-

धन्वी धनुष्मान्धानुष्को निषङ्ग्यस्त्री धनुर्धरः ॥
स्यात्काण्डवांस्तु काण्डीरः शाक्तीकः शक्तिहेतिकः ॥६९॥

याष्टीकपारश्वधिकौ यष्टिपार्श्वधहेतिकौ ॥
नैस्त्रिंशिकोऽसिहेतिः स्यात्समौ प्रासिककौन्तिकौ ॥ ७० ॥

चर्मी फलकपाणिः स्यात्पताकी वैजयन्तिकः ॥
अनुप्लवः सहायश्चानुचरोऽभिचरः समाः ॥ ७१ ॥

परोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः ॥
पुरोगमः पुरोगामी मन्दगामी तु मन्थरः ॥ ७२ ॥

जङ्घालोऽतिजवस्तुल्यौ जङ्घाकरिकजाङ्घिकौ ॥

स्यादुपाधिभेदाद्वा धनुर्धरतो भिन्नः । शाक्तीकः शक्तिहेतिकः "द्वे शक्त्यायुधधारकस्य" । शक्तिः प्रहरणमस्य शाक्तीकः । "शक्तियष्ट्योरीकक्" ॥६९॥ यष्टिहेतिको याष्टीकः एकं "दांडेवाला इति ख्यातस्य" । परश्वधः परशुः स हेतिर्यस्य सः पारश्वधिकः स्यात् एकं "फरशीकरी गडासेकरी इतिख्यातस्य" । यष्टिस्वधितिहेतिकावित्यपि पाठः । असिः खड्गः हेतिः शस्त्रमस्य स नैस्त्रिंशिकः एकं "निमचेकरी इति ख्यातस्य" । प्रासिकः "एकं प्रासायुधहेतिकस्य बल्लमकरी विटेकरी सांगकरी इति ख्यातस्य" । कौन्तिकः कुन्तहेतिकस्य "भालेकरी इति ख्यातस्यैकम्" कुन्तो भल्लः ॥ ७० ॥ चर्मी फलकपाणिः द्वे चर्मधारिणः "ढालाईत इति ख्यातस्य" फलति विशीर्यते फलकश्चर्म पाणौ यस्य । पताकी वैजयन्तिकः द्वे पताकां बिभ्रतः "निशाणकरी, जरीपटकेकरी इति ख्यातस्य" । वैजयन्त्या चरति वैजयन्तिकः । अनुप्लवः सहायः अनुचरः अभिचरः चत्वारि अनुचरस्य ॥ ७१ ॥ पुरोगः अग्रेसरः "अग्रसरोऽपि" प्रष्ठः अग्रतःसरः पुरःसरः पुरोगमः पुरोगामी" सप्त पुरोगामिनः । प्रतिष्ठते प्रष्ठः । मन्दगामी मन्थरः द्वे "शनैर्गामिनः" ॥७२॥ जङ्घालः जङ्घिलः । "प्रज्ञालप्रज्ञिलौ तुल्यौ जङ्घालजङ्घिलादयः" इति वाचस्पतिः । अतिजवः "अतिबल इत्यपि" द्वयमतिवेगवतः । जङ्घाकरिकः जाङ्घिकः "जङ्घासाध्यत्वादुपचाराद्गतिर्जङ्घा" । यो जङ्घाबलेन जीवति तत्र द्वयम् । तरस्वी त्वरितः वेगी प्रजवी जवनः जवः षट्कं त्वरितमात्रस्य ॥ ७३ ॥ यो जेतुं

f3-f8



तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥ ७३ ॥
जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके ॥
जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति ॥ ७४ ॥
सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि ॥
ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जोतिशयान्वितः ॥ ७५ ॥
स्यादुरस्वानुरसिलो रथिनो रथिको रथी ॥
कामङ्गाम्यनुकामीनो ह्यत्यन्तीनस्तथा भृशम् ॥ ७६ ॥
शूरो वीरश्च विक्रान्तो जेता जिष्णुश्च जित्वरः ॥
सांयुगीनो रणे साधुः शस्त्राजीवादयस्त्रिषु ॥ ७७ ॥
ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः ॥
वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥ ७८ ॥

शक्यते स जय्यः । यथा रामेण रावणो जय्यः । रावणं जेतुं रामः शक्तोत्येवेत्यर्थः । एकम् । जेय इत्येकं । जेतव्यमात्रे । यथा जेयं मनः न तु जय्यम् । जैत्रः जेता द्वे जेतुः ॥ ७४ ॥ यो विद्विषतः शत्रून् प्रति अलं सामर्थ्येन योद्धुं संमुखं गच्छति सः अभ्यमित्र्यः अमित्रीयः अभ्यमित्रीण इति च स्यात् त्रीणि । य ऊर्जस्य पराक्रमस्यातिशयेन युक्तः स ऊर्जस्वलः ऊर्जस्वी इति च स्यात् द्वे । "ऊर्जशब्दोऽदन्तः सान्तश्च । ऊर्जोऽतिशयान्वित इत्यपि पाठः"। ॥ ७५ ॥ उरस्वान् उरसिलः द्वे "विशालवक्षसः" उरस्वन्तौ । रथिनः "रथिर इत्यपि" रथिकः रथी त्रीणि रथस्वामिनः । रथोऽस्यास्तीति रथिनोऽदन्तः । यः कामङ्गामी यथेच्छं गच्छति तच्छीलः सोऽनुकामीनः स्यात् । "कामगामीत्यपि" एकम् । तथेति गामिसमुच्चये । यो भृशंगामी अत्यर्थं गमनशीलः सोऽत्यन्तीनः एकम् ॥ ७६ ॥ शूरः वीरः विक्रान्तः त्रीणि शूरस्य । जेता जिष्णुः जित्वरः त्रीणि जयनशीलस्य । रणे संयुगे साधुः सांयुगीनः एकं "युद्धकुशलस्य" । शस्त्राजीवे काण्डपृष्ठेति यत्प्रागुक्तं तदादयः "सांयुगीनान्ताः" त्रिषु । वाच्यलिङ्गत्वात् ॥ ७७ ॥ ध्वजिनी वाहिनी सेना पृतना अनीकिनी चमूः वरूथिनी बलं सैन्यं चक्रं अनीकं एकादश सेनायाः । "पुंसि

व्यूहस्तु बलविन्यासो भेदा दण्डादयो युधि ॥
प्रत्यासारो व्यूहपार्ष्णिः सैन्यपृष्ठे प्रतिग्रहः ॥ ७९ ॥

एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ॥
पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ ८० ॥

अनीकः" ॥ ७८ ॥ बलस्य सैन्यस्य विन्यासो युद्धार्थे रचनाविशेषेण स्थापनं व्यूह इत्येकं "विहू इति ख्यातस्य" । व्यूहलक्षणम् । "मुखे रथा हयाः पृष्ठे तत्पृष्ठे च पदातयः ॥ पार्श्वयोश्च गजाः कार्या व्यूहोऽयं परिकीर्तितः" इति । युधि दण्डादयो भेदाः विशेषाः व्यूहस्येति शेषः । सैन्यस्य दण्डवत्तिर्यगवस्थानं दण्डः । अदिना भोगमण्डलादयः । यदाह कामन्दकः । "तिर्यग्वृत्तिस्तु दण्डः स्याद्भोगोऽन्वावृत्तिरेव च । मण्डलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः" इति । "तत्र अन्योन्यानुगता वृत्तिर्भोगः सर्पशरीरवदवस्थानं मण्डलः । गजादीनां विजातीयैरमिश्रितानां स्थानमसंहतः । एतेषां च शकटमकरपताकासर्वतोभद्रदुर्जयादयो भेदाः प्रत्येकं सन्ति" । प्रत्यासारः व्यूहपार्ष्णिः द्वे व्यूहपश्चाद्भागस्य । प्रत्यासारयति भग्नान्प्रत्यासारः । "प्रत्यासर इत्यपि" सैन्यपृष्ठः प्रतिग्रहः "परिग्रहः पतद्ग्रहः इत्यपि" द्वे सेनायाः पश्चाद्भागस्य । प्रतिगृह्यतेऽवष्टभ्यते सैन्यमनेन प्रतिग्रहः ॥ ७९ ॥ एक इभो यस्यां सा एकेभा । एको रथो यस्यां सा । त्रयोऽश्वा यस्यां सा । पञ्च पदातयो यत्र सा । एतद्विशेषणचतुष्टयविशिष्टा सेना पत्तिः स्यात् । यदुक्तम् । "एको रथो गजश्चैको नराः पञ्च पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते" इति । एकम् । पत्त्यङ्गैः पत्तेरवयवैर्गजादिभिस्त्रिगुणैर्यथोत्तरं क्रमात्सेनामुखादय आख्याः स्युः ॥ ८० ॥ तद्यथा । तिसृभिः पत्तिभिः सेनामुखम् । त्रिभिः सेनामुखैर्गुल्मः । गुल्मत्रयेण गणः । त्रिभिर्गणैर्वाहिनी । तिसृभिः वाहिनीभिः पृतना । पृतनात्रयेण चमूः । एतत्त्रयेणाऽनीकिनी । तत्त्रयेण दशानीकिन्यः । तत्त्रयेण अक्षौहिणी । तथा च । अक्षौहिण्यामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः । संयुक्तानि सहस्राणि गजानामेकविंशतिः २१८७० । एवमेव रथानां तु सङ्ख्यानं कीर्तितं बुधैः २१८७० । पञ्चषष्टिः सहस्राणि षट् शतानि दशैव तु सङ्ख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरङ्गमैः ६५६१० । नृणां शतसहस्राणि सहस्राणि तथा नव । शतानि त्रीणि चान्यानि पञ्चाशच्च पदातयः १०९३५० । इत्येकैकम् । भारते

80-84



सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ॥
अनीकिनी दशानीकिन्योऽक्षौहिण्यथ संपदि ॥ ८१ ॥

संपत्तिः श्रीश्च लक्ष्मीश्च विपत्त्यां विपदापदौ ॥
आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ ॥ ८२ ॥

धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ॥
इष्वासोऽप्यथ कर्णस्य कालपृष्ठं शरासनम् ॥ ८३ ॥

कपिध्वजस्य गाण्डीवगाण्डिवौ पुन्नपुंसकौ ॥
कोटिरस्याटनी गोधे तले ज्याघातवारणे ॥ ८४ ॥

अक्षौहिणीप्रमाणम् । अक्षौहिण्याः प्रमाणं तु खाङ्गाष्टैकद्विकैर्गजैः । रथैरेतैर्हयैस्त्रिघ्नैः पञ्चघ्नैश्च पदातिभिः । गजाः २१८७०, रथाः २१८७०, अश्वाः ६५६१०, नराः १०९३५० सर्वमेकीकृत्य २१८७०० अक्षौहिणी भवति । महाक्षौहिणीप्रमाणं तु । खद्वयं ०० निधि ९ वेदा ४ क्षि २ चन्द्रा १ क्ष्य २ ग्नि ३ हिमांशुभिः १ । महाक्षौहिणिका प्रोक्ता सङ्ख्या गणितकोविदैः । सर्वमेकीकृत्य १३२१२४९०० । एतन्महाक्षौहिणीप्रमाणम् । संपत् ॥ ८१ ॥ संपत्तिः श्रीः लक्ष्मीः चत्वारि संपदः । "संपदेत्यन्यत्र" । विपत्तिः विपत् आपत् त्रीणि आपदः । "आपत्तिः आपदा इत्यन्यत्र" । आयुधं प्रहरणं शस्त्रं अस्त्रं चत्वारि शस्त्रमात्रस्य ॥ ८२ ॥ धनुः चापः धन्व शरासनं कोदण्ड कार्मुकं इष्वासः सप्त धनुषः । तत्र धनुश्चापे क्लीबे पुंसि च धन्व नान्तं धन्वनी। "धन्वमिति अदन्तमपि" । धनुरुदन्तोऽपि । "शरावापो धनुः स्त्री स्यात्" इति त्रिकाण्डशेषात् । कर्णस्य धनुः कालपृष्ठं स्यात् "एकम् । कालो यम इव पृष्ठमस्य" ॥ ८३ ॥ गाण्डीवः गाण्डिवः द्वे अर्जुनस्य धनुषि । "गाण्डिर्ग्रन्थिरस्यास्ति । क्लीबे गाण्डीवं गाण्डिवं च गाण्ड्यजगात्संज्ञायामिति मत्वर्थीयो वप्रत्ययः । गाण्ड्येत्यत्र यणा तन्त्रेण ह्रस्वदीर्घयोर्निर्देशः" । कोटिः "कोटी" अटनी "अटनिः" द्वे अस्य धनुषः प्रान्ते । गोधा तलं द्वे ज्या मौर्वी तस्या आघातस्ताडनं तद्वारणे चर्मादिकृतबाहुबन्धविशेषे । "गोधे तले इति व्यक्तिद्वयाद्वित्वम्" ॥ ८४ ॥ धनुषो मध्यं लस्तक इत्येकम् । मौर्वी ज्या शिञ्जिनी गुणः चत्वारि धनुर्गुणस्य "चिल्ला" इति ख्यातस्य । शिञ्जिनीशब्दस्ताल-

लस्तकस्तु धनुर्मध्यं मौर्वी ज्या शिञ्जिनी गुणः ॥
स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ॥ ८५ ॥
लक्षं लक्ष्यं शरव्यं च शराभ्यास उपासनम् ॥
पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ ८६ ॥
कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः ॥
प्रक्ष्वेडनास्तु नाराचाः पक्षो वाजस्त्रिषूत्तरे ॥ ८७ ॥
निरस्तः प्रहिते बाणे विषाक्ते दिग्धलिप्तकौ ॥
तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ॥ ८८ ॥
तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः ॥

व्यादिः" मूर्वाख्यस्य तृणस्य विकारो मौर्वी । प्रत्यालीढं आलीढं इत्यादयः पञ्च धनुर्धराणां स्थितिभेदा इत्यर्थः एकैकम् । आदिना समपदं वैशाखं मण्डलं च । तत्र वामजङ्घाप्रसारपूर्वकदक्षिणजङ्घासङ्कोचे प्रत्यालीढम् । दक्षिणजङ्घाप्रसारपूर्वकवामजङ्घासङ्कोचे आलीढम् । पादयोः समत्वेन स्थितिः समपदम् । वितस्त्यन्तरेण स्थिते पादद्वये वैशाखम् । मण्डलाकारेण पादद्वयधारणं मण्डलकम् ॥ ८५ ॥ लक्षं लक्ष्यं शरव्यं त्रीणि वेध्यस्य "निशाण इति ख्यातस्य" । शराभ्यासः उपासनं द्वे शरक्षेपाभ्यासस्य । "शरस्य शरमोक्षस्याभ्यासः शराभ्यासः" । पृषत्कः बाणः विशिखः अजिह्मगः खगः आशुगः ॥ ८६ ॥ कलम्बः मार्गणः शरः सरः । "चित्रपङ्खः सरः शरः" इति त्रिकाण्डशेषात् । पत्री रोपः इषुः द्वादश बाणस्य । तत्रेषुः स्त्रीपुंसयोः । प्रक्ष्वेडनः "प्रक्ष्वेदन इत्यपि" नाराचः द्वे लोहमयस्य बाणस्य । "नरानाचामति नाराचः । अन्येभ्योऽपीति डः । प्रज्ञाद्यण्" । पक्षः वाजः द्वे कङ्कादिपक्षस्य । उत्तरे निरस्तादिलिप्तकान्तास्त्रिषु ॥ ८७ ॥ प्रहिते क्षिप्ते बाणे निरस्त इत्येकम् । विषाक्तः दिग्धः लिप्तकः त्रीणि विषाक्ते बाणे । तूणः उपासङ्गः तूणीरः निषङ्गः इषुधिः ॥ ८८ ॥ तूणी षट्कमिषुधेः बाणठेवण्याचा भाता इति ख्यातस्य । इषवो धीयन्ते यस्यां भस्त्रायां सा इषुधिः स्त्रीपुंसयोः । तूणी स्त्री । "तूणेषुधी उपासङ्गः" इति रत्नकोशे । खड्गः निस्त्रिंशः चन्द्रहासः असिः रिष्टिः ऋष्टिरित्यपि ।

89-92



कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् ॥ ८९ ॥
त्सरुः खड्गादिमुष्टौ स्यान्मेखला तन्निबन्धनम् ॥
फलकोऽस्त्री फलं चर्म संग्राहो मुष्टिरस्य यः ॥ ९० ॥
द्रुघणो मुद्गरघनौ स्यादीली करवालिका ॥
भिन्दिपालः सृगस्तुल्यौ परिघः परिघातिनः ॥ ९१ ॥
द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ॥
स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका ॥ ९२ ॥

"ऋष्टिः खड्गस्तरवारी" इति त्रिकाण्डशेषः। कौक्षेयकः मण्डलाग्रः करवालः "करपालः इत्यपि" कृपाणः नव खड्गस्य। "तरवार इति ख्यातस्य" खण्डयति परं खड्गः ८९ ॥ खड्गस्य मुष्टौ त्सरुरित्येकं "थरू, मूठ इति ख्यातस्य"। तकारादिकं पुंसि। आदिना "कटार खंजीर इत्यादिनामक" छुरिकादिग्रहः। तस्य खड्गस्य मुष्टेः चर्मवर्ध्रिकया निबन्धनं मेखला स्यात् "एकं डाली इति ख्यातस्य"। यया प्रहरतो हस्तात् न निर्याति खड्गः। फलकः फलं चर्म त्रीणि ढाल इति ख्यातस्य चर्मणः। "क्लीबे फलकम्"। अस्य फलकस्य यो मुष्टिर्ग्रहणस्थानं स संग्राहः एकं "मूठ इति ख्यातस्य" ॥ ९० ॥ द्रुघणः "द्रुघन इत्यपि" मुद्गरः घनः त्रयं मुद्गरस्य "मुद्गल इति ख्यातस्य"। द्रुघणे इति सप्तम्यन्तपाठोऽपि। ईली "इली ईलिः" करवालिका "करपालिकेत्यपि" द्वे ह्रस्वखड्गाकृतेरेकधारस्य शस्त्रस्य "खांडा इति ख्यातस्य। गुप्ती इति केचित्"। भिन्दिपालः सृगः द्वे अश्मप्रक्षेपसाधनस्य रज्जुमयस्य यन्त्रविशेषस्य "गोफण इति ख्यातस्य। भिन्दिर्द्वादशतालं तु दश कुन्तोऽभिधीयत इति। तदवच्छिन्नः कालीऽपि भिन्दिः तं पालयतीति भिन्दिपालः"। परिघः परिघातिनः द्वे लोहबद्धहस्तप्रमाणलगुडस्य ॥ ९१ ॥ कुठारः स्वधितिः परशुः परश्वधः परशुं दधाति। "परस्वध इत्यपि" चत्वारि कुठारस्य "कुह्राड इति ख्यातस्य"। तत्र कुठारः स्त्रीपुंसयोः। तत्र स्त्रियां कुठारी। "कुठारकः पर्शुरथ च्छुरिका कोशशायिका" इति रभसः। स्वधितिः पुंसि। शस्त्री असिपुत्री छुरिका असिधेनुका चत्वारि छुरिकायाः "सुरी इति ख्यातायाः" ॥ ९२ ॥ शल्यं शङ्कुः। द्वे बाणाग्रस्य आयुधविशेषस्य "फल इति

वा पुंसि शल्यं शङ्कुर्ना सर्वला तोमरोऽस्त्रियाम् ॥
प्रासस्तु कुन्तः कोणस्तु स्त्रियः पाल्यश्रिकोटयः ॥ ९३ ॥
सर्वाभिसारः सर्वौघः सर्वसन्नहनार्थकः ॥
लोहाभिसारोऽस्त्रभृतां राज्ञां नीराजनाविधिः ॥ ९४ ॥
यत्सेनयाभिगमनमरौ तदभिषेणनम् ॥
यात्रा व्रज्याऽभिनिर्याणं प्रस्थानं गमनं गमः ॥ ९५ ॥
स्यादासारः प्रसरणं प्रचक्रं चलितार्थकम् ॥
अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः ॥ ९६ ॥

ख्यातस्य। शलति शल्यम् । "शल गतौ" । यच्छाश्वतः । सञ्ज्ञाकीलकयोः शङ्कुः शङ्कुः प्रहरणान्तर इति । ना पुमान् । सर्वला "शर्वला । शार्दूलशर्वलाशला-टुरिति शभेदात् ।" तोमरः "द्वे गुरगुंज इति प्रसिद्धस्य मन्थदण्डाकारशस्त्रभेद-स्य । तौर्गन्ता म्रियतेऽनेन तोमरः । शल्यादिचतुष्कमपि तोमरस्येत्येके । तत्र सर्वला स्त्री ।" प्रासः कुन्तः "द्वे भाला इति ख्यातस्य।" कोणः पालिः "पाली" अश्रिः "अश्रीः" कोटिः "कोटी" चत्वारि खड्गादिप्रान्तभागस्य "टोंक इति ख्यातस्य । तत्र पाल्यादयः स्त्रियाम्" ॥ ९३ ॥ सर्वाभिसारः सर्वौघः सर्व-सन्नहनं त्रीणि चतुरङ्गसैन्यसन्नहनस्य "जमाव इति ख्यातस्य । सर्वसन्नहन-मर्थो यस्य" । सर्वेषामभिसरणं सर्वाभिसारः । अस्त्रभृतां राज्ञां महानवम्यां दशम्यां वा नीराजनासमये शस्त्रादिसमर्पणलक्षणः यो विधिः स लोहाभि-सार इत्युच्यते एकम् । लोहं शस्त्रं अभिसार्यते प्रस्थाप्यतेऽत्र लोहाभिसारः । लोहाभिहारोऽपि । लोहस्य शस्त्रस्याभितो हरणम् । "लोहाभिहार इत्युक्तो विधिर्नीराजनोत्तरः" इत्यमरमाला । नीराजनो विधिरिति पाठे निःशेषेण राजनमत्रेति बहुव्रीहिर्बोध्यः ॥ ९३ ॥ अरौ शत्रुसमीपे यत्सेनया सहाभिगमनं तदभिषेणनं स्यात् एकम् । यात्रा व्रज्या अभिनिर्याणं प्रस्थानं गमनं गमः षट्कं प्रयाणस्य ॥ ९५ ॥ आसारः प्रसरणं "प्रसरणीत्यपि पाठः । प्रसरणि-रित्यपि" द्वे सैन्यस्य सर्वतो व्याप्तेः । प्रचक्रं चलितं द्वे प्रस्थितसैन्यस्य । "प्रचक्रं चलितं त्रिषु" इत्यमरमाला । रणे अहितान्प्रति भयरहितस्य शूरस्य यद्गमनं सोऽभिक्रम इत्येकम् । "अतिक्रम इत्यपि" ॥ ९६ ॥ वैतालिकाः

वैतालिका बोधकराश्चाक्रिका घाटिकार्थकाः ॥
स्युर्मागधास्तु मगधा बन्दिनः स्तुतिपाठकाः ॥ ९७ ॥
संशप्तकास्तु समयात्संग्रामादनिवर्तिनः ॥
रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः ॥ ९८ ॥
चूर्णे क्षोदः समुत्पिञ्जपिञ्जलौ भृशमाकुले ॥
पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् ॥ ९९ ॥
सा वीराशंसनं युद्धभूमिर्याऽतिभयप्रदा ॥

बोधकराः द्वे ये नृपान्स्तुतिपाठेन प्रातर्बोधयन्ति तेषु । "विविधेन तालेन शब्देन चरन्ति ते वैतालिकाः ।" चाक्रिकाः घाण्टिकाः द्वे बन्दिविशेषेषु । घण्टाघातेन ये शंसंति ते घाण्टिकाः । यदाहुः । प्रबोधसमये । घण्टाशिल्पास्तु घाण्टिका इति । चक्रिका घटिकार्थका इति क्वचित्पाठः । तत्र चक्रमस्ति वाद्यत्वेन यस्य । ठन् । घटीं कायन्ति "कै शब्दे" द्वे घटिकावादकस्य । मागधाः मगधाः "मधुका इति मुकुटः । मधु मधुरं कायन्ति इति विग्रहः ।" द्वे राजाग्रतो वंशक्रमस्य स्तावकानाम् । यदाहुः । "मागधाः सूतवंशजाः" इति । बन्दिनः स्तुतिपाठकाः द्वे राजादिस्तुतिपाठकेषु "भाट इति ख्यातेषु" वन्दन्ते स्तुवते तच्छीला बन्दिनः । यदुक्तम् । "वंदिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः" इति । चत्वार एकार्था इत्येके ॥ ९७ ॥ समयाच्छपथाद्ये संग्रामादनिवर्तिनोऽपराङ्मुखास्ते संशप्तकाः स्युरेकम् । रेणुः धूलिः "धूली" पांसुः "पांशुः" रजः चत्वारि धूल्याः धूळ इति ख्यातायाः । "रेणुः स्त्रीपुंसयोः ।" पांसुः पुंसि । रजः क्लीबे ॥ ९८ ॥ चूर्ण क्षोदः द्वे पिष्टस्य रजसः । षडपि रजस इत्येके । चूर्ण पुंलिङ्गोऽपि । "चूर्णो धूलौ क्षारभेदे चूर्णानि वासयुक्तिषु" इति मेदिनी । "चूर्णानि वासयोगाः स्युश्चूर्णो धूलिः सशर्करः" इति शाश्वतश्च । समुत्पिञ्जः पिञ्जलः द्वे अत्यन्तमाकुले सैन्यादौ पताका वैजयन्ती केतनं ध्वजं चत्वारि पताकायाः । केतनादि द्वयं पताकादण्डस्येत्येके । "पुंसि ध्वजः" ॥ ९९ ॥ या युद्धभूमिः खण्डितैर्गजादिभिरतिभयदा सा वीराशंसनं स्यात् "एकम् । वीरा आशंसंतेऽत्र वीराशंसनम् । "आङः शसि इच्छायाम्" । अहं पूर्वमहं पूर्वं अहमग्रे भवामीत्याग्रहपुरःसरं पूर्वं युद्धं अहंपूर्विका स्यात् । सुप् सुपेति समासे स्वार्थे कन् । स्त्रियां टाप् ।

अहंपूर्वमहंपूर्वमित्यहंपूर्विका स्त्रियाम् ॥ १०० ॥
आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि ॥
अहमहमिका तु सा स्यात्परस्परं यो भवत्यहंकारः ॥ १०१ ॥
द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च ॥
शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता ॥ १०२ ॥
वीरपाणं तु यत्पानं वृत्ते भाविनि वा रणे ॥
युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ॥ १०३ ॥
मृधमास्कन्दनं संख्यं समीकं सांपरायिकम् ॥
अस्त्रियां समरानीकरणाः कलहविग्रहौ ॥ १०४ ॥
संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ॥

एकम् । स्त्रियाम् ॥ १०० ॥ दर्पादात्मविषये या संभावना सामर्थ्याविष्करणं सा आहो पुरुषिकेत्युच्यते । अहंपुरुष इत्यहंकारवानहोपुरुषस्तद्भाव आहो-पुरुषिका एकम् । यः परस्परमहं शक्तोऽहं शक्त इत्यहंकारः सा अहमहमिका स्यात् । अहमहंशब्दोऽस्त्यत्र । वीप्सायां द्विर्वचनम् । एकं षडक्षरम् ॥ १०१ ॥ द्रविणं तरः सहः बलं शौर्यं स्थाम शुष्मं शक्तिः पराक्रमः प्राणः दश परा-क्रमस्य । तरसी । सहसी । स्थामनी । शुष्ममदन्तम् । सह इत्यदन्तोऽपि । "सहोऽस्त्रियां बले न स्त्री" इति रभसः । "सहो बले न स्त्रियां स्यात्" इति मे-दिनी च । विक्रमः अतिशक्तिता द्वे अतितराक्रमस्य ॥ १०२ ॥ रणे वृत्ते सति तच्छ्रमशान्त्यर्थं अथवा भाविनि भविष्यति रणे तदुत्साहवृद्ध्यर्थं यद्वीराणां मद्यपानं तद्वीरपानं स्यात् । वीरपाणमित्यपि । "वा भावकरणयोः" इति णत्वम् । युद्धं आयोधनं जन्यं प्रधनं प्रविदारणम् ॥ १०३ ॥ मृधं आस्कन्दनं संख्यं समीकं सांपरायिकं "संपरायिकं" क्वन् । समरः अनीकः रणः कलहः विग्रहः ॥ १०४ ॥ संप्रहारः अभिसंपातः कलिःसंस्फोटः "संस्फेटः" संयुगः अभ्यामर्दः "अभिमर्द इत्यपि" । "अभिमर्दस्तु पुंसि स्यादवमर्दे संपराये च" इति मेदिनी । समाघातः संग्रामः अभ्यागमः आहवः ॥ १०५॥ समुदायः संयत् समितिः आजिः समित् युत् एकत्रिंशद्युद्धस्य । संख्यं अनुस्वारम् ।

105-110



अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः ॥ १०५ ॥

समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ॥
नियुद्धं बाहुयुद्धेऽथ तुमुलं रणसंकुले ॥ १०६ ॥

क्ष्वेडा तु सिंहनादः स्यात्करिणां घटना घटा ॥
क्रन्दनं योधसंरावो बृंहितं करिगर्जितम् ॥ १०७ ॥

विस्फारो धनुषः स्वानः पटहाडम्बरौ समौ ॥
प्रसभं तु बलात्कारो हठोऽथ स्खलितं छलम् ॥ १०८ ॥

अजन्यं क्लीबमुत्पात उपसर्गः समं त्रयम् ॥
मूर्छा तु कश्मलं मोहोऽप्यवमर्दस्तु पीडनम् ॥ १०९ ॥

अभ्यवस्कन्दनं त्वभ्यासादनं विजयो जयः ॥
वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ॥ ११० ॥

समरादित्रयं अस्त्रियाम् । संयतौ समितौ । युधौ । नियुद्धं बाहुयुद्धं द्वे बाहुयुद्धस्य । तुमुलं इत्येकं रणस्य संकुले परस्परसंबाधे वर्तते ॥ १०६ ॥ क्ष्वेडा सिंहनादः द्वे वीराणां सिंहनादतुल्यनादविशेषस्य । क्ष्वेडा टाबन्ता । करिणां घटना युद्धे संघट्टनं घटा स्यात् । योधानां संरावः आक्रोशपूर्वकः शब्दः क्रन्दनं स्यात् अन्योन्यस्पर्धया योधानामाह्वानस्य एकम् । करिणां गर्जितं बृंहितं स्यात् एकम् ॥ १०७ ॥ धनुषः शब्दो विस्फारः एकम् । पटहः आडम्बरः द्वे संग्रामध्वनेः । प्रसभं बलात्कारः हठः त्रीणि बलात्कारस्य । "प्रगता सभा विचारोऽस्मात्प्रसभम् । बलात्करणं बलात्कारः" स्खलितं छलं द्वे युद्धमर्यादायाश्चलनस्य ॥ १०८ ॥ अजन्यं उत्पातः उपसर्गः त्रयमुत्पातस्य "शुभाशुभसूचकस्य । न जने साधु अजन्यम्" । मूर्च्छा कश्मलं मोहः त्रीणि मूर्छायाः । अवमर्दः पीडनं द्वे सस्यादिसंपन्नस्य देशस्य यत्परचक्रेण पीडनं तत्र ॥ १०९ ॥ अभ्यवस्कन्दनं अभ्यासादनं द्वे छलादाक्रमणस्य धाड इति ख्यातस्य । छापा इत्यपि । विजयः जयः द्वे शत्रुपराङ्मुखीकरणेन लब्धस्योत्कर्षस्य । वैरशुद्धिः प्रतीकारः वैरनिर्यातनं त्रीणि वैरप्रतीकारस्य ॥ ११० ॥ प्रद्रावः उद्द्रावः संद्रावः संदावः विद्रवः

प्रद्रावोद्रावसंद्रावसंदावा विद्रवो द्रवः ॥
अपक्रमोऽपयानं च रणे भङ्गः पराजयः ॥ १११ ॥
पराजितपराभूतौ त्रिषु नष्टतिरोहितौ ॥
प्रमापणं निबर्हणं निकारणं विशारणम् ॥ १२ ॥
प्रवासनं परासनं निषूदनं निर्हिंसनम् ॥
निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ॥ ११३ ॥
निस्तर्हणं निहननं क्षणनं परिवर्जनम् ॥
निर्वापणं विशसनं मारणं प्रतिघातनम् ॥ १४ ॥
उद्वासनप्रमथनक्रथनोज्जासनानि च ॥
आलम्भपिञ्जविशरघातोन्माथवधा अपि ॥ ११५ ॥
स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ॥
अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ॥ ११६ ॥
परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः ॥

द्रवः अपक्रमः अपयानं अष्टौ पलायनस्य । यः रणे भङ्गः स पराजय इत्येकम् ॥ १११ ॥ पराजितः पराभूतः द्वे निर्जितस्य । नष्टः तिरोहितः द्वे निलीनस्य । त्रिष्विति काकाक्षिवदुभयत्र युज्यते । प्रमापणादिवधान्तानि त्रिंशन्नामानि वधस्य । "तानि । प्रमापणं प्रमापनं वा । निबर्हणं निर्बर्हणं वा । निकारणं विशारणं निशारणं वा ॥ ११२ ॥ प्रवासनं परासनं निषूदनं निसूदनमिति वा । निर्हिंसनं निर्वासनं संज्ञपनं "मारणतोषणनिशामनेषु ज्ञा" "ज्ञप मिच्च" इति वा । निर्गन्थनं निर्गन्धनं वा । अपासनम् ॥११३॥ निस्तर्हणं निहननं क्षणनं परिवर्जनं निर्वापणं विशसनं मारणं प्रतिघातनम्" ॥ ११४ ॥ उद्वासनं प्रमथनं क्रथनं उज्जासनम् । प्रमापणमित्यारभ्योज्जासनपर्यन्तं भावल्युडन्ताः । आलम्भः पिञ्जः विशरः घातः उन्माथः "उन्मथो वा" वधः इति ॥ ११५ ॥ पञ्चता "पञ्चत्वं" कालधर्मः दिष्टान्तः प्रलयः अत्ययः अन्तः नाशः मृत्युः मरणं निधनः दश मरणस्य । तत्र मृत्युर्द्वयोः । निधनमस्त्रियाम् ॥ ११६ ॥ परासुः प्राप्तपञ्चत्वः परेतः प्रेतः संस्थितः मृतः प्रमीतः

मृतप्रमीतौ त्रिष्वेते चिता चित्या चितिः स्त्रियाम् ॥११७॥
कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् ॥
श्मशानं स्यात्पितृवनं कुणपः शवमस्त्रियाम् ॥ ११८ ॥
प्रग्रहोपग्रहौ बन्द्याः कारा स्याद्बन्धनालये ॥
पुंसि भूम्न्यसवः प्राणाश्चैवं जीवोऽसुधारणम् ॥ ११९ ॥
आयुर्जीवितकालो ना जीवातुर्जीवनौषधम् ॥

॥ इति क्षत्रियवर्गः ॥ ८ ॥

---

ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः ॥

सप्त मृतस्य । एते वाच्यलिङ्गाः । चिता चित्या चितिः "त्रयं प्रेतदाहाधारचुल्लेः सरण इति ख्यातस्य" ॥ ११७ ॥ अपमूर्धं मस्तकहीनं नर्तकक्रियायुक्तं यत्कलेवरं "धड इति ख्यातं" स कबन्धः स्यात् । कबन्धं सलिले तुण्डे कबन्धो राहुरक्षसोरित्युक्तम् । एकम् । युद्धे सहस्रपूरणः कबन्धो नृत्यते । उपचारान्नर्तनरहितेऽपि प्रयोगः । श्मशानं पितृवनं द्वे प्रेतभूमेः "मसणवटी इति ख्यातायाः" । शवः शेतेऽस्मिन् श्मशानं "द्वितालव्यम्" । कुणपः शवं द्वे निर्जीवशरीरस्य । "पुंसि तु शवः" ॥ ११८ ॥ प्रग्रहः उपग्रहः बन्दी "बन्दिरित्यपि" त्रीणि "चोरादेराकर्षणस्य बंदी अटकाव इति कैद इत्यपि ख्यातस्य" । बन्धनगेहे कारेत्येकं स्त्रियाम् । असवः प्राणाः द्वे प्राणानां । भूम्नि बहुत्वे । एवंशब्दात्प्राणा अपि नित्यं पुंसि भूम्नि च । प्राणो नाम वायुरित्येके तत्तु वायुमात्रविवक्षया । जीवः असुधारणं द्वे प्राणधारणस्य ॥ ११९ ॥ जीवितावच्छिन्नः काल आयुः स्यात् एकम् । उसन्तं क्लीबे । जीवितस्यौषधं रक्षणोपायो जीवातुः स्यात् । ना पुमान् एकम् ॥ इति क्षत्रियवर्गः ॥ ८ ॥ ऊरव्यः ब्रह्मण ऊरोर्जातः । शरीरावयवाद्यत् "ओर्गुणः" अवादेशः । ऊरुजः अर्यः वैश्यः भूमिस्पृक् विट् । षट् वैश्यस्य । आजीवः जीविका वार्ता वृत्तिः वर्तनं जीवनं षट् जीविकामात्रस्य ॥ १ ॥ कृषिः कर्षणम् । पशुपालस्य कर्म पाशुपाल्यं गोरक्षणादि । वणिजां कर्म वाणिज्यं क्रयविक्रयादि । "वणिज्यम् । वणिजेत्यपि" । एवं त्रयो वृत्तयो वैश्यानां

आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने ॥ १ ॥

स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः ॥
सेवा श्ववृत्तिरनृतं कृषिरुञ्छशिलं त्वृतम् ॥ २ ॥
द्वे याचितायाचितयोर्यथासंख्यं मृतामृते ॥
सत्यानृतं वणिग्भावः स्यादृणं पर्युदञ्चनम् ॥ ३८ ॥
उद्धारोऽर्थप्रयोगस्तु कुसीदं वृद्धिजीविका ॥
याच्ञयाप्तं याचितकं निमयादापमित्यकम् ॥ ४ ॥

जीवितका भेदा इत्यर्थः । "कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम्" इति महाभारते भगवद्गीतायाम् । अथ "मृतामृताभ्यां जीवेत मृतेन प्रमृतेन वा । सत्यानृताभ्यामपि वा न श्ववृत्त्या कथंचन" इत्यादिस्मृत्युक्तान्वृत्तिभेदान्व्युत्पादयति । सेवा परचित्तानुवर्तनं सा श्ववृत्तिः । शुनो वृत्तिरिव शुन इव वृत्तिर्वा । "शुनो वृत्तिः स्मृता सेवा गर्हितं तद्विजन्मनाम् । हिंसादोषप्रधानत्वादनृतं कृषिरुच्यते" इत्युक्तम् । "श्ववृत्तिर्नीचसेवनम्" इति श्रीभागवते । एकम् । कृषिः कर्षणं तदनृतं स्यात् । "अनृतं कर्षणं स्मृतम्" इति स्मृतेः । प्रनृतमिति क्वचित्पाठः । "प्रनृतं कर्षणं स्मृतम्" इति मनूक्तेः । एकम् । उञ्छश्च शिलं च उञ्छशिलं समाहारद्वन्द्वः । आपणादौ पतितकणानामेकशो ग्रहणमुञ्छः । क्षेत्रादौ स्वामित्यक्तकणिशानां ग्रहणं शिलम् । एतद्द्वयं ऋतमित्युच्यते । "उञ्छः कणशः आदानं कणिशाद्यर्जनं शिलम्" इति यादवः । "पुमानुञ्छः शिलं त्वृतम्" इति बोपालितः । एकम् ॥ २ ॥ याचिते प्रत्यहं तण्डुलादियाच्ञायां मृतमित्येकम् । "मृतं तु नित्ययाच्ञा स्यात्" इत्युक्तेः । अयाचिते अजगरवर्तनवद्याच्ञां विनैव लब्धे अमृतमित्येकम् । वणिग्भावो वाणिज्यं क्रयविक्रयादि तत्सत्यानृतं स्यात् एकम् । किंचित्सत्यं किंचिदसत्यं सत्यानृतम् । ऋणं पर्युदञ्चनम् ॥ ३ ॥ उद्धारः त्रयमृणस्य । "उद्धारश्चोद्धृतावृणे" इति विश्वः । अर्थप्रयोगः कुसीदं "कुसीदं कुषीदं चेत्यपि" । वृद्धिजीविका त्रीणि ऋणसंबन्धिकालान्तरद्रव्येण लोके "व्याज इति ख्यातेन" जीविकायाम् । याच्ञया यदाप्तं तद्याचितकं "एकं जायां आणलेला जायजाणा जिन्नस इति ख्यातस्य" । निमयात्परिवर्तादाप्तं आपमित्यकम् । अपमित्य आप्तं "अपमित्ययाचिताभ्यां कक्नौ" । "परिवर्तो

4-7



उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् ॥
कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः ॥ ५ ॥
क्षेत्राजीवः कर्षकश्च कृषिकश्च कृषीवलः ॥
क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम् ॥ ६ ॥
यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि यत् ॥
तिल्यं तैलीनवन्माषोमाणुभङ्गा द्विरूपता ॥ ७ ॥
मौद्गीनकौद्रवीणादिशेषधान्योद्भवक्षमम् ॥

विनिमयः" इति मेदिनी। "निमयः परिवर्तः स्यात्" इति मनुः ॥४॥ प्रयोक्ता ऋणस्य दाता उत्तमर्ण इत्येकं सावकार इति प्रसिद्धस्य । "उत्तमं ऋणमस्य" । ऋणस्य ग्राहकोऽधमर्ण इत्येकं कर्जदार इति प्रसिद्धस्य । कुसीदिकः वार्धुषिकः वृद्ध्याजीवः वार्धुषिः चत्वारि ऋणं दत्वा तद्वृद्ध्याजीविनः पुरुषस्य । "कुसीदार्थं प्रयच्छति कुसीदिकः । वृद्धिं गर्ह्यां प्रयच्छति वार्धुषिकः" ॥५॥ क्षेत्राजीवः कर्षकः "कार्षको वा" कृषिकः कृषीवलः चत्वारि कृषीवलस्य शेतकरीति लौकिकभाषायाम् । कृषिरस्यास्तीति कृषीवलः । बले इति दीर्घः । व्रीह्युद्भवोचितं व्रीहीणामुद्भवे योग्यं क्षेत्रं व्रैहेयं एकम् । शाल्युद्भवोचितं क्षेत्रं शालेयं एकम् ॥६॥ यवादीनां भवनं उद्भवोचितं यत्क्षेत्रं तत् यव्यादि । यथा यवानां भवनं क्षेत्रं यव्यम् । यवका अल्पयवास्तेषां भवनं क्षेत्रं यवक्यम् । "यवकः शूकधान्यो यवः" । षष्टिकाः षष्टिरात्रेण पच्यंते तेषां भवनं क्षेत्रं षष्टिक्यं एकैकम् । तिल्यं तैलीनवन्माषादेः क्षेत्रविषये द्विरूपता स्यात् । यथा तिल्यं तैलीनं द्वे तिलानां भवने क्षेत्रे । एवं माष्यं माषीणं द्वे माषाणां भवने क्षेत्रे । उमा अतसस्तासां क्षेत्रं उम्यं औमीनं द्वे । अणुर्धान्यभेदस्तत्क्षेत्रे अणव्यं आणवीनं द्वे । भङ्गा मातुलानी तत्क्षेत्रं भङ्ग्यं भाङ्गीनं द्वे ॥७॥ शेषाणां व्रीह्यादिभ्य उक्तेभ्योऽन्येषां मुद्गादीनां धान्यानामुद्भवोचितं क्षेत्रं मौद्गीनादि स्यात् । शेषधान्योद्भवोचितमिति वा पाठः । यथा मुद्गानां भवनं क्षेत्रं मौद्गीनम् । एवं कौद्रवीणम् । आदिना चाणकीनम् । गौधूमीनम् । कालायीनम् । कौलत्थीनम् । प्रैयंगवीनमित्यादि । "धान्यानां भवने क्षेत्रे खञ्" ईनादेशः । एकैकम् । शाकशाकटं शाकशाकिनं द्वयं शाकक्षेत्रादिके क्लीबम् । भवने क्षेत्रे शाकटशाकिनाविति वार्तिकेन सिद्धमेतत् । आदौ

("शाकक्षेत्रादिके शाकशाकटं शाकशाकिनम्") (१)
बीजाकृतं तूप्तकृष्टे सीत्यं कृष्टं च हल्यवत् ॥ ८ ॥
त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपि तस्मिन् ॥
द्विगुणाकृते तु सर्वं पूर्वं शम्बाकृतमपीह ॥ ९ ॥
द्रोणाढकादिवापादौ द्रौणिकाढकिकादयः ॥
खारीवापस्तु खारीक उत्तमर्णादयस्त्रिषु ॥ १० ॥
पुन्नपुंसकयोर्वप्रः केदारः क्षेत्रमस्य तु ॥
कैदारकं स्यात्कैदार्यं क्षेत्रं कैदारिकं गणे ॥ ११ ॥

उप्तं पश्चात्कृष्टं क्षेत्रमुप्तकृष्टं तत्र बीजाकृतमित्येकम् । बीजेन सह कृतं कृष्टं बीजाकृतम् । "कृञो द्वितीया" इति डाच् । सीत्यं कृष्टं हल्यं त्रीणि कृष्टमात्रस्य । सीतया हललेखया संमितं सीत्यम् । "शीत्यमित्यपि" । हलेन कृष्टं हल्यम् ॥ ८ ॥ त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यं चत्वारि वारत्रयकृष्टस्य । त्रिगुणं "त्रिवारं" कृतं कृष्टं क्षेत्रं त्रिगुणाकृतम् । "संख्यायाश्च" इति डाच् । तस्मिन् त्रिगुणाकृते इत्यर्थः । द्विगुणाकृतेऽपि सर्वं पूर्वं योज्यम् । यथा । द्विगुणाकृतं द्वितीयाकृतं द्विहल्यं द्विसीत्यं चत्वारि वारद्वयकृष्टस्य । इह द्विःकृष्टे शम्बाकृतमित्यपि नाम । "शम्बशब्दो द्वितीयकर्षणे वर्तते इति रामाश्रमः । सिद्धान्तकौमुद्यां तु शम्बशब्दः प्रतिलोमे । अनुलोमं कृष्टं क्षेत्रं प्रतिलोमं कर्षतीत्यर्थः । सम्बाकृतमिति दन्त्यादिरपि" । एवं पञ्च ॥ ९ ॥ उप्यतेऽस्मिन्निति वापः क्षेत्रम् । द्रोणादिपरिमितधान्यस्य वापादौ द्रौणिकादयः स्युः । यथा द्रोणस्य वापः क्षेत्रं द्रौणिकः । आढकस्य वापः आढकिकः । आदिशब्दात्प्रस्थस्य वापः । प्रास्थिकः "कौडविकः" इत्यपि । वापादावित्यादिशब्दात्पचादिग्रहः । द्रोणस्य पचो द्रौणिकः कटाहः । खारीवापः खारीपरिमितं यत्रोप्यते स खारीकः एकम् । उत्तमर्णादयः खारीकान्ताः त्रिलिङ्गाः । वाच्यलिङ्गत्वात् ॥ १० ॥ वप्रः केदारः क्षेत्रं त्रीणि क्षेत्रस्य "शेत इति ख्यातस्य" । "वप्रः प्राकाररोधसोः । क्षेत्रे ताते चये रेणौ" इति हैमः । अस्य क्षेत्रस्य गणे समूहे कैदारकं कैदार्यं "कैदारं" क्षेत्रं कैदारिकं इति चत्वारि ॥ ११ ॥ लोष्टं लेष्टुः द्वे मृत्तिकाखण्डस्य । "ढेंकूळ,

---

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

11-14



लोष्टानि लेष्टवः पुंसि कोटिशो लोष्टभेदनः ॥
प्राजनं तोदनं तोत्रं खनित्रमवदारणे ॥ १२ ॥

दात्रं लवित्रमाबन्धो योत्रं योक्त्रमथो फलम् ॥
निरीशं कुटकं फालः कृषको लाङ्गलं हलम् ॥ १३ ॥

गोदारणं च सीरोऽथ शम्या स्त्री युगकीलकः ॥
ईषा लाङ्गलदण्डः स्यात्सीता लाङ्गलपद्धतिः ॥ १४ ॥

डिफळ इति ख्यातस्य"। "लोष्टं पुंस्यपि लेष्टुः षण्ढेऽपि लोष्टः स्यात्" इति बोपालितः। कोटिशः कोटीशः इत्यपि लोष्टभेदनः द्वे लोष्टभञ्जनमुद्गरस्य "कुळव डिफळा इति ख्यातस्य"। प्राजनं तोदनं तोत्रं त्रीणि वृषादेस्ताडनोपयोगिनस्तोत्रस्य "आसूड, चाबूक इति ख्यातस्य"। तुद्यतेऽनेन तोत्रम्। यल्लुक्यम्। तोत्रवेत्रैकपाणये। खनित्रं अवदारणं द्वे कुद्दालादेः "कुदळ इति ख्यातस्य" ॥ १२ ॥ दात्रं लवित्रं द्वे। लुनाति छिनत्ति अनेन लवित्रं "इळा कोयता" इति प्रसिद्धम्। आबन्धः योत्रं योक्त्रं त्रीणि युगबन्धनोपयोगिन्यां रज्जौ "जुंपणी जोतें इति ख्यातायाम्"। फलं निरीशं "निरीषमिति" कुटकम्। "दीर्घादिरिति मुकुटः" फालः कृषकः "कृषिकः। कृषिकाकृषिकौ फालकृषकाविति रुद्रात्स्त्रियामपि" पञ्च लाङ्गलस्याधः स्थिते काष्ठे यस्याग्रं लोहेन प्रबध्यते। "आद्यत्रयं यत्र काष्ठे फालो निबध्यते तस्य। अन्त्यद्वयं फालस्येत्यपि मतम्"। फलति विशीर्यते भूमिरनेन फालः। लाङ्गलं हलं हालः। "हालः फालवहः सीता" इति विक्रमादित्यः। "हालो हले पुमान् हाला मदिरायां च योषिति" इति मेदिनी ॥ १३ ॥ गोदारणं सीरः "शीर इत्यपि" चत्वारि हलस्य। शम्या युगकीलकः द्वे युगस्य कीलके खीळ इति ख्याते। शम्यते वृषादिरनया शम्या। लाङ्गलस्य दण्ड ईषा स्यात्। "ईशा"। "प्रभुशंकरयोरीशः स्त्रियां लाङ्गलदण्डके" इति तालव्यान्ते रुद्ररभसौ। "ईशः स्वामिनि रुद्रे च स्यादीशा हलदण्डके" इति शान्तेषु विश्वः। एकं इसाड इति ख्यातस्य। लाङ्गलपद्धतिः, हलरचितारेखा सीता स्यात्। शीता। "शीता नभःसरिति लाङ्गलपद्धतौ च शीता दशाननरिपोः सहधर्मिणी च। शीतं स्मृतं हिमगुणे च तदन्विते च शीतोऽलसे च बहुवाररतौ च दृष्टः" इति तालव्यादौ धरणिः। एकं नांगराचें तास

पुंसि मेधिः खलेदारु न्यस्तं यत्पशुबन्धने ॥
आशुर्व्रीहिः पाटलः स्याच्छितशूकयवौ समौ ॥ १५ ॥

तोक्मस्तु तत्र हरिते कलायस्तु सतीनकः ॥
हरेणुरेणुकौ चास्मिन्कोरदूषस्तु कोद्रवः ॥ १६ ॥

मङ्गल्यको मसूरोऽथ मकुष्टकमयुष्ठकौ ॥
वनमुद्गे सर्षपे तु द्वौ तन्तुभकदम्बकौ ॥ १७ ॥

इति ख्यातस्य ॥ १४ ॥ पशुबन्धने वृषादिबन्धननिमित्ते यत्काष्ठं न्यस्तं निखातं तत्र मेधिः "मेथिरित्यपि" खलेदारु इति द्वे "मेढ इति ख्यातस्य"। खलेदार्विति "हलदन्तात्" इति सप्तम्या अलुक्। यद्वा खले धान्यमर्दनस्थले यद्दारु इति पृथक्पदं वा। आशुः व्रीहिः पाटलः पाटलिरित्यपि। पाटलो वर्णोऽस्यास्तीति अयं व्रीहेः। "पाटलो व्रीहिपाटल उच्यते" इति नामद्वयमिति सुभूतिः। तत्र आशु क्लीबे पुंस्यपि। "आशुस्तु व्रीहिशीघ्रयोः" इति हेमचन्द्रः। आशुव्रीहिरित्येकं पदमिति सुभूतिः।"अशु व्रीहौ पाटलो ना श्वेतरक्तेऽन्यलिङ्गवान्" इति रुद्रोऽपि। व्रीह्यादिः पुंसि। धान्यमात्रेऽपि व्रीहिं वक्ष्यन्ति। शितशूकः यवः द्वे जव इति ख्यातस्य "शितशूको द्वितालव्यः। मध्यतालव्योऽपि" ॥ १५ ॥ तत्र यवे हरिते हरिद्वर्णे तोक्म इत्येकम् "निःशूकयवस्य"। कलायः सतीनकः। "सातीनक इति माधवः। प्रज्ञाद्यण्। सतीलक" इति मेदिनी।हरेणुः रेणुकः चत्वारि "वाटाणा इति ख्यातस्य"। कोरदूषः कोद्रवः "काद्रव इत्यपि" द्वे हरीक इति ख्यातस्य ॥ १६ ॥ मङ्गल्यकः मसूरः। "मसुरा मसूरा। वेश्यायां व्रीहिभेदे च मसूरा मसुरा स्त्रियाम्। मसूरमसुरौ पुंसि द्वावेतावपि चैतयोः" इति रभसः। "मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः" इति मेदिनी। द्वे मसूर इति ख्यातस्य। मकुष्टकः "मकुष्टकः मुकुष्टकः। विश्वमेदिन्योस्तु मुकुष्ठो व्रीहिभेदे नेति टवर्गद्वितीयान्तः"। मयुष्ठकः "मयष्ठकः। मपष्ठकः। मपष्ठोऽपि मपुष्ठकः मपुष्ठोऽप्यन्यत्र"। वनमुद्गः "त्रीणि मठ, मटकी इति ख्यातस्य"। सर्षपः तन्तुभः तुन्तुभोऽपि"। कदम्बकः अयं सांसव "शिरस" इति ख्यातस्य। "सर्षपःस्यात्सरिषपः" इति त्रिकाण्डशेषः ॥ १७ ॥ एष सर्षपो धवलः शुभ्रश्चेत्सिद्धार्थ इत्येकम्। गोधूमः

---

१ अशुनामा व्रीहिः पाटल उच्यते इति नामद्वयम्-इति सुभूतिः-इति रामाश्रम्याम् ॥

17-21



सिद्धार्थस्त्वेष धवलो गोधूमः सुमनः समौ ॥
स्याद्यावकस्तु कुल्माषश्चणको हरिमन्थकः ॥ १८ ॥
द्वौ तिले तिलपेजश्च तिलपिञ्जश्च निष्फले ॥
क्षवः क्षुताऽभिजननो राजिका कृष्णिकाऽऽसुरी ॥ १९ ॥
स्त्रियौ कङ्गुप्रियङ्गू द्वे अतसी स्यादुमा क्षुमा ॥
मातुलानी तु भङ्गायां व्रीहिभेदस्त्वणुः पुमान् ॥ २० ॥
किंशारुः सस्यशूकं स्यात्कणिशं सस्यमञ्जरी ॥
धान्यं व्रीहिः स्तम्बकरिः स्तम्बो गुच्छस्तृणादिनः ॥ २१ ॥

सुमनः द्वे गहूं इति ख्यातस्य । सुमनोऽर्दंतः । यावकः कुल्माषः "कुल्मास इति दन्त्यान्तः" द्वे अर्धस्विन्नस्य यवादेः । "अर्धशिजे यवादिक घुगऱ्या इति ख्यातस्य" । धान्यभेदस्येत्येके । "शूकशून्ययवादेरित्यन्ये" । चणकः हरिमन्थकः हरिमन्थज इत्यपि "द्वे हरबरा इति ख्यातस्य" ॥ १८ ॥ तिलपेजः तिलपिञ्जः। "तिलान्निष्फलात्पिञ्जपेजौ" इति वार्तिकेनेमौ साधू । द्वे निष्फले तिले "वांझे तीळ रानतीळ इति ख्याते । जर्तिल इत्यप्यस्य नाम । जर्तिलः कथ्यते सद्भिररण्यप्रभवस्तिल इत्युक्तेः" । क्षवः क्षुताभिजननः राजिका कृष्णिका आसुरी पञ्च राजसर्षपाख्यस्य कृष्णसर्षपस्य "मोहरी, राई इति ख्यातस्य" । क्षुतमभिजायतेऽनेनेति क्षुताभिजननः । "क्षुधाभिजनन इत्यपि । तत्र क्षुधामभिजनयतीति विग्रहः" ॥ १९ ॥ कङ्गुः "कङ्गूरित्यपि" प्रियङ्गुः द्वे कांग, "राळे" इति ख्यातस्य । अतसी उमा क्षुमा त्रयं जवस इति ख्यातस्य धान्यभेदस्य । मातुलानी भङ्गा द्वे भांग, तागाचें बीं इति च ख्यातस्य । "तरङ्गभेदयोर्भङ्गो भङ्गा सस्यशणाह्वये" इति रुद्रः । व्रीहिभेदः अणुः स्यात् एकम् ॥ २० ॥ सस्यस्य शूकं सूक्ष्मं सूचितुल्यमग्रं किंशारुः स्यादेकं पुंसि "कूंस इति ख्यातस्य" । सस्यस्य मञ्जरी निर्गतनूतनशिरः कणिशं एकम् । कणाः सन्त्यस्य कणिशम् । "कणिशो धान्यशीर्षके" इति तालव्यान्ते रत्नकोशः । मूर्द्धन्यान्तोऽपि । धान्यं व्रीहिः स्तम्बकरिः त्रयं व्रीहियवादेः । स्तम्बकरिरिदन्तः पुंसि । तृणयवादेर्गुच्छो नालादिपुञ्जः स्तम्बः स्यात् एकं "थोंब इति प्रसिद्धस्य" ॥ २१ ॥ अस्य गुच्छस्य यः काण्डः स नाडी नालं च स्यात् द्वे ।

नाडी नालं च काण्डोऽस्य पलालोऽस्त्री स निष्फलः ॥
कडङ्गरो बुसं क्लीबे धान्यत्वचि तुषः पुमान् ॥ २२ ॥

शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे शमी शिम्बा त्रिषूत्तरे ॥
ऋद्धमावसितं धान्यं पूतं तु बहुलीकृतम् ॥ २३ ॥

माषादयः शमीधान्ये शूकधान्ये यवादयः ॥
शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी ॥ २४ ॥

तृणधान्यानि नीवाराः स्त्री गवेधुर्गवेधुका ॥

स काण्डो गृहीतफलत्वान्निष्फलः पलालः स्यात् एकं "सरम, कडबा, धाटूक इति ख्यातस्य । क्लीबे पलालम्" । कडङ्गरः "करङ्कर इति हरदत्तपाठः" । बुसं "बुषवेषतुषारतोषा इति षभेदान्मूर्धन्यान्तमपि" द्वे पलालादिक्षोदस्य भूस इति ख्यातस्य । तुष इत्येकं व्रीह्यादेस्त्वचि "कोंडा" इति ख्यातायाम् ॥ २२ ॥ श्लक्ष्णं कृशं तीक्ष्णं निशितं एतादृशं यदग्रं यवादेस्तत्र शूक इत्येकम् । "क्लीबे शूकम् ।" शमी शिम्बा "शिम्बिः शिम्बी चेत्यपि दन्त्यादिर्वा" द्वे शेंग इति प्रसिद्धस्य माषादिफलस्य । उत्तरे ऋद्धादयश्चत्वारो वाच्यलिङ्गाः । ऋद्धं आवसितं अवसितम् । "अवसितमृद्धे ज्ञानेऽपि" इति विश्वः । द्वे अपनीततृणस्य राशीकृतस्य धान्यस्य । पूतं बहुलीकृतं द्वे अपनीतबुसस्य धान्यस्य । शूर्पादिना शोधितस्येत्येके ॥ २३ ॥ शमीप्रभवं धान्यं तत्र माषमुद्गादयो भेदाः । यदुक्तं रत्नकोशे । "मुद्गो माषो राजमाषः कुलित्थश्चणकस्तिलः । कलायस्तूवर इति शमीधान्यगणः स्मृतः" इति एकम् । शूकसहितं धान्यं शूकधान्यं तत्र यवगोधूमादयो ज्ञेयाः एकम् । बृहच्छालो बहुलजलोत्पन्नो व्रीहिविशेषः कलमः । एतदपेक्षया किञ्चिदपकृष्टः षष्टिरात्रेण पच्यमानः षष्टिकः । आदिशब्दाद्रक्तादिराजशाल्यादयः एते शालयः स्युः एकम् । अमी माषयवशालिकलमषष्टिकाद्याः पुंसि ॥ २४ ॥ नीवारो मुन्यन्नभेदः नेर "देवभात" इति प्रसिद्धः । बहुवचनात् श्यामाकादयो गृह्यन्ते । एते तृणधान्यानि स्युः एकम् । गवेधुः "गवेडुरित्यपि" गवेधुका द्वे मुन्यन्नविशेषस्य कसईचें बीं इति प्रसिद्धस्य । इदं कसाड, कस इति कोंकणे प्रसिद्धम् । गवा जलेन तत्र वा एधते । "एध वृद्धौ" अयोग्रं मुसलः "द्वे

25-28



अयोग्रं मुसलोऽस्त्री स्यादुदूखलमुलूखलम् ॥ २५ ॥
प्रस्फोटनं शूर्पमस्त्री चालनी तितउः पुमान् ॥
स्यूतप्रसेवौ कण्डोलपिटौ कटकिलिञ्जकौ ॥ २६ ॥
समानौ रसवत्यां तु पाकस्थानमहानसे ॥
पौरोगवस्तदध्यक्षः सूपकारास्तु बल्लवाः ॥ २७ ॥
आरालिका आन्धसिकाः सूदा औदनिका गुणाः ॥
आपूपिकः कान्दविको भक्ष्यकार इमे त्रिषु ॥ २८ ॥

मुसळ इति ख्यातस्य । क्लीबे मुसलम्" । उदूखलं उलूखलं द्वे उलूखल "उखळ इति प्रसिद्धस्य" ॥ २५ ॥ प्रस्फोटनं शूर्पं "सूर्पमिति दन्त्यादिरपि" द्वे "सूप इति ख्यातस्य" । चालनी तितउः द्वे "चाळण इति प्रसिद्धस्य" । "क्षुद्रच्छिद्रशतोपेतं चालनं तितउः स्मृतः" इति कात्यः । "चालनं तितउ प्रोक्तम्" इति क्लीबकाण्डे रत्नकोशः । "न स्त्री तितउ चालनी" इति त्रिकाण्डशेषः । तनोति सारं तितउः "तनोतेर्डउः सन्वच्च" इति । स्यूतः प्रसेवः द्वे धान्यादिभरणार्थं कृतस्य वस्त्रभाण्डस्य पिशवी "गोणी, थैली इति ख्यातस्य ।" सीव्यते स्म स्यूतः । स्योनप्रसेवावित्यपि पाठः । "स्योनस्यूतप्रसेवकौ" इति रभसः । कण्डोलः पिटः पिण्ड इत्यपि । "पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिल्हकयोरपि" इति मेदिनी । द्वे वेणुदलादिरचितभाण्डस्य "पांटी, कणिंग इत्यादिख्यातस्य ।" कटः किलिञ्जकः द्वे वंशादिविकारस्य "करंडा इत्यादिख्यातस्य ।" कटत्यावृणोतीति कटः ॥ २६ ॥ समानाविति स्यूतादिभिर्युगलैः संबध्यते । रसवती पाकस्थानं महानसं त्रीणि पाकस्थानस्य सैंपाकघर, पाकशाला इति ख्यातस्य । तस्य पाकस्थानस्याध्यक्षः अधिकृतः पौरोगवः स्यात् एकं "वांकनीस इति ख्यातस्य" । पुरः पूजिता गौर्भूमिः पुरोगवी "तस्येदम्" इत्यण् । पौरोगवः सूपकारः बल्लवः ॥ २७ ॥ आरालिकः आंधसिकः । अंधः ओदनं शिल्पं येषां ते । ठक् । सूदः औदनिकः गुणः सप्त पाककर्तुः "आचारी इति ख्यातस्य" । आद्यं द्वयं व्यञ्जनकारस्येति क्षीरस्वामी । आपूपिकः कांदविकः भक्ष्यकारः "भक्ष्यंकारः भक्षकार इत्यपि" त्रीणि भक्ष्यकारस्य । भक्ष्यं तैलपक्वादि । इमे पौरोगवाद्याः वाच्यलिङ्गाः ॥ २८ ॥ अम्लान्तं उद्धानं "ऊध्मानमित्यपि"

अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका ॥
अङ्गारधानिकाऽङ्गारशकट्यपि हसन्त्यपि ॥ २९ ॥
हसन्यप्यथ न स्त्री स्यादङ्गारोऽलातमुल्मुकम् ॥
क्लीबेऽम्बरीषं भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियाम् ॥ ३० ॥
अलञ्जरः स्यान्मणिकः कर्कर्यालुर्गलन्तिका ॥
पिठरः स्थाल्युखा कुण्डं कलशस्तु त्रिषु द्वयोः ॥ ३१ ॥
घटः कुटनिपावस्त्री शरावो वर्धमानकः ॥

उत् धमायते । ल्युट् । "उद्धारमित्यपि ।" अधिश्रयणी चुल्लिः "चुल्लीत्यपि" अन्तिका । अन्दिकेत्यपि । अन्द्यतेऽत्र । "अति अदि बन्धने" ण्वुल् । पञ्च चुल्लेः चूल इति ख्यातायाः । अश्मनोऽप्यन्तोऽत्राश्मन्तः । "श्रीञ् पाके" । अधिश्रियेतास्यां अधिश्रयणी । अङ्गारधानिका अङ्गारशकटी हसन्ती ॥ २९ ॥ हसनी चतुष्कमङ्गारशकट्याः आगटी, "शेगडी" इति ख्यातायाः । अङ्गारः अलातं उल्मुकं त्रीणि प्रज्वलत्काष्ठस्य । आद्यमेकं निखारा इति ख्यातस्य । अग्रिमद्वयं कोलीत इति ख्यातस्येत्यपि मतम् । "अङ्गारमुल्मुके न स्त्री पुंलिङ्गस्तु महीसुते" इति विश्वः ॥ अम्बरीषं भ्राष्ट्रः द्वे चणकादिभर्जनपात्रस्य "खापर, रान्हे इति ख्यातस्य ।" भृज्यतेऽस्मिन् भ्राष्ट्रः । कन्दुः स्वेदनी द्वे मद्यनिर्माणोपयोगिनो भाटीति प्रसिद्धपात्रस्य । कन्दुर्वा ना विकल्पेन पुमान् पक्षे स्त्री ॥ ३० ॥ अलञ्जरः "अलिञ्जर इत्यपि" मणिकः द्वे महाकुम्भस्य "माठ, डेरा इति ख्यातस्य ।" कर्करी आलुः "आलूरित्यपि" गलन्तिका त्रयं तण्डुलादिप्रक्षालनोपयोगिन्याः गलन्तिकायाः "गळती इति ख्यातायाः वा, रोवळी इति लौकिकप्रसिद्धिः । अथवा झारी इत्यपि प्रसिद्धायाः" गलत्यम्भोऽस्या गलन्तिका । पिठरः स्थाली उखा "उषेत्यपि" कुण्डं चत्वारि स्थाल्याः । "पिठरः स्थाल्यां न क्लीबम्" इति मेदिनी । "स्थालं भाजनभेदेऽपि स्थाली स्यात्पाटलोखयोः" इति मेदिनी । "कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान् । पिठरे तु न ना" इति विश्वमेदिन्यौ । कलशः । "दन्त्यान्तोऽपि । केन जलेन लसति कलसः" ॥ ३१ ॥ घटः कुटः निपः चत्वारि कलशस्य । कलशं कलशी । द्वयोरिति घटेन सम्बध्यते । घटी । अस्त्रीति शरावेण संबध्यते । शरावः "सराव इति दन्त्यादिरपि" । वर्धमानकः द्वे पात्रभेदस्य "मालटी

32-35



ऋजीषं पिष्टपचनं कंसोऽस्त्री पानभाजनम् ॥ ३२ ॥
कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमान् ॥
सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम् ॥ ३३ ॥
दर्विः कम्बिः खजाका च स्यात्तर्दूर्दारुहस्तकः ॥
अस्त्री शाकं हरितकं शिग्रुरस्य तु नाडिका ॥ ३४ ॥
कलम्बश्च कडम्बश्च वेषवार उपस्करः ॥
तिन्तिडीकं च चुक्रं च वृक्षाम्लमथ वेल्लजम् ॥ ३५ ॥

इति प्रसिद्धस्य ।" ऋजीषं "ऋचीषमित्यपि"। "ऋच शब्दे" । बाहुलकात्कीषच् । पिष्टपचनं द्वे पिष्टपाकोपयोगिनः पात्रस्य "तवा, कढई इति ख्यातस्य ।" कंसः पानभाजनं "द्वे क्षीरादिपानपात्रस्य" ॥ ३२ ॥ कृत्तेश्चर्मणः स्नेहपात्रं तैलाद्याधारपात्रं कुतूः स्यात् एकं "बुधला इति ख्यातस्य ।" स्त्रियाम् । सैव कुतूरल्पा ह्रस्वा चेत्कुतुपः । "कुत्वा डुपच्" । बुधली डपकी इति लौकिकभाषायाम् । सर्वं "स्यूतादि पिठरादि च" पात्रमात्रं आवपनादिसंज्ञम् । आवपनं भाण्डं पात्रं अमत्रं भाजनं पञ्च " भांडें आयधण इति ख्यातस्य । पिबत्यनेन पात्रम्" ॥ ३३ ॥ दर्विः "दर्वी" कम्बिः "कम्बी" खजाका त्रयं स्त्रियां दर्व्याः "पळी इति ख्यातायाः ।" खजति मथ्नाति पाकं खजाका । तर्दूः दारुहस्तकः द्वे दर्वीभेदस्य "डवली इति ख्यातस्य । दारुणो हस्तको दारुहस्तकः" । तर्दूः पुंसि । अयं परिवेषणाद्युपयोगी । शाकं हरितकं शिग्रुः त्रयं वास्तुकादेः शाकस्य । शक्यते भोक्तुमनेन शाकम् । शिग्रुः पुंसि । सौभाञ्जनेऽपि शिग्रुरुक्तः । अस्य शाकस्य नाडिका नालम् ॥ ३४ ॥ कलम्बः कडम्ब इति च स्यात् द्वे "देंट इति ख्यातस्य" । वेषवारः "वेसवारः वेशवार इत्यपि" उपस्करः द्वे शाकादिसंस्कारार्थे रचितहरिद्रासर्षपमरीचादिचूर्णस्य । आत्रेयसंहितायामुक्तम् । "चित्रकं पिप्पलीमूलं पिप्पली चव्यनागरम् । धान्याकं रजनीश्वेततण्डुलाश्च समांशकाः । वेसवार इति ख्यातः शाकादिषु नियोजयेत्" इति "दश पलानि हरिद्रायाः । विंशतिपलानि धान्याकस्य । पञ्च पलानि शुद्धजीरकस्य । सार्द्धद्वयपलं मेथिकायाः । एतच्चतुष्टयं भर्जितमेव ग्राह्यम् । त्रीणि पलानि मरीचस्य । अर्द्धपलं हिङ्गोः ।

मरीचं कोलकं कृष्णमूषणं धर्मपत्तनम् ॥
जीरको जरणोऽजाजी कणा कृष्णे तु जीरके ॥ ३६ ॥

सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्चिका ॥
आर्द्रकं शृङ्गबेरं स्यादथ छत्रा वितुन्नकम् ॥ ३७ ॥

कुस्तुम्बरु च धान्याकमथ शुण्ठी महौषधम् ॥
स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम् ॥ ३८ ॥

आरनालकसौवीरकुल्माषाभिषुतानि च ॥
अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके ॥ ३९ ॥

एतत्सर्वमेकत्र संयोज्य संमर्दितं वेसवार इत्यन्ये"। तिन्तिडीकं "तितिडीकमित्यपि" चुक्रं वृक्षाम्लं त्रयं तिन्तिडीकस्याम्लभेदस्य "आमसोल इति ख्यातस्य"। वेल्लजम् ॥ ३५ ॥ मरीचं "मरिचमित्यपि" कोलकं कृष्णं ऊषणं धर्मपत्तनं षट्कं मरीचस्य मिरिं इति ख्यातस्य । ऊषणं दीर्घाद्यम् । ह्रस्वाद्यपि । "उषणं मरिचे क्लीबम्" इति मेदिनी । जीरकः जरणः अजाजी कणा चत्वारि जीरकस्य । अजाजी स्त्री ॥ ३६ ॥ सुषवी कारवी पृथ्वी पृथुः काला उपकुञ्चिका षट्कं कृष्णवर्णे जीरके "काळें जिरें, काळेरें इति ख्याते"। आर्द्रकं शृङ्गबेरं द्वे आर्द्रकस्य । शुण्ठ्याः पूर्वरूपमिदम् । "आलें इति ख्यातम्"। छत्रा विदुन्नकम् ॥ ३७ ॥ कुस्तुम्बरु "कुस्तुम्बरीति भरतमालायाम्"। धान्याकं धन्याकम् । ह्रस्वादीति मुकुटः । "धन्याकं धान्यकं धन्यं कुस्तुम्बुरु धनीयकम्" इति रभसः। धनेयकमित्यपि चत्वारि कोथिंबिरि "धणे" इति ख्यातस्य"। शुण्ठी "शुण्ठिरिति ह्रस्वान्तोऽपि। सधन्याशुण्ठिसैन्धवमिति वैद्यकम्"। महौषधं विश्वं नागरं विश्वभेषजं पञ्च शुण्ठ्याः । स्त्रियां तु विश्वा । विश्वस्य दोषस्य भेषजम् ॥ ३८ ॥ आरनालकं सौवीरं कुल्माषाभिषुतं अवन्तिसोमं धान्याम्लं कुञ्जलं काञ्जिकं सप्तकं काञ्जिकस्य । कुल्माषैरर्धस्विन्नैर्यवादिभिरभिषूयते स कुल्मषाभिषुतम् । कुल्माषमिति पृथग्वा । "कुल्माषं काञ्जिकेऽपि च" इति विश्वः । "कुल् अर्धस्विन्नः माषोऽसिन्कुल्माषः" अवन्त्या सूयते अवन्तिसोमम् । आह च धन्वन्तरिः । "काञ्जिकं काञ्जिकं वीरं कुल्माषाभिषुतं तथा। अवन्तिसोमं धान्याम्लमारनालं महारसम्।

सहस्रवेधि जतुकं बाह्लीकं हिङ्गु रामठम् ॥
तत्पत्री कारवी पृथ्वी बाष्पिका कबरी पृथुः ॥ ४०॥

निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी ॥
सामुद्रं यत्तु लवणमक्षीवं वशिरं च तत् ॥ ४१ ॥

सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे ॥
रौमकं वसुकं पाक्यं बिडं च कृतके द्वयम् ॥ ४२॥

सौवर्चलेऽक्षरुचके तिलकं तत्र मेचके ।

सौवीरं च सुवीराम्लं तथा चुक्रं तुषोदकम्" इति ॥ ३९ ॥ सहस्रवेधि जतुकं बाह्लीकं "बाह्लिकं" हिङ्गु रामठं पञ्च हिङ्गुवृक्षस्य निर्यासे । सहस्रं विध्यति गन्धेन सहस्रवेधि । इन्नन्तं क्लीबे तस्य हिङ्गुनः पत्री तत्पत्री । त्वक्पत्री । " तत्पत्री त्वचमाख्यातं त्वक्पत्री कारवीति च" इति रुद्रः । "त्वक्पत्रीति च कारव्यम्" इति हैमः । कारवी पृथ्वी बाष्पिका "बाष्पीकेत्यपि पाठः" कबरी पृथुः पञ्चकं हिङ्गुतरोः पत्र्यामित्यर्थः ॥ ४० ॥ निशा काञ्चनी पीता हरिद्रा वरवर्णिनी पञ्च हरिद्रायाः । निशाख्या निशापर्यायवाच्येत्यर्थः । तेन रजनी रात्रिरित्याद्यपि । निशाह्वेति क्वचित्पाठः । यत्सामुद्रं समुद्रभवं लवणं तत् अक्षीवं "अक्षिवमित्यपि" वशिरं "वसिरमित्यपि" द्वे ॥ ४१ ॥ सैन्धवः शीतशिवं "सितशिवं सितं शुभ्रं च तच्छिवं च" माणिमन्थं सिन्धुजं चत्वारि सिन्धुजे लवणे "शेंदेलोण इति ख्याते" । सिन्धुदेशे भवं सैन्धवम् । मणिमन्थपर्वते भवं माणिमन्थम् । मणिबन्धमित्यपि पाठः । रौमकं वसुकम् । वस्तकमिति हेमचन्द्रः । बस्तकम् । बस्त इव बस्तकम् अजगन्धित्वात् । "रौमके बस्तकं वसु" इति नाममाला । द्वे शाम्भरलवणस्य । शाम्भरिदेशे रुमानामको लवणाकरः तत्र भवं रौमकम् । सांभरलोण इति ख्यातम् । पाक्यं बिडं द्वयं द्वे नामनी कृतके कृत्रिमे लवणे "बिडलोण इति ख्याते" । पाके साधु पाक्यम् । क्षारमृत्तिकां हि पाचयित्वा लवणं कुर्वन्ति ॥ ४२ ॥ सौवर्चलः अक्षं रुचकं त्रीणि मधुरलवणस्य लवणभेदस्य । हृद्यगन्धमेतत् "संचळखार इति ख्यातम्" । तत्र सौवर्चले मेचके कृष्णवर्णे तिलकमित्येकम् । यद्वैद्याः । कृष्णसौवर्चलगुणा लवणे गन्धवर्जित इति मत्स्यण्डी फाणितं "द्वे राब काकवी इति ख्यातस्य" ।

मत्स्यण्डी फाणितं खण्डविकारः शर्करा सिता ॥ ४३ ॥
कूर्चिका क्षीरविकृतिः स्याद्रसाला तु मार्जिता ॥
स्यात्तेमनं तु निष्ठानं त्रिलिङ्गा वासितावधेः ॥ ४४ ॥
शूलाकृतं भटित्रं स्याच्छूल्यमुख्यं तु पैठरम् ॥
प्रणीतमुपसंपन्नं प्रयस्तं स्यात्सुसंस्कृतम् ॥ ४५ ॥
स्यात्पिच्छिलं तु विजिलं संमृष्टं शोधितं समे ॥
चिक्कणं मसृणं स्निग्धं तुल्ये भावितवासिते ॥ ४६ ॥

खण्डविकारः शर्करा सिता त्रीणि शर्करायाः "खडी साकर, पिठी साकर इति भेदभिन्नायाः ।" पञ्चापि शर्कराया इत्येके ॥ ४३ ॥ दध्यादिना क्षीरस्य विकृतिः कूर्चिका । यदाहुः । "दध्ना सह पयः पक्कं यत्तत्स्याद्दधिकूर्चिका । तक्रेण पक्कं यत्क्षीरं सा भवेत्तक्रकूर्चिका" इति । एकम् । रसाला मार्जिता द्वे दधिमधुशर्करामरीचार्द्रादिभिः कृतस्य लेह्यस्य श्रीखण्ड इति ख्यातस्य । यदुक्तं सूपशास्त्रे । "अर्धाढकः सुचिरपर्युषितस्य दध्नः खण्डस्य षोडश पलानि शशिप्रभस्य । सर्पिष्पलं मधु पलं मरिचं द्विकर्षं शुण्ठ्याः पलार्धमपि चार्धपलं चतुर्णाम् । सूक्ष्मे पटे ललनया मृदुपाणिघृष्टा कर्पूरधूलिसुरभीकृतपात्रसंस्था । एषा वृकोदरकृता सरसा रसाला या स्वादिता भगवता मधुसूदनेन" इति । तेमनं निष्ठानं द्वे व्यञ्जनस्य दध्यादेः "कढी इति ख्यातस्य ।" तिमत्यार्द्रीभवत्यन्नमनेन तेमनम् । सूपाद्यपि तेमनमुपचारात् । इतः परं वासितान्ता वाच्यलिङ्गाः ॥ ४४ ॥ शूलाकृतं भटित्रं शूल्यं त्रयं शूलेन संस्कृतस्य मांसादेः । शूलेन पक्कं शूलाकृतम् । शूलात्पाक इति डाच् । शूलं लोहशलाका । उख्यं पैठरं द्वे स्थालीसंस्कृतस्यान्नादेः । प्रणीतं उपसंपन्नं द्वे रसादिसंपन्नस्य व्यञ्जनादेः । प्रयस्तं सुसंस्कृतं द्वे प्रयत्ननिष्पन्नस्य घृतपक्वादेः ॥ ४५ ॥ पिच्छिलं विजिलं विजलं "विजनं चेत्यपि" द्वे मण्डयुक्तदध्यादेः "साई सुद्धां दहीं मठ्ठा इति ख्यातस्य ।" संमृष्टं शोधितं द्वे केशकीटाद्यपनयनेन शोधितस्यान्नादेः । चिक्कणं मसृणं स्निग्धं त्रीणि स्निग्धस्य । चिगिति अव्यक्तं कणति चिक्कणम् । "कण शब्दे" । भावितं वासितं द्वे पुष्पादिद्रव्यांतरेणाधिवासितस्य । यथा धूपेन भाविताास्तिलाः । वास्यते द्रव्यान्तरेण मिश्रीक्रियते धूप-

आपक्वं पौलिरभ्यूषो लाजाः पुंभूम्नि चाक्षताः ॥
पृथुकः स्याच्चिपिटको धाना भृष्टयवे स्त्रियः ॥ ४७ ॥
पूपोऽपूपः पिष्टकः स्यात्करम्भो दधिसक्तवः ॥
भिःसा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिविः ॥ ४८ ॥
भिःसटा दग्धिका सर्वरसाग्रे मण्डमस्त्रियाम् ॥
मासराचामनिस्रावा मण्डे भक्तसमुद्भवे ॥ ४९ ॥
यवागूरुष्णिका श्राणा विलेपी तरला च सा ॥

पुष्पादिना वाऽधिवास्यते वासितमिति स्वामी । "धूपितं वासितं विदुः" इति मुनिः ॥ ४६ ॥ आपक्वम् ईषत् पक्वम् । आङ् ईषदर्थेऽत्र । पौलिः अभ्यूषः "अभ्युषः अभ्योषश्चापि" । त्रयं "अर्द्धस्विन्नयवादेर्घृतादिना भर्जितयवादेर्वा घृतपक्वान्नस्य पोळी इत्यादिप्रसिद्धस्य" । लाजाः भर्जितव्रीहयः । पुंभूम्नि पुंसि बहुत्वे च । एवमक्षता अपि पुंभूम्नि । अक्षता यवा इति पुराणम् । एकैकस्याभिधानं पुंबहुत्वविधानार्थम् । "लाजः स्यादार्द्रतण्डुले । नपुंसकमुशीरेऽथ स्त्रियां पुंभूम्नि चाक्षताः" इति मेदिनी । "अक्षतं न द्वयोः षण्डे लाजेषु त्रिष्वहिंसिते । यवेऽपि क्वचित्" इति मेदिनी । पृथुकः चिपिटकः द्वे आर्द्रभृष्टव्रीहितण्डुलस्य "पोहे इति प्रसिद्धस्य" । धाना इत्येकं भृष्टयवे वर्तते । नित्यं स्त्रियां बहुत्वे च ॥ ४७ ॥ पूपः अपूपः पिष्टकः त्रीणि तण्डुलपिष्टरचितस्य भक्ष्यभेदस्य "वडा, घारगा इत्यादिख्यातस्य" । "अपूपः पिष्टपूपः स्यात्" इति मुनिः । यल्लक्ष्यम् । "चन्द्रांशुनिर्मलाः पूपाः शालितण्डुलनिर्मिताः" इति । दधियुक्ताः सक्तवो दधिसक्तवः करम्भः स्यात् । करम्ब इत्यपि । केन जलेन रम्बते । रबि शब्दे । एकम् । सक्तवस्तु धानाचूर्णम् ते च प्रायेण पुंभूम्नि । भिःसा भक्तं अन्धः अन्नं ओदनः दीदिविः षड्भक्तस्य । अन्धः सान्तम् । ओदनोऽस्त्री । दीदिविः पुंसि ॥ ४८ ॥ भिःसटा दग्धिका द्वे दग्धान्नस्य "करप इति ख्यातस्य" । सर्वेषां रसानां द्रवद्रव्याणां अग्रं अग्रिमो द्रवः मण्डः स्यात् । "क्लीबे मण्डम् । एकं निवळी इति ख्यातस्य" । मासरः आचामः निस्रावः "विस्राव इति मुकुटः" त्रीणि भक्तसमुद्भवे मण्डे नीस "पेज" इति ख्याते ॥ ४९ ॥ यवागूः उष्णिका श्राणा विलेपी तरला पञ्च द्रवदोदनस्य "आटवल, पातळ भात कञ्जेरी

("प्रक्षणाभ्यञ्जने तैलं कृसरस्तु तिलौदनः" ॥) (१)
गव्यं त्रिषु गवां सर्वं गोविड् गोमयमस्त्रियाम् ॥ ५० ॥
तत्तु शुष्कं करीषोऽस्त्री दुग्धं क्षीरं पयः समम् ॥
पयस्यमाज्यदध्यादि द्रप्सं दधि घनेतरत् ॥ ५१ ॥
घृतमाज्यं हविः सर्पिर्नवनीतं नवोद्धृतम् ॥
तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतम् ॥ ५२ ॥
दण्डाहतं कालशेयमरिष्टमपि गोरसः ॥
तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ॥ ५३ ॥

इति ख्यातस्य।" यवागूर्दीर्घान्ता। "प्रक्षणेत्यर्धं क्षेपकम्। प्रक्षणं अभ्यञ्जनं द्वे तैलस्य। तिलमिश्र ओदनः कृसरः स्यादेकम्"। गवां सर्वं गोरिदं गवि भवं गोविकार इत्याद्यर्थेषु यत्क्षीरादि तद्गव्यं स्यात् एकम्। "त्रिषु। दधिदुग्धादेः"। गोविट् गोमयं द्वे गोः पुरीषे "शेण इति ख्याते"। गोविट् षान्ता स्त्री ॥ ५० ॥ तद्गोमयं शुष्कं करीषं स्यात् एकं "गोवरी इति ख्यातस्य"। दुग्धं क्षीरं पयः त्रीणि "दूध इति ख्यातस्य"। पयः सान्तम्। पयसो विकारो यदाज्यदध्यादि तत्पयस्यम्। "आदिना तक्रं नवनीतम्"। यद्घनादितरत् श्लथं दधि तत् द्रप्सं स्यात्। "द्रप्समिति भरतमालायाम्। द्रप्सः पुंस्यपि। एकं पातळ दहीं इति प्रसिद्धस्य" ॥ ५१ ॥ घृतं आज्यं हविः सर्पिः चत्वारि घृतस्य। हविषी सर्पिषी "हविः सर्पिषि होतव्ये" इति हैमः। अञ्जनीयमाज्यम्। आङ्पूर्वादञ्जेः संज्ञायां क्यप्। नवनीतं नवोद्धृतं द्वे "लोणी इति ख्यातस्य"। मथिताद्भवो नवं तत्कालमुद्धृतं ह्योगोदोहोद्भवं पूर्वदिनप्राप्तगोक्षीरघृतं हैयङ्गवीनं स्यात्। एकं "एकरात्रपर्युषिताद्भव उत्पन्नस्य घृतस्य"। ह्यः पूर्वदिने यो गोदोहस्तस्मादुद्भवो यस्य तत्। "हैयंगवीनं संज्ञायाम्"। ह्यो गोदोहस्य हियङ्गुरादेशः विकारार्थे खञ् च निपात्यते ॥ ५२ ॥ दण्डाहतं कालशेयं अरिष्टम्। "अरिष्टमशुभे तक्रे सूतिकागार आसवे। शुभे मरणचिह्ने च" इति विश्वः। गोरसः चत्वारि दण्डमथितस्य गोरसमात्रस्य। तद्विशेषमाह। पादाम्बु चतुर्थांशमुदकं यत्र तद्दण्डाहतं तक्रमित्युच्यते। अर्धाम्बु अर्धमुदकं यत्र गोरसे तदुदश्वित्। तान्तम्। उदकेन श्वयति वर्द्धते इति विग्रहः। "टुओश्वि गतिवृद्ध्योः।" निर्जलं जलरहितं दधिमन्थन-

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

53-57



मण्डं दधिभवं मस्तु पीयूषोऽभिनवं पयः ॥
अशनाया बुभुक्षा क्षुद्ग्रासस्तु कवलः पुमान् ॥ ५४ ॥
सपीतिः स्त्री तुल्यपानं सग्धिः स्त्री सहभोजनम् ॥
(उदन्या तु पिपासा तृट् तर्षो जग्धिस्तु भोजनम्॥५५॥)(१)
जेमनं लेह आहारो निघासो न्याद इत्यपि ॥
सौहित्यं तर्पणं तृप्तिः फेला भुक्तसमुज्झितम् ॥ ५६ ॥
कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ॥
गोपे गोपालगोसंख्यगोधुगाभीरबल्लवाः ॥ ५७ ॥

मात्रेण मथितमित्युच्यते । एकैकम् ॥ ५३ ॥ दधिभवं मण्डं अग्रिमं मस्तु स्यात् । एकम् क्लीबे । "दध्न उपरिभागस्य । वस्त्रनिसृतदधिजलस्येत्यपि मतम्" । अभिनवं पयः नवप्रसूतायाः गोः क्षीरं सप्तदिनावधि पीयूषः स्यात् । "पीयूषं सप्तदिवसावधि क्षीरे तथाऽमृते" इति विश्वमेदिन्यौ । "पेयूषमिति मुकुटः" तत्कथितं सत्पीयूषशब्दवाच्यमित्येके । एकम् । अशनाया बुभुक्षा क्षुत् त्रयं क्षुधः । क्षुत्स्त्री धकारान्तः । "अशनस्य इच्छा अशनाया । क्षुधे-त्यन्यत्र" । ग्रासः कवलः द्वे "घांस इति ख्यातस्य । कवलार्थक इत्यपि पाठः" ॥ ५४ ॥ सपीतिः तुल्यपानं द्वे सहपानस्य । सग्धिः सहभोजनं द्वे "सहभोजनस्य" तत्र सग्धिः स्त्री । उदन्या पिपासा तृट् तर्षः चत्वारि तृषः । तृट् षान्ता । तर्षः पुंसि । "तृषा लिप्सातृषोः स्त्रियाम्" इति विश्वः । जग्धिः भोजनम् ॥ ५५ ॥ जेमनं "जमनमिति द्विरूपकोशः" लेहः "लेपः । लेपस्तु लेपने । "अशने च सुरायां च"इति हेमचन्द्रः । आहारः निघासः "निघस इत्यपि" न्यादः सप्त भोजनस्य । जग्धिः स्त्री । सौहित्यं तर्पणं तृप्तिः त्रीणि तृप्तेः । पूर्वं भुक्तं पश्चात्समुज्झितं भुक्तसमुज्झितं भुक्त्वोत्सृष्ट-मिति यावत् सा फेला स्यात् । फेलीरिति जटाधरः" एकम् ॥ ५६ ॥ कामं प्रकामं पर्याप्तं निकामं इष्टं यथेप्सितं षट्कं यथेसिप्तस्य । क्रियाविशेषणान्ये-तानि । यथा कामं भुङ्क्ते स । गोपः गोपालः गोसंख्यः गोधुक् गोदुहः । "गोपगोदुहबल्लवाः" इति त्रिकाण्डशेषः । आभीरः अभीर इत्यपि । अभि ईरयति ईर गत्यादौ । बल्लवः षट् गोपालस्य । गोदुहौ ॥ ५७ ॥ गोमहि-

इदमर्धं ताळपत्रपुस्तकेऽपि नास्ति ॥

गोमहिष्यादिकं पादबन्धनं द्वौ गवीश्वरे ॥
गोमान्गोमी गोकुलं तु गोधनं स्याद्गवां व्रजे ॥ ५८ ॥

त्रिष्वाशितङ्गवीनं तद्गावो यत्राशिताः पुरा ॥
उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ॥ ५९ ॥

अनड्वान्सौरभेयो गौरुक्ष्णां संहतिरौक्षकम् ॥
गव्या गोत्रा गवां वत्सधेन्वोर्वात्सकधैनुके ॥ ६० ॥

वृषो महन्महोक्षः स्याद्वृद्धोक्षस्तु जरद्गवः ॥
उत्पन्न उक्षा जातोक्षः सद्यो जातस्तु तर्णकः ॥ ६१ ॥
शकृत्करिस्तु वत्सः स्याद्दम्यवत्सतरौ समौ ॥

ष्यादिकं पादबन्धनमित्युच्यते पादेन पादे वा बन्धनमस्येति । यादवं धनमित्येके पेठुः । तत्र, गवादि यादवं वित्तमिति कोशान्तरप्रमाणम् । आदिना खराजाविकादेर्ग्रहणम् । गोमान् गोमी द्वौ शब्दौ गवीश्वरे गवां स्वामिनि । गोमन्तौ । गोमिनौ । गोकुलं गोधनं द्वे गवां व्रजे गोसंबन्धिसमूहे ॥ ५८ ॥ यत्र पुरा गाव आशिताः भोजिताः तत्स्थानं आशितङ्गवीनं एकम् । त्रिषु लिङ्गत्रये । उक्षा भद्रः बलीवर्दः "बरीवर्दः" ऋषभः वृषभः वृषः ॥ ५९ ॥ अनड्वान् । अनः शकटं वहतीति । "अनः क्लीबं जले शोके मातृस्यन्दनयोरपि" इति रभसः । सौरभेयः गौः नव वृषभस्य । उक्षाणौ । अनड्वाहौ । गावौ । "स्त्रियां अनड्वाही । आमनडुहः स्त्रियां वा । अनुडुहीत्यपि" । उक्ष्णां वृषभाणां संहतिः समूह औक्षकं स्यात् एकम् । गवां संहतिः गव्या गोत्रा द्वे । वत्सानां संहतिर्वात्सकम् । धेनूनां संहतिर्धैनुकम् । एकैकं क्रमेण ॥ ६० ॥ महान्वृषो महोक्षः एकं महावृषस्य । अचतुरेति साधुः । वृद्धोक्षः जरद्गवः द्वे वृद्धवृषभस्य । यन्मालायाम् । "महोक्षः स्यादुक्षतरः स्कान्धिकः स्कन्धवाहकः । षोडन्सद्दशनो वत्सः कूटो भग्नविषाणकः" इति । उत्पन्नः बलीवर्दभावं प्राप्तः उक्षा जातोक्षः स्यात् एकम् । सद्यो जातो वृषस्तर्णकः स्यात् एकम् ॥ ६१ ॥ शकृत्करिः वत्सः द्वे । दम्यः वत्सतरः द्वे स्पष्टतारुण्यस्य । वत्सत्वं स्वल्पमस्य वत्सतरः । षण्डता गोपतित्वं तद्योग्य आर्षभ्यः एकम् षण्ढः "शण्ढ इत्यपि" गोपतिः इट्चरः "इत्वर इत्यपि" त्रीणि स्वेच्छाचारिणो

62-66



आर्षभ्यः षण्डतायोग्यः षण्डो गोपतिरिट्चरः ॥ ६२ ॥

स्कन्धदेशे त्वस्य वहः सास्ना तु गलकम्बलः ॥
स्यान्नस्तितस्तु नस्योतः प्रष्ठवाड् युगपार्श्वगः ॥ ६३ ॥

युगादीनां तु वोढारो युग्यप्रासङ्ग्यशाकटाः ॥
खनति तेन तद्वोढाऽस्येदं हालिकसैरिकौ ॥ ६४ ॥

धूर्वहे धुर्यधौरेयधुरीणाः सधुरन्धराः ॥
उभावेकधुरीणैकधुरावेकधुरावहे ॥ ६५ ॥
स तु सर्वधुरीणः स्याद्यो वै सर्वधुरावहः ॥
माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी ॥ ६६ ॥

वृषभस्य पोळ इति ख्यातस्य । सनोति ददाति गर्भं षण्डः । इषा इच्छया चरति इट्चरः ॥ ६२ ॥ अस्य वृषभस्य स्कन्धदेशे वहः स्यात् एकं "खांदा इति ख्यातस्य"। सास्ना गलकम्बलः द्वे गोः कण्ठे लम्बमानस्य चर्मणः "सांकळी, कांबळ इति ख्यातस्य" । नस्तितः नस्योतः "नस्तोत इत्यपि पाठः" द्वे स्यूतनासिकस्य "वेसण्या बैल इति ख्यातस्य" । नस्ये नासारन्ध्रे ऊतः रज्ज्वा प्रोतः नस्योतः । प्रष्ठवाट् "पष्ठवाडिति रेफरहितमिति स्वामी" । युगपार्श्वगः द्वे दमनार्थं युग्येन सह स्कन्धे बद्धकाष्ठस्य । युगस्य स्कन्धकाष्ठस्य पार्श्वे गच्छतीति युगपार्श्वगः ॥ ६३ ॥ युगस्य वोढा युग्यः । वत्सानां दमनकाले स्कन्धे काष्ठमासज्यते स प्रासङ्गः तस्य वोढा प्रासङ्ग्यः "लोढण्या बैल इति ख्यातः" । शकटस्य वोढा शाकटः एकैकम् । तेन खनतीत्याद्यर्थे हालिकः सैरिकश्च स्यात् । यथा हलेन खनति हालिकः । एवं हलस्य वोढा हलस्यायं वा हालिकः । एवं सीरेण खनति सीरस्य वोढा सीरस्यायं वा सैरिकः । सीरो हलस्य पर्यायः द्वे "नांगऱ्या बैल इति ख्यातस्य" ॥ ६४ ॥ धूर्वहः धुर्यः धौरेयः धुरीणः धुरन्धरः । धुरन्धरेण सहिताः सधुरन्धराः एते पञ्च शब्दाः धुरन्धरवृषभस्य वाचकाः । धूर्वहशब्दो दीर्घादिः । "र्वोरुपधायाः" इति दीर्घः [ धुर्य इत्यत्र तु "न भकुर्छुराम्" इति दीर्घनिषेधः ] । एकधुरीणः एकधुरः एकधुरावहः त्रयं य एकामेव धुरं वहति तस्य ॥ ६५ ॥ यः सर्वामपि धुरं वहति स सर्वधुरीणः एकम् । माहेयी

अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा गोषु नैचिकी ॥
वर्णादिभेदात्संज्ञाः स्युः शबलीधवलादयः ॥ ६७ ॥

द्विहायनी द्विवर्षा गौरेकाब्दा त्वेकहायनी ॥
चतुरब्दा चतुर्हायण्येवं त्र्यब्दा त्रिहायनी ॥ ६८ ॥

वशा वन्ध्याऽवतोका तु स्रवद्गर्भाऽथ सन्धिनी ॥
आक्रान्ता वृषभेणाथ वेहद्गर्भोपघातिनी ॥ ६९ ॥

काल्योपसर्या प्रजने प्रष्ठौही बालगर्भिणी ॥
स्यादचण्डी तु सुकरा बहुसूतिः परेष्टुका ॥ ७० ॥

सौरभेयी गौः उस्रा माता शृङ्गिणी ॥ ६६ ॥ अर्जुनी अघ्न्या रोहिणी नवकं गवि । गावौ । मातरौ । या गोषु उत्तमा सा गौर्नैचिकीत्येकम् । निचिकी । "नैचकी गौरुत्तमा तु निचिकी सा प्रकीर्तिता" इति नाममाला । "नीचिका नीचिकी च" इति द्विरूपकोशः नीचैश्चरति नैचिकी । वर्णावयवप्रमाणादीनां भेदात् शबलीधवलादयो गवां संज्ञाः । शबली चित्रवर्णा "शबलापि" धवला शुक्लवर्णा "धवल्यपि" । आदिना कपिला पाटलेत्यादि । अवयवभेदात् लम्बकर्णा वक्रशृङ्गीत्यादि । "प्रमाण भेदात् दीर्घा खर्वा वामनीत्यादि ।" एकैकम् ॥ ६७ ॥ वयोभेदात्संज्ञाभेदमाह । द्विवर्षा द्वे वर्षे प्रमाणमस्याः सा गौर्द्विहायनी एकम् । एकाब्दा गौः एकहायनी एकम् । चतुरब्दा गौः चतुर्हायणी एकम् । त्रिवर्षा त्रिहायणी स्यात् एकम् । "त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम्" ॥ ६८ ॥ वशा वन्ध्या द्वे वांझ इति ख्यातायाः । अवतोका वतोकेत्यपि स्रवद्गर्भा द्वे अकस्मात्पतितगर्भायाः । "मृतवत्सा स्रवद्गर्भा" इति माला । वृषभेण मैथुनार्थे आक्रान्ता सन्धिनी । सन्धा गर्भाधानमस्त्यस्याः सन्धिनी वा एकम् । वृषोपगमनाद्गर्भोपघातिनी वेहदित्युच्यते एकम् । तान्तं स्त्रियाम् । विहन्ति गर्भं वेहत् । वेहद्वृषोपगतेति भागुरिः ॥ ६९ ॥ प्रजने गर्भग्रहणे काल्या प्राप्तकाला सा गौरुपसर्या एकम् । बाला चासौ गर्भिणी च बालगर्भिणी सा प्रष्ठौही । "पष्ठौहीत्यपि पाठः । तत्र पृषोदरादित्वात् रलोपः" एकम् । अचण्डी सुकारा द्वे अकोपनायाः । बहुसूतिः परेष्टुका द्वे बहुप्रसवायाः ॥ ७० ॥ चिरप्रसूता "बष्कयणी बष्कयिणीत्यपि । बष्कयस्तरुणवत्सः

70-74



चिरप्रसूता बष्कयणी धेनुः स्यान्नवसूतिका ॥
सुव्रता सुखसंदोह्या पीनोध्नी पीवरस्तनी ॥ ७१ ॥

द्रोणक्षीरा द्रोणदुग्धा धेनुष्या बन्धके स्थिता ॥
समांसमीना सा यैव प्रतिवर्षं प्रसूयते ॥ ७२ ॥

ऊधस्तु क्लीबमापीनं समौ शिवककीलकौ ॥
न पुंसि दाम संदानं पशुरज्जुस्तु दामनी ॥ ७३ ॥

वैशाखमन्थमन्थानमन्थानो मन्थदण्डके ॥
कुठरो दण्डविष्कम्भो मन्थनी गर्गरी समे ॥ ७४ ॥

सोऽस्त्यस्याः । बष्कयस्त्वेकहायनो वत्स इति शाकटायनः" द्वे दीर्घकालेन प्रसूतायाः । धेनुः नवसूतिका द्वे नूतनप्रसूतायाः । सुव्रता सुखसंदोह्या "सुखसंदुह्येत्यपि" द्वे सुशीलायाः "निसकीन इति ख्यातायाः" । पीनोध्नी पीवरस्तनी द्वे स्थूलस्तन्याः ॥ ७१ ॥ द्रोणक्षीरा द्रोणदुग्धा द्वे द्रोण-परिमितदुग्धदात्र्याम् । बन्धकं आधिस्तत्र स्थिता ऋणशुद्धिपर्यन्तं उत्तमर्णगृहे दोहनार्थं स्थापितेति यावत् सा धेनुष्या एकम् । "बन्धकं स्याद्विनिमयः" इति विश्वः । बन्धकं आधिर्नाम गाहाण इति लौकिकभाषायाम् । या वर्षे वर्षे प्रसूयते सा समांसमीनेत्येकं पञ्चाक्षरम् ॥ ७२ ॥ ऊधः आपीनं द्वे गोस्तनस्य "कांस इति ख्यातस्य ।" ऊधः सान्तं क्लीबम् । शिवकः कीलकः द्वे गवां बन्धनार्थं निखातस्य काष्ठस्य "मेढ इति ख्यातस्य" । दाम संदानं द्वे बन्धनरज्जोः "दावें इति ख्यातायाः ।" संदीयते बध्यतेऽनेन संदानम् । दाम नान्तम् । स्त्रियां तु दामा दामानौ । पशुरज्जुः दामनी "बन्धनीत्यपि पाठः" द्वे यस्यामेकस्यां बहुग्रन्थियुतायां बहवो वृषा बध्यन्ते तस्या रज्जोः "दावण इति ख्यातायाः ।" चरणपाशस्येत्येके ॥ ७३ ॥ वैशाखः मन्थः मन्थानः मन्थाः मन्थदण्डकः पञ्च मन्थनदण्डस्य "रवी इति ख्यातस्य ।" मन्थाः मन्थानौ । कुठरः । "कुटर इति पाठे तु कुट कौटिल्ये बाहुलकादरः ।" दण्डविष्कम्भः द्वे यत्र मन्थदण्डो बध्यते तस्य स्तम्भस्य "घुसळखांब इति ख्यातस्य ।" मन्थनी गर्गरी द्वे मथ्यमानदधिपात्रस्य । मन्थतेऽस्यां मन्थनी । कल-शीत्यपि पाठः ॥ ७४ ॥ उष्ट्रः क्रमेलकः मयः महाङ्गः चत्वारि उष्ट्रस्य उष्ट्रस्य

उष्ट्रे क्रमेलकमयमहाङ्गाः करभः शिशुः ॥
करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः ॥ ७५ ॥
अजा छागी शुभच्छागबस्तच्छगलका अजे ॥
मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके ॥ ७६ ॥
उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम् ॥
चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः ॥ ७७ ॥
वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् ॥
पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः ॥ ७८ ॥
विक्रेता स्याद्विक्रयिकः क्रायकक्रयिकौ समौ ॥
वाणिज्यं तु वणिज्या स्यान्मूल्यं वस्नोऽप्यवक्रयः ॥ ७९ ॥

शिशुः करभ इत्येकम् । दारवैः काष्ठमयैः पादबन्धनैरुपेताः करभाः शृङ्खलकाः स्युरेकम् ॥ ७५ अजा छागी द्वे "शेळी इति ख्यातायाः" । शुभः "तुभः स्तभः स्तुभश्चेत्यपि" । छागः बस्तः छगलकः अजः पञ्चकमजस्य "बोकड इति ख्यातस्य" । मेढ्रः उरभ्रः उरणः ऊर्णायुः मेषः वृष्णिः एडकः "सप्तकं मेंढरूं एडका इति ख्यातस्य" । अविरित्यपि । ऊर्णायुरुदन्तः ॥ ७६ ॥ उष्ट्राणां वृन्दे औष्ट्रकम् । उरभ्राणां वृन्दे औरभ्रकम् । अजानां वृन्दे आजकम् । क्रमादेकैकम् । चक्रीवान् बालेयः रासभः गर्दभः खरः पञ्च गर्दभस्य "गाढव इति ख्यातस्य" ॥ ७७ ॥ वैदेहकः सार्थवाहः नैगमः निगमः । "निगमो वाणिजे पुर्याम्" इति विश्वः । वाणिजः वणिक् पण्याजीवः आपणिकः क्रयविक्रयिकः अष्टौ क्रयविक्रयाभ्यां वर्तमानस्य वाणी इति ख्यातस्य । "वणिक् स्त्रियां वणिज्यायां पुमान्वाणिजकेऽपि च" इति विश्वः । वणिजौ ॥ ७८ ॥ विक्रेता विक्रयिकः द्वे वस्त्रपात्रादि दत्वा तन्मूल्यं गृह्णतः "विकणारा इति ख्यातस्य" । विक्रयेण जीवति विक्रयिकः" । क्रायकः क्रयिकः द्वे मूल्येन वस्त्रादि गृह्णतः "विकत घेणारा इति प्रसिद्धस्य । क्रयेण जीवति क्रयिकः" । वाणिज्यं वणिज्यमपि । "दूतवणिग्भ्यां च" इति यः । वणिज्या द्वे वणिजां कर्मणि "वाणीपणा इति ख्याते । वणिजां कर्म वाणिज्यम्" । मूल्यं वस्नः अवक्रयः त्रयं विक्रेयवस्तूनां मूल्यस्य "मोल इति

नीवी परिपणो मूलधनं लाभोऽधिकं फलम् ॥
परिदानं परीवर्तो नैमेयनिमयावपि ॥ ८० ॥

पुमानुपनिधिर्न्यासः प्रतिदानं तदर्पणम् ॥
क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके ॥ ८१ ॥

विक्रेयं पणितव्यं च पण्यं क्रय्यादयस्त्रिषु ॥
क्लीबे सत्यापनं सत्यङ्कारः सत्याकृतिः स्त्रियाम् ॥ ८२ ॥

विपणो विक्रयः संख्याः संख्येये ह्यादश त्रिषु ॥

ख्यातस्य" । वसत्यस्मिन्वस्तुप्राप्तिरिति वस्नः ॥ ७९ ॥ नीवी "नीविरित्यपि" परिपणः मूलधनं क्रयविक्रयादिव्यवहारे यन्मूलधनं तस्य भांडवल इति ख्यातस्य । नीवी स्त्री । परिपण्यते वृद्ध्यर्थं प्रयुज्यते परिपणः । मूलधनादधिकं निष्पन्नं कालान्तरेण स लाभः स्यात् एकं "नफा इत्यादिख्यातस्य" । परिदानं "प्रतिदानमित्यपि" परीवर्तः "परिवर्त इत्यपि" नैमेयः "वैमेयोऽपि" निमयः "विमय इत्यपि" चत्वारि परिवर्तनस्य "मोबदला इतिप्रसिद्धस्य" । "मेङ् प्रणिदाने" । निमानं नियमः ॥ ८० ॥ उपनिधिः न्यासः द्वे निक्षेपस्य "ठेव, पुरलेलें द्रव्य इति प्रसिद्धस्य" स्मृतौ तेषां भेदो नास्ति । तस्य निक्षेपस्य निक्षेप्त्रे अर्पणं प्रतिदानमित्युच्यते । एकम् । प्रतीपं दानं प्रतिदानम् । क्रये "क्रयविषये ग्राहका गृह्णीयुरिति बुद्ध्या" यदापणे प्रसारितं वस्तु तत् क्रय्यं एकम् । यत्क्रेतव्यमात्रं यत्र क्वापि वर्तते तत्क्रेयम् ॥ ८१ ॥ एवं विक्रेयं पणितव्यं पण्यं त्रयं विक्रेयस्य वस्तुनः । क्रय्यादयो वाच्यलिङ्गाः । सत्यापनं सत्यापना । "सत्यापना सत्याकृतिः" इति त्रिकाण्डे बोपालितात् । सत्यङ्कारः सत्याकृतिः त्रयं अवश्यं मयैतत्क्रेतव्यमित्यादिरूपस्य सत्यस्य करणे "सई करणें इति ख्याते । सत्यङ्कारस्तु लोके सचूकार, विसार इत्यादिप्रसिद्धः" । सत्यस्य कृतिः सत्याकृतिः । "सत्यादशपथ" इति डाच् ॥ ८२ ॥ विपणः विक्रयः द्वे "विकणें इति ख्यातस्य" । आदश "दशशब्दमभिव्याप्य" एकाद्या अष्टादशांता संख्याशब्दाः संख्येये वर्तमानास्त्रिषु । यथा एका शाटी । एकः पटः । एकं वस्त्रम् । दश स्त्रियः । दश पुरुषाः । दश कुलानि । "न तु विप्रस्यैक इत्यादि" एवं अष्टादशपर्यंताः उदाहर्तव्याः । तत्र चतुष्पर्यन्ता वाच्यलिङ्गाः । शेषं त्रिषु

विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः ॥ ८३ ॥

संख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः ॥
पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम् ॥ ८४ ॥

यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् ॥
मानं तुलाऽङ्गुलिप्रस्थैर्गुञ्जाः पञ्चाद्यमाषकः ॥ ८५ ॥

समानम् । द्विशब्दादेषां संख्येये एव वृत्तिर्न तु संख्यायामिति सूचितम् । विंशत्याद्याः विंशतिमारभ्य परार्द्धपर्यन्ताः सर्वाः संख्याः सदैकत्वे नित्यमेकवचनान्ताः । संख्येये संख्यायां च वर्तन्ते । तत्र संख्येये यथा । एकोनविंशतिः पटाः । विंशत्या पुरुषैः कृतम् । सन्ति शतं गाव इत्यादि । संख्यायां यथा । पटानां विंशतिः । गवां शतम् ॥ ८३ ॥ संख्यार्थे द्विबहुवचने स्तः । संख्यान्तरार्थे वर्तमानाया विंशत्यादिसंख्यायाः द्विवचने बहुवचने अपि भवत इत्यर्थः । यथा द्वे विंशती । गवां शतानि । "तिस्रो विंशतय इत्यादि । तासु विंशत्यादिषु नवतिपर्यन्ताः स्त्रियाम् ॥" पङ्क्तेरिति । पङ्क्तिर्दशसंख्या तामारभ्य दशगुणं उत्तरं यत्र तादृशं संख्यानं क्रमात् शतसहस्रादि स्यात् । "पङ्क्तिर्दशाक्षरछन्दो दशसंख्यावलिष्वपि" इति विश्वः । यथा दशगुणा पङ्क्तिः शतं स्यात् । शतं दशगुणं सहस्रं स्यात् । एवमयुतादि । यदाहुः । एकदशशतसहस्रायुतलक्षप्रयुतकोट्यः क्रमशः । अर्बुदमब्जं खर्वनिखर्वमहापद्मशंकवस्तस्मात् । जलधिश्चांत्यं मध्यं परार्धमिति दशगुणोत्तराः संज्ञाः । संख्यायाः स्थानानां व्यवहारार्थं कृताः पूर्वैरिति ॥ ८४ ॥ यौतवं द्रुवयं पाय्यं इति त्रयं मानर्थकम् मानमर्थो यस्य तत् । परिमाणवाचकमित्यर्थः । यौतवं ओष्ठ्यान्तवर्णम् । पाय्यं तालव्यसंयुक्तान्तम् । तन्मानं तुलाङ्गुलिप्रस्थैर्मियते । तुलामानं अङ्गुलिमानं प्रस्थमानंचेति त्रिविधमित्यर्थः । एतदेवोन्मानप्रमाणपरिमाणशब्दैः क्रमेण व्यवह्रीयते । यदुक्तम् । "ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्संख्याभिन्ना तु सर्वतः" इति । पञ्च गुञ्जाः आद्यमाषकः शास्त्रीयो माषकः स्यात् । यथा च शास्त्रे पञ्चकृष्णलो माष इति । एकम् । आद्येति विशेषणं द्विकृष्णलस्य राजतमाषस्य व्यावृत्त्यर्थम् । तस्य शास्त्रे प्रायशो व्यवहाराभावात् ॥ ८५ ॥ ते षोडश माषा अक्षः कर्षश्च स्यात् । "अक्षो पुंसि क्लीबे च" द्वे "तोळा इति ख्यातस्य ।" कर्षचतुष्टयं फलं स्यात् एकम् । सुवर्णः बिस्तः द्वे हेम्नः सुव-

ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् ॥
सुवर्णबिस्तौ हेम्नोऽक्षे कुरुबिस्तस्तु तत्पले ॥ ८६ ॥

तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः ॥
आचितो दश भाराः स्युः शाकटो भार आचितः ॥ ८७॥

कार्षापणः कार्षिकः स्यात्कार्षिके ताम्रिके पणः ॥
अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चकः ॥ ८८ ॥

कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ॥

र्णस्याक्षे अशीतिगुञ्जाभिस्तुलिते सुवर्ण एवेत्यर्थः । रुद्रस्तु । "सुवर्णं स्वर्णबिस्तयोः" इति क्लीबमाह । तस्य हेम्नः पले कुरुबिस्त इत्येकम् ॥ ८६ ॥ पलानां शतं तुला स्यात् एकं स्त्रियाम् । विंशतिस्तुलाः एको भारः स्यात् एकम् । "भारः स्याद्वीवधे विष्णौ पलानां द्विसहस्रके" इति कोशान्तरम् । पुरुषेण हि द्वे पलसहस्रे वोढुं शक्येते । भ्रियत इति भारः । दश भाराः आचित इति स्युः । यः शाकटः शकटेन वोढुं शक्यो भारः सोऽप्याचित इत्येकम् । "आचितः शकटोन्मेषे पलानामयुतद्वये" इति विश्वः ॥ ८७ ॥ कार्षापणः कार्षिकः द्वे राजतकर्षपरिमितरूपकस्य रुपया इति ख्यातस्य । "कार्षापणोऽस्त्री कार्षिके पणषोडशिकेऽपि च" इति कोशान्तरम् । ताम्रिके ताम्रसंबन्धिकर्षप्रमाणे तस्मिन्कार्षिके पण इत्येकं पैसा इति ख्यातस्य । इति तुलामानमुक्तम् । अङ्गुलिमानं हस्तादि तु नृवर्गे उक्तम् । प्रस्थमानं त्वाह । आढकादयः शब्दाः परिमाणार्थकाः परिमाणविशेषवाचकाः पृथक् प्रत्येकं भिन्ना इत्यर्थः । तत्र आढक इत्येकं पायली इति ख्यातस्य । द्रोण इत्येकं अद्मणी इति ख्यातस्य । द्वे अप्यस्त्रियाम् । खारी इत्येकं दीडमणी इति ख्यातस्य । खार इति पुंसि वा । खारिरिति ह्रस्वान्तोऽपि स्त्रियाम् । वाह इत्येकं बारामणी इति ख्यातस्य । निकुञ्चक इत्येकं मूठ इति ख्यातस्य ॥ ८८ ॥ कुडव इत्येकं पावशेर इति ख्यातस्य । कुटप इति मुकुटः । कुडपो वा । कुडवप्रमाणं तु । मृद्वेणुकाष्ठलोहादेः पात्रं यच्चतुरङ्गुलम् । विस्तीर्णं च तथोच्चं च तन्मानं कुडवं वदेत् । प्रस्थ इत्येकं शेर इति ख्यातस्य । आद्यशब्दाच्छूर्पभारादिग्रहः । यदाहुः । "पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम् । चत्वारः कुडवाः प्रस्थश्चतुष्प्रस्थं तथाऽऽढकम् । अष्टाढको

89-92



पादस्तुरीयो भागः स्यादंशभागौ तु वण्टके ॥ ८९ ॥
द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ॥
हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ॥ ९० ॥
स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते ॥
ताभ्यां यदन्यत्तत्कुप्यं रूप्यं तद्द्वयमाहतम् ॥ ९१ ॥
गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः ॥
शोणरत्नं लोहितकः पद्मरागोऽथ मौक्तिकम् ॥ ९२ ॥
मुक्ताऽथ विद्रुमः पुंसि प्रवालं पुन्नपुंसकम् ॥

भवेद्द्रोणो द्विद्रोणः शूर्प उच्यते । "सार्धशूर्पो भवेत्खारी द्विशूर्पा द्रोण्युदाहृता । तामेव भारं जानीयाद्वाहो भारचतुष्टयम्" इति । अन्यच्च । "अष्टमुष्टिर्भवेत्कुञ्चिः कुञ्चयोऽष्टौ तु पुष्कलम् । पुष्कलानि तु चत्वारि आढकः परिकीर्तितः । चतुराढको भवेद्द्रोणः" इत्येतन्मानलक्षणमित्युक्तम् । अत्र पलादित्रयं अभिन्नम् । तत्तद्देशभेदात्संख्यान्यथात्वं च यथा मगधदेशे । "द्रोणस्तु खार्याः खलु षोडशांशः स्यादाढको द्रोणचतुर्थभागः" इत्यादि । रूपकादेश्चतुर्थभागः पाद इत्युच्यते एकं "पावली इत्यादि ख्यातस्य"। अंशः भागः वण्टकः त्रीणि भागमात्रस्य "वांटा इति ख्यातस्य" ॥ ८९ ॥ द्रव्यं वित्तं स्वापतेयं रिक्थं ऋक्थं धनं वसु हिरण्यं द्रविणं द्युम्नं अर्थः राः विभवः त्रयोदश धनस्य । तत्र अर्थादित्रयं पुंसि । "रा द्वयोर्विभवे स्वर्णे" इति रुद्रः । रायौ रायः ॥ ९० ॥ कोशः हिरण्यं द्वे अपि घटिताघटितयोर्हेमरूप्ययोः । कोशस्तालव्यान्तो मूर्द्धन्यान्तो वा । ताभ्यां हेमरूप्याभ्यां यदन्यत्ताम्रादिकं तत्कुप्यं स्यात् । एकम् । कुप्यं ह्रस्वादि । गुपेरादेः कत्वं च संज्ञायामित्यनेनेन गकारस्य ककारः । अर्थाद्धिरण्यं रूप्यं चाकुप्यं । तद्द्वयं कुप्यमकुप्यं च आहतं "मुद्रितं चेत्" रूप्यं "एकं नाणें इति ख्यातस्य" । रूपमाहन्यतेऽस्य रूप्यम् । "रूपादाहत" इति यप् । "रूप्यं स्यादाहतस्वर्णरजतं रजतेऽपि च" इति विश्वः ॥ ९१ ॥ गारुत्मतं मरकतं अश्मगर्भः हरिन्मणिः चत्वारि पाच इति प्रसिद्धस्य मणेः । शोणरत्नं लोहितकः पद्मरागः त्रीणि पद्मरागस्य "माणीक इति ख्यातस्य" ।

१ अस्मिन्पादेऽक्षराणि नव भवन्तीति चिन्त्यमिदम् ॥ २ इत्यनेनेति । इदमयुक्तम् । "राजसूयसूर्य०"–( ३।१।१४४ )–इति सूत्रेण गुपेः क्यप् गुपेरादेः कत्वं च संज्ञायां निपात्यते–इति तु युक्तं वक्तव्यम् ॥

रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च ॥ ९३ ॥
स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् ॥
तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ॥ ९४ ॥
चामीकरं जातरूपं महारजतकाञ्चने ॥
रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ॥ ९५ ॥
अलङ्कारसुवर्णं यच्छृङ्गीकनकमित्यदः ॥
दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ॥ ९६ ॥
रीतिः स्त्रियामारकूटो न स्त्रियामथ ताम्रकम् ॥
शुल्बं म्लेच्छमुखं द्व्यष्टवरिष्ठोदुम्बराणि च ॥ ९७ ॥

मौक्तिकम् ॥ ९२ ॥ मुक्ता द्वे "मोती इति प्रसिद्धस्य" । मुच्यते शुक्तिभिर्मौक्तिकम् । विद्रुमः प्रवालः "द्वे पोंवळें इति ख्यातस्य । क्लीबे प्रवालम्" । रत्नं मणिः द्वे अश्मजातौ मरकतादौ मुक्तादिकेऽपि वर्तेते । तत्र मणिः स्त्रीपुंसयोः । "स्त्रियां ङीषन्तोऽपि मणी" । आदिशब्दाद्विद्रुमेऽपि । रमन्तेऽस्मिन् रत्नम् । "कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् । एतानि पञ्च रत्नानि रत्नशास्त्रविदो विदुः । सुवर्णं रजतं मुक्ता राजावर्तं प्रवालकम् । रत्नपञ्चकमाख्यातं शेषं वस्तु प्रचक्षते" इति वा । "मुक्ताफलं हिरण्यं च वैडूर्यं पद्मरागकम् ॥ पुष्परागं च गोमेदं नीलं गारुत्मकं तथा । प्रवालयुक्तान्युक्तानि महारत्नानि वै नव" इति ॥ ९३ ॥ स्वर्णाद्येकोनविंशतिः सुवर्णस्य । तत्र हेमभर्मणी नान्ते ॥ ९४ ॥ अष्टापदं क्लीबपुंसोः । शातकौम्भमिति द्विरूपकोशः । कर्बूरमिति दीर्घमध्यं शब्दरत्नावल्याम् । कर्चूरम् । "कर्चूरः स्यात्पुमान् शठ्यां सुवर्णे पुंनपुंसकम्" इति मेदिनी । भर्ममित्यदन्तमपि द्विरूपकोशे । गाङ्गेया नाम गङ्गायाः अपत्यम् । तदुक्तं वायुपुराणे । "यं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम् । तदुल्बं पर्वते न्यस्तं हिरण्यं समपद्यते" इति । जातरूपमित्यत्र प्रशस्तं जातं जातरूपम् । प्रशंसायां रूपप् ॥ ९५ ॥ यदलङ्काररूपं सुवर्णं तत् शृङ्गीकनकमित्येकम् । शृङ्गीति पृथगपि । मन्माला—भूषणं कनकं शृङ्गीति । दुर्वर्णादिपञ्चकं रजतस्य । "तत्र खर्जूरं ह्रस्वोकारमिति रामनाथः" । अपिशब्दात्तारं कलधौतमित्यपि ॥ ९६ ॥ रीतिः आरकूटः द्वे पित्तलस्य तत्र रीतिः स्त्रियाम् । रीतीत्यपि । आरकूटः पुंसि क्लीबे

लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी ॥
अश्मसारोऽथ मण्डूरं सिंहाणमपि तन्मले ॥ ९८ ॥

सर्वं च तैजसं लोहं विकारस्त्वयसः कुशी ॥
क्षारः काचोऽथ चपलो रसः सूतश्च पारदे ॥ ९९ ॥

गवलं माहिषं शृङ्गमभ्रकं गिरिजामले ॥
स्रोतोञ्जनंतु सौवीरं कापोताञ्जनयामुने ॥ १०० ॥

च । ताम्रकं शुल्बं म्लेच्छमुखं द्व्यष्टं "द्विष्टमपि" वरिष्ठं उदुम्बरं "औदुम्बरं भवेत्ताम्रे फलादौ यज्ञशाखिनः" इत्यजयः । षट् ताम्रस्य ॥ ९७ ॥ लोहः शस्त्रकं तीक्ष्णं पिण्डं कालायसं "कृष्णायसमिति रत्नमाला" । अयः अश्मसारः सप्त लोहस्य । "अश्मसारं च शस्त्रकम्" इत्यमरमाला । मण्डूरं सिंहाणं "सिहानमित्यपि पाठः" । सिङ्घाणमित्यपि" द्वे लोहमलस्य लोहकीट इति ख्यातस्य । मण्डूरं टवर्गमध्यम् ॥ ९८ ॥ सर्वमपि तैजसं सुवर्णरजतादिकं लोहमित्युच्यते । प्रज्ञाद्यणि लौहमित्यपि । यद्वा सर्वं स्वर्णादितैजसं लोहं च स्यात् । तेजसो विकारस्तैजसम् । यदुक्तम् । "सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु । सीसं कालायसं चैवमष्टौ लोहानि चक्षते" इति । अयस्तु विशेषाल्लोहसंज्ञम् । अयसो विकारः फालाख्यः कुशी स्यात् । यच्छाश्वतः । कुशी वला कुशी फाले इति । एकं स्त्रीलिङ्गम् । क्षारः काचः द्वे काचस्य "कांच बांगडखार इति ख्यातस्य" क्षरति क्षारः । चपलः रसः सूतः पारदः । पारतः । "रसेन्द्रः पारदः प्रोक्तः पारतोऽपि निगद्यते" इति तारपालः । "पारतस्तु मनाक्पाण्डुः सूतस्तु रहितो मलात् । पारदस्तु मनाक् शीतः सर्वे तुल्यगुणाः स्मृताः" इति शब्दार्णवः । चत्वारि पारदस्य "पारा इति ख्यातस्य" ॥ ९९ ॥ यन्माहिषं शृङ्गं तद्गवलमित्येकम् । पारदो हि प्रायेण गवले निधाप्यते तत्र तदभिधानम् । अभ्रकं गिरिजामलं द्वे "अभ्रक इति ख्यातस्य" । अभ्रस्य प्रतिकृतिरभ्रकम् । गिरिजम् । अमलमिति कश्चित् । तन्मते त्रीणि । "गिरिजं गिरिजाबीजममलं गवलध्वजम्" इति वाचस्पतिः स्रोतोञ्जनं सौवीरं कापोताञ्जनं यामुनं चत्वारि सौविराञ्जनस्य "सुरमा इति ख्यातस्य" । यमुनास्रोतसो जातमञ्जनं स्रोतोञ्जनम् । सुवीरदेशे भवं सौवीरम् । धन्वन्तरिस्तु । "अञ्जनं मेचकं कृष्णसौवीरं स्यात्सुवी-

तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके ॥
कर्परी दार्विकाक्वाथोद्भवं तुत्थं रसाञ्जनम् ॥ १०१ ॥
रसगर्भं तार्क्ष्यशैलं गन्धाश्मनि तु गन्धिकः ॥
सौगन्धिकश्च चक्षुष्याकुलाल्यौ तु कुलत्थिका ॥ १०२ ॥
रीतिपुष्पं पुष्पकेतु पुष्पकं कुसुमाञ्जनम् ॥
पिञ्जरं पीतनं तालमालं च हरितालके ॥ १०३ ॥
गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु ॥
बोलगन्धरसप्राणपिण्डगोपरसाः समाः ॥ १०४ ॥
डिण्डीरोऽब्धिकफः फेनः सिन्दूरं नागसंभवम् ॥

रजम्। कापोतकं यामुनं च स्रोतोञ्जनमुदाहृतम्" इति ॥ १०० ॥ तुत्थाञ्जनं शिखिग्रीवं वितुन्नकं मयूरकं कर्परी पञ्च तुत्थाञ्जनस्य मोरचूद इति ख्यातस्य। तुदत्यक्षिरोगान् तुत्थम्। तुत्थं च तदञ्जनं च। दार्विका दारुहरिद्रा तत्क्वाथोद्भवम्। तस्याः क्वाथे "समभागेन अजादुग्धेन" संस्कृतं तुत्थं तुत्थाञ्जनं रसाञ्जनादिसंज्ञं स्यात्। "दर्विकेत्यपि"। रसाञ्जनम् ॥ १०१ ॥ रसगर्भं तार्क्ष्यशैलं त्रीणि। केचित्तुत्थरसाञ्जनमिति समस्तं पेठुः। गन्धाश्मा गन्धिकः "गन्धक इत्यपि" सौगन्धिकः त्रीणि गन्धकस्य। चक्षुष्या कुलाली कुलत्थिका त्रयं "तुत्थविशेषस्य निळा सुरमा इति ख्यातस्य"। चक्षुषे हिता चक्षुष्या। कुले तिष्ठति तत्प्रतिकृतिः कुलत्थिका ॥ १०२ ॥ रीतिपुष्पं पुष्पकेतु पुष्पकं "पौष्पकमित्यपि" कुसुमाञ्जनं चत्वारि संतप्तपित्तलादुत्पन्नस्य "जस्ताचें फूल इति ख्यातस्य"। पुष्पकेतु उदन्तं क्लीबे। पिञ्जरं पीतनं तालं आलं "अलम्"। "हरितालमलं तालवर्णकं नटभूषणम्" इति माधवः। हरितालकं पञ्च हरितालस्य ॥ १०३ ॥ गैरेयं अर्थ्यं गिरिजं अश्मजं शिलाजतु पञ्च शिलाजतुनः "शिलाजित इति ख्यातस्य"। अर्थ्यते रसायनार्थिभिरर्थ्यम्। शिलायां स्रवल्लाक्षाकृतित्वाच्छिलाजतु। बोलः गन्धरसः "रसगन्ध इति स्वामी। राजदन्तादित्वात्"। प्राणः पिण्डः गोपरसः पञ्च गन्धरसस्य "रक्त्या बोळ इति ख्यातस्य"। गोपः रसश्चेति पृथगपि। अत्र गोस इति मुकुटः। गां जलं स्यति षोऽन्तकर्मणि। गोप इति स्वामी। गन्धप्रधानो रसोऽस्य गन्धरसः ॥ १०४ ॥ डिण्डीरः। "हिण्डीर इत्यपि"। हिण्डिर इति

नागसीसकयोगेष्टवप्राणि त्रपु पिच्चटम् ॥ १०५ ॥

रङ्गवङ्गे अथ पिचुस्तूलोऽथ कमलोत्तरम् ॥
स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि ॥ १०६ ॥

मेषकम्बल ऊर्णायुः शशोर्णं शशलोमनि ॥
मधु क्षौद्रं माक्षिकादि मधूच्छिष्टं तु सिक्थकम् ॥ १०७ ॥

मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका ॥
नैपाली कुनटी गोला यवक्षारो यवाग्रजः ॥ १०८ ॥

पाक्योऽथ सर्जिकाक्षारः कापोतः सुखवर्चकः ॥

शब्दरत्नावल्याम् । अब्धिकफः फेनः त्रयं सागरमलाख्यस्य समुद्रफेनस्य । सिन्दूरं नागसंभवं द्वे "सेंदूर इति ख्यातस्य" । नागात्सीसात्संभवोऽस्य नागसंभवम् । नागं सीसकं योगेष्टं वप्रं वर्ध्रमिति मुकुटः । "वृधु वर्धने" । वृधि-वपिभ्यां रन् । चत्वारि सीसस्य "शिसें इति ख्यातस्य" । त्रपु पिच्चटम् ॥ १०५ ॥ रङ्गं वङ्गं चत्वारि वङ्गे "कथिल इति ख्याते" । पिचुः तूलः द्वे कार्पासस्य । कमलोत्तरं कुसुम्भं वह्निशिखं महारजनं चत्वारि कुसुम्भस्य । रज्यते वस्त्राद्यनेन रजनम् । महच्च तद्रजनं च महारजनम् ॥१०६॥ मेषकम्बलः ऊर्णायुः द्वे कम्बलस्य । ऊर्णायुरुदन्तः पुंसि । शशोर्णं शशलोम द्वे शशलोम्नः । मधु क्षौद्रं माक्षिकं त्रीणि मधुनः । आदिना भ्रामरपौत्तिकादिग्रहणम् । मधूच्छिष्टं सिक्थकं द्वे "मेण इति ख्यातस्य" मधुना उच्छिष्यते मधूच्छिष्टम् ॥ १०७ ॥ मनःशिला "मनःशिल इति द्विरूपकोशः" । मनोगुप्ता मनोह्वा नागजिह्विका चत्वारि मनःशिलायाः । "मनःशब्दवाच्या शिला मनः-शिला" । नैपाली कुनटी गोला त्रीणि नैपालदेशोद्भवायां मनःशिलायाम् । सप्तैकार्था इत्येके । यवक्षारः यवाग्रजः ॥ १०८ ॥ पाक्यः त्रीणि दग्धय-वाङ्कुरेभ्यो जायमानस्य क्षारभेदस्य "जवखार इति ख्यातस्य" । सर्जिका-क्षारः । "सृजिकाक्षार इति रामनाथः" । कापोतः सुखवर्चकः त्रीणि क्षारभे-दस्य "सज्जीखार इति ख्यातस्य" । सर्जिकां दग्ध्वा क्षार्यते यः स सर्जि-काक्षारः । सौवर्चलं रुचकं द्वे क्षारभेदस्य "संचळखार इति ख्यातस्य" । प्रागुक्तमपि क्षारप्रसङ्गात् पुनरुक्तम् । पञ्चापि सर्जिकाक्षारस्येति सुभूत्या-

109 - 111 · 1



सौवर्चलं स्याद्रुचकं त्वक्क्षीरी वंशरोचना ॥ १०९ ॥
शिग्रुजं श्वेतमरिचं मोरटं मूलमैक्षवम् ॥
ग्रन्थिकं पिप्पलीमूलं चटिकाशिर इत्यपि ॥ ११० ॥
गोलोमी भूतकेशो ना पत्राङ्गं रक्तचन्दनम् ॥
त्रिकटु त्र्यूषणं व्योषं त्रिफला तु फलत्रिकम् ॥ १११ ॥
इति वैश्यवर्गः ॥ ९ ॥

---

शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः ॥
आचण्डालात्तु संकीर्णा अम्बष्ठकरणादयः ॥ १ ॥

दयः । "त्वक्क्षीरी वंशरोचना वंशलोचना" इति हेमचन्द्रः द्वे वेणुजन्यस्यौषधिविशेषस्य "वंशलोचन इति ख्यातस्य" । त्वक्क्षीरी वंशजा शुभ्रा वंशक्षीरी तु वैणवीति कोशान्तरम् ॥ १०९ ॥ शिग्रुजं श्वेतमरिचं द्वे सौभाञ्जनबीजस्य "शेवग्याचें बीं इति ख्यातस्य" । इक्षुसंबन्धि मूलकं मोरटं स्यात् एकं "इक्षुमूलस्य" । ग्रन्थिकं पिप्पलीमूलं चटिकाशिरः । "चटकाशिरः" इति हेमचन्द्रः । चटकायाः शिर इव । चटका शिरः इति पृथगपि । "शिरो ना पिप्पलीमूले" इति मेदिनी । त्रयं पिप्पलीमूलस्य "पिंपळीमूळ इति ख्यातस्य" ॥ ११० ॥ गोलोमी भूतकेशः द्वे "जटामांसी इति प्रसिद्धायाः" । गौरिव लोमान्यस्याः सा गोलोमी । "गोलोमी श्वेतदूर्वायां स्याद्वचाभूतकेशयोः" इति विश्वः । पत्राङ्गं रक्तचन्दनं द्वे रक्तचन्दनसदृशस्य रक्तसारस्य "कृष्णसिंसव, पतंग इति च ख्यातस्य । पत्राण्यङ्गेऽस्य पत्राङ्गम्" । त्रिकटु त्र्यूषणं "त्र्युषणमिति द्विरूपकोशः" व्योषं त्रीणि शुण्ठपिप्पलीमरीचानां समाहारस्य । त्रिफला "तृफला" । "तृफला त्रिफला च" इति त्रिकाण्डशेषः । फलत्रिकं द्वे हरीतक्यामलकबिभीतकफलानां समाहारस्य ॥ १११ ॥ इति वैश्यवर्गः ॥९॥ शूद्रः अवरवर्णः वृषलः जघन्यजः जघन्यात्पादाज्जातः । "जनी प्रादुर्भावे" । चत्वारि शूद्रस्य । चण्डालो ब्राह्मण्यां शूद्राज्जातस्तमभिव्याप्य वक्ष्यमाणा अम्बष्ठकरणादयः । "आदिना उग्रादयः" । संकीर्णाः प्रतिलोमानुलोमजत्वान्मिश्राः । एकम् । ते च संकरजातीयाः करणाम्बष्ठोग्रमागधमाहिष्यक्षत्तृसूतवैदेहकरथकारपारसवचण्डालाख्याः एकादशेति ॥ १ ॥ शूद्रा शूद्रजातिरङ्गना

शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः ॥
शूद्राक्षत्रिययोरुग्रो मागधः क्षत्रियाविशोः ॥ २ ॥
माहिषोऽर्याक्षत्रिययोः क्षत्ताऽर्याशूद्रयोः सुतः ॥
ब्राह्मण्यां क्षत्रियात्सूतस्तस्यां वैदेहको विशः ॥ ३ ॥
रथकारस्तु माहिष्यात्करण्यां यस्य संभवः ॥
स्याच्चण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः ॥ ४ ॥
कारुः शिल्पी संहतैस्तैर्द्वयोः श्रोणिः सजातिभिः ॥
कुलकः स्यात्कुलश्रेष्ठी मालाकारस्तु मालिकः ॥ ५ ॥

विट् वैश्यः तयोः सुत इति वक्ष्यमाणेनान्वयः स करण इत्येकम् । स तु लेखनवृत्तिः । वैश्यायां ब्राह्मणाज्जातः सुतोऽम्बष्ठः । स तु चिकित्सावृत्तिः । शूद्रायां क्षत्रियाज्जातः उग्रः । स तु शस्त्रवृत्तिः । क्षत्रियायां वैश्याज्जातो मागधः । स तु राजादिस्तुतिपाठवृत्तिः । एकैकम् ॥ २ ॥ अर्या वैश्या । वैश्यायां क्षत्रियाज्जातो माहिषः "माहिष्यः" । अस्य ज्योतिषं शाकुनं शास्त्रं स्वरशास्त्रं च जीविका । माहिष्योऽर्याक्षत्रिययोरित्यपि पाठः । अर्या क्षत्रिया तस्यां शूद्राज्जातः क्षत्ता । तस्य वृत्तिः पापर्द्धिकादिः । क्षत्तारौ । ब्राह्मण्यां क्षत्रियाज्जातः सूत इत्युच्यते तस्य गजबन्धनमश्वानां वाहनं कर्म सारथेरित्यादिर्जीविका । तस्यां ब्राह्मण्यां वैश्याज्जातो वैदेहकः । चतुःषष्टिकलाकर्मशैक्ष्यं तदुपजीविका । पण्याङ्गनानां राज्ञां च कुर्यात्सङ्गं तदिच्छया । उपजीव्यं तु तास्वेवेति । एकम् ॥ ३ ॥ करण्यां शूद्रविशोः सुतायां माहिष्याद्वैश्याक्षत्रिययोः जाताज्जातो रथकारः स्यात् । अस्य वर्तनं तु । रथकर्मेन्धनादिभिः । ब्राह्मण्यां वृषलेन शूद्रेण य उत्पादितः स चण्डालः स्यात् । "चाण्डाल इत्यपि" । मृतचैलैर्निन्द्यमांसैः श्मशाने तस्य जीवितमित्येकैकम् ॥ ४ ॥ कारुः शिल्पी द्वे चित्रकारादेः । शिल्पं कला सास्त्यस्य शिल्पी । "तक्षा च तन्तुवायश्च नापितो रजकस्तथा । पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः" इत्यपि । तैः सजातिभिः संहतैः श्रेणिः । सजातीयशिल्पीसङ्घः श्रेणिरित्यर्थः । स स्त्रीपुंसलिङ्गः । एकम् । कुलकः । कुलिकः । "कुलिको नागभेदे स्याद्रुभेदे कुलसत्तमे" इति मेदिनी । कुलश्रेष्ठी द्वे शिल्पीकुलप्रधानस्य । शिल्पिभेदानाह । मालाकारः मालिकः द्वे "माळी इति प्रसि-

कुम्भकारः कुलालः स्यात्पलगण्डस्तु लेपकः ॥
तन्तुवायः कुविन्दः स्यात्तुन्नवायस्तु सौचिकः ॥ ६ ॥
रङ्गाजीवश्चित्रकरः शस्त्रमार्जोऽसिधावकः ॥
पादूकृच्चर्मकारः स्याद्व्योकारो लोहकारकः ॥ ७ ॥
नाडिन्धमः स्वर्णकारः कलादो रुक्मकारकः ॥
स्याच्छाङ्खिकः काम्बविकः शौल्बिकस्ताम्रकुट्टकः ॥ ८ ॥
तक्षा तु वर्द्धकिस्त्वष्टा रथकारस्तु काष्ठतट् ॥
ग्रामाधीनो ग्रामतक्षः कौटतक्षोऽनधीनकः ॥ ९ ॥

ख्यातस्य"। पुष्पमाला पण्यमस्य मालिकः ॥ ५ ॥ कुम्भकारः कुलालः "द्वे कुंभार इति ख्यातस्य"। पलगण्डः लेपकः द्वे गृहादौ लेपकारस्य "गंवडी इत्यादि ख्यातस्य"। तन्तुवायः "तन्त्रवायः तन्द्रवायः तन्त्रवाप इति ओष्ठ्यान्तोऽपि"। कुविन्दः "कुपिन्द इत्यपि। कुप क्रोधे"। द्वे पटानां निर्मातरि कोष्टी इति ख्याते"। तुन्नवायः सौचिकः द्वे कञ्चुक्यादेर्निर्मातरि "शिंपी इति ख्याते"। सूच्या वानं शिल्पमस्य सौचिकः ॥ ६ ॥ रङ्गाजीवः चित्रकरः द्वे "चितारी, रंगारी इत्यादि ख्यातस्य"। रङ्गं श्वेतपीतरक्तादिकमाजीवति रङ्गाजीवः। शस्त्रमार्जः असिधावकः द्वे शस्त्रघर्षणोपजीविनः "शिकलगार इति ख्यातस्य"। पादूकृत् चर्मकारः द्वे "चांभार इति ख्यातस्य"। पादूः पादत्राणि करोति पादूकृत् तान्तः। व्योकारः लोहकारकः द्वे लोहार इति ख्यातस्य। व्यो इत्यव्ययं लोहबीजवाचीति श्रीभोजः ॥ ७ ॥ नाडिन्धमः स्वर्णकारः कलादः रुक्मकारकः चत्वारि स्वर्णकारस्य "सोनार इति ख्यातस्य"। शाङ्खिकः काम्बविकः द्वे शङ्खवलयादेः कर्तरि कंकणकार, "कांसार" इति ख्याते। शौल्बिकः ताम्रकुट्टकः द्वे "तांबट इति ख्यातस्य" शुल्बं ताम्रं तद्धटनं शिल्पमस्य शौल्बिकः ॥ ८ ॥ तक्षा वर्द्धकिः त्वष्टा रथकारः काष्ठतट् पञ्च वर्द्धकेः "सुतार इति ख्यातस्य"। वर्द्धयति छिनत्ति काष्ठं वर्द्धकिः। तक्षाणौ। त्वष्टारौ। काष्ठं तक्ष्णोति तनूकरोति काष्ठतट्। काष्ठतक्षौ। ग्रामाधीनो यस्तक्षा स ग्रामतक्ष इत्येकं "गांवचा सुतार इति ख्यातस्य"। "ग्रामकौटाभ्यां च तक्ष्णः" इति टच्। अनधीनकः स्वाधीनो यस्तक्षा स कौटतक्षः स्यात्। एकम् ॥ ९ ॥ क्षुरी

क्षुरी मुण्डी दिवाकीर्तिनापितान्तावसायिनः ॥
निर्णेजकः स्याद्रजकः शौण्डिको मण्डहारकः ॥ १० ॥
जाबालः स्यादजाजीवो देवाजीवस्तु देवलः ॥
स्यान्माया शाम्बरी मायाकारस्तु प्रतिहारकः ॥ ११ ॥
शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः ॥
भरता इत्यपि नटाश्चारणास्तु कुशीलवाः ॥ १२ ॥
मार्दङ्गिका मौरजिकाः पाणिवादास्तु पाणिघाः ॥
वेणुध्माः स्युर्वैणविका वीणावादास्तु वैणिकाः ॥ १३ ॥

मुण्डी । क्षुरि मुण्डि इतिह्रस्वघटितपाठोऽपि । दिवाकीर्तिः नापितः अन्तावसायी पञ्च नापितस्य "नाहावी इति ख्यातस्य" । निर्णेजकः रजकः द्वे वस्त्राणां धावकस्य "परीट इति ख्यातस्य" । शौण्डिकः मण्डहारकः द्वे सुराजीविनः "कलाल इति ख्यातस्य" । शुण्डा सुरा सा पण्यमस्य शौण्डिकः ॥ १० ॥ जाबालः अजाजीवः द्वे अजापालस्य "मेढपाळ, मेंढक्या, धनगर इति ख्यातस्य" । देवाजीवः "देवाजीवीत्यपि" देवलः द्वे देवसेवोपजीविनः "गुरव, देवळी इति ख्यातस्य । देवं लक्षणया तत्स्वं लातीति देवलः" माया शाम्बरी द्वे इंद्रजालस्य "गारूड इति ख्यातस्य" । शम्बराख्यस्यासुरस्येयं शाम्बरी । मायाकारः प्रतिहारकः "प्रतिहारिकः प्रातिहारिक इत्यपि द्वे मायाविनः गारुडीति ख्यातस्य" । प्रतिहारो व्याजः प्रयोजनमस्य स तथा ॥ ११ ॥ शैलाली शैलूषः जायाजीवः कृशाश्वी भरतः भारत इत्यपि । "कृशाश्वेन च यत्प्रोक्तं नटसूत्रमधीयते । रङ्गावतारी शैलूषो नटो भरतभारतौ" इति वाचस्पतिः । नटः षट्कं नटेषु "नटवा इति ख्यातेषु" नटति नृत्यति नटः । चारणः कुशीलवः द्वे कथकानां नटविशेषाणाम् । "कुत्सितं शीलमस्त्यस्य कुशीलवः" ॥ १२ ॥ मार्दङ्गिकाः मौरजिकाः द्वे मृदङ्गवादनकुशलानां "मृदंगी पखवाजी इति ख्यातानाम्" । पाणिवादाः पाणिघाः द्वे ये पाणितलेनैव पाण्यन्तरे मृदङ्गादिध्वनिमनुकुर्वन्ति तेषां "हाताचे तालधारी इति ख्यातानाम्" । वेणुध्माः वैणविकाः द्वे वेणुवादिनां "पांवेकरी इति ख्यातानाम्" । वेणुध्माः आहन्तः सोमपावत् । वीणावादाः वैणिकाः द्वे वीणावादनं शिल्पमेषां "विणेकरी इति ख्यातानाम्"

जीवान्तकः शाकुनिको द्वौ वागुरिकजालिकौ ॥
वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ॥ १४ ॥
भृतको भृतिभुक् कर्मकरो वैतनिकोऽपि सः ॥
वार्तावहो वैवधिको भारवाहस्तु भारिकः ॥ १५ ॥
विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः ॥
निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः ॥ १६ ॥
भृत्ये दासेरदासेयदासगोप्यकचेटकाः ॥
नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः ॥ १७ ॥
पराचितपरिस्कन्दपरजातपरैधिताः ॥

॥ १३ ॥ जीवान्तकः "जीवन्तिक इत्यपि" शाकुनिकः द्वे पक्षिणां हन्तरि "पक्षांचा पारधी इति ख्याते" । वागुरिकः जालिकः द्वे जालेन मृगान्बध्नतः । वागुरा मृगबन्धनी तया चरति वागुरिकः । वैतंसिकः कौटिकः मांसिकः त्रयं यो मांसविक्रयेण जीवति तस्य "खाटिक इति ख्यातस्य" । वीतंसेन मृगपक्ष्यादिबन्धनोपायेन चरति वैतंसिकः । कुटेन मृगादिबन्धनयंत्रेण चरति कौटिकः । मांसं पण्यमस्य मांसिकः ॥ १४ ॥ भृतकः भृतिभुक् कर्मकरः वैतनिकः चत्वारि वेतनोपजीविनः "चाकर, मजूर इति प्रसिद्धस्य" भृतिर्वेतनं भृतिं वेतनं भुङ्क्ते भृतिभुक् । वार्तावहः वैवधिकः "विवधिक इत्यपि" द्वे वार्ताया वाहके "कावड्या इति ख्याते" । विवधः पर्याहारः तं वहति वैवधिकः । विवधवीवधशब्दौ उभयतः बद्धशिक्ये स्कन्धवाह्ये काष्टे वर्तेते । भारवाहः भारिकः "द्वे ओझेकरी इति ख्यातस्य । भारीति नान्तोऽप्यन्यत्र" ॥ १५ ॥ विवर्णः पामरः नीचः प्राकृतः पृथक्जनः निहीनः अपसदः "अपशेद इति भरतमालायाम्" जाल्मः क्षुल्लक- "खुल्लकः । खुल्लकस्त्रिषु नीचेऽल्पे इति रभसः" । इतरः दश नीचस्य ॥ १६ ॥ भृत्यः दासेरः दासेयः दासः "दाश इति तालव्यान्तोऽपि" गोप्यकः चेटकः "चेडक इत्यपि" नियोज्यः किङ्करः प्रैष्यः "प्रेष्यः इत्यपि" भुजिष्यः परिचारकः एकादश दासस्य । प्रैष्य इत्यत्र प्रादूहोढेति वृद्धिः ॥ १७ ॥ पराचितः "पराजितोऽपि । परैराजीयते स्म" परिस्कन्दः "परिष्कन्दः परेश्चेति वा षत्वम् । परिष्कन्नः परिस्कन्नश्च इत्यपि" परजातः परैधितः चत्वारि

मन्दस्तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः ॥ १८ ॥
दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च ॥
चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः ॥ १९ ॥
निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः ॥
भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः ॥ २० ॥
व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः ॥
कौलेयकः सारमेयः कुक्कुरो मृगदंशकः ॥ २१ ॥
शुनको भषकः श्वा स्यादलर्कस्तु स योगितः ॥
श्वा विश्वकद्रुर्मृगयाकुशलः सरमा शुनी ॥ २२ ॥

परेण संवर्तितस्य । परैराचीयते वर्ध्यते पराचितः । मन्दः तुन्दपरिमृजः "पञ्जिः तुन्दपरिमार्जोऽपि" । आलस्यः शीतकः अलसः अनुष्णः षट् अलसस्य । अलसमस्त्यस्य अलसः अर्श आद्यच् । "अलस एव आलस्यः स्वार्थे ष्यञ् । अणि अलस इत्यपि" ॥ १८ ॥ दक्षः चतुरः पेशलः पटुः सूत्थानः उष्णः षट् दक्षस्य । "उष्णत्वं शीघ्रकारित्वमस्यास्तीत्युष्णः" । चण्डालः प्लवः मातङ्गः दिवाकीर्तिः जनङ्गमः "जलङ्गम इत्यपि" ॥ १९ ॥ निषादः । "निषादः स्वरभेदेऽपि चण्डाले धीवरान्तरे" इति कोशान्तरे । श्वपचः "श्वपाक इत्यपि" अन्तेवासी चाण्डालः पुक्कसः । "पुक्कसः श्वपचेऽधमे" इति मेदिनी दश चाण्डालस्य । अत्रावान्तरभेदोऽस्ति किञ्चित्सोऽनादृतः । किरातादयस्त्रयो म्लेच्छजातयश्चण्डालानां भेदाः । किरति शरान् किरातः । अरण्यचरा एते । "पुलिन्दः कथ्यते म्लेच्छे पुलिन्द्रोऽपि निगद्यते" इति तारपालः ॥ २० ॥ व्याधः मृगवधाजीवः मृगयुः लुब्धकः चत्वारि व्याधस्य । विध्यति मृगान्व्याधः । कौलेयकः सारमेयः कुक्कुरः "कुकुर इत्यनादिकोशः । कुर्कुर इति राजमुकुटः" । मृगदंशकः ॥ २१ ॥ शुनकः भषकः श्वा शुनकस्य । श्वानौ । "कुकुरस्तु शुनिः श्वानः कपिलो मण्डलः शुनः" इति वाचस्पतिः । योगितः प्रयोगेण उन्मत्तत्वं प्रापितः श्वा अलर्कः स्यात् "अलक इति मुकुटः" एकम् । यो मृगयाकुशलः श्वा स विश्वकद्रुरित्येकं "पारधी कुत्रा इति ख्यातस्य । विश्वं कन्दते । कदि आह्वाने" । शुनी सरमा स्यात् एकम् । सरमा देवशुनी । सामान्याभिधानं तूपचारात् ॥ २२ ॥ यो ग्राम्यः सूकरः

22-26



विट्चरः सूकरो ग्राम्यो वर्करस्तरुणः पशुः ॥
आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् ॥ २३ ॥

दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा कुरङ्गकः ॥
चौरैकागारिकस्तेनदस्युतस्करमोषकाः ॥ २४ ॥

प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः ॥
चौरिका स्तैन्यचौर्ये च स्तेयं लोप्त्रं तु तद्धने ॥ २५ ॥

वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम् ॥
उन्माथः कूटयन्त्रं स्याद्वागुरा मृगबन्धनी ॥ २६ ॥

स विट्चरः स्यात् एकं "गांवडुकर इति ख्यातस्य"। यस्तरुणः पशुरजादिः स वर्करः एकं "बकरा इत्यादि ख्यातस्य तरुणपशुमात्रस्य"। आच्छोदनं मृगव्यं आखेटः मृगया चत्वारि पापर्द्धेः "शिकारी इति ख्यातायाः। मृगया स्त्रियाम्" ॥ २२ ॥ लुब्धयोगात् लुब्धकसम्बन्धाद्दक्षिणारुर्दक्षिणे पार्श्वेऽरुर्व्रणमस्य स कुरङ्गको दक्षिणेर्मा स्यात्। व्याधेन कृतव्रण इत्यर्थः एकम्। दक्षिणेर्माणौ। चौरः "पचाद्यचि चोर इत्यपि"। ऐकागारिकः। एकमसहायं अगारं प्रयोजनमस्य। ऐकागारिकट् चौरे इति निपातनात् साधुः। स्तेनः दस्युः तस्करः मोषकः ॥ २४ ॥ प्रतिरोधिः परास्कन्दिः पाटच्चरः "पटच्चर इत्यपि"। चोरजीर्णपटयोः पटच्चर इति नामानुशासनम्"। मलिम्लुचः दश चोरस्य। चौरिका "चोरिकेत्यपि"। स्तैन्यं स्तेयम्। "स्तेनस्य भावः कर्म वा स्तैन्यमिति ष्यञन्तं केचिदिच्छन्ति। स्तेनाद्यन्नलोपश्चेति वार्तिकेन स्तेयमिति च साधु। "स्तेयं स्तैन्यं च चौर्यं स्याच्चौरिकाचोरिके स्त्रियाम्" इति वाचस्पतिः। चौर्यं चत्वारि स्तेयस्य। चौरस्य भावः चौरिका। चौर्यं धनं लोप्त्रं स्यात्। "लोत्रम्। लोत्रमश्रुणि चोरित इति विश्वः। लोतमिति जटाधरः"। एकम् ॥ २५ ॥ मृगपक्षिणां बन्धननिमित्तं यदुपकरणं पाशजालादि स वीतंस इत्येकम् "वितंस इत्यपि"। उन्माथः कूटयन्त्रं द्वे मृगपक्षिबन्धनार्थं छलेन यद्यन्त्रं निवेश्यते तत्र "सांपळा इति ख्याते"। वागुरा मृगबन्धनी द्वे जालीकृतरज्जुविशेषे "मृगांचें जाळें इति ख्याते" ॥ २६ ॥ शुल्बं "शुल्वेत्यपि ङीषन्तापि" वराटकं

शुल्बं वराटकं स्त्री तु रज्जुस्त्रिषु वटी गुणः ॥
उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः ॥ २७ ॥

पुंसि वेमा वायदण्डः सूत्राणि नरि तन्तवः ॥
वाणिर्व्यूतिः स्त्रियौ तुल्ये पुस्तं लेप्यादिकर्मणि ॥ २८ ॥

पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता ॥
(जतुत्रपुविकारे तु जातुषं त्रापुषं त्रिषु ॥) २९ ॥ (१)
पिटकः पेटकः पेटा मञ्जूषाऽथ विहङ्गिका ॥

रज्जुः वटी गुणः पञ्च रज्जोः "सुंब दोरी चन्हाट इति ख्यातायाः"। तत्र वराटकोऽस्त्रियाम्। रज्जुः स्त्रियाम्। वटी त्रिषु। "रज्जुः शुल्बा वराटो ना" इति रत्नकोशः। "सुम्यं वटाकर इति स्वामिपाठः"। प्रहेः कूपात्सलिलमूर्ध्वं वाह्यते येन तस्मिन् यन्त्रे "रहाट, लाट इति ख्याते" उद्घाटनं घटीयन्त्रं चेति द्वयमित्यर्थः ॥ २७ ॥ वेमा "वेम इत्यपि" वायदण्डः "वापदण्ड इत्योष्ठ्यमध्योऽपि" द्वे वस्त्रव्यूतिदण्डस्य "कोष्ट्याचें धोटें इति ख्यातस्य"। वयति तन्तूननेन वेमा। वेमानौ। ऊयते इति वायः वानं तदर्थो वायदण्डः तालव्यमध्यः। सूत्राणि तन्तवः द्वे "सूत इति ख्यातस्य। सूत्रतन्तुरिति समस्तं हारावल्याम्"। तन्तुः पुंसि। वाणिः व्यूतिः "व्युतिरिति द्विरूपकोशः। विशिष्टा ऊतिर्व्यूतिः" द्वे तन्तुवानस्य "विणणें इति ख्यातस्य"। लेप्यं मृदा पुत्तलिकादिकरणम्। आदिना काष्ठपुत्तलिकाकर्म गृह्यते तत्र पुस्तमित्येकम्। यदुक्तम्। "मृदा वा दारुणा वाथ वस्त्रेणाप्यथ चर्मणा। लोहरत्नैः कृतं वापि पुस्तमित्यभिधीयते" इति ॥ २८ ॥ वस्त्रदन्तादिभिः कृता पुत्रिका पाञ्चालिका स्यात्। "पञ्चालिकेत्यपि" पञ्चभिर्वर्णैरल्यते भूष्यते। घञ्। एकं "बाहुली इति ख्यातस्य"। पुत्र इवेति कन्। दन्तो गजदन्तः आदिना चर्मकाष्ठमृच्छिलेत्यादिग्रहणम्। जतु लाक्षा तद्विकारो जातुषम्। त्रपु वङ्गं तद्विकारस्त्रापुषम्। एकैकम्। "त्रपुजतुनोः षुक्" ॥ २९ ॥ पिटकः पेटकः पेटा "पेडेति मुकुटः। पीडेति स्वामी" मञ्जूषा चत्वारि वस्त्रालङ्कारादिस्थापनार्थं कृतायाः मञ्जूषायाः "पेटी इति ख्यातायाः"। आद्यौ पेटारिकायां परौ महत्यामिति स्वामी। विहङ्गिका भारयष्टिः द्वे शिक्याधारलगुडस्य "सुंटी

१ इदमर्धं ताळपत्रपुस्तकेऽपि नास्ति ॥

30-33



भारयष्टिस्तदालम्बि शिक्यं काचोऽथ पादुका ॥ ३० ॥
पादूरुपानत्स्त्री सैवानुपदीना पदायता ॥
नध्री वध्री वरत्रा स्यादश्वादेस्ताडनी कशा ॥ ३१ ॥
चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी ॥
नाराची स्यादेषणिका शाणस्तु निकषः कषः ॥ ३२ ॥
व्रश्चनः पत्रपरशुरीषिका तूलिका समे ॥
तैजसावर्तनी मूषा भस्त्रा चर्मप्रसेविका ॥ ३३ ॥

इत्यादिख्यातस्य"। इयं भारोद्वाहनार्था चतुर्दण्डिकेति सभ्याः । शिक्याधारस्कन्धग्राह्ययोर्लेगुड इति द्रविडाः । विहङ्गमेत्यपि पाठः । तस्यां भारयष्ट्यामालम्बते तत्तदालम्बि शिक्यं काचः स्यात् । "काचः शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे" इति विश्वः । द्वे आलम्बमानस्य रज्जुपञ्जरस्य "शिंकें इति ख्यातस्य"। पादुका ॥ ३० ॥ पादूः उपानत् त्रयमपि स्त्रियां पादत्राणस्य "जोडा इति ख्यातस्य"। सैवोपानत् पदायता पदवत् आयता पादायामेन बद्धा अनुपदीना एकं अनुरायामे सादृश्ये वा । अनुपदं बद्धा अनुपदीना उपानत् इति कौमुद्यामुक्तम् । "वाहाण इति ख्यातस्य" । नध्री वध्री वरत्रा त्रयं चर्ममय्या रज्ज्वाः "वाधी इति ख्यातायाः" । अश्वादेस्ताडनी रज्जुः कशा स्यात् एकं "जेरबंद इति ख्यातस्य । आदिना उष्ट्रगर्दभचोरादिग्रहः" ॥ ३१ ॥ चाण्डालिका चाण्डालिकेत्यपि" कण्डोलवीणा "कण्टोलवीणेत्यपि कण्डोलीति पृथगपि" चाण्डालवल्लकी त्रयं किनरीति ख्याताया अन्त्यजवीणायाः । नाराची एषणिका द्वे स्वर्णकाराणां नाराचाकृतिर्या लोहशलाका तत्र "कांटा, तराजू इति ख्याते"। शाणः निकषः कषः त्रीणि स्वर्णादि यत्र घर्षणेन परीक्ष्यते तस्याः शिलायाः "कसोटी, निसाणा इत्यादिख्यातायाः" ॥ ३२ ॥ व्रश्चनः पत्रपरशुः द्वे स्वर्णादिच्छेदनार्थस्य परशोः "कानस इति ख्यातस्य"। ईषिका "इषिका इषीका इत्यपि" तूलिका द्वे शलाकाभेदस्य "सळई इति ख्यातस्य" । तैजसं आवर्त्यते यत्र सा तैजसावर्तनी । स्वर्णादिपाकार्थः पात्रविशेषः मूषा स्यात् "मूस इति ख्याता"। मूषा मूषी मूषी । "मूषा त्वावर्तनी मूषी" इति शब्दार्णवः । मुष स्तेय इत्यस्मात्भिदाद्यङि ह्रस्वादिरपि । ह्रस्वा मुषा मुषी । एकम् । "भस्त्रा चर्मप्रसेविका । चर्मप्रसेवक इत्यपि" द्वे अग्निज्वलनार्थस्य चर्मप्रसेवकस्य "भाता इति ख्यातस्य"

आस्फोटनी वेधनिका कृपाणी कर्तरी समे ॥
वृक्षादनी वृक्षभेदी टङ्कः पाषाणदारणः ॥ ३४ ॥
क्रकचोऽस्त्री करपत्रमारा चर्मप्रभेदिका ॥
सूर्मी स्थूणाऽयःप्रतिमा शिल्पं कर्म कलादिकम् ॥ ३५ ॥
प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ॥
प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात् ॥ ३६ ॥
वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक् ॥
साधारणः समानश्च स्युरुत्तरपदे त्वमी ॥ ३७ ॥

॥ ३३ ॥ आस्फोटनी लास्फोटनी । "वेधनी तु लास्फोटन्यां स्फोटनी वृषदंशिका" इति वाचस्पतिः वेधनिका द्वे मण्यादेर्वेधोपयुक्तस्य शस्त्रभेदस्य "सामता इति ख्यातस्य" कृपाणी कर्तरी द्वे स्वर्णपात्रादि विच्छिद्यते येन तस्य कातर इति ख्यातस्य । वृक्षादनी वृक्षभेदी द्वे वृक्षभेदनार्थस्य शस्त्रभेदस्य "वांकस, तासणी इति ख्यातस्य" । टङ्कः "तङ्क इत्यपि" पाषाणदारणः द्वे पाषाणदारणार्थस्य घनभेदस्य "टांकी इति प्रसिद्धस्य" ॥ ३४ ॥ क्रकचः करपत्रं द्वे काष्ठादिविदारणार्थस्य करवत इति ख्यातस्य । आरा चर्मप्रभेदिका द्वे चर्मखण्डनार्थस्य शस्त्रभेदस्य आरी इति ख्यातस्य । सूर्मी "सूर्मिरिति वा" स्थूणा अयःप्रतिमा त्रयं लोहप्रतिमायाः । कला गीतनृत्यादिकं यत्कर्म तच्छिल्पम् । आदिना रथकारादिकर्म ॥ ३५ ॥ प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया प्रतिकृतिः अर्चा प्रतिनिधिः अष्टौ प्रतिमायाः । "प्रतिकृत्य मीयतेऽनेन प्रतिमानम् । माङ् माने" । प्रतिनिधिः पुंसि । उपमा उपमानं द्वे उपमितकरणस्य । "भावे करणे च । येनोपमीयते या चोपमितिस्तयोरेते नामनी इत्यर्थः । केचित्तु पूर्वान्विते इत्याहुः" ॥ ३६ ॥ समादिसप्तकं समान्तरस्य । "सह मानेन वर्तते समानं मानमस्येति वा समानः । एते वाच्यलिङ्गाः" । सदृक् शान्तः । अमी निभसंकाशादयः उत्तरपदे स्थिताः सदृशपर्याया वाच्यलिङ्गाश्च स्युः ॥ ३७ ॥ यथा पितृनिभः पुत्रः नित्यसमासोऽयं पित्रा सदृश इत्यर्थः । मातृनिभा कन्या मातुः सदृशीत्यर्थः । आदिना भूतरूपकल्पादिग्रहः । "यथा पितृभूतः पितृरूपः । पितृकल्पः" ।

निभसंकाशनीकाशप्रतीकाशोपमादयः ॥
कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् ॥ ३८ ॥
भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ॥
सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा ॥ ३९ ॥
गन्धोत्तमा प्रसन्नेराकादम्बर्यः परिस्रुता ॥
मदिरा कश्यमद्ये चाप्यवदंशस्तु भक्षणम् ॥ ४० ॥
शुण्डापानं मदस्थानं मधुवारा मधुक्रमाः ॥
मध्वासवो माधवको मधु माध्वीकमद्वयोः ॥ ४१ ॥

कर्मण्या विधा भृत्या भृतिः भर्म वेतनम् ॥ ३८ ॥ भरण्यं "भरण्येत्यपि" भरणं मूल्यं निर्वेशः पणः एकादश वेतनस्य । सुरा हलिप्रिया हाला परिस्रुत् वरुणात्मजा ॥ ३९ ॥ गन्धोत्तमा प्रसन्ना इरा कादम्बरी परिस्रुता मदिरा कश्यं मद्यं त्रयोदश मद्यस्य । कदम्बे जातो रसः कादम्बस्तं राति कादम्बरी"। "तत्र गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा" इति वचनात् सुरादि द्वयं गौड्यादित्रिविधमद्यस्य । शेषं मद्यमात्रस्येत्येके । पानरुचिजननार्थं यद्व्यञ्जनं भक्ष्यते सोऽवदंश इत्येकं "भर्जितचणकादिभक्षणस्य" ॥ ४० ॥ शुण्डापानं मदस्थानं द्वे मद्यगृहस्य । "शुण्डा पानं इति पृथगपि । शुण्डा पानगृहे मता । "अप्यम्बुहस्तिनीवेश्याहस्तिहस्तसुरासु च" इति मेदिनी । "शुण्डापि जलहस्तिन्यां मदिराकरिहस्तयोः" इति विश्वः । "पानं पीतिभाजनरक्षणे" इति मेदिनी । पीयतेऽस्मिन्पानम् । मधुवारः मधुक्रमः द्वे मधुपानपरिपाट्याः । "मधुनो वारः सक्षयः मधुवारः" । मध्वासकः माधवकः मधु माध्वीकम् । "मार्द्वीकमित्यपि । मृद्वीका द्राक्षा तस्याः विकारः । "तस्य विकारे" इत्यण् । चत्वारि मधुकपुष्पोद्भवस्य मद्यस्य । "द्वौ द्वौ पर्यायावित्यपि मतम् । मार्द्वीकमिति पाठे मध्वादि द्वयं द्राक्षारसस्य" । तत्र माध्वीकं मधु च द्वयोः न किंतु क्लीबे एव ॥ ४१ ॥ मैरेयम् । मिरायां देशविशेषे ओषधिविशेषे वा भवम् । नद्यादिभ्यो ढक् । आसवः सीधुः "तालव्यादिरपि शीधुरिति । यद्यपि शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् । मैरेयं धातकीपुष्पगुडधानाम्बुसंहितम्" इति माधवः । तथापि भेदमनादृत्योक्तम् । त्रयमिक्षुशाकादिजन्यस्य मद्य-

मैरेयमासवः सीधुर्मेदको जगलः समौ ॥
संधानं स्यादभिषवः किण्वं पुंसि तु नग्नहूः ॥ ४२ ॥
कारोत्तरः सुरामण्ड आपानं पानगोष्टिका ॥
चषकोऽस्त्री पानपात्रं सरकोऽप्यनुतर्षणम् ॥ ४३ ॥
धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः ॥
स्युर्लग्नकाः प्रतिभुवः सभिका द्यूतकारकाः ॥ ४४ ॥
द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि ॥
पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः पाशकाश्च ते ॥ ४५ ॥

विशेषस्य । सीधुरस्त्रियाम् । आसवः पुंसि । मेदकः जगलः द्वे सुराकल्कस्य । मद्यभेदस्येत्येके । जगलो मदनद्रुमे । "मेदके पिष्टमद्ये च" इति कोशान्तरम् । संधानं अभिषवः द्वे मद्यसंधानस्य । फलवंशाङ्कुरादिकं दीर्घकालं यत्संधीयते तस्येत्येके । किण्वं "कण्वमित्यपि" नग्नहूः द्वे तण्डुलादिद्रव्यकृतसुराबीजस्य । "मत्तनग्नकृताह्वानस्येत्यन्ये" । नग्नहौ ॥ ४२ ॥ सुराया मण्ड अग्रभागः कारोत्तरः "कारेण क्रियया उत्तरः कारोत्तरः । कारोत्तम इत्यपि" एकम् । आपानं पानगोष्टिका द्वे पानार्थायाः सभायाः । "आ संभूय पिबन्त्यत्र आपानम्" । चषकः पानपात्रं द्वे मद्यपात्रस्य । "चषकोऽस्त्री सुरापात्रे मधुमद्यप्रभेदयोः" इति मेदिनी । सरकः अनुतर्षणं द्वे मद्यपानस्य । अपिशब्दात्सरकोऽप्यस्त्री । "सरकं वा नानुतर्षो ना" इति रत्नकोशः । "सरकः सीधुपानेक्षुशीधुनोमद्यभाजने" इत्यजयः ॥ ४३ ॥ धूर्तः "धार्तइत्यपि पाठः । धावनेन आर्त्तः" । अक्षदेवी कितवः अक्षधूर्त्तः द्यूतकृत् पञ्च द्यूतकृतः "सोंगटीबाज, जुवेबाज इति ख्यातस्य" । अक्षैर्दीव्यति अक्षदेवी इन्नन्तः । लग्नकः प्रतिभूः द्वे ऋणादौ प्रतिनिधिभूतस्य "जामीन इति ख्यातस्य । प्रति प्रतिनिधिर्भवति प्रतिभूः" । सभिकाः द्यूतकारकाः द्वयं ये द्यूतं कारयन्ति तेषाम् । "सभा द्यूतमाश्रयत्वेनास्यास्ति सभिकः" ॥ ४४ ॥ द्यूतः अक्षवती कैतवं पणः चत्वारि द्यूतस्य । "अक्षाः पाशकाः सन्त्यस्यां सा अक्षवती" । पणः ग्लहः इति द्वे द्यूतजये यत् भाषाबन्धेन ग्राह्यं तस्य । अक्षः देवनः पाशकः त्रयं शारिपरिणयने हेतुभूतस्य पाशस्य "फांसे इति ख्यातस्य" ॥ ४५ ॥ शारीणामितस्ततो नयने परिणाय इत्येकम् । अस्त्रियामित्यस्य अष्टापदेन शब्देन

45-47. 1.



परिणायस्तु शारीणां समन्तान्नयनेऽस्त्रियाम् ॥
अष्टापदं शारिफलं प्राणिद्यूतं समाह्वयः ॥ ४६ ॥
उक्ता भूरिप्रयोगत्वादेकस्मिन्येऽत्र यौगिकाः ॥
ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गान्तरेऽपि ते ॥ ४७ ॥

॥ इति शूद्रवर्गः ॥ १० ॥

---

इत्यमरसिंहकृतौ नामलिङ्गानुशासने ॥
द्वितीयः काण्डो भूम्यादिः साङ्ग एव समर्थितः ॥ १ ॥

सम्बन्धः । अष्टापदं शारिफलं द्वे शारीणामाधारस्य कोष्टकयुक्तस्य वस्त्रादेः "सारीपट इति ख्यातस्य" । शारयस्तु काष्ठादिरचितो द्यूतोपकरणविशेषः सोंगटी इति लौकिकभाषायां प्रसिद्धः । प्राणिद्यूतं प्राणिनां मेषकुक्कुटादीनां द्यूतं मिथो युद्धलक्षणः क्रीडाविशेषः समाह्वयः । "अप्राणिभिः कृतं यत्तु तल्लोके द्यूतमुच्यते । प्राणिभिः क्रियते यत्तु सविज्ञेयः समाह्वयः" इत्युक्तेः । एकम् ॥४६॥ अत्र केषांचिल्लिङ्गभेदविधानाभावात्प्राप्तमपूर्णत्वं परिहरति उक्ता इति । अत्र शूद्रवर्गे यौगिकाः कुम्भकारमालाकारप्रभृतयः शब्दाः काव्यपुराणादिषु पुंस्येव भूरिप्रयोगत्वात्प्रचुरप्रयोगदर्शनादेकस्मिन्नेव लिङ्गे उक्ता निर्दिष्टास्तेऽन्यतोऽन्यत्र स्त्रीत्वादिविशिष्टे विशिष्यवृत्तौ सत्यां ताद्धर्म्यात् विशिष्टानां विशेष्यधर्मत्वाल्लिङ्गान्तरे स्त्रीलिङ्गादावप्यूहनीयाः । अपिशब्दात् रूढा अपि करणकुलालादयो जातिवचनत्वात् पुंसि स्त्रियां च वर्तन्ते इति ज्ञेयम् । यस्यावयवशक्त्य एवार्थो बुध्यते स यौगिकः । यस्यावयवशक्तिमनपेक्ष्य समुदायशक्तिमात्रेणार्थो बुध्यते स रूढः । तत्र यौगिको लिङ्गान्तरे यथा । कुम्भकारी स्त्री । कुम्भकारं कुलम् । एवं मालाकारी । मालाकारम् । अण्णन्तत्वात्स्त्रियां ङीप् । अयौगिको यथा । करणी । कुलाली । अत्र जातेरस्त्रीविषयादिति ङीष् ॥ ४७ ॥ इति शूद्रवर्गः ॥ १० ॥ श्रीमत्यमरविवेके महेश्वरेण विरचित एवायं भूम्यादिद्वितीयः काण्डः समाप्तः ॥

इति सटीकामरकोशस्य
द्वितीयं काण्डं समाप्तम् ॥

# अमरकोशद्वितीयकाण्डस्य वर्गानुक्रमेण श्लोकसंख्या.

| वर्गाङ्काः | वर्गनामानि. | मूलश्लोकाः | क्षेपकश्लोकाः | |
|---|---|---|---|---|
| १ | भूमिवर्गः ............... | १८ | १ | संकलनया वर्गाः मूलश्लोकाः<br>१० ७३३॥ |
| २ | पुरवर्गः .................. | २० | ·॥· | |
| ३ | शैलवर्गः .............. | ८ | .॥. | क्षेपकश्लोकाः एवं<br>१२ ७४५॥ |
| ४ | वनौषधिवर्गः ............ | १६९॥ | ० | |
| ५ | सिंहादिवर्गः ............... | ४३ | २॥ | |
| ६ | मनुष्यवर्गः .............. | १३९॥ | १ | |
| ७ | ब्रह्मवर्गः ............... | ५८ | ५ | |
| ८ | क्षत्रियवर्गः ............... | ११९॥ | ० | |
| ९ | वैश्यवर्गः ............... | १११ | १॥ | |
| १० | शूद्रवर्गः .................. | ४७ | ० | |

अथ

# सटीकामरकोशस्य

## तृतीयं काण्डम्.

विशेष्यनिघ्नैः संकीर्णैर्नानार्थैरव्ययैरपि ॥
लिङ्गादिसंग्रहैर्वर्गाः सामान्ये वर्गसंश्रयाः ॥ १ ॥
स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः ॥
गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः ॥ २ ॥

श्रीगणेशाय नमः ॥ ॥ अथ तृतीयकाण्डो व्याख्यायते । तत्र वक्ष्यमाणवर्गानाह । विशेष्यनिघ्नैरिति ॥ सामान्ये साधारणत्वात्सामान्याख्येऽस्मिन्काण्डे विशेष्यनिघ्नैर्विशेष्यं स्त्रीदारादि पूर्वोक्तं तदधीनलिङ्गवचनैः सुकृत्यादिभिः शब्दैः तथा संकीर्णैः परस्परविजातीयार्थैः कर्मपारायणादिभिः तथा नानार्थैः अनेकार्थेषु वर्तमानैर्नाकलोकादिभिः अव्ययैराङादिभिर्लिङ्गसंग्रहैः स्त्रियामीदूद्विरामैकाजित्यादिभिरादिशब्दान्नामसंग्रहैश्च लङ्काशेफालिकेत्यादिभिः शब्दैरुपलक्षितास्तत्तन्नामका वर्गाः वक्ष्यन्त इति शेषः । ते च वर्गाः स्वतन्त्रा नेत्याह । वर्गसंश्रया इति । वर्गाः संश्रया येषां ते । पूर्वोक्तस्वर्गादिवर्गसंबन्धिन एवेत्यर्थः ॥ १ ॥ इह शास्त्रे रूपादिभेदेनैव प्रायशो लिङ्गनिर्णयः तद्वदेवात्रापि वर्गे स्यादिति भ्रमनिरासार्थं व्यापकं लक्षणमाह । स्त्रीदाराद्यैरिति । यादृशैः स्त्रीलिङ्गत्वादियुक्तैः स्त्रीदाराद्यैः पदैर्यद्विशेष्यं स्त्रीदारादिरूपं यथा प्रस्तुतं प्रक्रान्तं तस्य विशेष्यस्य भेदका व्यावर्तका गुणद्रव्यक्रियाविशिष्टाः शब्दास्तथा स्युः । विशेष्यस्य यादृशे लिङ्गवचने तादृशलिङ्गवचना एव भवेयुरित्यर्थः । तत्र गुणः सुकृतादिस्तद्विशिष्टो यथा । सुकृतिनी स्त्री । सुकृतिनो दाराः । सुकृति कुलम् । द्रव्यं दण्डादि तद्विशिष्टो यथा । दण्डिनी स्त्री दण्डिनो दाराः । दण्डि कुलम् । क्रिया पचनादिव्यापारस्तद्विशिष्टो यथा । पाचिका स्त्री । पाचका दाराः । पाचकं कुलम् ॥ २ ॥ सुकृती पुण्यवान् धन्यः त्रयं भाग्यसंपन्नस्य । “धन्या

सुकृती पुण्यवान् धन्यो महेच्छस्तु महाशयः ॥
हृदयालुः सुहृदयो महोत्साहो महोद्यमः ॥ ३ ॥
प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः ॥
वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ॥ ४ ॥
पूज्यः प्रतीक्ष्यः सांशयिकः संशयापन्नमानसः ॥
दक्षिणीयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि ॥ ५ ॥
स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे ॥
जैवातृकः स्यादायुष्मानन्तर्वाणिस्तु शास्त्रवित् ॥ ६ ॥

धात्र्यामलक्योः स्याद्धन्यं पुण्यवति त्रिषु" इति विश्वमेदिन्यौ । सुकृतमस्यास्ति सुकृती । धनं लब्धा धन्यः धनायार्ह इत्यर्थः । महेच्छः महाशयः द्वे उदारं चित्तं यस्य तस्य दयालोः । "आशयः स्यादभिप्राये मानसाधारयोरपि" इति मेदिनी । हृदयालुः सुहृदयः "सहृदय इति पाठः । अत्र प्रशस्तपरत्वं हृदयशब्दस्य । हृदयवान् हृदयिक इत्यपि" द्वे यस्य चित्तं प्रशस्तं तस्य । महोत्साहः महोद्यमः द्वे दुरापेऽपि कृत्येऽध्यवसितक्रियस्य । "महानुद्यमो ऽस्य महोद्यमः" ॥ ३ ॥ प्रवीणः निपुणः अभिज्ञः विज्ञः निष्णातः शिक्षितः वैज्ञानिकः "व्रीह्यादित्वाठ्ठनि विज्ञानिक इत्यपि" कृतमुखः कृती कुशलः दश प्रवीणस्य । "कृतं कर्म प्रशस्तमस्य कृती" ॥ ४ ॥ पूज्यः प्रतीक्ष्यः द्वे । एतल्लक्ष्यम् । "भक्तिः प्रतीक्ष्येषु कुलोचिता ते" इति । सांशयिकः संशयापन्नमानसः द्वे संशयमापन्नं मानसं यत्र स्थाण्वादौ तस्य । तथा च संशयविषयीभूतोऽर्थः सांशयिक इति दीक्षिताः । संशयमापन्न इति ठञ् । दक्षिणीयः दक्षिणार्हः दक्षिण्यः "दाक्षिण्य इत्यपि" त्रीणि यो दक्षिणामर्हति तस्य ॥ ५ ॥ वदान्यः "वदन्य इत्यपि" स्थूललक्ष्यः "स्थूललक्ष इत्यपि" दानशौण्डः बहुप्रदः चत्वारि दानशूरस्य । "मां याचस्वेति वदति वदान्यः । स्थूलैर्महद्भिर्लक्ष्यते स्थूललक्ष्यः ।" जैवातृकः आयुष्मान् द्वे "जैवातृकः पुमान्सोमे कृषकायुष्मतोस्त्रिषु" इति विश्वमेदिन्यौ । अतिशयितमायुरस्यायुष्मान् । अन्तर्वाणिः शास्त्रवित् द्वे शास्त्रज्ञस्य । "अन्तर्वाणयति । वण शब्दे ।" ॥ ६ ॥ परीक्षकः कारणिकः द्वे प्रमाणैरर्थनिश्चायकस्य । "करणैश्चरति कारणिकः ।"

परीक्षकः कारणिको वरदस्तु समर्धकः ॥
हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः ॥ ७ ॥

दुर्मना विमना अन्तर्मनाः स्यादुत्क उन्मनाः ॥
दक्षिणे सरलोदारौ सुकलो दातृभोक्तरि ॥ ८ ॥

तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः ॥
प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः ॥ ९ ॥

गुणैः प्रतीते तु कृतलक्षणाहृतलक्षणौ ॥
इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता ॥ १० ॥

अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः ॥

वरदः समर्धकः द्वे वराणां दातरि । हर्षमाणः विकुर्वाणः प्रमनाः हृष्टमानसः चत्वारि हृष्टचेतसः । "प्रकृष्टं मनो यस्य प्रमनाः" ॥ ७ ॥ दुर्मनाः विमनाः अन्तर्मनाः त्रीणि सान्तानि व्याकुलचेतसः "दुःस्थितं मनोऽस्य दुर्मनाः । विगतं विविधं वा मनो यस्य विमनाः ।" उत्कः उच्छब्दात्स्वार्थे कन् । उन्मनाः द्वे उत्कण्ठितस्य । "उद्गतं मनोऽस्य उन्मनाः ।" दक्षिणः सरलः उदारः त्रयं सरलस्य । दक्षति वर्धते ऋज्वाशयत्वाद्दक्षिणः । यो दाता चासौ भोक्ता च तत्र सुकल इत्येकम् ॥ ८ ॥ तत्परः प्रसितः आसक्तः त्रीणि तात्पर्ययुक्तस्य । तत्परं उत्तमं यस्य तत्परः । इष्टार्थोद्युक्तः उत्सुकः द्वे अभिमतार्थे सोद्योगस्य । प्रसितासक्ताविष्टा उद्युक्त इति पाठे आविष्टान्तं चतुष्कमासक्ते । "पञ्चापि तत्परपर्याया इत्येके ।" प्रतीतः प्रथितः ख्यातः वित्तः विज्ञातः विश्रुतः षट् ख्यातस्य । प्रथते स्म प्रथितः । "प्रथ प्रख्याने" ॥ ९ ॥ कृतलक्षणः आहृतलक्षणः "आहितलक्षण इत्यपि" द्वे शौर्यादिभिः ख्याते "लक्षणं नाम्नि चिह्ने च" इति विश्वः । आहृतमभ्यस्तं लक्षणमस्य । "आहृतं गुणितेऽपि स्यात्" इति विश्वः । यल्लक्ष्यम् । ककुत्स्थ इत्याहृतलक्षणोऽभूदिति । इभ्यः आढ्यः धनी त्रीणि "इभ्यो धनवतीभ्या तु करेण्वां सल्लकीतरौ" इति हेमचन्द्रः । बहुधनमस्य धनी । स्वामी ईश्वरः । "ईश्वरो मन्मथे शम्भौ नाथे स्वामिनि वाच्यवत्" इति विश्वमेदिन्यौ । पतिः ईशिता ॥ १० ॥ अधिभूः नायकः नेता प्रभुः परिवृढः अधिपः दश प्रभोः ।

अधिकर्द्धिः समृद्धः स्यात्कुटुम्बव्यापृतस्तु यः ॥ ११ ॥
स्यादभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयम् ॥
वराङ्गरूपोपेतो यः सिंहसंहननो हि सः ॥ १२ ॥
निर्वार्यः कार्यकर्ता यः संपन्नः सत्त्वसंपदा ॥
अवाचि मूकोऽथ मनोजवसः पितृसन्निभः ॥ १३ ॥
सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः ॥
लक्ष्मीवाँल्लक्ष्मणः श्रीलः श्रीमान्स्निग्धस्तु वत्सलः ॥ १४ ॥
स्याद्दयालुः कारुणिकः कृपालुः सूरतः समाः ॥
स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः ॥ १५ ॥

ईशितारौ । अधिभुवौ । नेतारौ । अधिकर्द्धिः समृद्धः द्वे सुसंपन्नस्य । "अधिका ऋद्धिर्यस्य अधिकर्द्धिः" । कुटुम्बव्यापृतः ॥ ११ ॥ अभ्यागारिकः उपाधिः त्रीणि कुटुम्बपोषणादिव्यापारयुक्तस्य । "अभ्यागारे नियुक्तः अभ्यागारिकः" । अगारान्ताट्ठन् इकादेशः । उपाधिर्नित्यं पुंसि । अङ्गान्यवयवाः रूपं लावण्यं वरैरङ्गरूपैरुपेतो यः स सिंहसंहनन इत्येकम् ॥ १२ ॥ यः सत्त्वसंपदा व्यसनेऽप्यक्षुब्धं मनः सत्त्वं तत्संपत्त्या संपन्नः सन्कार्यं करोति स निर्वार्य इत्येकम् । "निर्धार्य इत्यपि" । संपन्न इत्यत्र संयुक्त इति पाठः । "व्यसनेऽभ्युदये वापि ह्यविकारं सदा मनः । तत्तु सत्त्वमिति प्रोक्तं नयविद्भिर्बुधैः किल" इति स्मरणात् । अवाक् मूकः द्वे "मूयते बध्यते वागस्य" । मनोजवसः । मनोजव इत्यपि । "मनोजवपितृसधर्माणः" इति नाममाला । पितृसन्निभः द्वे पितृतुल्यस्य ॥ १३ ॥ परिणेत्रे आदरपूर्वकमलंकृतां कन्यां यो ददाति स कूकुद इत्येकम् । "कुकुद इत्यपि" । लक्ष्मीवान् लक्ष्मणः श्रीलः "श्रील इत्यपि" श्रीमान् चत्वारि लक्ष्मीवतः । स्निग्धः वत्सलः वत्से पुत्रादिस्नेहपात्रेऽभिलाषोऽस्यास्ति द्वे स्नेहयुक्तस्य ॥ १४ ॥ दयालुः कारुणिकः कृपालुः सूरतः "सुरत इत्यपि" चत्वारि दयाशीलस्य । स्वतन्त्रः अपावृतः स्वैरी "स्वैर इत्यपि" स्वच्छन्दः निरवग्रहः पञ्च स्वच्छन्दस्य । "स्वः आत्मा तन्त्रं प्रधानं यस्य स्वतन्त्रः" ॥ १५ ॥ परतन्त्रः पराधीनः परवान् नाथवान् चत्वारि पराधीनस्य । "परः स्वाम्यस्यास्ति पर-

परतन्त्रः पराधीनः परवान्नाथवानपि ॥
अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ ॥ १६ ॥

खलपूः स्याद्बहुकरो दीर्घसूत्रश्चिरक्रियः ॥
जाल्मोऽसमीक्ष्यकारी स्यात्कुण्ठो मन्दः क्रियासु यः ॥१७॥

कर्मक्षमोऽलङ्कर्मीणः क्रियावान्कर्मसूद्यतः ॥
स कार्मः कर्मशीलो यः कर्मशूरस्तु कर्मठः ॥ १८ ॥

भरण्यभुक्कर्मकरः कर्मकारस्तु तत्क्रियः ॥
अपस्नातो मृतस्नात आमिषाशी तु शौष्कुलः ॥ १९ ॥

वान्" । परवन्तौ । अधीनः निघ्न आयत्तः अस्वच्छन्दः गृह्यकः पञ्चकमधीन-मात्रे । इनमधिगतः अधीनः अधि उपरि इनो यस्येति वा । "न स्वच्छन्दो-ऽस्यास्वच्छन्दः" । नवानामेकार्थत्वमित्येके ॥ १६ ॥ खलपूः बहुकरः द्वे संमा-र्जनादिकारिणः । खलं चत्वरं पुनाति मार्जयति खलपूः खलप्वौ । दीर्घसूत्रः चिरक्रियः द्वे यः स्वल्पकालसाध्यं चिरेण करोति तस्यालसविशेषस्य । दीर्घं सूत्रं व्यवस्था यस्य दीर्घसूत्रः । "सूत्रं तन्तुव्यवस्थयोः" इति विश्वः । चिरेण क्रियाऽस्य चिरक्रियः । जाल्मः असमीक्ष्यकारी द्वे यो गुणदोषानविमृश्य करोति तस्य । यः क्रियासु मन्दोऽलसो मूढो वा स कुण्ठ इत्येकम् ॥ १७ ॥ कर्मक्षमः अलङ्कर्मीणः द्वे कर्मणि शक्तस्य । "कर्मणे क्रियायै अलं समर्थः अलङ्कर्मीणः" । कर्मसु य उद्युक्तः स क्रियावान् एकम् । कार्मः कर्मशीलः द्वे नित्यं कर्मण्येव प्रवृत्तस्य । स्त्रियां तु कार्मी । कर्मशूरः कर्मठः द्वे प्रयत्नेन य आरब्धं कर्म परिसमापयति तस्य । "कर्मणि घटते कर्मठः" । "कर्मणि घटो-ऽठच्" इति पाणिनिः ॥ १८ ॥ भरण्यभुक् भरण्यं वेतनं भुङ्क्ते "कर्मण्यभुगि-त्यपि" कर्मकरः द्वे वेतनं गृहीत्वा कर्म करोति तस्य । तत्कर्मैव क्रिया यस्य स तत्क्रियः । वेतनं विनापि क्रियावान् स कर्मकार इत्येकम् । अपस्नातः मृतस्नातः द्वे मृतमुद्दिश्य स्नातस्य । आमिषाशी शौष्कुलः द्वे मत्स्यमांसभक्ष-कस्य । "शौष्कल इति वा पाठः" । शुष्कलः । "शुष्कलः शुष्कमांसस्य पणिके पिशिताशिनि" हैमः ॥ १९ ॥ बुभुक्षितः क्षुधितः जिघत्सुः अश-नायितः चत्वारि बुभुक्षितस्य । अत्तुमिच्छुः जिघत्सुः । सन्नन्तादुः । "अशनस्य

बुभुक्षितः स्यात्क्षुधितो जिघत्सुरशनायितः ॥
परान्नः परपिण्डादो भक्षको घस्मरोऽद्मरः ॥ २० ॥

आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते ॥
उभौ त्वात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके ॥ २१ ॥

सर्वान्नीनस्तु सर्वान्नभोजी गृध्नुस्तु गर्धनः ॥
लुब्धोऽभिलाषुकस्तृष्णक् समौ लोलुपलोलुभौ ॥ २२ ॥

सोन्मादस्तून्मदिष्णुः स्यादविनीतः समुद्धतः ॥
मत्ते शौण्डोत्कटक्षीबाः कामुके कमिताऽनुकः ॥ २३ ॥

कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः ॥

इच्छा अशनाया सा जाताऽस्य" । परान्नः परपिण्डादः द्वे परान्नोपजीविनः । भक्षकः घस्मरः अद्मरः त्रीणि भक्षणशीलस्य । "अत्तीत्यद्मरः" ॥ २० ॥ आद्यूनः औदरिकः द्वे विजिगीषाविवर्जिते उत्कर्षेच्छारहिते । बुभुक्षयाऽत्यन्तपीडिते इत्यर्थः । उदरे प्रसित औदरिकः । "उदराट्ठगाद्यूने" इति ठक् । आत्मम्भरिः कुक्षिम्भरिः द्वे यः स्वोदरं बिभर्ति तस्य "पोटभरू इति ख्यातस्य" । आत्मानं बिभर्ति आत्मम्भरिः ॥ २१ ॥ सर्वान्नीनः सर्वान्नभोजी द्वे यः सर्वेषां वर्णानां अन्नानि भुङ्क्ते तस्य परमहंसादेः । गृध्नुः गर्धनः द्वे आकाङ्क्षाशीलस्य । लुब्धः । अभिलाषुकः तृष्णक् त्रीणि अभिलाषशीलस्य । "लुभ्यति स लुब्धः" । अभिलष्यतीति अभिलाषुकः । "लष कान्तौ" कान्तिरिच्छा । "लषपतेत्युकञ्" । पञ्चापि लुब्धस्येति केचित् । तृष्णजौ । लोलुपः लोलुभः द्वे अतितृष्णाशीलस्य । „गर्हितं लुम्पति लोलुपः" ॥ २२ ॥ सोन्मादः । "उन्मद इति सून्माद इति वा पाठः । सु अतिशयित उन्मादोऽस्य" । उन्मदिष्णुः द्वे उन्मादशीलस्य । अविनीतः समुद्धतः द्वे दुर्विनीतस्य । "न व्यनायि अविनीतः" । मत्तः शौण्डः उत्कटः क्षीबः "क्षीबमिति नान्तोऽप्यस्ति" चत्वारि मत्तस्य । शुण्डायां पानागारे भवः शौण्डः । तत्र भव इत्यण् । "शौण्डो मत्ते च विख्याते" इति विश्वः । "उत्कटस्तीव्रमत्तयोः" इति हैमः । कामुकः कमिता अनुकः ॥ २३ ॥ कम्रः कामयिता अभीकः कमनः कामनः अभिकः नव कामुकस्य । अनु कामयते अनुकः । अभीको

विधेयो विनयग्राही वचनेस्थितः आश्रवः ॥ २४ ॥
वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः ॥
धृष्टे धृष्णग्वियातश्च प्रगल्भः प्रतिभान्विते ॥ २५॥
स्यादधृष्टे तु शालीनो विलक्षो विस्मयान्विते ॥
अधीरे कातरस्त्रस्ते भीरुभीरुकभीलुकाः ॥ २६ ॥
आशंसुराशंसितरि गृहयालुर्ग्रहीतरि ॥
श्रद्धालुः श्रद्धया युक्ते पतयालुस्तु पातुके ॥ २७ ॥
लज्जाशीलेऽपत्रपिष्णुर्वन्दारुरभिवादके ॥

दीर्घमध्यो ह्रस्वमध्यश्च । विधेयः विनयग्राही वचनेस्थितः आश्रवः चत्वारि वचनग्राहिणि । प्रवृत्तौ निवृत्तौ वा विधातुं शक्यः विधेयः । वचने तिष्ठति स वचनेस्थितः । "तत्पुरुषे कृति" इत्यलुक् ॥ २४ ॥ वश्यः प्रणेयः द्वे वशङ्गतस्य "प्रकर्षेण नेतुं शक्यः प्रणेयः" । अत्र विधेयादिषडपि वशङ्गतस्य वा । निभृतः विनीतः प्रश्रितः त्रयं विनीतस्य । नितरां अमारि निभृतः । "भृञ् भरणे" । धृष्टः धृष्णक् "धृष्णुरित्यपि" वियातः त्रीणि अविनीतस्य । "विरुद्धं यातं चेष्टितं यस्य वियातः" । धृष्णजौ । प्रगल्भः प्रतिभान्वितः द्वे सप्रतिभस्य । प्रत्युत्पन्नमतित्वं प्रतिभा । "प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता" इति रुद्रः ॥ २५ ॥ अधृष्टः शालीनः द्वे सलज्जस्य । विलक्षः विस्मयान्वितः द्वे "परकीयधर्मशीलादौ प्राप्ताश्चर्यस्य" । अधीरः कातरः द्वे भयक्षुत्पिपासादिव्याकुलस्य । "ईषत्तरति कातरः । ईषदर्थे चेति कोः कादेशः" । त्रस्तः "त्रस्नुरित्यपि" भीरुः "भीत इत्यपि" भीरुकः भीलुकः चत्वारि भयशीलस्य ॥ २६ ॥ आशंसुः आशंसिता द्वे वाञ्छाशीलस्य । गृहयालुः ग्रहीता द्वे ग्रहणशीलस्य । श्रद्धा आस्तिक्यबुद्धिस्तया युक्ते श्रद्धालुरित्येकम् । पतयालुः पातुकः द्वे पतनशीलस्य । "पतयति तच्छीलः पतयालुः" ॥ २७ ॥ लज्जाशीलः अपत्रपिष्णुः द्वे लोकलज्जायुक्तस्य । "लज्जा शीलमस्य लज्जाशीलः" । वन्दारुः अभिवादकः द्वे वन्दनशीलस्य । "वन्दते तच्छीलः वन्दारुः" । शरारुः घातुकः हिंस्रः त्रीणि हिंसाशीले । "शृणाति तच्छीलः शरारुः" । वर्धिष्णुः

शरारुर्घातुको हिंस्रः स्याद्वर्धिष्णुस्तु वर्धनः ॥ २८ ॥
उत्पतिष्णुस्तूत्पतिताऽलङ्करिष्णुस्तु मण्डनः ॥
भूष्णुर्भविष्णुर्भविता वर्तिष्णुर्वर्तनः समौ ॥ २९ ॥
निराकरिष्णुः क्षिप्नुः स्यात्सान्द्रस्निग्धस्तु मेदुरः ॥
ज्ञाता तु विदुरो विन्दुर्विकासी तु विकस्वरः ॥ ३० ॥
विसृत्वरो विसृमरः प्रसारी च विसारिणि ॥
सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी ॥ ३१ ॥
क्रोधनोऽमर्षणः कोपी चण्डस्त्वत्यन्तकोपनः ॥
जागरूको जागरिता घूर्णितः प्रचलायितः ॥ ३२ ॥
स्वप्नक् शयालुर्निद्रालुर्निद्राणशयितौ समौ ॥

वर्धनः द्वे वर्धनशीलस्य । "वर्धते तच्छीलः वर्धिष्णुः" ॥ २८ ॥ उत्पतिष्णुः उत्पतिता द्वे उत्पतनशीलस्य । "उत्पतति तच्छीलः उत्पतिष्णुः" । अत्र ये तृभिष्णुचूस्नुक्रुक्मरजित्यादयः प्रत्ययास्ते तच्छीलतद्धर्मतत्साधुकारिषु बोद्धव्याः । ताच्छील्ये प्रयोगः प्रायेण । अलङ्करिष्णुः मण्डनः द्वे अलङ्करणशीले । भूष्णुः भविष्णुः भविता त्रीणि भवनशीले । वर्तिष्णुः वर्तनः द्वे वर्तनशीले ॥ २९ ॥ निराकरिष्णुः क्षिप्नुः "क्षिष्णुरिति केचित्" द्वे निराकर्तरि । सान्द्रो घनः स चासौ स्निग्धश्च सान्द्रस्निग्धः मेदुरः स्यात् एकम् । यद्वक्ष्यम् । मेघैर्मेदुरमम्बरमिति । ज्ञाता विदुरः विन्दुः त्रयं ज्ञातरि । "वेदनशीलः विदुरः" विकासी "तालव्यान्तोऽपि" विकस्वरः "विकश्वर इत्यपि" द्वे विकासशीले ॥ ३० ॥ विसृत्वरः विसृमरः प्रसारी विसारी चत्वारि प्रसरणशीले । सहिष्णुरित्यादिषट् क्षमाशीले ॥ ३१ ॥ क्रोधनः अमर्षणः कोपी त्रीणि कोपशीलस्य । "अवश्यं कुप्यति कोपी" । चण्डः अत्यन्तकोपनः द्वे अतिक्रोधशीले । जागरूकः जागरिता द्वे जागरणशीले । घूर्णितः प्रचलायितः द्वे निद्राघूर्णितस्य । घूर्ण भ्रमणे । "प्रचलाया जाताऽस्येति प्रचलायित" ॥ ३२ ॥ स्वप्नक् शयालुः निद्रालुः त्रीणि निद्राशीलस्य । "शयालुः स्यादजगरे निद्राशीले च कुक्कुरे" इति विश्वमेदिन्यौ । स्वप्नजौ । निद्राणः "निद्रित इत्यपि" शयितः द्वे सुप्तस्य । पराङ्मुखः पराचीनः द्वे विमुखस्य । "पराञ्चत्यनभिमुखीभवति मुखमस्य

पराङ्मुखः पराचीनः स्यादवाङ्प्यधोमुखः ॥ ३३ ॥
देवानञ्चति देवद्र्यङ् विष्वद्र्यङ् विष्वगञ्चति ॥
यः सहाञ्चति सध्र्यङ् स स तिर्यङ् यस्तिरोऽञ्चति ॥ ३४ ॥
वदो वदावदो वक्ता वागीशो वाक्पतिः समौ ॥
वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि ॥ ३५ ॥
स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् ॥
दुर्मुखे मुखराबद्धमुखौ शक्लः प्रियंवदे ॥ ३६ ॥
लोहलः स्यादस्फुटवाग्गर्ह्यवादी तु कद्वदः ॥

पराङ्मुखः" । अवाङ् अधोमुखः द्वे "अवाञ्चत्यधोमुखीभवति अवाङ्" अवाञ्चौ ॥ ३३ ॥ यो देवानञ्चति गच्छति पूजयति वा स देवद्र्यङ् । एकम् । चान्तम्" । स्त्रियां देवद्रीची" । यो विष्वक् समन्तादञ्चति गच्छति स विष्वद्र्यङ् "विष्वद्र्यङ् इति तालव्यमध्योऽपि" । स्त्रियां विष्वद्रीची । "विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये" इति पाणिनिः । चान्तं एकम् । यः सहाञ्चति तुल्यं गच्छति स सध्र्यङ् । एकम् । सध्र्यञ्चौ । स्त्रियां सध्रीची । "सहस्य सध्रिः" इति पाणिनिः । यस्तिरो वक्रमञ्चति स तिर्यङ् । एकम् । "तिरसस्तिर्यलोपे" इति पाणिनिराह ॥ ३४ ॥ वदः वदावदः वक्ता त्रीणि वक्तरि । वागीशः वाक्पतिः द्वे अनवद्योद्दामवादिनि । वाचोयुक्तिपटुः "पटुरिति पृथगपि" । "वाग्मी पटौ सुराचार्ये" इति विश्वमेदिन्यौ । वाग्मी द्वे नैयायिकस्य । वाचोयुक्तीति वाग्दिगिति षष्ठ्या अलुक् । "प्रशस्ता वागस्य वाग्मी" । वावदूकः अतिवक्ता द्वे बहुभाषिणि ॥ ३५ ॥ जल्पाकः वाचालः वाचाटः बहुगर्ह्यवाक् चत्वारि यो बहु अवाच्यं वक्ति तस्य । कुत्सितं बहु भाषते वाचालः वाचाटः । "आलजाटचौ बहुभाषिणि" इति सूत्रेण साधु । जल्पाकी । षित्वात्स्त्रियां ङीष् । दुर्मुखः मुखरः अबद्धमुखः त्रयमनर्गलमुखस्य । "निन्दितं मुखमस्य मुखरः । न बद्धं नियमितं मुखमस्य अबद्धमुखः" । शक्लः प्रियंवदः द्वे प्रियवादिनि । शक्नोति वक्तुमिति शक्ल इति स्वामी । शक्ल इति सर्वधरः ॥ ३६ ॥ लोहलः अस्फुटवाक् द्वे अस्फुटवादिनि । "न स्फुटा वागस्यास्फुटवाक्" । गर्ह्यवादी कद्वदः द्वे कुत्सितभाषिणि । कुत्सितं वदति कद्वदः ।

समौ कुवाद्कुचरौ स्यादसौम्यस्वरोऽस्वरः ॥ ३७ ॥
रवणः शब्दनो नादीवादी नादीकरः समौ ॥
जडोऽज्ञ एडमूकस्तु वक्तुं श्रोतुमशिक्षिते ॥ ३८ ॥
तूष्णींशीलस्तु तूष्णीको नग्नोऽवासा दिगम्बरे ॥
निष्कासितोऽवकृष्टः स्यादपध्वस्तस्तु धिक्कृतः ॥ ३९ ॥
आत्तगर्वोऽभिभूतः स्याद्दापितः साधितः समौ ॥
प्रत्यादिष्टो निरस्तः स्यात्प्रत्याख्यातो निराकृतः ॥ ४० ॥

"रथवदयोश्च" इति कोः कदादेशः। गर्ह्यं वदति गर्ह्यवादी"। कुवादः कुचरः द्वे दोषकथनशीले। "कुत्सितं चरति कुचरः"। असौम्यस्वरः अस्वरः द्वे काकादिस्वरवदपस्वरयुक्तस्य ॥ ३७ ॥ रवणः शब्दनः द्वे शब्दशीलस्य। नान्दीवादी नान्दीकरः द्वे स्तुतिविशेषवादिनः। "नान्दीं वदति तच्छीलः नान्दीवादी"। "आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रवर्तते ॥ देवद्विजनृपादीनां तस्मान्नान्दीति कीर्त्यते" इति भरतः। जडः अज्ञः द्वे अत्यन्तमूढस्य। यदुक्तम्। "इष्टं वानिष्टं वा सुखदुःखे वा न चेह यो मोहात्। विन्दति परवशगः स भवेदिह जडसंज्ञकः पुरुषः" इति। यो वक्तुं श्रोतुं च शिक्षितो न भवति स एडमूकः। अनेडमूक इति पाठे नास्त्येडो मूकोऽस्मादिति विग्रहः। एडो बधिरः। "त्रिलिङ्गोऽनेडमूकः स्याच्छठे वाक्श्रुतिवर्जितः" इति रभसः॥ ३८ ॥ तूष्णींशीलः तूष्णीकः द्वे तूष्णीम्भावयुक्तस्य। शीले को मलोपश्चेति वार्तिकेन तूष्णीमो मस्य लोपः। "तूष्णीं शीलं यस्य तूष्णींशीलः"। नग्नः अवासाः दिगम्बरः त्रीणि नग्नस्य। अवाससौ। निष्कासितः निष्कामित इत्यपि। अवकृष्टः द्वे निर्गमितस्य। अपध्वस्तः धिक्कृतः द्वे निर्भर्त्सितस्य ॥ ३९ ॥ आत्तगर्वः आत्तगन्धः। "गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः" इति विश्वः। "गन्धो गर्वो लवोऽपि च" इति त्रिकाण्डशेषः। अभिभूतः द्वे भग्नदर्पस्य। "आत्तगन्धः पलायितः" इति कोशान्तरे। पलायनकर्तुरपि। लक्ष्यम्। "कर्णोऽपि भूत्वा कथमात्तगन्धः" इति भारतचम्पूः। "चत्वारोऽपि पर्याया इत्येके"। दापितः "दायित इत्यपि। तत्र दय दाने इति धातुः" साधितः द्वे "धनादिकं प्रदापितस्य प्रदापितस्य धनादेर्वा"। "धनादिकं दापयतीति दापितः" इति राजमुकुटः। प्रत्यादिष्टादि चतुष्कं निराकृतस्य ॥ ४० ॥

निकृतः स्याद्विप्रकृतो विप्रलब्धस्तु वञ्चितः ॥
मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः ॥ ४१ ॥

अधिक्षिप्तः प्रतिक्षिप्तो बद्धे कीलितसंयतौ ॥
आपन्न आपत्प्राप्तः स्यात्कान्दिशीको भयद्रुतः ॥ ४२ ॥

आक्षारितः क्षारितोऽभिशस्ते संकसुकोऽस्थिरे ॥
व्यसनार्तोपरक्तौ द्वौ विहस्तव्याकुलौ समौ ॥ ४३ ॥

विक्लवो विह्वलः स्यात्तु विवशोऽरिष्टदुष्टधीः ॥
कश्यः कशार्हे सन्नद्धे त्वाततायी वधोद्यते ॥ ४४ ॥

द्वेष्ये त्वक्षिगतो वध्यः शीर्षच्छेद्य इमौ समौ ॥

निकृतः विप्रकृतः द्वे विवर्णीकृतस्य । विप्रलब्धः वञ्चितः द्वे "वञ्चनं प्राप्तस्य" । मनोहतः प्रतिहतः प्रतिबद्धः हतः चत्वारि मनसि हतस्य । "कृतमनोभङ्गस्येत्यर्थः" ॥ ४१ ॥ अधिक्षिप्तः प्रतिक्षिप्तः द्वे "कृताक्षेपस्य" कस्यचिच्छौर्यादिकं प्रति स्पर्धमानस्य । "दुर्वचनमधिक्षेपः" इति राजमुकुटः । बद्धः कीलितः संयतः त्रीणि रज्ज्वादिना निबद्धस्य । आपन्नः आपत्प्राप्तः द्वे आपदं गतस्य । "आपद्यते स आपन्नः" । कान्दिशीकः भयद्रुतः द्वे भयात्पलायितस्य । कां दिशं गच्छामीति चिन्तयन् पलायितः कान्दिशीकः ॥ ४२ ॥ आक्षारितः क्षारितः अभिशस्तः त्रयं लोकापवादेन दूषितस्य । मैथुननिमित्तं मिथ्यादूषितस्येति केचित् । "आक्षारो मैथुनं प्रत्याक्रोशो जातोऽस्य आक्षारितः" । संकसुकः अस्थिरः द्वे चलप्रकृतेः । संकसतीति संकसुकः । "कस गतौ" । व्यसनार्तः उपरक्तः द्वे व्यसनपीडितस्य । विहस्तः व्याकुलः द्वे शोकादिभिरितिकर्तव्यतामूढस्य । "विक्षिप्तो हस्तो यस्य विहस्तः" ॥ ४३ ॥ विक्लवः विह्वलः द्वे शोकादिना गात्रभङ्गं प्राप्तस्य । विह्वलतीति विह्वलः । "ह्वल चलने" । विवशः अरिष्टदुष्टधीः द्वे आसन्नमरणदूषितबुद्धेः अरिष्टेन दुष्टा धीर्यस्य" । कश्यः कशार्हः द्वे कशाघातमर्हतः । कशा वेत्रम् । सन्नद्धे वर्मिते जिघांसौ आततायीत्येकम् । आततं यथा तथाऽयितुं शीलमस्य । "अय गतौ" ॥ ४४ ॥ द्वेष्यः अक्षिगतः द्वे द्वेषार्हस्य । "द्वेष्टुमर्हः द्वेष्यः" । वध्यः शीर्षच्छेद्यः द्वे वधार्हस्य । "वधमर्हति वध्यः" । यो विषेण

विष्यो विषेण यो वध्यो मुसल्यो मुसलेन यः ॥ ४५ ॥
शिश्विदानोऽकृष्णकर्मा चपलश्चिकुरः समौ ॥
दोषैकदृक् पुरोभागी निकृतस्त्वनृजुः शठः ॥ ४६ ॥
कर्णेजपः सूचकः स्यात्पिशुनो दुर्जनः खलः ॥
नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वञ्चकः ॥ ४७ ॥
अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः ॥
कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः ॥ ४८ ॥
निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः ॥

वध्यः हन्तव्यः स विष्य इत्येकम् । यो मुसलेन वध्यः स मुसल्यः एकम् ॥४५॥ शिश्विदानः अकृष्णकर्मा द्वे पुण्यकर्मणः । "शिश्विदानं कृष्णकर्मेति पाठे द्वे पापकर्मणः । अत्र श्विता वर्णे इति धातोः श्वितेर्दश्चेत्यानच् दत्वं सनो-लुक् च । श्वेतितुमिच्छति शिश्विदानः" । चपलः चिकुरः द्वे यो विचारमन्त-रेण झटिति वधादिकार्यमाचरति तस्मिन् । दोषैकदृक् पुरोभागी द्वे दोषमात्रं पश्यतः । "दोष एकस्मिन् दृक् ज्ञानं यस्य दोषैकदृक्" निकृतः अनृजुः शठः त्रयं यस्यान्तःकरणं वक्रं तस्य । निकृन्तति निकृतः । "कृती छेदने" ॥४६॥ कर्णेजपः । "तत्पुरुषे कृति" इति सप्तम्या अलुक् । सूचकः द्वे कर्णे परापवादं वदतः । विस्मृतबोधकस्येति कश्चित् । पिशुनः दुर्जनः खलः त्रयं परस्परभेदन-शीलस्य । पिशुनः सूचकस्यापि पर्यायो वा । नृशंसः घातुकः क्रूरः पापः चत्वारि परद्रोहशीले । "नॄन् शंसति नृशंसः" । धूर्तः वञ्चकः द्वे प्रतारणशीलस्य । "धूर्वति हिंसति धूर्तः" ॥४७॥ अज्ञः मूढः "मुग्ध इत्यपि" यथाजातः मूर्खः वैधेयः बालिशः षण्मूर्खस्य । बालिशस्तु शिशौ मूर्खे इति । "जातं जन्मकालविशेषम-नतिक्रम्य वर्तते तदस्यास्ति यथाजातः । कदर्यः कृपणः क्षुद्रः किंपचानः मितं-पचः । "मितनखे च" इति खच् मुमागमः । पञ्च यो धर्मात्मपुत्रदारादिकं पी-डयन् लोभादर्थसंचयं करोति तस्य । "कुत्सितोऽर्यः स्वामी कदर्यः । किंपचः अ-नमितंपच इति छेदो वा । तत्र न मितंपचोऽमितंपचः । तद्भिन्नोऽनमितंपचः" ॥४८॥ निःस्वः दुर्विधः दीनः दरिद्रः दुर्गतः पञ्च दरिद्रस्य । "स्वान्निष्क्रान्तो निःस्वः" । वनीयकः "वनीपक इत्यपि" याचनकः मार्गणः याचकः अर्थी

वनीयको याचनको मार्गणो याचकार्थिनौ ॥ ४९ ॥
अहंकारवानहंयुः शुभंयुस्तु शुभान्वितः ॥
दिव्योपपादुका देवा नृगवाद्या जरायुजाः ॥ ५० ॥
स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः ॥
( इति प्राणिवर्गः ( १ )

---

उद्भिदस्तरुगुल्माद्या उद्भिदुद्भिज्जमुद्भिदम् ॥ ५१ ॥
सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् ॥
कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ॥ ५२ ॥
तदासेचनकं तृप्तेर्नास्त्यन्तोयस्य दर्शनात् ॥

पञ्च याचकस्य ॥ ४९ ॥ अहंकारवान् अहंयुः द्वे अहंकारिणः । अहंकारो यस्यास्ति अहंकारवान् । मतुप् । अहमिति मान्तमव्ययम् । अहंयुरित्यत्र मत्वर्थीयो युस् प्रत्ययः एवं शुभंयुरित्यत्रापि । "अहंशुभमोर्युस्" इति पाणिनिः । शुभंयुः शुभान्वितः द्वे "शुभयुक्तस्य । "अकस्मादुपपद्यन्त इत्युपपादुकाः दिवि भवाः दिव्याः दिव्याश्च ते उपपादुकाश्च । नारकव्यावृत्त्यर्थं दिव्यपदम् । मातापित्रादिदृष्टकारणनिरपेक्षा अदृष्टसहकृतेभ्यो गुणेभ्यो जाता ये देवास्ते दिव्योपपादुका उच्यन्ते । एकम् नृगवाद्या जरायुजाः स्युः । एकम् । आद्यशब्दादश्वादयः । गर्भाशयो जरायुस्ततो जाता जरायुजाः । कृमिदंशाद्याः स्वेदजाः स्युः । एकम् । आद्यशब्दान्मत्कुणमशकादयः ॥ ५० ॥ स्वेदहेतुत्वादूष्मा स्वेदः ततो जाताः स्वेदजाः । पक्ष्यादयोऽण्डजाः । एकम् । अण्डेभ्यो जाता अण्डजाः । आदिना मत्स्यादिग्रहः ॥ इति प्राणिवर्गः ॥ तरुगुल्माद्या उद्भिदः । ते हि जायमाना भुवमुद्भिन्दन्तीत्युद्भिदः । आद्यशब्दात्तृणादिग्रहः । एकम् । उद्भित् उद्भिज्जं उद्भिदं त्रयमुद्भिदि ॥ ५१ ॥ सुन्दरं रुचिरं चारु सुषमं साधु शोभनं कान्तं मनोरमं "मनोहरमित्यपि" । रुच्यं मनोज्ञं मञ्जु मञ्जुलं द्वादश सुन्दरस्य । सु शोभनं समं सर्वमस्य सुषमम् । "सुविनिर्दुर्भ्यः" इति समः सस्य षत्वम् । रम्यं मनोरमं सौम्यं भद्रकं रामणीयकमित्यपि ॥ ५२ ॥ यस्य दर्शनात् दृङ्मनसोस्तृप्तेरन्तो नास्ति । यद्बहुशो दृष्टमप्यधिकामेव प्रीतिं जनयतीति

---

१ इदं तालपत्रपुस्तकेऽपि नास्ति ॥

अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ॥ ५३ ॥
निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः ॥
कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः ॥ ५४ ॥
मलीमसं तु मलिनं कच्चरं मलदूषितम् ॥
पूतं पवित्रं मेध्यं च वीध्रं तु विमलार्थकम् ॥ ५५ ॥
निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम् ॥
असारं फल्गु शून्यं तु वशिकं तुच्छरिक्तके ॥ ५६ ॥
क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः ॥
मुख्यवर्यवरेण्याश्च प्रवर्होऽनवरार्ध्यवत् ॥ ५७ ॥
परार्ध्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम् ॥

यावत् तदासेचनकं स्यात् । "असेचनकमित्यपि" । अभीष्टं अभीप्सितं हृद्यं दयितं वल्लभं प्रियं षडभीष्टस्य । "अभ्याप्तुमिष्यते स्म अभीप्सितम्" ॥ ५३ ॥ निकृष्टः प्रतिकृष्टः अर्वा । "अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गके" इति कोशान्तरे । रेफः रेपः । "रेपः स्यान्निन्दिते क्रूरे" इति विश्वः । याप्यः अवमः अधमः कुपूयः "कपूय इत्यपि । पृषोदरादित्वादत्वम्" । कुत्सितः अवद्यः खेटः गर्ह्यः अणकः "आणक इत्यपि" त्रयोदशाधमस्य । "खेटति त्रासयति खेटः" । अर्वा नान्तः । अर्वन्तौ ॥ ५४ ॥ मलीमसं मलिनं कच्चरं मलदूषितं चत्वार्यनुज्ज्वलस्य । "कुत्सितं चरति कच्चरम्" । पूतं पवित्रं मेध्यं त्रीणि । वीध्रमित्येकं विमलार्थकं स्वभावनिर्मलस्येत्यर्थः । "विमलात्मकमित्यपि पाठः" ॥ ५५ ॥ निर्णिक्तादिपञ्चकमपनीतमलस्य । असारं फल्गु द्वे निर्बलस्य । शून्यं "शुन्यमित्यपि । शुनः संप्रसारणं वा च दीर्घत्वमिति यत्" । वशिकं तुच्छं रिक्तकं चत्वारि "रिक्तस्य" ॥ ५६ ॥ प्रधानं प्रमुखः प्रवेकः अनुत्तमः उत्तमः मुख्यः वर्यः वरेण्यः प्रवर्हः अनवरार्ध्यः ॥ ५७ ॥ परार्ध्यः अग्रः प्राग्रहरः प्राग्र्यः अग्र्यः अग्रीयः अग्रियः सप्तदश प्रधानस्य । मुखमिव मुख्यः । अवरस्मिन्नर्द्धे भवः अवरार्ध्यः न अवरार्ध्यः अनवरार्ध्यः । तत्र प्रधानं नित्यं क्लीबे । पूर्वोत्तरशब्दास्तुल्यार्था इति वता ज्ञापितम् । श्रेयान् श्रेष्ठः पुष्कलः सत्तमः अतिशोभनः पञ्चात्यन्त-

श्रेयान् श्रेष्ठः पुष्कलः स्यात्सत्तमश्चातिशोभने ॥ ५८ ॥
स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ॥
सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥ ५९ ॥
अप्राग्र्यं द्वयहीने द्वे अप्रधानोपसर्जने ॥
विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् ॥ ६० ॥
वड्रोरुविपुलं पीनपीव्नी तु स्थूलपीवरे ॥
स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु ॥ ६१ ॥
स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः ॥
अत्यल्पेऽल्पिष्ठमल्पीयः कनीयोऽणीय इत्यपि ॥ ६२ ॥

शोभनस्य । "अतिशयेन सन् उत्तमः" । श्रेयांसौ ॥ ५८ ॥ व्याघ्रादय एते शब्दा उत्तरपदे श्रेष्ठार्थो गोचरो विषयो येषां ते । "गोचरा इत्यत्र वाचका इति पाठः क्वचित्" । यथा पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः । पुरुषश्रेष्ठ इत्यर्थः । आद्यशब्दात्सोमादयः । नृसोमः । व्याघ्रादिराकृतिगणः । "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति विशेषस्य पूर्वनिपाते व्याघ्रादेरुत्तरपदत्वम् ॥ ५९ ॥ अप्राग्र्यं अप्रधानं उपसर्जनं त्रयमप्रधानस्य । "प्राग्र्याद्भिन्नमप्राग्र्यम्" । तत्राप्रधानोपसर्जने द्वे द्वयहीने द्वयं स्त्रीपुंसौ ताभ्यां हीने क्लीबे इत्यर्थः । विशङ्कटं पृथु बृहत् विशालं पृथुलं महत् ॥ ६० ॥ वड्रं उरु विपुलं नव विस्तीर्णस्य । पीनं पीव स्थूलं पीवरं चत्वारि स्थूलस्य । स्त्रीपुंसयोस्तु पीवा । स्तोकः अल्पः क्षुल्लकः त्रयमल्पस्य । सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु । "तनुः काये त्वचि स्त्री स्यात्रिष्वल्पे विरले कृशे" इति कोशान्तरे ॥ ६१ ॥ मात्रा त्रुटिः लवः लेशः कणः अणुः एकादश सूक्ष्मस्य । स्तोकाद्यण्वन्ता एकार्था इत्येके । तत्र मात्रात्रुटी स्त्रियौ । "त्रुटीति ङीबन्तोऽपि क्वचित्" । लवादिः पुंसि । शेषं विशेष्यनिघ्नम् । "अत्यल्पेऽल्पिष्ठमल्पीयः कनीयोऽणीय इत्यपि" इति कोशान्तरम् । एतन्मूलगतमेवार्थं सर्वत्रास्य मूलग्रन्थ एव दर्शनात् । रामाश्रम्यादिष्वपि तथा ग्रहणाच्च । अल्पिष्ठं अल्पीयः कनीयः अणीयः चत्वार्यत्यल्पे । ॥ ६२ ॥ प्रभूतं प्रचुरं प्राज्यं अदभ्रं बहुलं बहु पुरुहूः "पुरुहमित्यपि पुरहमिति च" । पुरु भूयिष्ठं स्फारं

प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ॥
पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च ॥ ६३ ॥

परःशताद्यास्ते येषां परा संख्या शतादिकात् ॥
गणनीये तु गणेयं संख्याते गणितमथ समं सर्वम् ॥ ६४ ॥

विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम् ॥
समग्रं सकलं पूर्णमखण्डं स्यादनूनके ॥ ६५ ॥

घनं निरन्तरं सान्द्रं पेलवं विरलं तनु ॥
समीपे निकटासन्नसन्निकृष्टसनीडवत् ॥ ६६ ॥

सदेशाभ्याशसविधसमर्यादसवेशवत् ॥
उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् ॥ ६७ ॥

संसक्ते त्वव्यवहितमपदान्तरमित्यपि ॥

"स्फिरमित्यपि" । भूयः भूरि द्वादश बहुलस्य । पुरुहौ । क्लीबे तु पुरुहु ॥ ६३ ॥ येषां संख्येयानां संख्या शतात्सहस्राच्च परा ते क्रमेण परःशताः परःसहस्राः स्युरित्यर्थः । एकैकम् । राजदंतादित्वाच्छतसहस्रयोः परनिपातः । पारस्करादित्वात्सुट् । विशेष्यनिघ्नत्वाद्वाच्यलिङ्गता । यल्लक्ष्यम् । "परःशतानां विदुषां समाजे" इति । गणनीयं गणेयं द्वे गणयितुं शक्यस्य । संख्यातं गणितं द्वे यस्य संख्या कृता तस्य । समं सर्वम् ॥ ६४ ॥ विश्वं अशेषं कृत्स्नं समस्तं निखिलं अखिलं निःशेषं समग्रं सकलं पूर्णं "पूर्वमित्यपि पाठः । पूर्व पूरणे" । अखण्डं अनूनकं चतुर्दश समग्रस्य ॥ ६५ ॥ घनं निरन्तरं सान्द्रं त्रीणि निबिडस्य । निर्गतमन्तरमस्मात्तन्निरन्तरम् । पेलवं विरलं तनु त्रीणि विरलस्य । समीपः निकटः आसन्नः सन्निकृष्टः सनीडः ॥ ६६ ॥ सदेशः अभ्याशः अभ्यास इति दन्त्यान्त इति मुकुटः । सविधः समर्यादः सवेशः उपकण्ठः अन्तिकः अभ्यर्णः अभ्यग्रः अभितः पञ्चदश समीपस्य । तत्राभित इत्यव्ययम् । समानं नीडं वासस्थानमस्य सनीडः । उपगतः कण्ठः सामीप्यमस्य उपकण्ठः ॥ ६७ ॥ संसक्तं अव्यवहितं अपदान्तरं "अपटान्तरमित्यपि" त्रीणि संलग्नस्य । "न व्यवधीयते स्म अव्यवहितम्" । नेदिष्ठं अन्तिकतमं द्वे अति-

नेदिष्ठमन्तिकतमं स्याद्दूरं विप्रकृष्टकम् ॥ ६८ ॥
दवीयश्च दविष्ठं च सुदूरं दीर्घमायतम् ॥
वर्तुलं निस्तलं वृत्तं बन्धुरं तून्नतानतम् ॥ ६९ ॥
उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ वामने ॥
न्यङ्नीचखर्वह्रस्वाः स्युरवाग्रेऽवनतानतम् ॥ ७० ॥
अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् ॥
आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ॥ ७१ ॥
ऋजावजिह्मप्रगुणौ व्यस्ते त्वप्रगुणाकुलौ ॥
शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः ॥ ७२ ॥
स्थास्नुः स्थिरतरः स्थेयानेकरूपतया तु यः ॥
कालव्यापी स कूटस्थः स्थावरो जङ्गमेतरः ॥ ७३ ॥

निकटस्य । दूरं विप्रकृष्टकं द्वे ॥ ६८ ॥ दवीयः दविष्ठं सुदूरं त्रयमत्यन्तदूरस्य । दवीयांसौ । दीर्घं आयतं द्वे "दीर्घस्य" । वर्तुलं निस्तलं वृत्तं "त्रीणि वर्तुलस्य" । यत्स्वभावादुन्नतमुपाधिवशादीषन्नतं च तद्बन्धुरमित्यर्थः "बन्धूर-मित्यपि" एकम् ॥ ६९ ॥ उच्चः प्रांशुः उन्नतः उदग्रः उच्छ्रितः तुङ्गः षट् उन्नतस्य । "उच्चैस्त्वमस्य उच्चः । उन्नमति स उन्नतः" । वामनः न्यक् नीचः खर्वः ह्रस्वः पञ्च ह्रस्वस्य । न्यक् । चान्तः । स्त्रियां तु नीची । अवाग्रं अवनतं आनतं त्रयमधोमुखस्य । "अवनतमग्रमस्य अवाग्रम्" ॥ ७० ॥ अरालं वृजिनं जिह्मं ऊर्मिमत् कुञ्चितं नतं आविद्धं कुटिलं भुग्नं वेल्लितं वक्रं एकादश वक्रस्य । "कुटिं कौटिल्यं लाति कुटिलम्" ॥ ७१ ॥ ऋजुः अजिह्मः प्रगुणः त्रीण्यवक्रस्य । "भिन्नो जिह्मादजिह्मः" । व्यस्तः अप्रगुणः आकुलः त्रयमा-कुलस्य । "भिन्नः प्रगुणादप्रगुणः" । शाश्वतः ध्रुवः नित्यः सदातनः सनातनः पञ्च नित्यस्य । "शश्वद्भवः शाश्वतः" ॥ ७२ ॥ स्थास्नुः स्थिरतरः स्थेयान् त्रीण्यतिस्थिरस्य । "स्थानशीलः स्थास्नुः" । स्थेयांसौ । य एकरूपतया एके-नैव स्वभावेन कालव्यापी कालस्य व्यापक आकाशादिः स कूटस्थः कूटो निश्चलः सन् तिष्ठतीति । "कूटोऽस्त्री निश्चले राशौ" इति मेदिनी । स्थावरः जङ्गमे-

चरिष्णु जङ्गमचरं त्रसमिङ्गं चराचरम् ॥
चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम् ॥ ७४ ॥
चञ्चलं तरलं चैव पारिप्लवपरिप्लवे ॥
अतिरिक्तः समधिको दृढसंधिस्तु संहतः ॥ ७५ ॥
कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ॥
जठरं मूर्तिमन्मूर्तं प्रवृद्धं प्रौढमेधितम् ॥ ७६ ॥
पुराणे प्रतनप्रत्नपुरातनचिरन्तनाः ॥
प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ॥ ७७ ॥
नूत्नश्च सुकुमारं तु कोमलं मृदुलं मृदु ॥
अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम् ॥ ७८ ॥

तरः द्वे अचरस्य ॥७३॥ चरिष्णु जङ्गमं चरं त्रसं इङ्गं चराचरम् । "चरिचलिपति" इति वार्तिकेन चरतेर्द्वित्वे अभ्यासस्याकारः । एवं चलाचलं इत्यत्रापि । षट् चरस्य । "चरणशीलं चरिष्णु" । चलनं कम्पनं कम्प्रं त्रयं कम्पशीलस्य । चलं लोलं चलाचलम् ॥७४॥ चञ्चलं तरलं पारिप्लवं सप्तकं चलस्य । परिप्लवते पारिप्लवम् । चपलं चटुलं चैवेत्यपि पाठः । अतिरिक्तः समधिकः द्वे अधिकभूतस्य । "सम्यगधिकः समधिकः" । दृढसन्धिः संहतः द्वे दृढसन्धानयुक्तस्य ॥७५॥ कर्कशं कक्खटम् । खक्खटमिति कवर्गद्वितीयादिरपि । कठिनं क्रूरं कठोरं निष्ठुरं दृढं जठरं मूर्तिमत् मूर्तं नव कठिनस्य । "मूर्तिः काठिन्यमस्यास्ति मूर्तिमत्" । जठरं टवर्गद्वितीयमध्यम् । प्रवृद्धं प्रौढं एधितं त्रयं प्रवृद्धस्य ॥ ७६ ॥ पुराणं प्रतनं प्रत्नं पुरातनं चिरन्तनं पञ्च पुरातनस्य । पुरा भवं पुराणम् । सायंचिरेतिसाधुः पुराणप्रोक्तेति निपातनात् । पुराणं प्रत्नश्वास्त्रयोरित्युक्तत्वात् । प्रत्यग्रः अभिनवः नव्यः नवीनः नूतनः नवः ॥७७॥ नूत्नः सप्त नूतनस्य । "प्रतिनवमग्रमस्य प्रत्यग्रः" । सुकुमारं कोमलं मृदुलं मृदु चत्वारि कोमलस्य । अन्वक् अन्वक्षं अनुगं अनुपदं चत्वारि पश्चादित्यर्थे । अव्ययीभावत्वात्क्लीबमव्ययं च । "पदस्य पश्चादनुपदम्" ॥ ७८ ॥ प्रत्यक्षं "समक्षमित्यपि" ऐन्द्रियकं द्वे इन्द्रियग्राह्यस्य । इन्द्रियेणानुभूतं ऐन्द्रिय-

प्रत्यक्षं स्यादैन्द्रियकमप्रत्यक्षमतीन्द्रियम् ॥
एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि ॥ ७९ ॥
अप्येकसर्ग एकाग्र्योऽप्येकायनगतोऽपि सः ॥
पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्या अथास्त्रियाम् ॥ ८० ॥
अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः ॥
मोघं निरर्थकं स्पष्टं स्फुटं प्रव्यक्तमुल्बणम् ॥ ८१ ॥
साधारणं तु सामान्यमेकाकी त्वेक एककः ॥
भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि ॥ ८२ ॥
उच्चावचं नैकभेदमुच्चण्डमविलम्बितम् ॥
अरुन्तुदस्तु मर्मस्पृगबाधं तु निरर्गलम् ॥ ८३ ॥

कम् । अप्रत्यक्षं अतीन्द्रियं द्वे इन्द्रियैरग्राह्यस्य धर्मादेः। अनध्यक्षमित्यपि पाठः। "अपरोक्षमैन्द्रियकं परोक्षं स्यादतीन्द्रियम्" इति । एकतानः अनन्यवृत्तिः एकाग्रः एकायनः ॥ ७९ ॥ एकसर्गः एकाग्र्यः एकायनगतः सप्तैकाग्रस्य । एकं तानयति एकतानः । "तनु श्रद्धोपकरणयोः" । आदिः पूर्वः पौरस्त्यः प्रथमः आद्यः पञ्चकमाद्यस्य । पुरो भवः पौरस्त्यः। "दक्षिणापश्चा" इति त्यक्-प्रत्ययः । "आ प्रथमं दीयते गृह्यते आदिः" । तत्रादिः पुंस्येव ॥ ८० ॥ अन्तः जघन्यं चरमं अन्त्यं पाश्चात्यं पश्चिमं षण्डन्त्यस्य । तत्रान्तः पुन्नपुंसकयो रेव । यथा स्वच्छन्दा स्त्री कुलस्यान्तः । मोघं निरर्थकं द्वे व्यर्थस्य । "निर्गतोऽर्थो यस्मात्तन्निरर्थकम्" । स्पष्टं स्फुटं प्रव्यक्तं उल्बणं चत्वारि "स्पष्टस्य" ॥ ८१ ॥ साधारणं सामान्यं द्वे । एकमप्यनेकसंबन्धि साधारणम् । जातिवाचि सामान्यं तु क्लीबम् । एकाकी एकः एककः त्रयमसहाये । भिन्नः अन्यतरः "एकतर इति पाठः" एकः त्वः अन्यः इतरः षट् भिन्नार्थकाः भिन्नस्य वाचका इत्यर्थः । त्वशब्दः सर्ववत् । त्वौ त्वे ॥ ८२ ॥ उच्चावचं नैकभेदं द्वे बहुविधस्य । उदक् । च अवाक् च उच्चावचम् । मयूरव्यंसकादिः । उच्चण्डं अविलम्बितं "अविलम्बनमिति क्षीरस्वामी" द्वे तूर्णस्य । अरुन्तुदः मर्मस्पृक् द्वे मर्मभेदिनः । मर्मस्पृशौ । अबाधं निरर्गलं द्वे निर्बाधस्य। "न बाधाऽस्य अबाधम्" ॥ ८३ ॥ प्रसव्यं प्रतिकूलं अपसव्यं अपष्टु

प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च ॥
वामं शरीरं सव्यं स्यादपसव्यं तु दक्षिणम् ॥ ८४ ॥
संकटं ना तु संबाधः कलिलं गहनं समे ॥
संकीर्णे संकुलाकीर्णे मुण्डितं परिवापितम् ॥ ८५ ॥
ग्रन्थितं सन्दितं दृब्धं विसृतं विस्तृतं ततम् ॥
अन्तर्गतं विस्मृतं स्यात्प्राप्तप्रणिहिते समे ॥ ८६ ॥
वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते ॥
नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः ॥ ८७ ॥
परिक्षिप्तं तु निवृतं मूषितं मुषितार्थकम् ॥

चत्वारि विपरीतस्य । "प्रगतं सव्यात्प्रसव्यम्" यद्वामं शरीरं तत्सव्यं एकम् । यद्दक्षिणं शरीरं तदपसव्यं एकम् ॥ ८४ ॥ संकटं संबाधः द्वे अल्पावकाशे वर्त्मादौ । ना पुनान् । कलिलं गहनं द्वे दुरधिगम्यस्य । यथा गहनं शास्त्रम् । दुर्ज्ञानमित्यर्थः । संकीर्णं संकुलं आकीर्णं त्रीणि जनादिभिरत्यन्तमिश्रस्य । यथा संकीर्णवर्गः । केचित्तु एतान्पूर्वपर्यायानाहुः । संकीर्णमृषिपत्नीनामिति योगात् । मुण्डितं परिवापितं द्वे कृतमुण्डनस्य ॥ ८५ ॥ ग्रन्थितम् । ग्रथितमित्यपि पाठः । सन्दितं "गुम्फितं गुफितं चेत्यपि पाठः" दृब्धं त्रीणि गुम्फितस्य । विसृतं विस्तृतं ततं त्रीणि लब्धप्रसरस्य । "विस्तीर्यते स्म विस्तृतम्" । अन्तर्गतं विस्मृतं द्वे "विस्मृतस्य । विस्मर्यते स्म विस्मृतम्" । प्राप्तं प्रणिहितं द्वे लब्धस्य । "प्राप्यते स्म प्राप्तम्" ॥ ८६ ॥ वेल्लितः प्रेङ्खितः आधूतः चलितः आकम्पितः धुतः षडीषत्कम्पितस्य । "वेल्ल्यते स्म वेल्लितः । "वेल्ल चलने" । "प्रेङ्खोलितस्तरलितोल्लासितान्दोलितावपि" इति कोशान्तरम् । नुत्तः नुन्नः अस्तः निष्ठ्यूतः "निष्ठ्यूत इत्यपि" । आविद्धः क्षिप्तः ईरितः सप्त प्रेरितस्य । "नुद्यते स्म नुत्तः" ॥ ८७ ॥ परिक्षिप्तं निवृतं द्वे प्राकारादिना सर्वतो वेष्टितस्य । निव्रियते स्म निवृतम् । "वृञ् आवरणे" । मूषितं मुषितं द्वे चोरितस्य "मुष्यते स्म मूषितम्" । प्रवृद्धं प्रसृतं द्वे प्रसरणयुक्तस्य । "प्रसरति स्म प्रसृतम्" । न्यस्तं निसृष्टं द्वे निक्षिप्तस्य । निसृज्यते स्म निसृष्टम् । "सृज विसर्गे" । गुणितं आहतं द्वे [illegible]आवर्तितस्य । यथा पञ्चभिराहताश्चत्वारो

प्रवृद्धप्रसृते न्यस्तनिसृष्टे गुणिताहते ॥ ८८ ॥
निदिग्धोपचिते गूढगुप्ते गुण्ठितरूषिते ॥
द्रुतावदीर्णे उद्गूर्णोद्यते काचितशिक्यिते ॥ ८९ ॥
घ्राणघ्राते दिग्धलिप्ते समुदक्तोद्धृते समे ॥
वेष्टितं स्याद्वलयितं संवीतं रुद्धमावृतम् ॥ ९० ॥
रुग्णं भुग्नेऽथ निशितक्ष्णुतशातानि तेजिते ॥
स्याद्विनाशोन्मुखं पक्वं ह्रीणह्रीतौ तु लज्जिते ॥ ९१ ॥
वृत्ते तु वृतव्यावृत्तौ संयोजित उपाहितः ॥
प्राप्यं गम्यं समासाद्यं स्यन्नं रीणं स्नुतं स्रुतम् ॥ ९२ ॥

विंशतिः ॥ ८८ ॥ निदिग्धं उपचितं द्वे समृद्धस्य । निदिह्यते स्म निदिग्धम् । "दिह उपचये" । गूढं गुप्तं द्वे गोपनयुक्तस्य । यथा मन्त्रो गुप्तो विधातव्यः । गुण्ठितं "गुण्डितमित्यपि । गुड वेष्टने" रूषितं द्वे धूलिलिप्तस्य । "गुंडाळलेलें इति ख्यातस्य वा" । द्रुतं अवदीर्णं द्वे द्रवीभूतस्य । उद्गूर्णं उद्यतं द्वे "उत्तोलितस्य शस्त्रादेः" । काचितं शिक्यितं द्वे "शिक्ये स्थापितस्य" ॥ ८९ ॥ घ्राणं घ्रातं द्वे नासिकया गृहीतगन्धस्य पुष्पादेः । दिग्धं लिप्तं द्वे "विलिप्तस्य" । समुदक्तम् । यथा समुदक्तमुदकं कूपात् । उद्धृतं द्वे उन्नीतस्य "कूपादेर्जलादेः" । वेष्टितं वलयितं संवीतं रुद्धं आवृतं पञ्च वेष्टितस्य "नद्यादिना नगरादेः" ॥ ९० ॥ रुग्णं भुग्नं द्वे व्यथितस्य । "भग्नस्य वा काष्ठहस्तपादादेः" । निशितं निशातमित्यपि । "शाच्छोरन्यतरस्याम्" इतित्वविकल्पात् । क्ष्णुतं शातं तेजितं चत्वारि शाणादिना तीक्ष्णीकृतस्य शस्त्रादेः । निशायते स्म निशातम् । "शो तनूकरणे" । विनाशोन्मुखं प्रत्यासन्नविनाशं पक्वं स्यात् एकम् । "पच्यते स्म पक्वम्" । ह्रीणः ह्रीतः लज्जितः त्रयं संजातलज्जस्य ॥ ९१ ॥ वृत्तः वृतः व्यावृत्तः "वावृत्त इति केचित्" त्रयं कृतवरणस्य । यल्लक्ष्यम् । "पौरोहित्याय भगवान्वृतः काव्यः किलासुरैः" इति । संयोजितः "संयोगित इति भरतमालायाम्" । उपाहितः द्वे संयोगं प्रापितस्य । प्राप्यं गम्यं समासाद्यं त्रीणि प्राप्तुं शक्यस्य । "समासाद्यते प्राप्यते तत्समासाद्यम्" । स्यन्नं रीणं स्नुतं स्रुतं चत्वारि प्रस्नुतस्य । स्यन्द्यते स्म स्यन्नम् । "स्यन्दू प्रस्रवणे" ॥ ९२ ॥ संमूढः संकलितः द्वे योजितस्याङ्कादेः । यथा द्वौ त्रयः

संगूढः स्यात्संकलितोऽवगीतः ख्यातगर्हणः ॥
विविधः स्याद्बहुविधो नानारूपः पृथग्विधः ॥ ९३ ॥
अवरीणो धिक्कृतश्चाप्यवध्वस्तोऽवचूर्णितः ॥
अनायासकृतं फाण्टं स्वनितं ध्वनितं समे ॥ ९४ ॥
बद्धे संदानितं मूतमुद्दितं संदितं सितम् ॥
निष्पक्के क्वथितं पाके क्षीराज्यहविषां शृतम् ॥ ९५ ॥
निर्वाणो मुनिवह्न्यादौ निर्वातस्तु गतेऽनिले ॥
पक्कं परिणते गूनं हन्ने मीढं तु मूत्रिते ॥ ९६ ॥
पुष्टे तु पुषितं सोढे क्षान्तमुद्वान्तमुद्गते ॥

पञ्च च संकलिता द्वा भवन्ति । अवगीतः ख्यातगर्हणः द्वे निन्दितस्य । "अवगीयते निन्द्यते स्म अवगीतः" । विविधः बहुविधः नानारूपः पृथग्विधः चत्वारि "नाना रूपं यस्य नानारूपः" ॥ ९३ ॥ अवरीणः धिक्कृतः द्वे निन्दितमात्रस्य । अवध्वस्तः अपध्वस्तः । "अपध्वस्तं परित्यक्ते निन्दितेऽप्यवचूर्णिते" इति विश्वः । अवचूर्णितः द्वे चूर्णीकृतस्य । अनायासकृतं अनायासेन कृतः कषायविशेषः फाण्टं स्यात् एकम् । "क्षुब्धस्वान्त" इत्यादिनाऽनायासे निपातितम् । माधवस्तु नवनीतभावात्प्रागवस्थापन्नं द्रव्यं फाण्टं इति वेदभाष्ये आह । स्वनितं ध्वनितं द्वे शब्दितस्य ॥ ९४ ॥ बद्धं संदानितं मूतं "मूर्णमिति मुकुटः"। उद्दितं "उदितमित्यपि" संदितं सितं षट् बद्धस्य। "मूङ् बन्धने" क्तः मूतम् । "दो अवखण्डने" उत्पूर्वः संपूर्वश्च बन्धनार्थः उद्दितं संदितम् । निष्पक्कं क्वथितं द्वे साकल्येन पक्वस्य "कषायादेः" । क्षीरादीनां पाके शृतमित्येकम् । यथा शृतं क्षीरं पक्कमित्यर्थः । क्षीराज्यपयसां श्रुतमित्यपि पाठः ॥ ९५ ॥ निर्वाण इत्येकं मुनिवह्न्यादौ प्रयुज्यते न तु वाते । यथा निर्वाणो मुनिः निर्मुक्त इत्यर्थः । निर्वाणो वह्निः निर्गत इत्यर्थः । आदिशब्दान्निर्वाणो हस्ती "निर्मग्न इत्यर्थः" । निर्वाणो वात इति निष्पूर्वाद्वातेर्निष्ठातस्य नत्वम् । एकम् । गते अनिले निर्वात इत्येकम् । पक्कं परिणतं द्वे पाकं प्राप्तस्य । गूनं हन्नं द्वे कृतपुरीषोत्सर्गस्य । हद्यते स्म "हद पुरीषोत्सर्गे" । मीढं मूत्रितं द्वे कृतमूत्रोत्सर्गस्य ॥ ९६ ॥ पुष्टं पुषितं द्वे कृतपोषणस्य । सोढं क्षान्तं द्वे क्षमां प्रापितस्य । उद्वान्तः "उद्वाणमिति मुकुटः । उद्वान्तमिति रामनाथः" उद्गतः द्वे "वमनेन त्यक्तस्यान्नादेः।"

दान्तस्तु दमिते शान्तः शमिते प्रार्थितेऽर्दितः ॥ ९७ ॥
ज्ञप्तस्तु ज्ञपिते छन्नश्छादितेपूजितेऽञ्चितः ॥
पूर्णस्तु पूरिते क्लिष्टः क्लिशितेऽवसिते सितः ॥ ९८॥
प्रुष्टप्लुष्टोषिता दग्धे तष्टत्वष्टौ तनूकृते ॥
वेधितच्छिद्रितौ विद्धे विन्नवित्तौ विचारिते ॥ ९९ ॥
निष्प्रभे विगतारोकौ विलीले विद्रुतद्रुतौ ॥
सिद्धे निर्वृत्तनिष्पन्नौ दारिते भिन्नभेदितौ ॥ १००॥
ऊतं स्यूतमुतं चेति त्रितयं तन्तुसंतते ॥
स्यादर्हिते नमस्यितं नमसितमपचायितार्चितापचि-
तम् ॥ १०१ ॥

दान्तः दमितः द्वे दमं प्रापितस्य । यथा दमितमिन्द्रियम् । शान्तः शमितः द्वे शमनं प्रापितस्य । यथा शान्तो रोगः निवर्तित इत्यर्थः । प्रार्थितः अर्दितः द्वे याचितस्य । "अर्दितं याचितेऽपि स्याद्वातव्याधौ च हिंसिते" इति कोशान्तरे ॥ ९७ ॥ ज्ञप्तः ज्ञपितः द्वे "बोधं प्रापितस्य" । छन्नः छादितः द्वे "आच्छादितस्य" । पूजितः अञ्चितः "अर्चित" इत्यपि पाठः । "अर्च पूजायां" द्वे । पूर्णः पूरितः द्वे । "वा दान्तशान्तपूर्ण" इत्यादिना णिचि निष्ठान्ता निपातिताः क्लिष्टः क्लिशितः द्वे क्लेशं प्राप्तस्य । अवसितः सितः द्वे समाप्तस्य । षोऽन्तकर्मणीत्यतो निष्ठा ॥ ९८ ॥ प्रुष्टः प्लुष्टः उषितः दग्धः चत्वारि दग्धस्य । तष्टः त्वष्टः तनूकृतः त्रीणि "अतनुस्तनुरकारि तनूकृतः" । यथा तष्टं काष्ठं शस्त्रेणाल्पीकृतमित्यर्थः । वेधितः छिद्रितः विद्धः त्रीणि । यथा कर्णौ विद्धौ । विन्नः वित्तः विचारितः त्रीणि "प्राप्तविचारस्य" ॥ ९९ ॥ निष्प्रभः विगतः अरोकः त्रयं दीप्तिहीनस्य । "विगतौ वीतनिष्प्रभौ" इति रुद्रः । विलीनः विद्रुतः द्रुतः त्रीणि द्रवीभूतस्य घृतादेः । सिद्धः निर्वृत्तः निष्पन्नः त्रयं सिद्धस्य । दारितः भिन्नः भेदितः त्रीणि "भेदं प्रापितस्य" ॥ १०० ॥ ऊतं स्यूतं त्रितयं तन्तुसंतते । यथा प्रोतः पटः तन्तुभिरनुस्यूत इत्यर्थः । अर्हितं नमस्यितं नमसितं अपचायितं अर्चितं अपचितं षडर्चितस्य । नमस्यितं नमसितमित्युभयत्र "नमोवरिव" इति क्यच् क्यस्य विभाषेति यलोपविकल्पः । एवं वरिवसितेत्यत्रापि ज्ञेयम् ॥ १०१ ॥ वरिवसितं

वरिवसिते वरिवस्यितमुपासितं चोपचरितं च ॥
संतापितसंतप्तौ धूपितधूपायितौ च दूनश्च ॥ १०२ ॥
हृष्टे मत्तस्तृप्तः प्रहृन्नः प्रमुदितः प्रीतः ॥
छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम् ॥ १०३ ॥
स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम् ॥
लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च ॥ १०४ ॥
अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम् ॥
आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च ॥ १०५ ॥
त्रातं त्राणं रक्षितमवितं गोपायितं च गुप्तं च ॥
अवगणितमवमतावज्ञातेऽवमानितं च परिभूते ॥ १०६ ॥
त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टे ॥
उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितम् ॥ १०७ ॥

वरिवसितं उपासितं उपचरितं चत्वारि शुश्रूषितस्य । संतापितं संतप्तं धूपितं धूपायितं दूनं पञ्च संतापितस्य । "एभ्यः अकर्मकेभ्यः कर्तरि क्तेऽप्येतान्येव रूपाणि" ॥ १०२ ॥ हृष्टः मत्तः तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः षट् प्रमुदितस्य । छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णं अष्टौ खण्डितस्य ॥१०३॥ स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितं सप्त च्युतस्य । "एभ्यो गत्यर्थाकर्मकेति कर्तरि क्ते एतान्येव रूपाणि" । लब्धं प्राप्तं विन्नं भावितं आसादितं भूतं षट् प्राप्तस्य ॥ १०४ ॥ अन्वेषितं गवेषितं अन्विष्टं मार्गितं मृगितं पञ्च गवेषितस्य । यथा इतस्ततो गवेषितोऽपि चोरो न दृष्टः । आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नं उत्तं सप्त क्लिन्नस्य । यथा स्तिमितलोचनोऽश्रुभिः ॥ १०५ ॥ त्रातं त्राणं रक्षितं अवितं गोपायितं गुप्तं षट् रक्षितस्य । अवगणितं अवमतं अवज्ञातं अवमानितं परिभूतं पञ्च अवमानितस्य ॥ १०६ ॥ त्यक्तं हीनं विधुतं समुज्झितं धूतं उत्सृष्टं षडुत्सृष्टस्य । उक्तं भाषितं उदितं जल्पितं आख्यातं अभिहितं लपितं षडुदितस्य ॥ १०७ ॥ बुद्धं बुधितं मनितं विदितं प्रतिपन्नं अवसितं अवगतं सप्तावगतस्य । ऊरी-

107-112



बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगते ॥
ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् ॥ १०८ ॥
संगीर्णविदितसंश्रुतसमाहितोपश्रुतोपगतम् ॥
ईलितशस्तपणायितपनायितप्रणुतपणितपनितानि ॥१०९॥
अपि गीर्णवर्णिताभिष्टुतेडितानि स्तुतार्थानि ॥
भक्षितचर्वितलीढप्रत्यवसितगिलितखादितप्सातम् ॥११०॥
अभ्यवहृतान्नजग्धग्रस्तग्लस्ताशितं भुक्ते ॥
क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः ॥ १११ ॥
क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुलप्रकर्षार्थाः ॥
साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः ॥ ११२ ॥
बाढव्यायतबहुगुरुवामनवृन्दारकातिशये ॥
॥ इति विशेष्यनिघ्नवर्गः ॥ १ ॥

कृतं "उरीकृतमित्यपि" उररीकृतं अङ्गीकृतं आश्रुतं प्रतिज्ञातम् ॥ १०८ ॥ संगीर्णं विदितं संश्रुतं समाहितं उपश्रुतं "प्रतिश्रुतमित्यपि" उपगतं एकादशाङ्गीकृतस्य । ईलितं शस्तं पणायितं पनायितं प्रणुतं पणितं पनितम् । संगीर्णं संविदितं संश्रुतमित्यपि क्वचित्पाठः ॥ १०९ ॥ गीर्णं वर्णितं अभिष्टुतं ईडितं स्तुतं द्वादश स्तुतार्थानि । भक्षितं चर्वितं लीढं "लिप्तमित्यपि" प्रत्यवसितं गिलितं खादितं प्सातम् ॥ ११० ॥ अभ्यवहृतं अन्नं जग्धं ग्रस्तं ग्लस्तं अशितं भुक्तं चतुर्दश खादितस्य । "प्सा भक्षणे" प्सातम् । "अद्यते स्म अन्नम्" । क्षेपिष्ठादयः क्षिप्रादीनां प्रकर्षार्थाः । प्रकर्षोऽर्थो येषां ते तथा अतिशयविशिष्टेषु क्षिप्रादिषु क्रमेण वर्तन्त इत्यर्थः । यथाऽतिशयेन क्षिप्रः क्षेपिष्ठः । अतिशयेन क्षुद्रः क्षोदिष्ठः । अत्र प्रेष्ठादिचतुष्टये प्रियोरुस्थूलबहुला एवेष्ठनः प्रकृतयः । अभीप्सितादीनां निर्देशस्तु तत्पर्यायत्वात् । अतिशयेन प्रियः प्रेष्ठः इत्यादि । एकैकम् ॥ १११ ॥ ११२ ॥ बाढादीनामतिशये साधिष्ठादयः स्युः । अत्र व्यायतबहुवामना दीर्घस्फिरह्रस्वानां पर्यायाः । अतिशयेन बाढः साधिष्ठः । एवं वृन्दारकान्तेषु अतिशयविशिष्टेषु द्राघिष्ठादिक्रमेणैकैकं ज्ञेयम् । "वृन्दारको मुख्यः" ॥ इति विशेष्यनिघ्नवर्गः ॥ १ ॥ पूर्वकाण्डद्वये स्वर्गादि-

प्रकृतिप्रत्ययार्थाद्यैः संकीर्णे लिङ्गमुन्नयेत् ॥
कर्म क्रिया तत्सातत्ये गम्ये स्युरपरस्पराः ॥ १ ॥
साकल्यासङ्गवचने पारायणपरायणे ॥

नामानि प्रकरणैः सजातीयानि निबद्धानि । अत्रापि काण्डे सुकृत्यादीनि विशेष्यनिघ्नानि न्यबध्नात् । इदानीं पूर्वेषां संकीर्णत्वापत्तिभयेन ये पूर्वं नोक्तास्तत्संग्रहार्थं संकीर्णप्रकरणमारभते ॥ अत्र हि कर्मक्रियादयो भाववचनाः । अपरस्परादिर्विशेष्यनिघ्नः । स्तम्बघ्नादिः करणवचनः । तथा समूहवचन आपूपिकादिः । एवं संकीर्णैः संकीर्णार्थैः संकीर्णलिङ्गैश्च कथनात्संकीर्णवर्गोऽयम् । भिन्नजात्यर्थसंसर्ग एव हि संकरः । स चात्र प्रायेण विद्यत इति इहैव तद्व्यपदेशः । नन्वत्र संकीर्णत्वे विशेषविधानाभावे च कथमत्र लिङ्गज्ञानं स्यादित्याकाङ्क्षायां तदुपायमाह । प्रकृतीति । संकीर्णनाम्नि अत्र वर्गे वक्ष्यमाणलिङ्गसंग्रहोक्तरीत्या प्रकृत्यर्थेन प्रत्ययार्थेन च आद्यशब्दात्क्वचिद्रूपभेदादिना लिङ्गमुन्नयेत् ऊहेत् । तत्र प्रकृत्यर्थेन यथा । अपरस्परेति विभक्तिप्रकृतित्वात्प्रकृतिः । तस्याः सततक्रियासंबन्धात् क्रियायोगः । अपरत्वादिगुणयोगश्च । एवं गुणद्रव्यक्रियायोगोपाधिभिः परगामिन इत्यभिधेयलिङ्गत्वम् । प्रत्ययार्थेन यथा । स्फातिप्रभृतीनां क्तिन्नादिप्रत्ययान्तानां स्त्रीभावादावनिक्तिनिति वक्ष्यमाणत्वात्स्त्रीलिङ्गत्वम् । तथा संधिप्रभृतीनां किप्रत्ययान्तानां को घोः किरिति वक्ष्यमाणत्वात्पुंस्त्वम् । रूपभेदेन कर्मादेः क्लीबत्वादि । साहचर्येण च डिम्बे डमरविप्लवाविति डिम्बस्य पुंस्त्वम् । संकीर्ण इत्युपलक्षणम्, वर्गान्तरेष्वप्यनिश्चितलिङ्गानां मुत्प्रीतिरित्यादीनां प्रकृतिप्रत्ययादिभिरेव लिङ्गनिश्चयात् । कर्म क्रिया द्वे क्रियायाः । तच्छब्देन क्रिया परामृश्यते । क्रियासातत्ये गम्ये सति अपरस्परा इत्येकं नाम । अपरस्पराः सार्था गच्छन्ति । अपरे च परे च सङ्घाः सततं गच्छन्तीत्यर्थः । सातत्यमविच्छेदः । "अपरस्पराः क्रियासातत्ये" इति सुट् निपात्यते । सातत्ये किम् । अपरस्पराः सकृद्गच्छन्ति । वाच्यलिङ्गत्वादपरस्परा योषितः । अपरस्पराणि कुलानि । "निर्दिष्टं कर्मसातत्यं सुधीभिरपरस्परम्" इति भागुरिणोक्तत्वात् । तत्सातत्ये क्रियायाः क्रियावतां च नैरन्तर्ये । तद्यथा । "क्रियासातत्ये अपरस्परं गच्छन्ति । क्रियावतां च सातत्ये तु लिङ्गत्रयम्" ॥ १ ॥ साकल्यवचनं पारायणम् । पारस्यायनम् । पूर्वपदादिति णत्वम् । आसङ्गवचनं "परायणं तुरायणमित्यपि पाठः" । "तुर त्वरणे" । तुरस्य अयनम् । "परायणं समासं-

2-5.



यदृच्छा स्वैरिता हेतुशून्या त्वास्या विलक्षणम् ॥ २ ॥
शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः ॥
अवदानं कर्म वृत्तं काम्यदानं प्रवारणम् ॥ ३ ॥
वशक्रिया संवननं मूलकर्म तु कार्मणम् ॥
विधूननं विधुवनं तर्पणं प्रीणनावनम् ॥ ४ ॥
पर्याप्तिः स्यात्परित्राणं हस्तधारणमित्यपि ॥
सेवनं सीवनं स्यूतिर्विदरः स्फुटनं भिदा ॥ ५ ॥
आक्रोशनमभीषङ्गः संवेदो वेदना न ना ॥

गकात्स्न्येपारगतावपि" इति मेदिनी । आसङ्गः आसक्तिस्तद्वचनं क्रमेणैकैकम् । यदृच्छा स्वैरिता द्वे स्वच्छन्दतायाः । हेतुशून्या कारणरहिता आस्था स्थिति- र्विलक्षणं स्यात् विगतं लक्षणमालोचनं यत्र । तदुक्तं भागुरिणा । "विलक्षणं मतं स्थानं यत्रवेक्षिप्रयोजनम्" इति । एकम् ॥ २ ॥ शमथः शमः शान्तिः त्रयं चित्तोपशमस्य । दान्तिः दमथः दमः त्रयमिन्द्रियनिग्रहस्य । वृत्तं कर्म भूतपूर्वं चरित्रं तदवदानं एकम् । प्रशस्तकर्मणो वा । "अपदानमित्यपि पाठः" । काम्यदानं काम्यस्य तुलापुरुषादेर्दानं तत्प्रवारणं एकम् । प्रहारणमिति भरतमालायाम् । "प्रवारणं महादानम्" इति त्रिकाण्डशेषः ॥ ३ ॥ वशक्रिया संवननं "संवदनम्" । "स्यात्संवदनमालोचे वशीकारे नपुंसकम्" इति मेदिनी । द्वे मणिमन्त्रादिना वशीकरणस्य । मूलकर्म ओषधीनां मूलैरुच्चा- टनादि यत्कर्म तत्कार्मणमेकम् । विधूननं विधुवनं "विधुननमित्यपि जटा- धरः" द्वे कम्पनस्य । तर्पणं प्रीणनं अवनं त्रीणि तृप्तेः ॥ ४ ॥ पर्याप्तिः परित्राणं हस्तधारणं "हस्तवारणमित्यपि" त्रीणि वधोद्यतनिवारणस्य । सेवनं सीवनं स्यूतिः त्रयं सूचीक्रियायाः । शिवणें इति लौकिकभाषायाम् । "सेवस्तु सेवनं स्यूतिरिति पाठो वा" । विदरः स्फुटनं "स्फोटनमिति भर- तमालायाम्" । भिदा त्रयं द्विधाभावस्य । उकलणें इति लौकिकभाषायाम् ॥५॥ आक्रोशनं अभीषङ्गः अभिषङ्गः इत्यपि । "उपसर्गस्येति दीर्घत्वविकल्पात्" द्वे गालिप्रदानस्य शिव्या देणें इति प्रसिद्धस्य । संवेदः वेदना द्वे अनुभवस्य । तत्र वेदना न पुमान् । "अतो वेदनमित्यपि" । संमूर्छनं अभिव्याप्तिः द्वे सर्वतो व्याप्तेः ।

१ 'स्वास्थ'–इत्यत्र 'त्वास्था'–इत्यपपाठ एवेत्यग्रे २१ श्लोकतोऽवगम्यते ॥

संमूर्छनमभिव्याप्तिर्याच्ञा भिक्षाऽर्थनाऽर्दना ॥ ६ ॥
वर्धनं छेदनेऽथ द्वे आनन्दनसभाजने ॥
आप्रच्छन्नमथाम्नायः संप्रदायः क्षये क्षिया ॥ ७ ॥
ग्रहे ग्राहो वशः कान्तौ रक्ष्णस्त्राणे रणः क्वणे ॥
व्यधो वेधे पचा पाके हवो हूतौ वरो वृतौ ॥ ८ ॥
ओषः प्लोषे नयो नाये ज्यानिर्जीर्णौ भ्रमो भ्रमौ ॥
स्फातिर्वृद्धौ प्रथा ख्यातौ स्पृष्टिः पृक्तौ स्नवः स्रवे ॥ ९ ॥
एधा समृद्धौ स्फुरणे स्फुरणा प्रमितौ प्रमा ॥
प्रसूतिः प्रसवे श्च्योते प्राघारः क्लमथः क्लमे ॥ १० ॥

याच्ञा भिक्षा अर्थना अर्दना चत्वारि याचकस्य। याच्ञेति "यजयाच" इति नङ् ॥ ६ ॥ वर्धनं छेदनं द्वे कर्तनस्य। आनन्दनं "आमन्त्रणमिति क्वचित्पाठः" सभाजनं स्वभाजनमिति राजमुकुटः। आप्रच्छन्नं त्रीणि स्वागतसंप्रश्नादिना विहितस्यानन्दस्य। आम्नायः संप्रदायः द्वे गुरुपरम्परागतस्य सदुपदेशस्य। क्षयः क्षिया द्वे अपचयस्य ॥ ७ ॥ ग्रहः ग्राहः द्वे ग्रहणस्य। वशः कान्तिः द्वे इच्छायाः। रक्ष्णः "रक्षा" त्राणः द्वे रक्षणस्य। रणः क्वणः द्वे शब्दकरणस्य। व्यधः वेधः द्वे वेधनस्य। पचा पाकः द्वे "पचनस्य"। हवः हूतिः द्वे आह्वानस्य। वरः वृतिः द्वे वेष्टने संभक्तौ च। "तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः" इति ॥ ८ ॥ ओषः प्लोषः "प्रोष इत्यपि शब्दार्थकोशे" द्वे दाहस्य। नयः नायः द्वयं नीतेः। ज्यानिः जीर्णिः द्वे जीर्णतायाः। भ्रमः भ्रमिः द्वे भ्रान्तेः। स्फातिः वृद्धिः द्वे "वृद्धेः"। प्रथा ख्यातिः द्वे "प्रख्यातेः"। स्पृष्टिः पृक्तिः द्वे स्पर्शस्य। स्रवः स्नवः द्वे प्रस्रवणस्य ॥ ९ ॥ एधा "विधेत्यपि"। "विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधौ" इति मेदिनी। समृद्धिः द्वे उपचयस्य। स्फुरणं स्फुरणा "स्फुलनं स्फोरणं स्फारणं स्फरणं चेत्यपि" द्वे "स्फुरणस्य"। प्रमितिः प्रमा द्वे यथार्थज्ञानस्य। प्रसूतिः प्रसवः द्वे गर्भविमोचनस्य। श्च्योतः प्राघारः द्वे घृतादेः क्षरणे। क्लमथः क्लमः द्वे ग्लानेः ॥ १० ॥ उत्कर्षः अतिशयः द्वे

उत्कर्षोऽतिशये संधिः श्लेषे विषय आश्रये ॥
क्षिपायां क्षेपणं गीर्णिर्गिरौ गुरणमुद्यमे ॥ ११ ॥
उन्नाय उन्नये श्रायः श्रयणे जयने जयः ॥
निगादो निगदे मादो मद उद्वेग उद्भ्रमे ॥ १२ ॥
विमर्दनं परिमलोऽभ्युपपत्तिरनुग्रहः ॥
निग्रहस्तद्विरुद्धः स्यादभियोगस्त्वभिग्रहः ॥ १३ ॥
मुष्टिबन्धस्तु संग्राहो डिम्बे डमरविप्लवौ ॥
बन्धनं प्रसितिश्चारः स्पर्शः स्प्रष्टोपतप्तरि ॥ १४ ॥
निकारो विप्रकारः स्यादाकारस्त्विङ्ग इङ्गितम् ॥

प्रकर्षस्य । संधिः श्लेषः द्वे संधानस्य । विषयः आश्रयः "आसय इत्यपि" द्वे "आश्रयस्य" । क्षिपा क्षेपणं द्वे "प्रेरणस्य" । गीर्णिः गिरिः द्वे निगरणस्य "गिळणें इति ख्यातस्य" । गुरणं "गूरणमिति मुकुटः" उद्यमः द्वे "भाराद्युद्यमनस्य" ॥ ११ ॥ उन्नायः उन्नयः द्वे ऊर्ध्वं नयनस्य ऊहस्य च । श्रायः श्रयणं द्वे सेवायाः । जयनं जयः द्वे "जयस्य" । निगादः निगदः द्वे कथनस्य । मादः मदः द्वे हर्षस्य । उद्वेगः उद्भ्रमः द्वे उद्वेजनस्य ॥ १२ ॥ विमर्दनं परिमलः द्वे कुङ्कुमादिमर्दनस्य । "परिमलो विमर्देऽपि" इति विश्वः । अभ्युपपत्तिः अनुग्रहः द्वे अङ्गीकारस्य । ततोऽनुग्रहाद्विरुद्धो निग्रहः स्यात् । विग्रहस्तु विरोधः स्यादिति । "अथवा निग्रहस्तु निरोधः स्यादिति वा क्वचित्पाठः" । एकम् । अभियोगः अभिग्रहः द्वे कलहाह्वानस्य ॥ १३ ॥ मुष्टिबन्धः संग्राहः द्वे मुष्टिना दृढग्रहणस्य । डिम्बः डमरः विप्लवः त्रयं नरलुण्ठनादेरुपसर्गविशेषस्य प्रलयस्य वा । अशस्त्रकलहस्येति रामस्वामी । बन्धनं प्रसितिः चारः त्रीणि बन्धनस्य । "चारस्थाने स्वारं पठित्वा स्वारादीनां चतुर्णां पर्यायतामाह स्वामी । "स्वृ शब्दोपतापयोः" अच् प्रज्ञाद्यण् । स्वारः" । स्पर्शः "स्पश इति रेफहीनोऽपि" स्प्रष्टा "स्पष्टेत्यपि" उपतप्ता त्रयं उपतापाख्यरोगविशेषस्य । "संतप्तस्य वा" । स्पृशतीति स्पर्शः । "स्पर्शो रुजायां दाने च" इति विश्वः ॥ १४ ॥ निकारः विप्रकारः द्वे अपकारस्य । आकारः इङ्गः इङ्गितं "इङ्गितः" त्रयं "अभिप्रायानुरूपचेष्टितस्य" ।

परिणामो विकारो द्वे समे विकृतिविक्रिये ॥ १५ ॥
अपहारस्त्वपचयः समाहारः समुच्चयः ॥
प्रत्याहार उपादानं विहारस्तु परिक्रमः ॥ १६ ॥
अभिहारोऽभिग्रहणं निर्हारोऽभ्यवकर्षणम् ॥
अनुहारोऽनुकारः स्यादर्थस्यापगमे व्ययः ॥ १७ ॥
प्रवाहस्तु प्रवृत्तिः स्यात्प्रवहो गमनं बहिः ॥
living वियामो वियमो यामो यमः संयामसंयमौ ॥ १८ ॥
हिंसाकर्माभिचारः स्याज्जागर्या जागरा द्वयोः ॥
विघ्नोऽन्तरायः प्रत्यूहः स्यादुपघ्नोऽन्तिकाश्रये ॥ १९ ॥
निर्वेश उपभोगः स्यात्परिसर्पः परिक्रिया ॥

परिणामः विकारः द्वे प्रकृतेरन्यथाभावे । यथा मृद्विकारो घटः । विकृतिः विक्रिया द्वे विरुद्धक्रियायाः । परिणामस्यैव पर्यायाविमावपि वा । यथा कुण्डलं कनकस्यैव विकृतिः परिणाम इत्यर्थः ॥ १५ ॥ अपहारः अपचयः द्वे अपहरणस्य । समाहारः समुच्चयः द्वे राशीकरणस्य । सम्यगाहरणमेकत्र करणं समाहारः । सम्‌आङ्पूर्वकस्य हृञ् हरणे इत्येतस्य रूपम् । प्रत्याहारः उपादानं द्वे इन्द्रियाकर्षणस्य । विहारः परिक्रमः द्वे पद्भ्यां गतेः । यल्लक्ष्यम् । "सुराङ्गनानामवनौ परिक्रमः" इति ॥ १६ ॥ अभिहारः "अभ्याहार इत्यपि" अभिग्रहणं द्वे चौर्यकरणस्य । निर्हारः अभ्यवकर्षणं द्वे शल्यादेर्निष्काशनस्य । अनुहारः अनुकारः द्वे विडम्बनस्य । यथा खणखणेति नूपुरध्वनेरनुकारः । अर्थस्य धनादेरपगमे व्यय इत्येकम् । खर्च इति लौकिकभाषायाम् ॥ १७ ॥ प्रवाहः प्रवृत्तिः द्वे जलादीनां निरन्तरगतेः । यद्बहिर्गमनं स प्रवह इत्येकम् । वियामः वियमः यामः यमः संयामः संयमः षट् संयमस्य योगाङ्गस्य ॥ १८ ॥ हिंसाकर्म हिंसाफलकं कर्म जारणमारणादि अभिचारः स्यात् एकम् । जागर्या "अप्रिया जागर्तिश्चेति राजमुकुटः" जागरा द्वे जागरणस्य । तत्र जागरा स्त्रीपुंसयोः । विघ्नः अन्तरायः प्रत्यूहः त्रीणि विघ्नस्य । समीपभूत आश्रये उपघ्न इत्येकम् । उपघ्नआश्रये इति सूत्रेण सिद्धमेतत् । "आश्रयणस्य वा" ॥ १९ ॥ निर्वेशः उपभोगः द्वे "उपभोगस्य" । परिसर्पः परिक्रिया द्वे परिजनादिवेष्टनस्य । विधुरं प्रविश्लेषः द्वे अत्यन्तवियोगस्य "वैकल्येऽपि

20-24



विधुरं तु प्रविश्लेषेऽभिप्रायश्छन्द आशयः ॥ २० ॥

संक्षेपणं समसनं पर्यवस्था विरोधनम् ॥
परिसर्या परीसारः स्यादास्या त्वासना स्थितिः ॥ २१ ॥

विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः ॥
संवाहनं मर्दनं स्याद्विनाशः स्याददर्शनम् ॥ २२ ॥

संस्तवः स्यात्परिचयः प्रसरस्तु विसर्पणम् ॥
नीवाकस्तु प्रयामः स्यात्सन्निधिः सन्निकर्षणम् ॥ २३ ॥

लवोऽभिलावो लवने निष्पावः पवने पवः ॥
प्रस्तावः स्यादवसरस्त्रसरः सूत्रवेष्टनम् ॥ २४ ॥

प्रजनः स्यादुपसरः प्रश्रयप्रणयौ समौ ॥

च विश्लेषे विधुरं विकले त्रिषु" इति मेदिनी" । अभिप्रायः छन्दः आशयः त्रीणि "अभिप्रायस्य" । छन्दोऽदन्तः ॥ २० ॥ संक्षेपणं समसनं द्वे अविस्तारस्य । पर्यवस्था विरोधनं द्वे विरोधस्य । परिसर्या परीसारः "परिसार इति शब्दार्थकोशः" द्वे परितः सरणस्य । आस्या आसना स्थितिः त्रीणि "आसनस्य" ॥ २१ ॥ विस्तारः विग्रहः व्यासः त्रयं विस्तृतेः । विस्तारः शब्दसंबन्धी चेद्विस्तर इत्येकम् । संवाहनं मर्दनं द्वे अङ्गमर्दनस्य । यथा पादसंवाहनम् । विनाशः अदर्शनं द्वे तिरोधानस्य ॥ २२ ॥ संस्तवः परिचयः द्वयं परिचितौ । प्रसरः विसर्पणं द्वे "प्रणादिप्रसरणस्य" । नीवाकः प्रयामः द्वे धनधान्यादिषु जनानामादरातिशयस्य । नितरामुच्यते नीवाकः । सन्निधिः "सन्निधं" सन्निकर्षणं द्वे नैकट्यस्य । सन्निधिः पुंसि ॥ २३ ॥ लवः अभिलावः लवनं त्रयं धान्यादिच्छेदनस्य । निष्पावः पवनं पवः त्रीणि धान्यादीनां पूतीकरणस्य । संकीर्णत्वाल्लिङ्गसंकरः । प्रस्तावः अवसरः द्वे प्रसङ्गस्य । यथा । अवसरपठिता वाणीत्यादि । त्रसरः "तसर इति वा पाठः" सूत्रवेष्टनं द्वे तन्तुवायकृतसूत्रवेष्टनभेदस्य तसरी इति प्रसिद्धस्य ॥ २४ ॥ प्रजनः उपसरः द्वे गर्भग्रहणस्य । प्रश्रयः प्रणयः द्वे प्रेम्णः । प्रसर इति वा पाठः । "प्रसरः प्रणये वेगे" इति मेदिनी । धीशक्तिः निष्क्रमः द्वे बुद्धिसामर्थ्ये । "निष्क्रमो बुद्धिसंपत्तौ" इति विश्वः । "शुश्रूषा श्रवणं

धीशक्तिर्निष्क्रमोऽस्त्री तु संक्रमो दुर्गसंचरः ॥ २५ ॥
प्रत्युत्क्रमः प्रयोगार्थः प्रक्रमः स्यादुपक्रमः ॥
स्यादभ्यादानमुद्घात आरम्भः संभ्रमस्त्वरा ॥ २६ ॥
प्रतिबन्धः प्रतिष्टम्भोऽवनायस्तु निपातनम् ॥
उपलम्भस्त्वनुभवः समालम्भो विलेपनम् ॥ २७ ॥
विप्रलम्भो विप्रयोगो विलम्भस्त्वतिसर्जनम् ॥
विश्रावस्तु प्रतिख्यातिरवेक्षा प्रतिजागरः ॥ २८ ॥
निपाठनिपठौ पाठे तेमस्तेमौ समुन्दने ॥
आदीनवास्रवौ क्लेशे मेलके सङ्गसङ्गमौ ॥ २९ ॥

चैव ग्रहणं धारणं तथा । ऊहापोहौ च विज्ञानं तत्त्वज्ञानं च धीगुणाः" इति । संक्रमः दुर्गसंचरः द्वे दुर्गमार्गस्य । "दुर्गादिप्रवेशक्रियाया वा" । संक्रमते संक्रम्यते वाऽनेन संक्रमः । स न स्त्रियाम् । "दुर्गसंचार इत्यन्यत्र" ॥ २५ ॥ प्रत्युत्क्रमः "प्रत्युत्क्रान्तिरित्यपि" प्रयोगः द्वे युद्धार्थमतिशयितोद्योगस्य । प्रयोगोऽर्थो यस्य सः । प्रयुद्धार्थ इत्यपि पाठः । "प्रत्युत्क्रमः प्रयुद्धार्थः" इति भागुरिः । उपक्रमः प्रक्रमः द्वे प्रथमारम्भस्य । अभ्यादानं उद्घातः आरम्भः प्रथमारम्भमात्रस्य । यल्लक्ष्यम् । उद्घातः प्रणवो यासामिति । प्रक्रमादिपञ्चाप्येकार्था वा । संभ्रमः त्वरा द्वे संवेगस्य । "आवेगस्तु त्वरा त्वरी" इति वाचस्पतिः ॥ २६ ॥ प्रतिबन्धः प्रतिष्टम्भः द्वे कार्यप्रतिघातस्य । यथा मणिमन्त्रादिप्रतिबन्धादग्नेरनुष्णतेति । अवनायः निपातनं "नियातनमित्यपि पाठः" द्वे अधोनयनस्य । उपलम्भः अनुभवः द्वे साक्षात्कारस्य । समालम्भः विलेपनं द्वे कुङ्कुमादिना विलेपने ॥ २७ ॥ विप्रलम्भः विप्रयोगः द्वे रागिणोर्विच्छेदस्य । विलम्भः अतिसर्जनं द्वे अतिदानस्य । विश्रावः प्रतिख्यातिः "प्रविख्यातिरित्यपि" द्वे अतिप्रसिद्धेः । अवेक्षा प्रतिजागरः द्वयं वस्तूनां अवेक्षणस्य ॥ २८ ॥ निपाठः निपठः पाठः त्रीणि "पठनस्य" । तेमः स्तेमः समुन्दनं त्रयमार्द्रीभावस्य । आदीनवः आस्रवः क्लेशः त्रीणि क्लेशस्य । आस्रवन्तीन्द्रियाण्यनेनेति । आश्रवस्तालव्यमध्य इति केचित् । मेलकः संगः संगमः त्रीणि संगमस्य । "ना मेलः संगमो ना वा" इत्यमरमाला ॥ २९ ॥ संवीक्षणं

29-34



संवीक्षणं विचयनं मार्गणं मृगणा मृगः ॥
परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम् ॥ ३० ॥

निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् ॥
प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः॥ ३१ ॥

उपशायो विशायश्च पर्यायशयनार्थकौ ॥
अर्तनं च ऋतीया च हृणीया च घृणार्थकाः ॥ ३२ ॥

स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये ॥
पर्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्ययः ॥ ३३ ॥

प्रेषणं यत्समाहूय तत्र स्यात्प्रतिशासनम् ॥
स संस्तावः क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम् ॥ ३४ ॥

"अन्वीक्षणं अन्वेषणं गवेषणं चेत्यपि"। विचयनं मार्गणं मृगणा मृगः पञ्च तात्पर्येण वस्तूनां गवेषणस्य। परिरम्भः "परीरम्भ इत्यपि" परिष्वङ्गः संश्लेषः उपगूहनं चत्वारि आलिङ्गनस्य ॥ ३० ॥ निर्वर्णनं निध्यानं दर्शनं आलोकनं ईक्षणं पञ्च निरीक्षणस्य। "दर्शनालोकलक्षणमित्यपि पाठः"। प्रत्याख्यानं निरसनं प्रत्यादेशः निराकृतिः चत्वारि निराकरणस्य ॥ ३१ ॥ उपशायः विशायः द्वौ पर्यायेणानुक्रमेण यत्प्रहरकादीनां शयनं तदेवार्थो ययोस्तौ यथा। अर्तनं ऋतीया हृणीया हृणिया। "मोहो वीज्या जुगुप्सा च हृणीया हृणिया घृणा" इति वाचस्पतिः। "ह्रिणीया ह्रणिया च" इति द्विरूपकोशामरमालयोः। घृणा चत्वारि जुगुप्सायाः। करुणाया इति कश्चित्। ऋतिः सौत्रो धातुः। जुगुप्सायामिति बहवः। कृपायामिति केचित्। "घृणा जुगुप्साकृपयोः" इति विश्वः ॥ ३२ ॥ व्यत्यासः विपर्यासः व्यत्ययः विपर्ययः "विपर्याय इति भरतमालायाम्" चत्वारि व्यतिक्रमस्य। पर्ययः अतिक्रमः अतिपातः उपात्ययः चत्वारि अतिक्रमस्य ॥ ३३ ॥ समाहूय यज्ञभृत्यादीनां प्रेषणं तत्र प्रतिशासनं स्यात् एकम्। क्रतुषु द्विजन्मनां छन्दोगानां स्तुतिभूमिः स्तवनदेशः संस्तावः एकम्। समेत्य स्तुवन्त्यत्र संस्तावः। "यज्ञे समि स्तुवः" इति घञ् ॥ ३४ ॥ यस्मिन्काष्ठे काष्ठं निधाय तक्ष्यते तनूक्रियते स काष्ठरूप आधार

निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्धनः ॥
स्तम्बघ्नस्तु स्तम्बघनः स्तम्बो येन निहन्यते ॥ ३५ ॥
आविधो विध्यते येन तत्र विष्वक्समे निघः ॥
उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ ॥ ३६ ॥
निगारोद्गारविक्षावोद्ग्राहास्तु गरणादिषु ॥ ३७ ॥
आरत्यवरतिविरतय उपरामेऽथास्त्रियां तु निष्ठेवः ॥
निष्ठ्यूतिर्निष्ठेवनं निष्ठीवनमित्यभिन्नानि ॥ ३८ ॥
जवने जूतिः सातिस्त्ववसाने स्यादथ ज्वरे जूर्तिः ॥
उदजस्तु पशुप्रेरणमकरणिरित्यादयः शापे ॥ ३९ ॥

उद्धनः एकम् । ऊर्ध्वं हन्यतेऽस्मिन् उद्धनः । "उद्धनोत्याधानम्" इति सूत्रेण साधुः । स्तम्बस्तृणगुच्छो येन निहन्यते स खनित्रविशेषः स्तम्बघ्नः स्तम्बघनः द्वे । खुरपें, विळा इति लौकिकभाषायाम् ॥ ३५ ॥ येन विध्यते तत्र शस्त्रादौ आविध इत्येकं "भ्रमरसूच्यादेः विंधणें इत्यादिख्यातस्य" विष्वक्समे सर्वतः समाने वृक्षे निघ इत्येकं "तुल्यारोहपरिणाहवृक्षादेः" । उत्कारः निकारः द्वौ धान्यस्य उत्क्षेपणमर्थौ ययोस्तौ तथा ॥ ३६ ॥ निगारादयो गरणादिषु । यथा गरणे अभ्यवहारे निगार इत्येकं "गिळणें इति ख्यातस्य" । उद्गरणे वमने उद्गारः । "विक्षवणे" शब्दे विक्षावः इत्येकं "शिंक इति ख्यातायाः" ॥ उद्ग्रहणे ऊर्ध्वीकृत्य ग्रहणे उद्ग्राहः "ढेंकर इति ख्यातः" । एकैकम् ॥ ३७ ॥ आरतिः अवरतिः विरतिः उपरामः "उपरम इत्यपि" चत्वार्युपरतेः । निष्ठेवः निष्ठ्यूतिः निष्ठेवनं निष्ठीवनं चत्वारि मुखेन श्लेष्मोत्सर्गस्य । "क्लीबे निष्ठेवम्" । अभिन्नानि एकार्थानीत्यर्थः ॥ ३८ ॥ जवनं जूतिः द्वे वेगस्य । जू इति सौत्रो धातुः गतौ वेगे च । ऊतियूतिजूतीति सूत्रेण साधुः । सातिः अवसानं द्वे अन्तस्य । ज्वरः जूर्तिः द्वे ज्वरस्य । पशूनां गवादीनां प्रेरणं उदजः स्यात् एकम् । शापे आक्रोशे द्योत्ये अकरणिरित्यादयः । आक्रोशे नञीति भावे करोतेरनिः । आदिशब्दादजीवनिः । "अजननिः अवग्राहः निग्राह इति" । यथा "आः पाप कथमकरण्या न लज्जसे । अजीवनिस्ते शठ भूयात्" ॥ ३९ ॥ गोत्रान्तेभ्यः अपत्यार्थप्रत्ययान्तेभ्यः औपगवादिशब्देभ्यस्तस्य वृन्दमित्यर्थे औपग-

गोत्रान्तेभ्यस्तस्य वृन्दमित्यौपगवकादिकम् ॥
आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम् ॥ ४० ॥
माणवानां तु माणव्यं सहायानां सहायता ॥
हल्या हलानां ब्राह्मण्यवाडव्ये तु द्विजन्मनाम् ॥ ४१ ॥
द्वे पर्शुकानां पृष्ठानां पार्श्वं पृष्ठ्यमनुक्रमात् ॥
खलानां खलिनी खल्याऽप्यथ मानुष्यकं नृणाम् ॥ ४२ ॥
ग्रामता जनता धूम्या पाश्या गल्या पृथक्पृथक् ॥
अपि साहस्रकारीषवार्मणाथर्वणादिकम् ॥ ४३ ॥

॥ इति संकीर्णवर्गः ॥ २ ॥

---

नानार्थाः केऽपि कान्तादिवर्गेष्वेवात्र कीर्तिताः ॥

वकादिकं स्यात् । यथा । उपगोरपत्यानि पुमांसः औपगवास्तेषां समूह औपगवकम् । "गोत्रोक्ष" इति वुञ् अकादेशेन साधुः । आदिशब्दाद्गार्गकं दाक्षकमित्यादि । एकैकम् । इतःपरमावर्गसमाप्तेर्वृन्दमित्यधिकारः । अचेतसां जडानां अपूपादीनां वृन्दं आपूपिकम् । शाष्कुलिकम् । साक्तुकम् । इत्यादि एकैकम् । "अचित्तहस्तिधेनोष्ठक्" इति सूत्रेणेमे साधवः ॥ ४० ॥ माणवानां समूहो माणव्यम् । माणवा बालाः । सहायाः सखायस्तेषां समूहः सहायता । हलानां समूहो हल्या । एकैकम् । ब्राह्मण्यं वाडव्यं द्वे ब्राह्मणानां समूहस्य ॥ ४१ ॥ पर्शुका अस्थिविशेषास्तासां समूहः पार्श्वम् । पृष्ठानां समूहः पृष्ठ्यम् । यज्ञविषयेऽदः स्मरन्ति । खलिनी खल्या द्वे खलानां समूहस्य । नृणां मनुष्याणां समूहो मानुष्यकम् ॥ ४२ ॥ ग्रामाणां समूहो ग्रामता । जनानां समूहो जनता । धूमानां समूहो धूम्या । पाशानां समूहः पाश्या । गला बृहत्काशास्तेषां समूहो गल्या । सहस्राणां समूहः साहस्रम् । करीषाणां समूहः कारीषम् । करीषं शुष्कगोमयम् । वर्मणां समूहः वार्मणम् । वर्म कवचम् । अथर्वणां समूहः आथर्वणम् । एकैकम् । आदिशब्दाद्वार्मणमाङ्गारं चार्मिणमित्यादि । चर्मिणां समूहश्चार्मिणम् ॥ ४३ ॥ इति संकीर्णवर्गः ॥ २ ॥ अथानेकार्थवर्गः ॥ ननु किमर्थमनेकार्था आरभ्यन्ते । तेषां प्रागुक्तवर्गेष्वभिहितत्वात् । यद्यत्र वक्ष्यन्ते तर्हि कुतः प्रागुक्ता इत्यत आह । नानार्था इति । अत्र

भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते ॥ १ ॥
आकाशे त्रिदिवे नाको लोकस्तु भुवने जने ॥
पद्ये यशसि च श्लोकः शरे खड्गे च सायकः ॥ २ ॥
जम्बुकौ क्रोष्टुवरुणौ पृथुकौ चिपिटार्भकौ ॥
आलोकौ दर्शनद्योतौ भेरीपटहमानकौ ॥ ३ ॥
उत्सङ्गचिह्नयोरङ्कः कलङ्कोऽङ्कापवादयोः ॥
(तक्षको नागवर्धक्योरर्कः स्फटिकसूर्ययोः) ॥ ४ ॥ (१)

वक्ष्यमाणेषु कान्तादिवर्गेष्वेव केऽपि नानार्था उक्ता नतु प्रागुक्तपर्यायेषु। यथा। मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोरिति। भूरिप्रयोगा यत्र कुत्रापि काव्यादिषु कविभिः प्राचुर्येण प्रयुक्ता ये नाकलोकादयः शब्दास्ते पूर्वोक्तेषु येषु पर्यायेषु दृश्यंते तेषु पर्यायेषु अपिशब्दादत्रापि कान्तादिषु कीर्तिताः। यथा नाकशब्दः प्रचुरप्रयोगत्वात्प्राक् स्वर्गाकाशयोरुक्तोपि पुनरिहोक्तः। जम्बुकशब्दस्तु सृगालपर्यायेष्वेवोक्तो नतु वरुणपर्यायेषु। भूरिप्रयोगत्वाभावात्। इह तु जम्बुकौ क्रोष्टुवरुणावित्युभयत्रोच्यते ॥ १ ॥ नाक इत्येकं नाम ककारान्तं आकाशे स्वर्गे च वर्तते। न अकं दुःखमत्र नाकः "नभ्राड्" इति सूत्रे निपातितः। भुवने स्वर्गादौ जने च लोक इत्येकम्। "लोक्यते लोकः"। पद्ये अनुष्टुबादौ वृत्ते यशसि कीर्तौ श्लोक इत्येकम्। श्लोक्यते श्लोकः। "श्लोकृ संघाते"। यशसि यथा। उत्तमश्लोको हरिः। शरे बाणे खड्गे च सायकः ॥ २ ॥ क्रोष्टा सृगालः वरुणः प्रसिद्धः उभौ जम्बुकशब्दवाच्यौ। "जम्बुकः फेरवे नीचे पश्चिमाशापतावपि" इति मेदिनी। चिपिटो भ्रष्टव्रीहितण्डुलः पोहे इति लौकिकभाषायाम्। अर्भकः शिशुः तावुभौ पृथुकौ। "पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत्" इति। दर्शनं प्रकाशश्चालोकौ। "आलोकस्तु पुमान् द्योते दर्शने बन्दिभाषणे" इति मेदिनी। भेरीपटहं वाद्यविशेषौ। तूर्याङ्गत्वादेकवद्भावः। उभावानकौ। "आनकः पटहे भेर्यां मृदङ्गे ध्वनदम्बुदे" इति मेदिनी ॥ ३ ॥ उत्संगः क्रोडः तत्र चिह्ने चाङ्कः। "अङ्को रूपकभेदाङ्कचिह्नरेखाजिभूषणे। रूपकांशान्तिकोत्सङ्गस्थानेऽङ्कं पापदुःखयोः" इति मेदिनी। चिह्ने दोषारोपे च कलङ्कः। "कलङ्कोऽङ्केऽपवादे च कालायसमलेऽपि च" इति मेदिनी। नागविशेषे त्वष्टरि च तक्षकः। स्फटिकसूर्ययोरर्क-

१ इदमर्धं ताडपत्रपुस्तकेऽपि नास्ति ॥

4-8



मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः ॥
स्यात्पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके ॥ ५ ॥

उलूके करिणः पुच्छमूलोपान्ते च पेचकः ॥
कमण्डलौ च करकः सुगते च विनायकः ॥ ६ ॥

किष्कुर्हस्ते वितस्तौ च शूककीटे च वृश्चिकः ॥
प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम् ॥ ७ ॥

स्याद्भूतिकं तु भूनिम्बे कत्तृणे भूस्तृणेऽपि च ॥
ज्योत्स्निकायां च घोषे च कोशातक्यथ कट्फले ॥ ८ ॥

सिते च खदिरे सोमवल्कः स्यादथ सिल्हके ॥

शब्दो वर्तते । "अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ" इति मेदिनी ॥४॥ मारुते वायौ वेधसि ब्रह्मणि ब्रध्ने सूर्ये क इत्येकाक्षरं नाम पुंसि । तद्रूपं तु । कः कौ काः इत्यादि देववत् । शिरसि जले च कमिति क्लीबम् । सुखेऽपि कम् । "को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे । मयूरेऽग्नौ च पुंसि स्यात्सुखशीर्षजलेषु कम्" इति मेदिनी । तुच्छधान्ये तण्डुलशून्ये धान्ये संक्षेपे अविस्तारे भक्तसिक्थके अन्नावयवे पुलाक इत्येकम् ॥ ५ ॥ करिणो गजस्य पुच्छमूलोपान्ते गुदाच्छादकमांसपिण्डे उलूकः पक्षिभेदस्तत्र च पेचकः । कमण्डलौ चकाराद्वर्षोपले दाडिमादौ च करकः । "करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघोपले न स्त्री करकं च कमण्डलौ" इति मेदिन्याम् । सुगते बुद्धे चकाराद्विजराजे गरुडे च विनायकः ॥ ६ ॥ हस्ते हस्तप्रमाणे वितस्तौ च किष्कुः । "प्रकोष्ठेऽप्यनपुंसकः" इति रुद्रः । शूककीटे शूकसदृशरोमव्याप्ते कीटविशेषे चकारादलौ कर्कटे वृक्षविशेषेऽष्टमराशौ च वृश्चिकः । प्रतिकूले च प्रतीकः । तत्र प्रतिकूले त्रिषु । अवयवे पुंसि ॥ ७ ॥ भूनिम्बे किराततिक्ते कत्तृणं भूस्तृणं च गन्धतृणविशेषौ तत्र भूतिकम् । ज्योत्स्निकायां पटोल्यां "घोषे अपमार्गे च" कोशातकी । "कोशातकः कचे पुंसि पटोल्यां घोषके स्त्रियाम्" इति मेदिनी ॥ ८ ॥ कट्फले कायफल इति ख्याते वृक्षभेदे शुक्लखदिरे च सोमवल्कः । सोम इव वल्को वल्कलमस्य । सिल्हके पण्यभेदे तिलकल्के निःस्नेहतिलचूर्णे च पिण्याकः । रामठे हिङ्गुनि । चकाराद्बाल्हिके

तिलकल्के च पिण्याको बाह्लीकं रामठेऽपि च ॥ ९ ॥
महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः ॥
रुक्तापशङ्कास्वातङ्कः स्वल्पेपि क्षुल्लकस्त्रिषु ॥ १० ॥
जैवातृकः शशाङ्केऽपि खुरेऽप्यश्वस्य वर्तकः ॥
व्याघ्रेऽपि पुण्डरीको ना यवान्यामपि दीपकः ॥ ११ ॥
शालावृकाः कपिक्रोष्टुश्वानः स्वर्णेऽपि गैरिकम् ॥
पीडार्थेऽपि व्यलीकं स्यादलीकं त्वप्रियेऽनृते ॥ १२ ॥
शीलान्वयावनूके द्वे शल्के शकलवल्कले ॥
साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले ॥ १३ ॥

देशेऽश्वे धीरे च । "ह्रस्वमध्यं च बाल्हिकमिति । बाल्हीकमित्यपि" ॥ ९ ॥ व्यालग्राहाहितुण्डिकः । "कौशिको नकुले व्यालग्राहे गुग्गुलुशक्रयोः । विश्वामित्रे च कोशज्ञोलूकयोरपि कौशिक" इति विश्वः । रुक् रोगः । तापः संतापः । शङ्का भयं अत्रातङ्क इति नाम । "स्वल्पे अपिशब्दान्नीचकनिष्ठदरिद्रेष्वपि क्षुल्लकः । क्षुल्लकस्त्रिषु नीचेऽल्पे" इति कोशान्तरात् ॥ १० ॥ जैवातृकः पुमान्सोमे दीर्घायुःकृषयोस्त्रिषु । अपिशब्दात्पक्षिभेदे च वर्तकः । अपिशब्दादग्नौ दिग्गजादौ च पुंसि पुण्डरीकः । सिताम्भोजादौ क्लीबे च । यवानी ओषधीभेदः अजमोदाख्यः । अपिशब्दाद्बर्हिचूडेऽपि दीपकः प्रकाशेऽपि । "दीप्यक इत्यपि" ॥ ११ ॥ कप्यादयः शालावृकाः स्युः । अपिशब्दाद्गेरू इति ख्याते धातौ च गैरिकम् । "गैरिकं धातुरुक्मयोः" इति मेदिनी । "व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने" इति विश्वः ॥ १२ ॥ शीलं स्वभावोऽन्वयो वंशः तत्रानूकमिति । "अनूकं तु कुले शीले पुंसि स्याद्गतजन्मनि" इति मेदिनी । शकलं खण्डम् । वल्कलं त्वक् द्वे शल्के इति । सुवर्णानां हेम्नः कर्षाणां साष्टे शतेऽष्टाधिकशतके निष्कः । सहाष्टभिर्वर्तेत इति साष्टम् । सराजस्त्वयमितिवत् । यथा हेम्नि सुवर्णमात्रे उरसो वक्षसो भूषणे हेमपले च दीनारे सांव्यवहारिके द्रव्यभेदे च निष्कः । पलं कर्षचतुष्टयम् । गुञ्जानामशीतिः कर्षः ॥ १३ ॥ शमलं पुरीषम् । एनः पापम् । "त्रिषु पापाशये कल्कोऽस्त्री विट्किट्टेमदन्तयोः" इति विश्वः । "कल्कोऽस्त्री

दीनारेऽपि च निष्कोऽस्त्री कल्कोऽस्त्री शमलैनसोः ॥
दम्भेऽप्यथ पिनाकोऽस्त्री शूलशङ्करधन्वनोः ॥ १४ ॥
धेनुका तु करेण्वां च मेघजाले च कालिका ॥
कारिका यातनावृत्त्योः कर्णिका कर्णभूषणे ॥ १५ ॥
करिहस्तेऽङ्गुलौ पद्मबीजकोश्यां त्रिषूत्तरे ॥
वृन्दारकौ रूपिमुख्यावेके मुख्यान्यकेवलाः ॥ १६ ॥
स्याद्दाम्भिकः कौक्कुटिको यश्चादूरेरितेक्षणः ॥
लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः ॥ १७ ॥
"भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम् ॥
सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः ॥ १ ॥

घृततैलादिशेषे दम्भे बिभीतके" इति मेदिनी । "पिनाकोऽस्त्री रुद्रचापे पांसुवर्षत्रिशूलयोः" इति मेदिनी ॥ १४ ॥ करेण्वां हस्तिन्यां चकाराभवसूतायां गवि धेनुका । मेघजाले मेघवृन्दे चकाराद्देवताविशेषेऽपि कालिका । वृत्तिर्विवरणश्लोकः । यथा गृह्यकारिका । "यातनाकृत्योरित्यपि पाठः । कारिका नटयोषिति । कृतौ विवरणश्लोके शिल्पयातनयोरपि । नपुंसकं तु कर्मादौ कारके कर्त्तरि त्रिषु" इति मेदिनी ॥ १५ ॥ करिहस्तेऽङ्गुलौ गजशुण्डाग्रे अङ्गुलौ कमलान्तर्गतकोशे च कर्णिका । "कर्णिका करिहस्ताग्रे करमध्याङ्गुलावपि । क्रमुकादिच्छटांशेऽब्जवराटे कर्णभूषणे" इति मेदिनी । उत्तरे अतः परं स्वान्तेभ्यः प्राक् शब्दास्त्रिषु त्रिलिङ्गा इत्यर्थः । "वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु" इति मेदिनी । मुख्यश्चान्यश्च केवलश्चेति एके स्युः ॥ १६ ॥ दाम्भिको मायावी । योऽदूरेरितेक्षणः स च कौक्कुटिक इत्युच्यते । "संज्ञायां ललाटकुक्कुट्यौ पश्यति" इति सूत्रेण ठक्प्रत्यये कौक्कुटिकलालाटिकशब्दौ साधू । कुक्कुटीशब्देन तत्पाताहः स्वल्पदेशो लक्ष्यते । यो भृत्यः कोपप्रसादचिह्नज्ञानाय प्रभोर्भालं ललाटमेव पश्यति । भावदर्शीत्यपि पाठः । यश्च कार्याक्षमः प्रभोः कार्यं कर्तुमशक्तः तावुभौ लालाटिकौ । "लालाटिकः सदालस्ये प्रभुभावनिदर्शिनि" इत्यजयः । इतो भूभृन्नितम्बेत्यादयः केचिदमूलका एव पञ्च श्लोकाः अतस्तेषां व्याख्यानाभावः॥ १७॥ इति कान्ताः ॥

(पाकौ पक्तिशिशू मध्यरत्ने नेतरि नायकः ॥
पर्यङ्कः स्यात्परिकरे स्याद्व्याघ्रेऽपि च लुब्धकः ॥ २ ॥
आर्द्रायामपि लुब्धक इत्यपि पाठः ॥
पेटकस्त्रिषु वृन्देऽपि गुरौ देश्ये च देशिकः ॥
खेटकौ ग्रामफलकौ धीवरेऽपि च जालिकः ॥ ३ ॥
पुष्परेणौ च किञ्जल्कः शुल्कोऽस्त्री स्त्रीधनेऽपि च ॥
स्यात्कल्लोलेऽप्युत्कलिका वार्द्धकं भाववृन्दयोः ॥ ४ ॥
करिण्यां चापि गणिका दारकौ बालभेदकौ ॥
अन्धेऽप्यनेडमूकः स्याट्टङ्कौ दर्पाश्मदारणौ ॥ ५ ॥) (१)
(इति पञ्च क्षेपकाः ॥ इति कान्तवर्गः ) ॥ (२)
मयूखस्त्विट्करज्वालास्वलिबाणौ शिलीमुखौ ॥
शङ्खो निधौ ललाटास्थि कम्बौ न स्त्रीन्द्रियेऽपि खम् ॥१८॥
घृणिज्वाले अपिशिखे॥ इति खान्ताः॥शैलवृक्षौ नगावगौ॥
आशुगौ वायुविशिखौ शरार्कविहगाः खगाः ॥ १९ ॥
पतङ्गौ पक्षिसूर्यौ च पूगः क्रमुकवृन्दयोः ॥

अथ खान्तानाह । त्विट्करज्वालासु मयूखः । अत्र त्विट् शोभा । करः किरणः । भ्रमरशरौ शिलीमुखौ । शिली शल्यं मुखे ययोस्तौ । निधौ निधिभेदे ललाटास्थ्नि कम्बौ च शङ्खः । अपिशब्दादाकाशेऽपि शून्ये खम् । खमिन्द्रिये पुरे क्षेत्रे शून्यबिन्दौ विहायसि । "संवेदने देवलोके शर्मण्यपि नपुंसकम्" इति मेदिनी ॥ १८ ॥ घृणिः किरणः । अपिशब्दाच्चूडायां प्रपदे बर्हिचूडायां च शिखा । इति खान्तवर्गः । अथ गान्तानाह । शैलवृक्षौ नगसंज्ञकावगसंज्ञकौ च । विशिखो बाणः । बाणार्कपक्षिणः खगशब्दवाच्याः । अर्केति ग्रहणमुपलक्षणम् ॥ १९ ॥ चकाराच्छालिप्रभेदे पतङ्गः । क्रमुको वृक्षभेदः । तत्फले तु क्लीबं पूगम् । वृन्दं समूहः । पशवो हरिणाद्याः । अपिशब्दात् मृगशीर्षे मार्ग-

१ इदं पद्यचतुष्टयं तालपत्रपुस्तकेऽपि नास्ति ॥ २ इदमपि तालपत्रपुस्तके नास्ति । एवमग्रेऽपि ॥

पशवोऽपि मृगा वेगः प्रवाहजवयोरपि ॥ २० ॥

परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि ॥
गजेपि नागमातङ्गावपाङ्गस्तिलकेऽपि च ॥ २१ ॥

सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ॥
योगः सन्नहनोपायध्यानसंगतियुक्तिषु ॥ २२ ॥

भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ॥
चातके हरिणे पुंसि सारङ्गः शबले त्रिषु ॥ २३ ॥

कपौ च प्लवगः शापे त्वभिषङ्गः पराभवे ॥

णायां च मृगः । जवो रहः । अपिशब्दाद्विष्ठादेर्बहिर्निर्गमेऽपि वेगशब्दः स्यात् ॥ २० ॥ कुसुमसंबन्धिनि रेणौ परागः । स्नात्यनेन स्नानीयं गन्धचूर्णविशेषः । आदिना सुरतादिश्रमशान्तये कामशास्त्राद्युक्तं यत्कर्पूरादिचूर्णं तद्ग्रहः । अपिशब्दादुपरागेपि । परागः रजसि धूलौ । नागमातङ्गौ गजे वर्तेते । अपिशब्दात्काद्रवेयनागकेशरनागवल्लीहास्तिनपुरमेघमुस्तकादौ । नागः पुंसि । क्लीबं सीसलवङ्गयोः । अपिशब्दाच्चण्डालेऽपि मातङ्गः । "अपिशब्दात्" नेत्रस्यान्तेऽङ्गहीने चापाङ्गः । "अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च" इति विश्वः ॥ २१ ॥ स्वभावः प्रकृतिः । निर्मोक्षस्त्यागः । निश्चये यथा । "गृहाण शस्त्रं यदि सर्ग एष ते" इति रघुः । अध्यायः काव्यादिविरामस्थानं सृष्टिर्निर्माणं एतेषु सर्गः । "सर्गस्तु निश्चयाध्यायमोहोत्साहात्मसृष्टिषु" इति मेदिनी । सन्नहनं कवचः । उपायः सामादिः । ध्यानं चित्तवृत्तिनिरोधः संगतिः संगम इत्यादिषु योगशब्दः । "योगोऽपूर्वार्थसंप्राप्तौ संगतिध्यानयुक्तिषु । वपुःस्थैर्ये प्रयोगे च विष्कम्भादिषु भेषजे । विश्रब्धघातके द्रव्योपायसन्नहनेष्वपि । कार्मणेऽपि च" इति मेदिनी ॥ २२ ॥ स्त्र्यादिभृतौ पण्यस्त्रीणाम् । आदिशब्दाद्धस्त्यश्वादिकर्मकाराणां भृतौ मूल्ये पालने भरणे वा भोगः । "पालनेऽभ्यवहारे च निर्वेशे पण्ययोषिति" इति विश्वः । अहेः सर्पस्य । शबले कर्बुरे त्रिलिङ्गास्याम् । "सारङ्गः पुंसि हरिणे चातके च मतङ्गजे । शबले त्रिषु" इति मेदिनी ॥ २३ ॥ कपौ वानरे चकाराद्भेके सारथ्यादौ च प्लवगः । शापे आक्रोशे पराभवे तिरस्कारेऽभिषङ्गः । यानाद्यङ्गे रथशकटादीनामवयवे

यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु ॥ २४ ॥
स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले ॥
लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर्लिङ्गं चिह्नशेफसोः ॥ २५ ॥
शृङ्गं प्राधान्यसान्वोश्च वराङ्गं मूर्धगुह्ययोः ॥
भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ॥ २६ ॥
इति गान्ताः ॥ परिघः परिघातेऽस्त्रेऽप्योघो वृन्देऽम्भसां रये ॥
मूल्ये पूजाविधावर्घोऽहोदुःखव्यसनेष्वघम् ॥ २७ ॥
त्रिष्विष्टेऽल्पे लघुः ॥ इति घान्ताः ॥ काचाः शिक्यमृद्भेददृग्रुजः ॥

युगः । युग्मे द्वये कृतत्रेतादिषु हस्तचतुष्टये औषधभेदे च युगम् ॥ २४ ॥ इषुः शरः । पशू सुरभिवृषौ । घृणिः रश्मिः । स्वर्गादीनां दशानां द्वन्द्वैक्यम् । लक्ष्यदृष्ट्या प्रयोगानुसारेण गोशब्दः स्त्रियां पुंसि चोक्तेयः । यथा सुरभौ स्त्रियाम् । वृषभे पुंसि । "गौः स्वर्गे वृषभे रश्मौ वज्रे शीतकरे पुमान् । अर्जुनीनेत्रदिग्बाणभूवागादिषु योषिति" इति विश्वः । योषिति स्त्रीलिङ्गे । कोशान्तरे तु । "गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्यादिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु" इति । शेफः शिश्नः । अनुमाने हरमूर्तिभेदे च लिङ्गम् । "लिङ्गं चिह्नेऽनुमाने च सांख्योक्तप्रकृतावपि । शिवमूर्तिविशेषेऽपि मेहनेऽपि नपुंसकम्" इति मेदिनी ॥ २५ ॥ प्राधान्यं प्रभुत्वम् । सानुः शिखरम् । चकारात्पशोरवयवे शृङ्गम् । "शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । पाषाणोत्कर्षयोश्चापि शृङ्गः स्यात्कूर्चशीर्षके" इति मेदिनी । मूर्धा मस्तकः । गुह्यं योनिः । श्रीः संपच्छोभा । काम इच्छा च । माहात्म्यं ऐश्वर्यम् । यत्नः प्रयत्नः । अर्ककीर्ती सूर्ययशसी भगम् । "भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु । माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवौ" इति मेदिनी ॥ इति गान्तवर्गः ॥ २६ ॥ अथ घान्तानाह । परिघाते परितो हनने अस्त्रे लोहमयलगुडे अपिशब्दाद्योगभेदे च परिघः । अम्भसां रये जलप्रवाहे ओघः । परम्परायां नृत्यभेदे च । मूल्ये पण्ये पूजोपहारे चार्घः । अंहः पापम् । दुःखं जरामरणादिकम् । व्यसनं मृगयाद्यूतादि । विपद्रागद्वेषादि वा तत्राघम् ॥ २७ ॥ इष्टे मनोज्ञेऽल्पेऽगुरौ लघुस्त्रिषु । "निःसारे च त्रिषु" । इति घान्ताः ॥ ॥ घान्तकथनानन्तरं चकारान्ताः स्मृताः । शिक्यं दधिभाण्डादिलम्बनार्थं रज्जुसमूह-

27-31



विपर्यासे विस्तरे च प्रपञ्चः पावके शुचिः ॥ २८ ॥
मास्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु ॥
अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम् ॥ २९ ॥
इति चान्ताः॥("प्रसन्ने भल्लुकेऽप्यच्छो गुच्छः स्तबकहारयोः
परिधानाञ्चले कच्छो जलप्रान्ते त्रिलिङ्गकः ॥१॥") (१)
इति क्षेपकश्छान्तः ॥ केकितार्क्ष्यावहिभुजौ दन्तविप्राण्डजा द्विजाः ॥
अजा विष्णुहरच्छागा गोष्ठाध्वनिवहा व्रजाः ॥ ३० ॥
धर्मराजौ जिनयमौ कुञ्जो दन्तेऽपि न स्त्रियाम् ॥
वलजे क्षेत्रपूर्द्वारे वलजा वल्गुदर्शना ॥ ३१ ॥

कृत आश्रयविशेषः। मृद्भेदो मृद्विशेषः। यल्लक्ष्यम्। "काचः काचो मणिर्मणिः" इति। दृग्रुक् नेत्ररोगः पटलप्रायः। एते त्रयः काचाः। विपर्यासे वैपरीत्ये। चात्प्रतारणे प्रपञ्चः। पावकेऽग्नौ शुचिः पुंसि ॥ २८॥ मास्याषाढे अमात्ये सचिवे अत्युपधे उपधा धर्माद्यैः परीक्षणं तामतिक्रान्ते शुद्धचित्ते इत्यर्थः। "एतेषु च पुंसि"। "शुचिर्ग्रीष्माग्निभृङ्गारेष्वाषाढे शुद्धमन्त्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु" इति मेदिनी। मेध्ये पवित्रे सिते शुक्ले च त्रिषु। स्पृहायामत्यासक्तौ गभस्तौ किरणे चकाराद्दीप्तौ शोभायां च रुचिः ॥ २९ ॥ इति चान्ताः। "अपिशब्दात्स्फटिके अच्छः। स्तम्बे कलापे च गुच्छः। तुन्नवृक्षे नांदुर्खी इति प्रसिद्धे नौकाङ्गे च कच्छः" ॥ १ ॥ इति छान्ताः। अथ जान्तानाह। केकितार्क्ष्यौ मयूरगरुडौ। अहीन्भुङ्क्ते इत्यहिभुक्। विप्रेत्युपलक्षणं क्षत्रवैश्ययोः। "विप्रक्षत्रियविट्शूद्रा वर्णास्त्वाद्या द्विजाः स्मृताः" इति स्मृते अण्डजाः पक्षिण एते द्विजाः। छागो बस्तः। "अजो हरौ हरे कामे विधौ छागे रघोः सुते" इति विश्वः। गोष्ठं गोस्थानकम्। अध्वा मार्गः। निवहः संघः। एते व्रजाः ॥ ३० ॥ जिनो बुद्धः। युधिष्ठिरेऽपि धर्मराजशब्दः। दन्तिदन्ते कुञ्जः अपिशब्दान्निकुञ्जे "हनौ चापि पुन्नपुंसकलिङ्गः"। क्षेत्रे नगरद्वारे च वलजं क्लीबम्। "वलजं गोपुरे क्षेत्रे सस्यसंगरयोरपि" इति मेदिनी। वल्गुदर्शना वरस्त्रीत्यर्थः। वल्गु सुंदरं दर्शनं यस्याः सा। "वलजा वरयोषायाम्" इति कोशान्तरात् ॥ ३१ ॥

---

१ इदं पद्यं तालपत्रपुस्तकेऽपि नास्ति ॥

समे क्ष्मांशे रणेऽप्याजिः प्रजा स्यात्संततौ जने ॥
अब्जौ शङ्खशशाङ्कौ च स्वके नित्ये निजं त्रिषु ॥ ३२ ॥
॥ इति जान्ताः ॥ पुंस्यात्मनि प्रवीणे च क्षेत्रज्ञो वाच्यलिङ्गकः
संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना ॥ ३३ ॥
इति ञान्ताः ॥ काकेभगण्डौ करटौ गजगण्डकटी कटौ ॥
शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे ॥ ३४ ॥
देवशिल्पिन्यपि त्वष्टा दिष्टं दैवेऽपि न द्वयोः ॥
रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः ॥

समे क्ष्मांशे भूभागे तत्र आजिरिति । रणे संग्रामे । संततिरपत्यम् । चकाराद्धन्वन्तरावब्जः । पद्मेऽपि अब्जम् । स्वके आत्मीये नित्ये चिरस्थिते । यथा धर्मो निजः नित्य इत्यर्थः । इति जान्ताः ॥ ३२ ॥ अथ ञान्तानाह । आत्मनि पुरुषे क्षेत्रज्ञः पुंसि । प्रवीणे तु वाच्यलिङ्गकः । चेतना धीः । नामाभिधानम् । हस्ताद्यैर्हस्तभ्रूलोचनादिभिर्या अर्थसूचना प्रयोजनविज्ञापनं सापि संज्ञा । गायत्री सूर्यस्त्री च संज्ञा । तदुक्तं मेदिन्याम् । "संज्ञा नामनि गायत्र्यां चेतनारवियोषितोः । अर्थस्य सूचनायां च हस्ताद्यैरपि योषिति" इति ॥ ३३ ॥ अत्र क्षेपकोऽयम् । "दोषज्ञौ वैद्यविद्वांसौ ज्ञौ विद्वान्सोमजोऽपि च । विज्ञौ प्रवीणकुशलौ कालज्ञौ ज्ञानिकुक्कुटौ" इति ॥ १ ॥ इति ञान्ताः ॥ अथ टान्तानाह । काकश्चेभगण्डो हस्तिकपोलश्च काकेभगण्डौ करटौ स्याताम् । "करटो गजगण्डे स्यात्कुसुम्भे निन्द्यजीवने । एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे । करटो वाद्यभेदे" इति मेदिनी । गजगण्डः कटिश्च कटौ स्याताम् । कटिः श्रोणिः । "कटः श्रोणौ क्रियाकारे कलिञ्जेऽतिशये शवे । समये गजगण्डेऽपि पिप्पल्यां तु कटी मता" इति विश्वः । रुजा निष्केशशिराः खलतिः तस्मिन्दुश्चर्मणि निष्कुषितत्वचि महेश्वरे शिपिविष्टः । "शिपविष्टः शिविपिष्टः" इति राजमुकुटः ॥३४॥ देवशिल्पिनि विश्वकर्मण्यपिशब्दाद्रविभेदे काष्ठतक्षे त्वष्टा । दैवे प्राक्तनकर्मणि दिष्टम् । नपुंसकम् । अपिशब्दात्काले तु ना । रसे पिप्पल्यादिरसभेदे कटुः पुंसि । अकार्ये करणानर्हे कटु क्लीबम् । मत्सरतीक्ष्णयोस्त्रिषु । क्षेमे कल्याणे । अशुभेऽमङ्गले । अभावे अशुभस्यैवाभावे रिष्टमिति । शुभाशुभे अरिष्टे । सूतिकागृहं चारिष्टम् । अरिष्टमशुभे तक्रे सूति-

35-39



रिष्टं क्षेमाशुभाभावेष्वरिष्टे तु शुभाशुभे ॥ ३५ ॥
मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ॥
अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ॥ ३६ ॥
सूक्ष्मैलायां त्रुटिः स्त्री स्यात्कालेऽल्पे संशयेऽपि सा ॥
आर्त्युत्कर्षाश्रयः कोट्यो मूले लमकचे जटा ॥ ३७ ॥
व्युष्टिः फले समृद्धौ च दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ॥
इष्टिर्यागेच्छयोः सृष्टं निश्चिते बहुनि त्रिषु ॥ ३८ ॥
कष्टे तु कृच्छ्रगहने दक्षामन्दागदेषु च ॥
पटुर्द्वौ वाच्यलिङ्गौ च ॥ इति टान्ताः ॥ नीलकण्ठः शिवेऽपि च ॥ ३९ ॥
पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा ॥

कागार आसवे । शुभे मरणचिह्ने च" इति मेदिनी ॥ ३५ ॥ मायादिषु नवसु कूटम् । तदस्त्रियाम् । अन्यथाकारदर्शनं माया । निश्चलमविकारमाकाशादि । यन्त्रं मृगबन्धनविशेषः । कैतवं कपटम् अनृतं असत्यम् । राशिः पुञ्जः । अयोघनो लोहहननार्थं आयुधविशेषः । सीराङ्गं हलाङ्गम् ॥ ३६ ॥ सूक्ष्मैला प्रसिद्धा । काले ह्रस्वाक्षरचतुर्थभागग्रहणात्मके कालभेदे । अल्पे लेशे । संशये संदेहे । आर्तिश्चापाग्रम् । उत्कर्षः प्रकर्षः । अश्रिः कोणः । संख्याभेदेऽपि कोटिः । "स्यात्कोटिरश्रौ चापाग्रे संख्याभेदप्रकर्षयोः" इति विश्वः । मूले संश्लिष्टकेशे जटामांस्यां वेदविकृतौ च ॥ ३७ ॥ फले साध्ये समृद्धौ संपदि व्युष्टिः । अक्ष्णि चक्षुषि । यागो यज्ञः । इच्छा स्पृहा । "इष्टिर्मताभिलाषेऽपि संग्रहश्लोकयागयोः" इति मेदिनी । बहुनि प्रचुरे । मुक्तनिर्मितयोश्च सृष्टम् । सृष्टिर्निश्चिते बहुले त्रिष्विति क्वचित्पुस्तके पाठः ॥ ३८ ॥ कृच्छ्रं दुःखम् । गहनं दुरधिगमान्तःप्रान्तम् । उभे कष्टे । दक्षोऽनलसः । अगदो रोगहीनः । एते पटवः ॥ द्वौ कष्टपटू वाच्यलिङ्गौ ॥ इति टान्ताः ॥ ठान्तानाह । अपिशब्दान्मयूरेऽपि नीलकण्ठः ॥ ३९ ॥ अन्तर्जठरं जठरस्यान्तरम् । कुसूलो धान्यागारम् अन्तर्गृहं गृहाभ्यन्तरं च एतेषु कोष्ठः पुंसि । निष्पत्तिर्निष्पादनम् । नाशः अदर्शनम् । अन्तः प्रध्वंसः ।

निष्ठा निष्पत्तिनाशान्ताः काष्ठोत्कर्षे स्थितौ दिशि ॥ ४० ॥
त्रिषु ज्येष्ठोऽतिशस्तेऽपि कनिष्ठोऽतियुवाल्पयोः ॥ इति ठान्ताः ॥
दण्डोऽस्त्री लुगडेऽपि स्याद्गुडो गोलेक्षुपाकयोः ॥ ४१ ॥
सर्पमांसात्पशू व्याडौ गोभूवाचस्त्विडा इलाः ॥
क्ष्वेडा वंशशलाकाऽपि नाडी नालेऽपि षट्क्षणे ॥ ४२ ॥
काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ॥
स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने॥इति डान्ताः॥४३॥
भृशप्रतिज्ञयोर्बाढं प्रगाढं भृशकृच्छ्रयोः ॥
शक्तस्थूलौ त्रिषु दृढौ व्यूढौ विन्यस्तसंहतौ ॥ ४४ ॥
इति ढान्ताः ॥

स्थितौ मर्यादायां कालविशेषेऽपि ॥ ४० ॥ अतिशस्ते सुप्रशस्ते । अपिशब्ददतिवृद्धे । अग्रजे मासि च ज्येष्ठः । अतियूनि बाले । अनुजेऽपि कनिष्ठः ॥ इति ठान्ताः ॥ "दण्डो दमे मानभेदे लगुडे यमसैन्ययोः । व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थनयोरपि । अभिमाने ग्रहे दण्डश्चण्डांशोः पारिपार्श्वके" इत्यपिशब्दात् ज्ञेयाः । गोलो मृदादिगुडकः । इक्षुपाकः इक्षुविकारः । हस्तिसन्नाहेऽपि गुडः । स्नुहीगुडिकयोर्गुडा ॥ ४१ ॥ मांसात्पशुर्व्याघ्रः । मांसमत्तीति मांसात् स चासौ पशुश्चेति । डलयोरेकत्वेन व्यालश्च । "खलेऽपि च"। गौर्धेनुः । डलयोरैक्यादिडा इलाश्च । इला बुधपत्नी च । वंशशलाका पञ्जराद्यर्था वा शूर्पाद्यर्था वेणुशलाका क्ष्वेडा । अपिशब्दाद्विषे पुंसि । "सिंहनादे च स्त्रियाम् । "क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति" इति कोशान्तरे । षट्क्षणमिते काले नाले अपिशब्दाच्छिरादिषु च नाडी । "शिरायां गण्डदूर्वायां चर्यायां कुहनस्य च" इति मेदिनी ॥ ४२ ॥ दण्डादिषु षट्सु काण्डः । स च पुन्नपुंसकयोः । अर्वा कुत्सितः । वर्गः परिच्छेदः । यथा प्रथमकाण्डेऽभिहितम् । अवसरः प्रस्तावः । अमत्रे पात्रे । मूलं यद्वणिग्धनम् तत्र च भाण्डम् । काञ्चनादिनिर्मितेऽश्वाभरणे भूषणमात्रे च ॥ ४३ ॥ इति डान्ताः ॥ भृशमत्यर्थं प्रतिज्ञा स्वीकारः । दृढेऽपि प्रगाढम् । "शक्तः समर्थः तत्र स्थूले च दृढः । विन्यस्ते संहते च व्यूढः । पृथुले च" ॥४४॥ इति ढान्ताः ॥ स्त्रिया

भ्रूणोऽर्भके स्त्रैणगर्भे बाणो बलिसुते शरे ॥
कणोऽतिसूक्ष्मे धान्यांशे संघाते प्रमथे गणः ॥ ४५ ॥
पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च ॥
मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसंध्यादिके गुणः ॥ ४६ ॥
निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ॥
वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाऽक्षरे ॥ ४७ ॥
अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु ॥
स्थाणुः शर्वोऽप्यथ द्रोणः काकेऽप्याजौ रवे रणः ॥ ४८ ॥
ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ॥

अयं स्त्रैणः स्त्रैणश्चासौ गर्भश्च तस्मिन् बाले च भ्रूणः । बलिपुत्रे शरेच बाणः । "बाणः स्याद्गोस्तने दैत्यभेदे केवलकाण्डयोः" इति मेदिनी । अतिसूक्ष्मवस्तुनि धान्यांशे च कणः । प्रमथे रुद्रानुचरे गणः ॥ ४५ ॥ द्यूतमक्षादिभिः क्रीडा । आदिना मेषकुक्कुटादियुद्धादिकं तत्र उत्सृष्टे न्यस्तार्थे । भृतौ वेतने मूल्ये विक्रेयवस्तुद्रव्ये धने काकिणीचतुष्टये च पणः । "अपिशब्दात् ग्लहे क्रय्यशाकादिकायां च" । तदुक्तं धरण्याम् । "पणो माने वराटानां मूल्ये कार्षापणे धने । द्यूते विक्रय्यशाकादौ बद्धमुष्टौ ग्लहे भृतौ" इति । मौर्व्यां ज्यायां द्रव्याश्रिते रसगन्धादौ । आदिशब्दस्य प्रत्येकं संबन्धात्सत्त्वरजआदौ शौर्यचातुर्यादौ संधिविग्रहादौ इन्द्रिये अदेङित्युक्ते च गुणः । "गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागे शौर्यादिसत्त्वादिसंध्याद्यावृत्तिरज्जुषु । शुक्लादावपि वर्त्यां च" इति मेदिनी ॥ ४६ ॥ निर्व्यापारस्थितौ तूष्णीमवस्थाने कालविशेषे मुहूर्तस्य द्वादशे भागे उत्सवे पुत्रजन्मादौ क्षणः । "पर्वणि च" । विप्रक्षत्रियादौ शुक्लपीतादौ स्तुतौ स्तवे च वर्णः । अक्षरे वर्णं वा क्लीबे पुंसि चेत्यर्थः । "वर्णो द्विजादिशुक्लादियशोगुणकथासु च । स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेपने" इति मेदिनी ॥४७॥ "वर्णभेदे कपिले" । अपिशब्दात्सूर्यसारथौ । "अव्यक्तरागे संध्यारागे च" ॥ सोऽरुणशब्दः । "अपिशब्दात्" स्तम्भादौ स्थेयुषि च स्थाणुः । "अपिशब्दात्" अश्वत्थाम्नः पितरि परिमाणविशेषे च द्रोणः । आजौ युद्धे रवे शब्दे । काकेऽपि च रवे रण इत्यपि पाठान्तरम् ॥ ४८ ॥ श्रेष्ठो मुख्यः । "ग्राम-

ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः ॥ ४९ ॥
हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ॥
त्रिषु पाण्डौ च हरिणः स्थूणा स्तम्भेऽपि वेश्मनः ॥ ५० ॥
तृष्णे स्पृहापिपासे द्वे जुगुप्साकरुणे घृणे ॥
वणिक्पथे च विपणिः सुरा प्रत्यक्च वारुणी ॥ ५१ ॥
करेणुरिभ्यां स्त्री नेभे द्रविणं तु बलं धनम् ॥
शरणं गृहरक्षित्रोः श्रीपर्णं कमलेऽपि च ॥ ५२ ॥
विषाभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु ॥
प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ॥ ५३ ॥

णीर्भोगिके पत्यौ प्रधाने नापितेऽपि च" इति विश्वप्रकाशः । ग्रामं नयतीति ग्रामणीः । "अग्रग्रामाभ्याम्" इति णत्वम् । "मेषलोम्नि भ्रुवोरन्तरावर्ते च ऊर्णा" आदिना शशोष्ट्रादीनां च लोम सा ऊर्णा । सोर्णा तु चक्रवर्त्यादीनां महायोगिना च महापुरुषलक्षणभूता मृणालतन्तुसूक्ष्मा शुभ्रायता प्रशस्तावर्ता प्रायेण भवति ॥ ४९ ॥ हेम्नः सुवर्णस्य प्रतिमा या च हरिता हरिद्वर्णा । "हरिणी हरितायां च नारीमिद्वृत्तभेदयोः । सुवर्णप्रतिमायां च" इति मेदिनी । पाण्डौ पाण्डुरवर्णे चकारान्मृगभेदे । वेश्मनो गृहस्य स्तम्भे स्थूणा । अपिशब्दाल्लोहस्य प्रतिमायाम् ॥ ५० ॥ स्पृहा वाञ्छा । पिपासा पानेच्छा । "जुगुप्सा निन्दा करुणा च घृणेत्युच्यते" । वणिक्पथे पण्यवीथ्यां आपणे पण्ये च विपणिः । सुरा मद्यम् । प्रत्यक् प्रतीची दिक् । उभे वारुण्यौ । गण्डदूर्वापि वारुणी । "वारुणी गण्डदूर्वायां प्रतीचीसुरयोः स्त्रियाम्" इति कोशान्तरात् ॥ ५१ ॥ इभ्यां हस्तिन्यां करेणुः स्त्रीलिङ्गः । इभे हस्तिनि करेणुर्ना पुंलिङ्गः । बलं पराक्रमः गृहे रक्षितरि शरणम् । "वधरक्षणयोरपि शरणम्" । चकारादग्निमन्थे च श्रीपर्णम् ॥ ५२ ॥ अभिमरो युद्धम् । खरे तिग्मे । "तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके । क्लीबं यवाग्रजे पुंसि तिग्मात्मत्यागिनोस्त्रिषु" इति मेदिनी । हेतुर्धूमादिः मर्यादा सीमा । इयत्ता परिच्छेदः । प्रमाता ज्ञाता एष्वर्थेषु प्रमाणशब्दो वर्तते । "प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि । इयत्तायां च हेतौ च क्लीबैकत्वे प्रमातरि" इति मेदिनी ॥ ५३ ॥ साधकतमं क्रियासिद्धौ प्रकृष्टो हेतुः । साधकतमं करण-

करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ॥
प्राण्युत्पादे संसरणमसंबाधचमूगतौ ॥ ५४ ॥
घण्टापथेऽथ वान्तान्ने समुद्गिरणमुन्नये ॥
अतस्त्रिषु विषाणं स्यात्पशुशृङ्गेभदन्तयोः ॥ ५५ ॥
प्रवणं क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ॥
संकीर्णौ निचिताशुद्धौ विरिणं शून्यमूषरम् ॥ ५६ ॥
("सेतौ च वरणो वेणी नदीभेदे कचोच्चये ॥") (१)

इति णान्ताः ॥

देवसूर्यौ विवस्वन्तौ सरस्वन्तौ नदार्णवौ ॥
पक्षिताक्ष्यौं गरुत्मन्तौ शकुन्तौ भासपक्षिणौ ॥ ५७ ॥
अभ्युत्पातौ धूमकेतू जीमूतौ मेघपर्वतौ ॥

मिति पाणिनिराह । यथा रामेण बाणेन हतो वालीत्यत्र हननक्रियां प्रति बाणस्य साधकतमत्वात् करणत्वमस्ति । क्षेत्रं सस्योत्पत्तिस्थानम् । "करणं साधने क्षेत्रे" इति विश्वः । अपिशब्दात्कर्मादि । "करणं करणे काये साधनेन्द्रियकर्मसु । कायस्थे व्रतबन्धे च नाट्यगीतप्रभेदयोः । पुमान् शूद्राविशोः पुत्रे वानरादौ च कीर्त्यते" इत्यजयः । प्राणिनामुत्पादे जन्मनि । असंबाधचमूगतौ निर्बाधसैन्यगमने घण्टापथे च संसरणम् ॥ ५४ ॥ वान्तान्ने भुक्तोज्झितान्ने । उन्नये जलपात्रादेरूर्ध्वनयने । उन्मूलिते च "उद्गिरणम्" । अतःपरं वक्ष्यमाणा णान्तशब्दास्ते त्रिषु । पशुशृङ्गं चेभदन्तश्च तयोः विषाणम् । स्त्रियां विषाणी ॥ ५५ ॥ क्रमेण निम्ना क्रमनिम्ना सा चासौ उर्वी च पृथ्वी तत्र । प्रह्वे नम्रे चतुष्पथे प्रवणः पुंस्येव । निचितो व्याप्तः । अशुद्धः अमित्रः । "संकीर्णं संकटे व्याप्ते कुत्रचिद्वर्णसंकरे" इत्यजयः । शून्यं निराश्रयो देशः । ऊषरं स्थलभेदः तद्विरिणमिति स्यात् । "दीर्घादिरपि । इरणमित्यपि ईरणमिति च । ईरणं तूषरे शून्यमित्युक्तत्वात्" ॥ ५६ ॥ सेतौ च वरणो वेणी नदीभेदे कचोच्चय इत्यमूलकः ॥ इति णान्ताः ॥ अथ तान्तानाह ॥ नदः सरिद्विशेषः ॥ ताक्ष्यों गरुडः । भासः पक्षिभेदो गोष्ठकुक्कुटाख्यः । पक्षी पक्षिमात्रम् ॥ ५७ ॥ उत्पातो धूममयी तारा । ग्रहभेदेऽपि

---

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति ॥

हस्तौ तु पाणिनक्षत्रे मरुतौ पवनामरौ ॥ ५८ ॥
यन्ता हस्तिपके सूते भर्ता धातरि पोष्टरि ॥
यानपात्रे शिशौ पोतः प्रेतः प्राण्यन्तरे मृते ॥ ५९ ॥
ग्रहभेदे ध्वजे केतुः पार्थिवे तनये सुतः ॥
स्थपतिः कारुभेदेऽपि भूभृद्भूमिधरे नृपे ॥ ६० ॥
मूर्धाभिषिक्तो भूपेऽपि ऋतुः स्त्रीकुसुमेऽपि च ॥
विष्णावप्यजिताव्यक्तौ सूतस्त्वष्टरि सारथौ ॥ ६१ ॥
व्यक्तः प्राज्ञेऽपि दृष्टान्तावुभौ शास्त्रनिदर्शने ॥
क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे ॥ ६२ ॥
वृत्तान्तः स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः ॥

धूमकेतुः । जीवनं जलं मुञ्चतीति जीमूतो मेघः । पृषोदरादिः । "जीमूतोऽद्रौ धृतिकरे देवताडे पयोधरे" इति मेदिनी । "धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः" इति विश्वः । पाणिः करः । नक्षत्रं त्रयोदशम् । पवनो वायुरमरश्च मरुत्संज्ञौ ॥५८॥ महामात्रसारथी यन्तारौ । धाता धारकः । "स्वामिन्यपि भर्ता" । यानपात्रे वहित्रे "गृहस्थाने वाससि च पोतः । प्राण्यन्तरे भूतान्तरे ॥ ५९ ॥ "केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि" इति मेदिनी । पार्थिवे राज्ञि । तनये पुत्रे । कारुः शिल्पी तद्भेदे । अपिशब्दात्कञ्चुकिनि जीवेष्टियाजके च स्थपतिः । भूमिधरः शैलः ॥ ६० ॥ अपिशब्दात् प्रधाने क्षत्रियमात्रे च मूर्धाभिषिक्तः । स्त्रीकुसुमे रजसि हेमन्तादौ च ऋतुः । अजितश्चाव्यक्तश्चेति तकारान्ताविमौ विष्णावपि वर्तेते । अपिशब्दादपरिभूते शङ्करे चाजितः । "अव्यक्तः शङ्करे विष्णावव्यक्तं महदादिके । आत्मन्यपि स्यादव्यक्तमस्फुटे त्वभिधेयवत्" इति विश्वः । त्वष्टरि शिल्पिभेदे । "क्षत्रियाद्ब्राह्मणीजेऽपि सूतः सारथिवन्दिनोः" इति विश्वः ॥ ६१ ॥ स्फुटेऽपि व्यक्तः । शास्त्रं तर्कादि । निदर्शनमुदाहरणम् । इमे उभौ दृष्टान्तौ । द्वाःस्थे द्वारपाले । वैश्यायामित्यपिपाठः । "क्षत्ता शूद्रात्क्षत्रियाजे" इति विश्वकोशात् । चात् भुजिष्यातनये ॥ ६२ ॥ प्रकरणं प्रस्तावः । प्रकारो भावः । कार्त्स्न्यं साकल्यम् । वार्ता जनश्रुतिः । नृत्तस्थाने नृत्यमण्डपे । नीवृद्विशेषो जनपदविशेषः स च पश्चिमसागरस्थो

आनर्तः समरे नृत्यस्थाननीवृद्विशेषयोः ॥ ६३ ॥
कृतान्तो यमसिद्धांतदैवाकुशलकर्मसु ॥
श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः ॥ ६४ ॥
इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः ॥
कक्षान्तरेऽपि शुद्धान्तो नृपस्यासर्वगोचरे ॥ ६५ ॥
कासूसामर्थ्ययोः शक्तिर्मूर्तिः काठिन्यकाययोः ॥
विस्तारवल्ल्योर्व्रततिर्वसती रात्रिवेश्मनोः ॥ ६६ ॥
क्षयार्चयोरपचितिः सातिर्दानावसानयोः ॥
अर्तिः पीडाधनुष्कोट्योर्जातिः सामान्यजन्मनोः ॥ ६७ ॥
प्रचारस्यन्दयो रीतिरीतिर्डिम्बप्रवासयोः ॥

द्वारावती । "आनर्तो नृत्यशालायां जने जनपदान्तरे" इत्यजयः ॥ ६३ ॥ यमो धर्मराजः । दैवं प्राक्तनं कर्म । अकुशलकर्म पापम् । श्लेष्मादयो धातुशब्द-वाच्याः । आदिशब्दात्पित्तादिग्रहः । रस आहारपरिणामजो भागविशेषः । रसरक्तादीत्यादिना वसामज्जादिग्रहः । महाभूतानि पृथिव्यादीनि पञ्च । तद्गुणा गन्धादयः ॥ ६४ ॥ इन्द्रियाणि चक्षुरादीनि । अश्मविकृतिः मनःशि-लादिः । शब्दयोनिः भू सत्तायामित्यादिः । "भूवादयो धातवः" इति सूत्रात् । नृपस्य कक्षान्तरे राजधानीस्थानविशेषे । असर्वगोचरे इति कक्षान्तरस्य विशे-षणम् । अपिशब्दादन्तःपुरे आशौचान्ते च शुद्धान्तः ॥ ६५ ॥ कासूः महा-राष्ट्रभाषायां सैतीति ख्यातः आयुधभेदः । "कासूर्विकलवाची स्यात् कासूः शक्त्यायुधेऽपि च" इति विश्वात् । काठिन्यं दृढता । वल्ली लता । रात्रौ गृहे च वसतिः ॥ ६६ ॥ क्षयो हानिः अर्चा पूजा तत्रापचितिः निष्कृतौ व्यये च । अवसानं अन्तः । धनुष्कोटिः चापाग्रम् । आर्तिरिति पाठः । "उपसर्गादृति" इति वृद्धिः । सामान्यं गोत्वादि । मालत्यां च जातिः । "जातिः सामान्यगो-त्रयोः । मालत्यामामलक्यां च चुल्ल्यां कम्पिल्लजन्मनोः । जातीफले छन्दसि च" इति हैमः ॥ ६७ ॥ प्रचारः लोकाचार इति यावत् । स्यन्दः प्रस्रवणम् । तत्र रीतिः । "रीतिः प्रचारे स्यन्दे च लोहकिट्टारकूटयोः" इति विश्वः । डिम्बे प्रवासे च ईतिः । डिम्बो विप्लवः । स च सप्तविधः । "अतिवृष्टिरना-

उदयेऽधिगमे प्राप्तिस्त्रेता त्वग्नित्रये युगे ॥ ६८ ॥
वीणाभेदेऽपि महती भूतिर्भस्मनि संपदि ॥
नदीनगर्योर्नागानां भोगवत्यथ सङ्गरे ॥ ६९ ॥
सङ्गे सभायां समितिः क्षयवासावपि क्षिती ॥
रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः ॥ ७० ॥
जगती जगति च्छन्दोविशेषेऽपि क्षितावपि ॥
पङ्क्तिश्छन्दोऽपि दशमं स्यात्प्रभावेऽपि चायतिः ॥ ७१ ॥
पत्तिर्गतौ च मूले तु पक्षतिः पक्षभेदयोः ॥
प्रकृतिर्योनिलिङ्गे च कैशिक्याद्याश्च वृत्तयः ॥ ७२ ॥
सिकताः स्युर्वालुकापि वेदे श्रवसि च श्रुतिः ॥

वृष्टिः शलभा मूषकाः शुकाः। स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः" इति भेदात्। उदये उत्पत्तौ। अधिगमे लाभे। अग्नित्रये दक्षिणगार्हपत्याहवनीयाख्ये। द्वितीये युगे। त्रेताशब्द आवन्तः ॥ ६८ ॥ वीणाभेदो नारदी वीणा। महत्त्वयुक्तायां भार्यादौ च। अणिमादौ च भूतिः। "भूतिर्भस्मनि संपदि। मांसपाकविशेषे च जनने गजमण्डने" इत्यमरशेषः। नद्यां नागानां नगर्यां च भोगवती। सङ्गरादित्रये समितिः ॥ ६९ ॥ वासो निवासः। अपिशब्दान्मेदिन्याम्। कालभेदे च क्षितिः। सूर्यप्रभादिषु हेतिः ॥ ७० ॥ जगति लोके क्षितौ भुवि छन्दोविशेषे द्वादशाक्षरपादकवृत्ते जगती। "अपिशब्दाज्जने"। दशमं छन्दः दशाक्षरपादकं आवलिरपि पङ्क्तिः। उत्तरकालेऽप्यायतिः। "आयतिः संयमे दैर्घ्ये प्रभावागामिकालयोः" इति विश्वः ॥ ७१ ॥ वीरभेदे सैन्यभेदे च पत्तिः। पक्षभेदयोरिति षष्ठी। पक्षशब्दो मासार्धवाची खगावयववाची च अतो द्विवचनम्। मासार्धस्य मूले प्रतिपदीत्यर्थः। पक्षिपक्षस्य मूलेऽधोदेशे। पक्षस्य मूलं पक्षतिः "पक्षात्तिः" इति सूत्रेण तिप्रत्ययः। योनिलिङ्गे द्वंद्वैक्यम्। योनौ लिङ्गे च प्रकृतिः। चकारात्प्रधानत्वे अमात्यादौ स्वभावे च। आद्यशब्दादारभटीसात्वतीभारत्यः। "भारती सात्वती चैव कैशिक्यारभटी तथा। चतस्रो वृत्तयश्चैता यासु नाट्यं प्रतिष्ठितम्" इति। चकाराज्जीविकायां सूत्रविवरणे च वृत्तिः ॥ ७२ ॥ सिकताशब्दो वालुकायां स्त्रीलिङ्गो बहुवचनान्तश्च। अपिशब्दात्सिकतान्वितदेशे

73-77



वनिता जनितात्यर्थानुरागायां च योषिति ॥ ७३ ॥

गुप्तिः क्षितिव्युदासेऽपि धृतिर्धारणधैर्ययोः ॥
बृहती क्षुद्रवार्ताकी छन्दोभेदे महत्यपि ७४ ॥

वासिता स्त्रीकरिण्योश्च वार्ता वृत्तौ जनश्रुतौ ॥
वार्तं फल्गुन्यरोगे च त्रिष्वप्सु च घृतामृते ॥ ७५ ॥

कलधौतं रूप्यहेम्नोर्निमित्तं हेतुलक्ष्मणोः ॥
श्रुतं शास्त्रावधृतयोर्युगपर्याप्तयोः कृतम् ॥ ७६ ॥

अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ॥
युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु ॥ ७७ ॥

च शर्करायां च कीर्तितः । श्रवसि कर्णे । "श्रुतिः श्रोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणि" इति विश्वः । जनितोऽत्यन्तानुरागो यस्यां तस्यां योषिन्मात्रे च वनिता । "वनिता जनितात्यर्थरागयोषिति योषिति" इति विश्वः ॥ ७३ ॥ क्षितिव्युदासे भूविवरे । "गतार्थक्षितेरुत्खनने" इति सुभूतिः । अपिशब्दाद्रक्षणे च गुप्तिः । "गुप्तिः कारागृहे प्रोक्ता भूगर्ते रक्षणेऽधमे" इति विश्वः । तुष्टौ योगभेदे "अध्वरे" च धृतिः । क्षुद्रवार्ताकी ओषधिविशेषः । "बृहती क्षुद्रवार्ताक्यां कण्टकार्यां च वाचि च" इति विश्वः। छन्दोभेदो नवमं छन्दो बृहती । महती विपुला सापि बृहती स्यात् ॥ ७४ ॥ स्त्रीकरिण्योर्योषिद्धस्तिन्योर्वासिताशब्दः । रामस्वामी तु वाशितेति तालव्यमध्यमाह । "वाशृ शब्दे" इत्यस्य रूपम् । धान्ये पक्षिशब्दे च वासितं क्लीबम् । वृत्तौ जीविकायाम् । जनश्रुतिर्वृत्तान्तः फल्गुन्यसारे क्लीबम् । रोगरहिते त्रिषु । घृतामृते द्वे अप्सु वर्तेते । चकारात् घृतमाज्ये जले क्लीबम् । अमृतं तु घृते पीयूषे यज्ञशेषे च ॥ ७५ ॥ रूप्यं रजतम् । लक्ष्म चिह्नम् । अवधृतमाकर्णितम् । युगे प्रथमयुगे पर्याप्ते अलमर्थे कृतम् ॥७६॥ जीवानपेक्षि साहसरूपं कर्म । महाभीतिर्महद्भयं अत्याहितं स्यात् । युक्ते न्याय्ये । क्ष्मादौ क्षित्यादिपञ्चके । ऋते सत्ये । प्राणिनि जन्तौ । अतीते वृत्ते । प्राण्यतीत इति द्वंद्वैक्यम् । समे सदृशम् । "भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः" इति विश्वः ॥७७॥ पद्ये श्लोके । अतीते भूते

वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ॥
महद्राज्यं चावगीतं जन्ये स्याद्गर्हिते त्रिषु ॥ ७८ ॥
श्वेतं रूप्येऽपि रजतं हेम्नि रूप्ये सिते त्रिषु ॥
त्रिष्वितो जगदिङ्गेऽपि रक्तं नील्यादिरागि च ॥ ७९ ॥
अवदातः सिते पीते शुद्धे बद्धार्जुनौ सितौ ॥
युक्तेऽतिसंस्कृते मर्षिण्यभिनीतोऽथ संस्कृतम् ॥ ८० ॥
कृत्रिमे लक्षणोपेतेऽप्यनन्तोऽनवधावपि ॥
ख्याते हृष्टे प्रतीतोऽभिजातस्तु कुलजे बुधे ॥ ८१ ॥
विविक्तौ पूतविजनौ मूर्छितौ मूढसोच्छ्रयौ ॥

दृढे गाढे निस्तले वर्तुलेऽतीतादौ त्रिलिङ्गां वृत्तम् । राज्यं चकारात् बृहच्च महत् । "महद्राज्ये विशाले च" इति विश्वः । जन्ये जनापवादे गर्हिते निन्दितेऽवगीतम् ॥ ७८ ॥ अपिशब्दाच्छुभ्रेऽपि श्वेतम् । "श्वेतं रूप्येऽन्यवच्छुक्ले श्वेतो द्वीपाद्रिभेदयोः" इति विश्वः । हेम्नि रूप्ये सिते च रजतम् । अतो रजतात् परे त्रान्ताः शब्दास्त्रिषु । इङ्गे जङ्गमे भुवने च जगत् । नील्यादिरागयुक्तम् । "रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु । क्लीबं तु कुङ्कुमे ताम्रे" इति मेदिनी । त्रिष्वतो इत्यस्य स्थाने त्रिष्वितो इत्यपि पाठः । इतो रजतात्परे तान्ताः त्रिषु ॥ ७९ ॥ सितादित्रयेऽवदातः । शुद्धं निर्मलम् । अर्जुनः शुक्लः बद्धश्च सितः । युक्ते न्याय्ये अतिप्रशस्ते भूषिते मर्षिणि क्षन्तरि च अभिनीतः ॥ ८० ॥ कृत्रिमे घटादौ । लक्षणोपेते शास्त्रोपलक्षणयुक्ते च संस्कृतम् । अनवधौ निःसीमे अपिशब्दाच्छेषादौ अनन्तः । "अनन्तः केशवे शेषे पुमाननवधौ त्रिषु" इति मेदिनी । "अनन्तं खे निरवधौ" इति हैमः । ख्याते प्रसिद्धे हृष्टे च प्रतीतः । "प्रतीतः सादरे प्राज्ञे प्रथिते ज्ञातहृष्टयोः" इति हैमः । कुलजे कुलीने बुधे पण्डितेऽभिजातः । "अभिजातः कुलीने स्यान्न्याय्यपण्डितयोस्त्रिषु" इति मेदिनी ॥ ८१ ॥ पूतं पवित्रम् । विजनो विगतजन एकान्त इत्यर्थः । एतौ विविक्तौ । "विविक्तं स्यादसंपृक्ते रहःपूतविवेकिषु" इति हैमः । मूढो मोहं गतः सोच्छ्रयो वृद्धियुक्तः द्वौ मूर्छितौ । अम्लं चुक्रम् । त्रिरात्रिस्थं काञ्जिकमिति यावत् । परुषो निष्ठुरः द्वौ शुक्ताख्यौ । "शुक्तं पूताम्लनिष्ठुरे" इति मेदिनी ।

द्वौ चाम्लपरुषौ शुक्तौ शिती धवलमेचकौ ॥ ८२ ॥
सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् ॥
पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतःकृते ॥ ८३ ॥
निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् ॥
जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिता उत्थितास्त्वमी ॥ ८४ ॥
वृद्धिमत्प्रोद्यतोत्पन्ना आदृतौ सादरार्चितौ ॥ इति तान्ताः ॥
अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ॥ ८५ ॥
निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ ॥
समर्थस्त्रिषु शक्तिस्थे संबद्धार्थे हितेऽपि च ॥ ८६ ॥
दशमीस्थौ क्षीणरागवृद्धौ वीथी पदव्यपि ॥

मेचकः कृष्णवर्णः । "शिञ् निशाने" इति धातोः क्तिनि शितिः । "निशितेऽपि शितिर्भूर्जे ना सितासितयोस्त्रिषु" इति मेदिनी ॥ ८२ ॥ धर्ममात्रे क्लीबं तद्युक्ते त्रिषु सत् । अस् धातोः शतृप्रत्यये अलोपः । साधौ मान्ये । अरात्यभियुक्ते शत्रुणाक्रान्ते । अग्रतःकृते पुरःस्थिते ॥ ८३ ॥ आश्रयो निवासः । अवातो वातवर्जितः । उभौ निवातौ । यच्छस्त्राभेद्यं वर्म कवचं तदपि निवाताख्यम् । यथा । निवातकवचो वीरः । "निवातो दृढसन्नाहः" इत्यजयः । जात उत्पन्नः उन्नद्धो दृप्तः प्रवृद्धश्चैते उच्छ्रिताः । अमी वक्ष्यमाणा वृद्धिमदादय उत्थिताः ॥८४॥ वृद्धिमांश्च प्रोद्यतश्चोत्पन्नश्चेति । अत्र क्वचित् केचित् उदास्थितेत्यादयः सन्ति तेऽमूलकत्वादुपेक्ष्याः । इति तान्ताः ॥ अथ थान्तानाह ॥ अभिधेयो वाच्यः । राः धनम् । वस्तु तत्त्वम् । निवृत्तिर्निवर्त्तनम् । अत्र विषयेऽप्यर्थः । "अर्थो हेतौ प्रयोजने । निवृत्तौ विषये वाच्ये प्रकारद्रव्यवस्तुषु" इति हैमः ॥८५॥ निपानमुपकूपजलाशयः । आगमो बौद्धशास्त्रादन्यच्छास्त्रम् । ऋषिजुष्टे जले ऋषिभिः सेवितोदके गुरावुपाध्याये च तीर्थम् । "तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु" इति मेदिनी । "निपानेत्यत्र निदानमित्यपि पाठः । निदानमुपायः" ॥ शक्तिस्थे शक्तिमति । संबद्धार्थे यथा । समर्थः पदविधिः । हितेऽनुकूले ॥ ८६ ॥ क्षीणो रागो रसोऽस्य क्षीणरागः । वृद्धोऽतिवृद्धः । उभौ दशमीस्थौ । "दशमीस्थो नष्टबीजे स्थविरे च" इति विश्वः । पदवी मार्गः अपिशब्दात् पङ्क्तिरपि । आस्थानी सभा ।

आस्थानीयत्नयोरास्था प्रस्थोऽस्त्री सानुमानयोः ॥ ८७ ॥
"शास्त्रद्रविणयोर्ग्रन्थः संस्थाधारे स्थितौ मृतौ" ॥ (१)
इति थान्ताः ॥

अभिप्रायवशौ छन्दावब्दौ जीमूतवत्सरौ ॥
अपवादौ तु निन्दाज्ञे दायादौ सुतबान्धवौ ॥ ८८ ॥
पादा रश्म्यङ्घ्रितुर्यांशाश्चद्राग्न्यर्कास्तमोनुदः ॥
निर्वादो जनवादेऽपि शादो जम्बालशष्पयोः ॥ ८९ ॥
आरावे रुदिते त्रातर्य्याक्रन्दो दारुणे रणे ॥
स्यात्प्रसादोऽनुरागेऽपि सूदः स्याद्व्यञ्जनेऽपि च ॥ ९० ॥
गोष्ठाध्यक्षेऽपि गोविन्दो हर्षेऽप्यामोदवन्मदः ॥
प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम् ॥ ९१ ॥

यत्नः प्रयत्नः। सानु पर्वताग्रम्। मानं परिमाणभेदः॥८७॥ "शास्त्रद्रविणयोर्ग्रन्थः संस्थाधारे स्थितौ मृतौ" इत्यन्यत्र प्रक्षिप्तः पाठः। इति थान्ताः॥ अथ दान्तानाह॥ अभिप्राय आशयः। वशोऽधीनः। "छन्दो वशेऽभिप्राये च दृषत्पाषाणमात्रके। निष्पेषणार्थपट्टेऽपि" इति हैमः। जीमूतो मेघः। वत्सरो वर्षम्। "अब्दः संवत्सरे मेघे गिरिभेदे च मुस्तके" इति विश्वः। निन्दा गर्हा। आज्ञा। शासनं तत्रापवादः। अववाद इत्यपि पाठः। पुत्रो ज्ञातिश्च दायादौ॥ ८८॥ रश्मिः किरणः। तुर्यांशश्चतुर्थभागः। "पादो मूलास्ततुर्यांशाङ्घ्रिषु प्रत्यन्तपर्वते" इति हैमः। तमो नुदतीति तमोनुत्। जनवादे लोकापवादे अपिशब्दान्निर्णीतवादे निर्वादः।"निर्वादः स्यात्परीवादपरिनिश्चितवादयोः" इति विश्वः। जम्बाले कर्दमे। शष्पे बालतृणे॥ ८९॥ आरावे आर्तध्वनौ। त्रातरि रक्षके दारुणे रणे भीषणे युद्धे च आक्रन्दः। अनुरागेऽनुग्रहे। प्रसन्नतायां काव्यगुणे च प्रसादः। "प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिषु" इति मेदिनी। व्यञ्जने तेमने सूपकारे च सूदः॥ ९०॥ गोष्ठं गोस्थानं तस्याध्यक्षे गोपालादौ बृहस्पतौ कृष्णेऽपि गोविन्दः। दकारान्त आमोदशब्दो यथा हर्षे वर्तते अपिशब्दादतिनिर्हारिगन्धे च तथा मदोऽपि हर्षे। अपिशब्दाद्गर्वगजदानरेतःसु चेत्यर्थः। प्रधानमेव प्राधान्यम्। राजलिङ्गे छत्रादौ वृषाङ्गे वृषावयवे ककुदः॥ ९१॥

---

१ इदमर्धं तालपत्रपुस्तकेऽपि नास्ति॥

91-96



स्त्री संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु ॥
धर्मे रहस्युपनिषत्स्यादृतौ वत्सरे शरत् ॥ ९२ ॥
पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ॥
गोष्पदं सेविते माने प्रतिष्ठाकृत्यमास्पदम् ॥ ९३ ॥
त्रिष्विष्टमधुरौ स्वादू मृदू चातीक्ष्णकोमलौ ॥
मूढाल्पापटुनिर्भाग्या मन्दाः स्युर्द्वौ तु शारदौ ॥ ९४ ॥
प्रत्यग्राप्रतिभौ विद्वत्सुप्रगल्भौ विशारदौ ॥ इति दान्ताः ॥
व्यामो वटश्च न्यग्रोधावुत्सेधः काय उन्नतिः ॥ ९५ ॥
पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ ॥
परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ॥ ९६ ॥

संभाषा संभाषणम् । क्रियाकारः कर्मनियमः आजिर्युद्धम् । नाम संज्ञा । एतेषु संकेते च स्त्रीलिङ्गः संविदिति नाम । "संवित्संभाषणे ज्ञाने संयमे नाम्नि तोषणे । क्रियाकारे प्रतिज्ञायां संकेताचारयोरपि" इति हैमः । स्त्री इति तु संविदुपनिषच्छरद्भिः संबध्यते । रहस्येकान्ते । वेदान्तेऽप्युपनिषत् ॥ ९२ ॥ व्यवसितिर्व्यवसायः । "पदं स्थाने विभक्त्यन्ते शब्दे वाक्यैकवस्तुनोः । त्राणे पादे पादचिह्ने व्यवसायापदेशयोः" इति हैमः । सेविते गोभिरेव सेविते देशे माने खुरप्रमाणे गोष्पदम् । "गोष्पदं सेवितासेवितप्रमाणेषु" इति सूत्रेण सुडागमः सस्य षत्वं च निपात्यते । प्रतिष्ठा स्थानम् । कृत्यं कार्यम् । प्रतिष्ठाकृत्ये आस्पदशब्दो वर्तते । "आस्पदं प्रतिष्ठायाम्" इति निपातनात् सुडागमः ॥९३॥ अतः परं वर्गसमाप्तेर्दान्तास्त्रिषु । इष्टो मनोहरः । उभौ स्वादू । "स्वादुर्मनोज्ञे मिष्टे च" इति विश्वः । अतीक्ष्णोऽतिग्मः । कोमलोऽकठिनः । उभौ मृदू । "मृदुः स्यात्कोमले स्वरे" इति विश्वः । मूढो मूर्खः । अल्पे यथा । मन्दोदरी । अपटुरतीक्ष्णः निर्भाग्यो हीनभाग्यः । एते मन्दाः ॥ ९४ ॥ प्रत्यग्रोऽभिनवः । अप्रतिभोऽप्रगल्भः । द्वाविमौ शारदौ । "प्रगल्भो धृष्टः । विशारदो बुधे धृष्टः" इति हैमः । इति दान्ताः ॥ अथ धान्तानाह ॥ प्रसारितभुजद्वयकुण्डलं व्यामः । वटो वृक्षभेदः । द्वयं न्यग्रोधाख्यम् । कायो देहः । उन्नतिरुच्छ्रायः ॥ ९५ ॥ परित आह्रियतेऽसौ पर्याहारो ध्यानादिः मार्गः पथाः एतौ विवधसंज्ञौ च भारेऽप्येतौ । यज्ञियतरोः पलाशादेः शाखायां समिधि तत्र उपसूर्यके सूर्यसमीपमण्डले परिवेषाख्ये च परिधिः ॥९६॥

बन्धकं व्यसनं चेतःपीडाधिष्ठानमाधयः ॥
स्युः समर्थननीवाकनियमाश्च समाधयः ॥ ९७ ॥

दोषोत्पादेऽनुबन्धः स्यात्प्रकृत्यादिविनश्वरे ॥
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ॥ ९८ ॥

विधुर्विष्णौ चन्द्रमसि परिच्छेदे बिलेऽवधिः ॥
विधिर्विधाने दैवेऽपि प्रणिधिः प्रार्थने चरे ॥ ९९ ॥

बुधवृद्धौ पण्डितेऽपि स्कन्धः समुदयेऽपि च ॥
देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम् ॥ १०० ॥

विधा विधौ प्रकारे च साधू रम्येऽपि च त्रिषु ॥

उत्तमर्णगृहे ऋणमोचनपर्यन्तं विश्वासार्थं यद्वस्तु स्थाप्यते तद्बन्धकम् । गाहाण इति लौकिकभाषायां प्रसिद्धम् । व्यसनमापत्तिः । चेतःपीडा मानसी व्यथा । अधिष्ठानमध्यासनं एते आधयः । समर्थनं चोद्यपरिहारः । नीवाको वचनाभावः । नियमोऽङ्गीकारः एते समाधयः ॥ ९७ ॥ दोषोत्पादनं दोषोत्पादस्तत्र प्रकृत्यादिषु प्रकृतिप्रत्ययागमादेशेषु इक्श्यण्सुडादिषु यत्नश्वरमित्संज्ञालोपाभ्यामदर्शनशीलमक्षरं तत्र । यो मुख्यं पित्रादिकमनुयाति तस्मिन् शिशौ । प्रकृतस्य प्रक्रान्तस्य पदस्य निवृत्त्यभावः तत्रैतेषु अनुबन्धः ॥ ९८ ॥ "विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे" इति विश्वः । परिच्छेदे सीम्नि । बिले गर्ते । कालेऽपि अवधिः । विधाने कर्तव्ये दैवे प्राक्तनशुभाशुभकर्मणि ब्रह्मण्यपि विधिः ॥ ९९ ॥ बुधवृद्धौ धान्तौ पण्डितेऽपि वर्तेते । अपिशब्दाद्बुधः सौम्ये । वृद्धः स्थविरे । समुदये समूहे । यथा । अनलस्कन्धवपुष इति । अपिशब्दात्काण्डे नृपेंऽसे च । "स्कन्धः प्रकाण्डे कायेंऽसे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च" इति हैमः । देशभेदेऽब्धौ समुद्रे सिन्धुशब्दः पुंसि । "इभदाने च" । नदीसामान्ये तु स्त्रीलिङ्गे । "सिन्धुः समुद्रे नद्यां च नदे देशेभदानयोः" इति विश्वः ॥ १०० ॥ विधौ विधाने । प्रकारे विधाशब्दः स्यात् । यथा द्विविधं किंविधमित्यादि । अपिशब्दाद्वार्धुषिके सज्जने "चारावपि" साधुः । जाया भार्या स्नुषा पुत्रस्य पत्नी तत्र स्त्रीमात्रे च वधूः । जायास्नुषयोः पार्थक्यं वर्तत इति द्योतनाय

101-105.



वधूर्जाया स्नुषा स्त्री च सुधा लेपोऽमृतं स्नुही ॥ १०१ ॥
सन्धा प्रतिज्ञा मर्यादा श्रद्धा संप्रत्ययः स्पृहा ॥
मधु मद्ये पुष्परसे क्षौद्रेऽप्यन्धं तमस्यपि ॥ १०२ ॥
अतस्त्रिषु समुन्नद्धौ पण्डितम्मन्यगर्वितौ ॥
ब्रह्मबन्धुरधिक्षेपे निर्देशेऽथावलम्बितः ॥ १०३ ॥
अविदूरोऽप्यवष्टब्धः प्रसिद्धौ ख्यातभूषितौ ॥ इति धान्ताः ॥
सूर्यवह्नी चित्रभानू भानू रश्मिदिवाकरौ ॥ १०४ ॥
भूतात्मानौ धातृदेहौ मूर्खनीचौ पृथग्जनौ ॥
ग्रावाणौ शैलपाषाणौ पत्त्रिणौ शरपक्षिणौ ॥ १०५ ॥
तरुशैलौ शिखरिणौ शिखिनौ वह्निबर्हिणौ ॥

पृथक् तद्ग्रहणम् । देवालयादि येन लिप्यते सः लेपश्चूर्णविशेषः । "सुधा प्रासादभाक् द्रव्यं सुधा विद्युत्सुधामृतम् । सुधाहिभोजनं ज्ञेयं सुधा धात्री सुधा स्नुही" इति मञ्जरी ॥ १०१ ॥ प्रतिज्ञा स्वीकारः । तत्र यथा सत्यसन्धः । संप्रत्यय आदरः । स्पृहा काङ्क्षा तत्र श्रद्धेति । क्षौद्रे माक्षिके । दैत्यचैत्रवसन्तेषु द्रुभेदे च पुमान् मधुः । अक्षिहीनेऽप्यन्धशब्दः । "अन्धस्तु तिमिरे क्लीबं चक्षुर्हिनेऽभिधेयवत्" इति विश्वः ॥ १०२ ॥ अतः परे धान्तवर्गपर्यन्तास्त्रिषु । पण्डितमात्मानं मन्यते पण्डितंमन्यः । अधिक्षेपे निन्दाप्रयोगे यथा । हे ब्रह्मबन्धो दुष्टोऽसीति । "ब्रह्मबन्धुरधिक्षेपे निर्देशे च द्विजन्मनाम्" इति विश्वः ॥ १०३ ॥ अवलम्बितः आश्रितः । अविदूरः सन्निहितः । उभाववष्टब्धौ । "ष्टभि प्रतिस्तम्भे" "स्तम्भु रोधने" वा । "अवाच्चालम्बनाविदूर्ययोः" इति षत्वे अवष्टब्धशब्दः साधुः । अपिशब्दाद्बद्धोऽपि । लेशेऽपि गन्धः संबाधो गुह्यसंकटयोर्द्वयोः । बाधा निषेधे दुःखे च ज्ञातृचान्द्रिसुरा बुधाः ॥ इति धान्ताः ॥ अथ नान्तानाह ॥ चित्रा भानवो रश्मयो ययोस्तौ ॥ १०४ ॥ धाता च देहश्च । नीचो हीनजातिः । पृथग्जन इति चतुरक्षरम् । "पृथक्कार्यो जनः पृथग्जनः" । ग्रावा प्रस्तरे जलदे गिराविति । "पत्त्री श्येने रथे काण्डे खगद्रुरथिकाद्रिषु" इति विश्वः ॥ १०५ ॥ बर्ही मयूरः । "शिखी त्वग्नौ वृक्षे केतुग्रहे शरे । चूडावति बलीवर्दे मयूरे कुक्कुटे हयः" इति हैमः । लिप्सा वाञ्छा । उपग्रह अनुकूलनम् । उभौ प्रतियत्नौ "प्रतियत्नस्तु

प्रतियत्नावुभौ लिप्सोपग्रहावथ सादिनौ ॥ १०६ ॥
द्वौ सारथिहयारोहौ वाजिनोऽश्वेषुपक्षिणः ॥
कुलेऽप्यभिजनो जन्मभूम्यामप्यथ हायनाः ॥ १०७ ॥
वर्षार्चिर्व्रीहिभेदाश्च चन्द्राग्न्यर्का विरोचनाः ॥
क्लेशेऽपि वृजिनो विश्वकर्मार्कसुरशिल्पिनोः ॥ १०८ ॥
आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ॥
शक्रो घातुकमत्तेभो वर्षुकाब्दो घनाघनः ॥ १०९ ॥
घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरंतरे ॥
अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः ११० ॥

संस्कारलिप्सोपग्रहणेषु च" इति मेदिनी ॥ १०६ ॥ सारथिरश्वारोहश्च सादिनौ । "सादी तुरङ्गमारोहे निषादिरथिनोरपि" इति हैमः । अश्वो हयः । इषुः शरः पक्षी चैते वाजिनः । कुले कुलमुख्ये च जन्मभूम्यां जननस्थाने अभिजनः । "अभिजनः कुले ख्यातो जन्मभूम्यां कुलध्वजे" इति विश्वः ॥१०७॥ वर्षोऽब्दः । अर्ची रश्मिः व्रीहिभेदश्चैते हायनाः । जहात्युदकमिति हायनो व्रीहिः । जहाति भावानिति हायनो वर्षम् । जिहीते प्राप्नोतीति वा । "हश्च व्रीहिकालयोः" इत्यनेन ण्युट् अनादेशः । प्रह्लादपुत्रेऽपि विरोचनः । कल्मषेऽपि क्लीबं वृजिनम् । "वृजिनः क्लेशे वृजिनं भुग्नेऽघे रक्तचर्मणि" इति हैमः । अर्के सुरशिल्पिनि च विश्वकर्मा ॥ १०८ ॥ अततीत्यात्मा । "अत सातत्यगमने" । मनिन् प्रत्ययः । वर्ष्म देहः । "आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च" इति धरणिः । शक्र इन्द्रः । घातुकश्चासौ मत्तेभश्चेति कर्मधारयः । तथा वर्षुकश्चासावब्दश्चेति । घनाघन इति चतुरक्षरं नाम । शक्रघातुकमत्तेभवर्षुकाब्दा घनाघना इति क्वचित्पाठः ॥१०९॥ मूर्तिगुणे काठिन्ये मेघे च घनः पुंसि । मूर्ते कठिने निरन्तरे सान्द्रे च त्रिषु । "घनं स्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः । ना मुस्ताब्ध्योघदार्ढ्येषु विस्तारे लोहमुद्गरे । त्रिषु सान्द्रे दृढे च" इति मेदिनी । अर्थपशुकुलगुणादिभिर्यो दर्पस्तस्मिन् ज्ञाने प्रणये हिंसायां चाभिमानः ॥ ११० ॥ प्रभौ नृपे च पत्यौ वा

१ 'क्लेशेऽपि'–इत्यत्र 'केशेऽपि'–पाठोऽपि क्वचिद्दृश्यते ॥

वधूर्जाया स्नुषा स्त्री च सुधा लेपोऽमृतं स्नुही ॥ १०१ ॥
सन्धा प्रतिज्ञा मर्यादा श्रद्धा संप्रत्ययः स्पृहा ॥
मधु मद्ये पुष्परसे क्षौद्रेऽप्यन्धं तमस्यपि ॥ १०२ ॥
अतस्त्रिषु समुन्नद्धौ पण्डितम्मन्यगर्वितौ ॥
ब्रह्मबन्धुरधिक्षेपे निर्देशेऽथावलम्बितः ॥ १०३ ॥
अविदूरोऽप्यवष्टब्धः प्रसिद्धौ ख्यातभूषितौ ॥ इति धान्ताः ॥
सूर्यवह्नी चित्रभानू भानू रश्मिदिवाकरौ ॥ १०४ ॥
भूतात्मानौ धातृदेहौ मूर्खनीचौ पृथग्जनौ ॥
ग्रावाणौ शैलपाषाणौ पत्रिणौ शरपक्षिणौ ॥ १०५ ॥
तरुशैलौ शिखरिणौ शिखिनौ वह्निबर्हिणौ ॥

पृथक् तद्ग्रहणम् । देवालयादि येन लिप्यते सः लेपश्चूर्णविशेषः । "सुधा प्रासादभाक् द्रव्यं सुधा विद्युत्सुधामृतम् । सुधाहिभोजनं ज्ञेयं सुधा धात्री सुधा स्नुही" [illegible] स्वीकारः । [illegible] [illegible]द्रादौ राजशब्दः । "राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात्" इति मेदिनी । मृगाङ्कश्चन्द्रः । नर्तकीदूत्यौ वाणिन्यौ । "वाणिनी नर्तकीमत्ताविदग्धावनितासु च" इति मेदिनी । स्रवन्त्यां नद्यां सेनायामपि ॥ १११ ॥ वज्रं कुलिशम् । तडिद्विद्युत् । वन्दावृक्षे विजातीयप्ररोहे । योषिन्मात्रे विलासिन्यामपि कामिनीशब्दो वर्तते । "तनुः काये त्वचि स्त्री स्यात्रिष्वल्पे विरले कृशे" इति मेदिनी । अधोजिह्विका गलकण्ठिका सा सूना । अपिशब्दात्पुत्र्यां वधस्थानेऽपि ॥ ११२ ॥ क्रतुर्यज्ञः । तुच्छके शून्ये मन्दे च वितानं त्रिषु । मन्दे यथा । वितानभूतहृदयः । केतौ ध्वजे उपनिमन्त्रणे निवासेऽपि केतनम् ॥ ११३ ॥ तत्त्वं चैतन्यम् । तपो ब्रह्म यथा ब्रह्मचारीति । वेदादित्रये ब्रह्मशब्दः क्लीबे । विप्रवेधसोः पुंसि । "ऋत्विग्योगभिदोश्च । सूचने आशयप्रकाशनेऽपि" ॥ ११४ ॥ प्रतीवापः क्षीरादौ तक्रादेर्निक्षेपः । जवनं वेगः । आप्यायनं प्रीणनम् । एतदर्थकमातञ्चनम् । लाञ्छनं चिह्नम् । निष्ठानं तेमनम् । अवयवोऽवयवभेदः । स्त्रीपुंसयोरिति यावत् । एतेषु व्यञ्जनं नाम ॥ ११५ ॥ लोकवादे लोकापवादे पश्वादीनां युद्धे च "कुलीनत्वे च" कौलीनम् । निःसरणे ग्रहादेर्निर्गमे उपवने प्रयोजने च

प्रतियत्नावुभौ लिप्सोपग्रहावथ सादिनौ ॥ १०६ ॥
द्वौ सारथिहयारोहौ वाजिनोऽश्वेषुपक्षिणः ॥
कुलेऽप्यभिजनो जन्मभूम्यामप्यथहायनाः ॥ १०७ ॥
वर्षार्चिर्व्रीहिभेदाश्च चन्द्राग्न्यर्का विरोचनाः ॥
क्लेशेऽपि वृजिनो विश्वकर्मार्कसुरशिल्पिनोः ॥ १०८ ॥
आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ॥
शक्रो घातुकमत्तेभो वर्षुकाब्दो घनाघनः ॥ १०९ ॥
घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरंतरे ॥
अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः ११० ॥

संस्कारलिप्सोपग्रहणेषु च" इति मेदिनी ॥ १०६ ॥ सारथिरश्वारोहश्च सादिनौ । "सादी तुरङ्गमारोहे निषादिरथिनोरपि" इति हैमः । अश्वो हयः । [illegible] पक्षी चैते वाजिनः । कुले [illegible] च जन्मभूम्यां जननस्थाने प्रोक्तः" इति विश्वः । पौरुषे उद्योगे । तन्त्रं कुटुम्बकृत्ये स्वात्सिद्धान्ते [illegible] [illegible]मे । सन्निविष्टस्योद्गमे ऊर्ध्वीभवने । "उत्थानमुद्यमे तन्त्रे पौरुषे पुस्तके रणे । प्राङ्गणोद्गमहर्षेषु मलरोगेऽपि न द्वयोः" इति मेदिनी ॥ ११७ ॥ प्रतिरोधे तिरस्कारे । "स्वातन्त्र्यकृत्येऽपि व्युत्थानम्" । मारणाद्यष्टके सैन्ये मेढ्रे च साधनमिति नाम । तत्र मारणे यथा पारदसाधनम् । मृतसंस्कारेऽग्निदाहे । गतौ गमने । द्रव्ये धने । अर्थस्य धनादेर्दापने ॥ ११८ ॥ निर्वर्तनं अर्थनिष्पादनम् । उपकरणं परिकरः । उपाय इति केचित् । अनुव्रज्या अनुगमनम् । दाने त्यागे । न्यासार्पणे निक्षिप्तद्रव्यस्यार्पणे निर्यातनम् ॥ ११९ ॥ भ्रंशे अपाये पतने वा । दोष इत्यस्य प्रत्येकं संबन्धः । कामजदोषस्तु मृगयाद्यूतस्त्रीमद्यपानेषु प्रसक्तिः । कोपजदोषस्तु वाक्पारुष्यादिः । "व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु । दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे" इति मेदिनी । अक्षिलोम्नि चक्षुर्लोम्नि किञ्जल्के केसरे । अणीयसि तन्त्वाद्यंशे अल्पतरे सूत्रांशे । पक्ष्मेति नान्तम् ॥ १२० ॥ तिथिभेदेऽष्टमीदर्शादौ क्षणे उत्सवे पर्व । "पर्व प्रस्तावोत्सवयोर्ग्रन्थौ विषुवदादिषु । दर्शप्रतिपत्सन्धौ च तिथिग्रन्थविशेषयोः" इति हैमः । नेत्रपिधायकचर्मपुटे अध्वनि मार्गे वर्त्म ॥ अकार्ये

अकार्यगुह्ये कौपीनं मैथुनं संगतौ रते ॥ १२१ ॥
प्रधानं परमात्मा धीः प्रज्ञानं बुद्धिचिह्नयोः ॥
प्रसूनं पुष्पफलयोर्निधनं कुलनाशयोः ॥ १२२ ॥
क्रन्दने रोदनाह्वाने वर्ष्म देहप्रमाणयोः ॥
गृहदेहत्विट्प्रभावा धामान्यथ चतुष्पथे ॥ १२३ ॥
सन्निवेशे च संस्थानं लक्ष्म चिह्नप्रधानयोः ॥
आच्छादने संपिधानमपवारणमित्युभे ॥ १२४ ॥
आराधनं साधने स्यादवाप्तौ तोषणेऽपि च ॥
अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि ॥ १२५ ॥
रत्नं स्वजातिश्रेष्ठेऽपि वने सलिलकानने ॥

अकरणार्थे गुह्ये उपस्थे कौपीनम् । कूपपतनमर्हति कौपीनं पापं तत्साधनत्वात्तद्वत् गोप्यत्वाद्वा पुरुषलिङ्गमपि तदाच्छादनत्वाद्वस्त्रमपि । संगतौ भार्यादिसंबन्धे । रते सुरते मैथुनं स्यात् ॥ १२१ ॥ धीः बुद्धिः । महामात्रे । "प्रकृतौ प्रज्ञायां" च प्रधानम् । बुद्धिचिह्नयोः प्रज्ञानम् । "प्रसूनो वाच्यवज्जाते क्लीबं तु फलपुष्पयोः" इति मेदिनी । कुले वंशे ॥ १२२ ॥ आह्वानमारावः । उभे क्रन्दनसंज्ञे । प्रमाणमियत्ता । उभयोर्वर्ष्म । "वर्ष्म देहप्रमाणातिसुन्दराकृतिषु स्मृतम्" इति मेदिनी । गृहादीनि चत्वारि धामशब्दवाच्यानि । "धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः" इति हैमः । चतुष्पथे शृङ्गाटके ॥ १२३ ॥ सन्निवेशे अवयवविभागे संस्थानम् । "संस्थानं त्वाकृतौ मृतौ । चतुष्पथे सन्निवेशे" इति हैमः । "चिह्ने प्रधाने लक्ष्म" । संपिधानं तिरोधानम् । अपवारणं वस्त्रादिना परिवृत्तिः । उभे आच्छादनसंज्ञे । वस्त्रेऽप्याच्छादनम् ॥ १२४ ॥ साधने निष्पादने अवाप्तौ लाभे तोषणे तुष्टौ आराधनं स्यात् । चक्रं रथाङ्गम् । पुरं नगरम् । अध्यासनमाक्रमणं अधिष्ठानं स्यात् ॥ १२५ ॥ स्वजातिश्रेष्ठे रत्नम् । यथा स्त्रीरत्नम् । मणावपि । सलिलं जलम् । काननमरण्यम् । उभे वने । "वनं प्रस्रवणे गेहे प्रवाहेऽम्भसि कानने" इति हैमः । विरले सान्तरे । स्तोकेऽल्पे । तलिनम् । "स्वच्छे च" । "तल प्रतिष्ठायाम्" इति धातोरिनन् । यथा

तलिनं विरले स्तोके वाच्यलिङ्गं तथोत्तरे ॥ १२६ ॥
समानाः सत्समैके स्युः पिशुनौ खलसूचकौ ॥
हीनन्यूनावूनगर्ह्यौ वेगिशूरौ तरस्विनौ ॥ १२७ ॥
अभिपन्नोऽपराद्धोऽभिग्रस्तव्यापद्गतावपि ॥ इति नान्ताः ॥
कलापो भूषणे बर्हे तूणीरे संहतावपि ॥ १२८ ॥
परिच्छदे परीवापः पर्युप्तौ सलिलस्थितौ ॥
गोधुग्गोष्ठपती गोपौ हरविष्णू वृषाकपी ॥ १२९ ॥
बाष्पमूष्माश्रु कशिपु त्वन्नमाच्छादनं द्वयम् ॥

तलिनं वाच्यलिङ्गं तथा उत्तरेऽपि नान्तसमाप्तिपर्यन्तं वाच्यलिङ्गाः ॥ १२६ ॥ सन् पण्डितः समः सदृशः एकश्चैते समानाः स्युः । एकस्मिन्नर्थे यथा । समानोदरौ बन्धू एकोदरावित्यर्थः । खलो दुर्जनः । सूचकः कर्णेजपः उभौ पिशुनौ । "पिशुनं कुङ्कुमेऽपि च । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु" इति मेदिनी । ऊनोऽल्पः गर्ह्यो निन्द्यः द्वावेतौ हीनन्यूनशब्दवाच्यौ । वेगी वेगयुक्तः । शूरो बली ॥ १२७ ॥ अपराद्धोऽपराधवान् । अभिग्रस्तः शत्रुणाक्रान्तः । व्यापद्गतः प्राप्तविपत्कः । एते अभिपन्नवाच्याः । प्रक्षिप्तश्लोकद्वयं लिख्यते । "लेख्ये भूम्यादिदानार्थे यातनाऽऽज्ञा च शासनम् । निदानमवसाने च सार्थे वार्द्धुषिके धनी । कक्षापटेऽपि कौपीनं न ना खेदेऽपि वेदना । ग्रुम्नं बलेऽथ भार्यापि जातिदोषेऽपि लाञ्छनम् ॥" इति नान्ताः ॥ भूषणे अलङ्कारमात्रे । बर्हे मयूरपिच्छे । तूणीरे इषुधौ । संहतौ समुदाये । काञ्च्यां च "कलापशब्दः" ॥ १२८ ॥ परिच्छदः पटमण्डपाद्युपकरणम् । पर्युप्तिः सर्वतो वपनम् । "डुवप् बीजसन्ताने" धातुः । सलिलस्थितौ जलाधारे परीवापः । गां दोग्धीति गोधुग्गोपालः गोष्ठाध्यक्षश्च गोपौ । "गोपो ग्रामौघगोष्ठाधिकृतयोर्वल्लवे नृपे" इति विश्वः । वृषाकपिसंज्ञौ हरो विष्णुश्च "अग्निश्च" ॥ १२९ ॥ उष्मोष्णम् । अश्रु नेत्रोदकं च बाष्पसंज्ञम् । अथवोष्माश्रु इत्येकं बाष्पसंज्ञमिति वदन्ति । अन्नं भोजनम् । आच्छादनं वस्त्रम् । एतत् द्वयं कशिपुसंज्ञम् । वक्ष्यमाणमस्त्रियामिति कशिपौ तल्पे चान्वीयते । अट्टोऽट्टालिका । दाराः स्त्री । अत्र यथा गुरुतल्पः । स्तम्बे तृणादिगुच्छे । अपिशब्दाद्विस्तार-

तल्पं शय्याट्टदारेषु स्तम्बेऽपि विटपोऽस्त्रियाम् ॥ १३० ॥
प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः ॥
भेद्यलिङ्गा अमी कूर्मी वीणाभेदश्च कच्छपी ॥ १३१ ॥
("कुतपो मृगरोमोत्थपटे चाह्नोऽष्टमेंऽशके ॥" इति पान्ताः ॥
रवर्णे पुंसि रेफः स्यात्कुत्सिते वाच्यलिङ्गकः ॥)
इति फान्ताः ॥ (१)
अन्तराभवसत्त्वेऽश्वे गन्धर्वो दिव्यगायने ॥ १३२ ॥
कम्बुर्ना वलये शङ्खे द्विजिह्वौ सर्पसूचकौ ॥
पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वेऽपि पूर्वजान् ॥ १३३ ॥
इति बान्ताः ॥

शाखयोश्च । "पल्लवे विटाधिपेऽपि" विटपः ॥ १३० ॥ अमी प्राप्तरूपादयस्त्रयः पान्ता भेद्यलिङ्गाः बुधे पण्डिते मनोज्ञे मनोहरे च वर्तते । प्राप्तं रूपं येन प्राप्तरूपः । स्वमेव रूपं यस्य स्वरूपः । अभिलक्ष्यं रूपमस्याभिरूपः" । कूर्मी कमठी । वीणाभेदः सारस्वतीवीणा । सरस्वत्यास्तु कच्छपीत्युक्तत्वात् । द्वे कच्छपीसंज्ञे । 'कच्छपी वल्लकीभेदे डुलौ क्षुद्रगदान्तरे" इति विश्वः ॥१३१॥ "कुतपो मृगरोमोत्थपटे चाह्नोऽष्टमेंऽशके" इत्यन्यत्र क्वचित् । इति पान्ताः ॥ रवर्णे राक्षरे रेफः पुंसि । यथा रेफे परे लोपः । कुत्सिते रेफो वाच्यलिङ्गकः । शिफा शिखायां सरिति मांसिकायां च मातरि । शर्फ मूले तरूणां स्याद्गवादीनां खुरेऽपि च ॥ गुम्फः स्याद्गुम्फने बाहोरलङ्कारे च कीर्तितः । इति सार्धं पद्यं मूलादितरत् ॥ इति फान्ताः ॥ अथ बवयोः सावर्ण्यत्वात् बान्तान्वान्तांश्चाह । यो मरणजन्मनोरन्तराले स्थितः प्राणी सोऽन्तराभवसत्त्वः तस्मिन् । अश्वे घोटके । दिव्यगायने विश्वावसुप्रभृतौ । गायनमात्रे च गन्धर्वः । "गन्धर्वस्तु नभश्चरे । पुंस्कोकिले गायने च मृगभेदे तुरङ्गमे । अन्तराभवदेहे च" इति हैमः ॥ १३२ ॥ ना पुंसीत्यर्थः । गजशम्बूकयोरपि कम्बुः । "ग्रीवायां च" । सूचकः पिशुनः । पूर्वशब्दः प्राग्वाची वाच्यलिङ्गकः । यथा । पूर्वा नदी पूर्वो ग्रामः पूर्वं वनम् । यदा तु पूर्वजान् पितामहादीनाह तदा पुंसि बहुत्वे वर्तते । यल्लस्वम् । पूर्वेषामपि पूर्वजाः इति । "पूर्वे स्युः पूर्वजाः पूर्वे ज्ञातयः" इति वररुचिः । प्राक् पूर्वमग्रत इति च ॥ १३३ ॥ इति बान्ताः ॥ घटः कलशः इभस्य गजस्य

१ इदं पद्यमपि तालपत्रपुस्तके नास्ति ॥

कुम्भौ घटेभमूर्द्धांशौ डिम्भौ तु शिशुबालिशौ ॥
स्तम्भौ स्थूणाजडीभावौ शम्भू ब्रह्मत्रिलोचनौ ॥ १३४ ॥
कुक्षिभ्रूणार्भका गर्भा विस्रम्भः प्रणयेऽपि च ॥
स्याद्भेर्यां दुन्दुभिः पुंसि स्यादक्षे दुन्दुभिः स्त्रियाम् ॥१३५॥
स्यान्महारजने क्लीबं कुसुम्भं करके पुमान् ॥
क्षत्रियेऽपि च नाभिर्ना सुरभिर्गवि च स्त्रियाम् ॥ १३६ ॥
सभा संसदि सभ्ये च त्रिष्वध्यक्षेऽपि वल्लभः ॥इति भान्ताः॥
किरणप्रग्रहौ रश्मी कपिभेकौ प्लवङ्गमौ ॥ १३७ ॥
इच्छामनोभवौ कामौ शौर्योद्योगौ पराक्रमौ ॥

मूर्द्धांशः शिरोभागः । "कुम्भः स्यात्कुम्भकर्णस्य सुते वेश्यापतौ घटे ॥ राशिभेदे द्विपाङ्गे च" इति विश्वः । बालिशो मूर्खः । स्थूणा गृहस्तम्भः । जडीभावो जडत्वम् । "शम्भुर्ब्रह्मार्हतोः शिवः" इति हैमः ॥ १३४ ॥ भ्रूणो गर्भस्थो जन्तुः । अर्भकः शिशुः । एते गर्भाः । "गर्भः कुक्षौ शिशौ सन्धौ भ्रूणे पनसकण्टके" इति हैमः । प्रणये शृङ्गारप्रार्थनायां अपिशब्दाद्विश्वासादौ विस्रम्भः विश्रम्भोऽपि । "विश्रम्भः केलिकलहे विश्वासे प्रणये वधे" इति विश्वहैमौ ॥ दुन्दुभिर्भेर्यां पुंसि । अक्षे बालक्रीडोपकरणे तितरिंगि इति देशान्तरप्रसिद्धे स्त्रियाम् । "दुन्दुभिः पुमान् । वरुणे दैत्यभेर्योश्च स्याक्षबिन्दुत्रिकद्वये" इति मेदिनी ॥ १३५ ॥ महारजने पुष्पभेदे । येन रक्तं वस्त्रं कौसुम्भम् । करके कमण्डलौ । क्षत्रिये नाभिः पुंसि । अपिशब्दान्मुख्यनृपे चक्रमध्ये च । प्राण्यङ्गे तु द्वयोः । मृगभेदे तु स्त्रियाम् । गवि सौरभेय्याम् । सुरभिः स्त्री । चकाराद्वसन्तजातीफलचम्पकेषु ना । सुगन्धिमनोज्ञयोस्त्रिषु । "सुवर्णे पङ्कजे च क्लीबम्" ॥ १३६ ॥ संसदि सदसि । सभ्यः सदस्यः । "स्त्रियां सामाजिके गोष्ठ्यां द्यूतमन्दिरयोः सभा" इति रभसः" । अपिशब्दाद्दयिते । कुलीनाश्वे च वल्लभः । "वल्लभो दयितेऽध्यक्षे सलक्षणतुरङ्गमे" इति कोशान्तरात् ॥ इति भान्ताः ॥ अथ मान्तानाह । अश्वादेर्बन्धनरज्जुः प्रग्रहः । "रश्मिः पुमान् दीधितौ स्यात्पक्ष्मप्रग्रहयोरपि" इति मेदिनी ॥ १३७ ॥ मनोभवो मदनः । शौर्यं सामर्थ्यम् । पुण्यादौ षट्के धर्मशब्दस्तत्र । यमोऽन्तकः । न्याये यथा धर्मा-

धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः ॥ १३८ ॥

उपायपूर्व आरम्भ उपधा चाप्युपक्रमः ॥
वणिक्पथः पुरं वेदो निगमो नागरो वणिक् ॥ १३९ ॥

नैगमौ द्वौ बले रामो नीलचारुसिते त्रिषु॥
शब्दादिपूर्वो वृन्देऽपि ग्रामः क्रान्तौ च विक्रमः ॥ १४०॥

स्तोमः स्तोत्रेऽध्वरे वृन्दे जिह्मस्तु कुटिलेऽलसे ॥
उष्णेऽपि घर्मश्चेष्टालङ्कारे भ्रान्तौ च विभ्रमः ॥ १४१ ॥

गुल्मा रुक्स्तम्बसेनाश्च जामिः स्वसृकुलस्त्रियोः ॥

ध्यक्षः। स्वभावे यथा क्रूरधर्मा । आचारे धर्मशास्त्रोक्ते । सोमं पिबति स सोमपाः ॥ १३८ ॥ उपायं ज्ञात्वा य आरम्भः स उपायपूर्वः । अमात्यशीलपरीक्षोपाय उपधा। चिकित्सायां चोपक्रमः । "उपक्रमः स्यादुपधा चिकित्सारम्भविक्रमः" इति विश्वः । वणिक्पथो वाणिज्यम् । पुरं नगरम् । वेद आम्नायः। एते निगमाः। "निगमो वाणिजे पुर्यां कटे वेदे वणिक्पथे" इति मेदिनी । नगरे भवो नागरः वणिक् चैतौ "द्वौ" नैगमौ । "नैगमः स्यादुपनिषद्वणिजोर्नागरेऽपि च" इति मेदिनी ॥ १३९ ॥ बले बलदेवे पुंसि। नीलादिषु त्रिलिङ्गो रामशब्दः । नीलोऽसितः । चारुः मनोज्ञः । "रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे । राघवे चासिते श्वेते मनोज्ञेऽपि च वाच्यवत्" इति कोशान्तरम् । शब्दादिपूर्वो ग्रामशब्दो वृन्दे वर्तते । यथा शब्दग्रामः। अपिशब्दात्संवसथे "स्वरे च" ग्रामः। क्रान्तिर्विक्रमणं पराक्रमे च विक्रमः ॥ १४० ॥ क्वचिदत्र स्तोमेत्यादिपद्यममूलकमस्ति । अपिशब्दात्स्वेदाम्भसि घर्मः। चेष्टालङ्कारो हावः। शोभायां च विभ्रमः" ॥ १४१ ॥ रुक् रोगभेदः प्लीहाख्यः। स्तम्बः कुशादिगुच्छो बेट इति ख्यातः। सैन्यरक्षणे च गुल्मशब्दः। "गुल्मः सेनाघट्टभिदोः । सैन्यरक्षणरुग्भिदोः स्तम्बः" इति मेदिनी । स्वसा भगिनी । कुलस्त्री कुलवधूः तयोर्जामिशब्दः । "प्रहरे संयमे यामो यामिः स्वसृकुलस्त्रियोः" इति रभसात् । "यामिः कुलस्त्रीस्वस्रोः स्त्री" इति कोशान्तराच्च अन्तस्थादिरपि । क्षितिर्भूमिः। क्षान्तिस्तितिक्षा तयोः क्षमा । युक्ते योग्ये "क्षमम्" शक्ते हिते क्षमस्त्रिलिङ्गः । "धरणिस्तु

क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु ॥ १४२ ॥
त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशा ॥
ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु ॥ १४३ ॥
सूक्ष्ममध्यात्ममप्याद्ये प्रधाने प्रथमस्त्रिषु ॥
वामौ वल्गुप्रतीपौ द्वावधमौ न्यूनकुत्सितौ ॥ १४४ ॥
जीर्णं च परिभुक्तं च यातयाममिदं द्वयम् ॥ इति मान्ताः ॥
तुरङ्गगरुडौ तार्क्ष्यौ निलयापचयौ क्षयौ ॥
श्वशुर्यौ देवरश्यालौ भ्रातृव्यौ भ्रातृजद्विषौ ॥ १४५ ॥

योग्ये शक्ते हिते क्षममित्याह" ॥ १४२ ॥ हरित्पालाशः । कृष्णः कालः उभौ श्यामौ । शारिवा शतावरी निशा च श्यामा । "श्यामो वटे प्रयागस्य वारिदे वृद्धदारके । पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु । मरीचे सिन्धुलवणे क्लीबं स्त्री शारिवौषधौ । अप्रसूताङ्गनायां च प्रियङ्गावपि चोच्यते । यमुनायां त्रियामायां कृष्णात्रिवृतिकौषधौ । नीलिकायाम्" इति मेदिनी । पुण्ड्रमश्वादीनां ललाटचित्रम् । अश्वो घोटकः । "भूषा सामीप्यादश्वस्यैव" । प्रधानमेव प्राधान्यम् । केतुर्ध्वजः षट्सु ललामम् । "ललामेत्यपि । "प्रधानध्वजशृङ्गेषु पुण्ड्रवालधिलक्ष्मसु ॥ भूषावाजिप्रभावेषु ललामं स्याल्ललाम च" इति रुद्रः ॥ १४३ ॥ अध्यात्मं आत्मन्यधिकृतं लिङ्गदेहम् । अपिशब्दात्कैतवे । "सूक्ष्मे स्यात्कैतवेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके" इति मेदिनी । आद्ये आदौ प्रधाने मुख्ये प्रथमः । त्रिष्विति यावन्मान्तमधिकारः । प्रतीपो विपरीतः । वल्गुर्यथा । वामलोचनाः स्त्रियः । "वामः कामे सव्ये पयोधरे । उमानाथे प्रतीकूले चारौ वामा तु योषिति" इति हैमः । न्यूनश्च कुत्सितश्चाधमौ ॥ १४४ ॥ जीर्णं प्राप्तपरिणामम् । परिभुक्तं भुक्तोज्झितम् । द्वयं यातयामसंज्ञम् । यातः यामः उपभोगकालो यस्य । तदुक्तं हैमे । "यातयामोऽन्यवजीर्णे परिभुक्तोज्झितेऽपि च" इति ॥ इति मान्ताः ॥ अथ यान्तानाह । अश्वगरुडौ तार्क्ष्यसंज्ञौ । "तार्क्ष्यस्तु स्यन्दने वाहे गरुडे गरुडाग्रजे ॥ अश्वकर्णाह्वयतरौ स्यात्" इति हैमः । निलयो गृहम् । अपचयो ह्रासः । उभौ क्षयौ । "क्षयो गेहे कल्पान्तेऽपचये रुजि" इति हैमः । श्यालो भार्याभ्राता । श्वशुरस्यापत्यं श्वशुर्यः । भ्रातृपुत्रः शत्रुपुत्रश्च भ्रातृव्यौ ॥ १४५ ॥ रसदब्दो ध्वन-

पर्जन्यौ रसदब्देन्द्रौ स्यादर्यः स्वामिवैश्ययोः ॥
तिष्यः पुष्ये कलियुगे पर्यायोऽवसरे क्रमे ॥ १४६ ॥

प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु ॥
रन्ध्रे शब्देऽथानुशयो दीर्घद्वेषानुतापयोः ॥ १४७ ॥

स्थूलोच्चयस्त्वसाकल्ये नागानां मध्यमे गते ॥
समयाः शपथाचारकालसिद्धान्तसंविदः ॥ १४८ ॥

व्यसनान्यशुभं दैवं विपदित्यनयास्त्रयः ॥
अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽप्यथापदि ॥ १४९ ॥

दम्बुदः । इन्द्रः शक्रः । उभौ पर्जन्यौ । "मेघशब्देऽपि पर्जन्यः" प्रभुवैश्ययोरर्यः । पुष्यर्क्षे तुर्ययुगे च तिष्यः । अवसरे प्रस्तावे क्रमे च पर्यायः । "पर्यायस्तु प्रकारे स्यान्निर्माणेऽवसरे क्रमे" इति विश्वः ॥ १४६ ॥ प्रत्ययनं प्रत्ययः । प्रतीयते अनेन वा प्रत्येतीति वा प्रत्ययः । "इण्गतौ" "एरच्" अथवा पचादित्वात् साधुः । अधीनादिषु सप्तसु प्रत्ययशब्दस्तत्राऽधीने यथा । राजप्रत्ययाः प्रजाः । शपथः शपनम् । ज्ञाने यथा । प्रत्यक्षप्रत्ययः । विश्वासे यथा । न शत्रोः प्रत्ययं गच्छेत् । हेतौ यथा । गार्हस्थ्यं भार्याप्रत्ययम् । रन्ध्रे छिद्रे । शब्दे यथा । चिकीर्षतीत्यत्र सन् प्रत्ययः । "प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु । प्रथितत्वे च सन्नादावधीनज्ञानयोरपि" इति विश्वः । चिरद्वेषे पश्चात्तापे चानुशयः । "अनुबन्धे च" ॥ १४७ ॥ असाकल्येऽकार्त्स्न्ये । नागानां हस्तिनां यत्र शीघ्रं नापि मन्दं गमनं तत्रेत्यर्थः । स्थूलोच्चयो गण्डोपलेऽपि च । "गजानां मध्यमगतेऽप्यसाकल्यकरण्डयोः" इति मेदिनी । शपथादयः समयाः । तत्र शपथे यथा । कृतसमयोऽपि चोरो दण्ड्यः । संवित् संभाषा । "समयः शपथे भाषासंपदोः कालसंविदोः । सिद्धान्ताचारसंकेतनियमावसरेषु च । क्रियाकारे च निर्देशे" इति हैमः ॥ १४८ ॥ व्यसनानि द्यूतादीनि । अशुभमिति दैवविशेषणम् । विपद्विपत्तिरेतत्त्रयं अनयसंज्ञम् । अशुभदैवे यथा । निःस्वोऽभूदनयेन सः । अतिक्रमे उल्लङ्घने । "अपिशब्दात् नाशे चात्ययः" । आपदादित्रये संपरायः ॥ १४९ ॥ आयतिः उत्तरकालः । अपिशब्दात्पूजार्हेऽपि पूज्यः । सेनायाः पृष्ठभागे

युद्धायत्योः संपरायः पूज्यस्तु श्वशुरेऽपि च ॥
पश्चादवस्थायिबलं समवायश्च संनयौ ॥ १५० ॥
संघाते सन्निवेशे च संस्त्यायः प्रणयास्त्वमी ॥
विस्रम्भयाच्ञाप्रेमाणो विरोधेऽपि समुच्छ्रयः ॥ १५१ ॥
विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि ॥
निर्यासेऽपि कषायोऽस्त्री सभायां च प्रतिश्रयः ॥ १५२ ॥
प्रायो भूम्न्यन्तगमने मन्युर्दैन्ये क्रतौ क्रुधि ॥
रहस्योपस्थयोर्गुह्यं सत्यं शपथतथ्ययोः ॥ १५३ ॥
वीर्यं बले प्रभावे च द्रव्यं भव्ये गुणाश्रये ॥
धिष्ण्यं स्थाने गृहे भेऽग्नौ भाग्यं कर्म शुभाशुभम् ॥ १५४ ॥
कशेरुहेम्नोर्गाङ्गेयं विशल्या दन्तिकाऽपि च ॥

तिष्ठति यत्सैन्यं तत्पश्चादवस्थायिबलम् । समवायः समूहः । उभौ संनयौ ॥ १५० ॥ सन्निवेशे स्थानविशेषे "विस्तृतौ च संस्त्यायः" । अमी विस्रम्भादयस्त्रयः प्रणयाः । विस्रम्भो विश्वासः । "प्रसरश्च प्रणयः" । "वैरोन्नत्योः समुच्छ्रयः" इति रभसः ॥ १५१ ॥ यस्य मत्स्यादेर्यो जलादिर्ज्ञातो नित्यसेवितस्तस्य तत्र विषयः । शब्दादिकाः शब्दस्पर्शरूपरसगन्धाश्च विषयाः । देशगोचरौ विषयौ । निर्यासः क्वाथरसः । अपिशब्दाद्विलेपनादौ । "कषायो रसभेदे स्यादङ्गरागे विलेपने" इति विश्वः । आश्रये "अभ्युपगमे" च प्रतिश्रयः ॥ १५२ ॥ भूम्नि बाहुल्ये । यथा प्रायेण ब्राह्मणा भोज्याः । बाहुल्येनेत्यर्थः । अन्तो नाशो गम्यतेनेन । तत्रानशने यथा । प्रायोपवेशः कृतः । "प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि" इति विश्वः । क्रतौ यज्ञे कोपे च मन्युः । "शोके च" । रहस्यं गोप्यम् । तथ्यमृतम् । "कृतयुगे च सत्यम्" ॥ १५३ ॥ बलं सामर्थ्यम् । प्रभावस्तेजोविशेषः । तत्र वीर्यम् । "वीर्यं तेजःप्रभावयोः । शुक्रे शक्तौ च" इति हैमः । भव्ये सत्त्वे गुणाश्रये पृथिव्यादौ द्रविणे च द्रव्यम् । "द्रव्यं भव्ये धने क्ष्मादौ जतुद्रुमविकारयोः । विलेपे भेषजे रीत्याम्" इति हैमः । भे नक्षत्रे । अग्नौ वह्नौ । शुभाशुभमिति शुभमशुभं वा जन्मान्तरीयं यत्कर्म तद्भाग्यमित्युच्यते । ऐश्वर्येऽपि ॥ १५४ ॥ कशेरु स्वनाम्नैव ख्यातम् । दन्तिका निकुम्भः । अपिशब्दादग्निशिखा गुडूच्यपि विशल्या । "त्रिपुटायां च" । श्रीर्लक्ष्मीः । "वृषाकपायी जीवन्त्यां

वृषाकपायी श्रीगौर्योरभिख्या नामशोभयोः ॥ १५५ ॥
आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् ॥
उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः ॥ १५६ ॥
छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः ॥
कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने ॥ १५७ ॥
कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः ॥
जन्यं स्याज्जनवादेऽपि जघन्योऽन्त्येऽधमेऽपि च ॥ १५८ ॥

शतावर्युमयोः श्रियाम्" इति हैमः । नामाभिधानम् । शोभा कान्तिः तत्राभिख्येति । "अभिख्या त्वभिधाने स्याच्छोभायां च यशस्यपि" इति मेदिनी ॥ १५५ ॥ आरम्भादयो नव शब्दाः क्रियाशब्दवाच्यास्तत्रारम्भे यथा । सर्वाः क्रिया मन्त्रमूला नृपाणाम् । निष्कृतौ प्रायश्चित्ते यथा । "महापातकिनां पुंसां क्रिया प्राणान्तिका स्मृता" । शिक्षायां यथा । "क्रिया हि वस्तूपहिता प्रसीदति" । पूजने यथा । देवक्रियापरस्तपस्वी । संप्रधारणं विचारः । तत्र यथा । क्रियां विना को हि जानाति कृत्यम् । उपाये यथा । सप्त सामादिकाः क्रियाः । कर्मणि यथा । निष्क्रियस्य कुतः सुखम् । चेष्टायां यथा । मृतः किं निष्क्रियो यतः । चिकित्सायां यथा । "पूर्वं ज्वरे समुत्पन्ने क्रिया पूर्वज्वरानुगा" ॥ १५६ ॥ सूर्यप्रियादिचतुष्के छायाशब्दः । सूर्यप्रिया शनैश्चरमाता । कान्तौ यथा । विच्छायः । प्रतिबिम्बे यथा । संछाय आदर्शः । आतपाभावे यथा । नष्टच्छायो मध्याह्नः । "छाया पङ्क्तौ प्रतिमायामर्कयोषित्यनातपे । उत्कोचे पालने कान्तौ शोभायां च तमस्यपि" इति मेदिनी । हर्म्यादेः राजगृहादेः प्रकोष्ठेऽन्तर्गृहे । यथा । सप्त कक्ष्या अतिक्रम्येति । काञ्ची मेखला । मध्येभबन्धने वरत्रायाम् । मध्ये भागे यदिभबन्धनं तत्रेत्यर्थः । "कक्ष्या गृहप्रकोष्ठे स्यात्सादृश्योद्योगकाञ्चिषु । बृहत्तिकेभनाड्योश्च" इति हैमः ॥ १५७ ॥ क्रिया कर्म । कृत्या देवतानामसद्दैवतविशेषः । यल्लक्ष्यं भागवते । "तया स निर्ममे तस्मै कृत्यां कालानलोपमाम्" इति । क्रियायां यथा । कां कां कृत्यामकार्षीः । धनस्त्रीभूम्यादिभिर्भेदनीयो यः परराष्ट्रगतपुरुषादिस्तत्र कृत्याशब्दो वाच्यलिङ्गः । जनवादे निन्दितवादे । अपिशब्दाद्युद्धादौ । "जन्यं हट्टे परीवादे संग्रामे च नपुंसकम्" इति मेदिनी । अन्त्येऽधमे च जघन्यः । अपिशब्दाच्छिश्ने । "जघन्यं हेमले क्लीबं चरमे गर्हितेऽन्यवत्" इति मेदिनी ॥ १५८ ॥ चक्रा-

गर्ह्याहीनौ च वक्तव्यौ कल्यौ सज्जनिरामयौ ॥
आत्मवाननपेतोऽर्थादर्थ्यौ पुण्यं तु चार्वपि ॥ १५९ ॥
रूप्यं प्रशस्तरूपेऽपि वदान्यो वल्गुवागपि ॥
नाय्येऽपि मध्यं सौम्यं तु सुन्दरे सोमदैवते ॥ १६० ॥
इति यान्ताः ॥

निवहावसरौ वारौ संस्तरौ प्रस्तराऽध्वरौ ॥
गुरू गीष्पतिपित्राद्यौ द्वापरौ युगसंशयौ ॥ १६१ ॥
प्रकारौ भेदसादृश्ये आकाराविङ्गिताकृती ॥

राद्वचनार्हेपि वक्तव्यशब्दः । "वक्तव्यं कुत्सितेऽहीने वचनार्हे च वाच्यवत्" इति मेदिनी । अहीनस्थाने अधीन इति कुत्रचित्पाठो दृश्यते । सज्जः सोपकरणः । निरामयो नीरोगः । उभौ कल्यौ । कलासु साधुः कल्यः । उषस्यपि कल्यम् । "कल्यं प्रभाते क्लीबं स्यात्कल्यो वाक्श्रुतिवर्जिते । सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च । उपायवचनेऽपि स्यात्" इति मेदिनी । आत्मवान् धीमान् । अर्थाद्योऽनपेतः अपगतो न भवति स चार्थ्यः "अर्थ्यः संप्रार्थ्ये न्याय्यविज्ञयोः" इति हैमः । चारु सुन्दरं अपिशब्दात्सुकृतधर्मयोः "पावने च" पुण्यम् । "पुण्यं त्रिषु मनोज्ञे स्यात्क्लीबं सुकृतधर्मयोः" इति विश्वः ॥ १५९ ॥ प्रशस्तं रूपं यस्य तस्मिन् । "रूपादाहतप्रशंसयोर्यप्" इति सूत्रेण साधुः । अपिशब्दात् । "रूप्यं स्यादाहतस्वर्णरजते रजतेऽपि च । रम्ये प्रशस्तरूपे तु वाच्यवत्" इति विश्वः । अपिशब्दाद्दातर्यपि वदान्यः । न्याय्ये उचितेऽपिशब्दादवलग्ने च । "न्याय्यावलग्नयोर्मध्यमन्तरे चाधमे त्रिषु" इति रभसः । सोमदैवते यथा । सोमश्चन्द्रो दैवतमस्य सौम्यं हविः । "सौम्यो ज्ञे ना त्रिष्वनुग्रे मनोज्ञे सोमदैवते" इति मेदिनी ॥ १६० ॥ "सर्वज्ञभिषजौ वैद्यौ कुल्या कुलवधूः सरित् । फलकल्याणयोर्भव्यं योग्यं सांप्रतिके त्रिषु ॥ १ ॥ क्रियाचारातिक्रमेऽपि जलाधारेऽपि चाशयः ॥ दैत्याचार्येऽपि धिष्ण्यो ना कषायः सुरभावपि ॥ २ ॥ चन्द्रोदये वितानेऽपि स्यादाम्नायोऽन्वये श्रुतौ ॥ इदं सार्धं श्लोकद्वयं कुत्रचित्पुस्तके मूलेऽपि दृश्यते ॥ इति यान्ताः ॥ अथ रान्तानाह । निवहो वृन्दः । अवसरः प्रस्तावः उभौ वारौ । वारः सूर्यादिदिवसे वारोऽवसरवृन्दयोरिति । प्रस्तरो दर्भमुष्टिर्दर्भशय्या वा । अध्वरः क्रतुरुभौ संस्तरौ । आद्यशब्दाद्वेदशास्त्राध्यापकश्च गुरुः ॥ १६१ ॥ भेदो विशेषो यथा ।

किंशारू सस्यशूकेषू मरू धन्वधराधरौ ॥ १६२ ॥
अद्रयो द्रुमशैलार्काः स्त्रीस्तनाब्दौ पयोधरौ ॥
ध्वान्तारिदानवा वृत्रा बलिहस्तांशवः कराः ॥ १६३
प्रदरा भङ्गनारीरुग्बाणा अस्राः कचा अपि ॥
अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्ना च तूबरौ ॥ १६४ ॥
स्वर्णेऽपि राः परिकरः पर्यङ्कपरिवारयोः ॥
मुक्ताशुद्धौ च तारः स्याच्छारो वायौ स तु त्रिषु ॥१६५॥
कर्बुरेऽथ प्रतिज्ञाजिसंविदापत्सु संगरः ॥

पलाण्डुभेदा गृञ्जनादयः । सादृश्यं यथा । मर्कटप्रकारं करोति । इङ्गितं चेष्टितम् । "किंशारुर्ना सस्यशूके विशिखे कङ्कपक्षिणि" इति मेदिनी । सस्य-स्थाने धान्य इति क्वचित् पाठः ॥ धन्वा निर्जलदेशः । धराधरः पर्वतः सोऽपि मरुस्थलीसंबन्धान्मरुः ॥ १६२ ॥ द्रुमशैलार्केषु अद्रिशब्दो वर्तते । स्त्रियाः स्तनः कुचः अब्दो मेघः । उभौ पयोधरौ "पयोधरः कोशकारे नालिकेरे स्तनेऽपि च ॥ कशेरुमेघयोः पुंसि" इति मेदिनी । अरिः शत्रुः । दानवो दनुजभेदः । "वृत्रो मेघे रिपौ ध्वान्ते दानवे वासवे गिरौ" इति हैमः । राज्ञा ग्राह्यभागो बलिः । अंशू रश्मिः ॥ १६३ ॥ नारीरुक् स्त्रीणां रोगभेदः । "प्रदरो रोगभेदे स्याद्विदारशरभङ्गयोः" इति । कचाः केशाः । अपिशब्दात्कोणेऽप्यस्रः । न जाते शृङ्गे यस्य स एवंभूतो गौः । काले श्मश्रू-त्थानसमयेऽपि यो ना पुरुषोऽश्मश्रुः श्मश्रुरहितस्तावुभावपि तूबरौ । "काल इत्युभाभ्यां संबध्यते । तूबरोऽश्मश्रुपुरुषे प्रौढाशृङ्गारकेऽपि च । पुरुषे व्यञ्ज-नत्यक्ते स्यात्कषायरसेऽपि च" इति मेदिनी ॥ १६४ ॥ अपिशब्दाद्वित्तमात्रे रा इत्येकाक्षरम् । "भवेत्परिकरो व्राते पर्यङ्कपरिवारयोः । "प्रगाढगात्रिका-बन्धे विवेकारम्भयोरपि" इति विश्वः ।"यत्नारम्भौ परिकरौ" इति त्रिकाण्डशेषः। तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके । "तारं च रजतेऽत्युच्चस्वरेऽप्यन्य-वदीरितम्" इति विश्वः । स तु शारशब्दः। कर्बुरः शबलवर्णः । शारः स्याच्छ-बले वाच्यलिङ्गः पुंसि समीरणे ॥ १६५ ॥ आजिर्युद्धम् । संवित् क्रियाकारः । प्रतिज्ञायां यथा । सत्यसंगरः । "संगरो युधि चापदि । क्रियाकारे विषे चाङ्गीकारे क्लीबं शमीफले" इति मेदिनी । गुप्तवादे रहसिकर्तव्यावधा-

वेदभेदे गुप्तवादे मन्त्रो मित्रो रवावपि ॥ १६६ ॥
मखेषु यूपखण्डेऽपि स्वरुर्गुह्येऽप्यवस्करः ॥
आडम्बरस्तूर्यरवे गजेन्द्राणां च गर्जिते ॥ १६७ ॥
अभिहारोऽभियोगे च चौर्ये सन्नहनेऽपि च ॥
स्याज्जङ्गमे परीवारः खड्गकोशे परिच्छदे ॥ १६८ ॥
विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम् ॥
द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे ॥ १६९ ॥
विपुले नकुले विष्णौ बभ्रुर्ना पिङ्गले त्रिषु ॥
सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु ॥ १७० ॥

रणे मन्त्रः । "मन्त्रो देवादिसाधने । वेदांशे गुप्तवादे च" इति हैमः । अपिशब्दात्सख्यौ मित्रं क्लीबम् । मित्रं सुहृदि न द्वयोरित्युक्तत्वात् ॥ १६६ ॥ "यूपे तक्ष्यमाणे प्रथमपतितं शकलं यूपखण्डम्" । अपिशब्दाद्दम्भौलौ च स्वरुः । स्वरुर्वज्रध्वनौ बाणे यूपखण्डेऽपि च स्वरुः । गुह्ये उपस्थे । अपिशब्दाद्गूथेऽप्यवस्करः । तूर्यरवो वाद्यध्वनिः । "आडम्बरः समारम्भे गजगर्जिततूर्ययोः" इति कोशान्तरम् ॥ १६७ ॥ अभियोगोऽभिग्रहणम् । चोरस्य कर्म चौर्यम् । सन्नहनं कवचादिग्रहणम् । एतेष्वभिहारः । जङ्गमे जङ्गमविशेषे परिजन इति यावत् । खड्गकोशे असिपिधायके चर्मादौ परिच्छदे उपकरणे परीवारः ॥ १६८ ॥ विटपी वृक्षः । दर्भमुष्टिपरिमाणं तु । पञ्चाशता भवेद्ब्रह्मा तदर्धेन तु विष्टर इत्यादि । पीठमाद्यं यस्य तदासनं च विष्टरः । आद्यशब्दात् कृष्णाजिनादि । अत्र पीठं काष्ठादिमयमासनम् । द्वाःस्थे द्वारपाले प्रतीहारः । अनन्तरोक्ते प्रतीहारे प्रतीहारीत्यपि शब्दः । स तु पुंव्यक्तावपि स्त्रियाम् । "उपसर्गस्य घञि" इति दीर्घः । गौरादित्वात् ङीष् । अपिशब्दात् "द्वाःस्थितायां च योषिति" इति मेदिनी । अयमिकन्त इति न भ्रमितव्यम् । रान्तेषु तस्य पाठायोगात् ॥ १६९ ॥ विपुल इति नकुलविशेषणम् । तेन विशालनकुले विष्णौ च बभ्रुः पुंसि । पिङ्गले त्रिषु । "बभ्रुः पिङ्गाऽग्निशूलिषु । मुनौ विशाले नकुले विष्णौ" इति हैमः । स्थिरांशो वृक्षादेः कठोरभागः । तत्र यथा । शिंशपासारः । न्याय्ये न्यायादनपेते । वरे श्रेष्ठे । "सारो बले स्थिरांशे च मज्ज्ञि पुंसि जले धने । न्याय्ये क्लीबं त्रिषु वरे" इति मेदिनी ॥ १७० ॥

170 - 171



दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम् ॥
महारण्ये दुर्गपथे कान्तारं पुन्नपुंसकम् ॥ १७१ ॥
मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ॥
देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये ॥ १७२ ॥
वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना ॥
ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम् ॥ १७३ ॥
यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ॥
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥ १७४ ॥
शर्करा कर्परांशेऽपि यात्रा स्याद्यापने गतौ ॥

"द्यूतकारे पणे च" । दुरोदरश्चतुरक्षरः । द्यूते दुरोदरं क्लीबम् । दुर्गपथे दुर्गवर्त्मनि । "कान्तारोऽस्त्री महारण्ये बिले दुर्गमवर्त्मनि । पुंसि स्यादिक्षुभेदे" इति मेदिनी ॥ १७१ ॥ अन्यशुभद्वेषे परसंपत्त्यसहने मत्सरः पुंसि । तद्वति मात्सर्ययुक्ते कृपणे च मत्सरोऽभिधेयलिङ्गकः । देवाद्देवसकाशाद्वृतेऽभीप्सिते वरः पुंसि । श्रेष्ठे त्रिषु । मनाक्प्रिये ईषदिष्टे क्लीबम् । "वरो जामातरि वृतौ देवतादेरभीप्सिते ॥ षिङ्गे पुंसि त्रिषु श्रेष्ठे कुङ्कुमे तु नपुंसकम् । वरी प्रोक्ता शतावर्यां वरा च स्यात्फलत्रिके । मनागिष्टे वरं क्लीबं केचिदाहुस्तदव्ययम्" इति मेदिनी ॥ १७२ ॥ वंशस्य वेणोरङ्कुरे करीरः पुन्नपुंसकयोः । ना पुमान् । चमूजघने सेनापश्चाद्भागे प्रतिसरो ना पुंलिङ्गः । हस्तसूत्रे मङ्गलार्थं मन्त्रैरभिमन्त्रितं सूत्रं यत्करे बध्यते तत्र । "भवेत्प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे । व्रणशुद्धौ चमूपृष्ठे पुंसि न स्त्री तु मण्डले । आरक्षे करसूत्रे च नियोज्ये त्वन्यलिङ्गके" इति मेदिनी ॥ १७३ ॥ यमादिषु चतुर्दशसु हरिशब्दो वर्तते । तत्र त्रयोदशसु ना पुमान् । कपिलवर्णे त्रिलिङ्गः । अनिलो वायुः । अंशुः किरणः । वाजी हयः । शुकः पक्षिभेदः । अहिः सर्पः । "लोकान्तरहरिद्वर्णयोश्च हरिः" ॥ १७४ ॥ कर्परांशे सिकतासु । अपिशब्दात्खण्डविकृत्यादौ शर्कराशब्दः । "शर्करा खण्डविकृतावुपलाकर्परांशयोः । शर्करान्वितदेशेऽपि रुग्भेदे शकलेऽपि च" इति मेदिनी । याप्यतेऽनेन यापनं तस्मिन् । "यात्रा तु यापनोपाये गतौ देवार्चनोत्सवे" इति

इरा भूवाक्सुराऽप्सु स्यात्तन्द्री निद्राप्रमीलयोः ॥ १७५ ॥
धात्री स्यादुपमाताऽपि क्षितिरप्यामलक्यपि ॥
क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका ॥ १७६ ॥
त्रिषु क्रूरेऽधमेऽल्पेऽपि क्षुद्रं मात्रा परिच्छदे ॥
अल्पे च परिमाणे सा मात्रं कात्स्न्र्येऽवधारणे ॥ १७७ ॥
आलेख्याश्चर्ययोश्चित्रं कलत्रं श्रोणिभार्ययोः ॥
योग्यभाजनयोः पात्रं पत्रं वाहनपक्षयोः ॥ १७८ ॥
निदेशग्रन्थयोः शास्त्रं शस्त्रमायुधलोहयोः ॥

विश्वः । भ्वादिषु चतुर्षु इराशब्दः । सुरा मद्यम् । आपो जलम् । श्रमादिना सर्वेंद्रियापटुत्वं प्रमीला । "तन्द्रेति टाबन्तोऽपि" ॥ १७५ ॥ उपमात्रादिषु धात्रीशब्दः । उपमाता क्षीरप्रदा । क्षितिः पृथ्वी । आमलकी वृक्षभेदः । अपिना जनन्यपि धात्री । व्यङ्गादिषु क्षुद्रा । व्यङ्गा हीनाङ्गी । नटी नर्तनशीला । सरघा मधुमक्षिका । कण्टकारिका बृहती । "क्षुद्रा व्याघ्रीनटीव्यङ्गाबृहतीसरघासु च । चाङ्गेरिकायां हिंसायां मक्षिकामात्रवेश्ययोः" इति हैमः ॥ १७६ ॥ क्रूरादित्रये क्षुद्रं त्रिषु । "क्षुद्रो दरिद्रे कृपणे निकृष्टेऽल्पनृशंसयोः" इति हैमः । परिच्छदादित्रये मात्रा स्त्रियाम् । कात्स्न्र्यादिद्वये क्लीबम् । परिच्छदे यथा । महामात्रः । अल्पे यथा । शाकमात्रा । परिमाणे यथा । किं हस्तिमात्रोऽङ्कुशः । कात्स्न्र्ये यथा । जीवमात्रं न हिंस्यात् । अवधारणे तु । पयोमात्रं भुङ्क्ते । धने कर्णभूषायां वर्णावयवे च मात्रा । "मात्रं त्ववधृतौ स्वार्थे कात्स्न्र्ये मात्रा परिच्छदे । अक्षराऽवयवे द्रव्ये मानेऽल्पे कर्णभूषणे । काले वृत्ते च" इति हैमः ॥ १७७ ॥ आलेख्यं भित्त्यादौ नानावर्णलेखनम् । "चित्रं खे तिलकेऽद्भुते । आलेख्ये कर्बुरे" इति हैमः । श्रोणिः कटिः । "दुर्गस्थाने नृपादीनां कलत्रं श्रोणिभार्ययोः" इति रभसः । योग्ये यथा । दानपात्रं श्रोत्रियः "पात्रं तु भाजने योग्ये पात्रं तीरद्वयांतरे । पात्रं स्रुवादौ पर्णे च राजमन्त्रिणि चेष्यते" इति विश्वः । पर्णे च पत्रम् । "पत्रं तु वाहने पर्णे पक्षे च शरपक्षिणोः" इति विश्वः ॥ १७८ ॥ निदेश आज्ञा । ग्रन्थो व्याकरणादिः । तत्र शास्त्रम् । जटा वृक्षमूलम् । अंशुकं वस्त्रभेदः । नेत्रं वस्त्रविशेषः स्यादिति मञ्जरी । "नेत्रं मथिगुणे वस्त्रभेदे मूले

179-182



स्याज्जटांशुकयोर्नेत्रं क्षेत्रं पत्नीशरीरयोः ॥ १७९ ॥
मुखाग्रे क्रोडहलयोः पोत्रं गोत्रं तु नाम्नि च ॥
सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च ॥ १८० ॥
अजिरं विषये कायेऽप्यम्बरं व्योम्नि वाससि ॥
चक्रं राष्ट्रेऽप्यक्षरं तु मोक्षेऽपि क्षीरमप्सु च ॥ १८१ ॥
स्वर्णेऽपि भूरिचन्द्रौ द्वौ द्वारमात्रेऽपि गोपुरम् ॥
गुहादम्भौ गह्वरे द्वे रहोऽन्तिकमुपह्वरे ॥ १८२ ॥

द्रुमस्य च । रथे चक्षुषि नद्यां तु नेत्री नेतरि वाच्यवत्" इति मेदिनी । पत्न्यां देहे च क्षेत्रम् । "क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः" इति मेदिनीविश्वप्रकाशौ । "इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते" इति श्रीमद्भगवद्गीतायाम् ॥ १७९ ॥ क्रोडः सूकरः । तस्य हलस्य च मुखाग्रे पोत्रम् । "पोत्रं वस्त्रे मुखाग्रे च सूकरस्य हलस्य च" इति विश्वः । चकाराद्गोत्रं शैले कुलेऽपि च । "गोत्रं कुलाख्ययोः । संभावनीये बोधे च काननक्षेत्रवर्त्मसु" इति मेदिनी । आच्छादनं वस्त्रम् । सदादानं नित्यत्यागः । "अपिशब्दाद्वने कैतवे च सत्रशब्दः" ॥ १८० ॥ विषये रूपादौ अपिना चत्वरे अजिरम् । "अजिरं दर्दुरे काये विषये प्राङ्गणेऽनिले" इति हैमः । व्योम्न्याकाशे । वाससि वस्त्रे । "अम्बरं वाससि व्योम्नि कार्पासे च सुगन्धके" इति विश्वः । अपिशब्दात्सैन्यरथाङ्गयोश्चक्रम् । "चक्रं प्रहरणे गणे । कुलालाद्युपकरणे राष्ट्रे सैन्यरथाङ्गयोः । जलावर्ते दम्भे" इति हैमः । अपिशब्दाद्वर्णब्रह्मणोरप्यक्षरम् । "अक्षरं स्यादपवर्गे परमब्रह्मवर्णयोः । गगने धर्मतपसोरम्बरे मूलकारणे" इति हैमः । "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इति भगवद्गीतायामक्षरवाच्यः कश्चित कूटस्थः पुमान् प्रतीयते । चकाराद्दुग्धे क्षीरम् ॥ १८१ ॥ भूरिशब्दश्चन्द्रशब्दश्चैतौ द्वौ रान्तौ स्वर्णेऽपि वर्तेते । तत्र स्वर्णे भूरि रूपभेदात् क्लीबम् । अपिशब्दात् । "भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गके" इति मेदिनी । कर्पूरादौ च चन्द्रः । "चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु" इति मेदिनी । न केवलं पूर्द्वारे किं तु द्वारमात्रेऽपि गोपुरम् । "गोपुरं द्वारि पूर्द्वारि कैवर्तीमुस्तकेऽपि च" इति मेदिनी । गह्वरस्तु गुहादम्भनिकु-

182-185.



पुरोऽधिकमुपर्यग्राण्यगारे नगरे पुरम् ॥
मन्दिरं चाथ राष्ट्रोऽस्त्री विषये स्यादुपद्रवे ॥ १८३ ॥
दरोऽस्त्रियां भये श्वभ्रे वज्रोऽस्त्री हीरके पवौ ॥
तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे ॥ १८४ ॥
औशीरश्चामरे दण्डेऽप्यौशीरं शयनासने ॥
पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले ॥
व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ॥ १८५ ॥
अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ॥

ऽगहनेष्वपि" इति विश्वः । रहो विजनम् । अन्तिकं समीपम् । द्वे उपह्वरसंज्ञे ॥ १८२ ॥ पुर इत्यादीनि त्रीणि अग्रशब्दवाच्यानि । तत्र पुरः पुरस्तात् । यथा । अग्रगामी । अधिकं यथा । साग्रं शतम् । उपरि यथा । वृक्षाग्रम् । "अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत्" इति मेदिनी । पुरं मन्दिरं चेति द्वयमगारे गृहे नगरे च वर्तते । "गृहोपरिगृहं पुरम्" इति धरणिः । "पुरं शरीरे नगरे गृहपाटलिपुत्रयोः" इति हैमः । "मन्दिरं नगरे क्लीबम्" इति मेदिनी । विषये जनपदे उपद्रवे मरणादौ च राष्ट्रः । "स च पुन्नपुंसकः" ॥ १८३ ॥ श्वभ्रे गर्ते । हीरके मणिभेदे । पवौ भिदुरे । प्रधाने यथा । स्वतन्त्रः । सिद्धान्ते यथा । तान्त्रिकः । सूत्रवायपरिच्छदयोश्च तन्त्रशब्दः । "तन्त्रं कुटुम्बकृत्ये स्यात्सिद्धान्ते चौषधोत्तमे । प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे ॥ श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजने । इतिकर्तव्यतायां च" इति मेदिनी ॥ १८४ ॥ चामर इति दण्डविशेषणम् । चमरस्यायं चामरस्तत्र । शयनासनयोः समुदितयोरौशीरसंज्ञेति स्वामी । सुभूतिस्तु पृथगेव व्याख्यत् । गजशुण्डाग्रादिष्वष्टसु पुष्करम् । वाद्यभाण्डं वादनीयपात्रं तन्मुखे । खड्गफले खड्गमध्ये । पद्मे नलिने । तीर्थविशेषे कुष्ठाख्यौषधिविशेषे च । "पुष्करं द्वीपतीर्थाहिखगराजौषधान्तरे ॥ तूर्यास्येऽसिफले काण्डे शुण्डाग्रे खे जलेऽम्बुजे" इति हैमः ॥ १८५ ॥ अवकाशादिषु त्रयोदशसु अन्तरशब्दः । अवकाशे यथा । अन्तरे हिमम् । अवधौ

186 – 188



छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥ १८६ ॥
मुस्तेऽपि पिठरं राजकशेरुण्यपि नागरम् ॥
शार्वरं त्वन्धतमसे घातुके भेद्यलिङ्गकम् ॥ १८७ ॥
गौरोऽरुणे सिते पीते व्रणकार्येप्यरुष्करः ॥
जठरः कठिनेऽपि स्यादधस्तादपि चाधरः ॥ १८८ ॥
अनाकुलेऽपि चैकाग्रो व्यग्रो व्यासक्त आकुले ॥

यथा । मासान्तरे देयम् । परिधाने यथा। अन्तरे शाटकाः परिधानीया इत्यर्थः । अन्तर्धौ यथा । पर्वतान्तरितो रविः । भेदे यथा । यदन्तरं सर्षपशैलराजयोः । तादर्थ्ये यथा । त्वदन्तरेण ऋणमेतत् । छिद्रे यथा । परान्तरे प्रहर्तव्यम् । आत्मीये यथा । अयमत्यन्तरो मम । विनार्थे यथा । अन्तरेण पुरुषकारमिति । बहिर्यथा । अन्तरे चण्डालगृहाः । बाह्या इत्यर्थः । अवसरे यथा । अन्तरङ्गः सेवकः । मध्ये यथा । आवयोरन्तरे जातः पर्वतः । अन्तरात्मनि यथा । दृष्टोन्तरे ज्योतीरूपः । चकारात्सादृश्ये यथा । हकारस्य घकारोऽन्तरतमः ॥१८६॥ पिठरशब्दः मुस्ते मुस्तके । अपिशब्दान्मन्थाने "पिठरः स्थाल्यां ना क्लीबं मुस्तमन्थानदण्डयोः" इति मेदिनी । राजकशेरु जलजतृणमूलं "नागरमोथा इति ख्यातम्"। "नागरं मुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे" इति मेदिनी । अन्धतमसे गाढान्धकारे घातुके हिंस्रे शार्वरशब्दः । "घातुकेभे नृलिङ्गकमित्यपि पाठः । घातुकश्चासाविभश्च तत्र पुंलिङ्गमित्यर्थः" ॥ १८७ ॥ "गौरः पीतेऽरुणे श्वेते विशुद्धे चाभिधेयवत् । ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेसरे" इति मेदिनी । भल्लातकफलेऽप्यरुष्करः । "अरुष्करो व्रणकृति त्रिषु भल्लातके पुमान्" इति मेदिनी । "व्रणकार्येऽप्यरुष्कर इत्यपि पाठः" । उदरेऽपि जठरः । "जठरः कुक्षिवृद्धयोः" इति हैमः । अधस्तादनूर्ध्वे ओष्ठेऽपि "हीनेऽपि च" अधरः ॥ १८८ ॥ अनाकुले स्वस्थे । अपिशब्दादेकतानेऽपि । व्यासक्ते द्विधा व्यापृते । आकुलेऽनेकार्थे न्यस्तचित्ते व्यग्रः । उपर्यादित्रये उत्तरः । उपरि यथा, इत उत्तरम् । उदीच्ये यथा । नर्मदोत्तरे विक्रमशकः । श्रेष्ठे यथा । मुनिषूत्तरो वसिष्ठः । "उत्तरं प्रतिवाक्ये स्यादूर्ध्वोदीच्योत्तमेऽन्यवत् । उत्तरस्तु विराटस्य तनये दिशि चोत्तरा" इति विश्वः । एषामुपर्यादीनां विपर्यये वैपरीत्ये श्रेष्ठे

उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः स्यादनुत्तरः ॥ १८९ ॥
एषां विपर्यये श्रेष्ठे दूरानात्मोत्तमाः पराः ॥
स्वादुप्रियौ तु मधुरौ क्रूरौ कठिननिर्दयौ ॥ १९० ॥
उदारो दातृमहतोरितरस्त्वन्यनीचयोः ॥
मन्दस्वच्छन्दयोः स्वैरः शुभ्रमुद्दीप्तशुक्लयोः ॥ १९१ ॥
इति रान्ताः ॥ चूडा किरीटं केशाश्च संयता मौलयस्त्रयः ॥
द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलवः ॥ १९२ ॥
कृतान्तानेहसोः कालश्चतुर्थेऽपि युगे कलिः ॥
स्यात्कुरङ्गेऽपि कमलः प्रावारेऽपि च कम्बलः ॥ १९३ ॥
करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम् ॥

चानुत्तरः । श्रेष्ठे तु न विद्यमान उत्तरः श्रेष्ठो यस्मादिति विग्रहः ॥ १८९ ॥ दूरादयस्त्रयः पराः । अनात्मा आत्मनोऽन्यः । "परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले" इति मेदिनी । रसे च मधुरः । "क्रूरस्तु कठिने घोरे नृशंसे त्वभिधेयवत्" इति विश्वः ॥ १९० ॥ दक्षिणे चोदारस्त्रिषु । "उदारो दातृमहतोर्दक्षिणे चाभिधेयवत्" इति कोशान्तरात् । नीचः पामरः । स्वच्छन्दः स्वाधीनः । प्रदीप्ते शुक्ले च शुभ्रम् । "शुभ्रं स्यादभ्रके क्लीबमुद्दीप्तशुक्लयोस्त्रिषु" इति मेदिनी ॥ १९१ ॥ इति रान्ताः ॥ अथ लान्तानाह । चूडा शिखा । किरीटं मुकुटम् । संयता बद्धा ये च केशास्ते त्रयो मौलयः । त्रय इति मौलेः पुंस्त्वसूचनायोक्तम् । "मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम् । नाऽशोकद्रौ स्त्रियां भूमौ" इति तु मेदिनी । "पीलुः पुमान् प्रसूने स्यात्परमाणौ मतङ्गजे । अस्थिखण्डे च तालस्य काण्डपादपभेदयोः" इति मेदिनी । मातङ्गो गजः । काण्डो बाणः ॥ १९२ ॥ अनेहाः समयः । "कालो मृत्यौ महाकाले समये यमकृष्णयोः" इति मेदिनी । कलहेऽपि कलिः "कलिः स्त्री कलिकायां ना शूराजिकलहे युगे" इति मेदिनी । अपिशब्दात्कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे । प्राव्रियत इति प्रावारः । सास्नायां नागराजेऽपि कृमावपि च कम्बलः ॥ १९३ ॥ करो राजदेयभागः । उपहार उपचारः । तत्र बलिः पुंसि । "दैत्यप्रभेदे च बलिः" । प्राण्यङ्गजे त्वक्सं-

194-197



स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः १९४ ॥
वातूलः पुंसि वात्यायामपि वातासहे त्रिषु ॥
भेद्यलिङ्गः शठे व्यालः पुंसि श्वापदसर्पयोः ॥ १९५ ॥
मलोऽस्त्री पापविट्किट्टान्यस्त्री शूलं रुगायुधम् ॥
शङ्कावपि द्वयोः कीलः पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु ॥ १९६ ॥
कला शिल्पे कालभेदेऽप्याली सख्यावली अपि ॥
अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि ॥ १९७ ॥

क्रौञ्चे बलिः स्त्रियाम् । स्थौल्यादित्रये बलम् । "बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः" इति मेदिनी । काले हलायुधे च बलो ना पुमान् । "बलिस्तु बलिनि काके दैत्यभेदे हलायुधे" इति हैमः ॥ १९४ ॥ वात्यायां वातसमूहे । वातविकारासहे प्राणिनि वातूलस्त्रिषु । "वातूलो वातुलोऽपि स्यात्" इति द्विरूपकोशाद्ध्रस्वमध्योऽपि । शठे व्यालो वाच्यलिङ्गः । दुष्टगजे सिंहेऽपि च व्यालः ॥ १९५ ॥ विट् विष्ठा । किट्टं स्वेदादिजन्यं मलम् । कृपणे च विशेष्यलिङ्गम् । "शूलोऽस्त्री रोग आयुधे । मृत्युकेतनयोगेषु" इति मेदिनी । शङ्कौ लोहादिमयकीलके । अपिशब्दाज्ज्वालायामपि कीलः । स्त्रियां तु कीला । कीलोऽग्नितेजसि । "कफोणिस्तम्भयोः शङ्कौ" इति तु हैमः । पालिः स्त्रीलिङ्गा । अतः पाली च । अश्रिर्धारा कोणो वा । अङ्क उत्सङ्गः चिह्नं वा । पङ्क्तिः श्रेणिः । "पालिः कर्णलतायां स्यात्प्रदेशे पङ्क्तिचिह्नयोः" इत्यजयः । "सश्मश्रुयुवती पालिः पङ्क्तिः कर्णलतापि च" इति त्रिकाण्डशेषः । "पालिः कर्णलताग्रेऽश्रौ पङ्क्तावङ्कप्रभेदयोः । छात्रादिदेये स्त्री पाली यूकासश्मश्रुयोषितोः" इति मेदिनी ॥ १९६ ॥ शिल्पे गीतवाद्यादिनैपुण्ये । कालभेदे त्रिंशत्काष्ठात्मके काले कला । "अपिना कला स्यान्मूलैर्वृद्धौ शिल्पादावंशमात्रके । षोडशांशे च चन्द्रस्य कलनाकालमानयोः" इति मेदिनी । सख्यां पङ्क्तौ चालिः । आलिर्विशदाशये । "त्रिषु स्त्रियां वयस्यायां सेतौ पङ्क्तौ च कीर्तिता" इति मेदिनी । अब्ध्यम्बुविकृतौ चन्द्रोदयादिना जलधिजलवृद्धौ काले मर्यादायां च वेला । "वेला काले च जलधेस्तीरनीरविकारयोः । अक्लिष्टमरणे रोगे सीम्नि वाचि बुधस्त्रियाम् । भोजनेऽपीश्वराणां स्यात्" इति विश्वप्रकाशः ॥ १९७ ॥ कृत्तिकाः ताराः । बहुत्वाद्बहुत्वम् । गावो

बहुलाः कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिषु ॥
लीला विलासक्रिययोरुपला शर्करापि च ॥ १९८ ॥
शोणितेऽम्भसि कीलालं मूलमाद्ये शिफाभयोः ॥
जालं समूह आनायगवाक्षक्षारकेष्वपि ॥ १९९ ॥
शीलं स्वभावे सद्वृत्ते सस्ये हेतुकृते फलम् ॥
छदिर्नेत्ररुजोः क्लीबं समूहे पटलं न ना ॥ २०० ॥
अधःस्वरूपयोरस्त्री तलं स्याच्चामिषे पलम् ॥

धेनवो बहुलाख्याः। अग्नौ च बहुलः पुंसि। शितौ कृष्णवर्णे त्रिषु। "बहुला नीलिकायां स्यादेलायां गवि योषिति। कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम्। पुंस्यग्नौ कृष्णपक्षे च वाच्यवत्प्राज्यकृष्णयोः" इति मेदिनी। विलासे क्रियायां च लीला। "लीलां विदुः केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु" इति विश्वप्रकाशः। शर्कराः सिकताः खण्डविकृतिर्वा। अश्मनि पुंसि। उपलः प्रस्तरे रत्ने शर्करायां स्मृतोपला ॥ १९८ ॥ शोणिते रक्ते अम्भसि जले च कीलालं नाम। आद्ये शिफायां वृक्षजटायां भे नक्षत्रविशेषे मूलम्। आद्ये यथा। मूलप्रकृतिः "मूलं पार्श्वाद्ययोरूढौ। निकुञ्जशिफयोः स्वीये शिलायां च वशीकृतौ। प्रतिष्ठायाम्" इति हैमः। अर्थयोरिति पाठे मूलं धनम्। समूहे जालं यथा जनजालम्। आनायः शणसूत्रादिकृतो रज्जुसङ्घः। गवाक्षो वातायनम्। क्षारकोऽस्फुटकलिका। एतेषु जालम्। "दम्भेऽपि जालम्" ॥ १९९ ॥ स्वभावे प्रकृतौ सद्वृत्ते सच्चरिते शीलम्। सस्ये "वृक्षादीनां फलं सस्यम्" इत्युक्ते हेतुकृते हेतुना साधिते। यथा यागस्य फलं स्वर्गः। बाणाग्रेऽपि फलम्। "फलं हेतुकृते जातीफलेफलकसस्ययोः। त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयो" इति हैमः। छदिश्च नेत्ररुक् च छदिर्नेत्ररुजौ तयोः। छदिषि गृहाच्छादने। समूहे न नेत्युक्ते पटलं पटलेति च। "अथ पटलं पिटके च परिच्छदे। छदिर्दृग्रोगतिलके क्लीबं वृन्दे पुनर्न ना" इति मेदिनी॥ २०० ॥ अधो यथा। रसातलम्। स्वरूपे यथा। वक्षस्तलम्। "तलं स्वरूपाधरयोः खड्गमुष्टिचपेटयोः" इति। "तलं स्वरूपेऽनूर्ध्वेऽस्त्री क्लीबं ज्याघातवारणे। कानने कार्यबीजे च पुंसि तालमहीरुहे। चपेटे च त्सरौ तन्त्रीघाते सव्येन पाणिना" इति मेदिनी। "पलमुन्मानमांसयोः"

201-205



और्वानलेऽपि पातालं चैलं वस्त्रेऽधमे त्रिषु ॥ २०१ ॥
कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले ॥
निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः ॥ २०२ ॥
पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु ॥
प्रवालमङ्कुरेऽप्यस्त्री त्रिषु स्थूलं जडेऽपि च ॥ २०३ ॥
करालो दन्तुरे तुङ्गे चारौ दक्षे च पेशलः ॥
मूर्खेऽर्भकेऽपि बालः स्याल्लोलश्चलसतृष्णयोः ॥ २०४ ॥
इति लान्ताः ॥ दवदावौ वनारण्यवह्नी जन्महरौ भवौ ॥
मन्त्री सहायः सचिवौ पतिशाखिनरा धवाः ॥ २०५ ॥
अवयः शैलमेषार्का आज्ञाह्वानाध्वरा हवाः ॥

इति रुद्रः । और्वानले वाडवाग्नौ । "विवरे पातालम्" । "पातालं नागलोके स्याद्विवरे वाडवानले" । वस्त्रे चैलं क्लीबं अधमे त्रिषु । स्त्रीत्वे तु चैली । "चेलमित्यपि पाठः" ॥ २०१ ॥ शङ्कुभिः कीर्णे कीलैर्व्याप्ते श्वभ्रे गर्ते कुकूलम् । तुषाग्नौ कुकूलः । निर्णीते निश्चिते यथा । केवलं मूर्खः । एकस्मिन्यथा । केवलोऽयं व्रजति । कृत्स्ने यथा । केवला भिक्षवः । स्त्रीलिङ्गे केवली । "केवलः कुहने पुमान्" इति मेदिनी ॥ २०२ ॥ पर्याप्तिः सामर्थ्यम् । शिक्षिते कुशलं त्रिषु । यथा कुशला कुलवधूः । "प्रवालोऽस्त्री किसलयं वीणादण्डे च विद्रुमे" इति मेदिनी । स्थूलं पीवरेऽपि त्रिषु । "स्थूलं कूटेऽथ निष्प्रज्ञे पीवरे चान्यलिङ्गके" इति मेदिनी ॥२०३॥ दन्तुरे उन्नतदन्तयुक्ते । यथा दंष्ट्राकरालः । तुङ्गे उन्नते । "करालो दन्तुरे तुङ्गे भीषणे चाभिधेयवत् । स सर्जरसतैले ना क्लीबं कृष्णकुठेरके" इति मेदिनी । चारुदक्षयोः पेशलः । "बालोऽज्ञेऽश्वेभपुच्छयोः । शिशौ ह्रीबेरकचयोः" इति हैमः । सतृष्णः साकाङ्क्षः ॥२०४॥ इति लान्ताः ॥ अथ वान्तानाह । वनं काननम् । अरण्यवह्निः वनाग्निः । तत्र वान्तौ दवदावौ । "भवः क्षेमे च संसारे सत्तायां प्राप्तिजन्मनोः" इति मेदिनी । मन्त्री प्रधानम् । सहायः सखा एतयोरर्थे सचिवशब्दः । पतिर्भर्ता । शाखी वृक्षभेदः । नरो मनुष्यः एते धवाः । "धवो धूर्ते नरे पतौ । द्रुभेदे" इति हैमः ॥२०५॥ "अविर्नाथे रवौ मेषे शैले मूषिककम्बले" इति मेदिनी । आज्ञादयस्त्रयो हवसंज्ञाः । आह्वानं हूतिः । अध्वरो यज्ञः ।

भावः सत्ता॑स्वभावाभिप्रायचेष्टात्मजन्मसु ॥ २०६ ॥
स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने ॥
अविश्वासेऽपह्नवेऽपि निकृतावपि निह्नवः ॥ २०७ ॥
उत्सेकामर्षयोरिच्छाप्रसरे मह उत्सवः ॥
अनुभावः प्रभावे च सतां च मतिनिश्चये ॥ २०८ ॥
स्याज्जन्महेतुः प्रभवः स्थानं चाद्योपलब्धये ॥
शूद्रायां विप्रतनये शस्त्रे पारशवो मतः ॥ २०९ ॥
ध्रुवो भभेदे क्लीबं तु निश्चिते शाश्वते त्रिषु ॥
स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने ॥२१०॥

सत्तादिषट्के भावः । सत्तायां यथा । घटभावः पटभावः । आत्मनि यथा । स्वभावं भावयेद्योगी । "क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु । रत्यादौ च भावः । केचित् सत्तास्थाने स्वत्वमिति पठन्ति" ॥ २०६ ॥ उत्पादे उत्पत्तौ । गर्भमोचने प्रसूतौ प्रसवः । "अपत्ये च प्रसवः" । अपह्नवे अपलापे । निकृतौ शाठ्ये ॥ २०७ ॥ उत्सेक उद्धतिः । अमर्षः कोपः । इच्छायाः प्रसरो वेगः । महः क्षण आनन्दावसर इति यावत् । एतेषु उत्सवः । सतां मतेर्ज्ञानस्य निश्चये यथा । महानुभावा इति । "भावसूचने चानुभावः" ॥२०८॥ आद्योपलब्धये प्रथमज्ञानाय यत्स्थानम् । यश्च जन्महेतुस्तत्र प्रभवः । जन्महेतुः पित्रादिः । स्थानं यथा । गङ्गाप्रभवो हिमवान् । गङ्गाज्ञानस्य प्रथमस्थानं हिमवानित्यर्थः । जन्ममूलमपि प्रभवः । यथा वाल्मीकिः काव्यप्रभवः । "प्रभवो जन्ममूले स्याज्जन्महेतौ पराक्रमे । ज्ञानस्य चादिमस्थाने" इति मेदिनी । शूद्रायां विप्राज्जाते तनये शस्त्रे परश्वधाख्ये पारशवः । पारशवः पुमानित्यपि पाठान्तरम् ॥ २०९ ॥ भभेदे नक्षत्रविशेषे ध्रुवः पुंसि । निश्चिते अवधारिते ध्रुवं क्लीबम् । यथा ध्रुवं मूर्खः । शाश्वते नित्ये ध्रुवस्त्रिषु । यथा "जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च" इति । "ध्रुवः शङ्कौ हरे विष्णौ वटे चोत्तानपादजे । वसुयोगभिदोः पुंसि क्लीबं निश्चिततर्कयोः" इति मेदिनी । सगोत्रे आत्मनि क्षेत्रज्ञे स्वः पुंसि । आत्मीये स्वसंबन्धिनि । "स्वं त्रिलिङ्गम् । धने स्वः पुनपुंसके" ॥ २१० ॥ स्त्रीकट्यां यो वस्त्रस्य बन्धस्तत्र । परिपणे

स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च ॥
शिवा गौरीफेरवयोर्द्वन्द्वं कलहयुग्मयोः ॥ २११ ॥

द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु ॥
क्लीबं नपुंसकं षण्ढे वाच्यलिङ्गमविक्रमे ॥ २१२ ॥

इति वान्ताः ॥ द्वौ विशौ वैश्यमनुजौ द्वौ चराभिमरौ स्पशौ ॥
द्वौ राशी पुञ्जमेषाद्यौ द्वौ वंशौ कुलमस्करौ ॥ २१३ ॥

रहःप्रकाशौ वीकाशौ निर्वेशो भृतिभोगयोः ॥
कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु ॥ २१४ ॥

"राजपुत्रादेर्बन्धके । अपिना" वणिजां मूलधने नीवी । "नीवी स्त्रीकटीवस्त्रबन्धने । मूलद्रव्ये परिपणे" इति हैमः । फेरवः सृगालः । "शिवा झाटामलोमयोः । फेरौ शम्यां पथ्याधात्र्योः" इति हेमचन्द्रः । युग्मे द्वये । "द्वंद्वं रहस्ये कलहे तथा मिथुनयुग्मयोः" इति विश्वः ॥ २११ ॥ द्रव्ये वस्तुनि । असुषु प्राणेषु । व्यवसाये वीर्यातिशये । यथा सत्त्ववान् । जन्तुषु सत्त्वमस्त्रियाम् । "सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः । पिशाचादावात्मभावे बले प्राणेषु जन्तुषु" इति हेमचन्द्रः । "षण्ढे तृतीयप्रकृतौ क्लीबमिति वकारान्तं नाम नपुंसकं नपुंसकलिङ्गे" । अविक्रमेऽलसे क्लीबो वाच्यलिङ्गः । बवयोः सावर्ण्यादस्यात्र पाठः । "अस्त्री नपुंसके क्लीबं वाच्यलिङ्गमविक्रमे" इति रुद्रः । "क्लीबोऽपौरुषषण्ढयोः" इति हैमः । "क्लीबं स्यात्षण्ढके न स्त्री वाच्यलिङ्गस्त्वविक्रमे" इति मेदिनी ॥ २१२ ॥ इति वान्ताः ॥ अथ शान्तानाह ॥ मनुजो मनुष्यः । "विट् स्मृतो वैश्यमनुजप्रवेशेषु मनीषिभिः" इति विश्वः । चरो गूढपुरुषः । अभिमरो युद्धं तत्र स्पशोऽदन्तः । आद्यशब्दादृषभादिरपि राशिः । मस्करो वेणुः । "वंशः सङ्घेऽन्वये वेणौ पृष्ठाद्यवयवेऽपि च" इति हैमः ॥ २१३ ॥ रहो विजनः । विकाश इत्यपि । "विकाशो रहसि व्यक्ते" इति हैमः । भृतिर्वेतनम् । "भोग उपभोगः । मूर्छने च निर्वेशः" । कृतान्तो यमः । क्षुद्रः कृपणः । कर्षकः कृषीवलः । "कीनाशः कर्षकक्षुद्रोपांशुघातिषु वाच्यवत् । यमे ना" इति मेदिनी ॥ २१४ ॥ पदे व्याजे । "अपदेशः स्मृतो लक्ष्ये निमित्तव्याजयोरपि" इति विश्वः । कुशो

पदे लक्ष्ये निमित्तेऽपदेशः स्यात्कुशमप्सु च ॥
दशाऽवस्थानेकविधाप्याशा तृष्णापि चायता ॥ २१५ ॥
वशा स्त्री करिणी च स्यात् दृग्ज्ञाने ज्ञातरि त्रिषु ॥
स्यात्कर्कशः साहसिकः कठोरामसृणावपि ॥ २१६ ॥
प्रकाशोऽतिप्रसिद्धेऽपि शिशावज्ञे च बालिशः ॥
कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः ॥ २१७ ॥
इति शान्ताः ॥ सुरमत्स्यावनिमिषौ पुरुषावात्ममानवौ ॥
काकमत्स्यात्खगौ ध्वाङ्क्षौ कक्षौ तु तृणवीरुधौ ॥ २१८ ॥
अभीषुः प्रग्रहे रश्मौ प्रैषः प्रेषणमर्दने ॥

रामसुते दर्भे । "योक्त्रे द्वीपे च" पुंसि । जले क्लीबम् । अनेकविधबाल्यादिरूपा दशा । अपिशब्दाद्वस्त्रान्तेऽपि दशाः स्त्रियां बहुत्वे । "दशा वर्ताववस्थायां वस्त्रान्ते स्युर्दशा अपि" । आयता दीर्घा या तृष्णा स्पृहा सा आशा । चकाराद्दिगप्याशा ॥ २१५ ॥ योषाहस्तिन्योर्वशा । "वशा वन्ध्यासुतायोषास्त्रीगवीकरिणीषु च" इति मेदिनी । ज्ञाने बुद्धौ । "दृक् स्त्रियां दर्शने नेत्रे बुद्धौ च त्रिषु वीक्षके" इति मेदिनी । साहसिको विवेकरहितः । अमसृणो दुःस्पर्शः । "कर्कशः परुषे क्रूरे कृपणे निर्दये दृढे । इक्षौ साहसिके कासमर्दकाम्पिल्ययोरपि" इति विश्वः ॥ २१६ ॥ अपिशब्दादातपेऽपि प्रकाशः । "प्रकाशोऽतिप्रसिद्धे स्यात्प्रहासातपयोः स्फुटे" इति विश्वः । कुड्मले मुकुले । खड्गस्य पिधाने आच्छादने । अर्थौघे घनसमूहे । दिव्ये शपथभेदे कोशः कोषश्च । "नाशः क्षये तिरोधाने जीवितेशः प्रिये यमे । नृशंसखड्गौ निस्त्रिंशावंशुः सूर्यांशवः कराः ॥ १ ॥ आश्वाख्यशालिशीघ्रार्थे पाशो बन्धनशस्त्रयोः" इति सार्धश्लोकद्वयं पुस्तकान्तरे क्षेपकं दृश्यते ॥ २१७ ॥ इति शान्ताः ॥ अथ षान्तानाह ॥ सुरमत्स्यावुभौ अनिमिषौ स्तः । आत्मा क्षेत्रज्ञः । "पुरुषश्चात्मनि नरे पुंनागे च" इति हेमचन्द्रः । मत्स्यमत्ति खादति मत्स्यात् यो बकादिः खगः स च ध्वाङ्क्षः । "ध्वाङ्क्षस्तु काकबकयोस्तर्कुटे भिक्षुके गृहे" इति विश्वप्रकाशः । कार्पासबीजनिष्कासनयन्त्रं तर्कुटम् । वीरुल्लता । "कक्षो वीरुधि दोर्मूले कच्छे शुष्कतृणे वने" इति हैमः ॥ २१८ ॥ प्रग्रहेऽश्वादिरज्जौ । रश्मौ किरणे । मर्दनं पीडा । प्रैषः प्रेषणपीडयोरिति "प्रैषः स्यात्प्रेषणे क्लेशे मर्दनोन्मादयो-

१ सार्धेति चिन्त्यम्, रामाश्रम्यां श्लोकद्वयस्यैव दर्शनात् ॥

219-222



पक्षः सहायेऽप्युष्णीषः शिरोवेष्टकिरीटयोः ॥ २१९ ॥
शुक्रले मूषिके श्रेष्ठे सुकृते वृषभे वृषः ॥
द्यूतेऽक्षे शारिफलकेऽप्याकर्षोऽथाक्षमिन्द्रिये ॥ २२० ॥
ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे ॥
कर्षूर्वार्ता करीषाग्निः कर्षूः कुल्याभिधायिनि ॥ २२१ ॥
पुम्भावे तत्क्रियायां च पौरुषं विषमप्सु च ॥
उपादानेऽप्यामिषं स्यादपराधेऽपि किल्मिषम् ॥ २२२ ॥

रपि" इति विश्वः। अपिशब्दान्मासार्धादौ पक्षः। "पक्षो मासार्धके पार्श्वे ग्रहे साध्यविरोधयोः। केशादेः परतो वृन्दे बले सखिसहाययोः। चुल्लीरन्ध्रे पतत्रे च वाजिकुञ्जरपार्श्वयोः" इति मेदिनी। वस्त्रकृतं शिरसो वेष्टनं शिरोवेष्टः। किरीटं मुकुटम्। "उष्णीषं लक्षणान्तरे। शिरोवेष्टे किरीटे स्यात्" इति हैमः ॥ २१९ ॥ शुक्रं लातीति शुक्रलो वृषणः। मूषिके उन्दुरे सुकृते धर्मे। "वृषो गव्याखुधर्मयोः। पुंराशिभेदयोः शृङ्ग्यां वासके शुक्रलेऽपि च। श्रेष्ठे स्यादुत्तरस्थे च" इति हैमः। द्यूतादित्रये आकर्षः। अक्षे पाशके। शारिफलकं शारीणां द्यूतोपकरणानां फलकं पीठिका। "नाऽऽकर्षो द्यूत इन्द्रिये। पाशे शारिफले चैव कोदण्डाभ्यासवस्तुनि। आकर्षणेऽपि पुंसि स्यात्" इति मेदिनी। इन्द्रियेऽक्षं क्लीबम्। "अक्षं सौवर्चले तुत्थे हृषीके" इति हैमः। "अक्षो ज्ञातार्थशकटव्यवहारेषु पाशके। रुद्राक्षेन्द्राक्षयोः सर्पे बिभीतकतरावपि। चक्रे कर्षे पुमान्" इति मेदिनी। द्यूताङ्गादौ पुंसि ॥ २२० ॥ द्यूताङ्गे पाशके। कर्षे मानभेदे। चक्रे रथावयवे। कलिद्रुमे बिभीतके। वार्ता जीविका। करीषाग्निः शुष्कगोमयानलः। "करीषाग्निः पुमान्कर्षूः कुल्यायामपि च स्त्रियाम्।" कुल्या नदीभेदः ॥ २२१ ॥ पुंभावे पुरुषस्य भावे तत्क्रियायां पुरुषस्य कर्मणि पौरुषम्। "पौरुषं पुरुषस्य स्याद्भावे कर्मणि तेजसि। ऊर्ध्वविस्तृतदोः पाणिनृमाने त्वभिधेयवत्" इति मेदिनी। चकाराद्गरलेऽपि विषम्। उपादाने उत्कोचेऽप्यामिषम्। "आमिषं पुन्नपुंसकम्। भोग्यवस्तुनि संभोगेऽप्युत्कोचे पललेऽपि च" इति मेदिनी। पापेऽपि किल्मिषं "रोगेऽपि च" ॥२२२॥ वृष्टौ मेघवर्षणे। लोकं धत्ते लोकधातुर्जम्बुद्वीपस्तस्यांशे भारतादिखण्डे। वत्सरेऽब्दे वर्षशब्दः

स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम् ॥
प्रेक्षा नृत्येक्षणं प्रज्ञा भिक्षा सेवार्थना भृतिः ॥ २२३ ॥

त्विट् शोभापि त्रिषु परे न्यक्षं कार्त्स्न्यनिकृष्टयोः ॥
प्रत्यक्षेऽधिकृतेऽध्यक्षो रूक्षस्त्वप्रेम्ण्यचिक्कणे ॥ २२४ ॥

इति षान्ताः ॥ रविश्वेतच्छदौ हंसौ सूर्यवह्नी विभावसू ॥
वत्सौ तर्णकवर्षौ द्वौ सारङ्गाश्च दिवौकसः ॥ २२५ ॥

शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः ॥
पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे ॥ २२६ ॥

स्यात् । नृत्येक्षणं प्रज्ञा चेति द्वयं प्रेक्षासंज्ञम् । "प्रेक्षा धीरीक्षणं नृत्तमिति हैमादीक्षणं नृत्यं च" इति पृथगपि । अर्थना याञ्चा । भृतिर्वेतनम् । "भिक्षितवस्तुनि च भिक्षा" ॥ २२३ ॥ अपिशब्दात्कान्तौ ।"वाचि रुचौ त्विट् स्त्री" इति रभसः । परे वक्ष्यमाणास्त्रयः शब्दास्त्रिषु वाच्यलिङ्गा इत्यर्थः । कार्त्स्न्ये साकल्ये । निकृष्टेऽधमे । परशुरामोऽपि न्यक्षः। "न्यक्षः परशुरामे स्यात् न्यक्षः कार्त्स्न्यनिकृष्टयोः" इति कोशान्तरात्। "नियतानि अक्षाणि हृषीकाणि यस्मिन् न्यक्षः" । प्रत्यक्षे साक्षात्प्रमिते अधिकृते नियुक्तेऽध्यक्षः । "अधिकृतान्यक्षाण्यस्याध्यक्षः" । अप्रेम्णि स्नेहाभावे । अचिक्कणे अमसृणे ॥ २२४ ॥ इति षान्ताः ॥ अथ सान्तानाह ॥ श्वेतच्छदो विहगभेदः । "हंसः स्यान्मानसौकसि । निर्लोभनृपविष्ण्वर्कपरमात्मन्यमत्सरे । योगिभेदे मन्त्रभेदे शरीरमरुदन्तरे" इति मेदिनी । तर्णको गोवत्सः । "वत्सः पुत्रादिवर्षयोः । तर्णके नोरसि क्लीबम्" इति मेदिनी । सारङ्गाश्चातकाः । देवा अपि दिवौकसः । "दिवोकश्च दिवौकाश्च पुंसि देवे च चातके" इति द्विरूपकोशः ॥ २२५ ॥ शृङ्गारादौ शृङ्गारवीरकरुणादौ नवविधे । विषे गरले । वीर्ये तेजसि । गुणे स्वाद्वम्लादौ । रागे द्रवे रसशब्दः स्यात् । यथा रागे । रसिको युवा । "रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः । देहधातुप्रभेदे च पारदस्वाद्योः पुमान्" इति मेदिनी । उत्तंसश्चावतंसश्चेति सान्तद्वयं कर्णपूरे कर्णाभरणविशेषे शेखरे शिरोभूषणे च वर्तते ॥ २२६ ॥ देवभेदे यथा । अष्टौ वसवः धनरत्नयोर्वसु क्लीबम् । "वसुर्ना देवभेदाग्निमायोक्त्रबकराजसु । क्लीबं

226–230



देवभेदेऽनले रश्मौ वसू रत्ने धने वसु ॥
विष्णौ च वेधाः स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः ॥ २२७ ॥
लालसे प्रार्थनौत्सुक्ये हिंसा चौर्यादिकर्म च ॥
प्रसूरश्वापि भूद्यावौ रोदस्यौ रोदसी च ते ॥ २२८ ॥
ज्वालाभासौ न पुंस्यर्चिर्ज्योतिर्भद्योतदृष्टिषु ॥
पापापराधयोरागः खगबाल्यादिनोर्वयः ॥ २२९ ॥
तेजःपुरीषयोर्वर्चो महस्तूत्सवतेजसोः ॥
रजो गुणे च स्त्रीपुष्पे राहौ ध्वान्ते गुणे तमः ॥ २३० ॥

वृद्ध्यौषधे श्यालैरत्ने मधुरे त्रिषु" इति मेदिनी । चकाराद्विरिञ्चोऽपि वेधाः । "वेधा धातृज्ञविष्णुषु" इति हैमः । हितस्याशंसा हिताशंसा । अहेः सर्पस्य दंष्ट्रा च तयोराशीरिति सान्तं नाम वर्तते । "तत्स्त्रियाम्" । "आशीरुरगदंष्ट्रायां प्रियवाक्याभिलाषयोः" इति कोशान्तरम् ॥ २२७ ॥ प्रार्थना याञ्चा औत्सुक्यमुद्युक्तता । उभे लालसे । तृष्णातिरेके च लालसा । "लालसौत्सुक्यतृष्णातिरेकयाञ्चासु च द्वयोः" इति मेदिनी । चशब्दाद्वधेऽपि हिंसा । आदिना वृत्तिनाशादिकर्म । अश्वा वडवा । जनन्यामपि प्रसूः । "प्रसूरश्वाजनन्योश्च कन्दलीवीरुधोः स्त्रियाम्" इति मेदिनी । रोदसी रोदस्यौ इति सान्तद्विवचनान्ते स्यातामेकयोक्त्या भूमिद्यावौ द्वे अप्युच्यते । पृथगपि प्रयोगोऽस्ति । यदुक्तम् । "रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक् । सहप्रयोगेऽप्यनयो रोदस्यावपि रोदसी" इति । रोदसीत्यव्ययमप्यस्ति । यदुक्तम् । "द्यावापृथिव्यौ रोदस्यौ रोदसी रोदसीति च" इति ॥ २२८ ॥ ज्वालायां भासि च दीप्तौ अर्चिः । भादित्रये ज्योतिः । भं नक्षत्रम् । द्योतः प्रकाशः । दृष्टिः कनीनिकामध्यभागः । "अग्नौ दिवाकरे च ज्योतिः पुंसि" । आगः पापेऽपराधे च । "आगः स्यादेनोवदधे मन्तौ" इति हैमः । आदिना यौवनादि वयः ॥ २२९ ॥ पुरीषं गूथम् "वर्चो नपुंसकं रूपे विष्ठायामपि तेजसि । पुंसि चन्द्रस्य तनये" इति मेदिनी । उत्सवे तेजसि च महः । "गुणे गुणभेदे" । स्त्रीणां पुष्पे आर्तवे च "रेणुपरागयोश्च रजः । अदन्तोऽप्ययम् । "रजोऽयं रजसा सार्धं स्त्रीपुष्पगुणधूलिषु" इत्यजयः । राह्वादित्रये च तमः । "पापे शोके च" ॥ २३० ॥ पद्ये गायत्र्यादिवृत्ते । अभिलाषे

छन्दः पद्येऽभिलाषे च तपः कृच्छ्रादिकर्म च ॥
सहो बलं सहा मार्गो नभः खं श्रावणो नभाः ॥ २३१ ॥
ओकः सद्माश्रयश्चौकाः पयः क्षीरं पयोऽम्बु च ॥
ओजो दीप्तौ बले स्रोत इन्द्रिये निम्नगारये ॥ २३२ ॥
तेजः प्रभावे दीप्तौ च बले शुक्रेऽप्यतस्त्रिषु ॥
विद्वान् विदंश्च बीभत्सो हिंस्रेऽप्यतिशये त्वमी ॥ २३३ ॥
वृद्धप्रशस्ययोर्ज्यायान् कनीयांस्तु युवाल्पयोः ॥
वरीयांस्तूरुवरयोः साधीयान्साधुबाढयोः ॥ २३४ ॥
इति सान्ताः ॥ दलेऽपि बर्ह निर्बन्धोपरागार्कादयो ग्रहाः ॥

इच्छायाम् । "छन्दः पद्ये च वेदे च स्वैराचाराभिलाषयोः" इति मेदिनी । कृच्छ्रं सान्तपनादिव्रतम् । आदिना चान्द्रायणादि । तपो लोकान्तरेऽपि च । "धर्मे च तपः" । बले सहः क्लीबम् । मार्गो मार्गशीर्षः । अत्र पुंसि । "सहो बले ज्योतिषि च पुंसि हेमन्तमार्गयोः" इति कोशान्तरम् । खमाकाशः । तत्र नभः क्लीबे । श्रावणे पुंसि । "नभो व्योम्नि नभो घ्राणे बिसतन्तौ पतद्ग्रहे । प्रावृषि श्रावणे" इति हैमः ॥ २३१ ॥ सद्म गृहम् । ओकः अदन्तोऽप्ययम् । "ओक उचः कः" इति निपातनात् । आश्रय आश्रयमात्रम् । "ओकस्त्वाश्रयमात्रे स्यात्" इति हैमः । ओजो दीप्तिप्रकाशयोः । "अवष्टम्भे बले धातुतेजसि" इति हैमः । इन्द्रियनदीवेगयोः स्रोतः ॥ २३२ ॥ प्रभावादिचतुष्के तेजः । "तेजस्त्विड्रेतसोर्बले । नवनीते प्रभावेऽग्नौ" इति हैमः । अतः परं सान्तसमाप्तिपर्यन्ता वाच्यलिङ्गाः । विदन् ज्ञाता । चकारादात्मज्ञोऽपि विद्वान् । "विद्वानात्मविदि प्राज्ञे पण्डिते चाभिधेयवत्" इति विश्वः । हिंस्रे क्रूरे । अपिशब्दाद्रसभेदेऽपि बीभत्सः । "बीभत्सो विकृते क्रूरे रसे पार्थे घृणात्मनि" इति हैमः ॥ २३३ ॥ अमी वक्ष्यमाणा ज्यायआदयः साधीयःपर्यन्ताः सान्ता वृद्धादीनां बाढपर्यन्तानां अतिशये ज्ञेयाः । अतिशयेन वृद्धे प्रशस्ये स्तुत्ये च ज्यायान् । अतिशयितयोर्युवाल्पयोः कनीयान् । उरुर्महान् वरः श्रेष्ठस्तयोरतिशयितयोर्वरीयान् । अतिशयेन साधुः साधीयान् । अतिशयितं बाढं साधीयः । अतिशायनेऽर्थे इष्ठन्नीयसुन्भ्यां इमे शब्दाः साधवः ॥ २३४ ॥ इति सान्ताः । अथ हान्तानाह ॥ दले पत्रे अपिशब्दात्पिच्छेऽपि बर्हम् । "बर्हं तर्णे परीवारे कलापे" इति हैमः । निर्बन्धादयो ग्रहाः । निर्बन्ध आग्रहविशेषः उपरागश्च-

द्वार्यापीडे क्वाथरसे निर्व्यूहो नागदन्तके ॥ २३५ ॥
तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च ॥
पत्नीपरिजनादानमूलशापाः परिग्रहाः ॥ २३६ ॥
दारेषु च गृहाः श्रोण्यामप्यारोहो वरस्त्रियाः ॥
व्यूहो वृन्देऽप्यहिर्वृत्रेऽप्यमीन्द्वर्कास्तमोऽपहाः ॥ २३७ ॥
परिच्छदे नृपार्हेऽर्थे परिबर्हो॥इति हान्ताः॥ऽव्ययाः परे॥
आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे ॥ २३८ ॥

न्द्रार्कग्रहणम् । "ग्रहो निग्रहनिर्बन्धग्रहणेषु रणोद्यमे । सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः" इति विश्वः ॥ द्वारि द्वारे । आपीडे शेखरे । क्वाथरसे क्वथितद्रव्यरसे । नागदन्तके गृहादिभित्तिस्थकीलद्वये निर्व्यूहः ॥ २३५ ॥ हस्ते यद्गृहीत्वा तुलया द्रव्यमुन्मीयते तत्तुलासूत्रं तत्र । अश्ववृषादिरश्मौ च प्रग्राहप्रग्रहौ । "प्रग्राहः स्यात्तुलासूत्रे वृषादीनां च बन्धने" । "प्रग्रहः किरणे भुजे । तुलासूत्रेऽश्वादिरश्मौ सुवर्णे हरिपादपे । बन्धे बन्द्याम्" इति हैमः । परिजनः परिवारः । आदानं स्वीकारः "परिग्रहः कलत्रे च मूलस्वीकारयोरपि । शपथे परिवारे च राहुवक्त्रस्थभास्करे" इत्यजयः ॥ २३६ ॥ दारेषु पत्न्याम् । चकारात्सद्मनि गृहाः पुंभूम्नि । या वरस्त्री उत्तमा स्त्री तस्याः श्रोण्यां कट्यामारोहः । यथा वरारोहा । अपिशब्दादवरोहे गजारोहे च । "आरोहो दैर्घ्य उच्छ्राये स्त्रीकट्यां मानभिद्यपि । आरोहणे गजारोहे" इति हेमचन्द्रः । अपिशब्दाद्व्यूहः स्याद्बलविन्यासे । अहिर्वृत्रासुरे सर्पे "निर्माणतर्कयोश्च" । वह्निचन्द्रसूर्यास्तमोपहाः । "जिने च तमोपहः" ॥ २३७ ॥ नृपार्हेऽर्थे राजयोग्यद्रव्ये सितच्छत्रादौ । "परिबर्हस्तु राजार्हवस्तुन्यपि परिच्छद" इति । "परिबर्हः परिवारः" । परेऽतऊर्ध्वं वक्ष्यमाणा आङादिशब्दा अव्यया उच्यन्ते । अव्ययलक्षणं तु । "सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ॥ वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्" इति । तेषामत्र वर्गे उपन्यासस्तु पूर्ववन्नानार्थत्वात् । इति हान्ताः ॥ आङित्यव्ययं ईषदर्थादिचतुष्के । तस्य ङकारोऽनुबन्धः । ईषदर्थे यथा । आपिङ्गलः ईषत्पिङ्गल इत्यर्थः । अभिव्याप्तौ यथा । आसत्यलोकादापातालात् । सीमार्थे यथा । आसमुद्रं राजदण्डः । धातुयोगजे क्रियायोगजेऽर्थे यथा । आहरति "आक्रामतीत्यादि" ॥ २३८ ॥

आ प्रगृह्यः स्मृतौ वाक्येऽप्यास्तु स्यात्कोपपीडयोः ॥
पापकुत्सेषदर्थे कु धिङ् निर्भर्त्सननिन्दयोः ॥ २३९ ॥
चान्वाचयसमाहारेतरेतरसमुच्चये ॥
स्वस्त्याशीःक्षेमपुण्यादौ प्रकर्षे लङ्घनेऽप्यति ॥ २४० ॥
स्वित्प्रश्ने च वितर्के च तु स्याद्भेदेऽवधारणे ॥

यः प्रगृह्यसंज्ञकः आ इति निपातः सः स्मृतौ स्मरणे वाक्ये वाक्यपूरणे च वर्तते । प्रगृह्यस्त्वचि नित्यं प्रकृत्या वर्तते । तत्र स्मृतौ यथा । आ एवं किल तत् । वाक्ये तु आ एवं मन्यसे । "आ प्रगृह्यः स्मृतौ वाक्येऽनुकम्पायां समुच्चये" इति मेदिनी । सविसर्गस्त्वा इति यो निपातः स पीडायां कोपे च वर्तते । तत्र पीडायां यथा । आः शीतम् । कोपे यथा । आः पाप किं विकत्थसे । "आः स्मरणेऽपाकरणे कोपसंतापयोरपि" इति कोशान्तरम् । पापाद्यर्थत्रये कुशब्दः । पापे यथा । कुकर्म । कुत्सायां यथा । कापथः । ईषदर्थे यथा । कवोष्णम् । "कु पापीयसि कुत्सायामीषदर्थे निवारणे" इति हैमः । "कु कुत्सायां निवारणे" इति विश्वः । अपकारशब्दैर्भयोत्पादनं निर्भर्त्सनम् । दोषाख्यानमात्रं निन्दा । निर्भर्त्सने यथा । धिक् त्वां ताडनार्हमनध्ययनशीलम् । निन्दायां यथा । धिक् परस्त्रीगामिनं पुरुषम् ॥ २३९ ॥ अन्वाचयाद्यर्थचतुष्के चशब्दः । अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः । तत्र यथा । भिक्षामट गां चानय । समाहारः समूहः । तत्र यथा । संज्ञा च परिभाषा च संज्ञापरिभाषम् । मिलितानामन्वय इतरेतरयोगः । यथा धवश्च खदिरश्च धवखदिरौ । परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः । तत्र यथा । ईश्वरं गुरुं च भजस्वेति । "च पादपूरणे पक्षान्तरे हेतौ विनिश्चये" इति त्रिकाण्डशेषः । आशीराशीर्वादः । तत्र यथा । स्वस्ति ते भूयात् । क्षेमे निरुपद्रवे यथा । स्वस्ति गच्छ । पुण्ये यथा । स्वस्तिमान्स्वर्गमश्नुते । आदिना "स्वस्ति स्यान्मङ्गले पुण्येऽप्याशंसायामपि क्वचित्" इति मेदिनी । प्रकर्षे अति यथा । अत्युत्तमो विष्णुः । "अति प्रकर्षे लङ्घने भृशे स्तुतावसंप्रतिक्षेपेऽपि" इति हैमः । अतिवेलं जलधितलम् ॥ २४० ॥ प्रश्नवितर्कयोः स्वित् । प्रश्ने यथा । किं स्वित्कुशलमस्ति । वितर्को नानापक्षविमर्शः । स स्वथा । सर्वेश्वरत्वं विष्णोराहोस्विच्छिवस्य । "स्वित्प्रश्ने च वितर्के च

241-243



सकृत्सहैकवारे चाप्याराद्दूरसमीपयोः ॥ २४१ ॥
प्रतीच्यां चरमे पश्चादुताप्यर्थविकल्पयोः ॥
पुनःसहार्थयोः शश्वत्साक्षात्प्रत्यक्षतुल्ययोः ॥ २४२ ॥
खेदानुकम्पासंतोषविस्मयामन्त्रणे बत ॥
हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ॥ २४३ ॥
प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ॥

तथैव पादपूरणे" इति मेदिनी । भेदावधारणयोस्तुशब्दो यथा । क्षीरान्मांसं तु पुष्टिकृत् । शिष्टैर्मतं तु तद्युक्तम् । "तु पादपूरणे भेदे समुच्चयेऽवधारणे । पक्षान्तरे नियोगे च प्रशंसायां विनिग्रहे" इति मेदिनी । सहार्थे एकवारे च सकृत् यथा । सकृद्यान्ति । सकृदपि कुर्याद्दयाश्राद्धम् । दूरे "आरात्" यथा । आराच्छत्रोः सदा वसेत् । समीपे तु सखायं स्थापयेदारात् ॥ २४१ ॥ प्रतीच्यां पश्चिमदिशि । चरमेऽन्त्ये च पश्चात् । यथा । "पश्चादस्तङ्गतो रविः । पश्चिमे वयसि नैमिषं वशी" । अपिशब्दस्यार्थः समुच्चयस्तत्र विकल्पे चोतशब्दो यथा । उत भीम उतार्जुनः । विष्णुरुत शिवः सेव्यः । "उत प्रश्नवितर्कयोः । समुच्चये विकल्पे च" इति हैमः । अजयस्तु "उतापी द्वौ च बाढार्थाविति" । पुनरर्थे पौनःपुन्ये सहार्थे च शश्वत् । यथा शश्वद्विष्णुं स्मरेत् । शिष्यैः शश्वद्गतो गुरुः । "शश्वत्स्यादात्मप्रश्ने च मङ्गले । पुराकल्पे सदार्थे च पुनरर्थे च दृश्यते" इति मेदिनी । अजयस्तु "शश्वत्सहसदार्थयोः" इत्याह । "शश्वत्सह पुनर्नित्यः" इति हैमश्च । प्रत्यक्षे तुल्ये च साक्षात् । यथा । साक्षात् दृष्टो मया हरिः । साक्षाल्लक्ष्मीरियं वधूः ॥ २४२ ॥ खेदाद्यर्थपञ्चके बत । यथा । अहो बत महत्कष्टमिति । बत निःस्वोऽसि । बत पतिरालिङ्गितः । अहो बतायं ध्रुव आप देवम् । एहि बत सखे । "बतेत्यव्ययं दन्त्योष्ठ्यादि" इत्यजयः । हर्षादिचतुष्के हन्तशब्दः । "हर्षे यथा । हन्त लाभः शतगुणः । अनुकम्पायां यथा । हन्त दीनो रक्षितव्यः" । वाक्यारम्भे यथा । हन्त ते कथयिष्यामि । विषादे यथा । "हन्त जातमजातारेः प्रथमेन त्वयाऽरिणा । हन्त दानेऽनुकम्पायां वाक्यारम्भविषादयोः । निश्चये च प्रमोदे च" इति हैमः ॥ २४३ ॥ यो मुख्येन सदृशः प्रतिनिधिस्तत्र प्रतिशब्दो यथा । अभिमन्युं प्रति परीक्षित् । वीप्सा व्याप्तुमिच्छा तत्र यथा । तीर्थं तीर्थं प्रति गच्छति । लक्षणायां यथा । वृक्षशाखां प्रति विद्योतते विद्युत् । आदिना इत्थंभूताख्यानादौ । प्रयोगत इति शिष्टप्रयोगानु-

इति हेतुप्रकरणप्रकाशादिसमाप्तिषु ॥ २४४ ॥
प्राच्यां पुरस्तात्प्रथमे पुरार्थेऽग्रत इत्यपि ॥
यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ॥ २४५ ॥
मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ॥
वृथा निरर्थकाविध्योर्नानाऽनेकोभयार्थयोः ॥ २४६ ॥

सारेण प्रतिशब्दस्य प्रक्षेपः। "प्रतीत्यर्थंभूतभागयोः । प्रतिदाने प्रतिनिधौ वीप्सालक्षणयोरपि" इति हैमः । हेत्वर्थे इतिशब्दो यथा । रामो हन्तीति रावणः पलायते । प्रकरणं प्रकारः । यथा विप्रक्षत्रियविट्शूद्रा इति वर्णाः । प्रकाशे यथा । इति पाणिनिः । पाणिनिशब्दो लोके प्रकाशते इत्यर्थः । "प्रकर्ष इति पाठः" । आदिशब्दादेवमर्थे । यथा । "क्रमादमुं नारद इत्यबोधि" । समाप्ताववसाने यथा । धर्ममाचरेदिति । "इति स्वरूपे सान्निध्ये विवक्षानियमेऽपि च । हेतौ प्रकारप्रत्यक्षप्रकर्षेष्ववधारणे । एवमर्थे समाप्तौ स्यात्" इति हैमः ॥ २४४ ॥ प्राच्याद्यर्थचतुष्के पुरस्तात् । प्राच्यां पूर्वदिशि । प्रथमे यथा । पुरस्ताद्भुङ्क्ते । पुरार्थेऽतीते यथा । पुरस्ताद्दासोऽभूत् । अग्रतोऽग्रे यथा । पुरस्तात्पुस्तकम् । यद्वाग्रत इत्यपि शब्दः प्राच्याद्यर्थे स्यात् । साकल्यादौ यावत्तावच्छब्दौ यथा । यावद्दत्तं तावद्भुक्तम् । अवधौ यथा । मूलाच्छाखां यावत्प्रकाण्डः । माने परिमाणे यथा । यावत्स्वर्णं तावद्रजतम् । अवधारणे निश्चये यथा । श्रोत्रियं तावदामन्त्रयस्व । "यावत्कार्त्स्न्येऽवधारणे । प्रशंसायां परिच्छेदे मानाधिकारसंभ्रमे । पक्षान्तरे च" इति मेदिनी ॥ २४५ ॥ अथो अथ इमौ शब्दौ मङ्गलादिषु । मङ्गले यथा । अथातो ब्रह्मजिज्ञासा । अनन्तरे यथा । स्नानं कृत्वाऽथ भुञ्जीत । आरम्भे यथा । अथ शब्दानुशासनं लिख्यते । प्रश्ने यथा । अथ वक्तुं समर्थोऽसि । कार्त्स्न्ये यथा । अथ धातून्ब्रूमः । अथो अथ समुच्चये । "मङ्गले संशयारम्भाधिकारानन्तरेषु च । अन्वादेशे प्रतिज्ञायां प्रश्नसाकल्ययोरपि" इति हैमः । निरर्थके वृथा । यथा । वृथा दुग्धोऽनड्वान् । अविधौ विधिहीने वृथा । यथा । वृथा दानम् । "वृथा निष्कारणे वन्ध्ये वृथा स्याद्विधिवर्जिते" इति विश्वः । अनेकार्थे नानाशब्दो यथा । नानाविधा जनाः । उभयार्थे यथा । नानाविधं न सज्जेत् । "नानाविनोभयानेकार्थेषु" इति हेमचन्द्रः ॥ २४६ ॥ पृच्छायां यथा । को नु धावति ।

246-249



नु पृच्छायां विकल्पे च पश्चात्सादृश्ययोरनु ॥
प्रश्नावधारणाऽनुज्ञानुनयामन्त्रणे ननु ॥ २४७ ॥
गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ॥
उपमायां विकल्पे वा सामि त्वर्धे जुगुप्सिते ॥ २४८ ॥
अमा सह समीपे च कं वारिणि च मूर्धनि ॥
इवेत्थमर्थयोरेवं नूनं तर्केऽर्थनिश्चये ॥ २४९ ॥
तूष्णीमर्थे सुखे जोषं किं पृच्छायां जुगुप्सने ॥

विकल्पे यथा । अयं भीमो नु धर्मो नु । "नु प्रश्नेऽनुनयेऽतीतार्थे विकल्पवितर्कयोः" इति हैमः । पश्चादर्थे सादृश्यार्थे चानु । पश्चादर्थे यथा । रथमनुगच्छति । सादृश्ये यथा । ज्येष्ठं अनुकरोति । "अनु लक्षणवीप्सेत्थंभूतभागेषु सन्निधौ । सादृश्यायामहीनेषु पश्चादर्थसहार्थयोः" इति हैमः । प्रश्नादिपञ्चके ननु । प्रश्ने यथा । ननु किमेतत् । अवधारणे यथा । नन्वयं योगी । अनुज्ञायां यथा । ननु गच्छ । अनुनयः सान्त्वनम् । ननु कोपं मुञ्च दयां कुरु । आमन्त्रणं संबोधनम् । ननु राजन् । "नन्वाक्षेपे परिप्रश्ने प्रत्युक्तावववधारणे । वाक्यारम्भेऽप्यनुनयामन्त्रणानुज्ञयोरपि" इति हैमः ॥ २४७ ॥ गर्हादिपञ्चके क्रमादपिशब्दो यथा । अपि सिञ्चेत्पलाण्डुम् । स्त्रियं पालय पुत्रमपि । अपि जानासि किञ्चित्त्वम् । अपि चोरो भवेत् । अपि स्थाणुं जयेद्रामः । युक्तपदार्थे कामचारक्रियासु च अपिशब्दः । उपमाविकल्पयोर्वाशब्दः स्यात् । उपमायां यथा । आशीविषो वा संक्रुद्धः । विकल्पे यथा । शिवं वा यदि वा विष्णुम् । "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वः । अर्धे सामि यथा । सामि संमिताक्षी । जुगुप्सिते यथा । सामि कृतमकल्याणकारि ॥ २४८ ॥ सहार्थेऽमा यथा । पुत्रेणामा भुङ्क्ते । समीपे यथा । अमात्यः समीपवर्तीत्यर्थः । "अमान्तिकसहार्थयोः" इति कोशान्तरे च । "कं शिरःसुखवारिषु" इति मेदिनी । इवार्थे इत्थमर्थे च एवंशब्दो यथा । अग्निरेव द्विजः अग्निरिवेत्यर्थः । इत्थमर्थे प्रकारे । एवंवादिनि देवर्षौ । "एवं प्रकारोपमयोरङ्गीकारेऽवधारणे" इति धरणिहेमचन्द्रौ । तर्के नूनं यथा । नूनमयमतियज्वनां प्रियः । अर्थनिश्चये यथा । क्षुद्रेऽपि नूनं शरणं प्रपन्ने । "नूनं निश्चिततर्कयोः" इति विश्वः ॥ २४९ ॥ तूष्णीमर्थे मौने यथा । जोषं तिष्ठ । सुखे यथा । जोषमासीत वर्षासु । "जोषं सुखे

नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ॥ २५० ॥
अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ॥
हुं वितर्के परिप्रश्ने समयान्तिकमध्ययोः ॥ २५१ ॥
पुनरप्रथमे भेदे निर्निश्चयनिषेधयोः ॥
स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा ॥ २५२ ॥

स्तुतौ । मौनलङ्घनयोश्चापि" इति हैमः। पृच्छायां किम् । यथा । "किमाद्रियेरन् रसिकाः कृतिं ते" । जुगुप्सने किम् । यथा । स किंराजा यः प्रजां न रक्षति । "किं वितर्के परिप्रश्ने क्षेपनिन्दाप्रकारयोः" इति विश्वः । प्राकाश्यादिपञ्चके नामशब्दः । प्राकाश्यं प्रसिद्धिः । यथा "हिमालयो नाम नगाधिराजः" । संभाव्ये कथञ्चिदर्थे यथा । भविष्यति युद्धं नाम । क्रोधे यथा । मम वैरी रावणो नाम पापः । उपगमः सद्वेषाङ्गीकारः । यथा । शत्रोः सकाशाद्गृह्णाति नाम । कुत्सने यथा । को नामायं प्रलपति मे विशतः सभायाम् । "नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च । संभाव्यकुत्साप्राकाश्यविकल्पेष्वपि दृश्यते" इति मेदिनी ॥ २५० ॥ भूषणमलङ्कारः । पर्याप्तिः परिपूर्णता । शक्तिः सामर्थ्यम् । वारणं चैतदर्थेऽलंशब्दः । क्रमेण यथा । अलङ्कृतः शिशुः । अलं भुक्तवान् । अलं मल्लो मल्लाय । अलं महीपाल तव श्रमेण । "अलं निरर्थके" इति हैमः । वितर्कपरिप्रश्नयोर्हुङ्कारः । वितर्के हुं जलं मृगतृष्णा हुम् । परिप्रश्ने हुं देवदत्तोऽयम् । "हुं वितर्के चानुमतौ" इति त्रिकाण्डशेषः । "हुं वितर्के परिप्रश्ने हुं रुषोक्त्यनुनीतिषु" इति विश्वः । "हुं वितर्के परिप्रश्ने हुं लज्जायां निवारणे" इति हैमः । समीपमध्ययोः समया । समीपे यथा । समया पत्तनं नदी । मध्ये यथा । समया शैलयोर्ग्रामः ॥ २५१ ॥ प्रथमाभावे यथा । पुनरुक्तम् । भेदे यथा । किं पुनर्ब्राह्मणाः पुण्याः । "पुनरप्रथमे मतम् । अधिकारे च भेदे च तथा पक्षान्तरेऽपि च" इति मेदिनी । निश्चये निर्यथा । निरुक्तम् । निषेधे निर्धनो राजा । "निर्निश्चये क्रान्ताद्यर्थे निःशेषप्रतिषेधयोः" इति हैमः । प्रबन्धादिषु पुराशब्दः । प्रबन्धे यथा । पुराधीते । अविरतमपाठीदित्यर्थः । चिरन्तनम् । पुराणमिति यावत् । तत्र यथा । पुरातनम् । अतीतं भूतम् । निकटः सन्निहितः । आगामिकं भावि । "पुरा पुराणे निकटे प्रबन्धातीतभाविषु" इति विश्वमेदिन्यौ ॥ २५२ ॥ ऊररीत्येको दीर्घादिः शब्दः । उररीत्यपरो

नु पृच्छायां विकल्पे च पश्चात्सादृश्ययोरनु ॥
प्रश्नावधारणाऽनुज्ञानुनयामन्त्रणे ननु ॥ २४७ ॥
गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ॥
उपमायां विकल्पे वा सामि त्वर्धे जुगुप्सिते ॥ २४८ ॥
अमा सह समीपे च कं वारिणि च मूर्धनि ॥
इवेत्थमर्थयोरेवं नूनं तर्केऽर्थनिश्चये ॥ २४९ ॥
तूष्णीमर्थे सुखे जोषं किं पृच्छायां जुगुप्सने ॥

विकल्पे यथा। अयं भीमो नु धर्मो नु । "नु प्रश्नेऽनुनयेऽतीतार्थे विकल्पवितर्कयोः" इति हैमः। पश्चादर्थे सादृश्यार्थे चानु। पश्चादर्थे यथा। रथमनुगच्छति। सादृश्ये यथा। ज्येष्ठं अनुकरोति। "अनु लक्षणवीप्सेत्थंभूतभागेषु सन्निधौ। सादृश्यायामहीनेषु पश्चादर्थसहार्थयोः" इति हैमः। प्रश्नादिपञ्चके ननु। प्रश्ने यथा। ननु किमेतत्। अवधारणे यथा। नन्वयं योगी। अनुज्ञायां यथा। ननु गच्छ। अनुनयः सान्त्वनम्। ननु कोपं मुञ्च दयां कुरु। आमन्त्रणं संबोधनम्। ननु राजन्। "नन्वाक्षेपे परिप्रश्ने प्रत्युक्ताववधारणे। वाक्यारम्भेऽप्यनुनयामन्त्रणानुज्ञयोरपि" इति हैमः॥ २४७॥ गर्हादिपञ्चके क्रमादपिशब्दो यथा। अपि सिञ्चेत्पलाण्डुम्। श्रियं पालय पुत्रमपि। अपि जानासि किञ्चित्त्वम्। अपि चोरो भवेत्। अपि स्थाणुं जयेद्रामः। युक्तपदार्थे कामचारक्रियासु च अपिशब्दः। उपमाविकल्पयोर्वाशब्दः स्यात्। उपमायां यथा। आशीविषो वा संक्रुद्धः। विकल्पे यथा। शिवं वा यदि वा विष्णुम्। "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वः। अर्धे सामि यथा। सामि संमिताक्षी। जुगुप्सिते यथा। सामि कृतमकल्याणकारि॥ २४८॥ सहार्थेऽमा यथा। पुत्रेणामा भुङ्क्ते। समीपे यथा। अमात्यः समीपवर्तीत्यर्थः। "अमान्तिकसहार्थयोः" इति कोशान्तरे च। "कं शिरःसुखवारिषु" इति मेदिनी। इवार्थे इत्थमर्थे च एवंशब्दो यथा। अग्निरेव द्विजः अग्निरिवेत्यर्थः। इत्थमर्थे प्रकारे। एवंवादिनि देवर्षौ। "एवं प्रकारोपमयोरङ्गीकारेऽवधारणे" इति धरणिहेमचन्द्रौ। तर्के नूनं यथा। नूनमयमतियज्वनां प्रियः। अर्थनिश्चये यथा। क्षुद्रेऽपि नूनं शरणं प्रपन्ने। "नूनं निश्चिततर्कयोः" इति विश्वः॥२४९॥ तूष्णीमर्थे मौने यथा। जोषं तिष्ठ। सुखे यथा। जोषमासीत वर्षासु। "जोषं सुखे

250-251



नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ॥ २५० ॥
अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ॥
हुं वितर्के परिप्रश्ने समयान्तिकमध्ययोः ॥ २५१ ॥
पुनरप्रथमे भेदे निर्निश्चयनिषेधयोः ॥
स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा ॥ २५२ ॥

स्तुतौ । मौनलङ्घनयोश्चापि" इति हैमः। पृच्छायां किम् । यथा । "किमाद्रियेरन् रसिकाः कृतिं ते" । जुगुप्सने किम् । यथा । स किंराजा यः प्रजां न रक्षति । "किं वितर्के परिप्रश्ने क्षेपनिन्दाप्रकारयोः" इति विश्वः । प्राकाश्यादिपञ्चके नामशब्दः । प्राकाश्यं प्रसिद्धिः । यथा "हिमालयो नाम नगाधिराजः" । संभाव्यं कथञ्चिदर्थे यथा । भविष्यति युद्धं नाम । क्रोधे यथा । मम वैरी रावणो नाम पापः । उपगमः सद्वेषाङ्गीकारः । यथा । शत्रोः सकाशाद्गृह्णाति नाम । कुत्सने यथा । को नामायं प्रलपति मे विशतः सभायाम् । "नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च । संभाव्यकुत्साप्राकाश्यविकल्पेष्वपि दृश्यते" इति मेदिनी ॥ २५० ॥ भूषणमलङ्कारः । पर्याप्तिः परिपूर्णता । शक्तिः सामर्थ्यम् । वारणं चैतदर्थेऽलंशब्दः । क्रमेण यथा । अलङ्कृतः शिशुः । अलं भुक्तवान् । अलं मल्लो मल्लाय । अलं महीपाल तव श्रमेण । "अलं निरर्थके" इति हैमः । वितर्कपरिप्रश्नयोर्हुङ्कारः । वितर्के हुं जलं मृगतृष्णा हुम् । परिप्रश्ने हुं देवदत्तोऽयम् । "हुं वितर्के चानुमतौ" इति त्रिकाण्डशेषः । "हुं वितर्के परिप्रश्ने हुं रुषोक्त्यनुनीतिषु" इति विश्वः । "हुं वितर्के परिप्रश्ने हुं लज्जायां निवारणे" इति हैमः । समीपमध्ययोः समया । समीपे यथा । समया पत्तनं नदी । मध्ये यथा । समया शैलयोर्ग्रामः ॥ २५१ ॥ प्रथमाभावे यथा । पुनरुक्तम् । भेदे यथा । किं पुनर्ब्राह्मणाः पुण्याः । "पुनरप्रथमे मतम् । अधिकारे च भेदे च तथा पक्षान्तरेऽपि च" इति मेदिनी । निश्चये निर्यथा । निरुक्तम् । निषेधे निर्धनो राजा । "निर्निश्चये क्रान्ताद्यर्थे निःशेषप्रतिषेधयोः" इति हैमः । प्रबन्धादिषु पुराशब्दः । प्रबन्धे यथा । पुराधीते । अविरतमपाठीदित्यर्थः । चिरन्तनम् । पुराणमिति यावत् । तत्र यथा । पुरातनम् । अतीतं भूतम् । निकटः सन्निहितः । आगामिकं भावि । "पुरा पुराणे निकटे प्रबन्धातीतभाविषु" इति विश्वमेदिन्यौ ॥ २५२ ॥ ऊररीत्येको दीर्घादिः शब्दः । उररीत्यपरो

251-255.



ऊरर्यूरी चोररी च विस्तारेऽङ्गीकृतौ त्रयम् ॥
स्वर्गे परे च लोके स्वर्वार्तासंभाव्ययोः किल ॥ २५३ ॥
निषेधवाक्यालङ्कारजिज्ञासानुनये खलु ॥
समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः ॥ २५४ ॥
नामप्राकाश्ययोः प्रादुर्मिथोऽन्योन्यं रहस्यपि ॥
तिरोऽन्तर्धौ तिर्यगर्थे हा विषादशुगर्तिषु ॥ २५५ ॥
अहहेत्यद्भुते खेदे हि हेतावववधारणे ॥ इति नानार्थवर्गः ॥३॥

ह्रस्वादिरिति भेदान्न द्विरुक्तिः । विस्तारेऽङ्गीकृतौ च ऊर्यादित्रयम् । यथा ऊररी करोतीत्यादि । स्वः स्वर्गे यथा । स्वर्णद्यां स्नाति नारदः । परे इति लोकविशेषणम् । परे लोके यथा । "स्वर्गतस्य क्रिया कार्या पुत्रैः परमभक्तितः" । "स्वः स्वर्गपरलोकयोः" इति विश्वः । वार्तायां यथा । जघान कंसं किल वासुदेवः । संभाव्यं संभावनीयम् । तत्र यथा । गुरून्किलातिशेते शिष्यः । "किलशब्दस्तु वार्तायां संभाव्यानुनयार्थयोः" इति विश्वः । किल संभाव्यवार्तयोः । "हेत्वरुच्योरलीके च" इति हैमः ॥२५३॥ निषेधे खलु यथा । खलु रुदित्वा । वाक्यालङ्कारे वाक्यभूषायाम् । एतत्खल्वाहुः । जिज्ञासायां यथा । खलु जानासि । अनुनये यथा । देहि खलु वाचकम् । "खलु स्याद्वाक्यभूषायां जिज्ञासायां च सान्त्वने ॥ वीप्सामाननिषेधेषु पूरणे पदवाक्ययोः" इति मेदिनी । समीपादिपञ्चकेऽभितः । समीपे यथा । वाराणसीमभितः भागीरथी । उभयत इत्युभयार्थे यथा । अभितः कुरु चामरौ । शीघ्रार्थे यथा । अभितोऽधीष्व । साकल्ये यथा । अभितो वनदाहः । आभिमुखे यथा । अभितो हिंस्रको हन्ति मामेव परिधावति ॥२५४॥ नाम्नि प्राकाश्ये च प्रादुः । नाम्नि यथा । प्रादुरासीच्चक्रपाणिः । प्राकाश्ये यथा । प्रादुर्बुद्धिर्भविष्यति । अन्योन्यार्थे मिथो यथा । वासिष्ठकौण्डिन्यमैत्रावरुणानां मिथो न विवाहः । रहसि मिथो यथा । मिथो मन्त्रयते । "मिथोऽन्योन्यं मिथो रहः" इति विश्वः । अन्तर्धाने तिर्यगर्थे च तिरः । अन्तर्धाने यथा । तिरोभूयास्ते । तिर्यगर्थे यथा तिरोवर्तते चन्द्रः । विषादाद्यर्थत्रये हाकारः । विषादे यथा । हा रमणीयो गतः कालः । शुचि शोके । यथा । हा राम वनं गतोऽसि । अर्तौ पीडायां यथा । हा हतोऽस्मीति । "कुत्सार्थे च हा शब्दः" ॥ २५५ ॥ अद्भुते यथा । अहह बुद्धिप्रकर्षो राज्ञः । खेदे यथा । अहह नीतो द्यूतेन मया

चिरायचिररात्रायचिरस्याद्याश्चिरार्थकाः ॥
मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत्समाः ॥ १ ॥
स्राक् झटित्यञ्जसाह्नाय द्राङ् मङ्क्षु सपदि द्रुते ॥
बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे ॥ २ ॥
पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने ॥

कालः । अहहा दीर्घान्तमपि । अत्र क्विप् । "अहहेत्यद्भुते खेदे परिक्लेशप्रकर्षयोः । संबोधनेऽपि" इति मेदिनी । हेतौ कारणे हि । यथा । अग्निरत्रास्ति धूमो हि दृश्यते । अवधारणे निश्चये यथा । चन्द्रो हि शीतः । "हि पादपूरणे हेतौ विशेषेऽप्यवधारणे । प्रश्ने हेत्वपदेशे च संभ्रमासूययोरपि" इति मेदिनी । दीर्घान्तपाठोऽप्यस्ति । ही दुःखहेतावाख्यातो विषादे विस्मयेऽपि चेति ॥ इति नानार्थवर्गः ॥ ३ ॥ चिराय चिररात्राय चिरस्य एते निपाता आद्या येषां ते तथा । आद्यशब्दाच्चिरेण चिरात् चिरं इति षट् चिरार्थकाः । दीर्घकालस्य वाचका इत्यर्थः । "क्रमेणोदाहरणानि । यथा । चिराय संतर्प्य समिद्भिरग्निम् । चिररात्राय संचितम् । चिरस्य दृष्टेव मृतोत्थितेव । चिरेण नाभिं प्रथमोदबिन्दवः । चिरात्सुतस्पर्शरसज्ञतां ययौ । स चिरं तपसि स्थितः" । मुहुः पुनःपुनः शश्वत् अभीक्ष्णं असकृत् एते पञ्च समाः अर्थतस्तुल्याः । यथा । मुहुः पश्यसि कौन्तेय । आगच्छति पुनःपुनः । वन्यवृत्तिमिमां शश्वत् । अभीक्ष्णमक्षुण्णतयाऽतिदुर्गमम् । असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात् । अजयस्तु । अभीक्ष्णशब्दमनव्ययमप्याह । "अभीक्ष्णं तु पौनःपुन्ये सर्वदार्थे च दृश्यते" इत्यनव्ययप्रकरणे पाठात् ॥ १ ॥ स्राक् झटिति अञ्जसा अह्नाय द्राक् मङ्क्षु सपदि एते सप्त द्रुते शीघ्रे । यथा । स्राग् वयो याति देहिनाम् । वृक्षं झटित्यारुरोह । अञ्जसा याति तुरगः । अह्नाय सूर्येण तमो निरस्तम् । द्राक् भविष्यति सुखं तव प्रिये । मङ्क्षु ह्यपादि सरितः पटलैरलीनाम् । वचसस्तस्य सपदि क्रिया केवलमुत्तरम् । बलवत् सुष्ठु किमुत सु अति अतीव षट् निर्भरे अतिशये । यथा । पुनर्वशित्वा बलवन्निगृह्य । सुष्ठु पीतं मया घृतम् । किमुतावर्द्धत क्षेत्रम् । अतिवृष्टिः । अतीव शोभते राजा ॥ २ ॥ पृथक् विना अन्तरेण ऋते हिरुक् नाना एते षट् वर्जने । यथा । किंचिद्दत्त्वा पृथक् क्रिया । क्षणमप्युत्सहते न मां विना । अन्तरेण सुतं नास्ति सुखं संसा-

3-6



यत्तद्यतस्ततो हेतावसाकल्ये तु चिच्चन ॥ ३ ॥
कदाचिज्जातु सार्धं तु साकं सत्रा समं सह ॥
आनुकूल्यार्थकं प्राध्वं व्यर्थके तु वृथा मुधा ॥ ४ ॥
आहो उताहो किमुत विकल्पे किं किमूत च ॥
तु हि च स्म ह वै पादपूरणे पूजने स्वति ॥ ५ ॥
दिवाह्नीत्यथ दोषा च नक्तं च रजनाविति ॥
तिर्यगर्थे साचि तिरोऽप्यथ संबोधनार्थकाः ॥ ६ ॥
स्युः प्याट् पाडङ्ग हे है भोः समया निकषा हिरुक् ॥

रिणां भुवि । ऋते पुण्यात्स्वर्गतिर्न । हिरुक् कर्म न मोक्षः स्यात् । विष्णुं नाना मोक्षदो नास्ति देवः । यत् तत् यतः ततः चत्वारि हेतौ कारणे । यथा । यत्र रम्यं तरस्विभ्यः । तदिदं परिरक्ष शोभने । यतो गंगाम्भसि स्नातः । ततो निष्कल्मषो नरः । चित् चन द्वयं असाकल्ये । यथा कश्चित् । कश्चन ॥ ३ ॥ कदाचित् जातु द्वे कस्मिंश्चित्काले । स्मृतिः कदाचित् भवति । ज्ञानं ते जातु सूत्तमम् । सार्धं साकं सत्रा समं सह पञ्चकं सहेत्यर्थे । यथा । सार्धं दानववैरिणा । पत्न्या साकं पतिर्भुङ्क्ते । सत्रा कलत्रेण सुखं समश्नुते । समं वधूभिस्तरुणा रमन्ते । निश्वासधूमं सह रत्नभाभिः । प्राध्वमित्येकमानुकूल्ये । वृथा मुधा द्वे व्यर्थके । यथा । वृथा पुष्टः । बुधा मुधा भ्रमन्त्यत्र ॥ ४ ॥ आहो उताहो किमुत किं किमु उत षट् विकल्पे । यथा । "देव आहो गन्धर्वः । उताहो ब्रह्म चोच्यते । किमुत त्वं शिवो ब्रह्मा । स्थाणुरयं किं पुरुषः । गृहं किमु वनं गतः । विष्णुरुत शिवः सेव्यः" । तु हि च स्म ह वै षट् श्लोकचरणपूर्णतायाम् । यथा । "रामस्तु लक्ष्मणं प्राह । अहं हि यास्ये नगरम् । स च प्राह च राजानम् । मया स्म भुक्तम् । स ह तं प्राह लक्ष्मणः । तेन वै हतः" । सु अति द्वे पूजने । "सु स्तुतम् । अत्युत्तमः" ॥ ५ ॥ अह्नीत्यर्थे दिवाशब्दः । दोषा नक्तं द्वे रात्रावित्यर्थे । "यथा । चोराश्च दोषा ययुः । नक्तं गृहस्थो भुञ्जीत" । साचि तिरः द्वे तिर्यगर्थे । "कृतं साचि धनुस्तेन । तिरो गत्वा समीक्षेत" ॥ ६ ॥ प्याट् पाट् अङ्ग हे है भोः एते षट् संबोधनार्थकाः स्युः । यथा । "प्याट् भीम यज्ञं रक्षस्व । एवं पाडित्यादि" । समया निकषा हिरुक् त्रयं सामीप्ये । यथा ग्रामं समया । विलङ्घ्य लङ्कां निकषा हनि-

अतर्किते तु सहसा स्यात्पुरः पुरतोऽग्रतः ॥ ७ ॥
स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा ॥
किञ्चिदीषन्मनागल्पे प्रेत्यामुत्र भवान्तरे ॥ ८ ॥
व वा यथा तथैवैवं साम्येऽहो ही च विस्मये ॥
मौने तु तूष्णीं तूष्णीकां सद्यः सपदि तत्क्षणे ॥ ९ ॥
दिष्ट्या समुपजोषं चेत्यानन्देऽथान्तरेऽन्तरा ॥
अन्तरेण च मध्ये स्युः प्रसह्य तु हठार्थकम् ॥ १० ॥

ष्यति "पर्वतस्य हिरुक् नदी"। सहसेत्येकमतर्किते । यथा। "दिवः प्रसूनं सहसा पपात। सहसा विदधीत न क्रियाम्"। पुरः पुरतः अग्रतः त्रयमग्रे इत्यर्थे। यथा। "पुरः पश्यसि किं बाले। पुरतः स्थाप्य सर्वेशम् । लेखः प्रत्यर्थिनोऽग्रतः" ॥ ७ ॥ स्वाहा श्रौषट् वौषट् वषट् स्वधा पञ्चैते देवेभ्यो हविर्दानविशेषे प्रयुज्यन्ते । तत्र पितृदाने स्वधाशब्दः प्रसिद्धः । किञ्चित् ईषत् मनाक् त्रयमल्पे। यथा । "किंचिद्विकसितं सुमम् । ईषदुष्णं पयः पिब। मनाक् विहस्य संतुष्टः"। प्रेत्य अमुत्र द्वयं जन्मान्तरे। "यथा। प्रेत्य स्वर्गे महीयते। इह चामुत्र च फलम्" ॥ ८ ॥ व वा यथा तथा इव एवं षट् साम्ये। तत्र वशब्दो यथा। शात्रवं व वपुर्यशः। "मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम" इत्यत्र इवार्थे वशब्दो वाशब्दो वा बोध्य इति कौमुद्यामुक्तम्। यथा बुभुक्षितस्यान्नं तथैवार्तस्य चौषधम्। इन्दुरिन्दुरिव श्रीमान्। अग्निरेवं द्विजः। "वं प्रचेतसि जानीयादिवार्थे तु तदव्ययम्" इति मेदिन्यादिः। अतो "व वा यथा तथा"—इत्यादिमनोरमोक्तः पाठः साधुः"। न तु वद्वायथेत्यादिः । अपत्यादि-पर्यायमध्येऽण्फिआदीनामनुक्तेश्च । अहो ही द्वे विस्मये । यथा । अहो रूपमहो सत्त्वम् । "ही विस्मयविषादयोः" इति विश्वः। तूष्णीं तूष्णीकाम्। यथा। "तूष्णीं स्थित्वा क्षणं भूयः। तूष्णीकां जलमध्यगः" । सद्यः सपदि द्वे तत्काले। यथा। "सद्यो हतः समुत्तस्थौ। शत्रुं जघान सपदि" ॥ ९ ॥ दिष्ट्या समुपजोषं द्वे आनन्दे। यथा। दिष्ट्या ते दर्शनं कान्ते । समुपजोषं भूयात्। अन्तरे अन्तरा अन्तरेण त्रीणि मध्ये स्युः। यथा। अनयोरन्तरे तिष्ठ। त्वां मां चान्तरा अन्तरेण वा कमण्डलुः। प्रसह्येत्येकं हठार्थकम् ॥ १० ॥

10-13.



युक्ते द्वे साम्प्रतं स्थानेऽभीक्ष्णं शश्वदनारते ॥
अभावे नह्यनो नापि मास्म मालं च वारणे ॥ ११ ॥

पक्षान्तरे चेद्यदि च तत्त्वे त्वद्धाञ्जसा द्वयम् ॥
प्राकाश्ये प्रादुराविः स्यादोमेवं परमं मते ॥ १२ ॥

समन्ततस्तु परितः सर्वतो विष्वगित्यपि ॥
अकामानुमतौ काममसूयोपगमेऽस्तु च ॥ १३ ॥

सांप्रतं स्थाने द्वयं युक्ते । यथा । स्वयं छेत्तुमसांप्रतम् । न युक्तमित्यर्थः । "क्रमशो वच्मि सांप्रतमिति वा" । स्थाने हृषीकेश तव प्रकीर्त्या । अभीक्ष्णं शश्वत् द्वयं अनारते अजस्रे । "अभीक्ष्णमुष्णैरपि तस्य सोष्मणः । शश्वत्कालः" । नहि अ नो न चत्वारि अभावे । यथा । "नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति । अ राजदैविकं नष्टम् । नो चक्री किं कुलालः । न मे किंचन दह्यति" । "अ स्यादभावे स्वल्पार्थे" इति विश्वः । मास्म मा अलं त्रयं वारणे । यथा । मास्म कार्षीरिदं पुत्र । मा कुरु । अलं महीपाल तव श्रमेण ॥ ११ ॥ चेत् यदि द्वयं पक्षान्तरे । यथा । "सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम्" । अद्धा अञ्जसा द्वे तत्त्वार्थे । "यदि सैर्ण देवी यमनिरतदेहार्धघटनादवैति त्वामद्धा । अञ्जसेति रुरुधुः कुचग्रहैः" । प्रादुः आविः द्वयं प्राकाश्ये स्पष्टत्वे । यथा । प्रादुरासीत् । "आविर्बभूव" । ओं एवं परमं त्रयं मते अङ्गीकारे । यथा । "ओमित्युक्तवतोऽथ शार्ङ्गिणः । एवं यदाह भगवान् । परममित्युक्त्वा" । ओमित्यनुमते प्रोक्तं प्रवणे चाप्युपक्रमे इति विश्वः । एवं प्रकारोपमयोरङ्गीकारेऽवधारणे" इति च ॥ १२ ॥ समन्ततः परितः सर्वतः विष्वक् चत्वारि सर्वत इत्यर्थे । "समन्ततो वर्षति मेघः । आयान्ति परितः श्रियः । सर्वतो वाति पवनः । विष्वक् पतन्ति किरणाः" । अकामानुमतौ अनिच्छयानुमतौ काममित्येकम् । "त्वं हनिष्यसि चेत्कामम् । कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने" । "कामं प्रकामेऽनुमतावसूयानुगमेऽपि च" इति हैमविश्वप्रकाशौ । असूयापूर्वकस्वीकारे अस्त्वित्येकम् । यथा । "तथाविधस्तावदशेषमस्तु नः" । चकारात्काममित्यपि । "अस्तु स्यादभ्यनुज्ञानेऽसूयाङ्गीकारयोरपि" इति मेदिनी ॥ १३ ॥ नन्वित्येकं विरोधोक्तौ । "यथा ननु

ननु च स्याद्विरोधोक्तौ कच्चित्कामप्रवेदने ॥
निःषमं दुःषमं गर्ह्ये यथास्वं तु यथायथम् ॥ १४ ॥
मृषा मिथ्या च वितथे यथार्थं तु यथातथम् ॥
स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः ॥ १५ ॥
प्रागतीतार्थकं नूनमवश्यं निश्चये द्वयम् ॥
संवद्वर्षेऽवरे त्वर्वागामेवं स्वयमात्मना ॥ १६ ॥
अल्पे नीचैर्महत्युच्चैः प्रायो भूम्न्यद्रुते शनैः ॥
सना नित्ये बहिर्बाह्ये स्मातीतेऽस्तमदर्शने ॥ १७ ॥

एवं मन्यसे तर्हि किमपि न स्यात्" । कच्चिदित्येकं कामप्रवेदने इष्टपरिप्रश्ने । इच्छाया आख्याने वा । "यथा कच्चिज्जीवति मे माता । निःषमम् दुःषमम् द्वे निन्द्ये । यथा । निःषमं वक्ति मे मूर्खः । दुःषमं वर्तते वधूः" । यथास्वं यथायथं द्वे यथायोग्यमित्यर्थे । "यथास्वमाश्रमे च के । यथायथं फलायन्ते" ॥ १४ ॥ मृषा मिथ्या द्वे वितथे असत्ये । "उच्छ्रायसौन्दर्यगुणा मृषोद्याः । मिथ्योक्तं त्वया" । यथार्थं यथातथं द्वयं सत्ये । यथा । यथार्थमुक्तं नान्यत् । गुरुर्यथातथं वक्ति । तथाशब्दस्तथशब्दो वा सत्यार्थः" । एवं तु पुनः वै वा पञ्च निश्चयार्थकाः स्युः । "यथा । एवमेव यथा प्राह । "रावणं तु दुरात्मानमवधीद्राघवः प्रभुः" । पुनर्व्यासो वै धर्मज्ञः । वैवेत्यत्र वा एवेति वा छेदः ॥ १५ ॥ प्रागित्येकं अतीतार्थकम् । यथा प्राकर्म । नूनं अवश्यं द्वयं निश्चिते । नूनं शरणं प्रपन्ना । "अवश्यं यातारश्चिरतरमुषित्वापि विषयाः" । "नूनं निश्चिततर्कयोः" इति विश्वः । संवदित्येकं वर्षे । यथा प्रभवाख्या संवत् । अर्वागित्येकं अवरे । "कुले ऋतुत्रयादर्वाक् मण्डनाच्च तु मुण्डनम्" । आं एवं द्वयं अङ्गीकारे । यथा आं कुर्मः । "एवं कुर्मः" । स्वयमित्येकं आत्मनेत्यर्थे ॥ १६ ॥ नीचैरित्येकमल्पे । "तथापि नीचैर्विनयाददृश्यत" । उच्चैरित्येकं महति । "यथा । शृङ्गारमुच्चैर्गिरेरिदम् । प्राय इति भूम्नि बाहुल्ये । यथा । प्रायो नववधूः कान्तम् । शनैरिति अद्रुते मान्द्ये । यथा । शनैर्याति पिपीलिका । सनेत्येकं नित्ये । यथा सनातनः । बहिरिति बाह्ये । "यथा निष्कासितो बहिर्ग्रामात्" । स्मेत्यतीते । यथा वक्ति स्म व्यासः । अस्तमिति दर्शनाभावे । यथा । सायमस्तमितो रविः ॥ १७ ॥ अस्तीति सत्त्वे । यथा । अस्ति परलोक इति मतिर्यस्य स आस्तिकः । "रुपो-

17-19



अस्ति सत्त्वे रुषोक्तावु ऊं प्रश्नेऽनुनये त्वयि ॥
हुं तर्के स्यादुषा रात्रेरवसाने नमो नतौ ॥ १८ ॥
पुनरर्थेऽङ्ग निन्दायां दुष्ठु सुष्ठु प्रशंसने ॥ (१)
सायं साये प्रगे प्रातः प्रभाते निकषाऽन्तिके ॥ १९ ॥
परुत्परार्यैषमोऽब्दे पूर्वे पूर्वतरे यति ॥

क्तौ कोपेनोक्तौ उ। यथा। उ आगतः शत्रुः। "उ संबोधनरोषोक्त्योरनुकम्पानियोगयोः। पदपूरणे च पादपूरणेऽपि च दृश्यते" इति मेदिनी। ऊमिति प्रश्ने। ऊं गच्छसि बहिर्धेव। ह्रस्वपाठे उमित्यपि। रुषोक्तावूं उं प्रश्ने इति पाठान्तरम्। हूं प्रश्ने इत्यपि पाठः। अयीत्यनुनये सान्त्वने। "यथा। अयि क्रियार्थं सुलभं समित्कुशम्। अयि वद राघव तथ्यम्"। हुमिति तर्के। "स्याद्वेत्किं हुं प्रपद्यते"। उषेति रात्रेरवसाने। यथा। उषातनो वायुः। नमः प्रणामे। "नमो ब्रह्मण्यदेवाय"॥ १८ ॥ अङ्गेति पुनरर्थे। यथा। मूर्खोऽपि नावमन्यते किमंग विद्वान्। किं पुनरित्यर्थः। दुष्ठु निन्दायाम्। यथा। दुष्ठु खलत्वम्। सुष्ठु प्रशंसने। यथा सुष्ठु काव्यम्। सायमिति साये दिनान्ते। यथा। सायं सन्ध्यामुपासिष्ये। प्रगे प्रातः द्वे प्रभाते। "यथा। प्रगे नृपाणामथ तोरणाद्बहिः। यः पठेत्प्रातरुत्थाय"। निकषेति समीपार्थे ॥ १९ ॥ पूर्वेऽब्दे गते वर्षे परुदित्येकम्। पूर्वतरे गतवर्षात्पूर्ववर्षे परारीत्येकम्। यति वर्तमानेऽब्दे ऐषम इत्येकम्। "त्रयाणां यथा। परारि गतः कान्तः। परुदागत ऐषमोऽपि नागतः"। यतीति श्रन्तसेणः सप्तम्या रूपम्। अत्राह्नि अस्मिन्नहनीत्यर्थे अद्यशब्दः"। "यथा। अद्य गन्तुं न शक्नोमि"। अथ पूर्वेऽह्नीत्यादिशब्देन उत्तरेऽह्नीत्यादिपद्कस्य ग्रहणम्। "पूर्वेऽह्नीत्याद्यर्थे पूर्वादिशब्देभ्य एद्युस्प्रत्यये पूर्वेद्युरित्यादयः सप्त शब्दा भवन्ति। क्रमेण यथा। पूर्वस्मिन्नहनीत्यर्थे पूर्वेद्युः। "पूर्वेद्युरिष्यते प्रातः पूर्वेद्युः पूर्ववासरे" इति रुद्रः। उत्तरस्मिन्नहनि उत्तरेद्युः। "नान्दीमुखादुत्तरेद्युर्विवाहः परिकीर्तितः"। अपरस्मिन्नहनि अपरेद्युः। "आगतानपरेद्युस्तान्"। अधरस्मिन्नहनि अधरेद्युः। "अधरेद्युः प्रसूता सा। अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वे च वाच्यवत्"। अन्यस्मिन्नहनि अन्येद्युः। "अन्येद्युरात्मानुचरस्य भावम्"। अन्यतरस्मिन्नहनि अन्यतरेद्युः। "अन्यतरेद्युः पितरं द्रक्ष्यसि"।

१ अत्र 'अमानुगुण्ये ००००' इति पद्यमधिकं तालपत्रपुस्तकेऽस्ति ॥

अद्यात्राह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् ॥ २० ॥
तथाऽधरान्यान्यतरेतरात्पूर्वेद्युरादयः ॥
उभयद्युश्चोभयेद्युः परे त्वह्नि परेद्यवि ॥ २१ ॥
ह्यो गतेऽनागतेऽह्नि श्वः परश्वस्तु परेऽहनि ॥
तदा तदानीं युगपदेकदा सर्वदा सदा ॥ २२ ॥
एतर्हि संप्रतीदानीमधुना सांप्रतं तथा ॥
दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ॥ २३ ॥
॥ इत्यव्ययवर्गः ॥ ४ ॥

---

इतरस्मिन्नहनीतरेद्युः। कष्टदिनादितरेद्युः प्रियो द्रष्टव्यः" ॥ २० ॥ उभयद्युः उभयेद्युः द्वे उभयस्मिन्नहनीत्यर्थे। "द्युश्चोभयात् वक्तव्यः" इति वार्तिकेनोभयशब्दात् द्युः प्रत्ययः। चकारात् एद्युः प्रत्ययश्च। "उभयद्युरुपोषणम्"। परेद्यवीत्येकं परेऽहनि। "मित्रं दृष्टं परेद्यवि" ॥ २१ ॥ ह्य इत्येकं गतेऽहनि। "ह्यः सर्वमभवत्कार्यम्"। श्व इत्येकमनागते आगामिन्यहनि। ततः परेऽहनि परश्व इत्येकम्। श्वः परश्वश्च यथा। "अद्य श्वो वा परश्वो वा सर्वं कर्म भविष्यति"। परश्वस्तत्परेऽहनीति पाठान्तरम्। तदा तदानीं द्वे तस्मिन्काल इत्यर्थे। "यथा। तदा चक्षुष्मतां प्रीतिः। यदा स्यात्प्रियया सङ्गस्तदानीमेव मे सुखम्"। युगपत्। एकदा एकस्मिन्काल इत्यर्थे। "यथा। शत्रुमित्रोदासीना युगपदाहूताः। गवां शतमेकदा दत्तम्"। सर्वदा सदा द्वे सर्वस्मिन्काले इत्यर्थे। यथा। "सर्वदा सर्वदोसीति। याचते याचकः सदा" ॥ २२ ॥ एतर्हि संप्रति इदानीं अधुना सांप्रतं पञ्चकमस्मिन् काल इत्यर्थे। "यथा। एतर्हि क्रियते कार्यम्। संप्रत्यसौ गृहं याति। इदानीमस्मि संवृत्तः। बलावलेपादधुना। तत्रास्ते सांप्रतं मुनिः"। तथेति समुच्चये। पूर्वादौ दिशि पूर्वादौ देशे पूर्वादौ काले वा प्रागादयः स्युः। "दिशि प्राग्दिगित्यादि। देशे प्राग्देश इत्यादि। काले प्राकाल इत्यादि" ॥ पूर्वादौ इत्यादिशब्देनोत्तरपश्चिमदक्षिणाधरोर्ध्वादीनां ग्रहणम्। प्रत्यगादय इत्यादिशब्देन त्ववागित्यादिग्रहः। "उत्तरात् अधरात् दक्षिणात् उत्तरेण अधरेण दक्षिणेन दक्षिणा दक्षिणाहि दक्षिणतः उत्तरतश्च संगृह्यन्ते"। ऊर्ध्वे तूपरि उपरिष्टादिति ॥ २३ ॥ इत्यव्ययवर्गः ॥ ४ ॥ अथ लिङ्गसंग्रहवर्गमाह ॥ सलिङ्गशास्त्रैः

1-2



सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासजैः ॥
अनुक्तैः संग्रहे लिङ्गं संकीर्णवदिहोन्नयेत् ॥ १ ॥
लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः ॥
स्त्रियामीदूद्विरामैकाच् सयोनिप्राणिनाम च ॥ २ ॥
नाम विद्युन्निशावल्लीवीणादिग्भूनदीह्रियाम् ॥

पाणिन्याद्युक्तलिङ्गानुशासनसहितैः सन्नादिप्रत्ययजैश्चिकीर्षादिशब्दैः कृज्जैः श्वपाकादिभिः तद्धितप्रत्ययजैः अणाद्यन्तैः समासजैरदन्तोत्तरपदो द्विगुरित्यादिनोक्तैः बाहुल्येन पूर्वमनुक्तैः शब्दैरयं संग्रहः क्रियत इति शेषः । इहास्मिन्संग्रहवर्गे लिङ्गमुन्नयेदूहेत् । कथमित्याकाङ्क्षायां संकीर्णवदिति । यथा संकीर्णवर्गे प्रकृत्याभिरूह्येयं तथात्राप्युन्नयेत् । तत्र प्रकृत्यर्थेन यथा । अर्धर्चाः पुंसि चेति । प्रत्ययार्थेन यथा । स्त्रियां क्तिन् । प्रकृतिप्रत्ययार्थाद्यैरित्याद्यशब्दात्क्रियाविशेषणानां नपुंसकत्वं एकत्वं च यथा । शोभनं पचतीत्यादि ॥ १ ॥ सन्नादिकृत्तद्धितसमासजविषयं पूर्वोक्तशब्दलिङ्गादन्यलिङ्गं लिङ्गशेषः तस्य विधिः व्यापी स्वविषयस्य व्यापको भवति । प्रागुक्तैरिहोक्तैश्च विशेषविधिभिः न बाधितः स्यात् तर्ह्येव व्यापी भवेदित्यर्थः । एतेनास्य लिङ्गविशेषविधेरुत्सर्गभूतस्य स्वर्गादिवर्गा अपवादा वेदितव्याः । तत्र प्रागुक्तानां विशेषाणां पुनरुक्तिदोषप्रसङ्गाद्विस्तरभयाच्च न पुनरिह विधानम् । तथा हि । स्वर्गपर्याय इह पुंसि वक्ष्यते । तस्य द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपमिति पूर्वोक्तमपवादः । नीप्रभृतीनां तु कृतः कर्तरीत्यादिना वक्ष्येते । यद्यपि पूर्वलिङ्गमुक्तं तथाप्यप्राप्तप्रापणार्थतया लिङ्गानुशासनमिहापि प्रधानमेव । स्त्रियामित्यधिकारोऽयं मसीशब्दपर्यन्तं ज्ञेयः । ईदूतौ ईकारोकारौ विरामौ अवसानस्थौ यस्य तदीदूद्विरामं तच्च तदेकाच्च ईदूद्विरामैकाच् । ईदन्तमूदन्तं वा यदेकस्वरं शब्दरूपं तत्स्त्रियामित्यर्थः । यथा । धीः श्रीः भूः भ्रूः । नयतीति नीरित्यादौ कृतः कर्तरीति बाधितत्वाद्वाच्यलिङ्गत्वम् । योनिर्भगं तत्सहितानां प्राणिनां नाम स्त्रियाम् । यथा । माता दुहिता धेनुरित्यादि । दारशब्दादौ तु दाराः पुंभूम्नीति बाधकं प्रागुक्तम् । कलत्रशब्दस्य कलत्रं श्रोणिभार्ययोरिति क्लीबपाठो बाधकः । एवमुन्नेयमन्यत्रापि ॥ २ ॥ विद्युदादिह्रीपर्यन्तानां अष्टानां यन्नाम तत्स्त्रियाम् । यथा । विद्युत् तडित् रात्रिः रजनी वल्ली व्रततिः वीरुत् वीणा विपञ्चीत्यादि । "वीणादिग्भूनदीश्रियामिति पाठः क्वचित्" । अदन्तैर्मूलादिशब्दैर्य एकार्थः समाहा-

**अदन्तैर्द्विगुरेकार्थो न स पात्रयुगादिभिः ॥ ३ ॥**
**तल् वृन्दे येनिकट्यत्रा वैरमैथुनिकादिवुन् ॥**
**स्त्रीभावादावनिक्तिण्ण्वुल्ण्च्ण्वुच्क्यब्युजिञिङ्शाः ॥४॥**

रार्थो द्विगुसमासः स स्त्रियां स्यात् । यथा । पञ्चानां मूलानां समाहारः पञ्चमूली । एवं त्रिलोकी षडध्यायीत्यादि । अदन्तैरिति किम् । पञ्चानां कुमारीणां समाहारः पञ्चकुमारि । पञ्चराजमित्यादौ टचि अदन्तत्वे सत्यपि पात्रादित्वान्नपुंसकत्वमित्येके । एकार्थ इति किम् । पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः । न स इति । पात्रयुगाद्युत्तरपदैः अदन्तैः एकार्थो द्विगुः स्त्रियां न स्यात् । यथा । पञ्चपात्रम् । चतुर्युगम् । त्रिभुवनम् ॥ ३ ॥ तल् प्रत्ययः स्त्रियां स तु भावाद्यर्थे विहितः । तत्र भावे यथा । शुक्लता । कर्मणि ब्राह्मणता । समूहे ग्रामता । स्वार्थे देवता । वृन्द इति । वृन्दे समूहे य इनि कट्य त्र एते चत्वारः प्रत्ययाः स्त्रियाम् । यथा । पाशादिभ्यो यः । पाशानां समूहः पाश्या । वात्या । खलादिभ्य इनिः । खलिनी पद्मिनी । रथादिभ्यः कट्यच् । रथकट्या । एवं गोत्रा । वृन्दे किम् । मुखे भवो मुख्यः । दण्डोऽस्त्यस्य दण्डी । वैरेति । मिथुनस्य कर्म मैथुनिका । वैरमैथुनादौ च यो वुन्प्रत्ययः स स्त्रियाम् । "द्वंद्वाद्वुन्वैरमैथुनिकयोः" इति पाणिनिसूत्रात् । तत्र वैरे विरोधार्थे यथा । अश्वमहिषिका । अश्वमहिषस्येदं वैरमित्यर्थः । एवं काकोलूकिका । मैथुनिकायां यथा । अत्रिभरद्वाजिका । अत्रिभरद्वाजयोरियं मैथुनिका । विवाहरूपसंबन्ध इत्यर्थः । एवं कुत्सश्च कुशिका च तयोर्मैथुनिका कुत्सकुशिकिका । "वुन्ग्रहणं वुञ उपलक्षणम् । यथा काशिका गार्गिकया श्लाघते । क्वचित् वैरमैथुनिकादिवुरिति पाठः" । आदिना वीप्सादौ वुनो ग्रहणम् । स्त्रियां भावादिः स्त्रीभावादिस्तस्मिन् । स्त्रियामित्यधिकृत्य भावादौ ये विहिताः प्रत्यया अनिक्तिन्नादयस्ते स्त्रियां स्युरित्यर्थः । अनिर्यथा । आक्रोशे नञ्यनिः । अकरणिः अजीवनिः । क्तिन् यथा । कृतिः गतिः । ण्वुल् यथा । प्रच्छर्दिका प्रवाहिका आसिका । णच् यथा । व्यावक्रोशी । ण्वुच् यथा । शायिका इक्षुभक्षिका । क्यप् यथा । व्रज्या इज्या । "स्त्रीभावादौ किम् । वदः सुपि क्यप् च । मृषोद्यं ब्रह्मभूयम्" । युच् यथा । कारणा आसना । इञ् यथा । वापिः वासिः । कां कारिमकार्षीः । इञ उपलक्षणार्थत्वादिण् इक् च । यथा । आजिः कृषिः । अङ् यथा । पचा त्रपा भिदा । निर्यथा । ग्लानिः म्लानिः हानिः । शप्रत्ययो यथा । क्रिया इच्छा ॥ ४ ॥

4-6



उणादिषु निरूरीश्च ङ्याबूङन्तं चलं स्थिरम् ॥
तत्क्रीडायां प्रहरणं चेन्मौष्टा पाल्लवा ण दिक् ॥ ५ ॥
घञो ञः सा क्रियाऽस्यां चेद्दाण्डपाता हि फाल्गुनी ॥
श्यैनम्पाता च मृगया तैलम्पाता स्वधेति दिक् ॥ ६ ॥
स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षाऽपचये यदि ॥

उणादिषु ये निः ऊः ईः एते त्रयः स्त्रियां स्युः । तत्र न्यन्तो यथा । श्रेणिः "श्रोणिः द्रोणिः । उणादिष्वनिरिति पाठे अनिर्यथा । धरणिः धमनिः सरणिः" । ऊदन्तो यथा । चमूः कर्षूः । ईदन्तो यथा । तन्त्रीः । "तरीः" । ङ्यन्तं आबन्तं ऊङन्तं च यच्चलं जङ्गमं स्थिरं स्थावरं वा तत् स्त्रियां स्यात् । जङ्गमं यथा । नारी शिवा ब्रह्मबधूः । स्थावरं यथा । कदली माला कर्कन्धूः । तच्छब्देनात्र मुष्ट्यादिकं निर्दिश्यते । तेनायमर्थः । तन्मुष्ट्यादिकं प्रहरणं यदि क्रीडायां वर्तते तर्हि तस्मिन्नर्थे विहितो णप्रत्ययः स्त्रियाम् । "तदस्यां प्रहरणमिति क्रीडायां णः" इति सूत्रात् । दिगित्यनेनोक्तोदाहरणोद्देशः । तेन दाण्डा मौसलेति चोदाहर्तव्यम् । मुष्टिः प्रहरणमस्यां क्रीडायां मौष्टा । पाल्लवः प्रहरणमस्यां क्रीडायां पाल्लवा ॥ ५ ॥ सा घञन्तवाच्या । दण्डपातादिक्रियाऽस्यां फाल्गुन्यादिकायामित्यर्थे घञन्ताद्विहितो यो ञप्रत्ययः स स्त्रियां स्यात् । "घञः साऽस्यां क्रियेति ञः" इति सूत्रात् । उदाहरति । दण्डपातोऽस्यां फाल्गुन्यां दाण्डापाता फाल्गुनी । एवं श्येनपातोऽस्यां श्यैनम्पाता मृगया । तिलपातोऽस्यां स्वधाक्रियायां तैलम्पाता । श्येनतिलस्येति मुम् । "पितृदाने स्वधामतम्" इत्यमरमाला । वररुचिना तु स्वधा क्रिया प्रवेणीति स्त्रीलिङ्गतोक्ता । इतिशब्देन मुसलपातोऽस्यां मौसलपाता भूमिरित्यादिसिद्धिः । क्वचिद्देशे फाल्गुनपौर्णमास्यां दण्डपातेन क्रीडा भवतीति । दिगित्यनेन दाण्डपातादिकं उदाहरणमिति सूचितम् ॥ ६ ॥ यदि अपचयेऽल्पत्वे विवक्षा वक्तुमिच्छा स्यात्तर्हि मृणाल्यादयः स्त्रीलिङ्गाः स्युः । यथा । अल्पं मृणालं मृणाली । आदिशब्दाद्यथा । ह्रस्वो वंशो वंशी । गौरादित्वात् ङीष् । एवं कुम्भीप्रणालीछत्रीपटीतटीमठीत्यादयः । ह्रस्वार्थे कन्प्रत्ययः स्त्रियाम् । यथा पेटिका । काचिदिति किम् । अल्पो वृक्षो वृक्षक इत्यादि न स्त्रियाम् । अथ ङ्याबूङन्तमित्यादिनोक्तलिङ्गानामपि केषांचिन्नाम्नां सुखेन लिङ्गज्ञानाय पृथक् पाठं कान्तादिक्रमेणाह । लङ्केति । लङ्का राक्षसपुरी । शेफालिका पुष्पभेदः वृक्षभेदश्च । "स तु

लङ्का शेफालिका टीका धातकी पञ्जिकाऽऽढकी ॥ ७ ॥
सिध्रका सारिका हिक्का प्राचिकोल्का पिपीलिका ॥
तिन्दुकी कणिका भङ्गिः सुरङ्गासूचिमाढयः ॥ ८ ॥
पिच्छावितण्डाकाकिण्यश्चूर्णिः शाणी द्रुणी दरत् ॥
सातिः कन्था तथाऽऽसन्दी नाभी राजसभाऽपि च ॥ ९ ॥

निर्गुण्डी इति प्रसिद्धः" । टीका विषमपदव्याख्या । धातकी वृक्षभेदः "धायटी इति प्रसिद्धा" । पञ्जिका निःशेषपदव्याख्या । आढकी तुवरी "तूर इति प्रसिद्धा" ॥ ७ ॥ सिध्रका वृक्षभेदः । सारिका पक्षिभेदः "साळुंकी इति प्रसिद्धा" । हिक्का स्वरभेदः "ऊर्ध्ववातप्रवृत्तौ शब्दविशेषः उचकी इति प्रसिद्धः" । प्राचिका वनमक्षिका । "पक्षिभेद इति स्वामी" । उल्का तेजःपुञ्जः । पिपीलिका कीटभेदः मुंगी इति प्रसिद्धा । शनैर्याति पिपीलिक इति पुंस्त्वमपीति स्वामी" । तिन्दुकी वृक्षभेदः "टेंभुरणी इति प्रसिद्धा" । कणिका परमाणुः । भङ्गिः कौटिल्यभेदः । "विच्छित्तिर्वा । व्याजच्छलनिभे भङ्गिर्वैदर्भीतनमीलिका" इति रभसः । सुरङ्गा विवरभेदः "सुरंग इति ख्यातः" । सूचिर्व्यधनी । "स्त्री सूचिनृत्यभेदे च व्यधनीशिखयोरपि" इति रत्नकोशः। "माढिः पत्रशिरा" । "माढिर्दैन्यं पत्रशिरा" इति हैमः ॥ ८ ॥ पिच्छा । "शाल्मलिनिर्यासः भक्तादिमण्डश्च । पिच्छा शाल्मालिवेष्टके । "पङ्क्तिपूगच्छटाकोशमण्डेष्वश्वपदामये । मोचायां पिच्छले" इति हैमः । वितण्डा वादभेदः । काकिणी पणचतुर्थांशः । "काकिणी पणतुर्यांशे मानदण्डे च दृश्यते । कृष्णलैकवराट्योः स्यादुन्मानस्यांशकेऽपि च" इति मेदिनी । रभसस्तु नान्तेष्वप्याह । पणोदमानदण्डानां तुर्यांशेऽपि च काकिनीति । आढकस्य पञ्चाशत्तमो भाग उदमानम् । उक्तं च गणितावल्याम् । "कुल्या स्यादष्टभिर्द्रोणैर्द्रोणपादेन चाढकः । अतोऽर्धशतिको भाग उदमानमुदाहृतम्" इति । चूर्णिः चूर्णिका । शाणी शणपटविशेषः । "निकष इति स्वामी" । द्रुणी कर्णजलौका । "द्रुणी कूर्म्यां जलद्रोण्याम्" इति हैमः । दरत् म्लेच्छजातिः । सातिर्दानावसानयोः । कन्था प्रावरणान्तरम् । "कन्था मृन्मयभित्तौ च तथा प्रावरणान्तरे" इति मेदिनी । आसन्दी आसनभेदः "वेत्रासनमिति प्रसिद्धम्" । अङ्गविशेषो नाभिः । राज्ञां सभेति तत्पुरुषः । सभाराजेत्यत्र राजपर्यायस्यैवेष्यते इत्युक्तम् । तेन राजशब्दपूर्वकसभान्ततत्पुरुषे क्लीबत्वस्य निषेधात् स्त्रीत्वम् ॥ ९ ॥ झल्लरी वाद्यभेदः । "झलरी झल्लरी

9-10



झलरी चर्चरी पारी होरा लट्वा च सिध्मला ॥
लाक्षा लिक्षा च गण्डूषा गृध्रसी चमसी मसी ॥ १० ॥

॥ इति स्त्रीलिङ्गसंग्रहः ॥

पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः ॥

च द्वे हुडुके बालचक्रके" इति मेदिनी । चर्चरी करशब्दः हर्षक्रीडा वा । "चर्चरी गीतभेदे च केशमित्करशब्दयोः" इति कोशान्तरम् । पारी हस्तिपादरज्जुः । "पारी पूरापरागयोः । पात्र्यां कर्पूरिकायां च पादबन्धे च हस्तिनाम्" इति हैमः । होरा लग्नार्धम् । "होरा तु लग्ने राश्यर्द्धे शास्त्ररेखाप्रभेदयोः" इति हैमः । लट्वा ग्रामचटकः । "लट्वा करञ्जभेदे स्यात्फले वाद्ये खगान्तरे" इति मेदिनी । "सिध्मला मत्स्यविकृतौ" इति मेदिनी । सिध्मला "शुष्कमीने स्त्री त्रिलिङ्गां तु किलासिनी" इति त्रिकाण्डशेषः । लाक्षा जतु । लिक्षा यूकाण्डम् । गण्डूषा जलादिना मुखपूरणम् । पुंस्यपि । "गण्डूषो मुखपूर्तौ स्याद्गजहस्ताङ्गुलावपि । प्रसृत्या प्रमितेऽपि स्यात्" इति हैमः । "उक्ततनाभिस्तु गण्डूषा नापि मुखपूर्तिः" इति बोपालितः । गृध्रसी वातरोगभेदः । स तु उरुसन्धौ भवति । चमसी यज्ञपात्रभेदः । "प्रणीतेति प्रसिद्धा" । माषपिष्टपोलिकाविशेष इति वैद्यकग्रन्थे । "चमसो यज्ञपात्रस्य भेदेऽस्त्री पिष्टके स्त्रियाम्" इति मेदिनी । मसी कज्जलम् । "मेला मसी जलं पत्राञ्जनं च स्यान्मसिर्द्वयोः" इति त्रिकाण्डशेषः ॥ १० ॥ इति स्त्रीलिङ्गसंग्रहः ॥ अथ पुलिङ्गसंग्रहः ॥ पुंस्त्वे इति पतद्ग्रहशब्दपर्यन्तमधिकारः । भेदास्तुषितसाध्यादयः । अनुचराः सुनन्दादयः तैः सहिताः सुरासुराः देवदैत्याः पर्यायैः सह पुंसि । सुरपर्याया यथा । अमरा निर्जरा देवा मरुत इत्यादयः । तद्भेदा यथा । तुषिताः साध्याः । इन्द्रो मरुत्वान्मघवा । सूरसूर्यार्यमा । हाहा हूहूः । तुम्बुरुरित्यादिः । अनुचरा यथा । विष्णोरनुचरा जयविजयप्रभृतयः । रुद्रानुचरा नन्दिकेश्वरादयः । एवं असुरपर्याया दैत्या दानवा इत्यादयः । तद्भेदा बलिनमुच्यादयः । असुरानुचराः कुष्माण्डमुण्डादयः । एवमुन्नेयं सर्वत्र । एतेषामपि दैवतानि पुंसि वा देवताः स्त्रियामित्यादिबाधकं स्मारयिष्यति । अबाधिता इति वक्ष्यमाणेन । स्वर्गादयश्चोनविंशतिः सभेदाः सपर्यायाश्च पुंसि स्युः । स्वर्गपर्यायो यथा । स्वर्गो नाकस्त्रिदिव इत्यादिः । द्योदिवौ द्वे स्त्रियां क्लीबे

स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः ॥ ११ ॥
करगण्डोष्ठदोर्दन्तकण्ठकेशनखस्तनाः ॥
अह्वाहान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः ॥ १२ ॥
श्रीवेष्टाद्याश्च निर्यासा असन्नन्ता अबाधिताः ॥

त्रिविष्टपमिति बाधकं बलवत्तरं तद्विना पुंस्त्वम् । यागो यज्ञः । मखः क्रतुः । तद्भेदा अग्निष्टोमादयः । इष्ट्यादेर्बाधितत्वं वक्ष्यति । अद्रिः गिरिः पर्वतः । तद्भेदा मेरुसह्यादयः । एषां मध्येऽपवादः चेदुक्तः शैलवर्गे । मेघो घन इत्यादिः पर्यायः । भेदः पुष्करावर्तादिः । अभ्रस्य तु अभ्रं मेघ इति क्लीबपाठो बाधकः । अब्धिः समुद्र इत्यादयः समुद्रपर्यायाः ॥ क्षीरोदादिर्भेदः । द्रुर्वृक्षः । शाखीत्यादिः पर्यायः । वटादिर्भेदः । अत्रापि कचिद्रूपभेदादिना पाटलाशिंशपादौ अपवादा उक्ताः । कालो दिष्टः समयः । एवं पर्यायः । मासादयो भेदाः । असिः खड्गः । नन्दकादयो भेदाः । "ईल्यादौ बाधः" । शरो बाणः । भेदो नाराचादिः । इषुर्द्वयोरिति विशेषो दर्शितः । अरिः शत्रुः । भेद आततायिन्यादिः ॥ ११ ॥ करो राजग्राह्यभागो रश्मिः पाणिश्च । दीधित्यादीनां तु पुंस्त्वं बाधितम् । गण्डः कपोलः । ओष्ठो दन्तच्छदः । दशनवसनादि तु रूपभेदात् बाधितम् । दोः प्रवेष्टः । भुजबाहोस्तु द्वयोरिति विशेषः । दन्तो रदः । दन्तस्थाने दण्ड इत्यपि पाठः कण्ठो गलः । "समीपगलभेदेषु कण्ठं त्रिषु विदुर्बुधाः" इति शाश्वतः । केशः कचः । नखः कररुहः । नखोऽस्त्रीत्यादिना बाधितम् । स्तनः कुचः । एते यथासंभवं सभेदपर्यायाः पुंसि । अह्नः अहश्च एतदन्ताः पुंसि स्युः । यथा । अह्नः पूर्वं पूर्वाह्णः । "अह्नः अपरं अपराह्णः" । द्वे अहनी समाहृते द्व्यहः । क्ष्वेडभेदा विषविशेषाः पुंस्त्वे स्युः । यथा । सौराष्ट्रिकः । अत्र गरलं विषं पुंसि क्लीबे च । काकोलं इत्यादि बाधितम् । रात्रान्ता इति समासान्तस्यैकदेशानुकरणम् । एवमुत्तरत्रापि । रात्रशब्दोऽन्ते येषां ते यदि प्राक् असंख्यावाचकशब्दरहितास्तर्हि पुंसि । यथा । अहश्च रात्रिश्चाहोरात्रः सर्वरात्रः पूर्वरात्रः अपररात्रः । प्रागसंख्यका इति किम् । पञ्चरात्रम् । गणरात्रम् । पुण्यरात्रस्यार्धर्चादिपाठात् क्लीबत्वं च ॥ १२ ॥ श्रीवेष्टादयो ये निर्यासाः द्रवसारवाचकास्ते पुंसि स्युः । श्रीवेष्टः सरलः । "श्रीपिष्टः इति कचित्पाठः" । आद्येन श्रीवासवृकधूपादयः । चकाराद्गुग्गुलुसिह्लकादयः । असन् च अन् तावन्तौ येषां ते असन्नन्ताः

13-14



कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः ॥ १३ ॥
कषणभमरोपान्ता यद्यदन्ता अमी अथ ॥
पथनयसटोपान्ता गोत्राख्याश्चरणाह्वयाः ॥ १४ ॥

अच्कमसिसुसन्नन्तमित्यादिना वक्ष्यमाणेन अप्सर आदीनां पूर्वोक्तेन च बाधकेनाबाधिताश्चेत्पुंसि स्युस्तत्र असन्ता यथा। अङ्गिराः वेधाः चन्द्रमाः। अन्नन्ता यथा। कृष्णवर्त्मा मघवा। अबाधिता इति किम्। इदं वयः। इदं लोम। तुश्च रुश्च तुरू तौ विरामे येषां ते तुरुविरामकाः। कशेरुजतुवस्तूनि हित्वा तुशब्दान्ताश्च रुशब्दान्ताश्च पुंसि स्युरित्यर्थः। यथा। हेतुः सेतुः धातुः मन्तुस्तन्तुरित्यादि। कुरुः मेरुः किंशारुरित्यादि। कसेर्वाद्युपलक्षणं दारुश्मश्रुप्रभृतीनाम्। तत्र कसेरु अस्थिविशेषः। तृणविशेषो वा। जतु लाक्षा ॥ १३ ॥ कषणादयः षड्वर्णा उपान्ते अन्त्यसमीपे येषां ते तथा। यदीति। यदि एते कादिवर्णषट्कोपान्ता अदन्ताः स्युस्तर्हि पुंसि भवन्ति। यथा। अङ्कः लोकः स्फटिकः। शुल्कवल्कादि तु बाधितं पूर्वम्। ओषप्लोषमाषप्लक्षादयः षोपान्ताः। वर्षादयस्तु पूर्वं बाधिताः। पाषाणगुणकिरणादयो णोपान्ताः। विषाणादि बाधितम्। कौस्तुभदर्भशलभादिर्भोपान्तः। कुसुम्भादि बाधितम्। होमग्रामगुल्मव्यामादयो मोपान्ताः। पद्मादेर्वा पुंसीत्यादिना बाधितत्वम्। झर्झरसीकरसीरप्रभृतिः रोपान्तः। अजिरादेर्बाधः। पकारादिवर्णषट्कोपान्ता अबाधिताश्चेत्पुंसि स्युः। अत्र यद्यदन्ता इति पूर्वोक्तं न संबध्यते। अथादित्वात्। पकारोपान्ता यथा। यूपबाष्पकलापादयः। कुतपादिर्बाधितः। थकारोपान्ता वेपथुरोमन्थादयः। नोपान्ता इनघनभान्वादयः। वनादिस्तु बाधितः। योपान्ता आयव्ययजायुतन्तुवायादयः। मृगयादिस्तु बाधितः। सोपान्ता रसहासादयः। बिसादिर्बाधितः। टोपान्ताः पटादयः। किरीटादेर्बाधकमुक्तम्। गोत्रेति। गोत्रं वंशः तस्मिन्नाख्या संज्ञा येषां ते गोत्राख्या ऋषिसंज्ञकाः गोत्रस्यादिपुरुषाः ये प्रवराध्यायपठिताः येऽप्यन्ये अपत्यप्रत्ययं विना गोत्रवाचित्वेन लोके प्रसिद्धास्ते पुंसि स्युः। यथा। भरद्वाजः गोत्रमस्माकम्। एवं कश्यपवत्सप्रभृतयः। चरणस्य वेदशाखाया आह्वयाः संज्ञाः पुंसि स्युः। यथा। कठः बह्वृच इत्यादि ॥ १४ ॥ नाम्नि संज्ञायां अकर्तरि च कारके भावमात्रे च विहितास्ते घञादयः सप्त प्रत्ययाः पुंसि स्युः। भावे चेति चकारादसंज्ञायां च घञ् गृहीतः। घञन्ता यथा। प्रास्यत इति प्रासः। विदन्ति अनेन वेदः। प्रपतत्यस्मात्प्रपातः। भावः माषः पाकः त्यागः। अच् यथा। जयः चयः नयः।

नाम्न्यकर्तरि भावे च घञजबूनङ्णघाथुचः ॥
ल्युः कर्तरीमनिज्भावे को घोः किः प्रादितोऽन्यतः ॥१५॥
द्वन्द्वेऽश्ववडवावश्ववडवा न समाहृते ॥
कान्तः सूर्येन्दुपर्यायपूर्वोऽयःपूर्वकोऽपि च ॥ १६ ॥
वटकश्चानुवाकश्च रल्लकश्च कुडङ्गकः ॥

अप् यथा । करः गरः लवः प्लवः । नङ् यथा । यज्ञः प्रश्नः । "याज्ञेत्यत्र तु पुंस्त्वं बाधितम् । नङ उपलक्षणार्थत्वात् । स्वपो नन् । स्वप्नः । स्वप्नः संवेश इत्यपीति वा पुंस्त्वसिद्धिर्बोध्या" । णप्रत्ययो यथा । न्यादः । घप्रत्ययो यथा । उरश्छदः । अथुच् यथा । वेपथुः । ल्युरिति । कर्तरि नन्द्यादिल्युः पुंसि स्यात् । यथा । नन्दनः रमणः मधुसूदनः । भावे पृथ्वादिभ्यो य इमनिच् स पुंसि स्यात् । यथा । पृथोर्भावः प्रथिमा महिमा । भाव इति किम् । वृणोतीति वरिमा पृथ्वी । अत्र भावे इति शब्दो देहलीदीपन्यायेन पूर्वत्र परत्र च संबध्यते । भावे को यथा । "आखूत्थः प्रस्थः" । प्रादितः अन्यतश्च परो यो घुसंज्ञो धातुस्तस्माद्विहितः किप्रत्ययः पुंसि स्यात् । दाप्दैपौ विना दारूपो धारूपश्च धातुर्घुसंज्ञकः । प्रादितो यथा । प्रधिः निधिः आदिः । अन्यतो यथा । जलधिः इषुधेस्तु द्वयोरिति बाधितत्वम् ॥ १५ ॥ द्वन्द्वे समाहारादन्यत्र द्वन्द्वसमासेऽश्ववडवौ पुंसि । स्वयमेवोदाहरति । अश्वाश्च वडवाश्चाश्ववडवाः । एवमश्ववडवान् । अश्ववडवैरित्यादिप्रयोगः । समाहारे त्वश्ववडवमिति क्लीबम् । सूर्यचन्द्रपर्यायपूर्वकः कान्तशब्दः पुंसि । यथा । सूर्यकान्तः अर्ककान्तः चन्द्रकान्तः इन्दुकान्तः सोमकान्तः । अयोवाचकपूर्वकोऽपि कान्तः पुंसि । यथा । अयस्कान्तः लोहकान्तः ॥१६॥ इदानीं पुल्लिङ्गविशेषपर्यन्तमनुक्तानां कान्तादिक्रममनतिक्रम्याह । वटकः पिष्टकभेदः । अनुवाको वेदावयवः । रल्लकः कम्बलः । कुडङ्गको वृक्षलतागहनम् । "कुटङ्गक इत्यपि" । पुङ्खो बाणावयवः । न्यूङ्खः सामवेदे निपातित ओङ्कारः । न्युङ्ख इति ह्रस्वोकारोऽपि । "न्यूङ्खः सम्यग्घ्वनोङ्खे च साम्नः षड्प्रवणेऽपि च" इति मेदिनी । समुद्गः संपुटकः । विटो धूर्तः । "विटो द्वौ लवणे पिङ्गे मूषिके खदिरेऽपि च" इति मेदिनी । पट्टः काष्ठादिरचित आसनविशेषः । "पट्टश्चतुष्पथे पीठे राजादेः शासनान्तरे । व्रणादिबन्धने पेषाश्मनि" इति हैमः । घटस्तुला । "घटो दिव्ये तुलायां स्याद्घटी चीरे च वाससे" इति मेदिनी । अन्धकूपादयः स्पष्टाः ।

17-19



पुङ्खो न्यूङ्खः समुद्गश्च विटपट्टघटाः खटाः ॥ १७ ॥
कोट्टारघट्टहट्टाश्च पिण्डगोण्डपिचण्डवत् ॥
गडुः करण्डो लगुडो वरण्डश्च किणो घुणः ॥ १८ ॥
दृतिसीमन्तहरितो रोमन्थोद्गीथबुद्बुदाः ॥
कासमर्दोऽर्बुदः कुन्दः फेनस्तूपौ सयूपकौ ॥ १९ ॥

"खटस्तृणे कफे। टङ्केऽन्धकूपे प्रहारे" इति हैमः ॥ १७ ॥ कोट्टो दुर्गपुरम्। अरघट्टः कूपभेदः। "अरैश्चक्रावयवसदृशैः काष्ठविशेषैर्घट्यते रच्यते सोऽरघट्टः। राहाट इति प्रसिद्ध इत्यन्ये"। कस्यचिन्मते टकारान्तेष्वपि मट्टग्राम इति न्यायेन रेफान्तोऽपि कोट्टार इति त्र्यक्षरो निबद्धः। "कोट्टारो नगरे कूपे पुष्करिण्याश्च पाटके" इति मेदिनी। घट्टः घाट इति प्रसिद्धः। हट्टः क्रयविक्रयस्थानम्। पिण्डो मृदादिसंघातः। गोण्डो नाभिः। "गोण्डः पामरजातौ च वृद्धनाभौ च संमते" इति रुद्रः। पिचण्ड उदरम्। पिचिण्ड इत्यपि। "अस्त्री पिचिण्ड उदरे पशोरवयवे पुमान्" इति मेदिनी। पिचण्डवत् गड्वादयोऽपि पुंसि स्युरिति वता निर्दिश्यते। गडुर्गलगण्डः। "गडुः पृष्ठगुडे कुब्जे" इति विश्वः। करण्डो वंशादिकृतभाण्डभेदः। "करण्डो मधुकोशासिकारण्डेषु दलाढके" इति हैमः। लगुडो वंशादिदण्डः। वरण्डो मुखरोगः। "वरण्डो वदनव्यथा। अन्तरवेदिसंधौ च" इति हैमः। किणो मांसग्रन्थिभेदः। स तु खनित्रदण्डादिसंघर्षात्करतलादौ स्पष्टः। "व्रणजं चिह्नं च किणः"। घुणः काष्ठकृमिः। "घुणः स्यात्काष्ठवेधकः" इति रत्नकोशः ॥ १८ ॥ दृतिः चर्मपुटकः। "दृतिश्चर्मपुटे मत्स्ये ना" इति मेदिनी। सीमन्तः केशवेशः। हरित्पालाशवर्णः। "हरिद्दिशि स्त्रियां पुंसि हयवर्णविशेषयोः। अस्त्रियां स्यात्तृणे च" इति मेदिनी। रोमन्थः पशूनां चर्वितचर्वणम्। उद्गीथः सामभेदः। "उद्गीथः प्रणवः सामवेदध्वनिः" इत्यरुणः। बुद्बुदो जलविकारः। कासमर्दो गुल्मभेदः"। अर्बुदो दशकोट्यः। "अर्बुदो मांसकीले स्यात्पुंसि दशकोटिषु" इति मेदिनी। अर्दनिरिति पाठे अर्दनिरग्निः। कुन्दः शिल्पभाण्डम्। "कुन्दोऽच्युते निधौ। चक्रभ्रमौ च माध्ये च" इति हैमः। फेनो जलविकारः। स्तूपो वटकादिः। एतौ यूपश्च। "धूप इत्यपि" ॥ १९ ॥ आतपः सूर्यालोकः। क्षत्रिये नाभिः।

आतपः क्षत्रिये नाभिः कुणपक्षुरकेदराः ॥
पूरक्षुरप्रचुक्राश्च गोलहिङ्गुलपुद्गलाः ॥ २० ॥
वेतालभल्लमल्लाश्च पुरोडाशोऽपि पट्टिशः ॥
कुल्माषो रभसश्चैव सकटाहः पतद्ग्रहः ॥ २१ ॥

॥ इति पुल्लिङ्गशेषः ॥

द्विहीनेऽन्यच्च खारण्यपर्णश्वभ्रहिमोदकम् ॥

क्षत्रियवाची नाभिशब्दः पुंसीत्यर्थः । कुणपः शवभेदः । "कुणपः पूतिगन्धौ शवेऽपि च" इति मेदिनी । क्षुरो वपनशस्त्रम् । "क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे" इति मेदिनी । केदरो व्यवहारपदार्थः । पूरो जलप्रवाहः । "पूरः स्यादम्भसां वृद्धौ व्रणसंशुद्धिखाद्ययोः" इति हैमः । क्षुरप्रो बाणभेदः । "खुरप्र इति कवर्गद्वितीयादिरपि" । चुक्रः शाकभेदः । "चुक्रस्त्वम्लेऽम्लवेतसे" इति हैमः । गोलो वर्तुलपिण्डः । हिङ्गुलो रागद्रव्यभेदः । क्लीबे चोक्तो वैश्यवर्गे । "हिङ्गुलो वर्णकद्रव्ये ना भण्टाक्यां तु हिङ्गुली" इति मेदिनी । "हिङ्गुलुः स्यात्तु हिङ्गुलम्" इति मुकुटः । पुद्गलः आत्मा । "पुद्गलः सुन्दराकारे त्रिषु पुंस्यात्मदेहयोः" इति मेदिनी ॥ २० ॥ वेतालो भूताधिष्ठितशवः । "मल्लुः स्यात्पुंसि मल्लूकः" इति मेदिनी । मल्लो बाहुयुद्धकुशलः । पुरोडाशो हविर्भेदः । "पुरोडाशो हविर्भेदे चमसानां पिष्टकस्य च । रसे सोमलतायाश्च हुतशेषे च कीर्तितः" इति विश्वः । पट्टिशोऽस्त्रभेदः । "पट्टिस इति दन्त्यसान्त इति मुकुटः" । कुल्माषोऽर्धस्विन्नो यवः कुत्सितमाषो वा । "कुल्माषं काञ्जिके यावके पुमान्" इति मेदिनी । रभसः हर्षः । "रभसो हर्षवेगयोः" इति विश्वः । सकटाहः कटाहसहितः कटाहशब्दश्च पुंसीत्यर्थः । कटाहो वटकादिपाकपात्रम् । "कटाहो घृततैलादिपाकपात्रेऽपि कर्परे । कटाहः कूर्मपृष्ठे च कूपे च महिषीशिशौ" इति विश्वः । "कटाहः कूर्मकर्परे । द्वीपस्य च प्रभेदे च" इति मेदिनी च । सनिष्ठीवताम्बूलादिचर्वणनिक्षेपपात्रं पतद्ग्रहः ॥ २१ ॥ इति पुल्लिङ्गशेषः ॥ द्विहीने द्वाभ्यां स्त्रीपुंसाभ्यां हीने नपुंसके । अधिकारोऽयमाबाक्तिकात् । श्लोकद्वये प्राधान्येन निर्दिष्टा खादिशब्दषड्विंशतिः पर्यायैः सह क्लीबे । अत्रान्यदिति वाचितात् यदन्यत्तदेव क्लीबमिति सावधानार्थमुक्तम् । चकाराद्रत्नाकरणादि-

22-23



शीतोष्णमांसरुधिरमुखाक्षिद्रविणं बलम् ॥ २२ ॥
फलहेमशुल्बलोहसुखदुःखशुभाशुभम् ॥
जलपुष्पाणि लवणं व्यञ्जनान्यनुलेपनम् ॥ २३ ॥
कोट्याः शतादिसंख्याऽन्या वा लक्षा नियुतं च तत् ॥

संग्रहः । खमिन्द्रियं व्योम च । तद्यथा । छिद्रं नभः वियत् इत्यादि । अरण्यं विपिनं काननमित्यादि । पर्णं पत्रं दलम् । "पर्णं पत्रे किंशुके च" इति मेदिनी । श्वभ्रं तु पातालमित्यादि । हिमं तु प्रालेयमित्यादि । "हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम्" इति मेदिनी । उदकं तु जलं नीरम् । शीतं शीतलमित्यादि । उष्णं तिग्ममित्यादि । शीतोष्णं गुणे क्लीबं तद्वति त्रिषु । "शीतं हिमगुणे क्लीबं शीतलालसयोस्त्रिषु" इति मेदिनी । उष्णो ग्रीष्मे पुमान्दक्षाशीतयोरन्यलिङ्गके" इति मेदिनी । मांसं पिशितं तरसमित्यादि । रुधिरं शोणितं रक्तम् । "रुधिरोऽङ्गारके पुंसि क्लीबं तु कुङ्कुमासृजोः" इति मेदिनी । मुखं तु वदनं वक्त्रम् । "मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि । संध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्" इति मेदिनी । अक्षि तु नयनं नेत्रम् । द्रविणं धनमित्यादि । "द्रविणं काञ्चने धने । पराक्रमे बलेऽपि स्यात्" इति हैमः । बलशब्देन शक्तिसैन्यग्रहणम् । शक्तौ यथा । बलं शुष्मामेत्यादि । सैन्यं चक्रमित्यादि ॥ २२ ॥ फलं फलमात्रं कपित्थमित्यादि । "हलमित्यपि क्वचित्पाठः" । हेम सुवर्णं कनकमित्यादि । शुल्बं ताम्रमित्यादि । "शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ" इति मेदिनी । लोहं कालायसमित्यादि । सुखं शर्म शातमित्यादि । दुःखं तु कृच्छ्रं कष्टम् । शुभं कल्याणं कुशलमित्यादि । अशुभमकल्याणमित्यादि । जलपुष्पाणि । कुमुदकमलकह्लारोत्पलादीनि । लवणं सैन्धवमित्यादि । व्यञ्जनं तेमनं निष्ठानमित्यादि । "व्यञ्जनं श्मश्रुचिह्नयोः । तेमनेऽवयवेऽङ्गादौ" इति हैमः । व्यञ्जनविशेषाणामपि दधितक्रादीनां ग्रहणम् । अनुलेपनं कुङ्कुमादि । अत्र बाधितादन्यत् इति किम् । आकाशो विहाया द्यौः । अटवी अरण्यानीत्यादिकम् एवमन्यदप्यूह्यम् ॥ २३ ॥ कोट्या अन्या कोटिशब्दं विना या शतादिसंख्या सा क्लीबे स्यात् । लक्षशब्दो वा क्लीबे । पक्षे स्त्रियाम् । "लक्षा न पुंसि संख्यायां क्लीबं व्याजशरव्ययोः" इति मेदिनी । तदिति लक्षस्य पर्याया नियुतमित्यर्थः । उदाहरणं च । नियुतं शतं सहस्रमयुतमित्यादि । "शतं सहस्रमयुतं नियुतं प्रयुतं मतम् स्त्री कोटिरर्बुदमिति

द्व्यच्कमसिसुसन्नन्तं यदनान्तमकर्तरि ॥ २४ ॥
त्रान्तं सलोपधं शिष्टं रात्रं प्राक्संख्ययान्वितम् ॥
पात्राद्यदन्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः ॥ २५ ॥
द्वन्द्वैकत्वाव्ययीभावौ पथः संख्याव्ययात्परः ॥

क्रमाद्दशगुणोत्तरम्" इति रत्नकोशः। असन्तमिसन्तमुसन्तमन्नन्तं च यत् द्व्यच्कं द्विस्वरं तत् क्लीबे। असन्तं यथा। पयः मनः। इसन्तं यथा। सर्पिः ज्योतिः। उसन्तं यथा। वपुः यजुरित्यादि। अन्नन्तं यथा। चर्म शर्म सामेत्यादि। अनेनैव क्लीबत्वे सिद्धे परतो यन्मर्मशब्दोपादानं तदस्यानित्यत्वज्ञापनार्थम्। तेन "गुणान्धकारशोकेषु तमो राहौ पुमानयम्" इत्याद्यपि सिद्धम्। अकर्तरि कर्तुरन्यत्र यदनान्तं अनेत्यन्ते यस्य तत्क्लीबे। यथा। गमनम्। मरणम्। दानम्। करणम्। वरणम्। अकर्तरीति किम्। इध्मव्रश्चनः कुठारः। नन्दयतीति नन्दनः रमणः ॥ २४ ॥ त्रान्तं क्लीबे यथा। पात्रं वहित्रं वस्त्रं गात्रमित्यादि। सकारो लकारो वा उपधा अन्त्यात्पूर्वो यस्य तत् सलोपधम्। सोपधं यथा। बिसम्। अन्धतमसम्। लोपधं यथा। कुलं मूलमित्यादि। शिष्टमिति। यदवशिष्टं प्रागुक्तादन्यत् तच्च प्रागुक्तम्। यदबाधितं तदपि त्रान्तादिकं क्लीबे इत्यर्थः। शिष्टमिति किम्। पुत्रः वृत्रः हंसः कंसः पनसः शिला कालः गलः। संख्यापूर्वो रात्रशब्दः क्लीबे। "रात्राह्नाहाः पुंसि" इति पुंस्त्वप्राप्तेरपवादोऽयम्। "संख्यापूर्वं रात्रं क्लीबम्" इति वार्तिकं रात्राह्नाहा इत्यस्य बाधकम्। त्रिरात्रम्। पञ्चरात्रम्। संख्ययेति किम्। अर्धरात्रः मध्यरात्रः। पात्रादिभिरदन्तैरेकार्थो यो द्विगुः स क्लीबे। पञ्चरात्रम्। आदिना चतुर्युगम्। लक्ष्यानुसारतः शिष्टप्रयोगानुगमेनेत्यर्थः। अनेन पञ्चमूली त्रिलोकीत्यादिरपवादः। एकार्थः किम्। पञ्चकपालः पुरोडाशः। द्विगुरयं तद्धितार्थः ॥ २५ ॥ द्वन्द्वसमासस्यैकत्वं अव्ययीभावश्च क्लीबे। द्वन्द्वैक्यं यथा। पाणिपादम्। शिरोग्रीवम्। मार्दङ्गिकपाणविकम्। अव्ययीभावो यथा। अधिस्त्रि। उपगङ्गम्। संख्याया अव्ययाच्च परः पथः क्लीबे। यथा। द्विपथम्। त्रयाणां पथां समाहारस्त्रिपथम्। चतुष्पथम्। अव्ययाद्यथा। विपथम्। कापथम्। संख्याव्ययादिति किम्। धर्मपथः। योगपथः। पथ इति समासान्तानुकरणम्। समासे षष्ठीविभक्त्यन्तात्परा छाया क्लीबे। "छाया बाहुल्ये" इति पाणिनिसूत्रम्। सा चेद्बहूनां संबन्धिनी तर्ह्येव तदुदाहरति।

षष्ठ्याश्छाया बहूनां चेद्विच्छायं संहतौ सभा ॥ २६ ॥
शालार्थापि पराराजामनुष्यार्थादराजकात् ॥
दासीसभं नृपसभं रक्षःसभमिमा दिशः ॥ २७ ॥
उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने ॥
कोपज्ञकोपक्रमादिकन्थोशीनरनामसु ॥ २८ ॥

वीनां पक्षिणां छाया विच्छायमिति । इक्षुच्छायम् । बहूनामिति किम् । कुड्य-छाया कुड्यछायमिति वा । स्त्रियां तु वक्ष्यते । संहतौ समूहविषये सभाशब्दः क्लीबे । अत्रापि षष्ठ्या इत्यनुवर्तते । यथा । दासीनां सभा दासीसभम् । स्त्रीसभमित्यादि । संहताविति किम् । दासीनां सभा दासीसभा दासीगृह-मित्यर्थः ॥ २६ ॥ शालार्था गृहार्था अपिशब्दात्संहत्यर्था च या सभा सा अराजकात् राजशब्दवर्जितात् राजा मनुष्यार्थात् राजार्थात् राजपर्यायात् अमनुष्यार्थात् रक्षआदिशब्दात्षष्ठ्यन्तात्परा चेत् क्लीबे । शाला गृहं अर्थोऽ-भिधेयो यस्याः सा शालार्था । अराजकराजपर्यायात् यथा । इनसभम् । प्रभु-सभम् । अमनुष्यार्थाद्यथा । रक्षःसभम् । पिशाचसभम् । अराजकात्किम् । राज-सभा । "राजपर्यायग्रहणान्नेह चन्द्रगुप्तसभा । राजविशेषोऽयम्" । षष्ठ्या इति किम् । नृपतिविषये सभा नृपतिसभा । नृणां पतिर्यस्यां सा चासौ सभा चेति वा नृपतिसभा । अमनुष्यार्थादिति किम् । दासीसभा । दासीनां शालेत्यर्थः । इमा दिश इति दासीसभमित्यादीनि क्रमेण त्रीण्युदाहरणानी-त्यर्थः । तत्र दासीसभमित्यादि तु संहतावित्यस्यैव । इतरे तु शालासंहति-साधारणे ॥ २७ ॥ तयोरुपज्ञोपक्रमयोरादित्वं प्राथम्यं तस्य प्रकाशने द्योतने उपज्ञान्त उपक्रमान्तश्च समासः क्लीबे स्यात् । उदाहरणमाह । उपज्ञायत इत्यु-पज्ञा । को ब्रह्मा तस्योपज्ञा कोपज्ञं प्रजा । कस्योपक्रमः कोपक्रमं लोकः । प्रजापतिना प्रथमं सृष्टत्वात्तेनादावुपज्ञाता प्रजेत्यर्थः । तदादित्वेति किम् । देव-दत्तोपज्ञा । मृन्मयः प्रकारः । मृत्प्रकारस्यानेककारणत्वात् । देवदत्तेति सामा-न्यशब्देन च तदादित्वप्रतिपादनाभावे क्लीबत्वाभावः । एवं देवदत्तोपक्रमो रथः । अत्रापि षष्ठ्या इत्यनुवर्तते । उशीनराणां नामसु मध्ये षष्ठ्यन्तात्परा कन्था क्लीबे । सौशमीनां कन्था सौशमिकन्थम् । उशीनरादन्यत्र दाक्षिकन्था । नामसु इति किम् । वीरणकन्था ॥ २८ ॥ चकार इत् अनुबन्धो यस्य स चित् । नश्च णश्च कश्च चिच

भावे नणकचिद्भ्योऽन्ये समूहे भावकर्मणोः ॥
अदन्तप्रत्ययाः पुण्यसुदिनाभ्यां त्वहः परः ॥ २९ ॥
क्रियाव्ययानां भेदकान्येकत्वेऽप्युक्थतोटके ॥
चोचं पिच्छं गृहस्थूणं तिरीटं मर्म योजनम् ॥ ३० ॥
राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः ॥

नणकचितः। तेभ्योऽन्ये ये तव्यदादयोऽदन्ता धातुप्रत्ययाः भावे विहितास्ते क्लीबे। तत्र धातुप्रत्यया यथा। भवितव्यम्। भाव्यम्। सहितम्। भुक्तम्। नणकचिद्भ्योऽन्य इति किम्। प्रश्नः न्यादः आखूत्थः। वेपथुः। नणकेति घञ उपलक्षणम्। पाकः। भावे किम्। कर्तव्यो धर्मसंग्रहः। मृतो वैरी। समूहार्थे यथा। भिक्षाणां समूहो भैक्षम्। गार्भिणम्। औपगवकम्। काकमित्यादि। भावे अदन्ता यथा। गोर्भावः गोत्वम्। शुचेर्भावः शौचम्। कर्मणि यथा। शौक्ल्यम्। राज्ञः कर्म राज्यम्। चौर्यम्। तल्प्रत्ययस्य तु स्त्रीत्वमुक्तम्। पुण्यसुदिनाभ्यां परो विहितसमासान्तोऽहन्शब्दः क्लीबे। पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टेति वार्तिकेनेत्यर्थः। अह्नाहान्ता इति पुंस्त्वस्यापवादोऽयम्। पुण्याहम्। सुदिनाहम्। सुदिनशब्दः प्रशस्तार्थः॥ २९॥ क्रियाणामव्ययानां च भेदकानि विशेषणानि क्लीबे एकवचने च स्युः। क्रियाविशेषणं यथा। मन्दं पचति। सुखं तिष्ठन्ति योगिनः। सलीलं नृत्यति बाला। अव्ययविशेषणं यथा। रम्यं स्वः। सुखदं प्रातः। अथ कानिचित्कण्ठरवेणाह। उक्थं सामभेदः। तोटकं वृत्तभेदः रूपकभेदश्च। चोचमुपभुक्तफलावशिष्टं तालफलं वा। कदल्याः फलमिति कश्चित्। पिच्छं बर्हम्। गृहस्थूणं गेहस्तम्भः। तिरीटं वेष्टनम्। शिरोभूषणमिति केचित्। मर्म सन्धिस्थानम्। योजनं क्रोशचतुष्टयम्। "योजनं परमात्मनि। चतुष्क्रोश्यां च योगे च" इति मेदिनी॥ ३०॥ राजसूयवाजपेये यागभेदौ। "राज्ञा लतात्मकः सोमः सूयतेऽत्र राजसूयम्। वाजं पैष्टी सुरा पेयमत्र वाजपेयम्"। कवेः कृतौ वर्तमानं गद्यं पदसमूहः। पद्यं श्लोकः। "पद्यं श्लोके पुमान् शूद्रे पद्या वर्त्मनि कीर्तिता" इति मेदिनी। कवेः कृताविति किम्। गद्या वाक्। पद्या पद्धतिः। माणिक्यं रत्नभेदः। "मणिके मणिपुराख्ये नगरे भवं माणिक्यम्"। भाष्यं पदार्थविवृतिः। "सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" इति। सिन्दूरं रक्तचूर्णभेदः। "सिन्दूरस्तरुभेदे स्यात्सिन्दूरं रक्तचूर्णके।

माणिक्यभाष्यसिन्दूरचीरचीवरपिञ्जरम् ॥ ३१ ॥
लोकायतं हरितालं विदलस्थालबाह्लिकम् ॥
इति नपुंसकसंग्रहः ॥
पुन्नपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः ॥ ३२ ॥
मोदकस्तण्डकष्टङ्कः शाटकः कर्पटोऽर्बुदः ॥

सिन्दूरी रोचना रक्तवेल्लिका धातकीषु च" इति विश्वप्रकाशः । चीरं वस्त्रभेदः । "चीरी झिल्लयां नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालेखनभेदयोः" इति मेदिनी । चीवरं मुनिवासः । "शाक्यभिक्षुप्रावरणमिति सुभूतिः" । पिञ्जरं पक्ष्यादिबन्धनागारम् । "पिञ्जरोऽश्वान्तरे पीते क्लीबं स्वर्णे च पीतके" इति कोशान्तरम् । पञ्जरमित्यपि पाठः ॥ ३१ ॥ लोकायतं चार्वाकशास्त्रम् । हरितालं धातुभेदः । "हरितालं धातुभेदे स्त्री दूर्वाकाशरेखयोः" इति मेदिनी । विदलं वंशदलकृतपात्रभेदः । स्थालं भाण्डभेदः । बाल्हिकं कुङ्कुमादि । "बाह्लकमिति च बाह्लवमित्यपि । बहुदेशे भवं बाह्लवम्" ॥ इति नपुंसकसंग्रहः ॥ अथ चिक्कसपर्यन्ताः पुंसि क्लीबे च स्युः । उक्तादन्यः शेषः । यथा शङ्खपद्मौ निधिवाचकौ पुंसि । कम्बुनलिनवाचिनौ तु पुन्नपुंसकयोः । तथाऽत्रत्यशब्दोऽपि यत्पर्याये बाधितस्तत्पर्यायाद्भिन्नश्चेत् पुन्नपुंसकयोरित्यर्थः । ऋचोऽर्धमर्धर्चः । पिण्याकं तिलकल्कम् । "पिण्याकोऽस्त्री तिलकल्के हिङ्गुबाह्लीकसिह्लक" इति मेदिनी । कण्टकं रोमहर्षादि । "कण्टकः क्षुद्रशत्रौ च कर्मस्थानिकदोषयोः । रोमाञ्चे च द्रुमाङ्गे च कण्टको मस्करेऽपि च" इति विश्वप्रकाशः । "कण्टको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे । नैयोगिकादिदोषोक्तौ स्याद्रोमाञ्चद्रुमाङ्गयोः" इति मेदिनी ॥ ३२ ॥ मोदकं भक्ष्यभेदः । "मोदकाः खाद्यभेदेऽस्त्री हर्षके पुनरन्यवत्" इति मेदिनी । "मोदको हर्षुले खाद्ये" इति हैमः । तण्डकः उपतापविशेषः । "तण्डकः खञ्जने फेने समासप्रायवाचि च । गृहदारुतरुस्कन्धमायाबहुलकेष्वपि" इति मेदिनी । दण्डक इत्यपि । टङ्कोऽश्मदारणः । "टङ्को नीलकपित्थे च खनित्रे टङ्कनेऽस्त्रियाम् । जङ्घायां स्त्री पुमान्कोपे कोशासिग्रावदारणे" इति मेदिनी । शाटकः पटभेदः कर्पटं स्थानभेदः वस्त्रभेदो वा । खर्वटमित्यपि । "यत्रैकतो भवेद्ग्रामो नगरं चैकतः स्मृतम् ॥ मिश्रं तु खर्वटं नाम नदीगिरिसमाश्रयम्" इति । अर्बुदं संख्याभेदः । पातकं ब्रह्महत्यादि । उद्योग उत्साहः । चरकं वैद्यशास्त्रभेदः । "वरकमित्यपि पाठस्तत्र स्मृत-

पातकोद्योगचरकतमालामलका नडः ॥ ३३ ॥
कुष्ठं मुण्डं शीधु बुस्तं क्ष्वेडितं क्षेमकुट्टिमम् ॥
संगमं शतमानार्मशम्बलाव्ययताण्डवम् ॥ ३४ ॥
कवियं कन्दकार्पासं पारावारं युगन्धरम् ॥
यूपं प्रग्रीवपात्रीवे यूषं चमसचिक्कसौ ॥ ३५ ॥
अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् ॥
तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत् ॥ ३६ ॥
इति पुन्नपुंसकसंग्रहवर्गः ॥

वस्त्रम्" । तमालो वृक्षभेदः । "तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे" इति मेदिनी । आमलको धात्रीफलम् । नडोऽन्तर्विवरं तृणभेदश्च ॥ ३३ ॥ कुष्ठं रोगभेदः । "कुष्ठं रोगे पुष्करेऽस्त्री" इति मेदिनी । "कुष्ठं भेषजरोगयोः" इति हैमः । मुण्डं शिरः । शीधु मद्यम् । बुस्तं भृष्टं मांसं पनसादिफलासारभागश्च । क्वचित्पुस्तमिति पाठः । क्वचित् भ्रस्तमपि । क्ष्वेडितं वीरकृतसिंहनादः । क्षेमं कु॒लम् । "क्षेमोऽस्त्री लब्धरक्षणे । चण्डायां ना शुभे न [illegible] कात्यायन्यां [illegible] योषिति" इति मेदिनी । मोक्षेऽपि क्षेमः । कुट्टिमं [illegible]भेदः । "कुट्टिमोऽस्त्री निबद्धा भूः" इति कोशान्तरम् । "फरसबंदीति रू[illegible]तायाः" । संगमं संयोगः । शतमानं मानभेदः । अर्मं अक्षिरोगभेदः । शम्बलं वर्णभेदः । पाथेयं च । "शबलोऽस्त्री सम्बलवत्कूलपाथेयमत्सर" इति मेदिनी । अव्ययं स्वरादिनिपातवाचकम् । "अव्ययोऽस्त्री शब्दभेदे ना विष्णौ निर्व्यये त्रिषु" इति मेदिनी । ताण्डवं नृत्यभेदः ॥ ३४ ॥ कवियं महाराष्ट्रभाषया कडियाळीति प्रसिद्धम् । लगाम इत्यपि । "नार्यां कवी खलीनं कवियं वा ना तुरङ्गमुखभाण्डम्" इति बोपालितः । कन्दं पद्मिनीमूलादि । "कन्दोऽस्त्री सूरणे सस्यमूले जलधरे पुमान्" इति मेदिनी । क्वचित्कर्मेति पाठः । कार्पासं वस्त्रयोनिभेदः । "पारावारः पयोराशौ पारावारं तटद्वयम्" इति हैमः । युगन्धरं कूबरम् । यूपं यज्ञाङ्गभेदः । प्रग्रीवं द्रुमशीर्षकं "वातायनं मुखशाला वा" । पात्रीवं यज्ञपात्रभेदः । यूषं मण्ड इति प्रसिद्धम् । "मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः" इत्युक्तं वैद्यके । चमसचिक्कसौ पात्रभेदौ ॥ ३५ ॥ अर्धर्चादौ अस्मिन्वर्गे पुन्नपुंसकाधिकारे इति यावत् । "घृतादीनां पुंस्त्वाद्यं पाणिन्यादिभिरुक्तं तत्तु वैदिकम् । वेदे प्रसिद्धमित्यर्थः । अत-

स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः ॥
जातिभेदाः पुमाख्याश्च स्त्रीयोगैः सह मल्लकः ॥ ३७ ॥
ऊर्मिर्वराटकः स्वातिर्वर्णको झाटलिर्मनुः ॥
मूषा सृपाटी कर्कन्धूर्यष्टिः शाटी कटी कुटी ॥ ३८ ॥
॥ इति स्त्रीपुंसशेषसंग्रहवर्गः ॥
स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञ् क्वचिच्च वुञ् ॥

स्तदिह नोक्तम् । तल्लोकेऽप्यस्ति चेत् शेषवत् उक्तादन्यः शेषस्तद्वदस्तु शिष्टप्रयोगतो ग्राह्यमित्यर्थः ॥ ३६ ॥ इति पुन्नपुंसकसंग्रहवर्गः ॥ अपत्यान्ता अपत्यप्रत्ययान्ताः स्त्रीपुंसयोः स्युः । यथा । उपगोः अपत्यं पुमान् औपगवः । उपगोरपत्यं स्त्री औपगवी । वैदेहः वैदेही । गार्ग्यः गार्गी । द्विचतुःषट्पदोरगाः द्विपदचतुष्पदषट्पदवाचिनो भुजगवाचिनश्च जातिभेदाः स्त्रीपुंसयोः । तत्र द्विपदजातिभेदो यथा । मानुषः पुमान् । मानुषी स्त्री । ब्राह्मणः ब्राह्मणी" । "शूद्रः शूद्रा अजादित्वाट्टाप्" । चतुष्पद्भेदो यथा । मृगः मृगी । हयः हयी । षट्पदभेदो यथा । भृङ्गः भृङ्गी । उरगभेदो यथा । उरगः उरगी । नागः नागी । स्त्रीयोगैः सह पुमाख्याः पुन्नामानि स्त्रीपुंसयोः । यथा । इन्द्रः । इन्द्राणी । मातुर्भ्राता मातुलः । तस्य स्त्री मातुली । पुंसि वर्तमानो मातुलः । स्त्रीयोगात्स्त्रीत्वेऽपि वर्तते । शूद्रस्य स्त्री शूद्री । मल्लकादयश्च स्त्रीपुंसयोः । मल्लकः पुष्पवल्लीभेदः । स्त्रियां तु मल्लिका ॥ ३७ ॥ ऊर्मिस्तरङ्गः ग्रुनिरिति पाठः । "मुनिर्यतीङ्गुदीबुद्धपिलायागस्तिकिंशुके" इति विश्वप्रकाशः । वराटकः कपर्दकः । स्त्रियां तु वराटिका । स्वातिर्नक्षत्रम् । "वर्णकश्चन्दनम् । विलेपने चन्दने च वर्णकं पुन्नपुंसकम्" इति रसभः । "वर्णकश्चारणे स्त्री तु चन्दने च विलेपने । द्वयोर्नील्यादिषु स्त्री स्यादुत्कर्षे काञ्चनस्य च" इति मेदिनी । झाटलिः किंशुकवृक्षसदृशः मोखा इति प्रसिद्धः । मनुः स्वायम्भुवादिः मन्त्रो वा । मूषा तैजसावर्तनी । सृपाटी परिमाणभेदः । कर्कन्धूर्बदरी । यष्टिः लगुडः । काठीति महाराष्ट्रभाषायाम् । शाटी पटभेदः । कटी देहावयवः । कुटी ग्रहकोष्टकः । अत्र मूषा नाकारान्तः ॥३८॥ इति स्त्रीपुंससंग्रहवर्गः ॥ भावक्रिययोः भावे कर्मणि च वर्तमानः ष्यञ्प्रत्ययो वुञ्प्रत्ययश्च क्वचित्स्त्रीनपुंसकयोर्वर्तते । तत्र ष्यञ्प्रत्ययमुदाहरति । उचितस्य भावः औचित्यं औचिती च । मित्रस्य कर्म मैत्र्यं मैत्री वा । एवं सामग्र्यं सामग्री वा । आर्हन्त्यं

औचित्यमौचिती मैत्री मैत्र्यं वुञ् प्रागुदाहृतः ॥ ३९ ॥
षष्ठ्यन्तप्राक्पदाः सेनाछायाशालासुरानिशाः ॥
स्याद्वा नृसेनं श्वनिशं गोशालमितरे च दिक् ॥ ४० ॥
आबन्नन्तोत्तरपदो द्विगुश्चापुंसि नश्च लुप् ॥
त्रिखट्वं च त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि ॥ ४१ ॥

॥ इति स्त्रीनपुंसकशेषः ॥

त्रिषु पात्री पुटी वाटी पेटी कुवलदाडिमौ ॥

इति त्रिलिङ्गशेषसंग्रहः ॥

आर्हन्ती"। वुञ्प्रत्ययस्तु वैरमैथुनिकादिवुन्। इत्थं प्रागुदाहृतः। तथा मिथुनस्य भावः कर्म वा मैथुनिका मैथुनकं च। मनोज्ञादित्वाद्वुञ् ॥ ३९ ॥ तत्पुरुषे षष्ठ्यन्तं षष्ठीविभक्त्यन्तं प्राक्पदं यासां ताः षष्ठ्यन्तप्राक्पदाः सेनाद्याः स्त्रियां क्लीबे च स्युः। उदाहरति। नृणां सेना नृसेनम्। वेति विकल्पान्नृसेनापि। इतर इति। एवमन्यत्राप्युदाहर्तव्यमित्यर्थः। यवसुरं यवसुरा। कुड्यस्य छाया कुड्यच्छायं कुड्यच्छाया वा। षष्ठीबहुवचनान्तप्राक्पदा चेच्छाया क्लीब एवेति प्राग्दर्शितम् ॥ ४० ॥ आबन्तोत्तरपदोऽन्नन्तोत्तरपदश्च द्विगुसमासः पुंसि न स्यात्। किंतु स्त्रीनपुंसकयोः। अन्नन्तोत्तरपदस्य योऽन्त्यनकारस्तस्य लुप् लोपश्च स्यात्। आबन्तान्त्यपदमुदाहरति। त्रिखट्वमिति। तिस्रः खट्वाः समाहृताः त्रिखट्वम्। त्रिखट्वी च। अन्नन्तोत्तरपदो यथा। त्रयस्तक्षाणः समाहृतास्त्रितक्षम्। त्रितक्षी च। तक्षन्शब्दस्यान्त्यनकारो लुप्तः ॥ ४१ ॥ इति स्त्रीनपुंसकसंग्रहः ॥ पात्रादयो दाडिमान्तास्त्रिषु त्रिलिङ्गाः। पात्रं पात्रः इत्यादि। पात्र्यमत्रे त्रिष्विति मेदिनी। "पात्रं तु कूलयोर्मध्ये पर्णे नृपतिमन्त्रिणि। योग्यभाजनयोर्यज्ञभाण्डे नाट्यानुकर्तरि" इति हैमः। "वाटः पथि वृतौ वाटं वरण्डे गात्रभेदयोः। वाटी वास्तौ गृहोद्यानकट्योः" इति हैमः। कुवलं बदरीफलम्। "कुवलं चोत्पले मुक्ताफलेऽपि बदरीफले। कुड्मले मुकुरे पुंसि न द्वयोर्नरकान्तरे" इति मेदिनी ॥ इति त्रिलिङ्गशेषः ॥ द्वन्द्वैकत्वस्याव्ययीभावस्य च लिङ्गं प्रागुक्तम्। स्वप्रधाने उभयपदप्रधाने इतरेतराख्ये द्वन्द्वसमासे च तत्पुरुषे च यत्परमग्रिमपदस्थं लिङ्गं तदेव लिङ्गं स्यात् तत्र परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति पाणिनिसूत्रम्। तत्र द्वन्द्वे यथा।

42-44



परं लिङ्गं स्वप्रधाने द्वन्द्वे तत्पुरुषेऽपि तत् ॥ ४२ ॥
अर्थान्ताः प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः ॥
तद्धितार्थो द्विगुः संख्यासर्वनामतदन्तकाः ॥ ४३ ॥
बहुव्रीहिरदिङ्नाम्नामुन्नेयं तदुदाहृतम् ॥
गुणद्रव्यक्रियायोगोपाधिभिः परगामिनः ॥ ४४ ॥

कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । तत्पुरुषे यथा । धान्येनार्थो धान्यार्थः । सर्पाद्भीतिः सर्पभीतिः । सर्पभयम् । वाप्यश्वः ॥ ४२ ॥ उक्तस्य तत्पुरुषलिङ्गस्यापवादमाह । अर्थेति । अर्थान्तशब्दाः परोपगाः परगामिनः वाच्यलिङ्गा इत्यर्थः । यथा । द्विजायायं द्विजार्थः सूपः । द्विजार्था यवागूः । द्विजार्थं पयः । अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यमिति वार्तिकम् । प्रेति । प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः । "परं विशेष्यमुपगच्छन्तीत्यर्थः" । तत्र प्रादिपूर्वो यथा । अतिक्रान्तो मालामतिमालो हरः । अतिक्रान्ता मालामतिमालेयम् । अतिमालमिदम् । अवक्रुष्टः कोकिलया अवकोकिलः । अलंपूर्वो यथा । अलंकुमार्यै इत्यलंकुमारिरयम् । अलंकुमारिरियम् अलंकुमारि इदम् । प्राप्तजीविको द्विजः । प्राप्तजीविका स्त्री । प्राप्तजीविकमिदम् । एवमापन्नजीविकः । तद्धितार्थो द्विगुर्वाच्यलिङ्गः । पञ्चकपालः पुरोडाशः । पञ्चकपालं हविः । संख्याशब्दाः सर्वनामसंज्ञकास्तदन्ताश्च परलिङ्गभाजः । संख्या यथा । एकः पुमान् । एकं कुलम् । द्वौ पुमांसौ । द्वे स्त्रियौ कुले च । "त्रयः पुरुषाः । तिस्रः स्त्रियः । त्रीणि कुलानि । एवं चत्वारः चतस्रः चत्वारि" । षट्संज्ञकान्वक्ष्यति । विंशत्यादीनां लिङ्गं द्वितीयकाण्डे उक्तम् । शतादिकानां तु नपुंसकसंग्रहे । सर्वनाम यथा । सर्वो देशः । सर्वा नदी । सर्वं जलम् । एवं परः पुमान् । "संख्यान्तको यथा । ऊनत्रयः । ऊनतिस्रः । ऊनत्रीणि" । सर्वनामान्तको यथा । परमसर्वः । परमसर्वा । परमसर्वम् ॥ ४३ ॥ अदिङ्नाम्नां बहुव्रीहिरन्यलिङ्गभाक् । तदुदाहरणं स्वयमुन्नेयम् । यथा । वृद्धा भार्या यस्य स वृद्धभार्यः । बहुधनः । बहुधना । "बहुधनमित्यादि" । अदिङ्नाम्नामिति किम् । दक्षिणस्याः पूर्वस्याश्च दिशोरन्तरालं दिक् दक्षिणपूर्वा । दिङ्नामान्यन्तराले इत्यनेनात्र बहुव्रीहिः । गुणयोगेन द्रव्ययोगेन क्रियायोगेन च य उपाधिर्विशेषणं तेन धर्मिणि प्रवृत्तास्ते धर्मिलिङ्गभाजः । गुणयोगेन यथा । गन्धवती पृथ्वी ।

लक्ष्मीरिति—लक्षयति पश्यति नीतिज्ञमिति लक्ष्मीः, लक्ष्मी वा, पद्ममालयोऽस्या इति पद्मालया, पद्ममस्त्यस्या इति पद्मा, कमलमस्त्यस्या इति कमला, श्रयति हरिमिति, श्रीयते सर्वैरिति वा श्रीः, हरेः प्रिया हरिप्रिया इति षट् लक्ष्म्याः ॥ २७ ॥

शंख, चक्र, गदा, तलवार, मणि

पु. पु. न.
**शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनः।**
स. पु. पु. पु.
**कौमोदकी(गदा,खड्गो(नन्दकः)कौस्तुभो(मणिः) २८॥**

शङ्ख इति—लक्ष्मीपतेः दैत्यानां शं खनतीति, शाम्यतीति वा शङ्खः, पञ्चजने दैत्यभेदे पाताले वा भवः पाञ्चजन्य इत्येकं विष्णुशङ्खस्य। लक्ष्मीपतेश्चक्रं शोभनं दर्शनमस्य, सुखेन दृश्यत इति वा सुदर्शनः इत्येकं विष्णुचक्रस्य। लक्ष्मीपतेर्गदा गदतीति गदा-शब्दकत्वात् कोः पृथिव्या मोदकः कुमोदको विष्णुस्तस्येयं कौमोदकी इत्येकं विष्णुगदायाः। लक्ष्मीपतेः खड्गः नन्दयति देवानिति नन्दक इत्येकं विष्णुखड्गस्य। लक्ष्मीपतेर्मणिः कुं भुवं स्तुभ्नाति व्याप्नोति कुस्तुभोऽब्धिस्तत्र भवः, कुं स्तोभते कुस्तुभो विष्णुस्तस्यायमिति वा कौस्तुभः इत्येकं विष्णोर्मणेः ॥ २८ ॥

गरुड

पु. पु. पु. पु. पु.
**गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः।**
पु. पु. पु. पु.
**नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः ॥ २९ ॥**

गरुत्मानिति—गरुतः पक्षास्सन्त्यस्येति गरुत्मान्, गरुद्भिः पक्षैर्डयत इति गरुडः, तृक्षस्य कश्यपस्यापत्यं तार्क्ष्यः, विनताया अपत्यमिति वैनतेयः, खे आकाशे गच्छन्तीति खगास्तेषामीश्वरः खगेश्वरः, नागानां सर्पाणामन्तको नाशको नागान्तकः, विष्णोः रथ इव, विष्णोः रथः पौरुषं देहो वेति विष्णुरथः, कनकमयत्वात् शोभने पर्णे पक्षावस्येति सुपर्णः, पन्नगानश्नाति, पन्नगा अशनं यस्येति वा पन्नगाशनः इति नव गरुडस्य ॥२९॥

शिव या महादेव

पु. पु. पु. पु. पु. पु.
**शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः।**
पु. पु. पु. पु. पु
**ईश्वरः शर्व ईशानः शंकरश्चन्द्रशेखरः ॥ ३० ॥**
पु. पु. पु. पु. पु.
**भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः।**
पु. पु. पु. पु.
**मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः ॥ ३१ ॥**

---

* चापः शार्ङ्गमुरारेस्तु श्रीवत्सो लाञ्छनं स्मृतम्। अश्वाश्च शैब्यसुग्रीवमेघपुष्पबलाहकाः। सारथिर्दारुको मन्त्री ह्युद्धवश्चानुजो गदः ॥

शिव या महादेव

पु. पु. पु. पु. पु.
उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ।
पु. पु. पु. पु.
वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ॥ ३२ ॥
पु. पु. पु. पु.
कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः ।
पु. पु. पु. पु. पु.
हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः ॥ ३३ ॥
पु. पु. पु. पु.
गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः ।
पु. पु. पु. पु. पु. पु. †
व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः ॥ ३४ ॥

शम्भुरिति—शं सुखं भवति ( भावयतीति ) शम्भुः, ईष्टे इति ईशः, पशूनां जीवानां पतिरिति पशुपतिः, शिवमस्यास्तीति, शिवयतीति वा शिवः, शूलमस्यास्तीति शूली, महांश्चासावीश्वरश्चेति महेश्वरः, ईशितुं शीलमस्येश्वरः, शृणातीति, सर्वतीति वा शर्वः—सर्वः, ईष्टे तच्छील ईशानः, शं करोतीति शंकरः, चन्द्रः शेखरो यस्येति चन्द्रशेखरः, भूतानामीशो भूतेशः, खण्डयतीति खण्डः परशुरस्येति खण्डपरशुः, गिरेरीशो गिरिशः, गिरौ शेते इति गिरिशः, मृडाति मृड्णातीति वा मृडः, मृत्युं जयतीति मृत्युञ्जयः, कृत्तिश्चर्मवासोऽस्येति कृत्तिवासाः, पिनाकोऽस्यास्तीति पिनाकी, प्रमथानामधिपः प्रमथाधिपः, उच्यति क्रुधा सम्बध्यत इत्युग्रः, कपर्दोऽस्यास्तीति कपर्दी, श्रीः शोभा कण्ठेऽस्येति श्रीकण्ठः, शितिः कालः कण्ठोऽस्येति शितिकण्ठः, कपालं बिभर्तीति कपालभृत्, वामयति दुष्टानां मदमिति वामः दीव्यतीति देवः वामश्चासौ देवश्चेति वामदेवः, महांश्चासौ देवश्च—महान् देवो नृत्यादिरूपा क्रीडा यस्येति वा महादेवः, विविधा रविचन्द्राग्निरूपाण्यक्षीण्यस्य, विरूपेष्वपि अक्षिकृपादृष्टिर्यस्य, विविधानि रूपाणि विविधरूपेषु वा अक्षाणीन्द्रियाण्यस्येति वा विरूपाक्षः, त्रीणि लोचनानि यस्य, त्रिषु कालेषु लोकेषु गुणेषु वेदेषु लोचनं ज्ञानमस्य, त्रयो वेदा वर्णा अकारोकारमकारा वा लोचनानि यस्मिन्वति त्रिलोचनः, कृशानौ रेतो यस्य, कृशानुः सूतरूपो रेतोऽस्येति वा कृशानुरेताः, सर्वं जानातीति सर्वज्ञः, धूर्भारभूता जटिर्जटा यस्येति धूर्जटिः, नीलश्चासौ लोहितश्च नीललोहितः, हरतीति हरः, स्मरं कामं हरतीति स्मरहरः, भर्जते, भृज्यन्ते कामाद्योऽनेनेति वा भर्गः, त्रीण्यम्बकान्यस्य, त्रिष्वम्बकमस्येति, त्रयाणां लोकानामम्बकः पिता, त्रीन्वेदानम्बते शब्दायते वा त्र्यम्बकः, त्रयाणां धातूनां पुराणि तेषामन्तकः, त्र्यवयवं पुरं त्रिपुरं तस्यान्तकस्त्रिपुरान्तकः, धरतीति धरः गङ्गाया धरः गङ्गाधरः,

† अहिर्बुध्न्योऽष्टमूर्तिश्च गजारिश्च महानटः ।

अन्धकस्य दैत्यस्य रिपुः अन्धकरिपुः, क्रतुं ध्वंसयतीति क्रतुध्वंसी, वृषो ध्वजश्चिह्नमस्येति वृषध्वजः, व्योम्नि केशा यस्येति व्योमकेशः, भवति-भवते वा सर्वमिति भवः,बिभेत्यस्मादिति भीमः, तिष्ठतीति स्थाणुः, रोदयतीति रुद्रः, उमायाः पतिः उमापतिरित्यष्टचत्वारिंशच्छम्भोः ॥ ३० । ३४ ॥

जटा धनुष — पु. कपर्दो"ऽस्य जटाजूटः" पु. पिनाकोऽजगवं (न. धनुः)।

सेवक मातायें — पु. प्रमथाः(स्युःपारिषदा)ब्राह्मी"त्याद्यास्तु मातरः"॥३५॥

कपर्द इति—अस्य शिवस्य जटाजूटो जटाबन्धः केन सुखेन जलेन वा परं पूर्तिं ददाति, कस्य जलस्य परापूरणेन दायतीति वा कपर्दः इत्येकं जटाबन्धस्य। अस्य धनुः पातीति पिनाकः अजेन ब्रह्मणा गम्यते-अजं छागं गच्छति यज्ञत्वेन प्रविशतीति अजगो विष्णुरस्ति शरत्वेनास्मिन्निति अजगवम्—आजगवमिति द्वे शिवधनुषः। अस्य परिषदि साधवः पारिषदाः, दुष्टान्प्रमथन्तीति प्रमथाः स्युरिति द्वे शिवानुचराणां तु पुनः ब्रह्मण इयं ब्राह्मी ब्रह्मशक्तिरित्याद्याः मान्यन्ते पूज्यन्ते लोकमातृत्वादिति, मान्ति शिवपरिवारत्वे समाविशन्तीति वा मातरः "ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी तथा। कौमारीत्यपि चामुण्डा चर्चिकेत्यष्ट मातरः" ब्रह्मादिशक्तिदेवतानामैकैकम् ॥ ३५ ॥

सिद्धियां — स. विभूतिर्भूतिः स. र्भूतिरैश्वर्य्य न. 'मणिमादिकमष्टधा'।

विभूतिरिति—विभवनं विभूतिः, भवनं भूतिः, ईश्वरस्य भावः ऐश्वर्य्यमिति "अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा। ईशिता वशिता चैव तथा कामावशायिता" तत्र अणोर्भावोऽणिमा, लघोर्भावो लघिमा, प्रापणं प्राप्तिरंगुल्यग्रेण चन्द्रादेः, प्रकामस्य भावः प्राकाम्यमिच्छानाभिघातः, महतो भावो महिमा येन ब्रह्माण्डेपि न माति, ईशोऽस्यास्तीतीशी तस्य भाव ईशिता प्रभुत्वं येन स्थावरा अप्याज्ञाकारिणः, वशिनो भावो वशिता यया भूमावप्युन्मज्जननिमज्जने, कामानवशेते कामावशायी तस्य भावः कामावशायिता इति अणिमाद्यष्टसिद्धीनां नामत्रयम् ॥

पार्वती — स. उमा स. कात्यायनी स. गौरी स. काली स. हैमवती स. ईश्वरा ॥ ३६ ॥

स. शिवा स. भवानी स. रुद्राणी स. शर्वाणी स. सर्वमङ्गला।

स. *अपर्णा स. पार्वती स. दुर्गा स. मृडानी स. चण्डिका स. अम्बिका ॥ ३७ ॥

उमेति—ओर्महेशस्य मा लक्ष्मीरित्युमा, कात्यायनस्येयं कतस्यापत्यमिति वा कात्या

---

* आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा।

यनी, गौरो वर्णोऽस्त्यस्या गौरी, कालो वर्णोऽस्त्यस्या इति काली, हिमवतोऽपत्यं स्त्री हैमवती, ईष्टे इतीश्वरा—ईश्वरी वा, शिवयति, शिवमस्त्यस्याः, शिवो वास्ति भर्तृत्वेन यस्या इति वा शिवा, शिवस्य स्त्री तु शिवी, भवस्य स्त्री भवानी, रुद्रस्य स्त्री रुद्राणी, शर्वस्य स्त्री शर्वाणी, सर्वेभ्यः सर्वेषां वा मङ्गला, सर्वाणि मङ्गलान्यस्या इति वा सर्वमङ्गला, न पर्णान्यस्या इत्यपर्णा, पर्वतस्येयं पार्वती, दुःखेन गम्यते ज्ञायतेस्याम्, दुःखेन दुष्टैर्वा गीयते स्तूयते इति दुर्गा, मृडस्य स्त्री मृडानी, चण्डते इति चण्डिका, अम्ब्यते शब्द्यते इत्यम्बा, अम्बैवाम्बिका इति सप्तदश पार्वत्याः ॥ ३६ । ३७ ॥

पु. पु. पु. पु.
गणेश **विनायको विघ्नराजद्वैमातुरगणाधिपाः ।**
पु. पु. पु. पु.
**( अप्ये ) कदन्तहेरम्बलम्बोदरगजाननाः ॥ ३८ ॥**

विनायक इति—विनयति, विशिष्टो नायकः, विगतो नायको नियन्तास्येति वा विनायकः, विघ्नानां राजेति विघ्नराजः, द्वयोर्मात्रोरपत्यमिति द्वैमातुरः, गणानां प्रमथानामधिपो गणाधिपः, एको दन्तोऽस्येत्येकदन्तः, हे प्रभाते रम्बते इति हेरम्बः, लम्बमुदरमस्येति लम्बोदरः, गजस्याननमिवाननं यस्य गज आननमस्येति वा गजाननः इत्यष्टौ गणेशस्य ॥ ३८ ॥

पु. पु. पु. पु.
स्वामिकार्तिकेय **कार्त्तिकेयो महासेनः शरजन्मा षडाननः ।**
पु. पु. पु. पु. पु.
**पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ॥ ३९ ॥**
पु. पु. पु. पु.
**बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः ।**
पु. पु. पु. पु.
**षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ॥ ४० ॥**

कार्त्तिकेय इति—कृत्तिकानामपत्यमिति कार्त्तिकेयः, महती सेना यस्येति महासेनः, शरेषु जन्मास्येति शरजन्मा, षट् आननान्यस्येति षडाननः, पार्वत्या नन्दनः पार्वतीनन्दनः, स्कन्दतीति स्कन्दः, सेनां नयतीति सेनानीः, अग्नेर्भवतीत्यग्निभूः,गूहति रक्षति सेनामिति गुहः, बहुलानां कृत्तिकानामपत्यमिति बाहुलेयः, तारकं जयतीति तारकजित्, विशाखेति—विशाखायां जात इति वा विशाखः, शिखी मयूरो वाहनमस्येति शिखिवाहनः, षण्णां मातॄणामपत्यमिति षाण्मातुरः, धरतीति धरः, शक्तेर्धरः शक्तिधरः, कुमारयति, कुत्सितो मारोऽस्य, कौ पृथिव्यां मारयति दुष्टानिति वा कुमारः, क्रौञ्चस्य पर्वतस्य दारण इति सप्तदश कार्त्तिकेयस्य ॥ ३९ । ४० ॥

---

१ " हः शंकरे हरौ हंसे रणरोमाञ्चवाजिषु " इति नानार्थरत्नमाला । हे उपसि रम्बते इति स्वामी ।

पु. पु. पु. पु. पु.

इन्द्र इन्द्रोमरुत्वान्मघवा बिडौजाः पाकशासनः।

पु. पु. पु. पु.

वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः ॥ ४१ ॥

पु. पु. पु. पु. पु.

जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः।

पु. पु. पु. पु. पु. पु.

सुत्रामागोत्रभिद्वज्री वासवो वृत्रहा वृषा ॥ ४२ ॥

पु. पु. पु. पु.

वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः।

पु. पु. पु. पु.

जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः ॥ ४३ ॥

पु. पु. पु. पु.

संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः।

पु. पु. पु.

आखण्डलः सहस्राक्ष ऋभुक्षा (तस्य तु प्रिया)॥४४॥

इन्द्र इति–इन्दतीति इन्द्रः,मरुतः सन्त्यस्येति मरुत्वान्,मह्यते पूज्यत इति मघवा, मघो धनमस्येति व्युत्पत्त्या (मघवान्) बिडति बिडंभेदकमोजोऽस्येति बिडौजा विट्सु प्रजासु मनुष्येषु वा ओजोऽस्येति विडोजा इति वा पाकस्य दैत्यभेदस्य शासन इति पाकशासनः, वृद्धे श्रवसी यस्येति, वृद्धेषु पण्डितेषु श्रवो यशो यस्येतिवा वृद्धश्रवाः, सुष्ठु नासीरं सेना मुखं यस्य,शोभना नासीरा अग्रेसरा यस्येति वा सुनासीरः–शुनो वायुः शीरः सूर्यस्तौ स्तोऽस्येति वा शुनासीरः, पुरुप्रचुरं हूतमाह्वानं यज्ञेष्वस्य,पुरूणि हूतानि नामान्यस्येति वा पुरुहूतः,पुरोरीणां दारयतीति पुरन्दरः,जयतीति जिष्णुः,लेखेषु ऋषभः,लेखऋषभ इवेति वा लेखर्षभः,शक्नोतीति शक्रः,शतं मन्यवो यागा अस्य, शतेषु दैत्येषु मन्युः क्रोधोऽस्येति वा, शतं मन्यवो दैन्यान्यस्येति वा शतमन्युः, दिवः पतिर्दिवस्पतिः, सुष्ठु त्रायते इति सुत्रामा– "सूत्रायत इति सूत्रामा",गोत्रान्पर्वतान्भिनत्तीति गोत्रभित्,वज्रोऽस्यास्तीतिवज्री,वसवो देवा वसूनि रत्नान्यस्य वा सन्ति, वसोरपत्यमिति वा वासवः, वृत्रं हतवानिति वृत्रहा, वर्षतीति वृषा, वास्तोर्गृहक्षेत्रस्य पतिः वास्तोष्पतिः, सुराणां पतिः सुरपतिः, बलस्यासुरस्यारातिः बलारातिः, शच्याः पतिः शचीपतिः, जम्भमसुरं भेत्तुं शीलमस्येति जम्भभेदी,

---

१ श्वन्नुक्षन्नित्यादिना मघवन्निति निपातितं 'मघवा बहुल'मिति त्रादेशपक्षे तु मघवानित्यपि बोध्यम्–यत्तु त्रादेशे दीर्घाभावान्मघवन्निति स्वामिनोक्तं तन्न सर्वनामस्थाने चासम्बुद्धाविति दीर्घसंभवात्–नच संयोगान्तलोपस्यासिद्धत्वम् मघवा बहुलमिति बहुलग्रहणेन तद्बाधनात्। अतएव मतुपा त्रन्तादेशप्रत्याख्यानपरं वार्तिकं तद्भाष्यं च संगच्छते 'हविर्जक्षिति निःशङ्को मखेषु मघवानसा' विति भट्टिः एतेन मघवा,मघवन्, मघवानिति त्रैरूप्यमिति।

हरिर्हरिद्वर्णो हयो यस्येति हरिहयः, स्वः स्वर्गे राजते—स्वेषु देवेषु स्वेन धनेन वा आराजते स्वाराट्, न मुञ्चतीति नमुचिर्दैत्यस्तस्य सूदनो नमुचिसूदनः, संक्रन्दयतीति संक्रन्दनः, दुःखेन दुष्टं दुष्टेषु वा च्यवनमस्य, दुस्सहश्च्यवनो मुनिरस्येति वा दुश्च्यवनः, तुतोर्त्तीति तुरो वेगवाँस्तं साहयति अभिभवतीति तुराषाट्, मेघा वाहनमस्येति मेघवाहनः, आखण्डयतीत्याखण्डलः, सहस्रमक्षीण्यस्येति सहस्राक्षः, ऋभवः क्षियन्त्यत्रेति "ऋभुक्षः स्वर्गवज्रयोरिति विश्वः" ऋभुक्षः स्वर्गो वज्रो वाऽस्त्यस्येति ऋभुक्षा इति पञ्चत्रिंशदिन्द्रस्य॥४१।४४॥

इन्द्राणी स. स. स. स.
नगरी **पुलोमजा शचीन्द्राणी ( नगरी त्वमरावती )।**
घोड़ा
सारथि पु. पु. न.
वन **(हय) उच्चैःश्रवाः सूतो मातलिर्नन्दनं वनम्॥ ४५॥**

तस्येति—तस्येन्द्रस्य प्रिया तु पुलोम्नो मुनेर्जाता पुलोमजा ( पौलोमी अपि ) शचते शची सर्वेन्द्रियेषु। सचतइति वा सची दन्त्यादिरपि इन्द्रस्य स्त्री, इन्द्राणी इति त्रीणीन्द्रपत्न्याः। नगरी तु अमराः सन्त्यस्यामिति अमरावती इत्येकमिन्द्रपुरस्य। हयः अश्वस्तु उच्चैःश्रवसी यस्य, उच्चैः शृणोतीति वा, उच्चैर्महच्छ्रवो यशो यस्येति वा उच्चैःश्रवाः इत्येकमिन्द्राश्वस्य। सूतः सारथिः मतं लातीति मतलस्तस्यापत्यापत्यमिति मातलिरित्येकमिन्द्रसारथेः। वनं नन्दयतीति नन्दनमित्येकमिन्द्रवनस्य॥ ४५॥

पु. पु. पु.
इन्द्रघर **स्यात्प्रासादो वैजयन्तः जयन्तः पाकशासनिः।**
पुत्र
हाथी पु. पु. पु. पु.
**ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः॥ ४६॥**

स्यादिति—तस्य प्रासादो गृहं वैजयन्त्यः पताकाः सन्त्यस्येति वैजयन्तः स्यादित्येकमिन्द्रगृहस्य। जयतीति जयन्तः, पाकशासनस्यापत्यमिति पाकशासनिरिति द्वे इन्द्रपुत्रस्य। इरा उदकानि सन्त्यस्मिन्निति इरावान्समुद्रस्तत्र भवः ऐरावतः, अभ्रं मेघस्तदात्मको मातङ्गः अभ्र आकाशे मेघे वा विद्यमानो मातङ्ग इति वा अभ्रमातङ्गः, इरया उदकेन वणति, इरासुरावनमुदकं यस्मिन्निति वा इरावणस्तत्र भवः ऐरावणः, अभ्रेमाति, न भ्राम्यति वा अभ्रमुस्तस्य वल्लभः अभ्रमुवल्लभः इति चत्वारीन्द्रगजस्य॥ ४६॥

स. पु. न. पु. न. न. पु.
वज्र **ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः।**
पु. पु. पु. पु. पु. स.
**शतकोटिः स्वरुः शम्बो दम्भोलिरशनि (र्द्वयोः)॥४७॥**

---

१ अस्त्रियौ वज्रकुलिशाविति संसारावर्तः "वज्रं स्याद्बालके धान्यां क्लीबं योगान्तरे पुमान्। वज्रास्तुग्र्यां गुडूच्यां च वज्री स्नुह्यन्तरे स्मृता॥ दम्भोलौ हरिकेऽप्यस्त्री" इति॥

२ दम्नोति खेदयति "दम्भु दम्भने" इत्यस्मादौणादिक ओलिरिति॥

ह्लादिनीति—ह्लादतेऽवश्यमिति । ह्लादोऽस्त्यस्या इति वा ह्लादिनी, वजतीति वज्र-मस्त्री पुंक्लीबे स्यात्, कुलौ हस्ते शेते, कुलिनः पर्वतान् श्यति, कुत्सितमीषल्लिशतीति वा कुलिशम्, भिनत्तीति भिदुरम्, पुनातीति पविः, शतं कोटयो धारा अस्येति शतकोटिः, स्वरतीति, शोभनान्यरूंषि धारा अस्येति स्वरुः, शंशुभमस्त्यस्येति, शम्ब-यति संबध्नाति शत्रूनिति वा शम्बः, सम्बयतीति विग्रहे तु सम्बः दन्त्यादिरपि, दभ्नोतीति दम्भः रोधनं तस्मिन्नलति भूषयतीत्यलिः समर्थः दम्भोलिः, अश्नाति—अश्यते-ऽनेनेति वा अशनिः द्वयोः स्त्रीपुंसयोः स्यादिति दश वज्रस्य ॥ ४७ ॥

विमान देवर्षि सभा अमृत

न. पु. न. पु.
**व्योमयानं विमानोऽस्त्री (नारदाद्याः) सुरर्षयः ।**
स. स. न. न. स.
**स्यात्सुधर्मा देवसभा पीयूषममृतं सुधा ॥ ४८ ॥**

व्योमयानमिति—व्योमयाति, व्योम्नि यान्त्यनेन वा व्योमयानम्, विशिष्टं मानयन्त्य-नेन, विशेषेण मान्त्यस्मिन्निति, विगतं मानमुपमास्येति वा विमानः अस्त्री स्यादिति द्वे देव-रथस्य । नरस्य धर्म्यं नारं ददाति, नराणां समूहो नारं तद्द्यति खण्डयति कलहेनेति वा । नुरिदं नारमज्ञानं तद्द्यति ज्ञानोपदेशेनेति वा नारदः स एवाद्यो मुख्यो येषामिति नारदाद्याः सुराश्च ते ब्रह्मादिपुत्रत्वादृषयश्चेति सुरर्षय इत्येकं सुरर्षीणाम् । शोभनो धर्मोऽस्यामिति सुधर्मा देवसभा स्यादिति सह भान्त्यस्यामिति सभा देवानां सभा आस्थानगृहमिति द्वे देवसभायाः । पीय्यत इति पीयूषम्, न म्रियन्तेऽनेनेत्यमृतम्, सुखेन धीयत इति सुधा इति त्रीण्यमृतस्य ॥ ४८ ॥

आकाशगङ्गा सुमेरु

स. स. स. स. स.
**मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका ।**
पु. पु. पु. पु. पु.
**मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः ॥ ४९ ॥**

मन्दाकिनीति—मन्दमकितुं शीलमस्या इति मन्दाकिनी, वियति वियतो वा गङ्गा वियद्गङ्गा, स्वः स्वर्गस्य नदी स्वर्णदी, सुराणां दीर्घिकेव सुरदीर्घिका इति चत्वारि देवगङ्गायाः । मिनोत्युच्चत्वाज्ज्योतींषीति मेरुः, शोभनो मेरुः सुमेरुः, हेम्नोऽद्रिः हेमाद्रिः, रत्नानि सानावस्येति रत्नसानुः, सुराणामालयः सुरालय इति पञ्च मेरोः ॥ ४९ ॥

कल्पवृक्ष

पु. पु.
**(पञ्चैते देवतरवो) मन्दारः पारिजातकः ।**
पु. पु. न. पु.
**सन्तानः कल्पवृक्षश्च (पुंसि वा) हरिचन्दनम् ॥५०॥**

पञ्चेति—"एते पञ्च देवतरवः देववृक्षाः सन्ति" मन्दयति मोदयतीति मन्दा आरा-धारा अस्येति वा मन्दारः, पारिणोऽब्धेर्जातः पारिजातः स एव पारिजातकः, सन्त-

नोति पुष्पाणि—सन्तन्यन्ते पुष्पाण्यस्मिन्निति वा सन्तानः, कल्पः संकल्पितोऽर्थस्तस्य वृक्षः कल्पवृक्षः, चन्दयतीति चन्दनः, हरेश्चन्दनः हरिचन्दनः वा पुंसि स्यादिति पञ्चानां देववृक्षाणामेकैकम् ॥ ५० ॥

पु. पु. पु. पु.

सनत्कुमार **सनत्कुमारो वैधात्रः स्वर्वैद्यावश्विनीसुतौ ।**

स्वर्गवैद्य पु. पु. पु. पु.

**नासत्यावश्विनौ दस्रावाश्विनेयौ च (तावुभौ) ॥५१॥**

सनदिति—सनन्नित्यं कुमारः सनत्कुमारः सनद्ब्रह्मा तस्य कुमारोऽपत्यमिति वा सनत्कुमारः, विधातुरपत्यं वैधात्रः इति द्वे ब्रह्मपुत्रस्य। स्वः स्वर्गस्य वैद्यौ स्वर्वैद्यौ, अश्विन्याः सुतौ अश्विनीसुतौ, न सत्यं ययोस्तावसत्यौ न असत्यौ नासत्याविति, प्रशस्ताः अश्वाः सन्ति ययोः अश्विन्यां जातौ वा अश्विनौ, दस्यतः क्षिपतो रोगानिति दस्रौ, तौ उभौ यमलौ अश्विन्या अपत्ये आश्विनेयौ स्यातामिति षडश्विनोः ॥ ५१ ॥

स. स.

अप्सरा **स्त्रियां बहुष्वप्सरसः[१] स्वर्वेश्या (उर्वशीमुखाः[२]) ।**

गन्धर्व पु. पु.

**हाहा[३] हूहूश्चैवमाद्या 'गन्धर्वास्त्रिदिवौकसाम्' ॥ ५२ ॥**

स्त्रियामिति—उरून्महतोऽश्नुते व्याप्नोति वशीकरोतीति, उरु अश्नातीति वा उर्वशी ( सी ) मुखा आद्या यासां ता उर्वशीमुखाः अप्सरसः, स्वर्वेश्या इति चोच्यन्ते अद्भ्यः सरन्तीत्यप्सरसः स्त्रियां स्त्रीलिङ्गे बहुषु बहुत्वेषु स्युः बहुष्विति प्रायोवादः अनचिचेति सूत्रे 'अप्सराः' इति भाष्यप्रयोगादेकवचनमपि । स्वः स्वर्गस्य वेश्याः स्वर्वेश्याः, इति द्वे उर्वश्यादेः एवं हा कष्टं जहातीति हाहाः शसि हाहः अव्युत्पन्नपक्षे तु हाहान् हाहाः सान्तोपि "गन्धर्वा हाहसि प्रोक्ताः" ( इति रत्नकोषः ) हूइति ह्वयतीति हूहूश्चेत्याद्याः तुम्बुरुविश्वावसुचित्ररथादयः त्रिदिवौकसां देवानां गन्धं सौरभमर्वन्तीति गन्धर्वाः स्युरित्येकं देवगायकानाम् ॥ ५२ ॥

पु. पु. पु. पु. पु.

अग्निदेव **अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः ।**

पु. पु. पु. पु.

**कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ॥ ५३ ॥**

---

१ "स्त्रियां बहुष्वप्सरसः स्यादेकत्वे अप्सरा अपि" इति शब्दार्णवात् ॥

२ घृताची मेनका रम्भा उर्वशी च तिलोत्तमा । सुकेशी मञ्जुघोषाद्याः कथ्यन्तेऽप्सरसो बुधैरिति ॥

३ अव्युत्पत्तिपक्षे "आतो धातोः" ( ६ । ४ । १४० ) इत्यस्याप्राप्तेः शसि हाहान्–ओः सुपीत्यस्याप्राप्तेर्हूहूनित्यादि ॥ 'हहा, हुहू' इत्युभावादिहस्वौच "गीतमाधुर्यसम्पन्नौ विख्यातौ च हहाहुहू" इति व्यासोक्तिः ॥

पु. पु. पु. पु.
बर्हिःशुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः।
पु. पु. पु. पु. पु.
आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः॥ ५४॥
पु. पु. पु. पु.
लोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः।
पु. पु. पु. पु.
हिरण्यरेता हुतभुग् दहनो हव्यवाहनः॥ ५५॥
पु. पु. पु. पु. पु.
सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः।
पु. न. पु. पु. पु.
वड़वानल शुचिरप्पित्तमौर्वस्तु वाडवो वडवानलः॥ ५६॥

अग्निरिति—अङ्गत्यूर्ध्वं गच्छतीत्यग्निः, विश्वेनरा अस्येति विश्वानरस्तस्यापत्यं वैश्वानरः, वहति हव्यमिति वह्निः, वीयत इति वीतिः, वीतिर्भक्ष्यं पुरोडाशादिर्हूयतेऽस्मिन्निति वीतिहोत्रः, धनं जयतीति धनञ्जयः, कृपीटस्य जलस्य योनिः—कृपीटं जलं योनिरस्येति वा कृपीटयोनिः, ज्वलतीति ज्वलनः, विद्यते लभ्यत इति वेदः जातं वेदो धनं यस्येति जातवेदाः, तनूं शरीरं न पातयति, तनुं स्वं स्वरूपं न पातीति तनूनपात्, बृंहतीति बर्हिः, शुष्यत्यनेनेति शुष्मा, कृष्णो धूमो वर्त्मास्येति कृष्णवर्त्मा, शोचींषि ज्वालाः केशा इवास्येति शोचिष्केशः, उषः संध्यायां बुध्यते प्रकाशत इति उषर्बुधः, आश्रयमाधारमश्नातीति आश्रयाशः "आशेरतेऽत्रेति आशयस्तमश्नातीत्याशयाशः" इति पाठान्तरम् बृहन्तो भानवोऽस्येति बृहद्भानुः, कृश्यतीति कृशानुः, पुनातीति पावकः, अनित्यनेनेत्यनलः, लोहिता अश्वा यस्येति—रोहितो मृगोऽश्वो वाहनमस्येति वा लोहिताश्वः—रोहिताश्वः, वायोः सखा वायुसखः, शिखाः सन्त्यस्येति शिखावान्, आशु शीघ्रं आशुं व्रीहिं वा शुक्षणोतीत्याशुशुक्षणिः, हिरण्यं रेतोऽस्येति हिरण्यरेताः, हुतं भुङ्क्त इति हुतभुक्, दहतीति दहनः, हव्यं वाहयतीति हव्यवाहनः, सप्तार्चिषः सप्तार्चयो यस्येति सप्तार्चिः, दाम्यति दमयतीति वा दमुनाः, शोचयतीति, शुक्रं रेतोस्यास्तीति शुक्रः, चित्रा भानवोऽस्येति चित्रभानुः, विभा प्रभा वसु धनं यस्येति विभावसुः, अपां पित्तमिव अप्पित्तमिति चतुस्त्रिंशदग्नेः—उर्वस्य मुनेरपत्यमिति और्वः, वडवायां भवो वाडवः, वडवाया अनलो वडवानल इति त्रीणि वाडवाग्नेः॥ ५३। ५६॥

पु.स. पु.स. स. स. स.
अग्निज्वाला वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्।
अग्निके टुकड़े पु.स.न. पु. पु. पु.
जलना (त्रिषु)स्फुलिङ्गोग्निकणःसन्तापः संज्वरः(समौ)॥५७॥

१ काली कराली मनोजवा सुलोहिता सुधूम्रवर्णा स्फुलिङ्गिनी विश्वदासाख्याः सप्तवह्नेर्जिह्वाः।

वह्नेरिति—वह्नेरग्नेः ज्वलतीति ज्वालः, कीलतीति कीलः, तौ द्वयोः स्त्रीपुंसयोः स्याताम् । अर्च्यत इत्यर्चिः सान्तस्त्रिवदन्तोऽपि, हिनोति—हन्ति वा हेतिः, शेते इति शिखा स्त्रियां स्त्रीलिङ्गे स्यादिति पञ्चज्वालायाः । स्फुना फूत्कारेण लिङ्गतीति स्फुलिङ्गः, अग्नेः कणोऽग्निकणः इति द्वे अग्निकणस्य । संतापयतीति संतापः, संज्वरयतीति संज्वरः उभौ समौ समानार्थौ समलिङ्गाविति द्वे संतापस्य ॥ ५७ ॥

यमराज

पु. पु. पु. पु.
**धर्मराजःपितृपतिः समवर्ती परेतराट् ।**
पु. पु. पु. पु. पु.
**कृतान्तो यमुनाभ्राता शमनो यमराड्यमः ॥ ५८ ॥**
पु. पु. पु. पु. पु.
**कालो दण्डधरःश्राद्धदेवो वैवस्वतोऽन्तकः ।**

धर्मराज इति—धर्मस्य राजा धर्मराजः, पितॄणां पतिः पितृपतिः, समं वर्तितुं शीलमस्येति समवर्ती, परेतेषु मृतेषु राजत इति परेतराट्, कृतोऽन्तो विनाशो येनेति कृतान्तः, यमुनाया भ्राता यमुनाभ्राता, शमयतीति शमनः, यमेन संयमेन राजत इति यमराट्, यमयतीति यमः, कलयति, कालयत्यायुरिति, कल्यत इति वा कालः, धरतीति धरो दण्डस्य धरो दण्डधरः, श्राद्धस्य देवः श्राद्धदेवः, विवस्वतोऽपत्यमिति वैवस्वतः, अन्तं करोत्यन्तयति अन्तयतीत्यन्तक इति चतुर्दश यमस्य ॥ ५८ । ½ ॥

राक्षस

पु. पु. पु. पु. पु. पु.
**राक्षसःकौणपः क्रव्यात्क्रव्यादोऽस्रपआशरः ॥ ५९ ॥**
पु. पु. पु. पु.
**रात्रिंचरो रात्रिचरो कर्बुरो निकषात्मजः ।**
पु. पु. पु. न. न.
**यातुधानःपुण्यजनो नैर्ऋतो यातुरक्षसी ॥ ६० ॥**

राक्षस इति—रक्षत्यस्माद्रक्षः रक्ष एव राक्षसः, कुणपं शवं भक्षयितुं शीलमस्य, कोणं पातीति कोणपो निर्ऋतिस्तस्यायमिति वा कौणपः, क्रव्यमाममांसमत्तीति क्रव्यात्, कृत्तं छिन्नं तदेव पुनर्विशेषतः कृतं पक्वं च भुङ्क्ते इति क्रव्यादः, अस्रं रक्तं पिबतीति अस्रपः, न अपयत्यश्नव इति या आश्रृणातीति आशरः, रात्रौ चरतीति रात्रिंचरः, रात्रिचरः, कर्वतीति कर्बुरः, निकषाया आत्मजः निकषात्मजः, यातूनि रक्षांसि दधाति पुष्णाति, यातूनि यातना धीयन्तेऽस्मिन्निति वा यातुधानः, जातु कदाचिद्धानं संनिधानमस्येति जातुधानश्च-वर्गादिरपि, विरुद्धलक्षणया पुण्यश्चासौ जनश्चेति पुण्यजनः, निर्ऋतेरपत्यमिति नैर्ऋतः, यातीति यातु, रक्षन्त्यस्मादिति रक्षः इति पञ्चदश राक्षसस्य ॥ ५९ । ६० ॥

वरुण

पु. पु. पु. पु. पु.
**प्रचेता वरुणः पाशी यादसांपतिरप्पतिः ।**

---

१ कालयत्यायुः 'कलसंख्याने' (चु. उ. से.) ण्यन्तात् प्रज्ञाद्यणिति मुकुटः ॥

प्रचेता इति–प्रचेतयति प्रकृष्टं चेतोऽस्येति वा प्रचेताः, व्रियते वृणोति वा वरुणः वरणोपि, पाशोऽस्यास्तीति पाशी, यादांसि जलजन्तवस्तेषां पतिः यादसांपतिः, अपांपतिः अप्पतिरिति पञ्च वरुणस्य ॥

पवन

पु. पु. पु. पु. पु.
**श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ॥ ६१ ॥**
पु. पु. पु. पु. पु.
**पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः ।**
पु. पु. पु. पु. पु.
**समीरमारुतमरुज्जगत्प्राणसमीरणाः ॥ ६२ ॥**
पु. पु. पु. पु. पु.
**नभस्वद्वातपवनपवमानप्रभञ्जनाः ।**

श्वसन इति–श्वसित्यनेनेति श्वसनः, स्पृशतीति स्पर्शनः, वातीति वायुः, मातर्यन्तरिक्षे श्वयति संचरति, मातरि जनन्यां श्वयति वर्धते वा मातरिश्वा, सदागतिर्गमनमस्येति सदागतिः, पृषद् मृगभेदोऽश्वो वाहनमस्य, पृषतामम्बुकणानामश्व इवेति वा पृषदश्वः, वहतीति वहः गन्धस्य वहो गन्धवहः, गन्धं वहतीति गन्धवाहः, अनित्यनेनेति अनिलः, आशु गच्छतीति आशुगः, सम्यगीर्ते गच्छति–ईरयति प्रेरयति वा समीरः, म्रियन्तेऽनेन वृद्धेन विना वेति मरुत्स एव मारुतः, मरुद्वा, जगतां प्राणो जगत्प्राणः, समीरयतीति समीरणः, नभोऽस्याश्रयत्वेनास्ति नभस्वान्, वातीति वातः, पुनातीति पवनः, पवते इति पवमानः, प्रकृष्टं भनक्तीति प्रभञ्जन इति विंशतिर्वातस्य ॥ ६१ । ६२ । ½ ॥

शरीरस्थ पवन

पु. पु. पु. पु. पु.
**प्राणोऽपानः समानश्चोदानव्यानौ (च वायवः) ॥ ६३ ॥**
न. न. पु. पु.
**(शरीरस्था) इमे रंहस्तरसी तु रयःस्यदः ।**

प्राण इति–प्राणयतीति प्राणः, अपानयतीति अपानः, समानयतीति समानः, उदानयतीति उदानः, व्यानयतीति व्यानः, इमे प्राणादयो वायवः शरीरस्थाः स्युरिति "हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले । उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः" इति । रमतेऽनेन, रंहत्यनेन वा रंहः, तरत्यनेनेति तरः, रिणात्यनेनेति रयतेऽनेनेति वा रयः, स्यन्दतेऽनेनेति स्यदः, वस्तुतस्तु रंहादिष्वपि भावे व्युत्पत्तिरेव न्याय्येति । जवनं जव इति पञ्चवेगस्य ॥ ६३ । ½ ॥

शीघ्रता या वेग

पु. न. न. न. न. न. न.
**जवो (ऽथ) शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम् ॥ ६४ ॥**
न. न. न. न. न.
**सत्वरं चपलं तूर्णमविलम्बितमाशु (च) ।**

अथेति–शिङ्कतीति शीघ्रम्, त्वरते स्मेति त्वरितम्, लङ्घत इति लघु, क्षिपतीति क्षिप्रम्, ऋच्छति–इयर्ति वा अरम्, द्रवति स्म द्रुतम्, त्वरया सह वर्तत इति सत्वरम्, चोपतीति चपलम्, त्वरते स्मेति तूर्णम्, न विलम्बते स्म अविलम्बितम्, अश्नुते व्याप्नोतीति आशु इत्येकादश शीघ्रस्य ॥ ६४ । १/३ ॥

न. न. न. न. न. न.

नित्य या लगातार **सततानारताश्रान्तसन्तताविरतानिशम् ॥ ६५ ॥**

न. न. न. पु. पु.

**नित्यानवरताजस्रमप्यथातिशयो भरः ।**

न. न. न. न. न. न.

बारंबार **अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ॥ ६६ ॥**

न. न. न. न. न. न.

**तीव्रैकान्तनितान्तानि गाढबाढदृढानि ( च ) ।**

**(क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां सत्त्वगामि यत्)॥६७॥**

सततेति–संतन्यते स्म सततं, आरम्यते स्म आरतं, न आरतमित्यनारतम्, श्रम्यते स्म श्रान्तं, अविद्यमानं श्रान्तमत्रेति अश्रान्तम्, संतन्यते स्म संततम्, विरम्यते स्म विरतं, नास्ति विरतमस्येति अविरतम्, नास्ति निशाऽस्मिन्नित्यनिशम्, नियमेन भवं नित्यम्, अवरम्यते स्म अवरतम्–नास्त्यवरतं यत्रेति अनवरतम्, न जस्यतीत्यजस्रम् इति नव निरन्तरस्य । अथेति–अतिशेते अतिशयनं वा अतिशयः, भरति–भरणं वेति भरः, वेलां मर्य्यादामतिक्रान्तमित्यतिवेलम्, भृश्यतीति भृशम्, अर्थो निवृत्तिर्विषयो वा तमतिक्रान्तमत्यर्थम्, मात्रा स्तोकन्तामतिक्रान्तमिति अतिमात्रम्, उद्गाहते स्म उद्गाढम्, निःशेषेण भरोऽत्रेति निर्भरम्, तीवतीति तीव्रम्, एकोऽन्तो निश्चयोऽत्रेत्येकान्तम्, नितम्यति स्म नितान्तम्, गाहते स्म गाढम्, बाहते–बाह्यते स्म बाढम्, दृंहति स्म दृढमिति चतुर्दशातिशयस्य । शीघ्रादि दृढपर्य्यन्तं क्रियाविशेषणत्वादसत्त्वे द्रव्ये वर्तमानं क्लीबे स्यात्, एषां मध्ये यत्सत्त्वगामि द्रव्यगामितत्त्रिषु त्रिलिङ्ग्यां स्यादिति॥ ६५ । ६७ ॥

पु. पु. पु. पु.

कुबेर **कुबेरस्त्र्यम्बकसखो यक्षराड्गुह्यकेश्वरः ।**

पु. पु. पु. पु.

**मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥ ६८ ॥**

पु. पु. पु. पु.

**किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।**

पु. पु. पु. पु. पु.

**यक्षैकपिङ्गैडविडश्रीदपुण्यजनेश्वराः ॥ ६९ ॥**

कुबेर इति–कुत्सितं बेरं शरीरमस्य, कुम्बत्यन्येषामैश्वर्यमिति वा कुबेरः, त्र्यम्ब-

कस्य सखा त्र्यम्बकसखः, यक्षेषु राजत इति यक्षराट्, गुह्यं कायन्तीति गुह्यकास्तेषामीश्वरो गुह्यकेश्वरः, मनुष्यस्येव धर्म आचारः श्मश्रुलत्वादिर्वास्येति मनुष्यधर्मा, धनं दयते पातीति धनदः, राज्ञां यक्षाणां राजा राजराजः, धनानामधिपो धनाधिपः, किन्नराणामीशः किन्नरेशः, विश्रवसोऽपत्यमिति वैश्रवणः, पुलस्तेर्गोत्रापत्यमिति पौलस्त्यः, नरो वाहनमस्येति नरवाहनः, ई लक्ष्मीमक्ष्णोति व्याप्नोति, यक्ष्यते, यजति इज्यते लोकेनेति वा यक्षः, एकं पिङ्गमस्येति एकपिङ्गः, इलविला पुलस्तिभार्या तस्या अपत्यमित्यैलविलः "ऐडविडोपि" श्रियं दयते, ददातीति वा श्रीदः, पुण्यजनानामीश्वरः पुण्यजनेश्वरः इति सप्तदश कुबेरस्य ॥ ६८ । ६९ ॥

बाग　　न.　　पु.
पुत्र　( अस्योद्यानं ) चैत्ररथम्पुत्रस्तु नलकूबरः।
स्थानपुरी　पु.　　स.　　न.
विमान　कैलासः(स्थान)मलका 'पू' "विमानं" तु पुष्पकम्॥७०॥

अस्येति—अस्य कुबेरस्य उद्यान्त्यस्मिन्निति उद्यानं चित्ररथेन निर्वृत्तं चैत्ररथमित्येकं कुबेराक्रीडस्य । पुत्रस्तु नलः कूबरो युगंधरो यस्येति नलकूबर इत्येकं कुबेरपुत्रस्य । अस्य स्थानं के जले लासो लसनमस्य केलासः स्फटिकस्तस्यायं कैलासः अथवा केलीनां समूहः कैलं तेनास्यतेऽत्रेति वा कैलासः इत्येकं कुबेरस्थानस्य । अस्य पूः पुरी अलति भूषयतीत्यलका इत्येकं कुबेरपुर्याः । अस्य विमानं पुष्यति—पुष्पमिव वा पुष्पकमित्येकं कुबेरविमानस्य ॥ ७० ॥

पु.　　पु.　　पु.　　पु.
किन्नर　स्यात्किन्नरः किंपुरुषस्तुरंगवदनो मयुः।
खजाना　पु.　　पु.
खजानेकेभेद　निधिर्ना शेवधि ( र्भेदाः पद्मशङ्खादयो निधेः) ॥ ७१ ॥

## इति स्वर्गवर्गः ॥

स्यादिति—किंचित् कुत्सितो वा नरः किन्नरः, कुत्सितः पुरुषः किंपुरुषः, तुरङ्गस्येव वदनमस्येति तुरङ्गवदनः, मिनोति मीनातीति वा मयुरिति चत्वारि किन्नरस्य। नितरां धीयते, नितरां दधाति पोषयतीति, निधीयते वा निधिः, ना पुंलिङ्गः स्यात्, शेतेऽनेनेति शेवं सुखं तद्धीयते, शे कल्याणे मोहे वा धीयत इति वा शेवधिरिति द्वे सामान्यनिधेः।पद्मा लक्ष्मीरस्मिन्नस्तीति पद्मः शाम्यत्यम्नु दुःखं वानेन शङ्खस्तावादी येषान्ते पद्मशङ्खादयो निधेर्भेदा भवन्तीति " पद्मोऽस्त्रियां महापद्मः शङ्खो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नवेति (शब्दार्णवः)" निधिविशेषस्य प्रत्येकम् ॥ ७१ ॥

इति स्वर्गवर्गविवरणम् ॥

### अथ व्योमवर्गो व्याख्यायते ॥

स. स. न. न. न. न.

आकाश **द्योदिवौ " द्वे स्त्रियां " मभ्रं व्योमपुष्करमम्बरम् ।**

न. न. न. न. न. न.

**नभोन्तरीक्षं गगनमनन्तं सुरवर्त्म खम् ॥ १ ॥**

न. न. पु.न. पु.न.

**वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ।**

इति व्योमवर्गः ॥

द्योदिवाविति—द्योतन्ते तारका अस्यामिति द्यौः गोवत्—दीव्यन्त्यस्यामिति द्यौः दिवौ दिवः द्युभ्यामित्यादि—द्वे स्त्रियां स्यातामिति न बिभर्ति किञ्चित्—आपो भ्रश्यन्त्यस्मात्, अभ्रति स्थैर्यं गच्छति न भ्राजते वा अभ्रम्, व्ययति व्यवतीति वा व्योम, पुष्यतीति, पुष्कं वारि रातीति वा पुष्करम्, अम्बनमम्बः शब्दस्तं रातीति अम्बरम्, नह्यते मेघैः, न बभस्ति, नभते वा नभः, द्यावापृथिव्योरन्तरीक्ष्यते अन्तरीक्षम्, अन्तर् ऋक्षाण्यस्येति व्युत्पत्त्या अन्तरिक्षम्, गच्छन्त्यनेनास्मिन्वा गगनम्, नास्त्यन्तो यस्येति अनन्तम्, सुराणां वर्त्मेति सुरवर्त्म, खन्यते—खर्वत्यस्मिन्निति वा खम्, विविश्वत एति व्याप्नोति—वियच्छति न विरमति वा वियत्, विष्णोः पदमास्पदं स्वरूपं वा विष्णुपदम्, आकाशन्ते सूर्यादयोऽत्रेति आकाशः, विशेषेण हाययति गमयति विमानादीनिति विहायाः आकाशश्च विहायश्चेत्याकाशविहायसी वा पुंसि स्यातामिति षोडशाकाशस्य ॥ १ । १/२ ॥

इति व्योमवर्गविवरणम् ॥

### अथ दिग्वर्गो व्याख्यायते ॥

१ स. स. स. स. स.

दिशा **दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ( ताः ) ।**

स. स. स.

दिशा के भेद **प्राच्यऽपाची प्रतीच्यस्ताः (पूर्वदक्षिणपश्चिमाः)॥१॥**

स. पु.स.न.

दिशाकीवस्तु **उत्तरा दिगुदीची स्याद्दिश्यन्तु ( त्रिषु ) दिग्भवे ।**

दिश इति—दिशन्त्यवकाशमिति दिशः, कं वातं स्कुभ्नन्ति विस्तारयन्तीति ककुभः, काशन्त इति काष्ठाः, आश्नुवते व्याप्नुवन्तीति आशाः, हरन्ति नयन्त्यनयेति हरितः 'ता' इत्यनेन स्त्रीत्वं व्यनक्ति—दिशां बहुत्वाद्बहुवचनमिति पञ्चादिशः । प्राच्येति प्राञ्चति प्राप्नोति सूर्यमिति प्राची, अपाञ्चति सूर्यमिति अपाची अवाची वा प्रतिपश्चाद्दिनान्तेऽञ्चति सूर्यमिति प्रतीची ताः पूर्वदक्षिणपश्चिमा भवन्तीति उदूर्ध्वं तरन्ति अत्रोत्तरा दिक् उदञ्चतीति उदीची स्यादिति प्रत्येकं द्वे द्वे चतसृणाम्, दिशि भवं दिश्यन्तत्तु दिग्भवे त्रिषु स्यादिति एकं दिग्भवस्य ॥ १ । १/२ ॥

१ भागुरिमतेन टापि दिशा—दिक् तु स्त्रियां दिशा दान्ती ककुद्देवपथः पविरिति (शब्दार्णवः) ॥

पु. पु. पु. पु. पु. पु.

दिशाओंकेस्वामी **इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत्॥ २॥**

पु. पु.

**कुबेर ईशः (पतयः पूर्वादीनां दिशां क्रमात्)।**

इन्द्र इति—इन्द्रः, वह्निः, पितृपतिः, नैर्ऋतः, वरुणः, मरुत्, कुबेरः, ईशः एते क्रमात् पूर्वादीनां दिशां पतयः स्युरिति यथा पूर्वेशः इन्द्रः, आग्नेयीशो वह्निः, दक्षिणेशः पितृपतिः, नैर्ऋत्येशो नैर्ऋतः, पश्चिमेशो वरुणः, वायव्याधिपो मरुत्, उत्तरेशः कुबेरः, ईशानाधिपः ईशश्च। एते पूर्वादीनां स्वामिनो ज्ञेयाः॥ २। $\frac{१}{२}$॥

पु. पु. पु. पु. पु.

दिग्गज **ऐरावतःपुण्डरीको वामनः कुमुदोऽञ्जनः॥ ३॥**

पु. पु. पु.

**पुष्पदन्तः सार्वभौमःसुप्रतीकश्च (दिग्गजाः)।**

ऐरावत इति—इरा उदकानि सन्तीति इरावान्समुद्रस्तत्र भवः ऐरावतः, पुण्डरीकवद्वर्णो यस्येति पुण्डरीकः, वामयतीति वामनः, कुमुदवद्वर्णो यस्येति कुमुदः, अञ्जनवद्वर्णो यस्येत्यञ्जनः, पुष्पमिव दन्ता यस्येति पुष्पदन्तः, सर्वस्यां भूमौ विदितः सार्वभौमः, शोभनाः प्रतीका अवयवा यस्येति सुप्रतीकः एते दिक्षु विख्याता गजाः दिग्गजा इतीन्द्रगजानामैकैकम्॥ ३। $\frac{१}{२}$॥

स. स. स. स.

हथिनियां दिशाओंकामध्य या कोन **(करिण्यो)ऽभ्रमुकपिलापिङ्गलानुपमाःक्रमात्॥४॥**

स. स. स. स.

**ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती।**

न. स.

**क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम्॥५॥**

करिण्य इति—अभ्रे आकाशे एव मातीति अभ्रमुः, कपिलवद्वर्णोऽस्याः कपिला, पिङ्गलवद्वर्णोऽस्याः पिङ्गला, नास्त्युपमाऽस्या अनुपमा, ताम्रौ कर्णौ यस्यास्ताम्रकर्णी, शुभ्रौ दन्तावस्याः शुभ्रदन्ती, अङ्गानि कल्याणान्यङ्गान्यस्या वा अङ्गना, अञ्जनमस्त्यस्या अञ्जनावती एताः क्रमात् करिण्यो हस्तिन्यः स्युरिति क्रमेणैरावतादीनां हस्तिनीनामैकैकम्। क्लीबाव्ययमिति, दिशोर्मध्ये दिशयोर्मध्ये तु अपदिशम्, नपुंसकाव्ययं स्यात्, दिग्भ्यां विनिर्गता विदिक् स्त्रियां स्यादिति द्वे अग्न्यादिकोणस्य॥ ४। ५॥

न. न. पु.न. न.

बीच बवण्डर **अभ्यन्तरं त्वन्तरालं चक्रवालं(तु)मण्डलम्।**

अभ्यन्तरमिति—अभिगतमन्तरमभ्यन्तरम्, अन्तरं लातीत्यन्तरालमिति द्वे मध्यमात्रस्य। चक्राकारेण वलने, चक्रमिव वालो ऽस्य, चक्राकारेण वाडत इति वा चक्रवालम्, चक्रवा-

डम्, मण्डयतीति, मण्डं भूषां लातीति वा मण्डलमिति द्वे मण्डलाकारेण परिणतसमूहस्य ॥

न. पु. पु. पु. पु.
बादल **अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ॥६॥**
पु. पु. पु. पु. पु.
**धाराधरो जलधरस्तडित्वान्वारिदोम्बुभृत् ।**
पु. पु. पु. पु. पु.
**घनजीमूतमुदिरजलमुग्धूमयोनयः ॥ ७ ॥**

अभ्रमिति—अपो बिभर्ति, अभ्रति, न भ्रश्यन्त्यापो यस्मादित्यभ्रमभ्रं वा, मेहतीति मेघः, वारि वहतीति वारिवाहः, स्तनयतीति स्तनयित्नुः, बलाकाभिर्हायते गम्यते, बलेन हीयते आहायते वा बलाहकः, धाराणां धरो धाराधरः, जलस्य धरः जलधरः, तडितः सन्त्यस्मिन्निति तडित्वान्, वारि ददातीति वारिदः, अम्बु बिभर्तीत्यम्बुभृत्, हन्यते वायुनेति घनः, जीवनं जलं मूतं बद्धमनेन—ज्यानं जीः जिया वयोहान्या मूतो बद्ध इति वा जीमूतः, मोदन्तेऽनेनेति मुदिरः, जलं मुञ्चतीति जलमुक्, धूमो योनिरस्येति धूमयोनिरिति पञ्चदश मेघस्य ॥ ६ । ७ ॥

स. स. पु.स.न.
मेघों की पांति **कादम्बिनी मेघमाला ( त्रिषु ) मेघभवे 'ऽभ्रियम्' ।**
मेघों की वस्तु न. न. पु. न.
मेघगर्जना **स्तनितं गर्जितं मेघनिर्घोषोरसितादि च ॥ ८ ॥**

कादम्बिनीति—कादम्बाः कलहंसा बलाकावन्मेघमनुधावन्ति ते सन्त्यस्या इति कादम्बिनी, मेघानां माला मेघमालेति द्वे मेघपङ्क्तेः। मेघभवे—अभ्रे भवमभ्रियं त्रिषु पुंस्त्रीनपुंसकेषु स्यादित्येकं मेघभवस्य। स्तन्यते स्म स्तननं वा स्तनितम्, गर्ज्यते स्म—गर्जनं वेति गर्जितम्, निर्घोषणं निर्घोषो मेघस्य निर्घोषो मेघनिर्घोषः, रसनमिति रसितम्, आदिना ध्वनित—ह्राद—रासादयो गृह्यन्त इति चत्वारि मेघध्वनेः ॥ ८ ॥

स. स. स. स. स.
बिजली **शंपा शतह्रदा ह्रादिन्यैरावत्यः क्षणप्रभा ।**
स. स. स. स. स.
**तडित्सौदामनी विद्युच्चञ्चला चपला ( अपि ) ॥ ९ ॥**

शंपेति—शं सुखं भयंकरत्वान्निवतीति शंपा, शतं ह्रादा अव्यक्ताः शब्दा यस्याः शतं ह्रदा अर्चींषि अगाधजलाशया वा सन्त्यस्या इति वा शतह्रदा, ह्रादतेऽवश्यमिति—ह्रादोऽस्ति यस्या वेति ह्रादिनी, इरा आपः सन्त्यस्य इरावान् मेघस्तस्येयमैरावती, क्षणं प्रभास्या इति क्षणप्रभा, ताडयतीति तडित्, सुदाम्नि मेघे भवा सौदामनी—सौदामिनी—सौदाम्नी, विद्योतत इति विद्युत्, चञ्चनं चञ्चस्तं लातीति चञ्चला, चोपतीति चपलेति दश विद्युतः ॥ ९ ॥

---

१ "मेघास्तु त्रिविधास्तत्र वह्निजा धूमयोनयः । निःश्वासजास्तु जीमूतास्ते ज्ञेया जीवरूपिणः । यज्ञजास्तु घना घोराः पुष्करावर्तकादयः" ( इति शब्दार्णवे ) ।

बिजली का तड़पना, मेघोंकी चमक, इन्द्रधनुष, सीधाइन्द्र धनुष

पु.　पु.　पु.　पु.

**स्फूर्जथुर्वज्रनिर्घोषे मेघज्योतिरिरंमदः।**

न.　न.　न.

**इन्द्रायुधं शक्रधनु (स्तदेव ऋजु) रोहितम्॥ १०॥**

स्फूर्जथुरिति—स्फूर्जनं स्फूर्जथुः केचित्तु स्फूर्जथुरिति दीर्घं नेच्छन्ति, वज्रनिर्घोषेऽशनिशब्दे वज्रनिष्पेषे वा स्यादित्येकं वज्रध्वनेः। अन्योन्यस्य संघट्टेन मेघाभिस्सृत्य वृक्षादौ ज्योतिः पतति मेघस्य ज्योतिरिरिति वा मेघज्योतिः, इरया जलेन माद्यतीति इरंमद इति द्वे वज्राग्नेः। इन्द्रस्यायुधमिन्द्रायुधम्, शक्रस्य धनुः शक्रधनुरिति द्वे इन्द्रधनुषः। तदिन्द्रधनुरुत्पातादिना ऋजु अवक्रं सद्रोहितं स्यादित्येकमृजोरिन्द्रधनुषः॥ १०॥

स.　न.　पु.　पु.

वर्षा झूरा मेघ **वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ (समौ)।**

पु.　पु.　पु.

धारा फुहारा **धारासंपात आसारः शीकरोऽम्बुकणाःस्मृताः॥ ११॥**

वृष्टिरिति— वर्षणं वृष्टिः, वर्षणं वर्षमिति द्वे वृष्टेः। तद्विघाते तस्या वृष्टेर्विघाते अवग्रहणमवग्राहः, अवग्रहः तौ समौ समानार्थौ समानलिङ्गाविति द्वे वृष्टिविघातस्य। संपतनं संपातः धाराणां संपातो धारासंपातः, आसरणमासार इति द्वे महावृष्टेः। शीकते सीं करोतीति वा शीकरः, सीकरः, स्मृता वायुना प्रेरिता अम्बुकणा जलबिन्दव इत्येकं वातप्रक्षिप्तजलकणस्य॥ ११॥

पु.　पु.स.　न.

ओला दुर्दिन **वर्षोपलस्तु करका "मेघच्छन्नेह्नि" दुर्दिनम्।**

वर्षेति—उपलातीति उपलः वर्षस्य उपलो वर्षोपलः, कृणोतीति करका, करकश्चेति द्वे वर्षणोपलस्य। मेघच्छन्ने मेघान्धकारितेऽह्नि दिवसे दुर्निन्दितं दिनं 'दुर्दिन' मित्येकं मेघान्धकारितस्य॥

स.　स.　पु.　न.

ढांपना या छिपजाना **अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम्॥ १२॥**

न.　न.　न.　न.

**अपिधानतिरोधानपिधानाऽऽच्छादनानि (च)।**

अन्तर्धेति—अन्तर्धानमन्तर्धा, व्यवधानं व्यवधा, अन्तर्धीयते वान्तर्धानमन्तर्धिः, अपवार्यतेऽपवारणम्, अपिधीयतेऽपिधानम्, तिरोधीयते तिरोधानम्, अपिधीयते पिधानम् 'वष्टिभागुरिरिति वाल्लोपः' आच्छाद्यत इत्याच्छादनं, छद्यते छदनं वेत्यष्टावन्तर्धानस्य॥ १२। ३॥

पु.　पु.　पु.　पु.　पु.

चन्द्रमा **हिमांशुश्चन्द्रमाश्चन्द्र इन्दुःकुमुदबान्धवः॥ १३॥**

पु. पु. पु. पु. पु.
विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः ।
पु. पु. पु. पु. पु. पु.
अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः॥१४॥
पु. पु. पु. पु.
द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ।

हिमांशुरिति—हिमा अंशवो यस्येति हिमांशुः, चन्द्रं कर्पूरं सादृश्येन माति तुलयतीति, चन्द्रमाह्लादं मिमीते निर्मिमीते वा, मिमीते आनन्दमिति माश्चन्द्रः माश्चासौ चन्द्रश्च चन्द्रमा इति वा, चन्दतीति चन्द्रः, उनत्तीति इन्दुः, कुमुदानां बान्धवः कुमुदबान्धवः, विध्यति विरहिणमिति—विशेषेण धयन्त्येनं सुरा इति वा विधुः, सुधायुक्ता अंशवो यस्येति सुधांशुः, शुभ्रा अंशवो यस्येति शुभ्रांशुः, ओषधीनामीशः ओषधीशः, निशायाः पतिर्निशापतिः, अद्भ्यो जातः अब्जः, जीवयतीति जैवातृकः, अमृतं सूत इति सोमः, ग्लायतीति ग्लौः, मृगोऽङ्कोऽस्येति मृगाङ्कः, कलानि धीयन्तेऽत्रेति कलानिधिः, द्विजानां राजेति द्विजराजः, शशस्य धरः शशधरः, नक्षत्राणामीशो नक्षत्रेशः, क्षपां करोतीति क्षपाकर इति विंशतिश्चन्द्रस्य ॥ १३ । १४ । $\frac{१}{२}$ ॥

स. पु. न. पु.स.न.
कला,बिम्ब, कला(तु) षोडशो भागो बिम्बोऽस्त्रीमण्डलं (त्रिषु)॥१५॥
न. पु.न. पु.न. पु. न.
हिस्सा,आधा भित्तं शकलखण्डे वा पुंस्यर्द्धोऽर्धं ( समेंऽशके ) ।

कलेति—चन्द्रस्य षोडशो भागः कलयति कल्यते वा कला स्यादित्येकं चन्द्रस्य षोडशांशस्य । वेति शोभत इति बिम्बः अस्त्री पुंक्लीबे स्यात्, मण्डयति मण्डते वा मण्डलं त्रिषु पुंस्त्रीक्लीबेषु स्यादिति द्वे रविचन्द्रमण्डलस्य । भिद्यते स्म भित्तम्, शक्नोति शक्यते वा शकलम्, खण्डयते खन्यते वा खण्डः उभे वा पुंसि स्याताम् ऋध्नोत्यनेनेत्यर्धः, विशेष्यनिघ्नोयमिति चत्वारि खण्डमात्रस्य । समेंऽशके समप्रविभागेऽर्धशब्दः क्लीबमेवेत्येकं तुल्यखण्डद्वयमध्ये एकखण्डस्य ॥ १५ । $\frac{१}{२}$ ॥

स. स. स. स. स.
चांदनी चन्द्रिकाकौमुदीज्योत्स्ना प्रसाद(स्तु)प्रसन्नता ॥ १६ ॥
स्वच्छता पु. पु. न. न. न. न.
कलङ्क कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म (च) लक्षणम् ।

चन्द्रिकेति—चन्द्रोऽस्त्यस्याः, चन्दयतीति वा चन्द्रिका[१], कुमुदानामियं कौमुदी, ज्योतिरस्त्यस्यामिति ज्योत्स्ना इति त्रीणि चन्द्रप्रभायाः । प्रसादनं प्रसादः, प्रसीदति स्म प्रसन्नस्तस्य भावः प्रसन्नतेति द्वे नैर्मल्यस्य । कं ब्रह्माणं लङ्घयति हीनतां गमयति शाप-

१ चन्द्रं कायतीति व्युत्पत्त्या चन्द्रका इति स्यात् ।

यतीति वा कलङ्कः, अङ्कयतेऽनेनेत्यङ्कः, लाञ्छयतेऽनेनेति लाञ्छनम्, चाहयति चह्यतेऽनेनेति वा चिह्नम्, लक्षयतीति लक्ष्म, लक्ष्यतेऽनेनेति लक्षणं लक्ष्मणमपीति षट् चिह्नस्य ॥ १६ । ई ॥

बड़ीशोभा　स.　　　　स.　स.　स.　स.

शोभामात्र **सुषमा 'परमाशोभा' शोभाकान्तिर्द्युतिश्छविः ॥ १७ ॥**

सुषमेति—शोभनं समं सर्वमनयेति सुषमेत्येकं परमशोभायाः । शोभयतीति शोभा, कमनं कान्तिः, द्योतनं द्युतिः, द्युती, द्युत्तिर्वा, छ्यति—छिनत्त्यसारमिति वा छविरिति चत्वारि शोभायाः ॥ १७ ॥

पु.　　पु.　पु.　न.　न.

पाला **अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ।**

महापाला　न.　स.　स.　स.

**प्रालेयं महिका चाथ हिमानी हिमसंहतिः ॥ १८ ॥**

अवश्याय इति—अवश्यायते शैत्यमापद्यत इत्यवशायः, निह्रियते नीहारः, तोषयतीति तुषारः, तोहतीति तुहिनम्, हन्ति हिनोतीति वा हिमम्, प्रलीयन्ते पदार्था अत्रेति प्रलयो हिमाद्रिस्तत आगतं प्रालेयम्, मह्यत इति महिका, मिह्यत इति मिहिकापीति सप्त हिमस्य।अथेति—महद्धिमं हिमानी,हिमानां संहतिः हिमसंहतिरितिद्वे हिमसमूहस्य॥ १८॥

न.　　पु.स.न.　पु.स.न.　पु.स.न.

ठंढ **शीतं (गुणेतद्वदर्थाः) सुषीमःशिशिरो जडः ।**

ठंढ पर्याय　पु.स.न.　पु.स.न.　पु.स.न.　पु.स.न.

**तुषारः शीतलःशीतो हिमः (सप्तान्यलिङ्गकाः) ॥१६॥**

शीतमिति—गुणे स्पर्शविषये अश्यायीति शीतमित्येकं शीतगुणस्य । सुषीमादयः सप्त तु तद्वान्शीतगुणवानर्थो येषान्ते तद्वदर्थास्ते चान्यलिङ्गका विशेष्यनिघ्ना भवन्तीति, सुष्ठु सीमा मर्यादा यस्येति सुषीमः, शशतीति शिशिरः, जलति घनीभवतीति जलः डलयोरेकत्वस्मरणाज्जडोऽपि, तोषयतीति तुषारः, शीतं गुणोऽस्यास्तीति शीतलः, शीतमस्यास्तीति शीतः, हिममस्यास्तीति हिम इति सप्तशीतलद्रव्यस्य ॥ १६ ॥

पु.　पु.　　पु.　पु.

ध्रुव **ध्रुव औत्तानपादिः स्यादगस्त्यः कुम्भसंभवः ।**

अगस्त्य　पु.　　स.

अगस्त्यभार्या **मैत्रावरुणिरस्यैव लोपामुद्रा ( सधर्मिणी ) ॥ २० ॥**

ध्रुव इति—ध्रुवति स्थिरोभवतीति ध्रुवः, उत्तानपादस्यापत्यमित्यौत्तानपादिस्स्यादिति द्वे ध्रुवस्य । अगं विन्ध्यं स्त्यायति स्तभ्नोति वा अगस्त्यः, अगमस्यतीति व्युत्पत्त्या अगस्तिरपि, कुम्भः सम्भव उत्पत्तिस्थानमस्येति कुम्भसंभवः, मित्रावरुणौ देवर्षी तयोः रपत्यं मैत्रावारुणिरिति त्रीण्यगस्त्यस्य । अस्यैव सधर्मिणी समानो धर्मोऽस्त्यस्याः-

सधर्मिणी पत्नी लोपामुद्रा न मुदं रातीति अमुद्रालोपे धर्मलोपे अमुद्रा हर्षं न लभत इत्येकमगस्त्यपत्न्याः ॥ २० ॥

न. न. न. स. स. स.न.

तारा **नक्षत्रमृक्षं भं तारा तारकाप्युडु (वा स्त्रियाम्)।**

दक्षकीकन्या स. स. स.

अश्विनी **दाक्षायण्यो(ऽश्विनीत्यादितारा)अश्वयुगश्विनी॥२१॥**

नक्षत्रमिति—न क्षदते हिनस्ति, नक्षति, न क्षणोतीति वा नक्षत्रम्, ऋषतीति ऋक्षम्, भातीति भम्, तरन्त्यनया तारा, तारयतीति तारका तारकं वा उ क्रोधं डयते, उना शंभुना डीयते वा 'उडु' वा स्त्रियामिति षट् नक्षत्रसामान्यस्य । अश्विनीत्यादितारा: दक्षस्यापत्यानि दाक्षायण्यः स्युरित्येकमश्विन्यादिभानाम्। अश्वं युनक्ति रूपेणानुकरोतीति अश्वयुक्, अश्वः अश्वरूपमस्त्यस्या अश्विनीति द्वे अश्विन्याः॥२१॥

विशाखा स. स. पु. पु, स.

पुष्य धनिष्ठा **राधाविशाखापुष्येतु सिध्यतिष्यौ श्रविष्ठया।**

पूर्व और उत्तर स. स. स.

भाद्रपद **समाधनिष्ठा स्युः प्रौष्ठपदा भद्रपदाः (स्त्रियः) ॥ २२ ॥**

राधेति—राध्नोति कार्यमनया राधा, विशाखतीति विशाखेति द्वे विशाखायाः । पुष्णाति कार्याणीति पुष्यस्तस्मिन् पुष्येतु सिध्यन्ति कार्याण्यस्मिन्निति सिध्यः, तुष्यन्त्यस्मिन्निति तिष्य इति त्रीणि पुष्यस्य। श्रवणं श्रवः सोऽस्त्यस्याः श्रववती अतिशयेन श्रववती श्रविष्ठा तया अतिशयेन धनवती धनिष्ठा सा समेत्यन्वयः । प्रोष्ठो गौस्तस्येव पादा यासामिति, भद्रं पदं यासां ताः स्त्रियः स्युरिति द्वे पूर्वभद्रपदोत्तरभद्रपदानाम् ॥२२॥

पु. न. पु. न. स.

मृगशिरा **मृगशीर्षमृगशिरस्तस्मिन्नेवाग्रहायणी।**

स.

इल्वल **इन्वका[2] (स्तच्छिरोदेशे तारका निवसन्ति याः) ॥२३॥**

मृगेति—मृगस्य शीर्षमिव शीर्षं यस्येति मृगशीर्षम्, मृगः शिरोऽस्येति मृगशिरस्तस्मिन्नेव अग्रे हायनमस्या इत्याग्रहायणीति त्रीणि मृगशिरसः । तच्छिरोदेशे यास्तारका निवसन्ति ताः, इन्वन्ति प्रीणयन्तीति इन्वकाः इलन्तीति इल्वका, वेति मृगशीर्षशिरोदेशस्थानां पञ्चानां स्वल्पतारकाणामेकम् ॥ २३ ॥

---

१ एवं चायाश्चतस्रः स्त्रियां बहुत्वे, मृगशिरोऽस्त्रियामेकत्वे, आर्द्रा स्त्र्येकत्वे, पुनर्वसुपुष्यौ पुंस्येकत्वे, आश्लेषाद्ये स्त्रीबहुत्वे, फल्गुन्यौ स्त्रीद्वित्वे, हस्तो मिथुनैकत्वे, चित्रा स्त्र्येकत्वे, स्वातिर्मिथुनैकत्वे, विशाखाद्ये स्त्रीबहुत्वे, ज्येष्ठा स्त्र्येकत्वे, मूलमस्त्रियामेकत्वे, आषाढाद्वये स्त्रीबहुत्वे, श्रवणो मिथुनैकत्वे, धनिष्ठाद्ये स्त्रीबहुत्वे, भाद्रपदाद्वयं स्त्रीद्वित्वे, रेवती स्त्र्येकत्व इति ॥

२ इन्वका नक्षत्रमितिश्रुतेः ।

पु. पु. पु. पु. पु.
बृहस्पति **बृहस्पतिः सुराचार्यो गीर्पतिर्धिषणोगुरुः ।**
पु. पु. पु. पु.
**जीवआङ्गिरसोवाचस्पतिश्चित्रशिखण्डिजः ॥ २४ ॥**

बृहस्पतिरिति—बृहतां पतिर्बृहस्पतिः, सुराणामाचार्यः सुराचार्यः, गिरां पतिः गीर्पतिः गीःपतिः गीःपतिः गीष्पतिर्वा, धृष्णोति प्रशस्ता धिषणास्येति वा धिषणः, गृणात्युपदिशतीति गुरुः, जीवयतीति जीवः, अङ्गिरसोऽपत्यमिति आङ्गिरसः, वाचः पतिः वाचस्पतिः वाक्पतिर्वा, चित्रशिखण्डिनो जाताश्चित्रशिखण्डिजः इति नव बृहस्पतेः॥२४॥

पु. पु. पु. पु. पु. पु.
शुक्र, मंगल **शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः ।**
पु. पु. पु. पु. पु.
**अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः ॥ २५ ॥**

शुक्र इति—शोचतीति, माहेश्वरशुक्रद्वारानिर्गतत्वाद्वा शुक्रः, दैत्यानां गुरुर्दैत्यगुरुः, कौतुमवश्यमाख्यातुमर्हत्वात्काव्यः, वष्टीति उशना, भृगोरपत्यं भार्गवः,कवते—कौतीति वा कविरिति षट् शुक्रस्य । अङ्गानि इयर्ति पीनत्वात्, अङ्गतीति वा अङ्गारः स एवाङ्गारकः, कोः पृथिव्या जातः कुजः, भूमेरपत्यं भौमः, लोहितान्यङ्गान्यस्येति लोहिताङ्गः, मह्याः सुतो महीसुत इति पञ्च मङ्गलस्य ॥ २५ ॥

पु. पु. पु. पु. पु.
बुध, शनैश्चर, राहु, केतु **रौहिणेयो बुधः सौम्यः(समौ) सौरिशनैश्चरौ ।**
न. पु. पु. पु. पु.
**तमस्तुराहुः स्वर्भानुः सैंहिकेयो विधुंतुदः ॥ २६ ॥**

रौहिणेय इति—रोहिण्या अपत्यमिति रौहिणेयः, बुध्यत इति बुधः, सोमस्यापत्यमिति सौम्यः इति त्रीणि बुधस्य । सूरस्यार्कस्यापत्यमिति सौरिः, सूरस्यायं सौरोपि, शनैश्चरति पंगुत्वादिति शनैश्चरः उभौ समौ समानार्थौ समानलिङ्गाविति द्वे शनेः। ताम्यतीति तमः सान्तोऽदन्तश्च, रहति गृहीत्वा त्यजति चन्द्रार्काविति राहुः, स्वराकाशे भातीति स्वर्भानुः, सिंहिकाया अपत्यमिति सैंहिकेयः, विधुं तुदतीति विधुन्तुदः इति पञ्च राहोः । चाय्यतेऽनेनेति केतुः, शिखास्त्यस्येति शिखी इति द्वे केतोः ॥ २६ ॥

पु.
सप्तर्षि, लग्न, राशि **सप्तर्षयोमरीच्यत्रिमुखाश्चित्रशिखण्डिनः ।**
न.
**राशीनामुदयो लग्नं ( ते तु मेषवृषादयः )॥ २७ ॥**

---

१ मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः ॥

२ मेषो वृषोथ मिथुनं कर्कटः सिंहकन्यके । तुलाथ वृश्चिको धन्वी मकरः कुम्भमीनकाविति ॥

सप्तेति—मरीच्यत्रिमुखाः सप्त च ते ऋषयश्चेति सप्तर्षयः, चित्रः शिखण्डश्चूडाविशेषोऽस्त्येषामिति चित्रशिखण्डिनः चित्रशिखण्डिसंज्ञकाः स्युरिति। अश्नुवते व्याप्नुवन्ति राशयस्तेषामुदयः अलगी।दिति लग्नम्, ते राशयो मेषवृषावादी येषान्ते मेषवृषादयः प्रत्येकमेकम् ॥ २७ ॥

पु.　पु.　पु.　पु.　पु.　पु.

सूर्य　**सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः ।**

पु.　पु.　पु.　पु.　पु.

**भास्कराऽहस्करब्रध्नप्रभाकरविभाकराः ॥ २८ ॥**

पु.　पु.　पु.　पु.　पु.

**भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः ।**

पु.　पु.　पु.　पु.　पु.　पु.

**विकर्तनार्कमार्तण्डमिहिरारुणपूषणः ॥ २९ ॥**

पु.　पु.　पु.　पु.　पु.

**द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ।**

पु.　पु.　पु.　पु.

**विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ॥ ३० ॥**

पु.　पु.　पु.　पु.　पु.　पु.

**भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ।**

सूरेति—सुवति प्रेरयति लोकमिति सूरः—शवति शूरयते वा शूरः, सरत्याकाश इति सुवति प्रेरयति कर्मणि लोकानिति वा सूर्यः, इयर्तीति अर्यमा, अदितेरपत्यमादित्यः, द्वादश आत्मानो मूर्तयो यस्येति द्वादशात्मा, दिवादिनं करोतीति दिवाकरः, भाः करोतीति भास्करः, अहः करोतीति अहस्करः, तिमिरं बध्नातीति ब्रध्नः, प्रभां करोतीति प्रभाकरः, विभां करोतीति विभाकरः, भासः सन्त्यस्येति भास्वान्, विविधं वस्ते आच्छादयतीति विवो रश्मिरस्यास्तीति विवस्वान्, सप्ताश्वा यस्येति सप्ताश्वः, हरितोऽश्वा यस्येति हरिदश्वः, उष्णा रश्मयोऽस्येति उष्णरश्मिः, विशेषेण कर्तनं यस्य, विकर्तयति भक्तरोगानिति वा विकर्तनः, अर्च्यते—अर्क्यते वा अर्कः, मृतेऽण्डे भवो मार्तण्डः मार्ताण्डः, मेहतीति मिहिरः, ऋच्छतीति अरुणः, पुष्णाति-पूषतीति वा पूषा, दिवो मणिर्द्युमणिः, तरत्यनेन संसारमिति तरणिः, मेद्यतीति मित्रः, चित्रा भानवोऽस्येति चित्रभानुः, विरोचते इति विरोचनः, विभैव वसु यस्येति विभावसुः, ग्रहाणां पतिर्ग्रहपतिः, त्विषांपतिः, अह्नः पतिरहर्पतिः, भातीति भानुः, हन्तीति हंसः, सहस्रमंशवो यस्येति सहस्रांशुः, तपति तापयति वा तपनस्तापनो वा, सुवतीति सविता, रूयते, स्तूयते, रवते वा रविरिति सप्तत्रिंशत्सूर्यस्य ॥ २८ । ३० । ½ ॥

पु.　　पु.　　पु.

आसपास रहने वाले सूर्यगण　**माठरः पिङ्गलो दण्ड (श्चण्डांशोः पारिपार्श्वकाः) ॥३१॥**

सारथि मण्डल　पु.　　पु.　पु.　पु.　　पु.

**सूर्यसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः ।**

पु.　　पु.　　न.　　न.

**परिवेषस्तु परिधिरुपसूर्यकमण्डले ॥ ३२ ॥**

माठर इति—मनुते मठरस्स एव, मठतीति मठरस्तस्यापत्यमिति वा माठरः, पिङ्गलो वर्णोऽस्यास्तीति, पिङ्गं वर्णं लातीति वा पिङ्गलः, दण्डोऽस्यास्ति, दण्डयतीति वा दण्डः एते त्रयश्चण्डांशोः सूर्यस्य पारिपार्श्वकाः पार्श्वे इति परिपार्श्वम् परि पार्श्वेवर्तन्ते पारिपार्श्विका इति सूर्यपार्श्वस्थानां माठरादित्रयाणामेकैकम् । सूर्यस्य सूतः सूर्यसूतः, अरुणो वर्णोऽस्यास्तीति अरुणः, अविद्यमानावूरू यस्येत्यनूरुः, कश्यपस्यापत्यमिति काश्यपिः, गरुडस्याग्रजो गरुडाग्रज इति पञ्च सूर्यसारथेः । परितो विष्यते विश्यते वानेन परिवेषः—परिवेशः, परितो धीयतेऽनेनेति परिधिः, उपगतं सूर्यमुपसूर्यन्तदेवोपसूर्यकम्, मण्डतीति, मण्डं लातीति वा मण्डलमिति चत्वारि चन्द्रार्कयोरुत्पातादि जातमण्डलस्य ॥ ३१ । ३२ ॥

पु.　पु.　पु.　पु.　पु.　　पु.　　पु.

किरण　**किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः ।**

पु.　　पु.　पु.स.　　　　　　स.

**भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ॥ ३३ ॥**

किरण इति—कीर्यत इति किरणः, वसन्ति रसा अस्मिन्निति उस्रः, मिमीते इति मयूखः, अंशयतीत्यंशुः, गच्छतीति गः ज्ञेयवर्गस्तं बभस्ति दीपयतीति गभस्तिः, जिघर्ति घरतीति वा घृणिः, अश्नुत इति रश्मिः, भातीति भानुः, कीर्यत इति किरः, म्रियते तमोऽस्मिन्निति मरीचिः " स्त्रीपुंसयोः " स्यात्, दीधीते दीप्यत इति दीधितिः 'स्त्रियां' स्त्रीत्वे स्यादित्येकादश किरणानाम् ॥ ३३ ॥

स.　स.　स.　स.　स.　स.　स.　　स.　　स.

प्रभा　**(स्युः) प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ।**

न.　　न.　　　　　　　पु.　　पु.　　पु.

घाम　**रोचिः शोचि (रुभे क्लीबे) प्रकाशो द्योत आतपः ॥ ३४ ॥**

स्युरिति—प्रभातीति प्रभा, रोचनं रुक्, रोचत इति रुचिः, त्वेपतीति त्विट्, भातीति, भा, भाः, भासत इति भाः, छ्यति—छिनत्तीति तमो वा छविः, छवी, द्योतते ऽनयेति द्युतिः, दीप्यतेऽनयेति दीप्तिः, रोचतेऽनेन रोचिः, शुच्यति पूतीभवत्यनेनेति

---

१ भातीति क्विप् आवन्तत्वाभावान्न हलोपादिः 'भाः' विश्वपावत् ।

शोचिः उभे क्लीबे स्यातामित्येकादश प्रभायाः । प्रकाशनं प्रकाशः, द्योतनं द्योतः, आतपतीत्यातप इति त्रीण्यातपस्य ॥ ३४ ॥

न. न. न. न.

थोड़ागर्म **कोष्णं कवोष्णं मन्दोष्णं कदुष्णं (त्रिषु तद्वति)।**

न. न. न. स. स.

बड़ागर्म मृगतृष्णा **तिग्मं तीक्ष्णं खरं(तद्वन्)मृगतृष्णा मरीचिका॥ ३५॥**

**इति दिग्वर्गः॥**

कोष्णमिति—ईषदुष्णं कोष्णम्, कवोष्णम्, मन्दं च तदुष्णं च मन्दोष्णम्, ईषदुष्णं कदुष्णम् एते गुणे क्लीबाः,तद्वति गुणवति त्रिषु त्रिलिङ्गेषु भवन्तीति चत्वारीषदुष्णस्य। तेजयतीति तिग्मम्—तीक्ष्णं वा खमिन्द्रियं रात्यभिभवतीति खरम् तद्वत्—गुणे क्लीबम्, तद्वति त्रिषु यथा तीक्ष्णोऽसिः, तीक्ष्णा गदा, तीक्ष्णं चक्रमिति—त्रीणि उष्णस्य। मृगाणां तृष्णास्यामिति मृगतृष्णा, मरीचिरिव मरीचिकेति द्वे मृगतृष्णायाः ॥ ३५ ॥

इति दिग्वर्गविवरणम्।

## अथ कालवर्गो व्याख्यायते॥

पु. पु. पु. पु. स.

समय, **कालो दिष्टोऽप्यनेहापि समयोऽप्यथ पक्षतिः।**

स.

पहली तिथि तिथियां **प्रतिपद् (द्वे इमे स्त्रीत्वे) तदाद्यास्तिथयो द्वयोः॥ १॥**

काल इति—कालयति सर्वं कल्यते वा कालः, दिशतीति दिष्टः, नाहन्तिनाहन्यते वा अनेहाः, सम्यगेति समयः स्यादिति चत्वारि सामान्यकालस्य। अथेति पक्षस्य मूलं पक्षतिः, प्रतिपद्यते उपक्रम्यतेऽनयेति प्रतिपद् इमे द्वे स्त्रीत्वे स्यातामिति द्वे प्रतिपत्तिथेः। तदाद्येति सा प्रतिपद् आद्या यासां ताः अतन्तीति तिथयः द्वयोः स्त्रीपुंसयोः स्युरित्येकं सामान्यतिथेः॥ १ ॥

पु. न. न. पु. न. पु. न.

दिन प्रभात शाम गोधूली **घस्रोदिनाहनी (वा) तु (क्लीबे)दिवसवासरौ।**

पु. न. न. न. न.

**प्रत्यूषोऽहर्मुखं कल्यमुषः प्रत्युषसी (अपि)॥ २॥**

न. पु. न. अ. स. स.

**प्रभातं च दिनान्ते तु सायः सन्ध्या पितृप्रसूः।**

घस्र इति—घसत्यन्धकारमिति घस्रः, दीयते क्षीणं भवतीति, द्यति तमो निर्व्यापारस्थितिं चेति वा दिनम्, न जहातीति अहः, दीव्यन्त्यत्रेति दिवसः, वासयतीति वासरः

उभौ तु वा क्लीबे स्यातामिति पञ्च दिनस्य। प्रत्यूष इति–प्रत्यूषति रुजति कामुकानिति प्रत्यूषः, अह्नो मुखमित्यहर्मुखम्, कलयति चेष्टामिति कल्यं काल्यं वा, ओषत्यन्धकारमित्युषः, प्रत्योषतीति प्रत्युषः, भातुं प्रवृत्तमिति प्रभातमिति षट् प्रभातस्य। दिनस्यान्तो दिनान्तस्तस्मिन्दिनान्ते तु स्यति समापयति दिनमिति सायः,सायं मान्तमव्ययं त्वव्ययवर्गे वक्ष्यत्येकं दिनान्तस्य। संध्यायन्ति जनाः परब्रह्मास्यामिति संध्या, निर्यकारोपि सं-धीयतेऽनु सन्धीयतेऽस्यामिति सन्धा, पितॄन्प्रसूते इति पितृप्रसूरिति द्वे संध्यायाः ॥ २। १/२ ॥

पु. पु. पु. स.

दिनके भाग **प्राह्णापराह्णमध्याह्ना(स्त्रिसन्ध्य)मथ शर्वरी ॥ ३ ॥**

स. स. स. स. स. स.

रात्रि **निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा।**

स. स. स. स. स.

**विभावरीतमस्विन्यौ रजनी यामिनी तमी ॥ ४ ॥**

प्राह्णेति–प्रथमं च तदहश्चेति प्राह्णः, अह्नोऽपरम्–अपराह्णः, अह्नो मध्यं मध्यं च तदहश्चेति वा मध्याह्नः, तिसृणां संन्ध्यानां समाहारस्त्रिसन्ध्यम्–त्रिसन्ध्या वेत्यैकं दिनाद्यन्तमध्यानाम्। अथेति–शृणाति चेष्टा इति शर्वरी, शार्वरी वा नितरां श्यति तनूकरोति व्यापारानिति निशा, निशीथोऽस्त्यस्यामिति निशीथिनी, राति ददाति सुखमिति रात्रिः,रात्रीत्यपि, त्रयो यामा यस्या इति त्रियामा, क्षणमुत्सवं निर्व्यापारस्थितिं वा ददातीति क्षणदा, क्षपयति चेष्टामिति क्षपा, विभाति नक्षत्रादिभिरिति विभावरी, तमोऽस्त्यस्यामिति तमस्विनी, रजन्त्यनुरक्ता भवन्ति रागिणोऽस्यामिति रजनी, निन्दिता यामा यस्या इति यामिनी, ताम्यन्त्यस्यामिति तमी, तमिः, तमा वेति द्वादश रात्रेः ॥ ३।४ ॥

अँधेरी राति स. स. स.

चांदनी राति **तमिस्रा तामसी रात्रिर्ज्यौत्स्नी ( चन्द्रिकयान्विता )**

पूर्व व परदिन स.

संयुत राति **(आगामिवर्तमानार्हर्युक्तायां निशि ) पक्षिणी ॥ ५ ॥**

तमिस्रेति–तामसी महान्धकारवती रात्रिः तमोबहुलमस्त्यस्यामिति तमिस्रेति कथ्यत इत्येकमत्यन्धकाररात्रेः। चन्द्रिकयान्विता या रात्रिः सा ज्यौत्स्नीति भण्यते इत्येकं ज्योत्स्नावद्रात्रेः। आगामिवर्तमाने अहनीयुक्ते यस्यामिति तस्यां निशि पूर्वापरदिने पक्षाविव स्तो यस्यामिति पक्षिणी स्यादित्येकं दिनद्वयमध्यगतरात्रेः ॥ ५ ॥

न. पु. न.

रात्रिसमूह प्रदोष **गणरात्रं(निशाबह्वयः) प्रदोषो रजनीमुखम्।**

पु. पु. पु. पु.

आधी रात पहर **अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ(समौ) ॥ ६ ॥**

गणेति–वह्व्यो निशा, गणानां बह्वीनां रात्रीणां समाहारो गणरात्रमित्येकं रात्रिसमुदायस्य । दुष्यतीति दोषा प्रारब्धा दोषा यस्मिन्निति प्रदोषः, रजन्यामुखमिव रजनीमुखमिति द्वे रात्रिप्रारम्भस्य । अर्धं रात्रेरित्यर्धरात्रः, नितरां शेरतेऽस्मिन्निति निशीथः इमौ द्वौ समौ समानार्थौ समानलिङ्गाविति द्वे रात्रिमध्यस्य । यातीति यामः, प्रह्रियते ढक्कादिरस्मिन्निति प्रहः इमौ द्वौ समाविति द्वे प्रहरस्य ॥ ६ ॥

पर्व सन्धि अमाव पूर्णिमा पूर्णमासी

(स)पर्वसन्धिः(प्रतिपत्पञ्चदश्योर्यदन्तरम्) ।
पक्षान्तौ पञ्चदश्यौ द्वे पौर्णमासी(तु)पूर्णिमा ॥ ७ ॥

स इति–प्रतिपत्पञ्चदश्योर्यदन्तरं स सन्धिः स एव पर्व अपि पर्वसन्धिर्वेत्येकं पर्वसन्धेः । द्वे पञ्चदश्यौ पूर्णिमामावास्ये, पक्षस्यान्तौ पक्षान्तावित्येकं नाम पूर्णिमामावास्ययोः । पूर्णो मासो यस्यामिति पूर्णमासा सा एव पौर्णमासी, माश्चन्द्रः पूर्णो माः पूर्णमास्तस्येयं पौर्णमासीति वा पूर्णं चन्द्रस्य पूरणं तेन निर्वृत्ता पूर्णिमेति द्वे-पूर्णिमायाः ॥ ७ ॥

कलाहीन पूर्णिमा कला सहित पूर्णिमा अमावास्या

(कलाहीने)सानुमतिः (पूर्णे) राकानिशाकरे ।
अमावास्या त्वमावस्या दर्शःसूर्येन्दुसंगमः ॥ ८ ॥

कलेति–उदयकाले प्रतिपद्योगात्कलाहीने निशाकरे चन्द्रे सति सा पूर्णिमा अनुमन्यते अनुमतिरित्येकं कलाहीनपूर्णिमायाः । पूर्णे निशाकरे सति सैव पूर्णिमा राति शुभमिति राकेत्येकं कलासमेतपूर्णिमायाः । अमा सह वसतश्चन्द्रार्कावस्यामित्यमावास्या, अमावस्या, अमावासी, अमावसी, अमामासी, अमामसी, अमा–दृश्यते शास्त्रेणेति दर्शः, सूर्येन्दू संगच्छतोऽस्मिन्निति सूर्येन्दुसंगम इति चत्वारि दर्शस्य ॥ ८ ॥

अमा विशेष कुहू ग्रहण

( सादृष्टेन्दुः ) सिनीवाली[१] ( सानष्टेन्दुकला ) कुहूः ।
उपरागो ग्रहो(राहुग्रस्ते त्विन्दौ च पूष्णि च) ॥ ९ ॥

धूमकेतु

सोपप्लवोपरक्तौ द्वावग्न्युत्पात उपाहितः ।

---

१ जो पूर्व अमावास्या है वह सिनीवाली और जो उत्तर अमावास्या है उसे कुहू कहते हैं यह श्रुति का प्रमाण है ॥

सेति–दृष्टेन्दुश्चतुर्दशीयोगाद्दृष्टचन्द्रा सती सा अमा एन विष्णुना सह वर्तते सा लक्ष्मीरूयस्या इति सिनी चन्द्रकला तां वलति धारयतीति सिनीवालीति भण्यते, नष्टेन्दुकला उदये अमायोगान्नष्टचन्द्रकला सा अमा कुहयतीति कुहूः, कुहुरपि इति द्वे अमाविशेषस्य । राहुग्रस्ते इन्दौ चन्द्रे पूष्णि सूर्ये च सति उपरज्यतेऽनेनेति उपरागः, ग्रहणं ग्रहः, उपप्लवेन सह वर्तमानः सोपप्लवः, उपरज्यते स्म उपरक्तः इमौ द्वावपीति चत्वारि ग्रहणस्य । अग्नेरुत्पतनमग्न्युत्पातः, उप आसन्नमाहितं फलं यस्येति उपाहितः इति द्वे आकाशादिष्वग्निविकारस्य ॥ ६ । ९ ॥

एकत्र स्थित चन्द्र सूर्य — पु. **(एकयोक्त्या) पुष्पवन्तौ (दिवाकरनिशाकरौ) ॥१०॥**

एकयेति–एकया उक्त्या साधारणवचनेन दिवाकरनिशाकरौ रविशशिनौ पुष्प्यते पुष्पो विकासोऽस्ति ययोस्तौ पुष्पवन्तौ पुष्पस्यावन्ताविति वा स्याताम् अकारान्तोपि पुष्पवन्तशब्दो ज्ञेयः । तथा च पुष्पदन्तोपि इत्येकमेकत्रस्थितचन्द्रसूर्ययोः ॥ १० ॥

काष्ठा कला — **(अष्टादश निमेषास्तु) काष्ठा** स. **'त्रिंशत्तु ताः' कला** स. **।**

क्षण मुहूर्त — **(तास्तु) त्रिंशत्क्षणस्ते** पु. **तु मुहूर्तो** पु.न. **(द्वादशास्त्रियाम्) ॥११॥**

अष्टादशेति–अष्टभिरधिका दश अष्टादशनिमेषाः "क्षणद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयमित्यादिशास्त्रसिद्धाः" मिलित्वा काशत इति काष्ठा स्यादित्येकं काष्ठायाः । तास्त्रिंशत् काष्ठा मिलित्वा कलयतीति कला स्यादित्येकं कलायाः । तास्त्रिंशत् कला मिलित्वा क्षणोतीति क्षणः स्यादित्येकं क्षणस्य । ते तु क्षणा द्वादश मिलित्वा हूर्च्छतीति मुहूर्तोऽस्त्रियां पुन्नपुंकं स्यादित्येकं मुहूर्तस्य ॥ ११ ॥

दिनरात पक्ष — **ते तु त्रिंशदहोरात्रः** पु.न. **पक्ष** पु. **(स्ते दशपञ्च च) ।**

पक्षभेद मास — **पक्षौ पूर्वापरौ** पु. **शुक्लकृष्णौ** पुं. **मासस्तु** पु. **तावुभौ ॥ १२ ॥**

ते त्विति–ते तु त्रिंशन्मुहूर्ताः अहश्च रात्रिश्चानयोः समाहारः–अहोरात्रः स्यादित्येकमहोरात्रस्य । ते दशपञ्च चाहोरात्राः पक्ष्यते इति पक्षः स्यादित्येकं पक्षस्य । शुक्लकृष्णौ पूर्वापरौ पक्षौ स्याताम् शुक्लपक्षः पूर्वसंज्ञः, कृष्णपक्षोऽपरसंज्ञः स्यादितिक्रमेणैकैकम् । तावुभौ पक्षौ मस्यतेऽनेनेति मासः स्यादित्येकं मासस्य ॥ १२ ॥

---

१ निमेषोऽक्षिस्पन्दनकालः "अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्तितः" इत्युक्तम् ॥

ऋतु आधा वर्ष वर्ष

पु. न.

(द्वौ द्वौ मार्गादिमासौ)स्यादृतुस्तैरयनं (त्रिभिः) ।

१ पु.

(अयनेद्वे)(गतिरुदग्दक्षिणार्कस्य) वत्सरः ॥ १३ ॥

द्वाविति–मार्गादी द्वौ द्वौ मासौ इयर्ति ऋच्छति वा 'ऋतुः'स्यात्स च हेमन्तादिसंज्ञः माघादीत्यपिपाठः माघाद्युपक्रमस्तु अयनारम्भवशाज्ज्ञातव्य इत्येकमृतोः । तैस्त्रिभि-र्ऋतुभिः अयतेऽर्कोऽनेनेति अयनं स्यादित्येकमयनस्य तद्द्विधा सूर्यगतिभेदात् अर्कस्य सूर्यस्य उदक् उत्तरागतिः-दक्षिणागतिश्च स्यात् द्वे अयने वसन्त्यस्मिन्निति वत्सरः स्या-दित्येकं वत्सरस्य ॥ १३ ॥

समरात्रिदिन

न. न.

(समरात्रिंदिवेकाले) विषुवद्विषुवं (च तत्) ।

समरात्रिमिति–रात्रिश्च दिवा च रात्रिंदिवं तत्समं यस्मिन् तादृशे काले तुलामेषा-वच्छिन्ने विषु साम्यं तदस्यास्तीति विषुवत्, विषुवम्, विषु वातीति वा विषु नानारूपं गमनं विष्वक् तदस्यास्तीति विषुणोपि इति द्वे समरात्रिंदिवकालस्य ॥

अगहन

पु. पु. पु. पु.

मार्गशीर्षेसहामार्गे आग्रहायणिकश्च सः ॥ १४ ॥

मार्गेति–मृगशिरसा युक्ता पौर्णमासी मार्गशीर्षी सास्मिन्नस्तीति मार्गशीर्षस्तस्मिन् , सहते सहाः सहश्च, मृगेण युक्ता पौर्णमासी मार्गी सास्मिन्निति मार्गः, सः आग्रहा-यण्या युक्ता पौर्णमास्यस्मिन्निति आग्रहायणिकश्चेति चत्वारि मार्गमासस्य ॥ १४ ॥

पूष, माघ, फागुन, चैत

पु. पु. पु. पु. पु. पु.

पौषेतैषसहस्यौ(द्वौ)तपामाघे(ऽथ) फाल्गुने ।

पु. पु. पु. पु. पु.

स्यात्तपस्यः फाल्गुनिकः स्याच्चैत्रे चैत्रिको मधुः॥१५॥

पौषेति–पुष्येण युक्ता पौर्णमास्यस्मिन्निति पौषस्तस्मिन्, तिष्येण युक्ता पौर्णमास्य-स्मिन्निति तिष्यः, सहसि बले साधुः सहस्यः इमौ द्वौ स्यातामिति त्रीणि पौषमासस्य । मघया युक्ता पौर्णमास्यस्मिन्निति माघस्तस्मिन्, तपतीति तपाः तपश्च स्यादिति द्वे माघ-मासस्य । अथेति–फलति निष्पादयति फल्गुनस्स एव फाल्गुनस्तस्मिन्, तपसि साधु-स्तपस्यः, फल्गुनीभिर्युक्ता पौर्णमास्यस्मिन्नस्तीति फाल्गुनिकः स्यादिति त्रीणि फा-ल्गुनमासस्य । चित्रया युक्ता पौर्णमास्यस्मिन्नस्तीति चैत्रस्तस्मिन्, चित्रया युक्ता पौर्ण-मास्यस्मिन्निति चैत्रिकः, मन्यते एतन्मधुरिति त्रीणि चैत्रमासस्य ॥ १५ ॥

---

१ 'अर्कस्य' इति ग्रहणं चान्द्रतव्यावृत्त्यर्थं पक्षादिकं तु चान्द्रमुक्तम्–अयनन्तु न चान्द्रं किन्तु सौर-मेवेति दीक्षितः ॥

पु. पु. पु. पु. पु. पु.

वैशाख ज्येष्ठ **वैशाखे माधवो राधो ज्यैष्ठे शुक्रश्शुचि (स्त्वयम्)।**

पु. पु. पु. पु.

आषाढ़ सावन **आषाढे श्रावणे तु स्यान्नभाः श्रावणिकश्च (सः) ॥१६॥**

वैशाख इति—विशाखया युक्ता पौर्णमास्यस्मिन्नस्तीति वैशाखस्तस्मिन्, मधुमकरन्दः सोऽस्मिन्नस्तीति माधवः, राधाविशाखातद्वती पौर्णमासी राधी सास्मिन्नस्तीति राधः इति त्रीणि वैशाखमासस्य। ज्येष्ठयायुक्ता पौर्णमास्यस्मिन्नस्तीति ज्यैष्ठः,ज्येष्ठोऽपि तस्मिन्, विरहिणः शोचन्त्यस्मिन्निति शुक्र इति द्वे ज्येष्ठमासस्य। शोचन्ति विरहिणोऽस्मिन्निति शुचिः, अयमिति शुचेः पुंस्त्वाभिव्यक्त्यर्थम्, अषाढया युक्ता पौर्णमास्यस्मिन्नित्याषाढः, आषाढाभिराख्यात इति विग्रहे तु अषाढकोपीति द्वे आषाढमासस्य। श्रवणेन युक्ता पौर्णमास्यस्मिन्नस्तीति श्रावणस्तस्मिन्, विरहिणो नभ्यति—नभ्नाति—नभते वा नभाः सः श्रवणावती पौर्णमास्यस्मिन्नस्तीति श्रावणिकश्च स्यादिति त्रीणि श्रावणमासस्य ॥ १६ ॥

पु. पु. पु. पु.

भादौं, **स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः (समाः)।**

क्वार, पु. पु. पु. पु.

कार्तिक **स्यादाश्विनइषोप्याश्वयुजोऽपि स्यात्तु कार्त्तिकः ॥ १७ ॥**

स्युरिति—नभा अभ्रं तत्र साधुर्नभस्यः, प्रोष्ठपदाभिर्युक्ता पौर्णमास्यस्मिन्नस्तीति प्रौष्ठपदः, भद्राभिर्युक्ता पौर्णमास्यस्मिन्निति भाद्रः, भद्रपदाभिर्युक्ता पौर्णमास्यस्मिन्नस्तीति-भाद्रपदश्चैते समाः समानार्थाः समानलिङ्गकाश्चेति चत्वारि भाद्रपदमासस्य। स्यादिति—अश्विन्या युक्ता पौर्णमास्यस्मिन्नस्तीति आश्विनः, एषणामिट् यात्रा सास्मिन्मासे जिगूपूणामस्तीति इषः, अश्वयुजा युक्ता पौर्णमास्यस्मिन्नस्तीति आश्वयुजः अश्वयुजोपीति त्रीणि आश्विनमासस्य ॥ १७ ॥

पु. पु. पु. पु. पु.न.

हेमन्त **बाहुलोर्जौ कार्त्तिकिको हेमन्तः शिशिरोऽस्त्रियाम्।**

शिशिर पु. पु. पु. पु. पु.

वसन्त **वसन्ते पुष्पसमयः सुरभिर्ग्रीष्म ऊष्मकः ॥ १८ ॥**

पु. पु. पु. पु. पु.

ग्रीष्म **निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः।**

स्यादिति—कृत्तिकाभिर्युक्ता पौर्णमास्यस्मिन्नस्तीति कार्त्तिकः, बहुलाः कृत्तिकास्तद्वती पौर्णमास्यस्मिन्निति बाहुलः, ऊर्जयत्युत्साहयाति जिगीषूनिति ऊर्जः, कृत्तिकावती

पौर्णमास्यस्मिन्निति कार्त्तिकिक इति चत्वारि कार्त्तिकमासस्य । हन्तीति हेमन्तः, हिनोति वर्धयति बलमिति हेमापि इति मार्गपौषाभ्यां निष्पन्नस्य ऋतोरेकम् । शशन्ति धावन्ति पथिका यस्मिन्निति शिशिर इत्येकं माघफाल्गुनाभ्यामृतोः । वसन्ति मदनोत्सवा यत्रेति वसन्तस्तस्मिन्, पुष्पाणां समयः पुष्पसमयः, सुष्ठु रमन्ते रभसयुक्ता भवन्त्यत्रेति सुरभिरिति त्रीणि चैत्रवैशाखाभ्यामृतोः । ग्रसते रसानिति ग्रीष्मः, ऊषति रुजतीति ऊष्मा स एव ऊष्मकः, नितरां दह्यतेऽत्रेति निदाघः, उष्णमुपगमत्रेति उष्णोपगमः, ओषतीति उष्णः, ऊष्मा तप आगमोऽत्रेति उष्मागमः, तपतीति तप इति सप्त ज्येष्ठाषाढाभ्यामृतोः ॥ १८ । ३ ॥

वर्षा — स. स्त्रियां प्रावृट् (स्त्रियां भूम्नि) वर्षा (अथ) शरत्स्त्रियाम् ॥१९॥

शरत् — पु. ( षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् ) ।

स्त्रियामिति—वर्षणां वृट् प्रकृष्टा वृडत्रेति प्रावृट् स्त्रियां स्यात् प्रावृषापि, वर्षं वर्षणमत्रास्तीति वर्षा स्त्रियां स्त्रीत्वे भूम्नि बहुत्वे स्यात्तेन नित्यबहुवचनान्तो ज्ञेयः इति द्वे श्रावणभाद्राभ्यामृतोः । अथेति शीर्यन्ते पाकेनौषधयोऽस्यामिति शरत्, (द्) स्त्रिया स्यात् शरदा चेत्येकमाश्विनकार्त्तिकाभ्यामृतोः । अमी हेमन्तादयः षट् ऋच्छन्तीति ऋतवः पुंसि पुंस्त्वे भवन्ति ते च मार्गादीनां मार्गशीर्षादिमासानां युगैः युगलैः क्रमादवगन्तव्या इति हेमन्तादीनां षणामेकम् ॥ १९ । ३ ॥

वर्ष या साल — पु. संवत्सरो पु. वत्सरो पु. ऽब्दो पु. न. हायनो (ऽस्त्री) स. शरत्स. समाः ॥ २० ॥

संवत्सर इति—संवसन्त्यृतवोऽत्रेति संवत्सरः, वसन्त्यृतवोऽत्रेति वत्सरः, आप्यत इति अब्दः, भावाञ्जहाति, जिहीते वा हायनः 'अस्त्री' स्त्रीत्वे न स्यात्, शृणातीति शरत्स्त्रियां स्यात्, समन्ति विक्लवं कुर्वन्ति सर्वमिति—संमान्ति सह वर्तन्ते ऋतवोऽस्यामिति समाः प्रायेणायं बहुवचनान्तः क्वचिदेकवचनान्तोपीति षट् सँव्वत्सरस्य ॥ २० ॥

पितृदिन, देवदिन — (मासेन स्या) दहोरात्रः पु. पैत्रो पु. (वर्षेण) दैवतः पु. ।

ब्रह्माका दिन, कल्प — (दैवे युगसहस्रे द्वे) ब्राह्मः पु. कल्पौ पु. तु (तौ नृणाम् ) ॥२१॥

---

१ आदाय मार्गशीर्षाच्च द्वौ द्वौ मासौ ऋतुर्मतः ।

२ कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् । प्रोच्यते तत्सहस्रन्तु ब्रह्मणो दिनमुच्यत इति विष्णुपुराणतो युगनामानि ज्ञेयानि। तन्मानमाह मनूक्तवाक्यान्यवलोक्य । कृतयुगमानम् देववर्षैः४८०० वर्ष दिन३६० गुणितं जातं मानुषवर्षमानम् १७२८००० त्रेतादिव्यवर्षैः ३६०० मानुषैः १२९६००० द्वापरं दिव्यैः २४०० मानुषैः ८६४००० कलिर्दिव्यैः १२०० मानुषैः ४३२००० चतुर्युगं दिव्यैः १२००० मानुषैः ४३२०००० ब्रह्मदिनं दिव्यैः १२०००००० मानुषैः ४३२०००००० इत्थमवसेयः ।

मासेनेति–मासेन नृणां मासेन पितृणामयं पैत्रः अहोरात्रः स्यात्। तत्र कृष्णपक्षो दिनम्, शुक्लपक्षो रात्रिरित्येकं पैत्रदिनस्य। वर्षेणेति, नृणां वर्षेण देवतानामयं दैवतो ऽहोरात्रः, तत्रोत्तरायणं दिनं, दक्षिणायनं रात्रिरित्येकं दैवतदिनस्य। दैव इति-दैवे द्वे युगसहस्रे देवानां युगसहस्रद्वयेन ब्रह्मणोऽयं ब्राह्मोऽहोरात्र इत्येकं ब्रह्मणो दिनस्य। ये दैवेयुगसहस्रे तौ नृणां मनुष्याणां कल्पयतः स्थितिं प्रलयं चेति कल्पाविति-त्येकं कल्पस्य ॥ २१ ॥

न.
मन्वन्तर मन्वन्तरन्तु[1](दिव्यानां युगानामेकसप्ततिः)।
पु. पु. पु. पु. पु.
प्रलय संवर्तः प्रलयः कल्पः क्षयः कल्पान्त(इत्यपि) ॥ २२ ॥

मन्वन्तरमिति–दिव्यानां युगानां एकाधिका सप्ततिः मनोरन्तरमवकाश इति मन्व-न्तरमित्येकं मन्वन्तरस्य। संवर्त इति–संवर्तन्ते जगदत्रेति संवर्तः, प्रलीयतेऽत्रेति प्रलयः, कल्प्यन्ते क्षीयन्तेऽत्रेति कल्पः, क्षीयन्ते प्राणिनोऽत्रेति क्षयः, कल्पस्यान्तोऽवधिरिति कल्पान्तोपीति पञ्च प्रलयस्य ॥ २२ ॥

पु. न. पु. न. न. न.
पाप (अस्त्री)पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषम्।
न. न. न. न. न. न. न.
कलुषं वृजिनैनोघमंहो दुरितदुष्कृतम् ॥ २३ ॥

अस्त्रीति–पच्यते दुःखमनेन–पञ्चयतीति वा पङ्कं अस्त्री स्यात्, आप्नोति व्याप्नोति लोकानिति पाप्मा पुमान्स्यात्, पान्त्यस्मादात्मानम्–पिबति भक्षयति कर्तारमिति वा पापम्, केलयति क्रीडयति विषयेष्विति किल्बिषम्, शुभं कर्म स्यति समाप्तं करोतीति कल्मषम्, कलयति वशीकरोतीति कलुषम्, वृज्यत इति वृजिनम्, यन्त्यधोऽनेन–एति गच्छति प्रायश्चित्तेनेति वा एनः, अङ्क्ते गच्छति दानादिनेत्यघः, अमति–अं-हतीति वा अंहः, दुष्टमितं गमनमनेनेति दुरितम्, दुष्टं कृतं करणमनेनेति दुष्कृतमिति द्वादश पापस्य ॥ २३ ॥

पु. न. न. न. न. पु.
पुण्य स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः।
स. स. पु. पु. पु. पु. पु.
हर्ष मुत्प्रीतिः प्रमदो हर्षप्रमोदामोदसंमदाः ॥ २४ ॥
पु. पु. न. न. न.
स्यादानन्दथुरानन्दः शर्मशातसुखानि (च)।

---

१ तथा चैकस्य मन्वन्तरस्य ३०८५७१४२८ वर्षाणि, ६ मासाः, २५ दिनानि, ४२ घटिकाः, सार्धाण्येकपञ्चाशत्पलानि भवन्तीति मुकुटाशयः ॥

स्यादिति—धरति विश्वमिति, ध्रियते जनैरिति वा धर्मम् अस्त्रियां पुन्नपुंसकं स्यात्, पुनाति, पुण्यतीति पुण्यमर्हति तत्र साधुर्वेति पुण्यम्, अतिशयेन प्रशस्यमिति श्रेयः, सुष्ठुकृतमिति सुकृतम्, वर्षति फलमिति वृष इति पञ्च धर्मस्य। मुदिति—मोदनं मुत्, प्रयणं प्रीतिः, प्रमदनं प्रमदः, हर्षणं हर्षः, प्रमोदनं प्रमोदः, आमोदनमामोदः, संमदनं संमदः, आनन्दनमानन्दथुः, आनन्दनमानन्दः, शृणातीति शर्म, श्यति दुःखमिति शातम्, सातयतीति सातं वा सुखयतीति सुखमिति द्वादश सुखस्य हर्षस्य वा ॥ २४ । १/२ ॥

न. न. न. न. न. न.

कल्याण **श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ॥ २५ ॥**

न. न. न. न. पु.न.

**भावुकं भविकं भव्यं कुशलं क्षेम (मस्त्रियाम्) ।**

न.

**शस्तं (चाथ त्रिषु द्रव्ये)पापं पुण्यं सुखादि (च) ॥२६॥**

श्वःश्रेयसमिति—श्व आगामि श्रेयोऽत्रेति श्वःश्रयसम्, श्वोवसीयमपि शेतेऽनेनेति शिवम्, भन्दत इति भद्रं—भन्दं वा, कल्यं नीरुजत्वमाणयति—कल्ये प्रातःकालेऽण्यते वा कल्याणम्, मङ्गतीति मङ्गलम्, शोभते—शु पूजितं भातीति वा, शुभम्, भवनशीलं भावुकम्, भवोभद्रास्तिरत्रास्तीति भविकम्, भवतीति भवत्यनेनेति वा भव्यम्, कुत्सितं शलते संवृणोतीति कुशलम्—कुसलं—कुषलम् वा क्षयत्यशुभमिति क्षेममस्त्रियां स्यात्, शश्यते स्मेति शस्तमिति द्वादश कल्याणमात्रस्य। अथेति पापं पुण्यं पापपुण्यशब्दौ सुखादि च शस्तान्तं शब्दजातं द्रव्ये वर्तमानं त्रिषु त्रिलिङ्गेषु बोध्यम् ॥ २५ । २६ ॥

स. स. पु.न. पु. पु.

अच्छा या प्रशस्त शुभभाग्य **मतल्लिका[1] मचर्चिका प्रकाण्डमुद्धतल्लजौ ।**

पु.

**प्रशस्तवाचकान्यमून्ययः (शुभावहो विधिः) ॥ २७ ॥**

मतल्लिकेति—मतं मतिमलतीति मतल्लिका, मं शम्भुं चर्चतीति मचर्चिका, प्रकृष्टं काण्डमवसरो रसो वास्य, प्रगतः काण्डो धर्मोऽस्मादिति वा प्रकाण्डः, उद्धन्तीति उद्घः, लजतीति लजस्तद्वल्लजस्तल्लजः अमूनि प्रशस्तवाचकानि यथा प्रशस्तः पुरुषः=पुरुषमतल्लिका, ब्राह्मणमचर्चिका, गोप्रकाण्डम्, मनुष्योद्धः, कुमारीतल्लज इत्यादयो ज्ञेयाः मतल्लिकादीनां रूढिशब्दत्वात् प्रशंसावचनैश्चेति कृष्णसर्पवाप्यश्वादिवदेते नित्यसमासाः उद्धस्त्वसमस्तोपीति पञ्च प्रशस्तस्य। शुभावहः शुभप्रापकः विधिर्भाग्यं एतदनेन सुखमित्ययः इत्येकं शुभभाग्यस्य ॥ २७ ॥

---

१ मतल्लिकादयो नियतलिङ्गाः, अव्युत्पन्नाश्चेति प्राञ्चः ॥

पु.न. पु.न. पु.न. पु.न. स. पु.

भाग्य **दैवं दिष्टं भागधेयं भाग्यं (स्त्री) नियतिर्विधिः ।**

कारण पु. न. न. न

आदिकारण **हेतु (र्ना) कारणं बीजं (निदानं) स्त्वादिकारणम् ॥ २८ ॥**

दैवमिति—देवादागतं दैवम्, दिश्यतेऽस्मेति दिष्टम्, भाग एव भागधेयम्, भज्यत इति भाग्यम्, नियच्छति—नियम्यतेऽनयेति वा नियतिः स्त्री स्यात्, विधीयतेऽनेनेति विधिरिति षट् प्राक्तनशुभाशुभकर्मणः । हिनोति व्याप्नोति कार्यमिति हेतुः ना पुंलिङ्गः स्यात्, कार्यतेऽनेनेति कारणम्, विशेषेण जायतेऽनेन, वीयते वीर्विदं संवृतं जायते जनयतीति, विशेषेण एः कामादिना वा जायते, विशिष्टा ई लक्ष्मीर्जायतेऽस्मादिति, वजतीति वा बीजं बवयोरभेदाद्वीजमपीति त्रीणि कारणस्य । नितरां दीयतेऽसाधारणतया अन्यतेऽनेनेति निदानम्, आदिर्मुख्यं कारणमित्यादिकारणमिति द्वे मुख्यकारणस्य ॥ २८ ॥

पु. पु. पु. न. स.

चैतन्यपुरुष **क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः(स्त्रियाम्) ।**

प्रकृति स. न. न. न.

अवस्था गुण **(विशेषःकालिको)वस्था(गुणाः)सत्त्वं रजस्तमः ॥ २९ ॥**

क्षेत्रज्ञ इति—क्षीयत इति क्षेत्रं शरीरं तज्जानातीति क्षेत्रज्ञः, अतति सततं व्याप्नोतीत्यात्मा, पुरति—पूरयतीति वा पुरुषः पूरुष इति त्रीण्यात्मनः । प्रधत्ते सर्वमत्रेति—प्रधत्ते सर्वमात्मनि—प्रकृष्टं धानमनेन वा प्रधानम्, प्रकृष्टाकृतिः प्रकुरुते वा प्रकृतिस्त्रियां स्यादिति द्वे सत्त्वादिगुणसाम्यावस्थायाः । कालेन निर्वृत्तः कालकृतो धर्मो यौवनादिर्विशेषः अवस्थीयते अवस्थानं वा अवस्थेत्येकमवस्थायाः । सीदन्ति गुणादयोऽस्मिन्निति सतोभावो वा सत्त्वम्, रञ्जयतीति रजः, ताम्यत्यनेनेति तमः अदन्तोऽपि गुणाः स्युरिति त्रयाणामप्येकैकम् ॥ २९ ॥

न. न. न. स. स. पु.

जन्म **जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ।**

पु. पु. पु. पु. पु. पु.

जीवधारी **प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः ॥ ३० ॥**

जनुरिति—जननं जनुः, जन्यते जननम्, जायते इति जन्म अदन्तो वा जननं जनिः, उत्पदनमुत्पत्तिः, उद्भवनमुद्भव इति षट् जननस्य । प्राणाः सन्त्यस्येति प्राणी, चेतति चेतयते वा चेतनः, जन्मोऽस्यास्तीति जन्मी, जायत इति जन्तुः, जायत इति जन्युः शरीरमस्यास्तीति शरीरी इति षट् प्राणिनः ॥ ३० ॥

स. न. न. स. स.

जाति व्यक्ति — जातिर्जातं च सामान्यं व्यक्तिस्तु पृथगात्मता ।

न. न. न. न. न. न. न.

मन — चित्तन्तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ॥ ३१ ॥

इति कालवर्गः ॥

जातिरिति–जायत इति जातिः, जायत इति जातम्, समानानां भावः सामान्यमिति त्रीणि घटत्वादिजातेः । व्यनक्ति व्यज्यतेऽनयेति वा व्यक्तिः, पृथगात्मा यस्य तस्य भावः पृथगात्मतेति द्वे घटादिव्यक्तेः स्वरूपस्य वा । चित्यते स्म चेतनं वा चित्तम्, चेतयत्यनेनेति चेतः, ह्रियते विषयैः, हरत्याहरति विषयानिति वा हृदयम्, स्वन्यते स्मेति स्वान्तम्, हरतीति हृत्, द्, मन्यतेऽनेन मनस्तदेव मानसम् तदभावे मनः अर्धर्चादिरयमित्येके तदा 'मनाः' इत्यपीति सप्त मनसः ॥ ३१ ॥

इति कालवर्गविवरणम् ॥

---

## अथ धीवर्गो व्याख्यायते ॥

स. स. स. स. स. स. स.

बुद्धि या अक्ल — बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ।

स. स. स. स. स. स. स.

प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः ॥ १ ॥

बुद्धिरिति–बुध्यतेऽनया, बोधनं वा बुद्धिः, ईषणामीषा मनस ईषेति मनीषा, धृष्णुवन्त्यनयेति धिषणा, ध्यायत्यनया, ध्यानं वेति धीः, प्रज्ञायतेऽनया प्रज्ञानं वेति प्रज्ञा, शेते शेमोहस्तं मुष्णातीति शेमुषी, मन्यतेऽनया, मननं वेति मतिः, प्रकृष्टमीक्षणं प्रेक्षा, उपलम्भनमुपलभ्यतेऽनयेति वा उपलब्धिः, चेतनं चित्, संवेदनं संवित्, प्रतिपदनं प्रतिपद्यतेऽनयेति वा प्रतिपत्, ज्ञपयत्यनयेति ज्ञप्तिः, चेतयति, चेतनमिति वा चेतना इति चतुर्दश बुद्धेः ॥ १ ॥

स. पु.

मेधा संकल्प — (धीर्धारणावती) मेधा संकल्पः (कर्म मानसम्) ।

पु. पु. स. स. स.

सुखेच्छा विचार — चित्ताभोगो मनस्कारश्चर्चा संख्या विचारणा ॥ २ ॥

धीरिति–धारणावती धारणाशक्तियुक्ता धीः बुद्धिः मेधते संगच्छते सर्वमस्यामिति मेधा स्यादित्येकं धारणावद्बुद्धेः । मानसं कर्म इदमहं कुर्यामिति मनसः कर्म व्यापारः संकल्पनं संकल्पः स्यादित्येकं मनोव्यापारस्य । चित्तस्य मनसः आभोजनमाभोगस्तदेकप्रवणता पूर्णता वा चित्ताभोगः, करणं कारो मनसः कारो मनस्कार

---

१ हृदयस्य "पद्दन्नसिति हृदादेशः प्रभृतिग्रहणस्य प्रकारार्थत्वादिति ॥

इति द्वे मनसः सुखादौ तत्परत्वस्य। चर्चनं चर्चा, संख्यानं संख्या, विचारणमिति विचारणा इति त्रीणि विचारस्य ॥ २ ॥

पु. पु. पु. स. पु.

तर्क संदेह निश्चय

**अध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः ।**

पु. पु. पु. पु.

**संदेहद्वापरौ चाथ (समौ) निर्णयनिश्चयौ ॥ ३ ॥**

अध्याहार इति–अध्याहरणमध्याहारः, तर्कणमपूर्वोत्प्रेक्षणं तर्कः, ऊहनमूह इति त्रीणि तर्कस्य। विचिकित्सनं विचिकित्सा, संशयनं संशयः, संदेहनं संदेहः द्वौ परौ प्रकारौ यस्येति द्वापर इति चत्वारि विरुद्धानेककोट्यवगाहिज्ञानस्य। अथेति निर्णयनं निर्णयः, निश्चयनं निश्चय इति समौ समानार्थौ समानलिङ्गाविति द्वे निश्चयज्ञानस्य ॥ ३ ॥

स. स. पु. न.

मिथ्याज्ञान परद्रोह सिद्धान्त भ्रान्तिज्ञान

**मिथ्यादृष्टिर्नास्तिकता व्यापादो द्रोहचिन्तनम् ।**

पु. पु. स. स. पु.

**(समौ)सिद्धान्तराद्धान्तौ भ्रान्तिर्मिथ्यामतिर्भ्रमः॥४॥**

मिथ्येति–'मिथ्या' इत्यपह्नवे तद्विषयिणी दृष्टिरस्येति मिथ्यादृष्टिः, नास्ति परलोके मतिरस्येति नास्तिकस्तस्य भावो नास्तिकता इति द्वे परलोको नास्तीत्यादिबुद्धेः । व्यापादनं व्यापादः, द्रोहणं द्रोहस्तस्य चिन्तनं द्रोहचिन्तनमिति द्वे द्रोहचिन्तनस्य । असेधीदिति सिद्धः सिद्धोऽन्तो निश्चयोऽत्रेति सिद्धान्तः, राध्यतिस्मेति राद्धः राद्धस्सिद्धोऽन्तो निश्चयोऽत्रेति राद्धान्तः इति द्वे सिद्धान्तस्य। भ्रमणं भ्रान्तिः, मिथ्या चासौ मतिश्चेति मिथ्यामतिः, भ्रमणं भ्रम इति त्रीण्यतस्मिंस्तज्ज्ञानस्य ॥ ४ ॥

स. स. न. पु. पु. पु.

अङ्गीकार

**संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः ।**

पु. पु. पु. पु.

**अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः ॥ ५ ॥**

संविदिति–संवेदनं संवित् , आगमनमागूर्वधूवत्–आगच्छतीत्यागूर्वर्षाभूवत्–आगुरणमागूर्धूर्वत्, प्रतिज्ञायत इति प्रतिज्ञानम्, नियमनमिति नियमः, आश्रवणमाश्रवः, संश्रवणं संश्रवः, अङ्गीकरणमित्यङ्गीकारः, अभ्युपगमनमित्यभ्युपगमः, प्रतिश्रवणं प्रतिश्रवः, समाधानं समाधिरिति दशाङ्गीकारस्य ॥ ५ ॥

---

१ कृन्तति कृत्यते वा अच्–घञौ पृषोदरादित्वाद्वर्णविपर्ययः ॥

२ स्थाणौ पुरुषोयमितिज्ञानं भ्रान्तिः, स्थाणुर्वा पुरुषो वायमित्येककोटिकं ज्ञानं संशयः, स्थाणौ स्थाणुरिति ज्ञानं निश्चयोऽवगन्तव्यः ॥

न. न.

ज्ञान विज्ञान (मोक्षे धी) र्ज्ञान (मन्यत्र) विज्ञानं (शिल्पशास्त्रयोः)।

स. न. न. न. न. न.

मोक्ष मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ॥ ६ ॥

पु. पु. न. स. स.

अज्ञान मोक्षोपवर्गोथाज्ञानमविद्याहंमतिः (स्त्रियाम्)।

मोक्ष इति—मोक्षविषयिणी मोक्षफलिका वा या धीः बुद्धिः सा ज्ञानमुच्यत इत्येकं मोक्षोपयोगिबुद्धेः। अन्यत्रेति—अन्यफलिका शिल्पशास्त्रयोर्या धीः सा विज्ञानं कथ्यत इत्येकं शिल्पादिविषयकबुद्धेः। मुक्तिरिति—मोचनं मुक्तिः, बन्धविरहात्केवलस्य भावः कैवल्यम्, निर्वाणयत्र, निरवार्यीति वा निर्वाणम्, अतिशयेन प्रशस्यं श्रेयः, नितरां श्रेयो निःश्रेयसम्, अविद्यमानं मृतं मरणमत्रेत्यमृतम्, मोक्षणमवसानमिति मोक्षः, अपवर्जनमपवर्गः इत्यष्टौ मोक्षस्य। अथेति—ज्ञानविरुद्धमज्ञानम्, विद्याविरुद्धा अविद्या, अहंप्रधाना मतिरहंमतिस्स्त्रियां स्यादिति त्रीण्यविद्यायाः ॥ ६ । ३ ॥

न. पु. पु. पु. पु.

विषय रूपं शब्दो गन्धरसस्पर्शाश्च विषया (अमी) ॥ ७ ॥

पु. पु. न. न. न.

इन्द्रिय गोचरा इन्द्रियार्थाश्च हृषीकं विषयीन्द्रियम्।

रूपमिति—रोपयति विमोहयति, रूप्यते स्तूयते वा रूपम्, शप्यते आक्रुश्यत इति शब्दः, गन्धयतीति गन्धः, रस्यत इति रसः, स्पृश्यते इति स्पर्शः अमी विसिन्वन्ति निबध्नन्तीन्द्रियाणि विषयाः, गाव इन्द्रियाणि चरन्त्येष्विति गोचराः इन्द्रियैरर्थ्यन्त इति इन्द्रियार्थाः इति पञ्चानां प्रत्येकं त्रीणि। हृष्यत्यनेनेति हृषीकम्, विषयोऽस्यास्तीति विषयि, इन्द्रस्यात्मनो लिङ्गमितीन्द्रियमिति त्रीणीन्द्रियाणाम् ॥ ७ । ३ ॥

न. न.

कर्मेन्द्रिय ज्ञानेन्द्रिय कर्मेन्द्रियं (तु पाय्वादि) मनोनेत्रादि (धीन्द्रियम्) ॥ ८ ॥

पु.न. पु.न. पु. पु. पु.

रस मीठा तुवरस्तु कषायो(ऽस्त्री) मधुरो लवणः कटुः।

पु. पु.

तीखा आदि तिक्तोऽम्लश्च रसाः पुंसि (तद्वत्सु षडमी त्रिषु) ॥ ९ ॥

कर्मेन्द्रियमिति—पाययति शोषयतीति पायुः स एवादिर्यस्य तत् पाय्वादि कर्मसाधकमिन्द्रियं कर्मेन्द्रियमुच्यत इत्येकं गुह्यादीन्द्रियस्य। मनोनेत्रादि धीसाधनमिन्द्रियं कथ्यत इत्येकं ज्ञानेन्द्रियस्य। तुवर इति तवीति हिनस्ति रोगानिति तुवरः, तूवरोपि, कषति कण्ठमिति कषायः अस्त्री स्यादिति द्वे कषायरसस्य। मधु माधुर्यमस्यास्तीति मधुर इत्येकं मधुररसस्य। लुनाति जाड्यमिति लवण इत्येकं लवणरसस्य। कटत्यावृणोति

तीक्ष्णतया मुखमिति कटुः, कट्वी, कटुकेत्येकं कटुरसस्य। तेजयतिस्मेति तिक्तः इत्येकं तिक्तरसस्य। अम्ब्यते शब्द्यते भोक्तृभिरित्यम्ब्लः, अमति रुजत्यरुचिमिति वा अम्लः अम्लीति इत्येकमम्ब्लरसस्य। रस्यन्ते आस्वाद्यन्त इति रसाः तुवरादयः षड्रसशब्द-वाच्यास्तत्र तूवरस्तु कषायोऽस्त्रीत्युक्तत्वादितरेषां लिङ्गनिश्चयमाह–पुंसीति गुणमात्रे वर्तमानाः मधुराद्यः पञ्च पुंसि भवन्ति अमी षट् तद्वत्सु गुणवत्सु त्रिषु त्रिलिङ्गथां स्युरिति षड्रसनाम् ॥ ८। ९॥

सुगन्ध या अतर खुशबू

(विमर्दोत्थे) परिमलो (गन्धे जनमनोहरे)। (पु.)
आमोदः (सोऽतिनिर्हारी) (वाच्यलिङ्गत्वमागुणात्) ॥१०॥ (पु.)

विमर्दोत्थ इति–सुरतादिविमर्दोत्थे माल्यादिके घर्षणसमुद्भवे चन्दने च जनानां मनोहरे गन्धे परितो मलते धारयति जनमनांसि मल्यते वेति परिमलः स्यादित्येकं परि-मलस्य। सः परिमलः अतिनिर्हारी अत्यन्तमनोहरश्चेत् आसमन्तान्मोदयति इत्यामोदः स्यादित्येकमामोदस्य। वाच्येति आगुणात् "गुणे शुक्लादयः पुंसि" इत्यतः प्राक् अतः परं वाच्यलिङ्गत्वमधिक्रियते ॥ १० ॥

बड़ी दूर जाने वाला सुगन्ध, बड़ा सुगन्ध, पान की गन्ध

समाकर्षी (पु.) तु निर्हारी (पु.) सुरभिर्घ्राणतर्पणः (पु.)। (पु.)
इष्टगन्धः (पु.) सुगन्धिः (पु.) स्यादामोदी (पु.) मुखवासनः (पु.) ॥ ११ ॥

समाकर्षीति–समाकर्षत्यवश्यं मनः, समाकर्षणशीलो वेति समाकर्षी, निर्हरति मनोऽवश्यमिति, निर्हरणशीलो वेति निर्हारीति द्वे दूरगामिगन्धस्य–सुष्ठु रभन्तेऽत्रेति सुरभिः, घ्राणं तर्पयतीति घ्राणतर्पणः, इष्टगन्धोऽस्येति इष्टगन्धः, सुष्टुगन्धोऽस्येति सुगन्धिरिति चत्वारीष्टगन्धस्य। आमोदयतीत्यामोदी, मुखं वासयतीति मुखवासनः स्यादिति द्वे मुखवासनगुटिकादेः ॥ ११ ॥

दुर्गन्ध विना पके मांस का गन्ध

पूतिगन्धिस्तु (पु.) दुर्गन्धो (पु.) विस्रं (न.) (स्या)दामगन्धि (न.) (यत्)।

पूतीति–पूय्यते इति पूतिः दुष्टो गन्धोऽस्येति पूतिगन्धिः, दुष्टो गन्धोऽस्येति दुर्गन्ध इति द्वे दुर्गन्धस्य। विस्यति विस्रंसते वेति विस्रम्, आमोऽपक्को मलस्तस्येव गन्धोऽस्येति आमगन्धि यत् आमगन्धि तद्विस्रं स्यादिति द्वे अपक्वमांसादिगन्धस्य ॥

सफेद या उजला

शुक्ल (पु.) शुभ्र (पु.) शुचि (पु.) श्वेत (पु.१) विशद (पु.) श्येत (पु.) पाण्डराः (पु.) ॥ १२ ॥
अवदातः (पु.) सितो (पु.) गौरो (पु.) वलक्षो (पु.) धवलो (पु.) ऽर्जुनः (पु.)।

---

१ "श्वेतस्तु समपातोतो रक्तेतरजनरुचिः। वलक्षस्तु सितः शावः कदलीकुसुमोपमः॥ अर्जुनस्तु सितः कृष्ण लेशवान् कुमुदच्छविः। पाण्डुस्तु पीतभागार्धः केतकी धूलिसन्निभ" (इति शब्दार्णवः) ॥

शुक्लेति–शोकति मनोऽस्मिन्निति शुक्लः, शोभते इति शुभ्रः, शोचतीति शुचिः, श्वेतनं श्वेतः, विशीयत इति विशदः, श्यायत इति श्येतः, पण्डते मनोऽस्मिन्निति पाण्डरः, अवदायते स्मेति अवदातः, सिनोति मन इति सितः, गुरते उद्युङ्क्ते मनोऽस्मिन्निति गौरः, अवलक्ष्यते, वलतीति वल्–अक्षन्त्यस्मादित्यक्षः वल्चासावक्षश्चेति वलं क्षायतीति वा वलक्षः, धावति मनोऽत्रेति, धवनं धवस्तं लातीति वा धवलः, अर्ज्यत इत्यर्जुन इति त्रयोदश शुक्लवर्णस्य ॥ १२ । ½ ॥

पु. पु. पु. पु.
कुछ उजला **हरिणः पाण्डुरः पाण्डु (रीषत्पाण्डुस्तु) धूसरः ॥ १३ ॥**
पीलाव कुछ पु. पु. पु. पु. पु. पु. पु.
उजला काला **कृष्णे नीलासितश्यामकालश्यामलमेचकाः ।**

हरिण इति–हरति मनो हरिणः, पाण्डुरस्यास्तीति पाण्डुरः पण्ड्यते ज्ञायत इति पाण्डुरिति त्रीणि पीतसंवलितशुक्लस्य । ईषत्पाण्डुस्तु धुनोति चेत इति, धूसनं धूसस्तं रातीति वा धूसर इत्येकमीषत्पाण्डुरस्य । कर्षति मन इति कृष्णस्तस्मिन्, नीलतीति नीलः, सितविरुद्धोऽसितः, श्यायते मनोऽस्मिन्निति श्यामः, कल्यत इति कालः श्यामोऽस्यास्तीति श्यामलः, मचति मिश्रीभवति वर्णान्तरेणेति मेचक इति सप्त कृष्णवर्णस्य ॥ १३ । ½ ॥

पु. पु. पु. पु. पु. पु.
पीला
हरा **पीतोगौरोहरिद्राभः पालाशोहरितोहरित् ॥ १४ ॥**
लाल पु. पु. पु. पु. पु.
लालकमलसम **रोहितोलोहितोरक्तः शोणः कोकनदच्छविः ।**

पीत इति–पीयते, पिबति वा वर्णान्तरमिति पीतः, गुरति मनो यस्मिन्निति गौरः हरिद्रा इव आभा यस्येति हरिद्राभ इति त्रीणि पीतवर्णस्य । पलाशस्य पत्रस्यायमिति पलमश्नातीति पलाशः स एव पालाशः, हरतीति हरितः, हरतीति हरित् इति त्रीणि हरितवर्णस्य । रोहतीति रोहितः, लोहितो वा रजतिस्म, रज्यते स्मेति वा रक्त इति त्रीणि रक्तवर्णस्य । शोणयतीति शोणः, कोकनदं रक्तोत्पलमिव छविर्यस्येति कोकनदच्छविरिति द्वे शोणवर्णस्य ॥ १४ । ½ ॥

पु. पु.
थोड़ालाल **(अव्यक्तराग) स्त्वरुणः (श्वेतरक्तस्तु) पाटलः ॥ १५ ॥**
उजला लाल
वानरसमपीला पु. पु. पु. पु. पु.
धूमिल **श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते ।**

अव्यक्तेति–अव्यक्तो रागो यस्येत्यव्यक्तरागः, ऋच्छतीत्यरुण इति द्वे ईषद्रक्तवर्णस्य । श्वेतमिश्रो रक्तः श्वेतरक्तः, पाटयतीति पाटल इति द्वे श्वेतरक्तवर्णस्य ।

श्यायत इति श्यावः, कपिर्वर्णविशेषोऽस्यास्तीति, कपिर्मर्कटस्तद्वद्वर्णोऽस्त्यस्येति वा कपिशः स्यादिति द्वे कृष्णपीतस्य। धूमं रातीति धूम्रः, धूमं लातीति धूमलः उभौ कृष्णमिश्रो लोहितः कृष्णलोहितस्तस्मिन्स्यातामिति त्रीणि कृष्णलोहितस्य ॥ १५ । ½ ॥

पु. पु. पु. पु. पु. पु.
पीला **कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ ॥ १६ ॥**

पु.न. पु. पु. पु. पु. पु.
चित्रविचित्र **चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे।**

**"गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" ॥ १७ ॥**

**इति धीवर्गः ॥**

कडार इति—गडति, कडनं कडस्तमृच्छतीति वा कडारः, कवते, कपिं वर्णं लातीति वा कपिलः, पिञ्जयतीति पिङ्गः, पिंशतीति पिशङ्गः, कन्दतीति कद्रुः, पिङ्गं लातीति पिङ्गल इति षट् कपिलस्य। चीयते, चित्तं त्रायते वेति चित्रम्, कीर्य्यते इति किर्मीरः, कलयतीति कल्—मापयत्यभिभवति वर्णानिति माषः—कल् चासौ माषश्चेति कल्माषः, शपत्याक्रोशति वर्णानिति शबलः, एति वर्णानिति एतः, कर्वति वर्णानिति कर्बुरः—कर्बुरम्—कर्बुरा चेति षट् नानावर्णस्य। शुक्लादयः शब्दाः गुणे गुणमात्रे पुंसि भवन्ति । गुणिलिङ्गास्तु तद्वति गुणवति विशेष्यस्यानुपादाने यदेव यल्लिङ्गं प्रतिपिपादयिषितं तल्लिङ्गा इति यथा "शुक्लं वस्त्रम्—शुक्लः पटः—शुक्ला शाटी" त्यादयो ज्ञेयाः ॥ १६ । १७ ॥

इति धीवर्गविवरणम् ॥

---

**अथ शब्दादिवर्गो व्याख्यायते ॥**

स. स. स. स. स. स. स.
सरस्वती **ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती।**

पु. स. न. न. न. न.
बोलना **व्याहार उक्तिर्लपितं भाषितं वचनं वचः ॥ १ ॥**

ब्राह्मीति—ब्रह्मण इयं ब्राह्मी, भरतस्येयं भारती, भाष्यत इति भाषा, गृणन्त्येतामिति गीः भागुरिमते गिरापि, उच्यते, वचनं वेति वाक्, वण्यत इति वाणिः वाणी वा वणति वेदमुच्चारयतीति वणो ब्रह्मा तस्येयं वाणीति वा, सरोऽस्त्यस्या इति सरस्वती, सरतीति सरो ज्ञानमस्त्यस्येति सरस्वान्ब्रह्मा तस्येयं शक्तिरिति वेति सप्तवचनाधिष्ठात्रिदेवतायाः । व्याहरणं व्याहारः, वचनमित्युक्तिः, लपनमिति लपितम्, भाषणमिति भाषितम्, उच्यत इति वचनम् , वक्तीति वच इति षट् भाषणस्य। केचित्तु ब्राह्म्याद्यास्त्रयोदश वचनपर्याया इति ब्रुवन्ति ॥ १ ॥

---

१ चित्रं किर्मीर इति समासमकृत्वा पृथग्रूपभेददर्शनं "गुणे शुक्लादयः पुंसि" इत्यस्य बाधनार्थम् ॥

अपशब्द शब्द — पु. पु. पु. पु.

**अपभ्रंशोऽपशब्दः स्या (च्छास्त्रे) शब्द (स्तु) वाचकः ।**

अपभ्रंश इति—संस्कृतादपभ्रश्यतीति अपभ्रंशः, अपभ्रष्टः शब्दोऽपशब्दः इति द्वे व्याकरणानिष्पन्नस्य गावी–गोता–गोणीत्यादेः–शास्त्रे व्याकरणादौ यो वाचकः साधुः स शब्दः स एव निरुपपदेन शब्दशब्देन व्यवह्रियत इत्येकं शब्दस्य ॥

वाक्य — न.

**(तिङ्सुबन्तचयो) वाक्यं[1] क्रिया (वा) कारकान्विता ॥२॥**

तिङिति—तिङ् च सुप् च तिङ्सुपौ तावन्ते येषान्ते तिङ्सुबन्तास्तेषां चयः "सुप् च तिङ् च सुप्तिङ् सुप्विशिष्टं तिङ् सुप्तिङ् तयोरेकशेषेऽन्तशब्देन समासस्तेन सुबन्तचय–तिङन्तचय–सुप्तिङन्तचयानां त्रयाणामपि लाभः तत्र सुबन्तचयः–चैत्रेण शयितव्यम्, तिङन्तचयः–'पचति, भवति' सुप्तिङन्तचयः "चैत्रः पचतीत्यादि" वाक्यम् । कारकान्विता कारकविशिष्टा क्रिया वेति वाक्यम् । यथा यज्ञदत्तः घटमानय, गां पालय घासादिनेत्यादि कारकविशिष्टक्रिया बोधकं शब्दजातं वाक्यमिति विज्ञेयमित्येकं वाक्यस्य ॥२॥

वेद धर्म — स. पु. पु. स. पु.

**श्रुतिः (स्त्री) वेद आम्नायस्त्रयीधर्मस्तु (तद्विधिः) ।**

श्रुतिरिति—श्रूयते, श्रूयते धर्मोऽनयेति वा श्रुतिः स्त्री स्यात्, विदन्ति धर्ममनेनेति वेदः, आम्नायते अभ्यस्यते–आमनन्ति धर्माधर्माविति वा आम्नायः, त्रयोऽवयवा यस्या इति त्रयीति चत्वारि वेदस्य । तद्विधिः तेन वेदेन विधीयते यज्ञादिरेतेन वेदविहितत्वं धर्मत्वम्, वेदश्च धर्मे प्रमाणमित्युक्तम्—धरति लोकानिति, ध्रियते जनैरिति वा धर्मः इत्येकं वेदविहितकर्मणः ॥

वेदभेद — स. न. न. स.

**स्त्रियामृक्सामयजुषी (इति वेदास्त्रय) स्त्रयी ॥ ३ ॥**

स्त्रियामिति—ऋच्यन्ते स्तूयन्ते देवा अनयेति ऋक् स्त्रियां स्यात् । स्यति पापमिति साम, इज्यतेऽनेनेति यजुरिति वेदानां प्रत्येकमेकैकम् । इति एते त्रयो वेदाः त्रयोऽवयवा यस्याः सा त्रयीत्येकं वेदत्रयसंघातस्य ॥ ३ ॥

---

१ प्रयुज्यमानमप्रयुज्यमानं वाख्यानं प्रयुज्यमानैरप्रयुज्यमानैर्वा कर्त्रादिभिर्विशेषणैः सहितं वाक्यमुच्यते यथा 'धर्मो वो रक्षतु' अप्रयुज्यमानमाख्यातं यथा 'शीलन्ते स्वम्' अत्र सर्वपदेषु चास्ति वाक्यशक्तिरित्युक्तत्वादस्तीति गम्यते अप्रयुज्यमानविशेषणं यथा–'प्रविश' अत्र गृहमिति गम्यते । अनयोरर्थात्प्रकरणाद्वाख्यातादेरवगमादप्रयोगः आख्यातमित्यत्रचैकत्वस्य विवक्षितत्वात् "ओदनं पच तव भविष्यती"त्यादौ वाक्यभेदः । एकतिङ्वाक्यमिति भाष्यकारः । आख्यातं सविशेषणं वाक्यमिति वार्त्तिककारश्चेति ॥

वेदाङ्ग,वेदारम्भ, ( शिक्षेत्यादि श्रुते[1] ) रङ्गमोङ्कारप्रणवौ ( समौ )।
महाभारत आदि, स्वर इतिहासः पुरावृत्त ( मुदात्ताद्यास्त्रयः ) स्वराः ॥ ४ ॥

शिक्षेत्यादि—शिक्ष्यते स्थानादिकमनयेति शिक्षा इत्यादि श्रुतेर्वेदस्य अङ्ग्यते ज्ञायतेऽनेनेत्यङ्गमुच्यते इत्येकं वेदाङ्गस्य। अवतीत्योम् वषट्कार इति लिङ्गात्समुदायादपि कारप्रत्ययः ओङ्कारः, प्रणूयते स्तूयत इति प्रणवः उभौ समौ समानार्थौ समानलिङ्गाविति द्वे वेदारम्भस्य। 'इति ह' पारंपर्योपदेशेऽव्ययं तदास्तेऽस्मिन्निति इतिहासः, पुरावृत्तमाचष्टे पुरावृत्तयतीति पुरावृत्तमिति द्वे पूर्वाचरितप्रतिपादकभारतादिग्रन्थस्य। उदात्तेति—उदात्ताद्यास्त्रयः स्वरन्ति शब्दायन्ते इति स्वरा उच्यन्त इत्येकमुदात्तादि स्वराणाम् ॥ ४ ॥

न्याय आन्वीक्षिकी दण्डनीति ( स्तर्कविद्यार्थशास्त्रयोः )।
कहानी पुराण आख्यायिकोपलब्धार्था पुराणं पञ्चलक्षणम्[2] ॥ ५ ॥

आन्वीक्षिकीति—अनुश्रवणोत्तरमीक्षणं परीक्षणमन्वीक्षा सा प्रयोजनमस्या इति आन्वीक्षिकी, दम्यतेऽनेनेति दण्डो,नीयते बोध्यतेऽनयेति, दण्डं नयति दण्ड्यान्प्रतिप्रापयतीति वा दण्डनीतिः एतौ द्वौ क्रमात्तर्कविद्यार्थशास्त्रयोर्वर्तेते। आन्वीक्षिकी तर्कविद्यायां न्यायरूपायामिति, दण्डनीतिः अर्थस्य भूम्यादेः प्रापकं शास्त्रमर्थशास्त्रन्तस्मिन्निति अर्थशास्त्रे चेत्येकैकम्। आचष्टे इति आख्यायिका, उपलब्धो ज्ञातोऽर्थो यस्या इत्युपलब्धार्थेति द्वे ज्ञातसत्यार्थभूतायाः कथायाः। पुराभवमिति—पुरापि नवमिति—पुराअतीतागतावर्थाव्रणतीति वा पुराणम्, पञ्चलक्षणान्यस्येति पञ्चलक्षणमिति द्वे व्यासादिप्रणीतमत्स्यपुराणादेः ॥ ५ ॥

कथा,पहेली "प्रबन्धकल्पना" कथा प्रवल्हिका प्रहेलिका[4]।
स्मृति,संग्रह स्मृतिस्तु धर्मसंहिता समाहृतिस्तु संग्रहः ॥ ६ ॥

प्रबन्धेति—प्रबन्धस्य कल्पना रचनेति प्रबन्धकल्पना, कथनमिति कथेति द्वे काद-

---

१ शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषांगतिः। छन्दोविचितिरित्येतैः षडङ्गो वेद उच्यते ॥
२ "मद्वयं भद्वयं चैव व्रत्रयं वा चतुष्टयम्। अनापलिङ्गकूस्कानि पुराणानि पृथक् पृथक्" (इति देवीभागवते)
३ सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम् ॥
४ पानीयं पातुमिच्छामि त्वत्तःकमललोचने। यदि दास्यसि नेच्छामि नो दास्यसि पिबाम्यहम् ॥

ख्यायिकथायाः। प्रवल्हते आच्छादयतीति प्रवल्हिका, प्रहेलयति अभिप्रायं सूचयतीति प्रहेलिका "व्यक्तिकृत्यकमप्यर्थं स्वरूपार्थस्य गोपनात् । यत्र बाह्यार्थसंबन्धः कथ्यते सा प्रहेलिका" इति द्वे दुर्विज्ञानार्थप्रश्नस्य। वेदार्थस्मरणपूर्वकं रचितत्वात्स्मृतिः, स्मर्यतेऽनयेति वा स्मृतिः, धर्मबोधार्थं रचिता संहिता धर्मसंहितेति द्वे मन्वादिस्मृतेः। समाहरणं समाहृतिः, संग्रहणं संग्रहः "विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः। निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः" इति द्वे संग्रहग्रन्थस्य ॥ ६ ॥

समस्या पूरा करना, गोंगा — स. समस्या तु स. समासार्था स. किंवदन्ती स. जनश्रुतिः ।

वृत्तान्त, — स. वार्ता स. प्रवृत्तिर् पु. वृत्तान्त पु. उदन्तः स्यादथ पु. आह्वयः ॥ ७ ॥

नाम — स. आख्या स. आह्वे न. अभिधानं च न. नामधेयं च न.[१] नाम च ।

समस्येति—समसनमिति, समं कृत्स्नं तद्विषयिणीच्छा वेति समस्या, समासोऽर्थो यस्या इति समासार्था पूरणसाकाङ्क्षा कविशक्तिपरीक्षार्थमपूर्णतयैव पठ्यमाना यथा "शतचन्द्रं नभस्तलम्" इति तत्र "दामोदरकराघातविह्वलीकृतचेतसा। दृष्टं चाणूरमल्लेन" इत्यादिना सा पूर्य्यत इति द्वे समस्यायाः। कोपिवादः किंपूर्वाद्वदेर्भावे झचि अन्तादेशे ङीपि च किंवदन्ती, जनेभ्यः श्रूयते इति जनश्रुतिरिति द्वे लोकापवादस्य। वृत्तिर्लोकवृत्तं तदस्त्यस्यामिति वार्ता, प्रवर्तते व्याप्नोतीति प्रवृत्तिः, वृत्तोऽनुवर्तनीयो गवेषणीयोऽन्तः समाप्तिर्यस्येति वृत्तान्तः, उद्गतोऽन्तो यस्येति उदन्तः साधुवार्तयोःस्यादिति चत्वारि वृत्तान्तस्य। अथेति—आह्वयन्त्याह्वास्तैर्यायतेप्राप्यते—आह्वानमाहूतस्या अय इति वा आह्वयः, आख्यानमित्याख्या, आह्वानमित्याह्वा, अभिधीयत इत्यभिधानम्—म्नायत इति नाम तदेव नामधेयम् नम्यतेऽभिधीयतेऽर्थोऽनेनेति नाम इति षट् नाम्नः ॥ ७ । ½ ॥

पुकारना, गलगप, — स. हूतिर् स. आकारणा न. आह्वानं स. संहूति (र्बहुभिःकृता) ॥ ८ ॥

झगड़ा, आरम्भ — पु. विवादो [२] पु. व्यवहारः स्याद् पु. उपन्यासस्तु न. वाङ्मुखम् ।

उदाहरण, सौगन्द — पु. [३] उपोद्घात पु. उदाहारः न. शपनं पु. शपथः (पुमान्) ॥ ९ ॥

हूतिरिति—ह्वानं हूतिः, आकारणमित्याकारणा, आहूयते इत्याह्वानमिति त्रीण्याह्वानस्य। बहुभिः कृता हूतिः संह्वानमिति संहूतिरित्येकं संहूतेः। विवदनमिति, विरुद्धो वाद इति वा विवादः, व्यवहरणं व्यवहारः स्यादिति द्वे ऋणादिन्यायस्य। उपन्यसनमुप-

१ उणाद्यन्तं कृदन्तं च तद्धितं च समासजम्। शब्दानुकरणं चैव नाम पञ्चविधं स्मृतम् ॥

२ "विनानार्थेऽवसंदेहे हरणं हार उच्यते। नानासंदेहहरणाद्व्यवहार इति स्मृतः" (इति कात्यायनः)॥

३ चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षत इति ॥

न्यासः, वाचो मुखमिव वाङ्मुखमिति द्वे वचनोपक्रमस्य । उपसमीपे उद्घननं ज्ञापनमित्युपोद्घातः, उदाहरणमित्युदाहार इति द्वे वक्ष्यमाणयोग्यार्थवर्णनस्य । शप्यते शपनम्, शपनं शपथः पुमान्स्यादिति द्वे सुतस्पर्शादिना शपथकरणस्य॥ ८ । ६ ॥

पूछना सवाल
प्रत्युत्तर जवाब
साँच को झूठ करना
झूठ दोष लगाना
प्रीतिसे उपजा शब्द

पु. पु. स. न. न.
**प्रश्नोनुयोगः पृच्छा च प्रतिवाक्योत्तरे ( समे ) ।**
पु. न. न.
**मिथ्याभियोगोऽभ्याख्यानमथमिथ्याभिशंसनम्॥१०॥**
पु. पु.
**अभिशापः प्रणादस्तु (शब्दस्स्यादनुरागजः) ।**

प्रश्न इति–प्रच्छनं प्रश्नः "प्रश्ने चासन्नकाले" इति लिङ्गान्न संप्रसारणम्, अनुयोजनमनुयोगः, प्रच्छनं पृच्छेति त्रीणि प्रश्नस्य । प्रतिवचनं प्रतिवाक्यम्, उत्तरणमुत्तरम्–उभे समे समानार्थे समानलिङ्गके चेति द्वे प्रतिवाक्यस्य । मिथ्याचासावभियोगश्चेति मिथ्याभियोगः, अभ्याख्यायत इत्यभ्याख्यानमिति द्वे 'शतंमेधारयसीत्यादिमिथ्याविवादस्य । अथेति मिथ्या च अभिशंसनं चेति मिथ्याभिशंसनम्' अभिशपनमभिशापः इति द्वे मिथ्यारोपस्य सुरापानादिविषयस्य । अनुरागजः शब्दः प्रणदनमिति प्रणादः स्यादित्येकं प्रीतिविशेषजनितमुखकण्ठादिशब्दस्य ॥ १० । ३ ॥

यश
स्तुति
द्विरुक्त
ऊंचे घोषना
शोकादि से बोलना

न. स. स. पु. न. स. स.
**यशःकीर्तिःसमज्ञा च स्तवः स्तोत्रं स्तुतिर्नुतिः ॥ ११ ॥**
न. न. स.
**आम्रेडितं(द्विस्त्रिरुक्तं) मुच्चैर्घुष्टं तु घोषणा ।**
स.
**काकुः "स्त्रियांविकारोयःशोकभीत्यादिभिर्ध्वनेः" ॥१२॥**

यश इति–अश्नुते व्याप्नोतीति यशः, कीर्त्यत इति कीर्तिः, सम्यैः सर्वैर्ज्ञायत इति समज्ञा, समाज्ञानं समाज्ञा वा समजन्त्यस्यामिति समज्या समाज्या वेति त्रीणि कीर्तेः । स्तूयतेऽनेनेति स्तवः, स्तूयतेऽनेनेति स्तोत्रम्, स्तूयतेऽनयति स्तुतिः, नूयतेऽनया नवनं वेति नुतिरिति चत्वारि स्तुतेः । द्विस्त्रिरुक्तं द्वित्रिवारोक्तं आम्रेड्यते आधिक्येनोच्यतेस्मेति आम्रेडितं स्यादित्येकं द्वित्रिवारोक्तस्य । उच्चैर्घुष्यते स्मेति उच्चैर्घुष्टम्, घोषणमिति घोषणेति द्वे उच्चैः शब्दनस्य। शोकभीत्यादिभिर्ध्वनेः यः विकारः सः कक्यत इति काकुः स्त्रियां स्यादित्येकं शोकादिशब्दविकारस्य ॥ ११ । १२ ॥

निन्दा या बुराई करना

पु. पु. पु. पु. पु.
**अवर्णाक्षेपनिर्वादपरीवादापवादवत् ।**
पु. पु. स. स. स. न.
**उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ॥ १३ ॥**

अवर्णेति–वर्ण्यते इति वर्णः प्रशंसा तद्विरुद्धोऽवर्णः, आक्षेपणमाक्षेपः, निर्वादनं निर्वादः, परिवादनं परीवादः, अपवादनमपवादः अववादो वा, वदिति सादृश्येऽव्ययम्, उपक्रोशनमुपक्रोशः, जुगुप्सनं जुगुप्सा, कुत्सनं कुत्सा, निन्दनं निन्दा, गर्ह्यते गर्हणमिति दश निन्दायाः ॥ १३ ॥

न. पु. न. स.

कठोर, डराना, **पारुष्यमतिवादः स्याद्भर्त्सनं त्वपकारगीः ।**

न.

खिझाना **यः सनिन्द उपालम्भ(स्तत्र स्यात्)परिभाषणम् ॥१४॥**

पारुष्यमिति–परुषो निष्ठुरभाषी तस्य भावः पारुष्यम्, अतिक्रम्योक्तिः, अतिवदनं वेति अतिवादः स्यादिति द्वे अप्रियवाक्यस्य । भर्त्स्यते तर्ज्यते इति भर्त्सनम्, अपकारार्था गीरित्यपकारगीरिति द्वे 'चौरोसि घातयिष्यामि त्वाम्' इत्याद्यपकारार्थवाक्यस्य । यः सनिन्दः निन्दया समेतः उपालम्भनमुपालम्भस्तत्र परितो भाष्यते इति परिभाषणं स्यात्–उपालम्भो द्वेधा गुणाविष्करणपूर्वको निन्दापूर्वकश्च आद्यो यथा "महाकुलीन ! तव किमुचितमिदम्" द्वितीयस्तु "बन्धकीसुत ! तवोचितमेवेदम्" इति तत्र यो द्वितीयः स परिभाषणमित्येकं परिभाषणस्य ॥ १४ ॥

स.न.

निन्दा करना **तत्र त्वाक्षारणा यः स्या "दाक्रोशो मैथुनं प्रति" ।**

प्रिय बोलना न. पु. पु.

बकना **स्यादाभाषणमालापः प्रलापो (ऽनर्थकं वचः) ॥ १५ ॥**

तत्रेति–मैथुनं प्रति यः आक्रोशः स्यात् तत्र तु आक्षारणमिति आक्षारणा, आक्षार्यत इति आक्षारणमपीत्येकं परस्त्रीनिमित्तं पुंसः परपुरुषनिमित्तं स्त्रियाश्चाक्रोशनस्य । आभाष्यत इत्याभाषणम्, आलपनमालापः स्यादिति द्वे संभाषणस्य । अनर्थकमर्थशून्यं वचः प्रलपनं प्रलापः स्यादित्येकं प्रयोजनशून्यस्योन्मत्तादिवचनस्य ॥ १५ ॥

बार२ कहना पु. स. पु. न.

रोना, उल्टा कहना **अनुलापो मुहुर्भाषा विलापः परिदेवनम् ।**

परस्पर कहना पु. स. पु.

**विप्रलापो विरोधोक्तिः संलापो (भाषणं मिथः) ॥ १६ ॥**

अनुलाप इति–अनुलपनमनुलापः, मुहुः पुनः पुनर्भाषणमिति मुहुर्भाषा इति द्वे वारं वारं भाषणस्य । विलपनं विलापः, परिदेव्यते इति परिदेवनम्, परिदेवनमितिवा परिदेवनापीति द्वे अनुशोचनवचनस्य । विरुद्धः प्रलापो विप्रलापः, विरोधस्य उक्तिर्विरोधोक्तिरिति द्वे अन्योन्यविरुद्धवचनस्य । मिथोऽन्योन्यं प्रतिभाषणं संलपनं संलापः स्यादित्येकं मिथोभाषणस्य ॥ १६ ॥

पु. न. पु. पु.

सुन्दर कहना छिपाना सुप्रलापः सुवचनमपलापस्तु निह्नवः।

स. न.

दूतका कहना संदेशवाग्वाचिकं स्या "द्वाग्भेदास्तु त्रिषूत्तरे"॥ १७॥

सुप्रलाप इति—सुष्ठु प्रकृष्टं लपनं सुप्रलापः, सुष्ठु उच्यते सुवचनमिति द्वे शोभनवचनस्य। अपलपनमपलापः, निह्नवनं निह्नव इति द्वे धार्यमाणेन धारयामीत्याद्युक्तेः। संदिश्यते संदेशोऽर्थस्तस्य वाक्, संदिष्टोऽर्थो ययोच्यते सा वाचिकमिति द्वे संदेशवचनस्य। उत्तरे वक्ष्यमाणा वाग्भेदा रुशत्यादयः सम्यगन्तास्तु त्रिषु त्रिलिङ्गेषु भवन्तीति॥ १७॥

पु.स. स.

बुरी वाणी भली वाणी रुशतीवाग "कल्याणी" स्यात्कल्या "तु शुभात्मिका"।

न. न. न.

मधुर कहना ठीक कहना "अत्यर्थमधुरं" सान्त्वं संगतं हृदयंगमम्॥ १८॥

रुशतीति—अकल्याणी कल्याणविरुद्धा वाक् रुशती—उशती—उषती वा स्यात् यथा उशती—उषती—रुशती वाणी, उशन्—उषन्—रुशन् शब्दः, उशत्—उषत्—रुशद्वचनमित्यादयस्त्रिलिङ्गाः स्युरित्येकं कल्याणविहीनवाण्याः। शुभात्मिका तु वाक् कलासु साधुः कल्या काले साधुः काल्या वेत्येकं शुभवाण्याः। अत्यर्थमधुरं वचनं सान्त्वयतीति सान्त्वमित्येकमत्यन्तमधुरवचनस्य। संगच्छतेस्म संगतम्, हृदयं गच्छतीति हृदयंगममिति द्वे युक्तिमिलितवचनस्य॥ १८॥

न. न. न. न. न.

कठोर वचन गमेला वचन प्रिय व सत्य निष्ठुरं परुषं ग्राम्यमश्लीलं सूनृतं (प्रिये)।

न. न. न.

व असंभव कहना सत्येऽथ संकुलक्लिष्टे परस्परपराहते॥ १९॥

निष्ठुरमिति—नितिष्ठतीति निष्ठुरम्, पिपर्ति पूरयत्यलं बुद्धिं करोतीति परुषमिति द्वे कर्कशवचनस्य। ग्रामे भवं ग्राम्यम्, श्रियं लातीति श्रीलं तद्भिन्नमश्लीलमिति द्वे भण्डादिवचनस्य। प्रीणातीति प्रियम्—सत्सु साधु सत्यम् प्रियं यत्सत्यं तस्मिन् सुष्ठु नृत्यन्त्यनेनेति सूनृतमित्येकं प्रियसत्यवचनस्य। अथेति—संकुलतीति संकुलम्, क्लिश्यते स्मेति क्लिष्टम् उभे पराघानि पराहतं परस्परेण पराहतं तस्मिन्स्याताामिति द्वे 'माता मे वन्ध्या' इतिवद्विरुद्धार्थवचनस्य॥ १९॥

न. न. न.

ग्रस्त धमकाया "लुप्तवर्णपदं" ग्रस्तं निरस्तं त्वरितोदितम्।

न. न. न. न.

थूकसहित अर्थशून्य (अम्बूकृतं) सनिष्ठेवमबद्धं स्यादनर्थकम्॥ २०॥

लुप्तेति—लुप्तो वर्णः पदं वा यत्रेति लुप्तवर्णपदम्, ग्रस्यते स्मेति ग्रस्तमिति द्वे अशक्त्यादिनासंपूर्णोच्चारितस्य। निरस्यते स्मेति निरस्तम्, त्वरितमुदितं त्वरितोदितमिति द्वे शीघ्रोच्चारितवचनस्य। न अम्बु अनम्बु अम्बु अकारीति अम्बूकृतम्, सहनिष्ठेवेन श्लेष्मकणादिनिर्गमेनेति सनिष्ठेवम्, सनिष्ठीवमपीति द्वे श्लेष्मनिर्गमसहितवचनस्य। न बध्यते स्मेति अबद्धम्—अबध्यमपि, न अर्थो यस्येत्यनर्थकं स्यादिति द्वे समुदायार्थशून्यवचनस्य ॥ २० ॥

अयोग्य वचन, असंभावित, हाससमेत कहना, रतिकूजित

न. न. न. न.
**अनक्षरमवाच्यं स्यादाहतं तु मृषार्थकम्।**
न. न. न. न.
**सोल्लुण्ठनं तु सोत्प्रासं मणितं रतिकूजितम् ॥ २१ ॥**

अनक्षरमिति—न प्रशस्तान्यक्षराणि यस्मिन्निति अनक्षरम्, न वचनार्हमवाच्यं स्यादिति द्वे निन्दावचनस्य। आहन्यते स्मेत्याहतम्, मृषा अर्थो यस्येति मृषार्थकमिति द्वे 'एष वन्ध्यासुतो याति' इत्यादिवचनस्य। उल्लुण्ठ्यते उल्लुण्ठनम्—उल्लुण्ठनेन सहितं सोल्लुण्ठनम्, उत्प्रासनमुत्प्रासस्तत्सहितं सोत्प्रासम्—सोपहासमपीति द्वे सोपहासस्य। मणनं मणितम्, रतौ कूजितं रतिकूजितमिति द्वे रतिकूजितस्य ॥ २१ ॥

अस्पष्ट, असत्य

न. न. न. न.
**अथम्लिष्टमविस्पष्टं वितथं त्वनृतं वचः।**

सत्य

न. न. न. न.
**सत्यं तथ्यमृतं सम्य "गमूनि त्रिषु तद्वति" ॥ २२ ॥**

अथेति—म्लेच्छ्यते स्मेति म्लिष्टम्, न विस्पश्यते स्मेति अविस्पष्टमिति द्वे अप्रकटितवचनस्य। विगतं तथा सत्यं यस्मादिति वितन्यते वा वितथम्, न ऋतमनृतं वचो वचनमिति द्वे असत्यवचनस्य अथवा अनृतमसत्यं वचो वचनं वितथं स्यादित्येकमसत्यवचनस्य। सति साधु सत्यम्, तथा सत्ये साधु तथ्यम्, अर्यतेस्मेति ऋतम्, समञ्चति संगच्छते इति सम्यक्—समीची क्रियाभिति चत्वारि सत्यवचसः। अमूनि सत्यादीनि तद्वति सत्यवति वर्तमानानि त्रिषु त्रिलिङ्गयां भवन्तीति यथा "सत्यः पुमान्, सत्या स्त्री, सत्यं कुल" मित्यादयो विज्ञेयाः ॥ २२ ॥

शब्द

पु. पु. पु. पु. पु. पु. पु.
**शब्दे निनादनिनदध्वनिध्वानरवस्वनाः।**

खड़खड़ाना

पु. पु. पु. पु. पु. पु.
**स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः।**

गहनों का शब्द

पु. पु. पु. पु. पु.
**आरवारावसंरावविरावा ( अथ) मर्मरः[१] ॥ २३ ॥**

---

१ मर्मरो वस्त्रभेदे च शुष्कपर्णध्वनौ तथा। पुंसि स्त्रियां पुनः प्रोक्ता मर्मरी पीतदारुणि ॥

न.
"स्वनिते वस्त्रपर्णानां, भूषणानां च" शिञ्जितम्।

शब्द इति—शब्दनं शब्दस्तस्मिन्, निनदनं निनादः, निनदनं निनदः,ध्वन्यते—ध्वननं वेति ध्वनिः, ध्वननं ध्वानः, रवणं रवः, स्वननं स्वनः, स्वननं स्वानः, निर्घोषणं निर्घोषः, निर्ह्रादनं निर्ह्रादः, नदनं नादः, निस्वननं निस्वानः, निस्वननं निस्वनः, आरवणमारवः, आरवणमारावः, संरवणं संरावः, विरवणं विराव इति सप्तदश शब्दस्य। अथेति—वस्त्रपर्णानां वस्त्राणां पर्णानां च स्वनिते शब्दे मर्मरातीति मर्मरः स्यादित्येकं वस्त्रपर्णध्वनेः। भूषणानां च ध्वनौ शिञ्ज्यते स्मेति शिञ्जितम्, शिञ्जापीत्येकं भूषणध्वनेः॥२३। $\frac{१}{१}$॥

पु.　पु.　पु.　पु.　न.
वीणाआदि　निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि॥ २४॥
　　　　　पु.　पु.
का शब्द　"वीणायाःक्वणिते प्रादेः" प्रक्वाणप्रक्वणादयः।

निक्वाण इति—वीणायाः क्वणिते शब्दिते निक्वणनं निक्वाणः, निक्वणनं निक्वणः, क्वणनं क्वाणः, क्वणनं क्वणः, क्वण्यते क्वणनमित्यपीति पञ्च भूषावीणाकिन्नरादिस्वनितस्य। प्रादेःप्राद्युपसर्गात् प्रक्वणनं प्रक्वाणः, प्रक्वणनं प्रक्वणः आदिशब्दादुपक्वणादय इमेपि वीणाक्वणनस्यैव ज्ञेयाः॥ २४। $\frac{१}{१}$॥

पु.　पु.　न.　न.
गुल　कोलाहलः कलकल(स्तिरश्चां) वाशितं रुतम्॥ २५॥
पक्षियों का
स.　पु.　न.
शब्द　स्त्रीप्रतिश्रुत्प्रतिध्वाने गीतंगानमिमे(समे)॥ २६॥
प्रतिध्वनि

इति शब्दादिवर्गः॥

कोलाहल इति—कोलनं कोल एकीभावस्तमाहलतीति कोलाहलः, कलनं कलः कलादपि कलः कलकल इति बहुभिःकृतशब्दस्य। तिरोऽञ्चन्ति ते तिर्यञ्चस्तेषां यद्रुतं तद्वाशनं वाशितम्, वासितमपीत्येकं खगारावस्य। प्रतिध्वननं प्रतिध्वानस्तस्मिन्, प्रति प्रथमंशब्दं लक्ष्यीकृत्य श्रूयते इति प्रतिश्रुत् स्त्री स्यादित्येकं प्रतिध्वनेः। अगायीति गीतम्, गीयते गानमिमे द्वे समे समानार्थे समानलिङ्गके चेति द्वे गायनस्य॥ २५। २६॥

इति शब्दादिवर्गविवरणम्॥

अथ नाट्यवर्गो व्याख्यायते ॥

१पु. पु. पु. पु. पु. पु.

गाने के स्वर **निषादर्षभगान्धारषड्जमध्यमधैवताः ।**

पु.

**पञ्चम (श्चेत्यमीसप्ततन्त्रीकण्ठोत्थिताःस्वराः) ॥ १ ॥**

निषादेति—निषीदति मनोऽस्मिन्निति निषादः, ऋषति बलीवर्दस्वरसादृश्यं गच्छतीति ऋषभः, गन्धारदेशे भवो गान्धारः, षड्भ्यः नासाकण्ठोरस्तालुजिह्वादन्तेभ्यो जायतेइति षड्जः, मध्ये भवो मध्यमः, धीमतामयं धैवतः, पञ्चानां पूरणः पञ्चमः अमी सप्त स्वरास्तन्त्रीतः कण्ठाच्चोच्चरन्तीति— " दारवी गात्रवीणा च द्वे वीणे स्वरधारिके " इति वचनात्, वंशमुरजादयस्तु अनुकरणमात्रोपयोगिन इति भावः " षड्जं रौति मयूरस्तु गावो नर्दन्ति चर्षभम् । अजाविकौ च गान्धारं क्रौञ्चो नदति मध्यमम् ॥ पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् । अश्वस्तु धैवतं रौति निषादं रौति कुञ्जर"(इति नारदः) इति सप्तस्वराणामेकैकम् ॥ १ ॥

स.

सूक्ष्मस्वर, **काकली "तु कले सूक्ष्मे" ध्वनौ तु मधुरास्फुटे ।**

मधुरस्वर,

गम्भीरस्वर, पु. पु. पु.

उच्चस्वर, **कलो मन्द्रस्तु गम्भीरे तारोत्युच्चै(स्त्रयस्त्रिषु) ॥ २ ॥**

काकलीति—सूक्ष्मे कले तु ईषत्कलः काकली, कलते कल्यते वा कलिः ईषत्कलिः काकलिः काकली वा अतएव " साधूदितं काकलिभिः कुलीनैरित्यभिनन्दः प्रयोगः संगच्छत इत्येकं सूक्ष्मस्वरस्य । मधुरःश्रुतिसुखः सचासावस्फुटोऽव्यक्ताक्षरश्च तादृशे ध्वनौ तु कलनं, कडति माद्यत्यनेनेति वा कल इत्येकं मधुरस्वरस्य । गम्भीरे मेघादिध्वनौ तु मन्दत इति मन्द्र इत्येकं गम्भीरस्वरस्य । अत्युच्चैर्ध्वनौ तु तारयत्यतिक्रामत्यन्यान्शब्दानिति तार इत्येकमत्युच्चस्वरस्य त्रयः कलमन्द्रतारास्त्रिषु विशेष्यनिघ्ना भवन्तीति ॥ २ ॥

पु. स. स.

**(समन्वितलयस्त्वे)कतालो वीणा तु वल्लकी ।**

वीणा

वीणाविशेष स. स.

**विपञ्ची (सा तु तन्त्रीभिःसप्तभिः) परिवादिनी ॥ ३ ॥**

समन्वित इति—सम्यगन्वितो लयो नृत्यगीतवाद्यानां साम्यं यत्र स एकः समस्तालो

१ निषादःस्वरभेदेपि चण्डाले धीवरान्तरे—ऋषभस्त्वौषधान्तरे । स्वरभिद्वृषयोः कर्णरन्ध्रकुम्भीरपक्षयोः । उत्तरस्थःस्मृतःश्रेष्ठ स्त्रीनराकारयोषिति । " गान्धारोरागसिन्दूरस्वरेषुनीवृदन्तरे " इति हेमः । नासाकण्ठमुरस्तालुजिह्वां दन्तांश्च संस्पृशन् । षड्भ्यः संजायते यस्मात्तस्मात्षड्ज इति स्मृतः ॥ तद्वदेवोत्थितो वायुरुरःकण्ठसमाहतः । नाभिं प्राप्तो महानादो मध्यस्थस्तेन मध्यमः ॥ धीमतामयमित्यत्र संज्ञायामिति वत्वम् । वायुः समुद्गतोनाभेरुरोहृत्कण्ठमूर्धसु॥ विचरन्पञ्चमस्थानप्राप्तया पञ्चम उच्यते । तज्जन्यत्वात्पञ्चमःस्वर इति॥

माननमस्येत्येकतालः कथ्यते इत्येकमेकतालस्य । वेति जायते स्वरोऽस्यामिति वीणा, वल्लत इति वल्लकी, विपञ्चयति विस्तारयति शब्दमिति विपञ्चीति त्रीणि वीणायाः । सैव सप्तभिस्तन्त्रीभिरुपलक्षिता परिवदति स्वरान्, परिवदत्यवश्यमिति वा परिवादिनी-त्येकं विशेषवीणायाः ॥ ३ ॥

वीणाशब्द　न.　　न.
मृदङ्ग आदि　**ततं "वीणादिकं वाद्य" मानद्धं "मुरजादिकम्" ।**
वंशी आदि　　न.　　न.
घण्टाझालरिआदि **वंशादिकं तु शुषिरं कांस्यतालादिकं घनम् ॥ ४ ॥**

ततमिति—वीणादिकं यद्वाद्यं वादनीयं तत् तन्यते, तायते स्मेति वा ततं स्यादित्येकं वीणादिवाद्यस्य । मुरजादिकं यद्वाद्यं तदानह्यते स्म मुखे चर्मणा बध्यते स्मेत्यानद्धं स्यादित्येकं मुरजादिवाद्यस्य । वंशादिकं तु वंशो वेणुः, आदिना काहलादि । शुषिरश्छिद्रमस्यास्तीति शुषिरं—सुषिरमपीत्येकं वंशादिवाद्यस्य । कांस्यतालादिकं कांस्यमयस्तालः कांस्यतालः आदिना घण्टादि हन्यते हननं वेति घनं स्यादित्येकं कांस्यतालादिवाद्यस्य ॥ ४ ॥

　　न.　न.　न.
वाद्य भेद　**"चतुर्विधमिदं"[2] वाद्यवादित्रातोद्यनामकम् ।**
मृदङ्ग　पु.　पु.　पु.　पु.　पु.
मृदङ्ग भेद　**मृदङ्गा मुरजाभेदास्त्वङ्क्याालिङ्ग्योर्ध्वकास्त्रयः ॥ ५ ॥**

चतुर्विधमिति—"इदं ततादि चतुर्विधं" 'वाद्यवादित्रातोद्यनामकम्' वाद्यते ध्वन्यते इति वाद्यम्, वाद्यते वादित्रम्, आसमन्तात्तुद्यते ताड्यते इत्यातोद्यमिति वाद्यं वादित्रमातोद्यं वा नाम यस्य तदिति त्रीणि ततादिचतुष्टयस्य । मृद्यन्ते इति मृदङ्गाः, मुराद्वेष्टनाज्जाता, मुरं वेष्टनं जातमेषामिति वा मुरजा इति द्वे मृदङ्गस्य । तेषां भेदास्तु त्रयः अङ्के उत्सङ्गे भवः अङ्क्यः, आलिङ्ग्यत इत्यालिङ्ग्यः, ऊर्ध्वं कायति शब्दायत इति ऊर्ध्वकः, तदुक्तम्—"हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वकः । आलिङ्ग्यश्चैव गोपुच्छो मध्यदक्षिण-वामगा" इति त्रीणि मृदङ्गभेदानाम् ॥ ५ ॥

ढोल नगाड़ा,　पु.　स.　स.　पु.
तुरही, बड़ा　**स्याद्यशःपटहो ढक्का[3] भेरी ( स्त्री ) दुन्दुभिः (पुमान्) ।**
नगाड़ा बजाने　पु.　पु. न.　पु.
का दण्ड　**आनकः पटहोऽस्त्री स्यात्कोणो 'वीणादिवादनम्' ॥ ६ ॥**

स्यादिति—यशोऽर्थः पटहः यशःपटहः, ढक् इति कायतीति ढक्केति द्वे ढक्कायाः ।

---

१ सूर्ये सुषिरामिव पस्पशाह्निकभाष्यस्थश्रुताविति प्रयोगात्सुषिरं दन्त्याद्यपि प्राच्यास्तु तालव्याद्येवेत्याहुः ॥

२ ततं चैवावनद्धं च घनं सुषिरमेव च । चतुर्विधन्तु विज्ञेयमातोद्यं लक्षणान्वितमिति ॥

३ नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् । उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥

बिभेति अस्या रवादिति भेरी भरिर्वा स्त्री स्यात्, दुन्दुइति शब्देन भातीति द्यामुभति शब्देनेति वा दुन्दुभिः पुमान्स्यादिति द्वे भेर्याः । आनयति प्राणयति सोत्सहान्करोति योधानिति आनकः, पटेन हन्यते पट इति शब्दं जहातीति वा पटहः अस्त्री स्यादिति द्वे पटहस्य । वीणादि वाद्यते येन धनुराद्याकृतिना स कुणयते इति कोणः कथ्यत इत्येकं वीणादिवादनदण्डस्य ॥ ६ ॥

वीणा का दण्ड, वीणा की मढ़ी, तुम्बी वीणा का स्वरूप, वीणाका बन्धन

पु. पु. पु. पु.
**वीणादण्डः प्रवालः स्यात्ककुभस्तु प्रसेवकः ।**
पु. पु. न.
**कोलम्बकस्तु कायोस्या उपानाहो निबन्धनम् ॥ ७ ॥**

वीणेति—वीणाया दण्डो वीणादण्डः, प्रकर्षेण वल्यते संव्रियते प्रवालः स्यादिति द्वे वीणादण्डस्य। कं वातं स्कुभ्नाति, कश्च कुश्च ककू तौ भाति प्रकाशयतीति वा ककुभः, प्रसेव्यत इति प्रसेवकः, प्रसेवोपीति द्वे वीणादण्डादधः स्थितशब्दगाम्भीर्यार्थचर्मावनद्ध-दारुमयभाण्डस्य । वीणाप्रान्तस्थवक्रकाष्ठस्येत्यन्ये—अस्या वीणायाः कायः अलाबु-दण्डककुभसमुदायस्तन्त्रीरहितः, कोलतीति कोल्, अम्बते, अम्व्यते वा अम्बकः कोल् चासावम्बकश्च कोलम्बक इत्येकं वीणास्वरूपस्य । उपनह्यतेऽनेनास्मिन्वा उपानाहः, निबध्यतेनेनास्मिन्वेति निबन्धनमिति द्वे यत्र तन्त्र्यो निबध्यन्ते तस्योर्ध्वभागस्य॥ ७ ॥

पु. पु. पु. पु.
बाजों का भेद **" वाद्यप्रभेदा " डमरुमड्डुडिण्डिमझर्झराः ।**
पु. पु. स. स.
नाचने वाली **मर्दलः पणवोन्ये च नर्तकीलासिके ( समे ) ॥ ८ ॥**

वाद्येति—डमरुमड्डुडिण्डिमझर्झरादयो वाद्यप्रभेदा भवन्ति तत्र डमिति शब्दमियर्तीति डमरुः, डमरुकमपीत्येकं डमरोः । स एव महान्मज्जतीति मड्डुरित्येकं महड्डमरोः डिण्डीति शब्दं मिनोति प्रकाशयतीति डिण्डिम इत्येकं तम्बूराख्यस्य । झर्झतीति, झर्झशब्दं रातीति वा झर्झर इत्येकं झांझाख्यातस्य । मर्दमुपमर्दं लातीति मर्दल इत्येकं मृदङ्ग-तुल्यवाद्यविशेषस्य । पणं व्यवहारं वाति गच्छतीति पणवः प्रणवोपीत्येकं शृंगाद्याख्या-तस्य । अन्ये च गोमुखहुडुक्कादयोपि वाद्यप्रभेदाः स्युरिति पृथक् पृथगेकैकं वाद्यविशे-षाणाम् । नृत्यतीति नर्तकः, नर्तकी, लसतीति लासकः, लासकीति उभे समे समा-नार्थे समानलिङ्गके चेति द्वे नर्तक्याः ॥ ८ ॥

न. पु. न.
विलम्ब, शीघ्र **विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ।**
मध्य तालदेना पु. पु.
ताल मिलाना **तालः "कालक्रियामानं" लयः साम्यमथास्त्रियाम् ॥९॥**
पु.न. न. न. न. न. न.
नाचना **ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने ।**

विलम्बितमिति—विलम्बितादीनि क्रमात्तत्त्वादीनि भवन्ति यथा विलम्बन्ते कर-चरणादयोऽत्रेति विलम्बितं, तननं तत्—तदस्यास्तीति तत्त्वं स्यादित्येकं विलम्बितस्य। द्रवन्ति शीघ्रं गच्छन्त्यत्रेति द्रुतम्—ओघनमोघः स्यादित्येकं द्रुतस्य तयोर्मध्ये भवत्वान्मध्यम्—हननं घनं स्यादित्येकं मध्यस्य। कालक्रियामानं कालक्रिययोर्मानं परिच्छेदनं तालः स्यादित्येकं तालस्य। गीतवाद्यपादादिन्यासानां क्रियाकालयोः साम्यं, लयनं लयः स्यादित्येकं लयस्य। अथेति—अस्त्रियाम् तण्डुना प्रोक्तं ताण्डवम्, नट्यते नटनम्, नटस्य कर्म नाट्यम्, लसितुमर्हं लास्यम्, नर्तितुमर्हं नृत्यम्, नृत्यते नर्तनम्, नृत्तमपीति षट् नृत्यस्य॥ ६। ½॥

न. न.
नाचना,गाना,बजाना इनका तौर्यत्रिकं "नृत्यगीतवाद्यं" नाट्यमिदं त्रयम्॥ १०॥
पु. पु. पु.
एकस्वर नाच-नेवाला पुरुष भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंस (श्चेति नर्तकः)।
स.
नाचकी वेश्या स्त्रीवेषधारी पुरुषो "नाट्योक्तौ" गणिकाज्जुका॥११॥

तौर्येति—नृत्यगीतवाद्यमिदं त्रयं तोरितुमर्हं तूर्यं मृदङ्गमुरजादि तत्र भवं तौर्यम्, त्रयोंऽशा यस्येति त्रिकं, तौर्योपलक्षितं त्रिकं तौर्यत्रिकम्, नटस्येदं नाट्यमिति द्वे नृत्यगीतवाद्यस्य। यः पुरुषः स्त्रीवेषं धर्तुं शीलमस्येति स्त्रीवेषधारी, नृत्यतीति नर्तकः स्यात्तस्मिन् भ्रुवोर्भुवा वा कुंसो भाषणमस्य, भ्रुवा कुंसयतीति वा भ्रकुंसः, भृकुंसः, भ्रुकुंसः, भ्रूकुंसश्चेति त्रीणि स्त्रीवेषधारिनर्तकपुरुषस्य। नाट्योक्तावित्यधिकारः प्रागङ्गहारात् या गणिका वेश्या सा अर्जतीत्यज्जुका स्यादित्येकं गणिकायाः॥ १०।११॥

पु. पु. पु.
बहनोई पण्डित "भगिनीपति" रावुत्तो भावो विद्वानथावुकः।
पु. पु. पु. पु.
बाप राजकुमार जनको युवराजस्तु कुमारो भर्तृदारकः॥ १२॥

भगिनीति—नाट्योक्तौ भगिन्याः पतिर्भगिनीपतिः, आपन्नमाप् तमुत्तनोतीत्यावुत्तः आवुत्तोपि स्यादित्येकं भगिनीपतेः। विद्वान् वेत्ता भावयति परिभावयतीति भावः स्यादित्येकं पण्डितस्य। अथेति—जनकः पिता अवतीति आवुकः स्यादित्येकं पितुः। युवा चासौ राजा च युवराजः, कुमारयतीति कुमारः, द्रियते दारकः, भर्तू राज्ञो दारको भर्तृदारकः इति द्वे युवराजस्य॥ १२॥

राजा पु. पु. पु. स.
राजकन्या राजा भट्टारको देवस्तत्सुता भर्तृदारिका।
महारानी स. स.
अन्यरानी देवी कृताभिषेकायामितरासु तु भट्टिनी॥ १३॥

राजेति—नाट्योक्तौ राजा भटतीति भट्, टलतीति टारकः, भट् चासौ टारकश्च भर्तृ स्वामित्वमृच्छतीति वा भट्टारः स एव भट्टारकः, दीव्यतीति देव इति द्वे राज्ञः। तस्य राज्ञः सुता भर्तुर्दारिका भर्तृदारिकेत्येकं राजकन्यायाः। कृताभिषेकायां दीव्यतीति देवीत्येकं बद्धपट्टाया राज्याः। इतरासु राजपत्नीषु भटतीति भट्टः सोऽस्त्यस्याः पतित्वेनेति भट्टिनी स्यादित्येकं राजपत्नीनाम् ॥ १३ ॥

अवध्यकथन, राजाका साला, माता, कन्या, मान्य

न. पु.
**अब्रह्मण्य (मवध्योक्तौ) 'राजश्यालस्तु' राष्ट्रियः।**
स. स. स. स. पु. पु.
**अम्बा माताथ बालास्याद्वासूरार्यस्तु मारिषः ॥ १४ ॥**[1]

अब्रह्मण्यमिति—अवध्योक्तौ वधं नार्हतीत्युक्तौ ब्रह्मणि साधु ब्रह्मण्यं, न ब्रह्मण्यमब्रह्मण्यमित्येकं ब्राह्मणाद्यवध्यस्य। राज्ञः श्यालः राष्ट्रेऽधिकृतः राष्ट्रियः स्यादित्येकं राजश्यालस्य। माता अम्ब्यते शब्द्यत इत्यम्बा स्यादित्येकं मातुः। अथेति—बाला कुमारी वास्यते स्वगृह इति वासूरित्येकं कन्यायाः। अर्तुं योग्यः आर्यः मारिषतीति मारिषः, मर्षणात्सहनाद्धिंसानिवारकत्वान्मारिषः मार्षश्चेत्येकं मान्यस्य ॥ १४ ॥

जेठी बहन, नाट्यसन्धि, ठीक कहना

स. स. न.
**अत्तिका "भगिनी ज्येष्ठा" निष्ठानिर्वहणे समे।**
स. स. स.
**हण्डे[2] हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति ॥ १५ ॥**

अत्तिकेति—ज्येष्ठा भगिनी अत्तामाता सैव अत्तिका अन्तिकापि वा स्यादित्येकं ज्येष्ठभगिन्याः। नियतं स्थानं निष्ठा, निर्वाहो निर्वहणमित्युभे समे समानार्थे न तु समानलिङ्गे शब्दार्णवे लिङ्गभेददर्शनादिति द्वे मुख-प्रतिमुख-गर्व-विमर्श-निर्वहणाख्याः पञ्चनाटके सन्धयस्तत्र पञ्चमस्य सन्धेः। नीचां प्रत्याह्वानं हिण्डते इति हण्डे स्यादित्येकं नीचाह्वानस्य। चेटीं प्रत्याह्वानं हिरञ्यते इति हञ्जे स्यादित्येकं चेट्याह्वानस्य। सखीं प्रत्याह्वानं हलतीति हला स्यादित्येकं सख्याह्वानस्य ॥ १५ ॥

लचककरना-चना, अभिप्रायकाप्रकाशक शरीर और मन की चेष्टा

पु. पु. पु. पु.
**अङ्गहारोऽङ्गविक्षेपो व्यञ्जकाभिनयौ ( समौ )।**
पु.स.न. पु.स.न.
**निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके ॥ १६ ॥**

अङ्गेति—अङ्गस्य हरणं स्थानात्स्थानान्तरे नयनमङ्गहारः, अङ्गस्य विक्षेपोऽङ्गुल्यादिविन्यासः अङ्गविक्षेप इति द्वे नृत्यविशेषेनमनस्य। व्यनक्तीति व्यञ्जकः, अभिनयत्यर्थमित्यभिनयः उभौ समौ समानार्थौ समानलिङ्गौ चेति द्वे मनोगतभावाभिव्यञ्जकस्य।

---

१ "कर्तव्यमाचरन्काममकर्तव्यमनाचरन्। तिष्ठति प्रकृताचारे स तु आर्य इति स्मृतः" (इति वसिष्ठः)॥

२ हण्डे-हञ्जे-हलेति त्रीण्यप्यव्ययानि ॥

अङ्गसत्त्वाभ्यां निर्वृत्ते आङ्गिकसात्त्विके द्वे त्रिषु त्रिलिङ्ग्यां स्याताम्। अङ्गेन निर्वृत्तं भ्रूविक्षेपादि—सत्त्वेन निर्वृत्तं स्तम्भादि, "निर्वृत्तेऽक्षद्यूतादिभ्यः" इति प्राग्वहतीयष्ठक्। "स्तम्भः स्वेदोथ रोमाञ्चःस्वरभङ्गोथ वेपथुः। वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका गुणाः" इति क्रमेणैकैकम्॥ १६॥

आठ रस **श्रृङ्गारवीरकरुणाद्भुतहास्यभयानकाः।**

पु. पु. पु. पु.

श्रृङ्गार रस **बीभत्सरौद्रौ च रसाः श्रृङ्गारः शुचिरुज्ज्वलः॥ १७॥**

श्रृङ्गारेति—श्रृङ्गारादयोऽष्टौ रस्यन्ते इति रसाः च शब्दाच्छान्तोपि नवमः,वात्सल्यं दशमश्च तत्र शान्तस्यालौकिकत्वेन, वात्सल्यस्य पुत्रादिस्नेहरूपत्वाद्रत्यात्मकत्वेन च न निर्दिष्टाविति अतएवाष्टानां विवरणं क्रियत इत्याह—श्रृङ्गं प्राधान्यमियर्तीति श्रृङ्गारः, शोचन्त्यनेनेति शुचिः, उज्ज्वलति प्रकाशत इत्युज्ज्वलः इति त्रीणि श्रृङ्गाररसस्य॥ १७॥

पु. पु. न. स. स.

वीर करुणा **उत्साहवर्धनो वीरः कारुण्यं करुणा घृणा।**

हास्य स. स. स. पु. पु.

बीभत्स रस **कृपा दयानुकम्पा स्यादनुक्रोशोऽप्यथो हसः॥ १८॥**

पु. न. पु.स.न. पु.स.न.

या चिढ़ाना **हासो हास्यं च बीभत्सं विकृतं त्रिष्विदं द्वयम्।**

उत्साहेति—उत्साहेन वर्धते, उत्साहं वर्धयतीति वा उत्साहवर्धनः, वीरयति, विशेषेण ईर्त्ते ईरयति वा वीरः इति द्वे वीररसस्य। करुणः करुणावांस्तस्य भावः कारुण्यम्, करणं करुणा, घ्रियतेऽनयेति घृणा, कृपणं कृपा, दयते रक्षत्यनयेति दया, अनुकम्पनमनुकम्पा, अनुक्रोशन्त्यनेनेत्यनुक्रोशोपि स्यादिति सप्त करुणारसस्य। अथेति—हसनं हसः,हसनं हासः, हसितुमर्हं हास्यमिति त्रीणि हास्यरसस्य। बीभत्सनं बीभत्साऽस्त्यत्रेति बीभत्सम्, विकरणं विकृतम् वैकृतोपीदं द्वयं त्रिलिङ्गेषु ज्ञेयमिति द्वे बीभत्सस्य॥ १८। ½॥

---

१ विभवैरनुभावैश्च युक्तो वा व्यभिचारिभिः। आस्वाद्यत्वात्प्रधानत्वात्स्थाय्येव तु रसो भवेदित्युक्ते रत्यादिः स्थायीभाव एव सामाजिकैश्चर्व्यमाणो रसपदव्यपदेश्यो भवति तत्र रतिस्थायिभावकः कान्ताद्यालम्बनकः स्रक्चन्दनाद्युद्दीपितः कटाक्षाद्यनुभावितो व्रीडादिसंचारितः श्रृङ्गारः १ उत्साहस्थायिभावको द्विषद्द्विजनादीनालम्बनकोऽपकारगुणापदुद्दीपितः प्रतीकारकरणदानाद्यनुभावितो हर्षवेगचिन्तादिसंचारितो वीरः २ शोकस्थायिभावको मृताद्यालम्बनकस्तद्गुणाद्युद्दीपितारोदनाद्यनुभावितो दैन्यादिसंचारितः करुणः ३ विस्मयस्थायिको विस्मयजनककर्म कर्तालम्बनको विस्मयकर्माद्युद्दीपितश्च कितताद्यनुभावितो हर्षादिसंचारितोद्भुतः ४ हासस्थायिभावको विकृतरूपालम्बनको वैकृताद्युद्दीपितो गलफुल्लाद्यनुभावितः श्रमादिसंचारितो हास्यः ५ भयस्थायिभावको विकटाद्यालम्बनकस्तद्विकटकर्माद्युद्दीपितः पलायताद्यनुभावितो जडतादिसंचारितो भयानकः ६ जुगुप्सा स्थायिभावको विण्मूत्राद्यालम्बनको दुर्गन्धाद्युद्दीपितो निष्ठीवनाद्यनुभावितो ग्लान्यादिसंचारितो बीभत्सः ७ क्रोधस्थायिभावको द्विपदालम्बनकस्तदपकाराद्युद्दीपितो विकत्थनाद्यनुभावितो गर्वादिसंचारितो रौद्रः ८ इत्यष्टानां लक्षणम्॥

पु. न. न. न. न.
आश्चर्य विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम् ॥ १९ ॥
न. न. न. न. न. न.
भयानक दारुणं भीषणं भीष्मं भीमं घोरं भयानकम् ।
न. न. न. न.
उग्ररस भयंकरं प्रतिभयं रौद्रं तूग्र (ममी त्रिषु ) ॥ २० ॥
पु.न. स. स. न. न.
भय चतुर्दश दरत्रासौ भीतिर्भीः साध्वसं भयम् ।

विस्मय इति–विस्मयनं विस्मयः, अदित्याश्चर्यार्थेऽव्ययं तस्य भवनमित्यद्भुतम्, आ इति चर्यतेऽभिनीयत इत्याश्चर्यम्, चित्रयतीति चित्रमपीति चत्वार्यद्भुतस्य । अथेति–भीरोरिदं भैरवम्, दारयति चित्तमिति दारुणम्, भीषयते भीषणम्, बिभेत्यस्मादिति भीष्मम्, भीमम्, हन्ति, घोरयतीति वा घोरम्, बिभेत्यस्मादिति भयानकम्, भयं करोतीति भयंकरम्, प्रतिगतं भयेन प्रतिभयमिति नव भयानकरसस्य। रुद्रस्येदं, रुद्रो देवतास्येति वा रौद्रम्, उच्यति क्रुधा सम्बन्ध्यत इत्युग्रमिति द्वे उग्ररसस्य। अमी अद्भुताद्याश्चतुर्दश तद्वति त्रिषु भवन्तीति–दीर्यतेऽस्मादिति दरः, त्रसनं त्रासः, भयनं भीतिः, भयनं भीः, साधूनामसमिति साध्वसम्, भयनं भयमिति षड् भयस्य ॥ १९।२०।½॥

पु.
मन का विकार अर्थ प्रकाशक "विकारो मानसो" भावोऽनुभावो (भावबोधकः)॥२१॥
पु. पु. पु. पु. स.
गर्व या घमण्ड प्रतिष्ठा या बड़प्पन गर्वो[2]ऽभिमानोऽहंकारो मानश्चित्तसमुन्नतिः ।

विकार इति–मानसो विकारः भावयति करोति रसानिति भावः स्यादित्येकं मनोविकारस्य । भावस्य बोधकः सूचको गुणक्रियादिः, अनुभावयत्यनुभावः स्यादित्येकं रत्यादिसूचकरोमाञ्चादेः । गर्वणं गर्वः, अभितः सर्वतो मानः अभिमानः, अहमिति करणमहंकार इति त्रीणि गर्वस्य । मत्समो नास्तीति मननं मानः, चित्तस्य समुन्नतिश्चित्तसमुन्नतिरिति द्वे अतियोग्यमपिप्रतिचित्तोत्कर्षप्रत्ययस्य ॥ २१ । ½ ॥

पु. पु. ३ पु. स.
अपमान अनादरः परिभवः परीभावस्तिरस्क्रिया ॥ २२ ॥
स. स. स. न. न.
लज्जा रीढावमाननावज्ञावहेलनमसूर्क्षणम् ।
न. स. स. स. स. स.
औरसे लज्जा मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः ॥ २३ ॥

---

१ "शृङ्गारो विष्णुदेवः स्याद्धास्यः प्रमथदैवतः । करुणो यमदैवस्तु स्याद्रौद्रो रुद्रदैवतः" इति भरतः ॥

२ दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकस्स्मयो मदः इति षट् मदस्य ॥

३ व्रजन्ति ते मूढधियः पराभवमिति प्रयोगश्च ॥

अनादर इति—आदरणमादरः न आदरः अनादरः, परिभवनं परिभवः, पराभवोपि परिभवनं परीभावः, पराभावोपि, तिरस्करणं तिरस्क्रिया, रेहणं रीढा, अवमाननमवमानना—विमानना, अवज्ञानमवज्ञा, अवहेलोऽवहेलनम्, न सूर्क्षणमसूर्क्षणमिति नव परिभवस्य। मन्दमक्षं वागादि यत्रेति मन्दाक्षम्, ह्रयणं ह्रीः, त्रपणं त्रपा, व्रीडनं व्रीडा, लज्जनं लज्जेति पञ्च लज्जायाः। सा लज्जा अन्यतश्चेत्तदा अपत्रपा स्यादित्येकं पित्रादेः पुरतोऽभावतलज्जायाः ॥ २२ । २३ ॥

सहना पर- स. स. स.
धन की चाह **क्षान्तिस्तितिक्षाभिध्या ( तु परस्वविषये स्पृहा ) ।**
असहना स. स. स.
पै लगाना **अक्षान्तिरीर्ष्यासूया तु "दोषारोपो गुणेष्वपि" ॥ २४ ॥**

क्षान्तिरिति—क्षमणं क्षान्तिः, तितिक्षणं तितिक्षेति द्वे क्षमायाः। परस्वविषये चौर्यादिना स्पृहा तु अभिध्यानमभिध्या इत्येकं परधनहरणचिन्तायाः। न क्षमणमक्षान्तिः, ईर्ष्यणमीर्ष्येति द्वे परोत्कर्षासहिष्णुत्वस्य। गुणेष्वपि दोषारोपणमसूयनमित्यसूया अभ्यसूया च स्यादित्येकमर्थदानादि गुणेषु दम्भकत्वादिरूपदोषारोपणस्य॥२४॥

न. पु. पु. पु. पु. स.
वैर शोक **वैरं विरोधो विद्वेषो मन्युशोकौ तु शुक् ( स्त्रियाम् ) ।**
पु. पु. पु.
पछितावा **पश्चात्तापोनुतापश्च विप्रतीसार ( इत्यपि ) ॥ २५ ॥**

वैरमिति—वीरस्य कर्म वैरम्, विरोधनं विरोधः, विद्वेषणं विद्वेष इति त्रीणि वैरस्य। मन्यते मन्युः, शोचनं शोकः, शोचनं शुक् स्त्रियां स्यादिति त्रीणि शोकस्य। पश्चात्तपनं पश्चात्तापः, अनुतपनमनुतापः, विप्रतिसरणं विप्रतीसारः, विप्रतिसार इत्यपि स्यादिति त्रीणि पश्चात्तापस्य ॥ २५ ॥

पु. पु. पु. पु. पु. स. स.
क्रोध **कोपक्रोधामर्षरोषप्रतिघारुट्क्रुधौ ( स्त्रियाम् ) ।**
न. पु. पु.
शील पागल **शुचौ तु चरिते शीलमुन्मादश्चित्तविभ्रमः॥ २६ ॥**

कोपेति—कोपनं कोपः, क्रोधनं क्रोधः, मर्षणं मर्षो न मर्षोऽमर्षः, अन्येषामपीति दीर्घत्वे आमर्षो दीर्घादिरपि, रोषणं रोषः, प्रतिहननं प्रतिघः, रोषणं रुट् रुषापि, क्रोधनं क्रुध्, क्रुधापि उभे स्त्रियां स्याताम् 'भामः क्रोधेरवौदीप्तौ' विति सप्त क्रोधस्य। शुचौ शुद्धे चरिते तु शीलनं, शील्यतेऽनेन वेति शीलम् चारित्रमात्रेपि शीलम् निष्ठा च शीलं

१ अषितः क्षाम्यतेः क्षान्तिः षितस्तु क्षमतेः क्षमेति कौमुद्याम् ॥

२ अमर्षो ह्रस्वादिः "किमप्यमर्षोऽऽनये भृशायते" ( इति भारवेः ) 'दीर्घादिरपि' इति हट्टचन्द्रः । निरुद्योगं निरामर्षं निर्वीर्यमरिनन्दनमिति विशाखः ॥

चारित्रं चरित्रं चरितं तथेति रत्नकोषादित्येकं शीलस्य । उन्मादनमुन्मादः, चित्तस्य विभ्रमोऽनवस्थानं चित्तविभ्रम इति द्वे उन्मादस्य ॥ २६ ॥

पु. स. न. न. पु. पु.न.
प्रेम **प्रेमा ( ना ) प्रियता हार्दं प्रेम स्नेहो ( ऽथ ) दोहदम् ।**
स. स. स. स. स. स. स. पु.
मनोरथ **इच्छा कांक्षा स्पृहेहातृड्वाञ्छा लिप्सा मनोरथः॥ २७ ॥**
पु. पु. पु. पु.स.
बड़ी चाहना **कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा ( द्वयोः ) ।**
धर्मचिन्ता पु. स. पु. स.
मानसी पीड़ा **उपाधि(र्ना) धर्मचिन्ता पुंस्याधि(र्मानसी व्यथा)॥२८॥**

प्रेमेति—प्रीणातीति प्रियस्तस्य भावः प्रेमा ना पुमान् स्यात् " प्रेमास्त्रीस्नेहनर्मणो-रित्युक्तत्वात्क्लीबोपि, प्रियस्य भावो प्रियता, हृदयस्य कर्म हार्दम्, प्रयणं प्रेम, नान्तं क्लीवम्, स्नेहनं स्नेह इति पञ्च स्नेहस्य। अथेति—दोहमाकर्षं ददातीति दोहदम् "अय-मिच्छामात्रवाच्यपि विशेषेण गर्भिणीच्छायां प्रयुज्यते"एषणमिच्छा,काङ्क्षणं काङ्क्षा, स्पृहणं स्पृहा, ईहनमीहा, तर्षणं तृट्तृषापि भागुरिमते, वाञ्छनं वाञ्छा, लिप्सनं लिप्सा, मन एव रथोऽत्रेति मनोरथ इव वेति मनोरथः, कमनं कामः, अभिलषणमभि-लाषः, तर्षणं तर्षश्चेति द्वादशेच्छायाः । सतर्षोऽत्यर्थं महांश्चेत्तदा भृशं लसनं,लालसनं वा लालसा द्वयोः स्त्रीपुंसयोः स्यादित्येकं लालसायाः । उपाधीयतेऽनेनेत्युपाधिः ना पुमान्स्यात्, धर्मस्य चिन्ता धर्मचिन्तेति द्वे धर्मविचारस्य । मानसी व्यथा पीडा आधीयते दुःखमनेनेत्याधिः पुंसि स्यादित्येकं मनसः पीडायाः ॥ २७ । २८ ॥

स्मरण मित्र- स. स. न. स. स.
मिलने की **स्याच्चिन्ता स्मृतिराध्यानमुत्कण्ठोत्कलिके ( समे ) ।**
जल्दी उत्साह पु. पु. पु.न.
बड़ा उत्साह **उत्साहोऽध्यवसायस्स्यात्स वीर्यमतिशक्तिभाक्॥ २९ ॥**

स्यादिति—चिन्तनं चिन्ता—चिन्तियापि, स्मरणं स्मृतिः, आध्यातमित्याध्यानमिति त्रीणि स्मरणस्य । उत्कण्ठनमुत्कण्ठा, उत्कलतीति उत्कलिका उभे समे समानार्थे समानलिङ्गे चेति द्वे कामादिजस्मृतेः । उत्सहनमुत्साहः, अध्यवसानमध्यवसायः स्यादिति द्वे उत्साहस्य । स उत्साहः अतिशक्तिभाक् चेत्तदा वीरे साधु वीर्यं स्यादि-त्येकमतिशयिताध्यवसायस्य ॥ २९ ॥

पु.न. पु. पु. पु. न. न.
छल या ठगई **कपटोऽस्त्रीव्याजदम्भोपधयश्छद्मकैतवे ।**
स. स. न. पु. स.
भूल **कुसृतिर्निकृतिः शाठ्यं प्रमादोऽनवधानता ॥ ३० ॥**

कपट इति—के मूर्ध्नि पट इवाच्छादकः, पटतीति पटः, कस्य ब्रह्मणोऽपि पटो व्यापको वा कपटः अस्त्री स्यादिति । व्यजन्ति क्षिपन्त्यनेनेति व्याजः, दम्भ्यतेऽनेनेति दम्भः, उपधीयते आरोप्यतेऽनेनेति उपधिः, छाद्यन्तेऽनेनेति छद्म, कितवस्य कर्म कैतवम्, कुत्सिता सृतिः कुसृतिः, निकृष्टा कृतिः क्रिया परप्रतारणरूपापराभीष्टस्य निकर्तनं वेति निकृतिः, शठतीति शठस्तस्य कर्म शठनं वेति शाठ्यमिति नव कपटस्य। प्रमदनं प्रमादः, न अवधानमस्य तस्य भावोऽनवधानतेति द्वे अविमृष्टकृत्यस्य ॥ ३० ॥

न. न. न. न.

खेल स्त्रियों का रस विशेष या चोचला, नखरा आदि

**कौतूहलं कौतुकं च कुतुकं च कुतूहलम् ।**
**स्त्रीणां विलासविव्वोकविभ्रमा ललितं तथा ॥ ३१ ॥**
**हेला[1] लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः ।**

कौतूहलमिति—कुतूं चर्मनिर्मितस्नेहपात्रं हलति, हलतीति हलं कुत्वा हलं तदेव कौतूहलम्, कुतूं कायतीति कुतुकं तदेव कौतुकम्—कुतुकम्, कुतूं हलतीति कुतूहलमिति चत्वारि कौतुकस्य। विलसनं विलासः ( प्रियसमीपगमने यः स्थानासनगमनविलोकितेषु विकारोऽकस्माच्च क्रोधस्मितचमत्कारमुखविक्लवनं स विलासः ) विवानं विर्गतिविशेषः, उच्यते समवैत्यत्रेति ओकः, विवोरोकः विव्वोकः ( अभिमतप्राप्तावपि गर्वादनादरः सापराधस्य स्रक्चन्दनादिना संयमनं ताडनं च विव्वोकः ) विभ्रमणं विभ्रमः ( मदरागहर्षजनितो विपर्यासो विभ्रमः यथा अनिमित्तमासनादुत्थायान्यत्र गमनम्, प्रियारब्धकथामाक्षिप्य सख्या सहालापनम्, मुधैव रुषितक्रोधौ पुष्पादीनां याच्ञा सहसैव तत्परित्यागः, वस्त्राभरणमाल्यानामकारणात: खण्डनं मननं चेति योषितां यौवनजो विकारो विभ्रमः ) ललनं ललितम् (प्रियं प्रति भावाविष्कृतं ललितम् ) हेलनं हेला ( स्याद्भावसूचको हावो हेलास्यैवानुभावनम् । प्रौढेच्छासुरते हेलेति वा ) लयनं लीः, लियं लातीति लीला ( अलब्धप्रियसमागमया स्वचित्तविनोदार्थं प्रियस्य या वेषगतिदृष्टिहसितभणितैरनुकृतिः क्रियते सा लीला ) इति शब्दात्प्रकारार्थादन्येऽपि ज्ञेयाः । विच्छेदनं विच्छित्तिः ( प्रियेण दत्तं प्रीतिनिबन्धनं स्वल्पमपि भूषणं विच्छित्तिः ) किलकिञ्चितमत्रेति किलकिञ्चितम् "हर्षाद्रुदितगीतादिव्यामिश्रं किलकिञ्चितम्, मोटनं मोट्टः मोट्टायते स्मेति मोट्टायितम् "प्रियकथासु साङ्गभङ्गजृम्भणं कर्णकण्डूयनं मोट्टायितम्", कुट्टनं कुट्टः कुट्टेन निर्वृत्तं कुट्टिमं तदेव संजातमस्येति कुट्टिमितम् "दुःखोपचारः सौख्येऽपि हर्षात्कुट्टिमितं मतम्" विहरणं विहृतम् "अवसरागतं वचनं व्याजादिना हृतं विहृतम्" अमी शृंगार-

---

१ लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् । मोट्टायितं कुट्टिमितं विब्बोको ललितं तथा । विहृतं चेति मन्तव्या दश स्त्रीणां स्वभावजाः ॥ ( इति नाट्यरत्नकोषः ) ॥

भावजाः शृंगाराद्रत्यादेः भावान्मनोविकाराच्च जाताः क्रियाश्चेष्टा अलंकाराख्या विलासादिकाः स्त्रीणां हवनं हावाः हावशब्दवाच्याः स्युरिति ॥ ३१ । १/२ ॥

क्रीड़ामात्र पु. पु.स. पु. स. स. न.

स्वरूप का **द्रवकेलिपरीहासाः क्रीडा खेला नर्म च ॥ ३२ ॥**

छिपाना पु. पु. न. स. स. न.

कूदना **व्याजोपदेशो लक्ष्यं च क्रीडा खेला च कूर्दनम् ।**

द्रव इति—द्रवणं द्रवः, केलनं केलिः,केलीति वा, परिहसनं परीहासः,क्रीडनं क्रीडा, खेलनं खेला,नरणं नर्मेति षट् क्रीडायाः परिहास्यस्य वा । व्यजनं व्याजः परद्रोहफलः, अपदेशनमपदेशः, लक्षणं लक्ष्यम् , लक्षं वेति त्रीणि स्वरूपाच्छादनस्य । क्रीडनं क्रीडा, खेलनं खेला, कूर्द्यत इति कूर्दनमिति त्रीणि कन्दुकादिक्रीडनस्य ॥ ३२ । १/२ ॥

पसीना पु. पु. पु. पु. स.

मूर्च्छा **घर्मो निदाघः स्वेदः स्यात्प्रलयो नष्टचेष्टता ॥ ३३ ॥**

आकारगोपन स. स. पु. पु.

दौड़ा दौड़ **अवहित्थाकारगुप्तिः समौ संवेगसंभ्रमौ ।**

सशब्दहास न.

थोड़ा हास **स्यादाच्छुरितकं(हासः सोत्प्रासः)समनाक् स्मितम्३४**

घर्म इति—जिघर्ति—घरति वाङ्गमनेनेति घर्मः, निदह्यतेऽनेनेति निदाघः, स्विद्यतेऽङ्गमनेनेति स्वेद इति त्रीणि प्रस्वेदहेतोस्तापस्य । प्रलयनं प्रलयः, नष्टा चेष्टा यस्य, तस्य भावो नष्टचेष्टतेति द्वे सात्त्विकभावस्य मूर्च्छापरपर्यायस्य वा । अवहिः स्थितिरित्यवहित्था, आकारस्य शोकादिजनितमुखम्लान्यादेर्गोपनमाकारगुप्तिरिति द्वे आकारगोपनस्य । संवेजनं संचलनम् संवेगः, संभ्रमणं संभ्रम उभौ समाविति द्वे हर्षादिना कर्मसु त्वरणस्य । उत्प्रासनमुत्प्रासः उत्प्रासेनाधिक्येन क्षेपणेन वा सहितः सोत्प्रासः, हासः आच्छुरणमाच्छुरितं तदेवाच्छुरितकं स्यादित्येकं परस्यामर्षजनकहासस्य । स हासो मनागल्पः स्मयनं स्मितं स्यादित्येकमल्पहासस्य ॥ ३३ । ३४ ॥

मध्यमहास न. पु. न.

रोमखड़ा होना **"मध्यमः स्याद्वि"हसितं रोमाञ्चो रोमहर्षणम् ।**

रोना न. न. न. पु.स.न. न.

जँभुआना **क्रन्दितं रुदितं क्रुष्टं जृम्भस्तु(त्रिषु)जृम्भणम् ॥ ३५ ॥**

मध्यम इति—स हासो मध्यमो महत्त्वाल्पहीनो विहसनं विहसितं स्यादित्येकं मध्यमहासस्य । रोम्णामञ्चनं रोमाञ्चः, रोम्णां हर्षणं रोमहर्षणमिति द्वे रोमाञ्चस्य ।

---

१ "ईषद्विकसितैर्दन्तैः कटाक्षैः सौष्ठवान्वितम् । अलक्षितद्विजद्वारमुत्तमानां स्मितं भवेत्" ॥ १ ॥

क्रन्दनं क्रन्दितम्, रोदनं रुदितम्, क्रोशनं क्रुष्टमिति त्रीणि रोदनस्य। जृम्भणं जृम्भ-त्रिषु, जृम्भ्यते जृम्भणमिति द्वे मुखादिविकासस्य ॥ ३५ ॥

पु. पु. न. न.
आशाभङ्ग करना रेंगना **विप्रलम्भो विसंवादो रिङ्गणं स्खलनं ( समे )।**
स. न. पु. पु. पु.
निद्रा **स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश (इत्यपि) ॥ ३६॥**

विप्रेति—विशेषेण प्रलम्भनं विप्रलम्भः, विरुद्धं सम्यग्वदनं विसंवादः इति द्वे अङ्गीकृतासंपादनस्य। रिङ्ग्यते रिङ्गितं वा रिङ्गणम्, रिङ्गणं वा स्खल्यते स्खलितं वा स्खलनम् उभे समे समानार्थे समानलिङ्गे चेति द्वे धर्मादिश्चलनस्य। बालानां हस्तपादगमनस्य पिच्छिलादौ पतनस्य वा। निद्राणं निन्दनं निन्द्यतेऽनयेति वा निद्रा, शय्यते शयनम्, स्वपनं स्वापः, स्वपनं स्वप्नः, संवेशनं संवेशः, स्वपनं सुप्तिरित्यपीति पञ्च निद्रायाः॥३६॥

स. स. स. स. स.
आलस्य भौंहैं टेढ़ी करना **तन्द्रीप्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः (स्त्रियाम्)।**
स. स. स.
टेढ़ा देखना **अदृष्टिः(स्यादसौम्येक्षिणे)संसिद्धिप्रकृती(त्विमे) ३७॥**

तन्द्रीति—तद्द्रातीति तन्द्रा, तन्द्रायाः करणं तन्द्रिः—तन्द्री वा, प्रमील्यते प्रमीलनं वा प्रमीलेति द्वे अत्यन्तश्रमादिना सर्वेन्द्रियासामर्थ्यस्य। कुटनं कुटिः, भ्रुवोः कुटिः भ्रकुटिः, भ्रुकुटिः, भ्रूकुटिः, भृकुटीत्यपीति स्त्रियामिति त्रीणि क्रोधादिना ललाटसंकोचनस्य। असौम्ये असुन्दरेक्षिणे विरुद्धा दृष्टिरदृष्टिरित्येकं क्रूरदृष्टेः। संसेधनं संसिद्धिः, प्रकरणं प्रकुरुते वा प्रकृतिः इमे इति द्वयोः स्त्रीत्वबोधनार्थमुक्तम् ॥ ३७ ॥

न. पु. पु. पु.
स्वभाव,कांपना **स्वरूपं च स्वभावश्च निसर्गश्चाथ वेपथुः।**
पु. पु. पु. पु. पु. पु.
उत्सव या महफिल **कम्पोऽथ क्षण उद्धर्षो मह उद्धव उत्सवः ॥ ३८ ॥**

## इति नाट्यवर्गः ॥

स्वरूपमिति—स्वं रूपं स्वरूपम्, स्वो भावः स्वभावः, निसर्जनं निसर्गः "निसर्गः सृष्टौ स्वभावे च" ( इति हैमः ) इति पञ्च स्वभावस्य। अथेति—वेपनं वेपथुः, कम्पनं कम्प इति द्वे कम्पस्य। अथेति—क्षणोति दुःखमिति क्षणः "क्षणः कालविशेषे स्यात्पर्वण्यवसरे मदे। व्यापारे विकलत्वे च पारतन्त्र्यमध्ययोः" ( इति हैमः ) उद्धर्षयति, उद्गतो हर्षोऽत्रेति वा उद्धर्षः, महनं महतीति वा महः, उद्धुनोति दुःखमिति उद्धवः उत्सु-

---

१ सुप्तिरप्यत्र—"सुप्तिः स्पर्शाज्ञता निद्रा विश्रम्भे शयने स्त्रियाम्" ( इति मेदिनी ) ॥
२ "संसिद्धिः प्रकृतौ सिद्धौ मदोन्मादामपि स्त्रियाम्" ॥

वतीति उत्सवः "उत्सवो मह उत्सेके इच्छाप्रसरकोपयोरिति पञ्चोत्सवस्य ॥ ३८ ॥
इति नाट्यवर्गविवरणम् ॥

## अथ पातालवर्गो व्याख्यायते ॥

न. न. न. न.
पाताल बिल अधोभुवनपातालबलिसद्म रसातलम् ।
पु. न. न. न. न.
छिद्र पोलमात्र नागलोकोऽथ कुहरं शुषिरं विवरं बिलम् ॥ १ ॥
न. न. न. न. न. स. स.
पृथ्वी में पोल छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः ।
पु.स. पु. पु.स.न.
छेदसमेत वस्तु गर्तावटौ "भुवि श्वभ्रे" सरन्ध्रे शुषिरं ( त्रिषु ) ॥ २ ॥

अध इति–अधश्च तद्भुवनं च अधोभुवनम् अधः अपि "अधोऽव्ययं स्यादपाताले" ( इति त्रिकाण्डशेषः ) पतन्ति पापादत्रेति पातालम्, बलेः सद्म–बलिसद्म, रसायास्तलं रसातलम्, नागानां लोको नागलोकः, अधोलोकफणिभुवनादयोऽपीति पञ्च पातालस्य । कुं हरति कुहं रातीति वा कुहरम्, शुषिरस्यास्तीति शुषिरम्, विवृणोति विव्रियते वा विगतो वरोऽस्मात्–वीनां पक्षिणां वरं वा विवरम्, बिलति भिनत्ति बिल्यते वा बिलम्, छिद्रयते–छिद्यते वा छिद्रम् "छिद्रं विवररन्ध्रवत् । गर्ते दोषे" (इति हैमः ) निश्चयेन व्यथनं भयं चलनं वा यत्रेति निर्व्यथनम्, रोचतेऽत्रेति रोकम्, रमणं रम् क्रीडा तां धरति, रन्धयतीति वा रन्ध्रम्, श्वभ्रयतीति श्वभ्रम्, उप्यतेऽत्रेति वपा, शुष्यत्यत्रेति शुषिः, सुष्ठु स्यतीति सुषिरोपीत्येकादश बिलस्य । भुवि श्वभ्रे, गिरतीति गर्तः, अवन्त्यस्मादित्यवटः अवटिरपीति द्वे भूरन्ध्रस्य । सरन्ध्रे वस्तुनि शुषिरस्यास्तीति शुषिरं त्रिषु त्रिलिङ्ग्यां ज्ञेयमित्येकं सरन्ध्रवस्तुनः ॥ १ । २ ॥

पु.न. न. न. न. न.
अँधेरा
बड़ा अँधेरा अन्धकारो (ऽस्त्रियां) ध्वान्तं तमिस्रं तिमिरं तमः ।
न. न.
थोड़ा अँधेरा (ध्वान्ते गाढे) ऽन्धतमसं (क्षीणे) ऽवतमसं (तमः) ॥ ३ ॥

अन्धकार इति–अन्धनमन्धस्तं करोतीत्यन्धकारः स्त्रियां न स्यात्–ध्वन्यते स्मेति ध्वान्तं, तमोऽस्त्यत्रेति तमिस्रास्त्याश्रयत्वेनास्येति वा तमिस्रम्, तिम्यतीति तिमिरम्, ताम्यत्यनेनेति तमः सान्तोऽदन्तश्च तमसमपि "तमसं तु निशाचर्म" (इति त्रिकाण्डशेषः) इति पञ्चान्धकारस्य। गाढे घने ध्वान्ते अन्धकारे अन्धयत्यन्धं अन्धं च तत्तमश्चेत्यन्धतमसमित्येकं घनान्धकारस्य । क्षीणे ध्वान्ते तु अवहीनं तमः अवहीनतमसमित्येकं क्षीणान्धकारस्य ॥ ३ ॥

---

१ "रन्ध्रन्तु दूषणेच्छिद्रे" ( इति विश्वमेदिन्यौ ) ॥

न. पु. पु.

चारों ओर अँधेरा / नाग / नागेश्वर / नागराज / छोटा सांप / अजगर

विष्वक् सन्तमसं नागाः काद्रवेया (स्तदीश्वरः)।
पु. पु. पु. पु. १ पु.
शेषोऽनन्तो वासुकिस्तु सर्पराजो (ऽथ) गोनसे ॥ ४ ॥
पु. पु. पु. पु.
तिलित्सः स्या (दजगरे) शयुर्वाहस (इत्युभौ)।

विष्वगिति—विष्वक् सर्वतस्तमः समन्तात्तमः सन्तमसं स्यादित्येकं व्यापकतमसः। नगे भवा न गच्छन्तीति वा अगाः न अगाः नागाः, कद्र्वा अपत्यानि काद्रवेयाः सर्पेभ्योऽन्ये देवयोनयो अमीति द्वे फणालांगूलवतो नराकारसर्पस्य। तेषामीश्वरस्तदीश्वरः, शिष्यते शेषः "शेषोऽनन्तेऽवधेसीरिण्युपयुक्तेतरेऽपि च। शेषा निर्माल्यदाने स्यात्" (इति हैमः) न अन्तोऽस्येति अनन्त इति द्वे नागाधिराजस्य। अथेति—वसु रत्नं के मूर्ध्नि यस्येति, वसु कायति वा वसुकस्तस्यापत्यं वासुकिः, सर्पाणां राजा सर्पराजः इति द्वे सर्पराजस्य। अथेति—गोरेव नासिका यस्येति तस्मिन् गोनसे, तेलनं तिल् तामेति तिलितं स्यति, तिलिं गतिं त्सरतीति वा तिलित्सः स्यादिति द्वे सर्पराजस्य। गिरतीति गरः अजस्य गरः अजगरस्तस्मिन् शेते इति शयुः, वहति—वाहं गतिं स्यतीति वा वाहसः "वाहसोऽजगरेवारिनिर्याणसुनिषण्णयोः" (इति हैमः) इति उभौ स्यातामिति त्रीणि अजगरसर्पस्य ॥ ४ । १/२ ॥

पु. पु. पु. २ पु.

विषशून्य डेंडहा / कराइत / केंचुलीहीन

अलगर्दो जलव्यालः(समौ) राजिलडुण्डुभौ ॥ ५ ॥
पु. पु. पु. पु.
मालुधानो मातुलाहिर्निर्मुक्तो मुक्तकञ्चुकः।

अलेति—लगतीति लग्—अर्दतीत्यर्दः लग् चासावर्दश्च निर्विषत्वात्तद्भिन्नः, अलतीत्यलः, गर्दतीति गर्दः अलश्चासौ गर्दश्चेति वा अलगर्दः अलं गृध्यतीति अलगर्धो वा जलस्थो व्यालः जलव्याल इति द्वे जलव्यालस्य। राजी रेखास्यास्ति राजिं लातीति वा राजिलः "डुण्डु" इति भणति डुण्डुना भातीति वा डुण्डुभः उभौ समौ समानार्थौ समानलिङ्गाविति द्वे निर्विषद्विमुखसर्पस्य। मालुरोषधी तत्र धानमस्येति मालुधानः "मालुधानश्चित्रसर्पे महापद्मे च दृश्यते" (इत्युत्पालिनी) मातुलयतीति मातुलः आहन्तीति आहिः मातुलश्चासावहिश्चेति मातुलाहिरिति द्वे चित्रसर्पस्य। अमोचि मुच्यते स्मेति वा मुक्तः—कञ्चुकः नास्ति मुक्तोऽस्येति निर्मुक्तः, मुक्तः कञ्चुको येनेति मुक्तकञ्चुक इति द्वे मुक्तत्वक्सर्पस्य ॥ ५ । १/२ ॥

---

१ "गोनासायनियोजितागदरजाः" (इति राजशेखरः) ॥

२ "निर्मुक्तोनिर्विषः सर्पो राजिलः परिकीर्तितः" इति स्मरणात् ॥

सर्पमात्र

पु.१ पु. पु. पु. पु. पु.
**सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजंगमः ॥ ६ ॥**
पु. पु. पु. पु. पु.
**आशीविषो विषधरश्चक्री व्यालः सरीसृपः ।**
पु. पु. पु. पु. पु.
**कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥ ७ ॥**
पु. पु. पु. पु.
**दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः ।**
पु. पु. पु. पु. पु.
**उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥ ८ ॥**

सर्प इति—सर्पतीति सर्पः, पर्दते—पिपर्त्ति स्वमिति पृदाकुः, भुजतीति भुजः सन् गच्छतीति भुजगः, भुजेन कौटिल्येन गच्छतीति भुजङ्गः, आहन्तीत्यहिः, भुजेन गच्छतीति भुजंगमः, आशीस्तालुगतादंष्ट्रा तस्यां विषमस्येति आशीविषः, धरतीति धरः, विषस्य धरो विषधरः, चक्रमस्यास्तीति चक्री, व्याडतीति व्यालः, कुटिलं सर्पतीति सरीसृपः, कुण्डलं कुण्डलाकारतास्यास्ति कुण्डली, गूढाः पादा अस्य, गूढं पादयतीति वा गूढपाद्, चक्षुः श्रवः कर्णोऽस्येति चक्षुःश्रवाः, काकस्येवोदरमस्य—ईषदकतीति काकमीषत्कुटिलगतिमदुदरमस्येति वा काकोदरः, फणास्यास्तीति फणी, दर्व्याकारः फण एव करो यस्य दर्वीफणां करोतीति वा दर्वीकरः, दीर्घं पृष्ठमस्येति दीर्घपृष्ठः, गर्हितं दशतीति दन्दशूकः, बिले शेते इति बिलेशयः, उरसा गच्छतीति उरगः, पन्नं पतितं यथातथा गच्छतीति पन्नगः, भोगः फणो वक्रगतिर्वास्यास्तीति भोगी, जिह्मं कुटिलं गच्छतीति जिह्मगः, पवनोऽशनं यस्येति पवनाशन इति पञ्चविंशतिः सर्पमात्रस्य ॥ ६ । ७ । ८ ॥

सर्प सम्बन्धी
फण
केचुली
विषमात्र

पु.स.न. पु.स. पु.स.
**त्रिष्वाहेयं "विषास्थ्यादि" (स्फटायान्तु) फणा (द्वयोः) ।**
पु. पु. पु. पु.२ पु.
**(समौ) कञ्चुकनिर्मोकौ क्ष्वेडस्तु गरलं विषम् ॥ ९ ॥**

त्रिष्विति—सर्पस्य विषास्थि कञ्चुकादि अहौ भवमाहेयं त्रिषु त्रिलिङ्ग्यां स्यादित्येकं सर्पविषास्थ्यादेः । स्फुटतीति स्फटा, फटापि 'तस्यां' फणतीति फणा उभे द्वयोः स्त्रीपुंसयोः स्यातामिति द्वे फणायाः । कञ्चते इति कञ्चुकः, निश्चयेन मुच्यते इति निर्मोकः, उभौ समौ समानार्थौ समानलिङ्गाविति द्वे सर्पत्वचः । क्ष्वेडते मोहयति—क्ष्विद्यन्त्यनेन वा क्ष्वेडः, गिरति जीवमिति गरस्तं लातीति गरलम्, वेवेष्टि कायमिति विषमिति पुंसि क्लीबे चेति त्रीणि विषस्य ॥ ९ ॥

---

१ लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा । कुंभीनसः फणधरो हरिर्भोगधरस्तथा। अहेः शरीरं भोगः स्यादाशीरप्यहिदंष्ट्रिका ॥ द्वयोर्वर्तमानायांस्फटायांफणापि द्वयोरिति केचित् ॥२ ( गरलं पन्नगविषे तृणपूलकमानयोः ) ( इति हैमः ) ॥

पु.न. पु.न. पु.न.१

विष भेद "पुंसि क्लीबे च" काकोलकालकूटहलाहलाः ।

पु. पु. पु. पु.

सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः ॥ १० ॥

पु. पु.

दारदो वत्सनाभ (श्च विषभेदा अमी नव) ।

पुंसीति—ईषत्कोलतीति काकोलः, कालमपि कूटयति—कालस्य कर्मणो मृत्योर्वा कूटो राशिरिवेति वा कालकूटः, हलमिवाहलतीति हलाहलः हाला इव हलतीति हालाहलः, हालं हलतीति हालहलः एते काकोलादिहलाहलान्तास्त्रयोपि पुंसि क्लीब च स्युः । सुराष्ट्रे भवः सौराष्ट्रिकः, सारोष्ट्रेभवः सारोष्ट्रिको वा शुक्लिके देशे भवः शौक्लिकेयः, ब्रह्मणः पुत्रः ब्रह्मपुत्रः, प्रदीपयतीति प्रदीपनः, दरदि देशे भवः दारदः, वत्सस्य नाभिरिव नाभिरस्येति वा वत्सनाभः, अमी नव विषभेदा भवन्ति इति प्रत्येकं स्थावरविषभेदानाम् ॥ १० । १/२ ॥

विषवैद्य सांप काप कड़नेवाला पु. पु. पु. पु.

विषवैद्यो जाङ्गुलिको व्यालग्राह्यहितुण्डिकः ॥ ११ ॥

इति पातालभोगिवर्गः ॥

विषेति—विद्यामधीते वेत्ति वा वैद्यः विषस्य वैद्यो विषवैद्यः, जाङ्गुलीं विषविद्यामधीयते वेद वा जाङ्गुल्या दीव्यतीति वा जाङ्गुलिक इति द्वे गारुडिकस्य । व्यालं गृह्णातीति व्यालग्राही, अहेस्तुण्डं मुखं तेन दीव्यतीति अहितुण्डिक—अहितुण्डको वेति द्वे सर्पग्राहिणः ॥ ११ ॥

इति पातालभोगिवर्गविवरणम् ॥

## अथ नरकवर्गो व्याख्यायते ॥

पु. पु. पु. स.

नरक, स्यान्नारकस्तु नरको निरयो दुर्गतिः (स्त्रियाम्) ।

पु. पु.स. पु. पु.

नरकभेद, तद्भेदास्तपनावीचिमहारौरवरौरवाः ॥ १ ॥

प्रेत, पु. न. पु.

वैतरणीनदी संहारः कालसूत्रं (चेत्याद्याः) "सत्त्वास्तु" नारकाः ।

पु. स. स. स.

अलक्ष्मी प्रेता वैतरणी (सिन्धुः) स्यादलक्ष्मीस्तु निर्ऋतिः ॥ २ ॥

---

१ "स्निग्धं भवत्यमृततुल्यमहो कलत्रं हालाहलं विषमिवापगुणं तदेव" यथा कामपमायिमयेन्द्रियकुण्डैर्यद्यपि दुष्कृतहालहलौघः" ॥

स्यादिति–नरति–नृणातीति वा नरकः स एव नारकः मुकुटस्वामिमते तु नराः कायन्त्यत्रेति नरकः, निर्गतोऽयादिति निरयः, दुर्गमनं दुष्टा गतिर्वेति दुर्गतिः स्त्रियां स्यादिति चत्वारि नरकस्य " तद्भेदाः तस्य नरकस्य भेदाः " तपतीति तपनः, नास्ति वीचिः सुखमत्रेति अवीचिः, " रुरुर्नाम हिंसको प्राणिविशेषः " महतोरुरोरयं महारौरवः, रुरोरयं रौरवः, संहरणं सम्यग् हारोऽत्रेति वा संहारः " सम्यग् घातोऽत्रेति संघातो वा " कालान्ययोमयानि सूत्राण्यत्रेति कालसूत्रमिति आद्यशब्देन तामिस्रान्धतामिस्रासिपत्रवनादयः । तस्य नरकस्य भेदा ज्ञेयाः इति पृथगेकैकं नरकभेदानाम् । नरके भवा नारकाः नरकस्थाः सत्त्वाः जन्तवः प्राणुः, प्रयन्ति स्मेति वा प्रेताः परेता अपि भवन्तीत्येकं नरकस्थप्राणिनाम् । स्यदन्ते आपोऽत्रेति सिन्धुः नारकी नदी,विगतस्तरणिर्यत्र तत्रभवा, विगता तरणिर्नौ यत्रेति वा वैतरणी स्यादित्येकं नरकनद्याः । लक्ष्मीविरुद्धा अलक्ष्मीः, नियता ऋतिर्घृणा यस्याः, निर्गता ऋतेः शुभादिति वा निर्ऋतिरिति द्वे अलक्ष्म्याः ॥ १ । २ ॥

नरकमें ढकेलना **विष्टिराजूः**[१स.] **कारणा**[स.] **तु यातना**[स.] **तीव्रवेदना**[स.][स.] ।

तीव्रपीडा **पीडा**[स.] **बाधा**[स.] **व्यथा**[स.] **दुःखम्**[न.] **आमनस्यं**[न.] **प्रसूतिजम्**[न.] ॥ ३ ॥

दुःख या मानसी व्यथा

शारीर पीडा **स्यात्कष्टं**[न.] **कृच्छ्रम्**[न.] **आभीलं**[न.] **(त्रिष्वेषां भेद्यगामि यत्)** ।

## इति नरकवर्गः ॥

विष्टिरिति–विशति क्लेशम्–विष्णाति विष्यते वेति विष्टिः, आजवते, आअज्यते वेत्याजूरिति द्वे स्त्रियाविति द्वे नरके हठात्प्रक्षेपस्य । कारणामिति कारणा, यातनमिति यातना, वेदनमिति वेदना, तीव्रा चासौ वेदना चेति तीव्रवेदनेति त्रीणि तीव्रदुःखस्य । पीडनं पीडा,बाधनं बाधा,आबाधनमाबाधेति वा "आबाधा वेदना दुःखम्" ( इति हलायुधः ) व्यथनं व्यथा, दुष्टानि खान्यस्मिन्, दुर्निन्दितं खनति–दुःखयतीति वा दुःखम्, मानसे साधु मानस्यं,मानस्याद्भिन्नममानस्यम्–अमनसो भाव आमनस्यमिति वा प्रसूतेर्जातं प्रसूतिजमिति षट् मनोव्यथायाः । कषति स्मेति कष्टम्,कृन्ततीति कृच्छ्रम्,आसमन्ताद्भियं लातीति आभीलमिति त्रीणि शरीरपीडायाः । नवापिदुःखस्येत्येके । एषां मध्ये यद्भेद्यगामिद्रव्यगामितत्रिष्विति ज्ञेयम्–यथा "दुःखासेवा, दुःखसुतो निर्गुणः, सर्वं दुःखं विवेकिन इति" ॥ ३ । ३ ॥

इति नरकवर्गविवरणम् ॥

---

१ "विष्टिः कर्मकरे तु वाच्यलिङ्गो यथा "विशन्तु विष्टयः सर्वे रुद्रा इव महौजसः "

२ "हठादप्रभृतिकः क्लेशो विष्टिराजूश्च कीर्त्यते" ( इति कोषान्तरम् ) ॥

### अथ वारिवर्गो व्याख्यायते ॥

पु.　पु.　पु.　पु.　पु.

समुद्र　समुद्रोऽब्धिरकूपारः पारावरः सरित्पतिः ।

पु.　पु.　पु.　पु.　पु.　पु.

उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः ॥ १ ॥

पु.　पु.　पु.　पु.

रत्नाकरो जलनिधिर्यादःपतिरपांपतिः ।

पु.　पु.

समुद्रभेद　(तस्य प्रभेदाः ) क्षीरोदो लवणोद (स्तथापरे)॥ २ ॥

समुद्र इति–समुनत्तीति, समीचीना उद्रा जलचरविशेषा यस्मिन्निति, सह मुद्रया मर्यादया वर्तत इति वा समुद्रः, आपो धीयन्तेऽत्रेत्यब्धिः, कुं पृथ्वीं पिपर्तीति कूपारो न कूपारोऽकूपारः, न कूपमृच्छतीति, कुश्च उश्च कौ पिपर्ति तद्भिन्नोऽकूपारः, पारमावृणोति–पारावारावस्य स्त इति वा पारावारः पारमपारमस्येति पारापारो वा, सरितां पतिः सरित्पतिः, उदकानि सन्त्यत्रेति उदन्वान्, उदकानि धीयन्तेऽत्रेति उदधिः, स्यदन्ते आपोऽत्रेति सिन्धुः, सरो नीरं गतिर्वास्त्यस्मिन्निति सरस्वान्, सगरस्य राज्ञोऽयं सागरः, अर्णांसि जलानि सन्त्यत्रेति अर्णवः, रत्नानामाकरो रत्नाकरः, जलानि निधीयन्तेऽत्रेति जलनिधिः, यादसां जलजन्तूनां पतिरिति यादःपतिः, अपांपतिरिति पञ्चदश समुद्रस्य । तस्य समुद्रस्य प्रभेदाः–क्षीरमुदकं यस्येति क्षीरोदः, लवणमुदकं यस्येति लवणोदः तथा अपरे प्रभेदाः–इक्षुरसोदः, सुरोदः, दधिमण्डोदः, स्वादूदः, घृतोदश्चेति पृथक् पृथगेकैकं समुद्रविशेषाणाम् ॥ १ । २ ॥

स.बहु.व.　न.　न.　न.　न.　न.

जलमात्र　आपः[1](स्त्री भूम्नि) वार्वारि सलिलं कमलं जलम् ।

न.　न.　न.　न.　न.　न.

पयः कीलालममृतं जीवनं भुवनं वनम् ॥ ३ ॥

न.　न.　न.　न.　न.

कबन्धमुदकं[2] पाथः पुष्करः सर्वतोमुखम् ।

न.　न.　न.　न.　न.　न.　न.　न.

अम्भोर्णस्तोयपानीयनीरक्षीराम्बुशंबरम् ॥ ४ ॥

न.　पु.न.　पु.स.न.　पु.स.न.

जलविकार　मेघपुष्पं घनरस (स्त्रिषु द्वे) आप्यमम्मयम् ।

---

१ आपोभिर्मार्जनं कृत्वेति स्मृतेः ॥

२ उदकशब्दसमानार्थ उदशब्दो विद्यते । तथा च ‘ प्रसन्नोदम् ’ इत्यसंज्ञायामप्युदशब्दःप्रयुज्यते इति कैयटः । ‘प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं दकं चेति’ हलायुधः ॥

आप इति–आप्नुवन्ति–आप्यन्ते वा आपः स्त्रियां बहुत्वेषु आपः सान्तं क्लीवं च वारयतीति वार्, वार्य्यतेऽनेनेति वारि, सलतीति सलिलम्, कम्यत इति कमलम्, जलतीति जलम्, पयते, पीयते वा पयः, कीलां ज्वालामलति वारयति औवाग्नेः कीलां लातीति वा कीलालम्, न मृतं मरणमस्त्यस्मिन्निति अमृतम्, जीव्यतेऽनेनेति जीवनम्, भूयते–भवन्त्युत्पद्यन्तेऽनेनेति भुवनम्, वन्यते संभज्यते सेव्यते वा वनम्, कं सुखं बध्नातीति कबन्धम्, कमन्धमिति पठित्वा द्वे नामनीति केचिदाहुः–उनत्तीति उदकम्–उदं, दकं वा पातीति पाथः, पुष्णातीति पुष्करम्, सर्वतो मुखान्यस्येति सर्वतोमुखम्, आप्नोति, आप्यते, अम्भते वा अम्भः, ऋच्छतीत्यर्णः, तौतीति तोयम्, पीयते–पायते वति पानीयम्, नीयते निश्चयेन राति सुखमिति–निर्गतं रादग्नेर्वेति नीरम्, क्षियति–घस्यते वेति क्षीरम्, अम्बते इत्यम्बु, शं वृणोति–शंवं संवरणं रातीति शंवरम्, मेघस्य पुष्पमिवेति मेघपुष्पम्, घनस्य रसो घनरसो घनरसं वेति सप्तविंशतिर्जलस्य। अपांविकारोयमित्याप्यमाप्या वा, अपां विकारोऽम्मयम्–अम्मयीति वा द्वे त्रिषु स्याता मिति द्वे जलविकारस्य ॥ ३ । ४ । १/२ ॥

पु. पु. पु.स. पु.स.

लहर **भङ्गस्तरङ्ग ऊर्मिर्वा (स्त्रियां)वीचि "रथोर्मिषु" ॥ ५ ॥**

हिलकोरा पुं. पु. पु.

भँवर **महत्सूल्लोलकल्लोलौ स्यादावर्तो (ऽम्भसां भ्रमः)।**

न. पु. पु. स.

बूंद **पृषन्तिबिन्दुपृषताः ( पुमांसो ) विप्रुषः(स्त्रियः) ॥ ६ ॥**

भङ्ग इति–भज्यते इति भङ्गः, तरतीति तरङ्गः, ऋच्छतीत्यूर्मिः, वयति, ऊयते वेति वीचिः उभे वा स्त्रियां स्यातामिति चत्वारि तरङ्गस्य । अथेति–महत्सु ऊर्मिषु तरङ्गेषु उत्लोडयति, लोलयतीति वा लोलं, उद्गतश्चासौ लोलश्चेति वा उल्लोलः, कं जलं तस्य लोलः कल्लन्तेऽनेनेति वा कल्लोल इति द्वे महातरङ्गस्य । अम्भसां जलानां भ्रमणम्भ्रमः, आवर्तनमावर्तः स्यादित्येकं जलभ्रमणस्य। पर्षतीति पृषत् बहुत्वे पृषन्ति "बहुवचनमतन्त्रम्" विन्दतीति बिन्दुर्बहुत्वे बिन्दवः, पर्षतीति पृषतः बहुत्वे पृषताः "पृषन्ति बिन्दुपृषताः" इति त्रिभिर्द्वन्द्व इत्यन्ये । एते पुमांसः, विगता रुद्धा वा प्रुट् दाहोऽस्मादिति, विप्रोषणं वा विप्रुट् बहुत्वे विप्रुषः स्त्रियः स्युरिति चत्वारि जलकणस्य ॥५।६॥

न. पु. पु. पु.

जल का निक- **वक्राणि पुटभेदाः स्युर्भ्रमाश्च जलनिर्गमाः ।**

लना नाली या न. न. न. न. पु.स.न.

नल किनारा **कूलं रोधश्च तीरं (च) प्रतीरं (च) तटं (त्रिषु) ॥ ७ ॥**

वक्राणीति–वञ्चन्तीति वक्राणि, क्रियन्तेऽनेन चक्राणीति वा पुटं संश्लिष्टं

---

१ " पयः पृषन्तिभिः स्पृष्टा वान्ति वाताः शनैः शनैः " ( इति जाम्बवतीविजयवाक्यम् ) ॥

भिन्दन्तीति पुटभेदाः स्युरिति द्वे चक्राकारेण जलानामधोयानस्य । भ्रमन्ति जला-न्यत्रेति भ्रमाः, निर्गमनानि निर्गमाः,जलानां निर्गमा जलनिर्गमा इति द्वे जलनिस्सरण-जालकस्य, नद्यादावधःस्थजलस्योर्ध्वनिस्सरणस्य वा । कूलयतीति कूलम्, रुणद्धीति रोधः सान्तोऽदन्तश्च, तीरयतीति तीरं, प्रकृष्टं तीरं प्रतीरम्, तटतीति तटं त्रिषु त्रिलिङ्ग्यां स्यादिति पञ्च तीरस्य ॥ ७ ॥

न. न. न.

दोनों किनारा **पारावारे ( परार्वाची तीरे ) पात्रं ( तदन्तरम् )।**

दोनों का मध्य पु.न. पु.न.

द्वीप या टापू **द्वीपोऽस्त्रियामन्तरीपं ( यदन्तर्वारिणस्तटम् ) ॥ ८ ॥**

पारेति—परार्वाची तीरे पारावारे स्याताम्। परं तीरं पारम्, अर्वाक्तीरम् अवारम् अवार्यत इत्यावारम् न वारस्त्यत्रेति वा अवारमित्येकं परतीरावरतीरयोः । तदन्तरं तयोः पारावारयोरन्तरं मध्यं, पिबन्त्यत्र पान्त्यस्मादिति वा पात्रं स्यादित्येकं कूलयोर्मध्य-स्य । वारिणो जलस्य यदन्तस्तटं तत् द्विर्गता आपोऽत्रेति द्वीपः, अन्तर्गता आपो-ऽत्रेति अन्तरीपम् उभे अस्त्रियां पुंनपुंसकयोः स्यातामिति द्वे जलमध्यस्थस्थानस्य ॥८॥

न. न. न.

जल मध्यका स्थल, बालू **(तोयोत्थितं) तत्पुलिनं सैकतं सिकतामयम्।**

का स्थल, पु. पु. पु.न. पु. पु.

कीचड़ **निषद्वरस्तु जम्बालः पङ्को (ऽस्त्री) शादकर्दमौ ॥ ९ ॥**

तोयेति—तोयोत्थितं यत्स्थलं तत्पुलतीति पुलिनं कथ्यते इत्येकं जलादचिरनिर्गततटस्य। सिकताः सन्त्यस्मिन्निति सैकतम्, सिकतानां विकारः सिकतामयमिति द्वे वालुकामयतट-स्य। निषीदन्त्यत्र—निषदनं निषदासनं तस्य वर आवरक इति वा निषद्वरः। जमति—जम्बनं जम्बमालातीति वा जम्बालः, पञ्च्यते पञ्चत्यनेन वेति पङ्कः अस्त्री स्यात् । शीयन्ते-ऽस्मिन्ननेन—शीयते—नश्यति—श्यतीति वा शादः, कर्दतीति कर्दम इति पञ्च कर्दमस्य॥९॥

पु. पु. पु. पु.

नहर गड्ढा **जलोच्छ्वासाः परीवाहाः कूपकास्तु विदारकाः ।**

जल पु.स.न. स. स. स.

नाव **नाव्यं (त्रिलिङ्गं नौतार्ये) स्त्रियां नौस्तरणिस्तरिः ॥१०॥**

जलेति—जलान्युच्छ्वसन्त्येभिः, जलानामुच्छ्वसनं वेति जलोच्छ्वासाः, परिवह-न्त्येभिः, परिवहनं वेति परीवाहाः परिवाहाश्चेति द्वे प्रवृद्धजलस्य निर्गममार्गस्य सम-धिकजलस्य सर्वतोवहनस्य वा । नौतार्ये नौतरणार्हे नावा तार्यं नाव्यं त्रिलिङ्गं स्यादि-त्येकं नौतरणयोग्यजलस्य । नुद्यते—नयतीति नस्तमवतीति वा नौः, नौरेव नौका, तर-

१ उपार्जितानामर्थानां त्याग एव हि रक्षणम् । तडागोदरसंस्थानां परीवाह इवाम्भसामिति दीर्घलक्ष्यम्—दीर्घाभावे 'परिवाहो जगतः करोति किमिति माघः' ॥

न्त्यनयेति तरणिः, तरणी वा तरन्त्यनयेति—तरिः तरी वेते त्रयः स्त्रियां स्युरिति त्रीणि नौकायाः ॥ १० ॥

बेड़ा पु.न. पु. पु. पु.न.
सोता **उडुपं (तु) प्लवः कोलः स्रोतो (म्बुसरणं स्वतः)।**
उतराई पु. न. स. स.
डोंगी **आतरस्तरपण्यं स्याद्द्रोणी[1] काष्ठाम्बुवाहिनी ॥ ११ ॥**

उडुपमिति—उडुनो जलात्पाति—उडूनीव पातीति वा उडुपम्, "उडुपश्चन्द्रभेलयोः" (इति धरणिः) प्लवत इति प्लवः, कोलतीति कोल इति त्रीणि तृणादिनिर्मित-तरणसाधनस्य। स्वतोम्बु सरणं स्रवतीति स्रोतः श्रोतोपि स्यादित्येकमकृत्रिमजलवह-नस्य। आतरन्त्यनेनेत्यातरः, तरणं तरस्तस्य पण्यं तरपण्यं स्यादिति द्वे नद्यादितरणे देयमूल्यस्य। द्रवतीति द्रोणी द्रोणिर्वा द्रुणातीति द्रुणी द्रुणिर्वा काष्ठा काष्ठमयी पुनः पुनरम्बु वहतीति अम्बुवाहिनी, काष्ठा चासावम्बुवाहिनी चेति द्वे काष्ठकृतनौ-काकाराम्बुसेचन्याः ॥ ११ ॥

नाविक याजहाजी पु. पु. पु. पु.
पतवार पकड़ने **सांयात्रिकः[2] पोतवणिक् कर्णधारस्तु नाविकः।**
बाला खेवैया पु. पु. पु. पु.
मस्तूल **नियामकाः पोतवाहाः कूपको गुणवृक्षकः ॥ १२ ॥**

सामिति—समुदितानां गमनं द्वीपान्तरगमनं वा संयात्रा सा प्रयोजनमस्येति सां-यात्रिकः, पोतेनोपलक्षितो वणिक् पोतवणिगिति द्वे वहित्रगामिनो वणिजः। कर्णः श्रोत्रमरित्रं (चेति दुर्गः) तं धरतीति कर्णधारः, नावा तरतीति नाविक इति द्वे नावि-कस्य नौपृष्ठदण्डधारकस्य वा। नियच्छन्ति पोतमिति नियामकाः, पोतं वहन्तीति पोतवाहा इति द्वे वहित्रवाहकस्य। कूपं कायतीति कूपकः, गुणानां रज्जूनां वृक्षः स एव गुणवृक्षक इति द्वे नौमध्यस्थरज्जुबन्धनकाष्ठस्य नौबन्धनकीलकस्य वा ॥ १२ ॥

डांड़ पु. स. न. पु.
पतवार **नौकादण्डः क्षेपणी स्यादरित्रं केनिपातकः।**
काठ की कुदार स. पु. न. न.
डोलची **अभ्रिः (स्त्री) काष्ठकुद्दालः सेकपात्रं (तु)सेचनम् ॥ १३ ॥**

नौकेति—नौकायां दण्डो नौकादण्डः, क्षिप्यतेऽनयेति क्षेपणी—क्षेपणिः—क्षिपण्यपि स्यादिति द्वे नौकापार्श्वद्वयबद्धचालनकाष्ठस्य। ऋच्छत्यनेनेत्यरित्रम्, के जले निपा-तोऽस्येति केनिपातक इति द्वे नौपृष्ठस्थचालनकाष्ठस्य। अभ्रतीत्यभ्रिः स्त्री स्यात्, कुमुद्दालयतीति कुद्दालः, काष्ठस्य कुद्दालः काष्ठकुद्दाल इति द्वे पोतादेर्मलापनयनार्थं

१ " द्रोणीभिरम्भसि चरन्ति महार्णवस्य " इत्यनेकार्थकैरवाकरकौमुदी ॥
२ " संपूर्वस्य यातेर्द्वीपान्तरगमने वृत्तिः " इति चाणक्यटीकेति कलिङ्गः ॥

काष्ठादिरचितकुद्दालस्य । सेकस्य पात्रं सेकपात्रम्, सिच्यतेऽनेनेति सेचनमिति द्वे नौस्थजलनिःसारणपात्रस्य ॥ १३ ॥

न. पु.स.न.
आधीनाव, **(क्लीबे)ऽर्धनावं(नावोऽर्धे)"ऽतीतनौके"ऽतिनु (त्रिषु)।**
तैरनेवाला, पु.स.न.पु.स.न. पु.स.न. पु.स.न. पु.स.न.
निर्मल,गन्दा **त्रिष्वागाधात्प्रसन्नोच्छः कलुषोनच्छ आविलः॥१४॥**

क्लीब इति—नावोऽर्धे नौकार्धे नावोऽर्धमर्धनावमित्येकमर्धनौकायाः । अतीता नौर्येनेत्यतीतनौकस्तस्मिन्, नावमतिक्रान्तमतिनु त्रिषु त्रिलिङ्ग्यां स्यादित्येकं नौकामतिक्रान्तजलादेः । अतः परमागाधादगाधमभिव्याप्य त्रिषु त्रिलिङ्गेषु ज्ञेयम् । प्रासददिति प्रसन्नः, न छ्यति दृष्टिम्, न छादयत इति वा अच्छ इति द्वे निर्मलस्य । लुपतीति-लुषः, कस्य जलस्य लुषो घातकः कलुषः, भिन्नोऽच्छादित्यनच्छः, आविलतीत्याविल इति त्रीणि मलिनजलस्य ॥ १४ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.
गहरा उथला **निम्नं गभीरं गम्भीरमुत्तानं ( तद्विपर्यये )।**
बड़ा गहरा पु.स.न. पु स.न. पु. पु. पु.
मलाह **अगाधमतलस्पर्शे कैवर्ते दासधीवरौ॥ १५॥**

निम्नमिति—निमनतीति निम्नम्, गच्छन्ति गातेजलजन्तवोऽत्रेति वा गभीरम्—गम्भीरं वेति त्रीणि गम्भीरस्य । तस्य गम्भीरस्य विपर्यये उद्गतस्तानो विस्तारोऽस्मादुत्तानमित्येकमुत्तानस्य । अतलस्पर्शे तलस्याधोभागस्य स्पर्शः न सोऽत्रेति तस्मिन्—नास्ति गाधः स्थितिरत्रेत्यगाधमिति द्वे अतिनिम्नस्य । के जले वर्तन्ते केवर्तास्तेषामयं घातकः कैवर्तस्तस्मिन्—दशति मत्स्यान्, दाश्यते मूल्यमस्मै वेति दाशः दासश्च,दधाति मत्स्यानिति धीवर इति त्रीणि कैवर्तस्य ॥ १५ ॥

पु. न. न. न.
जाल छतरी **आनायः (पुंसि) जालं स्याच्छणसूत्रं पवित्रकम्[१]।**
स. स. न. न.
टोकरी बंसी **मत्स्याधानी कुवेणी स्याद् बलिशं मत्स्यवेधनम्॥१६॥**

आनाय इति—आनयन्ति मत्स्याननेन—आसमन्तान्नायोनेनेति वा आनायः पुंसि स्यात् । जले शिष्यते, जलति घनीभवतीति वा जालमिति द्वे जालस्य । शणातीति शणस्तस्य सूत्रम् शणसूत्रम्, पवित्रमुपवीतं तद्वदिवेति पवित्रकमिति द्वे शणसूत्रजालस्य । मत्स्या आधीयन्तेऽत्रेति मत्स्याधानी, कुत्सितं वेणन्ते मत्स्या अस्यामिति कुवेणी स्यादिति द्वे मत्स्यस्थापनपात्रस्य । बलिनो मत्स्यान्छ्यतीति बलिशं डलयोरैक्याद्बडिशमपि । विध्यतेऽनेनेति वेधनं मत्स्यानां वेधनं मत्स्यवेधनमिति द्वे बडिशस्य ॥ १६ ॥

---

१ "इवे प्रतिकृतौ" इति कन् । पवित्राद्विपरीतलक्षणया संज्ञायां कः ॥

पु. पु. पु. पु. पु. पु.

मछली, गलफटी मछली — पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः ।

पु. पु. पु. पु.

या बच्चे — विसारः शकली(चाथ)गडकः शकुलार्भकः ॥ १७ ॥

पृथ्विति—पृथूनि रोमाण्यस्येति पृथुरोमा, झषति—झष्यते वेति झषः, माद्यतीति मत्स्यः, मीनाति–मीयते वेति मीनः, विविधं सरतीति विसारी स एव वैसारिणः, अण्डाज्जायते स्मेत्यण्डजः, विशेषेण सरतीति विसारः, शकलमस्यास्तीति शकलीत्यष्टौ सामान्यमत्स्यानाम् । अथेति–गडतीति गडकः गडोपि वा, शकुलस्यार्भकः शकुलार्भक इति द्वे शकुलार्भकस्य ॥ १७ ॥

पु. पु. पु. पु.

पढ़िना, सूस — सहस्रदंष्ट्रः[२] पाठीन उलूपी शिशुकः ( समौ ) ।

पु. पु. पु.स. पु.स.

झिंगवा, सहरी — नलमीनश्चिलिचिमः प्रोष्ठी तु शफरी (द्वयोः) ॥ १८ ॥

सहस्रेति—सहस्रं दंष्ट्रा यस्येति सहस्रदंष्ट्रः, पाठीं पृष्ठं नमयतीति पाठीनः, अवश्यं पठति पाठी द्विजस्तस्येन इवापेक्षितः, हव्यकव्ययोः प्रशस्तत्वाद्वेति द्वे पाठीनमत्स्यस्य । उ विस्मयजनकं रूपमस्यास्ति, ओः शम्भोः रूपमुरूपमस्यास्तीति वा उलूपी, शिशुः शिशुमारस्तस्य प्रतिकृतिरिव शिशुकः उभौ समाविति द्वे सूस इतिख्यातमत्स्यविशेषस्य । नलवनस्थो मीनः नडाभो मीन इति वा नलमीनः तलमीनोपि वा चिलिं चिलिं विलासं मिमीते चिलचिमः—चिलीचिमः—चिलीचिमिरिति द्वे नलवनचारिणो मत्स्यविशेषस्य । प्रकृष्ट ओष्ठोऽस्या इति प्रोष्ठी, शफं रातीति शफरी उभे द्वयोः स्त्रीपुंसयोः स्यातामिति द्वे सहरीइतिख्यातमत्स्यस्य ॥ १८ ॥

पु. न. पु.

छोटी मछली — क्षुद्राण्डमत्स्यसंघातः पोताधानमथो झषाः ।

पु. पु. पु. पु. पु. पु.

बहुतही छोटी, तिमिंगिल — रोहितो मद्गुरःशालो राजीवःशकुलस्तिमिः ॥ १९ ॥

पु. न. पु.

जलजन्तु — तिमिंगिलादयश्चाथ यादांसि जलजन्तवः ।

पु. पु. पु. पु.

जलजीव भेद — (तद्भेदाः)शिशुमारोद्रशङ्कवो मकरा "दयः" ॥ २० ॥

क्षुद्रेति— क्षुद्रादण्डाज्जाता मत्स्याः क्षुद्राण्डमत्स्यास्तेषां संघातः समूहः पोते वहित्रे आधीयते पोतोऽर्भक आधीयतेऽत्रेतिवा पोताधानमिति द्वे अण्डादचिरनिर्गतमत्स्यसंघस्य ।

---

१ "अण्डजः कृकलासे स्यात्खगे मीने भुजंगमे । कस्तूर्यामण्डजा प्रोक्ता" इत्युपलभ्यते ॥

२ "सहस्रदंष्ट्रेवादालः पाठीने चित्रवल्लिकः । शकुलेस्यात्कलकः" इति विशेषमत्स्यत्वेनोक्तः ॥

अथविति–झषाः झषविशेषाः कथ्यन्ते, रोहति–रोहणं रोहो जातोऽस्येति रोहितः, मज्जतीति मद्गुरः,शाड्यत इति शालः सालश्च, राजीरेखास्यास्तीति राजीवः, शक्नोति गन्तुं वेगेनेति शकुलः, ताम्यतीति तिमिः, तिमिं गिरतीति तिमिंगिलः आदिशब्दात्तिमिंगिलगिलनन्दीवर्तादयो ज्ञेया इति पृथगेकैकं मत्स्यविशेषाणाम्। अथेति–यान्ति वेगेन, यामदन्तीति, यां दस्यन्तीति वा यादांसि, जलानां जन्तवो जलजन्तव इति द्वे जलजन्तूनाम्। "तेषां जलजन्तूनां भेदा उच्यन्ते" शिशून्मारयतीति शिशुमारः, उनत्तीति उद्रः,शङ्कतेऽस्मादिति शंकुः, कृणातीति करो मनुष्याणां करो,मंकते मङ्कस्तं रातीति वा मकरः आदिना ग्राहकुम्भीरादयो ज्ञातव्या इति पृथगेकैकं जलजन्तुविशेषाणाम्॥ १९।२०॥

केंकड़ा,कछुआ स्यात्कुलीरः (पु.) कर्कटकः (पु.) कूर्मे (पु.) कमठ (पु.) कच्छपौ (पु.)।

घड़ियाल, नाक ग्राहो[1] (पु.) ऽवहारो (पु.) नक्रस्तु[2] (पु.) कुम्भीरो (पु.) ऽथ महीलता (स.)॥ २१॥

केंचुआ ,गोह गण्डूपदः (पु.) किञ्चुलको (पु.) निहाका (स.) गोधिका (स.) (समे)।

स्यादिति–कुलति, कौलीयते, कुलमस्यास्तीति कुली तमीरयति, लयनं लीः, कुत्सिता लीस्तां रातीति वा कुलीरः,कृणातीति कर्,कटतीति कटः कर् चासौ कटश्च,कर्कं श्वेतवर्णं टलतीति वा कर्कटः स एव कर्कटक इति द्वे कर्कटकस्य। कुत्सितः कौ वा ऊर्मिवेगोऽस्येति कूर्मस्तस्मिन्, काम्यते, के जले मठतीति वा कमठः, कच्छेन पिबतीति कच्छप इति त्रीणि कच्छपस्य। गृह्णातीति ग्राहः, अवह्रियतेऽनेन, अवहरतीति वा अवहार इति द्वे ग्राहस्य। न क्रामति दूरस्थलमिति नक्रः, कुम्भिनं हस्तिनमीरयतीति कुम्भीर इति द्वे नक्रस्य। अथेति–मह्या लतेव कृशत्वदीर्घत्वाभ्यामिति महीलता, गण्डवो ग्रन्थयः पदान्यस्येति गण्डूपदः, किञ्चिच्चुलुम्पतीति किञ्चुलः स एव किञ्चुलक इति त्रीणि 'केचुवा' इति ख्यातस्य। नियतं जहाति भुवमिति निहाका, गुध्यतीति गोधा सैव गोधिका इति द्वे 'गोह' इति ख्यातायाः॥ २१। १/२॥

जोंक रक्तपा (स.) तु (जलौकायां[3]) "स्त्रियां भूम्नि" जलौकसः (स.)॥२२॥

सीपी, शंख मुक्तास्फोटः (पु.) (स्त्रियां) शुक्तिः (स.) शङ्खः (पु.न.) स्यात्कम्बु (पु.न.) (रस्त्रियाम्)।

छोटाशंख,घोंघा क्षुद्रशङ्खाः (पु.) शङ्खनकाः (पु.) शम्बूका (पु.स.) जलशुक्तयः (स.)॥ २३॥

---

१ "ग्राहो ग्रहे जलचरे" (इति हैमः)॥
२ "नक्रं नासाग्रदारुणोः" नक्रो यादसि (इति हैमः)॥
३ "जलौकापि जलोका स्याज्जलूका जलजन्तुका:" (इति तारपालः)॥

रक्तपेति–जलमोकोऽस्या जलौका–जलोका–जलूकापि तस्यां रक्त पिबतीति रक्तपा, जलमोको यासामिति जलौकसः स्त्रियां भूम्नि बहुत्वे जलं तदोकश्चास्तीति जलौकस एकवचनमदन्तत्वं चोपपाद्यमिति मुकुटादयोपीति त्रीणि जलौकायाः । मुक्ताः स्फुटन्त्यत्रेति मुक्तास्फोटः, शुच्यति, शोचति, शोकतीति वा शुक्तिः स्त्रियां स्यादिति द्वे शुक्तिकायाः । शं खनति, शङ्खमस्य, शाम्यत्यलक्ष्मीमिति वा शङ्खः, काम्यते इति कम्बुरेतावस्त्रियां पुंनपुंसके स्यातामिति द्वे शङ्खस्य । क्षुद्राश्च ते शङ्खाश्चेति क्षुद्रशङ्खाः, शङ्कन्ते शङ्कनास्त एव शङ्कनकाः,शङ्खस्य नखा इव शङ्खनखा अपि शं खनन्तीति शङ्खनास्त एव शङ्खनका वेति द्वे क्षुद्रशङ्खस्य । शाम्यन्तीति शम्बूकाः, जलजाः शुक्तयो जलशुक्तय इति द्वे शम्बूकानाम् ॥ २२ । २३ ॥

मेघा या मेढक, पु. पु. पु. पु. पु. पु.
छोटे कीडे, **भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः ।**
मेढकी, स. स. स. स. स. स.
कछुई **शिली गण्डूपदी भेकी वर्षाभ्वी कमठी दुलिः ॥ २४ ॥**

भेक इति–बिभेतीति भेकस्तस्मिन्, मण्डंति, मण्डयति जलाशयमिति वा मण्डूकः, वर्षासु भवतीति वर्षाभूः, शाडते, शालते वा शालूरः सालूरश्च, प्लवते इति प्लवः, दृणाति शब्दैः कर्णाविति दर्दुर इति षट् मण्डूकस्य । शिलतीति शिलस्तज्जातीया तद्भार्या वेति शिली, गण्डो ग्रन्थयः पदान्यस्य तद्भार्या तज्जातीया वेति गण्डूपदी इति द्वे किंचुलकभार्यायाः, क्षुद्रकिञ्चुलकजातेर्वा । भेकस्य भार्या तज्जातीया वेति भेकी, वर्षाभ्वी इत्यसाधु ङीविधायकाभावात्स्त्रियामपि वर्षाभूरित्येव अन्ये तु गौरादित्वान्ङीषमिच्छन्ति अतएव भागुर्यमरमालयोः 'वर्षाभ्वी' इति दृश्यते, इति द्वे मण्डूक्याः क्षुद्रमण्डूकस्य वा । कमठजातीया कमठस्य भार्या वेति कमठी, दोलतीति दुलिरिति द्वे कच्छप्याः ॥ २४ ॥

स. पु. स.
मद्गुरी जोंकभेद **(मद्गुरस्य प्रिया)शृङ्गी दुर्नामा दीर्घकोशिका ।**
जलाशय पु. पु. पु.
कुण्ड **जलाशया जलाधारा (स्तत्रागाधजलो)ह्रदः ॥ २५ ॥**

मद्गुरस्येति–मद्गुरो मत्स्यभेदः योग्यतया सादृश्याद्वा तस्य प्रिया भार्या शृणातीति शृङ्गी, मद्गुरीत्यपीत्येकं मद्गुर्य्याः । दुर्निन्दितं नामास्या इति दुर्नामा–दुर्नाम–दुर्नाम्नी, दीर्घः कोशो यस्या दीर्घकोशिका, दीर्घकोषिका वा इति द्वे 'झिनाई' इति ख्यातायाः । जलमाशयो हृदयं येषामिति, जलान्याशेरते तिष्ठन्त्यत्रेति वा जलाशयाः, आध्रियन्तेऽत्रेत्याधाराः जलस्याधारा जलाधारा इति द्वे जलाशयस्य । तत्र तेषु मध्ये अगाधं जलं यत्र स जलाशयः ह्रादते पचाद्यचि, पृषोदरादित्वादह्रस्वे च ह्रद इत्येकमगाधजलाशयस्य ॥ २५ ॥

पु. न.
चरही या **आहावस्तु निपानं(स्यादुपकूपजलाशये)।**
पु. पु. पु. पु.न.
प्याऊ कूआं **पुंस्येवान्धुःप्रहिः कूप उदपानं तु (पुंसि वा) ॥ २६ ॥**

आहाव इति–उपकूपजलाशये कूपान्तिकजलाधारे आहूयन्तेऽत्रेत्याहावः, नियतं पिबन्त्यस्मिन्निति निपानं स्यादिति द्वे कूपसमीपरचितजलाधारस्य । अम्यते, अन्धयतीति वा अन्धुः, प्रह्रियत इति प्रहिः, कुवन्ति मण्डूका यस्मिन्निति, कुत्सिता ईषद्वा आपोऽत्रेति कूपः एते त्रयः पुंस्येव भवन्ति । उदकं पिबन्त्यस्मिन्निति उदपानं तु स्थाने च उचितः वा पुंसि स्यादिति चत्वारि कूपस्य ॥ २६ ॥

गड़ाड़ी स. स. पु.
जगति **नेमिस्त्रिकास्य वीनाहो (मुखबन्धनमस्य यत्)।**
पुखरिया
बिना बनाया स. न. पु.न. पु. न.
तालाब **पुष्करिण्यान्तु खातं स्यादखातं देवखातकम् ॥ २७ ॥**

नेमिरिति–अस्य कूपस्य नयन्त्यनयेति नेमिः, तिस्रोऽस्रयोऽस्यास्त्रिका स्यादिति द्वे कूपस्यान्तरे रज्ज्वादिधारणार्थदारुयन्त्रस्य । अस्य कूपस्य यन्मुखबन्धनं तत् विनह्यतेऽनेनेति वीनाहः विनाहश्चेत्येकं कूपमुखे इष्टकादिभिर्बद्धस्य । पुष्कराणि सन्त्यस्यामिति पुष्करिणी तस्यान्तु अखानीति खातं स्यादिति द्वे समचतुरस्रखातस्य । खाताद्भिन्नमखातम्, देवेन खातं देवखातं तदेव देवखातकम् "अखातो देवखातक" इति पुंस्काण्डेऽमरदत्तात्पुंस्यपीति द्वे अकृत्रिमजलाशयस्य देवद्वारस्थजलाशयस्य वा ॥ २७ ॥

पु. पु.न. पु. स. न.
तलाब **पद्माकरस्तडागो (ऽस्त्री) कासारः सरसी सरः।**
बड़ा सरोवर
छोटा सरोवर पु. पु.न. न. स. स.
बावड़ी **वेशन्तः पल्वलं चाल्पसरो वापी (तु) दीर्घिका ॥ २८ ॥**

पद्मेति–पद्मानामाकरः पद्माकरः, तडयते तडागः, तडाकश्च अस्त्री स्यात् । तटम् अकति, अगति वा तटाकः तटागश्चेति द्वे सपद्मागाधजलाशयस्य । कासते, ईषत्सारोऽस्य, कासमृच्छतीति वा कासारः, स्रियते इति सरसी, सरतीति सरः "सरो नीरतडागयोः" (इति कोषान्तरम्) । इति त्रीणि कृत्रिमपद्माकरस्य । पश्चापि सरोमात्रस्येत्यन्ये । विशन्ति भेकादयोऽत्रेति वेशन्तः, पलतीति पल्वलम्–पल्वलश्च । अल्पं च तत्सरश्च अल्पसरः इति त्रीणि पल्वलस्य । उप्यन्ते पद्माद्यस्यामिति वापी–वापिरपि दीर्घा इव दीर्घिकेति द्वे वापिकायाः ॥ २८ ॥

न. स. पु.

खाई बाँध खेयन्तु परिखाधार(स्त्वम्भसां यत्र धारणम् ) ।

न. न. पु. स. स.

थावला स्यादा[1]लवालमावालमावापोऽथ नदी सरित् ॥ २९ ॥

स. स. स. स. स.

नदी तरङ्गिणी शैवलिनी तटिनी ह्रदिनी धुनी ।

स. स. स. स. स.

स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा ॥ ३० ॥

खेयमिति–खन्यते इति खेयम्, परितः खन्यत इति परिखति द्वे दुर्गादिपरितः खातस्य । यत्र अम्भसां जलानां धारणं भवति तत्र आध्रियते जलमस्मिन्नित्याधारःस्यादित्येकं बाँध इतिख्यातस्य । आसमन्ताज्जलस्य लवमालातीति आलवालम्, लवमालाति तद्भिन्नं नञ्समासे अलवालो ह्रस्वादिरित्यन्ये। आवलतेऽम्भोऽनेन, आईषत् वाला वृक्षा अत्रेति आवालम्, आवपन्ति जलमत्रेत्यावाप इति त्रीणि वृक्षमूलकृतजलाधारस्य । अथेति–नदतीति पचाद्यचि 'नदट्' इति टित्त्वनिपातनात् 'टिड्ढेति' ङीप् नदी, सरतीति सरित्, तरङ्गाः सन्त्यस्यामिति तरङ्गिणी, शैवलमस्त्यस्यामिति शैवलिनी, तटमस्त्यस्या इति तटिनी, ह्रदाः सन्त्यस्यामिति ह्रदिनी, ह्रादिन्यपि। धुनोतीति धुनी, स्रोतांसि सन्त्यस्या इति स्रोतस्वती, स्रोतस्विन्यपि । द्वीपमस्त्यस्यामिति द्वीपवती, स्रवतीति स्रवन्ती, निम्नं गच्छतीति निम्नगा, अपां समूह आपं तेन गच्छतीत्यापगा–अपगापीति द्वादश नद्याः ॥ २९ । ३० ॥

स. स. स. स.

गंगा गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा ।

स. २ स. स. स.

भागीरथी त्रिपथगा[2] त्रिस्रोता भीष्मसूरपि ॥ ३१ ॥

गङ्गेति–गच्छन्ति पापान्यनयेति गङ्गा, विष्णुः पदं स्थानं यस्या इति विष्णुपदी, जह्नो राजर्षेस्तनया जह्नुतनया, सुराणां निम्नगा सुरनिम्नगा, भगीरथस्येयं भागीरथी, त्रीन्पथो गच्छति–त्रयाणां पथां समाहारस्त्रिपथं तेन गच्छतीति वा त्रिपथगा त्रीणि स्रोतांसि यस्यास्त्रिस्रोता, भीष्मं सूते इति भीष्मसूरपीत्यष्टौ गङ्गायाः ॥ ३१ ॥

---

१ "इहैव जम्बूतरुमालवालवत्परीयुषांचैर्भरतेऽब्धिनावृते" इति प्रयोगाद्दीर्घादिः । अलवालरोधिपुपयः सुबिभ्रतः स पलाशिराशिरिव मूलसंततिः " इति माघाद्ध्रस्वादिरपि ॥

२ तथा च भारते " क्षितौ तारयते मर्त्यान्नागांस्तारयतेप्यधः । दिवि तारयते देवांस्तेन त्रिपथगा स्मृता" ( इति मुकुटः ) ॥

स. स. स. स.
यमुना **कालिन्दी सूर्यतनया यमुना शमनस्वसा।**
स. स. स. स.
नर्मदा **रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका॥ ३२॥**

कालिन्दीति—कलिन्दस्येयं कालिन्दी, सूर्यस्य तनया सूर्यतनया, यच्छतीति यमुना, शमनस्य स्वसा शमनस्वसेति चत्वारि यमुनायाः। रेवते इति रेवा, नर्मददाति, द्यति वा नर्मदा, सोमात्सोमवंशजातपुरूरवस उद्भवति, सोमोऽमृतमुद्भवत्यस्याः, सोमाद्रुद्राद्भवतीति वा सोमोद्भवा, मेकलस्य मेखलस्य वा ऋषेरद्रेर्वा कन्यकेति चत्वारि नर्मदायाः॥ ३२॥

नदी विशेष स. स. स. स.
कार्तवीर्य की **करतोया[1] सदानीरा बाहुदा सैतवाहिनी।**
नदी सतलज स. स. स. स.
व्यासानदी **शतद्रुस्तु शुतुद्रिः स्याद्विपाशा तु विपाट् (स्त्रियाम्)॥ ३३॥**

केति—करस्य तोयं तदत्रास्तीति करतोया, सदा नीरं यस्याः सदानीरेति द्वे करतोयायाः। लिखितस्यर्षेश्छिन्नं बाहुं ददाति स्मेति बाहुदस्य कार्तवीर्यस्येयमिति वा बाहुदा, सिताश्च ते वाहाश्च ते सन्त्यस्यासाविति सितवाही अर्जुनस्तस्येयं सैतवाहिनीति द्वे बाहुदायाः। वशिष्ठभयात् शतधा द्रवतीति शतद्रुः, सुपूजितं तुदतीति शुतुद्रिः स्यादिति द्वे शतद्रोः। विपाशयति वसिष्ठस्य पाशं मोचयतीति विपाशा, विपाशयतीति विपाट् उभे स्त्रियां स्यातामिति द्वे विपाशायाः॥ ३३॥

शोणभद्र पु. पु. स.
नहर **शोणो हिरण्यबाहुः स्यात्कुल्या (ल्पा कृत्रिमा सरित्)।**
शरावती, वेत्रवती स. स. स. स.
चन्द्रभागा, सरस्वती **शरावती वेत्रवती चान्द्रभागा[2] सरस्वती॥ ३४॥**
कावेरी, नद्यादि स. पु. पु.
संगम **कावेरी (सरितोऽन्याश्च) संभेदः सिन्धुसंगमः।**

शोण इति—शोणतीति शोणः, हिरण्यं बाहावस्य, हिरण्यं वहतीति वा हिरण्यबाहुः—हिरण्यवाहश्चेति द्वे शोणभद्रस्य। अल्पा कृत्रिमा सरित् नदी कुले प्राणिगणे, कुटुम्बे, दाम्पत्ये वा साधुरिति कुल्येत्येकं कृत्रिमस्वल्पनद्याः। शराः सन्त्यस्यामिति

---

१ "प्रथमं कर्कटेदेवी त्र्यहं गङ्गा रजस्वला। सर्वा रक्तवहा नद्यः करतोयाम्बुवाहिनी" (इति स्मृतेः)॥

२ चन्द्रभागयोः पर्वतयोरियम्, तत्प्रभवत्वात् "तस्येदमित्यण्" टिड्ढेति ङीप् प्राप्तः चन्द्रभागान्नद्यामिति बह्वादिगणसूत्रान्न भवति स्वरूपयोरविशेषादिति॥

शरावती, वेत्राणि सन्त्यस्यामिति वेत्रवती, चन्द्रभागयोः पर्वतयोरियं चान्द्रभागा—चन्द्रभागा, चान्द्रभागी—चन्द्रभागी, " चन्द्रभागा चान्द्रभागा चान्द्रभागी च सा मता । चन्द्रभागी च सैवोक्ता" ( इति द्विरूपकोपः ) सरांसि सन्त्यस्यामिति सरस्वती, कस्य जलस्य वेरं शरीरं तस्येयम्, ईषद्वेरमस्या वेति कावेरी, अन्याः कौशिकी, गण्डकी, चर्मण्वती, तापी, तपती, गोदावर्यादयः सरितो नद्यः सन्तीति । संभिद्यन्ते मिलन्त्यत्रेति संभेदः, सिन्धोः संगमः सिन्धुसंगम इति द्वे नद्यादिसंगमस्य ॥ ३४।½ ॥

पु.स.

पनारा (द्वयोः)प्रणाली(पयसःपदव्यां) त्रिषु तूत्तरौ ॥ ३५ ॥

दाविक पु.स.न. पु.स.न.

सारव (देविकायां सरय्वां च) भवेदाविकसारवौ ।

द्वयोरिति—पयसो जलस्य पदव्यां निर्गमनमार्गे प्रणाल्यत इति प्रणाली द्वयोः स्त्रीपुंसयोः स्यादित्येकं प्रणालस्य । इतः परमुत्तरौ देविकायां सरय्वां च भवेऽर्थे वर्तमानौ दाविकसारवाविति । दीव्यतीति देविका तस्यां भवो दाविकः,सरतीति सरयुः—सरयूरपि तस्यां भवः सारवः उभौ त्रिषु त्रिलिङ्गयां स्यातामित्येकैकं क्रमेण ॥ ३५ । ½ ॥

न. न. न. न.

कुई, सफेद कमल, सौगन्धिकन्तु कह्लारं हल्लकं रक्तसन्ध्यकम् ॥ ३६ ॥

लालकमल, न. न. न.

कफूला, स्यादुत्पलं कुवलय (मथ) नीलाम्बुजन्म (च) ।

नील कमल, न. न. न.

सफ़ेद कमल इन्दीवरं (च) नीलेस्मिन् (सिते) कुमुदकैरवे ॥ ३७ ॥

सौगन्धिकमिति—सुगन्ध्येव, शोभनो गन्धः प्रयोजनमस्येति वा सौगन्धिकम्, कस्य जलस्य हार इव, के ह्लादते वेति कह्लारमिति द्वे शुक्लकह्लारस्य । हल्लति, हलनं हल् तं लातीति वा हल्लं तदेव हल्लकम्, रक्तं सन्ध्येव, रक्तान्सन्धीनकतीति वा रक्तसन्ध्यकमिति द्वे रक्तकह्लारस्य रक्तवर्णत्रिकालविकासिपुष्पस्य वा । उत्पलतीति उत्पलम्, कोर्वलयमिव कुवलयम् चन्द्रविकाशि, "इन्दोरस्य च मण्डलं कुवलयालंकारकारिध्रुवम्" इति लक्ष्यसंवादोपि । कौ वलते " कुवलम् " कुवते कुवमपि " कुवलं तूत्पलं कुवम् " (इति त्रिकाण्डशेषः) इति द्वे सामान्येन कमलकुमुदादीनाम् । अथेति—अस्मिन्नीले उत्पले नीलं च तदम्बुजन्म चेति नीलाम्बुजन्म, इन्दतीति इन्दिरिन्दी वा लक्ष्मीस्तस्यावरमिष्टमिन्दीवरम्, इन्दीवारमपीति द्वे नीलोत्पलस्य । सिते उत्पले कौ मोदत इति कुमुदम्, कुमुदपि । के जले रौतीति केरवो हंसस्तस्येदं कैरवम् " कैरवं चन्द्रकान्तं गर्दभं कुमुदं कुमुद् " ( इति माधवः ) इति द्वे श्वेतोत्पलस्य ॥ ३६।३७ ॥

मकरन्द या कमलकन्द, पुरइन, सेवार, कुमुदिनी, कमलिनी

न. स. स.
शालूक(मेषां कन्दः) स्याद्वारिपर्णी तु कुम्भिका।
स. न. पु. स.
जलनीली तु शेवालं[1] शैवलोथ कुमुद्वती[2] ॥ ३८ ॥
स. स. स. स.
कुमुदिन्यां नलिन्यां[3] बिसिनी पद्मिनी[4] (मुखाः)।

शालूकमिति—एषां सौगन्धिकादीनां कन्दो मूलं शालूकं स्यादित्येकं कमलकन्दस्य। वारिणि पर्णान्यस्याः, वारि पिपर्तीति वारिपर्णी, कुम्भोऽस्त्यस्याः कुम्भिका इति द्वे जलकुम्भिकायाः। जलं नीलयतीति जलनीली, जले शेते तिष्ठतीति शेवालम्—शैवलः—शेवलः—शेयालुः—शेयालश्चेति त्रीणि शेवालस्य। अथेति—कुमुदिन्यां कुमुदान्यत्र देशे सन्तीति कुमुद्वती, कुमुदिनीति द्वे कुमुदयुक्तदेशस्य कुमुदलताया वा। नडाः सन्त्यत्र, नलमत्रास्तीति वा नलिनी तस्यां बिसमस्त्यस्या बिसिनी, पद्ममस्त्यस्याः पद्मिनी, मुखशब्दादाद्यर्थात् मृणालिनी—कमलिनी—पुटकिनीत्यादयो ज्ञेयाः। इति त्रीणि पद्मसंघातस्य कमलिन्या वा ॥ ३८ । १/२ ॥

कमल

पु.न. न. न. न.
(वा पुंसि) पद्मं नलिनमरविन्दं महोत्पलम् ॥ ३९ ॥
न. न. नं. न.
सहस्रपत्रं कमलं शतपत्रं कुशेशयम्।
न. न. न. न.
पङ्केरुहं तामरसं सारसं सरसीरुहम्[5] ॥ ४० ॥
न. न. न. न.
बिसप्रसूनराजीवपुष्कराम्भोरुहाणि (च)।

वेति—पद्यत इति पद्मं वा पुंसि स्यात्। नलतीति नलिनम्, अरं शीघ्रं लिप्सा विन्दति अराकाराणि पत्राणि विन्दति वेत्यरविन्दम्, महच्च तदुत्पलं चेति महोत्पलम्, सहस्रं पत्राण्यस्येति सहस्रपत्रम्, काम्यते, कं जलमलतीति वा कमलम्, शतं पत्राण्य-

---

१ "शेवलश्चैव शेवालः शैवलो जलनीलिका" (इति वाचस्पतिः) ॥

२ "कुमुद्वती कैरविण्यां दयितायां कुशस्य च" (इति कोषान्तरम्) ॥

३ "नलः पोटगले राज्ञि पितृदेवे कपीश्वरे। नली मनः शिलायां तु नलिनेऽपि नलं मतम्" (इति विश्वः) नलिनी पुनः। "पद्माकरे गङ्गाब्जिन्योः" (इति हैमः) ॥

४ "पद्मिनी पद्मसंघाते स्त्रीविशेषे सरोऽम्बुजे" (इति मेदिनी) ॥

५ सरसिरोहतीति विग्रहे "तत्पुरुषे कृति बहुलम् (६। ३। १४)" इत्यलुकि ह्रस्वे कारोऽपि। तथा च भारविः "अयमच्युतस्य वचनैः सरसिरुहजन्मनः" इति मुकुटः ॥

स्येति शतपत्रम् "शतपत्रः शिखण्डिनि, दार्वाघाटे सारसे च कमले तु नपुंसकम्" (इति विश्वः) कुशे जले शेते कुशेशयम्, पङ्के रोहतीति पङ्केरुहम्, "तामरं घृतमर्णश्च" (इति रुद्रः) तामरे जले सस्तीति, ताम्यते वेति तामरसम्, सरसि भवं सारसम्, सरस्यां रोहतीति सरसीरुहम्—सरसि रोहतीति विग्रहे सरसिरुहम्, सरोरुहमपि। विसस्य प्रसूनम् विसप्रसूनम्, केसरस्य राज्यस्यास्तीति राजीवम्, पुष्णातीति पुष्करम् "पुष्करं द्वीपितीर्थाहिखगरागौषधान्तरे। तूर्य्यास्येऽसिफले काण्डे शुण्डाग्रे खे जलेऽम्बुजे" (इति हैमः) अम्भसि रोहत्यम्भोरुहमिति षोडश पद्मसामान्यस्य॥ ३९ । ४० । ½ ॥

सफेद कमल, लाल कमल, कमलदण्ड, भसीड़ा, — **पुण्डरीकं (न.) सिताम्भोज (न.) (मथ) रक्तसरोरुहे (न.) ॥ ४१ ॥**

**रक्तोत्पलं (न.) कोकनदं (न.) नाल (स.) नाल (न.) (मथास्त्रियाम्)।**

कमल समूल **मृणालं (पु.न.) विस (न.) (मब्जादिकदम्बे) षण्ड (पु.न.) (मस्त्रियाम्) ॥४२॥**

पुण्डरीकमिति—पुण्डयतीति पुण्डरीकम्, सितं शुक्लं च तदम्भोजं चेति सिताम्भोजमिति द्वे श्वेतसरोरुहस्य। अथेति—रक्तं तत्सरोरुहं च रक्तसरोरुहं तस्मिन्, रक्तं च तदुत्पलं चेति रक्तोत्पलम्, कोकांश्चक्रवाकान्नदति—नादयतीति वा कोकनदमिति त्रीणि रक्तसरोरुहस्य। नलतीति नाला—नाली, नालमिति द्वे उत्पलादिदण्डस्य। अथेति—मृण्यते मृणालम्, मृणालीत्यपि[१] "मृणालं नलदे क्लीबं स्त्रीनपुंसकयोर्विसे" (इति मेदिनी) विस्यति—विशति—विष्णातीति वा विसम्—विशम्—विषमपि "मृणाले तु विसं विशम्" (इति द्विरूपकोषः) उभे अस्त्रियां पुंनपुंसकयोः स्यातामिति द्वे अब्जादीनां मूलस्य। अब्जादिकदम्बे पद्मादिसंघाते सनोतीति षण्डम् अस्त्रियां पुंनपुंसके स्यात् षण्डः—शण्डनं शण्डस्तालव्यादिरपीत्येकमब्जादीनां समूहस्य॥ ४१ । ४२ ॥

कमल की जड़, कमलकी धूलि, कमल आदि के नये पत्ते, कमलगट्टा — **करहाटः (पु.) शिफाकन्दः (पु.) किञ्जल्कः (पु.) केसरो (पु.न.) (ऽस्त्रियाम्)।**

**संवर्तिका (स.) नवदलं (न.) बीजकोषो (पु.) वराटकः (पु.) ॥ ४३ ॥**

**इति वारिवर्गः॥**

करेति—करं हाटयति, कं जलं रहति त्यजति करहं पद्ममटति बहिर्गच्छतीति वा करहाटः "करहाटः पद्मकन्दे देशद्रुमविशेषयोः" (इति हैमः) शिफामूलतरुप्ररोहस्तत्सहितः कन्दो मूलमिति शिफाकन्दः, शिफेति कन्दमिति चेति पृथक्नामनीत्यन्ये—इति द्वे पद्म-

१ "सान्द्रं चन्दनमङ्गके वलयिता पाणौ मृणालीलता" (इति राजशेखरः)॥

कन्दस्य । किञ्चिज्जलतीति किञ्जल्कः, के जले सरति, के शीर्य्यते वा केसरः—केशरश्च अस्त्रिया पुंनपुंसकयोः स्यादिति द्वे केशरस्य । संवर्तते संवर्तिः सा एव संवर्तिका "संवर्तिका नवपत्रिका" ( इति कोपालितः ) संवर्तिश्च, नवं च तद्दलं चेति नवदलम्, नवपत्रिकेत्यपीति द्वे पद्मादीनां नूतनपत्रस्य । बीजस्य कोषः पात्रमाधारो वा बीजकोषः—बीजकोशस्तालव्यान्तोपि । त्रियतेदलैः, वरं दलवरणमटतीति वा वराटस्स एव वराटकः स्यात् "वराटकः पद्मबीजकोषेरज्जौकपर्दके" (इति कोषान्तरम्) इति द्वे कमलबीजस्य॥४३॥

इति वारिवर्गविवरणम् ॥

उक्तवर्गसंग्रहेणोपसंहरन्नाह—

**उक्तं स्वर्व्योमदिक्कालधीशब्दादिसनाट्यकम् ।**
**पातालभोगिनरकं वारि चैषां च संगतम् ॥ ४४ ॥**
**इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।**
**स्वरादिकाण्डः प्रथमः साङ्ग एव समर्थितः ॥ ४५ ॥**

उक्तमिति—स्वर्व्योमदिक्कालधीशब्दादिसनाट्यकम् । पातालभोगिनरकं वारि चोक्तम्, एषां स्वर्गादीना संगतं सम्बन्धवशात्प्राप्तं देवासुरमेघादिकं तच्चोक्तं कथितमिति इतीति एवममरसिंहकृतौ नामलिङ्गानुशासने नामलिङ्गप्रतिपादके शास्त्रे साङ्गः अङ्गोपाङ्गसमेतः प्रथमः स्वरादिकाण्डः स्वरादिवर्गसमूहः समर्थितः संवर्णित एव आदिशब्देन पातालस्य ग्रहणम् अत्रायं भावः—अस्मिन्काण्डे द्वावेव मुख्यवर्गौ स्वर्गः पातालश्च तत्र नाट्यवर्गपर्यन्तं स्वर्गसाधारणपदार्थानां निरूपणत्वात्स्वर्गवर्गत्वम् । तदुत्तरं पातालसंगतार्थनिरूपणात्पातालवर्गत्वमिति बोध्यम् ॥ ४४ । ४५ ॥

इति श्रीमदमरसिंहविरचितेऽमरकोषे श्रीमद्रायबहादुरभार्गवप्रयागनारायणाज्ञया द्विजवरशक्तिधरविरचितायां रसालाख्यायां व्याख्यायां प्रथमःकाण्डः समाप्तिमगादिति शिवम् ॥ १ ॥

ॐ परमात्मने नमः ॥

# श्रीमदमरसिंहविरचितः
# अमरकोषः ।

## रसालाख्यया व्याख्यया समेतः ॥

---

### द्वितीयं काण्डम् ।

**वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः ।**
**नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥ १ ॥**

वर्गा इति—इह वक्ष्यमाणे द्वितीयकाण्डे साङ्गोपाङ्गैः अङ्गैर्मृच्छाखानगरादिभिरुपाङ्गैर्मृत्स्नावशादिभिः समेतैः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः, नृब्रह्मक्षत्रविट्शूद्रैरुपलक्षिताः वर्गाः उदिता वदितुमारब्धा इति ॥ १ ॥

स. स. स. स. स. स. स.
पृथ्वी **भूर्भूमिरचलानन्ता रसा विश्वंभरा स्थिरा ।**
स. स. स. स. स. स. स.
**धरा धरित्री धरणी क्षोणी ज्या काश्यपी क्षितिः ॥ २ ॥**
स. स. स. स. स.
**सर्वंसहा वसुमती वसुधोर्वी वसुंधरा ।**
स. स. स. स. स. स. स. स.
**गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही ॥ ३ ॥**

भूरिति—भवति, भवत्यस्यां सर्वमिति वा भूः, भवतीति भूमिः—भूमी वा, न चलति अचलाः सन्त्यस्यामिति वा अचला, नास्त्यन्तोऽस्याः, अनन्तो धारकोऽस्त्यस्या वा अनन्ता, रस्यते, रसोऽस्त्यस्यामिति वा रसा, विश्वं बिभर्तीति विश्वंभरा, तिष्ठतीति स्थिरा, धरति विश्वम्, धरास्सन्त्यस्यामिति वा धरा, धरतीति धरित्री, धरति, ध्रियते वा धरणी—धरणिर्वा क्षौतीति क्षोणी—क्षोणिर्वा, जिनातीति ज्या, कश्यपस्येयं काश्यपी, क्षियतीति क्षितिः, सर्वं सहत इति सर्वंसहा, वसुधनमस्त्यस्यामिति वसुमती, वसु दधातीति वसुधा, ऊर्णोति—ऊर्णूयते वेत्युर्वी, वसु धारयतीति वसुंधरा, गां जलं त्रायते—गोत्राः

---

१ "मृगशब्द आरण्यपशुमात्रपरः "आरण्याः पशवो मृगाः" ( इति स्मृतेः ) आदिशब्देन पक्षिकीटादीनां ग्रहणम् तस्य चाङ्गोपाङ्गानि पक्षिपक्षादीनि । मृगानत्तुं शीलं यस्येति मृगादी सिंहस्ताच्छील्ये णिनिर्वा ॥

शैलाः सन्त्यस्यामिति वा गोत्रा, कौति–कवते–कूयते वेति कुः, प्रथते इति पृथिवी-पृथवी–पृथ्वी, क्षमते क्ष्मा–क्षमापि, अवति, अव्यते वा अवनिः–अवनी वा, मेद-मस्त्यस्यामिति, मेद्यतीति वा मेदिनी, मह्यते, महीयते वा महिः–मही–महीश्चेति सप्तविंशतिर्भूमिकायाः ॥ २ । ३ ॥

स. स. स. स.
मिट्टी / अच्छी मिट्टी — **मृन्मृत्तिका(प्रशस्ता तु)मृत्सा मृत्स्ना च मृत्तिका ।**

स. पु. स.
सर्वसस्ययुक्त / खार मिट्टी — **उर्वरा "सर्वसस्याढ्या"स्यादूषःक्षारमृत्तिका ॥ ४ ॥**

मृदिति–मृद्यते मृत, मृदा, मृत्तिः, मृदेव मृत्तिकेति द्वे मृदायाः । प्रशस्ता मृत्तिका मृत्सा–मृत्स्ना चेति द्वे प्रशस्तमृदायाः । सर्वाणि च तानि सस्यानि च तैराढ्या मृत् ऋच्छति, ईर्यते वा अरा उरूणामरा, उर्व्यते उर्वस्तं राति, उरुश्चासौ वरा च उर्षु वरा वेति उर्वरा स्यादित्येकं सर्वसस्याढ्यमृदः । ऊषतीति ऊषः, क्षारयतीति क्षारा, क्षारा चासौ मृत्तिका चेति द्वे क्षारमृदायाः ॥ ४ ॥

पु.स.न. पु.स.न. न. स.
ऊसर / कृत्रिम स्थान — **ऊषवानूषरो(द्वावप्यन्यलिङ्गौ) स्थलं स्थली ।**

पु. पु. पु.स.न. पु.स.न.
मरुस्थल / जंगल — **(समानौ)मरुधन्वानौ द्वे खिलाप्रहते(समे) ॥ ५ ॥**

स. पु. न. न. न.
जगत् या भूतल — **(त्रिष्वथो) जगतीलोको विष्टपं भुवनं जगत् ।**

ऊषवानिति–ऊषोऽस्त्यस्मिन्निति ऊषवान्, ऊषोऽस्त्यस्येति ऊषरः द्वावपि अन्यलिङ्गौ स्यातामिति द्वे ऊषरस्य । स्थलतीति स्थलम्, स्थली अकृत्रिमा कृत्रिमास्थलेति द्वे स्थ-लस्य । म्रियन्ते भूतान्यस्मिन्निति मरुः, धन्व्यतेऽस्मादिति धन्वा उभौ समानौ समानार्थौ समानलिङ्गाविति द्वे निर्जलदेशस्य । खिलति खिल्यते वास्मिन्निति खिलम्, न प्रहन्यते स्मेति अप्रहतम् द्वे समे समानार्थे त्रिषु त्रिलिङ्ग्यां स्यातामिति द्वे हलाद्यकृष्टस्य । अथ-विति–गच्छतीति जगती, लोक्यत इति लोकः, विशन्त्यत्रेति विष्टपम्, पादिपाठे तु पिश्यते, पिष्यते वात्रेति पिष्टपः पुमानिति । भवन्त्यस्मिन्निति भुवनम्, गच्छतीति जगदिति पञ्च भूतलस्य ॥ ५ । ६ ॥

न.
भारत या वर्ष — **(लोकोऽयं)भारतं वर्षं शरावत्यास्तु योऽवधेः ॥ ६ ॥**

पु. पु.
सब देश / पूर्व उत्तर — **देशः (प्राग् दक्षिणः) प्राच्य उदीच्यः(पश्चिमोत्तरः) ।**

पु. पु. पु.
म्लेच्छदेश / मध्यदेश — **प्रत्यन्तो म्लेच्छदेशः स्यान्मध्यदेश(स्तु)मध्यमः ॥७॥**

लोक इति–अयं जम्बूद्वीपनवमांशो लोकः भरतस्य राज्ञः इदं भारतम्, वृष्यते वर्षणं वा वर्षम् "उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्। वर्षं तद्भारतं नाम भारती यत्र सन्तति" रित्येकं भारतवर्षस्य। शरावत्या नद्या अवधेर्मर्यादायाः यः प्राग्दक्षिणः प्राचा सहितो दक्षिणो देशः प्राच्यां भवः प्राच्यः कथ्यत इत्येकं शरावतीपूर्वदक्षिणदेशस्य। तत एवावधेः पश्चिमोत्तरः पश्चिमेन सहितः उत्तरो देशः उदीच्यां भवः उदीच्यो भण्यते इत्येकं शरावतीपश्चिमोत्तरदेशस्य। प्रतिगतोऽन्तम्–प्रत्यन्तः, म्लेच्छानां देशो म्लेच्छदेशः "चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते। तं म्लेच्छविषयं प्राहुरार्यावर्तमतः पर" मिति द्वे शिष्टाचाररहितखशादिदेशस्य। मध्यश्चासौ देशश्चेति मध्यदेशः, मध्ये भवो मध्यमः "हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तित" इति द्वे मध्यदेशस्य ॥ ६। ७॥

आर्यावर्त — पु. **आर्यावर्तः** पु. **पुण्यभूमि (मध्यं विन्ध्यहिमागयोः)।**

राज्य या देश, देशयानगरग्राम — स. **नीवृज्जनपदो** पु. पु. **देशविषयौ** पु. न. **तूपवर्तनम् ॥ ८॥**

आर्येति–विन्ध्यहिमागयोर्विन्ध्यहिमालययोर्मध्यं मध्यस्थलं आर्या आसमन्ताद् वर्तन्तेऽत्रेति आर्यावर्तः, पुण्या चासौ भूमिश्च, पुण्यस्य भूमिः, पुण्या भूमिर्यस्येति वा पुण्यभूमिः "आसमुद्रात्तु वै पूर्वादासमुद्राच्च पश्चिमात्। तयोरेवान्तरंगिर्योरार्यावर्तं विदुर्बुधाः" इति विन्ध्यहिमागमध्यदेशस्य। नियतो वर्तते–नियतं वा वर्तन्ते जना अत्रेति वा नीवृत्, जनः पदं वस्तु यत्रेति जनपदः इति द्वे जननिवासस्थानस्य। दिशति, दिश्यते वेति देशः, विसिनोति, विसीयन्तेऽत्रेति वा विषयः, उपवर्तन्तेऽत्रेति उपवर्तनमिति त्रीणि स्थानमात्रस्य ॥ ८॥

नरसलकादेश — **(त्रिष्वागोष्ठान्नडप्राये)** पु.स.न. **नड्वान्** पु.स.न. **नड्वल (इत्यपि)।**

फफूलाकादेश, बहुवेतका — पु.स.न. **कुमुद्वान् (कुमुदप्राये)** पु.स.न. **वेतस्वान् (बहुवेतसे) ॥ ९॥**

त्रिष्विति–आगोष्ठात् गोष्ठमभिव्याप्य त्रिषु त्रिलिङ्गयां ज्ञेयमिति। नडाः प्राया यत्रेति नडप्रायस्तस्मिन्, नडाः सन्त्यस्मिन्निति नड्वान्, नडाः सन्त्यत्रेति नड्वलइत्यपीतिद्वे नडाधिकदेशस्य। कुमुदानि प्रायाण्यत्रेति कुमुदप्रायस्तस्मिन्देशे कुमुदानि सन्त्यत्रेति कुमुद्वानित्येकं कुमुदाधिकदेशस्य। बहवो वेतसा यत्रेति तस्मिन्देशे वेतसाः सन्त्यत्रेति वेतस्वानित्येकं बहुवेतसदेशस्य ॥ ९॥

घासवालादेश — पु.स.न. **शाद्वलः (शादहरिते) (सजम्बाले तु)** पु.स.न. **पाङ्किलः।**

कीचड़युक्त सजल कछार — पु.स.न **जलप्रायम्** पु.स.न. **अनूपं स्यात्पुंसि** पु. **कच्छ (स्तथाविधः) ॥१०॥**

शाद्वल इति—शादहरिते शादैर्बालतृणैर्हरितस्तस्मिन्, शीयते—शीयतेऽस्मिन्निति वा शादो बालतृणमस्मिन्निति शाद्वलइत्येकं नवतृणप्रचुरस्य । जम्बालेन पङ्केन सहेति सजम्बालस्तस्मिन्देशे पङ्कोऽस्त्यस्मिन्निति पङ्किल इत्येकं सकर्दमदेशस्य । जलं प्रायं यत्रेति जलप्रायम्, अनुगता आपोऽत्रेति अनूपमिति द्वे जलाधिकदेशस्य । तथाविधो जलप्रायः कं जलं छयति परिछिनत्तीति कच्छः पुंसीत्येकं कच्छस्य ॥ १० ॥

स. पु.स.न. पु.स.न. पु.स.न.

वालूयुक्त **स्त्री शर्करा शर्करिलः शार्करः शर्करावति ।**

कंकड़युक्त पु.स.न.

वालूवाला **'देशएवादि' मावेवमुन्नेयाः सिकतावति ॥ ११ ॥**

स्त्रीति—शृणाति शीर्यते वेति शर्करा ( अश्मप्राया मृत् ) अस्त्यत्रेति वा शर्करा स्त्री स्यात् । शर्करास्त्यत्रेति शर्करिलः—शार्करः, शर्करावानिति चत्वार्यश्मप्रायमृदधिकस्य । तत्रादौ भवावादिमौ शर्करा—शर्करिलौ देशे एव नान्यत्र 'शार्करः' शर्करावान् इतीमौ तु देशादेशयोः । एवं सिच्यते सिकता सास्त्यत्रेति सिकता, 'सिकतिलः' इतीमौ सिकतावति देश एवोन्नेयाविति सैकतः, सिकतावान् इति तु देशादेशयोरिति चत्वारि वालुकाबहुलदेशस्य ॥ ११ ॥

नदीमातृक **( देशो ) नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः ।**

पु.स.न. पु.स.न.

देवमातृक **स्यान्नदीमातृको देवमातृकश्च ( यथाक्रमम् ) ॥ १२ ॥**

देश इति—नद्यम्बुभिर्वृष्ट्यम्बुभिश्च सम्पन्नैः व्रीहिभिर्धान्यैः पालितो देशः नदीमातास्येति नदीमातृकः, देवो मातास्येति देवमातृकश्च यथाक्रमं स्यादित्येकैकम् ॥ १२ ॥

पु.स.न. पु.स.न.

नीतिमान्राजा राजाज्ञायुक्त **सुराज्ञि देशे राजन्वान् स्या(त्ततोऽन्यत्र) राजवान् ।**

गैयों का स्थान न. न. न.

पहला स्थान **गोष्ठं गोस्थानकं (तत्तु) गौष्ठीनं (भूतपूर्वकम्) ॥ १३ ॥**

सुराज्ञीति—शोभनो राजा यत्रेति सुराजा तस्मिन् देशे शोभनो राजास्त्यत्रेति राजन्वान् स्यादित्येकं सुराजयुक्तदेशस्य । ततोऽन्यत्र राजमात्रयुक्तदेशे राजास्त्यत्रेति राजवानित्येकं सामान्यराजयुक्तदेशस्य । गावस्तिष्ठन्ति यत्रेति गोष्ठम्, गवां स्थानं गोस्थानं तदेव गोस्थानकमिति द्वे गोष्ठस्य । भूतपूर्वकं पूर्वं भूतं यद्गोष्ठं तत् गौष्ठीनं स्यादित्येकं भूतपूर्वगोस्थानकस्य ॥ १३ ॥

स. पु. पु. स.

नदी पहाड़ के निकटकी भूमि **पर्यन्तभूः परिसरः सेतुरालौ ( स्त्रियां पुमान् ) ।**

पुल पु. पु. पु.न.

ब्यमौर **वामलूरश्च नाकुश्च वल्मीकं ( पुंनपुंसकम् ) ॥ १४ ॥**

पर्यन्तेति–पर्यन्ते भूः पर्यन्तभूः, परितः सरन्त्यत्रेति परिसर इति द्वे नद्यादिसमीपभूमेः । स्त्रियां वर्तमानायामालौ सिनोति–सीयते वेति सेतुः पुमान्स्यात्।आ अलन्त्यम्भः, अल्यतेऽनयेति आलिः, आली वेति द्वे पुलस्य । वामैर्वामं वा लूयते-वामलूरः, न अकति, नम्यते भूरनेन वेति नाकुः, वलन्ते प्राणिनोऽत्रेति वल्मीकं पुंनपुंसकं स्यादिति त्रीणि पिपीलिकादिनिष्कासितमृत्पुञ्जस्य ॥ १४ ॥

न. न. पु. पु. पु. स. स.

सड़क या रास्ता **अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः ।**

स. स. स. स. स.

**सरणिः पद्धतिः पद्यावर्तन्येकपदीति च ॥ १५ ॥**

अयनमिति–अयन्ते ईयतेऽनेन वेत्ययनम्, वर्तन्तेऽनेनेति वर्त्म, मार्ग्यते, मृज्यते वितृणीक्रियते पादैरिति वा मार्गः, अत्ति पथिकबलमिति अध्वा, पतन्त्यनेन–पथन्तेऽनेनेति वा पन्थाः, वाटः पथश्च मार्गश्चेति त्रिकाण्डशेषात् पथइत्यदन्तोपि । पद्यतेऽनयेति पदवी, पदविर्वा । सरन्त्यनयेति सृतिः, सरति, स्त्रियते, शृणाति, शीर्यते वेति सरणिः, शरणिस्तालव्यादिरपि, पादाभ्यां हन्यते पद्धतिः, पादाय हिता पद्या, वर्तन्तेऽनयेति वर्तनी–वर्त्मनी च । एकः पादोऽस्यामिति एकपदी, एकपादपीति द्वादश मार्गस्य॥१५॥

पु. पु. पु.

अच्छी रास्ता **अतिपन्थाः सुपन्थाश्च सत्पथ(श्चार्चितेऽध्वनि) ।**

पु. पु. पुं. पु. पु.

कुमार्ग **व्यध्वो दुरध्वो विपथः कदध्वा कापथः (समाः) ॥१६॥**

अतीति–अर्चिते पूजिते अध्वनि मार्गे अत्यर्चितः पन्थाः अतिपन्थाः, शोभनः सुपूजितः पन्थाः सुपन्थाः, सँश्चासौ पन्थाश्चेति सत्पथ इति त्रीणि शोभनमार्गस्य । विरुद्धोऽध्वा व्यध्वः, दुष्टोऽध्वा दुरध्वः–विरुद्धः पथो विपथः, कुत्सितोऽध्वा कदध्वा, कुत्सितः पथः कापथः–कुपथोपि एते समाः समानार्थाः समानलिङ्काश्चेति पञ्च-कुपथस्य ॥ १६ ॥

अमार्ग पु. न. न. न.

चौराहा **अपन्थास्त्वपथं तुल्ये शृङ्गाटकचतुष्पथे ।**

दूर या शून्य न. पु. न.

दुर्गममार्ग **प्रान्तरं(दूरशून्योऽध्वा)कान्तारं (वर्त्मदुर्गमम्) ॥१७॥**

अपन्था इति–पथोऽभावः अपन्थाः, अपथम् उभे तुल्ये समानार्थे स्यातामिति द्वे मार्गाभावस्य । शृङ्गं प्राधान्यमटतीति शृङ्गाटकम्, चतुर्णां पथां समाहारश्चतुष्पथमुभे तुल्ये स्यातामिति द्वे चतुष्पथस्य । दूरश्चासौ शून्यश्चेति दूरशून्योऽध्वा मार्गः प्रकृष्टमन्तरमत्रेति प्रान्तरमित्येकं दूरशून्यमार्गस्य । दुर्गमं वर्त्म मार्गः कस्य जलस्य सुखस्य वान्तः कान्तस्तमृच्छतीति कान्तारमित्येकं दुर्गममार्गस्य ॥ १७ ॥

दो कोस स. पु. न. पु.
चार सौ हाथ **गव्यूतिः ( स्त्री ) क्रोशयुगं नल्वः किष्कुचतुःशतम्।**
राजमार्ग पु. न. न.
पुरमार्ग **घण्टापथः संसरणं तत्पुरस्योपनिष्करम् ॥ १८ ॥**

**इति भूमिवर्गः ॥**

गव्यूतिरिति—क्रोशयुगं क्रोशद्वयं यवनंयूतिः गोर्यूतिः गव्यूतिः स्त्री स्यादित्येकं गव्यूतेः। अथवा गव्यूतिः स्त्री स्यात्, क्रोशयोर्युगं क्रोशयुगमिति द्वे क्रोशद्वयस्य। किष्कूनां हस्तानां चतुःशतं चतुर्गुणं शतमिति वा नल्यते इति नल्वः स्यादित्येकं चतुःशतहस्तस्य। घण्टोपलक्षितः पन्थाः, घण्टानां पन्था इति वा घण्टापथः, संसरन्त्यत्रानेन वा संसरणमिति द्वे राजमार्गस्य। तत्संसरणं पुरस्य चेद्भवति तदा उपनिष्किरन्ति निस्सरन्ति सैन्यान्यत्र, उपनिःकीर्यते सैन्यैर्हन्यते वेत्युपनिष्करमित्येकं पुरमार्गस्य ॥ १८ ॥

इति भूमिवर्गविवरणम् ॥

---

**अथ पुरवर्गो व्याख्यायते ॥**

स. स.न. स.न. न. न.
नगर या नगरी, **पूः ( स्त्री ) पुरी नगर्यौ (वा) पत्तनं पुटभेदनम्।** [2]
उपनगर या न. पु.
शाखानगर, **स्थानीयं निगमो** [3] **"ऽन्यत्तु यन्मूलनगरात्पुरम्" ॥ १ ॥**
न. स. पु.
वेश्या का घर **तच्छाखानगरं वेशो वेश्याजनसमाश्रयः।**

पूरिति—पिपर्ति—पूर्यते वेति पूः स्त्री स्यात्, पुरतीति पुरी, नगाः सन्त्यत्रेति नगरी उभे वा स्त्रियौ स्याताम् पक्षे पुरम्, नगरम्, पतन्ति जना यत्रेति—पत्तनम्, पटन्तीति विग्रहे तु पट्टनमपि। पुटानि पात्राणि भिद्यन्तेऽत्रेति पुटभेदनम्, स्थानाय हितं स्थानीयम्, नितरां गच्छन्तीति निगम इति सप्त नगरस्य। मूलनगरं राजधानी ततोऽन्यत् यत् पुरं तत् शाखेव नगरं शाखानगरमित्येकं शाखानगरस्योपनगरस्य वा। विशन्त्यत्रेति वेशः, वेश्याजनस्य समाश्रयो वासस्थानं वेश्याजनसमाश्रय इति द्वे वेश्यानिवासस्य ॥१।१॥
बाज़ार पु. स. पु.स. स.
हाट आदि **आपणस्तु निषद्यायां विपणिः पण्यवीथिका ॥ २ ॥**
भीतरकीरास्ता स. स. स. पु. पु.न.
खाई **रथ्या प्रतोली विशिखा स्याच्चयोवप्र ( मस्त्रियाम् )।**

---

१ धनुर्हस्तचतुष्टयम्, द्वाभ्यां धनुस्सहस्राभ्यां गव्यूतिः पुंसि भाषित ( इति शब्दार्णवः ) ॥
२ पट्टनं पुटभेदनमिति वाचस्पतिः ॥
३ "निगमाः पूर्वणिग्वेदनिश्चयाध्ववणिक्पथाः ( इति हैमः ) ॥

आपण इति—आसमन्तात्पण्यायन्तेऽत्र, पण्यन्तेऽत्र वेत्यापणः, निषीदन्ति जना अस्यामिति निषद्या तस्यामिति द्वे हट्टस्य। विपण्यन्तेऽत्रेति विपणिः, पण्यानां वीथी सैव पण्यवीथिकेति द्वे हट्टशून्यविक्रयस्थानस्य। रथं वहतीति रथ्या, प्रतोलयतीति प्रतोली, विशेते इति विशिखेति त्रीणि ग्राममध्यमार्गस्य। चीयते इति चयः, उप्यतेऽत्रेति वप्रम् अस्त्रियां पुंनपुंसके स्यादिति द्वे प्राकाराधारस्य ॥ २ । १/२ ॥

पु. पु. पु. न.

घेर घिरा भीति **प्राकारो वरणः सालः प्राचीनं (प्रान्ततो वृतिः) ॥ ३ ॥**

या दीवाल स. न. न.

पत्थर वा हड्डी आदि की **भित्तिः (स्त्री) कुड्यमेडूकं (यदन्तर्न्यस्तकीकसम्)।**

प्राकार इति—प्रक्रियत इति प्राकारः, वृणोतीति वरणः, सल्यते—शल्यते वा सालः-शालश्चेति त्रीणि प्राकारस्य। प्रान्ततो वरणं वृतिः प्रागेव प्राचीनम्, प्राचीयत इति प्राचीरमिति वेत्येकं ग्रामादेरन्ते कण्टकादिवेष्टनस्य। भिद्यते इति भित्तिः स्त्री स्यात्। कुडयते इति कुड्डिस्तस्यां साधु कुड्यम्, कौ द्योतत इति वा कुद्यमिति द्वे कुडयस्य। अन्तर्न्यस्तानि कीकसानि अस्थीनि दार्ढ्यार्थं यत्रेति अन्तर्न्यस्तकीकसं यत्तत् ईडयते एडूकम्, एडुकम्—एडोकं चेत्येकमस्थ्यादिमयकुडयस्य ॥ ३ । १/२ ॥

न. पु. न. न. न. न. न.

घर **गृहं गेहोदवसितं वेश्म सद्मनिकेतनम् ॥ ४ ॥**

न. न. न. न. न. न.

**निशान्तवस्त्यसदनं भवनाऽऽगारमन्दिरम्।**

पु. पु. पु. पु.

**गृहाः( पुंसि च भूम्न्येव)निकाय्यनिलयाऽऽलयाः॥५॥**

पु. पु.स. स. स. न.

कचहरी चौक **वासः कुटी (द्वयोः) शाला सभा संजवनं (त्विदम्)।**

न. स. पु. न.स.

झोपड़ी **चतुःशालं (मुनीनां तु) पर्णशालोटजो (ऽस्त्रियाम्)॥६॥**

गृहमिति—गृह्णाति धान्यादिकमिति गृहम्, गेन गणेशेन ईह्यते काम्यते, गो गणेशो गन्धर्वो वा ईहा ईप्सिता यस्मिन्वेति गेहमस्त्रीति। उदूर्ध्वमवसीयते स्मेति उदवसितम्, विशन्त्यत्रेति वेश्म, सीदन्त्यत्रेति सद्म, निकेत्यतेस्मिन्निति निकेतनम्, निशायामस्यते स्मेति निशान्तम्, वसनं वस्तिस्तत्र साधु वस्त्यम्, सीदन्त्यत्रेति सदनं सादनमपि। भवन्त्यत्र भवनमस्त्यत्रेति वा भवनम्, आआगयन्ते आगास्तानृच्छतीत्यागारम् अगारं वा "गृहशब्दो भूम्न्येव पुंसि चात्क्लीबे" निचीयते धान्यादिकमत्रेति निकायो—निकाय्यो वा निलीयतेऽत्रेति निलयः, आलीयतेऽत्रेत्यालयः, वसन्त्यत्रेति वासः, कुटति

कुटिलीभवतीति कुटी, कुटिर्वा द्वयोः स्त्रीपुंसयोः स्यात्, शलन्त्यत्रेति शाला सह भान्त्यत्रेति सभा इति त्रिंशतिः सदनस्य। इदं संजवन्त्यत्रेति संजवनम्, चतस्रः शालाः समाहृता इति चतुःशालम्—चतुःशाला वेति द्वे अन्योन्याभिमुखशालाचतुष्टयगृहस्य। मुनीनान्तु पर्णनिर्मिता शाला पर्णशाला, "उटस्तृणपर्णादि" स्तस्माज्जायते उटजः अस्त्रियां पुंनपुंसकयोः स्यादिति द्वे मुनीनां कुटेः ॥ ४ । ६ ॥

यज्ञवेदी, अश्वशाला, सुनार आदिका घर, जलशाला प्याऊ

न. न. स.
**चैत्यमायतनं (तुल्ये) वाजिशाला (तु) मन्दुरा।**
न. स. स. स.
**आवेशनं शिल्पशाला प्रपा पानीयशालिका ॥ ७ ॥**

चैत्यमिति—चीयत इति चित्या तस्या इदं चैत्यम्, आयतन्तेऽत्रेति आयतनमुभे तुल्ये समानार्थे समानलिङ्गके चेति द्वे यज्ञस्थानस्य उद्देश्यवृक्षस्य वा। वाजिनां शाला वाजिशाला, मदन्तेऽत्रेति मन्दुरेति द्वे अश्वशालायाः। आविशन्त्यत्रेति आवेशनम्, शिल्पिनां शाला शिल्पिशाला, शिल्पस्य शाला वेति द्वे शिल्पिशालायाः। प्रपिबन्त्यस्यामिति प्रपा, पानीयस्य शाला सैव पानीयशालिकेति द्वे पानीयशालायाः ॥ ७ ॥

पाठशाला, मद्यघर, घर का मध्य, सोवरि

पु. स. न.
**मठ (श्छात्रादिनिलयो) गञ्जा (तु) मदिरागृहम्।**
न. न. न. न.
**गर्भागारं वासगृहमरिष्टं सूतिकागृहम् ॥ ८ ॥**

मठ इति—छात्रोऽन्तेवासि आदिर्येषां परिव्राजकक्षपणकादीनां तेषां निलयः स्थानं मठन्त्यत्रेति मठः कथ्यत इत्येकं छात्रादिगृहस्य। गजन्त्यस्यामिति गञ्जा, मदिराया गृहं मदिरागृहमिति द्वे मद्यसन्धानगृहस्य। गर्भ इवागारं गर्भागारम्, वासस्य गृहं वासगृहमिति द्वे गृहमध्यभागस्य। नास्ति रिष्टमत्र, न रिष्यते स्म हिंस्रैरिति वा अरिष्टम्, सूतैव सूतिका, सूतका वा तस्या गृहं सूतिकागृहमिति द्वे सूतिकानिवासस्य। चत्वारः पर्य्याया इत्यन्ये[1] ॥ ८ ॥

झरोखा, मण्डप, धनियों का घर, देवालय, महल

न. पु. पु.न. पु.
**वातायनं गवाक्षोऽथ मण्डपो (ऽस्त्री) जनाश्रयः।**
न. पु.
**हर्म्यादि "धनिनां वासः" प्रासादो (देवभूभुजाम्) ९॥**

वातायनमिति—ईयतेऽनेनेत्ययनं वातस्यायनं वातायनम्, गवामक्षीव गावो जलानि किरणा वाक्षन्ति व्याप्नुवन्त्येतमनेन वा गवाक्ष इति द्वे जालकस्य। अथेति—मण्डनं मण्डस्तं पाति पिबतीति वा मण्डपः अस्त्री स्यात्। जनानामाश्रयो जनाश्रय इति द्वे मण्ड-

---

१ भान्येतु वा सूतक.पुत्रिकावृन्दारकाणामित्युपलभ्यते ॥

पस्य। धनिनां धनवतां वासो निवासः हरति मनोहर्म्यम् आदिना स्वस्तिकाद्येकंधनवद्-गृहस्य। देवानां भूभुजां च गृहं। प्रसीदति मनोऽत्रेति प्रासाद इत्येकं देवनृपालयस्य॥६॥

पु.न. न. स. स.

राजघर — **सौधो(ऽस्त्री)राजसदनमुपकार्योपकारिका।**

डेरा या तंबू पु.न. पु.न. पु.न.

गृह भेद — **स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोपि च॥ १०॥**

पु.न.

**विच्छन्दक "प्रभेदा हि भवन्तीश्वरसद्मनाम्"।**

सौध इति–सुधालेपोऽस्यास्तीति सौधः अस्त्री स्यात्। राज्ञः सदनं सदनानां राजेति वा राजसदनमिति द्वे राजगृहस्य। उपक्रियते इत्युपकार्या उपकारयतीति विग्रहे तु उपकारीत्यपि, उपकरोतीति उपकारिकेति द्वे राजगृहसामान्यस्य। स्वस्ति क्षेमं कायतीति स्वस्तिकः सर्वतोभद्रमत्रेति सर्वतोभद्रः, नन्दयतीति नन्दी आवर्तोत्रेति नन्द्यावर्तः आदिना रुचकवर्धमानादिपरिग्रहः। विशिष्टं छन्दोऽत्र, विशिष्टाञ्छन्दयतीति विच्छन्दकः, विच्छृणत्तीति विच्छर्दकोपि एते ईश्वरसद्मनां प्रभेदा भवन्ति हीतीश्वरगृहविशेषाणां पृथगेकैकम्॥ १०। ३॥

न. न.

रनिवास — **"स्त्र्यगारं भूभुजा"मन्तःपुरं स्यादवरोधनम्॥ ११॥**

पु. पु. पु. पु.न.

अटा — **शुद्धान्तश्चावरोधश्च स्यादट्टः क्षौममस्त्रियाम्।**

दरवाज़े के बाहर का चौतरा या चौपार पु. पु. पु.

**प्रघाणप्रघणालिन्दा 'बहिर्द्वारप्रकोष्ठके'॥ १२॥**

स्त्रीति–भूभुजां भूपालानां स्त्र्यगारम्, स्त्रीणामागारं अन्तरभ्यन्तरे पुरं गृहमन्तःपुरम्, अवरुध्यन्तेऽत्रेत्यवरोधनम्, शुद्धा उपधा शुद्धा रक्षका अन्ते समीपेऽस्येति शुद्धान्तः, अवरुध्यन्तेऽत्रेत्यवरोधः स्यादिति चत्वार्यन्तःपुरस्य। अट्यते, अट्टयति वा अट्टः, क्षुवन्त्यत्रेति क्षौममस्त्रियां स्यात् क्षौममेव क्षौमोपीति द्वे हर्म्याद्युपरिगृहस्य बहिर्द्वारप्रकोष्ठके प्रहण्यते प्रघाणः–प्रघणश्च। अल्यते भूष्यत इत्यलिन्दः–आलिन्दोपीति त्रीणि द्वारप्रकोष्ठाद्बहिर्द्वाराग्रवर्तिचतुष्कस्य॥ ११। १२॥

स. स. न. न. न.

देहली आंगन — **गृहावग्रहणी देहल्यङ्गनं चत्वराजिरे।**

स.

मस्तकपट्टी — **'अधस्ताद्दारुणि' शिला नासा 'दारूपरिस्थितम्'॥१३॥**

---

१ " उपकार्य्युपकारिका " इति द्विरूपकोषदर्शनादुपकारीत्यपि॥

गृहेति—गृहमवगृह्यतेऽनयेति गृहावग्रहणी, देहनं देहो गोमयाद्युपलेपस्तं लातीति देहलीति द्वे देहल्याः। अङ्गन्त्यत्रेति अङ्गनम्, पृषोदरादित्वादङ्गणमपि। चत्यत इति चत्वरम्, अजन्त्यत्रेत्यजिरमिति त्रीणि चत्वरस्य। अधस्ताद्दारुणि शिलतीति शिला—शिलः—शिलीत्यकं द्वारस्तम्भाधस्थकाष्ठस्य, दारूपरिस्थितं नासयते नासेत्येकं द्वारस्तम्भोपरिस्थकाष्ठस्य ॥ १३ ॥

न. न. न. पु.

खिड़की,गुप्तद्वार **प्रच्छन्नमन्तर्द्वारं स्यात्पक्षद्वारन्तु पक्षकः।**

घरके छाने का सामान छावना पु.न. न. पु. न. स.

**वलीकनीध्रे पटलप्रान्ते(ऽथ) पटलं छदिः ॥ १४ ॥**

प्रच्छन्नमिति—प्रकर्षेण छन्नं द्वारमिति प्रच्छन्नम्, अन्तः स्थितं द्वारमन्तर्द्वारं स्यादिति द्वे गुप्तद्वारस्य। पक्षे पार्श्वे द्वारम्पक्षद्वारम्, पक्ष इव पक्षक इति द्वे पार्श्वद्वारस्य। वलत्यावृणोति भित्त्यादि वलीकं वलीकश्च। नितरां ध्रियते निश्चयेन धरति जलमिति वा नीध्रम्, पटलस्य छदिषः प्रान्तस्तस्मिन्निति त्रीणि वलीकस्य। अथेति—पटं लाति,पटत्युदकमिति वा पटलम्, छादयतीति छदिः, पटम्, चालमप्यत्रेति द्वे पटलस्य ॥ १४ ॥

स. स.

धरनि, कूवा या **गोपानसी (तु) वलभी ( छादने वक्रदारुणि )।**

छज्जा, कबूतरों का घर स. पु.न.

**कपोतपालिकायान्तु विटङ्कं ( पुंनपुंसकम् )॥ १५ ॥**

गोपेति—गोपायति, गवां गोभिर्वा पानं गोपानं तत्स्यति निवर्तयति वा गोपानसी, वलतीति वलभी, वलभिरपीति उभे वक्राणि दारूणि यस्मिन् तस्मिञ्छादने वर्तेते इति द्वे कुडयेपु छादनार्थं दत्तस्य वक्रकाष्ठस्य, पटलाधारवंशपञ्जरस्य वा। पालयतीति पालिका, कपोतानां पालिका तस्याम्, विशेषेण टङ्क्यन्तेऽत्रेति विटङ्कं पुंनपुंसकं स्यादिति द्वे गृहप्रान्ते रचितकपोतस्थानस्य ॥ १५ ॥

मोहरा या द्वार स. न. पु. स. स.

वेदी या चौतरा **(स्त्री)द्वार्द्वारं प्रतीहारः स्याद्वितर्दिस्तु वेदिका।**

बाहिरी फाटक पु. न. न. न. न.

नगरका फाटक **तोरणो(ऽस्त्री) बहिर्द्वारं पुरद्वारन्तु गोपुरम् ॥ १६ ॥**

स्त्रीति—द्वारयति द्वार्यते वा द्वाः स्त्री स्यात्, द्वारयतीति द्वारम्, प्रतिह्रियते आह्रियत इति प्रतीहारः स्यादिति त्रीणि द्वारस्य। विगता तर्दिर्हिंसाऽस्या इति वितर्दिः,विदन्त्यस्यामिति वेदी—वेदिर्वा सैव वेदिकेति द्वे प्राङ्गणादिकृतस्योपवेशस्थानस्य। तुरन्त्यत्र, तुतुरत्यनेनेति वा तोरणः अस्त्री स्यात्। बहिश्च तद्द्वारं चेति बहिर्द्वारमिति द्वे द्वारबाह्यभागस्य। पुरस्य द्वारं पुरद्वारम्, गोभिः पुरं गाः पुरतीति वा गोपुरमिति द्वे नगरबाह्यभागस्य॥१६॥

पुः

सुखसे आनेजाने के लिये बनी मिट्टीकीसीढ़ी केवार, बेंवड़ा

'कूटं पूर्द्वारि य ' द्धस्तिनखस्तस्मि(न्नथ त्रिषु)।

पु.स.न. पु.स.न. न.स.

कपाटमररं(तुल्ये)तद्विष्कम्भोऽर्गलं ( न ना )॥ १७ ॥

कूटमिति–पूर्द्वारि यत्कूटं तस्मिन् हस्तिनो नख इव हास्तिना न खन्यत इति वा हस्तिनख इत्येकं पुरद्वारे अवतरणार्थं कृतस्य क्रमनिम्नस्य मृत्कूटस्य । अथेति–त्रिषु भवन्ति, कं वातं शिरो वा पाटयति कपाटम्, कं वातं बटतीति कवाटमिति वा ऋच्छति, इयर्ति वा अररम् अरमृच्छतीति अररिर्वा उभे तुल्ये समानार्थे समानलिङ्गे च स्यातामिति द्वे कपाटस्य । तत्कपाटं विष्कभ्नातीति तद्विष्कम्भः, अर्ग्यत इत्यर्गलं ना पुंलिङ्गो नेत्येकं कपाटरोधनकाष्ठस्य ॥ १७ ॥

सीढ़ी काठआदि की सीढ़ी

न. न. स. स.

आरोहणं स्यात्सोपानं निश्रेणिस्त्वधिरोहणी ।

बढ़नी या झाड़ू कूड़ा, करकट

स. स. पु. पु.

संमार्जनी शोधनी स्यात्संकरोवकर (स्तथा) ॥ १८ ॥

आरोहेति–आरुह्यतेऽनेनेत्यारोहणम्, सह विद्यमान उपउपरि आनो गमनमनेनेति सोपानमिति द्वे पाषाणादिकृतसौधाद्यारोहणमार्गस्य । नियता श्रेणिः पंक्तिरत्रेति निश्रेणिः, अधिरुह्यतेऽनयेत्यधिरोहणीति द्वे काष्ठादिकृतारोहणमार्गस्य । संमृज्यतेऽनयेति संमार्जनी, शोध्यतेऽनयेति शोधनी स्यादिति द्वे संमार्जन्याः । संकीर्यते संकरः-संकारश्च तथा अवकीर्यत इत्यवकरः, अवकारश्चेति उभौ क्षिप्ते धूल्यादौ स्यातामिति द्वे अवकरस्य ॥ १८ ॥

निकलनेके द्वार अच्छा स्थान

न. न. पु. पु.

' क्षिप्ते ' मुखं निःसरणं संनिवेशो निकर्षणः ।

ग्राम या गांव घर बनाने की भूमि

पु. पु. स. पु.न.

(समौ) संवसथग्रामौ वेश्मभूर्वास्तु (रस्त्रियाम् )॥ १९॥

मुखमिति–खन्यते इति मुखम्, निःसरन्त्यनेनेति निःसरणमिति द्वे निर्गमनप्रवेशमार्गस्य । संनिविशन्तेऽत्रेति संनिवेशः, कर्षणान्निर्गतो निकर्षण इति द्वे पुरादौ गृहादिरचनापरिच्छिन्नदेशस्य । संवसन्त्यत्रेति संवसथः, ग्रसते इति ग्रामः उभौ समौ समानार्थौ समानलिङ्गौ चेति द्वे ग्रामस्य । वेश्मनो भूः वेश्मभूः, वसन्त्यत्रेति वास्तुः अस्त्रियां पुंनपुंसके स्यादिति द्वे गृहरचनावच्छिन्नभूमेः ॥ १९ ॥

गोंयड़ या पड़ोस डांड़ या सीमा

पु. न. स. स.

ग्रामान्त उपशल्यं स्यात्सीमसीमे ( स्त्रियामुभे ) ।

अहीरों का गांव जंगलियों का गांव

पु. स. पु. पु.

घोष आभीरपल्ली स्यात्पक्कणः शबरालयः ॥ २० ॥

इति पुरवर्गः ॥

१ " डित्खनेर्मुट् चोदात्तः " इत्यत्र् आदेर्मुडागमः ॥

ग्रामेति–ग्रामस्य अन्तो ग्रामान्तः, शल्यमुपगतमुपशल्यम्, उपकण्ठमपि स्यादिति द्वे ग्रामादिसमीपदेशस्य। सीयते इति सीमा, सीमानौ, डाबुभाभ्यामिति पक्षे डाप् सीमा, सीमे रमावत्। (आघाटोप्यत्र) उभे स्त्रियां स्यातामिति द्वे सीमायाः। घोषन्ति गावोऽत्रेति घोषः, आभीराणां पल्ली (ग्रामः) आभीरपल्ली–आभीरपल्लिरपि इति द्वे गोपग्रामस्य। पचन्तीति पचः, कणन्तीति कणाः पचः कणा यत्रेति पक्कणः, शबं रान्तीति शबरास्तेषामालयः शबरालय इति द्वे शबरालयस्य ॥ २० ॥

इति पुरवर्गविवरणम् ॥

---

## अथ शैलवर्गो व्याख्यायते ॥

पर्वत — महीध्रेशिखरिक्ष्माभृदहार्यधरपर्वताः (पु.) ।
अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः (पु.) ॥ १ ॥

महीध्र इति–महीं धरतीति महीध्रस्तस्मिन्, शिखरमस्यास्तीति शिखरी, क्ष्मां बिभर्तीति क्ष्माभृत्, ह्रियते हार्यः न हार्योऽहार्यः, धरतीति धरः, पर्वाणि सन्त्यत्र, पर्वतीति वा पर्वतः, अत्ति अद्यते वेत्यद्रिः, गां त्रायते इति गोत्रः, गिरतीति गिरिः, ग्रसत इति ग्रावा, न चलतीत्यचलः, प्रचुराः शिलाः सन्त्यत्रेति शैलः, शिलाभिरुच्चीयत इति शिलोच्चय इति त्रयोदश पर्वतस्य ॥ १ ॥

पृथ्वीको घेरेहुआ पर्वत, त्रिकूट जिसपर लंका बसती है — लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककु (त्समौ) (पु.) ।
अस्ताचल, उदयाचल — अस्तस्तु चरमक्ष्माभृदुदयः ( पूर्वपर्वतः ) (पु.) ॥ २ ॥

लोक इति–लोकनं लोकः, न लोकोऽलोकः लोकालोकौ प्रकाशान्धकारावत्र स्तो लोकालोकः, चक्रं भूमण्डलं वलते, चक्राकारेण वाडते, चक्रवालमस्यास्तीति वा चक्रवालः, चक्रवाडोपीति द्वे लोकालोकस्य। त्रीणि कूटान्यस्येति त्रिकूटः, त्रीणि ककुत्सदृशानि शृङ्गाण्यस्येति त्रिककुत्, उभौ समौ समानार्थौ समानलिङ्गौ चेति द्वे लङ्काधिष्ठानपर्वतस्य । असति स्म, अस्यते स्मेति वा अस्तः, चरन्त्यत्रेति चरमः पश्चिमः चरमश्चासौ क्ष्माभृदिति द्वे अस्ताचलस्य। उद्यन्ति ग्रहा अस्मादित्युदयः, पूर्वश्चासौ पर्वतश्चेति द्वे उदयाचलस्य ॥ २ ॥

पर्वतों के भेद — हिमवान्निषधो विन्ध्यो माल्यवान्पारियात्रकः (पु.) ।
गन्धमादन (न.) ( मन्ये च हेमकूटादयो ) नगाः (पु.) ॥ ३ ॥

हिमेति–हिममस्मिन्नस्तीति हिमवान्, निषीदतीति निषधः, विरुद्धं ध्यायति वीध्यते वेति विन्ध्यः, माल्याकारतास्यास्तीति माल्यवान्, परितो यात्रया दृश्यते पारियात्रः स एव पारियात्रकः, गन्धेन मादयतीति गन्धमादनम् । अन्ये चेति–हेम्नः कूटो राशिः हेमकूटः आदिशब्दान्मलय-दर्दुर-चित्रकूट-मैनाक-सह्यादयो नगाः पर्वता ज्ञेया इति पर्वतभेदाः ॥ ३ ॥

पत्थर पहाड़ की चोटी बीहड़ या पर्वत से पानी गिरनेका स्थान

पु. पु. पु. पु. पु. स. स.
**पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ।**
पु.न. न. न. पु. पु. पु.
**कूटोऽस्त्री शिखरं शृङ्गं प्रपातस्त्वतटोभृगुः ॥ ४ ॥**

पाषाणेति–पिनष्टि, पत्यनेन पाषः, अणतीति अणः पाषश्चासावणश्चेति पाषाणः, प्रस्तृणातीति प्रस्तरः, गिरति–गृणाति, गरतीति ग्रः, अवतीति अवा, ग्रश्चासावचा चेति ग्रावा, उपलाति, पलतीति पलः अोः शम्भोः पलो बोधको वेत्युपलः, अश्नुते अश्मा, शिलतीति शिला, दृणातीति दृषदिति सप्त पाषाणस्य । कूटयति, कूटयते वेति कूटः अस्त्री स्यादिति पूर्वोत्तराभ्यां संबध्यते । शिखां राति, शिखास्यास्तीति वा शिखरम्, शृणातीति शृङ्गमिति त्रीणि शिखरस्य । प्रपतन्त्यस्मादिति प्रपातः, न तटमत्रेत्यतटः, भृज्जति, भृज्ज्यते वेति भृगुः “ प्रपातस्तु तटो भृगु ” रिति पाठे तु प्रपत्यते यतस्तटात्स भृगुरिति त्रीणि प्रपातस्य ॥ ४ ॥

पर्वतका बीच पर्वतोंकासमभूभागया किनारा झरनाकास्थान झरना

पु.न. पु.न. पु.न. पु.न.
**कटकोऽस्त्री (नितम्बोऽद्रेः) स्नुःप्रस्थः सानु (रस्त्रियौ)।**
पु. न. पु. पु. पु.
**उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः ॥ ५ ॥**

कटक इति–अद्रेः पर्वतस्य नितम्बो मध्यभागः कटति, कट्यते वेति कटक इत्येकं मेखलाख्यस्य पर्वतमध्यभागस्य । स्नौति जलम्, स्नातीति वा स्नुः ‘पुमानेव’ स्नुः, इति सर्वधरः । प्रतिष्ठन्तेऽत्रेति प्रस्थः, सनोति ददाति सुखमिति सानुरुभावस्त्रियौ स्यातामिति त्रीणि पर्वतसमभूभागस्य । उनत्ति जलेनेति उत्सः, प्रस्रवन्त्यापोऽस्मादिति प्रस्रवणमिति द्वे यतो जलं स्रवति तस्य स्थानस्य । वारिणः प्रवाहो वारिप्रवाहः, निर्झरणं निर्झरः, झरणं झरः–झरा, झरी–झरिश्चेति त्रीणि उत्सान्निर्गतजलप्रवाहस्य पञ्चापि पर्याया वा ॥ ५ ॥

बनाईहुईगुफा बिना बनाई गुफा भारी पत्थर

स. पु.स. न. न. स.
**दरी तु कन्दरो ( वा स्त्री ) देवखातबिले गुहा ।**
पु.न. पु.
**गह्वरं गण्डशैलास्तु “च्युताःस्थूलोपलागिरेः” ॥६॥**

---

१ दृषत्पाषाणमात्रके निष्पेषणार्थपट्टेपि ॥

दरीति—दृणातीति दरी, केन जलेन दीर्यत इति कन्दरो वा विकल्पेन स्त्री स्यात् कन्दरा, कन्दर्यपीति द्वे कृत्रिमगुहाकारगिरिविवरस्य। खन्यते स्मेति खातम्, देवेन खातं देवखातम्, बिलतीति बिलम्, गूहति, गुह्यतेऽनयेति गुहा, गाह्यत इति गह्वरम्—गह्वरश्चेति चत्वारि अकृत्रिमगिरिबिलस्य। गिरेः पर्वतात् च्युताः पतिताःस्थूलाश्च ते उपलाश्चेति गण्डइव शैलाः शैलानां गण्डा इवेति वा गण्डशैला भण्यन्त इत्येकं गण्डशैलस्य॥६॥

खानि पर्वतसमीपीछोटेपर्वत पहाड़ की निचलीभूमि,ऊपर की भूमि

स. पु. पु. पु.
**खनिः स्त्रियामाकरः स्यात्पादाः प्रत्यन्तपर्वताः।**
स. स.
**उपत्यका "द्रेरासन्ना भूमि" "रूर्ध्व"मधित्यका[1]॥७॥**

खनिरिति—खन्यत इति खनिः—खनी—खानिश्च स्त्रियां स्यात् आकुर्वन्त्यत्र,आकीर्यन्ते धातवोऽत्रेति वा आकर इति द्वे खानेः। पद्यन्ते एभिरिति पादाः, प्रत्यन्ते महाद्रीणां समीपे ये क्षुद्राः पर्वतास्ते प्रत्यन्तपर्वता इति द्वे पर्वतसमीपवर्तिक्षुद्रपर्वतस्य। अद्रेः आसन्ना भूमिः उप आसन्ना उपत्यकेत्येकं पर्वतासन्नभूमेः। अद्रेरूर्ध्वं भूमिः अधि आरूढा अधित्यकेत्येकं पर्वतोर्ध्वभूमेः "उपाधिभ्यां त्यकन्नासन्नारूढयो" रिति पाणिनिसूत्रेण सिद्धावेताविति॥ ७॥

पहाड़से उपजी वस्तु मनःशिला आदि व गेरू कुञ्ज

पु.
**धातु'र्मनःशिलाद्यद्रे' र्गैरिक'न्तु' विशेषतः।**
पु.न. पु.न.
**निकुञ्जकुञ्जौ ( वा क्लीबे लतादिपिहितोदरे )॥ ८॥**

**इति शैलवर्गः॥**

धातुरिति—अद्रेः मनश्शिलादि "सुवर्णरूप्यताम्राणि हरितालं मनःशिला। गैरिकाञ्जनकासीससीसलोहाः सहिङ्गुलाः॥ गन्धकोऽभ्रकमित्याद्या धातवो गिरिसंभवाः" दधाति शोभामिति धातुरित्येकं पर्वतोत्पन्नवस्तुनः। गिरौ भवमिति गैरिकं विशेषतो विशेषेण धातुः, धातुशब्देनैव प्रसिद्धत्वादित्येकं गैरिकस्य। लतादिपिहितोदरे नितरां कुञ्जन्त्यत्रेति निकुञ्जः, कावजनीति कुञ्जत्यत्रेति वा कुञ्जः उभौ क्लीबे वा स्यातामिति द्वे लतादिभिः पिहितस्थानस्य॥ ८॥

इति शैलवर्गविवरणम्॥

---

[1] "अधित्यकायामिव धातुमय्यामिति" रघुः॥

## अथ वनौषधिवर्गो व्याख्यायते ॥

वन या जंगल स. न. न. न. न. न.

बड़ावन **अटव्यरण्यं विपिनं गहनं काननं वनम् ।**

घर के समीपी न. स. पु. पु.

बाग **महारण्यमरण्यानी गृहारामास्तु निष्कुटाः ॥ १ ॥**

अटवीति—अटन्त्यत्रेति अटवी, अर्य्यंत इत्यरण्यम्, विशेषेण पियन्त्यत्र, वेपन्तेऽत्रेति वा विपिनम्, गाह्यत इति गहनम्, कानयति दीपयतीति काननम्, वनतीति वनमिति षट् वनस्य । महच्च तदरण्यं च महारण्यम्, महदरण्यमरण्यानीति द्वे महावनस्य । गृहस्यारामाः गृहारामाः, कुटाद्गृहान्निष्क्रान्ताः निष्कुटा इति द्वे गृहोपवनस्य ॥ १ ॥

पु. न. न.

बनाया बाग **आरामः स्यादुपवनं (कृत्रिमं वनमेव यत्) ।**

स.

राजमन्त्री व वेश्या का बाग **"अमात्यगणिकागेहोपवने" वृक्षवाटिका ॥ २ ॥**

आराम इति—यत् कृत्रिमं वनं तदेव आरमन्त्यत्रेत्यारामः, उपगतं वनं उपवनं स्यादिति द्वे कृत्रिमवृक्षसमूहस्य । अमात्यो मन्त्री, गणिका वेश्या तयोर्गेहोपवनं तस्मिन् वटति, वट्यते वा वाटिका, वृक्षाणां वाटिका वृक्षवाटिकेत्येकं मन्त्रिणो वेश्यायाश्च गृहस्थोपवनस्य ॥ २ ॥

पु. न.

राजा का बाग **(पुमानाऽ)ऽक्रीड उद्यानं "राज्ञःसाधारणं वनम्" ।**

न.

रानी का बाग **'स्यादेतदेवं' प्रमदवन "मन्तःपुरोचितम्" ॥ ३ ॥**

पुमानिति—राज्ञो यत्साधारणं वनं तत् आक्रीडन्त्यत्रेति आक्रीडः पुमान् स्यात्, उद्यान्त्यत्रेत्युद्यानमिति द्वे राज्ञः सर्वोपभोग्यवनस्य । अन्तःपुरोचितं यद्वनं तदेव प्रमदानां वनं प्रमदवनं स्यादित्येकं यत्र सस्त्रीको राजा क्रीडति तस्य वनस्य ॥ ३ ॥

पंक्ति या पांति स. स. स. स. स. स. स.

लेखा या लकीर **वीथ्यालिरावलिः पंक्तिः श्रेणीलेखास्तु राजयः ।**

वन समूह स. पु. पु. पु.

अखुआ **वन्या (वनसमूहे)स्यादङ्कुरो (ऽभिनवोद्भिदि) ॥ ४ ॥**

वीति—विध्यत इति वीथी—वीथिर्वा, आलतीत्यालिः, आवलतीति आवलिः, पच्यत इति पङ्क्तिः, श्रीयते इति श्रेणीति पञ्च सान्तरपङ्क्तेः । लिख्यन्त इति लेखाः, राजन्तीति राजय इति द्वे निरन्तरपङ्क्त्यपङ्क्तिसाधारणायाः । वनसमूहे वनानां निकरे

---

१ प्रविष्टः प्रमदावनमिति भट्टिः ॥

वनानां समूहो वन्येत्येकं वनसमुदायस्य। अथवा वनानां समूहो वन्या, वनानां समूहो वनसमूह इति द्वे वनसमूहस्य। अङ्कयत इत्यङ्कुरः, उद्भिनत्तीति उद्भिद्, अभिनवश्चासावुद्भिच्चाभिनवोद्भिद् तस्मिन्निति द्वे अङ्कुरस्य ॥ ४ ॥

पु. पु. पु. पु. पु. पु.

वृक्ष या पेड़ **वृक्षो महीरुहः शाखी विटपी पादपस्तरुः।**

पु. पु. पु. पु. पु. पु. पु.

**अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः ॥ ५ ॥**

वृक्ष इति—वृक्षति, वृश्चयते वा वृक्षः, मह्यां रोहतीति महीरुहः, शाखास्यास्ति अवश्यं शाखतीति वा शाखी, विटपः शाखा विस्तारोऽस्यास्तीति विटपी, पादैः पिबतीति पादपः, तरति, तरन्त्यनेन वा तरुः, अनसः शकटस्याकं गतिं हन्तीति अनोकहः, कुटतीति कुटः, सलति वायुना चलति, सल्यते वा सालः, पलाशानि सन्त्यस्येति पलाशी, द्रवत्यूर्ध्वमिति द्रुः, 'समुदाये वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते' इति न्यायाद्द्रुः शाखास्यास्तीति द्रुमः, न गच्छतीत्यगम इति त्रयोदश वृक्षस्य ॥ ५ ॥

वानस्पत्य पु. पु.

वनस्पति **वानस्पत्यः "फलैः पुष्पा" त्तैरपुष्पाद्वनस्पतिः।**

ओषधी स. पु. पु.

फलवान् **ओषध्यः ('फलपाकान्ताः')स्यादवन्ध्यः फलेग्रहिः॥६॥**

वानेति—पुष्पाज्जातैः फलैः वनस्य पतिर्वनस्पतिस्तस्मिन्भवो वानस्पत्यः स्यादित्येकं वानस्पत्यस्य। अपुष्पाज्जातैस्तैःफलैः वनस्पतिः स्यादित्येकं वनस्पतेः। फलपाक एव अन्तो यासां ताः ओषाः स्रोषा दीप्तयो वा धीयन्तेऽत्रेति ओषध्यः स्युरित्येकमोषध्याः। वन्ध्ये साधुः वन्ध्यः, न वन्ध्योऽवन्ध्यः; फलानि गृह्णातीति फलेग्रहिः—फलग्रहिश्चेति द्वे फलसमये फलग्राहकस्य ॥ ६ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

बांझ **वन्ध्योऽफलोऽवकेशी च फलवान् फलिनः फली।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

सफल **प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ॥ ७ ॥**

पु.स.न. पु.स.न.

फूले हुए **फुल्लश्चैते विकसिते स्यु "रवन्ध्यादयस्त्रिषु"।**

वन्ध्य इति—वन्धे साधुरिति वन्ध्यः, न फलान्यस्येति अफलः, अवसन्नाः केशा यस्य सोवकेशो निष्केशोऽस्यास्तीति, अवकं शून्यमीष्टे तच्छीलो वेत्यवकेशीति त्रीणि वन्ध्यस्य। फलानि सन्त्यस्येति फलवान्, फलिनः, फली चेति त्रीणि फलसहितवृक्षस्य। फलति स्म फुल्लः प्रकर्षेण फुल्लः, प्रफुल्लतीति वा प्रफुल्लः, उत्फुल्लति उत्फलति स्म

---

१ अनोकहा कम्पितपुष्पगन्धिरिति रघुः ॥ २ यत्रान्या ओषधयो म्लायन्त इति श्रुतिः ॥

वेत्युत्फुल्लः, संफुल्लति संफलति स्म वेति संफुल्लः, व्यावृत्तः कोशः संकोचोऽस्मादिति व्याकोशः, कचतीति कचः,विगतः कचोऽस्मादिति विकचः, स्फुटतीति स्फुटः, अफालीदिति फुल्लः,व्यकासीदिति विकसित इत्यष्टौ प्रफुल्लवृक्षस्य। अवन्ध्यादयो विकसितान्तास्त्रिषु त्रिलिङ्ग्यां स्युरिति ॥ ७ । ½ ॥

शाखापत्ररहित पु.न. पु. पु. पु.
छोटा वृक्ष **स्थाणु(र्वा ना)ध्रुवः शङ्कु(र्ह्रस्वशाखाशिफः)क्षुपः॥८॥**
शाखारहित या पु. पु. स. स. स.
ठूंठ लता या **(अप्रकाण्डे) स्तम्बगुल्मौ वल्ली(तु)व्रततिर्लता।**
बेल, स. स. पु.
फैली लता **( लता प्रतानिनी ) वीरुद्गुल्मिन्युलप (इत्यपि) ॥ ९ ॥**

स्थेति–तिष्ठतीति स्थाणुः वा विकल्पेन ना पुमान्स्यात्, ध्रुवतीति ध्रुवः, शङ्कतेऽस्मादिति शङ्कुरिति त्रीणि शाखापत्ररहितवृक्षस्य। शाखा च शिफा च ते ह्रस्वे शाखाशिफे यस्येति स क्षौतीति क्षुपः कथ्यत इत्येकं सूक्ष्मशाखामूलस्य शाखोटकादेः । न प्रकाण्डोऽस्येति तस्मिन् तिष्ठतीति स्तम्बः, गुडतीति गुल्म इति द्वे स्कन्धरहितस्य । वल्लते इति वल्लीवल्लिरपि–वेल्लिश्च प्रतनोति, व्रतमिव करोतीति वा व्रततिः, लततीति लतेति त्रीणि लतामात्रस्य । शाखापत्रसंचयः प्रतानः सोऽस्त्यस्याः सा प्रतानिनी एतादृशी लता वीरुदादिशब्दत्रयवाच्या भवतीति । विरोचते विरुणद्धीति वा वीरुत्, गुल्मः प्रतानोऽस्त्यस्या गुल्मिनी, वलतीति उलप इति त्रीणि महालतायाः ॥ ८ । ९ ॥

वृक्ष व पर्वत पु. पु. पु.
की उँचाई **नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च (सः)।**
पु.न. पु.
वृक्षका भाग **अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः १०**

नगेति–नगादयो वृक्षगिरिदेवालयादयस्तेषामारोहणमारोहो दैर्घ्यं स उच्छ्रयणमुच्छ्रायः, उत्सेधनमुत्सेधः, उच्छ्रयणमुच्छ्रयश्चेति त्रीणि वृक्षादिदैर्घ्यस्य । तरोर्वृक्षस्य मूलादारभ्य शाखावधिः प्रकाण्डयते, प्रकाम्यते वेति पृषोदरादित्वात् प्रकाण्डः अस्त्री स्यात् स्कन्द्यते इति स्कन्धः " स्कन्धः स्यान्नृपतावंसे संपरायसमूहयोः। काये तरुप्रकाण्डे च भ्रात्रादौ छन्दसोभिदि इति धान्तेषु मेदिनी" ति द्वे स्कन्धस्य ॥ १० ॥

शाखा स. स. स. स. स. स.
बड़ीशाखा वृक्ष **( समे ) शाखालते स्कन्धशाखाशाले शिफाजटे ।**
मूल बरोह पु. स.
ऊपरगई लता **(शाखाशिफा)वरोहः स्या"न्मूलाच्चाग्रंगता"लता॥११॥**

सम इति–शाखति, शाख्यते वृक्षोऽनयेति शाखा, लततीति लता उभे समे समानार्थे समानलिङ्गे चेति द्वे शाखायाः। स्कन्धजा शाखा स्कन्धशाखा, शलतीति शालेति

द्वे स्कन्धात्प्रथमोत्पन्नशाखायाः। शेते इति शिफा, जटतीति जटेति द्वे जटारूपमूलस्य वटादेः शाखाया अवलम्बिनी शिफा (मूलम्) अवरोहतीत्यवरोहः स्यादित्येकमव-रोहस्य। मूलादूर्ध्वगता शिफा लता स्यात् मुकुटस्तु "प्रसङ्गादवरोहस्यार्थान्तर माह—तरुमूलात्प्रभृतिवृक्षाग्रपर्यन्तंगतागुडूच्यादिलताप्यवरोहः" स्यादित्येकमूर्ध्वगत-लतायाः॥ ११॥

वृक्षकी चोटी
वृक्ष की जड़
सार या हीर
बकला या छिलका

न. न. पु न. न. पु. पु.
**शिरोग्रं शिखरं (वा ना) मूलं बुध्नोऽङ्घ्रिनामकः।**
पु. पु. स. पु.न. पु.न.
**सारो मज्जा (नरि) त्वक् (स्त्री) वल्कं वल्कलमस्त्रियाम्॥१२॥**

शिर इति—श्रीयन्त इति शिरः, अगतीत्यग्रम्, शिखां रातीति शिखरं वा ना पुमान् स्यादिति त्रीणि शिखरस्य। मूलतीति मूलम्, बध्नाति, बध्यते वा बुध्नः, अंघ्रिर्नाम यस्येत्यंघ्रिनामक इति त्रीणि मूलमात्रस्य। सरति कालान्तरमिति सारः, मज्जतीति मज्जा-नान्तो नरि पुंसि स्यात् लज्जावद्राजवन्मज्जामांससारास्थिसारयोरिति भागुरेराबन्तोपि मज्जोक्ता मज्जया सहेति द्विरूपकोशाच्चेति द्वे मज्जायाः। त्वचति तनोति तन्यते वेति त्वक् स्त्री स्यात्। वलते, वल्कयतीति वा वल्कम्, वलते, वल्कं लातीति वा वल्कलम् उभे अस्त्रियां पुंनपुंसके स्यातामिति त्रीणि वल्कलस्य॥ १२॥

काठ
इन्धन
खोंखला
मंजरी

न. पु.न. न. न. न. न. स.
**काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् (स्त्रियाम्)।**
पु. पु.न. स. स.
**निष्कुहः कोटरं (वा ना) वल्लरिर्मञ्जरिः (स्त्रियौ)॥१३॥**

काष्ठमिति—काश्यत इति काष्ठम्, दीर्यत इति दारु (पुंनपुंसकयोर्दारुरिति त्रिकाण्ड-शेषः) इति द्वे काष्ठमात्रस्य। इन्धेऽग्निरनेनेतीन्धनम्, एधतेऽनेनेत्येधः, इध्यतेऽनेनेतीध्मम्, इध्यतेनेनेति एधः, समिध्यतेऽनयेति समित् स्त्रियां स्यादिति त्रीण्यग्निसंदीपनतृण-काष्ठादेः। द्वे यागादौ हूयमानकाष्ठस्य। (पञ्चापि पर्याया इति स्वामी) निश्चयेन कुहयते इति निष्कुहः, कुटनं कोटस्तं रातीति कोटरं वा ना पुमान्स्यादिति द्वे वृक्षादिरन्ध्रस्य। वल्लत इति वल्लू—ऋच्छतीत्यरिः वल्लू चासावरिश्च वल्लनं वल्लू तामृच्छतीति वा वल्लरिः—वल्लरी च, मञ्जुत्वमृच्छतीति मञ्जरिः—मञ्जरी चेत्युभे स्त्रियौ स्यातामिति द्वे वल्लरेः॥ १३॥

न. न. न. न. न. पु.
पत्ता नया पत्ता **पत्रं पलाशं छदनं दलं पर्णं छदः (पुमान्)।**
पु.न. न. पु. पु.न.
डालोंका फैलना **पल्लवो (ऽस्त्री) किसलयं विस्तारो विटपो (ऽस्त्रियाम्)॥१४॥**

---

१ शिखरोऽस्त्रीद्रुमाग्रे चाद्रिशृङ्गपुलकाग्रयोः॥ (इति कोशान्तरम्)

पत्रमिति–पततीति पत्रम्, पलं मांसमश्नातीति पलाशम्, छद्यतेऽनेनेति छदनम्, दलतीति दलम्, पृणाति, पर्णयति, पिपर्तीति वा पर्णम्, छद्यते-छाद्यते वानेनेति छदः पुमान्स्यादिति षट् पत्रस्य। पल्लयां लूयते, पल्यते इति पल्, लूयत इति लवः, पल् चासौ लवश्चेति वा पल्लवः अस्त्री स्यात् ( पुंसि क्लीबे च पल्लव इति व्याडिः ) किञ्चित्स-लतीति किसलयमिति द्वे नवपत्रस्य। विस्तरणं विस्तारः, विटानां पानम् विटान्पातीति वा विटपः अस्त्रियां पुंनपुंसके स्यादिति द्वे शाखादिविस्तारस्य ॥ १४ ॥

न. न. न. न.

फल, गुच्छा, गोला ( वृक्षादीनां ) **फलं सस्यं वृन्तं प्रसवबन्धनम्।**

पु.स.न. पु.स.न.

फल, सूखाफल (आमे फले)**शलाटुः स्या 'च्छुष्के'वान** (उभे त्रिषु)॥१५॥

वृक्षेति–वृक्षादीनां फलतीति फलम्, सस्तीति सस्यम्, तालव्यादिपाठे तु शस्यत इति शस्यमिति द्वे फलस्य। वृणोतीति वृन्तम्, प्रसूयत इति प्रसवः, बध्यतेऽनेनेति बन्धनम्, प्रसवस्य पुष्पफलपत्रस्य बन्धनमिति द्वे पुष्पफलपत्रबन्धनस्य। आमे फले शलतीति शलः, अटतीति अटुः शलश्चासावटुश्चेति शलाटुः स्यादित्येकमामफलस्य। शुष्के फले वायति स्मेति वान्यते वा वानं स्यादित्येकं शुष्कफलस्य। उभे शलाटुवाने त्रिषु त्रिलिङ्ग्यां स्यातामिति ॥ १५ ॥

नई कली, पु. न. स. पु.

कली, फूलका **क्षारको जालकं 'क्लीबे' कलिका कोरकः** ( पुमान् )।

गुच्छा, पु. पु. पु.न. पु.न.

फूलती कली **स्याद्गुत्सकस्तु स्तबकः कुड्मलो मुकुलो**(ऽस्त्रियाम्)॥१६॥

क्षारक इति–क्षरतीति क्षारकः, जलति, जालयति वा जालम्, जालमिवेति जालकं क्लीबे स्यादिति द्वे नवकलिकावृन्दस्य। कलयतीति कलिः सैव कलिका, कुर्यत इति कोरकः पुमान् "कोरकोऽस्त्रीकुड्मले स्यात्कक्कोलकमृणालयोः" इत्यादि दर्शनात् क्लीबेपि स्यादिति द्वे अविकसितकलिकायाः। गुध्यतीति गुत्सः स एव गुत्सकःगुच्छकश्च, स्तूयते, तिष्ठतीति वा स्तबक इति द्वे विकासोन्मुखकलिकायाः, कलिकादिकदम्बस्य वा। कुडति, कुडयते वा कुड्मलः कुटति कुट्यते वा कुट्मलश्च, मुञ्चति कलिकात्वमिति मुकुलः उभौ अस्त्रियां पुंनपुंसके स्यातामिति द्वे ईषद्विकासोन्मुखकलिकायाः ॥ १६ ॥

स. न. न. न. न.

फूल,फूलकारस (स्त्रियः) **सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्।**

पु. पु. पु. न.

फूलकी धूलि **मकरन्दः पुष्परसः परागः सुमनोरजः ॥ १७ ॥**

---

१ स्तबके हारभेदे च गुत्सः स्तम्बेपि कीर्तित इति दन्त्यान्ते ( रुद्रः )। पुष्पादिस्तबके गुच्छ इति तालव्यान्ते ( रन्तिदेवः ) ॥

स्त्रिय इति—सुष्ठु मन्यन्ते आभिरिति सुमनसः स्त्रियः स्युः(" भूम्नि स्त्रियां सुमनस इति रत्नकोषः " सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोरिति मेदिन्यादेरेकत्वमपि ) पुष्प्यतीति पुष्पम्, प्रसूयते स्मेति प्रसूनम्, कुस्यतीति कुसुमम्,समतीति समम् सुममपीति पञ्च प्रसूनस्य । मकरमपि द्यति, मकरमप्यन्दतीति वा मकरन्दः,पुष्पस्य रसः पुष्परस इति द्वे मकरन्दस्य । परागच्छतीति परागः, सुमनसां रजः सुमनोरज इति द्वे परागस्य॥ १७॥

वृक्षों का फल **द्विहीनं प्रसवे सर्वं हरीतक्यादयः ( स्त्रियाम् ) ।**[1]

न. न. न. न. न.

**आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं ( फले ) ॥ १८ ॥**

द्वीति—प्रसवे फलपुष्पादिषु वर्तमानं सर्वं वक्ष्यमाणमश्वत्थादि द्विहीनं द्वाभ्यां स्त्रीपुंसाभ्यां हीनं नपुंसकलिङ्गं ज्ञेयमिति । हरीतक्याः फलं हरीतकी आदिना कोशातकी-बदरी—कण्टकारिकादयः प्रसवेपि स्त्रियां स्युरिति फले अश्वत्थस्य फलमाश्वत्थम्, वेणोः फलं वैणवम्, प्लक्षस्य फलं प्लाक्षम्, न्यग्रोधस्य फलं नैयग्रोधम्, इङ्गुद्याः फल-मैङ्गुदमिति पृथक् पृथगेकैकम् ॥ १८ ॥

भटकटैयाका **बार्हतं च (फले जम्ब्वा) जम्बूः (स्त्री)जम्बु जाम्बवम् ।**

फल जामुन **( पुष्पे ) जातिप्रभृतयः स्वलिङ्गाः व्रीहयः (फले)॥१९॥**

बार्हतमिति—बृहत्याः फलं बार्हतमित्येकं बृहतीफलस्य । जमतीति जम्बूस्तस्याःफले जम्बूः स्त्री स्यात् जम्ब्वाः फलं जम्बु, जाम्बवमिति त्रीणि जम्बूफलस्य । पुष्पे वर्तमानाः जातिप्रभृतयः जातीयूथिका शेफालिकामल्लिकाद्याः स्वलिङ्गा भवन्ति जात्याः पुष्पं जातिः यूथिकायाः पुष्पं यूथिका, शेफालिकायाः पुष्पं शेफालिका, मल्लिकायाः पुष्पं मल्लिकेत्यादयो ज्ञेयाः फले वर्तमाना व्रीहयः स्वलिङ्गा भवन्ति यवानां फलानि यवाः, माषाणां फलानि माषाः, मुद्गानां फलानि मुद्गा इत्यादयोवगन्तव्याः ॥ १९ ॥

स.

कुम्हड़ा आदि **"विदार्याद्यास्तु मूलेपि पुष्पे क्लीबेऽपि" पाटला ।**[2]

पु. पु. पु. पु.

**बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः ॥ २० ॥**

पु. पु. पु. पु. पु.

पीपर **अश्वत्थे (ऽथ)कपित्थे स्युर्दधित्थग्राहिमन्मथाः ।**

पु. पु. पु.

कैथा **"तस्मि"न्दधिफलः पुष्पफलदन्तशठावपि ॥ २१ ॥**

---

१ हरीतक्यादिभ्यश्च ( ४ । ३ । १६७ ) २ प्लक्षादिभ्योऽण् ( ४ । ३ । १६४ )

३ पाटलः कुसुमे वर्णेप्याशुव्रीहिश्च पाटल इति शाश्वतात्पुंलिङ्गोपि ॥

वीति—मूलेऽपि वर्तमाना विदार्याद्यास्तु स्वलिङ्गा भवन्तीति विदार्या भूकूष्माण्डया मूलं पुष्पं फलमपि विदारी आदिना गम्भारी, शालपर्णीत्यादयो ज्ञेयाः, पुष्पे वर्तमाना पाटला क्लीबे स्यादविशब्दात्स्वलिङ्गा भवतीति । पाटलायाः पुष्पं पाटलम्, पाटलापि "पाटलापाटलौ स्त्री स्यादस्य पुष्पे पुनर्न नेति मेदिन्यां पुंस्त्वस्य निषधान्न पुंलिङ्गः" बुध्यत इति बोधिः, द्रुःशाखास्यास्तीति द्रुमः बोधिश्चासौ द्रुमश्चेति बोधिद्रुमः, चलंदलमस्येति चलदलः, पिप्पलं जलमस्यास्तीति पिप्पलः, कुञ्जरैराश्यत इति कुञ्जराशनः, शाल्मलिवटाद्यपेक्षया न श्वश्चिरं तिष्ठति, अश्वत्थं जलमस्यास्तीति वा अश्वत्थ इति पञ्च पिप्पलस्य । अथति—कपयस्तिष्ठन्त्यत्रेति पृषोदरादित्वात् कपित्थः, कवित्थोपि, तस्मिन्, दधिवर्णाद्रवस्तिष्ठत्यत्रेति दधित्थः, गृह्णातीति ग्राही, मननं मत्, मथतीति मथः मतो मथो मन्मथः, तस्मिन्निति दधिफलेऽस्येति दधिफलः, पुष्पयुक्तं फलमस्येति दधिफलः, दन्तानां शठ इवेति दन्तशठ इति सप्त कपित्थस्य ॥ २० । २१ ॥

पु. पु. पु. पु.

गूलर **उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ।**

पु. पु. पु. पु.

कचनार **कोविदारे चमरिकः कुद्दालो युगपत्रकः ॥ २२ ॥**

उद्विति—उल्लङ्घितमम्बरमनेनेति, उदतिशयेनाम्बते वा उदुम्बरः, जन्तवः फलेऽस्येति जन्तुफलः, यज्ञमङ्गतीति यज्ञाङ्गः, हेमवर्णं दुग्धमस्येति हेमदुग्धक इति चत्वारि उदुम्बरस्य । कुं भूमिं विदृणातीति पृषोदरादित्वात् कोविदारः, चमरमस्यास्तीति चमरिकः, कुमुद्दालयतीति शकन्ध्वादित्वात् कुद्दालः युगं युग्मं पत्रमस्येति युगपत्रक इति चत्वारि कोविदारस्य ॥ २२ ॥

पु. पु. पु.स. पु.

सातपत्तोंवाला **सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ।**

पु. पु. पु. पु.

छितिवन **आरग्वधे राजवृक्षसंपाकचतुरङ्गुलाः ॥ २३ ॥**

पु. पु. पु. पु.

अमिलतास **आरेवतव्याधिघातकृतमालसुवर्णकाः ।**

पु. पु. पु. पु. पु.

जम्बीरीनींबू **(स्युः)र्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ॥ २४ ॥**

सप्तेति—काण्डे काण्डे सप्तपर्णान्यस्येति सप्तपर्णस्तस्मिन्, विशाला त्वगस्येति विशालत्वक्, शरदि पुष्यतीति शारदः शारद्यपि, विषमाश्छदा यस्येति विषमच्छद इति चत्वारि 'छतवती' इति ख्यातस्य । आरगणामारग्रोगशंकापि तां हन्तीति आरजं रोगरागमपि हन्तीति वा आरग्वधस्तस्मिन्, राजा चासौ वृक्षश्च रोगाणां राजानं वृश्चति वृक्षाणां राजेति वा राजवृक्षः, सम्यक् पाकोऽस्येति संपाकः शं कल्याणं पाकोऽस्येति वा शंपाक-

स्तालव्यादिरपि । स्वामिमते शमींशिविम् अकतीति शम्याकोपि, चतस्रोऽङ्गुलयः प्रमाण-मस्येति चतुरङ्गुलः, आरेवयति निस्सारयति मलं सारकत्वादिति आरेव, अततीति अतः आरेव चासावतश्चेति आरेवतः, व्याधीन्हन्तीति व्याधिघातः, कृता माला पुष्पैरिति कृतमालः, शोभनो वर्णोऽस्येति सुवर्णकः, सुष्ठु पर्णान्यस्येति विग्रहे तु सुपर्णोपीत्यष्टावारग्वधस्य । जम्यत इति जम्बीरस्तस्मिन्, दन्तानां शठ इव दन्तशठः, जम्भयत्यम्लत्वादिति जम्भः, जम्भयतीति जम्भीरः जम्भयतीति जम्भलः एते स्युरिति पञ्च जम्भीरस्य ॥ २३ । २४ ॥

पु. पु. पु. पु. पु.

वरना **वरणे वरुणः सेतुस्तिक्तशाकः कुमारकः ।**

पु. पु. पु. पु. पु.

नागकेसर **पुंनागे पुरुषस्तुङ्गः केसरो देववल्लभः ॥ २५ ॥**

वरण इति—वृणोतीति वरणस्तस्मिन्, व्रियते वृणोति वा वरुणः, सिनोति, सीयते वा सेतुः, तिक्तः शाकोऽस्येति तिक्तशाकः, कुमारयतीति कुमारः कुमार इव कुमारक इति पञ्च वरणस्य । पुमान् नाग इव पुन्नागस्तस्मिन्, पुरतीति पुरुषः, तुञ्ज्यते इति तुङ्गः, प्रशस्ताः केसरा अस्येति केसरः, देवानां वल्लभ इति देववल्लभ इति पञ्च नागकेसरस्य ॥ २५ ॥

पु. पु. पु. पु.

नींब बड़ा तेंदुआ **पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ।**

पु. पु. पु. पु. पु.

या तिनिस **तिनिशे स्यन्दनो नेमीरथद्रुरतिमुक्तकः ॥ २६ ॥**

पु. पु. पु. पु.

अम्बाडा या **वञ्जुलश्चित्रकृच्चाथ ( द्वौ ) पीतनकपीतनौ ।**

पु. पु. पु. पु.

अमरा महुआ **आम्रातके मधूके (तु) गुडपुष्पमधुद्रुमौ ॥ २७ ॥**

पहाड़ी या पु. पु. पु.

जली महुआ **वानप्रस्थमधुष्ठीलौ ( जलजेऽत्र ) मधूलकः ।**

पारीति—पारमस्यास्तीति पारि पारंगतं भद्रमस्य, परितोभद्रमस्येति वा परिभद्रः स एव पारिभद्रस्तस्मिन, नियमयति, निम्बतीति वा निम्बः निम्बसंज्ञकस्तरुर्निम्बतरुः, मन्दते, मन्दा अरा यस्य, मन्दमृच्छतीति वा मन्दारः, पारि पारंगतं जातं जन्मास्य, पारिणः समुद्राज्जातो वा स एव पारिजातक इति चत्वारि 'वकायनी ' इत्याख्यातस्य । अतिक्रान्तो निशाः, अतिशयेन नेशतीति वा पृषोदरादित्वात् तिनिशस्तस्मिन्, स्यन्दत इति स्यन्दनः, नयतीति नेमिः, रथस्य द्रुः रथद्रुः, अतिशयितो मुक्तो विस्तारोऽस्येति अतिमुक्तकः, वच्यत इति वञ्जुलः, चित्रं करोतीति चित्रकृदिति सप्त तिनिशस्य । आम्रम-

ततीति आम्रातकः अम्रातकश्च तस्मिन्, पीतं करोति पीतयतीति पीतनः, कपीनां कपेर्वर्णस्य तनः ईर्लक्ष्मीस्तस्यास्तन ईतनः कपीनां कपेर्वा ईतनः कपीतनः इमौ द्वौ स्यातामिति त्रीणि आम्रातकस्य । मह्यते, मन्यते वा मधूकस्तस्मिन्, गुड इव पुष्पमस्येति गुडपुष्पः, मधुनामा द्रुमो मधुद्रुमः, वनप्रस्थे वनैकदेशे भवो वानप्रस्थः, मधु ष्ठीवति, मधुष्ठीलं गर्भेऽस्येति वा मधुष्ठील इति पञ्च मधूकस्य । अत्र जलजे मधूके मधुलातीति मधूलस्स एव मधूलक इत्येकं जलजमधूकस्य ॥ २६ । २७ । १/२ ॥

पु. पु. पु.

पीलुआ पहाड़ी **पीलौ गुडफलः स्रंसी (तस्मिंस्तु गिरिसंभवे)** ॥ २८ ॥

पलुिआ पु. पु. पु. पु.

अंकुहर या पिस्त **अक्षोटकर्परालौ द्वावङ्कोटे तु निकोचकः ।**

पीलाविति–पीलतीति पीलुस्तस्मिन्, गुड इव फलमस्येति गुडफलः, अवश्यं स्रंसयति मलमिति स्रंसीति त्रीणि पीलोः। तस्मिन्पीलौ गिरिसंभवे गिरिजे सति अक्ष्णोति अक्षस्येवोटाः पर्णान्यस्येति वा अक्षोटः, कर्परमालतीति, कर्परास्यास्ति वा कर्परालः कन्दरालोपि इमौ द्वौ स्यातामिति द्वे पर्वतपीलोः । अङ्कयत इत्यङ्कोटस्तस्मिन्, निकुच्यते इति निकोचकः लिकोचकोपीति[१] द्वे अङ्कोलस्य ॥ २८ । १/२ ॥

पु. पु. पु. पु. पु.

ढाक या छिउल **पलाशे किंशुकः पर्णो वातपोथो ( ऽथवेतसे )** ॥ २९ ॥

पु. पु. पु. पु. पु. पु.

वेत **रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः ।**

पु. पु. स. पु.

जलवेत **( द्वौ ) परिव्याधविदुलौ नादेयी (चाम्बुवेतसे )** ॥ ३० ॥

पलेति–प्रशस्तानि पलाशान्यस्य, पलं मांसमश्नातीति वा पलाशस्तस्मिन्, किञ्चित्शुक इव शुकतुण्डाभपुष्पत्वात्किंशुकः, पृणाति, पिपर्त्ति, प्रशस्तानि पर्णान्यस्येति वा पर्णः, वातं पोथयतीति वातपोथ इति चत्वारि पलाशस्य । अथेति–अयनमितम् वा विकल्पस्येतं ज्ञानं स्यतीति, ऊयते वा वेतसस्तस्मिन्, रम्यतेऽत्रेति रथः, अभ्रमिव अभ्रसमये वा पुष्पमस्येति अभ्रपुष्पः, वेत्ति, विद्यते वा विदुलः, शीतमस्यास्तीति शीतः, क्लीबेपि, वायतीति वम्–शुष्कमासमन्तान्नीरमस्येति वानीरः, वजतीति वञ्जुल इति सप्त वेतसस्य । अम्बुजातोवेतसोऽम्बुवेतसस्तस्मिन् , परिविध्यते परिव्याधः, विद्यत इति विदुलः इमौ द्वावपि पुमांसौ, नद्यां भवा नादेयीति चत्वारि जलजातवेतसस्य ॥ २९ । ३० ॥

---

१ लयनं लीस्तयाकोचको व्यथाजनकः 'लिकोचकः' ( इति श्रीकरः ) ॥

पु. पु. पु. पु. पु.
सहँजना लाल **शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः।**
पु. पु. पु.
फूलका सहँजना रीठा **(रक्तोऽसौ) मधुशिग्रुः स्याद्रिष्टः फेनिलः (समौ)॥३१॥**

शोभेति—शोभामनक्तीति शोभाञ्जनः स एव शौभाञ्जनो वा सुष्ठुभातामनक्तीति विग्रहे तु सुभाञ्जनः सएव सौभाञ्जनो दन्त्यादिरपि तस्मिन्, शिनोतीति शिग्रुः, तीक्ष्णो गन्धोऽस्येति तीक्ष्णगन्धकः, आक्षीवते, आक्षीवयति वा आक्षीवः, अक्षीवोपि, मोचयति मोचः स एव मोचक इति पञ्च सौभाञ्जनस्य। असौ शौभाञ्जनः रक्तः रक्तपुष्पश्चेत्तदा मधुप्रधानः शिग्रुः मधुर्मधुरः शिग्रुर्वा मधुशिग्रुः स्यादित्येकं रक्तशौभाञ्जनस्य। न रिष्टमस्मादिति अरिष्टः, फेनोऽस्यास्तीति फेनिलः उभौ समाविति द्वे 'रीठा' इति ख्यातस्य॥ ३१॥

पु. पु. पु. पु. पु.
बेल, पाकरि **बिल्वेशाण्डिल्यशैलूषौ मालूरश्रीफलावपि।**
पु. पु.स. पु.स. पु. पु. पु.
बरगद **प्लक्षो जटी पर्कटी स्यान्न्यग्रोधो बहुपाद्वटः॥ ३२॥**

वीति—बिलतीति बिल्वः ( बिल्वं फले श्रीफले ना ) तस्मिन्, शण्डते, शण्डयति शाण्डिलस्य गोत्रापत्यं वा शाण्डिल्यः शिलूषस्यापत्यं, शैलूष इवेति वा शैलूषः, मां लक्ष्मीं परेषां लुनातीति मालूरः, श्रीप्रदं श्रीप्रियं वा फलमस्येति श्रीफलोपीति पञ्च बिल्ववृक्षस्य। प्लक्षत्यधोगच्छति, प्लक्ष्यते वा प्लक्षः, जटतीति जटी—जटिः—जटी वा पृच्यत इति पर्कटी स्यादिति त्रीणि पर्कस्याः 'पाकर' इतिख्यातस्य। न्यक्रुणद्धीति न्यग्रोधः, बहवः पादा अस्येति बहुपाद्, वटतीति वट इति त्रीणि वटस्य॥३२॥

पु. पु. पु. पु. पु. पु.
लोध, आँव, **गालवः शावरो लोध्रस्तिरीटस्तिल्वमार्जनौ।**
खुशबूदार पु. पु. पु. पु.
आँब **आम्रश्चूतो रसालो (सौ)सहकारो (ऽतिसौरभः)॥३३॥**

गालेति—गालं नेत्रस्रवं वाति, गालवस्यापत्यमिति वा गालवः, शबराणामयं शाबरः, सावरो दन्त्यादिरपि। रुणद्धीति लोध्रः, लत्वाभावे रोध्रोपि, तीर्यते मलमनेनेति तिरीटः, तिलत्यङ्गमनेनेति तिल्वः मार्ष्टयनेनेति मार्जन इति षट् लोध्रस्य। आद्यौ श्वेतलोध्रे, शेषा रक्तलोध्रे, (इति स्वामी) अम्यत इति आम्रः, चूष्यते स्म, च्योतति रसमिति वा चूतः, रसमलतीति रसाल इति त्रीण्याम्रस्य। असावाम्रोऽतिशयितं सौरभमस्येत्यतिसौरभश्चेत्तदा सहकारयति मेलयति द्वन्द्वमिति सहकारः स्यादित्येकमतिसुगन्धाम्रस्य॥ ३३॥

पु. न. पु. पु. पु.

गुग्गुल **कुम्भोलूखलकं (क्लीबे)कौशिको[1] गुग्गुलुः पुरः ।**

पु. पु. पु. पु. पु.

लसोड़ा **शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ॥ ३४ ॥**

कुम्भेति–कमुम्भति ( शकन्ध्वादित्वात् ) कुम्भः, ऊर्ध्वं खम् उलूखं तल्लातीति उलूखलन्तदेव उलूखलकं क्लीबे स्यात्, कोशे भवः कौशिकः, गोजतीति गुज् व्याधिस्तस्माद्गुडति " डलयोरेकत्वात् " गुग्गुलुः, पुरतीति पुरः " पुरं पाटलिपुत्रेङ्गे गुग्गुलौ तु पुमानयमिति " (रभसः) इति पञ्च गुग्गुलोः । शिलतीति शेलुः, श्लेष्माणमततीति श्लेष्मातकः, श्यायते स्मेति शीतः, उद्दालयतीति उद्दालः, बहून्वारयति, बहून्वृणोतीति बहुवारः स एव वा बहुवारकः इति पञ्च बहुवारस्य ॥ ३४ ॥

पु.न. पु. पु. पु.

चिरौंजी **राजादनं पियालः "स्यात्सन्नकद्रुर्धनुष्पटः ।**

खंभारी या स. स. स. स.

कंभारी **गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका ॥ ३५ ॥**

स. स. पु.

**श्रीपर्णी भद्रपर्णी (च) काश्मर्यश्चा ( प्यथ द्वयोः ) ।**

राजेति–राजभिरद्यत इति राजादनम्, राजानमततीति विग्रहे तु राजातनोपि "राजादनं प्रसरको राजातन"(इति वाचस्पतिः) पीयत इति पियालः प्रीणातीति विग्रहे तु प्रियालश्च प्रियालश्च पियालकः (इति माधवः) सन्नोलीनः कद्रुर्वर्णोऽस्येति सन्नकद्रुः, सन्नः, कद्रुश्चेति द्वे नामनीति सोमनन्दीति (मुकुटः) दधन्ति धारयतीति धनुः, पटतीति पटः, धनुष इव पटो विस्तारोऽस्येति धनुष्पट इति समस्तं नाम वेति चत्वारि राजादनस्य । कं जलं बिभर्तीति गम्भारी, कम्भारीत्यपि, सर्वतो भद्रं यस्याः सर्वतोभद्रा, काशत इति काश्मरी, मधु इव पर्णान्यस्याः सैव मधुपर्णिका, श्रीयुक्तानि पर्णान्यस्याः श्रीपर्णी, भद्राणि पर्णान्यस्या भद्रपर्णी, काश्मरीशब्दोऽस्त्यस्येति काश्मर्य इति सप्त खम्भार्याः । अथेति–द्वयोर्भवन्तीत्यग्रे सम्बध्यते ॥ ३५ । १/२ ॥

पु.स. स. स. न. न. न.

बेर **कर्कन्धूर्बदरीकोली कोलं कुवलफेनिले ॥ ३६ ॥**

बेरके फल न. न. स. पु.

कटाय या शमी **सौवीरं बदरं घोण्टा "प्यथ स्या" त्स्वादुकण्टकः ।**

पु. पु पु. पु.

**विकङ्कतःस्रुवावृक्षो ग्रन्थिलो व्याघ्रपा(दपि) ॥ ३७ ॥**

---

१ " कौशिको नकुले व्यालग्राहे गुग्गुलशुक्रयोः । कोशजोलूकयोश्च स्याद्विश्वामित्रमुनावपि ॥ कौशिकी चण्डिकायां च नदीभेदे च योषिति " ( इति कोषान्तरम् ) ॥

कर्कमिति—कर्कं कण्टकं दधातीति कर्कन्धूः द्वयोः स्त्रीपुंसयोः स्यात् बदतीति बदरी, कोलति घनीभवतीति कोली, कौ वलतीति विग्रहे तु कुवल्यपीति त्रीणि बदर्य्याः। कोल्याः फलं कोलम्, कुवल्याः फलं कुवलम्, फेनोऽस्यास्तीति फेनिलम्, सुवीरदेशे भवं सौवीरम्, बदर्य्याः फलं बदरम्, घोणत इति घोण्टा "घोण्टा तु बदरी पूगवृक्षयोरपि योषितीति" (मेदिनी) इति षट् कर्कन्धूफलस्य। अथेति—कण्टकोऽस्यास्तीति कण्टकः, स्वादुश्चासौ कण्टकश्चेति स्वादुकण्टकः स्यात्, विकङ्क्ते इति विकङ्कतः, स्रुवायाःवृक्षः स्रुवावृक्षः, ग्रन्थिरस्यास्तीति ग्रन्थिलः, व्याघ्रस्य पादा इव पादा मूलान्यस्येति व्याघ्रपादपीति पञ्च कठेरस्य ॥ ३६ । ३७ ॥

पु. पु. स. स.
नारंगी **ऐरावतो नागरङ्गो नादेयी भूमिजम्बुका।**
पु. पु. पु. पु.
तेंदुआ **तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ॥ ३८ ॥**

ऐरेति—इरावत्या विद्युत इवायमैरावतः, नागा रजन्त्यत्र, नागस्य सिन्दूरस्येव रङ्गोऽस्येति वा नागरङ्गः, नृणातीति नारङ्गोपि "नागरङ्गे तु नारङ्गो नार्य्यङ्गस्तक्रवासनः" (इति वाचस्पतिः)नद्यां भवा नादेयी, भूमेर्जम्बूः सैव भूमिजम्बुकेति चत्वारि नागरङ्गस्य। शितिः कालः सारो मज्जा यस्येति शितिसारकस्तस्मिन्, तिम्यतीति तिन्दुकः, स्फूर्जतीति स्फूर्जकः, कालः स्कन्धो यस्येति कालस्कन्धः " कालस्कन्धस्तमाले स्यात्तिन्दुके जीवकद्रुमे " (इति विश्वः) इति चत्वारि तिन्दुकस्य ॥ ३८ ॥

पु. पु. पु. पु.
कड़वा तेंदुआ **काकेन्दुः कुलकः काकपीलुकः काकतिन्दुके।**
पु. पु. पु.स. पु. पु.
काली पाढ़रि **गोलीढो झाटलो घण्टापाटलिर्मोक्षमुष्ककौ ॥ ३९ ॥**

काकेति—काकानां काकवर्णो वा तिन्दुकः पृषोदरादित्वात् काकेन्दुः, कुलस्य प्रतिकृतिरिवकुलकः " कुलकं तु पटोले स्यात्सम्बद्धश्लोकसंहतौ। पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते " ( इति विश्वमेदिन्यौ ) काकैः पील्यते, काकानां पीलुरिवेति वा काकपीलुकः, काकानां तिन्दुकः काकतिन्दुकस्तस्मिन्निति चत्वारि कटुतिन्दुकस्य कुचिलाख्यस्य वा। गोभिर्लिह्यते स्म गोलीढः, झाटं संघातं लातीति झाटलः, अघानीति घण्टा, पटनं पाटस्तं लातीति पाटलिः, घण्टा चासौ पाटलिश्चेति घण्टापाटलिः स्वामी तु ( घण्टा, पाटलिरितिनामद्वयमाह) मोक्षयतिरोगमिति मोक्षः " मोक्षस्तु मुक्तिपाटलिमोचने " मुष्णातीति मुष्कः स एव मुष्कक इति पञ्च लोध्रविशेषस्य ॥ ३९ ॥

---

१ उक्तं च समन्वयप्रदीपे—यत्र वाक्यार्थविश्रान्तिः श्लोकेनैकेन जायते। तन्मुक्तकं युगं द्वाभ्यां त्रिभिः स्यात्तिलकं पुनः। चतुर्भिः स्याच्च कलकं पञ्चभिः कुलकं ततः। महाकुलकमित्यार्य्याः कथयन्ति ततः परमिति ॥

पुं. पु. पु. पु. पु.
तिलक,झाऊ **तिलकः क्षुरकः श्रीमा ( न्समौ ) पिचुलझावुकौ ।**
स. स. स. पु. पु.
कायफर **श्रीपर्णिका कुमुदिका कुम्भी कैटर्यकट्फलौ ॥ ४० ॥**

तिलेति—तिलतीति, तिल इवेति वा तिलकः, "तिलको द्रुमभेदे स्वभेदे च तिलकालके । क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके" क्षुरतीति क्षुरकः, श्रीरस्त्यस्येति श्रीमानिति त्रीणि तिलकवृक्षस्य । पिचुं तूलं लातीति पिचुलः, 'झा' इति शब्दं वेति गच्छतीति झावुः झावुरिवेति झावुकः उभौ समौ समानार्थौ समानलिङ्गाविति द्वे झावुकस्य । श्रीः पर्णेषु यस्या इति श्रीपर्णी सैव श्रीपर्णिका, कौ मोदते कुमुदा सैव कुमुदिका, कमुम्भतीति कुम्भी, कुम्भीव कुम्भी रसाधारत्वाद्वेति, केटनं केटस्तासस्तं रातीति केटरः स एव कैटर्य्यः कैडर्य्यश्च, ( अत्र स्वार्थे ष्यञ् ) कटतीति कट् फलतीति फलम् कट्फलमस्येति कट्फल इति पञ्च कट्फलस्य ॥ ४० ॥

पु. पु, स. पु.
लाल लोध **क्रमुकः पट्टिकाख्यः स्यात्पट्टी लाक्षाप्रसादनः ।**
पु. पु. पु. पु. न.
शहतूत **नूद ( स्तु ) यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु ( च ) ॥ ४१ ॥**
न. पु. पु. पु. पु.
कदम्ब **तूलं ( च ) नीपप्रियककदम्बास्तु हलिप्रिये ।**
पु. पु. स. पु.स.न.
भिलावां **वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी ( त्रिषु ) ॥ ४२ ॥**

क्रमुक इति—क्रामतीति क्रमुकः, पट्टिका आख्या यस्येति पट्टिकाख्यः,पट्टोऽस्यास्तीति, पटतीति वा पट्टी पट्टिश्च, लाक्षाप्रसीदत्यनेन, लाक्षां प्रसादयति वा लाक्षाप्रसादन इति चत्वारि पट्टिकाख्यलोध्रस्य । नुदति पापम्, नु वदति, नूयते वा नूदः तुदतीति तूदोपि, युवन्त्यनेनेति यूपः, क्रामतीति क्रमुकः, ब्रह्मणि वैदिके साधु ब्रह्मण्यः, ब्रह्मणो ब्रह्मणि वा दारु ब्रह्मदारु, तूलयति, तूल्यते वा तूलमिति षट् अश्वत्थाकारस्य, पार्श्वपिप्पलाख्यस्य, तूदस्य वा । नयति, नीयते वा नीपः, प्रीणातीति प्रियकः, कदतीति कदम्बः हलिनः प्रियः सुराया अधिवासनादिति हलिप्रिय इति चत्वारि कदम्बस्य । वीर इव वृक्षो वीरवृक्षः, अरुर्व्रणं करोतीति अरुष्करः, अग्निरिव मुखमस्या अग्निमुखी, भल्ल इवाततीति भल्लातकी त्रिषु त्रिलिङ्ग्यां स्यादिति चत्वारि भल्लातकस्य ॥ ४१ । ४२ ॥

पु. पु. पु. पु.
गेंठी अमिली **गर्दभाण्डे कन्दरालकपीतनसुपार्श्वकाः ।**
पु. स. स. स. पु.
बिजयसार **प्लक्षश्च तिन्तिडी चिञ्चाम्लिकाथो पीतसालके ॥ ४३ ॥**

२ पिचुः स्यात्तूलकर्षयोरिति ( धरणिः ) ॥

पु. पु. पु. पु. पु.
संखुआ या **सर्जकासनबन्धूकपुष्पप्रियकजीवकाः।**
पु. पु. पु. पु. पु.
शाल या कोरों **साले (तु) सर्जकार्ष्याश्वकर्णकाः सस्यसंवरः ॥४४॥**

गर्देति–"गर्दभो गन्धभिद्यपि" गर्दभमततीति गर्दभाण्डस्तस्मिन्, कन्दरां लातीति कन्दरालः, या लक्ष्म्यास्तन ईतनः कपीनां कपेर्वर्णस्य वा ईतनः कपीतनः, शोभनं पार्श्वमस्येति सुपार्श्वकः, प्रक्षरतीति प्लक्ष इति पञ्च गेह्याख्यस्य। तिम्यतीति तिन्तिडी, चिम् इत्यव्यक्तं शब्दं चिनोतीति चिञ्चा, अम्लोरसोऽस्यास्तीति अम्लिका, अम्लीकाचेति त्रीणि चिञ्चायाः। अथविति–पीतः सारोऽस्येति पीतसालकः, सृजति, सृज्यते वा सर्जकः, अस्यति रुजमिति असनः "प्रियको जीवकोसनः" इति (रत्नकोषः) बन्धूकस्येव पुष्पाण्यस्येति बन्धूकपुष्पः, प्रीणातीति प्रियकः, जीवयतीति जीवक इति षट् विजयसारस्य। सल्यते, सारोदार्ढ्यमतिशयितमस्येति वा सालः, सर्ज्यत इति सर्जः, कृषतीति कृषः स एव कार्ष्यः, अश्वकर्ण इव पत्रमस्येति अश्वकर्णकः, सस्यैः संव्रियते, सस्यसंवर इति पञ्च सालस्य ॥ ४३ । ४४ ॥

पु. पु. पु. पु. पु.
अर्जुन,खिन्नी **नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः।**
पु.न. पु. स.
या खिरिणी **राजादनः फलाध्यक्षः क्षीरिकायामथ (द्वयोः) ॥४५॥**
पु.स. पु. पु. पु. पु.
गोंदी,या पांखी **इङ्गुदी तापसतरुर्भूर्जे चर्मिमृदुत्वचौ।**
स. स. स. पु. पु.स.
भोजपत्र,सेमर **पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलि "द्वयोः" ४६**

नदीति–नद्याः सर्जो नदीसर्जः, वीरश्चासौ तरुश्चेति वीरतरुः, इन्द्रस्य इन्द्र इव वा द्रुरितीन्द्रद्रुः, ककुभो दिशः सन्त्यस्येति ककुभः, अर्ज्यत इत्यर्जुनः इति पञ्च अर्जुनवृक्षस्य। राजभिरद्यत इति राजादनः, राजादनमपि, फलानामध्यक्षः फलाध्यक्षः, क्षीरमस्त्यस्याः क्षीरिका तस्यामिति त्रीणि क्षीरिकायाः। अथेति इङ्गनामिङ्गस्तं द्यति खण्डयतीति इङ्गुदी द्वयोः स्यात्, तापसस्य तपस्विन उपयुक्तस्तरुस्तापसतरुरिति द्वे इङ्गुदस्य। ऊर्जनमूर्जः भूरूर्जोऽस्येति भूर्जः, प्रशस्तं चर्मास्यास्तीति चर्मी, मृदुस्त्वगस्येति मृदुत्वच इति त्रीणि भोजपत्रवृक्षस्य। पिच्छा शाल्मलिनिर्यासोऽस्त्यस्याः पिच्छिला, पूरयतीति पूरणी, मुञ्चति रसमिति मोचा, स्थिरमायुर्यस्याः स्थिरायुः "षष्टिवर्षसहस्राणि वने जीवति शाल्मलिरिति वचनात्" शालयतीति शाल्, मलते इति मलिः शाल् चासौ मलिश्चेति शाल्मलिः द्वयोः स्यादिति पञ्च शाल्मलेः ॥ ४५ । ४६ ॥

स. पु. पु. पु.

सेमर का गोंद **पिच्छा ( तु ) शाल्मलीवेष्टे[1] रोचनः कूटशाल्मलिः ।**

पु. पु. पु. पु.

काला सेमर कंजा या करंज **चिरबिल्वो नक्तमालः करज ( श्च ) करञ्जके ॥ ४७ ॥**

पिच्छेति—पतितुमिच्छति, पिच्छयति, पिच्छ्यते वा पिच्छा, शाल्मल्यावेष्टः शाल्मलीवेष्ट इति द्वे शाल्मलीनिर्यासस्य । रोचत इति रोचनः, कूटश्चासौ शाल्मलिश्चेति कूटशाल्मलिरिति द्वे कृष्णशाल्मलेः । चिरं चिरि वा बिलतीति चिरबिल्वः चिरिबिल्वोपि, नक्तं मालो धारणमस्य, नक्तमालतीति वा नक्तमालः, 'रक्तमाल' इति (स्वामी) करेण जन्यते, कं सुखं जलं वा रञ्जयतीति वा करजः, कं रञ्जयतीति करञ्जः सएव करञ्जक इति चत्वारि करञ्जस्य ॥ ४७ ॥

पु. पु. पु. पु.

कांटेदार कंजा **प्रकीर्यः पूतिकरजः पूतीकः कलिमारकः ।**

पु. स. स.

कंजा के भेद **( करञ्जभेदाः ) षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ॥ ४८ ॥**

प्रेति—प्रकीर्यते इति प्रकीर्यः, पूतिश्चासौ करजश्चेति पूतिकरजः, पुनातीति पूतीकः पूतिक इति पाठे तु पूतिं कायतीति पूतिकोपि, कलिं मारयतीति कलिमारः सएव कलिमारकः, कलिकारक इति पाठे तु कलिं करोतीति कलिकारः स एव कलिकारक इति चत्वारि कण्टकवत्करञ्जस्य । भिद्यन्त इति भेदाः करञ्जानां भेदाः करञ्जभेदाः षड् ग्रन्थयो ग्रन्था वा यस्येति षड्ग्रन्थः मर्कतीति मर्कटी, अङ्गारवर्णापर्णा वल्लरीति अङ्गारवल्लरीत्येकैकं करञ्जभेदानाम् ॥ ४८ ॥

पु. पु. पु. पु.

लालकंजा **रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ।**

पु.स. पु. पु. पु.

खैर या कत्था **गायत्री बालतनयः खदिरो[2] दन्तधावनः ॥ ४९ ॥**

रोहीति—अवश्यं रोहतीति रोही, रोहितो वर्णोऽस्यास्तीति रोहितः स एव रोहितकः, प्लीह्नः शत्रुः प्लीहशत्रुः, दाडिमस्य पुष्पमिव पुष्पमस्येति दाडिमपुष्पक इति चत्वारि रोहिडाख्यस्य । गायन्तं त्रायत इति, गायत्त्रोऽस्त्यस्येति वा गायत्री, बालास्तनयाः पत्राण्यस्येति बालतनयः, खदतीति खदिरः, दन्तान्धावतीति दन्तधावन इति चत्वारि खदिरस्य ॥ ४९ ॥

---

१ " क्वाथः कषायो निर्यूषो निर्यासो वेष्टकस्तथा " ( इति रभसः ) ॥

२ " खदिरो रक्तसारश्च गायत्री दन्तधावनः । कण्टकी बालपत्रश्च जिह्मशल्यः क्षितिक्षमः " ॥

पु. पु. पु.
दुर्गन्धवाला खैर अरिमेदो विट्खदिरे कदरः ( खदिरेसिते )।
पु. पु. पु.
सफेद कत्थां सोमवल्कोऽप्यथ व्याघ्रपुच्छगन्धर्वहस्तकौ ॥ ५० ॥
पु. पु. पु. पु.
एरण्ड एरण्ड उरुबूकश्च रुचकश्चित्रकश्च ( सः )।
पु. पु. पु. पु. पु.
चञ्चुः पञ्चाङ्गुलो मण्डवर्धमानव्यडम्बकाः ॥ ५१ ॥

अरीति—अरिरिव मेदो यस्येति अरिमेदः, विड्गन्धिः खादिरो विट्खदिरस्तस्मिन्निति द्वे दुर्गन्धिखदिरस्य। सिते खदिरे दृणातीति दरः कस्य जलस्य दरः कदरः, सोम इव वल्कोऽस्येति सोमवल्कोपीति द्वे श्वेतखदिरस्य। अथेति—व्याघ्रस्य पुच्छमिव पुच्छमस्येति व्याघ्रपुच्छः, गन्धर्वस्य मृगभेदस्य हस्त इव हस्तः पत्रमस्येति गन्धर्वहस्तकः, आईरयति वायुमिति एरण्डः, उरुं महान्तं वायुं वायतीति उरुवूकः, रोचत इति रुचकः, 'स' चित्रयतीति चित्रकः, चञ्चतीति चञ्चुः पञ्चाङ्गुलयोऽस्येति पञ्चाङ्गुलः, मण्डयतीति मण्डः, अमण्डः, आमण्डोपि, आदण्ड इत्येके, वर्धत इति वर्धमानः, व्यडं मलमम्बयतीति व्यडम्बकः, व्यडम्बनश्चेत्येकादश एरण्डस्य ॥ ५० । ५१ ॥

पु. स. स. स.
छोटी शमी (अल्पाशमी) शमीरः "स्या" च्छमी सक्तुफला शिवा।
पु. पु. पु. पु.
शमी या छौंकरा पिण्डीतको मरुवकः श्वसनः करहाटकः ॥ ५२ ॥
पु. पु. पु. पु.
मयनफर शल्यश्च मदने शक्रपादपः पारिभद्रकः।
पु.न. न. न. न.
देवदारु भद्रदारु द्रुकिलिमं पीतदारु (च) दारु (च) ॥ ५३ ॥
पु.न.
पूतिकाष्ठं च ( सप्त स्यु ) र्देवदारुण्यथ ( द्वयोः ) ॥ १/२ ॥

अल्पेति—अल्पाशमी, शमीरः स्यादित्येकमल्पशम्याः। शमयति रोगानिति शमी, सक्तुवत्फलमस्याः सक्तुफला, शिवं करोति शिवयतीति शिवेति त्रीणि शम्याः। पिण्डीं तनोति पिण्डीतः पिण्डीतइव पिण्डीतकः, मरुं वातीति मरुवकः, निर्जलेपि श्वसितीति श्वसनः, करं हाटयतीति करहाटः स एव करहाटकः, शलतीति शल्यः,मदयतीति मदन इति षट् मयनफलाख्यवृक्षस्य। शक्रस्य पादपः शक्रपादपः, पारिनिष्ठां प्राप्तं भद्रमस्येति पारिभद्रकः, भद्रं च तत् दारु चेति भद्रदारु, किलतीति किलिमम्, द्रुयुक्तं तत्किलिमं

चेति द्रुकिलिमम्, पीतं च तद्दारु चेति पीतदारु, दीर्यत इति दारु "पुंनपुंसकयोर्दार्विति त्रिकाण्डशेषः" पूति च तत्काष्ठं च पूतिकाष्ठम्, एते सप्त देवस्य दारु देवदारु तस्मिन्स्युरित्यष्टौ देवदारोः ॥ ५२ । ५३ । ३ ॥

पु.स. स. स. स. स.

पाढ़रि **पाटलिः पाटलामोघा काचस्थाली फलेरुहा ॥ ५४ ॥**

स. स. स. स.

कांकुनि **कृष्णवृन्ता कुबेराक्षी श्यामा (तु) महिलाह्वया ।**

स. स. स. स. स. स.

**लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली ॥ ५५ ॥**

स. स. स. पु.

**विष्वक्सेना गन्धफली कारम्भा प्रियक (श्च सा) ।**

अथेति–पातीति पाः, टलतीति टलिः, पाश्चासौ टलिश्चेति पाटलिः, पाटलीति द्वयोः स्त्रीपुंसयोः स्यात्, पाटं लातीति पाटला, मोहयतीति मोघा न मोघा अमोघा, "मोघा स्त्री पाटलावृक्षौ मोघं त्रिषु निरर्थके" इति रुद्रात् 'मोघा' अपि, काचस्य काष्ण्र्यस्य स्थालीपात्रम् काचस्थाली, स्वामी तु कालो वर्णोऽस्त्यस्याः 'काला' तिष्ठतीति स्थाली "स्थाली स्यात्पाटलोखयोरिति" फले रोहतीति फलेरुहा, कृष्णं वृन्तमस्याः कृष्णवृन्ता, कुबेरस्येवाक्षि यस्याः कुबेराक्षीति सप्त पाटलायाः । श्यामो वर्णोऽस्त्यस्याः श्यामा, महिलाया आह्वय आह्वयो यस्या महिलाह्वया, लततीति लता, गवि भूमौ वन्द्यत इति गोवन्दनी, गुन्द्रयतीति गुन्द्रा, प्रियं गच्छतीति प्रियङ्गुः, फलमस्त्यस्याः फलिनी, फलं विद्यते यस्याः फली, विष्वक्सिनोतीति विष्वक्सेना, गन्धवत्फलमस्या गन्धफली, ईषद्रम्भा कारम्भा, प्रीणातीति प्रियकः "प्रियकः पीतसारके । नीपे चित्रमृगे चाली प्रियङ्गौ कुङ्कुमेऽपि चेति" द्वादश कङ्गुसस्यस्य ॥ ५४ । ५५ । ३ ॥

पु. पु. पु. पु. पु.

सरिवन **मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः ॥ ५६ ॥**

पु. पु. पु. पु. पु.

आंवला **स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः ।**

पु. पु. स. पु.स.न.

बहेड़ा **शोणकश्चारलौ तिष्यफला त्वामलकी (त्रिषु) ॥ ५७ ॥**

स. स. पु.

**अमृता (च) वयस्था (च) 'त्रिलिङ्गस्तु' बिभीतकः ।**

पु. पु. पु. पु. पु.

**नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ॥ ५८ ॥**

मण्डूकेति—मण्डूक इव पर्णमस्येति मण्डूकपर्णः, पत्रे ऊर्णाऽस्येति पत्रोर्णः, नटतीति नटः; कट्वन्यङ्गान्यस्येति कट्वङ्गः, 'टुण्टु' इति कायतीति टुण्टुकः, सीव्यतीति स्योनः "स्योनः किरणसूर्ययोः" तेनाकति, अक्यते वा स्योनाकः, श्यायत इति विग्रहे तु 'श्योनाकः' तालव्यादिरपि, शुकनासा इव पुष्पमस्यास्तीति शुकनासः, ऋषतीति ऋक्षः, दीर्घं वृन्तमस्येति दीर्घवृन्तः, कुटन्वक्रीभवन् नटतीति कुटन्नटः,शोणतीति शोणः स एव शोणकः, "स्वामिमते शोनकोपि" इयर्तीति अरलः, अरलुः, अरटुश्चेति द्वादश श्योनाकस्य । तिष्यं मङ्गल्यं फलमस्यास्तिष्यफला, आमलत इत्यामलकी त्रिषु त्रिलिङ्ग्यां स्यात्, न म्रियन्तेऽनयेति अमृता, वयोयौवनं तिष्ठत्यनयेति वयस्था, "कायस्था तु हरीतक्यामलक्योश्च प्रकीर्तिता" (इति रभसः) कायस्थापीति चत्वार्यामलक्याः । विगतं भीतं रोगभयमस्मादिति, विशिष्टं भीतमस्माद्वा भूतकल्योराश्रयत्वादिति विभीतकस्त्रिलिङ्गः स्यात्, अक्षतीति अक्षः ना पुमान्स्यात् "अक्षोज्ञानात्मशकटव्यवहारेषु पाशके । रुद्राक्षे रावणौ सर्पे विभीतकतरावपि । चक्रे कर्षे पुमान् क्लीबं तुत्थे सौवर्चलेन्द्रिये" तुष्यतीति तुषः, कर्षं फलमस्येति कर्षफलः, भूतानामावासो भूतावासः कलेर्द्रुमः कलिद्रुम इति षट् विभीतकस्य ॥ ५६ । ५७ । ५८ ॥

स. स. स. स. स. स.

हड़ **अभया त्वव्यथा पथ्या कायस्था पूतनामृता ।**

स. स. स. स. स.

**हरीतकी हैमवती चेतकी श्रेयसी शिवा ॥ ५९ ॥**

अभयेति—न भयमस्या अभया, न व्यथा यस्या अव्यथा, पथोऽनपेता पथ्या, कायस्तिष्ठत्यनयेति कायस्था, पूतं करोति पूतयति, पूतयतीति पूतना, न म्रियन्तेऽनयेति अमृता, हरिर्वर्णतो यस्यामिति हरीतकी, हिमवति जाता हैमवती, चेतयतीति चेतकी, अतिप्रशस्तेति श्रेयसी, शिवंकरोति शिवयति. शिवयतीति शिवा "शिवो मोक्षे महादेवे कीलकग्रहयोगयोः । वालुके गुग्गुलौ वेदे पुण्डरीकद्रुमे पुमान् ॥ सुखे क्षेमे जले क्लीबं शिवाम्फाटामलोषधौ ॥ अभयामलकी गौरी फेरुसक्तुफलासु चेति" (मेदनी) इत्येका दश हरीतक्याः ॥ ५९ ॥

पु. पु. न. पु.

सरल **पीतद्रुः सरलः पूतिकाष्ठं (चाथ) द्रुमोत्पलः ।**

कठचम्पा पु. पु. पु. पु. पु.

नड़हल **कर्णिकारः परिव्याधे लकुचो लिकुचोडहुः ॥ ६० ॥**

पीति—पिबति, पीयते वर्णान्तरमिति पीतः, द्रवत्यूर्ध्वं गच्छतीति द्रुः पीतश्चासौ द्रुश्चेति पीतद्रुः, सरतीति सरलः, पूतेः पावनस्य काष्ठं पूतिकाष्ठम् "पूतिकाष्ठं च सरलदेवदारुमहीरुहो" रिति मेदिनीति त्रीणि सरलायाः । अथेति द्रुमे उत्पलं तदाकारं पुष्प-

१ नित्यमामलके लक्ष्मीर्नित्यं हरितगोमये । नित्यं शङ्खे च पद्मे च नित्यं शुक्ले च वाससांति श्रवणात् ॥

मस्येति द्रुमोत्पलः, कर्णिकामियर्तीति कर्णिकारः, परिविध्यतीति परिव्याधस्तस्मिन्निति त्रीणि कर्णिकारस्य । लक्यत इति लकुचः, लक्यत इति लिकुचः, दहति, तोहति वा डहुः, स्वामिमते तु अडहुरपीति त्रीणि 'बड़हर' इति ख्यातस्य ॥ ६० ॥

पु. पु. पु. पु. पु.

कटहल **पनसः कण्टकिफलो निचुलोहिज्जलोम्बुजः ।**

समुद्रफल स. स. स. स.

कठूंबरि **काकोदुम्बरिका फल्गुर्मलपूर्जघनेफला ॥ ६१ ॥**

पनस इति—पनाय्यते स्तूयत इति पनसः, पणसोपि, कण्टकिफलमस्येति कण्टकिफल इति द्वे पनसस्य । निचोलतीति निचुलः, हिनोतीति हित्, जलतीति जलम् हिज्जलमस्येति हिज्जलः, इज्जल इति पाठे तु एतीति इत्, जलमस्येति इज्जलः " निचुलेज्जलहिज्जला" (इति रभसः) अम्बुनि जातोम्बुज इति त्रीणि स्थलवेतसस्य, समुद्रफलस्य वा । काकप्रिया उदुम्बरी काकोदुम्बरी इव काकोदुम्बरिका फलतीति फल्गुः, मलात्पापात्पुनातीति मलपूः मलयूरितिपाठे तु मलं यवते, मलते वा मलयूरपि, जघने फलं यस्या जघनेफलेति चत्वारि काकोदुम्बरिकायाः ॥ ६१ ॥

पु. पु. पु. पु.

नींब **अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः ।**

पु. पु. स. न. स.

शीशम **पिचुमर्दश्च निम्बे(ऽथ) पिच्छिलागुरु शिंशपा ॥६२॥**

अरीति—न रिष्टमशुभमस्मादिति अरिष्टः, "अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः । अरिष्टमशुभे तक्रे सूतिकागार आसवे ॥ शुभे मरणचिह्ने चेति मेदिनी" सर्वतोभद्रं यस्मादिति सर्वतोभद्रः, हिङ्ग्वाकारो हिङ्गुगन्धो वा निर्यासोऽस्येति हिङ्गुनिर्यासः, मलते इति मालकः, पिचुं कुष्ठभेदं मर्दयतीति पिचुमर्दकः, 'स्वामिमते तु पिचुं मन्दयतीति पिचुमन्दोपि' निर्वृत्ति स्वास्थ्यमिति निम्बस्तस्मिन्निति पट् निम्बाख्यस्य । अथेति—पिच्छाऽस्त्यस्याः पिच्छिला, न गुरुरस्मादिति अगुरु " अगुरु क्लीबे शिंशपायां जोङ्गके, लघुनि त्रिष्विति" (रुद्रः) शिम् इत्यव्यक्तं शब्दं शब्देन वा शपति, शीघ्रं शीर्षं वा पातीति शिंशपा इति त्रीणि शिंशपायाः ॥ ६२ ॥

स. स. पु. पु.

काला शीशम **कपिला भस्मगर्भा (सा) शिरीष(स्तु) कपीतनः ।**

सिरसा पु. पु. पु. पु.

चम्पा **भण्डिलो(प्यथ) चाम्पेयश्चम्पके हिमपुष्पकः ॥ ६३ ॥**

केति—कपिलवर्णपुष्पाणि सन्त्यस्याः कपिला, सैव भस्मगर्भे यस्याः भस्मगर्भेति द्वे कृष्णशिंशपायाः । वस्तुतस्तु कपिलादिकमपि शिंशपासामान्यपर्यायमेव तस्मात्पञ्चनामा

नीति युक्तम् । शृणातीति शिरीषः, तनोतीति तनः, या लक्ष्म्यास्तनः ईतनः कपीनां कपेर्वर्णस्य वा ईतनः कपीतनः, भण्डतीति भण्डिलः, रलयोरैकत्वात् भण्डिरोपि "भण्डिरो भण्डिलो नेति" (वाचस्पतिः) इति त्रीणि शिरीषस्य । अथेति—चम्पाया अपत्यं चाम्पेयः, चम्पयति, चम्प्यते वा चम्पकः, हेमवर्णं पुष्पमस्येति हेमपुष्पक इति त्रीणि चम्पकस्य ॥ ६३ ॥

चम्पा की कली, मौलसिरी, अशोक, अनार

स. पु.
**(एतस्य कलिका) गन्धफली[1] स्यादथ केसरे ।**
पु. पु. पु. पु. पु.
**वकुलो[2] वञ्जुलोऽशोके (समौ) करकदाडिमौ ॥ ६४ ॥**

एतेति—एतस्य चम्पकस्य कलिका-गन्धः फलं साध्यमस्या गन्धफली स्यादित्येकं चम्पककलिकायाः । अथेति—के जले सरति, केसराः सन्त्यस्येति वा केसरस्तस्मिन्, वङ्कत इति वकुल इति द्वे वकुलस्य । वजतीति वञ्जुलः, न शोकोऽस्मादिति अशोकस्तस्मिन्निति द्वे अशोकस्य । करोति दोषाभावमिति करकः, दलनं दालः, दालेन निर्वृत्तो डलयोरैक्याद् दाडिमः—दाडिम्बोपि उभौ समौ समानार्थौ समानलिङ्गाविति द्वे दाडिमस्य ॥ ६४ ॥

नागकेसर, जाही

पु. पु. पु. पु.
**चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः ।**
स. स. स. स. स.
**जया जयन्ती तर्कारी नादेयी वैजयन्तिका ॥ ६५ ॥**

चेति—चम्पाया अपत्यं चाम्पेयः, केसराः सन्त्यस्येति केसरः, नागाख्यः केसरः नागकेसरः, काञ्चनस्याह्वय आह्वयो यस्येति काञ्चनाह्वय इति चत्वारि नागकेसरस्य । जयतीति जया, जयतीति जयन्ती, तर्कमृच्छतीति तर्कारी, नद्यां भवा नादेयी, वैजयन्ती पताकेव, विजयन्तस्येयं वा वैजयन्ती सैव वैजयन्तिकेति पञ्च "जाही" इति ख्यातायाः ॥ ६५ ॥

अरणी, कुरैया

न. पु. स. स.
**श्रीपर्णमग्निमन्थः 'स्या'त्कणिकागणिकारिका ।**
स. पु. पु. पु. स.
**जया(ऽथ)कुटजः शक्रो वत्सको गिरिमल्लिका ॥ ६६ ॥**

श्रीति—श्रीःपर्णेषु यस्येति श्रीपर्णम्, अग्निं मथ्नातीति अग्निमन्थः स्यात्, कणतीति कणिका, गणनं गणिस्तं करोति सैव, गणयतीति गणिका, ऋच्छतीति आरिका गणिका चासावारिका चेति वा गणिकारिका, जयतीति जया स्यादिति पञ्च जयपर्णस्य अरण्याख्यस्य वा । अथेति—कूटे शृङ्गे जायते स्पृषोदरादित्वात् कुटजः स

१ न षट्पदो गन्धफलीमजिघ्रदिति संगच्छते ॥

२ गन्त्यते वकुलशब्दोऽन्तस्थादिरन्येषां मते तु पवर्गादिरपि ॥

एव कौटजश्च "कौटजः कुटजः कोटीति" (चन्द्रः) शक्नोतीति शक्रः, वदतीति वत्सः स एव वत्सकः, गिरिमल्लीव गिरिमल्लिकेति चत्वारि कुटजस्य ॥ ६६ ॥

पु.स.न. पु.स.न. पु.स.न.

इन्द्रयव **(एतस्यैव) कलिङ्गेन्द्रयवभद्रयवं (फले) ।**

पु. पु. पु. पु.

करौंदा **कृष्णपाकफलाविग्नसुषेणाः (करमर्दके) ॥ ६७ ॥**

एतेति—एतस्य कुटजस्यैव फले कलिं गच्छति गायतीति वा कलिङ्गम्, इन्द्रसंज्ञवृक्षस्य यवम् इन्द्रयवम्, भद्रं च तद्यवं चेति भद्रयवमिति त्रीणीन्द्रयवस्य । कृष्णः पाकोऽस्य कृष्णपाकं फलमस्येति कृष्णपाकफलः, आविजते स्मेति आविग्नः न विजते स्मेति अविग्नोपि, शोभना सेना यस्येति, सुष्ठु सिनोतीति वा सुषेणः, करं मृद्नातीति करमर्दः स एव करमर्दकस्तस्मिन्निति चत्वारि करमर्दकस्य ॥ ६७ ॥

पु. पु. पु. पु.

तमाल **कालस्कन्धस्तमालः 'स्या' त्तापिच्छो(ऽप्यथ)सिन्दुकः ।**

पु. पु. स. स.

म्योढ़ी **सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिके (त्यपि) ॥ ६८ ॥**

कालेति—कालस्कन्धोऽस्यति कालस्कन्धः, ताम्यतीति तमालः स्यात् । तापिनं छादयतीति तापिच्छः, तापिंजोपि "तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे" (इति मेदिनीति) त्रीणि तमालस्य । अथेति—स्यन्दत इति सिन्दुः—सिन्धुश्च स एव सिन्दुकः, सिन्धुकश्च, सिन्दुं वृणोति वारयति वा सिन्दुवारः—सिन्धुवारः, शोभनो रसोऽस्येति सुरसः इन्द्रस्य सुरसः इन्द्रसुरसः, ( स्वामिमते तु ) इन्द्रसुरिसोपि, निर्गुडति-गुडाद्वेष्टनान्निर्गता वेति पृषोदरादित्वान्निर्गुण्डी, इन्द्रस्य जन्या, इन्द्रमानयतीति वा इन्द्राणी सैव इन्द्राणिकेत्यपीति पञ्च निर्गुण्ड्याः ॥ ६८ ॥

स. स. स. पु. पु.

बन्दाल,हाथी **वेणी खरागरी देवताडो जीमूत ( इत्यपि ) ।**

स. स. न. स.

शुण्डा या शु- **श्री हस्तिनी (तु) भूरुण्डी तृणशून्यं (तु) मल्लिका ॥ ६९ ॥**
इयां बेला स. पु. स.

जंगली बेला **भूपदी शीतभीरुश्च (सैवा)ऽऽस्फोता ( वनोद्भवा ) ।**

वेणीति—वेणतीति वेणी—वेणिर्वा, खमिन्द्रियं रात्यभिभवतीति खरा, गृणातीति गरी, खरं विषमागिरतीति खरागरीत्येकमाहुः, स्वामिमते तु गरामागिरतीति गरागरी, देवमिन्द्रियं ताडयतीति देवताडः, "देवताडः सैंहिकेये जीमूते च हुताशने" ( इति

---

१ "सिन्दुवारः श्वेतपुष्पः सिन्दुकः सिन्धुवारितः । नीलपुष्पः शीतसहो निर्गुण्डी नीलसिन्धुकः" ॥

मेदिनी ) जिया वयोहान्या मूतो बद्धो जीमूतः जीमूत इवेति जीमूतकोपीति पञ्च देवताडस्य । श्रीहस्तोऽस्त्यस्याः, हस्तं गृह्णाति हस्तयति अवश्यं, श्रेयं हस्तयतीति वा श्रीहस्तिनी, भुव रुणडयतीति भूरुण्डी इति द्वे हस्तिकर्णपत्रशाकविशेषस्य, "घुइयां" इति ख्यातायाः, माषादिक्षेत्रभवाया वकुलपुष्पाभलोहितपुष्पाया वा 'शिरीहथिनी' इति ख्याताया वा । तृणशून्य स्थाने साधु तृणशून्यम् , स्वामिमत तु तृणशूल्ये गुल्मे साधु तृणशूल्यमपि, मल्लते गन्धं, मल्ल्यते वा मल्ली सैव मल्लिका, भुवि पदमस्या भूपदी, शीताङ्गीरुः शीतभीरुः शतभीरुरिति पाठे तु शतं वियोगिनो भीरवोऽस्याः शतभीरुरपि "मल्लिका शतभीरुश्च गवाक्षी भद्रमल्लिका । शीतभीरुर्मदायन्ती भूपदी तृणशून्यकमिति" ( वाचस्पतिः ) इति चत्वारि 'बेला' इति ख्यातायाः । सैव वनोद्भवा चेत्तदा आस्फोटयतीति आस्फोता स्यादित्येकं वनमल्लिकायाः ॥ ६९ । $\frac{1}{2}$ ॥

(स्याह फूल वाली नेवारी) शेफालिका (तु) सुवहा निर्गुण्डी नीलिका (च सा) ॥७०॥
(सफ़ेद फूल वाली नेवारी) ( सितासौ ) श्वेतसुरसा भूतवेश्यथ मागधी ।
(जूही, पीले फूल वाली जूही) गणिका यूथिकाम्बष्ठा ( सा पीता ) हेमपुष्पिका ॥७१॥

(स. स. स. स. / स. स. स. / स. स. स.)

शेफेति—शेरत इति शेफा अलयो यस्यामिति शेफाली सैव शेफालिका, कनभावे शेफालीत्यपि, सुष्ठु वहत्यामोदमिति सुवहा, निर्गुण्डतीति निर्गुण्डी, "निर्गुण्डी नीलशेफाल्यां सिन्धुवारद्रुमेपि चति" (मेदिनी) सा च नीलवर्णा नीली सैव नीलिका "नीलिका नीलिनी क्षुद्ररोगशफालकासु चेति"(मेदिनी) चत्वारि नेवारी इति ख्यातायाः । असौ सिता श्वेतवर्णपुष्पा चेत्तदा शोभनो रसोऽस्याः सुरसा श्वेता चासौ सुरसा चेति श्वेतसुरसा, भूतानि विशतीति भूतवेशीति द्वे श्वेतशेफालिकायाः । अथेति—मगधे देशे भवा मागधी, गणयतीति गणिका "गणिका यूथी वेश्येभीतकारीषु नानुदेवज्ञे" (इति मेदिनी ) यूथमस्त्यस्या यूथिका, अम्बा माता इव तिष्ठतीति अम्बष्ठा "अम्बष्ठो देशभेदेपि विप्राद्वैश्यासुतेपि च । अम्बष्ठाप्यम्ललोण्यां स्यात्पाठायूथिकयोरपीति" ( विश्वमदिन्यावति ) चत्वारि यूथिकायाः । सा यूथिका पीता पीतवर्णपुष्पा चेत्तदा हेमवर्णं पुष्पमस्या हेमपुष्पिका स्यादित्येकं पीतपुष्पयूथिकायाः ॥ ७० । ७१ ॥

(वासन्ती लता या बेल मालती) अतिमुक्तः पुण्ड्रकः "स्याद्वा" सन्ती माधवी लता ।
(या चमेली, नेवारी या वर्षाकी बेल) सुमना मालती जातिः सप्तला नवमालिका ॥ ७२ ॥

(पु. पु. स. स. स. / स. स. स. स. स.)

---

१ कथमितरथाशेफालीषु स्खलत्कुसुमास्वपीति प्रयोगदर्शनात् ॥

अतीति—अतिक्रान्तो मुक्तां शौक्ल्यादतिरक्तत्वाद्वेति अतिमुक्तः, पुण्डति, पुण्ड्यते वा पुण्ड्रः स एव पुण्ड्रकः, वसन्ते पुष्प्यतीति वासन्ती, मधौ पुष्प्यतीति माधवी, लततीति लतेति पञ्च वासन्तीलतायाः । सुष्ठु मन्यते, शोभनो मनोऽस्यामिति सुमनाः "स्त्रियां सुमनसो भूम्नि पुष्पे जातौ तु भेदतः । विदुष्यपि यदादृष्टस्तदा भेदेन शिष्यते" (इति व्याडिः) "सुमनायाश्च पत्रेणेति सुश्रुतदर्शनात्" टाबन्तापि, मां लक्ष्मीं लतति, मालं तनोति वा मालती, जायते प्रीतिरनयेति वा जातिरिति त्रीणि मालत्या वा " चमली " इति ख्यातायाः । सप्त पर्णानि मनोबुद्धीन्द्रियाणि वा लातीति सप्तला, नवास्तुल्यामलास्या नवमालिकेति द्वे नवमालिकायाः ॥ ७२ ॥

पु.न. पु.न. पु. पु. पु.

कुन्द,दुपहरिया **माघ्यं कुन्द(रक्तक ( स्तु ) बन्धूको बन्धुजीवकः ।**

घीकुआरि स. स. स. पु. स.

कटसरैया **सहा कुमारी तरणिरम्लान ( स्तु ) महासहा ॥ ७३ ॥**

मेति—माघे साधु माघ्यम्, कुं भुवं दायति, द्यति, कुणतीति वा कुन्दम् "माघ्यः कुन्दः कुरुण्टक" इति पुंस्काण्डे (रत्नकोषात्पुंस्त्वमपि) "कुन्दो माघ्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना" (इति मेदिनीति) द्वे कुन्दस्य । रक्तं रक्तवर्णं पुष्पमस्त्यस्येति रक्तः स एव रक्तकः, बध्नाति चित्तमिति बन्धूकः बन्धुरिव जीवं जलमस्येति बन्धुजीवक इति त्रीणि "दुपहरिया" इति ख्यातस्य । आतपं सहते इति सहा कुमारीव, कुमारयति, कामयते वेति कुमारी, तरन्त्यनयेति तरणिरिति त्रीणि कुमार्याः, 'घीकुवारीति' ख्यातायाः । न म्लायति स्मेति 'अम्लानः' " अम्लानं त्वमले भिण्टाभद " (इति हैमः) महती चासौ सहा च, महतो विमदस्य सहा वेति द्वे ' कटसरैया ' सामान्यस्य ॥ ७३ ॥

लालफूलवाली पीलिफूलवाली **(तत्र शोणे ) कुरवक ( स्तत्र पीते ) कुरुण्टकः ।**

पु.स स. पु.

कालेफूलवाली या झिण्टी **(नीलाझिण्टीद्वयो)र्बाणा दासी चार्तगलश्च(सा)७४॥**

तत्रेति—तस्मिन् अम्लाने शोणे रक्ते सति, कुत्सितो रवोऽत्रेति 'कुरवकः' कुईषद्रौतीति विग्रहे तु कुरवकः स्यादित्यकं 'रक्तकटसरैया' इति ख्यातायाः । तत्र अम्लाने पीते सति रुण्टतीति रुण्टकः कोः कुत्सितो वा रुण्टकः, कुर्यत इति वा कुरुण्टः स एव कुरण्टकः कुरण्टीत्यपि "कुरण्टी दारु पुत्र्यां ना झिण्ट्यम्लानप्रभेदयोरिति" (मेदिनी) इत्येकं ' पीतपुष्पयुक्तकटसरैया ' इति ख्यातायाः । नीला नीलपुष्पयुता झिण्टी चेत्तदा वरयते इति बाणा सा द्वयोः स्त्रीपुंसयोः स्यात् । दस्यते इति दासी, "दासी बाणाभुजिष्ययोरिति" ( मेदिनी ) आर्तः क्षीणो गलतीति आर्तगल इति त्रीणि नीलझिण्टिकायाः ॥ ७४ ॥

पियावासामात्र या झिण्टीमात्र लालफूलवाली　पु.　स.　पु.
**सैरीयक (स्तु) झिण्टी (स्यात्तस्मि)न्कुरवको (ऽरुणे)।**
बैंजनी सोनहरी　पु.　पु.स.
**(पीता) कुरण्टको (झिण्टी) तस्मिन्सहचरी (द्वयोः) ७५॥**

सैरीति—सीरे भवः सैरः कर्षस्तत्र भवः सैरीयः स एव सैरीयकः, सैरेयक इति पाठे तु सीर्यां भवः सैरेयः स एव सैरेयकः, झिमिति रटतीति पृषोदरादित्वात् झिण्टी स्यादिति द्वे झिण्टासामान्यस्य । तस्मिन्सैरीयके अरुणे रक्ते सति कुत्सितो रवोऽत्रेति 'कुरवकः' स्यादित्येकं रक्तझिण्ट्याः । पीता पीतपुष्पयुता झिण्टी चेत्तदा कुर्यते इति कुरण्टः स एव कुरण्टकः स्यात्, तस्मिन्कुरण्टके सहचरतीति 'सहचरी' द्वयोः स्त्रीपुंसयोः स्यादिति द्वे पीतझिण्ट्याः ॥ ७५ ॥

न.　न.　न.
गुड़हर　**ओड्रपुष्पं जवापुष्पं वज्रपुष्पं (तिलस्य यत्)।**
तिलपुष्प　पु.　पु.　पु.　पु.
कनेर　**प्रतिहासशतप्रासचण्डातहयमारकाः ॥ ७६ ॥**
पु.　पु.　पु.　पु.
करील　**करवीरे करीरे (तु) क्रकरग्रन्थिला (वुभौ)**

ओड्रेति—आ ईषदुनत्तीति ओड्रम्, ओड्रं पुष्पमस्येति ओड्रपुष्पम्, जवतीति जवा "ओड्रपुष्पेऽपि वृक्षवि जवाशब्दः प्रकीर्तित"(इति त्रिकाण्डशेषः) जपा इति पाठे तु जपतीति जपा "जवायान्तु जपा स्मृता"(इति धर्मदासः) इति द्वे जवाकुसुमस्य । तिलस्य यत् पुष्पं तत् वज्रपुष्पं स्यादित्येकं तिलपुष्पस्य । प्रतीपो हासो विकासोऽस्येति प्रतिहासः, शतं प्रासाः कुन्ताइव पत्राण्यस्यति, शतं पुष्पाणि प्रास्यतीति वा शतप्रासः, चण्डमततीति चण्डातः, हयानां मारको हयमारकः, करं वीरयतीति करवीरस्तस्मिन्निति पञ्च करवीरस्य । किरति, करिणमीरयति वा करीरस्तस्मिन्, क्रइति करोतीति क्रकरः, ग्रन्थिरस्यास्ति, ग्रन्थिं लातीति वा ग्रन्थिल उभौ स्यातामिति त्रीणि करीरस्य 'करील' इति ख्यातस्य ॥ ७६ । ३ ॥

पु.　पु.　पु.　पु.　पु.
धतूरा　**उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः ॥ ७७ ॥**
पु.　पु.　पु.
धतूरा का फल　**मातुलो मदनश्चा (स्य फले) मातुलपुत्रकः ।**

उन्निति—उन्मत्तयतीति उन्मत्तः, कितवाः सन्त्यस्येति, कितान् वञ्चतीति वा कितवः, "कितवो धूर्तवन्मत्त वञ्चके कनकाह्वये" (इति विश्वः) धूर्व्यते स्मेति, धूर्वणं धूर्तं तदस्यास्तीति वा धूर्तः, धयति धातूनित पृषोदरादित्वाद् धत्तूरः, "धत्तूरस्तु स्मृतो धूर्तो देविता कितवः शठः" (इति स्वामी) धूसयतीति धूः, तूर्यत इति तूरः धूश्चासौ तूरश्चेति

धूस्तूरः धुस्तुरोपि "धुस्तुरस्तु पुण्डरी शोधूस्तूरः कनकाह्वयः" (इति शब्दार्णवः)कनकमाह्वयो यस्येति कनकाह्वयः,मास्ति नास्ति तुला यस्येति, मा श्रीस्तुलास्येति वा मातुलः, मदयतीति मदनः "मदनः स्मरवसन्तद्रुभिद्धत्तूरसिक्थके"(इति मदिनीति) सप्त धत्तूरस्य। अस्य धत्तूरस्य फल मातुलस्य पुत्र इव मातुलपुत्रकः इत्येकं कनकाह्वयफलस्य॥ ७७।१॥

पु. पु. पु. पु.

बिजौरा नींबू **फलपूरो बीजपूरो रुचको मातुलुङ्गके ॥ ७८ ॥**

पु. पु. पु. पु.

मरुआयादवना **समीरणो मरुवकः प्रस्थपुष्पः फणिज्जकः ।**

पु. पु. पु. पु.

बवई या पर्णास **जंबीरो ( प्यथ ) पर्णासे कठिंजरकुठेरकौ ॥ ७९ ॥**

फलेति—फलेन पूर्यते, फलं पूरयति वा फलपूरः, बीजेन पूर्यते, बीजं पूरयति वा बीजपूरः, रोचत इति रुचकः "रुचको बीजपूरे च निष्के दन्तकपोतयोः। न द्वयोः सर्जिकाक्षारेप्यश्वाभरणमाल्ययोः। सौवर्चलेपि मङ्गल्यद्रव्येपि कटकेपि चति" (मेदिनी) मीनात्यरुचिमिति मातुः, लुञ्च्यत इति लुङ्गः स एव लुङ्गकः मातुश्चासौ लुङ्गकश्चेति मातुलुङ्गकस्तस्मिन्निति चत्वारि "बिजौरा" इति ख्यातायाः। समीरयतीति समीरणः, मरौ वातीति मरुवकः, प्रस्थे सानौ पुष्प्यतीति प्रस्थपुष्पः, फणिजातोऽस्मात्फणाभपत्रपुष्पत्वात्, फणि उज्झको वर्जकोऽस्येति फणिज्जकः, फणिज्झकोपि जम्यत इति जम्,वीरयतीति वीरः जम् चासौ वीरश्चेति जंबीरः जम्बीरोपीति पञ्च"मरुआ" इति ख्यातस्य। अथेति—पर्णान्यस्यति, पर्णैरसतीति वा पर्णासस्तस्मिन्, कठिनं जरयतीति कठिञ्जरः, कुण्ठतीति कुठेरः स एव कुठेरक इति त्रीणि पर्णासस्य ॥ ७८।७९॥

पु. पु. पु. पु.

उजली बवई **( सिते)ऽर्जको (ऽत्र) पाठी (तु) चित्रको वह्निसंज्ञकः ।**
चीता

पु. पु. पु. पु. पु.

मदार **अर्काह्ववसुकास्फोतगणरूपविकीरणाः ॥ ८० ॥**

पु. पु. पु. पु.

सफेद मदार **मन्दारश्चार्कपर्णो (ऽत्रशुक्लेऽ) लर्कप्रतापसौ ।**

सितइति—अत्र पर्णासे सिते सति अर्जयतीति अर्जकः स्यादित्येकं श्वेतपर्णासस्य। पाठोऽस्यास्तीति पाठी, चितं बुद्धिं त्रायत इति चित्रः स एव चित्रकः "चित्रकं तिलके नातु व्याघ्रभिद्धञ्चुपाठिषु" (इति मेदिनी) वह्निः संज्ञा यस्येति वह्निसंज्ञः इति त्रीणि चित्रकस्य। अर्क आह्वा यस्येति अर्काह्वः, वसतीति वसुः स एव वसुकः, आस्फोटयतीति आस्फोतः, गणा बहूनि रूपाणयस्येति गणरूपः, विकिरति, विविधः किरणोऽस्येति वा विकीरणः, मन्दान् इयर्ति, मन्दैरर्यते वा मन्दारः "मन्दारः स्यात्सुरद्रुमे। पारि-

१ सौवर्चलं मातुलुङ्गं शिला चन्दनपेषणी। ग्रीवाभरणकं चैषु चतुर्षु रुचकं स्मृतम् ॥

अद्रेर्कपर्णे च मन्दारो हस्तिधूर्तयो" (रिति मेदिनी) अर्कभानि पर्णानि पत्राण्यस्येत्यर्कपर्णः इति सप्तार्काह्वस्य। अत्र अर्काह्वे शुक्ले सति अलतीति अल्, अर्क्यत इत्यर्कः अल् चासावर्कश्चेति अलर्कः "अलर्को धवलार्के स्याद्योगोन्मादितकुक्कुरे" (इति मेदिनी) प्रतापं चक्षुस्तेजः स्यति, प्रकृतास्तापसा येनेति वा प्रतापस इति द्वे श्वेतार्कस्य॥ ८०। १/२॥

स. पु. पु. पु. पु.

बक या गुमा **शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः॥ ८१॥**

स. स. स. स.

बांदा **वन्दा वृक्षादनी वृक्षरुहा जीवन्तिके (त्यपि)।**

शिवेति—शिवप्रिया मल्ली शिवमल्ली, पशुपतेरयं पाशुपतः, एकमस्थि लातीति एकाष्ठीला, "एकाष्ठीलावनतिक्तिकौषधौ पुंसि वकपुष्पे" (इति मेदिनी) वातीति वुकः बकोपि "बकस्तु बकपुष्पे स्यात्कङ्क श्रीदे च रक्षसि" (इति मेदिनी) वस्ते, वसति वा वसुरिति पञ्च बकपुष्पस्य। वन्द्यते इति वन्दा, बवयोरैक्याद्बन्दापि वृक्षमत्तीति वृक्षादनी, वृक्षं रोहति, वृक्षे रोहति वा वृक्षरुहा, जीवतीति जीवन्ती सैव जीवन्तिकेति चत्वारि वृक्षोपरि जातलताविशेषस्य॥ ८१। १/२॥

स. स. स. स. स.

नींव गिलोय **वत्सादनी छिन्नरुहा गुडूची तन्त्रिकामृता॥ ८२॥**

स. स. स. स.

या गुड्च **जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि।**

वत्सेति—वत्सैरद्यते इति वत्सादनी, छिन्ना रोहतीति छिन्नरुहा, गुडतीति गुडीची, तन्त्रयतीति तन्त्रिका, न मृतमस्याः अमृता, जीवतीति जीवन्ती सैव जीवन्तिका "जीवन्तिका गुडूच्यां च जीवाख्या शाकवन्दयोरिति" (मेदिनी) सोमस्य वल्ली सोमवल्ली, विगतं शल्यमस्या विशल्या, "विशल्याग्निशिखादन्ती गुडूची त्रिपुटासु चेति" (मेदिनी) मधुमयानि पर्णान्यस्या मधुपर्णीति नव गुडूच्याः॥ ८२। १/२॥

स. स. स. स. स. स.

मूर्वा-मुहार **मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा॥ ८३॥**

स. स. स. स.

या चिनार **मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्य(पि)।**

मूर्वेति—मूर्वतीति मूर्वा, दीव्यतीति देवी, मधुरसोऽस्या मधुरसा, मुरतीति मोरटा, तेजतीति तेजनी, स्रवतीति स्रवा, स्रुवापि "स्रुवा द्वयोर्होमपात्रे सल्लकीमूर्वयोः स्त्रियामिति" (मेदिनी) मधु लातीति मधूला सैव मधूलिका, मधुनः श्रेणिरत्रेति मधुश्रेणी, गोःकर्ण इव गौःकर्णो यस्या इति वा गोकर्णी, पीलोरिव पर्णान्यस्याः पीलुपर्णीति दश मूर्वायाः॥ ८३। १/२॥

स. स. स. स. स. स.

पाढ़ा या **पाठाम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा ॥ ८४ ॥**

स. स. स. स.

पाढ़रि **एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ।**

पाठेति—पठ्यते इति पाठा, अम्बेव मातेव तिष्ठतीति अम्बष्ठा, विद्धौ कर्णौ ययेति, अविद्धोऽच्छिद्रः पर्णरूपः कर्णोऽस्या वेति विद्धकर्णी, अविद्धकर्णी, स्थापयतीति स्थापनी, अतिशयेन प्रशस्ता श्रेयसी, रस्यत इति रसा, एकमस्थि लातीति एकाष्ठीला, पापे चलति, पापक्तीति पापचो वायुस्तमीरयति वा पापचेली, प्राचि भवा प्राचीना, वने तिक्ता वनतिक्ता सैव वनतिक्तिकेति दश पाठायाः ॥ ८४ । १/२ ॥

स. स. स. स.

कुटकी **कटुः कटंवराशोकरोहिणी कटुरोहिणी ॥ ८५ ॥**

स. स. स. स.

**मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी ।**

कटुरिति—कटतीति कटुः, कटतीति कटस्तं वृणोतीति कटंवरा, कटंभरा इति पाठे तु कटं बिभर्तीति कटम्भरा, अशोक इव रोहतीति अशोकरोहिणी, व्यस्तमपीदं नाम " अशोकः कटुरोहिण्यामशोको वञ्जुलद्रुमे " ( इति रभसः ) कटतीति कटुः, रोहतीति रोहिणी, कटुश्चासौ रोहिणी चेति कटुरोहिणी, मत्स्यपित्तमिवेति मत्स्यपित्ता, कृष्णो वर्णेन भेदश्छेदोऽस्याः कृष्णं मलं भिनत्तीति वा कृष्णभेदी, चक्राकारमङ्गं यस्याश्चक्राङ्गी " चक्राङ्गी कटुरोहिण्यामिति " ( मेदिनी ) शकुलैर्मत्स्यभेदैरद्यते इति शकुलादनीत्यष्टौ ' कुटकी ' इति ख्यातायाः ॥ ८५ । १/२ ॥

स. स. स. स. स.

कयबांच **आत्मगुप्ता जडाव्यण्डा कण्डूरा प्रावृषायणी ॥ ८६ ॥**

स. स. स. स.

**ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छूश्च मर्कटी ।**

आत्मेति—आत्मना गुप्ता आत्मगुप्ता, जडयतीति जडा, न जहाति शूकानिति अजहापि " ज्ञेया जाङ्गलिका सैव साजहा प्रावृषायिणी " (इतीन्दुः) न विगतमण्डमस्याः अव्यण्डा, कण्डूं रातीति कण्डूरा कण्डुरापि, प्रवर्षणं प्रावृषा तामेतीति, अयते वा प्रावृषायणी, ऋष्यैर्मृगैः प्रोक्ता, ऋषिभिरप्रोक्ता वा ऋष्यप्रोक्ता शूकयुक्ता शिम्बिः शूकशिम्बि " शूकशिम्बा चेति " ( वाचस्पतिः ) कपीनां कच्छूः कपिकच्छूः, मर्कटीवाचरतीति मर्कटीयति इति मर्कटीति नव "कयबांच" इति ख्यातायाः ॥८६।१/२ ॥

स. स. स. स. स. स.

मूसरि या **चित्रोपचित्रान्यग्रोधी द्रवन्ती शंबरी वृषा ॥ ८७ ॥**

स. स स. स.

मूसाकर्णी **प्रत्यक्श्रेणी सुतश्रेणी रण्डामूषिकपर्ण्यपि ।**

चित्रेति—चित्रं रूपमस्याश्चित्रा, उपगता चित्रमित्युपचित्रा, न्यग्रुणद्धि, न्यक् रुणद्धीति वा न्यग्रोधी, "न्यग्रोधी तूपचित्रायामिति" (मेदिनी) द्रवतीति द्रवन्ती, शं वृणोतीति शंवरी, वर्षतीति वृषा, प्रतीची श्रेणी यस्याः प्रत्यक्श्रेणी, सुतानां श्रेणी यस्याः सुतश्रेणी, रमन्तेऽत्रेति रण्डा, स्वामिमते तु चण्ड्यत इति चण्डापि, मूषिकः पर्णमस्या मूषिकपर्णी, आखुपर्णिकेत्यपीति दश 'मूसाकर्णी' इति ख्यातायाः ॥ ८७ । १/२ ॥

पु.　　पु.　　पु.　　पु.

अपामार्ग चिचिड़ा या आँधीझाड़ा　**अपामार्गः शैखरिको धामार्गवमयूरकौ ॥ ८८ ॥**

स.　　स.　　स.　　स.

**प्रत्यक्पर्णी कीशपर्णी किणिही खरमञ्जरिः ।**

अपेति—अपमार्जन्त्यनेनेति अपामार्गः, शिखरे प्रायेण भवतीति शैखरिकः, धाम्नोऽर्गः, धामार्गस्तं वातीति धामार्गवः, अधामार्गवोपि, मयूरप्रतिकृतिः मयूरकः, प्रत्यश्चि पर्णान्यस्याः प्रत्यक्पर्णी, कपिलोमतुल्यानि लोमशानि पर्णान्यस्याः कपिपर्णी, स्वामिमते तु कीशपर्ण्यपि, किणिनो व्रणान् जिहीते, किणिनो व्रणान् हन्तीति वा किणिही, खरा मञ्जरिरस्याः खरमञ्जरिरित्यष्टावपामार्गस्य ॥ ८८ । १/२ ॥

स.　　स.　　स.　　स.　　स.

भँगरा या भँगरैया　**हञ्जिकाब्राह्मणीपद्माभार्गीब्राह्मणयष्टिकाः ॥ ८९ ॥**

स.　　पु.　　पु.　　पु.

**अङ्गारवल्लीबालेयशाकवर्बरवर्धकाः ।**

हञ्जीति—हन्ति, भनक्ति वा रोगानिति पृषोदरादित्वात् हञ्जिका, फञ्जिकापि, ब्रह्मण इयं ब्राह्मणी, पद्माभं पुष्पमस्याः पद्मा, भर्जनं भर्गः सोस्त्यस्या भार्गी, ब्राह्मणयष्टिरिव ब्राह्मणयष्टिका, अङ्गारवद्वल्ल्यस्या अङ्गारवल्ली, बालेयस्य शाको बालेयशाकः, वर्बर्तीति वर्बरः, वर्धत इति वर्धक इति नव भार्ग्याः ॥ ८९ । १/२ ॥

स.　　स.　　स.　　स.　　स.

मंजीठ　**मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेशिका ॥ ९० ॥**

स.　　स　　स.　　स.

**मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ।**

मञ्जीति-मञ्जौ शोभने वर्णे तिष्ठति, अतिशयेन मञ्जुरिति वा मञ्जिष्ठा, विकसति, विकषति वा विकसा, विकषा, जिङ्गतीति जिङ्गी, समन्ततोऽङ्गतीति समङ्गा, काले मिश्यते कालमेशी सैव कालमेशिका, कालं वर्णं मिषतीति वा कालमेषी सैव कालमेषिका, मण्डूकवत्पर्णान्यस्या मण्डूकपर्णी, भण्डतीति भण्डीरी, भाण्डीरी, भण्डीरिका, भण्डतीति भण्डी, योजनगामिनी वल्ली योजनवल्लीत्यपीति नव मञ्जिष्ठायाः ॥ ९० । १/२ ॥

पु. पु. पु. पु. पु.
यवासा या धमासा यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ॥ ९१ ॥
स. स. स. स. स.
रोदनी कच्छुरानन्ता समुद्रान्ता दुरालभा ।

यास इति–याति, यसनं वा यासः, यौतीति यवासः, दुःखेन स्पृश्यते इति दुःस्पर्शः, धन्वनो यासो धन्वयासः, कुं नाशयतीति कुनाशः स एव कुनाशकः, रोदयतीति रोदनी, स्वामिमते तु चोदनीत्यपि, कच्छूं रातीति कच्छुरा, नास्ति अन्तो यस्या अनन्ता, समुद्रान्तोऽस्त्यस्याः समुद्रान्ता, दुःखेनालभ्यत इति दुरालभा इति दश यवासस्य ॥ ९१ । ½ ॥

स. स. स. स.
पिठवन पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिपर्णिका ॥ ९२ ॥
स. स. स. स. स.
क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनिर्गुहा ।

पृश्नीति–पृश्निरल्पं पर्णमस्याः पृश्निपर्णी, पृथगसक्तं पर्णमस्याः पृथक्पर्णी, चित्रं पर्णमस्याश्चित्रपर्णी, अङ्घ्रेरारभ्य पर्णान्यस्या अङ्घ्रिपर्णी सैव अङ्घ्रिपर्णिका, मुकुटमते तु अङ्घ्रिमूलमारभ्य वल्लिरस्या अङ्घ्रिवल्ली सैवाङ्घ्रिवल्लिकेत्यपि क्रोष्टुभिर्विन्ना विचारिता, दत्तेवेति वा कोष्टुविन्ना, सिंहपुच्छमस्याः सिंहपुच्छी, कलं श्यतीति कलशिः, धावतीति धावनिः, गूहतीति गुहा इति नव पृश्निपर्ण्याः ॥ ९२ । ½ ॥

स. स. स. स. स.
भटकटैया निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ॥९३॥
स. स. स. स. स.
प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि ।

नीति–निदिह्यते स्म निदिग्धा सैव निदिग्धिका, स्पृशतीति स्पृशी, व्याजिघ्रतीति व्याघ्री, बृंहतीति बृहती, "क्षुद्रायां क्षुद्रवार्ताक्यां बृहती छन्दसि क्वचिदिति" (शाश्वतः) कण्टकानियर्तीति कण्टकारी सैव कण्टकारिका, प्रचोदयतीति प्रचोदनी, कोलतीति कुली, क्षुणत्तीति क्षुद्रा "क्षुद्राव्यङ्गानटीकण्टकारिकासरघासु च । चाङ्गेरीवेश्ययोर्हिंस्रामक्षिकामात्रयोरपीति" (मेदिनी) दुःस्पृश्यत इति दुःस्पर्शा, राष्ट्रमस्त्यस्या राष्ट्रिकेत्यपीति दश कण्टकार्याः ॥ ९३ । ½ ॥

स. १ स. स. स. स.
नील नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ॥९४॥
स. स. स. स. स. स.
रञ्जनी श्रीफली तुत्था द्रोणी दोला(च)नीलिनी ।

---

१ नीलादोषधाविति ङीष् ॥

नीलीति—नीलतीति नीली "नीलीरुग्भेदनीलिन्योरिति" ( मेदिनी ) कल्यत इति काला, क्लीतकं क्लयोऽस्त्यस्याः क्लीतकिका, ग्रामे भवा ग्रामीणा, मधुराणि पर्णान्यस्यामधुपर्णी सैव मधुपर्णिका, रञ्जयतीति रञ्जनी, श्रीमत्फलमस्त्यस्याः श्रीफली, तुद्यते तुत्थयति वा तुत्था, द्रवतीति द्रोणी, स्वामिमते तु तूयतेऽनयेति तूणीत्यपि, दोलयतीति दोला, 'मेलापि' "तुत्था श्रीफलिका मेला सारवाही च रञ्जनी"(इति निघण्टुः )नीलो वर्णोऽस्त्यस्याः नीलिनीत्येकादश नील्याः नील इति ख्यातस्य ॥ ९४ । १/२ ॥

पु. पु. स. स. स.

बकुची **अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ॥९५॥**

स. स. स. स.

**कालमेषी कृष्णफला वाकूची पूतिफल्यपि ।**

अवेति—अवलगोरशोभनाज्जातोऽवल्गुजः, सोम इव सोमेन वा राजतीति सोमराजी, शोभना वल्लिरस्याः सुवल्लिः, सोमस्य वल्लिः सोमवल्लिः सैव सोमवल्लिका, कालं मिषतीति कालमेषी, कृष्णं फलमस्याः कृष्णफला, वातं कूचयतीति पृषोदरादित्वाद् वाकूची, मुकुटमते तु वाचं गुञ्जतीति वागुजीत्यपि, पूतिः फलेष्वस्याः पूतिफलीत्यष्टौ वाकूच्याः ॥ ९५ । १/२ ॥

स. स. स. स. स. स.

गजपीपरि **कृष्णोपकुल्या वैदेही मागधी चपला कणा ॥ ९६ ॥**

स. स. स. स. स.

छोटी पीपरि **उषणा पिप्पली शौण्डी कोला(थ) करिपिप्पली ।**

स. स. स.

**कपिवल्ली कोलवल्ली श्रेयसी वसिरः (पुमान्)॥ ९७॥**

कृष्णेति—कृष्णो वर्णोऽस्त्यस्याःकृष्णा।"कृष्णा स्याद्द्रौपदीनीलीकणाद्राक्षासु योषितीति" ( मेदिनी ) उपकोलति, उपगता कुल्यामिति वा उपकुल्या, विदेहेषु भवा वैदेही, "वैदेही रोचनासीतावणिक्स्त्रीपिप्पलीषु चेति" (मेदिनी) मगधेषु भवा मागधी, चपतीति चपला, कणति शब्दयतीति कणा, ओषति, ऊषति वा उषणा, ऊषणा दीर्घादिरपि, पिपर्तीति पिप्पली, शुण्डायां मद्यपानगृहे भवा शौण्डी "शौण्डो मत्ते च विख्याते पिप्पल्यां तु भवेत्स्त्रियामिति" (मेदिनी) इति दश पिप्पल्याः। अथेति—करीव पिप्पली करिपिप्पली, कपिरिव वल्ली कपिवल्ली, कोल इव वल्ली कोलवल्ली, अतिशयेन प्रशस्ता श्रेयसी, वस्ते इति वसिरः तालव्यपाठे तु वष्टीति वशिरः पुमान्स्यादिति पञ्च गजपिप्पल्याः ॥ ९६ । ९७ ॥

न. १ न. स. स. स.

चव्य या **चव्यं (तु) चविकं काकचिञ्चागुञ्जे(तु)कृष्णला ।**

१ केचित्तु पूर्वान्वयमाहुः, यदाह चन्द्रनन्दनः— "चव्या कोलाथ चविका श्रेयसी गजपिप्पली । च्यवना कोलवल्ली तु चव्यं कुञ्जरपिप्पली" अत्र पक्षे तुस्थाने चः पाठ्यः ॥

स. स. पु.स. पु.

पीपरि की ल- फलंकषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ॥ ९८ ॥
कड़ी घुंघुची पु. पु. पु.
गोखुरू गोकण्टको गोक्षुरको वनशृङ्गाट (इत्यपि)।

चव्यमिति–चर्व्यत इति चव्यम्, चर्व्यत इति चविकम्, स्त्रियामपि "चव्या कोला च चविका चव्यं कुञ्जरपिप्पलीति" (हट्टचन्द्रः) इति द्वे चव्यस्य। काकवर्णा चिञ्चा काकचिञ्चा, गुञ्जतीति गुञ्जा "गुञ्जा तु काकचिञ्चायां पटहे च कलध्वनाविति"(मेदिनी) कृष्णं वर्णं लातीति कृष्णला इति त्रीणि गुञ्जायाः। पलं मांसं कषतीति पलंकषा, इक्षुगन्ध इव गन्धोऽस्या इक्षुगन्धा, शुनो दंष्ट्रा इव श्वदंष्ट्रा, स्वादुः कण्टकोऽस्य स्वादुकण्टकः, गोर्धेनोः पृथिव्या वा कण्टकः गोकण्टकः, "गोकण्टको गोक्षुरके श्वपुटे च गवांखुरे" (इति मेदिनी) गोर्गौर्वा क्षुरतीति गोक्षुरः स एव गोक्षुरकः, वनस्य शृङ्गाट इव वनशृङ्गाटः इति सप्त गोक्षुरकस्य "गुखुरू" इति ख्यातस्य ॥ ९८ । ३ ॥

स. स. स. स. स. स.
अतीस विश्वा विषा प्रतिविषातिविषोपविषारुणा ॥ ९९ ॥
स. न. स. स.
दुधिया शृङ्गी महौषधं (चाथ) क्षीरावी दुग्धिका (समे)।

विश्वेति–विशतीति विश्वम्, "विश्वं समस्ते जगति विश्वेदेवेषु नागरे। विश्वा चातिविषायां स्यादिति" (विश्वः) वेवेष्टीति विषा, प्रतीपं विषमस्याः प्रतिविषा, विषमतिक्रान्ता अतिविषा, विषमुपगता उपविषा, अरुणो वर्णोऽस्त्यस्या अरुणा, शृणातीति शृङ्गी, महच्च तदौषधं चेति महौषधम् "महौषधन्तु शुण्ठ्यां स्याद्विषायां लशुनेपि चेति" (मेदिनी) इत्यष्टावतिविषायाः। अथेति–क्षीरमवतीति क्षीरावी, दुग्धमस्त्यस्या दुग्धिका उभे समे समानार्थे समानलिङ्गे च स्यातामिति द्वे "दूधी" इति ख्यातायाः ॥ ९९ । ३ ॥

स. स. स. स. स.
शतावरि शतमूली बहुसुता भीरुरिन्दीवरी वरी ॥ १०० ॥
स. स. स. स.
दारुहल्दी ऋष्यप्रोक्ताभीरुपत्री नारायण्यः शतावरी।
स. पु. पु. पु.
अहेरु (रथ) पीतद्रुकालेयकहरिद्रवः ॥ १०१ ॥
स. स. स. स.
दार्वी पचंपचा दारुहरिद्रा पर्जनी (त्यपि)।

शतेति–शतं मूलान्यस्याः शतमूली, बहवः सुता यस्या बहुसुता, न भीरुरभीरुः, नीलोत्पलाकारपुष्पत्वाद् इन्दीवरमस्त्यस्याः इन्दीवरी, वृणोतीति वरी, ऋष्यैः प्रोक्ता ऋष्यप्रोक्ता, अभीरूणि पत्राण्यस्या अभीरुपत्री, नारायणाज्जाता नारायणी

"नारायणोऽच्युतेऽभीरुगौर्योर्नारायणी मतेति" (मेदिनी) शतेनावृणोतीति शतावरी, न हिनोतीति अहेरुरिति दश शतावर्याः। अथेति—पीतं द्रवतीति पीतद्रुः, कलेरयं कालेयः स एव कालेयकः, कालीयकोपि "निर्दिष्टा वै कटकिनी स च कालेयकः स्मृतः। कालीयको दारुनिशेति" (रुद्रः) हरिः पिङ्गः पीतो वा द्रुरस्य हरिद्रुः "हरिद्रुः पीतचन्दनमिति" (निघण्टुः) दीर्यत इति दार्वी, पचतीति पचंपचा "पीतदारुपचंपचा" (इति निघण्टुः) दारुश्चासौ हरिद्रा चेति दारुहरिद्रा, परं पालकं स्वास्थ्यं जनयतीति पर्जन्या सौ जनी चेति वा पर्जनीति सप्त दारुहरिद्रायाः॥ १००। १०१। ३॥

स. स. स. स. स.

खुरासानीवच **वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका॥ १०२॥**

स. स. स. स.

सफेदवच **(शुक्ला) हैमवती वैद्यमातृसिंह्यौ (तु) वाशिका।**

पु. पु. पु. पु. पु.

रूसा **वृषोटरूषः सिंहास्यो वासको वाजिदन्तकः॥ १०३॥**

वचेति—वक्तीति वचा, उग्रोगन्धोऽस्या उग्रगन्धा, षड्ग्रन्था ग्रन्थयो यस्याः षड्ग्रन्था, गोर्लोमास्या गोलोमी, शतं पर्वाणि सन्त्यस्याः शतपर्विका "शतपर्विका तु दूर्वायां वचायामपि योषितीति" (मेदिनी) इति पञ्च वचायाः। सा वचा शुक्ला श्वेतवर्णा चेत्तदा हिमवति भवा हैमवती स्यादित्येकं श्वेतमूलवचायाः। वैद्यस्य मातेव वैद्यमाता, हिनस्तीति सिंही, वाश्यते, उश्यते वा वाशिका, वासयतीति विग्रहे तु वासा दन्त्यान्तोपि "वासो गृहेऽप्यवस्थाने वासा स्यादटरूषके" (इति रुद्रः) वर्षति मधु इति वृषः, अटान् गच्छतो रोषतीति अटरुषः, अटैरूषतीति विग्रहे तु अटरूषो दीर्घोकारवानपि "वैद्यमाताटरूषकः" (इति रभसः) सिंहआस्यमस्येति सिंहास्यः "सिंहास्यो वाजिदन्तकः" (इति रभसः,) वस्ते आच्छादयति, वासयति वा वासकः, वाजीदन्तोऽस्येति वाजिदन्तक इत्यष्टावटरूषस्य॥ १०२। १०३॥

स. स. स. स.

विष्णुकान्ता **आस्फोता गिरिकर्णी "स्या" द्विष्णुक्रान्तापराजिता।**

स. पु. पु. पु. पु.

तालमखाना **इक्षुगन्धा (तु) काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः॥ १०४॥**

आसिति—आस्फोटयतीति आस्फोता, गिरिर्वालमूषिकाकर्णोऽस्या गिरिकर्णी, विष्णुना क्रान्ता विष्णुक्रान्ता, न पराजिता अपराजिता इति चत्वारि विष्णुक्रान्तायाः। इक्षुः गन्धोऽस्या इक्षुगन्धा, "इक्षुगन्धा कोकिलाक्षे क्रोष्ट्याकाशे च गोक्षुरे" (इति मेदिनी) काण्डेन इक्षुरिव काण्डेक्षुः, कोकिलोऽक्षि यस्येति कोकिलाक्षः, इक्षुमिक्षुगन्धं रातीति इक्षुरः, क्षुरइव क्षुर. "क्षुरःस्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुर इति" (विश्वः) इति पञ्च "तालमखाना" इति ख्यातस्य॥ १०४॥

पु. पु. स. स. स.
सौंफ शालेयः 'स्या'च्छीतशिवश्छत्रा मधुरिका मिसिः ।
स. पु. पु. स. स. स.
सेंहुड़ मिश्रेया(प्यथ)सीहुण्डो वज्रद्रुःस्नुक्स्नुहीगुडा॥१०५॥
स. पु.न. स. स.
बायविडङ्ग समन्तदुग्धा(थो)वेल्लममोघा चित्रतण्डुला ।
पु. पु. पु.न.
तण्डुलश्च कृमिघ्नश्च विडङ्गं(पुंनपुंसकम्) ॥ १०६ ॥

शेति—शालीनां भवनं क्षेत्रं शालेयं तदस्यास्तीति शालेयः, शीतमस्यास्तीति शीतः, शिवमस्यास्तीति शिवः शीतश्चासौ शिवश्चेति शीतशिवः, छत्रमस्यास्तीति छत्रा, मधुरो रसोऽस्त्यस्या मधुरा सैव मधुरिका, मस्यते इति मिसिः, मिसी वा, मेशति, मिशतीति विग्रहे तु मिशी, मिशिरपि तालव्यान्तः, मिश्रयतीति मिश्रा, ईयत इत्येया मिश्रा चासा-वेया चेति शकन्ध्वादित्वान्मिश्रेया इति षट् 'सौंफ' इति ख्यातायाः। अथेति—'सी' इति हुण्डते सीहुण्डः "वज्रद्रुमः सिहुण्डोथ" इति रभसात्सिहुण्डो ह्रस्वादिरपि, वज्रश्चासौ द्रुश्चेति वज्रद्रुः, स्वामी तु "वज्रः स्नुक् स्त्री स्नुही गुडा" इति पठति, स्नुह्यतीति स्नुक्-स्नुही, भागुरिमते स्नुहापि, गुडतीति गुडा, समन्ताद्दुग्धमस्याः समन्तदुग्धा इति षट् सीहुण्डस्य। अथविति—वेल्लतीति वेल्लम्, न मोघा अमोघा, मोघापि "कृमिघ्नं तण्डुलं मोघा" (इति वाचस्पतिः) चित्रास्तण्डुला अस्याश्चित्रतण्डुला, तड्यत इति तण्डुलः, मुकुटमते तु तन्तुं कृमिसूत्रं लातीति तन्तुलोपि, कृमीन् हन्तीति कृमिघ्नः, विडतीति विडङ्गं पुंनपुंसकं स्यादिति षट् विडङ्गस्य ॥ १०५ । १०६ ॥

स. पु. स. स.
बरिआरा सनई बला वाट्यालकोघण्टारवा(तु)शणपुष्पिका ।
स. स. स. स. स.
दाख मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति(च) ॥१०७॥

बलेति—बलति, बलमस्त्यस्या इति वा बला, वाटीमलतीति वाट्यालः स एव वाट्यालक इति द्वे बलायाः। घण्टेवारौतीति घण्टारवा, शणः पुष्पं यस्याः शणपुष्पी सैव शणपुष्पिका, इति द्वे घण्टारवायाः। मृद्नाति, मृद्यते वा मृद्वीका, गौःस्तनोऽस्या गोस्तनी, "गोस्तनो हारभेदे ना द्राक्षायां गोस्तनी स्त्रियामिति" (मेदिनी) द्राङ्क्ष्यत इति द्राक्षा, स्वद्यत इति स्वाद्वी, मधूरसोऽस्या मधुरसा, "भवेन्मधुरसा द्राक्षा मूर्विका दुग्धिकासु चेति" (मेदिनी) इति पञ्च द्राक्षायाः ॥ १०७ ॥

स. स. स. स. स.
निसोत या सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ।

स. स. स. स. स.
त्रिधारा त्रिभण्डीरोचनीश्यामापालिन्द्यौ(तु)सुषेणिका१०८॥
स. स. स. स.
कालानिसोत कालामसूरविदलार्धचन्द्रा कालमेषिका।

सर्वेति—सर्वा अनुभूतयोऽस्यामिति सर्वानुभूतिः, सरतीति सरला, सरणापि, "सर्वानुभूतिः सरणा त्रिपुटा रेचनी सरा" (इति वाचस्पतिः) त्रयःपुटा यस्यास्त्रिपुटा, त्रिपुटीत्यपि "त्रिपुटी महतीस्त्राशा"(इति वाचस्पतिः) त्रिभिरवयवैर्वृता त्रिवृता, त्रीनवयवान् वृणोतीति त्रिवृत्, त्रीन् दोषान्भण्डत इति त्रिभण्डी, रोचत इति रोचनी "रोचनी कर्कशे स्मृता" रेचनी इति पाठे तु रिणक्तीति रेचनी "रेचनी त्रिवृतादन्त्योरिति" (मेदिनी) इति सप्त शुक्लत्रिवृतायाः। श्यायत इति श्यामा, पालयतीति पालिन्दी, सुष्ठु सेनया यातीति सुषेणा सैव सुषेणिका, कालयतीति काला, मसूरवद्विदलमस्या मसूरविदला, अर्धश्चन्द्रो यस्या अर्धचन्द्रा,कालं मिषतीति कालमेषी सैव कालमेषिकेति सप्त श्यामत्रिवृतायाः ॥ १०८ । ३ ॥

न. न. स. स.
मुलेठी मधुकं क्लीतकं यष्टिमधुका मधुयष्टिका॥ १०९ ॥
काला गंगा फल
स. स. स. स.
विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री (च या सिता)।
उजला गंगा फल
स. स स.
(अन्या)क्षीरविदारी'स्या'न्महाश्वेतर्क्षगन्धिका ११०॥

मेति—मन्यत इति मधु, मध्विव मधुकम्,क्लीबनं क्लीतमधाष्टर्यं कलति, क्लीं क्लीवत्वं तकतीति वा क्लीतकम्, यष्टी मध्विवास्या यष्टिमधुका, मधुयष्टीव मधुयष्टिका "मधुयष्टी च यष्टी च यष्टीमधुकमेव चेति"(वाचस्पतिः) इति चत्वारि मधुयष्टिकायाः। विदारयतीति विदारी, क्षीरमिव शुक्ला क्षीरशुक्ला, इक्षुर्गन्धोऽस्या इक्षुगन्धेति त्रीणि शुक्लभूकूष्माण्डस्य। तथा च अन्या या असिता कृष्णा सा तु क्रोशतीति क्रोष्ट्री "क्रोष्ट्री शृगालिका-क्षीरविदारीलाङ्गलीपु चेति" (विश्वः) क्षीरवती विदारी, क्षीरविदारी, महती चासावश्वेता च महाश्वेता,ऋक्षो गन्धोऽस्याः, ऋक्षान् गन्धयतीति वा सैव ऋक्षगन्धिका स्यादिति चत्वारि कृष्णभूकूष्माण्डस्य ॥ १०९ । ११० ॥

स. स. स. स.
जलपीपरि लाङ्गली शारदी तोयपिप्पली शकुलादनी।
अजमोद या
स. स. पु. पु. पु.
मोरशिखा खराश्वाकारवीदीप्यो मयूरोलोचमस्तकः ॥ १११ ॥

---

१ एवं च विदार्यादित्रयं शुक्लवाचकम्। क्रोष्ट्र्यादिचतुष्टयं कृष्णवाचकमिति मन्तव्यम्॥

लेति–लाङ्गलाकारोऽस्त्यस्या लाङ्गली, "लाङ्गलीतोयपिप्पल्यां क्लीबन्तु कुसुमान्तरे। गोदारणे तृणराजगृहदारुविशेषयोरिति" (मेदिनी) शरदि भवा शारदी, तोयस्य पिप्पलीव तोयपिप्पली, शकुलैरद्यत इति शकुलादनीति चत्वारि जलपिप्पल्याः। खरमश्नुते, खरैरश्यते वा खराश्वा, केन जलेन रौतीति करवो मयूरस्तस्येयं कारवी, "कारवीमधुरादीप्यत्वक्पत्री कृष्णजीरके" (इति मेदिनी) दीपनं दीपस्तत्र साधुर्दीप्यः, दीपकोपि "अलंकारे यवान्यां च दीपको लोचमस्तके" (इति रभस,) मीनाति रोगमिति मयूरः, लोच्यते, लोचयति वा लोचो दर्शनीयो भासमानो वा मस्तकोऽस्येति लोचमस्तकः, स्वामिमते तु लोचमर्कटोपीति पञ्च मयूरशिखायाः ॥ १११ ॥

स. स. स. स. स.

काली सारिवा **गोपी श्यामा शारिवा(स्या)दनन्तोत्पलशारिवा।**

ऋद्धि, वृद्धि — न. स. स. स. [१]

**योग्यमृद्धिःसिद्धिलक्ष्म्यौ वृद्धे(रप्याह्वया इमे) ॥११२॥**

गोपीति–गोपायतीति गोपी, गोपापि, "गोपीश्यामा गोपवल्ली गोपा गोपालिका च सा" (इति वाचस्पतिः) श्यायत इति श्यामा, शरणांशारिरस्त्यस्या इति शारिवा, नास्त्यन्तोऽस्या अनन्ता, "अनन्ता च विशल्यायां शारिवादूर्वयोरपीति" (मेदिनी) उग्रं पलमनया, उत्पलमस्त्यस्या वा उत्पला, उत्पला चासौ शारिवा चेति उत्पलशारिवा इति पञ्च शारिवायाः। युज्यते, योगाय प्रभवति वा योग्यम्, ऋध्नोतीति ऋद्धिः, "ऋद्धिः स्यादौषधीभेदे समृद्धावपि योषिति" (इति मेदिनी) सिध्यतीति सिद्धिः "सिद्धिस्तु मोक्षे निष्पत्तियोगयोरिति" (हैमः) लक्षयति, लक्ष्यते वा लक्ष्मीः, "लक्ष्मीः संपत्तिशोभयोः" (इति मेदिनी) इति चत्वारि ऋद्धयाख्यौषधेः। इमे उक्ताश्चत्वारो वृद्धयाख्यौषधेरप्याह्वया नामानि, वर्धतेऽनयेति वृद्धिरिति पञ्च वृद्धयाख्यौषधेः ॥११२॥

स. स. स. स. स.

केला **कदली वारणबुसा रम्भा मोचांशुमत्फला।**

स. स. स. स.

वनमूंग **काष्ठीला मुद्गपर्णी (तु) काकमुद्गा सहे (त्यपि)॥११३॥**

कदेति–कन्दते, कन्द्यते वा केन वायुना दल्यते वा, कदली, कदलापि, बुस्यति, बुस्यते वा बुसा, बुषेति मूर्धन्यान्तोपि, वारणानां बुसा वारणबुसा, रभते, रभ्यते वा रम्भा, "रम्भा कदल्यप्सरसोर्ना वेणौ वारणान्तरे" (इति मेदिनी) मुञ्चतीति मोचा, अंशुमन्ति सूक्ष्मावयववन्ति फलान्यस्याः, अंशुमानिव फलान्यस्या वा अंशुमत्फला, भानुफलापि, काष्ठिना इल्यत इति काष्ठीला, इति षट् कदल्याः। मुद्गःपर्णमस्या मुद्गपर्णी, काकेनेषज्ज्वलेन मुदं गच्छतीति, काकामुद्गा, हर्षप्राप्ता यस्यामिति वा काकमुद्गा,

---

१ "वृद्धिस्तु वर्धने योगेऽप्यष्टवर्गौषधान्तरे। कालान्तरे चाभ्युदये समृद्धावपि योषितीति" (मेदिनी) ॥

सहते इति सहा "सहो बले न स्त्रियां स्यात् स्त्रियान्तु नखभेषजे। दण्डोत्पला मुद्गपर्णी कुमारी पृथिवीषु चेति" (मेदिनी) इति त्रीणि "मुंगौनी" इति ख्यातस्य॥ ११३॥

स. स. स. स. स.
बैंगन या भाटा **वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षणी।**
स. स. स. स. स.
रासन या **नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ॥११४॥**
स. स. स. स.
लताविशेष **नकुलेष्टा भुजङ्गाक्षी छत्राकी सुवहा ( च सा )।**

वार्तेति—वार्तमारोग्यमाकयति, वार्तं फल्गु अकं यस्या वा वार्ताकी, वातिङ्गणस्तु वार्ताङ्गो वार्ताकः शाकबिल्वकः" इति रभसात्पुंस्यपि, "वार्ता वातिङ्गणे वृत्ताविति" विश्वाद् वार्तापि, "वातिङ्गणश्च वार्ताकुरिति" (त्रिकाण्डशेषाच्च) वार्ताकुरपि, हिङ्गु लातीति हिङ्गुली, हिनस्तीति सिंही, भण्यते, भण्यते वा भण्टाकी, दुःखेन प्रधृष्यत इति दुष्प्रधर्षणी, दुष्प्रधर्षिणीत्यपि इति पञ्च भण्टाक्याः। नकुलानां प्रियं, न आकुलत्वं यया वेति नाकुली, शोभनो रसोऽस्याः सुरसा, राति, रायते, रस्यते वा रास्ना, शोभनो गन्धः सुगन्धः, सुगन्धोऽस्त्यस्याः सुगन्धा, गन्धवती नाकुली गन्धनाकुली, नकुलानामिष्टा नकुलेष्टा, भुजङ्गानक्षति, भुजङ्गोऽक्षि यस्या भुजङ्गाक्षी, छत्रमकतीति छत्राकी, सा च सुष्ठु वहतीति सुवहा स्यादिति नव रास्नायाः॥ ११४। ½ ॥

स. स. स. स. स.
सरिवन **विदारिगन्धांशुमती सालपर्णी स्थिरा ध्रुवा ॥ ११५॥**
स. स. म. स.
कपास **तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति ( च )।**

विदेति—विदार्या गन्धो विदारिगन्धः, अंशवः सन्त्यस्या अंशुमती, सालः पर्णमस्याः सालपर्णी, शालपर्णी तालव्यादिरपि, तिष्ठतीति स्थिरा, ध्रुवतीति ध्रुवा इति पञ्च शालपर्ण्याः। तुण्डिकाञ्शरीराणि ईरयतीति तुण्डिकेरी, समुद्रोऽन्तो यस्याः, मुद्रया सह वर्तमानोऽन्तः समीपं यस्या वा समुद्रान्ता, करोति क्रियते वा कर्पासी, कार्पासी, बदतीति बदरा इति चत्वारि कार्पास्याः॥ ११५। ½ ॥

स. स. पु. पु.
नर्माकपास काकड़ासिंगी **भारद्वाजी (तु सा वन्या) शृङ्गी (तु) ऋषभो वृषः॥११६॥**
स. स. स. स.
कंकही या गंगेरन **गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका।**

भारेति—सा कर्पासी वन्या वनोद्भवा चेत्तदा भरद्वाजस्य मुनेरियं भारद्वाजी स्यादित्येकं वनकर्पास्याः "नर्मा" इति ख्यातायाः। शृणाति गदमिति शृङ्गी, ऋषतीति

ऋषभः, वर्षतीति वृषः इति त्रीणि शृङ्ग्याः " काकड़ासिंगी " इति ख्यातायाः । गाङ्गं जलमीरयति गाङ्गेरुः सैव गाङ्गेरुकी, नागानां हस्तिनां बला नागबला, ऋषति वातमिति ऋषा, गवि भूमावेधते गवेधुः सैव गवेधुका ह्रस्वा चासौ गवेधुका चेति चत्वारि " कंघही " " गंगरन " इति ख्यातायाः ॥ ११६ । ३ ॥

सफ़ेद फूल की तुरई, पीले फूल की तुरई, चचेड़ा, भूमिजामुन, कलिहारी, कौआठोंढी

पु. पु. स.

**धामार्गवो घोषकः "स्या"न्महाजाली (स पीतकः) ११७॥**

स. स. स. स. स.

**ज्यौत्स्नी पटोलिका जाली नादेयी भूमिजम्बुका ।**

स. स. स. स.

**स्याल्लाङ्गलिक्यग्निशिखा काकाङ्गी काकनासिका ॥११८॥**

धामेति—धाम ऋच्छति धामार्, गच्छति, गम्यते वा गौः धामार् चासौ गौश्चेति धामार्गवः, घोषतीति घोषः स एव घोषकः स्यादिति द्वे " श्वेतपुष्पतोरई " इति ख्यातायाः । स घोषकः पीतकश्चेत्तदा आलयतीति जाली, महती चासौ जाली चेति महाजाली स्यादित्येकं " घियातोरई " इति ख्यातायाः । ज्योत्स्नास्त्यस्या ज्यौत्स्नी, पटतीति पटोली सैव पटोलिका, जलतीति जाली इति त्रीणि " चचेड़ा " इति ख्यातस्य । नद्यां भवा नादेयी, भूमिलग्ना जम्बुका, भूमिजम्बुका इति द्वे भूमिजम्बुकायाः। लाङ्गलं पुष्पविशेषोऽस्त्यस्याः, लाङ्गलवत्खनति भूमिमिति वा लाङ्गलकी, अग्नेरिव शिखास्या अग्निशिखा इति द्वे " कलिहारी " इति ख्यातायाः । काकस्येवाङ्गं नासारूपं फलमस्याः काकाङ्गी, काकस्येव नासिका यस्याः काकनासिका इति द्वे काकजङ्घायाः " कौआठोंढ़ी " इति ख्यातायाः ॥ ११७ । ११८ ॥

हंसपदी या लजालू, मुसली, मेढ़ासिंगी, गोभी

स. स. स. स.

**गोधापदी (तु) सुवहा मुसली तालमूलिका ।**

स. स. स. स

**अजशृङ्गी विषाणी (स्याद्) गोजिह्वादर्विके (समे) ११९॥**

गोधेति—गोधाया इव पादो मूलमस्या गोधापदी, सुवहतीति सुवहा " गोधापदी तु सुवहा त्रिफला हंसपद्यपि " ( इति कोषान्तरम् ) इति द्वे हंसपद्याः । मुस्यतीति मुसली, मुषल्यपि, तालो मूलमस्यास्तालमूली सैव तालमूलिकेति द्वे " मुसली " इति ख्यातायाः । अजः शृङ्गमस्या अजशृङ्गी, विषाणमस्त्यस्या विषाणी स्यात् " विषाणी क्षीरकाकोल्यामजशृङ्ग्यां च योषिति । कुष्ठनामौषधे क्लीबं त्रिषु शृङ्गेभदन्तयोरिति" ( मेदिनी ) इति द्वे " मेढ़ासिंगी " इति ख्यातायाः । गौर्जिह्वेव गोजिह्वा, दर्वीव दर्विका, दार्विकापि उभे समे समानार्थे समानलिङ्गे चेति द्वे " गोभी " इति ख्यातायाः ॥ ११९ ॥

स. स. स. स.

तांबूल या पान ताम्बूलवल्ली ताम्बूली नागवल्ल्य(प्यथ) द्विजा।

स. स. स. स. स.

गगनधूरि हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ॥ १२० ॥

तामिति—ताम्यतीति तान्, बोलतीति बुली ताँश्चासौ बुली चेति पृषोदरादित्वात्ताम्बूली, ताम्बूल्याख्या वल्ली ताम्बूलवल्ली, तामं बोलतीति ताम्बूली, नागलोकस्य वल्ली नागवल्ली इति त्रीणि "नागवेलि" इति ख्यातायाः। अथेति—द्विर्जाता द्विजा, "द्विजाभार्ग्यारेणुकयोरिति" (हेमचन्द्रः) हरतीति हरेणुः, "कषायेपि हरेणुर्ना रेणुकायां स्त्रियां भवेदिति" (रुद्रः) रिणाति, रीयते वा रेणुः रेणुरस्त्यस्याः, रेणुरेवेति वा रेणुका, "रेणुकापि हरेणौ च जामदग्न्यस्य मातरीति" (मेदिनी) कुन्तिषु देशेषु भवा कौन्ती, कपिलो वर्णोऽस्त्यस्याः कपिला, भस्मनो गन्धो भस्मगन्धोऽस्त्यस्या भस्मगन्धिनी इति षट् हरेणुकायाः ॥ १२० ॥

न. न. न. न.

एलुवा एलवालुकमैलेयं सुगन्धि हरिवालुकम्।

पालक न. स. पु. पु. पु.स.न.

या कुंदरू वालुकं (चाथ) पालङ्क्या मुकुन्दः कुन्दकुन्दुरू ॥१२१॥

एलेति—एलयतीति, एला इव वलतीति एलावालु तदेव एलावालुकम् स्वामिमते एलवालुकम्, इलाया अपत्यमैलेयम्, शोभनो गन्धोऽस्य सुगन्धि, हरिद्वर्णं वालुकम् हरिवालुकम्, वलतीति वालु तदेव वालुकमिति पञ्च "एलुवा" इति ख्यातस्य। अथेति—पालनं पालया अङ्क्यते पालङ्क्या, मुकुं मुक्तिं ददातीति मुकुन्दः, कुं भूमिमुनत्तीति कुन्दः, कुमुन्दयतीति कुन्दरु इति चत्वारि "पालक" इति ख्यातशाकस्य, कुन्दरू इति ख्यातस्य वा ॥ १२१ ॥

न. न. न. न. न.

नेत्रवाला वालं ह्रीवेरबर्हिष्ठोदीच्यं केशाम्बुनाम (च)।

न. न. न. न.

शिलाजीत कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु ॥ १२२ ॥

न. स. स. स. स.

तालीसपत्र शैलेयं तालपर्णी (तु) दैत्या गन्धकुटी मुरा।

स. स. स. स. स.

साल या गन्धिनी गजभक्ष्या (तु) सुवहा सुरभी रसा ॥ १२३॥

स. स. स. स.

सालई महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति (च)।

वेति—वालयतीति वालम्, ह्रीयुक्तं वेरमस्येति ह्रीवेरम्, बर्हिषि तिष्ठतीति बर्हिष्ठम्, उदीचि जातमुदीच्यम्, केशाम्बुनोर्नाम यस्येति केशाम्बुनाम इति पञ्च "नेत्रबाला" इति ख्यातस्य। कालेनानुस्त्रियते कालानुसार्यम्, वर्धते स्म वृद्धम्, अश्मनः पुष्पमिव अश्मपुष्पम्, शीतं च तच्छिवं च शीतशिवम्, शिलायां भवं शैलेयमिति पञ्च "शिलाजित" इति ख्यातस्य। तालः पर्णमस्यास्तालपर्णी, दितेरयं दैत्या, गन्धस्य कुटीव गन्धकुटी, मुरतीति मुरा, प्रशस्तो गन्धोऽस्याः गन्धिनी इति पञ्च मुराख्यसुगन्धिद्रव्यस्य। गजैर्भक्ष्यते गजभक्ष्या-गजभक्षापि, सुवहतीति सुवहा, सुष्ठु रमते सुरभिः, रस्यते रसा, महदीरणमस्याः, महमुत्सवमीरयति वा महेरणा, कुन्दुरुरिवप्रतिकृतिः कुन्दुरुकी, सजति, सल्कुरः लक्यते वा सल्लकी "सल्लकी सिल्जकी ह्लादा" (इति रुद्रः) शल्लकी तालव्यादिरपि, ह्लादयत्यवश्यमिति ह्लादिनी इत्यष्टौ सल्लक्याः, "सालर" इति ख्यातायाः ॥ १२२ । १२३ । ३/१ ॥

स. स. स. स.
धवई या धाय **अग्निज्वाला सुभिक्षे(तु)धातकी धातृपुष्पिका॥१२४॥**
स. स. स. स. स.
बड़ी इलायची **पृथ्वीका चन्द्रवालैला निष्कुटिर्बहुला ( थ सा )।**
स. स. स. स. स.
छोटी इलायची **( सूक्ष्मो )पकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः१२५॥**

अग्नीति—अग्नेर्ज्वालेव अग्निज्वाला, सुष्ठु भिक्ष्यते इति सुभिक्षा, धातुं करोति, धातयतीति धातकी, धातृ पुष्पमस्याः धातृपुष्पिका इति चत्वारि धातक्याः "धवा" इति ख्यातस्य। प्रथते इति पृथ्वीका, चन्द्रस्य कर्पूरस्य बालेव चन्द्रवाला, एलयतीति एला, निश्चिता कुटिः कौटिल्यमस्याः, निष्क्रान्ता कुटेर्वेति निष्कुटिः, "निष्कुटी" बहूनि बीजानि लातीति बहुला इति पञ्च एलायाः। अथेति—सा सूक्ष्मा चेत्तदा उपकुञ्चतीति उपकुञ्चिका, तुदतीति तुत्था, कुरतीति कोरङ्गी, त्रयः पुटा यस्यास्त्रिपुटा, त्रुटतीति त्रुटिरिति पञ्च सूक्ष्मैलायाः ॥ १२४ । १२५ ॥

पु. न. न. न. न. न.
कूट **व्याधिः कुष्ठं पारिभाव्यं वाप्यं पाकलमुत्पलम् ।**
स. स. स. पु.
शंखाहूली **शङ्खिनी चोरपुष्पी(स्यात्)केशि(न्यथ)वितुन्नकः१२६॥**
स. स. स. स. स. स.
भूमिआंवला **झटाऽमलाऽज्झटा ताली शिवातामलकीति ( च )।**

व्येति—विगत आधिरनेन व्याधिः "व्याधिः कुष्ठे च रोगेनेति" (मेदिनी) कुष्णाति रोगमिति कुष्ठम्, परिभावे साधु परिभाव्यं तदेव पारिभाव्यम्, व्याप्यत इति व्याप्यम्, "वाप्यां भवं वाप्यम्, आप्यत इत्याप्यमपि" पाकं लातीति पाकलम्, उत्पलतीति

उत्पलमिति षट् "कूट" इति ख्यातस्य। शङ्खाः सन्त्यस्याः शङ्खिनी, चोरइव पुष्पं यस्याश्चोरपुष्पी, केशाः सन्त्यस्याः केशिनी इति त्रीणि "शङ्खाहूली" इति ख्यातायाः। अथेति—वितुद्यते स्म वितुन्नः स एव वितुन्नकः, झटति, झट्यते वा झटा, न मलो यस्याः अमला, अत आश्चर्यस्य झटः संघातोऽस्यामिति, अत्तीति अन्, झटतीति झटा, अन्नासौ झटा चेति अज्झटा, तालयतीति ताली, शिवमस्त्यस्यामिति शिवा, तनुश्चासावामलकी चेति षट् ( सप्त ) भूम्यामलक्याः ॥ १२६। ३ ॥

गुलाब या स्थल — न. प्रपौण्डरीकं न. पुण्डर्यं ( मथ ) पु. तुन्नः पु. कुबेरकः ॥ १२७ ॥

कमल तून या — पु. कुणिः पु. कच्छः पु. कान्तलको पु. नन्दिवृक्षो ( थ ) स. राक्षसी।

तूनी धनहरी — स. चण्डा स. धनहरी पु. क्षेमदु पु. ष्पत्रगणहासकाः पु. ॥ १२८ ॥

प्रेति—पुण्डरीकेण सदृशम् पौण्डरीकं, प्रकृष्टं पौण्डरीकं प्रपौण्डरीकम् "साधुपुष्पं स्थलपद्मं द्विश्रीकृत्पुण्डरीककमिति" (रभसः) पुण्डस्य अर्यं प्रधानं पुण्डर्यमिति द्वे "पुण्डरीया" इति ख्यातस्य। अथेति—तुद्यते स्म तुन्नः, कुत्सितं वेरमस्येति कुबेरकः, कुणतीति कुणिः, तूणयतीति तुणिरपि, कचति, केन छृणत्तीति वा कच्छः, काम्यत इति कान्तः, लकतीति लकः, कान्तश्चासौ लकश्चेति कान्तलकः, नन्दनं नन्दी तस्या वृक्षो नन्दिवृक्षः इति षट् "तुणी" इति ख्यातस्य। अथेति—रक्षस इयं राक्षसी, चण्डत इति चण्डा, धनं हरतीति धनहरी, क्षिणोतीति क्षेमः, दुष्टानि पत्राण्यस्येति दुष्पत्रः, गणां हासयतीति गणहासकः गणोपि, "गणः प्रमथसंख्यौघे चण्डासैन्यप्रभेदयोः" (इति रुद्रः) इति षट् चोराख्यगन्धद्रव्यस्य ॥ १२७। १२८ ॥

नखनामक गन्धद्रव्य माल- — न. व्याडायुधं न. व्याघ्रनखं न. करजं न. चक्रकारकम्।

कांगनी, पवारी या नलीनामक गन्धद्रव्य — स. शुषिरा स. विद्रुमलता स. कपोताङ्घ्रि स. र्नटी स. नली ॥ १२९ ॥

व्याडेति—व्याडस्य व्याघ्रस्य आयुधमिव व्याडायुधम्, व्याघ्रस्य नखमिव व्याघ्रनखम्, "भवेद्व्याघ्रनखं कन्दगन्धद्रव्यविशेषयोः। नखक्षतान्तरे क्लीबमिति" (मेदिनी) करजं नखं तदिव करजम्, चक्रस्य कारकं चक्रकारकमिति चत्वारि नखाख्यगन्धद्रव्यस्य। शुषिरस्त्यस्याः, शुषिरमस्त्यस्यां वेति शुषिरा, विद्रुमस्येव लता विद्रुमलता, कपोतस्याङ्घ्रिरिव कपोताङ्घ्रिः, नटतीति नटी, नलतीति नली इति पञ्च "मालकांगनी" इति ख्यातायाः ॥ १२९ ॥

ककुंदनि — स. धमन्य स. ञ्जनकेशी ( च ) स. हनुर्हट्ट स. विलासिनी।

स. पु. पु. न. न. स.
अरहर या अढ़ी शुक्तिः शङ्खः खुरः कोलदलं नख (मथा) ढकी॥१३०॥
स. स. स. न. न.
काक्षी मृत्स्ना तुवरिका मृतालकसुराष्ट्रजे ।

धमेति—धम्यत इति धमनी, धमनिरपि, अञ्जनमिव केशा अस्या अञ्जनकेशी "केचित्त्विदं द्वयं पूर्वान्वयीत्याहुः" हन्तीति हनुः, हट्टे विलसति तच्छीला हट्टविलासिनी इति चत्वारि 'कक्कून्दनी' इति ख्यातायाः । शोचतीति शुक्तिः, शाम्यतीति शङ्खः, खुरतीति खुरः, कोलस्य बदर्या इव दलमिति कोलदलम्, न खनतीति नखमिति पञ्च नखाख्यगन्धद्रव्यस्य । अथेति—आढकमस्त्यस्याः परिच्छेदकत्वेन, आढौकते वा आढकी, कक्षे भवा काक्षी, मृत्स्नाऽस्त्यस्याः क्षेत्रत्वेन मृत्स्ना, तुवरोऽस्त्यस्यास्तुवरिका, "वर्षिका मरिलका तूवर्याढकी कच्छुराशटी" इति बोपालितात् तूवरी च, मृतमालयतीति मृतालं तदेव मृतालकम्, मृदि तालः प्रतिष्ठा अस्येति विग्रहे तु मृत्तालकमिति द्वितकारमपि, सुराष्ट्रे जातं सुराष्ट्रजमिति षट् "तूवरी" इति ख्यातायाः ॥ १३० । ३/२ ॥

न. न. न. न.
नागरमोथा जलमोथा कुटन्नटं दाशपुरं वानेयं परिपेलवम् ॥ १३१ ॥
न. न. न.
गोया या छोटा मोथा प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि (च) ।

कुटन्निति—कुटन् वक्रीभवन् नटतीति कुटन्नटम्, दाशान् कैवर्तान् पिपर्तीति दाशपुरम्, दशपुरं—दशपूरं चेति कश्चित्पाठः, दश पूरयति, दश पुरो वास्याः "दशपूरं दशपुरं सवनं जीविताह्वयमिति" (वाचस्पतिः) वने पानीये जायते इति वानेयम्, वन्यमपि, परितः पेलवं मृदु परिपेलवम्, प्लवते इति प्लवम् "प्लवं गन्धतृणे प्रोक्तं कैवर्ती मुस्तकेऽपि चेति" (विश्वः) गां जलं पिपर्ति, गौर्जलं पुरमस्येति वा गोपुरम्, गां जलं नर्दयतीति गोनर्दम्, कैवर्तानां जातिः कैवर्ती तस्या मुस्तकं कैवर्तीमुस्तकम्, कैवर्तमुस्तकमपीत्यष्टौ "मोथा" इति ख्यातस्य ॥ १३१ । ३/२ ॥

न. न. न. न. न.
कुकरौंधा ग्रन्थिपर्णं शुकं बर्हिपुष्पं स्थौणेयकुक्कुरे ॥ १३२ ॥
स. स. स. स. स. स.
असरक मरुन्माला (तु) पिशुना स्पृक्का देवी लता लघुः ।
स. स. स. स.
समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिके (त्यपि) ॥ १३३ ॥

ग्रन्थीति—ग्रन्थौ पर्णान्यस्य, ग्रन्थय इव पर्णान्यस्येति वा ग्रन्थिपर्णम्, शोचतीति शुकम्, शुकस्येव बर्हाणि पर्णान्यस्येति विग्रहे तु शुकबर्हमित्येकं नाम केप्याहुः, बर्हं पत्रं

प्रशस्तमस्येति बर्हि, पुष्यतीति पुष्पम्, बर्हि च तत्पुष्पं चेति बर्हिपुष्पम्, बर्हपुष्प-मित्यन्ये, बर्हमपि, स्थूणाया अपत्यं स्थौणेयम्, कुकुरोऽस्यास्तीति कुकुरमिति पञ्च "कुकुरौंधा" इति ख्यातस्य । मरुद्भिर्मल्यते इति मरुन्माला व्यस्तं समस्तं च नामेदम्, म्रियत इति मरुत्, मल्यत इति माला, पिंशतीति पिशुना, स्पृश्यत इति स्पृक्का, पृक्कापि, दीव्यतीति देवी, लततीति लता, लङ्घत इति लघुः, समुद्रोऽन्तोऽस्याः समुद्रान्ता, व-हति, उह्यते वा वधूः, " पृक्का च महिला वधूः " कोटिभिरग्रैर्वर्षति मध्विति कोटि-वर्षा, लङ्कायामुप्यते लङ्कोपिका इति दश "असरक" इति ख्यातस्य ॥ १३२ । १३३॥

जटामांसी — तपस्विनी (स.) जटामांसी (स.) जटिला (स.) लोमशा (स.) मिसी (स.) ।

दालचीनी या तज — त्वक्पत्र (न.) मुत्कटं (न.) भृङ्गं (न.) त्वचं (न.) चोचं (न.) वराङ्गकम् (न.) ॥ १३४ ॥

तपेति—तपोऽस्त्यस्यास्तपस्विनी, जटास्त्यस्या जटतीति वा जटा, मन्यते इति मांसी, जटामांस्यपि जटास्त्यस्या जटिला, लोमानि सन्त्यस्याः लोमशा, मस्यतीति मिसी, मिसिरपि, मसी, मशिर्वा इति षट् "जटामांसी" इति ख्यातायाः । त्वगिव पत्रमस्य त्वक्-पत्रम्, त्वगपि, उत्कटतीति उत्कटम्, बिभर्तीति भृङ्गम्, प्रशस्ता त्वगस्यास्तीति त्वचम्, प्रशस्तं चोचमस्यास्तीति चोचम् "त्वक्त्वचचोचशब्दाः स्युर्वल्के चर्मणि पत्रके" (इति धरणिः) वरमङ्गमस्येति वराङ्गकमिति षट् त्वक्पत्रस्य ॥ १३४ ॥

कचूर — कर्चूरको द्राविडकः काल्पको वेधमुख्यकः ।

अन्नमात्र औषध — ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् ॥ १३५ ॥

केति—कर्चतीति पृषोदरादित्वात्कर्चूरः स एव कर्चूरकः—कर्बूरकोपि वा, द्रविडे देशे जातो द्राविडः स एव द्राविडकः, कल्पे विधौ भवः काल्पः सएव काल्पकः, काल्यकोपि, वेधे मुख्यः वेधमुख्यः स एव वेधमुख्यकः, इति चत्वारि कर्चूरकस्य । जातिमात्रे जातिमात्र-विवक्षायां ओषाः प्लोषा दीप्तयो वा धीयन्तेऽत्रेति "ओषध्यः" स्युः "ओषधी" शब्दप्र-योगो भवतीति यावत्, अजातौ द्रव्यमात्रविवक्षायां तु "औषध" शब्दप्रयोगः, "ओषधे-रजातावित्यण्" सर्वमित्यनेन घृततैलादिकमप्यौषधशब्दवाच्यं भवतीति विज्ञेयम् ॥ १३५॥

साग या तर-कारी, चौराई, इन्द्रपुष्पी — शाकाख्यं (न.) (पत्रपुष्पादि) तण्डुलीयो (पु.) ऽल्पमारिषः (पु.) ।

विशल्या (स.) ग्निशिखा (स.) नन्ता (स.) फलिनी (स.) शक्रपुष्प्यपि (स.) ॥ १३६॥

शाकेति—शक्यते भोक्तुम्, श्यतीति वा शाकम् पत्रपुष्पादिशाकाख्यं शाकनामकं स्यात् " मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् । त्वक्पुष्पं कवकं चैव शाकं दशविधं

स्मृतम्" मूलं मूलकादेः, पत्रं वास्तुकादेः, करीरं वंशांकुरम्, अग्रं वेत्रादेः, फलं कूष्माण्डादेः, काण्डमुत्पलादेर्नालम् अविरूढकं तालबीजांकुरास्थिमज्जादि, त्वक् मातुलुङ्गादेः, पुष्पं तिन्तिडी कोविदारादेः, कवकं छत्रिका इति दशविधं शाकं स्मृतमिति। तण्डुलाय हितस्तण्डुलीयः, मारिषतीति मारिषः, अल्पश्चासौ मारिषश्चेत्यल्पमारिषः इति द्वे "चौराई" इति ख्यातस्य। विगतं शल्यमनयेति विशल्या, अग्नेरिव शिखा संतापो यस्या अग्निशिखा, न अन्तो यस्या अनन्ता, फलानि सन्त्यस्याः फलिनी, शक्रः पुष्पमस्याः शक्रपुष्पीति पञ्च इन्द्रपुष्प्याः ॥ १३६ ॥

स. स. स. पु.
विधारा **(स्याद्)ऋक्षगन्धा छगलान्त्र्यावेगी वृद्धदारकः।**
ब्राह्मी, क्ष्योंटा पु. स. स. स. स.
या उजली दूब **जुङ्गो ब्राह्मी तु मत्स्याक्षी वयस्था सोमवल्लरी ॥१३७॥**

स्यादिति—ऋक्षस्येव गन्धोऽस्याः ऋक्षगन्धा, ऋष्यगन्धापि, छगलस्येवान्त्रमस्याश्छगलान्त्री, छगलापि आवेगोऽस्त्यस्याः आवेगी, वृद्धो दारकोऽस्मात्, वृद्धत्वं दारयति वा वृद्धदारकः, जुङ्गति, जुङ्गयते वा जुङ्गः इति पञ्च वृद्धदारकस्य। ब्रह्मण इयं ब्राह्मी, मत्स्याक्षीव पुष्पमस्याः मत्स्याक्षी, वयसि तिष्ठत्यनयेति वयस्था, सोमस्य वल्लरी इति चत्वारि ब्राह्मयाः ॥ १३७ ॥

स. स. स. स.
मकोय **पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती।**
स. स. स. स.
माषपर्णी **हयपुच्छी (तु) काम्बोजी माषपर्णी महासहा ॥१३८॥**

पट्विति—पटूनि पर्णान्यस्याः पटुपर्णी, हिमवति जाता हैमवती, स्वर्णमिव क्षीरमस्याः स्वर्णक्षीरी, हिममस्त्यस्या हिमावती इति चत्वारि "मकोय" इति ख्यातायाः। हयपुच्छमिव पर्णान्यस्या हयपुच्छी, कम्बोजदेशे भवा काम्बोजी, माषस्य इव पर्णान्यस्या माषपर्णी, महती चासौ सहा चेति महासहा इति चत्वारि माषपर्ण्याः ॥ १३८ ॥

स. स. स. स.
कुंदरू **तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्य (पि)।**
स. स. स. स. स.
बबई **बर्बरा कबरी तुङ्गी खरपुष्पाजगन्धिका ॥ १३९ ॥**

तुण्डीति—तुण्डं चञ्चुरस्ति येषामिति तुण्डिकास्तानीरयतीति तुण्डिकेरी, तुण्डकेरीति पाठान्तरे प्रशस्तं तुण्डं तुण्डकमीर्ते तुण्डकेरी, रक्तं फलमस्या रक्तफला, बिम्बीं कायतीति बिम्बिका, पीलोरिव पर्णमस्याः पीलुपर्णी इति चत्वारि "कुन्दरी" इति ख्यातायाः। बृणोतीति बर्बरा, बृणोतीति वरी कस्य शिरसो वरी कबरी, तुञ्जतीति

तुङ्गी, खरं पुष्पमस्याः खरपुष्पा, अजस्येव गन्धोऽस्या अजगन्धिका इति पञ्च बर्बरायाः "बबई" इति ख्यातायाः ॥ १३९ ॥

स. स. स. स.

कोलिन्दण **एलापर्णी(तु) सुवहा रास्ना युक्तरसा (च सा)।**

अम्लोनियां स. स. स. स. स.

या चूक **चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाम्ललोणिका ॥ १४० ॥**

एलेति—एलाया एव पर्णान्यस्या एलापर्णी, सुवहतीति सुवहा, रासत इति रास्ना, सा च युक्तो रसो यस्या युक्तरसा इति चत्वारि एलापर्ण्याः। "चाङ्गस्तु शोभने दक्षे" (इति मेदनी) चाङ्गमीरयतीति चाङ्गेरी, चकते, चक्यतेऽनेनेति वा चुक्रा सर्वे चुक्रमिवेति वा चुक्रिका, शठतीति शठा-दन्तानां शठा दन्तशठा, अम्बे तिष्ठतीति अम्बष्ठा, अम्ललेभ्य ऊना पृषोदरादित्वात् अम्ललोणा सैव अम्ललोणिका इति पञ्च "अम्लोनियां" इति ख्यातायाः ॥ १४० ॥

पु. पु. पु. पु.

अम्लवेतस **सहस्रवेधी चुक्रोम्लवेतसः शतवेध्य(पि)।**

लजालू स. स. स. स.

**नमस्कारी गण्डकाली समङ्गा खदिरे (त्यपि) ॥ १४१ ॥**

सहस्रेति—सहस्रं वेधितुं शीलमस्येति सहस्रवेधी, चकतेऽनेनेति चुक्रः, अम्लश्चासौ वेतसश्च अम्लवेतसः, शतं वेधितुं शीलमस्येति शतवेधी इति चत्वारि अम्लवेतसस्य "नवलजालू" इति ख्यातस्येति वा मुकुटः। नमस्करणशीला नमस्कारी, गण्डेषु ग्रन्थिषु काली गण्डकाली, समङ्गतीति समङ्गा, खदतीति खदिरा इति चत्वारि[1]"लाला-जोडी" इति ख्यातायाः ॥ १४१ ॥

स. स. स. स. स.

जीवन्ती या **जीवन्ती जीवनी जीवा जीवनीया मधुः स्रवा।**

पु. पु. पु. पु. पु.

डोड़ी जीवक **कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः ॥ १४२ ॥**

जीवेति—जीवतीति जीवन्ती, जीव्यतेऽनयेति जीवनी, जीवयतीति जीवा, जीवितुमर्हा, जीवनाय हिता वेति जीवनीया, मन्यते इति मधुः, स्रवतीति स्रवा, "मधुस्रवा" इत्येकं नामेत्यन्ये इति षट् गुर्जरदेशीय "दोड़ी" इति ख्यातायाः। कूर्चमिव शीर्षं यस्येति कूर्चशीर्षः, मधु माधुर्यं रातीति मधुरः स एव मधुरकः, शृणातीति शृङ्गः, ह्रस्वान्यङ्गान्यस्येति ह्रस्वाङ्गः, जीवयतीति जीवकः इति पञ्च जीवकस्य ॥ १४२ ॥

---

१ "खदिरा शाकभेदे स्त्री ना चन्द्रे दन्तधावने" (इति मेदिनी)॥

पु. पु. पु. स.

चिरायता **किराततिक्तो भूनिम्बोऽनार्यतिक्तो ( ऽथ ) सप्तला ।**

स. स. स. स.

सेहुँड के भेद **विमला सातला भूरिफेना चर्मकषे ( त्यपि ) ॥ १४३ ॥**

किरेति—किरातदेशोऽस्ति जन्मस्थानमस्येति किरातः, तेजयति स्म तिक्तः, किरातश्चासौ तिक्तश्चेति किराततिक्तः, भुवो निम्ब इव भूनिम्बः, अनार्यप्रियश्चासौ तिक्तश्चेति अनार्यतिक्तः, चिरात्तिक्तोपि "किरातश्चिरात्तिक्तश्च भूनिम्बहिमकावपीति" ( रभसः ) इति त्रीणि "चिरायता" इति ख्यातस्य । अथेति—सप्त लातीति सप्तला, विगता मला ययेति विमला, सातं सुखं लातीति सातला, भूरयः फेना यस्या भूरिफेना, चर्मणः कषा चर्मकषेति पञ्च सीहुण्डभेदस्य, चर्मघासस्येत्यन्ये ॥ १४३ ॥

काकोली या स. स. स. पु.

ककोड़ी दँतिया **वायसोली स्वादुरसा वयस्था ( थ ) मकूलकः ।**

पु. स. स. स.

या जयपाल **निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्य(पि)१४४॥**

वायेति—वायसान् ओलण्डतीति वायसोली, स्वादुरसोऽस्याः स्वादुरसा, वयसि स्थीयतेऽनयेति वयस्था इति त्रीणि "ककोड़ी" इति ख्यातायाः । अथेति—मङ्कत इति मकूलः स एव मकूलकः, मुकूलकोपि, निभृशं स्कुभ्नाति विस्तारयतीति निकुम्भः, दाम्यति, दम्यते वा दन्ता सैव दन्तिका, प्रत्यञ्ची श्रेणयस्याः प्रत्यक्श्रेणी, उदुम्बरस्यैव पर्णान्यस्या उदुम्बरपर्णी इति पञ्च वज्रदन्त्याः ॥ १४४ ॥

स. स. स. स.

अजवाइन **अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका ।**

न. न. न.

पुष्करमूल **( मूले ) पुष्करकाश्मीरपद्मपत्राणि ( पौष्करे )॥१४५॥**

अजेति—अजेन मोदते, मोद्यते, अजं मोदयतीति वा अजमोदा, उग्रो गन्धोऽस्याः उग्रगन्धा इति द्वे अजमोदायाः । ब्रह्मणा दभ्यत इति ब्रह्मदर्भा, दुष्टो यवो यवानी, सैव यवानिका, समकारपाठे तु यमेनानितीति यमानी इति द्वे यवानिकायाः । चत्वारः पर्याया इत्येके । पौष्करे मूले पुष्यति पुष्णाति वा पुष्करम्, कश्मीरेषु भवं काश्मीरम्, पद्मस्येव पत्रमस्येति पद्मपत्रम्, "पद्मपर्णमिति वा पाठः" इति त्रीणि पुष्करमूलस्य ॥ १४५ ॥

स. स. स. स. स.

कपिला या **अव्यथातिचरा पद्मा चारटी पद्मचारिणी ।**

स्थलकमलिनी पु. पु. पु. पु. स.

कबीला **काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनी(त्यपि)॥१४६॥**

अव्येति—न व्यथते इति अव्यथा, अति चरतीति अतिचरा, पद्यत इति पद्मा, चारयतीति चारटा, पद्मे चरितुं शीलमस्याः पद्मचारिणी इति पञ्च पद्माकस्य। काम्पिलाया अदूरभवः काम्पिल्यः, कम्पते कम्पिल्लः स एव काम्पिल्लः इत्थ निर्यकारोपि, कृणातीति कर् कशत इति कशः कर् चासौ कशश्चेति कर्कशः, चन्दतीति चन्द्रः, रक्तमङ्गमस्येति रक्ताङ्गः, रोचत इति रोचनी, रिणक्तीति विग्रहे तु रेचनीत्यपीति पञ्च "कवीला" इति ख्यातस्य ॥ १४६ ॥

चकवड़ **प्रपुन्नाडस्त्वेडगजो दद्रुघ्नचक्रमर्दकः ।**
(पु. पु. पु. पु.)

प्याज **पद्माट उरणाख्य(श्च)पलाण्डु(स्तु)सुकन्दकः ॥ १४७ ॥**
(पु. पु पु. पु.)

प्रेति—पुमांसं नाडयतीति पुन्नाडः प्रकृष्टः प्रगतो वा पुन्नाडः प्रपुन्नाडः, एडो मेष एव गजो यस्य, एडे स्वप्ने गजतीति वा एडगजः, दद्रुं हन्तीति दद्रुघ्नः, चक्रं दद्रुं मृद्नातीति चक्रमर्दः स एव चक्रमर्दकः, पद्ममिव पद्मां वा पद्मसमूहं वा अटतीति पद्माटः, उरणस्य मेषस्य आख्याऽस्येति उरणाख्यः, उरणस्याक्षीवाक्षि यस्येति उरणाक्षः इति षट् "चकवड़" इति ख्यातस्य । पलतीति पलाण्डुः, शोभनमतीव वा कन्दयति, सुकन्दः स एव सुकन्दकः इति द्वे "प्याज" इति ख्यातस्य ॥ १४७ ॥

हराप्याज **लतार्कदुर्द्रुमौ (तत्र हरिते) 'थ' महौषधम् ।**
(पु. पु. न.)

लहसुन **लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ॥ १४८ ॥**
([1] न. पु. पु. पु. पु.)

लतेति—तत्र पलाण्डौ हरिते पालाशे सति लतासु अर्क्यते, अर्च्यते विरुद्धलक्षणाया निन्द्यते वा लतार्कः, दुष्टो द्रुमो दुर्द्रुमः उभौ स्यातामिति द्वे हरिद्वर्णपलाण्डोः । अथेति—महच्च तदौषधं चात महौषधम्, "महौषधं तु शुण्ठ्यां स्याद्विषायां लशुनेपि च" (इति मेदिनी) अश्नुते, अश्नाति वा लशुनम्, गृञ्ज्यते रोगेषु भक्ष्यत्वेन कथ्यत इति गृञ्जनः, न रिष्टमशुभमस्मात् अरिष्टः, महत् कन्दमस्येति महाकन्दः, रसेः आस्वादने ऊन्यते पातकहेतुत्वात् रसोनः स एव रसोनकः इति षट् "लशुन" इति ख्यातस्य ॥ १४८ ॥

गदहपुन्ना बिसखपरिया **पुनर्नवा (तु) शोथघ्नी वितुन्नं सुनिषण्णकम् ।**
(स. स. न. न.)

पटसन या पट्टुआ **स्याद्वातकः शीतलोऽपराजिता शणपर्ण्य(पि) ॥ १४९ ॥**
(पु. पु. स. स.)

---

[1] लशुनं गृञ्जनं चैव पलाण्डु कवकानि च । वृत्ताकारालिकालाबुजातीया जातिदूषितमिति । श्वेतकन्दः पलाण्डुविशेषो गृञ्जनम् । लशुनं दीर्घपत्रश्च पिच्छगन्धो महौषधम् । फरणश्च पलाण्डुश्च लतार्कश्चापराजितः । गृञ्जनं यवनेष्टश्च पलाण्डोर्दश जातयः" इति सुश्रुतेनोक्तत्वात् ॥

पुनरिति—पुनरभीक्ष्णं नूयत इति पुनर्नवा, शोथं हन्तीति शोथघ्नी इति द्वे "गदहपूर्णा" इति ख्यातायाः । तुद्यते स्म तुन्नं विगतं तुन्नं व्यथनमस्मात् वितुन्नम्, सुष्ठु निषण्णमस्मात्सुनिषण्णकमिति द्वे "विषखपरिया" इति ख्यातस्य। वातं करोति, वातयतीति, वातकः शीतं लातीति शीतलः, "शीतलवातलः" इत्यपि नाम "शणपर्णी शीतलवातकः" ( इति धन्वन्तरिः ) न पराजिता अपराजिता, शणः पर्णान्यस्याः शणपर्णी, अशन इव पर्णमस्या अशनपर्णीत्यपीति चत्वारि "पटशण" इति ख्यातस्य ॥ १४६ ॥

स. स. स. स. स.

मालकांगनी **पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ।**

चिरायता के न. स. स. स.

बीज **वार्षिकं त्रायमाणा (स्यात्) त्रायन्ती बलभद्रिका ॥१५०॥**

पारेति—पारावत इव अङ्घ्रिरस्याः पारावताङ्घ्रिः, कटवद्भातीति कटभी, पण्यते इति पण्या, पिण्यापि, ज्योतिरस्त्यस्या ज्योतिष्मती, लततीति लता इति पञ्च "मालकांगनी" इति ख्यातायाः । वर्षासु भवं जातं वेति वार्षिकम्, त्रायत इति त्रायमाणा, त्राणं त्रास्तामयतीति त्रायन्ती, बलेन भद्रा बलभद्रा सैव बलभद्रिका इति चत्वारि "त्रायमाणा" इति ख्यातायाः ॥ १५० ॥

स. स. स. स.

बिलाईकन्द **विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेति ( च ) ।**

भँगरा,काकजंघा पु. पु. स. स.

या काकमाची **मार्कवो भृङ्गराजः (स्यात्) काकमाची (तु) वायसी १५१॥**

वीति—विष्वक्सेनस्य प्रिया विष्वक्सेनप्रिया, गृह्णातीति गृष्टिः, घर्षतीति विग्रहे तु घृष्टिरिति पाठान्तरम्, वराहस्येयं वाराही, बदतीति बदरा इति चत्वारि "वाराहीकन्द" इति ख्यातायाः । मारयतीति मास्तस्यां शौक्ल्यनासिकायां कूयत इति मार्कवः, भृङ्ग इव राजते भृङ्गराजः "भृङ्गरजः" इति पाठे तु भृङ्ग इव रजोऽस्येति भृङ्गरजः, "स्यान्मार्कवो भृङ्गरजो भृङ्गराजः सुजागरः" ( इति रभसः) इति द्वे भृङ्गराजस्य । काकान् मञ्चते इति काकमाची, वायसानामियं वायसी इति द्वे काकमाच्याः "काकप्रिया" इति ख्यातायाः ॥ १५१ ॥

स. स. स. स. स.

सौंफ **शतपुष्पा सितच्छत्राऽतिच्छत्रा मधुरा मिसिः ।**

आकाशबेलि स. स. स. स.

बँवरि या लता **अवाक्पुष्पी कारवी (च) सरणा (तु) प्रसारिणी ॥१५२॥**

स. स. स.

विशेष **( तस्यां ) कटंभरा राजबला भद्रबले ( ति च ) ।**

शतेति—शतं पुष्पाण्यस्याः शतपुष्पा, सितं बद्धं शुभ्रं वा छत्रमस्याः सितच्छत्रा, छत्रमतिक्रान्ता अतिच्छत्रा, मधुरस्त्यस्या मधुरा, मस्यतीति मिसिः, अवाञ्चि पुष्पाण्यस्या अवाक्पुष्पी, के आरौतीति कारवी इति सप्त "सौंफ" इति ख्यातायाः । सरतीति सरणा, सरणीत्यपि, प्रसार्यतेऽङ्गमनयेति प्रसारिणी, सर्तुं शीलमस्या वेति प्रसारिणी सारणीत्यपि "रुग्भेदे ना प्रसारण्यां स्वल्पनद्यां च सारिणी" ( इति मेदिनी ) "तस्यां" कटं बिभर्तीति कटम्भरा, बलानां बलप्रदानां राजा राजबला, भद्रं बलमस्या भद्रबला इति पञ्च "कुब्जप्रसारिणी" इति ख्यातायाः ॥ १५२ । ३ ॥

स. स. स. स. स.
चकवत ना- **जनी जतूका रजनी जातुकृच्चक्रवर्तिनी ॥ १५३ ॥**
मक औषध स. स. स. स.
कचूर या **संस्पर्शा ( थ ) शटी गन्धमूली षड्ग्रन्थिकेत्यपि ।**
आँबा हल्दी पु. पु. पु. पु.
करेला **कर्चूरो ( पि ) पलाशो ( थ ) कारवेल्लः कटिल्लकः ॥१५४॥**
स. न. पु. पु. पु.
परवर **सुषवी ( चाथ ) कुलकं पटोलस्तिक्तकः पटुः ।**

जनीति—जायते आरोग्यमनयेति जनी, जायते जतूका, जतुकापि, रजति, रज्यतेऽनयेति वा रजनी, जातु करोतीति जातुकृत्, चक्रमिव वर्तितुं शीलमस्याश्चक्रवर्तिनी, सम्यक् स्पृशति, स्पृश्यते वा संस्पर्शा इति षट् "चकवत" इति ख्यातस्य । अथेति—शटतीति शटी, शठतीति शठीत्यपि, गन्धं मूलमस्या गन्धमूली, षट् बहवो ग्रन्थयोऽस्याः षड्ग्रन्थिका, कर्चतीति कर्चूरः, कर्बूरोपि, पले मांसे आशा यस्येति पलाशः इति पञ्च लघुकर्चूरस्य "आँबाहल्दी" इति वा ख्यातायाः । अथेति—कारं वेल्लतीति कारवेल्लः, कटतीति कटिल्लः स एव कटिल्लकः, कठिल्लकोपि, सु सुवतीति सुषवी इति त्रीणि "करेला" इति ख्यातस्य । अथेति—कोलतीति कुलकम्, पटतीति पटोलः, तेजयति स्म तिक्तः स एव तिक्तकः, पाटयतीति पटुः "पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत् । पटोले तु पुमान् क्लीबे छत्रालवणयोरपि" ( इति मेदिनी ) इति चत्वारि "परवर" इति ख्यातस्य ॥ १५३ । १५४ । ३ ॥

पु. पु. पु.स. स.
कुम्हड़ा ककड़ी **कूष्माण्डक ( स्तु ) कर्कारुरीर्वारुः कर्कटी ( स्त्रियौ ) १५५॥**
कड़ुईलौकी, स. स. स. स.
लौकी जेठऊ **इक्ष्वाकुः कटुतुम्बी ( स्यात् ) तुम्ब्यलाबू ( रुभे समे ) ।**

---

१ "रञ्जेः क्युन्" ( उ. २ । ७९ ) इति क्युनि कित्त्वान्नलोपः गौरादित्वान्ङीष्—इति बोध्यम् ॥
२ कारोवधे निश्चये च बलौयत्ने यतावपि । तुषारशैलेपि पुमान् स्त्रियां दूत्यां प्रसेवके । सुवर्णकारिकायां च बन्धनागारबन्धयोः (इति मेदिनी) ॥

ककड़ी इन्द्रायनि — स. स. स. स. स.

**चित्रा गवाक्षी गोडुम्बा विशाला (त्वि) न्द्रवारुणी१५६॥**

कूविति–कु ईषत् ऊष्मा अण्डेषु बीजेषु यस्येति कूष्माण्डस्स एव कूष्माण्डकः, कर्कं शुक्लवर्णमृच्छतीति कर्कारुरिति द्वे कूष्माण्डस्य। ईरणमीस्तां वृणोतीति,वारयति वा 'ईर्वारुः' "तुर्यस्वरादिरीर्वारुः कर्कट्यां पठ्यते बुधैः" 'ह्रस्वादिरपि' "उन्मत्तोधुस्तुरिर्वारुः कर्कटिः स्यादिति" (रत्नकोषः) एर्वारुरिति पाठे श्राङ्बोध्यः "उर्वारुकमिव बन्धनादिति श्रुतेः पृषोदरादित्वेनादेरुत्वे "उर्वारुः" इति च, कृणातीति कस्तं कटति, ककमटतीति वा कर्कटी उभे स्त्रियौ स्यातामिति द्वे "काकडी" इति ख्यातायाः। इक्षुमाकरोति, त्रिकायां जातमिक्षु इति शब्दमकरोतीति वा इक्ष्वाकुः, कटतीति कटुः, तुम्बति रुचिमिति तुम्बी, कटु चासौ तुम्बी चेति कटुतुम्बी, इति द्वे कटुतुम्ब्याः। तुम्बति रुचिमिति तुम्बी, तुम्बिः, न लम्बते इत्यलाबुः "अलाबुस्तु पिण्डफला तुम्बिस्तुम्बी महाफला। तुम्बा तु वर्तुलालाबुनिम्बचूर्णा तु लाबुका" ( इति वाचस्पतिः ) उभे समे समानार्थे समानलिङ्गे च स्यातामिति द्वे "तुम्बा" इति ख्यातायाः। चीयत इति चित्रा, गां भूमिमक्ष्णोतीति गवाक्षी, गां भुवं तुम्बतीति पृषोदरादित्वाद्गोडुम्बा इति त्रीणि कर्कटीविशेषस्य। विशलति, विशत्यत्रेति वा विशाला, इन्द्रं वारयतीति इन्द्रवारुणी इति द्वे "इन्द्रारुणी" इत्याख्यातायाः॥ १५५। १५६॥

जिमींकन्द या — पु. पु. पु. पु. स.

**अर्शोघ्नः सूरणः कन्दो गण्डीर (स्तु) समष्ठिला।**

सूरन गांड़रि — स. स. पु.न. स.

**कलम्ब्युपोदिका (स्त्री तु) मूलकं हिलमोचिका १५७॥**

अरिति–अर्शांसि गुदव्याधीन् हन्तीति अर्शोघ्नः, शूर्यते, सूर्यते वा शूरणः, सूरणो दन्त्यादिरपि, कन्दति, कन्दयति, कन्द्यते वा कन्दः इति त्रीणि सूरणस्य। गण्डति, गण्डयते वा गण्डीरः, समे तिष्ठति, सम्यगष्ठिलाबीजं यस्या वेति समष्ठिला इति द्वे गण्डीरस्य "गाण्डरदूबी" इति ख्यातानूपजशाकभेदस्य। कडति, के जले लम्बते वा कलम्बीत्येकं "करमुवा" इति ख्यातस्य। उपाधिकमुदकमस्यामिति उपोदिका स्वामिमते तु अपगतोदका जाङ्गलत्वात् अपोदिका इत्येकं "पोई" इति ख्यातस्य। मूलति, मूलयति वा मूलं तदेव मूलकम् इत्येकं "मूली" इति ख्यातस्य। हिलतीति हिला, मोचयतीति मोचिका हिला चासौ मोचिका चेति हिलमोचिका इत्येकं "हिलसाल" इति ख्यातस्य॥ १५७॥

बथुई या कलम्बी आदि — न. १ स. स.

**वास्तूकं (शाकभेदाःस्युं) दूर्वा (तु) शतपर्विका।**

१ "मण्डूकपर्णी पालङ्क्या चिल्लिका चाप्युपोदिका। चाङ्गेरी हिलमोचा च कलम्बी शाकजातयः" (इति माला)॥

पांच शाकों स. स. स. स.
के भेद **सहस्रवीर्या भार्गव्यौ रुहानन्ता (थसा सिता)॥१५८॥**
दूब स. स. स. स.
उजली दूब **गोलोमी शतवीर्या (च) गण्डाली शकुलाक्षकः।**

वेति–वसति देहे, वसन्त्यस्मिन्गुणा वेति वास्तूकम्, वास्तौ भवं वास्तुकं ह्रस्वमध्यमपि, इत्येकं "बथुवा" इति ख्यातस्य। कलम्ब्याद्याः पञ्च शाकभेदाः स्युः, दूर्वति, दूर्व्यते वा दूर्वा दूर्विकापि, शतं पर्वाण्यस्याः, शतं पर्वतीति वा शतपर्विका, सहस्रं वीर्याण्यस्याः सहस्रवीर्या, भृगोरियं भार्गवी, छिन्नापि रोहतीति रुहा, न अन्तो यस्या अनन्ता इति षट् दूर्वायाः। अथेति–सा दूर्वा सिता शुक्ला चेत्तदा गोलोमसु जाता गोलोमी, शतं वीर्याण्यस्याः शतवीर्या, गण्डति, गण्डमलति वा गण्डाली, शकुलस्य मत्स्यस्येवाक्षि यस्येति शकुलाक्षः स एव शकुलाक्षकः इति चत्वारि शुक्लदूर्वायाः॥ १५८। ३ ॥

मोथा नागर- पु. पु. स. पु न.
मोथा या **कुरुविन्दो मेघनामा मुस्तामस्तक(मस्त्रियाम्)॥१५९॥**
पु. स. स. स. स.
निर्विषी घास **(स्याद्भ) द्रमुस्तको गुन्द्रा चूडाला चक्रलोच्चटा।**

कुर्विति–कुरून् विन्दतीति कुरुविन्दः, मेघनामानि नामान्यस्येति मेघनामा, मुस्तयतीति मुस्ता, मुस्तयतीति मुस्तकम् अस्त्रियां पुंनपुंसकयोः स्यादिति चत्वारि "मोथा" इति ख्यातायाः। भन्दते, भद्रं करोति भद्रयतीति वा भद्रः, मुस्तयतीति मुस्तकः, भद्रश्चासौ मुस्तकश्चेति भद्रमुस्तकः, भद्रमपि नाम "भद्रं स्यान्मङ्गले हेम्नि मुस्तके करणान्तरे" (इति रुद्रः) गां जलं द्रातीति गुन्द्रा इति द्वे "नागरमोथा" इति ख्यातस्य। चूडास्त्यस्याः चूडाला, चक्रं लातीति चक्रला, उच्चटतीति उच्चटा इति त्रीणि मुस्ताविशेषस्य॥ १५९। ३ ॥

पु. पु. पु. पु. पु.
बांस **वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः॥ १६० ॥**
पु. पु. पु. पु. पु.
**शतपर्वा यवफलो वेणुमस्करतेजनाः।**

वमिति–वमति, वनति, वन्यते, उश्यते, वष्टीति वा वंशस्तस्मिन्, त्वक् सारोऽस्येति त्वक्सारः, कर्म क्रियामृच्छतीति कर्मारः, त्वचि सारोऽस्येति त्वचिसारः, तृणेषु ध्वज इव तृणध्वजः, शतं पर्वाण्यस्येति शतपर्वा, यव इव फलान्यस्येति यवफलः, वेणतीति वेणुः, मङ्कते, मस्कते वानेन मस्करः, तेजयति शास्त्रमग्निं वेति तेजनः इति दश वंशस्य॥ १६० । ३ ॥

हवासे बजने वाले बांस गांठि या पोर रामसर, सरकण्डा या सरई

(पु.) वेणवः कीचका (स्ते स्युर्ये स्वनन्त्यनिलोद्धताः)॥१६१॥

(पु.) ग्रन्थि (र्ना) (न.) पर्व (न.) परुषी (पु.) गुन्द्रस्ते (पु.) जनकः (पु.) शरः ॥

वेणोति—ये वेणवोऽनिलेनोद्धतास्तडिताश्चालिता वा सन्तः स्वनन्ति शब्दायन्ते ते चीकन्ति, चीकयन्ते, की इत्यव्यक्तं चकन्ते, कीचइत्यव्यक्तं कायन्तीति वा "कीचकाः" स्युरित्येकं वाताहतसस्वनवंशस्य । ग्रन्थत इति ग्रन्थिः ना पुमान् स्यात् "ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोरिति" (मेदिनी) पर्वतीति पर्व, "पर्व क्लीवं मह ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि" (इति मेदिनी) पिपर्तीति परुः "मज्जासारो ग्रन्थि. परुः" परागः कुसुमरेणुरिति (पुंस्काण्डे) रत्नकोषादुदन्तोपि इति त्रीणि ग्रन्थेः । गोदत इति गुन्द्रः, तेजयतीति तेजनः स एव तेजनकः, शृणातीति शरः, सरतीति सरो दन्त्यादिरपि "सरस्तु मुञ्जो बाणाख्यो गुन्द्रस्तेजनकः शर" (इति वाचस्पतिः) इति त्रीणि "सरहरी" इति ख्यातस्य ॥ १६१।१॥

नरकुल या नरई, काश या कास, बगई या वेद, इख या ऊँख, पौंड़ा, काला पौंड़ा

(पु.) नडस्तु (पु.) धमनः (पु.) पोटगलो (ऽथो) (पु.न.) काशमस्त्रियाम् ॥१६२॥

(स.) इक्षुगन्धा (पु.) पोटगलः (पुंभूमनि तु) (पु.) वल्वजाः ।

(पु.) रसाल (पु.) इक्षु (स्तद्भेदा[२]ः) पुण्ड्रकान्तारकादयः ॥१६३॥

नड इति—नडतीति नडः, धमति, धम्यते वा धमनः, पोटेन संश्लेषेण गलतीति पोटगलः इति त्रीणि नडस्य "नल" इति ख्यातस्य । अथविति—काशत इति काशम्, अस्त्रियां पुंनपुंसके स्यात्, इक्षुवद्गन्धोऽस्या इक्षुगन्धा, पोटेन गलतीति पोटगलः इति त्रीणि काशस्य । वलन्त इति वलः, वजन्तीति वजाः, वलश्च ते वजाश्चेति वल्वजाः पुंभूमनि तु भवन्तीति "एको वल्वजः" इति सूत्रे भाष्यकारवचनादेकत्वेपि इत्येकं वल्वजस्य "बगई" इति ख्यातस्य । रसेन अलति, अल्यते वा रसालः, इष्यत इति इक्षुरिति द्वे इक्षोः । पुण्डति, पुण्ड्यते वा पुण्ड्रः स एव पौण्ड्रोपि, कान्तं रसमृच्छतीति कान्तारः स एव कान्तारकः आदिना कोषकाराद्या गृह्यन्त इति तद्भेदा भवन्तीति ॥ १६२ । १६३ ॥

---

१ सकीचकैर्मारुतपूर्णरन्ध्रैरिति रघुवंशकाव्ये ॥

२ "पौण्ड्रको भीरुकश्चैव वंशकः शतपोरकः । कान्तारस्तापसेक्षुश्च काण्डेक्षुः सूचिपत्रकः । नैपालो दीर्घपत्रश्च नीलपोरोथ कोषकः । इत्येता जातयस्तेषां कथयामि गुणानपीति (भावप्रकाशः) ॥

न. न. पु. न.

गांडर (स्या )द्वीरणं वीरतरं ( मूलेऽस्योशीरमस्त्रियाम् )।

न. न. न. न. न.

खस अभयं नलदं सेव्यममृणालं जलाशयम्॥ १६४॥

न. न. न. न. न.

लामज्जकं लघुलयमवदाहेष्टकापथे।

स्यादिति—विं पक्षिणमीरयति, विशिष्टजनमीरयति वा वीरणम्, अतिशयितं वीरं वीरतरमिति द्वे वीरणस्य "गाडर" इति ख्यातस्य। अस्य वीरणस्य मूले उश्यत इति उशीरम् अस्त्रियां पुंनपुंसके स्यात्, न भयमस्मादित्यभयम्, नलं गन्धं ददाति, दयते वा नलदम्, सेवितुमर्हं सेव्यम्, मृणालमिव अमृणालम्, मृणालमपि, "मृणालं नलदे क्लीबं पुंनपुंसकयोर्बिसे" (इति मेदिनी) जले आशेते, जलो जड आशयो यस्येति वा जलाशयम्, लाति दोषानिति ला, मज्जतीति मज्जा ला मज्जासारोऽस्येति लामज्जकम्, लङ्घते रोगानिति लघु, लीयत इति लयम्, लघु च लयं चेति लघुलयं समस्तं नाम, व्यस्तमपि "लामज्जकं सुवासं स्यादमृणालं लयं लघु" ( इति सुश्रुतः ) अवलीयते दाहोऽस्मादिति अवदाहम्, अवदीयतेऽनेनेत्यवदानमपि "अवदानमिन्द्र-गुप्तमवदाहेष्टकापथे" ( इति वाचस्पतिः ) "अवदाहेष्टम्, कापथम्" इति नामद्वयं केचि-दाहुः इष्टं कापथमस्येति, इष्टकेव दृढः पन्था यस्य, इष्टकायामपि पन्था यस्येति वा कापथमिति दश वीरणमूलस्य "खस" इति ख्यातस्य॥ १६४। १/२॥

न. स. स.

तृणजातियां 'नलादय' स्तृणं गर्मुच्छ्यामाकप्रमुखा(अपि)॥१६५॥

न. पु. पु. न. न.

कुश या डाभ(अस्त्री) कुशं कुथो दर्भः पवित्र (मथ) कत्तृणम्।

सुगन्धतृण न. न. न. न. न.

या रोहिष पौरसौगन्धिकध्यामदेवजग्धकरौहिषम्॥ १६६॥

नलेति—नल आदिर्येषान्ते नलादयः तृणयत इति तृणम्, तृणजातयः स्युः गिरति, गीर्यते वा गर्मुत्, श्यायते, श्यामं वर्णमकतीति वा श्यामाकः "श्यामाकः श्यामकोऽपि चेति" (हलायुधः) उभौ गर्मुच्छ्यामाकौ प्रमुखौ आद्यौ येषान्तेऽपि तृण-जातयः स्युः, प्रमुखशब्दान्नीवाराद्याः, मुकुटस्तु अनन्तराः कुशादयो व्यवहिताश्च कङ्गुकोद्रवादयो गृहीताः—इत्याह कोद्रवादीनामेवं सति हविष्यत्वापातादित्येकं नडादि-गर्मुच्छ्यामादिकानाम्। कौ शेते, कुश्यतीति वा कुशमस्त्रियां पुंनपुंसकयोः स्यात्, कुथ्य-तीति कुथः, दभ्यत इति दर्भः, पूयतेऽनेनेति पवित्रमिति चत्वारि कुशस्य। अथेति—कुत्सितं तृणं कत्तृणम्, पुरे भवं पौरम्, शोभनो गन्धः सुगन्धः प्रयोजनमस्येति सौगन्धि-

कम्, ध्यायन्ते पशुभिरिति ध्यामम्, देवैरद्यते स्म देवजग्धं तदेव देवजग्धकम्, रोहतीति रौहिषमिति षट् रोहिषाख्यतृणविशेषस्य ॥ १६५ । १६६ ॥

पानी के तृण या खर नये तृण या खर घास तृणमात्र

स. पु. पु. न. न.
**छत्रातिच्छत्रपालघ्नौ मालातृणकभूस्तृणे ।**
न. न. पु. न. न. न.
**शष्पं बालतृणं घासो यवासं तृणमर्जुनम् ॥ १६७ ॥**

छत्रेति—छदति, छादयति वा छत्रम्, छत्रमतिक्रान्तोऽतिच्छत्रः, पालं क्षेत्रं हन्तीति पालघ्नः इति त्रीणि जलजतृणविशेषस्य । मालाकाराणि तृणान्यस्येति मालातृणकम्, भुवस्तृणं भूस्तृणमिति द्वे तृणविशेषस्य । शस्यते, शुष्यति वा शष्पम्, बालं च तत्तृणं चेति बालतृणमिति द्वे नवतृणस्य । अद्यते, घस्यते वा घासः, यौति, यूयते वा यवासम्, इति द्वे गवाद्यदनीयतृणविशेषस्य । तृणयते इति तृणम्, अर्ज्यत इति अर्जुनमिति द्वे तृणमात्रस्य ॥ १६७ ॥

खरही या घूर नरई का ढेर ताड़ वृक्ष नारियल

स. स.
**(तृणानां संहति)स्तृण्या नड्या(तु नडसंहतिः) ।**
पु. पुं. पु. स.
**तृणराजाह्वयस्तालो नालिकेर(स्तु)लाङ्गली ॥ १६८ ॥**

तृणेति—तृणानां संहतिः समूहः तृण्या स्यादित्येकं तृणसमुदायस्य । नडानां संहतिः नड्या स्यादित्येकं नडसमुदायस्य । तृणानां राजा, तृणराज इत्याह्वयो यस्येति तृणराजाह्वयः, तालयतीति तालः इति द्वे तृणराजस्य । नलति, नल्यते वा नालिः, केन वायुना ईर्यते इति केरः, नालिश्चासौ केरश्च नालिकेरः, नारिकेलोपि, लङ्गतीति लाङ्गली इति द्वे नारिकेलस्य ॥ १६८ ॥

सुपारी सुपारी का फल खजूर केतकी वृक्ष ताल भेद वनखजूरी

स. पु. पु. पु. पु.
**घोण्टा तु पूगः क्रमुको गुवाकः खपुरो ( ऽस्य तु ) ।**
न. पु.
**(फल) मुद्वेगमेते च हिन्तालसहितास्त्रयः ) ॥**
पु. पु.स. स. स. पु.
**खर्जूरः केतकी ताली खर्जूरी ( च )तृणद्रुमाः ॥१६९ ॥**

## इति वनौषधिवर्गः ॥

घोण्टेति—घोणते इति घोण्टा, पवते, पुनाति वा पूगः, क्रामतीति क्रमुः स एव क्रमुकः, गुवन्त्यनेन गुवाकः, गूवाकोपि, " गुवाकोपि च गूवाकः " (इति तारपालः) खमिन्द्रियमाकाशं वा पिपर्तीति खपुरः इति पञ्च पूगस्य " सुपारी " इति ख्यातस्य। अस्य पूगस्य फलं तु उद्गतो वेगोऽस्मादिति, उद्विजन्तेऽनेनेति वा " उद्वेगम् " इत्येकं

क्रमुकफलस्य । एते नालिकेराद्यास्त्रयो हिन्तालेन चतुर्थेन सहिताः, खर्जूराद्याश्चत्वारोऽष्टौ तृणद्रुमाः तृणजातीया द्रुमा भवन्तीति, हीनोऽल्पस्तालः हिन्तालः इत्येकमल्पतालस्य । खर्जतीति खर्जूरः इत्येकं खर्जूरस्य । केतयतीति केतकी इत्येकं केतक्याः । तालयतीति ताली, तालिरित्येकं तालभेदस्य । खर्जतीति खर्जूरी इत्येकं "वनखजूरी" इति ख्यातायाः ॥ १६६ ॥

इति वनौषधिवर्गविवरणम् ॥

---

## अथ सिंहवर्गो व्याख्यायते ॥

पु. पु. पु. पु. पु. पु.

सिंह बाघ **सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ।**

पु. पु. पु. पु. पु.

चीता **शार्दूलद्वीपिनौ व्याघ्रे तरक्षुस्तु मृगादनः ॥ १ ॥**

सिंह इति—सिञ्चति, हिनस्तीति सिंहः, मृगाणामिन्द्रो मृगेन्द्रः, पञ्चत इति, पञ्चं विस्तृतमास्यमस्येति, मुखं, पादाश्च पञ्च आस्यानीव यस्येति वा पञ्चास्यः, हरिणी पिङ्गले अक्षिणी यस्येति हर्यक्षः, केसराः स्कन्धबालाः सन्त्यस्येति केसरी, के वारि शृणाति, शीर्यते वा केशरः सोऽस्त्यस्येति विग्रहे तु केशरी तालव्यमध्यमपि, हरतीति हरिः"हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु । कपौ सिंहे हरेऽजेंऽशौ शक्रे लोकान्तरे पुमान् । वाच्यवत्पिङ्गहरितो रिति"(इति मेदिनी) इति षट् सिंहस्य । शारयतीति शार्, दूयते परितापयतीति दूलः, शार् चासौ दूलश्चेति, शृणातीति वा शार्दूलः, द्वौ वर्णौ ईयते, द्वीपाकाररेखावत्त्वाद् द्वीपं चर्मास्त्यस्येति वा द्वीपी, व्याजिघ्रतीति व्याघ्रः "व्याघ्रः स्यात्पुंसि शार्दूले रक्तैरण्डकरञ्जयोः । श्रेष्ठनरादुत्तरस्थः कण्टकार्यां तु योषितीति" (मेदिनी) इति त्रीणि व्याघ्रस्य "बाघ" इति ख्यातस्य । तरं गतिं मार्गं वा क्षिणोतीति तरक्षुः, मृगमत्तीति मृगादनः इति द्वे "तेंदुआबाघ" इति ख्यातस्य, मुकुटमते तु "हुण्डार" इति ख्यातस्य ॥ १ ॥

पु. पु. पु. पु. पु. पु. पु.

सूअर **वराहः शूकरो घृष्टिः कोलः पोत्री किरः किटिः ।**

पु. पु. पु. पु. पु.

**दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार (इत्यपि) ॥ २ ॥**

वरेति—वरं श्रेष्ठमाहन्तीति वराहः, सवनं सूक्तां करोतीति सूकरः "तालव्या अपि दन्त्याश्च शम्बसूकरपांशवः" (इति शभेदः)शूकोऽस्त्यस्य, शूकं राति, शूइति ध्वनिं करोतीति वा शूकरः, घर्षतीति घृष्टिः, गृह्णातीति विग्रहे तु गृष्टिरपि, कोलति पीनत्वात् कोलः, पोत्रं मुखाग्रमस्त्यस्येति पोत्री, किरतीति किरः, किरिरपि, केटतीति किटिः,

दंष्ट्रास्त्यस्येति दंष्ट्री, घोणा नासास्त्यस्येति घोणी, स्तब्धानि रोमाणि यस्येति स्तब्धरोमा,क्रुडनं क्रोडः सोऽस्त्यस्येति क्रोडः, भुवं दारयतीति भूदार इति द्वादश शूकरस्य॥२॥

पु. पु. पु. पु. पु.
वानर या बन्दर **कपिप्लवंगप्लवगशाखामृगवलीमुखाः ।**

पु. पु. पु. पु. पु.
भालू **मर्कटो वानरःकीशो वनौका(अथ)भल्लुके ॥ ३ ॥**

पु. पु. पु. पु. पु. पु.
गैंड़ा **ऋक्षाच्छभल्लभालूका गण्डके खड्गखड्गिनौ ।**

कपीति—कम्पते इति कपिः, प्लवनं प्लवस्तेन गच्छतीति प्लवंगः, प्लवंगमश्च, प्लवेनगच्छतीति प्लवगः, शाखाचारी मृगः पशुः शाखामृगः, बलीयुक्तं मुखमस्येति, बलीमुखेऽस्येति वा बलीमुखः, मर्कतीति मर्कटः, वने भवं फलादि वानं तद्राति, वानं वाः, गमनं तस्मिन्नपि नृणाति बालकम्, वा किंचिन्नरो वेति वानरः, की इति शब्दमीष्टे, कस्य वायोरपत्यं किर्हनुमान् ईशो यस्येति वा कीशः, वनमोकोऽस्येति वनौकाः इति नव वानरस्य । अथेति—भल्लत इति भल्लुः स एव भल्लुकस्तस्मिन्, भल्लूको दीर्घमध्योपि, स एव भाल्लुकः, भाल्लूकश्च, ऋक्षणोतीति ऋक्षः, 'अच्छ' आभिमुख्येन भल्लते इति अच्छभल्लः, भालयते इति भालूकः इति चत्वारि भल्लुकस्य "भालू" इति ख्यातस्य । गच्छतीति गण्डः स एव गण्डति संहतो भवतीति वा गण्डकस्तस्मिन्, खडतीति खड्गः, खड्गः शृङ्गमस्त्यस्येति खड्गी इति त्रीणि "गैंड़ा" इति ख्यातस्य॥ ३।१॥

पु. पु. पु. पु. पु.
भैंसा **लुलापो महिषोवाहद्विषत्कासरसैरिभाः ॥ ४ ॥**

स. पु. पु. पु.
सियार **( स्त्रियां ) शिवा भूरिमायगोमायुमृगधूर्तकाः ।**

पु. पु. पु. पु. पु. पु.
**सृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः ॥ ५ ॥**

लुलेति—लुडति पङ्के डलयोरेकत्वात् लुलः, आप्नोतीति आपः, लुलश्चासावापश्च, लुड्यन्ते, लुलाविलोडिता आपो येनेति वा लुलापः, लुलतीति लुलः, अयते इति अयः लुलश्चासावयश्चेति विग्रहे तु लुलायोपि, महति, मह्यते, मंहते वा महिषः, वाहानां वाहेषु वा द्विषन्निति वाहद्विषन्, के जले आसरति, ईषत्सरतीति वा कासरः,

१ संघातविगृहीतंनाम, "अच्छः स्फटिकभल्लूकनिर्मलेष्वच्छमव्ययम् । आभिमुख्ये" (इति मेदिनी) ॥ अच्छभल्लपरिषद्विहरन्तीत्यभिनन्दः ॥ २ खुरविधुतधरित्री चित्रकायो लुलायः इति ॥

३ "तालव्या अपि दन्त्याश्च शम्बशम्बरशूकराः । रशनापि च जिह्वायां शृगालः कलशोपि च" ( इति शभेदः ) ॥

सीरोऽस्त्येषां सीरिणः कर्षका तेषामिभ इव, सीरस्य सूर्यस्य इभ इवेति वा सीरिभः स एव सैरिभ इति पञ्च महिषस्य। शिवो देवतास्त्यस्याः शिवा स्त्रियां स्यात्, भूरयो माया यस्येति भूरिमायः, गां विकृतां वाचं मिनोतीति गोमायुः, मृगेषु धूर्त इव मृगधूर्तकः, सृजति मायाम्, असृग्आलाति वा सृगालः, शृङ्गं न लातीति विग्रहे तु शृगालस्ताल-व्यादिरपि, वञ्चयते इति वञ्चकः, क्रोशतीति क्रोष्टा, " फे" इत्यव्यक्तं रौतीति फेरुः, " फे " इत्यव्यक्तो रवोऽस्येति फेरवः, जमतीति जम्बुकः, उलूकादित्वाद् जम्बूकोपि इति दश जम्बूकस्य " सियार " इति ख्यातस्य ॥ ४ । ५ ॥

पु. पु. पु. पु. पु.

बिलार गोह **ओतुर्विडालो मार्जारो वृषदंशक आखुभुक् ।**

पु. पु. पु.

बिषखोपड़ा **( त्रयो ) गौधारगौधेरगौधेया (गोधिकात्मजे) ॥ ६ ॥**

ओतुरिति—अवति विष्ठाम् , आखुभ्यो गृहं वेति ओतुः, वेडति, विड्यते वा विडालः, मार्ष्टि मुखमिति मार्जारः, वृषान् मूषकान् दशतीति वृषदंशः स एव वृषदंशकः, आखून् भुङ्क्ते, आखुभ्यो भुनक्ति वा आखुभुक् इति पञ्च मार्जारस्य । गोधाया अपत्यम् गौधारः, गौधेरः, गौधेयः एते त्रयो गोधिकात्मजे भवन्तीति त्रीणि सर्पाद्गोधायां जातस्य " चन्दनगोहा " इति ख्यातस्य ॥ ६ ॥

साही साही पु. पु. स. न. न.

के लोम **श्वावित्तु शल्य (स्तल्लोम्नि) शलली शललं शलम् ।**

वातचारी मृग पु. पु. पु. पु. पु.

भेड़िया या बीग**वातप्रमीर्वातमृगः कोक ईहामृगो वृकः ॥ ७ ॥**

श्वेति—श्वानं विध्यतीति श्वावित्, शलतीति शल्यः इति द्वे शल्यस्य "सेही" इति ख्यातस्य । तस्य श्वाविधो लोमनि शलतीति शलली, स्त्रीत्वाविवक्षायां शललम्, पचाद्यचि, शलमिति त्रीणि शल्लकीलोम्नः । वातं प्रमिमीते—वाताभिमुखधावनात् वातप्रमीः "वातप्रमीर्वातमृगः" (इति पुंस्काण्डेऽमरमाला) "योषिति वातप्रमीः समीरमृगः" इति वोपालितात्स्त्रीत्वमप्यस्य, वात इव वातस्य वा मृगो वातमृगः इति द्वे मृगभेदस्य । कोकत इति कोकः, ईहा मृगेष्वस्य, ईहां मृगयते, ईहाप्रधानो मृगो वा ईहामृगः, वर्कते, वृणोति वा वृकः इति त्रीणि वृकस्य " बिग " इति ख्यातस्य ॥ ७ ॥

हरिण हरिणी पु. पु. पु. पु. पु.

के चाम आदि**मृगे कुरङ्गवातायुहरिणाजिनयोनयः ।**

हरिण के चाम पु.स.न. पु. स.न.

आदि **ऐणेयमेण्याश्चर्माद्यमेणस्यैण ( मुभे त्रिषु ) ॥ ८ ॥**

मृग इति—मृग्यते व्याधैरिति मृगः, कौ रङ्गति, कौ रङ्गोस्त्यस्येति वा कुरङ्गः, वातमयत इति वातायुः, वानमयते इति वानायुरपि, हरति मनः, ह्रियते गीतेन वा हरिणः, अजिनस्य

योनिः अजिनयोनिरिति पञ्च हरिणस्य । एणयाः मृग्याः चर्माद्यं चर्मास्थिमांसादि, एणया विकारोऽवयवो वा ऐणेयम् इत्येकं मृगीचर्माद्यस्य । एणस्य मृगस्य विकारोऽवयवो वा ऐणम् उभे ऐणेयैणे त्रिषु त्रिलिङ्गयां स्यातामित्येकं मृगचर्माद्यस्य ॥ ८ ॥

स॰ स॰ पु॰ पु॰ पु॰

हरिणों के **कदली कन्दली चीनश्चमूरुप्रियकावपि ।**

पु॰

भेद **समूरु(श्चेति हरिणा अमी अजिनयोनयः) ॥ ९ ॥**

केति—के दलतीति कदली, "कदलं त्रिषु" (इत्यमरमाला) कन्दे सस्यमूले लीयते, कन्दतीति वा कन्दली " कन्दलं त्रिषु कपालेप्युपरागे नवाङ्कुरे । कलध्वनौ कन्दली तु मृगगुल्मप्रभेदयोरिति"(लान्तेषु मेदिनी) चिनोतीति चीनः, चमति, चम्वामूरुर्यस्येति वा चमूरुः, प्रीणाति, प्रीयते वा प्रियः स एव प्रियकः, शोभनावूरू यस्येति समूरुः इति अमी षट् हरिणा हरिणभेदा अजिनयोनयः स्युरिति षट् हरिणभेदानाम् ॥ ९ ॥

पु॰ पु॰ पु॰ पु॰ पु॰ पु॰

मृगभेद **कृष्णसाररुरुन्यङ्कुरङ्कुशंवररौहिषाः ।**

पु॰ पु॰ पु॰ पु॰ पु॰ पु॰

**गोकर्णपृषतैणर्श्यरोहिताश्चमरो ( मृगाः ) ॥ १० ॥**

कृष्णेति—कृष्णेन सारः शवलः कृष्णसारः तालव्यपाठे तु कृष्णश्चासौ शारश्चेति कृष्णशारोपि, रौतीति रुरुः "रुरुर्दैत्ये मृगेपि चेति" (हैमः) नितरामञ्चतीति न्यङ्कुः,रमते, रज्यते वा रङ्कुः, शं वृणोतीति शंवरः "शंवरो दानवान्तरे । मत्स्यैणगिरिभेदेषु शंवरी पुनरौषधाविति" (हैमः) रौहिषं तृणभेदमत्तीति रौहिषः, गोरिव कर्णावस्येति गोकर्णः, पृषताः सन्त्यस्य, पर्षतीति वा पृषतः, एतीति एणः, ऋच्छति, इयर्ति वा ऋश्यः, ऋषतीति विग्रहे तु ऋष्यो मूर्धन्यान्तोपि, रिष्यत इति विग्रहे तु रिष्योपि, रोहतीति रोहितः, चमति, चम्यते वा चमरः एते मृगा मृगभेदाः अजिनयोनयः स्युरिति द्वादश मृगभेदानाम् ॥ १० ॥

पु॰ पु॰ पु॰ पु॰ पु॰ पु॰

मृग वा हरिण **गन्धर्वः शरभो रामः सृमरो गवयः शशः ।**

भेद पशुजाति **( इत्यादयो मृगेन्द्राद्या गवाद्याः ) पशुजातयः ॥ ११ ॥**

गन्धेति—गन्धयति, गन्ध्यते वा गन्धः, अर्वतीति अर्वः, गन्धश्चासावर्वश्चेति शकन्ध्वादित्वाद्गन्धर्वः, शृणातीति शरभः, सरतीति सरभो दन्त्यादिरपि, रमते,रमन्तेऽस्मिन्ननेन वा रामः, सरणशीलः सृमरः,गवते, गवनं गवस्तेन यातीति वा गवयः,शशतीति

---

१ रम्भावृक्षे च कदली पताकामृगभेदयोरिति (लान्तेषु मेदनी) ॥

२ चीनोदेशांशुकव्रीहिभेदे तन्तौ मृगान्तरे (इति मेदिनी) ॥

शशः इत्यादयो येऽत्रोक्ताः, ये च पूर्वोक्ता मृगेन्द्राद्याः, ये च वक्ष्यमाणा गोमेष-हस्त्यश्वादयः ते सर्वे पश्यन्ति सर्वमविशेषेण पशवस्तेषां जातयः पशुशब्दवाच्या भवन्तीति ॥ ११ ॥

पु. पु. पु. स. स.

मूसा या चूहा, **उन्दुरुर्मूषिकोऽप्याखुर्गिरिका बालमूषिका।**

छोटे चूहे पु. पु. स. स.

गिरगिट **सरटः कृकलासः स्यान्मुशली गृहगोधिका ॥ १२ ॥**

उन्द्विति—उनत्तीति उन्दुरुः "कन्दुरुन्दुरुरुन्दुरः" (इति शब्दार्णवः) मुष्णातीति मूषिकः, मूषतीति विग्रहे तु मूषकः "मूषको वज्रदशनः क्रमः काण्डो बिलेशयः" (इति वाचस्पतिः) आखनतीति आखुरिति त्रीणि मूषिकस्य। गिरतीति गिरिः सैव गिरिका, बाला चासौ मूषिका चेति बालमूषिका इति द्वे बालमूषिकायाः। सरतीति सरटः, कृकं शिरो ग्रीवां कण्ठं च लासयति चालयतीति कृकलासः इति द्वे गिरगिटाख्यस्य। मुस्यति संशयमिति मुसली स्वामिमते "मुशली" तालव्यमध्यापि, मुकुटमते "मुषली" मूर्धन्यमध्या चेति वर्णदेशना, अल्पा गोधा गोधिका, गृहस्य गोधिका गृहगोधिका इति द्वे पल्ल्याः "बिछुत्तिया" इति ख्यातायाः ॥ १२ ॥

स. पु. पु. पु.

मकड़ी **लूता (स्त्री) तन्तुवायोर्णनाभमर्कटकाः ( समाः )।**

छोटे कीड़े पु. पु. स. स.

खनखजूर **नीलङ्गु(स्तु)क्रिमिः कर्णजलौकाःशतपद्युभे ॥ १३ ॥**

लूतेति—लुनातीति लूता स्त्री स्यात् लूतकापि, तन्तून् वयतीति तन्तुवायः स्वामिमते तु तन्त्रं तन्तून्वयतीति तन्त्रवायोपि, ऊर्णेव तन्तुनाभावस्येति ऊर्णनाभः ऊर्णनाभि-रपि, मर्कतीति मर्कटः स एव मर्कटकः एते समाः समानार्थाः समानलिङ्गाश्चेति च-त्वारि लूतायाः "मकड़ी" इति ख्यातायाः। नीलति, नितरां लङ्गतीति वा नीलङ्गुः "नीलङ्गुरपि नीलाङ्गुः" (इति द्विरूपकोषः) क्रामतीति क्रिमिः बाहुलकात्संप्रसारणमपि "द्रुमामये भवेत्पुंसि कीटे च क्रिमिवत् कृमिरिति" (रभसः) इति द्वे क्षुद्रकृमेः "सुनकीड़ा" इति ख्यातस्य। कर्णस्य जलौकेव "कर्णजलौकाः" सान्ता वा, शतं पादा यस्याः शतपदी उभे "गोजर" इति ख्यातस्य ॥ १३ ॥

पु. पु. पु. पु. पु.

कीड़े, बीछी, **वृश्चिकः शूककीटः स्यादलिद्रुणौ ( तु ) वृश्चिके।**

परेवा पु. पु. पु. पु.

बाज **पारावतः कलरवः कपोतो (ऽथ)शशादनः ॥ १४ ॥**

पु. पु. पु. पु. पु.

उल्लू, भर्दूल, **पत्त्री श्येन उलूके तु वायसारातिपेचकौ ।**

पु. पु. पु. पु.

खँड़रैचा **व्याघ्राटः (स्याद्भ)रद्वाजः खञ्जरीट (स्तु)खञ्जनः॥१५॥**

वृश्चिक इति—वृश्चतीति वृश्चिकः, शूकयुक्तः कीटः शूककीटः स्यादिति द्वे ऊर्णादिभक्षककृमिविशेषस्य । अलति दंशे समर्थो भवति अलिः बाहुलकादिण्प्रत्यये दीर्घादिरपि "वृश्चिको द्रुण आलिः स्यादिति"(वोपालितः) द्रुणातीति द्रुणः, स्वामिमते द्रोणोपि, उभौ वृश्चतीति वृश्चिकस्तस्मिन्स्यातामिति त्रीणि वृश्चिकस्य "बीछी" इति ख्यातस्य । परं जीवं, पराच्छत्रोरहंकाराद्वा ज्ञानोपदेशेन अवतीति, परावतो दत्तात्रेयस्यायं गुरुरिति वा पारावतः, पारादप्यापतति प्रेम्णेति विग्रहे तु पारापतः "पारावतश्च छेद्यश्च कपोतो रक्तलोचनः । पारायतः कलरवः"(इति रभसः)कलो रवोऽस्येति कलरवः, को वायुः पोतो नौरिवास्य, कस्य वायोः पोत इवेति वा कपोतः इति त्रीणि कपोतस्य "परेवा" इति ख्यातस्य । अथेति—शशमत्तीति शशादनः, अतिशयितं प्रशस्तं वा पत्रमस्येति वा पत्त्री, श्यायत इति श्येनः इति त्रीणि श्येनस्य "बाज" इति ख्यातस्य । उच्यतीति उलूकस्तस्मिन् , वायसस्य काकस्यारातिः वायसारातिः, पचति संतपति, पच्यते दुःखेनेति वा पेचकः उभौ स्यातामिति त्रीणि घूकस्य उल्लूइति ख्यातस्य । व्याघ्रमटति, व्याघ्र इवाटतीति वा व्याघ्राटः, भरद्वाजस्यापत्यं,भरन्धारको वाजोऽस्येति वा भरद्वाजः स्यादिति द्वे भर्दूलस्य । खञ्ज इव ऋच्छतीति खञ्जरीटः, खञ्जतीति खञ्जनः इति द्वे खञ्जनस्य ॥ १४ । १५ ॥

पु. पु. पु. पु.

उजली चील्ह नीलकण्ठ **लोहपृष्ठ(स्तु)कङ्कः(स्यादथ)चाषः किकीदिविः ।**

पु. पु. पु. पु.

भुजेंगा **कलिङ्गभृङ्गधूम्याटा(अथ)स्याच्छतपत्रकः ॥ १६ ॥**

पु. पु. पु. पु.

कठफोरवा पपीहा **दार्वाघाटो(थ)शारङ्गः स्तोककश्चातकः(समाः) ।**

पु. पु. पु, पु.

मुर्गा **कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ १७ ॥**

लोहेति—लोहमिव पृष्ठमस्येति लोहपृष्ठः,कङ्कते इति कङ्कः स्यादिति द्वे कंकहडाख्यस्य। अथेति—चाषयतीति चाषः, "इक्षुपक्षिभिदोश्चासः" इति दन्त्यान्तेषु रभसप्रामाण्यात् चासोपि, 'किकी' इति दीव्यति वाशत इति किकीदिविः "चाषो दिविः किकिः स्मृत" ( इति व्याडिः ) इति द्वे चाषस्य "नीलकण्ठ" इति ख्यातस्य । कलिं कलहं

---

१ अथ शक्राख्योदिवान्धो वक्रनासिकः । हरिनेत्रोदिवाभीतोनखाशीपीयुघर्षौ । काकभीरुर्नक्तचारी ( इति त्रिकाण्डशेषः ) ॥

गच्छति, के मूर्ध्नि लिङ्गं चूडास्येति वा कलिङ्गः, बिभर्ति कुलमिति भृङ्गः "भृङ्गो धूम्याटषिङ्गयोः । मधुव्रते भृङ्गराजे पुंसि भृङ्गं गुडत्वचि" ( इति मेदिनी ) धूम्या धूमसमूह इवाटतीति धूम्याटः इति त्रीणि भुजंगाख्यस्य "भुजेटा" इति ख्यातस्य । अथेति—शतं पत्राण्यस्येति शतपत्रकः, दारु आहन्तीति दार्वाघाटः "काष्ठकुट्टः शतच्छदः" (इति त्रिकाण्डशेषः) इति द्वे दार्वाघाटस्य "कठफोरवा" इति ख्यातस्य । अथेति—शारयति, शार्यते वा तपादिना शारङ्गः "शारङ्गश्चातके ख्यातः शबले हरिणेऽपि चेति" ( तालव्यादावजयः ) सरतीति सारङ्गः "चातके हरिणे पुंसि सारङ्गः शबले त्रिषु" (इति दन्त्यादौ रभसात्) सारमङ्गमस्येति शकन्ध्वादित्वाद्वा सारङ्गः, स्तोकं कायति, स्तोकं कं जलमस्येति वा स्तोककः, चततीति चातकः एते समाः समानार्थाः समानलिङ्गकाश्चेति त्रीणि चातकस्य "पिपिहा" इति ख्यातस्य । कृकेन गलेन वक्तीति कृकवाकुः, ताम्रा चूडास्येति ताम्रचूडः, कोकनं कुक्, कुटतीति कुटः कुका कुटः, कुत्सितः कुटः कोः पृथिव्याः कुटो वेति कुक्कुटः, चरणा आयुधमस्येति चरणायुधः इति चत्वारि कुक्कुटस्य "मुर्गा" इति ख्यातस्य ॥ १६ । १७ ॥

पु. पु. स.

गर्गैवा,गर्गैया **चटकः कलविङ्कः "स्या" "त्तस्य स्त्री" चटका (तयोः) ।**

पु. स.

बचा, बच्ची **(पुमपत्ये) चाटकैरः (स्त्र्यपत्ये) चटकैव (हि) ॥ १८ ॥**

चटेति—चटतीति चटकः, कलं वङ्कते इति कलविङ्कः स्यादिति द्वे चटकस्य । तस्य चटकस्य स्त्री चटका इत्येकं चटकायाः । तयोः चटकायाश्चटकस्य वा पुमपत्ये चाटकैरः इत्येकं चाटकैरस्य । स्त्री च तदपत्यं च स्त्र्यपत्यं तस्मिन् चटका एवेत्येकं चटकायाः ॥ १८ ॥

पु.स. पु. पु. पु.

कौड़िला **कर्करेटुः करेटुः (स्यात्) कृकणक्रकरौ (समौ) ।**

मुआचिड़ी पु. पु. पु. पु.

कोयल **वनप्रियः परभृतः कोकिलः पिकं[1] ( इत्यपि ) ॥ १९ ॥**

कर्केति—'कर्क' इति रेटतीति कर्करेटुः, के वायौ जले वा रेटतीति करेटुः स्यादिति द्वे देशान्तरीयसारसस्य कौड़िलाख्यस्य वा । 'कृ' इति कणति, कृकेण कण्ठेन अणतीति वा कृकणः, 'क्र' इति शब्दकरणशीलः क्रकरः उभौ समौ समानार्थौ समानलिङ्गौ चेति द्वे तित्तिरविशेषस्य "मुआचिड़ी" इति ख्यातस्य वा । वनं प्रियमस्येति वनप्रियः, परेण भृतः परभृतः, कोकत इति कोकिलः, अपि कायतीति पिक इत्यपीति चत्वारि कोकिलस्य ॥ १९ ॥

---

१ वष्टिभागुरिरित्यल्लोपः ॥

पु. पु. पु. पु. पु.

कौवा **काके (तु) करटारिष्टबलिपुष्टसकृत्प्रजाः ।**

पु. पु. पु. पु. पु.

**ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा (अपि) ॥ २० ॥**

काक इति–कायतीति काकस्तस्मिन् , करोति शकुनमिति करटः, न रिष्टमस्येति अरिष्टः, बलिना पुष्टो बलिपुष्टः, सकृत्प्रजा यस्येति सकृत्प्रजः, ध्वाङ्क्षतीति ध्वाङ्क्षः "ध्वाङ्क्षः काके बकेऽर्थिनि । गृहे ध्वाङ्क्षी तु काकोल्यामिति" (हेमः) कां कां इति शब्दनादात्मानं घोषयतीति आत्मघोषः, परं बिभर्तीति परभृत्, बलिं भुङ्क्ते इति बलिभुक्, वयते इति वायस इति दश काकस्य ॥ २० ॥

पु. पु. पु. पु.

वनकौवा काला कौवा **द्रोणकाक'स्तु' काकोलो दात्यूहः कालकण्ठकः ।**

पु. पु. पु. पु. पु. पु.

चील, गीध, सुआ **आतायिचिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ (समौ)॥२१॥**

द्रोण इति–द्रुणतीति द्रोणः, द्रोणाख्यः काकः द्रोणकाकः, काकयतीति काकोलः "द्रोणकाको दग्धकाको वृद्धकाको वनाश्रयः" (इति त्रिकाण्डशेषः) इति द्वे वन्यकाकस्य "डोंडकाक" इति ख्यातस्य वा । दानं दातिर्मारणं तामूहते, दित्यौहोऽयमिति वा दात्यूहः, काले वर्षाकाले कण्ठोऽस्येति कालकण्ठकः इति द्वे जलकाकस्य श्यामकाकस्य वा । आतायते तच्छीलः आतायी, स्वामिमते तु आतपतीति 'आतापी' चिल्लतीति चिल्लः इति द्वे चिल्लस्य "चील्ह" इति ख्यातस्य । दक्षते दक्षाय्यस्तस्यायं दाक्षाय्यः, गृध्यतीति गृध्रः "गृध्रः खगान्तरे पुंसि वाच्यलिङ्गस्तु लुब्धके" (इति मेदिनी) इति द्वे गृध्रस्य "गीध" इति ख्यातस्य 'कि' इति ईरयतीति कीरः, शोकति, शोभते, शवतीति वा शुकः उभौ समौ समानार्थौ समानलिङ्गौ चेति द्वे शुकस्य । समाविति चिल्लादित्रयेषु योजनीयम् ॥ २१ ॥

पु. पु. पु. पु. पु. पु.

कराकुल, बगला, **क्रुङ् क्रौञ्चो (थ) बकः कह्वः पुष्कराह्वस्तु सारसः ।**

पु. पु. पु. पु.

सारस, चक्रवाक **कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥ २२ ॥**

क्रुङिति–क्रुञ्चतीति क्रुङ् 'पचाद्यचि' क्रुञ्चः, स एव क्रौञ्चः इति द्वे क्रौञ्चस्य "कराकुल" इति ख्यातस्य । अथेति–वङ्कते, वाति, वायति, 'व' इति कायति वक्तीति वा बकः "बकस्तु बकपुष्पे स्यात् कह्वे श्रीदे च रक्षसीति" (मेदिनी) 'क' इति शब्दं, के

---

१ स एव च चिरंजीवी चैकदृष्टिश्च मौकुलिः ॥

जले वा ह्वयतीति कह्वः इति द्वे बकस्य । पुष्करं पद्मं तस्माह्वा आह्वा यस्येति पुष्कराह्वः, सरसि भवः सारस इति द्वे सारसस्य । कोकत इति कोकः, क्रियते निशया वियोगी, चकते वा चक्रः, चक्रेण चक्रशब्देनोच्यते इति चक्रवाकः, रथाङ्गस्य चक्रस्याह्वयो नाम यस्येति रथाङ्गाह्वयनामकः इति चत्वारि चक्रवाकस्य "चकवा" इति ख्यातस्य ॥ २२ ॥

बत्तख कुररी हंस

पु. पु. पु. पु.
**कादम्बः कलहंसः स्यादुत्क्रोशकुररौ (समौ)।**
पु. पु. पु. पु.
**हंसा (स्तु) श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥ २३ ॥**

कादेति—कदम्बे समूहे भवः कादम्बः, कलो मधुरवाक्हंसः कलहंसः स्यादिति द्वे कलहंसस्य "बत्तक" इति ख्यातस्य । उत्क्रोशतीति उत्क्रोशः, कवते इति कुररः उभौ समौ समानार्थौ समानलिङ्गौ चेति द्वे कुररस्य । हन्ति गच्छतीति हंसः बहुत्वे हंसाः, श्वेता गरुतः पक्षा अस्येति श्वेतगरुत् बहुत्वे श्वेतगरुतः, चक्रवदङ्गान्यस्येति चक्राङ्गः बहुत्वे चक्राङ्गाः, मानसं सर ओकोऽस्येति मानसौकाः बहुत्वे मानसौकसः इति चत्वारि हंसस्य ॥ २३ ॥

राजहंस, हंसभेद, हंसविशेष

पु.
**राजहंसा (स्तु ते चञ्चुचरणैर्लोहितैः सिताः)।**
पु. पु.
**(मलिनै)र्मल्लिका(ख्यास्ते)धार्तराष्ट्राः(सितेतरैः)॥२४॥**

राजेति—लोहितैः रक्तवर्णैः चञ्चुचरणैः चञ्चुभिः सहितैश्चरणैरुपलक्षिताः ये सिताः शुक्ला हंसास्ते राजहंसाः कथ्यन्त इत्येकं राजहंसस्य। मलिनैः किञ्चिद्धूम्रवर्णैश्चञ्चुचरणैरुपलक्षिता ये हंसास्ते 'मल्लिक' आख्या येषामिति मल्लिकाख्या उच्यन्त इत्येकं हंसभेदस्य । सितेतरैः कृष्णचञ्चुचरणैरुपलक्षिता ये हंसास्ते धृतराष्ट्रे भवाः धार्तराष्ट्राः प्रोच्यन्त इत्येकं श्यामचञ्चुचरणयुतहंसस्य ॥ २४ ॥

आड़ी बगुला भेद हंसी सारसी

स. स. स. स. स.
**शरारिराटिराडिश्च बलाकाबिसकण्ठिका।**
स. स.
**(हंसस्य योषिद्)वरटा (सारसस्य तु) लक्ष्मणा ॥२५॥**

शरेति—शरं नीरं हिंसां वा ऋच्छतीति शरारिः, कपिलिकादित्वाल्लत्वे 'शरालिरपि' "शरमततीति शरातिः, शरमटतीति शराटिः, शरमडतीति शराडिः" इति पाठान्तरम्, आअटतीति आटिः, आअडतीति आडिः "आडिः शरालिर्वरटी गन्धोली वानरी कपी" इति स्त्रीलिङ्गकाण्डे रत्नकोषात्त्रयोऽपि स्त्रीलिङ्गा ज्ञातव्याः । इति त्रीणि शरारेः "आड़ी" इति ख्यातायाः । बलते, बलेनाकतीति वा बलाका, बिस-

बककण्ठोऽस्या विसकण्ठिका इति द्वे बकभेदस्य । हंसस्य योषित्स्त्री वृणीते सेवते सर इति वरटा स्यादित्येकं हंसयोषितायाः । सारसस्य योषित् लक्ष्मीरस्त्यस्याः लक्ष्मणा इत्येकं सारसयोषितायाः ॥ २५ ॥

चमगीदड़ी, गीदड़ — स. जतुकाऽजिनपत्रा 'स्या'त्परोष्णी तैलपायिका ।

मक्खी मधुमक्खी — वर्वणा मक्षिका नीला सरघा मधुमक्षिका ॥ २६ ॥

जत्विति—जत्विव जतुका, दीर्घमध्या जतूकापि, अजिनमिव पत्रमस्याः अजिनपत्रा-स्यादिति द्वे जतूकायाः "चमगीदड़ी" इति ख्यातायाः। परं शत्रु उष्णं यस्याः परोष्णी, तैलं पिबतीति तैलपायिका इति द्वे "मुखविष्टा" वागुलिकादिनामिकायाः "गीदड़" इति ख्यातस्य वा । वर इति वणति, वर्वतीति वा वर्वणा, मशति, मक्षतीति वा मक्षिका, नीलतीति नीला इति त्रीणि नीलमक्षिकायाः । सरं गतिमन्तं घातयतीति सरघा, मधुनो मक्षिका, मधुकर्त्री मक्षिका वा मधुमक्षिका इति द्वे मधुमक्षिकायाः ॥ २६ ॥

पतङ्ग, वनमक्खी, मसा, बर्रे — पतङ्गिका पुत्तिका 'स्या' द्दंश 'स्तु' वनमक्षिका ।

दंशी(तज्जातिरल्पास्याद्)गन्धोली वरटा(द्वयोः)॥२७॥

पतेति—पततीति पतङ्गिका, पुत् कुत्सितं तायते, पुत् कुत्सितं शब्दं तनोतीति वा पुत्ती सैव पुत्तिका स्यादिति द्वे पतङ्गिकायाः " पांखी " इति ख्यातायाः । दशतीति दंशः, "दंशःकीटविशेषे च वर्मदंशनयोः पुमानिति" (मेदिनी) वनस्य मक्षिका वनमक्षिका इति द्वे वनमक्षिकायाः । अल्पा तज्जातिः दंशजातिः दशतीति दंशी स्यादित्येकं "डांस" इति ख्यातायाः । गन्धयत इति गन्धोली " गन्धोली वरटाशुण्ठ्योर्भद्रायामिति " ( हैमः ) वृणोतीति वरटा—वरटी अपि " वरटा वरटीहंस्योस्तत्पतौ वरटः स्मृतः " ( इति तारपालः ) वरटो द्वयोः स्त्रीपुंसयोः स्यादिति द्वे वरटस्य " बर्र " इति ख्यातस्य ॥ २७ ॥

झींगुर फनिगा जुगनू — भृङ्गारी चीरुका चीरी झिल्लिका ( च समा इमाः ) ।

( समौ ) पतङ्गशलभौ खद्योतो ज्योतिरिङ्गणः ॥ २८ ॥

भृङ्गेति—भृङ्गं भृङ्गरूपमाराति, बिभर्त्ति, रूपेण भृङ्गमृच्छतीति वा भृङ्गारी, 'ची' इति रौतीति चीरुका, मुकुटमते तु झीरुकापि, चिनोतीति चीरी, चिल्लतीति पृषोदरादित्वाद् झिल्ली सैव झिल्लिका इमाः समाः समानार्थाः समानलिङ्गाश्चेति चत्वारि

झिल्लिकायाः "झिंगुरी" इति ख्यातायाः । पततीति पतङ्गः, "पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः । क्लीबं सूते" (इति विश्वमेदिन्योः) शलतीति शलभः उभौ समाविति द्वे पतङ्गस्य "फनिगा" इति ख्यातस्य । खं द्योतते, द्योतयति वा खद्योतः, ज्योतिर्नक्षत्रमिवेङ्गतीति ज्योतिरिङ्गणः इति द्वे खद्योतस्य "जुगुनू" इति ख्यातस्य ॥ २८ ॥

पु.　पु.　पु.　पु.　पु.

भौंरा　**मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ।**

पु.　पु.　पु.　पु.　पु.　पु.

**द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥ २९ ॥**

मध्विति—मधु व्रतं भक्ष्यं यस्येति मधुव्रतः, मधु करोत्येवंशीलो मधुकरः, मधु लेढीति मधुलिट्, मधु पिबतीति मधुपा अलो वृश्चिकलांगूलं तदिवास्येति अली, द्वौ रेफौ नाम्नि यस्येति द्विरेफः, पुष्पाणि लेढीति पुष्पलिट्, बिभर्तीति भृङ्गः षट् पदान्यस्येति षट्पदः, भ्रमतीति भ्रमरः, अलतीति अलिरित्येकादश भ्रमरस्य ॥ २९ ॥

पु.　पु.　पु.　पु.　पु.

मोर या　**मयूरो बर्हिणो बर्हीं नीलकण्ठो भुजङ्गभुक् ।**

पु.　पु.　पु.　पु.

मुरैला　**शिखावलः शिखीकेकीमेघनादानुलास्यपि ॥ ३० ॥**

मेति—मयते, मह्यां रौतीति वा मयूरः, बर्हमस्त्यस्येति बर्हिणः, बर्हीं, नीलः कण्ठोऽस्येति नीलकण्ठः, भुजङ्गं भुङ्क्ते इति भुजङ्गभुक्, शिखास्त्यस्येति शिखावलः, पक्षे शिखी, केकास्त्यस्येति केकी, मेघनादेनानुलसत्येवंशीलो मेघनादानुलासी इति नव मयूरस्य ॥ ३० ॥

मोर की बोली स.　पु.　पु.

चन्द्रिका　**केका ( वाणी मयूरस्य ) (समौ) चन्द्रकमेचकौ ।**

चोटी　स.　स.　पु.　न.　न.

पंख　**शिखा चूडा शिखण्डश्च पिच्छबर्हे (नपुंसके) ॥ ३१ ॥**

केकेति—मयूरस्य वाणी के मूर्धनि कायते इति केका स्यादित्येकं मयूरवाण्याः । चन्द्र इव चन्द्रकः, मेचको वर्णोऽस्त्यस्येति मेचकः " बर्हिकण्ठसमं वर्णं मेचकं ब्रुवते बुधा" (इति कात्यः) उभौ समौ समानार्थौ समानलिङ्गाविति द्वे पिच्छस्य चन्द्राकृतेः । शेत इति शिखा, चुडयत इति चूडा इति द्वे मयूरशिखायाः । शिखिनाम्यते शिखण्डः "शिखण्डो बर्हचूडयोरिति" (हेमचन्द्रः) पिच्छयति, पिच्छयते वा पिच्छम्, बर्हतीति बर्हं उभे नपुंसके स्यातामिति त्रीणि मयूरपिच्छस्य ॥ ३१ ॥

पु. पु. पु. पु. पु.
पक्षिमात्र खगे विहंगविहगविहंगमविहायसः ।
पु. पु. पु. पु. पु. पु.
शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ॥ ३२ ॥
पु. पु. पु. पु. पु. पु.
पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः ।
पु. पु. पु. पु. पु. पु.
नगौको वाजिविकिरविविष्किरपतत्रयः ॥ ३३ ॥
पु. पु. पु. पु.
नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमाः ।

खग इति—खे गच्छतीति खगः, विहायसि गच्छतीति विहङ्गः, विहगः, विहंगमः, विजहाति भुवम्, विहापयतीति वा विहायाः, शक्नोतीति शकुन्तिः, पक्षौ स्तोऽस्येति पक्षी, शक्नोतीति शकुनिः, शकुन्तः, शकुनः, द्विर्जायत इति द्विजः, पतत्रमस्त्यस्येति पतत्री, पत्रमस्त्यस्येति पत्री, पतेन पक्षेण गच्छतीति पतगः, पततीति पतन्, पत्रं पतत्रं रथ इव यस्येति पत्ररथः, अण्डाज्जायते स्मेति अण्डजः, नगो वृक्षः नगे वा ओको यस्येति नगौकाः, वाजाः पक्षाः सन्त्यस्येति वाजी, विकिरतीति विकिरः, वातीति विः, विकिरतीति विष्किरः, पततीति पतत्रिः, नीडे उद्भवो येषामिति नीडोद्भवाः, गरुतः पक्षाः सन्त्येषामिति गरुत्मन्तः, पतितुमिच्छवः पित्सन्तः, नभसं गच्छन्तीति नभसंगमाः इति सप्तविंशतिः पक्षिणाम् ॥ ३२ । ३३ । १ ॥

पु. पु. पु. पु.
हारिल, जलमुर्ग बत्तख तीतर, वनमुर्ग, लवा, चकोर, बटेर आदि (तेषां विशेषा) हारीतो मद्गुः कारण्डवः प्लवः ॥ ३४ ॥
पु. पु. पु. पु. पु.
तित्तिरिः कुक्कुभोलावो जीवंजीवश्चकोरकः ।
पु. पु. पु. स.
कोयष्टिकष्टिट्टिभको वर्तको वर्तिका (दयः) ॥ ३५ ॥

तेषामिति—"तेषां पक्षिणामेते विशेषाः भेदा उच्यन्ते" हरिमित ईतो वा हारोऽस्त्यस्मिन् हारि मनोहरमितं गमनमस्य, हारयतीति हार्—एति स्मेति ईतः हार्चासावीतश्चेति हारीतः इत्येकं हारीतस्य "हरियाल" इति ख्यातस्य। मज्जतीति न्यङ्क्वादित्वात् मद्गुः "मद्गुः पानीयकाकिका" (इति रभसः) इत्येकं जलकाकस्य "जलमुर्ग" इति ख्यातस्य वा । रमणं रण्डः ईषद्रण्डः कारण्डस्तं वातीति कारण्डवः, प्लवते इति प्लवः इति द्वे कारण्डवस्य "बत्तख" इति ख्यातस्य । तित्तिशब्दं रातीति तित्तिरिः "तित्तिरिः पक्षिणि मुनाविति" (हैमः) इत्येकं तित्तिरस्य 'कुक्' इति शब्दं कौति,

कुक्कुशब्दं भाषते वा कुकुभः इत्येकं वनकुक्कुटस्य "वनमुर्गा" इति ख्यातस्य। लावयतीति लावः इत्येकं लवाख्यस्य। जीवं जीवयतीति जीवंजीवः "जीवंजीवः खगान्तरे। द्रुमभेदे चकोरे चेति" (हैमः) तद्दर्शनेन विषनाशित्वादित्येकं मयूरपक्षपक्षिणः। अथवा जीवंजीवः, चकतीति चकोरः स एव चकोरक इति द्वे चकोरस्य। कं जलं यष्टिरिवास्येति कोयष्टिकः 'टिट्टि' शब्दं भाषते, टिट्टिशब्देन भासीति वा टिट्टिभः स एव टिट्टिभकः इति द्वे टिट्टिभकस्य "टिंटहरी" इति ख्यातस्य। वर्तते इति वर्तकः, वर्तिका "वर्तकस्तु खुरेऽश्वस्य विहगे वर्तिकाद्वयोरिति" (मेदिनी) इति द्वे वर्तिकायाः "बटेर" इति ख्यातस्य आदिना सारिकाकपिंजलादयो ज्ञेयाः ॥ ३४ । ३५ ॥

पु. पु. पु.न. न. न. न.

पंख, पंख की **गरुत्पक्षच्छदाः पत्त्रं पतत्त्रं (च) तनूरुहम्।**

स. न. स. स.

जड़ चोंच **(स्त्री) पक्षतिः पक्षमूलं चञ्चुस्त्रोटिरुभे (स्त्रियौ)॥३६॥**

गरुदिति—गिरति, गृणातीति वा गरुत्, पक्षयति, पक्ष्यते वा पक्षः "पक्षस्तु मासार्धगृहसाध्ययोः। चुल्लीरन्ध्रे बले पार्श्वे वर्गे केशात्परश्चये। पिच्छे विरोधे देहाङ्गे सहाये राजकुञ्जरे" (इति हैमः) सान्तोपि "पक्षसी च स्मृतौ पक्षाविति शुभाङ्कः, छाद्यतेऽनेनाङ्गमिति छदः "गरुत्पक्षौ नरौ छदमिति वोपालितात्क्लीबमपि, पतत्यनेन पत्त्रम्, पतन्तं त्रायत इति पतत्त्रम्, तन्वां रोहतीति तनूरुहम् इति षट् पक्षस्य। पक्षस्य मूलं पक्षतिः स्त्री स्यात्, पक्षस्य मूलं पक्षमूलमिति द्वे पक्षमूलस्य। चञ्चतीति चञ्चुः, त्रोटयते इति त्रोटिः उभे स्त्रियौ स्यातामिति द्वे चञ्च्वोः " चोंच " इति ख्यातस्य ॥ ३६ ॥

न. न. न.

उड़ना **प्रडीनोड्डीनसंडीनान्येताः (खगगतिक्रियाः)।**

अण्डा स. पु. न. पु. पु.न.

घोंसला **पेशीकोषौ(द्विहीनो)ऽण्डं कुलायो नीड(मस्त्रियाम्)३७॥**

प्रेति—प्रथमं डयनं प्रडीनम्, तिर्य्यग्गमनमित्यन्ये, उद्‌र्ध्वं डयनं उड्डीनम्, संगतं डयनं संडीनम्—एताः खगानां पक्षिणां गतेः गमनस्य क्रियाः बोद्धव्याः इति पक्षिणां गतिविशेषाणां पृथक् पृथगेकैकम्। पिंशतीति पेशी, कुष्यति निष्क्रामत्यस्मात्स्वयमेव कोषः "कोषोऽस्त्रीति मेदिनीकोषात्तालव्यान्तोप्ययम्" अमत्यस्मादिति अण्डम्, द्विहीने द्वाभ्यां हीने क्लीबे ज्ञेयमिति त्रीणि अण्डस्य " अण्डा " इति ख्यातस्य। कुलं पक्षिसन्तानोऽयतेऽत्र, कौ लायो गतिरस्मादिति वा कुलायः " कुलायस्तु पुमान्स्थानमात्रे स्यात्पक्षिवासके " (इति मेदिनी) नितरामीड्यते, निश्चिता इलन्त्यत्रेति वा नीडम् अस्त्रियां पुंनपुंसकयोः स्यादिति द्वे पक्षिवासस्य ॥ ३७ ॥

पु. पु. पु. पु. पु. पु. पु.

बच्चे **पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।**

नर मादा न. न. न. न. न.

दो **(स्त्रीपुंसौ) मिथुनं द्वन्द्वं युग्मं (तु) युगलं युगम् ॥ ३८॥**

पोत इति—पुनाति, पवते वा पोतः स्त्रियां पोती, पायते, पिबति वा पाकः अजादित्वात्पाका, अर्व्यते वृद्धिं प्राप्यते इति अर्भकः, डिम्भयतीति डिम्भः, " डिम्भोपि बालिशे बाले " ( इति मेदिनी ) पर्थयति, पर्थ्यते, प्रथते वा पृथुकः " पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवदिति" (मेदिनी) शव्यत इति शावः, स एव शावकः, श्यति, शायते वा शिशुरिति सप्त शावकस्य । स्त्री च पुमांश्चेति स्त्रीपुंसौ, मेथतीति मिथुनम्, द्वौ द्वाविति द्वन्द्वम " द्वन्द्वं रहस्येति साधुः " इति त्रीणि मिथुनस्य । युज्यत इति युग्मम्, युज्यते, युगं लाति, युगमस्त्यस्येति वा युगलम्, युज्यत इति युगमिति त्रीणि यमलस्य ॥ ३८ ॥

पु. पु. पु. पु. पु. पु.

समूह या झुण्ड **समूहनिवहव्यूहसन्दोहविसरव्रजाः ।**

पु. पु. पु. पु. पु. पु. पु.

**स्तोमौघनिकरव्रातवारसंघातसंचयाः ॥ ३९ ॥**

पु. पु. पु. पु. पु.

**समुदायः समुदयः समवायश्चयो गणः ।**

स. न. न. न.

**( स्त्रियान्तु ) संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥ ४०॥**

समूहेति—समूह्यत इति समूहः, नितरामुह्यते, वहतीति वा निवहः, व्यूह्यत इति व्यूहः, संदुह्यत इति संदोहः, विसरतीति विसरः "विसरः प्रसरे व्रजे" (इति मेदिनी) व्रजतीति व्रजः "व्रजो गोष्ठाध्ववृन्देष्विति " (मेदिनी) स्तूयत इति स्तोमः, आउह्यतेऽनेनेति ओघः " ओघो वेगे जलस्य च । वृन्दे परंपरायां च द्रुतनृत्योपदेशयोरिति" (मेदिनी) निकीर्यत इति निकरः "निकरो निवहे सारे न्यायदेयधने निधाविति" (मेदिनी) व्रत्यते नियम्यते इति व्रातः, वार्यते आच्छाद्यतेऽनेनेति वारः " वारः सूर्यादिवासरे। द्वारे हरे कुब्जवृक्षे वृन्दावसरयोः क्षणे " ( इति मेदिनी ) संहन्यत इति संघातः, संचीयत इति संचयः, समुदायत इति समुदायः, समुदीयत इति समुदयः, समवयन्त्यनेनास्मिन्वेति समवायः, चीयत इति चयः, गण्यत इति गणः, संहन्यत इति संहतिः स्त्रियां स्यात् । वृणोति, वृण्यते वेति वृन्दम्, निकुरति, निकुर्यते वा निकुरम्बम्, कुत्सितमम्बते, अम्ब्यते वा, कदति, कद्यते वा कदम्बं तदेव कदम्बकमिति द्वाविंशतिः कदम्बस्य ॥ ३९ । ४० ॥

पु. पु. पु.

समूहविशेष ( वृन्दभेदाः ) समैर्वर्गः सङ्घसार्थौ ( तु ) (जन्तुभिः)।

न. पु.न.

( सजातीयैः ) कुलं यूथं (तिरश्चां) पुंनपुंसकम्॥ ४१॥

वृन्देति—वृन्दस्य समूहस्य भेदा विशेषा उच्यन्ते—समैः सजातीयैः प्राणिभिरप्राणिभिश्चोपलक्षितं वृन्दं वृज्यत इति वर्गः कथ्यते यथा मनुष्यवर्गः, शैलवर्गश्च। जन्तुभिस्सजातीयविजातीयप्राणिभिरुपलक्षितः समूहः संहन्यते इति सङ्घः, सरतीति सार्थः, सङ्घश्च सार्थश्च तौ कथ्येते यथा पशुसङ्घः, वणिक्सार्थः। सजातीयैरेव जन्तुभिरुपलक्षितः समूहः कोलतीति कुलं प्रोच्यते। तिरश्चां समूहो यौति, यूयते वा यूथं पुंनपुंसकं विज्ञेयमिति ॥ ४१ ॥

पु. पु.

पशुसमूह ( पशूनां)समजो (न्येषां) समाजो (थ सधर्मिणाम्)।

अन्यसमूह पु. पु. पु.स. पु. पु.न.

सधर्मिसमूह अनाज का ढेर (स्या)न्निकायःपुञ्जराशी तूत्करःकूट (मस्त्रियाम्)॥४२॥

पेति—पशूनां समूहः संवीयतेऽत्रेति समजः कथ्यते "समजः पशुवृन्दे ना विपिने तु नपुंसकमिति" (मेदिनी) अन्येषां समूहः संवीयतेऽत्रेति समाजः प्रोच्यते। अथेति—सधर्मिणां समूहः निकायः स्यादिति वृन्दभेदानां पृथक् पृथक्। पिञ्जयति-पिञ्ज्यते वा उन्नत्या पुमांसं जयतीति वा पुञ्जः, अश्नुते, रश्यते वा राशिः, उत्कीर्यत इति उत्करः, कूटयति, कूट्यते वा कूटम् अस्त्रियां पुंनपुंसके स्यात् "कूटं पूर्द्वारयन्त्रयोः। मायादम्भाद्रिशृङ्गेषुसीराङ्गेनृत्ततुच्छयोः। निश्चलेऽयोघने राशाविति" (हेमचन्द्रः) इति चत्वारि धान्यादेरुच्छ्रितवृन्दस्य ॥ ४२ ॥

कबूतर,सुवा,मोर, न. न. न. न.

तीतर आदि का कापोतशौकमायूरतैत्तिरा ( दीनि तद्गणे )।

समुदाय पलाऊपक्षी,हिरन (गृहासक्ताः पक्षिमृगा) श्छेका (स्ते)गृह्यका(श्च ते)४३॥

इति सिंहादिवर्गः॥

केति—तद्गणे तेषां कपोतशुकमयूरतित्तिरीणां गणे समुदाये कपोतानां समूहः कापोतम्, शुकानां समूहः शौकम्, मयूराणां समूहो मायूरम्, तित्तिरीणां समूहस्तैत्तिरम् आदिना काकानां समूहः काकम्, वर्त्तकानां समूहो वार्त्तकम्, उलूकानां समूह औलूकमित्यादीनि भवन्ति इति कपोतादीनां पृथक् पृथगेकैकम्—ये गृहेषु आसक्ता पक्षिमृगास्ते छ्यन्ति, छाद्यन्ते वा छेकाः ते च गृह्यन्ते इति गृह्याः अनुकम्पिता गृह्याः गृह्यकाः कथ्यन्त इति द्वे गृहासक्तपक्षिमृगाणाम् ॥ ४३ ॥

इति सिंहादिवर्गविवरणम् ॥

अथ मनुष्यवर्गो व्याख्यायते।

पु. पु. पु. पु. पु. पु.

मनुष्य या पुरुषमात्र **मनुष्या मानुषा मर्त्या मनुजा मानवा नराः।**

पु. पु. पु. पु. पु.

**(स्युः) पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ १ ॥**

मनुष्या इति—मनोरपत्यं मनुष्यः, बहुत्वे मनुष्याः, स्त्रियां मनुषी, मानुषा, बहुत्वे मानुषाः, स्त्रियां मानुषी, म्रियत इति मर्तः स एव मर्त्यः, बहुत्वे मर्त्याः, मनोर्जातो मनुजः, बहुत्वे मनुजाः, मनोरयं, मनोरपत्यं वा मानवः, बहुत्वे मानवाः, नरति, नृणाति वा नरः, बहुत्वे नराः, इति षट् मनुष्यमात्रस्य। पाति, पुनाति वा पुमान्, बहुत्वे तु पुमांसः, पञ्चजना उत्पादका यस्य, पञ्चभिर्भूतैर्जन्यते वा पञ्चजनः, बहुत्वे पञ्चजनाः, पुरतीति पुरुषः, बहुत्वे पुरुषाः, पूर्य्यत इति पूरुषः, बहुत्वे पूरुषाः, नयतीति ना, बहुत्वे नरः इति पञ्च मनुष्यजातौ पुरुषस्य ॥ १ ॥

स. स. स. स. स. स. स.

स्त्रीमात्र **स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः।**

स. स. स. स.

**प्रतीपदर्शिनी वामा वनिता महिला(तथा) ॥ २ ॥**

स्त्रीति—स्त्यायति गर्भोऽस्यामिति स्त्री, योषति, युष्यते वा योषित्, योष्यते स्मेति योषिता "स्त्री वधूर्योषिता रामा" (इति त्रिकाण्डशेषः) अल्पं बलमस्या अबला, युष्यते, योष्यते वा योषा, चवर्गादिपाठे तु जुषते, जुष्यते वा जोषापि, नुर्नरस्य वा स्त्री "नृनरयोर्वृद्धिश्च" इति शार्ङ्गरवादिगणे पाठान्ङीन् जातिलक्षणस्य ङीषोऽपवादः, ङीन्संनियोगेन वृद्धिश्चेति नारी मुकुटमते तु नुर्नरस्य वा धर्म आचारोऽस्याः, नुर्नरस्य वेयं नारी, सीम्नोऽन्तः सीमन्तोऽस्त्यस्याः सीमन्तिनी, वहति, उह्यते वा वधूः, प्रतीपं द्रष्टुं शीलमस्या अपाङ्गनिरीक्षणात् प्रतीपदर्शिनी, वमति स्नेहम्, वामः कामोऽस्त्यस्या वा वामा, वन्यते स्म, वनति वा वनिता, महति, मह्यते वा महिला "महिला फलिनी स्त्रियोरिति" (मेदिनी) महस्योत्सवस्य इला भूमिरिति विग्रहे तु महेलापि इत्येकादश स्त्रीमात्रस्य॥२॥

स. स. स. स.

विशेष स्त्रियां **(विशेषा)स्त्वङ्गना भीरुः कामिनी वामलोचना।**

स. स. स. स. स.

**प्रमदा मानिनी कान्ता ललना(च)नितम्बिनी ॥ ३ ॥**

स. स. स. स. स.

कोपवती **सुन्दरी रमणी रामा कोपना(सैव)भामिनी।**

स. स. स. स.

बहुत उत्तम **वरारोहामत्तकाशिन्युत्तमा वरवर्णिनी ॥ ४ ॥**

वीति–स्त्रीणां विशेषा भेदाः कथ्यन्ते– प्रशस्तान्यङ्गान्यस्या इति अङ्गना, भयशीला इति भीरुः, भूयान्कामोऽस्याः कामिनी, "कामिनी भीरुवन्दयोरिति" (मेदिनी) वामः कामो लोचने आलोचने नेत्रे यस्याः, वामे सुन्दरे लोचने चक्षुषी यस्या वा वामलोचना, प्रमदो हर्षोऽस्त्यस्या इति प्रमदा, मानोऽस्त्यस्या इति मानिनी, मुकुटमते भावः शृङ्गारचेष्टाविशेषस्तद्युक्ता भाविनी, कम्यते स्म इति कान्ता, ललते, लडति वा ललना, अतिशयितो नितम्बो यस्यास्सा नितम्बिनी । सु द्रियते, सु=अतीव उनत्ति चित्तं द्रवीकरोतीति वा पृषोदरादित्वात्सुन्दरी, सुन्दरा वा, रमयति, रम्यते वास्यामिति रमणी, रमत इति रामा इति पृथक् पृथगेकैकमुत्कृष्टस्त्रीविशेषाणाम् । कुप्यति तच्छीला कोपना, सैव अवश्यं भामते इति भामिनी इति द्वे कोपनस्त्रियाः । वर आरोहोनितम्बोऽस्या वरारोहा,मत्ता क्षीबेव काशते भातीति मत्तकाशिनी, दन्त्यसपक्षे मत्तकासिनी, अतिशयेनोत्कृष्टा, उत्ताम्यति, उत्तम्यते वा उत्तमा, वरवर्णोऽस्त्यस्या वरवर्णिनी इति चत्वार्यत्यन्तोत्कृष्टस्त्रियाः ॥ ३ । ४ ॥

स. स.

पटरानी<br>अन्यरानी **(कृताभिषेका) महिषी भोगिन्यो (ऽन्या नृपस्त्रियः)।**

कृतेति–कृतोऽभिषेकोऽस्याः कृताभिषेका, मह्यते पूज्यत इति महिषी, " महिषी नृपयोषिति । सैरिभ्यामौषधीभेदे" (इति हेमचन्द्रः) इत्येकं महिष्याः । अन्या नृपस्त्रियः अतिशयितो भोगो यासां ता भोगिन्यः स्युरित्येकं भोगिन्याः ॥ ३ ॥

स. स. स. स.

ब्याही **पत्नी पाणिगृहीती(च)द्वितीया सहधर्मिणी ॥ ५ ॥**

स. स. पु. ब. स.

पतिपुत्रवती **भार्या जाया (थ पुंभूम्नि) दाराः(स्यात्तु)कुटुम्बिनी ।**

स. स. स. स. स.

पतिव्रता **पुरन्ध्री सुचरित्रा (तु) सती साध्वी पतिव्रता ॥ ६ ॥**

पत्नीति–पत्युर्यज्ञे संयोगो ययेति पत्नी दम्पत्योः सहाधिकारात्, पाणिर्गृहीतोऽस्याः पाणिगृहीती, द्वयोःपूरणी द्वितीया, सहधर्मोऽस्त्यस्याः सहधर्मिणी सधर्मिणी वा पत्या सह कर्मस्वधिकारात्, भ्रियते, भूर्य्यते वा भार्य्या, जायतेऽस्यामिति जाया "जायायास्तद्धि जायात्वं यदस्यां जायते पुनरिति"(मनुः)दारयन्ति भ्रातॄन्,कामजं दुःखं दारयन्तीति वा "दाराः" पुंभूम्नि स्यात् टाबन्तोपि "क्रोडा हारा तथा दारा त्रय एते यथाक्रमम् । क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिरिति व्याडिशुभाङ्कौ" इति सप्त विवाहित-

---

१ शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला । भर्तृभक्ता च या नारी सा भवेद्वरवर्णिनी (इति रुद्रः)॥

भार्यायाः । कुटुम्बं पोष्यवर्गमस्त्यस्या इति कुटुम्बिनी, पुरं गेहं धारयति, धरतीति वा पुरन्ध्री, पुरन्ध्रिह्रस्वान्तापि इति द्वे पुत्रादिमत्याः सधवायाः । शोभनं चरित्रमस्याः सुचरित्रा, अस्ति एकस्मिन् पत्याविति सती, साध्नोति पतिकार्यमिति साध्वी, पत्यौ व्रतं नियमोऽस्याः, पतिर्व्रतमस्या वा पतिव्रता पतिशब्दः पतिसेवायां लाक्षणिको ज्ञेय इति चत्वारि पतिव्रतायाः ॥ ५ । ६ ॥

सपत्नी स्वयं पतिकी चाहनेवाली कुलवती

स. स. स. स.
**कृतसपत्निकाऽध्यूढाऽधिविन्ना(थ) स्वयंवरा ।**
स. स. स. स.
**पतिंवरा(च)वर्य्या(च) कुलस्त्री कुलपालिका ॥ ७ ॥**

कृतेति—सपत्न्येव सपत्निका कृता सपत्निका यस्याः कृतसपत्निका, "कृतसापत्निका" इति क्वाचित्कपाठे तु सपत्न्या भावः सापत्नी सैव सापत्निका कृता सापत्निका यस्याः, कृतसापत्नका इति पाठे तु सपत्न्या आगतं सापत्नं तदेव सापत्नकं कृतं सापत्नकमस्याः कृतसापत्नका, अधि उपरि ऊढमुद्वहनमस्याः अध्यूढा, अधि उपरि विन्नं लाभोऽस्याः, अधिका विन्ना लब्धा यस्या वेति अधिविन्ना इति त्रीणि अनेकभार्यस्य प्रथममूढायाः । अथेति—स्वयं वृणीते इति स्वयंवरा, पतिं वृणोतीति पतिंवरा, व्रियतेऽनयेति वर्य्या इति त्रीणि स्वेच्छाकृतपतिवरणायाः । कुलपालिका स्त्री शाकपार्थिवादित्वात् कुलस्त्री, कुलं पालयतीति कुलपालिका इति द्वे व्यभिचारवारणेन कृतकुलरक्षायाः ॥ ७ ॥

कन्या अदृष्ट रजोवती दृष्टरजोवतीयुवती

स. स. स. स. स.
**कन्या कुमारी गौरी ( तु ) नग्निकाऽनागतार्तवा ।**
स. स. स. स.
**( स्या) न्मध्यमा दृष्टरजास्तरुणी युवतिः (समे)॥ ८॥**

केति—कनति, कन्यते वा कन्या, "कन्या एव कन्यका" कम्यते, कुमारयति, कुत्सितो मारोऽस्या वेति कुमारी "कुमारी रामतरुणी नवमाल्योर्नदीभिदि। कन्या पराजिता गौरी जम्बूद्वीपेषु च स्मृता" (इति विश्वः) इति द्वे कुमार्याः। गूयत इति गौरी, "गौरी त्वसंजातरजः कन्याशंकरभार्ययोः । रोचनी रजनी पिङ्गा प्रियङ्गुवसुधासु च । आपगाया विशेषेऽपि यादसांपतियोषिति" (इति मेदिनी) नजते स्म इति नग्ना सैव नग्निका "नग्निका तु कुमार्यां स्यात्पुमान् क्षपणावन्दिनोः" ( इति मेदिनी ) अनागतमार्तवं रजोऽस्या अनागतार्तवा इति त्रीणि गौर्याः । बालयौवनयोर्मध्ये भवा, तयोर्मध्ये मा शोभा यस्यामिति वा मध्यमा, दृष्टं रजो यस्याः, यया वेति दृष्टरजाः स्यादिति द्वे मध्यमायाः । तरतीति तरुणी "तरुणी तलुनीति च" (इति शब्दभेदः) "तलुनः पवने यूनि युवत्यां तलुनी स्मृता" ( इति मेदिनी ) यौतीति युवतिः यौतेः शत्रन्तात् ङीपि 'युवती' उभे समे समानार्थे समानलिङ्गे चेति द्वे युवत्याः ॥ ८ ॥

बहू, सुवासिनी, स. स. स. स. स.
धनादीच्छा- **(समाः) स्नुषा जनी वध्वश्चिरण्टी (तु) सुवासिनी।**
वती मैथुनेच्छा- स. स. स. स.
वती **इच्छावती कामुका (स्याद्) वृषस्यन्ती(तु)कामुकी॥६॥**

सेति–स्नौतीति स्नुषा, जायते वंशोऽस्यामिति जनी "जनी स्नुषावनितयोरिति" (हैमः) वहतीति वधू "वधूः पत्न्यां स्नुषानार्योः स्पृक्कासारिवयोरपि। नवपरिणीतायां चेति" (हैमः) एताः समाः समानार्थाः समानलिङ्गाश्चेति त्रीणि पुत्रभार्यायाः। चिरेणाटति पितृगेहाद्भर्तृगेहमिति चिरण्टी, मुकुटमते तु पितृकुलस्नेहाच्चिरमिटति गच्छतीति चिरिण्टी, हैमे तु चिरिणोतीति "चिरिण्टी, चरिण्टी" च सु अतीव वसति पितृगृहे तच्छीला 'सुवासिनी' स्ववासिनी इति पाठे तु स्वेषु पित्रादिषु वस्तुं शीलमस्याः स्ववासिनी इति द्वे पितृगेहस्थप्राप्तयौवनायाः। इच्छास्त्यस्या इति इच्छावती, कामयत इति कामुका स्यादिति द्वे धनादीच्छावत्याः। आत्मनो वृषं नरं शुक्रलं वेच्छतीति वृषस्यन्ती, कामयत इति कामुकी इति द्वे मैथुनेच्छावत्याः॥ ६॥

स.
संकेतगामिनी **(कान्तार्थिनी तु या याति संकेतं सा) ऽभिसारिका।**
स. स. स. स. स. स.
स्वैरिणी अपुत्रा **पुंश्चली चर्षिणी बन्धक्यसती कुलटेत्वरी॥ १०॥**
स. स. स.
पतिपुत्रवती **स्वैरिणी पांशुला (च) स्यादशिश्वी (शिशुनाविना)।**
स. स. स.
विधवा **अवीरा (निष्पतिसुता) विश्वस्ताविधवे (समे)॥११॥**

कान्तेति–या तु कान्तार्थिनी सती संकेतं याति सा अभिसरतीति अभिसारिका कथ्यत इत्येकं भर्त्रिच्छया रतिस्थानं गच्छन्त्याः। पुंसो भर्त्तुः सकाशाच्चलति पुरुषान्तरं गच्छतीति पुंश्चली, कर्षति मन इति चर्षिणी, धर्षयतीति विग्रहे तु धर्षणी इति वा पाठः, अवश्यं धृष्णोतीति व्युत्पत्त्या तु धर्षिणीत्यपि क्वचित्पाठः, बध्नाति मनोऽत्रेति बन्धकी, सत्याभिन्ना असती, अटतीति अटा कुलस्य अटा शकन्ध्वादित्वात् कुलटा, एति तच्छीला इत्वरी,स्वया इच्छया स्वेन स्वातन्त्र्येण वा ईरितुं शीलमस्याः स्वैरिणी, पांशु पापमस्त्यस्याः, पांशु लाति वा पांशुला इत्यष्टावसत्याः। शिशुना विना न शिशुर्यस्याः "अशिश्वी" स्यादित्येकमपत्यरहितायाः। या निष्पतिसुता सा वीरयति वीरा तस्या भिन्ना 'अवीरा' स्यादित्येकं पतिपुत्ररहितायाः। विफलं श्वसिति स्म विश्वस्ता, विगतो धवोऽस्याः विधवा उभे समे समानार्थे समानलिङ्गे चेति द्वे रण्डायाः॥ १०। ११॥

---

१ "विश्वस्ताविधवे तुल्ये विशस्ता पतिर्ना च सा" (इति वाचस्पतिः)॥

सखी सुहागिन स. स. स. स. स.
बूढ़ी बुद्धिमती **आलिः सखी वयस्या (च) पतिवत्नी सभर्तृका ।**
स. स. स. स. स. स.
महामतिमती **वृद्धा पलिक्नी प्रज्ञा (तु) प्राज्ञी प्राज्ञा (तु) धीमती॥१२॥**

आलिरिति—आलयतीति आलिः, आली च समानं ख्यायते जनैः, सनोति ददाति सुखमिति वा सखी, वयसा तुल्या वयस्या इति त्रीणि सख्याः । पतिरस्त्यस्याः पतिवत्नी, सह भर्त्रास्तीति सभर्तृका इति द्वे जीवद्भर्तृकायाः । वर्धते स्म इति वृद्धा, पलितमस्त्यस्याः पलिक्नी इति द्वे वृद्धायाः । प्रजानातीति प्रज्ञा, प्रज्ञा एव प्राज्ञा इति द्वे स्वयंज्ञात्र्याः । प्रज्ञास्त्यस्याः प्राज्ञा, धीरस्त्यस्या धीमती इति द्वे प्रशस्तबुद्धेः ॥ १२ ॥

स. स.
सजातीय **शूद्री (शूद्रस्य भार्या स्यात्) शूद्रा (तज्जातिरेव च) ।**
विजातीय स. स.
अहिरिन **आभीरी (तु) महाशूद्री (जातिपुंयोगयोः समा) ॥ १३ ॥**

शूद्रीति—शूद्रस्य भार्या शूद्री स्यादित्येकं भिन्नजातीयाया अपि शूद्रभार्यायाः । तज्जातिरेव शूद्रा स्यादित्येकमन्यभार्याया अपि शूद्रजातीयायाः । आभीरस्य भार्या, तज्जातीया वा आभीरी, महाशूद्रस्य भार्या, तज्जातीया वा 'महाशूद्री' एतद्द्वयीजातिपुंयोगयोः समा समानार्था समानलिङ्गा च या तु महती शूद्रा तत्र 'महाशूद्रा' इत्येवेति द्वे आभीर्याः ॥ १३ ॥

स. स. स. स.
बनियाइनि **अर्याणी स्वयमर्या (स्यात्) क्षत्रिया क्षत्रियाण्यपि ।**
क्षत्रियाइनि स. स. स.
पढ़ानेवाली
स्वयंव्याख्यात्री **उपाध्यायाप्युपाध्यायी स्यादाचार्यापि (च स्वतः)॥१४॥**

अर्येति—स्वयं पुंयोगं विना जातिमात्रे अर्यत्वजातिविशिष्टा भार्या अर्याणी, अर्या च स्यादिति द्वे वैश्यजातीयायाः । क्षत्रियत्वजातिविशिष्टा भार्या क्षत्रिया क्षत्रियाणी अपीति द्वे क्षत्रियजातीयायाः । उपेत्याधीयतेऽस्या उपाध्याया, उपाध्यायी अपीति द्वे विद्योपदेशिन्याः । स्वतः आचर्यत इति आचार्या अपि च स्यादित्येकं स्वयं मन्त्रव्याख्यात्र्याः ॥ १४ ॥

आचार्यपत्नी स. स. स.
वैश्यपत्नी **आचार्यानी (तु पुंयोगे) स्यादर्यी क्षत्रियी (तथा) ।**
क्षत्रियपत्नी
पण्डिताइनि स. स. स.
स्त्रीपुंसलक्षणवती **उपाध्यायान्युपाध्यायी पोटा (स्त्रीपुंसलक्षणा) ॥ १५ ॥**

आचेति—पुंयोगे तु आचार्यस्य भार्या इत्यस्मिन्नर्थे तु 'आचार्यानी' स्यादित्येकमाचार्य-

भार्यायाः । अर्यस्य वैश्यस्य भार्या 'अर्यी' स्यादित्येकं वैश्यपत्न्या अन्यजातीयाया अपि । क्षत्रियस्य भार्या 'क्षत्रियी' स्यादित्येकमन्यजातीयाया अपि क्षत्रियपत्न्याः । उपाध्यायस्य भार्या उपाध्यायानी, उपाध्यायी इति द्वे विद्योपदेष्टृभार्यायाः । स्त्रीपुंसलक्षणा स्त्रीपुंसयोः स्तनश्मश्र्वादिचिह्नयुता स्त्री पोटयतीति पोटा स्यादित्येकं स्त्रीपुंसलक्षणावत्याः ॥ १५ ॥

वीर की स्त्री वीर की माता — स. वीरपत्नी स. वीरभार्या स. वीरमाता (तु) स. वीरसूः ।
लड़के की उपजानेवाली — स. जातापत्या स. प्रजाता (च) स. प्रसूता (च) स. प्रसूतिका ॥ १६ ॥

वीरेति—वीरः पतिरस्या वीरपत्नी, वीरस्य भार्या वीरभार्या इति द्वे वीरपत्न्याः । वीरस्य माता वीरमाता, वीरं सूते इति वीरसूरिति द्वे वीरमातुः । जातमपत्यमस्याः जातापत्या, प्रजायते स्म प्रजाता, प्रासविष्ट इति प्रसूता, प्रसूता एव प्रसूतिका इति चत्वारि प्रसूतायाः ॥ १६ ॥

नङ्गी दूती — (स्त्री) स. नग्निका स. कोटवी (स्याद्) स. दूती स. संचारिके (समे) ।
आधी बूढ़ी रांड — स. कात्याय (न्यर्धवृद्धा या कषायवसनाधवा) ॥ १७ ॥

स्त्रीति—नजते स्म नग्ना सैव नग्निका, कोटनं कोटस्तं वातीति कोटवी, कुट्टनं कोट्टस्तं वातीति विग्रहे तु कोट्टवी, कोटं रातीति विग्रहे तु कोटरी, कोटरा वा स्यादिति द्वे नग्नायाः । दवति, दुनोति, दूयते, दूयन्तेऽनया वेति दूतिः दूती वा संचरति, संचारयति वा संचारिका उभे समे समानार्थे समानलिङ्गे च स्यातामिति द्वे दूत्याः । अर्धवृद्धा अर्धजरती कषायवसना कषायाम्बरधारिणी अधवा पतिहीना या स्त्री सा कतस्यापत्यं कात्यायनस्येयं वेति कात्यायनी स्यादित्येकं विशेषणत्रयवत्याः ॥ १७ ॥

लौंडी — स. सैरन्ध्री (परवेश्मस्था स्ववशा शिल्पकारिका) ।
जवान लौंडी — स. असिक्नी (स्यादवृद्धा या प्रेष्यान्तःपुरचारिणी) ॥ १८ ॥

सैरमिति—परस्य वेश्म गृहं तस्मिंस्तिष्ठतीति परवेश्मस्था स्वे आत्मनि वशो यस्याः स्ववशा स्वतन्त्रा शिल्पकारिका कर्षकस्य स्त्रीव या स्त्री सा सीरं धरतीति सीरन्ध्रस्तस्येयं, स्वैरं स्वाच्छन्द्यं धरतीति स्वैरन्ध्रस्तस्येयं वा सैरन्ध्री, स्वैरन्ध्री वा कथ्यते इकारमध्यपाठे तु पृषोदरादित्वात्सैरिन्ध्रीत्यपि इत्येकं विशेषणत्रयवत्याः "लौंडी" इति ख्यातायाः । प्रेष्यते राज्ञीभिरिति प्रेष्या अन्तःपुरं चरितुं शीलमस्याः अन्तःपुरचारिणी अवृद्धा या

१ "चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी । प्रसाधनोपचारज्ञा सैरन्ध्री परिकीर्तिता" (इति कात्यः) ॥

स्त्री सा सिनोति, सीयते स्म सिता शुक्लकेशा तद्भिन्ना असिक्नी, असिता वेति भण्यते इत्येकं कृष्णकेशादित्रिविशेषणायाः ॥ १८ ॥

स. स. स. स.

वेश्या **वारस्त्री गणिका वेश्या रूपाजीवा(ऽथ)साजनैः ।**

स. स. स.

प्रधानवेश्या कुट्टनी **सत्कृता वारमुख्या(स्यात्) कुट्टनी शम्भली(समे)१९॥**

वारेति—वारस्य वृन्दस्य स्त्री वारस्त्री, गणः समूहोऽस्त्यस्याः,गणयतीति वा गणिका, वेशेन नेपथ्येन शोभते, वेशे वेश्यावाटे भवा, वेशः प्रवेशोऽस्त्यस्या वा वेश्या, वेवेष्टीति विग्रहे तु वेष्यापि रूपमाजीवोऽस्या रूपाजीवा इति चत्वारि वेश्यायाः। अथेति—सा जनैः सत्कृता सती वारे वेश्यावृन्दे मुख्या वारमुख्या स्यादित्येकं प्रधानवेश्यायाः। कुट्टयतीति कुट्टनी, शं सुखं भलत इति शम्भली, सम्यक् भलत इति विग्रहे तु संभली दन्त्यादिरपि उभे समे समानार्थे समानलिङ्गे चेति द्वे परनारीं पुंसा संयोजयित्र्याः ॥ १९ ॥

स. स. स. स.

शुभाशुभज्ञा, **विप्रश्निका त्वीक्षणिका दैवज्ञा(थ)रजस्वला ।**

स. स. स. स. स.

रजस्वला **स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि ॥ २० ॥**

स. स. न. न. न.

स्त्रीरज **ऋतुमत्यप्युदक्यापि स्याद्रजः पुष्पमार्तवम् ।**

विप्रेति—विविधः प्रश्नोऽस्त्यस्या विप्रश्निका, शुभाशुभयोरीक्षणमस्त्यस्याः ईक्षणिका, दैवं शुभाशुभं जानातीति दैवज्ञा इति त्रीणि लक्षणादिना शुभाशुभज्ञायाः। अथेति—रजोऽस्त्यस्या रजस्वला, स्त्रीधर्मो रजोऽस्त्यस्याः स्त्रीधर्मिणी, अवति लज्जयेति अवीः "अविं स्त्रीधर्मिणीं विद्यादिति कात्यात्" "अविः" ह्रस्वान्तापि, अत्रेरपत्यमात्रेयी, मलमस्त्यस्या मलिनी, पुष्पं रजोऽस्त्यस्याः पुष्पवती, ऋतुरस्त्यस्या ऋतुमती, उदकमर्हतीति उदक्या इत्यष्टौ रजस्वलायाः। रज्यतेऽनेनेति रजः, पुष्प्यते इति पुष्पम्, ऋतुरेव ऋतोरिदं वा आर्तवमिति त्रीणि स्त्रीपुष्पस्य ॥ २० । १/२ ॥

गर्भिणी की अभिलाषा विना रजकी स. स. स. स.

**श्रद्धालुर्दोहदवती निष्कला विगतार्तवा ॥ २१ ॥**

श्रदिति—श्रद्धत्ते तच्छीला श्रद्धालुः,दोहदं गर्भिण्यभिलाषोऽस्त्यस्या दोहदवती इति द्वे अभिलाषविशेषवत्याः। कलान्निष्कान्ता, निर्गतं कलं शुक्रमस्या वा निष्कला, विगतमार्तवं रजोऽस्या विगतार्तवा इति द्वे रजोहीनायाः ॥ २१ ॥

स. स. स. स.

गर्भिणी **आपन्नसत्त्वा (स्याद्) गुर्विण्यन्तर्वत्नी (च)गर्भिणी ।**

न. न. न.

गणिकासमूह गर्भिणीसमूह युवतीसमूह **( गणिकादेस्तु ) गाणिक्यं गार्भिणं यौवतं(गणे)॥२२॥**

आपेति—आपन्नः सत्त्वो जन्तुरनया, अस्यां वा आपन्नसत्त्वा, गुरुर्दुर्जरोऽलघुर्वा गर्भोऽस्त्यस्याः, गर्वतीति वा गुर्विणी, अन्तरस्ति गर्भोऽस्यामिति अन्तर्वत्नी, गर्भोऽस्त्यस्या गर्भिणी इति चत्वारि गर्भिण्याः। गणिकादेस्तु गणे समूहे गणिकानां समूहो गाणिक्यम्, इत्येकं गणिकासमूहस्य। गर्भिणीनां समूहो गार्भिणम् इत्येकं गर्भिणीसमूहस्य। युवतीनां समूहो यौवतमित्येकं युवतीसमूहस्य॥ २२॥

उद्गरी उद्गरा उद्गरा विशेष

स. स. पु.
**पुनर्भूर्दिधिषू (रूढा द्वि) स्तस्या दिधिषूः (पतिः)।**
पु.
**(सतु द्विजो)ऽग्रे[1] दिधिषूः (सैव यस्य कुटुम्बिनी)॥२३॥**

पुनरिति-द्विः द्वौ वारौ ऊढा विवाहिता या स्त्री सा पुनर्भवतीति पुनर्भूः, दधाति पापम्, धिष्यते, दिधिं धैर्यं स्यतीति वा दिधिषूः मुकुटमते तु दिधिषुर्ह्रस्वान्तमपीति द्वे दिधिष्वाः "उद्गरी" इति ख्यातायाः। तस्या दिधिष्वाः पतिः आत्मनो दिधिषूमिच्छतीति दिधिषूरित्येकं पुनर्भूपतेः। सैव यस्य कुटुम्बिनी पोष्यवर्गपालिका स्यात् स तु द्विजः क्षत्रियादिरपि अग्रे प्रधानं दिधिषूर्यस्येति अग्रेदिधिषूः स्यादित्येकं पुनर्भूप्रधानभार्यस्य॥ २३॥

कन्यापुत्र सुभगासुत परस्त्रीसुत

पु. पु. पु.
**कानीनःकन्यकाजातः(सुतोथ)सुभगासुतः।**
पु. पु.
**सौभागिनेयःस्यात्पारस्त्रैणेय(स्तु परस्त्रियाः)॥ २४॥**

कानीति—कन्याया अपत्यं कानीनः "कानीनः कन्यकासुते। कर्णे व्यासे" (इति हैमः) कन्यकया जातः सुतः कन्यकाजातः इति द्वे अनूढापत्यस्य। अथेति—सुभगायाः सुतः सुभगासुतः, सुभगाया अपत्यं सौभागिनेयः इति द्वे सुभगापत्यस्य। परस्त्रिया अपत्यं पारस्त्रैणेयः स्यादित्येकं परभार्यापुत्रस्य॥ २४॥

बुआ के पुत्र मौसी के पुत्र सौतेली मा के पुत्र

पु. पु.
**पैतृष्वसेयः"स्या"त्पैतृष्वस्रीयश्च(पितृष्वसुः)।**
पु. पु.
**सुतो(मातृष्वसुश्चैवं) वैमात्रेयो विमातृजः॥ २५॥**

पैत्रिति—पितृष्वसुः सुतः पितृष्वसुरपत्यं पैतृष्वसेयः, पैतृष्वस्रीयः, इति द्वे पितृष्वसुरपत्यस्य। एवं मातृष्वसुः सुतः मातृष्वसुरपत्यं मातृष्वसेयः, मातृष्वस्रीयः इति द्वे मातृष्वसुरपत्यस्य। विरुद्धा माता विमाता तस्या अपत्यं वैमात्रेयः, विमातुर्जातो विमातृज इति द्वे अपरमातृसुतस्य॥ २५॥

---

[1] ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा। सा चाग्रे दिधिषूर्ज्ञेया पूर्वा तु दिधिपूर्मता इति मनुः॥

पु. पु. पु.

कुलटापुत्र (अथ)बान्धकिनेयः(स्याद्ब)न्धुलश्चासतीसुतः ।

पु. पु.

भिक्षुकीपुत्र कौलटेयः कौलटेरो(भिक्षुकी तु सती यदि ) ॥ २६ ॥

पु. पु.

तदा कौलटिनेयो(ऽस्याः)कौलटेयो(पि चात्मजः) ।

अथेति—बन्धक्या अपत्यं बान्धकिनेयः, बन्धून्लातीति बन्धुलः, असत्याः सुतः असतीसुतः, कुलटाया अपत्यं कौलटेयः, कौलटेरः इति पञ्च कुलटापुत्रस्य । यदि तु सती भिक्षुकी स्यात्तदा अस्या आत्मजः कुलटाया अपत्यं कौलटिनेयः, कौलटेयोपि स्यादिति द्वे भिक्षार्थं गेहं गेहमटन्त्याः सत्याः पुत्रस्य ॥ २६ । [१] ॥

पु. पु. पु. पु. पु.

पुत्र आत्मजस्तनयःसूनुः सुतः पुत्रः स्त्रियां त्वमी ॥ २७ ॥

स. न. न.

पुत्री (आहु)र्दुहितरं (सर्वे)ऽपत्यं तोकं(तयोःसमे) ।

अपत्य

पु. पु. पु. पु. पु.

औरसपुत्र

बाप (स्वजाते) त्वौरसोरस्यौ तातस्तु जनकः पिता ॥२८॥

आत्मेति—आत्मनो देहाज्जातः आत्मजः, तनोति कुलं, तन्यते वा तनयः, सूयत इति सूनुः, सूयते स्म सुतः, पुनाति, पूयते, पुन्नाम्नो नरकात्त्रायते वा पुत्रः पुन्नाम्नो नरकाद्यस्मादिपतरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा" (इति मनुः९।१३८) इति पञ्च पुत्रस्य । अमी आत्मजाद्याः सर्वे स्त्रियां वर्तमानाः सन्तो दुहितरं वदन्ति यथा। "आत्मजा, तनया, सूनुः, सुता, पुत्री, पुत्रिका, पुत्रका" दोग्धि दहतीति वा दुहिता इति षट् पुत्रिकायाः । न पतन्ति पितरोऽनेनेति अपत्यम्, तौतीति तोकम् उभे एतयोस्तनयदुहित्रोः समे समानलिङ्गे स्यातामिति द्वे पुत्रकन्ययोः । स्वजाते स्वस्मात्स्वपाणिगृहीत्यां जाते उरसा निर्मितः औरसः, उरस्यः, औरस्योपि स्यादिति द्वे स्वस्माज्जातपुत्रस्य। तनोतीति तातः, जनयतीति जनकः, पातीति पिता इति त्रीणि जनकस्य ॥२७।२८॥

स. स. स. स. स. स.

माता, जनयित्री प्रसूर्माता जननी भगिनी स्वसा ।

बहिन,

स. स. स. स.

ननन्द, 

पौत्री ननन्दा(तु स्वसा पत्युः)नप्त्री पौत्री सुतात्मजा ॥२९॥

जनेति—जनयतीति जनयित्री, अन्तर्भावितण्यर्थात् 'जनित्री' प्रसूयत इति प्रसूः- मान्यते, माति गर्भोऽस्यां वेति माता, जनयतीति जननी इति चत्वारि जनयित्र्याः । भगं कल्याणं यत्नो वास्त्यस्या भगिनी,सुष्ठु अस्यति, अस्यते वा स्वसा इति द्वे भगिन्याः ।

---

१ स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धियम् । तमौरस्यं विजानीयात्पुत्रं प्रथमकल्पितमिति मनुः ॥

पत्युः स्वसा ननन्दति—न तुष्यति न नन्दयति भ्रातृजायामिति वा ननन्दा वृद्धौ ननान्दापि "ननन्दा तु स्वसा पत्युर्ननान्दा नन्दना च सा" (इति रभसः) इत्येकं भर्तृभगिन्याः "ननंद" इति ख्यातायाः । न पतन्ति पितरोऽनयेति नप्त्री, पुत्रस्य पुत्र्याश्चापत्यं स्त्री पौत्री, सुतस्य सुतायाश्चात्मजा सुतात्मजा इति त्रीणि नप्त्र्याः ॥ २९ ॥

स.

देवरान जेठानी (भार्यास्तु भ्रातृवर्गस्य) यातरः (स्युः परस्परम्) ।

भौजाई मामी स. स. स. स.

प्रजावती भ्रातृजाया मातुलानी 'तु' मातुली ॥ ३० ॥

भेति—भ्रातृवर्गस्य भार्याः पत्न्यः परस्परं यतन्ते इति यातरः स्युरित्येकं भ्रातृवर्गभार्यायाः । प्रजास्त्यस्या इति प्रजावती, भ्रातुर्जायेति भ्रातृजाया इति द्वे भ्रातृपत्न्याः, मातुलस्य भार्या मातुलानी, मातुली इति द्वे मातुलपत्न्याः ॥ ३० ॥

स. पु.

सासु श्वशुर (पतिपत्न्योः प्रसूः) श्वश्रूः श्वसुर (स्तु पिता तयोः) ।

पु. पु.

चाचा मामा (पितुर्भ्राता) पितृव्यः स्या (न्मातुर्भ्राता) तु मातुलः ३१॥

पतीति—पतिश्च पत्नी च पतिपत्न्यौ तयोः प्रसूः माताश्वश्रूः, पत्युर्माता पत्न्याः श्वश्रूः, पत्न्या माता पत्युः श्वश्रूः श्वशुरस्य भार्या इत्येकं श्वशुरपत्न्याः । तयोः पतिपत्न्योः पिता श्वशुरः 'शु' इति आश्चर्ये पूजायां वा शु, आशु अश्नुते, अश्यते वा श्वशुरः इत्येकं श्वशुरस्य । पितुर्भ्राता पितृव्यः स्यादित्येकं पितृव्यस्य । मातुर्भ्राता मातुलः स्यादित्येकं मातुलस्य " मामा " इति ख्यातस्य ॥ ३१ ॥

पु. पु. पु.

साला देवर श्यालाःस्यु (र्भ्रातरःपत्न्याः) (स्वामिनो) देवृदेवरौ ।

पु. पु. पु. पु.

भानजा दामाद स्वस्रीयो भागिनेयःस्याज्जामाता दुहितुःपतिः ॥ ३२ ॥

श्येति—पत्न्याः भ्रातरः पत्युः श्यालाः स्युः श्यायते, उच्छिष्टमधुपर्कवाची 'श्या' शब्दस्तं लातीति वा श्यालः बहुत्वे श्यालाः स्यामयतीति स्यालो दन्त्यादिरपि बहुत्वे स्यालाः इत्येकं श्यालस्य । स्वामिनः पत्युर्भ्रातरः पत्न्याः देवरः स्युः दीव्यतीति देवा, देवते इति देवरः " देवृदेवरदेशनः" (इति शब्दार्णवः) इति द्वे देवरस्य पत्युः कनिष्ठभ्रातुरिति स्वामी, ज्येष्ठस्तु श्वसुर एवेति सुभूत्यादयः । स्वसुरपत्यं स्वस्रीयः, भगिन्या अपत्यं भागिनेयः स्यादिति द्वे भगिनीसुतस्य । जायां मिमीते, मिनोति वा जामाता, दुहितुः पतिरिति द्वे जामातुः ॥ ३२ ॥

दादा, दादी, परदादा, परदादी, नाना, नानी, परनाना, परनानी, भाई बन्धु

पु. पु. पु.

**पितामहः पितृपिता ( तत्पिता ) प्रपितामहः ।**

पु. पु. पु.

**(मातु) र्मातामहाद्येवं सपिण्डा (स्तु) सनाभयः॥३३॥**

पितेति—पितुः पिता पितामहः, स्त्रियां 'पितामही' पितुः पिता पितृपिता इति द्वे पितामहस्य । तत्पिता तस्य पितामहस्य पिता प्रकर्षेण पितामहः प्रपितामह इत्येकं प्रपितामहस्य । एवं मातुर्मातामहादिः, मातुः पिता मातामहः इत्येकं मातामहस्य । प्रकृष्टो मातामहः प्रमातामहः इत्येकं प्रमातामहस्य । समानः पिण्डो देहो मूलपुरुषो निर्वाप्यो वास्य सह पिण्डेन वर्तते वेति सपिण्डः बहुत्वे तु सपिण्डाः, समानो नाभिर्मूलपुरुषोऽस्येति सनाभिः बहुत्वे तु सनाभयः इति द्वे सपिण्डस्य ॥ ३३ ॥

सगेभाई

पु. पु. पु. पु.

**समानोदर्यसोदर्यसगर्भ्यसहजाः ( समाः ) ।**

सगोत्री भाई

पु. पु. पु. पु. पु. पु.

**सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः (समाः) ॥ ३४ ॥**

समेति—समाने उदरे शयितः समानोदर्यः, सोदर्यः, समाने गर्भे भवः सह तुल्ये गर्भे कुक्षौ भवो वेति सगर्भ्यः, सह तुल्य उदरे जातः सहजः, सह उदरेण वर्तते सोदरः सहोदरश्चात्र "भ्राता तु स्यात्सहोदरः । समानोदर्यसोदर्यसगर्भ्यसहजा अपि । सोदरश्चेति" (नाममाला) एते समाः समानार्थाः समानलिङ्गाश्चेति चत्वारि एकोदरोत्पन्नभ्रातुः । समानं गोत्रं कुलमस्येति सगोत्रः, बध्नातीति बन्धुः स एव बान्धवः, जानातीति ज्ञातिः, बध्नातीति बन्धुः, स्वनतीति स्वः, स्व आत्मीयश्चासौ जनश्चेति स्वजनः एते समाः समानार्थाः समानलिङ्गाश्चेति षट् बान्धवस्य ॥ ३४ ॥

ज्ञातिभाव, बन्धुसमूह, मुख्यपति, जारपति

न. स.

**ज्ञातेयं बन्धुता ( तेषां क्रमाद्भावसमूहयोः ) ।**

पु. पु. पु. पु. पु. पु.

**धवः प्रियः पतिर्भर्ता जारस्तूपपतिः (समौ ) ॥ ३५ ॥**

ज्ञेति—तेषां सगोत्राणां भावसमूहयोः क्रमात् ज्ञातेयम्, बन्धुता स्यात् यथा ज्ञातेर्भावो ज्ञातेयम् इत्येकं ज्ञातिभावस्य । बन्धूनां समूहो बन्धुता इत्येकं बन्धुसमूहस्य । धवति, धूयते वा धवः, प्रीणातीति प्रियः, पातीति पतिः, बिभर्तीति भर्ता इति चत्वारि पतेः । जारयतीति जारः, उपमितः पत्या, उपसृष्टः पतिरनेन वा उपपतिः उभौ समौ समानार्थौ समानलिङ्गौ चेति द्वे जारपतेः ॥ ३५ ॥

कुण्ड, गोल, भतीजा, भाई, बहिन

पु. पु.

**(अमृते जारजः) कुण्डो (मृते भर्तरि) गोलकः ।**

पु. पु. पु. पु.

**भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ भ्रातरा (वुभौ) ॥ ३६॥**

अमृत इति—भर्तरि अमृते जाराज्जातो जारजः पुत्रः कुण्ड्यते कुलमनेनेति कुण्डः "कुण्डमग्न्यालये मानभेदे देवजलाशये । कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान्। पिठरे नना" (इति मेदिनी) सुते पुमान्, सुतायां जातिलक्षणो ङीष् भवत्येवैकं कुण्डस्य । भर्तरि मृते सति जाराज्जातः पुत्रो गुड्यत इति गोलः स एव गोलकः "गोलको विधवापुत्रे जारात्स्यान्मणिके गुडे" (इति मेदिनी) इत्येकं गोलकस्य । भ्रातुरपत्यं भ्रात्रीयः, भ्रातुर्जातो भ्रातृजः इति द्वे भ्रातृपुत्रस्य । भ्राता च भगिनी च भ्रातृभगिन्यौ, उभौ स्वसा च भ्राता च भ्रातरौ स्यातामिति द्वे भ्रातृभगिन्योः ॥ ३६ ॥

पु. पु. पु. पु.

मा बाप **मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।**

पु. पु. पु.

सासु ससुर कन्या पुत्र **श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ(पुत्रश्च दुहिता च)॥ ३७॥**

मातेति—माता च पिता च मातापितरौ, पितरौ, मातरपितरौ, प्रसूश्च जनयिता च प्रसूजनयितारौ इति चत्वारि मातापित्रोः । श्वश्रूश्च श्वशुरश्च श्वश्रूश्वशुरौ, श्वशुरौ, इति द्वे श्वश्रूश्वशुरयोः । पुत्रश्च दुहिता चेत्यत्र भ्रातृपुत्रावित्येकशेषे 'पुत्रौ' इत्येकं कन्यापुत्रयोः ॥ ३७ ॥

पु. १ पु. पु. पु.

स्त्रीपुरुष **दम्पती जम्पती जायापती भार्यापती (च तौ) ।**

थौभरी या जेर, रजबीज का मेल

पु. पु. पु.न. पु.न.

**गर्भाशयो जरायुः 'स्या'दुल्वं(च)कललो(ऽस्त्रियाम्)३८॥**

दमिति—जाया च पतिश्च दम्पती, जम्पती, जायापती, भार्या च पतिश्च भार्यापती तावित्यनेन पुंस्त्वमुक्तम् "शाल्मली मैथिली मैत्री दम्पती जम्पती च सा" (इति वाचस्पतौ) स्त्रीत्वमप्युक्तमिति चत्वारि जायापत्योः। गर्भ आशेतेऽत्रेति गर्भाशयः, जरामेतीति 'जरायुः' स्यादिति द्वे गर्भवेष्टनचर्मणः । उल्लीयते, ओलति, उल्यते, वल्यते वा उल्वम्, कल्यत इति कललः उभौ अस्त्रियां पुंनपुंसके स्यातामिति द्वे शुक्रशोणितसंपातस्य चत्वारि गर्भवेष्टनस्येत्यन्ये ॥ ३८ ॥

पु. पु. पु. पु.

जन्ममास **सूतिमासो वैजननो गर्भो भ्रूण (इमौ समौ) ।**

गर्भ स. पु. पु.न. पु. पु.न.

हिजरा **तृतीयाप्रकृतिः शण्ढः क्लीबः पण्डो नपुंसकम् ॥ ३९ ॥**

---

१ राजदन्तादि ( २ । २ । ३१ ) गणपाठाजायाशब्दस्य दंजभावो वा निपात्यते । दाराः पुंसि बहुत्वे च दं कलत्रे नपुंसकमित्यमरमाला "पत्न्यां जंदमलिङ्गत्वे" इति नामप्रपञ्चः ॥

सूतीति—सूतेः प्रसवस्य मासः सूतिमासः, विजायतेऽस्मिन्निति विजननः स एव, विजननस्यायं वैजननः " नवमे दशमे वापि प्रबलैः सूतिमारुतैः । निस्सार्यते बाण इव जन्तुश्छिद्रेण सत्वरः " इति द्वे जन्ममासस्य । गीर्यते, उद्गीर्यते, शब्द्यते वेति गर्भः, भ्रूणयते इति भ्रूणः " भ्रूणः स्त्रीगर्भडिम्भयोः " ( इति मेदिनी) इति द्वे कुक्षिस्थगर्भस्य । स्त्रीपुंसावपेक्ष्य तृतीया प्रकृतिः तृतीयः प्रकारः असमस्तमेतत् समासे तु तृतीयप्रकृतिः, शाम्यतीति शण्ढः "क्लीवं शण्ढश्च कञ्चुकीति" (तालव्यादौरभसः) शण्ढ षण्ढौ तु सौविदाविति" (हैमः) क्लीवत इति क्लीबः "अस्त्रीनपुंसके क्लीबं वाच्यलिङ्गस्त्वविक्रमे " ( इति रुद्रः ) पण्डते, पणते वा पण्डः " पण्डः षण्ढेऽपि स्त्री स्यात् " ( इति मेदिनी ) न स्त्री पुमानिति नपुंसकम् "स नपुंसको भवेदिति भाष्यात्पुंस्यप्ययमिति पञ्च नपुंसकस्य ॥ ३९ ॥

न. न. न. न. न.

बालपन, युवापन, बूढ़ापन, बूढ़ोंका समूह — **शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं (समे) ।**
न. न. पु. न.
**स्यात्स्थाविरं(तु)वृद्धत्वं वृद्धसंघे (ऽपि)वार्धकम् ॥ ४० ॥**

शिश्विति—शिशोर्भावः शिशुत्वम्, शैशवम्, बालस्य भावो बाल्यमिति त्रीणि शैशवस्य । तरुणस्य भावस्तारुण्यम्, यूनो भावो यौवनम्, उभे समे समानार्थे समानलिङ्गे चेति द्वे यौवनस्य । स्थविरस्य भावः स्थाविरम्, वृद्धस्य भावो वृद्धत्वं स्यादिति द्वे स्थाविरस्य । वृद्धानां संघो वृद्धसंघस्तस्मिन्नपि, वृद्धानां समूहो वार्धकम् " वार्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणीति " ( विश्वः ) स्वार्थे ष्यञि वार्धक्यमपीति द्वे वार्द्धकस्य ॥ ४० ॥

पु.न. स. स.

अति बुढ़ापा, बुढ़ाई, दूध पीनेवाले बच्चे — **पलितं(जरसा शौक्ल्यं केशादौ) विस्रसा जरा ।**
स. स. स. स.
**स्यादुत्तानशया डिम्भा स्तनपा (च)स्तनन्धयी ॥ ४१ ॥**

पलितमिति—केशादौ जरसा जरया शौक्ल्यं शुक्लत्वं फलति, फलनं, पलति स्म, पलनं वेति ' पलितम् ' " पलितं शैलजे तापे केशपाके च कर्दमे " ( इति मेदिनी ) इत्येकं पलितस्य । विस्रस्यतेऽनयेति विस्रसा, जीर्यतेऽनया, जरणं वेति जरा इति द्वे जरायाः । उत्ताना शेत इति उत्तानशया, डिम्भयति, डिम्भते वा डिम्भा, स्तनौ पिबतीति स्तनपा, स्तनं धयतीति स्तनंधयी एषु त्रिलिङ्गता " त्रिषु जरावराः " इति वक्ष्यमाणत्वात् स्त्रीलिङ्गनिर्देशः स्त्रीप्रत्ययप्रदर्शनार्थः इति चत्वार्यतिबालिकायाः ॥ ४१ ॥

पु. पु. पु. पु. पु.

बालक युवापुरुष वृद्धपुरुष

**बाल'स्तु स्या'न्माणवको वयस्थस्तरुणो युवा ।**

पु. पु. पु. पु. पु. पु.

**प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्न'पि' ॥ ४२ ॥**

बाल इति—बलते, बल्यतेवा बालः[1] "बालोऽङ्गेऽश्वेभपुच्छयोः। शिशौ ह्रीवेरकचयोर्बाला तु त्रुटियोषितोः । बाली भूपान्तरे मेधाविति" ( हैमः ) मनोरयं माणवः अल्पो माणवो माणवकः "हारभेदे च माणवको बाले कुपुरुषेऽपि चेति" (रभसः) इति द्वे बालस्य । वयसि यौवनमात्रके तिष्ठतीति वयस्थः, तरतीति तरुणः "तरुणं कुब्जपुष्पेना रुचकेमूनि तु त्रिषु" ( इति विश्वः ) यौतीति युवा इति त्रीणि तरुणस्य । प्रगतं वयोऽस्येति प्रवयाः, तिष्ठतीति स्थविरः, वर्धत स्म इति वृद्धः, जिनाति स्म इति जीनः, जीर्यति स्म इति जीर्णः, जीर्यतीति जरन् इति षट् वृद्धस्य ॥ ४२ ॥

बड़ावूढ़ा जेठाभाई छोटा भाई

**वर्षीयान्दशमी ज्यायान् पूर्वजस्त्वग्रियोऽग्रजः ।**

**जघन्यजे स्युः कनिष्ठयवीयो वरजानुजाः ॥ ४३ ॥**

वरिति—अतिशयेन वृद्ध इति वर्षीयान्, दशमोऽवस्थाविशेषोऽस्यास्तीति दशमी, अतिशयेन वृद्धइति ज्यायान् इति त्रीण्यतिवृद्धस्य । पूर्वस्मिन्काले जातः पूर्वजः, अग्रे जात इति अग्रियः अग्रिमो वा अग्रे जात इति अग्रजः इति त्रीणि प्रथमजातस्य । जघन्यजेऽवरकाले जातो जघन्यजस्तस्मिन्, अतिशयेन युवा इति कनिष्ठः, कनीयानपि, पक्षे यवीयाः, अवरस्मिन् काले जातोऽवरजः, अनुपश्चाज्जातोऽनुजः इति पञ्च पश्चाज्जातस्य ॥ ४३ ॥

पु. पु. पु. पु. पु. पु.

दुर्बल, बलवान्, तुन्दीला,

**अमांसो दुर्बलश्छातो बलवान्मांसलोंसलः ।**

पु. पु. पु. पु. पु.

**तुन्दिलस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचिण्डिलः ॥४४॥**

अमेति—अल्पं मांसमस्येति अमांसः, दुष्टं बलमस्येति दुर्बलः, छायते स्म इति छातः, शायते स्म इति विग्रहे तु शातोपि "दुर्बले निशिते स्यातां शितशाताविमौ त्रिषु" (इति तालव्यादौ रभसः ) इति त्रीणि दुर्बलस्य । बलमस्यास्तीति बलवान्, मांसमस्त्यस्येति मांसलः, अंसो बलमस्यास्तीति अंसलः इति त्रीणि मांसलस्य "बलवान" इति ख्यातस्य । अतिशयितं तुन्दमुदरमस्येति तुन्दिलः, तुन्दिकः, तुन्दी, 'तुन्दिभोपि, बृहत्कुक्षिरस्येति बृहत्कुक्षिः, अतिशयितं पिचिण्डमुदरमस्येति पिचिण्डिलः इति पञ्च स्थूलोदरस्य ॥ ४४ ॥

---

१ "वयःपक्षिणि बाल्यादौ वयो यौवनमात्रके" (इति विश्वः) ॥

पु. पु. पु. पु.

नकचपटा सुन्दर केशवाला सिमटी खालवाला

**अवटीटोऽवनाटश्चावभ्रटो ( नतनासिके ) ।**

पु. पु. पु. पु. पु.

**केशवः केशिकः केशी बलिनो वलिभः(समौ)॥४५॥**

अवेति—नता नासिकाऽस्येति नतनासिकस्तस्मिन्, अवटीटं, अवनाटं, अवभ्रटं च नासिकाया नतमस्त्यस्याः अवटीटा, अवनाटा, अवभ्रटा च नासिकास्त्यस्य पुरुषस्य अवटीटः, अवनाटः, अवभ्रटः इति त्रीणि चिपिटनासस्य । प्रशस्ताः केशा यस्येति केशवः, केशिकः, केशी इति त्रीणि प्रशस्तकेशस्य स्थूलकेशस्य वा । वलिस्त्वक्संकोचोऽस्यास्तीति वलिनः, वलिभः उभौ समाविति द्वे श्लथचर्मवतः ॥ ४५ ॥

पु. पु. पु. पु. पु.

विकल अङ्गवाला वामन, तीखी नाकवाला, नकटा

**विकलाङ्ग(स्तु)पोगण्डः खर्वो ह्रस्व (श्च)वामनः ।**

पु. पु. पु.

**खरणाःस्यात्खरणसः विग्र (स्तु गतनासिकः) ॥ ४६ ॥**

वीति—विकलमङ्गमस्येति विकलाङ्गः, पवते, पुनाति वा पौः, पौगण्ड एकदेशोऽस्य, अपकृष्टं गच्छतीति वा पृषोदरादित्वात् पोगण्डः "पोगण्डो विकलाङ्गकः" ( इति रत्नकोषः ) "पोगण्डो विकलाङ्गः स्यात्" ( इति हलायुधः ) अपोगण्ड इति पाठेतु नञ्समासः "अपोगण्डस्तु शिशुके विकलाङ्गे च भीरुके" ( इति विश्वः ) इति द्वे स्वभावन्यूनाधिकाङ्गस्य । खर्वतीति खर्वः "खर्वं संख्यान्तरे नीचवामनके त्रिषु" ( इति मेदिनी ) ह्रसति, ह्रस्यते वा ह्रस्वः "ह्रस्वो न्यक्खर्वयोस्त्रिषु" (इति मेदिनी) वामयतीति, वामोऽस्यास्तीति वा वामनः स्त्रियान्तु वामनी इति त्रीणि खर्वपुरुषस्य । खरा तीक्ष्णा नासिकास्येति खरणाः पक्षे खरणसः स्यादिति द्वे तीक्ष्णनासिकस्य । विगता नासिकास्येति विग्रः "विखुः, विखूः, विख्यः" विग्रो विखुर्विनासिकः "( इति रभसः ) गता नासिका यस्येति गतनासिकः इति द्वे गतनासिकस्य ॥ ४६ ॥

पु. पु. पु. पु.

खुरसमान नाकवाला ल्यचरा ऊंचीजांघवाला मिलीजांघवाला

**खुरणाः(स्या)त्खुरणसः प्रज्ञुः प्रगतजानुकः ।**

पु. पु. पु. पु.

**ऊर्ध्वज्ञुरूर्ध्वजानुः (स्या) त्संज्ञुः संहतजानुकः ॥४७॥**

खुरेति—खुर इव नासिकाऽस्येति खुरणाः पक्षे खुरणसः स्यादिति द्वे पशुखुरसदृशनासिकस्य । प्रगते विरले जानुनी यस्येति प्रज्ञुः, पक्षे प्रगतजानुकः इति द्वे वातादिना विरलजानुकस्य । ऊर्ध्वे जानुनी यस्येति ऊर्ध्वज्ञुः, पक्षे ऊर्ध्वजानुः स्यादिति द्वे ऊर्ध्वजानुकस्य । संहते जानुनी यस्येति संज्ञुः, पक्षे संहतजानुकः स्यादिति द्वे संलग्नजानुकस्य ॥ ४७ ॥

बहिरा, कुबड़ा, ठूंठा छोटी देह वाला, पँगुला, मुण्डा

पु. पु. पु. पु. पु. पु.
**स्यादेडे बधिरः कुब्जे गडुलः कुकरे कुणिः।**
पु. पु. पु. पु. पु. पु.
**पृश्निरल्पतनौ श्रोणः पङ्गौ मुण्डस्तु मुण्डिते ॥ ४८ ॥**

स्यादिति—आ इलति, आसर्वतः ईड्यते, ईट्टे वेति एडस्तस्मिन्, बध्नाति कर्णम्, बध्यते वा बधिरः इति द्वे श्रवणशक्तिहीनस्य। कौ उब्जति, कुईषदुब्जमार्जवमस्येति शकन्ध्वादित्वात् कुब्जस्तस्मिन्, गडति, गड्यते वा गडुः सोऽस्त्यस्येति गडुलः इति द्वे कुब्जस्य। कुत्सितः करोऽस्येति कुकरस्तस्मिन्, कुणति, कुणयते वा कुणिः, कूणिरपि इति द्वे रोगादिना वक्रकरस्य। अल्पा तनुरस्येति अल्पतनुस्तस्मिन्, स्पृशति, स्पृश्यते, पृच्छति, पृच्छ्यते, पर्शति, पृष्यते वा पृश्निरिति द्वे अल्पशरीरस्य। पनते इति पङ्गुस्तस्मिन्, श्रोणतीति श्रोणः इति द्वे जङ्घाहीनस्य "पँगुला" इति ख्यातस्य। मुण्ड्यते स्म मुण्डितस्तस्मिन्, मुण्डवत इति मुण्डः इति द्वे खण्डितकेशस्य ॥ ४८ ॥

कञ्जा, लँगड़ा, लहसन, तिल

पु. पु. पु. पु.
**वलिरः केकरे खोडे खञ्ज(स्त्रिषु जरावराः)।**
पु. पु. पु. पु. पु.
**जडुलःकालकःपिप्लुस्तिलकस्तिलकालकः ॥ ४९ ॥**

वेति—के मूर्ध्नि कर्तुं शीलमस्येति केकरस्तस्मिन्, वलते इति वलिरः इति द्वे केकरस्य "कञ्जा" इति ख्यातस्य। खोडतीति खोडस्तस्मिन्, खञ्जतीति खञ्जः "अथ खञ्जके खोडखोराविति" (रभसः) इति द्वे खञ्जस्य "लँगड़ा" इति ख्यातस्य। जराशब्दादवरा अर्वाचीना उत्तानशयाद्यास्त्रिषु त्रिलिङ्ग्यां भवन्तीति। जलतीति जडुलः "मुकुटमते तु जटुलः" कालयतीति कालकः, अपिप्लवते इति पिप्लुरिति त्रीणि जडुलस्य "लसुन" इति ख्यातस्य। तिल इव तिलकः, तिलइव कालकः तिलकालकः इति द्वे देहस्थतिलस्य ॥ ४९ ॥

आरोग्य, उपाय, औषध

न. न. स. स.
**अनामयं (स्यादा)ऽऽरोग्यं चिकित्सा रुक्प्रतिक्रिया।**
न. न. न. पु. पु.
**भेषजौषधभैषज्यान्यगदो जायु(रित्यपि) ॥ ५० ॥**

अनेति—आमयस्याभावोऽनामयम्, न रोगोऽस्येत्यरोगस्तस्य भाव आरोग्यमिति द्वे अरोगस्य। चिकित्सनं चिकित्सा, रुजः प्रतिक्रिया रुक्प्रतिक्रिया इति द्वे रोगनिवारणस्य। भेषयतीति भेषो रोगस्तं जयति, भेषं जायति, भिषज इदं वेति भेषजम्,

---

१ "निसर्गतः कूणिपङ्गुरोगण्डाः" इति नाममालायामार्यपाठादीर्घोकारवानपि ॥

२ "मुण्डो मुण्डितशीर्षयोः। राहौ देशान्तरे" (इति हेमः) ॥

ओषधेरिदमौषधम् , भेषजमेव भैषज्यम् , न गदोऽस्मादित्यगदः, जयति रोगानिति जायुरिति पञ्च औषधस्य ॥ ५० ॥

स. स. पु. पु. पु. पु. पु.

रोग (स्त्री)रुग्रुजा चोपतापरोगव्याधिगदामयाः ।

क्षयी पु. पु. पु. पु. पु.

पीनस क्षयःशोषश्च यक्ष्मा(च) प्रतिश्यायस्तु पीनसः ॥ ५१ ॥

स्त्रीति—रुजति देहम् , रोजनं वेति रुक् रोजनं रुजा च स्त्री स्यात् " रुजा-त्वामयभङ्गयोरिति" (हैमः) उपतापयति, उपतपनं वेति उपतापः "उपतापो गदे तापे" ( इति हैमः ) रुजति, रोजनं वेति रोगः, विविधा आधयोऽस्मात्, व्याधानं वेति व्याधिः, गदतीति गदः " गदः कृष्णानुजे रोगे गदा प्रहरणान्तरे " ( इति हैमः ) अमनयामस्तं यान्त्यनेन, आमयनं वेति आमयः इति सप्त रोगस्य । क्षयति नाशयति देहमिति क्षयः " क्षयो गेहे कल्पान्तेऽपचये रुजि " ( इति हैमः ) शोषयतीति शोषः, " शोषः शोषणयक्ष्मणोरिति" (हैमः) यक्षयते, यक्ष्यते वा यक्ष्मा इति त्रीणि राजय-क्ष्मणः । प्रतिक्षणं श्यायते इति प्रतिश्यायः, प्रतिश्यायतेऽनयेति व्युत्पत्त्या प्रतिश्या अपि, पीनं स्यति, सायति वा पीनसः " आपीनसः प्रतिश्या स्यादिति " (रभसः) इति द्वे नासारोगस्य ॥ ५१ ॥

स. न. पु. पु. पु.

छींक, खांसी (स्त्री) क्षुत् क्षुतं क्षवः(पुंसि)कास(स्तु) क्षवथुः(पुमान्) ।

पु. पु. पु. पु. पु.

सूजन, ब्यंवाई शोफ (स्तु) श्वयथुःशोथःपादस्फोटो विपादिका॥५२॥

स्त्रीति—क्षवणं क्षुत्, स्त्री स्यात् , क्षवणं क्षुतम्, क्षवणं क्षवः पुंसि स्यादिति त्रीणि छिक्कायाः । कासतेऽनेनेति कासः काशत इति काशस्तालव्यान्तोपि " काशस्तृणे रोगभेदे " ( इति हैमः ) "वाराणस्यां भवेत्काशी क्षवथौ ना तृणेऽस्त्रियामिति ताल-व्यान्ते रभसाच्च तालव्यान्तोपि " क्षवणं, क्षौत्यनेन वा क्षवथुः पुमान्स्यात् " क्षवथुः कासे छिक्कायामिति " (हेमचन्द्रः) शवतीति शोफः, श्वयत्यनेनेति श्वयथुः, शवतीति शोथः इति त्रीणि शोथस्य । स्फुटनं स्फोटः, पादस्य स्फोटः, पादौ स्फोटयतीति वा पादस्फोटः, विपद्यतेऽनयेति विपादिका इति द्वे पादस्फोटनरोगस्य ॥ ५२ ॥

न. न.[१] न. स. स.

गद्दुनां ओदी किलाससिध्मे कच्छ्वां (तु) पाम पामा विचर्चिका ।

खाज,खुजली, स. स. स. पु. पु.स.न.

फोड़ा,फुड़िया कण्डूः खर्जूश्च कण्डूया विस्फोटः पिटक (स्त्रिषु)॥५३॥

---

१ "सिध्मं किलासं नपुंसकं सिध्म " इति हैमनाममालायाम् ॥

कीति—किलतीति किलम्, अस्यत्यसम् किलं च तदसं च, केलनं किला तामस्यति, किलेन श्वैत्येन असतीति वा किलासम्, सिध्यतीति सिध्मं सिध्म इति वा इति द्वे किलासस्य "सेहुवां" इति ख्यातस्य। कषतीति कच्छूस्तस्याम्, पायत्यङ्गम्, पायते देहोऽस्मात्, पिबति देहमिति वा पाम स्त्रियान्तु "मनः" इति न ङीप् पामा द्वित्वे पामानौ बहुत्वे पामानः "डाबुभाभ्यामिति" डापि पामा द्वित्वे पामे बहुत्वे पामाः रमावत्, विचर्च्यते इति विचर्चिका इति चत्वारि 'खसु' रोगस्य। कण्डूयनं कण्डूः, खर्जनं खर्जूः, कण्डूयनं कण्डूया इति त्रीणि गात्रविघर्षणस्य। विस्फोटतीति विस्फोटः, पेटतीति पिटकः त्रिषु त्रिलिङ्गयां स्यात् "पिटकः स्यात्तु विस्फोटे मञ्जूषायामपीष्यते" ( इति हेमचन्द्रः ) स्त्रियां पिटका क्षिपकादित्वान्नेत्त्वम् "विस्फोटा त्रिटिका स्त्रियामित्यमरमालायां" वकारादिरपि इति द्वे विस्फोटस्य "फोड़ा" इति ख्यातस्य ॥ ५३ ॥

| | |
|---|---|
| घाव नसूर<br>मण्डलाकार | पु.न. न. न. पु.<br>**व्रणो (ऽस्त्रिया) ईर्ममरुः (क्लीबे) नाडीव्रणः (पुमान्)।** |
| कोढ़ सफेदकोढ़<br>बवासीर | पु. न. न. न. न. न.<br>**कोठो मण्डलकं कुष्ठश्वित्रे दुर्नामकार्शसी ॥ ५४ ॥** |

व्रेति—व्रणति, व्रणयतीति वा व्रणः अस्त्रियां पुंनपुंसके स्यात् ईरयति सुखमिति ईर्मम्, इयर्त्तीति अरुः क्लीबे नपुंसके स्यादिति त्रीणि व्रणस्य। नाड्यां व्रणः नाडीव्रणः पुमान्स्यादित्येकं सदागलतोव्रणस्य। कुणठतीति कोठः, मण्डलमिव मण्डलकमिति द्वे मण्डलाकारकुष्ठस्य। कुष्णात्यङ्गम्, कुत्सितं तिष्ठतीति वा कुष्ठम् "कुष्ठं भेषजरोगयोरिति" ( हैमः ) श्वेतत इति श्वित्रमिति द्वे श्वेतकुष्ठस्य। दुष्टं नामास्येति दुर्नामकम्, ऋच्छतीति अर्शः इति द्वे गुदरोगस्य ॥ ५४ ॥

| | |
|---|---|
| कब्जियत<br>संग्रहणी | पु. पु. स. स.<br>**आनाहस्तु विबन्धः (स्याद्) ग्रहणी रुक् प्रवाहिका।** |
| वमन | स. स. पु.<br>**प्रच्छर्दिका वमिश्च (स्त्री) "पुमांस्तु" वमथुः (समाः) ५५॥** |

आनेति—आनह्यतेऽनेन, आनहनं वा आनाहः, विबध्यतेऽनेन विबन्धनं वा विबन्धः स्यादिति द्वे आध्मानस्य। गृह्णाति जठराग्निमिति ग्रहणी, प्रवहति बहु स्रवति गुदमस्याम्, प्रवहणं वेति प्रवाहिका रुक्रोगः प्रवाहिकारोगो ग्रहणी स्यादिति द्वे संग्रहणीरोगस्य। प्रच्छर्दनं प्रच्छर्दिका, वमनं वमिः स्त्री स्यात्, वमनं वमथुः पुमान्स्यात् "वमथुः पुंसि वमने गजस्य करशीकरे" ( इति मेदिनी ) एते समाः समानार्थाः ज्ञातव्याः इति त्रीणि वमनस्य ॥ ५५ ॥

१ स. पु. पु. पु.
रोगविशेष (व्याधिभेदा) विद्रधिः(स्त्री) ज्वरमेहभगन्दराः ।
स. न.
पथरी अश्मरी मूत्रकृच्छ्रं 'स्यात्' (पूर्वे शुक्रावधेस्त्रिषु) ॥५६॥

व्येति—"व्याधिभेदाः रोगप्रभेदाः कथ्यन्ते"—वेदनं,विद्रातीति वा विद्रं तद्धीयतेऽस्याम्, विद्रस्य धानं वेति विद्रधिः स्त्री स्यादित्येकं विद्रधेः "व्यरथिया"इति ख्यातस्य । ज्वरति, ज्वरणं वेति ज्वरः इत्येकं ज्वरस्य । मेहति, मेहनं वेति मेहः इत्येकं प्रमेहस्य । भगं दारयतीति भगन्दरः इत्येकं भगन्दरस्य । अश्मानं राति,अश्माकारं शुक्रं राति ददातीति वा अश्मरी, मूत्रे कृच्छ्रमत्रेति मूत्रकृच्छ्रं स्यादिति द्वे अश्मर्याः "पथरी" इति ख्यातायाः । इतः परं शुक्रावधेः पूर्वे पठिताः शब्दाः त्रिषु त्रिलिङ्गयां भवन्ति वाच्यलिङ्गा इति यावत्॥५६॥

पु. पु. पु. पु. पु.
वैद्य=हकीम, डाक्टर रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके ।
पु.स.न. पु.स.न. पु.स.न. पु.स.न.
नीरोगी वार्तो निरामयःकल्य उल्लाघो(निर्गतोगदात्) ॥ ५७॥

रोगेति—रोगं हरति तच्छीलो रोगहारी, अगदमरोगं जन्तुं करोतीति अगदंकारः, भिषज्यतीति भिषक्, विद्यामधीते वैद्यः, चिकित्सतीति चिकित्सकः इति पञ्च वैद्यस्य । वृत्तिरस्यास्तीति वार्तः । निष्क्रान्त आमयादिति निरामयः, " निरामयस्तु पुंसि स्यादिडिके त्रिषु नीरुजे" (इति विश्वमेदिन्यौ) कलासु साधुरिति कल्यः"कल्यं प्रभाते मधुनि सज्जे दक्षे निरामये । कल्या कल्याणवाचि स्यादिति" (हैमः) उल्लाघते स्म, उल्लाघ्यते स्म इति वा उल्लाघः गदाद्रोगान्निर्गतो निर्मुक्तः उल्लाघः कथ्यते " उल्लाघो निपुणे हृष्टे शुचिनीरोगयोरपि" (इति हैमः) इति चत्वारि रोगनिर्मुक्तस्य ॥ ५७ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
रोगक्षीण रोगी ग्लानग्लास्नू आमयावी विकृतो व्याधितोऽपटुः ।
पु.स.नं. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
खाजवाला आतुरोऽभ्यमितोऽभ्यान्तः(समौ)पामनकच्छुरौ॥५८॥

ग्लेति—ग्लायति स्म इति ग्लानः, ग्लानशीलो ग्लास्नुरिति द्वे रोगेण क्षीणस्य । आमयोऽस्यास्तीति आमयावी, विक्रियते स्म इति विकृतः,व्याधिः संजातोऽस्येति व्याधितः "पटुर्दक्षे च नीरोगे" (इति मेदिनी) पटोरन्यः अपटुः, आतोतोर्तीति आतुरः, अभ्यम्यते स्म, अभ्यमति स्म इति वा अभ्यमितः इडभावे अभ्यान्तः इति सप्त रोगिणः ।

---

१ त्वग्रक्तमांसमेदांसि प्रदूष्यास्थिसमाश्रिताः । दोषाः शोथं शनैर्घोरं जनयन्त्युच्छ्रिताभृशम्॥१॥महाशूलं रुजावन्तं वृत्तं वाप्यथवायतम् । स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्च सः ॥२॥ इति भावप्रकाशात्पुंलिङ्गोपि ॥

पामास्यास्तीति पामनः, कच्छूरस्यास्तीति कच्छुरः उभौ समौ स्यातामिति द्वे विचर्चिकायुक्तस्य ॥ ५८ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.
दादवाला बवासीरवाला **दद्रुणो दद्रुरोगी 'स्याद' र्शोरोगयुतोऽर्शसः ।**
पु.स.न. पु.स.न. पु.स.न. पु.स.न.
वातरोगी अतीसारवाला **वातकी वातरोगी 'स्या' त्सातिसारोऽतिसारकी ॥ ५६ ॥**

देति—दृणाति दद्रूः, दद्रूरस्यास्तीति दद्रुणः, दद्रूश्चासौ रोगश्चेति दद्रुरोगः स एवास्यास्तीति दद्रुरोगी स्यादिति द्वे दद्रुरोगिणः । अर्शोरोगेण युतः अर्शोरोगयुतः, अर्शांसि सन्त्यस्येति अर्शसः इति द्वे मूलव्याधिमतः । वातोऽतिशयितोऽस्येति वातकी, वातरोगोऽस्यास्तीति वातरोगी स्यादिति द्वे वातरोगिणः । सहातिसारेण वर्तते सातिसारः, अतिसारोऽस्यास्तीति अतिसारकी इति द्वे अतिसारवतः ॥ ५६ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.
चिपड़ा चौंधरा चिपड़ी आँखें **(स्युः) क्लिन्नाक्षे चुल्लचिल्लपिल्लाः (क्लिन्नेऽक्षिणि चाप्यमी)**
पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
पागल कफी **उन्मत्त उन्मादवति श्लेष्मलः श्लेष्मणः कफी ॥ ६० ॥**

स्युरिति—क्लिन्ने अक्षिणी यस्येति क्लिन्नाक्षस्तस्मिन्, चुल्लचिल्लपिल्लाः स्युः क्लिन्ने चक्षुषी अस्येति चुल्लः, चिल्लः, पिल्लः "अमी चुल्लाद्याः क्लिन्ने अक्षिणि च स्युरिति त्रीणि क्लिन्ननेत्रतद्वतोः । उन्माद्यति स्म इत्युन्मत्तः, उन्मदनमुन्मादः सोऽस्यास्तीति उन्मादवान् इति द्वे वातकृतचित्तविभ्रमस्य अथवा उन्मादवति पुरुषे "उन्मत्तः" स्यात् "उन्मत्तो मुचुकुन्दे स्याद्धत्तूरोन्मादयुक्तयोरिति" (हैमः) इत्येकमुन्मत्तस्य । श्लेष्माऽस्यास्तीति श्लेष्मलः, पामादित्वान् श्लेष्मणः, कफोऽस्यास्तीति कफी इति त्रीणि कफवतः ॥ ६० ॥

पु.स.न. पु.स.न. पु.स.न.
कुबड़ा तुन्दीला **न्युब्जो (भुग्नेरुजा) "वृद्धनाभौ" तुण्डिभतुण्डिलौ ।**
सेहुवांवाला पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
अन्धा मूर्च्छित **किलासी सिध्मलोऽन्धोऽदृङ्मूर्च्छाले मूर्त्तमूर्च्छितौ ॥६१॥**

न्युबिति—रुजा रोगेण भुग्ने पुरुषे न्युब्जनं न्युब्जः स्यात् "न्युब्जः कुब्जे कुशस्रुचि । अधोमुखेऽपि च न्युब्जं कर्मरङ्गतरोः फले" (इति हैमः) इत्येकं न्युब्जस्य । वृद्धा उन्नता नाभिरस्येति वृद्धनाभिस्तस्मिन्, तुण्ड्यत इति तुण्डिः स एवास्यास्तीति तुण्डिभः, तुण्डिरस्यास्तीति तुण्डिलः, तुन्दिल इति पाठे तु तुन्दोऽस्यास्तीति "तुन्दिलः" इति त्रीणि उन्नतनाभियुक्तपुरुषस्य । किलासमस्यास्तीति किलासी, सिध्ममस्यास्तीति सिध्मलः इति द्वे सिध्मलस्य । अन्धयतीति अन्धः, न दृगस्येति अदृक्

इति द्वे अचक्षुषः । मूर्च्छास्यास्तीति मूर्च्छालः, मूर्च्छति स्म इति मूर्तः, मूर्च्छा संजातास्येति मूर्च्छितः, मूर्तमूर्च्छितौ मूर्च्छाले स्यातामिति त्रीणि मूर्च्छावतः ॥ ६१ ॥

न. न. न. न. न. न.
बीज पित्त **शुक्रं तेजोरेतसी (च) बीजवीर्येन्द्रियाणि (च)।**
पु. न. पु. पु. म. स.
कफ खाल **मायुः पित्तं कफः श्लेष्मा (स्त्रियां तु) त्वगसृग्धरा ॥६२॥**

शुक्रमिति—शोचत्यनेन, शोचयति वा शुक्रम्, "शुक्रं तु रेतोक्षिरुजोरिति" (हेमः) तेजयतीति तेजः, रिणातीति रेतः, विशेषेण ईजते, बीजयति, बीज्यतेऽनेनेति वा बीजम्" "बीजन्तु रेतसि । स्यादाधाने च तत्त्वे च हेतावङ्कुरकारणे" (इति हैमः) वीरेऽक्लीबे साधुः वीरयति, वीर्यतेऽनेनेति वा वीर्यम् "वीर्यं तेजःप्रभावयोः शुक्रे शक्तौ चेति" (हैमः) इन्द्रस्यात्मनो लिङ्गमिन्द्रियमिति षट् बीजस्य । मिनोति देहे ऊष्माणमिति मायुः, अपि दीयते स्म इति पित्तमिति द्वे पित्तस्य । केन जलेन फलति, के शिरसि फणति, फक्कति वा कफः, श्लिष्यतीति श्लेष्मा इति द्वे कफस्य । त्वचति, तनोति वा त्वक् स्त्रियां स्यात् "त्वक् स्त्री चर्मणि वल्के च गुडत्वचि विशेषतः" (इति मेदिनी) पुंसीति घे त्वच इत्यदन्तोऽपि "त्वक्त्वचचोचशब्दाः स्युर्वल्के चर्मणि पत्रके" (इति धरणिः) असृजो रक्तस्य धरा "असृग्धरा" इत्येके इति द्वे त्वचायाः ॥ ६२ ॥

न. न. न. न. न. न.
मांस **पिशितं तरसं मांसं पललं क्रव्यमाऽऽमिषम् ।**
न. न. पु.स.न.
सूखामांस **उत्तप्तं शुष्कमांसं (स्यात्तद्वल्लूरं त्रिलिङ्गकम्) ॥ ६३ ॥**

पिशीति—पिंशति, पिश्यते स्म वा पिशितम्, "पिशितं मांसं पिशिता मांसिका" (इति हैमः) तरोबलमस्त्यस्मिन्निति तरसम्, मन्यत इति मांसम्, पलति, पल्यतेऽनेन वेति पललम् "पललं तिलमिश्रे स्यात्पललं पिशितेऽपि च" (इति शाश्वतः) क्लवते, क्लव्यतेऽस्माद्वेति क्रव्यम्, आमिषतीत्यामिषमिति षट् मांसस्य । उत्तप्यते स्म इति उत्तप्तम्, शुष्कं चतन्मांसं चेति शुष्कमांसम्, वल्लते, वल्ल्यते वा वल्लूरं तत् त्रिलिङ्गकं स्यादिति त्रीणि शुष्कमांसस्य ॥ ६३ ॥

न. न. न. न. न. न. न.
रुधिर **रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम् ।**
कलेजा पु.स.न. न. न. न. न. स. स.
हृदय चर्बी **बुक्काग्रमांसं हृदयं हृन्मेद (स्तु) वपा वसा ॥ ६४ ॥**

रुधीति— रुणद्धि, रुध्यते वा रुधिरं तस्मिन्, अस्यते, न भृजति वा असृग्,

१ "बुक्का हृद् हृदयं बुक्का पुरसं च तदाग्रमामिति (हेमनाममालायाम्) ॥

रोहति, रुह्यते वा लोहितम् "लोहितं रक्तगोशीर्षे कुङ्कुमे रक्तचन्दने । पुमान्नदान्तरे भौमे वर्णे च त्रिषु तद्वति" (इति मेदिनी) अस्यत इत्यस्रम् "अस्रः कोणे कचे पुंसि क्लीवमस्रुणि शोणिते" (इति मेदिनी) रज्यते स्म इति रक्तम्, क्षताज्जातं क्षतजम्, शोणति स्म शोणितमिति सप्त रुधिरस्य । वुक्कयते स्वादुत्वान्मृग्यते इति वुक्का, "शोणितेषु स्त्रियां वृक्कावुक्कासुरसमद्वयोः" (इति रभसः) अग्रं मुख्यं मांसमित्यग्रमांसमिति द्वे हृदयान्तर्गतमांसविशेषस्य । हरति, ह्रियते वा हृदयम्, हृत् "पद्मकोशप्रतीकाशं रुचिरं चाप्यधोमुखम् । हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्" इति द्वे हृदयकमलस्य । चत्वारि पर्याया इत्येके । मेद्यतीति मेदः, वपति, उप्यते वा वपा "वपा विवरमेदसोरिति" (हैमः) वसति, वस्ते वा वसा इति त्रीणि शुद्धमांसस्नेहस्य ॥ ६४ ॥

| | |
|---|---|
| गले की पिछली नस, | (पश्चाद्ग्रीवा शिरा) मन्या नाडी (तु) धमनिः(शिरा) । |
| | स. स. स. स. |
| नाड़ी, फेफड़ा मैल | तिलकं क्लोम मस्तिष्कं गोर्दं किट्टं मलो(ऽस्त्रियाम्)॥६५॥ |
| | न. न. न. न. न. पु.न. |

पेति—पश्चाद्भागे ग्रीवायाः शिरा, मन्यतेऽनयेति मन्या कथ्यत इत्येकं ग्रीवायाः पश्चाद्भागस्थितशिरायाः । नाडयति, नाड्यते वा नाडी "नाडी नाले व्रणान्तरे । शिरायां गण्डदूर्वायां चर्यायां कुहनस्य च । तथा षट् क्षणकालेपीति" (मेदिनी) धमतीति धमनिः, धमनीति वा "धमनी तु शिराहट्टविलासिन्योश्च योषितीति" (मेदिनी) सिनोतीति सिरा, शिनोतीति विग्रहे तु तालव्यादिरपि "शिरो ना पिप्पलीमूले स्याद्धमन्यां च योषितीति" तालव्यादौ रभसादिति त्रीणि धमन्याः । तेलति, तिलतीति वा तिलं तदेव तिलकम्, "तिलको द्रुमरोगाश्वभेदेषु तिलकालके । क्लीवं सौवर्चलक्लोम्नोर्न स्त्रियान्तु विशेषके" (इति विश्वमेदिन्यौ) क्लवत इति क्लोम इति द्वे उदर्यजलाशयस्य । मस्यते, मसनं वेति मस्तिस्तां मस्कते पृषोदरादित्वात् मस्तिष्कम्, गुरते, गूर्यते वा गोर्दमिति द्वे मस्तकभवस्नेहस्य । केटति स्म किट्टम्, मलत इति मलः अस्त्रियां पुंनपुंसके स्यादिति द्वे मलस्य ॥ ६५ ॥

| | |
|---|---|
| | न. पु. न. पु. पु. स. |
| आंत पिलही | अन्त्रं पुरीतद् गुल्म (स्तु) प्लीहा पुंस्य (थ) वस्नसा । |
| नस कलेजा | स. न. न. |
| या जिगर | स्नायुः (स्त्रियां) कालखण्डयकृती (तु समे इमे) ॥ ६६ ॥ |

अन्त्रमिति—अमत्यनेनेति अन्त्रम्, पुरीं शरीरं तनोतीति पुरीतत् "पुरीतदस्त्रियामिति" वाचस्पतिरिति द्वे अन्त्रस्य "आंत" इति ख्यातस्य । गुड्यतेऽस्मादिति गुल्मः, प्लेहत इति प्लीहा पुंसि स्यात् मुकुटमते तु प्लीहा टावन्ता चेति द्वे कुक्षिवामपार्श्वे

---

१ वसा शुक्रमसृग्मज्जा कर्णविण्मूत्रविट्नखाः । श्लेष्माश्रुदूषिकाः स्वेदा द्वादशैते नृणां मलाः ॥

मासखण्डस्य । अथेति—वस्ते शरीरमिति वस्नं चर्म तत्स्यतीति वस्नसा, स्नातीति स्नायुः उभे स्त्रियां स्याताम् इति द्वे वायुवाहिनीनाड्याः । कालं च तत्खण्डम् च कालखण्डम्, यमनं यः संयमस्तं करोतीति यकृत् इमे समे समानार्थे समानलिङ्गे चेति द्वे कुक्षेर्दक्षिणभागस्थमांसखण्डस्य "कलेजा" इति ख्यातस्य ॥ ६६ ॥

स. स. स. स.
लार, कीचड़ **सृणिका स्यन्दिनी लाला दूषिका (नेत्रयोर्मलम्) ।**
न. पु. पु. पु. न. न.
मूत **मूत्रं प्रस्रावउच्चारावस्करौ शमलं शकृत् ॥ ६७ ॥**
न. न. पु.न. स. स.
विष्ठा **गूथं पुरीषं वर्चस्क (मस्त्री) विष्ठाविषे (स्त्रियौ) ।**

सृणीति—सरतीति सृणिः सैव सृणिका "सृणीका दीर्घमध्यापि" अवश्यं स्यन्दते इति स्यन्दिनी, लालयत इति लाला इति त्रीणि लालायाः "लार" इति ख्यातायाः । नेत्रयोर्मलं दूषयति दूषिरेवेति वा दूषिका "पिञ्चोडकं नेत्रमलं दूषी च दूषिकापि चेति" (वाचस्पतिः) 'दूषीका' अपीत्येकं नेत्रमलस्य । मूत्र्यत इति मूत्रम्, प्रस्रयत इति प्रस्रावः इति द्वे मूत्रस्य । उच्चार्यते त्यज्यते इति उच्चारः, अवकीर्यते अधः क्षिप्यत इति अवस्करः, शाम्यति, शम्यते वा शमलम्, शक्नोति, शक्यते वा निःसर्तुं निःसारयितुं वेति शकृत्, गूयत इति गूथम्, पिपर्ति शरीरमिति पुरीषम्, वर्चते, वर्च्यते वा वर्चः, कुत्सितं वर्चो वर्चस्कम् अस्त्री पुंनपुंसकं स्यात्, वितिष्ठते उदरे अनया पुरुषो वेति विष्ठा, वेवेष्टीति विट् तालव्यान्तपाठे तु विशतीति विट् उभे स्त्रियौ स्याताम् इति नव पुरीषस्य ॥ ६७ । $\frac{1}{2}$ ॥

कपाल हड्डी पु. पु.न. न. न. न.
**(स्या)त्कर्परःकपालो(ऽस्त्री)कीकसंकुल्यमस्थि(च) ६८॥**
पांजर रीढ़ पु स.
**(स्याच्छरीरास्थ्नि) कङ्कालः (पृष्ठास्थ्नि तु) कशेरुका ।**
खोपड़ी पशुड़ी स. स.
**(शिरोस्थनि)करोटिः(स्त्री)पार्श्वास्थनि(तु)पर्शुका॥६९॥**

स्यादिति—कल्पत इति कर्परः, "कर्परस्तु कटाहे स्याच्छस्त्रभेदकपालयोः"(इति हैमः) कं पालयति, कम्पते वा कपालः अस्त्री पुंनपुंसकं स्यात् "कपालोऽस्त्री शिरोऽस्थ्नि स्याद् घटादेः सकले व्रजे" (इति मेदिनी) इति द्वे शिरोस्थिखण्डस्य । की इति कसतीति कीकसम् "कीकसः कृमिजातौ स्यात्पुंसि कुल्ये नपुंसकमिति" (मेदिनी) कुले भवं, साधु, कोलति, कुल्यते वेति कुल्यम् "कुल्यः कुलोद्भवे मान्ये कुलस्यातिहितेपि च । कुल्यं स्यात्कीकसेऽप्यष्टद्रोणी शूर्पामिषेषु च । पयः प्रणालीसरितोः कुल्या जीवन्तिकौषधावि ति" (विश्वः) अस्यत इत्यस्थि इति त्रीणि कीकसस्य । कं शीर्षं कालयति,

कङ्कते वेति कङ्कालः शरीरास्थ्नि स्यादित्येकं त्वङ्मांसरहितशरीरास्थ्नः । कं वायुं शृणाति, केन शीर्यते वा कशेरुः सैव कशेरुका अथवा कशति, कश्यते वा कशेरुः सैव 'कशेरुका' पृष्ठास्थ्नि स्यादित्येकं पृष्ठवंशस्य । कं वायुं रोटते, केन रुट्यते, कं रोटयतीति वा करोटिः, करोटी वा शिरोऽस्थनि स्त्री स्यादित्येकं शिरोऽस्थ्नः । स्पृशति, स्पृश्यते वा पर्शुः, सैव पर्शुका अथवा परं शृणातीति पर्शुः, पर्शुरिव पर्शुका पार्श्वास्थनि स्यात् अप्राणिजातेश्चेत्यूङि पर्शूरपीत्येकं पार्श्वास्थ्नः ॥ ६८ । ६९ ॥

न. पु. पु. पु. न.

अङ्ग **अङ्गं प्रतीकोऽवयवोऽपघनो (ऽथ) कलेवरम् ।**

न. न. न. न. न. पु.

**गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ७० ॥**

पु. पु.न. स. स. स.

देह **कायो देहः ( क्लीबपुंसोः) स्त्रियां मूर्तिस्तनुस्तनूः ।**

अङ्गमिति—अङ्गतीति अङ्गम्, "अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति । क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके "( इति मेदिनी ) प्रत्येति, प्रतीयते वा प्रतीकः " प्रतीकोऽवयवेऽपि स्यादप्रतिकूलविलोमयोः" (इति मेदिनी) अवयौतीति अवयवः, अपहन्यते इत्यपघनः इति चत्वार्यङ्गस्य । अथेति—कले शुक्रे मधुराव्यक्तध्वनौ वा वरं श्रेष्ठमिति कलेवरम्, एति, गच्छति, गाते वेति गात्रम्, वपति, उप्यते वा वपुः "वपुः क्लीबं तनौ शस्तावपीति" (मेदिनी ) संहन्ति, संहन्यतेऽस्मिन्भूतानीति वा संहननम्, शृणाति, शीर्यते वा शरीरम्, वर्षति, वृष्यते वा वर्ष्म, विविधं सुखादि गृह्णाति, विविधैर्व्याधिभिर्गृह्यते वेति विग्रहः, " विग्रहः कायविस्तारविभागे ना रणोऽस्त्रियामिति" (मेदिनी ) चीयतेऽन्नादिभिरिति कायः, " कायः कदेवते मूर्तौ संघे लक्ष्यस्वभावयोः । मनुष्यतीर्थे कायं स्यादिति" ( मेदिनी) दिह्यत इति देहः क्लीबपुंसोः स्यात्, मूर्च्छतीति मूर्तिः "मूर्तिः पुनः प्रतिमायां कायकाठिन्ययोरपीति " ( हेमः ) तनोति, तन्यते कर्मपाशोऽनयेति वा तनुः " तनुषे तनुपेकमिति वासवदत्तायमकात्स्रान्तापि, "अप्राणिजातेरित्यूङि औणादिके कृषिचमितनीत्यूप्रत्यये वा तनूरेते त्रयः स्त्रियां स्युरिति द्वादश गात्रस्य ॥ ७० । $\frac{1}{2}$ ॥

न. न. पु. पु. पु. पु.न.

पादाग्र पैर **पादाग्रं प्रपदं पादः पदंह्रिश्चरणो (ऽस्त्रियाम्) ॥ ७१ ॥**

स. पु.न. पु.

गण्ठा एँड़ी **(तद्ग्रन्थी) घुटिकेगुल्फौ (पुमा)न्पार्ष्णि(स्तयोरधः) ।**

स. स. पु.न. पु.न. पु.न.

जंघा जानु **जङ्घा (तु) प्रसृता जानूरुपर्वाष्ठीव (दस्त्रियाम् )॥ ७२ ॥**

पेति—पादस्याग्रं पादाग्रं, प्रकृष्टं प्रारब्धं प्रगतं वा पदम् प्रपदमिति द्वे पादाग्रस्य ।

पद्यत इति पादः " पादो बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे चेति " ( मेदिनी ) पद्यते पद्, स्वामिमते तु पद्यतेऽनेनेति पदोऽदन्तः, अंहतेऽनेनेति अंह्रिः, अङ्घतेऽनेनेति विग्रहे तु अङ्घ्रिरपि, चरत्यनेनेति चरणः अस्त्रियां पुंनपुंसके स्यात् "चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च। भ्रमणे भक्षणे चापि नपुंसक उदाहृतः" ( इति मेदिनी ) इति चत्वारि चरणस्य । तस्य पादस्य ग्रन्थी, घोटतेऽनयेति घुटिका द्वित्वे घुटिके, गलति, गल्यते वा गुल्फः द्वित्वे गुल्फाविति द्वे पादग्रन्थ्योः । तयोर्गुल्फयोरधः पृष्यतेऽनेनेति पार्ष्णिः पुमान्स्यात् " पार्ष्णिः स्त्रीपुंसयोः पादमूले स्याद्ध्वजिनी कटादिति " (रन्तिदेवः) इत्येकं पादपश्चाद्भागस्य । जायते, जङ्घन्यते, कुटिलं गच्छतीति वा जङ्घा, प्रसरतिस्म, प्रसियते स्म, प्रकृष्टं सृतं गमनमनयेति वा प्रसृता इति द्वे जङ्घायाः । जायत इति जानु, ऊर्णूयते इत्यूरुस्तस्य पर्व, ऊरुपर्व, अतिशयितमस्थि यस्मिन्निति अष्ठीवत् एते त्रयोऽस्त्रियां पुंनपुंसके स्युरिति त्रीणि जान्वोः ॥ ७१।७२॥

न. पु. पु.
निरोह जांघ का **सक्थि (क्लीबे पुमा) नूरु (स्तत्सन्धिः पुंसि) वङ्क्षणः ।**
जोड़ गुदा न. न. पु. पु.स.
मूत्राशय **गुदं त्वपानं पायु (र्ना) बस्ति (र्नाभेरधोद्वयोः) ॥ ७३ ॥**

सेति—सजति, सज्यते वा सक्थि क्लीबे नपुंसके स्यात्, ऊर्णूयते इति ऊरुः पुमान्स्यादिति द्वे जानूपरिभागस्य । तस्य ऊरोः सन्धिः वाङ्क्षति, वाङ्क्ष्यते, वङ्क्षते, वक्षतीति वा वङ्क्षणः पुंसि स्यादित्येकमूरुसन्धेः । गोदते, गवते, गूयतेऽनेनेति वा गुदम्, अपानित्यनेनेत्यपानम्, पाति मल नःसारणेन—पिबति वस्त्यौषधमिति वा पायुः ना पुमान्स्यादिति त्रीणि विष्ठानिर्गममार्गस्य । नाभेरधोभागो वसति मूत्रमत्र वस्ते, वस्यते वेति बस्तिः द्वयोः स्त्रीपुंसयोः स्यात् " नाभेरधो मूत्रपुटं बस्तिर्मूत्राशयोपि चेति " ( हैमीयनाममालायाम् ) इत्येकं नाभ्यधोभागस्य ॥ ७३ ॥

कमर स्त्री के पु. न. स. स. स.
कमरका पिछला **कटो(ना)श्रोणिफलकं कटिः श्रोणिः ककुद्मती ।**
भाग कमर का पु. न.
अगिला भाग **(पश्चा)न्नितम्बः(स्त्रीकट्याः)(क्लीबेतु)जघनं(पुरः) ७४ ॥**

केति—कट्यत इति कटः ना पुमान्स्यात्, श्रोणेः फलकमिव चर्माकारत्वादिति श्रोणिफलकम्, कट्यत इति कटिः, श्रोणतीति श्रोणिः, ककुद् वृषांस इव मांसपिण्डः ककुत्तोतिशयितोऽस्यामिति ककुद्मती यवादित्वान्नत्वं नेति पञ्च कट्याः । स्त्रीकट्याः पश्चाद्भागो नितम्यति, नितम्बते, निभृतं तम्यते कामुकैरिति वा नितम्बः कथ्यते इत्येकं स्त्रीकट्याः पश्चाद्भागस्य । स्त्रीकट्याः पुरोभागः हन्यते इति जघनं क्लीबे स्यादित्येकं स्त्रीकट्या अग्रभागस्य ॥ ७४ ॥

न.
नितम्बाँके गड्ढे (कूपकौ तु नितम्बस्थौ द्वयहीने) ककुन्दरे ।
स. पु. पु.
कूले भग, लिङ्ग (स्त्रियां)स्फिचौ कटिप्रोथावुपस्थो(वक्ष्यमाणयोः) ७५॥

कूपेति—नितम्बे तिष्ठतो नितम्बस्थौ, कूपाविव कूपकौ, कुं भूमिं दारयतः कुन्दरे कुत्सिते कुन्दरे ककुन्दरे कुकुन्दरे वा द्वयेन हीने स्यातामित्येकं पृष्ठवंशाद्धोगर्तयोः । स्फायेते, स्फेटयतो वेति स्फिचौ स्त्रियां स्याताम्, प्रोथतः प्रोथौ कट्याः प्रोथौ मांसपिण्डाविति कटिप्रोथौ "कटी" प्रोथाविति नामद्वयं वा " स्त्रियां स्फिचौ कटिप्रोथौ कटीप्रोथौ च पूलकाविति" (रभसः) "प्रोथोऽश्वघोणाध्वगयोः कट्यामिति" (हैमः) इति द्वे कटिप्रोथयोः । वक्ष्येते वक्ष्यमाणौ तयोः भगशिश्नयोः उपतिष्ठते इति उपस्थः " उपस्थः शेफसि क्रोडे तथा मदनमन्दिरे" (इति विश्वमेदिन्यौ) इत्येकं भगलिङ्गयोः ॥ ७५ ॥

न. पु.स. पु. न. न. न.
भग-लिङ्ग भगं योनि (द्वयोः) शिश्नो मेढ्रं मेहनशेफसी ।
पु. पु. पु. न.
वृषण, मेरुदण्ड मुष्कोऽण्डकोशो वृषणः (पृष्ठवंशाधरे) त्रिकम् ॥ ७६ ॥

भेति—भज्यत इति भगम् " भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु । माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षे च ना रवाविति" (विश्वमेदिन्यौ) यौतीति योनिः द्वयोः स्त्रीपुंसयोः स्यात् " योनिः स्त्रीपुंसयोश्च स्यादाकारे स्मरमन्दिरे " ( इति मेदिनी ) " योनिः कारणे भगतोययोरिति " (हैमः) इति द्वे भगस्य । शशति, शिनोति वा शिश्नम्, मेहत्यनेनेति मेढ्रम् मिह्यतेऽनेनेति मेहनम्, शेते रेतः पाते इति शेफः, शेपश्च सान्तोऽदन्तश्चेति चत्वारि लिङ्गस्य । मुष्णाति रेत इति मुष्कः, अण्डयोः कोशः अण्डकोशः अण्डकोषश्च, वर्षतीति वृषणः इति त्रीणि वृषणस्य । पृष्ठवंशस्य अधरे अधोभागे त्रयाणां संघस्त्रिकमित्येकं पृष्ठवंशाधरस्य "मेरुदण्ड" इति ख्यातस्य ॥ ७६ ॥

१पु. पु. पु.न. न. न. पु. पु.
पेट कुच पिचण्डकुक्षी जठरोदरतुन्दं स्तनौ कुचौ ।
पु.न. न. स.न. न.
कुचाग्र गोद चूचुकं (तु) कुचाग्रं स्या(न्न ना)क्रोडं भुजान्तरम् ॥७७॥

पीति—अपि चमत्यन्नम्, अपि चण्ड्यतेऽनेन हेतुनेति वा पिचण्डः पृषोदरादित्वात्पिचिण्डोपि, कुष्यते निष्कास्यते मलोऽस्मादिति कुक्षिः, जायते जन्तुर्मलो वात्रेति 'जठरः' "जठरो न स्त्रियां कुक्षौ बद्धकक्खटयोस्त्रिष्विति" ( मेदिनी ) उदणाति, उदच्छति, उद्दियर्ति वा उदरम् "उदरं तुन्दरणयोरिति" (हैमः) तुदति, तर्णोत्यन्नमिति वा तुन्दमिति

१ वष्टि भागुरिरित्यल्लोपः ॥

पश्चोदरस्य । स्तनति कथयति यौवनोदयम्, स्तन्यते शब्द्यते कामुकैरिति वा स्तनः द्वित्वे स्तनौ, कुचतीति कुचः द्वित्वे कुचाविति द्वे स्तनयोः । चूष्यते, 'चूचु' इत्यव्यक्तं कायतीति वा चूचकम्, कुचस्य कुचयोर्वाग्रं कुचाग्रं स्यादिति द्वे कुचाग्रस्य । क्रुड्यते इति क्रोडं ना पुमान् न स्यात् "क्रोडः कोले शनौ क्रोडमङ्के" ( इति हैमः ) भुजयोरन्तरं भुजान्तरमिति द्वे अङ्कस्य ॥ ७७ ॥

न. न. न. न.

छाती पीठ **उरो वत्सं (च) वक्ष (श्च) पृष्ठन्तु (चरमं तनोः) ।**

पु. न. पु.न. न.

कन्ध हँसुली **स्कन्धो भुजशिरोंऽसो(ऽस्त्री)(सन्धी तस्यैव) जत्रुणी ७८॥**

उरविति—इयर्तीति उरः "उरो वक्षसि मुख्ये स्यादिति" (हैमः) वदति सामर्थ्यमिति वत्सः, "वत्सः पुत्रादिवर्षयोः। तर्णके नोरसि क्लीबमिति" (मेदिनी) "पुत्रादौ तर्णके वर्षे वत्सो वत्सं तु वक्षसीति" ( रुद्रः ) वक्षतीति वक्षः इति त्रीणि वक्षसः । पश्चापि वत्सस्येत्यन्ये । तनोर्देहस्य चरमं पृष्यत इति पृष्ठं स्यात् "पृष्ठं चरममात्रे स्याद्देहस्यावयवान्तरे" ( इति मेदिनी ) इत्येकं देहपश्चाद्भागस्य । स्कन्द्यते इति स्कन्धः "स्कन्धः प्रकाण्डे कायांसे विज्ञानादिषु पञ्चसु। नृपे समूहे व्यूहे चेति" (हैमः) भुजस्य शिरो भुजशिरः, अस्यते समाहन्यते भारादिना, अमति, अम्यते वा अंसः "अंसः स्कन्धे विभागे स्यादिति" (हैमः) अस्त्री पुंनपुंसकं स्यादिति त्रीणि स्कन्धस्य। तस्यैव सन्धी जायते बाहुरस्मादिति जत्रु द्वित्वे जत्रुणी इत्येकमंसकक्षयोः सन्धेः॥७८॥

न. पु. पु.न.

कांख बगल **बाहुमूले (उभौ)कक्षौ पार्श्व (मस्त्री तयोरधः) ।**

पु.न. पु.न. पु.न.

शरीर का मध्य **मध्यमं चावलग्नं (च) मध्यो(ऽस्त्री)द्वौपरौ द्वयोः॥७९॥**

वेति—उभौ कक्षौ बाहुमूले स्याताम्—बाह्वोर्मूलं बाहुमूलम्, कष्यत इति कक्षः, द्वित्वे कक्षौ "कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे । स्पर्द्धापदेनादोर्मूलकच्छवीरुत्तृणेषु चेति" (मेदिनी) इति द्वे बाहुमूलस्य । तयोः कक्षयोरधोभागः स्पृश्यते, पर्शूनां समूहो वेति पार्श्वम् अस्त्री पुंनपुंसकं स्यात् "पार्श्वमन्तिके । कक्षाधोऽवयवे चक्रोपान्ते पर्शुगणेऽपि चेति" (हैमः) इत्येकं कक्षयोरधोभागस्य । मध्ये भवं मध्यमम् "मध्यमो मध्यजेऽन्यवत् । पुमान्स्वरे मध्यदेशेऽप्यवलग्ने तु न स्त्रियाम् । स्त्रियां दृष्टरजो नार्यां कर्णिकाङ्गुलिभेदयोः । त्र्यक्षरच्छन्दसि तथेति" ( मेदिनी ) लग्यते स्म, लज्जते स्म वा लग्नम्, अवकृष्टं, अवसन्नं वा लग्नम् अवलग्नम् "अवलग्नोऽस्त्रियां मध्ये त्रिषु स्याल्लग्नमात्रके" (इति मेदिनी) मध्ये शरीरस्य भवं, मां शोभां धत्ते वेति मध्यः अस्त्री पुंनपुंसकं स्यात् "मध्यं विलग्ने न स्त्री स्यान्न्याय्येऽन्तरेऽधमे त्रिष्विति" ( मेदिनी ) इति त्रीणि देहमध्यस्य । द्वावित्याद्यग्रेऽन्वेति ॥ ७९ ॥

पु.स. पु.स. पु. पु. पु.स. पु.स.
भुजा कोहनी **भुजबाहू प्रवेष्टो दोः(स्यात्)कफोणिस्तु कूर्परः ।**
ऊपरला भाग पु. पु.
निचला भाग **(अस्योपरि)प्रगण्डः(स्यात्)प्रकोष्ठ(स्तस्यचाप्यधः)८०॥**

द्वाविति–परौ द्वौ भुजबाहू द्वयोः स्त्रीपुंसयोः स्याताम्–भुजति, भुज्यतेऽनेनेति भुजः, टापि भुजा, "अथोभुजा द्वयोर्बाहौ करे" (इति मेदिनी) बाधते, वहत्यनेनेति वा बाहुः बाहत इति व्युत्पत्त्या तु बाहोपि "बाहोश्वभुजयोः पुमानिति" (दामोदरः) "बाहोऽबाहुरिति स्मृतः" (इति देशीकोषः) बाहोऽश्वमानयोः, वृषे बाहा तु बाहौ स्यादिति" (हैमः) प्रवेष्टत इति प्रवेष्टः, दाम्यत्यनेन दोः भागुरिमते टाप् दोषा "दोर्दोषा च भुजो बाहूः पाणिर्हस्तः करस्तथा" (इति धनञ्जयः) इति चत्वारि भुजस्य। कं सुखं स्फोरयति, केन सुखेन फणति, स्फुरति वा कफोणिः, कुरतीति कूः, पिपर्तीति परः कूर् चासौ परश्च, कुरा शब्देन परः, कुप्यत्यनेनेति वा कूर्परः इति द्वे कूर्परस्य "कोहनी" इति ख्यातस्य। अस्य कूर्परस्य उपरि ऊर्ध्वभागे प्रत्यासन्नो गण्डः कपोलोऽस्येति 'प्रगण्डः' स्यादित्येकं प्रगण्डस्य। तस्य प्रगण्डस्याप्यधोभागः प्रकुष्यतेऽनेन कुसूलादन्नम्, प्रविष्टः कोष्ठं कुसूलमिति वा प्रकोष्ठः स्यादित्येकं कफोणरधोमणिबन्धपर्यन्तस्य ॥ ८० ॥

पु.
पहुँचा बाहिरी **(मणिबन्धादाकनिष्ठं करस्य) करभो (बहिः)।**
भाग हाथ पु. पु. पु. स. स.
तर्जनी **पञ्चशाखः शयःपाणिस्तर्जनी (स्यात्)प्रदेशिनी॥८१॥**

मणीति–मणिर्बध्यतेऽत्रेति मणिबन्धः "मणिबन्धः पाणिमूलमिति" (हलायुधः) तस्मादाकनिष्ठं कनिष्ठापर्यन्तं करस्य बहिर्भागः कृणाति, किरत्यनेन, करे भातीति वा करभः स्यादित्येकं करबहिर्भागस्य। पञ्चशाखा इवाङ्गुलयोऽस्येति पञ्चशाखः, शेते सर्वमस्मिन्निति शयः, शाम्यति कण्डुर्मलो वानेनेति "शमः" इति पाठान्तरम्। पणायन्त्यनेनेति पाणिः "पाणिः शमः शयो हस्तः" (इत्यमरमाला) इति त्रीणि हस्तस्य। तर्ज्यतेऽनयेति तर्जनी, प्रदिश्यतेऽनयेति प्रदेशनी, प्रदेशोऽस्त्यस्या इति विग्रहे तु प्रदेशिनीति पाठान्तरमिति द्वे अङ्गुष्ठसमीपाङ्गुल्याः ॥ ८१ ॥

स. स. पु. स.
अँगुलियां अँ- **अङ्गुल्यः करशाखाः (स्युः) पुंस्यङ्गुष्ठः प्रदेशिनी।**
गूठा समस्त स. स. स.
अँगुली **मध्यमानामिका(चापि)कनिष्ठा(चेति ताःक्रमात्)॥८२॥**

---

"अङ्गुलस्तु यवो मतः" (इत्यमरदत्तः) "अङ्गुलो ना यवमानमिति" (वाचस्पतिः) तत्राङ्गेर्बाहुलकादुलः ॥

अङ्गुलिरिति–अङ्गति, अङ्गुं पाणिपादमवयवं लातीति वा अङ्गुलिः ङीपि अङ्गुली "अङ्गुलिः करशाखायां कर्णिकायां गजस्य चेति" (हेमविश्वप्रकाशौ) अङ्गुरिः, अङ्गुरी बहुत्वे अङ्गुलयः, करस्य शाखा इव करशाखाः स्युरिति द्वे अङ्गुलीनाम् । अङ्गुशब्दोऽङ्गवाची अङ्गौ पाणौ तिष्ठतीति अङ्गुष्ठः पुंसि स्यात्, प्रदेशोऽस्त्यस्याः प्रदेशिनी उक्तापि यथासंख्यबोधाय पुनरुक्ता, मध्ये भवा मध्यमा, न नामग्रहणयोग्यमस्याः ब्रह्मणोऽनया शिरश्छेदनादत एवास्यां पवित्रीक्रियते, अनामा सैव अनामिका, अतिशयेनाल्पा कनिष्ठा "कनिष्ठोऽल्पेऽनुजे यूनि कनिष्ठा त्वन्तिमाङ्गुलाविति" (हैमः)इति ताः पञ्चाङ्गुलयः क्रमाज्ज्ञातव्याः इत्येकैकं क्रमेण समस्ताङ्गुलीनाम् ॥८२॥

पु. पु. पु.न. पु.न.

नख=नह तीन **पुनर्भवः कररुहो नखो(ऽस्त्री)नखरो(ऽस्त्रियाम्) ।**

पु. पु. पु.

प्रमाण विशेष **प्रादेशतालगोकर्णा (स्तर्जन्यादियुते तते) ॥ ८३ ॥**

पुनरिति–पुनर्भवतीति पुनर्भवः, "पुनर्नौतीति पुनर्नवः" इति वा पाठः । करे रोहतीति कररुहः, नखमस्येति नखोऽस्त्री पुंनपुंसकं स्यात् "नखी स्त्रीपुंसयोः शुक्तौ नखरे पुंनपुंसकमिति" (मेदिनी) न खनति, खन्यते वा नखं रातीति वा नखरोऽस्त्रियां स्यात् "नखरं त्रिषु" (इत्यमरमाला) इति चत्वारि नखस्य । तर्जन्यादियुते तते विस्तृते प्रादेशतालगोकर्णाः क्रमात्स्युः प्रदिश्यत इति प्रदेशः "प्रदेशो देशमात्रे स्यात्तर्जन्यङ्गुष्ठसंमिते" (इति मेदिनी) इत्येकं तर्जनीसमेतविततांङ्गुष्ठस्य । तलत्यत्रेति तालः "तालःकरतलेऽङ्गुष्ठमध्यमाभ्यां च सम्मिते । गीतकालक्रियामाने करस्फाले द्रुमान्तरे" (इति मेदिनी) इत्येकं मध्यमासहितविततांङ्गुष्ठस्य । गोःकर्ण इव गोकर्णः "गोकर्णोऽश्वतरे सर्पे सारङ्गे प्रमथान्तरे । अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधाविति" (विश्वः) इत्येकमनामिकासहितविततांङ्गुष्ठस्य ॥ ८३ ॥

पु.स. पु.

बित्ता **(अङ्गुष्ठे सकनिष्ठे स्या) द्वितस्तिर्द्वादशाङ्गुलः ।**

चटकना **(पाणौ) चपेटप्रतलप्रहस्ता (विस्तृताङ्गुलौ) ॥ ८४ ॥**

अङ्गुष्ठ इति–सकनिष्ठे कनिष्ठया समेते विततेऽङ्गुष्ठे वितस्यतीति वितस्तिः, द्वादश अङ्गुलयः प्रमाणमस्येति द्वादशाङ्गुलः स्यादिति द्वे वितस्तेः "बिलस्त" इति ख्यातस्य । विस्तृता अङ्गुलयो यस्मिंस्तस्मिन् पाणौ हस्ते चपेटप्रतलप्रहस्ताः स्युः चपतीति चपः, एटतीति इटः चपश्चासाविटश्च चपेटः, चर्पटोप्यत्र "चर्पटः स्फारविपुले चपेटे पर्पटेऽपि चेति" (विश्वमेदिन्यौ) प्रतलतीति प्रतलः "प्रतलं पातालभेदे ततांङ्गुलिके पुमानिति" (मेदिनी) तलमप्यत्र "तलं स्वरूपाधरयोः स्त्रङ्गमुष्टि-

चपेटयोरिति" (विश्वः) "तलश्चपेटे तालद्राविति" (हेमः) पुंसि तालमहीरुहे चपेटे चेति मेदिनीतश्च पुंस्ययम्, प्रसृतो हस्तः प्रहस्तः इति त्रीणि विस्तृताङ्गुलिहस्तस्य ॥८४॥

दुहत्था चटकना (द्वौ संहतौ) सिंहतलः (प्रतलौ वामदक्षिणौ) ।

पसर अँजुरी (पाणिर्निकुब्जः) प्रसृति (स्तौ युता) वञ्जलिः (पुमान्) ८५॥

द्वाविति—द्वौ वामदक्षिणौ प्रतलौ संहतौ मिलितौ सिंहस्येव तलमत्रेति सिंहतलः, संहतं संघट्टं लातीति विग्रहे तु संहतलो वेत्येकं वामदक्षिणयोः पाणयोर्मिलितयोर्विस्तृताङ्गुल्योः । नितरां कुब्जाप्रकृतिरस्येति निकुब्जः, पाणिर्हस्तः प्रसरत्यनेन प्रसृतिः, प्रकृष्टं सृतमस्येति विग्रहे तु प्रसृतो वा "प्रसृतः सप्रसारे स्याद्विनीते वेगिते त्रिषु । अर्धाञ्जलौ तु पुंलिङ्गो जङ्घायां प्रसृता मता" (इति मेदिनी) इत्येकं प्रसृतस्य "पसर" इति ख्यातस्य । तौ प्रसृतौ युतौ मिलितौ अज्यतेऽनेनेत्यञ्जलिः पुमान्स्यात् "अञ्जलिस्तु पुमान् हस्तसंपुटे कुडवेऽपि च" (इति मेदिनी) इत्येकमञ्जलेः ॥ ८५ ॥

हाथ मुण्डाहाथ कनिष्ठारहित (प्रकोष्ठे विस्तृतकरे) हस्तो (मुष्ट्या तु बद्धया) ।

मूठीवाला हाथ सरत्निः स्यादरत्नि (स्तु निष्कनिष्ठेन मुष्टिना) ॥ ८६ ॥

प्रेति—विस्तृतकरे विस्तृतः करो यस्य यस्मिन्वा तस्मिन्प्रकोष्ठे कूर्पराधः प्रदेशे हसति, हस्यतेऽनेनेति वा हस्तः स्यात् "चतुर्विंशत्यङ्गुलो हस्तः" सकलसिद्धान्तोक्तत्वादित्येकं हस्तस्य । बध्यते स्म, बद्धा तया मुष्णाति, मुष्यतेऽनयेति वा मुष्टिस्तयोपलक्षितः सहरत्निः ऋच्छति, अर्यतेऽनेनेति वा रत्निः स्यात् "रत्न्यरत्नी स्त्रियौ बद्धमुष्टिततांगुली" (इत्यमरमाला) इत्येकं रत्नेः । निर्गता कनिष्ठा यस्मात्तेन मुष्टिनोपलक्षितो हस्तः रत्निभिन्नोऽरत्निः स्यात् "नारत्निः कफोणौ हस्ते सप्रकोष्ठे चाङ्गुलाविति" (रुद्रः) इत्येकमरत्नेः ॥८६॥

फैला हाथ　व्यामो (बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्) ।

ऊपर उठा हाथ (ऊर्ध्वविस्तृतदोःपाणि नृमाने) पौरुषं (त्रिषु) ॥ ८७ ॥

व्येति—तिर्यक् ततयोः सकरयोः बाह्वोरन्तरं मध्यं विशेषेण अम्यते ऽनेनेति व्यामः कथ्यत इत्येकं स्वे स्वे पार्श्वे प्रसारितयोर्बाह्वोर्मध्यस्य । दोषौ च पाणी चैषां समाहारो दोःपाणि ऊर्ध्वं विस्तृतं दोःपाणि येन सः ताहशो ना पुरुषस्तस्य यन्मानं परिमाणं तेन पुंसा वा यन्मीयते तत्र पुरुषः प्रमाणमस्येति पौरुषं त्रिषु त्रिलिङ्ग्यां स्यात् यथा पौरुषो नदः, पौरुषी नदी, पौरुषं सरः "पौरुषं पुरुषस्य स्याद्भावे कर्मणि तेजसि । ऊर्ध्वविस्तृतदोःपाणि नृमाने त्वभिधेयवत्" (इति मेदिनी) इत्येकं पौरुषस्य ॥८७॥

कण्ठ ग्रीवा तीन रेखावाली — पु.स.न. कण्ठो, पु. गलो (थ) स. ग्रीवायां स. शिरोधिः स. कन्धरे (त्यपि)।

ग्रीवा घांटी — स. कम्बुग्रीवा (त्रिरेखा सा) पु.स. ऽवटुर्घाटा स. कृकाटिका स. ॥ ८८॥

केति—कणति, कण्ठते वा कण्ठः "समीपगलशब्देषु त्रिषु कण्ठं विदुर्बुधाः" (इति शाश्वतः) कण्ठो गले संनिधाने ध्वनौ मदनपादपे" (इति विश्वः) गलति, गिलति, गीर्यतेऽनेनेति वा गलः "गलः कण्ठे सर्जरसे" (इति मेदिनी) इति द्वे ग्रीवाग्रभागस्य। अथेति—गीर्यतेऽनयेति ग्रीवा तस्याम्, शिरो धीयतेऽस्यामिति शिरोधिः, कं शिरो धरति, धारयति वा कन्धरा इति त्रीणि ग्रीवायाः। तिस्रो रेखा यस्यामिति त्रिरेखा सा कम्बुः शङ्ख इव ग्रीवेति 'कम्बुग्रीवा' इत्येकं कम्बुग्रीवायाः। अवटलति, अवटीकते, न वटतीति वा अवटुः, "अवटुः पुरुषे कृकाटिका घाटा" (इति बोपालितः) घाटयति, घाट्यते वा घाटा, कृकं कण्ठमटतीति कृकाटा सैव कृकाटिका इति त्रीणि ग्रीवायामुन्नतभागस्य "घांटी" इति ख्यातस्य ॥ ८८ ॥

मुख — न. वक्त्रास्ये न. वदनं न. तुण्डमाननं न. लपनं न. मुखम् न.।

नासिका — (क्लीबे) न. घ्राणं स. गन्धवहा स. घोणा स. नासा (च) स. नासिका ॥८९॥

वेति—उच्यतेऽनेनेति वक्त्रम्, आस्यन्दते प्रस्रवत्यम्लादिना, आस्यन्द्यते द्रवीक्रियते वान्नादिना अस्यन्ते वर्णा येनेति, अस्यते ग्रासोऽस्मिन्वेति आस्यम् "मुखं मुखान्तरालं च द्वयमास्यमितीरितम्" (इति शाश्वतः) वदत्यनेनेति वदनम्, तुण्डतीति तुण्डम्, आनन्त्यनेनेति आननम्, लप्यतेऽनेनेति लपनम्, खन्यतेऽनेनेति मुखम् "प्राक् खनो मुड्दात्तश्च ततोऽच प्रत्ययो भवेत्। प्रजासृजा यतः खातं तस्मादाहुर्मुखं बुधाः" इति सप्त मुखबिलस्य। घ्रायतेऽनेनेति घ्राणम् "घ्राणं क्लीबं नासिकायां घ्राते स्याद्वाच्यलिङ्गकमिति" (मेदिनी) वहतीति वहा, गन्धस्य वहा गन्धवहा "स्याद्गन्धवाहा नासायां पुंलिङ्गे मातरिश्वनि" (इति मेदिनी) घोणत्यनयेति घोणा: नासतेऽनयेति नासा, नासत इति नासिका "घ्राणं गन्धवहा नासा नसा नस्या च नासिका" (इति साहसाङ्कः) इति पञ्च नासिकायाः ॥ ८९ ॥

ओठ दाढ़ी — पु. ओष्ठाधरौ (तु) पु. रदनच्छदौ पु. दशनवाससी न.।

गाल कनपटी — (अधस्ता) न. च्चिबुकं पु. गण्डौ पु. कपोलौ (तत्परो) पु.स. हनुः ॥ ९० ॥

ओष्ठेति—उष्यते उष्णाहारेणेति ओष्ठः द्वित्वे ओष्ठौ, न ध्रियत इति अधरः द्वित्वे

अधरौ ओष्ठौ च अधरौ चेति ओष्ठाधरौ "द्वन्द्वश्च प्राणीत्येकत्वं न भवति अनित्यत्वात्" ओष्ठाभ्यां युतावधराविति शाकपार्थिवादिर्वा रदनाः छाद्यन्ते आभ्यामिति रदनच्छदौ, दशनानां वाससी इव आवरकत्वादिति चत्वार्युत्तराधरोष्ठमात्रस्य। अधरोष्ठस्य अधस्तात् चीवति, चीव्यते, चिनोति शोभां वेति चिवु तदेव चिवुकमित्येकमोष्ठाधोभागस्य। गण्डतीति गण्डः द्वित्वे गण्डौ, "गण्डः स्यात्पुंसि खङ्गिनि। ग्रहयोगे प्रभेदे च वीध्यङ्गे पिटकेऽपि च। चिह्नवीरकपोलेषु हयभूषणबुद्बुदे" (इति मेदिनी) कस्यते, कं सुखं पोलतीति वा कपोलः द्वित्वे कपोलाविति द्वे कपोलस्य। ताभ्यां कपोलाभ्यां परः हन्तीति हनुः "हनुर्हट्टविलासिन्यां मृत्यावस्त्रे गदे स्त्रियाम्। द्वयोः कपोलावयवे" (इति मेदिनी) इत्येकं कपोलाधोभागस्य॥ ९०॥

पु.　पु.न.　पु.　पु.　न.　न.

दांत, तालु, **रदना दशना दन्ता रदास्तालु (तु) काकुदम्।**

जीभ　स.　स.　स.　न.

ओठका किनारा **रसज्ञा रसना जिह्वा (प्रान्तावोष्ठस्य) सृक्कणी॥ ९१॥**

रेति—रद्यतेऽनेनेति रदनः बहुत्वे रदनाः, दशन्तीति दशनाः, दाम्यन्तीति दन्ताः, रदन्तीति रदाः इति चत्वारि दन्तानाम्। तालयति, तरन्त्यनेन वर्णा इतिवा तालु, काकुर्जिह्वा उद्यतेऽनुद्यतेऽस्मिन्, ईषत्कवते, "निश्चेष्टं ककुदं शिरः" ककुदे भवं वा काकुदमिति द्वे तालुनः। रसं जानातीति रसज्ञा, रसति, रसयति, रसन्त्यनयेति वा रसना "तालव्या अपि दन्त्याश्च" इत्यादौ "जिह्वायां रशना तथा" इत्युक्तेर्दन्त्यतालव्यमध्येयम्। लेढि, लिहन्त्यनयेति वा जिह्वा इति त्रीणि जिह्वायाः। ओष्ठस्य प्रान्तौ सृजति लालादिकमिति सृक्कणी "प्रान्तावोष्ठस्य सृक्कणीति क्लीबकाण्डेऽमरदत्तः" कवयुक्तं (सृकणी) इत्यन्ये (सृक्कणी) ङयन्ता इत्येके अदन्तं सृक्कमित्यपरे 'सृक्किशब्दो ह्रस्वेकारान्तोऽपि क्लीब इत्यपरे' इत्येकमोष्ठान्तयोः॥ ९१॥

न.　न.　पु.　स.

भाल, भौंह, **ललाटमलिकं गोधि (रूर्ध्वे दृग्भ्यां) भ्रुवौ (स्त्रियौ)।**

भ्रूमध्य,　पु.न.　स.　स.

नेत्र, तिल **कूर्च (मस्त्री भ्रुवोर्मध्यं) तारका (क्ष्णः) कनीनिका॥ ९२॥**

लेति—ललनं ललो विलासस्तमटतीति ललाटम्, अलति-अल्यते वा अलिकम्—अलीकमपि "अलिकं ह्रस्वदीर्घमध्यमिति राजदेवः" गुध्यति, गावौ नेत्रे धीयते यस्मिन्निति गोधिः "भाले गोध्यलिकालीक ललाटानीति" नाममालायामिति त्रीणि ललाटस्य। दृग्भ्यामूर्ध्वभागे भ्रमति, भ्राम्यतीति भ्रूः द्वित्वे भ्रुवौ स्त्रियौ स्यातामित्येकं नेत्रोपरिभागस्थरोमराजेः। भ्रुवोर्मध्यं कूर्वति, कूर्यते वा कूर्चमस्त्री पुन्नपुंसकं स्यात "कूर्चमस्त्री भ्रुवोर्मध्ये कत्थनश्मश्रुकैतवे" (इति मेदिनी) अक्ष्णो मध्यं तारयतीति तारका "तारकोदैत्यभित्कर्णधारयोर्न द्वयोर्दृशि। कनीनिकायामृक्षे च न पुमांस्त्वा-

तरि त्रिषु" (इति मेदिनी) कनतीति कनीना सैव कनीनिका "कनीनिका तारकेऽक्ष्णः स्यात्कनिष्ठाङ्गुलावपि" ( इति मेदिनी ) इति द्वे अक्षितारकायाः ॥ ९२ ॥

न. न. न. न. न. न.

आँख **लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।**

स. स. न. न. न. न. न.

आँसू **दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमश्रु (च) ॥ ९३ ॥**

लवितिं—लोच्यतेऽनेनेति लोचनम्, नीयतेऽनेनेति नयनम्, नीयतेऽनेनेति नेत्रम् "नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च । रथे चक्षुषि नद्यां तु नेत्री नेतरि वाच्यवदिति" (मेदिनी) ईक्ष्यतेऽनेनेति ईक्षणम् । चष्टे, चक्षतेऽनेनेति वा चक्षुः, अक्षति, अश्नुतेऽनेनेति वा अक्षि अक्षं वा, पश्यतीति दृक्, दृश्यतेऽनयेति दृष्टिः "दृष्टिर्ज्ञानेऽक्ष्णि दर्शने" ( इति हैमः ) इत्यष्टौ लोचनस्य । अस्यतीति अस्रु, नेत्रयोरम्बु नेत्राम्बु, रुद्यत इति रोदनम्, अस्यतीति अस्रम् "अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते" ( इति मेदिनी ) अश्नुते कण्ठमिति अश्रु "जागरे चाश्रमश्रुणीत्यूष्मभेदात्तालव्यप्रकरणोक्तेश्च" तालव्यशमपीति पञ्च रोदनस्य "आँसू" इति ख्यातस्य ॥ ९३ ॥

पु. पु.

आँखों के किनारे **अपाङ्गौ ( नेत्रयोरन्तौ ) कटाक्षो (ऽपाङ्गदर्शने ) ।**

पु. पु. न. स. पु.न. न.

किनारों से देखना कान **कर्णशब्दग्रहौ श्रोत्रं श्रुतिः(स्त्री)श्रवणं श्रवः ॥ ९४ ॥**

अपेति—नेत्रयोरन्तौ अपाङ्गति, अपकृष्टोऽङ्गात्, अपकृष्टान्यङ्गान्यस्माद्वेति 'अपाङ्गः' द्वित्वे अपाङ्गौ स्याताम् "अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च" ( इति विश्वः) इत्येकमपाङ्गस्य । अपाङ्गेन दर्शनम् अपाङ्गदर्शनं तस्मिन्, कटावतिशयिताविक्षिणी यत्र, कटं गण्डमक्षतीति वा कटाक्षः "कटाक्षकाक्षावितिरभसात्" काक्षोपि इति द्वे कटाक्षस्य । कीर्यते शब्दग्रहणाय क्षिप्यते, कीर्यते शब्दो यस्मिन्, किरति शरीरे सुखम्, कर्णयतीति वा कर्णः "कर्णःपृथासुते ज्येष्ठे सुवर्णालौश्रुतावपि" (इति मेदिनी) शब्दो गृह्यतेऽनेनेति शब्दग्रहः, श्रूयतेऽनेनेति श्रोत्रम्, श्रूयतेऽनयेति श्रुतिःस्त्री स्यात् श्रवति, श्रूयतेऽनेनेति वा श्रवणम्, "श्रवणं श्रुतौ" श्रूयतेऽनेनेति श्रवः इति षट् कर्णस्य ॥ ९४ ॥

न. न. न. पु. पु.न.

शिर, मस्तक **उत्तमाङ्गं शिरःशीर्षं मूर्धा(ना)मस्तको(ऽस्त्रियाम्) ।**

पु. पु. पु. पु. पु. पु.

केश, बाल **चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः ॥ ९५ ॥**

उदिति—उत्तमं च तदङ्गं च उत्तमाङ्गम्, श्रीयते उष्णीषादिनेति शिरः "शिरः

प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च" ( इति मेदिनी ) शिरोवाची शिरोऽन्तो रजोवाचीरजस्तथा, "कुमारशीर्षयोरिति ज्ञापका"च्छिर:शब्दस्य शीर्षादेशे शीर्षम्, मुह्यत्यस्मिन्नाहते मूर्धा ना पुमान्स्यात्, मस्यतेस्म मस्त: स एव मस्तक: अस्त्रियां पुन्नपुंसके स्यादिति पञ्चशिरस: । 'चि' इति अव्यक्तं कुरतीति चिकुर:, कुन्तं कुन्ताग्राकारं लातीति कुन्तल:, "कुन्तलश्चषके वाले यवे ना भूम्निनीवृति" (इति मेदिनी) वलतीति वाल:, कच्यते, कचयत्यात्मानं वेति कच: "कच:शुष्कव्रणे केशे वन्धे पुत्रे च गीर्पते: । कचाकरवेवामिति"(हैम:)क्लिश्नाति, क्लिश्यते, केशेते वा केश:"केश:स्यात्पुंसि वरुणे ह्रीवेरे कुन्तलेपि च "(इति मेदिनी) शिरसि रोहतीति शिरोरुह: इति षट् केशस्य॥९५॥

न. न. पु. पु.

केशसमूह टेढ़े बाल (तद्वृन्दे) कैशिकं कैश्यमलकाश्चूर्णकुन्तला: ।

ललाट पर झुके जुल्फें (ते ललाटे) भ्रमरका: काकपक्ष: शिखण्डक: ॥ ९६ ॥

पु. पु. पु.

तदिति—तेषां केशानां वृन्दे समूहे कैशिकम्, कैश्यं च स्यात् केशानां समूह: कैशिकम्, पक्षे कैश्यमिति द्वे केशवृन्दस्य । अलति, अल्यते वेति अलक:, वहुत्वे अलका: " अलका कुवेरपुर्यामस्त्रियां चूर्णकुन्तले " ( इति मेदिनी ) चूर्णस्य कर्पूरादि क्षोदस्य कुन्तला: इति द्वे वक्रकेशानाम् । ते अलका ललाटे स्युस्तदा भ्रमर इव भ्रमरक: वहुत्वे ' भ्रमरका: ' भवन्ति " अथ भ्रमरको भृङ्गे गैरिके. चूर्णकुन्तले " ( इति मेदिनी ) इत्येकं ललाटनतकेशानाम् । काकस्य पक्षइव काकपक्ष:, शिखाया अण्ड इव शकन्ध्वादित्वात् शिखण्डक: " शिखण्डौ तु शिखा वर्हाविति तालव्यादौ" (रभस: ) " शिखण्डो वर्हचूडयो: " ( इति मेदिनी ) शकन्ध्वादित्वं केचिन्नेच्छन्ति " शिखाण्डकशिखण्डकाविति " ( वाचस्पतिसुभूती ) इति द्वे सामान्येन शिखाया: वालानां शिखाया वा ॥ ९६ ॥

स. पु. पु.

पटिया जूड़ा कवरी केशवेशो (ऽथ) धम्मिल: ( संयता: कचा: ) ।

स. स. स. स. स.

चोटी जटा शिखा चूडा केशपाशी (व्रतिनस्तु ) जटा सटा ॥ ९७॥

केति—कूयते, कंशिरो वृणोत्याच्छादयतीति वा कवरी " कवरी केशविन्यासशाकयोरिति" ( हैम: ) केशानां वेशो मार्जनावन्धविशेष: केशवेश: इति द्वे केशवेशस्य । अथेति संयता: सम्बद्धा मुक्तादिभिर्ग्रथिता वा कचाश्चेत्तदा धमतीति धम्, मिलतीति मिल्ल: धम् चासौ मिल्लश्चेति धम्मिल्ल: इत्येकं चूडाया: " जूड़ा" इति ख्याताया: । शेते इति शिखा " शिखा शाखा वर्हिचूडा लाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेपि च " (इति मेदिनी ) चुड्यन इति चूडा " चूडा शिखा-

म्योः । बाहुभूपावलम्भ्योश्चेति" ( हैमः ) केशानां पाशो यस्यामिति केशपाशी इति त्रीणि शिरोमध्यस्थचूडायाः " चोटी " इति ख्यातायाः । प्रतिनः शिखा जटति, जन्यते, जायते वेति जटा " जटा लग्नकचे मूले मांस्यां प्लक्षे पुनर्जटी " ( इति मेदिनी ) सटतीति सटा " सटा जटाकेसरयोरिति " ( मेदिनी ) " कोटीरस्तु जटा सटेति " ( रभसः ) इति द्वे तपस्विजटायाः ॥ ९७ ॥

स. स. पु. पु.

बेनी लुटरी **वेणिः प्रवेणी शीर्षण्यशिरस्यौ ( विशदे कचे )।**

साफ पु. पु. पु.

केशसमूह **पाशः पक्ष(श्च)हस्त(श्च कलापार्थाः कचात्परे)॥९८॥**

वेणीति—वेणतीति वेणिः, वेणी वा " वेणी सेतुप्रवाहयोः । देवताडे केशबन्धे " ( इति हैमः ) प्रवेणतीति, प्रकृष्टा वेणिर्वेति प्रवेणिः प्रवेणी वा इति द्वे प्रोषितभर्तृकाद्धिार्यकेशरचनाविशेषस्य । विशदे स्नानादिनिर्मले कचे केशे शिरसि भवः शीर्षण्यः पक्षे शिरस्यः उभौ स्यातामिति द्वे विशदकचस्य । कचात्कचवाचकात्परे सन्तः पाशाद्यास्त्रयः कलापोऽर्थो येषामिति कलापार्था भवन्तीति यथा पाश्यत इति पाशः " पाशस्तु मृगपश्वादिबन्धने । कर्णान्ते शोभनार्थः स्यात्कचान्ते निकरार्थकः । छत्राद्यन्ते च निन्दार्थः " ( इति हैमः ) पक्ष्यत इति पक्षः " पक्षो मासार्धके गेहपार्श्वसाध्यविशेषयोः । केशादेः परतो वृन्दे बले सखिसहाययोः " ( इतिमेदिनी ) हसति, हस्यते वा हस्तः " हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परो व्राते " ( इति मेदिनी ) कचपाशः, केशपाशः, केशपक्षः, कुन्तलहस्त इत्यादयः स्युरिति त्रीणि केशसमूहस्य ॥ ९८ ॥

पु.न. न. न. न.

रोम दाढ़ी **तनूरुहं रोम लोम ( तद्वृद्धौ ) श्मश्रु ( पुंमुखे )।**

मोछअलंकार पु. पु. न. न. न.

की शोभा **आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥ ९९ ॥**

तेति—तन्वां रोहतीति तनूरुहम्, " तनूरुहं तु लोम्नि स्यात्पतत्रे च नपुंसकमिति" ( मेदिनी ) " तनूरुहस्तु पुत्रे गरुति लोम्नि चेति" ( हैमः ) रोहतीति रोम, लूयत इति लोम इति त्रीणि तनूरुहस्य । पुंसो मुखे तेषां लोम्नां वृद्धिस्तस्यां श्म मुखं श्रयति, श्मनि मुखे श्रूयते वा श्मश्रु स्यादित्येकं दाढ़िकायाः । आकल्पयति, आकल्पते, आकल्पनं वा आकल्पः, वेवेष्टि, विष्यते, वेषणं वा वेषः, तालव्यशान्तोऽपि विशति, विश्यते, वेशनं वा वेशः " वेशो वेश्यागृहे गृहे । नेपथ्ये चेति " ( मेदिनी ) नयतं ति नि निनो नेतृस्य, नेतुर्वा पथ्यं नेपथ्यम् " नेपथ्यन्तु प्रसाधने । रङ्गभूमौ वेशभेदे " ( इति हैमः ) प्रत्यङ्गं प्रतिख्यातं वा कर्म शाकपार्थिवादित्वात् प्रतिकर्म,

प्रसाध्यतेऽङ्गमनेनेति प्रसाधनमिति पश्चालङ्कारचनादिकृतशोभायाः ॥ ९९ ॥

पु.स.न. पु.स.न. पु.स.न.
अलंकार करने ( दशैते त्रिष्व ) लंकर्तालंकरिष्णुश्च मण्डितः ।
वाला पु.स.न. पु.स.न. पु.स.न. पु.स.न.
अलंकारयुत प्रसाधितोऽलंकृतश्च भूषितश्च परिष्कृतः ॥ १०० ॥

देति—एते वक्ष्यमाणा रोचिष्णुपर्यन्ताः दश त्रिषु त्रिलिङ्ग्यां भवन्ति। अलं करोतीति अलंकर्ता, अलंकरणशीलोऽलंकरिष्णुरिति द्वे अलंकरणशीलस्य। मण्ड्यते स्म मण्डितः, प्रसाध्यते स्म प्रसाधितः, अलं क्रियते स्म अलंकृतः, भूष्यते स्म भूषितः, परिष्क्रियते स्म परिष्कृतः इति पञ्च भूषितस्य ॥ १०० ॥

पु.स.न. पु.स.न. पु.स.न. स. स.
अलंकारादिकों विभ्राड्भ्राजिष्णुरोचिष्णूभूषा ( तु स्या ) दलंक्रिया ।
से अतिशोभित पु. न. पु. न.
अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ॥ १०१ ॥
शृङ्गार गहना न. न. पु.न.
मुकुट मण्डनं ( चाथ ) मकुटं किरीटं ( पुन्नपुंसकम् ) ।

वीति—विभ्राजते तच्छील विभ्राट्, भ्राजनशीलोभ्राजिष्णुः, रोचितुं शीलमस्येति रोचिष्णुरिति त्रीण्यलंकारादिना शोभमानस्य । भूषणं भूषा, अलंकरणमलंक्रिया स्यादिति द्वे भूषायाः । अलंक्रियतेऽनेनेति अलंकारः "अलंकारः कङ्कणादिषु । उपमादाविति" (हैमः) आभ्रियतेऽनेनेति आभरणम्, परिष्क्रियतऽनेनेति परिष्कारः, विभूष्यतेऽनेनेति विभूषणम्, मण्ड्यतेऽनेनेति मण्डनमिति पञ्च विभूषणानाम्। अथेति मङ्क्तेऽनेनेति मकुटम्, हुकारपाठे तु बाहुलकाद्धातोरत उः मुकुटमपि, किरति, कीर्यतेऽनेनवा किरीटं पुन्नपुंसकं स्यादिति द्वे किरीटस्य ॥ १०१ । १ ॥

चोटी की मणि पु. न. पु.
हारके बीच की चूडामणिः शिरोरत्नं तरलो ( हारमध्यगः ) ॥ १०२ ॥
बड़ी मणि चोटी स. स. स. स.
की सोनेकी पट्टी बालपाश्या पारितथ्या पत्रपाश्या ललाटिका ।
कर्णभूषण या स. न. न. न.
तर्की कुण्डल कर्णिका तालपत्रं (स्या)त्कुण्डलं कर्णवेष्टनम् ॥ १०३ ॥

चूडेति—चूडायामणिश्चूडामणिः, "चूडामणिः काकचिञ्चाफले मूर्धमणावपि" ( इति हैमः ) शिरसो रत्नं शिरोरत्नमिति द्वे चूडामणेः । हारस्य मध्यं हारमध्यं गच्छतीति हारमध्यगोमणिः तरं तरणं लातीति तरलः कथ्यते "तरलं चञ्चलेपिङ्गे भास्वरेऽपि त्रिलिङ्गकम् । हारमध्यमणौ पुंसि यवागूसुरयोः स्त्रियामिति" (मेदिनी) इत्येकं

हारमध्यमणेः । बालपाशे केशसमूहे साधुः, बालेषु पाश्या पाशसमूहो वा बाल-पाश्या, परितस्तथाभूताः परितथा सैव पारितथ्या इति द्वे सीमन्तस्थितायाः स्वर्णादि-पट्टिकायाः । पाशसमूहः पाश्या पत्रमिव पाश्या पत्रपाश्या, ललाटस्यालंकारः ललाटिका इति द्वे ललाटाभरणस्य । कर्णस्यालंकारः कर्णिका " कर्णिका कर्ण-भूषणे । बीजकोशे सरोजस्य करमध्याङ्गुलावपि । कुट्टिन्यां हस्तिहस्ताग्रे " ( इति-हैमः ) तालस्य पत्रं तालपत्रं स्यात् " तालपत्रं तु कुण्डले । स्यात्तालपत्री रण्डाया-मिति (हैमः) ' ताटङ्कोऽप्यत्र सुवर्णरचितस्यापीदं नाम ' इति द्वे कर्णाभरणस्य । कुण्डते, कुण्ड्यते, कुण्डं कुण्डलाकारं लातीति वा कुण्डलम्, " कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि च । काञ्चनद्रुगुडूच्योः स्त्री " ( इति मेदिनी ) वेष्ट्यतेऽनेनेति वेष्टनम् कर्णयोर्वेष्टनमिति द्वे कुण्डलस्य ॥ १०२ । १०३ ॥

कण्ठा, कण्ठी — न. स. न. स.

लम्बी कण्ठी — **ग्रैवेयकं कण्ठभूषा लम्बनं ( स्या ) ल्ललन्तिका ।**

सोने की लम्बी कण्ठी — स. स.

मोतियों से गुथी कण्ठी — **(स्वर्णैः) प्रालम्बिकाथोरःसूत्रिका (मौक्तिकैः कृता) १०४**

ग्रैवेयेति–ग्रीवायां भवं ग्रैवेयकम्, "ग्रैवेयमपि" भूष्यतेऽनयेति भूषा कण्ठस्य भूषा कण्ठभूषा इति द्वे कण्ठभूषायाः " कण्ठा " इति ख्यातायाः । लम्बत इति लम्बनम् ललतीति ललन्ती सैव ललन्तिका स्यादिति द्वे किञ्चिल्लम्बमानकण्ठभूषणस्य । सैव ललन्तिका स्वर्णैः कृता चेत्तदा प्रालम्बत इति प्रालम्बिका स्यादित्येकं लम्बकण्ठिकायाः। अथेति–सैव ललन्तिका मौक्तिकैः मुक्ताभिः कृता चेत्तदा उरसः सूत्रमिव उरः सूत्रिका स्यादित्येकं मुक्ताग्रथितललन्तिकायाः ॥ १०४ ॥

पु. स. पु.

मोतियोंका हार, सौलरका हार — **हारो मुक्तावली देवच्छन्दो (ऽसौ ) शतयष्टिकः) ।**

पु. पु. पु.

हारभेद — **(हारभेदा यष्टिभेदा) द्गुत्सगुत्सार्धगोस्तनाः ॥ १०५ ॥**

पु. पु. स.

**अर्धहारो माणवक एकावल्ये (कयष्टिका) ।**

स.

**(सैव) नक्षत्रमाला (स्यात्सप्तविंशतिमौक्तिकैः) ॥ १०६ ॥**

हेति–हारयति मनः, ह्रियते मनोऽनेन वा हारः, भिदादिपाठादङिहारापि, मुक्तानाम-वली दीर्घा पङ्क्तिः मुक्तावली "हारो मुक्तावली हारः"(इति रभसः ) इति द्वे हारस्य। शतं यष्टिका लतिका यस्येति शतयष्टिकोऽसौ हारः देवैश्छन्द्यत इति देवच्छन्दः स्या-

१ " स ग्रैवेयस्त्वमसि फणिना " इति राजशेखरः ॥

द्विरेकं शतजातिकहारस्य। यष्टीनां भेदात् हारभेदाः स्युः यथा गुच्छति इति गुत्सः "गुत्सःस्यात्स्तबके स्तम्बे हारभिद्ग्रन्थिपर्णयोः" इति दन्त्यान्तेषु ( मेदनी ) छान्तोपि "स्याद्गुच्छःस्तबके स्तम्बे हारभेदकलापयोः" (इति मेदिनी) गूयत इति गुच्छः, द्वात्रिंशल्लतिको गुच्छः, गुत्सस्यार्धः गुत्सार्धः चतुर्विंशतियष्टिको हारो गुत्सार्धः स्यात्, गोःस्तनइव गोस्तनः, "चतुस्त्रिशल्लतो हारश्चतुःसरिव गोस्तनः, अर्धेनैकदेशेन कृतो हारः अर्धहारः, माणवो बालः सइव माणवकः ॥ "माणवको हारभेदे बाले कुपुरुषे वटौ" ( इति मेदिनी ) एकयष्टिका एकाचासाववली चेति एकावली स्यात्, सा एकावल्येवसप्तविंशतिमुक्ताभिः कृता चेत्तदा नक्षत्राणां मालेव नक्षत्रमालास्यादिति प्रत्येकमेकैकम् ॥ १०५।१०६ ॥

पु.　पु.　पु. न.　पु. न.

पहुँची व कड़े **आवापकः पारिहार्यः कटको वलयो (ऽस्त्रियाम्)।**

बाजूबन्द　पु.न.　पु.न.　पु. न.　स.

आदि अंगूठी **केयूरमङ्गद (न्तुल्ये) अङ्गुलीयकमूर्मिका ॥ १०७ ॥**

आवेति—आ उप्यते आवापः स एव आवापकः, परिह्रियते इति परिहार्यः सएव पारिहार्यः अथवा परिहार एव पारिहार्यः, कटति, कट्यते वा कटकः, "कटकोऽस्त्री नितम्बेऽद्रेर्दन्तिनां दन्तमण्डने। सानुद्रलवणे राजधानीवलययोरपि" ( इति मेदिनी ) वलते इति वलयः "वलयः कण्ठरोगे ना कङ्कणे पुन्नपुंसकमिति" (मेदिनी ) उभावस्त्रियां पुन्नपुंसके स्यातामिति चत्वारि प्रकोष्ठाभरणस्य के बाहु शिरसि यौतीति 'केयूरम्' अङ्गं दयते, दायति, द्यति वा अङ्गदम् उभे तुल्ये समानार्थे समानलिङ्गे स्याताभिति द्वे प्रगण्डभूषणस्य। अङ्गुलौ भवमङ्गुलीयकम् अङ्गुरीयकमिति वा पुंलिङ्गोऽप्ययम् "अयं मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुरीयकः" इति सद्भिप्रयोगात्, ऊर्मिरिव, ऊर्मिं[1] प्रकाशं कायतीति वा 'ऊर्मिका' इति द्वे अङ्गुलीभूषणस्य ॥ १०७ ॥

स.　पु.न.　न.

मोहर करनेवाली कङ्कण **(साक्षरा)ङ्गुलिमुद्रा(सा)कङ्कणं करभूषणम्।**

स.　स.　स.　स.

व कड़ा अंगूठी स्त्रियों की **(स्त्रीकट्यां)मेखला[2] काञ्ची सप्तकी रशना(तथा)॥१०८॥**

पु.स.न.

करधनी पुरुषों की करधनी **(क्लीबे)सारसनं(चाथपुंस्कट्यां)शृङ्खलं(त्रिषु)।**

सेति—सा ऊर्मिका साक्षरा अक्षरैः सहिता चेत्तदा अङ्गुल्या मुदं राति, मोदते वा मुद्रा अङ्गुल्या मुद्रा इत्येकं रामनामाद्यङ्किताङ्गुलीयस्य। कं शुभं कणति, कङ्कते वा

---

१ "ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोरिति" मेदिनी ॥

२ "एकयष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिका। रशना षोडशा ज्ञेया: कलापः पञ्चविंशकः" इति भेदस्त्विह न विवक्षितः ॥

कङ्कणम् "कङ्कणं करभूषायां सूत्रमण्डनयोरपि" ( इति मेदिनी ) करं भूषयति, करो भूष्यतेऽनेन वा करभूषणम् " हस्तमण्डनसूत्रे स्यात्कङ्कणोना प्रतीसरः "(इति रत्नकोषः) इति द्वे करभूषणस्य । स्त्रीणां कटिस्तस्यां मखं गतिं लातीति पृषोदरादित्वान्मेखला काञ्चत इति काञ्ची काञ्चिर्वा "काञ्ची स्यान्मेखला दाम्नि प्रभेदे नगरस्य च" ( इति मेदिनी ) सप्तभिरनेकाभिः किङ्किणीभिः, सप्तस्वरान् कायतीति वा सप्तकी, अश्नुते, अश्नाति, रशतीति वा रशना, रसयतीति विग्रहे तु 'रसना' दन्त्यमध्यापि, सारमुत्कृष्टं सनमस्येति सारसनम् "मेखलायां सारसनमुरस्त्रे च तनुत्रिणामिति दन्त्यादौ रभसः" क्लीबे नपुंसके स्यादिति पञ्चस्त्रीकटिभूषणस्य । अथेति पुंसां कट्यां चेत् काञ्ची शृङ्खैः खलतीति पृषोदरादित्वात् शृङ्खलं त्रिषु त्रिलिङ्ग्यां स्यात् " शृङ्खलं पुंस्कटी काञ्च्या लोहरज्जौ च बन्धने" इति हैमः । इत्येकं पुरुषकटिकाञ्चिकायाः ॥ १०८ । ३ ॥

बिछिया या पायजेब — न. पादाङ्गदं पु. तुलाकोटिर्म पु.न. ञ्जीरो पु.न. नूपुरो(ऽस्त्रियाम्) ॥ १०९ ॥

घुंघुरू — पु. हंसकः पु. पादकटकः स. किङ्किणी स. क्षुद्रघण्टिका ।

वस्त्रों के बनाने का कारण — (त्वक्फलकृमिरोमाणि) स. वस्त्रयोनि(र्दशत्रिषु) ॥ ११० ॥

पेति—पादस्याङ्गदमिव, पादएवाङ्गं, पादाङ्गं दायति, दयते, द्यति वा पादाङ्गदम्, तुलां तुलया वा कोटयति, तुलाकारं कोटिरग्रमस्येति वा तुलाकोटिः "तुलाकोटिर्मानभेदेऽर्बुदे स्यान्नूपुरेपि च" ( इति हैमः ) मञ्जतीति मञ्जीरः, नुवनं नूयते वा नूस्तस्यां पुरतीति नूपुरः उभावस्त्रियां पुन्नपुंसके स्याताम् "मञ्जीरोऽस्त्रीस नूपुरः ( इति रभसः ) हंसइव, हंसइव कायतीति वा हंसकः, पादस्य पादयोर्वा कटको वलयः पादकटकः इति षट् नूपुरस्य । किञ्चित्किणं शब्दं करोति, किङ्किणयति वा किङ्किणी, स्वामिमते तु कङ्के गता वणतीति, कं सुखं कणति वा कङ्कणी "कङ्कणः स्यात्प्रतिसरः कङ्कणी क्षुद्रघण्टिका" ( इति भागुरिः ) घण्टति, घण्टयति, घण्टेत वा घण्टिका क्षुद्रा चासौ घण्टिका चेति क्षुद्रघण्टिका इति द्वे किङ्किण्याः "घुंघुरू" इति ख्यातायाः । त्वक्फलकृमिरोमाणि वस्त्राणां योनिः कारणं वस्त्रयोनिरित्येकं वस्त्रकारणस्य । वक्ष्यमाणानि क्षौमादिवर्जं वाल्कादीनि निष्प्रवाण्यन्तानि दश त्रिषु त्रिलिङ्ग्यां भवन्ति चकारादेकादशं तन्त्रकमपि त्रिषु स्यादिति ॥ १०९ । ११० ॥

अलसी से बने कपास से रचे — पु.स.न. वाल्कं [1](क्षौमादि) पु.स.न. फालं 'तु' पु.स.न. कार्पासं पु.स.न. बादरं (च तत्) ।

रेशमी कपड़े पशमीना आदि — पु.स.न. कौशेयं पु.स.न. कृमिकोशोत्थं पु.स.न. राङ्कवं पुं.स.न. मृगरोमजम् ॥ १११ ॥

---

१ वाल्कक्षौमफालकार्पासबादरकौशेयराङ्कवानाहतनिष्प्रवाणि तन्त्रकाणि—इति स्वामी ॥

वेति—क्षुमाया अतस्याः विकारः क्षौमं तदेवादि यस्येति क्षौमादि वस्त्रं वल्कस्य विकारो वाल्कं स्यादित्येकमतस्यादिरचितवस्त्रस्य। फलस्य विकारः फालम्, कर्पास्याः कर्पासस्य वा विकारः कार्पासम्, बदराया बदरस्य वा विकारो बादरमिति त्रीणि कर्पासरचितवस्त्रस्य। कोशे, कोषे वा संभूतं कौशेयम्, कौषेयं वा कृमीणां कोशस्तस्मादुत्थं जातं कृमिकोशोत्थमिति द्वे कृमिकोशोद्भववस्त्रस्य। रङ्कौ भवं राङ्कवम्, मृगाणां रोमाणि तेभ्यो जातं मृगरोमजम्, मृगशब्देनात्र पशुमात्रं ग्राह्यं तेन कम्बलाद्यपि राङ्कवं ज्ञेयमिति द्वे पशुरोमरचितवस्त्रस्य ॥ १११ ॥

पु.स.न. पु.स.न. पु.स.न. न.

नवीन वस्त्र, **अनाहतं निष्प्रवाणिं तन्त्रकं (च) नवाम्बरे।**

न.

धोये वस्त्र **(तत्स्यादु) द्गमनीयं (यद्धौतयोर्वस्त्रयोर्युगम्[1])॥ ११२॥**

अनेति—न आहतमनाहतम्, प्रोयतेऽनयेति प्रवाणी, निर्गता प्रवाणी तन्तुवायशलाकाऽस्मादिति निष्प्रवाणि, तन्त्रादचिरापहृतम् तन्त्रकम्, नवं च तदम्बरं चेति नवाम्बरमिति चत्वारि क्षेदभोगक्षालनरहितवस्त्रस्य। धौतयोः प्रक्षालितयोर्वस्त्रयोर्यद्युगं तत् उद्गम्यतेऽभिलष्यते इति उद्गमनीयं स्यादित्येकं धौतवस्त्रयुग्मस्य ॥ ११२ ॥

न. न. न. न.

धोये रेशमी दुशाला आदि **पत्त्रोर्णं धौतकौशेयं बहुमूल्यं महाधनम्।**

पट्ट वस्त्र वस्त्रों का किनारा न. न. पु.स.न. पु.स.न.

**क्षौमं दुकूलं (स्याद्) द्वे तु निवीतं प्रावृतं (त्रिषु)॥ ११३॥**

पेति—पत्रेषु कृतोर्णा पत्रोर्णास्त्यत्रेति पत्रोर्णम् "पत्रोर्णं धौतकौशेये पत्रोर्णः शोणकद्रुमे" (इति हैमः) धाव्यते स्म धौतम् धौतं च तत्कौशेयं च धौतकौशेयमिति द्वे प्रक्षालितकौशेयस्य। बहु मूल्यमस्येति बहुमूल्यम्, महद्धनमूल्यमस्येति महाधनमिति द्वे बहुमूल्यवस्त्रस्य। क्षौति, क्षूयते वा क्षौमम् "क्षोममट्टे दुकूलेऽस्त्रीति" (मेदिनी) क्षोममेव क्षौमम्, दुष्टं कूलति पृषोदरादित्वाद्दुकूलं स्यादिति द्वे पट्टवस्त्रस्य। निवीयते स्म निवीतम्, प्राव्रियते स्म प्रावृतम्, द्वे त्रिषु त्रिलिङ्ग्यां स्यातामिति द्वे वस्त्राद्यतस्य, वस्त्रान्तस्य वा ॥ ११३ ॥

स. पु.स.

वस्त्रों का छोर **(स्त्रियां बहुत्वे वस्त्रस्य) दशाः (स्युः) वस्तयो (द्वयोः)।**

न. पु. पु. पु. स.

लम्बाई चौड़ाई **दैर्घ्यमायाम आनाहः परिणाहो विशालता ॥ ११४ ॥**

स्त्रियामिति—वस्त्रस्य दश्यन्त इति दशाः स्त्रियां बहुत्वे स्युः "दशावर्त्यामवस्थाय-

---

१ युगमित्यविवक्षितम् ॥

वस्त्रान्ते भूम्नि पुंस्त्रियोरिति " (रभसः) वस्यत इति वस्तिः बहुत्वे ' वस्तयः ' द्वयोः स्त्रीपुंसयोः स्युरिति द्वे वस्त्रान्तावयवानाम् । दीर्घस्य भावो दैर्घ्यम् , आयाति आयम्यते ऽनेन, आयमनं वा आयामः, आनह्यतेऽनेन आनाहः, आरुह्यतेऽनेन " आरोहः " इति पाठान्तरम् "आरोहस्त्ववरोहे च वरयोषित्कटावपि । आरोहणे गजारोहे दीर्घत्वे च समुच्छ्रये " ( इति मेदिनी ) इति त्रीणि दैर्घ्यस्य । परिणह्यतेऽनेनेति परिणाहः, विशालस्य भावो विशालता इति द्वे परिणाहस्य " पनहा " इति ख्यातस्य ॥११४॥

न. न. पु. पु.
पुराना वस्त्र फटा **पटच्चरं जीर्णवस्त्रं ( समौ ) नक्तककर्पटौ ।**
या चिथड़ा न. न. न. न. न. न.
वस्त्रमात्र **वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम् ॥ ११५ ॥**

पटदिति—पटदित्यव्यक्तं शब्दं चरति, पट इवाचरति, पटतीति पटत् पूर्वं भूतं पटदिति वा पटच्चरम्, जीर्णं च तद्वस्त्रं चेति जीर्णवस्त्रमिति द्वे जीर्णांशुकस्य । नजत इति नक्तः स एव नक्तकं सुखमस्मादिति वा नक्तकः, कचित् ' लक्तकः ' इति पाठः । लक्यते स्म लक्तः स एव ' लक्तकः ' किरति, कृणाति, करोति वा कर्, पटतीति पटः- कर् चासौ पटश्च, करस्य पटः शकन्ध्वादित्वात् कर्पटः उभौ समौ समानार्थौ समानलिङ्गौ स्तः इति द्वे प्रस्वेदादिमार्जनार्थहस्तस्थवस्त्रखण्डस्य, मलिनत्वादिदुष्टजीर्णवस्त्रखण्डस्य वा " चिथड़ा " इति ख्यातस्य । वस्यतेऽनेनेति वस्त्रम्, आच्छाद्यतेऽनेन आच्छादनम्, वस्यतेऽनेन वासः, चिल्यतेऽनेनेति चेलं तदेव चैलं वा "चेलो नीचेऽधमे त्रिषु, नपुंसकन्तु वसने " (इति मेदिनी ) वस्यतेऽनेन वसनम्, अंशुः सूत्रादिसूक्ष्मांशे किरणे चण्डदीधितेः " ( इति हैमः ) अंशून् कायति, अंशुभिः काशते वा अंशुकम् "अंशुकं श्लक्ष्णवस्त्रे स्याद्वस्त्रमात्रोत्तरीययोरिति" (मेदिनी) इति षट् वस्त्रस्य ॥ ११५ ॥

पु. पु.न. पु.न. पु.स.न.
अच्छे कपड़े मोटे **सुचेलको[1] पटोऽस्त्री[2] (ना) वराशिः स्थूलशाटकः ।**
कपड़े ओहार पु. पु. पु. पु.
कम्बल **निचोलः प्रच्छदपटः ( समौ ) रल्लककम्बलौ ॥ ११६ ॥**

सुचेलेति—शोभनं चेलं सुचेलं कायतीति सुचेलकः, पटतीति पटः अस्त्री स्यात् "पटश्चित्रपटे वस्त्रेऽस्त्री प्रियालद्रुमे पुमानिति" ( मेदिनी ) इति द्वे शोभनवस्त्रस्य । वरं श्रेष्ठं वरणं वा अश्नुते वराशिः ना पुमान्स्यात् " वरासिः स्यात्खड्गवरे वरासिः स्थूलशाटके " ( इति दन्त्यान्तेषु रभसः ) शटतीति शाटकः, स्थूलश्चासौ शाटकश्चेति स्थूलशाटकः इति द्वे स्थूलपटस्य । निचोल्यते, निचोडयते वा निचोलः " निचोलन्तु

१ शोभनं चेलमेव स्वार्थे कन् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि ॥
२ " पटोऽस्त्री कर्पटः शाटः सिचयप्रोतलक्तकाः " ( इति रभसः ) ॥

नपुंसकमिति" ( रभस: ) स्त्रियां निचोली इत्यपि राजदेव:, निचुलोपि "निचुलस्तु निचोले स्यादिज्जलाख्यमहीरुहे" ( इति मेदिनी ) प्रच्छदति, प्रच्छद्यते, प्रच्छाद्यतेऽनेन वा प्रच्छद:, प्रच्छदश्चासौ पटश्चेति प्रच्छदपट: इति द्वे डोलिकाद्यावरणपटस्य । रमते इति रल्, लातीति ला:, रल् चासौ लाश्च स एव, रमणं रल् क्रीडा लक्ष्यतेऽनेन, रलं लातीति रल्लक: "रल्लक: कम्बले स्मृत:, तथैव कम्बलमृगे" ( इति हैम: ) कम्बति, कम्ब्यते वा कम्बल: "कम्बल: कृमिसास्नयो: । नागप्रभेदे प्रावारे वैकक्ष्ये कम्बलं जले" ( इति हैम: ) उभौ समौ समानार्थौ समानलिङ्गौ स्यातामिति द्वे कम्बलस्य ॥ ११६ ॥

धोती आदि — (न.) (न.) (न.) अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके ।

अँगौछा या — (पु.) (पु.) (स्त्री.) ( द्वौ ) प्रावारोत्तरासङ्गौ ( समौ ) बृहतिका ( तथा ) ॥११७॥

डुपट्टा आदि — (न.) (न.) (पु.स्त्री.) (पु.न.)

अँगिया या — संव्यानमुत्तरीयं ( च ) चोलकूर्पासकौ ( स्त्रियाः ) ।

चोली रजाई या — (पु.)

अँगरखा — नीशारः ( स्यात्प्रावरणे हिमानिलनिवारणे ) ॥११८॥

अन्तेति– अन्तरे भवमन्तरीयम्, उपसंवीयतेऽनेन, उपसंव्यानम्, परिधीयते इति परिधानम्, अधोदेहभागस्यांशुकमधोंऽशुकमिति चत्वारि परिधानवस्त्रस्य । प्रव्रियतेऽनेन प्रावार:, उत्तरे ऊर्ध्वभागे आसज्यते उत्तरासङ्ग: इमौ द्वौ समौ समानार्थौ समानलिङ्गौ स्त:, तथा बृहत्येव बृहतिका, संवीयतेऽनेन संव्यानम्, उत्तरस्मिन्देहभागे भवमुत्तरीयमिति पञ्चोपरि वस्त्रस्य । चोल्यतेऽनेन चोल: गौरादित्वाच्चोली, कूर्परेऽस्यते, कूर्परोऽत्रास्यते, कूर्परे आस्ते वा पृषोदरादित्वात् कूर्पास: स एव कूर्पासक: "कूर्पासस्त्वर्धचोलक:" ( इति हारावली ) इति द्वे स्त्रिया: कञ्चुलिकाख्यस्य 'स्त्रिया:' इति विशेषेणोक्तं पुंसोऽप्येतावुपमानादिति सुभूति:, द्वे स्त्रीपुंसकञ्चुलिकाया (इति मुकुट:) हिमानिलनिवारणे प्रावरणे नितरां शीर्यते हिमानिलावत्रानेन, वा 'नीशार:' स्यादित्येकं हिमानिलविनाशकवस्त्रस्य ॥ ११७ । ११८ ॥

उटंग लहँगा — (पु.न.) ( अर्धोरुकं वरस्त्रीणां स्या ) च्चण्डातक ( मंशुकम् ) ।

लम्बा लहँगा — (पु.स्त्री.न.) ( स्यात्त्रिष्वा ) प्रपदीनं ( तत्प्राप्नोत्याप्रपदं हि तत् ) ॥११९॥

अर्धेति–वरस्त्रीणामूरोरर्धमर्धोरुस्तस्मिन् काशतेऽर्धोरुकमंशुकं वस्त्रं चण्डां कोपनां वरस्त्रियमतनीति चण्डातकम् "अर्धोरुकं वरस्त्रीणां वासश्चण्डातक: स्मृत:"

इति पुंस्काण्डे वोपालितात्पुंलिङ्गोपि स्यादित्येकं चण्डातकस्य " उटंगलहँगा " इति ख्यातस्य । यत् आप्रपदं प्राप्नोति तत् आप्रपदीनं त्रिषु त्रिलिङ्गयां स्यादित्येकं पादाग्रपर्यन्तलम्ब्यमानवस्त्रस्य ॥ ११९ ॥

पु.न. पु. न.

चँदवा तम्बू (अस्त्री) वितानमुल्लोचो दूष्या (द्यं वस्त्रवेश्मनि)।

स. स. स.

डेरा कनात प्रतिसीरा जवनिका (स्या)त्तिरस्करणी (च सा)॥१२०॥

अस्त्रीति—वितन्यत इति वितानम् अस्त्री पुंनपुंसकं स्यात् " वितानो यज्ञ उल्लोचे विस्तारे पुंनपुंसकम् । क्लीवं वृत्तविशेषे स्यात्त्रिलिङ्गो मन्दतुच्छयोरिति " (मेदिनी) ऊर्ध्वं लोचति, ऊर्ध्वं लोच्यते वा उल्लोचः इति द्वे वितानस्य " चँदवा " इति ख्यातस्य । वस्त्रवेश्मनि वस्त्ररचितसद्मनि दूष्यते इति दूष्यं स्यात् आद्येन पटकुटी, पटवेश्म, पटवास, पटकुड्यादिग्रहः इत्येकं वस्त्रगेहस्य । प्रतिसिनोति, प्रतिसीयते वा प्रतिसीरा, जवत्यस्यामिति जवना सैव जवनिका " यमनिका " इति वा पाठः यमयतीति यमना सैव यमनिका सा च तिरस्क्रियतेऽनयेति तिरस्करणी स्यादिति त्रीणि व्यवधानपटस्य " क़नात " इति ख्यातायाः । क्वचित्तु पर्यङ्किका परिकरः पर्यङ्कश्चावसक्थिका । अञ्चलं त्वंशुकान्ते स्यान्नीवीसारसनश्च यः" इत्यधिकं पठन्ति ॥ १२० ॥

न. पु. स. स. स.

अङ्ग संस्कार पोछना उबटना परिकर्माङ्गसंस्कारः (स्या)न्मार्ष्टिर्मार्जना मृजा।

न. न. पु. पु.

नहाना उद्वर्तनोत्सादने (द्वे समे) आप्लाव आप्लवः ॥१२१॥

न. स. न. पु. न.

चन्दनादि से लेपे गये गन्ध को फिर करना स्नानं चर्चा (तु) चार्चिक्यं स्थासको (थ) प्रबोधनम्।

पु. स. स.

स्तन, गाल आदि में कस्तूरी आदि से चिह्न रचना अनुबोधः पत्रलेखा पत्राङ्गुलि (रिमे समे) ॥ १२२ ॥

पेति—परिक्रियते मलाद्यनेन परिमलवर्जनार्था क्रिया परिकर्म स्नानोद्वर्तनादि, 'प्रतिकर्म' इति वा पाठः । अङ्गं संस्क्रियतेऽनेन अङ्गसंस्कारः इति द्वे शरीरशोभाधायककर्मणः । मार्जनं मार्ष्टिः, मार्जयतीति मार्जना, मार्जनं मृजा इति त्रीणि प्रोञ्छनादिनाङ्गनिर्मलीकरणस्य । उद्वर्त्यतेऽनेन उद्वर्तनम्, उत्साद्यतेऽनेन उत्सादनम् " उत्सादनं समुल्लेखोद्वर्तनोद्वाहनेषु च " (इति विश्वमेदिन्यौ) इमे द्वे समे समानार्थे समानलिङ्गे स्तः इति द्वे उद्वर्तनद्रव्येणाङ्गनिर्मलीकरणस्य । आप्लवनमाप्लावः पक्षे आप्लवः, स्नायते स्नानमिति त्रीणि स्नानस्य । चर्चनं चर्चा " चर्चा स्याच्चर्ममुण्डायां चिन्ता स्थासकयोरपि" (इति हैमः) चर्चनं चर्चतीति वा चर्चिका तस्याभावश्चार्चिक्यम्,

तिष्ठतीति स्थासः स एव स्थासकः " स्थासकः पुंसि चार्चिक्ये जलादेरपि बुद्बुदे " ( इति मेदिनी ) इति त्रीणि चन्दनादिना देहविलेपनस्य । अथेति–प्रबुध्यत इति प्रबोधनम्, अनुबोधनमनुबोधः इति द्वे गतगन्धस्य प्रयत्नेनोद्बोधनस्य ( यथा कस्तूरिकादेर्मद्यादिना ) पत्त्राकारा लेखा शाकपार्थिवादित्वात् पत्रलेखा, पत्त्रार्थोऽङ्गुलिरङ्गुलिव्यापारः पत्त्राङ्गुलिरिमे समे स्त्रियां स्यातामिति द्वे स्तनकपोलादौ केसरादिना रचिततिलकविशेषस्य ॥ १२१ । १२२ ॥

न. न. न. पु.न.

तिलक, **तमालपत्त्रतिलकचित्रकाणि विशेषकम् ।**

न.

**( द्वितीयं च तुरीयं च न स्त्रिया )मथ कुङ्कुमम् ॥१२३॥**

न. न. न. न. न.

कुंकुम **कश्मीरजन्माग्निशिखं वरं बाल्हीकपीतनम् ।**

न. न. न. न. न.

**रक्तसंकोचपिशुनं धीरलोहितचन्दनम् ॥ १२४ ॥**

तमेति–तमालस्य पत्त्रमिव तदाकृतित्वात्तमालपत्त्रम् " तमालपत्त्रं तापिच्छे तिलके पत्त्रके " ( इति विश्वः ) " तमालस्तिलके खड्गे " इति विश्वात्तमालोपि, तिलति, तेलति वा तिलकम् " तिलकोऽश्वद्रुमभिदोः पुण्ड्रके तिलकालके । तिलकं रुचके लोम्नि" ( इति हैमः ) चित्रयति, चित्रं करोति वा चित्रकम् " चित्रकं तिलके ना तु व्याघ्रभिच्चञ्चुराटिषु " ( इति हैमः ) विशिनष्टि विशेषकम् " विशेषकोऽस्त्रीतिलके विशेषयितरि त्रिषु " ( इति मेदिनी ) द्वितीयं तिलकम् , तुरीयं विशेषकम्, च स्त्रियां न भवतः किन्तु पुंनपुंसकयोरिति चत्वारि ललाटकृततिलकस्य । अथेति–कुक्यते, कुंकुं इति शब्दोस्ति वाचकत्वेनास्येति वा कुंकुमम्, कशति, कश्यते वा कश्मीरस्तस्मिञ्जन्मास्येति कश्मीरजन्म " काश्मीरं कुंकुमेपि स्याट्टङ्कपुष्करमूलयोरिति" (मेदिनी ) अग्निरिव शिखा केसरोऽस्येति अग्निशिखम् " अथाग्निशिखमुद्दिष्टं कुसुम्भे कुंकुमेऽपि चेति" (मेदिनी) व्रियत इति वरम्, "वरो वृतौ । विटे जामातरि श्रेष्ठे देवतादेरभीप्सिते । वरं तु घुसृणे किंचिदिष्टे " ( इति हैमः ) बल्हते बल्हीको देशस्तस्मिन् भवं बाल्हीकम् " बाल्हीकं बाल्हिकं धीरहिङ्गुनोर्नाश्मदेशयोरिति " (त्रिकाण्डशेषः) पीतयति, पीयते वा पीतनम् " पीतनं पीतदारुणि । कुङ्कुमे हरिताले च पुमानाम्रातकेमतः " ( इति मेदिनी ) रज्यते स्म रक्तम् " रक्तं नील्यादिरञ्जिते । कुङ्कुमेऽसृज्यनु रक्ते प्राचीनामलकेऽरुणे" (इति हैमः) संकोचति, संकोचयति, संकोच्यते वा संकोचम् "संकोचो मीनभेदे च बन्धे क्लीबन्तु कुङ्कुम" इति मेदिनी । पिंशतीति पिशुनम् "पिशुनं कुङ्कुमेऽपि च । कपि वक्रे च काके ना सूचकक्रूरयोस्त्रिषु । पृक्कायां पिशुना स्त्री

स्यादिति " (मेदिनी) दधाति, धीयते वा धीरः "धीरो धैर्यान्विते स्वैरे बुधे क्लीबन्तु कुङ्कुमे " लोहितं च तच्चन्दनं चेति लोहितचन्दनम्, लोहितमपि " लोहितं रक्त-गोशीर्षे कुङ्कुमे रक्तचन्दने " ( इति मेदिनी ) इत्येकादश केसरस्य ॥ १२३।१२४॥

स. स. न. पु. पु. पु.

महावर **राक्षा लाक्षा जतु ( क्लीबे ) यावोऽलक्तो द्रुमामयः ।**

न. न. न. न.

लवङ्ग **लवङ्गं देवकुसुमं श्रीसंज्ञ ( मथ ) जायकम् ॥ १२५ ॥**

न. न.

पीत चन्दन **कालीयकं ( च ) कालानुसार्यं ( चाथ समार्थकम् ) ।**

न. न. न. न. न. न.

अगुरु **वंशकागुरुराजार्हलोहकृमिजजोङ्गकम् ॥ १२६ ॥**

रेति—रक्ष्यतेऽनयेति रक्षा सैव राक्षा, लक्ष्यतेऽनयेति लक्षा सैव लाक्षा, जायते इति जतु क्लीबे स्यात्, यौति, यूयते वा यवः स एव यावः, न लज्जते स्म, न लक्यते स्म, न रक्तोऽस्मादिति वा अलक्तः, द्रुमाणामामयो द्रुमामयः इति षट् अलक्तस्य "महावर" इति ख्यातस्य । लुनाति, लूयते वा लवङ्गम्, देवानां कुसुमम्, कुसुमेषु देव इवेति, देव-योग्यं कुसुमं वेति देवकुसुमम् , श्रियः संज्ञा संज्ञा यस्येति श्रीसंज्ञमिति त्रीणि लव-ङ्गस्य । अथेति—जयति गन्धान्तरमिति जायकम् , कालस्य वर्णास्येदं कालीयं तदेव कालीयकम् , कलेरिष्टं कालेयमिति वा पाठः " कालीयकं च कालेयं वर्णकं कान्ति-दायकमिति" ( व्याडिः ) अनुस्रियतेऽनुसार्यम्—कालेन वस्तुनानुसार्यं कालानुसार्यम् , " कालानुसार्यं शैलेये कालीये शिंशपाद्रुमे " ( इति विश्वमेदिन्यौ ) इति त्रीणि सुगन्धद्रव्यभेदस्य । अथेति—समानोऽर्थो यस्य तदिति समार्थकम्, वंश इव वंशकम् , वंशोऽस्त्यत्रेति विग्रहे तु वंशिकमपि " राजार्हं वंशिकं नतम् । वनद्रुमः परमदो वंशकं लोहनामकमिति " ( वाचस्पतिः ) न गुरु यस्मादिति अगुरु " अगुर्वगुरुराजार्ह-मिति "(हैमः) राजानमर्हतीति राजार्हम्, "राजार्हं जोङ्गके क्लीबं राजयोग्येऽभिधेय-वदिति" ( मेदिनी ) लुह्यते, रोहतीति वा लोहम् " लोहोऽस्त्री शस्त्रके लोहं जोङ्गके सर्वतेजसि" ( इति मेदिनी ) कृमिभिर्जन्यते कृमिजम्, जुङ्गति, जुङ्गयते वा पृषोदरा-दित्वात् जोङ्गकमिति षट् अगुरुणः ॥ १२५ । १२६ ॥

न. पु. न. स.

काला अगुरु **कालागुर्वगुरु ( स्यात्त ) न्मङ्गल्या (मल्लिगन्धि यत् ) ।**

पु. पु. पु. पु.

अगुरुका भेद **यक्षधूपः सर्जरसो रालसर्वरसावपि ॥ १२७ ॥**

यक्षधूप या राल पु. पु. पु.

दशाङ्गधूप **बहुरूपो (ऽप्यथ) वृकधूपकृत्रिमधूपकौ ।**

केति–कालं च तदगुरु चेति, कालागुरु, न गुरु अगुरु "कालागुर्वप्यगुरूच्यते" (इति सुभूतिः) इति द्वे कालागुरुणः । मल्लिकापुष्पस्येव गन्धो यस्येति यदगुरुमल्लिगन्धि तत् मङ्गल्ये साधुः मङ्गल्या स्यादित्येकमगुरुभेदस्य । यक्षान् धूपायतीति यक्षधूपः, सर्जस्य सालस्य रसः सर्जरसः, न राति दुःखमिति अरालः, स्वामिमते रालोपि "रालः सर्वरसोऽरालो धूपको वह्निवल्लभः" (इति रभसः) सर्वे रसा यस्मिन् सर्वे रस्यते वा सर्वरसः, बहूनि रूपाण्यस्येति बहुरूपः "बहुरूपः स्मरे विष्णौ सरटे धूपके शिवे" (इति हैमः) इति पञ्च रालस्य । अथेति–वृक इव धूपो वृकधूपः, "वृकधूपस्तु सरलद्रवकृत्रिमधूपयोरिति" (मेदिनी) कृत्रिमश्चासौ धूपश्च कृत्रिमधूपः स एव कृत्रिमधूपकः इति द्वे नानासुगन्धिकृतदशाङ्गादिधूपस्य ॥ १२७ । १/३ ॥

पु. पु. पु. पु. पु.

लोबान **तुरुष्कः पिण्डकः सिह्लो यावनो(प्यथ)पायसः ॥१२८॥**

पु. पु. पुं. पु.

देवदारु धूप **श्रीवासो वृकधूपो (ऽपि) श्रीवेष्टसरलद्रवौ ।**

तुर्विति–तुतोर्त्तीति तुरुस्स एव तुरुष्कः, "तुरुष्कः सिह्लके म्लेच्छजातौ देशान्तरेऽपि च" (इति विश्वमेदिन्यौ) पिण्डत इति पिण्डः स एव पिण्डकः "पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिह्लकयोरपि । ओड्रपुष्पे च पुंसि स्यात् क्लीबमाजीवनायसोः । पिण्डी तु पिण्डतगरेऽलाबू खर्जूरभेदयोः" (इति मेदिनी) स्निह्यतीति पृषोदरादित्वात् सिह्लः, यवनदेशे भवः याव्यते वा यावनः इति चत्वारि सिह्लकस्य "लोबान" इति ख्यातस्य । अथेति–पय एव, पयसो विकारो वा पायसः "पायसस्तु क्लीबपुंसोः श्रीवासपरमान्नयोः" (इति मेदिनी) श्रियो वासः श्रीश्चासौ वासश्चेति वा श्रीवासः, "श्रीवासो वृकधूपे स्यात्पङ्कजे मधुसूदने" (इति मेदिनी) धूप्यतेऽनेनेति धूपः, वृकनामाधूपः शाकपार्थिवादित्वात् वृकधूपः, श्रियः श्रीसंज्ञको वावेष्टः श्रीवेष्टः, मुकुटमते तु श्रियः सरलद्रवस्य पिष्टः श्रीपिष्टोपि सरलस्य देवदारोर्द्रवः इति पञ्च सरलद्रवस्य "देवदारुधूप" इति ख्यातस्य ॥ १२८ । १/२ ॥

पु. पु. स. न.

कस्तूरी **मृगनाभिर्मृगमदः कस्तूरी (चाथ) कोलकम् ॥ १२९ ॥**

न. न. पु न.

कबाबचीनी कपूर **कक्कोलकं कोशफल (मथ) कर्पूर (मस्त्रियाम्) ।**

पु. पु. पु. पु.

**घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमबालुका ॥ १३० ॥**

मृगेति–मृगस्य नाभिः, मृगनाभिः "मृगनाभिर्मृगमदो मृगः कस्तूरिकापि च"

१ "श्रीवेषरचनाशोभाभारती सरलद्रवे" (इति विश्वः) ॥

( इति माधवात् ) मृगोपि" मुख्यराट्क्षत्रिये नाभिः पुंसि प्राण्यङ्गके द्वयोः । चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे " ( इति रभसात् ) नाभिरपि, मृगस्य मदः, मृगमदः, " मदो रेतसि कस्तूर्यामिति " ( मेदिनी ) मदोपि, कसति गन्धोऽस्या इति कस्तूरी इति त्रीणि कस्तूरिकायाः । अथेति–कोलतीति कोलकम् " रलयोरेकत्वात् " कोरकमपि, " कोरकोऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः " ( इति मेदिनी ) ककतेऽत्रेति कक्, कोलतीति कोलम्, कक् च तत्कोलं चेति कक्कोलं तदेव कक्कोलकम्, कोशे फलमस्येति कोशफलमिति त्रीणि फलकर्पूरस्य " कबाबचीनी " इति ख्यातस्य । अथेति–किरति, कृणाति, करोति वा कर्, पूर्यत इति पूरः कर् चासौ पूरश्चेति कर्पूरमस्त्रियां पुंनपुंसके स्यात्, घनो दृढः सारोस्य, घनस्य सार इव वा घनसारः, चन्द्रस्य संज्ञा इव संज्ञा यस्येति चन्द्रसंज्ञः, सितं श्वैत्यं, बन्धनं, चन्द्रं वा अभ्रतीति सिताभ्रः, सिता आभा यस्येति विग्रहे तु सिताभोपि हिमा चासौ बालुका चेति हिमबालुका इति पञ्च कर्पूरस्य ॥ १२९ । १३० ॥

मलयागिरि चन्दन चन्दनों के भेद

पु. पु. पु. पु.न.
**गन्धसारो मलयजो भद्रश्रीश्चन्दनो ( ऽस्त्रियाम् ) ।**
न. न. पु.न.
**तैलपर्णिकगोशीर्षे हरिचन्दन ( मस्त्रियाम् ) ॥१३१॥**

गन्धेति–गन्धवान्सारः स्थिरभागोऽस्य, गन्ध एव सारोऽस्येति वा गन्धसारः, मलये जातो मलयजः, भद्रा श्रीरस्येति भद्रश्रीः "हस्तिजात्यन्तरे भद्रो वाच्यवच्छ्रेष्ठसाधुनोरिति" ( विश्वः ) चन्दयतीति चन्दनम् अस्त्रियां पुंनपुंसके स्यादिति चत्वारि मलयजचन्दनस्य । तिलपर्णी वृक्षभेदे जाता तैलपर्णी सैव तैलपर्णिका तस्यां भवं तैलपर्णिकम्, गोः शीर्षमिव गोशीर्षम्, हरेरिन्द्रस्य चन्दनं, हरिः कपिलवर्णं चन्दनं वा हरिचन्दनम "हरिचन्दनमस्त्री स्यात्त्रिदशानां महीरुहे । नपुंसकन्तु गोशीर्षे ज्योत्स्नाकुङ्कुमयोरपि" (इति मेदिनी) अस्त्रियां पुंनपुंसके स्यादिति चन्दनविशेषाणां पृथक्पृथगेकैकम ॥ १३१ ॥

रक्तचन्दन

स. न. न. न.
**तिलपर्णी ( तु ) पत्राङ्गं रञ्जनं रक्तचन्दनम् ।**

जायफल

न. न. न.
**कुचन्दनं (चाथ) जातीकोशजातीफले (समे) ॥१३२॥**

तिलेति–तिलस्येव पर्णान्यस्याः, तिलपर्णी नदी आकरोऽस्या वा ' तिलपर्णी ' पत्रेऽत्रङ्गति, पत्रमेवाङ्गमस्येति वा पत्राङ्गम्, पत्राङ्गं न द्वयोर्भूर्जे पद्मके रक्तचन्दने " (इति मेदिनी) रञ्जयतीति रञ्जनम् "रञ्जनो रागजनने रञ्जनं रक्तचन्दने" (इति मेदिनी ) रक्तं च तच्चन्दनं च रक्तचन्दनम्, कुत्सितान्यन्यचन्दनान्यस्मात्, कुत्सितं चन्दनं, कौ चन्दनं वेति कुचन्दनमिति पञ्च रक्तचन्दनस्य । जात्याः कोशम् जातीकोशम

"जातिर्जातीफलेपि च" इति रभसाज्जातिरपि, जात्याः फलम् जातीफलम् "फलं लाभे जातिकोषे बाणाग्रे फलकेपि च" (इति रुद्रः) फलमपि उभे समे समानार्थे स्यातामिति द्वे जातीफलस्य "जायफल" इति ख्यातस्य ॥ १३२ ॥

महासुगन्धित लेप पीसे सुगन्धित द्रव्य घिसे चन्दनादि लेप

**(कर्पूरागरुकस्तूरीकक्कोलै) र्यक्षकर्दमः।**
**गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम् ॥ १३३ ॥**

कर्पूरेति—समभागैः कर्पूरागरुकस्तूरीकक्कोलैः यक्षप्रियः कर्दमः यक्षकर्दमः कथ्यते "कर्पूरागरुकस्तूरीकक्कोलघुसृणानि च। एकीकृतमिदं सर्वं यक्षकर्दम इष्यते" (इति व्याडिः) कुङ्कुमागरुकस्तूरीकर्पूरं चन्दनं तथा। महासुगन्धमित्युक्तं नामतो यक्षकर्दमः (इति धन्वन्तरिः) इत्येकं यक्षकर्दमलेपस्य। गात्रमनुलिप्यते ययेति गात्रानुलेपनी, वर्त्यत इति वर्तिरिति द्वे गात्रानुलेपयोग्यस्य पिष्टसुगन्धिद्रव्यस्य। वर्णं करोति वर्णयतीति वर्णकम्, विलिप्यतेऽनेनेति विलेपनं स्यात् "गात्रानुलेपनी वर्तिर्विगन्ध्यथ विलेपनम्। वर्णकं चाथ विच्छित्तिः स्त्री कषायोङ्गरागके" (इति रभसः) इति द्वे घृष्टचन्दनादिलेपमात्रस्य ॥ १३३ ॥

सुगन्धकारक चूर्ण वासित वस्तु गन्धमालादि का धारण

**चूर्णानि वासयोगाः (स्यु) र्भावितं वासितं (त्रिषु)।**
**(संस्कारो गन्धमाल्याद्यैर्यः स्यात्तद) धिवासनम् १३४॥**

चूरिति—चूर्ण्यत इति चूर्णम्, बहुत्वे चूर्णानि, वासे सुगन्धीकरणे योगाः उपायाः वासयोगाः स्युरिति द्वे पटवासादिक्षोदस्य। भाव्यते स्म भावितम्, "भावितं वासिते प्राप्ते" (इति हैमः) वास्यते स्म वासितम् "वासितं भाविते रुते" (इति मेदिनी) उभे त्रिषु त्रिलिङ्ग्यां स्यातामिति द्वे द्रव्यान्तरभावितस्य। गन्धमाल्याद्यैः मङ्गल्यधूपादिभिर्वस्त्रादीनां ताम्बूलादीनां च यः संस्कारः तत् अधिकं वास्यते अधिवासनं स्यादित्येकं गन्धमाल्याद्यधारणस्य ॥ १३४ ॥

शीशमाल्य केश मध्यमाल्य शिर से चोटी तक शिर से ललाट तक

**माल्यं मालास्रजौ (मूर्ध्नि) केशमध्ये (तु) गर्भकः।**
**प्रभ्रष्टकं (शिखालम्बि) (पुरोन्यस्तं) ललामकम् १३५॥**

मेति—मूर्ध्नि शिरसि इदमतन्त्रमन्यत्रापि माला भवत्येव। मल्यते, मालैव वा माल्यम् "माल्यं कुसुमतत्स्रजोरिति" (मेदिनी) मल्यते, मां लातीति वा माला "माला तु पङ्क्तौ पुष्पादिदामनि" (इति हैमः) सृजति, सृज्यते वा स्रक् इति त्रीणि शिरोधार्यमाल्यस्य। केशमध्ये तु गर्भ इव गर्भकः स्यादित्येकं केशमध्यस्थमाल्यस्य। शिखालम्बि

शिखातो लम्बमानं माल्यं प्रभृश्यते स्म, प्रभ्रंशितुं प्रवृत्तमिति वा प्रभ्रष्टं तदेव प्रभ्रष्टकं स्यादित्येकं शिखालम्बिमाल्यस्य। तदेव माल्यं पुरोभागे न्यस्तं ललाटपर्यन्तं ललाममिव ललामकं स्यादित्येकं पुरस्थललाटपर्यन्तमाल्यस्य ॥ १३५ ॥

न. न.

गलस्थमाला **प्रालम्ब ( मृजुलम्बि स्यात्कण्ठा ) द्वैकक्षकं ( तु तत् )।**

वक्षस्थ माला पु. पु.

शिखास्थ माला **(यत्तिर्यक्क्षिप्तमुरसि) (शिखास्वा) पीडशेखरौ॥१३६॥**

प्रेति—कण्ठादूर्ध्वमृजुलम्बितुं शीलमस्य तदेव माल्यं प्रालम्बत इति प्रालम्बं स्यादित्येकं कण्ठोर्ध्वलम्बमानमाल्यस्य । यदुरसि उपवीतवत्तिर्यक्क्षिप्तं माल्यं तत् विशिष्टकक्षोऽस्माद्विकक्षमुरस्तत्र भवं वैकक्षं तदेव वैकक्षकं स्यादित्येकं वक्षस्स्थमाल्यस्य। शिखासु क्षिप्तं माल्यम्, आपीडयतीति आपीडः, शिङ्खतीति शेखरः इति द्वे शिखास्थमाल्यस्य ॥ १३६ ॥

स. पु. पु. स.

मालादिका **रचना ( स्या ) त्परिस्पन्द आभोगः परिपूर्णता।**

बनाना सब न. पु. स. न.

वस्तु से पूर्ण **उपधानं तूपबर्हः शय्यायां शयनीय ( वत् ) ॥ १३७॥**

तकिया शय्या न. पु. पु. पु. स.

पलँग **शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया ( समाः )।**

रेति—रचनमिति रचना, परिस्पन्द्यतेऽत्र, परिस्पन्दनं वा परिस्पन्दः, "परिस्यन्दः" इति वा पाठः इति द्वे शिल्पादिरचनायाः । आभोजनमाभोगः "आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपि" ( इति विश्वमेदिन्यौ ) परितः पूर्यते स्म परिपूर्णस्तस्य भावः परिपूर्णता स्यादिति द्वे समस्तसामग्रीपूर्णतायाः । उपधीयते शिरोऽत्रेति उपधानम् उप बृह्यतेऽत्रेति अनेन वा उपबर्हः इति द्वे शिरोनिधानस्य। शय्यतेऽत्रेति शय्या "शय्या स्याच्छयनीयेपि गुम्फनेपि च योषिति" ( इति मेदिनी ) शय्यतेऽस्मिन्निति शयनीयम् ( वदित्यव्ययम् ) शय्यतेऽत्रेति शयनम् "शयनं सुरते निद्राशय्ययोश्च नपुंसकमिति" (मेदिनी) इति त्रीणि तूलिकादेः शय्यामात्रस्य वा। मञ्चत इति मञ्चः, परितोऽङ्क्यते पर्यङ्कः "परेश्च घाङ्कयोरिति वा लत्वे" पल्यङ्कः "पल्यङ्को मञ्चपर्यङ्कवृषीपर्यस्तिकासु च" ( इति मेदिनी ) एते खट्यते काङ्क्ष्यते शयनार्थिभिरिति खट्वा तया समाः समानार्था ज्ञेया इति चत्वारि पल्यङ्कस्य ॥ १३७ । १ ॥

पु. पु. पु. पु. न. न.

गेंद या छोटी **गेन्दुकः कन्दुको दीपः प्रदीपः पीठमासनम् ॥ १३८॥**

---

१ "दीपस्तु स्नेहाशः कज्जलध्वजः। दशेन्धनो गृहमणिर्दोषातिलक इत्यपि । शिखातरुर्दीपवृक्षो ज्योत्स्नावृक्षोऽथ लोचकः" ( इति त्रिकाण्डशेषः )॥

तकिया, दीप, पु. पु. पु. पु.
आसन, डब्बा, **समुद्गकः संपुटकः प्रतिग्राहः पतद्ग्रहः।**
पीकदान, कङ्घी, स. स. पु. पु.
बुकवा, **प्रसाधनी कङ्कतिका पिष्टातः पटवासकः॥ १३९॥**

गयिति—गाते गा गच्छन्निन्दुरिव, गे गगने इन्दुरिवेति वा गेन्दुकः, कन्द्यते, कं सुखं ददाति, दयते, द्यति, यच्छति वा कन्दुः स एव कन्दुकः इति द्वे गेन्दुकस्य "गेंद" इति ख्यातस्य "गालमसूरिया" इति ख्यातस्य वा। दीपयति, दीप्यतेऽनेनेति वा दीपः, प्रदीपयति, प्रकृष्टो दीप इति वा प्रदीपः इति द्वे प्रदीपस्य। पेठन्त्यत्र, पीयतेऽत्रेति वा पीठम् "विष्टरः पीठमस्त्रियामिति" (त्रिकाण्डशेषः) आस्यतेऽत्रेति आसनमिति द्वे आसनस्य। समुद्गच्छति समुद्गः स एव समुद्गकः, संपुट्यते इति संपुटकः इति संपुटस्य "डब्बा" इति ख्यातस्य। प्रतिगृह्णातीति प्रतिग्राहः पक्षे प्रतिग्रहः "प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे। योग्येभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे" (इति मेदिनी) पततो ग्रहः पतद्ग्रहः इति द्वे पतद्ग्रहस्य "पीकदानी" इति ख्यातायाः। प्रसाध्यतेऽनयेति प्रसाधनी "प्रसाधनी तु कङ्कत्यां सिद्धौ वेशे प्रसाधनमिति" (विश्वमेदिन्यौ) कङ्कते, कस्य शिरसोऽङ्कास्तेष्वततीति वा कङ्कतिका "कङ्कती तु प्रसाधनी" (इति स्त्रीकाण्डेऽमरमाला) "कङ्कतं तु प्रसाधनमिति क्लीबकाण्डे च इति द्वे कङ्कतिकायाः "कङ्घी" इति ख्यातायाः। पिष्टमततीति पिष्टातः, पटं वासयति, पटो वास्यतेऽनेनेति वा पटवासः स एव पटवासकः इति द्वे पिष्टातस्य "बुकवा" इति ख्यातस्य॥ १३८। १३९॥

शीशा या दर्पण पु.न. पु. पु. न. न.
बेना या पंखा **दर्पणे मकुरादर्शौ व्यजनं तालवृन्तकम्॥ १४०॥**

### इति मनुष्यवर्गः॥

दरिति— दर्पयतीति दर्पणः, "आदर्शो दर्पणः प्रोक्तः" (इत्यमरमाला) मङ्कते मकुरः, मङ्कुरोपि वा मुञ्चति ज्योतिरिति विग्रहे तु मुकुरोऽप्युकारवानपि "मकुरः स्यान्मुकुरवद्दर्पणे बकुलद्रुमे" (इति मेदिनी) [1]आदृश्यते रूपमत्रेति आदर्शः "आदर्शो दर्पणे टीकाप्रतिपुस्तकयोरपि" (इति मेदिनी) इति त्रीणि दर्पणस्य। व्यजन्त्यनेन व्यजनम्, तालस्येव वृन्तमस्य, ताले करतले वृन्तमिव बन्धनमस्येति वा तालवृन्तं तदेव तालवृन्तकमिति द्वे व्यजनस्य "पंखा" इति ख्यातस्य॥ १४०॥

इति मनुष्यवर्गविवरणम्॥

---

१ किं तद्दर्पणमभि यत्र सकलमिति धर्मसेनोऽसौ नपुंसकमपि॥

अथ ब्रह्मवर्गो व्याख्यायते ।

स्त्री. न. न. न. पु. पु.
वंश सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ ।
पु. पु. पु. पु.
वर्ण वंशोऽन्ववायः सन्तानो वर्णाः (स्युर्ब्राह्मणादयः)॥१॥

समिति—संतन्यत इति सन्ततिः " सन्ततिः स्यात्पङ्क्तौ गोत्रे पारपर्ये च पुत्र-पौत्राणामिति " (मेदिनी) गूयत इति गोत्रम् " गोत्राभूगव्ययोर्गोत्रः शैले गोत्रं कुला-ख्ययोः । संभावनीयबोधे च काननक्षेत्रवर्त्मसु " ( इति मेदिनी ) जन्यत इति जन-नम्, "जननं वंशजन्मनोरिति" ( मेदिनी ) कूयते, कोलति, कुं भूमिं लाति, कौ लीयते वा कुलम्, " कुलं जनपदे गोत्रे सजातीयगणेपि च । भवने च तनौ क्लीबं कपट-कार्योपधौ कुली " ( इति मेदिनी) अभिजन्यते, अभितोऽभिमुखो वा जनो जन्मात्रेति वा अभिजनः, " भवेदभिजनः ख्यातौ जन्मभूम्यां कुलध्वजे । कुलेपि च पुमानिति " (मेदिनी) अन्वीयत इत्यन्वयः, उश्यते, वन्यते वा वंशः "वंशो वेणौ कुले वर्गे पृष्ठाद्यव-यवेपि च " ( इति विश्वमेदिन्यौ ) अन्ववाय्यतेऽन्ववायः, संतन्यते सन्तानः "सन्तानः सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे" (इति मेदिनी) इति नव वंशस्य । ब्राह्मण आदिर्येषु ते ब्राह्मणादयः वर्ण्यन्ते इति वर्णाः स्युः " वर्णो द्विजादिशुक्लादि यशोगुणकथासु च। स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेपने" ( इति मेदिनी ) इत्येकं वर्णस्य ॥ १ ॥

न.
चारवर्ण राज-(विप्रक्षत्रियविट्शूद्रा) श्चातुर्वर्ण्य (मिति स्मृतम्) ।
पु. पु. पु. पु.
वंश कुलीन राजबीजी राजवंश्यो बीज्यस्तु कुलसंभवः ॥ २ ॥

विप्रेति—विप्रश्च क्षत्रियश्च विट् च शूद्रश्च ते विप्रक्षत्रियविट्शूद्राः चत्वार एव वर्णाश्चातुर्वर्ण्यमिति स्मृतं कथितमित्येकं चातुर्वर्ण्यस्य । राज्ञो बीजयितुं शीलमस्य, राज्ञो बीजं राजबीजमस्यास्तीति वा राजबीजी, वंशे भवो वंश्यः राज्ञो वंश्यः, राजवंशे साधुर्वेति राजवंश्यः इति द्वे राजवंश्यस्य । बीज्यते, बीजमस्यास्ति, बीजे भवः साधु-र्वेति बीज्यः, कुले संभवति, कुले संभवोऽस्य, संभवत्यस्मादिति संभवः कुलस्य संभवो वेति कुलसंभव इति द्वे कुलीनस्य ॥ २ ॥

पु. पु. पु. पु. पु. पु.
महाकुलीनब्रह्म-माहाकुलकुलीनार्यसभ्यसज्जनसाधवः ।
चारी आदि पु. पु. पु. पु.
चारो आश्रम ब्रह्मचारी गृही वानप्रस्थो भिक्षु (श्चतुष्टये) ॥ ३ ॥

पु. पु. पु. पु. पु.

ब्राह्मण, **आश्रमो (ऽस्त्री) द्विजात्यग्रजन्मभूदेववाडवाः ।**

पु. पु.

ब्राह्मणकर्म **विप्रश्च ब्राह्मणो(ऽसौ)षट्कर्मा(यागादिभिर्युतः) ॥४॥**

मेति—महच्च तत्कुलं चेति महाकुलं तस्यापत्यं माहाकुलः, महत्कुलमस्येति विग्रहे तु ' महाकुलः ' ह्रस्वादिरपि । कुलस्यापत्यं कुलीनः, अर्यत इति आर्यः, सभायां साधुः सभ्यः, अस्तीति सन् सश्चासौ जनश्चेति सज्जनः, साध्नोति धर्ममिति साधुः "साधु-र्वार्धुषिके चारौ सज्जने चाभिधेयवदिति" ( मेदिनी ) इति षट् महाकुलीनस्य । ब्रह्म-वेदस्तदध्ययनार्थं व्रतमप्युपचाराद्ब्रह्म तच्चरितुं शीलमस्य, ब्रह्मतपो ज्ञानं वा चरत्यर्जय-त्यवश्यमिति वा ब्रह्मचारी, गृहा दाराः सन्त्यस्येति गृही, वनमेव वनस्य वा प्रस्थः, प्रदे-शस्तत्र भवो वानप्रस्थः, भिक्षणशीलो भिक्षुः एतच्चतुष्टये चतुरवयवसमुदाये । आश्रा-म्यन्त्यत्रानेन वा आसमन्ताच्छ्रमोऽत्रेति वा आश्रमः अस्त्री पुंनपुंसकं स्यात् " आश्रमो ब्रह्मचर्यादौ वानप्रस्थे वने मठे । अस्त्रियामिति" ( मेदिनी ) इत्येकं चतुराश्रमस्य । द्वे जाती जन्मनी यस्येति द्विजातिः " द्विजातिर्विप्राण्डजयोश्च पुंलिङ्गः" (इति मेदिनी) अग्रे आदौ जन्मास्य, अग्रान्मुखाज्जन्मास्येति वा अग्रजन्मा, "अग्रजन्मा द्विजश्रेष्ठे भ्रातरि ब्रह्मणि स्मृतः " ( इति विश्वः ) भुवो, भुवि वा देव इव भूदेवः, " वडवाकुम्भदा-स्यश्वा स्त्रीविशेषा द्विजन्मनाम् " ( इति रभसः ) वडवायां जातः, वाडनं वालनं वा वाडः सोऽस्यास्ति, वाडं वातीति वा वाडवः " वाडवं करणे स्त्रीणां घोटकौघे नपुंसकम् । पाताले न स्त्रियां पुंसि ब्राह्मणे वडवानले " ( इति मेदिनी ) विप्राति, उप्यतेऽत्र, विप्राति, विपाति वा विप्रः, ब्रह्मणोऽपत्यम्, ब्रह्म अधीते जानाति वा ब्राह्मणः इति षट् ब्राह्मणस्य । असौ विप्रो यागादिभिर्युतः सन् षट्कर्माण्यस्येति ' षट्कर्मा ' कथ्यते " इज्याध्ययनदानानि याजनाध्यापने तथा । प्रतिग्रहश्च तैर्युक्तः षट्कर्मा विप्र उच्यते " इत्येकं षट्कर्मणो विप्रस्य ॥ ३ । ४ ॥

पु. पु. पु. पु. पु. पु. पु.

पण्डित वैदिक **विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः ।**

पु. पु. पु. पु. पु. पु. पु.

**धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः॥५॥**

पु. पु. पु. पु. पु. पु.

**धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ।**

पु. पु. पु. पु.

**दूरदर्शी दीर्घदर्शी श्रोत्रियच्छान्दसौ ( समौ ) ॥ ६ ॥**

---

१ मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धनादिति मनुः ॥

वीति—वेत्तीति विद्वान् " विद्वानात्मविदि प्राज्ञे पण्डिते चाभिधेयवत् " ( इति विश्वः ) विप्रकृष्टं निश्चिनोति, चेतति, चिन्तयति वा पृषोदरादित्वात् विपश्चित्, दोषं जानातीति दोषज्ञः, अस्तीति सन् " सन्साधौ धीरशस्तयोः । मान्ये सत्ये विद्यमाने त्रिषु साध्व्युमयोः स्त्रियामिति" (मेदिनी) सुष्ठुध्यायतीति सुधीः, कौति धर्मादि, कवते वा कुः, वेत्तीति विदः कोर्वेदस्य विदः " विदा ज्ञाने च निर्दिष्टा मनीषायां च योषितीति" (मेदिनी) कविवेदे विदा यस्येति वा कोविदः, बुध्यते बुधः " बुधः सौम्ये च पण्डिते " ( इति मेदिनी ) धियं राति ददाति, धियमीरयति वा धीरः " धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे । स्त्रियां श्रवणतुल्यायामिति" (मेदिनी) मनीषास्यास्तीति मनीषी, जानातीति ज्ञः " ज्ञो ब्रह्मबुधविद्वत्सु " ( इति मेदिनी ) प्रकर्षेण जानातीति प्रज्ञः " प्रज्ञस्तु पण्डिते वाच्यलिङ्गो बुद्धौ तु योषिति " ( इति मेदिनी ) प्रज्ञ एव प्रज्ञास्यास्तीति वा प्राज्ञः, संख्या विचारणास्त्यस्येति संख्यावान्, पण्ड्यतेऽनयेति पण्डा "पण्डः षण्डे धियि स्त्री स्यादिति" (मेदिनी) पण्डा जातास्य, पण्ड्यते स्म वा पण्डितः "यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः । ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः" (इति गीतायाम् ) कवते, कौति वा कविः "कविर्वाल्मीकिकाव्ययोः । सूरौ काव्यकरे पुंसि स्यात्खलीने तु योषिति " ( इति मेदिनी ) धीरस्यास्तीति धीमान् " धीमान् पण्डिते च बृहस्पतौ " ( इति मेदिनी ) सूते, सूयते वा सूरिः केचित्तु " सूरश्चारुभटे सूर्ये " ( इति विश्वः ) सूरः सूर्योऽस्त्युपास्यतयास्येति " सूरी " नान्तमाहुः "दूरदृक् कोविदः सूरी " ( इति रभसः ) प्रशस्तं कृतं कर्मास्य, कृतमनेन वा कृती " कृतीस्यात्पण्डिते योग्ये " ( इति हैमः ) कर्षतीति कृष्टिः " आकर्षणे स्त्रियां कृष्टिर्भवेन्नातु " विपश्चिति " (इति रन्तिदेवः) लब्धो वर्णः स्तुतिर्येनेति लब्धवर्णः, विचष्ट इति विचक्षणः, दूरान्दूराद्वा पश्यतीति दूरदर्शी, दीर्घं पश्यतीति दीर्घदर्शी इति द्वाविंशतिः पण्डितस्य । छन्दोऽधीते निपातनाच्छ्रोत्रियः पक्षे छान्दसः उभौ समौ समानार्थौ समानलिङ्गौ स्तः इति द्वे सम्पूर्णशाखाध्यायिनः ॥ ५ । ६ ॥

| | |
|---|---|
| पढ़ानेवाला, | (पु.) उपाध्यायोऽध्यापको (पु.) ( थ ) ( सनिषेकादिकृत् ) गुरुः[1] (पु.) । |
| पिता आदि, आचार्य, | (मन्त्रव्याख्याकृदा[2]) चार्य (पु.) (आदेष्टा त्वध्वरे) व्रती (पु.) ७॥ |
| यजमान, दीक्षित, बहुयाग | यष्टा (पु.) ( च ) यजमान (पु.) (श्च) ( स सोमवति ) दीक्षितः (पु.) । |
| कर्ता सविधि यज्ञकर्ता | इज्याशीलो (पु.) यायजूको (पु.) यज्वा (पु.) (तु) विधिनेष्टवान् ॥ ८॥ |

---

१ गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निषेधकृत् । अन्धकारनिरोधत्वाद्गुरुरित्यभिधीयते ॥ १ ॥ ( इति गुरुगीतायाम् ) ॥

२ पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपोऽथ समाधानं व्याख्यानं पञ्चलक्षणम् ॥

उपेति—उपेत्याधीयतेऽस्मादित्युपाध्यायः, अध्यापयतीति अध्यापकः "एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः। योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते"(इति मनुः) इति द्वे उपाध्यायस्य। अथेति—सोऽध्यापकः निषेकादिकृत् निषेको गर्भाधानमादिर्यस्य सीमन्तोन्नयनादेस्तस्य कर्ता सन् गृणाति धर्मादिं, गिरत्यज्ञानमिति वा गुरुः कथ्यते "गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि। पुमान्निषेकादिकरे पित्रादौ सुरमन्त्रिणि" (इति मेदिनी) "निषेकादीनि कर्माणि यः करोति यथाविधि। संभावयति चान्येन स विप्रो गुरुरुच्यते" (इति मनुरपि) इत्येकं गुरोः। मन्त्रस्य वेदस्य व्याख्यां करोतीति मन्त्रव्याख्याकृत्, आचर्यते इत्याचार्यः "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः। साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षते" (इति मनुः) इति द्वे आचार्यस्य। अध्वरेयागे यः आदिशति स्वेष्टसंपादनाय ऋत्विजः प्रेरयतीति आदेष्टा, "आदिष्टी इति पाठेतु आदिष्टमनेनेत्यादिष्टी"सः व्रतं भोजनादि नियमोऽस्त्यस्य,व्रतयतीति वा व्रती, यजते यष्टा, यजते इति यजमानश्च स्यादिति त्रीणि यजमानस्य। स व्रती सोमपानवति यागे आदेष्टा सन् दीक्षते स्म, दीक्षा जातास्येति वा दीक्षितः स्यादित्येकं दीक्षितस्य। इज्याशीलमस्य, इज्यां शीलतीति वा इज्यशीलः, पुनः पुनर्भृशं वा यजत इति यायजूकः इति द्वे यायजूकस्य। यस्तु विधिना इष्टवान् स यजते स्म यज्वा स्यादित्येकं सविधियज्ञकर्तृकस्य ॥ ७। ८ ॥

बृहस्पति यज्ञकर्ता सोमरसपायी, सर्वस्व दक्षिणासेयज्ञका करनेवाला

पु. पु. पु.
**( सगीर्पतीष्ट्या ) स्थपतिः सोमपीती ( तु ) सोमपः।**
पु.
**सर्ववेदाः ( स येनेष्टो यागः सर्वस्वदक्षिणः ) ॥ ९ ॥**

स इति—स यज्वा गीर्पतीष्ट्या बृहस्पतिसवननामकयागेनेष्टवान्सन् स्थानं स्थः, पातीति पतिः स्थश्चासौ पतिश्चेति स्थपतिः स्यात् "स्थपतिः कञ्चुकिन्यपि। जीवेष्टियाजके शिल्पिभेदे ना सत्तमे त्रिषु" (इति मेदिनी) इत्येकं स्थपतेः। सोमस्य पीतं सोमपीतमस्यास्तीति सोमपीती, स्वामिमते तु सोमपीथः, सोमं पिबतीति सोमपः दीर्घपाठे तु क्विबन्तः सोमपः, इति द्वे सोमपायियजमानस्य। सर्वस्वं दक्षिणा यत्र विश्वजिदादौ स यागो येन इष्टः कृतः सः सर्वं वेदयति, सर्वं विन्दतीति वा सर्ववेदाः कथ्यत इत्येकं सर्वस्वदक्षिणायागकर्तृकस्य ॥ ९ ॥

साङ्ग वेदपाठी गृहस्थाश्रम आदि के लिये गुरुसे आज्ञापाने वाला अभिषव स्नान करनेवाला

पु.
**अनूचानः ( प्रवचने साङ्गेऽधीती ) गुरोस्तु यः।**
पु. पु.
**(लब्धानुज्ञः) समावृत्तः सुत्वा ( त्वभिषवे कृते) ॥ १०॥**

अन्विति—साङ्गे शिक्षाद्यङ्गषट्कोपेते प्रोच्यते प्रवचनो वेदस्तत्र अधीतमनेनेत्य-

धीती अन्ववोचदित्यनूचानः स्यात् "अनूचानो विनीते स्यात्साङ्गवेदविचक्षणे" ( इति विश्वः ) इत्येकं साङ्गवेदविशारदस्य । गुरोः सकाशाद् यो लब्धानुज्ञः लब्धा प्राप्ता अनुज्ञा आज्ञा येन स समावर्त्तते स्म समावृत्तः स्यादित्येकं गुरुकुलवासान्निवृत्तस्य । अभिषेकेऽवभृथस्नाने कृते सति सुतवानिति सुत्वा स्यादित्येकमवभृथस्नानकर्तृकस्य ॥ १० ॥

पु. पु. पु. पु. पु.
शिष्य नया **छात्रान्तेवासिनौ शिष्ये शैक्षाः प्राथमकल्पिकाः ।**

पु.
शिष्य सपाठी **( एकब्रह्मव्रताचारा मिथः ) सब्रह्मचारिणः ॥ ११ ॥**

छेति—गुरुदोषाच्छादनं छत्त्रं तच्छीलमस्येति छात्रः, अन्ते समीपे वस्तुं शीलमस्येति अन्तेवासी, "अन्तेवासी भवेच्छिष्ये चण्डाले प्रान्तगेऽपि च" (इति विश्वः ) शिष्यत इति शिष्य इति त्रीणि शिष्यस्य । शिक्षामधीयते, शिक्षाया इमे, शिक्षायां भवाः, शिक्षां लभन्ते वा शैक्षाः, प्रथमकल्पः आद्यारम्भः प्रयोजनं येषामिति, प्रथमकल्पमधीयते वा प्राथमकल्पिकाः इति द्वे प्रथमारब्धवेदानाम् । एकस्मिन्ब्रह्मणि व्रताचरणं येषां ते मिथः परस्परं समानं ब्रह्म चरन्तीति सब्रह्मचारिणः स्युरित्येकं सपाठिनाम् ॥ ११ ॥

पु. पु. पु.
**सतीर्थ्यास्त्वेकगुरव ( श्चितवानग्नि ) मग्निचित् ।**

न.
**(पारम्पर्योपदेशे) स्यादैतिह्यमितिहा(व्ययम्) ॥ १२ ॥**

सेति—समाने तीर्थे वसन्तीति सतीर्थ्याः, एको गुरुर्येषान्ते एकगुरवः इति द्वे सतीर्थ्यस्य । यः अग्निं चितवान् सः अग्निमचैषीदिति अग्निचित्स्यादित्येकमग्निचितवतः । परम्पराया आगतः स एव पारम्पर्यः[1], उपदिश्यते उपदेशनं वा उपदेशः पारम्पर्यश्चासावुपदेशश्च पारम्पर्योपदेशस्तस्मिन् 'इतिह' इति निपातसमुदायः, तदेव ऐतिह्यम्, इत्येवं हकिल 'इतिह' अव्ययं स्यादिति द्वे पारम्पर्योपदेशस्य ॥ १२ ॥

स. पु.
प्रथम ज्ञान, **उपज्ञा ( ज्ञानमाद्यं स्या ) ( ज्ज्ञात्वारम्भ ) उपक्रमः ।**
जानकर आरम्भ पु. पु. पु. पु. पु. पु. पु.
करना, यज्ञ **यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ॥ १३ ॥**

उपेति—आदौ भवमाद्यं प्राथमिकं ज्ञानं उपज्ञानम् उपज्ञा स्यात् यथोपदेशं विना श्लोकनिर्माणे वाल्मीकेर्ज्ञानमित्येकमाद्यज्ञानस्य । ज्ञात्वा अवबुद्ध्वाय: आरम्भणमारम्भः स उपक्रमणमुपक्रमः स्यात् " उपक्रमस्तूपधायां ज्ञात्वारम्भे च विक्रमे । चिकित्सायामिति " ( मेदिनी ) यथामाने नन्दस्य प्रथमारम्भः उपक्रमः सः इत्येकं ज्ञात्वा

१ "अस्ति हि परम्पराशब्दोऽव्युत्पन्नं प्रातिपदिकम्, परं पिपर्ति, पचाद्यच्, श्वपचाजारभरावत् पृषोदरादिर्वा ॥

प्रथमारम्भस्य । इज्यतेऽत्रानेन वा यज्ञः "यज्ञः स्यादात्मनि मखे नारायणहुताशयोः" ( इति हैमः ) सूयते सोमोऽत्रानेन वा सवः "सवो यज्ञे च सन्धाने" ( इति मेदिनी ) न ध्वरति, अध्वानं राति वा अध्वरः "अध्वरः सावधाने स्याद्वसुभेदे क्रतौ पुमान्" (इति मेदिनी) इज्यतेऽत्रानेन वा यागः सप्तभिश्छन्दोभिरग्निजिह्वाभिर्वा तन्यते, तानि सप्त तन्यन्तेऽत्रेति वा सप्ततन्तुः, मखन्ति देवा अत्रानेनवा मखः, करोति, क्रियते वा क्रतुः "क्रतुर्यज्ञे मुनौ पुंसि" ( इति मेदिनी ) इति सप्त यज्ञस्य ॥ १३ ॥

पु. पु. स. न. पु.

पञ्च महायज्ञ **पाठो[1] होम(श्चातिथीनां) सपर्य्या तर्पणं बलिः ।**

पु.

**( एते पञ्च ) महायज्ञा (ब्रह्मयज्ञादिनामकाः) ॥ १४ ॥**

पेति–पठनं, पाठनं वा पाठः, हवनं होमः, अतिथीनामदृष्टपूर्वाणां गृहमागतानां सपर्यणं सपर्या ( पूजा ) तृप्यतीति तर्पणम्, बलनं बलिः एते ब्रह्मयज्ञआदिर्येषां तानि ब्रह्मयज्ञादीनि नामानि येषान्ते ब्रह्मयज्ञादिनामकाः पञ्च महान्तश्च ते यज्ञाश्च महायज्ञाः स्युः "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्" (इति मनुः) अध्यापनं ब्रह्मयज्ञः, तर्पणं पितृयज्ञः, होमो देवयज्ञः, बलिर्भूतयज्ञः, अतिथिपूजनं नरयज्ञः स्यादिति पञ्च महायज्ञानामेकैकम् ॥ १४ ॥

स. स. स. स. स. स.

सभा **समज्या परिषद्गोष्ठी सभासमितिसंसदः ।**

स. न. स.न.

**आस्थानी (क्लीब)मास्थानं (स्त्रीनपुंसकयोः)सदः॥१५॥**

सेति–समजन्त्यस्यामिति समज्या, परितः सीदन्त्यस्यामिति परिषद् बाहुलकात्परेरन्त्यलोपे 'पर्षद्' च, गावोऽनेका वाचस्तिष्ठन्त्यस्यामिति गोष्ठी "गोष्ठी सभासंलापयोः स्त्रियाम्" ( इति मेदिनी ) सह भान्त्यस्याम्, समाना भान्त्यस्यामिति वा सभा, "सभा सामाजिके गोष्ठ्यां द्यूतमन्दिरयोरपि" ( इति मेदिनी ) संयन्त्यस्याम्, सह विद्यमाना मिलितैर्वा मितिः प्रमास्यामिति वा समितिः "समितिः सम्पराये स्यात्सभायां संगमेऽपि च" ( इति मेदिनी ) संसीदन्त्यस्यामिति संसद्, आतिष्ठन्त्यस्यामिति आस्थानी, आस्थानं क्लीबं स्यात्, सीदन्त्यस्यामिति सदः स्त्रीनपुंसकयोः स्यादिति नव सभायाः ॥ १५ ॥

यज्ञगृहविशेष, पु. पु.

यज्ञदर्शक, **प्राग्वंशः (प्राग्घविर्गेहा) त्सदस्या (विधिदर्शिनः) ।**

सभामें बैठने पु. पु. पु. पु.

वाले **सभासदः सभास्तारा: सभ्याः सामाजिका(श्च ते)१६॥**

---

१–"पाठश्च पठने ख्यातो विद्धपर्ण्यान्तु योषिति" ( इति मेदिनी ) ॥

प्रागिति—हविर्गेहात् हविःशालायाः प्राक् पूर्वभागे यजमानादीनां स्थित्यर्थं गेहे प्राञ्चतीति प्राङ् वंशो गोत्रं स्थूणो वात्रेति प्राग्वंशः स्यादित्येकं यज्ञगृहविशेषस्य। विधिं द्र,शीलं येषान्ते विधिदर्शिनः न्यूनाधिकविचारका ऋत्विग्विशेषाः सदसि साधवः सदस्याः स्युरित्येकं सदस्यानाम्। ते च सभायां सीदन्तीति सभासदः, सभा स्तृणन्तीति सभास्ताराः, सभायां साधवः सभ्याः समाजं समवयन्ति, समाजं रक्षन्तीति वा सामाजिकाः स्युरिति चत्वारि सामाजिकानाम् ॥ १६ ॥

पु. पु. पु.

वेदत्रयी ज्ञाता, **अध्वर्यूद्गातृहोतारो (यजुःसामर्ग्विदः क्रमात्)।**

पु. पु.

ऋत्विक् **(आग्नीध्राद्या धनैर्वार्या) ऋत्विजो याजका(श्च ते)॥१७॥**

अध्वेति—यजुश्च सामानि च ऋचश्च यजुसामर्चस्ता विदन्तीति यजुस्सामर्ग्विदः क्रमात् अध्वरमिच्छति,न ध्वरति वा अध्वर् तं याति, यौति वा अध्वर्युः,उद्गायति सामेति उद्गाता, जुहोतीति होता एते स्युः यजुर्विदध्वर्युः सामविदुद्गाता, ऋग्विद् होता भवति इति ऋत्विग्विशेषाणां क्रमादेकैकम्। धनैर्हेतुभिः वरणे करणैर्वा व्रियन्त इति वार्याः ते अग्नीनिन्धे अग्नीदृत्विग् अग्नीधः स्थानं तात्स्थ्यात्सोपि आग्नीध्रः स एव आद्यो येषां ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणाच्छंसि अच्छावाकनेष्ट्रादीनां षोडशानां ते आग्नीध्राद्या ऋतौ यजन्तीति ऋत्विजः, यजन्तीति याजकाश्च स्युः "वृताः कुर्वन्ति ये यज्ञमृत्विजो याजकाश्चते" ( इति कात्यः ) इति द्वे याजकानाम् ॥ १७ ॥

यज्ञवेदी यज्ञ स. न. न.

का चौतरा यज्ञ **वेदिः(परिष्कृता भूमिः)(समे)स्थण्डिलचत्वरे।**

स्तम्भविशेष पु. पु. स.

रक्षार्थटट्टी, **चषालो यूपकटकः कुम्बा (सुगहना वृतिः) ॥ १८ ॥**

वेदिरिति—परितः कृता संस्कृता भूमिः विद्यते शोधनेन ज्ञायते, विचार्यते, प्राप्यते, वेदयति, वेद्यते वा वेदिः " वेदिः स्यात्पण्डिते पुमान्। स्त्रियामङ्गुलिमुद्रायां स्यात्परिष्कृतभूतले " ( इति मेदिनी ) इत्येकं यज्ञवेदिकायाः। स्थलन्त्यस्मिन्निति स्थण्डिलम्, चतन्त्यस्मिन्निति चत्वरम् उभे समे समानार्थे समानलिङ्गे स्तः इति द्वे यागार्थं संस्कृतभूमेः। चषति, चष्यते वा चषालः, यूपस्याग्रे कृतः कटकाकारः यूपकटकः इति द्वे यज्ञस्तम्भविशेषस्य। सुगहना निविडा वृतिर्वेष्टनं कुम्ब्यतेऽनयेति कुम्बा स्यादित्येकमन्त्यजादिदृष्टिवारणाय निविडावृतेः " रक्षार्थटट्टी " इति ख्यातायाः ॥ १८ ॥

यज्ञस्तम्भशीर्ष न. न. पु.स.

अग्नि निकालने की दो **यूपाग्रं तर्म ( निर्मन्थ्यदारुणि ) त्वरणि (द्वयोः)।**

लकड़ी तीनों पु. पु. पु.

यज्ञाग्नियां **दक्षिणाग्निर्गार्हपत्याहवनीयौ ( त्रयोऽग्नयः ) ॥१९॥**

यूपेति–यूपस्याग्रं यूपाग्रम्, तरतीति तर्म इति द्वे यूपाग्रभागस्य । निर्मथ्यते निर्मन्थ्यम्, निर्मन्थ्यं च तद्दारु चेति निर्मन्थ्यदारु तस्मिंस्तु ऋच्छतीति अरणिः द्वयोः पुंस्त्रियोः स्यात् "अरणिर्वह्निमन्थे ना द्वयोर्निर्मन्थ्यदारुणि" ( इति मेदिनी ) इत्येकमरण्योः । दक्षिणोऽग्निः दक्षिणाग्निः,गृहपतिना संयुक्तः गार्हपत्यः, आहूयते प्रीणयते प्रक्षिप्यते वा हविरत्र, आह्वनमर्हतीति वा आहवनीयः एते त्रयोऽग्नयो भवन्ति इति यज्ञाग्नित्रयाणामेकैकम् ॥ १९ ॥

तीनों अग्नि, यज्ञाग्निविशेष, यज्ञाग्निस्थल

**( अग्नित्रयमिदं ) त्रेता प्रणीतः ( संस्कृतोऽनलः ) ।**
**समूह्यः परिचाय्योपचाय्या ( वग्नौ प्रयोगिणः ) ॥२०॥**

अग्नीति– इदमग्नित्रयं त्राणमिति त्राः सदा संधुक्षणम्, त्रायन्ते त्रा आहुतयस्ताभिरिता, त्रित्वमिता वा पृषोदरादित्वात् त्रेता स्यात् "त्रेता युगेऽग्नित्रये च"(इति हैमः) इत्येकमग्नित्रयाणाम् । संस्कृतोऽनलोऽग्निः प्रकर्षं नीतः प्रणीतः स्यात् "प्रणीत उपसम्पन्ने कृते क्षिप्ते प्रवेशिते । संस्कृताग्नौ च" ( इति हेमचन्द्रः) इत्येकं संस्कृतानलस्य । समुह्यते, समूह्यते वा समूह्यः, परिचीयते परिचाय्यः, उपचीयते उपचाय्यः एते त्रयोऽग्नौ प्रयोगोस्ति येषान्ते प्रयोगिणः प्रयोक्तव्या अग्निनामानीत्यर्थः इति त्रीणि यज्ञाग्निस्थलस्य ॥ २० ॥

अग्निविशेष, अग्निप्रिया

**(यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ।**
**तस्मि)न्नानाय्योथाग्नायी स्वाहा(च)हुतभुक्प्रिया २१॥**

य इति–गार्हपत्यादानीय यः दक्षिणाग्निः प्रणीयते दक्षिणाग्नित्वेन संस्क्रियते तस्मिन् आनीयत इत्याऽऽनाय्यः स्यात् यस्तु भ्राष्ट्रवैश्यकुलयोनिः स 'आनेयः' कथ्यत इत्येकं गार्हपत्यानीताग्निविशेषस्य । अथेति–अग्नेः स्त्री अग्नायी, सुष्ठु आहूयन्ते देवा अनयेति, स्वाहास्त्यस्या वा स्वाहा, हुतं भुनक्तीति हुतभुक् तस्य प्रिया 'हुतभुक्प्रिया' स्यादिति त्रीणि अग्निप्रियायाः ॥ २१ ॥

अग्न्युद्दीपन मन्त्र, गायत्र्यादि छन्द, यज्ञपायस

**(ऋक्) सामिधेनी धाय्या ( च या स्यादग्निसमिन्धने ) ।**
**(गायत्रीप्रमुखं) छन्दो (हव्यपाके) चरुः (पुमान्)॥२२॥**

ऋगिति–अग्नेः समिन्धने समुद्दीपने या ऋक् सा समिधामाधानी सामिधेनी धीयते धाय्या च स्यादिति द्वे अग्निसमुद्दीपनर्चायाः । गायन्तं त्रायते, गायेन गानेन

१–मीमांसकैरपि त्रिवृच्चर्वधिकरणे अन्नपरत्वं चरुशब्दस्याभ्युपगतम् । "उगवादिभ्योयत्" कैयटस्तु स्थालीवाची चरुशब्दस्तात्स्थ्यादोदनेभाक्तः इत्याह ॥

त्रायते वा गायत्री, " गायत्री त्रिपदा देवी छन्दोभिन् खदिरेषु च " ( इति मेदिनी ) गायत्री प्रमुखा प्रधाना आद्या वा यस्मिंस्तत् ' गायत्रीप्रमुखम् ' षडक्षरपदा गायत्री, " प्रमुखशब्देन उष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यतिजगतीशक्वरीत्यादि एकाक्षरवृद्धया बोध्यम् " चन्दति इति छन्दः स्यादित्येकं गायत्र्यादीनाम् । पच्यते, पचनं वा पाकः हव्यस्य पाको हव्यपाकस्तस्मिन् चर्यते भक्ष्यत इति चरुः पुमान्स्यात् " चरुर्भाण्डे च हव्यान्ने " ( इति विश्वप्रकाशः ) इत्येकं हव्यान्नस्य ॥ २२ ॥

स.
दधिमिलादूध **आमिक्षा (साश्रृतोष्णेया क्षीरे स्यादधियोगतः ) ।**

न.
यज्ञ का पंखा **धुवित्रं (व्यजनं तद्यद्रचितं मृगचर्मणा ) ॥ २३ ॥**

आमीति—श्रृतोष्णे क्वथिते तप्ते च क्षीरे पयसि दधियोगतः दध्नो योजनात् या सा आमिक्षा स्यादित्येकं दधियुक्तपक्वोष्णादुग्धस्य । मृगचर्मणा रचितं विनिर्मितं यद् व्यजनं तद् धवित्रम्, धुवित्रं च स्यादित्येकमग्नेः संधुक्षणाय मृगत्वचारचितव्यजनस्य ॥ २३ ॥

न. न. पु.न.
दही समेत घी **पृषदाज्यं (सदध्याज्ये)परमान्न (न्तु)पायसम् ।**
खीर देवपित्रन्न न. न. पु.न.
यज्ञपात्र **हव्यकव्ये (दैवपैत्रे अन्ने) पात्रं (स्रुवादिकम्) ॥ २४ ॥**

पृषदिति—सदध्याज्ये दध्नासहिते घृते पर्षति, पृष्यते वा पृषत्, आज्यतेऽनेन आज्यम् पृषच्च तदाज्यं च, पृषद्भिः सहितमाज्यं वा पृषदाज्यं स्यात् " पृषातकं सदध्याज्ये पृषदाज्यं तदुच्यते "-इत्येकं दधिमिश्रितघृतस्य । परमं च तदन्नं च, परमाणामुत्तमानामन्नमिति वा परमान्नम्, पयसि संस्कृतं पायसम् "पायसः श्रीवासे पायसं परमान्नके" ( इति हैमः ) इति द्वे परमान्नस्य । देवानामिदं दैवम्, पितॄणामिदं पैत्रम् दैवं च पैत्रं च दैवपैत्रे अर्थेतेस्म अन्ने हूयन्ते प्रीणयन्ते देवा येन, हूयते प्रक्षिप्यते वा हव्यम्, कूयते पितृभ्यः कव्यम् देवान्नं हव्यम्, पित्रन्नं कव्यम् हव्यं च कव्यं च हव्यकव्ये स्यातामेकैकं हव्यकव्यान्नयोः । स्रवति घृतादिकमिति स्रुवः स आदिर्यस्य तदिति स्रुवादिकं पाति, पिबत्यनेन वा पात्रं स्यादित्येकं स्रुवादिकस्य आदिना चमसोलूखलमुसलस्फ्यादीनां ग्रहणं बोध्यम् ॥ २४ ॥

स. स. स. पु.स. पु.
स्रुवभेद, **ध्रुवोपभृज्जुहू(र्ना तु)स्रुवो[2] भेदाः स्रुचः (स्त्रियः) ।**
पु.
यज्ञपशु **उपाकृतः (पशुरसौ योऽभिमन्त्र्य क्रतौ हतः) ॥ २५ ॥**

---

१ ध्रुवा वटपत्राकृतिः, उपभृच्चक्राकृतिः, जुहूरर्धचन्द्राकृतिरिति मुकुटः ॥
२ स्रुवो द्वयोर्होमपात्रे शल्लकीमूर्वयोः स्त्रियाम् ( इति मेदिनी ) ॥

ध्रुवेति—ध्रुवतीति ध्रुवा "ध्रुवः शङ्कौ हरे विष्णौ वटे चोत्तानपादजे । वसुयोगभिदो पुंसि क्लीबं निश्चिततर्कयोः । स्त्री मूर्वाह्वयोः शालपर्ण्यां गीतस्रुग्भेदयोस्त्रिषु । संतते शाश्वते च" (इति मेदिनी) उपबिभर्तीति उपभृद्, जुहोतीति जुहूः, स्रवतीति स्रुवः ना पुमान्स्यात् एते च स्रवतीति स्रुक् चान्ता तस्या भेदाः विशेषाः स्त्रियः स्त्रीलिङ्गाः स्युरिति चत्वारि स्रुवभेदानाम् । क्रतौ यागे अभिमन्त्र्य अभितो मन्त्रयित्वा यः पशुः हतो हन्तुमारब्धः असौ उपाक्रियते स्म उपाकृतः स्यात् "उपाकृतोऽध्वरहते पशौ नोपद्रुते त्रिषु" (इति विश्वमेदिन्यौ) इत्येकं क्रतावभिमन्त्रितपशोः ॥ २५ ॥

यागपशुवध **परम्पराकं**(न.) **शमनं**(न.) **प्रोक्षणं**(न.) **( च ) ( वधार्थकम् ) ।**

मारेहुए पशु **( वाच्यलिङ्गाः ) प्रमीत**(पु.स.न.)**ोपसम्पन्न**(पु.स.न.)**प्रोक्षिता**(पु.स.न.) **(हते)॥२६॥**

परमिति—अकनमाकः परमतिशयेऽव्ययं परंपरः श्रेष्ठ आकोऽस्मादिति परम्पराकम्, शमयति, शम्यते वा शमनम्, "शमनं शान्तिवधयोः शमनः श्राद्धदेवते" (इति विश्वमेदिन्यौ) शसनमिति स्वामी, ससनमित्यन्ये । प्रकृष्टमुक्षणं प्रोक्षणम् "प्रोक्षणं सेकवधयोः" (इति हैमः) एतत्त्रयं वधो हिंसार्थोऽस्येति वधार्थकं स्यादिति त्रीणि यज्ञार्थपशुहननस्य । प्रमीयते स्म प्रमीतः "प्रमीतं वाच्यलिङ्गं स्यात्प्रोक्षितेऽपि मृतेऽपि च" (इति मेदिनी) उपसंपद्यते स्म उपसम्पन्नः "उपसंपन्नमुद्दिष्टं निहते च सुसंस्कृते" (इति विश्वमेदिन्यौ) प्रोक्ष्यते स्म प्रोक्षितः "प्रोक्षितं निहते सिक्ते" (इति रभसः) एते त्रयो हते वाच्यलिङ्गाः स्युरिति त्रीणि यज्ञहतपशोः ॥ २६ ॥

साकल्यविशेषहूनी वस्तु **सांनाय्यं**(न.) **हवि**(न.) **( रग्नौ तु हुतं त्रिषु ) वषट्कृतम्**(पु.स.न.) **।**

यज्ञान्तस्नान, यज्ञीयवस्तु **(दीक्षान्तो)वभृथो**(पु.) **यज्ञ (स्तत्कर्मार्हन्तु)यज्ञियम्**(न.)**॥२७॥**

यज्ञकर्म, कर्मविशेष **(त्रिष्वथ क्रतुकर्मे) ष्टं**(न.) **पूर्तं**(न.) **( खातादिकर्मणि ) ।**

यज्ञशेष, श्राद्धशेष **अमृतं**(न.) **विघसो**(पु.) **( यज्ञशेषभोजनशेषयोः ) ॥ २८ ॥**

सामिति—संनीयते सान्नाय्यम्, हूयते हविरिति द्वे हविर्विशेषस्य । अग्नौ हुतं प्रक्षिप्तं हविः वषडिति मन्त्रोपलक्षणं वषट् मन्त्रेण कृतं प्रक्षिप्तं वषट्कृतं त्रिषु त्रिलिङ्ग्या स्यादित्येकं हुतस्य । दीक्षाया अन्तःप्रधानकर्मसमाप्तौ क्रियमाणो यो यज्ञः स अवभ्रियतेऽनेन अवभृथः स्यादित्येकं यज्ञविशेषस्य । तस्य यज्ञस्य कर्मक्रियामर्हतीति तत्कर्मार्हं यज्ञमर्हतीति यज्ञियं त्रिषु त्रिलिङ्ग्यां स्यादित्येकं क्रतुक्रियासंपादनयोग्यद्विजद्रव्यादेः ।

---

१ विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः । विघसो भुक्तशेषः स्यादग्निशेषस्तथामृतम् (इति मनुः)॥

अथेति–क्रतुश्च यज्ञः कर्म च दानादि क्रतुकर्म यजनमिष्टं स्यात् "इष्टं यागे च दाने च वाञ्छितेऽपि प्रयुज्यते" (इत्यजयः) "एकाग्निकर्महवनं त्रेतायां यच्च हूयते। अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते" (इति मनुः) इत्येकं यज्ञकर्मणः। खातं पुष्करिणीखननमादिर्यस्य देवालयारामादिनिर्माणस्य खातादि च तत्कर्म च क्रिया तस्मिन् पूरणं, पूर्यते स्म वा पूर्तं स्यात् "पुष्करिण्यः सभावापीदेवतायतनानि च। आरामश्च विशेषेण पूर्तं कर्म विनिर्दिशेदिति" (स्मृतिः) "पूर्तं त्रिषु पूरिते स्यात्क्लीबं खातादिकर्मणि" (इति मेदिनी) इत्येकं खातादिकर्मणः। यज्ञस्य शेषो होमावशिष्टाज्यपुरोडाशादिः, देवपित्रतिथिगुर्वादिभुक्तस्य शेषस्तयोः अमृतमिव अमृतं स्यात् "अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते। अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः" (इति मेदिनी) इत्येकं यज्ञशेषस्य। विशिष्टैरद्यते विघसः स्यादित्येकं भोजनशेषस्य ॥ २७ । २८ ॥

पु. न. न. न. न.

दान **त्यागो विहापितं दानमुत्सर्जनविसर्जने।**

न. न. न. न.

मृतक के लिये **विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥ २९ ॥**

न. न. न. स.

दान **प्रादेशनं निर्वपनमपवर्जनमंहतिः।**

**मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदैहिकम् ॥ ३० ॥**

त्येति–त्यजनं त्यागः "त्यागो दाने च वर्जने" (इति मेदिनी) विहापनं विहापितम्, दत्तं दानम्, "दानं गजमदे त्यागे पालनच्छेदशुद्धिषु" (इति विश्वमेदिन्यौ) उत्सृष्टमुत्सर्जनम्, विसृष्टं विसर्जनम्, "विसर्जनं परित्यागे दाने संप्रेषणेऽपि च" (इति मेदिनी) विश्राणितं विश्राणनम्, वितीर्णं वितरणम्, स्पृष्टं स्पर्शनम्, "स्पर्शनो मारुते पुंसि दाने स्पर्शे नपुंसकम्" (इति मेदिनी) प्रतिपादितं प्रतिपादनम्, "प्रतिपादनं तु दाने प्रतिपत्तौ प्रबोधने" (इति मेदिनी) प्रादिष्टं प्रादेशनम्, निरुप्तं निर्वपनम्, अपवर्जितमपवर्जनम्, हन्ति दुरितमनयेति अंहतिः "अंहतिस्त्यागरोगयोः" (इति हैमः) इति त्रयोदश दानस्य। मृतायेदं मृतार्थं तदहे प्रेतदिने यद्दानं तत् देहादूर्ध्वं ऊर्ध्वदेहस्तस्मिन् भवमौर्ध्वदैहिकमौर्ध्वदेहिकं वा त्रिषु त्रिलिङ्गयां स्यादित्येकं प्रेतमुद्दिश्य मरणादिनमारभ्य सपिण्डीकरणपर्यन्तं प्रत्यहं दीयमानस्य जलपिण्डादेः॥२९।३०॥

न. पु. न.

पितृदान, श्राद्ध, मासिक श्राद्ध, श्राद्धकाल **पितृदानं निवापः (स्या)च्छ्राद्धं (तत्कर्म शास्त्रतः)।**

न. न. पु.न.

**अन्वाहार्यं मासिकें(ऽशोऽष्टमोऽह्नः)कुतपो(ऽस्त्रियाम्)३१**

पीति–पितृभ्यो दानं पितृदानम्, न्युप्यते, निवपनं वा निवापः स्यादिति द्वे सपि-

---

१–तदहर्दानमिति पाठेतु समासान्तविधेरनित्यत्वान्न टच् ॥

ण्डनादूर्ध्वं पितृनुद्देशेन दानस्य । शास्त्रतः शास्त्रविधानेन तत्कर्म तेषां पितृणां कर्म श्रद्धाऽस्त्यत्रेति श्राद्धमित्येकं श्राद्धस्य । अनु आह्रियते अन्वाहार्यम्, मासे भवं मासिकम् "पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्" (इति मनुः) इत्येकं मासिकश्राद्धस्य। पञ्चदश मुहूर्तात्मकस्य अह्नो दिवसस्याष्टमोंऽशो भागः कुत्सितं तपति, कुं भुवं तपतीति वा कुतपोऽस्त्रियां पुंनपुंसकं स्यात् "दिवसस्याष्टमे भागे मन्दीभवति भास्करः। स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम्" (इति शातातपः) इत्येकं श्राद्धकालविशेषस्य॥ ३१॥

स. स. स. स.

धर्मादि का खोजना वि- पर्येषणा परीष्टिश्चान्वेषणा (च) गवेषणा ।

स. स. स. स. स. स.

नय, मांगना सनिस्त्वध्येषणा याच्ञाभिषस्तिर्याचनार्थना ॥ ३२ ॥

परीति—पर्येषणं पर्येषणा, पर्येषणं परीष्टिः, अन्वेषणं अन्वेषणा, गवेषणं गवेषणा इति चत्वारि धर्माद्यन्वेषणस्य । सननं सनिः, अध्येषणं अध्येषणा इति द्वे गुर्वाद्याराधनस्य, गुर्वादेः प्रार्थनया कचिदर्थे नियोजनस्य वा । याचनं याच्ञा, अभिशंसनम् अभिशस्तिः, स्वामी तु अभिषसनम् अभिषस्तिरित्यवोचत्, याचनमिति याचना, अर्थनमिति वा अर्थना इति चत्वारि याचनस्य ॥ ३२ ॥

पु.स.न. पु.स.न.

पूजार्थ जल, पांव धोना (षट् तु त्रिष्व) र्घ्यमर्घार्थे पाद्यं (पादाय वारिणि)।

पु.स.न. पु.स.न.

अतिथिनिमित्त कर्म क्रमादातिथ्यातिथेये (अतिथ्यर्थेऽत्र साधुनि) ॥ ३३ ॥

षडिति—अर्घ्यादारभ्य आगन्तुपर्यन्ताः षट्शब्दाः त्रिषु त्रिलिङ्गयां स्युः अर्घार्थं वारिणि जले अर्घायेदम् अर्घ्यं स्यादित्येकमर्घ्यस्य । पादाय वारिणि पादायेदं पाद्यं स्यादित्येकं पाद्यस्य । अत्र अतिथ्यर्थे साधुनि चार्थे क्रमादातिथ्यातिथेये स्तः अतिथय इदमातिथ्यमित्येकमातिथ्यर्थकर्मकस्य । अतिथौ साधु आतिथेयमित्येकमतिथिनिमित्तसिद्धस्य ॥ ३३ ॥

पु.स.न. पु.स.न. पु.

पाहुन, (स्युरा) वेशिक आगन्तुरतिथि (र्ना गृहागते)।

स. स. स. स. स. स.

पूजा पूजा नमस्यापचितिः सपर्यार्चार्हणाः (समाः) ॥ ३४ ॥

स्युरिति—"वेशो वेश्यागृहे गृहे" (इति मेदिनी) आवेशे अगृहे भवः आवेशिकः, आगच्छतीति आगन्तुः, अतति, नास्ति द्वितीया तिथिर्यस्येति वा अतिथिः ना पुंसि स्यात् "अतिथिः कुशपुत्रे स्यात्पुमानागन्तुकेपि च" (इति विश्वमेदिन्यौ) एते त्रयः शब्दाः गृहागते स्युः इति त्रीणि गृहागतस्य । पूजनं पूजा, नमस्यनं नमस्करणं

वा नमस्या, अपचायनमपचितिः, सपर्यणं सपर्या, अर्चनमर्चा, अर्हणमर्हणा एताः समाः समानार्थाः समानलिङ्गाश्चेति षट् पूजनस्य ॥ ३४ ॥

स. स. स. स.

सेवा **वरिवस्या (तु) शुश्रूषा परिचर्याप्युपासना ।**

घूमना स. स. न. स.

ध्यानादि स्थिति **व्रज्याटाट्या पर्यटनं चर्या (त्वीर्यापथस्थितिः) ॥ ३५ ॥**

वरीति–'वरिवस्' शब्दः पूजार्थः वरिवस्यनं वरिवसः करणं वा वरिवस्या, शुश्रूषणं शुश्रूषा, परिचरणं परिचर्या "परिचर्यानुपसर्येष्टिरिति" (भागुरिः)उपासनमुपासना "उपासनमिति पाठे तु भावे ल्युट्" "उपासनं शराभ्यासेऽप्युपास्ता वासनेऽपि च" ( इति विश्वमेदिन्यौ ) इति चत्वारि सेवायाः । व्रजनं व्रज्या, अटनमटाट्यनं वा अटाट्या, परितोऽटनं पर्यटनम् , "अटा पर्यटनं भ्रमः" ( इति रत्नकोषादटापि ) इति त्रीण्यटनस्य । ईर्यते ज्ञायते ईर्या तस्याः पन्था ईर्यापथो ध्यानाद्युपायस्तत्र स्थितिः चरणं चर्या कथ्यत इत्येकं ध्यानमौनादिस्थितेः ॥ ३५ ॥

पु. न. न. न.

आचमन, **उपस्पर्शस्त्वाचमन (मथ) मौनमभाषणम् ।**

स. स. स. पु.

चुपचाप, **आनुपूर्वी (स्त्रियां वा) वृत्परिपाटी अनुक्रमः ॥ ३६ ॥**

अनुक्रम, पु. पु. पु. पु.

अतिक्रम **पर्यायश्चातिपातस्तु स्यात्पर्यय उपात्ययः ।**

उपेति–उपस्पर्शनमुपस्पर्शः "उपस्पर्शे स्पर्शमात्रे स्नानाचमनयोरपि" ( इति मेदिनी ) आचम्यतेऽम्भोऽत्रेत्याचमनमिति द्वे आचमनस्य । अथेति–मुनेः कर्म, भावो वा मौनम्, न भाषणमभाषणमिति द्वे मौनस्य । पूर्वं पूर्वं, पूर्वानुक्रमेण वा अनुपूर्वं तस्य भावः आनुपूर्वी वा स्त्रियां स्यात् पक्षे आनुपूर्व्यम्, आवर्तनमत्रेत्यावृत्, परिपाटनं परिपाटिः "कृदिकारादिति" ङीषि परिपाटी च तेन "कृता लङ्का भर्तुर्वदनपरिपाटीषु घटना" ( इति पूर्वप्रयोगः संगच्छते ) अनुक्रमणमनुक्रमः, पर्ययणं पर्यायः "पर्यायः प्रकारेऽवसरे क्रमे" ( इति विश्वमेदिन्यौ ) इति पञ्च क्रमस्य । अतिक्रम्य पतनमतिपातः, पर्ययणं पर्ययः, उपगतस्यातिक्रम्यायनमुपात्ययः इति त्रीणि क्रमोल्लङ्घनस्य ॥ ३६ । १ ॥

व्रतमात्र पु. पु.न. न.

चान्द्रायणादि **नियमो व्रत (मस्त्री) (तच्चोपवासादि) पुण्यकम् ॥ ३७ ॥**

उपवास न. पु. पु. स.

उपवास विचार **औपवस्तं (तू) पवासो विवेकः पृथगात्मता ।**

नीति–नियमनं नियमः "नियमो यन्त्रणायां च प्रतिज्ञानिश्चये व्रते" (इति मेदिनी)

व्रियते, व्रजन्ति स्वर्गमनेनेति वा पृषोदरादित्वाद्व्रतम् अस्त्री पुंनपुंसकं स्यादिति द्वे व्रतमात्रस्य। उपवास आदिर्यस्य कृच्छ्रचान्द्रायणप्राजापत्यनक्तभोजनादेः, तदुपवासादि व्रतं पुण्यमेव पुण्यकं स्यादित्येकमुपवासादेर्विहितव्रतस्य । उपवसनमुपवस्तं तदेव औपवस्तम् " औपवस्त्रमिति पाठे तु उपवसतीति उपवस्ता तस्येदं कर्म औपवस्त्रं स्यात् " उपवसनमुपवासः, उपोषणमुपोषितं वा इति द्वे भोजनविरहस्य । विवेचनं विवेकः " विवेकः स्याज्जलद्रोण्यां पृथग्भावविचारयोः " ( इति मेदिनी ) पृथगात्मा यस्य तस्य भावः पृथगात्मता इति द्वे प्रकृतिपुरुषादिभेदज्ञानस्य ॥ ३७ । ३ ॥

सदाचार वा वेदाभ्यासफल　न.　स.
**( स्या ) द्ब्रह्मवर्चसं वृत्ताध्ययनर्धि (रथाञ्जलिः)॥३८॥**

वेदपाठ में अञ्जलि अञ्जलि　पु.　पु.
या मुख से **(पाठे) ब्रह्माञ्जलिः ( पाठे विप्रुषो ) ब्रह्मबिन्दवः ।**

न.　पु.　पु.　पु.
जलकण आसन विशेष विधान **( ध्यानयोगासने ) ब्रह्मासनं कल्पे विधिक्रमौ ॥ ३९ ॥**

स्यादिति– ब्रह्मणो वेदस्य तपसो वा वर्चः ब्रह्मवर्चसम्, वृत्तं चाचारः अध्ययनं च गुरुमुखाद्वेदाक्षरग्रहणं तयोर्ऋद्धिः वृत्ताध्ययनर्धिः स्यादिति द्वे आचाराध्ययनसमृद्धेः । अथेति–पाठे वेदपाठे योऽञ्जलिः स ब्रह्मणोऽञ्जलिः ब्रह्माञ्जलिः स्यादित्येकं वेदपाठकाले कृतस्याञ्जलेः । पाठे वेदपाठे विप्रुषो मुखान्निर्गतबिन्दवो ब्रह्मणो बिन्दवः ब्रह्मबिन्दवः स्युरित्येकं वेदपाठसमये मुखनिर्गतबिन्दूनाम् । ध्यानं प्रत्ययैकतानता च, योगश्चित्तवृत्तिनिरोधश्च तयोरासनं, ध्यानस्य योग उपायः ध्यानमेव योगो वा तस्यासनं स्वस्तिकसिद्धपद्मादि ब्रह्मणः सम्बन्धि आसनं ब्रह्मासनं स्यादित्येकं ध्यानयोगासनस्य । कल्पतेऽनेन कल्पस्तस्मिन्, " कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने " ( इति मेदिनी ) वेधनं विधानं वा विधिः, " विधिर्ना नियतौ काले विधाने परमेष्ठिनि " क्रमणं क्रमः " क्रमश्चानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च " ( इति मेदिनी ) इति त्रीणि विधानस्य ॥ ३८।३९ ॥

पु.　पु.
मुख्यविधि **मुख्यः ( स्यात्प्रथमः कल्पो) ऽनुकल्प (स्ततोऽधमः)।**

गौणविधि　न.
वेदाध्ययन **( संस्कारपूर्वं ग्रहणं स्यादु ) पाकरणं ( श्रुतेः) ॥ ४० ॥**

म्विति–प्रथमः आद्यः कल्पो विधिः मुखमिव मुख्यः स्याद् यथा "व्रीहिभिर्यजेत" इत्येकमाद्यविधेः । ततोऽधमः कल्पः अनुहीनः कल्पः अनुकल्पः स्यात् यथा " व्रीह्यभावे नीवारैर्यजेत " इत्येकं गौणविधेः । संस्कार उपनयनं पूर्वं यत्र तत् श्रुतेर्ग्रहणं उपाक्रियतेऽनेन उपाकरणं स्यादित्येकं वेदपाठारम्भविधिविशेषस्य ॥ ४० ॥

न. न.
नमस्कार **( समे तु ) पादग्रहणमभिवादन ( मित्युभे )।**
पु. पु. पु. पु. पु.
संन्यासी **भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी[1] ॥ ४१ ॥**

सेति—पादयोर्ग्रहणं स्पर्शः पादग्रहणम्, अभिमुखीकरणार्थं वादनम्, आभिमुख्येन वाद्यते आशीःकार्यतेऽनेनेति वा अभिवादनम् इत्युभे समे समानार्थे समानलिङ्गे स्तः इति द्वे नामोच्चारणपूर्वकसंस्कृतप्रयोगेण नमस्कारस्य । भिक्षणशीलो भिक्षुः, परित्यज्य सर्वं व्रजतीति परिव्राट्, कर्मन्देन प्रोक्तं भिक्षुसूत्रमधीते कर्मन्दी, पराशरस्य गोत्रापत्यं पाराशर्यस्तेन प्रोक्तं भिक्षुसूत्रमधीते पाराशरी, मस्कनं मस्करो ज्ञानं गतिर्वास्यास्ति, मस्करो वेणुरस्यास्ति, माकर्तुं कर्म निषेद्धुं शीलमस्य, मकुर इव शुद्धमन्तःकरणमस्यास्ति, मङ्कते मकरो निधिभेदोऽस्त्यस्येति वा मस्करी इति पञ्च संन्यासिनः॥४१॥

तपस्वी पु. पु. पु. पु. पु.
मौनी **तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः ।**
दान्त पु. -पु. पु. पु.
ब्रह्मचारी **तपःक्लेशसहो दान्तो वर्णिनो ब्रह्मचारिणः ॥ ४२ ॥**

तेति—तपोऽस्यास्तीति तपस्वी "तपस्वी तापसे चानुकम्प्ये त्रिष्वथ योषिति । मांसिका कटुरोहिण्योः" ( इति मेदिनी ) तपोऽस्त्यस्येति तापसः, परिकाङ्क्षितुं शीलमस्य, पारमत्रास्ति पारि ब्रह्मज्ञानं काङ्क्षतीति वा पारिकाङ्क्षी इति त्रीणि तपस्विनः। वाचं यच्छतीति वाचंयमः, मन्यते इति मुनिः "मुनिः पुंसि वसिष्ठादौ वङ्गसेनतरौ जिने" ( इति मेदिनी ) इति द्वे मौनव्रतिनः । तपसः क्लेशस्तपःक्लेशः सहते सहः तपः क्लेशस्य सहः तपःक्लेशसहः, दाम्यति स्म दान्तः "दान्तस्तु दमितेऽपि स्यात्तपःक्लेशसहे त्रिषु" ( इति मेदिनी ) इति द्वे तपःक्लेशसहस्य । वर्णः स्तुतिरस्यास्तीति वर्णी "वर्णी स्याल्लेखके चित्रकरेऽपि ब्रह्मचारिणि" (इति विश्वमेदिन्यौ) द्वित्वे 'वर्णिनौ' बहुत्वे वर्णिनः स्युः। ब्रह्म वेदाध्ययनव्रतं चरति तच्छीलो वा ब्रह्मचारी, द्वित्वे ब्रह्मचारिणौ, बहुत्वे ब्रह्मचारिणः स्युरिति द्वे ब्रह्मचारिणः ॥ ४२ ॥

पु.स. पु. पु. पु.
ऋषि **ऋषयः सत्यवचसः स्नातकस्त्वाप्लवव्रती[2] ।**
स्नातक पु. पु. पु.
जितेन्द्रिय **(ये) निर्जितेन्द्रियग्रामा यतिनो यतयश्च (ते) ॥ ४३ ॥**

ऋषेति—ऋषन्ति जानन्तीति ऋषयः "ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम्"

---

१ इदमेव "किं तर्हि मा कृतकर्माणि शान्तिर्वः श्रेयसी इत्याह । अतो मस्करी परिव्राजकः" इति भाष्यसंमतम् ॥

२ गुरवे तु वरं दत्त्वा स्नायाद्वा तदनुज्ञया । वेद व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥

(इति मेदिनी) ते च सप्तविधाः "महर्षिदेवर्षिब्रह्मर्षिपरमर्षयः काण्डर्षिः श्रुतर्षिश्च क्रमवराः" ( इति रत्नकोषः ) स्त्रियां वा ङीप् ऋषी, द्वित्वे ऋष्यौ, बहुत्वे ऋष्यः स्युः, सत्यं वचो येषामिति सत्यवचसः इति द्वे ऋषेः । स्नाति स्म स्नातः स एव स्नातकः, आप्लवते आप्लवः व्रतमस्यास्तीति व्रती आप्लवश्चासौ व्रती च आप्लवव्रती, आप्लुतव्रती वा इति द्वे समाप्तवेदव्रतस्याश्रमान्तरमागतस्य । इन्द्रियाणां ग्रामः, निर्जित इन्द्रियग्रामो यैस्ते, यमनं यतमुपरमणमस्ति नित्यं वा येषामिति यतिनः, यतन्ते यतयः "यतिः स्त्रीपाठविच्छेदे निकारयतिनोः पुमानिति" ( इति मेदिनी ) अत्र पक्षे यमः क्तिच्प्रत्ययो बोध्यः इति त्रीणि निर्जितसर्वेन्द्रियस्य ॥ ४३ ॥

भूमिशायी — **(यः स्थण्डिले व्रतवशाच्छेते) स्थण्डिलशाय्य (सौ)।** (पु.)

व्यास आदि — **स्थाण्डिलश्चा(थ) विरजस्तमसः (स्यु)र्द्वयातिगाः॥४४॥** (पु. पु. पु.)

यइति–व्रतवशात्स्थण्डिले यः शेते असौ "स्थण्डिले शेते" स्थण्डिलशायी स्यात्, स्थण्डिले शेते स्थाण्डिलः इति द्वे अनास्तृतभूमिशयनव्रतिनः । अथेति–विगते रजस्तमसी येभ्यः, रजस्तमोभ्यां विगता वा विरजस्तमसः, द्वयमतिगच्छन्तीति द्वयातिगाः स्युरिति द्वे निवृत्तरजस्तमोगुणानाम् ॥ ४४ ॥

पवित्र, पाखण्डी — **पवित्रः प्रयतः पूतः पाषण्डाः सर्वलिङ्गिनः।** (पु. पु. पु. पु. पु.)

पलाशदण्ड, वैणवदण्ड — **(पालाशो दण्ड)आषाढो(व्रते)राम्भ(स्तु वैणवः)॥४५॥** (पु. पु.)

पेति–पवते, पुनाति वा पवित्रः " पवित्रं वर्षणे कुशे । ताम्रे पयसि च क्लीबं मेध्ये स्यादभिधेयवदिति" (मेदिनी) प्रयच्छति स्म प्रयतते वा प्रयतः, पवते स्म पूतः "पूतं त्रिपु पवित्रे च शटिते बहुलीकृते" इति त्रीणि पूतस्य । पापं सन्वन्तीति पाषण्डाः कवर्गद्वितीयमध्यपाठे तु पां खण्डयन्तीति पाखण्डाः "पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते । तं खण्डयन्ति ते यस्मात्पाखण्डास्तेन हेतुना " सर्वाणि च तानि लिङ्गानि, सर्वेषां लिङ्गानि, सर्वलिङ्गानि सन्ति येषामिति वा सर्वलिङ्गिनः इति द्वे बौद्धक्षपणकादिदुश्शास्त्रवर्तिनाम्। व्रते ब्रह्मचर्ये यः पलाशस्य विकारः पलाशो दण्डः स आषाढी पूर्णिमा प्रयोजनमस्येति आषाढः स्यादित्येकं ब्रह्मचर्यपालाशदण्डस्य । यस्तु व्रते वैणवो दण्डः स " रम्भा कदल्यप्सरसोर्ना वेणौ वानरान्तरे " ( इति मेदिनी ) रम्भस्य वेणोर्विकारो राम्भः स्यादित्येकं वैणवदण्डस्य ॥ ४५ ॥

कमण्डलु, ऋष्यासन — **(अस्त्री) कमण्डलुः कुण्डी (व्रतिनामासनं) वृषी।** (पु.न. स. स.)

मृगचर्म, भिक्षासमूह — **अजिनं चर्म कृत्तिः(स्त्री)भैक्षं(भिक्षाकदम्बकम्)॥४६॥** (न. न. स. न.)

अस्त्रीति–कस्य प्रजापतेर्जलस्य वा मण्डः सारस्तं लाति, लभते वा कस्य मण्डं भूषां लाति वा मितद्र्वादित्वात् कमण्डलुः अस्त्री पुंनपुंसकं स्यात्, कुणतीति कुण्डी "कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमानिति" (मेदिनी) इति द्वे ऋषिपात्रस्य। व्रतिनामासनं ब्रुवन्तः सीदन्त्यस्यां, वर्षति सुखं वा वृषी स्यात् "गण्डूषा मञ्जूषा वृषी" इति मूर्धन्यान्ता, "अतसी बृषी मांसी" इत्यान्ते चन्द्रगोभिलदर्शनादन्त्यान्तापि इत्येकं ब्रह्मचर्याद्यासनस्य। अजति, अज्यते वा अजिनम्, चरति, चर्यते वा चर्म "चर्मकृत्तौ च फलके" (इति मेदिनी) कृत्यते कृत्तिः स्त्री स्यात् "कृत्तिश्चर्म त्वचोर्भूर्जे कृत्तिकायां द्वयं स्त्रियामिति" (मेदिनी) इति त्रीणि मृगचर्मणः। भिक्षाकदम्बकं भिक्ष्यन्ते भिक्षास्तासां समूहो भैक्षं स्यादित्येकं भिक्षासमूहस्य ॥ ४६ ॥

वेदाध्ययनसोमलताकाकूटनासर्वाघनाशनमन्त्र

**स्वाध्यायः (स्या)ज्जपः सुत्याभिषवः सवनं (च सा)।**
पु. पु. स. पु. न.

**(सर्वैनसामपध्वंसि जप्यं) त्रिष्वघमर्षणम् ॥ ४७ ॥**
न.

स्वेति–सुअतीव आवृत्त्या अध्ययनम्, स्वार्थमध्ययनं वा स्वाध्यायः, जपनं जपः स्यात् बाहुलकाद्धञ् 'जपनं जापः' इति रक्षितस्तेन "शूद्रस्य मन्त्रजापं प्रत्यनधिकारादित्यादिसिद्धिरिति मुकुटः" इति द्वे वेदाध्ययनस्य। सवनं सुत्या सा अभिषवणमभिषवः, सुतं सवनं च स्यादिति त्रीणि सोमलताकण्डनस्य। सर्वाणि एनांसि मानसादि पापानि अपध्वंसयितुं शीलमस्य जप्यते जप्यम्, अघं मर्षति, मृष्यति वा अघमर्षणं त्रिषु त्रिलिङ्ग्यां स्यादित्येकं सर्वपापनाशनमन्त्रस्य ॥ ४७ ॥

दर्शयाग,पौर्णमासयाग,नित्यकर्म

**दर्श(श्च) पौर्णमास (श्च यागौ पक्षान्तयोः पृथक्)।**
पु. पु.

**(शरीरसाधनापेक्षं नित्यं यत्कर्म) तद्यमः ॥ ४८ ॥**
पु.

देति–पक्षान्तयोरमावास्यापौर्णमास्योर्विहितौ यागौ पृथक्क्रमेण दर्शपौर्णमाससंज्ञकौ स्याताम् दृश्यते शास्त्रेणेति दर्शः "पक्षान्तेष्टौ दर्शने च दर्शः सूर्येन्दुसंगमे, "दर्शस्तु स्यादमावास्या यागभेदावलोकने" (इति मेदिनी) इत्येकं दर्शयागस्य। पौर्णमास्यां भवः पौर्णमासः "पौर्णमासः पुमान्यज्ञभेदे स्त्री पूर्णिमातिथौ" (इति मेदिनी) इत्येकं पौर्णमासयागस्य। शरीरसाधनापेक्षं शरीरमात्रेण साध्यं नित्यं यत् कर्म कार्यं तत् यच्छतीति यमः स्यात् "यमोऽन्यलिङ्गो यमजे ना काके शमने शनौ। शरीरसाधनापेक्षं नित्यकर्मणि संयमे" (इति मेदिनी) तथा च पातञ्जलसूत्रम् "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः २।३०" इत्येकं यमस्य ॥ ४८ ॥

पु.
कर्मविशेष, नियम(स्तु स यत्कर्मा[1]नित्यमागन्तुसाधनम्)।
वामस्कन्धा- न. न.
र्पित जनेऊ उप[2]वीतं यज्ञसूत्रं (प्रोद्धृते दक्षिणे करे)॥ ४९॥

नीति—यत् कर्म अनित्यं नतु यावज्जीवं कर्तव्यम्, आगन्तुसाधनं आगन्तुभिः कादाचित्कैः कामनया समयविशेषादिभिः साधनैस्साध्यमुपवासस्नानजपादि तत् नितरां यच्छतीति नियमः स्यात् "नियमो यन्त्रणायां च प्रतिज्ञा निश्चये व्रते" (इति मेदिनी) तथा च पातञ्जलसूत्रम् "शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः २।३२" इत्येकं नियमस्य। दक्षिणे करे प्रोद्धृते बहिष्कृते सति वामस्कन्धार्पितम्, उपवीयते स्म, उपाजति स्म, उपवेति स्म वा उपवीतम्, यज्ञार्थं धृतं सूत्रम्, यज्ञस्य सूत्रं वा यज्ञसूत्रमिति द्वे वामस्कन्धार्पितयज्ञोपवीतस्य ॥ ४९ ॥

दाहिने कांधेका न. न.
जनेऊ, कण्ठमें प्राचीना[3]वीत (मन्यस्मि)न्निवीतं(कण्ठलम्बितम्)।
मालाकार, देव न.
तीर्थ, प्रजा-
पतितीर्थ (अङ्गुल्यग्रे तीर्थं)दैवं(स्वल्पाङ्गुल्योर्मूले)कायम्॥ ५०॥

प्रेति—अन्यस्मिन् वामकरे प्रोद्धृते सति प्राचीनं प्रदक्षिणम् आवीयते स्म प्राचीनावीतं स्यादित्येकं विपरीतधृतयज्ञोपवीतस्य। कण्ठाल्लम्बितं यज्ञसूत्रं निवीयते स्म, नि= अधोभागे वीतं गमनमस्य वा 'नि' इति प्रकृते "राश्यधोभावविन्यासे" (इति मेदिनी) निवीतं स्यादित्येकं. करद्वये बहिष्कृतेसति ऋजुभावेन स्थापितयज्ञसूत्रस्य अङ्गुलीनामग्रे देवानामिदम्, देवो देवतास्येति वा दैवं तीर्थं स्यादित्येकं दैवतीर्थस्य। स्वल्पाङ्गुल्योरनामिकाकनिष्ठिकयोः मूले अधोभागे कः प्रजापतिर्देवतास्येति कायं तीर्थं स्यादित्येकं कायतीर्थस्य ॥ ५० ॥

पैत्रतीर्थ, न.
ब्रह्मतीर्थ (मध्येऽङ्गुष्ठाङ्गुल्योः) पित्र्यं (मूले ह्यङ्गुष्ठस्य) ब्राह्मम्।
ब्रह्म में न. न. न.
लय होना (स्याद्)ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्य(मित्यपि)॥५१॥

मेति—अङ्गुष्ठाङ्गुल्योरङ्गुष्ठतर्जन्योर्मध्ये पितरो देवतास्य, पित्र्यम्, पितॄणामिदं पैत्रं च स्यादित्येकं पितृतीर्थस्य। अङ्गुष्ठस्य मूले 'हि' अवधारणे ब्रह्मा देवतास्येति ब्राह्मं

---

१ कर्मनित्यमिति वा पाठः॥

२ तथा च गोभिलसूत्रे—"दक्षिणं बाहुमुद्धृत्य शिरोऽवधायसव्येंऽसे प्रतिष्ठापयति दक्षिणं कक्षमन्ववलम्बं भवतीत्येवं यज्ञोपवीती भवति" (१।२।२)॥

३ "सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽसे प्रतिष्ठापयति सव्यं कक्षमन्ववलम्बं भवत्येवं प्राचीनावीती भवति (१।२।३)॥

स्यादित्येकं ब्राह्मतीर्थस्य । ब्रह्मणो भवनं ब्रह्मभूयम्, ब्रह्मणो भावो ब्रह्मत्वम्, युनक्तीति युजस्तेन सह युजः, योजनं युक् सहयुजा, सयुजस्य सयुजो वा भावः सायुज्यं ब्रह्मणः सायुज्यं ब्रह्मसायुज्यं स्यादिति त्रीणि ब्रह्मसायुज्यस्य ॥ ५१ ॥

देवताओं में मिलना, कृच्छ्र चान्द्रायणादि, संन्यासविशेष नष्टाग्निवाला मिथ्याधर्माश्रयी लोभी या दम्भी संस्कार हीन वेदाभ्यास विहीन

न. न.
**देवभूयादिकं ( तद्वत् ) कृच्छ्रं ( सान्तपनादिकम् ) ।**
पु. पु.
**(संन्यासवत्यनशने पुमान् ) प्रायो (थ) वीरहा ॥ ५२॥**
पु. स.
**नष्टाग्निः कुहना ( लोभान्मिथ्येर्यापथकल्पना ) ।**
पु. पु. पु. पु.
**व्रात्यः संस्कारहीनः (स्याद) स्वाध्यायो निराकृतिः ५३॥**

देवेति—देवस्य भावः, देवभूयमादिर्यस्येति देवभूयादिकं तद्वद्ब्रह्मभूयादिवत् त्रिरूपात्मकं स्यात् देवस्य भवनं देवभूयम्, देवस्य भावो देवत्वम्, देवस्य सायुज्यं देवसायुज्यं स्यादिति त्रीणि देवसायुज्यस्य । संतपति संतपनं तस्येदं कर्म, सम्यक्तपनमत्रेति वा सांतपनमादिर्यस्येति सान्तपनादिकं कृन्तत्यनेन कृच्छ्रं स्यात् आदिना चान्द्रायणप्राजापत्यपराकादिग्रहः, तेषां स्वरूपाण्याह—" गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतमिति ( मनुः ११।२१२ ) " एकैकं ह्रासयेत्पिण्डं कृष्णे शुक्ले च वर्धयेत् । उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम् ॥ त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् । त्र्यहं परं च नाश्नीयात्प्राजापत्यं चरं द्विजः " इत्येकं कृच्छ्रचान्द्रायणादीनाम् । सम्यक्न्यसनं न्यास आत्यन्तिकस्त्यागस्तद्युक्ते अनशनेऽभोजने प्रकृष्टमयनं 'प्रायः' पुमान्स्यात् "प्रायो मरणानशने मृत्यो बाहुल्यतुल्ययोः" (इति मेदिनी ) इत्येकं संन्यासविशेषस्य । अथेति—वीरोऽग्निस्तं हन्तीति वीरहा, नष्टोऽग्निर्यस्येति नष्टाग्निरिति द्वे प्रमादादिना यस्याग्निहोत्रिणोऽग्निर्नष्टस्तस्य । लोभात् अर्थलिप्सया मिथ्येर्यापथकल्पना मिथ्यातत्त्वे ईर्यापथस्याचारभेदस्य कल्पना संपादना कुहयति, कुहनं वा कुहना स्यात् " कुहना दम्भचर्यायामीर्ष्यालौ कुहनस्त्रिषु " ( इति मेदिनी ) इत्येकं दम्भेन कृतध्यानमौनादेः । शरीरायासजीवी व्याधादिर्व्रातः स इव व्रातमर्हतीति वा व्रात्यः, संस्कारैर्गर्भाधानादिभिरुपनयनादिभिर्वा हीनः संस्कारहीनः स्यादिति द्वे संस्कारहीनस्य । न स्वाध्यायो वेदाध्ययनमस्येति अस्वाध्यायः, आकृतेरध्ययनचेष्टाया निर्गतः निराकृतिरिति द्वे वेदाध्ययनरहितस्य ॥ ५२ । ५३ ॥

बहुरूपिया, ब्रह्मचर्यहीन

पु. पु. पु. पु.
**धर्मध्वजी लिङ्गवृत्तिरवकीर्णी क्षतव्रतः ।**
**( सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च) ॥ ५४ ॥**

सूर्यास्त सुप्त,　　　　पु.　　　　पु.
सूर्योदय सुप्त, (अंशुमान) भिनिर्मुक्ताभ्युदितौ ( च यथाक्रमम् )।
　　　　पु.
छोटा भाई　परिवेत्ता ( नुजोनूढे ज्येष्ठे दारपरिग्रहात् ) ॥ ५५ ॥

धर्मेति—धर्मस्य ध्वजश्चिह्नम्, धर्मो ध्वज इव वा धर्मध्वजोऽस्यास्तीति धर्मध्वजी, लिङ्गमाश्रमादिचिह्नधारणं वृत्तिर्जीविकाहेतुर्यस्येति लिङ्गवृत्तिरिति द्वे भिक्षाद्यर्थं जटादिधारिणः। अवकरणमवकीर्णं विक्षिप्तं हिंसितं वा वृत्तमनेन अवकीर्णी, क्षतं खण्डितं व्रतमस्येति क्षतव्रतः इति द्वे खण्डितब्रह्मचर्यादेः। यस्मिन्सुप्ते अंशुमान्सूर्योऽस्तमेति अस्ताचलं प्राप्नोति, यस्मिन्सुप्ते उदेति उदयं प्राप्नोति च तत्र यथाक्रमम् अभिनिर्मुक्ताभ्युदितौ स्याताम् अभि सर्वतः सायंतनेन कर्मणा निश्चयेन मुक्तः, अभिसर्वं सायंतनं कर्म निश्चयेन मुक्तं येन वा अभिनिर्मुक्तः स्यादित्येकं सूर्यास्तसमयसुप्तस्य। अभिसर्वत उद् अतिशयेन इतं गतं प्रातस्तनं कर्मास्मादिति अभ्युदितः स्यादित्येकं सूर्योदयसुप्तस्य। ज्येष्ठे भ्रातरि अनूढे विवाहरहिते सति दारपरिग्रहात् अनुजो लघुभ्राता परिविन्दति ज्येष्ठं परित्यज्य भार्यां लभते 'परिवेत्ता' स्यादित्येकं ज्येष्ठे विवाहरहिते कृतदारपरिग्रहकनिष्ठस्य ॥ ५४ । ५५ ॥

　　　　पु.　　　　　　　　　　पु.　पु.
बड़ा भाई, विवाह परिवित्तिस्तु ( तज्ज्यायान् ) विवाहोपयमौ ( समौ )।
　　　　पु.　पु.　पु.　　　　न.
( तथा ) परिणयोद्वाहोपयामाः पाणिपीडनम् ॥ ५६॥

परीति—तज्ज्यायान् तस्य परिवेत्तुर्ज्यायान् ज्येष्ठः परिवर्जनं विन्दति लभते इति परिवित्तिः स्यादित्येकं परिवेत्तुर्ज्येष्ठभ्रातुः। विशिष्टं वहनं विवाहः, उपयमनमुपयमः उभौ समौ समानार्थौ समानलिङ्गौ स्तः तथेति—परिणयनं परिणयः, उद्वहनमुद्वाहः, उपयमनमुपयामः, पाणेः पीडनं ग्रहणं पाणिपीडनमिति षड्वाहस्य ॥ ५६ ॥

　　पु.　　पु.　　न.　　न.　　न.
मैथुन, त्रिवर्ग, व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम्।
　　पु.　　　　　　पु.
चतुर्वर्ग　त्रिवर्गो ( धर्मकामार्थै) श्चतुर्वर्गः (समोक्षकैः) ॥५७॥

व्येति—व्यवायनं व्यवायः, ग्रामे भवा ग्राम्या जनास्तेषां धर्मो ग्राम्यधर्मः, मिथुनस्य कर्म मैथुनम्, नितरां धुवनं हस्तपादादि चालनमत्रेति निधुवनम्, रमणं रतमिति पञ्च मैथुनस्य। धर्मश्च कामश्च अर्थश्च धर्मकामार्थास्तैः कृत्वा त्रयाणां वर्गः समूहस्त्रिवर्गः स्यादित्येकं त्रिवर्गस्य। समोक्षकैः मोक्षेण सहितैर्धर्मकामार्थैः कृत्वा उपलक्षितो वा चतुर्णां वर्गश्चतुर्वर्गः स्यादित्येकं चतुर्वर्गस्य ॥ ५७ ॥

चतुर्भद्र वर के मित्रयासहबाला आदि **सबलैस्तैश्चतुर्भद्रं जन्याः स्निग्धा वरस्य ये ॥ ५८ ॥**

## इति ब्रह्मवर्गः ॥

सेति–सबलैः बलेन सहितैस्तैर्धर्मादिभिरुपलक्षितं चत्वारि भद्राणि श्रेष्ठान्यत्र वृन्दे चत्वारि भद्राणीति वा चतुर्भद्रं स्यात् "भद्रो वाच्यवच्छ्रेष्ठसाधुनोः" ( इति विश्वः ) इत्येकं चतुर्भद्रस्य । वरस्य जामातुर्ये स्निग्धास्तत्पक्षा वयस्यादयः जनीं वधूं वहन्तीति जन्याः स्युः "जन्यो वरवधूज्ञातिप्रियभृत्यहितेषु च" ( इति विश्वः ) इत्येकं वरवयस्यादीनाम् ॥ ५८ ॥

इति ब्रह्मवर्गविवरणम् ॥

---

## अथ क्षत्रियवर्गो व्याख्यायते ॥

क्षत्रिय राजा **मूर्धाभिषिक्तो (पु.) राजन्यो (पु.) बाहुजः (पु.) क्षत्रियो (पु.) विराट् (पु.) ।**
**राज्ञि (पु.) राट् (पु.) पार्थिव (पु.) क्ष्माभृन् (पु.) नृप (पु.) भूप (पु.) महीक्षितः (पु.) ॥ १ ॥**

मूर्धेति– मूर्धन्यभिषिच्यत इति मूर्धाभिषिक्तः "राज्यदानसमये मूर्धन्यभिषिच्यते तत्प्रभावात्सर्वोऽपि मूर्धाभिषिक्तः स्यात्" राजति, राज्ञोऽपत्यं वा राजन्यः, बाहुभ्यां बाह्वोर्वा जातो बाहुजः "बाहुजः क्षत्रिये कीरे स्वयं जाततिलेऽपि च" ( इति विश्वमेदिन्यौ ) क्षदति, क्षतात्त्रायते वा पृषोदरादित्वात् क्षत्त्रस्तस्यापत्यं क्षत्त्रियः, विशेषेण राजतीति विराडिति पञ्च क्षत्रियस्य । राजतीति राजा, "राजा प्रभौ च नृपतौ क्षत्त्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यादिति" ( मेदिनी ) राजतीति राट्, पृथिव्या ईश्वरः, पार्थिवः, "पार्थिवो नृपतौ भूमिविकारे पार्थिवोऽन्यवत्" (इति विश्वः ) क्ष्मां बिभर्तीति क्ष्माभृत्, "क्ष्माभुगिति पाठे तु क्ष्मां भुनक्ति पालयतीति क्ष्माभुक्" नॄन्पातीति नृपः, भुवं पातीति भूपः, महीं क्षियति, मह्यां क्षयतीति वा महीक्षित् इति सप्त राज्ञः ॥ १ ॥

महाराजा
महाराजाधिराज **( राजा तु प्रणताशेषसामन्तः स्याद ) धीश्वरः (पु.) ।**
छोटा राजा **चक्रवर्ती (पु.) सार्वभौमो (पु.) ( नृपोऽन्यो ) मण्डलेश्वरः (पु.) ॥ २ ॥**

राजेति–संलग्नोऽन्त एकदेशोऽस्याः समन्तासमन्तायाः स्वदेशाव्यवहितभूमेरिमे राजानः सामन्ताः प्रणता अशेषाः सामन्ता स्वदेशानन्तरराजानो यस्येति प्रणताशेषसामन्तो राजा अधिकईश्वरः अधीश्वरः स्यादित्येकं सर्वसंनिहितनृपवशकारिणः । चक्रे भूमण्डले राजमण्डले वा वर्तितुं शीलमस्य, चक्रं गणे चक्रवाके" (इति विश्वः)

चक्रं सैन्यं वर्तयितुं सर्वभूमौ चालयितुं शीलमस्य अवश्यं चक्रं वर्तयतीति वा 'चक्रवर्ती' सर्वभूमेरीश्वरः सार्वभौमः " सार्वभौमस्तु दिङ्नागे सर्वपृथ्वीशतावपि " ( इति त्रिश्वमेदिन्यौ ) इति द्वे समुद्रपर्यन्तभूमीश्वरस्य । सार्वभौमादन्यो नृपः नरपालः मण्डलस्य भूम्येकदेशस्य ईश्वरः मण्डलेश्वरः स्यादित्येकं मण्डलेशस्य ॥ २ ॥

राजसूयादि कर्ता **( येनेष्टं राजसूयेन मण्डलस्येश्वरश्च ) यः ।**

मण्डलेश्वर, **शास्ति यश्चाज्ञया राज्ञः स) सम्राड (थ) राजकम्॥३॥**

नृपान्यश्च, नृप न.

समूह, क्षत्रिय **राजन्यकं ( च ) (नृपतिक्षत्रियाणां गणे क्रमात् ) ।**

समूह, मन्त्री पु. पु. पु. पु.

या वज़ीर, छोटा मन्त्री **मन्त्री धीसचिवोऽमात्यो(ऽन्ये)कर्मसचिवा(स्ततः)४ ॥**

येनेति—येन नृपेण राजसूयेन इष्टं यजनमकारि, यश्च मण्डलस्य ईश्वरः यश्च आज्ञया राज्ञो नृपान् शास्ति शिक्षयति सः सम्यग् राजतीति सम्राट् स्यादित्येकं सार्वभौमविशेषस्य । केचित्तु पृथक् त्रीणि नामान्याहुः । राजसूयकर्ता सम्राट्, द्वादशराजमण्डलेश्वरोपि सम्राट्, सर्वनृपतीनां शासकोऽपि सम्राट् स्यात् । अथेति—नृपतिक्षत्रियाणां गणे समूहे क्रमात् राज्ञां समूहो राजकम्, राजन्यानां समूहो राजन्यकं च स्यात् नृपतिसमूहात्मकं राजकं स्यादित्येकं नरपतिसमूहस्य । क्षत्रियसमूहात्मकं राजन्यकं स्यादित्येकं क्षत्रियसमूहस्य । मन्त्रो गुप्तभाषणमस्यास्ति, अवश्यं मन्त्रयते वा मन्त्री, धिया, धियां वा सचिवः सहायः, धीप्रधानः सचिवो वेति धीसचिवः, अमासह समीपे वा भवोऽमात्यः स्यादिति त्रीणि धीसचिवस्य । ततो धीसचिवादन्ये कर्मसु सचिवाः सहायाः कर्मसचिवाः स्युरित्येकं कर्मसचिवस्य ॥ ३ । ४ ॥

प्रधानमन्त्री, पु. पु.न. पु. पु.

पुरोहित, **महामात्राः प्रधानानि पुरोधा ( स्तु ) पुरोहितः ।**

पञ्च या पु. पु.

न्यायाधीश **( द्रष्टरि व्यवहाराणां ) प्राड्विवाकाक्षदर्शकौ ॥ ५ ॥**

महेति—" मात्रा कर्णविभूषायां वित्ते माने परिच्छिदे । अक्षरावयवे स्वल्पे क्लीबं कात्स्न्र्येऽवधारणे " ( इति मेदिनी ) महती मात्रा येषामिति महामात्राः, "महामात्रः समृद्धे चामात्ये हस्तिपकाधिपे " ( इति मेदिनी ) प्रकर्षेण धीयन्ते इति प्रधानानि " प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि । प्रज्ञायामपि च क्लीबमेकत्वे तूत्तमे सदा" (इति मेदिनी) इति क्लीबत्वम्, पुंलिङ्गोऽपि "महामात्रः प्रधानः स्यादिति" 'पुंस्काण्डे वोपालितात्' इति द्वे प्रधानस्य । पुरोऽग्रे धीयत इति पुरोधाः, पुरोधीयते स्म पुरोहितः इति द्वे पुरोहितस्य । ऋणादानादीन्यष्टादश विवादस्थानानि व्यवहारास्तेषां

---

[1] सम्राट् समाराधनतत्परोभूदिति रघुः ॥

द्रष्टरि निर्णेतरि प्रन्द्रनं प्राट्, विवचनं विवाकः प्राट् च विवाकश्च प्राड्विवाकौ प्रश्नविवेकावस्य स्तः प्राड्विवाकः "विवादानुगतं पृष्ट्वा पूर्ववाक्यं प्रयत्नतः। विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः" अक्षन्तीत्यक्षाः "अक्षः कर्षे तुषे चक्रे शकटव्यवहारयोः" (इति विश्वः) पश्यतीति दर्शकः, अक्षाणां व्यवहाराणां दर्शकः 'अक्षदर्शकः' इति द्वे धर्माध्यक्षस्य ॥ ५ ॥

पु. पु. पु. पु. पु.
द्वारपाल, **प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः।**
रखवार, पु. पु. पु. पु.
अधिकारी **रक्षिवर्ग (स्त्व) नीकस्थो(ऽथा)ध्यक्षाधिकृतौ(समौ)६॥**

प्रतीति–प्रतिहरणं प्रतीहारो जनवारणमस्त्यस्येति प्रतीहारः, "प्रतीहारो द्वारि द्वाःस्थे द्वाःस्थितायां तु योषिति" (इति विश्वमेदिन्यौ) द्वारं पालयतीति द्वारपालः, द्वारि तिष्ठतीति द्वाःस्थः, द्वारि तिष्ठति स्म द्वाःस्थितः "द्वाःस्थितो वेत्रधारकः" (इति त्रिकाण्डशेषः) पश्यतीति दर्शकः "स्याद्दर्शको दर्शयिता प्रतीहारोऽपि दर्शकः" (इति रुद्रः) द्वाःस्थितस्य दर्शक इति समस्तं नामेत्यन्ये, "द्वारपो द्वाःस्थितादर्शी" (इति रभसः) इति पञ्च द्वारपालस्य। अवश्यं रक्षन्तीति रक्षिणः, वृज्यत इति वर्गः, रक्षिणां वर्गो रक्षिवर्गः, अनीकेन, अनीके वा तिष्ठतीति अनीकस्थः "अनीकस्थो रणगते हस्तिशिक्षाविचक्षणे। राजरक्षिणि चिह्ने च वीरमर्दनकेऽपि च" (इति विश्वमेदिन्यौ) इति द्वे रक्षकगणस्य। अथेति–अध्यक्षति, अधिगतोऽक्षं व्यवहारमिति वा अध्यक्षः "अध्यक्षोऽधिकृते प्रोक्तः प्रत्यक्षे त्वभिधेयवदिति" (मेदिनी) अधि अधिकमुपरि वा क्रियते स्म अधिकृतः उभौ समौ समानार्थौ समानलिङ्गौ स्यातामिति द्वे व्यापारितस्य ॥ ६ ॥

एकग्रामाध्यक्ष, पु. पु.
बहुग्रामाध्यक्ष, **स्थायुको (ऽधिकृतो ग्रामे) गोपो (ग्रामेषु भूरिषु)।**
स्वर्णाधिकारी, पु. पु. पु. पु.
रूप्याधिकारी **भौरिकः कनकाध्यक्षो रूप्याध्यक्ष (स्तु) नैष्किकः॥७॥**

स्थेति–ग्रामेऽधिकृतः स्थातुं शीलमस्येति स्थायुकः स्यादित्येकमेकग्रामाधिकृतस्य। भूरिषु ग्रामेषु अधिकृतो गोपायतीति गोपः स्यात् "गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि। ग्रामौघाधिकृते शारिवाख्यौषधौ स्त्रियामिति" (मेदिनी) इत्येकं बहुग्रामाधिकृतस्य। भूरिणि सुवर्णे नियुक्तो भौरिकः, कनकस्य अध्यक्षः कनकाध्यक्षः इति द्वे सुवर्णाधिकृतस्य। आहतं प्रशस्तं वा रूपमस्येति रूप्यः "रूप्यः स्यात्सुन्दरे त्रिषु" "आहतस्वर्णरजते रजते च नपुंसकमिति" (मेदिनी) रूप्यस्याध्यक्षो रूप्याध्यक्षः;

निष्के हेम्नि नियुक्तो नैष्किकः " टङ्कपतिर्नैष्किको रजताध्यक्षः " ( इति रभसः ) इति द्वे टङ्कादिशालायां नियुक्तस्य ॥ ७ ॥

रनिवासाधिकारी, रनिवास का सेवक

(अन्तः पुरे त्वधिकृतः स्या) दन्तर्वंशिको (जनः)।
पु. पु. पु. पु.
सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च (ते)॥८॥

अन्तरिति—अन्तःपुरे अधिकृतो जनः अन्तर् अभ्यन्तरो वंशो गृहम्, अन्तर्वंशस्तस्मिन्नियुक्त अन्तर्वंशोऽस्त्यस्येति वा 'अन्तर्वंशिकः' स्यादित्येकमन्तःपुराधिकृतजनस्य । सुष्ठु विदन्तं विद्वांसमपि लान्ति वशवर्तिनं कुर्वन्तीति सुविदल्लाः स्त्रियस्तासामिमे रक्षकाः सौविदल्लाः, कञ्चुकश्चोलकोऽस्त्येषामिति कञ्चुकिनः, " कञ्चुकी जोङ्गकतरौ महल्लेपन्नगे विटे " ( इति हैमः ) तिष्ठन्त्येषु पुरुषाः स्थाः दारास्तेषां पान्तीति पतयः स्थपतयस्त एव स्थापत्याः, सुविदन्तीति सुविदा एव, सुवेदनं सुविद् सुज्ञानमस्त्येषामिति, सुविदश्चतुराः स्त्रियस्तासामिमे रक्षका वा सौविदा इति चत्वारि रुयगारे वहीरक्षाधिकृतस्य ॥ ८ ॥

खोजा सेवक, पड़ोसी राजा, अन्य राजा

पु. पु. पु. पु. पु.
शण्ढो वर्षवर (स्तुल्यौ) सेवकार्थ्यनुजीविनः ।
पु. पु.
(विषयानन्तरो राजा) शत्रुर्मित्र[1] (मतः परम्) ॥ ९ ॥

शेति—शाम्यति शिश्नाभावादिति शण्ढः, " शण्ढः क्लीबस्तु कञ्चुकी " (इति तालव्यादौ रभसः ) "शण्ढः स्यात्पुंसि गोपतौ । आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि " ( इति मेदिनी ) " शण्ढषण्ढौ सौविदौ । वन्ध्यपुंसीङ्करे क्लीबे " ( इति हैमः ) वरति, वृणोति वा वरः वर्षस्य रेतःपातस्य वरो वर्षवरः उभौ तुल्यौ समानार्थौ समानलिङ्गौ स्तः " ये त्वल्पसत्त्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः । जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः " इति द्वे शण्ढस्य । सेवत इति सेवकः, " सेवकस्तु प्रसेवे ना वाच्यलिङ्गोऽनुजीविनि " ( इति मेदिनी ) अर्थोऽसंनिहितोऽस्यास्तीति अर्थी, " अर्थी पुमान्याचके स्यात्सेवके च विवादिनि " ( इति मेदिनी ) अनुजीवितुं शीलमस्येति, अनुजीवी इति त्रीणि सेवकस्य । विषयानन्तरः स्वदेशाव्यवहितदेशो राजा शातयतीति शत्रुः स्यादित्येकं स्वदेशाव्यवहितदेशीयनृपस्य । अतः शत्रोः परं मेद्यतीति मित्रं स्यादित्येकमन्यनृपस्य ॥ ९ ॥

---

[1] "मित्रं सुहृदि न द्वयोः । सूर्ये पुंसि स्त्रियां गन्धद्रव्ये देश्यान्तरे पुमानिति" (मेदिनी) ॥

दोनोंसे भिन्न, पु. पु.
अपने राज्य से उदासीनः (परतरः) पार्ष्णिग्राह (स्तु पृष्ठतः)।
पीछे का राजा, पु. पु. पु. पु. पु. पु. पु.
रिपौवैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥ १० ॥
पु. पु. पु. पु. पु. पु. पु.
वैरी द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः।
पु. पु. पु. पु. पु.
अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ॥ ११ ॥

उदेति—अतिशयितः परः परतरः शत्रुमित्राभ्यां परो राजा उदास्त इति उदासीनः स्यादित्येकं शत्रुमित्रपरनृपस्य । पृष्ठतः पृष्ठभागस्थितो राजा पार्ष्णिपश्चात्पदं गृह्णातीति पार्ष्णिग्राहः "सैन्यपृष्ठे पुमान्पार्ष्णिः पश्चात्पदजिगीषयोः" ( इति विश्वः ) इत्येकं जिगीषुपृष्ठभागस्थितनृपस्य । रपति दोषमनिष्टमिति वा रिपुस्तस्मिन् , वीरस्य कर्म भावो वा वैरमस्यास्तीति वैरी, सपत्नीव सपत्नः, इयर्ति विरोधमिति अरिः, द्वेष्टीति द्विषन् , द्वेषणशीलो द्वेषणः, दुष्टं हृदयमस्येति दुर्हृद् , द्वेष्टीति द्विट्, विरुद्धः पक्षो विविधः पक्षो वास्येति विपक्षः, न हितमस्मादिति अहितः, अमति गच्छतीति अमित्रः, दस्यतीति दस्युः, शातयतीति शत्रुः शत्रुरेव शात्रवः, शत्रुः, अभिहन्तुं शीलमस्येति अभिघाती, "द्वेष्योऽभियातिरमित्रः" (इति रत्नकोषः) अभियातीति "अभियातिः" पिपर्ति रोषमिति परः, न राति सुखमिति अरातिः, प्रतिकूलमर्थयितुं शीलमस्येति प्रत्यर्थी, परिदोषाख्यानं पन्थयितुं शीलमस्येति परिपन्थी इत्यूनविंशतिःशत्रोः॥१०।११॥

समान वयवाले, पु. पु. पु. न. पु. पु.
मित्र, वयस्यः स्निग्धः सवया (अथ) मित्रं सखा सुहृत्।
मित्रता या न. न. पु. न.
मिताई, भलाई सख्यं साप्तपदीनं (स्याद) नुरोधोऽनुवर्तनम् ॥ १२ ॥

वयेति—वयसा तुल्यो वयस्यः, स्निह्यतीति स्निग्धः, समानं वयोऽस्येति सवयाः इति त्रीणि समानवयस्यस्य । अथेति—मेद्यतीति मित्रम्, समानः ख्यायते लोकैरिति सखा, शोभनं हृदयमस्येति सुहृदिति त्रीणि मित्रस्य । सख्युर्भावः कर्म वा सख्यम्, सप्तभिः पदैरवाप्यत इति साप्तपदीनं स्यादिति द्वे सख्युर्धर्मकर्मणोः। अनुगम्य रोधनम् अनुरोधः, अनुगम्य वर्तनं चित्ताराधनमिति द्वे आराध्यादेरिष्टसंपादनस्य ॥ १२ ॥

पु. पु. पु. पु. पु.
दूत या यथार्हवर्णः प्रणिधिरपसर्पश्चरःस्पशः।
हलकारा, पु. पु. पु. पु.
विश्वासी चार (श्च) गूढपुरुष (श्च) आप्तः प्रत्ययित(स्त्रिषु)॥१३॥

१ बाहुलकादनादेशस्याभावः "अनुनासिकपरत्वाभावादनादेशो नेति तु भाष्यसिद्धान्तः ॥
२ "प्रत्ययः शपथे रन्ध्रे विश्वासाधारहेतुषु" (इति विश्वः) ॥

यथेति—अर्हतीति अर्हः यो योऽर्हो यथार्हं वर्णो रूपमस्येति यथार्हवर्णः " वर्णः स्याद्भेदरूपयोः " ( इति धरणिः ) प्रकर्षेण निधीयते ज्ञेयमत्रेति प्रणिधिः, " प्रणिधिर्याचने चरे " ( इति हैमः ) अपसर्पतीति अपसर्पः, चरतीति चरः "चरोऽक्षद्यूतभेदे च भौमे चारे त्रसे चले " ( इति मेदिनी ) स्पशति बाधते परानिति स्पशः, " स्पशः स्यात्संपराये च प्रणिधावपि पुंस्ययम् " ( इति मेदिनी ) चर एव चारः " चारः पियालवृक्षे स्याद्गतौ बन्धापसर्पयोः " ( इति मेदिनी ) गूढश्चासौ पुरुषश्चेति गूढपुरुषः इति सप्त चारस्य " जासूस " इति ख्यातस्य । आप्यते स्म आप्तः, प्रत्ययो विश्वासः संजातोऽस्येति प्रत्ययितः त्रिषु त्रिलिङ्ग्यां स्यादिति द्वे विश्वासाधारस्य ॥ १३ ॥

ज्योतिर्विद् सांवत्सरो ज्यौतिषिको दैवज्ञ गणका (वपि) ।
(स्यु)र्मौहूर्तिको मौहूर्तज्ञानिकार्तान्तिका(अपि) ॥१४ ॥

सामिति—संवत्सरं वेत्तीति सांवत्सरः, ज्योतिर्नक्षत्राद्यधिकृत्य कृतो ग्रन्थो ज्योतिषस्तमधीते वेद वा ज्यौतिषिकः, दैवं प्राक्कृतं शुभाशुभं कर्म जानातीति दैवज्ञः, गणयतीति गणकः, मुहूर्तमधिकृत्य कृतं ग्रन्थमधीते वेद वा मौहूर्तिकः ( अणि ) मौहूर्तः, ज्ञानमस्यास्तीति ज्ञानी " कृतान्तोयमसिद्धान्तदैवाकुशलकर्मसु " कृतान्तं वेत्तीति कार्तान्तिकः इत्यष्टौ ज्यौतिषस्य ॥ १४ ॥

शास्त्री, तान्त्रिको ज्ञातसिद्धान्तः सत्री गृहपतिः (समौ) ।
सौदी, लेखक लिपिंकरोऽक्षरचणोऽक्षरचुञ्चु (श्च) लेखके ॥ १५ ॥

तेति—तन्त्रं सिद्धान्तमधीते वेद वा तान्त्रिकः, ज्ञातः सिद्धान्तो येनेति ज्ञातसिद्धान्तः इति द्वे तान्त्रिकस्य तत्त्वार्थज्ञस्य वा । " सत्रमाच्छादने यज्ञे सदादाने च कैतवे " ( इति विश्वः ) सत्रमस्यास्तीति सत्री, गृहस्य पतिः गृहपतिः उभौ समौ समानार्थौ समानलिङ्गौ स्तः इति द्वे सदान्नादिदानकर्तृगृहस्थस्य । लिपिं करोतीति लिपिंकरः एवं लिबिंकरोपि, अक्षरे वित्तोऽक्षरचणः, एवमक्षरचुञ्चुरपि । लिखतीति लेखकः इति चत्वारि लेखकस्य ॥ १५ ॥

लिखायाअक्षर (लिखिताक्षरविन्यासे)लिपिर्लिबि(रुभे स्त्रियौ) ।
दूत, दूतका काम (स्यात्संदेशहरो दूतो दूत्यं (तद्भावकर्मणि ) ॥ १६ ॥

लिखीति—लिख्यते स्म लिखितम्, न क्षरन्तीत्यक्षराणि, विन्यसनं विन्यासः, अक्ष-

राणां विन्यासः, लिखितं चाक्षरविन्यासश्चानयोः समाहारो लिखिताक्षरविन्यासं तस्मिन्, लिप्यत इति लिपिः, लिविः सौत्रो धातुः लिव्यत इति लिविः, उभे स्त्रियौ स्यातामिति चत्वारि लिखितस्य । संदेशं वाचिकं हरतीति संदेशहरः, दवति, दूयते स्म वा दूतः इति द्वे दूतस्य । तद्भावकर्मणि दूतस्य भावः कर्म वा दूत्यम्, 'ष्यञि' दौत्यमपि स्यादित्येकं दौत्यस्य ॥ १६ ॥

पथिक, **अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।**
**स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥ १७ ॥**
राज्याङ्ग **राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ।**

अध्वेति—अध्वानमलंगच्छतीति अध्वनीनः, अध्वानं गच्छतीति अध्वगः, अध्वानमलं गच्छतीति अध्वन्यः, पन्थानं नित्यं गच्छतीति पान्थः स्त्रियां पान्था ष्कनिप्रत्यये पथिकः स्त्रियां पथिकी इति पञ्च पथिकस्य । स्वामी राजा, अमात्यो मन्त्री, सुहृद् मित्रम्, कोशो भण्डारः, राष्ट्रं देशः, पर्वतादि दुर्गाणि, बलं सैन्यम् एतानि सप्त राज्यस्य राजकर्मणोऽङ्गानि । प्रकृष्टं कुर्वन्ति राज्यमिति प्रकृतयः, पौराणां नागराणां श्रयन्ति, श्रीयन्ते वा श्रेणयः एकमुख्याः सजातीयसमूहाश्च यथा कामन्दकीये " स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् । परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते " पौरश्रेणिभिः सहाष्टाङ्गमपि राज्यमिति दर्शितमिति त्रीणि द्वे वा राज्याङ्गानाम् ॥ १७ । १/२ ॥

पु. पु. न. न. न. पु.
मिलाप आदि **सन्धि ( र्ना ) विग्रहो यानमासनं द्वैधमाश्रयः ॥ १८ ॥**
पु. स.
६गुण ३शक्तियां **( षड् ) गुणाः शक्तय ( स्तिस्रः प्रभावोत्साहमन्त्रजाः ) ।**
त्रिवर्ग **( क्षयः स्थानं च वृद्धिश्च ) त्रिवर्गो ( नीतिवेदिनाम् ) ॥ १९ ॥**

सन्धिरिति—सन्धानं सन्धिः ना पुमान्स्यात् "स्वर्णादिदानेन परबन्धुभिः प्रीत्युत्पादनामित्रीकरणं सन्धिः " ( १ ) विरुद्धं विविधं वा ग्रहणं विग्रहः " परमण्डले दाहलुण्ठनच्छेदादिविग्रहः " ( २ ) यान्त्यत्रेति यानम् " उपचितशक्तेः कृतमूलराष्ट्ररक्षकस्य शत्रोरवस्कन्दनाय यात्रायानम्" तच्च विगृह्य यानम्, सन्धाय यानम्, संभूय यानम्, प्रसङ्गयानम्, उपेक्ष्ययानं च पञ्चविधं विज्ञेयम् ( ३ ) आसितमासनम् " नाहमिदानीं योद्धुं समर्थः इति कालादिप्रतीक्षया विजिगीषोर्दुर्गादीन् वर्धयतः । "स्थितिरासनम् " तदपि पञ्चविधम् ( ४ ) द्विप्रकारं द्वैधम् " बलिनो वैरिणोर्मध्ये काकाक्षिवदलक्षितस्योभयत्र वाचा समर्पणं द्वैधम् " तच्च चतुर्विधम् ( ५ ) आश्रयणमाश्रयः, उक्तं हि— " उच्छिद्यमानो रिपुणा निरुपायप्रतिक्रियः । शक्तिहीनः संश्रयते बलिनं धार्मिकं नृपम् " ( ६ ) एते षट् गुणयन्ते इति गुणाः गुणशब्दवाच्या भवन्ति इत्येकं

सन्ध्यादीनाम् । प्रभावोत्साहमन्त्रजाः तिस्रः शक्तयः स्युः भवत्यनेन भावः प्रकृष्टो भावः प्रभावः उक्तं हि—" कोशदण्डबलं प्रभुशक्तिः" उत्साहतेऽनेन उत्साहः उक्तं हि—"विक्रमबलमुत्साहशक्तिः" सन्ध्यादीनां सामादीनां च यथावत्स्थापनं न तु ज्ञानबलं मन्त्रशक्तिः " पञ्चाङ्गमन्त्रो मन्त्रशक्तिरित्यन्ये " प्रभावश्च उत्साहश्च मन्त्रश्च प्रभावोत्साहमन्त्रास्तेभ्यो जातास्तिस्रः शक्यन्ते जेतुमनयेति शक्तयः स्युरित्येकं त्रिशक्तीनाम् । क्षयणं क्षयः " कृषिर्वणिक्पथं दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकारबलादानं शून्यानां च निवेशनम् इत्यष्टवर्गस्तस्यापचयः क्षयः " स्थितं स्थानम् " उपचयापचयाभावः स्थानम् " वर्धनं वृद्धिः " उपचयो वृद्धिः " इति नीतिं वेदितुं शीलं येषां तेषां त्रयाणां वर्गस्त्रिवर्गः स्यादित्येकं नीतिशास्त्रोक्तक्षयस्थानवृद्धीनाम् ॥ १८ । १९ ॥

पु. पु.

प्रभाव उपाय **( स ) प्रतापः प्रभावश्च ( यत्तेजः कोषदण्डजम् ) ।**

पु.

**(भेदो दण्डः सामदानमित्यु)पाय (चतुष्टयम्) ॥२०॥**

सइति—कोषो धनम्, दण्डो दमः सैन्यं च ताभ्यां जातं यत् तेजः "अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् । प्राणात्यये प्रसहनं तत्तेजः समुदाहृतमिति" (भरतः) सः प्रतापयत्यनेन प्रतपनं वा प्रतापः, भवत्यनेनभावः प्रकृष्टो भावः प्रभवनं वा प्रभावश्च स्यादिति द्वे प्रभावस्य । भेदनं भेदः " शत्रोरमात्यादीनामुपायेन परतो विश्लिष्यात्मसात्करणं भेदः, स्नेहरागापनयनं संहर्षोत्पादनं तथा । संतर्जनं च भेदज्ञैर्भेदस्तु त्रिविधः स्मृतः इति " दमनं दण्डः " वधोऽर्थहरणं चैव परिक्लेशस्तथैव च । इति दण्डविधानज्ञैर्दण्डोपि त्रिविधः स्मृतः " सामनम्, स्यति रोषमनेन वा साम " परस्परोपकाराणां दर्शनं गुणकीर्तनम् । सम्बन्धस्य समाख्यानमायत्याः संप्रकाशनम् । वाचा पेशलया साधु तवाहमिति चार्पणम् । इति सामविधानज्ञैः साम पञ्चविधं स्मृतम् " दत्तं दानम् स्वधनस्य परेभ्यः प्रतिपादनं दानम् "प्रतिदानं तथा तस्य गृहीतस्यानुमोचनम् । द्रव्यादानमपूर्वं च स्वयंग्राहप्रवर्तनम् । देयस्य प्रतिमोक्षश्च दानं पञ्चविधं स्मृतम् " इत्युपायानां चतुष्टयं विज्ञेयम् अन्यत्र सप्तोपाया उक्ताः " साम दानं च दण्डश्च भेदश्चेति चतुष्टयम् । मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः " इति नृपोपायचतुष्टयानामेकैकम् ॥ २० ॥

दण्ड मिलाप न. पु. पु. न.

भेद मन्त्री आदि **साहसं ( तु ) दमो दण्डः साससान्त्व ( मथो समौ)।**

के कामों को पु. पु. स.

देखना **भेदोपजापा ( वुपधा ) धर्माद्यैर्यत्परीक्षणम् ॥ २१ ॥**

सेति–सहसि बले भवं साहसम्, "साहसं तु दमे दुष्करकर्मणि । अविमृश्य कृतौ धाष्टर्ये " ( इति हैमः ) दमनं दमः " दमः स्यात्कर्दमे दण्डे दमने दमथेऽपि च " ( इति हेमचन्द्रः ) दाम्यति, दण्डयत्यनेन वा दण्डः "दण्डः सैन्ये दमे यमे । मानव्यूह-ग्रहभेदेष्वश्वेऽर्कानुचरे मथि । प्रकाण्डे लगुडे कोणे चतुर्थोपायगर्वयोः " ( इति हैमः ) इति त्रीणि दण्डस्य । सामनम्, स्यति रोषमनेन वा साम, सान्त्वनं सान्त्व-मिति द्वे साम्नः " मिलाप" इति ख्यातस्य । अथविति–भेदनं भेदः " भेदो द्वैधे वि-शेषे स्यादुपजापे विदारणे " ( इति विश्वमेदिन्यौ ) उपांशु जपनं जापः उभौ समौ समानार्थौ समानलिङ्गाविति द्वे भेदस्य । धर्म आद्यो येषामिति धर्माद्याः आद्येन कामार्थभयग्रहः तैर्धर्मार्थकामभयैरमात्यादेर्यत्परीक्षणं तत् उपाधीयते शुद्धिज्ञानमत्रेति उपधा स्यादित्येकं राज्ञा धर्माद्यैरमात्यादेः परीक्षणस्य ॥ २१ ॥

पु.स.न.
सलाह **( पञ्चत्रिष्व ) षडक्षीणो ( यस्तृतीयाद्यगोचरः )।**
एकान्त पु.स.न. पु.स.न. पु.स.न. पु.स.न. न.
एकान्त की बात **विविक्तविजनच्छन्ननिःशलाका (स्तथा) रहः ॥ २२ ॥**
अ. अ. पु.स.न.
विश्वास **रहश्चोपांशु (चालिङ्गे) रहस्यं ( तद्भवे त्रिषु )।**
पु. पु. पु.
अन्याय **(समौ)विस्रम्भविश्वासौभ्रेषो(भ्रंशोयथोचितात्)२३॥**

पेति–निःशलाकान्ताः पञ्च त्रिषु त्रिलिङ्ग्यां स्युः यः तृतीयाद्यगोचरस्तृतीयादि-भिर्न ज्ञातः स अविद्यमानानि षट् अक्षीण्यत्रेति अषडक्षीणः स्यादित्येकं द्वाभ्यामेव कृतस्य मन्त्रस्य । विविञ्चन्ति जना अत्रेति विविक्तः " विविक्तं त्रिष्वसंपृक्ते रहः पूतविवेकिषु " ( इति मेदिनी ) विगतो जनोऽस्मादिति विजनः, छद्यते स्म छन्नः " छन्नं तु रहसि क्लीबं छादिते वाच्यलिङ्गकम् " निर्गता शलाकाप्यस्मात्, शला-काया निर्गतो वेति निःशलाकः 'तथा' शब्दः समुच्चये रह्यते, रमन्तेऽत्रेति वा रहः " रहस्तत्त्वे रते गुह्ये " ( इति मेदिनी ) रभसोपि, " रहो निधुवनेपि स्याद्रहो गुह्ये नपुंसकम् " उपगता अंशवः किरणा अत्रेति उपांशु "उपांशुर्जपभेदे स्यादुपांशुविजने-ऽव्ययम् " ( इति विश्वहेममेदिन्यः ) अलिङ्गे द्वे अव्यये स्यातामिति सप्तैकान्तस्य । तद्भवे रहो भवं रहस्यं त्रिषु त्रिलिङ्ग्यां स्यात् " रहस्या स्त्री नदीभेदे गोपनीयेऽभि-धेयवदिति" (मेदिनी) इत्येकं रहस्यस्य । विस्रम्भणं विस्रम्भः, तालव्यादिस्तु प्रमादे गतः " विश्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च " ( इति विश्वमेदिन्यौ ) विश्व-सनं विश्वासः उभौ समौ समानार्थौ समानलिङ्गाविति द्वे विश्वासस्य । यथोचिताद् यथाप्राप्तात् भ्रंशोऽधःपतनं भ्रेषणं भ्रेषः स्यादित्येकमन्यायस्य ॥ २२ । २३ ॥

पु. पु. पु. न. न.

न्याय न्याययुत **अभ्रेषन्यायकल्पा (स्तु) देशरूपं समञ्जसम्।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

द्रव्ययुक्तायुक्त **युक्तमौपयिकं लभ्यं भजमानाभिनीत (वत्) ॥ २४ ॥**

पु.स.न. स. न.

परीक्षा **न्याय्यं (च त्रिषु षट्) संप्रधारणा (तु) समर्थनम्।**

अभ्र इति—भ्रेषादन्योऽभ्रेषः, नियमेन ईयत इति न्यायः, कल्पनं कल्पः "कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने" (इति मेदिनी) दिश्यत इति देशः देशो रूपमस्य, दिश्यमानस्योचितस्य रूपम्, प्रशस्तं देशनं वेति देशरूपम्, सम्यगञ्जोऽत्र, संगतमञ्जसा तत्त्वमत्रेति वा समञ्जसमिति पञ्चोचितस्य। युज्यते स्म युक्तम् "युक्तो युक्ते पृथग्भूते क्लीबं हस्तचतुष्टये" (इति मेदिनी) उपयन्त्यनेन उपायः उपाय एव औपयिकम्, लभ्यत इति लभ्यम्, "लभ्यं युक्ते च लब्धव्ये" (इति मेदिनी) भजते फलमनुबध्नातीति भजमानम्, अभिनीयते स्म अभिनीतम् तेन तुल्यमभिनीतवत् "अभिनीतं संस्कृते च न्याय्ये चामर्षिणि त्रिपु" (इति रुद्रः) न्यायादनपेतं न्याय्यम् एते युक्तादयः षट् त्रिपु त्रिलिङ्गयां स्युरिति षट् न्यायागतस्य। संप्रधारणमिति संप्रधारणा, समर्थितं समर्थनमिति द्वे 'इदमुचितमेत्र' इति निश्चयस्य ॥२४। [१]॥

पु. पु. पु. न.

आज्ञा या हुक्म **अववाद (स्तु) निर्देशो निदेशः शासनं (च सः) ॥ २५ ॥**

मर्यादा स. स. स. स. स. स.

अपराध **शिष्टि (श्चा) ज्ञा (च) संस्था (तु) मर्यादा धारणा स्थितिः।**

न. पु. पु. न. न.

क़ैद करना **आगोऽपराधो मन्तु (श्च) (समे तू) द्दानबन्धने ॥ २६ ॥**

अवेति—अवलम्ब्य वदनमत्रेति अववादः, निर्देशनं निर्देशः, निदेशनं निदेशः "निदेशः शासनोपान्तकथनेषु प्रयुज्यते" (इति विश्वः) शिष्टं शासनम्, शासनं शिष्टिः बाहुलकात्तिः शास्तिरपि आज्ञानमाज्ञापनं वा आज्ञा इति षडाज्ञायाः। सम्यगवस्थानं, संतिष्ठतेऽनयेति वा संस्था "संस्थश्चरेऽवस्थिते स्त्री स्थितौ सादृश्यनाशयोः" (इति मेदिनी) 'मर्या' इति सीमार्थेऽव्ययम् तत्र दीयते इति मर्यादा, धारयति धर्ममिति धारणा "धारणाङ्गे च योगेऽस्य न पुंसि स्याद्विधारणे" स्थानं तिष्ठन्त्यत्रेति वा स्थितिरिति चत्वारि न्याय्यपथस्थितेः। एतीति आगः "आगोऽपराधे पापे स्यादिति" (मेदिनी) अपराधनमपराधः, मन्यत इति मन्तुः "मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि

---

१ विश्वहैमसंवादप्राप्तप्रामाण्यमेदिनीपुस्तके "युतः" इति पाठस्योपालम्भेन योग्यत्वेन चात्रास्योपन्यासः प्रामादिकः ॥

प्रजापतौ " ( इति मेदिनी ) इति त्रीण्यपराधस्य । उद्दितमुद्दानम्, बद्धमिति बन्धनम् उभे समे समानार्थे समानलिङ्गे स्यातामिति द्वे बन्धनस्य ॥ २५ । २६ ॥

दूना दण्ड पौत या राज-भाग महसूल भेंट या नज़र

पु. पु. पु. पु.
**द्विपाद्यो (द्विगुणो दण्डो) भागधेयः करो बलिः ।**
पु.न. न. न.
**(घट्टादिदेयं) शुल्को(ऽस्त्री) प्राभृत(न्तु) प्रदेशनम् २७॥**

द्वीति–द्विगुणो दण्डः द्वौ पादौ परिमाणमस्येति द्विपाद्यः स्यादित्येकमपराधे शास्त्रेण बोधितदण्डाद्द्विगुणदण्डस्य । भाग एव भागधेयः " अर्थागमो भवेदायो भागधेयो बलिः करः " ( इति हलायुधः ) कीर्यत इति करः " करो वर्षोपले पाणौ रश्मौ प्रत्यायशुण्डयोः " ( इति मेदिनी ) कर एव कारः " कारोवधे निश्चये च बलौ रत्ने यतावपि " ( इति विश्वमेदिन्यौ ) बल्यत इति बलिः " बलिर्दैत्यप्रभेदे च करचामरदण्डयोः । उपहारे पुमानस्त्री जरया श्लथचर्मणि । गृहदारुप्रभेदे च जठरावयवेऽपि च " ( इति मेदिनी ) इति त्रीणि कर्षकादिभ्यो राजग्राह्यभागस्य । घट्टः आदिर्यस्येति घट्टादिः आदिना गुल्मप्रतोल्यादिग्रहस्तस्मिन् घट्टादौ यद्देयं द्रव्यादिकं तत् शुल्क्यत इति शुल्कः अस्त्री पुंनपुंसकं स्यात् " शुल्कं घट्टादिदेये स्याद्वरादर्थग्रहेऽस्त्रियामिति " ( मेदिनी ) इत्येकं घट्टादिदेयराजभागस्य "महसूल" इति ख्यातस्य । प्राभ्रियते स्म प्राभृतम् , प्रदिश्यत इति प्रदेशनमिति द्वे देवताभ्यो मित्रादिभ्यश्च दीयमानस्य ॥ २७ ॥

उपहार दायज या व्रत व भीख आदि में देयधन

न. न. पु. स.
**उपायनमुपग्राह्यमुपहारस्तथोपदा ।**
पु. पु.
**(यौतकादि तु यद्देयं) सुदायो हरणं (च तत्) ॥ २८ ॥**

उपेति–उपेयते, उपाय्यते वा उपायनम् "उपायनमुपग्राह्यं प्राभृतं चोपदा स्त्रियाम्" ( इत्यमरमाला ) उपगृह्यत इति उपग्राह्यम् , उपह्रियत इति उपहारः " तथेति समुच्चये " उपदीयत इति उपदा इति चत्वार्युपहारस्य षडप्युपहारस्येत्यन्ये । युतकं योनिसम्बन्धस्तत्र भवम् , युतयोर्वरवध्वोरिदं वा यौतं तदेव यौतकम् " यौतकं यौतुकं च तदिति वाचस्पतेरुमध्यमपि " तदेवादिर्यस्येति यौतुकादि " आदिना व्रतभिक्षादिपरिग्रहः " यद्देयं तत् सुदीयत इति सुदायः, ह्रियत इति हरणम् " हरणं यौतकादीनां द्रव्ये भुजे हृतावपि " ( इति मेदिनी ) इति द्वे कन्यादानकाले व्रतभिक्षादौ च दीयमानद्रव्यस्य ॥ २८ ॥

---

१ " युतकं युगले युक्ते संशयेऽपि चेति रभसः । युतकं संशये युगे । नारी वस्त्राञ्चले युक्ते चलनाम्रे च यौतके " ( इति मेदिनी ) ॥

पु. न. स.

वर्तमान,भविष्य तत्काल(स्तु)तदात्वं (स्यादुत्तरः काल) आयतिः।
शीघ्रफल, न. पु.
आगामीफल सान्दृष्टिकं (फलं सद्य) उदर्कः (फलमुत्तरम्)॥२६॥

तदिति—स चासौ कालश्चेति तत्कालः, 'तदा' इत्यस्य भावस्तदात्वं स्यादिति द्वे वर्तमानकालस्य। उत्तरः कालः आयंस्यतेऽत्र, आयास्यतीति वा आयतिः "आयतिस्तु स्त्रियां दैर्घ्ये प्रभावागामिकालयोः" (इतिमेदिनी) इत्येकमुत्तरकालस्य। सद्यः फलं सन्दृष्टौ प्रत्यक्षे भवं सान्दृष्टिकं स्यादित्येकं व्यापारानन्तरं जायमानफलस्य। उत्तरं फलम् उदर्क्यते, उदर्च्यते, उदृच्यते वा उदर्कः स्यात् "उदर्क एष्यत्कालीनफले मदनकण्टके" (इति मेदिनी) इत्येकं भाविकर्मफलस्य॥ २६॥

न. न.

अदृष्टभय, दृष्ट अदृष्टं (वह्नितोयादि) दृष्टं (स्वपरचक्रजम्)।
भय, अपने न.
पक्षीयों से भय (महीभुजा) महिभयं (स्वपक्षप्रभवं भयम्)॥३०॥

अद्रिति—वह्निश्च तोयं च आदिर्यस्येति भयहेतुत्वाद्भयम् आदिना "हुताशनो जलं व्याधिर्दुर्भिक्षं मरकस्तथा। अतिवृष्टिरनावृष्टिर्मूषिकाः शलभादयः" गृह्यन्ते, अदृष्टहेतुकत्वान्न दृष्टमदृष्टमित्येकमग्न्यादिकृतभयस्य। स्वश्च परश्च स्वपरौ तयोश्चक्रे सैन्ये ताभ्यां जातं स्वपरचक्रजं भयं दृश्यते स्म दृष्टं स्यादित्येकं स्वपरसैन्यात्परराष्ट्राच्चौराटविकादेः परचक्राद्दाहविलोपादेर्भयस्य। महीभुजामवनिपालानां स्वपक्षात्प्रभवतीति स्वपक्षप्रभवं भयम् अहिरिव गृहस्थत्वादावृताकारत्वाच्च स्वस्य पक्ष एव अहिस्तस्य भयं महिभयं स्यादित्येकं स्वसहायाज्जातभयस्य॥ ३०॥

स. पु. न. न.

व्यवस्था प्रक्रिया (त्व)धिकारः(स्याच्)चामरं(तु)प्रकीर्णकम्।
स्थापन, चँवर, न. न. न.
राजगद्दी, नृपासनं (तु) यद्भद्रासनं सिंहासनं (तु तत्)॥३१॥
सिंहासन,छाता, न. न. न.
राजछाता, (हैमं) छत्रं त्वातपत्रं (राज्ञस्तु) नृपलक्ष्म (तत्)।
पूर्ण कलश, पु. पु. पु. स.
झारी भद्रकुम्भः पूर्णकुम्भो भृङ्गारः कनकालुका॥ ३२॥

प्रेति—प्रकर्षाय करणं प्रक्रिया "प्रक्रिया तूत्पादने स्यादधिकारप्रकारयोरिति" (हेमचन्द्रः)अधि आधिक्यस्य करणमधिकारः स्यादिति द्वे राज्ञां छत्रधारणादिव्यापारस्य। चमति, चम्यतेऽनेन वा चमरम् "चमरश्चामरे दैत्ये चमरी तु मृगान्तरे" (इतिहैमः)

चमरमेव चामरम् स्त्रियामजादित्वाच्चामरापि "चामरा चामरं बालव्यजनं रोमगुच्छक-मिति" (रभसः ) प्रकीर्यते स्म प्रकीर्णम् तदेव प्रकीर्णकम् " प्रकीर्णकं चामरे स्याद्विस्तारे ना तुरङ्गमे " ( इति मेदिनी ) इति द्वे चामरस्य । यत् नृपस्य आसनं नृपासनम् , तत् भद्रं च तदासनं चेति भद्रासनं स्यादिति द्वे मण्यादिकृतराजासनस्य । यत् हैमं हेमविकारजं नृपासनं तत् सिंहाकारमासनं सिंह इव आसनं वेति सिंहासनं स्यादित्येकं सुवर्णकृतराजासनस्य । छादयत्यनेन छत्रम् , आतपात्त्रायत इत्यातपत्रमिति द्वे छत्रस्य । तत् छत्रं राज्ञो नृपस्य लक्ष्म चिह्नं नृपलक्ष्म स्यादित्येकं नृपच्छत्रस्य । भद्रस्य भद्रो वा कुम्भः भद्रकुम्भः, पूर्णः कुम्भः पूर्णकुम्भः इति द्वे पूर्णकलशस्य । बिभर्ति जलमिति भृङ्गारः, कनकस्य आलुः कनकालुः सैव कनकालुका स्यादिति द्वे सुवर्णकृतजलपात्रस्य ॥ ३१ । ३२ ॥

पु. न. न. न.

सेनानिवास, **निवेशः शिबिरं ( षण्ढे ) सज्जनं ( तू ) परक्षणम् ।**

गश्त या पहरा, न.

सेनाङ्ग **( हस्त्यश्वरथपादातं ) सेनाङ्गं ( स्याच्चतुष्टयम् )॥३३॥**

नीति—निविशन्तेऽत्रेति निवेशः "निवेशः सैन्यविन्यासे न्यासेद्रङ्गविवाहयोः" (इति हैमः ) शवन्त्यत्रेति शिविरं षण्ढे क्लीबे स्यादिति द्वे आगन्तुकसैन्यवसतेः । सज्जन्त्यनेन, सच्छोभनं जन्यतेऽनेन वा सज्जनम् , उपरक्ष्यतेऽनेन उपरक्षणमिति द्वे सैन्यरक्षणाय नियुक्तप्रहरिकादिन्यासस्य । पदातीनां समूहः पादातम् , हस्तिनश्च अश्वाश्च रथाश्च पादातं चेति हस्त्यश्वरथपादातं सेनाङ्गत्वादेकवद्भावः । चत्वारोऽवयवा यस्येति चतुष्टयं सेनाया अङ्गं सेनाङ्गं स्यादित्येकं सेनाङ्गस्य ॥ ३३ ॥

पु. पु. पु. पु. पु. पु.

हाथी, **दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः ।**

पु. पु. पु. पु. पु. पु.

हाथियोंकाराजा, **मतङ्गजो गजो नागः कुञ्जरो वारणः करी ॥ ३४ ॥**

पु. पु. पु. पु. पु.

मदान्ध **इभः स्तम्बेरमः पद्मी यूथनाथ ( स्तु )यूथपः ।**

हाथी, हाथी का पु. पु. पु. पु.

बच्चा **मदोत्कटो मदकलः कलभः करिशावकः ॥ ३५ ॥**

देति—अतिशयितौ दन्तावस्येति दन्ती, दन्तौ स्तोऽस्येति दन्तावलः, हस्तः शुण्डास्त्यस्येति हस्ती, द्वौ रदावस्येति द्विरदः, अनेकेन करेण मुखेन च पिबतीति अनेकपः, द्वाभ्यां मुखशुण्डाभ्यां पिबतीति द्विपः, मतङ्गाद्दषेर्जातो मतङ्गजः, गजतीति गजः, न अगः नगे भवो वा नागः, " नागो मतङ्गजे सर्पे पुन्नागे नागकेशरे । क्रूराचारे

नागदन्ते मुस्तके वारिदेऽपि च। देहानिलविशेषे च श्रेष्ठे स्यादुत्तरस्थितः। नागं रङ्गे सीसपत्रे स्त्रीबन्धे करणान्तरे" ( इति हैमः ) अतिशयितः कुञ्जो हनुरस्येति कुञ्जरः, "कुञ्जरोऽनेकपे केशे कुञ्जरा धातकीद्रुमे। पाटलायां चेति" ( हेमचन्द्रः ) वारयति शत्रुबलमिति वारणः "वारणं प्रतिषेधे स्याद्वारणस्तु मतङ्गजे" ( इति विश्वः ) करोऽस्त्यस्येति करी, एति, ईयते वा इभः "स्तम्बो गुल्मे तृणादीनामकाण्डे द्रुमगुच्छयोरिति" ( विश्वः ) स्तम्बे रमते स्तम्बेरमः, पद्मं बिन्दुजालमस्त्यस्येति पद्मी इति पञ्चदशहस्तिनः। यूथस्य हस्तिवृन्दस्य नाथो यूथनाथः, यूथं पातीति यूथपः इति द्वे यूथमुख्यहस्तिनः। मदेन दानाम्बुनोत्कटो मत्तो मदोत्कटः, मदेन कलते, मदे सति कलो ध्वनिर्यस्येति वा मदकलः इति द्वे अन्तर्मदस्य हस्तिनः। कलते, कलयति, कलं भाषते वा कलभः, करिणः शावकः करिशावकः इति द्वे करिशावकस्य॥३४।३५॥

मदस्रावीहाथी, वे मदवाला, हाथियों का झुण्ड, हथिनी

पु. पु. पु. पु. पु.
**प्रभिन्नो गर्जितो मत्तः (समा)वुद्वान्तनिर्मदौ।**
न. स. स. स. स.
**हास्तिकं गजता (वृन्दे) करिणी धेनुका वशा॥ ३६॥**

प्रेति—प्रकर्षेण भिद्यते स्म प्रभिन्नः, गर्जयति, गर्जो जातोऽस्येति वा गर्जितः "गर्जितं वारिवाहादिध्वनौ ना मत्तकुञ्जरे" ( इति विश्वमेदिन्यौ ) माद्यति स्म मत्तः इति त्रीणि जातमदस्य। उद्गतं वान्तं मदवमनमस्मादिति उद्वान्तः, मदान्निर्गतः, मदो निर्गतोऽस्मादिति वा निर्मदः उभौ समौ समानार्थौ समानलिङ्गाविति द्वे गतमदगजस्य। वृन्दे करिणां समुदाये हस्तिनां समूहो हास्तिकम्, गजानां समूहो गजता इति द्वे गजसमूहस्य। करोऽस्त्यस्या इति करिणी, धेनुरिव धेनुका, "स्याद्धेनुका करिण्यां च धेनावपि पुंसि दानवविशेषे" ( इति मेदिनी ) वष्टि, उश्यते वा वशा "वशा बन्ध्यासुता योषा स्त्री गवीकरिणीषु चेति" तालव्यान्तेषु विश्वादिति त्रीणि करिण्याः "हस्तिनी" इति ख्यातायाः॥ ३६॥

हाथी का गाल,पु. उसका मद, शूंड़ से निकले जलकण शीश का मांस पिण्ड कुंभों का मध्य भाग

पु. पु. न. पु. पु.
**गण्डः कटो मदो दानं वमथुः करशीकरः।**
पु. पु.
**कुम्भौ(तु पिण्डौ शिरस)(स्तयोर्मध्ये)विदुः(पुमान्)३७**

गेति—गण्डतीति गण्डः, "गण्डः स्यात्पुंसि खड्गिनि। ग्रहयोगप्रभेदे च वीर्ध्यङ्गे पिटकेऽपि च। चिह्नवीरकपोलेषु हयभूषणबुद्बुदे" ( इति मेदिनी ) कटतीति कटः "कटः श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशये शवे। समये गजगण्डेऽपि पिप्पली तु कटी मता" ( इति मेदिनी ) माद्यत्यनेन, मदयति वा मदः "मदो रेतसि कस्तूर्यां

गर्वे हर्षमदानयोः" ( इति मेदिनी ) द्यत्यनेन दानम् "दानं गजमदे त्यागे पालनच्छेद-शुद्धिषु" ( इति विश्वमेदिन्यौ ) इति द्वे मदपतनस्य । वम्यते वमनं वा वमथुः "वमथु-र्वमने कासे मातङ्गकरशीकरे" ( इति हैमः ) करस्य शुण्डादण्डस्य शीकरः कर-शीकरः इति द्वे शुण्डान्निर्गतजलस्य । शिरसो मस्तकस्य पिण्डेते पिण्डौ "पिण्डो बाले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिह्लकयोरपि । ओड्रपुष्पे च पुंसि स्यात्क्लीबमाजीवनायसोः । पिण्डी तु पिण्डतगरेऽलाबूखर्जूर-भेदयोः" ( इति मेदिनी ) कुं भुवमुम्भतः शकन्ध्वादित्वात् कुम्भौ स्याताम् "कुम्भो राश्यन्तरे हस्तिमूर्धांशे राक्षसान्तरे । कार्मुके वारनार्या च घटे क्लीबन्तु गुग्गुलौ" ( इति मेदिनी ) इत्येकं गजशिरसो मांसपिण्डस्य । तयोः कुम्भयोर्मध्ये मध्यभागे वेत्ति संज्ञामत्र घातेनेति 'विदुः' पुमान्पुंलिङ्गः स्यादित्येकं कुम्भमध्यभागस्य ॥ ३७ ॥

हाथीका मत्था, नेत्रोंकी गोलाई देखना, कानों की जड़

पु. स.
**अवग्रहो ( ललाटं स्या ) दिषीका ( त्वक्षिकूटकम् ) ।**
न. स.
**( अपाङ्गदेशो ) निर्याणं ( कर्णमूलं तु ) चूलिका ॥३८॥**

अवेति—गजस्य ललाटं अवगृह्यतेऽङ्कुशेनेति अवग्रहः घञि तु अवग्राहोऽपि स्यात् "गजालिके वृष्टिरोधे प्रतिबन्धेऽप्यवग्रहः" ( इति रुद्रः ) इत्येकं गजललाटस्य । अस्य अक्षिकूटकं चक्षुर्गोलकं ईष्यत इति इषीका, ईषीका दीर्घादिरपि इत्येकं हस्ति-चक्षुर्गोलकस्य । अत्र अपाङ्गस्य अपाङ्गो वा देशोऽपाङ्गदेशः निर्यात्यनेनेति निर्याणं स्यात् "निर्याणं वारणापाङ्गदेशे मोक्षेऽध्वनिर्गमे" ( इति मेदिनी ) इत्येकं गजापाङ्ग-देशस्य । अस्य कर्णयोर्मूलं चूल्यतेऽनयेति चूलिका स्यात् "चूलिका नाटकस्याङ्गे कर्णमूले च हस्तिनाम्" ( इति मेदिनी ) इत्येकं करिकर्णमूलस्य ॥ ३८ ॥

ललाट का अधोभाग, दांतों का मध्यभाग, कंधा, बिन्दुसमूह

**अधः कुम्भस्य वाहित्थं प्रतिमानमधोऽस्य यत् ।**
**आसनं स्कन्धदेशः स्यात् पद्मकं बिन्दुजालकम् ॥३८॥**

अधइति—कुम्भस्य वातकुम्भस्य अधो ललाटाधोभागः अवश्यं वहति वाही स ति-ष्ठत्यत्रेति पृषोदरादित्वाद् वाहित्थं स्यात् "कुम्भयोरन्तरं विदुः । वातकुम्भस्तु तस्याधो वाहित्थं तु ततोऽप्यधः" ( इति हैमनाममाला ) इत्येकं ललाटाधोभागस्य । अस्य वाहित्थस्य यत् अधोभागस्तत् प्रतिमीयतेऽनेनेति प्रतिमानं स्यात् "प्रतिमानं प्रतिच्छायागजदन्तान्तरालयोः" ( इति रुद्रः ) इत्येकं वाहित्थाधोभागस्य दन्त-मध्यस्य । आस्यतेऽत्रेति आसनम्, "आसनं द्विरदस्कन्धे पीठे यात्रानिवर्तने" ( इति विश्वमेदिन्यौ ) स्कन्ध एव देशः स्कन्धदेशः इति द्वे गजस्कन्धस्य । पद्ममिव पद्म-

कम् "पद्मकं स्यात्पद्मकाष्ठविन्दुजालकयोरपि" ( इति मेदिनी ) बिन्दूनां जालमिव बिन्दुजालकं स्यादिति द्वे गजमुखादिस्थबिन्दुसमूहस्य ॥ ३९ ॥

पार्श्वभाग,अग्र भाग,पूर्वजङ्घा भाग,अपरजङ्घा भाग — पु. पु. पु. न. न.

**पक्षभागः पार्श्वभागो दन्तभाग(स्तु योऽग्रतः)।**

**( द्वौ पूर्वपश्चाज्जङ्घादिदेशौ ) गात्रावरे(क्रमात्) ॥४०॥**

पक्षेति—पक्षयत्यनेनेति पक्षः, भज्यत इति भागः पक्षस्य, पक्ष एव वा भागः पक्षभागः, पार्श्वस्य, पार्श्वमेव वा भागः पार्श्वभागः इति द्वे गजपार्श्वस्य। अग्रतो यो भागः स तु दन्तस्य भागः, दन्तसम्बन्धी भागो वा दन्तभागः स्यात् शाकपार्थिवादित्वान्मध्यमपदलोपः इत्येकमग्रभागस्य। पूर्वा च पश्चाच्च, पूर्वापश्चाच्च ते जङ्घे च, पूर्वापश्चाज्जङ्घे आदी ययोरिति, पूर्वापश्चाज्जङ्घादी तौ च देशौ चेति पूर्वपश्चाज्जङ्घादिदेशौ यौ द्वौ ते क्रमात् क्रमेण गातेऽनेन, एत्यनेन वा गात्रम् "गात्रं गजाग्रजङ्घादिभागेऽप्यङ्गे कलेवरे" (इति मेदिनी) अवराति, न वृणोति, व्रियते वेति अवरम् "अवरं गजान्त्यजङ्घादिदेशे चरमे त्रिपु" ( इति मेदिनी ) गात्रं च अवरं चेति गात्रावरे स्याताम् पूर्वजङ्घाभागो गात्रम्, पश्चाज्जङ्घाभागोऽवरमिति यावत् "द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे न ना" ( इति रभसः ) इत्येकैकं पूर्वपश्चाज्जङ्घादिदेशयोः ॥ ४० ॥

न. न. न. पु. पु.स.न.

चाबुक, खूंटा, **तोत्रं वैणुकमालानं बन्धस्तम्भे (ऽथ) शृङ्खला।**

पु. पु.न. पु.न. पु.स.

आंदू, अंकुश **अन्दुको[2] निगडोऽस्त्री स्यादङ्कुशोऽस्त्री सृणिः[3] स्त्रियाम् ४१**

तवितिः—तुद्यतेऽनेनेति तोत्रम्, "तोत्रं तु प्राजने वैणुकेऽपि च" ( इति मेदिनी ) वेणुना निर्वृत्तमिति वैणुकम् "वेणुकमिति पाठान्तरम्" इति द्वे तोदनदण्डस्य। आलीयतेऽत्रेति आलानम्, बन्धस्य बन्धनस्य स्तम्भो बन्धस्तम्भः इति द्वे बन्धनस्तम्भस्य। अथेति—शृङ्गं प्राधान्यं खलति, शृङ्गात्प्राधान्यात्खलत्यनेन वा पृषोदरादित्वात् शृङ्खला "शृङ्खला पुंस्कटी काञ्च्यां लोहरज्जौ च बन्धने" ( इति हैमः ) अन्द्यते बध्यतेऽनयेति अन्दूः "अन्दूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च" (इति मेदिनी) स एवान्दुकः, निगलति, निर्गतो गडः सेचनमस्मादिति वा निगडोऽस्त्री पुंनपुंसकं स्यादिति त्रीणि निगडस्य "बेड़ी" इति ख्यातस्य। अङ्क्यतेऽनेनेति अङ्कुशः अस्त्री

---

१ "गात्रावरे पूर्वपश्चात्पादयोः परिभाषिते" ( इति भागुरिः ) कश्चित्तु अष्ठीवद्भागादूर्ध्वमवरम्। अधस्तु गात्रमित्याह। अपरा पवर्गादिमध्या च। अपरं तूत्तरार्थे स्यात्पश्चाद्भागे च दन्तिनामिति"(विश्वः)॥

२ अन्दुकः स्वार्थे कन् "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि" इति पुंस्त्वम् ॥

३ तेन आरक्षमग्नमवमत्यसृणिं सिताग्रमिति माघवाक्यं संगच्छते ॥

पुंनपुंसकं स्यात् , सरत्यन्तर्गच्छत्यनयेति सृणिः, शृणातीति विग्रहे तु शृणिस्ताल-व्यादिरपि " शृणिरङ्कुशवाची च काशश्च तृणवाचकः" ( इति शभेदः ) स्त्रियां स्यात ' स्त्रियामित्येकदेशेन स्त्रीपुंसशब्दसमुदायो लक्ष्यते' तेन सृणेः पुंस्त्वमपि, इति सुभूत्या-द्यः स्त्रियामिति प्रायिकत्वादुक्तमिति द्वे अङ्कुशस्य ॥ ४१ ॥

कमर बांधने की स. स. स. स. स.
रस्सी पलान **दूष्या कक्ष्या वरत्रा ( च ) कल्पना सज्जना ( समे )।**
आदिसे सजना स. न. पु. पु. पु.स.
गद्दी या झूल **प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो ( द्वयोः ) ॥४२॥**

द्विति—दूष्यतेऽनयेति दूष्या " दूष्यं त्रिषु दूषणीये क्लीबं वस्त्रे च तद्गृहे " ( इति मेदिनी) चूष्यते पीयते पृष्ठमांसेनादृश्यतां नीयते इति चूष्येति मुकुटः, कक्षे भवा कक्ष्या, " कक्ष्या बृहतिकायां स्यात्काञ्च्यां मध्येभवन्धने । हर्म्यादीनां प्रकोष्ठे चेति" (मेदिनी) वरं त्रायते, व्रियतेऽनयेति वा वरत्रा इति त्रीणि गजमध्यबन्धनस्य । कल्पनं कल्पना " अथ कल्पना । करिणः सज्जनायां स्त्री क्लीबं क्लृप्तौ च कल्पने " ( इति मेदिनी ) सज्जनं सज्जना " सज्जनं तु भवेत्क्लीबमुपरक्षणपट्टयोः । वाच्यलिङ्गं कुलीने स्या-त्कल्पनायां च योषिति" ( इति मेदिनी) उभे समे समानार्थे समानलिङ्गे स्यातामिति द्वे पल्याणाद्यारोपणेन सज्जीकरणस्य । प्रकर्षेण वीयतेऽस्यामिति प्रवेणिः " प्रवेणिः स्त्री कुथावेण्योः" ( इति मेदिनी ) कृदिकारादिति वा ङीषि तु प्रवेण्यपि, आस्तीर्य-तेऽनेनेति आस्तरणम्, व्रियतेऽनेन, बहवो वर्णाः सन्त्यस्येति वा वर्णः " वर्णः स्वर्णे व्रते स्तुतौ । रूपे द्विजादौ शुक्लादौ कुथायामक्षरे गुणे । भेदे गीतक्रमे चित्रे यशस्तालविशेषयोः । अङ्गरागे च वर्णं तु कुङ्कुमे" ( इति हैमः ) परिगतस्तोमोऽत्र, परिस्तूयते वा परिस्तोमः, कुथ्यति, कुथ्नाति, कुन्थत्यशोभामिति वा कुथः द्वयोः स्त्रीपुंसयोः स्यात् " कुथः स्त्रीपुंसयोर्वर्णकम्बले पुंसि बर्हिषि " ( इति मेदिनी ) क्लीबेपि, " स्त्रीप्रवेणी कुथं त्रिषु " ( इति वोपालितः ) इति पञ्च गजोपर्यास्तरणचित्र-कम्बलस्य ॥ ४२ ॥

न. स. स.
निर्बल हाथी, **वीतं ( त्वसारं हस्त्यश्वं ) वारी ( तु ) गजबन्धनी ।**
पु. पु. पु. पु. पु. पु.
घोड़ा, हाथी **घोटके पीतितुरगतुरङ्गाश्वतुरङ्गमाः ॥ ४३ ॥**
बांधनेकी शाला, पु. पु. पु. पु. पु. पु. पु.
घोड़ामात्र **वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।**

वीतेति—न सारो बलमस्येत्यसारं हस्ती चाश्वश्चेति हस्त्यश्वम् सेनाङ्गत्वादेकत्वम् अजति स्म, वेति स्म युद्धादिकर्मणो वेति वीतं स्यात् "वीतमसारगजे स्यादङ्कुशकर्मण्य-सारतुरगे च" (इति मेदिनी) इत्येकं बलरहितगजाश्वस्य। वार्यतेऽनयेति वारी "वारी

स्याद्गजबन्धन्यां कलश्यामपि योषिति । वारिर्वाग्गजबन्धन्योः स्त्री क्लीबेम्बुनि वालुके ” ( इति मेदिनी ) वध्यतेऽस्यामिति बन्धनी गजस्य बन्धनी गजबन्धनी इति द्वे गज-बन्धनशालायाः । घोटत इति घोटकः पचाद्यचि घोटोऽपि, “ घोटसैन्धवगन्धर्वा हयवाजितुरंगमाः ” ( इति रभसः ) पिबतीति पीतिः “ पीतिर्नाश्वे स्त्रिया पाने ” ( इति मेदिनी ) वेतीति व्युत्पत्त्या तु वीतिरपि “ वीतिरश्वेऽशने गतौ । प्रजने धावने दीप्ताविति ” ( हैमः ) तोरणं तुरस्तेन ( त्वरया ) गच्छतीति तुरगः, तुरङ्गः, अश्नुत इति अश्वः, तुरेण गच्छतीति तुरंगमः, अवश्यं वजति, वाजाः पक्षाः सन्त्यस्येति वा वाजी “ वाजी वाणाश्वपक्षिषु ” ( इति मेदिनी ) वाहते, वाह्यते, उह्यतेऽनेन वा वाहः “ वाहो भुजे पुमान्मानभेदाश्ववृषवायुषु ” ( इति मेदिनी ) ऋच्छति, अर्वति वा ‘ अर्वा ’ “ अर्वा तुरंगमे पुंसि कुत्सिते वाच्यलिङ्गकः ” गन्ध-मर्वतीति शकन्ध्वादित्वात् गन्धर्वः “ गन्धर्वस्तु नभश्चरे । पुंस्कोकिले गायने च मृग-भेदे तुरंगमे । अन्तरा भवदेहे च ” ( इति हैमः ) हयति, हिनोति वा हयः, सिन्धुषु भवः सैन्धवः “ सैन्धवस्तु सिन्धुदेशोद्भवे हये । मणिमन्थेऽपि ” ( इति हैमः ) सपति सेनायां समवैतीति सप्तिरिति त्रयोदश तुरंगमस्य ॥ ४३ । १/२ ॥

अच्छी जाति-वाला घोड़ा सिखलाया घोड़ा घोड़ों का भेद, अश्वमेधीय घोड़ा अधिक वेगवाला

पु. पु. पु. पु.
**आजानेयाः कुलीनाः (स्युः) विनीताः साधुवाहिनः ॥ ४४ ॥**
पु. पु. पु. पु.
**वनायुजाः पारसीकाः काम्बोजा वाल्हिका ( हयाः ) ।**
पु. पु. पु. पु.
**ययु (रश्वो)ऽश्वमेधीयो जवन (स्तु) जवाधिकः ॥ ४५ ॥**

आजेति—अजनमाजः क्षेपणं तेन आनेयाः प्रापणीयाः आयत्ता वा आजानेयाः “ शक्तिनिर्भिन्नहृदयाः स्खलन्तश्च पदे पदे । आजानन्ति यतः संज्ञामाजानेयास्ततः स्मृताः ” ( इत्यश्वशास्त्रम् ) कुलस्यापत्यानि कुलीनाः स्युरिति द्वे कुलीनाश्वस्य । विनीयन्ते स्म विनीताः, “ विनीतः सुवहाश्वे स्याद्वाणिज्येऽपि पुमांस्त्रिषु । जितेन्द्रिये-ऽपनीते च निभृते विनयान्विते ” ( इति मेदिनी ) साधु वहनशीलाः साधुवाहिनः इति द्वे सुशिक्षिताश्वस्य । वनायुषु देशेषु जाता हया वनायुजाः, पारसीके देशे भवाः पारसीकाः, कम्बोजेषु भवाः काम्बोजाः, वल्हिकदेशे भवा वाल्हिकाः “ वाल्हीकं वा-ल्हिकं धीरहिङ्गुनोर्नाश्वदेशयोः ” इति त्रिकाण्डशेषतो दीर्घमध्योऽपि इति हयविशे-षाणामेकैकम् । अश्वमेधाय हितः अश्वमेधीयोऽश्वः, यातीति ययुः स्यात् “ययुः पुमा-नश्वमेधतुरंगे च तुरंगमे ” ( इति मेदिनी ) इत्येकमश्वमेधीयाश्वस्य द्वे इत्यन्ये । जवनशीलो जवनः, “ जवनस्तु स्यदे वेगिहये ना वेगिनि त्रिषु ” ( इति मेदिनी ) जवेन वेगेनाधिको जवाधिकः इति द्वे अधिकवेगशालिनोऽश्वस्य ॥ ४४ । ४५ ॥

लदुवा उजला रथवाही बछेड़ा घोड़ी, घोड़ियों का गिरोह
पु. पु. पु. पु.
**पृष्ठ्यः स्थौरी (सितः) कर्को रथ्यो ( वोढा रथस्य यः )।**
पु. पु. स. स. स. न.
**बालः किशोरो वाम्यश्वा वडवा वाडवं (गणे) ॥ ४६ ॥**

प्रिति—प्रशस्तमतिशयितं वा पृष्ठमस्येति पृष्ठ्यः, स्थूलस्येदं रलयोरेकत्वात्स्थौरं बलमस्यास्तीति स्थौरी " स्थौरी पृष्ठ्यः पृष्ठवहः " ( इति बोपालितः ) इति द्वे भारवाहिनोऽश्वस्य । सितः शुक्लोऽश्वः करोति, क्रियते वा कर्कः स्यात् " कर्कः कर्के तनौ वह्नौ शुक्लाश्वे दर्पणे घटे " ( इति मेदिनी ) इत्येकं शुक्लाश्वस्य । रथस्य वोढा वाहको योऽश्वः स रथं वहतीति रथ्यः स्यात् " रथ्या रथौघविशिखावर्तनीषु च योषिति । रथवोढरि पुंलिङ्गः " ( इति मेदिनी ) इत्येकं रथवाहकाश्वस्य । अश्वस्य बालः कशति, किञ्चिच्छवतीति वा किशोरः स्यात् "अथ किशोरोऽश्वस्य शावके । तैलपर्ण्यौषधौ च स्यात्तरुणावस्थसूर्ययोः " (इति मेदिनी) इत्येकमश्वकिशोरस्य । वामयति, वं वरुणमति, तेनाम्यते वा गौरादित्वात् वामी " वामी शृगाली वडवा रासभीकरभीषु च " ( इति मेदिनी ) अश्वजातिरजादित्वादश्वा, वलं वाति, वलेन वजति, वलं सामर्थ्यमतिशयितमस्त्यस्या वा डलयोरेकत्वाद् वडवा " वडवा द्विजयोषिति । अश्वायां कुम्भदास्यां नारीजात्यन्तरेऽपि च " इति त्रीणि वडवायाः " घोड़ी" इति ख्यातायाः । गणे घोटिकानां समुदाये वडवानां समूहो वाडवं स्यात् " वाडवं करणे स्त्रीणां घोटिकौघे नपुंसकम् । पाताले न स्त्रियां पुंसि ब्राह्मणे वडवानले" ( इति मेदिनी ) इत्येकं घोटिकासमूहस्य ॥ ४६ ॥

घोड़ोंकी १दिन की मंजिल, घोड़ोंकीबिचली देह, हिनहिनाना
पु.स.न.
**(त्रिष्वा) श्वीनं (यदश्वेन दिनेनैकेन गम्यते) ।**
न. स. स.
**कश्यं(तु मध्यमश्वानां)हेषा ह्रेषा (च निस्वनः) ॥४७॥**

त्रिष्विति—अश्वेन एकेन दिनेन यद् मार्गो गम्यते तत् " अश्वेन एकाह्नातिक्रम्यत इत्याश्वीनं " त्रिषु त्रिलिङ्गयां स्यादित्येकमश्वानामेकाह्निकयानस्य । अश्वानां मध्यम् अश्वादेस्ताडनीताडनं वा कशा तामर्हतीति कश्यम् " कश्यं त्रिषु कशार्हे स्यात्क्लीबं मध्याश्वमध्ययोः " ( इति मेदिनी ) इत्येकमश्वानां मध्यभागस्य । अश्वानां निस्वनः शब्दः हेषणं हेषा, ह्रेषणं ह्रेषा च स्यादिति द्वे अश्वानां ध्वनेः " हिनहिनाना " इति ख्यातस्य ॥ ४७ ॥

घोड़ोंका गला, घोड़ोंका गिरोह, घोड़ोंकी चालें, लगाम
पु. पु. न. न.
**निगाल(स्तु)गलोद्देशे(वृन्दे त्वा)श्वीयमाश्व (वत्) ।**
न. न. न. न. न.
**आस्कन्दितं धोरितकं रेचितं वल्गितं प्लुतम् ॥ ४८ ॥**

स. स. पु.न.

टाप (गतयोऽमूःपञ्च)धारा घोणा(तु)प्रोथमस्त्रियाम्।

स. पु.न. न. पु.

कविका(तु)खलीनो(ऽस्त्री)शफं(क्लीबे)खुरः(पुमान्)४९॥

नीति—निगिरति, निगिलत्यनेन वा निगालः, गलस्य उद्देशः समीपभागो गलोद्देशः "घण्टाबन्धसमीपस्थो निगालः कीर्तितो बुधैः । तस्मिन्नेव मणिर्नाम रोमजः शुभकृन्मतः" इति द्वे ग्रीवायाः समीपभागस्य । वृन्दे अश्वानां समुदाये अश्वानां समूहः आश्वीयम्, पक्षेऽणि आश्वम्। वदिति निर्देशश्चात्रोभयत्र समत्वज्ञापनार्थः इति द्वे अश्ववृन्दस्य । आस्कन्दनम्, आस्कन्दः संजातोऽस्येति वा आस्कन्दितम् "उत्तेजितमुपकण्ठमास्कन्दितकमित्यपि । उत्प्लुत्योत्प्लुत्य गमनं कोपादिवाखिलैः पदैः" (इति हैमनाममाला) धोरणं धोरितं तदेव धोरितकम् धोरितमेव धौरितन्तदेव धौरितकं वा "अथ धौरितकं धौर्यं धोरणं धौरितं च तत्" (इति वाचस्पतिः) रेचनं रेचितम् "उत्तेजितं रेचितं स्यान्मध्यवेगेन या गतिः" (इति हैमनाममाला) वल्गनं वल्गितम् "वल्गितं पुनः । अग्रकाय समुल्लासात्कुञ्चितास्यं नतत्रिकम्" (इति नाममाला) प्लवनं प्लुतम् "प्लुतमश्वस्य गतौ प्लुतस्त्रिमात्रके" (इति हैमः) अमूरश्वानां पञ्च गतयो भवन्ति ता धार्यन्तेऽनयाऽत्रेति वा धाराः स्युः "धारा सैन्याग्रिमस्कन्धे तुरङ्गगतिपञ्चके" इत्येकमश्वगतिविशेषाणाम्। घोणत इति घोणा, प्रोथतीति प्रोथम् अस्त्रियां पुंनपुंसकं स्यात् "प्रोथोऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु" (इति मेदिनी) इति द्वे अश्वप्रोथस्य "थूथुन" इति ख्यातस्य। कवत इति कविका, खे मुखे लीनः खलीनः इति द्वे खलीनस्य "लगाम" इति ख्यातस्य। शं फणतीति शफं क्लीबे नपुंसके स्यात्, "शफं मूले तरूणां स्याद्गवादीनां खुरेऽपि च" (इति मेदिनी) खुरतीति खुरः पुमान्स्यात् "खुरः कोलदले शफे" (इति मेदिनी) इति द्वे अश्वखुरस्य "टाप" इति ख्यातस्य॥ ४८। ४९॥

पु.न. न. न. पु. पु.

पूंछ, बालयुत पुच्छो (ऽस्त्री) लूमलाङ्गूले वालहस्त(श्च)वालधिः।

पूंछ, लोटना (त्रिषू) पावृत्तलुठितौ (परावृत्ते मुहुर्भुवि)॥ ५०॥

त्रिति—पुच्छतीति पुच्छः अस्त्री पुंनपुंसकं स्यात् "पुच्छः पश्चात्प्रदेशः स्याल्लाङ्गूले पुच्छमिष्यते" (इति मेदिनी) लूयत इति लूमम्, लङ्गतीति लङ्गूलं तदेव लाङ्गूलम् "लाङ्गूलं पुच्छशेफयोः" (इति मेदिनी) इति त्रीणि लाङ्गूलस्य। "वालो ना कुन्तलेऽश्वस्य गजस्यापि च वालधौ" (इति पवर्गीयादौ मेदिनी) वालो हस्त इव दंशादिनिवारकत्वात् वालानां हस्तः समूहो वेति वालहस्तः, वाला धीयन्तेऽत्रेति वालधिरिति द्वे केशवल्लाङ्गूलमात्रस्य। श्रमशान्त्यर्थं मुहुर्भुवि पुनः

पुनर्भूमौ परावृत्ते सति उपावर्तते स्म उपावृत्तः, लुठति स्म लुठितः उभौ त्रिषु त्रिलिङ्गयां स्यातामिति द्वे अश्वलुठितस्य ॥ ५० ॥

पु. पु. पु.
लड़ाई का रथ, **( याने चक्रिणि युद्धार्थे ) शताङ्गः स्यन्दनो रथः ।**
पु.
रथविशेष **( असौ ) पुष्यरथ( श्चक्रयानं न समराय यत् ) ॥५१॥**

येति—युद्धायेदं युद्धार्थं तस्मिन्युद्धार्थे युद्धप्रयोजनवति चक्रमस्यास्तीति चक्री तस्मिंश्चक्रिणि चक्रयुक्ते यान्त्यनेन यानं तस्मिन्याने सति शतमङ्गान्यवयवा यस्येति शताङ्गः, स्यन्दत इति स्यन्दनः "स्यन्दनं तु स्रुतौ नीरेतिनिशे ना रथेऽस्त्रियामिति" ( मेदिनी ) रमन्तेऽत्रानेन वा रथः " रथः पुमानवयवे स्यन्दने वेतसेऽपि च " ( इति मेदिनी ) इति त्रीणि युद्धार्थरथस्य । यत् चक्रयानं समराय संग्रामाय न स्यात् असौ पुष्य इव रथः, पुष्ये यात्रोत्सवादौ रथो वेति पुष्यरथः पकारमध्यपाठे तु सुकुमारत्वात् पुष्पमिव रथः पुष्परथः स्यादित्येकं युद्धं विना यात्रासेवादौ सुखभ्रमणार्थरथस्य ॥ ५१ ॥

पु. न. न.
जनाना रथ **कर्णीरथः प्रवहणं डयनं ( च समं त्रयम् ) ।**
न. पु.न. स. न.
गाड़ा, गाड़ी **(क्लीबे)ऽनःशकटोऽस्त्रीस्याद्गन्त्री(कम्बलिवाह्यकम्)५२**

केति—कर्णसाध्या श्रवणक्रियोपचारात्कर्णः कर्णोऽस्यातीति कर्णी कर्णी चासौ रथश्च शब्दमात्रेण रथो न तु वस्तुतो रथः अथवा सामीप्यात्कर्णशब्देन स्कन्धो लक्ष्यते कर्णः स्कन्धः सोऽस्त्यस्य वाहकत्वेन स्कन्धवाह्यः स चासौ रथश्चेति कर्णीरथः, प्रोह्यतेऽनेनेति प्रवहणम्, डीयतेऽनेनेति डयनम्, हीयतेऽनेनेति व्युत्पत्त्या तु हयनमपि स्यादिदं त्रयं समं समानार्थकं विज्ञेयमिति त्रीणि पुरुषस्कन्धवाह्ययानविशेषस्य "डोला" इति ख्यातस्य । अनिति चीत्करोतीति अनः क्लीबे नपुंसके स्यात्, शक्नोति भारं वोढुं जीवयितुं वेति शकटः अस्त्री पुंनपुंसकं स्यादिति द्वे शकटस्य " गाड़ा " इति ख्यातस्य । गम्यतेऽनयेति गन्त्री, कम्बलिभिः सास्नावद्भिर्वृषैरुह्यते इति कम्बलिवाह्यं तदेव कम्बलिवाह्यकमिति द्वे शकटिकायाः " गाड़ी " इति ख्यातायाः ॥ ५२ ॥

स. न. स. स.
पालकी हिंडोला या डोली बाघ **शिबिका याप्ययानं(स्याद्)दोलाप्रेङ्खा(दिकाःस्त्रियाम्)।**
पु.स.न. पु.स.न.
चर्मसे घिरा रथ **( उभौ तु ) द्वैपवैयाघ्रौ ( द्वीपिचर्मावृते रथे ) ॥ ५३ ॥**

---

१ अन्येषामपीति ( ६ । ३ । १३७ ) दीर्घः ॥

शीति–शिवं करोति, शिवैवेति वा शिबिका, याप्यैरधमैर्वाह्यं यानं याप्ययानं स्यादिति द्वे शिबिकायाः "पालकी" इति ख्यातायाः। दोलयति, दोल्यते वा दोला, प्रेङ्ख्यत इति प्रेङ्खा "आदिना शयनखट्वादिदोला" उभे स्त्रियां स्यातामिति द्वे दोलायाः "हिंडोला" इति ख्यातायाः "डोली" इति वा ख्यातायाः। द्वीपिचर्मावृते रथे द्वीपिनो विकारो द्वैपः, द्वैपेन चर्मणा परिवृतो रथो द्वैपः, व्याघ्रस्य विकारो वैयाघ्रः, वैयाघ्रेण चर्मणा परिवृतो रथो वैयाघ्रः उभौ (त्रिषु) स्यातामिति द्वे वैयाघ्रचर्मवेष्टितरथस्य ॥ ५३ ॥

सफेद कम्बल से घिरा रथ, कम्बल, वस्त्र व दुकूलादि से युक्त रथ

पु.
**( पाण्डुकम्बलसंवीतः स्यन्दनः ) पाण्डुकम्बली[१] ।**
पु.स.न. पु.स.न.
**( रथे ) काम्बलवास्त्राद्याः ( कम्बलादिभिरावृते ॥५४॥**

पेति–पाण्डुकम्बलसंवीतः श्वेतकम्बलवेष्टितः स्यन्दनो रथः पाण्डुकम्बलेन परिवृतो रथः पाण्डुकम्बली स्यादित्येकं शुक्लकम्बलवेष्टितरथस्य। कम्बलादिभिरावृते रथे सति कम्बलेन परिवृतो रथः काम्बलः, वस्त्रेण परिवृतो रथो वास्त्रः, आदिना चार्मक्षौमदौकूलादिग्रहः इति कम्बलाद्यावृतरथानामेकैकम् ॥ ५४ ॥

रथसमूह, धुरी, तांगा

स. स.
**( त्रिषु द्वैपादयो ) रथ्या रथकट्या ( रथव्रजे ) ।**
न. पु.
**धूः ( स्त्री ) 'क्लीबे' यानमुखं ( स्याद्र ) थाङ्गमपस्करः ॥ ५५ ॥**

त्रीति–द्वैपादयो वास्त्रान्तास्त्रिषु त्रिलिङ्गयां स्युः। रथानां समूहो रथ्या "रथ्या तु रथसंघाते प्रतोल्यां पथि चत्वरे" (इति हैमः) रथानां समूहो रथकट्या, रथानां व्रजो रथव्रजः इति त्रीणि रथसमूहस्य। धूर्वतीति धूः स्त्री स्यात् "धूर्यानमुखभारयोः" (इति हैमः) यानस्य मुखं यानमुखं क्लीबे स्यादिति द्वे वोढृबन्धनस्थानस्य। रथस्य अङ्गं रथाङ्गम्, अपकीर्यते स्वस्थाने क्षिप्यत इति अपस्करः इति द्वे चक्रभिन्नरथारम्भकस्य ॥ ५५ ॥

पहिया, पुट्ठी या हाल, नाह, कुलावा

न. न. स. पु.
**चक्रं रथाङ्गं ( तस्यान्ते ) नेमिः ( स्त्री स्या ) त्प्रधिः ( पुमान् ) ।**
स. स. पु. पु.स.
**पिण्डिका नाभिरक्षाग्रकीलके ( तु द्वयो ) राणिः ॥ ५६ ॥**

चेति–क्रियते गतिरनेनेति चक्रम्, "चक्रः कोके पुमान् क्लीबं व्रजे सैन्यरथाङ्गयोः। राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः। जलावर्तेऽपि" (इति मेदिनी) रथस्य

---

१ "स्यात्पाण्डुकम्बलः श्वेतप्रावारग्रामभेदयोः" (इति मेदिनी) ॥

अङ्गं रथाङ्गम् " रथाङ्गं न द्वयोश्चक्रे ना चक्राङ्गविहंगमे " ( इति मेदिनी ) इति द्वे चक्रस्य " पहिया " इति ख्यातस्य । तस्यान्ते तस्य चक्रस्यान्तो भूमिस्पर्शिभागस्तस्मिन्, नयति रथमिति नेमिः स्त्री स्यात् " नेमिर्नातिनिशे कूपत्रिकाचक्रान्तयोः स्त्रियाम् " ( इति मेदिनी ) प्रधीयतेऽनेनेति प्रधिः पुमान्स्यादिति द्वे नेमेः "पुट्ठी" इति ख्यातायाः। पिण्ड्यन्तेऽरा यस्यामिति गौरादित्वात् पिण्डी सैव पिण्डिका, नभ्यतेऽक्षेण, नह्यन्तेऽरा अत्रेति वा नाभिः " नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे " ( इति मेदिनी ) इति द्वे रथचक्रमध्ये मण्डलाकारायाः " नाह " इति ख्यातायाः । अक्षाग्रकीलके अक्षस्य नाभिक्षेप्यस्यान्ते कीलके अणतीति अणिः द्वयोः स्त्रीपुंसयोः स्यात् कृदिकारादिति वा ङीपि अणी आणी च " अणिराणिवदक्षाग्रकीले स्यादश्रिसीमयोः " ( इति विश्वः ) इति द्वे अक्षाग्रकीलकस्य " कुलावा " इति ख्यातस्य ॥ ५६ ॥

स. पु. पु. पु.

लोह का परदा जूआ का काठ **रथगुप्तिर्वरूथो (ना) कूवर (स्तु) युगन्धरः ।**

रथ के नीचे का काठ दूसरा जूआ पु. पु. **अनुकर्षो (दार्वधःस्थं) प्रासङ्गो(ना)(युगान्तरम्)॥५७॥**

रथेति—रथस्य गुप्तिरावरणमिति रथगुप्तिः व्रियते रथोऽनेनेति वरूथः ना पुमान्स्यात् " वरूथो रथगुप्तौ स्याद्वरूथं चर्मवेश्मनोः " ( इति मेदिनी ) इति द्वे परप्रहरणाभिघातरक्षार्थं रथसंनाहवदावरणस्य । कुवते, कूयते वेति कूवरः " कूवरस्त्रिषु चारौ ना कुब्जकेऽस्त्री युगन्धरे " युगं वोढृबन्धनकाष्ठं धारयतीति युगंधरः इति द्वे युगकाष्ठबन्धनस्थानस्य । अधस्स्थं रथस्याधःस्थं दारुकाष्ठम् अनुकृष्यत इति अनुकर्षः स्यात् " अनुकर्षो रथाधःस्थदारुण्यप्यनुकर्षणे " ( इति मेदिनी ) नान्तोप्ययम् " अनुकर्षा नाक्षतलदारु " (इति बोपालितः) इत्येकं रथस्याधस्तलभागदारुणः । द्वितीयं युगं युगान्तरं प्रसज्यत इति प्रासङ्गः ना पुमान्स्यादित्येकं रथाद्यङ्गयुगादन्ययुगं वृषभाणां दमनकाले यदासज्यते तस्य स्वामी तु " युगाद्युगः " इति पाठमाश्रित्य युगेन अततीति युगाद्यथादित्तस्य युगः प्रासङ्गः ना पुमान्स्यादित्याह अन्ये तु युगान्तरं यद्बध्यते तस्येत्याहुः " युगं द्वितीयं प्रासङ्गः " इति कात्योपि व्याख्यातवानिति ॥ ५७ ॥

न. न. न. न. न.

सब सवारी, **( सर्वं स्याद् )वाहनं यानं युग्यं पत्रं ( च ) धोरणम् ।**

कहार आदि से लेजाने वाली पु.न. **(परम्परावाहनं यत्त) वैनीतक ( मस्त्रियाम् ) ॥ ५८ ॥**

सर्वमिति—सर्वं हस्त्यश्वरथादि दोलान्तं वाहयति, वहत्यनेन वेति वाहनम् यान्त्यनेनेति यानम् " यानं स्याद्वाहने गतौ " ( इति मेदिनी ) युज्यतेऽनेन वेति युग्यम् ,

पतन्त्यनेनेति पत्रम् " पत्रं तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोः " ( इति मेदिनी ) धोरति, धोरयत्यनेन वा धोरणं स्यादिति पञ्च वाहनमात्रस्य। यत् परम्परया वहतीति परम्परावाहनं तत् विनीतकानामिदं, विनीयते स्म विनीतं तदेव विनीतकं तदेव वेति वैनीतकम् अस्त्रियां पुंनपुंसकं स्यादित्येकं परम्परावाहनस्य ॥ ५८ ॥

फीलवान — आधोरणा (पु.) हस्तिपका (पु.) हस्त्यारोहा (पु.) निषादिनः (पु.)।

रथवान् या — नियन्ता (पु.) प्राजिता (पु.) यन्ता (पु.) सूतः (पु.) क्षत्ता (पु.) (च) सारथिः (पु.) ॥ ५९ ॥

गाड़ीवान — सव्येष्टृ (पु.) दक्षिणस्थौ (पु.) ( च संज्ञा रथकुटुम्बिनः )।

आधवितिः–आधोरयन्तीति आधोरणाः, हस्तिनं पान्तीति हस्तिपास्त एव हस्तिपकाः, हस्तिनमारोहयन्तीति हस्त्यारोहाः, निषीदन्त्यवश्यम्, निषादयन्त्युपवेशयन्ति हस्तिनमिति वा निषादिनः इति चत्वारि हस्तिपकस्य " महावत " इति ख्यातस्य। नियच्छति नितरामश्वान्प्रेरयतीति नियन्ता, प्राजति प्राजयतीति वा प्राजिता, यच्छति प्रेरयत्यश्वानिति यन्ता, सुवति गमयति स्म अश्वानिति सूतः " सूतस्तु सारथौ तक्षिण क्षत्रियाद्ब्राह्मणीसुते। वन्दिपारदयोः पुंसि प्रसूते प्रेरिते त्रिषु " ( इति विश्वमेदिन्यौ ) क्षदति संवारयत्यश्वानिति क्षत्ता, सरति गमयत्यश्वान्, सरथस्यापत्यं वेति सारथिः, सव्ये वामे तिष्ठतीति सव्येष्टा "सव्येष्ठा सारथिः" (इति कैयटः) "सव्येष्ठः" इत्यदन्तोपि " प्राजिता दक्षिणस्थश्च सादी सारथिरुच्यते। सूतः क्षत्ता नियन्ता च यन्ता सव्येष्ठ एव च " ( इत्यमरमाला ) दक्षिणे तिष्ठतीति दक्षिणस्थः एताः रथं कुटुम्बयितुं शीलमस्य, रथस्य कुटुम्बं तदस्यास्तीति रथकुटुम्बी तस्य संज्ञा ज्ञातव्या इत्यष्टौ सारथेः ॥ ५९ । १ ॥

रथ में चढ़कर लड़नेवाले, — रथिनः (पु.) स्यन्दनारोहा (पु.) अश्वारोहा (पु.) (स्तु) सादिनः (पु.) ॥ ६० ॥

सवार, लड़नेवाले, — भटा (पु.) योधा (पु.) (श्च) योद्धारः (पु.) सेनारक्षा (पु.) (स्तु) सैनिकाः (पु.)।

गश्तवाले, फौज या सेना — (सेनायां समवेता ये) सैन्या (पु.) (स्ते) सैनिका (पु.) (श्च ते) ॥ ६१ ॥

रेति–रथाः सन्त्येषामिति रथिनः, स्यन्दनमारोहन्तीति स्यन्दनारोहाः इति द्वे रथारूढयोधस्य। अश्वमारोहन्तीति अश्वारोहाः, सीदन्त्यवश्यमिति सादिनः " सादी तुरङ्गमातङ्गरथारोहेषु दृश्यते " ( इति मेदिनी ) इति द्वे अश्वारोहस्य " असवार " इति ख्यातस्य। भटन्तीति भटाः, " भटः स्यात्पुंसि वीरे च विशेषे पामरस्य च " ( इति मेदिनी ) युध्यन्त इति योधाः, युध्यन्त इति योद्धारः, इति त्रीणि भटस्य।

सेनां रक्षन्तीति सेनारक्षाः, ठक्प्रत्यये सेनां रक्षन्तीति सैनिकाः, " सैनिकः सैन्यरक्षे च स्यात्सेनासमवेतके " ( इति मेदिनी ) इति द्वे सेनारक्षकस्य । ये सेनायां समवेताः संमिलिताः ते सैन्याः ते च सैनिकाः स्युः सेनायां समवयन्तीति सैन्याः पक्षे ठक्प्रत्यये सैनिकाः इति द्वे सेनायां मिलितस्यैकदेशीभूतस्य ॥ ६० । ६१ ॥

सूबेदार बहादुर, सेनारक्षक, सेनापति

पु. पु.
**( बलिनो ये सहस्रेण ) साहस्रा ( स्ते ) सहस्रिणः ।**
पु. पु. पु. पु.
**परिधिस्थः परिचरः सेनानीर्वाहिनीपतिः ॥ ६२ ॥**

बेति—ये सहस्रेण बलिनो बलवन्तस्ते साहस्राः सहस्रिणश्च स्युः सहस्रं बलानि सन्ति येषामिति साहस्राः इन्प्रत्यये तु सहस्रिणः इति द्वे सहस्रसंख्याकेन गजादिना बलवतः । परिधौ सेनान्ते तिष्ठतीति परिधिस्थः, परितश्चरतीति परिचरः, इति द्वे सेनायां राज्ञो दण्डकारिणः, रथगजादेश्चक्रपादादिरक्षकस्य वा । सेनां नयतीति सेनानीः " सेनानीः स्यात्पुमान् कार्त्तिकेये सेनापतौ पुमान् " ( इति मेदिनी ) वाहिन्याः पतिरिति वाहिनीपतिरिति द्वे सेनापतेः ॥ ६२ ॥

बख्तर

पु. पु.न.
**कञ्चुको वारवाणो (ऽस्त्री) (यत्तु मध्ये सकञ्चुकाः) ।**

कमरपट्टी

न. न. न.
**(बध्नन्ति तत्)सारसनमधिकाङ्गो(ऽथ) शीर्षकम् ॥ ६३ ॥**

टोप

न. न. न. न. न.
**शीर्षण्यं ( च ) शिरस्त्रे ( ऽथ ) तनुत्रं वर्म दंशनम् ।**

कवच

पु. पु. पु. पु.
**उरश्छदः कङ्कटकोजगरः कवचो (ऽस्त्रियाम्) ॥ ६४ ॥**

केति—कञ्च्यत इति कञ्चुकः " कञ्चुको वारवाणे स्यान्निर्मोके कवचेऽपि च । वर्धापकगृहीताङ्गस्थितवस्त्रे च चोलके । कञ्चुक्योषधिभेदे " ( इति मेदिनी ) वाणं वृणोति, वारयति वा वारमाच्छादकं वानमस्येति वा वारवाणः अस्त्री पुंनपुंसकं स्यादिति द्वे चोलकाकृतिसंनाहस्य । सकञ्चुकाः कञ्चुकसमेताः मध्ये मध्यकाये यत् बध्नन्ति तत् सारं सनोति, सारं बलमस्यते दीप्यतेऽनेनेति वा सारसनम् "सारसनं मेखलायामुरस्त्रे च तनुत्रिणामिति" (विश्वः)अधिकमङ्गादित्यधिकाङ्गम् "कचित्तु सारसनाधिपाङ्गे " इति पाठः यत्कात्यः " अधिपाङ्गं सारसनम् " इति द्वे कञ्चुकदार्ढ्यार्थं मध्यकाये निबद्धस्य । अथेति—शीर्षस्य प्रतिकृतिः, शीर्षे कं सुखमस्मादिति वा शीर्षकम्, शिरसे हितं शीर्षण्यम्, " शीर्षण्यं शीर्षरक्षणे । शीर्षण्यो विशदे कचे " ( इति हैमः ) शिरस्त्रायत इति शिरस्त्रमिति त्रीणि शीर्षकस्य " टोप " इति ख्यातस्य ।

अथेति—तनुं त्रायत इति तनुत्रम्, वृणोति देहमिति वर्म, दंश्यतेऽनेनेति दंशनम् "दंशनं वर्मदंशयोः" ( इति हैमः ) उरश्छाद्यतेऽनेनेति उरश्छदः, कं सुखं कटति, कङ्कते वा कङ्कटः स एव कङ्कटकः, जगता गृह्यते, जागर्तीति वा पृषोदरादित्वाद् जगरः "जगरः कङ्कटो योगः सन्नाहः स्यादुरश्छदः" ( इति बोपालितः ) कं वातं वञ्चतीति कवचः अस्त्रियां पुंनपुंसकं स्यात् " कवचो गर्दभाण्डे च सन्नाहे पटहेऽपि च " (इति विश्व-मेदिन्यौ ) इति सन्नाहस्य ॥ ६३ । ६४ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

झिलिम आदि **आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्ध ( वत् ) ।**

धारे हुए मन्त्र पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

आदिसे रक्षित **सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ॥ ६५ ॥**

आम्विति—आमुच्यते स्म आमुक्तः, प्रतिमुच्यते स्म प्रतिमुक्तः, अपि नह्यते स्म " वष्टिभागुरिरित्यल्लोपे " पिनद्धः, अपिनद्धेन तुल्यमपिनद्धवदिति चत्वारि परहित-कवचवस्त्रादेः । संनह्यति, संनह्यते स्म वा सन्नद्धः, " सन्नद्धो वर्मिते व्यूढे " ( इति मेदिनी ) वर्मणा नह्यते स्म, वर्म संजातमस्येति वा वर्मितः, सज्जतीति सज्जः, " अथ सज्जः स्यात्संनद्धे संभृते त्रिषु " दंश्यते स्म, दंशः संजातोऽस्येति वा दंशितः, व्यूढो धृतः कङ्कटो येनेति व्यूढकङ्कटः इति पञ्च धृतसन्नाहस्य ॥ ६५ ॥

न.

कवचधारिसमूह **( त्रिष्वामुक्तादयो ) ( वर्मभृतां ) कावचिकं (गणे) ।**

पु. पु. पु. पु. पु.

पैदल, पैदलों **पदातिपत्तिपदगपादातिकपदाजयः ॥ ६६ ॥**

पु. पु. न. स.

का गिरोह **पद्ग ( श्च ) पदिक ( श्चाथ ) पादातं पत्तिसंहतिः ।**

पु. पु. पु. पु.

हथियारबन्द **शस्त्राजीवे काण्डपृष्ठायुधीया युधिकाः ( समाः )॥६७॥**

त्रीति—आमुक्तादयो व्यूढकङ्कटान्ताः शब्दास्त्रिषु त्रिलिङ्गयां स्युः यथा आमुक्ता शाटी, आमुक्तौ वारबाणः, आमुक्तं शस्त्रमिति ज्ञेयम् । वर्मभृतां कवचधारिणां गणे समुदाये कवचिनां समूहः कावचिकं स्यादित्येकं धृतसंनाहानां गणस्य । पादाभ्या-मततीति पदातिः, पद्यत इति पत्तिः, पादाभ्यां गच्छतीति पदगः, पादाभ्यामतति, पदातिरेवेति वा पादातिकः, पादाभ्यामजतीति पदाजिः बहुत्वे पदाजयः, पादाभ्या-मवतीति विग्रहे तु पादाविकोपि स्यात्, पादाभ्यां गच्छतीति पद्गः, पादाभ्यां चरतीति पदिकः स्यादिति सप्त पदातेः " पैदर " इति ख्यातस्य । अथेति—पदातीनां समूहः पादातम्, पत्तीनां संहतिरिति पत्तिसंहतिरिति द्वे पदातिवृन्दस्य । शस्त्रमाजीवत्युपजी-

वतीति शस्त्राजीवस्तस्मिन्, काण्डानि शस्त्राणि पृष्ठे यस्येति काण्डपृष्ठः मुकुट-मते तु स्पृष्टं गृहीतं काण्डं शस्त्रं येनेति काण्डस्पृष्टोपि स्यात्, आयुधेन जीवतीति आयुधीयः, ठनिप्रत्यये तु आयुधिकः एते समाः समानार्थाः समानलिङ्गाश्चेति चत्वारि शस्त्रजीविनः ॥ ६६ ।६७ ॥

पु. पु. पु.

अच्छे तीरंदाज **कृतहस्तः सुप्रयोगविशिखः कृतपुङ्ख ( वत् )।**

निशाना से चूके पु.

बाणवाला **अपराद्धपृषत्को ( ऽसौ लक्ष्याद्यश्च्युतसायकः )॥६८॥**

कृतेति—कृतोऽभ्यस्तो हस्तो यस्येति कृतहस्तः, सुप्रयोगः शोभनप्रयोगवान् विशिखो बाणो यस्येति सुप्रयोगविशिखः, कृतोऽभ्यस्तः पुङ्खः पुङ्खवान् शरो येनेति कृतपुङ्खस्तेन तुल्यं कृतपुङ्खवदिति त्रीणि सम्यक्कृतशराभ्यासस्य । लक्ष्याद्वेध्याद् यः च्युतसायको भ्रष्टबाणकः असौ अपराद्धः पृषत्को बाणोऽस्येति अपराद्धपृषत्कः स्यादित्येकं लक्ष्या-प्राप्तशरस्य ॥ ६८ ॥

पु. पु. पु. पु. पु. पु.

धनुर्धारी **धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः ।**

बाणधारी पु. पु. पु. पु.

बर्छीवाला **(स्या)त्काण्डवां(स्तु)काण्डीरःशाक्तीकःशक्तिहेतिकः६९**

धेति—“ धन्वा तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च ” ( इति मेदिनी ) धन्वास्यास्तीति धन्वी, धनुरस्यास्तीति धनुष्मान् , धनुःप्रहरणमस्येति धानुष्कः, निषङ्गोऽस्यास्तीति निषङ्गी, “ अस्त्रं प्रहरणे चापे ” ( इति विश्वः ) अस्त्रमस्या-स्तीति अस्त्री, धरतीति धरो धनुषो धरो धनुर्धरः इति षट् धनुर्धरस्य । “ काण्डःस्तवे तरुस्कन्धे बाणेऽवसरनीरयोः । कुत्सिते वृक्षभिन्नाडी वृन्धे रहसि न स्त्रियामिति” ( मेदिनी ) काण्डो बाणोऽस्यास्तीति काण्डवान् , काण्डोस्त्यस्येति काण्डीरः स्यादिति द्वे बाणधारकस्य । शक्तिः प्रहरणमस्येति शाक्तीकः, शक्तिर्हेतिर्यस्येति शक्तिहेतिरिति द्वे शक्तिधारकस्य ॥ ६९ ॥

पु. पु.

लट्ठधारी, फरसा **याष्टीकपारश्वधिकौ ( यष्टिपर्श्वधहेतिकौ )।**

धारी,खड्गधारी, पु. पु.

सांगधारी, भालाधारी **नैस्त्रिंशिकोऽसिहेतिःस्या(त्समौ)प्रासिककौन्तिकौ ७०**

येति—यष्टिश्च पर्श्वधश्च तौ हेती ययोस्तौ यष्टिपर्श्वधहेतिकौ, यष्टिः प्रहरणमस्येति याष्टीकः, पर्श्वधः परशुः प्रहरणमस्येति पारश्वधिकः तौ च याष्टीकपारश्वधिकौ

स्यातामित्येकैकम् । निस्त्रिंशः प्रहरणमस्येति नैस्त्रिंशिकः, असिर्हेतिरायुधो यस्येति असिहेतिः स्यादिति द्वे खड्गायुधस्य । प्रासः प्रहरणमस्येति प्रासिकः, कुन्तः प्रहरणमस्येति कौन्तिकस्तौ च समौ समानार्थौ समानलिङ्गौ च स्यातामित्येकैकम् ॥ ७० ॥

पु. पु. पु. पु.

ढालवाला, **चर्मी फलकपाणिः ( स्यात् ) पताकी वैजयन्तिकः ।**

झण्डावाला, पु. पु. पु. पु.

सहायक **अनुप्लवः सहायश्चानुचरोऽभिसरः ( समाः ) ॥ ७१ ॥**

चेति—चर्मास्यास्तीति चर्मी, फलकं पाणावस्येति फलकपाणिः स्यादिति द्वे फलकधारकस्य । पताकास्यास्तीति पताकी, वैजयन्त्याचरति, वैजयन्त्यस्यास्तीति वा वैजयन्तिकः स्यादिति द्वे ध्वजधारकस्य । अनु पश्चात्प्लवते इति अनुप्लवः, सह एति, अयते वा सहायः, अनुचरतीति अनुचरः, अभितः सरतीति अभिसरः एते समाः समानार्थाः समानलिङ्गाश्च स्युरिति चत्वारि सहायस्य ॥ ७१ ॥

पु. पु. पु. पु. पु.

अगुआ, धीरे२ **पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः ।**

पु. पु. पु. पु.

चलनेवाला **पुरोगमः पुरोगामी मन्दगामी ( तु ) मन्थरः ॥ ७२ ॥**

पुरइति—पुरो गच्छतीति पुरोगः, अग्रे सरतीति अग्रेसरः, प्रतिष्ठते गच्छतीति प्रष्ठः “ प्रष्ठस्त्रिष्वग्रगे श्रेष्ठे पुंसि चाण्डालिकौषधौ ” ( इति मेदिनी ) अग्रतः सरतीति अग्रतःसरः, पुरःसरतीति पुरःसरः, पुरो गच्छतीति पुरोगमः, पुरोगमनशीलः पुरोगामी इति सप्ताग्रेसराणाम् । मन्दं गच्छति तच्छील इति मन्दगामी, मन्थति पादौ, मन्थं रातीति वा मन्थरः “ मन्थरः कोशफलयोर्बाधमन्थानयोः पुमान् । कुसुम्भ्यां न द्वयोर्मन्दे पृथौ वक्रेऽभिधेयवत् ” ( इति मेदिनी ) इति द्वे शनैर्गमनशीलस्य ॥ ७२ ॥

पु. पु. १ पु. पु.

जल्द चलने- **जङ्घालोऽतिजव (स्तुल्यौ) जङ्घाकरिकजाङ्घिकौ ।**

वाला, हल- पु. पु. पु. पु. पु. पु.

कारा, जल्द-

बाज़ **तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥ ७३ ॥**

जेति—अतिशयिता जङ्घास्येति जङ्घालः, पिच्छादित्वादिलचि जङ्घिलोऽपि, “ प्रज्ञालप्रज्ञिलौ तुल्यौ जङ्घालजङ्घिलादयः ” ( इति वाचस्पतिः ) अतिशयितो जवो वेगो यस्येति अतिजवः उभौ तुल्यौ समानार्थौ समानलिङ्गाविति द्वे अतिवेगवतः । जङ्घा साध्यत्वादुपचाराद्गतिजङ्घा सैव करो राजदेयो भागः, आकरः श्रेष्ठो वा जङ्घाकरोऽस्यास्ति, जङ्घैव करी हस्ती यस्येति वा जङ्घाकरिकः, जङ्घाभ्यां जीवतीति जाङ्घिकः इमावपि

१ तुल्यावित्युभयत्रान्वयः ॥

तुल्याविति द्वे जङ्घाजीविनः । तरो वेगोऽस्यास्तीति तरस्वी, त्वरते, त्वरा संजातास्येति वा त्वरितः "त्वरितं वेगतद्वतोरिति" (हैमः) अतिशयितो वेगोऽस्येति वेगी, प्रजवतीति प्रजवी, जवतीति जवनः, जवतीति जवः "जवो वेगवति त्रिषु । पुंलिङ्गस्तु भवेद्वेगे चौड्रपुष्पे जवा मता" ( इति मेदिनी ) इति षट् वेगवन्मात्रस्य ॥ ७३ ॥

जीतनेशक्य, जीतनेयोग्य, जीतनेवाला, सामर्थ्य से शत्रु के सामने जानेवाला पहलवान

पु. जय्यो ( यः शक्यते जेतुं ) पु. जेयो ( जेतव्यमात्रके ) ।
पु. जैत्र (स्तु) पु. जेता ( यो गच्छत्यलं विद्विषतः प्रति )॥ ७४॥
(सो)ऽभ्यमित्र्यो पु. ऽभ्यमित्रीयो पु. ऽप्यभ्यमित्रीण पु. (इत्यपि)।
ऊर्जस्वलः पु. स्यादूर्जस्वी पु. (य ऊर्जातिशयान्वितः)॥७५॥

जेति—यः जेतुं शक्यते सः जेतुं शक्यो जय्यः स्यादित्येकं जेतुंशक्यस्य । जेतव्यमात्रके जेतुं योग्यो जेयः स्यादित्येकं जेतुं योग्यस्य । जेता एव जैत्रः, जयनशीलो जेता स्यादिति द्वे जयवतः । यो विद्विषतः प्रति अलंगच्छति सः अमित्रस्याभिमुखमभ्यमित्रमलंगामी अभ्यमित्र्यः, अभ्यमित्रीयः, अभ्यमित्रीण इत्यपि स्यादिति त्रीणि सामर्थ्येन शत्रूणां संमुखं गच्छतः । यः ऊर्जस्य बलस्यातिशयस्तेन अन्वितो युक्तः सः "ऊर्जस्तु कार्त्तिकोत्साहबलेषु प्राणनेपि च" ( इति मेदिनी ) अतिशयित ऊर्जोऽस्यास्तीति ऊर्जस्वलः, ऊर्जस्वी च स्यादिति द्वे बलातिशयवतः ॥ ७४ । ७५ ॥

चौड़े छातावाला रथका स्वामी यथेष्टगामी वारंवारगामी

( स्यादु ) पु. रस्वानुरसिलो पु. रथिरो पु. रथिको पु. रथी पु. ।
कामंगाम्यनु पु. कामीनो पु. ह्यत्यन्तीन पु. (स्तथा भृशम्)॥ ७६ ॥

स्यादिति—प्रशस्तमतिशयितं वा उरो यस्येति उरस्वान् इलचि प्रत्यये तु उरसिलः स्वामिमते तु उरसा बलं लक्ष्यत इत्युरसिलः स्यादिति द्वे विपुलोरसः । रथोऽस्यास्तीति रथिरः, रथोऽस्त्यस्येति रथिकः इनि प्रत्यये तु रथी रथस्येनः प्रभुः शकन्ध्वादित्वाद्रथिनोऽपीत्येके इति त्रीणि रथस्वामिनः । कामं यथेच्छं गमनशीलो कामंगामी, कामस्य सदृशम् अनुकामं गामी अनुकामीनः इति द्वे यथेष्टं गमनशीलस्य । तथा भृशंगामी अन्तस्यात्ययः अत्यन्तंगामी अत्यन्तीनः स्यादित्येकमतिगमनशीलस्य ॥ ७६ ॥

बहादुर, जीतनेवाला रणकुशल

पु. शूरो पु. वीरश्च पु. विक्रान्तो पु. जेता पु. जिष्णु ( श्च ) पु. जित्वरः ।
पु. सांयुगीनो(रणे साधुः) शस्त्राजीवादय ( स्त्रिषु ) ॥ ७७ ॥

१ ऊर्जशब्दोऽदन्तः सान्तश्च ॥ २ मेधारथाभ्यामिरन्निचाविति पठित्वा रथिर इति व्याख्यॆयं राथीन इत्यपपाठ इत्याह स्वामीभाष्योक्तं स्वीकृतवानिति ॥

शिवति—शूरयतीति शूरः "शूरःस्याद्यादवे भटे" ( इति मेदिनी ) वीरयतीति वीरः "वीरो रसविशेषे स्यादुत्तरे सुभटे त्रिषु। स्त्री सुरा क्षीरकाकोली तामलक्येलवालुके। पतिपुत्रवतीरम्भा विदारीदुग्धिकासु च। मल्लयूक्षीरविदार्योः क्लीबं शृङ्ग्यां नतेऽपि च" ( इति पवर्गतृतीयादौ मेदिनी ) विक्रामति स्म विक्रान्तः इति त्रीणि शूरस्य। जयनशीलो जेता, जयत्येवंशीलो जिष्णुः, "जिष्णुर्ना वासवेऽर्जुने। जित्वरे वाच्यवदिति" ( मेदिनी ) जयति तच्छीलो जित्वरः इति त्रीणि जयशीलस्य। रणे साधुः "संयुगे संग्रामे साधुः" सांयुगीनः स्यादित्येकं युद्धकुशलस्य। शस्त्राजीवादयः सांयुगीनान्तास्त्रिषु त्रिलिङ्ग्यां स्युः॥ ७७॥

स   स.   स.   स.   स.   स.

सेना या   **ध्वजिनी वाहिनी सेना पृतनानीकिनी चमूः।**

स.   न.   न.   न.   पु.न.

फ़ौज   **वरूथिनी बलं सैन्यं चक्रं चानीक ( मस्त्रियाम् )॥७८॥**

ध्वेति—ध्वजाः सन्त्यस्यामिति ध्वजिनी, वाहाः सन्त्यस्यामिति वाहिनी, सिनोति, सह इनेन वेति सेना, प्रियत इति पृतना, "पृतना तु स्त्रियां सेनामात्रसेनाविशेषयोः" ( इति मेदिनी ) अनीकं रणोऽस्ति प्रयोजनत्वेनास्या इति अनीकिनी, "अनीकिनी स्त्रियां सेनामात्रसेनाविशेषयोः" ( इति मेदिनी ) चमति शत्रूनिति चमूः "चमूः सेनाविशेषे च सेनामात्रे च योषिति" ( इति मेदिनी ) वरूथाः सन्त्यस्यामिति वरूथिनी, बलति, बलते वा बलम्, सेनैवेति सैन्यम्, क्रियतेऽनेनेति चक्रम्, अनित्यनेन अनीकम् अस्त्रियां पुंनपुंसकं स्यादित्येकादश सेनायाः॥ ७८॥

क़िला बांधना   पु.   पु.

सेना के विशेषभेद व्यूह का पीछा   **व्यूह ( स्तु ) बलविन्यासो ( भेदा दण्डादयो युधि )।**

पु.   पु.   पु.

सेना का पीछा   **प्रत्यासारो व्यूहपार्ष्णिः ( सैन्यपृष्ठे ) प्रतिग्रहः॥ ७६॥**

व्यित्रति—व्यूह्यत इति व्यूहः "व्यूहः स्याद्बलविन्यासे निर्माणे वृन्दतर्कयोः" ( इति मेदिनी ) बलस्य सेनाया विन्यासो विभज्य स्थापनमिति बलविन्यास इति द्वे व्यूहस्य। युधि संग्रामे दण्डादयो भेदा विशेषाः स्युः। यदाह कामन्दकिः "तिर्यग्वृत्तिस्तु दण्डः स्याद्भोगोन्वावृत्तिरेव च। मण्डलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः" आदिना शकट-मकर-पताका-सर्वतोभद्र-दुर्जयादयोपि संगृह्यत इत्येकैकं सेनाविशेषभेदानाम्। प्रतीपमासारयति भग्नानिति प्रत्यासारः, व्यूहस्य पार्ष्णिः पृष्ठभाग इति व्यूहपार्ष्णिः "पार्ष्णिः स्यादुन्मदस्त्रियाम्। स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च" ( इति विश्वमेदिन्यौ ) इति द्वे व्यूहस्य पृष्ठभागस्य। सैन्यस्य पृष्ठं सैन्यपृष्ठन्तस्मिन् प्रतिगृह्यतेऽनेनेति प्रतिग्रहः "प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे। योग्येभ्यो

विधिवद्देये तद्ग्रहे च ग्रहान्तरे (इति मेदिनी) इत्येकं सैन्यपश्चाद्भिन्नसंघातानीकस्य ॥ ७६ ॥

स.

सेना विशेष **( एकेभैकरथात्र्यश्वा ) पत्तिः ( पञ्चपदातिका ) ।**
**( पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ) ॥ ८० ॥**

एकेति—एक इभो यस्यामित्येकेभा, एको रथो यस्यामित्येकरथा, त्रयोऽश्वा यस्यामिति त्र्यश्वा, पञ्च पदातयो यस्यामिति पञ्चपदातिका सेना पद्यते, पत्यते वा पत्तिः स्यात् "पत्तिर्ना पदगे, स्त्रियाम् । गतावेकरथैकेभत्र्यश्वपञ्चपदातिके" (इति मेदिनी) भरतः—"एको रथो गजश्चैको नराः पञ्च पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते" इत्येकं सेनाविशेषस्य । सर्वैः पत्त्यङ्गैः त्रिगुणैस्त्रिभिर्गुणितैः यथोत्तरं क्रमादाख्याः सेनामुखाद्याः संज्ञाः स्युरिति ॥ ८० ॥

न. पु.न. पु. स. स. स.

**सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।**

स. स.

**अनीकिनी (दशानीकिन्यो)ऽक्षौहिण्य(थ संपदि) ८१ ॥**

सयिति—तिस्रः पत्तयः सेनाया मुखमुपक्रमः सेनामुखं स्यात्, त्रिभिः सेनामुखैः गुडति, गुड्यते वा गुल्मः, त्रयो गुल्माः गण्यते गणयति वा गणः, त्रयो गणा वाहाः सन्त्यस्यामिति वाहिनी, तिस्रो वाहिन्यः प्रियत इति पृतना, तिस्रः पृतनाः चमति शत्रूनिति चमूः, तिस्रश्चम्वोऽनीकं रणोऽस्त्यस्यामिति अनीकिनी स्यादेकैकं सेनाविशेषस्य । दशानीकिन्यः ऊहः समूहोऽस्त्यस्या ऊहिनी अक्षाणामूहिनीति अक्षौहिणी स्यात् "अक्षौहिण्यामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः । संख्यायुक्तासहस्राणि गजानामेकविंशतिः । एवमेव रथानान्तु संख्यानं कीर्तितं बुधैः । पञ्चषष्टिः सहस्राणि षट् शतानि दशैव तु । संख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरंगमैः । नृणां शतसहस्रं तु सहस्राणि नवैव तु । शतानि त्रीणि चान्यानि पञ्चाशच्च पदातयः" इत्येकमक्षौहिण्याः अथ संपदीत्यस्यान्वयोऽग्रे वक्ष्यते ॥ ८१ ॥

तत्तत्सेनाविशेषे गजादीनां निर्णयाय चक्रमिदम् ।

| सेना | पत्तिः | सेनामुखम् | गुल्मः | गणः | वाहिनी | पृतना | चमूः | अनीकिनी | अक्षौहिणी |
|---|---|---|---|---|---|---|---|---|---|
| गजाः,रथाः | १ | ३ | ६ | २७ | ८१ | २४३ | ७२६ | २१८७ | २१८७० |
| अश्वाः | ३ | ६ | २७ | ८१ | २४३ | ७२६ | २१८७ | ६५६१ | ६५६१० |
| पदातयः | ५ | १५ | ४५ | १३५ | ४०५ | १२१५ | ३६४५ | १०६३५ | १०६३५० |

स. स. स. स. स. स.

संपति, विपति **सम्पत्तिः श्री (श्च) लक्ष्मी (श्च) विपत्तौ विपदापदौ।**

न. न. न. न.

हथियार धनुष **आयुध (न्तु) प्रहरणं शस्त्रमस्त्र (मथास्त्रियौ)॥८२॥**

पु.न. पु.न. न. न. न. न.

राजा कर्ण का **धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्।**

पु. न.

**इष्वासो (ऽप्यथ कर्णस्य) कालपृष्ठं (शरासनम्)॥८३॥**

अथेति–संपदनं, सम्पद्यतेऽनयेति वा सम्पत्, सम्पत्तिः, श्रीयते सर्वैरिति श्रीः, "श्रीर्वेषरचना शोभा भारती सरलद्रुमे। लक्ष्म्यां त्रिवर्गसम्पत्तौ वेषोपकरणे मतौ" (इति विश्वमेदिन्यौ) लक्ष्यते, लक्षयति पश्यति नीतिज्ञमिति वा लक्ष्मीरिति चत्वारि धनोत्कर्षस्य। विपदनं, विपद्यतेऽनयेति वा विपत्तिः, विपत्, आपदनं, आपद्यतेऽनयेति वा आपत्, आपत्तिरिति त्रीणि विपत्तेः। आयुध्यन्तेऽनेनेति आयुधम्, प्रह्रियतेऽनेनेति प्रहरणम्, शस्यतेऽनेनेति शस्त्रम्, अस्यते, असति वा अस्त्रमिति चत्वारि प्रहरणमात्रस्य। अथेति–धनतीति धनुः "धनुः पियाले ना न स्त्री राशिभेदे शरासने। धनुर्धरे त्रिषु" (इति सान्तेषु मेदिनी) उदन्तोऽपि, "धनुः पुमान् पियालद्रौ राशिभेदे शरासने" (इति नान्तेषु मेदिनी) ऊप्रत्ययान्तः स्त्रियामपि "स्थावरन्तु धनुर्गुणी"। शरावापो धनूः स्त्री स्यात्तूणाता त्रिणाताऽपि च" (इति त्रिकाण्डशेषः) चपस्य वंशभेदस्य विकारश्चापः उभावस्त्रियौ पुंनपुंसकौ स्याताम्, धन्वतीति धन्व "धन्वा तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च" (इति मेदिनी) शरा अस्यन्तेऽनेनेति शरासनम्, कोर्दण्डो वंशोऽस्येति कोदण्डम् "कोदण्डं कार्मुके देशभेदभूतलयोरपि" (इति हेमचन्द्रः) कर्मणे प्रभवतीति कार्मुकम् "अथ कार्मुकः। वंशे कार्मुकमिष्वासे कर्मठे" (इति हैमः) इषवो बाणा अस्यन्तेऽनेनेति इष्वासः "इष्वासो धन्वधन्विनोरिति" (हैमः) इति सप्त चापस्य। अथेति–कर्णस्य शरासनं कालो यम इव पृष्ठमस्य, कालवर्णं पृष्ठमस्येति वा कालपृष्ठं स्यादित्येकं कर्णधनुषः॥ ८२। ८३॥

पु.न. पु.न.

अर्जुनका धनुष **(कपिध्वजस्य) गाण्डीवगाण्डिवौ (पुंनपुंसकौ)।**

धनुषका किनारा स. स. स.न. स.न.

दस्ताना **कोटि (रस्या) टनी गोधे तले (ज्याघातवारणे)॥८४॥**

केति–कपिर्हनुमान् ध्वजो ध्वजे वा यस्येति कपिध्वजोऽर्जुनस्तस्य शरासने गाण्डीगाण्डिर्वा ग्रन्थिरस्यास्तीति गाण्डीवः गाण्डिवश्च उभौ पुंनपुंसकौ स्याताम्

" जिष्णोर्धनुषिकोदण्डे गाण्डीवं गाण्डिवं तथा " ( इति शाश्वतः ) इति द्वे अर्जुन-धनुषः । अस्य धनुषोऽन्त्ये कोटयतेऽनयेति कोटी कोटिर्वा, " कोटिः स्त्री धनुषोऽग्रेऽश्रौसंख्याभेदप्रकर्षयोः " ( इति मेदिनी ) अटति गुणोऽत्रेति अटनी अटनिर्वा इति द्वे धनुषोऽन्त्यस्य । ज्यायागुणस्याघातस्य वारणे गुध्येत बाहुभ्यामिति गोधे, " गोधा तल्लनिहाकयोः " ( इति मेदिनी ) तलतीति तला, तलम् वा, द्वित्वे तले स्याताम् व्यक्तिद्वयाद् द्वित्वमिति द्वे चर्मरचितहस्तानाविशेष इति ख्यातानाम् ॥ ८४ ॥

पु. न. स. स. स. पु.

धनुष का मध्य **लस्तक ( स्तु ) धनुर्मध्यं मौर्वीज्याशिञ्जिनी गुणः ।**

रोदा धन्वियों के न. न.

आसन **(स्यात्)प्रत्यालीढमालीढ(मित्यादिस्थानपञ्चकम्)८५**

लेति—लस्यते स्म लस्तः स एव लस्तकः, धनुषो मध्यं धनुर्मध्यमिति द्वे धनुषो मध्यभागस्य । मूर्वाया विकारो मौर्वी, जिनातीति ज्या, शिञ्ज इति शिञ्जिनी, गुणयत इति गुणः "गुणोज्यासूत्रतन्तुषु । रज्जौ सत्त्वादौ सन्ध्यादौ शौर्यादौ भीमइन्द्रिये । रूपादावप्रधाने च दोषान्यस्मिन्विशेषणे " ( इति हैमः ) इति चत्वारि गुणस्य " रोदा " इति ख्यातस्य । प्रत्यालेहनं प्रत्यालीढम्, "प्रत्यालीढन्तु चरणान्यासभेदेऽशिते त्रिषु" ( इति मेदिनी ) आलेहनमालीढम् " आलीढं पादविन्यासेशिते त्रिषु " ( इति विश्वमेदिन्यौ ) तत्र ऊर्ध्वस्थस्य वामपादप्रसारे दक्षिणपादसंकोचे आद्यम् , विपर्ययेऽन्त्यम् आदिना समपाद-विशाख-मण्डलग्रहः वितस्त्यन्तरेण स्थिते पादद्वये विशाखः, भरतस्त्वाह " वैष्णवं समपादं च वैशाखं मण्डलं तथा, प्रत्यालीढमथालीढं स्थानान्येतानि षड् नृणाम् " इति पञ्च धन्विनां स्थानभेदानाम् ॥ ८५ ॥

न. न. न. पु. न.

निशाना बाण **लक्षं लक्ष्यं शरव्यं ( च ) शराभ्यास उपासनम् ।**

पु. पु. पु. पु. पु. पु.

सीखना बाण **पृषत्कबाणविशिखा अजिह्मग खगाशुगाः ॥ ८६ ॥**

पु. पु. पु. पु. पु. पु.स.

या तीर **कलम्बमार्गणशराः पत्रीरोपइषु ( द्वयोः ) ।**

लेति—लक्ष्यत इति लक्षम् " लक्षं व्याजशरव्ययोः । संख्यायामपि " ( इति हैमः ) लक्षितुमर्हं लक्ष्यम् , शरवे हिंस्राय हितं ; शरान्व्ययति वा शरव्यमिति त्रीणि लक्ष्यस्य " निशाना " इति ख्यातस्य । शरस्य शरमोक्षस्याभ्यासः शराभ्यासः उपास्यत इत्युपासनमिति द्वे शराभ्यासस्य । पर्षतीति पृषत्स एव पृषत्कः, वणनं बाणः शब्दोऽस्त्यस्येति बाणः " बाणः स्याद्गोस्तने दैत्यभेदे केवलकाण्डयोः । बाणा तु बाणमूले स्त्री नीलझिण्ट्यां पुनर्द्वयोः " ( इति मेदिनी ) विशिष्टा शिखाग्रमस्येति

विशिखः "विशिखा खनित्रिकायां रथ्यायां विशिखः शरे" (इति हैमः) जिह्मस्याभावः, अजिह्ममृजुगच्छतीति अजिह्मगः, खं गच्छतीति खगः "खगोऽर्कग्रहपक्षिषु। शरे देवेऽपि" (इति हैमः) आशु गच्छतीति आशुगः "आशुगोऽर्केशरे वायौ" (इति हेमचन्द्रः) कलयत इति कलम्बः "कलम्बी शाकभेदेऽपि कदम्बशरयोः पुमान्" (इति मेदिनी) मार्गयति, मार्ग्यते वा मार्गणः "मार्गणं याचनेऽन्वेषे मार्गणस्तुशरेऽर्थिनि" (इति हैमः) शृणात्यनेनेति शरः "शरस्तु तेजने बाणे दध्यग्रे ना शरं जले" (इति विश्वमेदिन्यौ) दन्त्यादिपाठे तु सरतीति सरः "बाणः स्यादस्त्रकण्टकः। स्थूलक्ष्वेडोविपाटश्च चित्रपुङ्खः शरः सरः। पत्रवाहोविकर्षः" (इति त्रिकाण्डशेषः) पत्राणि पक्षाः सन्त्यस्येति पत्री "पत्री काण्डे खगे द्रुमे। रथेऽद्रौ रथिके श्येने" (इति हेमचन्द्रः) रोप्यते, रुप्यतेऽनेनेति वा रोपः "रोपो रोपणबाणयोः" (इति विश्वः) ईष्यतेऽनेनेति इषुः द्वयोः स्त्रीपुंसयोः स्यादिति द्वादशबाणस्य॥ ८६। ½॥

लोहियाबाण, **प्रक्ष्वेडना (स्तु) नाराचाः पक्षो वाज (स्त्रिषूत्तरे)॥८७॥**
　(पु. पु. पु. पु.)
फोंक, फेंकाबाण, पु.स.न.　(पु.स.न. पु.स.न.)

विषैलेबाण **निरस्तः (प्रहिते बाणे) (विषाक्ते) दिग्धलिप्तकौ।**

प्रेति—प्रकर्षेण क्ष्वेदन्त इति पृषोदरादित्वात् प्रक्ष्वेडनाः, नरानाचामन्ति, नराणां समूहो नारमाचामन्तीति वा नाराचा इति द्वे सर्वलोहमयशरस्य। पक्षति, पक्ष्यतेऽनेनेति वा पक्षः, व्रजति, वाजयत्यनेन वा वाजः "वाजो निस्वनपक्षयोः। वेगे पुमानथ क्लीबे घृतयज्ञान्नवारिषु" (इति मेदिनी) इति द्वे शरपक्षस्य। उत्तरे निरस्तादयो लिप्तकान्ताः वक्ष्यमाणाः शब्दास्त्रिषु त्रिलिङ्गयां स्युः। प्रहिते प्रक्षिप्ते बाणे निरस्यते स्म निरस्तःस्यादित्येकं प्रक्षिप्तबाणस्य। विषाक्ते बाणे दिह्यते स्म दिग्धः, लिप्यते स्म लिप्तः स एव लिप्तकः उभौ स्यातामिति द्वे विषसम्बद्धबाणस्य॥८७।½॥

　(पु. पु. पु, पु. पु.स.)
तरकस **तूणोपासङ्गतूणीरनिषङ्गा इषुधि (र्द्वयोः)॥ ८८॥**

　(स. पु. पु. पु. पु. पु.)
तलवार **तूण्यां खड्गे (तु) निस्त्रिंशचन्द्रहासासिरिष्टयः।**
　(पु. पु. पु. पु.)
**कौक्षेयको मण्डलाग्रः करपालः कृपाण (वत्)॥ ८९॥**

त्विति—तूणयति, तूण्यते शरैरिति वा तूणः स्त्रियां तूणा च "स्त्रियां तूणोपुधी उपासङ्गः" (इति रत्नकोषः) उपासज्यन्ते शरा अत्रेति उपासङ्गः, तूणीं तूणत्वमीर्ते, तूणीं शरैः संकोचं रातीति वा तूणीरः, नितरां सज्यन्ते शरा अत्रेति निषङ्गः, इषवो धीयन्तेऽत्रेति इषुधिः द्वयोः स्त्रीपुंसयोः स्यात, तूण्यते बाणैरिति गौरादित्वात् तूणी

इति षट् शराधारस्य । खण्डति परं, खण्ड्यतेऽनेनेति वा खड्गः "खड्गो गण्डकशृङ्गासिबुद्धिभेदेषु गण्डके" ( इति विश्वमेदिन्यौ ) निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः निस्त्रिंशोनिर्घृणे खड्गे" ( इति हैमः ) चन्द्रइव हासः प्रभास्य, चन्द्रं हसति वा द्युतिमत्त्वादिति चन्द्रहासः, "चन्द्रहासोऽसिमात्रके । दशग्रीवकृपाणे च कनीयसि च गुग्गुलौ ( इति हैमः ) अस्यते, असति वा असिः "असिः खड्गे नदीभिदि" ( इति हैमः) रेषति, रिशति वा रिष्टिः "रिष्टिः खड्गे ना शुभे स्त्री" (इति मेदिनी) शिलाशूलर्ष्टिमुद्गरमिति भट्टिप्रयोगाद् ऋषतीति ऋष्टिरपि " ऋष्टिः खड्गस्तरवारिकौक्षेयकौ च नन्दकः" ( इति रभसः ) कुक्षौ भवः कौक्षेयकः, मण्डलमग्रमस्येति मण्डलाग्रः, करं पालयतीति करपालः करवाल इति पाठे तु करे वालो यस्य, करंवलति, करेण वल्यते वा करवालः, कृपां नुदतीति कृपाणस्तेन तुल्यं कृपाणवदिति नव खड्गस्य॥ ८८।८९ ॥

पु. स.

कब्जा,परतला,**त्सरुः( खड्गादिमुष्टौ स्यात् ) मेखला ( तन्निबन्धनम् ) ।**

पु. न. न. पु.

ढाल,हथकड़ा,**फलको (ऽस्त्री) फलं चर्म संग्राहो (मुष्टिरस्य यः) ॥ ९० ॥**

त्सेति–खड्गादिमुष्टौ त्सरतीति त्सरुः स्यात् आदिना कटितलच्छुरिकादिग्रहः इत्येकं खड्गादिमुष्टेः "क़ब्ज़ा" इति ख्यातस्य । तन्निबन्धनं मांलक्ष्मीमीखति, माशब्दो निषेधे मा ईखति, माईं लक्ष्मीं खलति वा मेखला "मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः" ( इति मेदिनी ) इत्येकं खड्गादेश्चर्मादिनिर्मितकटिबन्धनस्य युद्धे हस्तात्पतनवारणाय मणिबन्धे प्रध्रियमाणस्य चर्मादेर्वा । फलतीति फलकः अस्त्री पुंनपुंसकं स्यात् अचि प्रत्यये फलम् "फलं हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः" ( इति मेदिनी ) चर्यते, चरत्यनेनेति वा चर्म "चर्म कृत्तौ च फलके" ( इति विश्वः ) इति त्रीणि चर्मणः "फरी" इति ख्यातायाः । अस्य फलस्य यो मुष्टिः स संगृह्यते इति संग्राहः स्यादित्येकं चर्ममुष्टेः "हथकड़ा" इति ख्यातस्य ॥ ९० ॥

पु. पु. पु. स. स.

मुद्गर, एक धारवाली,खड्ग या खांड़ा, **द्रुघणो मुद्गरघनौ (स्यादी) ली करपालिका ।**

पु. पु. पु. पु.

गोफना, लोहांगी **भिन्दिपालः सृग (स्तुल्यौ) परिघः परिघातनः ॥ ९१ ॥**

द्रुिति–द्रुर्वृक्षो हन्यतेऽनेनेति द्रुघणः, "द्रुघणो मुद्गरेऽपि स्याद् द्रुहिणे च परश्वधे" ( इति विश्वमेदिन्यौ ) केचित्तु क्षुभ्नादित्वान्न णत्वमिच्छन्ति द्रुघनोऽपि, गिरतीति गरः मुदोगरो मुद्गरः, हन्यतेऽनेनेति घनः "घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे । संघे मुस्ते घनं मध्यनृत्यवाद्यप्रकारयोः" ( इति हैमः ) इति त्रीणि

मुद्गरस्य । ईर्ते, ईर्यते, ईड्यते वा ईली, इलतीति विग्रहे तु 'इली' ह्रस्वादिरपि, करं पालयतीति करपाली सैव करपालिका, "करवालिका" इति पाठे तु करं वलते, करेण वाल्यते वा करवाली सैव करवालिका इति द्वे करवालिकायाः "गुप्ती" इति ख्यातायाः । भिन्दतीति भिन्दिः "भिन्दिर्द्वादश तालं तु दश कुन्तोऽभिधीयते" (इति भरतः) तदवच्छिन्नः कालोऽपि भिन्दिस्तं पालयतीति भिन्दिपालः, सरतीति सृगः उभौ तुजया सम्मितौ तुल्यौ स्यातामिति द्वे सृगस्य "गोफण" इति ख्यातस्य । परितो हन्यतेऽनेनेति परिघः "परिघोऽस्त्रे योगभेदे परिघातेऽर्गलेपि च" (इति हैमः) परितो घातयत्यनेनेति परिघातनः इति द्वे लोहबद्धलगुडभेदस्य "लोहांगी" इति ख्यातायाः ॥ ६१ ॥

पु.स. पु.स. पु.स. पु.

फरसा या (द्वयोः)कुठारः स्वधितिः परशु (श्च)परश्वधः ।

कुल्हारा छूरी स. स. स. स.

या चाकू (स्या)च्छस्त्री(चा)सिपुत्री(च)छुरिका(चा)सिधेनुका६२

द्वेति—कुठे गतिप्रतिघाते आरोगतिरस्य, कुठं वृक्षमृच्छतीति वा कुठारः द्वयोः स्त्रीपुंसयोः स्यात् । स्वं धियतीति स्वधितिः, परं शृणातीति परशुः, पर्शुरपि, परस्य श्वयनं परश्वस्तं धयतीति परश्वधः, पर्श्वधोऽपि 'परस्वधः' इति पाठे तु परस्य स्वंदधाति काष्ठदण्डधारकत्वात् परस्वधः "कुठारः स्त्री च स्वधितिः परशुश्च परश्वधः" (इति रभसः) इति चत्वारि कुठारस्य । शस्यतेऽनयेति शस्त्री, "लोहे शस्त्री छुरिकायामिति हैमः" असेः पुत्री असिपुत्री, छुरतीति छुरिका असेर्धेनुरिव असिधेनुका स्यादिति चत्वारि छुरिकायाः "छूरी" इति ख्यातायाः ॥ ६२ ॥

पु.न. पु. स. पु.न.

बर्छी, गुर्ज, (वा पुंसि)शल्यं शङ्कु(र्ना)शर्वला तोमरो (ऽस्त्रियाम्) ।

सांग,भाला,खड्गा-पु. पु. पु. स. स. स.

दिकों की नोक प्रास(स्तु)कुन्तः कोण(स्तु स्त्रियः)पाल्यश्रिकोटयः६३

वेति—शलतीति शल्यं वा पुंसि स्यात् "शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेपु तोमरे । मदनद्रुश्वाविधोर्ना" (इति मेदिनी) शङ्कतेऽस्मादिति शङ्कुः ना पुमान्स्यात् "शङ्कुः पत्रशिराजाले संख्याकीलकशम्भुषु । पादोऽस्त्रभेदयोर्मेढ्रे" (इति हैमः) इति द्वे शल्यस्य 'बर्छी' इति ख्यातायाः । शर्वतीति शर्वला, स्वामिमते तु सर्वं लातीति सर्वलापि, तौतीति तौः म्रियत इति मरः तौश्चासौ मरश्च, तौर्गन्ता म्रियतेऽनेनेति वा तोमरः अस्त्रियां पुंनपुंसके स्यादिति द्वे तोमरस्य 'गुर्ज' इति ख्यातस्य । प्रास्यत इति प्रासः, कुं शरीरमुनत्तीति शकन्ध्वादित्वात् कुन्तः "कुन्तः प्रासे चण्डभावे क्षुद्रजातौ गवेधुके । कुन्ती पाण्डुप्रियायां च शल्लक्यां गुग्गुलद्रुमे" (इति विश्वः) इति द्वे कुन्तस्य "भाला"

इति ख्यातस्य । कुणात्यनेनेति कोणः "कोणो वाद्यप्रभेदे स्याद्वीणादीनां च वादने । एकदेशे गृहादीनामस्रौ च लगुडेऽपि च" ( इति मेदिनी ) पालयतीति पालिः, ङीषि पाली वा "पालिः कर्णलताग्रेऽस्रौ पङ्क्तावङ्कप्रभेदयोः । छात्रादिदेये स्त्री पाली यूकासश्मश्रुयोषितोः" ( इति मेदिनी ) अश्नाति, अश्नुते, आश्रीयते प्रहारार्थमिति वा अश्रिः "अश्रिः कोणैकदेशयोः" ( इति धरणिः ) "अस्रः कोणे शिरसिजे" इति विश्वादस्रोऽपि, कोटयति, कोट्यते वा कोटिः "कोटिः स्त्री धनुषोऽग्रेऽस्रौ संख्याभेदप्रकर्षयोः" ( इति मेदिनी ) इति चत्वारि कोणभागस्य ॥ ९३ ॥

फ़ौजकी तैयारी या जमाव — पु. **सर्वाभिसारः** पु. **सर्वौघः** पु. **सर्वसंनहनार्थकः ।**

शस्त्रपूजन — पु. **लोहाभिहारो( ऽस्त्रभृतां राज्ञां नीराजनाविधिः )॥९४॥**

सेति—सर्वेषामभिसरणं सर्वाभिसारः, सर्वस्य ओघः समूहः सर्वौघः, "सर्वौघो गुरुवेगे च सर्वसंनहने पुमान्" ( इति मेदिनी ) सर्वेषां संनहनं सर्वसंनहनमर्थो यस्येति सर्वसंनहनार्थकः इति त्रीणि सर्वसैन्यसंनहनस्य। अस्त्रभृतां शस्त्रधारिणां राज्ञां नृपाणां निःशेषेण नितरां वा राजनं नीराजना तस्या विधिः नीराजनाविधिः लोहस्य शस्त्रस्याभितो हरणं सरणं वा लोहाभिहारः, लोहाभिसारो वा स्यादित्येकं महानवम्यां प्रस्थानात्प्राक् शस्त्रवाहनादिपूजनविधेः ॥ ९४ ॥

शत्रु पर चढाई प्रस्थान या पयान — **(यत्सेनयाभिगमनमरौ तद)** न. **भिषेणनम् ।**

स. **यात्रा** स. **व्रज्या** न. **भिनिर्याणं** न. **प्रस्थानं** न. **गमनं** पु. **गमः ॥ ९५ ॥**

यदिति—अरौ शत्रुसमीपे सेनया यदभिगमनं तदभिषेणितमभिषेणनं स्यादित्येकं सेनया शत्रुसमीपगमनस्य। यानं यात्रा "यात्रा तु यापनेऽपि स्याद्गमनोत्सवयोः स्त्रियाम्" ( इति मेदिनी ) व्रजनं व्रज्या अभिनिर्यातमभिनिर्याणम्, प्रस्थितं प्रस्थानम्, गतं गमनम्, गमनं गमः "गमोनाक्षविवर्ते स्यादपर्यालोचितेऽध्वनि" ( इति मेदिनी ) इति षट् प्रस्थानमात्रस्य ॥ ९५ ॥

फ़ौज का फैलाव चलती फ़ौज भयरहित वीर का जाना — **(स्यादा)** पु. **सारः** न. **प्रसरणं** न. **प्रचक्रं** न. **चलिता ( र्थकम् ) ।**

**(अहितान्प्रत्यभीतस्य रणे यान)** पु. **मभिक्रमः ॥ ९६ ॥**

स्येति—आसरणमासारः स्यात् "आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले" ( इति विश्वः ) प्रसृतं प्रसरणम् प्रसरणी इति पाठे तु प्रसरतीति प्रसरणिः कृदिका-

रादिति वा ङीपि प्रसरणी इति द्वे सर्वतोव्यापिसैन्यप्रसरणस्य । प्रस्थितं चक्रं सैन्यं प्रचक्रम्, चलितमेवार्थो यस्येति चलितार्थकम् चलितशब्दस्य समानार्थकम् "प्रचक्रं चलितं त्रिषु" (इत्यमरमाला) इति द्वे प्रस्थितसैन्यस्य । रणे संग्रामे अभीतस्य भयरहितस्य अहितान्प्रतियानम् अभिक्रमणमभिक्रमः स्यादित्येकमभीतयानस्य ॥ ९६ ॥

प्रभात जगाने-वाले घड़ि-याली यश-गायक भाट

पु. पु. पु. पु.
**वैतालिका बोधकराश्चाक्रिका घाण्टिका (र्थकाः)।**
पु. पु. पु. पु.
**(स्यु)र्मागधा(स्तु मगधा वन्दिनः स्तुतिपाठकाः॥९७॥**

वायिति—विविधेन तालेन शब्देन चरन्तीति वैतालिकाः, बोधं कुर्वन्तीति बोधकरा इति द्वे प्रातर्जागरणकारिणः । चक्रेण समूहेन चरन्तीति चाक्रिकाः, घण्टया चरन्तीति घाण्टिकास्त एवार्था येषामिति घाण्टिकार्थकाः इति द्वे बहुमिलितनृपस्तुत्यादिपाठकानाम्। क्वचित्तु "चक्रिका घटिकार्थका इति पाठः । तत्र चक्रमस्ति वाद्यत्वेन येषामिति चक्रिकाः, घटीं कायन्तीति घटिकास्त एवार्था येषामिति घटिकार्थकाः इति द्वे घटिकावादकानाम् । मगध्यन्ति याचन्त इति मगधास्त एव मागधाः अणोऽभावे मगधा इति द्वे वंशपरम्पराशंसकानाम् । अवश्यं वन्दन्त इति वन्दिनः "वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः" पठन्तीति पाठकाः स्तवनं स्तुतिस्तस्याः पाठकाः स्तुतिपाठकाः इति द्वे वन्दिनः "भाट" इति ख्यातस्य ॥ ९७ ॥

लड़ाई से नहीं भागनेवाला

पु.
**संशप्तका (स्तु समयात्संग्रामादनिवर्तिनः)।**

धूरि या धूलि

पु.स. स. पु. न.
**रेणु(र्द्वयोः स्त्रियां)धूलिः पांशु(र्ना न द्वयो) रजः॥९८॥**

समिति—समयाच्छपथाद्धेतोराचाराद्वा ये संग्रामात् न निवर्तितुं शीलं येषामिति अनिवर्तिनोऽपराङ्मुखास्ते संशपनं शपथं कुर्वन्ति संशप्तयन्तीति, संशप्तं सम्यक् शप्तं सत्यं येषामिति वा संशप्तकाः स्युरित्येकं रणादपराङ्मुखानाम् । रिणाति, रीयते वा रेणुः । द्वयोः स्त्रीपुंसयोः स्यात्, धुवति, धूयते, धवनं धूस्तया लीयते वा धूलिः स्त्रियां स्यात्, पंशतीति पांशुः, पांसुरिति दन्त्यान्तश्च ना पुमान् स्यात्, रजतीति रजः सान्तोऽदन्तश्च द्वयोः स्त्रीपुंसयोः न स्यादिति चत्वारि रजसः ॥ ९८ ॥

बड़ी धूलि बड़ी व्याकुल फ़ौज झण्डा या निशाना

पु.न. पु. पु. पु.
**(चूर्णे) क्षोदः समुत्पिञ्जपिञ्जलौ (भृशमाकुले)।**
स. स. न. पु.न.
**पताका वैजयन्ती स्यात्केतनं ध्वज(मस्त्रियाम्)॥९९॥**

---

१ उत्पिञ्जलश्च । "कुर्वाणमुत्पिञ्जलजातपत्रैः" (इति माघः) इति मुकुटः ॥

चूरिति—चूर्ण्यत इति चूर्णः, " चूर्णा निवासयोगाः स्युश्चूर्णो धूलिः सशर्करा " ( इति शाश्वतः ) क्षुद्यत इति क्षोदः " क्षोदः पेषणचूर्णयोः " ( इति हैमः ) इति द्वे सशर्करधूलेः षडेव रजस इत्येके । भृशमाकुले अतिसंकुले समुत्पिञ्जयतीति समुत्पिञ्जः, पिञ्जं लातीति पिञ्जलः उभौ स्यातामिति द्वे अतिसंकुलस्य । पतति, पत्यतेऽनयेति वा पताका " पताका वैजयन्त्यां स्यात्सौभाग्यनाटकाङ्कयोः " ( इति विश्वमेदिन्यौ ) विजयत इति विजयन्तस्तस्येयं वैजयन्ती " वैजयन्तो गुहे शक्रप्रासादध्वजयोः पुमान् । वैजयन्ती पताकायां जयन्ती पादपे स्त्रियाम्" ( इति मेदिनी ) केत्यते ज्ञायतेऽनेनेति केतनम् " केतनन्तु निमन्त्रणे । गृहे केतौ च कृत्ये च " ( इति मेदिनी ) ध्वजतीति ध्वजः "ध्वजः पूर्वदिशोगृहे । शिश्ने चिह्ने पताकायां खट्वाङ्गे शौण्डिकेऽपि च" ( इति हैमः ) इति चत्वारि पताकायाः ॥ ९९ ॥

भयावनी युद्ध-भूमि (सा) वीराशंसनं ( युद्धभूमिर्याऽतिभयप्रदा ) ।
स.
हम पहले लड़ैंगे (अहं पूर्वमहं पूर्वमित्य) हंपूर्विका ( स्त्रियाम् ) ॥ १०० ॥

सेति—या युद्धभूमिः रणभूमिः अतिभयप्रदा भृशं भीतिप्रदायिका सा वीरा आशंस्यन्तेऽत्रेति वीराशंसनं स्यादित्येकमतिभीतिप्रदाया रणभूमेः । अहं पूर्वमहं पूर्वमित्यस्यामिति अहंपूर्विका स्त्रियां स्यादित्येकं 'अहं पूर्वमहं पूर्वमिति' योधानां धावनक्रियायाः ॥ १०० ॥

हमीं पुरुष हैं या हमीं लड़ैंगे आहोपुरुषिकादर्पाद्या स्यात्संभावनात्मनि ।
आपस में घमंड करना अहमहमिका तु सा स्यात्परस्परं योभवत्यहंकारः १०१॥

आहविति—दर्पादभिमानादात्मनि या संभावना सा अहो अहं पुरुषः अहोपुरुषस्तस्यभावः आहोपुरुषिका स्यादित्येकमात्मनि शक्त्याविष्करणस्य । यः परस्परं अहंकारो भवति सा अहमहंशब्दोऽस्त्यत्रेति अहमहमिका स्यादित्येकं परस्पराहंकारस्य ॥ १०१ ॥

न. न. न. न. न. न. न.
सामर्थ्य द्रविणं तरःसहोबलशौर्याणि स्थाम शुष्मं (च) ।
स. पु. पु. पु. स.
अतिसामर्थ्य शक्तिः पराक्रमप्राणौ विक्रमस्त्वतिशक्तिता ॥ १०२ ॥

द्रेति—द्रवत्यनेनेति द्रविणम्, " द्रविणं काञ्चने धने । पराक्रमे बलेऽपि स्यात् " ( इति हेमचन्द्रः ) तरत्यनेनेति तरः " तरो जवे बले " ( इति हैमः ) सह्यतेऽनेनेति सहः " सहो बले ज्योतिषि च सहा हेमन्तमार्गयोः " (इति सान्तेषु हैमः) "दण्डोत्पला मुद्गपर्णी कुमारीनखभेषजे । सहास्त्रियां बले न स्त्री " (इति रभसाददन्तमपि,)

वलते, वलत्यनेनेति वा बलम् " वलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः। पुमान् हलायुधे दैत्यप्रभेदे वायसेऽपि च। बलयुक्तेऽन्यलिङ्गः स्याद्बाल्याल्लके तु योषिति " (इति मेदिनी) शूरस्य भावः कर्म वा शौर्यम् "शौर्यमारभटीशक्त्योः" (इति विश्वः) तिष्ठत्यनेनेति स्थाम, शुष्यत्यनेनारिरिति शुष्मम् "शुष्मं तेजसि सूर्ये ना" (इति मेदिनी) शक्यतेऽनयेति शक्तिः " शक्तिरायुधभेदे स्यादुत्साहादौ बले स्त्रियाम् " (इति हैमः) पराक्रम्यतेऽनेनेति पराक्रमः " पराक्रमो विक्रमे स्यात्सामर्थ्योद्योगयोरपि" (इति विश्वः) प्राणित्यनेनेति प्राणः "प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले। पुंलिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चासुषु " (इति मेदिनी) इति दश सामर्थ्यस्य। विक्रमणं विक्रमः " विक्रमस्तु पुमान् क्रान्तिमात्रे स्याच्छक्तिसंपदि " (इति मेदिनी) अतिशयिता शक्तिर्यस्य तस्य भावोऽतिशक्तिता इति द्वे अतिसामर्थस्य ॥ १०२ ॥

न.
नशा करना **वीरपाणं (तु यत्पानं वृत्ते भाविनि वा रणे)।**

वीति—रणे संग्रामे वृत्ते प्रवृत्ते निवृत्ते भाविनि वा सति वीराणां यत्पानं तत् वीरपानं स्यात्। वीराणां पानम् वीरपाणं वीरपानं वा इत्येकं मद्यपानस्य ॥

न. न. न. न. न.
लड़ाई **युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ॥ १०३ ॥**

न. न. न. न. न.
**मृधमास्कन्दनं संख्यं समीकं संपरायकम्।**

पु. पु. पु. पु. पु.
**(अस्त्रियां) समरानीकरणाः कलहविग्रहौ ॥१०४॥**

पु. पु. पु. पु. पु.
**सम्प्रहाराभिसंपातकलिसंस्फोटसंयुगाः[1]।**

पु. पु. पु. पु. पु.
**अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः ॥ १०५ ॥**

पु. स. स. स. स. स.
**समुदायः (स्त्रियः) संयत्[2]समित्याजिसमिद्युधः ॥**

य्विति—योधनं युद्धम्, आयुद्धमायोधनम्, जननं, जायते वा जन्यम् " जन्यं हट्टे परीवादे संग्रामे च नपुंसकम् " (इति विश्वमेदिन्यौ) प्रधानम्, प्रधन्ति वा प्रधनम् " प्रधनं युधि दारणे " (इति हैमः) प्रविदारितं प्रविदारणम् " प्रविदारणमाख्यातं संपरायेऽवदारणे " (इति मेदिनी) मर्दनं मृधम्, आस्कन्दितमास्कन्दनम् " आस्कन्दनं तिरस्कारे रणे संशोषणेऽपि च " (इति विश्वः) संख्यानं संख्यम्

---

१ रथयुग इति निर्देशात्—प्रतिजनादिपुगणे संयुगशब्दपाठाद्वा गुणाभावः ॥

२ संयत्तुरस्यपि " खेजिसंयत्यतुलास्त्रगौरवे " (इति दण्डी) ॥

" संख्यमाहवे । संख्यैकादौ विचारे च " ( इति हैमः ) समनं समीकम्, संपरायणं संपरायस्तदेव संपरायकम् ( ठकि ) साम्परायिकोऽपि, एते समरादयः समुदायान्ता अस्त्रियां पुंनपुंसके स्युः । समरणं समरः, अननं, ननयनं वा अनीकः "अनीकोऽस्त्री रणे सैन्ये " ( इति मेदिनी ) रणनं रणः " रणः कोणे क्वणे पुंसि समरे पुन्नपुंसकम् " ( इति मेदिनी ) " कलं तु मधुरध्वनौ " ( इति धरणिः ) कलस्य हननमिति कलहः, विग्रहणं विग्रहः " विग्रहो युधि विस्तारे प्रविभागशरीरयोः " ( इति हैमः ) संप्रहरणं संप्रहारः " संप्रहारो गतौ रणे " ( इति हैमः ) अभिसंपतनमभिसंपातः, कलनं कलिः " कलिर्विभीतके शूरे विवादेऽन्त्ययुगे युधि " ( इति हैमः ) संस्फोटनं संस्फोटः, संयोजनं संयुगः, अभ्यामर्दनमभ्यामर्दः, अभिमर्दनमभिमर्दोऽपि, समाहननं समाघातः " समाघातो वधे युद्धे " ( इति मेदिनी ) संग्रामणं संग्रामः, अभ्यागमनमभ्यागमः " अभ्यागमः समरेऽन्तिके । घातेरोधेऽभ्युपगमे " ( इति हैमः ) आह्वानमाहवः " आहवः समरे यज्ञे " ( इति हैमः ) समुदयनं समुदायः, संयतनं, संयमनं वा संयत्, समयनं समितिः " समितिर्युधि संगमे । साम्ये सभायामिति " ( हेमचन्द्रः, ) अजनमाजिः " आजिः स्त्री समभूमौ संग्रामे " ( इति मेदिनी ) समयनं समित् , योधनं युद् एते संयदादयः स्त्रियः स्युरित्येकत्रिंशत्प्रहरणक्रियायाः ॥ १०३ । १०५ । १/२ ॥

बाहुयुद्ध रण व्याकुलता सिंहनाद हाथियों का गिरोह वीरों को निन्दापूर्वक पुकारना हाथियों की गर्जना

**नियुद्धं (न.) बाहुयुद्धे (न.) ( स्यात्तुमुलं (न.)) रणसंकुले (न.) ॥ १०६ ॥**

**क्ष्वेडा (स.) ( तु ) सिंहनादः (पु.) ( स्यात्करिणां)घटना (स.) घटा (स.) ।**

**क्रन्दनं (न.) योधसंरावो (पु.) बृंहितं (न.) करिगर्जितम् (न.) ॥ १०७ ॥**

नीति—बाहुयुद्धे नियुद्धं स्यात् । निगृह्य, नितरां वा युद्धं नियुद्धम्, बाहुभिर्युद्धं बाहुयुद्धमिति द्वे बाहुयुद्धस्य । रणसंकुले रणव्याकुले तुमुलं स्यात् । तवनं तौति वा तुमुलम् " तुमुलं व्याकुले रणे " ( इति त्रिकाण्डशेषः ) रणस्य संकुलं रणसंकुलमिति द्वे रणव्याकुलतायाः ।[१]क्ष्वेदनं पृषोदरादित्वात् क्ष्वेडा रूपभेदात्स्त्रीत्वम् " विशेषैर्यद्यबाधितः " इति परिभाषणान्न पुंस्त्वम् , सिंहवन्नदनं सिंहनादः स्यादिति द्वे योधानां सिंहनादस्य । करिणां हस्तिनां समुदाये घटयतीति घटना, घटनं घटा " घटः समाधिभेदेभशिरःकूटकुटेषु च । घटा घटनगोष्ठीभघटनासु च योषिति "

---

१ क्ष्वेडो ध्वनौ कर्णामये विषे । क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति । लोहितार्कपर्णफलेघोषपुष्पे नपुंसकम् । दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्तितः ( इति मेदिनी ) ॥

( इति मेदिनी ) इति द्वे हस्तिसंघस्य । क्रन्दितं क्रन्दनं " क्रन्दनं रोदनेऽपि स्यादाह्वानेऽपि " ( इति मेदिनी ) संरवणं संरावः योधानां संरावः योधसंरावः इति द्वे अन्योन्यस्पर्धया योधानामाह्वानस्य । बृंहणं बृंहितम्, करिणां गर्जनं करिगर्जितं स्यादिति द्वे हस्तिगर्जनस्य ॥ १०६ । १०७ ॥

धनुषका शब्द, जुभाऊन-गाड़ा, हठ धोखा देना

पु.　　　　पु.　पु.
**विस्फारो ( धनुषः स्वानः ) पटहाडम्बरौ ( समौ ) ।**
न.　　　　पु.　पु.　　न.　न.
**प्रसभं (तु) बलात्कारो हठो (ऽथ) स्खलितं छलम् ॥१०८॥**

वीति—धनुषः स्वानः विस्फरणं, विस्फुरणं वा विस्फारः स्यादित्येकं धनुर्नादस्य । पटं हन्तीति पटहः "पटहो ना समारम्भे आनके पुंनपुंसकम्" (इति मेदिनी) आडम्बनमाडम्बस्तं राति, रायति वा आडम्बरः उभौ समौ समानार्थौ समानलिङ्गाविति "आडम्बरः समारम्भे गजगर्जिततूर्ययोः " ( इति विश्वः ) इति द्वे युद्धपटहस्य " दमदमा" इति ख्यातस्य । प्रगता सभा विचारोऽस्मात्, सभायाः प्रगतो वेति प्रसभम् " क्लीवे तु प्रसभं हठः " ( इति वोपालितः ) बलादिति निपातो हठार्थः बलात्करणं बलात्कारः हठनं हठः "हठः स्यात्प्रसभे पृश्न्यामिति" (मेदिनी) इति त्रीणि हठस्य । अथेति—स्खलनं स्खलितम् " स्खलनं छलिते भ्रेषे " छानं छलम् " छलं छद्म स्खलितयोः " ( इति हैमः ) इति द्वे युद्धमर्यादायाश्चलनस्य ॥ १०८ ॥

उत्पात मूर्च्छा देशों को उपद्रव पहुँचाना

न.　　　　पु.　पु.
**अजन्यं ( क्लीवे ) उत्पात उपसर्गः ( समं त्रयम् ) ।**
स.　　न.　　पु.　　पु.　　न.
**मूर्च्छा (तु) कश्मलं मोहोऽप्यवमर्द (स्तु) पीडनम् ॥१०९॥**

अजेति—न जन्यते, न जने साधुर्वेति अजन्यं क्लीवे नपुंसके स्यात्। उत्पतनमुत्पातः, उपसृज्यते, उपसर्जनं वा उपसर्गः " उपसर्गः पुमान् रोगभेदोपप्लवयोरपि " ( इति मेदिनी ) इदं त्रयं समं समानार्थकं स्यादिति त्रीणि शुभाशुभसूचकमहाभूतविकारस्य । मूर्च्छनं मूर्च्छा, कशनं कश्मलम्, मोहनं मोहः "अथ मोहो नृलिङ्गः स्यादविद्यायां च मूर्च्छने " ( इति मेदिनी ) इति त्रीणि मूर्च्छायाः । अवमर्दनमवमर्दः, पीडितं पीडनमिति द्वे देशादेरुपद्रवदानस्य ॥ १०९ ॥

धोखे से दबाना विजय या फतेपाना वैर मिट जाना

न.　　　　न.　पु.　पु.
**अभ्यवस्कन्दनं ( त्व ) भ्यासादनं विजयो जयः ।**
स.　　　पु.　　　न.
**वैरशुद्धिः प्रतीकारो वैरनिर्यातनं ( च सा ) ॥ ११० ॥**

अभीति—अभ्यवस्कन्दितमभ्यवस्कन्दनम्, अभ्यासादितमभ्यासादनमिति द्वे प्रहारा-

दिना निःशक्तिकरणस्य । विजयनं विजयः, " विजयः स्याज्जये पार्थे स्त्रियां तिथ्यन्तरे स्मृता । उमासख्याम् " ( इति मेदिनी ) जयनं जयः " जया जयन्तीतिथिभित्पथ्यो-मा तत्सखीषु च । अग्निमन्थे ना जयन्ते विजये च युधिष्ठिरे " ( इति मेदिनी ) इति द्वे विजयस्य । सा वैरस्य शुद्धिः वैरशुद्धिः स्यात्, प्रतिकरणं प्रतीकारः निर्यातितं निर्यातनम् वैरस्य निर्यातनं वैरनिर्यातनमिति त्रीणि वैरशोधनस्य ॥ ११० ॥

पु. पु. पु. पु. पु. पु.

भागना **प्रद्रावोद्द्रावसंद्रावसंदावा विद्रवो द्रवः ।**

पु. न. पु.

हारना **अपक्रमोपयानं च ( रणे भङ्गः ) पराजयः ॥ १११ ॥**

प्रेति—प्रद्रवणं प्रद्रावः, उद्द्रवणमुद्द्रावः, संद्रवणं संद्रावः, संद्रवनं संदावः, विद्रवणं विद्रवः, द्रवणं द्रवः " द्रवः प्रद्रावनर्मणोः । विद्रवे रसगत्योश्च " ( इति हैमः ) अपक्रमणमपक्रमः, अपयातमपयानमित्यष्टौ पलायनस्य । रणे संग्रामे यः भङ्गः स पराजयः स्यात् । भञ्जनं भङ्गः " भङ्गो जयविपर्यये । भेदरोगतरङ्गेषु भङ्गा सस्यान्तरे स्त्रियाम् " ( इति मेदिनी ) पराजयनं पराजयः इति द्वे पराजयस्य ॥ १११ ॥

पु. पु. पु. पु.

हारा छिपा **पराजितपराभूतौ (त्रिषु) नष्टतिरोहितौ ॥ १/२ ॥**

पेति—पराजीयते स्म, परैराजीयते स्म वा पराजितः, पराभूयते स्म पराभूतः उभौ त्रिषु त्रिलिङ्ग्यां स्यातामिति द्वे प्राप्ताभिभवस्य । नश्यति स्म नष्टः, तिरोधीयते स्म, हिनोति स्म वा तिरोहितः नशनं नष्टं नष्टमस्यास्तीति नष्टः, तिरोहितमस्त्यस्येति तिरोहितो वा " अत्र काकाक्षिगोलकन्यायेन त्रिष्विति पदं पूर्वोत्तराभ्यां संबध्यते " इति न्यायादिमावपि त्रिलिङ्ग्यां स्यातामिति द्वे तिरोहितस्य ॥ १/२ ॥

न. न. न. न.

वधना, मारना या क़तल करना **प्रमापणं निर्वर्हणं निकारणं विशारणम् ॥ ११२ ॥**

न. न. न. न.

**प्रवासनं परासनं निषूदनं निर्हिंसनम् ।**

न. न. न. न.

**निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ॥ ११३ ॥**

न. न. न. न.

**निस्तर्हणं निहननं क्षणनं परिवर्जनम् ।**

न. न. न. न.

**निर्वापणं विशसनं मारणं प्रतिघातनम् ॥ ११४ ॥**

न. न. न. न.

उद्वासनप्रमथनक्रथनोज्जासनानि ( च )।

पु. पु. पु. पु. पु. पु.

आलम्भपिञ्जविशरघातोन्माथवधा (अपि) ॥ ११५ ॥

प्रेति—प्रमापितं प्रमापणम्, निर्वर्हितं निर्वर्हणम्, निकारितं निकारणम्, विशारितं विशारणम्, प्रवासितं प्रवासनम्, परास्तं परासनम्, निषूदितं निषूदनम्, निहिंसितं निर्हिंसनम्, निर्वासितं निर्वासनम्, संज्ञपितं संज्ञपनम्, निर्ग्रन्थितं निर्ग्रन्थनम्, निर्गन्थनमित्यन्ये अपास्तमपासनम्, निस्तर्हितं निस्तर्हणम्, निहतं निहननम्, क्षतं क्षणनम्, परिवर्जितं परिवर्जनम्, निर्वापितं निर्वापणम्, विशस्तं विशसनम्, मारितं मारणम्, प्रतिघातितं प्रतिघातनम्, उद्वासितमुद्वासनम्, प्रमथितं प्रमथनम्, क्रथितं क्रथनम्, उज्जासितमुज्जासनम्, आलम्भनमालम्भः, पिञ्जनं पिञ्जः, विशरणं विशरः, हननं घातः, उन्मथनमुन्माथः "मुकुटमते तु" "उन्मन्थनमुन्मन्थः", हननं वधोऽपीति त्रिंशन्मारणस्य ॥ ११२ । ११५ ॥

स. पु. पु. पु. पु.

मृत्यु या मौत ( स्यात् ) पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः।

पु. पु. पु.स. न. पु.न.

अन्तो नाशो (द्वयो) र्मृत्युर्मरणं निधनो (ऽस्त्रियाम्) ॥ ११६ ॥

स्यादिति—पञ्चानां भावः पञ्चता "पञ्चता पञ्चभावे स्यान्मरणेऽपि च योषिति" ( इति मेदिनी ) कालस्य धर्मः कालधर्मः, दिष्टस्य दैवस्यान्तो दिष्टान्तः, प्रलयनं प्रलयः अत्ययनमत्ययः, "अत्ययोऽतिक्रमे दण्डे विनाशे दोषकृच्छ्रयोः" ( इति मेदिनी ) अन्तनमन्तः, "अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। अवयवेऽपि" ( इति हैमः ) नशनं नाशः "नाशः पलायने मृत्यौ परिध्वस्तावदर्शने" ( इति हेमचन्द्रः ) मरणं मृत्युः द्वयोः स्त्रीपुंसयोः स्यात् "मृत्युर्ना मरणे यमे" ( इति मेदिनी ) मृतं मरणम्, निधानं निधनम् अस्त्रियां पुंनपुंसकं स्यात् "निधनं स्यात्कुले नाशे" ( इति मेदिनी ) इति दश मरणस्य ॥ ११६ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

मुर्दा परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः।

पु.स.न. पु.स.न. स. स. स.

चिता मृतप्रमीतौ (त्रिष्वेते) चिता चित्या चितिः (स्त्रियाम्) ११७

प्रेति—परा गता असवः प्राणा यस्मादिति परासुः, प्राप्तं पञ्चत्वं येनेति प्राप्तपञ्चत्वः परलोकमितः परा दूरमितो वा परेतः "परेतो वाच्यलिङ्गः स्यान्मृते भूतान्तरे पुमान्"

( इति मेदिनी ) प्रकर्षेण इतः प्रेतः “ प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः ” ( इति मेदिनी ) सन्तिष्ठते स्म संस्थितः, म्रियते स्म मृतमस्त्यस्येति वा मृतः, प्रमीयते स्म प्रमीतः “ प्रमीतं वाच्यलिङ्गं स्यात्प्रोषितेऽपि मृतेऽपि च ” ( इति मेदिनी ) एते परास्वादयः प्रमीतान्तास्त्रिपु त्रिलिङ्गयां स्युरिति सप्त परेतस्य । चीयतेऽस्यामिति चिता “ चितं छन्ने त्रिपु चिता चित्यायां संहतौ स्त्रियाम् ” ( इति मेदिनी ) चयनं चित्या “ चित्यं मृतकचैत्ये स्याच्चित्या मृतचितौ स्त्रियाम् ” ( इति मेदिनी ) चीयतेऽस्यामिति चितिः स्त्रियां स्यात् “ चितिश्चित्यावृन्दयोः स्त्री ” ( इति मेदिनी ) इति त्रीणि चितायाः ॥ ११७ ॥

पु.न.
मूंड़कटा कबन्धो(ऽस्त्री[1]क्रियायुक्तमपमूर्धकलेवरम्) ।
श्मशान न. न. पु. पु.न.
निर्जीव या लाश श्मशानं(स्या)त्पितृवनं कुणपः शव(मस्त्रियाम्)॥११८॥

केति—क्रियायुक्तं नृत्यादिक्रियासम्बन्नम् अपगतो मूर्धा मस्तको यस्मात्तच्च कलेवरं शरीरं कंशिरो बध्यते छिद्यतेऽस्मात्, केन वायुना बध्यते वा कबन्धः अस्त्री पुंनपुंसकं स्यात् “ कबन्धमुदके रुण्डे कबन्धो राहुरक्षसोः ” ( इति हैमः ) इत्येकं रुण्डस्य । शवाः शेरतेऽत्रेति पृषोदरादित्वात् श्मशानं द्वितालव्यम् , “वनं नपुंसकं नीरे निवासालयकानने ” ( इति मेदिनी ) पितॄणां वनं, पितॄन् वनति वा पितृवनं स्यादिति द्वे श्मशानस्य । कणतीति कुणपः “ विट्सारिकायां कुणपः पूतिगन्धे शवेऽपि च ” ( इति विश्वमेदिन्यौ ) शवतीति शवः अस्त्रियां पुंनपुंसके स्यात् “ शवः स्यात्कुणपे पुमान् । नपुंसकं तु पानीये ”( इति मेदिनी ) इति द्वे मृतशरीरस्य ॥ ११८ ॥

पु. पु. स. स. पु.
क़ैदी, जेल- प्रग्रहोपग्रहौ बन्द्यां कारा(स्याद्बन्धनालये) ।
खाना, पु. पु. न.
प्राण, प्राणी (पुंसिभून्य)सवःप्राणा(श्चैवं)जीवोऽसुधारणम्॥ ११९॥

प्रेति—बन्द्यां प्रग्रहोपग्रहौ स्याताम् प्रगृह्यत इति प्रग्रहः “ प्रग्रहस्तु तुलासूत्रे बन्द्यां नियमने भुजे । हयादिरश्मौ रश्मौ च सुवर्णाहरिपादपे ” ( इति मेदिनी ) उपग्रह्यत इति उपग्रहः “ उपग्रहः पुमान्बन्द्यामुपयोगेऽनुकूलने ” ( इति मेदिनी ) वन्दते, वन्द्यते वा वन्दी वन्दिर्वा इति त्रीणि प्रग्रहस्य “ क़ैदी ” इति ख्यातस्य । बन्धनालये कारा स्यात् कीर्यतेऽत्रेति कारा “ कारो वधे निश्चये च बलौ यत्ने यतावपि । कारस्तुपारशैले च कारा दूत्यां प्रसेवके । बन्धने बन्धनागारे हेमकारिकयोरपि ”

१ “को ब्रह्मणि समीरात्मयमदम्भेषु भास्करे। मयूराग्नौ च पुंसि स्यात्सुखशीर्षजलेषु कम्”(इति मेदिनी)॥

( इति विश्वः ) बन्धनस्य आलयो बन्धनालयः इति द्वे बन्धनालयस्य "जेलखाना" इति ख्यातस्य । अस्यन्ति, अस्यन्ते वा असवः एवं प्राणन्त्येभिरिति प्राणाः उभौ पुंसि भूम्नि बहुत्वे स्यातामिति द्वे पञ्चवायूनाम् । जीवनं जीवः "जीवः प्राणिनि वृत्तौ च वृक्षभेदे बृहस्पतौ । जीवा जीवन्तिका मौर्वी वचा शिञ्जितभूमिषु । न स्त्री तु जीविते" (इति मेदिनी) धारितं धारणम् असूनां धारणमसुधारणमिति द्वे जीवनस्य ॥ ११९ ॥

आयुर्दाय जीवनोपाय — न. आयुर्जीवितकालो पु.न. (ना) जीवातुर्न. जीवनौषधम् ॥ १२० ॥

इति क्षत्रियवर्गः ॥

आयुरिति—एतीति आयुः, जीवितस्य कालो जीवितकालः इति द्वे जीवावच्छिन्न-कालस्य । जीवत्यनेनेति जीवातुः ना पुमान्स्यात्, "जीवातुरस्त्रिया भक्ते जीविते जीवनौषधे" ( इति मेदिनी ) जीवनस्य औषधम् जीवनौषधमिति द्वे मृतसंजीवनौ-षधस्य ॥ १२० ॥

इति क्षत्रियवर्गविवरणम् ॥

---

## अथ वैश्यवर्गो व्याख्यायते ।

वैश्य — पु. ऊरव्या पु. ऊरुजा पु. अर्या पु. वैश्या पु. भूमिस्पृशो पु. विशः ।

जीविका — पु. आजीवो पु. जीविका स. वार्ता स. वृत्तिर्न. वर्तनन. जीवने ॥ १ ॥

विति—ब्रह्मण ऊर्वोर्भवा ऊरव्याः, ऊरोर्जाता ऊरुजाः, अर्यन्ते इत्यर्याः, विश-न्तीति विशस्त एव वैश्याः, भूमिं स्पृशन्तीति भूमिस्पृशः, विशन्तीति विश इति षड् वैश्यस्य । आजीव्यतेऽनेनेति आजीवः, जीव्यतेऽनयेति जीविका " जीवकः प्राणके पीतसारक्षपणयोरपि । कूर्चशीर्षे च पुंसि स्यादाजीवे जीविका मता । त्रिषु सेविनि वृद्ध्याशीर्जीविनोराहितुण्डिके " ( इति मेदिनी ) वृत्तिरस्त्यस्यामिति वार्ता "वार्ता तु वर्तने वातिङ्गणे कृष्याद्युदन्तयोः । निस्साराऽऽरोग्ययोः क्लीबे वृत्तिमन्नीरुजोस्त्रिषु " ( इति मेदिनी ) वर्ततेऽनयेति वृत्तिः " वृत्तिर्विवरणा जीवकैशिक्यादि प्रवर्तने ( इति मेदिनी ) वर्तन्ते जीवन्त्यनेनेति वर्तनं "वर्तनो वामने क्लीबं वृत्तौ स्त्री पेषणाध्वनोः । न पुंसि तूलनालायां तर्कुपिण्डे च जीवने । वर्तिष्णौ त्रिषु " ( इति मेदिनी ) जीवन्त्यनेनेति जीवनमिति षड् जीवनोपायस्य ॥ १ ॥

---

१ " भूमि स्पृक् पुंसि मानववैश्ययोः " ( इति मेदिनी ) ॥

वैश्यों की जीविका — स. न. न.
( स्त्रियां ) कृषिः पाशुपाल्यं वाणिज्यं ( चेति वृत्तयः ) ।

नौकरी खेती सीला बिनना — स. स. न. स. पु. न. न.
सेवा श्ववृत्तिरनृतं कृषिरुञ्छशिलं ( त्वृ ) तम् ॥ २ ॥

स्त्रियामिति—कर्षणं कृषिः स्त्रियां स्यात्। पशून्पालयतीति पशुपालस्तस्य कर्म भावो वा पाशुपाल्यम्, वणिजां कर्म भावो वा वाणिज्यम् " वणिज्या च " " सत्यानृतं तु वाणिज्यं वणिज्या " ( इति हैमनाममाला ) इति वृत्तयो जीवनोपायाः स्युरिति प्रत्येकं जीवनोपायस्यैकैकम् । सेवनं सेवा, शुनो वृत्तिरिव, शुन इव वृत्तिर्वेति श्ववृत्तिरिति द्वे परचित्तानुवर्तनस्य । न ऋतमनृतम् " अनृतं कृषावसत्ये च " ( इति रुद्रः ) स्वामिमते तु "प्रमृतमिति पाठः सभ्यः, प्रमृतं कर्षणं स्मृतमिति" (मनुः) कर्षणं कृषिरिति द्वे कर्षणस्य । उञ्छनमुञ्छः, शिलनं शिलं तयोः समाहारद्वन्द्वः " उञ्छः कणश आदाने कणिशाद्यर्जनं शिलम् "( इति यादवः ) ऋच्छति, अर्यते वा ऋतम् " पुमानुञ्छः शिलमृतमिति " ( बोपालितः ) इति त्रीणि शिलोञ्छस्य ॥ २ ॥

मांगने व विना मांगने पै मिलै — न. न.
( द्वे याचितायाचितयोर्यथासंख्यं ) मृतामृते ।

बनियई — न. पु. न. न.
सत्यानृतं वणिग्भावः (स्याद्) ऋणं पर्युदञ्चनम् ॥ ३ ॥

उधार लेना व्याज — पु. पु. न. स.
उद्धारोऽर्थप्रयोग ( स्तु ) कुसीदं वृद्धिजीविका ।

मांगनेसे मिला बादे से मिला — न. न.
(याच्ञयाप्तं) याचितकं (निमयादा)पमित्यकम् ॥ ४ ॥

द्वे इति—मृतं चामृतं च मृतामृते द्वे याचितायाचितयोर्यथासंख्यं स्यातामित्येकैकं प्रार्थनाऽप्रार्थनक्रिययोस्तत्कर्मणोर्वा । सत्यसहितमनृतं शाकपार्थिवादित्वात् सत्यानृतम्, वणिजोभावो वणिग्भावः स्यादिति द्वे वाणिज्यस्य । अर्यते स्म ऋणम्, परित उदञ्च्यत इति पर्य्युदञ्चनम्, उद्ध्रियते उद्धारः " उद्धारश्चोद्धृतावृणे " ( इति मेदिनी ) इति त्रीणि ऋणस्य " क़र्ज़ " इति ख्यातस्य । अर्थस्य प्रयोगः अर्थप्रयोगः कुस्यत इति कुसीदम् " कुसीदं वृद्धिजीवने " ( इति हैमः ) वृद्ध्या जीविका वृद्धिजीविका इति त्रीणि कुसीदस्य " व्याज " इति ख्यातस्य । याच्ञयाप्तं याच्ञाप्राप्तं याचितेन निर्वृत्तं याचितकं स्यादित्येकं याचिताप्तस्य । निमयात्परिवर्तनाद्यदाप्तं तत् अपमानमपमित्य ल्यबन्तमव्ययं तेन आप्तमापमित्यकं स्यादित्येकं परिवर्तनेनाप्तस्य ॥ ३ । ४ ॥

---

१ " शुनो वृत्तिः स्मृता सेवा गर्हितं तद्द्विजन्मनाम् । हिंसादोषप्रधानत्वादनृतं कृषिरुच्यते" इति ॥

पु. पु.
महाजन,कर्जी उत्तमर्णाधमर्णौ(द्वौप्रयोक्तृग्राहकौ क्रमात्)।
पु. पु. पु. पु.
ब्याजखोर कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः॥ ५॥

उत्तेति—प्रयोक्ता च ग्राहकश्च प्रयोक्तृग्राहकौ द्वौ क्रमात् उत्तमर्णश्च अधमर्णश्च उत्तमर्णाधमर्णौ स्याताम् उत्तममृणमस्येति उत्तमर्णः स्यादित्येकमृणव्यवहारे धनस्वामिनः। अधममृणमस्येति अधमर्णः स्यादित्येकमृणव्यवहारे ग्राहकस्य। कुसीदार्थं प्रयच्छति कुसीदिकः, वृद्धिंगर्ह्यां प्रयच्छतीति वार्धुषिकः वृद्धिराजीवो जीविकास्येति वृद्ध्याजीवः, पृषोदरादित्वात्कलोपे वार्धुषिरिति चत्वारि वृद्ध्याजीवस्य "ब्याजखोर" इति ख्यातस्य॥ ५॥

पु. पु. पु. पु.
किसान क्षेत्राजीवः कर्षकश्च कृषक(श्च) कृषीवलः।
सामान्य धान्य पु.स.न. पु.स.न.
धान का खेत (क्षेत्रं) व्रैहेयशालेयं (व्रीहिशाल्युद्भवोचितम्)॥ ६॥

क्षेत्रेति—क्षेत्रमाजीवोऽस्येति क्षेत्राजीवः, कर्षतीति कर्षकः क्वुनि कृषकः वृद्धिपक्षे कार्षकोपि, कर्षणं कृषिः सास्त्यस्येति कृषीवल इति चत्वारि कर्षकस्य "किसान" इति ख्यातस्य। व्रीहिशाल्युद्भवोचितं क्षेत्रं व्रैहेयशालेयं स्यात् व्रीहीणां भवनं क्षेत्रं व्रैहेयमित्येकं धान्यसामान्योद्भवोचितक्षेत्रस्य। शालीनां च भवनं क्षेत्रं शालेयं स्यादित्येकं कलमाद्युत्पत्तियोग्यक्षेत्रस्य॥ ६॥

जव,सींकुररहित पु.स.न. पु.स.न. पु.स.न.
जव ओरसाठी यव्यं यवक्यं षष्टिक्यं (यवादिभवनं हि यत्)।
का तिल, उड़द, पु.स.न. पु.स.न.
अलसी, अणुवा,
भांगका तिल्यतैलीन (वन्माषोमाणुभङ्गाद् द्विरूपता)॥ ७॥

येति—यवादिभवनं यत् क्षेत्रं तत् यव्यं, यवक्यं, षष्टिक्यं च स्यात् यवानां भवनं क्षेत्रं यव्यं स्यादित्येकं यवोद्भवोचितक्षेत्रस्य। शूकशून्या यवा यवकास्तेषां भवनं क्षेत्रं यवक्यं स्यादित्येकं शूकशून्ययवोद्भवोचितस्य। षष्टिकानां भवनं क्षेत्रं षष्टिक्यं स्यादित्येकं षष्टिकोद्भवोचितस्य। माषोमाणुभङ्गात् तिल्यतैलीनवद् द्विरूपता स्यात् तिलानां भवनं क्षेत्रं तिल्यम्, तैलीनं च स्यादिति द्वे तिलोद्भवोचितस्य। माषाणां भवनं क्षेत्रं माष्यम्, माषीणं च स्यादिति द्वे माषोद्भवोचितस्य। उमानां भवनं क्षेत्रम् उम्यम्, औमीनं च स्यादिति द्वे उमोद्भवोचितस्य। अणूनां भवनं क्षेत्रम् अणव्यम्, आणवीनं च स्यादिति द्वे अणूद्भवोचितस्य। भङ्गाया भवनं क्षेत्रं भङ्ग्यम्, भाङ्गीनं च स्यादिति द्वे भङ्गोद्भवोचितक्षेत्रस्य॥ ७॥

मूँग, कोदों, गेहूँ, कयराव, कुल्थी, ककुनी, चना आदि शाक व तरकारी बोकर जुते खेत, जुते खेत

पु.स.न. पु.स.न.

**मौद्गीन कौद्रवीणा(दि शेषधान्योद्भवक्षमम्)।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

**बीजाकृतं[1] तूप्तकृष्टं सीत्यं कृष्टं (च) हल्य(वत्)॥ ८ ॥**

मौद्गीति—शेषधान्योद्भवक्षमं क्षेत्रं मौद्गीनकौद्रवीणादि स्यात्। मुद्गानां भवनं क्षेत्रं मुद्गीनं स्यादित्येकं मुद्गभवोचितस्य। कोद्रवाणां भवनं क्षेत्रं कौद्रवीणं स्यादित्येकं कोद्रवोद्भवोचितस्य। आदिना गोधूमानां भवनं क्षेत्रं गौधूमीनं स्यादित्येकं गोधूमोद्भवोचितस्य। कलायानां भवनं क्षेत्रं कालायीनं स्यादित्येकं कलायोद्भवोचितस्य। कुलत्थानां भवनं क्षेत्रं कौलत्थीनं स्यादित्येकं कुलत्थोद्भवोचितस्य। प्रियङ्गूणां भवनं क्षेत्रं प्रैयङ्गवीणं स्यादित्येकं प्रियङ्गूद्भवोचितस्य। चणकानां भवनं क्षेत्रं चाणकीनं स्यादित्येकं चणकोद्भवोचितस्येत्यादि विज्ञेयम्। बीजेन सह कृतं कृष्टं बीजाकृतम्, पूर्वमुप्तं च तत्पश्चात्कृष्टं च उप्तकृष्टमिति द्वे बीजाकृतस्य। सीतया संमितं सीत्यम्, कृष्यते स्म कृष्टम्, हलेन कृष्टं हल्यं तेन तुल्यं हल्यवत्स्यादिति त्रीणि हल्यस्य॥ ८ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

तीन बार जुते खेत **त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्य(मपि तस्मिन्)**

पु.स.न. पु.स.न.

दो बार जुते खेत **द्विगुणाकृते(तु तत्सर्वं द्विपूर्वं) शम्बाकृत(मपीह)॥ ९ ॥**

त्रीति—त्रिगुणं कृतं त्रिगुणाकृतम्, तृतीयं कृतं तृतीयाकृतम्, त्रिवारं हलेन कृष्टं त्रिहल्यम्, त्रिवारं सीतया संमितं त्रिसीत्यमपीति चत्वारि वारत्रयकृष्टस्य। तस्मिन् द्विगुणाकृते क्षेत्रे तु तत् पूर्वोक्तं सर्वं सकलं द्विपूर्वं स्यात् यथा द्विगुणं कृतं द्विगुणाकृतम्, द्वितीयं कृतं द्वितीयाकृतम्, द्विवारं हलेन कृष्टं द्विहल्यम्, द्विवारं सीतया संमितं द्विसीत्यम्, इह द्वितीयाकृते शम्बाकृतमपि शम्बशब्दो द्वितीयकर्षणे वर्तते शम्बं कृतं शम्बाकृतम् 'सम्बाकृतम्' दन्त्याद्यपि इति पञ्च द्विवारकृष्टस्य॥ ९ ॥

द्रोण, आढक, प्रस्थ, कुडव व खारीभर बोये जानेवाले खेत.

पु.स.न. पु.स.न.

**(द्रोणाढकादि[2] वापादौ) द्रौणिकाढकिका(दयः)।**

पु.स.न.

**(खारीवापस्तु) खारीक (उत्तमर्णादयस्त्रिषु)॥ १० ॥**

द्रोणेति—द्रोणश्च आढकश्च तावादी येषामिति तेषां वपनम्, उप्यन्तेऽत्रेति वा वापः स एवादिर्थस्येति तस्मिन् द्रौणिकश्च आढकिकश्च तावादी येषामिति ते स्युरिति

---

१ अबीजं सबीजं संपन्नं बीजाकृतमिति स्वामी तन्न "अभूततद्भावे" इत्यस्यानुवृत्तेः॥

२ "शरावाभ्यां भवेत्प्रस्थश्चतुःप्रस्थैस्तथाढकः। चतुराढको भवेद्द्रोणः खारी द्रोणचतुष्टयम्। कुडवोऽर्द्धशरावकः"। (इति शार्ङ्गधरभावप्रकाशौ)॥

यथा द्रोणस्य वापः द्रौणिकः स्यादित्येकं द्रोणपरिमितधान्यवापोचितक्षेत्रस्य। आढकस्य वापः आढकिकः स्यादित्येकमाढकपरिमितधान्यवापोचितस्य। आदिना प्रस्थस्य वापः प्रास्थिकः स्यादित्येकं प्रस्थपरिमितव्रीह्यादिवापयोग्यस्य। कुडवस्य वापः कौडविकः स्यादित्येकं कुडवपरिमितधान्यादिवापयोग्यस्य। वापादावित्यादिना पचाद्यर्थग्रहस्तेन द्रोणम्, आढकं च पचतीत्यादि विज्ञेयम्। खार्या वापः खारीकः स्यादित्येकं खारीपरिमितधान्यवापोचितकेदारस्य। उत्तमर्णादयः खारीकान्तास्त्रिषु त्रिलिङ्गयां स्युर्वाच्यलिङ्गा भवन्तीति ॥ १० ॥

पु. पु. न.

खेत (पुंनपुंसकयो) वप्रः केदारः क्षेत्र (मस्य तु)।

न. न. न. न.

खेतों के समूह केदारकं (स्या) त्कैदार्यं क्षैत्रं कैदारिकं (गणे) ॥ ११ ॥

पुमिति—उप्यतेऽत्रेति वप्रः पुंनपुंसकयोः स्यात्, "वप्रस्ताते पुमानस्त्री रेणौ क्षेत्रे चये तटे" (इति विश्वः) के जले शिरसि वा दारोऽस्य, केन जलेन दीर्यत इति वा केदारः "केदारोऽद्रौ शिवे क्षेत्रे भूमिभेदालवालयोः" (इति विश्वः) क्षीयते धान्यैरत्रेति क्षेत्रम् "क्षेत्रं भारतादौ भगाङ्गयोः। केदारे सिद्धिभूपत्न्योः" (इति हैमः) इति त्रीणि क्षेत्रस्य "खेत" इति ख्यातस्य। तथा अस्य गणे समुदाये तु केदाराणां समूहः कैदारकम्, यञि कैदार्यम्, क्षेत्राणां समूहः क्षैत्रम्, केदाराणां गणः कैदारिकं स्यादिति चत्वारि केदारसमूहस्य ॥ ११ ॥

ढेला पु.न. पु. पु. पु.

सरावनि लोष्टानि लेष्टवः (पुंसि) कोटिशो लोष्टभेदनः।

चाबुक खन्ता न. न. न. न. न.

या कुदार प्राजनं तोदनं तोत्रं[१] खनित्रमवदारणम् ॥ १२ ॥

लविति—लोष्टतीति लोष्टम्, द्वित्वे लोष्टे, बहुत्वे लोष्टानि स्युः पुंलिङ्गोऽप्ययम् "लेष्टुः शठेऽपि लोष्टः स्यात्" (इति बोपालितः) लिशति, लिश्यते वा लेष्टुः, द्वित्वे लेष्टू, बहुत्वे लेष्टवः पुंसि भवन्तीति द्वे लोष्टस्य "ढेला" इति ख्यातस्य। कोटिना अग्रेण श्यति, कोटिरस्यास्तीति वा कोटिशः, लोष्टानां भेदनः लोष्टभेदन इति द्वे लोष्टभेदनकाष्ठस्य "सरावनि, हेंगा, पटेला, मई" इति ख्यातायाः। प्रवीयते प्राज्यते वानेनेति प्राजनम्, प्रवयणम् वा तुद्यतेऽनेनेति तोदनम्, ष्ट्रनि प्रत्यये तु तोत्रम् "तोत्रन्तु प्राजने वेणुकेऽपि च" (इति विश्वमेदिन्यौ) इति त्रीणि वृषभादिप्रेरणदण्डस्य। खन्यतेऽवदार्यतेऽनेनेति खनित्रम्, अवदार्यतेऽनेनेति अवदारणमिति द्वे खनित्रस्य "खन्ता" इति ख्यातस्य ॥ १२ ॥

---

१ यलक्ष्यम् "तोत्रवेत्रैकपाणये" इति ॥

हँसिया, जोत, फार, हर, सैला

न. न. न. न. न. न.
**दात्रं लवित्रमाबन्धो योत्रं योक्त्र (मथो) फलम्।**
न. न. पु. पु. न. न.
**निरीशं कुटकं फालः कृषिको लाङ्गलं हलम्॥ १३॥**
न. पु. स. पु.
**गोदारणं (च) सीरो (ऽथ) सम्या (स्त्री) युगकीलकः।**

देति--दात्यनेनेति दात्रम्, लूयतेऽनेनेति लवित्रमिति द्वे दात्रस्य "हँसिया" इति ख्यातस्य। आबध्यतेऽनेनेति आबन्धः, यूयतेऽनेनेति योत्रम्, युज्यतेऽनेनेति योक्त्रमिति त्रीणि वृषादेर्गले युगबन्धनस्य। अथविति–फलतीति फलम् "फलं हेतुकृते जातीफले फलकसस्ययोः। त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः। फली फलिन्याम्" (इति हैमः) ईशाया निर्गतं निरीशम् स्वामिमते तु निष्क्रान्ता ईषास्मादिति निरीषं मूर्धन्यान्तमपि, कुटतीति कुटकम् कूटयति छिनत्तीति विग्रहे तु कूटं तदेव कूटकमिति दीर्घाद्यमपि, फालयतीति फालः, कृषतीति कृषिकः "कृषिकाकृषिकौ फालकृषकाविति रुद्रात्स्त्रियामपि" क्वचित्तु कृषकः "कृषकः पुंसि फाले स्यात्कर्षके त्वभिधयवत्" (इति विश्वः) इति पञ्चापि फालस्य आद्यत्रयं यत्र काष्ठे फालो निबध्यते तस्य अन्त्यद्वयं तु फालस्येति स्वामी। लङ्गतीति लाङ्गलम् "लाङ्गली तोयपिप्पल्यां क्लीबन्तु कुसुमान्तरे। गोदारणे तृणराजगृहदारुविशेषयोः" (इति मेदिनी) हलतीति हलम् ज्वलादित्वात् णप्रत्यये तु हालोऽपि "हालः फालवहः सीता" (इति विक्रमादित्यः) गां भूमिं दारयति, गौर्भूमिर्दार्यतेऽनेनेति वा गोदारणम्, सिनोति, सीयते वा सीरः "सीरःस्यादंशुमालिनि। लाङ्गले" (इति हैमः) इति चत्वारि हलस्य। अथेति–शम्यते वृषादिरनयेति शम्या स्त्री स्यात्, युगस्य कीलो युगकीलः स एव युगकीलकः इति द्वे शम्यायाः "सैला" इति ख्यातायाः॥ १३। ½॥

इरस, कूंड़, मेढ़ी, साठी, जव

स. पु. स. स.
**ईशा लाङ्गलदण्डः (स्यात्) सीता लाङ्गलपद्धतिः॥ १४॥**
**(पुंसि) मेधिः (खले दारु न्यस्तं यत्पशुबन्धने)।**
पु. पु. पु.
**आशुर्व्रीहिःपाटलः (स्यात्) सितशूकयवौ (समौ)॥ १५॥**

ईति–ईष्टे, ईश्यतेऽनयेति वा ईशा "ईशः स्वामिनि रुद्रे च स्यादीशा हलदण्डके" (इति शान्ते विश्वः) ईषते, ईष्यतेऽनयेति वा ईषा "ईषा पेषी च मञ्जूषा" (इति मूर्धन्यान्ते चन्द्रगोमी) लाङ्गलस्य दण्डो लाङ्गलदण्डः स्यादिति द्वे हलयुगयोर्मध्यकाष्ठस्य "हरस" इति ख्यातस्य। स्यति भुवम्, सीयते वा सीता "सीता लाङ्गलरेखा स्याद्व्योमगङ्गा च जानकी" (इति दन्त्यादौ रभसः) शेते स्म, इति विग्रहे तु

शीतापि "शीता नभःसरिति लाङ्गलपद्धतौ च शीता दशाननरिपोः सह धर्मिणी च । शीतं स्मृतं हिमगुणे च तदन्विते च शीतोऽलसे च बहुवारतरौ च दृष्टः" ( इति तालव्यादौ धरणिः ) लाङ्गलस्य पद्धतिर्लाङ्गलपद्धतिरिति द्वे लाङ्गलकृत-रेखायाः "कूंड़" इति ख्यातायाः । खले पशुबन्धने यत् दारु काष्ठं न्यस्तं स्थापितं तत् मेध्यन्ते, मेथ्यन्ते च पशवोऽत्रेति मेधिः मेथिश्च पुंसि स्यादित्येकं मेधेः "मेढ़ी" इति ख्यातस्य । अश्नुत इति आशुः "आशुस्तु व्रीहिशीघ्रयोः" ( इति हेमचन्द्रः ) । "आशु स्याद्व्रीहिशीघ्रयोः" इति रत्नमालाप्रामाण्याच्च क्लीबमपि, व्रीयते, बर्हत्यु-पचयं गच्छति वा पृषोदरादित्वात् व्रीहिः, पाटं लाति, पाटलो वर्णोऽस्त्यस्येति वा पाटलः "आशु व्रीहौ पाटलो ना श्वेतरक्तेन्यलिङ्गवान्" ( इति रुद्रः ) इति त्रीणि षष्टिकादेः । सितं शूकं यस्येति सितशूकः, स्वामिमते तु शितशूको द्वितालव्योऽपि, यौति, यूयते वा यवः "यवो धान्येऽपृथक्कृतौ" (इति हैमः) उभौ समौ समानार्थौ समानलिङ्गाविति द्वे यवस्य ॥ १४ । १५ ॥

हरा जव, मटर या मटरा — तोक्मस्तु (तत्र हरिते) कलायं (स्तु) सतीनकः ।

(पु. पु. पु.)

कोदव — हरेणुखण्डकौ (चास्मिन्)कोरदूष (स्तु) कोद्रवः ॥१६॥

(पु. पु. पु. पु.)

तविति–तत्र तस्मिन् हरिते यवे तकति, तक्यते वा तोक्मः स्यात्, "तोक्मं कर्ण-मले पुंसि हरिते च हरियवे" ( इति मेदिनी ) इत्येकमपक्वयवस्य । कलमयते कलायः, सति जीवे इनः प्रभुः सतीनो वायुस्तं करोतीति सतीनकः, प्रज्ञाद्यणि तु सातीनकोपि, अस्मिन्सतीनकेऽपि हरतीति हरेणुः "हरेणुः स्त्री रेणुकायां स तु पुंसि सतीनके" ( इति रभसात्पुंस्ययम् ) खण्डोऽस्त्यस्येति खण्डिकः तौ स्तः [1]"कलायस्त्रिकटः प्रोक्तः सतीनो वर्तुलो मतः । हरेणुरङ्कटो ज्ञेयः" ( इति व्याडिः ) इति चत्वारि कलायस्य । कोरं रुधिरं दूषयतीति कोरदूषः, कौति, कवते वेति कौः, द्रवतीति द्रवः कौश्चासौ द्रवश्च, केन वायुना द्रवति वा पृषोदरादित्वात् कोद्रवः इति द्वे कोद्रवस्य ॥ १६ ॥

(पु. पु. पु. पु.)

मसूर मोठ — मङ्गल्यको मसूरो (ऽथ) मकुष्ठकमयुष्ठकौ ।

(पु. पु. पु. पु.)

या वनमूंग सरसों — वनमुद्गे सर्षपे ( तु द्वौ ) तन्तुभकदम्बकौ ॥ १७ ॥

मेति–मङ्गले साधुर्मङ्गल्यः स एव मङ्गल्यकः, मस्यति, मस्यते वा मसूरः, दीर्घमध्यः मसुरश्च ह्रस्वमध्योऽपि ज्ञेयः "वेश्यायां व्रीहिभेदे च मसूरा मसुरा स्त्रियाम् । मसूरमसुरौ

---

[1] "कलायो वर्तुलः प्रोक्तः सतिलश्च हरेणुकः । त्रिपुटः खण्डिकोऽपि स्यादिति" (भावप्रकाशः) ॥

पुंसि द्वावेतावपि चैतयोः " ( इति रभसः ) इति द्वे मसूरस्य । अथेति—मङ्कति, मङ्क्यते वा मकुः, तिष्ठतीति स्थकः मकुश्चासौ स्थकश्चेति मकुष्ठकः, मकुश्चासौ स्थश्चेति विग्रहे तु मकुष्ठोऽपि पृषोदरादित्वात् मुकुष्ठश्च " मकुष्ठो व्रीहिभेदे स्यान्मकुष्ठो मन्थरेऽन्यवत् " ( इति टवर्गद्वितीयान्ते विश्वमेदिन्यौ ) मिनोतीति मयुः, तिष्ठतीति स्थकः मयुश्चासौ स्थकश्चेति मयुष्ठकः, उभौ वनमुद्गे स्याताम् वनस्य मुद्गो वनमुद्गः इति त्रीणि वनमुद्गस्य " मोठ " इति ख्यातस्य । सरति स्नेहोऽस्मादिति सर्षपः " सर्षपः स्यात्सरिषपः कटुस्नेहश्च तन्तुभः" (इति त्रिकाण्डशेषः) तत्र तन्तुना भातीति तन्तुभः स्वामिमते तु बाहुलकादुभचिप्रत्यये पृषोदरादित्वात् तुन्तुभोऽपि, कन्दति, कन्दयति वा कदम्बः स एव कदम्बकः उभौ द्वौ स्यातामिति त्रीणि सर्षपस्य ॥ १७ ॥

सफ़ेद सरसों, गेहूं, कुल्थी, चना

**सिद्धार्थ (स्त्वेष धवलो) गोधूमः सुमनः (समौ) ।**
**(स्या) द्यावक (स्तु) कुल्मास[1]श्चणको[2] हरिमन्थकः ॥ १८ ॥**

सीति—एषः सर्षपो धवलः श्वेतवर्णश्चेत्तदा सिद्धोऽर्थोऽस्मादिति सिद्धार्थः स्यात् । " सरिषपः सिते तस्मिन् रक्षोघ्नो भूतनाशनः " ( इति रभसः ) " सिद्धार्थस्तु पुमाञ्शाक्यसिंहे च सितसर्षपे " ( इति मेदिनी ) इत्येके सितसर्षपस्य । गुध्यति, गुध्यते वा गोधूमः " गोधूमो नागरङ्गे स्यादोषधिव्रीहिभेदयोः " ( इति मेदिनी ) सुष्ठु मन्यते इति सुमनः " गोधूमसुमनौ समौ " ( इति रभसः ) उभौ समौ समानार्थौ समानलिङ्गाविति द्वे गोधूमस्य । यौतीति यवकः स एव यावकः स्यात्, कुल्मस्यतीति कुल्मासः दन्त्यान्तः, कुत्सितो माष इति विग्रहे तु पृषोदरादित्वात् " कुल्माषः " मूर्धन्यान्तोपि " कुल्माषो यावकः पुंसि " ( इति रभसः ) इति द्वे कुल्माषस्य "अर्धस्विन्नयवादिरिति ख्यातस्य" । चण्यत इति चणकः, हरिभिर्वाजिभिर्मथ्यत इति हरिमन्थः स एव हरिमन्थकः इति द्वे चणकस्य " चना " इति ख्यातस्य ॥ १८ ॥

बांझतिल, राई

**(द्वौ तिले) तिलपेज (श्च) तिलपिञ्जश्च (निष्फले) ।**
**क्षवः क्षुधाभिजननो राजिका कृष्णिकासुरी ॥ १९ ॥**

द्वाविति—निष्फले फलरहिते स्नेहविहीने तिले तिलपेजश्च तिलपिञ्जश्चेति द्वौ स्यातामिति निष्फलतिलः तिलपेजः, तिलपिञ्जश्च अर्तिलोऽपि " अर्तिलः कथ्यते सद्भिररण्यप्रभवस्तिलः " इति द्वे तैलहीनतिलस्य । क्षौतीति क्षवः, क्षुधामभिजनयतीति

१ कुल्माषोऽर्धस्विन्नो यवादिरिति स्वामी—शकुशल्यो यवादिरिति रक्षितादयः ॥
२ " चणको हरिमन्थः स्यात्सकलप्रिय इत्यपि " ( इति भावप्रकाशः ) ॥

क्षुधाभिजननः, क्षुतमभिजनयतीति विग्रहे तु क्षुताभिजननोऽपि राजति, राजयति वा राजिका कृष्णो वर्णोऽस्त्यस्याः कृष्णा सैव कृष्णिका, अस्यतीति असुरस्तस्येयमासुरी इति पञ्च राजिकायाः " राई " इति ख्यातायाः ॥ १९ ॥

ककुनी, अलसी, भांग या पटुवा सामा, चीना, मेडुवा

स.　स.　स.　स.　स.
**(स्त्रियौ) कङ्गुप्रियङ्गू (द्वे) अतसी (स्या) दुमा क्षुमा ।**
स.　पु.　पु.
**मातुलानी (तु) भङ्गायां (व्रीहिभेद) स्त्वणुः (पुमान्) ॥ २० ॥**

स्त्रीति—कमङ्गति, अङ्गयति, कं सुखं गच्छतीति वा कङ्गुः कङ्गूर्वा, प्रियं गच्छतीति प्रियङ्गुः प्रियङ्गूर्वा इति द्वे स्त्रियौ स्यातामिति द्वे प्रियङ्गोः "ककुनी" इतिं ख्यातायाः । अततीति अतसी स्यात्, उं शिवं माति, मिमीते वा अवति, ऊयते वा उमा "उमातसी हैमवतीहरिद्राकीर्तिकान्तिषु " ( इति मेदिनी ) क्षौति, क्षूयते वा क्षुमा " क्षुमातसी-नीलिकयोः " ( इति विश्वः ) इति त्रीणि क्षुमायाः " अलसी " इति ख्या-तायाः । भङ्गायान्तु मातुलानी स्यात् मायास्तुला मातुला तामानयति, मातुलस्य धत्तूरस्य स्त्रीव वेति मातुलानी, भज्यतेऽनयेति भङ्गा " तरङ्गभेदयोर्भङ्गो भङ्गाशस्य शणाह्वये " ( इति रुद्रः ) इति द्वे शणाख्यसस्यभेदस्य । व्रीहिभेदः व्रीहिविशेषस्तु अणतीति अणुः पुमान् स्यादित्येकमणोः "मेडुवा, चिनवावा" इति ख्यातस्य॥२०॥

सीकुर या टूंड़, बाली सामान्य, धान्य गुच्छा

पु.　पु.न.　पु.न.　स.
**किंशारुः शस्यशूकं (स्यात्) कणिशं शस्यमञ्जरी ।**
न.　पु.　पु.　पु.　पु.
**धान्यं व्रीहिः स्तम्बकरिः स्तम्बो गुच्छ (स्तृणादिनः) ॥ २१ ॥**

किमिति—किञ्चित् कुत्सितं वा शृणातीति किंशारुः, " अथ किंशारुर्धान्यशूके शरेऽपि च " ( इति हैमः ) शस्यस्य शूकं शस्यशूकम् स्यात् " मुकुटमते तु शस्यशूको-ऽपि " इति द्वे यवाद्यग्रस्य । कणाः कणाः सन्त्यस्य, कणिनं स्वावयवं श्यतीति वा कणिशम्, " कणिशो धान्यशीर्षके " ( इति तालव्यान्ते रत्नकोषः ) शस्यस्य मञ्जरी शस्यमञ्जरी इति द्वे शस्यमञ्जर्याः ( बाली ) इति ख्यातायाः । धाने पोषणे साधुर्धान्यम् " धान्यं तु व्रीहौ धान्याके " ( इति हैमः ) व्रीणाति, व्रीयते वा व्रीहिः " व्रीहिः सामान्यधान्ये स्यादाशुधान्ये च पुंस्ययम् " ( इति विश्वः ) स्तम्बं करो-तीति ' स्तम्बकरिः ' व्रीहिसाहचर्यात्पुंस्त्वमिति त्रीणि धान्यसामान्यस्य । तृणा-दिनो गुच्छः स्तम्बः स्यात्—तिष्ठत्यत्रेति स्तम्बः, गवनं गुत् तां छ्यतीति गुच्छः, गुतं स्यतीति विग्रहे तु गुत्सोपि, आदिना व्रीहियवादिग्रहः इति द्वे यवादीनां मूलस्य ॥ २१ ॥

---

१ धान्यपदेन सप्तदश धान्यान्युच्यन्ते । " व्रीहि, यव, मसूर, गोधूम, मुद्ग, माष, तिल, चणक, अणु, प्रियङ्गु, कोद्रव, मकुष्ठक, कलाय, कुलत्थ, षष्टिक, सर्षप, अतसीति सप्तदश " महाभाष्ये " विभाषा तिलमाषोमाभङ्गाणुभ्यः " इति सूत्रे तु " शणसप्तदशानि धान्यानीत्युक्तम् " ॥

स. न. पु. पु.न.

नरई पयार **नाडी नालं (च) काण्डो (ऽस्य) पलालो (ऽस्त्री सनिष्फलः)।**

पु. न. पु.

भूसाभूसी **कडङ्गरो बुसं (क्लीबे) (धान्यत्वचि) तुषः (पुमान्) ॥२२॥**

नेति—अस्य गुल्छस्य काण्डः नाडी, नालं च स्यात् नालयति, डलयोरेकत्वाद्गौरादित्वाच्च नाडी, "नाडी कुहनचर्यायां घटिकागण्डदूर्वयोः । नाले गुणान्तरे स्नायौ" (इति हैमः) नलतीति नालम् "नालं काण्डे मृणाले च नालीशाककलम्बके" (इति हैमः) कणति, काण्यते वा काण्डः "काण्डो नालेऽधमे वर्गे द्रुस्कन्धेऽवसरे शरे । सहश्लाघाम्बुषु स्तम्बे" (इति हैमः) इति त्रीणि नालस्य "नरई" इति ख्यातायाः । स काण्डः निष्फलश्चेत्तदा पलति, पल्यते, पलमलति वा पलालः अस्त्री पुंनपुंसकं स्यादित्येकं पलालस्य "पयार" इति ख्यातस्य । गृणाति-गिरति वा गरः कडस्य गरः, कडतीति कड् अङ्गतीति अङ्गम् कड् च तदङ्गं च कडङ्गं रातीति वा कडङ्गरः, बुसतीति बुसं दन्त्यान्तम् "बुषवेषतुषारतोषाः" इति षभेदान्मूर्धन्यान्तमपि क्लीबे नपुंसके स्यादिति द्वे बुसस्य "भूसा" इति ख्यातस्य । धान्यत्वचि तुषः पुमान्स्यात् धान्यस्य त्वक् धान्यत्वक् ,तुष्यतीति तुषः "तुषस्तु धान्यत्वचि विभीतके" (इति हेमचन्द्रः) इति द्वे धान्यत्वचायाः "भूसी" इति ख्यातायाः ॥ २२ ॥

पु.न. स. स.

सीकुर छीमी **शूको (ऽस्त्रीश्लक्ष्णतीक्ष्णाग्रे) शमी सिम्बा (त्रिषूत्तरे)।**

पु.स.न. पु.स.न. पु.स.न.

ढेर बसाया **ऋद्धमावसितं (धान्यं) पूतं (तु) बहुलीकृतम् ॥ २३ ॥**

शिवति—श्लक्ष्णतीक्ष्णाग्रे शूकः अस्त्री पुंनपुंसकं स्यात् श्यतीति शूकः "शूकोऽनुक्रोशशृङ्गयोः" (इति विश्वः) श्लक्ष्णं कृशं च तत्तीक्ष्णं च तदग्रं चेति श्लक्ष्णतीक्ष्णाग्रमिति द्वे शूकस्य । शाम्यतीति गौरादित्वात् 'शमी' सक्तुफलायां च शिम्बिकायां च वल्गुलौ (इति मेदिनी) समतीति सिम्बा शिनोतीति विग्रहे तु शिम्बा, शिमिः, शिम्बिरपि इति द्वे शिम्बायाः "छीमी" इति ख्यातायाः । उत्तरे बहुलीकृतान्ताः शब्दास्त्रिषु त्रिलिङ्ग्यां भवन्तीति । आवसितं धान्यं ऋद्धं स्यात् । ऋध्यते स्म ऋद्धम् "ऋद्धं सम्पन्नधान्ये च सुसमृद्धे तु वाच्यवत्" (इति विश्वः) राध्यते स्म विग्रहे तु पृषोदरादित्वादित्वे रिद्धमपि, आवस्यते स्म, अवसानं, रक्षार्थमाच्छादितं वा आवसितम् अवसीयते स्म अवसानं प्राप्तं सम्पन्नं वा अवसितमपि "अवसितमृद्धे

---

१ किंशारोरन्यः शूको निर्दिष्टः, शूकधान्यशमीधान्यभेदार्थं वा पुनरुक्तः ॥

ज्ञातेऽपि। अवसानगते च वाच्यलिङ्गं स्यात्" (इति विश्वमेदिन्यौ) इति द्वे मर्दनानन्तरमपनीततृणस्य बहुलीकरणायोग्यस्य धान्यराशेः। पूयते स्म पूतम्, बहुमानं लातीति बहुलम् अबहुलम् बहुलमकारीति बहुलीकृतमिति द्वे राशीकृतधान्यस्य ॥ २३ ॥

न. न.
शमीधान्य (माषादयः) शमीधान्ये शूकधान्ये (यवादयः)।
शूकधान्य पु.
शालिधान्य शालयः (कलमाद्याश्च षष्टिकाद्याश्च) पुंस्यमी ॥ २४॥

मेति—"माषो मुद्गो राजमाषः कुलत्थश्चणकस्तिलः। काकाण्डश्चीवर इति शमीधान्यगणः स्मृतः" (इति रत्नकोषः) माषः आदिर्येषामिति माषादयः शमीप्रभवं धान्यं शमीधान्यं तस्मिन् भवन्तीत्येकं शमीधान्यस्य। यवः आदिर्येषामिति यवादयः शूकयुक्तं धान्यं शूकधान्यं तस्मिन्भवन्तीत्येकं शूकधान्यस्य। कल्यतेऽनेनेति कलमः "कलमः शालिचौरयोः" (इति हैमः) स आद्यो येषामिति कलमाद्याः, षष्टिरात्रेण पच्यन्ते षष्टिकास्तदाद्याश्च शाड्यन्ते, शाल्यन्ते वा शालयः स्युः "शालिस्तु गन्धोलौ कलमादिषु" (इति हैमः) इत्येकं शालिधान्यस्य अमी माषाद्याः पुंसि भवन्तीति॥२४॥

तिन्नी, पसाही न. पु. स. स.
या मुनियों का अन्न, गोहुवां तृणधान्यानि नीवाराः (स्त्री) गवेधुर्गवेधुका।

त्रिति—तृणानीव धान्यानि अकृष्टोत्पन्नत्वादिति तृणधान्यानि निव्रियन्त इति नीवाराः "स्यान्नीवारो वणिजके वास्तव्येऽपि च दृश्यते" (इति विश्वः) बहुवचनेन श्यामाकादिग्रहः इति द्वे तृणधान्यस्य "तिन्नी—पसाही" इति ख्यातस्य उक्तं हि "शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकम्। शिम्बीधान्यं क्षुद्रधान्यमित्युक्तं धान्यपञ्चकम्। शालयो रक्तशाल्याद्याः व्रीहयः षष्टिकादयः। यवादिकं शूकधान्यं मुद्गाद्यं शिम्बिधान्यकम्। कङ्ग्वादिकं क्षुद्रधान्यं तृणधान्यं च तत्स्मृतम्" (इति भावप्रकाशः) गवा जलेन तत्र वा एधते गवेधुः स्त्री स्यात्। सैव गवेधुका, गवे गवार्थं दीयते रक्ष्यतेऽसाविति नैरुक्तत्वादस्य डत्वे गवेडुरपि इति द्वे गवेधुकायाः "गोहुवां" इति ख्यातस्य ॥ [1] ॥

मूसर पु.न. पु.न. न. न.
उखली अयोग्रो मुसलो (स्त्री) स्यादुदूखलमुलूखलम् ॥२५॥
सूप न. पु.न. स न. पु.न.
चलनी प्रस्फोटनं शूर्प (मस्त्री) चालनी तितउः (पुमान्) [2]।

---

१ "यावनालो यवनालशिखरी वृत्ततन्दुलः। दीर्घनालो दीर्घशिरः क्षेत्रेक्षुश्चेक्षुपत्रकः" इति सामान्ययवनालस्य। धावलो यावनालस्तु पाण्डुलस्तारतन्दुलः। नक्षत्राकृतिविस्तारो वृत्तो मौक्तिकतन्दुलः। जूर्णाह्वयो देवधान्यं जूर्णलो बीजपुष्पकः। जूर्नलः दुष्पगन्धश्च सुगन्धः सगुरुन्दकः (इति भावप्रकाशः) ॥

२ "तितउः पुंसि क्लीबे च पृथगुच्चारणे द्वयोः सामर्थ्याद्गुणो न" इति गुणाभावः ॥

अयविति—अयोऽग्रेऽस्येति अयोग्रः, मुस्यत्यनेनेति मुसलः अस्त्री पुंनपुंसकं स्यादिति द्वे मुसलस्य । ऊर्ध्वं च तत्खं च, ऊर्ध्वखं लातीति पृषोदरादित्वात् उदूखलम्, उलूखलमपि " उदूखलं गुग्गुलौ स्यादुलूखलेऽपि न द्वयोः" ( इति मेदिनी ) इति द्वे उलूखलस्य । प्रस्फोट्यतेऽनेनेति प्रस्फोटनम्, शूर्पयति, शूर्प्यतेऽनेनेति वा शूर्पम् अस्त्री पुंनपुंसकं स्यात् " सूर्पे च " इति पाठाद्दन्त्यादिरपीति द्वे सूर्पस्य । चाल्यतेऽनयेति चालनी " क्षुद्रच्छिद्रशतोपेतं चालनं तितउः स्मृतः" ( इति कात्यः ) तनोति, तन्यतेऽनेनेति वा " तितउः " पुमान्स्यात् " चालनं तितउ प्रोक्तम् " (इति क्लीबकाण्डे रत्नकोषः ) " न स्त्री तितउ चालनी " ( इति त्रिकाण्डशेषः ) इति द्वे चालन्याः " चलनी " इति ख्यातायाः ॥ २५ ॥ $\frac{१}{२}$ ॥

पु. पु. पु. पु. पु. पु.
थैली या बोरा **स्यूतप्रसेवौ कण्डोलपिटौ कटकिलिञ्जकौ ॥ २६ ॥**
डेलवा या दौरा न. न.
चटाई, झांपी **(समानौ) रसवत्यां (तु)पाकस्थानमहानसे ।**
रसोई का घर पु. पु.
रसोई का स्वामी **पौरोगव (स्तदध्यक्षः) सूपकारास्तु बल्लवाः ॥ २७ ॥**
पु. पु. पु. पु. पु.[२]
रसोईदार **आरालिका आन्धसिकाः सूदा औदनिका गुणाः ।**

स्यूवेति—सीव्यते स्म स्यूतः औणादिके नप्रत्यये तु स्योनोऽपि, " स्योनस्यूतप्रसेवकाः " ( इति रभसः ) प्रसीव्यत इति प्रसेवः " प्रसेवस्तु वीणाङ्गस्यूतयोर्दृतौ " ( इति हेमचन्द्रः ) इति द्वे वस्त्रशणादिनिर्मितस्य " थैला " इति ख्यातस्य । कण्डयत इति कण्डोलः, पिटतीति पिटः कुनि तु पिटकोऽपि पिण्डयते इति विग्रहे तु पिण्डोऽपि स्यादिति द्वे वंशादिनिर्मितभाण्डस्य । कटतीति कटः "कटः श्रोणौ द्वयोः पुंसि किलिञ्जेतिशये शवे । समये गजगण्डेऽपि पिप्पल्यान्तु कटी मता " ( इति मेदिनी ) किल्यतेऽनेनेति किलिर्वेत्रवीरणादिस्तस्माज्जातः पृषोदरादित्वात् किलिञ्जः स एव किलिञ्जकः उभौ समानौ समानार्थौ समानलिङ्गाविति द्वे कटस्य "चटाई" इति ख्यातायाः । रसाः सन्त्यस्यामिति रसवती तस्यान्तु पाकस्थानमहानसे स्याताम् पाकस्य स्थानम् पाकस्थानम्, महच्च तदनश्चेति महानसमिति त्रीणि रसवत्याः " रसोई " इति ख्यातायाः । पुरः पूजिता गौर्भूमिः पुरोगवी तस्या अयम्, पुरः प्रथमं याच्यवस्तुषु गौर्नेत्रमस्येति वा पुरोगुः स एव पौरोगवः, तस्य अध्यक्षस्तदध्यक्षः इति द्वे महानसाधिकृतस्य । सवति रसमिति सूपस्तं करोतीति सूपकारः बहुत्वे सूपकाराः, बल्लनं बल्लः सोऽस्त्यस्य, बल्लं वातीति वा बल्लवः बहुत्वे बल्लवाः, "बल्लवः

१ यल्लक्ष्यं कटे शेते कुमारासाविति सारस्वतीये ॥ २ " गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागे शौर्यादिसंध्यादिसत्त्वाद्यावृत्तिरज्जुषु । शुक्लादावपि बुद्ध्यां च " ( इति मेदिनी ) ॥

सूपकारे स्याद्भीमसेने च गोदुहि" ( इति विश्वः ) अरालं कुटिलं चरन्तीति आरालिकाः, अन्धोभक्तं शिल्पं येषामिति आन्धसिकाः, सूदन्ति छागादीनिति सूदाः "सूदस्तु कथितः सूपकारे च व्यञ्जनान्तरे" ( इति विश्वः ) ओदनं शिल्पं येषामिति औदनिकाः, गुणयन्त इति गुणा इति सप्त सूपकारस्य ॥ २६ । २७ । ½ ॥

पु.　　पु.　　पु.
पूवा आदि बनानेवाले **आपूपिकः कान्दविको भक्षकार ( इमे त्रिषु ) ॥ २८ ॥**
न.　　न.　　स.　　स.　　स.
चूल्ही या चूल्हा **अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका ।**

आपूपेति—अपूपाः पण्यमस्येति आपूपिकः, कन्दौ संस्कृतं कान्दवम्, कान्दवं पण्यमस्येति कान्दविकः, भक्षं करोतीति भक्षकारः इमे पौरोगवादयः त्रिषु त्रिलिङ्गयां भवन्तीति त्रीणि पूपादिकारस्य । अश्मनोऽप्यन्तोऽत्रेति शकन्ध्वादित्वाद् अश्मन्तम् " अश्वन्त " इति पाठे तु असूनामन्तोऽत्रेति अश्वन्तोपि, उद्धीयतेऽत्रेति उद्धानम् " उद्धानमुद्गते वाच्यलिङ्गं चुल्ल्यां नपुंसकम् " ( इति विश्वः ) "उद्ध्मानमिति पाठे तु उद्ध्मायतेऽत्रेति उद्ध्मानमपि, अधिश्रीयतेऽत्रेति अधिश्रयणी, चुल्ल्यतेऽत्र, चुद्यतेऽत्राग्निरिति वा चुल्लिः ङीपि चुल्ली वा अन्त्यतेऽत्रेति अन्तिका "अन्तिकं निकटे वाच्यलिङ्गं स्त्री शीतलौषधौ । चुल्ल्यां ज्येष्ठभगिन्यां च नाट्योक्तौ कीर्त्यतेऽन्तिका" (इति मेदिनी) इति पञ्च चुल्लिकायाः ॥ २८ । ½ ॥

स.　　स.　　स.
अंगेठी, अँगार, **अङ्गारधानिकाङ्गारशकट्य ( पि ) हसन्त्य ( पि )॥२९॥**
स.　　पु.न.　　न.　　न.
लुकाठ, खपरी, **हस ( न्यप्यथ न स्त्री स्या ) दङ्गारो लातमुल्मुकम् ।**
न.　　पु.　　पु.स.
भार या भट्ठी **(क्लीबे)ऽम्बरीषं भ्राष्ट्रो(ना)कन्दुर्वा स्वेदनी(स्त्रियाम्)३०**

अङ्गेति—अङ्गारा धीयन्तेऽस्यामिति अङ्गारधानी सैव अङ्गारधानिका, अङ्गाराणां शकटी अङ्गारशकटी, हसतीति हसन्ती " हसन्त्यङ्गारधान्यां च मल्लिकाशाकिनीभिदोः " ( इति विश्वः ) हसति, हस्यते वा हसनी अपीति चत्वारि हसन्याः " वरोसी" इति ख्यातायाः । अथेति—अङ्गति, अङ्गमियर्ति वा अङ्गारः स्त्री न स्यात् " अङ्गारमुल्मुके न स्त्री पुंलिङ्गस्तु महीसुते " ( इति मेदिनी ) इत्येकमङ्गारस्य

---

१ स च साग्निर्निरग्निश्च तत्र साग्नौ यथा—"अङ्गारचुम्बितमिव व्यथमानमास्ते " इति । निरग्नौ यथा "कलङ्कस्तत्र्यो व्रजति मलिनाङ्गारतुलनाम्" इत्यादि प्रयोगः संगच्छते ॥

२ " हसन्तीं च हसन्तीं च हसन्तीं वामलोचनाम् । हेमन्ते ये न सेवन्ते ते नरा मन्दभागिनः ॥१॥

" अँगार" इति ख्यातस्य । लातं लातं, न लातमस्येति अलातम्, ओषतीति उल्मुकमिति द्वे अर्धदग्धकाष्ठस्य त्रयोऽपि पर्याया इत्यन्ये। अम्ब्यतऽत्रेति अम्बरीषं क्लीबे स्यात् " अम्बरीषं रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे । नरकस्य प्रभेदे च किशोरे भास्करेऽपि च । आम्रातकेऽनुतापे च " ( इति मेदिनी ) भृज्ज्यतेऽत्रेति भ्राष्ट्रः ना पुमान् स्यादिति द्वे भर्जनपात्रस्य " खपरी " इति ख्यातायाः । स्कन्दतीति कन्दुः वा ना स्यात् पक्षे स्त्रीत्वाहचर्यात् स्विद्यतेऽस्यामिति स्वेदिनी वा स्त्रियां स्यात् पक्षे स्वेदनोऽपीति द्वे कन्दोः " भट्ठी " इति ख्यातायाः ॥ २६ । ३० ॥

मेटुका, करवा, **अलिञ्जरः ( स्या ) न्मणिकः कर्कर्यालुर्गलन्तिका ।**
(पु. — पु. स. स. स.)

बटलोही घड़ा **पिठरः स्थाल्युखा कुण्डं कलश ( स्तु त्रिषु द्वयोः )॥ ३१॥**
(पु. स. स. न. पु.)

सेरवा **घटः कुटनिपा ( वस्त्री ) शरावो वर्धमानकः ।**
(पु.स. पु.न. पु.न. पु न. पु.न.)

अलतीति—अलति, अलनं वा अलिः सामर्थ्यं तज्जृणाति जरयति वा अलिञ्जरः, मणतीति मणिः स एव मणिकः स्यादिति द्वे मणिकस्य "मेटुका" इति ख्यातस्य । कर्कशं कर्कस्तं रातीति गौरादित्वात् कर्करी " कर्करी भाण्डभेदे ना दर्पणे कठिने त्रिषु" (इति विश्वः ) आलुनातीति आलूः, ह्रस्वपाठे तु आलातीति मितद्र्वादित्वात् आलुरपि, " आलुर्गलन्तिकायां स्त्री क्लीबं मूले च भेलके " ( इति मेदिनी ) गलतीति गलन्ती सैव गलन्तिका इति त्रीणि कर्कर्याः " करवती " इति ख्यातायाः । पेठतीति पिठस्तं रातीति पिठरः, तिष्ठत्योदनाद्यत्रेति, स्थलत्यत्रेति वा स्थाली, " स्थालं भाजनभेदेऽपि स्थाली स्यात्पाटलोखयोः " ( इति मेदिनी ) ओखतीति उखा ओषतीति विग्रहे तु उषा मूर्धन्यान्तापि कुण्डयतीति कुण्डम् "कुण्डमग्न्यालये मानभेदे देवजलाशये । कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान् । पिठरे तु न ना " ( इति विश्वः ) इति चत्वारि ओदनादिपचनपात्रस्य " बटुलोही " इति ख्यातायाः । कलं शवतीति कलशः, केन जलेन लसतीति विग्रहे तु कलसो दन्त्यान्तोऽपि त्रिषु त्रिलिङ्ग्यां स्यात्, घटत इति घटः द्वयोः स्त्रीपुंसयोः स्यात्, स्त्रियां घटी " घटः समाधिभेदेन शिरःकूटकुटेषु च । घटाघटनगोष्ठीभघटनासु च योषिति " ( इति मेदिनी ) कुटतीति कुटः, नियतं पिबत्यनेनेति निपः उभावप्यस्त्रियौ स्यातामिति चत्वारि घटस्य " घड़ा " इति ख्यातस्य । शृणाति, शरणं वा शरस्तं तस्माद्वा अवतीति शरावः, सरति, सरणं वेति सरस्तं तस्माद्वा अवतीति विग्रहे तु सरावो दन्त्यादिरपि, वर्धते इति वर्धमानः स एव वर्धमानकः इमावप्यस्त्रियौ स्यातामिति द्वे शरावस्य " सेरवा " इति ख्यातस्य ॥ ३१ । १/२ ॥

न. न. पु. न.

तवा ऋजीषं पिष्टपचनं कंसो (ऽस्त्री) पानभाजनम्॥३२॥

आबखोरा स.

कुप्पा कुतूः (कृत्तेःस्नेहपात्रं) (सैवाल्पा) कुतुपः (पुमान्)।

कुप्पी न. न. न. न. न.

सब बर्तन (सर्वं)मावपनं भाण्डं पात्रामत्रं (च) भाजनम्॥ ३३ ॥

ऋजीति—अर्जतीति ऋजीषम्, ऋचतीति विग्रहे तु ऋचीषमपि, पिष्यते स्म पिष्टम्, पच्यतेऽत्रेति पचनम्, पिष्टस्य पचनं पिष्टपचनमिति द्वे ऋजीषस्य "तवा" इति ख्यातस्य। कम्यते इति कंसः अस्त्री पुंनपुंसकं स्यात् "कंसोऽस्त्री तैजसद्रव्ये कांस्ये मानेऽसुरे तु ना" (इति मेदिनी) पीयते इति पानम्, भाजयतीति भाजनम् पानस्य क्षीरादिपानस्य भाजनं पानभाजनमिति द्वे क्षीरादिपानपात्रस्य "आबखोरा" इति ख्यातस्य। कृत्तेश्चर्मणः स्नेहपात्रं स्नेहस्य तैलघृतादेः पात्रम्, कौति, कुत्सितं तन्यते वा कुतूः स्यादित्येकं चर्मनिर्मितस्नेहपात्रस्य "कुप्पा" इति ख्यातस्य। सा कुतूरेव अल्पा चेत्तदा अल्पा कुतूः कुतुपः पुमान् स्यादित्येकमल्पकुत्वाः "कुप्पी" इति ख्यातायाः। स्यूतादि पिठरादि च सर्वं समस्तं आवपनादि शब्दवाच्यं स्यात् आ उप्यतेऽत्रेति आवपनम्, भणति, भन्दते वा पृषोदरादित्वात् भण्डं तदेव भाण्डम् "भाण्डं मूलवणिग्वित्ते तुरंगाणां च मण्डने। नदीकूलद्वयीमध्ये भूषणे भाजनेऽपि च" (इति हैमः) पाति, पिबत्यनेन वा पात्रम्, अमतीति अमत्रम्, भाजयतीति भाजनमिति पञ्च भाण्डस्यैं "बर्तन" इति ख्यातस्य ॥ ३२। ३३ ॥

स. स. स. पु.स. पु.

करछुली दर्विः कम्बिः खजाका (च) (स्या)त्तर्दूर्दारुहस्तकः।

चमचा या डौवा पु.न. न. पु. स.

साग (अस्त्री) शाकहरितकं शिग्रु (रस्य तु) नालिका॥३४॥

साग का डंठल पु. पु. पु. पु.

साग का मसाला कडम्ब(श्च) कलम्ब (श्च) वेसवार उपस्करः।

---

१ पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं यथा। शाकं षड्विधमुद्दिष्टं गुरुविद्याद्यथोत्तरम् १ प्रायः शाकानि सर्वाणि विष्टम्भीनि गुरूणि च। रूक्षाणि बहुवर्चांसि सृष्टविण्मारुतानि च २ शाकं भिनत्ति वपुरस्थि निहन्ति नेत्रं वर्णं विनाशयति रक्तमथापि शुक्रम्। प्रज्ञाक्षयं च कुरुते पलितं च नूनं हन्ति स्मृतिं गतिमिति प्रवदन्ति तज्ज्ञाः ३ शाकेषु सर्वेषु वसन्ति रोगास्ते हेतवो देहविनाशनाय। तस्माद् बुधः शाकविवर्जनन्तु कुर्यात्तथाम्लेषु स एव दोषः" ॥ ४ ॥

२ "विंशतिः पलानि हरिद्रायाः, दश पलानि धान्याकस्य, पञ्च पलानि शुद्धजीरकस्य, पलं सार्द्धद्वयं मेथिकायाः, एतच्चतुष्टयं भर्जितमेव ग्राह्यम्, त्रीणि पलानि मरिचस्य, अर्धपलं रामठस्य" एतत्सर्वमेकत्र संयोज्य संमर्दितं वेसवार इत्युच्यते॥

देति–दृणातीति दर्विः, कृदिकारादिति ङीषि तु दर्वी च कम्यते इति कम्बिः कम्बी च खजति मथ्नाति पाकमिति खजाका एतत्साहचर्यात्पूर्वयोः स्त्रीत्वमिति त्रीणि खजाकायाः " करछुली " इति ख्यातायाः । तरति, तर्दति, तृणत्ति वा तर्दूः स्यात्। हस्तप्रतिकृतिर्हस्तकः दारुणो हस्तको दारुहस्तकः एतत्साहचर्यात्पूर्वः पुंसि स्यादिति द्वे दारुहस्तकस्य " डौवा " इति ख्यातस्य उक्तहैमानुरोधात्पश्चापि पर्याया इत्यन्ये । श्यति, शक्नोति भोक्तुमनेनेति वा शाकम् अस्त्री पुंनपुंसकं स्यात् " शाको द्वीपान्तरेऽपि च । शक्तौ द्रुमविशेषे च पुमान् हरितके स्त्रियाम् " ( इति मेदिनी ) हरति, ह्रियते वा हरितवर्णोऽस्यास्तीति वा हरितं तदेव हरितकम् शिनोति, शीकते, शिक्यते वा शिग्रुः "शिग्रुर्ना शाकमात्रे च शोभाञ्जनमहीरुहे" ( इति विश्वमेदिन्यौ ) इति त्रीणि शाकस्य । अस्य शाकस्य तु नालिका नालयतीति नाली सैव नालिका कडतीति कडम्बः, केन लम्बते इति कलम्बः स्त्रियां कलम्बी च " कलम्बः शायके नीपे नाली शाके कलम्ब्यपि " (इति विश्वः) इति त्रीणि शाकनालिकायाः । वेसनं प्रेरणं वेसस्तं वृणोति, वारयति वा वेसवारः " चित्रकं पिप्पलीमूलं पिप्पली चव्यनागरम् । धान्याकं रजनीश्वेततण्डुलाश्च समाशकाः । वेसवार इति ख्यातः शाकादिषु नियोजयेत् " ( इति आत्रेयसंहितायाम् ) उपस्करोति व्यञ्जनेन समवैतीति उपस्कारः इति द्वे संस्कारार्थे दीयमानस्य हिङ्गुजीरकहरिद्राधान्याकशुण्ठीसर्षपादेः ॥ ३४ । १/२ ॥

न. न. न. न.

चूक **तिन्तिडीकं(च)चुक्रं(च)वृक्षाम्ल(मथ)वेल्लजम् ॥ ३५ ॥**

न. न. न. न. न.

मिरच **मरिचं कोलकं कृष्णमूषणं धर्मपत्तनम् ।**

तीति–तिम्यतीति तिन्तिडीकम्, चकति, चकते वा चुक्रम् " चुक्रं वृक्षाम्ले चाङ्गेर्यां स्त्री पुंस्यम्लेऽम्लवेतसे " ( इति विश्वः ) वृक्षस्य अम्लम् वृक्षाम्लमिति त्रीणि चुक्रस्य "चूका" इति ख्यातस्य । अथेति–वेल्लनं वेल्लस्तं जायते जनयतीति वा वेल्लजम् , म्रियते विषमनेनेति मरिचम् बाहुलकादीचि तु मरीचं दीर्घमध्यमपि, कोलतीति कोलकम् , कर्षतीति कृष्णम् " कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्जुने । कृष्णा स्याद्द्रौपदीनीलीकणाद्राक्षासु योषिति । मेचके वाच्यलिङ्गः स्यात् क्लीबे मरिचलोहयोः " (इति विश्वः) ऊषतीति ऊषणम् ह्रस्वपाठे उषतीति विग्रहे तु उषणमपि, धर्मपत्तने जातं धर्मपत्तनम् संज्ञापूर्वकत्वान्न वृद्धिरिति षट् मरिचस्य " मिरच " इति ख्यातस्य ॥ ३५ । १/२ ॥

पु. पु. पु. स.

सफ़ेद जीरा **जीरको जरणोऽजाजी कणा (कृष्णे तु जीरके)॥ ३६ ॥**

स. स. स. पु. , स. स.

स्याह जीरा **सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्चिका ।**

जीति—जवति, जिनाति वा जीरः स एव जीरकः, जरयतीति जरणः "जरणं हिङ्गुनि स्मृतम्। जरणो जीरकेऽपि स्यात् कृष्णे सौवर्चलेऽपि च" (इति विश्वः) अजमजतीति अजाजी, कणतीति कणा "कणा जीरककुम्भीरमक्षिकापिप्पलीषु च। कणोऽतिसूक्ष्मे धान्यांशे" (इति विश्वः) इति चत्वारि श्वेतजीरकस्य। कृष्णे कृष्णवर्णवति जीरके तु सुपवर्णं सुपवः सोऽस्त्यस्या इति सुपवी, कारं वाति, कारणं काः संपदादित्वामवतीति वा गौरादित्वादणन्तत्वाच्च कारवी "कारवी मधुरादीप्यत्वक्पत्री कृष्णजीरके" (इति मेदिनी) प्रथते इति पृथ्वी "पृथ्वी भूमौ महत्यां च त्वक्पत्र्यां कृष्णजीरके" (इति विश्वः) ङीषोऽभावे तु पृथुः "पृथुः स्यान्महति त्रिषु। त्वक्पर्ण्यां कृष्णजीरेऽस्त्री पुमानग्नौ नृपान्तरे" (इति मेदिनी) कालो वर्णोऽस्त्यस्याः काला, उपकुञ्चतीति उपकुञ्चिका इति षट् कृष्णजीरकस्य॥ ३६। [१]॥

अदरख, आर्द्रकं (न.) शृङ्गवेरं (न.) (स्यादथ) छत्रा (स.) वितुन्नकम् (न.)॥ ३७॥

धनियां, कुस्तुम्बुरु (न.) (च) धान्याक (न.) [१] (मथ) शुण्ठी (स.) [२] महौषधम् (न.)।

सोंठि (स्त्रीनपुंसकयो)र्विश्वं (स.न.) नागरं (न.) विश्वभेषजम् (न.)॥ ३८॥

आर्द्रेति—आर्द्रयति जिह्वाम्, अर्दति कफम्, आर्द्रायां जातम्, आर्द्रसंज्ञकम् वा आर्द्रकम् शृङ्गमिव वेरं कलेवरमस्येति शृङ्गवेरं स्यादिति द्वे आर्द्रकस्य "अदरख" इति ख्यातस्य। अथेति—छत्रमस्त्यस्याः छत्रा "छत्रं स्यादातपत्राणे छत्रामधुरिकौषधौ। धान्याके च शिलीन्ध्रे च" (इति हेमचन्द्रः) विगतं तुन्नं दुःखमस्मात्, वितुद्यते भक्ष्यार्थमिति वा वितुन्नं तदेव वितुन्नकम् "वितुन्नकं तु धान्याके झाटामलमयूरके" (इति विश्वः) कुत्सितं स्तुम्बतीति बाहुलकादुरुप्रत्यये कुस्तुम्बुरु, धन्यते भक्ष्यार्थिभिः, धान्यमकतीति वा धान्याकम्, मुकुटमते तु धन्याकमपि, "धन्याकं धान्यकं धान्यं कुस्तुम्बुरु धनीयकम्" (इति रभसः) इति चत्वारि धान्याकस्य। शुण्ठतीति गौरादित्वात् शुण्ठी इनि तु शुण्ठिरपि, महच्च तदौषधं चेति महौषधम्, "महौषधं तु च शुण्ठ्यां स्याद्विषायां लशुनेऽपि च" (इति विश्वः) विशतीति विश्वं स्त्रीनपुंसकयोः स्यात् "विश्वं कृत्स्ने च भुवने विश्वेदेवेषु नागरे। विश्वाप्यतिविषायां स्यादिति" (विश्वः) नगरे भवं नागरम् "नागरं मुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे" (इति मेदिनी) विश्वस्य दोषस्य भेषजमिति पञ्च शुण्ठिकायाः "सोंठि" इति ख्यातायाः॥ ३७। ३८॥

---

१ सधन्या शुण्ठिसैन्धवमिति वैद्यकम्॥

२ यदा पचाद्यचि तदा गौरादित्वकल्पनं समीचीनं भाति, यदा तु सर्वधातुभ्य इनिति इन्प्रत्ययः स्यात्तदा "कृदिकारादिति" वैकल्पिकत्वाद्गौरादित्वकल्पनं व्यर्थमेवेति॥

न. न. न.

कांजी **आरनालकसौवीरकुल्माषाभिषुतानि (च) ।**

न. न. न. न.

**अवन्तिसोमधान्याम्लकुञ्जलानि (च) काञ्जिके ॥३९॥**

आरेति—ऋच्छतीति आरः—नलतीति ज्वलादित्वाराणप्रत्यये नालः आरो नालोऽस्येति आरनालकम्, सुवीरेषु भवं सौवीरम् , कोलतीति कुल् अर्धस्विन्नो माषोऽस्मिन्, कुलबन्धुर्माषोऽस्येति वा कुल्माषम् , अभिषूयते स्म अभिषुतम्, स्वामिमते तु कुल्माषैरर्धस्विन्नैर्यवादिभिरभिषूयते स्म "कुल्माषाभिषुतम्" इत्येकं नाम विज्ञेयम्, सूयते स्म सोमम् अवन्तिषु अभिषुतं सोमम् अवन्तिसोमम्, धान्याभिषुतमम्लम् धान्याम्लम्, कुत्सितं जलं पृषोदरादित्वात् कुञ्जलम् अञ्जनमञ्जिका के अञ्जिका अस्येति काञ्जिकम् "काञ्चिकं" इति पाठे तु काञ्चयतीति काञ्चि तदेव काञ्चिकम् "काञ्चिकं काञ्जिकं वीरं कुल्माषाभिषुतं तथा । अवन्तिसोमं धान्याम्लमारनालं महारसम् । सौवीरं च सुवीराम्लं तथा शुक्तं तुषोदकम्" ( इति धन्वन्तरिः ) इत्यष्टौ काञ्जिकस्य ॥ ३९ ॥

न. न. न. न. न.

हींग, **सहस्रवेधिजतुकं वाल्हीकं हिङ्गु रामठम् ।**

स. स. स. स. स. स.

हींग की पत्ती **तत्पत्री कारवी पृथ्वी बाष्पिका कबरी पृथुः ॥ ४० ॥**

सेति—सहस्रं वेधितुं शीलमस्येति सहस्रवेधि, जतुइव जतुकम् "जतुकाजिनपत्र्यां जतुकं हिङ्गुलाक्षयोः" ( इति मेदिनी ) वल्हीकेषु भवं वाल्हीकम् ह्रस्वमध्यमपि "अथ वाल्हिकः । देशभेदेऽश्वभेदे च वाल्हिकं हिङ्गुकुङ्कुमम् । वाल्हिकवत्" (इति हैमः)हिनोति, हिमं गच्छति वा मृगय्वादित्वात् हिङ्गु, रमतेऽनेन, रामठे देशे भवं वा रामठमिति पञ्च हिङ्गुनः "हींग" इति ख्यातायाः । तस्य हिङ्गुतरोः पत्री तत्पत्री "त्वक्पत्री" इति च पाठः "तत्पत्री त्वचमाख्यातं त्वक्पत्री कारवीति च" (इति रुद्रः) कारं वातीति गौरादित्वात् कारवी, प्रथते इति पृथ्वी "पृथ्वी भूमौ महत्यां च त्वक्पत्र्यां कृष्णजीरके" (इति मेदिनी ) बाष्पमिव बाष्पिका, पृषोदरादित्वाद् बाष्पीकापि कं शिरो वृणोत्याच्छादयति कस्य शिरसो वरीति वा कबरी "कबरी केशविन्यासशाकयोः" (इति हैमः) स्वामिमते तु "कर्वरी" च प्रथते इति पृथुरिति षट् हिङ्गुपत्र्याः ॥ ४० ॥

---

१ "आरनालं तु गोधूमैरामैः स्यान्निस्तुषीकृतैः । पक्वैर्वासंधितं तत्तु सौवीरसदृशं गुणैः" २ "सौवीरन्तु यवैरामैः पक्वैर्वा निस्तुषीकृतम् । गोधूमैरपि सौवीरमाचार्याः केचिदूचिरे" ३ धान्याम्लं शालिचूर्णं च कोद्रवादिकृतं भवेत्" ( इति भावप्रकाशः ) ॥

स. स. स. स. स.

हल्दी **निशाह्वा काञ्चनी पीता हरिद्रा वरवर्णिनी।**

न. न.

समुद्रलोन **( सामुद्रं यत्तु लवण ) मक्षीवं वसिरं (च तत् ) ॥४१॥**

नीति—निशा आह्वा यस्या इति निशा, " निशापदेन तत्पर्याया लक्ष्यन्ते " काञ्च्यतेऽनयेति काञ्चनी, " काञ्चनः काञ्चनारे स्याच्चम्पके नागकेसरे। उदुम्बरे च धत्तूरे हरिद्रायां तु काञ्चनी " ( इति विश्वः ) पीयते स्म पीता " पीतो वर्णान्तिपीतयोः। पीता हरिद्रा " ( इति हैमः ) हरिं वर्णं द्राति, हरिभिर्द्रूयते, हरितं द्रवतीति वा हरिद्रा, वरश्चासौ वर्णश्च सोऽस्त्यस्यामिति वरवर्णिनी इति पञ्च हरिद्रायाः। यत्तु समुद्रे भवं सामुद्रं लुनातीति लवणं लवणाल्लुगिति निपातनाणत्वम् तत् " अक्ष्णा ईः" ( लक्ष्मीः शोभा वा ) अक्षीस्तां वाति, वायति वा अक्षीवम् "अक्षीवं वशिरं शिग्रौ ना मत्ते पुनरन्यवत्" ( इति विश्वः ) वसनं वसिस्तां रातीति वसिरम्, वशनं वशिस्तां रातीति वशिरं तालव्यमध्यमपि " वशिरः पुमान्। किणिही हस्तिपिप्पल्योः क्लीबेऽब्धिलवणे स्मृतः"(इति मेदिनी) इतिद्वे सामुद्रलवणस्य॥४१॥

पु. न. न. न.

सेंधव **सैन्धवो (ऽस्त्री) शीतशिवं माणिमन्थं (च) सिन्धुजे।**

सांभर न. न. न. न. न.

खारी **रौमकं वसुकं पाक्यं विडं (च) कृतके (द्वयम्)॥ ४२॥**

सैन्धेति—सिन्धुजे सिन्धुदेशोद्भवे लवणे सैन्धवः, शीतशिवं, माणिमन्थं च स्यात् सिन्धुषु भवः सैन्धवः अस्त्री पुंनपुंसकं स्यात् " सैन्धवस्तु सिन्धुदेशोद्भवे हये। माणिमन्थेऽपि" शीतं च तच्छिवं चेति शीतशिवम् "अथ शीतशिवं क्लीबं शैलेयमणिमन्थयोः। पुंसि सक्तुफलावृक्षे तथा मधुरिकौषधौ " ( इति मेदिनी ) मुकुटमते तु सितं शुभ्रं च तच्छिवं चेति सितशिवमपि, मणिमन्थाख्यपर्वते भवं माणिमन्थनम्, स्वामिमते तु मणिबन्धपर्वते भवं माणिबन्धमपि, सिन्धुषु जातं सिन्धुजमिति चत्वारि सैन्धवस्य। रुमायां भवं रौमं तदेव रौमकम्, वसु कायति, वस्वेव, वस्वस्त्यस्मिन्निति वा वसुकम् " वसुकं रौमके पुंसि शिवमह्यर्कपर्णयोः" ( इति विश्वः ) वस्तकमिति पाठे तु वस्त इव अजगन्धित्वाद् वस्तकम् "रौमके वस्तकं वसु"(इति नाममाला) इति द्वे रौमकस्य "सांभरि" इति ख्यातस्य। कृतके विनिर्मिते कृत्रिमे लवणे पाक्यम्, विडं चेति द्वयं स्यात्, पाके साधु, पच्यते वा पाक्यं स्यात्, विडतीति विडमिति द्वे विडस्य "खारी" इति ख्यातस्य ॥ ४२ ॥

सोंचर, कालानमक, **सौवर्चलेऽक्षरुचके तिलकं तत्र मेचके ।**

राब, सफ़ेद चीनी या मिश्री **मत्स्यण्डी फाणितं खण्डविकारे शर्करा सिता ॥४३॥**

सौविति–सौवर्चले लवणे अक्षरुचके स्याताम् । सुष्ठु वर्च्यते, दीप्यते इति सुवर्चलम् तदेव सौवर्चलम्, अक्षतीति अक्षम्, "अक्षो रथस्यावयवे व्यवहारे विभीतके । पाशके शकटे कर्षे ज्ञाने चात्मनि रावणौ । अक्षं सौवर्चले तुत्थे हृषीके" (इति हेमचन्द्रः) रोचत इति रुचकम् "रुचको बीजपूरे च निष्के दन्तकपोतयोः । न द्वयोः सर्जिकाक्षारेऽप्य-श्वाभरणमाल्ययोः । सौवर्चलेऽपि मङ्गल्ये द्रव्येऽपि कटकेऽपि च" (इति विश्वः) इति त्रीणि सौवर्चलस्य "सोंचर" इति ख्यातस्य । तत्र तस्मिन् सौवर्चले मेचके कृष्णवर्णे चेत्तदा तिलति, तेलति वा तिलकम् "तिलको द्रुमरोगाश्वभेदेषु तिलकालके । क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके" (इति मेदिनी) इत्येकं श्यामसौवर्च-लस्य । मन्दं मुदं वा स्यन्दते पृषोदरादित्वात् मत्स्यण्डी, फाणयते स्म फाणितम्, इति द्वे फाणितस्य "राब" इति ख्यातस्य । खण्डविकारे खण्डविकारवति द्रव्ये शृणाति पित्तमिति शर्करा "शर्करा खण्डविकृतौ कर्परांशे रुगन्तरे । उपलायां शर्करायुक्त-देशे शकलेपि च" (इति हैमः) सितः श्वेतवर्णोऽस्त्यस्याः, सिनोति वा सिता स्यात् "सितमवसिते च बद्धे धवले त्रिपु । शर्करायां स्त्री" (इति मेदिनी) इति द्वे सितायाः "चीनी वा मिश्री" इति ख्यातायाः ॥ ४३ ॥

खोवा **कूर्चिका क्षीरविकृतिः (स्याद्र) साला (तु)मार्जिता ।**

सिखरन कढ़ी **(स्या)त्तेमनं तु निष्ठानं (त्रिलिङ्गा वा सितावधेः)॥४४॥**

१ "श्लेष्माणमाशु विनिहन्ति सदार्द्रकेण पित्तं निहन्ति च तदेव हरीतकीभिः । शुण्ठ्या समं हरति वातमशेषमित्थं दोषत्रयक्षयकराय नमो गुडाय" (इति भावप्रकाशः)॥ २ "खण्डं तु सिकतारूपं सुश्वेतं शर्करा सिता । सिता सुमधुरा रुच्या वातपित्तास्रदाहहृत्" (इति भावप्रकाशः)॥

३ "आदौ माहिषमम्लमम्बुरहितं दध्याढकं शर्करां शुभ्रां प्रस्थयुगोन्मितां शुचिपटे किंचिच्च किंचित् क्षिपेत् । दुग्धेनार्धघटेन मृन्मयनवस्थाल्यां दृढं स्रावयेदेलाबीजलवङ्गचन्द्रमरिचैर्योग्यैश्च तद्योजयेत् । भीमेन प्रियभोजनेन रचिता नाम्ना रसाला स्वयं श्रीकृष्णेन पुरा पुनः पुनरियं प्रीत्या समास्वादिता । एषा येन वसन्तवर्जितदिने संसेव्यते नित्यशस्तस्य स्यादतिवीर्यवृद्धिरनिशं सर्वेन्द्रियाणां बलम्" (इति भावप्रकाशः) पहले खटाई व जलरहित गाढ़े भैंस के दही को ४ सेर लेवे इसमें २ सेर सफ़ेद शकर मिलावे फिर साफ़ गाढ़े कपड़े में डाल हाथों से मले सब दही नीचे के पात्र में इकट्ठा हो जावे इसमें ५ सेर दूध डाले छाने नीचे मिट्टी का पात्र रक्खे जब सारा दही छन जावे तब इसमें इलायचीके बीज, लौंग, भीमसेनी कपूर, कालीमिरच इनका चूर्ण व शहद डाले इस रसाला को भीमसेन कि जिनको भोजन प्यारा है उन्होंने बनाया व श्रीकृष्णजी ने वारंवार स्वाद लिया है इसको वसन्त ऋतु छोड़कर जो प्राणी सेवन करताहै उसके वीर्य बढ़ताहै व सब इन्द्रियोंमें बल आ जाता है इसे श्रीखण्ड भी कहते हैं ॥

किति—कूर्चो मस्त्वादिरस्त्यस्याः, कूर्चतीति वा कूर्चिका "दध्ना सह पयःपक्वं यत्तत्स्याद्दधिकूर्चिका । तक्रेण पक्वं यत्क्षीरं सा भवेत्तक्रकूर्चिका" "कूर्चिका सूचिकायां च तूलिकायां च कुड्मले । कपाटोद्भेदने क्षीरविकृतावपि योषिति" (इति मेदिनी) इति द्वे "किलाटिकायाः" "मावा—खोवा" इति ख्यातायाः । रसानालातिरसाला "अर्धाढकः सुचिरपर्युषितस्य दध्नः खण्डस्य षोडश पलानि शशिप्रभस्य । सर्पिः पलं मधु पलं मरिचं द्विकर्षं शुण्ठ्याः पलार्धमपि चार्धपलं चतुर्णाम् ॥ सूक्ष्मे पटे ललनया मृदुपाणिघृष्टा कर्पूरधूलिसुरभीकृतपात्रसंस्था । एषा वृकोदरकृता सरसा रसाला यास्वादिता भगवता मधुसूदनेन" (इति सूदशास्त्रम्) मार्ज्यते स्म मार्जिता इति द्वे रसालायाः "शिखरन" इति ख्यातायाः । तिम्यतेऽनेन तेमनं "तेमनं व्यञ्जने क्लेदे तेमनी चुल्लिभित्त्यपि" (इति हेमचन्द्रः) निष्ठीयतेऽत्रेति निष्ठानं स्यादिति द्वे व्यञ्जनस्य । इतो वक्ष्यमाणा वासितावधेः वासितपर्यन्ताश्शब्दास्त्रिलिङ्गा वाच्यलिङ्गा भवन्तीति ॥ ४४ ॥

(शूल पर भुना मांस; बटलोही में पका रसियाउरि घी से पका अन्न)

शूलाकृतं (पु.स.न.) भटित्रं (पु.स.न.) (च) शूल्यम् (पु.स.न.) उख्यं (पु.स.न.) तु पैठरम् (पु.स.न.) ।
प्रणीतम् (पु.स.न.) उपसंपन्नं (पु.स.न.) प्रयस्तं (पु.स.न.) (स्यात्) सुसंस्कृतम् (पु.स.न.) ॥ ४५ ॥

शिवति—शूलेन कृतं शूलाकृतम्, भटति, भट्यते स्म भटित्रम्, शूले संस्कृतं शूल्यं स्यादिति त्रीणि लोहशलाकया पक्वमांसस्य । उखायां संस्कृतम् उख्यम्, पिठरे संस्कृतं पैठरमिति द्वे पिठरपक्वान्नादेः । प्रणीयते स्म प्रणीतम् "प्रणीतमुपसम्पन्ने कृते क्षिप्ते प्रवेशिते । संस्कृताग्नौ च" (इति हैमः) उपसम्पद्यते स्म उपसम्पन्नम् "उपसम्पन्नमुद्दिष्टं निहते च सुसंस्कृते" (इति विश्वः) इति द्वे पाकेन संस्कृतस्य व्यञ्जनादेः । प्रयस्यते स्म प्रयस्तम्, सुष्ठु संस्क्रियते स्म सुसंस्कृतं स्यादिति द्वे द्रव्यान्तरसंस्कृतस्य पक्वस्य ॥ ४५ ॥

(पनिहां व्यञ्जन बीना अन्न; चिकना; छौंका या बघारा)

(स्या)त्पिच्छिलं (पु.स.न.) (तु) विजिलं (पु.स.न.) संमृष्टं (पु.स.न.) शोधितं (पु.स.न.) (समे) ।
चिक्कणं (पु.स.न.) मसृणं (पु.स.न.) स्निग्धं (पु.स.न.) (तुल्ये) भावित (पु.स.न.) वासिते (पु.स.न.) ॥ ४६ ॥

स्यादिति—"पिच्छा तु शाल्मलीवेष्टे मण्डे चाश्वपदामये । पङ्क्तौ पूगच्छटाकोशमोचानिजयुतेषु च । पिच्छः पुच्छे" (इति विश्वः) पिच्छोऽस्त्यस्येति पिच्छिलः, वेजनं विजिस्ता लातीति विजिलमिति द्वे मण्डयुक्तभक्तजलयुक्तव्यञ्जनयोः । संमृज्यते स्म संमृष्टम्, शोध्यते स्म शोधितम् उभे समे समानार्थे स्यातामिति द्वे शोधितस्य । चिक्कनं चिक्कः अणतीति अणम् चिक्कस्य अणं शकन्ध्वादिः चित्यते वा चिक्कणम् ,

मस्यति, संवृणोति वा पृषोदरादित्वात् मसृणम् "मसृणोऽकर्कशे स्निग्धे त्रिषु मायां तु योषिति" ( इति विश्वः ) स्निह्यति स्म स्निग्धमिति त्रीणि चिक्कणस्य । भाव्यते स्म भावितम् "भावितं वासिते प्राप्ते" ( इति विश्वः ) वास्यते स्म वासितम् "वासिता करिणीनार्योर्वासितं भाविते रुते" ( इति मेदिनी ) उभे तुल्ये समानार्थे स्यातामिति द्वे ग्राहितहिङ्ग्वादि गन्धस्य व्यञ्जनादेः ॥ ४६ ॥

मुरमुरा | न. पु. पु. पु.बहु. पु.न. बहु.
धान का लावा **आपक्वं पौलिरभ्यूषो लाजाः (पुंभूम्नि) चाक्षताः[1] ।**
चिउरा | पु. पु. स.बहु.
बहुरी **पृथुकः (स्या)च्चिपिटको[2]धाना (भृष्टयवे स्त्रियः) ॥४७॥**

आपेति—ईषत्पक्वम् आपक्वम्, पोलति, पोलनं वा पोलस्तेन निर्वृत्तः पौलिः अभ्यूषसाहचर्यात्पुंसि भवति, अभ्यूषति, अभ्यूष्यते वा अभ्यूषः "तोक्मं हरितो यवोऽभ्युषः" ( इति वोपालितात ) ह्रस्वमध्योऽपि पचाद्यचि तु अभ्युषतीति अभ्योषोऽपि इति त्रीणि भर्जितहरितयवादेः । लज्यन्ते इति लाजाः पुंभूम्नि पुंसि बहुत्वे स्युः "लाजः स्यादार्द्रतण्डुले । नपुंसकमुशीरेऽथ स्त्रियां पुंभूम्नि चाक्षते" ( इति मेदिनी ) चो भिन्नक्रमः—क्षणनं क्षतम् न क्षतं येषामिति अक्षताश्च पुंभूम्नि भवन्तीति "अक्षतं न द्वयोः पण्डे लाजेषु त्रिष्वहिंसिते । यवेऽपि कथित्" ( इति मेदिनी ) इति द्वे भृष्टव्रीह्यादेः । प्रथत इति पृथुकः "पृथुकश्चिपिटेऽर्भके" ( इति हेमचन्द्रः ) नासिकाया नतं चिपिटं तदिव चिपिटकः स्यादिति द्वे चिपिटकस्य "चिउरा" इति ख्यातस्य । भृष्टयवे धानाः स्त्रियः स्युः दधतीति "धानाः" इति बहुवचननिर्देशादयं नित्यबहुवचनान्तो भवतीति विज्ञेयम् "धाना भृष्टयवेऽङ्कुरे धान्याके चूर्णसक्तुषु" ( इति हैमः ) भृष्टश्चासौ यवश्चेति द्वे भृष्टयवस्य "बहुरी" इति ख्यातायाः ॥ ४७ ॥

| पु. पु. पु. पु. पु. बहु.
पुवा या बरा **पूपोऽपूपः पिष्टकः ( स्यात् ) करम्भो दधिसक्तवः ।**
दहीसाना | स. न. न. न. पु.न. पु.न.
सत्तू भात **भिस्सा[3] (स्त्री) भक्तमन्धोन्नमोदनो(ऽस्त्री)सदीदिविः ४८**

प्विति—पवनं पूरिति संपदादित्वात् पिबति, पातीति वा पूपः, न पूय्यते, अपुवं

---

१ मुकुटस्तु—अक्षतमिति पठित्वा 'क्षणु हिंसायाम्' इत्यतः कर्मणि क्तः । क्षतं खण्डितम्, न क्षतमक्षत॰मिति विगृह्यते 'लाजाः' नित्यपुंलिङ्गाः नित्यबहुवचनान्ताश्चेति व्याख्यातवान् ॥

२ स्वार्थिकाः प्रकृतितोऽपि लिङ्गवचनान्यतिवर्तन्तेऽपीति पुंस्त्वम् ॥

३ बभस्तीति विग्रहे तु बाहुलकात्सः "बहुलं छन्दसि" इतीत्वम् "ब्राह्मणभिस्सा" इति सूत्रे भाष्यप्रयोगाल्लोकेऽपि ॥

पिबति पातीति वा अपूपः, पेषणं पिष्टं तस्य विकारः पिष्टकः स्यात् " पिष्टको घृत-पूपादौ नेत्ररोगान्तरेऽपि च " इति त्रीणि पूपस्य । केन जलेन रभ्यते मिश्रीक्रियते केन वायुना नीयते वा करम्भः, केन जलेन रम्बते, किरति, कीर्यते वेति विग्रहे तु कर-म्बोऽपि, सचन्ते, सच्यन्ते वा सक्तवः " धाना चूर्णन्तु सक्तवः " ( इति नाममाला ) दध्युपसिक्ताः सक्तवः शाकपार्थिवादित्वाद् दधिसक्तवः इति द्वे दधिमिश्रितसक्तुकस्य । बभस्ति, भेदनं भिद् ता स्यतीति वा भिस्सा स्त्री स्यात् भज्यते स्म भक्तम् , "भक्तमन्ने तत्परे च " ( इति हेमचन्द्रः ) अद्यते, अन्धयति वा अन्धः, अद्यते स्म अन्नम् " अन्नं भक्ते च भुक्ते स्यात् " ( इति विश्वः ) सदीदिविः दीदिविसहितः ओदनः अस्त्री पुंनपुंसकं स्यात् उनत्ति, ऊर्द्दतेऽनेन वेति पृषोदरादित्वात् ओदनः, " ओदनं न स्त्रियां भक्ते वलायामोदनी स्त्रियाम्" (इति मेदिनी) दीव्यत्यनेन दीदिविः " दीदि-विर्धिषणे पुंसि स्यादन्ने च तदस्त्रियाम् " ( इति विश्वः ) इति षडोदनस्य ॥ ४८ ॥

　　स.　　स.　　　　पु.न.
जलाभात **भिस्साटा दग्धिका ( सर्वरसाग्रे ) मण्ड(मस्त्रियाम्)।**
पसावन या मैल　पु.　पु.　पु.
भात का माड़ **मासराचामनिस्रावा (मण्डे भक्तसमुद्भवे )॥ ४९ ॥**

भीति—भिस्सां टीकते डप्रत्यये ह्रस्वे च भिस्सटा, दह्यते स्म दग्धा कुत्सिता दग्धा दग्धिका इति द्वे दग्धौदनस्य । सर्वरसाग्रे मण्डम् अस्त्रियां पुंनपुंसकं स्यात् रसश्चासा-वग्रश्च, रसस्य अग्रः, अग्रो रस इति राजदन्तादिर्वा सर्वस्य रसाग्रः सर्वरसाग्रः, मण्डति, मण्ड्यते, मन्यते वा मण्डः "मण्डः पञ्चाङ्गुले शाकभेदे क्लीवन्तु मस्तुनि । आमलक्यां स्त्रियां मण्डाथास्त्रियां सारपिच्छयोः " ( इति विश्वः ) भक्तात्समुद्भवतीति भक्तसमु-द्भवस्तस्मिन् मण्डे मासराचामनिस्रावाः स्युः मा श्रीः सरत्यत्र, मास्यते वा मासरः, आचम्यते आचामः, निस्राव्यत इति निस्रावः, विस्राव्यत इति विग्रहे तु विस्रावोऽपि इति त्रीणि भक्तमण्डस्य ॥ ४९ ॥

　　स.　　स.　　स.　　स.　　स.
लप्सी गौ **यवागूरुष्णिका श्राणा विलेपी तरला ( च सा ) ।**
का दूध　पु.स.न.　　　　स.न.　पु.न.
आदि गोबर **गव्यं (त्रिषु गवां सर्वं) गोविट् गोमय(मस्त्रियाम्)॥५०॥**

येति—यौति, यूयते वा यवागूः, उष्णा एव उष्णिका, श्रायते स्म श्राणा, विलिम्प-तीति पचाद्यचि गौरादित्वाद् विलेपी या विलेपी सा च तरणं तरस्तं लातीति तरला स्यादिति पञ्च श्राणायाः " लप्सी " ‡ इति ख्यातायाः । गवां धेनूनां सर्वं भव-

‡ "समितां सर्पिषा भृष्टां शर्करां पयसि क्षिपेत् । तस्मिन् घनीकृते न्यस्येल्लवङ्गं मरिचादिकम् । सिद्धैषा लप्सिका ख्याता " ( इति भावप्रकाशः ) ॥

विकारावयवादि गोरिदं गव्यं त्रिपु त्रिलिङ्गयां स्यात् " गव्यं नपुंसकं ज्यायां रागद्रव्ये-ऽप्यथ स्त्रियाम् । गोसमूहे त्रिलिङ्गं तु गोदुग्धादौ च योषिति " ( इति मेदिनी ) इत्येकं धेनूद्भवपयोदध्यादिकस्य । वेवेष्टि विशतीति वा विट् गोर्विट् गोविट्, गोः पुरीषं गोमयम् अस्त्रियां पुंनपुंसकं स्यादिति द्वे गोमयस्य " गोबर " इति ख्यातस्य ॥५०॥

पु.न. न. न. न.

करसी दूध (तत्तु शुष्कं) करीषो (ऽस्त्री) दुग्धं क्षीरं पयः ( समम् ) ।

घी, दही आदि न. न.

पतला दही पयस्य (माज्यदध्यादि) द्रप्सं ( दधि घनेतरत् ) ॥ ५१ ॥

तदिति–तद्गोमयन्तु शुष्कं चेत् तदा कीर्यत इति करीषः अस्त्री पुंनपुंसकं स्यादित्येकं शुष्कगोमयस्य । दुह्यतेस्म दुग्धम्, क्षयणं क्षीस्तामीरयति, घस्यते वा क्षीरम् " क्षीरं पानीयदुग्धयोः " ( इति हैमः ) पीयते, पयते वा पयः " पयः क्षीरे च नीरे च " ( इति हैमः ) एतत्त्रयं समं समानार्थकं स्यादिति त्रीणि दुग्धस्य । आज्यं च दधि चादिर्यस्य आदिना तक्रं नवनीतं च गृह्यते, आज्यदध्यादिपयसो विकारः पयस्यं स्यादित्येकं घृतादेः । घनेतरत् घनात्कठिनादन्यत् दधि दृप्यत्यनेन द्रप्सं स्यात् " द्रप्सं दधिघनं तथा " ( इति नाममाला ) तृप्यत्यनेनेति विग्रहे तु अन्न्यादित्वात् त्रप्स्यमपि द्रप्स्यं च केचित्तु द्रप्सस्थाने सरं पठन्तीति सरतीति सरः "बाणद्रप्सौ सरौ " ( इति दुर्गः ) इत्येकं द्रप्सस्य " दगडा " इति ख्यातस्य ॥ ५१ ॥

न. न. न. न. न.

घी घृतमाज्यं हविः सर्पिर्नवनीतं ( नवोद्धृतम् ) ।

नैनू न.

ताजा नैनू (तत्तु) हैयंगवीनं ( यद् ह्योगोदोहोद्भवं घृतम् ) ॥ ५२ ॥

घ्रिति–घ्रियते इति घृतम् " घृतमाज्याम्बुदीप्तेषु " ( इति हेमचन्द्रः ) आज्यते-ऽनेनेति आज्यम्, हूयते इति हविः " हविः सर्पिषि होतव्ये " ( इति हैमः ) सर्पतीति सर्पिरिति चत्वारि घृतस्य । नवं च तदुद्धृतं च नवोद्धृतं घृतं नवं च तन्नीतं च नवनीतं स्यादित्येकमकृताग्निसंयोगस्य नवोद्धृतस्य । यत् ह्यो गोदोहोद्भवं घृतं तत्तु हैयंगवीनं स्यात् । दुह्यते इति दोहः गवां दोहः ह्योगोदोहः ह्योगोदोहादुद्भवतीति तस्य " हैयङ्गवीनं संज्ञायाम् " ५ । २ । २३ इति निपातः इत्येकमेकरात्रपर्युषित-दध्युत्पन्नघृतस्य ॥ ५२ ॥

न. न. न. पु.

माठा दण्डाहतं कालशेयमरिष्ट (मपि) गोरसः ।

न. न. न.

माठा के भेद तक्रं ह्युदश्विन्मथितं (पादाम्ब्वर्धाम्बुनिर्जलम्) ॥ ५३ ॥

देति—दण्डेन मथाहतं विलोडितं दण्डाहतम्, कलश्यां मन्थपात्रे भवम् कालशेयम्, न रिष्टमक्षेमं यस्मादिति अरिष्टमपि " अरिष्टमशुभे तक्रे सूतिकागार आसवे। शुभे मरणचिह्ने च " ( इति विश्वः ) गवां रसो गोरसः इति चत्वारि गोरसस्य " घोल " इति ख्यातस्य। अथास्य भेदानाह—पादाम्ब्वर्धाम्बु निर्जलं क्रमेण तक्रम्, उदश्वित्, मथितं च स्यात्—तञ्चति, तञ्च्यते वा तक्रं पादाम्बुयुतं तक्रं स्यादित्येकं चतुर्थांशजलघोलस्य। उदकेन श्वयति वर्धते इति उदश्वित् अर्धाम्बुयुतमुदश्वित्स्यादित्येकमर्धजलघोलस्य। मथ्यते स्म मथितम् निर्जलं मथितं स्यादित्येकं निर्जलघोलस्य ॥ ५३ ॥

दही का पानी — न. मस्तु, पु. पीयूषः
पेयुस
भूख — स. अशनाया, स. बुभुक्षा, स. क्षुद्, पु. ग्रासः, पु. कवलः
कौर

**(मण्डं दधिभवं) मस्तु पीयूषो (ऽभिनवं पयः)।**
**अशनाया बुभुक्षाक्षुद् ग्रास(स्तु)कवलः(पुमान्)॥५४॥**

मेति—दध्नो भवतीति दधिभवं मण्डं मस्यते, इति मस्तु स्यादित्येकं वस्त्रनिःसृतदधिजलस्य दध्युपरिभागस्य वा। अभिनवं पयः क्षीरं पीयति, पीय्यतेऽनेनेति वा पीयूषः स्यात् " पीयूषं सप्तदिवसावधिक्षीरे तथाऽमृते " ( इति विश्वः ) बाहुलकाद्गुणे पेयूषमपि[1] इत्येकं नवप्रसूताया गोः क्षीरस्य। अशनस्य इच्छा अशनाया, भोक्तुमिच्छा बुभुक्षा क्षोधनं क्षुत् भागुरिमते टापि क्षुधा च इति त्रीणि क्षुधायाः " भूख " इति ख्यातायाः। ग्रस्यते, इति ग्रासः, केन वलत इति कवलः पुमान् स्यादिति द्वे कवलस्य ॥ ५४ ॥

साथ पीना — स. सपीतिः, न. तुल्यपानं, स. सग्धिः, न. सहभोजनम्
साथ खाना
प्यास — स. उदन्या, स. पिपासा, स. तृट्, पु. तर्षः, स. जग्धिः, न. भोजनम्

**सपीतिः(स्त्री) तुल्यपानं सग्धिः(स्त्री) सहभोजनम्।**
**उदन्या(तु)पिपासातृट् तर्षो जग्धि(स्तु)भोजनम्॥५५॥**

भोजन — न. जेमनं, पु. लेहः, पु. आहारः, पु. निघसः, पु. न्यादः
अघाना
खाने से बचा — न. सौहित्यं, न. तर्पणं, स. तृप्तिः, स. फेला, न. भुक्तसमुज्झितम्
जूठा

**जेमनं लेह आहारो निघसो न्याद ( इत्यपि )।**
**सौहित्यं तर्पणं तृप्तिः फेलाभुक्तसमुज्झितम् ॥ ५६ ॥**

सेति—पानं पीतिः समाना पीतिः सह पीतिर्वा सपीतिः स्त्री स्यात्, तुल्यं च यत्पानं च तुल्यपानमिति द्वे बहुभिः संमिल्यपानस्य। अदनं ग्धिः समाना ग्धिः सग्धिः स्त्री स्यात्, भुक्तं भोजनं समानं भोजनं सहभोजनं चेति द्वे सहभोजनस्य। उदकस्येच्छा उदन्या, पातुमिच्छा पिपासा, तर्पणं तृट् संपदादिः " तृट् तृष्णावतर्षश्च भवेल्लिप्सा-

---

१ " स्यात्पेयूषं च पीयूषं नवक्षीरेऽमृतेऽपि च " ( इति हारावली ) ॥

पिपासयोः " ( इति हैमः ) भागुरिमते तु टापि तृषापि "तृषा लिप्सातृषोः स्त्रियाम्" (इति विश्वः ) घञि तु तर्षः इति चत्वारि तृषायाः । अदनं जग्धिः, भुक्तं भोजनम्, जीन्तम्, जेमितं वा जान्तम्, जमितं वा जेमनम्, जमनं वा लेहनं लेहः ' लेपः ' इति पाठे तु लेपनं लेपः " लेपस्तु लेपने । अशने च सुरायां च " ( इति हेमचन्द्रः ) आहरणमाहारः, न्यदनं निघसः ' णे ' न्यादः इत्यपि इति सप्त भोजनस्य । सुहितस्य भावः सौहित्यम्, तृप्तं तर्पणम्, तर्पणं तृप्तिरिति त्रीणि तृप्तेः । फेल्यते इति फेला, पूर्वं भुक्तं पश्चात्समुज्झितम् भुक्तसमुज्झितमिति द्वे भुक्तोत्सृष्टस्य ॥ ५५ । ५६ ॥

न. न. न. न. न. न.

चाह **कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ।**

पु. पु. पु. पु. पु. पु.

अहीर **गोपे गोपालगोसंख्यगोधुगाभीरवल्लवाः ॥ ५७ ॥**

केति—कमनं कामम् "विशेषैर्यद्यबाधितः" इति क्लीबत्वं ज्ञेयम् "कामं वाढेऽनुमति-रेतसोः । कामः स्मरेच्छाकाम्येषु " (इति हैमः) प्रकमनं प्रकामम्, पर्यापणं पर्याप्तम्, निकमनं निकामम्, एषणम् इष्टम्, " इष्टमाशंसितेऽपि स्यात्पूजिते प्रेयसि त्रिषु । सप्ततन्तौ पुमान् क्लीबे संस्कारे क्रतुकर्मणि " ( इति विश्वः ) आप्तुमिष्टम् ईप्सितम् ईप्सितमनतिक्रम्य यथेप्सितमिति षट् इच्छानतिक्रमस्य । गां पातीति गोपः " गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि । ग्रामौघाधिकृते पुंसि सारिवाख्यौषधौ स्त्रियाम् " ( इति विश्वः ) गां पालयतीति गोपालः, " गोपालो नृपगोपेशे " ( इति मेदिनी ) गां संचष्टे इति गोसंख्यः, गां दोग्धीति गोधुक् ( ग् ) मूलविभुजादित्वात्के गोदुहो-ऽपि " गोपगोदुहवल्लवाः " ( इति त्रिकाण्डशेषः ) आसमन्ताद्भियं राति, आ अभिईरयति वा आभीरः, वल्लनं वल्लस्तं वाति, वायति वा वल्लवः इति षट् आभीरस्य "अहीर" इति ख्यातस्य ॥ ५७ ॥

न. पु.

पशु या चौ- **(गोमहिष्यादिकं) पादबन्धनं (द्वौ) गवीश्वरे ।**

पाये गोपाल, पु. पु. न. न. पु.

गैयोंका गरोह **गोमान् गोमी गोकुलं(तु)गोधनं(स्या)द्गवां व्रजे ॥५८॥**

गोमेति—गौश्च महिषी च गोमहिष्यौ आदी यस्येति गोमहिष्यादिकं पादे बन्धन-मस्येति पादबन्धनं स्यात् "यादवं धनमिति"पाठे तु गोमहिष्यादिकं धनं यदूनामिदं यादवं स्यात् " गवादि यादवं वित्तम् " ( इति वोपालितः ) आदिना खराजाविकादिग्रहः इत्येकं गोमहिष्यादिकस्य । गवीश्वरे गवामधिपे गोमान्, गोमी चेति द्वौ स्याताम् । गवामीश्वरो गवीश्वरः,बहवो गावोऽस्येति गोमान्, गावः सन्त्यस्येति गोमी स्यादिति

त्रीणि गवीश्वरस्य। गवां व्रजे गोसमुदाये गवां कुलं गोकुलम् " गोकुले धनगोधने" ( इति व्याडिः ) गवां धनं गोधनं स्यादिति द्वे गोसंघातस्य ॥ ५८ ॥

पु.स.न
जहां पहले गौओं ने चरा या बैल खाया **(त्रिष्वा)शितंगवीनं (तद्गावो यत्राशिताःपुरा)।**
पु. पु. पु. पु. पु. पु.
**उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ॥ ५९ ॥**
बैलोंका गरोह पु. पु. पु. न.
गैया, बछड़ों **अनड्वान्सौरभेयो गौ( रुक्ष्णांसंहति) रौक्षकम्।**
और धेनुओंका झुण्ड स. स. न. न.
**गव्या गोत्रा (गवां वत्सधेन्वो) वात्सकधैनुके ॥ ६० ॥**

त्रीति—यत्र पुरा गावो धेनवः आशिता भोजिताः तत् आशितंगवीनं त्रिषु त्रिलिङ्गयां स्यात् आशिता भोजिता गावो यत्रेति आशितंगवीनमित्येकं पूर्वं गवां चारणस्थानस्य। उक्षतीति " श्वन्नुक्षन्निति कनिनन्तो निपातः " भन्दते इति भद्रः "भद्रः शिवे खञ्जरीटे वृषभे तु कदम्बके। करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः। काञ्चने च स्त्रियां रास्ना कृष्णा व्योमनदीषु च। तिथिभेदे प्रसारिण्यां कट्फलानन्तयोरपि। त्रिषु श्रेष्ठे च साधौ च न पुंसि करणान्तरे " ( इति मेदिनी ) वरणं वर् ईश्च वर् च ईवरौ तौ ददातीति ईवर्दः, अतिशयितं बलमस्येति बली स चासावीवर्दश्चेति बलीवर्दः, ऋषतीति ऋषभः, "ऋषभस्त्वौषधान्तरे। स्वरभिद्वृषयोः कर्णरन्ध्रकुम्भीरपुच्छयोः" ( इति मेदिनी ) वर्षतीति वृषभः " वृषभः श्रेष्ठवर्षयोः " ( इति विश्वः ) इगुपधत्वात्कप्रत्यये तु वृषः " वृषो धर्मे बलीवर्दे शृङ्गयां पुंराशिभेदयोः। श्रेष्ठे स्यादुत्तरस्थश्च वासमूषकशुक्ले। वृषा मूषिकपर्ण्यां च" ( इति मेदिनी ) अनः शकटं वहति " अनसि वहेः क्विबनसो डश्च " इति क्विपि सस्य डत्वे च अनड्वान्, सुरभ्या अपत्यं सौरभेयः गच्छतीति गौः " गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयी दृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च " ( इति विश्वमेदिन्यौ ) इति नव बलीवर्दस्य। उक्ष्णां वृषभाणां संहतिः समुदायः उक्ष्णां समूहः औक्षिकं स्यादित्येकं वृषसमूहस्य। गवां संहतिः समूहः गव्या, गोत्रा च स्यात् गवां समूहो गव्या, त्रप्रत्यये तु गोत्रा स्यादिति द्वे गोसमूहस्य। वत्सधेन्वोः संहतिः वात्सकधैनुके स्याताम्। वत्सानां समूहो वात्सकमित्येकं वत्ससमुदायस्य। धेनूनां समूहो धैनुकं स्यादित्येकं धेनुसमूहस्य ॥ ५९। ६० ॥

पु. पु. पु.
बड़ा बैल बूढ़ा बैल **(उक्षामहान्)महोक्षः(स्याद्)वृद्धोक्ष(स्तु)जरद्गवः।**
पु. पु.
कलोर नया बछड़ा **(उत्पन्नउक्षा)जातोक्षः सद्योजात (स्तु)तर्णकः ॥६१॥**

वितिम–महान् उक्षा गवेन्द्रः वृषभश्चेत्तदा महांश्चासावुक्षा चेति महोक्षः स्यादित्येकं महोक्षस्य । वृद्धश्चासावुक्षा चेति वृद्धोक्षः, जरंश्चासौ गौश्चेति जरद्गवः इति द्वे वृद्धवृषभस्य । उत्पन्नो जातः उक्षा वृषश्चेत्तदा जातश्चासावुक्षा चेति जातोक्षः स्यादित्येकं भ्रष्टदम्यभावस्य । सद्योजातस्तु तत्कालसंभूतो वृषभश्चेत्तदा तृणोतीति तर्णकः स्यादित्येकं सद्योजातस्य ॥ ६१ ॥

बछड़ामात्र नाटा बधिया सांड़

पु. पु. पु. पु.
**शकृत्करि(स्तु)वत्सः (स्याद्) दम्यवत्सतरौ(समौ) ।**
पु. पु. पु. पु.
**आर्षभ्यः (षण्डतायोग्यः) षण्डो गोपतिरिट्चरः ॥६२॥**

शेति–शकृत् करोतीति शकृत्करिः, वदतीति वत्सः स्यात् "वत्सः पुत्रादिवर्षयोः । तर्णकेनोरसि क्लीवम्" (इति विश्वः) इति द्वे वत्समात्रस्य । दमनार्हो दम्यः, तनुर्वत्सो वत्सतरः उभौ समौ समानार्थौ समानलिङ्गाविति द्वे वत्सभावमतीत्य द्वितीयं वयःस्पृष्टस्य । षण्डताया योग्यः षण्डतायोग्यो दम्यश्चेत्तदा ऋषभस्य प्रकृतिः आर्षभ्यः स्यादित्येकं क्लीवतायोग्यस्य । सनोति गर्भं ददाति, सन्यते गर्भो दीयते वा ञमान्तादिति डे षण्डः स्यात् बाहुलकान्नात्र सत्वम् "षण्डं पद्मादिसंघाते न स्त्री स्याद्गोपतौ पुमान् " (इति मूर्धन्यादौ डान्ते मेदिनी) शाम्यतीति विग्रहे तु शमेरिति ढे शण्ढोऽपि "शण्ढः स्यात्पुंसि गोपतौ । आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि" ( इति मेदिनी ) गवां पतिः गोपतिः, एषणामिट् इच्छा तया चरतीति इट्चरः एति तच्छील इति विग्रहे तु इत्वरोऽपि इति त्रीणि षण्डस्य "सांड़" इति ख्यातस्य ॥ ६२ ॥

कान्धा गलकंवरी नाथे बैल काढ़े बैल

पु. स. पु.
**(स्कन्धप्रदेशस्तु) वहः सास्ना(तु) गलकम्बलः ।**
पु. पु. पु. पु.
**(स्यान्न)स्तित(स्तु) नस्योतः प्रष्ठवाड्युगपार्श्वगः॥६३॥**

स्केति–अस्य वृषभस्य स्कन्धयोः प्रदेशस्तु वहति युगमनेनेति वहः स्यात् " वहः स्याद्वृषभस्कन्धे वाहे गन्धवहेऽपि च " ( इति विश्वः ) इत्येकं वृषस्कन्धस्य । सस्तीति सास्ना, गलस्य कम्बलो गलकम्बलः " कम्बलो नागराजे स्यात्सास्नाप्रावारयोः क्रमौ । कम्बलश्चोत्तरासङ्गे कम्बलं सलिले मतम्" ( इति विश्वः ) इति द्वे सास्नायाः " गलकंवरी " इति ख्यातायाः । नसनं नस्तं तत्कृतमस्येति नस्तितः स्यात्, नासिकायां भवा नस्या नासारज्जुस्तया उतः नस्योतः "नस्तोतः" इति पाठे तु नस्यते इति नस्ता तया उतो नस्तोतोऽपि इति द्वे नासारज्जुयुक्तस्य । प्रष्ठमग्रगामिनं वहतीति प्रष्ठवाट्, स्वामी तु पञ्चमं षष्ठं वा वर्षं वहतीति विगृह्य 'षष्ठवाट्' इति पृषोदरादित्वाद्रेफरहितं पठितवानिति युगस्य स्कन्धकाष्ठस्य पार्श्वं गच्छतीति युगपार्श्वगः इति द्वे दमनकाले कण्ठारोपितकाष्ठवाहस्य ॥ ६३ ॥

जोतनियां
लदनियां ( युगादीनां तु वोढारो ) युग्यप्रासङ्ग्यशाकटाः ।
गाड़ी का बैल
हलवाही (खनति तेन तद्वोढास्येदं) हालिकसैरिकौ ॥ ६४ ॥

युगेति–युगादीनां वोढारस्तु युग्यप्रासङ्ग्यशाकटाः स्युः । युगं वहतीति युग्यः स्यादित्येकं युगवहस्य । प्रासङ्गं वहतीति प्रासङ्ग्यः स्यादित्येकं प्रासङ्गवहस्य । शकटं वहतीति शाकटः स्यादित्येकं शकटवहस्य । तेन खनति, तस्य वोढा तद्वोढा, अस्येदमेष्वर्थेषु हालिकसैरिकौ स्याताम्–हलेन खनति, हलं वहति, हलस्यायं वा हालिकः, सीरेण खनति, सीरं वहति, सीरस्यायं वा सैरिकः स्यादिति द्वे हलवहस्य ॥ ६४ ॥

धुरिहा बैल, धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः ।
एक धुरावाही (उभावे) कधुरीणैकधुरावेकधुरावहे ॥ ६५ ॥

धूरिति–धूर्वहे सधुरन्धराः धुरन्धरसमेताः धुर्यधौरेयधुरीणाः स्युः । वहतीति वहः धुरोवहो धूर्वहः, धुरं वहतीति धुर्यः, धौरेयः, धुरीणः, धुरं धारयतीति धुरन्धरः इति पञ्च धूर्वहस्य । एकधुरावहे एकधुरीणैकधुरावित्युभौ स्याताम् । एकाचासौ धूश्च एकधुरा तां वहतीति एकधुरीणः लुक्पक्षे "लुक् तद्धितलुकि" इति टापो निवृत्तौ एकधुरः, एकधुराया वहः एकधुरावहः इति त्रीणि एकधुरावहस्य ॥ ६५ ॥

सर्वभारवाही (सतु)सर्वधुरीणो (यो भवेत्) सर्वधुरावहः ।
गैया माहेयी सौरभेयी गौरुस्रा माता (च) शृङ्गिणी ॥ ६६ ॥
उत्तम गैया अर्जुन्यघ्न्यारोहिणी(स्यात्)(स्यादुत्तमा गोषु)नैचिकी।

स इति–यो वृषभः सर्वधुरावहो भवेत् सतु सर्वधुरीणः स्यात्। सर्वा चासौ धूश्चेति सर्वधुरा तां वहतीति सर्वधुरीणः, सर्वधुराया वहः सर्वधुरावहः स्यादिति द्वे सर्वभारवाहकस्य । मह्या अपत्यं स्त्री, महाया अपत्यं वा माहेयी, सुरभ्या अपत्यं स्त्री सौरभेयी, गच्छतीति गौः, वसति क्षीरमस्यामिति उस्रा, "गौरुस्रा प्रिया इला मही" ( इति निरुक्तम् ) "उस्रो वृषे च किरणेऽप्युस्राऽर्जुन्युपचित्रयोः" ( इति मेदिनी ) मान्यते पूज्यते लोकैरिति माता 'मातरौ गोजनन्यौ द्वे' ( इति रुद्रः ) शृङ्गमस्त्यस्याः शृङ्गिणी, अर्जुनवर्णवती अर्जुनी स्यात् । न हन्ति दातारम् न हन्यते दातेति वा अघ्न्या, रोहितवर्णवती रोहिणी स्यात् "रोहिणी सोमवल्केभे कण्ठरोगोमयोर्गवि" ( इति

हेमचन्द्रः ) इति नव गोमात्रस्य । गोषु या उत्तमा चेत्सा नैचिकी स्यात् । नीचैश्चरतीति नैचिकी अथवा " निचिः कर्णशिरोदेशे " ( इति रभसः ) निचिरेव निचिकं प्रशस्तं निचिकमस्त्यस्याः नैचिकी " नैचिकी गौरुत्तमा तु निचिकी सा प्रकीर्तिता " इत्येकमुत्तमायाः ॥ ६६ । १/२ ॥

चितकबरी आदि — (वर्णादिभेदात्संज्ञाः स्युः)शवलीधवला (दयः)॥६७॥

दो वर्ष की / एक वर्ष की — द्विहायनी द्विवर्षा (गौ)रेकाब्दा(त्वे)कहायनी ।

चारवर्ष की / तीनवर्ष की — चतुरब्दा चतुर्हायण्ये (वं) त्र्यब्दा त्रिहायणी ॥ ६८ ॥

वेति—वर्ण आदिर्येषामिति आदिना प्रमाणावयवादिग्रहस्तेषां भेदाद्विशेषात् (शवलयोगाद् ) " अन्यतोङीषिति " ङीषि शवली, धवलयोगाद् अनुदात्तत्वाभावान्न ङीष् धवला ते आदी यासामिति ताः संज्ञाः स्युः । आदिना कृष्णा, कपिला, पाटला इत्यादयः, प्रमाणभेदाद्—दीर्घा, ह्रस्वा, खर्वा, वामनी इत्यादयः, अङ्गभेदात्—पिङ्गाक्षी, लम्बकर्णी, वक्रशृङ्गीत्यादयो गृह्यन्ते इति शवलादीनामेकैकम् । गौर्द्विवर्षा चेत्तदा द्विहायनी स्यात् । द्वौ हायनौ यस्या इति द्विहायनी, द्वे वर्षे वयःप्रमाणमस्या इति द्विवर्षा इति द्वे द्विवर्षायाः । एकाब्दा एकवर्षा चेत्तदा तु एकहायनी स्यात् । एकोऽब्दो यस्या इति एकाब्दा, एकोहायनोयस्या इति एकहायनी इति द्वे एकाब्दायाः । चतुरब्दा चेत्तदा चतुर्हायणी स्यात् । चत्वारोऽब्दा यस्या इति चतुरब्दा, चत्वारो हायना यस्या इति चतुर्हायणी इति द्वे चतुर्वर्षायाः । एवं त्र्यब्दा चेत्तदा त्रिहायणी स्यात् । त्रयोऽब्दा यस्या इति त्र्यब्दा, त्रयो हायना यस्या इति त्रिहायणी इति द्वे त्रिवर्षायाः ॥ ६७ । ६८ ॥

बहिला गिरेगर्भ वाली गर्भिणी — वशा बन्ध्यावतोका (तु) स्रवद्गर्भा (थ) संधिनी ।

विना समय बैल के पास जानेवाली — (आक्रान्ता वृषभेण) (थ) वेहद्गर्भोपघातिनी॥६९॥

वेति—वष्टीति वशा " वशा नार्यां बन्ध्यगव्यां हस्तिन्यां दुहितर्यपि " ( इति हैमः) बध्नातीति बन्ध्या इति द्वे वत्सविहीनायाः " बहिला " इति ख्यातायाः । अवगलितं तोकमपत्यं यस्या अवतोका, स्रवन्गर्भोयस्याः स्रवद्गर्भा इति द्वे स्रवद्गर्भायाः । अथेति वृषभेण आक्रान्ता सा सन्धानं सन्धा गर्भाधानमस्त्यस्याः सन्धिनी स्यात् "सन्धिनी वृषभाक्रान्ता कालदुग्धोस्त्रयोः स्त्रियाम् " ( इति मेदिनी ) इत्येकं कृतमैथुनायाः । अथेति—विहन्ति गर्भमिति वेहत् , गर्भमुपहन्तीति गर्भोपघातिनी इति द्वे वृषभयोगेन गर्भपातिन्याः ॥ ६९ ॥

गर्भधारनेयोग्य, स. स. स. स.
गाभिनकलोर **काल्योपसर्या ( प्रजने ) प्रष्ठौही बालगर्भिणी।**
या ओसर सीधी स. स. स. स.
बहुतवार ब्यानी **( स्याद ) चण्डी (तु) सुकरा बहुसूतिः परेष्टुका॥७०॥**

केति–प्रजने गर्भग्रहणे काल्या प्राप्तकाला चेत्तदा उपस्त्रियते वृषेणेति उपसर्या स्यादित्येकं गर्भग्रहणयोग्यायाः। प्रष्ठं वहतीति प्रष्ठौही, पृषोदरादित्वाद्रलोपे पष्ठौहीत्यपि, बाला चासौ गर्भिणी चेति बालगर्भिणी इति द्वे प्रथमं गर्भं धृतवत्याः। न चण्डी अचण्डी, सु सुखं करोति, सुक्रियते वा सुकरा स्यादिति द्वे सुशीलायाः। बह्वी सूतिर्यस्या बहुसूतिः, परमिच्छति, परैरिष्यते वा परेष्टुः सैव परेष्टुका इति द्वे बहुप्रसूतायाः॥ ७० ॥

स. स. स. स.
बकेनि नई ब्याई **चिरसूता वष्कयिणी धेनुः ( स्या ) न्नवसूतिका।**
दुहने में सीधी स. स. स. स.
मोटे थनवाली **सुव्रता सुखसन्दोह्या पीनोध्नी पीवरस्तनी॥ ७१ ॥**

चीति–चिरंसूता चिरसूता, वष्कते, गच्छति इति बाहुलकादयनि प्रत्यये वष्कयस्तरुणवत्सः सोऽस्त्यस्याः वष्कयिणी स्यात्। शाकटायनमते तु वष्कयस्त्वेकहायनोवत्सस्तेन नीयते ' संपदादित्वाद्गौरादित्वाच्च वष्कयणी इकाररहित उपान्त्योऽपि, इति द्वे वष्कयिण्याः " बकेनि " इति ख्यातायाः। धीयते, इति धेनुः, " धेनुर्गोमात्रके दोग्ध्र्याम् " ( इति हैमः ) नवं सूतं प्रसवोऽस्या नवसूतिका इति द्वे नवप्रसूतायाः। शोभनं व्रतमस्याः सुव्रता, सुखेन संदुह्यते, इति सुखसंदोह्या इति द्वे सुव्रतायाः। पीनमूधोऽस्याः पीनोध्नी, पीवराः स्तना यस्याः पीवरस्तनी इति द्वे पीवरस्तनवत्याः॥७१॥

स. स. स.
द्रोण भर दूध **द्रोणक्षीरा द्रोणदुघा धेनुष्या ( बन्धके स्थिता )।**
देनेवाली,गिरवी स.
धरीहुई बरसायड़ **समां समीना ( सा यैव प्रतिवर्षं प्रसूयते )॥ ७२ ॥**

द्रविति–द्रोणपरिमितं क्षीरमस्या द्रोणक्षीरा, द्रोणं दोग्धीति द्रोणदुघा इति द्वे द्रोणपरिमितक्षीरायाः। या बन्धके स्थिता सा धेनुष्या स्यात् " संज्ञायां धेनुष्या " (४।४।८९) इति साधुरित्येकं बन्धकस्थितायाः। या प्रतिवर्षं प्रसूयते सा समांसमीना स्यात्। समायां समायां विजायते "समां समां विजायते ५।२।१२" इति खप्रत्यये उत्तरदले टाविभक्त्योर्लोपः, पूर्वदले यलोप एव निपात्यते ' समांसमीना ' स्यादित्येकं प्रतिवर्षप्रसूतायाः॥ ७२ ॥

थयन न. न. पु.
खूंटा ऊधस् (स्तु क्लीब) मापीनं (समौ) शिवककीलकौ ।
नोइन स.न. न. स. स.
गेरांव (न पुंसि) दाम संदानं पशुरज्जु (स्तु) दामनी ॥७३॥

विति—वहति, उनत्ति वा असुनिप्रत्यये "ऊधसोऽनङ्" इत्यादिनिर्देशादूधादेशे च ऊधः क्लीबं स्यात्। आप्यायतेस्म आपीनं स्यादिति द्वे क्षीराशयस्य। शेतेऽत्र, श्यति गात्रकण्डूमिति वा शिवः स एव शिवकः, कील्यतेऽत्रेति कीलः स एव कीलकः उभौ समौ समानार्थौ समानलिङ्गौ च स्यातामिति द्वे "कीलकस्य" पशुबन्धनकाष्ठस्य "खूंटा" इति ख्यातस्य। द्यति, दीयते वा दाम पुंसि न स्यात्, सन्दीयते, सन्दानमिति द्वे दोहनकाले पादबन्धनरज्जोः "नोइन" इति ख्यातायाः। पशुबन्धनी रज्जुः शाकपार्थिवादित्वात् पशुरज्जुः। दामैव प्रज्ञाद्यणि, अन्निति प्रकृतिभावे, टिड्ढेति ङीपि च दामनी केषांचिन्मते तु बन्धनीति पाठः इति द्वे पशुबन्धनरज्जोः ॥ ७३ ॥

पु. पु. पु. पु. पु.
मथानी या रई वैशाखमन्थमन्थानमन्थानोमन्थदण्डके ।
खंभा पु. पु. स. स.
महेड़ा कुठरो दण्डविष्कम्भे मन्थनी गर्गरी (समे) ॥ ७४ ॥

वायिति—विशाखा प्रयोजनमस्येति वैशाखः "वैशाखो मासभेदेऽपि मन्थाने च प्रकीर्तितः" (इति मेदिनी) मथ्यतेऽनेनेति मन्थः "मन्थोरवौ मथि। सात्तवे नेत्ररोगे च" (इति हैमः) मन्थनशीलो मन्थानः, मथ्यतेऽनेनेति मन्थाः, मन्थस्य दण्डो मन्थदण्डः स एव मन्थदण्डकः इति पञ्च मन्थानस्य "मथानी" इति ख्यातायाः। दण्डविष्कम्भे कुठरः स्यात्। कुटतीति बाहुलकादरप्रत्यये कुठरः, कुटतीति विग्रहे तु कुटरोऽपि, दण्डं विष्कम्भातीति दण्डविष्कम्भः स्यादिति द्वे मन्थबन्धनकाष्ठस्य, मन्थदण्डधारककाष्ठस्य वा। मथ्यतेऽस्यामिति मन्थनी, गिरति बाहुलकाद्गरटि प्रत्यये, 'गर्ग' इति शब्दं रातीति वा गौरादित्वात् गर्गरी उभे समे समानार्थे स्यातामिति द्वे मन्थनपात्रस्य ॥ ७४ ॥

पु. पु. पु. पु. पु.
ऊंट, बच्चे उष्ट्रे क्रमेलकमयमहाङ्गाः करभः (शिशुः) ।
काठ में बँधे पु.
छोटे बच्चे (करभाःस्युः) शृङ्खलका (दारवैः पादबन्धनैः) ॥७५॥

विति—ओषति, उष्यते वा उष्ट्रः, क्रामतीति विचि प्रत्यये क्रम्, इलति, एलयति वा 'गत्रुल्कि' एलकः क्रमश्चासावेलकश्च क्रमेलकः, मीनाति, मयते वा मयः "मयः

शिल्पिनि दैत्यानां करभेऽश्वतरेऽपि च" ( इति मेदिनी ) महान्त्यङ्गानि यस्येति महाङ्गः इति चत्वार्युष्ट्रस्य "ऊंट" इति ख्यातस्य। अस्य शिशुः सुतः किरति कीर्यते वा करभः स्यात् "करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते" ( इति मेदिनी ) इत्येकमुष्ट्रशिशोः। दारवैः काष्ठमयैः पादबन्धनैर्युक्ताः करभाः शृङ्खलं बन्धनं येषामिति 'कनि' शृङ्खलकाः स्युरित्येकं दारुविकारशृङ्खलाप्रायबन्धनयुक्तकरभस्य ॥ ७५ ॥

बकरी बकरा — स्त्री. अजा स्त्री. छागी पु. स्तभ पु. च्छाग पु. बस्त पु. छगलका पु. अजे।

भेंड़ा — पु. मेढ्रो पु. रभ्रो पु. रणो पु. र्णायु पु. र्मेष पु. वृष्ण पु. य एडके ॥ ७६ ॥

अजेति—अजति, न जायते वा टापि अजा "अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे" ( इति हैमः ) छ्यति, छायते वा जातित्वात् छागी इति द्वे अजायाः "बकरी" इति ख्यातायाः। अजे स्तभच्छागबस्तछगलकाः स्युः स्तभ्नोतीति मूलविभुजादित्वात् के स्तभः तोभते, शोभते वेति विग्रहे तु इगुपधत्वात् के तुभः, शुभोऽपि, बस्तयतीति बस्तः, छायते, इति छगलः स एव छगलकः, अजतीति पचाद्यचि अजः स्यादिति पञ्च छगलस्य "छगड़ा—बकरा वा" इति ख्यातस्य। एडके मेढ्रोरभ्रोरणोर्णायुमेषवृष्णयः स्युः। मेहतीति मेढ्रः, उरुभ्रमति डे, पृषोदरादित्वात् उना शंभुनारभ्यते वा उरभ्रः, ऋच्छति, अर्यते वा उरणः, ऊर्णा अस्येति ऊर्णायुः, मिषति अचि मेषः, वर्षतीति वृष्णिः, इलति, एलयति वा ण्वुलि डलयोरैक्यात् एडकः इति सप्त मेढ्रस्य "भेंड़ा" इति ख्यातस्य ॥ ७६ ॥

ऊंट, भेंड़, बकरों का समूह — (उष्ट्रोरभ्राजवृन्दे स्या) न. दौष्ट्र न. कौरभ्र न. काजकम्।

गदहा — पु. चक्रीवन्त(स्तु) पु. वालेया पु. रासभा पु. गर्दभाः पु. खराः ॥ ७७ ॥

वेति—उष्ट्रोरभ्राजवृन्दे औष्ट्रकौरभ्रकाजकं स्यात्। उष्ट्राणां समूहः 'वुञि' औष्ट्रकं स्यादित्येकमुष्ट्रसमुदायस्य। उरभ्राणां समूह औरभ्रकं स्यादित्येकं मेषसमूहस्य। अजानां समूह आजकं स्यादित्येकं बस्तवृन्दस्य। चक्रवद्भ्रमणं चक्रं तदस्त्येषामिति चक्रीवन्तः, बलये उपसंहाराय संहिताः बलेरपत्यानि वा वालेयाः "बालेयो गर्दभे पुंसि मृदौ बलिहिते त्रिषु" ( इति मेदिनी ) रासन्ते रासभाः, गर्दन्तीति गर्दभाः "गर्दभं श्वेतकुमुदे गर्दभो गन्धभिद्यपि। रासभे गर्दभी क्षुद्रजन्तुरोगप्रभेदयोः" ( इति विश्वः ) खं मुखबिलमतिशयितमेषामिति खराः "खरो रक्षोन्तरे तीक्ष्णे दुःस्पर्शे रासभेऽपि च" ( इति हेमचन्द्रः ) इति पञ्च गर्दभस्य ॥ ७७ ॥

---

१ "ऊर्णाया युस् ५।२।१२३"। सित्वात्पदत्वम् अत्र छन्दसीति केचिदनुवर्तयन्ति। युक्तं चैतत् अन्यथाहि "अहंशुभमोर्युस्" इत्यत्रैवोर्णाग्रहणं कुर्यादिति ॥

पु. पु. पु. पु. पु.
बनियां या साहूकार वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् ।
पु. पु. पु.
पण्याजीवो(ह्या)पणिकः क्रयविक्रयिक(श्च सः) ॥७८॥

वायिति—विदेहेषु भवो, विदेग्धि, वै निश्चितो देह उपचयो यस्येति वा वैदेहकः, " वैदेहको वाणिजके शूद्राद्वैश्यासुतेऽपि च " ( इति विश्वः ) सार्थं वहतीति सार्थवाहः, निगमे भवो नैगमः " नैगमः स्यादुपनिषद्वणिजोर्नागरेऽपि च " (इति मेदिनी ) संज्ञापूर्वकत्वाद्वृद्ध्यभावे निगमोऽपि " निगमो वाणिजे पुर्यां कटे वेदे[1] वणिक्पथे " ( इति विश्वः ) पणते, इति वणिक् प्रज्ञाद्यणि तु वाणिजः, अणोऽभावे तु वणिक्, पणते पण्यम् पण्यमाजीवो यस्येति पण्याजीवः, आपणनमापणो व्यवहारोऽस्यास्तीति आपणिकः, यः 'आपणिकः' सः क्रयविक्रयाभ्यां जीवतीति क्रयविक्रयिकः स्यादित्यष्टौ सार्थवाहस्य " साहूकार " इति ख्यातस्य ॥ ७८ ॥

पु. पु. पु. पु.
बेचनेवाले खरीदनेवाले विक्रेता ( स्या ) द्विक्रयिकः क्रायकः क्रयिकः (समौ) ।
न. स. न. पु. पु.
बनियांपन मोल वाणिज्यं (तु)वणिज्या(स्यात्)मूल्यं वस्नोऽप्यवक्रयः७६

वीति—विक्रीणातीति विक्रेता, विक्रयेण जीवतीति विक्रयिकः स्यादिति द्वे विक्रयिकस्य । क्रीणातीति क्रायकः, क्रयेण जीवतीति क्रयिकः उभौ समौ समानार्थौ स्यातामिति द्वे क्रयिकस्य । वणिजां कर्म वाणिज्यम्, वणिजो भावः, वणिजि साधुर्वा वणिज्या स्यात् । स्त्रीत्वं स्वभावादिति माधवः इति द्वे वणिक्कर्मणः । मूलेनानाम्यं मूल्यम्, वसत्यत्रेति वस्नः " वस्नं वस्त्रे धने मूल्ये भृतौ " ( इति हेमचन्द्रः ) इति त्रीणि मूल्यस्य ॥ ७६ ॥

स. पु. न. पु. न. न.
पूंजी या मूर नीवी परिपणो मूलधनं लाभोधिकं फलम् ।
लाभ या नफा न. पु. पु. पु.
अदला बदला परिदानं परीवर्तो नैमेयनिमया ( वपि ) ॥ ८० ॥

नीति—नितरां[2]मिन्वति, नितरां व्ययति वा " नौव्योयलोपः पूर्वस्य च दीर्घः " इति इणि, यलोपे, नेर्दीर्घे च कृदिकारादितिविकल्पनात् नीवी, नीविरपि, " नीवी स्त्री कटीवस्त्रबन्धने । मूलद्रव्ये परिपणे " ( इति विश्वः ) परिपण्यते वृद्ध्यर्थं

---

१ यल्लक्ष्यं "निगमकल्पतरोर्गलितं फलमिति भागवते" ॥

२ 'इवि प्रीणने' ( भ्वा. प. से. ) "अनित्यमागमशासनम्" इति न नुम्, "इगुपधात्कित्" इति इन् कृदिकारादिति वा ङीप् ॥

प्रयुज्यते इति परिपणः, मूलं च तद्धनं चेति मूलधनमिति त्रीणि मूलधनस्य । लभ्यत इति लाभः, अध्यारूढम् अधिकमिति साधु, फलतीति फलम् " फलं हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः । फली, फलिन्याम् " ( इति हैमः ) इति त्रीणि लाभस्य । परिवृत्य दत्तं परिदानम्, " प्रतिदानमिति वा पाठः " परिवर्तनं परीवर्तः, निमानं निमेयः प्रज्ञाद्यणि तु निमेय एव नैमेयः, निमीयते निमयः उभावपि स्याताम् इति चत्वारि परिदानस्य " अदला बदला " इति ख्यातस्य ॥ ८० ॥

धरोहरि धरना　　पु.　　पु.　　न.　　न.
धरोहरि देना　**(पुमानु) पनिधिर्न्यासः प्रतिदानं (तदर्पणम्)।**
बेचनेकी वस्तु　　पु.स.न. पु.स.न.
खरीदने की वस्तु　**(क्रये प्रसारितं) क्रय्यं क्रेयं (क्रेतव्यमात्रके)॥ ८१ ॥**

रिति—उपनिधीयत इति उपनिधिः पुमान् स्यात्। न्यस्यते, न्यसनं वा न्यासः इति द्वे निक्षेपस्य "धरोहरि" इति ख्यातायाः । तदर्पणं प्रतिदानं स्यात् । प्रतीपं दत्तं प्रतिदानम् , अर्पितमर्पणम् तस्य अर्पणं तदर्पणमिति द्वे स्वामिने निक्षेपार्पणस्य । क्रये क्रयविक्रयस्थाने ग्राहका गृह्णीयुरिति बुद्ध्या यत् प्रसारितं वस्तु तत् क्रीयते इति क्रय्यं " क्रय्यस्तदर्थे " ( ६ । १ । ८२ ) इति साधु इत्येकं " ग्राहका गृह्णीयुः " इति बुद्ध्यापणे प्रसारितस्य । क्रेतव्यमात्रके क्रयणार्हं क्रेयं स्यादित्येकं हट्टे प्रसारणायोगस्य ॥ ८१ ॥

　　पु.स.न.　　पु.स.न.　　पु.स.न.
बिकाऊ वस्तु **विक्रेयं पणितव्यं (च) पण्यं ( क्रय्यादयस्त्रिषु )।**
　　न.　　पु.　स.
बयाना　**(क्लीबे)सत्यापनंसत्यंकारःसत्याकृतिः(स्त्रियाम्)॥८२॥**

वीति—विक्रीयते इति विक्रेयम्, पण्यते इति पणितव्यम् यति प्रत्यये तु पण्यते इति पण्यम् , 'अवद्यपण्येति' साधु इति त्रीणि विक्रयक्रियाकर्मणः । क्रय्यादयः पण्यान्तास्त्रिषु त्रिलिङ्ग्यां भवन्तीति । सत्यापितं सत्यापनं क्लीबे नपुंसके स्यात् सत्यापयति विग्रहे तु ण्यासेति युचि सत्यापना स्यात् " सत्यापना सत्याकृतिः " ( इति स्त्रीकाण्डे वोपालितः) सत्यस्य करणं सत्यंकारः क्तिनि, डाचि च प्रत्यये तु सत्यस्य करणं सत्याकृतिः स्त्रियां स्यादिति त्रीणि सत्याकृतेः ' साई ' इति ख्याताया: ॥ ८२ ॥

बेचना गिनती　पु.　　पु.
१ से १८ तक **विपणो विक्रयः(संख्याः संख्येये ह्यादश त्रिषु)।**
२० से परार्द्ध पर्यन्त **विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः ॥ ८३ ॥**

---

१ इकाई, दहाई, सैकड़ा, हज़ार, दशहज़ार, लाख, दशलाख, करोड़, दशकरोड़, अर्ब, दशअर्ब, खर्ब, दशखर्ब, नील, दशनील, पद्म, दशपद्म, शंख, और दशशंख, आदि गिनतियां होती हैं ॥

वीति—विपणनं विपणः संज्ञापूर्वकत्वान्न वृद्धिः, विक्रयणं विक्रयः इति द्वे विक्रयक्रियायाः । आदश-दशन्ति, दश्यन्ते वा बाहुलकात्कनिन् दशशब्दमभिव्याप्य एकादिकाः नवदशपर्यन्ताः संख्याः त्रिषु त्रिलिङ्गयां भवन्तीति एकाद्याः दशान्ताः संख्याः संख्येयेषु वर्तमानास्त्रिलिङ्गाः स्युः । यथा एकः पटः, एका शाटी, एकं कुण्डम्, दश पटाः-दश स्त्रियः, दश कुण्डानि आदशेति अष्टादशान्ता (इति क्षीरस्वामी) आदशेति दशशब्दश्रुतिपर्यन्तमष्टादशं यावत् संख्या एकादिकाः संख्येये द्रव्ये वर्तन्ते, हिरवधारणे तेन सामानाधिकरण्ये नैव तासां वृत्तिरित्यर्थः । यथा 'एको विप्रः' 'दश विप्राः' इति, नतु वैयधिकरण्येन वृत्तिरिति, नतु एको विप्रस्य, दश विप्राणामित्यादिरिति मुकुटः । विंशतिः आद्या यासान्ताः सर्वाः संख्याः संख्येयसंख्ययोः वर्तमानाः सदा एकत्वे स्युः नित्यमेकवचनान्ता भवन्तीति—विंशत्याद्याः सर्वा एव संख्याः संख्येये संख्यायां नित्यमेकवचनान्ता एव वर्तन्ते । " यद्भाष्यम्—आदशभ्यः संख्या संख्येये वर्तते, ऊर्ध्वं संख्याने संख्येये च " इति । विंशतिः पटाः विंशतिः पटानाम् । शतं गावः, शतं गवामिति क्षीरस्वामी ( वाचस्पतिरप्याह ) " ऊनविंशत्यादिकास्तु सर्वाः संख्येयसंख्ययोः " ( इति हेमचन्द्रः ) तथा च " मुकुटः " विंशत्याद्यास्तु संख्याशब्दा एकत्वे वर्तमानाः संख्येये संख्याने च वर्तन्ते यथा विंशतिर्घटाः, विंशतिर्घटानाम्, शतं गावः, शतं गवामिति सद्भिः सुधीभिरेवाकलनीयम् ॥ ८३ ॥

**संख्यार्थे द्विबहुत्वेस्तस्तासु चानवतेः स्त्रियः ।**
**पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम् ॥ ८४ ॥**

समिति—विंशत्यादीनां यदा संख्यार्थस्तदा द्विबहुत्वे द्विवचनबहुवचनेऽपि स्तः । संख्यामात्रार्थे वर्तमानायाः विंशत्यादेः संख्याया द्विवचनबहुवचने अपि स्यातामेकशेषेण । यथा द्वे विंशती, तिस्रो विंशतयः । गवां विंशती, गवां विंशतयः ( इति क्षीरस्वामी ) यदा तु भेदविवक्षायां संख्यान्तरस्यार्थेऽभिधेये विंशत्यादयो वर्तन्ते, तदा तत्सामानाधिकरण्यादुपचारेण तेभ्यो द्विवचनबहुवचने अपि भवतः । यथा द्वे विंशती, तिस्रो विंशतयः इति । सामानाधिकरण्याभावेऽपि " गवां विंशती, गवां विंशतयः " इति मुकुटोऽपि व्याख्यातवानिति । तासु विंशत्यादिषु आनवतेः नवतिमभिव्याप्य स्त्रियः स्त्रीलिङ्गा भवन्तीति यथा विंशत्या पुरुषैः कृतम्, विंशतिः कुण्डानीति । पञ्चनं पङ्क्तिः यद्वा पञ्चकद्वयम् " पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् " ( ५ । १ । ५९ ) इति एते रूढि शब्दा निपात्यन्ते । पङ्क्तेर्दशगुणोत्तरं क्रमात् शतसहस्रादि ज्ञेयम् । यथा दश पङ्क्तयः शतम्, दशशतानि सहस्रम्, दशसहस्राण्ययुतमित्यादि विज्ञेयम ॥ ८४ ॥

तौल या नाप न. न. न. न.
तौल के भेद **यौतवं द्रुवयं पाय्य (मिति)माना (र्थकं त्रयम्)।**
घुंघुची से स. स. पु. पु.
माशातक **(मानं)तुलाङ्गुलिप्रस्थैः (गुञ्जाः पञ्चा) द्यमाषकः ॥८५॥**

याविति—युतं, यौतीति वा योतुः शोधनं, शोधको वा तस्येदं यौतवम्, द्रोर्विकारो द्रुवयम् " माने वयः " इति साधु, मीयतेऽनेनेति पाय्यम् "पाय्यसांनाय्येति" साधु इति त्रयं मानमर्थो यस्येति मानार्थकं स्यादिति त्रीणि मानार्थकस्य। अथ मानभेदानाह—तोल्यतेऽनयेति तुला " अङ्ग " अतुलोपमाभ्यामिति निर्देशाद्गुणाभावः, अङ्गतीति अङ्गुलिः, प्रस्थीयतेऽनेनेति प्रस्थस्तैर्मानं त्रिविधं स्यादिति तुलामानम्, अङ्गुलिमानम्, प्रस्थमानं चेति मानत्रयस्य। पञ्च गुञ्जाः मष्यतेऽनेनेति माषः " माषो व्रीह्यन्तरे मूर्खे मानत्वग्दोषभेदयोः " ( इति मेदिनी ) शास्त्रीयत्वात् माष एव माषकः आद्यश्चासौ मापकश्चेति आद्यमाषकः स्यादित्येकं माषस्य "माशा" इति ख्यातस्य॥८५॥

तोला,चार पु. पु.न. न.
तोला,अस्सी **(ते षोडशा )क्षः कर्षो (ऽस्त्री) पलं (कर्षचतुष्टयम्)।**
घुघुची भर, या पु.न. पु.न. पु.
मोहर भर,पल **सुवर्णविस्तौ (हेम्नोऽक्षे) कुरुविस्त (स्तु तत्पले)॥८६॥**

तयिति—ते षोडश माषाः अक्षतीति अक्षः "अक्षो रथस्यावयवे व्यवहारे विभीतके। सायके शकटे कर्षे ज्ञाने चात्मनि रावणौ। अक्षं सौवर्चले तुत्थे हृषीके स्यात्" ( इति हेमचन्द्रः ) कर्षतीति कर्षः अस्त्री पुंनपुंसकं स्यात् " कर्षो ना कर्षणे मानप्रभेदे पुंनपुंसकम् " ( इति मेदिनी ) इति द्वे कर्षस्य। कर्षचतुष्टयं पलं स्यात्। पलतीति पलम् " पलमुन्मानमांसयोः" ( इति हैमः ) कर्षाणां चतुष्टयं कर्षचतुष्टयमिति द्वे पलस्य। हेम्नोऽक्षे सुवर्णविस्तौ स्याताम्। शोभनो वर्णः, स्तुतिर्वा यस्येति सुवर्णः " सुवर्णं स्वर्णविस्तयोः " इति रुद्रात्क्लीबमपि " सुवर्णो ना स्वर्णकर्षे सुवर्णा च मखान्तरे। स्त्री कृष्णागुरुणि क्लीबे काञ्चने हरिचन्दने " ( इति विश्वः ) विस्यते स्म विस्तः उभौ स्यातामिति द्वे स्वर्णकर्षस्य। तस्य हेम्नः पले तत्पले कुरुषु विस्तः कुरुविस्तः स्यादित्येकं स्वर्णपलस्य॥ ८६ ॥

स. पु.
सौपल,बीसतुला **तुला (स्त्रियां पलशतं ) भारः ( स्याद्विंशतिस्तुला )।**
दश भार पु.न. पु.
गाड़ाभर भार **आचितो(दश भाराः स्युः) (शाकटो भार) आचितः ८७**

---

१ यवो द्वादशभिर्गौरसर्षपैः प्रोच्यते बुधैः। यवद्वयेन गुञ्जा स्यात्त्रिगुञ्जो बल्ल उच्यते। माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत्क्वचित्। चतुर्भिर्माषकैः शाणः स निष्कष्टङ्क एव च। गद्याणो माषकैः षड्भिः कर्षः स्याद्दशमाषकः। चतुःकर्षैः पलं प्रोक्तं दशशाणमितं बुधैः। चतुःपलैश्च कुडवः प्रस्थाद्याः पूर्ववन्मताः॥ शास्त्रीयप्रमाणसे पांच रत्ती का 'माशा' होता है और चरक या सुश्रुत आदि के मान से छः रत्ती, सात रत्ती या आठ रत्ती का माशा कहा है॥

त्विति—पलानां शतं पलशतं तोलति, तोलयति वा तुला स्त्रियां स्यात् "तुला सादृश्यमानयोः । गृहाणां दारुबन्धाय पीठिकायामपीष्यते । राशौ पलशते भाण्डे तुलं स्याद्ब्रह्मदारुणि । आकाशे च पिचौ न स्त्री" ( इति विश्वः ) इत्येकं शतपलस्य । विंशतिस्तुला भ्रियते इति भारः स्यात् " भारः स्याद्वीवधे विष्णौ पलानां द्विसहस्रके " ( इति मेदिनी ) क्वादेर्दीर्घान्तादप्प्रत्यये तु भरोऽपि स्यादित्येकं विंशतितुलायाः । दश भाराः आचीयते स्म आचितः स्युः "आचितः शकटोन्मेये पलानामयुतद्वये " (इति विश्वः) इत्येकं दशभारस्य । शकटेन उह्यते इति शाकटः भारोऽपि ' आचितः ' स्यादित्येकं शाकटभारस्य ॥ ८७ ॥

रुपया-पैसा **कार्षापणः** (पु.) **कार्षिकः** (पु.) **(स्यात्) (कार्षिके ताम्रिके) पणः** (पु.) **।**

केति—कर्षस्यायं कार्षः, आपणनमापणः कार्षस्य कार्षेण वा आपणः कार्षापणः " कार्षापणोऽस्त्री कार्षिके पणषोडशकेऽपि च " ( इति मेदिनी ) कर्षस्यायं कार्षिकः स्यादिति द्वे रजतरूप्यस्य । ताम्रिके कार्षिके पण्यतेऽनेनेति पणः स्यात् " पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्रहे । क्रय्यशाकादिके द्यूते व्यवहारे भृतौ धने " (इति विश्वमेदिन्यौ ) इत्येकं ताम्रकृतकार्षापणस्य । तुलामानमुक्तम् , अङ्गुलिमानं च हस्तादि नरवर्गे प्रोक्तमेवेति द्रष्टव्यम् ॥ [1] ॥

प्रस्थमानं त्वाह—

आढक आदि मान विशेष **अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चकः ॥ ८८ ॥**
**कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ।**

---

१ " न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित् । अतः प्रयोगकार्यार्थं मानमत्रोच्यते मया । चरकस्य मतं वैद्यैराद्यैर्यस्मान्मतं ततः । विहाय सर्वमानानि मागधं मानमुच्यते । त्रसरेणुर्बुधैः प्रोक्तस्त्रिंशता परमाणुभिः । त्रसरेणुस्तु पर्यायनाम्ना वंशी निगद्यते । जालान्तरगतैः सूर्यकरैर्वंशी विलोक्यते । षड्वंशीभिर्मरीचिः स्यात्ताभिःषड्भिश्च राजिका । तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते बुधैः । यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम् । षड्भिस्तु रत्तिकाभिः स्यान्माषको हेमधानकौ । माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते । टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते । क्षुद्रको वटकश्चैव द्रंक्षणः स निगद्यते । कोलद्वयं तु कर्षः स्यात्स प्रोक्तः पाणिमानिका । अक्षः पिचुः पाणितलं किंचित्पाणिश्च तिन्दुकम् । विडालपदकं चैव तथा षोडशिका मता । करमध्यो हंसपदं सुवर्णं कवलग्रहः । उदुम्बरं च पर्यायैः कर्षमेव निगद्यते । स्यात्कर्षाभ्यामर्धपलं शुक्तिरष्टमिका तथा । शुक्तिभ्यां च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका । प्रकुञ्चः षोडशी बिल्वं पलमेवात्र कीर्त्यते । पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतं च निगद्यते । प्रसृतिभ्यामञ्जलिः स्यात्कुडवोऽर्धशरावकः । अष्टमानं च स ज्ञेयः कुडवाभ्यां च मानिका । शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः । शरावाभ्यां भवेत्प्रस्थश्चतुःप्रस्थैस्तथाढकः । भाजनं कांस्यपात्रं च चतुःषष्टिपलश्च सः । चतुर्भिराढकैर्द्रोणः कलशो नल्वणोऽर्मणः । उन्मानं च घटो राशिर्द्रोणपर्यायसंज्ञितः । द्रोणाभ्यां सूर्पकुंभौ च चतुःषष्टिः शरावकः । सूर्पाभ्यां च भवेद्द्रोणी वाहो गोणी च सा स्मृता । द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः । चतुस्सहस्रपलिका षण्णवत्यधिका च सा । पलानां द्विसहस्रं च भार एकः प्रकीर्तितः । तुला पलशतं ज्ञेयं सर्वत्रैवैष निश्चयः । माषकंकाक्षबिल्वानि कुडवः प्रस्थमाढकम् । राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणम्" (इति भावप्रकाशः)॥

अत्तीति–आढौकते इति अचि पृषोदरादित्वात् आढकः अस्त्रियां पुंनपुंसके स्यात् । " आढकी च तुवर्यां स्त्री परिमाणान्तरे त्रिषु " (इति मेदिनी) इत्येकं चतुःप्रस्थस्य । द्रवतीति द्रोणः अस्त्रियां स्यात् " द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाकेऽस्त्री नीवृदन्तरे । स्त्रियां काष्ठाम्बुवाहिन्यां गवादिन्यामपीष्यते" (इति विश्वः) इत्येकं चतुराढकस्य । खमारातीति मूलविभुजादित्वात् 'के' गौरादित्वाच्च खारी स्यादित्येकं द्रोणचतुष्टयस्य । उह्यतेऽनेनेति वाहः " वाहोऽश्वमानयोः । वृषे वाहा तु बाहौ स्यात् " ( इति हेमचन्द्रः ) इत्येकं सूर्पद्वयस्य । नितरां कुञ्चतीति निकुञ्चः स एव निकुञ्चकः, प्रकुञ्चतीति विग्रहे तु प्रकुञ्चः स एव प्रकुञ्चकोपि स्यादित्येकमेकमुष्टिकायाः । कुण्डते, कुण्ड्यते वा बाहुलकात्कवाचि प्रत्ययेऽनित्यत्वान्नुमोऽभावेपि कुडवः स्यात् । मुकुटमते तु कुटति, कुट्यते वा कपनि प्रत्यये कुटपोऽपि स्यादित्येकं पादसेटकस्य । प्रस्थीयतेऽनेनेति प्रस्थः "प्रस्थोऽस्त्रियां मानभेदे सानावत्युच्चवस्तुनि " ( इति मेदिनी ) इत्येकमेकसेटकस्य । इत्याद्याः परिमाणार्थकाः पृथक् भिन्नाः सन्तीति आद्यर्थेन मानीभविकाप्रवर्तिकादयः संगृह्यन्ते इति ॥ ८८ । [१] ॥

पु. पु. पु. पु.

चौथाई-बांट **पाद(स्तुरीयो भागः)स्या(दंशभागौ तु)वण्टके ॥८९॥**

पेति–तुरीयो भागः पद्यते, इति घञि पादः स्यात् " पादो बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे च " ( इति मेदिनी ) इत्येकं तुर्यभागस्य । अंश्यते, इति कर्मणि घञि कृते अंशः स्यात् " अंशो विभाजने प्रोक्त एकदेशेऽपि वस्तुनः " ( इति हेमचन्द्रः ) भज्यते इति भागः " भागो रूपार्धके भाग्यैकदेशयोः " ( इति हैमः ) वण्ट्यते इति वण्टः स एव वण्टकः स्यादिति त्रीणि वण्टकस्य " बांट " इति ख्यातस्य ॥ ८९ ॥

न. न. न. न. न. न. न.

धन **द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ।**

न. न. न. पु. पु. पु.

**हिरण्यं द्रविणं द्युम्नमर्थरैविभवा ( अपि ) ॥ ९० ॥**

द्रेति–द्रुरिव द्रव्यम् " द्रव्यं च भव्ये " इति साधुः, द्रव्यं भव्ये धने क्ष्मादौ जतुद्रुमविकारयोः । विनये भेषजे रीत्याम् " ( इति हैमः ) विद्यते स्म वित्तम् " वित्तो भोगप्रत्यययोरिति " साधुः "वित्तं क्लीबे धने वाच्यलिङ्गं ख्याते विचारिते " ( इति मेदिनी ) स्वपतौ साधु स्वापतेयम् , रिच्यते इति रिक्थम् , ऋच्यते, इति बाहुलकात्क्थनि ऋक्थम्, धनति, दधन्ति वा धनम् , वसति, उष्यते वाऽस्मिन्गुणैरिति वसेः,

---

[१] " अर्धर्चादित्वात्पुंनपुंसकम् " ॥

वस्यते वा वसु " वसुर्मयूखाग्निजनाधिपेषु योक्त्रसुरे स्याद्वसु हाटके च । वृद्धयौषधस्थानधनेपुरत्ने शुष्के वसु स्यान्मधुरेऽन्यवच्च " ( इति विश्वप्रकाशः ) हर्यति, जिहीते भाग्यवन्तामिति वा हिरण्यम् " हिरण्यं रेतसि द्रव्ये शातकुम्भवराटयोः । अक्षये मानभेदे स्यादकुप्ये च नपुंसकमिति" (मेदिनी) द्रवति, द्रूयते वा इनानि प्रत्यये द्रविणम् , " द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे " ( इति विश्वः ) दिवं मनतीति द्युम्नम् " द्युम्नं वित्ते बलेऽपि च " (इति हेमचन्द्रः) अर्थ्यते, घञि, ऋच्छति, अर्यते वा ' थनि ' अर्थः " अर्थो विषयार्थनयोर्धनकारणवस्तुषु । अभिधेये च शब्दानां निवृत्तौ च प्रयोजने " ( इति मेदिनी ) राति सुखम्, रायते वा रातेर्डैरिति साधुः " राद्वयोर्विभवे स्वर्णे " ( इति रुद्रः ) विभवतीति 'अचि' विभवः "विभवो धननिर्वृत्त्योः" ( इति हैमः ) इति त्रयोदश धनस्य ॥ ९० ॥

सोना चांदी तांबा आदि — (स्या) कोष [पु.] (श्र) हिरण्यं [न.] (च) (हेमरूप्ये कृताकृते) ।

तांबा रूपा का मेल — (ताभ्यां यदन्यत्त) कुप्यं [न.] रूप्यं [न.] (तद्द्वयमाहतम्) ॥ ९१ ॥

स्येति—यदा हेम च रूप्यं च हेमरूप्ये कृतं चाकृतं च कृताकृते घटिताघटिते स्याताम् । तदा कोषश्च हिरण्यं च स्यात् । कुष्यते इति अकर्तरीति घञि, कोषः, कुश्यते इति विग्रहे तु कोशस्तालव्यान्तोऽपि " तालव्या मूर्धन्याश्चैते " इत्यधिकारे " कोशविशदौ च " (इति शभेदः) हर्यतीति हिरण्यम् स्यादिति द्वे कृताकृतस्वर्णरूप्ययोः । ताभ्यां हेमरूप्याभ्यां यदन्यत्ताम्रादि तत् कुप्यते इति कुप्यं स्यात् । राजसूयेति साधु इत्येकं स्वर्णरूप्यान्यत्ताम्रादिधातोः । तद्द्वयं कुप्याकुप्यं, तयोर्हेमरूप्ययोर्द्वयं वा आहतं ताडितं चेत्तदा " आहतं तु मृषार्थके । गुणिते ताडिते चापि " ( इति हैमः ) आहतं रूपमस्येति रूप्यं स्यादित्येकं ताम्ररूप्ययोर्मेलकस्य ॥ ९१ ॥

मरकत मणि — गारुत्मतं [न.] मरकतम् [न.] अश्मगर्भो [पु.] हरिन्मणिः [पु.] ।

पद्मराग — शोणरत्नं [न.] लोहितकः [पु.] पद्मरागो [पु.] (ऽथ) मौक्तिकम् [न.] ॥ ९२ ॥

मोती मूंगा — मुक्ता [स.] (थ) विद्रुमः [पु.] (पुंसि) प्रवालं[1] [पु.न.] (पुंनपुंसकम्) ।

गेति—गरुत्मतो जातत्वात् ' तस्येदमित्यणि ' गारुत्मतम्, मरकं तरन्त्यनेनेति डप्रत्यये मरकतम् , अश्मनो गर्भः अश्मगर्भः, हरिद्वर्णो मणिः शाकपार्थिवादित्वात् हरिन्मणिरिति चत्वारि हरिन्मणेः । शोणं च तद्रत्नं च शोणरत्नम् , लोहितमेव कनि

---

१ प्रवालशब्द ओष्ठमध्योऽपि स्यादिति केचिदिच्छन्ति ॥

प्रत्यये लोहितकः, पद्ममिव रागोऽस्येति पद्मरागः स्यादिति त्रीणि पद्मरागस्य। अथेति–मुच्यते शुक्तिभिरिति, मुक्तैवेति वा मौक्तिकम्, मुच्यते स्म मुक्ता "मुक्ता मौक्तिकपुंश्चल्योः" (इति हैमः) इति द्वे मुक्तायाः। अथेति–विशिष्टो द्रुमः, विशिष्टे द्रौ भवो वेति विद्रुमः पुंसि स्यात् "विद्रुमो रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम्" (इति मेदिनी) प्रवल्यते, प्रवलतीति वा ज्वलादित्वाण्णप्रत्यये प्रवालं पुंनपुंसकं स्यात् "प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे" (इति विश्वः) इति द्वे प्रवालस्य "मूंगा" इति ख्यातस्य ॥ ९२। $\frac{१}{२}$ ॥

न. पु.स.

रत्नमात्र **रत्नं मणि (र्द्वयो) (रश्मजातौ मुक्तादिकेऽपि च)॥९३॥**

रेति–अश्मजातौ मरकतादौ मुक्तादिकेऽपि च रत्नम्, क्लीबे, मणिः द्वयोः स्त्रीपुंसयोः स्यात्। रमन्ते धनार्थिनोऽस्मिन्निति रत्नम् "धनार्थिनो जनाः सर्वे रमन्तेऽस्मिन्नतीव यत्। ततो रत्नमिति प्रोक्तं शब्दशास्त्रविशारदैः। रत्नं क्लीबे मणिः पुंसि स्त्रियामपि निगद्यते। तत्तु पाषाणभेदोऽस्ति मुक्तादि च तदुच्यते। रत्नं गारुत्मतं पुष्परागो माणिक्यमेव च। इन्द्रनीलश्च गोमेदस्तथा वैदूर्यमित्यपि। मौक्तिकं विद्रुमश्चेति रत्नान्युक्तानि वै नव" मण्यते इति मणिर्मणी वा "मणिः स्त्रीपुंसयोरश्मजातौ मुक्तादिकेऽपि च। कण्ठदेशस्तनेऽजाया लिङ्गाग्रेऽलिञ्जरेऽपि च" (इति विश्वः) इति द्वे रत्नमात्रस्य ॥९३॥

न. न. न. न. न. न.

सुवर्ण **स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्।**

न. न. न. न. न.

या सोना **तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम्॥ ९४॥**

न. न. न. न.

**चामीकरं जातरूपं महारजतकाञ्चने।**

न. न. न. पु.न.

**रुक्मं कार्तस्वरं जाम्बूनदमष्टापदो(ऽस्त्रियाम्)॥९५॥**

स्वरिति–सुष्ठु शृणोति, "अचि" अर्णनमर्णो "वाञ्चि" शोभनोऽर्णो गतिरनेनेति वा स्वर्णम्, शोभनो वर्णोऽस्य, सुष्ठु वर्ण्यते वा सुवर्णम्, कनतीति कनकम्, "कनकं हेम्नि पुंसि स्यात् किंशुके नागकेसरे। धत्तूरे काञ्चनारे च कालीये चम्पकेऽपि च" (इति मेदिनी) हिनोति, हीयते वा 'मनिनि' हेम, हटति, हाटयति वा हाटकम्, तप्यतेऽनेनेति तपनीयम्, शतकुम्भे पर्वते भवं शातकुम्भम्, स्वामिमते तु अनुशतिकादित्वादुभयपदवृद्धौ शातकौम्भमपि, गङ्गाया अपत्यं गाङ्गेयम् "यं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम्। तदुल्वं पर्वतेन्यस्तं हिरण्यं समपद्यत" (इति वायुपुराणम्)

---

१ कर्बुरशब्दो दन्त्योष्ठ्यमध्यो वा ओष्ठ्यमध्यः स्यादिति केचिदिच्छन्ति ॥

" गाङ्गेयः स्यात् पुमान् भीष्मे क्लीबं स्वर्णकसेरुणोः" (इति मेदिनी) भरति, बिभर्ति वा ' मनिनि ' भर्म " भर्म स्यात्काञ्चने भृतौ " ( इति मेदिनी ) कर्बत्यनेन मद्गुरादित्वात् कर्बुरम् " कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः । कर्बुरा कृष्णवृन्तायां शबले पुनरन्यवत् " ( इति विश्वः ) चमीकरे आकरे भवम्, चमनं चामी तां करोति वा टप्रत्यये चामीकरम्, जातं रूपं यस्य, प्रशस्तं जातमिति वा जातरूपम्, महच्च तद्रजतं च आन्महत इत्यात्वे महारजतम् काञ्चति, काञ्चते वा नन्द्यादित्वात् काञ्चनम्, रोचते इति रुक्मम् " रुक्मं लोहे सुवर्णे च " ( इति हेमचन्द्रः ) कृतस्वरे आकरविशेषे भवम्, कृताः पठिताः स्वरा येन तस्मै देयमिति वा कार्तस्वरम्, जम्बूरसस्य नद्यां भवं जाम्बूनदम्, अष्टौ धातवः पदानि स्थानान्यस्येति अष्टानामपदमिति वा अष्टापदः अस्त्रियां पुंनपुंसकं स्यादित्येकोनविंशातिः स्वर्णस्य ॥ ९४।९५ ॥

सोने का ग- **( अलंकारसुवर्णं य ) च्छृङ्गी कनक ( मित्यदः ) ।**

हना-चांदी **दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेत ( मित्यपि ) ॥ ९६ ॥**

अलमिति—यत् अलंकारसुवर्णम् अलंकारसम्बन्धि सुवर्णम् अदः शृङ्गिणामीः प्रधाना लक्ष्मीर्वा शृङ्गी तां कनतीति शृङ्गीकनकम्, ' शृङ्गी ' इति पृथगूनाम वेति केचिदाहुः " स्त्री शृङ्गी मण्डनसुवर्णम् " (इति रत्नकोषः) " भूषणं कनकं शृङ्गी " ( इति नाममाला च ) शृङ्गिर्ह्रस्वान्ता च तथा च " बाणः "—" वर्षपर्वतसमूहमिवान्तःस्थिता परिमाणशृङ्गिहेमकूटं राजकुलमिति मुकुटः " इत्येकं भूषणसम्बन्धिसुवर्णस्य । सुवर्णापेक्षया दुष्टो वर्णोऽस्येति दुर्वर्णम्, " दुर्वर्णं त्रिष्वसद्वर्णे क्लीबमैलेयरूप्ययोः " ( इति मेदिनी ) रजति, रज्यते वा रजतम् " रजतं त्रिषु शुक्ले स्यात् क्लीबं हारे च दुर्वर्णे " ( इति विश्वः ) रूप्यते इति रूप्यम् " रूप्यः स्यात्सुन्दरे त्रिषु । आहतस्वर्णरजते रजते च नपुंसकम् " ( इति हेमचन्द्रः ) खर्जतीति खर्जूरम् " खर्जूरं रूप्यफलयोः । खर्जूरं कीटवृक्षयोः " ( इति हैमः ) श्वेतते इति श्वेतम् "श्वेतो द्वीपाद्रिभेदयोः । श्वेतावराटिकाकाष्ठपाटलाशङ्खिनीषु च । क्लीबं रूप्येऽन्यवच्छुक्ले" (इति मेदिनी) इति पञ्च रजतस्य "चांदी" इति ख्यातस्य ॥ ९६ ॥

पीतल-तांबा **रीतिः (स्त्रिया) मारकूटो (न स्त्रिया) (मथ) ताम्रकम् ।**

**शुल्बं म्लेच्छमुखं द्व्यष्टवरिष्ठोन्दुम्बराणि ( च ) ॥९७॥**

रीति—रीयते, रिणाति वा रीतिः स्त्रियां स्यात् । रीतिः स्त्रियां स्यन्दप्रचारयोः ।

---

१ अल्पं शृङ्गं प्राधान्यं वा यस्या गौरादित्वाच्च शृङ्गी स्यात् ॥

पित्तले लोहकिट्टे च " ( इति मेदिनी ) अरणमारस्तं कूटयते इति आरकूटः स्त्रियां न स्यात् " आरकूटोऽस्त्रियां द्रव्यं रीतिस्तु रीतिकोमलम् " ( इति रभसः ) इति द्वे पित्तलस्य। अथेति—ताम्यति, तम्यते वा रक्, दीर्घे च ताम्रम्, शलतीति शुल्बम् उल्बादयश्चेति बन्नन्तो निपात्यते, अथवा शुल्बयति, शुल्व्यते वा अचि, घञि वा शुल्वं वान्तमपि, "शुल्वं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ"(इति हेमचन्द्रः) म्लेच्छ-देशे मुखमुत्पत्तिरस्य, म्लेच्छस्य मुखमिवेति वा म्लेच्छमुखम्, द्वे हेमरूप्ये अश्नुते स्म द्व्यष्टम्, अतिशयेन वरम्, उरु वा वरिष्ठम् "वरिष्ठं ताम्रके क्लीबम्" (इति रुद्रः) उं शम्भुं वृणोति उंवरम् पृषोदरादित्वात् उम्बरमपि उत्कृष्टमुम्बरमुदुम्बरम् "उदुम्बरस्तु देहल्यां वृक्षभेदे च पण्डके। कुष्ठभेदेऽपि च पुमांस्ताम्रे तु स्यान्नपुंसकम्" (इति मेदिनी) प्रज्ञाद्यणि तु औदुम्बरम् "औदुम्बरं भवेत्ताम्रे फलादौ यज्ञादौ यज्ञशाखिनः"(इत्यजयः) इति षट् ताम्रस्य ॥ ९७ ॥

पु.न. न. न. न. न. न.

लोहा लोहाका **लोहो ( ऽस्त्री ) शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी।**

पु.न. पु.न. पु.न.

मैल **अश्मसारो (ऽथ) मण्डूरं शिङ्घाण(मपि तन्मले)॥९८॥**

लवितिं—लोहति, लुह्यते वा अचि, लूयतेऽनेनेति वा बाहुलकाद् हे, रोहति, रुह्यते वा अचि, घञि वा कपिलिकादित्वाल्लत्वे लोहः अस्त्री पुंनपुंसकं स्यात्, "लोहो-ऽस्त्री शस्त्रके लोहं जोङ्गके सर्वतैजसे" (इति मेदिनी) प्रज्ञाद्यणि तु लौहमपि, शस्यतेऽनेन दाम्नीति 'ष्ट्रनि' शस्त्रम् तदेव शस्त्रकम् तेजयति, तेज्यते वा तिजेर्दीर्घश्चेति क्स्नप्रत्यये तीक्ष्णम् " तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके। क्लीबं यवाग्रके पुंसि तिग्मात्म-त्यागिनोस्त्रिषु " ( इति मेदिनी ) पिण्डते, पिण्ड्यते वा अचि, घञि वा पिण्डम् " पिण्डो बोलेबले सान्द्रे देहागारैकदेशयोः। देहमात्रे निवापे च गोलसिल्हकयोरपि। ओण्ड्रपुष्पे च पुंसि स्यात् क्लीबमाजीवनायसोः। पिण्डी तु पिण्डतगरेऽलाबूखर्जूर-भेदयोः " ( इति मेदिनी ) कालं च तदयश्च " अनोश्मायःसरसामिति टचि " कालायसम्, एति, अयते वा अयः, अश्मनः सारः अश्मसारः " अश्मसारं च शस्त्रकम् " ( इत्यमरमाला ) इति सप्त लोहस्य। अथेति—मण्डतीति खर्जूरादित्वात् मण्डूरम्, शिङ्घ्यते आणकप्रत्यये पृषोदरादित्वात्कलोपे, सिंहमाणयति वा शिङ्घाणम् " शिङ्घाणं काचपात्रे च लोहनासिकयोर्मले " ( इति मेदिनी ) सिंहानमिति पाठे तु सिंहवदनिति अचि, सिंहमानयति वा अणि, सिंहानमपि तस्य लोहस्य मले स्यादिति द्वे लोहकिट्टस्य ॥ ९८ ॥

न. स.

सब धातु,फार **(सर्वं स्यात्तैजसं) लोहं ( विकारस्त्वयसः ) कुशी ।**

पु. पु. पु. पु. पु. पु.न.

कांच, पारा **क्षारः काचो (ऽथ)चपलो रसः सूत(श्च)पारदे[1] ॥ ९९ ॥**

सेति—तेजसो विकारः, तेजोऽस्त्यस्येति वा तैजसम् सर्वं तैजसं लोहति, लुह्यते वा लोहम्, लोहमेव लोहं वा स्यादित्येकं सर्वधातूनाम् । अयसो लोहस्य विकारः कुं भूमिं श्यति डप्रत्यये, 'जानपदेति' ङीषि कुशी स्यात् " कुशी फालेऽपि वल्गायां कुशा पाविष्ठमत्तयोः । कुशो वाच्यवदाख्यातः" (इति विश्वः) इत्येकं फालस्य "फार" इति ख्यातस्य ।क्षरति, ज्वलादित्वाणप्रत्यये क्षारः, "क्षारः काचे रसे गुडे भस्मनि धूर्ते लवणे" (इति हैमः) कचते, अचि, प्रज्ञाद्यणि काचयति वा अचि काचः स्यात् " काचः शिक्यमणौ नेत्ररोगभेदे मृदन्तरे" ( इति विश्वः ) इति द्वे काचस्य । अथेति—चोपति, 'कले' चपनम् 'अचि, चपं लातीति वा के' चपलस्स्यात्, "चपलश्चोरके चले । क्षणिके चिकुरे शीघ्रे पारदे प्रस्तरान्तरे । मीने च चपला तु स्यात् पिप्पल्यां विद्युति श्रियाम् । पुंश्चल्यामपि " ( इति हेमचन्द्रः ) रसयति, रस्यते वा रसः " रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे । बोले रागे गृहे धातौ तिक्तादौ पारदेऽपि च " ( इति हैमः ) शिवेन सूयते स्म सूतः स्यात् " सूतस्तु सारथौ तीक्ष्णे क्षत्रियाद्ब्राह्मणीसुते । वन्दि-पारदयोः पुंसि प्रसूते प्रेरिते त्रिषु" ( इति मेदिनी ) पारं ददातीति पारदः " पारत " इति पाठे तु पारं तनोति डे पारतः " पारतस्तु मनाक्पाण्डुः सूतस्तु रहितो मलात् । पारदस्तु मनाक् शीतः सर्वे तुल्यगुणाः स्मृताः " ( इति शब्दार्णवः ) इति चत्वारि पारदस्य पारा इति ख्यातस्य ॥ ९९ ॥

न. न. न. न.

भैंस का सींग **गवलं ( मा[2]हिषं शृङ्गे ) मभ्रकं गिरिजामले ।**

न. न. न. न.

अभ्रक, सुरमा **स्रोतोऽञ्जनं ( तु ) सौवीरं कापोताञ्जनयामुने॥ १०० ॥**

गेति—अलतीति अचि, अलम् गवामलम्, गवनं गवस्तं लातीति वा गवलम्, माहिषं शृङ्गं गवलं स्यादित्येकं माहिषशृङ्गस्य । अभ्रति अभ्रयते वा क्वुनि, अभ्रस्य प्रतिकृति-र्वेति कनि, अभ्रकम्, गिरौ जातं डे, गिरिजम् "गिरिजं त्वभ्रकेऽपि स्याच्छिलाजतुनि शैलजे । लोहेऽपि गिरिजा गौरी मातुलुङ्गशोश्च योषिति " ( इति मेदिनी ) अमति वृषादित्वात् कलचि, न मलमस्येति वा अमलं स्यात् "गिरिजं गिरिजाबीजममलं गवल-ध्वजम्" ( इति वाचस्पतिः ) स्वामिमुकुटयोर्मते तु गिरिजामलमित्येकं नाम विज्ञेयमिति

१ " रसेन्द्रः पारदः प्रोक्तः पारतोऽपि निगद्यते " ( इति तारपालः ) ॥

२ रसः प्रायेण महिषशृङ्गे स्थाप्यतेऽतो रसानन्तरमस्य कथनं समुचितमेवेति मुकुटः ॥

त्रीणि अभ्रकस्य। अज्यते नयनमनेनेति करणे 'ल्युटि' अञ्जनम्—स्रोतोजमञ्जनमिति शाकपार्थिवादित्वात् स्रोतोऽञ्जनम्, सुवीरदेशे भवं सौवीरम् "सौवीरं काञ्जिके स्रोतोञ्जने च बदरीफले। ना तु नीवृति" ( इति विश्वः ) कपोतस्येदं, कापोतं च तदञ्जनं चेति कापोताञ्जनम्, यमुनायां भवं यमुनाया इदं वा तद्वच्छ्यामत्वाद् यामुनं स्यादिति चत्वारि स्रोतोञ्जनस्य "सुरमा" इति ख्यातस्य ॥ १०० ॥

न. न. न. न.

तूतिया **तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके।**

रसौंत स. स. न. न.

या रसांजन **कर्परी दार्विका ( क्वाथोद्भवं ) तुत्थं रसाञ्जनम् ॥१०१॥**

न. न. पु. पु.

गन्धक **रसगर्भं तार्क्ष्यशैलं गन्धाश्मनि ( तु ) गन्धकः।**

पु. स. स. स.

काला सुरमा **सौगन्धिक (श्च) चक्षुष्याकुलाल्यौ (तु) कुलत्थिका१०२॥**

त्विति—तुत्थयति, तुत्थ्यते वा 'अचि,' तुत्थं च तदञ्जनं चेति तुत्थाञ्जनम्, शिखिनो ग्रीवा, शिखिग्रीवास्त्यस्येति शिखिग्रीवम्, वितुद्यते स्म वितुन्नं तदेव वितुन्नकम्, मयूरस्य प्रतिकृतिः, मयूरं कायति वा सादृश्यात् मयूरकमिति चत्वारि तुत्थाञ्जनस्य "तूतिया" इति ख्यातस्य, कल्पते, बाहुलकादरटि, लत्वाभावे, टिड्ढेति ङीपि च 'कर्परी' स्यात्, दार्वी दारुहरिद्रा तद्विकारोऽपि दार्वी सैव दार्विका, तत्तुत्थं क्वाथोद्भवमावर्तितं सदुक्तपर्यायं तुत्थं चास्य नाम "तुत्थं स्यादमृतासङ्गं कर्परी तुत्थमित्यपि" ( इति रभसः ) इति त्रीणि आवर्तननिष्पन्नरसाञ्जनभेदस्य। रसजमञ्जनमिति शाकपार्थिवादित्वाद् रसाञ्जनम्, रसोगर्भेऽस्येति रसगर्भम्, तार्क्ष्यशैले भवं तार्क्ष्यशैलमिति त्रीणि रसाञ्जनस्य। स्वामी तु तुत्थाञ्जनादिकं पर्यन्तं पञ्चकं तुत्थाञ्जनपर्यायमुक्त्वा दार्विका-क्वाथोद्भवे तुत्थरसाञ्जनादित्रयमाह—( इति मुकुटः ) गन्धयुक्तोऽश्मा शाकपार्थिवा-दित्वात् गन्धाश्मा, गन्धोऽस्त्यस्येति गन्धः सएव गन्धकः ठनिप्रत्यये तु गन्धिकोऽपि, शोभनोगन्धोऽस्येति विनयादित्वात्स्वार्थे 'ठकि' सौगन्धिकः "आमोदलेशयोर्गन्धः ससुगन्धः सुगन्धकः" इति त्रीणि गन्धकस्य। चक्षुषे हिता चक्षुष्या "चक्षुष्यः केतके पुण्डरीकसंज्ञकपादपे। कुलत्थिकासुभगयोः स्त्रियामक्षिहितेऽन्यवत्" (इति मेदिनी ) कुलमलति, कर्मण्यणि, ङीपि च कुलाली "चक्षुष्या कुम्भकारी च कुलाली च कुलत्थिका" ( इति रत्नकोषः ) कुलत्थप्रतिकृतिः, कुले तिष्ठति, सुपीति के, स्वार्थे कनि, च पृषोदरादित्वात्कुलत्थिका इति त्रीणि कृष्णसौवीरस्य "काला सुरमा" इति ख्यातस्य ॥ १०१ । १०२ ॥

न. न. न. न.

अञ्जनविशेष **रीतिपुष्पं पुष्पकेतु पौष्पकं कुसुमाञ्जनम् ।**

न. न. न.

हरिताल **पिञ्जरं पीतनं तालमालं (च) हरितालके ॥ १०३ ॥**

रीति-रीतेः पित्तलस्य पुष्पमिव तन्मलत्वात् रीतिपुष्पम्, पुष्पस्य केतुरिव केतुर्यस्येति नाशकत्वात् पुष्पकेतु " पुष्पकेतु कुसुमाञ्जनमिति " ( रुद्रः ) पुष्पस्य प्रतिकृतिः कनि, पुष्पकम्, ततः स्वार्थेऽणि पौष्पकम्, कुसुममिव कुसुमनाशकं वा अञ्जनं कुसुमाञ्जनमिति चत्वारि ध्मायमानरीतिकाजातमलस्य । पिञ्जनं पिञ्जोवर्णास्तं रातीति पिञ्जरम्, पीतं वर्णं नयते, डप्रत्यये पीतनम् " पीतनं पीतदारुणि । कुङ्कुमे हरितालं च " ( इति विश्वः ) तालयति, तल्यते वा तालम् " तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च सम्मिते । गीतकालक्रियामाने करस्फाले द्रुमान्तरे । वाद्यभाण्डे च कांस्यस्य त्सरौ तालीजटौषधौ । क्लीबन्तु हरिताले स्यात् " ( इति मेदिनी ) आलयति, अचि, आलाति वा 'के' आलम् " आलं स्यादनलपहरितालयोः " ( इति हेमचन्द्रः ) हरितं वर्णमालाति, मूलविभुजादित्वात्कप्रत्यये, कर्मण्यणि वा हरितालम् तदेव हरितालकम् "हरितालमलं तालवर्णकं नटभूषणम्" (इति माधवः) इति पञ्च हरितालस्य॥१०३॥

न. न. न. न. न.

शिलाजित **गैरेयमर्थ्यं गिरिजमश्मजं (च) शिलाजतु ।**

पु. पु. पु. पु. पु.

गन्धरस **बोलगन्धरसप्राणपिण्डगोपरसाः ( समाः ) ॥ १०४ ॥**

गायिति-गिरौ भवं गैरेयम्, अर्थ्यते, अर्थादनपेतंवा अर्थ्यम्, " अर्थ्यो विपश्चिति न्याय्ये त्रिष्वर्थ्यन्तु शिलाजतु" (इति रुद्रः) गिरेर्जातं गिरिजम् "गिरिजं त्वभ्रकेऽपि स्याच्छिलाजतुनि शैलजे । लोहेऽपि गिरिजा गौरी मातुलुङ्गयोश्च योषिति " ( इति मेदिनी ) अश्मनोजातमश्मजम्, शिलाया जत्विव शिलाजतु इति पञ्च शिलाजतुनः । बोलयति, अचि वातीति वा पिञ्जादित्वादूलचि, बोलः गन्धो गन्धवान्रसोऽस्येति गन्धरसः, स्वामिमते तु राजदन्तादित्वाद् रसगन्धोऽपि, प्राणित्यनेनेति प्राणः, पिण्डते इति पिण्डः मुकुटमते तु गां जलं स्यतीति गोसः, गोर्जलात्पातीति विग्रहे तु गोपोऽपि, रसयति, रस्यते वा रसः एते समाः समानार्थकाः समानलिङ्गाश्च स्वामिमते तु गोपे उत्पत्तौरसोऽस्येति ' गोपरसः ' इति समस्तमपीति षट् गन्धरसस्य ॥ १०४ ॥

पु. पु. पु. न. न.

समुद्रफेन **हिण्डीरोऽब्धिकफः फेनः सिन्दूरं नागसंभवम् ।**

न. न. न. न. न. न.

सेंदुर सीसा **नागसीसकयोगेष्टवप्राणि त्रपु पिच्चटम् ॥ १०५ ॥**

न. न. पु. पु. न.
रांगा रुई **रङ्गवङ्गे (ऽप्यथ) पिचुस्तूलो (ऽथ) कमलोत्तरम्।**
न. न. न.
कुसुम **(स्यात्) कुसुम्भं वह्निशिखं महारजन(मित्यपि)॥१०६॥**

हीति—' हिण्डी ' ' हिण्डि ' इति वा शब्दमीरयतीति अग्नि, अचि, वा हिण्डीरः ' डिण्डी ' इति शब्दमीरयतीति विग्रहे तु डिण्डीरोऽपि, अब्धेः कफ इव अब्धिकफः, स्फायते, इति फेनः, " फेनमीनाविति " साधुः। इति त्रीणि समुद्रफेनस्य। स्यन्दते, इति सिन्दूरम् " स्यन्देः संप्रसारणं च " इति साधुः, " सिन्दूरस्तरुभेदे स्यात्सिन्दूरं रक्तचूर्णके। सिन्दूरी रोचना रक्तचेलिका धातकीषु च " ( इति मेदिनी ) नागं सीसं संभव उत्पत्तिस्थानमस्येति नागसंभवमिति द्वे सिन्दूरस्य। नगे भवं नागम्, " नागं नपुंसके रङ्गे सीसके करणान्तरे। नागः पुन्नागमातङ्गक्रूराचारिषु तोयदे। नागकेसरपुन्नागनागदन्तप्रभेदके। देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थितः " ( इति मेदिनी ) सिनोतीति सि, ईस्यतीति ईसम् सिच तदीसं च सीसं तदेव सीसकम्, योगे धातुसम्बन्धे इष्टम् योगेष्टम्, उप्यते, इति ष्ट्रनि, वप्रम्, मुकुटमते तु वर्धते, इति वर्ध्रमपि, " वर्ध्रः सीसवरत्रयोः " ( इति हैमः ) इति चत्वारि सीसकस्य। त्रपते, इति त्रपु, " रङ्गसीसकयोस्त्रपुः " ( इति रुद्रः ) पिच्चयतीति पिच्चटम्, " पिच्चटो नेत्ररोगे स्यात् कज्जवं सीसकरङ्गयोः " ( इति विश्वः ) रङ्गतीति रङ्गम् " रङ्गो ना रागे नृत्यरणक्षितौ। अस्त्री त्रपुणि " ( इति मेदिनी ) वङ्गतीति वङ्गम् " वङ्गं सीसकरङ्गयोः। वार्ताकेऽपि च कार्पासे पुंभूम्नि नीवृदन्तरे " ( इति मेदिनी ) इति चत्वारि रङ्गस्य " रांगा " इति ख्यातस्य। अथेति पिचति, पचति वा मृगय्वादित्वात् पिचुः " पिचुर्ना कुष्ठभेदे च कर्षे तूलेऽसुरान्तरे " ( इति विश्वः ) तूलयति, तूल्यते वा तूलः " तूलं स्याद्ब्रह्मदारुणि। आकाशे च पिचौ न स्त्री " ( इति मेदिनी ) रभसात् पिचु तूलोऽपि इति द्वे तूलस्य " रुई " इति ख्यातस्य। अथेति, कमलादुत्तरं कमलोत्तरम्, कुस्यतीति कुसुम्भं स्यात् " कुसुम्भं हेमनि महारजने ना कमण्डलौ " ( इति मेदिनी ) वह्निवच्छिखास्येति वह्निशिखम् रज्यतेऽनेनेति रजनं महच्च तद्रजनं च महारजनम् " महारजनमुद्दिष्टं शान्तकुम्भकुसुम्भयोः " इति चत्वारि कुसुम्भस्य॥ १०५। १०६॥

पु. पु. न. न.
भेड़ा के ऊन से बना कम्बल **मेषकम्बल ऊर्णायुः शशोर्णं शशलोमनि।**
न. न. न. न. न.
खरगोश के ऊन से बना कम्बल शहद-मोम **मधुक्षौद्रंमाक्षिका(दि)मधूच्छिष्टं(तु)सिक्थकम्॥१०७॥**

मेति—मेषलोमकृतः कम्बलः शाकपार्थिवादित्वात् मेषकम्बलः, ऊर्णौतीति ऊर्णा

सास्त्यस्येति ऊर्णायुः " ऊर्णायायुस् " इति साधुः इति द्वे कम्बलस्य । शशस्य ऊर्णाऽस्त्यस्येति शशोर्णम् , " शशोर्णं कारणांकरम् " इति चन्द्रगोमिलिङ्गानुशासनात्क्लीबत्वम् शशस्य लोम शशलोम इति द्वे शशोर्णस्य । मन्यते, इति मधु "मधुपुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यान्तु योषिति " ( इति विश्वमेदिन्यौ ) क्षुद्राभिर्मक्षिकाभिः कृतं क्षौद्रम्, " क्षौद्रन्तु मधुनीरयोः " (इति हेमचन्द्रः ) मक्षिकाभिः कृतं माक्षिकम् आदिना भ्रामर, वाटक, पौतिकादयो गृह्यन्ते इति त्रीणि क्षौद्रस्य " शहद " इति ख्यातस्य । मधुना उच्छिष्टं मधूच्छिष्टम्, सिञ्चति, सिच्यते वा थकि, सिक्थम् तदेव सिक्थकमिति द्वे मधूच्छिष्टस्य " मोम " इति ख्यातस्य ॥ १०७ ॥

मैनशिल — स. मनःशिला स. मनोगुप्ता स. मनोह्वा स. नागजिह्विका ।

नैपालीमैनशिल, जवाखार — स. नैपाली[1] स. कुनटी स. गोला पु. यवक्षारो पु. यवाग्रजः ॥ १०८ ॥

सज्जी — पु. पाक्यो (ऽथ) पु. स्वर्जिकाक्षारः पु. कापोतः पु. सुखवर्चकः ।

सोचर, वंशलोचन — न. सौवर्चलं (स्या) न. रुचकं स. त्वक्क्षीरी स. वंशरोचना ॥१०९॥

मेति—मनःशब्दवाच्या शिलेति शाकपार्थिवादित्वात् मनःशिला, मनसा गुप्ता मनोगुप्ता, मनःशब्देन हूयते कथ्यते "कविधौ प्रसारिणिभ्यो डः " इति डप्रत्यये मनोह्वा, नागानां जिह्वेव नागजिह्विका, नेपाले भवा नैपाली, कौनटति, अचि, गौरादिः, कुत्सिता नटीव वा कुनटी, गां दीप्तिं लाति, ' के ' गुड्यते वा घञि डलयोरैक्याद् गोला, " गोला गोदावरी सख्योः, कुनटी दुर्गयोः स्त्रियाम् । पत्राञ्जने मण्डने चालिञ्जरे बालखेलने " ( इति मेदिनी ) इति सप्त मनःशिलायाः । यवानां क्षारः यवक्षारः, यवाग्राज्जायते स्म पञ्चम्यामिति डप्रत्यये यवाग्रजः, पाके साधुः पाक्यः इति त्रीणि यवक्षारस्य । अथेति—स्वर्जिकारसजः क्षारः शाकपार्थिवादित्वात् स्वर्जिकाक्षारः, कपोतवर्णोऽस्त्यस्येति कापोतः, सुखं वर्चयति, 'क्वुन्' सुखवर्चकः, सुवर्चलाया इदं सौवर्चलम्, " अथ सौवर्चलं सर्जक्षारे च लवणान्तरे " ( इति मेदिनी ) रोचतेऽनेनेति 'क्वुन्' रुचकं स्यात् " रुचको बीजपूरे च निष्के दन्तकपोतयोः । न द्वयोः सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययोः । सौवर्चलेऽपि मङ्गल्यद्रव्येऽपि कटकेऽपि च " ( इति मेदिनी ) इति पञ्च स्वर्जिकाक्षारस्य " सज्जीखार " इति ख्यातस्य । त्वचो वंशात् क्षीरमस्याः गौरादित्वात् " त्वक्क्षीरी " रोचते, इति नन्द्यादित्वाद् रोचना

---

[1] " नैपालीनवमालीमनःशिलासुवहासुन " ( इति विश्वः ) ॥

वंशस्य रोचना वंशरोचना "स्याद्वंशरोचना वांशी तुकाक्षीरी तुका शुभा । त्वक्क्षीरी वंशजा शुभ्रा वंशक्षीरी तु वैणवी" (इति शाश्वतः) इति द्वे वंशरोचनायाः "वंशलोचन" इति ख्यातायाः ॥ १०८ । १०९ ॥

शोभाञ्जन न. न. न.
**शिग्रुजं श्वेतमरिचं मोरटं (मूलमैक्षवम्)।**
ईख की जड़ न. न. न.
पिपरामूल **ग्रन्थिकं पिप्पलीमूलं चटकाशिर (इत्यपि) ॥ ११०॥**

शीति—शिग्रोर्जायतेस्म पञ्चम्यामिति डप्रत्यये शिग्रुजम्, श्वेतं मरिचमिव श्वेतमरिचमिति द्वे शोभाञ्जनबीजस्य । इक्षोरिदमैक्षवं मूलं मुरतीति "शकादिभ्योऽटन्" इत्यटनिप्रत्यये मोरटं स्यादित्येकमिक्षुमूलस्य । ग्रन्थेः प्रतिकृतिर्ग्रन्थिकम् "ग्रन्थिकं पिप्पलीमूले गुग्गुलुग्रन्थिपर्णयोः । करीरे पुंसि दैवज्ञे सहदेवाख्यपाण्डवे" (इति विश्वः) पिप्पल्यामूलं पिप्पलीमूलम्, चटकायाः शिर इव चटकाशिरः, अपिशब्दाच्छिरोऽपि "शिरो ना पिप्पलीमूले" (इति रभसः) इति त्रीणि पिप्पलीमूलस्य "पिपरामूल" इति ख्यातस्य ॥ ११० ॥

जटामांसी, पतङ्ग स. पु. न. न.
**गोलोमी भूतकेशो (ना) पत्राङ्गं रक्तचन्दनम् ।**
मिले सोंठि, मिरच, पीपरि, न. न. न. स. न.
मिले आँवरा, हड़, बहेरा **त्रिकटु त्र्यूषणं व्योषं त्रिफला (तु) फलत्रिकम् ॥ १११ ॥**

**इति वैश्यवर्गः ॥ ९ ॥**

गविति—गोलोम्नामियम् "तस्येदमित्यणि" संज्ञापूर्वकत्वाद्वृद्ध्यभावेऽपि गोलोमी "गोलोमी श्वेतदूर्वायां स्याद्वचाभूतकेशयोः" (इति विश्वः) भूतानां केश इव, भूतः केशोऽस्येति वा भूतकेशः ना पुमान्स्यादिति द्वे जटामांस्याः श्वेतदूर्वाया वा । पत्राण्यङ्गेऽस्येति पत्राङ्गम्, "पत्राङ्गं न द्वयोर्भूर्जे पद्मके रक्तचन्दने" (इति मेदिनी) रक्तं चन्दनमिव रक्तसारत्वाद् रक्तचन्दनमिति द्वे रक्तसारद्रव्यस्य "पतङ्ग" इति ख्यातस्य । त्रयाणां कटूनां समाहारः त्रिकटु, ऊषतीति नन्दादित्वाल्ल्युटि ऊषणम् त्रयाणामूषणानां समाहारः पात्रादित्वात् त्र्यूषणम्, विशेषेण ओषतीति अचि, व्योषमिति त्रीणि त्र्यूषणस्य "सोंठि, मिरच, पीपरि" इति ख्यातस्य । त्रयाणां फलानां समाहारस्त्रिफला अजादिः, तृफतीति वा तृफश्चेति कले, तृफलापि "त्रिफला तृफलापि च" (इति त्रिकाण्डशेषः) फलानां त्रिकं फलत्रिकमिति द्वे त्रिफलायाः ॥ १११ ॥

इति वैश्यवर्गविवरणम् ॥ ९ ॥

---

## अथ शूद्रवर्गो व्याख्यायते ॥

पु. पु. पु. पु.

शूद्र शूद्रा(श्चा) वरवर्णा (श्च) वृषला (श्च) जघन्यजाः ।

पु.

वर्णसंकर (आचाण्डालात्तु) संकीर्णा (अम्बष्ठकरणादयः) ॥१ ॥

शिवति—शोचतीति " शुचेर्दश्च " इति रकि, दीर्घे च शूद्रः द्वित्वे शूद्रौ, बहुत्वे शूद्राः, अवरोऽधमोवर्णोऽस्य, अवरश्चासौ वर्णश्चेति वा अवरवर्णः द्वित्वे अवरवर्णौ, बहुत्वे अवरवर्णाः, वर्षति, वृष्यते वा ' कलचि ' वृषं धर्मं लुनाति 'डे' वृषं लातीति के, वृषलः, द्वित्वे वृषलौ, बहुत्वे वृषलाः, जघन्यात्पादाज्जाता जघन्यजाः " जघन्यं मेहने क्लीबे चरमे गर्हितेऽन्यवत् " (इति मेदिनी) इति चत्वारि शूद्रस्य । आचाण्डा-लात् चाडालपर्यन्तम् वक्ष्यमाणाः अम्बष्ठश्च करणश्च तावादी येषामिति ते संकीर्यन्ते स्म संकीर्णाः स्युः आदिना उग्रादयो गृह्यन्ते इत्येकमाचाण्डालादम्बष्ठादीनाम् ॥ १ ॥

पु. पु.

शूद्रा में ब-नियांसे पैदा, (शूद्राविशोस्तु) करणोऽम्बष्ठो (वैश्याद्विजन्मनोः)।

बनियानी में ब्राह्मणसे उपजा,

पु. पु.

शूद्रा में क्षत्रिय से जना, (शूद्राक्षत्रिययो) रुग्रो मागधः (क्षत्रियाविशोः) ॥ २ ॥

क्षत्रिया में ब-नियां से हुआ

शिवति—शूद्रा च विट् च शूद्राविशौ तयोः सुतः किरति, कीर्यते वा युचि, ल्युटि वा करणः " करणं हेतुकर्मणोः । बालवादौ हसे लेपे नृत्यगीतप्रभेदयोः । क्रिया-भेदेन्द्रियक्षेत्रकायसंवेशनेषु च । कायस्थे साधने क्लीबं पुंसि शूद्राविशोः सुते" ( इति विश्वः ) इत्येकं वैश्याच्छूद्रायां जातस्य । वैश्या च द्विजन्मा च तयोः सुतः अम्बे ति-ष्ठतीति सुपीति के, 'अम्बाम्बेति' षत्वे च अम्बष्ठः " अम्बष्ठोदेशभेदेऽपि विप्राद्वैश्या-सुतेऽपि च । अम्बष्ठाप्यम्ललोण्यां स्यात्पाठायूथिकयोरपि " ( इति मेदिनी ) इत्येकं विप्राद्वैश्यायां जातस्य । शूद्रा च क्षत्रियश्च तयोः सुतः उच्यतीति " ऋज्रेन्द्रेति " निपातनात् उग्रः "उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिपूत्कटे । स्त्री वचाक्षुतयोः " ( इति मेदिनी ) इत्येकं क्षत्राच्छूद्रायां जातस्य । क्षत्रिया च विट् च तयोः सुतः मगध्यतीति, अचि, " यस्यहल " इति यलोपे च मगधः 'प्रज्ञाद्यणि' तु मागधः "मागधो मगधो-द्भूते शुक्लजीरकबन्दिनोः । वैश्यतः क्षत्रियापुत्रे मागधी स्यात्तु पिप्पली । यूथीमापावि-शेषश्च " ( इति हेमचन्द्रः ) इत्येकं वैश्यतः क्षत्रियायां जातस्य ॥ २ ॥

बनियानी में क्षत्रिय से उपजा, क्षत्रिया में शूद्र से जना, ब्राह्मणी में क्षत्रिय से हुआ, ब्राह्मणी में बनियां से उपजा

पु. पु.
**माहिष्यो (ऽर्याक्षत्रिययोः) क्षत्ता (यार्शूद्रयोःसुतः)।**
पु. पु.
**(ब्राह्मण्यां क्षत्रिया)त्सूत(स्तस्यां) वैदेहको(विशः)३॥**

मेति—अर्या च क्षत्रियश्च तयोः सुतः महिष्यां साधुः, यति, अणि, महति मह्यते वा टिपचि, महिषः स एव चतुर्वर्णादित्वात्स्वार्थे ष्यञि माहिष्यः स्यादित्येकं क्षत्रियादर्यायां जातस्य। अर्या च शूद्रश्च तयोः सुतः क्षदति, क्षद्यते वा 'शंसिक्षदेति' तृचि क्षत्ता स्यात् " क्षत्ता शूद्रात्क्षत्रियाजे प्रतीहारे च सारथौ। भुजिष्यातनयेऽपि स्यान्नियुक्तवेधसोः पुमान् " (इति मेदिनी) इत्येकं शूद्रादर्यायां जातस्य। ब्राह्मण्यां क्षत्रियाज्जातः सूयतेस्म सूतः " सूतः पारदसारथ्योः प्रसूतेरितवन्दिषु। ब्राह्मण्यां क्षत्रियाज्जाते तक्ष्णि " (इति हैमः) इत्येकं क्षत्रियाद्ब्राह्मण्यां जातस्य। तस्यां ब्राह्मण्यां विशो वैश्याज्जातः विदेहेषुभवः अणि, विदेहस्यापत्यं वा जनपदेति'अञि'वैदेहः स एव वैदेहकः " वैदेहको वाणिजके शूद्राद्वैश्यासुतेऽपि च " (इति मेदिनी) इत्येकं वैश्याद्विप्राङ्गनायां जातस्य ॥ ३ ॥

माहिष्य से करणीमें जना ब्राह्मणी में शूद्रसे उपजा

पु.
**रथकार(स्तु माहिष्यात् करण्यां यस्य संभवः)।**
पु.
**(स्या)च्चण्डाल(स्तु जनितो ब्राह्मण्यां वृषलेन यः)॥४॥**

रेति—माहिष्याद्वैश्याक्षत्रियसुतात् करण्यां शूद्रायां वैश्यादुत्पन्नायां सुतायां यस्य संभवो जन्म स्यात्सः रथं करोतीति कर्मण्यणित्यणि, रथकारः स्यात् " रथकारस्तु माहिष्यात्करणीजे च तक्षणि " (इति मेदिनी) इत्येकं माहिष्यात्करणीजस्य। ब्राह्मण्यां विप्राङ्गनायां वृषलेन शूद्रेण यो जनितः समुत्पादितः सः चण्डते, इति चण्डालः प्रज्ञाद्यणि तु चाण्डालोऽपि स्यादित्येकं वृषलाद्ब्राह्मण्यां जातस्य ॥ ४ ॥

चितेरा, सबों के सजातीय समूहकारीगर प्रधान,माली

पु. पु. पु.स.
**कारुः शिल्पी (संहतैस्तैर्द्वयोः) श्रेणिः (सजातिभिः)।**
पु. पु. पु. पु.
**कुलकः(स्यात्)कुलश्रेष्ठी मालाकार(स्तु)मालिकः॥५॥**

---

१ "अर्या स्वामिनी सा च क्षत्रिया योग्यत्वात् तेन "क्षत्रियायां च शूद्रजे" इत्यनेनाविरोधः॥

२ " वैश्यान्मागधवैदेहौ राजविप्राङ्गनासु च " (१०। ११) इति मनुवाक्यानुकूलमूलविरुद्धोऽनेकार्थकोषो नादरणीयः॥

केति–करोतीति “ कृवापेत्युण् ” कारुः “ कारुस्तु कारके शिल्पे विश्वकर्मणि शिल्पिनि ” ( इति हेमचन्द्रः ) शिल्पमस्यास्तीति शिल्पी “ शिल्पी तु वाच्यवत्कारौ स्त्रियां कोलदलौषधौ ” ( इति मेदिनी ) तक्षा च तन्तुवायश्च नापितो रजकस्तथा। पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः ” इति द्वे शिल्पिनः । तैः सजातिभिः समानजातीयैः संहतैस्समूहैः श्रयति, श्रीयते वा ‘ श्रेणिः ’ द्वयोः स्त्रीपुंसयोः स्यात् । “ श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समानशिल्पिसंहतौ ” ( इति मेदिनी ) इत्येकं सजातीयशिल्पिसंघस्य । कोलतीति ‘क्वुन्’ कुलकः स्यात् “कुलकं तु पटोले स्यात्सम्बद्धश्लोकसंहतौ । पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते” (इति मेदिनी ) “ कुलिकः ” इति पाठे तु कुलमधीनत्वेनास्यास्तीति ‘ठन्’ कुलिकः “ कुलिको नागभेदे स्याद्द्रुभेदे कुलसत्तमे, ( इति मेदिनी ) कुलश्रेष्ठत्वमस्यास्तीति इनि “ कुलश्रेष्ठी ” इति द्वे कारुसंघे मुख्यस्य । मालां करोतीति ‘ अण् ’ मालाकारः, मालास्यास्तीति, माला शिल्पमस्येति वा ‘ठन्’ मालिकः “ मालिका सप्तला पुत्री ग्रीवालंकरणेऽपि च । पुष्पमाल्ये नदीभेदे पक्षिभेदे च मालिकः ” ( इति मेदिनी ) इति द्वे मालिकस्य “ माली ” इति ख्यातस्य ॥ ५ ॥

कुम्हार, थवई, कोली, दर्ज़ी

पु. पु. पु. पु.
**कुम्भकारः कुलालः ( स्यात् ) पलगण्ड ( स्तु ) लेपकः ।**
पु. पु. पु. पु.
**तन्तुवायः कुविन्दः (स्यात्) तुन्नवाय (स्तु) सौचिकः ॥ ६ ॥**

कि॒ति–कुम्भं करोति कर्मण्यणित्यण्, कुम्भस्य कारः कुम्भकारः “ कुम्भकारी कुलत्थ्यां च पुंसि स्याद् घटकारके ” ( इति विश्वः ) कुं भूमिं लालयति, अण्, डलयोरैक्यात्, कुलमालाति के, कुलमलति, ‘अण्’ कुलमालुनातीति वा ‘डे’ कुलालः स्यादिति द्वे कुलालस्य “ कुम्हार ” इति ख्यातस्य । पलं मांसं तत्तुल्येन मृदादिना गण्डति वदनैकदेशमिव करोतीति ‘अचि’ पलगण्डः, लिम्पतीति ‘ण्वुल्’ लेपकः स्यादिति द्वे लेपकारस्य “राज” इति ख्यातस्य । तन्तून् वयतीति अण्, तन्तुवायः “ तन्त्रवायः ” इति पाठे तु तन्तवो वितन्यन्ते यस्मिंस्तत्तन्त्रम् तद्वद्वयतीति तन्त्रवायः, तन्त्रवाप इति पाठान्तरम्, कुं भुवं कुत्सितं वा विन्दतीति शे, कुप्यति वा किन्दच्, कुवि ( वि ) न्दः स्यादिति द्वे कुविन्दस्य “ कोली ” इति ख्यातस्य । तुन्नं छिन्नं वयतीति ‘अण्’ तुन्नवायः, सूची शिल्पमस्येति ‘ठक्’ सौचिकः स्यादिति द्वे सौचिकस्य “ दर्ज़ी ” इति ख्यातस्य ॥ ६ ॥

---

१ “ घूके कुलालः कुक्कुभे कुम्भकारेऽञ्जनान्तरे ” ( इति विश्वः ) ॥

पु.　पु.　पु.　पु.

रंगसाज सिकलीगर　रङ्गाजीवश्चित्रकरः शस्त्रमार्जोऽसिधावकः।

चमार लोहार　पु.　पु.　पु.　पु.

पादूकृच्चर्मकारः(स्याद्)व्योकारो लोहकारकः॥ ७॥

रेति—रङ्गं श्वेतपीतरक्तादिकमाजीवति, रङ्गेणाजीवति, इगुपधत्वात्के, रङ्ग आजीवोऽस्येति वा रङ्गाजीवः चित्रं करोतीति "दिवाविभेति" टे, चित्रकरः स्यादिति द्वे चित्रकरस्य "रंगसाज़" इति ख्यातस्य। शस्त्रं मार्ष्टीति अणि शस्त्रमार्जः, असिं धावतीति अणि, असिधावः स एव असिधावकः स्यादिति द्वे शस्त्रमार्जस्य "सिकलीगर" इति ख्यातस्य। पद्यते अनयेति, ऊप्रत्यये पादूस्तां करोतीति क्विपि, तुकि च पादूकृत्, चर्म करोतीति अणि, चर्मकारः स्यादिति द्वे चर्मकारस्य "चमार" इति ख्यातस्य। "व्यो" इत्यव्ययं लोहबीजवाची (इति श्रीभोजः) व्यो करोतीति अणि, व्योकारः, लोहं करोतीति अणि लोहकारः स एव लोहकारकः "व्योकारोऽयस्करोऽयस्कारो लोहकारः स्यात्" (इति रत्नकोषः) इति द्वे लोहकारस्य "लोहार" इति ख्यातस्य॥ ७॥

पु.　पु.　पु.　पु.

सोनार　नाडिंधमः स्वर्णकारः कलादो रुक्मकारके।

चुरिहार ठठेर　पु.　पु.　पु.　पु.

(स्या)च्छाङ्खिकः काम्बविकः शौल्विकस्ताम्रकुट्टकः॥८॥

नेति—नाडीं वंशनलीं धमतीति, खशि, ह्रस्वे, मुमि च नाडिंधमः, स्वर्णं करोतीति अणि स्वर्णकारः, कलामादत्ते इति मूलविभुजादित्वात्के कलादः रुक्मं करोतीति अणि, रुक्मकारः स एव रुक्मकारकः इति चत्वारि स्वर्णकारस्य "सोनार" इति ख्यातस्य। शङ्खः शिल्पमस्येति ठकि, शाङ्खिकः, कम्बुः शिल्पमस्येति ठकि, कम्बोर्विकारोऽस्यास्तीति वा ठनि, काम्बविकः स्यादिति द्वे शाङ्खिकस्य "चुरिहार" इति ख्यातस्य। शुल्वघट्टनं शिल्पमस्येति ठकि, शौल्विकः ताम्रं कुट्टयतीति अणि ताम्रकुट्टः स एव ताम्रकुट्टकः स्यादिति द्वे ताम्रकुट्टकस्य "ठठेर" इति ख्यातस्य॥ ८॥

पु.　पु.　पु.　पु.　पु.

बढ़ई　तक्षा(तु) वर्धकिस्त्वष्टा रथकार(श्च) काष्ठतट्।

गांवका बढ़ई प्रधान बढ़ई　पु.　पु.　पु.　पु.

ग्रामाधीनो ग्रामतक्षः कौटतक्षोऽनधीनकः॥ ९॥

तेति—तक्ष्णोतीति 'युवृषीत्यादिना' कनिनि, तक्षा, वर्धते, इति अचि, वर्धस्तं कषतीति बाहुलकाड्डौ, वर्धकिः, त्वक्षतीति तृचि, त्वष्टा, "त्वष्टा पुमान्देवशिल्पितक्ष्णो-

गादित्यभिद्यपि" ( इति मेदिनी ) रथं करोतीति अणि, रथकारः, काष्ठं तक्षति—तक्ष्णोति वा क्विपि, काष्ठतट् इति पञ्च तक्ष्णः " बढ़ई " इति ख्यातस्य । ग्रामेऽधि, " सप्तमीति " समासे, " अषडक्षेति " खप्रत्यये, ग्रामाधीनः, ग्रामस्य तक्षा, " ग्रामकौटाभ्यां चेति " टचि, ग्रामतक्षः स्यादिति द्वे ग्रामतक्षस्य । न अधीनोऽनधीनः स एव अनधीनकः स्वाधीनो यस्तक्षा स कुत्र्यांभवः, अणि, कौटः तक्षतीति कनिनि तक्षा कौटश्चासौ तक्षा चेति टचि, कौटतक्षः स्यादित्येकं प्रधानवर्धकेः ॥ ९ ॥

पु. पु. पु. पु. पु.
नाऊ या नाई **क्षुरिमुण्डिदिवाकीर्तिनापितान्तावसायिनः ।**
धोबी या ब- पु. पु. पु. पु.
रेठा कलवार **निर्णेजकः (स्या) द्रजकः शौण्डिको मण्डहारकः ॥ १० ॥**

क्षिवति—क्षुरोऽस्यास्तीति इनि, क्षुरी, मुण्डं करोति मुण्डयतीति ग्रह्यादित्वाणिणिनि मुण्डी, दिवाकीर्तिरस्येति दिवाकीर्तिः " दिवाकीर्तिस्तु पुंसि स्यान्नापितान्तावसायिनोः " ( इति विश्वः ) न पियति स्म अपितः न अपितः निषेधार्थकेन न शब्देन 'सुप्सुपेति' समासे नापनं नापः स जातोऽस्येति वा नापितः, नखानामन्तमवसातुं शीलमस्येति ' सुपीति ' णिनि, युकि च अन्तावसायी " अन्तावसायी श्वपचे मुनिभेदे च नापिते " ( इति मेदिनी ) इति पञ्चनापितस्य " नाऊ " इति ख्यातस्य । निर्णेनेक्तीति, ण्वुलि, " उपसर्गादसमासे " इति णत्वे च निर्णेजकः, रजतीति क्वुनि रजकः स्यादिति द्वे रजकस्य " धोबी " इति ख्यातस्य । " शुण्डा पानगृहे मता । अम्बुहस्तिनी वेश्या हस्तिहस्तसुरासु च " ( इति मेदिनी ) शुण्डा सुरा पण्यमस्येति ठकि, शौण्डिकः, मण्डं सुराग्ररसं हरतीति अणि, मण्डहारः सएव मण्डहारकः इति द्वे शौण्डिकस्य " कलवार " इति ख्यातस्य ॥ १० ॥

गड़रिया पु. पु. पु. पु.
पुजारी या **जावालः (स्या) दजाजीवो देवाजीवी (तु) देवलः ।**
पण्डा इन्द्र-
जाल आदि स. स. पु. पु.
इन्द्रजाली **(स्या)न्मायाशाम्बरी मायाकार(स्तु)प्रतिहारिकः॥११॥**

जेति—जवमलतीति अणि, जवमालाति वा के जवालोऽजस्तस्यायं जावालः अजा आजीवो जीविकास्येति अजाजीवः स्यादिति द्वे जावालस्य " गड़रिया " इति ख्यातस्य । देवैराजीवितुं शीलमस्येति णिनि, देवाजीवी, देवआजीवो जीविकास्येति विग्रहे तु देवाजीवोऽदन्तोऽपि, देवान् जीविकार्थे लाति, देवं लक्षणया तत्स्वं लाति वा देवलः स्यादिति द्वे देवलस्य " पण्डा—पुजारी वा " इति ख्यातस्य । विश्वं माति, मिमीते वा यस्यामिति ' माछाससिभ्य ' इति ये टापि च मां यातीति वा " आतो-

ऽनुपेति " के, माया " माया स्याच्छाम्बरीबुद्ध्योर्माय: पीताम्बरेऽसुरे " ( इति मेदिनी ) शम्बराख्यदैत्यस्येयं " तस्येदमित्यणि " शाम्बरी स्यादिति द्वे इन्द्रजालादि-मायायाः । मायां करोतीति अणि मायाकारः, प्रतिहरणं घञि, प्रतिहारो व्याजः प्रयोजनमस्येति ठकि, प्रातिहारिकः स्यादिति द्वे इन्द्रजालिकस्य ॥ ११ ॥

नट / कथिक या भांड

**शैलालिन (स्तु) शैलूषा जायाजीवाः कृशाश्विनः।**
**भरता (इत्यपि) नटाश्चारणा (स्तु) कुशीलवाः॥ १२॥**

शायिति–शिलालिना प्रोक्तं नटसूत्रमधीयत इति 'पाराशर्येति' णिनि, शैलालिनः, शिलूपस्य ऋषेरपत्यानि शैलूषाः "नटे बिल्वे च शैलूषः" ( इति तालव्यादि-मूर्धन्यान्तेषु रभसः ) जायया जीवन्तीति 'इगुपधत्वात्के' जायाजीवाः, कृशाश्वेन प्रोक्तं नटसूत्रमधीयते कर्मन्देति इनि, कृशाश्विनः भरतस्य मुनेः शिष्याः अणि, संज्ञा-पूर्वकत्वाद्वृद्ध्यभावे च भरताः, नटन्तीति अचि नटाः " रङ्गावतारी शैलूषो नटोभ-रतभारतौ " ( इति वाचस्पतिः ) इति षट् नटस्य । चारयन्ति कीर्तिमिति नन्द्या-दित्वाल्ल्युप्रत्यये चारणाः, कुत्सितं शीलमस्त्येषां " कुगतीति " समासे " अन्यत्रापि दृश्यते " इति वप्रत्यये च कुशीलं वान्तीति वा " आतोऽनुपेति " के, कुशीलवाः स्युरिति द्वे वन्दिविशेषस्य " कथिक " इति ख्यातस्य ॥ १२ ॥

मृदङ्ग बजाने वाला ताली बजानेवाला / बांसुरी बजाने वाला वीणा बजानेवाला

**मार्दङ्गिका मौरजिकाः पाणिवादा (स्तु) पाणिघाः।**
**वेणुध्माः(स्यु)र्वैणविकावीणावादा(स्तु)वैणिकाः १३॥**

मेति–मृदङ्गो लक्षणाया तद्वादनशिल्पमेषामिति विग्रहे " शिल्पमिति " ठकि, मार्दङ्गिकाः, मुरजः शिल्पमेषामिति मौरजिकाः स्युरिति द्वे मार्दङ्गिकस्य । पाणिं-वादयन्तीति णयन्तादणि, पाणिवादाः, पाणिंघ्नन्तीति पाणिघाः "पाणिघताडघौ शिल्पिनि" इति साधुः–इति द्वे पाणिघस्य । वेणुं धमन्तीति "आतोऽनुपेति" के, वेणुध्माः, वेणोर्विकारोऽञि, वैणवम्, तच्छिल्पमेषामिति, ठकि वैणविकाः स्युरिति द्वे वैणविकस्य । वीणां वादयन्तीति णयन्तादणि, वीणावादाः, वीणा शिल्पमेषामिति वैणिकाः स्युरिति द्वे वीणावादकस्य ॥ १३ ॥

चिड़ीमार / जालिक / कसाई

**जीवान्तकः शाकुनिको (द्वौ) वागुरिकजालिकौ।**
**वैतंसिकः कौटिक (श्च) मांसिक (श्च समं त्रयम्)॥१४॥**

जीति–जीवानामन्तको नाशको जीवान्तकः, शकुनान् हन्तीति "पक्षिमत्स्येति" ठकि, शाकुनिकः स्यादिति द्वे शाकुनिकस्य "चिड़ीमार" इति ख्यातस्य। वागुरया मृगबन्धन्या चरतीति वागुरिकः, जालेन चरतीति ठकि, जालिकः एतौ द्वौ स्यातामिति द्वे जालिकस्य "बहेलिया" इति ख्यातस्य। वीतंसेन मृगपक्ष्यादिबन्धनोपायेन चरतीति वैतंसिकः, कूटेन मृगादिबन्धनयन्त्रेण चरतीति कौटिकः, मांसं पण्यमस्येति "तदस्य पण्यमिति" ठकि, मांसिकः एतत्त्रयं समं समानार्थकं स्यादिति त्रीणि मांसिकस्य "चिकवा" इति ख्यातस्य ॥ १४ ॥

पु. पु. पु. पु.
मज़दूर **भृतको भृतिभुक्कर्मकरो वैतनिको (ऽपि सः)।**
खबरिहा पु. पु. पु. पु.
बोझिया **वार्तावहो वैवधिको भारवाह (स्तु) भारिकः ॥ १५ ॥**

भ्रिति–भ्रियते स्म भृतः स एव कनि, भृतिं करोति भृतयतीति वा क्वनि भृतकः, भृतिं वेतनं भुङ्क्ते क्विपि, भृतिभुक्, कर्म करोतीति "कर्मणि भृताविति" टे, कर्मकरः यः कर्मकरः स वेतनेन जीवति "वेतनादिभ्यो जीवतीति" ठकि वैतनिकोऽपि स्यादिति चत्वारि भृतकस्य "मज़दूर" इति ख्यातस्य। वहतीति अचि, वहः वार्तायावहो वार्तावहः, विवधं, वीवधं वा वहतीति ठनि, विवधिकः, वीवधिकः, पक्षे ठकि, वैवधिकः स्यादिति द्वे वार्तावहस्य "संदेसिहा" इति ख्यातस्य। भारं वहतीति अणि, भारवाहः भारो वाह्यत्वेनास्त्यस्येति ठनि भारिकः स्यादिति द्वे भारिकस्य "बोझिया" इति ख्यातस्य ॥ १५ ॥

पु. पु. पु. पु. पु.
नीच **विवर्णः पामरो नीचः प्राकृत (श्च) पृथग्जनः।**
पु. पु. पु. पु. पु.
**निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतर (श्च सः) ॥ १६ ॥**

वीति–विगतो वर्णो[1] यस्य यस्माद्वेति विवर्णः, पामानं रातीति के, पा धर्मो म्रियते येनेति वा घे, पामरः, निकृष्टामीं लक्ष्मीं चिनोतीति डे, नीचः, प्रकृतौ भवः, प्रकृष्टमकृतमकार्यमस्येति वा प्राकृतः, सज्जनेभ्यः पृथग्भूतोजनः शाकपार्थिवादित्वात् पृथग्जनः, निश्चयेन हीनः "कुगतीति" समासे निहीनः, अपकृष्टमपकृष्टे वा सीदतीति अचि, अपसदः, जालयति, जालं करोति वा बाहुलकान्मे, जाल्मः "जाल्मस्तु पामरे। असमीक्ष्य कारिणि च" (इति हैमः) क्षुधं लाति, के, कनि च क्षुणत्ति, क्षुद्यते वा "स्फायितञ्चीति" रकि, कपिलिकादित्वाल्लत्वे च, क्षुधा लक्ष्यते वा पुंसीति घे,

---

१ "वर्णो द्विजादौ शुक्लादौ स्तुतौ रूपयशोऽक्षरे" (इति विश्वः) ॥

क्षुल्लकः, खदनं संपदादित्वात्क्विपि, पृषोदरादित्वादुत्वे च खुद् तां लातीति कनि, खुल्लकः कवर्गद्वितीयादिरपि "खुल्लकस्त्रिषु नीचेऽल्पे" (इति रभसः) इना कामेन तीर्यते, 'ॠदोरिति' अपि, इतं गमनं करोति, इतेन ज्ञानेन क्षीयते वा बाहुलकादरप्रत्यये इतरः यः क्षुल्लकः स इतरः स्यादिति दश नीचस्य ॥ १६ ॥

सेवक, दास　**भृत्ये दासेयदासेरदासगोप्यकचेटकाः।**
(पु. पु. पु. पु. पु. पु.)

खिदमतगार　**नियोज्यकिंकरप्रैष्यभुजिष्यपरिचारकाः ॥ १७ ॥**
(पु. पु. पु. पु. पु.)

भ्रिति—भ्रियते, इति "भृञोऽसंज्ञायामिति" क्यपि, तुकि च भृत्यः, दास्या अपत्यम् "ढ्य च इति" ढकि, दासेयः, "क्षुद्राभ्यो वेति" ढ्रकि च दासेरः, दंसयति, दंस्यते वा "दंसेष्टटनाविति" टनि, नस्यात्वे च दास्यते इति विग्रहे तु 'घञि' दासः "दासः सेवकशूद्रयोः" दंशेश्चेति टनि "दाशः" तालव्यान्तोऽपि, गुप्यते यति, कनि च गोप्यं कायति वा "आतोऽनुपेति" के गोप्यकः, चेट्यते, "कृञादिभ्य इति" वुनि चेटकः, नियुज्यते, इति नियोज्यः "प्रयोज्यनियोज्याविति" साधुः, किञ्चित्, कुत्सितं वा करोतीति विग्रहे "दिवाविभेत्यत्र" "कियत्तद्बहुष्विति" वार्तिकेन अचि किंकरः, प्रेष्यते, ण्यति, "प्रादूहविति" वृद्धौ च प्रैष्यः, भुङ्क्ते, स्वाम्युच्छिष्टम्, भुज्यते वा "रुचिभुजिभ्यामिति" किष्यनि, भुजिष्यः, परिचरतीति ण्वुलि, परिचारकः इत्येकादश भृत्यस्य ॥ १७ ॥

दूसरे से पालागया　**पराचितपरिस्कन्दपरजातपरैधिताः।**
(पु. पु. पु. पु.)

मन्द या सुस्त　**मन्दस्तुन्दपरिमृज आलस्यःशीतकोऽलसोऽनुष्णः १८॥**
(पु. पु. पु. पु. पु. पु.)

पेति—आचीयते वर्द्धयते स्म आचितः, परैराचितः पराचितः, "पराजित" इति पाठे तु परैराजीयते स्म परेषामाजः क्षेपणं जातोऽस्येति वा पराजितः, परिस्कन्दतीति पचाद्यचि, "परेश्चेति" वा षत्वे परिस्कन्दः, परपोषितत्वात् परस्माज्जातः परजातः, परैर्जीयते स्म इति विग्रहे तु परजितोऽपि, परैरेधितः संवर्धितः परैधितः इति चत्वारि औदासीन्येन परपोषितस्य। मन्दते, स्वपितीति अचि, मन्दः, "मन्दोऽतीक्ष्णे च मूर्खे च स्वैरेचाभाग्यरोगिणोः। अल्पे च त्रिषु पुंसि स्याद्धस्तिजात्यन्तरे शनौ" (इति विश्वः) तुन्दमुदरं परिमार्ष्टीति "तुन्दशोकयोरिति" के तुन्दपरिमृजः, न लसतीति अचि, स्वार्थे ष्यञि च आलस्यः, शीतं करोतीति "शीतोष्णाभ्यां कारिणीति" कनि शीतकः, न लसतीति पचाद्यचि, अलसः "उष्णो ग्रीष्मे पुमान्दक्षाशीतयोरन्य

लिङ्गकः" ( इति मेदिनी ) उष्णोदक्षस्तस्मादन्योऽनुष्णः स्यादिति षट् मन्दस्य "सुस्त" इति ख्यातस्य ॥ १८ ॥

पु. पु. पु. पु. पु. पु.

चतुर **दक्षे ( तु ) चतुरपेशलपटवः सूत्थान उष्ण ( श्च ) ।**

पु. पु. पु. पु. पु.

चाण्डाल **चण्डालप्लवमातङ्गदिवाकीर्तिजनंगमाः ॥ १९ ॥**

पु. पु. पु. पु. पु.

**निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः ।**

देति—दक्षते, इति अचि दक्षः "दक्षः प्रजापतौ रुद्रवृषभे कुक्कुटे पटौ । द्रुमे दक्षा तु मेदिन्याम्" ( इति विश्वः ) चतति, चत्यते वा "मन्दवाशीति" उरचि, चतुरः, पेशनम्, घञ्, पेशस्तं लातीति के, पेशलः, पाटयतीति पटुः "फलिपाटीति" साधुः "पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत् । पटोले तु पुमान् क्लीबे छत्रालवणयोरपि" ( इति मेदिनी ) सुष्ठु उत्थानमुद्योगोऽस्येति, सूत्थानः, उष्णत्वं शीघ्रकारित्वमस्यास्तीति अर्श आद्यचि, उष्णः स्यादिति षट् चतुरस्य । चण्डते, इति "पतिचण्डिभ्यामिति" आलञ्, चण्डालः, प्लवते, इति अचि, प्लवः "प्लवः सक्षे प्लुतौ कपौ । शब्दे कारण्डवे म्लेच्छजातौ भेककभेलयोः । क्रमनिम्न महीभागे कुलकेऽप्लवायसे । जलान्तरे प्लवंगन्धतृणेमुस्तकभिद्यपि" ( इति हैमः ) मतङ्गस्यापत्यम्, मतङ्गस्यायं वा अणि, मातङ्गः, दिवाकीर्तिरकीतिर्वास्येति दिवाकीर्तिः, अधार्मिकाञ्जनान् गच्छति, जनेभ्यो गच्छतीति वा "गमेश्चेति" खचि, जनंगमः, निषीदति पापमस्मिन्निति, "हलश्चेति" घञ्, निषादः "निषादः स्वरभेदेऽपि चण्डाले धीवरान्तरे" ( इति मेदिनी) श्वानं पचतीति पचाद्यचि, श्वपचः, अणि तु न्यङ्क्वादित्वात्कुत्वे श्वपाकोऽपि, ग्रामादेरन्तेवसतीति "सुप्यजाताविति" णिनि "शयवासेति" अलुकि च अन्तेवासी, चण्डाल एव स्वार्थे अञ्, चाण्डालः, पुत् कुत्सितं पुण्यं, पुमांसं वा कसतीति अचि, मूलविभुजादित्वात् के, वा पृषोदरादित्वात् पुक्कसः "पुष्कसः श्वपचेऽधमे" इति विश्वेदर्शनात्पुष्कसोऽपि, हैमे तु बुक्सी, बुक्सशब्दावुपलभ्येते इति दश निषादस्य ॥ १९ । ½ ॥

पु. पु. पु. पु.

म्लेच्छभेद **(भेदाः) किरातशबरपुलिन्दा म्लेच्छ (जातयः) ॥२०॥**

भयिति—किरातादयस्त्रयो म्लेच्छजातयश्चाण्डालभेदा भवन्तीति. किरतीति इगुपधेति के, किरः अततीति पचाद्यचि अतः किरश्चासावतश्चेति किरातः "किरातो

---

१ अस्य तु बहुत्वे 'चण्डालाः' इत्येव रूपम् । "चाण्डालाः" इति रूपे तु "तस्येदम्" इत्याद्यण् बोध्यः छान्दसा अपि क्वचिल्लोके 'सन्धिः' इत्यादय इव प्रयुज्यन्ते इति वा बोध्यम् ॥

म्लेच्छभेदे स्याद्भूनिम्बेऽल्पतनावपि । स्त्रियां चामरवाहिन्यां कुट्टनीदुर्गयोरपि " ( इति मेदिनी ) शवतीति वाहुलकादरप्रत्यये, शवं रातीति, " आतोऽनुपेति " के वा शवरः " शवरो म्लेच्छभेदे च पानीये शंकरेऽपि च" ( इति विश्वः ) पोलतीति विग्रहे "कुणि पुलिभ्यामिति" किन्दचि पुलिन्दः " पुलिन्दः कथ्यते म्लेच्छे पुलिन्देऽपि निगद्यते " ( इति तारपालः ) म्लेच्छन्तीति म्लेच्छास्तेषां जातयोऽवान्तरभेदाः स्युः " गोमांसभक्षको यस्तु लोकवाह्यं च भाषते । सर्वाचारविहीनोऽसौ म्लेच्छ इत्यभिधीयते " (सूतसंहितायामपि) " ब्राह्मण्यां वैश्यतोजातः क्षत्ता भवति नामतः । अस्यामनेन चौर्येण म्लेच्छो विप्रात्प्रजायते " इति त्रीणि म्लेच्छजातिचण्डालभेदानाम् ॥ २० ॥

बहेलिया **व्याधो** (पु.) **मृगवधाजीवो** (पु.) **मृगयुर्लुब्धको** (पु. पु.) **( ऽपि सः ) ।**
कुत्ता
पागल कुत्ता **कौलेयकः** (पु.) **सारमेयः** (पु.) **कुक्कुरो** (पु.) **मृगदंशकः** (पु.) **॥ २१ ॥**
शिकारी कुत्ता **शुनको** (पु.) **भषकः** (पु.) **श्वा** (पु.) **( स्या ) दलर्क** (पु.) **( स्तु स योगितः ) ।**
कुतिया **( श्वा ) विश्वकद्रु** (पु.) **( मृगयाकुशलः ) सरमा** (स.) **शुनी** (स.) **॥ २२ ॥**

व्येति—विध्यति मृगानिति 'श्याद्व्यधेति' णे, व्याधः, मृगवधेनाजीवतीति इगुपधेतिके मृगवधाजीवः, मृगान्वधार्थं यातीति ' मृगय्वादयश्चेति ' कौ, मृगयुः " मृगयुः पुंसि गोमायौ व्याधे च परमेष्ठिनि " ( इति मेदिनी ) यः मृगयुः सः लुभ्यते स्म लुब्धः स एव स्वार्थे कनि, लुब्धकोऽपि स्यादिति चत्वारि व्याधस्य " बहेलिया " इति ख्यातस्य । कुले भवः " कुलकुक्षीति " ढकञि, कौलेयकः, "कौलेयकः सारमेये कुलीने" ( इति हैमः ) सरमाया अपत्यम् ढकि, सारमेयः, कोकते, किपि, कुक्, कुरतीति के, कुक् चासौ कुरश्चेति कुक्कुरः " कुक्कुरः सारमेये ना ग्रन्थिपर्णे नपुंसकम् " ( इति विश्वः) मृगान् दशतीति अणि, स्वार्थे कनि च, मृगदंशकः, शुनतीति कुनि, शुनकः, भषतीति कुनि, भषकः, श्वयतीति "श्वन्नुक्षन्निति" कनिनि, श्वा स्यात् "कुक्कुरस्तु शुनि श्वानः कपिलो मण्डलः शुनः " ( इति वाचस्पतिः ) इति सप्त शुनकस्य " कुत्ता " इति ख्यातस्य । यः योगो मत्ततोपायो जातोऽस्येति, योग्यते स्म वा योगितः स अलमर्च्यते, अर्च्यते वा घञि, शकन्ध्वादित्वात् अलर्कः स्यात् "अलर्को धवलार्के स्याद्योगोन्मादितकुक्कुरे " ( इति विश्वः ) इत्येकं मत्तशुनकस्य । यः श्वा सारमेयः मृगयाकुशलः आखेटचतुरः स विश्वकं सर्वं द्रवतीति मितद्द्वादित्वाड्डौ, विश्वं कन्दतीति जन्वादित्वात् विश्वकद्रुः स्यात् " विश्वकद्रुस्त्रिषु खलेध्वा ना खेटशुनोः पुमान् "

( इति मेदिनी ) इत्येकमाखेटनिपुणशुनकस्य । सरतीति बाहुलकादमप्रत्यये सरमा "सरमा कुक्कुरी देवशुन्योः स्याद्राक्षसीभिदि" ( इति मेदिनी ) शुनतीति "इगुपधेति" के, गौरादित्वात् शुनी स्यादिति द्वे सरमायाः "कुतिया" इति ख्यातायाः ॥ २१ । २२ ॥

गांव का सुअर पु. विट्चरः ( शूकरो ग्राम्यो ) पु. वर्करः ( स्तरुणः पशुः ) । जवान पशु

शिकार न. आच्छोदनं न. मृगव्यं (स्या)दाखेटो पु. मृगया स. (स्त्रियाम्)२३॥

वीति–ग्रामे भवो ग्राम्यः शूकरः विषं विष्ठां चरतीति अचि, मूलविभुजादित्वात् के, विषश्चरो वा विट्चरः स्यादित्येकं ग्राम्यशूकरस्य । तरुणो युवा पशुः वर्कते, इति बाहुलकादरनि, वर्करः स्यात् "वर्करः परिहासे स्याच्छागे युवपशावपि" ( इति विश्वः ) इत्येकं तरुणपशुमात्रस्य । आच्छिद्यन्तेऽत्रेति ल्युटि, पृषोदरादित्वात् आच्छोदनम्, मृगाव्यय्यन्तेऽत्रेति "अन्येभ्योऽपीति" डे, मृगव्यम्, आखिट्यन्तेऽत्रेति "हलश्चेति" घञि आखेटः, मृग्यन्तेऽत्रेति 'मृगया' स्त्रियां स्यात् "परिचर्या परिसर्या मृगयेति" साधुरिति चत्वारि आखेटस्य "शिकार" इति ख्यातस्य ॥ २३ ॥

दाहिने अङ्ग में ( दक्षिणारुर्लुब्धयोगा ) पु. दक्षिणेर्मा ( कुरङ्गकः ) ।

घाववाला चोर पु. चोरै पु. कागारिक पु. स्तेन पु. दस्यु पु. तस्कर पु. मोषकाः ॥ २४ ॥

चौर कर्म पु. प्रतिरोधि पु. परास्कन्दि पु. पाटच्चर पु. मलिम्लुचाः ।

चोरी का माल स. चौर्यिका न. स्तैन्य न. चौर्ये(च) न. स्तेयं न. लोप्त्रं (तु)(तद्धनम्)२५

देति–यः कुरङ्गको लुब्धयोगाद् दक्षिणेऽरुरस्येति दक्षिणारुः स्यात् स दक्षिणे ईर्मास्येति दक्षिणेर्मा स्यादित्येकं दक्षिणाङ्गव्रणवतो मृगस्य । चोरणं चुरा संज्ञापूर्वकत्वान्न गुणः चुराशीलमस्येति "छत्रादिभ्य इति" णे, वृद्धौ च चौरः "चौरः पाटच्चरेऽपि स्याच्चौरपुष्पौषधावपि" ( इति विश्वः ) पचाद्यचि तु चोरोऽपि, एकमसहायमगारं प्रयोजनमस्येति 'ऐकागारिकः' "ऐकागारिकट्चौरे" इति साधुः । स्तेनयति, पचाद्यचि स्तेनः, दस्यतीति "जनिमनीति" युप्रत्यये "अनुनासिकयोः" इत्युक्तत्वादनाभावे च दस्युः "दस्युश्चौरे रिपौ पुंसि" ( इति हैमः ) तत्करोतीति अचि, सुटि, तल्लोपे च तस्करः, मुष्णातीति ण्वुलि, मोषकः, प्रतिरोद्धुं शीलमस्येति

'सुपीति' णिनिः, प्रतिरोधी, परानास्कन्तुं शीलमस्येति परास्कन्दी, पाटयंश्चरतीति अचि, पृषोदरादित्वात् पाटच्चरः "चौरजीर्णपटयोः पटच्चरः" (इति नामानुशासनम्) मलिं धृतं म्लोचतीति मूलविभुजादित्वात्के, मलिम्लुचः "मलिम्लुचो मासभेदे चौरज्वलनयोः पुमान्" (इति विश्वः) इति दश चौरस्य । चौरस्य भावः कर्म वा मनोज्ञादित्वाद् वुञि, चौरिका, स्तेनस्य भावः कर्म वा ष्यञि, स्तैन्यम्, चौरस्य कर्म ष्यञि, चौर्यम्, स्तेनस्य भावो यति, नलोपे च स्तेयम् "स्तेयं स्तैन्यं च चौर्यं स्याच्चौरिकाचोरिकेस्त्रियाम्" (इति वाचस्पतिः) इति चत्वारि चोरकर्मणः । तस्य चोरस्य धनं लुप्यते ष्ट्रनि लोप्त्रम्, लूयते इति विग्रहे तु ष्ट्रनि, लोत्रमपि "लोत्रमस्रुणि चोरिते" (इति विश्वः) इत्येकं चौरधनस्य ॥ २४ । २५ ॥

बहेलियों का सामान — वीतंस (पु.) (स्तूपकरणं बन्धने मृगपक्षिणाम्) ।
फन्दा जाल — उन्माथः (पु.) कूटयन्त्रं (न.) (स्या) द्वागुरा (स.) मृगबन्धनी (स.) ॥ २६ ॥

वीति—मृगाश्च पक्षिणश्च मृगपक्षिणस्तेषां बन्धने यदुपकरणं तत् वितंस्यते घञि, "उपसर्गस्येति" दीर्घे च "वीतंसः" स्यात् "वीतंसो बन्धनोपाये मृगाणामपि पक्षिणाम् । तेषामेव च विश्वासहेतोः प्रावरकेऽपि च" (इति विश्वः) इत्येकं मृगादिबन्धनसाधनस्य । उन्मथ्यतऽनेनेति "हलश्चेति" घञि, उन्माथः "उन्माथः कूटयन्त्रे स्यान्मारणे घातके पुमान्" (इति मेदिनी) कूटस्वरूपं यन्त्रं कूटयन्त्रं स्यादिति द्वे मृगादिबन्धनयन्त्रस्य । अवागुरते, 'इगुपधेति' के "वष्टि भागुरि" इत्यकारलोपे, टापि च वागुरा, मृगो बध्यतेऽनयेति "करणाधिकरणयोश्चेति" ल्युटि मृगबन्धनी स्यादिति द्वे जालविशेषस्य ॥ २६ ॥

रस्सी — शुल्बं (न.स.) वराटकः (पु.) (स्त्री तु) रज्जु (स.) (त्रिषु) वटी (पु.स.न.) गुणः (पु.) ।
रहट — उद्घाटनं (न.) घटीयन्त्रं (न.) (सलिलोद्वाहनं प्रहेः) ॥ २७ ॥

शिवति—शुल्वयति, 'पचाद्यचि' शुल्यते वा 'एरजिति' अचि, शुल्वम् "रज्जु शुल्वा वराटो ना" (इति रत्नकोषात्) स्त्र्यपि "शुल्वं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ" (इति विश्वः) स्वामी तु "सुम्यंवटाकरः" इति पठितवान्, सुमे पुष्पे साधु, यति, सुम्यम्, वटं वेष्टनमाकरोतीति अचि, वटाकरः" वरमटतीति, क्वनि, वराटकः सृज्यते, इति "सृजेरसुम् च" इति उप्रत्यये, असुमि, सलोपे च रज्जुः स्त्री स्यात् "रज्जुर्वेण्यां गुणे योषित्" (इति विश्वमेदिन्यौ) वटतीति अचि वट्यते वा "खनोघवेति" घे, गौरादित्वात् वटी त्रिपु त्रिलिङ्ग्यां स्यात् "वटी त्रिपु

गुणो पुंसि स्यान्न्यग्रोधकपर्दयोः" (इति मेदिनी) गुण्यते, अदन्तत्वादेरजित्यचि गुणः "गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागे शौर्यादिसन्ध्यादिसत्त्वाद्यावृत्ति-रज्जुषु । शुक्लादावपि वस्त्यां च " ( इति मेदिनी ) इति पञ्च वराटकस्य " रस्सी " इति ख्यातायाः । प्रहेः कूपात् सलिलमुद्वाह्यतेऽनेनेति सलिलोद्वाहनम्, उद्घाट्यते-ऽनेन ण्यन्ताल्ल्युटि उद्घाटम्, घटीनां यन्त्रं घटीयन्त्रं च स्यादिति द्वे " रहट " इति ख्यातस्य ॥ २७ ॥

राछ, सूत बीनना लीपना आदि

पु.न. पु. न. पु.
(पुंसि) वेमा वापदण्डः सूत्राणि (नरि) तन्तवः ।
स. स. न.
वाणिर्व्यूतिः(स्त्रियौतुल्ये)पुस्तं (लेप्यादि कर्मणि)॥२८॥

पुंसीति—वयत्यनेनेति, " वेञः सर्वत्रेति " मनिनि ' वेमा ' पुंसि स्यात्, वपनम्, घञि, वापः, दण्डयतीति अचि, दण्डः, वापस्य दण्डो वापदण्डः " वायदण्डः " इति पाठे तु वानं वायः, दमनम्, अमान्तादिति डे, दण्डः वायस्य दण्डो वायदण्डो-ऽपि स्यादिति द्वे वायदण्डस्य " राछ " इति ख्यातस्य । सूत्र्यते, अचि, सीव्यतेऽनेन वा " सिविमुच्योष्टेरूचेति " ष्ट्रनि, सूत्रम्, द्वित्वे सूत्रे, बहुत्वे सूत्राणि स्युः " सूत्रन्तु सूचनाकारिग्रन्थे तन्तुव्यवस्थयोः " ( इति हैमः ) तन्यन्ते, " सितनीति " तुनि, तन्तवः नरि पुंसि भवन्तीति द्वे सूत्रस्य । वाणनम्, " अच इः " इतीप्रत्यये वाणिः वाणी वा, वानम्, 'ऊतियूतीत्यादिना' निपातिते ऊतिः विशिष्टा ऊतिर्व्यूतिः उभे स्त्रियौ भूत्वा तुल्यसमानार्थे स्यातामिति द्वे वस्त्रादिवानस्य । लेप्यमादिर्यस्य, तच्च तत्कर्म चेति तस्मिन् लेप्यादि कर्मणि पुस्त्यते ण्यन्तादचि पुस्तं स्यात् । आदिना काष्ठपुत्तलिका-दिग्रहः "मृदा वा दारुणाथाथ वस्त्रेणाप्यथ चर्मणा । लोहरत्नैः कृतं वापि पुस्तमित्यभि-धीयते " इत्येकं मृदादिलेपकस्य ॥ २८ ॥

गुड़िया पेटारी बहँगी या काँवरि सिकहर जूता मोजा

स. स.
पञ्चालिका पुत्रिका(स्याद् वस्त्रदन्तादिभिः कृता) ।
पु. पु. स. स. स.
पिटकः पेटकः पेटा मञ्जूषा(थ) विहंगिका ॥ २९ ॥
स. न. पु. स.
भारयष्टि(स्तदालम्बि) शिक्यं काचो(ऽथ) पादुका ।
स. स. स.
पादूरुपान (स्त्री सैवा) नुपदीना (पदायता) ॥ ३० ॥

पेति—वस्त्रं च दन्तश्च तावादी येषामिति तैः कृता पुत्तलिका पञ्चभिर्वर्णैरल्यते

१ " अल्पाक्षरमसंदिग्धं सारवद्विश्वतो मुखम् । अस्तोभ्यमनवद्यं च सूत्रं सूत्रविदो विदुः " ॥

भूष्यते घञि, स्वार्थे कनि, टापि, प्रत्ययस्थादितीत्वे, संज्ञायामिति ण्वुलि वा पञ्चालिका "पाञ्चालिका" इति पाठे तु पञ्चालदेशे भवा "जनपदतदवध्योश्चेति" वुञि वृद्धौ च 'पाञ्चालिका' "पाञ्चालिका स्त्रियां वस्त्रपुत्रिका गीतिभेदयोः" (इति मेदिनी) पुत्री इव "इवेति, यावादित्वाद्वेति" कनि, पुत्रिका स्यात् "स्यात्पुत्रिका पुत्तलिका दुहित्रोर्यावतूलिके । ना पुत्रे शरभे धूर्ते शैलवृक्षप्रभेदयोः" (इति विश्वमेदिन्यौ) आदिना मृच्छिलादिकृता इति द्वे पञ्चालिकायाः "गुड़िया" इति ख्यातायाः । पेटतीति क्वुनि, पिटकः "पिटकस्त्रिषु विस्फोटे मञ्जूषायां पुनः पुमान्" (इति मेदिनी) ण्वुलि तु पेटकः "पेटकः पुस्तकादीनां मञ्जूषायां च कदम्बके" (इति विश्वः) मुकुटमते तु पिण्डते, अचि, अनित्यत्वान्नुमोऽभावे च 'पडा' स्यात्, स्वामिमते तु पीडयतीति अचि, टापि "पीडा" मज्जत्यत्रेति, "मस्जेर्नुम् चेति" ऊषनि, मञ्जूषा स्यादिति चत्वारि पेटकस्य "पेटारी" इति ख्यातायाः । अथेति—विहायसा गच्छतीति विहंगस्तस्य प्रतिकृतिः "इवेति" यावादित्वाद्वा कनि, विहंगिका, मुकुटमते तु "विहंगमापि" भारस्य यष्टिर्भारयष्टिरिति द्वे विहंगिकायाः "बहँगी—काँवड़ी" वा इति ख्यातायाः । तामालम्बितुं शीलमस्येति "सुपीति" णिनौ तदालम्बि, स्रंसतेऽस्मादिति, "स्रंसेः शिः कुट् किच्च" इति यति, शिरादेशे, कुटि च शिक्यम्, कच्यतेऽत्रेति घञि, काचः "काचः शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे" (इति विश्वमेदिन्यौ) इति द्वे शिक्यस्य "सिकहर" इति ख्यातस्य । अथेति—पद्यतेऽनयेति "शिल्कशिपद्यर्तेः" इत्यूप्रत्यये, स्वार्थे कनि च 'पादुका' कनोऽभावे तु पादूः, पादमुपनह्यति, उपनह्यते वा क्विपि, दीर्घे च 'उपानत्' स्त्री स्यादिति त्रीणि उपानहः "जूता" इति ख्यातायाः । सैव पदायता पदस्यानु "यस्य चायामः" इत्यव्ययीभावे अनुपदं पादायामप्रमाणाबद्धा "अनुपदसर्वेति" खे 'अनुपदीना' स्यादित्येकमनुपदीनायाः "मोजा" इति ख्यातायाः ॥ २९ । ३० ॥

चाम की रस्सी, जेरबन्द — **नध्री वध्री वरत्रा (स्यादश्वादेस्ताडनी) कशा ।**

किंगरी — **चाण्डालिका (तु) कण्डोलवीणा चण्डालवल्लकी ॥ ३१ ॥**

नेति—नह्यतेऽनयेति "दाम्नीति" ष्ट्रनि, नध्री, वध्यते, "वृधिवपिभ्यामिति" रनि गौरादित्वान्ङीषि, वध्री, व्रियतेऽनयेति "वृञश्चिदिति" अत्रनि, 'वरत्रा' स्यादिति त्रीणि चर्ममयरज्जोः । अश्वः आदिर्येषामिति तेषां ताडनी आघातिनी कशतीति, अचि, टापि, कशा स्यात् । आदिना उष्ट्रगर्दभचौरादिग्रहः इत्येकमश्वादिताडन्याः । चण्डालेन कृता "कुलालादिभ्य" इति वुञि चण्डालस्येयम् वा "तस्येदमिति" अणि, "टिड्ढेति" ङीपि, चाण्डाली सैव चाण्डालिका, "चाण्डालिका किन्नरायामुमायामोषधीभिदि" (इति मेदिनी) कण्डते, बाहुलकादोलचि, कण्डो-

लश्चण्डालस्तस्य वीणा कण्डोलवीणा "कटोलवीणा" इति पाठे तु कटतीति "कपिगडीति" श्रोलचि, कटोलस्तस्य वीणा कटोलवीणाऽपि, चण्डालस्य वल्लकी चण्डालवल्लकी स्यादिति त्रीणि चाण्डालिकायाः "किंगरी" इति ख्यातायाः ॥ ३१ ॥

स. स. पु. पु. पु.

सीनार का कांटा कसौटी रेती सलाई

**नाराची (स्या) देषणिका शाण (स्तु) निकषः कषः ।**

पु. पु. स. स.

**व्रश्चनः पत्रपरशुरेषिका तूलिका (समे) ॥ ३२ ॥**

नेति—स्वल्पो नाराचो बाणभेदो गौरादित्वान्ङीषि नाराची, इष्यतेऽनयेति एषणी सैव एषणिका स्यादिति द्वे सुवर्णतुलायाः । शश्यते "अकर्तरीति" घञि, श्यतीति विग्रहे तु बाहुलकाण्णप्रत्यये शाणः "शाणो मासचतुष्टये । लोहादीनां च निकषे शाणी प्रावरणान्तरे" (इति मदिनी) निकषतीति अचि, निकषः, "निकषः शाणफलके निकषा यातुमातरि" (इति विश्वमेदिन्यौ) कषतीति 'पचाद्यचि' कषः स्यादिति त्रीणि सुवर्णपरीक्षणपाषाणस्य, खड्गादितीक्ष्णीकरणयन्त्रस्य वा । वृश्च्यतेऽननेति ल्युटि, व्रश्चनः, पत्रमिव परशुः पत्रपरशुः स्यादिति द्वे सुवर्णादिच्छेदनद्रव्यस्य "लघुकरपत्रस्य" वा । इष्यते, "कृञादिभ्य इति" वुनि, एषिका ईषति ईष्यते वेति विग्रहे तु क्वुनि, ईषिकापि, तूलतीति, क्वुनि, तूलिका उभे समे समानार्थे स्यातामिति द्वे वं.रणादिशलाकायाः ॥ ३२ ॥

स. स. स. स.

घरिया

**तैजसावर्तनी मूषा भस्त्रा चर्मप्रसेविका ।**

धौंकनी बर्मी स. स. स. स.

कतरनी

**आस्फोटनी वेधनिका कृपाणी कर्तरी (समे) ॥ ३३ ॥**

तैजेति—तेजसो विकारः सुवर्णादिरावर्त्यतेऽस्यामिति ण्यन्तादधिकरणे ल्युटि, तैजसावर्तनी, मूषतीति "इगुपधेति" के, टापि च मूषा, मोषणं भिदाद्यङि, वा मुषा ह्रस्वादिरपि, गौरादित्वान्ङीषि तु मूषी, अपि "मूषा मुषा त्वावर्तनी मूषी" (इति शब्दार्णवः) इति द्वे मूषायाः "घरिया" इति ख्यातायाः । भस्यतेऽनयेति, "हुयामेति" त्रनि, इडोऽभावे, टापि च भस्त्रा, चर्मणा प्रसीव्यते, वुनि, ण्वुलि वा चर्मप्रसेविका इति द्वे भस्त्रायाः "धौंकनी" इति ख्यातायाः । आस्फोट्यतेऽनयेति ल्युटि, आस्फोटनी, मुकुटमते तु लसन्ती स्फोटयतीति पृषोदरादित्वात् लास्फोटनी अपि, विध्यतेऽनयेति ल्युटि, वेधनी सैव वेधनिका "वेधनी तु लास्फोटन्यां स्फोटनी वृषदंशिका" (इति वाचस्पतिः) इति द्वे मुक्तादिवेधन्याः "बर्मी" इति ख्यातायाः । कृपामणतीति, कर्मण्यणि, ङीपि च कृपाणी, कृन्ततीति बाहुलकादरप्रत्यये, कर्तनं कर्त्तरं रातीति वा 'आतोनुपेति' के, गौरादित्वान्ङीषि 'कर्तरी' उभे समे समानार्थे स्यातामिति द्वे कृपाणिकायाः "कतरनी" इति ख्यातायाः ॥ ३३ ॥

पु. पु. पु. पु.

बांका टांकी **वृक्षादनो वृक्षभेदी टङ्कः पाषाणदारणः।**

पु.न. न. स. स.

आरा रांपी **क्रकचो (ऽस्त्री) करपत्रमाराचर्मप्रभेदिका ॥ ३४ ॥**

त्रिति—वृक्षमत्तीति, "कृत्यलुटः" इति ल्युटि, वृक्षादनः वृक्षं भेत्तुं शीलमस्येति "सुपीति" णिनौ वृक्षभेदी स्यादिति द्वे काष्ठतनूकरणसाधनस्य "बांका" इति ख्यातस्य। टङ्कयति, 'पचाद्यचि' टमिति शब्दं कायतीति वा "आतोऽनुपेति" 'सुपीति' वा के, टङ्कः, पाषाणो दार्यतेऽनेनेति, णयन्तात्ल्युटि, पाषाणदारणः स्यादिति द्वे टङ्कस्य "टांकी" इति ख्यातायाः। 'क्र' इति कचति, पचाद्यचि, क्रकचः अस्त्री पुंनपुंसकं स्यात्, करेण, कराद्वा पततीति ष्ट्रनि, करपत्रं स्यादिति द्वे करपत्रस्य "आरा" "करोत" वेति ख्यातस्य। आइयर्ति, ऋच्छति वा अचि, आर्यते वेति विग्रहे तु भिदाद्यङि आरा "आरा शस्त्र्यामिति" पाठात्साधुः "आरा चर्मप्रभेदिन्यां पुंसि भौमशनैश्चरे" (इति मेदिनी) चर्मणः प्रभेदिका चर्मप्रभेदिका स्यादिति द्वे आरायाः "रांपी" इति ख्यातायाः ॥ ३४ ॥

स. १ स. स. न.

लोहे की प्रतिमा **सूर्मी स्थूणायः प्रतिमा शिल्पं (कर्मकलादिकम्)।**

कारीगरी, न. न. स. स. स.

मूर्ति, **प्रतिमानंप्रतिविम्बंप्रतिमाप्रतियातना प्रतिच्छाया३५**

स. स. पु. स. न.

मिसाल **प्रतिकृतिरर्चा(पुंसि) प्रतिनिधिरुपमोपमानं(स्यात्)।**

भ्विति—शोभना ऊर्मिर्यस्या गौरादित्वान्ङीपि, सूर्मी, तिष्ठतीति स्थूणा "रास्ना सास्नास्थूणेति" साधुः "स्थूणा सूर्म्यां स्तम्भे रुगन्तरे" (इति हैमः) अयसः प्रतिमा अयःप्रतिमा स्यादिति त्रीणि लोहप्रतिमायाः। कला नृत्यगीतादिरूपा चतुःषष्टिभेद-भिन्ना आदिर्यस्येति कलादिकं कर्म शील्यते, शल्यते वा शिल्पं स्यात् "खष्पशिल्पेति" साधुः "शिल्पं स्रुवे क्रियादिके" (इति विश्वः) आदिना सुवर्णकारादिकर्मग्रहः इत्येकं कलादिकर्मणः। प्रतिकृत्य मीयतेऽनेनेति, ल्युटि, प्रतिमानम्, प्रतिकृतिर्बिम्बं यस्येति "कुगतीति" समासे प्रतिबिम्बम्, प्रतिमीयते पूज्यतेऽनयेति "आतश्चोपसर्गे" इत्यङि प्रतिमा, "प्रतिमा गजदन्तस्य बन्धे चानुकृतावपि" (इति मेदिनी) प्रतियात्यतेऽनयेति युचि, प्रतियातना, प्रतिनिधेः छाया प्रतिच्छाया, प्रतिनिधेः कृतिः प्रतिकृतिः, अर्च्यते पूज्यते "गुरोश्च हलः" इत्यप्रत्यये अर्चा, प्रतिनिधीयते सदृशीक्रियते "उपसर्गे घोः किः" इति कौ, प्रतिनिधिः पुंसि स्यादित्यष्टौ प्रतिमायाः। उपमानम्, उपमीयतेऽनयेति वा अङि, उपमा, उपमितम्, उपमीयतेऽनेनेति वा ल्युटि उपमानं स्यादिति द्वे उपमायाः "मिसाल" इति ख्यातायाः ॥ ३५ । १/२ ॥

---

१ "ग्रीष्मजालमशर्मि" इति मप्रत्यये शरादेशे च इति मुकुटस्तत्पाणिनीयः "शर्मी" तालव्यादिरित्य-युक्तम्। "सूर्म्यं शुषिरामिव" इति श्रुतिविरोधात् ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

समानता या (वाच्यलिङ्गाः) समस्तुल्यः सदृक्षःसदृशःसदृक् ॥ ३६॥

बराबरी पु.स.न. पु.स.न.

साधारणः समान(श्च) (स्युरुत्तरपदे त्वमी) ।

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

निभसंकाशनीकाशप्रतीकाशोपमा(दयः) ॥ ३७ ॥

वेति–समतीति, 'पचाद्यचि' समः, तुलया संमितः "नौवयोधर्मेत्यादिना" यति,तुल्यः, समानमिव पश्यन्ति जना यं स आत्मानं समान इव पश्यतीति "समानान्ययोश्च" इति कञ्क्विनौ "दृग्दृशवतुषु" इत्यत्र "दृक्षे च" इति वार्तिकबलादनुक्तोऽपि क्सः कल्प्यते इति" क्सप्रत्यये सभावे च सदृक्षः, "कञ्" सदृशः, क्विनि सदृक्, सह आधारणेन वर्तते "वोपसर्जनस्य" इति सभावे साधारणः, सह मानेन वर्तते, समानं मानमस्येति वा समानः एते सप्त वाच्यलिङ्गा विशेष्यनिघ्ना भवन्तीति सप्त समानस्य । अमी निभसंकाशनीकाशप्रतीकाशोपमादय उत्तरपदे उत्तरपदस्था एव सदृशवचनाः सन्तो वाच्यलिङ्गाः स्युः । यथा'पितृनिभःपुत्रः' 'मातृनिभा कन्या' देवनिभमपत्यमिति । नियतं भातीति "आतश्चोपसर्गे" इति के निभः "निभस्तु कथितो व्याजे पुंलिङ्गः सदृशे त्रिषु" संकाशते, 'पचाद्यचि' संकाशः "संकाशः सदृशेऽन्तिके" (इति हैमः) नितरां काशते, अचि "इकः काशे" इति दीर्घे च नीकाशः "नीकाशो निश्चये तुल्ये" (इति विश्वः) प्रतिकाशते, अचि, दीर्घे च प्रतीकाशः उपमानम्, उपमीयतेऽनयेति वा उपमा एते शब्दा आदयो येषामिति आदिना भूतरूपकल्पादयो गृह्यन्ते यथा पितृभूतः, पितृरूपः, पितृकल्प इति पञ्चापि सदृशस्य ॥ ३६ । ३७ ॥

स. स. स. स. न. न.

मजदूरी कर्मण्या(तु)विधा भृत्या भृतयो भर्म वेतनम् ।

न. न. न. पु. पु.

कमाई भरण्यं भरणं मूल्यं निर्वेशः पण(इत्यपि) ॥ ३८ ॥

केति–कर्मणा संपद्यते, कर्मणि साधुर्वा यति, कर्मण्या, कर्माणि विधीयन्तेऽनयेति " आतश्चोपसर्गे " इत्यङि, विधा, भ्रियन्ते कर्मकरा अनयेति " संज्ञायां समजेति " क्यपि, तुकि च भृत्या, " कर्मणि भृतौ " इति निर्देशात् क्तिन्नपि भृतिः, भ्रियतेऽनेनेति मनिनि, भर्म, वीयतेऽनेनेति "वीपतिभ्यामिति " तननि, वेतनम्, भरणे साधु, यति, भरण्यम्, भ्रियतेऽनेनेति ल्युटि भरणम् "भरणं वेतने भृतौ " ( इति विश्वः ) मूलेनानाम्यम् " नौवयोधर्मेति " यति मूल्यम्, " मूल्यं स्याद्वेतने वस्ने " ( इति विश्वः ) निर्विश्यते घञि, निर्वेशः " निर्वेशस्तु पुमान् भोगे वेतने मूर्च्छनेऽपि च " ( इति मेदिनी ) पण्यते " नित्यं पण इति " अपि, " पुंसीति " घे वा पणः "पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्लहे । क्रय्यशाकादिके द्यूतव्यवहारे भृतौ धने " (इति मेदिनी ) इत्येकादश वेतनस्य ॥ ३८ ॥

स. स. स. स. स.
मदिरा या शराब **सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा ।**
मद्यपीनेमें रुचि- स. स. स. स. स.
कारी भोजन **गन्धोत्तमा प्रसन्नेराकादम्बर्यः परिस्रुता ॥ ३९ ॥**
मद्यपानस्थान स. न. न. पु.
मद्यपीनेकासमय **मदिरा कश्यमद्ये(चाप्य) वदंश (स्तु भक्षणम्) ।**
न. न. पु. पु.
**शुण्डापानं मदस्थानं मधुवारा मधुक्रमाः ॥ ४० ॥**

स्विति–सुष्ठु राति यामिति, सुअतीव रायन्त्यनयेति वा "आतश्चोपसर्गे" इत्यङि, सुरा, हलिनो बलस्य प्रिया हलिप्रिया, हलत्यङ्गम् ज्वलादित्वाणो, हल्यतेऽनयेति वा घञि हाला "हाला सुरायाम्" ( इति विश्वः ) परितः स्रवतीति परिस्रुत्, वरुणालयोऽपि वरुणस्तस्यात्मजा वरुणात्मजा, गन्धेन उत्तमा, गन्ध उत्तमो यस्या वा गन्धोत्तमा, प्रसीदति स्म 'गत्यर्थेति' क्ते, 'रदाभ्यामिति' नत्वे च प्रसन्ना, ईकामं राति, "आतोनुपेति" के, इरा, कुत्सितमम्बरं कदम्बरं नीलाम्बरमस्यास्ति "अर्शआदिभ्य इति" अचि, कादम्बरस्तस्येयम् । कदम्बे जातो रसः "तत्र जातः" इत्यणि कादम्बरस्तं रातीति वा 'आतोनुपेति' के, गौरादित्वान्ङीषि, कादम्बरी "कादम्बरस्तु दध्यग्रे मद्यभेदे नपुंसकम् । स्त्री वारुणी परभृताभारतीसारिकासु च" ( इति मेदिनी ) परितः स्रूयते स्म लोकैरिति परिस्रुता "परिस्रुता स्त्री वारुण्यां स्यन्ने स्यादभिधेयवत्" ( इति मेदिनी ) माद्यत्यनयेति "इषिमदीति" किरचि, मदिरा, कश्यतेऽनेनेति बाहुलकात्ये कश्यम् "मद्यारवमध्ययोः कश्यम्" ( इति रन्तिदेवः ) माद्यत्यनेन "गदमदचरेति" यति, मद्यमिति त्रयोदश मद्यसामान्यस्य । मद्यपानसमये रुचिजनकं यद्भक्षणं तत् अवदंशनम्, अवदश्यते वा भावे, कर्मणि च घञि, अवदंशः स्यादित्येकं पानरुचिजनकभक्षणस्य । शुन्यते, "अमान्तादिति" डे, शुण्डा "शुण्डा पानगृहे मता" ( इति मेदिनी ) पिबन्त्यत्रेति, अधिकरणे 'ल्युटि' पानम् "पानं पीतिभाजनरक्षणे" ( इति मेदिनी ) मदस्य स्थानं मदस्थानमिति त्रीणि मद्यपानगृहस्य । मधुनो वारा मधुवाराः, मधुनः क्रमा मधुक्रमाः स्युरिति द्वे मधुपानावसरस्य॥३९।४०॥

पु. पु. न. न.
महुआ का **मध्वासवो माधवको मधुमार्द्वीक(मद्वयोः) ।**
गुड़ आदि का न. पु. पु.न. पु. पु.
मद्यका काढ़ा **मैरेयमासवःशीधुर्मेदको जगलः(समौ) ॥ ४१ ॥**

मेति–मधूकपुष्पं मधु तस्य आसवः मध्वासवः, मधुना कृतः सन्धितः "कुलालादिभ्य इति" वुञि, माधवकः, मन्यत इति मधु "फलिपाटीति" साधु "मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति" (इति विश्वमेदिन्यौ)

---

१ शुण्डापि जलहस्तिन्यां मदिराकरिहस्तयोः । नलिन्यां वारयोषायां शुण्डस्तु मदनिर्भरे" ( इति विश्वः ) ॥

मृद्वीका द्राक्षा तस्या विकारः "तस्य विकारः" इत्यणि, "अनुदात्तादेः" इत्यञि वा मार्द्वीकम् "केचित्तु पृषोदरादित्वान्माध्वीकमपि पठन्ति" अद्वयोः क्लीबमिति चत्वारि मधुकपुष्पकृतमद्यस्य। स्वामी तु द्वौ द्वौ पर्यायावित्याह। मिरायां देशविशेषे ओषधिविशेषे वा भवम् "नद्यादिभ्यो ढक्" इति ढकि, मैरेयम्, आसूयते, "ऋदोरप्" इत्यपि, आसवः, शेरतेऽनेनेति "शीङो धुक्" इति धुक्कि, शीधुः "अर्धर्चादिः" यद्यपि "शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत्। मैरेयं धातकीपुष्पगुडधानाम्बुसंहितम्" (इति माधवः) तथापि भेदमनादृत्योक्तमिति त्रीणि मैरेयस्य। मेद्यतीति वुनि, मेदकः भृशं गलति, यङ्लुगन्तादचि संज्ञापूर्वकत्वात् "दीर्घोऽकितः" इति दीर्घाभावे च जगलः "जगलौ मदनद्रुमे। मेदके पिष्टमद्ये च" (इति मेदिनी) उभौ समौ समानार्थौ समानलिङ्गौ स्यातामिति द्वे सुराकल्कस्य ॥ ४१ ॥

मद्य बनाना, सुरा बीज — न. सन्धानं (स्याद) भिषवः (पु.) किण्वं (न.) (पुंसि तु) नग्नहूः (पु.)।

सुरा का फूल, पीने की सभा — कारोत्तरः (पु.) सुरामण्ड (पु.) आपानं (न.) पानगोष्ठिका (स.) ॥ ४२ ॥

समिति—संधीयते, ल्युटि सन्धानम् "सन्धानं स्यादभिषवे तथा संघट्टनेऽपि च" (इति विश्वः) अभिपूयते, ऋदोरित्यपि अभिषवः स्यात् "भवेदभिषवः स्नाने मद्यसन्धानयज्ञयोः (इति विश्वः) इति द्वे आम्रादिसन्धानस्य। कृणानं कण्यते वा' किण्वम् "उल्वादयश्चेति" साधुः "किण्वं पापे सुराबीजे" (इति विश्वः) ह्वानम्, हूयते वा संपदादि क्विपि, हूः नग्नस्य हूः नग्नहूरिति पुंसि स्यादिति द्वे नानाद्रव्यकृतसुराबीजस्य मत्तनग्नकृताह्वानस्य वा। कारेण क्रियया उत्तरः कारोत्तरः स्वामिमते तु कारोत्तमोऽपि सुराया मण्डः सुरामण्डः इति द्वे सुरापुष्पस्य। आसंभूय पिबन्त्यत्रेति ल्युटि आपानम्, पानस्य गोष्ठी पानगोष्ठी सैव पानगोष्ठिका इति द्वे मद्यपानसभायाः ॥ ४२ ॥

मद्यपान का पात्र, मद्य पीना — चषको (पु.न.) (ऽस्त्री) पानपात्रं (न.) सरको (पु.न.) (ऽप्य) नुतर्षणम् (न.)।

जुआरी — धूर्तो (पु.) ऽक्षदेवी (पु.) कितवो (पु.) ऽक्षधूर्तो (पु.) द्यूतकृ (पु.) (त्समाः) ॥ ४३ ॥

चेति—चष्यतेऽनेनेति क्वुनि चषकः, अस्त्री पुंनपुंसकं स्यात् "चषकोऽस्त्री सुरापात्रे मद्यमद्यप्रभेदयोः" (इति मेदिनी) पानस्य पात्रम् + पानपात्रमिति द्वे पानपात्रस्य। स्त्रियते वुनि, सरकः "सरकः शीधुपानेक्षुशीधुनोर्मद्यभाजने" (इत्यजयः) अपि शब्दात्सरकोऽप्यस्त्री स्यात् "सरकं वा नानुतर्षो ना" (इति रत्नकोषः) अनुतृष्यतेऽनेनेति ल्युटि, अनुतर्षणम् 'घञि' अनुतर्षोऽपि "चषकश्चानुतर्षश्च सरकश्च" (इति भागुरिः) इति द्वे मद्यपानस्य चत्वार्येव मद्यपानपात्रस्येति वा मुकुटः। धूर्वति

" हसिमृग्रिण्इति " तनि, वलोपे च धूर्तः " धूर्तं तु खण्डलवणे धत्तूरे ना विटे त्रिषु " ( इति मेदिनी ) " धार्तः " इति पाठे तु धावनम् संपदादित्वात् क्विपि, बाहुलकाद्वलोपे च धा धावनेनार्तिः, धार्तिरस्यास्तीति अणि, धा धावनेनार्तो वा धार्तः, अक्षैर्दीव्यतीति ' सुपीति ' णिनौ अक्षदेवी, कितं ज्ञानं वायति, कितेन वातीति वा ' आतोऽनुपेति ' के, कितवः " कितवो धूर्तवन्मत्ते वञ्चके कनकाह्वये " ( इति विश्वः ) अक्षेषु धूर्तः " सप्तमी शौण्डैरिति " समासे अक्षधूर्तः, द्यूतं करोतीति क्विपि तुकि च द्यूतकृत् एते समाः समानार्थाः समानलिङ्गाः स्युरिति पञ्च द्यूतकारस्य ॥ ४३ ॥

जामिन — **(स्यु)र्लग्नकाः प्रतिभुवः सभिका द्यूतकारकाः ।**
(पु. पु. पु. पु.)

फड़बाज़, जुआ — **द्यूतो(ऽस्त्रिया)मक्षवती कैतवं पण(इत्यपि) ॥ ४४ ॥**
(पु.न. स. न. पु.)

स्युरिति—लज्जन्ते स्म " गत्यर्थेति " क्ते, स्वार्थे कनि च लग्नकाः, प्रति प्रतिनिधयो भवन्तीति क्विपि, प्रतिभुवः स्युरिति द्वे लग्नकस्य " ज़ामिन " इति ख्यातस्य । " सभाद्यूतं सभागृहम् " ( इति रुद्रः ) सभाद्यूतमाश्रयत्वेनास्यास्तीति व्रीह्यादित्वात् ठनि सभिकः, द्वित्वे सभिकौ, बहुत्वे सभिकाः द्यूतं कारयन्तीति अणि स्वार्थे कनि च ण्वुलि तु कारयन्तीति कारकाः, द्यूतस्य कारकाः द्यूतकारकाः स्युरिति द्वे सभिकस्य " फड़बाज़ " इति ख्यातस्य । देवनं क्रीडनं द्यूतं तद्देवास्मिन्निति वा द्यूतः अस्त्रियां पुंनपुंसके स्यात्, अक्षाः पाशकाः सन्त्यस्यामिति मतुपि अक्षवती लोकात्स्त्रीत्वम्, कितवस्य कर्म युवादित्वादणि कैतवम् " कैतवं तु छले द्यूते कैतवः कितवे रिपौ " ( इति मेदिनी ) पणो ग्लहोऽस्त्यस्मिन्निति 'अर्शआद्यचि' पण इत्यपि स्यादिति चत्वारि द्यूतक्रीडनस्य ॥ ४४ ॥

बाज़ी पाशा — **पणो (ऽक्षेषु) ग्लहोऽक्षा (स्तु) देवनाःपाशका(श्च ते)।**
(पु. पु. पु. पु. पु.)

गोटियों का चारों ओर जाना, चौपड़ — **परिणाय(स्तु शारीणां समन्तान्नयने)ऽस्त्रियाम् ॥ ४५ ॥**
(पु.)

जीवों की बाज़ी — **अष्टापदं शारिफलं प्राणिद्यूतं समाह्वयः ।**
(पु.न. पु.न. न. पु.)

पेति—अक्षेषु पणो ग्लहः स्यात् पण्यते उत्सृज्यते 'नित्यं पणः' इति योगविभागादपि पणः, ग्लह्यतेऽनेन घे, घञि वा संज्ञापूर्वकत्वाद्वृद्ध्यभावे च ग्लहः गृह्यते इति विग्रहे तु " अक्षेषु ग्लहः " इति साधुः इति द्वे द्यूते लाप्यमानस्य । ये अक्षास्ते देवनाः पाशकाश्च स्युः । अक्ष्नन्तीति 'पचाद्यचि' अक्षाः "अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके । रुद्राक्षेन्द्राक्षयोः सर्पे विभीतकतरावपि । चक्रे कर्षे पुमान् क्लीबं तुत्थे सौवर्चलेन्द्रिये" ( इति मेदिनी ) दीव्यन्ति येन ल्युटि, देवनाः " देवनं व्यवहारे स्याज्जिगीषाक्रीडयोरपि । अक्षेषु देवनः प्रोक्तः " ( इति विश्वः ) पाशयन्तीति ण्वुलि, कनि वा पाशकाः स्युरिति त्रीणि पाशकस्य । शारीणां समन्तान्नयने परितो वामदक्षिणतो नयनम्

" परिन्योरिति " घञि, परिणायः स्यादित्येकं शारीणां परितो नयनस्य । पङ्क्तौ पङ्क्तौ अष्टौ पदान्यस्येति " अष्टनः संज्ञायाम् " इति दीर्घे ऽष्टापदम् अस्त्रियां पुंनपुंसके स्यात् " अष्टापदोऽस्त्री कनके शारीणां फलकेऽपि च " ( इति मेदिनी ) " फलं हेतुसमुत्थे स्यात्फलके व्युष्टिलाभयोः " ( इति विश्वः ) शारीणां फलं पट्टः शारिफलमिति द्वे शारीणां खेलनाधारपट्टस्य । प्राणिभिः कृतं द्यूतं प्राणिद्यूतम्, सम्यगाहूयतेऽत्रेति विग्रहे पुंसीति घे, बाहुलकादात्वाभावे च समाह्वयः स्यादिति द्वे प्राणिद्यूतस्य ॥ ४५ । $\frac{1}{2}$ ॥

सर्वलिङ्गासंग्रहादसंपूर्णतां परिहरति—

**( उक्ता भूरिप्रयोगत्वादेकस्मिन्येऽत्र यौगिकाः)॥४६॥**
**ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गान्तरेऽपि ते ॥ ४७ ॥**

**इति शूद्रवर्गः ॥**

उक्ता इति—अत्र वर्गे भूरिप्रयोगत्वात् प्रचुरप्रयोगदर्शनादेकस्मिँल्लिङ्गे पुंसि ये यौगिका मालाकार—लोहकार—मार्दङ्गिक—वैणविकादयः शब्दा उक्ताः निर्दिष्टाः ते ताद्धर्म्यात्तद्योगवशात्तेषामन्यतोऽन्यत्रजातौ वृत्तौ सत्यां लिङ्गान्तरे स्त्रियां क्लीबे चोहनीयाः । अपिशब्दाद्येऽप्ययौगिकाः करण—मालिक—कुम्भकारादयस्ते जातिवचनत्वात् लिङ्गान्तरे स्त्रीलिङ्गे क्लीबत्वेऽपि ज्ञातव्या इति यावत् यस्यावयवशक्य एवार्थो बुध्यते स यौगिकः । यस्यावयवशक्तिमनपेक्ष्य समुदायशक्तिमात्रेणार्थो बध्यते स रूढः, तत्र यौगिको लिङ्गान्तरे यथा कुम्भकारी स्त्री, कुम्भकारं कुलम् , एवं मालाकारी, मालाकारम् , अदणन्तत्वात्स्त्रियां ङीप् , अयौगिको यथा करणी—कुलालीत्यादयः अत्र जातेरस्त्रीविषयादिति ङीप् भवतीति विज्ञेयम् ॥ ४६ । ४७ ॥

इति शूद्रवर्गविवरणम् ॥

**इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।**
**भूम्यादिकाण्डो द्वितयः साङ्ग एव समर्थितः ॥ ४८ ॥**

इतीति—एवममरसिंहस्य कृतौ नामलिङ्गानुशासने नामलिङ्गव्युत्पादके शास्त्रे साङ्गः अङ्गोपाङ्गैः समेतः द्वितयो द्वितीयो भूम्यादिकाण्डः पृथिव्यादिसमूहः समर्थितः संवर्णित एवेति शम् ॥ ४८ ॥

इति श्रीमदमरसिंहविरचितेऽमरकोषे श्रीमद्रायबहादुरप्रयागनारायणाज्ञया द्विजवरशक्तिधरसंकलितायां रसालाख्यायां व्याख्यायां द्वितीयः काण्डः संपूर्णतामगादिति शिवम् ॥ २ ॥

॥ श्रीः ॥

ॐ परमात्मने नमः ॥

# श्रीमदमरसिंहविरचितः

# अमरकोषः ।

## रसालाख्यया व्याख्यया समेतः ॥

### तृतीयं काण्डम् ।

**विशेष्यनिघ्नैः संकीर्णैर्नानार्थैरव्ययैरपि ।**
**लिङ्गादिसंग्रहैर्वर्गाः सामान्ये वर्गसंश्रयाः ॥ १ ॥**

विशेष्येति—इह सामान्ये साधारणत्वात्सामान्याख्ये तृतीयकाण्डे विशेष्यनिघ्नैः विशेष्यं स्त्रीदारादि तदधीनलिङ्गवचनैः सुकृत्यादिभिः शब्दैः, संकीर्णैः परस्परविजातीयार्थैः कर्मधारयणादिभिः, नानार्थैः अनेकार्थेषु वर्तमानैर्नाकलोकादिभिः, अव्ययैराङादिभिरपि, लिङ्गान्यादौ येषामिति तेषां संग्रहैः, आदिशब्दान्नामसंग्रहैश्च लङ्काशेफालिकेत्यादिभिः शब्दैरुपलक्षितास्तन्नामकाः वर्गाः स्वर्गादयः संश्रया आश्रया येषामिति ते स्वर्गादिवर्गसम्बन्धिनो वर्गाः उच्यन्ते मयेति शेषः ॥ १ ॥

लिङ्गज्ञानोपायमाह—

**स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः ।**
**गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः ॥ २ ॥**

स्त्रीति–यादृशैः स्त्रीलिङ्गत्वादियुक्तैः स्त्रीदाराद्यैः पदैर्यद्विशेष्यं स्त्रीदारादिरूपं यथा प्रस्तुतं प्रक्रान्तं तस्य विशेष्यस्य भेदका व्यावर्तका गुणद्रव्यक्रियाविशिष्टाः शब्दास्तथा स्युः विशेष्यस्य यादृशे लिङ्गवचने तादृशलिङ्गवचना एव भवेयुरिति । तत्र गुणः सुकृतादिस्तद्विशिष्टो यथा सुकृतिनी स्त्री, सुकृतिनो दाराः, सुकृति कुलम् । द्रव्यं दण्डादि तद्विशिष्टो यथा दण्डिनी स्त्री, दण्डिनो दाराः, दण्डि कुलम् । क्रिया पचनादिव्यापारस्तद्विशिष्टो यथा पाचिका स्त्री, पाचका दाराः, पाचकं कुलमित्यादि विज्ञेयम् ॥ २ ॥

| | पु.स.न. | पु.स.न. | पु.स.न. | पु.स.न. | पु.स.न. |
|---|---|---|---|---|---|
| भाग्यवान् बड़ी चाहना | **सुकृती** | **पुण्यवान्** | **धन्यो** | **महेच्छ (स्तु)** | **महाशयः ।** |
| | पु.स.न. | पु.स.न. | पु.स.न. | पु.स.न. | |
| वाला सीधा बड़ा उद्योगी | **हृदयालुः** | **सुहृदयो** | **महोत्साहो** | **महोद्यमः ॥ ३ ॥** | |

स्विति—सुकृतमस्यास्तीति ' अत इनिठनाविति ' इनिः सुकृती, पुण्यमस्यास्तीति ' मतुप् ' पुण्यवान्, धनं लब्धा 'धनगणं लब्धेति' ' यत् ' धन्यः "धन्या धात्र्याम-लक्योः स्याद्धन्यं पुण्यवति त्रिषु " ( इति विश्वमेदिन्यौ ) इति त्रीणि सभाग्यस्य। महतीच्छा यस्येति महेच्छः, " आशयः स्यादभिप्राये मानसाधारयोरपि " ( इति मेदिनी ) महानाशयोऽस्येति महाशयः स्यादिति द्वे महाभिलाषस्य । प्रशस्तं हृदय-मस्येति " हृदयाच्चालुरन्यतरस्यामिति " 'आलुः' हृदयालुः, शोभनं हृदयमस्येति ( " मित्रत्वाविवक्षणान्न हृद्भावः " ) सुहृदयः, " सहृदयः " इति वा पाठः सह हृदयेन " तेन सहेति " बहुव्रीहिः । अत्र प्रशस्तपरत्वं हृदयशब्दस्य तेन हृदयवान्, हृदयिक इत्यपि इति द्वे प्रशस्तचित्तस्य । महानुत्साहोऽस्येति महोत्साहः, महानुद्यमो-ऽस्येति महोद्यमः स्यादिति द्वे दुस्साध्यकृत्येऽपि साधनपरस्य ॥ ३ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

ज्ञाता या **प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः ।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

चतुर **वैज्ञानिकः कृतमुखः कृती कुशल ( इत्यपि ) ॥ ४ ॥**

प्रेति—प्रकृष्टा वीणास्य, प्रवीणयति, प्रवीणयते वा अचि, घञि वा प्रवीणः, निपु-णाति इगुपधेति के निपुणः, अभिजानाति " आतश्चोपसर्गे " इति के, अभिज्ञः, विशेषेण जानातीति विज्ञः, न्यस्नासीत् 'गत्यर्थेति' क्ते, 'निनदीभ्यामिति' षत्वे च निष्णातः, शिक्षा जाताऽस्य, अशिक्षिष्टेति वा शिक्षितः, विज्ञानं बुद्धिः " विज्ञानं यज्ञं तनुते " ( इति श्रुतेः ) विज्ञाने नियुक्तः " तत्र नियुक्तः " इति ठकि, विज्ञानेन जयति वा " तेन दीव्यतीति " वा ठकि, वैज्ञानिकः व्रीह्यादित्वाट्ठनि तु ' विज्ञानिकः ' इत्यपि, कृतं संस्कृतं मुखमस्येति कृतमुखः, कृतं कर्म प्रशस्तमस्येति कृती, कुशान् लाति के, कौ पृथिव्यां शलति, अचि, कौ शलति चालयति राज-कार्याणि, कोः पापाच्छलति बुद्धिवैभवादिति वा कुशलः " कुशलः शिक्षिते त्रिषु । क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसकम्" (इति विश्वमेदिन्यौ) इति दश प्रवीणस्य॥४॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

मान्य वा पूज्य **पूज्यः प्रतीक्ष्यः सांशयिकः संशयापन्नमानसः ।**

संशयकारी पु.स.न. पु.स.न. पु.स.न.

दक्षिणायोग्य **दक्षिणीयोदक्षिणार्ह (स्तत्र)दक्षिण्य(इत्यपि) ॥ ५ ॥**

द्विति—पूज्यते " अचो यत्" इति यति, पूज्यः " पूज्यः श्वशुरवन्द्ययोः " ( इति हैमः ) प्रतीक्ष्यते " ऋहलोरिति " ण्यति प्रतीक्ष्यः " प्रतीक्ष्यः प्रतिपाल्ये स्यात्पूज्ये

---

१ वीणया प्रगायति, प्रगायते वा " सत्यापेति " णिजन्तात् पचाद्यच् ( ३ । १ । १३३ ) कर्मणि घञ् ( ३।३ । १९ ) वा ' एरजण्यन्तानामिति ' नाच् । एरजण्यन्तानामिति तु वचनमनार्षमिति कैयटः ॥

च" (इति हैमः) इति द्वे पूज्यस्य । संशयमापन्नः "संशयमापन्न इति" ठकि सांशयिकः, संशयमापन्नं मानसं यस्य यस्मिन्निति वा संशयापन्नमानसः स्यादिति द्वे सन्देहविषयस्य, सन्देहाश्रयस्य वा । यत्र दक्षिणीयः, दक्षिणार्हश्च तत्र दक्षिण्य इत्यपि स्यात् । दक्षिणामर्हति "कडंगरदक्षिणाच्छचेति" छे, दक्षिणीयः, दक्षिणा-मर्हति, "अर्हः" इत्यचि दक्षिणार्हः, दक्षिणामर्हति यति दक्षिण्यः प्रज्ञाद्यणि तु "दाक्षिण्य" इत्यपि स्यादिति त्रीणि दक्षिणायोग्यस्य ॥ ५ ॥

पु.स.न.　पु.स.न.　पु.स.न.　पु.स.न.

अतिदानी **(स्यु)र्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे ।**

दीर्घायुवाला　पु.स.न.　पु.स.न.　पु.स.न.　पु.स.न.

शास्त्रज्ञाता **जैवातृकः(स्या)दायुष्मानन्तर्वाणि(स्तु)शास्त्रवित् ॥६॥**

स्युरिति–मां याचस्वेति वदति "वदेरान्यः" इत्यान्ये वदान्यः "वदान्यो दानशौण्डे स्याच्चारुवादिनि वाच्यवत्" स्थूलं कूटं लक्ष्यमस्य, स्थूलैर्महद्भिर्लक्ष्यते वा कर्मणि ण्यति स्थूललक्ष्यः, अयकारपाठे तु घञि स्थूललक्षोपि, दाने शौण्डः "सप्तमी शौण्डैरिति" समासे दानशौण्डः "शौण्डो मत्तेऽपि विख्याते" (इति विश्वः) बहु प्रददातीति "प्रे दाज्ञः" इति के बहुप्रदः स्यादिति चत्वारि दानशूरस्य । जीवति जीवेः "आतृकन् वृद्धिश्च" इति आतृकनि वृद्धौ च जैवातृकः "जैवातृकः पुमा-न्सोमे कृषकायुष्मतोस्त्रिषु" (इति विश्वमेदिन्यौ) अतिशयितमायुरस्य मतुपि "तसौ मत्वर्थे" इति भत्वाद्रुत्वाभावे च आयुष्मान्स्यादिति द्वे सायुषः । "वाणि-स्त्रुदे । व्यूतौ मूल्ये सरस्वत्यामिति" (हैमादयः) अन्तर्वाणिरस्य समासान्तविधेर-नित्यत्वान्न कप्, अन्तर्वाणयति वा 'वण शब्दे' स्वार्थणिजन्तादच इरिति 'इ' प्रत्यये अन्तर्वाणिः, शास्त्रं वेत्ति "सत्सूद्विषेति" क्विप् शास्त्रवित्स्यादिति द्वे शास्त्रज्ञस्य ॥ ६ ॥

पु.स.न.　पु.स.न.　पु.स.न.　पु.स.न.

पारखी **परीक्षकः कारणिको वरदस्तु समर्धकः ।**

वरदाता　पु.स.न.　पु.स.न.　पु.स.न.　पु.स.न.

हर्षित मनवाला **हर्षमाणोविकुर्वाणः प्रमना हृष्टमानसः ॥ ७ ॥**

परीति–परीक्षते 'ण्वुलि' परीक्षकः, "करणं हेतुकर्मणोः" (इति मेदिनी) करणेश्चरति "चरतीति" 'ठकि' कारणिकः स्यादिति द्वे परीक्षाकारकस्य । वरं ददाति "आतोऽनुपसर्गे कः इति" 'के' "वरदः पुनः । प्रसन्ने शान्तचित्ते च वरदा तु कुमारिका" (इति हैमः) समृध्नोति 'ण्वुलि' समर्धकः स्यादिति द्वे वरदायकस्य । हर्षति "ताच्छील्येति" चानशि, मुगागमे च हर्षमाणः, विकुरुते चानशि, शानचि वा विकुर्वाणः, प्रकृष्टं मनोऽस्येति प्रमनाः, हृष्टं मानसमस्येति हृष्टमानसः स्यादिति चत्वारि हर्षितमानसस्य ॥ ७ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

उदास प्रीतियुत **दुर्मना विमना अन्तर्मनाः(स्या)दुत्क उन्मनाः ।**

सरलचित्त पु.स.न. पु.स.न. पु.स.न. पु.स.न.

दाता भोक्ता **दक्षिणे सरलोदारौ सुकलो (दातृभोक्तरि)॥ ८ ॥**

दुरिति–दुःस्थितं मनोऽस्येति दुर्मनाः, विगतं विविधं वा मनोऽस्येति विमनाः, अन्तर्मनोऽस्येति अन्तर्मनाः स्यादिति त्रीणि दुःखितमानसस्य । उद्गतं मनोऽस्य "उत्क उन्मनाः" इत्युद्गतमनस्कवृत्तेरुच्छब्दात्स्वार्थे कनि उत्कः, उद्गतं मनोऽस्येति उन्मनाः स्यादिति द्वे उत्कण्ठितमानसस्य । दक्षते "द्रुदक्षिभ्यामिति" इननि दक्षिणः, "दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिषु । अवामे त्रिषु यज्ञादिविविदाने दिशि स्त्रियाम्" ( इति मेदिनी ) सरति अलचि, सरलः "सरलः पूतिकाष्ठे नाथोदाराबक्रयोस्तृषु" ( इति मेदिनी ) उत्कृष्टमासमन्ताद् राति "आतश्चेति" के, उदर्यते कर्मणि घञि वा उदारः "उदारो दातृमहतोर्दक्षिणेऽप्यभिधेयवत्" ( इति मेदिनी ) इति त्रीणि ऋज्वाशयस्य । यो दाता चासौ भोक्ता च तत्र सुकलयते "ईषदुरिति" खलि–शोभना कलाऽस्येति वा सुकलः स्यादित्येकं दातृभोक्तृकस्य ॥ ८ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

आसक्तचित्त **(तत्परे)प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः ।**

सोद्योगी पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

विख्यात **प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः ॥ ९ ॥**

तदिति–तत्परे तात्पर्ययुक्ते प्रसितासक्तौ स्याताम्–तत्परमुत्तमं यस्य, तेन पूर्यते "ऋदोरित्यपि" वा तत्परः, प्रासायि–प्रसीयते स्म वा प्रसितः, आसञ्जि–आसज्यते स्म वा कर्मणि क्ते आसक्तः स्यादिति त्रीणि तात्पर्ययुक्तस्य । इष्टश्चासावर्थश्च तत्र उद्युक्तः इष्टार्थोद्युक्तः, उत् उद्योगं सवति, सुनोति वा विचि, संज्ञापूर्वकत्वादगुणाभावे क्विपि आगमशास्त्रस्यानित्यत्वात्तुगभावे वा ततस्संज्ञायां कनि, उत्सुवति वा मितद्र्वादित्वाड्डौ, "सत्सूद्विषेति" क्विपि वा कनि "केण इति" ह्रस्वे च उत्सुकः स्यादिति द्वे अभिमतार्थे सोद्योगस्य । प्रसितासक्ताविष्टा उद्युक्त इति पाठे आविष्टान्तं चतुष्कमासक्ते, "पञ्चापि तत्परपर्याया" इति केप्याहुः । प्रतीयते स्म, प्रत्येकमगादिति वा गत्यर्थत्वात्कर्तरि कर्मणि वा 'क्ते' प्रतीतः, प्रथते स्म अकर्मकत्वात् कर्तरि 'क्ते' प्रथितः, अख्यायि इति ख्यातः, अवेदीति वित्तः "वित्तो भोगप्रत्यययोरिति" साधुः, व्यज्ञायि क्ते, विजानातीति विग्रहे तु "मतिबुद्धीति" वर्तमाने क्ते वा विज्ञातः, व्यश्रावीति विश्रुतः स्यादिति षट् प्रसिद्धस्य ॥ ९ ॥

पु.स.न. पु.स.न.

गुणोंसे विख्यात **(गुणैःप्रतीते तु)कृतलक्षणाहतलक्षणौ ।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

धनी **इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता ॥ १० ॥**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

स्वामी　**अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः।**

गुणैरिति–गुणैः शौर्यादिभिः प्रतीते विख्याते तु कृतलक्षणाहतलक्षणौ स्याताम् "लक्षणं नाम्नि चिह्ने च" (इति विश्वः) कृतमुच्चरितं लक्षणं नामास्येति कृतलक्षणः "आहतं गुणितेऽपि स्यात्" (इति विश्वः) आहतमभ्यस्तं लक्षणं यस्येति आहतलक्षणः स्यादिति द्वे गुणैर्विख्यातस्य। इभमर्हति दण्डादित्वाद् यति, एः कामाद्भ्यसते वा "अन्येभ्योऽपीति" डे इभ्यः "इभ्यो धनवतीभ्या तु करेणवां सल्लकीतरौ" (इति हेमचन्द्रः) आध्यायति "आतश्चेति" के, पृषोदरादित्वाड्ढत्वे च आढ्यः, बहु धनमस्त्यस्येति "अत इनीति" इनिः धनी स्यादिति त्रीणि बहुधनस्य। स्वमैश्वर्यमस्यास्तीति स्वामी "स्वामिन्नैश्वर्ये" इति साधुः, ईष्टे "स्थेशेति" वरचि ईश्वरः "ईश्वरो मन्मथे शंभौ नाढ्ये स्वामिनि वाच्यवत्" (इति विश्वमेदिन्यौ) पाति "पातेरिति" डतिः पतिः "पतिर्धवे ना त्रिष्वीशे" (इति विश्वः) ईष्टे तृनि, तृचि वा ईशिता, अधिभवति "भुवःसंज्ञान्तरयोरिति" क्विपि अधिभूः, नयति ण्वुलि नायकः "नायको नेतरि श्रेष्ठे हारमध्यमणावपि" (इति विश्वहेमचन्द्रौ) नयति तृचि नेता, प्रभवति "विप्रसंभ्यो ड्वसंज्ञायामिति" डौ प्रभुः, परिवर्हति स्म, परिवृंहति स्म वा परिवृढः "प्रभौ परिवृढः" इति साधुः अधिपाति "आतश्चेति" के अधिपः स्यादिति दश प्रभोः॥ १०। ३/२॥

पु.स.न. पु.स.न. पु.

समृद्धिवाला　**अधिकर्द्धिःसमृद्धः(स्यात्) कुटुम्बव्यापृतस्तु यः॥११॥**

पु.न. पु.

कुटुम्बपालक　**(स्याद)भ्यागारिक(स्तस्मि)न्नुपाधि(श्च पुमानयम्)।**

पु.

बड़ा सुन्दर　**(वराङ्गरूपोपेतो यः) सिंहसंहननो (हि सः)॥ १२॥**

अधीति–अधिका ऋद्धिरस्येति अधिकर्द्धिः, समृध्नोति अकर्मकत्वात् कर्तरि 'क्त' समृद्धः स्यादिति द्वे अतिसम्पन्नस्य। यस्तु कुटुम्बव्यावृतः कुटुम्बपोषणे संसक्तस्तस्मिन् अभ्यागारिकः उपाधिश्च स्यात् अयमुपाधिः पुमान्स्यात्-व्याप्रियते स्म अकर्मकत्वात्कर्तरि 'क्ते' व्यापृतः "व्यापृतस्तरुणो युवा" (इति बोपालितः) कुटुम्बे व्यापृतः, कुटुम्बव्यापृतः अभ्यागारे नियुक्तः "अगारान्ताट्ठन्निति" ठनि, अभि अधिक आगारिको वा अभ्यागारिकः, आधानम् "उपसर्गे घोरिति" कौ आधिः उपगत आधिम् "अत्यादयः" इति समासे उपाधिः नित्यं पुंसि "उपाधिर्धर्मचिन्तायां कुटुम्बव्यापृते छले" (इति विश्वमेदिन्यौ) इति त्रीणि कुटुम्बपोषणादिव्यापारयुक्तस्य। अङ्गान्यवयवाः रूपं लावण्यम् अङ्गानि च रूपं च अङ्गरूपाणि वराणि च तान्यङ्गरूपाणि च तैरुपेतो यः स हि सिंहं

श्रेष्ठं संहननमस्य, संहनने सिंहः इति वा राजदन्तादित्वात् सिंहसंहननः स्यादित्येकं महासुन्दरस्य ॥ ११ । १२ ॥

दुःख में भी खुशी से काम करनेवाला — पु.स.न. **निर्वार्यः ( कार्यकर्ता यः सपतन् सत्त्वसंपदा )।**

गूंगा पिता समान — पु.स.न. पु.स.न. पु.स.न. पु.स.न. **अवाचि मूको(ऽथ)मनोजवः(स)पितृसन्निभः॥ १३ ॥**

नीति—यः सत्त्वसंपदा व्यसनेऽप्यक्षुब्धं मनःसत्त्वम् " व्यसनेऽभ्युदये वापि ह्यविकारं सदा मनः । तत्तु सत्त्वमिति प्रोक्तं नयविद्भिर्बुधैः किल " ( इति स्मरणात् ) तत्संपत्त्या संपतन् उद्यमं कुर्वन् संयुतः सन् वा कार्यं करोति सः निश्चयेन व्रियते "अृह-लोरिति" ण्यति निर्वार्यः स्यात् "निर्धार्यः" इति पाठे तु निश्चयेन ध्रियते 'ण्यति' निर्धार्योऽपि स्यादित्येकं निश्शङ्ककार्यकर्तृकस्य । अवाचि वाग्रहिते मूकः स्यात् न वाग्यस्येति अवाक् 'मू' इति कायति "आतोऽनुपेति" के मूयते बध्यते वागस्येति वा बाहुलकात्कक्कि मूकः स्यादिति द्वे मूकस्य "गूंगा" इति ख्यातस्य । अथेति—जवतीति पचाद्यचि जवम् मनोजवं वेगवद्यस्येति मनोजवः " मनोजवपितृसधर्माणः " ( इति नाममाला) स्वामिमते तु चमसादिवत् मनोजवसः । पीयूषव्याख्यातो "मनोजवाः" सान्तोऽपि,पितेव सन्निभाति "आतश्चोपसर्गे" इति'के'पितृसन्निभःस्यादिति द्वे पितृसमस्य॥ १३॥

अलंकृत कन्या-दाता — पु.स.न. **(सत्कृत्यालंकृतां कन्यां यो ददाति स)कूकुदः।**

लक्ष्मीवान् स्नेही — पु.स.न. पु.स.न पु.स.न. पु.स.न. पु.स.न. पु.स.न. **लक्ष्मीवाँल्लक्ष्मणःश्रीलःश्रीमान्स्निग्ध(स्तु)वत्सलः१४**

सदिति—सत्कृत्य सत्कारं प्रतिपाद्य अलंकृतां सर्वालंकरणैरुपेतां कन्यां यो वराय ददाति सः कवनम् संपदादित्वात् क्विपि कूः शब्दस्तस्य कुः कीर्तिभूमिस्तां ददाति तया दायति वा "आतोऽनुपेति" सुपीति योगविभागाद्वा के कूकुदः स्यात् "कुकुदः" इति पाठे तु कोकते 'इगुपधेति' के पृषोदरादित्वात् कुकुम्तं ददातीति कुकुदोऽपि स्यादित्येकमादरपूर्वकालंकृतकन्यादायकस्य । लक्ष्मीरस्यास्तीति मतुपि लक्ष्मीवान्, लक्ष्मीरस्यास्तीति विग्रहे पामादित्वान्ने " लक्ष्म्या अच्चेति " गणसूत्रेणात्वे च लक्ष्मणः "लक्ष्मणा स्त्रोषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात्सश्रीके चाभिधेयवत् " ( इति मेदिनी ) श्रीरस्यास्ति ' सिध्मादित्वात् ' लचि, श्रियं लातीति वा " आतोऽनुपेति " के श्रीलः, कपिलिकादित्वाल्लत्वे तु " श्लीलः " इत्यपि, श्रीर-

१ मूयते बध्यते वागस्येति 'मूङ् बन्धने' ( भ्वा. आ. सें. ) बाहुलकात् "अवतिमवतीभ्याम् कक्" इति मुकुटेनोक्तम् । तन्नाधातुप्रत्ययानां कारकेषु विहितत्वात्संबन्धे विधानाभावात् अवतेः प्रयोजनाभावात् । "धातोः" इत्येकत्वाविवक्षणेन धातुसमुदायात् प्रत्ययाभावाच्च उक्तसूत्राभावाच्च "मूको दैत्यावाग्दीनेषु" ( इति हैमः ) ॥

स्यास्तीति श्रीमान् स्यादिति चत्वारि लक्ष्मीसंपन्नस्य । स्निह्यतिस्म अकर्मकत्वात् कर्तरि क्ते "वाद्रुहेति" घत्वे च स्निग्धः "वत्सः पुत्रादिवर्गयोः" (इति मेदिनी) वत्से पुत्रादिस्नेहपात्रेऽभिलाषोऽस्यास्ति "वत्सांसाभ्यामिति" लचि वत्सलः स्यादिति द्वे स्नेहयुक्तस्य "स्नेही" इति ख्यातस्य ॥ १४ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

दयावान् **(स्या) दयालुः कारुणिकः कृपालुः सूरतः (समाः) ।**

स्वेच्छाचारी पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

या स्वतन्त्र **स्वतन्त्रोऽपावृतःस्वैरीस्वच्छन्दोनिरवग्रहः ॥ १५ ॥**

स्यादिति—दयते तच्छीलः "स्पृहिगृहीति" 'आलुचि' दयालुः करुणाशीलमस्येति "शीलमिति" ठकि, कारुणिकः, कृपां लातीति मितद्र्वादित्वाड्डौ कृपालुः, शोभन उः शंभुः सूस्तस्मिन् रतः, स्विरतं यस्य, सुरमते वा "सौरमेक्तो दमेः पूर्वपदस्य च दीर्घः" इति क्ते, दीर्घे च सुरतः स्यात् एते समाः समानार्थाः समानलिङ्गाः स्युरिति चत्वारि कारुणिकस्य । स्व आत्मा तन्त्रं प्रधानमस्येति स्वतन्त्रः, अपगतमावृतमावरणमस्येति अपावृतः "अपावृतस्तु पिहिते स्वतन्त्रेऽपि च वाच्यवत्" (इति विश्वमेदिन्यौ) स्वेन ईरितुं शीलमस्य "सुप्यजातावीति" 'णिनौ' "स्वादीरेरिणोरिति" वृद्धौ च स्वैरी, स्वच्छन्दोऽभिलाषो यस्येति स्वच्छन्दः, निष्क्रान्तोऽवग्रहान्नियमादिति विग्रहे "निरादयः" इति समासे निरवग्रहः स्यादिति पञ्च स्वतन्त्रस्य ॥ १५ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

पराधीन या पराये हुक्म **परतन्त्रः पराधीनः परवान्नाथवा (नपि) ।**

में रहनेवाला पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

आधीनमात्र **अधीनोनिघ्नआयत्तोऽस्वच्छन्दोगृह्यकोऽ(प्यसौ)॥१६॥**

पेति—परस्तन्त्रं प्रधानं यस्येति परतन्त्रः, परस्मिन्नधि "सप्तमीशौण्डैरिति" समासे, अषडक्षेति खे, ईनादेशे च पराधीनः, परः स्वाम्यस्यास्तीति 'मतुपि' परवान्, नाथोऽस्यास्तीति नाथवानपि स्यादिति चत्वारि पराधीनस्य । इनमधिगतः "अत्यादयः" इति समासे । अध्युपरिइनोऽस्येति वा अधीनः, निहन्यते निगृह्यते हन्तेः "घञर्थे कः" इति 'के' निघ्नः, आयततेस्म अकर्मकत्वात्कर्तरि क्ते आयत्तः, न स्वः छन्दोऽस्येति अस्वच्छन्दः, असौ गृह्यते "पदास्वैरीति" 'क्यपि' स्वार्थे 'कनि' गृह्यकोऽपि स्यात् "गृह्यको निघ्नके छेके" (इति विश्वमेदिन्यौ) इति पञ्चाधीनसामान्यस्य नवानामप्येकार्थत्वमिति केचिदाहुः ॥ १६ ॥

बुहारनेवाला पु.स.न. पु.स.न. पु.स.न. पु.स.न.

सुस्त **खलपूः (स्या) द्बहुकरो दीर्घसूत्रश्चिराक्रियः ।**

अविचारी पु.स.न. पु.स.न. पु.स.न.

आलसी **जाल्मोसमीक्ष्यकारी(स्यात्)कुण्ठो(मन्दःक्रियासु यः)**

खेति—" खलं भूस्थानकल्केषु " ( इति विश्वः ) खलं चत्वरं पुनाति मार्जयति 'क्विपि' खलपूः द्वित्वे " श्रोः सुपीति " यणादेशे खलप्वौ बहुत्वे खलप्वः स्युः । बहु करोति, भुवं संमार्ष्टीति "कियत्तद्बहुष्वज्विधानमिति" 'अचि' बहुकरः, स्त्रियां बहुकरा स्यादिति द्वे संमार्जनादिकारिणो भुवं मार्जयतो वा । " सूत्रं तन्तुव्यवस्थयोः " ( इति विश्वः ) दीर्घं सूत्रं व्यवस्था यस्येति दीर्घसूत्रः, चिराच्चिरेण वा क्रिया यस्येति चिरक्रियः स्यादिति द्वे अतिविलम्बेन क्रियासंपादकस्यालसविशेषस्य वा । जालयति जाल्यते वा बाहुलकान्मे जाल्मः " जाल्मस्तु पामरे । असमीक्ष्यकारिणि च " ( इति हैमः ) असमीक्ष्याविचार्य कर्तुं शीलमस्येति " सुपीति " 'णिनौ' असमीक्ष्यकारी स्यादिति द्वे गुणदोषविचारशून्यस्य । यः क्रियासु मन्दोऽलसो मूढो वा सः कुण्ठति 'पचाद्यचि' कुण्ठः स्यात् " कुण्ठोऽकर्मण्यमूर्खयोः " ( इति मेदिनी ) इत्येकं मन्दक्रियस्य ॥ १७ ॥

| | |
|---|---|
| काम करनेवाला. काम करने में लगा. हमेशा काम में लगा | पु.स.न. पु.स.न. पु.स.न.<br>**कर्मक्षमोऽलंकर्मीणः क्रियावान् ( कर्मसूद्यतः ) ।** |
| कामों का पूरा करनेवाला. | पु.स.न. पु.स.न. पु.स.न. पु.स.न.<br>**(स) कार्मः कर्मशीलो (यः)कर्मशूर(स्तु)कर्मठः॥१८॥** |

केति—कर्मसु क्षमः " सप्तमीति " योगविभागात्समासे कर्मक्षमः, कर्मणे क्रियायै अलं समर्थः " प्राप्तापन्नालं पूर्वेति " परवल्लिङ्गनिषेधात्समासे " पर्यादयः " इति वा "अपडक्षेति " 'खे' ईनादेशे च ' अलंकर्मीणः ' स्यादिति द्वे क्रियाकरणे समर्थस्य । यः कर्मसु उद्यतः उद्युक्तः सः क्रियास्यास्तीति मतुपि क्रियावान्स्यादित्येकं कर्मोद्यतस्य । यः कर्मशीलः सः कार्मः स्यात् कर्मशीलमस्य "छत्रादिभ्योणः" इति ' णे ' वृद्धौ च कार्मः, स्त्रियां तु ' कार्मी ' कर्मणिशीलमस्त्यस्येति कर्मशीलः स्यादिति द्वे कर्मसु फलमनपेक्ष्यप्रवृत्तस्य । कर्मणि शूरः सप्तमीसमासे कर्मशूरः, कर्मणि घटते " कर्मणि घटोऽठच् " इत्यठचि कर्मठः स्यादिति द्वे प्रयत्नेन प्रारब्धकर्मपरिसमापकस्य ॥ १८ ॥

| | |
|---|---|
| मज़दूर. विना मज़दूरी कामकरनेवाला. | पु.स.न. पु.स.न. पु.स.न.<br>**भरण्यभुक्कर्मकरः कर्मकार(स्तु तत्क्रियः) ।** |
| मृतकस्नायी. मांसभक्षक. | पु.स.न. पु.स.न. पु.स.न. पु.स.न.<br>**अपस्नातो मृतस्नात आमिषाशी (तु) शौष्कलः॥१९॥** |

भेति—भरण्यं वेतनं भुङ्क्ते क्विपि भरण्यभुक्, क्वचित् " कर्मण्यभुक् " इति पाठस्तत्र कर्मणि साधु "तत्र साधुरिति" 'यति' कर्मण्यं वेतनं भुङ्क्ते 'क्विपि' कर्मण्यभुगपि,

१ " भरण्यभुक् " अयं शूद्रवर्गेऽपि कथितस्तथापि पर्यायान्तरकथनार्थमनूदितः ॥

कर्म करोति "कर्मणि भृतौ" इति 'टे' कर्मकर: स्यादिति 'द्वे' मूल्येन कर्मकुर्वतो वेतनं गृहीत्वा कर्मकारिणो वा। यस्तु तत्कर्मैव क्रिया यस्येति तत्क्रिय: कर्मकारक्रिय: स: कर्म करोति कर्मण्यणि कर्मकार: स्यादित्येकं वेतनं विना कर्मकारस्य। अपकृष्टं स्नात: "प्रादयोगताद्यर्थे" इति समासे अपस्नात:, मृते स्नात: सप्तमीसमासे मृतस्नात: स्यादिति द्वे मृतमुद्दिश्य स्नातस्य। आमिषमश्नाति "सुपीति" णिनौ आमिषाशी, "शुष्कली शुष्कमांसेऽपि मांसपात्रेऽपि सा मता" तामत्तीति विग्रहे "शेषे" 'इत्यणि' शौष्कल: स्वामिमते तु पृषोदरादित्वात् शाष्कलोऽपि संज्ञापूर्वकत्वाद्वृद्ध्यभावे तु शुष्कलोऽपि "शुष्कल: शुष्कमांसस्य फणिके पिशिताशिनि" (इति हैम:) इति द्वे मांसमत्स्याशिन: ॥ १९ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

भूखा **बुभुक्षित: (स्या) त्क्षुधित: जिघत्सुरशनायित:।**

पराश्नजीवी पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

खवैया **परान्न: परपिण्डादो भक्षको घस्मरोऽद्मर: ॥ २० ॥**

द्वितीति—भोक्तुमिच्छा बुभुक्षा सा जाताऽस्य तारकादित्वादितचि बुभुक्षित:, क्षुध्यतिस्म अकर्मकत्वात् कर्तरि 'क्ते' "वसतिक्षुधोरिति" इडागमे च क्षुधा जातास्येति तारकादित्वादितचि वा क्षुधित:, अत्तुमिच्छु: अदे: सनि "लुङ्सनोरिति" घस्लादेशे "सनाशंशेति उप्रत्यये च जिघत्सु:, अशनस्येच्छा "अशनायेति" साधु: अशनाया जाताऽस्य तारकादित्वादितचि अशनायित: स्यादिति चत्वारि क्षुधितस्य। परस्य अन्नं परान्नम् तन्नित्यमस्येति "अर्श आदिभ्य" इत्यचि परान्न:, परस्य पिण्डं तदत्तीति कर्मण्यणि परपिण्डाद: स्यादिति द्वे परान्नजीवनस्य। भक्षयति 'ण्वुलि' भक्षक:, घसति "सृघस्यद: क्मरच्" इति क्मरचि, घस्मर: एवमत्तीति 'क्मरचि' अद्मर: स्यादिति त्रीणि भक्षणपरस्य ॥ २० ॥

पु.स.न. पु.स.न.

मरभुखा **आद्यून:(स्या) दौदरिको (विजिगीषाविवर्जिते)।**

पु.स.न. पु.स.न.

पेटू **(उभौ) त्वात्मंभरि: ‡कुक्षिंभरि: (स्वोदरपूरके) ॥२१॥**

आद्यिति—विजिगीषाविवर्जिते उत्कर्षेच्छारहिते आद्यून:, औदरिकश्च स्यात्। आदेवीत् अकर्मकत्वात्कर्तरि 'क्ते' "दिवोऽविजिगीषायामिति" निष्ठानत्वे "यस्य विभाषेति" इडागमाभावे ऊठि च आद्यून:, उदरे प्रसित: "उदराट्ठगाद्यूने" इति 'ठकि' वृद्धौ च औदरिक: स्यादिति द्वे बुभुक्षयातिपीडितस्य "मरभुखा" इति ख्यातस्य। आत्मानं

‡ चान्द्रास्तु आत्मोदरकुक्षिष्विति पेट्ठ:, "ज्योत्स्नाकरम्भमुदरंभरयश्चकोरा:" (इति मुरारि:) ॥

भरति बिभर्ति वा आत्मंभरिः " फलेग्रहिरात्मंभरिश्चेति " साधुः, कुक्षिं बिभर्ति चात्र " भृञः कुक्ष्यात्मनोर्मुम् च " इति मुमागमे ' कुक्षिंभरिः, उभौ स्वोदरपूरके स्याताभिति द्वे निजोदरपूरकस्य " पेटू " इति ख्यातस्य ॥ २१ ॥

पु.स.न. पु.स.न. पु.स.न पु.स.न.

सर्वभक्षी **सर्वान्नीन(स्तु) सर्वान्नभोजी गृध्नु(स्तु) गर्धनः ।**

लोभी पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

महालोभी **लुब्धोऽभिलाषुकस्तृष्णक्(समौ)लोलुपलोलुभौ ॥२२॥**

सेति—सर्वेषामन्नानि सर्वान्नानि तानि भक्षयति "अनुपदसर्वान्न" इति 'खे' तस्येनादेशे च सर्वान्नीनः, सर्वान्नानि भोक्तुशीलमस्य " सुपीति" 'णिनौ' सर्वान्नभोजी स्यादिति द्वे सर्ववर्णान्नभक्षकस्य । गर्धनशीलः " त्रसिगृधीति " 'क्नौ' गृध्नुः गृध्यत्येवंशीलो " जुचङ्क्रम्येति " 'युचि', अनादेशे च गर्धनः, लुभ्यतिस्म " गत्यर्थेति " कर्तरि 'क्ते' लुब्धः " लुब्ध आकाङ्क्षिणि व्याधे " ( इति हेमचन्द्रः ) अभिलष्यति " लषपतपदेति " उकञि अभिलाषुकः, तृष्यति " स्वपितृषोरिति " नजङि तृष्णक् सर्वधरमते तु तृष्णाशब्दात् " तत्करोतीति " णयन्तारायवुलि तृष्णाकोऽदन्तोपि स्यादिति पञ्च लुब्धस्य " लोभी " इति ख्यातस्य । गर्हितं लुम्पति " लुपसदेति " 'यङन्तादचि' लोलुपः, भृशं लुभ्यति "धातोरेकाचः" इति यङन्तादचि लोलुभः उभौ समौ समानार्थौ समानलिङ्गौ स्यातामिति द्वे अतिलुब्धस्य ॥ २२ ॥

सिड़ी या पागल पु.स.न. पु.स.न. पु.स.न. पु.स.न.

अन्यायी **उन्मद(स्तू)न्मदिष्णुः (स्याद) विनीतः समुद्धतः ।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

मतवाला **मत्ते शौण्डोत्कटक्षीबाः कामुके कमितानुकः ॥ २३ ॥**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

कामुक या कामी **कम्रः कामयिता भीकः कमनः कामनोऽभिकः ।**

उन्मेति—उद्गतो मदो हर्षोऽस्येति उन्मदः क्वचित् " सोन्मादः " इति पाठस्तत्र सह उन्मादेन वर्तते सोपसर्गत्वान्मदेर्घञि सोन्मादः, सुअतिशयित उन्मादोऽस्येति विग्रहे तु " सून्मादः " इत्यपि उन्मदनशीलः "अलंकृञिति" 'इष्णुचि' उन्मदिष्णुः स्यादिति द्वे उन्मादशीलस्य " पागल " इति ख्यातस्य । नव्यनाथीति कर्मणि क्ते अविनीतः, समुद्धन्तिस्म, समुद्धन्यतेस्म इति वा हन्तेर्गत्यर्थत्वात् कर्तरि, कर्मणि वा 'क्ते' समुद्धतः " समुद्धतं समुद्गीर्णेऽप्यवनीते च वाच्यवत् " ( इति मेदिनी ) इति द्वे अविनीतस्य अन्याययुक्तस्य वा । माद्यतिस्म "गत्यर्थेति" कर्तरि 'क्ते' " नध्याख्येति " नत्वाभावे मत्तः, शुण्डायां पानागारे भवः " तत्र भवः " इत्यणि शौण्डः ".शौण्डो मत्ते च विख्याते पिप्पल्यां च भवेत्स्त्रियाम् " ( इति विश्वमेदिन्यौ ) उद्गतः कट

आवरणमावारकोवास्य, उद्गतमदप्रवृत्तेरुच्छब्दात्स्वार्थे " संप्रोदश्चेति " कटचि वा उत्कट: " उत्कटस्तीव्रमत्तयो: " ( इति हैम: ) क्षीबतेस्म अकर्मकत्वात्कर्तरि क्ते " अनुपसर्गादिति " साधु:, क्ते वा ' क्षीब: ' नान्तोऽप्ययम् "क्षीवाणौ समबुध्यत" इति व्यासप्रयोगात्तत्र बाहुलकात्कनिनि क्षीबाऽपि स्यादिति चत्वारि मत्तस्य " मतवाला" इति ख्यातस्य । कामयते "लषपतपदेति" 'उकञि' कामुक: "कामुक: कमने शोकपादपे चातिमुक्तके " ( इति मेदिनी ) णिङभावे च ' तृचि ' कमिता, अनुकामयते अनुक: " अनुकाभिकेति " साधु:, कमनशील: " नमि कम्पीति " ' रे ' कम्र:, कामयते, ' तृचि ' कामयिता, अभिकामयते अभीक: " अभीक: कामुके क्रूरे निर्भये त्रिपु ना कवौ" ( इति मेदिनी ) कमनशील: "अनुदात्तेतश्चेति" 'युचि' कमन: " कमन: कामुके कामेऽभिरूपेऽशोकपादपे " ( इति मेदिनी ) कामनशील: कामयते वा " णिङन्ताद्युचि " कामन:, अभिकामयते अभिक: स्यादिति नव कामुकस्य ॥ २३ । ३ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.
आज्ञाकारी **विधेयो विनयग्राही वचनेस्थित आश्रव: ॥ २४ ॥**
वश्य पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
नम्र या सीखा **वश्य: प्रणेयो निभृतविनीतप्रश्रिता: ( समा: ) ।**
धृष्ट या ढीठ पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
बुद्धिमान् **धृष्टे धृष्णग्वियात (श्च) प्रगल्भ: प्रतिभान्विते ॥२५॥**

वीति—विधातुं शक्य:, " अचोयत् " इति 'यति' "ईद्यति" इतीदादेशे, गुणे च विधेय:, प्रवृत्तौ निवृत्तौ वा विनयं ग्रहीतुं शीलमस्य " सुपीति " णिनौ विनयग्राही, वचने तिष्ठतिस्म "गत्यर्थेति" क्ते "तत्पुरुषे कृति" इत्यलुकि च वचनेस्थित:, आशृणोति, ' पचाद्यचि ' आश्रव: " आश्रवो वचनेस्थिते । प्रतिज्ञायां च क्लेशे च " ( इति हैम: ) इति चत्वारि प्रवृत्तिनिवृत्त्योर्विधातुं शक्यस्य । वशमधीनत्वं गत: "वशगत: " इति यति वश्य:, "वशमायततायां स्यात् " (इति विश्व: ) प्रकर्षेण नेतुं शक्य " अचोयदिति " यति प्रणेय: स्यादिति द्वे वशंगतस्य । नितरामभारिनिभृत:, व्यनायीति विनीत: " विनीतस्तु निभृते निर्जितेन्द्रिये । वाणिजे साधुवाह्यश्वे विनयग्राहिते हिते " ( इति हैम: ) प्रथममश्रायि गुणैरिति प्रश्रित: एते समा: समानार्था: स्युरिति त्रीणि विनययुक्तस्य । धृष्टे धृष्णक्, वियातश्च स्यात् धृष्णोतिस्म ' गत्यर्थेति ' कर्तरि 'क्ते' "धृषिशसीति" इडभावे च धृष्ट:, "धृषेश्चेति वाच्यमिति" 'नजिङि' धृष्णक् "त्रसि गृधीति" 'क्नौ' धृष्णुरपि, विरुद्धं यातं चेष्टितं यस्य, विरुद्धमयासीद्वा 'गत्यर्थेति' 'क्ते' वियात: स्यादिति त्रीणि निर्लज्जस्य । 'प्रतिभान्विते प्रगल्भ: स्यात्' प्रगल्भते 'पचाद्यचि ' प्रगल्भ:, प्रतिभानम् "आतश्चोपसर्गे " 'इत्यङि' प्रतिभा "प्रज्ञानवनवोन्मेष-

शालिनी प्रतिभा मता " ( इति रुद्रः ) तया अन्वितो युक्तः प्रतिभान्वितः स्यादिति द्वे प्रत्युत्पन्नमतेः ॥ २४ । २५ ॥

सलज्ज पु.स.न. पु.स.न. पु.स.न. पु.स.न.
आश्चर्यो **(स्याद्) धृष्टे (तु) शालीनो विलक्षो विस्मयान्विते ।**
व्याकुल पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
डरपाक **अधीरे कातरस्त्रस्नौ भीरुभीरुकभीलुकाः ॥ २६ ॥**

स्यादिति—अधृष्टे अप्रगल्भिते शालीनःस्यात् न धृष्णोतिस्म अधृष्टः, शालाप्रवेशमर्हति शालीनः " शालीनकौपीने " इति साधुरिति द्वे सलज्जस्य । विस्मयान्विते आश्चर्ययुक्ते विलक्षः स्यात् विशेषेण लक्षयति " पचाद्यचि " विलक्षः, विस्मयेनाश्चर्येणान्वितो विस्मयान्वितः स्यादिति द्वे परकीयधर्मशीलादौ प्राप्ताश्चर्यस्य । अधीरे धैर्यतारहिते कातरः स्यात् न धीरो धैर्यं यस्येति अधीरः, ईषत्तरतीति अचि " ईषदर्थे चेति " कोः कादेशे च कातरः स्यादिति द्वे रोगादिलक्षणेनाकुलमानसस्य । त्रस्नौ त्रसनशीले भीरु-भीरुक-भीलुकाःस्युः त्रस्यति " त्रसिगृधीति " 'क्नौ' त्रस्नुः, बिभेत्येवं शीलो " भियः क्रुक्लुकनाविति " 'क्रौ' भीरुः, " भीरुरात्त त्रिलिङ्गः स्याद्भरयोषिति योषिति " ( इति विश्वमेदिन्यौ ) " क्रुकन्नपीति " 'क्रुकनि' भीरुकः, 'क्लुकनि' भीलुकः स्यादिति चत्वारि भयशीलस्य ॥ २६ ॥

कहनेवाला पु.स.न. पु.स.न. पु.स.न. पु.स.न.
पकड़नेवाला **आशंसुराशंसितरि गृहयालुर्ग्रहीतरि ।**
श्रद्धावान् पु.स.न. पु.स.न. पु.स.न.
गिरनेवाला **श्रद्धालुः(श्रद्धयायुक्ते) पतयालु (श्च) पातुके ॥ २७ ॥**

आशेति—आशंसतरि आशंसुः स्यात् । आशंसते " सनाशंसेति " 'उ' प्रत्यये आशंसुः, एवं 'तृनि' आशंसिता स्यादिति द्वे इष्टार्थप्राप्तीच्छोः । ग्रहीतरि गृहयालुः स्यात् गृहयति " स्पृहिगृहीति " 'आलुचि', "अयामन्तेति" णेरयादेशे च गृहयालुः, गृह्णाति 'तृनि' " ग्रहोऽलिटीति " इटो दीर्घे च ग्रहीता स्यादिति द्वे ग्रहणशीलस्य । गुरुवेदान्तवाक्यादिषु विश्वासः श्रद्धा तया युक्ते संपन्ने श्रद्धालुः स्यात् , श्रद्धधाति 'आलुचि' श्रद्धालुः स्यादित्येकं श्रद्धावतः । पातुके पतनशीले पतयालुः स्यात् पतयति 'आलुचि'पतयालुः,पतति "लषपतेति""उकञि'पातुकः स्यादिति द्वे पतनशीलस्य॥२७॥

लज्जावान् पु.स.न. पु.स.न. पु.स.न. पु.स.न.
बन्दना करनेवाला **लज्जाशीलोऽपत्रपिष्णुर्वन्दारुरभिवादके ।**
पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
हत्यारा बढ़नेवाला **शरारुर्घातुकोहिंस्रः(स्या)द्वर्धिष्णु(श्च)वर्धनः ॥ २८ ॥**

लेति—लज्जाशीलमस्येति लज्जाशीलः, अपत्रपते " अलंकृञिति " इष्णुचि अप-

त्रपिष्णुः स्यादिति द्वे लज्जावतः । अभिवादके वन्दारुः स्यात्—वन्दते "शृवन्द्योरिति" 'आरौ' वन्दारुः, अभिवादयति 'ण्वुलि' अभिवादकः स्यादिति द्वे वन्दनशीलस्य । शृणाति आरौ, शरारुः, हन्ति "लषपतेति" 'उकञि' घातुकः, हिनस्ति "नमिकम्पीति" रे हिंस्रः "हिंस्रा काकादनीमांस्योः स्त्रियां स्याद्घातुकेऽन्यवत्" (इति विश्वमेदिन्यौ) इति त्रीणि हिंसाशीलस्य । वर्धते "अलंकृञिति" 'इष्णुचि' वर्धिष्णुः, एवं "अनुदात्तेतश्चेति" 'युचि' वर्धनः "वर्धनं छेदने वृद्धौ वर्धनी तु गलन्तिका" (इति हैमः) इति द्वे वर्धनशीलस्य ॥ २८ ॥

उछलनेवाला. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
भूषणों की चाह वाला. होने की चाह वाला. वर्तनेवाला.

**उत्पतिष्णु(स्तू)त्पतिताऽलंकरिष्णु (स्तु)मण्डनः ।**

पु.स.न पु.स.न. पु.स.न. पु.स.न पु.स.न.

**भूष्णुर्भविष्णुर्भविता वर्तिष्णुर्वर्तनः(समौ) ॥ २९ ॥**

उदिति—उत्पतति 'इष्णुचि' उत्पतिष्णुः, एवं 'तृनि' उत्पतिता स्यादिति द्वे ऊर्ध्वपतनशीलस्य । अलंकरणशीलः "अलंकृञिति" 'इष्णुचि' अलंकरिष्णुः, मण्डनशीलः "क्रुधमण्डार्थेभ्यश्चेति" 'युचि' मण्डनः स्यादिति द्वे अलंकरणशीलस्य । भवनशीलः "ग्लाजिस्थश्चेति" 'ग्स्नौ' भूष्णुः, "भुवश्चेति" 'इष्णुचि' भविष्णुः, तृनि भविता स्यादिति त्रीणि भवनशीलस्य । वर्तनशीलः "अलंकृञिति" 'इष्णुचि' वर्तिष्णुः, "अनुदात्तेतश्चेति" 'युचि' वर्तनः उभौ समौ समानार्थौ स्यातामिति द्वे वर्त्तनशीलस्य ॥ २९ ॥

निकालनेवाला. पु.स.न. पु.स.न. पु.स.न.
सघनस्निग्ध.

**निराकरिष्णुःक्षिप्नुः(स्यात्)"सान्द्रस्निग्धस्तु"मेदुरः ।**

जाननेवाला. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
खिलनेवाला.

**ज्ञाता(तु) विदुरो बिन्दुर्विकासी (तु) विकस्वरः ॥३०॥**

नीति—निराकरणशीलः 'इष्णुचि' निराकरिष्णुः, क्षेपणशीलः "त्रसिगृधीति" क्नौ, क्षिप्नुः स्यादिति द्वे निराकरणशीलस्य । सान्द्रोघनः स्निग्धश्चिक्कणः सान्द्रश्चासौ स्निग्धश्चेति सान्द्रस्निग्धो मेदुरः स्यात् मेदनशीलो"भञ्जभासेति" 'घुरचि' मेदुरः स्यात् तल्लक्ष्यं "मेघैर्मेदुरमम्बरमिति" विज्ञेयमित्येकं घनचिक्कणस्य । जानाति 'तृनि' ज्ञाता, वेदनशीलो "विदिभिदीति" 'कुरचि' विदुरः, वेत्तीत्येवंशीलोबिन्दुः "बिन्दुरिच्छुरिति" साधुरिति त्रीणि ज्ञानशीलस्य । विकसति "वौ कसलसेति" 'घिनुणि' "विकासः स्फुटने व्यक्तौ" (इति दन्त्यान्ते धरणिः) तस्मादिनौ वा विकासी एवं "स्थेशभासेति" 'वरचि' विकस्वरः स्यादिति द्वे विकसनशीलस्य ॥ ३० ॥

---

१ चाद्भुवः अतएव भाष्ये तु "भुव इट् प्रतिषेधश्च" इत्युपलभ्यते ॥

गमन करने वाला. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
विसृत्वरो विसृमरः प्रसारी (च) विसारिणि ।
सहनशील. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी ॥३१॥

वीति–विसरणशीलो विसारोऽस्त्यस्येति वा विसारी तस्मिन् विसृत्वरो विसृमरः प्रसारी च स्युः विसरणशीलः "इणनश्जीति" क्वरपि, "ह्रस्वस्येति" तुकि च विसृत्वरः एवं "सृघस्येति" 'क्मरचि' विसृमरः, प्रसरणशीलः "प्रेलपेति" घिनुणि, प्रसारी विसरणम् 'घञि' विसारः सोऽस्त्यस्येति इनौ विसारी स्यादिति चत्वारि प्रसरणशीलस्य । सहनशीलः "अलंकृञिति" इष्णुचि, सहिष्णुः, एवं "अनुदात्तेतश्चेति" 'युचि' सहनः, क्षमणशीलः 'तृनि' क्षन्ता, तितिक्षणशीलः "सनाशंसेति" 'उप्रत्यये' तितिक्षुः, तृनः "स्वरतीति" पक्षे इडागमे क्षमिता, क्षाम्यत्येवं शीलः "शमित्यष्टाभ्य इति" 'घिनुणि' क्षमी स्यादिति षट् सहनशीलस्य ॥३१॥

क्रोधी. महाक्रोधी. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
क्रोधनोऽमर्षणः कोपी चण्ड(स्त्व)त्यन्तकोपनः ।
जागनेवाला. पु.स.न. पु.स.न. पु.स.न. पु.स.न
निद्रा से घूर्णित. जागरूको जागरिता घूर्णितः प्रचलायितः ॥ ३२ ॥

क्रविति–क्रोधनशीलः "क्रुधमण्डेति" 'युचि', क्रोधनः, नमर्षणशीलो 'युचि' अमर्षणः, अवश्यं कुप्यति "आवश्यकेति" 'णिनौ' कोपी स्यादिति त्रीणि क्रोधनशीलस्य । चण्डते 'पचाद्यचि' चण्डः "चण्डस्तु यमदासेऽति कोपने । तीव्रे दैत्यविशेषे च चण्डी तु शिवयोषिति । चण्डा धनहरीशंखपुष्प्योः" (इति हेमचन्द्रः) अत्यन्तं कुप्यति "क्रुधमण्डेति" 'युचि' अत्यन्तकोपनः स्यादिति द्वे अतिक्रोधनस्य । जागरणशीलः "जागरूकः" 'इत्यूके' जागरूकः एवं 'तृनि' जागरिता स्यादिति द्वे जागरूकस्य । घूर्णतेस्म "गत्यर्थेति" 'क्ते' घूर्णाजातास्येति तारकादित्वादितिचि वा घूर्णितः, प्रचल इवाचरति "कर्तुः क्यङ् सलोपश्चेति" 'क्यङि' प्रचलायतेस्म "गत्यर्थेति" 'क्ते' प्रचालाया जातास्येति 'इतचि' वा प्रचलायितः स्यादिति द्वे संजातघूर्णस्य ॥ ३२ ॥

सोनेवाला. पु.स.न. पु.स.न. पु.स.न. पु.स.न पु.स.न.
सोया हुआ. स्वप्नक् शयालुर्निद्रालुर्निद्राणशयितौ ( समौ ) ।
विमुख. पु.स.न. पुं.स.न. पु.स.न. पु.स.न
अधोमुख. पराङ्मुखः पराचीनः (स्या) दवाङप्यधोमुखः ॥ ३३ ॥

स्वेति–स्वपनशीलः "स्वपितृषोरिति" 'नजिङि' स्वप्नक्, शयनशीलः "शीङश्चेति" 'आलुचि' शयालुः "शयालुः स्यादजगरे निद्राशीले च कुक्कुरे" ( इति

विश्वमेदिन्यौ ) निद्राशीलः " स्पृहिगृहीति " ' आलुचि ' निद्रालुः स्यादिति त्रीणि निद्राशीलस्य । निद्रातिस्म अकर्मकत्वात्कर्तरि क्ते " संयोगादेरिति " निष्ठा नत्वे च निद्राणः, शेतेस्म कर्तरि क्ते " निष्ठाशीङिति " कित्त्वाभावे च शयितः उभौ समौ समानार्थौ स्यातामिति द्वे निद्रां प्राप्तस्य । पराञ्चत्यनभिमुखो भवति "ऋत्विगिति" ' क्विनि ' पराक्मुखमस्येति पराङ्मुखः, पराङेव, " विभाषाञ्चेरिति " स्वार्थे ' खे ' तस्येनादेशे च पराचीनः स्यादिति द्वे विमुखस्य । अवाञ्चत्यधोमुखोभवति ' क्विनि ' अवाङ्, स्त्रियाम् " उगितश्चेति " ङीपि अवाची अधोमुखं यस्येति अधोमुखः स्यादिति द्वे अधोमुखस्य ॥ ३३ ॥

देवपूजक. सब ओर जानेवाला. साथ का जानेवाला. तिरछा जानेवाला.

पु.स.न. पु.स.न.

**( देवानञ्चति ) देवद्र्यङ् विष्वद्र्यङ् (विष्वगञ्चति) ।**

पु.स.न. पु.स.न.

**(यःसहाञ्चति)सध्र्यङ्(सः)सतिर्यङ्(यस्तिरोऽञ्चति)३४**

दयिति—देवान् अञ्चति=गच्छति पूजयति वा क्विनि " विष्वग्देवयोरिति" अद्र्यादेशे च देवद्र्यङ् स्यादित्येकं देवपूजकस्य । विष्वगञ्चति ' क्विनि ' अद्र्यादेशे च विष्वद्र्यङ् मूर्धन्यमध्यः " विश्वद्र्यङ् " तालव्यमध्यश्च स्यादित्येकं सर्वतो गच्छतः । यः सह अञ्चति गच्छति स सध्र्यङ्स्यात् "सहस्य सध्रिरिति" सध्र्यादेशः। स्त्रियाम् " उगितश्चेति " ङीपि सध्रीची, स्यादित्येकं सहचरितस्य । यस्तिरोऽञ्चति स तिर्यङ् स्यात् "तिरसस्तिर्यलोपे" इति तिर्यादेशः स्यादित्येकं वक्रं गच्छतः ॥ ३४ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

वक्ता **वदो वदावदो वक्ता वागीशो वाक्पतिः ( समौ ) ।**

महावक्ता नैयायिक बहुभाषी

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

**वाचोयुक्तिपटुर्वाग्मी वावदूको ( ऽतिवक्तरि ) ॥ ३५ ॥**

वेति—वदति " पचाद्यचि " वदः, एवं " चरिचलीति " अचि, द्वित्वे, अभ्यासस्याकचि च वदावदः, वक्ति ' तृनि ' वक्ता " वक्ता तु पण्डितेऽपि स्याद्वाग्मिन्यप्यभिधेयवत् " ( इति विश्वः ) इति त्रीणि वदावदस्य " वक्ता " इति ख्यातस्य । वाचामीशो वागीशः, वाचांपतिः वाक्पतिः उभौ समौ समानार्थौ स्यातामिति द्वे पटुवचनस्य " महावक्ता " इति ख्यातस्य । वाचो युक्तिः सयुक्तिकत्वम् " वाग्दिक्पश्यद्भ्यः " इत्यलुकि, वाचो युक्तिस्तस्यां पटुः प्रवीणो वाचोयुक्तिपटुः, प्रशस्ता वागस्य " वाचोग्मिनिः " इति ' ग्मिनौ ' वाग्मी स्यात् "वाग्मी पटौ सुराचार्ये" ( इति विश्वमेदिन्यौ ) इति द्वे प्रशस्तवाचः " नैयायिक " इति ख्यातस्य । अतिवक्तरि वावदूकः स्यात् । अतिशयेन वदति, वाच्यते कुर्वादिषु ' वावदूक ' शब्दपाठात् वदेरूके, वावदूकः, अतिवक्ति साधुकारिणि ' तृनि ' ' तृचि ' वा अतिवक्ता स्यादिति द्वे बहुभाषिणः ॥ ३५ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

अवाच्यभाषी **( स्या ) जल्पाक (स्तु) वाचालो वाचाटो बहुगर्ह्यवाक् ।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

अप्रियवादी प्रियवादी **(दुर्मुखे) मुखराबद्धमुखौ शक्लः (प्रियंवदे) ॥ ३६ ॥**

स्यति—जल्पनशीलो जल्पति वा "जल्पभिक्षेति" 'षाकनि' जल्पाकः, षित्त्वात्स्त्रियां ङीषि 'जल्पाकी' बहुगर्ह्या वागस्य "आलजाटचौ बहुभाषिणि" इति कुत्सायाम् 'आलचि' वाचालः, 'आटचि' वाचाटः, बहुगर्ह्या वाक् यस्येति बहुगर्ह्यवाक् स्यादिति चत्वारि बहुगर्ह्यभाषिणोऽवाच्यवादिनो वा । दुर्मुखेऽप्रियवादिनि मुखराबद्ध-मुखौ स्याताम् । दुर्निन्दितं मुखमस्येति दुर्मुखः, निन्दितं मुखमस्य "खमुखेति" "रे" मुखरः ( अत्र मुखशब्दो लक्षणया वचनपरो ज्ञेयः ) न बद्धं नियमितं मुखमस्येति अबद्धमुखः स्यादिति त्रीण्यप्रियवादिनः । प्रियंवदे प्रियवक्तरि शक्लः स्यात् । शक्नोति "मूङ् शक्येति" क्ले शक्लः, स्वाभिमते तु शक्नोति वक्तुमिति 'क्तचि' शक्तः, सर्व-धरमते तु शक्नोपि, प्रियं वदति "प्रियवशे वद इति" 'खचि' मुमागम च प्रियं-वदः स्यादिति द्वे प्रियवादिनः ॥ ३६ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

अप्रकटवादी **लोहलः ( स्याद ) स्फुटवाग् गर्ह्यवादी ( तु ) कद्वदः ।**

कुवादी दोषवादी क्रूरवादी

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

**(समौ) कुवादकुचरौ (स्याद) सौम्यस्वरोऽस्वरः ॥३७॥**

लविति—लोहनम्[1] भावे 'घञि' लोहं लाति "आतोऽनुपेति" 'के' रोहयति बाहुलकादलचि वा कपिलिकादित्वाल्लत्वे च लोहलः "लोहलः शृङ्ख-लाद्यर्येऽव्यक्तवाचिनि च त्रिषु" ( इति हेमचन्द्रः ) न स्फुटा वागस्येति अस्फुट-वाक् स्यादिति द्वे अस्फुटवादिनः । गर्ह्यं निन्द्यं वदति "सुप्यजाताविति" 'णिनौ' गर्ह्यवादी, कुत्सितं वदति, अचि "रथवदयोश्चेति" कोः कदादेशे च 'कद्वदः' स्या-दिति द्वे कुवादिनः । कुत्सितो वादोऽस्येति कुवादः, कुत्सितं चरति 'पचाद्यचि' कुचरः उभौ समौ समानार्थौ स्यातामिति द्वे कुकथनशीलस्य । असौम्यो रूक्षः स्वरो यस्येति असौम्यस्वरः, अप्रशस्तः स्वरो यस्येति अस्वरः स्यादिति द्वे काकादिवद्रूक्षस्वरस्य ॥ ३७ ॥

शब्द करनेवाला पु.स.न. पु.स.न. पु.स.न. पु.स.न.

आशिषसे बड़ाई करनेवाला **रवणः शब्दनो नान्दीवादी नान्दीकरः ( समौ ) ।**

महामूढ़ गूंगा व बहिरा पु.स.न. पु.स.न. पु.स.न.

**जडोऽज्ञे एडमूक ( स्तु वक्तुं श्रोतुमशिक्षिते ) ॥ ३८ ॥**

रेति—रवणशीलः "चलनशब्दार्थादिति" 'युचि' रवणः, शब्दनशीलो

---

१ 'लुह गार्ध्ये' इति वोपदेवः ॥

'युचि' शब्दनः स्यादिति द्वे शब्दकरणशीलस्य । नान्दीवदनशीलः "सुपीति" वदेर्णिनौ नान्दीवादी, नान्दीं करोति "दिवाविभेति" टे. नान्दीकरः "आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रवर्तते । देवद्विजनृपादीनां तस्मान्नान्दीति कीर्त्यते" (इति भरतः) उभौ समौ समानार्था स्यातामिति द्वे नाटकादौ मङ्गलार्थं भेर्यादिवादकस्य । अज्ञे अज्ञातरि जडः स्यात् जलति 'पचाद्यचि' डलयोरभेदाल्लस्य डत्वे च जडः "इष्टं वानिष्टं वा सुखदुःखं वा न वेत्ति यो मोहात् । परवशगः स भवेदिह जडसंज्ञकः पुरुषः" । "जडा स्त्रियाम् । शूकशिम्ब्यां हिमग्रस्तमूकाप्रज्ञेषु च त्रिषु" (इति विश्वमेदिन्यौ) न जानातीति 'के' अज्ञः स्यादिति द्वे इष्टानिष्टज्ञानविहीनस्य । वक्तुं श्रोतुं च अशिक्षिते शिक्षारहिते एडो बधिरश्चासौ मूकश्चेति एडमूकः "एडमूकोऽन्यलिङ्गः स्याच्छठे वाक्श्रुतिवर्जिते" (इति मेदिनी) नास्ति एडमूकोऽस्मादिति विग्रहे तु अनेडमूकोऽपि "त्रिलिङ्गोऽनेडमूकः स्याच्छठे वाक्श्रुतिवर्जिते" (इति रभसः) इत्येकं वाक्श्रुतिवर्जितस्य ॥ ३८ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

चुप रहनेवाला, **तूष्णींशील (स्तु) तूष्णीको नग्नोऽवासा दिगम्बरः ।**

नंगा धडंगा, पु.स.न. पु.स.न. पु.स.न. पु.स.न.

निकाला धिकारी **निष्कासितोऽवकृष्टः (स्याद) पध्वस्त (स्तु) धिक्कृतः ॥ ३९ ॥**

त्विति—तूष्णींशीलमस्येति तूष्णींशीलः, तूष्णींशीलमस्त्यस्येति "शीले को मलोपश्चेति" के, मलोपे, "केणः" इति नाणो ह्रस्वे च मलोपसामर्थ्यादिति तूष्णीकः स्यादिति द्वे मौनशीलस्य "चुप्पा" इति ख्यातस्य । नजतेस्म, अकर्मकत्वात्कर्तरि क्ते "ओदितश्चेति" निष्ठानत्वे च नग्नः "नग्नो बन्दिक्षपणयोः पुंसि त्रिषु विवाससि" (इति विश्वः) न वासोऽस्येति अवासाः, दिगेव अम्बरं यस्येति दिगम्बरः "दिगम्बरः स्यात्क्षपणेऽधने तमसि शंकरे" (इति मेदिनी) इति त्रीणि दिगम्बरस्य "नंगा" इति ख्यातस्य। निष्कास्यते स्म णयन्तात्कर्मणि क्ते" निष्कासितः, अवकृष्यते स्म अवकृष्टः स्यादिति द्वे निष्कासितस्य । अपध्वस्यते स्म अपध्वस्तः "अपध्वस्तः परित्यक्ते निन्दितेऽप्यवचूर्णिते" (इति मेदिनी) 'धिक्' इति कृतो धिक्कृतः स्यादिति द्वे निन्दितस्य ॥ ३९ ॥

गर्वखण्डवाला पु.स.न. पु.स.न. पु.स.न. पु.स.न.

धनादि का दिलानेवाला **आत्तगर्वोऽभिभूतः (स्याद्) दापितः साधितः (समौ) ।**

अनादर किया हुआ पु.स.न. पु.स.न. पु.स.न. पु.स.न.

**प्रत्यादिष्टो निरस्तः (स्या) त्प्रत्याख्यातो निराकृतः ॥ ४० ॥**

---

१ नजते स्म "ओ नजी व्रीडे" (तु. आ. से.) अकर्मकत्वात् कर्तरि क्तः (३ । ४ । ७२) "ओदितश्च" (८ । २ । ४५) इति नत्वमिति सुधाकारः ॥

आत्तेति—आत्तो गर्वो यस्येति आत्तगर्वः, "गन्धो गन्धक आमोदे सम्बन्धे लेश-गर्वयोरिति विश्वः" आत्तो गन्धो गर्वो यस्येति विग्रहे तु आत्तगन्धोऽपीति पाठान्तरम्, अभिभूयते स्म अभिभूतः स्यादिति द्वे विध्वस्ताभिमानस्य अथवा अपध्वस्तमारभ्या-भिभूतान्तं चत्वारः पर्याया इति केप्याहुः । दाप्यते स्म णयन्तात्कर्मणि क्ते दापितः, 'दाय्यते स्म' इति विग्रहे तु दायितोऽपीति पाठान्तरम्, साध्यते स्म साधितः उभौ समौ समानार्थौ स्यातामिति द्वे धनादिकप्रदापितस्य । प्रत्यादिश्यते स्म प्रत्यादिष्टः, निरस्यते स्म निरस्तः, "निरस्तः प्रेषितशरे संत्यक्ते त्वरितोदिते । निष्ठ्यूते प्रतिहते च" (इति हैमः) प्रत्याख्यायते स्म प्रत्याख्यातः, निराकारि कर्मणि क्ते, निराकृतः स्यादिति चत्वारि निराहृतस्य ॥ ४० ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

निकाला हुआ **निकृतः(स्या)द्विप्रकृतो विप्रलब्ध (स्तु) वञ्चितः ।**

ठगा गया पु.स.न. पु.स.न. पु.स.न. पु.स.न.

टूटे दिलवाला **मनोहतः प्रतिहतः प्रतिबद्धो हत (श्च सः) ॥ ४१ ॥**

नीति—न्यकारि-निक्रियतेस्म वा कर्मणि 'क्ते' निकृतः, निकृतं विप्रलब्धे स्याच्छठे विप्रकृते त्रिषु" (इति विश्वः) विप्राकारि-विप्रक्रियतेस्म वा विप्रकृतः स्यादिति द्वे निकृतस्य । विप्रलभ्यतेस्म कर्मणि क्ते विप्रलब्धः, वञ्च्यतेस्म णयन्तात्कर्मणि 'क्ते' वञ्चितः स्यादिति द्वे विप्रलब्धस्य । यः मनोहतः सः प्रतिहतः, प्रतिबद्धः, हतश्च स्यात् । मनोहतं यस्येति मनोहतः, प्रति हन्यतेस्म कर्मणि 'क्ते' प्रतिहतः प्रतिबद्ध्यतेस्म प्रतिबद्धः, हन्यतेस्म हतः स्यादिति चत्वारि कृतमनोभङ्गस्य ॥ ४१ ॥

निन्दित पु.स.न. १ पु.स.न. पु.स.न. पु.स.न. पु.स.न.

बँधुआ **अधिक्षिप्तः प्रतिक्षिप्तो बद्धे कीलितसंयतौ ।**

विपत्ति में पड़ा पु.स.न. पु.स.न. पु.स.न. २ पु.स.न.

भय से भगा **आपन्न आपत्प्राप्तः(स्यात् )कान्दिशीकोभयद्रुतः॥४२॥**

अधीति—अधिक्षिप्यतेस्म कर्मणि 'क्ते' अधिक्षिप्तः, "अधिक्षिप्तः प्रणिहिते कुत्सिते भर्त्सिते त्रिषु" (इति विश्वहेमचन्द्रौ) प्रत्यक्षेपि-प्रतिक्षिप्यतेस्म वा प्रति-क्षिप्तः "प्रतिक्षिप्तं प्रतिहते प्रेषिते च निराकृते" (इति विश्वः) इति द्वे कृताक्षेपस्य, निन्दामधिगतस्य वा । बद्धे कारागृहे निगडादिभिर्यन्त्रिते कीलितसंयतौ स्याताम् । बद्ध्यतेस्म कर्मणि 'क्ते' बद्धः कील्यतेस्म, कीलितः, संयम्यतेस्म संयतः स्यादिति त्रीणि बद्धस्य "बँधुवा" इति ख्यातस्य । आपद्यतेस्म 'गत्यर्थेति' कर्तरि 'क्ते' आपन्नः, आपदनं संपदादित्वात् क्विपि आपत् । प्राप्नोतिस्म प्राप्तः आपदं प्राप्तः "द्वितीया श्रितेति" समासे आपत्प्राप्तः स्यादिति द्वे आपत्तिमागतस्य । कां दिशं

---

१ "कस्यचिच्छौर्यादिकं प्रतिस्पर्धमानस्य दुर्वचनमधिक्षेपः" (इति राजमुकुटः) ॥

२ कांदिशं गच्छामीति चिन्तयन् पलायितः कान्दिशीकः स्यादिति ॥

गच्छामीत्याह " तदा हेति माशब्दादिभ्य इति " ठकि तस्येकादेशे च पृषोदरादित्वात् कान्दिशीकः, मुकुटस्तु कन्दनम् भावे 'घञि' कन्दः सोऽस्त्यस्येति मत्वर्थीये 'इनौ' कन्दी, शीकनं भावे 'घञि' शीकः स चासौ कन्दिशीकः सोऽस्त्यस्येति "ज्योत्स्नाद्यणि" कान्दिशीकः सिद्ध्यतीत्येवं व्याख्यातवानिति । अदुद्रुवत्-द्रवतिस्म वा 'गत्यर्थेति' कर्तरि क्ते द्रुतः, भयाद्द्रुतः "पञ्चमीति" योगविभागात्समासे भयद्रुतः स्यादिति द्वे भयात्पलायितस्य ॥ ४२ ॥

अपवादी पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
चञ्चल **आक्षारितः क्षारितोऽभिशस्ते संकसुकोऽस्थिरे ।**
कथित पु.स.न. पु.स.न. पु.स.न. पु.स.न.
शोकाकुल **व्यसनार्त्तोपरक्तौ(द्वौ)विहस्तव्याकुलौ (समौ) ॥४३॥**

आक्षेति—अभिशस्ते आक्षारितः, क्षारितश्चेत्युभौ स्याताम् । आक्षार्यतेस्म ण्यन्तात्कर्मणि 'क्ते' आक्षारो मैथुनं प्रत्याक्रोशो जातोऽस्येति 'इतचि' वा आक्षारितः एवं क्षार्यतेस्म क्षारितः " क्षारितः स्रावितेः क्षारे चाभिशस्तेऽपि च त्रिषु" ( इति मेदिनी ) अभिशस्यतेस्म कर्मणि 'क्ते' यस्य विभाषेति, 'वृषिशसीति' वा इडागमाभावे च अभिशस्तः स्यादिति त्रीणि मैथुननिमित्तं मिथ्यादूषितस्य । अस्थिरे संकसुकः स्यात् । संकसति " समि कस उकन्निति " उकनि संकसुकः, न स्थिरः अस्थिरः स्यादिति द्व चलस्वभावस्य । व्यसनेन आर्त्तो व्यसनार्त्तः, उपरज्यते स्म कर्मणि क्ते उपरक्तः " उपरक्तो व्यसनार्त्ते राहुग्रस्तेन्दुसूर्ययोः " ( इति विश्वः ) व्यसनार्तश्चोपरक्तश्चेमौ द्वौ स्यातामिति द्वे दैवमानुषपीडायुक्तस्य । विक्षिप्तोहस्तोऽस्येति विहस्तः, " विहस्तस्तु विह्वले पण्डकेऽकरे " ( इति हैमः ) व्याकोलति " इगुपधेति " 'के' व्याकुलः उभौ समौ समानार्थौ स्यातामिति द्वे शोकादिभिरिति कर्तव्यताशून्यस्य ॥ ४३ ॥

शोकादि से भङ्ग गात्रवाला. मरणासन्नबुद्धिवाला पु.स.न. पु.स.न. पु.स.न. पु.स.न.
**विक्लवो विह्वलः ( स्यात्तु ) विवशोऽरिष्टदुष्टधीः ।**
बेंत मारने योग्य पु.स.न. पु.स.न. पु.स.न. १
आततायी **कश्यः कशार्हे ( संनद्धे ) त्वाततायी(वधोद्यते)॥४४॥**

वीति—विक्लवते 'पचाद्यचि' विक्लवः, विह्वलतीति 'अचि' विह्वलः स्यादिति द्वे स्वाङ्गान्यैव धारयितुमशक्तस्य । विरुद्धं वष्टि 'अचि' विवशः " विवशास्त्रिष्ववश्यात्मारिष्टदुष्टधियोरपि " ( इति मेदिनी ) अरिष्टेन दुष्टा, अरिष्टदुष्टा धीर्यस्येति अरिष्टदुष्टधीः स्यादिति द्वे आसन्नमरणलक्षणेन दूषितमतेः । कशार्हे कश्यः स्यात् ।

---

१ वध उपलक्षणम् । यत्स्मृतिः—"अग्निदो गरदश्चैव शस्त्रपाती धनापहः । क्षेत्रदारहरश्चैव षडेते आततायिनः ॥ " ( इति क्षीरस्वामी ) ॥

कशामर्हति " दण्डादिभ्यो यः " इति ' ये ' कश्यः, " कश्यं कशार्हमद्ययोः । अश्वमध्येऽपि " ( इति हैमः ) कशामर्हति " अर्हः " इत्यचि, कशार्हः स्यादिति द्वे ताडनार्हस्य । संनद्धमस्त्यस्येति, ( अचि ) संनह्यति स्म वा अकर्मकत्वात् कर्तरि 'क्ते' संनद्धस्तस्मिन् वधोद्यते आततायी स्यात् । आततं यथा स्यात्तथा अयितुं शीलमस्य " सुपीति " ' णिनौ ' आततायी स्यादित्येकमाततायिनः ॥ ४४ ॥

शत्रुता करने योग्य. शीश काटने योग्य. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

**द्वेष्ये त्वक्षिगतो वध्यः शीर्षच्छेद्य ( इमौ समौ ) ।**

विष देनेयोग्य. मूसल से मारने योग्य. पु.स.न. पु.स.न.

**विष्यो (विषेण यो वध्यो) मुसल्यो(मुसलेन यः)॥४५॥**

द्वायिति—द्वेष्ये द्वेषार्हे अक्षिगतः स्यात् । द्वेष्टुमर्हः "ऋहलोरिति" 'ण्यति' द्वेष्यः अक्षिविषयं गतः " शाकपार्थिवादित्वात्" मध्यमपदलोपे अक्षिगतः स्यादिति द्वे द्वेषार्हस्य । वधमर्हति स्म " दण्डादिभ्यो यः " इति ' ये ' हन्तुमर्हः " हनो वधच " इति ' यति ' वा वध्यः, शीर्षस्य शिरसश्छेदस्तमर्हति "शीर्षच्छेदादिति " ' यति ' शीर्षच्छेद्यः इमौ समौ समानार्थौ स्यातामिति द्वे शिरश्छेदार्हस्य । यो विषेण वध्यश्चेत स विष्यः स्यात् विषेण वध्यः "नौवयोधर्मेति" यति विष्यः स्यादित्येकं विषवध्यस्य । यो मुसलेन वध्यश्चेत्स मुसल्यः स्यात् मुसलेन वध्यः " दण्डादिभ्य इति " ' ये ' मुसल्यः स्यादित्येकं मुसलवध्यस्य ॥ ४५ ॥

पुण्यात्मा पापात्मा. विना विचारे वधादि करनेवाला पु.स.न. पु.स.न. पु.स.न. पु.स.न.

**शिश्विदानोऽकृष्णकर्मा चपलश्चिकुरः ( समौ ) ।**

केवल दोष दर्शी. कपटी पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

**दोषैकदृक् पुरोभागी निकृतस्त्वनृजुः शठः ॥ ४६ ॥**

शीति—शिश्विन्दे ' श्विदि श्वैत्ये ' अस्मात् " लिटः कानच् " इति कानचि, अनित्यत्वान्नुमोऽभावे च शिश्विदानः, अकृष्णं शुक्लं कर्मास्येति अकृष्णकर्मा स्यादिति द्वे अपापकर्मणः । कृष्णकर्मेति पाठान्तरम् तत्र ' श्विता वर्णे, अस्माच्श्वेतितुमिच्छति " श्वितेर्दश्चेति " आनचि, दत्वे, सनोलुकि च शिश्विदानः, कृष्णं कर्मास्येति कृष्णकर्मा स्यादिति द्वे पापकर्मणः । चपति वृषादित्वात् ' कलचि ' चपलः " चपलश्चोरके चले " ( इति हैमः ) ' चि ' इत्यव्यक्तं कुरति " इगुपधेति " ' के ' चिकुरः " चिकुरोऽहौ गृहबभ्रौ केशे चञ्चलशैलयोः । पक्षिवृक्षभिदोश्चापि " ( इति हैमः ) उभौ समौ समानार्थौ स्यातामिति द्वे दोषमनिश्चित्य वधादिकमाचरतः । दोषे एकस्मिन् दृक् ज्ञानं यस्येति दोषैकदृक्, पुरः पूर्वं भजते " संपृचेति " ' घिनुणि ' पुरोभागी स्यादिति द्वे दोषैकग्राहकस्य । निकृन्तति

"इगुपधेति" के न्यकारीति विग्रह तु कर्मणि 'क्ते' वा निकृतः "निकृतं विप्रलब्धे स्याच्छठे विप्रकृते त्रिषु" ऋजुविरुद्धो "नञिति" तत्पुरुषे "नलोपोनञः" इति न लोपे "तस्मादिति" नुडागमे च अनृजुः, शठति "पचाद्यचि" शठः "शठो मध्यस्थपुरुषे धूर्ते धत्तूरकेऽपि च" (इति हेमचन्द्रः) इति त्रीणि वक्राशयस्य॥४६॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. १ पु.स.न.

चुगलखोर **कर्णेजपः सूचकः (स्यात्) पिशुनो दुर्जनः खलः।**

दुष्ट पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

घातुक

छली **नृशंसो घातुकः क्रूरः पापो धूर्त (स्तु) वञ्चकः॥४७॥**

केति—कर्णे जपति "स्तम्बकर्णयोः" इत्यचि, "हलदन्तादिति" अलुकि च कर्णेजपः, सूचयति, 'ण्वुलि' "युवोरिति" अकादेशे च सूचकः स्यात् "सूचकः शुनि दुर्जने। कथक सीवनद्रव्ये मार्जारे वायसेऽपि च" (इति हैमः) इति द्वे सूचकस्य "चुगलखोर" इति ख्यातस्य। पिंशति "क्षुधिपिशिमथिभ्यः किदिति" 'उननि' पिशुनः, "पिशुनं कुङ्कुमेऽपि च। कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु। पृक्कायां पिशुना स्त्री स्यात्" (इति विश्वमेदिन्यौ) दुष्टो जनः "कुगतीति" समासे दुर्जनः, खलति, "पचाद्यचि" खं छिद्रं लाति "आतोनुपेति" के वा खलः स्यात् "खलः कल्के भुवि स्थाने क्रूरे कर्णेजपेऽधमे" (इति हैममेदिन्यौ) इति त्रीणि परस्परभेदकस्य। स्वामी तु सूचकपर्याय एवैतानाह। नॄन् शंसति हन्तीति विग्रहे "कर्मण्यण्" इत्यणि नृशंसः, हननशीलो "लषपतेति" 'उकञि' घातुकः, कृन्तति "कृतेच्छ्रः क्रूचेति" 'रकि' 'क्रू' आदेशे च क्रूरः "क्रूरस्तु कठिने घोरे नृशंसेऽप्यभिधेयवत्" (इति विश्वः) पापमस्यास्तीति "अर्श आदिभ्य इति" अचि पापः स्यादिति चत्वारि परद्रोहकारिणः। धूर्वति=हिंसतीति "हसिमृग्रिण्" इति 'तनि' "राल्लोपः" इति वलोपे "हलि चेति" दीर्घे च धूर्तः "धूर्तन्तु खण्डलवणे धूर्ता धत्तूरमायिनोः" (इति हेमचन्द्रः) वञ्चयति (वञ्चु गतौ) णयन्तात्ण्वुलि, अकादेशे च वञ्चकः "वञ्चकस्तु खले धूर्ते गृहबभ्रौ च जम्बुके" (इति विश्वमेदिन्यौ) इति द्वे परप्रतारणस्वभावस्य॥ ४७॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

मूर्ख **अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः।**

पु.स.न. पु.स.न. पु.स.न. पुं.स.न. पु.स.न.

कृपण **कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः॥ ४८॥**

अज्ञ इति—अज्ञे अज्ञातरि मूढयथाजातमूर्खवैधेयबालिशाः स्युः। न जानाति 'इगु-

१ खलः सर्षपमात्राणि परच्छिद्राणि पश्यति। आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति॥ १॥
सर्पः क्रूरः खलः क्रूरः सर्पात्क्रूरतरः खलः। सर्प एकाकिनं हन्ति खलः सर्वविनाशकृत्॥ २॥

पथेति ' ' के ' कित्त्वादाल्लोपे च अज्ञः " अज्ञस्तु जडमूर्खयोः " ( इति विश्वः ) मुह्यति स्म " गत्यर्थेति " ' क्ते ' हस्य ढत्वे, धत्वे, ष्टुत्वे, ढलोपे, दीर्घे च मूढः "मूढस्तन्त्रितबालयोः" (इति विश्वः) "वा द्रुहेति" घत्वपक्षे मुग्धोऽपि जातं जन्मकालविशेषमनतिक्रम्यवर्तते ' पदार्थानतिवृत्तावव्ययीभावे तदस्यास्तीति " अर्श आदिभ्य इति " ' अचि ' यथाजातः, मुह्यति " मुहेःखोमूर्चेति " ' खे ' मूरादेशे च मूर्खः, विधेयं विधानं तस्यायमविकारी " तस्येदम् " इत्यणि, वृद्धौ च वैधेयः, वलिशस्य मत्स्यवेधनस्यायं मूर्खत्वादपूज्यत्वात् " अणि " वृद्धौ च वालिशः स्यादिति षट् मूर्खस्य। कदर्ये निन्दितस्वामिनि कृपणक्षुद्रकिंपचानमितंपचाः स्युः। कुत्सितोऽर्यः स्वामी "कुगतीति" समासे " कोः कत्तत्पुरुषेऽचि " इति कोः कदादेशे च कदर्यः, कृपां करोति " तत्करोतीति " ' णिचि ' कृपयति=कृप्यते "कृत्यल्युटो बहुलमिति" कर्मणि ' ल्युटि ' अजादेशस्य स्थानिवत्त्वाद्गुणाभावे च। कृप्यते कृपा विषयी क्रियते बाहुलकात् क्युनि, ल्युटि वा संज्ञापूर्वकत्वाद्गुणाभावे लत्वाभावे च वा कृपणः, क्षुणत्तीति " स्फायितञ्चीति " ' रकि ' क्षुद्रः " क्षुद्रो दरिद्रे कृपणे निकृष्टेऽल्पनृशंसयोः " ( इति हेमचन्द्रः ) किंपचति " ताच्छील्ये इति " चानशि, शानचि वा अनित्यत्वान्मुमागमाभावे, " किंक्षेपे " इति समासे च किंपचानः, मितं पचति। " मितनखे च " इति ' खचि ' मितंपचः " किंपचः, अनमितंपचः " इति वा छेदः तत्र पचति 'पचाद्यचि' पचः, कुत्सितः पचः, समासे किंपचः नमितंपचोऽमितं पचस्तद्भिन्नोऽनमितंपचः स्यादिति पञ्च कृपणस्य ॥ ४८ ॥

दरिद्री या निर्धनी मँगता या याचक

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

**निःस्व(स्तु) दुर्विधो दीनो दरिद्रो दुर्गतो(ऽपि सः)।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

**वनीयको याचनको मार्गणो याचकार्थिनौ ॥ ४९ ॥**

निरिति–यः निःस्वो निर्धनः स दुर्विधः, दीनः, दरिद्रः, दुर्गतोऽपि स्यात्। निर्गतं स्वं धनमस्य, स्वान्निष्क्रान्तो वा निःस्वः, दुःस्था विधा प्रकारः समृद्धिर्वास्येति दुर्विधः "दुर्विधो वाच्यलिङ्गः स्याद्दुर्गतेऽपि खलेऽपि च" (इति मेदिनी) दीयते स्म 'दीङ् क्षये' अस्माद् "गत्यर्थेति" कर्तरि 'क्ते' स्वादीनामोदित्त्वाद् "ओदितश्चेति" निष्ठानत्वे च दीनः "दीना स्त्री मूषिका स्त्रियाम्। वाच्यवद्दुर्गते भीते" (इति मेदिनी) दरिद्राति 'पचाद्यचि' आर्धधातुकत्वाद् दरिद्रातेरालोपे च दरिद्रः, दुर्गच्छति स्म "गत्यर्थेति" कर्तरि 'क्ते' दुर्गतःस्यादिति पञ्च दरिद्रस्य। वननम् "सर्वधातुभ्य इन्निति" इनि, वनिर्याच्ञा तामिच्छति 'क्यचि' वनीयति, 'ण्वुलि', वनीयकः "वनीपकः" इति पाठेतु वनीं पाति "आतोऽनुपेति" 'के' वनीपस्तस्मात् संज्ञायां कनि-क्वुनि वा वनीपकोऽपि, याचति 'नन्दादित्वाल्ल्यौ' याचनः ततः स्वार्थे कनि याचनकः,मार्गति, "मार्ग अन्वेषणे"

" बहुलमन्यत्रापीति " 'युचि' मार्गणः, याचति 'णवुलि' याचकः, अर्थोऽस्यास्ति "अर्थाच्चासंनिहिते" इति 'इनौ' अर्थयते, गृह्यादित्वाणिनौ वा अर्थी स्यादिति पञ्च याचकस्य ॥ ४९ ॥

अहंकारी. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
शुभयुक्त. **अहंकारवानहंयुः शुभंयु(स्तु) शुभान्वितः ।**
देवता. पु.स.न.
नर पशु आदि **दिव्योपपादुका (देवा) "नृगवाद्या" जरायुजाः ॥५०॥**

अहमिति–अहंकरणमहंकारः सोऽस्त्यस्येति 'मतुपि' अहंकारवान्, अहमस्यास्ति "अहंशुभमिति मान्तं विभक्तिप्रतिरूपकमव्ययम्" । "अहंशुभमोर्युस्" इति 'युसि' अहंयुः स्यादिति द्वे साहंकारस्य । शुभमस्ति 'युसि' शुभंयुः, शुभेन अन्वितः "कर्तृकरणे–" इति समासे शुभान्वितः स्यादिति द्वे शुभयुक्तस्य । देवाः दिव्योपपादुकाः स्युः " नरकव्यावृत्तये दिव्यपदम् । मातापित्रादिदृष्टकारणनिरपेक्षा अदृष्टसहकृतेभ्यो गुणेभ्यो जाता ये देवास्ते दिव्योपपादुका उच्यन्ते"–दिवि भवाः, "द्युप्रागपेति" 'यति' दिव्याः, उपपद्यन्ते उपपूर्वकपदगतावस्मात् "लपपतपदेति" 'उकञि' उपपादुकाः दिव्याश्च ते उपपादुकाश्चेति दिव्योपपादुकाः स्युरित्येकं देवानाम् । नृगवाद्याः जरायुजाः भवन्ति नाच गौश्च आद्यौ येषामिति नृगवाद्याः आद्यशब्देन खराश्वादीनां ग्रहणम् । ते जरायोर्गर्भाशयाज्जाताः "पञ्चम्यामिति" जनेर्डे जरायुजाः स्युरित्येकं नृगवादीनाम् ॥ ५० ॥

स्वेदज अण्डज **(स्वेदजाः) कृमिदंशाद्याः पक्षिसर्पादयो(ऽण्डजाः) ।**

## इति प्राणिवर्गः ॥

स्वेदेति–कृमिदंशाद्याः कृमिश्च दंशश्च तावाद्यौ येषामिति । आद्यशब्देन मशक-मत्कुणादिग्रहणम् । ते स्वेदजा उच्यन्ते स्वेदजनकत्वादूष्मास्वेदस्तस्माज्जाता " पञ्चम्यामिति " जने 'डे' स्वेदजाः स्युरित्येकं कृमिदंशादीनाम् । पक्षिसर्पादयः पक्षी च सर्पश्च तावादी येषामिति । आदिशब्देन नक्रमत्स्यपिपीलिकादिग्रहः । ते अण्डजा कथ्यन्ते अण्डे जाताः "सप्तम्यां जनेरिति" 'डे' अण्डजाः स्युरित्येकं पक्षि-सर्पादीनाम् ॥ इति प्राणिवर्गः ॥

पु. पु.स.न. पु.स.न. पु.स.न.
वृक्ष,लता आदि **उद्भिद (स्तरुगुल्माद्या) उद्भिदुद्भिज्जमुद्भिदम् ॥५१॥**

उद्भीति–तरुगुल्माद्याः तरुश्च गुल्मश्च तावाद्यौ येषामिति । आद्यशब्देन तृणौषधि-लतादिग्रहः । ते उद्भिदः कथ्यन्ते । भुवमुद्भिन्दन्ति " भिदिर् विदारणे " अस्मात् " सत्सूद्विषेति " 'क्विपि' उद्भिदः स्युरित्येकं तरुगुल्मादीनाम् । उद्भिनत्तीति विग्रहे 'क्विपि' उद्भित् (द्) उद्भेदनं संपदादित्वात् 'क्विपि' उद्भित् ततो जातम् "पञ्चम्या-

मिति " 'डे' उद्भिज्जम्, उद्भिनत्ति "इगुपधेति" 'के' उद्भिदं स्यादिति त्रीणि उद्भिदस्य ॥ ५१ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

सुन्दर या **सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् ।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

मनोरम **कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ॥ ५२ ॥**

स्विति—सु द्रियते 'दृङ् आदरे' अस्मात् "ग्रहवृद इति" 'अपि' पृषोदरादित्वान्नुमागमे च—सु उनत्ति चित्तं द्रवीकरोति वा बाहुलकादरे, शकन्ध्वादित्वात्पररूपे च सुन्दरम्, स्त्रियां गौरादित्वान्ङीपि सुन्दरी, रोचते "इषिमदिमुदीति" 'किरचि' रुचिरम्, चरति चित्ते "दृसनिजनीति" 'ञुण्' चारु "चारुर्बृहस्पतौ पुंसि शोभने त्वभिधेयवत्" ( इति विश्वः ) सु शोभनं समं सर्वमस्येति "सुविनीति" षत्वे सुषमम्, साघ्नोत्यर्थमिति "कृवापेति" 'उण्' साधु, "साधुर्जैने मुनौ वार्द्धुषिके सज्जनरम्ययोः" ( इति हेमचन्द्रः ) शोभते "अनुदात्तेतश्चेति" 'युचि' शोभनम् "शोभनो योगभेदे ना सुन्दरे वाच्यलिङ्गकः" ( इति मेदिनी ) कम्यते स्म कमणि 'क्ते' "यस्य विभाषेति" इडागमाभावे, च "अनुनासिकस्येति" दीर्घ च । 'कनति स्म' "गत्यर्थेति" क्ते वा कान्तम् "कान्ता नार्य्यां प्रियङ्गौ स्त्री शोभने त्रिषु ना धवे । लोहे च चन्द्रसूर्य्यायः पर्यायात्तु शिलासु च" ( इति विश्वमेदिन्यौ ) मनोरमयति गयन्तात् 'कर्मण्यण्' मनोरमम् "मनोहरम्" इति पाठे तु मनोहरति "हरतेरनुद्यमने" इत्यचि मनोहरम्, रोचते—रुच्यते वा रुच्यम "राजसूयेति" साधुः, मनसा जानातीति इगुपधत्वात् 'के' मनोज्ञम्, मञ्ज्यते 'मजि ध्वनाविति' सौत्रो धातुस्तस्माद्बाहुलकादुप्रत्यये मञ्जु, मञ्जु मञ्जुत्वं लाति गृह्णतीति विग्रहे तु "आतोऽनुपेति" 'के' मञ्जुलम् "मञ्जुलं च जलाभ्वले । रम्ये कुञ्जे मञ्जुलस्तु दात्यूहे" ( इति हैमः ) इति द्वादश सुन्दरस्य ॥ ५२ ॥

पु.स.न.

परमसुन्दर **( तद ) सेचनकं ( तृप्तेर्नास्त्यन्तो यस्य दर्शनात् )**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

प्यारा **अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ॥ ५३ ॥**

तदिति—यस्य दर्शनात् दृष्टेर्मनसश्च तृप्तेः अन्तो नास्ति तत् असेचनकं स्यात् । न सिच्यते मनोऽत्रेति "करणाधिकरणयोश्चेति" ल्युटि ततः "संज्ञायां कन्" इति 'कनि' 'असेचनकं' स्यात् "आसेचनमिति" दीर्घादि पाठे 'आङ्' बोध्यः इत्येकमतिसुन्दरस्य । अभीष्टे अभीप्सितम्, हृद्यम्, दयितम्, वल्लभम्, प्रियं च स्यात् । अभित इष्यते स्म "इषु इच्छायाम्" इत्यतः कर्मणि 'क्ते' अभीष्टम्, अभ्यापु-

मिष्यते स्म सन्नन्तात्कर्मणि ' क्ते ' अभीप्सितम्, हृदयस्य प्रियम् " हृदयस्य प्रियः " इति ' यति ' हृद्यम्, " हृद्यं च बलजीरे च हृत्प्रिये हृद्गतेऽपि च । वशकृद्वेदमन्त्रे च हृद्या वृद्धयाख्यभेषजे " ( इति विश्वः ) दय्यते स्म कर्मणि ' क्ते ' दयितम्, वल्लते, वल्ल्यते वा " रासिवल्लिभ्यां च " 'इत्यभचि ' वल्लभम्, " वल्लभो दयितेऽध्यक्षे-सल्लक्षणतुरङ्गमे " ( इति विश्वः ) प्रीणाति " इगुपधेति " के प्रियम् " प्रियो वृद्धयौषधे हृद्ये धवे " ( इति हैमः ) इति षट् प्रियस्य ॥ ५३ ॥

पु.स.न. पु.स.न. पु.स.न.पु.स.न.पु.स.न.पु.स.न.पु.स.न.

अधम **निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः ।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.पु.स.न.

**कुपूयकुत्सितावद्यखेटगर्ह्याणकाः ( समाः ) ॥ ५४ ॥**

नीति—निकृष्यते स्म कर्मणि ' क्ते ' निकृष्टः, प्रतिकृष्यते स्म कर्मणि ' क्ते ' प्रतिकृष्टः, ऋच्छति " अन्येभ्योऽपीति " ' वनिपि ' ऋच्छतेः " अवद्यावमाधमार्वरेफाः कुत्सिते " इति वन्नन्तो निपात्यते वा अर्वा "अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः" ( इति मेदिनी ) रिफ्यते ' रिफ कत्थनादौ ' अस्मात् "अकर्तरि च" इति ' घञि ' "अवद्यावमाधमेति " अप्रत्ययान्ते निपातिते वा रेफः "रेफो रवर्णे पुंसि स्यात्कुत्सिते वाच्यवत्पुनः " ( इति विश्वः ) 'रेपः' इति पाठे तु रीयते, कर्मणि बाहुलकात् 'पे' रेपः " रेपः स्यान्निन्दिते क्रूरे" ( इति विश्वः ) मुकुटमते तु रेपाः सान्तोऽपि "प्रापे-रूपी पुरारेपाः " (इति माघस्य द्व्यक्षरयमकम् ) याप्यते ण्यन्तात्कर्मणि "अचोयत्" इति 'यति' याप्यः, " याप्यं तु यापनीये स्यान्निन्दितेऽप्यभिधेयवत् " (इति मेदिनी) अवत्यस्मादात्मानम् " अवद्येति " अम प्रत्ययान्ते निपातिते अवमः, तत्रैव वकारस्य धकारपक्षे अधमः " अधमः स्याद्गर्ह्ये ऊने " (इति विश्वः) कुत्सितं पूयते ' पचाद्यचि' कुपूयः, पृषोदरादित्वादत्वे कपूयोऽपि, कुत्सा संजातास्य तारकादित्वादितचि कुत्सितः, न उद्यते " अवद्यावमेति " निपात्यते अवद्यः, खेटति त्रसति ' अचि ' खेटः " खेटः कफे ग्रामभेदे चर्मण्यस्त्रयर्वति त्रिषु " ( इति मेदिनी ) गर्ह्यते " ऋहलोर्ण्यत् " इति ' ण्यति ' गर्ह्यः, अणति ' अचि ' अणः " कुत्सायां कन् " कुत्सितोऽणः अणकः एते समानार्थाः स्युरिति त्रयोदशाधमस्य ॥ ५४ ॥

पु.स.न. पु.स.न. पु.स.न. पु स.न.

मैली या गन्दी वस्तु पवित्र या साफ़ स्वभावसे पवित्र **मलीमसं ( तु ) मलिनं कच्चरं मलदूषितम् ।**

पु.स.न.पु.स.न.पु.स.न. पु.स.न. पु.स.न.

**पूतं पवित्रं मेध्यं (च) वीध्रं (न्तु) विमलात्मकम्॥५५॥**

मेति—मलोऽस्यास्तीति मलीमसम् " ज्योत्स्नातमिस्रेति " साधुः, " मलीमसं तु मलिने पुष्पकासीसलोहयोः " ( इति विश्वः ) मलते, मल्यते वा " बहुलमन्यत्रा-

पीति " ' इनचि ' ' किनचि ' वा मलिनम् " मलिनं कृष्णदोषयोः । मलिनी रजस्वलायाम् " ( इति हैमः ) कुत्सितं चरति ' अचि ' कदादेशे च कच्चरम् , मलेन दूषितम् " कर्तृकरणे कृता बहुलम् " इति समासे ' मलदूषितम् ' स्यादिति चत्वारि मलदूषितस्य । पूयते स्म कर्मणि ' क्ते ' पूतम् " पूतं त्रिषु पवित्रे च शठिते बहुलीकृते" ( इति मेदिनी ) पुनाति, पूयतेऽनेनेति वा " कर्तरिचर्षिदेवतयोः " इति " इत्र " पवित्रम् " पवित्रं तु मेध्ये ताम्रे कुशे जले । अर्घोपकरणे चापि पवित्रा तु नदीभिदि " ( इति हैमः ) मेधनार्हम् ' मेधृ संगमे च ' अस्मात् " ऋहलोरिति " ' ण्यति ' मेध्यम् " मध्यं त्रिषु शुचौ रक्तवचारोचनयोः स्त्रियाम् " ( इति मेदिनी ) ' पवित्रः प्रयतः पूत ' इति प्राणिविषये उक्तम् । इह त्वप्राणिनिज्ञेयमिति त्रीणि पवित्रस्य । वीन्ध ' ञि इन्धी दीप्तौ ' अस्मात् " वा विन्धेः " इति 'क्नि' वीध्रम् , विमल आत्मा स्वभावो यस्येति विमलात्मकम् । विमलमर्थमस्य विग्रहे तु विमलार्थकम वा स्यादिति द्वे स्वभावनिर्मलस्य ॥ ५५ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

मलरहित. **निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम् ।**

निरर्थक. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न पु.स.न.

खाली या रीता. **असारं फल्गु शून्यं ( तु ) वशिकं तुच्छरिक्तके ॥५६॥**

नीति—निर्णिज्यते स्म कर्मणि ' क्ते ' निर्णिक्तम् , शोध्यते स्म ण्यन्तात्कर्मणि ' क्ते ' शोधितम्, मृज्यते स्म कर्मणि ' क्ते ' मृष्टम्, निष्क्रान्तं शोध्यमस्मात् शोध्यान्निष्क्रान्तमिति वा निःशोध्यम्, न अवस्करोऽत्रेति अनवस्करं स्यादिति पञ्चापनीतमलस्य । न सारोऽत्रेति असारम्, फलति ' ञिफला विशरणे ' अस्माद् ' गुक्ि ' फल्गु " फलपाटीति " साधुः " फल्गुः काकोदुम्बरिके वृक्षे निरर्थकेऽपि च " ( इति हैमः ) इति द्वे निरर्थकस्य । शुनेहितम् " शुनः संप्रसारणं वा च दीर्घः " इति गणसूत्रेण ' यति ' संप्रासारणे, दीर्घे च शून्यम् " शून्यं बिन्दौ च निर्जने । शून्या तु नलिका " ( इति हैमः ) उश्यते " सर्वधातुभ्य इति " 'इनि' " संज्ञायां कन् " इति कनि च वशिकम्, तोदनम् संपदादित्वाद्भावे ' क्विपि ' तुद् व्यथा तया-छ्यति मूलविभुजादित्वात् ' के ' तुदं छ्यति विग्रहे तु " आतोनुपेति " ' के ' वा तुच्छम्, रिच्यते स्म कर्मणि ' क्ते ' स्वार्थे ' कनि ' च ' रिक्तकं ' स्यादिति चत्वारि शून्यस्य ॥ ५६ ॥

न. पु.स.न. पु.स.न. पु.स न. पु.स.न.

प्रधान या **( क्लीबे ) प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः ।**

मुख्य पु.स.न.पु.स.न. पु.स.न. पु.स.न. पु.स.न.

**मुख्यवर्यवरेण्या (श्च ) प्रवर्हानवरार्ध्य ( वत् ) ॥५७॥**

पु.स.न.पु.स.न. पु.स.न. पु.स.न.पु.स.न. पु.स.न. पु.स.न.

**पराध्यग्रिप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम् ।**

क्लीबे—प्रधीयते, प्रदधाति वा 'ल्युटि' 'युचि' वा प्रधानं क्लीबे नपुंसके स्यात् । "प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि । प्रज्ञायामपि च क्लीबमेकत्वे तूत्तमे सदा" ( इति मेदिनी ) प्रकृष्टं मुखमस्य प्रमुखम् "प्रमुखं प्रथमे मुख्ये" ( इति हैमः ) प्रविच्यते 'घञि' प्रवेकः, न उत्तमोऽस्मादिति अनुत्तमः, अतिशयेन उत्कृष्टः उत्कृष्टार्थवृत्तेरुच्छब्दात् 'तमपि' द्रव्यप्रकर्षार्थत्वान्नामुः । उत्ताम्यति 'अचि' उत्तम्यते 'घञि' वा "नोदात्तेति" वृद्ध्यभावे च उत्तमः, मुखमिव, मुखे भवो वा शाखादित्वाद् 'ये' मुख्यः, वर्यते 'वर ईप्सायाम्' चुराद्यदन्तात् "अचोयत्" इति कर्मणि 'यति' वर्यः, व्रियते "वृञ्एण्यः," 'इत्येण्ये' वरेण्यः, प्रवर्हति 'अचि' प्रवर्हः, अवरस्मिन्नर्धेभवः "परावराधमोत्तमपूर्वाच्चेति" अर्थात् 'यति' अवरार्ध्यः न अवरार्ध्यः "नञ्" इति समासे अनवरार्ध्यः, वदिति समानार्थेऽव्ययम् तेन एते सर्वे समानार्थाः स्युः । परस्मिन्नर्धे भवम् 'अर्धाद्यार' इति 'यति' परार्ध्यम्, अगतीति अग्रम् "ऋज्रेन्द्रेति" साधु । "अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत्" ( इति मेदिनी ) प्रकृष्टमग्रं प्राग्रं तस्मिन्हरति "हरतेरनुद्यमनेऽच्" 'इत्यचि' प्राग्रहरम्, प्राग्रे भवम् "अग्राद्यत्" इति 'यति' प्राग्र्यम्, अग्रे भवम् "घच्छौचेति" चकाराद्यति अग्र्यम् , 'छे' छस्य ईयादेशे च अग्रीयम्, 'घे' घस्य इयादेशे च अग्रियं स्यादिति सप्तदश प्रधानस्य ॥ ५७ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

श्रेष्ठ. **श्रेयाञ्श्रेष्ठः पुष्कलः 'स्या'त्सत्तम(श्चा)तिशोभने॥५८॥**

पु. पु. पु. पु.

श्रेष्ठार्थवाचक. **(स्युरुत्तरपदे) व्याघ्रपुङ्गवर्षभकुञ्जराः ।**

पु. पु. पु.

**सिंहशार्दूलनागा (द्याः पुंसि श्रेष्ठार्थगोचराः) ॥५९॥**

श्रयेति—अतिशोभने श्रेयान्, श्रेष्ठः, पुष्कलः, सत्तमश्च स्यात् । अतिशयेन प्रशस्यः "द्विवचनविभज्योपपदेतरबीयसुनौ" ( ५ । ३ । ५७ ) "अजादी गुणवचनादेव" इति 'ईयसुनि' "प्रशस्यस्यश्रः" इति आदेशे, गुणे च श्रेयान् "श्रेयो मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत् । श्रेयसी करिपिप्पल्यामभयापाठयोरपि" ( इति विश्वः ) "अतिशायनेतमबिष्ठनौ" इति 'इष्ठनि' आदेशे, गुणे च श्रेष्ठः "श्रेष्ठो वरे कुबेरे च" ( इति हैमः ) पुष्यति "पुषः करः कलश्च" इति 'कले' पुष्कलः "पुष्कलस्तु पूर्णे श्रेष्ठे" ( इति हैमः ) अतिशयेन सन् 'तमपि' सत्तमः

"सत्तमः स्यात्पूज्यतमे साधीयस्युत्तमे त्रिषु" ( इति मेदिनी ) अतिशयेन शोभनोऽतिशोभनः स्यादिति पञ्च सत्तमस्य शोभनस्य वा । व्याघ्रपुङ्गवर्षभकुञ्जराः सिंहशार्दूलनागाद्या उत्तरपदे स्थिताश्चेत्तदा श्रेष्ठस्यार्थः, श्रेष्ठार्थो गोचरो येषामिति श्रेष्ठार्थगोचराः श्रेष्ठार्थवाचका वा सन्तः पुंसि स्युः । यथा पुरुषो व्याघ्र इव "उपमितं व्याघ्रादिभिरिति" समासे पुरुषव्याघ्रः, पुमांश्चासौ गौश्चेति "गोरतद्धितलुकि" इति 'टचि' पुङ्गवः मुनिषु पुङ्गवो मुनिपुङ्गवः, पुरुषेषु ऋषभः श्रेष्ठः पुरुषर्षभः, मनुष्यः कुञ्जर इव मनुष्यकुञ्जरः, नृपः सिंह इव नृपसिंहः, नृपः शार्दूल इव नृपशार्दूलः, नृपः नाग इव नृपनागः आद्यशब्देन सोमचन्द्रमुखादिग्रहस्तेन ना सोम इव "नृसोमः" इत्यादि सिद्धमित्येते श्रेष्ठार्थवाचकस्य ॥ ५८ । ५९ ॥

पु.स.न. न. न.

अप्रधान. **अप्राग्र्यं ( द्वयहीने द्वे ) अप्रधानोपसर्जने ।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

विस्तीर्ण. **विशंकटं पृथु बृहद्विशालं पृथुलं महत् ॥ ६० ॥**

पु.स.न.पु.स.न.पु.स.न.पु.स.न.पु.स.न. पु.स.न. पु.स.न.

मोटा. **वड्रोरु विपुलं पीनपीव्नी (तु) स्थूलपीवरे ।**

अग्रेति–प्राग्र्याद्भिन्नम्=अप्राग्र्यम्, प्रधानादन्यद् अप्रधानम्, उपसृज्यते कर्मणि ल्युटि उपसर्जनम् इमे द्वे द्वयाभ्यां स्त्रीपुंसाभ्यां हीने क्लीबे स्यातामिति त्रीणि अप्रधानस्य । विस्तृतम् विस्तृतार्थवृत्तेर्विशब्दात् "वेः शालच् शंकटचौ" इति 'शंकटचि' विशंकटम्, प्रथते 'प्रथ प्रख्याने' अस्मात् "प्रथिम्रदीति" कौ, संप्रसारणे च पृथु, "पृथुर्विशाले भूपाले बाष्पिका कृष्णाजीरयोः" ( इति हेमचन्द्रः ) बर्हति 'बृह-वृद्धौ' अस्मात् "वर्तमाने पृषद्बृहन्महत्" इति अति प्रत्ययान्तो निपात्यते । बृहत्, विस्तृतम् 'शालचि' विशालम् "विशालात्विन्द्रवारुण्यामुज्जयिन्यां च योषिति । नृपवृक्षभिदोः पुंसि पृथुले त्वभिधेयवत्" ( इति विश्वमेदिन्यौ ) पृथुत्वमस्यास्ति सिध्मादित्वात् 'लचि' पृथुत्वं लातीति वा पृथुलम्, महति "वर्तमाने पृषदिति" 'अति' महत्, वलते "बहुलमन्यत्रापि" इति 'रकि' डलयोरैक्याद् वड्रम्, उर्णोति "महति ह्रस्वश्च" इति कुप्रत्यये, नुलोपे, ह्रस्वे च उरु, विपोलति "इगुपधेति" 'के' विपुलम् "विपुलः पृथुले गाधे मेरुपश्चिमभूधरे" ( इति विश्वः) इति नव विशालस्य विस्तीर्णस्य वा । प्यायते स्म "ओप्यायी वृद्धौ" अस्मात् "गत्यर्थेति" कर्तरि 'क्त' "ओदितश्च" इति निष्ठानत्वे, "प्यायः पी" इति 'पी' आदेशे च पीनम्, प्यायते 'प्यैङ् वृद्धौ' अस्मात् "श्याप्योः संप्रसारणं च" इति 'क्वनिपि' पीव, स्त्रियां तु "वनोरच" इति ङीब्रौ पीवरी, स्थूलयति 'अचि' स्थूलम् "स्थूलः पीने जडे" ( इति हैमः ) प्यायते "छित्वरछत्वर-

पीवरपीवरेति " ष्वरच् प्रत्ययान्तो निपात्यते पीवरम् " पीवरः स्थूलकूर्मयोः " ( इति हेमचन्द्रः ) इति चत्वारि स्थूलस्य ॥ ६० । ३ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.पु.स.न.पु.स.न.

थोड़ा **स्तोकाल्पक्षुल्लकाः श्लक्ष्णं सूक्ष्मं दभ्रं कृशं तनु॥ ६१ ॥**

स. स. पु. पु. पु. पु.

सूक्ष्म या महीन **(स्त्रियां) मात्रा त्रुटी (पुंसि) लवलेशकणाणवः ।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

बहुत थोड़ा **अत्यल्पेऽल्पिष्ठमल्पीयः कनीयोऽणीय (इत्यपि) ॥६२॥**

स्तवितिस्तुच्यते ' ष्टुच प्रसादे ' अस्माद् ' घञ् ' न्यङ्क्वादित्वात्कुत्वे च स्तूयत बाहुलकात्स्तूचः ' के ' वा स्तोकः " स्तोकस्त्रिष्वल्पे चातके पुमान् " ( इति मेदिनी ) अल्यते वार्यते ' अल भूषणादौ ' अस्माद्बाहुलकात् ' पे ' अल्पः, क्षोदनं संपदादित्वात् ' क्विपि ' क्षुद् तां लाति " आतोऽनुपेति " के " तोर्लि " इति लत्वे स्वार्थे कनि च क्षुद्यते " स्फायितञ्चीति " 'रक्' रलयोरेकत्वात् कपिलिकादित्वाद्वा लत्वे च वा क्षुल्लकः "क्षुल्लकस्त्रिषु नीचेऽल्पे" (इति विश्वः) श्लिष्यति, श्लिष्यते वा "श्लिषेरच्चोपधायाः" इति ' क्स्ने ' श्लक्ष्णम्, सूच्यते " सूचेः स्मन् " इति 'स्मनि' सूक्ष्मम् " सूक्ष्मं स्यात्कतकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके " ( इति विश्वः ) दभ्यते " स्फायितञ्चि " इति ' रक् ' दभ्रम्, कृश्यते स्म कृशम् " अनुपसर्गात्फुल्लक्षीब-कृशोल्लाघाः" इति साधु, तन्यते "तनि चरीति" उप्रत्यये 'तनु' "तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे " ( इति विश्वः ) मीयते " सर्वधातुभ्यः ष्ट्रन् " इति ' ष्ट्रनि ' षितांङीषोऽनित्यत्वात् ' टापि ' मात्रा " मात्रं त्ववधृतौ स्वार्थे कार्त्स्न्ये मात्रा परिच्छदे । अक्षरावयवे द्रव्ये मानेऽल्पे कर्णभूषणे । काले वृत्ते च (इति हैमः) त्रुट्यते " इगुपधात्कित् " इति ' इनि ' " कृदिकारादिति " वा ङीष् त्रुटी, त्रुटिर्वा उभे स्त्रियां स्याताम् । लूयते " ऋदोरप् " इति ' अपि ' लवः " लवः कालभिदि-च्छिदि । विलासे रामजे लेशे " ( इति हैमः ) लिशति 'अचि' लिश्यते ' घञ् ' वा लेशः, कणति ' अचि ' कणः " कणो धान्यांशलेशयोः । कणाजीरकपिप्पल्योः " ( इति हेमचन्द्रः ) अणति, अण्यते वा " अणश्च " इति उप्रत्यये अणुः " अणु-र्व्रीह्यल्पयोः " ( इति हैमः ) एते पुंसि स्युरिति चतुर्दश सूक्ष्मस्य । अत्यल्पे अल्पि-ष्ठम्, अल्पीयः, कनीयः, अणीय इत्यपि स्यात् । अतिशयेन अल्पः अत्यल्पः, अतिशयेन अल्पः ' इष्ठनि ' अल्पिष्ठम् ' ईयसुनि ' अल्पीयः " युवाल्पयोः कनन्यतरस्याम् " इति कनादेशे ' कनीयः ' अतिशयेन अणुः ' ईयसुनि ' अणीयः स्यादिति पञ्च अत्यल्पस्य ॥ ६१ । ६२ ॥

पु.स.न. पु.स.न. पु.स.न पु.स.न पु.स.न. पु.स.न.

बहुत या। **प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न, पु.स.न. पु.स.न.

अधिक **पुरुहं पुरु भूयिष्ठं स्फिरं भूय (श्च) भूरि (च)॥ ६३ ॥**

प्रेति–प्रभवति स्म "गत्यर्थेति" क्ते प्रभूतम् "प्रभूतमुद्गते प्राज्ये" (इति हैमः) प्रचोरति चुरादीनां णिज्वैकल्पिकत्वात् "इगुपध" इति 'के' प्रगतं चुरायाः, इति वा प्रचुरं, प्रवीयते 'अज गतौ' यति, 'वहुलं तणीति' 'वी' आदेशाभावे च। प्रकर्षेणाज्यते काम्यते "अञ्जू व्यक्त्यादौ" आङ्पूर्वात् "अञ्जेः संज्ञायाम्" इति 'क्यपि' वा प्राज्यम्, दभ्रादल्पादन्यत् 'नञ्समासे' अदभ्रम्, बहून् लाति "आतोऽनुप-" इति 'के' बहुलम् "बहुला नीलिकायां स्यादेलायां गवि योषिति। कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम्। पुंस्यग्नौ कृष्णपक्षे च वाच्यवत्प्राज्यकृष्णयोः" (इति विश्वमेदिन्यौ) बंहते 'बहि वृद्धौ' अस्माद् "लङ्घिबंह्योर्नलोपश्च" इति 'उप्रत्यये' नलोपे च बहु, "बहु स्यात्त्र्यादिसंख्यासु विपुलेऽप्यभिधेयवत्" (इति विश्वः) पुरून् हन्ति "अन्येभ्योऽपि" इति 'डे' पुरून् जहाति, जिहीते वा 'आतोऽनुपेति' 'के' वा पुरुहम्, पिपर्ति, पूर्यते वा 'पृभिदि–' इति 'कौ' "उदोष्ठ्येति" उदादेशे, रपरत्वे च पुरु, "पुरुः प्राज्येऽभिधेयवत्। पुंसि स्याद्देवलोके च नृपभेदपरागयोः" (इति हैमः) अतिशयेन बहु 'इष्ठनि' इलोपे, बहोर्भूरादेशे, यिडागमे च भूयिष्ठम्, स्फायत इति स्फिरम् "अजिरशिशिर–" इति साधु, स्फारमित्यपिपाठः, तत्र 'स्फायितञ्चि' इति 'रकि' स्फारम् "स्फारस्तु स्फरकादीनां बुद्बुदे विपुलेऽपि च" (इति हेमचन्द्रः) अतिशयेन बहु 'ईयसुनि' "बहोर्लोपो भू च बहोः" इति इलोपे, बहोर्भूरादेशे च भूयः, भवति "अदिशदिभूशुभिभ्यः क्रिन्" इति 'क्रिनि' भूरि "भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि। नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकः" (इति मेदिनी) इति द्वादश बहुलस्य॥ ६३॥

पु.स.न.

सौ से परे या **परश्शता (द्यास्ते येषां परा संख्या शतादिकात्)।**

अधिक. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

गिनने योग्य. **गणनीये (तु) गणेयं संख्यातं गणित (मथ) समं सर्वम्॥ ६४॥**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

गिने हुए. **विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम्।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

समग्र या संपूर्ण. **समग्रं सकलं पूर्णमखण्डं (स्याद) नूनके॥ ६५॥**

पेति—येषां संख्येयानां संख्या गणना शतादिकात् परा अधिकाचेत्तदा ते क्रमशः परश्शताद्याः स्युः । शतात्परे " पञ्चमी " इति योगविभागात्समासे, राजदन्तादित्वात्परनिपाते, पारस्करादित्वात्सुडागमे च परश्शताः, आद्येन परस्सहस्राः स्युस्तेन " परश्शतानां विदुषां समाजः " इति केषांचिद्वचनं संगच्छत इत्येकं शतात्परस्य । गणनीये तु गणेयं स्यात् । गण्यते 'अनीयरि' गणनीयम्, गणयितुं शक्यम् " अचो यत् " इति 'यति' संज्ञापूर्वकत्वाण्णिलोपाभावे, गुणे च गणेयम्, प्रज्ञाद्यणि तु गाणेयमपि स्यादिति द्वे गणयितुं शक्यस्य । संख्यायते स्म 'ख्या प्रकथने' अस्माच्चक्षिङादेशाद्वा कर्मणि 'क्ते' संख्यातम्, गण्यते स्म कर्मणि 'क्ते' गणितं स्यादिति द्वे गणितस्य । अथेति—समति 'षम वैक्लव्ये' अस्मात्पचाद्यचि समम् " सर्वसाधुसमानेषु समं स्यादभिधेयवत् " ( इति विश्वः ) सरति—सृतमनेन विश्वमिति " सर्वनीधृष्वेति " निपातिते, सर्वति, 'अचि' वा सर्वम्, विशति, " अशूप्रुषि—"इति 'क्वनि' विश्वम् " विश्वं कृत्स्ने च भुवने विश्वेदेवेषु नागरे । विश्वाप्यतिविषायां स्यात् " ( इति विश्वः ) न शेषोऽस्येति अशेषम्, कृत्यते " कृत्यशूभ्यां क्स्नः " इति 'क्स्ने' कृत्स्नम् " कृत्स्नं सर्वाम्बुकुक्षिषु " ( इति मेदिनी ) समस्यते स्म कर्मणि 'क्ते' समस्तम्, निवृत्तं खिलमस्येति निखिलम्, न खिलमस्येति अखिलम्, निष्क्रान्तं शेषात् " निरादयः " इति समासे निःशेषम्, संगतमग्रमस्य, समं ग्रसते वा " अन्येभ्योऽपि " इति 'डे' समग्रम्, कलाभिः सहितम्—सहकलाभिर्वा सकलम्, पूर्यते स्म कर्तरि, कर्मणि वा क्ते पूर्णम् " पूर्णः शक्ते समग्रे ना पूरिते त्वभिधेयवत् " ( इति मेदिनी ) स्वामिमते तु पूर्वमिति पाठस्तत्र पूर्वति 'पूर्व पूरणे' अस्मादचि पूर्वम्, न खण्ड्यते 'घञि' अखण्डम्, ऊनयति 'अचि' ऊनम् न ऊनम् 'नञ्समासे' अनूनम्, स्वार्थे 'कनि' अनूनकं स्यादिति चतुर्दश समग्रस्य ॥ ६४ । ६५ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
सघनयागभिन **घनं निरन्तरं सान्द्रं पेलवं विरलं तनु ।**
पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
विरलया छिदका **समीपे निकटासन्नसंनिकृष्टसनीड ( वत् ) ॥ ६६ ॥**
पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
समीप या पास **सदेशाभ्याशसविधसमर्यादसवेश ( वत् ) ।**
पु.स.न. पु.स.न. पु.स.न. पु.स.न.
**उपकण्ठ[1]ान्तिकाभ्यर्णा[2]भ्यग्रा(अप्य)भितो(ऽव्ययम्)॥**

घेति—हन्यते 'हन हिंसागत्योः' अस्मात् " मूर्तौ घनः " इति 'अपि' घनादेशे च घनम् " घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे । संघे मुस्ते घनं मध्ये

१ तं तस्थिवांसं नगरोपकण्ठे इति । २ अभ्यर्णमागस्कृतमस्पृशद्भिरिति रघुः ।

नृत्यवाद्यप्रभेदयोः " ( इति हेमचन्द्रः ) निर्गतमन्तरात्—निर्गतमन्तरमस्मिन्निति वा निरन्तरम्, सह अन्द्यते 'अदि बन्धने, बाहुलकाद् 'रकि' सान्द्रं स्यादिति त्रीणि सघनस्य 'गझिन' इति ख्यातस्य। पेलनम् 'पिल भेदने' घञि पेलः सोऽस्त्यस्येति "अन्येभ्योऽपि" इति 'वे' पेलवम्, विराति बाहुलकात् 'कलनि' आतोलोपे च विरलम्, तन्यते "भृमृशीति" उप्रत्यये तनु "तनुर्वपुस्त्वचोः। विरलेऽल्पे कृशे" ( इति हैमः ) इति त्रीणि विरलस्य। संगता आपो यस्मिन्निति विग्रहे 'ऋक्पूरब्धूः' इति 'अप्रत्यये' "द्व्यन्तरुपसर्गेभ्योऽपईत्" इति अपईदादेशे च समीपः, निबद्धम् "संप्रोदश्च" इति चान्नेः 'कटचि' निकटति 'अचि' वा निकटः, आसीदति स्म "गत्यर्थेति" 'क्ते' आसद्यते स्म कर्मणि 'क्ते' वा आसन्नः, संनिकृष्यते कर्मणि 'क्ते' संनिकृष्टः, समानं नीडं वासस्थानमस्य—सहनीडेनेति वा सनीडः, समानो देशोऽस्येति सदेशः, अभ्यश्यते "अभिपूर्वकादशूङ् व्याप्तौ" इत्यतो 'घञि' अभ्याशः मुकुटमते तु अभ्यासीदतीति विग्रहे 'अन्येभ्योऽपीति' 'डे' अभ्यासोदन्त्यान्तोऽपि "अभ्यासोऽभ्यसनेऽन्तिके" ( इति दन्त्यान्तेषु विश्वमेदिन्यौ ) समाना विधाऽस्य, सह विधयेति वा सविधः, समाना मर्यादास्येति समर्यादः, समानो वेशोऽस्येति सवेशः, ( वदिति समानार्थेऽव्ययमुभयत्रापि ज्ञेयम् ) उपगतः कण्ठः सामीप्यमस्य, उपगतः कण्ठम् "अत्यादयः" इति समासे वा उपकण्ठः, अन्तोऽस्यास्ति 'ठनि' ठस्येकादेशे च अन्तिकः, "अन्तिकं निकटे वाच्यलिङ्गं स्त्री शोभनौषधौ। चुल्ल्यां ज्येष्ठभगिन्यां च नाट्योक्त्यां कीर्त्यतेऽन्तिका ( इति विश्वः ) अभ्यर्दति स्म, अभ्यर्द्यते स्म वा कर्तरि, कर्मणि वा 'क्ते' "अभेश्चाविदूर्ये" इतीडभावे च अभ्यर्णः, अभिमुखमग्रमस्येति अभ्यग्रः, "पर्यभिभ्यां च" इति तसिलि अभितोऽपि अव्ययं स्यादिति पञ्चदश निकटस्य ॥ ६६ । ६७ ॥

संयुक्त या मिला पु.स.न. पु.स.न. पु.स.न.
अत्यन्त समीप **संसक्ते ( त्व ) व्यवहितमपटान्तर ( मित्यपि )।**
पु.स.न. पु.स.न. पु.स.न. पु.स.न.
दूर या फासिला **नेदिष्ठमन्तिकतमं ( स्था ) दूरं विप्रकृष्टकम् ॥ ६८ ॥**

समिति—संसक्ते संयुक्ते तु अव्यवहितम्, अपटान्तरमित्यपि स्यात्। संसज्यते स्म कर्मणि 'क्ते' संसक्तम्, न व्यवधीयते स्म कर्मणि 'क्ते' "दधातेर्हिः" इति ह्यादेशे च अव्यवहितम्, पटानामन्तरमपटान्तरम्, न पटान्तरमत्रेति अपटान्तरम्, मुकुटमते तु अपदान्तरमपीति त्रीणि संयुक्तस्य। अतिशयेनान्तिकम् 'इष्ठनि' "अन्तिकबाढयोर्नेदसाधौ" इति नेदादेशे, "यस्येति च" इत्यल्लोपे च नेदिष्टम्, अतिशये नान्तिकम् 'तमपि' अन्तिकतमं स्यादिति द्वे अति निकटस्य। दुःखेनेयते प्राप्यते दुरुपसर्गादिण्गतावस्माद् "दुरीणो लोपश्च" इति रकि इणो लोपे, "रोरीति" रलोपे,

" ह्रलोपे पूर्वस्येति " दीर्घे च दूरम्, विप्रकृष्यते स्म कर्मणि ' क्ते ' विप्रकृष्टम्, स्वार्थे कनि ' विप्रकृष्टकम् ' स्यादिति द्वे दूरस्य ॥ ६८ ॥

अतिदूर पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
लम्बा चौड़ा **दवीय ' श्च ' दविष्ठं ' च ' सुदूरे दीर्घमायतम्।**
गोल ऊंचा पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
झुका हुआ **वर्तुलं निस्तलं वृत्तं बन्धुरं ' तू ' न्नतानतम् ॥ ६९ ॥**

देति—सुदूरे अतिदूरे दवीयः, दविष्ठं च स्यात्। अत्यन्तं दूरम् ' ईयसुनि ' " स्थूलदूरयुवेति " रलोपे, गुणे, अवादेशे च दवीयः, ' इष्ठनि ' दविष्ठम्, सु=अत्यन्तं दूरं सुदूरं स्यादिति त्रीणि अतिदूरस्य । दृणाति बाहुलकाद् ' घकि ' इदादेशे, दीर्घे च दीर्घम्, आयम्यते स्म कर्मणि ' क्ते ' आयतते 'अचि' वा आयतं स्यादिति द्वे लम्बितस्य विस्तीर्णस्य वा । वर्तते बाहुलकादुलचि वर्तुलम्, निर्गतं तलमस्येति निस्तलम्, " निस्तलं वर्तुले चले " ( इति विश्वः ) वर्तते स्म ' गत्यर्थेति ' कर्तरि ' क्ते ' वृत्तम् " वृत्तं वृत्तौ दृढे मृते । चरित्रे वर्तुले छन्दः स्वतीताधीतयोर्वृते " ( इति हैमः ) इति त्रीणि वर्तुलस्य । बध्नाति " मद्गुरादयश्चेति " 'उरचि' बन्धुरः खर्जूरादित्वात् ' ऊरे ' बन्धूरोऽपि " बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिषु " ( इति रन्तिदेवः ) उन्नमति स्म उन्नतम्, आनमति स्म आनतम् उन्नतं च तदानतं च उन्नतानतं स्यादिति द्वे उन्नतानतस्य ॥ ६९ ॥

पु.स.न.पु.स.न.पु.स.न.पु.स.न. पु.स.न. पु.स.न. पु.स.न.
ऊंचा **उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे(ऽथ) वामने।**
बौना . पु.स.न.पु.स.न.पु.स.न. पु.स.न. पु.स.न. पु.स.न.पु.स.न.
औंधे मुख **न्यग्नीच खर्बह्रस्वाः(स्यु) रवाग्रेऽवनतानते ॥ ७० ॥**

उच्चेति—तुङ्गे उत्तुङ्गे उच्चप्रांशून्नतोदग्रोच्छ्रिताः स्युः—उच्चिनोति " अन्येभ्योऽपीति " 'डे' उच्चैस्त्वमस्त्यस्य ' अचि ' वा " अव्ययानामिति " टिलोपे च उच्चः, प्रकृष्टा अंशवोऽस्येति प्रांशुः, उन्नमति " गत्यर्थेति " कर्तरि ' क्ते ' उन्नतः, उच्छ्रयति स्म कर्तरि ' क्ते ' उच्छ्रितम् " उच्छ्रितं त्रिषु संजाते समुन्नद्धप्रवृद्धयोः " ( इति मेदिनी ) तुञ्ज्यते कर्मणि ' घञि ' तुङ्गः " तुङ्गः पुन्नागनगयोर्बुधे स्यादुन्नतेऽन्यवत् । तुङ्गी प्रोक्ता हरिद्रायां वर्वरायामपीष्यते " ( इति हैमः ) । इति षट् उन्नतस्य । अथेति—वामने न्यग्नीचखर्बह्रस्वाः स्युः । वामयति मदम् नन्दादित्वाल्ल्यौ वामनः, न्यञ्चति " ऋत्विगिति " 'क्विनि' न्यक्, नीचैस्त्वमस्त्यत्रेति अर्शआद्यचि ' अव्ययानामिति ' टिलोपे च नीचः " नीचः पामरखर्बयोः " ( इति हेमचन्द्रः ) खर्वति, पचाद्यचि खर्वः " खर्वं संख्यान्तरे क्लीबं नीचे वामनके त्रिषु " ( इति मेदिनी ) ह्रसति ' ह्रस शब्दे ' अस्माद्बाहुलकात् ' वे ' ह्रस्वः " खर्वह्रस्वौ न्यग्वामनौ " ( इति हैमः )

इति पञ्च वामनस्य " बौंना " इति ख्यातस्य । अवाग्रे अधोमुखे अवनतानते स्याताम् । अवनतमग्रमस्येति अवाग्रम्, अवनमतिस्म " गत्यर्थेति " कर्तरि ' क्त ' अवनतम्; आनमति स्म आनतं स्यादिति त्रीण्यधोमुखस्य ॥ ७० ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

वक्र **अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् ।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

या टेढ़ा **आविद्धं कुटिलं भुग्नं वेल्लितं वक्र(मित्यपि) ॥ ७१ ॥**

अरेति—ऋच्छति ' विचि ' अर् तमालाति मूलविभुजादित्वात् ' के ' अरालाति विग्रहे तु " सुपीति " योगविभागात् ' के ' वा अरालम्, " अरालं कुटिले सर्जरसे च समदन्तिनि " ( इति विश्वः ) वृज्यते, वृजेः "किच" इति "किनचि" वृजिनम् " वृजिनं कलमषे क्लीबं केशे ना कुटिले त्रिषु " ( इति मेदिनी ) जहाति हीयते वा " जहातेः सन्वदालोपश्च " इति ' मनि ' जिह्मम्, " जिह्मस्तु कुटिले मन्दे जिह्मं तगरपादपे " ( इति हैमः ) । " ऊर्मिः स्त्री पुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसंकोचरेखायां वेदनापीडयोरपि " ( इति मेदिनी ) ऊर्मिरस्यास्ति ' मतुपि ' यवादित्वान्मतोर्वस्याभावे च ऊर्मिमत्, कुञ्चति स्म कर्तरि ' क्त ' बाहुलकात्संज्ञापूर्वकत्वाद्वा नलोपाभावे च कुञ्चितम्, नमति स्म कर्तरि ' क्ते ' नतम् " नतं तगरपाख्यां स्यात् क्लीवं कुटिलनम्रयोः । "त्रिषु" ( इति मेदिनी ) आविध्यते स्म कर्मणि ' क्ते ' " ग्रहिज्येति " संप्रसारणे च आविद्धम् " आविद्धो वाच्यलिङ्गः स्यात्कुटिले च पराहते " ( इति मेदिनी ) कुटति " मिथिलादयश्च " इति " इलचि " कुटि कौटिल्यं लाति गृह्णातीति वा " आतोऽनुपेति " ' के ' कुटिलम् " कुटिला त्वापगायां स्त्री भुग्ने तु वाच्यलिङ्गकः " ( इति मेदिनी ) भुजति स्म " गत्यर्थेति " कर्तरि ' क्ते ' " ओदितश्च " इति निष्ठानत्वे च भुग्नम्, वेल्लति स्म कर्तरि ' क्ते ' वेल्लितम् " वेल्लितं गमने क्लीवं कुटिले विधुते त्रिषु " ( इति मेदिनी ) वञ्चति " वञ्चु गतौ " अस्मात् " स्फायितञ्चीति " ' रकि ' नलोपे, चस्य के च वक्रम् " वक्रं पुटभेदे वक्रः कुटिले क्रूरभौमयोः " ( इति हैमः ) इत्येकादश कुटिलस्य ॥ ७१ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

सीधा **ऋजावजिह्मप्रगुणौ व्यस्तेत्वप्रगुणाकुलौ ।**

आकुल पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

नित्य **शाश्वत(स्तु)ध्रुवो नित्य सदातन सनातनाः ॥ ७२ ॥**

ऋजेति—ऋजौ सरले अजिह्मप्रगुणौ स्याताम् । अर्जति, अर्जयति गुणानिति वा ऋजुः " अर्जिदृशिकम्यमीति " साधुः, भिन्नो जिह्मादिति अजिह्मः, प्रकृष्टा

गुणा यस्येति प्रगुणः स्यादिति त्रीणि सरलस्य। व्यस्ते तु अप्रगुणाकुलौ स्याताम्। व्यस्यते स्म कर्मणि 'क्त' व्यस्तः, भिन्नः प्रगुणादिति अप्रगुणः, आकोलति इगुपधत्वादिति 'के' आकुलः स्यादिति त्रीणि आकुलस्य। शश्वद्भवः "तत्र भवः" इत्यणि, वृद्धौ वहिषष्टिलोप इति वचनादव्ययानां टिलोपस्यानित्यत्वाट्टिलोपाभावे च शाश्वतः, अध्यात्मादित्वात् ठञपि ठस्येकादेशे च शाश्वतिकोऽपि, ध्रुवति "इगुपधेति" 'के' ध्रुवः, "ध्रुवोवटे। वसुयोगभिदोः शम्भौ शङ्कावुत्तानपादजे। स्थिरे नित्ये निश्चिते च ध्रुवं खेऽजस्रतर्कयोः। ध्रुवा मूर्वाशालपर्ण्योः स्रुग्भेदे गीतभिद्यपि" (इति हैमः) नियतं भवः "त्यब्नेर्ध्रुवे" इति 'त्यपि' नित्यः "नित्यं स्यात्संततेऽपि च। शाश्वते त्रिषु" (इति मेदिनी) सदाभवः "सायं चिरमिति" ट्यौ, "युवोरिति" अनादेशे, तुडागमे च सदातनः एवं सनाभवः सनातनः "सनातनोऽच्युते। पितॄणामतिथौ रुद्रवेधसोः शाश्वते स्थिरे" (इति हेमचन्द्रः) इति पञ्चनित्यस्य॥ ७२॥

पु.स.न. पु.स.न. पु.स.न.
अति स्थिर. **स्थास्नुः स्थिरतरस्थेया (नेकरूपतया तु यः)।**
स्थिर. पु.स.न. पु.स.न. पु.स.न.
वृक्षादि. **(कालव्यापी स) कूटस्थः स्थावरो जङ्गमेतरः॥ ७३॥**

स्थेति–स्थानशीलः "ग्लाजिस्थश्चेति" 'ग्स्नौ' स्थास्नुः, अतिशयेन स्थिरः "द्विवचनविभज्येति" 'तरपि' स्थिरतरः, 'ईयसुनि' "प्रियस्थिरेति" स्थादेशे गुणे च स्थेयान्स्यादिति त्रीण्यतिस्थिरस्य। एकरूपतया प्रधानरूपतया यः कालं व्याप्तुं शीलमस्त्यस्येति कालव्यापी स कूटवत्तिष्ठति "सुपिस्थः" इति 'के' कूटस्थः स्यादित्येकं निश्चलस्य। तिष्ठत्येवंशीलः स्थानशीलो वा "स्थेशभासेति" 'वरचि' स्थावरः, जङ्गमादितरो जङ्गमेतरः स्यादिति द्वे जङ्गमेतरस्य॥ ७३॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
चलनेवाले. **चरिष्णुजङ्गमचरं त्रसमिङ्गं चराचरम्।**
पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
कांपनेवाले. **चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम्॥ ७४॥**
पु.स.न. पु.स.न. पु.स.न. पु.स.न.
चञ्चल. **चञ्चलं तरलं (चैव) पारिप्लवपरिप्लवे॥**

चेति–चरणशीलम् "अलंकृञिति" 'इष्णुचि' चरिष्णु, वक्रं गच्छति, भृशं गच्छति वा यङि, पचाद्यचि, जङ्गमम्, चरति 'अचि' चरम् "चरोक्षद्यूतभेदे च भौमे चारे त्रसे चले" (इति मेदिनी) त्रसति 'अचि' त्रसम्, इङ्गति 'अचि' इङ्गम् "इङ्गः स्यादिङ्गितेऽद्भुते। ज्ञानजङ्गमयोश्चापि" (इति हेमचन्द्रः) चरति

' अचि ' " चरिचलीति " द्वित्वे अभ्यासस्यागागमे च चराचरम् " चराचरं जङ्गमे स्यादिङ्गविष्टपयोरपि " ( इति हमः ) इति चराचरस्य । चलनशीलम् "चलनशब्देति" युचि, अनादेशे च चलनम्, कम्पनशीलम् 'युचि' कम्पनम्, "नमिकम्पीति " ' रे ' कम्प्रं स्यादिति त्रीणि कम्पनशीलस्य। चलति, अचि, चलम्, लोडति "क्वचिदपवादविषयेऽप्युत्सर्गप्रवृत्तेः" अचि डलयोरैक्याद् लोलम्, चलति अचि, "चरिचलीति " द्वित्वे अभ्यासस्यागागमे च चलाचलम्, चञ्चति बाहुलकादलचि चञ्चलम् "चञ्चला तु तडिल्लक्ष्म्योश्चञ्चलश्चपलेऽनिले" ( इति मेदिनी ) तरति बाहुलकादलचि तरलम् " तरलं चञ्चलेषिङ्ग भास्करेऽपि त्रिलिङ्गकम् " ( इति विश्वः ) परिप्लवते 'अचि' प्रज्ञाद्यणि च पारिप्लवम्, 'केवलेऽचि' परिप्लवमिति सप्त चञ्चलस्य॥ ७४ । ३ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

अधिक. **अतिरिक्तः समधिको दृढसंधि'स्तु' संहतः ॥ ७५ ॥**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

बड़ा मिलापी. **कक्खटं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ।**

कठिन. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

बहुत बढ़ेहुए. **जरठं मूर्तिमन्मूर्तं प्रवृद्धं प्रौढमेधितम् ॥ ७६ ॥**

अतीति–अतिरिच्यते स्म कर्मणि ' क्ते ' अतिरिक्तः, सम्यगधिकः समधिकः स्यादिति द्वे अधिकस्य । दृढः सन्धिः संधानमस्येति दृढसन्धिः, संहन्यते स्म कर्मणि ' क्ते ' संहतः "संहतं संगते दृढे" ( इति हैमः ) इति द्वे दृढसंधानस्य । कक्खति " कक्ख हसने" शकादित्वादटनि कक्खटम्, खक्खटमिति कवर्गद्वितीयादिरपि । कठति "बहुलमन्यत्रापीति" ' इनचि ' कठिनम् " कठिनमपि निष्ठुरे स्यात्तत्त्वेऽपि त्रिषु नपुंसकं स्थाल्याम् । कठिनी खटिकायामपि कठिनागुडशर्करायां च " ( इति विश्वः ) कृन्तति "कृतेश्छः क्रूच" इति ' रक्ि ' क्रू आदेशे च क्रूरम्, "क्रूरा नृशंसघोरोष्णाकठिनाः" ( इति हैमः ) कठति " कठिचकिभ्यामोरन् " इति ' ओरनि ' कठोरम्, " कठोरौ पूर्णकठिनौ " ( इति हैमः ) नितिष्ठति मद्गुरादित्वादुरचि, आलोपे च निष्ठुरम्, दर्हति, दृंहति स्म वा दृढम् " दृढः स्थूलबलयोः " इति साधु " दृढं स्थूले नितान्ते च प्रगाढे बलवत्यपि " ( इति मेदिनी ) जीर्यति बाहुलकादठचि जरठम्, " जरठः कर्कशे पाण्डौ कठिनेऽप्यभिधेयवत् " ( इति विश्वः ) मूर्तिः काठिन्यमस्यास्ति ' मतुपि' मूर्तिमत्, मूर्छति स्म अकर्मकत्वात्कर्तरि ' क्ते ' " आदितश्च " इति इडागमाभावे " न ध्याख्येति " नत्वाभावे च मूर्त्तम् " मूर्त्तं स्यात्त्रिषु मूर्छाले कठिने मूर्तिमत्यपि " ( इति विश्वः ) इति नव कठोरस्य । प्रवर्धते स्म " गत्यर्थेति " कर्तरि ' क्ते ' प्रवृद्धम्, प्रोह्यते स्म प्राप्यते स्म कर्मणि ' क्ते ' " प्रादूहेति " वृद्धौ च प्रौढम्, एधते स्म कर्तरि ' क्ते ' एधितं स्यादिति त्रीणि प्रवृद्धस्य ॥ ७५ । ७६ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न, पु.स.न.
पुराना. **पुराणे प्रतनप्रत्नपुरातनचिरन्तनम् ।**
पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न पु.स.न.
नया. **प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ॥ ७७ ॥**
पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
कोमल. **नूत्न ( श्च ) सुकुमारं ( तु ) कोमलं मृदुलं मृदु ।**
पु.स.न. पु.स.न. पु.स.न. पु.स.न.
पीछे. **अन्वगन्वक्षमनुगेऽनुपदं ( क्लीबमव्ययम् ) ॥ ७८ ॥**

वृत्ति–पुराभवम् "सायं चिरमिति" ट्यौ, "पुराणप्रोक्तेषु" इति निर्देशात्तुडभावे च पुराणम् "पुराणं प्रत्नशास्त्रयोः । पुराणः षोडशपणे" ( इति हैमः ) प्रकृष्टे भवम् "नश्च पुराणे प्रात्वक्तव्य" इति चात् त्नप्–तनप्–खाश्च प्रत्यया वक्तव्याः" इति भाष्यात्तनपि प्रतनम्, 'त्नपि' प्रत्नम्, पुराभवम् 'ट्यौ' पुरातनम्, चिरे भवम् "सायं चिरमिति" ट्यौ, निपातनान्मान्तत्वे च चिरन्तनं स्यादिति पञ्च पुरातनस्य । प्रतिनवमग्रमस्येति प्रत्यग्रः, अभिनूयते "ॠदोरप्" इति 'अपि' अभिनवः, नूयते "अचोयत्" इति 'यति' नव्यः, नव एवेति विग्रहे "नवस्य-नूरादेशस्त्नप्, तनप् खाश्च प्रत्ययाः" इति 'खे' खस्येनादेशे च नवीनः, 'तनपि' नूतनः, नूयते, 'अपि' नवः, 'त्नपि' 'नू' आदेशे च नूत्नः स्यादिति सप्त नवीनस्य । सुष्ठु कुमार्यते 'कुमारक्रीडायाम्' चुराद्यदन्तात् 'पुंसीति' 'घे' "एरच्" इति 'अचि' सुकाम्यते "कमेः किदुच्चोपधायाः" इति "आरनि" अत उत्त्वे च वा सुकुमारम्, कौतीति विग्रहे "कुटिकशिकौतिभ्यः प्रत्ययस्य मुट्" इति 'कलचि' मुडागमे, बाहुलकाद्गुणे च कोमलम्, मृदुर्गुणोऽस्यास्ति "सिध्मादिभ्यश्च" इति 'लचि' मृदुलम्, म्रदते, म्रद्यते वा "म्रद मर्दने" भौवादिकात "प्रथिम्रदिभ्रस्जाम्" इति 'कौ' संप्रसारणे च मृदु "मृदुतीक्ष्णे च कोमले" ( इति हैमः ) इति चत्वारि कोमलस्य । अनुगे वर्तमानमन्वगन्वक्षमनुपदमेतत्त्रय-मव्ययं वर्तते क्लीबत्वं तु अन्वक्षानुपदयोरेव भवति अन्वञ्चति "ऋत्विगिति" क्विनि "क्विन्प्रत्ययस्येति" कुत्वे च अन्वक्, अनुगतमक्षमिन्द्रियमन्वक्षम्, अनुगच्छति "अन्येभ्योऽपि" इति 'डे' अनुगम्, पदस्य पश्चात् पश्चादर्थेऽव्ययीभावे अनुपदमिति चत्वार्यनुगस्य ॥ ७७ । ७८ ॥

१ पुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तोऽपि पृषोदरादित्वान्नेति बोध्यम् "अबाधकान्यपिनिपातनानि" इति भाष्यविरुद्धमिति परिभाषेन्दुशेखरे नागेशः । २ युज्यते चान्वक् शब्दस्याव्ययत्वम् "अन्वग्ययौमध्यमलोकपालः" इत्यत्र 'अन्वङ्' इति रूपापत्तेः । तामित्यत्र "कर्तृकर्मणोरिति" षष्ठ्यापत्तेश्च । अव्ययत्वे तु न लोकाव्ययेति षष्ठी निषेधेन अव्ययादिति सुपोलुकालुप्तत्वेन न काप्यनुपपत्तिः ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.
प्रत्यक्ष.अप्रत्यक्ष.**प्रत्यक्षं ( स्या ) दैन्द्रियकमप्रत्यक्षमतीन्द्रियम् ।**
पु.स.न. पु.स.न. पु.स.न. पु.स.न.
एकाग्रमनवाला.**एकतानोऽनन्यवृत्तिरेकाग्रैकायना ( वपि ) ॥ ७९ ॥**
पु.स.न. पु.स.न. पु.स.न.
**(अप्ये) कसर्गएकाग्र्यो (ऽप्ये) कायनगतो (ऽपि च)।**

प्रेति—अक्षमिन्द्रियं प्रतिगतम् " अत्यादयः " इति समासे प्रत्यक्षम्, इन्द्रियेणानुभूयते कुलालादित्वाद् ' वुञि ' वृद्धौ, अकादेशे च ऐन्द्रियकं स्यादिति द्वे इन्द्रियज्ञातस्य । भिन्नं प्रत्यक्षात् नञ्समासे अप्रत्यक्षम्, अनध्यक्षमिति वा पाठस्तत्र अक्षेष्वधि विभक्त्यर्थेऽव्ययीभावे अध्यक्षम् तस्माद्भिन्नमनध्यक्षमपि, इन्द्रियमतिक्रान्तमतीन्द्रियं स्यादिति द्वे इन्द्रियेणाज्ञातस्य । एकस्तानोविस्तारोऽस्य, एकं तानयति ' तनु श्रद्धोपकरणयोः ' अस्माच्चौरादिकात् कर्मण्यणि वा एकतानः, न अन्यावृत्तिरस्येति अनन्यवृत्तिः, एकम्, एकस्मिन् वा अग्रमस्य एकाग्रः, एकमयनमस्येति एकायनः, एकः, एकस्मिन् वा सर्गो निश्चयोऽस्येति एकसर्गः, एकमग्र्यं ज्ञेयमस्येति एकाग्र्यः प्रज्ञाद्यणि तु ऐकाग्र्योऽपि, एकं च तदयनं च एकायनं गतः एकस्मिन्नयने गतं ज्ञानमस्येति वा एकायनगतोऽपि स्यादिति सप्त एकाग्रचित्तस्य समाहितमानसस्य वा ॥७९।$\frac{1}{2}$ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.पु.स.न.
आदि. **पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्या (अथास्त्रियाम्)॥ ८० ॥**
पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
अन्त. **अन्तो जघन्यं चरममन्त्यपाश्चात्य पश्चिमम् ।**
पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
व्यर्थ. साफ. **मोघं निरर्थकं स्पष्टं स्फुटं प्रव्यक्तमुल्वणम् ॥ ८१ ॥**

पुमिति—आप्रथमं दीयते गृह्यते, प्रथममादीयते गृह्यते वा " उपसर्गेघोः किः " इति ' कौ ' आलोपे च आदिः " सामीप्ये च व्यवस्थायां प्रकारेऽवयवे तथा । चतुःष्वर्थेषु मेधावी आदि शब्दं तु लक्षयेदिति " पुंसि स्यात् । पूर्वति ' अचि ' पूर्वः " पूर्वं तु पूर्वजे । प्रागयं श्रुतभेदेषु " ( इति हैमः ) पुरोभवः " दक्षिणापश्चात्पुरसस्त्यक् " इति ' त्यकि ' वृद्धौ च पौरस्त्यः, प्रथते ' प्रथ प्रख्याने ' अस्मात् " प्रथेरमच् " इत्यमचि प्रथमः " प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत् " ( इति मेदिनी ) आदौ भवः दिगादित्वाद् ' यति ' आद्यः स्यादिति पञ्च प्रथमस्य । अथेति—अमति बाहुलकात्तनि, अन्तति ' अचि ' वा अन्तः अस्त्रियां पुन्नपुंसके स्यात् " अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः । अवयवेऽपि" (इति हेमचन्द्रः) जघने भवम् दिगादित्वात्—शरीरावयवत्वाद्वा ' यति ' जघन्यम् " जघन्यं मेहने क्लीबं चरमे गर्हितेऽन्यवत " ( इति मेदिनी ) चरति " चरेश्च " इत्यमचि चरमम्,

अन्तेभवम् दिगादित्वाद् 'यति' अन्त्यम्, "अन्त्यस्त्वन्तभवेऽधमे" (इति हैमः) पश्चाद्भवम् "दक्षिणापश्चादिति" 'त्यकि' वृद्धौ च पाश्चात्यम्, एवम् "अग्रादि पश्चाड्डिमच्" इति 'डिमचि' पश्चिमं स्यादिति पञ्च पाश्चात्यस्य। मुह्यन्त्यस्मिन् "हलश्चेति" 'घञि' 'अचि' वा न्यङ्क्वादित्वात्कुत्वे च मोघः "मोघो दीने निष्फले च मोघा स्यात्पाटलातरौ" (इति हैमः) निर्गतोऽर्थोऽस्मादिति निरर्थकं स्यादिति द्वे निष्प्रयोजनस्य। स्पाश्यतेस्म णयन्तात्कर्मणि 'क्ते' स्पष्टम् "वादान्तेति" साधुः। स्फुटति इगुपधत्वात् के, स्फुटम्, "स्फुटो व्यक्तप्रफुल्लयोः। सिते व्याप्ते" (इति हैमः) प्रव्यज्यतस्म, प्रव्यच्यतेस्म इति वा कर्मणि 'क्ते' प्रव्यक्तम् उद्गणाति उत्पूर्वकाद्गणशब्दे अस्मात्पचाद्यचि पृषोदरादित्वाल्लत्वे च उल्वणं स्यादिति चत्वारि स्पष्टस्य॥ ८०।८१॥

पु.स.न. न. पु.स.न. १ पु.स.न. पु.स.न.

साधारण. **साधारणं (तु) सामान्यमेकाकी (त्वे)क एककः।**

असहाय. पु.स.न. पु.स.न. पु.स.न.पु.स.न.पु.स.न.पु.स.न.

भिन्न. **भिन्ना "र्थका" अन्यतर एकस्त्वोऽन्येतरा (वपि)॥८२॥**

सेति—सह आधारणेनेति साधारणम्, तदेव "आग्नीध्रसाधारणादञ्" इति 'अञि' साधारणम् स्त्रियां टिड्ढेति ङीपि साधारणी, टापि 'साधारणा' सह मानेन समानं तस्य भावः, चातुर्वर्ण्यादित्वात् स्वार्थे वा 'ष्यञि' सामान्यं स्यादिति द्वे अनेकसम्बन्धिन एकस्य। एक एव "एकादाकिनिच्चासहाये" "चात्कनलुकौ च" इति 'आकिनिचि' एकाकी, 'कनोलुकि' एकः "एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिपु" (इति मेदिनी) 'कनि' एककः, पीयूषव्याख्यातः "शाम्भवी शक्तिरेकला" इति वचनादेकलोऽपि तत्र सिध्मादित्वात् "लच्" स्यादिति त्रीण्यसजातीयासहायस्य। भिन्नोऽर्थो येषामिति भिन्नार्थकाः, अन्य एव अल्पाच्तरमितिवत्स्वार्थे 'तरपि' अन्यतरः क्वचित् 'एकतरः' इति पाठस्तत्र "एकाच्च प्राचाम्" इति 'डतरच्'। एति "इणभी" इति 'कनि' एकः, तनोति "तनोतेरनश्च वः" इति चात् क्विबित्येके, आगमानित्यत्वात्तुक् वैकल्पिकः, केचित्तुचिकमेवानुवर्तयन्ति एवं मतभेदसिद्धौ त्वत्-त्व-शब्दावन्यपर्यायौ सर्वादिगणे पठिताविति। अनिति अघ्न्यादित्वाद् 'ये' अन्यः "अन्योऽसदृशेतरयोः" (इति हैमः) तरणम् "ऋृदोरप्" इत्यपि, तरः एः कामस्य तरः, इना कामेन तरति पचाद्यचि वा इतरः "इतरः पामरेऽन्यस्मिन्" (इति हेमचन्द्रः) इति षडन्यतरस्य भिन्नार्थवाचकस्य वा॥ ८२॥

अनेकप्रकारका. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

जल्दबाज़ी. **उच्चावचं नैकभेदमुच्चण्डमविलम्बितम्।**

मर्मभेदक. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

अबाधित. **अरुंतुदं (तु) मर्मस्पृगबाधं (तु) निरर्गलम्॥ ८३॥**

१ "एकाकी हयमारुह्य" ति सप्तशतीस्तवः॥

उच्चेति–उदक् चावाक् चेति उच्चावचम् " मयूरव्यंसकादयश्च " इति निपातनात् साधुः, एकोभेदोऽस्येत्येकभेदम्, न एकभेदम् " सुप्सुपा " इति समासे न एको भेदोऽत्रेति वा उत्तरपदशब्दस्य समासचरमावयवे रूढत्वान्मध्यमपदे नलोपाभावे नैकभेदं स्यादिति द्वे अनेकप्रकारस्य । उच्चण्डनम् भावे ' घञि ' उच्चण्डते पचादित्वादचि वा उच्चण्डम्, विलम्बनं, विलम्ब्यतेस्म वा विलम्बितम् न विलम्बितमिति नञ्समासे ' अविलम्बितम् ' स्वामिमते तु अवलम्बितमवलम्बनमपि स्यादिति द्वे उत्तालस्य " जल्दबाज़ी " इति ख्यातस्य । अरूंपि तुदति ' तुद व्यथने ' अस्मात् ' विध्वरुषोस्तुदः " इति खचि, "अरुर्द्विषदिति" मुमागमे च 'अरुंतुदम्' मर्म स्पृशति ' स्पृश उपतापे ' तौदादिकात् " स्पृशोऽनुदके " इति ' क्विनि ' कवर्गादेशे च मर्मस्पृक् स्यादिति द्वे मर्मपीडकस्य । न बाधा अस्येति अबाधम्, निष्क्रान्तमर्गलायाः "निरादयः क्रान्ताद्यर्थे पञ्चम्या " इति समासे ' निरर्गलम् ' स्यादिति द्वे बाधारहितस्य ॥ ८३ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

उलटा. **प्रसव्यं प्रतिकूलं ( स्याद ) पसव्यमपष्टु ( च )।**

बायाँ. पु.स.न. पु.स.न. पु.स.न.

दाहिना. **वामं (शरीरे) सव्यं (स्या) दपसव्यं (तु) (दक्षिणे)॥८४॥**

प्रेति–प्रगतं सव्यादिति प्रसव्यम्, "प्रसव्यं वाच्यलिङ्गं स्यात्प्रतिकूलानुकूलयोः " ( इति मेदिनी ) प्रतीपं कूलादिति प्रतिकूलम्, अपगतं सव्यादिति अपसव्यम् "अपसव्यं त्रिलिङ्गन्तु दक्षिणप्रतिकूलयोः " ( इति विश्वः ) अपतिष्ठतीति विग्रहे "अपदुःसुपुस्थः " इति ' कौ ' आलोपे, सुषमादित्वात् षत्वे च 'अपष्टु' स्यात् "अपष्टुः, पुंसि काले च वामे स्यादन्यलिङ्गकः " ( इति मेदिनी ) इति चत्वारि विरुद्धार्थप्रकाशकस्य " उलटा " इति ख्यातस्य । शरीरे यद्वामं तत्सव्यं स्यात् । सूयते ' षू प्रेरणे ' अस्मात्तौदादिकात्कर्मणि " अचोयत् " इति यति अवादेशे च सव्यम् " सव्यं वामे च दक्षिणे " ( इत्यजयः ) । " सव्यं तु दक्षिणे[1] । वामे च प्रतिकूले च " ( इति विश्वः ) इत्येकं वामस्य " बायाँ " इति ख्यातस्य । दक्षिणे दक्षिणाङ्गे तु ' अपसव्यम् ' स्यात् अपक्रान्तं सव्यादित्यपसव्यमित्येकं दक्षिणस्य ' दाहिना ' इति ख्यातस्य ॥ ८४ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

संकट. **संकटं ( ना तु ) सम्बाधः कलिलं गहनं ( समे )।**

दुष्प्रवेश. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

संकुल. मूड़ा. **संकीर्णं संकुलाकीर्णे मुण्डितं परिवापितम् ॥ ८५ ॥**

---

१ दक्षिणे यथा–"वामोबाहुर्मृडान्याः करकलितरणत्कङ्कणालीकरालो यस्मिन्सव्यो भुजगवलयवान् " ( इत्यनेकार्थकैरवाकारकौमुदी ) ॥

समिति—संबाधार्थात्संशब्दात्स्वार्थे " संप्रोदश्चेति " ' कटचि ' संकटति ' कटे वर्षावरणयोः' अस्मात्पचाद्यचि वा संकटम्, संबाधन्तेऽत्र "बाधृ विलोडने" अस्माद् " हलश्च " इति ' घञि ' संबाधः ना पुमान्स्यात् " संबाधः संकटे भगे " (इति विश्वः) इति द्वे संकीर्णस्य। कलते, कल्यते वा " कल शब्दसंख्यानयोः " भौवादिकात् "सलिकलि—" इति ' इलचि ' कलिलम्, गाहते, "बहुलमन्यत्रापि" इति ' युचि ' "पृषोदरादित्वाद्ध्रस्वे च गस्य गानस्य गतेर्वाहनमिति वा गहनम् "गहनं वनदुःखयोः। गह्वरे कलिले चापि " (इति विश्वहैमौ) उभे समे समानार्थे स्यातामिति द्वे दुष्प्रवेशस्य। संकीर्यते स्म कर्मणि ' क्ते ' संकीर्णम्, "संकीर्णं निचितेऽपि स्यादशुद्धे त्वभिधेयवत् " (इति मेदिनी) संकोलति ' कुल संस्त्याने ' अस्मादिगुपधेति ' के ' संकुलम्, आकीर्यते स्म कर्मणि ' क्ते ' आकीर्णं स्यादिति त्रीणि नानाजातीयसंमिलितस्य सर्वैकार्थानीत्येके वा। मुण्ड्यते स्म ' मुडि खण्डने ' अस्माद्भौवादिकात् कर्मणि ' क्ते ' मुण्डितम्, परिवाप्यते स्म " वपिः प्रकिरणे दृष्टश्छेदने चापि वर्तते " केशान्वपतीति सूत्रे "आदे च उपदेशेऽशिति" ६। १। ४५ भाष्यात्। मुण्डनार्थोऽत्र वपिस्तस्माण्णयन्तात्कर्मणि ' क्ते ' परिवापितम्, स्यादिति द्वे मुण्डितस्य॥ ८५॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

गुंथा हुआ. **ग्रथिते संदितं दृब्धं विसृतं विस्तृतं ततम्।**

फैलाया. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

भूला हुआ. स्थापित. **अन्तर्गतं विस्मृतं (स्या) त्प्राप्तप्रणिहिते (समे)॥ ८६॥**

ग्रेति—ग्रथ्यते स्म 'ग्रन्थ संदर्भे' अस्मात्क्रैयादिकात्कर्मणि 'क्ते' नलोपे च ग्रथितम्। ग्रन्थितमिति पाठान्तरम् तत्र ' ग्रथि कौटिल्ये ' अस्माद्भौवादिकात्कर्मणि ' क्ते ' ग्रन्थितम् ' गुम्फितम् ' इति पाठे गुम्फ्यते स्म ' गुम्फ ग्रन्थे ' अस्मात्तौदादिकाण्णयन्तात्कर्मणि ' क्ते ' गुम्फितम्, णयन्ताभावे गुफितमपि, पीयूषव्याख्यातो गुन्थितमिति क्वचित्, स्वामिमते तु मव्यते स्म कर्मणि ' क्ते ' मवितम्, अनेकार्थत्वाद् ग्रन्थने वर्तमाना ' म्रृदक्षोदे ' क्रैयादिकाण्णयन्तात्कर्मणि ' क्ते ' मर्दितमपि, संदीयते ' दो अवखण्डने' अस्माद्दैवादिकात्कर्मणि ' क्ते ' " द्यतिस्यतीति " इत्वे च संदितम्, दृभ्यते स्म ' दृभी ग्रन्थे ' कर्मणि ' क्ते ' ' दृब्धम् ' स्यादिति त्रीणि ग्रन्थितस्य। विसरति स्म कर्तरि ' क्ते ' विसृतम्, विस्तीर्यते स्म कर्मणि ' क्ते ' विस्तृतम्, तायते, तन्यते स्म वा कर्मणि ' क्ते ' ततम् " ततं व्याप्ते विस्तृते च त्रिलिङ्गकम्। क्लीबं वीणादिवाद्ये स्यात्पुंलिङ्गस्तु सदागतौ " (इति मेदिनी) इति त्रीणि विस्तृतस्य। अन्तर्गच्छति स्म, गम्यते स्म वा कर्तरि, कर्मणि वा ' क्ते ' अन्तर्गतम्, विस्मर्यते स्म

१ भगे योनौ यथा—करिहस्तेन संबाधे प्रविश्यान्तर्विलोडिते। उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजिते॥ (इत्यनेकार्थकैरवाकारकौमुदी)॥

कर्मणि ' क्ते ' ' विस्मृतम् ' स्यादिति द्वे विस्मृतस्य । प्राप्यते स्म कर्मणि ' क्ते ' प्राप्तम् " प्राप्तं लब्धे समञ्जसे " ( इति मेदिनी ) गोवर्धनमते तु प्रोप्यते स्म कर्मणि ' क्ते ' प्रोप्तमपि, प्रणिधीयते स्म कर्मणि ' क्ते ' " दधातेर्हिः " इति ह्यादेशे च प्रणिहितम् उभे समे समानार्थे स्यातामिति द्वे स्थापितस्य ॥ ८६ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

कंपा. **वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते ।**

पु.स.न.पु.स.न.पु.स.न. पु.स.न. पु.स.न.पु.स.न.पु.स.न.

भेजा. **नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः (समाः) ॥ ८७ ॥**

वयिति–वेल्ल्यते स्म ' वेल्ल चलने ' अस्माद्भौवादिकाण्ण्यन्तात्कर्मणि ' क्ते ' वेल्लितः, " वेल्लितं गमने क्लीबं कुटिले विधुते त्रिषु " ( इति मेदिनी ) प्रेङ्ख्यते स्म कर्तरि, कर्मणि वा ' क्ते ' प्रेङ्खितः, आधूयते स्म ' धू विधूनने ' तौदादिकात् ' धूञ् कम्पने ' क्रैयादिकाद्वा कर्मणि ' क्ते ' आधूतः, चल्यते स्म 'चल कम्पने' भौवादिकाण्ण्यन्तात्कर्मणि ' क्ते ' चलितः, आकम्प्यते स्म आकम्पितः, धूयते स्म, कर्मणि ' क्ते ' धुतः " धुतम् । त्यक्ते विधूते " ( इति हैमः ) इति षड् ईषत्कम्पितस्य । नुद्यते स्म कर्मणि ' क्ते ' नुत्तः " नुदविद– " इति वा नत्वे नुन्नः, अस्यते स्म कर्मणि ' क्ते ' अस्तः " अस्तः क्षिप्ते पश्चिमाद्रौ " ( इति हैमः ) निष्ठीव्यते स्म कर्मणि ' क्ते ' " यस्ये " तीडभावे, च " च्छ्वोः– " इति ऊठि च निष्ठ्यूतः, आविध्यते स्म कर्मणि ' क्ते ' आविद्धः " आविद्धो वाच्यलिङ्गः स्यात्कुटिले च पराहते " ( इति मेदिनी ) क्षिप्यते स्म, क्षिप्तः, ईर्यते स्म ' ईर गतौ कम्पने च ' कर्मणि ' क्ते ' ईरितः एते समाः समानार्थाः स्युरिति सप्त प्रेरितस्य ॥ ८७ ॥

घिरा हुआ पु.स.न. पु.स.न. पु.स.न. पु.स.न.

चुराया गया **परिक्षिप्तं ( तु ) निवृतं मूषितं मुषिता ( र्थकम् ) ।**

फैलाया गया पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

फेंकाहुआ

गुणा किया **प्रवृद्धप्रसृते न्यस्तनिसृष्टे गुणिताहते ॥ ८८ ॥**

पेति–परितः क्षिप्यते स्म कर्मणि ' क्ते ' परिक्षिप्तम्, निव्रियते स्म ' वृञ् वरणे ' क्रैयादिकात्कर्मणि ' क्ते ' निवृतं स्यादिति द्वे परिखादिना वेष्टितस्य । मूष्यते स्म ' मूष स्तेये ' भौवादिकात्कर्मणि ' क्ते ' मूषितम्, मुषितमेवार्थो यस्येति मुषितार्थकम् मुष्यते स्म ' मुष स्तेये ' क्रैयादिकात्कर्मणि 'क्ते' मुषितम् " मुषितं हृतखण्डिते" ( इति विश्वः ) इति द्वे चोरितस्य । प्रवर्धते स्म "गत्यर्थेति" कर्तरि ' क्ते ' प्रवृद्धम्, प्रसरति स्म कर्तरि ' क्ते ' प्रसृतं स्यादिति द्वे प्रसृतस्य । न्यस्यते स्म कर्मणि ' क्ते ' न्यस्तम्, निसृज्यते स्म 'सृज विसर्गे' कर्मणि ' क्ते ' निसृष्टं स्यादिति द्वे त्यक्तस्य । गुण्यते स्म ' गुण आमन्त्रणे ' चौरादिकात्कर्मणि ' क्ते ' गुणितम्, आहन्यते स्म 'हन हिंसागत्योः' आदादिकात्कर्मणि ' क्ते ' आहतं स्यादिति द्वे गुणितस्य ॥ ८८ ॥

बढ़ा हुआ पु.स.न. पु.स.न. पु.स.न.पु.स.न. पु.स.न. पु.स.न.
छिपा
धूलिलिप्त **निदिग्धोपचिते गूढगुप्ते गुण्डितरूषिते ।**
रसीला पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
उबाया **द्रुतावदीर्णे उद्गीर्णोद्यते काचितशिक्यिते ॥ ८९ ॥**
छीका में रक्खा

नीति—निदिह्यतेस्म 'दिह उपचये' अादादिकात् कर्मणि 'क्ते' निदिग्धम्, उपचीयते स्म 'चिञ् चयने' कर्मणि 'क्ते' उपचितम् ''भवेदुपचितं दिग्धे समृद्धे वाच्यलिङ्गकम्'' ( इति मेदिनी ) इति द्वे पुष्टिं प्रापितस्य । गुह्यतेस्म 'गुहू संवरणे' भौवादिकात्कर्मणि 'क्ते' गूढं ''गूढं रहसि गुह्ये च न द्वयोः संवृते त्रिषु'' ( इति मेदिनी ) गुप्यतेस्म 'गुपू रक्षणे' भौवादिकात्कर्मणि 'क्ते' गुप्तम् ''गुप्तं गूढे त्राते'' ( इति हैमः ) इति द्वे कृतगोपनस्य । गुण्ड्यते स्म 'गुडि वेष्टने' चौरादिकात्कर्मणि 'क्ते' गुण्डितम्, गुण्ठितमिति पाठे 'गुठि वेष्टने' चौरादिकात्कर्मणि 'क्ते' गुण्ठितमपि, रूष्यतेस्म रूषिर्वेष्टनार्थोऽपठितोऽपि भ्वादौ द्रष्टव्यो भ्वादेराकृतिगणत्वात् कर्मणि 'क्ते' रूषितं स्यादिति द्वे 'गुण्डालित' इति ख्यातस्य । द्रवतिस्म, द्रूयतेस्म वा कर्तरि, कर्मणि वा 'क्ते' द्रुतम् ''द्रुतं शीघ्रविलीनयोः'' (इति हैमः) अवदीर्यतेस्म 'दॄ विदारणे' क्रैयादिकात्कर्मणि 'क्ते' इदादेशे रपरत्वे, दीर्घे, णत्वे च अवदीर्णम्, स्यादिति द्वे प्रापितद्रवीभावस्य । उद्गूर्यतेस्म 'गुरी उद्यमने' दैवादिकात्कर्मणि'क्ते' दीर्घे, णत्वे च उद्गूर्णम्, उद्यम्यतेस्म 'यम उपरमे' भौवादिकात्कर्मणि'क्ते'उद्यतं स्यादिति द्वे उत्तालितस्य। काचे धृतम् ''प्रातिपदिकाद्धात्वर्थे'' इति'णिचि' तदन्तात्कर्मणि'क्ते' काचितम्, एवं शिक्ये धृतम् 'णिचि' तदन्तात्कर्मणि 'क्ते' 'शिक्यितम्' स्यादिति द्वे शिक्ये स्थापितस्य ॥ ८९ ॥

सूंघाहुआ पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. १
चन्दनादि लेप **घ्राणघ्राते दिग्धलिप्ते समुदक्तोद्धृते (समे) ।**
कूपादि से पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
निकालना.नदी
आदि से घिरा **वेष्टितं(स्या)द्वलयितं संवीतं रुद्धमावृतम् ॥ ९० ॥**

घ्रेति—घ्रायतेस्म, 'घ्रा गन्धोपादाने' भौवादिकात्कर्मणि'क्ते' ''नुदविदेति'' वा निष्ठा नत्वे, ''अट्कुप्वाङिति'' णत्वे च घ्राणः, ''घ्राणं तु घ्रातघोणयोः'' ( इति हैमः ) नत्वाभावे तु घ्रातं स्यादिति द्वे अाघ्रातस्य । दिह्यतेस्म 'दिह उपचये' अादादिकात्कर्मणि 'क्ते' दिग्धम्, ''दिग्धो विषाक्तबाणे स्यात्पुंसि लिप्तेऽन्यलिङ्गकः'' ( इति मेदिनी ) लिप्यतेस्म 'लिप् उपदेहे' तौदादिकात्कर्मणि 'क्ते' 'लिप्तम्' स्यात् ''लिप्तं भुक्तविलिप्तयोः'' (इति हैमः) इति द्वे लिप्तस्य ''लेप'' इति ख्यातस्य । समुदच्यतेस्म ''अञ्चु गतिपूजनयोः'' भौवादिकात्कर्मणि 'क्ते' समुदक्तम्, उद्ध्रियतेस्म 'हृञ् हरणे' 'धृञ् धारणे' वा अस्मात्कर्मणि 'क्ते' उद्धृतम् '' उद्धृतं स्यात्त्रिषूत्क्षिप्ते परिभुक्तोज्झितेऽपि च ''

---

१ समे इति 'प्रवृद्धप्रसृते' इत्यारभ्य समुदक्तोद्धृते' इत्यन्तमन्वेतीति भानुः ॥

( इति मेदिनी ) उभे 'समे' स्यातामिति द्वे कूपादेर्निष्काशितजलादेः । वेष्ट्यतेस्म 'वेष्ट वेष्टने' भौवादिकात्कर्मणि'क्ते' वेष्टितम् "वेष्टितं रुद्धे लासके करणान्तरे" (इति मेदिनी) वलयवत्कृतम् "तत्करोति" इति 'णिचि' तदन्तात्कर्मणि 'क्ते' वलयं जातमस्य 'तारकादित्वादितचि' वा वलयितम्, संवीयतेस्म 'व्येञ् संवरणे' अस्मात्कर्मणि 'क्ते' संवीतम्, रुध्यतेस्म कर्मणि 'क्ते' रुद्धम्, आव्रियतेस्म 'वृञ् वरणे' क्रैयादिकात्कर्मणि'क्ते' आवृतं स्यादिति पञ्च नद्यादिवेष्टितस्य ॥ ९० ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

टेढ़े या टूटे. **रुग्णं भुग्ने (ऽथ) निशितक्ष्णुतशातानि तेजिते ।**

तीखे. पके. पु.स.न.पु.स.न.पु.स.न.पु.स.न. पु.स.न.

लज्जित. **(स्याद्वि) नाशोन्मुखं पक्वं ह्रीणह्रीतौ (तु) लज्जिते॥९१॥**

रुगिति—भुग्ने आविद्धे रुग्णं स्यात् । रुज्यते स्म 'रुजोभङ्गे' तौदादिकात्कर्मणि 'क्ते' "ओदितश्च" इति निष्ठा नत्वे, कुत्वे णत्वे च रुग्णम्, एवं भुज्यते स्म 'भुजो कौटिल्ये' अस्मात् कर्मणि 'क्ते' नत्वे तस्यासिद्धत्वाच्चोः कुरिति कुत्वे च भुग्नं स्यादिति द्वे वक्रस्य । अथेति—तेजिते तीक्ष्णीकृते निशितक्ष्णुतशातानि स्युः । निशायतेस्म "शो तनूकरणे' दैवादिकात्कर्मणि 'क्ते' "शाच्छोरिति" वेत्वे च निशितम्, पक्षे निशातमपि, क्ष्णूयतेस्म 'क्ष्णुतेजने' आदादिकात्कर्मणि 'क्ते' क्ष्णुतम्, शायतेस्म कर्मणि'क्ते' शातम्, तेज्यतेस्म 'तिज निशाने' चुरादिण्यन्तात्कर्मणि 'क्ते' तेजितं स्यादिति चत्वारि शाणादिना तीक्ष्णीकृतस्य । विनशनम् 'भावे घञि' विनाशः उद्गतं मुखमारम्भोऽस्य उन्मुखम् विनाशे उन्मुखम् विनाशोन्मुखम्, पच्यतेस्म 'डुपचष् पाके' भौवादिकात्कर्मणि 'क्ते' "पचोवः" इति निष्ठा वत्वे च 'पक्वम्' स्यात् "पक्वं परिणते नाशाभिमुखे" ( इति हैमः ) इति द्वे विनाशोन्मुखस्य । लज्जिते लज्जासंजाते ह्रीतह्रीणौ स्याताम् । अह्रैषीत्—जिह्रेतिस्म वा 'ह्री लज्जायाम्' जौहोत्यादिकात्कर्तरिनिष्ठा प्रत्यये, "नुदविदेति" वा नत्वे, णत्वे च ह्रीणः, नत्वाभावे तु ह्रीतः, लज्जाजातास्येति विग्रहे तारकादित्वादितचि लज्जितः स्यादिति त्रीणि लज्जितस्य ॥ ९१ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

वरण किये. **वृते (तु) वृत्तवावृत्तौ संयोजित उपाहितः ।**

मिलाये. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

मिलने योग्य. बहते हुए. **प्राप्यं गम्यं समासाद्यं स्यन्नं रीणं स्रुतं स्नुते ॥ ९२ ॥**

व्रिति—वृते वरणीकृते वृत्तवावृत्तौ स्याताम् । व्रियतेस्म 'वृञ् वरणे' क्रैयादिकात्कर्मणि 'क्ते' वृतः, तेन "पौरोहित्याय भगवान् वृतः काव्यः किलासुरैः" इति प्रयोगः संगच्छते । वृत्यतेस्म 'वृतु वरणे' दैवादिकात्कर्मणि 'क्ते' वृत्तः "वृत्तं वृत्तौ दृढे मृते । चरित्रे वर्तुले छन्दः स्वतीताधीतयोर्वृते" (इति हेमचन्द्रः) केचित्तु 'वावृतु वरणे' दैवा-

दिकं पठन्ति तन्मते श्राव्वृत्यतेस्म कर्मणि 'क्ते' वावृत्तः स्यादिति त्रीणि स्वयंवरादौ स्वीकृतवरादेः । संयोज्यतेस्म 'युजिर् योगे' रौधादिकारायन्तात्कर्मणि 'क्ते' संयोजितः, उपाधीयतेस्म 'डुधाञ् धारणपोषणयोः' जौहोत्यादिकात्कर्मणि 'क्ते' "दधातेर्हिः" इति ह्यादेशे च उपाहितः "उपाहितां वक्षसि पीवरस्तने" ( इति भारविः ) "उपाहितो नलोत्पाते पुमानारोपिते त्रिषु" ( इति मेदिनी ) इति द्वे मेलितस्य । प्राप्यते "आप्लृ व्याप्तौ" सौवादिकात् "ऋहलोरिति" ण्यति, प्राप्यम्, गम्यते 'गम्लृगतौ' भौवादिकात् "पोरदुपधात्" इति 'यति' गम्यम्, समासाद्यते 'षद्लृ विशरणादौ' भौवादिकात् कर्मणि 'ण्यति' समासाद्यं स्यादिति त्रीण्यासुंशक्यस्य । स्यन्दतेस्म, 'स्यन्दू प्रस्रवणे' भौवादिकात्कर्तरि, 'क्ते' " रदाभ्यामिति " निष्ठा नत्वे च स्यन्नम्, रीयतेस्म 'रीङ् प्रस्रवणे' दैवादिकात्कर्तरि, 'क्ते' "स्वादयश्रोदितः" इति नत्वे च रीणम्, स्रवतिस्म स्रूयतेस्म वा 'स्रु गतौ' भौवादिकात्कर्तरि, कर्मणि वा 'क्ते' स्रुतम् , स्नौतिस्म' 'ष्णु प्रस्रवणे' आदादिकात्कर्तरि 'क्ते' स्नुतं स्यादिति चत्वारि प्रस्नुतस्य ॥ ६२ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

जोड़े हुए **संगूढः(स्या)त्संकलितोऽवगीतः ख्यातगर्हणः ।**

निन्दित पु.स.न. पु.स.न. पु.स.न. पु.स.न.

नानाभांति **विविधः (स्या)द्बहुविधो नानारूपः पृथग्विधः ॥६३ ॥**

समिति—संगुह्यतेस्म 'गुहू संवरणे' भौवादिकात्कर्मणि 'क्ते' ढत्वे, धत्वे, ष्टुत्वे, ढ लोपे, दीर्घे च संगूढः, संकल्यतेस्म 'कल संख्याने' भौवादिकात्कर्मणि 'क्ते' संकलितः स्यादिति द्वे अङ्कान्तरेणैकीकृतस्याङ्कादेः । अवगीयते निन्द्यतेस्म 'गै शब्दे' भौवादिकात्कर्मणि 'क्ते' "घुमास्थेति" ईदादेशे च अवगीतः, "अवगीतं तु निर्वादे दृष्टगर्हितयोरपि" ( इति विश्वः ) ख्याता गर्हणायस्येति ख्यातगर्हणःस्यादिति द्वे प्रसिद्धनिन्दस्य । विचित्राविधा यस्येति विविधः, बह्वोविधा यस्येति बहुविधः,नानारूपमस्येति नानारूपः, पृथग्विधायस्येति पृथग्विधःस्यादिति चत्वारि नानाप्रकारस्य ॥ ६३ ॥

धिक्कारे पु.स.न. पु.स.न. पु.स.न. पु.स.न.

घिसे हुए **अवरीणोधिक्कृत ( श्चाप्य ) वध्वस्तोऽवचूर्णितः ।**

सहाय किये पु.स.न. पु.स.न. पु.स.न. पु.स.न.

बाजते **अनायासकृतं फाण्टं स्वनितं ध्वनितं(समे) ॥ ६४ ॥**

अवेति—अवरीयतेस्म, 'रीङ् स्रवणे' दैवादिकात्कर्मणि'क्ते' स्वादीनामोदित्वान्निष्ठा नत्वे च अवरीणः, धिगकारि—धिक्क्रियतेस्म वा धिक्कृतः स्यादिति द्वे निन्दितमात्रस्य । अवध्वस्यतेस्म 'ध्वंसुगतौ' भौवादिकात्कर्मणि'क्ते' अवध्वस्तः"अवध्वस्तं परित्यक्ते निन्दितेऽप्यवचूर्णिते" ( इति विश्वः) । अपध्वस्यतेस्म विग्रहे तु कर्मणि 'क्ते' अपध्वस्तोऽपि,

---

१ केचित्तु वाग्रहणं वृतु धातोराद्यवयवमिच्छन्ति। ततोवावृत्यमानासौ रामशालां न्यविक्षत (इति भट्टिः) ॥

अवचूर्ण्यतेस्म "सत्यापेति" णयन्तात्कर्मणि 'क्ते' 'चूर्णपेषे' चौरादिकात्कर्मणि 'क्ते' वा अवचूर्णितः स्यादिति द्वे क्षिप्तसुधादिचूर्णस्य । अनायासेन कृतं फाण्टं स्यात् अथवा आयसनमायासस्तस्माद्भिन्नोऽनायासस्तेन कृतम् अनायासकृतम् , फण्यतेस्म 'फण गतौ' भौवादिकात्कर्मणि 'क्ते' फाण्टम् "क्षुब्धस्वान्तध्वान्तेति साधुरिति द्वे अनायाससाध्यकषायविशेषस्य । स्वन्यतेस्म 'स्वन शब्दे' भौवादिकाद्भावेकर्मणि वा 'क्ते' स्वनितम् ध्वन्यतेस्म 'ध्वन शब्दे' भौवादिकाद्भावे कर्मणि वा 'क्ते' ध्वनितम् उभे समे समानार्थे स्यातामिति द्वे कृतशब्दस्य ॥ ६४ ॥

बँधे हुए. अच्छे पके. पके घी आदि.

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
**बद्धे संदानितं मूतमुद्दितं संदितं सितम् ।**
पु.स.न. पु.स.न. १ पु.स.न.
**निष्पक्वं क्वथितं(पाके क्षीराज्यपयसां) श्रृतम् ॥ ६५ ॥**

बेति—बध्यतस्म 'बन्ध बन्धने' क्रैयादिकात्कर्मणि 'क्ते' बद्धम्, संदान्यतेस्म 'दान खण्डने' भौवादिकात्कर्मणि 'क्ते' संदानितम्, मूयतेस्म 'मूङ् बन्धने' भौवादिकात्कर्मणि 'क्ते' मूतम् मुकुटमते तु 'मुर्व बन्धने' भौवादिकात्कर्मणि 'क्ते' "राल्लोपः" इतिवलोपे' "हलिचेति" दीर्घे, निष्ठा नत्वे च मूर्णमपि, उद्दीयते "दो अवखण्डने" दैवादिकात्कर्मणि 'क्ते' "द्यतिस्यतीति" इत्वे च उद्दितम्' एवं संदीयते कर्मणि 'क्ते' सन्दितम्, सीयतेस्म 'षिञ् बन्धने' सौवादिकात्कर्मणि 'क्ते' सितम्' स्यादिति षड्बद्धस्य । निश्चयेन पक्वम्, निष्पक्वम्, क्वथ्यतेस्म 'क्वथे निष्पाके' भौवादिकात्कर्मणि 'क्ते' क्वथितं स्यादिति द्वे निष्पक्वस्य । क्षीरं दुग्धम्, आज्यं घृतम् पयो जलम् तेषां पाके श्रृतं स्यात् । श्रायतेस्म 'श्रा पाके' आदादिकात्कर्मणि 'क्ते' श्रृतम् 'श्रृतं पाके' इति साधु इत्येकं दुग्धाज्यादि पाकस्य ॥ ६५ ॥

बुझे. पवनरहित. पके. हगे. मूते.

पु.स.न. पु.स.न.
**निर्वाणो(मुनिवह्न्यादौ) निर्वात(स्तु गतानिले) ।**
पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.
**पक्वं परिणते गूनं हन्ने मीढं(तु) मूत्रिते ॥ ६६ ॥**

निरिति—मुनिवह्न्यादौ निर्वाणः स्यात् । निर्वातिस्म 'वा गतिगन्धनयोः' आदादिकात् "गत्यर्थेति" कर्तरि 'क्ते' निर्वाणः "निर्वाणोऽवाते" इति साधुः । यथा निर्वाणो मुनिः निर्मुक्तः, निर्वाणो वह्निः शान्त इत्यर्थः । आदिना निर्वाणोहस्ती निमग्नइत्यर्थः । "निर्वाणमस्तंगमने निर्वृतौ गजमज्जने । संगमेऽप्यपसर्गे च" ( इति विश्वः ) इत्येकं निर्मुक्ताद्यस्य । गतानिले गतश्चासावनिलश्च तस्मिन् निर्वातः स्यात् । निर्ववाविति निर्वातः यथा ( निर्वातो वातः ) इत्येकं गतानिलस्य । परिणते पक्व स्यात् । अपाचीति पक्वम्, परिणमतिस्म 'णम् प्रह्वत्वे' भौवादिकात् कर्तरि 'क्ते'

१ "क्षीरं पानीयदुग्धयोः" ( इति हैमः ) " पयःक्षीरं पयोजलम् " ( इत्यनेकार्थमञ्जरी ) ॥

परिणतं स्यादिति द्वे परिणामं प्राप्तस्य । हन्ने गूनं स्यात्। गूयते स्म 'गु पुरीषोत्सर्गे' तौदादिकात्कर्मणि 'क्ते' "दुग्वो दीर्घश्च" इति निष्ठानत्वे दीर्घे च गूनम्, हद्यते स्म 'हद पुरीषोत्सर्गे' भौवादिकात्कर्मणि 'क्ते' हन्नं स्यादिति द्वे गुदनिष्काशितपुरीषस्य । मूत्रिते तु मीढं स्यात्। मिह्यते स्म 'मिह् सेचने' अस्माद्भौवादिकात्कर्मणि 'क्ते' ढत्वे, धत्वे, ष्टुत्वे, ढलोपे, दीर्घे च मीढम्, मूत्र्यते स्म 'मूत्र प्रस्रावे' चौरादिकात्कर्मणि 'क्ते' इडागमे च मूत्रितं स्यादिति द्वे उपस्थनिष्काशितमूत्रस्य ॥ ९६ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

पोढे किये क्षमावान् वान्त किये इन्द्रियजित् शान्त किये. मांगे

**पुष्टे (तु) पुषितं सोढे क्षान्तमुद्वान्तमुद्गते ।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

**दान्त(स्तु) दमिते शान्तः शमिते प्रार्थितेऽर्दितः ॥९७॥**

ष्विति—पुष्टे तु पुषितं स्यात्। पुष्यते स्म 'पुष पुष्टौ' दैवादिकात्कर्मणि 'क्ते' इडभावे च 'पुष्टम्' स्यात् एवं भौवादिकात्कर्मणि 'क्ते' इडागमे च 'पुषितम्' स्यादिति द्वे कृतपोषणस्य । सोढे क्षान्तं स्यात्। सहते, सह्यते स्म वा 'षह मर्षणे' भौवादिकात्कर्तरि, कर्मणि वा 'क्ते' "सहिवहोरोदवर्णस्य" इत्यवर्णस्यौदादेशे च सोढम्, क्षमते, क्षम्यते स्म वा 'क्षमूष् सहने' भौवादिकात्कर्तरि, कर्मणि वा 'क्ते' "अनुनासिकस्येति" दीर्घे च 'क्षान्तम्' स्यादिति द्वे क्षान्तस्य । उद्गते उद्वान्तं स्यात्। उद्वम्यते स्म 'टुवमु उद्गिरणे' भौवादिकात्कर्मणि 'क्ते' दीर्घे च उद्वान्तम्, मुकुटमते तु उद्धायते स्म 'ओहाङ् गतौ' जौहोत्यादिकात्कर्तरि, कर्मणि वा 'क्ते' निष्ठानत्वे च उद्धानम् उद्वानमिति वा कचित्पाठस्तत्र 'ओवै शोषणे' भौवादिकात्कर्मणि 'क्ते' निष्ठानत्वे च उद्वानम्, उद्गम्यते स्म 'गम्लृ गतौ' भौवादिकात्कर्मणि 'क्ते' अनुनासिकलोपे च 'उद्गतम्' स्यादिति द्वे वमित्वात्त्यक्तस्यान्नादेः । दमिते दान्तः स्यात्। दम्यते स्म 'दमु उपशमे' दैवादिकाण्णिजन्तात्कर्मणि 'क्ते' दान्तः "वादान्तेति" साधुः । पक्षे इडागमे, णिलोपे च दमितः "दान्तस्तु दमितेऽपि स्यात्तपःक्लेशसहे त्रिषु" (इति मेदिनी) इति द्वे कृतदमनस्य वृषभादेः । शमिते शान्तः स्यात्। शम्यते स्म 'शमु उपशमे' दैवादिकाण्णिजन्तात्कर्मणि 'क्ते' शान्तः "शान्तोऽतिमुक्तरसयोः पुंसि त्रिषु शमान्विते । अव्ययं धारणे शान्तम्" (इति मेदिनी) पक्षे शमितः णयन्ताभावे तु शान्तो रोगः निवृत्त इत्यर्थः स्यादिति द्वे शान्तस्य । प्रार्थिते अर्दितः स्यात्। प्रार्थ्यते स्म 'अर्थ उपयाच्ञायाम्' चौरादिकात्कर्मणि 'क्ते' इडागमे च प्रार्थितः, अर्द्यते स्म 'अर्द गतौ याचने च' भौवादिकात्कर्मणि 'क्ते' इडागमे च अर्दितः "अर्दितं याचितेऽपि स्याद्वातव्याधौ च हिंसिते" (इति मेदिनी) इति द्वे प्रार्थितस्य ॥ ९७ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

जानेहुए ढँके पूजित पूर्ण क्लेशित. समाप्त

**ज्ञप्त(स्तु) ज्ञपिते छन्नश्छादिते पूजितेऽञ्चितः ।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

**पूर्ण(स्तु) पूरिते क्लिष्टः क्लिशितेऽवसिते सितः[1] ॥ ९८ ॥**

---

१ "सितस्त्ववसिते बद्धे वर्णे सिता तु शर्करा" (इति हैमः)॥

ज्ञप्तेति—ज्ञप्यते स्म 'ज्ञा अवबोधने' मारणादौ वर्तमानान्मित्संज्ञकाण्णयन्तात्कर्मणि 'क्ते' "वादान्तेति" निपातिते च ज्ञप्तः, पक्षे इडागमे, णिलोपे च ज्ञपितः स्यादिति द्वे ज्ञपितस्य । छादिते अपवारिते छन्नः स्यात् । छाद्यते स्म 'छद अपवारणे' चौरादिकाण्णयन्तात्कर्मणि 'क्ते' "वादान्तेति" निपातिते च छन्नः, "छन्नं रहश्छादितयोः" (इति हैमः) पक्षे इडागमे णिलोपे च छादितः स्यादिति द्वे छादितस्य । पूजितेऽञ्चितः स्यात् । पूज्यते स्म 'पूज पूजायाम्' चौरादिकाण्णयन्तात्कर्मणि 'क्ते' पूजितः यथा "नरदेवेन पूजितः" अञ्च्यते स्म 'अञ्चु पूजायाम्' भौवादिकात्कर्मणि 'क्ते' "अञ्चेः पूजायाम्" इतीडागमे, "नाञ्चेः पूजायाम्" इति नलोपाभावे च अञ्चितः, "अर्चितः" इति पाठे तु 'अर्च पूजायाम्' भौवादिकात्कर्मणि 'क्ते' अर्चितोऽपि स्यादिति द्वे पूजितस्य । पूरिते पूर्णः स्यात् । पूर्य्यते स्म 'पूरी आप्यायने' दैवादिकाण्णयन्तात्कर्मणि 'क्ते' "वादान्तेति" निपातिते च पूर्णः "पूर्णः कृत्स्ने च पूरिते" (इति हैमः) पक्षे इडागमे, णिलोपे च पूरितः स्यादिति द्वे पूर्णस्य । क्लिशिते क्लिष्टः स्यात् । क्लिश्यते स्म 'क्लिशू विबाधने' क्रैयादिकात्कर्मणि 'क्ते' "क्लिशः क्त्वानिष्ठयोः" इति वेट्कत्वादिडभावे "व्रश्चेति" षत्वे, ष्टुत्वे च क्लिष्टः, इडागमे तु क्लिशितः स्यादिति द्वे प्राप्तक्लेशस्य । अवसिते सितः स्यात् । अवस्यति स्म अवसीयते स्म वा 'षोन्तकर्मणि' दैवादिकात्कर्तरि कर्मणि वा 'क्ते' आत्त्वे "द्यतिस्यतीति" इत्त्वे च अवसितः एवं केवलादपि कर्तरि, कर्मणि वा 'क्ते' सितः स्यादिति द्वे समाप्तस्य ॥ ९८ ॥

पु.स.न. पु.स.न.पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

जले हुए, सूक्ष्मकिये, छेदे, विचारे

**प्रुष्टप्लुष्टोषिता (दग्धे) तष्टत्वष्टौ (तनूकृते) ।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न.पु.स.न. पु.स.न.

**वेधितच्छिद्रितौ (विद्धे) विन्नवित्तौ (विचारिते) ॥९९॥**

प्रुष्टेति—दग्धे भस्मीकृते प्रुष्टप्लुष्टोषिताः स्युः । प्रुष्यते स्म 'प्रुष दाहे' भौवादिकात्कर्मणि 'क्ते' "यस्य विभाषेति" इडभावे च प्लुष्टः, एवं 'प्लुष दाहे' भौवादिकात्कर्मणि 'क्ते' इडभावे च प्लुष्टः, उष्यते स्म 'उष दाहे' भौवादिकात्कर्मणि 'क्ते' इडागमे च उषितः "उषितं व्युषिते प्लुष्टे" (इति हैमः) दह्यते स्म 'दह भस्मीकरणे' भौवादिकात्कर्मणि 'क्ते' घत्वे, धत्वे, गत्वे च दग्धः स्यादिति चत्वारि भस्मीकृतस्य । तनूकृते तष्टत्वष्टौ स्याताम् । तक्ष्यते स्म 'तक्षू तनूकरणे' भौवादिकात्कर्मणि 'क्ते' इडभावे, "स्कोरिति" कलोपे, ष्टुत्वे च तष्टः, एवं त्वक्ष्यते स्म 'त्वक्षू तनूकरणे' कर्मणि 'क्ते' त्वष्टः, अतनुस्तनुरकारि, 'डुकृञ् करणे' तानादिकात्कर्मणि 'क्ते' च्वौ, दीर्घे

---

१ "द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गमिति भागवतम्" ॥

च तनूकृतः स्यादिति त्रीणि तष्टस्य । यथा तष्टं काष्ठं शस्त्रेणाल्पीकृतमित्यर्थः । विद्धे वेधितच्छिद्रितौ स्याताम् । वेध्यते स्म 'विध विधाने' तौदादिकाण्ण्यन्तात्कर्मणि 'क्ते' वेधितः, छिद्र्यते स्म 'छिद्र वेधे' अदन्तचौरादिकात्कर्मणि 'क्ते' छिद्रितः, विध्यते स्म 'व्यध ताडने' दैवादिकात्कर्मणि 'क्ते' "ग्रहिज्येति" संप्रसारणे च विद्धःस्यात् "विद्धं स्याद्वेधिते क्षिप्ते सदृशे बाधिते त्रिषु" (इति विश्वः) इति त्रीणि वेधितस्य । विचारिते विन्नवित्तौ स्याताम् । विद्यते स्म 'विद विचारणे' रौधादिकात्कर्मणि 'क्ते' "नुदविदेति" वा नत्वे विन्नः "विन्नं विचारिते लब्धे" (इति विश्वः) नत्वाभावे वित्तः "वित्तं क्लीबे धने वाच्यलिङ्गं ख्याते विचारिते" (इति मेदिनी) विचार्यते स्म 'चर गतौ' भौवादिकाण्ण्यन्तात्कर्मणि 'क्ते' इडागमे, णिलोपे च विचारितः स्यादिति त्रीणि प्राप्तस्य विचारितस्य वा ॥ ९९ ॥

निस्तेज पि० (निष्प्रभे [पु.स.न.]) विगतारोकौ [पु.स.न. पु.स.न.] (विलीने [पु.स.न.]) विद्रुतद्रुतौ [पु.स.न. पु.स.न.] ।

छला सिद्ध हुआ फाड़ागया (सिद्धे [पु.स.न.]) निर्वृत्तनिष्पन्नौ [पु.स.न. पु.स.न.] (दारिते [पु.स.न.]) भिन्नभेदितौ [पु.स.न. पु.स.न.] ॥१००॥

नीति—निष्प्रभे निस्तेजसि विगतारोकौ स्याताम् । निष्क्रान्ता प्रभाऽस्मादिति निष्प्रभः, विगच्छति स्म 'गम्लृ गतौ' भौवादिकाद् "गत्यर्थेति" कर्तरि 'क्ते' अनुनासिकलोपे च विगतः, "विगतौ वीतनिष्प्रभौ" (इति रुद्रः) रोचनम् 'रुच दीप्तौ' भौवादिकाद्भावे 'घञि' रोकः, न रोकोऽस्येत्यरोकः स्यादिति त्रीणि निष्प्रभस्य । विलीने विद्रुतद्रुतौ[1] स्याताम् । विलीयते स्म 'लीङ् श्लेषणे' दैवादिकात्कर्तरि 'क्ते' स्वादीनामोदित्त्वान्निष्ठानत्वे च विलीनः, विद्रवति स्म 'द्रु गतौ' भौवादिकात्कर्तरि 'क्ते' विद्रुतः, एवं केवलादपि कर्तरि 'क्ते' द्रुतः स्यादिति त्रीणि स्वतः प्राप्तद्रवीभावस्य । सिद्धे निर्वृत्तनिष्पन्नौ स्याताम् । सिध्यति स्म 'षिधु संराद्धौ' दैवादिकाद् "गत्यर्थेति" कर्तरि 'क्ते' सिद्धः "सिद्धो व्यासादिके देवयोनौ निष्पन्नमुक्तयोः । नित्ये प्रसिद्धे" (इति हेमः) निर्वर्तते स्म 'वृतु वर्तने' कर्तरि 'क्ते' इडभावे च निर्वृत्तः, निष्पद्यते स्म 'पद गतौ' दैवादिकात्कर्तरि 'क्ते' निष्ठानत्वे च निष्पन्नः स्यादिति त्रीणि सिद्धावस्थां प्राप्तस्य । दारिते भिन्नभेदितौ स्याताम् । दार्यते स्म 'दृ विदारणे' क्रैयादिकाण्ण्यन्तात्कर्मणि 'क्ते' इडागमे, णिलोपे च दारितः, अभेदीति 'भिदिर् विदारणे' रौधादिकात्कर्मणि 'क्ते' "रदाभ्यामिति" निष्ठानत्वे निष्ठापेक्षया पूर्वस्य दस्यापि नत्वे च भिन्नः, एवं चौरादिकाण्ण्यन्तात्कर्मणि 'क्ते' इडागमे, णिलोपे च भेदितः स्यादिति त्रीणि विदारितस्य ॥ १०० ॥

---

१ "द्रुतं शीघ्रविलीनयोः" (इति हेमः) ॥

पु.स.न. पु.स.न. पु.स.न.

बुने वस्त्र आदि **ऊतं स्यूतमुतं ( चेति त्रितयं तन्तुसन्तते )।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

नमस्कार किये **स्यादर्हितेनमस्यितनमसितमपचायितार्चितापचितम्**

वेति—तन्तुसन्तते ऊतं, स्यूतम्, उतं चेति त्रितयं स्यादिति। ऊय्यते स्म, 'ऊयी तन्तुसन्ताने' भौवादिकात्कर्मणि 'क्ते' "लोपो व्योर्वलीति" यलोपे च ऊतम्, सीव्यते स्म। 'षिवु तन्तुसन्ताने' दैवादिकात्कर्मणि 'क्ते' "छ्वो–" रित्यूठि, यणादेशे च स्यूतम्, ऊयते स्म 'वेञ् तन्तुसन्ताने' भौवादिकात्कर्मणि 'क्ते' "ग्रहिज्येति" संप्रसारणे च उतम्, सन्तन्यते स्म कर्मणि 'क्ते' "अनुदात्तोपदेशेति" नलोपे च सन्ततम् तन्तुभिः सन्ततम् "कर्तृकरणे कृता बहुलमिति" समासे तन्तुसन्ततम् स्यादिति चत्वारि स्यूतस्य। अर्ह्यते स्म 'अर्ह पूजायाम्' भौवादिकात्कर्मणि 'क्ते' इडागमे च अर्हितम्, नमःकृतम् "नमोवरीति" क्यचि, तदन्तात्कर्मणि 'क्ते' "क्यस्य विभाषेति" यलोपाभावे, इडागमे च नमस्यितम्, यलोपपक्षे तु नमसितम्, अपचाय्यते स्म 'चायृ पूजानिशामनयोः' भौवादिकात्कर्मणि 'क्ते' इडागमे च अपचायितम्, अर्च्यते स्म 'अर्च पूजायाम्' भौवादिकात्कर्मणि 'क्ते' अर्चितम्, अपचीयते स्म 'चिञ् चयने' सौवादिकात्कर्मणि 'क्ते' "अपचितश्चेति" चायतेर्निपातिते वा अपचितम् स्यादिति षड् नमस्कृतस्य ॥ १०१ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न.

पूजा किये **वरिवसिते वरिवस्यितमुपासितं चोपचरितं (च)।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

तपे या तपाये **सन्तापितसन्तप्तौ धूपितधूपायितौ (च) दून(श्च) १०२॥**

वेति—वरिवसिते वरिवः कृते वरिवस्यितमुपासितमुपचरितं च स्यात् वरिवः कृतम् "नमो वरिवः" इति क्यचि, तदन्तात्कर्मणि 'क्ते' "क्यस्य विभाषेति" यलोपे च वरिवसितम्, यलोपाभावे तु वरिवस्यितम्, उपास्यते स्म 'आस उपवेशने' कर्मणि 'क्ते' उपासितम्, उपचर्यते स्म 'चर गतौ' भौवादिकात्कर्मणि 'क्ते' उपचरितं स्यादिति चत्वारि पूजितस्य। संतापयति स्म, संताप्यते स्म वा 'तप दाहे' चौरादिकात्कर्तरि, कर्मणि वा 'क्ते' संतापितः, संतपति, संतप्यते स्म वा 'तप संतापे' भौवादिकात्कर्तरि, कर्मणि वा 'क्ते' संतप्तः, धूपायति, धूप्यते स्म वा 'धूप संतापे' भौवादिकात्कर्तरि कर्मणि वा 'क्ते' धूपितः एवं "आयादयः--" इति वैकल्पिकत्वाद् धूपाय्यते स्म धूपायितः, दुनोति स्म, दूयते स्म वा 'टुदु उपतापे' सौवादिकात्कर्तरि, कर्मणि वा 'क्ते' "दुग्वो दीर्घश्च" इति निष्ठानत्वे च दूनः स्यादिति पञ्च धूपितस्य ॥ १०२ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

हर्षित (हृष्टे) मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः ।

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

कटे हुए छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम् ॥१०३॥

हृष्टेति—हृष्टे मत्तः, तृप्तः, प्रह्लन्नः, प्रमुदितः, प्रीतश्च स्यात्। हर्षति स्म, 'हृषु अलीके' भौवादिकात् हृष्यति स्म 'हृष तुष्टौ' दैवादिकाद्वा कर्तरि 'क्ते' "हृषेर्लोमसु" इति विकल्पेट्कत्वाद् "यस्य विभाषेति" इडभावे च हृष्टः, "हृष्टो रोमाञ्चितेऽपि च। जातहर्षे प्रतिहते विस्मितेऽप्यभिधेयवत्"( इति मेदिनी ) माद्यति स्म 'मदी हर्षे' दैवादिकात्कर्तरि 'क्ते' "नध्याख्येति" नत्वाभावे च मत्तः, तृप्यति स्म 'तृप प्रीणने' दैवादिकात्कर्तरि 'क्ते' तृप्तः, प्रह्लादते स्म 'ह्लादी सुखे च' भौवादिकात्कर्तरि 'क्ते' "रदाभ्यामिति" निष्ठानत्वे, "ह्लादो निष्ठायामिति" ह्रस्वे च प्रह्लन्नः, प्रमोदते स्म 'मुद हर्षे' भौवादिकात्कर्तरि 'क्ते' प्रमुदितः, प्रीयते स्म 'प्रीङ् प्रीणने' दैवादिकात्कर्तरि 'क्ते' प्रीतः स्यादिति षट् हर्षितस्य । छिद्यते स्म 'छिदिर् द्वैधीकरणे' रौधादिकात्कर्मणि 'क्ते' निष्ठानत्वे च छिन्नम्, छायते स्म 'छो छेदने' दैवादिकात्कर्मणि 'क्ते' छातम्, लूयते स्म 'लूञ् छेदने' क्रैयादिकात्कर्मणि 'क्ते' "ल्वादिभ्य इति" नत्वे च लूनम्, कृत्यते स्म 'कृती छेदने' तौदादिकात्कर्मणि 'क्ते' कृत्तम् दायते स्म 'दाप् लवने' आदादिकात्कर्मणि 'क्ते' दातम्, दीयते स्म 'दो अवखण्डने' दैवादिकात्कर्मणि 'क्ते' "द्यतिस्यतीति" इत्वे च दितम्,अच्छायीति कर्मणि 'क्ते' "शाच्छोरन्यतरस्याम्" इतीत्वे च छितम्, वृश्च्यते स्म 'ओव्रश्चू छेदने' तौदादिकात्कर्मणि 'क्ते' "ग्रहिज्येति" संप्रसारणे, "ओदितश्च" इति निष्ठानत्वे नत्वस्यासिद्धत्वाद् "व्रश्चेति" षत्वे प्राप्ते "निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः" इति सिद्धत्वात्षत्वाभावे "स्कोरिति" सलोपे, "चोः कुरिति" कुत्वे, "अट्कुप्वाङिति" णत्वे च 'वृक्णम्' स्यादित्यष्टौ छिन्नस्य ॥ १०३ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

चुये स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम् ।

पु.स.न.पु.स.न.पु.स.न. पु.स.न. पु.स.न. पु.स.न.

मिले लब्धं प्राप्तं विन्नं भावितमासादितं (च) भूतं (च)॥१०४॥

स्रेति—स्रंसते स्म, स्रस्यते स्म वा 'स्रंसु ध्वंसु भ्रंशु अवस्रंसने' भौवादिकात्कर्तरि, कर्मणि वा 'क्ते' इडभावे च स्रस्तम्, ध्वंसते, ध्वस्यते स्म वा कर्तरि, कर्मणि वा 'क्ते' ध्वस्तम्, एवं भ्रंशते, भ्रश्यते स्म वा कर्तरि, कर्मणि वा 'क्ते' इडभावे, नलोपे, "व्रश्चेति" षत्वे, ष्टुत्वे च भ्रष्टम्, स्कन्दति, स्कद्यते स्म वा 'स्कन्दिर् गत्यादौ' भौवादिकात्कर्तरि कर्मणि वा 'क्ते' नलोपे, "रदाभ्यामिति" निष्ठानत्वे च स्कन्नम्, पद्यते स्म

१ छिन्नं कृत्ते त्रिलिङ्गयां स्याद्गुडूच्यामपि योषिति" ( इति मेदिनी ) ॥

' पद गतौ ' दैवादिकात्कर्तरि, कर्मणि वा 'क्ते' नत्वे च पन्नम् , च्यवते, च्यूयते स्म वा ' च्युङ् गतौ ' भौवादिकात्कर्तरि, कर्मणि वा ' क्ते ' च्युतम्, गल्यते स्म ' गल स्रवणे ' चौरादिकात्कर्तरि, कर्मणि वा 'क्ते' इडागमे च ' गलितम् ' स्यादिति सप्त च्युतस्य । लभ्यते स्म ' डुलभष् प्राप्तौ ' भौवादिकात्कर्मणि 'क्ते' धत्वे बत्वे च लब्धम्, प्राप्यते स्म ' आप्लृ व्याप्तौ ' सौवादिकात्कर्मणि 'क्ते' प्राप्तम्, विद्यते स्म ' विद्लृ लाभे' तौदादिकात्कर्मणि 'क्ते' निष्ठानत्वे च विन्नम्, भाव्यते स्म ' भू प्राप्तौ' चौरादिकाण्ण्यन्तात्कर्मणि 'क्ते' भावितम्, आसाद्यते स्म ' षद्लृ विशरणादौ ' तौदादिकाण्ण्यन्तात्कर्मणि 'क्ते' इडागमे, णिलोपे च आसादितम्, भूयते स्म, चुरादीनां णिज्वैकल्पिकत्वाण्णिचोऽभावपक्षे कर्मणि 'क्ते' 'भूतम्' स्यादिति षट् प्राप्तस्य ॥ १०४ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

ढूंढे **अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम् ।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

गीले **आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं(च)१०५॥**

अन्वयिति—अन्वेष्यते स्म ' एष गतौ ' भौवादिकात् ' इष गतौ ' दैवादिकाण्ण्यन्ताद्वा कर्मणि 'क्ते' अन्वेषितम्, गवेष्यते स्म ' गवेष मार्गणे' चौरादिकात्कर्मणि 'क्ते' इडागमे च गवेषितम्, अन्विष्यते स्म ' इषु इच्छायाम् ' तौदादिकात्कर्मणि ' क्ते ' " यस्य विभाषेति " इडभावे च अन्विष्टम्, मार्ग्यते स्म ' मार्ग अन्वेषणे ' चौरादिकात्कर्मणि 'क्ते' मार्गितम्, मृग्यते स्म ' मृग अन्वेषणे ' चौरादिकात्कर्मणि 'क्ते' मृगितं स्यादिति पञ्च अन्वेषितस्य । अर्द्यते स्म ' अर्द गतौ याचने च ' भौवादिकात्कर्मणि " अर्देर्दीर्घश्च " इति रकि, दीर्घे च आर्द्रम् " आर्द्रा नक्षत्रभेदे स्यात्स्त्रियां क्लिन्नेऽभिधेयवत् " ( इति मेदिनी ) आर्द्रेण सह वर्तमानं सार्द्रम्, क्लिद्यति स्म ' क्लिदू आर्द्रीभावे' दैवादिकादकर्मकत्वात्कर्तरि 'क्ते' "रदाभ्यामिति" निष्ठानत्वे च क्लिन्नम्, तिम्यति स्म, ' तिम ष्टिम आर्द्रीभावे ' दैवादिकाद् " गत्यर्थाकर्मकेति " कर्तरि ' क्ते ' तिमितम्, एवं स्तिम्यति स्म अकर्मकत्वात्कर्तरि 'क्ते' स्तिमितम् " स्तिमितस्तरले क्लिन्ने " ( इति रुद्रः ) समुनत्ति स्म ' उन्दी क्लेदने ' रौधादिकादकर्मकत्वात्कर्तरि ' क्ते ' " नुदविदेति " वा निष्ठानत्वे च समुन्नम्, नत्वाभावे तु उनत्ति स्म कर्तरि 'क्ते' " श्वीदितो निष्ठायाम् " इतीडभावे च ' उत्तम् ' स्यादिति सप्त सार्द्रस्य ॥ १०५ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

रखाये **त्राणं त्रातं[1] रक्षितमवितं[2] गोपायितं गुप्तम् ।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

अपमानित **अवगणितमवमतावज्ञाते अवमानितं(च)परिभूते १०६**

---

१ तत्क्षयम् त्रैलोक्यमेतदखिलं रिपुनाशनेन त्रातं त्वया समरमूर्धनि तेपि हत्वा ( इति मार्कण्डेयः ) ॥
२ रक्षितं रामनामभिरिति ॥

त्रेति—त्रायते स्म, अत्रायीति वा 'त्रैङ् पालने' भौवादिकात्कर्मणि 'क्ते' "नुदविदेति" वा नत्वे च त्राणम् "त्राणं त्राते रक्षणे च त्रायमाणौषधावपि" ( इति हैमः ) नत्वाभावे तु त्रातम् रक्ष्यते स्म 'रक्ष पालने' भौवादिकात्कर्मणि 'क्ते' इडागमे च रक्षितम्, अव्यते स्म 'अव रक्षणादौ' भौवादिकात्कर्मणि 'क्ते' इडागमे च अवितम्, गोपाय्यते स्म 'गुपू रक्षणे' भौवादिकाद् "आयादय" इति आयान्तात्कर्मणि 'क्ते' गोपायितम्, आयाभावे तु गुप्यते स्म कर्मणि 'क्ते' गुप्तं स्यात् "गुप्तं गूढे त्राते" ( इति हैमः ) इति षट् रक्षितस्य। अवगण्यते स्म 'गण संख्याने' चौरादिकात्कर्मणि 'क्ते' अवगणितम्, अवमन्यते स्म 'मन ज्ञाने' दैवादिकात्कर्मणि 'क्ते' "अनुदात्तोपदेशेति" नलोपे च अवमतम्, अवज्ञायते स्म 'ज्ञा अवबोधने' क्रैयादिकात्कर्मणि 'क्ते' अवज्ञातम्, अवमान्यते स्म 'मान पूजायाम्' भौवादिकात्कर्मणि 'क्ते' अवमानितम्, परिभूयते तिरस्क्रियते स्म 'भू सत्तायाम्' कर्मणि 'क्ते' परिभूतं स्यादिति पञ्चावमानितस्य ॥ १०६ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

त्यागेहुए **त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टम्।**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

कहेहुए **उक्तंभाषितमुदितंजल्पितमाख्यातमभिहितंलपितम्॥**

त्येति—त्यज्यते स्म 'त्यज हानौ' भौवादिकात्कर्मणि 'क्ते' इडभावे, "चोः कुरिति" कुत्वे, "खरि चेति" चर्त्वे च त्यक्तम्, हीयते स्म 'ओहाक् त्यागे' जौहोत्यादिकात्कर्मणि 'क्ते' "घुमास्थेति" ईत्वे, निष्ठानत्वे च हीनम्, विधूयते स्म 'धुञ् कम्पने' सौवादिकात्कर्मणि 'क्ते' विधुतम्, समुज्झ्यते स्म 'उज्झ उत्सर्गे' तौदादिकात्कर्मणि 'क्ते' इडागमे च समुज्झितम्, धूयते स्म, 'धू विधूनने' तौदादिकात्कर्मणि 'क्ते' धूतम्, "धूतौ कम्पितभर्त्सितौ" (इति हेमचन्द्रः) उत्सृज्यते स्म उत्पूर्वकात् 'सृज विसर्गे' अस्मात्तौदादिकात्कर्मणि 'क्ते' "व्रश्चेति" षत्वे, ष्टुत्वे च 'उत्सृष्टम्' स्यादिति षट् त्यक्तस्य। उच्यते स्म 'वच परिभाषणे' आदादिकाद् ब्रूञो वचेर्वा कर्मणि 'क्ते' "वचिस्वपियजादीनां कितीति" संप्रसारणे, कुत्वे च उक्तम्, भाष्यते स्म 'भाष व्यक्तायां वाचि' भौवादिकात्कर्मणि 'क्ते' इडागमे च भाषितम्, उद्यते स्म 'वद व्यक्तायां वाचि' भौवादिकात्कर्मणि 'क्ते' यजादित्वात्संप्रसारणे, इडागमे च उदितम्, जल्प्यते स्म 'जल्प व्यक्तायां वाचि' भौवादिकात्कर्मणि 'क्ते' इडागमे च जल्पितम्, आख्यायते स्म 'ख्या प्रकथने' आदादिकाच्चक्षिङादेशाद्वा कर्मणि 'क्ते' आख्यातम्, अभिधीयते स्म 'डुधाञ् धारणपोषणयोः' जौहोत्यादिकात्कर्मणि 'क्ते' "दधातेर्हिः" इति ह्यादेशे च अभिहितम्, लप्यते स्म 'लप् व्यक्तायां वाचि' भौवादिकात्कर्मणि 'क्ते' इटि च 'लपितम्' स्यादिति सप्त जल्पितस्य॥ १०७ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

ज्ञात या विदित बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगते ।

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

अङ्गीकृत या ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् ॥ १०८ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

स्वीकार किया संगीर्णविदितसंश्रुतसमाहितोपश्रुतोपगतम् ।

विवृति—बुध्यते स्म 'बुध् अवगमने' दैवादिकात्कर्मणि 'क्ते' अनिट्कत्वादिडभावे, धत्वे, दत्वे च बुद्धम् "बुद्धः पण्डिते बोधिते जिने" ( इति हैमः ) एवं 'बुधिर् बोधने' 'बुध अवगमने' वा भौवादिकात्कर्मणि 'क्ते' सेट्कत्वादिडागमे च बुधितम्, मन्यते स्म 'मनु अवबोधने' तानादिकात्कर्मणि 'क्ते' "यस्य विभाषेति" निषेधस्यानित्यत्वादिटि "तदनित्यत्वे च 'कृती छेदने' इतीदित्करणं लिङ्गम् । अन्यथा सेऽसिचीति वेट्कत्वात्सिद्धे किन्तेनेति" वोपदेवस्तु 'मन चेति' भ्वादिं मनिं पठितवानिति तस्मात्कर्मणि 'क्ते' सेट्कत्वादिडागमे च मनितं स्यात्, विद्यते स्म 'विद ज्ञाने' आदादिकात्कर्मणि 'क्ते' इटि च विदितम्, प्रतिपद्यते स्म 'पद गतौ' दैवादिकात्कर्मणि 'क्ते' "रदाभ्यामिति" निष्ठानत्वे च प्रतिपन्नम्, अवसीयते स्म 'षोऽन्तकर्मणि' दैवादिकात्कर्मणि 'क्ते' "द्यतिस्यतीति" इत्वे च अवसितम्, अवगम्यते स्म 'गम्लृ गतौ' भौवादिकात्कर्मणि 'क्ते' "अनुदात्तोपदेशेति" मलोपे च अवगतं स्यादिति सप्त विदितस्य । ऊरीक्रियते स्म 'डुकृञ् करणे' तानादिकात्कर्मणि 'क्ते' ऊरीकृतम्, उरीकृतमपि, एवम् उररीक्रियते स्म कर्मणि 'क्ते' उररीकृतम्, अनङ्गमङ्गमकारीति कर्मणि 'क्ते' च्वौ, दीर्घे च अङ्गीकृतम्, आश्रूयते स्म 'श्रु श्रवणे' भौवादिकात्कर्मणि 'क्ते' आश्रुतम्, प्रतिज्ञायते स्म 'ज्ञा अवबोधने' क्रैयादिकात्कर्मणि 'क्ते' प्रतिज्ञातम्, संगीर्यते स्म 'गॄ निगरणे' तौदादिकात् 'गॄ शब्दे' क्रैयादिकाद्वा कर्मणि 'क्ते' इदादेशे, रपरत्वे, दीर्घे, निष्ठानत्वे, णत्वे च संगीर्णम्, विद्यते स्म 'विद ज्ञाने' आदादिकात्कर्मणि 'क्ते' इडागमे च विदितम्, "विदितं बुधिताश्रुतयोः" ( इति मेदिनी ) संश्रूयते स्म कर्मणि 'क्ते' संश्रुतम्, समाधीयते स्म कर्मणि 'क्ते' ह्यादेशे च समाहितम्, उपश्रूयते स्म कर्मणि 'क्ते' उपश्रुतम्, उपगम्यते स्म कर्मणि 'क्ते' मलोपे च उपगतं स्यादित्येकादशाङ्गीकृतस्य ॥ १०८ । ३ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

प्रशस्त या ईलितशस्तपणायितपनायितप्रणुतपणितपनितानि ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

सराहना किये अपगीर्णवर्णिताभिष्टुतेडितानिस्तुतार्थानि[1] ।

ईलीति—ईड्यते स्म 'ईड स्तुतौ' आदादिकात्कर्मणि 'क्ते' डलयोरैक्याल्लत्वे च

१-स्तुतासुरैः पूर्वमभीष्टसंश्रयादिति सप्तशतीस्तवः ॥

ईलितम्, शस्यते स्म 'शंसु स्तुतौ' भौवादिकात्कर्मणि 'क्ते' इडभावे च शस्तम् "शस्तं क्षेमे प्रशस्ते च" (इति हैमः) पणाय्यते स्म 'पण व्यवहारे स्तुतौ च' भौवादिकादायान्तात्कर्मणि 'क्ते' इडागमे "अतो लोप" इत्यलोपे च पणायितम् एवं पनाय्यते स्म कर्मणि 'क्ते' पनायितम्, प्रणूयते स्म 'णु स्तुतौ' आदादिकात्कर्मणि 'क्ते' प्रणुतम्, पणेरायाभावे तु पण्यते स्म कर्मणि 'क्ते' पणितम्, एवं पन्यते स्म आयाभावे कर्मणि 'क्ते' पनितम्, अपिगीर्यते स्म 'गॄ शब्दे' क्रैयादिकात्कर्मणि 'क्ते' अपिगीर्णम्, गीर्यते स्म इति विग्रहे तु कर्मणि 'क्ते' गीर्णमपि, वर्ण्यते स्म 'वर्ण वर्णक्रियाविस्तारगुणवचनेषु' चौरादिकात्कर्मणि 'क्ते' वर्णितम्, अभिष्टूयते स्म 'ष्टुञ् स्तुतौ' आदादिकात्कर्मणि 'क्ते' "उपसर्गात्सुनोतीति" षत्वे च अभिष्टुतम्, ईड्यते स्म कर्मणि 'क्ते' इडागमे च ईडितम्, एतानि स्तुतमेवार्थो येषामिति स्तुतार्थानि स्युरिति द्वादश प्रशस्तस्य ॥ १०६ । ३ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

खाये, **भक्षितचर्वितलिप्तप्रत्यवसितगिलितखादितप्सातम्**

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

चखाये **अभ्यवहृतान्नजग्धग्रस्तग्लस्ताशितं भुक्ते ।**

भेति—भक्ष्यते स्म, 'भक्ष अदने' चौरादिकात्कर्मणि 'क्ते' इडागमे च भक्षितम्, चर्व्यते स्म 'चर्व अदने' भौवादिकात्कर्मणि 'क्ते' इडागमे च चर्वितम्, लिप्यते स्म 'लिप उपदेहे' तौदादिकात्कर्मणि 'क्ते' लिप्तम्, कचित्तु लीढमिति पाठस्तत्र 'लिह आस्वादने' आदादिकात्कर्मणि 'क्ते' इडभावे, ढत्वे, धत्वे, ष्टुत्वे, ढलोपे, दीर्घे च लीढम्, प्रत्यवसीयते स्म, 'षो अन्तकर्मणि' दैवादिकात्कर्मणि 'क्ते' "द्यतिस्यतीति" इत्वे च प्रत्यवसितम्, गरणम् 'गॄ निगरणे' तौदादिकाद्भावे "इक्कृष्यादिभ्यः" इति इकि, इदादेशे, रपरत्वे, "अचि विभाषेति" वालत्वे गिलिः, सा संजातास्येति तारकादित्वादितचि, गिलितम्, लत्वाभावे तु गिरितमपि, खाद्यते स्म 'खादृ भक्षणे' भौवादिकात्कर्मणि 'क्ते' इडागमे च खादितम्, प्सायते स्म 'प्सा भक्षणे' आदादिकात्कर्मणि 'क्ते' प्सातम्, अभ्यवह्रियते स्म, हृञ्हरणे' भौवादिकात्कर्मणि 'क्ते' अभ्यवहृतम्, अद्यते स्म 'अद भक्षणे' आदादिकात्कर्मणि 'क्ते' "रदाभ्यामिति" निष्ठानत्वे च अन्नम्, "अदोऽनन्ने" इति ज्ञापकाद्वा जग्ध्यादेशे, धत्वे "झरो झरीति" धलोपे च जग्धम्, ग्रस्यते स्म 'ग्रसुग्लसु अदने' भौवादिकात्कर्मणि 'क्ते' "यस्य विभाषेति" इडभावे च ग्रस्तम् एवं ग्लस्यते स्म कर्मणि 'क्ते' ग्लस्तम्, अश्यते स्म 'अश भोजने' क्रैयादिकात्कर्मणि 'क्ते' सेट्कत्वादिडागमे च अशितम्, भुज्यते स्म 'भुज पालनाभ्यवहारयोः' रौधादिकात्कर्मणि 'क्ते' इडभावे, गत्वे, कत्वे च 'भुक्तम्' स्यादिति चतुर्दश खादितस्य ॥ ११० । ३ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

अतिशयार्थ वाची ये ६ शब्द हैं

**क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः ॥ १११ ॥**

पु.

**( क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुप्रकर्षार्थाः ) ।**

क्षेपीति—क्षेपिष्ठादयः क्षिप्रादीनां प्रकर्ष एव अर्थो येषामिति प्रकर्षार्था भवन्ति तथातिशयविशिष्टक्षिप्रादिषु यथासंख्यं वर्तन्ते इति—यथा अतिशयेन क्षिप्रः " अतिशायने तमबिष्ठनाविति " इष्ठनि, " स्थूलदूरेति " यणो लोपे गुणे च क्षेपिष्ठः, एवं अतिशयेन क्षुद्रः इष्ठनि, क्षोदिष्ठः, अतिशयेन प्रियः, इष्ठनि " प्रियस्थिरेति " प्रादेशे गुणे च प्रेष्ठः, अतिशयेन उरुः इष्ठनि, वरादेशे च वरिष्ठः, अतिशयेन स्थूलः, इष्ठनि " स्थूलदूरेति " यणो लोपे, गुणे, अवादेशे च स्थविष्ठः, अतिशयेन बहुलः इष्ठनि, " प्रियस्थिरेति " बहुलस्य बंहादेशे च बंहिष्ठः स्यादिति अत्राभीप्सितपृथूप्रियोरुपर्यायाविति पीवरः स्थूलपर्यायः पीवर इति पाठस्त्वयुक्तश्छन्दोभङ्गात् । पीव इति पाठे नान्तो युक्तः स्यादित्येकैकम् ॥ १११ । ½ ॥

पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न. पु.स.न.

अतिशयवाची साधिष्ठ आदि

**साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः ॥ ११२ ॥**

**( बाढव्यायतबहुगुरुवामनवृन्दारकातिशये ) ।**

## इति विशेष्यनिघ्नवर्गः ।

सेति—बाढाद्यतिशये साधिष्ठादयो यथासंख्यं वर्तन्ते अत्र व्यायतबहुवामना दीर्घस्फिरह्रस्वानां पर्यायाः यथा अतिशयेन बाढः इष्ठनि " अन्तिकबाढयोर्नेदसाधाविति " बाढस्य साधादेशे साधिष्ठः, अतिशयेन व्यायतो दीर्घः, इष्ठनि " प्रियस्थिरेति " दीर्घस्य द्राघादेशे द्राघिष्ठः, अतिशयेन स्फिरः इष्ठनि, स्फादेशे, गुणे च स्फेष्ठः, अतिशयेन गुरुः इष्ठनि, गरादेशे चगरिष्ठः, अतिशयेन ह्रस्वः इष्ठनि " स्थूलदूरेति " वलोपे च ह्रसिष्ठः, अतिशयेन वृन्दारको मुख्यः इष्ठनि, " प्रियस्थिरेति " वृन्दादेशे च वृन्दिष्ठः स्यादित्येकैकम् ॥ ११२ । ½ ॥

इति विशेष्यनिघ्नवर्गविवरणम् ।

---

## अथ संकीर्णवर्गो व्याख्यायते ।

क्रिया, वारंवार चलना

**प्रकृतिप्रत्ययाद्यर्थैःसंकीर्णे लिङ्गमुन्नयेत् ।**

**कर्मक्रिया तत्सातत्ये गम्ये स्युरपरस्पराः ॥ १ ॥**

---

१ नैरन्तर्याभावे तु अपरपराः सकृद्गच्छन्तीति ॥

प्रेति—संकीर्णार्थैः संकीर्णलिङ्गैश्चारब्धत्वात्संकीर्णो वर्गे प्रकृतिप्रत्ययाद्यर्थैर्लिङ्गम्पुंस्त्वादिकं उन्नयेत् ऊहेत । यथा ‘ अपरस्परः ’ अयं हि लिङ्गविशेषाभिधायिप्रत्ययस्याविधानात्प्रकृतिः अस्य च “ परवल्लिङ्गमिति ” अतिदेशात्परशब्दस्यैव लिङ्गं भवति परशब्दस्य च सर्वनामत्वात्त्रिलिङ्गत्वम् । न च द्वन्द्वे चेति निषेधः । तस्य समुदायविषयत्वेनावयवविषयत्वाभावात् । प्रत्ययार्थेन यथा—शान्तिः स्त्रियां क्तिनो विधानात् । ‘ विधूननम् ’ नपुंसके ल्युटो विहितत्वात् । आद्यशब्देन रूपभेदादिग्रहः । रूपभेदेन कर्मादेः क्लीबत्वादि । साहचर्येण डिम्बादेः पुंस्त्वादि । अथवा भिन्नजातीयेन लिङ्गेन संसर्गे सति अत्र वर्गे वर्गान्तरे च प्रकृत्यर्थाद्यैर्लिङ्गं ज्ञेयम् । लिङ्गसंग्रहे वक्ष्यमाणमपि लिङ्गमुन्नेयत्वेनेहोक्तमिति । करणम्, क्रियते वा ‘ डुकृञ् करणे ’ तानादिकाद्भावे कर्मणि “ सर्वधातुभ्यो मनिन् ” इति मनिनि कर्म, “ कर्मव्याप्ये क्रियायां च पुंनपुंसकयोर्मतम् ” ( इति रुद्रः ) एवं “ कृञः श चेति ” शे, “सार्वधातुके यगिति” यकि “रिङ्शयग्लिङ्क्षु” इति रिङादेशे च यगभावे रिङादेशे “अचिश्नु ” इतीयङि वा क्रिया स्यादिति द्वे क्रियायाः । तत्सातत्ये क्रियायाः क्रियावतां च नैरन्तर्ये गम्ये अपरस्पराः स्युः अपरे च परे चेति द्वन्द्वे “ अपरस्पराः क्रियासातत्ये ” इति सुटि निपातिते ‘ अपरस्पराः ’ क्रियासातत्ये ‘ अपरस्परं गच्छन्ति ’ “ निर्दिष्टं कर्मसातत्ये सुधीभिरपरस्परम् ” ( इति भागुरिः ) क्रियावतां सातत्ये तु लिङ्गत्रयम्, अपरस्पराः सार्थाः स्त्रियश्च गच्छन्ति, अपरस्पराणि कुलानि इत्येके नैरन्तर्येण क्रियायाः क्रियावतश्च ॥ १ ॥

साकल्य वचन, आसंगवचन, ( साकल्यासङ्गवचने ) पारायणतुरायणे । (न. न.)

स्वतन्त्रता, बे-कारण स्थिति यदृच्छा स्वैरिता ( हेतुशून्या त्वास्था ) विलक्षणम् ॥२॥ (स. स. न.)

सेति—साकल्यं च आसङ्गश्च तौ वक्तः “ कृत्यलुटो बहुलम् ” इति वचेः कर्तरि ल्युटि, साकल्यासङ्गवचने पारायणतुरायणे स्याताम् । पारस्य अयनम् “पूर्वपदादिति” णत्वे ‘ पारायणम् ’ क्लीबलिङ्गमेवेत्येकेतेन “ रत्नपारायणं नाम लङ्केयं मम मैथिली ” इति भट्टिप्रयोगः संगच्छते । “ परायणम् ” इति वा पाठस्तत्र परं च तदयनं चेति ‘ परायणम् ’ “ आश्रये तत्पराभीष्टे परायणपदं विदुः ” ( इति शाश्वतः ) । तोतोर्ति ‘ तुर त्वरणे ’ जौहोत्यादिकात्कर्तरि “ इगुपधेति ” ‘ के ’ तुरस्तस्यायं तुरायणम्, त्वराया अयनमिति वा त्वरायणम् । मुकुटस्तु यथाक्रमं साकल्यवचनं पारायणम् । आसङ्गवचनं च परायणमिति व्याख्यातवानिति, तथा च पीयूषव्याख्यायामपि क्वचित्परायणस्थाने तुरायणमितीच्छन्तीत्येकैकम् । ऋच्छनम् ‘ ऋच्छ गत्यादौ ’ तौदादिकाद्भावे “ गुरोश्च हलः ” इत्यप्रत्यये ऋच्छा, या ऋच्छा “ विशेषणं विशे-

ण्येण बहुलम् " इति समासे यदृच्छा, स्वेनेरितुं शीलमस्य " सुप्यजाताविति " णिनौ स्वैरी तस्य भावः ' तलि ' स्वैरिता स्यादिति द्वे स्वातन्त्र्यस्य । हेतुना कारणेन शून्या आस्था स्थितिः विलक्षणं स्यात् । विगतं लक्षणमालोचनं यत्रेति विलक्षणम् " विलक्षणं मतं स्थानं यद्भवेन्निष्प्रयोजनम् " ( इति भागुरिः ) इत्येकं कारणशून्यस्थितेः ॥ २ ॥

शान्ति, इन्द्रियनिग्रह, सुकर्म, महादान

पु. पु. स. स. पु. पु.
**शमथ(स्तु) शमःशान्तिर्दान्ति(स्तु) दमथो दमः ।**
न. न. न. न.
**अवदानं कर्मवृत्तं काम्यदानं प्रवारणम् ॥ ३ ॥**

शेति—शमनम् ' शमु उपशमे ' दैवादिकाद्भावे, "बाहुलकाच्छामिदमिभ्यामिति " अथचि, शमथः, ' भावे ' घञि, " नोदात्तोपदेश " इति वृद्ध्यभावे च शमः, " स्त्रियां क्तिन् " इति क्तिनि, "अनुनासिकस्य" इति दीर्घे च शान्तिः स्यादिति त्रीणि कामक्रोधाद्यभावस्य । दमनम् ' दमु उपशमे ' दैवादिकाद्भावे स्त्रियां क्तिनि, दीर्घे च दान्तिः, अथचि, दमथः, ' घञि ' दमः स्यादिति त्रीणि तपःक्लेशसहनस्य । अवदातम् ' दैप् शोधने ' भौवादिकाद्भावे ल्युटि, अनादेशे च अवदानम् अपदानमिति वा पाठः, वर्तनम् ' वृतु वर्तने ' अस्माद्भावे 'क्ते' इडभावे च वृत्तम्, कर्मणः कर्मणि वा वृत्तम् कर्मवृत्तं स्यादिति द्वे प्रशस्तकर्मणः । कामोऽस्ति यत्रेति " अन्यत्रापीति " यपि, काम्यते ' कमु कान्तौ ' भौवादिकात्स्वार्थणयन्तात्कर्मणि " अचो यत् " इति यति वा काम्यम, दत्तं दानम्, काम्येनेच्छया काम्यस्य वरस्त्रीहस्त्यश्वादेर्वा दानम् काम्यदानम्, प्रवारितम् प्रपूर्वकात् ' वृञ् वरणे ' चौरादिकाण्णयन्ताद्भावे " ल्युट् चेति " ल्युटि, अनादेशे च प्रवारणम् " प्रवारणं निषेधे स्यात्काम्यदाने च न द्वयोः " ( इति मेदिनी ) पीयूषव्याख्यातः प्रचारितमिति विग्रहे तु प्रचारणमपि स्यादिति द्वे महादानस्य ॥ ३ ॥

वशीकरण, उच्चाटन, कांपना, अघाया

स. न. न.
**वशक्रिया संवननं मूलकर्म 'तु' कार्मणम् ।**
न. न. न. न. न.
**विधूननं विधुवनं तर्पणं प्रीणनावनम् ॥ ४ ॥**

वेति—वशस्य करणम् " कृञः श च " इति शे, यकि, रिङादेशे च वशक्रिया, संवनितम् संपूर्वको ' वनु याचने ' तानादिको वशीकरणार्थस्तस्माद्भावे ल्युटि, अनादेशे च संवननम्, समुप्तं संवपनम्, समुदितं वा संवदनमपीति द्वे वशीकरणस्य ।

१ "अपश्रियः संवदनं यतस्तत् " इति मणौरघुवंशः ( इति मुकुटपीयूषौ ) ॥

ओषध्यादिमूलेन कर्म मूलकर्म, कर्मैव " तद्युक्तात्कर्मणोऽण् " इत्यणि, वृद्धौ च कार्मणम् " कार्मणं मन्त्रतन्त्रादियोजने कर्मठेऽपि च " ( इति मेदिनी ) इति द्वे कार्मणस्य । विधूनितम् विपूर्वकाद् ' धूञ् कम्पने ' चौरादिकाण्णयन्ताद्भावे ल्युटि, अनादेशे च विधूननम्, विधूतम् विपूर्वको ' धू विधूनने ' तौदादिकस्तस्माद्भावे ल्युटि " गाङ्कुटादिभ्यः " इति ङित्वाद्गुणाभावे, उवङि च ' विधुवनम् ' स्यादिति द्वे कम्पनस्य । तृप्तम् ' तृप प्रीणने ' दैवादिकाद्भावे ल्युटि, गुणे, अनादेशे, णत्वे च तर्पणम्, प्रीणितम् ' प्रीञ् तर्पणे ' क्रैयादिकात्स्वार्थण्यन्ताद्भावे ' ल्युटि ' अनादेशे च प्रीणनम्, अवितम् ' अव रक्षणादौ ' भौवादिकाद्भावे ल्युटि ' अवनम् ' स्यादिति त्रीणि तर्पणस्य ॥ ४ ॥

स. न. न.
रक्षा, सीना, **पर्याप्तिः 'स्या' त्परित्राणं हस्तवारण ( मित्यपि ) ।**
न. न. स. पु. न. स.
फटना **सेवनं सीवनं स्यूतिर्विदरः स्फुटनं भिदा ॥ ५ ॥**

पेति—पर्यापणम् परिपूर्वकः 'आप्लृ व्याप्तौ' सौवादिकस्त्राणार्थस्तस्मात्स्त्रियां क्तिनि, पर्याप्तिः, परित्रातम् परिपूर्वकः ' त्रैङ् पालने ' भौवादिकस्तस्माद्भावे ल्युटि, परित्राणम्, वारितम् 'वृञ् वरणे' चौरादिकात्स्वार्थण्यन्ताद्भावे ल्युटि वारणम्, हस्तेन हस्तस्य वा वारणम हस्तवारणम्, अपिशब्दात्कचित् हस्तधारणमिति वा पाठस्तत्र ' धृञ् धारणे' भौवादिकाण्णयन्ताद्भावे ल्युटि धारणम्, प्रहारोद्यतस्य हस्तस्य धारणं रोधो हस्तधारणमपि स्यादिति त्रीणि मारणोद्यतनिवारणस्य । स्यूतम् ' षिवु तन्तुसन्ताने ' दैवादिकाद्भावे ल्युटि, गुणे, अनादेशे च सेवनम्, पृषोदरादित्वाद्दीर्घे तु सीवनम्, क्तिनि, ' च्छ्वोरित्यूठि ' यणादेशे च स्यूतिः " सेवस्तु सेवनं स्यूतिः " इति पाठो न्याय्यस्तत्र ' सेवनम् ' भावे घञि सेवः स्यादिति त्रीणि सीवनस्य । विदरणम्, ' दॄ विदारणे ' क्रैयादिकाद्भावे " ऋदोरप् " इत्यपि, गुणे च, विदरः, स्फुटितम् ' स्फुट विकसने ' तौदादिकाद्भावे ल्युटि, कुटादित्वाद्गुणाभावे च स्फुटनम्, भेदनम् ' भिदिर् विदारणे ' रौधादिकाद्भावे " षिद्भिदादिभ्योऽङ् " इत्यङि, गुणाभावे, टापि च भिदा स्यादिति त्रीणि स्फुटनस्य ॥ ५ ॥

न. पु. पु. स.
शापना, अनुभव **आक्रोशनमभीषङ्गः संवेदो वेदना ( न ना ) ।**
ज्ञान,
न. स. स. स. स. स.
सर्वत्र व्यास, भिक्षा **संमूर्च्छनमभिव्याप्तिर्याच्ञाभिक्षार्थनार्दना ॥ ६ ॥**

आक्रुष्टमिति—आक्रुष्टम् आङ्पूर्वकः ' क्रुश आह्वाने ' भौवादिकस्तस्माद्भावे ल्युटि, गुणे, अनादेशे च आक्रोशनम्, अभिषञ्जनम् अभिपूर्वकः ' षञ्ज संगे ' भौवादिकस्तस्माद्भावे घञि, " उपसर्गस्य घञि " इति दीर्घे, कुत्वे च ' अभीषङ्गः ' स्यादिति द्वे शापस्य । संवेदनम् संपूर्वको ' विद ज्ञाने ' आदादिकस्तस्माद्भावे घञि, गुणे च संवेदः, वेदयति—वेद्यते वा 'विद चेतनाख्याननिवासेषु' चौरादिकाण्णयन्तात् "ण्यासेति" " घट्टिवन्दिविदिभ्यश्चेति " वा युचि, अनादेशे, टापि च वेदना ना पुमान् न स्यादिति द्वे अनुभवस्य । संमूर्तम् ' मुर्च्छा मोहसमुच्छ्राययोः ' भौवादिकाद्भावे ल्युटि, अनादेशे च संमूर्च्छनम्, अभिव्यापनम्, अभिविपूर्वकः ' आप्लृ व्याप्तौ ' सौवादिकस्तस्मात " स्त्रियां क्तिन् " इति क्तिनि, अभिव्याप्तिः स्यादिति द्वे सर्वतो व्याप्तेः । याचनम् ' टुयाचृ याच्ञायाम् ' भौवादिकाद्भावे " यजयाचेति " नङि, चुत्वे, टापि च याच्ञा, भिक्षणम् ' भिक्ष याचने ' भौवादिकाद्भावे " गुरोश्च " इत्यप्रत्यये टापि च भिक्षा, अर्थयति अर्थ्यते वा ' अर्थ याच्ञायाम् ' चौरादिकाण्णयन्तात् " ण्यासेति " युचि, अनादेशे च अर्थना, अर्दयति ' अर्द गतौ याचने च ' भौवादिकस्तस्मात्स्वार्थण्यन्ताद् युचि अर्दना स्यादिति चत्वारि याच्ञायाः ॥ ६ ॥

(कटना, कुशा-आनन्द, उत्तमोपदेश, हानि)

**वर्धनं छेदने (ऽथ द्वे) आनन्दनसभाजने ।**
**आप्रच्छन (मथा) म्नायः संप्रदायः(क्षये)क्षिया ॥७॥**

वेति—छेदने वर्धनं स्यात् । वर्धितम् ' वर्धच्छेदनपूरणयोः ' चौरादिकाण्णयन्ताद्भावे ' ल्युटि ' अनादेशे च वर्धनम् " वर्धनं छेदने वृद्धौ " (इति दन्तोष्ठ्यादावजयः) छिन्नम् ' छिदिर् द्वैधीकरणे ' रौधादिकाद्भावे ' ल्युटि ' छेदनं स्यादिति द्वे छेदनस्य । अथेति—आनन्दितम् आङ्पूर्वकः ' टुणदि समृद्धौ ' भौवादिकस्तस्माद्भावे ल्युटि, अनादेशे च आनन्दनम्, आमन्त्रणमिति वा क्वचित्पाठस्तत्राङ्पूर्वको ' मत्रि गुप्तभाषणे ' चौरादिकस्तस्माद्भावे ' ल्युटि ' आमन्त्रणम्, सभाजितम् ' सभाज प्रीतिसेवनयोः '[1] चौरादिकाद्भावे ' ल्युटि ' सभाजनम्, आनन्दनं च सभाजनं चेति आनन्दनसभाजने द्वे तथा च आपृष्टम् आङ्पूर्वकः ' प्रच्छ ज्ञीप्सायाम् ' तौदादिक आनन्दनार्थस्तस्माद्भावे ' ल्युटि ' आप्रच्छनं स्यादिति त्रीण्यालिङ्गनकुशलप्रश्नादिनानन्दनस्य । अथेति—आम्नानम् आङ्पूर्वको ' म्ना अभ्यासे ' भौवादिकस्तस्माद्भावे 'घञि' " आतो युगिति " युकि च आम्नायः, संप्रदानम् संप्रपूर्वको ' डुदाञ् दाने ' जौहो-

१ मुकुटेन तु " प्रीतिसेवनयोः " इति पाठो धृतः । स्वामिना तु—' प्रीतिदर्शने ' इति पाठोऽङ्गीकृतः ॥

ण्यादिकस्तस्माद्भावे घञि, युक्ति च संप्रदायः स्यादिति द्वे गुरुपरम्परागतसदुपदेशस्य। क्षये क्षिया स्यात्। क्षयणम् 'क्षि क्षये' भौवादिकस्तस्माद्भावे "एरच्" इत्यचि, गुणे, अयादेशे च क्षयः, एवं 'क्षीष् हिंसायाम्' क्रैयादिकस्तस्मात् "षिद्भिदादिभ्योऽङ्" इत्यङि, इयङि च क्षिया स्यादिति द्वे अपचयस्य ॥ ७ ॥

लेना, चाहना, रक्षा, शब्द, छेदना, पकाना, बुलाना, वरदान

पु. पु. पु. स. पु. न. पु. पु.
**(ग्रहे) ग्राहो वशः (कान्तौ) रक्षण (त्राणे) रणः (क्वणे)।**
पु. पु. स. पु. पु. स. पु. स.
**व्यधो (वेधे) पचा (पाके) हवो (हूतौ) वरो (वृतौ) ॥८॥**

ग्रेति–ग्रहे ग्रहणे ग्राहः स्यात्। ग्रहणम् 'ग्रह उपादाने' क्रैयादिकस्तस्माद्भावे "ग्रहवृद्–" इत्यपि ग्रहः, ग्राहणम् स्वार्थण्यन्ताद्भावे "एरच्" इत्यचि, घञि वा 'ग्राहः' स्यादिति द्वे ग्रहणस्य। कान्तौ वशः स्यात्। वशनम् 'वश कान्तौ' आदादिकस्तस्माद्भावे "वशिरण्योः" इत्यपि वशः, कमनम 'कमु कान्तौ' भौवादिकस्तस्माद्भावे 'क्तिनि' "अनुनासिकस्य" इति दीर्घे, मस्यानुस्वारे, परसवर्णे च 'कान्तिः' स्यादिति द्वे इच्छायाः। त्राणे पालने रक्षणः स्यात। रक्षणम् 'रक्ष पालने' भौवादिकाद्भावे "यजयाचेति" नङि, 'रक्ष्णः' त्रातम् 'त्रैङ् पालने' भौवादिकाद्भावे 'ल्युटि' अनादेशे, णत्वे च 'त्राणम्' स्यादिति द्वे रक्षणस्य। क्वणे रणः स्यात्। रणनम् 'रण शब्दे' भौवादिकाद्भावे "वशिरण्योः" इत्यपि रणः, क्वणनम् 'क्वण शब्दे' भौवादिकाद्भावे 'अपि' क्वणः "क्वणो वीणायामिति" साधुरिति द्वे शब्दकरणस्य। वेधे व्यधः स्यात्। व्यधनम् 'व्यध ताडने' दैवादिकाद्भावे "व्यधजपोः" इत्यपि व्यधः, वेधनम् 'विध विधाने' तौदादिकाद्भावे घञि, गुणे च वेधः, प्रज्ञाद्यणि तु वैधोऽपि स्यादिति द्वे वेधनस्य। पाके पचा स्यात्। पचनम् 'डुपचष् पाके' भौवादिकाद्भावे षित्त्वादङि, टापि च पचा, एवं घञि, कुत्वे च पाकः स्यादिति द्वे पचनस्य। हूतौ हवः स्यात्। ह्वानम् 'ह्वेञ् स्पर्द्धायां शब्दे च' भौवादिकाद्भावे "भावेऽनुपसर्गस्य" इत्यपि, संप्रसारणे, गुणे, अवादेशे च हवः, एवं क्तिनि, यजादित्वात्संप्रसारणे च हूतिः स्यादिति द्वे आह्वानस्य। वृतौ वरः स्यात्। वरणम् 'वृञ् वरणे' सौवादिकाद्भावे "ग्रहवृद्–" इत्यपि, गुणे, रपरत्वे च वरः "तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः" एवं क्तिनि वृतिः स्यादिति द्वे वरस्य ॥ ८ ॥

जलाना, नीति, जीर्ण, भ्रम, बढ़ती, प्रसिद्धता, छूना, टपकना

पु. पु. पु. पु. स. स. पु. स.
**ओषः (प्लोषे) नयो (नाये) ज्यानि (जीर्णौ) भ्रमो (भ्रमौ)।**
स. स. स. स. स. स. पु. पु.
**स्फाति (वृद्धौ) प्रथा (ख्यातौ) स्पृष्टिः (पृक्तौ) स्नवः (स्रवे)॥**

अवेति—प्लोषे दाहे ओषः स्यात् । ओषणम् ‘ उष दाहे ’ भौवादिकाद्भावे ‘घञि’ गुणे च ओषः, प्लोषणम् ‘ प्लुष दाहे ’ भौवादिकाद्भावे घञि प्लोषः स्यादिति द्वे दाहस्य । नाये नीतौ नयः स्यात् । नयनम् ‘ णय् गतौ ’ भौवादिकाद्भावे ‘ घञि ’ संज्ञापूर्वकत्वाद्वृद्ध्यभावे च ‘ णीञ् प्रापणे ’ भौवादिकाद्भावे ‘ एरच् ’ इत्यचि वा नयः एवं “ प्रिणीभुवो—” इति ‘ घञि ’ वृद्धौ च नायः स्यादिति द्वे नीतेः । जीर्णौ ज्यानिः स्यात् । ज्यानम् ‘ ज्या वयोहानौ ’ क्रैयादिकाद्भावे “ ग्लाम्लाज्याहाभ्यो निः ” इति ‘नौ’ ज्यानिः, जरणम् ‘जॄष् वयोहानौ’ दैवादिकाद्भावे ‘क्तिनि’ इदादेशे, रपरत्वे, दीर्घे “ॠल्वादिभ्य इति” निष्ठावत्वाद् “रदाभ्यामिति” नत्वे, णत्वे च जीर्णिः स्यादिति द्वे जीर्णस्य । भ्रमौ भ्रमः स्यात् । भ्रमणम् ‘ भ्रमु अनवस्थाने ’ दैवादिकाद्भावे ‘ घञि ’ “ नोदात्तोपदेशस्य—” इति वृद्ध्यभावे च भ्रमः एवम् “इक्कृष्यादिभ्यः” इति ‘ इकि ’ ‘ भ्रमिः ’ स्यादिति द्वे भ्रमणस्य । वृद्धौ स्फातिः स्यात् । स्फातम्, स्फायनं वा ‘ स्फायी वृद्धौ ’ भौवादिकाद्भावे ‘ क्तिनि ’ यलोपे च स्फातिः “ स्फातिर्वृद्धिः प्रसारो ना ” ( इति वोपालितः ) वर्धनम् ‘ वृधु वृद्धौ ’ भौवादिकाद्भावे ‘ क्तिनि ’ धत्वे, दत्वे च वृद्धिः स्यादिति द्वे वृद्धेः । ख्यातौ प्रथा स्यात् । प्रथनम् ‘ प्रथ प्रख्याने ’ भौवादिकाद्भावे “ घटादयः षितः ” इति षित्त्वादङि प्रथा, ख्यानम् ‘ ख्या प्रकथने ’ आदादिकाच्चक्षिङादेशाद्वा भावे ‘ क्तिनि ’ ख्यातिः स्यादिति द्वे प्रख्यातेः । पृक्तौ स्पृष्टिः स्यात् । स्पर्शनम् ‘ स्पृश् संस्पर्शे ’ तौदादिकाद्भावे ‘ क्तिनि ’ “ व्रश्चेति ”षत्वे, ष्टुत्वे च स्पृष्टिः, पर्चनम् ‘ पृची संपर्के ’ रौधादिकाद्भावे क्तिनि, कुत्वे च पृक्तिः स्यादिति द्वे स्पर्शनस्य । स्नवनम् ‘ ष्णु प्रस्रवणे ’ आदादिकाद्भावे “ॠदोरप्” इत्यपि, गुणे, अवादेशे च स्नवः, स्रवणम् ‘ स्रु गतौ ’ भौवादिकाद्भावे ‘ अपि ’ स्रवः, घञि तु स्नावः, स्रावश्च स्यादिति द्वे प्रस्रवणस्य ॥ ९ ॥

बढ़ना, फुरना, सत्यज्ञान, जनना, घी आदिका झरना या टपकना, ग्लानि

स. स. न. स. स. स.
**विधा (समृद्धौ) (स्फुरणे) स्फुरणा (प्रमितौ) प्रमा ।**
स. पु. पु. पु. पु. पु.
**प्रसूतिः(प्रसवे)(श्च्योते)प्राघारः क्लमथः(क्लमे) ॥१०॥**

वीति—विधानम् विपूर्वको ‘ डुधाञ् धारणपोषणयोः ’ जौहोत्यादिकस्तस्माद्भावे “ आतश्चोपसर्गे ” इत्यङि, आतो लोपे, टापि च विधा, “ विधा गजान्ने ऋद्धौ च ” ( इति मेदिनी ) एधनमिति विग्रहे तु “ गुरोश्च हलः ” इत्यप्रत्यये, एधापि, समर्धनम् संपूर्वकः ‘ ऋधु वृद्धौ ’ दैवादिकस्तस्माद्भावे क्तिनि, समृद्धिः स्यादिति द्वे धनसंपत्तेः । स्फुरणे स्फुरणा स्यात् । स्फुरितम् ‘ स्फुर स्फुरणे ’ तौदादिकाद्भावे ल्युटि, अना-

---

१ “ क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते ” इति ॥

देशे, कुटादित्वाद् गुणाभावे च स्फुरणम् स्वार्थण्यन्तात् स्फोरणम् धातुपाठेऽदुपधपाठात् स्फरणम्, प्रज्ञाद्यणि तु स्फारणमपि, स्वार्थण्यन्ताद्युचि तु संज्ञापूर्वकत्वाद्गुणाभावे टापि च स्फुरणा स्यादिति द्वे स्फुरणस्य । प्रमितौ प्रमा स्यात् । प्रमाणम् प्रपूर्वको 'डुमिञ् प्रक्षेपणे' सौवादिकस्तस्माद्भावे 'क्तिनि' प्रमितिः, एवं प्रपूर्वको 'माङ् माने' दैवादिकस्तस्मात् "आतश्चोपसर्गे" 'इत्यङि' प्रमा स्यादिति द्वे प्रमाज्ञानस्य । प्रसवे प्रसूतिः स्यात् । प्रसवनम् प्रपूर्वकः 'पूङ् प्राणिप्रसवे' दैवादिकस्तस्माद्भावे 'क्तिनि' प्रसूतिः, एवं 'पूङ्' दैवादिकात् 'पू प्रेरणे' तौदादिकाद्वा "ऋदोरप्" इत्यपि, गुणे, अवादेशे च प्रसवः स्यादिति द्वे प्रसवनस्य, प्रेरणस्य वा । श्च्योते क्षरणे प्राघारः स्यात् । श्च्योतनम् 'श्च्युतिर् क्षरणे' भौवादिकाद्भावे घञि, गुणे च श्च्योतः । यकाररहिते तु श्चोतोऽपि, प्रघरणम् प्रपूर्वकः 'घृ क्षरणादीप्तयोः' जौहोत्यादिकस्तस्माद्भावे 'घञि' "उपसर्गस्य" इति दीर्घे, वृद्धौ च 'प्रघारः' स्यादिति द्वे क्षरणस्य । क्लमनम् 'क्लमु ग्लानौ' दैवादिकाद्भावे बाहुलकादथचि क्लमथः, घञि तु "नोदात्तोपदेश" इति वृद्ध्यभावे क्लमः स्यादिति द्वे ग्लानेः ॥ १० ॥

बड़ाई, मिलाप, प्रयोजन, फेंकना या आज्ञा करना, लीलना, उद्यम करना.

पु. पु. पु. पु. पु. पु.
**उत्कर्षो(ऽतिशये) संधिः (श्लेषे) विषय (आशये) ।**
स. न. स. स. न. पु.
**(क्षिपायां) क्षेपणं गीर्णि (गिरौ) गुरण(मुद्यमे)॥ ११ ॥**

उदिति–अतिशये उत्कर्षः स्यात् । उत्कर्षणम् उत्पूर्वकः 'कृष विलेखने' भौवादिकस्तस्माद्भावे घञि, गुणे च उत्कर्षः, अतिशयनम्, अतिपूर्वकः 'शीङ् स्वप्ने' आदादिकस्तस्माद्भावे "एरच्" इत्यचि, गुणे अयादेशे च अतिशयः स्यादिति द्वे उत्कर्षस्य । श्लेषे आलिङ्गने संधिः स्यात् । संधानम् संपूर्वको 'डुधाञ् धारणपोषणयोः' जौहोत्यादिकस्तस्माद्भावे 'उपसर्गे घोः किः' इति कौ, आलोपे च संधिः, श्लेषणम् 'श्लिष आलिङ्गने' दैवादिकाद्भावे 'घञि' गुणे च श्लेषः स्यादिति द्वे सन्धानस्य । आशये विषयः स्यात् । विषयणम् विपूर्वकः 'षिञ् बन्धने' सौवादिकस्तस्माद्भावे 'एरच्' इत्यचि, गुणे च विषयः, आशयनम् आङ्पूर्वकः 'शीङ् स्वप्ने' आदादिकस्तस्मादचि आशयः "आश्रयः" इति वा पाठस्तत्र आङ्पूर्वकः 'श्रिञ् सेवायाम्' अस्माद्भावेऽचि आश्रयोपि स्यादिति द्वे विषयस्य । क्षिपायां क्षेपणं स्यात् । क्षेपणम् 'क्षिप प्रेरणे' तौदादिकाद्भावे भिदाद्यङि क्षिपा, ल्युटि तु क्षेपणं स्यादिति द्वे क्षेपणस्य । गिरौ गीर्णिः स्यात् । गरणम् 'गॄ निगरणे' तौदादिकाद्भावे क्तिनि, इदादेशे, रपरत्वे, दीर्घे, 'ॠल्वादिभ्य इति' निष्ठावत्वान्नत्वे, णत्वे च गीर्णिः 'इक्कृष्यादिभ्यः' इतीकि तु गिरिः स्यादिति द्वे निगरणस्य । उद्यमे गुरणं स्यात् । गूर्णम् 'गुरी उद्यमने' तौदादिकाद्भावे ल्युटि, अनादेशे, कुटादित्वादगुणाभावे च गुरणम्, 'गूरी हिंसागत्योः' दैवादिकाद् 'गूर उद्यमने' चौरादिकाद्वा भावे ल्युटि, अनादेशे च गूरणम्, तौदादिकात्स्वार्थण्यन्तात्तु गोरणमपि, उद्यमनम् उत्पूर्वको 'यमु

उपरमे' भौवादिकस्तस्माद्भावे 'घञि' संज्ञापूर्वकत्वाद् वृद्ध्यभावे च उद्यमः स्यादिति द्वे सागाद्युद्यमनस्य ॥ ११ ॥

पु. पु. पु. न. न. पु.

उठाना,आश्रय, जीति, कहना, खुशी, ऊबना.

**उन्नाय (उन्नये) आयः (अयणे) (जयने) जयः ।**

पु. पु. पु. पु. पु. पु.

**निगादो (निगदे) मादो (मदे) उद्वेग (उद्भ्रमे)॥ १२॥**

उदिति—उन्नये उन्नायः स्यात् । उन्नयनम् उत्पूर्वको 'णीञ् प्रापणे' भौवादिकस्तस्माद्भावे "अवोदोर्नियः" इति घञि, वृद्धौ च उन्नायः, अचि तु उन्नयः स्यादिति द्वे उन्नयनस्य । अयणे आयः स्यात् । अयणम् 'श्रिञ् सेवायाम्' भौवादिकस्तस्माद्भावे "श्रिणीभुवो" इति घञि, वृद्धौ च आयः, ल्युटि तु 'अयणं' स्यादिति द्वे आश्रयणस्य । जयने जयः स्यात् । जितम् 'जि जये' भौवादिकस्तस्माद्भावे ल्युटि, जयनम्, 'अचि' तु जयः । जपने जपः स्यादिति वा पाठस्तत्र जपितम् 'जप व्यक्तायां वाचि' भौवादिकाद्भावे ल्युटि जपनम् 'अपि' तु जपः स्यादिति द्वे उत्कर्षप्राप्तेः । निगदे निगादः स्यात् । निगदनम् निपूर्वको 'गद व्यक्तायां वाचि' भौवादिकस्तस्माद्भावे घञि, वृद्धौ च निगादः, "नौ गदेति" 'अपि' तु निगदः स्यादिति द्वे निगदनस्य । मदे मादः स्यात् । मदनम् 'मदी हर्षे' दैवादिकस्तस्माद्भावे 'घञि' मादः, "मदोऽनुपसर्गे" इत्यपि तु मदः स्यादिति द्वे हर्षस्य । उद्भ्रमे उद्वेगः स्यात् । उद्वेजनम् उत्पूर्वकः 'ओविजी भयचलनयोः' तौदादिकस्तस्माद्भावे घञि, गुणे, कुत्वे च उद्वेगः, उद्भ्रमणम् उत्पूर्वको 'भ्रमु अनवस्थाने' दैवादिकस्तस्माद्भावे घञि "नोदात्तोपदेशस्येति" वृद्ध्यभावे च 'उद्भ्रमः' स्यादिति द्वे उद्वेजनस्य ॥ १२ ॥

न. पु. स. पु.

मींजना, अङ्गीकार,न मानना, रण में पुकारना.

**विमर्दनं परिमले[1]ऽभ्युपपत्तिरनुग्रहः ।**

पु. पु. पु. पु.

**निग्रहे[2]'स्तु' निरोधः (स्याद) भियोगस्त्वभिग्रहः ॥१३॥**

वीति—परिमले विमर्दनं स्यात् । विमृदितम् विपूर्वको 'मृद क्षोदे' क्रैयादिकस्तस्माद्भावे 'ल्युटि' गुणे, अनादेशे च विमर्दनम्, परिमलनम् परिपूर्वको 'मल धारणे' भौवादिकस्तस्माद्भावे घञि, संज्ञापूर्वकत्वाद्वृद्ध्यभावे च परिमलः स्यादिति द्वे कुङ्कुमादिमर्दनस्य । अभ्युपपदनम् अभ्युपपूर्वकः 'पद गतौ' दैवादिकाद्भावे 'क्तिनि' अभ्युपपत्तिः, अनुग्रहणम् अनुपूर्वको 'ग्रह उपादाने' क्रैयादिकस्तस्माद्भावे "ग्रहवृद" इत्यपि अनुग्रहः स्यादिति द्वे हितसंपादनाहितनिवारणप्रवृत्तेः । निग्रहणम् 'अपि' निग्रहः, निरोधनम् निपूर्वको 'रुधिर आवरणे' रौधादिकस्तस्माद्भावे घञि, गुणे च निरोधः स्यात । स्वामिमते तु विग्रहस्तु विरोधः स्यादिति वा पाठस्तत्र विग्रहणम् 'अपि' विग्रहः,

१ "परिमलो विमर्देऽपीति" (विश्वः) ॥ २ निग्रहस्तद्विरुद्धः स्यादिति पाठान्तरम् ॥

विरोधनम् 'घञि' विरोध: स्यादिति द्वे निरोधस्य। अभियोजनम् अभिपूर्वको 'युजिर् योगे' रौधादिकस्तस्माद्भावे 'घञि' गुणे, कुत्वे च अभियोग:, अभिग्रहणम् अभिपूर्वको ग्रह उपादाने, क्रैयादिकस्तस्माद्भावे 'अपि' अभिग्रह: "अभिग्रहोऽभिग्रहणेऽप्यभियोगे च गौरवे" (इति रुद्र:) इति द्वे अभियोगस्य ॥ १३ ॥

मूठीबाँधना, लूटना, बाँधना, संताप.

**मुष्टिबन्ध'स्तु' संग्राहो (डिम्बे) डमरविप्लवौ।**
**बन्धनं प्रसितिश्चार: स्पर्श: स्प्रष्टोपतप्तरि ॥ १४ ॥**

(पु. पु. पु. पु. पु. / न. स. पु. पु. पु. पु.)

म्विति—मुष्यतेऽनया, मुष्णाति वा क्तिनि, क्तिचि वा मुष्टि: "संपीडिताङ्गुलि मुष्टि:" (इति हलायुध:) बन्धनं 'घञि' बन्ध: मुष्टेर्बन्धो मुष्टिबन्ध:, संग्रहणम् संपूर्वकाद् 'ग्रह उपादाने' क्रैयादिकाद्भावे "समिमुष्टाविति" घञि, वृद्धौ च संग्राह: स्यादिति द्वे मुष्टि बन्धनस्य। डिम्बे लुण्ठने डमरविप्लवौ स्याताम्। डिम्बनम् 'डिबि नोदे' अस्माद्भावे 'घञि' डयनम् 'डीङ् विहायसा गतौ' अस्मादौणादिके निपातिते वा डिम्ब: "भयध्वनि पुष्कसेऽपि डिम्ब: प्लीहनि विप्लवे" (इति रभस:) 'डम' इति शब्दस्यराणाम् डम पूर्वको 'रा दाने' आदादिकस्तस्माद्भावे बाहुलकाद् घञर्थे 'के' आलोपे च डमर:, प्रज्ञाद्यणि तु डामरोऽपि। विप्लवनम् विपूर्वक: 'प्लुङ् गतौ' भौवादिकस्तस्माद् "ऋदोरप्" इत्यपि, विप्लव: स्यादिति त्रीणि धाडक लुण्ठनादेरशस्त्रकलहस्य वा बद्धम् 'बन्ध बन्धने' क्रैयादिकस्तस्माद्भावे ल्युटि, अनादेशे च बन्धनम्, प्रसयनम् प्रपूर्वक: 'षिञ् बन्धने' सौवादिकस्तस्माद्भावे 'क्तिनि' प्रसिति:, चरणम् 'चर गतौ' भौवादिकाद् बन्धनार्थाद्भावे घञि, वृद्धौ च 'चार:' "बन्धापसर्पयोश्चार:" (इति रुद्र:) स्वामि मते तु 'स्वार:'[1] इति पाठस्तत्र स्वरति 'स्वृ शब्दोपतापयो:' भौवादिकात्पचाद्यचि स्वर: प्रज्ञाद्यणि तु स्वारोऽपि स्यादिति त्रीणि बन्धनस्य। उपतप्तरि स्पर्श: स्प्रष्टा च स्यात्। स्पृशति 'स्पृश संस्पर्शने' तौदादिको धातूनामनेकार्थत्वादुपतापे वृत्तिस्तस्मात्कर्तरि "पदरुजविशस्पृशो घञ्" इति घञि, गुणे च स्पर्श: "स्पश:" इति रेफहीनपाठे तु 'स्पश बाधनस्पर्शनयो:' भौवादिकात्पचाद्यचि स्पशोऽपि, तृचि "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" इत्यमागमे च स्प्रष्टा पक्षे स्पर्ष्टा च। उपतपति उपपूर्वक: 'तप सन्तापे' भौवादिकस्तस्मात्तृचि, उपतप्ता स्यादिति त्रीणि संतप्तस्य, संतापस्य वा ॥ १४ ॥[2]

अपकार, अभिप्रायानुरूपचेष्टा, प्रकृति का बदलना.

**निकारो विप्रकार: (स्यादा) कारस्त्विङ्ग इङ्गितम्।**
**परिणामो विकारो (द्वे समे) विकृतिविक्रिये ॥ १५ ॥**

(पु. पु. पु. पु. न. / पु. पु. स. स.)

---

१ स्वामी तु चारस्थाने स्वारं पठित्वा स्वरादीनां चतुर्णां पर्यायतामाह ॥

२ स्वारस्पर्शयोर्भावे घञ्, स्प्रष्टोपतप्त्रोर्भावे "कृत्यल्युटो बहुलमिति" तृच् भावप्रकरणानुरोधादिति वा ॥

नीति–निकृष्टीकरणम्, निपूर्वको 'डुकृञ् करणे' तानादिकस्तस्माद्भावे 'घञि' वृद्धौ च निकारः "निकारः स्यात्परिभवे धान्यस्योत्क्षेपणेऽपि च" (इति धरणिः) विप्रकरणम् विप्रपूर्वकात्कृञो भावे 'घञि' विप्रकारः स्यादिति द्वे अपकारस्य। आकरणम् आङ्पूर्वकात्कृञो भावे 'घञि' आकारः, इङ्गनम् 'इगि गतौ' भौवादिकाद्भावे 'घञि' इङ्गः, एवं भावे क्ते, नुमि इडागमे च 'इङ्गितम्' स्यादिति त्रीणि अभिप्रायानुरूपचेष्टायाः। परिणामनम् परिपूर्वको 'णम प्रह्वत्वे शब्दे च' भौवादिकस्तस्माद्भावे घञि, वृद्धौ च परिणामः, विकरणम् विपूर्वकात्कृञो भावे 'घञि' विकारः, क्तिनि विकृतिः एवं 'कृञःशचेति' शे, यकि, रिङादेशे च विक्रिया इमे द्वे समे समानार्थे स्यातामिति चत्वारि प्रकृतेरन्यथा भवनस्य ॥ १५ ॥

छीन लेना, बटोरना, लेना, खेल के लिये घूमना.

पु. पु. पु. पु.
**अपहारस्त्वपचयः समाहारः समुच्चयः ।**
पु. न. पु. पु.[1]
**प्रत्याहार उपादानं विहार (स्तु) परिक्रमः ॥ १६ ॥**

अपेति–अपहरणम् अपपूर्वको 'हृञ् हरणे' भौवादिकस्तस्माद्भावे 'घञि' वृद्धौ च अपहारः, अपचयनम् अपपूर्वकः 'चिञ् चयने' सौवादिकस्तस्माद्भावे 'एरच्' इत्यचि, गुणे, अयादेशे च अपचयः स्यादिति द्वे अपहरणस्य। समाहरणम् समाङ्पूर्वको 'हृञ् हरणे' भौवादिकस्तस्माद्भावे घञि, वृद्धौ च समाहारः, समुच्चयनम् समुत्पूर्वकः 'चिञ् चयने' अस्माद्भावे 'अचि' समुच्चयः स्यादिति द्वे राशीकरणस्य। प्रत्याहरणम् प्रत्याङ् पूर्वकाद् 'हृञ् हरणे' अस्माद्भावे 'घञि' प्रत्याहारः, उपात्तम् उपाङ् पूर्वकाद्दाञो भावे 'ल्युटि' अनादेशे च उपादानम्, स्यादिति द्वे स्वविषयेभ्य इन्द्रियपरावर्तनस्य। विहरणम् विपूर्वकाद् हृञो भावे घञि विहारः, परिक्रमणम् परिपूर्वकः 'क्रमु पादविक्षेपे' भौवादिकस्तस्माद्भावे 'घञि' "नोदात्तोपदेशस्य मान्तस्यानाचमेः" इति वृद्ध्यभावे च परिक्रमः स्यादिति द्वे क्रीडार्थसंचरणस्य ॥ १६ ॥

चोरी करना, युक्ति से बाणादि का निकालना, नकल करना, खर्च.

पु. न. पु. न.
**अभिहारोऽभिग्रहणं निर्हारोऽभ्यवकर्षणम् ।**
पु. पु. पु.
**अनुहारोऽनुकारः (स्यादर्थस्यापगमे) व्ययः ॥ १७ ॥**

अभीति–अभिहरणम् अभिपूर्वकाद् हृञो भावे घञि, वृद्धौ च अभिहारः, अभ्याङ्पूर्वकाल्ल्युटि तु अभ्याहरणमपि अभिगृहीतम् अभिपूर्वकाद् 'ग्रह उपादाने' अस्माद्भावे ल्युटि अनादेशे, णत्वे च 'अभिग्रहणम्' स्यादिति द्वे आभिमुख्येन ग्रहणस्य। निर्हरणम् "निर्" पूर्वकाद् हृञो भावे 'घञि' निर्हारः, अभ्यवकृष्टम्

[1] पुराङ्गनानामवनौ परिक्रम इति ॥

अभ्यवपूर्वकः 'कृष् विलेखने' भौवादिकस्तौदादिकश्च तस्माद्भावे ल्युटि गुणे, अनादेशे, णत्वे च अभ्यवकर्षणं स्यादिति द्वे शल्यादेर्युक्त्या निःसारणस्य। अनुहरणम्, अनुपूर्वकाद् हृञो भावे घञि, वृद्धौ च अनुहारः, अनुकरणम् अनुपूर्वकात् कृञो भावे घञि अनुकारः स्यादिति द्वे सदृशीकरणस्य। अर्थस्य धनादिकस्य अपगमे अपक्षयेऽल्पीभावे व्ययः स्यात् व्ययनम् 'व्यय वित्तसमुत्सर्गे' चुराद्यदन्तस्तस्माद्भावे घञि, 'एरच्' इत्यचि वा व्ययः स्यादित्येकमर्थापगमस्य ॥ १७ ॥

पु. स. पु.
बहना, **प्रवाह(स्तु)प्रवृत्तिः (स्या) त्प्रवहो "गमनं वहिः"।**
बाहर जाना, पु. पु. पु. पु. पु. पु.
संयम. **वियामो वियमो यामो यमः संयामसंयमौ ॥ १८ ॥**

प्रेति—प्रवहणम् प्रपूर्वको 'वह प्रापणे' भौवादिकस्तस्माद्भावे 'घञि' वृद्धौ च प्रवाहः, प्रवर्तनम् प्रपूर्वको 'वृतु वर्तने' भौवादिकस्तस्माद्भावे 'क्तिनि' प्रवृत्तिः स्यादिति द्वे अविच्छेदेन जलादिप्रवृत्तेः। वहिर्गमनं प्रवहः स्यात्। वहत्यनेन 'गोचरसंचरवहेति' घान्ते निपातिते वहः प्रकृष्टो वहः प्रवहः "प्रवहस्तु वहिर्यात्रा मातरिश्वप्रभेदयोः" (इति विश्वः) इत्येकं वहिर्यात्रायाः। वियमनम् विपूर्वको 'यम उपरमे' भौवादिकस्तस्माद्भावे 'घञि' वृद्धौ च वियामः, "यमः समुपनिविषु च" इति 'अपि' वियमः, यमनम् 'घञि' यामः चादनुपसर्गाद् अपि तु यमः, संयमनम् 'घञि' संयामः 'अपि' तु संयमः स्यादिति षट् संयमनस्य। स्वामी तु वियामवियमाविति द्वे विविधयमनस्य। यामयमाविति द्वे उपरतिमात्रस्य। संयामसंयमाविति द्वे च संयमनस्येति व्याख्यां व्याख्यातवानिति ॥ १८ ॥

मारण कर्म, न. पु. स. पु.स.
जागना, **हिंसाकर्माभिचारः (स्या)ज्जागर्याजागरा (द्वयोः)।**
विघ्न, पु. पु. पु. पु. पु.
पासका आश्रय. **विघ्नोऽन्तरायः प्रत्यूहः (स्यादु) पघ्नोऽन्तिकाश्रये ॥१९॥**

हिमिति—हिंसाफलं कर्म शाकपार्थिवादित्वान्मध्यमपदलोपे हिंसाकर्म, अभिचरणम् अभिपूर्वकः 'चर गतिभक्षणयोः' भौवादिकस्तस्माद्भावे 'घञि' वृद्धौ च अभिचारः स्यादिति द्वे मारणादिक्रियायाः। जागरणम् "जागृ निद्राक्षये" आदादिकस्तस्माद्भावे 'शे' यकि, "जाग्रोऽविचिण्णल्ङित्सु" इति गुणे, टापि च जागर्या गुणात्परत्वादियङादेशे जाग्रिया, क्तिनि जागर्तिः, 'जागर्तेरकारो वा' इत्यप्रत्यये, गुणे, टापि च जागरा द्वयोः स्त्रीपुंसयोः स्यादिति द्वे जागरणस्य। विहननम् विपूर्वको 'हन हिंसागत्योः' अस्माद् 'घञर्थे कः' इति 'के' "गमहनजनखनघसामिति" उपधालोपे, "हो हन्तेरिति" कुत्वे च विघ्नः अन्तर्मध्ये, अन्तरस्य व्यवधानस्य वा अयनम् 'अय गतौ' भौवादिकः 'इण् गतौ' आदादिकश्च तस्माद्भावे घञि,

अचि वा अन्तरायः, प्रत्यूहनम् प्रतिपूर्वकः 'ऊह वितर्के' भौवादिकस्तस्माद्भावे 'घञि' प्रत्यूहः स्यादिति त्रीणि विघ्नस्य । अन्तिकाश्रये उपघ्नः स्यात् । उपहन्यते, उपहननं वा उपपूर्वकाद्धन्तेरप्प्रत्यये उपधालोपे, कुत्वे च उपघ्नः "उपघ्नआश्रये" इति साधुः । अन्तिके आश्रीयते आश्रयणं वा "एरच्" इत्यचि, गुणे, अयादेशे च अन्तिकाश्रयः स्यादिति द्वे संनिहिताश्रयस्य ॥ १६ ॥

उपभोग, परिवार, महावियोग, अभिप्राय.

पु. पु. पु. स.
**निर्वेश उपभोगः (स्या) त्परिसर्पः परिक्रिया ।**
न. पु. पु. पु. पु.
**विधुरं (तु) प्रविश्लेषोऽभिप्रायश्छन्द आशयः ॥ २० ॥**

निरिति–निर्वेशनम् निरपूर्वको 'विश प्रवेशने' तौदादिकस्तस्माद्भावे 'घञि' गुणे च निर्वेशः, उपभोजनम् उपपूर्वको 'भुज पालनाभ्यवहारयोः' रौधादिकस्तस्माद्भावे घञि, गुणे, कुत्वे च उपभोगः स्यादिति द्वे उपभोगस्य । परितः समन्तात्सर्पणम् परिपूर्वकः 'सृप्लृ गतौ' भौवादिकस्तस्माद्भावे घञि, गुणे, रपरत्वे च परिसर्पः, परिकरणम् परिपूर्वकात्कृञो भावे "कृञः शचेति" शे, यकि, रिङादेशे च परिक्रिया स्यादिति द्वे परिजनादिनावेष्टनस्य । विगता धूः कार्यभारो "ऋक्पूरब्धूः पथामानक्षे" इत्यप्रत्यये विधुरम् क्लीबत्वं लोकात् । प्रविश्लेषणम् प्रविपूर्वकः 'श्लिष् आलिङ्गने' दैवादिकस्तस्माद्भावे घञि, गुणे च प्रविश्लेषः "वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिषु" ( इति त्रिकाण्डशेषः ) इति द्वे विश्लेषस्य । अभिप्रयणम् अभिपूर्वकः 'प्रीञ् तर्पणे' क्रैयादिकस्तस्माद्भावे 'घञि' वृद्धौ आयादेशे च अभिप्रायः, छन्दनम् 'छदि संवरणे' चौरादिकस्तस्माद्भावे घञि छन्दः, चन्दनं वेति विग्रहे तु 'चदि आह्लादने' भौवादिकस्तस्मात् "सर्वधातुभ्योऽसुन्निति" असुनि "चन्देरादेश्च छः" इति छे च छन्दस्सान्तोपि आशयनम् आङ्पूर्वकः 'शीङ् स्वप्ने' आदादिकस्तस्माद्भावे "एरच्" इत्यचि, गुणे, अयादेशे च आशयः स्यादिति त्रीण्यभिप्रायस्य ॥ २० ॥

संक्षेप, बिगाड़, चारों ओर जाना, आसन.

न. न. स. न.
**संक्षेपणं समसनं पर्य्यवस्था विरोधनम् ।**
स. पु. स. स. स.
**परिसर्या परीसारः (स्यादा)स्या(त्वा)सना स्थितिः॥ २१॥**

समिति–संक्षिप्तम् संपूर्वकः 'क्षिप प्रेरणे' तौदादिकस्तस्माद्भावे ल्युटि, गुणे, अनादेशे, णत्वे च संक्षेपणम्, समस्तम् संपूर्वकः 'असु क्षेपणे' दैवादिकस्तस्माद्भावे ल्युटि, अनादेशे च समसनं स्यादिति द्वे संक्षेपस्य । पर्यवस्थानम् पर्यवपूर्वकात्तिष्ठतेर्भावे "आतश्चोपसर्गे" इत्यङि, आलोपे, टापि च पर्यवस्था विरुद्धम् विपूर्वको 'रुधिर् आवरणे' अस्माद्भावे ल्युटि, गुणे, अनादेशे च विरोधनं स्यादिति द्वे विरोधस्य । परि-

सरणम् परिसर्या "परिचर्यापरिसर्येति" साधुः । एवं परिपूर्वकात्सरतेर्भावे 'घञि' उपसर्गस्य 'घञि' इति दीर्घे, वृद्धौ च परीसारः, दीर्घाभावे तु परिसारोऽपि स्यादिति द्वे सर्वतो गमनस्य । आसनम् 'आस उपवेशने' अस्माद्भावे "कृत्यल्युटो बहुलम्" इति 'ण्यति' आस्या, "ण्यासश्रन्थो युच्" इति 'युचि' अनादेशे, टापि च आसना, स्थानम् 'ष्ठा गतिनिवृत्तौ' भौवादिकस्तस्माद्भावे "स्थागापापचो भावे" इति क्तिनि "द्यतिस्यतीति" इत्वे च स्थितिः स्यादिति त्रीणि आसनस्य ॥ २१ ॥

विस्तार, शब्दविस्तार, अङ्गमींजना, लोप या छिपना.

पु. पु. पु. पु.
**विस्तारो विग्रहो व्यासः (स च शब्दस्य) विस्तरः ।**
न. न. पु. न.
**(स्या) न्मर्दनं संवाहनं विनाशः (स्याद)दर्शनम् ॥२२॥**

वीति—विस्तरणम् विपूर्वकः 'स्तॄञ् आच्छादने' क्रैयादिकस्तस्माद्भावे "प्रथने वावशब्दे" इति घञि, वृद्धौ च विस्तारः, विग्रहणम् विपूर्वकाद् 'ग्रह उपादाने' अस्माद्भावे "ग्रहवृद–" इत्यपि विग्रहः, व्यसनम् विपूर्वकः 'असु क्षेपणे' दैवादिकस्तस्माद्भावे घञि, वृद्धौ च व्यासः स्यादिति त्रीणि विस्तारस्य। स च शब्दस्य व्यासश्चेत्तदा विस्तरः स्यात् । विस्तरणम् विपूर्वकात्स्तृणातेर्भावे "ॠदोरप्" इत्यपि, गुणे च विस्तरः स्यादित्येकं शब्दविस्तरस्य । मृदितम् 'मृद क्षोदे' क्रैयादिकस्तस्माद्भावे ल्युटि मर्दनम् एवं संवाहितम् संपूर्वकाद्वहतेस्स्वार्थण्यन्ताद्भावे ल्युटि, " वाहनमाहितादिति " निपातनाद्दीर्घेऽपि वा संवाहनं संवहनं वा स्यादिति द्वे पादमर्दनादेः। विनशनम् विपूर्वकान्नश्यतेर्भावे घञि, वृद्धौ च विनाशः, दर्शनस्याभावोऽदर्शनं स्यादिति द्वे तिरोधानस्य ॥ २२ ॥

परिचय, घावका फैलना, धान्यादि का संग्रह, समीप या पड़ोस.

पु. पु. पु. न.
**संस्तवः(स्या)त्परिचयः प्रसर(स्तु)विसर्पणम् ।**
पु. पु. पु. न.
**नीवाक(स्तु)प्रयामः(स्या)त्संनिधिः संनिकर्षणम् ॥२३॥**

समिति—संपूर्वकात्स्तौतेर्भावे "ॠदोरप्" इत्यपि, गुणे, अवादेशे च संस्तवः, परितः समन्ताच्चयनम् परिपूर्वकाच्चिनोतेर्भावे "एरच्" इत्यचि, गुणे, अयादेशे च परिचयः स्यादिति द्वे परिचयस्य " पहिचान " इति ख्यातस्य । प्रसरणम् प्रपूर्वकात्सरतेर्भावे बाहुलकादपि, गुणे च प्रसरः, विसृतम् विपूर्वकः 'सृप्लृ गतौ' भौवादिकस्तस्माद्भावे ल्युटि, गुणे च विसर्पणं स्यादिति द्वे व्रणादिविसरणस्य । निवचनम् निपूर्वकाद्वक्तेर्ब्रवीतेर्वा भावे घञि 'उपसर्गस्येति' दीर्घे, वृद्धौ, कुत्वे च नीवाकः, प्रयमणम् प्रपूर्वकाद्यच्छतेर्भावे घञि, वृद्धौ च प्रयामः स्यादिति द्वे धान्यसंचयस्य क्रयादरस्य वा । संनिधानम् संपूर्वकाद्धाञो भावे "उपसर्गे घोः किः" इति कौ, आलोपे च संनिधिः, घञर्थे के तु संनिधं च " संनिधं समीपमुपकण्ठम् " ( इति वोपालितः ) संनिकृष्टम् संनिपूर्वकात्कृषेर्भावे ल्युटि गुणे च संनिकर्षणं स्यादिति द्वे संनिधानस्य ॥ २३ ॥

अन्न काटना, अन्नादिकों को साफ करना, प्रसंग, नरी.

पु. पु. न. पु. न. पु.
**लवोऽभिलावो (लवने) निष्पावः (पवने) पवः ।**
पु. पु. पु. न.
**प्रस्तावः(स्याद)वसरस्त्रसरः सूत्रवेष्टनम् ॥ २४ ॥**

लेति—लवने छेदने लवः, अभिलवश्च स्यात् । लवनम् लुनातेर्भावे " ऋदोरप् " इत्यपि लवः, अभिलवनम् अभिपूर्वकाल्लूञो भावे ' निरभ्योः पूल्वोः ' इति घञि, वृद्धौ, आवादेशे च अभिलावः, लूनम्, लुनातेर्भावे ल्युटि लवनं स्यादिति त्रीणि छेदनस्य। पवने निष्पावः पवश्च स्यात् । निष्पवनम् निष्पूर्वकात्पुनातेर्भावे घञि निष्पावः, पूतम् पूञो भावे ल्युटि, गुणे अनादेशे च पवनम्, एवम् " ऋदोरप् " इत्यपि तु पवः स्यादिति त्रीणि धान्यादीनां बहुलीकरणस्य । प्रस्तवनम् प्रपूर्वकात्स्तौतेर्भावे ' प्रेद्रुस्तुस्रुवः ' इति घञि, वृद्धौ, आवादेशे च प्रस्तावः, अवसरणम् अवपूर्वकात्सरतेर्भावे बाहुलकादपि गुणे च अवसरः स्यादिति द्वे प्रसंगस्य। त्रसनम् त्रस्यतेर्भावे बाहुलकादौणादिके ' अरनि ' त्रसरः " तसरः " इति पाठे तु तननम् तनोतेर्भावे " तन्पृषिभ्यां क्सरन् " इति क्सरनि, नलोपे च तसरोऽपि सूत्राणां तन्तूनां वेष्टनं सूत्रवेष्टनं स्यादिति द्वे सूत्रस्य वेष्टनक्रियायाः ॥ २४ ॥

प्रथम गर्भ, प्रीति प्रार्थित, बुद्धिशक्ति, कोटका मार्ग.

पु. पु. पु. पु.
**प्रजनः (स्यादु) पसरः प्रश्रयप्रणयौ (समौ)।**
स पु. पु. पु.
**धीशक्तिर्निष्क्रमो(ऽस्त्री तु) संक्रमो दुर्गसंचरः ॥ २५ ॥**

प्रेति—प्रजननम् प्रपूर्वको ' जनी प्रादुर्भावे ' दैवादिकस्तस्माद्भावे ' घञि ' "जनिवध्योरिति " वृद्ध्यभावे च प्रजनः, उपसरणम् उपपूर्वकात्सरतेर्भावे " प्रजने सर्तेः " इत्यपि, गुणे च उपसरः स्यादिति द्वे प्रथमगर्भग्रहणस्य । प्रश्रयणम् प्रपूर्वकः ' श्रिञ् सेवायाम् ' भौवादिकस्तस्माद्भावे " एरच् " इत्यचि गुणे, अयादेशे च प्रश्रयः, " प्रसरः " इति वा पाठस्तत्र प्रसरणम् प्रसरतेर्भावे बाहुलकादपि, गुणे च प्रसरोऽपि, " प्रसरः प्रणये वेगे " ( इति मेदिनी ) प्रणयनम् प्रपूर्वकान्नयतेर्भावे अचि, गुणे, अयादेशे च प्रणयः उभौ समौ समानार्थौ स्यातामिति द्वे प्रीत्या प्रार्थनस्य । धियः शक्तिः धीशक्तिः साष्टधा " शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहौ च विज्ञानं तत्त्वज्ञानं च धी गुणाः " निष्क्रमणम् निष्पूर्वकात्क्राम्यतेर्भावे घञि, " नोदात्तोपदेशस्येति " वृद्ध्यभावे च निष्क्रमः " निष्क्रमो निर्गमे ख्यातौ बुद्धिसंपदि निष्क्रमः " ( इति रुद्रः ) इति द्वे बुद्धिशक्तेः । संक्रमणम् संपूर्वकात्क्रमेर्भावे घञि, वृद्ध्यभावे च संक्रमः अस्त्री पुन्नपुंसकं स्यात् । दुःखेन गम्यतेऽस्मिन्निति "सुदुरोरधिकरणे" इति (डे) दुर्गम्, संचरणम् संपूर्वकाच्चरतेर्भावे पुंसीति 'घे' संचर·

'घञि'तु संचारोऽपि दुर्गस्य संचरो दुर्गसंचरः स्यादिति द्वे दुर्गप्रवेशनक्रियायाः ॥ २५ ॥

युद्धकी बढ़ती या कर्मारम्भ में पहला प्रयोग, प्रथमारम्भ या आरम्भमात्र, वेग.

पु. पु. पु. पु.
**प्रत्युत्क्रमः प्रयोगार्थः प्रक्रमः (स्या) दुपक्रमः ।**
न. पु. पु. पु. स
**(स्याद)भ्यादानमुद्घात आरम्भः संभ्रमस्त्वरा॥२६॥**

प्रेति–प्रत्युत्क्रमणम् प्रत्युत्पूर्वकात्क्राम्यतेर्भावे घञि, "अनुदात्तोपदेशस्येति" वृद्ध्यभावे च प्रत्युत्क्रमः, क्तिनि तु प्रत्युत्क्रान्तिः, प्रयोजनम् प्रपूर्वकाद्युनक्तेर्भावे घञि, गुणे, कुत्वे च प्रयोगः स एवार्थो यस्येति प्रयोगार्थः "प्रयुद्धार्थः" इति वा पाठस्तत्र योधनं युद्धम् प्रकृष्टं युद्धमर्थोऽस्येति प्रयुद्धार्थोऽपि "प्रत्युत्क्रमः प्रयुद्धार्थः" ( इति भागुरिः ) इति द्वे कर्मारम्भे प्रथमप्रयोगस्य । प्रक्रमणम् प्रपूर्वकात्क्राम्यतेर्भावे घञि वृद्ध्यभावे च प्रक्रमः, एवम् उपक्रमणम् उपपूर्वकात्क्रमेर्भावे घञि उपक्रमः, आत्तमादानम्, आभिमुख्येनादानम् अभ्यादानम्, उद्धननम् उत्पूर्वकाद्धन्तेर्भावे घञि "हनस्तोऽचिण्णलोः" इति नस्य तत्वे कुत्वे वृद्धौ च उद्घातः, एवमुपोद्घातोऽपि आरम्भणम् आङ्पूर्वकाद् 'रभ राभस्ये' भौवादिकाद्भावे घञि, "रभेरशब्लिटोः इति नुमि च आरम्भः स्यादिति पञ्चारम्भस्य अन्ये त्वाद्यौ प्रथमारम्भस्य त्रीण्यारम्भमात्रस्येत्याहुर्वा । संभ्रमणम् संपूर्वकाद्भ्राम्यतेर्भावे घञि, वृद्ध्यभावे च संभ्रमः, त्वरणम् त्वरतेर्भावे घटादीनां षित्त्वातिदेशादङि टापि च त्वरा स्यात् "आवेगस्तु त्वरा त्वरिः" (इति वाचस्पतिः ) इति द्वे त्वरायाः ॥ २६ ॥

कार्य का रुकना, गिरना साक्षात्कार, तिलक लगाना.

पु. पु. २ पु. न.
**प्रतिबन्धः प्रतिष्टम्भोऽवनाय ( स्तु ) निपातनम् ।**
पु. पु. पु. न.
**उपलम्भस्त्वनुभवः समालम्भो विलेपनम् ॥ २७ ॥**

प्रेति–प्रतिबन्धनम् प्रतिपूर्वकाद्बध्नातेर्भावे घञि प्रतिबन्धः "विष्कम्भः प्रतिबन्धो वियोगः" ( इति बोपालितः ) प्रतिष्टम्भनम् प्रतिपूर्वकात्स्तभ्नातेर्भावे घञि "स्तम्भेरिति" षत्वे च प्रतिष्टम्भः, एवं विष्टम्भोऽपि स्यादिति द्वे रोधस्य । अवनयनम् अवपूर्वकान्नयतेर्भावे "अवोदोर्नियः" इति घञि, वृद्धौ, आयादेशे च अवनायः, अचि तु अवनयोऽपि निपातितम् निपूर्वकात्पततेः स्वार्थण्यन्ताद्भावे ल्युटि अनादेशे च निपातनम्, नियातनमिति वा पाठस्तत्र निपूर्वकाद् 'यत निकारोपस्कारयोः' चौरादिकाद्भावे ल्युटि नियातनमपि स्यादिति द्वे अधोनयनस्य । उपलम्भनम् उपपूर्वकाल्लभतेर्भावे घञि "उपसर्गात्खल्घञोः" इति नुमि च उपलम्भः अनुभवनम् अनुपूर्वकाद्भ-

---

१ "संचारो निर्गमो भ्रमाम्बुपथः" ( इति रत्नकोषः ) ॥
२–'बाहुप्रतिष्टम्भविवृद्धमन्यु' रिति रघुः ॥

वतेर्भावे "ऋदोरप्" इत्यपि, गुणे, अवादेशे च अनुभवः स्यादिति द्वे साक्षात्कारस्य। समालम्भनम् समाङ्पूर्वकाल्लभेर्भावे घञि, नुमि च समालम्भः, विलिप्तम् विपूर्वकाल्लिम्पतेर्भावे ल्युटि, गुणे, अनादेशे च विलेपनं स्यादिति द्वे कुङ्कुमादिनोपलेपस्य ॥ २७ ॥

प्रीति तोड़ना, अतिदान, अतिप्रसिद्धि, पदार्थों का देखना.

पु. पु. पु. न.
**विप्रलम्भो विप्रयोगो विलम्भस्त्वतिसर्जनम्।**
पु. स. स. पु.
**विश्राव(स्तु)प्रविख्यातिरवेक्षा प्रतिजागरः ॥ २८ ॥**

वीति–विप्रलम्भनम् विप्रपूर्वकाल्लभतेर्भावे 'घञि' नुमि च विप्रलम्भः विप्रयोजनम् विप्रपूर्वकाद्युजेर्भावे घञि, गुणे कुत्वे च विप्रयोगः स्यादिति द्वे रागिणोर्वियोजनस्य। विलम्भनम् विपूर्वकाल्लभेर्भावे घञि "उपसर्गादिति" नुमि च विलम्भः, अतिसृष्टम् अतिपूर्वकात्सृज्यतेर्भावे ल्युटि, गुणे, अनादेशे च अतिसर्जनं स्यादिति द्वे अतिदानस्य। विश्रवणम् विपूर्वकाच्छृणोतेर्भावे "वौ क्षुश्रुवः" इति घञि, वृद्धौ, आवादेशे च विश्रावः, प्रविख्यानम् प्रविपूर्वकात्ख्यातेर्भावे क्तिनि, प्रविख्यातिः, एवं प्रतिख्यानम् प्रतिख्यातिरपि स्यादिति द्वे अतिप्रसिद्धेः। अवेक्षणम् अवपूर्वकादीक्षतेर्भावे "गुरोश्च हलः" इत्यप्रत्यये टापि च अवेक्षा, प्रतिजागरणम् प्रतिपूर्वकाज्जागर्तेर्भावे घञि "जाग्रोऽविचिण्णल्ङित्" गुणे रपरत्वे च प्रतिजागरः स्यादिति द्वे अवेक्षणस्य ॥ २८ ॥

पढ़ना, गीला करना, क्लेश, समागम.

पु. पु. पु. पु. पु. न.
**निपाठनिपठौ पाठे तेमस्तेमौ समुन्दने।**
पु. पु. पु. पु. पु. पु.
**आदीनवास्रवौ क्लेशे मेलके सङ्गसङ्गमौ ॥ २९ ॥**

नीति–पाठे निपाठनिपठौ स्याताम्। निपठनम् निपूर्वकात्पठतेर्भावे 'घञि' वृद्धौ च निपाठः "नौ गदनदेति" अपि तु निपठः एवं केवलादपि घञि पाठः स्यादिति त्रीणि पठनस्य। समुन्दने संक्लेदने तेमस्तेमौ स्याताम्। तेमनम् तिम्यतेर्भावे घञि, गुणे च तेमः, एवं स्तेमनं स्तेमः, समुन्नं समुत्तं वा संपूर्वकादुनत्तेर्भावे ल्युटि अनादेशे च 'समुन्दनम्' स्यादिति त्रीण्यार्द्रीभावस्य। क्लेशे आदीनवास्रवौ स्याताम्। आदानम् आङ्पूर्वको 'दीङ् क्षये' दैवादिकस्तस्माद्भावे क्ते स्वादीनामोदित्त्वात् "ओदितश्चेति" निष्ठानत्वे च आदीनम् + वानम् वातेर्बाहुलकाद् "घञर्थे कः" इति के आलोपे च वः, आदीनस्य वः आदीनवः, आश्रवणम् आङ्पूर्वकात्स्रवतेर्भावे अपि, गुणे अवादेशे च आस्रवः, क्लेशनम् क्लिश्नातेर्भावे घञि, गुणे च क्लेशः स्यादिति त्रीणि क्लेशस्य। मेलके सङ्गसङ्गमौ स्याताम्। मेलनम् मिलतेर्भावे घञि मेलः स्वार्थे कनि च मेलकः सञ्जनम्

---

१–आस्रवन्तीन्द्रियाण्यनेनेति आस्रवः केषांचिन्मते तु आश्रवणमाश्रवस्तालव्यमध्योऽपि ॥

'षञ्ज सङ्गे' भौवादिकस्तस्माद्भावे घञि, कुत्वे, परसवर्णे च सङ्गः, संगमनम् संपूर्वकाद्गच्छतेर्भावे "ग्रहवृदृनिश्चिगमश्च" इत्यपि संगमः स्यात्। प्रज्ञाद्यणि तु सांगमोऽपि "नामेलःसंगमोनावा" ( इत्यमरमाला ) इति त्रीणि सगमस्य ॥ २९ ॥

न. न. न. स. पु.
खोजना, **संवीक्षणं विचयनं मार्गणं मृगणा मृगः ।**
पु. पु. पु. न.
लिपटना. **परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम् ॥ ३० ॥**

संवीति–संवीक्षितम् संविपूर्वकादीक्षतेर्भावे ल्युटि, अनादेशे च संवीक्षणम्, स्वामिमते तु "अन्वीक्षितमन्वीक्षणम्, अन्वेषितमन्वेषणम्, गवेषितं गवेषणमित्यपि त्रयं स्यात्" विचितम् विपूर्वकाच्चिनोतेर्भावे ल्युटि, गुणे, अनादेशे, अयादेशे च विचयनम्, मार्गितम् 'मार्ग अन्वेषणे' चौरादिकस्तस्माद्भावे ल्युटि मार्गणम्, मृगणम 'मृग अन्वेषणे' चुराद्यदन्ताद्भावे 'ण्यासेति' युचि, अनादेशे, टापि च मृगणा मुकुटमते तु "परिचर्या परिसर्या मृगयेति" निपातिते मृगयाऽपि घञि तु मृगः स्यादिति पञ्चान्वेषणस्य । परिरम्भणम् परिपूर्वकाद्रभतेर्भावे घञि, "रभेरशब्लिटोः" इति नुमि च परिरम्भः, दीर्घे च परीरम्भोऽपि, परिष्वञ्जनम् परिपूर्वकः 'ष्वञ्ज परिष्वङ्गे' भौवादिकस्तस्माद्भावे घञि, कुत्वे, परसवर्णे, "परिनिविभ्यः" इति षत्वे च परिष्वङ्गः, संश्लेषणम् संपूर्वकात् श्लिष्यतेर्भावे घञि, गुणे च संश्लेषः, उपगूढम् उपपूर्वकाद्गूहतेर्भावे ल्युटि "ऊदुपधाया गोहः" इत्युपधोदादेशे च उपगूहनं स्यादिति चत्वार्यालिङ्गनस्य ॥ ३० ॥

न. न. न. न. न.
देखना, **निर्वर्णनं ( तु ) निध्यानं दर्शनालोकनेक्षणम् ।**
न. न. पु. स.
निकालना. **प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ॥ ३१ ॥**

नीति–निर्वर्णितम् निर्पूर्वकाद्वर्णयतेर्वर्णशब्दात् "सत्यापेति" णिजन्ताद्वा भावे ल्युटि, अनादेशे च निर्वर्णनम्, निध्यातम् निपूर्वकाद्ध्यायतेर्भावे ल्युटि निध्यानम्, दृष्टम् पश्यतेर्भावे ल्युटि, गुणे, अनादेशे च दर्शनम्, आलोकितम् आङ्पूर्वकाल्लोकतेर्भावे ल्युटि आलोकनम् घञि तु आलोकोऽपि । ईक्षितम् ईक्षतेर्भावे ल्युटि, अनादेशे, णत्वे च ईक्षणम्, एवं लक्षितं लक्षणमपि स्यादिति पञ्च निरीक्षणस्य । प्रत्याख्यातम् प्रत्याङ्पूर्वकात्ख्यातेश्चक्षिङादेशाद्वा भावे ल्युटि प्रत्याख्यानम्, निरस्तम् निर्पूर्वकादस्यतेर्भावे ल्युटि अनादेशे च निरसनम्, प्रत्यादेशनम् प्रत्याङ्पूर्वकाद्दिशतेर्भावे घञि गुणे च प्रत्यादेशः, निराकरणम् निराङ्पूर्वकात्करोतेर्भावे 'क्तिनि' निराकृतिः स्यादिति चत्वारि निराकरणस्य ॥ ३१ ॥

---

१—वर्णवर्णक्रियाविस्तारगुणवचनेषु ॥

पु. पु.

प्रहर के सोने वाले, घिनाना, निन्दा या करुणा.

**उपशायो विशायश्च ( पर्यायशयनार्थकौ ) ।**

न. स. स. स.

**अर्तनं (च) ऋतीया (च) हृणीया (च) घृणा (र्थके) ॥ ३२ ॥**

उपेति—उपशायो विशायश्चेत्युभौ पर्यायेण क्रमेण शयनं तदेवार्थो ययोरिति पर्याय-शयनार्थकौ स्याताम् । उपशयनम् उपपूर्वकाच्छेतेर्भावे "व्युपयोः शेतेः पर्याये" इति घञि, वृद्धौ, आयादेशे च उपशायः, एवं विशयनं विशायश्च स्यादिति द्वे पर्याय-शयनार्थकस्य । "घृणाजुगुप्साकृपयोरिति" (विश्वः) घृणा एवार्थो यस्येति घृणार्थक-स्तस्मिन् घृणार्थके अर्तनम्, ऋतीया, हृणीया च स्यात् । ऋतितम्, ऋतिः सौत्र-स्तस्मादीयङोऽभावे भावे ल्युटि, गुणे, अनादेशे च अर्तनम्, ईयङ् पक्षे "अप्रत्ययात्" इत्यप्रत्यये, टापि च ऋतीया, हृणीयनम् कण्ड्वादित्वाद् हृणीयतेर्भावे अप्रत्यये, टापि च हृणीया, पृषोदरादित्वाद्ध्रस्वे च हृणियापि, घर्णनम् घृणोतेर्भावे भिदादित्वादङि टापि च घृणा "मोहो वीज्या जुगुप्सा च हृणीया हृणिया घृणा" ( इति वाच-स्पतिः ) इति चत्वारि जुगुप्सनस्य ॥ ३२ ॥

पु. पु. पु. पु.

उलटा पलटा, अतिक्रम.

**स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये ।**

पु. पु. पु. पु.

**पर्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्ययः ॥ ३३ ॥**

स्यादिति—विपर्यये व्यत्यासः, विपर्यासः, व्यत्ययश्च स्यात् । व्यत्यसनम् व्यतिपूर्व कादस्यतेर्भावे घञि, वृद्धौ च व्यत्यासः, एवं विपर्यसनं विपर्यासः, व्यत्ययनम् व्यति-पूर्वकादेतेर्भावे "एरच्" इत्यचि, गुणे, अयादेशे च व्यत्ययः, विपर्ययनम् विपरि-पूर्वकादेतेर्भावे अचि विपर्ययः घञि तु 'विपर्यायः' स्यादिति चत्वारि व्यतिक्रमस्य । पर्ययणम् परिपूर्वकादेतेर्भावे अचि पर्ययः, घञि तु पर्यायः, अतिक्रमणम् अतिपूर्वका-त्क्राम्यतेर्भावे घञि, "नोदात्तोपदेशस्येति" वृद्ध्यभावे च अतिक्रमः, तस्मिन्नतिक्रमे अतिपातः, उपात्ययश्च स्यात् । अतिपतनम् अतिपूर्वकात्पततेर्भावे घञि, वृद्धौ च अतिपातः, उपात्ययनम् उपातिपूर्वकादेतेर्भावे अचि, गुणे, अयादेशे च उपात्ययः स्यादिति चत्वार्यतिक्रमस्य ॥ ३३ ॥

न.

भृत्यों को भेजना, यज्ञमें ब्राह्मणों की स्तुति का स्थान.

**( प्रेषणं यत्समाहूय तत्रस्या ) त्प्रतिशासनम् ।**

पु.

**(स) संस्तावः (क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम्) ॥ ३४ ॥**

प्रयिति—समाहूय यत् प्रेषणं भृत्यादीनामाज्ञाकरणं तत्र प्रतिशासनम् स्यात् । प्रति-पूर्वकाच्छास्तेर्भावे ल्युटि अनादेशे च प्रतिशासनम् स्यादित्येकं भृत्यादिप्रेषणस्य ।

क्रतुषु यागेषु द्विजन्मनां वेदगायकानां विप्राणां या स्तुतिभूमिः स संस्तावः स्यात् । समेत्य स्तुवन्त्यत्रेति विग्रहे संपूर्वकात्स्तौतेराधारे "यज्ञे समिस्तुवः" इति घञि, वृद्धौ, आवादेशे च संस्तावः स्यादित्येकं यज्ञे स्तावकद्विजावस्थानभूमेः ॥ ३४ ॥

बहटन या ठीहा, खन्ता या गड़ेला

(निधाय तक्ष्यते यत्र काष्ठे काष्ठं स) उद्घनः ।
स्तम्बघ्न (स्तु)स्तम्बघनः (स्तम्बो येन निहन्यते)॥३५॥

नीति—यत्र यस्मिन् काष्ठे काष्ठं निधाय संस्थाप्य तक्ष्यते तनूक्रियते स काष्ठरूपाधारः उद्घनः स्यात् । उदूर्ध्वं हन्यतेऽस्मिन् उत्पूर्वकाद्धन्तेरधिकरणे अपि "उद्घनोऽत्याधानम्" इति साधुरित्येकमुद्घनस्य "ठीहा" इति ख्यातस्य । येन शस्त्रविशेषेण स्तम्बो गुल्सो निहन्यते स स्तम्बघ्नः स्तम्बघनश्च स्यात् । स्तम्बो हन्यते येन स्तम्बोपपदाद्धन्तेः करणे "स्तम्बे क च" इति के, उपधालोपे, कुत्वे च स्तम्बघ्नः पक्षे अपि, घनादेशे च स्तम्बघनः ल्युटि तु स्तम्बहननमपि स्यादिति द्वे तृणादिगुच्छोन्मूलनसाधनस्य, नीवारादिग्रहणार्थं कृतवंशपात्रस्य वा ॥ ३५ ॥

बर्मा, बराबर जमे वृक्ष अनाज को ऊपर निकालना.

आविधो (विध्यते येन तत्र) "विष्वक्समे" निघः ।
उत्कार 'श्च' निकार 'श्च' (द्वौ धान्योत्क्षेपणार्थकौ)॥३६॥

आवीति—येन शस्त्रविशेषेण पदार्थो विध्यते तत्र आविधः स्यात् । आविध्यते येन, आङ्पूर्वकाद्विध्यतेः करणे "घञर्थे कः" इति के, "ग्रहिज्येति" संप्रसारणे च आविधः स्यादित्येकं भ्रमरसूच्यादेः "बर्मा" इति ख्यातस्य । विष्वक्समे समन्तात्समारोहपरिणाहमहीरुहादौ निघः स्यात् । नियतं हन्यते निघः "निघो निमित्तम्" इति साधुरित्येकं तुल्यरोहपरिणाहवृक्षादेः । उत्कारो निकारश्चेमौ द्वौ धान्यानामुत्क्षेपणं तदेवार्थो ययोस्ताविति धान्योत्क्षेपणार्थकौ स्याताम् । उत्करणम् उत्पूर्वकात्किरतेर्भावे "कॄ धान्ये" इति घञि, वृद्धौ च उत्कारः एवं निकरणम् 'घञि' निकारःस्यादिति द्वे धान्यानामुत्क्षेपणस्य ॥ ३६ ॥

खाना, डांकना, छींकना, डकारना, उपरति या निवृत्ति, थूंकना, या खखारना.

निगारोद्गारविक्षावोद्ग्राहा (निगरणादिषु) ।
आरत्यवरति विरतय उपरामे(ऽथास्त्रियां तु)निष्ठेवः३७।
निष्ठ्यूतिर्निष्ठेवनं निष्ठीवन (मित्यभिन्नानि) ।

नीति—निगारः, उद्गारः, विक्षावः, उद्ग्राह एते चत्वारः क्रमशो निगरणादिषु वर्तन्ते । यथा निगरणम् निपूर्वकाद्गिरतेर्भावे "उन्न्योर्ग्रः" इति घञि, वृद्धौ च निगारः

स्यादित्येकं निगलनस्य । उद्गरणम् उत्पूर्वकाद् गृणातेर्भावे घञि उद्गारः स्यादित्येकं वमनस्य । विक्षवणम् विपूर्वकात् क्षौतेर्भावे "वौक्षुश्रुवः" इति घञि, वृद्धौ, आवादेशे च विक्षावः स्यादित्येकं छिक्कायाः । उद्ग्रहणम् उत्पूर्वकाद् गृह्णातेर्भावे 'उदिग्रहः' इति घञि, वृद्धौ च उद्ग्राहः स्यादित्येकमुद्ग्रहणस्य "डकार" इति ख्यातस्य । उपरामे आरत्यवरतिविरतयः स्युः । आरमणम् आङ्पूर्वकाद्रमतेर्भावे क्तिनि, "अनुदात्तोपदेशेति" मलोपे च आरतिः, अवरमणम् क्तिनि, मलोपे च अवरतिः, एवम् विरमणम् विरतिः, उपरमणम् उपपूर्वकाद्रमेर्भावे घञि, वृद्धौ च उपरामः संज्ञापूर्वकत्वाद्, वृद्ध्यभावे तु उपरमोऽपि स्यादिति चत्वार्युपरमणस्य । अथेति—निष्ठेवनम् निपूर्वकात् ष्ठीव्यतेर्भावे घञि, गुणे च निष्ठेवः, अस्त्रियां पुन्नपुंसके स्यात् । एवं क्तिनि, "च्छ्वोः शूडनुनासिके च" इत्यूठि, यणादेशे च निष्ठ्यूतिः, ल्युटि, गुणे, अनादेशे च निष्ठेवनम्, पृषोदरादित्वाद्दीर्घपक्षे तु निष्ठीवनम् इमानि अभिन्नानि एकार्थकानि स्युरिति चत्वारि मुखेनश्लेष्मनिरसनस्य ॥ ३७ ॥ ३ ॥

वेग, अन्त ज्वार, पशुओं को खदेना, शाप, औपगव-समूह.

न. स. स. न. पु. स.
**जवने जूतिः सातिस्त्ववसाने (स्यादथ) ज्वरे जूर्तिः॥३८॥**
पु. न. स.
**उदज (स्तु) पशुप्रेरणमकरणि (रित्यादयः शापे)।**
न.
**(गोत्रान्तेभ्यस्तस्यवृन्दमित्यौ)पगवका(दिकम्)॥३९॥**

जेति—जवने रंहसि जूतिः स्यात् । "जुः, सौत्रो वेगे" अस्माद्भावे ल्युटि, गुणे अवादेशे च जवनम्, 'क्तिनि' तु जूतिः "ऊतियूतिजूतिसातिहेतिकीर्तयश्च" इति साधुरिति द्वे वेगस्य । अवसाने विरामे सातिः स्यात् । सानम् स्यतेर्भावे क्तिनि सातिः "ऊतियूतीति" साधुः, अवसितम् अवपूर्वकात्स्यतेर्भावे ल्युटि अनादेशे च अवसानं स्यादिति द्वे समापनस्य । अथेति ज्वरे जूर्तिः स्यात् । ज्वरणम् ज्वरतेर्भावे घञि, संज्ञापूर्वकत्वाद्वृद्ध्यभावे च ज्वरः, एवं क्तिनि "ज्वरत्वरेति" ऊठि च जूर्तिः स्यादिति द्वे ज्वररोगस्य । उदजनम् उत्पूर्वकादजतेर्भावे "समुदोरजः पशुषु" इत्यपि, "अचपोः" इति पर्युदासाद्वीभावाभावे च उदजः, पशूनां प्रेरणम् पशुप्रेरणं स्यादिति द्वे गवादीनां प्रेरणस्य । शापे आक्रोशे अकरणिरित्यादयः स्युः । अकरणम् नञ्पूर्वकात्करोतेर्भावे "आक्रोशे नञ्यनिः" इत्यनौ, गुणे, णत्वे च अकरणिः आदिना न जननम् 'अनौ' अजननिः, अवग्रहणम् अवपूर्वकाद्गृह्णातेर्भावे "आक्रोशे अवन्योर्ग्रहः" इति घञि, वृद्धौ च अवग्राहः, एवं निग्रहणम् 'घञि' निग्राहः इत्यादयः स्युरित्येकमाक्रोशनस्य । गोत्रान्तेभ्यः अपत्यप्रत्ययान्तेभ्यस्तस्य वृन्दं 'तस्य समूहः' इत्यर्थे औपगवकादिकं स्यात् । यथा उपगोरपत्यानि पुमांसः "तस्यापत्यम्" इत्यणि, वृद्धौ "ओर्गुणः" इति गुणे अवादेशे च औपगवास्तेषां समूहः "गोत्रोक्षोष्ट्रोरभ्र-

राजेति" वुञि, अकादेशे च औपगवकम् आदिना गार्गकम्, दाक्षकमित्यादयो भवन्ति तस्य वृन्दमित्यावर्गपरिसमाप्तेरधिकारोऽयमित्येकमौपगवसमूहस्य ॥ ३८ । ३९ ॥

पुवा व पूरीका समूह, बाल-समूह या मनुष्य-समूह, मित्र-समूह.

न न
**आपूपिकं शाष्कुलिक (मेवमाद्यमचेतसाम्)।**
**"माणवानान्तु" माणव्यं "सहायानां" सहायता॥४०॥**

आपूविति—अचेतसां चेतनारहितानां जडानां वृन्दे आपूपिकम्, शाष्कुलिकम् एवमाद्यं स्यात्। अपूपानां समूहः "अचित्तहस्तिधेनोष्ठक्" इति ठकि, वृद्धौ, ठस्येकादेशे च आपूपिकं स्यादित्येकं पूपसमूहस्य। एवं शष्कुलीनां समूहः ठकि, वृद्धौ, इकादेशे च शाष्कुलिकं स्यादित्येकं शष्कुलीसमूहस्य। आदिना सक्तूनां समूहः साक्तुकमित्यादिग्रहः। माणवानां बालकानां वृन्दे तु माणव्यं स्यात्। माणवानां समूहः "ब्राह्मणमाणववाडवाद्यदिति" यति, "यस्येति" अलोपे च माणव्यं स्यादित्येकं बालसमूहस्य। मानवानां समूहे तु मानव्यमपि स्यादित्येकं मानवसमूहस्य। सहायानां वृन्दे सहायता स्यात्। सहायानां समूहः "गजसहायाभ्यामिति" तलि, टापि च सहायता स्यादित्येकं सहायसमूहस्य ॥ ४० ॥

हलों का समूह, ब्राह्मणों का समूह, पशुरियों का समूह, पीठों का समूह.

स. न. न.
**हल्या हलानां ब्राह्मण्यबाडव्ये (तु द्विजन्मनाम्)।**
न. न.
**(द्वे पर्शुकानां पृष्ठानां) पार्श्वं पृष्ठ्य (मिति क्रमात्)॥४१॥**

हेति—हलानां वृन्दे हल्या स्यात् हलानां समूहः "पाशादिभ्यो यः" इति ये टापि च हल्या स्यादित्येकं हलसमूहस्य। द्विजन्मनां ब्राह्मणानां वृन्दे तु ब्राह्मण्यवाडव्ये स्तः ब्राह्मणानां समूहः "ब्राह्मणमाणवेति" यति, ब्राह्मण्यम् एवं बाडवाना ब्राह्मणानां समूहः बाडव्यं स्यादिति द्वे विप्रसमुदायस्य। पर्शुकानां पृष्ठानां च वृन्दे पार्श्वम्, पृष्ठ्यमिति द्वे क्रमात्स्याताम्। पर्शूनांसमूहः "पर्श्वाणस्" इति णसि, "सिति च" इति पदत्वाद्भत्वाभावे च 'पार्श्वम्' स्यादित्येकं पर्शुसमूहस्य। पृष्ठानां समूहः "पृष्ठाद्यत्" इति यति, पृष्ठ्यं स्यादित्येकं पृष्ठसमूहस्येदं यज्ञविषये स्मरन्तीति विज्ञेयम् ॥ ४१ ॥

खलिहानों का समूह, मनुष्यों का समूह, ग्राम, जन, धुआं, पाश और काशों का समूह.

स. स. न.
**(खलानां) खलिनी खल्या (प्यथ) मानुष्यकं (नृणाम्)।**
स. स. स. स. स.
**ग्रामता जनता धूम्या पाश्या गल्या (पृथक् पृथक्) ४२॥**

खेति—खलानां समुदाये खलिनी, खल्यापि स्यात्। खलानां समूहः "इनित्रकट्यचश्चेति" इनौ, अलोपे ङीपि च खलिनी एवं "खलगोरथात्" इति ये, टापि च खल्या

स्यादिति द्वे खलसमूहस्य "खलिहानवृन्द" इति ख्यातस्य । अथेति नृणां मनुष्याणां निकरे मानुष्यकं स्यात् मनुष्याणां समूहः "गोत्रोक्षोष्ट्रेति" वुञि, वृद्धौ, अकादेशे "प्रकृत्या अके राजन्यमनुष्ययुवानः" इति यलोपाभावे च मानुष्यकं स्यादित्येकं मानुषसमूहस्य । ग्रामाणां समूहः "ग्रामजनबन्धुभ्यस्तल्" इति तलि, टापि च ग्रामता स्यादित्येकं ग्रामसमूहस्य । एवं जनानां समूहः तलि टापि च जनतास्यादित्येकं जनसमूहस्य । धूमानां समूहः "पाशादिभ्यो यः" इति ये, अलोपे, टापि च धूम्या स्यादित्येकं धूमसमूहस्य । पाशानां समूहः ये, पाश्या स्यादित्येकं पाशसमुदायस्य । एवं गला बृहत्काशास्तेषां समूहः 'पाशादिभ्य इति' ये, अलोपे टापि च गल्या स्यादित्येकं काशसमूहस्य एते शब्दाः पृथक् पृथक् भवन्तीति ॥ ४२ ॥

सहस्र, करीष, चर्म और अथर्वादिकों का समूह. **'अपि' साहस्र(न.)कारीष(न.)चार्मण(न.)आथर्वण(न.)(दिकम्) ॥४३॥**

## इति संकीर्णवर्गः ॥

अपीति—समूहे वर्तमानानां सहस्रादीनां साहस्रकारीषचार्मणाथर्वणादिकं स्यात् । सहस्राणां समूहः 'भिक्षादिभ्योऽण्' इत्यणि, वृद्धौ, अलोपे च साहस्रं स्यादित्येकं सहस्रसमूहस्य । करीषाणां समूहः अणि, वृद्धौ, अलोपे च कारीषं स्यादित्येकं शुष्कगोमयसमूहस्य । चर्मणां चर्मिणां वा समूहः, अणि, वृद्धौ, णत्वे च चार्मणं चार्मिणं वा स्यादित्येकैकं चर्म-चर्मि-समूहस्य । अथर्वणां समूहः अणि, वृद्धौ, णत्वे च आथर्वणं स्यादित्येकमथर्वसमूहस्य आदिना वार्मणमाङ्गारमित्यादिग्रहः । संकीर्णार्थत्वं च घञादीनां कर्तृभिन्ने कारके भावे च विधानात्, उणादीनां भावकारकेषु विधानात् भावे प्रायेण विग्रहो दर्शितः, कारके तु यथासंभवमूहनीयः सद्भिः सुधीभिरिति॥४३॥

इति संकीर्णवर्गविवरणम् ॥

---

## अथ नानार्थवर्गो व्याख्यायते ॥

**नानार्थाः केऽपि कान्तादि वर्गेष्वेवात्र कीर्तिताः ।**
**भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते ॥ १ ॥**

नेति—अत्रैव वर्गे वक्ष्यमाणेषु कान्ता आदयो येषामिति तेषां वर्गाः समूहास्तेषु केऽपि नानार्था अनेकार्थाः कीर्तिताः शब्दिताः । यथा "मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोम्बुनोरिति" ये कान्तादयो येषु पर्यायेषु भूरिप्रयोगाः प्रचुरप्रयोगास्ते तेषु कीर्तिताः । अपिशब्दादिहापि । यथा नाकशब्दः । अतः पुनरुक्तिर्नोद्भावनीयेति भावः ॥ १ ॥

आकाश, स्वर्ग, स्वर्गादि, जन, छन्द, कीर्ति, तीर, तलवार. **( आकाशे त्रिदिवे ) नाको(पु.) लोक(पु.) ( स्तु भुवने जने ) ।**
**( पद्ये यशसि च ) श्लोकः(पु.) ( शरे खड्गे च ) सायकः(पु.) ॥२॥**

आकेति—आकाशे, त्रिदिवे स्वर्गे च नाकः । न अकं दुःखमत्रेति 'नाकः' स्यादित्येकं स्वर्गाकाशयोः । भुवने, जने च लोकः । लोकनम्, लोक्यते वा लोकतेर्भावे कर्मणि च घञि, गुणे च लोकः स्यादित्येकं जनभुवनयोः । पद्ये छन्दसि यशसि कीर्तौ च श्लोकः । श्लोकनं, श्लोक्यते वा श्लोकतेर्भावे कर्मणि च घञि 'श्लोकः' स्यादित्येकं पद्ययशसोः । शरे बाणे खड्गे च 'सायकः' । स्यतीति स्यतेः कर्तरि ण्वुलि, युकि च सायकः, श्यतीति विग्रहे तु शायकोऽपि स्यादित्येकं बाणखड्गयोः ॥ २ ॥

सियार, वरुण, चिउड़ा, बालक, दर्शन, प्रकाश, तुरही, पटह.

पु. जम्बुकौ ( क्रोष्टुवरुणौ ) पु. 'पृथुकौ' ( चिपिटार्भकौ ) ।
पु. आलोकौ ( दर्शनोद्द्योतौ ) ( भेरीपटह ) पु. मानकौ ॥ ३ ॥

जमिति—क्रोष्टा शृगालः, वरुणो जलेशः उभौ जम्बुकौ जम्बुकपदवाच्यौ स्याताम् । जमतीति जम्बुकः "मितद्र्वादयश्च" इति साधुः "जम्बुकः फेरवे नीचे पश्चिमाशापतावपि" ( इति मेदिनी ) इत्येकं क्रोष्टुवरुणयोः । चिपिटार्भकौ चिपिटः चिपटिकः अर्भको बालः उभौ पृथुकौ पृथुकपदवाच्यौ स्याताम् । पृथुरेव "संज्ञायां कन्" इति कनि, प्रथते वा पृथुकः "अर्भकपृथुकपाका वयसि" इति साधुः "पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत्" इत्येकं चिपिटार्भकयोः । दर्शनोद्द्योतौ आलोकावालोकपदवाच्यौ स्याताम् । आलोकनम् आङ्पूर्वकाल्लोकतेर्भावे घञि, गुणे च आलोकः "आलोकस्तु पुमान्द्योते दर्शने वन्दिभाषणे" ( इति मेदिनी ) इत्येकं दर्शनोद्द्योतयोः । भेरीपटहम् भेरी-पटहमित्युभौ आनकौ आनकपदवाच्यौ स्याताम् । अनिति 'अन प्राणने, आदादिकस्तस्मात्कर्तरि ण्वुलि, वृद्धौ अकादेशे च आनकः "आनकः पटहे भेर्यां मृदङ्गे ध्वनदम्बुदे" ( इति मेदिनी ) इत्येकं भेरीपटहयोः ॥ ३ ॥

गोदी, चिह्न, चिह्न, अपवाद, सर्प, बढ़ई, स्फटिक, सूर्य.

( उत्सङ्गचिह्नयो ) पु. रङ्कः पु. कलङ्को ( ऽङ्कापवादयोः ) ।
पु. तक्षको ( नागवर्धक्यो ) पु. रर्कः ( स्फटिकसूर्ययोः ) ॥ ४ ॥

उदिति—उत्सङ्गचिह्नयोर्वाचकः अङ्कः स्यात् । अङ्कयतेऽनेन 'अकि लक्षणे' भौवादिकस्तस्माद् "हलश्च" इति करणे घञि, नुमि, अनुस्वारे, परसवर्णे च अङ्कः स्यात्—"अङ्को रूपकभेदागश्चिह्नरेखाजिभूषणे । रूपकाशान्तिकोत्सङ्गस्थाने" ( इति मेदिनी ) इत्येकमुत्सङ्गचिह्नयोः । अङ्कापवादयोर्वाचकः कलङ्कः स्यात् । कलति 'कल शब्द संख्यानयोः' अस्मात्कर्तरि "अन्येभ्योऽपि दृश्यते" इति क्विपि, कल्—अङ्क्यतेऽनेनेत्यङ्कः, कल् चासावङ्कश्चेति कलङ्कः स्यात् । "कलङ्कोऽङ्केऽपवादे च कालायसमलेऽपि च" ( इति मेदिनी ) इत्येकमङ्कापवादयोः । नागः सर्पः वर्धकिस्तष्टा उभयोर्वाचकस्त-

क्षकः स्यात् । तक्षति 'तक्षू तनूकरणे' भौवादिकस्तस्मात्कर्तरि ण्वुलि, अकादेशे च तक्षकः स्यादित्येकं नागवर्धक्योः । स्फटिकसूर्ययोर्वाचकः अर्कः स्यात् । अर्च्यते 'अर्च पूजायाम्' भौवादिकस्तस्मात्कर्मणि घञि, "चजोरिति" कुत्वे च "कृदाधारार्चि-कलिभ्यः कः" इति के वा "चोः कुरिति" कुत्वे, "झरो झरीति" कलोपे च, अर्क्यते "एरच्" एरजण्यन्तानामिति मते घञि वा अर्कः "अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ" ( इति मेदिनी ) इत्येकं स्फटिकसूर्ययोः ॥ ४ ॥

वायु, ब्रह्मा, सूर्य, शीश, जल, तिन्नी, संक्षेप, भात का सीथ.

पु. न.
**( मारुते वेधसि ब्रध्ने पुंसि ) कः कं ( शिरोऽम्बुनोः ) ।**
पु.
**( स्या ) त्पुलाक ( स्तुच्छधान्ये संक्षेपे भक्तसिक्थके ) ॥ ५ ॥**

मेति—मारुते वायौ, वेधसि ब्रह्मणि, ब्रध्ने सूर्ये च कः पुंसि स्यात् । शिरोम्बुनोः शिर-जलयोर्वाचकं कं स्यात् । कायति, कचते वा कायतेः कचतेर्वा कर्तरि "अन्येभ्योपीति" डे कः कं वा स्यात्-"को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे । मयूरेऽग्नौ च पुंसि स्यात्सुखशीर्षजलेषु कम्" ( इति मेदिनी ) इत्येकैकं मारुतादीनाम् । तुच्छधान्ये नीवारादौ संक्षेपे अविस्तारे भक्तसिक्थके च पुलाकः स्यात् । पोलनम्, पोलतेर्भावे संपदादित्वात् क्विपि, पुल् तामकतीति "कर्मण्यण्" इत्यणि, "वलाकादयश्चेति" वा पुलाकः स्यादित्येकं तुच्छधान्यादीनाम् ॥ ५ ॥

उल्लू, हाथी की पूंछ के पास का मांस, करवा, ओला, अनार, बुद्ध, गणेश, गरुड़.

पु.
**( उलूके करिणः पुच्छमूलोपान्ते च ) पेचकः ।**
पु.न. पु.
**( कमण्डलौ च ) करकः ( सुगते च ) विनायकः ॥ ६ ॥**

विति—उलूके वायसारातौ करिणो हस्तिनः पुच्छमूलोपान्ते च पेचकः स्यात् । पचति, पच्यते वा दुःखेनेति पचतेः कर्तरि, कर्मणि च "पचिमच्योरिच्चोपधायाः" इति वुनि उपधेत्त्वे, अकादेशे, गुणे च पेचकः स्यादित्येकमुलूकगजपुच्छमूलोपान्तयोः । कमण्डलौ करकः स्यात् । करोति "कृञादिभ्यो वुन्" इति वुनि, गुणे, अकादेशे च करकः "करकस्तु पुमान्पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघोपले न स्त्री करङ्के च कमण्डलौ" ( इति मेदिनी ) इत्येकं कमण्डलोः । सुगते शोभनज्ञानवति जिने च विनायकः स्यात् । विनयति, विंपूर्वकान्नयतेः कर्तरि ण्वुलि, वृद्धौ, अकादेशे च विनायकः "विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ" ( इति मेदिनी ) इत्येकं बुद्धस्य ॥ ६ ॥

हाथ, बीता; बिच्छू या आठवीं राशि, उलटा, अङ्गा-वयव.

पु. पु.
**किष्कु ( हस्ते वितस्तौ च ) ( शूककीटे च ) वृश्चिकः ।**
पु.स.न.
**( प्रतिकूले ) प्रतीक ( स्त्रिष्वेकदेशे तु ) पुंस्ययम् ) ॥ ७ ॥**

कीति–हस्ते, वितस्तौ च किष्कुः स्यात् । कायतेऽनेन 'कै शब्दे' भौवादिकस्तस्मात् "मृगय्वादयश्च" इति करणे कौ धातोरित्त्वे सुकि, कुकि च निपातिते षत्वे च किष्कु "किष्कुर्द्वयोर्वितस्तौ च सप्रकोष्ठकरेऽपि च" ( इति मेदिनी ) इत्येकं हस्तवितस्त्योः । शूककीटे शूकसदृशरोमव्याप्तकीटविशेषे 'वृश्चिकः' स्यात् । वृश्चति, वृश्चतेः कर्तरि "व्रश्चिकृषोः किकन्" इति किकनि, "ग्रहिज्येति" संप्रसारणे च वृश्चिकः "वृश्चिकस्तु द्रुणौ राशौ शूककीटौषधीभिदोः" ( इति मेदिनी ) इत्येकं शूककीटादीनाम् । प्रतिकूले प्रतीकस्त्रिषु त्रिलिङ्ग्यां स्यात् । एकदेशे तु अयं पुंसि स्यात् । प्रतिगता ईर्लक्ष्मीर्येन यं वा "नद्यृतश्च" इति कपि प्रतीकः "प्रतीकोऽवयवेऽपि स्यात्प्रतिकूलविलोमयोः" ( इति मेदिनी ) इत्येकं प्रतिकूलादेः ॥ ७ ॥

| | |
|---|---|
| चिरायता, गन्धतृण,कुकुरमुत्ता, तोरई,चँचेड़ा या चिरचिरा,कायफल, दूधिया खैर,लोबान, तिलोंकी खली या पीना, हींग,काबुलदेश या काबुली घोड़ा. | ( स्या ) द्भूतिक (न्तु भूनिम्बे कत्तृणे भूस्तृणेऽपि च ) ।<br>(ज्योत्स्निकायां च घोषे च)कोशातक्य(थ कट्फले)॥८॥<br>( सिते च खदिरे ) सोमवल्कः ( स्यादथ सिल्हके ) ।<br>(तिलकल्के च) पिण्याको बाह्लीकं (रामठेऽपि च)॥९॥ |

(Gender marks printed above words: न. (भूतिक), स्त्री. (कोशातकी), पु. (सोमवल्कः), पु. (पिण्याकः), न. (बाह्लीकं))

स्यादिति–भूनिम्बे, कत्तृणे, भूस्तृणेऽपि च 'भूतिकं' स्यात् । भवति, भवतेः कर्तरि "क्तिच्क्तौ च संज्ञायाम्" इति क्तिचि तदन्तात्संज्ञायां कनि च भूतिकम् "स्याद्भूतिकं तु भूनिम्बे दीप्यभूस्तृणकत्तृणे" ( इति मेदिनी ) इत्येकं भूनिम्बादीनाम् । ज्योत्स्निकायां पटोलिकायां घोषे अपामार्गे च कोशातकी स्यात् । कोषं कोशं वातति कोषकोशपूर्वकः 'अत सातत्यगमने' भौवादिकस्तस्मात् "क्वुन्शिल्पिसंज्ञयोरिति" क्वुनि, अकादेशे गौरादित्वान्ङीषि च कोषातकी, कोशातकी वा "कोशातकः कचे पुंसि पटोल्यां घोषके स्त्रियाम्" (इति मेदिनी) इत्येकं पटोलिकापामार्गयोः । अथेति–कट्फले, सिते खदिरे च सोमवल्कः स्यात् । सोम इव वल्को वलमस्येति सोमवल्कः स्यादित्येकं कट्फलश्वेतखदिरयोः । अथेति–सिल्हके गन्धद्रव्यविशेषे, तिलकल्के च पिण्याकः स्यात् । पण्यते इति पिण्याकः "पिनाकादयश्च" इति साधुः "पिण्याकोऽस्त्री तिलकल्के हिङ्गुबाह्लीकसिल्हके" ( इति मेदिनी ) इत्येकं सिल्हकतिलकल्कयोः । रामठे हिङ्गुनि बाह्लीकं स्यात्-चाश्वदेशयोरपि । वहति उह्यते वा बाह्लीकम् "अलीकादयश्च" इति साधुः "बाह्लीकं बाह्लिकं धीरहिङ्गुनोर्नाश्वदेशयोः" ( इति रभसः ) इत्येकं रामठादीनाम् ॥ ८ । ९ ॥

---

१ "ज्योत्स्नाचन्द्रमसो भासि स्फुरज्ज्योतिर्निशि स्मृता" ( इत्यजयः ) "ज्योत्स्नी पटोली ज्योत्स्नवन्निशोः" ( इति हैमः ) ॥

इन्द्र, गूगुल, उल्लू,मदारी, विश्वामित्र, नेवला,रोग, ताप, शङ्का, थोड़ा,नीच, छोटा.

पु. पु.
( महेन्द्रगुग्गूलूकव्यालग्राहिषु ) कौशिकः ।
पु.
(रुक्तापशङ्कास्वा)तङ्कः(स्वल्पेऽपि)क्षुल्लक(स्त्रिषु)॥ १० ॥

महेति–महेन्द्रो देवराजः, गुग्गुलुः कुम्भः, उलूको वायसारातिः, व्यालग्राही अहितुण्डिको मदारीति यावत् एषु कौशिकः स्यात् । कुशिकस्यापत्यं "ऋष्यण्" इत्यणि, वृद्धौ, अलोपे च कौशिकः "कौशिको नकुले व्यालग्राहिगुग्गुलशक्रयोः । विश्वामित्रे च कोशज्ञो, लूकयोरपि कौशिकः । कौशिकी चण्डिकायां च नदीभेदे च कौशिकी" ( इति विश्वः ) इत्येकं महेन्द्रादीनाम् । रुक् रोगः तापः संतापः शङ्का आसु आतङ्कः स्यात् । आतङ्कनम्, आतङ्कयतेऽनेनेति वा भावे, करणे वा घञि आतङ्कः "आतङ्को रोगसन्तापशङ्कासु मुरजध्वनौ" ( इति मेदिनी ) इत्येकं रोगादीनाम् । स्वल्पे अपिशब्दान्नीचेऽपि क्षुल्लकस्त्रिषु त्रिलिङ्ग्यां स्यात् । क्षोदनम्, क्षोधनम् वा क्षुणत्तेः क्षुध्यतेर्वा भावे संपदादित्वात्किपि क्षुद् तां लाति गृह्णाति क्वुनि, अकादेशे, आलोपे, लत्वे च क्षुल्लकः "क्षुल्लकस्त्रिषु नीचेऽल्पे" ( इति मेदिनी ) इत्येकमल्पादीनाम् ॥ १० ॥

चन्द्रमा, दीर्घायु, कृश, घोड़ेकी टाप, बत्तख,बाघ, आगी, दिग्गज, सफ़ेद कमल,अजवायन,मोरकी चोटी आदि.

पु. पु.
जैवातृकः ( शशाङ्केऽपि ) ( खुरेऽप्यश्वस्य ) वर्तकः ।
पु. पु.
(व्याघ्रेऽपि)पुण्डरीको(ना)(यवान्यामपि)दीपकः॥ ११॥

जायिति–शशाङ्के चन्द्रे अपिशब्दाद्दीर्घायुः कृशयोरपि[1] जैवातृकः स्यात् । जीवति, जीवतेः कर्तरि "आतृकन् वृद्धिश्च" इति आतृकनि, वृद्धौ च जैवातृकः "जैवातृकः पुमान्सोमे दीर्घायुःकृशयोस्त्रिषु" ( इति मेदिनी ) इत्येकं चन्द्रादीनाम् । अश्वस्य घोटकस्य खुरे अपिशब्दाद्विहगेऽपि वर्तकः स्यात् । वर्तते, वृतेः कर्तरि ण्वुलि, गुणे, अकादेशे च वर्तकः, स्त्रियां वर्तिकाऽपि "वर्तकस्तु खुरेऽश्वस्य विहगे वर्तिका द्वयोः" ( इति मेदिनी ) इत्येकमश्वखुरादीनाम् । व्याघ्रे अपिशब्दाद्दिङ्नागादौ पुण्डरीकः ना पुमान्स्यात् । पुण्डयतीति पुण्डरीकः "फर्फरीकादयश्च" इति साधुः "पुण्डरीकः सिताम्भोजे सितच्छत्रे च भेषजे । पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि च" ( इति मेदिनी ) इत्येकं व्याघ्रादीनाम् । यवान्याम्, अपिशब्दादजमोदादावपि

[1] कृशयोरपीति पाठान्तरम् ।

दीपकः स्यात्। दीपयति, दीप्यतेर्ण्यन्तात्कर्तरि ण्वुलि, अकादेशे च दीपकः "दीपकं वागलंकारे वाच्यवद्दीप्तिकारके । दीपकश्चाजमोदायां यवानीबर्हिचूडयोः" (इति मेदिनी) इत्येकं यवान्यादीनाम् ॥ ११ ॥

वानर, सियार, कुत्ता आदि, सोना, गेरू, पीड़ा, अप्रिय-अकार्य, अप्रिय, झूठ.

पु. न.
**शालावृकाः "कपिक्रोष्टुश्वानः" (स्वर्णेऽपि) गैरिकम्।**
न. न.
**(पीडार्थेऽपि) व्यलीकं (स्याद) लीकं (त्वप्रियेऽनृते) ॥१२॥**

शेति—कपिर्वानरः, क्रोष्टा शृगालः, श्वा शुनकः एते शालावृकाःस्युः । शालां वृणवन्ति, शालापूर्वकाद्वृणोतेः कर्तरि "सृवृभूशुषिमुषिभ्यः कक्" इति ककि, शालावृकाः स्युरित्येकं वानरादीनाम् । स्वर्णे अपिशब्दाद्धातावपि गैरिकं स्यात् । गिरौ भवम् अध्यात्मादित्वाट्ठकि, वृद्धौ, ठस्येकादेशे, इलोपे च गैरिकम् "गैरिकं धातुरुक्मयोः" (इति मेदिनी) इत्येकं स्वर्णादीनाम् । पीडार्थे अपिशब्दादप्रियाकार्यादावपि व्यलीकं स्यात् । अलति 'अल भूषणादौ' भौवादिकस्तस्मात्कर्तरि "अलीकादयश्च" इति कीकन्नन्ते निपातिते अलीकम् विगतमलीकम् व्यलीकं "व्यलीको नागरे स्मृतः । व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने" (इति विश्वः) इत्येकं पीडनादीनाम् । अप्रिये, अनृते असत्ये च अलीकं स्यात् "अलीकमप्रियेऽपि स्याद्दिव्यसत्ये नपुंसकम्" (इति मेदिनी) इत्येकमप्रियादीनाम् ॥ १२ ॥

स्वभाव, वंश खण्ड, बकला, १०८ कर्ष सोना, सोनामात्र, छाती का भूषण, सोने का पल, अशर्फी, विष्ठा, पाप, त्रिशूल, शिव-धनुष.

न.
**(शीलान्वया) वनूके (द्वे) शल्के (शकलवल्कले) ।**
**(साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले ॥ १३ ॥**
पु.न. पु.न.
**दीनारेऽपिच) निष्को (ऽस्त्री) कल्को (ऽस्त्रीशमलैनसोः)।**
पु.न.
**(दम्भेऽप्यथ) पिनाको (ऽस्त्री शूलशंकरधन्वनोः) १४॥**

शीति—शीलं स्वभावः, अन्वयो वंशः उभौ अनूके अनूकपद वाच्यौ स्याताम् । अनूच्यति अनुपूर्वकादुच्यतेः कर्तरि "इगुपधेति" के, न्यङ्क्वादित्वात्कुत्वे च अनुकायति, अनुपूर्वकात्कायतेः कर्तरि "आतश्चोपसर्गे" इति के वा "अन्येषामपीति" दीर्घे च अनूकम् "अनूकं तु कुले शीले पुंसि स्याद्गतजन्मनि" (इति मेदिनी) इत्येकं शीलादीनाम् । शकलं खण्डम्, वल्कलं त्वक्चेमे द्वे शल्के स्याताम् । शलति शलतेः कर्तरि "इणभीकेति" कनि 'शल्कम्' स्यादित्येकं खण्डवल्कलयोः । सुवर्णानां साष्टे सहाष्टाभिर्वर्तमाने शते कर्षे, हेम्नि हेममात्रे, उरोभूषणे वक्षोलंकरणे पले हेमपले

दीनारे सांव्यवहारिके रूपकेऽपि च निष्कः अस्त्री पुंनपुंसकं स्यात्। निश्चयेन कायति, निपूर्वकात्कायतेः कर्तरि "आतश्चोपेति" के "इदुदुपधस्य चेति" षत्वे च निष्क- "निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः। वक्षोऽलंकरणे हेममात्रे हेमपलेऽपि च" ( इति मेदिनी ) इत्येकं स्वर्णसाष्टशतकर्षादीनाम्। शमलैनसोः गूथपापयोः दम्भे लोकवञ्चनाय विहितकर्मानुष्ठानेऽपि कल्कः अस्त्री पुंनपुंसकं स्यात्। कल्यते, कलतेः कर्मणिः "कृपाचारेति" के, कल्कः "कल्कः पापाशये पापे दम्भे विट्किट्ट-योरपि" ( इति विश्वः ) इत्येकं शमलादीनाम्। अथेति शूलशंकरधन्वनोः पिनाकः अस्त्री पुंनपुंसकं स्यात्। पनाय्यत इति पिनाकः "पिनाकादयश्च" इति साधुः "पिना-कोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः" ( इति मेदिनी ) इत्येकं त्रिशूलादीनाम्॥१३।१४॥

हथिनी, नई ब्याई गइया, मेघसमूह, देवी, नरक यातना, वृत्ति, तर्की, हाथी की सूंड़ का अगिला भाग, कमलबीज, देवता, मनोज्ञ, श्रेष्ठ, मुख्य, अन्य, केवल.

स. धेनुका ( तु करेण्वां च ) ( मेघजाले च ) स. कालिका।
स. कारिका ( यातनावृत्त्योः ) स. कर्णिका ( कर्णभूषणे )॥१५॥
( करिहस्ताङ्गुलौ पद्मबीजकोश्यां ) ( त्रिषूत्तरे )।
पु.स.न. वृन्दारकौ ( रूपिमुख्या ) पु.स.न. वेके ( मुख्यान्यकेवलाः )॥१६॥

धयिति—करेण्वां हस्तिन्यां चाद्धेनावपि धेनुका स्यात्। धेनुरेव स्वार्थे कनि, धेनुका "स्याद्धेनुका करिण्यां च धेनावपि ना तु दानवविशेषे" ( इति मेदिनी ) इत्येकं हस्तिन्यादीनाम्। मेघजाले मेघसमूहे चाद्योगिनीभेदादावपि 'कालिका' स्यात्। कालो वर्णोऽस्त्यस्याः "अत इनिठनाविति" ठनि, ठस्येकादेशे टापि च। काल्येव स्वार्थे कनि वा कालिका "कालिका चण्डिकाभेदे कार्ष्ण्ये वृश्चिकपत्रयोः। क्रमदेय-वस्तुमूल्ये धूसरीनवमेघयोः। पटोलशाखारोमालीमांसीकाकीशिवासु च। मेघावलौ च" ( इति मेदिनी ) इत्येकं मेघजालादीनाम्। यातनावृत्त्योः वेदनाविवरणश्लो-कयोः कारिका स्यात्। करणम् "धात्वर्थनिर्देशे ण्वुल्" इति ण्वुलि, वृद्धौ, अकादेशे, टापि अत इत्त्वे च कारिका "कारिका नटयोषिति। कृतौ विवरणश्लोके शिल्पयातनयोरपि। नपुंसकं तु कर्मादौ कारकं कर्तरि त्रिषु" ( इति मेदिनी ) इत्येकं यातनादीनाम्। कर्णभूषणे कर्णालंकारे, करिहस्ताङ्गुलौ गजशुण्डाग्रभागे, पद्मबीज-कोश्यां च 'कर्णिका' स्यात्। कर्णस्यालंकारः "कर्णललाटादिति" कनि, टापि "प्रत्ययस्थादिती" त्त्वे च कर्णिका "कर्णिका करिहस्ताग्रे करमध्याङ्गुलावपि। क्रमुकादिच्छटांशेऽब्जवराटे कर्णभूषणे" ( इति मेदिनी ) इत्येकं कर्णभूषणादी-

नाम् । अत उत्तरे खान्तेभ्यः प्राक् वक्ष्यमाणाः शब्दास्त्रिषु त्रिलिङ्ग्यां भवन्तीति । रूपिमुख्यौ वृन्दारकौ वृन्दारकपदवाच्यौ स्याताम् । प्रशस्तं वृन्दमस्य "शृङ्गवृन्दाभ्या मारकन्" इति आरकनि वृन्दारकः "वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु" (इति मेदिनी) इत्येकं सुरादीनाम् । मुख्यान्यकेवलाः एके एकपदवाच्याः स्युः । एति 'इण् गतौ' आदादिकस्तस्मात्कर्तरि "इणभीकेति" कनि एकः "एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु" (इति मेदिनी) इत्येकं मुख्यादीनाम् ॥ १५ । १६ ॥

मायावी, दूरसे देखनेवाला, मुँहदेखा, स्वामी का काम न करनेवाला

(स्या)द्दाम्भिकः^पु. कौक्कुटिको^पु.(यश्चादूरेरितेक्षणः) ।
लालाटिकः^पु. (प्रभोर्भालदर्शी कार्याक्षमश्च यः) ॥ १७ ॥

स्यादिति—दम्भनं दभ्नोतेर्भावे 'घञ्' दम्भः लोकवञ्चनाय विहितकर्मानुष्ठानं दम्भः सोऽस्त्यस्येति, तेन चरतीति वा ठकि, वृद्धौ, ठस्येकादेशे च दाम्भिकः छल-कारिणि स्यादित्येकं मायाविनः । यश्च आदूरेरितेक्षणः दूरदर्शी सः कौक्कुटिकः । कुक्कुटीं पश्यति "संज्ञायां ललाटकुक्कुट्यौ पश्यति" इति ठकि, वृद्धाविकादेशे, ईलोपे च कौक्कुटिकः स्यादित्येकं दूरदर्शिनः । यः प्रभोः स्वामिनः भालं पश्यत्येवंशीलो भालदर्शी, यश्च कार्याक्षमः स्वामिकार्यं कर्तुमशक्तः स लालाटिकः स्यात् । ललाटं पश्यति ठकि लालाटिकः "लालाटिकः प्रभोर्भालदर्शिन्याश्लेषणान्तरे । कार्याक्षमे" (इति मेदिनी) भावदर्शीति वा पाठः "लालाटिकः सदालस्यप्रभुभालनिदर्शिनि" (इत्यजयः) इत्येकं स्वामिभालावलोकिकार्यकरणासमर्थयोः ॥ १७ ॥

पर्वत, चूतर, कङ्कण, चक्र, सुई की नोक, छोटा वैरी, रोमाञ्च.

(भूभृन्नितम्बवलयचक्रेषु)कटको^पु. न.(ऽस्त्रियाम्) ।
(सूच्यग्रे क्षुद्रशत्रौ च लोमहर्षे च) कण्टकः^पु. ॥ १८ ॥

भित्ति—भूभृत्पर्वतो नृपश्च, नितम्बः कटिपश्चाद्भागः, वलयः कङ्कणम् चक्रं रथा-ङ्गादिकम् एषु कटकः अस्त्रियां पुन्नपुंसके स्यात् । कटति, कट्यते वा कटतेः कर्तरि कर्मणि वा "क्वुन्शिल्पिसंज्ञयोः" इति क्वुनि, अकादेशे च कटकः "कटकोऽस्त्री नितम्बेऽद्रेर्दन्ति-नां दन्तमण्डले । सामुद्रलवणे राजधानीवलययोरपि" (इति मेदिनी) इत्येकं पर्वतादी-नाम् । सूच्यग्रे सूचिमुखे क्षुद्रशत्रावल्पवैरिणि, लोमहर्षे रोमाञ्चे च कण्टकः स्यात् । कण्टति 'कटि गतौ' भौवादिकस्तस्मात्कर्तरि 'ण्वुलि' अकादेशे च कण्टकः "कण्टकः क्षुद्रशत्रौ च कर्मस्थानकदोषयोः । रोमाञ्चे च द्रुमाङ्गे च कण्टको मस्करेऽपि च" (इति विश्वः) इत्येकं सूचीमुखादीनाम् ॥ १८ ॥

पकाना, बालक, हार के बीचकी मणि, अधिपति — पु. पाकौ (पक्तिशिशू) (मध्यरत्ने नेतरि) नायकः । पु.

पलंग या परिवार, बधिक, लोभी. — पु. पर्य्यङ्कः(स्यात्परिकरे)(स्याद्व्याधेऽपि च)लुब्धकः १९॥ पु. १

पेति—पचनं पक्तिः, शिशुर्बालकः उभौ पाकौ पाकशब्दवाच्यौ स्याताम् । पायते, पिबति वा पाकः "अर्भकपृथुकपाका वयसि" इति साधुः "पाकः परिणतौ शिशौ - केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च" ( इति मेदिनी ) इत्येकं पचनादीनाम् । मध्यरत्ने हारमध्यमणौ, नेतरि अधिपे च नायकः स्यात् । नयति, नयतेः कर्तरि एवुलि वृद्धौ अकादेशे, आयादेशे च नायकः "नायको नेतरि श्रेष्ठे हारमध्यमणावपि" ( इति विश्वः ) इत्येकं मध्यरत्नादीनाम् । परिकरे परिजनादौ पर्य्यङ्कः स्यात् । परितोऽङ्कयते परिपूर्वकः 'अकि लक्षणे' भौवादिकस्तस्मात्कर्मणि घञि पर्यङ्कः "पल्यङ्कोमञ्च पर्यङ्कवृषीपर्यस्तिकासु च" ( इति मेदिनी ) इत्येकं परिजनादीनाम् । व्याधे अपि शब्दाल्लोभिनि च लुब्धकः स्यात् । लुभ्यतिस्म 'लुभ गार्ध्ये' दैवादिकस्तस्माद् "गत्यर्थेति" कर्तरि क्ते, लुब्धः स्वार्थे कनि च लुब्धकः स्यादित्येकं व्याधादीनाम् ॥ १९ ॥

समूह, पेटारी, गुरु, देश में उपजा, गांव — पेटक(स्त्रिषु वृन्देऽपि) (गुरौ देश्ये च) दैशिकः । पु.

ढाल, मल्लाह या कहार. — पु. खेटकौ(ग्रामफलकौ) (धीवरेऽपि च)जालिकः ॥ २० ॥ पु.

पयिति—वृन्दे समूहे अपिशब्दान्मञ्जूषायामपि पेटकस्त्रिषु त्रिलिङ्गयां स्यात् । पेटति, 'पिट संघाते' भौवादिकस्तस्मात्कर्तरि 'एवुलि' गुणे, अकादेशे च पेटकः "पेटकः, पुस्तकादीनां मञ्जूषायां कदम्बके" (इति विश्वः) इत्येकं समूहादेः । गुरावुपदेशकारिणि देश्ये देशोद्भवे च दैशिकः स्यात् । देशनम्, दिशतेर्भावे घञि देशः सोऽस्त्यस्येति. ठनि, अणि च देशेभवोवा अध्यात्मादित्वाट्ठञि वा दैशिकः स्यादित्येकं गुर्वादीनाम् । ग्रामफलकौ खेटकौ खेटकपदवाच्यौ स्याताम् । खेटति ' खिट त्रासे ' भौवादिकस्तस्मात्कर्तरि एवुलि, गुणे, अकादेशे च खेटकः स्यादित्येकं ग्रामादेः । धीवरेऽपि जालिकः स्यात् । जालेन चरति " चरतीति " ठकि, वृद्धौ, ठस्येकादेशे च जालिकः स्यादित्येकं धीवरादेः ॥ २० ॥

पराग, पद्म-केसर स्त्रीधन, — पु. पु.स. (पुष्परेणौ च ) किञ्जल्कः शुल्को स्त्री ( स्त्रीधनेऽपि च ) ।

महसूल, हिलकोरा, भाव, समूह. — स. न. (स्यात्कल्लोलेप्यु)त्कलिका वार्धकं(भाववृन्दयोः)॥२१॥

"१—आर्द्रायामपि लुब्धकः " इत्यपि पाठः ।

ग्विति—पुष्परेणौ कुसुमधूलौ चशब्दात्केसरेऽपि किञ्जल्कः स्यात् । किञ्चिज्जलति, किञ्चित्पूर्वकाद् 'जल अपवारणे' अस्माच्चौरादिकाद्बाहुलकात्कप्रत्यये, पृषोदरादित्वात् 'किञ्जल्कः' स्यादित्येकं पुष्परेणवादीनाम् । स्त्रीधने वरादर्थग्रहे, अपि शब्दाद् घट्टादिदेये च शुल्कः अस्त्री पुन्नपुंसकं स्यात् । शुल्क्यते, 'शुल अतिसर्जने' अस्मात्कर्मणि घञि शुल्कः "शुल्कं घट्टादिदेये स्याद्वरादर्थग्रहेऽस्त्रियाम्" (इति मेदिनी) इत्येकं घट्टादिदेयधनादीनाम् । कल्लोले उल्लोले, अपि शब्दादुत्कण्ठादौ च 'उत्कलिका' स्यात् । उत्कलनम्, उत्कल्यते वा उत्पूर्वकात्कलेः "कृञादिभ्यो वुन्" इति वुनि, अकादेशे, टापि, इत्वे च उत्कलिका "उत्कलिका तु हेलायां तरङ्गोत्कण्ठयोरपि" (इति कोषान्तरम्) इत्येकं कल्लोलादीनाम् । भाववृन्दयोः भावसमूहयोर्वाचकं वार्धकं स्यात् । वृद्धानां समूहः "वृद्धाच्च" इति वुञि, वृद्धौ, अकादेशे च वार्धकम् "वार्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि" (इति विश्वः) वृद्धसमुदाये, वृद्धत्वे, वृद्धकर्मणि च 'वार्धकम्' स्यादित्येकं भाववृन्दयोः ॥ २१ ॥

हथिनी, वेश्या बालक, विदारक, अन्ध, घमण्ड पत्थर काटने का औज़ार

स. पु.
**(करिण्यां) चापि गणिका दारकौ (बालभेदकौ) ।**
पु. पु.
**(अन्धेप्य) नेडमूकः स्याट्टङ्कौ (दर्पाश्मदारणौ) ॥ २२ ॥**

## इति कान्तवर्गः ॥

केति—करिण्यां हस्तिन्याम्, अपिशब्दाद्यूथिकावेश्यादौ च गणिका स्यात् । गणः समूहोऽस्त्यस्या भर्तृत्वेन, ठनि, गणयतीति विग्रहे तु ण्वुलि, अकादेशे टापि, इत्वे च गणिका—"गणिका यूथी-वेश्येभी-तर्कारीषु ना तु दैवज्ञे" (इति मेदिनी) इत्येकं करिण्यादीनाम् । बालभेदकौ बालः अर्भकः भेदको दारकश्च उभौ दारकौ दारकपदवाच्यौ स्याताम् । दृणाति, दारयति वा ण्वुलि, वृद्धौ, अकादेशे च दारकः, द्वित्वे दारकावित्येकमर्भकभेदकयोः । अन्धे लोचनरहिते, अपिशब्दाच्छठे, वाक्श्रुतिवर्जिते च अनेडमूकः स्यात् । नास्ति एडमूकोऽस्मादनेडमूकः "त्रिलिङ्गोऽनेडमूकः स्याच्छठे वाक्श्रुतिवर्जिते" (इति रभसः) इत्येकमन्धादीनाम् । दर्पाश्मदारणौ गर्वग्रावभेदकौ टङ्कौ टङ्कपदवाच्यौ स्याताम् । टङ्कयति, "टकि बन्धे" अस्माच्चौरादिकात्कर्तरि पचाद्यचि टङ्कः, द्वित्वे टङ्कौ स्तः "टङ्को नीलकपित्थे च खनित्रे टङ्कनेऽस्त्रियाम् । "जङ्घायां स्त्री" पुमान्कोपे कोषासिग्रावदारणे" (इति मेदिनी) इत्येकं दर्पादीनाम् ॥२२॥

इति कान्तवर्गविवरणम् ॥

---

## अथ खान्ताः ।

शोभा, किरण, ज्वाला, भौंरा, बाण, निधिभेद, भाल की हड्डी, शङ्ख, इन्द्रियादि

पु. पु.
**मयूख (स्त्विट्करज्वालास्व) (लिबाणौ) शिलीमुखौ ।**
पु. न.
**शङ्खो (निधौ ललाटास्थ्नि कम्बौ न स्त्री) (न्द्रियेपि) खम् २३**

मेति—त्वेषणं त्विट् कान्तिः, करः किरणः, ज्वाला अग्निशिखा-एष्वर्थेषु मयूखः स्यात् । मिमीते 'माङ्माने' जौहोत्यादिकस्तस्मात्कर्तरि "माङऊखोमयच" इति ऊखे, माङोमयादेशे च मयूखः "मयूखः किरणेऽपि च । ज्वालायामपि शोभायाम्" ( इति मेदिनी ) इत्येकं त्विडादीनाम् । अलिर्भ्रमरः, बाणः शायकः उभौ शिलीमुखौ स्याताम् । शिली शल्यं मुखे यस्येति शिलीमुखः स्यादित्येकं भ्रमरबाणयोः । निधौ शेवधौ ललाटास्थ्नि भालास्थनि, कम्बौ शङ्खे कङ्कणे च शङ्खः स्त्री न स्यात् । शाम्यत्यनेन शाम्यतेः करणे "शमेः खः" इति 'खे' दैत्यानां शं सुखं खनति "अन्येभ्योऽपीति" डे वा शङ्खः "शङ्खः कम्बौ न योषिन्ना भालास्थ्नि निधिभिन्नखे" ( इति मेदिनी) इत्येकं निध्यादीनाम् । इन्द्रिये अपिशब्दात्क्षेत्रादावपि 'खम्' स्यात् । खनति, खनतेः कर्तरि 'अन्येभ्योऽपीति' डे खम् "खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि । संवेदने देवलोके शर्मण्यपि नपुंसकम्" ( इति मेदिनी ) इत्येकमिन्द्रियादीनाम् ॥ २३ ॥

| | |
|---|---|
| किरण, ज्वाला, चोटी आदि पर्वत, वृक्ष, वायु, बाण, शर, सूर्य, पक्षी. | (घृणिज्वाले अपि) शिखे (स.) (शैलवृक्षौ) नगावगौ (पु. पु.) । आशुगौ (पु.) (वायुविशिखौ) (शरार्कविहगाः) खगाः (पु.) ॥ २४ ॥ |

घ्रिति—घृणिः किरणः- ज्वाला अग्निशिखा उभे शिखे शिखापदवाच्ये स्याताम् । अपिशब्दाच्छाखादयश्च शिखापदवाच्याः स्युः । शेते "शीङो ह्रस्वश्च" इति खे, ह्रस्वे, टापि च शिखा "शिखाशाखावर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च" ( इति मेदिनी ) इत्येकं किरणादीनाम् ( इति खान्ताः ) अथ गान्ता व्याख्यायन्ते—शैलवृक्षौ पर्वतपादपौ नगौ, अगौ च स्याताम् । न गच्छति नञ्पूर्वकाद्गच्छतेः कर्तरि "अन्येभ्योऽपीति" डे "नगोऽप्राणिष्वन्यतरस्याम्" इति नञि प्रकृतिभूते च नगः "नगो महीरुहे शैले भास्करे पवनाशने" ( इति हैमः ) "नलोपो नञः" इति नस्य लोपे तु अगः "अगः स्यान्नगवत्तरौ । शैले सरीसृपे भानौ" इति द्वे शैलवृक्षादीनाम् । वायुविशिखौ वातबाणौ आशुगौ स्याताम् । आशु गच्छति, "अन्वेष्वपीति" डे आशुगः स्यादित्येकं वाय्वादीनाम् । शरो बाणः, अर्कः, सूर्यः, विहगः पक्षी एते खगाः खगपदवाच्याः स्युः । खे गच्छति "अन्वेष्वपीति" डे खगः "खगः सूर्ये ग्रहे देवे मार्गणे च विहंगमे" ( इति मेदिनी ) इत्येकं बाणादीनाम् ॥२४॥

| | |
|---|---|
| पक्षी, सूर्य, पांखी, सुपारी, समूह, हरिण, मृगाशिर, ढूंढ़ना, प्रवाह, जोरसे चलना. | पतङ्गौ (पु.) ( पक्षिसूर्यौ च ) पूगः (पु.) ( क्रमुकवृन्दयोः ) । ( पशवोऽपि ) मृगा (पु.) वेगः (पु.) ( प्रवाहजवयोरपि ) ॥ २५ ॥ |

पेति—पक्षिसूर्यौ विहगादित्यौ पतङ्गौ स्याताम् । चशब्दाच्छलभादयोऽपि पतङ्गाः स्युः । पतति, पततेः कर्तरि "पतेरङ्गच् पक्षिणि" इति अङ्गचि पतङ्गः "पतङ्गः शलभे शालीप्रभेदे पक्षिसूर्ययोः । क्लीबं सूते" (इति मेदिनी) इत्येकं विहंगमादीनाम् । क्रमुकवृन्दयोः पूगः स्यात् । पुनाति, पूयते मुखमनेनेति वा पुनातेः कर्तरि करणे वा "छापूखडिभ्यः कित्" इति गनि पूगः स्यादित्येकं पूगसंघयोः । पशवो वृषादयः अपिशब्दात्कुरङ्गादयोऽपि मृगाः मृगपदवाच्याः स्युः । मृग्यते 'मृग अन्वेषणे' चुराद्यदन्तात्कर्मणि घञि मृगः "मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः । अन्वेषणायां याच्ञायां मृगी तु, वनितान्तरे" (इति मेदिनी) इत्येकं पशूनाम् । प्रवाहजवयोः अपिशब्दाद्रेतः किम्पाचयोरपि वेगः स्यात् । वेजनम् "ओविजी भयचलनयोः" अस्माद्भावे घञि, गुणे कुत्वे च वेगः "वेगो रयप्रवाहयोः । रेतः किम्पाचयोश्चापि" (इति हैमः) इत्येकं प्रवाहादीनाम् ॥ २५ ॥

फूलकी धूलि, गन्धचूर्ण धूलि, हाथी आदि, तिलक, नेत्र-प्रान्त आदि.

**पराग**: (पु.) (**कौसुमे रेणौ स्नानीयादौ रजस्यपि**) ।
(**गजेऽपि**) **नाग**(पु.)**मातङ्गा**(पु.)**वपाङ्ग**(पु.) (**स्तिलकेऽपि च**) ॥ २६ ॥

पेति—कौसुमे रेणौ, पुष्पधूलौ, स्नानीयादौ, रजसि अपिशब्दादुपरागचन्दनादावपि परागः स्यात् । परागच्छति "अन्येष्वपीति" डे परागः "परागः कौसुमे रेणौ धूलिस्नानीययोरपि । गिरिप्रभेदे विख्यातावुपरागे च चन्दने" (इति मेदिनी) इत्येकं पुष्पधूल्यादीनाम् । गजे हस्तिनि अपिशब्दात्क्रूराचारितोयदादावपि नागमातङ्गौ स्याताम् । न अगः नागः "नागं नपुंसकं रङ्गे सीसके करणान्तरे । नागः पन्नगमातङ्गक्रूराचारिषु तोयदे । नागकेसरपुन्नागनागदन्तकमुस्तके । देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरः स्थितः" (इति मेदिनी) मतङ्गस्यायम् "तस्येदम्" इत्यणि वृद्धौ, अलोपे च मातङ्गः "मातङ्गः श्वपचे गजे" (इति मेदिनी) इति द्वे गजादीनाम् । तिलके अपि शब्दान्नेत्रप्रान्तादावपि अपाङ्गः स्यात् । अपगतोऽङ्गात् "निरादयः" इति समासे अपाङ्गः "अपाङ्गो नयनस्यान्ते स्याच्चित्रकप्रधानयोः" (इत्यजयः) इत्येकं तिलकादीनाम् ॥ २६ ॥

स्वभाव, त्याग, निश्चय, अध्याय, सृष्टि, कवच, उपाय, ध्यान, संगति, युक्ति.

**सर्गः** (पु.) (**स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु**) ।
**योगः** (पु.) (**संनहनोपायध्यानसंगतियुक्तिषु**) ॥ २७ ॥

सेति—स्वभावः, निर्मोक्षस्त्यागः-मोक्षाभावो वा निश्चयः, अध्यायः, सृष्टिश्च एषु सर्गः स्यात् । सृज्यते 'सृज विसर्गे' दैवादिकस्तस्मात्कर्मणि 'घञि' गुणे, कुत्वे च सर्गः "सर्गस्तु निश्चयाध्यायमोहोत्साहात्मसृष्टिषु" (इति मेदिनी) इत्येकं स्वभावादीनाम् । संनहनं कवचम्, उपायः सामादिः, ध्यानं चिन्तनम्, संगतिः

संगमः, युक्तिश्च एष्वर्थेषु योगः स्यात् । योजनम् ' युज् समाधौ ' दैवादिकः ' ' युजिर् योगे ' रौधादिकश्च अस्माद्भावे घञि, गुणे, कुत्वे च योगः " योगोऽपूर्वार्थसंप्राप्तौ संगतिध्यानयुक्तिषु । वपुःस्थैर्यप्रयोगे च विष्कुम्भादिषु भेषजे । विश्रब्धघातके द्रव्योपायसंनहनेष्वपि । कार्मणेऽपि च ( इति मेदिनी ) इत्येकं कवचादीनाम् ॥ २७ ॥

सुख,स्त्री आदि का पालन, साँप का फन, देह, पपीहा, हरिण, विचित्र रंग.

**भोगः** (सुखेस्त्र्यादिभृतावहेश्चफणकाययोः) पु.

(चातके हरिणे पुंसि) **सारङ्गः** (शबले त्रिषु) ॥ २८ ॥

भविति–सुखे, स्त्र्यादिभृतौ, अहेः सर्पस्य फणाकाययोश्च भोगः स्यात् । भोजनम् भुनक्तेर्भुजतेर्वा भावे घञि, गुणे, कुत्वे च भोगः " भोगः सुखे धने पुंसि ( चाहेः) शरीरफणयोर्मतः । पालनेऽभ्यवहारे च योषिदादिभृतावपि " ( इति मेदिनी ) भृतिर्भाडिः आदिना हस्त्यश्वादिकर्मकाराणां च भृतिः " पालनेऽभ्यवहारे च निर्वेशे पण्योषिताम् ( इति विश्वः ) इत्येकं सुखादीनाम् । चातके हरिणे च सारङ्गः पुंसि स्यात् । शबले त्रिषु त्रिलिङ्गयां स्यात् । सारमङ्गं यस्य, शकन्ध्वादिः सारं गच्छति–"गमेःसुपि वाच्यः " इति खचि ( खच्चडिद्वावाच्यः ) इति डित्त्वाट्टिलोपे च, सहारङ्गेणेति वा सारङ्गः " सारङ्गः " पुंसि हरिणे चातके च मतङ्गजे । शबले त्रिषु ( इति मेदिनी ) इत्येकं चातकादीनाम् ॥ २८ ॥

वानर, मेढक, सारथी, शाप, अनादर, जुवा आदि, जोड़ा, सत्ययुगादि.

(कपौ च) **प्लवगः** पु. (शापे) **त्वभिषङ्गः** पु. (पराभवे) ।

(यानाद्यङ्गे) **युगः** पु. (पुंसि) **युगं** न. (युग्मे कृतादिषु) ॥ २९ ॥

केति–कपौ वानरे चशब्दाद्भेकसारथ्यादावपि प्लवगः स्यात् । प्लवेन गच्छति, ' अन्येष्वपीति डे ' टिलोपे च प्लवगः " प्लवगो वानरे भेके सारथौ चोष्णदीधितेः " ( इति मेदिनी ) इत्येकं वानरादीनाम् । शापे आक्रोशे, पराभवे तिरस्कारे च अभिषङ्गः स्यात् । अभिषञ्जनम् अभिपूर्वकः ' षञ्ज सङ्गे ' भौवादिकस्तस्माद्भावे घञि " उपसर्गादिति " षत्वे, कुत्वे च अभिषङ्गः " अभिषङ्गः पुंलिङ्गः पराभवाक्रोशशपथेषु " ( इति मेदिनी ) इत्येकं शापादीनाम् । यानाद्यङ्गे यानाद्यवयवे युगः पुंसि स्यात् । युग्मे युगले कृतादिषु कृत, त्रेता, द्वापरादिषु आदिना हस्तचतुष्कवृद्ध्यौषधादावपि युगं क्लीबे स्यात् । योजनम्, युज्यते वा युनक्तेर्भावे कर्मणि वा घञि, संज्ञापूर्वकत्वात्तद्वहति रथयुगेति निपातनाद्वा गुणाभावे, कुत्वे च युगः " युगो रथे हलाद्यङ्गे न द्वयोस्तु कृतादिषु । युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च " ( इति मेदिनी ) इत्येकं रथहलाद्यङ्गादीनाम् ॥ २९ ॥

स्वर्ग, वाण, गौ, बैल आदि, चिह्न, मूत्रेन्द्रिय आदि. (स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले ।

पु. स. न.
लक्ष्यदृष्ट्या स्त्रियां पुंसि) गौर्लिङ्गं (चिह्नशेफसोः) ॥ ३० ॥

स्वरिति–स्वर्गो नाकः, इषुर्बाणः, पशवो वृषादयः, वाग् वाणी, वज्रं कुलिशम्, दिक् दिशा, नेत्रं लोचनम्, घृणिः किरणः, भूर्भूमिः जलं पानीयम् एषु अर्थेषु गौः लक्ष्यदृष्ट्या प्रयोगानुसारेण स्त्रियां पुंसि च स्यात्। गच्छति, गम्यतेऽनेनेति वा गमेः कर्तरि, कर्मणि, करणे वा 'गमेर्डोरिति' डो प्रत्यये गौः "गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु" ( इति केशवः ) इत्येकं स्वर्गादीनाम् । चिह्नं लक्ष्म, शेफो मेहनम् उभयोरर्थे लिङ्गं स्यात्। लिङ्ग्यतेऽनेन "लिगि गतौ" भौवादिकस्तस्मात्करणे "हलश्च" इति घञि, नुमागमे च लिङ्गम् " लिङ्गं चिह्नेऽनुमाने च सांख्योक्तप्रकृतावपि । शिवमूर्तिविशेषे च मेहनेऽपि नपुंसकम्" ( इति मेदिनी ) इत्येकं चिह्नादेः ॥ ३० ॥

न. न.
स्वामी, शिखर आदि, मस्तक, योनि आदि श्रृङ्गं (प्राधान्यसान्वोश्च) वराङ्गं (मूर्धगुह्ययोः) ।

न.
संपदा, अभिलाषा आदि. भगं (श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु) ॥ ३१ ॥

## इति गान्तवर्गः ।

श्रृङ्गमिति–प्राधान्यसान्वोः प्रभुत्वशिखरयोः चशब्दाच्चिह्नक्रीडाम्बुयन्त्रकादावपि श्रृङ्गं स्यात्। श्रृणाति 'शॄ हिंसायाम्' क्रैयादिकस्तस्मात्कर्तरि "श्रृणातेर्ह्रस्वश्च" इति गन्, नुटि च श्रृङ्गम् "श्रृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ श्रृङ्गः स्यात्कूर्चशीर्षके । स्त्री विषायां स्वर्णमीनभेदयोर्ऋषभौषधौ" ( इति मेदिनी ) इत्येकं प्राधान्यादीनाम् । मूर्धगुह्ययोः मस्तकयोन्योः वरं च तदङ्गं चेति वराङ्गं स्यात् "वराङ्गं योनिमातङ्गमस्तकेषु गुडत्वचि" ( इति मेदिनी ) इत्येकं मूर्धादीनाम्। श्रीः संपत्तिः शोभा च, कामोऽभिलाषः, माहात्म्यमैश्वर्यम्, वीर्यं पराक्रमः, यत्नः प्रयत्नः, अर्कः सूर्यः, कीर्तिर्यशश्च एष्वर्थेषु भगं स्यात्। भज्यते-भजतेः कर्मणि 'पुंसीति' 'खनोघचेति' वा घे, कुत्वे च भगम् " भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु । माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवौ" ( इति मेदिनी ) इत्येकं संपदादीनाम् ॥ ३१ ॥

इति गान्तवर्गः ।

---

## अथ घान्ताः ।

पु. पु.
मारना, अस्त्र, समूह, जल का वेग, मोल, पूजा का जल, पाप, दुःख, शिकार आदि. परिघः (परिघातेऽस्त्रेऽ)प्योघो (वृन्देऽम्भसां रये) ।

पु. न.
(मूल्ये पूजाविधा) वर्घोऽ(होदुःखव्यसनेष्व)घम् ॥ ३२ ॥

परीति–परिघाते, अस्त्रे अस्त्रविशेषे, अपिशब्दाद् योगार्गलयोरपि परिघः स्यात् । परिहननम्, परिहन्यतेऽनेनेति वा हन्तेर्भावे करणे वा "परीघः" इत्यपि, घा देशे च परिघः " परिघो योगभेदेऽस्त्रविशेषेऽर्गलघातयोः " (इति मेदिनी) इत्येकं परिघातादीनाम् । "परेश्चघाङ्कयोः" इति लत्वेऽपि पलिघः " पलिघः काचकलशे घटे प्राकारगोपुरे " (इति हैमः) इत्येकं काचकलशादीनाम् । वृन्दे समूहे, अम्भसां जलानां रये वेगे ओघः स्यात् । आऊह्यतेऽनेन आङ्पूर्वकाद् 'ऊह वितर्के' अस्मात्करणे "हलश्च" इति घञि गुणे, न्यङ्क्वादित्वात्कुत्वे च ओघः "ओघो वेगे-जलस्य च । वृन्दे परम्परायां च द्रुतनृत्योपदेशयोः" (इति मेदिनी) इत्येकं समूहादीनाम् । मूल्ये, पूजाविधौ च अर्घः स्यात् । अर्ह्यतेऽनेन 'अर्ह पूजायाम्' भौवादिकस्तस्मात्करणे "हलश्च" इति घञि न्यङ्क्वादित्वात्कुत्वे च अर्घः स्यादित्येकं मूल्यादेः । अंहः पापम्, दुःखं जन्मजरामरणादिकम्, व्यसनं मृगयाद्यूतादिकम् एषु अघं स्यात् । अङ्घ्यतेऽनेन "अघि गत्याक्षेपे" भौवादिकस्तस्मात्करणे घञि, "अनित्यमागमशासनमिति" नुमोऽभावे च 'अघं' स्यादित्येकं पापादीनाम् ॥ ३२ ॥

इष्ट, अल्प, सिकहर या छींका, काच, नेत्ररोग, विपरीत, बड़ाई, ठगना, अग्नि, आषाढ, मन्त्री आदि.

**(त्रिष्विष्टेऽल्पे) लघुः काचाः (शिक्यमृद्भेददृग्रुजः) ।**
पु. पु.

**(विपर्यासे विस्तरे च) प्रपञ्चः (पावके) शुचिः ॥ ३३ ॥**
पु. पु.

**(मास्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु) ।**

त्रिष्विति–इष्टे मनोज्ञे, अल्पे च लघुः त्रिषु त्रिलिङ्ग्यां स्यात् । लङ्घ्यते 'लघि गतौ' भौवादिकस्तस्मात्कर्मणि "लघिवंह्योर्नलोपश्च" इत्युप्रत्यये नलोपे च लघुः "कृष्णागुरुणि शीघ्रे च लघु क्लीबेऽगुरौ त्रिषु । निःसारे च मनोज्ञे च पृक्कायां च लघुः स्त्रियाम्" (इति रभसः) इत्येकमिष्टादीनाम् ' (इति घान्ताः) अथ चान्ता व्याख्यायन्ते–शिक्यं सिकहराख्यम्, मृद्भेदो मृदन्तरम्, दृग्रुक् नेत्ररोगः एते काचाः काचपदवाच्याः स्युः । काच्यतेऽनेन 'कच बन्धे' भौवादिकस्तस्मात्करणे घञि "नकादेः" इति कुत्वाभावे च णिजन्तात्पचाद्यचि वा काचः "काचः शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे" (इति मेदिनी) इत्येकं शिक्यादीनाम् । विपर्यासे विपर्यये, विस्तारे, चशब्दात्संचयप्रतारणयोरपि प्रपञ्चः स्यात् । प्रपञ्च्यते प्रपूर्वकः 'पचि व्यक्तीकरणे' भौवादिकस्तस्मात्पचाद्यचि, नुमि, अनुस्वारे, परसवर्णे च प्रपञ्चः "प्रपञ्चः संचयेऽपि स्याद्विस्तरे च प्रतारणे" (इति मेदिनी) इत्येकं विपर्यादीनाम् । पावके अनले, मासि आषाढमासे उपधामुत्कोचमतिक्रान्तेऽमात्ये च शुचिः पुंसि स्यात् । मेध्ये पूते, सिते धवले च त्रिषु त्रिलिङ्ग्यां स्यात् । शोचत्यनेन, शोचतेः करणे "इगुपधात्कित्" इति इनि, कित्त्वाद् गुणाभावे च शुचिः "शुचिर्ग्रीष्माग्निश्रृङ्गारे

ष्वाषाढे शुद्धमन्त्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिपु" ( इति मेदिनी ) इत्येकं पावकादीनाम् ॥ ३३ ॥ ३ ॥

क्रोधेच्छा, अभिलाषा किरण आदि.

स.

**(अभिष्वङ्गे स्पृहायां च गभस्तौ च)रुचिः(स्त्रियाम्)॥३४॥**

**इति चान्ताः ।**

अभीति–अभिष्वङ्गे क्रोधेच्छायां स्पृहायामत्यासक्तौ, गभस्तौ किरणे चशव्दात्प्रकाशशोभयोरपि रुचिः स्त्रियां स्यात् । रोचते 'रुच दीप्तावभिप्रीतौ च' भौवादिकस्तस्मात्कर्तरि "इगुपधात्कित्" इतीनि, कित्त्वाद् गुणाभावे च रुचिः "रुचिः स्त्रीदीप्तिशोभायामभिष्वङ्गाभिलापयोः" ( इति मेदिनी ) इत्येकं क्रोधेच्छादीनाम् ॥ ३४ ॥

इति चान्ताः ।

---

**अथ छान्ताः ।**

हर्षित, रीछ, स्फटिक, पल्लव, हार, पहिरनेके कपड़े का छोर, नाव, जल का किनारा.

पु. पु.स.न.

**( प्रसन्ने भल्लुके ) प्यच्छो गुच्छः (स्तवकहारयोः) ।**

पु.

**(परिधानाञ्चले) कच्छो (जलप्रान्ते त्रिलिङ्गकः) ॥३५॥**

प्रेति–प्रसन्ने आनन्दिते भल्लुके ऋक्षे अपिशव्दात्स्फटिकामलयोरपि अच्छः स्यात् । न च्छयति दृष्टिम् "सुपीति" के, न च्छाद्यते "अन्येष्वपीति" डे वा अच्छः "अच्छो भल्लूके स्फटिकेऽमलेऽच्छाभिमुखेऽव्ययम् ( इति हैमः ) इत्येकं प्रसन्नादीनाम् । स्तवकहारयोः गुच्छः स्यात् । गवनम् 'गुङ् शव्दे' भौवादिकस्तस्मात्संपदादित्वात्किपि, तुकि च 'गुत्' तां छ्यतीति "आतोऽनुपेति" के आलोपे च गुच्छः "स्याद् गुच्छः स्तवकेस्तम्बे हारभेदकलापयोः" ( इति मेदिनी ) इत्येकं स्तवकादीनाम् । परिधानाञ्चले परिधानीयवस्त्रप्रान्ते 'कच्छः' पुंसि, जलप्रान्ते तु त्रिलिङ्गकः स्यात् । कं जलं छ्यति परिच्छिनत्ति कपूर्वकः "छो छेदने" दैवादिकस्तस्मात्कर्तरि "आतोऽनुपेति" के, आलोपे च कच्छः "कच्छो द्रुभेदे नौकाङ्गेऽनूपप्राये तटेऽपि च । कच्छास्तु देशे, कच्छास्यात्परिधानापराञ्चले । चीर्यां वराह्याम्" ( इति हैमः ) इत्येकं परिधानाञ्चलादीनाम् ॥ ३५ ॥

इति छान्ताः ।

---

**अथ जान्ताः ।**

मयूर, गरुड, नेवला, दाँत, ब्राह्मण, पक्षी, विष्णु, शिव, बकरा आदि गौका स्थान, मार्ग, समूह.

पु. पु.

**( केकिताक्ष्यौ ) वहिभुजौ ( दन्तविप्राण्डजा ) द्विजाः ।**

पु. पु.

**अजा (विष्णुहरच्छागा) (गोष्ठाध्वनिवहा)व्रजाः ॥३६॥**

कयिति-केकी मयूरः, तार्क्ष्यो गरुडो नकुलश्च उभौ अहिभुजौ अहिभुक्पदवाच्यौ स्याताम्। अहिं भुङ्क्ते अहिपूर्वको 'भुज पालनाऽभ्यवहारयोः' रौधादिकस्तस्मात् "क्विप् चेति" क्विपि, अहिभुक् स्यादित्येकं मयूरादीनाम्। दन्ता दशनाः, विप्रा ब्राह्मणाः, अण्डजाः पक्षिणश्च एते द्विजाः द्विजपदवाच्याः स्युः। द्विर्जायते द्विःपूर्वको 'जनी-प्रादुर्भावे' दैवादिकस्तस्मात् "अन्येष्वपीति" डे, डित्वाट्टिलोपे च द्विजः "जन्मना जायते शूद्रः कर्मणा द्विज उच्यते" (इत्याद्यभियुक्तोक्तेः) तथा च "द्विजः स्याद्ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु ना। द्विजा भार्ग्यां हरेणौ च" (इति मेदिनी) इत्येकं दशनादीनाम्। विष्णुर्नारायणः, हरः शिवः, छागो बर्करः, एते अजाः अजपदवाच्याः स्युः। न जायते "अन्येष्वपीति" डे, अजतीति विग्रहे तु पचाद्यचि वा, बहुलं तणीति भाष्यस्थवार्तिकेन, व्यादेशाभावे च अजः "अजो हरौ हरे कामे विधौ छागे रघोःसुते" (इति विश्वः) इत्यकं हरिहरादीनाम्। गोष्ठं गोस्थानकम्, अध्वा मार्गः, निवहः समूहश्च एते व्रजाः व्रजपदवाच्याः स्युः। व्रजति, व्रजेः कर्तरि पचाद्यचि, व्रजत्यस्मिन्निति विग्रहे तु "गोचरसंचरेति" घान्ते निपातिते वा व्रजः "व्रजो गोष्ठाध्ववृन्देषु" (इति मेदिनी) इत्येकं गोष्ठादीनाम्॥ ३६॥

बुद्ध, यमराज, युधिष्ठिर, हाथी-दाँत, सघनवन, खेत, नगर का द्वार, उत्तम स्त्री.

**पु. धर्मराजौ (जिनयमौ) पु. कुञ्जो (दन्तेऽपि न स्त्रियाम्)**
**न. बलजे (क्षेत्रपूर्द्वारे) स. बलजा (वल्गुदर्शना)॥ ३७॥**

धेति—जिनो बुद्धः, यमो यमराजः उभौ धर्मराजौ धर्मराजपदवाच्यौ स्याताम्। धर्मेण राजति, पचाद्यचि, धर्मस्य राजा, धर्मश्चासौ राजाचेति वा "राजाहः सखिभ्यष्टच्" इति टचि धर्मराजः "धर्मराजो यमे बुद्धे युधिष्ठिरनृपे पुमान्" (इति मेदिनी) इत्येकं बुद्धादीनाम्। दन्ते दन्तिनां दन्ते अपिशब्दाद्धनौ निकुञ्जेऽपि-कुञ्जः स्त्रियां न स्यात्। कौ जायते "सप्तम्यां जनेर्डः"-इति डे, पृषोदरादित्वान्नुमागमे च कुञ्जः "कुञ्जोऽस्त्रियां निकुञ्जेऽपि हनौ दन्तेऽपि दन्तिनाम्" (इति मेदिनी) इत्येकं गजदन्तादीनाम्। क्षेत्रं धान्यक्षेत्रम्, पूर्द्वारं गोपुरम् उभे बलजे बलजपदवाच्ये स्याताम्। बले जातम् "सप्तम्यामिति" जनेर्डे, टिलोपे च बलजम् "बलजं गोपुरे क्षेत्रे सस्यसंगरयोरपि" (इति मेदिनी) इत्येकं क्षेत्रादीनाम्। वल्गु मनोहरं दर्शनं यस्या वल्गुदर्शना वराऽबला बलजा स्यात्। बले जाता "सप्तम्यामिति" डे, टिलोपे, टापि च बलजा "बलजा वरयोषायां यूथ्याम्" (इति मेदिनी) इत्येकं वरयोषादीनाम्॥ ३७॥

---

१—"जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते। वेदाभ्यासाद्भवेद्विप्रो ब्रह्म जानाति ब्राह्मणः" (इति स्मृत्यन्तरम्)॥

समभूभाग, संग्राम, पुत्र, कन्या, रैयत, शङ्ख, चन्द्रमा, धन्वन्तरि, कमल आदि अपने, नित्य.

स. स.
(समक्ष्मांशे रणे)प्याजिः प्रजा (स्यात्संततौ जने)।
पु. न.
अब्जौ (शङ्खशशाङ्कौ च) (स्वके नित्ये) निजं (त्रिषु) ३८

इति जान्ताः ॥

सेति–समक्ष्मांशे समभूभागे रणे संग्रामेऽपि आजिः स्यात्, अजन्त्यस्याम् 'अज गतौ' भौवादिकस्तस्मादाधारे "अज्यतिभ्यां च" इतीणि, वृद्धौ च आजिः "अथाजिः स्त्री समभूमौ च संग्रामे" (इति मेदिनी) इत्येकं समभूभागादीनाम् । संततौ संताने जने लोके च प्रजा स्यात् । प्रजायते, प्रपूर्वको 'जनी प्रादुर्भावे' दैवादिकस्तस्मात्कर्तरि "उपसर्गे च संज्ञायाम्" इति डे, टापि च प्रजा स्यादित्येकं सन्तानादीनाम् । शङ्खः कम्बुः, शशाङ्कश्चन्द्रः उभौ अब्जौ अब्जपदवाच्यौ स्याताम् । च शब्दान्निचुलादयोऽप्यब्जाः स्युः । 'अप्सु जायते' "सप्तम्यां जनेर्डः" इति डे, जस्त्वे च अब्जः "अब्जोऽस्त्री शङ्खे ना निचुले धन्वन्तरौ च हिमकिरणे । क्लीबं पद्मे" (इति मेदिनी) इत्येकं शङ्खादीनाम् । स्वके स्वकीये, आत्मीये, नित्ये चिरस्थायिनि च 'निजं' त्रिषु त्रिलिङ्ग्यां स्यात् । निजायते निपूर्वकाज्जनेः "उपसर्गे च" इति डे, निजं स्यादित्येकमात्मीयादीनाम् ॥ ३८ ॥

इति जान्ताः ॥

---

## अथ ञान्ताः ।

आत्मा, प्रवीण, बुद्धि, नाम, हाथ आदि से अर्थ बतलाना, गायत्री, सूर्यपत्नी.

पु.
(पुंस्यात्मनि प्रवीणे च) क्षेत्रज्ञो (वाच्यलिङ्गकः)।
स.
संज्ञा (स्याच्चेतनानामहस्ताद्यैश्चार्थसूचना) ॥ ३६ ॥

पुमिति–आत्मनि क्षेत्रज्ञः पुंसि स्यात् । प्रवीणे च वाच्यलिङ्गकः स्यात् । क्षेत्रं जानाति उपपदसमासे 'ज्ञा अवबोधने' क्रैयादिकस्तस्मात्कर्तरि "आतोऽनुपसर्गे कः" इति के आलोपे च क्षेत्रज्ञः स्यादित्येकमात्मादीनाम् । चेतना बुद्धिः, नाम अभिधानम्, हस्ताद्यैः पाणिभ्रुकुटिलोचनाद्यैः अर्थस्य सूचना च एते संज्ञापदवाच्याः स्युः । संज्ञानम्, संपूर्वकाज्जानातेर्भावे "आतश्चोपसर्गे" इत्यङि, आलोपे च संज्ञा स्यात् । "संज्ञा नामनि गायत्र्यां चेतनारवियोषितोः । अर्थस्य सूचनायां च हस्ताद्यैरपि योषिति" (इति मेदिनी) इत्येकं चेतनादीनाम् ॥ ३६ ॥

वैद्य, पण्डित या प्राज्ञ विद्वान्, बुध.

पु. पु.
दोषज्ञौ (वैद्यविद्वांसौ) ज्ञो (विद्वान्सोमजोऽपि च)॥४०॥

इति ञान्ताः ॥

---

१–संग्रामे यथा "तिष्ठाम्याजौ स्थिरो भव" (इति मार्कण्डेयः) ॥

दविति—वैद्यश्चिकित्सकः, विद्वान्प्राज्ञः पण्डितश्च उभौ दोषज्ञौ दोषज्ञपदवाच्यौ स्याताम्। दोषं जानातीति दोषपूर्वकाज्जानातेः कर्तरि "आतोऽनुपसर्गे कः" इति के, आलोपे च दोषज्ञः स्यादित्येकं वैद्यादेः । विद्वानध्यात्मवेदकः सोमजश्चन्द्रजः अपिशब्दाद् ब्रह्मा च ज्ञः स्यात् । जानाति, जानातेः कर्तरि "इगुपधज्ञाप्रीकिरः कः" इति के, आलोपे च ज्ञः "ज्ञो ब्रह्मा–बुध–विद्वत्सु" (इति मेदिनी) इत्येकं प्राज्ञादीनाम्॥ ४०॥

इति ञान्ताः॥

---

अथ टान्ताः।

कौआ, हाथी का गाल आदि, हाथी का कपोल, कमर आदि, चँदुला, दुष्टचर्म, महेश आदि.

**( काकेभगण्डौ ) करटौ ( गजगण्डकटी ) कटौ ।**

**शिपिविष्ट ( स्तु खलतौ दुश्चर्मणि महेश्वरे )॥ ४१ ॥**

केति—काको वायसः, इभगण्डो हस्तिकपोलः उभौ करटौ करटपदवाच्यौ स्याताम्। क इति रटति कपूर्वको 'रट शब्दे' भौवादिकस्तस्मात्पचाद्यचि करटः "करटो गजगण्डे स्यात्कुसुम्भे निन्द्यजीवने । एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे । करटो वाद्यभेदे" ( इति मेदिनी ) इत्येकं काकादीनाम्। गजगण्डकटी हस्तिकपोलश्रोणी कटौ कटपदवाच्यौ स्याताम्। कटति 'कटे वर्षावरणयोः' भौवादिकस्तस्मात्पचाद्यचि कटः "कटः श्रोणौ क्रियाकारे किलिञ्जे[2]ऽतिशये शवे । समये गजगण्डेऽपि पिप्पल्यां च कटी मता" ( इति विश्वः ) इत्येकं गजगण्डादीनाम् । खलतौ रोगादिना निष्केशशिरसि, दुष्टचर्मणि, महेश्वरे महेशे शौरौ च शिपिविष्टः स्यात् । शिपिषु रश्मिषु पशुषु वा विष्टः शिपिविष्टः शिपिपिष्टश्च "शिपिविष्टः शिवः शौरिर्दुश्चर्मा खलतिस्तथा" ( इति कोषान्तरम् ) इत्येकं खल्वाटादीनाम्॥ ४१॥

विश्वकर्मा, बढ़ई, सूर्य, भाग्य, काल, रस, अकार्य, डाह, तीखा.

**( देवशिल्पिन्यपि ) त्वष्टा दिष्टं ( दैवेऽपि न द्वयोः )।**

**(रसे)कटुः कटु (कार्ये) त्रिषु (मत्सरतीक्ष्णयोः)॥ ४२॥**

दयिति—देवशिल्पिनि विश्वकर्मणि अपिशब्दात्तक्षादित्यभेदयोरपि त्वष्टा स्यात् । त्वक्षति, त्वक्ष्यते वा त्वष्टा "नप्तृनेष्टृ–" इति साधुः "त्वष्टा पुमान्देवशिल्पितक्ष्णोरादित्यभिद्यपि" ( इति मेदिनी ) इत्येकं देवशिल्प्यादीनाम्। दैवे भाग्ये दिष्टं

---

१–"कटधूमस्य सौरभ्यमवघ्राय व्रजौकसः" ( इति भागवतम् )॥

२–किल्यतेऽनेन 'किल श्वैत्यक्रीडनयोः' अस्माद् "इगुपधात्कित्" इतीनि किलिर्वेत्रवीरणादिस्ततो जातः जनेः "पञ्चम्यामजातौ" इति डे पृषोदरादित्वान्नुमागमे च किलिञ्जस्तस्मिन्निति॥

द्वयोः स्त्रीपुंसयोः न स्यात् । अपिशब्दात्काले पुमान् स्यात् । दिश्यतेस्म दिशतेः कर्मणि क्ते, " व्रश्चेति " षत्वे, ष्टुत्वे च दिष्टम् " दिष्टं दैवे पुमान् काले " ( इति मेदिनी ) इत्येकं दैवादीनाम् । रसे रसमात्रे कटुः पुमान्, अकार्ये कटु नपुंसकं, मत्सरतीक्ष्णयोस्तु त्रिषु त्रिलिङ्गयां स्यात् ॥ ४२ ॥

क्षेम, अशुभ, शुभ, शुभ, अशुभ, सौरि का घर, मदिरा, मरणका चिह्न, माया, निश्चल, यन्त्रादि, छोटी इलायची, काल अल्प, संशय.

**रिष्टं ( क्षेमाशुभाभावे ) ष्वरिष्टे ( तु शुभाशुभे ) ।**
**( मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ) ॥ ४३ ॥**
**अयोघने शैलशृङ्गे (सीराङ्गे) कूट ( मस्त्रियाम् ) ।**
**(सूक्ष्मैलायां) त्रुटिः(स्त्रीस्यात्कालेऽल्पेसंशयेऽपि सा) ४४**

रीति—क्षेमं कुशलम्, अशुभममङ्गलम्, अभावोऽशुभाभावः एषु रिष्टं स्यात् । रेषणम्, रिष्यते स्म वा " रिष् हिंसायाम् " दैवादिकस्तस्माद्भावे कर्मणि वा क्ते, इडभावे च रिष्टम् " रिष्टं क्षेमाशुभाभावे पुंसि खड्गे च फेनिले " ( इति मेदिनी ) इत्येकं क्षेमादीनाम् । शुभं कल्याणम्, अशुभमभद्रम् उभे अरिष्टे अरिष्टपदवाच्ये स्याताम । न रिष्टम् नञ्समासे अरिष्टम् " अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः । अरिष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च " ( इति मेदिनी ) इत्येकं शुभादीनाम् । माया विपरीतदर्शनम्, निश्चलः अचलः, अविकार आकाशादिर्वा, यन्त्रं मृगबन्धनविशेषः, कैतवं कपटम्, अनृतमसत्यम्, राशिः समूहः, अयोघनः लोहघनः, शैलशृङ्गम् पर्वतशिखरम्, सीराङ्गं फालाधारः एषु कूटम् अस्त्रियां पुन्नपुंसके स्यात् । कूटयते, कूटयते वा ' कूट आप्रदाने ' चौरादिकस्तस्मात्पचाद्यचि, घञि वा कूटम् " कूटं पूर्द्वारयन्त्रयोः । मायादम्भाद्रिशृङ्गेषु सीराङ्गेनृत्ततुच्छयोः । निश्चलेऽयोघने राशौ " ( इति हेमचन्द्रः ) इत्येकं मायादीनाम् । सूक्ष्मैलायाम् तुत्थायाम् त्रुटिः स्त्री स्यात्—सा त्रुटिः काले कालमाने, अल्पे स्वल्पे, संशयेऽपि स्यात् । त्रुट्यतेऽनेन ' त्रुट छेदने ' चौरादिकस्तस्माद् ' इगुपधादिति ' इनि त्रुटिः, त्रुटी वा "त्रुटिः स्त्री संशये स्वल्पे सूक्ष्मैलाकालमानयोः" (इति मेदिनी) इत्येकं सूक्ष्मैलादीनाम् ॥ ४३।४४॥

धन्वा की नोक, बड़ाई, कोन, करोड़, जड़, लिपटे बाल, फल, संपदा, ज्ञान, नेत्र, देखना.

**( अर्त्युत्कर्षाश्रयः ) कोटयो ( मूले लग्नकचे ) जटा ।**
**व्युष्टिः (फले समृद्धौ च) दृष्टि (र्ज्ञानेऽक्षिणदर्शने) ॥ ४५ ॥**

अरिति—अर्तिर्धनुषोऽग्रभागः, उत्कर्षो जयाप्तिः, अश्रिः खड्गादिकोणः एते कोट्यः कोटिपदवाच्याः स्युः । कोटयते ' कूट प्रतापने ' चौरादिकस्तस्माद् ' अचइः ' इति इप्र-

त्यये, शिलोपे च कोटिः, कोटी वा "कोटिः स्त्री धनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः" (इति मेदिनी) इत्येकं चापाग्रभागादीनाम् । मूले, लग्नकचे च जटा स्यात् । जटति 'जट संघाते' भौवादिकस्तस्मात्पचाद्यचि, टापि च जटा "जटा लग्नकचे मूले मांस्यां प्लक्षे पुनर्जटी" (इति मेदिनी) इत्येकं मूलादीनाम् । फले, समृद्धौ च व्युष्टिः स्यात् । व्युच्छनम्, व्युच्छ्यतेवा विपूर्वकः 'उच्छी विवासे' भौवादिकस्तस्माद्भावे, कर्मणि वा क्तिनि, "व्रश्चेति" षत्वे, ष्टुत्वे च व्युष्टिः स्यादित्येकं फलादीनाम् । ज्ञाने, अक्ष्णि नेत्रे, दर्शने च दृष्टिः स्यात् । दर्शनम्, दृश्यतेऽनयेति वा 'दृशिर्प्रेक्षणे' भौवादिकस्तस्माद्भावे कर्मणि वा क्तिनि, षत्वे, ष्टुत्वे च दृष्टिः "दृष्टिर्ज्ञानेऽक्ष्णिदर्शने" (इति हैमः) इत्येकं ज्ञानादीनाम् ॥ ४५ ॥

यज्ञ, इच्छा, निश्चित, बहुत, दुःख, महावन, दक्ष, तीक्ष्ण, नीरोग, हर, काला कौआ, पेट का कोठा, कोठिला, घरका मध्य, खत्ता कोठरी आदि.

स. इष्टि (यागेच्छयोः) स. सृष्टि (निश्चिते बहुनि त्रिषु)।
पु.स.न. कष्टे (तु कृच्छ्रगहने) (दक्षामन्दागदेषु तु)॥ ४६ ॥
पु.स.न. पटु (द्वौ वाच्यलिङ्गौ च) पु. नीलकण्ठः (शिवेऽपि च)।
पु. (पुंसि) कोष्ठे (ऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा) ॥ ४७ ॥

यिति–यागो यज्ञः इच्छा वाञ्छा अनयोरिष्टिः स्यात । एषणम् 'इषु इच्छायाम्' तौदादिकस्तस्माद्भावे क्तिनि, इज्यतेऽनयेति वा यजेः करणे क्तिनि, "व्रश्चेति" षत्वे, ष्टुत्वे च इष्टिः "इष्टिर्मताभिलाषेऽपि संग्रहः श्लोकयागयोः" (इति मेदिनी) इत्येकं यागादीनाम् । निश्चिते, बहुनि प्रचुरे बहुले वा सृष्टिः त्रिषु त्रिलिङ्गयां स्यात् । सर्जनम्, 'सृज विसर्गे' दैवादिकस्तस्माद्भावे क्तिनि, षत्वे, ष्टुत्वे च सृष्टिः, अदन्तपाठे तु भावे क्ते सृष्टमपि "मुक्तनिर्मितयोः प्राज्ये त्रिषु सृष्टं तु निश्चिते" (इति रुद्रः) इत्येकं निश्चितादीनाम् । कृच्छ्रं दुःखम्, गहनं कलिलंमहावनं सघनं विकटं वा उभे कष्टे कष्ट-पदवाच्ये स्याताम् । कषति, कष्यते स्म वा कर्तरि कर्मणि वा क्ते "कृच्छ्रगहनयोः कषः" इतीडभावे च कष्टम् "कष्टं तु गहने कृच्छ्रे" (इति कोषान्तरम्) इत्येकं कृच्छ्रादीनाम् । दक्षश्चतुरः अमन्दस्तीक्ष्णः, अगदो नीरोगः एषु पटुः स्यात् । पाटयति । पटतेर्ण्यन्तात् "फलिपाटीति" उप्रत्यये पटादेशे च पटुः "पटुस्तीक्ष्णे स्फुटे दक्षे निष्ठुरे निर्दयेऽपि च" (इति रुद्रः) इत्येकं दक्षादीनाम् । इमौ कष्टपटू द्वौ वाच्यलिङ्गौ स्याताम् (इति टान्ताः) अथ ठान्ता व्याख्यायन्ते–नीलः कण्ठो यस्येति नीलकण्ठः शिवे सदाशिवे अपिशब्दाद्दात्यूहकलविङ्कखञ्जनादिष्वपि स्यात् । "कालकण्ठस्तु दात्यूहे कल-विङ्के च खञ्जने । सितापाङ्गे हरे पीतसारके नीलकण्ठवत्" (इति विश्वः) इत्येकं हरादीनाम । अन्तर्जठरं जठरमध्यम, कुसूलो धान्यागारं कोठिलेति यावत् तथा अन्त-

गृहं गेहमध्यम् एतत्रयं कोष्ठः पुंसि स्यात् । कुष्यते कुष्णातेः कर्मणि " उषि कुषीति " थनि, ष्टुत्वे च कोष्ठः " कोष्ठः कुसूले चात्मीये मध्ये कुक्षेर्गृहस्य च " ( इति मेदिनी ) इत्येकमन्तर्जठरादीनाम् ॥ ४६ । ४७ ॥

सिद्धि, नाश, अन्त, बड़ाई, मर्यादा, दिशा, अत्युत्तम, अति वृद्ध, बड़ा भाई, महीना, बालक, छोटा भाई.

स. स.
**निष्ठा (निष्पत्तिनाशान्ताः) काष्ठो (त्कर्षे स्थितौ दिशि) ।**
पु.स.न. पु.
**(त्रिषु) ज्येष्ठो(ऽतिशस्तेऽपि)कनिष्ठो(ऽतियुवाल्पयोः) ४८**

## इति ठान्ताः ॥

नीति—निष्पत्तिः निष्पादनं सिद्धिर्वा, नाशोऽदर्शनम्, अन्तः प्रध्वंसः एते निष्ठापदवाच्याः स्युः । निष्ठानम्, निपूर्वकात्तिष्ठतेर्भावे " आतश्चोपसर्गे " इत्यङि, उपसर्गादिति षत्वे टापि च निष्ठा " निष्ठा निष्पत्तिनाशान्तयाच्ञानिर्वहणेषु च " ( इति मेदिनी ) इत्येकं निष्पत्त्यादीनाम् । उत्कर्षे प्रकर्षे, स्थितौ स्थितिमात्रे, दिशि च काष्ठा स्यात् । काशते " काशृ दीप्तौ " भौवादिकस्तस्मात्कर्तरि " हनिकुषीति " क्थनि, षत्वे, ष्टुत्वे, टापि च काष्ठा " काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम् " ( इति मेदिनी ) अतिशस्ते अतिप्रशस्ते अपिशब्दाद् वृद्धमासान्तरादावपि ज्येष्ठस्त्रिषु त्रिलिङ्गयां स्यात् । अतिशयेन प्रशस्तः " अतिशायने तमबिष्ठनाविति " इष्ठनि, " ज्यचेति " प्रशस्यस्य ज्यादेशे, गुणे च ज्येष्ठः " ज्येष्ठः श्रेष्ठे च वृद्धे च त्रिषु मासान्तरे पुमान् । ज्येष्ठा तु गृहगोधाख्यजन्तुनक्षत्रभेदयोः " ( इति मेदिनी ) इत्येकमतिप्रशस्तादीनाम् । अतियुवा अतितरुणः, अल्पः अत्यल्पः उभयोः कनिष्ठः स्यात् । अतिशयेन युवा अल्पो वा इष्ठनि, " युवाल्पयोः कनन्यतरस्याम् " इति कनादेशे च कनिष्ठः " कनिष्ठोऽतियुवात्यल्पानुजस्त्रीदुर्बलाङ्गुलौ " ( इति मेदिनी ) इत्येकमतियुवादीनाम् ॥ ४८ ॥

इति ठान्ताः ॥

---

## अथ डान्ताः ।

लाठी, दण्डकरना आदि, मिट्टी आदिका गोला या गेंद, मीठा, सांप, बाघ, गौ, धरती, वाणी, बुधभार्या.

पु. न. पु.
**दण्डो (ऽस्त्री लगुडेऽपि स्याद्) गुडो (गोलेक्षुपाकयोः) ।**
पु. स. स.
**(सर्पमांसात्पशू) व्याडौ (गोभूवाच) स्त्विडा इला ॥४६॥**

देति—लगुडे यष्टौ, अपिशब्दाद्यममानभेददमसैन्यव्यूहभेदादावपि दण्डः अस्त्री पुन्नपुंसकं स्यात् । दण्डयति, ' दण्ड निपातने ' चौरादिकस्तस्मात्कर्तरि पचाद्यचि, दण्ड्य-

तेऽनेन " इगुपधेति " घे, दाम्यतीति विग्रहे तु 'ञमान्तादिति' डे वा दण्डः " दण्डो यमे मानभेदे लगुडे दमसैन्ययोः । व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि । अभिमाने ग्रहे दण्डश्चण्डांशोः पारिपार्श्विके " ( इति विश्वः ) इत्येकं लगुडादीनाम् । गोलो वर्तुलपिण्डः, पचनं पाकः इक्षूणांपाकः अनयोः गुडः स्यात् । गुडति 'गुड वेष्टने' तौदादिकस्तस्मात्कर्तरि " इगुपधेति " के गुडः " गुडः स्याद्गोलके हस्तिसंनाहेक्षुविकारयोः । गुडा स्नुह्यां च कथिता गुडिकायां च योषिति " ( इति मेदिनी ) इत्येकं गोलादीनाम् । सर्पो भुजंगः, मांसमत्तीति मांसात् सचासौ पशुश्चेति मांसात्पशुर्व्याघ्रः उभौ व्याडौ व्याडपदवाच्यौ स्याताम् । व्याडति व्याङ्पूर्वकः 'अड उद्यमे' भौवादिकस्तस्मात्पचाद्यचि व्याडः " व्याडो व्याघ्रे खले सर्पे " ( इति रभसः ) इत्येकं सर्पादीनाम् । गौर्धेनुः, भूर्भूमिः, वाक् वाणी च एते इडापदवाच्या इलापदवाच्याश्च स्युः । इलति 'इल उत्क्षेपे' तौदादिकस्तस्मात्कर्तरि " इगुपधेति " के, टापि, डलयोरैक्याड्डत्वे च इडा " इडा तु बुधयोषिति । सौरभेय्यां च वचने वसुमत्यामपि स्त्रियाम् " ( इति मेदिनी ) डत्वाभावे तु इलापि " इला कलत्रे सौम्यस्य धरित्र्यां गवि वाचि च " ( इति मेदिनी ) इति द्वे गवादीनाम् ॥ ४६ ॥

बांसकी शलाका, सिंहनाद, विषादि, घड़ी, नाड़ी, दण्ड, बाण, निंदित आदि.

**क्ष्वेडा** (स.) **( वंशशलाकाऽपि ) नाडी** (स.) **( कालेऽपि षट्क्षणे ) ।**
**काण्डो** (पु.न.) **ऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ) ॥ ५० ॥**

क्ष्वयिति—वंशस्य शलाका पिञ्जरार्थवेणुशलाका अपिशब्दात्सिंहनादोऽपि क्ष्वेडा स्यात् । तथा च विषध्वनिकर्णामयेषु क्ष्वेडः, लोहितार्कपर्णफलघोषपुष्पेषु च क्ष्वेडं स्यात् । क्ष्वेलति 'क्ष्वेलृ चलने' भौवादिकस्तस्मात्पचाद्यचि, डलयोरैक्याल्लस्य डत्वे, टापि च क्ष्वेडा "क्ष्वेडो ध्वनौ कर्णामये विषे । क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति । लोहितार्कपर्णफले घोषपुष्पे नपुंसकम् । दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्तितः " ( इति मेदिनी ) इत्येकं वेणुशलाकादीनाम् । षट्क्षणे षट्क्षणपरिमिते काले समये अपिशब्दाच्छिद्रादिष्वपि नाडी स्यात् । नालयति 'णल गन्धे' भौवादिकोण्यन्तस्तस्मात्पचाद्यचि, डलयोरैक्याल्लस्य डत्वे, गौरादित्वान्ङीषि च नाडी " नाडी नाले व्रणान्तरे । शिरायां गण्डदूर्वायां चर्यायां कुहनस्य च । तथा च षट्क्षणकालेऽपि " ( इति मेदिनी ) इति षट्क्षणकालादीनाम् । दण्डो लगुडादिः, बाणः शरः, अर्वा कुत्सितः, वर्गः परिच्छेदः, अवसरः प्रस्तावः, वारि जलम् एषु काण्डो अस्त्री पुन्नपुंसकं स्यात् । कनति 'कनी दीप्तौ' भौवादिकस्तस्मात् 'ञमान्तादिति' डे " कादिभ्यः कित् " इति कित्त्वे, नस्यानुस्वारे, परसवर्णे " अनुनासिकस्येति " दीर्घे च काण्डः " काण्डःस्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः । कुत्सिते वृक्षभिन्नाडी वृन्ते रहसि न स्त्रियाम् " ( इति मेदिनी ) इत्येकं दण्डादीनाम् ॥ ५० ॥

घोड़ेका गहना आदि, अत्यर्थ, प्रतिज्ञा, दृढ़, अतिशय, दुःख, कष्ट.

( स्या )द्भाण्ड ( मश्वाभरणेऽमत्रेमूलवणिग्धने )।
(भृशप्रतिज्ञयो) र्बाढं प्रगाढं ( भृशकृच्छ्रयोः) ॥ ५१ ॥

स्यादिति—अश्वाभरणेऽश्वभूषणे, अमत्रे भाजने, मूलवणिग्धने वणिग्मूलधने, भूषणमात्रे च भाण्डं स्यात्। भण्यते 'भण शब्दे' भौवादिकस्तस्मात्कर्मणि 'अमान्तादिति' डे, पृषोदरादित्वाद्भाण्डम् "भाण्डं पात्रे वणिग्मूलधने भूषाश्वभूषयोः" ( इति मेदिनी ) इत्येकमश्वाभरणादीनाम्। ( इति डान्ताः ) अथ ढान्ता व्याख्यायन्ते—भृशमतिशयः, प्रतिज्ञानं प्रतिज्ञा अनयोर्बाढं स्यात्। बाहते, वाह्यते स्म वा "बाहृ प्रयत्ने" भौवादिकस्तस्मात्कर्तरि कर्मणि वा क्ते, "क्षुब्धस्वान्तेति" निपातिते बाढम् "बाढं भृशप्रतिज्ञयोः" ( इति कोषान्तरम् ) इत्येकमतिशयादीनाम्। भृशकृच्छ्रयोरतिशयदुःखयोः प्रगाढं स्यात्। प्रगाह्यतेस्म प्रपूर्वको 'गाहू विलोडने' अस्मात्कर्मणि क्ते, "यस्य विभाषा" इतीडभावे, हस्य ढत्वे, धत्वे, ष्टुत्वे, ढलोपे च प्रगाढम् "प्रगाढं स्याद्दृढे कृच्छ्रे" ( इति धरणिः ) इत्येकं भृशादीनाम् ॥ ५१ ॥

समर्थ, मोटा, जोड़े, मिले, सेना विशेष, बच्चा.स्त्रीकागर्भ, बाणासुर,तीर.

(शक्तस्थूलौ त्रिषु) दृढौ व्यूढौ (विन्यस्तसंहतौ)।
भ्रूणो(ऽर्भके स्त्रैणगर्भे) बाणो(बलिसुते शरे) ॥ ५२ ॥

शेति—शक्तः समर्थो बलवांश्च, स्थूलः पीवरः उभौ दृढौ दृढपदवाच्यौ सन्तौ त्रिषु त्रिलिङ्गयां स्याताम्। दृंहति, दृंहतिस्म वा "दृह दृहि वृद्धौ" भौवादिकस्तस्मात्कर्तरि 'गत्यर्थाकर्मेति' क्ते "दृढः स्थूलबलयोः" इति निपातिते च दृढः "दृढः स्थूले नितान्ते च प्रगाढे बलवत्यपि" ( इति मेदिनी ) इत्येकं शक्तादीनाम्। विन्यस्तो विसृष्टो विनिर्मुक्तः संस्थापितश्च, संहतो दृढसन्धिः, सन्नद्धः समुदितश्च उभौ व्यूढौ व्यूढपदवाच्यौ[1] स्याताम्। विशेषेणोह्यतेस्म विपूर्वको 'वह प्रापणे' भौवादिकस्तस्मात्कर्मणि क्ते, यजादित्वाद् "वचिस्वपीति" संप्रसारणे, हस्य ढत्वे, धत्वे, ष्टुत्वे, ढलोपे, दीर्घे च व्यूढः "व्यूढः संहतविन्यस्ते पृथुलेऽप्यभिधेयवत्" ( इति मेदिनी ) इत्येकं विन्यस्तादीनाम् ( इति ढान्ताः ) "अथ णान्ता व्याख्यायन्ते—" अर्भके शावके, स्त्रिया अयं स्त्रैणः सचासौ गर्भश्च तस्मिन्स्त्रैणगर्भे स्त्रीगर्भे च भ्रूणः स्यात्। भ्रूण्यते 'भ्रूण आशायाम्' चौरादिकस्तस्मात्कर्मणि घञि भ्रूणः "भ्रूणः स्त्रीगर्भडिम्भयोः" ( इति मेदिनी ) इत्येकमर्भकादीनाम्। बलिसुते बाणासुरे, शरे शायके च बाणः स्यात्। बाणयति 'बाण शब्दे' भौवादिकः स्वार्थण्यन्तस्तस्मात्कर्तरि पचाद्यचि बाणः "बाणः स्याद्गोस्तने दैत्यभेदे केवलकाण्डयोः। बाणा तु बाणमूले-

१ सेनाविशेषसंस्थापने यथा—"दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा" (इति भगवद्गीतायाम्) ॥

ऽस्त्री नीलझिण्टया पुनर्द्वयोः" (इति मेदिनी) इत्येकं बलिसुतादीनाम् ॥ ५२ ॥

अतिसूक्ष्म, चावलों की कनकी, समूह, रुद्रानुचर, जूआ की बाजी आदि
पु. पु.
**कणो (ऽतिसूक्ष्मे धान्यांशे संघाते प्रमथे) गणः ।**
पु.[1]
**पणो (द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च) ॥ ५३ ॥**

केति—अतिसूक्ष्मे अतिलवे, परमाणौ वा धान्यांशे धान्यातिसूक्ष्मभागे तण्डुलादिप्रसिद्धे च कणः स्यात् । कणति 'कण निमीलने' भौवादिकस्तस्मात्पचाद्यचि कणः "कणा जीरककुम्भीरमक्षिकापिप्पलीषु च । कणोऽतिसूक्ष्मे धान्यांशे" (इति मेदिनी) इत्येकमतिसूक्ष्मादीनाम् । संघाते समूहे, प्रमथे रुद्रानुचरे च गणः स्यात् । गण्यते 'गण संख्याने' चौरादिकस्तस्मात्कर्मणि 'घञि' 'अचि' वा गणः "गणः स्यात्प्रमथे संघे संख्यासैन्यप्रभेदयोः" (इति मेदिनी) इत्येकं संघातादीनाम् । द्यूतादिषु कैतवादिषु, उत्सृष्टे समुज्झिते, भृतौ भृत्यायाम्, मूल्ये वस्तुमूल्ये, धने द्रव्ये, अपिशब्दाद्व्यवहारस्तुतिकार्षापणादिष्वपि पणः स्यात् । पणनम्, पण्यतेऽनेनवा 'पण व्यवहारे स्तुतौ च' भौवादिकस्तस्माद्भावे, करणे वा "नित्यं पणः परिमाणे" इत्यपि पणः "पणो माने वराटानां मूल्ये कार्षापणे धने । द्यूते विक्रय्य शाकादेर्बद्धमुष्टौ ग्लहे भृतौ" (इति धरणिः) इत्येकं द्यूतादीनाम् ॥ ५३ ॥

धनुषकी रस्सी, रसगन्धादि, मौन रहना आदि.
पु. पु.
**(मौर्व्यां द्रव्याश्रिते सत्त्वशुक्लसंध्यादिके) गुणः ।**
**(निर्व्यापारस्थितौ कालविशेषोत्सवयोः) क्षणः ॥ ५४ ॥**

मार्व्विति—मौर्व्यां धनुषो ज्यायाम्, द्रव्याश्रिते रसगन्धादौ, सत्त्वं च शुक्लश्च सन्धिश्च सन्ध्या च ते ता वा आदयो यस्येति द्वन्द्वान्ते श्रूयमाणत्वादादिशब्दस्य प्रत्येकं सम्बन्धस्तेन सत्त्वादौ, शुक्लादौ, सन्धिविग्रहादौ सन्ध्यादौ च गुणः स्यात् । गुण्यते 'गुण आमन्त्रणे' चौरादिकस्तस्मात्कर्मणि घञि गुणः "गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागशौर्य्यादिसत्त्वादिसन्ध्याद्यावृत्तिरज्जुषु । शुक्लादावपि बुद्ध्यां च" (इति मेदिनी) इत्येकं मौर्व्यादीनाम् । निर्व्यापारस्थितौ व्यापाराभावस्थितौ कालविशेषे त्रिंशत्कलात्मिके काले, उत्सवे पुत्रजन्मपर्वादौ च क्षणः स्यात् । क्षणोति 'क्षण हिंसायाम्' तानादिकस्तस्मात्कर्तरि पचाद्यचि क्षणः "क्षणो व्यापारशून्यत्वमुहूर्तोत्सवपर्वसु" (इति रुद्रः) इत्येकं निर्व्यापारस्थित्यादीनाम् ॥ ५४ ॥

---

१ "वराटकानां दशकद्वयं यत्सा काकिणी ताश्च पणश्चतस्रः । ते षोडशद्रम्म इहावगम्यो द्रम्मैस्तथा षोडशभिश्च निष्कः" (इति लीलावत्याम्) ॥

ब्राह्मण, क्षत्रियादि, सफ़ेद, लाल, आदि, बड़ाई, हरूफ़, सूर्य, सूर्यका सारथी, वर्णभेद आदि·

पु· न·
**वर्णो (द्विजादौ शुक्लादौ स्तुतौ) वर्णं (तु वाक्षरे)।**
पु·
**अरुणो (भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु) ॥ ५५॥**

वेति—द्विजादौ ब्राह्मणक्षत्रियादौ, शुक्लादौ शुक्लरक्तपीतादौ आदिना यशोगुणकथासु, स्तुतौ च वर्णः पुमान्स्यात्। अक्षरे अक्षरविलेखने तु वर्णं वा क्लीबं स्यात्। वर्ण्यते 'वर्ण प्रेरणे' चौरादिकस्तस्माद्भावे कर्मणि वा घञि वर्णः "वर्णो द्विजादिशुक्लादियशोगुणकथासु च। स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेखने" (इति मेदिनी) इत्येकं द्विजादीनाम्। भास्करे सूर्ये अपिशब्दादव्यक्तरागसन्ध्यारागार्कसारथ्यादिषु अरुणः पुमान्स्यात्। वर्णभेदेऽपि त्रिषु त्रिलिङ्ग्यां स्यात्। ऋच्छति 'ऋ गतौ' भौवादिकस्तस्मात्कर्तरि "अर्तेश्च" इत्युनानि गुणे, णत्वे च अरुणः "अरुणोऽव्यक्तरागेऽर्के सन्ध्यारागेऽर्कसारथौ। निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु" (इति मेदिनी) इत्येकं भास्करादीनाम्॥ ५५॥

शिव, खंभा या ठूंठ, वृक्षादि, काला कौआ, द्रोणाचार्य, परिमाण विशेष, शब्द, संग्राम, नाई, मुख्य आदि·

पु· पु· पु·
**स्थाणुः (शर्वेऽपि च) द्रोणः (काकेऽपि च) (रवे) रणः।**
पु· *
**ग्रामणी (र्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु) ॥ ५६ ॥**

स्थेति—शर्वे शिवे अपिशब्दात्कीले ध्रुवे च स्थाणुः स्यात। तिष्ठति, 'ष्ठा गतिनिवृत्तौ' भौवादिकस्तस्मात्कर्तरि "स्थो णुः" इति णौ स्थाणुः "स्थाणुः कीले हरे पुमान्। अस्त्री ध्रुवे" (इति मेदिनी) इत्येकं शिवादीनाम्। काके कृष्णकाके अपिशब्दादाढकादिचतुष्टयकूपीपतिनीवृदन्तरकाष्ठाम्बुवाहिन्यादिष्वपि द्रोणः स्यात्। द्रवति 'द्रु गतौ' भौवादिकस्तस्मात्कर्तरि "कृवृशृसि" इति ने, णत्वे च द्रोणः "द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये। पुमान्कूपीपतौ कृष्णकाकेऽस्त्री नीवृदन्तरे। स्त्रियां काष्ठाम्बुवाहिन्यां गवादिन्यामपीष्यते" (इति मेदिनी) इत्येकं काकादीनाम्। रवे कणे, कोणे, समरे च रणः स्यात्। रणति 'रण शब्दे' भौवादिकस्तस्मात्कर्तरि पचाद्यचि रणः "रणः कोणे कणे पुंसि समरे पुन्नपुंसकम्" (इति मेदिनी) इत्येकं कणादीनाम्। नापिते क्षौरकारिणि ग्रामणीः पुंसि स्यात्। श्रेष्ठे प्रधाने ग्रामाधिपे च त्रिषु

* "ग्रामणी नीलिकायां स्त्री ग्रामोद्भूतेऽभिधेयवत्" (इति मेदिनी)। ग्रामोऽस्त्यस्या इति विग्रहे तु ग्रामिण्यपि।

त्रिलिङ्ग्यां स्यात् । ग्रामं नयति उपपदसमासे 'णीञ् प्रापणे' भौवादिकस्तस्मात् "सत्सूद्विषेति" क्विपि "अग्रग्रामाभ्याम्" इति णत्वे च ग्रामणीः "ग्रामणीर्भोगिके पत्यौ प्रधाने नापितेऽपि च । ग्रामणीर्नीलिकायां च ग्रामेयी पण्ययोषितोः" ( इति विश्वः ) इत्येकं नापितादीनाम् ॥ ५६ ॥

भेड़, खरहा, ऊंट आदि लोमों का बना ऊन आदि, मृगी, स्वर्णप्रतिमा आदि.

**ऊर्णा ( मेषादिलोम्नि स्यादावर्ते चान्तराभ्रुवोः )[१] ।**
**हरिणी ( स्यान्मृगी हेमप्रतिमा हरिता च या ) ॥ ५७ ॥**

ऊरिति–मेष आदिर्येषामिति आदिना शशोष्ट्रमृगादिग्रहस्तेषां लोम तस्मिन्मेषादिलोम्नि भ्रुवोरन्तरावर्ते च ऊर्णा स्यात् । ऊर्णोति 'ऊर्णुञ् आच्छादने' आदादिकस्तस्माद् "अन्येभ्योऽपीति" डे, टिलोपे, टापि च ऊर्णा "सोर्णा तु चक्रवर्त्यादीनां महारोगिणां च महापुरुषलक्षणभूता मृणालतन्तुसूक्ष्मा, शुभ्रायता प्रशस्तावर्ता प्रायेण भवति" इत्येकं मेषादिलोमादीनाम् । मृगी मृगपत्नी, हेमप्रतिमा सुवर्णमयी मूर्तिः या हरिता हरितवर्णविशिष्टा च सा हरिणी स्यात् । हरिणस्य स्त्री "पुंयोगादिति" ङीपि हरिणी "हरिणी हरितायां च नारीभिद्वृत्तभेदयोः । सुवर्णप्रतिमायां च" ( इति मेदिनी ) इत्येकं मृग्यादीनाम् ॥ ५७ ॥

पाण्डुरवर्ण, मृग, खम्भा, लोहेकी प्रतिमा, वाञ्छा, पिपासा, निन्दा, दया.

**( त्रिषु पाण्डौ च ) हरिणः स्थूणा ( स्तम्भेऽपि वेश्मनः ) ।**
**तृष्णे ( स्पृहापिपासे द्वे ) ( जुगुप्साकरुणे ) घृणे ॥ ५८ ॥**

त्रिष्विति–पाण्डौ पाण्डुरवर्णे चशब्दात्सारङ्गेऽपि हरिणः त्रिषु त्रिलिङ्ग्यां स्यात् । हरति 'हृञ् हरणे' भौवादिकस्तस्मात्कर्तरि "हृश्यास्त्या" इतीनचि णत्वे च हरिणः "हरिणः पुंसि सारङ्गे शवले त्वभिधेयवत्" ( इति मेदिनी ) इत्येकं पाण्डुरादीनाम् । वेश्मनो गृहस्य स्तम्भे अपिशब्दात्सूर्म्यामपि स्थूणा स्यात् । तिष्ठतीति स्थूणा "रास्नासास्नेति" साधुः "स्थूणा स्यात्सूर्म्यां स्तम्भेऽपि वेश्मनः" ( इति मेदिनी ) इत्येकं गेहस्तम्भादीनाम् । स्पृहा च पिपासा च इमे द्वे तृष्णे तृष्णापदवाच्ये स्याताम् । तर्षणम् 'ञितृष विपासायाम्' दैवादिकस्तस्मात्कर्तरि "तृषिशुषिरसिभ्यः कित्" इति ने, तस्य कित्त्वाद्गुणाभावे टापि च तृष्णा स्यादित्येकं स्पृहादीनाम् । जुगुप्सा निन्दा, करुणा कृपा च उभे घृणे घृणापदवाच्ये स्याताम् । घर्णनम् 'घृणु दीप्तौ' तानादिकस्तस्माद्भावे "षिद्भिदादिभ्योऽङि" इत्यङि टापि च घृणा स्यादित्येकं निन्दादीनाम् ॥ ५८ ॥

---

१–स्वामिमते तु "आवर्ते चान्तराभ्रुवो" इति पाठस्तत्र भ्रुवावित्यत्र 'अन्तरान्तरेण युक्ते' इति द्वितीया ज्ञातव्या ॥

बाज़ार की गली, दूकान आदि, मदिरा, पश्चिम दिशा, हथिनी, हाथी, बल, धन.

स. स.
**( वणिक्पथे च ) विपणिः ( सुरा प्रत्यक् च ) वारुणी[1] ।**

स. न.
**करेणु ( रिभ्यां स्त्री नेभे ) द्रविणं ( तु बलं धनम् ) ॥ ५९ ॥**

वेति—वणिक्पथे=हट्टमार्गे चशब्दादापणे पण्ये च विपणिः स्त्रियां स्यात् । विपण्यतेऽस्याम् विपूर्वकः ' पण व्यवहारे ' भौवादिकस्तस्मात्कर्मणि आधारे वा " सर्वधातुभ्य इन् " इतीनि विपणिः " आपणे पण्यवीथ्यां च पण्ये च विपणिः स्त्रियाम् " ( इति रुद्रः ) सुरा मदिरा, प्रत्यक् प्रतीची च उभे वारुणीपदवाच्ये स्याताम् । वरुणस्येयम् " तस्येदम् " इत्यणि, वृद्धौ, अलोपे " टिड्ढाणञिति " ङीपि च वारुणी " वारुणी गण्डदूर्वायां प्रतीचीसुरयोः स्त्रियाम् " ( इति मेदिनी ) इत्येकं सुरादीनाम् । इभ्यां हस्तिन्यां करेणुः स्त्री स्यात् । इभे हस्तिनि च करेणुः ना पुमान्स्यात् । के रुणुरस्य, करोति वा " कृहृभ्यामेणुः " इत्येणौ, गुणे च करेणुः " करेणुर्गजयोषायां स्त्रिया पुंसि मतङ्गजे " ( इति मेदिनी ) गरेणुर्वा " करेणुश्च गरेणुश्च करिणीकर्णिकारयोः " ( इति रन्तिदेवः ) बलं पराक्रमः, धनं वित्तं च द्रविणं स्यात् । द्रवति द्रयते वा ' द्रु गतौ ' भौवादिकस्तस्मात्कर्तरि कर्मणि वा " द्रुदक्षिभ्यामिनन् " इतीननि, गुणे, अवादेशे च द्रविणम् " द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे " ( इति मेदिनी ) इत्येकं बलादीनाम् ॥ ५९ ॥

घर, रक्षा करनेवाला, कमल, अग्निमन्थ, विष, युद्ध, लोहा, तेज़.

न. न.
**शरणं ( गृहरक्षित्रोः ) श्रीपर्णं ( कमलेऽपि च ) ।**

न.
**( विषाभिमरलोहेषु ) तीक्ष्णं ( क्लीबे खरे त्रिषु ) ॥ ६० ॥**

शेति—गृहं गेहम्, रक्षतीति रक्षिता पालयिता च उभयोः शरणं स्यात् । शृणाति, शीर्णं वा ' शॄ हिंसायाम् ' क्रैयादिकस्तस्मात्कर्तरि " कृत्यल्युटो बहुलम् " इति ' ल्युटि ' भावे वा ल्युटि, अनादेशे, गुणे, णत्वे च ' शरणम् ' " शरणं गृहरक्षित्रोर्वधरक्षणयोरपि " ( इति मेदिनी ) इत्येकं गेहादीनाम् । कमले पद्मे अपिशब्दादग्निमन्थादिषु श्रीपर्णं स्यात् । श्रीः पर्णेऽस्येति श्रीपर्णम् " श्रीपर्णी कुम्भिगम्भार्योः क्लीबे पद्माग्निमन्थयोः " ( इति रभसः ) इत्येकं पद्मादीनाम् । विषं गरलम्, अभिमरो मरणानिरपेक्षया युद्धोत्साहः, " भवेदभिमरो युद्धे बले स्वबलसाध्वसे " ( इति मेदिनी ) लोहं कालायसम् एषु तीक्ष्णं क्लीबे नपुंसके स्यात् । खरे तिग्मे त्रिषु त्रिलिङ्ग्यां स्यात् । तेजयति ' तिज निशाने ' भौवादिकः स्वार्थण्यन्तो वा " तिजेर्दीर्घश्च " इति क्स्ने, कुत्वे, चर्त्वे, षत्वे, क्षत्वे च तीक्ष्णम् " तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके । क्लीबं यवाग्रजे पुंसि तिग्मात्मत्यागिनोस्त्रिषु " ( इति मेदिनी ) इत्येकं गरलादीनाम् ॥ ६० ॥

---

१—" वारुणीं मदिरां पीत्वा मदाघूर्णितलोचनाविति " भागवतम् ॥

हेतु मर्यादा आदि जिससे क्रिया कीजाय, खेत आदि.

न.
**प्रमाणं ( हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ) ।**
न.
**करणं ( साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ) ॥ ६१ ॥**

प्रेति—हेतुः कारणं धूम्रादिः, मर्यादा, सीमा, शास्त्राणि षड्दर्शनानि, इयत्ता परिच्छेदकता, प्रमाता ज्ञाता एष्वर्थेषु प्रमाणं स्यात् । प्रमिमीते, प्रमितम्, प्रमीयते ज्ञायते वास्तुसार्वस्वं यथार्थतयाऽनेनेति वा प्रपूर्वको 'माङ् माने' जौहोत्यादिकस्तस्मात्कर्तरि, भावे, करणे वा ल्युटि, अनादेशे णत्वे च प्रमाणम् "प्रमाणं नित्यमर्यादा शास्त्रेषु सत्यवादिनि । इयत्तायां च हेतौ च क्लीबैकत्वे प्रमातरि" ( इति मेदिनी ) इत्येकं कारणादीनाम् । साधकतमं क्रियासिद्धौ प्रकृष्टोपकारकम्, क्षेत्रं धान्योत्पत्तिस्थानम्, गात्रं कलेवरम्, इन्द्रियाणि ज्ञानेन्द्रियाणि—कर्मेन्द्रियाणि च एषु, अपिशब्दात् कर्मकायस्थव्रतबन्धनाट्यगीतादिष्वपि करणं स्यात् । करोति, क्रियते, क्रियतेऽनेन, कृतं वा 'डुकृञ् करणे' तानादिकस्तस्मात्कर्तृकर्मकरणभावेषु ल्युटि, गुणे, अनादेशे, णत्वे च करणम् "करणं कारणे काये साधनेन्द्रियकर्मसु । कायस्थे व्रतबन्धे च नाट्यगीतप्रभेदयोः । पुमाञ्शूद्राविशोः पुत्रे वानरादौ च कीर्त्यते" ( इत्यजयः ) इत्येकं साधनक्षेत्रादीनाम् ॥ ६१ ॥

जीवोंके जन्मादि उगिला अन्नादि.

**( प्राण्युत्पादे ) संसरण ( मसंबाधचमूगतौ ) ।**
**( घण्टापथे ) (ऽथ वान्तान्ने) समुद्धरण (मुन्नये) ॥ ६२ ॥**

प्रेति—प्राण्युत्पादे प्राणिनां जीवानामुत्पादे, असंबाधचमूगतौ अव्याहतसेनागतौ, घण्टापथे घण्टोपलक्षितमार्गे, नगरमार्गे च संसरणं स्यात् । सम्यक्सरन्त्यनेन संपूर्वकः 'सृ गतौ' भौवादिकस्तस्मात्करणे ल्युटि, गुणे, अनादेशे, णत्वे च संसरणं स्यादित्येकं जीवोत्पादादीनाम् । अथेति वान्तान्ने भुक्तोज्झिते, उन्नये ऊर्ध्वनयने, उन्मूलिते च समुद्धरणं स्यात् । सम्यग् उद्ध्रियते समुत्पूर्वको 'हृञ् हरणे' भौवादिकस्तस्मात्कर्मणि भावे वा ल्युटि, गुणे, अनादेशे, णत्वे च समुद्धरणम्, उद्धरणमपि "भुक्तोज्झितोन्मूलितयोः स्यादुद्धरणमुन्नये" ( इति रभसः ) इत्येकं वान्तान्नादीनाम् ॥ ६२ ॥

पशुओंका सींग, हाथीदाँत, क्रम से उतार पृथिव्यादि.

पु.स.न.
**( अतस्त्रिषु ) विषाणं ( स्यात्पशुशृङ्गेभदन्तयोः ) ।**
पु.स.न.
**प्रवणः ( क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ) ॥ ६३ ॥**

अतइति—अतः परम् आणान्तं वक्ष्यमाणाः शब्दास्त्रिषु त्रिलिङ्गयां स्युः । पशूनां वृषभादीनां शृङ्गम्, इभानां हस्तिनां दन्तः उभयोः विषाणं स्यात् । व्यस्तिविपूर्वकः 'अस भुवि' आदादिकस्तस्मात्कर्तरि चानशि, "श्नसोरल्लोपः" इत्यल्लोपे "उपसर्गा-

त्पादुरिति " षत्वे, णत्वे च विषाणम् " विषाणी क्षीरकाकोल्यामजशृङ्ग्यां च योषिति । कुष्ठनामौषधौ क्लीबं त्रिषु शृङ्गेभदन्तयोः " ( इति मेदिनी ) इत्येकं पशुशृङ्गादीनाम् । क्रमनिम्नोर्व्याम् क्रमनिम्नमहीभागे, प्रह्वे नम्रे च प्रवणस्त्रिषु स्यात् । चतुष्पथे चतुर्मार्गसंगमे तु ना पुमान्स्यात् । प्रवन्तेऽनेनात्रेति वा ' प्रुङ् गतौ ' भौवादिकस्तस्मात्करणे आधारे वा " करणाधिकरणयोश्च " इति ल्युटि, गुणे, अवादेशे, णत्वे च प्रवणः " प्रवणः क्रमनिम्नोर्व्यां प्रह्वे च स्याच्चतुष्पथे । आयत्ते च तथा क्षीणे प्रगुणे समुदाहृतः " ( इति धरणिः ) इत्येकं क्रमनिम्नमहीभागादीनाम् ॥ ६३ ॥

व्याप्त, अशुद्धादि, शून्य, ऊसर, देव, सूर्यादि नद, समुद्र.

पु.स.न. संकीर्णौ (निचिताशुद्धा) पु.स.न. वीरिणं ( शून्यमूषरम् ) ।
( देवसूर्यौ ) विवस्वन्तौ सरस्वन्तौ ( नदार्णवौ ) ॥६४॥

समिति—निचितो व्याप्तः अशुद्धोऽपूतः उभौ संकीर्णौ संकीर्णपदवाच्यौ स्याताम् । संकीर्यते स्म संपूर्वकः ' कॄ विक्षेपे ' तौदादिकस्तस्मात्कर्मणि क्ते " ॠत इद्धातोः " इतीत्त्वे रपरत्वे दीर्घे " रदाभ्यामिति " निष्ठानत्वे णत्वे च संकीर्णस्त्रिषु स्यात् " संकीर्णं संकटे व्याप्ते कुत्रचिद्वर्णसंकरे " ( इत्यजयः ) इत्येकं निचितादीनाम् । शून्यं निराश्रयदेशं प्राणिवर्जितं वा, ऊषरं च ईरिणं स्यात् ऋच्छन्ति यस्मिन्निति ' ऋ गतौ ' भौवादिकस्तस्मादाधारे " अर्तेः किदीच्च " इतीननि, कित्त्वाद्गुणाभावे, ईदादेशे, रपरत्वे, णत्वे च ईरिणम् " ईरिणं तूषरे शून्ये " ( इति मेदिनी ) इदादिरपि " इरिणं निराश्रये भूभागे कथितमूषरे " ( इति ह्रस्वादावजयः ) इत्येकं शून्यादीनाम् ( इति णान्ताः ) अथ तान्ता व्याख्यायन्ते—देवः[1] सुरो घनो राजा च, सूर्यो दिवाकरः उभौ विवस्वन्तौ स्याताम् विवस्तेजोऽस्त्यस्येति मतुपि " मादुपधायाश्चेति " मतोर्मस्य वत्वे, दीर्घे, नुमि, सुलोपे, संयोगान्तसलोपे च विवस्वान् " विवस्वांस्तु सुरे सूर्ये तन्नगर्य्यां विवस्वती " ( इति मेदिनी ) इत्येकं देवादीनाम् । नदः सरिद्विशेषः, अर्णवः समुद्रश्च उभौ सरस्वन्तौ स्याताम् सरोगमनमस्यास्ति मतुपि सरस्वान् " सरस्वांस्तु नदे चाब्धौ नान्यवद्रसिके स्त्रियाम् । वाणीस्त्रीरत्नवाग्देवीगोनदीषु नदीभिदि " ( इति मेदिनी ) इत्येकं नदादीनाम् ॥ ६४ ॥

पक्षी, गरुड़, गीध, पक्षीमात्र, अग्नि, धूममयी तारा, मेघ, पहाड़.

( पक्षिताक्ष्यौं ) पु. गरुत्मन्तौ पु. शकुन्तौ ( भासपक्षिणौ ) ।
( अग्न्युत्पातौ ) पु. धूमकेतू पु. जीमूतौ ( मेघपर्वतौ )॥ ६५ ॥

पेति—पक्षी पक्षवान् खगो वा तार्क्ष्यस्य कश्यपस्यापत्यं तार्क्ष्यो गरुडश्च उभौ गरु-

---

१—"देवः सुरे घने राज्ञि देवमाख्यातमिन्द्रिये । देवी कृताभिषेकायां तेजनीस्पृक्कयोरपि " ( इति कोषान्तरम् ) ॥

त्मन्तौ स्याताम् । गरुतः पक्षाः सन्त्यस्येति 'मतुपि' यवादित्वात् "झयः" इति वत्वाभावे च गरुत्मान्स्यादित्येकं खगादीनाम् । भासः कुक्कुटो गृध्रश्च "भासो भासि समाख्यातो गोऽकुक्कुटगृध्रयोः" ( इति विश्वः ) पक्षी पक्षिमात्रश्च उभौ शकुन्तौ शकुन्तपदवाच्यौ स्याताम् । शक्नोति "शकेरुनोन्तोन्त्युनयः" इत्युन्ते शकुन्तः "शकुन्तः कीटभेदे स्याद्भासपक्षिविहंगयोः" ( इति मेदिनी ) इत्येकं भासादीनाम् । अग्निरनलः, उत्पातः उपसर्गः शुभाशुभसूचको महाभूतविकारो वा उभौ धूमकेतू धूमकेतुपदवाच्यौ स्याताम् । धूमः केतुश्चिह्नमस्येति धूमकेतुः "धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः" ( इति विश्वः ) इत्येकमनलादीनाम् । मेघः पयोधरः, पर्वतः शैलश्च उभौ जीमूतौ जीमूतपदवाच्यौ स्याताम् । जीवनं जलं मूतं बद्धमनेन पृषोदरादित्वात्साधुः । ज्यानं जीः, जिया वयोहान्या मूतो बद्ध इति वा जीमूतः "जीमूतोऽद्रौ धृतिकरे देवताड़े पयोधरे" ( इति मेदिनी ) इत्येकं मेघादीनाम् ॥ ६५ ॥

हाथ, नक्षत्र- पु. पु.
विशेष, पवन, **हस्तौ ( तु पाणिनक्षत्रे ) मरुतौ ( पवनामरौ ) ।**
देवता, हाथी-
वान्, गाड़ीवान्, पु. पु.
धारण या पालन **यन्ता ( हस्तिपके सूते ) भर्ता ( धातरि पोष्टरि ) ॥ ६६ ॥**
करनेवाला आदि.

हेति—पाणिर्हस्तः, नक्षत्रमृक्षम् उभे हस्तौ स्याताम् । हसति 'हसे हसने' भौवादिकस्तस्मात्कर्तरि "हसिमृग्रिण्" इति तनि हस्तः "हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे कौशात्परो व्राते" ( इति मेदिनी ) इत्येकं करादीनाम् । पवनो वायुः, अमरो देवः उभौ मरुतौ मरुत्पदवाच्यौ स्याताम् । म्रियतेऽनेन 'मृङ् प्राणत्यागे' तौदादिकस्तस्मात्करणे "मृग्रोरुतिः" इत्युतौ, गुणे च मरुत् "मरुद्देवे समीरे वा ग्रन्थिपर्णे नपुंसकम्" ( इति मेदिनी ) इत्येकं वाय्वादीनाम् । हस्तिपके हस्त्यारोहे, सूते सारथौ च यन्ता स्यात् । यच्छति 'यमु उपरमे' भौवादिकस्तस्मात्कर्तरि "ण्वुल्तृचाविति" तृचि अनुस्वारे, परसवर्णे च यन्ता स्यादित्येकं हस्तिपकादीनाम् । धातरि धारणकर्तरि, पोष्टरि पोषणकर्तरि च भर्त्ता स्यात् । भरति, बिभर्ति वा 'भृञ् भरणे' भौवादिकः 'डुभृञ् धारणपोषणयोः' जौहोत्यादिकश्च अस्मात्कर्तरि "ण्वुल्तृचाविति" तृचि कर्तृवद्भर्ता स्यात् । "भर्त्ता स्वामिनि पुंसि स्यात् त्रिषु धातरि पोष्टरि" ( इति मेदिनी ) इत्येकं धात्रादीनाम् ॥ ६६ ॥

पु. पु.
पीने का पात्र, **( पानपात्रे शिशौ ) पोतः प्रेतः ( प्राण्यन्तरे मृते ) ।**
बच्चा आदि,
भूतान्तर, मृतक, पु. पु.
ग्रह, भेद, प- **(ग्रहभेदे ध्वजे) केतुः (पार्थिवे तनये) सुतः ॥ ६७ ॥**
ताका, राजा,
पुत्र आदि.

पेति—पानस्य मद्यादिपानस्य पात्रे यानपात्रे वा शिशौ बालके च पोतः स्यात्

पुनाति, पूयते वा 'पूञ् पवने' क्रैयादिकस्तस्मात्कर्तरि कर्मणि वा "हसिमृग्रिण्-" इति तनि, गुणे च पोतः "पोतः शिशौ वहित्रे च गृहस्थाने च वाससि" (इति मेदिनी) इत्येकं पानपात्रादीनाम्। प्राण्यन्तरे भूतान्तरे मृते मृतके च प्रेतः स्यात्। प्रकर्षेण इतः प्रैति स्म वा "गत्यर्थेति" कर्तरि क्ते प्रेतः "प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः" (इति मेदिनी) इत्येकं भूतान्तरादीनाम्। ग्रहभेदे, ध्वजे च केतुः स्यात्। चाय्यतेऽनेन 'चायृ पूजानिशामनयोः' भौवादिकस्तस्मात्करणे "चायः कि" इति तौ, क्यादेशे, गुणे च केतुः "केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि" (इति मेदिनी) इत्येकं ग्रहभेदादीनाम्। पार्थिवे भूपतौ तनये पुत्रे च सुतः स्यात् सूयते स्म सुनोतेः कर्मणि सौति स्म सौतेः कर्तरि वा क्ते सुतः "सुतः स्यात्पार्थिवे पुत्रे स्त्र्यपत्ये तु सुता स्मृता" (इति मेदिनी) इत्येकं भूपादीनाम् ॥ ६७ ॥

कारीगर, कंचुकी आदि, पर्वत, राजा भूपाल, क्षत्रिय मात्र.

**स्थपतिः (कारुभेदेऽपि) भूभृद् (भूमिधरे नृपे)।**
**मूर्धाभिषिक्तो (भूपेऽ) प्यृतुः (स्त्रीकुसुमेऽपि च) ॥ ६८ ॥**

स्थेति—कारुभेदे शिल्पिभेदे अपिशब्दात्कञ्चुकिनि, जीवेष्टियाजकेऽपि स्थपतिः स्यात् तिष्ठन्त्यस्मिन् तिष्ठतेराधारे "घञर्थे कः" इति के, आलोपे च स्थः पातीति पतिः स्थश्चासौ पतिश्चेति स्थपतिः "स्थपतिः कञ्चुकिन्यपि। जीवेष्टियाजके शिल्पिभेदे ना सप्तमे त्रिषु" (इति मेदिनी) इत्येकं शिल्पिभेदादीनाम्। भूमिधरे पर्वते, नृपे नरपतौ च भूभृत्स्यात्। भुवं बिभर्ति उपपदसमासे "क्विप् च" इति क्विपि, तुकि च भूभृत्स्यादित्येकं भूधरादीनाम्। भूपे भूपतौ अपिशब्दान्मन्त्रिणि क्षत्रियेऽपि मूर्धाभिषिक्तः स्यात्। मूर्धनि अभिषिच्यते स्म अभिपूर्वकः 'षिच् क्षरणे' तौदादिकस्तस्मात्कर्मणि क्ते, कुत्वे च "उपसर्गादिति" षत्वे च मूर्धाभिषिक्तः "मूर्धाभिषिक्तो भूपाले मन्त्रिणि क्षत्रियेऽपि च" (इति मेदिनी) स्त्रीकुसुमे नारीरजसि अपिशब्दान्मासि वसन्तादौ धीरेऽपि ऋतुः स्यात्। ऋच्छति "अर्तेश्च तुः" इति तौ, कित्त्वाद्गुणाभावे च ऋतुः "ऋतुर्मासि वसन्तादौ धीरे स्त्री कुसुमेऽपि च" (इति मेदिनी) इत्येकं रमणीरजसादीनाम् ॥ ६८ ॥

विष्णु, शिवादि, सूर्य, बढ़ई, सारथी, पण्डित, प्रकाशितादि तर्कादिशास्त्र, उदाहरण.

**(विष्णा) वप्यजिताव्यक्तौ सूत (स्त्वष्टरि सारथौ)।**
**व्यक्तः (प्राज्ञेऽपि) दृष्टान्ता (वुभे शास्त्रनिदर्शने)[1] ॥ ६९ ॥**

वीति—वेवेष्टि सर्वं जगदिति विष्णुर्व्यापकस्तस्मिन् अपिशब्दाच्छंकरे, महदादिके,

---

१—"निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः। अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम्" ॥ १ ॥

आत्मन्यस्फुटेऽपि अजिताऽव्यक्तौ स्याताम् । न जीयते स्म नञ्पूर्वको ‘ जि अभिभवे ’ भौवादिको द्विकर्मकस्तस्मात्कर्मणि क्ते अजितः “ अजितो नाहरौ त्रिपु । अनिर्जिते च ” ( इति विश्वः ) न व्यज्यते स्म नञ्विपूर्वकः ‘ अञ्जू व्यक्तादौ ’ रौधादिकस्तस्मात्कर्मणि क्ते “ यस्य विभाषेति ” इडभावे, कुत्वे चर्त्वे च अव्यक्तः “अव्यक्तः शंकरे विष्णावव्यक्तं महदादिके । आत्मन्यपि स्यादव्यक्तमस्फुटे त्वभिधेयवत् ” (इति विश्वः) इति द्वे विष्णवादीनाम् । त्वष्टरि रवौ, तक्ष्णि वा, सारथौ, क्षत्रियाद्ब्राह्मणीसुतवन्दिपारदप्रसूतादिष्वपि सूतः स्यात् । सुवति, सूयते स्म वा ‘ षू प्रेरणे ’ तौदादिकस्तस्मात्कर्तरि कर्मणि वा क्ते सूतः “ सूतस्तु सारथौ तक्ष्णि क्षत्रियाद्ब्राह्मणीसुते । वन्दिपारदयोः पुंसि प्रसूते प्रेरिते त्रिपु ” ( इति मेदिनी ) इत्येकं रव्यादीनाम् । प्राज्ञे पण्डिते अपिशब्दात्स्फुटेऽपि व्यक्तः स्यात् । व्यज्यते स्म विपूर्वकादञ्जेः कर्मणि क्ते, कुत्वे, चर्त्वे च व्यक्तः “व्यक्तः स्फुटमनीषिणोः ” ( इति मेदिनी ) इत्येकं शास्त्रविदादीनाम् । शिष्यतेऽनेनेति शासनं वा शास्त्रं, निदर्शनमुदाहरणं च उभे दृष्टान्तौ स्याताम् । “ अन्तः प्रान्तेऽन्तिके नाशे ” ( इति विश्वः ) दृष्टः अन्तः पारोऽत्रेति दृष्टान्तः “ दृष्टान्त उदाहृतौ । शास्त्रे च मरणे ” ( इति मेदिनी ) इत्येकं तर्कादिशास्त्रादीनाम् ॥ ६९ ॥

सारथी, ड्योढ़ीदार आदि, प्रकरण आदि.

पु. **क्षत्ता ( स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे )** [१] **।**

पु. **वृत्तान्तः ( स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः ) ॥७०॥**

क्षदिति—सारथौ सूते, द्वाःस्थे द्वारपालके, क्षत्रियायां क्षत्रियायां शूद्रजे शूद्राज्जाते, जायमाने वा चशब्दाद्दासीतनयनियुक्तादिष्वपि क्षत्ता स्यात् । क्षदति ‘ क्षद संवरणे ’ सौत्रस्तस्मात् “ तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ ” इति तृचि नप्तृवत् क्षत्ता, “ क्षत्ता शूद्रात्क्षत्रियाजे प्रतीहारे च सारथौ । भुजिष्यातनये क्षत्ता नियुक्ते च प्रजासृजि ” ( इति विश्वः ) इत्येकं सारथ्यादीनाम् । प्रकरणे प्रस्तावे, प्रकारे भावे अभिप्राये वा कार्त्स्न्यवार्तयोः समग्रवार्ताविशेषयोः वृत्तान्तः स्यात् । वृत्तोऽन्तोऽस्य, वृत्तस्यान्त इति वा वृत्तान्तः “ वृत्तान्तोऽवसरे भावे कार्त्स्न्यवार्ताविशेषयोः । वृत्तान्तः प्रक्रियायां च” ( इति विश्वः ) इत्येकं प्रस्तावादीनाम् ॥ ७० ॥

समर आदि यमराजादि.

पु. **आनर्तः ( समरे नृत्यस्थाननीवृद्विशेषयोः ) ।**

पु. **कृतान्तो ( यमसिद्धान्तदैवाकुशलकर्मसु ) ॥ ७१ ॥**

आनेति—समरे संग्रामे, नृत्यस्थाने नृत्यशालायाम्, नीवृद्विशेषे जनपदान्तरे जने च

---

१—“ क्षत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे ” इति सिद्धान्तकौमुद्यामुणादिः ।

आनर्तः स्यात् । आनृत्यन्त्यत्र आङ्पूर्वको 'नृती गात्रविक्षेपे' दैवादिकस्तस्मादाधारे "हलश्च" इति घञि, गुणे च आनर्तः "आनर्तो नृत्यशालायां जने जनपदान्तरे" (इत्यजयः) इत्येकं संग्रामादीनाम् । यमो यमराजः, सिद्धो निष्पन्नोऽन्तो निश्चयोऽत्रेति सिद्धान्तः वादिप्रतिवादिभ्यां निर्णीतो योऽर्थः स च सिद्धान्त इति वा, दैवं पूर्वजन्मकृतं कर्म, अकुशलकर्म पापं च एष्वर्थेषु कृतान्तः स्यात् । कृतोऽन्तो येन यस्येति वा कृतान्तः स्यादित्येकं यमादीनाम् ॥ ७१ ॥

श्लेष्मा, पित्तादि रसादि, पृथि-व्यादि, गन्धादि, नेत्रादि, मन-शिलादि, भ्वादि.

**श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः ।**
**इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः ॥ ७२ ॥**

श्लयिति—श्लेष्मा कफः स आदिर्यस्येति श्लेष्मादि आदिना पित्तादिग्रहः, रसः प्रथम आहारस्य विकारः, रक्तोऽसृक् तावादी यस्येति रसरक्तादि आदिना वसामज्जाशुक्रादिग्रहः, महाभूतानि पृथिव्यादिपञ्चभूतानि तद्गुणा गन्धादयः, इन्द्रियाणि चक्षुरादीनि, अश्मनो विकृतिः मनःशिलादिः, शब्दयोनिः शब्दोत्पत्तिस्थानं भू सत्तायामित्यादिश्च एते धातवो धातुपदवाच्याः स्युः । दधाति, धीयते वा धात्वः कर्तरि कर्मणि वा "सितनिगमि" इति तुनि धातुः स्यादित्येकं श्लेष्मादीनाम् ॥ ७२ ॥

राजधानी, रनिवास आदि, बर्छी, सांग, बल या ताक़त, कठिनता, शरीर.

**( कक्षान्तरेऽपि ) शुद्धान्तो ( नृपस्यासर्वगोचरे ) ।**
स. स.
**(कासूसामर्थ्ययोः) शक्तिर्मूर्तिः (काठिन्यकाययोः) ७३॥**

केति—असर्वगोचरे सर्वजनागम्ये नृपस्य नरपालकस्य कक्षान्तरे गुह्यकक्षाभेदे राजधानी स्थानविशेषे वा अपिशब्दादन्तःपुरे अशौचान्तेऽपि वा शुद्धान्तः स्यात् । शुद्धोऽन्तोऽस्येति शुद्धान्तः "शुद्धान्तोऽन्तःपुरे गुह्यकक्षाभेदे च भूपतेः" (इत्यजयः) इत्येकं भूपतिगुह्यकक्षाभेदादीनाम् । "कासूर्विकलवाचि स्यात्कासूः शक्त्यायुधेऽपि च" (इति विश्वः) कासूः शक्त्यायुधः, सामर्थ्यं बलम् अनयोः शक्तिः स्यात् । शक्यते नया 'शक्लृ शक्तौ' सौत्रादिकस्तस्मात्करणे क्तिनि शक्तिः क्तिचि तु शक्तिः शक्ती वा "शक्तिरस्त्रान्तरे गौर्य्यामुत्साहादौ बले स्त्रियाम्" (इति मेदिनी) इत्येकं शक्त्यायुधादीनाम् । कठिनं कठोरं तस्य भावः काठिन्यम्, कायो देहः अनयोः मूर्तिः स्यात् । मूर्च्छति 'मूर्च्छा मोहादौ' भौवादिकस्तस्मात्कर्तरि क्तिचि, "राल्लोपः" इति छलोपे च मूर्तिः "मूर्तिः पुनःप्रतिमायां कायकाठिन्ययोरपि" (इति हैमः) इत्येकं काठिन्यादीनाम् ॥ ७३ ॥

विस्तार, बेलि, रात्रि, घर, क्षय, पूजा, दान, अन्त आदि.

स. स.
**(विस्तारवल्ल्योः) व्रततिर्वसती (रात्रिवेश्मनोः) ।**
स. स.
**(क्षयार्चयो) रपचितिः साति (दानावसानयोः) ॥७४॥**

व्रीति—विस्तारवल्लयोः विस्तारलतयोः प्रततिः स्यात् । प्रतं करोति " तत्करोतीति " णिजन्तात्कर्तरि बाहुलकादतौ व्रजन्ती ततिरस्याः पृषोदरादित्वाद् वा व्रततिः श्रीभोजमते तु 'प्रजति' बाहुलकादतौ वा " व्रततिस्तु प्रतानिन्यां विस्तारेऽपि " ( इति हैमः ) " कृदिकारादिति " ङीषि तु दीर्घान्तापि " धराधरेन्द्रं प्रततीततीरिव " ( इति माघः ) इत्येकं विस्तारादेः । रात्रिवेश्मनोः निशागेहयोः वसतिः स्यात् वसन्त्यस्याम् वसतेराधारे " वहिवसीति " अतौ वसतिः ङीषि तु वसती वा " वसतिः स्यात्स्त्रियां वासे यामिन्यां च निकेतने " ( इति मेदिनी ) इत्येकं राज्यादेः । क्षयार्चयोः हानिपूजयोः अपचितिः स्यात् । अपचीयते, अपचाय्यते वा अपपूर्वकाच्चिनोतेश्चायतेर्वा क्तिनि " चायः चिक्तिनि " इति च्यादेशे च 'अपचितिः' " भवेदपचितिः पूजाव्ययनिष्कृतिहानिषु " ( इति मेदिनी ) इत्येकं क्षयादीनाम् । दानावसानयोः दानविरामयोः सातिः स्यात् सननम्, सानं वा सनोतेः स्यतेर्वा भावे क्तिनि " जनसनेति " आत्वे 'द्यतिस्यतीति' इत्वाभावे निपातिते वा सातिः स्यादित्येकं दानादेः ॥ ७४ ॥

दुःख, धन्वाका स. स.
किनारा, सामान्य जाति, जन्म, **अर्तिः (पीडाधनुष्कोट्योः) जातिः (सामान्यजन्मनोः) ।**
लोकाचार, टपकना, गदर, विदेश. स. स.
**(प्रचारस्यन्दयोः) रीतिरीति (र्डिम्बप्रवासयोः) ॥ ७५ ॥**

अर्तिरिति—पीडा बाधा, धनुष्कोटिः धनुषोऽग्रभागः अनयोरर्तिः स्यात् । अर्दनम् ' अर्द हिंसायाम् ' चौरादिकस्तस्माद्भावे क्तिनि, चर्त्वे च अर्तिः, आङ्पूर्वकादृच्छतेः क्तिनि तु " उपसर्गादृति धातौ " इति वृद्धौ आर्तिरपि स्यादित्येकं पीडादीनाम् । सामान्यम् जातम्, जन्म जननम् अनयोर्जातिः स्यात् । जननम्, जायतेऽनयेति वा जनेर्भावे करणे वा क्तिनि, " जनसनेति " आत्वे च जातिः " जातिश्छन्दसि सामान्ये मालत्यां गोत्रजन्मनोः । जातिर्जातीफले धात्र्यां चुल्लीकम्पिल्लयोरपि " ( इति विश्वः ) इत्येकं सामान्यादीनाम् । प्रचारो लोकाचारः, स्यन्दः क्षरणम् अनयोरीतिः स्यात् । रीयते ' रीङ् स्रवणे ' दैवादिकः, रिणाति ' री गतिरेषणयोः ' क्रैयादिको वा तस्मात्कर्तरि क्तिचि, रयणमिति विग्रहे तु क्तिनि वा रीतिः " रीतिः प्रचारे स्यन्दे च लोहकिट्टारकूटयोः " ( इति विश्वः ) इत्येकं प्रचारादीनाम् । डिम्बो विप्लवः, प्रवासो विदेशः उभयोः * ईतिः स्यात् । ईयतेऽनया ' ईङ् गतौ ' दैवादिकस्तस्मात्करणे ' क्तिनि ' ईतिः " ईतिर्डिम्बे प्रवासेऽतिवृष्ट्यादिषट्सु च स्त्रियाम् " ( इति मेदिनी ) इत्येकं डिम्बादीनाम ॥ ७५ ॥

---

* " अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः " ( इति स्वामिमुकुटे ) ॥

उदय, लाभ, तीनों अग्नियां, दूसरा युग, नारदकी वीणा, महत्त्व गुणयुक्त भार्या, भस्म, संपदा.

स. स.
**(उदयेऽधिगमे) प्राप्तिस्त्रेता (स्त्वग्नित्रये युगे)।**
स. १ स.
**(वीणाभेदेऽपि) महती भूति (र्भस्मनि संपदि)॥७६॥**

वित्ति–उदये उत्पत्तौ समृद्धौ वा अधिगमे लाभे च प्राप्तिः स्यात्। प्रापणम् प्रपूर्वकः 'आप्लृ व्याप्तौ' सौवादिकस्तस्माद्भावे क्तिनि प्राप्तिः "प्राप्तिर्महोदये। लाभेऽपि च स्त्रियाम्" (इति मेदिनी) इत्येकं महोदयादीनाम्। अग्नित्रये दक्षिणाग्नि-गार्हपत्याहवनीयेषु, युगे युगद्वये च त्रेता स्यात्। त्रीन् भेदान् इता प्राप्ता पृषोदरादित्वात्साधुः, त्राणं त्रा, सदासंधुक्षणम्, तामिता, त्रायन्ते इति त्राः आहुतयस्ताभिरिता वा त्रेता "त्रेता युगेऽग्नित्रये च" (इति हैमः) इत्येकमग्नित्रयादीनाम्। वीणाभेदे नारदस्य वीणायाम् अपिशब्दान्महत्त्वगुणसंपन्नभार्यायामपि महती स्यात्। मह्यते 'मह पूजायाम्' भौवादिकस्तस्मात्कर्मणि "वर्तमाने पृषदिति" अतिप्रत्यये निपातिते शतृवद्भावात्, "उगितश्चेति" ङीपि च महती "महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम्। तत्त्वभेदे पुमान् श्रेष्ठे वाच्यवत्" (इति मेदिनी) इत्येकं वीणाभेदादीनाम्। भस्मनि क्षारके, संपदि संपत्तौ च भूतिः स्यात्। भवनम्, भूयतेऽनया वा, 'क्तिनि' भवति क्तिचि वा भूतिः "भूतिर्भस्मनि संपत्तिहस्तिशृङ्गारयोः स्त्रियाम्" (इति मेदिनी) इत्येकं भस्मादीनाम्॥ ७६॥

नागों की नदी, और नगरी, संग्राम, सङ्ग, सभाश्रय, निवास, पृथ्वी.

स.
**(नदीनगर्योर्नागानां) भोगव (त्यथ संगरे)।**
स. स.
**(सङ्गे सभायां) समितिः (क्षयवासावपि) क्षिती॥७७॥**

नेति–नागानां काद्रवेयाणां नदी सरित्, नगरी पुरी च अनयोः भोगवती स्यात्। भोगोऽस्त्यस्यामिति मतुपि, मस्य वत्वे, ङीपि च भोगवती "अथ भोगवतीनागपुरीनद्योरहौ पुमान्" (इति मेदिनी) इत्येकं नागनद्यादीनाम्। अथेति–संगरे संग्रामे, सङ्गे संमेलने, सभायां जनसमूहे च समितिः स्यात्। समयनम् समीयतेऽस्यां वा संपूर्वकः 'इण् गतौ' आदादिकस्तस्मात् क्तिनि समितिः "समितिः संपराये स्यात्सभायां संगमेऽपि च" (इति मेदिनी) इत्येकं समरादीनाम्। क्षयो नाशो ह्रासो वा वासो निवासश्च उभौ क्षिती क्षितिपदवाच्यौ स्याताम्। अपिशब्दात्कालभेदे, मेदिन्यामपि क्षितिः स्यात्। क्षयणम्, क्षीयतेऽस्यां वा क्षयतेः क्षियतेर्वा भावे, आधारे वा क्तिनि क्षितिः

---

१ "विश्वावसोस्तु बृहती तुम्बरोस्तु कलावती। महती नारदस्य स्यात्सरस्वत्यास्तु कच्छपी" (इति वैजयन्ती)॥

" क्षितिर्निवासे मेदिन्यां कालभेदे क्षये स्त्रियाम् " ( इति मेदिनी ) इत्येकं क्षयादीनाम् ॥ ७७ ॥

सूर्यका प्रकाश, हथियार, अग्निशिखा, दुनिया, बारह अक्षर पादवाली छन्द, पृथ्वी, जन.

स.
**( रवेरर्चिश्च शस्त्रं च वह्निज्वाला च ) हेतयः ।**
स. *
**जगती ( जगतिच्छन्दोविशेषेऽपि क्षितावपि ) ॥ ७८ ॥**

रेति—रवेः सूर्यस्य अर्चिः प्रकाशः, शस्त्रमायुधम्, वह्निज्वाला अग्निशिखा च एते हेतयः हेतिपदवाच्याः स्युः—हिनोति, हन्ति, हन्यतेऽनयेति वा हिनोतेः, हन्तेर्वा कर्तरि क्तिचि, करणे वा क्तिनि " ऊतियूतीति " निपातिते च हेतिः " हेतिर्ज्वालास्त्रसूर्यांशुषु " ( इति कोषान्तरम् ) इत्येकं सूर्यप्रकाशादीनाम् । जगति लोके, छन्दोविशेषे द्वादशाक्षरपादवृत्ते, क्षितौ पृथिव्याम् अपिशब्दाज्जनेऽपि जगती स्यात् । गच्छति ' गम्लृ गतौ ' भौवादिकस्तस्मात् " द्रुतप्बृहन्महज्जगदिति " अतिप्रत्यये निपातिते शतृवद्भावात् " उगितश्चेति " ङीपि च जगती " जगत्स्याद्विष्टपे क्लीबं ना वायौ जंगमे त्रिषु । जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च " ( इति मेदिनी ) इत्येकं जगदादीनाम् ॥ ७८ ॥

दशवां छन्द, पांति प्रभाव, उत्तरकाल जाना, सेनाभेद, पक्ष या पखेरूके पंखकी मूल.

स.
**पङ्क्ति ( श्छन्दोऽपि दशमं ) ( स्यात्प्रभावेऽपि ) चायतिः ।**
स.
**पत्ति ( र्गतौ च ) ( मूले तु ) पक्षतिः ( पक्षभेदयोः ) ॥ ७९ ॥**

पमिति—दशमं छन्दः दशाक्षरपादवृत्तम् " उक्तात्युक्ता तथा मध्या प्रतिष्ठान्यासु पूर्विका । गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च " इत्यनुक्रमोक्तेषु दशमं छन्दः पङ्क्तिः, " पंक्तिश्छन्दो दशापि स्यादिति " वा क्वचित्पाठः । अपिशब्दाद्दशसंख्यालिषु पंक्तिः स्यात् । पञ्चनम् ' पचि व्यक्तीकरणे ' भौवादिकस्तस्माद्भावे ' क्तिनि ' अथवा पञ्चकद्वयम् पंक्तिः " पंक्तिविंशतीति " साधुः " पंक्तिर्दशाक्षरच्छन्दोदशसंख्यालिषु स्त्रियाम् " ( इति मेदिनी ) इत्येकं दशाक्षरपादवृत्तादीनाम् । प्रभावे प्रतापे अपिशब्दात्संयमदैर्घ्यागामिकालेषु च आयतिः स्यात् । आयमनम्, आयम्यतेऽनयेति वा आङ्पूर्वको ' यमु उपरमे ' भौवादिकस्तस्माद्भावे, करणे वा ' क्तिनि ' " अनुदात्तोपदेशेति " मलोपे आयतिः " आयतिः संयमे दैर्घ्ये प्रभावागामिकालयोः " ( इति विश्वः ) इत्येकं प्रभावादीनाम् । गतौ=गमने ' च ' शब्दात्पदगे, एकरथैकेभत्र्यश्वपञ्चपदातिके

* " द्युतिगमिजुहोतीनां द्वे च " ( वा. ३-२ । १७८ ) इति क्विपि, " गमः क्वौ " इति मलोपे, तुकि, गौरादित्वान्ङीषि च वा जगती स्यात् ॥

वा पत्तिः स्यात् । पतति पत्ते: कर्तरि क्तिचि पत्तिः "पत्तिर्ना पदगे स्त्रियाम् । गता-वेकरथैकेभत्र्यश्वपञ्चपदातिके" ( इति मेदिनी ) इत्येकं गत्यादीनाम् । पक्षभेदयोः पक्षभेदौ द्वौ एको मासार्धः, अपरः पक्ष्यवयवः, तयोर्मूले तु पक्षतिः स्यात् । पक्षस्य मूलम्, "पक्षात्तिः" इति तौ पक्षतिः "सर्वतोऽक्तिन्नर्थादिति" ङीषि तु पक्षतीत्यपि "पक्षतिस्तु भवेत्पक्षमूले च प्रतिपत्तिथौ" (इति कोषान्तरम्) इत्येकं पक्ष-मूलादीनाम् ॥ ७६ ॥

भग, लिङ्ग, मन्त्री आदि, कौशिकी, जीविका आदि, बालू, बालूयुक्त देशादि, वेद, कान, सुनना आदि.

स. प्रकृति ( योनिलिङ्गे च ) ( कौशिक्याद्याश्च ) वृत्तयः । स.

सिकताः(स्युर्वालुकाऽपि)(वेदे श्रवसि च) श्रुतिः ॥ ८० ॥

प्रेति—योनिलिङ्गे योनौ भगे, लिङ्गे मेढ्रके चशब्दाद्गुणसाम्यामात्यादिस्वभाव-पौरवर्गेषु प्रकृतिः स्यात् । प्रकुरुते प्रपूर्वको 'डुकृञ् करणे' तानादिकस्तस्मात्कर्तरि क्तिचि, क्तिनि वा प्रकृतिः "प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ, लिङ्गे पौरवर्गे" ( इति मेदिनी ) इत्येकं योन्यादीनाम् । कौशिकी नदीविशेषः यामरचय-द्राधिनन्दनानुजेति यावत् सा आद्या यासां ताः वृत्तयः स्युः । आद्येन आरभटी-सात्वती-भारतीनां ग्रहणम् चशब्दाज्जीविकासूत्रार्थविवरणयोरपि वृत्तिः स्यात् । वर्ततेऽनया वृतेः करणे क्तिनि वृत्तिः "वृत्तिर्विवरणे जीव्ये कौशिक्यादिषु चेष्यते" ( इति विश्वः ) भारती सात्वती चैव कौशिक्यारभटी तथा । चतस्रो वृत्तयश्चैता यासु नाट्यं प्रतिष्ठितम् ( इति भरतः ) इत्येकं कौशिक्यादीनाम् । बालुका वालुकायां सिकताः स्युः । अपिशब्दाद्वालुकायुक्तदेशेऽपि सिकता स्त्री स्यात् । सिच्यते 'षिच क्षरणे' तौदादिकस्तस्मात्कर्मणि बाहुलकादतचि, पृषोदरादित्वाच्चस्य कत्वे च सिकता, द्वित्वे सिकते, बहुत्वे सिकताः स्युः "सिकता स्त्री सिकतले वालुकायान्तु भूमनि" ( इति मेदिनी ) इत्येकं बालुकादीनाम् । वेदे ऋग्यजुस्सामाथर्वाख्ये, श्रवसि श्रोत्रे, चशब्दाद्वार्ताश्रोत्रकर्मणोरपि श्रुतिः स्यात् । श्रूयतेऽनयेति शृणोतेः करणे क्तिनि श्रुतिः "श्रुतिः श्रोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणि" ( इति विश्वः ) इत्येकं वेदादीनाम् ॥ ८० ॥

बड़ी प्यारी स्त्री, स्त्रीमात्र, भूवि-वर, गुफा, धारण, धैर्य.

स. वनिता ( जनितात्यर्थानुरागायां च योषिति ) ।

स. गुप्तिः (क्षितिव्युदासेऽपि) स. धृति (र्धारणधैर्ययोः) ॥ ८१ ॥

वेति—जनितः उत्पादितोऽत्यर्थोऽनुरागो यस्यां तस्यामिति जनितात्यर्थानुरागायां नार्यां योषिति योषायां च वनिता स्यात् । वन्यते स्म वनतेर्वनोतेर्वा कर्मणि क्ते, "यस्य

विभाषा " इत्यस्यानित्यत्वादिडागमे, टापि च वनिता " वनिता जातरागस्त्रीस्त्रियोः स्त्री त्रिषु याचिते " ( इति मेदिनी ) इत्येकं जातानुरागनार्यादीनाम् । क्षितिव्युदासे पृथिव्यन्तरबिले अपिशब्दात्कारागाररक्षणाधमावकरस्थानेषु च गुप्तिः स्यात् । गोपनम्, गुप्यते वा गुपेर्भावे कर्मणि वा क्तिनि गुप्तिः " गुप्तिः कारागृहे प्रोक्ता भूगर्ते रक्षणेऽधमे" ( इति विश्वः ) इत्येकं भूगर्तादीनाम् । धारणधैर्ययोः धृतिः स्यात् । धरणम् धरतेर्भावे ' क्तिनि ' धृतिः " धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु " ( इति विश्वः ) इत्येकं धारणादीनाम् ॥ ८१ ॥

भटकटैया, वनभटा आदि, स्त्री हथिनी, जीविका वार्ता आदि, लघु, असार, रोगरहित, पानी, घी, सुधा, यज्ञशेष, चाँदी, सोना, कारण, चिह्न या निशान.

स.
**बृहती ( क्षुद्रवार्ताकी छन्दोभेदे महत्यपि ) ।**

स. स.
**वासिता (स्त्रीकरिण्योश्च) वार्ता (वृत्तौ जनश्रुतौ)॥८२॥**

न. न. न.
**वार्तं (फल्गुन्यरोगे च) (त्रिष्वप्सु च) घृतामृते ।**

न. न.
**कलधौतं (रूप्यहेम्नो) निमित्तं (हेतुलक्ष्मणोः) ॥ ८३ ॥**

व्रिति—क्षुद्रवार्ताकी छन्दोभेदे इति समाहारद्वन्द्वः क्षुद्रवार्ताक्यां=कण्टकार्य्याम्, छन्दोभेदे=नवाक्षरपादवृत्ते, महति विशाले अपिशब्दाद्वारिधान्यादिषु च बृहती स्यात् । बर्हति ' बृह वृद्धौ ' भौवादिकस्तस्मात्कर्तरि "वर्तमाने पृषदिति" अतिप्रत्यये निपातिते शतृवद्भावाद् " उगितश्चेति " ' ङीपि ' च बृहती " बृहती क्षुद्रवार्ताक्यां कण्टकार्यां च वाचि च । वारिधान्यां महत्यां च छन्दोवसनभेदयोः " ( इति विश्वः ) इत्येकं क्षुद्रवार्ताक्यादीनाम् । स्त्रीकरिण्योः वनिताहस्तिन्योः वासिता स्यात् । चशब्दात्सुरभीकृतधान्यमात्रखगाराववस्त्रवेष्टितेषु वासितं स्यात् । वास्यते ' वस निवासे ' भौवादिको ण्यन्तो ' वास उपसेवायाम् ' चौरादिको वा तस्मात्कर्मणि क्ते, इडागमे, णिलोपे ' टापि ' च वासिता " वासिता करिणीनार्योर्वासितं सुरभीकृते । धान्यमात्रे खगारावे वासितं वस्त्रवेष्टिते " ( इति विश्वः ) स्वामी तु ' वाशिता ' तालव्यमध्यमप्याह तत्र " वाश्ट शब्दे " दैवादिकस्तस्मात्कर्मणि क्ते इडागमे च ' वाशिता ' स्यादित्येकं वनितादीनाम् । वृत्तौ जीविकायाम्, जनश्रुतौ किंवदन्त्यां च वार्ता स्यात् । वृत्तिरस्त्यस्याम् " वृत्तेश्च " इति णे, वृद्धौ टापि वार्ता " वार्ता वातिङ्गणे वृत्तौ वार्ताकृष्याद्युदन्तयोः " ( इति विश्वः ) इत्येकं वृत्त्यादीनाम् । फल्गुनि, लघुनि, असारे, तत्त्वहीने वा वार्तं क्लीबं स्यात् । अरोगे रोगरहिते च ' वार्तम् ' त्रिषु त्रिलिङ्ग्यां स्यात् । वृत्तिरस्त्यस्येति णे, वृद्धौ च वार्तम् " वार्तं फल्गुन्यरोगे स्यादारोग्ये वृत्तिमत्यपि " ( इति धरणिः ) इत्येकमसारादीनाम् । अप्सु जले च घृतामृते त्रिषु त्रिलिङ्ग्यां स्याताम् । जिघर्ति ' घृ क्षरणदीप्त्योः ' जौहोत्यादिकस्तस्मात्कर्तरि " अञ्जिघृसिभ्यः क्तः "

इति 'क्त' घृतम् "घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत्" (इति मेदिनी) न मृतं मरणमत्रेति अमृतम् "अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते। अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः" (इति मेदिनी) इत्येकं जलादीनाम्। रूप्यहेम्नोः रजत-सुवर्णयोः कलधौतं स्यात्। कलो मलो धौतोऽस्येति कलधौतम् "कलधौतं सुवर्णे स्याद्रजते च नपुंसकम्" (इति मेदिनी) इत्येकं रजतादीनाम्। हेतुलक्ष्मणोः कारण-चिह्नयोः निमित्तं स्यात्। निमेद्यति निपूर्वको 'ञिमिदा स्नेहने' दैवादिकस्तस्माद्वर्तमाने कर्तरि "ञीतः क्तः" इति क्ते, संज्ञापूर्वकत्वात् "अनात्मने पदनिमित्ते" इति निर्देशाद्वा नत्वाभावे च निमित्तं स्यादित्येकं हेत्वादीनाम्॥ ८२।८३॥

शास्त्र, सुनाहुआ सत्ययुग, अलमर्थ, महाभय, बड़ा साहस. **श्रुतं (शास्त्रावधृतयो) युगपर्याप्तयोः[1] कृतम्।**
**अत्याहितं महाभीतिः कर्म जीवानपेक्षि च॥ ८४॥**

श्रुतमिति–शास्त्रावधृतयोः शिष्यतेऽनेन, शासनं वा शास्त्रम्, अवधरणमवधृतम् अनयोः श्रुतं स्यात्। श्रवणम्, श्रूयते स्म वा शृणोतेर्भावे, कर्मणि वा क्ते श्रुतं स्यादित्येकं शास्त्रादीनाम्। युगपर्याप्तयोः युगं सत्ययुगाख्यम्, पर्याप्तमलमर्थकं च उभयोः कृतं स्यात्। अकारि, क्रियते स्म वा करोतेः कर्मणि 'क्ते' कृतम् "कृतं युगेऽलमर्थे स्याद्विहिते हिंसिते त्रिषु" (इति मेदिनी) इत्येकं युगादीनाम्। महाभीतिः महद्भयम्, जीवानपेक्षि कर्म महासाहसिककार्यं च अत्याहितं स्यात्। अत्याधीयते स्म अत्याङ्पूर्वकाद्दधातेः कर्मणि क्ते, "दधातेर्हिः" इति ह्यादेशे च अत्याहितं स्यादित्येकं महाभीत्यादीनाम्॥ ८४॥

न्याय, पृथिव्यादि पञ्चभूत, सत्यादि, श्लोक, यश, भूतकालादि. **(युक्ते क्ष्मादावृते) भूतं (प्राण्यतीते समे त्रिषु)।**
**वृत्तं (पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले)॥ ८५॥**

(न.) (न.)

युक्तेति–युक्ते न्याय्ये, क्ष्मादौ पृथिव्यादिपञ्चभूतके, ऋते सत्ये 'प्राण्यतीते' इति समाहारद्वन्द्वः प्राणिनि जन्तौ अतीते गतकाले, समे समाने च भूतं त्रिषु त्रिलिङ्ग्यां स्यात्। अभूत्, भवति स्म वा भवतेः कर्तरि "गत्यर्थेति" 'क्ते' भूतम् "भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिषूचिते। प्राप्ते वृत्ते समे सत्ये देवे योन्यन्तरे तु ना। कुमारेऽपि" (इति मेदिनी) इत्येकं न्याय्यादीनाम्। पद्ये श्लोके, चरित्रे यशसि, अतीते गतकाले, 'दृढनिस्तले' इति समाहारद्वन्द्वः दृढे गाढे, निस्तले, गोले, वर्तुले वा वृत्तं त्रिषु स्यात्। वर्तनम्, वर्तते स्म वा 'वृतु वर्तने' भौवादिको वरणे दैवादिको वा तस्माद्भावे, कर्तरि वा 'क्ते' वृत्तम् "वृत्तोऽधीतेऽप्यतीतेऽपि वर्तुलेऽपि मृते वृते। वृत्तेऽन्यलिङ्गं वा क्लीबे छन्दश्चारित्रवृत्तिषु" (इति मेदिनी) इत्येकं पद्यादीनाम्॥ ८५॥

---

१ "शक्तौ निवारणे तृप्तौ पर्य्याप्तं स्याद्यथेप्सिते" (इति रुद्रः)॥

राज्य,बड़ाआदि, न. न.
अपवाद, निन्दित, रूपा, **मह ( द्राज्यं चा) वगीतं ( जन्ये स्याद्गर्हिते त्रिषु )।**
उजला, द्वीपभेद, रत्नों की माला, सोना, चांदी आदि. न. न.
**श्वेतं ( रूप्येऽपि ) रजतं (हेम्नि[1] रूप्ये सिते त्रिषु)॥८६॥**

मेति—राज्यं महत् मह्त्पदवाच्यं स्यात्। चकाराद्वल्लकीभेदे तत्त्वभेदे, श्रेष्ठेऽपि स्यात्। मह्यते महते: कर्मणि "वर्तमाने पृषदिति" अतिप्रत्यये निपातिते महत् "महती वल्लकी-भेदे राज्ये तु स्यान्नपुंसकम्। तत्त्वभेदे पुमाञ्श्रेष्ठे वाच्यवत्" (इति मेदिनी) इत्येकं राज्यादीनाम्। जन्ये जनापवादे, गर्हिते निन्दिते च 'अवगीतम्' त्रिषु त्रिलिङ्ग्यां स्यात्। अवगीयते स्म अवपूर्वकाद्गायते: कर्मणि 'क्ते' "घुमास्थागापेति" ईत्वे च अवगीतम् "अवगीतस्तु निर्वादे दुष्टगर्हितयोरपि" (इति मेदिनी) इत्येकं जनापवादादीनाम्। रूप्ये रजते अपिशब्दात् श्वेतद्वीपे, शुक्लेऽपि श्वेतं स्यात्। श्वेतते 'श्विता वर्णे' भौवादिकस्तस्मात्पचाद्यचि श्वेतम् "श्वेतो द्वीपाद्रिभेदयो:। श्वेतावराटिकाकाष्ठपाटलाशंखिनीषु च। क्लीबं रूप्येऽन्यवच्छुक्ले" (इति मेदिनी) इत्येकं रूप्यादीनाम्। हेम्नि स्वर्णे, रूप्ये रूपाख्ये, सिते शुभ्रे च रजतं त्रिषु त्रिलिङ्ग्यां स्यात्। रजति, रज्यतेऽनेनेति वा रजते: कर्तरि, करणे वा "पृषिरञ्जिभ्यां कित्" इत्यतचि, कित्त्वान्नलोपे च रजतम् "रजतं रञ्जने रूप्ये शोणिते ह्रदहारयो:" (इत्यजय:) इत्येकं हेमादीनाम्॥ ८६॥

पु.स.न. पु.स.न.
जंगम, भुवन, वायु,नील्यादि रंग, रुधिर, **(त्रिष्वितो) जग (दिङ्गेऽपि) रक्तं (नील्यादिरागि च)।**
पु.स.न. पु.स.न.
सफ़ेद, पीला, निर्मल बंधा या कैदी, सफ़ेद. **अवदात:(सिते पीते शुद्धे) (बद्धार्जुनौ) सितौ॥ ८७॥**

त्रीति—इत: परमातान्तं वक्ष्यमाणा ये शब्दास्ते त्रिषु त्रिलिङ्ग्यां भवन्ति। इङ्गे जङ्गमे अपिशब्दात् विष्टपे, वायौ च जगत् स्यात्। गच्छति गच्छते: कर्तरि "द्युति-गमिजुहोतीनां द्वे च" इति क्विपि "गम: क्वौ" इति मलोपे, तुकि च जगत् "जगत् स्यात्पिष्टपे क्लीबं वायौ ना जंगमे त्रिषु" (इति मेदिनी) इत्येकं जंगमादीनाम्। नील्यादिरागि नील्यादिरागयुक्तं रक्तं स्यात्। चशब्दात् अनुरक्ते, लोहिते त्रिषु, कुङ्कुमे, ताम्रे, प्राचीनामलके, रुधिरे च नपुंसकं स्यात्। रजति, रज्यते वा रजते: कर्तरि कर्मणि वा "गत्यर्थेति" क्ते, जस्य कुत्वे, चर्त्वे च रक्तम् "रक्तोनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु। क्लीबं तु कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि" (इति मेदिनी) इत्येकं नील्यादिरङ्गवदादीनाम्। सिते शुभ्रे, पीते पीतवर्णयुक्ते, शुद्धे पूते च अवदात: स्यात्।

[1] "हारे रूप्ये सिते त्रिषु" इति पाठान्तरम्॥

अवदायते दायतेः कर्मणि क्ते, अवदातः "अवदातं तु विमले मनोज्ञे सितपीतयोः" ( इति हैमः ) इत्येकं सितादीनाम् । बद्धार्जुनौ बद्धश्वेतौ सितौ सितपदवाच्यौ स्याताम् । सीयते सिनोतेः कर्मणि क्ते सितः, द्वित्वे सितौ "सितमवसिते च बद्धे धवले त्रिपु शर्करायां स्त्री" ( इति मेदिनी ) इत्येकं बद्धार्जुनयोः ॥ ८७ ॥

उचित या न्याय्य,संस्कारी, क्षमी, रचेहुए पदार्थ, शास्त्र लक्षण संपन्न, विना सीमा, शेष, विष्णु.

पु.स.न. पु.स.न.

**(युक्तेऽतिसंस्कृते मर्षिण्य) भिनीतो (ऽथ) संस्कृतम् ।**

पु.स.न.

**(कृत्रिमे लक्षणोपेतेऽप्य) नन्तो (ऽनवधावपि) ॥ ८८ ॥**

यिवति–युक्ते न्याय्ये उचिते वा अतिसंस्कृते अत्यन्तसंस्कारप्राप्ते, मर्षिणि क्षन्तर्यपि अभिनीतः स्यात् । अभिनीयते स्म अभिपूर्वकान्नयतेः कर्मणि क्ते, अभिनीतः "अभिनीतं संस्कृते च न्याय्ये चामर्षिणि त्रिपु" ( इति रुद्रः ) इत्येकं न्याय्यादीनाम् । अथेति–कृत्रिमे करणेन निर्वृत्ते, लक्षणोपेते लक्षणेन उपेते पाणिन्यादिसूत्रव्युत्पादिते अपिशब्दात् शस्ते भूपिते च संस्कृतं स्यात् । संस्क्रियते स्म संपूर्वकात्करोतेः कर्मणि क्ते सुडागमे च 'संस्कृतम्' "संस्कृतः कृत्रिमे शस्ते भूषितेऽप्यन्यलिङ्गकः । क्लीबन्तु लक्षणोपेते" ( इति मेदिनी ) इत्येकं कृत्रिमादीनाम् । अनवधौ अवधिरहिते अपिशब्दाच्छेषकेशवादिपु अनन्तः स्यात् । न अन्तोऽस्येत्यनन्तः "अनन्तः केशवे शेषे पुमान्निरवधौ त्रिपु । अनन्ता च विशल्यायां शारिवादूर्वयोरपि । कणादुरालभापथ्यापार्वत्यामलकीपु च । विश्वंभरागुडूच्योः स्यादनन्तं सुरवर्त्मनि" ( इति मेदिनी ) इत्येकमनवध्यादीनाम् ॥ ८८ ॥

विख्यात, हर्षित आदि, कुलीन, पण्डित आदि, पवित्र, एकान्त आदि, मोहित, बढ़ाहुआ आदि.

पु.स.न. पु.स.न.

**( ख्याते हृष्टे ) प्रतीतोऽभिजात ( स्तु कुलजे बुधे ) ।**

पु.स.न. पु.स.न.

**विविक्तौ (पूतविजनौ) मूर्च्छितौ (मूढसोच्छ्रयौ) ॥ ८९ ॥**

ख्येति–ख्याते प्रसिद्धे, हृष्टे हर्षिते च प्रतीतः स्यात् । प्रतीयते स्म प्रतिपूर्वकाद् 'इण् गतौ' अस्मात्कर्मणि क्ते प्रतीतः "प्रज्ञाताज्ञातहृष्टेपु प्रतीतः सादरे त्रिपु" ( इति मेदिनी ) इत्येकं विख्यातादीनाम् । कुलजे कुलीने, बुधे पण्डिते अभिजातः स्यात् । अभिजायते स्म अभिपूर्वकाज्जनेः कर्तरि "गत्यर्थेति" क्ते "जनसनखनामिति" आत्वे च अभिजातः "अभिजातः कुलीने स्यान्न्याय्यपण्डितयोस्त्रिपु" (इति मेदिनी) इत्येकं कुलीनादीनाम् । पूतः शुद्धः विजनः एकान्तदेशः उभौ विविक्तौ विविक्तपदवाच्यौ स्याताम् । विविज्यते स्म विपूर्वकाद् 'विजिर् पृथग्भावे' जौहोत्यादिकात् 'विचिर् पृथग्भावे' रौधादिकाद्वा कर्मणि क्ते, कुत्वे, चर्त्वे च विविक्तः "विविक्तं त्रिष्वसंपृक्ते रहःपूतविवेकिपु" ( इति मेदिनी ) इत्येकं पूतादीनाम् । मूढो मोहं प्राप्तः सोच्छ्रयः वृद्धिसमे-

तश्च उभौ मूर्च्छितौ स्याताम् । मूर्च्छा संजातास्येति तारकादित्वादितचि मूर्च्छितः "मूर्च्छितमपि सोच्छ्रये च मूढे च" ( इति मेदिनी ) इत्येकं मूढादीनाम् ॥ ८९ ॥

पु.स.न. पु.स.न.

खट्टा, निठुर, सफेद, स्याह, सच्चा, साधु, विद्यमान आदि.

**( द्वौ चाम्लपरुषौ ) शुक्लौ शिती ( धवलमेचकौ ) ।**

पु.स.न.

**( सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च ) सन् ॥ ९० ॥**

द्वाविति—अम्लोऽम्लरसश्चुक्रो वा परुषः कठोरः इमौ द्वौ शुक्तौ शुक्तपदवाच्यौ स्याताम् । शुच्यते स्म, 'ईशुचिर् पूतीभावे' अस्माद्दैवादिकात्कर्मणि क्ते, "श्वीदितः" इतीडभावे च शुक्तः "शुक्तं पूताम्लनिष्ठुरे" ( इति मेदिनी ) इत्येकमम्लादीनाम् । धवलो गौरः मेचकः श्यामलः उभौ शिती शितिपदवाच्यौ स्याताम् । शीयते शिनोतेः कर्मणि क्तिनि कर्तरि क्तिचि वा शितिः सितिर्वा द्वित्वे शिती सिती वा "शितिर्भूर्जे ना सितासितयोस्त्रिषु" ( इति मेदिनी ) इत्येकं धवलादीनाम् । सत्ये तथ्ये सत्ययुगादौ वा साधौ परोपकारिणि, उत्तमकुलजे, उचिते वा विद्यमाने वर्तमानकाले, प्रशस्ते श्रेष्ठे, अभ्यर्हिते पूजिते च "सन्" स्यात् । अस्तीति विग्रहे 'अस भुवि' अस्मादादादिकात्कर्तरि "लटः शतृ" इति शतरि "श्नसोरल्लोपः" इत्यल्लोपे नुमि, सुलोपे तलोपे च सन् स्त्रियान्तु "उगितश्चेति" ङीपि "सती" स्यात् "सन्साधौ धीरशस्तयोः । मान्ये सत्ये विद्यमाने त्रिषु साध्व्युमयोः स्त्रियाम्" (इति मेदिनी) इत्येकं सत्यादीनाम् ॥ ९० ॥

पूजित, वैरिविजित, आगे आया, निवास, अवात, अभेद्य कवच.

**पुरस्कृतः ( पूजितेऽरात्यभियुक्तेऽग्रतः कृते ) ।**

**निवातावा (श्रयावातौ) ( शस्त्राभेद्यं च वर्म यत् ) ॥ ९१ ॥**

प्विति—पूजिते सम्मानिते, अरात्यभियुक्ते वैरिविजिते अग्रतःकृते सम्मुखीकृते च पुरस्कृतः स्यात् । पुरोऽकारि पुरःपूर्वकात्करोतेः कर्मणि क्ते "पुरोऽव्ययमिति" गतित्वे "नमस्पुरसोरिति" सत्वे च पुरस्कृतः "पुरस्कृतोऽभिशरतारिग्रस्ताग्रे कृतपूजिते" ( इति मेदिनी ) इत्येकं पूजितादीनाम् । आश्रयः निवासः, अवातः वातरहितश्च उभौ निवातौ स्याताम् । शस्त्राभेद्यं यद्वर्मकवचादिकं तच्च निवातं स्यात् । निरुद्धो निवृत्तो वा वातोऽस्मादिति निवातः "निवातो दृढसन्नाहे निवासे वातवर्जिते" ( इत्यजयः ) इत्येकं निवासादीनाम् ॥ ९१ ॥

उपजा, गर्वीला, बहुत ही बड़ा, वृद्धिमान्, लगा और उपजा हुआ, सत्कार संपन्न और पूजित.

**जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिता उत्थितास्त्वमी ।**

**वृद्धिमत्प्रोद्यतोत्पन्ना आदृतौ सादरार्चितौ ॥ ९२ ॥**

इति तान्ताः ॥

जेति–जातः उत्पन्नः उन्नद्धः दृप्तः अभिमानयुक्तो वा प्रवृद्धः समृद्धश्च एते उच्छ्रिताः उच्छ्रितपदवाच्याः स्युः। उच्छ्रयति, उच्छ्रीयते स्म वा उत्पूर्वकाच्छ्रयतेः कर्तरि कर्मणि वा "गत्यर्थेति" क्ते उच्छ्रितः द्वित्वे उच्छ्रितौ, बहुत्वे उच्छ्रिताः "उच्छ्रितं त्रिषु संजाते समुन्नद्धप्रवृद्धयोः" (इति मेदिनी) इत्येकं जातादीनाम्। अमी वक्ष्यमाणाः वृद्धिमत्प्रोद्यतोत्पन्नाः शब्दाः उत्थिताः उत्थितपदवाच्याः स्युः। उत्तिष्ठति स्म उत्पूर्वकात्तिष्ठतेः कर्तरि "गत्यर्थेति" क्ते, "उदःस्थास्तम्भोरिति" पूर्वसवर्णे, "झरो झरीति" थलोपे, "खरि चेति" चर्त्वे, "द्यतिस्यतिमास्थामिति" इत्वे च उत्थितः द्वित्वे उत्थितौ, बहुत्वे उत्थिताः "उत्थितं स्यात्त्रिषूत्पन्ने प्रोद्यते वृद्धिमत्यपि" (इति मेदिनी) इत्येकं वृद्धिमदादीनाम्। सादरः आदरसमेतः सत्कारयुतो वा अर्चितः पूजितश्च उभौ आदृतौ आदृतपदवाच्यौ स्यातम्। आद्रियते स्म आङ्पूर्वकाद् 'दृङ् आदरे' अस्मात्तौदादिकात्कर्मणि 'क्ते' आदृतः इत्येकं सादरार्चितयोः॥ ६२॥

इति तान्ताः।

---

## अथ थान्ता व्याख्यायन्ते॥

वाच्य, धन, पु. वस्तु, हेतु, उपरति, प्याऊ, आगम आदि.

**अर्थो (ऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु)।**

न.

**(निपानागमयो) स्तीर्थ (मृषिजुष्टजले गुरौ)॥ ६३॥**

अरिति–अभिधेयः वाच्यः, राः धनम्, वस्तु पदार्थव्यूहः, प्रयोजनम् उद्देश्यो हेतुर्वा निवृत्तिः निवर्तनम्, उपरागो विरागो वा एषु अर्थः स्यात्। ऋच्छति, अर्यते वा 'ऋ गतौ' अस्माज्जौवादिकात्कर्तरि, कर्मणि वा "उषिकुषिगार्तिभ्यस्थन्" इति थनि, गुणे च अर्थ्यते इति विग्रहे तु 'अर्थ उपयाच्ञायाम्' अस्माच्चौरादिकात् कर्मणि घञि वा अर्थः "अर्थो विषयार्थनयोर्धनकारणवस्तुषु। अभिधेये च शब्दानां निवृत्तौ च प्रयोजने" (इति मेदिनी) इत्येकमभिधेयादीनाम्। निपानम् जलावतारः उपकूपजलाशयो वा आगमः[1] बौद्धशास्त्रभिन्नशास्त्रमनयोः, ऋषिजुष्टजले ऋषिसेवितजले, गुरौ उपाध्याये अयोध्यादिषु च तीर्थं स्यात्। तीर्यतेऽनेनेति विग्रहे तरतेः करणे "पातृतुदीति" थकि किस्वादित्वे रपरत्वे दीर्घे च तीर्थम् अर्धर्चादित्वात्तीर्थो वा "तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च। अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु" (इति मेदिनी) इत्येकं निपानादीनाम्॥ ६३॥

शक्तिमान्, सम्बद्धार्थ, प्रतिकूल, क्षीणराग, बड़ा बूढ़ा, मार्ग, पांति.

**समर्थ (स्त्रिषु शक्तिस्थे संबद्धार्थे हितेऽपि च)।**

**दशमीस्थौ (क्षीणरागवृद्धौ) वीथी (पदव्यपि)॥ ६४॥**

---

१ आगतं शिववक्त्रेभ्यो गतं च गिरिजाश्रुतौ। मतं च वासुदेवस्य तस्मादागम उच्यते॥ १॥

सेति—शक्तिस्थे शक्तिमति, सम्बद्धार्थे सम्बन्धस्यार्थे, हितेऽनुकूलेऽपि च समर्थस्त्रिषु त्रिलिङ्ग्यां स्यात् । समर्थयते, समर्थ्यते वा संपूर्वकाद् 'अर्थ उपयाच्ञायाम्' चौरादिकात्कर्तरि पचाद्यचि, कर्मणि घञि वा समर्थः इत्येकं शक्तिमदादीनाम् । क्षीणरागो विगतरागः वृद्धो अतिवृद्धश्च उभौ दशमीस्थौ स्याताम् । दशम्यां तिष्ठतीति विग्रहे "सुपि स्थः" इति के आलोपे च दशमीस्थः द्वित्वे दशमीस्थौ "दशमीस्थो नष्टबीजे स्थविरेऽप्यन्यलिङ्गकः" इत्येकं क्षीणरागादीनाम् । पदवी मार्गः अपिशब्दात्पङ्क्त्यादिश्च वीथी स्यात् । विथ्यते 'विथृ याचने' अस्माद्भौवादिकाद् "इगुपधात्कित्" इतीनि, बाहुलकाद्दीर्घे, "कृदिकारादिति" ङीषि च वीथी वीथिर्वा "वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरवर्त्मनोः" (इति मेदिनी) इत्येकं पदव्यादीनाम् ॥ ९४ ॥

सभा, उपाय, पर्वत का अग्र-भाग, परिमाण, भेद, पुस्तक, धन, आधार, स्थिति, मरण.

स. पु.न. *

**(आस्थानीयत्नयो) रास्था प्रस्थो (ऽस्त्री सानुमानयोः) ।**

पु. स.

**"(शास्त्रद्रविणयो)र्ग्रन्थः संस्था(धारे स्थितौ मृतौ) ९५ ॥"**

आसिति—आस्थानी सभा, यत्नः उपायश्च अनयोः आस्था स्यात् । आस्थानम्, आतिष्ठत्यस्यामिति वा आङ्पूर्वकात्तिष्ठतेर्भावे आधारे वा "आतश्चोपसर्गे" इत्यङि, आलोपे, टापि च आस्था "आस्था त्वालम्बनास्थानयत्नापेक्षासु योषिति" ( इति मेदिनी ) इत्येकं सभादीनाम् । सानुः शृङ्गः पर्वताग्रभागो वा मानं परिमाणभेदः अनयोः प्रस्थः अस्त्री पुन्नपुंसकं स्यात् । प्रतिष्ठतेऽनेन अस्मिन्निति वा प्रपूर्वकात्तिष्ठतेः "घञर्थे कः" इति के आलोपे च प्रस्थः "प्रस्थोऽस्त्रियां मानभेदे सानावुन्मितवस्तुनि" ( इति मेदिनी ) इत्येकं सान्वादीनाम् । शास्त्रम् शासनम्, द्रविणं धनमनयोर्ग्रन्थः स्यात् । ग्रन्थनम्, ग्रथ्यते वा ग्रथ्नातेर्भावे, कर्मणि वा घञि ग्रन्थः इत्येकं शास्त्रादीनाम् । आधारे अधिकरणे, स्थितौ स्थित्याम्, मृतौ मरणे च संस्था स्यात् । संस्थानम्, संतिष्ठतेऽनयेति वा संपूर्वकात्तिष्ठतेर्भावे करणे वा अङि, आलोपे, टापि च संस्था "संस्थश्चरेवस्थिते स्त्री स्थितौ सादृश्यनाशयोः" ( इति मेदिनी ) इत्येकमाधारादीनाम् ॥ ९५ ॥

इति थान्ताः ।

## अथ दान्ता व्याख्यायन्ते ।

आशय, वश, मन, संवत्सर, निन्दा, हुक्म, पुत्र, बान्धव, किरण, चरण, चौथाई, चन्द्र, अग्नि, सूर्य.

पु. पु.

**( अभिप्रायवशौ ) छन्दावब्दौ ( जीमूतवत्सरौ ) ।**

पु. पु.

**अपवादौ ( तु निन्दाज्ञे ) दायादौ ( सुतबान्धवौ ) ॥**

पु. पु.

**पादा(रश्म्यङ्घ्रितुर्यांशा)(श्चन्द्राग्न्यर्का)स्तमोनुदः ९६॥**

* "सानुः शृङ्गे बुधे मार्गे वात्यायां पल्लवे वने" ( इति विश्वः ) ॥

अभीति—अभिप्राय: आशय:, वशोऽधीनश्च उभौ छन्दौ छन्दपदवाच्यौ स्याताम् । छन्द्यते ' छदि संवरणे ' अस्माच्चौरादिकाद् " अकर्तरि कारके चेति " कर्मणि घञि छन्द: " छन्दो वशेऽभिप्राये च दृषत्पाषाणमात्रके । निष्पेपणार्थपट्टेऽपि " ( इति हैम: ) इत्येकमभिप्रायादीनाम् । जीमूतो मेघ:, वत्सर: संवत्सरश्च उभौ अब्दौ अब्दपदवाच्यौ स्याताम् । अपो ददाति अप्पूर्वकाद्ददाते: " आतोऽनुपेति " के आलोपे च अब्द: " अब्द: संवत्सरे मेघे गिरिभेदे च मुस्तके " ( इति विश्व: ) इत्येकं मेघादीनाम् । निन्दा जुगुप्सा, आज्ञा शासनं च उभे अपवादौ स्याताम् । अपवदनम्, अपोद्यते वा अप्पूर्वकाद्वदतेर्भावे कर्मणि वा ' घञि ' अपवाद: मुकुटमते तु अववाद: " अववादस्तु निन्दायामाज्ञाविश्रम्भयोरपि " ( इति विश्व: ) इत्येकं निन्दादीनाम् । सुत: पुत्र: वान्धवो ज्ञातिश्च उभौ दायादौ स्याताम् । दायमत्ति दायपूर्वकाद् ' अद भक्षणे ' अस्मात् " कर्मण्यण् " इत्यणि । आदत्ते इति विग्रहे तु आङ्पूर्वकाद्ददाते: कर्तरि " आतश्चोपेति " के आलोपे च आद: दायस्य आद: दायाद इति वा " दायादस्तु भवेत्पुंसि सपिण्डे तनयेऽपि च " ( इति मेदिनी ) इत्येकं सुतादीनाम् । रश्मि: किरण: अङ्घ्रिश्चरणो वृक्षमूलं वा तुर्यांशश्चतुर्थांशश्च एते पादा: स्यु: पद्यतेऽसाविति ' पद गतौ ' अस्माद्दैवादिकात् " पदरुजविशेति " घञि पाद: " पादो बुध्ने तुरीयांशे शैले प्रत्यन्तपर्वते । चरणे च मयूखे च" ( इति मेदिनी ) इत्येकं मयूखादीनाम् । चन्द्रो निशाकर: अग्नि: पावक: अर्क: सूर्यश्च एते तमोनुद: स्यु: । तमो नुदतीति विग्रहे उपपदसमासे तम:पूर्वकाद् ' णुद प्रेरणे ' अस्मात्कर्तरि क्विपि तमोनुद्, द्वित्वे तमोनुदौ, बहुत्वे तमोनुद: स्युरित्येकं चन्द्रादीनाम् ॥ ९६ ॥

जनवाद, सि- पु. द्धान्त, कीचड़, बालतृण, कष्ट
**निर्वादो(जनवादेऽपि) शादो (जम्बालशष्पयो:) ।** पु.

युत रोदन, रक्षक, भयानक युद्ध.
**(सारावे रुदिते त्रात)र्याक्रन्दे(दारुणे रणे) ॥ ९७ ॥** पु.

निरिति—जनवादे लोकवादे अपिशब्दान्निर्णीतवादे सिद्धान्ते वा निर्वाद: स्यात् । निर्वदनम् निरपूर्वकाद्वदतेर्भावे ' घञि ' निर्वाद: " निर्वाद: स्याल्लोकवादपरिनिष्ठितवादयो:" ( इति मेदिनी ) इत्येकं लोकवादादे: । जम्बाल: कर्दम: शष्पं वालतृणं च अनयो: शाद: स्यात्, शदनम्, शद्यतेऽनेनेति वा 'शद्लृशातने' अस्माज्जौवादिकाद्भावे करणे वा घञि शाद: * " शाद: कर्दमशष्पयो: " ( इति हैम: ) इत्येकं कर्दमादे:। सारावे आर्तनादसमेते रुदिते रोदने त्रातरि पार्ष्णिग्राहाक्रान्तस्य विजिगीषोरक्षितरि दारुणे भयानके रणे संग्रामे च " आक्रन्द:"स्यात् । आक्रन्दति, आक्रन्दयति आक्रन्द्यतेऽस्मिन्, आक्रन्दनम्, वा आङ्पूर्वक: ' क्रदि आह्वाने रोदने च ' अस्माज्जौवादिकात् ' क्रन्द शब्द-

---

* श्यतीति विग्रहे तु ' शो तनूकरणे' अस्माद्दैवादिकात्कर्तरि " शाशपिभ्यां ददनाविति " दे आत्वे च शाद इति वा ॥

सातत्ये ' चौरादिकाद्वा कर्तरि पचाद्यचि आधारे, भावे वा घञि आक्रन्दः " आक्रन्दः क्रन्दने ह्वाने मित्रदारुणयुद्धयोः " ( इति मेदिनी ) इत्येकं कष्टयुतशब्दादीनाम् ॥९७॥

अनुग्रह, प्रसन्नता, काव्यगुण, व्यञ्जन, रसोई करनेवाला, गवाध्यक्ष, प्रमोद, अभिमानआदि.

पु. पु.
**(स्या)त्प्रसादो(ऽनुरोधेऽपि)सूदः(स्याद्व्यञ्जनेऽपि च) ।**
पु. पु. पु.
**(गोष्ठाध्यक्षेऽपि)गोविन्दो(हर्षेऽ) प्यामोदवन्मदः ॥९८॥**

स्यादिति—अनुरोधे अनुरागे अनुवर्तने वा अपिशब्दात् अनुग्रहकाव्यप्राणस्वास्थ्यादिषु च प्रसादः स्यात् । प्रसदनम्, प्रसद्यतेऽनेनेति वा प्रपूर्वकात्सदेर्भावे करणे वा घञि, वृद्धौ च प्रसादः " प्रसादोऽनुग्रहे काव्यप्राणस्वास्थ्यप्रसत्तिषु " ( इति मेदिनी ) इत्येकमनुरागादीनाम् । व्यञ्जने सूपादौ, अपिशब्दाच्छक्तिभेदे सूपकारे च सूदः स्यात् । सूदयति, सूद्यते वा ' षूद क्षरणे ' अस्माच्चौरादिकात्कर्त्तरि पचाद्यचि कर्मणि " एरच् " इत्यचि वा सूदः " सूदस्तु सूपवत्सूपकारे च व्यञ्जनेऽपि च " ( इति विश्वः ) इत्येकं सूपभक्तादीनाम् । गोष्ठाध्यक्षे गोस्थानकाधीशे अपिशब्दाद्वासुदेवे बृहस्पतौ च गोविन्दः स्यात् । गां विन्दति गोपूर्वकाद्विन्दतेः कर्तरि " गवादिषु विन्देः संज्ञायामिति " शे, शित्त्वान्नुमि च गोविन्दः " गोविन्दो वासुदेवे स्याद्गवाध्यक्षे बृहस्पतौ " ( इति मेदिनी ) इत्येकं गवाध्यक्षादीनाम् । हर्षे प्रमोदे आमोदः स्यात् । तद्वन्मदोऽपि आमोदयति, आमोदनं वा आङ्पूर्वकान्मुदेः स्वार्थण्यन्तात् कर्तरि पचाद्यचि, भावे घञि वा आमोदः " आमोदो गन्धहर्षयोः " ( इति मेदिनी ) मदनम्, मद्यतेऽनेनेति वा माद्यतेर्भावे करणे वा " मदोऽनुपसर्गे " इत्यपि मदः " मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः " ( इति विश्वः ) इति द्वे हर्षादीनाम् ॥ ९८ ॥

श्रेष्ठ, राजचिह्न, बैल की लाट, ज्ञान, संभाषण, क्रियाकार, संग्राम और नाम.

पु.न.
**(प्राधान्ये राजलिङ्गे च वृषाङ्गे) ककुदो(ऽस्त्रियाम्) ।**
स.
**(स्त्री)संवि(ज्ज्ञानसंभाषाक्रियाकाराजिनामसु) ॥ ९९ ॥**

प्रेति—प्राधान्ये मुख्ये, राजलिङ्गे राजलक्ष्मणि छत्रचामरादिके, वृषाङ्गे वृषभाङ्गविशेषे लाटेति प्रसिद्धे च ककुदः अस्त्रियां पुन्नपुंसकं स्यात् । कं सुखं कौति कपूर्वकात् कौतेः कर्तरि " अब्दादयश्चेति " दे पृषोदरादित्वादगुणाभावे च ककुदः यदा हलन्तस्तदा कं सुखं कौतीति विग्रहे क्विपि, तुकि च ककुत् ( द् ) "ककुद्मत् ककुदं श्रेष्ठे वृषाङ्गे राजलक्ष्मणि " ( इति विश्वः ) इत्येकं प्राधान्यादीनाम् । ज्ञानं विद्या, संभाषा सुरीत्या संभाषणम्, क्रियायाः कारो नियमः पणबन्धो वा आजिर्युद्धम् नाम संज्ञा एतेष्वर्थेषु संवित् स्त्री स्यात् । संवेदनम्, संविद्यतेऽनयेति वा संपूर्वकाद् ' विद ज्ञाने ' आदादिकाद् ' विद चेतनादौ च ' चौरादिकाद्वा भावे, करणे वा संपदादित्वात्क्विपि संवित्

" संवित् स्त्रियां प्रतिज्ञायामाचारे ज्ञानसंगरे । संभाषणे क्रियाकारे संकेते नाम्नि तोषणे " ( इति मेदिनी ) इत्येकं ज्ञानादीनाम् ॥ ६६ ॥

धर्म, एकान्त, वसन्त आदि ऋतु, ऋतु,साल, व्यवसाय,रक्षण, स्थान, चिह्न, चरण,वस्तु.

**( धर्मे रहस्यु ) पनिषत् ( स्यादृतौ वत्सरे ) शरत् ।**
**पदं (व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु) ॥ १०० ॥**

धेति—धर्मे श्रुतिस्मृतिविहितकर्मणि शास्त्रोक्तकर्मोत्पन्नभाविफलसाधनभूते शुभे पुण्ये दानादौ वा रहसि एकान्ते गोप्ये वा वेदान्ते च उपनिषत् स्यात् । उपनिषदनम्, उपनिषीदति श्रेयोऽस्यामिति वा उपनिपूर्वकात्सीदतेर्भावाधारयोः सम्पदादित्वात् क्विपि उपनिषत् " भवेदुपनिषद्धर्मे वेदान्ते विजने स्त्रियाम् " ( इति मेदिनी ) इत्येकं विजनादीनाम् । ऋतौ वसन्तादौ वत्सरे वर्षे च 'शरत्' स्यात् । शृणाति, शीर्यन्ते पाकेनौषधयोऽस्यामिति वा शृणातेः कर्तरि, आधारे वा ( शृदृभसोऽदिरिति ) अदिप्रत्यये शरत् " शरत्स्त्री वत्सरेऽप्यृतौ " ( इति मेदिनी ) इत्येकमृतुवत्सरयोः । व्यवसितिर्व्यवसायः, त्राणं रक्षणम्, स्थानं स्थितिः, लक्ष्म लक्षणम्, अङ्घ्रिः चरणः, वस्तु पदार्थः एषु पदं स्यात् । पद्यते, पदनम्, पद्यतेऽनेनेति वा 'पद गतौ' अस्माद्दैवादिकात्कर्तरि पचाद्यचि, भावकर्मकरणेषु वा 'घञि' संज्ञापूर्वकत्वाद्वृद्ध्यभावे च पदम् " पदं शब्दे च वाक्ये च व्यवसायापदेशयोः । पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः " ( इति विश्वः ) श्लोकपादेऽपि च क्लीबं पुंलिङ्गः किरणे पुनः ( इति मेदिन्यां विशेषः ) इत्येकं व्यवसायादीनाम् ॥ १०० ॥

गोसेवित देश, मान, स्थान, कार्य, इष्ट, मिष्ट, अकठिन, कोमल.

**गोष्पदं ( सेविते माने ) ( प्रतिष्ठाकृत्य ) मास्पदम् ।**
**(त्रिष्विष्टमधुरौ) स्वादू मृदू (चातीक्ष्णकोमलौ)॥ १०१ ॥**

गविति—सेविते गोसेवितदेशे, माने प्रमाणे गोपदप्रमिते लम्बिते आयते श्वभ्रे वा गोष्पदं स्यात् । गावः पद्यन्तेऽस्मिन्देशे गोपूर्वकात् 'पद गतौ' अस्माद्दैवादिकादाधारे घञि, संज्ञापूर्वकत्वाद्वृद्ध्यभावे च गोःपदमिति समासेवा "गोष्पदं सेवितासेवितप्रमाणेषु" इति सुटि सस्य षत्वे च निपातिते गोष्पदम् " गोष्पदं गोपदे श्वभ्रे गवां च गतिगोचरे " ( इति विश्वः ) इत्येकं सेवितमानयोः । प्रतिष्ठा स्थानं मर्यादा वा कृत्यं कार्यमेतद्द्वयमास्पदं स्यात् । आपद्यतेऽस्मिन्निति विग्रहे आङ्पूर्वकात्पद्यतेराधारे घञि, वृद्ध्यभावे " आस्पदं प्रतिष्ठायामिति " सुडागमे च आस्पदम् " आस्पदं पदकृत्ययोः " ( इति मेदिनी ) इत्येकं स्थानकार्ययोः । अतः परमावर्गादान्तास्त्रिषु भवन्ति । इष्टो मनोज्ञः मधुरो मिष्टः उभौ स्वादू स्वादुपदवाच्यौ स्याताम् । स्वदते 'ष्वद आस्वादने' अस्माद्भौवादिकात्

"कृवापेति" उणि वृद्धौ स्वादुः द्वित्वे स्वादू "स्वादु मिष्टमनोज्ञयोः" (इति मेदिनी) इत्येकमिष्टमधुरयोः । अतीक्ष्णः अतिग्मः कोमलः अकठिनः उभौ "मृदू" मृदुपदवाच्यौ स्याताम् । मृद्यते 'म्रद मर्दने' अस्माद्भौवादिकात् कर्मणि "प्रथिम्रदीति" कौ, संप्रसारणे च मृदुः द्वित्वे मृदू "मृद्वतीक्ष्णे च कोमले" (इति हैमः) इत्येकमतिग्मकोमलयोः ॥ १०१ ॥

मूर्ख, अल्पादि, नया, अधीर, पण्डित व ढीठ.

पु.स.न. पु.स.न. पु.स.न.

**(मूढाल्पापटुनिर्भाग्या) मन्दाः स्यु (र्द्वौ तु) शारदौ ।**
**(प्रत्यग्राप्रतिभौ) (विद्वत्सुप्रगल्भौ) विशारदौ ॥ १०२ ॥**

**इति दान्ताः ॥**

म्विति—मूढो मूर्खः अल्पा स्वल्पा, अपटुः असमर्थः निर्भाग्यो भाग्यहीनश्च एते मन्दाः मन्दपदवाच्याः स्युः । मन्दते 'मदि स्तुत्यादौ' अस्माद्भौवादिकात्कर्तरि पचाद्यचि, नुमागमे च मन्दः द्वित्वे मन्दौ बहुत्वे मन्दाः "मन्दोऽतीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः । अल्पे च त्रिषु पुंसि स्याद्धस्तिजात्यन्तरे शनौ" (इति मेदिनी) इत्येकं मूढादीनाम् । प्रत्यग्रोऽभिनवः, अप्रतिभः अप्रगल्भोऽधीरो वा इमौ द्वौ तु शारदौ शारदपदवाच्यौ स्याताम् । शरदि भवः "सन्धिवेले" त्यणि वृद्धौ च शारदः द्वित्वे शारदौ "शारदोऽब्दे स्त्रियां तोयपिप्पलीसप्तपर्णयोः । शस्ये क्लीबं शरज्जातनूतनाप्रतिभे त्रिषु" (इति मेदिनी) इत्येकमभिनवाधीरयोः । विद्वान् पण्डितः सुप्रगल्भः महाधृष्टो महाधीरो वा इमौ द्वौ विशारदौ विशारदपदवाच्यौ स्याताम् । विशिष्टो विपरीतो वा शारदः "प्रादयो गतेति" समासे विशारदः "विशारदः पण्डिते च धृष्टे" (इति मेदिनी) इत्येकं धृष्टपण्डितयोः ॥ १०२ ॥

इति दान्ताः ॥

---

**अथ धान्ता व्याख्यायन्ते ॥**

नापविशेष, बरगद, देह, उंचाई, ध्यानादि, रास्ता.

पु. पु.

**(व्यामो वटश्च) न्यग्रोधावुत्सेधः (कायउन्नतिः) ।**
**(पर्याहारश्च मार्गश्च) विवधौ वीवधौ (च तौ) ॥ १०३ ॥**

व्येति—व्यामः ततयोः सकरयोर्बाह्वोस्तिर्यगन्तरम्, वटः बहुपाच्च उभौ न्यग्रोधौ स्याताम् । न्यक् रुणद्धीति विग्रहे उपपदसमासे "कर्मण्यण्" इत्यणि, गुणे च न्यग्रोधः द्वित्वे न्यग्रोधौ "न्यग्रोधो व्यामवटयोर्न्यग्रोधश्च शमीतरौ" (इति विश्वः) इत्येकं व्यामवटयोः । कायो देहः उन्नतिरौन्नत्यं च उत्सेधः स्यात् । उत्सेधनम्, उत्सिध्यतेऽनेनेति वा उत्पूर्वकः 'षिधु गत्याम्' भौवादिकस्तस्माद्भावे करणे वा घञि, गुणे च उत्सेधः "उत्सेधस्तूच्छ्रये न स्त्री क्लीबं संहननेऽपि च" (इति विश्वः) इत्येकं कायो-

च्छाययोः। पर्याहारः उभयतो बद्धशिक्यं स्कन्धावाह्यं काष्ठम् "काँवडी" इति ख्यातं धान्यादिर्वा मार्गः पन्थाश्च तावुभौ विवधौ वीवधौ च स्याताम्। विविधो वधो हननं गमनं वेति विग्रहे "प्रादिभ्यो धातुजस्येति वा. २। २। २४" समासे, उत्तरपदलोपे च विवधः "अन्येषामपीति" दीर्घपक्षे तु वीवधः द्वित्वे विवधौ-वीवधौ च "विवधो वीवधश्चापि पर्याहारेऽध्वभारयोः" (इति विश्वः) इति द्वे पर्याहारादीनाम्॥ १०३॥

यज्ञीय वृक्षादि, गिरवी या थाती आदि.

पु.
**परिधि (र्यज्ञियतरोः शाखायामुपसूर्यके)।**
पु.
**(बन्धकं व्यसनं चेतः पीडाधिष्ठान) माधयः॥ १०४॥**

परीति—यज्ञियतरोः पलाशादिवृक्षस्य शाखायाम्, उपसूर्यके सूर्यसमीपस्थे मेघवृषादिसंनिकर्षाज्जायमाने वेष्टनाकारे मण्डले च परिधिः स्यात्। परिधीयते परिपूर्वकाद्धातेः कर्मणि "उपसर्गे घोः किरिति" कौ, आलोपे च परिधिः स्यादित्येकं यज्ञियवृक्षादेः। बन्धकं उत्तमर्णगृहे आऋणादानाद्विश्वासार्थं यद्वस्तु स्थापितं तद्बन्धकं स्यात्। व्यसनं दुःखम्, चेतः पीडा मानसी व्यथा, अधिष्ठानमध्यासनमाश्रयो वा एते आधयः आधिपदवाच्याः स्युः। आधानम्, आधीयतेऽनेनास्मिन्निति वा आङ्पूर्वकाद्धाञो भावकरणाधारेषु कौ, आलोपे च आधिः, द्वित्वे आधी, बहुत्वे आधयः "आधिः पुमाँश्चित्तपीडाप्रत्याशाबन्धकेषु च। व्यसने चाप्यधिष्ठाने" (इति मेदिनी) इत्येकं बन्धकादीनाम्॥ १०४॥

समाधान आदि थाती या धरोहर आदि.

पु.
**(स्युः समर्थननीवाकनियमाश्च) समाधयः।**
पु.
**(दोषोत्पादे)ऽनुबन्धः(स्यात्प्रकृत्यादिविनश्वरे)॥ १०५॥**
**(मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने)।**

स्युरिति—समर्थनं शङ्कापरिहारः, समाधानं वा नीवाको वचनाभावः मूल्योत्कर्षार्थं धान्यादिसंग्रहो वा नियमः अङ्गीकारश्च एते समाधयः समाधिपदवाच्याः स्युः। समाधानम्, समाधीयतेऽनेनेति वा समाङ्पूर्वकाद्धधातेर्भावसाधनयोः कौ, आलोपे च समाधिः, द्वित्वे समाधी, बहुत्वे समाधयः "समाधिर्ध्याननीवाकनियमेषु समर्थने" (इति विश्वः) इत्येकं समर्थनादीनाम्। दोषोत्पादे दोषाणामुत्पादने, प्रकृत्यादिविनश्वरे प्रकृतिप्रत्ययागमादेशेषु विनश्वरे, इत्संज्ञालोपाभ्यामदर्शनशील [illegible] मुख्यानुयायिनि मातापित्रादिकानुवर्तिनि शिशौ बालके, प्रकृतस्यानुवर्तने प्रकृतस्य प्रारब्धस्य अनुवर्तने च अनुबन्धः स्यात्। अनुबध्यते अनुपूर्वकाद्बध्नातेः कर्मणि घञि अनुबन्धः "अनुबन्धस्तु बन्धे स्याद्दोषोत्पादे विनश्वरे। मुख्यानुयायिबाले च प्रकृतस्यानुवर्तने" (इति मेदिनी) इत्येकं दोषोत्पादनादीनाम्॥ १०५। ३॥

विष्णु, चन्द्रमा, परिच्छेद, गड़हा, विधान, भाग्य, याचना, जासूस, पण्डित, समूहादि.

पु. पु.
विधु (र्विष्णौ चन्द्रमसि) (परिच्छेदे बिले)ऽवधिः॥१०६॥
पु. पु.
विधि ( र्विधाने दैवेऽपि) प्रणिधिः (प्रार्थने चरे ) ।
पु. पु. पु.
बुधवृद्धौ ( पण्डितेऽपि )स्कन्धः(समुदयेऽपि च)॥१०७॥

वीति—विष्णौ सर्वव्यापिनि परमेश्वरे, चन्द्रमसि निशानाथे अत्रापीत्यनुवृत्त्या कर्पूरे, राक्षसे च 'विधुः' स्यात् । विध्यति विरहिणाम् 'व्यध ताडने' अस्माद्दैवादिकात्कर्तरि "पृभिदीति" कौ "ग्रहिज्येति" संप्रसारणे च विधुः "विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे" ( इति विश्वः ) इत्येकं हृषीकेशादीनाम् । परिच्छेदे भागे, विभागे, अध्याये, पर्वणि, सर्गे, सीमनि वा बिले विवरे च अवधिः स्यात् । अवधानम् अवधीयतेऽनेनेति वा अवपूर्वकाद्दधातेर्भावसाधनयोः कौ, आलोपे च अवधिः "अवधिस्त्ववधाने स्यात्सीम्नि काले बिले पुमान्" ( इति मेदिनी ) इत्येकं परिच्छेदादीनाम् । विधाने कर्तव्यकार्ये, दैवे पूर्वजन्मकृते शुभाशुभकर्मणि अपिशब्दात् परमेष्ठिनि, काले च विधिः स्यात् । विधानम्, विधीयतेऽनेनेति वा विपूर्वकाद्दधातेर्भावकरणयोः कौ, आलोपे च विधिः "विधिर्ना नियतौ काले विधाने परमेष्ठिनि" ( इति मेदिनी ) इत्येकं विधानादीनाम् । प्रार्थने याचने चरे चरिष्णौ, चारे वा प्रणिधिः स्यात् । प्रणिधानम्, प्रणिधीयतेऽनेनेति वा प्रणिपूर्वकाद्दधातेर्भावसाधनयोः कौ, आलोपे च प्रणिधिः "प्रणिधिर्याचने चरे" ( इति हैमः ) इत्येकं याचनादीनाम्, पण्डिते सदसद्विवेकिनि विदुषि, कवौ वा अपिशब्दाद्रौहिणेयादिषु च बुधवृद्धौ स्याताम् । बुध्यते 'बुध अवगमने' अस्माद्दैवादिकात्कर्त्तरि "इगुपधेति" के, क्त्वादृगुणाभावे च बुधः "बुधः कवौ रौहिणेये" ( इति विश्वः) वर्धते स्म 'वृधु वृद्धौ' अस्माद्भौवादिकात्कर्तरि "गत्यर्थेति" क्ते, धत्वे, दत्वे च वृद्धः "वृद्धो जीर्णे प्रवृद्धे ज्ञे त्रिषु क्लीबन्तु शैलजे" ( इति मेदिनी ) इति द्वे पण्डितादीनाम् । समुदये समुदाये समूहे वा अपिशब्दान्नृपांससंपरायकायादिषु च स्कन्धः स्यात् । कं शिरो दधाति "आतोनुपसर्गे" इति के, पारस्करादित्वात्सुडागमे, आलोपे च स्कन्धः "स्कन्धः स्यान्नृपतावंसे संपरायसमूहयोः । काये तरुप्रकाण्डे च भद्रादौ छन्दसो भिदि" ( इति मेदिनी ) इत्येकं समूहादीनाम् ॥ १०६ । १०७ ॥

नद विशेष, समुद्र, नदी, विधान, प्रकार, सुन्दर आदि.

पु.स.
देशे 'नदविशेषेऽब्धौ)सिन्धु(र्ना सरिति स्त्रियाम् ) ।
स. पु.स.न.
विधा(विधौ प्रकारे च) साधु (रम्येऽपि च त्रिषु)॥१०८॥

दृयिनि—देशे देशभेदे, नदविशेषे "भैरव—शोणभद्र—ब्रह्मपुत्रादौ" अब्धौ समुद्रे

च सिन्धुः ना पुमान्स्यात् । सरिति नद्यां तु स्त्रियां स्यात् । स्यन्दते 'स्यन्दू प्रस्रवणे' अस्माद्भौवादिकात्कर्तरि "स्यन्देः संप्रसारणं धश्चेति" उप्रत्यये, संप्रसारणे, दस्य धान्तादेशे च सिन्धुः "सिन्धुः समुद्रे नद्यां च नदे देशेभदानयोः" (इति विश्वः) इत्येकं नदविशेषादीनाम् । विधौ विधाने, प्रकारे भेदे सादृश्ये च 'विधा' स्यात् । विधानम् विपूर्वकाद्धाञो भावे "आतश्चोपेति" अङि, आलोपे, टापि च विधा "विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधौ" (इति विश्वः) इत्येकं विधानादीनाम् । रम्ये रमणीये सुन्दरे वा अपिशब्दाद्वार्धुषिके, सज्जने च 'साधु' त्रिपु त्रिलिङ्ग्यां स्यात् । साध्नोति 'साध संसिद्धौ' अस्मात्सौवादिकात्कर्तरि "कृवापेति" उणि साधु "साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्" (इति विश्वः) इत्येकं रम्यादीनाम् ॥ १०८ ॥

भार्या, पुत्रस्त्री, स्त्रीमात्र, चूना, अमृत, सेहुँड़, संकल्प, मर्यादा, आदर, आकांक्षा.

**वधू "जाया स्नुहा स्त्री च" (स.) सुधा "लेपोऽमृतं स्नुही" (स.) ।**
**सन्धा (स.) "प्रतिज्ञामर्यादा" श्रद्धा[1] (स.) "संप्रत्ययःस्पृहा" (स.) ॥१०९॥**

वेति—जाया भार्या, स्नुहा पुत्रपत्नी, स्त्री स्त्रीमात्रा च एते वधूपदवाच्याः स्युः । वहतीति विग्रहे वहतेः कर्तरि "वहो धश्चेति" उप्रत्यये हस्य धादेशे च वधूः "वधूः स्नुषानवोढास्त्रीभार्याप्रकाङ्गनासु च । शट्यां शारिवायां च" (इति विश्वः) इत्येकं भार्यादीनाम् । लेपः जेमनम्, "येन देवालयाद्या लिप्यन्ते" चूनेति ख्यातो वा अमृतम् मोक्षः जलं घृतं वा स्नुही सीहुण्डश्च सुधा स्यात् । सुष्ठु, सुखेन वा धीयते धार्यते, पोष्यते, पीयते वा सुपूर्वकाद्धाञो धेटो वा कर्मणि "आतश्चोपसर्गे" इत्यङि, आलोपे, टापि च सुधा "सुधा प्रासादभाग्द्रव्यं सुधाविद्युत्सुधामृतम् । सुधा हि भोजनं ज्ञेयं सुधा धात्री सुधा स्नुही" (इत्यनेकार्थमञ्जरी) इत्येकं लेपादीनाम् । प्रतिज्ञा संकल्पः स्वीकारो वा मर्यादा सीमा प्रशंसा वा उभे 'सन्धा' पदवाच्ये स्याताम् । संधानम् संधीयतेऽत्रेति वा संपूर्वकाद्धाञो भावाधारयोरङि, आलोपे, टापि च सन्धा स्यादित्येकं प्रतिज्ञादेः । संप्रत्ययः सत्कारः आदरः विश्वासो वा स्पृहा आकाङ्क्षा च उभे 'श्रद्धा' पदवाच्ये स्याताम् । श्रद्धानम्, श्रद्धीयतेऽत्रेति वा श्रत्पूर्वकाद्धधातेर्भावाधिकरणयोरङि, आलोपे, टापि च श्रद्धा "श्रद्धादरे च काङ्क्षायाम्" (इति मेदिनी) इत्येकमादरादीनाम् ॥ १०९ ॥

मदिरा, फूलका रस, शहद, अन्धा, अंधेरा, मूर्ख, अहंकारी.

**मधु[2] (न.) ("मद्ये पुष्परसे" क्षौद्रे)ऽप्यन्धं(तमस्यपि) ।**
**(अतस्त्रिषु) समुन्नद्धौ (पु.स.न.) (पण्डितंमन्यगर्वितौ) ॥ ११० ॥**

---

१ "गुरुवेदान्तवाक्यादिषु विश्वासः श्रद्धा" (इति तत्त्वबोधः) ॥

२ "मधुपराग मधु चैत है, मधु मदिरा मकरन्द। मधु नभ मधु खग मधु सुधा, मधुसूदन गोविन्द" ॥ (इति भाषाकोषः) ॥

मेति—मद्ये मदिरायाम्, पुष्परसे मकरन्दे, क्षौद्रे माक्षिके अपिशब्दाज्जलदैत्यचैत्रवसन्तजीवाशोकादौ च मधु स्यात् । मन्यते 'मन ज्ञाने' अस्माद्दैवादिकात्कर्तरि "फलपाटीति" उप्रत्यये, धान्तादेशे च मधु "मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रुमे" (इति विश्वः) इत्येकं मद्यादीनाम् । तमसि तिमिरे अपिशब्दान्नेत्रहीने जले च अन्धं स्यात् । अन्धयति 'अन्ध दृष्ट्युपघाते' अस्माच्चौरादिकात्कर्त्तरि पचाद्यचि अन्धम् "अन्धन्तु तिमिरे क्लीबं चक्षुहीनेऽभिधेयवत्" (इति मेदिनी) इत्येकं तिमिरादीनाम् । अतः परमाधान्ताद्वक्ष्यमाणाः शब्दास्त्रिषु त्रिलिङ्ग्यां भवन्तीति । आत्मानं पण्डितं मन्यते पण्डितंमन्यो मूर्खः, गर्वितः दृप्तः अभिमानयुक्तो वा उभौ समुन्नद्धौ स्याताम् । समुन्नह्यते स्म समुत्पूर्वकात् 'णह बन्धने' अस्माद्दैवादिकात्कर्त्तरि क्ते हस्य धत्वे, तस्य धत्वे, जश्त्वे च समुन्नद्धः "समुन्नद्धः समुद्धूते पण्डितंमन्यदृप्तयोः" (इति विश्वः) इत्येकं पण्डितंमन्यादीनाम् ॥ ११० ॥

(पु.स.न.) निन्दित, आज्ञा आदि — **ब्रह्मबन्धु(रधिक्षेपे निर्देशेऽ) (थावलम्बितः)** (आश्रित) ।

(पु.स.न.) संनिहित — **(अविदूरोऽ) प्यवष्टब्धः** (पु.स.न.) ख्यात, भूषित — **प्रसिद्धौ (ख्यातभूषितौ)** ॥ १११ ॥

**इति धान्ताः ॥**

ब्रेति—अधिक्षेपे निन्दाप्रयोगे यथा "हे ब्रह्मबन्धो दुष्टोऽसीति" विप्राचारहीने, निन्दितकर्मकारिणि वा निर्देशे आज्ञायाम् उपदेशे वा ब्रह्मबन्धुः स्यात् । ब्रह्मैव ब्राह्मणजातिः बन्धुरस्येति ब्रह्मबन्धुः "ब्रह्मबन्धुरधिक्षेपे निर्देशे च द्विजन्मनाम्" (इति विश्वः) इत्येकमधिक्षेपादेः । अथेति—अवलम्बितः आश्रितः, वस्त्रादिरुद्धो वा न विदूरं यस्येति अविदूरः सन्निहितः जीवितो रुद्धश्च वा अपिशब्दाद्बद्धश्च अवष्टब्धः स्यात् । अवष्टभ्यते स्म अवपूर्वकात्स्तभ्नोतेः स्तभ्नातेर्वा कर्मणि क्ते, धत्वे, जश्त्वे "अवाच्चालम्बनाविदूर्ययोः" इति षत्वे च अवष्टब्धः "अवष्टब्धोविदूरे स्यादाक्रान्ते चावलम्बिते" (इति मेदिनी) इत्येकमवलम्बितादेः । ख्यातः प्रख्यातः कथितो वा भूषितः वस्त्राभरणैरलंकृतश्च उभौ प्रसिद्धौ स्याताम् । प्रसिद्ध्यति, प्रसिद्ध्यते स्म वा प्रपूर्वकात्सेधतेः सिध्यतेर्वा कर्त्तरि, कर्मणि वा क्ते, धत्वे, दत्वे च प्रसिद्धः स्यादित्येकं ख्यातालंकृतयोः ॥ १११ ॥ इति धान्ताः ॥

---

## अथ नान्ता व्याख्यायन्ते ॥

सूर्य, आगी — **(सूर्यवह्नी) चित्रभानू*** (पु.) किरण या ललाम, सूर्य, ब्रह्मा — **भानू (रश्मिदिवाकरौ)** (पु.) ।

वपु, मूढ, नीच जाति — **भूतात्मानौ (धातृदेहौ)(मूर्खनीचौ) पृथग्जनौ** (पु.) ॥ ११२ ॥

---

* चित्रभानुः पुमान् वैश्वानरे चाहस्करेऽपि च "(इति कोषान्तरम्) ॥

सूरिति—सूर्यो दिवाकरः वह्निरग्निश्च उभौ चित्रभानू चित्रभानुपदवाच्यौ स्याताम् । चित्रा भानवो रश्मयोऽस्येति चित्रभानुः द्वित्वे चित्रभानू स्यातामित्येकं सूर्यादेः । रश्मिः किरणः हयरश्मिर्वा दिवाकरः सूर्यश्च उभौ भानू भानुपदवाच्यौ स्याताम् । भातीति विग्रहे 'भा दीप्तौ' अस्मादादादिकात्कर्तरि "दाभाभ्यां नुः" इति नौ भानुः द्वित्वे भानू "भानुरंशौ रवौ दिने" (इति कोषान्तरम्) इत्येकं किरणादीनाम् । धाता ब्रह्मा विष्णुर्वा देहः कायः उभौ भूतात्मानौ स्याताम् । भूतानामात्मा, भूतानि आत्मा स्वभावो यस्येति वा भूतात्मा द्वित्वे भूतात्मानौ स्यातामित्येकं धात्रादेः । मूर्खो मूढः नीचो हीनजातिः उभौ पृथग्जनौ स्याताम् । पृथक् कार्यो जनः शाकपार्थिवादित्वान्मध्यमपदलोपे पृथग्जनः द्वित्वे पृथग्जनौ स्यातामित्येकं मूढादेः ॥ ११२ ॥

पर्वत, पत्थर; बाण, पक्षी, वृक्ष, पहाड़, आगी, मोर.

(पु.) ग्रावाणौ (शैलपाषाणौ) (पु.) पत्रिणौ (शरपक्षिणौ) ।
(पु.) (तरुशैलौ) शिखरिणौ (पु.) शिखिनौ (वह्निबर्हिणौ) ॥११३॥

ग्रेति—शैलः पर्वतः, पाषाणः प्रस्तरः उभौ ग्रावाणौ स्याताम् । ग्रसत इति 'ग्रसु अदने' अस्माद्भौवादिकाड्डे, ग्रः, आवनति आङ्पूर्वकाद्वनतेर्विचि, आवाग्रश्चासावावा चेति ग्रावा द्वित्वे ग्रावाणौ "ग्रावा प्रस्तरे जलदे गिरौ" (इति विश्वः) इत्येकं शैलादीनाम् । शरो वाणो जलं वा पक्षी खगः उभौ पत्रिणौ स्याताम् । पत्राणि सन्त्यस्य "अत इति" इनौ दीर्घे च पत्री, द्वित्वे पत्रिणौ "पत्री श्येने रथे काण्डे खगद्रुरथिकाद्रिषु" (इति विश्वः) इत्येकं वाणादीनाम् । तरुर्वृक्षः, शैलः पर्वतः उभौ शिखरिणौ स्याताम् । शिखरमस्ति ययोरिति इनौ, शिखरिणौ "शिखरी स्यादपामार्गशैलपादपयोः पुमान्" (इति कोषान्तरम्) इत्येकं वृक्षादीनाम् । वह्निरग्निः बर्ही मयूरः उभौ शिखिनौ स्याताम् । शिखाः सन्त्यस्येति "द्वन्द्वोपतापेति" व्रीह्यादित्वाद्वा इनौ "यस्येति" आलोपे च शिखी द्वित्वे शिखिनौ "शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे । मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गकः" (इति मेदिनी) इत्येकमग्न्यादीनाम् ॥ ११३ ॥

वाञ्छा, अनुकूल, सारथी, सवार, घोड़ा, बाण, पखेरू.

(पु.) प्रतियत्नौ (उभौ लिप्सोपग्रहावथ) सादिनौ ।
(द्वौ सारथिहयारोहौ) वाजिनो (ऽश्वेषुपक्षिणः) ॥११४॥

प्रेति—लिप्सा वाञ्छा, उपग्रहो वन्दीग्रहणादिः उभौ प्रतियत्नौ स्याताम् । प्रतियतनम्, प्रतियत्यते वा प्रतिपूर्वकात् 'यती प्रतियत्ने' अस्माद्भौवादिकात् 'यत निकारादौ' चौरादिकाद्वा "यजयाचेति" नङि प्रतियत्नः द्वित्वे प्रतियत्नौ "प्रतियत्नश्च संस्कारलिप्सोपग्रहणेषु च" (इति मेदिनी) इत्येकं लिप्सादीनाम् ।

अथेति सारथिः सूतः, हयारोहः अश्वारोहश्चेमौ द्वौ सादिनौ स्याताम्। अवश्यं सीदति, सादयति वा 'षद्लृ विशरणादौ' अस्माद्भौवादिकाण्ण्यन्ताद्वा "आवश्यकेति" ग्रह्यादित्वाद्वा णिनौ वृद्धौ च सादी द्वित्वे सादिनौ "सादी तुरङ्गमातङ्गरथारोहेषु दृश्यते" (इति मेदिनी) इत्येकं सारथ्यादीनाम्। अश्वो घोटकः इषुर्बाणः, पक्षी विहंगश्च एते वाजिनो वाजिपदवाच्याः स्युः वाजाः पक्षाः सन्त्यस्य "अत इति" इनौ, अलोपे च वाजी, द्वित्वे वाजिनौ, बहुत्वे वाजिनः "वाजी बाणाश्वपक्षिषु" (इति मेदिनी) इत्येकमश्वादीनाम्॥ ११४॥

कुल, जन्मभूमि, बरस, किरण, तिन्नी पसाई या साठी, चन्द्रमा, आगी, सूर्य.

पु. (कुलेऽप्य)भिजनो (जन्मभूम्यामप्यथ) हायनाः। पु.

(वर्षार्चिर्व्रीहिभेदाश्च) (चन्द्राग्न्यर्का) विरोचनाः॥ ११५॥

किति—कुले मुख्यवंशे, जन्मभूम्यां जन्मस्थाने अपिशब्दात् ख्यातादौ च अभिजनः स्यात्। अभिजायतेऽस्मिन् अभिपूर्वकाज्जनेराधारे "हलश्च" इति घञि "जनिवध्योश्चेति" वृद्ध्यभावे च अभिजनः "अभिजनः कुले ख्यातौ जन्मभूम्यां कुलध्वजे" (इति विश्वः) इत्येकं कुलादीनाम्। अथेत्यनन्तरम् वर्षोऽब्दम्, अर्चिर्ज्वाला रश्मिर्वा, व्रीहिभेदो मुकुटमते नीवारादिः स्वामिमते तु षष्टिकश्च एते हायनाः हायनपदवाच्याः स्युः जहाति, जिहीते वा 'ओहाक् त्यागे, ओहाङ् गतौ' वा अस्माज्जौहोत्यादिकात् "हश्च व्रीहिकालयोरिति" ण्युटि, णित्त्वाद् युगागमे अनादेशे च हायनः "हायनो न स्त्रियां वर्षे पुंस्यर्चिर्व्रीहिभेदयोः" (इति मेदिनी) इत्येकं वर्षादीनाम्। चन्द्रो निशाकरः, अग्निर्वैश्वानरः अर्को दिवाकरश्च एते विरोचनाः विरोचनपदवाच्याः स्युः विरोचते विपूर्वकाद्रुचेः कर्त्तरि "अनुदात्तेतश्च हलादेरिति" युचि, गुणे, अनादेशे च विरोचनः, द्वित्वे विरोचनौ, बहुत्वे विरोचनाः "विरोचनः प्रह्लादस्य तनयेऽर्केऽग्निचन्द्रयोः" (इति मेदिनी) इत्येकं चन्द्रादीनाम्॥ ११५॥

बाल, वरुण, वासुदेव, सूर्य, देवताओं का कारीगर, उपाय, धृति, बुद्धि, स्वभाव, ब्रह्म, शरीर.

पु. पु.

(केशेऽपि) वृजिनो विश्वकर्मा(र्कसुरशिल्पिनोः)।

आत्मा (यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च)॥ ११६॥

कयिति—केशे कचे वरुणे, वासुदेवे वा अपिशब्दात्कल्मषादौ वृजिनः स्यात्। वृज्यते 'वृजी वर्जने' अस्मादादादिकात्कर्मणि "वृजेः किच्चेति" इनिनि कित्त्वाद्गुणाभावे च वृजिनः "वृजिनं कल्मषे क्लीबं केशे ना कुटिले त्रिषु" (इति रभसः) इत्येकं चिकुरादीनाम्। अर्कः सूर्यः, सुरशिल्पी देवशिल्पी अनयोर्विश्वकर्मा स्यात्।

विश्वं कर्म अस्मादस्येति वा विश्वकर्मा " विश्वकर्मा सहस्रांशौ मुनिभिद्देवशिल्पिनोः " ( इति मेदिनी ) इत्येकं सूर्यादीनाम् । यत्नः परिश्रमः, उद्योगो वा धृतिस्तुष्टिर्धारणां सुखं वा बुद्धिर्ज्ञानम्, सांख्योक्तसुखदुःखाद्यष्टविधधर्मवत्प्रकृतिपरिणामभेदो वा स्वभावः स्वकीयधर्मो निजगुणो वा ब्रह्म परमात्मा " यस्मात्प्रजाः प्रजायन्ते तद्ब्रह्मेति विदुर्बुधाः " ( इति श्रुतेः ) वर्ष्म देहश्च आत्मा स्यात् । अतति सततं व्याप्नोति 'अत सातत्यगमने' अस्माद्भौवादिकात् " सातिभ्यामनिन्मनिणाविति " मनिणि, णित्त्वाद्वृद्धौ, परत्वादुपधादीर्घे, सुलोपे, नलोपे च आत्मा " आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च " ( इति धरणिः ) इत्येकं यत्नादीनाम् ॥ ११६ ॥

इन्द्र, हिंसक, मतवाला हाथी, वर्षा करनेवाला मेघ, धनादिका गर्व, स्नेह, मारडालना.

(शक्रो घातुकमत्तेभो वर्षुकाब्दो) घनाघनः पु. ।
अभिमानो पु. ( ऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः ) ॥ ११७ ॥

शेति—शक्रः इन्द्रः, घातुकमत्तेभः घातुकश्चासौ मत्तेभश्चेति कर्मधारये हिंसकमत्तहस्ती क्रूरप्रमत्तकरी वा वर्षुकाब्दः वर्षणशीलो वारिदश्च घनाघनः स्यात् । केचित्तु " शक्रघातुकमत्तेभवर्षुकाब्दा घनाघनाः " इति बहुवचनान्तं पठन्ति तन्मते शक्रः दिवस्पतिः, घातुकः हिंसकः, मत्तेभो मत्तवारणः, वर्षुकाब्दः वर्षाकारी मेघः संवत्सरो वा एते घनाघनाः स्युः । हन्तीति विग्रहे " हन्तेर्घत्वं चेति " पचाद्यचि, द्वित्वे, अभ्यासस्यागमे, कुत्वे च घनाघनः " अन्योन्यघट्टने चैव घातुके च घनाघनः " (इति धरणिः) इत्येकमिन्द्रादीनाम् । अर्थादिदर्पे अर्थो धनं वस्तु वा आदिना कुलपशुगुणादिग्रहस्तेषां दर्पे गर्वे, अज्ञाने विवेकरहिते अविद्यायां वा ज्ञाने विवेके विद्यायां वा प्रणयहिंसयोः प्रणयः स्नेहः हिंसा प्राणवियोगानुकूलव्यापारश्च अनयोरभिमानः स्यात् । अभिमननम् अभिपूर्वाद्दैवादिकान्मनेर्भावे घञि वृद्धौ च अभितः सर्वतो मानो वेत्यभिमानः स्यादित्येकं वित्तादिगर्वादीनाम् ॥ ११७ ॥

बादल, कठिनता, कठोर, सघन, सूर्य, स्वामी, चन्द्रमा, रजपूत, राजा.

घनो पु.स.न. ( मेघे मूर्त्तिगुणे त्रिषु मूर्त्ते निरन्तरे ) ।
इनः पु. (सूर्ये प्रभौ) राजा पु. (मृगाङ्के क्षत्रिये नृपे) ॥ ११८ ॥

घेति—मेघे वारिदे, मूर्त्तिगुणे काठिन्ये, मूर्ते कठिने, कठोरे वा निरन्तरे सान्द्रे, सघने, निविडे वा घनस्त्रिषु त्रिलिङ्ग्यां स्यात् । हननम्, हन्यते वा हन्तेर्भावकर्मणोः " मूर्तौ घनः " इत्यपि, घनादेशे च घनः " घनं सान्द्रं घनं वाद्यं घनो मुस्तो घनोऽम्बुदः । घनः काठिन्यसंघातो विस्तारो लोहमुद्गरः " ( इति धरणिः ) इत्येकं मेघा-

दीनाम् । सूर्ये दिवाकरे प्रभौ स्वामिनि अधिपे नृपे वा इनः स्यात् । एति, ईयते वा ' इण् गतौ ' अस्मादादादिकात् कर्तरि, कर्मणि वा " इणसिञ्जीति " नकि, इनः " इनः सूर्ये नृपे पत्यौ " (इति कोषान्तरम्) इत्येकं सूर्यादीनाम् । मृगाङ्के चन्द्रमसि, क्षत्रिये क्षत्रियजातौ, नृपे नृपतौ प्रभौ वा राजा स्यात् । राजति, राजते वा राजेः कर्तरि " कनिन् युवृषीति " कनिनि परत्वादुपधादीर्घे, सुलोपे, नलोपे च राजा " राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात् " ( इति मेदिनी ) इत्येकं निशाकरादीनाम् ॥ ११८ ॥

नाचनेवाली, दूती, नदी, सेनाभेद, वज्र, बिजली, बांदा आदि.

**स.* वाणिन्यौ (नर्तकीदूत्यौ) (स्रवन्त्यामपि) वाहिनी स. ।**
**स. ह्रादिन्यौ (वज्रतडितौ) (वन्दायामपि) कामिनी स.॥११९॥**

वेति—नर्तकी लासिका नृत्यकारिणी वेश्या वा दूती संचारिका मत्ता वा उभे वाणिन्यौ स्याताम् । अवश्यं वणति ' वण शब्दे ' अस्माद्भौवादिकात्कर्तरि " आवश्यकेति " ग्रह्यादित्वाद्वा णिनौ, वृद्धौ, ङीपि च वबयोरैक्याद् वाणिनी " वाणिनी नर्तकीमत्ताविदग्धावनितासु च " ( इति मेदिनी ) इत्येकं नर्तक्यादीनाम् ; स्रवन्त्यां नद्याम्, ओषध्यां वा अपिशब्दात्सेनायां सैन्यभेदे च वाहिनी स्यात् । वहतीति विग्रहे ग्रह्यादित्वाण्णिनौ, वृद्धौ, ङीपि च वाहिनी " वाहिनी स्यात्तरङ्गिण्यां सेनासैन्यप्रभेदयोः " ( इति विश्वः ) इत्येकं नद्यादीनाम् । वज्रं कुलिशम्, तडिद्विद्युत् उभे ह्रादिन्यौ स्याताम् । ह्रादतेऽवश्यम् ह्रादेः कर्तरि " आवश्यकेति " णिनौ, वृद्धौ, ङीपि च ह्रादिनी द्वित्वे ह्रादिन्यौ " ह्रादिनी वज्रविद्युतोः " ( इति कोषान्तरम् ) इत्येकं वज्रादीनाम् । वन्दायां वृक्षादन्याम् वृक्षे विजातीयप्ररोहे वा अपिशब्दाद्भीरौ विलासिन्यां स्त्रीमात्रायां च कामिनी स्यात् " कामिनी भीरुवन्दयोः " ( इति मेदिनी ) इत्येकं वन्दादीनाम् ॥ ११९ ॥

खाल, देह, गलशुण्डी, याग, विस्तार, कमीना, मूढ़, कार्य, ध्वजा, निमन्त्रण.

**(त्वग्देहयोरपि) तनुः स. सूना स. ( धोजिह्विकापि च) ।**
**(क्रतुविस्तारयोरस्त्री) वितानं न. (त्रिषु तुच्छके)॥ १२० ॥**
**(मन्देऽथ) केतनं न. ( कृत्ये केतावुपनिमन्त्रणे ) ।**

त्वगिति—त्वग् वल्कलं चर्म वा देहः कायः उभयोः, अपिशब्दादल्पे, विरले, कृशे च ' तनुः ' स्यात् तनोति, तन्यते वा तनोतेः कर्तरि कर्मणि वा " भृमृशीति " उप्रत्यये तनुः " तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे " ( इति मेदिनी ) " कृषिचमि-

* " वाणिनीशब्दो मेदिन्यां पवर्गीयादौ पठितः । हैमे तु अन्तस्थादौ पठितः । एवं वाहिनीशब्दोऽपि बोद्धव्यः ॥

तनीति " ऊप्रत्ययेतु तनूरपि इत्येकं त्वगादीनाम् । अधोजिह्विका गलकण्ठिका गलघण्टिका रोगविशेषो वा अपिशब्दात् पुन्नी, वधालयश्च सूना स्यात् । सवनम्, सूयते वा 'षूङ् प्राणिगर्भविमोचने' अस्माददादिकाद्भावे, कर्मणि वा क्ते, ओदित्त्वात् "ओदितश्चेति" निष्ठानत्वे, टापि च सूना " सूना पुत्र्यांवधस्थानगलशुण्डिकयोरपि " (इति विश्वः) इत्येकं गलशुण्डिकादेः । क्रतुर्यज्ञः, विस्तरो व्यासश्च अनयोर्वितानम् अस्त्री पुन्नपुंसकं स्यात् । तुच्छके शून्ये रिक्तके वा मन्दे मूढे च त्रिषु त्रिलिङ्ग्यां स्यात् । विततनम्, वितन्यते वा विपूर्वकात्तनोतेर्भावे, कर्मणि वा घञि, वृद्धौ च वितानम् " वितानो यज्ञ उल्लोचे विस्तारे पुंनपुंसकम् । क्लीवं वृत्तविशेषे स्यात्त्रिलिङ्गो मन्दतुच्छयोः " (इति मेदिनी) इत्येकं क्रतुकर्मादीनाम् । अथेत्यनन्तरम् कृत्ये कार्ये, केतौ ध्वजे, उपनिमन्त्रणे, आमन्त्रणे, निवासे च 'केतनं' स्यात् । केतनम्, कित्यते, अनेन, अत्रेति वा 'कित निवासादौ' अस्माद्भौवादिकाद्भावकर्मकरणाधिकरणेषु ल्युटि गुणे अनादेशे च केतनम् " केतनं तु ध्वजे कार्ये निमन्त्रणनिवासयोः " (इत्यजयः) इत्येकं कृत्यादीनाम् ॥ १२० । ३/१ ॥

न. पु.

वेद, तत्त्व, तपस्या, ब्राह्मण, प्रजापति. **(वेदस्तत्त्वं तपो) ब्रह्म ब्रह्मा (विप्रः प्रजापतिः) ॥ १२१ ॥**

वयिति—वेदः श्रुतिः, ऋग्यजुस्सामेति त्रयो वेदा वा ज्ञानम्, ज्ञानशास्त्रम्, तत्साधनं वा तत्त्वं विलम्बितनृत्यभेदः, परमेश्वरस्य सारो मूलं, यथार्थः, सत्यादिकारणम्, चैतन्यः, परमात्मा, सांख्यशास्त्रोक्तप्रकृत्यादयः पञ्चविंशतिः पदार्था वा तपो ग्रीष्मऋतुः कृच्छ्रादिकर्म च ब्रह्म स्यात् । बृंहति 'बृहि वृद्धौ' अस्माद्भौवादिकात्कर्तरि " बृंहेर्नोऽच्चेति " मनिनि, नस्याकारे च ब्रह्म स्यादित्येकं वेदादेः । विप्रो, ब्राह्मणः ऋत्विग्योगयुक्तो वा प्रजापतिः विधाता, दक्षादिर्वा जामाता, वैश्वानरः, दिवाकरस्त्वष्टा वा ब्रह्मा स्यात् । बृंहति वर्धयति प्रजाः अन्तर्भावितण्यर्थाद्बृंहेर्मनिनि नस्यादादेशे दीर्घे, सुलोपे, नलोपे च ब्रह्मा " ब्रह्मा तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे चाध्यात्मज्ञानयोस्तथा" (इति मेदिनी) इत्येकं विप्रादीनाम् ॥ १२१ ॥

न.

उत्साह, हिंसा, सूचन, प्रकाशन, **(उत्साहने च हिंसायां सूचने चापि) गन्धनम् ।**

न.

जविन, वेग, तर्पण. **आतञ्चनं (प्रतीवापजवनाप्यायनार्थकम्) ॥ १२२ ॥**

उदिति—उत्साहने उत्साहे उत्थापने वा हिंसायां प्राणवियोगानुकूलव्यापारे क्रूरकर्मणि वा सूचने परदोषाविष्करणे अपिशब्दात्सत्यासत्यप्रकाशने च 'गन्धनम्' स्यात् । गन्धितम्, 'गन्ध अर्दने' अस्माच्चौरादिकाद्भावादौ ल्युटि, अनादेशे च गन्धनम् " गन्धनं सूचनोत्साहहिंसनेषु प्रकाशने " (इति विश्वः) इत्येकमुत्साहनादेः ।

प्रतीवापो दुग्धादौ दध्यादिभावार्थे तक्रादिप्रक्षेपः, निक्षेपो वा जवनं वेगः आप्यायनं तर्पणम् तान्येव अर्थो यस्येति आतञ्चनं स्यात् । आतञ्चितम् आङ्पूर्वकात्तञ्चेर्भावादौ ल्युटि, अनादेशे च 'आतञ्चनम्' स्यादित्येकं प्रतीवापादेः ॥ १२२ ॥

चिह्न, दाढ़ी, मूछ, गीलाकरना, अङ्गभेद, लोकापवाद, पश्वादिकों का युद्ध.

**न. व्यञ्जनं ( लाञ्छने श्मश्रुनिष्ठानावयवेष्वपि ) ।**

**न. (स्या)त्कौलीनं(लोकवादे युद्धे पश्वहिपक्षिणाम्)॥१२३॥**

व्येति—लाञ्छने चिह्ने, श्मश्रुणि लोमवृद्धौ पुंमुखे, निष्ठाने तेमने अवयवे स्त्रीपुरुषयोरङ्गभेदेऽपि व्यञ्जनं स्यात् । व्यक्तम्, व्यज्यते अनेनेति वा विपूर्वकादञ्जेर्भावादौ ल्युटि अनादेशे च व्यञ्जनम् "व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेऽपि च" ( इति मेदिनी ) इत्येकं लाञ्छनादेः । लोकवादे लोकापवादे, पश्वहिपक्षिणां पशुर्मृगादिः अहिः सर्पो वृत्रासुरो वा पक्षी खगः एषां युद्धे संग्रामे च कौलीनं स्यात् । कुलीनस्य कर्म भावो वा "युवादयणि" वृद्धौ च कौलीनम् "कौलीनं पशुभिर्युद्धे कुलीनत्वापवादयोः" ( इति धरणिः ) इत्येकं कौलीनादेः ॥ १२३ ॥

निकलना, वनभेद, प्रयोजन, सावकाश, टिकना, खेलना आदि.

**न. (स्या) दुद्यानं ( निःसरणे वनभेदे प्रयोजने ) ।**

**(अवकाशे स्थितौ)स्थानं न. (क्रीडादावपि)देवनम् न.॥१२४॥**

स्यादिति—निःसरणे गेहादिभ्यो निःसृतौ, वनभेदे राज्ञः साधारणे वने उपवने वा प्रयोजने अर्थे, कार्ये, कारणे वा उद्यानं स्यात् । उद्यात्यनेन, अस्मिन्निति वा उत्पूर्वकात् 'या प्रापणे' अस्मादादादिकात् "करणाधिकरणयोश्चेति" ल्युटि अनादेशे च उद्यानम् "उद्यानं वनभेदे स्यान्निःसृतौ च प्रयोजने" ( इति धरणिः ) इत्येकं निःसरणादीनाम् । अवकाशे अवसर सावकाशे वा स्थितौ गतिनिवृत्तौ, गृहे च स्थानं स्यात् । स्थितम्, स्थीयतेऽत्रेति वा तिष्ठतेर्भावाधिकरणयोर्ल्युटि अनादेशे च स्थानम् "स्थानं सादृश्यऽवकाशे स्थितौ वृद्धिक्षयेतरे" ( इति मेदिनी ) इत्यकमवकाशादेः । क्रीडा खेला, लीला च आदिना विजिगीषादिग्रहः अपिशब्दादक्षेपु च देवनं स्यात् । द्यूतम्, दीव्यतेऽनेनेति वा 'दिवु क्रीडादौ' अस्माद्भावकरणादौ ल्युटि, गुणे, अनादेशे च देवनम् "देवनं व्यवहारे स्याज्जिगीषाक्रीडयोरपि । अक्षेषु देवनः प्रोक्तः" ( इति विश्वः ) इत्येकं क्रीडादीनाम् ॥ १२४ ॥

पौरुष, तन्त्र, बैठे हुए का उठना, तिरस्कार, विरोधाचरण.

**न. उत्थानं ( पौरुषे तन्त्रे सन्निविष्टोद्गमेऽपि च ) ।**

**न. व्युत्थानं(प्रतिरोधे च विरोधाचरणेऽपि च) ॥ १२५ ॥**

उदिति—पौरुषे=उद्योगे, प्रशंसने, पराक्रमादौ वा, तन्त्रे=कुटुम्बकृत्ये, सिद्धान्ते, औषधोत्तमे, प्रधाने, तन्तुवाने, शास्त्रभेदे, परिच्छदे, श्रुतिशाखान्तरे, हेतौ, उभयार्थ-प्रयोजके वा, सन्निविष्टस्य उद्गमे अपिशब्दात्पुस्तकरणाहर्षेषु चशब्दान्मलवेगेऽपि उत्थानं स्यात् । उत्थितम्, उत्थीयतेऽनेनेति वा उत्पूर्वकात्तिष्ठतेर्भावादौ ल्युटि अना-देशे सस्य थे, थलोपे, उदो दस्य चर्त्वेन तत्वे च उत्थानम् "उत्थानमुद्यमे तन्त्रे पौरुषे पुस्तके रणे । प्राङ्गणोद्गमहर्षेषु मलवेगेऽपि न द्वयोः" (इति मेदिनी) इत्येकं पौरुषा-दीनाम् । प्रतिरोधे तिरस्कारे, बाधे, प्रतिबन्धे, निरोधे वा विरोधाचरणे चौर्यादि-विरुद्धाचरणे अपिशब्दात्स्वतन्त्राचरणे च व्युत्थानं स्यात् । विरुद्धमुत्थानम् "प्रादयो गतेति" समासे व्युत्थानम् "स्वतन्त्रता च व्युत्थानम्" (इति त्रिकाण्डशेषः) इत्येकं प्रतिरोधादीनाम् ॥ १२५ ॥

प्रेतक्रिया, गमन, धनका उपजाना, निर्वर्तन, उपकरण, अनुगमन. **(मारणे मृतसंस्कारे गतौ द्रव्योपपादने ।**
**निर्वर्तनोपकरणानुव्रज्यासु च ) साधनम् ॥ १२६ ॥** न.

मेति—मारणे निर्वापणे, वधे वा मृतस्य परेतस्य संस्कारे दाहादिकर्मणि, गतौ गमने, द्रव्योपपादने धनोपपादने 'द्रव्येऽर्थदापने' इति पाठे तु द्रव्ये धातुमात्रे पृथि-व्यादिपञ्चभूतके वा, अर्थस्य धनादिकस्य दापने, निर्वर्तने अर्थसिद्धौ उपकरणे साधनसामग्र्याम्, परिकरे, उपाये, व्यञ्जनादौ वा अनुव्रज्यायामनुगमने च शब्दा-त्सैन्ये, सिद्धौषधे, मेढ्रे च साधनं स्यात् । साद्धम्, साध्यते, अनेनेति वा साध्नोते-र्भावकर्मकरणादौ ल्युटि, अनादेशे च साधनम् "साधनं मृतसंस्कारे सैन्ये सिद्धौषधौ गतौ । निर्वर्तनोपायमेढ्रदापनेऽनुगमे धने" (इति मेदिनी) इत्येकं मारणादीनाम्॥ १२६॥

वैरका मिटाना, दान देना, धरोहरका फेरना, विपदा, नीचे गिरना, कामज और कोपज दोष. **निर्यातनं (वैरशुद्धौ दाने न्यासार्पणेऽपि च ) ।** न.
**व्यसनं (विपदि भ्रंशे दोषे कामजकोपजे) ॥ १२७ ॥** न.

निरिति—वैरशुद्धौ वैरस्य प्रतीकारे दाने गोधनादिप्रदाने न्यासार्पणे उपनिधिप्रति-दानेऽपि च निर्यातनं स्यात् । निर्यातितम्, निर्यात्यते, अनेनेति वा निरपूर्वकाद् 'यत निकारादौ' अस्माच्चौरादिकात्स्वार्थण्यन्ताद्भावादौ ल्युटि, अनादेशे, णिलोपे च 'निर्यातनं' स्यादित्येकं वैरप्रतीकारादीनाम् । विपदि विपत्तौ, भ्रंशे विनाशने अधः-पतने वा कामजकोपजे दोषे कामजे दोषे मृगयाक्षपानादौ, कोपजे वाक्पारुष्यदण्ड-पारुष्यार्थदूषणादौ च व्यसनं स्यात् । व्यस्तम्, व्यस्यते, अनेनेति वा विपूर्वकाद् 'असु क्षेपणे' अस्माद्देवादिकाद्भावादौ ल्युटि, अनादेशे च व्यसनम् "व्यसनं त्वशुभे

सक्तौ पानस्त्रीमृगयादिषु । दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे " (इति विश्वः) इत्येकं विपदादीनाम् ॥ १२७ ॥

वरौनी, केसर, सूत आदि का बड़ा सूक्ष्मभाग, तिथिभेद, उत्सव, पलकमार्ग.

न. पक्ष्मा (क्षिलोम्नि किञ्जल्के तन्त्वाद्यंशेऽप्यणीयसि) ।
‡ न. न. (तिथिभेदे क्षणे) पर्व वर्त्म (नेत्रच्छदेऽध्वनि) ॥ १२८ ॥

पेति—अक्षिलोम्नि नेत्रलोमनि, किञ्जल्के केसरे, अणीयसि तन्त्वाद्यंशे सूत्रादि सूक्ष्मांशेऽपि पक्ष्म स्यात् । पक्ष्यते, अनेनेति वा 'पक्ष परिग्रहे' अस्माद्भौवादिकात्कर्मकरणादौ मनिनि, सुलुकि, न लोपे च पक्ष्म "पक्ष्मसूत्रादिसूक्ष्मांशे किञ्जल्के नेत्रलोमनि" (इति विश्वः) इत्येकं नेत्रलोमादीनाम् । तिथीनां चतुर्दश्यष्टम्यावास्यापौर्णमासीनां भेदे, क्षणे उत्सवे, अवसरे, मध्ये वा दशलवपरिमितकाले च पर्व स्यात् । पर्वति, पर्व्यते वा 'पर्व पूरणे' अस्माद्भौवादिकात्कर्तरि कर्मणि वा बाहुलकात्कनिनि, सुलुकि, नलोपे च पर्व "पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे विषुवादिषु । दर्शप्रतिपदोः सन्धौ स्यात्तिथेः पञ्चकान्तरे" (इति धरणिः) इत्येकं तिथिभेदादीनाम् । नेत्रच्छदे नयनच्छदचर्मपुटके, अध्वनि मार्गे च वर्त्म स्यात् । वर्तते, अनेन, अस्मिन्निति वा वृतेः कर्तृकरणाधिकरणेषु मनिनि वर्त्म स्यादित्येकं नयनच्छदादीनाम् ॥ १२८ ॥

अकार्य, लिङ्गाच्छादक वस्त्र, संगति, सुरत, परमात्मा, प्रज्ञा, बुद्धि, निशान.

न. न. (अकार्यगुह्ये) कौपीनं मैथुनं (संगतौ रते) ।
न. न. प्रधानं (परमात्मा धीः) प्रज्ञानं (बुधिचिह्नयोः) ॥१२६॥

अकेति—अकार्ये कार्याभावे अयोग्यकर्मणि वा गुह्ये उपस्थच्छदवस्त्रविशेषे च 'कौपीनम्' स्यात् । कूपपतनमर्हति "शालीनकौपीने अधृष्टाकार्ययोः" इति खञि, वृद्धौ, ईनादेशे, अलोपे च कौपीनम् "कौपीनं स्यादकार्येऽपि चीरगुह्यप्रदेशयोः" (इति विश्वः) इत्येकमकार्यादेः । संगतौ भार्यादिसंगमे, संबन्धे वा रते सुरते च मैथुनं स्यात् । मिथुनमेव मिथुनस्येदं वा प्रज्ञाद्यणि, इदमर्थीयेऽणि वा वृद्धौ, अलोपे च मैथुनम् "संबन्धे * सुरते युग्मे राशौ मिथुनमिष्यते" (इति व्याडिः) इत्येकं मैथुनादेः । परमात्मा परब्रह्म, धीः प्रज्ञा च प्रधानं स्यात् । प्रधत्ते, प्रधीयतेऽनेन, अत्रेति वा प्रपूर्वकाद्दधातेः कर्तृकरणादौ ल्युटि अनादेशे च प्रधानम् "प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि । प्रज्ञायामपि च क्लीबमेकत्वे तूत्तमे सदा" (इति

‡ "चतुर्दश्यष्टमी कृष्णा अमावास्या च पूर्णिमा । पर्वाण्येतानि राजेन्द्र ! रविसंक्रमणं तथा ॥ १ ॥

* सम्बन्ध, सुरत, जोड़ा और ज्योतिष में तीसरी राशि ये 'मिथुन' कहलाते हैं और उस के कर्म को 'मैथुन' कहते हैं ॥

मेदिनी ) इत्येकं परमात्मादेः । बुद्धिः मनीषा, चिह्नं लाञ्छनं च अनयोः प्रज्ञानं स्यात् । प्रज्ञायते, अनेन वा प्रपूर्वकाज्ज्ञानातेः कर्मकरणादौ ल्युटि, अनादेशे च 'प्रज्ञानम्' स्यादित्येकं बुद्ध्यादेः ॥ १२९ ॥

फूल, फल, कुल विनाश, रोना, बुलाना, देह, प्रमाण.

**न. प्रसूनं (पुष्पफलयो)र्निधनं(कुलनाशयोः)। न.**
**न. क्रन्दने (रोदनाह्वाने) वर्ष्म (देहप्रमाणयोः)॥१३०॥ न.**

प्रेति—पुष्पं कुसुमम्, फलं नारिकेलादिकं च अनयोः प्रसूनं स्यात् । प्रसूयते प्रपूर्वकात्सुनोतेः कर्मणि "सुञोदीर्घश्चेति" ने, दीर्घे च प्रसूनम् "प्रसूनं तु प्रसूते फलपुष्पयोः" ( इति हैमः ) इत्येकं पुष्पादेः । कुलं गोत्रम्, नाशो विनाशः उभयोर्निधनं स्यात् । निधानम्, निधीयतेऽत्रेति वा निपूर्वकाद्धाञोभावादौ "कृपृवृजीति" क्यौ, अनादेशे, आलोपे च निधनम् "निधनं स्यात्कुले नाशे" ( इति मेदिनी ) इत्येकं कुलादेः । रोदनमस्रुविमोचनम्, आह्वानमाहूतं च उभे क्रन्दने स्याताम् । क्रन्दितम् क्रन्दतेर्भावे ल्युटि अनादेशे च क्रन्दनम् द्वित्वे क्रन्दने "क्रन्दने रोदनेऽपि स्यादाह्वानेऽपि" ( इति मेदिनी ) इत्येकं रोदनादेः । देहः स्थूलं सूक्ष्मकारणशरीरम्, प्रमाणं यथार्थज्ञानम् इयत्ता वा उभयोर्वर्ष्म स्यात् । वर्षति, वृष्यते वा वृषेः कर्तरि, कर्मणि वा मनिनि, सुलुकि, नलोपे च वर्ष्म "वर्ष्मदेहप्रमाणातिसुन्दराकृतिषु स्मृतम्" ( इति मेदिनी ) इत्येकं देहादेः ॥ १३० ॥

घर, देह, दीप्ति, प्रभाव, चौराहा, अच्छावासस्थान, निशान, प्रधान.

**न. (गृहदेहत्विट्प्रभावा) धामा (न्यथ चतुष्पथे।**
**सन्निवेशे च) संस्थानं लक्ष्म(चिह्नप्रधानयोः)॥१३१॥ न. न.**

ग्रिति—गृहं गेहम्, देहः कायस्त्रिविधशरीरं वा त्विट् दीप्तिः, छविर्वा प्रभावः प्रतापः कोषदण्डाज्जायमानं तेजो वा एते धामानि स्युः । दधाति, धीयते वा धाञ कर्त्तरि कर्मणि वा मनिनि धाम द्वित्वे धामनी बहुत्वे धामानि "धाम शक्तौ प्रभावे च तेजोमन्दिरजन्मसु" ( इति विश्वः ) इत्येकं गेहादीनाम् । अथेत्यनन्तरं चतुष्पथे शृङ्गाटके, संनिवेशे निकर्षणे अवयवानां विभागे वा चशब्दान्मरणेऽपि संस्थानं स्यात् । संस्थितम्, संस्थीयतेऽनेन, अत्रेति वा संपूर्वकात्तिष्ठतेर्भावकरणाधिकरणेषु ल्युटि अनादेशे च संस्थानम् "संस्थानमाकृतौ मृत्यौ सन्निवेशे चतुष्पथे" ( इति मेदिनी ) इत्येकं चतुष्पथादीनाम् । चिह्नम् लाञ्छनम्, प्रधानं परमात्मा प्रकृतिः प्रज्ञादिर्वा उभयोर्लक्ष्म स्यात् । लक्ष्यते, अनेन वा लक्षयतेः कर्मसाधनयोर्ल्युटि, णिलोपे, अनादेशे च लक्ष्म "लक्ष्मप्रधानचिह्नयोः" ( इति मेदिनी ) इत्येकं लाञ्छनादेः ॥ १३१ ॥

छिपाना, ढांपना, साधन, लाभ, सन्तोष.

न.
आच्छादने ( संपिधानमपवारणमित्युभे ) ।
न.
आराधनं (साधने स्यादवाप्तौ तोषणेऽपि च) ॥ १३२ ॥

आचिति—संपिधानं तिरोधानम्, अपवारणं वस्त्रादिभिः परिवारणं वस्त्रं वा उभे आच्छादने स्याताम् । आच्छादितम्, आच्छाद्यतेऽनेन वा आङ्पूर्वकात् 'छद अपवारणे' अस्माच्चौरादिकाद्भावसाधनयोर्ल्युटि, अनादेशे च आच्छादनम् द्वित्वे आच्छादने "आच्छादनं संपिधाने वस्त्रेऽपवृत्तिमात्रके" ( इति धरणिः ) इत्येकमपवारणादेः । साधने निर्वर्तने, उपकरणे अनुगमने वा अवाप्तौ लाभे, संप्राप्तौ वा तोषणे संतोषेऽपि च आराधनं स्यात् । आराध्यतेऽनेन आङ्पूर्वकाद्राध्नोतेः करणे ल्युटि अनादेशे च आराधनं स्यादित्येकं साधनादेः ॥ १३२ ॥

पहिया, नगर, प्रताप, चढ़ाई या परमासन, प्रधान, मणि, जल, जंगल.

न.
अधिष्ठानं ( चक्रपुरप्रभावाध्यासनेष्वपि ) ।
न. न.
रत्नं ( स्वजातिश्रेष्ठेऽपि ) वने ( सलिलकानने ) ॥ १३३ ॥

अधीति—चक्रं रथाङ्गम्, पुरं नगरम्, प्रभावः प्रतापः, अध्यासनमाक्रमणम्, अपिशब्दात्परमासनं च एषु अधिष्ठानं स्यात् । अधिष्ठितम्, अधिष्ठीयते, अनेन वा अधिपूर्वकात्तिष्ठतेर्भावादौ ल्युटि, अनादेशे "उपसर्गात्सुनोतीति" सस्य षत्वे च अधिष्ठानम् "अधिष्ठानं रथस्याङ्गे प्रभावेऽध्यासने पुरे" इत्येकं चक्रादीनाम् । स्वजातिश्रेष्ठे आत्मजातिप्रधाने, स्वकीयजात्युत्तमे वा अपिशब्दान्मणौ च रत्नं स्यात् । रमयति, रमतेऽस्मिन्निति वा अन्तर्भावितण्यार्थाद्रमेः कर्तरि, अण्यन्तादाधारे वा "रमेस्तच" इति ने, "नेड्वशीति" इडभावे, णिलोपे, मस्य तत्वे च रत्नम् "रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्" ( इति मेदिनी ) इत्येकं स्वजातिप्रधानादीनाम् । सलिलं जलम्, काननं विपिनम् उभे वने वनपदवाच्ये स्याताम् । वनति, वनुते वा भौवादिकात्तानादिकाद्वा वनेः कर्तरि पचाद्यचि वन्यते इति विग्रहे तु कर्मणि "अकर्तरीति" घञि, संज्ञापूर्वकत्वाद्वृद्ध्यभावे च वनम् द्वित्वे वने "क्लीबं स्यात्कानने नीरे निवासे निलये वनम्" ( इति रभसः ) इत्येकं जलादीनाम् ॥ १३३ ॥

बिरला, थोड़ा, पण्डित, बराबर, मुखिया, क्रूर, सूचक या चुग़ल.

न.
तलिनं ( विरले स्तोके ) ( वाच्यलिङ्गास्तथोत्तरे ) ।
पु.स.न. पु.स.न.
समानाः ( सत्समैकेस्युः ) पिशुनौ ( खलसूचकौ ) ॥ १३४ ॥

तेति—विरले अन्तरसमेते, स्तोके अल्पे, "शय्यायाम्, विरले, तुच्छे, स्वच्छे" च

तलिनं स्यात् । तलति, तल्यते वा ' तल प्रतिष्ठायाम्' अस्माद्भौवादिकात्कर्तरि, कर्मणि वा " तलिपुलिभ्यां चेति " इननि तलिनम् " तलिनं विरले स्तोके स्वच्छेऽपि वाच्यलिङ्गकम् " ( इति मेदिनी ) इत्येकं विरलादीनाम् । तथा तलिनवत् उत्तरे आनान्ताद्वक्ष्यमाणाश्शब्दा वाच्यलिङ्गास्त्रिलिङ्गाः स्युः । सन् सुधीः, समः सदृशः, एको मुख्योऽद्वितीयो वा एते समानाः स्युः । समति 'षम वैक्लव्ये' अस्माद्भौवादिकात्कर्तरि " ताच्छील्यवयोवचनशक्तिष्विति " आनशि " आगमशासनमनित्यमिति " न्यायान्मुगागमाभावे च सहमानेन वर्तते, इति वा समानः द्वित्वे समानौ बहुत्वे समानाः " समानं सत्समैकेषु त्रिषु ना नाभिमारुते " ( इति मेदिनी ) इत्येकं सदादीनाम् । खलो दुर्जनोऽधमो वा, सूचको निन्दकः शिक्षको बोधको वा उभौ पिशुनौ स्याताम् । पिंशति ' पिश अवयवे ' अस्मात्तौदादिकात्कर्तरि " क्षुधिपिशिमिथिभ्यः कित् " इत्युननि कित्त्वाद्गुणाभावे च पिशुनः द्वित्वे पिशुनौ " पिशुनं कुङ्कुमेऽपि च । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु " ( इति मेदिनी ) इत्येकं खलादीनाम् ॥ १३४ ॥

कमती या न्यून, पु.स.न. पु.स.न. पु.स.न.
निन्द्य,वेगवान्, बलवान्, अपराधी, वैरिग्रस्त, विपदा में प्राप्त हुआ.

**हीनन्यूना ( वूनगर्ह्यौ ) ( वेगिशूरौ ) तरस्विनौ ।**
पु.स.न.
**अभिपन्नौ (ऽपराद्धोऽभिग्रस्तव्यापद्गता अपि) ॥ १३५॥**

हीति—ऊनः स्वल्पः, गर्ह्यो निन्द्यः उभौ हीनन्यूनौ स्याताम् । जहाति, हीयते वा जहातेः कर्तरि कर्मणि वा " आदिकर्मणि क्तः " इति क्ते " घुमास्तेति " ईदादेशे " ओदितश्चेति " निष्ठानत्वे च हीनः " हीनं गर्ह्योनयोस्त्रिषु " ( इति मेदिनी ) न्यूनयति निपूर्वकात् ' ऊन परिहाने ' अस्माच्चौरादिकात्कर्तरि पचाद्यचि, न्यून्यते इति विग्रहे तु " अकर्तरि चेति " कर्मणि घञि न्यूनः " न्यूनं गर्ह्योनयोः " ( इति मेदिनी ) इति द्वे गर्ह्योनयोः । वेगी वेगवान्, शूरो वीरश्च उभौ तरस्विनौ स्याताम् । तरो बलं जवो वास्यास्ति " अस्मायेति " विनौ, " सौचेति " दीर्घे च तरस्वी द्वित्वे तरस्विनौ स्याताम् । " तरस्वी शूरवेगिनोः " ( इति मेदिनी ) इत्येकं वेगिशूरयोः । अपराद्धः अपराधवान्, अभिग्रस्तो वैरिपराजितः सर्वतः शत्रुसंरुद्धो वा व्यापद्गतो विपद्गतः अपिशब्दादभिद्रुतश्च अभिपन्नः स्यात् । अभिपद्यते स्म अभिपूर्वकात्पद्यतेः कर्त्तरि, कर्मणि वा क्ते " रदाभ्यामिति " निष्ठानत्वे निष्ठापेक्षया धातोर्दस्य नादेशे च अभिपन्नः " अभिपन्नोऽपराद्धेऽभिद्रुते ग्रस्ते विपद्गते " ( इति विश्वः ) इत्येकमपराधवदादीनाम् ॥ १३५ ॥

इति नान्ताः ॥

---

अथ पान्ता व्याख्यायन्ते ॥

पु.‡

भूषण, मोरपंख, तरकस, समूह, परिच्छद, चारोंतरफ बीज-बोना, जलाधार.

**कलापो ( भूषणे वर्हे तूणीरे संहतेऽपि च ) ।**

पु.

**( परिच्छदे ) परीवापः ( पर्युप्तौ सलिलस्थितौ ) ॥१३६॥**

केति–भूषणे अलंकारमात्रे, वर्हे मयूरपिच्छे, तूणीरे इषुधौ, संहते समुदाये अपिशब्दात्काञ्च्याम्, चशब्दाच्चन्द्रे, विदग्धे, व्याकरणभेदेऽपि कलापः स्यात् । कलामाप्नोति कलापूर्वकाद् "आप्लृ व्याप्तौ" अस्मात्सौवादिकात् "कर्मण्यण्" इत्यणि । कला आप्यतेऽनेनेति विग्रहे तु "हलश्चेति" घञि वा कलापः "कलापः संहतौ वर्हे काञ्च्यां भूषणतूणयोः" ( इत्यजयः ) "चन्द्रे, विदग्धे व्याकरणभेदेऽपि कथ्यते बुधैः" ( इति मेदिन्यां विशेषः ) इत्येकं भूषणादीनाम् । परिच्छदे, परिवारे–पटमण्डपाद्युपकरणे वा, पर्युप्तौ परितो बीजवपने, सलिलस्थितौ जलाधारे च परीवापः स्यात् । परिवपनम्, पर्युप्यतेऽनेन, अत्रेति वा परिपूर्वकाद्वपतेर्भावकरणाधिकरणेषु घञि, वृद्धौ, "उपसर्गस्येति" दीर्घे च परीवापः स्यादित्येकं परिच्छदादीनाम् ॥ १३६ ॥

पु. पु.

ग्वाला, गोशालाधिप, शिव, विष्णु, ऊष्मा, आंसू, अनाज, कपड़ा.

**( गोधुग्गोष्ठपती ) गोपौ ( हरविष्णू ) वृषाकपी ।**

न. पु.न.

**बाष्प ( मूष्णास्त्रु ) कशिपु ( त्वन्नमाच्छादनं द्वयम् ) ॥ १३७॥**

गविति–गोधुक् गोदोग्धा आभीरो वा गोष्ठपतिर्गोशालाधिपः उभौ गोपौ स्याताम् । गांपाति गोपूर्वकात्पातेः कर्तरि "आतोऽनुपेति" के, कित्त्वादालोपे च गोपः द्वित्वे गोपौ "गोपो ग्रामौघगोष्ठाधिकृतयोर्बल्लवे" ( इति विश्वः ) इत्येकं गोदुहादीनाम् । हरः शिवः, विष्णुर्नारायणः उभौ वृषाकपी स्याताम् । वृषं धर्मं न कम्पयति, वृषाद्धर्मादाकम्पयति दुष्टानिति वा वृषनञाङ्पूर्वकात् 'कपि किञ्चिच्चलने' अस्मात्कर्त्तरि "कुडिकम्प्योर्नलोपश्चेति" इप्रत्यये, नलोपे च, वर्षति कामानिति "इगुपधेति" के वृषः, आकम्पयति पापानीति पूर्ववदिप्रत्यये, वृषश्चासावाकपिश्च । वृषा इन्द्रोऽनेनास्माद्वा आकम्पते, वृषो धर्मो वृषा इन्द्रो वा कपिरिवशे यस्येति वा, वृषरक्षकः कपिर्वराहः शाकपार्थिवादित्वान्मध्यमपदलोपे वा "अन्येषामपीति" दीर्घे च । वृष्णः इन्द्रस्य अकं दुःखं पियति, प्राप्नोति, प्रापयति दैत्यानिति वा विचि, संज्ञापूर्वकत्वाद्गुणाभावे च, क्विपि तु आगमशास्त्रस्यानित्यत्वात्तुगागमाभावे च वृषाकपिः द्वित्वे परशब्दस्येष्टवाचित्वादियङं

‡ "द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम् । कलापकं चतुर्भिः स्यात्तत ऊर्ध्वं कुलकं स्मृतम् ॥ १ ॥

बाधित्वा पूर्वसवर्णदीर्घे च वृषाकपी "वृषाकपिः पुमान्कृष्णे शंकरे जातवेदसि" (इति मेदिनी) इत्येकं शिवादीनाम् । ऊष्मा ग्रीष्मः अश्रुनयनाम्बुबाष्पं स्यात् । वाधते वाधेः कर्तरि "खष्पशिल्पेति" पे, धस्य षत्वे निपातिते च वाष्पम् "बाष्पो नेत्रजलोष्मणोः वाष्वं‡ च" (इत्युणादिः) इत्येकं नेत्रजलादेः । अन्नं भक्तम्, आच्छादनं वस्त्रमेतद्द्वयं कशिपु स्यात् । कशते दुःखम्, कश्यते वा कशेः कर्त्तरि, कर्मणि वा "मृगय्वादित्वात्" कौ इपुगागमे निपातिते च कशिपु, कशिपुर्वा अत्र वक्ष्यमाणमस्त्रियामिति संबद्ध्यते तेन पुन्नपुंसकं स्यात् । "एकोक्त्या कशिपुर्भक्ताच्छादने च द्वयोः पृथक्" (इति विश्वः) इत्येकं भक्तादेः ॥ १३७ ॥

शयन या पलंग, अटारी, स्त्री, गुल्म या गुच्छा, पण्डित, मनोहर, कछुई बीणा विशेष, मृगरोम से उपजा कम्बल, दिनका आठवां भाग.

**तल्पं** (न.) **(शय्याट्टदारेषु)(स्तम्बेऽपि)विटपो** (पु.न.) **(ऽस्त्रियाम्)।**
**प्राप्तरूप** (पु.स.न.) **स्वरूप** (पु.स.न.) **ाभिरूपा** (पु.स.न.) **(बुधमनोज्ञयोः) ॥ १३८ ॥**
**(भेद्यलिङ्गा अमी)(कूर्मी वीणाभेदश्च)कच्छपी** (स.) **।**
**"कुतपो** (पु.) **(मृगरोमोत्थपटे चाह्नोऽष्टमेंशके)" ॥ १३९ ॥**

### इति पान्ताः ॥

तेति—शय्या शयनीयम् पल्यङ्को वा अट्टोऽट्टालिका दाराः स्त्रियः एषु तल्पं स्यात्। तल्यतेऽस्मिन्, 'तल प्रतिष्ठायाम्' अस्माद्भौवादिकादाधारे "खष्पशिल्पेति" पे, तल्पम् अत्रापि वक्ष्यमाणमस्त्रियामिति संबध्यते इत्येकं शयनादीनाम् । स्तम्बे गुल्मे तृणादिगुच्छे वा अपिशब्दात्पल्लवे, पिङ्गे, विस्तारे, शाखायां च विटपः अस्त्रियां पुन्नपुंसकं स्यात् । वेटति, विट्यते वा 'विट आक्रोशे, शब्दे च' अस्माद्भौवादिकात्कर्तरि, कर्मणि वा "विटपपिष्टपविशिपोल्पाः" इति कपनि, विटपः विटपं वा "विटपः पल्लवे पिङ्गे विस्तारे स्तम्बशाखयोः" (इति विश्वः) इत्येकं स्तम्बादीनाम् । बुधः पण्डितः सौम्यो वा मनोज्ञः मनोहरो मञ्जुलो वा अनयोः प्राप्तरूपस्वरूपाभिरूपाः स्युः । प्राप्तं रूपं येनेति प्राप्तरूपः, "प्राप्तरूपोज्ञरम्ययोः" (इति मेदिनी) स्वमेवरूपं यस्येति स्वरूपः, अभिलक्ष्यं रूपमस्येति अभिरूपः "अभिरूपो बुधे रम्ये" (इति मेदिनी) अमी शब्दाः भेद्यलिङ्गा वाच्यलिङ्गा भवन्ति इति त्रीणि ज्ञरम्ययोः । कूर्मी कमठी वीणाभेदो वल्लकीभेदश्च कच्छपी स्यात् । कच्छे, कच्छं वा पिबति, कच्छेन पातीति वा "सुपीति" के, गापोष्टगिति तु न भवति पिबतेः सुराशीध्वोरिति वचनात् "गतिकारकोपपदेति" सुबुत्पत्तेः प्राक् समासे "जातेरिति" ङीषि च कच्छपी "कच्छपी वल्लकीभेदे डुलौ क्षुद्रगदान्तरे" (इति विश्वः) इत्येकं कूर्म्यादीनाम् । मृगरोमोत्थपटे मृगलोमजवस्त्रे, अह्नोऽष्टमेंऽशके पञ्चदशमुहूर्तात्मकस्य दिनस्याष्टमेभागे च कुतपः स्यात् । कुत्सितं तपति कुपूर्वकात्तपतेः कर्तरि "संज्ञाया-

‡वायति, वाति वेति विग्रहे तु "खष्पाशिल्पेति" प प्रत्ययेपुगागमे निपातिते च वाप्पमपि अतएव गोवर्धनाचार्यैरपि वाप्पाकुलमिति व्याख्यातम् ॥

मिति " खचि " अनव्ययस्येत्यनुवृत्तेर्मुमागमाभावे च कुंभुवं तपति वा आगमजमनित्यमित्युक्तत्वान्मुमोऽभावे च कुतपः "कुतपोऽस्त्रियां दौहित्रे वाद्ये छागजकम्बले । कुशे दिनस्याष्टमांशे वा सूर्ये " ( इति मेदिनी ) इत्येकं मृगरोमोत्थपटादीनाम् ॥१३८।१३६॥

इति पान्ताः ॥

---

### अथ फान्ता व्याख्यायन्ते ॥

पु.

रकार, निन्दित, शिखा या जटा, नदी, जटामांसी, माता.

**(रवर्णे पुंसि ) रेफः (स्यात्कुत्सिते वाच्यलिङ्गकः ) ।**

स.

**शिफा(शिखायां सरिति मांसिकायां च मातरि)॥१४०॥**

रेति–रवर्णे ' र ' इत्यक्षरे रेफः पुंसि स्यात् । कुत्सिते निन्दिते च वाच्यलिङ्गकः स्यात् । र इतिवर्णः इति विग्रहे " रादिफः " इति इफे, गुणे च । रिफति, रिफ्यते वा ' रिफ हिंसायाम् ' अस्मात्तौदादिकात्कर्तरि पचाद्यचि कर्मणि " अकर्तरीति " घञि वा गुणे च रेफः " रेफो रवर्णे पुंसि स्यात्कुत्सिते वाच्यवत्पुनः " ( इति विश्वः ) इत्येकं रवर्णादीनाम् । शिखायां चूडायाम्, सरिति नद्याम्, मांसिकायां जटामांस्याम्, मातरि धात्र्यां सौरभेय्यामाखुकर्ण्यां वा शिफा स्यात् शेते शीङः कर्तरि बाहुलकात् फकि, ह्रस्वे, टापि च शिफा " शिफा जटायां सरिति मांसिकायां च मातरि " ( इति विश्वः ) इत्येकं शिखादीनाम् ॥ १४० ॥

रूखों की जड़, गौ आदि पशुओं का खुर, गूंथना, बाहुओं का गहना.

न.

**शफं (मूले तरूणां स्याद्गवादीनां खुरेऽपि च ) ।**

पु.

**गुम्फः (स्याद्गुम्फने बाहोरलंकारे च कीर्तितः)॥१४१॥**

**इति फान्ताः ॥**

शेति–तरूणां वृक्षाणां मूले, गवादीनां धेनूनां खुरेऽपि च शफं स्यात् । शं फणति शम्पूर्वकात् ' फण गतौ ' अस्माद्भौवादिकात्कर्त्तरि " अन्येभ्योऽपीति डे " डित्त्वाट्टिलोपे, पृषोदरादित्वान्मलोपे च शफं स्यादित्येकं तरुमूलादेः । गुम्फने ग्रन्थने, बाहोः भुजाया अलंकारे भूषणे च गुम्फः वर्णितः स्यात् । गुम्फनम्, गुफ्यते वा ' गुम्फ ग्रन्थे ' अस्मात्तौदादिकाद्भावकर्मणोर्घञि गुम्फः स्यादित्येकं गुम्फनादौ ॥ १४१ ॥

इति फान्ताः ॥

---

### अथ बान्ता व्याख्यायन्ते ।

जन्म मरण में टिकाहुआ प्राणी, घोड़ा, देवगायक या गवैया, कंकण, शंख, सर्प, निन्दक.

पु.

**( अन्तराभवसत्त्वेऽश्वे ) गन्धर्वो ( दिव्यगायने ) ।**

पु.‡ पु.

**कम्बु (र्ना वलये शङ्खे ) द्विजिह्वौ (सर्पसूचकौ) ॥१४२॥**

---

‡ " कम्बुः शंखेऽस्त्रियां पुंसि शम्बूके वलये गजे " ( इति मेदिनी ) ॥

अन्तरेति—अन्तराजन्ममरणयोर्मध्ये भवे सत्त्वे यातनाशरीरे, अश्वे घोटके, दिव्यगायने देवगायके विश्वावसुतुम्बुरुचित्ररथादौ, गायनमात्रे च गन्धर्वः स्यात् । गन्धं सौरभमर्वति गन्धपूर्वकाद् ‘ अर्व गतौ ’ अस्मात्कर्तरि “ कर्मण्यण् ” इत्यणि, सुपो लुकि, शकन्ध्वादित्वात्पररूपे च गन्धर्वः “ गन्धर्वः पशुभेदे स्यात्पुंस्कोकिलतुरङ्गयोः । अन्तराभवसत्त्वे च गायनेऽपि च” ( इति मेदिनी ) इत्येकमन्तराभवसत्त्वादीनाम् । वलये कङ्कणे, शंखे च कम्बुः ना पुमान्स्यात् । काम्यते ‘ कमु कान्तौ ’ अस्मात्कर्मणि “ मृगय्वादयश्चेति ” कुप्रत्यये, वुगागमे निपातिते च कम्बुः “ कम्बुर्वलयशङ्खयोः । गजे शम्बूके कर्चूरे ग्रीवायामलिकेऽपि च ” ( इति हैमः ) इत्येकं वलयादीनाम् । सर्पो भुजंगमः, सूचको निन्दकः पिशुनश्च उभौ द्विजिह्वौ स्याताम् । द्वे जिह्वे ययोस्तावित्येकं सर्पसूचकयोः ॥ १४२ ॥

पूर्व या पूर्वज लोग. पु.स.न. **पूर्वो(ऽन्यलिङ्गः प्रागाह) (पुम्बहुत्वेपि पूर्वजान्) ।**

## इति बान्ताः ॥

पूरिति—प्राग् पूर्वदिग्वाची यः पूर्वः सः अन्यलिङ्गः वाच्यलिङ्गः स्यात् । इत्याह वदत्याचार्यः । यश्च पूर्वजान् पूर्वजानां वाची स पुंबहुत्वेऽपि स्यात् । पूर्वयति ‘ पूर्व निकेतने ’ अस्माच्चौरादिकात्कर्त्तरि पचाद्यचि पूर्वः “ पूर्वे तु पूर्वजेषु स्युः पूर्वः प्रागाद्ययोस्त्रिषु ” ( इति मेदिनी ) पूर्वजेषु पूर्वे स्युः । यथा “ पूर्वे स्युः पूर्वजाः पूर्वे ज्ञातयः ” ( इति धरणिः ) प्रागाद्ययोः पूर्वः त्रिषु त्रिलिङ्ग्यां स्यात् । यथा “ पूर्वो ग्रामः, प्रयागात्पूर्वाकाशी, पूर्वं वनं वर्तते ” पूर्वशब्दो विश्वमेदिन्योरपि स्पर्शान्तेष्वेवोपलभ्यते । हैमेतु दन्त्योष्ठ्यान्तेष्वेवेति सद्भिः सुधीभिरेवाकलनीयमित्येकं प्रागादीनाम् । इत्यादि ज्ञेयम् ॥

इति बान्ताः ॥

---

## अथ भान्ता व्याख्यायन्ते ॥

घड़ा, हाथी का शिरोभाग, बालक, मूर्ख. पु. **कुम्भौ (घटेभमूर्धांशौ)** पु. **डिम्भौ (तु शिशुबालिशौ) १४३॥**

किति—घटः कलशः इभमूर्धांशोहस्तिमस्तकभागः उभौ कुम्भौ स्याताम् । कुं भूमिं कुत्सितं वा उम्भति कुपूर्वकाद् ‘ उम्भ पूरणे ’ अस्मात्तौदादिकात्कर्तरि “ कर्मण्यण् ” इत्यणि, सुपो लुकि, शकन्ध्वादित्वात्पररूपे च कुम्भः द्वित्वे कुम्भौ, “ कुम्भः स्यात्कुम्भकर्णस्य सुते वेश्यापतौ घटे । राशिभेदे द्विपाङ्गे च कुम्भं त्रिवृति गुग्गुले ” ( इति विश्वः) इत्येकं घटादीनाम्। शिशुरर्भकः, बालिशो मूढोऽज्ञो वा उभौ डिम्भौ स्याताम् । डिम्भयति “ डिभि संघे ” अस्माच्चौरादिकात् “ पचाद्यचि ” नुमागमे च डिम्भः द्वित्वे डिम्भौ “ डिम्भोऽपि बालिशे बाले ” ( इति मेदिनी ) इत्येकं बालादीनाम ॥ १४३ ॥

सूर्मी, थूनी या खंभा, जडता, ब्रह्मा, शिव, उदर, स्त्रीका गर्भ, बालक, प्रणय आदि.

पु. पु.
**स्तम्भौ (स्थूणाजडीभावौ) शम्भू (ब्रह्मत्रिलोचनौ)।**
पु. पु.
**(कुक्षिभ्रूणार्भका) गर्भा विस्रम्भः (प्रणयेऽपि च)१४४॥**

स्तेति–स्थूणा लोहप्रतिमा, गेहस्तम्भो वा, अजडस्य जडस्यभवनं जडीभावो जडता उभौ स्तम्भौ स्याताम्। स्तभ्नाति, स्तभ्नोति वा 'स्तम्भु रोधने' अस्मात्सौत्रात्क्रैयादिकात्कर्तरि पचाद्यचि, स्तम्भनमिति विग्रहे तु भावे घञि वा स्तम्भः द्वित्वे स्तम्भौ स्यातामित्येकं स्थूणादेः। ब्रह्मा प्रजावर्धको विधाता वा त्रीणि लोचनानि यस्येति त्रिलोचनः सदाशिवः उभौ शम्भू स्याताम्। शं सुखं भवति प्रापयति शंपूर्वकाद् 'भूप्राप्तौ' अस्माच्चौरादिकादन्तर्भावितणयर्थात्कर्तरि मितद्र्वादित्वाड्डौ डित्त्वाट्टिलोपे च शम्भुः द्वित्वे शम्भू "शम्भुः पुंसि महादेवे परमेष्ठिनि चार्हति" (इति मेदिनी) इत्येकं ब्रह्मादीनाम्। कुक्षिरुदरम्, भ्रूणस्त्रैणगर्भः गर्भस्थजन्तुर्वा अर्भको बालकः एते गर्भाः स्युः। गिरति, गृणाति, गीर्यते वा गिरतेर्गृणातेर्वा कर्तरि, कर्मणि वा "अर्तिगृभ्यां मन्" इति मनि, गुणे च गर्भः द्वित्वे गर्भौ बहुत्वे गर्भाः "गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके" (इति मेदिनी) इत्येकमुदरादीनाम्। प्रणये परिचये शृङ्गाररसप्रार्थने वा अपिशब्दात्केलिकलहे, विश्वासे, वधे च विस्रम्भः स्यात्। विस्रंभणम्, विस्रभ्यतेऽनेनेति वा विपूर्वकात्'स्रम्भु विश्वासे'अस्माद्भौवादिकाद्भावसाधनयोर्घञि विस्रम्भः "विस्रम्भः केलिकलहे विश्वासे प्रणये वधे" (इति विश्वः) इत्येकं ‡ प्रणयादीनाम्॥ १४४॥

भेरी, पाशा, कुसुम का फूल, कमण्डलु या करवा आदि.

पु. स.
**(स्याद्भेर्यां)दुन्दुभिः(पुंसि स्यादक्षे)दुन्दुभिः(स्त्रियाम्)।**
न.
**(स्यान्महारजने क्लीबं) कुसुम्भं (करके पुमान्)॥१४५॥**

स्यादिति–भेर्यां 'तुरही' इति ख्यातायां बृहड्ढक्कायां वा दुन्दुभिः पुंसि पुंलिङ्गे स्यात्। अक्षे पाशके दुन्दुभिः स्त्रियां स्त्रीलिङ्गे स्यात्। 'दुन्द' इति शब्देन 'उभति' दुन्दपूर्वकाद् 'उभ पूरणे' अस्मात्तौदादिकात्कर्तरि "इगुपधात्कित्" इतीनि, कित्त्वाद् गुणाभावे शकन्ध्वादित्वात्पररूपे च 'दुन्द्' इति हलन्तस्यैवानुकरणे वा तदा पररूपाभावे च दुन्दुभिः "दुन्दुभिः पुमान्। वरुणे दैत्यभेर्योश्च त्र्यक्षे बिन्दुत्रिकद्वये"[१] (इति मेदिनी) इत्येकं भेर्यादीनाम्। महारजने वह्निशिखे 'कुसुम्भं' क्लीबं स्यात्। करके कमण्डलौ 'करवा' इति ख्याते वा 'कुसुम्भः' पुमान् स्यात्। कुषुम्यति, अनेन वा

---

‡ "परिचयप्रार्थनयोः प्रणयः परिकीर्तितः" (इत्यमरमाला)॥

१–अक्षे बिन्दुत्रिकद्वये यथा "दुन्दुभ्या किल तत्कृतं पतितया यद्द्रौपदी हारिता" (इति स्वामिमुकुटानेकार्थकैरवाकरकौमुद्यः)॥

' कुसुम्भक्षेपे ' अस्मात्कण्ड्वादिकात्कर्तरि पचाद्यचि, " हलश्चेति " घञि वा पृषोदरादित्वात्षत्वाभावे च कुसुम्भं, कुसुम्भो वा " कुसुम्भं हेमनि महारजने ना कमण्डलौ " ( इति मेदिनी ) इत्येकं महारजनादीनाम् ॥ १४५ ॥

क्षत्रिय, गौ, गोष्ठी, सामाजिकयासज्जन, अध्यक्ष.

**(क्षत्रियेऽपि च) नाभि (र्ना) सुरभि (र्गवि च स्त्रियाम्) ।**
**सभा (संसदि सभ्ये च) (त्रिष्वध्यक्षेऽपि) वल्लभः ॥ १४६ ॥**

**इति भान्ताः ॥**

क्षेति–क्षत्रिये क्षात्रजातौ अपिशब्दान्मुख्यनृपतौ, चक्रमध्ये च नाभिः ना पुमान् स्यात् । चशब्दात्प्राणिप्रतीके द्वयोः कस्तूरिकामदे च स्त्रियां स्यादिति । नभ्यते ' णभ हिंसायाम् ' अस्माद्भौवादिकात्कर्मणि " इणजादिभ्यः " इत्यणि, णित्त्वाद्वृद्धौ च नाभयतीति विग्रहे तु स्वार्थण्यन्तात्कर्तरि " अ च इः " इतीप्रत्यये, णिलोपे च नाभिः " कृदिकारादिति " ङीषि च नाभी वा " नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे " ( इति मेदिनी ) इत्येकं क्षत्रियादीनाम् । गवि कामधेनौ चशब्दाच्छल्लकीमातृभिदोः सुरभिः स्त्रियां स्यात् । चम्पकवसन्तजातीफलेषु पुमान्, स्वर्णगन्धोत्पलेषु नपुंसकम्, सुगन्धितमनोज्ञयोस्त्रिलिङ्गयाम्, विख्यातादिष्वपि पुमान्स्यात् । सुष्ठुरभते, रभ्यते वा सुपूर्वकाद्रभेः कर्तरि कर्मणि वा " सर्वधातुभ्य इन् " इतीनि सुरभिः "सुरभिः शल्लकीमातृभित्सुरगोषु योषिति । चम्पके च वसन्ते च तथा जातीफले पुमान् । स्वर्णे गन्धोत्पले क्लीबं सुगन्धिकान्तयोस्त्रिषु" । " ( विख्याते सचिवेधीरे चैत्रेऽपि पुमानयम् ) " । ( इति मेदिनी ) इत्येकं सुरधेन्वादीनाम् । संसदि परिषदि, सभ्येसामाजिके चशब्दाद्द्यूतमन्दिरयोरपि सभा स्त्रियां स्यात् । सह भान्ति ये, यस्यां वा सहपूर्वकाद्भातेः कर्तरि, आधारे वा " सुपीति " के, " अन्येभ्योऽपीति " डेवा डित्वाट्टिलोपे टापि च सभा " स्त्रियां सामाजिके गोष्ठ्यां द्यूतमन्दिरयोः सभा " ( इति रभसः ) इत्येकं गोष्ठ्यादीनाम् । अध्यक्षे मुख्याधिकारिणि, अपिशब्दाद्दयिते, सल्लक्षणाश्वे च वल्लभः त्रिषु त्रिलिङ्ग्यां स्यात् । वल्लते, वल्ल्यते वा वल्लेः कर्तरि कर्मणि वा " रासिवल्लिभ्यां चेति " अभचि वल्लभः " वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरंगमे " ( इति मेदिनी ) इत्येकमध्यक्षादीनाम् ॥ १४६ ॥

इति भान्ताः ॥

---

**अथ मान्ता व्याख्यायन्ते ।**

किरण, पगहा, बानर, मेंडक, चाहना, कामदेव, शूरता, उद्योग.

**(किरणप्रग्रहौ) रश्मी (कपिभेकौ) प्लवंगमौ ।**
**(इच्छामनोभवौ) कामौ (शौर्योद्योगौ) पराक्रमौ ॥ १४७ ॥**

कीति–किरणो मयूखः, प्रग्रहो हयादिवन्धनरज्जुः उभौ रश्मी स्याताम् । अश्नुते, अश्यतेऽनेनेति वा अश्नोतेः कर्तृसाधनयोः " अश्नोते रश् च " इति मिप्रत्यये धातोरशादेशे च रश्मिः द्वित्वे रश्मी, " रश्मिः पुमान् दीधितौ स्यात्पक्ष्मप्रग्रहयोरपि " ( इति मेदिनी ) इत्येकं किरणादीनाम् । कपिर्वानरः रक्तचन्दनम्, वराहः कपिलवर्णो वा भेको मेघो मण्डूको वा एतौ प्लवंगमौ स्याताम् । प्लवेन गच्छति प्लवपूर्वकाद्गमेः कर्तरि " गमश्चेति " खचि, " खच्चडिद्वेति " डित्त्वाभावे मुमागमे च प्लवंगमः " प्लवंगमश्च मण्डूके तथा शाखामृगेऽपि च " ( इति मेदिनी ) इत्येकं वानरादीनाम् । इच्छा आकाङ्क्षा अभिलाषो वा मनोभवो मदनः उभौ कामौ स्याताम् । कमनम्, कम्यते वा कमेर्भावे, कर्मणि वा घञि, वृद्धौ च कामः द्वित्वे कामौ " कामः स्मरेच्छयोः पुमान् । रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम् " ( इति मेदिनी ) इत्येकमिच्छादीनाम् । शौर्यं शूरता, उद्योग उपायः शक्त्युद्योगाविति पाठान्तरम् शक्तिः सामर्थ्यम् अस्त्रविशेषो वा उद्यमः उत्साहः उभौ पराक्रमौ स्याताम् । पराक्रमणम्, पराक्रम्यतेऽनेनेति वा परापूर्वकात्क्रमेर्भावसाधनयोर्घञि " नोदात्तोपदेशस्येति " वृद्ध्यभावे च पराक्रमः द्वित्वे पराक्रमौ " पराक्रमः स्यात्सामर्थ्ये विक्रमोद्यमयोरपि " ( इति मेदिनी ) इत्येकं शौर्यादीनाम् ॥ १४७ ॥

पुण्य, संयम, न्याय, स्वभाव, आचार, सोमपायी, उपाय पूर्वक आरम्भ, घूस या धर्मादिकों से मन्त्रियों की परीक्षा.

पु.न.
**धर्माः ( पुण्ययमन्यायस्वभावाचारसोमपाः ) ।**

पु.
**(उपायपूर्वा आरम्भ उपधा चाप्यु) पक्रमः ॥ १४८ ॥**

धेति–पुण्यं सुकृतम्, यमः संयमो यमो वा, न्यायः कल्पः, स्वभावो निसर्गः आचारः मन्वादिमहर्षिप्रणीतशास्त्रोक्तव्यवहारः, सोमपाः सोमपायी एते धर्माः स्युः । धरति ध्रियते वा धरतेः कर्तृकर्मणोः " अर्तिस्तुसु " इति मनि, गुणे च धर्मः " धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे " ( इति मेदिनी ) इत्येकं पुण्यादीनाम् । उपायः पूर्वोयस्येति आरम्भः, उपधा उत्कोचः अपिशब्दाच्चिकित्सा, विक्रमश्च उपक्रमः स्यात् । उपक्रमणम्, उपक्रम्यतेऽनेनेति वा उपपूर्वकात्क्रमेर्भावसाधनयोर्घञि, वृद्ध्यभावे च उपक्रमः " उपक्रमः स्यादुपधाचिकित्सारम्भविक्रमे " ( इति विश्वः ) इत्येकमारम्भादीनाम् ॥ १४८ ॥

वाणिज्य, नगर, वेद, नागर, बनियां, बलदेव, काला, सुन्दर, सफ़ेद.

पु.
**(वणिक्पथः पुरं वेदो) निगमा ( नागरो वणिक् ) ।**

पु. पु.
**नैगमौ (द्वौ) (बले) रामो (नीलचारुसिते त्रिषु) ॥ १४९ ॥**

वेति–वणिक्पथो वाणिज्यम्, पुरं नगरम्, वेदः आम्नायः एते निगमाः स्युः । निगम्यते, अनेनेति वा "गोचरसंचरेति" घान्ते निपातिते निगमः द्वित्वे निगमौ बहुत्वे निगमाः "निगमो वाणिजे पुर्यां कटे वेदे वणिक्पथे" ( इति विश्वः ) इत्येकं वाणिज्यादीनाम् । नागरो नगरवासी, वणिग्वैश्यश्चेमौ द्वौ नैगमौ स्याताम् । द्वाविति ब्राह्मणस्य नैगमत्वे निषेधः ( इति स्वामी ) द्वावित्युक्तेरुपनिषद्ब्राह्मणयोर्नायमित्येके इति पीयूषव्याख्यातोऽवसेयम् । निगमे भवः "तत्रभवः" इत्यणि वृद्धौ च नैगमः "नैगमः स्यादुपनिषद्वणिजोर्नागरेऽपि च" ( इति विश्वः ) इत्येकं नागरादीनाम् । बले बलदेवे रामः पुमान्स्यात् । नीले कृष्णे, चारौ सुन्दरे रमणीये वा सिते धवले च त्रिषु त्रिलिङ्ग्यां स्यात् । रमते, अनेनेति वा रमेः कर्तरि, करणे वा "ज्वलितिकेति" णे, "हलश्चेति" घञि वा वृद्धौ च रामः "रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे । राघवे चासितश्वेतमनोज्ञेषु च वाच्यवत्" ( इति विश्वः ) इत्येकं बलादीनाम् ॥ १४६ ॥

समूह, चढ़ाई, स्तोत्र, यज्ञ, समुदाय, टेढ़ा, आलसी.

**(शब्दादिपूर्वो वृन्देऽपि) ग्रामः (पु.) (क्रान्तौ च) विक्रमः (पु.) ।**
**स्तोमः (पु.) (स्तोत्रेऽध्वरे वृन्दे) जिह्मस्तु (पु.) (कुटिलेऽलसे) १५० ॥**

शेति–शब्दादिः पूर्वो यस्येति ग्रामः वृन्दे समुदाये अपिशब्दात्स्वरे संवसथे च स्यात् । ग्रसते, ग्रस्यते वा ग्रसेः कर्तरि, कर्मणि वा "ग्रसेराचेति" मे, सस्यात्वे च ग्रामः "ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वकः" ( इति विश्वः ) इत्येकं वृन्दादीनाम् । क्रान्तौ क्रान्तिमात्रे चशब्दाच्छक्तिसंपत्तावपि विक्रमः स्यात् । विक्रमणम्, विक्रम्यतेऽनेनेति वा विपूर्वकात्क्रमेर्भावसाधनयोर्घञि, वृद्ध्यभावे च विक्रमः "विक्रमः शक्तिसंपत्तिः क्रान्तिमात्रं च विक्रमः" ( इति धरणिः ) इत्येकं क्रान्त्यादीनाम् । स्तोत्रे स्तवे, अध्वरे यागे, वृन्दे समूहे च स्तोमः स्यात् । स्तूयते, अनेनेति वा स्तौतेः कार्यसाधनयोः "अर्तिस्तुसु" इति मनि गुणे च स्तोमः "स्तोमः स्तोत्रेऽध्वरे वृन्दे मस्तके लोहदण्डके" ( इति कोषान्तरम् ) इत्येकं स्तवादीनाम् । कुटिले कुञ्चिते वक्रे वा अलसे मन्दे च जिह्मः स्यात् । जहाति, हीयते वा जहातेः कर्त्तरि, कर्मणि वा "जहातेः सन्वदालोपश्चेति" मनि, सन्वद्भावे, आलोपे च जिह्मः "जिह्मस्तु कुटिले मन्दे जिह्मं तगरपादपे" ( इति हैमः ) इत्येकं कुटिलादीनाम् ॥ १५० ॥

ग्रीष्म, घाम आदि, हाव, भ्रान्ति, लीहा, गुच्छा, फ़ौज, बहिन, भौजाई, देवरानी, जेठानी आदि, पृथ्वी, सहनशीलता, योग्य, समर्थ, हितैषी.

**"(उष्णेऽपि) घर्म (पु.) (श्चेष्टालंकारे भ्रान्तौ च) विभ्रमः (पु.) ।"**
**गुल्मा (पु.) ( रुक्स्तम्बसेनाश्च ) जामिः (स.) (स्वसृकुलस्त्रियोः) ।**
**(क्षितिक्षान्त्योः) क्षमा (स.) (युक्ते) क्षमं (न.) (शक्ते हिते त्रिषु) १५१**

त्रिति–उष्णे उष्णागमे अपिशब्दात्स्वेदादौ च घर्मः स्यात् । घरति, जिघर्त्यङ्गमनेनेति वा घरतेर्जिघर्त्तेर्वा करणे मकि, गुणे च निपातिते घर्मः " घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्बुनोरपि " ( इति कोषान्तरम् ) इत्येकमुष्णादीनाम् । चेष्टालङ्कारे हावे विशेषे भ्रान्तौ चित्तवृत्त्यनवस्थाने च विभ्रमः स्यात् ।- विभ्रमणम् विपूर्वकाद्भ्राम्यतेर्भावे घञि, " नोदात्तोपदेशेति " वृद्ध्यभावे च विभ्रमः " अथ विभ्रमः । शोभायां संशये हावे " ( इति हैमः ) इत्येकं हावादीनाम् । रुक् उदररोगः प्लीहारूयव्याधिर्वा स्तम्बोऽप्रकाण्डस्तृणादिगुच्छो वा सेनात्रिसेनामुखम् , चशब्दाद् घट्टसैन्यरक्षणेऽपि एते गुल्माः स्युः । गुड्यते गुडेः कर्मणि बाहुलकान्मकि, डलयोरेकत्वाड्डस्य लत्वे च गुल्मः "गुल्मः स्तम्बे प्लीह्निघट्टसैन्ययोः सैन्यरक्षणे" (इति विश्वः) इत्येकं प्लीहादीनाम् । स्वसा भगिनी, कुलस्त्री कुलवधूः अनयोर्जामिः स्यात् । जायति जायते वा 'जैक्षये' अस्माद्धौवादिकात्कर्तृकमर्णोर्बाहुलकान्मिप्रत्यये, आत्वे च । जम्यते इति विग्रहेतु जमेः कर्मणि "इञजादिभ्य इति" इञि, ञित्वाद्वृद्धौ च जामिः " जामिः स्वसृकुलस्त्रियोः " ( इति चवर्गादावजयः ) मुकुटस्तु " प्रहरे समये यामो यामिः स्वसृकुलस्त्रियोः " इति रभसादन्तस्थादित्वं व्याख्यातवान् । तत्र यातेर्बाहुलकान्मिप्रत्यये तु यामिः " यामिः कुलस्त्रीस्वस्रोःस्त्री " ( इति मेदिनी ) इत्येकं भगिन्यादीनाम् । क्षितिः पृथ्वी, क्षान्तिस्तितिक्षा अनयोः क्षमा स्यात्, युक्ते योग्ये क्षमम्, मान्तमव्ययमित्येके । शक्ते पराक्रमे, हिते हितैषिणि च त्रिषु त्रिलिङ्ग्यां स्यात् । क्षमणम् क्षमूषो भावे षित्त्वादङि टापि च क्षमा, क्षमते, क्षम्यते वा पचाद्यचि, घञि वा क्षमः " क्षमा तितिक्षा पृथ्वी च योग्ये शक्ते हिते क्षमम् " ( इति धरणिः ) इत्येकं क्षित्यादीनाम् ॥ १५१ ॥

हरा, काला, पु.स.न. स.
श्यामलता, हल्दी या रात,
**(त्रिषु)श्यामौ(हरित्कृष्णौ)श्यामा(स्याच्छारिवा निशा)।**

पूंछ, भाल का न. चित्र, घोड़े का गहना, प्रधान और निशान.
**ललामं ( पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु ) ॥ १५२ ॥**

त्रिष्विति–हरित्पलाशो दिग्वा, कृष्णः कृष्णवर्णः उभौ श्यामौ त्रिषु त्रिलिङ्ग्या स्याताम् । श्यायते श्यैङः कर्तरि " इषुयुधीन्धि " इति मकि, आत्वे च श्यामः " श्यामो वटे प्रयागस्य वारिदे वृद्धदारके । पिके च कृष्णहरिते पुंसि स्यात्तद्वतित्रिषु । मरिचे सिन्धुलवणे क्लीबं स्त्रीशारिवौषधौ । अप्रसूताङ्गनायां च प्रियङ्गावपि चोच्यते । यमुनायां त्रियामायां कृष्णात्रिवृतिकौषधौ । नीलिकायामिति मेदिनी " इत्येकं हरितादीनाम् । शारिवा अनन्ता श्यामलता वा निशा हरिद्रा, त्रियामा वा श्यामा स्यात् । श्यायते श्यैङो मकि, टापि च श्यामो वर्णोऽस्त्यस्या वा श्यामा " श्यामा गोपवल्ली गोपा गोपालिका च सा " ( इति वाचस्पतिः ) इत्येकं शारिवादेः । पुच्छो लाङ्गूलं

पुण्ड्रमश्वादीनां ललाटचित्रम्, अश्वो वाजी, भूषा सामीप्यादश्वस्यैव, प्रधानमेव प्राधान्यम्, केतुः पताका एषु ललामं स्यात् । लडनम् लडेर्भावे संपदादित्वात्क्विपि, डलयोरैक्याड्डस्य लत्वे च लल् ताममतीति "कर्मण्यण्" इत्यणि वृद्धौ च ललामम् बाहुलकात्कनिनि नान्तोऽपि "प्रधानध्वजश्रृङ्गेषु पुण्ड्रवालधिलक्ष्मसु । भूषावाजि-प्रधानेषु ललामं स्याल्ललाम च" ( इति रुद्रः ) इत्येकं पुच्छादीनाम् ॥ १५२ ॥

न.
लिङ्गशरीर, आदि, प्रधान, सुन्दर,प्रतिकूल, न्यून, निन्दित. **सूक्ष्म(मध्यात्मम)(प्यादौ प्रधाने)प्रथम(स्त्रिषु)।**
पु.स.न. पु.स.न.
**वामौ (वल्गुप्रतीपौ द्वा) वधमौ (न्यूनकुत्सितौ)॥१५३॥**

स्विति–अध्यात्मम् आत्मनि अधिकृतं लिङ्गशरीरम् अपिशब्दात्कैतवादिकं च सूक्ष्मं स्यात् । सूच्यते 'सूच पैशुन्ये' अस्माच्चौरादिकात्कर्मणि "सूचेः स्मन्" इति स्मनि, चस्यकुत्वे, षत्वे, क्षत्वे च सूक्ष्मम् "सूक्ष्मं स्यात्कैतवेऽध्यात्मे पुंस्यग्नौ त्रिषु चाल्पके" ( इति मेदिनी ) इत्येकमध्यात्मादीनाम् । आदौ, प्रधाने मुख्ये च प्रथमस्त्रिषु त्रिलिङ्ग्यां स्यात् । प्रथते 'प्रथ विस्तारे' अस्माद्भौवादिकात्कर्तरि "प्रथे-रमच्" इत्यमचि प्रथमः "प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्" ( इति मेदिनी ) इत्येकमादिप्रधानयोः । अतः परमामान्तं 'त्रिषु' इत्यधिक्रियते । वल्गु मनोरमम्, प्रतीपो विपरीतः एतौ द्वौ वामौ स्याताम् । वमति वमेः कर्तरि "ज्वलि-तिकेति" णे । वम्यते इति विग्रहे तु कर्मणि घञि ञित्वाद्वृद्धौ च वामः द्वित्वे वामौ "वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे । पयोधरे हरे कामे विद्या वामा-मपि स्त्रियाम् । वामी श्रृगालीवडवारासभीकरभीषु च" ( इति विश्वः ) इत्येकं मनोहरादीनाम् । न्यूनः ऊनः, कुत्सितो निन्दितः उभौ अवमौ स्याताम् । अवति, अवेः कर्तरि "अवद्यावमाधमेति" अमे, वस्य धान्तादेशे निपातिते च । न धमति, धम्यते वा नञ् पूर्वकाद् 'धम ध्माने' अस्मात्सौत्रात्कर्तरि पचाद्यचि, कर्मणि घञि वा अधमः "अधमः स्याद्गर्ह्यऊने" ( इति विश्वः ) इत्येकं न्यूनादेः ॥ १५३ ॥

पु.स.न.
जीर्ण, खाकर त्याग किया. **(जीर्णं च परिभुक्तं च) यातयाम (मिदंद्वयम्)।**

**इति मान्ताः ॥**

जीरिति–जीर्णं परिपक्वम्, परिणामतां प्राप्तं वा परिभुक्तं परिभुक्तोज्झितं चेदं द्वयं यातयामं स्यात् । यातो गतो याम उपभोग कालो यस्येति यातयामम् "यातयामो-ऽन्यवज्जीर्णे परिभुक्तोज्झितेऽपि च" ( इति मेदिनी ) इत्येकं जीर्णादेः ।

इति मान्ताः ॥

अथ यान्ता व्याख्यायन्ते ।

घोड़ा, गरुड़, घर, कमतीहोना या अपहार. पु. पु.
**(तुरंगगरुडौ) तार्क्ष्यौ (निलयापचयौ) क्षयौ ॥ १५४ ॥**

त्विति–तुरंगः अश्वः, गरुडः पक्षिराजः उभौ तार्क्ष्यौ स्यातम् । तार्क्ष्यस्य कश्यपस्यापत्यमिति विग्रहे "ऋष्यन्धकेति" अणि, तार्क्ष्यः, द्वित्वे तार्क्ष्यौ "तार्क्ष्योऽश्वसर्पयोः । गरुडाग्रजे सुपर्णे च पुंसि क्लीबं रसाञ्जने" (इति मेदिनी) इत्येकं तुरंगमादेः । निलयः आलयः, अपचयः अपहारो ह्रासो वा एतौ क्षयौ स्याताम् । क्षयणम्, क्षीयतेऽत्रेति वा क्षयतेः, क्षियतेर्वा भावाधारयोः "एरच्" इत्यचि, "पुंसीति" घे वा गुणे च क्षयः "क्षयो रोगान्तरे वेश्मकल्पान्तापचयेषु च" (इति मेदिनी) इत्येकं निलयादीनाम् ॥ १५४ ॥

देवर, साला, भतीजा, बैरी, गर्जताहुआमेघ, इन्द्र, प्रभु, बनियां. पु. पु. पु. पु.
**श्वशुर्यौ (देवरश्यालौ) भ्रातृव्यौ(भ्रातृजद्विषौ) ।**
**पर्जन्यौ(रसदब्देन्द्रौ)स्यादर्यः(स्वामिवैश्ययोः)॥१५५ ॥**

श्वेति–देवरः पतिलघुभ्राता, श्यालः पत्नीभ्राता उभौ श्वशुर्यौ स्याताम् । श्वशुरस्यापत्यमिति विग्रहे "राजश्वशुराद्यत्" इति यति, "यस्येति चेति" अलोपे च श्वशुर्यः द्वित्वे श्वशुर्यावित्येकं देवरादेः । भ्रातृजो भ्रातृसुतः, द्विट् शत्रुरेतौ भ्रातृव्यौ स्याताम् । भ्रातुरपत्यम् "भ्रातुर्व्यच्चेति" व्यति "व्यन्सपत्ने" इति व्यनि वा भ्रातृव्यः, द्वित्वे भ्रातृव्यावित्येकं भ्रातृजादेः । रसदब्दोध्वनदम्बुदः, इन्द्रो देवराजः उभौ 'पर्जन्यौ' स्याताम् । पर्षति, पृषेः कर्तरि 'अन्य' प्रत्यये षस्य जे निपातिते च पर्जन्यः द्वित्वे पर्जन्यौ "पर्जन्यो मेघशब्देऽपि ध्वनदम्बुदशक्रयोः" (इति विश्वः) इत्येकं मेघशब्दादीनाम् । स्वामी प्रभुः वैश्यो वणिग् अनयोः अर्यः स्यात् । अर्यते "ऋ गतौ" अस्मात्कर्मणि "अर्यः स्वामिवैश्ययोरिति" यति, गुणे च 'अर्यः' स्यादित्येकं स्वाम्यादेः ॥ १५५ ॥

पुष्यनक्षत्र, कलियुग, अवसर, क्रम, आधीन, सौगन्द, ज्ञान, विश्वास, हेतु, छेद, शब्द, बहुत काल की शत्रुता, पीछे से पछिताना. पु. पु. पु. पु.
**तिष्यः (पुष्ये कलियुगे) पर्यायो (ऽवसरे क्रमे ) ।**
**प्रत्ययो (ऽधीनशपथज्ञानविश्वासहेतुषु ॥ १५६ ॥**
**रन्ध्रे शब्दे ) ऽथानुशयो (दीर्घद्वेषानुतापयोः ) ।**

तीति–पुष्ये पुष्यनक्षत्रे, कलियुगे तुर्ययुगे च तिष्यः स्यात् । त्वेषन्ति कार्याण्य-

स्मिन्, त्विषेराधारे अघ्न्यादित्वाद् ' यकि ' वलोपे निपातिते च तिष्यः " तिष्यः कलियुगे ऋक्षे तिष्या धात्री च कीर्त्यते " ( इति धरणिः ) इत्येकं पुष्यादेः । अवसरे अवकाशे प्रस्तावे वा क्रमे कल्पे विधाने वा पर्यायः स्यात् । पर्ययणम्, परिपूर्वका-देतेर्भावे "परावनुपात्यये" इति घञि, ञित्वाद्वृद्धौ, यणादेशे च पर्यायः " पर्यायस्तु प्रकारे स्यान्निर्माणेऽवसरे क्रमे " ( इति विश्वः ) इत्येकमवसरादेः । अधीनः निघ्नः आयत्तो वा शपथः शापज्ञानं मोक्षविषयिणी बुद्धिः इन्द्रियार्थसंनिकर्षजन्यं वा, विश्वासो विस्रम्भः, हेतुः कारणम् एषु तथा रन्ध्रे छिद्रे, शब्दे च प्रत्ययः स्यात् । प्रत्ययनम्, प्रतीयतेऽनेनेति वा प्रतिपूर्वकादिणोभावसाधनयोः " एरच् " इत्यचि ' पुंसीति ' घे वा गुणे अयादेशे च प्रत्ययः " प्रत्ययः शपथे रन्ध्रे विश्वासाचार-हेतुषु । प्रथितत्वे च सन्नादावधीनज्ञानयोरपि " ( इति विश्वः ) इत्येकमधीनादी-नाम् । अथेत्यनन्तरम् दीर्घद्वेषो महाद्वेषो बहुकालिकी शत्रुता वा अनुतापः पश्चा-त्तापः अनयोः अनुशयः स्यात् । अनुशयनम्, अनुशीयतेऽनेनेति वा अनुपूर्व-काच्छीङो भावाधारयोः " एरच् " इत्यचि " पुंसीति " घेवा गुणे, अयादेशे च अनुशयः " भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः " ( इति विश्वः ) इत्येकं दीर्घ-द्वेषादीनाम् ॥ १५६ ॥

असंपूर्णता, हाथियों की मध्यमगति, सौगन्द, आचार, काल, सिद्धान्त, कुभाषा, व्यसन, अशुभ, दैव, विपत्ति.

**स्थूलोच्चय(स्त्वसाकल्ये गजानां मध्यमे गते )॥१५७॥** (पु.)

**समयाः(शपथाचारकालसिद्धान्तसंविदः) ।** (पु.)

**(व्यसनान्यशुभं दैवं विपदि) त्यनया (स्त्रयः)॥ १५८॥** (पु.)

स्थिवति—असाकल्ये असामग्र्ये गजानां हस्तिनां मध्यमे गते गमने च स्थूलोच्चयः स्यात् । उच्चयनम् उत्पूर्वकाच्चिनोतेर्भावे " एरच् " इत्यचि, गुणे, अयादेशे, उदो दस्य चुत्वेन जे, चर्त्वेन चे च उच्चयः स्थूलस्योच्चयः स्थूलोच्चयः " स्थूलोच्चयस्त्वसाकल्ये गण्डोपलकरण्डयोः "(इति विश्वः) इत्येकमसाकल्यादेः । शपथः शपनम्, आचारोधर्म-शास्त्रोक्तव्यवहारः, कालो दण्डधरो, दिष्टो वा सिद्धान्तो राद्धान्तः, संवित् संभाषा च एते समयाः स्युः । समयनम्, समीयतेऽनेनात्रेति वा संपूर्वकादिणोभावसाधनाधारेषु " एरच् " इत्यचि, " पुंसीति " घे वा समेतीति विग्रहे तु " पचाद्यच् " इत्यचि वा गुणे, अयादेशे च समयः द्वित्वे समयौ, बहुत्वे समयाः " समयः शप-थाचारसिद्धान्तेषु तथा धियि । क्रियाकारे च निर्देशे संकेते कालभाषयोः ( इति मेदिनी ) इत्येकं शपथादीनाम् । व्यसनानि स्त्रीद्यूतपानादीनि अशुभम् अभद्रदायकं दैवं भागधेयम्, विपद् विपत्तिः एते त्रयोऽनयाः स्युः । न नयनम्, न नीयतेऽनेनात्रेति वा विरोधार्थकनञ्पूर्वकान्नयतेर्भावकरणाधिकरणेषु " एरच् " इत्यचि, अयाच्छुभा-

वहविधेरन्यो वा अनयः, द्वित्वे अनयौ, बहुत्वे अनयाः " अनयस्तु विपदैवाशुभयोर्व्यसनेषु च " ( इति मेदिनी ) इत्येकं व्यसनादीनाम् ॥ १५७ । १५८ ॥

उल्लंघन, कष्ट, पु. दोष, दण्डदेना, आपदा, लड़ाई, आनेवालाकाल, श्वशुर आदि.

**अत्ययो ( ऽतिक्रमे कृच्छ्रे दोषे दण्डेप्यथापदि ) ।**
**(युद्धायत्योः) संपरायः पूज्य (स्तु श्वशुरेऽपि च)॥ १५६॥**

अतीति—अतिक्रमे अतिपाते, अभीतस्य रणे याने वा, कृच्छ्रे कष्टे सान्तपनादिके वा दोषे अवगुणे, अपराधे, वातपित्तकफात्मके वा दण्डे, दमे लगुडे वा अपिशब्दादत्युत्पाते, नाशे, विध्वंसे च अत्ययः स्यात् । अत्ययनम्, अतीयतेऽनेनात्रेति वा अतिपूर्वकादिणोभावकरणाधिकरणेषु " एरच् " इत्यचि, गुणे अयादेशे च अत्ययः " अत्ययोऽतिक्रमे कृच्छ्रेऽत्युत्पाते नाशदण्डयोः " ( इति धरणिः ) इत्येकमतिक्रमादीनाम् । अथेत्यनन्तरम् आपदि विपत्तौ युद्धे संग्रामे, आयतावुत्तरकाले च संपरायः स्यात् । संपरायणम्, संपरेयतेऽनेनात्रेति वा संपरापूर्वकादिणोभावसाधनाधारेषु अचि, गुणे, अयादेशे, सवर्णादीर्घे च संपरायः " संपरायः समीके स्यादापदुत्तरकालयोः " ( इति मेदिनी ) इत्येकमापदादीनाम् । श्वशुरे पतिपत्न्योः पितरि, अपिशब्दात्पूजायोग्ये च पूज्यः स्यात् । पूजयितुमर्हः ' पूज पूजायाम् ' अस्माच्चौरादिकाद् " अर्हे कृत्यतृचश्चेति " यति पूज्यः " पूज्यौ श्वशुरपूजार्हौ " ( इति मेदिनी ) इत्येकं पूज्यादेः ॥ १५६ ॥

सेना पृष्ठभागस्थ सेना, समूह, समुदाय, अच्छा वासस्थान, वि- श्वास, माँगना, प्रेम, बैर, उँचाई, जिसकाजो जा- नागया, शब्द, स्पर्श आदि.

**(पश्चादवस्थायिबलं समवायश्च) संनयौ ।**
**(संघाते सन्निवेशे च)संस्त्यायः प्रणया(स्त्वमी)॥१६०॥**
**(विस्रम्भयाच्ञाप्रेमाणो) (विरोधेऽपि) समुच्छ्रयः ।**
**विषयो (यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि)॥ १६१ ॥**

पेति—पश्चात्सेनापृष्ठभागे अवस्थातुं शीलं यस्येति बलं सैन्यम्, समवायः संघातश्च उभौ संनयौ स्याताम् । संनयनम्, संनीयते वा संपूर्वकान्नयतेर्भावकर्मणोः " एरच् " इत्यचि संनयतीति विग्रहे तु कर्तरि " पचाद्यचि " वा गुणे, अयादेशे च संनयः द्वित्वे संनयावित्येकं सेनापृष्ठस्थसेनादेः । संघाते समुदाये, सन्निवेशे निकर्षणे च शब्दाद्विस्तृतावपि संस्त्यायः स्यात् । संस्त्यानम्, संपूर्वकात्स्त्यायतेर्भावे घञि आत्वे, युगागमे च संस्त्यायः " संस्त्यायः सन्निवेशे च संघाते विस्तृतावपि " ( इति मेदिनी ) इत्येकं समूहादेः । विस्रम्भो विश्वासः, याच्ञा, प्रार्थना, प्रेमा, प्रियता

अमी प्रणायाः स्युः । प्रणायनम्, प्रपूर्वकान्नयतेर्भावे " एरच् " इत्यचि, गुणे, अया- देशे च प्रणायः, द्वित्वे प्रणायौ, बहुत्वे प्रणायाः " प्रणायः प्रसरे प्रेम्णि याच्ञाविस्र- म्भयोरपि । निर्वाणेऽपि " ( इति मेदिनी ) इत्येकं विश्वासादीनाम् । विरोधे वैरे अपिशब्दादुन्नतौ च समुच्छ्रयः स्यात् । समुच्छ्रयणम्, समुत्पूर्वकात् श्रिञोभावे, अचि, गुणे अयादेशे दस्य चुत्वेन जे, चर्त्वेन चे ' शश्छोऽटीति ' छे च समुच्छ्रयः " वैरोन्नत्योः समुच्छ्रयः " ( इति रभसः ) इत्येकं विरोधादेः । यस्य प्राणिनः प्रबन्धाद् यः पदार्थो ज्ञातो नित्यं सेवितस्तत्र, शब्दादिके, अपिशब्दाद् गोचरे, देशे, जनपदे च विषयः स्यात् । विषयणम्, विषीयतेऽत्रेति वा " एरच् " इत्यचि, " पुंसीति " घे, वा विषिणोतीति विग्रहे तु पचाद्यचि वा गुणे, अयादेशे " परिनिविभ्यः सेवसितस- येति " षत्वे च विषयः " विषयो गोचरे देशे तथा जनपदेऽपि च । प्रबन्धाद्यस्य यो ज्ञातस्तत्र रूपादिके पुमान् " ( इति मेदिनी ) इत्येकं गोचरादेः ॥ १६० । १६१ ॥

कषैला, काढ़ा या गोंद, समाज, (निर्यासेऽपि)कषायो(पु.)(ऽस्त्री) (सभायां च)प्रतिश्रयः(पु.) ।
बाहुल्य, अन्त- गति, दीनता, यज्ञ, कोप. प्रायो(पु.)(भूम्न्यन्तगमने) मन्यु(पु.) (दैन्ये क्रतौ क्रुधि) १६२॥

निरिति—निर्यासे क्वाथे अपिशब्दाद्रसभेदाङ्गरागविलेपनादौ च कषायः अस्त्री पुन्नपुं- सकं स्यात् । कषति कण्ठम्, कषेः कर्त्तरि बाहुलकादायेकषायः " कषायो रसभेदे स्यादङ्गरागे विलेपने । निर्यासे च कषायोऽथ सुरभौ लोहितेऽन्यवत् " ( इति विश्वः ) इत्येकं निर्यासादेः । सभायां गोष्ठ्याम्, चशब्दादङ्गीकारे, आश्रयेऽपि प्रतिश्रयः स्यात् । प्रतिश्रयणम्, प्रतिश्रीयतेऽत्रेति वा प्रतिपूर्वकाच्छ्रयतेर्भावाधारयोः " एरच् " इत्यचि " पुंसीति " घे वा गुणे अयादेशे च प्रतिश्रयः " प्रतिश्रयः सभायां चाश्रयेऽभ्युप- गमेऽपि च " ( इति मेदिनी ) इत्येकं समाजादेः । भूम्नि बाहुल्ये, अन्तगमने अन्तगतौ मरणे वा अनशने, तुल्ये च प्रायः स्यात् । प्रायणम्, प्रपूर्वकादयतेरेतेर्वाभावे घञि, वृद्धौ, आयादेशे, सवर्णादीर्घे च प्रायः "प्रायश्चानशने मृत्यौ प्रायोबाहुल्यतुल्ययोः " ( इति विश्वः ) इत्येकं बाहुल्यादेः । दैन्ये दीनतायाम्, क्रतौ यागे, क्रुधि कोपे, शोके च मन्युः स्यात् । मन्यते मनः कर्तरि " यजिमनिशुन्धिदसिजनिभ्यो युच् " इति युचि " अनुनासिकयोः " इत्युक्तत्वादनादेशाभावे च मन्युः " मन्युः पुमान् क्रुधि । दैन्ये शोके च यज्ञे च " ( इति मेदिनी) इत्येकं दैन्यादीनाम् ॥ १६२ ॥

गोप्य, लिङ्ग, भग, सौगन्द, सही या ठीक, (रहस्योपस्थयो)र्गुह्यं(न.) सत्यं(न.)(शपथतथ्ययोः) ।
बल, प्रभाव, न. शुभ, पृथ्वी आदि. वीर्य(न.)(बले प्रभावे च)द्रव्यं(न.)(भव्ये गुणाश्रये) ॥ १६३ ॥

१ बाहुल्ये यथा " प्रायेण ब्राह्मणा भोज्याः " अन्तगतौ यथा " प्रायोपवेशः कृतः"(इत्यग्निवेशः) ॥

रेति–रहस्यं रहसिभवम्, गोप्यं वा उपस्थो भगं, लिङ्गश्च अनयोर्गुह्यं स्यात् । गूहनम्, गुह्यते वा गूहतेर्भावे, कर्मणि वा “ शंसिदुहिगुहिभ्यो वेति ” क्यपि, किन्त्वाद्गुणाभावे च, ण्यति तु संज्ञापूर्वकत्वाद्गुणाभावे वा गुह्यम् “ गुह्यं रहस्युपस्थे च गुह्यः कमठदम्भयोः ” ( इति विश्वः ) इत्येकं रहस्यादीनाम् । शपथः शपनम्, शापो वा, तथ्यमृतं च एतयोः सत्यं स्यात् । सति साधुः “ तत्र साधुरिति ” यति सत्यम् “ सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वति ” ( इति मेदिनी ) इत्येकं शपथादेः । बले शौर्य्ये, सामर्थ्ये वा प्रभावे प्रतापे, तेजोविशेषे वा चशब्दाच्छुक्रे च वीर्यं स्यात् । वीर्य्यतेऽनेन, ‘ वीर विक्रान्तौ ’ अस्माच्चौरादिकात्करणे “ अचोयत् ” इति ‘ यति ’ वीरे साधुरिति विग्रहे तु “ तत्र साधुरिति ” यति, वा वीर्यम् “ वीर्यं प्रभावे शुक्रे च तेजः सामर्थ्ययोरपि ” ( इति मेदिनी ) इत्येकं बलादेः । भव्ये शुभे, सत्ये जीवे वा गुणाश्रये पृथिव्यादौ, “ द्रविणे च ” द्रव्यं स्यात् । द्रोरिदम्, “ द्रव्यं च भव्ये ” इति यति, गुणे, अवादेशे च द्रव्यम् “ द्रव्यं स्याद्द्रविणे भव्ये पृथिव्यादौ च पित्तले । भेषजे च विलेपे च जतुद्रुमविशेषयोः ” ( इति विश्वः ) इत्येकं भव्यादेः ॥ १६३ ॥

ठिकाना, घर, न. नक्षत्र, आगी. शुभाशुभ कर्म, न.

**धिष्ण्यं(स्थाने गृहे भेऽग्नौ) भाग्यं(कर्म शुभाशुभम्) ।**

कसेरू वा सोना, न. वज्रदन्ती या दन्तीवृक्ष आदि. स.

**(कशेरुहेम्नो)र्गाङ्गेयं विशल्या (दन्तिकाऽपि च) ॥१६४॥**

धीति–स्थाने अवकाशे, स्थितौ वा गृहे गेहे, भे नक्षत्रे, अग्नौ वह्नौ च धिष्ण्यं स्यात् । धृष्णोति, ‘ ञिधृषा प्रागल्भ्ये ’ अस्मात्सौवादिकात्कर्तरि “ सानसि वर्णसीति ” ण्ये, ऋकारस्येकारे च धिष्ण्यम् “ धिष्ण्यं स्थानाग्निसद्मसु । शक्तावृक्षेऽपि ” ( इति मेदिनी ) इत्येकं स्थानादेः । शुभाशुभं जन्मान्तरीयं कर्म्म, ऐश्वर्यं च भाग्यं स्यात् । भज्यतेऽनेनेति विग्रहे भजतेः करणे “ ऋहलोर्ण्यत् ” इति ण्यति, णित्त्वाद्वृद्धौ, “ चजोरिति ” कुत्वे च, भगस्यैश्वर्यस्य भावोवेति विग्रहे तु ब्राह्मणादित्वात् ष्यञि, भाग्यम् “ भाग्यं शुभात्मकविधौ स्याच्छुभाशुभकर्मणि ” ( इति विश्वः ) इत्येकं शुभाशुभकर्मादेः । कशेरुस्वनामख्याततृणकन्दविशेषः, हेम हिरण्यम् अनयोर्गाङ्गेयं स्यात् । गङ्गाया अपत्यम् “ शुभ्रादिभ्यश्चेति ” ढकि, वृद्धौ, ढस्यैयादेशे आलोपे च गाङ्गेयम् “ गाङ्गेयः स्यात्पुमान्भीष्मे क्लीबं स्वर्णकशेरुणोः ” ( इति मेदिनी ) इत्येकं कशेरुकादेः । दन्तिका उदुम्बरपर्णिका अपिशब्दादग्निशिखा, चशब्दाद्गुडूची त्रिपुटा च विशल्या स्यात् । विगता शल्यात्, विगतं शल्यं यस्या वेति विशल्या “ विशल्याग्निशिखादन्ती गुडूची त्रिपुटासु च ” ( इति मेदिनी ) इत्येकं दन्तिकादेः ॥ १६४ ॥

लक्ष्मी, पार्वती, नाम, शोभा, आरम्भ आदि.

स. वृषाकपायी(श्रीगौर्यो) रभिख्या (नामशोभयोः) । स.
(आरम्भोनिष्कृतिः शिक्षा पूजनं संप्रधारणम् ॥१६५॥
उपायः कर्म चेष्टा च चिकित्सा‡ च नव) क्रियाः ।

त्रिति—श्रीर्लक्ष्मीः, गौरी शिवप्रिया अनयोर्वृषाकपायी स्यात् । वृषाकपेः स्त्री, "वृषाकप्यग्नीति" ङीपि, ऐकारे, आयादेशे च वृषाकपायी "वृषाकपायी श्रीगौरीवरीजीवन्तिकासु च" (इति मेदिनी) इत्येकं लक्ष्म्यादीनाम् । नाम अभिधानम्, शोभा कान्तिः अनयोः अभिख्या स्यात् । अभिख्यानम्, अभिपूर्वकात्ख्यातेश्चक्षिङादेशाद्वा भावे "आतश्चोपसर्गे" इत्यङि, आलोपे, टापि च अभिख्या "अभिख्या त्वभिधाने स्याच्छोभायां च यशस्यपि" (इति मेदिनी) इत्येकं नामादेः । आरम्भः प्रारम्भः, निष्कृतिः प्रायश्चित्तम्, शिक्षा अभ्यासो वर्णोच्चारणविधिर्वा, पूजनमर्चनम्, संप्रधारणं विचारः, उपायः सामादिः, कर्म कार्यं फलाश्रयत्वं वा, चेष्टा परिस्पन्दः, चिकित्सा रुक्प्रतिक्रिया एते नव क्रियापदवाच्याः स्युः । करणम्, करोतेर्भावादौ "कृञः शचेति" शे, यकि, रिङादेशे, इयङि सति वा टापि च क्रिया "क्रिया कर्मणि चेष्टायां करणे संप्रधारणे । आरम्भोपायशिक्षार्थचिकित्सानिष्कृतिष्वपि" (इति विश्वः) आरम्भे यथा "सर्वाः क्रिया मन्त्रमूला नृपाणाम्" निष्कृतौ यथा "महापातकिनां पुंसां क्रिया प्राणान्तिका स्मृता" शिक्षायां यथा "क्रिया हि वस्तूपहिता प्रसीदति" पूजने यथा "देवक्रियापरस्तपस्वी" संप्रधारणे यथा "क्रियां विना को हि जानाति कृत्यम्" उपाये यथा "सप्तसामादिकाः क्रियाः" कर्मणि यथा "निष्क्रियस्य कुतः सुखम्" चेष्टायां यथा "मृतः किं निष्क्रियो यतः" चिकित्सायां यथा "पूर्वं ज्वरे समुत्पन्ने क्रिया पूर्वज्वरानुगा" इत्येकमारम्भादीनाम् ॥ १६५ ॥

सूर्यपत्नी, शोभा, प्रतिबिम्ब, घाम का अभाव,

स. छाया(सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः)॥ १६६ ॥

धनियों के व राजाओं के मन्दिरोंकीडयोढ़ी,

स. कक्ष्या(प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने) ।

करधनी, हाथी का कमरबन्ध, क्रिया, तामसी देवता आदि.

स. कृत्या(क्रियादेवतयोस्त्रिषु भेद्येधनादिभिः)॥ १६७ ॥

छेति—सूर्यप्रिया सूर्यकान्ता, कान्तिः शोभा, प्रतिबिम्बं प्रतिमानम्, अनातपः प्रकाशाभावो घर्माभावश्च वा एते छायापदवाच्याः स्युः । छ्यति, छ्यतेः कर्तरि "श्याद्व्यधेति" णे, आत्वे, युगागमे, "माछाशसिभ्यो यः" इति ये वा, आत्वे,

‡ "या क्रिया व्याधिहरणी सा चिकित्सा निगद्यते । दोषधातुमलानां या साम्यकृत्सैव रोगहृत् ॥" (इति भावप्रकाशः) ॥

टापि च छाया " छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः " ( इति मेदिनी ) इत्येकं सूर्यप्रियादीनाम् । हर्म्यादेर्धनिनांगेहादेर्नृपालयादेर्वा प्रकोष्ठे, काञ्च्यां मेखलायाम्, मध्येभबन्धने हस्तिकटिबन्धने च कक्ष्या स्यात् । कक्षेभवा, " शरीरावयवादिति " यति, अलोपे, टापि च कक्ष्या " कक्ष्या बृहतिकायां स्यात्काञ्च्यां मध्येभबन्धने । हर्म्यादीनां प्रकोष्ठे च " ( इति मेदिनी ) इत्येकं हर्म्यादिप्रकोष्ठादेः । क्रिया कर्म, देवता दैवतविशेषः एतयोः कृत्या स्त्री स्यात् । धनादिभिर्भेद्ये भेदनीये च त्रिषु त्रिलिङ्गयां स्यात् । करणम्, करोतेर्भावे " कृञः श च " इति चात् क्यपि, तुकि च, कृत्यते इति विग्रहे तु कृन्ततेः कर्मणि " ऋदुपधादिति " वा क्यपि टापि च कृत्या " कृत्यो विद्विषि कार्ये च कृत्या क्रिया दिवौकसोः " ( इति रभसः ) इत्येकं क्रियादेः ॥ १६६ । १६७ ॥

झगड़ा,युद्धादि, चरम, अधम, निन्दित,अधीन, संनद्ध, नीरोग.

(पु.स.न.) जन्यः (स्याज्जनवादेऽपि) (पु.स.न.) जघन्यो(ऽन्तेऽधमेऽपि च)।
(गर्ह्याधीनौ च) (पु.स.न.) वक्तव्यौ (पु.स.न.) कल्यौ (सज्जनिरामयौ)॥१६८॥

जेति–जनानां वादे निन्दितवादे अपिशब्दाद्युद्धादौ च 'जन्यः' स्यात् । जनस्य जल्पः, " मतजनहलादिति " यति, जायते, जनयति वा जनेः कर्तरि[1] " ऋहलोरिति" ण्यति, " जनिवध्योश्चेति " वृद्ध्यभावे, " अचोयत् " इति यति वा जन्यः जनीं वहतीति विग्रहे तु " संज्ञायां जन्या " इति वा साधुः । " जन्यामातृवयस्यास्याज्जन्या जनीवरप्रिया । जननीजनपित्रोश्च जन्यं निर्वादयुद्धयोः " ( इति धरणिः ) इत्येकं जनवादादेः । अन्ते चरमे, अधमे अवद्ये निकृष्टे वा अपि शब्दाच्छिश्नादौ च जघन्यः स्यात् । जघनेभवः, " शरीरावयवादिति " यति, कुटिलं हन्यते, वा हन्तेर्यङन्तात् " अचोयत् " इति यति, आगमशासनस्यानित्यत्वात् " नुगतः " इति नुगागमाभावे च जघन्यः " जघन्यं चरमे शिश्ने जघन्यं गर्हितेऽन्यवत् " ( इति विश्वः ) इत्येकमन्तादेः । गर्ह्योऽधमः पामरो वा अधीनो निम्नः आयतो वा चशब्दाद्वचनार्हश्च उभौ वक्तव्यौ स्याताम् । वचनार्हः, वक्तेर्ब्रूञादेशाद्वा कर्मणि तव्ये, चस्य कुत्वे च वक्तव्यः, द्वित्वे वक्तव्यौ " वक्तव्यं कुत्सिते हीने वचनार्हे च वाच्यवत् " ( इति मेदिनी ) इत्येकं गर्ह्यादेः । सज्जो बद्धसंनाहादिः, निरामयो नीरोगः एतौ कल्यौ स्याताम् । कलासु साधुः, " तत्र साधुः " इति यति, आलोपे च, कल्यते इति विग्रहे तु कलयतेश्चुराद्यदन्तात्कर्मणि " अचोयत् " इति यति वा णिलोपे च कल्यः द्वित्वे कल्यौ, " कल्यं प्रभाते क्लीबं स्यात्कल्यो वाक्श्रुतिवर्जिते । सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च । उपायवचनेऽपि स्यात्त्रिषु मद्ये तु योषिति " ( इति मेदिनी ) इत्येकं सज्जादीनाम् ॥ १६८ ॥

---

१ कर्तरि ण्यदादयस्तु " कृत्यल्युटो बहुलम् " (३।३।११३) इत्युक्तेरुन्नेयः ॥

पु.स.न पु.स.न.
ज्ञानी, धनी, सुन्दर, अच्छा (आत्मवाननपेतोऽर्था)दर्थ्यौ पुण्य(न्तु चार्वपि) ।
रूप, प्रियवादी., पु.स.न. पु.स.न.
रूप्यं(प्रशस्ते रूपेऽपि) वदान्यो(वल्गुवागपि)॥ १६६ ॥

आदिति–आत्मवान् ज्ञानी, अर्थाद्धनादनपेतः संयुक्तो धनी अर्थशाली वा एतौ अर्थ्यौ स्याताम् । अर्थे साधुः, "तत्र साधुरिति" यति, अर्थादनपेतः "धर्मपथ्य-र्थेति" यति वा "यस्येति" अलोपे च अर्थ्यः द्वित्वे अर्थ्यौ "अर्थ्यौ विज्ञार्थ-शालिनोः" ( इत्यजयः ) "अर्थ्यं शिलाजतुन्यर्थ्यौ बुधे न्याय्ये च वाच्यवत्" ( इति मेदिनी ) इत्येकमात्मवदादेः । चारु सुन्दरम्, अपिशब्दात्सुकृतं धर्मं च पुण्यं स्यात् । पुनाति, पूञः कर्तरि "पूञो यण्णुग्ह्रस्वश्च" इति, यणि, णुकि, ह्रस्वे च, पुणतीति विग्रहे तु "इगुपधेति" के, पुणस्तस्मिन्साधु, "तत्रसाधुरिति" यति वा पुण्यम् "पुण्यस्त्रिपु मनोज्ञे स्यात्क्लीवं सुकृतधर्मयोः" ( इति विश्वः ) इत्येकं चार्वादेः । प्रशस्ते रूपे अपिशब्दादाहतस्वर्णरजते रजतमात्रे च रूप्यं स्यात् । आहतं प्रशस्तं "वा" रूपमस्त्यस्येति, "रूपादाहतप्रशंसयोः" इति यपि, रूप्यम् "रूप्यः स्यात्सुन्दरे त्रिपु । आहतस्वर्णरजते रजते च नपुंसकम्" ( इति मेदिनी) इत्येकं प्रशस्त-रूपादेः । वल्गुवाक् मनोहरवादी वाग्मी वा अपिशब्दाद्दाता च वदान्यः स्यात् । वदति, वदेः कर्तरि "वदेरान्यः" इत्यान्ये वदान्यः "वदान्यो दातृवाग्मिनोः" ( इत्यजयः ) इत्येकं वल्गुवागादेः ॥ १६६ ॥

पु.स.न. पु.स.न.
योग्य, सुन्दर, सोम देवता वाला. (न्याय्येऽपि) मध्यं सौम्यं (तु सुन्दरे सोमदैवते) ।
इति यान्ताः ॥

न्यिति–न्याय्ये युक्ते अपिशब्दादवलग्नान्तराधमादिषु च मध्यं स्यात् । मां शोभां ध्यायति, धत्ते वा मापूर्वकाद् ध्यायतेः कर्तरि "आतोऽनुपेति" के, धाञो यकि वा आलोपे पृषोदरादित्वाद्ध्रस्वे च मध्यते इति विग्रहे तु "अघ्न्यादयश्चेति" यकि, हस्य धत्वे निपातिते च मध्यम् "न्याय्यावलग्नयोर्मध्यमन्तरे चाधमे त्रिपु" ( इति रभसः ) इत्येकं न्याय्यादीनाम् । सुन्दरे रुचिरे, सोमदैवते चन्द्रदैवते च सौम्यं स्यात् । सोमो देवताऽस्य । "सोमाट्ट्यण्" इति ट्यणि, सोमइवेति विग्रहे तु चातुर्वर्णा-दित्वात् ष्यञि वा वृद्धौ च सौम्यम् । "सौम्यो बुधे मनोज्ञे स्यादनुगे सोमदैवते" ( इति विश्वः ) इत्येकं सुन्दरादेः ॥

इति यान्ताः ॥

अथ रान्ता व्याख्यायन्ते ।

समूह, प्रसंग, पत्थर, यज्ञ, बृहस्पति, पिता आदि, युग, संशय, भेद, सादृश्य, आकार, चेष्टित.

पु. पु.
(निवहावसरौ) वारौ संस्तरौ (प्रस्तराध्वरौ) ॥ १७० ॥
पु. पु.
गुरू (गीष्पतिपित्राद्यौ) द्वापरौ (युगसंशयौ) ।
पु. पु.
प्रकारौ (भेदसादृश्ये) आकारा (विङ्गिताकृती) ॥ १७१ ॥

नीति–निवहः समूहः, अवसरः प्रस्तावः एतौ वारौ स्याताम् । वारयति, व्रियते वा वृणोतेः स्वार्थण्यन्तात्प्रेरणार्थकाद्वा कर्तरि पचाद्यचि, कर्मणि घञि वा वृद्धौ, रपरत्वे च वारः " वारः सूर्यादिदिवसे वारोऽवसरवृन्दयोः । कुब्जवृक्षे हरेद्वारे वारं मद्यस्य भाजने " ( इति विश्वः ) इत्येकं समुदायादेः । प्रस्तरः शय्या, पाषाणो वा अध्वरो यागः एतौ संस्तरौ स्याताम् । संस्तीर्यते, संपूर्वकात्स्तृणातेः कर्मणि " ऋदोरप् " इत्यपि, गुणे, रपरत्वे च संस्तरः " संस्तरप्रस्तरावेतौ प्रस्तराध्वरयोरपि । मणिपाषाणयोश्चापि यथाक्रममुदीरितौ " ( इति विश्वः ) इत्येकं प्रस्तरादेः । गीष्पतिः सुराचार्यः पित्राद्यः पिता जनकः आद्यान्महद्दुर्जरालघ्वादिग्रहः एतौ गुरू स्याताम् । गृणाति आत्मतत्त्वमिति, गृणातेः कर्तरि " कृग्रोरुच्चेति " कुप्रत्यये, उदादेशे रपरत्वे च गुरुः " गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि । पुमान्निषेकादिकरे पित्रादौ सुरमन्त्रिणि " ( इति मेदिनी ) इत्येकं गीष्पत्यादेः । युगः सत्यत्रेतादियुगभेदः, संशयः संदेहः एतौ द्वापरौ स्याताम् । द्वाभ्यां परः, द्वौपरावत्रेति वा पृषोदरादित्वाद् द्विशब्दस्य द्वादेशे द्वापरः " द्वापरं संशये युगे " ( इति कोषान्तरम् ) इत्येकं युगादेः । भेदः उपजायो विशेषो वा सादृश्यं तुल्यम् उभे प्रकारौ स्याताम् । प्रकरणम्, प्रपूर्वकात्करोतेर्भावे घञि, वृद्धौरपरत्वे च प्रकारः द्वित्वे प्रकारौ " प्रकारस्तुल्यभेदयोः " ( इति मेदिनी ) इत्येकं भेदादेः । इङ्गितम् चेष्टा, आकृतिरवयवसंस्थानम् एते द्वे ' आकारौ ' स्याताम् । आकरणम्, आङ्पूर्वकात्कृञोभावे घञि, वृद्धौ रपरत्वे च आकारः द्वित्वे आकाराविल्येकमिङ्गितादेः ॥ १७० । १७१ ॥

अनाज का अग्रभाग, बाण, धन्वा, पर्वत, वृक्ष, शैल, सूर्य, कुच, मेघ.

पु. पु.
किंशारू (धान्यशूकेषू) मरू (धन्वधराधरौ) ।
पु. पु.
अद्रयो (द्रुमशैलार्काः) (स्त्रीस्तनाब्दौ) पयोधरौ ॥ १७२ ॥

किमिति–धान्यशूकः शस्यशूकः, इषुर्बाणः कङ्कपत्री वा एतौ किंशारू स्याताम् । किंचित्, कुत्सितं वा शृणाति, किंपूर्वकाच्छृणातेः कर्तरि " किंजरयोः श्रिणः " इति ञुणि, वृद्धौ, रपरत्वे च किंशारुः द्वित्वे किंशारू " किंशारुर्ना शस्यशूके विशिखे कङ्कपत्रिणि ", ( इति मेदिनी ) इत्येकं धान्यशूकादेः । धन्वा निर्जलदेशश्चापो वा

धराधरः पर्वतः एतौ मरू स्याताम् । म्रियन्ते जन्तवोऽत्रेति विग्रहे म्रियतेराधारे "भृमृशीति" उप्रत्यये, गुणे, रपरत्वे च मरुः द्वित्वे मरू "मरुर्ना गिरिधन्वनोः" (इति मेदिनी) इत्येकं धनुरादेः । द्रुमो वृक्षः, शैलः शिलोच्चयः अर्को दिवाकरः एते अद्रयः स्युः । अत्ति, अद्यते वा अदेः कर्तरि कर्मणि ना "अदिशदीति" क्रिनि, अद्रिः, द्वित्वे अद्री, बहुत्वे अद्रयः "अद्रिस्तु पर्वते । सूर्ये शाखिनि च" (इति हैमः) इत्येकं द्रुमादीनाम् । स्त्रीस्तनो युवतीकुचः, अब्दो वारिदः एतौ पयोधरौ स्याताम् । धरतीति "पचाद्यचि" धरः पयसोधरः पयोधरः द्वित्वे पयोधरौ "पयोधरः कोपकारे नारिकेले स्तनेऽपि च । कशेरुमेघयोः पुंसि" (इति मेदिनी) इत्येकं कामिनीकुचादेः ॥ १७२ ॥

अंधेरा, वैरी, दानव, भेट, हाथ, किरण, (ध्वान्तारिदानवा) वृत्रा (बलिहस्तांशवः) कराः । [पु.] [†] [पु.]

पराजय या तरङ्ग, बाण, दार, कोना आदि. प्रदरा(भङ्गनारीरुग्बाणा) अस्राः (कचा अपि) ॥ १७३ ॥ [पु.]

ध्वेति—ध्वान्तः अन्धकारः, अरिः शत्रुः, दानवो दनुजभेदः एते वृत्राः स्युः । वर्तते, वृतेः कर्तरि "स्फायितञ्चिवञ्चीति" रकि, वृणोतीति विग्रहे तु वृणोतेः कर्तरि बाहुलकात्क्रे वा वृत्रः वृत्रो वा द्वित्वे वृत्रौ, वृत्रौ वा बहुत्वे वृत्राः, वृत्रा वा "वृत्रो रिपौ घने ध्वान्ते शैलभेदे च दानवे" (इति मेदिनी) इत्येकं ध्वान्तादीनाम् । बली राजग्राह्यो भागः, हस्तः पाणिः, अंशुर्मयूखः एते कराः स्युः । कीर्यते, किरतेः कर्मणि "ऋदोरप्" इत्यपि, गुणे, रपरत्वे च, करोतीति विग्रहे तु "पचाद्यचि" वा करः द्वित्वे करौ, बहुत्वे कराः "करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः" (इति मेदिनी) इत्येकं बल्यादीनाम् । भङ्गः पराजयस्तरङ्गो वा नारीरुक् रमणी-रोगविशेषः बाणो विशिखः एते प्रदराः स्युः । प्रदरणम्, प्रदीर्यतेऽनेनेति वा प्रपूर्वकाद्दृणातेर्भावसाधनयोः "ऋदोरप्" इत्यपि, गुणे, रपरत्वे च प्रदरः, द्वित्वे प्रदरौ, बहुत्वे प्रदराः "प्रदरो रोगभेदे स्याद्विदारे शरभङ्गयोः" (इति मेदिनी) इत्येकं भङ्गादीनाम् । कचाः केशाः, अपिशब्दादश्रूणि कोणाश्च एते अस्राः स्युः । अस्यते, असेः कर्मणि बाहुलकाद्रकि, अस्रः द्वित्वे अस्रौ, बहुत्वे अस्राः "अस्रः कोणे, कचे पुंसि क्लीबमश्रुणि शोणिते" (इति मेदिनी) इत्येकं कचादीनाम् ॥ १७३ ॥

विना सींग का बैल, विनादाढ़ी मूछ का पुरुष, ( अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्ना च ) तूवरौ । [पु.]

सोना, धन, पलंग, परिवार. ( स्वर्णेऽपि ) राः परिकरः (पर्यङ्कपरिवारयोः) ॥ १७४ ॥ [पु.] [पु.]

† "अर्थागमो भवेदायो भागधेयो बलिः करः" (इति हलायुधः) ॥

अजेति—काले इत्युभाभ्यां संबध्यते, यौवनसमये न जातं उत्पन्नं शृङ्गं विषाण-मस्त्यस्येति ' अजातशृङ्गो गौर्वृषभः, अश्मश्रुः श्मश्रुविहीनो ना पुरुषश्च उभौ तूवरौ स्याताम् । तौति, तौतेः कर्त्तरि बाहुलकाद्वरे, दीर्घे च तनोतीति विग्रहे तु बाहुलकाडू प्रत्यये तूः वृणोति, व्रियते वा वृणोतेः कर्तरि अचि, कर्मणि अपि, वा वरः तूश्चासौ वरश्चाच्छादको वा तूवरः "तूवरो दन्तोष्ठ्यमध्यो ग्रन्थकृता पठितः । वस्तुतस्तु पवर्गाद्यमध्यः । वेदे तथा दर्शनात् " अश्वस्तूपरो गोमृगः " ( इति पीयूषव्याख्या-तोऽवसेयम् ) तूवरोऽश्मश्रुपुरुषे प्रौढाशृङ्गगवेऽपि च । पुरुषे व्यञ्जनत्यक्ते स्यात्कषाय-रसेऽपि च " ( इति मेदिनी ) इत्येकमजातशृङ्गादेः । स्वर्णे काञ्चने अपिशब्दा-द्वित्ते च राः स्यात् । राति सुखम्, रायते वा रातेः कर्तरि कर्मणि वा " रातेर्डैः " इति डै प्रत्यये डित्त्वाट्टिलोपे " रायो हलि " इत्याकारान्तादेशे, रुत्वे, विसर्गे च राः " राः पुंसि स्वर्णवित्तयोः " ( इति मेदिनी ) इत्येकं हिरण्यादेः । पर्यङ्को मञ्चः परिवारः परिजनः उभयोः ' परिकरः ' स्यात् । परिकीर्यते परिपूर्वकात्किरतेः कर्मणि " ॠदोरप् " इत्यपि, परिकीर्यतेऽनेनेति विग्रहे तु करणे " पुंसीति " घे वा गुणे, रपरत्वे च परिकरः " भवेत्परिकरो व्राते पर्यङ्कपरिवारयोः । प्रगाढगात्रिकाबन्धे विवेकारम्भयोरपि " ( इति विश्वः ) इत्येकं पर्यङ्कादेः ॥ १७४ ॥

शुद्धमोती, वायु, चितकबरा, प्रतिज्ञा, युद्ध, सुभाषा, आपदा.

(मुक्ताशुद्धौ च)तारः[पु.] स्याच्छारो[पु.] (वायौ सतु त्रिषु ।
कर्बुरे)(ऽथ प्रतिज्ञाजिसंविदापत्सु ) संगरः[पु.] ॥ १७५ ॥

मुक्तेति—मुक्तायाः शुद्धिस्तस्याम्, चशब्दात्तरणशुद्धमौक्तिकरजतादौ च तारः स्यात् । तारयति, तार्य्यते, अनेनेति वा तारयतेः कर्तरि पचाद्यचि, कर्मणि घञि, साधने ' घे ' वा णिलोपे च तारः " तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके । तारं च रजते-ऽत्युच्चस्वरेऽप्यन्यवदीरितम् । ऋक्षाक्षिमध्ययोस्तारा सुग्रीवगुरुयोषितोः । बुद्धदेव्यां मता तारा " ( इति विश्वः ) इत्येकं शुद्धमौक्तिकादेः । वायौ समीरणे शारः पुमा-न्स्यात् । स तु कर्बुरे शबले त्रिषु त्रिलिङ्ग्यां स्यात् । शृणाति, शीर्यतेऽनेनेति वा शृणातेः कर्तरि, करणे वा " शॄ वायुवर्णनिवृत्तेषु " घञि, वृद्धौ, रपरत्वे च शारः " शारः स्याच्छबले वाच्यलिङ्गः पुंसि समीरणे" ( इति मेदिनी ) इत्येकं वाय्वादेः । अथेत्यनन्तरम् प्रतिज्ञा कर्तव्योपदेशः, आज्ञा वा आजिः संग्रामः, संवित्तु भाषा क्रिया-कारो वा आपत् विपत्तिः एष्वर्थेषु संगरः स्यात् । संगरणम्, संगीर्यते, अनेनेति वा संपूर्वकाद्गृणातेर्भावकर्मसाधनेषु " ॠदोरप् " इत्यपि, " पुंसीति " घे वा गुणे रपरत्वे च संगरः "संगरो युधि चापदि । क्रियाकारे विषे चाङ्गीकारे क्लीबं शमीफले" ( इति मेदिनी ) इत्येकं प्रतिज्ञानादेः ॥ १७५ ॥

मन्त्रभाग, गुप्तवाद, सूर्य,यज्ञ, (वेदभेदे गुह्यवादे) मन्त्रो मित्रो (रवावपि)।
बाण,यज्ञस्तम्भ का टुकड़ा, गुह्येन्द्रिय,विष्ठादि (मखेषु यूपखण्डेऽपि) स्वरु (गुह्ये) ऽप्यवस्करः ॥ १७६॥

वयिति–वेदभेदे वेदविशेषे, गुह्यवादे गुप्तवादे रहसि कर्तव्यनिश्चये वा मन्त्रः स्यात् । मन्त्रणम्, मन्त्र्यते वा मन्त्रयतेर्भावकर्मणोर्घञि, नुमागमे, परसवर्णे च मन्त्रः "मन्त्रोवेदविशेषे स्याद्देवादीनां च साधने । गुह्यवादेऽपि च पुमान्" (इति मेदिनी) इत्येकं वेदभेदादेः । रवौसूर्ये अपिशब्दात्सुहृदि च मित्रः स्यात् । मेद्यति, मिदेः कर्तरि "अमिचिमिदिशसिभ्यः क्त्रः" इति क्त्रे, दस्य चर्त्वेन तकारे च मित्रः "मित्रं सुहृदि न द्वयोः। सूर्ये पुंसि" (इति मेदिनी) इत्येकं सूर्यादीनाम्। मखो यागः, इपुर्बाणः यूपखण्डस्तक्ष्यमाणयूपस्य प्रथमपतितशकलः एषां समाहारद्वन्द्वे मखेषु यूपखण्डम्, तस्मिन्, अपिशब्दाद्भिदुरे च स्वरुः स्यात् । स्वरति, स्वर्यते वा स्वरतेः कर्तरि कर्मणि वा "शृस्वृस्निहीति" उ प्रत्यये, गुणे, रपरत्वे च स्वरुः "स्वरुः पुमान् यूपखण्डे भिदुरेऽप्यध्वरे शरे" (इति मेदिनी) इत्येकं मखादेः । गुह्ये उपस्थे, अपिशब्दाद्वर्चस्के च अवस्करः स्यात् । अवोऽधः कीर्यते, अवपूर्वकात्किरतेः कर्मणि "ऋदोरप्" इत्यपि, गुणे, रपरत्वे, "वर्चस्केऽवस्करः" इति सुडागमे च अवस्करः "अवस्करोऽपि वर्चस्के गुह्ये" (इति मेदिनी) इत्येकमवस्करादेः ॥ १७६॥

मृदङ्गादिकों की ध्वनि, गजेन्द्रों की गर्जना, अभियोग, चौर्य, कवचादिधारण. आडम्बर(स्तूर्यरवे गजेन्द्राणां च गर्जिते)।
अभिहारो (ऽभियोगे च चौर्ये संनहनेऽपि च) ॥१७७॥

आडमिति–तूर्यरवे मृदङ्गमुरजादिवाद्यध्वनौ, गजेन्द्राणां मत्तमातङ्गानां गर्जिते गर्जने, चशब्दात्समारम्भेऽपि आडम्बरः स्यात् । आडम्ब्यते, आङ् पूर्वकाद् डम्बयतेश्चौरादिकाद्भावकर्मणोर्घञि आडम्बस्तं रातीति विग्रहे "आतोऽनुपेति" के आलोपे च आडम्बरः "आडम्बरः समारम्भे गजगर्जिततूर्ययोः" (इति विश्वः) इत्येकं तूर्यरवादेः । अभियोगे अभिगम्याक्रमणे, चौर्ये चोरकर्मणि, संनहने कवचादिधारणेऽपि च अभिहारः स्यात् । अभिहरणम्, अभिपूर्वकाद्धरतेर्भावे घञि, वृद्धौ, रपरत्वे च अभिहारः स्यादित्येकमभियोगादेः ॥ १७७ ॥

परिजन, तलवारका म्यान, उपकरण, वृक्ष, मूठी परिमाण कुश,पीठाआदि आसन, (स्याज्जङ्गमे) परीवारः (खड्गकोशे परिच्छदे)।
विष्टरो(विटपी दर्भमुष्टिः पीठाद्यमासनम्) ॥ १७८ ॥

स्यादिति–जङ्गमे, परिजने, खड्गकोशे करवालकोशे, परिच्छदे उपकरणे च परीवारः स्यात् । परिवारणम्, परिवार्यतेऽनेनेति वा परिपूर्वकाद् वृणोतेः स्वार्थण्यन्ताद्भावे, साधने वा घञि, दीर्घे, णिलोपे च परीवारः "परीवारो परिजने खड्गकोशे परिच्छदे" ( इति मेदिनी ) इत्येकं जङ्गमादेः । विटपी पादपः, दर्भमुष्टिः मुष्टिकापरिमाणदर्भः, पीठमाद्यं यस्य तदासनं च 'विष्टरः' स्यात् । विस्तीर्यते, विपूर्वकात्स्तृणातेः कर्मणि, "वृक्षासनयोर्विष्टरः" इत्यपि, स्त्रः सस्य षत्वे ष्टुत्वे च निपातिते विष्टरः "विष्टरो वृक्ष आसनं च" इत्येकं वृक्षादेः ॥ १७८ ॥

दरवाजा, द्वारपाल, ड्योढ़ीदारिन, विशाल, नेवला, विष्णु, पीलारंग.

पु. स.
**(द्वारि द्वाःस्थे) प्रतीहारः (प्रतीहार्यप्यनन्तरे) ।**
पु.
**(विपुले नकुले विष्णौ)बभ्रुः(स्यात्पिङ्गले त्रिषु) ॥१७९॥**

द्वेति–द्वारि द्वारे, द्वाःस्थे द्वारपाले च प्रतीहारः स्यात् । अनन्तरे द्वास्थे प्रतीहारी अपि स्यात् । प्रतिह्रियतेऽनेन, अत्रेति वा प्रतिपूर्वकाद्धरतेः साधनाधारयोर्घञि वृद्धौ, रपरत्वे "उपसर्गस्येति" दीर्घे च प्रतीहारः, गौरादित्वान्ङीषि च प्रतीहार्यपि "प्रतीहारो द्वारि द्वाःस्थे द्वाःस्थितायां तु योषिति" ( इति मेदिनी ) इत्येकं द्वारादीनाम् । विपुले विशाले, नकुले 'नेवला' इति ख्याते, विष्णौ सर्वव्यापिनि परमेश्वरे बभ्रुः पुमान्स्यात् । पिङ्गले पीतवर्णे त्रिषु त्रिलिङ्ग्यां स्यात् । भरति, बिभर्ति वा भृञः कर्तरि "कुर्भ्रश्चेति" कौ, द्वित्वे, अभ्यासऋवर्णस्यादादेशे, रपरत्वे, रलोपे, जस्त्वे, यणादेशे च बभ्रुः "बभ्रुर्ना नकुले विष्णौ विपुले पिङ्गले त्रिषु" ( इति बलशर्मा ) इत्येकं विपुलादेः ॥ १७९ ॥

सामर्थ्य, स्थिरांश, न्याय्य, श्रेष्ठ, जूआरी, बाज़ी, जूआ.

पु.
**सारो (बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु ) ।**
पु. न.
**दुरोदरो(द्यूतकारे पणे) (द्यूते) दुरोदरम् ॥ १८० ॥**

सेति–बले स्थौल्ये, सामर्थ्ये, सैन्ये वा स्थिरांशे वृक्षादेः स्थिरांशे च सारः पुमान्स्यात् । न्याय्ये न्याययुक्ते क्लीबं नपुंसकम्, वरे श्रेष्ठे त्रिषु त्रिलिङ्ग्यां स्यात् । सरति सरतेः कर्तरि "सृ स्थिरे" इति घञि, वृद्धौ, रपरत्वे च सारः "सारो बले स्थिरांशे च मज्जि पुंसि जले धने । न्याय्ये क्लीबं त्रिषु वरे" ( इति मेदिनी ) इत्येकं बलादीनाम् । द्यूतकारे कैतवकारके, पणे ग्रहे च दुरोदरः स्यात्, द्यूते तु दुरोदरं स्यात् । दुष्टमासमन्तादुदरमस्येति दुरोदरः "दुरोदरं द्यूतभेदे द्यूतकृत्पणयोः पुमान्" ( इति मेदिनी ) "आश्रित्य दुर्गं गिरिकन्दरोदरं क्रीडन्त्यमुष्मिन्सजतं दुरोदरमिति यमकान्निरुकारोऽपीति" गोवर्धनाचार्यो व्याख्यातवानित्येकं द्यूतकारादेः ॥ १८० ॥

पु.न.
महावन, दुर्गम मार्ग, परसम्पत्ति का नहीं सहने वाला आदि. **(महारण्ये दुर्गपथे) कान्तारः (पुन्नपुंसकम्) ।**
पु.
**मत्सरो(ऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ) ॥ १८१ ॥**

मेति—महारण्ये महावने, दुर्गपथे दुर्गमवर्त्मनि च कान्तारः पुन्नपुंसकं स्यात् । कान्ता अरा अस्य, कान्तं मनोज्ञमृच्छति, इयर्ति वा कान्तपूर्वकादृच्छतेरियतेर्वा " कर्मण्यण् " इत्यणि, उपपदसमासे, विभक्तिलोपे, वृद्धौ, रपरत्वे च कान्तारः "कान्तारोऽस्त्रीमहारण्ये बिले दुर्गमवर्त्मनि । पुंसि स्यादिक्षुभेदे " ( इति मेदिनी ) इत्येकं महारण्यादेः । अन्यशुभद्वेषे परशुभद्वेषे मत्सरः पुमान्स्यात् । तद्वानन्यशुभद्वेषवान्, कृपणः कदर्यश्चैतयोस्त्रिषु त्रिलिङ्गयां स्यात् । माद्यति परकृच्छ्रे, मदेः कर्तरि " कृभूमदिभ्यः कित् " इति सेर, दस्य चर्त्वेन तकारे च मत्सरः " मत्सरा मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान् । असह्यपरसंपत्तौ कृपणे चाभिधेयवत् " (इति मेदिनी ) इत्येकमन्यशुभद्वेषादेः ॥ १८१ ॥

देवता से चाहा, श्रेष्ठ, थोड़ा प्यारा, बांसकाअँखुआ, करील, कलश. **(देवाद्वृते) वरः (श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये) ।**
**(वंशाङ्कुरे)करीरो(ऽस्त्री तरुभेदे घटे च ना )॥ १८२ ॥**

दयिति—देवाद्वृते देवादभिलषिते वरः पुमान् स्यात् । श्रेष्ठे त्रिषु त्रिलिङ्गयां स्यात्, मनाक्प्रिये ईषत्प्रिये च क्लीबं नपुंसकं स्यात् । वरणम्, व्रियते वा वृणोतेर्भावे कर्मणि वा " ग्रहवृदृ " इत्यपि, वृणोतीति विग्रहे तु कर्तरि पचाद्यचि वा गुणे, रपरत्वे च वरः " वरो जामातरि वृतौ देवतादेरभीप्सिते षिङ्गे पुंसि त्रिषु श्रेष्ठे कुङ्कुमे तु नपुंसकम् । वरी प्रोक्ता शतावर्यां वरा च स्यात्फलत्रिके । मनागिष्टे वरं क्लीबं केचिदाहुस्तदव्ययम् " ( इति मेदिनी ) इत्येकं देवाद्वृतादेः । वंशाङ्कुरे वेणवङ्कुरे करीरः अस्त्री पुन्नपुंसकं स्यात्, तरुभेदे वृक्षभेदे, घटे कलशे च ना पुमान्स्यात् । किरति, कीर्यते, कृणाति वा किरतेः कृणातेर्वा कर्तरि कर्मणि वा " कॄशॄपॄकटीति " ईरनि, करिणमीरयतीति विग्रहे तु करिपूर्वकादीरयतेः कर्तरि " कर्मण्यण् " इत्यणि गुणे, रपरत्वे च करीरः " वंशाङ्कुरे करीरोऽस्त्रीवृक्षभिद्घटयोः पुमान् । करीरा चीरिकायान्तु दन्तमूले तु दन्तिनाम "( इति मेदिनी ) इत्येकं वंशाङ्कुरादेः ॥ १८२ ॥

पु.
सेनाका पृष्ठभाग या पुरोभाग, रक्षासूत, यम, पवन आदि. **( ना चमूजघने हस्तसूत्रे) प्रतिसरो (ऽस्त्रियाम्) ।**
**(यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ॥ १८३ ॥**
**शुकाहिकपिभेकेषु) हरि ( र्ना कपिले त्रिषु) ॥**

नेति—चमूजघने सेनापुरोभागे चमूपृष्ठे वा प्रतिसरो ना पुमान् स्यात् । हस्तसूत्रे करसूत्रेऽस्त्रियां पुन्नपुंसकं स्यात् । प्रतिसरति, प्रतिपूर्वकात्सरतेः कर्तरि पचाद्यचि, प्रतिस्त्रियतेऽनेनेति विग्रहे तु "पुंसीति" घे वा गुणे, रपरत्वे च प्रतिसरः "भवेत्प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे । व्रणशुद्धौ चमूपृष्ठे पुंसि न स्त्री तु मण्डले । आरक्षे करसूत्रे च नियोज्ये त्वन्यलिङ्गकः" (इति मेदिनी) इत्येकं चमूजघनादीनाम् । यमो यमराजः, अनिलो वायुः, इन्द्रो देवराजः, चन्द्रो निशापतिः, अर्कः सूर्यः, विष्णुर्नारायणः, सिंहो मृगेन्द्रः, अंशुः किरणः, वाजी अश्वः एषु, शुकः कीरः, अहिः सर्पः, कपिर्वानरः, भेको मण्डूकः एषु हरिः ना पुमान्स्यात् । कपिले पिङ्गले त्रिषु त्रिलिङ्ग्यां स्यात् । हरति, हृञः कर्तरि "अचइः" इतीप्रत्यये, गुणे, रपरत्वे च हरिः "हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु । सिंहाश्वकपिभेकाहिशुकलोकान्तरेषु च । हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः" (इति विश्वः) इत्येकं यमादीनाम् ॥ १८३ । ३ ॥

| | |
|---|---|
| सिटकी, खांड़, पत्थर, चलाना या बिताना, | स. स. ‡<br>**शर्करा (कर्परांशेऽपि) यात्रा (स्याद्यापने गतौ)॥ १८४॥** |
| चलना, देवपूजनविषयक उत्साह, पृथ्वी, | स. स.<br>**इरा (भूवाक्सुराप्सु) (स्या)त्तन्द्री (निद्राप्रमीलयोः)।** |
| वाणी, मदिरा, जल, नींद, आलस्य, धाई, धरती, आंवला. | स.<br>**धात्री (स्यादुपमातापि क्षितिरप्यामलक्यपि) ॥ १८५॥** [1] |

शरिति—कर्परांशे खर्परांशे अपिशब्दादुपलाखण्डविकृतिशर्करान्वितदेशादौ च शर्करा स्यात् । शृणाति, शीर्यते वा शृणातेः कर्तरि कर्मणि वा "श्रः करन्" इति करनि, गुणे, रपरत्वे च शर्करा "शर्कराखण्डविकृतावुपलाकर्परांशयोः । शर्करान्वितदेशेऽपि रुग्भेदे शकलेऽपि च" (इति मेदिनी) इत्येकं कर्परांशादेः । यापने प्रापणे, चालने, निःसारणे वा गतौ गमने च यात्रा स्यात् । यानम्, यायतेऽनयेति वा यातेर्भावसाधनयोः "हुयामेति" त्रनि, टापि यात्रा "यात्रा तु यापनोपाये गतौ देवार्चनोत्सवे" (इति विश्वः) इत्येकं यापनादेः । भूः पृथ्वी, वाक् वाणी, सुरा मदिरा, आपो जलम् एषु इरा स्यात् । एति, ईयते वा एतेः कर्तरि, कर्मणि वा "ऋज्रेन्द्राग्रेति" रनि, गुणाभावे निपातिते, टापि च इरा "इरा

---

‡ "कोकिल तावद्विरसान्यापय दिवसान् वनान्तरे निवसन् । यावदलिकुलमालः कोपि रसालःसमुल्लसति" (इति भामिनीविलासः) ॥

१—"पिताय यदि बालस्य विदध्यादुपमातरम् । सुविचार्य गुणान्दोषान्कुर्याद्धात्रीं तदेदृशीम् । सवर्णां मध्यवयस्कां सच्छीलां मुदितां सदा । शुद्धदुग्धां बहुक्षीरां सवत्सामतिवत्सलाम् । स्वाधीनामल्पसंतुष्टां कुलीनां सज्जनात्मजाम् । कैतवेन परित्यक्तां निजपुत्रदशां शिशौ" (इति भावप्रकाशः) ॥

मध्ये च वारिणि " इत्येकं पृथिव्यादेः । निद्रा शयनम्, प्रमीला अत्यन्तश्रमादिना मोहप्राया चैतयोः तन्द्री स्यात् । तत् राति, द्राति वा तत्पूर्वकाद् रातेर्द्रातेर्वा " आतोऽनुपेति " के, आलोपे तदो नान्तत्वे निपातिते गौरादित्वान्ङीषि च तन्द्री, टापि तु तन्द्रापि, तन्द्रायाः करणमिति विग्रहे तु " तत्करोति " इति णिजन्तात्कर्तरि " अच इः " तन्द्रिः " कृदिकारादिति " वा ङीषि तन्द्री " तन्द्रिस्तन्द्रीस्तन्द्रा " ( इति द्विरूपकोषः ) इत्येकं निद्राप्रमीलयोः । उपमाता दुग्धपायिका, क्षितिः पृथ्वी, आमलकी तिष्यफला अपिशब्दाज्जननी च धात्री स्यात् । धीयते, धेटः कर्मणि, " धः कर्मणि ष्ट्रन् " इति ष्ट्रनि, आत्वे, षित्त्वान्ङीषि च धात्री " धात्री जनन्यामलकी वसुमत्युपमातृषु " ( इति मेदिनी ) इत्येकमुपमात्रादेः ॥ १८४ । १८५ ॥

अङ्गहीन, नटी, मधुमक्खी, भटकटैया, निर्दय, नीच, थोड़ा, उपकरण, स्वल्प, माप, समग्र, निश्चित.

स. क्षुद्रा ( व्यङ्गा नटी वेश्या सरघा कण्टकारिका ) ।

पु. स. ( त्रिषु क्रूरेऽधमेऽल्पेऽपि ) क्षुद्रो मात्रा (परिच्छदे १८६ ॥

न. अल्पे च परिमाणे स्या) न्मात्रं (कात्स्न्र्येऽवधारणे) ।

क्षिवति—व्यङ्गा अङ्गहीना, नटी शैलूषी, वेश्या गणिका, सरघा मधुमक्षिका कण्टकारिका बृहती च क्षुद्रा स्यात् । क्रूरे नृशंसे, अधमे नीचे, अल्पे स्तोके अपिशब्दात्कृपणे च क्षुद्रस्त्रिषु त्रिलिङ्ग्यां स्यात् । क्षुणत्ति, क्षुद्यते वा क्षुणत्तेः कर्त्तरि, कर्मणि वा " स्फायितञ्चीति " रकि, टापि च क्षुद्रा टाबभावे तु क्षुद्रः " क्षुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवत् । क्षुद्राव्यङ्गानटीकण्टकारिकासरघासु च । चाङ्गेरीवेश्ययोर्हिंस्रामक्षिकामात्रयोरपि " ( इति विश्वः ) इत्येकं व्यङ्गादीनाम् । परिच्छदे उपकरणे, अल्पे क्षुल्लके, परिमाणे परितो माने च सा मात्रा स्यात् । कात्स्न्र्ये सामग्र्ये अवधारणे निश्चिते च मात्रं स्यात् । माति, मिमीते, मीयतेऽनयेति वा मातेर्माङो वा कर्तृसाधनयोः " हुयामेति " त्रनि, टापि च मात्रा, टाबभावे तु मात्रम् " मात्रा कर्णविभूषायां वित्ते माने परिच्छदे । अक्षरावयवे स्वल्पे क्लीबं कात्स्न्र्येऽवधारणे " ( इति मेदिनी ) इत्येकं परिच्छदादीनाम् ॥ १८६ । [१] ॥

चित्रसारी, आश्चर्य, कमर, स्त्री, उचित, भाजन, वाहन, पक्ष, हुक्म, ग्रन्थ, हथियार, लोहा.

न. न. (आलेख्याश्चर्ययो)श्चित्रं कलत्रं(श्रोणिभार्ययोः) १८७॥

न. न. ( योग्यभाजनयोः ) पात्रं पत्रं ( वाहनपक्षयोः ) ।

न. न. (निदेशग्रन्थयोः)शास्त्रं शस्त्रं (मायुधलोहयोः) ॥१८८॥

१ " शासनादनिशं देवि ! वर्णाश्रमनिवासिनाम् । तारणात्सर्वपापेभ्यः शास्त्रमित्यभिधीयते " ( इति कुलार्णवतन्त्रम् ) ॥

एति—आलेख्यं भित्त्यादौ नानावर्णप्रलेखनम्, आश्चर्यमद्भुतं चैतयोश्चित्रं स्यात् । चिनोति, चीयते वा चिनोतेः कर्तरि कर्मणि वा "अमिचीति" क्रे, कित्त्वाद्गुणाभावे च चित्रम् "चित्राखुपर्णीगोडुम्बासुभद्रादन्तिकासु च । मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम् । तिलकालेख्ययोः क्लीबं कर्बुराद्भुतयोरपि ।। तद्युक्तयोर्वाच्यलिङ्गं चित्री झिल्यां नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालिखनभेदयोः" ( इति मेदिनी ) इत्येकमालेख्यादेः । श्रोणिः कटिः भार्या जाया चैतयोः कलत्रं स्यात् । गडति, गड्यते वा गडेः कर्तृकर्मणोः "गडेरादेश्च कः" इत्यत्रनि, गस्य कादेशे, डलयोरैक्याड्डस्य लत्वे च, कलं त्रायते, कलपूर्वकात्त्रैङः कर्तरि "आतोऽनुपेति" के, आलोपे च । कडति, कड्यते वा कडेः कर्तरि कर्मणि वा बाहुलकादत्रनि, डस्य लत्वे च वा कलत्रम् "दुर्गस्थाने नृपादीनां कलत्रं श्रोणिभार्ययोः" ( इति रभसः ) इत्येकं कट्यादेः । योग्यो निपुणः उचितो वा, भाजनं भाण्डं चानयोः पात्रं स्यात् । पाति, पायते, पीयतेऽनेनेति वा पातेः कर्तृकर्मणोः पिबतेः साधने वा "दादिभ्यश्छन्दसि" इति ष्ट्रनि पात्रम् "पात्रन्तु भाजने योग्ये पात्रं तीरद्वयान्तरे । पात्रं स्रुवादौ पर्णे च राजमन्त्रिणि चेष्यते" ( इति विश्वः ) इत्येकं योग्यादेः । वाहनं यानम्, पक्षः शुक्लादिश्चैतयोः पत्रं स्यात् । पतन्त्यनेन, पततेः करणे "दाम्नीति" ष्ट्रनि पत्रम् "पत्रन्तु वाहने पर्णे पक्षे च शरपक्षिणोः" ( इति विश्वः ) इत्येकं वाहनादेः । निदेश आज्ञा, ग्रन्थो व्याकरणादिश्चानयोः शास्त्रं स्यात् । शासनम्, शिष्यतेऽनेनेति वा शासेर्भावसाधनयोः "सर्वधातुभ्य इति" ष्ट्रनि शास्त्रमित्येकं निदेशादेः । आयुधं प्रहरणम्, लोहः कालायसं चैतयोः शस्त्रं स्यात् । शस्यतेऽनेन, शसेः साधने "दाम्नीति" ष्ट्रनि शस्त्रम् "शस्त्रं लोहास्त्रयोः क्लीबं छुरिकायां तु योषिति" ( इति मेदिनी ) इत्येकमायुधादेः ।। १८७।१८८ ।।

जटा, वस्त्रभेद, भार्या, शरीर, सूअर व हलका मुखाग्र, नाम, वंश आदि.

**(स्या) (ज्जटांशुकयो) र्नेत्रं क्षेत्रं (पत्नीशरीरयोः) ।**
**(मुखाग्रे क्रोडहलयोः)पोत्रं गोत्रं (च नाम्नि च)।।१८९।।**

स्यादिति—जटा संलग्नकचा, अंशुकं वसनं चैतयोर्नेत्रं स्यात् । नयति, नीयते, अनेनेति वा नयतेः कर्तृकर्मकरणेषु ष्ट्रनि, गुणे च नेत्रम् "नेत्रं मथिगुणे वस्त्रे तरुमूले विलोचने । नेत्रं रथे च नाड्यां च नेत्री नेतरि भेद्यवत्" ( इति विश्वः ) "नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च । रथे चक्षुषि नद्यां च नेत्री नाड्यां च योषिति" ( इति मेदिनी ) इत्येकं जटादेः । पत्नी धर्मपत्नी, शरीरं कलेवरं चानयोः क्षेत्रं स्यात् । क्षयति, क्षियति, क्षीयते, अनेन वा क्षयतेः क्षियतेर्वा कर्तृकर्मसाधनेषु "सर्वधातुभ्यः ष्ट्रन्" इति ष्ट्रनि गुणे च क्षेत्रम् "क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः" ( इति मेदिनी ) इत्येकं पत्न्यादेः । क्रोडहलयोः सूकरलाङ्गलयो-

मुखाग्रे 'पात्रं' स्यात्। पूयतेऽनेन पुनातेः करणे "हलसूकरयोः पुवः" इति ष्ट्रनि, गुणे च पोत्रम् "पोत्रं वस्त्रे मुखाग्रे च सूकरस्य हलस्य च" (इति विश्वः) इत्येकं क्रोडहलमुखाग्रादेः। नाम्नि नामधेये चशब्दात् कुलसंभावनीयबोधकाननक्षेत्रादावपि गोत्रं स्यात्। गूयतेऽनेन, गुङः साधने ष्ट्रनि, गुणे च गोत्रम् "गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः। संभावनीयबोधे च काननक्षेत्रवर्त्मसु" (इति मेदिनी) इत्येकमभिधानादेः॥ १८९॥

ढांपना, यज्ञ, नित्यदान, जंगल, छल, शब्दादि विषय, काया, आकाश, वस्त्र.

न.
**सत्त्र (माच्छादने यज्ञे सदादाने वनेऽपि च)।**
**अजिरं(विषये काये)ऽप्यम्बरं(व्योम्नि वाससि)॥१९०॥**

सदिति—आच्छादने अपवारणे वसने वा, यज्ञे यागे, सदादाने नित्यदाने, वने अरण्ये, अपिशब्दात्कैतवे च सत्त्रं स्यात्। सीदन्त्यनेन, अत्रेति वा सदेः साधनाधारयोः ष्ट्रनि, दस्य चर्त्वेन तकारे च सत्त्रम्। "सत्त्रं यज्ञे सदादानच्छादनारण्यकैतवे" (इति मेदिनी) इत्येकमाच्छादनादेः। विषये शब्दस्पर्शरूपादौ, काये देहे अपिशब्दात्प्राङ्गणवातदर्दुरेषु च अजिरं स्यात्। अजन्त्यत्र, अनेन वा अजतेराधारे साधने वा "अजिरशिशिरेति" किरचि, वीभावाभावे च अजिरम् "अजिरं प्राङ्गणे वाते विषये दर्दुरे तनौ। स्त्री चण्ड्याम्" (इति मेदिनी) इत्येकं विषयादेः। व्योम्नि आकाशे, वाससि वस्त्रे च अम्बरं स्यात्। अम्बते, अम्ब्यते वा "अबि शब्दे" अस्मादौवादिकात्कर्तरि, कर्मणि वा बाहुलकादरे, नुमागमे च अम्बरम् "अम्बरं वाससि व्योम्नि कार्पासे च सुगन्धके" (इति विश्वः) इत्येकमाकाशादेः॥ १९०॥

राज्यादि, मोक्षादि, जल, दूध, सोना आदि, द्वारमात्र या नगरद्वार आदि.

न. न. न.
**चक्रं (राष्ट्रे)ऽप्यक्षरं (तु मोक्षेऽपि) क्षीर (मप्सु च)।**
पु. पु. न.
**(स्वर्णेऽपि) भूरिचन्द्रौ (द्वौ)(द्वारमात्रे तु) गोपुरम्१९१॥**

चेति—राष्ट्रे, राज्ये, देशे वा अपिशब्दाद् व्रजसैन्यरथाङ्गदम्भान्तरकुलालाद्युपकरणादौ च चक्रं स्यात्। क्रियतेऽनेन, "घञर्थे कः" इति के "के कृञादीनामिति" द्वित्वे च चक्रम् "चक्रः कोके पुमान् क्लीबं व्रजे सैन्यरथाङ्गयोः। राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः। जलावर्तेऽपि" (इति मेदिनी) इत्येकं राष्ट्रादीनाम्। मोक्षे अपवर्गे अपिशब्दादकारादिवर्णाव्ययब्रह्माच्युताकाशधर्मतपस्यामूलकारणेषु च अक्षरं स्यात्। न क्षरति, नञ्पूर्वकात्क्षरतेः कर्तरि "पचाद्यचि" अश्नुते, इति विग्रहे तु "अशेः सरः" इति सरे वा "व्रश्चेति" षत्वे, "षढोरिति" कत्वे, षत्वे, क्षत्वे, च अक्षरम् "मोक्षेऽपवर्गे ब्रह्मण्यच्युतेऽक्षरम्" (इत्यनेकार्थ-

कोषः ) इत्येकं मोक्षादेः । अप्सु जले चशब्दाद्दुग्धे च 'क्षीरं' स्यात् । घस्यते, घसतेः कर्मणि "घसेः किच्चेति" ईरनि "गमहन" इत्युपधालोपे, "खरि चेति" घस्य कत्वे, "शासिवसीति" षत्वे, क्षत्वे च क्षीरम् "क्षीरं दुग्धे जले" ( इति मेदिनी ) इत्येकं जलादेः । स्वर्णे सुवर्णे अपिशब्दाद् वासुदेवहरविधिकर्पूरकाम्पिल्ल-सुधांशुचर्वादौ च भूरिचन्द्राचेतौ द्वौ स्याताम् । भवति, भूयते वा भवतेर्भावयतेर्वा कर्तरि भावादौ च "अदिशदीति" क्रिनि, क्रित्त्वादूगुणाभावे च भूरिः "भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकः" ( इति मेदिनी ) चन्दति चन्देः कर्तरि "स्फायितञ्चीति" रकि, नुमागमे च चन्द्रः "चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णचरुषु" ( इति मेदिनी ) इति द्वे काञ्चनादेः । द्वारमात्रे, पुरद्वारे च गोपुरं स्यात् । पुरति, पुरेः कर्तरि "इगुपधेति" के किस्वादूगुणाभावे च पुरम्, गवां पुरम् गोपुरम् "गोपुरं द्वारि पूर्द्वारि कैवर्ती मुस्तकेऽपि च" (इति मेदिनी ) इत्येकं द्वारमात्रादेः ॥ १६१ ॥

गुफा, कपट, एकान्त, समीप, (गुहादम्भौ) गह्वरे (द्वे) (रहोऽन्तिक) मुपह्वरे । (न., न.)

अगाड़ी, अधिक, ऊपर, घर, नगर (पुरोऽधिकमुप) र्यग्राण्य (गारे नगरे) पुरम् ॥ १६२ ॥ (न., न.)

विषय, उपद्रव. मन्दिरं (चाथ) राष्ट्रो (ऽस्त्री विषये स्यादुपद्रवे ) । (न., पु.न.)

गेति–गुहा देवखातम्, दम्भो व्याजश्चेति द्वे नाम्नी गह्वरे गह्वरपदवाच्ये स्याताम् । गाह्यते, गाहतेः कर्मणि "छित्वरच्छत्वरेति" ष्वरचि ह्रस्वत्वे निपातिते च गह्वरम् द्वित्वे गह्वरे "गह्वरस्तु गुहादम्भनिकुञ्जगहनेष्वपि" ( इति विश्वः ) इत्येकं गुहादेः । रहो विजनम्, अन्तिकं निकटं चेति द्वे उपह्वरे स्याताम् । उपह्वरन्त्यत्र, उपपूर्वकाद् ह्वरतेराधारे "पुंसीति" घे, गुणे, रपरत्वे च उपह्वरम्, द्वित्वे उपह्वरे "उपह्वरं समीपे स्यादेकान्ते च नपुंसकम्" ( इति मेदिनी ) इत्येकमेकान्तादेः । पुरः पुरस्तात्, अधिकं प्राज्यम्, उपरि उपरिष्टादिमानि त्राणि अग्राणि स्युः । अंगति, अंग्यते वा अंगतेः कर्तरि कर्मणि वा "ऋज्रेन्द्राग्रेति" रनि, नलोपे निपातिते च अग्रम्, द्वित्वे अग्रे, बहुत्वे अग्राणि "अग्रं पुरस्तादुपरिपरिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् । अधिके च प्रधाने च प्रथमे चा-भिधेयवत्" ( इति मेदिनी ) इत्येकं पुरस्तादादेः । अगारे आलये नगरे नगर्यां च पुरं, मन्दिरं च स्यात् । पुरति, पुरेः कर्तरि "इगुपधेति" के, कित्त्वादूगुणाभावे च पिपर्तीति विग्रहे तु "मूलविभुजादित्वात्" के वा उदादेशे रपरत्वे च पुरम् "पुरं शरीरमित्याहुर्गृहोपरिगृहेपुरम् । पुरो गुग्गुलुराख्यातो नगरेऽपि पुरंपुरी" ( इति अरुणः ) मन्दतेऽत्र मन्देराधारे "इषिमदिमुदीति" किरचि, नुमागमे च मन्दिरम्

" मन्दिरं नगरेऽगारे क्लीबं ना मकरालये " ( इति मेदिनी ) इत्येकमगारादेः । अथेत्यनन्तरं विषये जनपदे, उपद्रवे मरणादौ च राष्ट्रोऽस्त्री पुन्नपुंसकं स्यात् । राजति, राजेः कर्तरि " सर्वधातुभ्यः ष्ट्रन् " इति ष्ट्रनि, " व्रश्चेति " षत्वे च राष्ट्रः " राष्ट्रं स्यादुपवर्तने । उपद्रवे क्लीबपुंसोः " ( इति मेदिनी ) इत्येकं विषयादेः ॥ १६२ । ३ ॥

डर, गड्हा, हीरा, वज्र आदि.

पु.न. पु.न.

**दरो(ऽस्त्रियां भये श्वभ्रे) वज्रो (ऽस्त्री हीरके पवौ) १६३॥**

देति—भये त्रासे, श्वभ्रे गर्ते च दरः अस्त्रियां पुन्नपुंसके स्यात् । दरणम्, दीर्यते वा दरतेर्दृणातेर्वा भावे, कर्मणि वा " ऋदोरप् " इत्यपि, गुणे, रपरत्वे च दरः "दरोऽस्त्री साध्वसे गर्ते कन्दहे तु दरी स्मृता । दराव्ययं मनागर्थे " ( इति मेदिनी ) इत्येकं भयादेः । हीरके " हीरा " इति ख्याते, पवौ कुलिशे च वज्रः अस्त्री पुन्नपुंसकं स्यात् । वजति, वजेः कर्तरि " ऋज्रेन्द्रेति " रनि, वज्रः, वज्रमपि " वज्रं स्याद्बालके धात्र्यां क्लीबं योगान्तरे पुमान् । वज्रा स्नुह्यां गुडूच्यां च वज्री स्नुह्यन्तरे स्मृता । दम्भोलौ हीरकोऽप्यस्त्री वज्रं त्रपुवरत्रयोः " ( इति मेदिनी ) इत्येकं हीरकादेः ॥१६३॥

प्रधान, सिद्धान्त, कोली, बिछौना आदि सामान, चवँर की डांड़ी, खस की टट्टी, शयन, आसन.

न.

**तन्त्रं ( प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे ) ।**

न.

**औशीरं ( चामरे दण्डेऽप्यौशीरं शयनासने ) ॥१६४॥**

तनिति—प्रधाने स्वतन्त्रे महामात्रे परमात्मनि वा, सिद्धान्ते राद्धान्ते, सूत्रवाये तन्तुवाये, परिच्छदे उपकरणादौ च तन्त्रं स्यात् । तननम्, तन्यते, अनेन वा तनोतेर्भावकर्मसाधनेषु ष्ट्रनि । तन्त्रणम्, तन्त्र्यते वा तन्त्रयतेर्भावे, कर्मणि वा घञि, अचि वा तन्त्रयतीति विग्रहे तु कर्तरि पचाद्यचि वा तन्त्रम् " तन्त्रं कुटुम्बकृत्ये स्यात्सिद्धान्ते चौषधोत्तमे । प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे । श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके " ( इति मेदिनी ) इत्येकं प्रधानादेः । चामरे चमरसम्बन्धिनि दण्डे औशीरम्, शयनासने शयनं चासनं च शयनासनं तत्रापि औशीरं स्यात् । उश्यते, वशेः कर्मणि " वशेः कित् " इतीरनि, कित्त्वात्संप्रसारणे च उशीरं तदेव प्रज्ञाद्यणि, उशीरस्येदमिति विग्रहे तु " तस्येदम् " इत्यणि वा वृद्धौ च औशीरम् " औशीरं चामरे दण्डे औशीरं स्वापपीठयोः " ( इत्यजयः ) इत्येकं चामरदण्डादेः ॥ १६४ ॥

हाथीसूंड़ का अग्रभाग, बाजा का मुख, पानी, आकाश, तलवार की नोक, कमल, तीर्थ, कूट.

न.

**पुष्करं ( करिहस्ताग्रे वाद्यभाण्डमुखे जले ) ।**

**व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ) ॥ १६५ ॥**

छ्विति—करिहस्ताग्रे गजशुण्डाग्रे, वाद्यभाण्डमुखे वाद्यपात्रास्ये, जले पानीये, व्योम्नि आकाशे, खड्गफले असिफलके, पद्मे कमले, तीर्थे, औषधिविशेषे च पुष्करं स्यात् । पुष्णाति, पुष्यते, अनेन वा पुषेः कर्त्तरि, कर्मणि, करणे वा " पुषः कित् " इति करनि ' पुष्करम् ' " पुष्करं द्वीपतीर्थाहिखगराजौषधान्तरे । तूर्यास्येऽसिफले काण्डे शुण्डाग्रे खे जलेऽम्बुजे " ( इति हैमः ) इत्येकं करिकराग्रादेः ॥ १९५ ॥

अवकाश आदि. न. अन्तर ( मवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च) १९६ ॥

अनिति—अवकाशादित्रयोदशार्थवाचकमन्तरं स्यात् । अन्तं राति अन्तपूर्वकाद्रातेः कर्त्तरि "आतोऽनुपेति" के, आलोपे च अन्तरम् । अवकाशे यथा 'अन्तरे हिमम्' अवधौ यथा ' मासान्तरे देयम् ' परिधाने यथा अन्तरे—अन्तरा वा शाटकाः परिधानीयाः, अन्तर्द्धौ यथा 'पर्वतान्तरतो रविः' भेदे यथा 'यदन्तरं सर्षपशैलराजयोः' तादर्थ्ये यथा ' त्वदन्तरेण ऋणमेतत् ' छिद्रे यथा 'परान्तरे प्रहर्तव्यम् ' आत्मीये यथा 'अयमत्यन्तरो मम' विनार्थे यथा ' अन्तरेण पुरुषकारम् ' बहिर्बाह्ये यथा 'अन्तरे चाण्डालगृहाः' अवसरे यथा ' अन्तरङ्गः सेवकः' मध्ये यथा 'आवयोरन्तरे जातः पर्वतः' अन्तरात्मनि यथा ' दृष्टोऽन्तरे ज्योतीरूपः ' चशब्दात्सादृश्ये यथा 'हकारस्य घकारोऽन्तरतमः' इत्येकमवकाशादेः ॥ १९६ ॥

मोथा, कन्दविशेष बड़ा अँधेरा, घातुक, हिंसक, कठोर आदि.

न. (मुस्तेऽपि) पिठरं (राजकशेरुण्यपि) न. नागरम् ।
न. शार्वरं (त्वन्धतमसे घातुके भेद्यलिङ्गकम्) ॥ १९७ ॥

ण्विति—मुस्ते मुस्तके, अपिशब्दान्मन्थानदण्डके, स्थावरविषभेदे सुगन्धद्रव्यादौ च पिठरं स्यात् । पेठति, पिठ्यते वा पिठेः कर्त्तरि कर्मणि वा बाहुलकादरे, गुणाभावे च पिठरम् "पिठरः स्थाल्यां ना क्लीबं मुस्तामन्थानदण्डयोः " ( इति मेदिनी ) इत्येकं मुस्तादेः । राजकशेरुणि कन्दविशेषे अपिशब्दान्मुस्तकशुण्ठीविदग्धादौ च नागरं स्यात् । नगरे भवम् "तत्र भवः" इत्यणि, वृद्धौ च, न अगं राति वा नकारेण "सुप्सुपा" इति समासे नागपूर्वकाद्रातेः " आतोऽनुपेति " के आलोपे च नागरम् " नागरं मुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे" ( इति मेदिनी ) इत्येकं राजकशेर्वादेः । अन्धतमसे गाढे ध्वान्ते, घातुके हिंसके क्रूरे वा शार्वरं भेद्यलिङ्गकं वाच्यलिङ्गकं स्यात् । "स्वामी तु "घातुकेभे नृलिङ्गकम् " इति पठित्वा घातुकश्चासाविभश्च तत्र नृलिङ्गं पुंलिङ्गं व्याख्यातवानिति" शर्वर्यां भवम् " तत्र भवः " इत्यणि णित्वाद्वृद्धौ च शार्वरमित्येकमन्धतमसादेः ॥ १९७ ॥

लाल, सफ़ेद, पीला, घावकरने वाला, कठिन नीच आदि.

पु.स.न. पु.स.न.
**गौरो(ऽरुणे सिते पीते) (व्रणकार्यं) (प्यरुष्करः)।**
पु.स.न. पु.स.न.
**जठरः (कठिनेऽपि स्या) (दधस्तादपि) चाधरः॥१९८॥**

गाविति—अरुणे सूर्ये, सूर्यसारथौ, सन्ध्यारागे अव्यक्तरागे वा सिते श्वेते, पीते पीतवर्णे च गौरः स्यात्। गवते मनोऽत्र, गुङोऽधिकरणे "ऋज्रेन्द्रेति" रनि वृद्धित्वे निपातिते च। गूर्यतेऽनेनेति वा गुरतेः साधने "हलश्चेति" घञि, गुणे च गोर एव "प्रज्ञाद्यणि" वृद्धौ च गौरः "गौरः पीतेऽरुणे श्वेते विशुद्धे चाभिधेयवत्। ना श्वेत-सर्षपे चन्द्रे न द्वयोः पद्मकेसरे" (इति मेदिनी) इत्येकमरुणादेः। व्रणकारी क्षतकारी अपिशब्दाद्भल्लातकश्च अरुष्करः स्यात्। अरुःकरोति अरुष्पूर्वकात्कृञः कर्तरि "दिवा विभेति" टे, गुणे रपरत्वे "इणः षः" इति षत्वे च अरुष्करः "अरुष्करो व्रणकृति त्रिषु भल्लातके पुमान्" (इति मेदिनी) इत्येकं व्रणकारादेः। कठिने कठोरे अपि-शब्दात्कुक्षिवद्धयोश्च जठरः स्यात्। जायते, अस्मिन् वा जनेः कर्तर्याधारे च "जनेरर-ष्ठच" इत्यरे, नस्य ठत्वे च जठरः "जठरो न स्त्रियां कुक्षौ वद्धकठ्वटयोस्त्रिषु" (इति मेदिनी) इत्येकं कठिनादेः। अधस्तादनूर्ध्वे अपिशब्दादोष्ठे हीने च अधरः स्यात्। न धरति नञ्पूर्वकाद्धृञः कर्तरि "पचाद्यचि" गुणे च। धरादुच्चात्कठिनादन्यो वा अधरः "अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वेऽपि वाच्यवत्" (इति मेदिनी) इत्येकं नीचादेः॥ १९८॥

स्वस्थ या सावधान, अनेक कार्यों में लगा, व्याकुल, ऊपर, उत्तरदिशा, उत्तम, इनका विपर्यय, श्रेष्ठ, दूर, देहादि उत्तम, स्वादु, मनोज्ञ.

पु.स.न. पु.स.न.
**(अनाकुलेऽपि) चैकाग्रो व्यग्रो (व्यासक्त आकुले)।**
पु.स.न. पु.स.न.
**(उपर्युदीच्यश्रेष्ठेष्व) प्युत्तरः (स्या) दनुत्तरः॥१९९॥**
पु.स.न.
**(एषां विपर्यये श्रेष्ठे) (दूरानात्मोत्तमाः) पराः।**
पु.स.न. पु.स.न.
**(स्वादुप्रियौ च) मधुरौ क्रूरौ (कठिननिर्दयौ)॥ २००॥**

अनेति—अनाकुले स्वस्थे अव्यग्रे वा अपिशब्दादेकताने एकविषयासक्तचित्ते वा एकाग्रः स्यात्। एकमेकत्र वाग्रमस्येति एकाग्रः "एकाग्रमन्यलिङ्गः स्यादेकतानेऽप्यनाकुले" (इति मेदिनी) इत्येकमनाकुलादेः व्यासक्ते कार्यसंलग्ने अनेकार्थसंलग्नचित्ते वा आ-कुले व्याकुले च व्यग्रः स्यात्। विविधं विविधेवाग्रमस्य। विरुद्धमङ्गति वा "ऋज्रेन्द्रा-ग्रेति" रनि, नुमागमे, नलोपे निपातिते च व्यग्रः स्यादित्येकं व्यासक्तादेः। उपर्युदी-च्यश्रेष्ठेषु ऊर्ध्वोदीच्योत्तमेषु उत्तरो वाच्यलिङ्गकः स्यात्, अपिशब्दाद्विराटतनये पुमान, उत्तरस्यां दिशि स्त्रीप्रतिवाक्ये च क्लीबं स्यात्। उत्तरति, उत्पूर्वकात्तरतेः कर्तरि "पचा-

द्यचि " गुणे, रपरत्वे च। अतिशयेनोद्गतो वा तरपि, द्रव्यप्रकर्षत्वादाम्वभावे च उत्तरः "उत्तरं प्रतिवाक्ये स्यादूर्ध्वोदीच्योत्तमेऽन्यवत्। उत्तरस्तु विराटस्य तनये दिशि चोत्तरा" ( इति विश्वः ) इत्येकमुपर्यादेः । एषां विपर्यये व्यत्यासे, श्रेष्ठे उत्तमे च अनुत्तरः स्यात्। उत्तरस्याभावः। उत्तरस्य विरुद्धो वा श्रेष्ठे न उत्तरो यस्मादित्येकं विपर्ययादेः। दूरं विप्रकृष्टम्, अनात्मा आत्माभावो देहादिर्वा उत्तमः श्रेष्ठश्चैते पराः स्युः। पिपर्ति, पूर्यते, अनेन वा पिपर्त्तेः कर्तरि " पचाद्यचि " कर्मणि करणे वा " ॠदोरप् " इत्यपि, " पुंसीति " घे वा गुणे, रपरत्वे च परः " परः श्रेष्ठारिदूरान्योत्तमे क्लीबं तु केवले " (इति मेदिनी) इत्येकं दूरादेः। स्वादुप्रियौ स्वादुशोभनौ मधुरौ स्याताम्। चशब्दाद्रसो मधुरः, विषं मधुरम्, रसवान्मधुरो वाच्यलिङ्गकश्च स्यात्। मधु माधुर्यं राति, अस्त्यत्र वा। मधुपूर्वकाद्रातेः कर्तरि " आतोऽनुपेति " के, आलोपे च, " ऊषशुषीति " रे, वा मधुरः द्वित्वे मधुरौ " मधुरस्तु रसे विषे। मधुरं रसवत्स्वादुप्रियेषु मधुरोऽन्यवत् " ( इति विश्वः ) इत्येकं स्वाद्वादेः । कठिननिर्दयौ 'क्रूरौ' स्याताम्। कृन्तति, कृन्ततेः कर्तरि " कृतेश्छः क्रू च " इति रकि, कृतेः 'क्रू' आदेशे च क्रूरः द्वित्वें क्रूरौ " क्रूरस्तु कठिने घोरे नृशंसेऽप्यभिधेयवत् " ( इति विश्वः ) इत्येकं कठिनादेः ॥ १९९ । २०० ॥

पु.स.न. पु.स.न.

दाता, पूज्य, अन्य, नीच, **उदारो ( दातृमहतो) रितर (स्त्वन्यनीचयोः )।**

पु.स.न. पु.स.न.

मूर्ख, स्वाधीन, उज्ज्वलित, सफ़ेद. **(मन्दस्वच्छन्दयोः) स्वैरः शुभ्र(मुद्दीप्तशुक्लयोः)॥२०१॥**

उदेति—दाता दानकर्ता, महान्पूज्यश्चैतयोरुदारः स्यात्। उच्चैरासमन्तादृच्छति, उदाङ्पूर्वकादृच्छतेः कर्तरि, पचाद्यचि, गुणे, रपरत्वे च उदारः " उदारो दातृमहतो-र्दक्षिणे चाभिधेयवत् " ( इति मेदिनी ) इत्येकं दात्रादेः । अन्यो भिन्नोऽन्यतरो वा नीचोऽधमश्चैतयोरितरः स्यात्। इना कामेन तरति, इपूर्वकात्तरतेः कर्तरि पचा-द्यचि, गुणे, रपरत्वे च इतं ज्ञानं गमनं वा रातीति, " आतोऽनुपेति " के आलोपे च वा इतरः " इतरः पामरेऽन्यस्मिन् " (इति हेमचन्द्रः) इत्येकमन्यादेः । मन्दो मूढः स्वच्छन्दः स्वाधीनश्चैतयोः स्वैरः स्यात्। स्वेन स्वातन्त्र्येण ईर्ते, ईरयति वा ईर्तेरीरयतेः कर्तरि पचाद्यचि, " स्वादीरेरिणोः " इति वृद्धौ च स्वैरः स्यादित्येकं मन्दादेः। उद्दीप्तः उज्ज्वलितः शुक्लः श्वेतश्चानयोः शुभ्रं स्यात्। शोभते, शुभेः कर्तरि " स्फायि-तञ्चीति " रकि, कित्त्वादुगुणाभावे च शुभ्रम् " शुभ्रं स्यादभ्रके क्लीबमुद्दीप्तशुक्लयो-स्त्रिपु " ( इति मेदिनी ) इत्येकमुद्दीप्तादेः ॥ २०१ ॥

इति रान्ताः ॥

---

## अथ लान्ता व्याख्यायन्ते ॥

चोटी, मुकुट, जूड़ा, वृक्षभेद, हाथी, बाण, फूल.

पु.स.न

( चूडा किरीटं केशाश्च संयता ) मौलय ( स्त्रयः ) ।

पु.

( द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि ) पीलवः ॥ २०२ ॥

च्विति—चूडा शिखा, किरीटं मुकुटम्, संयताः बद्धाःकेशाः कचाश्चेति त्रयो मौलयः मौलिपदवाच्याः स्युः । मूलस्यादूरेभवः " सुतंगमादित्वात् " इञि, मूलस्यापत्यं वा " अत इञ् " इतीञि, ञित्त्वाद्वृद्धौ च मौलिः, द्वित्वे मौली, बहुत्वे मौलयः "किरीटे मौलिरस्त्रीवे चूडासंयतकेशयोः " ( इति रभसः ) इत्येकं चूडादेः । द्रुमप्रभेदः पादपभेदः, मातङ्गो हस्ती, काण्डो बाणः, पुष्पं प्रसूनं चैतानि पीलवः स्युः । पीलति, पीलेः कर्तरि मृगय्वादित्वादुप्रत्यये पीलुः, द्वित्वे पीलू, बहुत्वे पीलवः । " पीलुः पुमान्प्रसूनेस्यात्परमाणौ मतङ्गजे । अस्थिखण्डे च तालस्य काण्डपादपभेदयोः " (इति मेदिनी) इत्येकं द्रुमप्रभेदादेः ॥ २०२ ॥

यमराज, समय आदि, चौथा युग, कलह आदि, मृग, जल, कमल-आदि, दुपट्टा, नागराजादि.

पु. पु.

(कृतान्तानेहसोः) काल (श्चतुर्थेऽपि युगे) कलिः ।

‡ पु. पु.

(स्यात्कुरङ्गेऽपि) कमलः (प्रावारेऽपि च) कम्बलः ॥२०३॥

क्विति—कृतान्तो यमः, अनेहाः समयश्चैतयोः कालः स्यात् । कालयति, कलेर्ण्यन्तात्कर्तरि पचाद्यचि, कल्यते संख्यायते, उपदिश्यते वा कर्मणि घञि, ञित्त्वाद्वृद्धौ च, कलयति भूतान्यायुर्वेति विग्रहे तु कलेश्चुराद्यन्तात्कर्तरि पचाद्यजन्तात् ' प्रज्ञाद्यण् ' णित्त्वाद्वृद्धौ च वा कालः " कालो मृत्यौ महाकाले समये यमकृष्णयोः " ( इति मेदिनी ) इत्येकं कृतान्तादेः । चतुर्थे युगे कलियुगे, अपिशब्दाच्छूराजिकलहे च कलिः पुमान्, कलिकायां तु स्त्री स्यात् । कलयति, कल्यते वा कलेश्चुराद्यदन्तात्कर्तरि, कर्मणि वा " अच इः " इती प्रत्यये, णिलोपे च कलिः "कलिः स्त्री कलिकायां ना शूराजिकलहे युगे " ( इति मेदिनी ) इत्येकं तुर्ययुगादेः । कुरङ्गे मृगभेदे, अपिशब्दात्सलिलताम्रजलजादौ च कमलः कमलं वा स्यात् । कामयते, काम्यते वा कमेर्णिङभावे कर्तरि, कर्मणि वा "वृषादित्वात्" कलचि, कमलः "कमलं सलिले ताम्रे जलजे क्लोम्नि भेषजे । मृगभेदे तु कमलः" ( इति मेदिनी ) इत्येकं कुरङ्गादेः । प्रावारे उत्तरासङ्गे अपिशब्दान्नागराजादौ च कम्बलः स्यात् । काम्यते, " कमेर्बुक्च " इति कलचि, बुगागमे च कम्बति, कम्ब्यते वा वृषादित्वात्कलचि, कं कुत्सितं शिरोऽम्बु वा बलते पचाद्यचि वा

‡ " पतङ्गमातङ्गकुरङ्गभृङ्गमीनाहताः पञ्चभिरेव पञ्च । एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरिन्द्रियैर्वा" ॥ १ ॥

कम्बलः "कम्बलो नागराजे स्यात्सास्नाप्रावारयोरपि । कृमावप्युत्तरासङ्गे सलिले तु नपुंसकम्" ( इति मेदिनी ) इत्येकं प्रावारादेः ॥ २०३ ॥

पोत, पूजासामग्री, ढीली खाल, मोटापन, सामर्थ्य, फ़ौज, कौआ, बलदाऊ.

(करोपहारयोः पुंसि) वलिः (प्राण्यङ्गजे स्त्रियाम्) ।
( स्थौल्यसामर्थ्यसैन्येषु ) बलं (ना काकसीरिणोः) २०४

केति—करो राजग्राह्योभागः, उपहारः पूजासामग्री चैतयोर्वलिः पुंसि स्यात् । प्राण्यङ्गजे त्वक्संकोचे तु स्त्रियां स्यात् । वलति, वल्यते प्राण्यते, वलते, वल्यते संव्रियतेवा बलेर्वलेर्वा कर्तरि, कर्मणि वा "सर्वधातुभ्य" इतीनि, बलिः, वलिर्वा "वलिर्दैत्यप्रभेदे च करचामरदण्डयोः । उपहारे पुमान्स्त्री तु जरयाश्लथचर्मणि । गृहदारुप्रभेदे च जठरावयवेऽपि च" ( इति मेदिनी ) इत्येकं राजग्राह्यभागादेः । स्थौल्यं पीनत्वम्, सामर्थ्यं शक्तिमत्त्वम, सैन्यं सेना चैषु वलं क्लीबं, स्यात् । काकसीरिणोः वायसबलरामयोस्तु ना पुमान्स्यात् । बलति, बल्यते वा बलेः कर्तरि पचाद्यचि, कर्मणि घञि, संज्ञापूर्वकत्वाद् वृद्ध्यभावे, "पुंसीति" घे वा बलम् "बलं गन्धरसे रूपे स्थामनि, स्थौल्यसैन्ययोः । बलो हलायुधे दैत्यभेदे बलिनि वायसे" ( इति विश्वः ) इत्येकं स्थौल्यादेः ॥ २०४ ॥

वातसमूह, वात व्याधि का न सहनेवाला, शठ, जंगली हिंसकजीव, सांप.

वातूलः (पुंसि वात्यायामपि वातासहे त्रिषु) ।
( भेद्यलिङ्गः शठे) व्यालः (पुंसि श्वापदसर्पयोः)२०५॥

वेति—वात्यायां वातसमूहे वातूलः पुंसि स्यात् , वातासहेऽपि त्रिषु त्रिलिङ्ग्यां स्यात् । वातानां समूहो वातं न सहत इति वा "वातात्समूहे च" इत्यूले, चात्तदसहनेऽपि वातूलः, वातयतीति विग्रहे तु वातेश्चुराद्यदन्तात्कर्तरि बाहुलकादुलचि, वातुलोऽपि "वातूलो वातुलोऽपि स्यात्" ( इति द्विरूपकोषः ) इत्येकं वातसमूहादेः । शठे अनृजौ व्यालः भेद्यलिङ्गो वाच्यलिङ्गः स्यात् । श्वापदोहिंसकपशुर्व्याघ्रो वा सर्पोनागश्चैतयोः पुंसि स्यात् । विरुद्धमासमन्तादलति, अडति वा व्याङ्पूर्वकादलेरडेर्वा कर्तरि "पचाद्यचि" डलयोरैक्याड्डस्य लत्वे च व्यालः "व्यालो दुष्टगजे सर्पे शठे श्वापदसिंहयोः" (इति हैमः) इत्येकं शठादेः ॥ २०५ ॥

पाप, बीट, कीट, रोग, हथियार, स्थाणु, शल्य, ज्वाला, कोन, धार, गोंद, पांति.

मलो (ऽस्त्री पापविट्किट्टान्यस्त्री) शूलं ( रुगायुधम्) ।
(शङ्कावपिद्वयोः) कीलःपालिःस्त्र्यश्र्यङ्कपंक्तिषु॥२०६॥

मेति—पापं किल्विषम् नरकहेतुकं कर्म वा विट् विष्ठा, किट्टं तैलाद्यधोभागस्थं शिङ्घ्राणादि च एतान्येषु मलः अस्त्री पुन्नपुंसकं स्यात् । मलते, मलयति वा मलेः कर्त्तरि पचाद्यचि मलः "मलोऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्" (इति मेदिनी) "वसाशुक्रमसृग्मज्जमूत्रंविट्कर्णत्वग्नखाः । श्लेष्माश्रुदूषिकास्वेदो द्वादशैते मला नृणाम्" इत्येकं पापादेः । रुक् रोगः, आयुधमस्त्रं चेति द्वयं शूलम् अस्त्री पुन्नपुंसकं स्यात् । शूलति, शूलेः कर्तरि "इगुपधेति" के, शूलम् "शूलोऽस्त्री रोग आयुधे । मृत्युकेतनयोगेषु शूला स्यात्पण्ययोषिति" (इति मेदिनी) इत्येकं रोगादेः । शङ्कौ स्थाणौ शल्ये वा अपि शब्दादग्नितेजसि च कीलः द्वयोः स्त्रीपुंसयोः स्यात् । कीलति, कील्यते, अनेनात्रेति वा कीलेः कर्त्तरि इगुपधत्वात्के, कर्मसाधनाधारेषु घञि, "पुंसीति" घे वा कीलः "कीलः कफोणिकाघाते स्थाणौ च ज्वलनार्चिषु" (इति धरणिः) इत्येकं शङ्क्वादेः । अश्रिः कोणः, अङ्कः उत्सङ्गश्चिह्नं वा पंक्तिः श्रेणिरेष्वर्थेषु पालिः स्त्री स्यात् । पालयति, पाल्यते, अनयाऽत्रेति वा पालेर्ण्यन्तात्कर्तरि कर्मसाधनाधारेषु वा "अच इः" इतीप्रत्यये णिलोपे च पालिः *"पालिः कर्णलतायां स्यात्प्रदेशे पंक्तिचिह्नयोः" (इत्यजयः) इत्येकं कोणादेः ॥ २०६ ॥

| | |
|---|---|
| कारीगरी, काल-भेद, सखी, पांति, ज्वार-भाठा, समय, सीमा. | स. कला (शिल्पे कालभेदे) ऽप्याली (सख्यावली अपि) । स. (अब्ध्यम्बुविकृतौ) वेला (कालमर्यादयोरपि) ॥२०७॥ |

केति—शिल्पे गीतवाद्यादिनिपुणतायाम्, कालभेदे त्रिंशत्काष्ठात्मके कालमाने अपि शब्दाच्चित्रकलादिकर्मणि, चित्रादिकर्तरि, मूलधनवृद्धौ, चन्द्रस्य षोडशांशे च कला स्यात् । कलयति, कल्यते वा कलेश्चुराद्यदन्तात्कर्तरि पचाद्यचि, कर्मणि "पुंसीति" घे वा । कं लातीति विग्रहे तु "आतोऽनुपेति" के आलोपे, टापि च कला "कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके । षोडशांशे च चन्द्रस्य कलनाकालमानयोः" (इति मेदिनी) इत्येकं शिल्पादेः । सखी वयस्या, आवलिः पंक्तिश्चोभे आली स्याताम् । अपिशब्दाद्विशदाशये त्रिषु, सेतौ च स्त्रियां स्यादिति । आ अलति, अल्यते, अनयेति वा आङ्पूर्वकादलेः कर्तरि, कर्मणि, करणे वा "सर्वधातुभ्य इन्" इतीनि आलिः "कृदिकारादिति" ङीष्पक्षे तु आली वा "आलिर्विशदाशये । त्रिषु स्त्रियां वयस्यायां सेतौ पंक्तौ च कीर्तिता" (इति मेदिनी) इत्येकं सख्यादेः । अब्ध्यम्बुविकृतौ चन्द्रोदयाद्वारिधिवारिविकृतौ, कालमर्यादयोः समयसीमयोः अपिशब्दादीश्वराणां भोजने च वेला स्यात् । वेलति, वेल्यते, अनयेति वा वेलेः कर्तरि "पचाद्यचि" कर्मकरणयोः "गुरोश्च हलः" इत्यङि वा टापि च वेला "वेला काले च सीमाया-

* "सश्मश्रुयुवती पालिः पंक्तिः कर्णलतापि च" (इति त्रिकाण्डशेषः) "पालिः कर्णलताग्रेऽस्रौ पंक्तावङ्कप्रभेदयोः । छात्रादिदेये स्त्री पाली यूकासश्मश्रुयोषितोः" (इति मेदिनी) ॥

मध्ये: कूलविकारयोः । अक्लिष्टमरणे रोगे ईश्वरस्य च भोजने " ( इति मेदिनी ) इत्येकमध्यम्बुविकारादेः ॥ २०७ ॥

कृत्तिका, गैया, आदि, आगी, श्यामता, विलास, क्रिया, सिटकी या चीनी.

**बहुलाः (कृत्तिका गावो) बहुलो (ऽग्नौ शितौ त्रिषु)।**
**लीला (विलासक्रिययो) रुपला (शर्करापि च) ॥२०८॥**

वेति—कृत्तिकाः, गावश्च बहुलाः स्युः,अग्नौ अनले, शितौ कृष्णे च बहुलः त्रिपु त्रिलिङ्ग्यां स्यात् । वहति, वहेः कर्तरि वाहुलकादुलचि । बहुलाति वेति विग्रहे तु "आतो नुपेति " के, आलोपे, टापि च वहुला, द्वित्वे बहुले, वहुत्वे बहुलाः "बहुला नीलिकायां स्यादेलायां गवियोषिति । कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम् । पुंस्यग्नौ कृष्णपक्षे च वाच्यवत्प्राज्यकृष्णयोः " ( इति मेदिनी ) इत्येकं कृत्तिकादेः । विलासः कामिनीशृङ्गारचेष्टाविशेषः, क्रिया कर्मादिश्चैतयोः लीला स्यात् । लेलायनम, ' लेला दीप्तौ ' अस्मात्कण्ड्वादिकाद्भावे भिदाद्यङि, " अप्रत्ययादिति " वा पृषोदरादित्वाल्लीकारादेशे च । 'लयनम्' वेति विग्रहे तु लीङो भावे बाहुलकाल्ले, गुणाभावे, टापि च लीला "लीलां विदुः केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु" ( इति विश्वप्रकाशः ) इत्येकं विलासादेः । शर्करा सिकता, अपिशब्दात्सिता च उपला स्यात् । उपलाति, उपपूर्वकाल्लातेः कर्तरि "आतश्चोपसर्गे" इति के, । उं शंभुं पलति, औ शम्भौ पलति वा उपूर्वकात्पलेः कर्तरि 'पचाद्यचि' टापि च उपला " उपलः प्रस्तरे रत्ने शर्करायान्तु योषिति" ( इति मेदिनी ) इत्येकं शर्करादेः ॥ २०८ ॥

रुधिर, जल, प्रथम, जटा, नक्षत्र, समूह आदि.

**(शोणितेऽम्भसि) कीलालं मूलमाद्ये शिफाभयोः ।**
**जालं (समूहआनायगवाक्षक्षारकावपि) ॥ २०९ ॥**

शविति—शोणिते रुधिरे, अम्भसि पानीये च कीलालं स्यात् । कीलेन प्रतिबन्धेन अल्यते वार्यते, कीलपूर्वकादलेः कर्मणि घञि, कीलं प्रतिबन्धमलति वेति विग्रहे तु " कर्मण्यण् " इत्यणि कीलालम् । " कीलालं रुधिरे तोये " ( इति हैमः ), इत्येकं रुधिरादेः । आद्ये प्रथमे, शिफा जटा, भं नक्षत्रं चानयोः मूलं स्यात् । मूलति, मूलेः कर्तरि "इगुपधेति" के मूलम् " मूलं शिफाद्ययोः । मूलं वित्तेऽन्तिके नाभे " ( इति मेदिनी ) इत्येकं प्रथमादेः । समूहः समुदायः, आनायः शणसूत्ररचितरज्जुसमूहः, गवाक्षो वातायनम, क्षारकः ईषद्विकसितकलिका अपि शब्दाद्दम्भश्च जालं स्यात् । जलति, जलेः कर्तरि ज्वलादित्वाण्णे, जालयति वेति विग्रहे तु चौरादिकाज्जलेः ' पचाद्यचि ' आलम् "जालं गवाक्षआनाये क्षारके दम्भवृन्दयोः । जालो नीपद्रुमे " ( इति मेदिनी ) इत्येकं समूहादेः ॥ २०९ ॥

स्वभाव, सुयश
वृक्षादिफल, हेतु
सिद्धफल,
छानी, नेत्ररोग,
समूह.

*न. न.
**शीलं (स्वभावे सद्वृत्ते) (सस्ये हेतुकृते) फलम् ।**
न.
**(छदिर्नेत्ररुजोःक्लीबं) (समूहे) पटलं (न ना) ॥ २१० ॥**

शीति—स्वभावे प्रकृतौ, सद्वृत्ते सद्यशसि च शीलं स्यात् । शीलनम्, शील्यतेऽनेनेति वा शीलेर्भावे करणे वा घञ्, शयनमिति विग्रहे तु "शीङो धुगिति" लकिवा शीलम्, अर्धर्चादित्वात्क्लीबम् । "निष्ठा च शीलं चारित्रं चरित्रं चरितं तथा" ( इति रत्नकोषः ) इत्येकं स्वभावादेः । सस्ये वृक्षादिफले, हेतुकृते हेतुसमुत्थे च फलं स्यात् । फलति, फलेः कर्तरि पचाद्यचि फलम्, "फलं हेतुसमुत्थेस्यात्फलके व्युष्टिलाभयोः । जातीफलेऽपि कक्कोले सस्यबाणाग्रयोरपि" ( इति विश्वः ) इत्येकं सस्यादेः । छदिर्गृहाच्छादनम्, नेत्ररुक्दृग्रोगश्चैतयोः पटलं क्लीबं स्यात् । समूहे समुदाये ना पुमान् न स्यात् । पटं विस्तारं लाति, पटपूर्वकाल्लातेः कर्त्तरि "आतोऽनुपेति" के, आलोपे च पटलम् "अथ पटलं पिटके च परिच्छदे । छदिर्दृग्रोगतिलके क्लीबं वृन्दे पुनर्नना" ( इति मेदिनी ) इत्येकं गृहाच्छादनादेः ॥ २१० ॥

नीचे, स्वरूप,
मांस, उन्मान,
आगी, नाग-
लोक, कपड़ा,
अधम.

पु.न. न.
**( अधःस्वरूपयोरस्त्री ) तलं(स्याच्चामिषे) पलम् ।**
न. न.
**(और्वानलेऽपि) पातालं चेलं (वस्त्रेऽधमे त्रिषु) ॥२११॥**

अध इति—अधः अनूर्ध्वम्, स्वरूपं स्वकीयरूपं स्वस्यात्मनो रूपं वा एतयोः तलं अस्त्री पुन्नपुंसकं स्यात् । तलति, तलेः कर्त्तरि पचाद्यचि तलम् "तलं स्वरूपेऽनूर्ध्वेऽस्त्री क्लीबं ज्याघातवारणे । कानने कार्यबीजे च पुंसितालमहीरुहे । चपेटे च त्सरौ तन्त्रीघाते सव्येन पाणिना" ( इति मेदिनी ) इत्येकमनूर्ध्वादेः । आमिषे मांसे चादुन्माने च पलं स्यात् । पलति, पलेः कर्त्तरि "पचाद्यचि" पलम् "पलमुन्मानमांसयोः" ( इति रुद्रः ) इत्येकमामिषादेः । और्वानले वडवानले, अपिशब्दान्नागलोके, विवरे च पातालं स्यात् । पतति, अत्र वा पतेः कर्त्तर्य्याधारे वा "चण्डिपतिभ्यामालञ्" इत्यालञ्, पातमलति, पचाद्यचि, पातमालातीति विग्रहे तु "आतोऽनुपेति" के वा आलोपे च पातालम् "पातालं नागलोके स्याद्विवरे वडवानले" ( इति मेदिनी ) इत्येकमौर्वानलादेः । वस्त्रे वसने, अधमे निकृष्टे नीचे वा चेलं त्रिषु त्रिलिङ्गयां स्यात् । चिलति, चिल्यते, चेलति, चेल्यते वा चिलेश्चेलेर्वा कर्त्तरि पचाद्यचि, कर्मणि घञ् वा चेलम् "चेलो नीचेऽधमे त्रिषु । नपुंसकन्तु वसने" ( इति मेदिनी ) इत्येकं वस्त्रादेः ॥ २११ ॥

* "शीलं स्वभावे सद्वृत्ते" ( इति विश्वः ) चरित्रमात्रेऽपि शीलं स्यादिति ॥

न.
कीलों से भरा गड़हा, भूसीकी आग, निश्चित, अकेला, पूरा, या समग्र.
कुकूलं (शंकुभिः कीर्णे श्वभ्रे ना तु तुषानले)।
न.
(निर्णीते) केवलमिति (त्रिलिङ्गं त्वेककृत्स्नयोः) ॥२१२॥

किति—शंकुभिः कीलैः कीर्णे व्याप्ते श्वभ्रे रन्ध्रे कुकूलं क्लीबं स्यात्। तुषानले तुषाग्नौ तु ना पुमान्स्यात्। कोर्भूमेः कूलम्, कुत्सितं कूलं वा कुकूलमित्येकं कीलकीर्णश्वभ्रादेः। निर्णीते निश्चिते केवलमिति क्लीबं स्यात्। एककृत्स्नयोः एकसमग्रयोस्तु त्रिलिङ्गं स्यात्। केवते, केवेः कर्त्तरि वृषादित्वात्कलचि, के शिरसि वलति वेतिविग्रहे तु पचाद्यचि केवलम् स्त्रियां टापि केवला संज्ञाछन्दसोस्तु " केवलमामकेति " ङीपि केवलीत्यपि " केवलः कुहने पुमान् " (इति मेदिनी) इत्येकं निश्चितादेः ॥२१२॥

न.
पूर्णता, क्षेम, पुण्य, शिक्षित, अँखुवा, मूर्ख-आदि.
(पर्याप्तिक्षेमपुण्येषु) कुशलं (शिक्षिते त्रिषु)।
पु.न. पु.स.न. ‡
प्रवाल(मंकुरेऽप्यस्त्री) (त्रिषु) स्थूलं (जडेऽपि च)॥२१३॥

परिति—पर्याप्तिः सामर्थ्यम् पूर्णता,प्राप्तिर्वा क्षेमं भव्यम्, लब्धवस्तुरक्षणं वा, पुण्यं सुकृतं शुभमदृष्टं धर्मं वा एषु कुशलं क्लीबं स्यात। शिक्षिते कृताभ्यासे निपुणे वा त्रिषु त्रिलिङ्ग्यां स्यात। कौ भूमौ शलति, कुपूर्वकाच्छलेःकर्तरि पचाद्यचि, कुश्यति वृषादित्वात्कलचि कुशाँल्लातीति विग्रहे तु "आतोऽनुपेति" के वा आलोपे च कुशलम् " कुशलः शिक्षिते त्रिषु । क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसकम् " ( इति विश्वः ) इत्येकं पर्याप्त्यादेः। अंकुरे अभिनवोद्भिदि, किसलये वा अपिशब्दाद्वीणादण्डे, विद्रुमे च प्रवालं अस्त्री पुन्नपुंसकं स्यात्। प्रवलति, प्रपूर्वकाद्वलेः कर्त्तरि ज्वलादित्वाणे, वृद्धौ च ण्यन्तात्पचाद्यचि वा प्रवालम् " प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे " ( इति मेदिनी ) इत्येकमंकुरादेः। जडे निष्प्रज्ञे, अपिशब्दात्कूटे, पीवरे च स्थूलं त्रिषु त्रिलिङ्ग्यां स्यात्। स्थूलयति स्थूलेश्चुराद्यदन्तात्कर्तरि पचाद्यचि स्थूलम् " स्थूलं कूटे च निष्प्रज्ञे पीवरेऽप्यन्यलिङ्गकम् " ( इति मेदिनी ) इत्येकं मूढादेः ॥ २१३ ॥

* पु. पु.
ऊँचे दांतवाला, ऊंचा, सुन्दर, चतुर, मूर्ख, बालक, चञ्चल, तृष्णासहित.
करालो (दन्तुरे तुङ्गे) (चारौ दक्षे च) पेशलः।
पु. पु. ‡
(मूर्खेऽर्भकेऽपि)बालः(स्या)ल्लोल(श्चलसतृष्णयोः)२१४

इति लान्ताः ॥

केति—दन्तुरे उन्नतरदे, तुङ्गे उन्नते उच्चतायुते वा करालः स्यात्। करेणाञ्जाति,

---

‡ इष्टं वानिष्टं वा सुखदुःखे न चेहेद्योमोहात्। विन्दति परवशगः स भवेदिह जडसंज्ञकः पुरुषः ॥ १ ॥

* दन्तुरे यथा ' करालदंष्ट्रः ' ‡ चञ्चले यथा " लोलाक्षीं सुन्दरीं पश्य " ॥

कराङ्पूर्वकाल्लाते: कर्त्तरि "आतश्चोपसर्गे" इति, "सुपीति" योगविभागाद्वा के, आलोपे च । करमलतीति विग्रहे तु "कर्मण्यण्" इत्यणि वा करालः "करालं दन्तुरे तुङ्गे भीषणे चाभिधेयवत्" (इति मेदिनी) इत्येकं दन्तुरादेः । चारौ सुन्दरे, दक्षे आलसहीने, चतुरे, शिक्षिते वा पेशलः स्यात् । पेशनम्, पिशेर्भावे घञि,गुणे च पेशस्तं लातीति "आतोऽनुपेति" के, आलोपे च, पेशोऽस्यास्ति, सिध्मादित्वाल्लचि वा पेशलः स्यादित्येकं सुन्दरादेः । मूर्खे मूढे, अर्भके शिशौ, अपिशब्दात् कचे ह्रीवेराश्वेभपुच्छेषु च बालः स्यात् । बलति, बल्यते वा बलेः कर्तरि ज्वलादित्वाणे, कर्मणि घञि वा वृद्धौ च-'बाडते' इति विग्रहे तु पचाद्यचि डस्य लत्वे च बालः "बालो ना कुन्तलेऽश्वस्य गजस्यापि च बालधौ । वाच्यलिङ्गोऽर्भके मूर्खे ह्रीवेरे पुन्नपुंसकम् । अलङ्कारान्तरे मेध्यौ बाली बाला त्रुटिस्त्रियोः" (इति मेदिनी) इत्येकं मूढादेः । चलश्चञ्चलः सतृष्णस्तृष्णासमेतश्चानयोर्लोलः स्यात् । लोडति, लोडेः कर्तरि "पचाद्यचि" डलयोरैक्याड्डस्य लत्वे च लोलः "लोलश्चले सतृष्णे च लोला तु रसनाश्रियोः" (इति हैमः) इत्येकं चञ्चलादेः ॥ २१४ ॥

इति लान्ताः ॥

---

## अथ वान्ता व्याख्यायन्ते ॥

वन, वनाग्नि, जन्म, शिव, प्रधान, सखा, स्वामी, खैर, मनुष्य.

**दवदावौ (वनारण्यवह्नौ) (जन्महरौ) भवौ ।**
**(मन्त्रीसहायः)सचिवौ (पतिशाखिनरा) धवाः॥ २१५ ॥**

देति—वनं काननम्, अरण्यवह्निः वनाग्निश्च उभौ दवदावौ स्याताम् । दवति, दुनोति वा दवतेर्दुनोतेर्वा कर्तरि पचाद्यचि, गुणे, अवादेशे च दवः "दुन्योरनुपसर्गे" इति नीसाहचर्यात्सानुबन्धकाद्दुनोतेरेव कर्तरि णे, णित्त्वाद्वृद्धौ आवादेशे च दावः इति द्वे वनवनाग्न्योः । जन्म जननम्, हरः शिवश्च एतौ भवौ भवपदवाच्यौ स्याताम् । भवति, भवतेरन्तर्भावितण्यर्थात्कर्तरि पचाद्यचि जन्मनि तु भावे "ऋदोरप्" इत्यपि गुणे, अवादेशे च भवः "भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः" (इति मेदिनी) इत्येकं जन्मादेः । मन्त्री प्रधानः, सहायः सखा चैतौ सचिवौ स्याताम् । सचनम्, सचेर्भावे "सर्वधातुभ्य इन्" इतीनि सचिस्तंवाति, "आतोऽनुपेति" के, आलोपे च सचिवः द्वित्वे सचिवावित्येकं मन्त्रिसहाययोः । पतिः स्वामी, शाखी वृक्षभेदः खदिरो वा नरो मनुष्यश्चैते धवाः धवपदवाच्याः स्युः । धवति, धुवति, धूनोति, धुनाति वा धूञः कर्तरि 'पचाद्यचि' धूयते, इति विग्रहेतु "ऋदोरप्" इत्यपि, गुणे, अवादेशे च धवः द्वित्वे धवौ, बहुत्वे धवाः "धवः पुमान्नरे धूर्ते पत्यौ वृक्षान्तरेऽपि च" (इति मेदिनी) इत्येकं पत्यादेः ॥ २१५ ॥

पहाड़, भेंड़ा, पु.
सूर्य, हुक्म, बुलाना, यज्ञ, पु. **अवयः(शैलमेषार्का) (आज्ञाह्वानाध्वरा) हवाः ।**
सत्ता, स्वभाव, आशय, चेष्टा, आत्मा, जन्म. पु. **भावः (सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु) ॥ २१६ ॥**

अवेति—शैलः पर्वतः, मेषो मेढ्रः, अर्कः सूर्यश्च एते अवयः स्युः। अवति, अव्यते-वा अवतेः कर्तरि कर्मणि वा " सर्वधातुभ्य इन् " इतीनि अविः द्वित्वे अवी बहुत्वे अवयः "अविर्भूपुष्पवत्योः स्त्री वायुप्राकारभास्सु ना " ( इति वैजयन्ती ) इत्येकं शैलादेः । आज्ञा निदेशः, आह्वानं हूतिः, अध्वरो यागश्चैते हवाः स्युः । ह्वानम्, हूयतेऽत्रेतिवा हूयतेर्भावाधारयोः "भावेऽनुपसर्गस्य " इति अपि, संप्रसारणे, गुणे, अवादेशे च हवः, द्वित्वे हवौ, बहुत्वे हवाः स्युरित्येकमाज्ञादेः । सत्ता विद्यमानता, स्वभावः प्रकृतिः, अभिप्रायः आशयः, चेष्टा शरीरव्यापारः, आत्मा यत्नोधृतिर्बुद्धिः परमात्मा स्वभावः ब्रह्म, देहो वा जन्म उत्पत्तिरेषु भावः स्यात् । भावयति, भवतेर्ण्यन्तात्कर्तरि पचाद्यचि, भवनं वेति विग्रहे तु " श्रिणीभुवोऽनुपसर्गस्य " इति, घञि ञित्त्वाद्वृद्धौ आवादेशे च भावः " भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु । क्रियालीलापदार्थेषु विभूतिबन्धुजन्तुषु । रत्यादौ च " ( इति मेदिनी ) इत्येकं सत्तादेः ॥ २१६ ॥

उत्पत्ति, फल, फूल, गर्भप्रसव, पु. **(स्यादुत्पादे फले पुष्पे) प्रसवो (गर्भमोचने) ।**
अविश्वास, अपह्नव, शठता. पु. **(अविश्वासेऽपह्नवेऽपि निकृतावपि) निह्नवः ॥ २१७ ॥**

स्यादिति—उत्पादे उत्पत्तौ, फले वृक्षादिफले, पुष्पे कुसुमे, गर्भमोचने च प्रसवः स्यात् । प्रसवनम्, प्रसूयते वा प्रपूर्वकात्सूयतेर्भावे " ऋदोरप् " इत्यपि । कर्तरि पचाद्यचि वा गुणे अवादेशे च प्रसवः " प्रसवोगर्भमोचने । उत्पादे स्यादपत्येऽपि फलेऽपि कुसुमेऽपि च " ( इति मेदिनी ) इत्येकमुत्पत्त्यादेः । अविश्वासे विश्वासहीने अपह्नवे अपलापे, निकृतौ शठतायामपि निह्नवः स्यात् । निह्नवनम्, निपूर्वकाद्ह्नुङोभावे " ऋदोरप् " इत्यपि, गुणे, अवादेशे च निह्नवः " निह्नवः पुंसिनिकृताविश्वासालापयोः " ( इति मेदिनी ) इत्येकमविश्वासादेः ॥ २१७ ॥

ऊपर उठाना, चाहनाकी उपज, उछाह, पु. **(उत्सेकामर्षयोरिच्छा प्रसवे मह) उत्सवः ।**
प्रभाव, ज्ञानका निश्चय, भावका बोधक. पु. **अनुभावः (प्रभावे च सतां च मतिनिश्चये) ॥ २१८ ॥**

उदिति—उत्सेकः उद्रेकः, अमर्षः कोपः, इच्छायाः प्रसवः उत्पत्तिः, महः उद्धवः एषु उत्सवः स्यात् । अथवा उत्सेकामर्षयोः उद्रेकप्रकोपयोः, इच्छाप्रसवे वाञ्छोत्पत्तौ, महे

क्षणे च उत्सवः स्यात् । उत्सवनम्, उत्पूर्वकात्सवतेर्भावे "ऋदोरप्" इत्यपि, गुणे, अवादेशे, उदोदस्य चर्त्वेन तकारे च उत्सवः "उत्सवो मह उत्सेक इच्छाप्रसवकोपयोः" ( इति मेदिनी ) इत्येकमुद्रेकादेः । प्रभावे प्रतापे, सतां बुद्धिमतां मतिनिश्चये बुद्धिनिर्णये, ज्ञाननिश्चये वा चशब्दाद्भावसूचकेऽपि अनुभावः स्यात् । भवनम्, "श्रिनीभुवो–" इति घञि भावः अनुगतोभावः "प्रादयो गताद्यर्थे" इति समासे । अनुभावयतीति विग्रहेतु कर्तरि "पचाद्यचि" वा णिलोपे च अनुभावः "अनुभावः प्रभावे स्यान्निश्चये भावसूचके" ( इति विश्वः ) इत्येकं प्रभावादेः ॥ २१८ ॥

जन्म का कारण, ज्ञान का पहला स्थान, शूद्रा में ब्राह्मणसे उपजा बालक, फरसा.

पु.
**(स्याज्जन्महेतुः) प्रभवः(स्थानं चाद्योपलब्धये) ।**
पु.
**(शूद्रायां विप्रतनये शस्त्रे) पारशवो(मतः) ॥ २१९ ॥**

स्यादिति–जन्महेतुः जन्मनो जननस्य हेतुः कारणमुद्भवकर्ता पित्राद्यः, आद्योपलब्धये प्रथमज्ञानार्थं स्थानं च प्रभवः स्यात् । प्रभवत्यस्मात् प्रपूर्वकाद्भवतेरपादाने "ऋदोरप्" इत्यपि, गुणे, अवादेशे च प्रभवः "प्रभवो जलमूले स्याज्जन्महेतौ पराक्रमे । ज्ञानस्य चादिमस्थाने" ( इति मेदिनी ) इत्येकं जन्महेत्वादेः । शूद्रायां शूद्रस्य विजातीयाङ्गनायां विप्रतनये ब्राह्मणतनूजे, शस्त्रे कुठाराख्ये आयुधे च पारशवः पुमान् मतः सर्वाचार्यैः स्वीक्रियते इति भावः । पराञ्छृणाति, पर पूर्वकाच्छृणातेः कर्तरि "आङ्परयोः खनिशृभ्यां डिच्चेति" उप्रत्यये, डित्त्वाट्टिलोपे च परशुः सएव प्रज्ञाद्यणि परस्त्रिया अपत्यं वा "परस्त्री परशुं च" इति गणसूत्रादणि, वृद्धौ "ओर्गुणः" इति गुणे, अवादेशे च पारशवः "पारशवः पुमान् । परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेऽपिच" ( इति मेदिनी ) इत्येकं विप्राच्छूद्रासुतादेः ॥ २१९ ॥

ताराभेद, निश्चित, हमेशा, ज्ञाति, आत्मा, आत्मीय और धन.

पु. *
**ध्रुवो(भभेदे क्लीबे तु निश्चिते शाश्वते त्रिषु) ।**
पु.　　पु.स.न.　　पु.न.
**स्वो(ज्ञातावात्मनि)स्वं(त्रिष्वात्मीये)स्वो(ऽस्त्रियांधने)२२०**

ध्रुवइति–भभेदे नक्षत्रविशेषे ध्रुवः पुंसि स्यात् । निश्चिते व्यवसिते तु क्लीबे स्यात् । शाश्वते नित्ये त्रिषु त्रिलिङ्ग्यां स्यात् । ध्रुवति, ध्रुवतेः कर्तरि "इगुपधेति" के ध्रुवः "ध्रुवः कीले शिवे शङ्कौ, वसौ योगे वटे मुनौ । ध्रुवा मूर्वा शालिपर्ण्यां गीतिस्रुग्भेदयोरपि, । ध्रुवन्तु निश्चिते तर्के निश्चले शाश्वतेऽन्यवत्" ( इति विश्वः ) इत्येकं नक्षत्रविशेषादेः । ज्ञातौ सगोत्रे, आत्मनि क्षेत्रज्ञे च स्वः पुंसि स्यात् । आत्मीये स्वसम्बन्धिनि स्वं त्रिपु त्रिलिङ्ग्यां स्यात् । धने वित्ते स्वः अस्त्रियां पुन्नपुंसके स्यात् । स्वनति

* "जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च" ( इति भागवतम् ) ॥

स्यन्यते वा स्वनतेः कर्तृकर्मणोः " अन्येभ्योऽपि " इति डे, डित्वाट्टिलोपे च स्वः " स्वो ज्ञात्यात्मनोः स्वं निजे धने " ( इति हेमचन्द्रः ) " स्वःस्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने " ( इति मेदिनी ) इत्येकं ज्ञात्यादेः ॥ २२० ॥

नारा, राजपुत्रादि के पास गिरवीं धरना, मूलधन, पार्वती, सियार, कलह, जोड़ा.

स.
**( स्त्रीकटीवस्त्रबन्धेऽपि ) नीवी ( परिपणेऽपि च ) ।**
‡ न.
**शिवा ( गौरीफेरवयो ) र्द्वन्द्वं ( कलहयुग्मयोः ) ॥ २२१ ॥**

स्त्रीति—स्त्रीकटीवस्त्रबन्धे स्त्रिया रमण्याः कट्यां वस्त्रस्य बन्धने, परिपणे राजपुत्रादेर्बन्धके, अपिशब्दाद्वणिजां मूलधने च नीवी स्यात् । निव्ययति, निवीयते वा, निपूर्वकाद्व्येञः कर्तरि कर्मणि वा " नौव्योयलोपः पूर्वस्य च दीर्घः " इतीणि, यलोपे, पूर्वस्य दीर्घे, " कृदिकारादिति " ङीषि च नीवी ङीपोऽभावे नीविरपि, " नीवी स्त्री कटीवस्त्रबन्धने । मूलद्रव्ये परिपणे " ( इति हैमः ) इत्येकं नारीकटिवस्त्रबन्धादेः । गौरी शिवप्रियादिः, फेरवो जम्बुकश्चैतयोः शिवा स्यात् । शिवमस्त्यस्याः, " अर्श आदिभ्योऽच् " इत्यचि, टापि च शिवा " शिवा झाटामलौषधौ । अभयामलकीगौरी क्रोष्ट्रीसक्तुफलासु च " ( इति विश्वः ) इत्येकं गौर्यादेः । कलहो विवादो युद्धं वा, युग्मं युगलं द्वित्वसंयुतं वा उभयोर्द्वन्द्वं स्यात् । द्वौद्वाविति द्वन्द्वम् " द्वन्द्वं रहस्यमर्यादेति " साधुः "चार्थे द्वन्द्वः" इति निर्देशात्पुंस्यपि । " द्वन्द्वं रहस्ये कलहे तथा मिथुनयुग्मयोः " ( इति मेदिनी ) इत्येकं कलहादेः ॥ २२१ ॥

धन, प्राण, निश्चय, हिजड़ा, षधिया बैल, डरपोक या कायर.

न.
**( द्रव्यासुव्यवसायेषु ) सत्त्व ( मस्त्री तु जन्तुषु ) ।**
न.
**क्लीवं ( बं ) ( नपुंसके षण्ढे वाच्यलिङ्गमविक्रमे ) ॥ २२२ ॥**

## इति वान्ताः ।

द्रेति—द्रव्यं वित्तम्, असुः प्राणाः, व्यवसायो निश्चयः एषु सत्त्वं नपुंसकं स्यात् । जन्तुषु प्राणिमात्रेषु तु ' अस्त्री ' पुंन्नपुंसकं स्यात् । सीदन्ति गुणाद्या अस्मिन्निति, सदेराधारे " अन्येभ्योऽपि दृश्यन्ते" इति त्वनि दस्य चर्त्वेन तकारे च सत्त्वम् "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मत्वव्यवसायासुवित्तेष्वस्त्री तु जन्तुषु " ( इति मेदिनी ) इत्येकं द्रव्यादेः । नपुंसके तृतीयप्रकृतौ षण्ढे शण्ढे आकृष्टाण्डे गोपतौ वा क्लीबम् अस्त्री पुन्नपुंसकं स्यात् । अत्राप्यस्त्रीत्यनुवर्तते । अविक्रमे अलसे अपौरुषे साम र्थ्यहीने वा वाच्यलिङ्गं त्रिलिङ्गं स्यात् । क्लीवते, क्लीबेः कर्तरि " इगुपधेति " के

‡ " गौरी त्वसंजातरजःकन्या शंकरभार्ययोः । रोचनीरजनीपिङ्गप्रियङ्गुवसुधासु च । आपगाया विशेषेऽपि यादसां पतियोषिति " ( इति कोषान्तरम् ) ॥

क्लीबम् " अस्त्री नपुंसके क्लीबं वाच्यलिङ्गमविक्रमे " ( इति रुद्रः ) " विश्वहैममेदिनीष्वपि यणान्तेष्वेव पठितत्वाद्धातोर्बान्तत्वाच्च बवयोरैक्याद्वा बान्तोवान्तश्चायमिति सद्भिस्सुधीभिरेवाकलनीयम् " इत्येकं नपुंसकादेः ॥ २२२ ॥

इति वान्ताः ॥

---

**अथ शान्ता व्याख्यायन्ते ॥**

बनियां, मनुष्य, दूत, लड़ाई, समूह, मेषादि, वंश या बांस.

**(द्वौ) विशौ (वैश्यमनुजौ) (द्वौ चराभिमरौ) स्पशौ।**
**(द्वौ)राशी(पुञ्जमेषाद्यौ)(द्वौ)वंशौ(कुलमस्करौ)॥२२३॥**

द्वाविति–वैश्यो वणिक्, मनुजो मनुष्यश्चैतौ द्वौ विशौ स्याताम्। विशति, विशेः कर्त्तरि क्विपि, क्त्वित्वाद्गुणाभावे, " व्रश्चेति–" षत्वे चत्वें च विट् द्वित्वे विशौ " विट् स्मृतो वैश्यमनुजप्रवेशेषु मनीषिभिः " ( इति विश्वः ) इत्येकं वणिजादेः। चरो दूतो धावकश्चरिष्णुर्वा अभिमरो युद्धं चैतौ द्वौ स्पशौ स्याताम्। स्पशति, स्पशेः कर्त्तरि पचाद्यचि, स्पशः, द्वित्वे स्पशौ " स्पशः स्यात्संपराये च प्रणिधावपि पुंस्ययम् " ( इति मेदिनी ) इत्येकं दूतादेः। पुञ्जः समुदायः, मेषाद्यः मेषवृषादिश्चैतौ द्वौ राशी स्याताम्। अश्नुते व्याप्नोति, " अशिपण्योरुडायलुकौचेति " इण् प्रत्यये, रुडागमे च राशिः, द्वित्वे राशी " राशिर्मेषादिपुञ्जयोः " (इति मेदिनी) इत्येकं पुञ्जादेः। कुलं सजातीयसमूहः, मस्करोवेणुः कीचको वा एतौ द्वौ वंशौ स्याताम्। वनति, वन्यते वा वनेःकर्त्तरि कर्मणि वा बाहुलकाच् शे। वष्टि, उश्यते वा वशेःकर्तरि पचाद्यचि, कर्मणि घञि वा संज्ञापूर्वकत्वाद् वृद्ध्यभावे " संख्यावंश्येनेति " निर्देशान्नुमागमे च वंशः " वंशो वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च " ( इति विश्वः ) इत्येकं कुलादेः ॥ २२३ ॥

एकान्त, प्रकाश, तनख़्वाह, भोग, या यमराज, क्षुद्र, अधम, किसान.

**(रहःप्रकाशौ) वीकाशौ निर्वेशो (भृतिभोगयोः)।**
**(कृतान्ते पुंसि) कीनाशः (क्षुद्रकर्षकयोस्त्रिषु)॥२२४॥**

(पु. पु. पु.)

रेति–रहो विजनं, गोप्यं, रमणं, याथार्थ्यं वा, प्रकाशः आतपश्चैतौ वीकाशौ स्याताम्। विकाशनम्, विकाश्यतेऽस्मिन्निति वा विपूर्वकात्काशेर्भावाधारयोर्घञि, " इकःकाशे " इति दीर्घे च वीकाशः " वीकाशो विजने व्यक्ते " ( इति विश्वः ) इत्येकं विजनादेः। भृतिर्वेतनम्, भोगः उपभोगः भोजनाद्युत्पन्नसुखानुभवो वा एतयोर्निर्वेशः स्यात्। निर्वेशनम्, निर्विश्यते वा निरुपपदाद्विशेर्भावे कर्मणि वा घञि, गुणे च निर्वेशः " निर्वेशस्तु पुमान्भोगे वेतने मूर्च्छनेऽपिच " ( इति मेदिनी ) इत्येकं वेतनादेः। कृतान्ते यमराजे कीनाशः पुंसि स्यात्। क्षुद्रः क्रूरः, अधमः, अल्पो वा कर्षकः

कृषीवलश्चैतयोस्त्रिषु त्रिलिङ्ग्यां स्यात् । 'की' इत्यव्ययं कुत्सायाम् । की कुत्सितं नाशयति, कीपूर्वकान्नाशयतेः कर्तरि पचाद्यचि । क्लिश्नाति, क्लिश्यते वा क्लिशेःकर्त्तरि, कर्मणि वा "क्लिशेरीच्चोपधायाः कन्लोपश्चलोनाम् च" इति कनि, उपधाया ईत्वे, लस्यलोपे, नामागमे च कीनाशः "कीनाशः कर्षकक्षुद्रोपांशुघातिषु वाच्यवत् । यमे ना" ( इति मेदिनी ) इत्येकं कृतान्तादेः ॥ २२४ ॥

स्थान,निशाना, कारण, जल आदि, अनेकावस्था, दीपवर्त्तिका, वस्त्र का छोर, चाहना, पूर्वादि दिशा.

पु.
**(पदे लक्ष्ये निमित्ते) ऽपदेशः (स्या) त्कुश (मप्सु च) ।**

स. स.‡
**दशा(वस्थानेकविधाऽ) प्याशा ( तृष्णापि चायता) २२५**

पेति--पदे व्यवसाये, रक्षणे, स्थाने, चिह्ने, चरणे, सर्वपदार्थे वा लक्ष्ये व्याजे, शरव्ये वा निमित्ते हेतौ च अपदेशः स्यात् । अपदेशनम्, अपदिश्यते वा अपपूर्वकादिशतेर्भावे कर्मणि वा घञि ञित्त्वाद् गुणे च अपदेशः " अपदेशः पुमाँल्लक्ष्ये निमित्तव्याजयोरपि " ( इति विश्वः ) इत्येकं पदादेः । अप्सु जले कुशं स्यात् । चशब्दात् द्वीपे, योक्त्रे, दर्भे, रामसुतेऽपि कुशः पुमान् स्यात् । कुश्यति, कुशेः कर्त्तरि "इगुपधेति" के, कित्त्वाद् गुणाभावे च कु पापं श्यतीति विग्रहे तु "सुपीति" योगविभागात्के, आलोपे च कुशम् "कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले" (इति विश्वः) इत्येकं जलादेः । अनेकविधावाल्यादिरूपा अवस्था,अपिशब्दाद्दीपवर्त्तिका, वस्त्रान्तश्च दशा स्यात्, वस्त्रान्ते तु भूम्नि स्त्रियां स्यात् । दशति, दंशेः कर्तरि मूलविभुजादित्वात्के-पचाद्यचि वा "जपजभदहदशेति" निर्देशादकृङित्यपि नलोपे, दश्यते इति विग्रहे तु "गुरोश्च" इत्यङि, नलोपे टापि च दशा "दशावस्थादीपवर्त्योर्वस्त्रान्ते भूम्नि योषिति" ( इति मेदिनी ) इत्येकं नानाविधावस्थादेः । आयता विस्तृता तृष्णा लिप्सा अपि शब्दाद्दिशा च आशा स्यात् । आसमन्तादश्नुते, आङ्पूर्वकादश्नोतेः कर्तरि पचाद्यचि, टापि च आशा "आशा ककुभि तृष्णायाम्" ( इति हैमः ) इत्येकं तृष्णादेः ॥ २२५ ॥

नारी, हथिनी, ज्ञान, ज्ञाता, आँखआदि, साहसिक, कठिन, दुःस्पर्श आदि.

स. स.
**वशा (स्त्री करिणी च स्या) द् दृग् (ज्ञाने ज्ञातरि त्रिषु ) ।**

पु.स.न.
**(स्या) त्कर्कशः (साहसिकः कठोरामसृणावपि) ॥२२६॥**

वेति–स्त्री योषा, करिणी हस्तिनी, च शब्दाद्वन्ध्यगवी, दुहितापि वशा स्यात् । वष्टि, वशेः कर्तरि पचाद्यचि, टापि च वशा "वशा नार्य्यां वन्ध्यगव्यां हस्तिन्यां दुहि-

‡ "तृष्णायां यथा–आशा हि परमं दुःखं नैराश्यं परमं सुखम्" ( इति भागवतम् ) ॥

तर्यपि ” ( इति हैमः ) इत्येकं नार्यादेः । ज्ञाने बुद्धौ, ज्ञातरि वीक्षके च दृक् त्रिषु त्रिलिङ्ग्यां स्यात् । अत्रापि चेत्यनुवर्त्तते तस्मान्नेत्रे दर्शने च स्त्रियां स्यात् । पश्यति, दृशेः कर्तरि “ अन्येभ्योऽपि दृश्यते ” इति क्विपि, दर्शनम्, दृश्यतेऽनेनेति वा सम्पदादित्वात्किपि, “ त्यदादिष्विति ” दृशेःक्विन्विधान दन्यत्रापीति कुत्वे दक् जस्त्वे च दृग “ दृक् स्त्रियां दर्शने नेत्रे बुद्धौ च त्रिषु वीक्षके ” ( इति मेदिनी ) इत्येकं ज्ञानादेः । अतः परमावर्गान्तंत्रिष्वित्यधिक्रियते । साहसिको विवेकरहितो मिथ्यावादी, मनुष्यमारणादौरतश्चौरादिर्वा कठोरः कठिनः अमसृणोऽचिक्कणो दुःस्पर्शो वा अपिशब्दात्कृपणनिर्दयदृढादिश्च कर्कशः स्यात् । कृणाति, कॄञः कर्तरि “ अन्येभ्योऽपीति ” विचि, कर्, कर्त्ते, कशेः कर्तरि पचाद्यचि, कशः कर्चासौ कशश्चेति कर्कशः “ कर्कशः परुषे क्रूरे कृपणे निर्दये दृढे । इक्षौ साहसिके कासमर्दकाम्पिल्लयोरपि ” ( इति विश्वः ) इत्येकं साहसिकादेः ॥ २२६ ॥

बड़ा प्रसिद्ध, प्रहास, घाम, खिलना, बच्चा या लड़का व मूढ आदि.

पु.स.न. ... पु.स.न.

**प्रकाशो (ऽतिप्रसिद्धेऽपि) (शिशावज्ञे च) वालिशः ॥**

**इति शान्ताः ।**

प्रेति—अतिप्रसिद्धे महाविख्याते अपिशब्दात्प्रहासातपस्फुटेषु प्रकाशः स्यात् । प्रकाशते, प्रकाशनं वा प्रपूर्वकात्काशेः कर्तरि पचाद्यचि, भावे घञि वा प्रकाशः “ प्रकाशोऽति प्रसिद्धेस्यात्प्रहासातपयोः स्फुटे ” ( इति विश्वः ) इत्येकमतिप्रसिद्धादेः । शिशौ शावके करभे वा, अज्ञे जडे, मूढे च वालिशः स्यात् । वाडनम्, वाडेर्भावे “ सर्वधातुभ्य इन् ” इतीनि डलयोरैक्याड्डस्य लत्वे च वालिस्तां श्यतीति “ आतोऽनुपेति ” के, आलोपे च वालिशः “ वालिशस्तु शिशौ मूर्खे ” ( इति मेदिनी ) इत्येकं शावकादेः ॥

इति शान्ताः ।

---

## अथ षान्ता व्याख्यायन्ते ।

देवता, मछली, परमात्मा, मनुष्य, कौआ, बगला, तृण या घास, लता.

पु. पु.

**(सुरमत्स्याव) निमिषौ पुरुषा (वात्ममानवौ) ॥ २२७ ॥**

पु. पु.

**(काकमत्स्यात्खगौ) ध्वाङ्क्षौ कक्षौ (तु तृणवीरुधौ) ।**

स्विति—सुरो देवो मत्स्यो मीनश्चैतौ अनिमिषौ स्याताम् । न निमिषति, नञ्—निपूर्वकान्मिषेः कर्तरि “ इगुपधेति ” के, नञ्समासे नञोनस्य लोपे च अनिमिषः, द्वित्वे अनिमिषावित्येकं सुरादेः । आत्मा परमात्मा, मानवो मनुजश्चैतौ पुरुषौ स्याताम् । पुरति, पुरेः कर्तरि “ पुरःकुषन् ” इति कुषनि, कित्त्वाद् गुणाभावे च पुरुषः द्वित्वे पुरुषौ “ पुरुषः पूरुषे सांख्यज्ञे च पुन्नागपादपे ” ( इति मेदिनी ) इत्येकं पुरुषादेः ।

काकः करटो वायसो वा मत्स्यानत्तीति मत्स्यात्सचासौ खगश्चैतौ ध्वाङ्क्षौ स्याताम् । ध्वाङ्क्षति, ध्वाङ्क्षेः कर्तरि पचाद्यचि ध्वाङ्क्षः द्वित्वे ध्वाङ्क्षौ " ध्वाङ्क्षो मत्स्यात्खगे काके भिक्षुके तक्षकेऽपिच " ( इति मेदिनी ) इत्येकं वायसादेः । तृणं घासादिः, वीरुल्लता चैतौ कक्षौ स्याताम् । कषति, कष्यते वा कषेः कर्तरि कर्मणि वा " वृतृवदिहनिकमिकषिभ्यःसः " इति से, " षढोरिति " कत्वे, षत्वे, क्षत्वे च कक्षः " कक्षः स्मृतो भुजामूले कक्षोऽरण्ये च वीरुधि । कक्षः शुष्कतृणे प्रोक्तः कक्षःकच्छ उदाहृतः । कक्षा स्पर्धापदे काञ्च्यां रथगेहप्रकोष्ठयोः । गजरज्जौ परीधानपश्चादञ्चलपल्लवे " ( इति धरणिः ) इत्येकं तृणादेः ॥ २२७ । ३/२ ॥

घोड़े की पगही, किरण, भेजना या हुक्म देना, मर्दन करना.

पु. पु.
**अभीषुः (प्रग्रहे रश्मौ) प्रैषः (प्रेषणमर्दने) ॥२२८ ॥**

अभीति–प्रग्रहे अश्वादिरज्जौ, रश्मौ किरणे च अभीषुः स्यात् । ईषते, ईष्यते वा ईषेः कर्तरि, कर्मणि वा " ईषेः किच्च " इत्युप्रत्यये, धातोरादेरिदादेशे च इषुः, अभिगत इषुः " प्रादयो गतेति " समासे अभीषुः । मुकुटमते तु अभीशुस्तालव्यान्तोऽपीत्येकं प्रग्रहादेः । प्रेषणं प्रेरणमाज्ञाकरणं वा मर्दनं पीडनं चेति समाहारद्वन्द्वे प्रेषणमर्दनं तस्मिन्प्रैषः स्यात् । प्रेषणम्, प्रपूर्वकादिषेर्भावे घञ्, " प्रादूहो–" इति वृद्धौ च प्रैषः स्यात् । पीयूषव्याख्यातस्तु प्रेषः एङादिरपि । " प्रैषः प्रेषणपीडयोः " ( इत्यजयः ) " प्रैषः स्यात्प्रेषणे क्लेशे मर्दनोन्मादयोरपि" (इति विश्वः) इत्येकं प्रेषणादेः ॥ २२८॥

सहाय, आधा मास आदि, पगड़ी, मुकुट, महावीर्यवान्, मूसा, श्रेष्ठ, धर्म, बैल.

पु. न.
**पक्षः (सहायेऽप्यु) ष्णीषं ( शिरोवेष्टकिरीटयोः ) ।**

पु
**( शुक्रले मूषिके श्रेष्ठे सुकृते वृषभे ) वृषः ॥ २२९ ॥**

पेति–सहाये सहचरे अपिशब्दान्मासार्धकादौ च पक्षः स्यात् । पक्षति, पक्ष्यते वा पक्षेः कर्तरि 'पचाद्यचि' कर्मणि 'घञ्' वा पक्षः । " पक्षो मासार्धके पार्श्वे ग्रहे साध्यविरोधयोः । केशादेः परतो वृन्दे बले सखिसहाययोः । चुल्लीरन्ध्रे पतत्रे च वाजि कुञ्जरपार्श्वयोः " ( इति मेदिनी ) इत्येकं सहायादेः । शिरोवेष्टः शिरसोवेष्टनं वस्त्रादिरूपम्, किरीटं मुकुटं चैतयोरुष्णीषं स्यात् । उष्णमीषते हिनस्ति, उष्णपूर्वकादीषेः कर्तरि " इगुपधेति " के, शकन्ध्वादित्वात्पररूपे च उष्णीषम् " उष्णीषं तु शिरोवेष्टे किरीटे लक्षणान्तरे " ( इति विश्वः ) इत्येकं शिरोवेष्टनादेः । शुक्रले बहुवीर्यवति, वृष्यप्रयोगे वा, मूषिके आखौ, श्रेष्ठे पूज्ये नृपे वा सुकृते धर्मे, वृषभे बलीवर्दे च वृषः स्यात् । वर्षति, वृषेः कर्तरि "इगुपधेति" के, कित्त्वाद् गुणा भावे च वृषः " वृषोधर्मे

वलीवर्दे शृङ्गयां पुंराशिभेदयोः । श्रेष्ठे स्यादुत्तरस्थे च वासमूषिकशुक्रले " ( इति मेदिनी ) इत्येकं शुक्लादेः ॥ २२६ ॥

फूलती कली, तलवार का घर, खज़ाना, सौगन्द, जूआ, पांशा, चौपड़, इन्द्रियां, जूआ, सोलहमाशे, रथ का पहिया, लेन देन, बहेड़ा.

पु.न.

**कोषो (ऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः)।**

पु. पु.न.

**(द्यूतेऽक्षेशारिफलकेऽ)प्याकर्षोऽथाक्ष(मिन्द्रिये)॥२३०॥**

**(ना द्यूताङ्गे कर्षे चक्रे व्यवहारे कलिद्रुमे)।**

कविति—कुड्मले मुकुले, खड्गपिधाने करवालाच्छादने, अर्थौघदिव्ययोः धनसमूह शपथयोश्च धनौघस्वर्गीयपदार्थयोर्वा कोषः अस्त्री पुन्नपुंसकं स्यात् । कुष्यते, कुषेः कर्मणि घञ्‌ ञित्त्वाद्‌ गुणे च कोषः " कोषोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके । जातिकोशेऽर्थसंघाते पेश्यां शब्दादिसंग्रहे " ( इति मेदिनी ) तालव्यान्तोऽपि " कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके– " इति श्लोकस्य मेदिन्यां तालव्यान्तेऽपि पाठः । इत्येकमीषद्विकसितकलिकादेः । द्यूते दुरोदरे, अक्षे पाशके, शारिफलकेऽष्टापदे अपिशब्दाच्चापभ्यासवस्तुनि, आकर्षणे च आकर्षः पुमान् स्यात् । आकर्षणम्, आकृष्यते, आकृषत्यस्मिन्निति वा आङ्पूर्वात्कृषेर्भावकर्माधिकरणेषु घञ्, गुणे च आकर्षः " नाकर्षोद्यूतइन्द्रिये । पाशके शारिफलके कोदण्डाभ्यासवस्तुनि । आकर्षणेऽपि पुंसि स्यात् " (इति मेदिनी) इत्येकं द्यूतादेः । अथेति–इन्द्रिये हृषीके अक्षं नपुंसकं स्यात् । द्यूताङ्गे कैतवाङ्गे, कर्षे मानभेदे, चक्रे रथावयवे, व्यवहारे आयव्यय चिन्तायाम्, कलिद्रुमे भूतावासे बिभीतके वा ना पुमान् स्यात् । अक्ष्णोति, अक्ष्यते, अनेन, अत्रेति वा अक्षेः कर्तरि पचाद्यचि, कर्मकरणाधिकरणेषु घञ्, वा अक्षः " अक्षः कर्षेतुषे चक्रे शकटव्यवहारयोः । आत्मज्ञे पाशके चाक्षं तुत्थे सौवर्चलेन्द्रिये " ( इति विश्वः ) इत्येकमिन्द्रियादेः ॥ २३० ॥

जीविका, बिनबांकण्डा, नदी मात्र या तलैया.

पु. स. ‡

**कर्षू (र्वार्ता करीषाग्निः) कर्षूः (कुल्याभिधायिनी) २३१॥**

केति–वार्ता जीविका कर्षूः स्त्रियां स्यात् । करीषाग्निः शुष्कगोमयाग्निः कर्षूः पुमान् स्यात् । कुल्याभिधायिनी नदीमात्राभिधाना कर्षूः स्त्रियां स्यात् । कर्षति, कृष्यते, कर्षणं वा कृषेः, कर्त्तरि, कर्मणि, भावे वा " कृषिचमितनीति " ऊप्रत्यये, गुणे, रपरत्वे च कर्षूः " करीषाग्निः पुमान् कर्षूः कुल्यायामपि च स्त्रियाम् " ( इति रभसः ) इत्येकं जीविकादेः ॥ २३१ ॥

---

‡ कुल्या नदीमात्रं च । " कुल्या धुनी द्वीपवती तटिनी ह्रादिनी सरित् । रोधोवक्रापगाकर्षूः स्रवन्ती निम्नगानदी " ( इति रत्नकोषः ) ॥

पुरुषपना, पुरुषकर्म, जल, जहर, घूस लेना आदि, जुर्म, गुनाह, पाप, रोग

न. न.
( पुंभावे तत्क्रियायां च ) पौरुषं विष ( मप्सु च ) ।
न. न.
(उपादानेऽप्या)मिषं (स्या) दपराधेऽपि) किल्बिषम् २३२

पुमिति—पुंभावे पुरुषस्य भावे तत्क्रियायां पुरुषकर्मणि चशब्दात्तेजस्यपि पौरुषं स्यात् । पुरुषस्य कर्म भावो वा । "प्राणभृज्जाति" इत्यञ्, ञित्त्वाद्वृद्धौ च पौरुषम । पौरुषं पुरुषस्य स्याद्भावे कर्मणि तेजसि । ऊर्ध्वविस्तृतदोः पाणिनृमाने त्वभिधेयवत् । ( इति विश्वः ) इत्येकं पुंभावादेः । अप्सु जले चशब्दाद्गरलेऽपि विषं स्यात् । वेवेष्टि, विषेः कर्तरि "इगुपधेति" के, क्त्वाद् गुणाभावे च विषम् "विषं तु गरले तोये" ( इति विश्वः ) इत्येकं जलादेः । उपादाने उत्कोचे, अपिशब्दाद्भोग्यवस्तुनि, सम्भोगे, मांसे च आमिषं स्यात् । आमिष्यते=भुज्यते, आङ्पूर्वकान्मिषेः कर्मणि घञ्, संज्ञापूर्वकत्वाद् गुणाभावे च आमिषम् "आमिषं पुन्नपुंसकम् । भोग्यवस्तुनि संभोगेऽप्युत्कोचे पललेऽपि च ।" ( इति मेदिनी ) इत्येकमुत्कोचादेः । अपराधे पापे, दोषेऽधर्मे, अन्याये वा अपिशब्दाद्रोगे च किल्बिषं स्यात् । केलनम्, किल्यते वा "किल क्षेपे" अस्मात्तौदादिकाद्भावे कर्मणि वा "किलेर्बुक् च" इति टिषच्, बुगागमे च किल्बिषम् "किल्बिषं पापरोगयोः" ( इति मेदिनी ) इत्येकमपराधादेः ॥ २३२ ॥

वर्षा, मेह, जम्बूद्वीप का भारतखण्ड, साल या संवत्, नाच का देखना, बुद्धि, आराधना, मांगना, तनख्वाह.

पु.न.
( स्याद्वृष्टौ लोकधात्वंशे वत्सरे ) वर्ष ( मस्त्रियाम् ) ।
स. स.
प्रेक्षा ( नृत्येक्षणं प्रज्ञा ) भिक्षा ( सेवार्थना भृतिः ) २३३

स्यादिति—वृष्टौ वारिदवर्षणे, लोकं धत्ते लोकधातुर्जम्बूद्वीपादिस्तदंशे भारतादौ, वत्सरे संवत्सरे च वर्षम् अस्त्रियां पुन्नपुंसके स्यात् । वर्षति, वर्षयति वा वृषेर्वर्षयतेर्वा कर्तरि पचाद्यचि, वर्षणमिति विग्रहे तु "अज्विधौ भयादीनामुपसंख्यानम्" इत्यचि वा गुणे, रपरत्वे च वर्षम् "वर्षोऽस्त्री भारतादौ च जम्बूद्वीपाब्दवृष्टिषु । प्रावृट्काले स्त्रियां भूम्नि" ( इति मेदिनी ) इत्येकं वृष्ट्यादेः । नृत्यं नर्तनं तस्य, ईक्षणं दर्शनम, "प्रेक्षा धीरीक्षणं नृत्तमिति" हैमादीक्षणं नृत्तंचेति पृथक्पाठात्समाहारद्वन्द्वो वा, प्रज्ञा बुद्धिश्च प्रेक्षा स्यात् । प्रेक्षणम्, प्रेक्ष्यतेऽनयेति वा प्रपूर्वकादीक्षतेर्भावे, करणे वा "गुरोश्च हलः" इत्यप्रत्यये, टापि च प्रेक्षा, "प्रेक्षा धीनृत्यदर्शयोः" ( इत्यजयः ) "प्रेक्षा नृत्येक्षणे बुद्धौ" ( इति मेदिनी ) इत्येकं नर्तनादेः । सेवा आराधना, अर्थना याचना, भृतिर्भरणया च भिक्षा स्यात् । भिक्षणम्, भिक्ष्यते वा "भिक्ष याच्ञायाम्" अस्माद्भावे कर्मणि वा

अप्रत्यये टापि च भिक्षा " भिक्षा भृतौ च याच्ञायां सेवाभिक्षितवस्तुनोः " ( इति. विश्वः ) इत्येकमाराधनादेः ॥ २३३ ॥

शोभा, संपूर्ण, अधम, प्रत्यक्ष, अधिकृत, अप्रेम, अचिक्कण.

स. त्विट् (शोभापि)(त्रिषु परे) पु.स.न. न्यक्षं (कात्स्न्र्यनिकृष्टयोः)।
(प्रत्यक्षेऽधिकृते) पु.स.न. ऽध्यक्षो पु.स.न. रूक्ष(स्त्वप्रेम्णयऽचिक्कणे) २३४

**इति षान्ताः ॥**

त्वीति–शोभा कान्तिश्छविर्वा, अपिशब्दाद्वाणी, रुचिश्च त्विट् स्यात् । त्वेषणम्, त्विष्यतेऽनयेति वा त्विषेर्भावे, साधने वा संपदादित्वात्क्विपि चर्त्वे च त्विट् " कान्तौ वाचि रुचौ त्विट् स्त्री " ( इति रभसः ) इत्येकं शोभादेः । अतः परे वक्ष्यमाणास्त्रयस्त्रिषु त्रिलिङ्ग्यां स्युर्वाच्यलिङ्गा भवन्तीति यावत् । कात्स्न्र्यनिकृष्टयोः साकल्याधमयोः, अत्रापीत्यनुवृत्त्या परशुरामे च न्यक्षं स्यात् । नियतानि निकृतानि वा अक्षाणि यस्य यस्मिन्निति वा न्यक्षम् "न्यक्षः परशुरामे स्यान्न्यक्षः कात्स्न्र्यनिकृष्टयोः" (इति विश्वः) इत्येकं कात्स्न्र्यादेः । प्रत्यक्षे साक्षात्प्रमाणीकृते, अधिकृते नियुक्ते च अध्यक्षः स्यात् । अधिगतोऽक्षं अधिगतोऽक्षेण वा अक्षेषु व्यवहारेषु अधिकृतः, अधिकृतान्यक्षाणयस्य, अध्यक्ष्णोति वा अधिपूर्वादक्ष्णोतेः कर्तरि ' पचाद्यचि ' अध्यक्षः " अध्यक्षोऽधिकृते प्रोक्तः प्रत्यक्षे त्वभिधेयवत् " ( इति मेदिनी ) इत्येकं प्रत्यक्षादेः । अप्रेम्णि प्रेमाभावे स्नेहरहिते वा अचिक्कणे अमसृणे च रूक्षः स्यात् । रूक्षयति, ' रूक्ष पारुष्ये ' अस्मात्स्वार्थण्यन्तात्कर्तरि पचाद्यचि रूक्षः । इत्येकमप्रेमादेः ॥ २३४ ॥

इति षान्ताः ॥

---

**अथ सान्ता व्याख्यायन्ते ॥**

दिवाकर, सफेद पंखवाला पक्षी, सूर्य, आगी, बछड़ा, बरस, चातक, देवता.

(रविश्वेतच्छदौ) पु. हंसौ ( सूर्यवह्नी) पु. विभावसू ।
पु. वत्सौ (तर्णकवर्षौ द्वौ) (सारङ्गाश्च ) पु. दिवोकसः ॥२३५॥

रेति–रविः सूर्यः, श्वेतच्छदः सितपक्षो विहंगभेदश्चैतौ हंसौ स्याताम् । हन्ति गच्छति, हनेःकर्तरि पचाद्यचि " भवेद्वर्णागमाद्धंसः " इति सगागमे च " वृतृवदिवचिवसिहनिकमिकपिभ्यः " इति स प्रत्यये वा हंसः द्वित्वे हंसौ " हंसो विहङ्गभेदे-स्यादर्के विष्णौ हयान्तरे । योगिमन्त्रादिभेदेषु परमात्मन्यमत्सरे । निर्लोभनृपतौ हंसः शरीरमरुदन्तरे " ( इति विश्वः ) इत्येकं रव्यादेः । सूर्यो दिवाकरः वह्निरनलश्चैतौ विभावसू स्याताम् । विभाप्रभावसुधनमस्येति विभावसुः द्वित्वे विभावसू " विभावसुः

पुमान्सूर्ये हारभेदे च पावके" ( इति मेदिनी ) इत्येकं सूर्यादेः। तर्णको गोवत्सः, वर्षो वत्सरश्चेमौ द्वौ वत्सौ स्याताम् । वसति, अस्मिन्निति वा वसेः कर्तरि, अधिकरणे वा "वृतृवदीति" से "सः स्यार्धधातुके" इति सस्य ते च वत्सः द्वित्वे वत्सौ "वत्सः पुत्रादिवर्षयोः । तर्णके नोरसि क्लीबम्" ( इति मेदिनी ) इत्येकं गोवत्सादेः । सारङ्गं येषामिति, सारं गच्छन्तीति वा सारङ्गाः मृगचातकहरिणाः चशब्दाद्देवा अपि दिवौकसः स्युः । द्यौरोकोयेषामिति दिवोकसः "दिवोकाश्च दिवौकाश्च पुंसि देवे च चातके" ( इति मेदिनी ) इत्येकं हरिणादेः ॥ २३५ ॥

शृङ्गार, वीर आदि, कर्ण भूषण आदि.

(शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे) रसः । (पु.)

(पुंस्यु) त्तंसावतंसौ (द्वौ कर्णपूरे च शेखरे) ॥ २३६ ॥ (पु. पु.)

श्रिति—शृङ्गारादौ शृङ्गारवीरकरुणादौ, विषे गरले, वीर्ये बले प्रभावे च गुणे स्वादे रागे प्रीतावनुरागे वा द्रवे द्रवतायुक्ते वेगे च रसः स्यात् । रस्यते "रस आस्वादनादौ" अदन्तस्तस्मात्कर्मणि घञि, अल्लोपस्य स्थानिवत्त्वाद्वृद्ध्यभावे च रसः "रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः । शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे । रसा तु शल्लकी पाठाजिह्वाधरणिकङ्गुपु" ( इति विश्वः ) इत्येकं शृङ्गारादेः । कर्णपूरे कर्णाभरणे, शेखरे शिरोभूषणे च उत्तंसावतंसावेतौ द्वौ पुंसि स्याताम् । उत्तंसयति, उत्तंस्यते अनेन वा उत्पूर्वकस्तसिः सौत्रोभूषार्थस्तस्मात्कर्तरि पचाद्यचि, कर्मसाधनयोर्घञि वा उत्तंसः, एवमवतंसोऽपि "उत्तंसः कर्णपूरेऽपि शेखरे चावतंसवत्" ( इति विश्वः ) इति द्वे कर्णाभरणादेः ॥ २३६ ॥

आठो वसुदेवता, आगी, किरण, रत्न, धन, विष्णु, बुद्धिमान्, ब्रह्मा, हितकी चाहना, सांपकी दाढ़.

( देवभेदेऽनले रश्मौ ) वसू ( रत्ने धने ) वसु । (पु. न.)

(विष्णौ च)वेधाः(स्त्री)त्वाशी(र्हिताशंसाहिदंष्ट्रयोः)२३७ (पु. स.)

दयिति—देवभेदे अष्टवसुदेवताविशेषे अनले अग्नौ कृत्तिकाभे वा रश्मौ किरणे हयरश्मौ वा वसुः पुमान्स्यात् । रत्ने माणिक्यादौ धने द्रव्यमात्रे च वसु क्लीबं स्यात् । वसति सर्वत्र, उष्यतेऽनेन वा वसेः कर्तरि करणे वा "शृस्वृस्निहि" इत्युप्रत्यये वसुः "वसुर्देदेऽग्नौ योक्त्रेऽशौ वसु तोये धने मणौ" ( इत्युणादिकोषः ) "वसुर्ना देवभेदाग्निभयोक्त्रबकराजसु । क्लीबं वृद्ध्यौषधे श्याले रैरत्ने मधुरे त्रिपु" ( इति मेदिनी ) इत्येकं देवभेदादेः । विष्णौ हृषीकेशे चशब्दाद् बुधे परमेष्ठिन्यपि वेधाः स्यात् । विधति, विधः कर्तरि असुनि । विदधातीति विग्रहे तु "विधाञो वेध च" इत्युसुनि वा दीर्घे च वेधाः "वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि" (इति मेदिनी) इत्येकं विष्णवादेः ।

हितस्य आशंसा, अहेः सर्पस्य दंष्ट्रा चैतयोः आशीः स्त्री स्यात् । आशास्ते, आङ्पूर्वकः 'शासु इच्छायाम्' आदादिकस्तस्मात्कर्तरि क्विपि। आशासनम्, आशास्यतेऽनयावेति विग्रहे तु संपदादित्वात् क्विपि वा "आशासः कौ–" इतीत्त्वे षत्वस्यासिद्धत्वाद्रुत्वे च आशीः "आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति" (इति कोषान्तरम्) इत्येकं हिताशंसादेः ॥ २३७ ॥

प्रार्थना, बड़ी चाहना आदि, चोरी, वध आदि, घोड़ी, माता आदि, भूमि, स्वर्ग.

**लालसे (प्रार्थनौत्सुक्ये) हिंसा (चौर्यादि कर्म च)।**
**प्रसू (रश्वापि) (भूद्यावौ) रोदस्यौ रोदसी (च ते) २३८**

लेति–प्रार्थना याचना, औत्सुक्यमतिलिप्सा च उभे लालसे स्याताम्। लालसनम् 'लस दीप्तौ' भौवादिको यङन्तस्तस्माद्भावे "अ प्रत्ययात्" इत्यप्रत्यये, टापि च लालसा द्वित्वे लालसे "लालसौत्सुक्यतृष्णातिरेकयाच्ञासु च द्वयोः" (इति मेदिनी) इत्येकं प्रार्थनादेः। चौरस्य कर्म 'ब्राह्मणादित्वात्ष्यञि' चौर्यम्, आदिना बन्धन-त्रासन-ताडनादि चाद्वधोऽपि हिंसा स्यात्। हिंसनम 'हिसि हिंसायाम्' रौधादिकस्तस्माद्भावे "गुरोश्च–" इत्यप्रत्यये, टापि च हिंसा "हिंसा चौर्यादिघातयोः" (इति मेदिनी) इत्येकं चौर्यादेः। अश्वा वडवा अपिशब्दाज्जननी कदलीलता च प्रसूः स्यात्। प्रसूते प्रपूर्वकात् सूतेः कर्तरि "सत्सू–" इति क्विपि प्रसूः "प्रसूरश्वाजनन्योश्च कदलीवीरुधोरपि" (इति विश्वः) इत्येकमश्वादेः। ते भूद्यावौ द्यावाभूमी रोदस्यौ, रोदसी च स्याताम्। रोदिति सर्वमत्रेति, रुदेराधारे असुनि, गौरादित्वान्ङीषि च रोदसी, द्वित्वे रोदस्यौ, 'रोदसी, इत्यव्ययमप्यस्ति। "द्यावापृथिव्यौ रोदस्यौ रोदसी रोदसीति च" विगृहीतयोरप्येते नामनी। रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक्। सह प्रयोगेऽप्यनयोरोदः स्यादपि रोदसी" (इति विश्वः) इत्येकं द्यावाभूम्योः ॥ २३८ ॥

ज्वाला, दीप्ति, नक्षत्र, प्रकाश, दृष्टि, पाप, गुनाह, पक्षी, बाल्यावस्था आदि.

**(ज्वालाभासोर्नपुंस्य) र्चिर्ज्योति (र्भद्योतदृष्टिषु)।**
**(पापापराधयो) रागः (खगबाल्यादिनो) र्वयः॥ २३९॥**

ज्वेति–ज्वाला वह्निशिखा भाः दीप्तिश्च अनयोः अर्चिः पुंसि न स्यात्। अर्च्यते, अर्चेः कर्मणि "अर्चिशुचीति–" इसौ, अर्चिः "अथार्चिर्मयूखशिखयोर्नना" (इति मेदिनी) इत्येकं ज्वालादेः। भं नक्षत्रम, द्योतः प्रकाशः, दृष्टिः कनीनिका मध्यभागश्चैषु ज्योतिः नपुंसकं स्यात्। द्योतते, द्योतनम्, अनेनेति वा द्युतेः कर्तृभाव साधनेषु "द्युतेरिसिन्नादेश्चजः" इतीसनि, दस्य जकारे, गुणे च ज्योतिः "ज्योति-

+ आगच्छतीति आगः–इति स्वाम्युक्तिस्तु चिन्त्या।

रश्मौ दिवाकरे । पुमान्नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः " ( इति मेदिनी ) इत्येकं नक्षत्रादेः । पापं किल्बिषम्, अपराधो मन्तुश्चानयोः आगः स्यात् । एति, इण्: कर्तरि " इण आग अपराधे च " इत्यसुनि धातोरागादेशे च आगः " आगोऽपराधे पापे स्यात् " ( इति मेदिनी ) इत्येकं पापादेः । खगः पक्षी, बाल्यं बाल्यावस्था आदिना यौवनं चानयोर्वयः स्यात् । वयते, वेति, अजति वा वयतेर्वेतेरजतेर्वा कर्तरि असुनि वयः " वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम् " ( इति मेदिनी ) इत्येकं खगादेः ॥ २३९ ॥

प्रताप, विष्ठा, उत्सव, तेज, गुण, स्त्रीपुष्प, राहु, अँधेरा, तीसरा गुण.

**( तेजःपुरीषयो ) वर्चो मह ( स्तूत्सवतेजसोः ) ।**
**रजो (गुणे च स्त्रीपुष्पे) (राहौ ध्वान्ते गुणे) तमः॥२४०॥**

(न. न. न. न.)

तयिति—तेजः प्रतापः, प्रभावः प्रकाशो वा पुरीषं गूथं चानयोः वर्चो नपुंसकं स्यात् । वर्चते ' वर्च दीप्तौ ' अस्मात्कर्तरि ' असुनि ' वर्चः " वर्चो नपुंसकं रूपे विष्ठायामपि तेजसि । पुंसि चन्द्रस्य तनये " ( इति मेदिनी ) इत्येकं प्रतापादेः । उत्सवः उद्धर्षः तेजः प्रतापादिश्चानयोः महः स्यात् । महनम्, मह्यते वा महतेर्भावकर्मणोरसुनि महः मुकुटमते तु अदन्तोऽपि " मही नद्यन्तरे भूमौ महउत्सवतेजसोः " ( इति मेदिनी ) इत्येकमुत्सवादेः । गुणे गुणान्तरे, स्त्रीपुष्पे आर्तवे चशब्दात्परागे रेणुमात्रेऽपि रजः क्लीबं स्यात् । रञ्जनम् , रज्यतेऽनेनेतिवा, रजतेर्भावसाधनयोरसुनि, " भूरञ्जिभ्यां कित् " इति कित्वान्नलोपे च रजः " रजःक्लीबं गुणान्तरे । आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते " ( इति मेदिनी ) अदन्तोऽपि । रजोऽयं रजसा सार्धं स्त्रीपुष्पगुणधूलिषु " ( इत्यजयः ) इत्येकं गुणादेः । राहौ सैंहिकेये, ध्वान्ते महान्धकारे, गुणे सत्त्वादित्रये, " पापे, शोके च " तमः क्लीबं स्यात् । तम्यतेऽनेनेति, ' तमु ग्लानौ ' अस्माद्दैवादिकात्करणे असुनि तमः "तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुन्तुदे" ( इति मेदिनी ) इत्येकं राह्वादेः ॥ २४० ॥

अनुष्टुबादि, मनोरथ, सान्तपनादि कर्म, बल, मार्ग, आकाश, श्रावण मास.

**छन्दः (पद्येऽभिलाषे च) तपः (कृच्छ्रादि कर्म च) ।**
**सहो(बलं)सहा(मार्गो)नभः(खं)(श्रावणे)नभाः २४१॥**

(न. न. न. पु. न. पु.)

छेति—पद्येऽनुष्टुबादौ वृत्ते, अभिलाषे मनोरथे, चशब्दाद्वेदे स्वैराचारेऽपि छन्दः स्यात् । चन्दनम्, चन्द्यतेऽनेनेति वा चन्देर्भावसाधनयोरसुनि " चन्देरादेश्चछः " इति चस्य छत्वे च छन्दः " छन्दः पद्ये च वेदे च स्वैराचाराभिलाषयोः " ( इति मेदिनी ) इत्येकं पद्यादेः । कृच्छ्रं सान्तपनादिकम्, आदिना प्राजापत्य-चान्द्रायणा-

दिव्रतरूपं कर्म, चशब्दाल्लोकान्तरम्, धर्मम्, शिशिरो, माघश्च तपः, तपाश्च स्यात्। तपनम्, तप्यते, अनेनेति वा। तपेर्भावकर्मकरणेषु 'असुनि' तपः "तपोलोकान्तरेऽपि च। चान्द्रायणादौ धर्मे च पुमाञ्छिशिरमाघयोः" (इति मेदिनी) इत्येकं सान्तपनादेः। बलं स्थौल्यसामर्थ्यसैन्यं ज्योतिश्च सहः स्यात्। मार्गो मार्गशीर्षः पन्थाश्च सहाः स्यात्। सहते, सह्यते, अनेन, अत्रेति वा सहेः कर्तृकर्मकरणाधिकरणेषु असुनि, सहः, सहाश्च "सहो बले ज्योतिषि च पुंसिहेमन्तमार्गयोः" (इति मेदिनी) अत्र लिङ्गभेदार्थो द्विःपाठो बोद्धव्यः, एवमग्रेऽपि। इत्येकं बलादेः। खं व्योम नभः स्यात्। श्रावणः श्रावणमासः अत्रापि चानुवृत्त्या मेघपतद्ग्रहघ्राणमृणालसूत्रादिश्च नभाः स्यात्। नभनम्, नभ्यते, अनेन, अत्रेति वा नभेर्भावकर्मसाधनाधारेषु असुनि, नभः नभाश्च "नभो व्योम्नि नभा मेघे श्रावणे च पतद्ग्रहे। घ्राणे मृणालसूत्रे च वर्षासु च नभाः स्मृतः" (इति विश्वः) इत्येकमाकाशादेः॥ २४१॥

घर, आश्रयमात्र, दूध, पानी, प्रकाश, बल, वीज, नदीका वेग.

**न. ओकः (सद्माश्रयश्चौ) काः पु. पयः (क्षीरं) न. पयो (ऽम्बु च) न.।**

**न. ओजो (दीप्तौ बले) न. स्रोत (इन्द्रिये निम्नगारये) ॥२४२॥**

अविति—सद्म गृहम् ओकः स्यात्। आश्रयः आश्रयमात्रश्च ओकाः स्यात्। उच्यति समवैत्यत्र। 'उच समवाये' अस्माद्दैवादिकादाधारे 'असुनि' गुणे न्यङ्क्वादित्वात्कुत्वे च ओकः "ओकउचःके" इति निपातनाददन्तोऽपि। "ओका आश्रयमात्रेस्यान्मन्दिरे च नपुंसकम्" (इति मेदिनी) इत्येकं मन्दिरादेः। क्षीरं दुग्धं पयः स्यात्। अम्बु जलं च पयः स्यात्। पीयते 'पीङ् पाने' दैवादिकः। पयते वा 'पयगतौ' भौवादिको वा अस्मात्कर्तरि 'असुनि' पयः "पयः क्षीरे च नीरे च" (इतिहैमः) इत्येकं क्षीरादेः। दीप्तौ द्युतौ प्रभायां वा बल सामर्थ्ये अत्रापि चानुवृत्त्या अवष्टम्भे प्रकाशेपि ओजः स्यात्। उब्जति, अनेन वा 'उब्ज आर्जवे' अस्मात्तौदादिकात्कर्तरि साधने वा "उब्जेर्बले बलोपश्चेति" असुनि, बलोपे, गुणे च ओजः "ओजोदीप्तावबष्टम्भे प्रकाशबलयोरपि" (इति मेदिनी) स्वाम्यादिमते तु विषमसंख्यावाचीओजोऽदन्तोऽपि इत्येकं प्रभादेः। इन्द्रिये वीर्ये निम्नगारये नदीवेगे च स्रोतः स्यात्। स्रवति, 'स्रु गतौ' अस्माद्भौवादिकात्कर्तरि "स्रुरीभ्य तुट् च" इति असुनि, तुडागमे, गुणे च स्रोतः "स्रोतोऽम्बुवेग इन्द्रिये" (इति मेदिनी) इत्येकं वीर्यादेः॥ २४२॥

प्रभाव, प्रकाश, असहन, बल, शुक्र, पण्डित, क्रूर आदि.

**† न. तेजः (प्रभावे दीप्तौ च बले शुक्रेऽप्य) तास्त्रिषु।**

**पु. विद्वान् (विदंश्च) पु. वीभत्सो (हिंस्रोऽप्य (तिशयेत्वमी) २४३**

† "अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत्। प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम्" (इति भरतः)॥

तयितिं–प्रभावे प्रतापे, दीप्तौ प्रकाशे, चादसहने, बले सामर्थ्ये, शुक्रे रेतसि अपिशब्दाद्धाम्नि च तेजः स्यात् । तेजयति, तेज्यतेऽनेनेति वा ' तिज निशाने ' भौवादिकाण्ण्यन्तात्कर्तरि, साधने वा असुनि, णिलोपे च तेजः " तेजो धाम्नि पराक्रमे । प्रभावरेतसोश्च " ( इति विश्वः ) " तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसोः " ( इति मेदिनी ) इत्येकं प्रभावादेः । अतःपरमावर्गान्तं वक्ष्यमाणाः सान्तास्त्रिषु त्रिलिङ्गाः वाच्यलिङ्गा भवन्तीति यावत् । विदन् पण्डितः, चशब्दादात्मवेत्ता प्राज्ञोऽपि विद्वान् स्यात् । वेत्ति, विदेःकर्तरि शतरि " विदेःशतुर्वसुः " इति शतुर्वसावादेशे, नुमागमे, दीर्घे, सुलोपे, सलोपे तस्यासिद्धत्वान्नलोपाभावे च विद्वान् " विद्वानात्मविदिप्राज्ञे पण्डिते चाभिधेयवत् " ( इति विश्वः ) इत्येकं पण्डितादेः । हिंस्रः क्रूरः शरारुर्घातुको वा अपिशब्दाद्रसभेदो, विकृतः, पार्थः, पापो, घृणात्मा च बीभत्सः स्यात् । बीभत्सते, बीभत्स्यते, अनेन वा ' बध बन्धने ' भौवादिकस्तस्मात्स्वार्थसन्नन्तात्कर्तरि पचाद्यचि, कर्मणि, करणे वा घञि, घे वा अलोपे च बीभत्सः " बीभत्सो विकृते पार्थे क्रूरे पापघृणात्मनोः " ( इत्यजयः ) इत्येकं हिंस्रादेः । अमी वक्ष्यमाणा ज्यायानित्यादयश्चत्वारस्त्वऽतिशयेऽर्थे प्रवर्तन्तइति ॥ २४३ ॥

बूढ़ा, प्रशंसनीय, ज्वान, थोड़ा, महान् श्रेष्ठ, साधु, स्वीकार या मजबूत.

पु.स.न. पु.स.न.
**(वृद्धप्रशस्ययो) र्ज्यायान् कनीयांस्तु (युवाल्पयोः) ।**
पु.स.न. पु.स.न.
**वरीयां (स्तूरुवरयोः) साधीया (न्साधुबाढयोः)॥२४४॥**

## इति सान्ताः ।

त्रिति–वृद्धो जीर्णः स्थविरो वा प्रशस्यः स्तुत्यश्चानयोर्ज्यायान् स्यात् । अतिशयेन वृद्धः प्रशस्यो वा " द्विवचनेति " ईयसुनि " ज्यच " इति, " वृद्धस्य च " इति वृद्धप्रशस्ययोर्ज्यादेशे, " ज्यादादीयसः " इत्यात्वे, नुमागमे, दीर्घे, सुलोपे, सलोपे च ज्यायान् " ज्यायान्वृद्धे प्रशस्ये च " ( इति हैमः ) इत्येकं वृद्धप्रशस्ययोः । युवा तरुणः, अल्पः स्तोकश्चानयोः कनीयान्स्यात् । अतिशयितो युवाल्पो वा । " युवाल्पयोः कनन्यतरस्याम् " इतीयसुनि, कन्नादेशे च कनीयान् " कनीयानतियूनिस्यादत्यल्पानुजयोस्त्रिषु " ( इति मेदिनी ) इत्येकं युवाल्पयोः । उरुर्महान्, वरःश्रेष्ठश्चानयोर्वरीयान् स्यात् । अति शयित उरुर्वरो वा । " द्विवचनेति " ईयसुनि, " प्रियस्थिरेति " उरोर्वरादेशे च वरीयान् " वरीयान् योगभिच्छ्रेष्ठवरिष्ठेष्वतियूनि च " ( इति मेदिनी ) इत्येकं महदादेः । साधुः सज्जनो रम्यो वा बाढं स्वीकारः दृढश्चानयोः साधीयान्स्यात् । अतिशयितः साधुर्बाढो वा । ईयसुनि " अन्तिकबाढयोः " इति बाढशब्दस्य साधादेशे च साधीयानित्येकं साध्वादेः ॥ २४४ ॥

इति सान्ताः ॥

अथ ह्रान्ता व्याख्यायन्ते ॥

पत्ता, मोर का पंख, निर्बन्ध, ग्रहण, सूर्यादि, द्वार, शिरोभूषण आदि.

**(दलेऽपि) बर्हं (निर्बन्धो परागार्कादयो) ग्रहाः ।**
**(द्वार्यापीडे क्वाथरसे) निर्यूहो (नागदन्तके) ॥ २४५ ॥**

देति—दले पत्रे, अपिशब्दान्मयूरपिच्छे च बर्हं स्यात् । बर्हति 'बृह वृद्धौ' अस्माद्धौवादिकात्कर्तरि 'पचाद्यचि' बर्ह्यते वेति विग्रहे तु बर्हः कर्मणि 'घञि' बर्हम् "बर्हं पिच्छेदलेऽस्त्रियाम्" (इति मेदिनी) इत्येकं दलादेः । निर्बन्धः आग्रहविशेषः "लोके ज़िद इतिख्यातो वा" उपरागः अर्केन्दुग्रहणम् अर्कादिः सूर्यादिश्चैते ग्रहाः स्युः । गृह्णाति, ग्रहणं वा ग्रहेः कर्तरि "विभाषाग्रहः" इति पक्षे अचि, भावे तु "ग्रहवृदृ" इत्यपि 'ग्रहः' द्वित्वे ग्रहौ, बहुत्वे ग्रहाः "ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे । सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः" (इति विश्वः) इत्येकमाग्रहविशेषादेः । द्वारि द्वारे, आपीडे शिरोभूषणे, क्वाथरसे क्वथितद्रव्यरसे, नागदन्तके भित्तिस्थकीलके च निर्यूहः स्यात् । निर्यूहति, निर्पूर्वकाद्यूहेर्लौकिकात्साधोः कर्तरि "इगुपधेति" के निरूहतिवेति विग्रहे तु के, पृषोदरादित्वाद्धातोर्यडागमे च निर्यूहः "निर्यूहशेखरे द्वारे निर्यासे नागदन्तके" (इति विश्वः) इत्येकं द्वारादेः ॥ २४५ ॥

तुलासूत्र, घोड़े आदिकी रस्सी, पत्नी, परिवार, ग्रहण, मूल धन, सौगन्द आदि.

**(तुलासूत्रेऽश्वादिरश्मौ) प्रग्राहः प्रग्रहो (ऽपि च) ।**
**(पत्नीपरिजनादानमूलशापाः) परिग्रहाः ॥ २४६ ॥**

तुलेति—तुलासूत्रे हस्तेन यद् गृहीत्वा तुलया तोल्यते तत्तुलासूत्रं "मंझा" इति ख्यातम् तस्मिन्, अश्वो हयः आदिना वृषादयश्च तेषां रश्मौ रज्जौ, अपिशब्दात् किरणे, भुजे, सुवर्णे, हरिपादपे, बन्धे, बन्द्यां च प्रग्राहः प्रग्रहश्च स्यात् । प्रगृह्यते प्रपूर्वकाद्ग्रहेः कर्मणि "प्रेवणिजाम्" "रश्मौ च" इति वा घञि, ञित्त्वादुपधावृद्धौ च प्रग्राहः "प्रग्राहः स्यात्तुलासूत्रे वृषादीनां च बन्धने" (इति हैमः) पक्षे "ग्रहवृदृ" इत्यपि, प्रग्रहः "प्रग्रहस्तु तुलासूत्रे बन्द्यां नियमने भुजे। हयादिरश्मौ रश्मौ च सुवर्णे हरिपादपे" (इति विश्वः) इत्येकं तुलासूत्रादेः । पत्नी जाया, परिजनः परिवारः, आदानं स्वीकारो ग्रहणं वा, मूलं मूलधनाङ्गीकारः, शापः शपथश्चैते परिग्रहाः स्युः । परिगृह्णाति, परिग्रहणम्, परिगृह्यते वा परिपूर्वकाद्ग्रहेः कर्तरि "विभाषा ग्रहः" इति पक्षे 'अचि' भावकर्मणोस्तु "ग्रहवृदृ—" इति 'अपि' परिग्रहः द्वित्वे परिग्रहौ, बहुत्वे परिग्रहाः "परिग्रहः कलत्रे च मूलस्वीकारयोरपि । शपथे परिवारे च राहुवक्त्रस्थभास्करे" (इत्यजयः) इत्येकं पत्न्यादेः ॥ २४६ ॥

स्त्री, वर स्त्री की कमर, समूह, वृत्रासुर, आगी, चन्द्रमा, सूर्य आदि.

पु.ब. पु.
(दारेषु च) गृहाः (श्रोण्यामप्या) रोहो (वरस्त्रियाः)।

पु. पु. पु.
व्यूहो(वृन्देऽप्य)हि(र्वृत्रेऽप्य)(ग्नीन्द्वर्का)स्तमोपहाः२४७

देति—दारेषु[1] पत्न्याम्, च शब्दात्सद्मनि गृहाः पुंभूम्नि स्युः। गृह्णाति धान्यादिकमिति, ग्रहेः कर्तरि "गेहे कः" इति के, कित्त्वाद् "ग्रहिज्येति" संप्रसारणे च। गर्हते वेति विग्रहे तु "इगुपधेति" के गृहः, द्वित्वे गृहौ, बहुत्वे गृहाः, गृहं च "गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि" (इति मेदिनी) इत्येकं दारादेः। वरस्त्रियाः वराङ्गनायाः श्रोण्यां कट्याम्, अपिशब्दादवरोहे, आरोहणे, गजारोहे, दीर्घत्वे, समुच्छ्रये च आरोहः स्यात्। आरोहति, आरोहणम्, आरुह्यते वा। आङ् पूर्वकाद्रुहेः कर्त्तरि "पचाद्यचि" भावकर्मणोस्तु घञि गुणे च आरोहः "आरोहस्त्ववरोहे च वरारोहा कटावपि। आरोहणे गजारोहे दीर्घत्वे च समुच्छ्रये" (इति मेदिनी) इत्येकं वराङ्गनाकट्यादेः। वृन्दे समूहे अपिशब्दात्तर्कनिर्माणबलविन्यासेषु च व्यूहः स्यात्। व्यूहते, व्यूह्यते वा। विपूर्वकाद् "ऊह वितर्के" अस्माद्भौवादिकात्कर्तरि "इगुपधेति" के कर्मणि घञि वा व्यूहः "व्यूहः स्याद्बलविन्यासे निर्माणे वृन्दतर्कयोः" (इति विश्वः) इत्येकं समूहादेः। वृत्रे वृत्रासुरे अपिशब्दात्सर्पे च अहिः स्यात्। आहन्ति, आङ्पूर्वकाद्धन्तेः कर्तरि "आङि श्रिहनिभ्यां ह्रस्वश्च" इतीणि, डित्त्वाट्टिलोपे, आङो ह्रस्वे च अहिः "अहिर्वृत्रासुरे सर्पे" (इति विश्वः) इत्येकं वृत्रादेः। अग्निरनलः, इन्दुश्चन्द्र अर्कः सूर्यश्चैते तमोऽपहाः स्युः। तमोऽपहन्ति, तमोऽपपूर्वकाद्धन्तेः कर्तरि "अपे क्लेशतमसोः" इति डे, डित्त्वाट्टिलोपे च तमोपहः, द्वित्वे तमोपहौ, बहुत्वे तमोपहाः "तमोपहः सहस्रांशुमृगाङ्कजिनवह्निषु" (इति विश्वः) इत्येकमनलादेः॥ २४७॥

उपकरण या बिछौना आदि सामान, राजा के योग्य वस्तु.

पु.
(परिच्छदे नृपार्हेऽर्थे) परिवर्हो (ऽव्ययाः परे)।

इति हान्ताः॥

परीति—परिच्छदे उपकरणे, नृपार्हे राजयोग्ये अर्थे वस्तुनि अपि परिवर्हः स्यात्। परिवर्हते, परिवर्ह्यते वा परिपूर्वकाद्वर्हेः कर्तरि पचाद्यचि, कर्मणि घञि वा परिवर्हः "परिवर्हस्तु राजार्हवस्तुन्यपि परिच्छदे" (इति विश्वः) इत्येकमुपकरणादेः। इतः परे अनेकार्था अव्यया उच्यन्त इति॥

इति हान्ताः॥

---

१ तात्स्थ्याद्दारेषु॥

### अथ अव्यया व्याख्यायन्ते ॥

अल्पार्थ, अभिव्याप्ति, मर्यादार्थ, क्रियायोगज.

## आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे ॥ २४८ ॥

आङिति—ईषदर्थे अल्पार्थे, अभिव्याप्तौ अभिविधौ, सीमार्थे मर्यादार्थे, धातुना योगे सति योऽर्थो जायते तस्मिन् आङ् स्यात् । अतति, अतेः कर्तरि बाहुलकाड्डाङि प्रत्यये, ङित्त्वाट्टिलोपे, प्रातिपदिकत्वात्स्वादिषु, "अव्ययदाप्सुपः" इति सुपो लुकि च आङ् "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्" ( इति कौमुद्याम् ) ईषदर्थे यथा आपिङ्गलः ईषत्पिङ्गल इत्यर्थः । अभिव्याप्तौ यथा आसत्यलोकात्—आपातालाद्वा । सीमार्थे यथा—आसमुद्रं राजदण्डः । धातुयोगजे क्रियायोगजे यथा—आक्रामति धूमो हर्म्यतलादित्यादिर्विज्ञेयम् ॥ २४८ ॥

स्मरण, वाक्यारम्भ, कोप, पीड़ा, पाप, निन्दा, थोड़ा, घुड़कना या लानत.

## आ (प्रगृह्यः स्मृतौ वाक्येऽ)प्यास्तु(स्यात्कोपपीडयोः) । (पापकुत्सेषदर्थे)कु धिग्नि(र्भर्त्सननिन्दयोः) ॥ २४९ ॥

आप्रेति—स्मृतौ स्मरणे, वाक्ये वाक्यारम्भे अपिशब्दादनुकम्पायां समुच्चये च वर्तमानः आ प्रगृह्यः स्यात् । आप्नोति, आप्नोतेः कर्तरि क्विपि, पृषोदरादित्वात्पलोपे च आ, "आ प्रगृह्यः स्मृतौ वाक्येऽनुकम्पायां समुच्चये" (इति मेदिनी) प्रगृह्यसंज्ञकत्वात् "प्लुतप्रगृह्या अचि" इति सन्धि न प्राप्नोतीति भावः । स्मृतौ यथा 'आ एवं किल तत्' वाक्ये यथा 'आ एवं तु मन्यसे' । कोपपीडयोः क्रोधबाधयोः-आः[2] स्यात् । आस्ते, आसेः आङ्पूर्वादसतेर्वा कर्तरि क्विपि, आः "आः स्मरणेऽप्याकरणे कोपसन्तापयोरपि" ( इति मेदिनी ) कोपे यथा 'आः पाप ! किं विकत्थसे' पीड़ायां यथा आः शीतम् । पापं किल्बिषम्, कुत्सा निन्दा, ईषदर्थोऽल्पार्थश्चैषां समाहारे पापकुत्सेषदर्थे कु स्यात् । कवते, कूयते वा कुङः कर्तरि कर्मणि वा "मितद्र्वादित्वात्" डौ, डित्त्वाट्टिलोपे च कु "कु पापे चेषदर्थे च कुत्सायां च निवारणे" ( इति विश्वः ) पापे यथा 'कुकर्मपरोऽयं जनः' कुत्सायां यथा 'कापथोऽयं देशो वर्तते' ईषदर्थे यथा 'कवोष्णं जलं शीते रोचते । निर्भर्त्सनमपकारशब्दैर्भयोत्पादनम्, निन्दा दोषकीर्तनं चानयोर्धिक् स्यात् । धक्कयति, दधाति वा धक्कयतेर्दधातेर्वा कर्तरि बाहुलकाड्डिक् प्रत्यये, डित्त्वाट्टिलोपे च धिक्, निर्भर्त्सने यथा "धिक् त्वां ताडनार्हमनध्ययनशीलम्" । निन्दायां यथा 'धिक् परस्त्रीगामिनं पुरुषमिति ॥ २४९ ॥

१ तेन सहेत्यभिविधिः । तेन विना मर्यादा ॥

२ " आः किमेतदिति क्रोधादाभाष्य महिषासुरः " ( इति मार्कण्डेयपुराणम् ) ॥

अन्वाचय, समाहार, इतरेतर, समुच्चय, आशीर्वाद, क्षेम, पुण्य आदि, प्रकर्ष, लांघना और प्रशंसा.

**चा ( न्वाचयसमाहारेतरेतरसमुच्चये ) ।**

**स्वस्त्या (शीः क्षेमपुण्यादौ)(प्रकर्षे लङ्घनेऽप्य)ति २५०**

चेति—अन्वाचयः=अन्यतरस्यानुषङ्गिकत्वेनान्वयः, समाहारः=अनेकपदानां समूहः, इतरेतरयोगः=मिलितानामन्वयः, समुच्चयः परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः एषां समाहारस्तत्र चः स्यात् । चन्दति, चन्देः कर्तरि " अन्येभ्योऽपीति " डे, डित्त्वाट्टिलोपे च चः, " चः पादपूरणे पक्षान्तरे हेतौ विनिश्चये " ( इति त्रिकाण्डशेषः ) अन्वाचये यथा ' वटो ! भिक्षामट गां चानय ' समाहारे यथा ' संज्ञापरिभाषम् ' इतरेतरयोगे यथा ' धवखदिरौ छिन्धीति ' समुच्चये यथा " रमेशं गुरुं च भजस्वेति " । आशीराशीर्वादः, क्षेमं कुशलम्, पुण्यं सुकृतं तदादौ स्वस्ति स्यात् । स्वसति, स्वस्यति वा सुपूर्वकादसतेरस्यतेर्वा कर्तरि क्तिचि, वाहुलकात्तिप्रत्यये वा ' स्वस्ति ' " स्वस्ति मङ्गलाशीर्वादपापनिर्णोजनादिषु " ( इति भागुरिः ) आशिषि यथा ' स्वस्ति ते भूयात् ' क्षेमे यथा ' स्वस्ति गच्छ ' पुण्ये यथा ' स्वस्तिमान्स्वर्गमश्नुते ' आदिना " स्वस्ति स्यान्मङ्गले पुण्येऽप्याशंसायामपि क्वचित् " ( इति मेदिनी ) । प्रकर्षे उत्कर्षे, लङ्घने उच्छ्लने अपिशब्दात्प्रशंसायां च अति स्यात् । अतति, अतेःकर्तरि " सर्वधातुभ्य इन् " इतीनि प्रत्यये ' अति ' " अतिशब्दः प्रशंसायां प्रकर्षे लङ्घनेऽपि च " ( इति विश्वः ) प्रकर्षे यथा ' अत्युत्तमो विष्णुः ' लङ्घने यथा ' अतिवेलं जलधितलम् ' इत्यादि विज्ञेयम् ॥ २५० ॥

पूछना, विचार, भेद, निश्चय, साथ, एकबार, दूर, समीप.

**स्वि(त्प्रश्ने च वितर्के च ) तु ( स्याद्भेदेऽवधारणे ) ।**

**सकृत् (सहैकवारे स्या) दारा ( दूरसमीपयोः ) ॥ २५१ ॥**

स्विदिति—प्रश्ने पृच्छायाम्, वितर्के नानापक्षविचारे च शब्दात्पादपूरणेऽपि स्वित् स्यात् । सुष्ठु एति, अयति वा सुपूर्वकादेतेरयतेर्वा कर्तरि क्विपि, तुगागमे च स्वित् " स्वित् प्रश्ने च वितर्के च तथैव पादपूरणे " ( इति मेदिनी ) प्रश्ने यथा ' किंस्वित्ते कुशलमस्ति ' वितर्के यथा ' सर्वेश्वरत्वं विष्णोराहोस्वित् शिवस्य ' । भेदे पृथक्करणे, अवधारणे निश्चये च तु स्यात् । तुदति, तुदेः कर्तरि मितद्र्वादित्वाड्डौ डित्त्वाट्टिलोपे च तु " तु पादपूरणे भेदे समुच्चयेऽवधारणे । पक्षान्तरे नियोगे च प्रशंसायां विनिग्रहे " ( इति मेदिनी ) भेदे यथा " क्षीरान्मांसं तु पुष्टिकृत् " अवधारणे यथा ' शिष्टैर्मतं तु तद्युक्तम् ' । सहः सहार्थः, एकवारमेकवारकथनं चानयोः समाहारस्तस्मिन् ' सकृत् ' स्यात् । एकवारम् , " एकस्य सकृच्च " इति सुचि, एकस्य सकृदा-

देशे 'संयोगान्तस्येति' सुचोलोपे च सकृत् "सकृत् सहैकवारयोः" (इत्यजयः) सहार्थे यथा 'सकृद्यान्ति सुरस्त्रियः' एकवारे यथा 'सकृदपि कुर्याद्गयाश्राद्धम्'। दूरं विप्रकृष्टकम्, समीपं सन्निकृष्टं चानयोः 'आरात्' स्यात्। आराति, आङ्पूर्वकाद् रातेः कर्त्तरि बाहुलकादाति प्रत्यये आरात्। दूरे यथा 'आराच्छत्रोः सदा वसेत्' समीपे यथा 'सखायं स्थापयेदारात्' इत्याद्यवसेयम्॥ २५१॥

पछाँह, अन्त, समुच्चय, विकल्प, बारम्बार, सहार्थ, प्रत्यक्ष, तुल्य.

**(प्रतीच्यां चरमे) पश्चादुता (प्यर्थविकल्पयोः)।**
**(पुनःसहार्थयोः) शश्वत्साक्षा(त्प्रत्यक्षतुल्ययोः) २५२॥**

प्रति—प्रतीच्यां पश्चिमाशायाम्, चरमे अन्त्ये च पश्चात्स्यात्। अवरस्मिन्, "पश्चात्" इत्यनेनावरस्य सप्तमीपञ्चमीप्रथमान्तस्य निपातिते, अव्ययत्वात्सुपोलुकि च पश्चात्। प्रतीच्यां यथा 'पश्चादस्तंगतोरविः' चरमे यथा 'पश्चिमे वयसि नैमिषे वसेत्'। अप्यर्थस्समुच्चयः प्रश्नश्च, विकल्पो भेदः पक्षान्तरं वा अनयोः 'उत' स्यात्। ऊयते स्म, 'उङ् शब्दे' अस्माद्गौवादिकात्कर्मणि 'क्ते' उत "उताप्यौ द्वौच बाढार्थौ" (इत्यजयः) समुच्चये यथा 'उतार्जुनो भीमो रणे गमिष्यतः' विकल्पे यथा 'विष्णुरुत शिवः सेवनीयः'। पुनः पुनरर्थः, सहार्थश्चानयोः। पुनश्च सहश्च तावेवार्थौ ययोस्ताविति द्वन्द्वान्ते श्रूयमाणस्यार्थस्य प्रत्येकं सम्बन्धस्तेन पुनरर्थे, सहार्थे च शश्वत्स्यात्। शशाति, शशेः कर्त्तरि बाहुलकाद्वत् प्रत्यये शश्वत् "शश्वत् सहसहार्थयोः" (इत्यजयः) पुनरर्थे यथा 'शश्वद्विष्णुं स्मरेत्' सहार्थे यथा 'शिष्यैः शश्वद्गतो गुरुः। अक्षमिन्द्रियं प्रतिगतं प्रत्यक्षम्, तोलनं तुला तया संमितं तुल्यं सादृश्यं चानयोः 'साक्षात्' स्यात्। सहाक्षेण साक्षस्तमतति, साक्षपूर्वकादतेः कर्त्तरि क्विपि, साक्षात् "साक्षात् तुल्यसमक्षयोः" (इत्यजयः) प्रत्यक्षे यथा 'साक्षाद् दृष्टो मया हरिः' तुल्ये यथा 'साक्षाल्लक्ष्मीरियं वधूः' इति॥ २५२॥

खेद, अनुकम्पा, संतोष, विस्मय, आमन्त्रण, हर्ष, दया, वाक्यारम्भ, विषाद.

**(खेदानुकम्पासन्तोषविस्मयामन्त्रणे) वत।**
**हन्त (हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः)॥२५३॥**

खयिति—खेदो दैन्यम्, अनुकम्पा कृपा, सन्तोषः सन्तुष्टिः, विस्मयोऽद्भुतम्, आमन्त्रणमांभिमुखीकरणम् एषां समाहारस्तस्मिन् 'वत' स्यात्। वन्यतेस्म 'वनु याचने' अस्मात्तानादिकात्कर्मणि क्ते, "यस्य विभाषेति" इडागमाभावे, "अनुदात्तोपदेशेति" नलोपे च वत "वत खेदेऽनुकम्पायां हर्षे सम्बोधनेऽद्भुते" (इति दन्त्योष्ठ्यादावजयः) खेदे यथा 'अहो वत महत्कष्टम्' अनुकम्पायां यथा 'वत निःस्वो भरणीयः' सन्तोषे यथा 'वत रमणयापतिरालिङ्गितः' विस्मये यथा 'अहो वतायं ध्रुव आप देवम्' सम्बोधने यथा 'अत्र एहि वत सखे'। हर्षे प्रमोदे, अनुकम्पायां दयायाम्,

१ "उत प्रश्नविकल्पयोः। समुच्चये विकल्पेचेति" (हेमः)॥

वाक्यारम्भो वाक्यप्रारम्भः, विषादो दुःखं तापश्च अनयोः 'हन्त' स्यात् । हन्ति, हन्तेः कर्त्तरि बाहुलकात्तप्रत्यये हन्त " हन्त वाक्यारम्भखेदविषादहर्षसंभ्रमे " ( इति मेदिनी ) हर्षे यथा ' हन्त ते लाभः शतगुणः ' अनुकम्पायां यथा 'हन्त दीनो रक्षितव्यः ' वाक्यारम्भे यथा ' हन्त ते कथयिष्यामि, विषादे यथा ' हन्तजातमजातारेः प्रथमेन त्वयारिणा ' ( इति माघः ) ॥ २५३ ॥

मुख्यसदृश, वीप्सा, लक्षणा आदि, कारण, प्रकरण, प्रकाश आदि, समाप्ति.

**प्रति ( प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ) ।**
**इति ( हेतुप्रकरणप्रकर्षादिसमाप्तिषु ) ॥ २५४ ॥**

प्रेति—प्रतिनिधौ मुख्यसदृशे, वीप्सा व्याप्तुमिच्छा, लक्षणाशक्यसम्बन्धः, अन्वयानुपपत्तिपूर्विका वा आदिना इत्थंभूताख्यानभागप्रतिदानस्तोकादिस्तस्मिन्नर्थे प्रयोगतः शिष्टप्रयोगानुसारेण ' प्रति ' स्यात् । प्राति, प्रथते वा प्रातेः प्रथेर्वा कर्तरि बाहुलकाड्डुतौ प्रति । प्रतिनिधौ यथा ' अभिमन्युं प्रति परीक्षित् ' । वीप्सायां यथा ' तीर्थं तीर्थं प्रति गच्छति बलः ' लक्षणायां यथा ' वृक्षं प्रति विद्योतते विद्युत् ' । इत्थंभूताख्याने यथा ' भक्तो विष्णुं प्रति यज्ञदत्तः ' यज्ञदत्तो विष्णुं प्रतिभक्तो विष्णुस्वरूप इत्यर्थः । भागे यथा ' लक्ष्मीर्हरिंप्रति ' हरेर्भाग इत्यर्थः । प्रतिदाने यथा ' तिलेभ्यः ' प्रतियच्छति माषानित्यादिज्ञेयम् । हेतुः कारणम्, प्रकरणं प्रकारः, प्रकर्षादिः प्रकाशादि, समाप्तिरवसानमेष्वर्थेषु ' इति ' स्यात् । एति, अयति वा एतेरयतेर्वा कर्तरि क्तिचि ' इति ' " इति प्रकरणे हेतौ प्रकाशादिसमाप्तिषु । निदर्शने प्रकारेस्यादनुकर्षे च संमतम् " ( इति विश्वः ) हेतौ यथा ' रामो हन्तीति रावणः पलायते ' प्रकरणे यथा ' ब्राह्मण क्षत्रिय-विट्-शूद्रा इति ' प्रकर्षे यथा ' इति पाणिनिः ' आदिना ' क्रमादमुं नारद ' इत्यबोधि सः ( इति माघः ) समाप्तौ यथा धर्ममाचरेदिति ॥ २५४ ॥

पूर्वदिशा, पहला, व्यतीत, संपूर्ण, अवधि, परिमाण, निश्चय.

**( प्राच्यां ) पुरस्तात् ( प्रथमे पुरार्थे ) ऽग्रतइत्यपि ) ।**
**यावत्तावच्च ( साकल्येऽवधौ मानेऽवधारणे ) ॥ २५५ ॥**

प्रेति—प्राच्यां पूर्वस्यां दिशि, प्रथमे आदिमे, पुरार्थेऽतीतविषये च 'पुरस्तात्' स्यात् । अग्रतः इत्यपि प्राच्याद्यर्थेषु भवतीति । पूर्वस्मिन् " दिक्छब्देभ्यः सप्तमी " इत्यस्तातौ " अस्ताति च " इति पुरादेशे च पुरस्तात् " प्राच्यांपुरः पुरस्तादग्रप्रथमव्यतीतेषु " ( इति वोपालितः ) अग्रे इति, " आद्यादिभ्य उपसंख्यानम् " इति तसौ अग्रतः । प्राच्यां यथा ' पुरस्ताद्गतो ब्रह्मदत्तः ' प्रथमे यथा ' पुरस्ताद्भुङ्क्ते ' पुरार्थे यथा ' पुरस्ताद्वासोऽभूत् ' एवमग्रतः संस्थाप्यदेवेशं पूजयेदिति । साकल्ये सामग्र्ये, अवधौ परिच्छेदे, माने परिमाणे, अवधारणे निश्चये च यावत्—तावच्च स्यात् । यत्, तत् परि-

---

१ " हन्तदानेऽनुकम्पायां वाक्यारम्भविषादयोः । निश्चये च प्रमोदे च" ( इति हैमः ) ॥

माणमस्य, " यत्तदेतेभ्यः परिमाणे वतुप् " इति वतुपि, " आसर्वनाम्नः " इत्यात्वे, पूर्वाचार्याणां मते तु डावतौ वा यावत्, तावत् " यावत्कात्स्न्र्येऽवधारणे । प्रशंसायां परिच्छेदे मानाधिकारसंभ्रमे । पक्षान्तरे च " ( इति मेदिनी ) साकल्ये यथा ' यावद्दत्तं तावद्भुक्तम् ' अवधौ यथा ' मूलाच्छाखां यावत्प्रकाण्डः ' परिमाणे यथा ' यावत्स्वर्णं तावद्रजतम् ' अवधारणे यथा ' श्रोत्रियं तावदामन्त्रयस्व ' इति ॥ २५५ ॥

मङ्गल, अनन्तर, आरम्भ, प्रश्न, कात्स्न्र्य, निरर्थक, विधिहीन, अनेकार्थ, उभयार्थ.

**(मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्ये) ष्वथो अथ ।**
**वृथा(निरर्थकाविध्योः) नाना(नेकोभयार्थयोः) ॥२५६॥**

मेति—मङ्गलं कल्याणम्, अनन्तरमन्तररहितम्, आरम्भः प्रारम्भः, प्रश्नः पृच्छा, कात्स्न्र्यं सामग्र्यं चैष्वर्थेषु अथो; अथ च स्यात् । अर्थयते, 'अर्थ उपयाच्ञायाम' अस्माच्चौरादिकात्कर्त्तरि बाहुलकाड्डोः, पृषोदरादित्वाद्रलोपे च अथो, ' अन्येभ्योऽपीति ' डे, रलोपे च अथ " अथाथो संशये स्यातामधिकारे च मङ्गले । विकल्पानन्तरप्रश्नकात्स्न्र्यारम्भसमुच्चये " ( इति मेदिनी ) मङ्गले यथा ' अथातो ब्रह्मजिज्ञासा ' अनन्तरे यथा ' स्नानं कृत्वाथ भुञ्जीत ' आरम्भे यथा 'अथ शब्दानुशासनं लिख्यते' प्रश्ने यथा ' अथ वक्तुं समर्थोऽसि ' कात्स्न्र्ये यथा ' अथ धातून् ब्रूमो वयमिति ' । निरर्थको व्यर्थः, अविधिर्विधिहीनश्चानयोर्वृथा स्यात् । वृणोति, वृणीते वा वृञो वृङो वा कर्तरि बाहुलकात्थाकि, कित्त्वाद् गुणाभावे च वृथा " वृथा निष्कारणे वन्ध्ये वृथा स्याद्विधिवर्जिते " ( इति विश्वः ) निरर्थके यथा 'वृथा दुग्धोऽनड्वान्' अविधौ यथा 'वृथा दानं धनाढ्येषु' । अनेको बहुविधः, उभयो द्वयस्तावेवार्थौ ययोस्तयोरर्थे नाना स्यात् । न इति " विनञ्भ्यां नानाञौ न सह: " इति नञो नाञि प्रत्यये नाना " नानाशब्दो विनाऽर्थेऽपि तथानेकोभयार्थयोः " ( इति मेदिनी ) अनेकार्थे यथा 'इह नानाविधा जना निवसन्ति' उभयार्थे यथा 'नाना विधं न सज्जेत' " नानाविनोभयानेकार्थेष्विति " हेमचन्द्रादपि बोद्धव्यम् ॥२५६॥

पूछना, विकल्प, पीछे, बराबरी, सवाल, निश्चय, आज्ञा, तसल्ली देना, सम्बोधन.

**नु[2] (पृच्छायां विकल्पे च) (पश्चात्सादृश्ययो) रनु ।**
**(प्रश्नावधारणानुज्ञानुनयामन्त्रणे) ननु ॥ २५७ ॥**

न्विति—पृच्छायां ज्ञीप्सायाम्, विकल्पे पक्षान्तरे च ' नु ' स्यात् । नुदति, नौति वा नुदेर्नौतेर्वा कर्तरि मितद्र्वादित्वाड्डौ, डित्त्वाट्टिलोपे च नु " नु स्यात्प्रश्ने विकल्पार्थेऽप्य-

१ " अथो अथ समुच्चये । मङ्गले संशयारम्भाधिकारानन्तरेषु च । अन्वादेशे प्रतिज्ञायां प्रश्नसाकल्ययोरपि " ( इति हैमः ) ॥ शास्त्रं सुचिन्तितमथो परिचिन्तनीयं स्वाराधितोऽपि नृपतिः परिशङ्कनीयः । अङ्के स्थितापि युवतिः परिशङ्कनीया शास्त्रे नृपे च युवतौ च कुतो वशित्वम्॥ १ ॥

२ " नु प्रश्नेऽनुनयेऽतीतार्थे विकल्पवितर्कयोः " ( इति हैमः ) ॥

तीतानुनयार्थयोः " ( इति विश्वः ) पृच्छायां यथा ' कोनुभावति ' विकल्पे यथा ' अयं भीमोनु धर्मोनु ' । पश्चात्पश्चादर्थः, सादृश्यं तुल्यं चानयोरनु स्यात् । अनिति, ' अन प्राणने ' अस्मादादादिकात्कर्तरि बाहुलकादुप्रत्यये अनु " अनु हीने सहार्थे च पश्चात्सादृश्ययोरपि । आयामे च समीपे च लक्षणादावनुक्रमे " ( इति विश्वः ) पश्चादर्थे यथा ' रथमनुगच्छति ' सादृश्ये यथा ' ज्येष्ठमनुकरोति ' । प्रश्नः पृच्छा, अवधारणं निश्चयः अनुज्ञा आज्ञा, अनुनयः सान्त्वनम्, आमन्त्रणं सम्बोधनं चैषां समाहारस्तत्र ननु स्यात् । न नुदति, नञ् पूर्वकान्नुदेः कर्त्तरि मितद्वादित्वाड्डौ डित्त्वाट्टिलोपे च ननु " ननु प्रश्नेऽप्यनुनयेऽनुज्ञानेऽप्यवधारणे । आमन्त्रणे च" (इति विश्वः ) प्रश्ने यथा ' ननु किमेतत् ' अवधारणे यथा ' नन्वयं योगी ' अनुज्ञायां यथा ' ननु गच्छ ' अनुनये यथा ' ननु कोपं मुञ्च दयां कुरु ' सम्बोधने यथा 'ननु राजन् ! मया सह वाराणसीं व्रज ' इत्याद्यवसेयम् ॥ २५७ ॥

निन्दा, समुच्चय, प्रश्न, शङ्का, संभावना, मिसाल,भेद,आधा, निन्दित.

**( गर्हासमुच्चयप्रश्नशङ्कासंभावनास्व ) पि ।**
**(उपमायां विकल्पे) वा सामि(त्वर्धे जुगुप्सिते)॥ २५८**

गेति—गर्हा निन्दनम् , समुच्चयनं समुच्चयः परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयो वा, प्रश्नः पृच्छा, शङ्का सन्देहः, संभावना कल्पना चैष्वर्थेषु अपि स्यात् । न पियति, नञ् पूर्वकात्पियतेः कर्तरि क्विपि, आगमशास्त्रस्यानित्यत्वात्तुगागमाभावे च अपि, " अपि संभावनाप्रश्नशङ्कागर्हासमुच्चये । तथा युक्तपदार्थे च कामचारक्रियासु च " ( इति विश्वः ) निन्दायां यथा ' तं धिक् योऽपि सिञ्चेत्पलाण्डुम् ' समुच्चये यथा ' स्त्रियं पालय पुत्रमपि ' प्रश्ने यथा 'अपि जानासि किञ्चित्त्वम् ' शङ्कायां यथा ' अपि चोरोभवेत् ' संभावनायां यथा 'अपि स्थाणुं जयेद्रामः ' । उपमायां उपमाने विकल्पे भेदे च 'वा' स्यात् । वाति,वातेः कर्तरि क्विपि वा "वा स्याद्विकल्पोपमयोर्वितर्के पादपूरणे । समुच्चये च " ( इति मेदिनी ) " वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये " ( इति विश्वः ) उपमायां यथा ' आशीविषो वा संक्रुद्धः ' विकल्पे यथा ' शिवं वा यदि वा विष्णुं पूजयेदिति । अर्धे खण्डे, जुगुप्सिते निन्दिते च ' सामि ' स्यात् । सामयति, ' षाम सान्त्वप्रयोगे ' अस्माच्चौरादिकात्कर्त्तरि " अच इः " इती प्रत्यये सामि । अर्धे यथा ' सामि संमीलिताक्षी ' जुगुप्सिते यथा ' सामिकृतमकल्याणकारि ' इति ॥ २५८ ॥

साथ, समीप, जल, मस्तक, उपमा, प्रकार, तर्क, निश्चय.

**अमा (सह समीपे च ) कं ( वारिणि च मूर्धनि ) ।**
**( इवेत्थमर्थयो ) रेवं नूनं ( तर्केऽर्थनिश्चये ) ॥ २५९ ॥**

अमेति—सह सहार्थे, समीपे निकटे च ' अमा ' स्यात् । न माति, नञ्पूर्वका-

न्मातेः कर्त्तरि क्विपि, नञो नस्य लोपे च अमा । सहार्थे यथा 'पुत्रेणामा भुङ्क्ते' समीपे यथा 'अमात्यः समीपवर्तीत्यर्थः' । वारिणि जले, मूर्धनि मस्तके च 'कं' स्यात् । कम्यते, कमेर्णिङभावपक्षे विचि कम् "कं शिरःसुखवारिषु" ( इति विश्वः ) वारिणि यथा 'वेत्रवत्याःकममलं पश्य सखे !' मस्तके यथा 'मम कं पातु माधवः' । इवे त्थमर्थयोः उपमाप्रकारयोः एवं स्यात् । 'ए' इत्थं वमति एपूर्वकाद्वमेः कर्तरि विचि एवम् "एवं प्रकारोपमयोरङ्गीकारेऽवधारणे" ( इति धरणिः ) इवार्थे यथा 'अग्निरेवं वाडवः वाडवो ब्राह्मणः अग्निरिवेत्यर्थः' । इत्थमर्थे यथा 'एवं वादिनि देवर्षाविति । तर्के ऊहे अपूर्वोत्प्रेक्षणे वा अर्थनिश्चये अर्थावधारणे च 'नूनं' स्यात् । नुवा स्तुत्या नमति, नूपूर्वकान्नमेः कर्त्तरि विचि नूनम् "नूनं निश्चिततर्कयोः" इति विश्वः ) तर्के यथा 'नूनमयमति पश्चानां प्रियः' अर्थनिश्चये यथा 'क्षुद्रेऽपि नूनं शरणं प्रपन्ने' रक्षणीयइतिभावः ॥ २५९ ॥

मौन, आनन्द, पूछना, निन्दा, ( तूष्णीमर्थे सुखे ) जोषं किं (पृच्छायां जुगुप्सने) ।
प्रसिद्ध, संभावना, कोप, प्राप्ति, निन्दा. नाम (प्रकाश्यसंभाव्यक्रोधोपगमकुत्सने ) ॥ २६० ॥

व्रिति–तूष्णीमर्थे मौनार्थे, सुखे आनन्दे च 'जोषम्' स्यात् । जुष्यते, जुषेः कर्मणि बाहुलकादमि जोषम् "जोषं सुखे प्रशंसायां तूष्णींलङ्घनयोरपि" ( इति मेदिनी ) मौनार्थे यथा 'जोषं तिष्ठ' सुखार्थे यथा 'जोषमासीत वर्षासु' । पृच्छायां प्रश्ने, जुगुप्सने निन्दने च 'किम्' स्यात् । कायति "कायतेर्डिमिः" इति डिमौ, कवनम्, कूयते वा कौतेर्भावकर्मणोर्बाहुलकाड्डिम् प्रत्यये वा किम् "किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि" ( इति मेदिनी ) पृच्छायां यथा 'किमाद्रियेरन् रसिकाः कृतिं मे' निन्दने यथा 'सकिं सखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते सकिं प्रभुः' । प्राकाश्यं प्रसिद्धम, संभाव्यं संभावना, क्रोधः कोपः, उपगमः सत्स्वरूपाङ्गीकारः, कुत्सनं निन्दनं चैषां समाहारस्तत्र नाम स्यात् । नामयति, नाम्यते वा नामयतेः कर्त्तरि कर्मणि वा 'अन्येभ्योऽपीति' डे 'नाम' "नामकोपेऽभ्युपगमे विस्मये स्मरणेऽपिच । संभाव्यकुत्साप्राकाश्यविकल्पेष्वपि दृश्यते" ( इति मेदिनी ) प्राकाश्ये यथा 'हिमालयोनामनगाधिराजः' संभाव्ये यथा 'रामरावणयोर्भविष्यति युद्धं नाम' क्रोधे यथा 'ममवैरी रावणो नाम पापः' उपगमे 'शत्रोःसकाशाद्गृह्णाति राज्यं नाम' कुत्सने यथा 'को नामायं प्रलपति मे विशतः सभायाम्' इति २६०॥

भूषण, परिपूर्णता, सामर्थ्य, निषेध, अलं ( भूषणपर्याप्तिशक्तिवारणवाचकम् ) ।
संदेह, प्रश्न, पास, मध्य. हुं (वितर्के परिप्रश्ने) समया (न्तिकमध्ययोः) ॥ २६१ ॥

अलमिति—भूषणमलंकारः, पर्याप्तिः परिपूर्णता, शक्तिः सामर्थ्यम्, वारणं निषेधश्चैतेषां वाचकमलं स्यात् । अलति, ' अल भूषणादौ ' अस्माद्धौवादिकात्कर्त्तरि बाहुलकादमि अलम् " अलं भूषणपर्याप्तिवारणेषुनिरर्थके । अलं शक्तौ च निर्दिष्टम् " ( इति विश्वः ) भूषणे यथा ' सर्वालंकरणैरलंकृतोऽयंबालः ' पर्याप्तौ यथा ' अलं भुक्तवान् यज्ञदत्तः ' शक्तौ यथा ' अलं मल्लोमल्लाय ' वारणे यथा ' अलं महीपाल ! तव श्रमेण ' ( इति रघुः ) वितर्के संदेहे ऊहे वा परिप्रश्ने पृच्छायां च ' हुं ' स्यात् । हूयते, ' हु दानादौ ' अस्माज्जौहोत्यादिकात्कर्मणि बाहुलकान्मे, हुम् " हुं वितर्के चानुमताविति ( त्रिकाण्डशेषः ) वितर्के यथा ' हुं जलं मृगतृष्णा हुम् ' परिप्रश्ने यथा ' हुं यज्ञदत्तोऽयमायाति ' । अन्तिकं निकटम्, मध्यं मध्यमं चानयोः समया स्यात् । समेति, संपूर्वकाद् ' इण् गतौ ' अस्मादादादिकात्कर्तरि ' आः समिण्निकषिभ्याम् ' इत्या प्रत्यये गुणे, अयादेशे च समया, समीपे यथा ' समया पत्तनं नदी वहति ' मध्ये यथा ' समया शैलयोर्ग्रामः ' पर्वतयोर्मध्ये ग्रामो वसति इति ॥ २६१ ॥

अप्रथम, भेद, निश्चय, निषेध, प्रबन्ध, चिरातन, व्यतीत, समीप, भावी.

**पुन ( रप्रथमे भेदे ) नि ( र्निश्चयनिषेधयोः ) ।**
**( स्यात्प्रबन्धे चिरातीते निकटागामिके ) पुरा ॥ २६२ ॥**

पुनरिति—अप्रथमे प्रथमाभावे, भेदे अन्तरे च ' पुनर् ' स्यात् । पनते, 'पन स्तुतौ' अस्माद्धौवादिकात्कर्तरि बाहुलकादरे, अस्योकारे च ' पुनर् ' "पुनरप्रथमे मतम् । अधिकारे च भेदे च तथा पक्षान्तरेऽपि च " ( इति मेदिनी ) प्रथमाभावे यथा ' पुनरुक्तं पुण्यदत्तेन ' भेदे यथा ' किं पुनर्ब्राह्मणाः पुण्याः ' । निश्चयोऽवधारणम्, निषेधो वारणं चानयोर्निर् स्यात् । नृणाति, नृणातेः कर्तरि क्विपि " ॠत इत्- " इत्वीरादेशे च ' निर् ' । " निर्निश्चये क्रान्ताद्यर्थे निर्निःशेषनिषेधयोः " ( इति विश्वः ) निश्चये यथा ' निरुक्तमिदं नित्यानन्देन ' निषेधे यथा ' बहुदानान्निर्धनोऽयं राजा ' । प्रबन्धे अविच्छेदेन क्रियाकरणे, चिरे चिरन्तने, अतीते व्यतीते, निकटे सन्निहिते, आगामिके भाविनि च पुरा स्यात् । पुरति, ' पुर अग्रगमने ' अस्मात्तौदादिकात्कर्तरि बाहुलकात्का प्रत्यये, कित्त्वाद्गुणाभावे च पुरा " पुरा पुराणे निकटे प्रबन्धातीतभाविषु " ( इति मेदिनी ) प्रबन्धे यथा ' पुराधीते धीरोयम् ' अविरतमपाठीदित्यर्थः । चिरन्तने यथा ' पुरातना ऋषयो यमैडयंस्त ' माहुरग्र्यं पुरुषं पुराणमिति । अतीते यथा ' पुरा रामो राजा बभूव ' निकटे यथा 'पुरा रामं तस्थौ रामानुजः' आगामिके यथा ' चतुर्विंशतितः पुरा मे भाग्यमुदेष्यति ' उदयं प्राप्स्यतीति ॥ २६२ ॥

---

१ वसन्तीह पुरा छात्राः—अवात्सुः—अवसन्—ऊषुर्वा । पुराभुङ्क्ते निश्चितं भोक्ष्यत इति । " इति पुरातनं शास्त्रं प्राप्तं ब्रह्मादिकैः पुरा " ( इत्यथर्वणरहस्यम् ) ॥

विस्तार, अङ्गीकार, स्वर्ग, परलोक, बात, संभावना या बड़ाई.

**ऊरर्यूरी चोररी च (विस्तारेऽङ्गीकृतौ त्रयम्)।**

**(स्वर्गे परे च लोके) स्व (र्वार्तासंभाव्ययोः)किल॥२६३॥** †

ऊरेति—विस्तारे व्यासे, अङ्गीकृतौ स्वीकृतौ चार्थे ऊररी, ऊरी, उररी चैतत्त्रयं स्यात्। ऊयते, 'ऊयी तन्तुसन्ताने' अस्माद्धौवादिकात्कर्तरि बाहुलकाद्ररीकि, यलोपे च ऊररी, रीकि तु ऊरी, अत्र ह्रस्वादौ पाठात् 'उरी' ह्रस्वादिरपि। वयति, वयते वा वयतेः कर्तरि ररीकि, संप्रसारणे, पूर्वरूपे च उररी "ऊररी चोररी चोरी विस्तारेऽङ्गीकृतौ त्रयम्" (इत्यजयः) विस्तारे यथा। 'गुरुर्ग्रन्थमूररी करोति=विस्तारयतीत्यर्थः' अङ्गीकारे यथा 'ऊरीकृत्य पितुर्वाक्यं रामोऽरण्यं जगाम ह' 'उररी करोति प्रभोराज्ञां रामदत्तः। स्वर्गे, परे लोके च 'स्वर्' स्यात्। स्वरति, स्वर्यते वा स्वरतेः कर्तरि कर्मणि वा विचि गुणे, रपरत्वे च स्वर् "स्वः प्रेत्य व्योम्नि नाके च" (इति कोषान्तरम्) स्वर्गे यथा 'स्वर्णद्यां स्नाति नारदः'। परलोके यथा 'स्वर्गतस्य क्रिया कार्या पुत्रैः परमभक्तितः'। वार्ता प्रवृत्तिः, संभाव्यं संभावना, संभाव्यः प्रशंसनीयो वा अनयोरर्थे 'किल', स्यात्। किलति, किलेःकर्तरि 'इगुपधेति' के, कित्त्वाद्गुणाभावे च किल "किलशब्दस्तु वार्तायां संभाव्यानुनयार्थयोः" (इति विश्वः)। "वार्तायामरुचौ किल" (इति त्रिकाण्डकोषः) वार्तायां यथा 'जघान कंसं किल वासुदेवः' संभाव्ये यथा "गुरून् किल अतिशेते शिष्यः" इति॥ २६३॥

निषेध, वाक्य भूषण, जिज्ञासा, अनुनय, समीप, उभयार्थ, शीघ्र, संपूर्णता, सामने.

**(निषेधवाक्यालङ्कारजिज्ञासानुनये) खलु।**

**(समीपोभयतःशीघ्रं साकल्याभिमुखे)ऽभितः॥२६४॥**

नीति—निषेधः प्रतिषेधः, वाक्यालंकारो वाक्यभूषणम्, जिज्ञासा ज्ञातुमभिलाषा, अनुनयः सान्त्वनं चैषां समाहारस्तत्र 'खलु' स्यात्। खलति, खलतेः कर्तरि बाहुलकादुप्रत्यये खलु "खलु स्याद्वाक्यभूषायां जिज्ञासायां च सान्त्वने। वीप्सामाननिषेधेषु पूरणे पादवाक्ययोः" (इति मेदिनी) निषेधे यथा 'पीत्वा खलुगतः' वाक्यालंकारे यथा 'एतत्खल्वाहुर्लोकाः' जिज्ञासायां यथा 'खलु जानाति यज्ञदत्तः' अनुनये यथा 'देहि खलु वाचकमिति'। समीपं निकटम्, उभयतः उभयार्थः शीघ्रं त्वरितम्, साकल्यं कार्त्स्न्यम्, अभिमुखं सम्मुखं चैषां समाहारस्तत्र 'अभितः' स्यात्। अभिइति, "पर्यभिभ्यांच" इत्यभिशब्दात्तसिलि अभितः। समीपे यथा 'वाराणसीमभितोभागीरथी' उभयार्थे यथा 'अभितः कृष्णं गोपाः' शीघ्रार्थे यथा

† 'अलीके यथा-'प्रसह्य सिंहः किल तां चकर्ष' (इति रघुः)। अज्ञानसूचके यथा 'सुप्तोऽहं किल विललाप'॥

'अभितोऽधीष्व' साकल्ये यथा 'अभितो ग्रामं वनानि सन्ति' अभिमुखे यथा 'अभितोहिंसको हन्ति मामेव परिधावति' इति ॥ २६४ ॥

शब्द, प्रकाश, परस्पर, छिपना, टेढ़ा, दुःख, शोक, पीड़ा.

**( नामप्राकाश्ययोः ) प्रादुर्मिथो ( ऽन्योन्यं रहस्यपि ) । तिरो(ऽन्तर्धौ तिर्यगर्थे) हा (विषादशुगार्तिषु) ॥२६५॥**

नेति—नाम नामधेयम्, शब्दो वा प्राकाश्यं द्यौत्यं चानयोरर्थे प्रादुः स्यात्। प्रान्दति, प्रपूर्वकादन्देः कर्त्तरि वाहुलकादुसि, आगमशास्त्रस्यानित्यत्वान्नुमागमाभावे च । प्राप्तीत्ति विग्रहे तु कर्तरि उसि वा प्रादुः । नामनि यथा 'प्रादुरासीच्चक्रपाणिः' प्राकाश्ये यथा 'बुद्धिस्तेप्रादुर्भविष्यति' । अन्योन्यमन्योन्यार्थे, रहसि एकान्तेऽपि मिथः मिथो च स्यात् । मेथति, 'मेथृसंगमे' अस्माद्भौवादिकात्कर्त्तरि असुनि, पृषोदरादित्वाद्ध्रस्वे च मिथः, बाहुलकादो प्रत्ययेतु 'मिथो' तन्त्रेणोभयमिहनिर्दिष्टमिति । अन्योन्यार्थे यथा 'वासिष्ठकौण्डिन्यमैत्रावरुणानां मिथो न विवाहः' एकान्ते यथा 'मिथः सीतामश्लिक्षद्रामः' रहसि सीतामालिङ्गितवानिति । अन्तर्द्धौ अन्तर्धाने, तिर्यगर्थे कुटिलार्थे च तिरः स्यात् । तरति, तरतेः कर्तरि असुनि 'कचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' इति गुणविषये "ॠतइद्धातोः" इतीरादेशे च तिरः । अन्तर्द्धौ यथा 'तिरो बभूव वामनः' तिर्यगर्थे यथा 'तिरो वर्तते चन्द्रः' कुटलीभूत्वा वर्तत इति। विषादो दुःखम्' शुक् शोकः, अर्तिः पीडा चैष्वर्थेषु 'हा' स्यात । जहाति, जहातेः कर्तरि क्विपि हा "हा विषादे च शोके च कुत्सादुःखार्थयोरपि" ( इति मेदिनी ) विषादे यथा 'हा रमणीयो गतः कालः' शोके यथा 'हा राम ! वनं गतोऽसि' पीडायां यथा 'हा हतोऽस्मि' इति ॥ २६५ ॥

आश्चर्य, खेद, कारण और निश्चय.

**अहहे ( त्यद्भुते खेदे ) हि ( हेताववधारणे ) ॥२६६॥**

## इति नानार्थवर्गः ॥

अहेति—अद्भुते विस्मये, खेदे दैन्ये शोके वा 'अहह' इत्यव्ययं स्यात् । अहं जहाति, जिहीते वा अहं पूर्वकाद् हाको हाङो वा कर्तरि "अन्येभ्योऽपीति" डे, पृषोदरादित्वान्मलोपे च अहह । "अहहा" दीर्घान्तमपि" तत्र 'क्विप्' बोध्यः "अहहेत्यद्भुवे खेदे परिक्लेशप्रहर्षयोः । सम्बोधनेऽपि" ( इति मेदिनी ) अद्भुते यथा 'अहह बुद्धिप्रकर्षो राज्ञः' खेदे यथा 'अहह नीतो मया द्यूतेन कालः' परिक्लेशे यथा 'अहहा परिपीडितोऽहं व्याधिनाऽतो गङ्गाम्भसि पतिष्यामीति । प्रहर्षे यथा "अहहा मे रात्रौ पौत्रो जातः" सम्बोधने यथा 'अहह सखे ! मया साकं भोक्तव्यम्' । हेतौ कारणे, अवधारणे निश्चये च 'हि' स्यात् । हिनोति, हिनोतेः कर्तरि विचि, संज्ञापूर्वकत्वाद्गुणाभावे च । क्विपि तु तुगागमाभावे वा 'हि' "हि

पादपूरणे हेतौ विशेषेऽप्यवधारणे । प्रश्ने हेत्वपदेशे च संभ्रमासूययोरपि । ही दुःख हेतावाख्यातो विषादे विस्मयेऽपि च "। ( इति मेदिनी ) तत्र पृषोदरादित्वाद्दीर्घः । एषु सर्वत्र भावे वा प्रत्यया ज्ञातव्याः । हेतौ यथा ' अग्निरत्रास्ति धूमो हि दृश्यते ' अवधारणे यथा ' चन्द्रोहि शीतो वर्तत इति '॥ २६६ ॥

इति नानार्थवर्गविवरणम् ।

---

## अथ अव्ययवर्गो व्याख्यायते ।

दीर्घकाल, **( चिरायचिररात्रायचिरस्याद्या ) श्चिरार्थकाः ।**

बारम्बार. **मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृ (त्समाः) ॥ १ ॥**

चीति–चिरायः, चिररात्रायः, चिरस्यः एते आद्यायेषामिति ते चिरोऽर्थो येषामिति चिरार्थकाः स्युः । आद्यपदेन " चिरम्, चिरेण, चिरात्, चिरे " इति गृह्यन्ते । चिरमयते, चिरपूर्वादयतेः कर्तरि " कर्मण्यण् " इत्यणि चिराय यथा ' चिराय सन्तर्प्य समिद्भिरग्निम् ' । चिरारात्रयः । " अच् प्रत्यन्वव–" इत्यत्र " अच् " इति योगविभागादचि चिररात्रास्तानयते " कर्मण्यण् " इत्यणि । चिररात्राय यथा चिररात्राय संचितं मधु मक्षिकाभिः '। चिरमस्यति, चिरपूर्वादस्यतेः कर्तरि ण्यति-सञ्ज्ञापूर्वकत्वाद्वृद्ध्यभावे, शकन्ध्वादित्वात्पररूपे च चिरस्य यथा ' चिरस्य दृष्टेवमृतो त्थितेव ' । चिनोति, चिनोतेः कर्तरि बाहुलकाद्रकि, गुणाभावे, मान्तत्वे च निपातिते चिरम्, यथा ' चिरंजीवतु बालोऽयम् ' रेणकि प्रत्यये चिरेण यथा ' चिरेण नाभि प्रथमोदबिन्दवः ' चिरमततीति विग्रहेतु चिरपूर्वकादतेः कर्तरि क्विपि, चिरात्, 'चिरात्सुतस्पर्शरसज्ञतां ययौ ' रेकि, चिरे । ' स चिरे तपसि स्थितः ' । इति सप्तदीर्घ कालस्य । मुहुः, पुनः पुनः, शश्वत्, अभीक्ष्णम्, असकृत् एते समास्तुल्यार्थाः स्युः । मोहनम्, मुह्यतेः कर्तरि बाहुलकादुसि मुहुः । यथा ' मुहुः पश्यसि कौन्तेय '। पनते, पनेः कर्तरि बाहुलकादरि, " नित्यवीप्सयोः " इति पुनः शब्दस्य द्वित्वे च पुनः पुनः यथा ' आगच्छति पुनः पुनः ' । शशति, शशेः कर्तरि बाहुलकाद्वति, शश्वत् यथा ' शश्वच्छान्तिं निगच्छति ' । अभिक्ष्णोति, अभिपूर्वकात् क्ष्णोतेः कर्तरि बाहुलकाड्डमौ अभीक्ष्णम् । यथा ' अभीक्ष्णं स्थाल्यामोदनं पचति ' । अन्यस्तु अभीक्ष्ण शब्दमनव्ययमप्याह । " अभीक्ष्णंतु पौनः पुन्ये सर्वदार्थे च दृश्यते " इत्यनव्ययप्रकरणे पाठात् । वारंवारं शश्वदर्थे वारंवारेण चेष्यते " ( इति त्रिकाण्डशेषः ) न सकृत नञ्समासे असकृत् यथा ' असकृज्जलपानाच्च ' । इति पञ्च पौनःपुन्यार्थस्य ॥ १ ॥

शीघ्रता वाचक, **स्राग्झटित्यञ्जसान्हाय सपदिद्राङ्मङ्क्षु ( द्रुते )।**

अतिशयार्थक. **बलवत्सुष्ठुकिमुतस्वत्यतीव च ( निर्भरे ) ॥ २ ॥**

स्रेति—स्राक्, झटिति, अञ्जसा, अन्हाय, सपदि, द्राक्, मङ्क्षु एते द्रुते शीघ्रार्थे स्युः। स्रवति, स्रुवःकर्तरि बाहुलकाड्डाकि, स्रवणमिति विग्रहेतु संपदादित्वात् क्विपि तुगागमे च स्रुत् तामासमन्तादकति, क्विपि वा शकन्ध्वादित्वात्पररूपे च स्राक् यथा 'स्राग्वयोयाति देहिनाम्'। झटनम्, झटेर्भावे संपदादित्वात् क्विपि झट् तामेतीति कर्तरि क्तिचि झटिति 'वृक्षं झटित्यारुरोह वानरः' अञ्जनम्, अञ्जेर्भावे "कृत्यल्युटो (कृतो) बहुलम्" इति पचाद्यचि अञ्जस्तं स्यति, सायति वा क्विपि अञ्जसा यथा 'अञ्जसा याति तुरगः'। ह्वनम्, ह्वेञोभावे बाहुलकाद् घञि, पृषोदरादित्वाद्धस्य यत्वे च ततो नञि समासे 'अह्नाय' यथा 'अह्नाय सूर्येण तमो निरस्तम्'। संपद्यते, संपूर्वकात्पद्यतेः कर्तरि इनि, पृषोदरादित्वात्समोऽन्त्यलोपे च सपदि यथा 'वचसस्तस्य सपदिक्रिया केवलमुत्तरम्' द्राणम्, द्रातेर्भावे संपदादित्वात् क्विपि द्रा तामकतीति, कर्तरि क्विपि द्राक् यथा 'द्राग्भविष्यति ते सुखं प्रिये'। मज्जति, मज्जतेः कर्तरि बाहुलकात्सुप्रत्यये 'मस्जिनशोः—' इति नुमागमे, "स्कोरिति" सलोपे, कुत्वे, षत्वे, क्षत्वे च मङ्क्षु यथा "मङ्क्षूदपाति सरितः पटलैरलीनाम्" इति सप्त द्रुतस्य। बलवत्, सुष्ठु, किमुत, सु, अति, अतीव एते निर्भरे अतिशयार्थे स्युः। बलमस्यास्ति, मतुपि, मतो मस्य वत्वे च बलवत् यथा 'पुनर्वशित्वाद्बलवन्निगृह्य' सुतिष्ठति, सुपूर्वकात्तिष्ठतेः कर्त्तरि "अपदुःसुषुस्थः" इति कौ "सुषमादिषु च" इति षत्वे च सुष्ठु, यथा 'सुष्ठु पीतं मया घृतम्' किंच तद् उत च किमुत, यथा 'किमुतावर्द्धितं क्षेत्रम्'। सवति, सवनम् वा सवतेः कर्तरि भावे वा क्विपि, तुगागमाभावे च सु यथा 'सुपक्वं कदलीफलम्' अतति, अतेः कर्तरि इनि, अति यथा 'अतिवर्षति तोयदः' अति च इव च अतीव यथा 'अतीव शोभते राजा' इति षड् अतिशयस्य ॥ २ ॥

वर्जनार्थक, **पृथग्विनान्तरेणर्ते हिरुङ् नाना च (वर्जने)।**
कारणार्थक,
असंपूर्णार्थक. **यत्तद्यतस्ततो (हेता) वसाकल्ये तु (चिच्चन) ॥ ३ ॥**

प्रिति—पृथक्, विना, अन्तरेण, ऋते, हिरुक्, नानाचेति षट् वर्जने वर्जनार्थे स्युः। पर्थयति 'पृथ प्रक्षेपे' अस्माच्चौरादिकात्कर्तरि बाहुलकात्कुकि, प्रथयति, 'प्रथेः कित्संप्रसारणं चेति' अजि वा कित्त्वात्संप्रसारणे च पृथक् यथा 'किञ्चिद्दत्त्वा पृथक् क्रिया' "विनञ्भ्यां नानाञौ न सह" इति निषेधार्थाद्विशब्दान्ना प्रत्यये विना "विना वातं विना वर्षं विद्युतः पतनं विना। विना हस्तिकृतं दोषं केनेमौ पातितौ द्रुमौ"। अन्तरेति, अन्तः पूर्वकादेतेः कर्तरि 'णे' गुणे च अन्तरेण 'अन्तरेण सुतं नास्ति सुखं संसारिणां भुवि'। ऋतीयते, "ऋतिः" सौत्रस्तस्मात्कर्तरि 'के' गुणाभावे च ऋते 'ऋते ज्ञानान्न मुक्तिः'। हिनोति, हिनोतेः कर्तरि रुककि हिरुक् 'हिरुक् कर्म न मोक्षः'। नञो "विनञ्भ्याम्" इति नाञि प्रत्यये, ञित्त्वाद्वृद्धौ च नाना 'विष्णुं

नाना नास्ति मोक्षदो देवः ' इति षट् वर्जनार्थस्य । यत्, तत्, यतः, ततः एते हेतौ कारणे स्युः । अत्र चानुवृत्त्या येनतेनाद्यपि ज्ञेयम् । यच्छति, यमेः कर्तरि क्विपि " गमादीनां कौ " इत्यनुनासिकलोपे तुगागमे च यत् यथा ' यन्नरम्यं तरस्विभ्यः ' । तनोति, तनोतेः कर्तरि क्विपि, नलोपे, तुगागमे च तत् ' तदिदं रक्ष शोभने ' । यस्मात् " पञ्चम्यास्तसिल् " इति तसिलि, त्यदाद्यत्वे च यतः ' यतो गङ्गाम्भसि स्नातः ' । तस्मात्, तसिलि, त्यदाद्यत्वे च ततः ' ततो निष्कल्मषो भवेत् ' । यच्छब्दाट्टा प्रत्यये, त्यदाद्यत्वे, इनादेशे, गुणे च येन यथा ' वितर गिरमुदारां येन मूकाः पिकाः स्युः ' । एवं तच्छब्दाट्टाप्रत्यये, त्यदाद्यत्वे, इनादेशे, गुणे च तेन यथा ' तेन तुष्टा जनाः सर्वे महामोदं प्रलेभिरे ' इत्यादि विज्ञेयम् । इति चत्वारि कारणस्य । असाकल्ये असकलार्थे चित्, चन इमौ स्याताम् । चेतति, चितेः कर्तरि क्विपि चित् " कश्चित्कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः " । चनति, चनेः कर्तरि पचाद्यचि चन ' ततः कञ्चन नाश्रयेत् ' इति द्वे असकलार्थस्य ॥ ३ ॥

किसी काल, सहार्थक, अनुकूलता, निरर्थक.
**कदाचिज्जातु सार्धं ( तु ) साकं सत्रा समं सह ।**
**( आनुकूल्यार्थकं ) प्राध्वं (व्यर्थके तु) वृथा मुधा ॥ ४ ॥**

केति—कस्मिन् काले " सर्वैकान्यकिंयत्तदः काले दा " इति ' दा ' किमः कादेशे च कदा, चेततीति कर्तरि क्विपि चित्—कदा च चिच्च अनयोः समाहारः कदाचित् यथा ' कण्डूयमानेन कटं कदाचित् ' जायति ' जै क्षये ' अस्मात्कर्त्तरि बाहुलकात्तुनि जातु यथा ' ज्ञानं ते जातु सूत्तमम् ' इति द्वे कस्यचित्कालस्य । सह अर्धित्वा "आभीक्ष्ण्येणमुल्" इति णमुलि, गुणे, " सहस्य सः " इति सादेशे च । ऋध्यति ऋध्यतेः कर्तरि बाहुलकात्कमि वा सह ऋधंवर्धनम् । सार्धम् यथा ' सार्धं दानववैरिणा ' । सह अकनम्, सह पूर्वकादकेर्भावे बाहुलकादमि, णमुलि वा सादेशे च साकम् यथा ' पत्न्या साकं पतिर्भुङ्क्ते ' सह त्रायते, सहपूर्वकात्त्रैङः कर्तरि क्विपि, आत्वे च सत्रा यथा ' सत्रा कलत्रेण सुखं समश्नुते ' । समति, समेः कर्त्तरि बाहुलकादमि समम् यथा ' समं वधूभिस्तरुणा रमन्ते ' । सहते, सहेः कर्तरि पचाद्यचि सह यथा ' पुत्रेण सहागतः पिता । तथा च " सजूः सहार्थे " इति त्रिकाण्डशेषात्सजुष् शब्दोऽप्यत्रत्रोद्धव्यः । सह जुषते, सहपूर्वकाज्जुषेः कर्त्तरि क्विपि, सादेशे, रुत्वे, दीर्घे च सजूः यथा ' सजूः सख्या गन्तव्यम् ' इति पञ्च सहार्थकस्य । प्राध्वम्, आनुकूल्यार्थकं स्यात् । प्राध्वनति, प्राङ्पूर्वकाद्ध्वनेः कर्तरि बाहुलकाड्डुमि प्रत्यये प्राध्वम् " प्राध्वंतु प्रणतेचातिदूरे वर्त्मनि बन्धनम् " ( इति मेदिनी ) यथा ' प्राध्वं प्रणमति गुरुं गौरिनाथः ' इत्येकमानुकूल्यार्थस्य । वृथा, मुधा चेमौ व्यर्थके निष्कारणे बन्ध्ये वा स्याताम् । व्रियते वृङो वृञो वा कर्मणि थाकि वृथा " वृथा बन्ध्ये निष्कारणे " ( इति मेदिनी ) यथा ' पञ्च यज्ञा वृथा तस्य नीलवस्त्रस्य धारणात् ' । मुह्यति, मुहेः

कर्तरि बाहुलकात्काप्रत्यये, गुणाभावे, पृषोदरादित्वाद् ह्रस्य थत्वे च मुधा 'मुधा वृथा भ्रमन्त्यत्र' इति द्वे व्यर्थकस्य ॥ ४ ॥

विकल्पार्थक, **आहो उताहो किमुत (विकल्पे) किं किमूत (च)।**
पादपूरणार्थक. **तु हि च स्म ह वै (पादपूरणे) (पूजने) स्वती ॥ ५ ॥**

आहो इति—आहो, उताहो, किमुत, किम्, किमु, उत चैते षट् विकल्पार्थे स्युः। आहन्ति, आङ्पूर्वकाद्धनेः कर्तरि बाहुलकाड्डो प्रत्यय, डित्त्वाट्टिलोपे च आहो यथा 'देवः आहो गन्धर्वः' "विकल्पे विस्मयेऽप्यहो" इति रुद्रवचनाद् 'अहो' ह्रस्वादिरपि। यथा 'रामः अहो शिवः' विस्मये यथा 'अहो अलं श्लाघ्यतमं यदोः कुलम्'। उत च आहो च, अनयोः समाहारः उताहो यथा 'उताहो ब्रह्म चोच्यते'। किम् च उत च, अनयोः समाहारः किमुत "किमुतातिशये प्रश्ने विकल्पे च प्रयुज्यते" (इति विश्वः) यथा 'किमुत त्वं शिवो ब्रह्मा' कानम्, कायतेर्भावे बाहुलकाड्डिमो किम् यथा 'स्थाणुरयं किं पुरुषः'। किम् च उच, अनयोः समाहारः किमु, "किमुसंभावनायां स्याद्विमर्शेचापि दृश्यते" (इति मेदिनी) यथा 'गृहं किमुवनं गतः'। ऊयते उङः कर्मणि क्ते उत "उत प्रश्ने वितर्के च उताप्यर्थविकल्पयोः" (इति विश्वः) यथा 'विष्णुरुत शिवः सेव्यः' इति षट् वितर्कणस्य। तु—हि—च—स्म—ह—वै चैते पादपूरणेऽर्थे स्युः। तुदति, तुदेः कर्तरि बाहुलकाड्डुप्रत्यये, तु यथा 'रामस्तु लक्ष्मणं प्राह'। हिनोति, हिनोतेः कर्तरि क्विपि, तुगभावे च हि यथा 'अहं हि यास्ये नगरं मनोज्ञम्'। चनति, चिनोति वा चनतेश्चिनोतेर्वा कर्तरि "अन्येभ्योऽपीति" डे, डित्त्वाट्टिलोपे च 'च' यथा 'स च प्राह च राजानम्'। स्मयते, स्मिङः कर्तरि डे, स्म 'मया स्म भुक्तं सुचिरं सुराज्यम्' हन्ति, हनेः कर्तरि डे ह "ह स्यात्सम्बोधने पादपूरणेच विनिग्रहे। नियोगे च क्षिपायां स्यात्कुत्सायामपि दृश्यते" (इति मेदिनी) 'स हतं प्राह लक्ष्मणः' वाति,वातेः कर्तरि बाहुलकाड्डै प्रत्यये वै 'हतो वै रामचन्द्रेण रावणो लोकरावणः' इति षट् पादपूरणार्थकस्य। पूजने अर्चने सु च अति चेति-स्वती स्याताम्। सवति, सवतेः कर्तरि डु प्रत्यये सु "सु पूजायां भृशार्थे नु मतिकृच्छ्रसमृद्धिषु" (इति मेदिनी) 'सुस्तुतो देवदेवेशः शिवया सहितो हरः' अतति, अतेः कर्तरि इनि अति "अत्युत्तमो हि देवानां विष्णुः सर्वगुहाशयः" इति द्वे पूजनार्थस्य॥५॥

दिनार्थक,रात्र्यर्थक, कुटिलार्थक, सम्बोधनार्थक. **(दिवाह्नीत्यथ) दोषा (च) नक्तं (च रजनाविति)।**
**(तिर्यगर्थे) साचि† तिरो (ऽप्यथ सम्बोधनार्थकाः) ॥ ६ ॥**

† साचिः स्त्रीलिङ्गापि प्रकृत्यन्तरमस्ति। 'भित्तौ साची परिणतमुखी' (इति सप्तकुमारिका) "तिर्यक् साचिरपिस्त्रियाम् ॥ (इति रत्नकोषः) ॥

दीति–अह्नि दिवसे इत्यर्थे दिवा स्यात्। दीव्यन्त्यत्र, दिवेराधारे बाहुलकात्का प्रत्यये दिवा यथा 'दिवानिशं तप्यति मर्मताडितः' इत्येकं दिवसस्य। अथेत्यनन्तरं दोषा, नक्तम्, 'चकारादुषापि' इति त्रयं रजनौ रात्रावित्यर्थे स्यात्। दुष्यन्त्यत्र, दुषेराधारे आप्रत्यये, गुणे च दोषा 'दोषा रात्रिमुखे रात्रावत्रानव्ययमप्यसौ' (इति विश्वः) यथा 'चौराश्च दोषा ययुः'। नज्जति 'ओनस्जी व्रीडे' अस्मात्कर्तरि तमु प्रत्यये, पृषोदरादित्वात्सलोपे, कुत्वे, चर्त्वे च नक्तम् "नक्तं दोषा च रजनौ" "इति कोषान्तरम्" यथा 'नक्तं गृहस्थो भुञ्जीत' इति द्वे रात्रेः। तिर्यगर्थे कुटिलार्थे साचि, तिरोऽपि स्यात्। सचनम्, सचेर्भावे "इञजादिभ्यः" इतीञि, ञित्त्वादवृद्धौ साचि 'कृतं साचि धनुस्तेन' तरणम्, तरतेर्भावे असुनि "क्वचिदपवादविषयेऽपि–" इतीरादेशे च तिरः यथा "तिरोगत्वा समीक्षेत" अथेत्यनन्तरं वक्ष्यमाणाः पाडादयः सम्बोधनार्थकाः स्युरिति ॥ ६ ॥

सम्बोधनार्थक, सामीप्यार्थक, अविचारित, अग्रार्थक.

**स्युः (पाट् प्याडङ्गहेहैभोः) (समया निकषा हिरुक्)।**
**(अतर्किते तु) सहसा (स्या)त्पुरः पुरतोऽग्रतः ॥ ७ ॥**

स्युरिति–पाट्, प्याट्, अङ्ग, हे, है, भोः एते षट् सम्बोधनार्थकाः स्युः। पाटयति, पटेर्णिजन्तात्कर्त्तरि क्विपि, णिलोपे च पाट् यथा 'पाट्भीम! यज्ञं रक्षस्व'। प्यायते, प्यैङः कर्तरि बाहुलकात् ट् प्रत्यये आत्वे च प्याट् 'प्याट् पार्थ! जयद्रथं पश्य' अङ्गति अङ्गेः कर्तरि पचाद्यचि अङ्ग 'अङ्गदेव दयांकुरु'। हिनोति, हिनोतेः कर्तरि विचि, गुणे च हे 'हे राम! तव दासोऽस्मि'। हन्ति, हनेः कर्तरि बाहुलकाड्डै प्रत्यये, डित्त्वाट्टिलोपे च है 'है अम्ब मां सन्निधेहि'। भाति, भातेः कर्तरि बाहुलकाड्डोस् प्रत्यये, डित्त्वाट्टिलोपे च भोः 'क्षमस्व भो दुराराध्य' इति षट् सम्बोधनस्य। समया–निकषा–हिरुक् इति त्रीणि सामीप्ये स्युः। समयनम्, संपूर्वकादेतेर्भावे "आ समिणनिकषिभ्याम्" इत्या प्रत्यये, गुणे, अयादेशे च समया यथा 'समया ग्रामं नदी वहति'। निकषणम्, निपूर्वकात्कषेर्भावे आप्रत्ययेनिकषा "निकषान्तिकमध्ययोः" (इति मेदिनी)। यथा 'विलङ्घ्य लङ्कां निकषा हनिष्यति'। हिनोति, हिनोतेः कर्तरि रुकक्रि प्रत्यये हिरुक् 'हिरुगुक्तं च सामीप्ये' (इत्यमरमाला) 'हिरुग्रामंगतो भरतः' इति त्रीणि सामीप्यस्य। अतर्किते अविचारिते तु सहसा स्यात्। सहते, सहेः कर्तरि बाहुलकादसा प्रत्यये सहसा यथा 'दिवः प्रसूनं सहसा पपात' इत्येकमविचारितस्य। पुरः, पुरतः, अग्रतः इति त्रयोऽग्रार्थाः स्युः। पूर्वस्मिन्, पूर्वाधरावराणामसि पुरधवश्चैषाम्" इत्यस्तात्यर्थे असि प्रत्यये, पुरादेशे, रुत्वे, विसर्गे च पुरः

---

१ "उषा रात्रौ तदन्ते च (इति मेदिनी)॥

२ "मम तावन्मतमिदं श्रूयतां मङ्गवामपि।" (इति माघः)।

यथा 'पुरः पश्यसि किं बाले' पुरति, पुरतेः कर्तरि बाहुलकादतसुकि, पुरतः 'पुरतः स्थाप्य सर्वेशम्' अग्र इति आद्यादित्वात्तसौ अग्रतः "ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्नविणीं न सिंहम्" (इति रघुः) इति त्रीण्यग्रार्थकस्य ॥ ७ ॥

देवतार्थक, पित्र्यर्थक, अल्पार्थक, जन्मान्तरार्थक.

**स्वाहा ( देवहविर्दाने ) श्रौषड्वौषड्वषट् स्वधा ।**
**किञ्चिदीषन्मना (गल्पे) प्रेत्यामुत्र (भवान्तरे) ॥ ८ ॥**

स्वेति–स्वाहा, श्रौषट्, वौषट्, वषट्, स्वधा एते पञ्च देवहविर्दाने देवतार्थहविष्यदानविशेषे प्रयुज्यन्ते । स्वादतेऽनेन, स्वादेः करणे बाहुलकादाप्रत्यये, पृषोदरादित्वादस्य हे च । सुष्ठु आहूयतेऽनेनेति वा साधने डाप्रत्यये स्वाहा । यथा 'इन्द्राय स्वाहा' श्रूयते, अनेनेति वा शृणोतेः कार्यसाधनयोर्बाहुलकाड्डौषट् प्रत्यये, डित्वाट्टिलोपे च श्रौषट् । 'शम्भवे श्रौषट्' उह्यतेऽनेन, वहतेःकरणे डौषटि, वौषट् 'वासुदेवाय वौषट्' । डषटि प्रत्यये तु वषट् 'बलारातये वषट्' स्वद्यतेऽनेन, स्वदेः साधने बाहुलकादा प्रत्यये, पृषोदरादित्वादस्य धे च स्वधा, † 'पितृभ्यः स्वधा' इति पञ्च देवहविर्दानस्य । किंचित्, ईषत्, मनाक् इति त्रयोऽल्पे अल्पार्थे प्रवर्तन्ते । किम् च चिच्चानयोः समाहारः किंचित् यथा 'किंचिद्विकसितं पुष्पमिति । ईषणम्, ईषतेर्भावे बाहुलकादति प्रत्यये ईषत्, 'ईषदुष्णं पयः पिब' मननम्, मनेर्भावे बाहुलकादाकि प्रत्यये मनाक् यथा 'मनाग् विहस्य सन्तुष्टो बभूव' इति त्रीण्यल्पार्थकस्य । भवान्तरे जन्मान्तरे प्रेत्य–अमुत्र इत्युभे प्रवर्तेते । प्रकर्षेण इत्वा, प्रपूर्वकादेतेर्भावे क्त्वा प्रत्यये, "समासे–" इति ल्यबादेशे, तुगागमे च प्रेत्य, यथा 'प्रेत्य स्वर्गे महीयते' । अमुष्मिन्, अदसः "सप्तम्यास्त्रल्" इति त्रलि, त्यदाद्यत्वे, पररूपत्वे, उत्वे, मत्वे च अमुत्र 'इहामुत्र च फलं ज्ञेयमिति' द्वे भवान्तरस्य ॥ ८ ॥

तुल्यार्थक, विस्मयार्थक, मौनार्थक, तत्कालार्थक.

**वंवा यथा तथैवैवं ( साम्ये ) ऽहो ही च ( विस्मये ) ।**
**(मौने तु) तूष्णीं तूष्णीकां सद्यः सपदि (तत्क्षणे) ॥ ६ ॥**

वेति–व, वा, यथा, तथा, एव, एवम्–एते षट् साम्ये तुल्यार्थे स्युः । वाति, वानं वा वातेः कर्तरि भावे वा 'अन्येष्वपि दृश्यते' इति डे, डित्वाट्टिलोपे च व 'वं प्रचेतसि जानीयादिवार्थे तु तदव्ययम्' (इति मेदिनी) यथा 'शरच्चन्द्रो व ते यशः' क्विपि तु वाः ‡ 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम । म्रियमाणौ च तौ दृष्ट्वा मङ्क्विस्तत्रेदमब्रवीत्" । विषधरो वा चुक्रोध मेघनादो महाबलः' । येन प्रकारेण, यच्छब्दात् "प्रकार वचने थाल्" इति थालि, विभक्तित्वात्त्यदाद्यत्वे च यथा 'यथा

---

† "पितृदाने स्वधामता" इति ।

‡ क्वचित् 'वत्' इति पाठो दृश्यते, सतु न युक्तः । वति प्रत्ययेन गतार्थत्वात् । नच वतिरेवात्र पठितः सादृश्यपर्याये प्रत्ययपाठस्यायुक्तत्वात् । अपत्यसमूहादिपर्यायेष्वण्वुञादीनामपाठात् ॥

बुभुक्षितस्यान्नम्' । तेन प्रकारेण, तच्छब्दात्थालि, त्यदाद्यत्वे च तथा 'तथैवार्तस्य चौपधम्' । अयनम्, एतेर्भावे 'इणशीभ्यांवन्' इति वनि, गुणे च एव "एवौपम्ये परिभवे ईषदर्थेऽवधारणे" ( इति हैमः ) यथा "शार्दूल एव भूपालो भाति लोके भयंकरः" अत्र स्वामिमुकुटाभ्यां तु इव शब्दो गृहीतः । अयनम्, एतेर्भावे बाहुलकाद्वकि, कित्त्वाद्गुणाभावे च इव 'छायेव तां भूपतिरन्वगच्छत' वमि प्रत्यये तु एवम् "अग्निरेवं द्विजोभाति रामान्तिकमुपागतः" इति षट् साम्यार्थस्य । विस्मये अद्भुते अहो, ही इत्युभे स्याताम् । अहानम्, नञ्पूर्वाद्हाङोभावे बाहुलकाड्डो प्रत्यये अहो यथा 'अहो अलं पुण्यतमं मधोर्वनम्' । हननम्, हन्तेर्भावे बाहुलकाड्डीप्रत्यये डित्त्वाट्टिलोपे च ही 'ही † विचित्रो विपाकः' ( इति माघः ) इति द्वे विस्मयार्थस्य । मौने अभाषणे तु तूष्णीम्–तूष्णीकाम् इत्युभे स्याताम् । तोषणम्, तुष्यतेर्भावे बाहुलकान्नीमि प्रत्यये, उपधाया ऊदादेशे च तूष्णीम् । यथा 'तूष्णीं स्थित्वा क्षणं रामो जगाम गुरुसन्निधौ' तूष्णीमेव, "अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः" इति मित्त्वादन्त्याचः परे कामागमे, तूष्णीकाम् "तूष्णीकामासने रामः स्थित्वा दध्यौ महेश्वरम्" इति द्वे मौनस्य । स चासौ क्षणश्च तस्मिन् तत्क्षणे तत्काले सद्यः, सपदि इत्युभे स्याताम् । समानेऽहनि इति सद्यः, "सद्यः परुदिति" साधुः । यथा 'सद्योहतः समुत्तस्थौ' संपद्यतेऽस्मिन्, संपूर्वात्पद्यतेराधारे 'सर्वधातुभ्य इन्' इतीनि प्रत्यये सपदि "ध्यात्वा सपदि तं रामं बाणं जग्राह लक्ष्मणः" इति द्वे तत्कालस्य ॥ ९ ॥

कल्याणार्थक, मध्यार्थक, हठार्थक.

**दिष्ट्या समुपजोषं (चेत्यानन्दे)ऽथान्तरेऽन्तरा ।**
**अन्तरेण च (मध्ये) स्युः प्रसह्य तु (हठार्थकम्) ॥१०॥**

दीति–दिष्ट्या, समुपजोषम् चेत्युभे आनन्दे आनन्दार्थे स्याताम् । देशनम्, दिशतेर्भावे संपदादित्वात्क्विपि, दिक् तां स्त्यायति, दिक्पूर्वात्स्त्यायतेः कर्त्तरि क्विपि, षत्वे, पृषोदरादित्वात्सलोपे, ष्टुत्वे, संज्ञापूर्वकत्वाज्जश्त्वाभावे च दिष्ट्या यथा 'दिष्ट्या ते दर्शनं कान्ते' समुपजोषणम्, समुपपूर्वाज्जुषतेर्भावे अमिप्रत्यये, गुणे च समुपजोषम् "समुपजोषं समीपं ते दर्शनंजातमुत्तमम्" समुपयोषं चतुर्थमन्तस्थाद्यमित्येके । मुकुटस्तु 'दिष्ट्या शमुपजोषं चेति पठित्वा नामत्रयं व्याख्यातवान्' तत्र दिशति, अघ्न्यादि त्वात्कर्तरि यकि, षत्वे, तुगागमे, ष्टुत्वे च निपातिते दिष्ट्या, शमयतेर्णिजन्तात् कर्तरि विचि शम्, "शंकरः शं करोतु मे" उपजोषणम्, उपपूर्वकाज्जुषतेर्भावे बाहुलकादमिप्रत्यये गुणे च उपजोषम् चवर्गतृतीयतृतीयम् । अन्तस्थाद्यतृतीयमित्येके इति पीयूषव्याख्यातोऽवसेयम् । "उपजोषमुमानाथ दर्शनं प्राप्तमद्यमे" इति त्रीणि कल्याणार्थस्य । अथेत्यनन्तरम् अन्तरे–अन्तरा–अन्तरेण च मध्ये मध्यार्थे स्युः । अन्तरेति,

† "कुमुदवनमपश्रिश्रीमदम्भोजषण्डं त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः । उदयमहिमरश्मि र्यातिशीतांशुरस्तं हतविधिलसितानां ही विचित्रोविपाकः" ॥ १ ॥ ( इति माघः ) ॥

अन्तर्पूर्वकादेतेः कर्तरि विचि गुणे च अन्तरे यथा 'अनयोरन्तरेतिष्ठ' डाचि प्रत्यये अन्तरा 'त्वां मामन्तरा हरिः' णप्रत्यये, गुणे च अन्तरेण 'नारदपर्वतयोरन्तरेण कमण्डलुः' इति त्रीणि मध्यस्य। प्रसह्य तु हठोऽर्थोयस्येति हठार्थकं स्यात्। प्रकर्षेण सोढ्वा प्रपूर्वात्सहेर्भावेक्त्वाप्रत्यये ल्यबादेशे च प्रसह्य यथा 'प्रसह्य सिंहः किल तां चकर्ष' इत्येकं हठार्थस्य ॥ १० ॥

उचितार्थक, निरन्तरार्थक, अभावार्थक, वारणार्थक.

**( युक्ते द्वे ) सांप्रतं स्थानेऽभीक्ष्णं शश्व ( दनारते )।**
**(अभावे) नह्यनो[†]नापि मास्ममालं च (वारणे) ॥११॥**

य्वेति—सांप्रतम्, स्थाने इति द्वे युक्ते उचितार्थे स्याताम्। संप्रतननम्, संप्रपूर्वकात्तनोतेर्भावे बाहुलकाड्डुमिप्रत्यये, पृषोदरादित्वात्समोदीर्घे च सांप्रतम् यथा 'क्रमशो वच्मि सांप्रतम्' "विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्" असांप्रतं न युक्त मित्यर्थः"। स्थानस्य करणम्, स्थानशब्दात् 'तत्करोतीति' णिजन्ताद्भावे 'ए' प्रत्यये णिलोपे च स्थाने "स्थाने हृषीकेश ! तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च" इति द्वे युक्तार्थस्य। अभीक्ष्णम्, शश्वत् इति द्वे अनारते निरन्तरे प्रयुज्येते। अभिक्ष्णवनम्, अभिपूर्वात्क्ष्णौतेर्भावे बाहुलकाड्डुमिप्रत्यये, पृषोदरादित्वादभेदीर्घे च अभीक्ष्णम् "अभीक्ष्णमुष्णैरपि तस्य सोष्मणः सुरेन्द्रवन्दीश्वसितानिलैर्यथा। स चन्दनाम्भःकणकोमलैस्तथा वपुर्जलार्द्रापवनैर्न निर्ववौ' शशनम्, शशतेर्भावे वति प्रत्यये शश्वत् 'शश्वच्छान्ति प्रदेहि मे' इति द्वे निरन्तरस्य। नहि, अ, नो, नापि इति चत्वारि अभावे स्युः। नह्यति, नह्यतेः कर्तरि 'इनि' नहि "नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति" अवति, अवनम् वा अवतेः कर्तरि भावे वा बाहुलकाड्डप्रत्यये डित्वाट्टिलोपे च अ "अ स्वल्पार्थेऽप्यभावेऽपि" ( इति हैमः ) "अ[†]शब्दः स्यादभावेऽपि स्वल्पार्थप्रतिषेधयोः। अनुकम्पायां च तथा वासुदेवे त्वनव्ययः" ( इति मेदिनी ) नञोऽयमकार इति वा केचिदाहुः। 'अ विप्रवद्भाष से विप्र इव न ब्रूषे' इत्यर्थः। नह्यति, नह्यतेः कर्तरि बाहुलकाड्डो प्रत्यये नो "नो नक्री किं कुलालः"। डप्रत्यये तु न 'नायं जनोमे सुख–दुःखहेतुः' इति चत्वारि अभावस्य। मास्म—मा, अलम् इति त्रीणि वारणे निषेधार्थे प्रवर्तन्ते। माच स्म च अनयोः समाहारः मास्म "मास्मकार्षीरिदंप्रिये"। मानम्, मातेर्भावे संपदादित्वात्किपि मा 'मा निषाद ! प्रतिष्ठां त्वमगमश्शाश्वतीः समाः' अलनम्, अलतेर्भावे बाहुलकादमि प्रत्यये अलम् 'अलं महीपाल तव श्रमेण' इति त्रीणि वारणस्य ॥ ११ ॥

पक्षान्तरार्थक, यथार्थक, प्रकटार्थक, अङ्गीकारार्थक.

**(पक्षान्तरे) चेद्यदि च (तत्त्वे) त्वद्धाऽञ्जसा ( द्वयम् )।**
**(प्राकाश्ये) प्रादुराविः (स्या)दोमेवं परमं (मते) ॥१२॥**

[†] 'अनशब्दोऽपि निषेधे' अनोपमाते वृद्धिरिति मुकुटः।

पक्षेति—चेत्, यदि चेति द्वे पक्षान्तरे विकल्पार्थे स्याताम् । चेतति, चितेः कर्तरि विचि, गुणे च चेत् यथा 'सत्यं चेत्तपसा च किम्' यतनम्, यतेर्भावे इनि, पृषोदरादित्वात्तस्यदे च यद्वा यच्छब्दाणिणजन्तात् "अचइः" इतीप्रत्यये, "प्रकृत्यैकाच्" इति टिलोपाभावे च यदि 'शुचिमनो यद्यस्तितीर्थेन किम्' इति द्वे पक्षान्तरस्य । अद्धा—अञ्जसा इति द्वयं तत्त्वे यथार्थे स्यात् । अतनम्, अतेर्भावे संपदादित्वात् क्विपि, अतं सततगमनं धयति, दधाति वा अत्पूर्वाद्धयतेर्दधातेर्वा कर्तरि विचि अद्धा यथा 'भ्रातरं चावधीत्कंसं मातुरद्धा तदर्हणम्' मातुर्देवक्या भ्रातरं कंसं च अवधीत् हतवान् इति अद्धा साक्षात्कारेण अतदर्हणम् कृष्णस्य अयोग्यमिति भावः" । अञ्जनम्, अञ्जेः "कृत्यल्युटो बहुलमिति" वाहुलकाद् भावे 'पचाद्यचि' अञ्जस्तं स्यति, सायति वा । अञ्जपूर्वात्स्यतेः सायतेर्वा कर्तरि 'पचाद्यचि' क्विपि वा अञ्जसा †'अञ्जसा मथुरां रुध्वा जरासन्धो जगर्जह' इति द्वे तत्त्वार्थस्य । प्रादुः, आविरिति द्वयं प्राकाश्ये स्फुटार्थे स्यात् । प्रात्ति, प्रपूर्वादत्तेः कर्तरि बाहुलकादुसि, दीर्घे च प्रादुः यथा 'प्रादुर्भूत्वा तयोर्मध्ये जहार स्वां प्रियां हरिः' । आवते, आङि पूर्वादुङः कर्तरि वाहुलकादिरि, इसि वा गुणे, अवादेशे, दीर्घे च आविः "देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः । आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः" इति द्वे प्रकटार्थस्य । ओम्—एवम्—परमम् इति त्रीणि मते अनुमतावर्थे प्रवर्तन्ते । अवति, अवतेः कर्तरि मनिनि, तस्य टिलोपे, "ज्वरत्वरेति" ऊठि, गुणे च ओम् "ओमित्यनुमतौ प्रोक्तं प्रणवे चाप्युपक्रमे" । ( इति कोषान्तरम् ) 'ओम्प्रश्नेऽङ्गीकृतौ रोषे' ( इति विश्वः ) यथा 'ओमित्युक्तवतोऽथ शार्ङ्गिण इति' । अयनम्, इणोभावे वाहुलकाद् वमि प्रत्यये गुणे च एवम् 'एवं यदाह भगवान्' परंमिमीते, मिनोति, मीनाति वा परपूर्वान्माङो मिञोमीञोवा कर्तरि वाहुलकाड्डुमि, परमम् 'ओमेवं परमं भवेत्' ( इति व्याडिः ) यथा "इत्युक्त्वा परमं रामो हनुमन्तमुवाचह" इति त्रीण्यनुमतार्थस्य ॥ १२ ॥

सब तरफ, यथेष्ट, अत्यर्थ, या विनाकामना स्वीकार, निन्दा समेत स्वीकार.

**समन्ततस्तु परितः सर्वतो विष्वगि ( त्यपि ) ।**
**(अकामानुमतौ) कामम(सूयोपगमे) ऽस्तु (च) ॥ १३ ॥**

समेति—समन्ततः, परितः, सर्वतः, विष्वक् इति चत्वारि सर्वतइत्यर्थे प्रयुज्यन्ते । अपिशब्दाद् 'अभितः, विश्वतः' समन्तादित्यादिग्रहः । समन्तात्, "आद्यादित्वात्" तसौ, समन्ततः यथा 'समन्ततो वर्षति वारिवाहः' "पर्यभिभ्यां च" इति परिशब्दात्तसिलि, परितः 'आयान्ति परितः श्रियः' सर्वस्मात्, "पञ्चम्यास्तसिल्"

† "तत्रतत्राञ्जसायुष्मन्भवता यद्विनिश्चितम् । पुंसामेकान्ततः श्रेयस्तन्नः शंसितुमर्हसि" ( इति भागवतम् ) ॥ अञ्जसेति रुरुधुः कुचग्रहैः ।

इति तसिलि, सर्वतः 'सर्वतो वाति पवनः' विषु अञ्चति, विषुपूर्वादञ्चतेः कर्तरि क्विनि विष्वक् । 'विष्वक् पतन्ति किरणाः' अभिशब्दात्तसिलि, अभितः 'अभितो ग्रामं वनानि सन्ति' विश्वस्मात्, तसिलि विश्वतः 'विश्वतो वाति वातोऽयम्' समन्तात् 'समन्तात्सरति स्मरः' इति चत्वारि सर्वत इत्यर्थस्य। अकामानुमतौ अनिष्टाङ्गीकारे काममित्येकं स्यात् । काम्यते, कमेर्णिङन्तात्कर्मणि बाहुलकादमि कामम् " अकामानुमतौ काममसूयोपगमेऽपि च " ( इति रुद्रः ) 'आकामानुमतौ कामम्' इत्यपि क्वचित्पाठो दृश्यते तत्राङ्बोध्यः । निकामानुमतौ काममित्यर्थः । "कामं कामाभ्यनुज्ञयोः" ( इति त्रिकाण्डशेषः ) यथा 'त्वं हनिष्यसि चेत्कामम्' इत्येकं कामाभ्यनुज्ञयोः । असूया गुणेषु दोषारोपस्तस्या उपगमः सत्स्वरूपाङ्गीकारस्तत्र 'अस्तु' इत्येकं स्यात् । च शब्दान्नामशब्दोऽप्यत्र संगृह्यते । असति, अस्यति वा असतेरस्यतेर्वा कर्तरि बाहुलकात्तुनि अस्तु " अस्तु स्यादभ्यनुज्ञानेऽप्यसूयापीडयोरपि " ( इति मेदिनी ) 'माजीवन्यः परावज्ञादुःखदग्धोऽपि जीवति । तस्याजननिरेवास्तु जननीक्लेशकारिणः' इत्येकमसूयाङ्गीकारस्य ॥ १३ ॥

विरोधोक्ति, इष्ट प्रश्न, निन्दा योग्य, यथा योग्य.

**ननुच ( स्याद्विरोधोक्तौ ) कच्चित् ( कामप्रवेदने ) ।**
**निःषमं दुःषमं (गर्ह्ये) यथास्वं (तु) यथायथम् ॥ १४ ॥**

नन्विति—विरोधोक्तौ विरोधवचने ननुचेत्येकं स्यात् । न नुदति, नञ्पूर्वान्नुदतेः कर्तरि मितद्र्वादित्वाड्डौ, डित्वाट्टिलोपे च ननु, चन्दतीति बाहुलकाड्डे टिलोपे च 'च, 'ननु, 'च' अनयोः समाहार द्वन्द्वे ननुच 'ननुचैवं मन्यसे तर्हि किमपि न स्यात्' केचिदत्र समुच्चयार्थं पादपूरणार्थं वा च शब्दं मत्वा 'ननु' एवेत्येकं विरोधोक्तौ स्यादित्याहुः । तेषां मते 'ननु एवं मन्यसे तर्हि किमपि नस्यादित्युदाहरणीयम् । इत्येकं विरोधवचनस्य । कामप्रवेदने इष्टपरिप्रश्ने इच्छार्थप्रकाशने वा कच्चिदित्येकं स्यात् । कौति, कौतेः कर्तरि बाहुलकाड्डुति, डित्वाट्टिलोपे च कत्, चेतति, चितेः कर्तरि क्विपि चित् कच्च चिच्चानयोः समाहारद्वन्द्वे कच्चित् यथा 'कच्चिज्जीवति मे माता' इत्येकं कामप्रवेदनस्य । निःषमम्, दुःषमं चेति द्वे गर्ह्ये निन्दितेऽर्थे स्याताम् । निर्गतं सममत्र, " तिष्ठद्गुप्रभृतीनिचेति " अव्ययीभावत्वे, 'सुविनिर्दुर्भ्यः' इति षत्वे च निःषमम् । यथा 'निःषमं वक्ति मे मूर्खः' । एवं दुष्टं सममत्रेति, दुःषमम् 'दुःषमं वर्तते वधूः' इति द्वे निन्दितार्थस्य । यथास्वमिति वीप्सायामव्ययीभावः योयमात्मा यच्चात्मीयं तद्यथास्वं तस्मिन् यथायोग्येऽर्थे यथायथं स्यात् । 'यथास्वे यथायथम्' इति सूत्रेण यथा शब्दस्य द्वित्वे क्लीबत्वे च निपातिते यथायथम् । केचित्तु यथायोग्ये यथास्वम्, यथायथं चेति नामद्वयमप्याहुः । यथा 'यथास्वमाश्रमं चक्रे' । 'यथायथं फलायन्ते' इति द्वे यथायोग्यस्य ॥ १४ ॥

असत्यार्थक, सत्यार्थक, निश्चयार्थक.

**मृषा मिथ्या च ( वितथे ) यथार्थं ( तु ) यथातथम् ।**
**( स्यु ) रेवं तु पुनर्वै वे ( त्यवधारणवाचकाः ) ॥ १५ ॥**

म्रिति–मृषा, मिथ्या चेति द्वे वितथे विगतं तथा सत्यमस्मात्तत्र असत्येऽर्थे स्याताम् । मृष्यते, मृषेःकर्मणि बाहुलकात्का प्रत्यये, कित्त्वाद्गुणाभावे च मृषा " उच्छ्राय-सौन्दर्यगुणा मृषोद्याः " । मथति, मथेः कर्तरि ' अघ्न्यादित्वाद्यगन्तो निपात्यते । मिथ्या ' सत्यमुक्तं त्वया नात्र मिथ्या किञ्चित्त्वयोदितम्'.इति द्वे असत्यार्थस्य । अर्थ-मनतिक्रम्य, पदार्थानतिवृत्तावव्ययीभावे यथार्थं तस्मिन्नर्थे यथातथमित्येकं स्यात् । तथा शब्दस्तथशब्दो वासत्यार्थः सत्यमनतिक्रम्य यथातथम् । केचित्तु सत्यार्थे यथा-र्थम्–यथातथमिति नामद्वयमप्याहुः । ' यथार्थमुक्तं भवता नचान्यत् ' । ' गुरुर्यथातथं ब्रूते गोविन्दगुणगायकः ' । इति द्वे सत्यार्थस्य । एवम्–तु–पुनः वै वा इति पञ्च अव-धारणवाचकाः स्युः । केचित्तु वा एवेति पदच्छेदं कुर्वन्ति । सुभूतिस्तु ' स्युरेवन्तु पुनर्वाच' ※ इति पठितवान् । एति, इणः कर्तरि बाहुलकाद्वमि एवम् ' एवमेव यथा प्राह ' । तुदति, तुदेः कर्तरि बाहुलकाड्डुप्रत्यये तु ' रावणं तु दुरात्मानमवधीद्राघवः प्रभुः ' पनते, पनेः कर्तरि बाहुलकादरि, अस्योदादेशेच पुनः ' पुनर्बभाषे वसुदेव-सूनुः ' वाति, वातेः कर्तरि डै प्रत्यये वै । ' धर्मज्ञो व्याससूनुर्वै सज्जनानन्ददायकः ' । वाति, वातेः कर्तरि क्विपि, वा 'स्वामिना तु वचो वोक्तं तन्मे भद्रकरं भवेत्' । अयनम् । इणोभावे वनि, गुणे च एव 'तदेव सत्यं वद मे मुरारे ! ' इति पञ्चावधारणार्थस्य ॥ १५ ॥

अतीतार्थक, निश्चयार्थक, संवत्सरार्थक, पश्चादर्थक, आत्मार्थक.

**प्राग ( तीतार्थकं ) नूनमवश्यं ( निश्चये द्वयम् ) ।**
**संव ( द्वर्षे )ऽ(वरे)त्वर्वागामेवं स्वय (मात्मना) ॥ १६ ॥**

प्रेति–प्रागित्येकं अतीतो अर्थो यस्येति अतीतार्थकं भूतकालार्थकं स्यात् । प्राचि देशे, प्राचोदेशात्, प्राङ्देशो वा । " सप्तमीपञ्चमी–" इत्यस्तातौ, ' अञ्चेर्लुक् ' इति लुकि च प्राक् यथा "प्राक्कर्मकृतं भुङ्क्ते जनो जातो धरातले " इत्येकमतीतार्थकस्य । नूनम्–अवश्यं चेति द्वयं निश्चये अवधारणे स्यात् । नु ऊनयति, नुपूर्वकादूनयतेः कर्तरि बाहुलकादमि प्रत्यये नूनम् " नूनं निश्चिततर्कयोः " ( इति विश्वः ) यथा 'धर्मज्ञो धर्मराजोऽयं नूनं राज्यं प्रपत्स्यते' । अवश्यायते, अवपूर्वात् श्यैङःकर्तरि बाहुल-काड्डुमिप्रत्यये, डित्त्वाट्टिलोपे च अवश्यम् ' अवश्यं यातारश्चिरतरमुषित्वापि विषयाः' इति द्वे निश्चयार्थस्य । संवदित्येकं वर्षे वत्सरे स्यात् । संवयते, संपूर्वाद्वयतेः कर्तरि क्विपि-यलोपे, तुगागमे च, संवदतीति विग्रहे तु कर्तरि विचि वा संवत् यथा " सांप्रतं क्षय, नामकं संवत्प्रवर्तते " इत्येकं संवत्सरस्य । अवरे पूर्वकालतः पश्चादित्यर्थे अर्वागित्येकं

※ "चान्वाचये समाहारे अन्योन्यार्थे समुच्चये । पक्षान्तरे तथा पादपूरणेऽप्यवधारणे" ( इति रुद्रः ) ॥

स्यात्। अर्वन्तमञ्चति, अवरे अञ्चति वा। अस्ताति प्रत्यये, "अञ्चेर्लुक्" इति लुकि पृषोदरादित्वात् अर्वाक् यथा "कुले मृतुत्रयादर्वाक् मण्डनान्नतु मुण्डनम्" इत्येकमवरस्य। आम्—एवं चेति द्वे निश्चयार्थे अङ्गीकारार्थे वा स्याताम्। आमयति, अमतेर्णयन्तात्कर्तरि क्विपि, णिलोपे च आम् "आम् ज्ञानविनिश्चये" (इति वोपालितः) यथा "आंकुर्मो वचनं गुरोः"। अयनम्, इणोभावे बाहुलकाद्दमि, गुणेच एवम् "एवं कृत्वापितुर्वाक्यं रामो मात्रन्तिकं गतः" इति द्वे स्वीकारस्य। स्वयमित्येकं आत्मना इत्यत्रार्थे स्यात्। सुष्ठु अयते, सुपूर्वकादयतेः कर्तरि बाहुलकाद्मिप्रत्यये, यणादेशे च स्वयम् यथा "जायते श्रीपतिः स्वयम्" इत्येकमात्मार्थस्य ॥ १६ ॥

अल्पार्थक, महत्त्वार्थक, बाहुल्यार्थक, अशीघ्रार्थक, नित्यार्थक, बाह्यार्थक, अतीतार्थक, अदर्शनार्थक.

**(अल्पे) नीचै (र्मह) त्युच्चैः प्रायो (भूम्न्यद्रुते) शनैः।**
**सना(नित्ये)बहि(र्बाह्ये)स्मा(तीते)ऽस्त(मदर्शने)॥१७॥**

अल्प इति—नीचैरित्येकं अल्पे अल्पार्थे स्यात्। निचीयते, निपूर्वकाच्चिनोतेः कर्मणि "नौ दीर्घश्च" इति डैसि प्रत्यये, दीर्घे च नीचैः यथा 'तथापि नीचैर्विनयाददृश्यत' इत्येकमल्पस्य। उच्चैरित्येकं महति महत्त्वार्थे स्यात्। उच्चीयते, उत्पूर्वाच्चिनोतेः कर्मणि "उदिचेर्डैसिः" इति डैसौ, चुत्वे, चर्त्वे च उच्चैः यथा "उच्चैरधः पातिपयोमुचोऽपि समूहमूहुः पयसां प्रणाल्यः" इत्येकमुन्नतार्थस्य। प्रायः इत्येकं भूम्नि बाहुल्यार्थे स्यात्। प्रायणम्, प्रपूर्वादयतेर्भावे असुनि प्रायः। यथा "प्रायः साहसिकाः स्त्रियः" इत्येकं बाहुल्यार्थस्य। शनैरित्येकमद्रुते अशीघ्रार्थे स्यात्। शणाति, शानयति वा शणातेः शानयतेर्वा कर्तरि 'ऐस्' प्रत्यये पृषोदरादित्वाणस्यनत्वे ह्रस्वे वा शनैः यथा "शनैरनीयन्त रयात्पतन्तोरथाः क्षितिं हस्तिनखादखेदैः" इत्येकमद्रुतार्थस्य। सना इत्येकं नित्ये नित्यार्थके स्यात्। केचित्तु सना, सनात्, सनदिति नामत्रयं नित्यार्थकमाहुः। सनति, सनतेः कर्तरि बाहुलकादाप्रत्यये सना यथा "सनातनोऽयं पुरुषः पुराणः" आत्प्रत्ययेतु सनात् "सनान्नमस्ये चरणौ मुरारेः" अति प्रत्यये तु सनत् "सनत्कुमारो वचनं बभाषे" इत्येकं नित्यार्थकस्य। बहिरित्येकं बाह्ये बाह्यार्थके स्यात्। वहति, वहेः कर्तरि बाहुलकादिसि प्रत्यये, वबयोरभेदाद्बत्वे च बहिः यथा "बहिर्विकारं प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः" इत्येकं बाह्यार्थस्य। स्मेत्येकं अतीते व्यतीतार्थके स्यात्। स्यति, स्यतेः कर्तरि बाहुलकाड्ड्मप्रत्यये, टिलोपे च स्मयते इति विग्रहे तु "स्मिङो डः" इति डप्रत्यये वा स्म यथा "शीतालुः सलिलगतेन सिच्यते स्म" इत्येकमतीतार्थकस्य। अस्तमित्येकम्, अदर्शने दर्शनाभावे स्यात्। असनम्, अस्यतेर्भावे बाहुलकात्तमि प्रत्यये, निष्ठा प्रत्यये वा मान्तत्वे निपातिते च अस्तम् यथा "उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौहिमधाम्नि याति चास्तम्" इत्येकमदर्शनस्य॥ १७॥

सत्ता, कोपोक्ति प्रश्न, सान्त्वन, तर्क, रात्रिविराम, नमस्कार.

**अस्ति (सत्त्वे) (रुषोक्तावू)मुं (प्रश्ने) (ऽनुनये) त्वयि।**
**हुं (तर्के) स्यादुषा (रात्रेरवसाने) नमो (नतौ) ॥ १८ ॥**

अस्तिति–सत्त्वे सत्तायां विद्यमानतायां वा अस्तीत्येकं स्यात् । असनम्, असतेर्भावे क्तिचि, तौ वा 'अस्ति' "अस्त्याह (शब्दौ) कालसामान्ये तिङन्तप्रतिरूपकौ" (इति त्रिकाण्डशेषः) यथा "मित्रमस्तिधनं कृष्णां पश्येत्याह प्रिया पतिम्" इत्येकं सत्तायाः। रुषा क्रोधेन उक्तौ वचने ऊमित्येकं स्यात्। ऊय्यते, ऊयतेः कर्मणि मुक्ि प्रत्यये, यलोपे च 'ऊम्' यथा "ऊमागतोऽहं शत्रुस्ते पौरुषं दर्शयाशु मे" इत्येकं कोपवचनस्य। प्रश्ने पृच्छायां रुषा प्रश्ने वा उमित्येकं स्यात्। अवनम्, उङो भावे बाहुलकाड्डुमि प्रत्यये, डित्त्वाट्टिलोपे च 'उम्' यथा "उं गच्छसि बहिर्धव" इत्येकं पृच्छायाः। अनुनये सान्त्वने तु अयीत्येकं स्यात्। ईयते, अय्यते वा एतेरयतेर्वा "सर्वधातुभ्य इन्" इतीनि प्रत्यये 'अयि' यथा "अयि विजहीहि दृढोपगूहनम्" अयतेर्बाहुलकादे प्रत्यये तु 'अये' इत्यपि स्यात्। यथा "माकुरु मानिनि मानमये" इत्येकमनुनयस्य। तर्के ऊहे हुमित्येकं स्यात्। हवनम्, जुहोतेर्भावे बाहुलकाड्डुमि प्रत्यये 'हुम्' यथा 'हुं रामो भरतो हुं च' इत्येकं तर्कस्य। रात्रेर्निशाया अवसाने विरामे 'उषा' इत्येकं स्यात्। ओषति, उषेः कर्तरि बाहुलकात्का प्रत्यये कित्त्वाद्गुणाभावे च उषा, असि प्रत्यये तु उषोऽपि "उषा स्याद्रजनीशेषे 'उषः' इत्यपि दृश्यते" (इति रभसः) यथा 'उषातनो वाति वायुः' इत्येकं रजनीशेषस्य। नतौ नमस्कारे नम इत्येकं स्यात्। नमनम्, नमतेर्भावे असुनि प्रत्यये 'नमः' यथा "नमो ब्रह्मण्यदेवाय" इत्येकं नमनस्य ॥ १८ ॥

पुनरर्थक, निन्दार्थक, प्रशंसार्थक, सायंकालार्थक, प्रभातार्थक, समीपार्थक.

**(पुनरर्थे) ऽङ्ग (निन्दायां) दुष्ठु सुष्ठु (प्रशंसने)।**
**सायं (साये) प्रगे प्रातः (प्रभाते) निकषा(न्तिके)॥१९॥**

पुनरिति–पुनरर्थे पुनरर्थके अङ्गेत्येकं स्यात्। अङ्गनम्, अङ्गतेर्भावे घञि, नुमागमे च अङ्ग यथा "मूर्खोऽपि नावमन्यते किमङ्ग विद्वान् किंपुनरित्यर्थः" इत्येकं पुनरर्थस्य। निन्दायां कुत्सायां 'दुष्ठु' इत्येकं स्यात्। दुः स्थानम्, दुःपूर्वकात्तिष्ठतेर्भावे "अपदुः सुषुस्थः" इति कुप्रत्यये, आलोपे, सुषमादित्वात्षत्वे च दुष्ठु-यथा "दुष्ठु खलु त्वम्" इत्येकं निन्दायाः। प्रशंसने प्रशंसायां सुष्ठु इत्येकं स्यात्। सुस्थानम्, सुपूर्वकात्तिष्ठतेर्भावे कौ, आलोपे, षत्वे च सुष्ठु यथा "सुष्ठु काव्यं त्वया कृतम्" इत्येकं प्रशंसायाः। साये दिनान्ते सायमित्येकं स्यात्। सानम्, स्यतेर्भावे बाहुलकाण्णमि प्रत्यये, युगागमे च सायम् यथा "सायं सन्ध्यामुपासिष्ये" इत्येकं दिनान्तस्य।

प्रभाते प्रातःकाले प्रगे, प्रातरित्युभे स्याताम् । प्रगीयते, अत्रेति वा प्रपूर्वकाद्गायतेः कर्मण्यधिकरणे वा बाहुलकात्के, आलोपे, कप्रत्ययेतु " सायंचिरम् " इति सूत्रे अनव्ययस्य प्रगशब्दस्यैत्वे निपातिते वा प्रगे यथा " इत्थं रथाश्वेभनिषादिनां प्रगे गणो नृपाणामथतोरणाद्बहिः " प्रातति, प्रपूर्वकादततेः कर्तरि " प्रादततेररन् " इत्यरनि, प्रातः यथा " रेवतीरमणो रामः प्रातरत्र समागतः " इति द्वे प्रभातस्य । अन्तिके निकटे निकषेत्येकं स्यात् । निकषणम्, निपूर्वकात्कषतेर्भावे " आसमिणनिकषिभ्यामिति " आप्रत्यये निकषा "निकषा पत्तनं नदी वहति" इत्येकं समीपस्य ॥ १९ ॥

पूर्वगत, पूर्वपूर्वगत, वर्तमानवर्ष, आजदिन, पूर्वगत दिनादि·

**परुत्परार्यैषमो ( ऽब्दे पूर्वे पूर्वतरे यति ) ।**
**अद्या (त्राह्न्य) थ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् ॥२०॥**
**तथाधरान्यान्यतरेतरात्पूर्वेद्युरादयः ।**

पेति—पूर्वे अब्दे वत्सरे, पूर्वतरे वर्षे, यति गच्छति वर्तमाने वर्षे च परुत्—परारि—ऐषमश्चैते त्रयः शब्दाः क्रमेण भवन्ति । पूर्वस्मिन् वत्सरे, "उदारी च संवत्सरे" इति उति प्रत्यये विभक्तिलोपे " पूर्वपूर्वतरयोः परः " इति पूर्वस्य परादेशे, निपातनादलोपे च परुत् । यथा " परुन्नागतः कामिनीं कान्तकोऽसौ " एवं पूर्वतरे वत्सरे, " सद्यः परुदिति " आरिप्रत्यये, परादेशे च परारि " परारिनागतं कृष्णो राधां बाधाहरीं प्रियाम् " । अस्मिन्संवत्सरे, " सद्यः परुदिति " समसप्रत्यये, इदम इशादेशे, वृद्धौ च ऐषमः " ऐषमो भगवानिन्द्रो भूरिवृष्टिं करिष्यति " इति त्रीणि पूर्वादिवत्सरस्य । अत्रास्मिन् अहनि दिवसेऽर्थे अद्येत्येकं स्यात् । अस्मिन्नहनि, " सद्यःपरुदिति " इदमोद्ये प्रत्यये, अशादेशे निपातिते च अद्य " अद्यापि सेनातुरगाः सविस्मयैरलूनपक्षा इव मेनिरे जनैः " इत्येकमस्य दिनस्य । अथेत्यनन्तरम् पूर्वोत्तरापरात् तथा अधरान्यान्यतरेतराच्च ' पूर्वेऽह्नि ' इत्यादावर्थे पूर्वेद्युरादयः शब्दा भवन्ति । आदिना ' उत्तरेऽह्नि, अपरेऽह्नि, अन्यस्मिन्नह्नि, अन्यतरस्मिन्नह्नि, इतरस्मिन्नह्नि । द्वितीयेनादि शब्देन उत्तरेद्युः, अपरेद्युः, अन्येद्युः, अन्यतरेद्युः, इतरेद्युरित्यादयः शब्दाः सिध्यन्ति । पूर्वस्मिन्नहनि, " सद्यःपरुदिति " पूर्वशब्दादेद्युसि प्रत्यये, अलोपे निपातिते च पूर्वेद्युः " पूर्वेद्युरिष्यतेप्रातः पूर्वेद्युः पूर्ववासरे " ( इति रुद्रः ) यथा " पूर्वेद्युः प्राह पितरं पूर्णानन्दः परेश्वरः" । उत्तरेऽहनि, उत्तरशब्दादेद्युसि, अलोपे च उत्तरेद्युः "नान्दीमुखादुत्तरेद्युर्विवाहः परिकीर्तितः " । अपरेऽहनि, अपरशब्दादेद्युसि, अलोपे च अपरेद्युः " अपरेद्युर्गमिष्यामि मथुरां माधवप्रियाम् " अधरेऽहनि, अधरशब्दादेद्युसि, अलोपे च अधरेद्युः ‡ " अधरेद्युरधोगत्वा नागनाथं ददर्श सः " । अन्यस्मिन्नहनि अन्यशब्दादेद्युसि, अलोपे च अन्येद्युः " अन्येद्युरात्मानुचरस्य भावम् " । अन्यतर-

‡ " अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वे च वाच्यवदिति " ( कोषान्तरम् ) ॥

स्मिन्नहनि " सद्यः परुदि " त्यादिना निपातिते अन्यतरेद्युः " दृष्ट्वात्वन्यतरेद्युर्मामानन्दुर्मुनयोमलाः " इतरस्मिन्नहनि, इतरशब्दादेद्युसि इतरेद्युः " इतरेद्युर्निरीक्षेहमीशानंपार्वतीप्रियम् " इत्येकैकं क्रमेण ॥ २० ॥

दोनों दिन, पर दिन. **उभयद्युश्चोभयेद्युः ( परेत्वह्नि ) परेद्यवि ॥ २१ ॥**

उभेति–उभयद्युः, उभयेद्युश्चेत्युभौ उभयदिवसवाचकौ स्याताम् । उभयस्मिन्नहनि, " द्युश्चोभयाद्वक्तव्यः " इत्युभयशब्दाद् द्युसि प्रत्यये, विभक्तिलोपे च उभयद्युः । यथा " उभयद्युरुमानाथपादकञ्जं भजाम्यहम् " । एवं " सद्यःपरुदिति " 'एद्युसि' प्रत्यये, अलोपे च उभयेद्युः । यथा "उभयेद्युर्भजे रामं ससीतं लक्ष्मणानुगम्" इति द्वे उभयदिवसस्य । परे अह्नि परदिने तु परेद्यवीत्येकं स्यात् । परस्मिन्नहनि, " सद्यः परुदिति " परशब्दादेद्यवि प्रत्यये, अलोपे निपातिते च ' परेद्यवि ' यथा ' मित्रं दृष्टं परेद्यवि ' इत्येकं परदिवसस्य ॥ २१ ॥

गयादिन, आने वाला दिन,परसों, उसीसमय, एकसमय, सर्व समय. **ह्यो ( ऽतीते ) (ऽनागतेऽह्नि) श्वः परश्वश्च (परेऽहनि) तदा तदानीं युगपदेकदा सर्वदा सदा ॥ २२ ॥**

ह्यसिति–अतीते व्यतीते अह्नि दिवसे ' ह्यः ' स्यात् । यातमहो, ह्यः ' पृषोदरादित्वात्साधुः'। "एषमोह्यःश्वसोऽन्यतरस्यामिति" निर्देशश्चात्रानुकूलः । यथा "ह्योऽभवत्त्वत्पुत्रः " इत्येकमतीतदिनस्य । अनागते आगामिनि अह्नि दिवसे ' श्वः ' स्यात् । आगामि अहः श्वः पृषोदरादित्वात्साधुः । यथा ' श्वोभविता राज्यभारो रामस्य ' इत्येकमागामिदिनस्य । परे अहनि परदिवसे परश्वः स्यात् । परंच तच् श्वश्च, । श्वःपरं वा राजदन्तादित्वात्परनिपातिते च परश्वः । यथा " रामः परश्वः समुपेष्यते माम् " इत्येकं परदिवसस्य । तदा–तदानीमिति द्वे तत्काले स्याताम् । तस्मिन्काले तच्छब्दात् " तदोदाच " इति दा प्रत्यये, त्यदाद्यत्वे, पररूपत्वे च तदा यथा ' तदा चक्षुष्मतां प्रीतिः " दानीम्प्रत्ययेतु तदानीम् । यथा ' यदा स्याद्राधयासंगस्तदानीमेव मे सुखम् " इति द्वे तत्कालस्य । युगपत्–एकदाचेत्युभे एककाले स्याताम् । युवन्त्यस्मिन्काले, यौतेराधारे ' गपतकि ' प्रत्यये । युगं पयतेऽस्मिन्निति विग्रहे तु युगपूर्वकात्पयतेराधारे ' डति ' प्रत्यये वा युगपत् "उदयाद्रिमूर्ध्नियुगपच्चकासतोः" एकस्मिन्काले, एकशब्दात् " सर्वैकान्येति " दा प्रत्यये एकदा " एकदा भगवान्व्यासो वासुदेवं ददर्शह " इति द्वे एकसमयस्य । सर्वदा–सदा चेत्युभे सर्वकाले स्याताम् । सर्वस्मिन्काले, सर्वशब्दात् " सर्वैकान्येति" दा प्रत्यये सर्वदा यथा " तैरस्मान्रक्ष सर्वदा"। " सर्वस्य सोन्यतरस्यामिति " सर्वस्य सादेशे च सदा, यथा " याचन्ते याचकाः सदा " इति द्वे सर्वकालस्य ॥ २२ ॥

अब या इस समय-पूर्व, उत्तर,पश्चिम.

**एतर्हि संप्रतीदानीमधुनासाम्प्रतं तथा।**
**( दिग्देशकालेपूर्वादौ ) प्रागुदक्प्रत्यगादयः ॥ २३ ॥**

**इत्यव्ययवर्गः ॥**

---

अयिति–एतर्हि–संप्रति–इदानीम्–अधुना–तथा साम्प्रतम् एते पञ्च अस्मिन्काले स्युः। अस्मिन् काले, इदम् शब्दाद् " इदमोर्हिल् " इति हिलि प्रत्यये, विभक्तिलोपे " एतेतौरथोः " इत्येतादेशे च एतर्हि यथा " एतर्हि क्रियते कार्यम् " । सम् च प्रति चानयोः समाहारद्वन्द्वे संप्रति यथा " हरत्यघं संप्रति हेतुरेष्यतः " । अस्मिन्काले, इदम् शब्दाद् " दार्नीचेति " दानीं प्रत्यये, विभक्तिलोपे, इशादेशे च इदानीम् यथा " इदानीं नास्ति ते भयम् " । " अधुना " इत्यधुना प्रत्ययेतु विभक्तिलोपे, इशादेशे, " यस्येति " इलोपे च अधुना यथा " नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत्। विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः " । एवं सम् च प्रतिचानयोः समाहार-द्वन्द्वे तस्मात् " प्रज्ञाद्यण् " इत्यणि, वृद्धौ, गणे पाठान्मान्तत्वे निपातिते च सांप्रतम् यथा " मानिनीमानविध्वंसदक्षो जयति सांप्रतम् " इति पञ्चास्य कालस्य। पूर्वः आदिर्यस्मिंस्तस्मिन्पूर्वादौ दिग्देशकाले वाच्ये सति प्रागुदक्प्रत्यगादयः शब्दाः स्युः। प्राच्यांदिशि, प्राच्यादिशः, प्राची दिग् वा। प्राचिदेशे काले च, प्राचोदेशात्, कालाच्च। प्राची शब्दात्प्राक् शब्दाद्वा " दिक्शब्देभ्यः सप्तमी–पञ्चमी–प्रथमाभ्यो दिग्देशकालेष्वस्तातिः " इत्यस्तातौ, " अञ्चेर्लुक् " इत्यस्तातेर्लुकि, " लुक्तद्धितलुकि " इति स्त्रीप्रत्ययस्य लुकि च प्राक् " प्रागेव विद्यमानत्वान्न तेषामिह संभवः " एवम् उदीच्याम्, उदीच्याः, उदीची दिक् वा उदक्। प्रतीच्याम्, प्रतीच्याः, प्रतीचीदिग्वा प्रत्यक्, पूर्वादावित्यादिपदनोत्तर–दक्षिणाऽधरादीनां ग्रहः । ' प्रत्यगादयः ' इत्यादिशब्देन 'उत्तरात्' ' अधरात्, दक्षिणात्, उत्तरेण, अधरेण, दक्षिणेन, दक्षिणा, दक्षिणाहि, दक्षिणतः, उत्तरतः इत्यादयोबोध्याः। उत्तरादिक्, उत्तराशब्दाद् " उत्तराधरदक्षिणादातिः " इत्यातौ, उत्तरात् " उत्तरा त्तुगतो योगी जटाधारी दिगम्बरः " अधरोदेशः, अधरशब्दादाति प्रत्यये अधरात् " अधरात्तु गमिष्यामि " दक्षिणस्यां दिशि, दक्षिणाशब्दादातौ, आलोपे च दक्षिणात् " दक्षिणात्तु ययौ देवः " उत्तरस्यांदिश्यदूरम्, उत्तराशब्दात् " एनबन्यतरस्यामदूरेऽपञ्चम्याः " इत्येनपि, आलोपे च उत्तरेण " उत्तरेण गतो रामः " अधरस्यां दिश्यदूरम्, अधराशब्दादेनपि, आलोपे च अधरेण " अधरेण नदी वहति " दक्षिणस्यां दिश्यदूरम्, दक्षिणाशब्दादेनपि, आलोपे च दक्षिणेन " दक्षिणेन शिवानाथो रमानाथं ददर्श ह " दक्षिणस्यां दिशि दूरम्, दक्षिणाशब्दात् " दक्षिणादाच् " इत्याचि दक्षिणा " दक्षिणा दुर्जना यन्ति " एवमाहि प्रत्यये दक्षिणाहि " दक्षिणाहि वसन्त्यत्र श्वपाकाः पापकारिणः " दक्षिणस्यां दिशि, दक्षिणाशब्दात् " दक्षिणोत्तराभ्यामतसुच् " इत्यतसुचि, दक्षिणतः " ययौ

दक्षिणतःखलः " एवमुत्तरस्यां दिशि, अतसुचि प्रत्यये, आलोपे च उत्तरतः "शिवो-ह्युत्तरतो नित्यं विजह्रे शिवया सह " ऊर्ध्वदेशे, " उपर्युपरिष्टात् " इत्यूर्ध्वशब्दाद्रि-ल्प्रत्यये, ऊर्ध्वस्योपादेशे च उपरि " ग्रामस्योपरि पक्षिणः पतन्ति " एवं रिष्टातिल-प्रत्यये उपरिष्टात् " उपरिष्टान्नारदोभ्यागात् " अधरस्यां दिशि, अस्तातिप्रत्यये, अधा-देशे च अधस्तादित्यादयोऽवगन्तव्या इति ॥ २३ ॥

इत्यव्ययवर्गः ॥

---

## अथ लिङ्गादिसंग्रहवर्गो व्याख्यायते ।

**सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासजैः ।**
**अनुक्तैः संग्रहे लिङ्गं संकीर्णवदिहोन्नयेत् ॥ १ ॥**

सलिङ्गेति–सलिङ्गशास्त्रैः लिङ्गबोधकानि तानि शास्त्राणि लिङ्गशास्त्राणि "शाक-पार्थिवादित्वान्मध्यमपदलोपः " । लिङ्गशास्त्रैःसहिताःसलिङ्गशास्त्रास्तैर्लिङ्गानुशा-सनसहितैः सन्नादिर्येषामितिसन्नादयश्च कृतश्च तद्धिताश्च समासाश्चतेभ्योजायन्ते येतैरिति । ' सन्नादिप्रत्ययजैः ' चिकीर्षा, लोलूया, कण्डूया, पुत्रकाम्येत्यादिभिः । ' कृत्प्रत्ययजैः ' क्तिन्नाद्यन्तैः, भूतिः, इष्टिः, कृतिः, स्मृतिरित्यादिभिः । ' तद्धितप्रत्य-यजैः, अणाद्यन्तैः औपगवः, औपगवी, गार्ग्यः, गार्गीत्यादिभिः । समासजैः, समास-प्रयुक्तलिङ्गभाग्भिः संज्ञापरिभाषम्, बदरामलकमित्यादिभिः । अनुक्तैः प्रागनुक्तैः शब्दैः संग्रहः क्रियतइति शेषः । इहास्मिन्संग्रहे लिङ्गसंग्रहवर्गे लिङ्गं संकीर्णवत् संकीर्णवर्गवत् उन्नयेत्तर्कयेदिति ( अस्यायंभावः ) संकीर्णवर्गे यथा प्रकृतिप्रत्ययाद्यर्थैर्लिङ्गोहनमनुक्त-लिङ्गशब्दविषयम्–तथात्रापि सलिङ्गशास्त्रादिभिर्लिङ्गोहनमनुक्तलिङ्गशब्दविषयं बोध्यम् । तत्र प्रकृत्या यथा " अर्धर्चाः पुंसि च " अर्धर्चः, अर्धर्चमित्यादि । प्रत्ययेन " स्त्रियांक्तिन् " " पुंसि संज्ञायां घः " " नपुंसके भावे क्तः " इत्यादिभिः । प्रकृतिप्रत्ययाद्यर्थैरित्यादिशब्देन क्रियाविशेषणानां क्लीबत्वमेकवचनान्तत्वं च ज्ञेयम् । तेन " सुखं सुष्वाप पिङ्गला " इत्यादिसिद्धम् । नन्वत्रकृत्प्रत्ययजैरित्यनयैवोक्त्या चि-कीर्षा,पुत्रकाम्येत्यादीनामपिसंग्रहे सिद्धे पृथक्सन्नादिपदोपादानं किमर्थमितिचेत् ? गोब-लीवर्दन्यायेन, ब्राह्मणवसिष्ठन्यायेन वा प्राधान्यसूचनार्थमिति बोध्यम् ॥ १ ॥

लिङ्गशेषविधि, ईदन्त–ऊदन्त–एकस्वर–भगस मेत प्राणिनाम.

**लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः ।**
**स्त्रियामीदूद्विरामैकाच्सयोनिप्राणिनाम च ॥ २ ॥**

लिङ्गेति–लिङ्ग्यन्ते चिह्न्यन्ते ज्ञायन्ते पुंस्त्रीनपुंसकतया शब्दा अनेनेति लिङ्गम्– तस्य शेषोऽवशेषस्तस्यविधिः यदि विशेषैरत्रोक्तैः प्रागुक्तैश्च अबाधितो बाधितो न भवति तदा व्याप्नोतीति व्यापी काण्डत्रयस्य व्यापकः स्यात् । उत्सर्गत्वात् " अपवा-

दविषयं विहायोत्सर्गः सर्वत्र प्रवर्तत" इति । स्त्रियामित्यधिक्रियते–ईश्च ऊश्च तौ विरामे विरामावन्तौ वा यस्य तच्च तदेकाच्च स्त्रियां स्यात् । यथा श्रीः, धीः, ह्रीः, भ्रूः, सूः, द्रूः, जूः, लवनं लूः, भवनं भूः । "नयतीति नीः, लुनातीति लूः" इत्यादौ तु परत्वात् "कृतः कर्तरि" इति वाच्यलिङ्गता भवति । योनिर्भगं तत्सहितानां प्राणिनां नाम च स्त्रियां स्यात् । यथा माता, दुहिता, याता, पोता, ननान्दा, स्त्री "दाराः पुंभूम्नीति" विशेषोऽवगम्यते ॥ २ ॥

बिजली आदि. अदन्त शब्दों के साथ द्विगुसमास, पात्राद्यदन्त का निषेध.

**नाम विद्युन्निशावल्लीवीणादिग्भूनदीह्रियाम् ।**
**अदन्तैर्द्विगुरेकार्थो न स पात्रयुगादिभिः ॥ ३ ॥**

नामेति–विद्युदादीनामष्टानां नाम स्त्रियां स्यात् । विद्युत्=तडित् । निशा=रात्रिः, रजनिः । वल्ली=वीरुत् । वीणा=विपञ्ची, इत्यादौ 'ङ्याबूङन्तम्' इति सिद्धे वीणाग्रहणं चिन्त्यम् । केचित्तु वीणास्थाने वाणीं पठन्ति । वाक्, गौः, गीः । दिक्, हरित् । भूः, भूमिः कुः । सरित्, विपाट् । ह्री ग्रहणं चिन्त्यम् । "ईदूद्विरामैकाच्" इति–' त्रपादौ "ङ्याबूङन्तम्" इति च सिद्धत्वात् । "केचित्तु धियामिति पठन्ति" । संवित्, चित्, प्रतिपदित्यादि । एकोऽर्थो यस्येति एकार्थः "द्विगुरेकवचन" मित्यनेन समाहारे एकत्वविधानात् । अदन्तैरुत्तरपदैः सह यो द्विगुः स स्त्रियां स्यात् । यथा दशानां मूलानां समाहारो दशमूली, त्रयाणां लोकानां समाहारस्त्रिलोकी, पञ्चाक्षराणां समाहारः पञ्चाक्षरी । 'अदन्तैः किम्' । पञ्चकुमारि, दशधेनु । 'एकार्थः किम्' । पञ्चकपालः, पञ्चकपालौ । पञ्चकपालाः । पात्रयुगादिभिरदन्तैर्यो द्विगुः स स्त्रियां न स्यात् । यथा पञ्चपात्रम्, चतुर्युगम्, त्रिभुवनम्, त्रिपुरम् । भाष्ये तु त्रिपुरीत्येव दृश्यते ॥ ३ ॥

भावाद्यर्थक, समूहार्थक, वैर मैथुनिकाद्यर्थक, स्त्रीभावाद्यर्थक.

**तल् (वृन्दे) येनिकट्यत्रा वैरमैथुनिकादिवुन् ।**
**(स्त्रीभावादाव)निक्तिण्ण्वुल्णच्ण्वुक्यब्युजिञङ्निशाः ४**

तलिति–भावादौ विहितं तलन्तं स्त्रियां स्यात् । शुक्लस्य भावः, शुक्लता । ग्रामाणां समूहो, ग्रामता । गवां समूहो, गोता । ब्राह्मणस्य कर्म, ब्राह्मणता । वृन्दे समूहे यश्च इनिकट्यत्राश्च तदन्तं स्त्रियां स्यात् । पाशानां समूहः, पाश्या । खलानां समूहः, खलिनी । शाकानां समूहः, शाकिनी । रथानां समूहो, रथकट्या । गवां समूहो, गोत्रा । वृन्द किम् । मुखे भवो, मुख्यः । दण्डोऽस्यास्तीति, दण्डी । "द्वन्द्वाद्वुन्वैरमैथुनिकयोः" इति वुनि, अकादेशे च अश्वश्च महिषश्च तयोर्वैरम्, अश्वमहिषिका । काकश्च उलूकश्च तयोर्वैरम्, काकोलूकिका । अत्रिश्च भरद्वाजश्च तयोर्मैथुनिका, अत्रिभरद्वाजिका । कुत्सश्च कुशि-

कश्च तयोर्मैथुनिका=कुत्सकुशिकिका । आदिना " पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च" । "दण्डव्यवसर्गयोश्च" इति वुनो ग्रहणम् । वीप्सायां द्वौ द्वौ पादौ ददाति, द्विपदिकां ददाति । द्वे द्वे शतं ददाति, द्विशतिकां ददाति । दण्डे-द्वौपादौ दण्डितः, द्विपदिकाम् । द्विशतिकां व्यवसृजति ददातीत्यर्थः । वैरेत्यादि किम् । " वासुदेवार्जुनाभ्यां वुन् " वासुदेवोभक्तिरस्य वासुदेवकः । वुनो ग्रहणं ' वुञ ' उपलक्षणम् । " कचिद्वुरितिपाठः " " गोत्रचरणाच्श्लाघात्याकारतदेवेतेषु " वुञ् । गार्गिकया श्लाघते । काठिकया विकत्थते । " द्वन्द्वमनोज्ञादिभ्यश्च " वुञ् शिष्यश्च उपाध्यायश्च तयोर्भावः, शैष्योपाध्यायिका । स्त्रियांभावादिस्तस्मिन्। स्त्रियामित्यधिकारे अकर्तरि कारके च,ये अन्यादयः प्रत्ययास्तदन्तं स्त्रियां स्यात् । " आक्रोशे नञ्यनिः " न करणम्, अकरणिः । न जीवनम्, अजीवनिस्ते शठ ! भूयात् । " स्त्रियां क्तिन् " करणं, कृतिः । भवनं, भूतिः । ' ण्वु ' इति ण्वुल्-ण्वुचोः सामान्यग्रहणम् । "रोगाख्यायां ण्वुल्बहुलम् " प्रच्छर्दनम्, प्रच्छर्दिका । प्रवहणम्, प्रवाहिका । " धात्वर्थनिर्देशे ण्वुल्वक्तव्यः " आसनम, आसिका । शयनम्, शायिका । " पर्यायार्हणोत्पत्तिषु ण्वुच्" इति ण्वुचि । भवतः शायिका । भवानिक्षुभक्षिकामर्हति । "कर्मव्यतिहारे णच् स्त्रियाम् । इति णच्-तदन्तात् " णचः स्त्रियामञ् " अञन्तत्वाट्टिड्ढेति ङीप् । व्यवक्रोनम्, व्यावक्रोशी । व्यवहसनं व्यावहासी । व्यत्युक्षणं व्यात्युक्षी । "व्रजयजोर्भावे क्यप् " व्रजनं, व्रज्या । यजनम्, इज्या । " संज्ञायां समजनिषद्–" इति क्यपि । समजन्त्यस्यामिति समज्या=सभा । निषीदन्त्यस्यामिति निषद्या=आपणः । विदन्त्यनयति विद्या[1]। स्त्रीभावादौ किम् । "वदः सुपि क्यप् च" ब्रह्मणो वदनं, ब्रह्मोद्यम् । " भुवो भावे " इति क्यप् । ब्रह्मणो भवनं, ब्रह्मभूयम् । "ण्यासश्रन्थोयुच् " इति युचि, कारणं, कारणा । कामनं, कामना । " विभाषाख्यानपरिप्रश्नयोरिञ्च " । का त्वं कारिं गर्णि वाकार्षीः ? सर्वां कारिं गर्णि वाकार्षम् । " षिद्भिदादिभ्योऽङ् " पचनम्, पचा । त्रपणम्, त्रपा । भेदनम्, भिदा । छेदनम्, छिदा । "अ प्रत्ययात्" इत्यप्रत्यये चिकीर्षणं, चिकीर्षा । पुत्रीयणं, पुत्रीया । "गुरोश्च हलः" ईहनम्, ईहा । ऊहनम्, ऊहा । " ग्लाम्लाज्याहाभ्यो निः " ग्लानम्, ग्लानिः । म्लानम्, म्लानिः । ज्यानम्, ज्यानिः । हानम्, हानिः । " कृञः शच " करणम्, क्रिया । एषणम्, " इच्छा " इति सूत्रेण इषेः 'श' प्रत्यये इच्छा=वाञ्छेति यावत् ॥ ४ ॥

औणादकन्यन्त, ऊदन्त, ईदन्त, ङ्यन्त, आबन्त, चल,स्थिर, जिस खेल में मार पीट हो वहां ण प्रत्यय का होना.

**उणादिषु निरूरीश्च ङ्याबूङन्तं चलं स्थिरम् ।**

**(तत्क्रीडायां प्रहरणं) चेन्मौष्टा पाल्लवा "णदिक्"॥ ५ ॥**

१-अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्याह्येताश्चतुर्दश ॥ १ ॥

उणेति—उणादिषु उणादौ निरूरीश्च न्यन्तम्, ऊदन्तम्, ईदन्तं च स्त्रियां स्यात्। यथा " वीज्याज्वरिभ्यो निः " नि प्रत्यये, बाहुलकात्सत्वे च वेणिः " वेणिः स्यात्केशविन्यासः प्रवेणिश्च स्त्रियामुभे " ( इति कोषान्तरम् ) ज्यानिः, जूर्णिः। " सृवृषिभ्यां कित् " सृणिरङ्कुशः। " वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्योनित् " श्रेणिः= पङ्क्तिः। श्रोणिः=कटिः। द्रोणिः=जलसेचिनी। " अनिरिति पाठान्तरम् "। " अर्तिसृधृधम्यश्यवितृभ्योऽनिः " अनिप्रत्यये धरणिः=पृथ्वी। धमनिः=नाड़ी। सरणिः=पद्धतिः। " कृषिचमितनिधनिसर्जिखर्जिभ्यऊः " कर्षूः " कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यांस्त्रियां मता " चमूः=सेना। " अवितृस्तृतन्त्रिभ्य ईः " अवीर्नारीरजस्वला। तरीर्नौः। स्तरीर्धूमः। तन्त्री वीणादेर्गुणः। ङीच आप्च ऊङ्च अन्ते यस्य तत् ङ्यावूङन्तं स्त्रियां स्यात्। कदली " कदली हरिणान्तरे। रम्भायां वैजयन्त्यां च ( इति हैमः ) कन्दली " कलध्वनौ कन्दली तु मृगगुल्मप्रभेदयोः " (इति मेदिनी) रमा=लक्ष्मीः। गङ्गा[1]=देवनदी। वामोरूः। करभोरूः। चलं जंगमं स्थिरं स्थावरं च स्त्रियां स्यात्। चले यथा नारी, शिवा, ब्रह्मवधूः। स्थावरे नाडी, खट्वा, अलाबूः। चरस्थिरग्रहणं चिन्त्यप्रयोजनम्। अन्यस्य व्यवच्छेद्यस्याभावात्। तत्प्रहरणं क्रीडायांचेत्तदा मौष्टा—पाल्लवा च स्यात्। " तदस्यां प्रहरणमिति क्रीडायां णः " इति 'ण' प्रत्यये, मुष्टिः प्रहरणमस्यामिति मौष्टा। पल्लवाः प्रहरणमस्यामिति पाल्लवा। इति णस्य दिगुदाहरणम्। नतु परिगणनम्। तेन मुसलप्रहरणमस्यामिति मौसला। ' दण्डः प्रहरणमस्यामिति दाण्डा ' इत्यादि सिद्धम्॥ ५॥

घञन्त से ञ प्रत्ययका होना, फगुई, शिकार, स्वधा.

**घञो ञः सा क्रियास्यांचेद्दाण्डपाता हि फाल्गुनी।**
**श्यैनंपाता 'च' मृगया तैलंपाता स्वधे (ति दिक्)॥६॥**

घञ इति—सा घञन्तपदवाच्या दण्डपातादिक्रिया अस्यामिति सप्तम्यर्थे वर्तते चेत्तदाघञो घञन्तात् ञः प्रत्ययः स्यात् सच स्त्रियाम्। " घञः सास्यां क्रियेति ञः " घञन्तात्क्रियावाचिनः प्रथमान्तादस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे ञप्रत्ययः स्यात्। दण्डपातोऽस्यां फाल्गुन्यां वर्तते, दाण्डपाता फाल्गुनी। श्येनपातोऽस्याम्। तिलपातोऽस्यां वर्तते। उभयत्रापि " श्येनतिलस्य पाते ञे " इति मुमागमे श्यैनंपाता=मृगया। तैलंपाता=स्वधा " पितृदाने स्वधा मता " (इत्यमरमाला) वररुचिना तु " स्वधा क्रिया प्रवेणीति " स्त्रीलिङ्गतोक्ता इति दिक् उदाहरणम्। 'श्येनतिलस्य' किम्। दण्डपातोऽस्यां तिथौ वर्तते इति दाण्डपातातिथिः। मूसलपातोऽस्यां भूम्यां वर्तत इति मौसलपाता भूमिरित्यादिज्ञेयम्॥ ६॥

---

[1]—" गङ्गा गङ्गेति योब्रूयाद्योजनानां शतैरपि। मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति " ( इति पुराणान्तरम् )॥

अल्पत्व विवक्षा में मृणाली आदि, लङ्का, निर्गुण्डी या नेवारी, निरन्तरव्याख्या, धवई, निश्शेष पदव्याख्या, अरहर या तोरई.

**( स्त्री स्या ) त्काचिन्मृणाल्यादि (र्विवक्षापचये यदि)।**
**लङ्का शेफालिका टीका धातकी पञ्जिकाऽऽढकी ॥ ७ ॥**

स्त्रीति–यदि अपचये अल्पत्वे विवक्षा वक्तुमिच्छा स्यात्तदा मृणाल्यादिः काचित्स्त्री स्यात्। अल्पं मृणालम्, गौरादित्वान्ङीषि ' मृणाली ' आदिना कुम्भी, प्रणाली, मुशली, छत्री, पटी, मठी। काचिदितिकम्। अल्पवृक्षो वृक्षकः। ङ्या–वृङ्न्तमिति सिद्धे नामानुशासनार्थो लङ्कादीनां पाठः। भङ्गयादीनामुभयानुशासनार्थः। शेफालिकादीनां तु व्यर्थः स्वपर्यायपठितत्वात्। लाक्यते सुखमस्यामिति विग्रहे लाकयतेश्चौरादिकादधिकरणे " एरच् " इत्यचि, घञि वा पृषोदरादित्वाद्ध्रस्वे, नुमागमे नुम्यनुपधत्वाद् वृद्ध्यभावे च रमन्तेऽस्यामिति विग्रहे तु बाहुलकात्के, लत्वे, मस्यानुस्वारे, परसवर्णे च लङ्का " लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च " ( इति मेदिनी ) शेते इति विग्रहे ' विचि ' शेः ' शयं फालयतीति ' अणि, स्वार्थे कनि, कनि वा शेफालिका=पुष्पविशेषः। टीक्यतेऽर्थोऽनयेति टीकतेः करणे " गुरोश्च हलः " इत्यप्रत्यये, टापि च टीका " निरन्तरव्याख्या विषमपदव्याख्या च "। धातुं करोति, णिचि, टिलोपे, कनि, पिप्पल्यादित्वान्ङीषि च धातकी =धातृपुष्पिका। पिञ्ज्यतेऽर्थोऽस्यामिति " पिजि भाषार्थः " अस्माच्चौरादिकादधिकरणे " गुरोश्च हलः" इत्यप्रत्यये, पृषोदरादित्वादिकारस्याकारे, स्वार्थेकनि च। पिञ्जयतीति विग्रहे तु कनि वा पञ्जिका=निश्शेषपदस्य व्याख्या। "पच्यन्ते व्यक्तीक्रियन्ते पदार्था अनयेति विग्रहे तु पञ्चिका[1] च " आयव्ययलिखनार्था ( इति मुकुटः )। आसमन्ताड्ढौकते, ढौक्यते वा ' अचि, घञि ' वा पृषोदरादित्वादौकारस्याकारे, गौरादित्वान्ङीषि च आढकी " आढकी तु तुवर्यां स्त्री परिमाणान्तरे त्रिषु " ( इति मेदिनी ) तुवर्यां आढकी स्त्री स्यात्। परिमाणान्तरे ' त्रिषु,' भवतीति ज्ञेयम् ॥ ७ ॥

सीध, मैना, हिचकी, बनमक्खी, लूका, चींटी, तेंदुआ, किनका भर, टेढ़ाई, सुरंग, सूजी, पत्ते का सिरा.

**सिध्रका सारिका हिक्का प्राचिकोल्का पिपीलिका।**
**तिन्दुकी कणिका भङ्गिः सुरङ्गासूचिमाढयः ॥ ८ ॥**

सिध्रेति–सेधति, सिद्ध्यते वा सिधेः कर्तरि, कर्मणि वा " स्फायितञ्चीति " रकि, स्वार्थे कनि, क्षिपकादित्वादित्त्वाभावे च सिध्रका ' सीध ' इति प्रसिद्धो वृक्ष-

---

१—" पञ्चिका क्रियते लघुः " ( इति वोपदेवः ) ॥

भेदः । सरति, सरतेः कर्तरि ' ण्वुलि ' वृद्धौ, अकादेशे, टापि च सारिका । शृणाति दुःखं विरहिणीनामिति, विग्रहे तु शृणातेः कर्तरि ' ण्वुलि ' शारिका तालव्यादिरपि । पक्षिभेदो " मैना " इति ख्यातो वा । हिक्कनम्, हिक्कतेर्भावे " गुरोश्च हलः " इत्यप्रत्यये–हिक्यते इति विग्रहे तु पचाद्यचि, टापि च हिक्का=ऊर्ध्वे वातप्रवृत्तौ शब्द विशेषः । प्राचति प्रपूर्वकाद् ' अचु गतौ ' अस्मात्कर्तरि ' ण्वुलि ' प्राचिका=वनमक्षिका, पक्षिभेदो वा । ओषति, ओष्यते वा " शुकवल्कोल्काः " इति ककि, षस्य लत्वे च उल्का=तेजः पुञ्जः । अपि पील्यते, अपि पूर्वकात् ' पील प्रतिष्टम्भे ' अस्मात्कर्मणि घञि " वष्टिभागुरिरिति " अलोपे, स्वार्थे कनि, टापि च पिपीलिका । स्वामिमते तु " शनैर्याति पिपीलकः " इति पुंस्त्वमपि । तिम्यति, तिमेः कर्तरि बाहुलकादुकषि, गुणाभावे, ङीषि च तिन्दुकी=कालस्कन्धः तेंदुआ इति ख्यातो द्रुमविशेषः । कणति, कणेः कर्तरि पचाद्यचि, स्वार्थे ' कनि ' कणिका=अति सूक्ष्मम् । भङ्गस्य करणम्, " तत्करोतीति " णिजन्ताद्भावे " अचइः " इति 'इ' प्रत्यये भङ्गिः= विच्छित्तिः, कौटिल्यभेदो वा । " व्याजच्छलनिभे भङ्गिर्वैदर्भीतनमीलिका " ( इति रभसः ) सुबहु रज्यतेऽस्यां रजसा सुपूर्वकाद्रञ्जेराधारे " हलश्च " इति घञि, " चजोरिति " कुत्वे टापि च सुरङ्गा=तिर्यग्भूखातः । सूच्यतेऽनया, ' सूच पैशुन्ये ' अस्माच्चौरादिकात्करणे " अचइः " इतीप्रत्यये सूचिः । " स्त्री सूचिर्नृत्यभेदे च व्यधनी शिखयोरपि " ( इति रत्नकोषः ) । महनम्, मह्यतेऽनयेति वा महतेर्भावे साधने वा क्तिनि, ढत्वे, धत्वे, ष्टुत्वे, ढलोपे, दीर्घे च माढिः " माढिः पत्रशिरा " ( इति रत्नकोषः ) " माढिः स्त्री पत्रभङ्गौ च दैन्यस्यापि प्रकाशने " ( इति मेदिनी ) पत्रभङ्गौ दैन्यस्यापि प्रकाशने च माढिः स्त्री स्यादिति ॥ ८ ॥

सेमर या भात आदि का मांड़, वितण्डावाद, कौड़ी, सौ कौड़ी, साड़ी या कसौटी, कछुई, झरना, दान, कथरी, कुर्सी, तोंदी, कचहरी.

**पिच्छा वितण्डा काकिण्यश्चूर्णिः शाणी द्रुणी दरत् ।**
**सातिः कन्था तथासन्दी नाभी राजसभापि च ॥ ९ ॥**

पिच्छेति–पिच्छयते, ' पिच्छ बाधे ' अस्माच्चौरादिकादित्कर्मणि " गुरोश्च हलः " इत्यप्रत्यये, टापि च पिच्छा=शाल्मलिनिर्यासो भक्तादिमण्डश्च । वितण्ड्यते परपक्षोऽनयेति, विपूर्वकात् ' तडि आघाते ' अस्मात्साधने " गुरोश्च हलः " इत्यप्रत्यये, टापि च वितण्डा=वादभेदः । ककनम्, ' कक लौल्ये ' अस्माद्भावे घञि काकः, काकमणतीति विग्रहे " कर्मण्यण् " इत्यणि, पृषोदरादित्वादकारस्येकारादेशे, ङीपि च काकिणी " पणगण्डकयोस्तुर्य उदमानस्य काकिणी " ( इति रुद्रः ) रभसस्तु नान्तेष्वप्याह " पणोदमानगण्डानां तुर्यांशेऽपि काकिनी " तत्र ' अन प्राणने ' धातु-

बोध्यः । आढकस्य पञ्चाशत्तमोभागः उद्मानः ( ध्वनितं हि गणितावल्याम्-) कुल्या स्यादष्टभिर्द्रोणैर्द्रोणपादेन चाढकम्। अतोर्धशतिकोभाग उदमानमुदाहृतमिति "। " चूर्णो धूलौ क्षारभेदे चूर्णानिवासयुक्तिषु " ( इति मेदिनी ) चूर्णस्य करणम्, " तत्करोतीति " णिजन्ताद्भावे " अचइः " इतीप्रत्यये चरणं चोरणं वेति विग्रहे तु " घृणि-पृश्नि-पार्ष्णि-चूर्णि-भूर्णीति " निपातिते च चूर्णिः=कपर्दकशतम् । शणस्य विकारः, " तस्य विकारः " इत्यणि, टिड्ढेति " ङीपि, शाणी=प्रावरण-भेदः, निकषः ' इति स्वामी'। शाण इत्यन्ये । द्रुणाति, द्रुणतेः कर्तरि " इगुपधेति ' के " जातेरस्त्रीति " ङीषि च द्रुणी " द्रुण्यम्बुद्रोणीकच्छप्योः " ( इति मेदिनी ) दरणम्, दीर्यते वा दरतेर्द्दणातेर्वा भावे, कर्मणि वा " शृदृभसोऽदिः " इत्यदि प्रत्यये दरत् " दरत्स्त्रियां प्रपातेऽपि भयपर्वतयोरपि " ( इति मेदिनी ) सानम्, स्यतेर्भावे ' क्तिनि ' ' द्यतिस्यतिमास्था ' इतीत्त्वे प्राप्ते ' ऊतियूतिजूतीति ' इत्त्वाभावे निपातिते च सननमिति विग्रहे तु सनोतेर्भावे क्तिनि " जनसन "इत्यात्वे वा सातिः " सातिर्दा-नावसानयोः " ( इति हैमः ) । कम्यते, कमेःकर्मणि बाहुलकात्थनि कन्था " कन्था मृन्मयभित्तौ स्यात्तथा प्रावरणान्तरे " ( इति मेदिनी ) आस्यतेऽस्यामिति, अब्दा-दयश्चेति साधुः । आसन्दी-" वेत्रासनमासन्दी स्त्री वृषी च व्रतिकासनम् " ( इति कोषान्तरम् ) नभ्यतेऽनयाऽस्यां वा नभेःसाधनेऽधिकरणे वा " इञजादिभ्यः " इतीञ्प्रत्यये, ञित्त्वाद्वृद्धौ च नाभिः " नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्। द्वयोः प्राणिप्रतीकेस्यात्स्त्रियां कस्तूरिकामदे " (इति मेदिनी) राज्ञां सभा राजसभा ॥ ९ ॥

झालरि, गीत-भेद, गगरी, हो-राशास्त्र, गौरैया चिड़िया, मत्स्य विकार, लाह, लीख, कुल्ला, वातरोग, चौंसी, रोशनाई.

**झल्लरी चर्चरी पारी होरा लट्वा (च) सिध्मला ।**

**लाक्षा लिक्षा (च) गण्डूषा गृध्रसी चमसी मसी ॥१०॥**

## इति स्त्रीलिङ्गशेषः ॥

झल्लेति-झर्भ्यते ' झर्झ परिभाषणहिंसातर्जनेषु ' अस्माद्भौवादिकात्कर्मणि बाहुलकादरनि, पृषोदरादित्वाद्रझयोर्लत्वे च, गौरादित्वान्ङीषि च झल्लरी "झल्लरी झिल्लरी च द्वे हुडुके बालचक्रके " ( इति मेदिनी ) चर्च्यते, ' चर्च परिभाषण-भर्त्सनयोः ' अस्मात्तौदादिकात्कर्मणि बाहुलकादरनि, गौरादित्वान्ङीषि, चर्चरी= " चर्चरी गीतभेदे च केशभित्करशब्दयोः " ( इति कोषान्तरम् ) । पारयति, पार्य्यते वा ' पॄ पूरणे ' अस्माच्चौरादिकात्कर्तरि ' पचाद्यचि ' कर्मणि ' घञि ' वा गौरादित्वान्ङीषि च पारी " कर्करी पूरयोः पारी पादरज्ज्वां च हस्तिनः " ( इति विश्वः ) । होलति, हुल्यते वा " हुल हिंसासंवरणयोः " अस्माद्भौवादिकात्कर्तरि

'पचाद्यचि' कर्मणि घञि वा रलयोरेकत्वाद्रत्वे, टापि च होरा—"होरा तु लग्ने राश्यर्धे रेखाशास्त्रभिदोरपि" ( इति मेदिनी ) लटति 'लट बाल्ये' अस्माद्भौवादिकात्कर्तरि "अशृप्रुषिलटीति" कनि, टापि च लट्वा—"लट्वा करञ्जभेदेऽपि फलेऽवद्ये-खगान्तरे" ( इति मेदिनी ) सिध्ममस्त्यस्याः "सिध्मादिभ्यश्च" इति लचि, टापि च सिध्मला—"सिध्मला मत्स्यविकृतौ वाच्यवत् किलासिनि" ( इति मेदिनी ) लक्ष्यते, 'लक्ष आलोचने' अस्माच्चौरादिकात्कर्मणि घञि पृषोदरादित्वा "लाक्षा-रोचना" इति निर्देशाद्वादीर्घे, टापि च लाक्षा=द्रुमामयः । लक्ष्यते, लक्षयतेः कर्मणि घञि, पृषोदरादित्वादस्य इत्वे, टापि च लिक्षा=यूकाण्डम् । गण्ड्यते 'गडि वदनैक-देशे' अस्माद्भौवादिकाद् "गण्डेश्च" इत्यूषनि, टापि च गण्डूषा "उन्नतनाभिस्तु गण्डूषा नापि मुखपूर्तिः" ( इति वोपालितः ) गृध्रमपि स्यति, गृध्रपूर्वकात्स्यतेः कर्तरि "आतोनुपसर्गे—" इति के, आलोपे, गौरादित्वान्ङीषि च गृध्रसी, ऊरुसन्धौ वातरोगः। चम्यते, चमतेः कर्मणि "अत्यविचमितमीति" असचि, गौरादित्वान्ङीषि च चमसी "चमसो यज्ञपात्रस्य भेदेऽस्त्रीपिष्टके स्त्रियाम्" ( इति मेदिनी ) मस्यति, मस्यतेः कर्तरि "सर्वधातुभ्य इन्" इतीनि, "कृदिकारादिति" वा ङीषि, मसी-मसिर्वा अतएव "अथ स्त्रीपुंसयोः केलिर्मणिर्योनिर्मसिर्मुनिः" (इति त्रिकाण्डशेषः) संगच्छते । मषति हिनस्ति औज्ज्वल्यमिति विग्रहे तु मषतेः कर्तरि 'पचाद्यचि' ङीषि च मषी मूर्धन्योपधोऽपि "मलिनाम्बु मषी-मसी" इति हैमाद् बोध्यम् ॥ १० ॥

इति स्त्रीलिङ्गशेषविवरणम् ॥

---

## अथ पुंलिङ्गसंग्रहो व्याख्यायते ॥

सभेद-सानुचर-सपर्याय, देव और दैत्य, स्वर्ग, याग, पर्वत, मेघ, समुद्र, वृक्ष, समय, तरवार, बाण, वैरी.

**पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः ।**
**स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः ॥ ११ ॥**

पुमिति—सह भेदैरनुचरैश्च वर्तमानाः सभेदानुचराः, सहपर्यायैर्वर्तमानाः सपर्यायाः सुराश्च असुराश्च देवा दैत्याश्च पुंस्त्वे स्युः । यथा अमरा निर्जरा देवाः । सुरभेदाः—तुषिताः, साध्याः, आभास्वराः, इन्द्रः, शक्रः, सूर्यः, आदित्यः । देवानुचराः—हाहाः, हूहूः, तुम्बुरुः, नारदः, मातलिः, । असुरपर्यायाः—दैत्याः, दैतेयाः, दानवाः । दैत्य-भेदाः—बलिः, नमुचिः, जम्भः । दैत्यानुचराः—कूष्माण्डमुण्डकुम्भाण्डादयः । "दैव-तानि देवताः" इत्यादौ बाधोऽस्य । स्वर्गादय एकोनविंशतिः सभेदाः सपर्यायाश्च पुंसि स्युः । स्वर्गः, नाकः, त्रिदिवः । "द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम्" इति विशेषैर्बाधितः । यज्ञः, मखः, क्रतुः । तद्भेदाः—उक्थातिरात्राग्निष्टोमाश्वमेधाः । अद्रिः,

गिरिः, पर्वतः । भेदाः–मेरुः, हिमवान्, सह्यः 'गन्धमादनमिति' बाधः । मेघः, घनः, जलदः । भेदाः–पुष्करावर्तकादयः । 'अभ्रमिति तु बाधः' अब्धिः, समुद्रः, सागरः । भेदाः–क्षीरोदः, लवणोदः । द्रुः, वृक्षः, शाखी । भेदाः–प्लक्षः, वटः, आम्रः । "पाटला शिंशपादेर्बाधः" । कालः, दिष्टः, समयः । भेदाः–मासः, पक्षः, ऋतुः "दिनतिथ्यादौ बाधः" । असिः, खड्गः, मण्डलाग्रः । भेदाः–नन्दकः, चन्द्रहासः "कटित्रमित्यादौ बाधः" । शरः, बाणः, विशिखः । भेदाः–नाराचः, काण्डः, भल्लः "इषुर्द्वयोरिति बाधः" अरिः, शत्रुः, अरातिः । भेदाः–आततायीत्यादयो भवन्ति ॥ ११ ॥

हाथ, गाल आदि अह्नाहान्त, विष भेद, रात्रान्त. **करगण्डौष्ठदोर्दन्तकण्ठकेशनखस्तनाः ।**
**अह्नाहान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः ॥१२॥**

केति–करो राजग्राह्यो भागः, रश्मिः, पाणिश्च । मरीच्यादीनां तु बाधः । गण्डः, कपोलः । ओष्ठः, दन्तच्छदः, अधरः । दोः=प्रकोष्ठः । भुजादिर्द्वयोरिति बाधः । दन्तः, दशनः, रदः । भेदो जम्भः । कण्ठः, गलः "समीपे गलशब्देषु कण्ठं त्रिषु विदुर्बुधाः" ( इति शाश्वतः ) । केशः=कचः । नखः, पुनर्भवः "नखरोऽस्त्रिया मिति" बाधः । स्तनः, कुचः, पयोधरः । अह्नश्च अहश्च अन्ते येषामिति ते पुंसि, स्युः । परवल्लिङ्गापवादोऽयम् । अह्नःपूर्वं पूर्वाह्णः, अह्नोऽपरमपराह्णः । द्वयोरह्नोः समाहारो द्व्यहः, त्रयाणामह्नां समाहारस्त्र्यहः । अत्र 'सनपुंसकम्' इत्यस्यापवादः । क्ष्वेडो विषं तद्भेदाः पुंसि स्युः । सौराष्ट्रिकः, शौक्लिकेयः, ब्रह्मपुत्रः । रात्रोऽन्तो येषां ते । प्राक् पूर्वपदं न संख्या येषां ते पुंसि स्युः । परवल्लिङ्गतापवादोऽयम् । परत्वात्समाहारनपुंसकतामपि बाधते । तेन अहोरात्रः, सर्वरात्रः, पूर्वरात्रः । 'प्रागसंख्यकाः' इति किम् 'पञ्चरात्रमित्यादौ पुंस्त्वं न स्यादिति ॥ १२ ॥

गोंद आदि, विशेष धूप आदि, कसेरू आदि. **श्रीवेष्टाद्याश्च निर्यासा असन्नन्ता "अबाधिताः" ।**
**कशेरुजतुवस्तूनि ( हित्वा ) तुरुविरामकाः ॥ १३ ॥**

श्रीति–श्रीवेष्टआद्यो येषामिति ते निर्यासा वृक्षद्रवाः पुंसि स्युः । श्रीवेष्टः, सरलः, द्रवः । 'श्रीपिष्टः' इति क्वचित्पाठः । आद्येन श्रीवासः, वृकधूपः, गुग्गुलुः, सिह्लकः इत्यादयः पुंसि बोध्याः । यदि असन्ताः अन्नन्ताश्च अबाधिताः स्युस्तदा पुंसि भवन्ति । यथा–अङ्गिराः, वेधाः, चन्द्रमाः । कृष्णवर्त्मा, प्रतिदिवा, मघवा । 'अबाधिताः' किम् । अप्सरसः, जलौकसः, सुमनसः । लोम, साम, वर्म । "कशेरुजतुवस्तूनि" हित्वा विहाय तुश्च रुश्च तुरू तौ विरामे विरामौ वा येषामिति ते पुंसि स्युः । हेतुः, सेतुः

---

१—"अह्नोऽह्न एतेभ्यः" इत्यहन्शब्दस्याह्नादेशे, "अह्नोऽदन्तात्" इत्यह्नादेशस्यनस्यणत्वमिति बोध्यम् ॥

धातुः । कुरुः । मेरुः, त्सरुः ' कशेरुजतुवस्तूनि हित्वा ' इति व्यर्थम् । ' अबाधिताः' इत्यस्यान्वयसंभवात् । वस्तुतस्तु ' अबाधिताः ' इत्यपि व्यर्थम् । ' विशेषैर्यद्यबाधितः ' इत्यनेन निर्वाहात् । अतएव दार्वश्वत्रादिषु निर्वाहो ज्ञातव्य इति ॥ १३ ॥

कषणभमरोपध, पथनयसटोपध, गोत्र व वेदशाखा के नाम.

**कषणभमरोपान्ता ( यद्यदन्ता अमी अथ ) ।**
**पथनयसटोपान्ता गोत्राख्याश्चरणाह्वयाः ॥ १४ ॥**

केति—कषणभमरोपान्ताः कषणभमरवर्णोपधाः अमी यदि अदन्ता अकारान्ताश्चेत्तदा पुंसि स्युः । यथा अङ्कः, अर्कः, लोकः शोक इत्यादयः पुंसि भवन्ति । माषः, तुषः, तोषः, पोषः, रोष इत्यादयः । पाषाणः, शाणः, गुणः, घुण इत्यादयः । दर्भः, सरभः, गर्दभ इत्यादयः । सोमः, होमः, ग्रामः, धूम इत्यादयः । झर्झरः, शीकरः, सीरः, समीर इत्यादयः पुंसि स्युः । अथेत्यनन्तरम् पथनयसटोपान्ताः पथनयसटवर्णोपधाः अमी यद्यबाधिताश्चेत्तदा पुंसि स्युः । कूपः, यूपः, सूपः, कलाप इत्यादयः पुंसि स्युः । नाथः, सार्थः, शपथ इत्यादयः । अपघनः, इनः, जन इत्यादयः । अपनयः, विनयः, प्रणय इत्यादयः । रसः, हासः, पनस इत्यादयः । करटः, पटः, सरट, इत्यादयः पुंसि स्युः । अत्र मुकुटमते तु ' अदन्ताः ' इति न सम्बध्यते, अथादित्वात् तेन गोमायुः, जायुः, वायुः, पायुरित्यादयः पुंसि स्युः । गोत्रं वंश आख्यायते यैरिति गोत्रस्यादिपुरुषाः प्रवराश्च पुंसि स्युः । गौतमः, भरद्वाजः, अत्रिः, वसिष्ठ इत्यादयः । चरणानां वेदशाखानामाह्वया नामानि पुंसि स्युः । कठः, कलापः, बह्वृच इत्यादयः पुंसि भवन्तीति ॥ १४ ॥

घञ् आदि, ल्यु आदि.

**नाम्न्यकर्तरि भावे ( च ) घञजबनङ्णघाथुचः ।**
**ल्युःकर्तरीमनिज्भावे कोघोःकिः(प्रादितोऽन्यतः)॥१५॥**

नाम्नीति—घञ्—अच्—अप्—नङ्—ण—घ—अथुच् एते सप्त प्रत्ययाः नाम्नि संज्ञायां विषये अकर्तरि कर्तृभिन्ने कारके भावे च ये विहितास्तदन्ताः पुंसि स्युः । यथा प्रसीदन्त्यस्मिन्मनांसि, इति विग्रहे "हलश्च" इत्याधारे घञि, वृद्धौ प्रासादः=देवभूभुजां वासः । प्रास्यते, प्रपूर्वकादस्यतेः कर्मणि घञि, प्रासः=सांग इतिख्यातमस्त्रम् । विदन्त्यनेनेति, विदेः करणे घञि वेदः=आम्नायः । प्रपतन्त्यस्मादिति, प्रपूर्वकात्पततेरपादाने घञि प्रपातः=तटः । भावे यथा पचनं, पाकः । त्यजनं, त्यागः=दानम् । चकारात् रुजतीति, " पदरुज " इति घञि रोगः=आमयः । दायः, धाय इत्यादयोऽसंज्ञायां विहिता अपि गृह्यन्ते । चयनम्, चिनोतेर्भावे " एरच् " इत्यचि चयः=वप्रं, समूहो वा । जयनम्, अचि जयः=विजयः । कीर्यते, किरतेः कर्मणि " ॠदोरप् " इत्यपि करः=राजग्राह्यभागः, मरीचिः, पाणिर्वा । गीर्यतेऽनेनेति, अपि, गरः, गलः कण्ठो

वा । लवनम्—लूयते वा अपि, लवः=लेशः, कालभेदः, छेदः, रामात्मजो वा । स्तवनम्, भावे ' अपि ' स्तवः=स्तोत्रम् । इज्यतेऽनेनात्रेति वा यजतेः कर्मणि, साधनेऽधिकरणे वा " यजयाचयतविच्छप्रच्छरक्षो नङ् " इति ' नङि ' यज्ञः—" यज्ञःस्यादात्मनि मखे नारायणहुताशयोः " ( इति हैमः ) । यतनम्, यते ' भावे नङि ' । यत्नः=प्रतियत्नः उपायो वा । ' नङ् ' इत्युपलक्षणम् । " स्वपेनन् " इत्यपि गृह्यते। ' स्वप्नः संवेश इत्यपि ' इति वा पुंस्त्वसिद्धिर्बोध्या । न्यदनम्, निपूर्वकादत्तेर्भावे " नौ णच " इति णे, वृद्धौ न्यादः=आहारो, जेमनं वा । उरश्छाद्यतेऽनेन, उरःपूर्वकात् ' छद अपवारणे ' अस्माच्चौरादिकात्साधने " पुंसि संज्ञायां घः " इति घे, "छादेर्घे–" इति ह्रस्वे च उरश्छदः=कवचम् । प्रच्छाद्यतेऽनेन, घे, ह्रस्वे च प्रच्छदः=पटः । श्वयनम्, श्वयतेर्भावे " ट्वितोऽथुच् " ' इत्यथुचि ' श्वयथुः=शोथः । वेपनम्, वेपतेर्भावे अथुचि, वेपथुः=कम्पः । " नन्दिग्रहिपचादिभ्यः " इति नन्द्यादिभ्यः कर्तरि विहितो 'ल्युः' पुंसि स्यात् । नन्दयतीति, ल्युप्रत्यये, अनादेशे च नन्दनः, रमते इति रमणः, सूदयतीति सूदनः। मधोः+सूदनो मधुसूदनः। संज्ञायामिदम्। असंज्ञायां तु " कृतःकर्तर्यसंज्ञायाम् " इति सिद्धम् । भावे इमनिच् तदन्ताः पुंसि स्युः । यथा पृथोर्भावः, " पृथ्वादिभ्य इमनिज्वा " इति इमनिचि, " र ऋतोहलादेर्लघोः " इति ऋकारस्य रत्वे, टेरिति टिलोपे च प्रथिमा । एवं मृदोर्भावो म्रदिमा । "सुपिस्थः" इति योगविभागाद्भावे कः । " घञर्थे कः " इति वा तदन्ताः पुंसि स्युः । आखूनामुत्थानमिति, घञर्थे के, आखूत्थः । प्रस्थानम्, के प्रस्थः । प्रादितः उपसर्गतः अन्यतः अन्यस्माच्च सुबन्तात्परो यो घुस्तस्माद्विहितो यः 'कि' प्रत्ययस्तदन्तः पुंसि स्यात् । यथा नितरां धीयते, धत्ते पोषयत्यनेनवेति विग्रहे " उपसर्गे घोः किः " इति कि प्रत्यये आलोपे च निधिः=सामान्यनिधिः । आदीयते गृह्यतेऽर्थोऽनेनेति, आदिः । विधानम्—विधीयतेऽनेन वा विधिः, उदकानि धीयन्तेऽस्मिन्निति विग्रहे "कर्मण्यधिकरणे च" इति 'कि'प्रत्यये उदधिः=सागरः। जलानि धीयन्तेऽस्मिन्निति जलधिः=समुद्रः। अत्र'प्रादितोऽन्यतः ' इति व्यर्थम् । घोःकिरित्यनेनैवेष्टसिद्धत्वात्तथापि स्पष्टार्थमिति ज्ञेयम् ॥ १५ ॥

घोड़ा-घोड़ी, सूर्यकान्त, इन्दुकान्त, लोहकान्त आदि.

**द्वन्द्वेऽश्ववडवावश्ववडवानसमाहृते ।**
**कान्तः सूर्येन्दुपर्यायपूर्वोऽयः पूर्वकोऽपि च ॥ १६ ॥**

द्वन्द्व इति–असमाहृते समाहारार्थभिन्ने द्वन्द्वे द्वन्द्वसमासे अश्ववडवाविति शब्दः पुंसि स्यात् । यथा अश्वश्च वडवा च अश्ववडवौ "पूर्ववदश्ववडवौ" इति पुंस्त्वम । परवल्लिङ्गतापवादः । द्वित्वमविवक्षितम् । तेन अश्वाश्च वडवाश्ज अश्ववडवास्तानश्ववडवान्, अश्ववडवैरित्यादि । असमाहृते किम् । अश्ववडवम् । " विभाषावृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् " इति चैकवद्भावः । सूर्येन्दुपर्यायपूर्वः=सूर्यचन्द्रनामपूर्वः कान्तशब्दः पुंसि स्यात् । यथा–सूर्यकान्तः, अर्ककान्तः,

इन्दुकान्तः, चन्द्रकान्तः, सोमकान्तः । अयः पूर्वकः लोहपूर्वकः कान्तशब्दोऽपि च पुंसि स्यात् । यथा अयस्कान्तः, लोहकान्तः, पिराडकान्त इत्यादयः पुंसि भवन्तीति ॥ १६ ॥

बरा आदि, फोंक आदि.

**वटकश्चानुवाकश्च रल्लकश्चकुडङ्गकः ।**
**पुङ्खोन्युङ्खः समुद्गश्च विटपट्टघटाः खटः ॥ १७ ॥**

वटक इति—वटति 'वट वेष्टने' अस्माद्भौवादिकात् कर्तरि "क्न्शिल्पसंज्ञयोरपूर्वस्यापि" इति क्वुनि, अकादेशे च वटकः=माषपिष्टविकारः । अनु उच्यते, अनुपूर्वकाद्वचेः कर्मणि "अकर्तरि च कारके संज्ञायाम्" इति घञि, वृद्धौ, "चजोः कुघिण्यतोः" इति कुत्वे च अनुवाकः=ऋग्यजुः समूहः । रुलनम्, लल्यते वा ललतेर्भौवादिकाद्भावे कर्मणि वा संपदादित्वात्क्विपि, रलयोरेकत्वे च रल् । लक्यते, लकतेः कर्मणि "पुंसि संज्ञायाम्" इति घे, लकः । रल् चासौ लकश्च रल्लकः=पक्ष्मकम्बलम् । कुटति, कुटतेः कर्तरि "अन्येभ्योऽपि दृश्यते" क्विपि कुट् । कुट् अङ्गमस्य । "शेषाद्विभाषा" इति कपि, कुडङ्गकः । "कुडङ्गको ना छदिः पिटम्" ( इति बोपालितः ) 'वृक्षलतागृहम्' ( इति स्वामी ) "कुटङ्गकः" इति पाठे तु कुटेः कर्तरि "इगुपध:–" इति के शकन्ध्वादित्वात्पररूपत्वं बोध्यम् । पुमांसं खनति, पुंसा खन्यते वा पुंस्पूर्वकात्खनतेः कर्तरि, कर्मणि वा "अन्येभ्योपि" इति डे, टिलोपे च पुङ्खः=काण्डमूलम् । न्युङ्खयते, निपूर्वकादुङ्खतेः कर्मणि "पुंसि संज्ञायाम्" इति 'घे' न्युङ्खः "न्युङ्खः सम्यङ्मनोज्ञे च साम्नः षट्प्रणवेषु च" ( इति मेदिनी ) 'न्यूङ्ख' इति दीर्घपाठे तु पृषोदरादित्वात् "यज्ञकर्मण्यजपन्यूङ्खसामसु" इति निर्देशाद्वादीर्घः । समुद्गम्यते, समुत्पूर्वकाद्गच्छतेः कर्मणि "अन्येष्वपि" इति डे, टिलोपे च समुद्गः=संपुटकः । वेटति, वेटतेः कर्तरि "इगुपध"-इति के, क्त्त्वाद्गुणाभावे च विटः "विटोऽद्रौ धवले षिङ्गे मूषिके खदिरेऽपि च" (इति मेदिनी) । पटति, पट्यते वा पटतेः कर्तरि, कर्मणि वा बाहुकात्तप्रत्यये, ष्टुत्वे च पट्टः "पट्टः पेषणपाषाणे व्रणादीनां च बन्धने । चतुष्पथे च राजादिशासनान्तरपीठयोः" ( इति मेदिनी ) तट्यते, धन्यते वा तटतेर्धनतेर्वा कर्मणि "पुंसि संज्ञायाम्" इति घे, पृषोदरादित्वात्तस्य धत्वे नस्य टत्वे वा घटः "परीक्षार्थतुलायां च घटः सूरिभिरिष्यते" ( इति विश्वः ) खटयते=काङ्क्ष्यते, खटतेः कर्मणि "पुंसीति" घे खटः "खटोन्धकूपखपयोः प्रहारान्तरटङ्कयोः" ( इति मेदिनी ) अन्धकूणादौ खटः पुंसि स्यादिति ॥ १७ ॥

कोट, अरहट, बाजार आदि– गलगण्ड, प्यटारी, लाठी, मुरा लेग, घावका चिह्न, घुन.

**कोट्टारघट्टहट्टाश्च पिण्डगोण्डपिचण्डवत् ।**
**गडुः करण्डो लगुडो वरण्डश्च किणो घुणः ॥ १८ ॥**

कोट्टेति–कुट्टयते–कुट्टयतेश्चौरादिकात्कर्मणि बाहुलकादारनि, गुणे च कोट्टारः " कोट्टारो नागरे कूपे पुष्करिण्याश्च पाटके " ( इति रभसः ) घट्टयतेऽस्मिन्, ' घट्ट चलने ' अस्माद्भौवादिकादाधारे " हलश्च " इति घञि, घट्टः " घाट " इति ख्यातः । केचित्तु " कोट्ट " " अरघट्ट-" इति छित्त्वा " कोट्टो दुर्गपुरम् " । अरघट्टः कूपभेदः " इतिवाचख्युः । तत्र कुट्टधातोर्घे, बाहुलकाद्गुणे च कोट्टः " कोट्टः पुंक्लीबलिङ्गः "–इत्यभिधानचिन्तामणौहेमः । अरैश्चक्रावयवसदृशैः काष्ठविशेषैर्घट्टयते रच्यते अरघट्टः, कूपाज्जलनिःसारणार्थं घटीयन्त्रमित्यन्ये । हटन्त्यत्र, हटतेराधारे बाहुलकात्तप्रत्यये, ष्टुत्वे च हट्टः=आपणः । पिण्डते, पिण्डयते वा पिण्डेः कर्तरि, कर्मणि वा अचि, घञि वा पिण्डः, " पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिह्लकयोरपि " ( इति मेदिनी ) गोरण्ड इव गोण्डः "गोण्डः पामरजातौ च वृद्धनाभौ च तद्वति " ( इति मेदिनी ) अपि चण्डतेऽनेनात्रेति वा अपिपूर्वकाच्चण्डेः साधनेऽधिकरणे वा " हलश्च " इति घञि " वष्टिभागुरि " रित्य पेरल्लोपे च पिचण्डः " पिचण्डोऽवयवे पशोः । उदरे च " ( इति हैमः ) अत्र वच्छब्देन गड्वादयोऽपि पुंसि स्युः । गडति, गडयते वा गडतेः कर्तरि, कर्मणि वा बाहुलकादुप्रत्यये गडुः, "गडुः पृष्टगुडे कुब्जे" ( इति विश्वः) क्रियते, करोतेः कर्मणि "अण्डन् कृसृभृवृञः" इत्यण्डनि, गुणे च करण्डः"करण्डो मधुकोषासिकारण्डवद्लाढके " ( इति मेदिनी ) लगति, लगतेः कर्तरि बाहुलकादुडचि 'लगुडः' लगुडो यष्टिः । वृणोति, व्रियते वा वृणोतेः कर्तरि, कर्मणि वा ' अण्डनि ' वरण्डः "वरण्डोऽप्यन्तरावेदौ समूहमुखरोगयोः " ( इति मेदिनी ) ) कणति, कणतेः कर्तरि पचाद्यचि, पृषोदरादित्वादस्य इत्वे च किणः"किणोमांसग्रन्थिर्व्रणजं चिह्नं च" । घोणते, घुणेः कर्तरि " इगुपध–" इति के कित्त्वाद्गुणाभावे च घुणः " घुणः स्यात्काष्ठवेधके " ( इति रत्नकोषः ) काष्ठवेधके घुणः पुंसि स्यादिति ॥ १८ ॥

मशक,बालों का बांधना,हरारंग, पाग़ुर, सामवेद ध्वनि, बुल्ला, रोगभेद, दशकरोड़,कुन्द,फेना, उंचाई, पुआ या बरा.

* दृतिसीमन्तहरितो रोमन्थोद्गीथबुद्बुदाः ।
कासमर्दोऽर्बुदःकुन्दः फेनस्तूपौ सपूपकौ ॥ १९ ॥

दृतीति–द्रियते, 'दृङ् आदरे ' अस्मात्तौदादिकात्कर्तरि " क्तिच्क्तौ च संज्ञायाम्" इति ' क्तिचि ' दृतिः " दृतिश्चर्मपुटेमत्स्ये ना " ( इति मेदिनी ) सीम्नोऽन्तः शकन्ध्वादित्वात्पररूपे सीमन्तः=केशविन्यासः । हरति, ह्रियते वा हरतेः कर्तरि, कर्मणि वा " हृसृरुहियुषिभ्य इतिः " इतीतौ, गुणे, रपरत्वे च हरित् " हरिद्दिशि स्त्रियां पुंसि

* "इन्द्रियाणान्तु सर्वेषां यद्येकं क्षरतीन्द्रियम् । तेनास्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम्" (इति मनुः)

हयवर्णविशेषयोः । अस्त्रियां स्यात्तृणे च ( इति मेदिनी ) रोमस्य मन्थो रोमन्थः पृषोदरादिः पशूनां चर्वितस्यपुनश्चर्वणम् । उद्गीयते, उत्पूर्वकाद्गायतेःकर्मणि "गश्चोदि" इति थकि उद्गीथः " उद्गीथः प्रणवः सामवेदध्वनिः " ( इत्यरुणः ) साम्नोभाग विशेषो वा । 'बुद्' इत्यव्यक्तध्वनिं बुन्दति करोति,बुत्पूर्वकाद्बुन्दतेः कर्तरि 'मूल विभुजादित्वात्' क प्रत्यये, गुणाभावे च बुद्बुदः 'जलविकारः । कासं मृद्नातीति, कासपूर्वकान्मृद्नातेः कर्तरि "कर्मण्यण्" इत्यणि, गुणे च कासमर्दः=वेसवारभेदः । अरंबुन्दतीति, अरपूर्वकाद्बुन्दतेः कर्तरि " मूलविभुजादित्वात् " के, नलोपे, पृषोदरादित्वादरस्यालोपे च अर्बुदः " अर्बुदो मांसपरुषि दशकोटिषु न स्त्रियाम् । महीधरविशेषे ना " ( इति मेदिनी ) स्कुन्दते 'स्कुदि आप्रवणे' अस्माद्भौवादिकात्कर्तरि 'पचाद्यचि' पृषोदरादित्वात्सलोपे च कुन्दः " कुन्दोमाघ्येऽस्त्रीमुकुन्दभ्रमि निध्यन्तरेषु ना ( इति मेदिनी ) स्फायते, स्फायतेः कर्तरि " फेनमीनाविति " निपातिते, फेनः=समुद्रफेन इति ख्यातः । स्तूयते, स्तौतेः कर्मणि " स्तुवोदीर्घश्च " इति पे दीर्घे च स्तूपः=समुच्छ्रायः । मुकुटमते तु स्तूप्यते 'ष्टूप समुच्छ्राये' अस्मच्चौरादिकात्कर्मणि घञि वा स्तूपः=घृतादिकृतकूटः । पुनाति, पूयते वा पूञःकर्तरि, कर्मणि वा बाहुलकात्पकि, पूपः=अपूपः, पिष्टको वा । स्वामिमते तु यौति, यूयते, युवन्ति वध्नन्त्यस्मिन्पशुमिति वा यौतेः कर्तरि, कर्मणि, आधारे वा " कुयुभ्यां च " इति पे, दीर्घे च यूपः यज्ञस्तम्भः सएव स्वार्थे कनि यूपकस्तेनसहितो सयूपकौ फेनस्तूपौ पुंसि स्यातामिति ॥ १६ ॥

घाम, राजा व क्षत्रिय, भाला, मुर्दा, छूरा, व्यवहार, पदार्थ, पानी की धारा, बाण, अम्लवेतस, गोल, ईश्वर, देह.

**आतपः क्षत्रिये नाभिः कणपक्षुरकेदराः ।**
**पूरक्षुरप्रचुक्राश्च गोलहिङ्गुलपुद्गलाः ॥ २० ॥**

आतप इति—आतपति, आङ्पूर्वकात्तपतेः कर्तरि 'पचाद्यचि' आतपः=प्रकाशः 'घाम' इतिख्यातो वा । क्षत्रिये क्षत्रियार्थे वाच्ये सति नाभिः पुंसि स्यात् । नभ्यते 'णभ हिंसायाम्' अस्मात्कर्तरि " इणजादिभ्यः " इतीणि, नाभयतीति विग्रहे तु स्वार्थणयन्तात् " अचइः " इति इ प्रत्यये वा नाभिः " नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् " ( इति मेदिनी ) कणं पाति, पिबति वा कणपूर्वकात् पातेः पिबतेर्वा कर्तरि " आतोऽनुपेति " के, आलोपे च कणपः ( प्रासविशेषः ) । क्वचित् 'कुणपः' इति पाठः । कणति, 'कण शब्दे' अस्मात्कर्तरि " क्वणेः संप्रसारणं च " इति कपनि, संप्रसारणे च कुणपः " कुणपः पूतिगन्धो शवेऽपि च " ( इति मेदिनी )

क्षुरति, 'क्षुर विलेखने' अस्मात्तौदादिकात्कर्तरि "इगुपध–" इति के 'क्षुरः' "क्षुरः स्याच्छेदने द्रव्ये कोकिलाक्षे च गोक्षुरे" (इति मेदिनी) के दृणाति, दीर्यते वा के पूर्वकादृणातेः कर्तरि "पचाद्यचि" कर्मणि "ऋदोरप्" इत्यपि वा गुणे, रपरत्वे च केदरः। संव्यवहारः पदार्थश्च। 'तरुभेदः' इत्यन्ये। पूरयति 'पूर पूरणे' अस्माच्चौरादिकात्कर्तरि "पचाद्यचि" णिलोपे च पूरः "पूरो जलप्रवाहे स्याद्व्रणसंशुद्धिखाद्ययोः" (इति मेदिनी) क्षुरं प्राति, क्षुर इव प्राति वा क्षुरपूर्वकात्प्रातेः कर्तरि "आतोऽनुप–" इति "सुपीति" योगविभागाद्वा कप्रत्यये, आलोपे च क्षुरप्रः। मुकुटस्तु 'खुरप्रः' † इति कवर्गद्वितीयादिं व्याख्यातवानिति। वाण भेदः। चक्यतेऽनेन, चकतेः करणे "चकिचम्योरुच्चोपधायाः" इति रक्, उपधाया उत्वे च चुक्रः "चुक्रं वृक्षाम्ले, चाङ्गेर्यां स्त्रीपुंस्यम्लेऽम्लवेतसे" (इति मेदिनी) गुडयते, 'गुड रक्षायाम्' अस्मात्तौदादिकात्कर्मणि 'घञि' गुणे, डलयोरेकत्वाड्डस्य लत्वे च 'गोलः' "गोलःस्यात्सर्ववर्तुले" (इति हेमः) हिङ्गुलाति, हिङ्गुपूर्वकाल्लातेः कर्तरि "आतोऽनुपेति" के, आलोपे च हिङ्गुलः- "हिङ्गुलो वर्णकद्रव्ये ना भण्टाक्यां तु हिङ्गुली" (इति मेदिनी) हिङ्गुलुरित्युदन्तोपि तत्र मितद्र्वादित्वाड्डुप्रत्ययो बोध्यः। मुकुटस्तु "हिङ्गुलुस्यात्तु हिङ्गुलमिति क्लीबे पठितवान्। वैश्यवर्गक्लीबलिङ्गमुदन्तमदन्तं च पठ्यते इत्यादिकम्। हेमचन्द्रोपि स्वोपज्ञनाममालाव्याख्यायां व्याख्यातवान्। वाचस्पतिस्तु "हिङ्गुलस्त्वस्त्रियामिति" क्लीबेऽप्याह इत्यभिहितवान्। "पुत्" इति कुत्सायामव्ययम्। पुद्गिलति, गीर्यते वा पुत्पूर्वकाद्गिरतेः कर्तरि "पचाद्यचि" कर्मणि "ऋदोरप्" इत्यपि वा। पुद्गलतीति विग्रहे तु पुत्पूर्वकाद्गलतेः कर्तरि "पचाद्यचि" वा पुद्गलः "पुद्गलः सुन्दराकारे त्रिषु पुंस्यात्मदेहयोः" (इति मेदिनी) सुन्दराकारे पुद्गलः त्रिषु त्रिलिङ्गयाम्। आत्मदेहयोः पुंसि स्यादिति ॥ २० ॥

भूत, पहलवान, भालू, जाउरि, पटा-पीढा या अन्नभेद,कांजी, हर्ष, कडाह,पीकदान.

**वेतालमल्लभल्लाश्च पुरोडाशोऽपि पट्टिशः।**
**कुल्माषो रभसश्चैव सकटाहः पतद्ग्रहः ॥ २१ ॥**

## इति पुंलिङ्गसंग्रहः ॥

वयिति–वो वायुरितो गतोयस्मात्स वेतः। वेतमलति, वेतपूर्वकादलतेः कर्तरि, "कर्मण्यण्" इत्यणि, वे वायौ तालः प्रतिष्ठा यस्येति वा वेतालः। भूताविष्टः शवः। मल्लते, मल्ल्यते वा 'मल्ल धारणे' अस्माद्भौवादिकात्कर्तरि "पचाद्यचि"

† यथा "दशाननक्षिप्तखुरप्रखण्डितः क्वचिद्गतार्धोहिमदीधितिर्यथा" इति हरिविलासे लिखितवानिति ॥

कर्मणि ' घञि ' वा मल्लः " मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि " ( इति मेदिनी ) भल्लते, भल्ल्यते वा भल्लेः कर्तरि 'पचाद्यचि' कर्मणि ' घञि ' वा भल्लः, " भल्लः स्यात्पुंसि भल्लूके शस्त्रभेदे पुनर्द्वयोः । भल्लातक्यां स्त्रियां भल्ली " ( इति मेदिनी ) । पुरः प्रथमं दाश्यतेऽयमिति विग्रहे पुरःपूर्वकाद्दाशतेःकर्मणि 'घञि' पृषोदरादित्वात् " व्रीहेश्च पुरोडाशे " इति निर्देशाद्वा दस्य डत्वे च पुरोडाशः " पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च । रसे सोमलतायाश्च हुतशेषे च कीर्तितः" ( इति विश्वः ) " पट्टिः स्त्री पटभेदेस्याल्ललाटे कुम्भिकाद्रुमे " ( इति मेदिनी ) पट्टिं श्यति, पट्टिपूर्वकात् श्यतेः कर्तरि " आतोऽनुप–" इति के, आलोपे च पट्टिशः । मुकुटमते तु ' पट्टिसः ' दन्त्यसान्तोपि तत्र ' षो अन्तकर्मणि ' दैवादिकात्कर्तरि कप्रत्ययो बोध्यः, शस्त्रभेदः । कोलनम्, कोलतेर्भावे संपदादित्वात् क्विपि, कुल् । कुलं मषति, कुलपूर्वकान्मषतेः कर्तरि " कर्मण्यण् " इत्यणि, वृद्धौ च कुल्माषः " कुल्माषो यावके प्रोक्तः कुल्माषं काञ्जिकेऽपि च " ( इति विश्वः ) धातुपारायणे ' कुल्मासः ' इति दन्त्यसान्तोपि । तत्र मसेर्दैवादिकाद् ' घञ् ' प्रत्ययो बोध्यः । कुल्मासो माषादिमिश्रमर्धस्विन्नमोदनं " खिचड़ी " इति ख्यातम् । रभणम्, रभतेऽनेनेति वा रभेर्भावे, करणे वा " अत्यविचमितमी–" त्यसचि, रभसः " रभसो वेगहर्षयोः " ( इति विश्वः ) सकटाहः कटाहसहितः पतद्ग्रहः पुंसि स्यात् । कटेनातिशयेनाहन्यतेगम्यते, कटाङ्पूर्वकाद्धन्तेः कर्मणि " अन्येभ्योऽपीति " डे, टिलोपे च कटाहः " कटाहो घृततैलादिपाकपात्रेऽपि कर्परे । कटाहः कूर्मपृष्ठे च स्तूपे च महिषीशिशौ " (इति विश्वः) " कराह " इति ख्यातः । गृह्णाति, ' ग्रह उपादाने ' अस्मात्क्रैयादिकात्कर्तरि ' पचाद्यचि ' ग्रहः । पततस्ताम्बूलादेर्ग्रहः, पतद्ग्रहः=निष्ठीवनपात्रम् " पीकदान " इति ख्यातं सुधीभिरिति ॥ २१ ॥

आकाशादि, **( द्विहीने ) ऽन्यच्च खारण्यपर्णश्वभ्रहिमोदकम् ।**

शीतादि. **शीतोष्णमांसरुधिरमुखा† क्षिद्रविणं बलम् ॥ २२ ॥**

द्वीति–द्विहीने द्वाभ्यां स्त्रीपुंसाभ्यां हीने रहिते " क्लीबे " इत्यधि क्रियते । अन्यदवशिष्टम् उक्तात्संग्रहाच्छेषः ' क्लीबे ' स्यात् । तत्र कांश्चित्पर्यायपरत्वेन व्याचष्टे–खमिति, खनति, खन्यते वा ' खनु अवदारणे ' अस्मात्कर्तरि, कर्मणि वा " अन्येभ्योऽपीति " डे, टिलोपे च खम् " खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि । संवेदने देवलोके शर्मण्यपि नपुंसकम् " ( इति मेदिनी ) । अर्यते, अर्तेः कर्मणि " अर्तेर्निच्च " इत्यन्यप्रत्यये णत्वे च अरण्यम्=काननम् ' जंगल ' इति ख्यातम् । पर्णयति, ' पर्ण हरितभावे ' अस्माच्चौरादिकात्कर्तरि ' पचाद्यचि ' पर्णम् " पर्ण

† " प्राक्खनो मुड्दात्तश्च ततोचप्रत्ययो भवेत् । प्रजासृजा यतः खातं तस्मादाहुर्मुखं बुधाः " ( इति निरुक्तम् ) ॥

पत्रे पलाशे ना " ( इति कोषान्तरम् ) । श्वभ्रयति 'श्वभ्र गतौ' अस्मात्स्वार्थ-ण्यन्तात्कर्तरि 'पचाद्यचि' श्वभ्रम् । सुष्ठु अभ्रमिति विग्रहे तु दन्त्यादित्वमपि । विवरम् । हन्ति, हनेः कर्तरि "हन्तेर्हिच" इति मनि, ह्यादेशे च हिमम् "हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गः" ( इति मेदिनी ) उनत्ति, 'उन्दी क्लेदने' अस्माद्रौणादिकात्कर्तरि क्वनि, नलोपे, अकादेशे च उदकम् । श्यायते स्म, श्यैङः कर्तरि "गत्यर्था–" इति क्ते, "द्रवमूर्तिस्पर्शयोः श्यः" इति संप्रसारणे च शीतम् "शीतं हिमगुणे क्लीबं शीतलालसयोस्त्रिषु" ( इति मेदिनी ) ओषति=दहति, उषेःकर्तरि "इण्सिञ्जिदीङुष्यविभ्यो नक्" इति नकि, उष्णम् "उष्णो ग्रीष्मे पुमान्दक्षाशीतयोरन्यलिङ्गकः" ( इति मेदिनी ) मन्यते, मनेः कर्तरि "मनेर्दीर्घश्च" इति से, दीर्घे च मांसम् "मांसं स्यादामिषे क्लीबं कक्कोली जटयोः स्त्रियाम्" ( इति मेदिनी ) रुणद्धि । रुध्यते वा 'रुधिर् आवरणे' अस्माद्रौणादिकात्कर्तरि, कर्मणि वा "इषिमदिमुदीति" किरचि, गुणाभावे च रुधिरम् "रुधिरोऽङ्गार के पुंसि क्लीबन्तु कुङ्कुमास्रजोः" ( इति मेदिनी ) खनति, खन्यते, अनेन वा । खनतेः कर्तरि, कर्मणि, साधने वा "डित्खनेर्मुट् सचोदात्तः" इत्यचि, डित्वाट्टिलोपे, धातोर्मुडागमे च मुखम् "मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि । संध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्" ( इति मेदिनी ) अश्नुते, अश्नोतेः कर्तरि "अशेर्नित्" इति 'क्सि' प्रत्यये, षत्वे, कत्वे, क्षत्वे च अक्षि= लोचनम् । द्रवति, द्रूयते वा द्रवतेः कर्तरि, कर्मणि वा "द्रुदक्षिभ्यामिनन्" इतीननि द्रविणम् "द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे" ( इति मेदिनी ) बलति 'बल प्राणने' अस्मात्कर्तरि "पचाद्यचि" बलम् "बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः । पुमान् हलायुधे दैत्यप्रभेदे वायसेऽपि च । बलयुक्तेऽन्यलिङ्गः स्याद्वाटयालके तु योषिति ( इति मेदिनी ) योषिति स्त्रियां स्यादिति ॥ २२ ॥

फल, सोना, तांबा, लोहा, सुख, दुःख, शुभ, अशुभ, कमल आदि फूल, निमक, पक्वान्न, उबटन.

**फलहेमशुल्बलोहं सुखदुःखशुभाशुभम् ।**
**जलपुष्पाणि लवणं व्यञ्जनान्यनुलेपनम् ॥ २३ ॥**

फेति—फलति, फलतेः कर्तरि "पचाद्यचि" फलम् "फलं हेतुकृतेजातीफलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः" ( इति हैमः ) । कचित्तु हलमिति पाठः । तत्र हलति, 'हल विलेखने' अस्मात्कर्तरि "पचाद्यचि" हलम्=लाङ्गलम् । हिनोति, हिनोतेः कर्तरि "सर्वधातुभ्यो मनिन्" इति मनिनि, गुणे च हेम हाटकम्, हिरण्यम्, स्वर्णम् वा । शलति, शल्यते वा शुल्वम् "उल्वादयश्च" इति साधुः । ताम्रम्–वरिष्ठम्, म्लेच्छमुखं वा । लोहयति, लुह्यते वा । रोहति, रुह्यते वा

रुहेः कर्तरि ' पचाद्यचि ' कर्मणि घञि वा कपिलिकादित्वाल्लत्वे च । लूयतेऽनेन-वेति विग्रहेतु लूञः साधने बाहुलकाद् ह प्रत्यये, गुणे च लोहम्=तीक्ष्णम्, पिण्डम्, शस्त्रकं वा । सुखयति, कर्तरि ' पचाद्यचि ' सुखम्, शातम्—शर्म वा । दुःखयति कर्तरि अचि, दुःखम्=कृच्छ्रम्, कष्टम्, कलाकुलं वा । शोभते, शुभेः कर्तरि " इगुपध—" इति के, गुणाभावे च शुभम्=कल्याणम्, मङ्गलं वा । न शुभमिति अशुभम्=अकल्याणम्, अभद्रं वा । जलपुष्पाणि जलभवानि पुष्पाणि कुमुदकमलकह्लारोत्पलानि क्लीबे स्युः । लुनाति, लूञः कर्तरि नन्द्यादित्वात् ल्यु प्रत्यये अनादेशे "लवणाल्लुगितिनिर्देशात्त्वे च लवणम् " लवणं सैन्धवादौ ना सिन्धुरक्षोभिदोरसे । तद्युक्ते वाच्यलिङ्गः स्यान्नदीभेदद्विषोः स्त्रियाम् " ( इति मेदिनी ) व्यज्यतेऽनेन, विपूर्वकादनक्तेः साधने " करणाधिकरणयोश्च " इति ल्युटि, अनादेशे च व्यञ्जनम् " व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेऽहनि " ( इति मेदिनी ) अनुलिप्यते, अनेन वा अनुपूर्वकाल्लिम्पतेः कर्मणि, करणे वा ल्युटि, अनादेशे च अनुलेपनम्, यथा " कुंकुमाद्यनुलेपनम् " खादिसपर्यायं सविशेषं च क्लीबे भवतीति मुकुटो व्याख्यातवानिति ॥ २३ ॥

करोड़ से भिन्न सौ आदि संख्या, लाख, द्विस्वर इसन्त, उसन्त, अन्नन्त, अनान्त

**कोट्याः शतादिः संख्यान्या वा लक्षा नियुतं (च तत्) ।**
**द्व्यच्कमासिसुसन्नन्तं यदनान्तमकर्तरि ॥ २४ ॥**

कत्रिति—कोट्याः कोटेः अन्या भिन्ना शतादिः संख्या क्लीबे स्यात् । यथा शतम्, सहस्रम्, अयुतम्, अर्बुदम् । लक्ष्यते, लक्षयतेः कर्मणि " गुरोश्च—" इत्य प्रत्यये, टापि च लक्षा वा क्लीबे स्यात् । " लक्षा न पुंसि संख्यायां क्लीबे व्याजशरव्ययोः" ( इति मेदिनी ) तत् लक्षं नियुतं नियुतशब्दवाच्यमपि । नियूयते स्म, निपूर्वकाद् यौतेः कर्मणि ' क्ते ' नियुतम् " शतं सहस्रमयुतं नियुतं प्रयुतं मतम् । स्त्री कोटिरर्बुदमिति क्रमाद्दशगुणोत्तरम् " ( इति रत्नकोषः ) । असन्तमिसन्तमुसन्तमन्नन्तं यद्द्व्यच्कं तत्क्लीबे स्यात् । यथा 'यशः' पयः, तेजः, तमः " तमोध्वान्ते गुणे शोके क्लीबं वा ना विधुंतुदे " ( इति मेदिनी ) इसन्तं यथा सर्पिः, हविः, रोचिः, शोचिः । उसन्तं यथा धनुः, वपुः यजुः । अन्नन्तं यथा कर्म, चर्म, वर्म, शर्म । अकर्तरि कर्तृवर्जितेऽर्थे यदनान्तंनाम तत्क्लीबे स्यात् । यथा कदनम्, गगनम्, दमनम्, रमणम्, शमनमित्यादि । अकर्तरीति किम् । नन्दनः, रमणः, सूदन इत्यादयः पुंसि स्युरिति ॥ २४ ॥

त्रान्त, सलोपध, संख्यापूर्वपद रात्रान्त, पात्राद्यदन्तद्विगुसमास.

**त्रान्तं सलोपधं शिष्टं रात्रं प्राक्संख्ययान्वितम् ।**
**पात्राद्यदन्तैरेकार्थो द्विगु ( र्लक्ष्यानुसारतः ) ॥ २५ ॥**

त्रेति—त्रान्तं त्रकारान्तम्, सलोपधं सकारलकारोपधं च क्लीबे स्यात् । त्रान्तं

यथा गात्रम्, दात्रम्, पात्रम्, मित्रम्, यन्त्रम्, वहित्रम्, वस्त्रम् । सोपधं यथा-विसम्, बुसम्, अन्धतमसम् । लोपधं यथा कूलम्, तूलम्, मूलम्, शूलम् । शिष्ट-मत्रशिष्टमत्राधितमिति यावत् । शिष्टं किम् । पुत्रः, मन्त्रः, वृत्रः । कंसः, पनसः, हंसः । कालः, शालः । प्राक्संख्ययान्वितं संख्यापूर्वपदं रात्रान्तं क्लीबे स्यात् । यथा द्वयोः रात्र्योः समाहारो द्विरात्रम् । तिसृणां रात्रीणां समाहारः त्रिरात्रम् । पञ्चानां रात्रीणां समाहारः पञ्चरात्रम् । पात्राद्यदन्तैः पात्रादिभिरदन्तैरेकार्थो द्विगुः क्लीबे स्यात् । लक्ष्यानुसारतः शिष्टप्रयोगात् । पञ्चानां पात्राणां समाहारः पञ्चपात्रम् । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । एकार्थः किम् । पञ्चसु कपालेषु संस्कृतः, पञ्चकपालः पुरोडाशः । 'तद्धितार्थेद्विगुरयम्' 'लक्ष्यानुसारत इति किम्' त्रयाणां–पुराणां तिसृणां पुरां वा समाहारस्त्रिपुरी । पञ्चानां मूलानां समाहारः पञ्चमूली । त्रयाणां लोकानां समाहारस्त्रिलोकीत्यादिषु स्त्रीत्वं बोध्यम् ॥ २५ ॥

एकार्थकद्वन्द्व, अव्ययीभाव, संख्याव्यय से परे पथिन्, षष्ठ्यन्त परछाया, समूह में सभा.

**द्वन्द्वैकत्वाव्ययीभावौ पथः संख्याव्ययात्परः ।**
**षष्ठ्याश्छाया (बहूनां चे) द्विच्छायं (संहतौ)सभा॥२६॥**

द्वन्द्वेति–द्वन्द्वस्य एकत्वम्, एकत्वे द्वन्द्वो वा द्वन्द्वैकत्वमेकार्थको द्वन्द्वः समाहारद्वन्द्वः, अनव्ययस्य भवनमव्ययीभावश्च उभौ क्लीबे स्याताम् । द्वन्द्वैकत्वे यथा पाणिपादम्, शिरोग्रीवम्, मार्दङ्गिकपाणविकमित्यादिषु "द्वन्द्वश्चप्राणितूर्यसेनाङ्गानाम्" इत्येकत्वम् । अव्ययीभावे यथा अधिगोपम्, उपगङ्गम्, अधिस्त्रि, यथाशक्ति । संख्याव्ययात्परः पथः कृतसमासान्तः 'पथिन्' शब्दः क्लीबे स्यात् । द्वयोःपथोः समाहारो द्विपथम्, त्रयाणां पथां समाहारस्त्रिपथम्, चतुर्णां पथां समाहारश्चतुष्पथम् । विरूपः पन्थाः, विरुद्धः पन्थावेति विपथमित्यादिषु "ऋक्पूर–" इति समासान्तः "पथः संख्याव्ययादेरिति" क्लीबत्वम् । कुत्सितः पन्थाः "कापथ्यक्षयोः" इति कादेशे, "पथो विभाषा" इत्यप्रत्यये, "पथः संख्याव्ययादेरिति" क्लीबत्वे च कापथम् । संख्याव्ययात्परः किम् । धर्मपथः, योगपथः । कृतसमासान्तः किम् । अतिपन्थाः, सुपन्थाः । षष्ठ्याःषष्ठ्यन्तात्परा तत्पुरुषे छाया क्लीबे, सा चेद्बहूनां सम्बन्धिनी स्यात् । यथा वीनां पक्षिणां छाया विच्छायम् । अत्र "छाया बाहुल्ये" इति क्लीबत्वम् । 'बहूनां किम्, कुड्यच्छाया, कुड्यच्छायम्, अत्र विभाषासेना" इति क्लीबत्वम् । संहतौ समूहे वर्तमानो यः सभाशब्दस्तदन्तस्तत्पुरुषः क्लीबे, षष्ठ्यन्तात्पराचेत् । यथा स्त्रीणां सभा, स्त्रीसभम्=स्त्रीसंघातः । अत्र "अशाला च" इति क्लीबत्वम् । संहताविति किम् । धर्मस्य सभा, धर्मसभा धर्मशालेत्यर्थः संपद्यते ॥ २६ ॥

राजशब्द वर्जित राजपर्याय-रक्षः पिशाचादि वाचक षष्ठ्यन्त पर शालार्थक सभा शब्द.

**शालार्थापि परा राजाऽमनुष्यार्थादराजकात् ।**
**दासीसभं नृपसभं रक्षःसभ ( मिमादिशः ) ॥ २७ ॥**

शालेति—शालागृहमर्थो यस्याः सा सभा अराजकात् राजामनुष्यार्थात्=राजशब्द वर्जित राजपर्यायात्, अमनुष्यात्=रक्षःपिशाचादिवाचकाच्च षष्ठ्यन्तात्परात्तत्पुरुषे क्लीबे स्यात् । अपिना संहत्यर्था सभा गृह्यते । इनस्य सभा, इनसभम् । प्रभूणां स्वामिनां सभा, प्रभसभम् । पिशाचानां सभा, पिशाचसभम् । दासीनां सभा, दासीसभं दासीगृहमित्यर्थः । नृपाणां सभा, नृपसभम् । रक्षसां सभा, रक्षस्सभमित्यादिषु " सभा राजामनुष्यपूर्वा " इति क्लीबत्वम् । इमा दिशः उदाहरणान्यवसेयानि । 'अराजकात् किम् ' राज्ञां सभा राजसभा । राजपर्यायग्रहणान्नेह चन्द्रगुप्तस्य सभा, चन्द्रगुप्तसभा । राजविशेषोऽयम् । षष्ठ्यन्तात्किम् । ईष्टे, ' ईश ऐश्वर्ये ' अस्मादादादिकात्कर्तरि " स्थेशभासपिसकसोवरच् " इति वरचि, टापि च ईश्वरा साचासौ सभाचेतीश्वरसभा । न सभा असभा । तत्पुरुषे, इति क्लिबू । ईश्वरस्य सभेव सभा यस्येति ईश्वरसभः । अत्र " सप्तम्युपमानपूर्वस्योत्तरपदलोपश्च " इति बहुव्रीहिर्विज्ञायतामिति ॥ २७ ॥

उपज्ञान्तआदि, **उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने ।**
कोपज्ञान्तआदि. **कोपज्ञकोपक्रमादिकन्थोशीनरनामसु ॥ २८ ॥**

उपेति—उपज्ञायते, उपपूर्वकाज्ज्ञानातेः कर्मणि ' आतश्चोपसर्गे ' इत्यङि, टापि च उपज्ञा । उपक्रम्यते, उप पूर्वकात्क्रमेः कर्मणि घञि, उपक्रमः । उपज्ञा उपक्रमश्चान्ते यस्येति उपज्ञोपक्रमान्तस्तत्पुरुषः क्लीबे स्यात् । तदादित्वप्रकाशने तयोः उपज्ञोपक्रमयोः आदित्वप्रकाशने प्राथम्येद्योत्येसति । " उपज्ञोपक्रमंतदाद्याचिख्यासायाम् " उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात् । तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः प्राथम्यं चेदाख्यातुमिष्यते । कस्य ब्रह्मणः उपज्ञा आद्यं ज्ञानं कोपज्ञम्=प्रजा । कस्य प्रजापतेः उपक्रमः आद्यारम्भः कोपक्रमं लोकः । आदिना पाणिनेरुपज्ञा प्राथम्यज्ञानं पाणिन्युपज्ञं ग्रन्थः । नन्दस्य उपक्रमः आद्यप्रारम्भः नन्दोपक्रमं द्रोणः । षष्ठ्यन्तात्परा या कन्था तदन्तस्तत्पुरुषः क्लीबे स्यात् । सा कन्था उशीनरनामसु उशीनरदेशस्थसंज्ञासु वर्तते चेत् । सौशमीनां कन्था सौशमिकन्थम् । आह्विकन्थम् । ' उशीनर, इति किम् ' दाक्षिकन्था । वाह्विकेष्वियं संज्ञा । ' नामसु किम् ' वीरणकन्था कुत्रापीयं न संज्ञेति ॥ २८ ॥

---

१ कस्य प्रजापतेः उपज्ञा, उपक्रमश्च । सृष्टिस्तेनादौ ज्ञाता प्रक्रान्ता च ॥

भाव में नणक चितों से अन्य अदन्त प्रत्यय, समूह व भाव कर्म में तद्धित प्रत्ययान्त, पुण्य सुदिन पर अह-न्शब्द.

**भावे नणकचिद्भ्योन्ये समूहे भावकर्मणोः।**
**अदन्तप्रत्यया पुण्यसुदिनाभ्यां त्वहः परः॥ २६॥**

भाव इति—नश्च-णश्च-कश्च-चिच्च नणकचितस्तेभ्योऽन्ये अदन्तप्रत्ययाः कृतो ये भावे विहिताः, तथा समूहे अर्थे भावकर्मणोर्विहिता ये अकारान्तप्रत्ययास्तद्धिताः, तदन्तं नाम क्लीवे स्यात्। यथा भवनम्,भूतम्। अत्र "नपुंसके भावे क्तः" भवितव्यम् भवद्भिः भवनीयम्, वा। अत्र ' तयोरेवकृत्यक्तखलर्थाः " इति भावे तव्यादयः। भवति, भूयते वा भव्यम् " भव्यगेयेति " साधुः। ब्रह्मणो भवनं ब्रह्मभूयम्। अत्र " भुवोभावे " इति भावे क्यप्। सांराविणम्—सांकूटिनं वर्तते। उभयत्र "अभिविधौ भावे इनुण् " इति ' इनुण् ' तदन्तात् " आणिमुणः " इत्यण् " इनण्यनपत्ये" अनपत्यार्थेऽणि पर इन्प्रकृत्या स्यात्। तेन " नस्तद्धिते " इति टिलोपो न। नण-केतिकिम्। "यजयाच—" इति नङ्। इज्यते इति यज्ञः। यतनम्, यत्नः। "स्वपोनन्। स्वपनम्, स्वप्नः। 'नौणच्' न्यदनम्,न्यादः। "सुपीति—" 'घञर्थे—" इति च कः। आखूनामुत्थानमाखूत्थः। विहननम्, विघ्नः। चित् " एरच् " इत्यच्, चयनं चयः। जयनं जयः। " ण्यासश्रन्थोयुच् " इति युच्। कारणं, कारणा। समूहेतद्धिताः। " भिक्षादिभ्योऽण्" भिक्षाणां समूहो, भैक्षम्। " गोत्रोक्षोष्ट्र—" इति वुञ्। " युवो-रनाकाविति " अकादेशः। औपगवानां समूहः, औपगवकम् "तस्य समूहः" इत्यण्। काकानांसमूहः, काकम्। "केदाराद्यञ्च" केदाराणां समूहः, कैदार्यम्—कैदारकं वा। भावे " तस्यभावस्त्वतलौ—" गोर्भावो, गोत्वम्। " इगन्ताच्चलघुपूर्वात् " इत्यण्। शुचेर्भावः, शौचम्। मुनेर्भावो,मौनम्। "द्वन्द्वमनोज्ञादिभ्यश्च" इति वुञ्—अकादेशश्च मनोज्ञानां समूहो मानोज्ञकम्।"स्तेनाद्यन्नलोपश्च" इति यत्। स्तेनस्य भावः कर्म वा स्तेयम्= चौर्य्यम्। " गुणवचनब्राह्मणादिभ्यः कर्मणि च " चाद्भावे। इति ष्यञ्। शुक्लस्य भावः कर्म वा शौक्ल्यम्। पुण्यसुदिनाभ्यां परः कृतसमासान्तोऽहः शब्दः क्लीवे स्यात्। पुण्यं च तदहश्च " राजाहः सखिभ्यष्टच् " इति टच्, पुण्याहम्। सुदिन-शब्दः प्रशस्तवाची। सुदिनं च तदहश्च सुदिनाहम्। अत्र " पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा " इति क्लीबत्वम्। समासान्त इति किम्, पुण्यान्यहानि यस्मिन्निति पुण्याहा मासश्चात्र समासान्तत्वाभावान्न क्लीबत्वमितिबोध्यम्॥ २६॥

क्रियाव्यय विशेषण, सामभेद, वृत्तभेद, ताड़फल या केला का फल गोंद या भात, थून्हीं, सोना, मर्म-योजन.

**क्रियाव्ययानां भेदकान्येकत्वेऽप्युक्थतोटके ।**

**चोचं पिच्छं गृहस्थूणं[1] तिरीटं मर्मयोजने ॥ ३० ॥**

क्रियेति–धात्वर्थात्मिकाः क्रियाः, न वियन्ति न क्षयंयान्तीति अव्ययानि क्रियाश्चाव्ययानि च क्रियाव्ययानि तेषां क्रियाव्ययानां भेदकानि विशेषणानि एकत्वे अपि शब्दात्क्लीबे च स्युः । क्रियाविशेषणानि यथा मन्दं पचन्ति, सुखं तिष्ठन्ति योगिनः, सलीलं नृत्यन्ति बालाः । अव्ययविशेषणानि यथा । रम्यं स्वः, प्रातः कमनीयम् । उच्यते, वचेः कर्मणि " पातॄतुदिवचिरिचिसिचिभ्यः स्थक् " इति थकि, किन्त्वात्संप्रसारणे, कुत्वे च उक्थम्=सामभेदः । तुटति, तुटेः कर्तरि ' ण्वुलि ' गुणे, अकादेशे च तोटकम्=वृत्तविशेषः । चोप्यते, चोपयतेः कर्मणि घञि, चञ्चति–चच्यतेवेति विग्रहे तु चञ्चेः कर्तरि "पचाद्यचि" कर्मणि घञि वा पृषोदरादित्वादस्यौत्वे च चोचम् " फलावशिष्टं तालफलं च चोचं कदल्याः फलं भवेत् " (इत्यार्षकोषः) । पिच्छयते, पिच्छयतेः स्वार्थणयन्तात्कर्मणि घञि पिच्छम् " पिच्छापूगच्छटाकोषमोचाशाल्मलिवेष्टके । भक्तसंभूतमण्डे च पंक्तावश्वपदामये । स्त्रियां पुंसि तु लाङ्गूले न द्वयोर्बर्हचूडयोः " ( इति मेदिनी ) गृहस्य स्थूणा, गृहस्थूणम्=गृहस्तम्भः,काष्ठमयी द्विकर्णिका वा । तरति, तरतेः कर्तरि, कर्मणि वा " कृतॄकृषिभ्यः कीटन् " इति कीटनि, किन्त्वादीत्वे, रपरत्वे च किरीटं वेष्टनम, सुवर्णं वा । शिरोभूषणमित्यन्ये । म्रियतेऽनेन, म्रियतेः करणे " सर्वधातुभ्य मनिन् " इति मनिनि, गुणे च मर्म=सन्धिस्थानम् । युज्यते ' युजिर् योगे ' अस्माद्रौधादिकात्कर्मणि " कृत्यल्युटो बहुलम् " इति ल्युटि, गुणे, अनादेशे च योजनम् " योजनं परमात्मनि । चतुष्क्रोश्यां च योगे च " (इति मेदिनी ) परमात्मनि, चतुष्क्रोश्यां, योगे च ' योजनं ' स्यादिति ॥ ३० ॥

राजसूय, वाजपेय, गद्य-पद्य, माणिक्य, भाष्य, सेंदुर, चीर-चीवर, पञ्जर या पिंजरा

**राजसूयं वाजपेयं गद्यपद्ये ( कृतौ कवेः ) ।**

**माणिक्यभाष्यसिन्दूरचीर[2]चीवरपञ्जरम् ॥ ३१ ॥**

राजेति–राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यः, लतात्मकः सोमो राजा स सूयते कण्ड्यतेऽत्रेति वा राजपूर्वकात्सुनोतेः कर्मण्यधिकरणे वा " राजसूयसूर्यमृषोद्य-

---

१ " गृहशशाभ्यां क्लीबे ( नियमार्थमिदम् ) गृहशशापूर्वे स्थूणोर्णे यथासंख्यं नपुंसके स्तः । इति क्लीबत्वम् " ॥

२ " चीराणि किं पथि न सन्ति दिशन्ति भिक्षाम् " ( इति भागवतम् ) ॥

रुच्यकुप्यकृष्टपच्याव्यथ्या: " इति 'क्यपि' निपातनाद्दीर्घे च राजसूयम् । वाजमन्नं पैष्टीसुरा वा पीयतेऽत्रेति, वाजपूर्वकात् पिबतेरधिकरणे यति, "ईद्यति" इत्यात ईत्वे गुणे च वाजपेयम् । उभावपियागविशेषावर्धर्चादीज्ञेयाविति । कवे: कृतौ "गद्यपद्ये" क्लीबे स्याताम् । यथा गद्यते, गदे: कर्मणि "गदमदचरयमश्चानुपसर्गे" इति 'यति' गद्यम्=छन्दोरहितं वाक्यं * वार्तिकमिति वा । पादा: सन्त्यस्य "अन्येभ्योऽपीति" यपि, पद्दन्नो'–इति पदादेशे । पद: सन्त्यस्येति वा पद्यम् "पद्यं श्लोके पुमान् शूद्रे पद्या वर्त्मनि कीर्तिता" (इति मेदिनी) कवे: कृताविति किम् । गद्या=वार्ता । पद्य:=पङ्क:, पद्यं=रज: । मणिशब्देन कायति जनोऽयम्, मणिपूर्वकात्कायते: कर्तरि "अन्येभ्योऽपीति" डप्रत्यये मूलविभुजादित्वात्के वा मणिकम् । मणिके मणिपूराख्ये नगरे भवम् "शण्डिकादिभ्योञ्य:" इति 'ञ्ये' चातुर्वर्ण्यादित्वात् 'ष्यञि' वा ञित्वाद्वृद्धौ च माणिक्यम्=प्रवालसदृशमश्मजातं रत्नम्, रक्तमणिर्वा । भाष्यते सूत्रार्थो ऽनेनेति विग्रहे 'भाष व्यक्तायां वाचि' अस्मात्करणे "कृत्यल्युटो बहुलम्" इति 'ण्यति' भाष्यम् "सूत्रार्थो वर्ण्यते यत्र वाक्यै: सूत्रानुसारिभि: । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदु:"। स्यन्दते, स्यन्दे: कर्तरि "स्यन्दे: संप्रसारणं च" इत्यूरनि, संप्रसारणे च सिन्दूरम् "सिन्दूरस्तरुभेदे स्यात्सिन्दूरं रक्तवर्णके । सिन्दूरी रोचनारक्तचेलिकाधातकी षु च" (इति मेदिनी) चीयते, चिनोते: कर्मणि "शुसिचिमीनां दीर्घश्च" इति रकि, दीर्घे च चीरम्–"चीरी झिल्ल्यां नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालिखनभेदयो:" (इति मेदिनी) चीयते, चिञ:कर्मणि "छित्वरच्छत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वरा:" इति ष्वरचि प्रत्ययान्ते निपातिते चीवरम्=मुनिवसनम्, "शाक्यभिक्षुप्रावरणमिति वा सुभूति:"। पिञ्ज्यते, 'पिजि संपर्के' अस्मादादादिकात्कर्मणि बाहुलकादरप्रत्यये पृषोदरादित्वादिकारस्यात्वे च पञ्जरम् "यावन्मध्यं बहुधा पाञ्जरं नावगाहते" इति दमयन्तीश्लेषादकारवान् । क्वचित्तु पिञ्जरमिति वा पाठ: । "पिञ्जरोऽश्वान्तरे क्लीबं स्वर्णे पीते च वाच्यवत्" (इति मेदिनी) कायास्थिवृन्दं पक्ष्यादिबन्धनगृहं च भणितं सुधीभिरिति ॥ ३१ ॥

चार्वाकशास्त्र, हरिताल, बांस का पात्र, थारा या देशभेद.

**लोकायतं हरितालं विदलं स्थालबाह्लवम् ।**

**इति क्लीबसंग्रह: ॥**

लोक इति–लोके आयतन्ते, लोकाङ्पूर्वाद्यते: कर्तरि 'पचाद्यचि' लोकायताश्चार्वाकास्तेषामिदं शास्त्रम् "तस्येदम्" इत्यणि, संज्ञापूर्वकत्वाद्वृद्ध्यभावे च लोकायतम् । हरितेनालति, हरितपूर्वकादलते: कर्तरि 'पचाद्यचि' हरितालम् "हरितालं धातुभेदे स्त्री दूर्वाकाशरेखयो:" (इति मेदिनी) विदलति, विपूर्वकाद्दलते: कर्तरि 'पचाद्यचि'

* उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते । तं ग्रन्थं वार्तिकं प्राहुर्वार्त्तिकज्ञामनीषिण: ॥ १ ॥

विदलम्=वंशकृतपात्रभेदः । स्थलत्यत्र ' ष्ठल स्थितौ ' अस्मादधिकरणे " हलश्च " इति घञि ' णिजन्तादचि वा स्थालम् " स्थालं भाजनभेदेऽपि स्थाली स्यात्पाटलोखयोः " ( इति मेदिनी ) बह्लुदेशे भवम् । " तत्र भवः " इत्यणि, णित्त्वाद्वृद्धौ, गुणे, अवादेशे च बाह्लवम्=कुङ्कुमम् ।

इति क्लीबसंग्रहविवरणम् ॥

---

आधीऋचा, तिलोंकी खली, कांटा.

## ( पुंनपुंसकयोः ) शेषोऽर्धर्चपिण्याककण्टकाः ॥३२॥

पुमिति—" पुन्नपुंसकयोरित्यधिक्रियते " शेषः=उक्तादन्यः पुंनपुंसकयोः स्यात् । ऋचोऽर्धम् । " अर्धं नपुंसकम् " इति समासे, " ऋक्पूरब्धूरिति " अ प्रत्यये समासान्ते च अर्धर्चः । अर्धर्चम् । अत्र ' अर्धर्चाः पुंसि च " इति पुंनपुंसकत्वम् । पण्यते इति पिण्याकः " पिनाकादयश्चेति " साधुः । " पिण्याकोऽस्त्री तिलकल्केहिङ्गुबाह्लीकसिह्लके " ( इति मेदिनी ) । कण्टति ' कटि गतौ ' अस्माद्भौवादिकात्कर्तरि ' ण्वुलि ' अकादेशे च कण्टकः " कण्टकः क्षुद्रशत्रौ च कर्मस्थानकदोषयोः । रोमाञ्चे च द्रुमाङ्गे च कण्टको मस्करेऽपि च " (इति विश्वः) " कण्टको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे । नैयोगिकादिदोषोक्तौ स्याद्रोमाञ्चद्रुमाङ्गयोः " ( इति मेदिनी ) क्षुद्रशत्रुप्रभृतिषु कण्टकः स्त्रियां न स्यादिति ॥ ३२ ॥

लड्डू, उपताप, टांकी, साड़ी, कपड़ा, खर्व, दशकरोड़, पातक, उद्योग, चरकशास्त्र, तमाखू, आंवला, नरई.

## मोदकस्तण्डकष्टङ्कः शाटकः खर्वटोऽर्बुदः ।
## पातकोद्योगचरकतमालामलका नडः ॥ ३३ ॥

मोदेति—मोदते, मोदयते वा ' मुद हर्षे ' अस्माद्भौवादिकात्स्वार्थण्यन्ताद्वा कर्तरि ण्वुलि, अकादेशे च मोदकः " मोदकः खाद्यभेदेऽस्त्री हर्षके पुनरन्यवत् " ( इति मेदिनी ) । तण्डते ' तडि आघाते ' अस्माद्भौवादिकात्कर्तरि ' ण्वुलि ' अकादेशे च तण्डकः।"तण्डकःखञ्जने फेने समासप्रायवाचि च। गृहदारुतरुस्कन्धमायाबहुलकेष्वपि" ( इति मेदिनी ) । दण्ड एव, स्वार्थे कनि, " दण्डकः " इत्यपि । टङ्कयति, ' टकि बन्धे ' अस्माच्चौरादिकात्कर्तरि ' पचाद्यचि ' णिलोपे च टङ्कः " टङ्को नीलकपित्थे च खनित्रे टङ्कनेऽस्त्रियाम् । जङ्घायां स्त्री पुमान्कोपे कोषासिग्रावदारणे " (इति मेदिनी) तङ्कतीति विग्रहे तु ' तकि कृच्छ्रजीवने ' अस्मात्कर्तरि ' पचाद्यचि ' णिलोपे च तङ्कोपि । तङ्को=भयम् । शटति, 'शट गतौ' अस्मात्कर्तरि ' ण्वुलि ' वृद्धौ, अकादेशे च शाटकः=परिधानीयः । खर्वति, ' खर्व दर्पे ' अस्माद्भौवादिकात्कर्तरि " शकादिभ्योऽटन् " इत्यटनि, खर्वटः " यत्रैकतोभवेद्ग्रामो नगरं चैकतः स्मृतम् । मिश्रन्तु

खर्वटं नाम नदीगिरिसमाश्रयम्" अर्वति, 'अर्व हिंसायाम्' अस्माद्भौवादिकात्कर्तरि बाहुलकादुदचि, अर्बुदः "अर्बुदो मांसकीलेऽस्त्री परुषे दशकोटिषु। महीधरविशेषे ना" (इति मेदिनी) पातयति 'पत्लृ गतौ' अस्माद्भौवादिकाण्ण्यन्तात्कर्तरि ण्वुलि, णिलोपे, अकादेशे च पातकम्=पापम्, दोषः, अपराधो वा। उद्योजनम्, उत्पूर्वकाद्युनक्तेर्भावे 'घञ्' उद्योगः=उद्यमः, उपायः, यत्नः, परिश्रमः, चेष्टा च। चरति, चरतेः कर्तरि क्वुनि, अकादेशे च चरकम्=वैद्यकशास्त्रभेदः। वरकमिति पाठे तु स्यूतं वस्त्रम्। ताम्यति, तमेः कर्तरि "तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन्" इति 'कालनि' तमालः "तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे" (इति मेदिनी) आमलक्याः फलम् "नित्यं वृद्धशरादिभ्यः" इति मयटि, तस्य "फले लुक्" इति लुकि च आमलकः, आमलकम्। नडति, 'नड भ्रंशे' अस्माच्चौरादिकाण्णिचोऽभावपक्षे कर्तरि 'पचाद्यचि' नडः=नडोऽन्तरविवरं तृणभेदश्चेति ॥ ३३ ॥

कोढ़, मूंड़, मद्य, भूंजामांस, वीरनाद, कुशल, भीति, संयोग, तोलभेद, अक्षिरोग, रस्ताखर्च, विकारशून्य, नाचना.

**कुष्ठं मुण्डं शीधु बुस्तं क्ष्वेडितं क्षेम कुट्टिमम्।**
**संगमं शतमानार्मशम्बलाव्ययताण्डवम् ॥ ३४ ॥**

कुष्ठमिति—कुष्णाति, कुष्णातेः कर्तरि "हनिकुषि" इति 'क्थनि' कुष्ठम्। "कुष्ठं रोगे पुष्करेऽस्त्री" (इति मेदिनी) मुण्डयते, मुण्डेः कर्मणि 'घञ्' मुण्डम्=शिरः, मुण्डोऽसुरो वा। शेतेऽनेन। शीङः करणे "शीङोधुक्लक्—" इति धुकि, शीधु=मद्यम्। बुस्यतेस्म, बुस्यतेः कर्मणि क्ते, बुस्तम् "बुस्तं मांसशष्कुली, भृष्टमांसम्, पनसादिफलसारभागश्च। क्वचित् 'पुस्त' मिति पाठः। पुस्तयतीति, पुस्त्यते वा कर्तरि 'अचि' कर्मणि 'घञ्' वा पुस्तम्—तदेव पुस्तकम्। कचिच्चुस्तमिति वा पाठः। च्युस्यते, चुसेः कर्मणि क्ते, निपातनाद्यलोपे इडभावे च चुस्तम् 'तंग' इति ख्यातम्। क्ष्वेडनम्, क्ष्वेड्यते वा क्ष्विडेर्भावे कर्मणि वा 'ञीतः क्तः" इति क्ते क्ष्वेडितम्=वीरगर्जितम्। क्षयति, क्षियति वा क्षयतेः क्षियतेर्वा कर्तरि "अर्तिस्तुसुहु—" इति मनि, गुणे च क्षेमम्=कुशलम्। कुट्टनम्, कुट्टयतेर्भावे घञि कुट्टस्तेन निर्वृत्तम्। "भावप्रत्ययान्तादिमप्" इति 'इमपि' कुट्टिमम् "कुट्टिमोऽस्त्री निबद्धाभूः" (इति कोषान्तरम्।) संगमनम्, संपूर्वकाद्गमेर्भावे "ग्रहवृदृ" इत्यपि संगमम्=संयोगः। शतंमानमस्येतिशतमानम्=रूप्यपलम्। ऋच्छति, अर्तेःकर्तरि मनि, गुणे, रपरत्वे च अर्मम्=अक्षिरोगः। शम्वति अनेन शम्बयतेः करणे बाहुलकादलचि शम्बलं=पाथेयम्।

१ "चुरादीनां वा णिच्" इति पक्षाश्रये पचाद्यजिति पीयूषव्याख्यायाम् ॥

सम्बलमितिपाठे तु ' सम्ब सर्पणे ' धातुर्बोध्यः। न व्येति न क्षयं यातीति, नञ्पूर्वकादेतेः कर्तरि 'पचाद्यचि' भावे " एरच् " इत्यचि वा अव्ययम् "अव्ययो ऽस्त्री शब्दभेदे ना विष्णौ निर्व्यये त्रिषु ( इति मेदिनी ) तद्गुना प्रोक्तम् " तेन प्रोक्तम् " इत्यणि, वृद्धौ, गुणे, अवादेशेच ताण्डवम्=नर्तनमिति ॥ ३४ ॥

तोबड़ा, जिमीकन्द, कपास, नदी के दोनों किनारे, जूआ आदि, यज्ञस्तम्भ, झरोखा, यज्ञपात्र, जूस, यज्ञपात्र, पात्रविशेष.

**कवियं कन्दकर्पासं पारावारं युगन्धरम्।**
**यूपं प्रग्रीवपात्रीवे यूषं चमसचिक्कसौ ॥ ३५ ॥**

कवीति—कवते, कुङः कर्तरि बाहुलकादियप्रत्यये, गुणे, अवादेशे च कवियम्। " नार्या कवी खलीनं कवियंवानातुरंगमुखभाण्डम् " ( इति वोपालितः ) कन्दति, कन्दतेः कर्तरि 'पचाद्यचि' कन्दः, कन्दं वा "कन्दोऽस्त्री सूरणे सस्यमूले जलधरे पुमान् " क्वचित्कर्मेति वा पाठः। करोति, क्रियते वा कृञः कर्तरि, कर्मणि वा " कृञः पासः " इति पास प्रत्यये, गुणे, रपरत्वे च कर्पासम्=' कपास ' इति ख्यातम्। पारयति, पार्य्यते वा पारयतेः कर्तरि 'पचाद्यचि' कर्मणि, " पुंसीति" घे वा पारम्। न वारयति, नञ्पूर्वकाद्वारयतेःकर्तरि 'पचाद्यचि' अवारम्—पारं च अवारं चानयोःसमाहारः पारावारम्=परार्वाचीतीरम्। युगंधारयति, युगपूर्वकाद्धारयतेः कर्तरि " संज्ञायां भृतॄ—" इति खचि, " खचिह्रस्वः " इति ह्रस्वे, " अरुर्द्विषत् " इति मुमागमे च युगन्धरम्=कूबरः। युवन्त्यस्मिन्, यौतेराधारे " कुयुभ्यां च " इति पे, दीर्घे च यूपम्, यूपः यज्ञस्तम्भः। प्रगता ग्रीवा यस्मिन्निति प्रग्रीवम्=वातायनम्, मुखशाला, द्रुमशीर्षं वा। पात्रीं वातीति, पात्रीपूर्वकाद्वातेःकर्तरि " आतोनुपसर्गे कः " इति के, आलोपेच पात्रीवम्=यज्ञोपकरणपात्रभेदः। यूषति, यूषतेः कर्त्तरि "इगुपध-" इतिके, यूषम् " मुद्गामलकयूषस्तु ग्राही पित्तकफेहितः " ( इति वैद्यकशास्त्रम् )। चमन्त्यनेन, चमतेः करणे "अत्यविचमि—" इत्यसचि ' चमसम्=सोमपानपात्रम्। चेतत्यनेन, चितेःकरणे कसप्रत्यये तस्य कादेशे च। चिकनम्, चिक्कयति वा चिक्कयतेर्भावे घञि, कर्त्तरि ' पचाद्यचि ' वा चिक्कः। चिक्कं स्यति, चिक्कपूर्वकात्स्यतेःकर्तरि " आतोऽनुपसर्गे कः " इति के, आलोपेच चिक्कसः=अयमपि यज्ञपात्रविशेषो ज्ञायतामिति ॥ ३५ ॥

**अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम्।**
**तन्नोक्तमिहलोकेऽपि तच्चेदस्त्यस्तु ( शेषवत् ) ॥ ३६ ॥**

**इति पुन्नपुंसकसंग्रहः ॥**

अर्धेति—अर्धर्चादौ अत्र पुन्नपुंसकाधिकारवर्गे घृतादीनां पुंस्त्वाद्यं पाणिन्यादिभि-

भणितम् । तद् ध्रुवं वैदिकं वेदप्रसिद्धम् । तत्तस्मादिह नोक्तम् न व्याख्यातम् । चेद्यदि लोकेऽप्यस्ति तत् शेषवदस्तु शिष्टप्रयोगानुसारेणग्राह्यमिति ॥ ३६ ॥

इति पुन्नपुंसकसंग्रहविवरणम् ॥

---

**स्त्रीपुंसयोरपत्यान्ता, द्विचतुःषट्पदोरगाः ।**
**जातिभेदाः पुमाख्याश्च स्त्रीयोगैःसह मल्लकः॥ ३७ ॥**

स्त्रीति—" स्त्रीपुंसयोः " इत्यधि क्रियते । अपत्यार्थे विहिता येऽणादयस्तदन्ताः सर्वे स्त्रीपुंसयोः स्युः । औपगवः, औपगवी । गार्ग्यः, गार्गी । द्विचतुष्पदषट्पदवाचिनः उरगवाचिनश्च जातिविशेषाः स्त्रीपुंसयोः स्युः । मानुषः, मानुषी । विप्रः, विप्रा । शूद्रः, शूद्रा "शूद्रा चामहत्पूर्वाजातिः" इति टाप् । बकः, बकी । हंसः, हंसी । सिंहः, सिंही । भ्रमरः, भ्रमरी । उरगः, उरगी । " जातेरस्त्रीविषयात्– " इति ङीप् । अबाधिता इत्येव । मक्षिका, शिवा, लूता । पिपीलिका । जातिवाचिनः स्त्रीपुंसयोः स्युः । द्रुणः, द्रुणी । मत्स्यः, मत्सी । केचित्तु ' षट्पदादिभिरस्यैकवाक्यतां वदन्ति । पुमाख्याः पुरुषाख्याः स्त्रीयोगैः सह वर्तमानाः स्त्रीपुंसयोःस्युः । ब्राह्मणः, ब्राह्मणी । शूद्रः, शूद्री । मल्लते,मल्लेः कर्तरि 'ण्वुलि' अकादेशे च मल्लकः, स्त्री चेन्मल्लिका अत्र " प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः " इति पूर्वस्यात इदादेशः । " मल्लिका तृणशून्येऽपि मीनमृत्पात्रभेदयोः " ( इति मेदिनी ) तृणशून्ये मीनमृत्पात्रभेदयोरपि मल्लिका स्यादिति ॥ ३७ ॥

यती, कौड़ी, नक्षत्र, चन्दन, कालीपादरि, मन्त्र, घरिया, परिमाण, बेरी, लाठी, साड़ी, कमर, झोपड़ी.

**मुनिर्वराटकः स्वातिर्वर्णको झाटलिर्मनुः ।**
**मूषा सृपाटी कर्कन्धूर्यष्टिः शाटी कटी कुटी ॥ ३८ ॥**

मुनिरिति—मन्यते, मनेः कर्तरि " मनेरुच्च " इतीनि, उदादेशे च मुनिः " मुनिः पुंसि वसिष्ठादौ वङ्गसेनतरौ जिने " ( इति मेदिनी ) वरमटति, वरपूर्वकादटतेः कर्तरि ' क्वुनि, अकादेशे च वराटकः=बीजकोषः, शुल्वं वा । शोभनमतति सुपूर्वकादततेःकर्तरि " अञ्ज्यतीभ्यां च " इतीणि, णित्त्वाद्वृद्धौ च स्वातिः,=नक्षत्रभेदः । वर्णयति, वर्णयतेः कर्तरि ' ण्वुलि ' अकादेशे च वर्णकः " विलेपने चन्दने च वर्णकं पुन्नपुंसकम् " ( इति रभसः ) झटनम् ' झट संघाते ' अस्माद्भौवादिकाद्भावे 'घञि' झाटः । झाटं लाति, झाटपूर्वकाल्लातेःकर्तरि बाहुलकाड्डि प्रत्यये, डित्त्वाट्टिलोपे च झाटलिः=वृक्षभेदः । मन्यते, मनेःकर्तरि " शॄस्वृस्निहि–" इत्युप्रत्यये मनुः=आदि राजा, मन्त्रश्च । मूषति, मूषेः कर्तरि ' पचाद्यचि, ' टापि च मूषा=स्वर्णादिविलेपन-

भाण्डम् । सरति, सर्पति वा सरतेः सर्पतेर्वा कर्तरि बाहुलकात्पाट प्रत्यये पृषोदरादित्वाद्वा-सृपाटः=परिमाणभेदः । जातित्वाद्गौरादित्वाद्वा ङीषि सृपाटी । कर्कं दधातीति, कर्कन्धूः "अन्दूदृम्भू–" इति साधुः । बदरी वृक्षः । यक्षते, 'यक्ष पूजायाम्' अस्माद्गौरादिकात्कर्तरि क्तिचि "स्कोः संयोगाद्योः" इति कलोपे, ष्टुत्वे च । यजतेर्बाहुलकात्ति प्रत्यये "व्रश्चभ्रस्जेति" षत्वे वा यष्टिः=लगुडो, मधुयष्टिका च । शाट्यते, शाटयतेः स्वार्थण्यन्तात्कर्मणि घञि, जातिलक्षणे 'ङीषि' च शाटी=पटभेदः । कटति, कटतेः कर्तरि 'पचाद्यचि' जातिलक्षणे ङीषि च "सर्वधातुभ्य" इतीनि वा "कृदिकारादिति" वा ङीषि कटी, कटिर्वा । कुटति, कुटतेः कर्तरि इनि । "इगुपध–" इति वा के, "जाते–" रिति गौरादित्वाद्वा ङीषि च कुटी कुटिर्वा गृहविशेषः, पर्णशाला वेति विज्ञायतामिति ॥ ३८ ॥

इति स्त्रीपुंससंग्रहविवरणम् ॥

---

## अथ स्त्रीनपुंसकसंग्रहो व्याख्यायते ॥

---

ष्यञ्, वुञ्, उचित, मिताई.

**"स्त्रीनपुंसकयो" र्भावक्रिययोः 'ष्यञ्' क्वचिच्च 'वुञ्' ।**
**औचित्यमौचितीमैत्री मैत्र्यं 'वुञ्' (प्रागुदाहृतः)॥३६॥**

स्त्रीति–"स्त्रीनपुंसकयोः" इत्यधिक्रियते । भावक्रिययोः भावकर्मणोर्विहितः ष्यञ् वुञ् च क्वचित् स्त्रीनपुंसकयोः स्यात् । "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति चकाराद्भावे च विहितः 'ष्यञ्' स्त्रीनपुंसकयोः स्यात् । क्वचिदिति ष्यञ्वुञ्भ्यां सम्बध्यते । क्वचित् 'ष्यञ्' स्यात् । क्वचिच्च वुञ् स्यात् । यथा उचितस्य भावः, कर्म वा । ष्यञि, वृद्धौ, "यस्येति च" इत्यलोपे च औचित्यम् । स्त्रियान्तु "षिद्गौरादिभ्य" इति 'ङीषि' "हलस्तद्धितस्य–" इति यलोपे च औचिती । मित्रस्य भावः, कर्म वा 'ष्यञि' मैत्र्यम् । स्त्रियां तु 'ङीषि' यलोपे च मैत्री । एवं समग्रस्य भावः सामग्र्यम् । स्त्रियां तु सामग्री । अर्हतो भावः कर्म वा 'ष्यञि' "अर्हतो नुम्च" इति नुमागमे च आर्हन्त्यम् । स्त्रियान्तु आर्हन्ती=योग्यता । प्राग् 'द्वितीयकाण्डे' वुञ् उदाहृतः । यथा अहो अहं पुरुषः "सुप्सुपा" इति समासे अहो पुरुषस्य भावः 'मनोज्ञादित्वाद्' वुञि, वृद्धौ, अकादेशे, टापि च आहोपुरुषिका । शिष्यश्च उपाध्यायश्च तयोर्भावः "द्वन्द्वमनोज्ञादिभ्यश्च" इति 'वुञि' शैष्योपाध्यायिका । गर्गस्य भावः "गोत्रचरणादिति–" वुञि, गार्गिका । क्वचिन्न । मनोज्ञस्य भावः वुञि, अकादेशे च मानोज्ञकम् । रमणीयस्य भावः कर्म वा "योपधाद्गुरूपोत्तमादिति" 'वुञि' रामणीयकम् । "भावे" इति किम् । चत्वारो वर्णाश्चातुर्वर्ण्यम्, अत्रस्वार्थे 'ष्यञ्' बोध्यः । स्त्रियां न स्यादिति ॥ ३६ ॥

सेना, छाया, शाला आदि, मनुष्यों की सेना, कुत्तों की रात, गायगोठ।

**षष्ठ्यन्तप्राक्पदाः सेनाच्छायाशालासुरानिशा।**
**स्याद्वा नृसेनं श्वनिशं गोशालमितरे च (दिक्)॥ ४०॥**

षष्ठीति—षष्ठ्यन्तं प्राक्पदं पूर्वपदं येषामिति=षष्ठ्यन्तात्पराः—सेनाच्छायाशाला सुरानिशास्तत्पुरुषे स्त्रीनपुंसकयोः स्युः। यथा नृणां सेना, नृसेना। वृक्षस्य छाया, वृक्षच्छाया। गवां शाला, गोशाला। यवानां सुरा, यवसुरा। श्वनां निशा, श्वनिशा। पक्षे "विभाषा सेनासुराछायाशालानिशानाम्" इति क्लीबता स्यादिति। यथा नृसेनम्। वृक्षच्छायम्। गोशालम्। यवसुरम्। श्वनिशम्। एवमितरेऽपिबोध्याः। यथा "छायाबाहुल्ये" छायान्तस्तत्पुरुषो नपुंसकं स्यात्पूर्वपदार्थबाहुल्ये। इक्षूणां छाया, इक्षुच्छायम् "विभाषासेना" इति विकल्पस्यायमपवादः। 'इक्षुच्छायानिषादिन्यः' इति तु "आसमन्तान्निषादिन्यः" इत्याङ्प्रश्लेषोबोध्यः। इति दिक् उदाहरणमिदं विज्ञायताम्॥ ४०॥

**आबन्नन्तोत्तरपदो द्विगुश्चापुंसि नश्च लुप्।**
**त्रिखट्वं च त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि॥ ४१॥**
**इति स्त्रीनपुंसकसंग्रहः।**

आबिति—आबन्तोत्तरपदोऽन्नन्तोत्तरपदश्चद्विगुरपुंसि स्त्रीनपुंसकयोः स्यात्। नश्च अनोनकारस्य च लोपनं लुप्=लोपःस्यात्। "आबन्तो वा" आबन्तोत्तरपदोद्विगुः स्त्रियां वेष्टः। अनोनलोपश्च वाच द्विगुः स्त्रियाम्। आबन्तोत्तरपदो यथा तिसृणां खट्वानां समाहारः "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वे कृते "द्विगोरिति" ङीपि च त्रिखट्वी। पक्षे "सनपुंसकम्" इति क्लीबत्वम्। त्रिखट्वम्। एवं पञ्चानां खट्वानां समाहारः, पञ्चखट्वी—पञ्चखट्वम्। अन्नन्तोत्तरपदो यथा त्रयाणां तक्ष्णां समाहारस्त्रितक्षी अत्र "अनोनलोपश्चेति" नलोपे, "द्विगोरिति" ङीप्। पक्षे त्रितक्षम्। एवं पञ्चानां तक्ष्णां समाहारः, पञ्चतक्षी। पक्षे पञ्चतक्षमिति॥ ४१॥

इति स्त्रीनपुंसकसंग्रहविवरणम्॥

---

## अथ त्रिलिङ्गशेषोव्याख्यायते॥

पात्र, दोना, वाटी, पेटारा, कमल या वेरफल, अनार.

**"त्रिषु" पात्री पुटी वाटी पेटी कुवलदाडिमौ।**
**इति त्रिलिङ्गशेषः।**

त्रीति "त्रिषु" इत्यधिक्रियते। पाति, पातेः कर्तरि "दादिभ्यश्छन्दसि" इति 'ष्ट्रन्' 'षिद्गौरादिभ्यश्च" इति ङीषि च पात्री "पात्र्यमत्रे त्रिषु क्लीबं स्रुवादौ राजमन्त्रिणि। तीरद्वयान्तरे योग्ये" (इति मेदिनी)। पुटति, पुटतेः कर्तरि "इगुपध—" इति के, गौरादित्वान्ङीषि च पुटी=पात्रभेदः। वाटयते, वाटयतेरर्थ-

न्तात्कर्मणि 'घञि' वाटः, गौरादित्वान्ङीषि च वाटी । वाटः पथिवृतौ वाटं वरण्डेऽङ्गान्नभेदयोः । वाटी वास्तौ गृहोद्यानकट्योः " ( इति हैमः ) । पिट्यते-पिटेः कर्मणि घञि, गुणे, जातित्वाद्गौरादित्वाद्वा ङीषि पेटी । स्त्रीलिङ्गप्रदर्शनं तु ङ्यन्तता सूचनार्थम् । वेत्रादिरचिता । कौ वलति, कुपूर्वकाद्वलतेः कर्तरि 'पचाद्यचि' कुवलम् " कुवलं चोत्पले मुक्ताफलेऽपि बदरीफले " ( इति मेदिनी ) दलनम्-दलतेर्भावे 'घञि' दालः , दालेन निर्वृत्तः " भावप्रत्ययान्तादिमप् " इतीमपि, डलयोरेकत्वाल्लस्य डत्वे च दाडिमः, दाडिमी, दाडिमम् " दाडिमः करको दन्तबीजो लोहित पुष्पकः " ( इति भावप्रकाशः ) " अनार " इति ख्यातम् । " वियोगिनीमैक्षत दाडिमीमसौ " ( इति नैषधम् ) असौ वियोगिनीं दाडिमीं ऐक्षत अपश्यदिति ॥

इति त्रिलिङ्गशेषविवरणम् ॥

द्वन्द्वसमास, तत्पुरुषसमास. **परलिङ्गं स्वप्रधाने द्वन्द्वे, तत्पुरुषेऽपि ( तत् ) ॥ ४२ ॥**

परेति-स्वे समस्यमानाः पदार्थाः प्रधानं यत्र तस्मिन्नितरेतरयोगद्वन्द्वे परपदस्य लिङ्गं स्यात् । यथा कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ । मयूरी च कुक्कुटश्च मयूरीकुक्कुटौ अत्रेतरेतरयोगाद् द्विवचनम् । तत्परलिङ्गं तत्पुरुषेऽपि स्यात् । यथा कुलस्य ब्राह्मणः, कुलब्राह्मणः । ब्राह्मणस्य कुलं, ब्राह्मणकुलम् । अर्धं पिप्पल्याः, अर्ध-पिप्पली । " परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः " इति परवल्लिङ्गता स्यादिति ॥ ४२ ॥

**अस्यापवादमाह—**

**अर्थान्ताः प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः ।**
**तद्धितार्थे द्विगुः संख्यासर्वनामतदन्तकाः ॥ ४३ ॥**

अर्थेति-अर्थोऽन्ते येषामिति अर्थान्ताः, प्राद्यादिपूर्वं येषामिति ते प्राद्यलंप्राप्ताऽऽपन्नपूर्वाश्च परं विशेष्यमुपगच्छन्तीति परोपगाः विशेष्यलिङ्गाः स्युः । अर्थान्ता यथा— द्विजायायम्, द्विजार्थः सूपः । द्विजायेयम्, द्विजार्था यवागूः । द्विजायेदं, द्विजार्थं पयः । एवं विप्रार्थोवेदः, विप्रार्थामाला, विप्रार्थं वस्त्रम् । अत्र " अर्थेन नित्यसमासो विशेष्यलिङ्गताचेति वक्तव्यम् " इति नित्यसमासो वाच्यलिङ्गता च बोध्या । प्रादिपूर्वा यथा—प्रगतः आचार्यः=प्राचार्यः " प्रादयो गताद्यर्थे प्रथमया" इति समासः ॥ खट्वामतिक्रान्तोऽतिखट्वः । "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः । एवमतिक्रान्तो मालामतिमालोहारः । अतिक्रान्तामालामतिमालेयम् । अतिमालमिदम् । अवक्रुष्टः कोकिलया, अवकोकिलः । " अवादयः क्रुष्टाद्यर्थे तृतीयया " इति समासः । अलं पूर्वो यथा अलं कुमार्यै इत्यलंकुमारिरयम् , अलंकुमरिरियम्, अलंकुमारि इदम् । अलंजीविकायै अलंजीविकः, अलंजीविका, अलंजीविकम् । प्राप्तोजीविकाम्, प्राप्तजीविको द्विजः, प्राप्तजीविका स्त्री, प्राप्तजीविकमिदम् । एवम् आपन्नो जीविकाम्,

आपन्नजीविको विप्रः, आपन्नजीविका विप्रा, आपन्नजीविकमिदम् । अत्र " द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः " अस्मादेवज्ञापकात्समासः । तद्धितार्थे यो द्विगुः सवाच्यलिङ्गः स्यात् । पञ्चसु कपालेषु संस्कृतः, पञ्चकपालः=पुरोडाशः । पञ्चकपाला, पञ्चकपालम् । " संख्यापूर्वो द्विगुः " इति द्विगुसमासः । " संस्कृतं भक्षाः " इत्यण् । " द्विगोर्लुगनपत्ये " इत्यणोलुक् । संख्या सर्वनामानि च संख्या सर्वनामान्ताश्च शब्दा वाच्यलिङ्गाः स्युः । एकः पुमान्, एका स्त्री, एकं कुलम् । द्वौ पुमांसौ, द्वे स्त्रियौ, द्वे कुले । त्रयः पुरुषाः, तिस्रः स्त्रियः, त्रीणि कुलानि। एवं चत्वारो ब्राह्मणाः,चतस्रो ब्राह्मण्यः, चत्वारि वस्त्राणि । बहवो जनाः । बह्व्यो रमण्यः । बहूनि धनानि । सर्वनामानि यथा सर्वोदेशः, सर्वानदी, सर्वं जलम् । एवं परः पुमान्, परा स्त्री, परं कुलम् । संख्यान्तका यथा ऊनत्रयः, ऊनतिस्रः, ऊनत्रीणि । सर्वनामान्तका यथा परमसर्वः, परमसर्वा, परमसर्वमित्याद्यवसेयम् ॥ ४३ ॥

## बहुव्रीहिरदिङ्नाम्नामुन्नेयं ( तदुदाहृतम् ) ।
## गुणद्रव्यक्रियायोगोपाधयः ( परगामिनः ) ॥ ४४ ॥

बह्विति—अदिङ्नाम्नाम्, न दिङ्नामानि येषामिति तेषामदिङ्नाम्नां बहुव्रीहिः, बहुव्रीहिसमासो वाच्यलिङ्गः स्यात् । तदुदाहृतं तस्योदाहरणमुन्नेयम् स्वयमेव विचारणीयम् । बहु=प्रचुरं धनं यस्येति बहुधनः, बहुधनं यस्या इति बहुधना, बहु धनं यस्मिंस्तद्बहुधनं गृहम् । ' अदिङ्नाम्नामिति किम् ' उत्तरस्याः पूर्वस्याश्च दिशोरन्तरालम् + उत्तरपूर्वा । अत्र " दिङ्नामान्यन्तराले " इति बहुव्रीहिः । गुणद्रव्यक्रियाणां योगे उपाधिर्निमित्तं येषामिति ते परगामिनो विशेष्यलिङ्गाः स्युः । यथा शुक्लःपटः, शुक्ला शाटी, शुक्लं वस्त्रम् । दण्डोऽस्त्यस्येति दण्डी, दण्डोऽस्त्यस्या इति दण्डिनी, दण्डो विद्यते यस्य तद्दण्डि । पचति, पाचयति वा पाचकः, स्त्री पाचिका, कुलं पाचकमित्याद्यवसेयम् ॥ ४४ ॥

---

कृत्प्रत्ययान्त,
कृत्य प्रत्ययान्त,
अणाद्यन्त.

## " कृतः कर्तर्यसंज्ञायां " कृत्याः ( कर्तरि कर्मणि ) ।
## अणाद्यन्ता ( स्तेनरक्षाद्यर्थे ) नानार्थभेदकाः ॥ ४५ ॥

कृत इति—असंज्ञायां कर्तरि अर्थे " कर्तरि कृत् " इत्यादिना विहिताः कृतः कृत्संज्ञकप्रत्ययास्तदन्ताः शब्दाः परगामिनो वाच्यलिङ्गाः स्युः । यथा करोतीति विग्रहे कर्तरि " ण्वुलतृचाविति " तृचि, कर्ता पुमान् । स्त्रियां " ऋन्नेभ्योङीप् " इति ङीपि, कर्त्री=माया । कर्तृ=कलत्रम् । कुंभस्य कारः, कुम्भकारः=कुलालः। अत्र "कर्मण्यण्" इत्यण् प्रत्ययः । स्त्रियां " टिड्ढेति " ङीपि, कुम्भकारी=कुलाली । कुम्भकारम्=कुलम् । ' असंज्ञायां किम् ' । " संज्ञायां भृतृवृजिधारिसहितपिदमः " इति

विहिता वाच्यलिङ्गा न स्युः । विश्वं बिभर्तीति विश्वम्भरोऽच्युतः, शक्रश्च । विश्वंभरा भूमिः । कर्तरि—कर्मणि च विहिताः कृत्याः कृत्यप्रत्ययान्ताः शब्दाः वाच्यलिङ्गाः स्युः । कर्तरि यथा—भवतीति भव्यस्तरुः, भव्या वराङ्गना, भव्यं कुलम् । अत्र "भव्यगेयेति" कर्तरि यत्—एवम् "वसेस्तव्यत्कर्तरि णिच्च" वसतीति वास्तव्योऽयम्, वास्तव्या सा, वास्तव्यं तत् । कर्मणि यथा क्रियतेऽसौ कार्यो घटः, कार्या सृष्टिः, कार्यं जगत् । अत्र कर्मणि "ऋहलोर्ण्यत्" इति ण्यत् । कर्तरीत्यादिकिम् । एधितव्यम्, एधनीयं त्वया । अत्र भावे औत्सर्गिकमेकवचनं क्लीबत्वं च बोध्यम् । असंज्ञायामित्येव । भिद्यः नदः, उध्यः । अत्र "भिद्योध्यौ नदे" इति क्यप्, उभौ वाच्यलिङ्गौ न स्यातामिति तेनरक्ताद्यर्थे—"तेन रक्तं रागात्" इत्याद्यर्थे विहिता ये अणादयस्तदन्ताः शब्दाः, नानार्थानां भेदका विशेषणानि । नानार्था वा भेदका विशेष्या येषांते वाच्यलिङ्गाः स्युः । यथा कौङ्कुमेन रक्तः, कौङ्कुमः पटः । अत्र "तेन रक्तं रागात्" इत्यण् । स्त्रियां कौङ्कुमी शाटी । कौङ्कुमं वस्त्रम् । लाक्षयारक्तः, लाक्षिकः पटः । अत्र "लाक्षारोचनाट्ठक्" इति ठक् । लाक्षिकी शाटी । लाक्षिकं वस्त्रम् । कृत्तिकाभियुक्ता कार्त्तिकी । अत्र "नक्षत्रेण युक्तः कालः" इत्यण् । वसिष्ठेन दृष्टं, वासिष्ठं साम "दृष्टं साम" इत्यण् । वसिष्ठेन दृष्टो, वासिष्ठो मन्त्रः । वासिष्ठी ऋक् । प्रजापतिना प्रोक्तः, प्राजापत्यः । "तेन प्रोक्तम्" इत्यर्थे "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति ण्यः । "अणाद्यन्ताः" इत्यादिपदेन ग्रामे भवो, ग्राम्यः पुमान्, ग्रामेभवा, ग्राम्या स्त्री, ग्रामे भवं, ग्राम्यमित्यादिषु "ग्रामाद्यखञौ" इति 'य' प्रत्ययः । "रक्ताद्यर्थे" इत्यादिपदेन मथुराया आगतः "तत आगतः" इत्यण्, माथुरः, स्त्रियां "टिड्ढेति" ङीप् । माथुरीयमित्याद्यवसेयम् ॥ ४५ ॥

**षट् संज्ञका "त्रिषु" समा युष्मदस्मत्तिङव्ययम् ।**
**परं विरोधे, शेषं (तु) ज्ञेयं "शिष्टप्रयोगतः" ॥ ४६ ॥**

## इति लिङ्गादिसंग्रहवर्गः ॥

षडिति—"ष्णान्ताःषट्"—"डति च" इति सूत्राभ्यां कृतषट्संज्ञकाः, युष्मदस्मदी, तिङन्तम्, अव्ययानि चैते त्रिषु लिङ्गेषु समाः तुल्याः स्युः । एषामलिङ्गत्वेन सादृश्यत्वमिति बोध्यम् । यथा षट् नराः, षट् स्त्रियः, षट् कुलानि । पञ्च नराः, पञ्च नार्यः, पञ्च फलानि । कति घटाः, कति स्त्रियः, कति गृहाणि । त्वं पुरुषः, त्वं स्त्री, त्वं फलम् । एवम् अहं पुरुषः, अहं स्त्री, अहं फलम् । पुरुषः पचति, स्त्री पचति, कुलं पचति । उच्चैः प्रासादः, उच्चैः शाला, उच्चैर्गृहम् । विरोधे "लिङ्गविधायकवचनविरोधे सति परं वचनं ग्राह्यम् । यथा 'स्त्रियामीदूद्विरामैकाच्' इत्यस्याव

१ विश्वं बिभर्तीति-विग्रहे "संज्ञायां भृतॄवृजि—" इत्यादिना खचि विश्वम्भरः "विश्वम्भरोऽच्युते शक्रे पुंसि विश्वम्भरा भुवि" (इति कोषान्तरम्) ॥

काशः—धीः, भ्रूः । "कृतःकर्तर्यसंज्ञायाम्" इत्यस्यावकाशः—कर्ता, पाचकः । नीः, लूः, इत्यादावुभयप्रसंगे परत्वात्त्रिलिङ्गताभवति। शेषमिहानुक्तं तु शिष्टप्रयोगतः शिष्टानां प्रयोगाज्ज्ञेयं ज्ञातव्यम् । यथा "चालनी तितउः पुमान्" इत्युक्तम् । इह "तितउ परिवपनं भवति" इति पस्पशाभाष्यप्रयोगान्नपुंसकत्वमपि बोध्यम् । तथा "ताटङ्कस्ते" इत्याचार्यप्रयोगात्ताटङ्कशब्दस्य पुंस्त्वम् । यथा वा 'कलिका कोरकः पुमान्' इतीहोक्तम् । 'कोरकाणि' इति माघकाव्यप्रयोगान्नपुंसकत्वमप्यवसेयं सद्भिः सुधीभिरिति ॥ ४६ ॥

इति लिङ्गादिसंग्रहवर्गविवरणम् ॥

---

**अथोक्तस्यैवोपसंहारमाह—**

**इत्यमरसिंहकृतौ, नामलिङ्गानुशासने ।**
**सामान्यकाण्डस्तृतीयः, साङ्गएव समर्थितः ॥ ४७ ॥**

इत्यमरसिंहकृतौ नामलिङ्गानुशासने तृतीयः सामान्यकाण्डः साङ्गःसाङ्गोपाङ्गसमेत एव समर्थितः संपादितः संभाषितो वा अथवा अमरसिंहकृतौ अमरसिंहाचार्य निर्मिते नामलिङ्गानुशासने नामलिङ्गप्रतिपादके शास्त्रे साङ्गः प्रस्ताववर्गसमूहाङ्गसमेत एव समर्थितः संभणितः संपादितो वा तृतीयः सामान्यकाण्डः इति समाप्तिं पफाणोति शम् ॥ ४७ ॥

---

## अथ व्याख्याकृद्वंशवर्णनमाह—

श्रीमत्प्राज्ञनरायणेन प्रभुणा स्वाज्ञापितः सादरं
नाम्ना शक्तिधरः सदाशिवपदद्वन्द्वे रतो नित्यशः ।
चक्रे चामरके प्रशस्तविवृतिं विद्वज्जनानां मुदे
नानाकोषयुतां विशुद्धिसहितां वाणिद्वयालंकृताम् ॥ १ ॥
शाके शैलगुणाष्टभूपरिमिते वर्षे द्विगोत्राङ्कको
पौषे मास्यसिते हरीशतिथिके श्रीभास्करे वासरे ।
सर्वेषां सुखबोधनाय रचिता व्याख्या रसाला मया
तां नित्यं प्रविलोकयन्तु सुधियो हृष्यन्तु स्वान्ते स्वके ॥ २ ॥
व्याख्याः सन्ति विदांवरैर्विरचिता यद्यप्यनेकानघा
यासु स्वल्पधियो विवेकरहिता बाला विषीदन्ति ये ।
तेषामेव कृते पदार्थवलिता व्याख्या रसाला कृता
सोयं मेऽत्र परोपकारकुशलैः संक्षम्यतां दुर्नयः ॥ ३ ॥
एषा रसाला रचिता विशाला, व्युत्पत्तिमाला सरला सुधीनाम् ।
स्वान्ते कवीनामनिशं विभातु, बालाः सुबोधं नितरां लभन्ताम् ॥ ४ ॥
पुरे मुरादाबादाख्ये शुक्लवंशोद्भवः सुधीः ।
आसीद्दुर्गाप्रसादाख्यो वलभद्रस्तु तत्सुतः ॥ ५ ॥
तस्यात्मजः शक्तिधरः शिवपादार्चने रतः ।
कृतवान्सर्वतोषाय विस्पष्टार्थप्रबोधिनीम् ॥ ६ ॥
बुद्धिमान्द्यवशात्किञ्चिद्यदशुद्धमलेखि तत् ।
द्वेषभावं समुत्सृज्य शोधनीयं मनीषिभिः ॥ ७ ॥

इति श्रीमदमरसिंहविरचिते अमरकोषे आनरेबुलश्रीमद्रायबहादुरभार्गवप्रयागनारायणाज्ञया द्विजवरशक्तिधरसंकलितायां रसालाख्यायां व्याख्यायां तृतीयः काण्डः समाप्तिमगादिति शम् ॥ ३ ॥

समाप्तश्चायं ग्रन्थः ॥

THE

# NÂMALINGÂNUS'ÂSANA

## ( AMARAKOSHA. )

OF

**AMARASIMHA.**

With the Commentary (Vyâkhyâsudhâ or Ramâs'ramî)

OF

BHÂNUJI DÎKSHIT

( SON OF THE GRAMMARIAN BHATTOJI DÎKSHIT ).

**EDITED WITH NOTES**

BY

PANDIT S'IVADATTA,

OF JAYPUR.

**Fifth Edition.**

REVISED BY

WÂSUDEV LAXMAṆ S'ÂSTRÎ PAṆS'ÎKAR.

PUBLISHED BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS,

BOMBAY.

1929.

॥ श्रीः ॥

# नामलिङ्गानुशासनं

नाम

# अमरकोषः ।

## पण्डितवरश्रीमदमरसिंहविरचितः ।

महामहोपाध्यायश्रीभट्टोजिदीक्षितात्मजविद्वद्वरश्रीभानुजिदीक्षितकृतया

व्याख्यासुधाख्यया व्याख्यया सहितः ।

जयपुरराजधानीवास्तव्येन पाठशालाध्यापकेन दाधिमथवंश-

भूषणसुमतिश्रीबदरीनाथात्मजश्रीशिवदत्तकोविदेन

टिप्पण्यादिपरिष्कारपुरस्कारेणोपस्कृतः ।

पञ्चमं संस्करणम् ।

पणशीकरोपाह्वलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा संशोधितम् ।

स च

मुम्बय्यां

पाण्डुरङ्ग जावजीश्रेष्ठिभिः

स्वीये निर्णयसागराख्यमुद्रणालये आयसाक्षरैर्मुद्रयित्वा प्रकाशितः ।

शाके १८५०—सन १९२९.

# भूमिका ।

## श्रीगणेशाय नमः ।

धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयनिष्पत्तिर्हि सर्वाभीप्सिता । सा च श्रुतिस्मृतिपुराणेतिहासादितत्तच्छास्त्रार्थज्ञानाधीना । तत्तदर्थज्ञानं च तत्तदवान्तरवाक्यार्थज्ञानाधीनम् । तत्तद्वाक्यार्थज्ञानं च तत्तत्पदार्थज्ञानाधीनम् । तत्तत्पदार्थज्ञानं च तत्तत्पदशक्तिग्रहाधीनम् । तत्तत्पदशक्तिग्रहे च

'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥'

इति शिष्टोक्तिदर्शिते शक्तिग्रहोपायेषु कोषस्यैव मुख्यकारणत्वम् । व्याकरणस्य यौगिकशब्दशक्तिग्राहकत्वेऽपि रूढयोगरूढयोः शक्तिग्राहकत्वाभावात् । उपमानादीनां स्वतःशक्तिग्राहकत्वाभावात् ॥ कोषेषु च केवलनामानुशासनभूतानां केवललिङ्गानुशासनभूतानां च लाघवेनोपकारकत्वाभावेन नामलिङ्गोभयानुशासनत्वेनामरसिंहविरचितस्यास्यैव कोषस्य सर्वोपकारकत्वम् । 'अयममरसिंहः किंजातीयः कदा कुत्रत्यं महीमण्डलं मण्डयांचकार' इति न निश्चितम् । परंतु देवसामान्यनामान्युक्त्वा देवविशेषनामप्रारम्भे बुद्धनाम्नां लेखनेन बौद्धत्वमस्यावसीयते ॥

केचित्तु—

'धन्वन्तरिः क्षपणकोऽमरसिंहशङ्कू वेतालभट्टघटखर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥'

इति वैक्रमनवरत्नख्यापकश्लोकतो विक्रमसमकालिकत्वममरसिंहस्य वदन्ति ॥

परे तु—

'इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ च शाब्दिकाः ॥'

इति पद्यानुरोधेन पाणिनि-समन्तभद्रयोरन्तरालभवत्वं ब्रुवते ॥ अत्रेदं बोध्यम्—इदं न क्रमबोधकम्, पाणिनिमहाभाष्यप्रवृत्तिसमकालनिष्पत्तिकचान्द्रव्याकरणकर्तृचन्द्राचार्यस्य पाणिनितः प्राग्लेखनात् ॥

अस्य वैयाकरणत्वं तु—

'अमरसिंहो हि पापीयान्सर्वं भाष्यमचूचुरत् ।'

इति पद्यात्सकलभाष्यतत्त्वज्ञत्वस्य प्रतीतेः प्रतीतमेव ॥ इत्थं भङ्ग्यन्तरेणोक्तिस्तु बौद्धत्वेन सकलवैदिकविरुद्धत्वात् ॥ अस्य सर्वोपकारकत्वादेव बहुभिरस्य व्याख्याः कृताः । तासु मद्दृष्टास्तु—

**१—अमरकोशोद्घाटनम्** भट्टक्षीरस्वाम्युत्प्रेक्षितम् ॥

तत्र च श्रीभोज-राजशेखर-भट्टि-माघ-प्रभृतीनां नामानि सन्ति ॥

**२—पदचन्द्रिका** रायमुकुटेन १३५३ शकाब्दे निर्मिता ॥

तत्रत्यग्रन्थादीनां नामानि डॉक्टर श्रीयुतभाण्डारकरैः प्रकाशितानि ॥

**३—बुधमनोहरा** स्वयंप्रकाशशिष्यवेदान्तिमहादेवविरचिता ॥

तत्र मुकुटनाम वर्तते ॥

**४—पीयूषव्याख्या** रामकृष्णदीक्षितकृता ॥

अत्रापि मुकुटनाम वर्तते ॥

**५—अमरचन्द्रिका** परमानन्दमैथिलकृता मुकुटसारभूता ॥

**६—पदविवृतिः** लिङ्गसूरिविरचिता ॥

**७—व्याख्यासुधा** भानुजिदीक्षितकृता ॥

अत्रत्यग्रन्थादिनामानि पत्रान्तरे मुद्रितानि ॥

**८—अमरविवेकः** महेश्वरकृतः ॥

आभ्यो व्याख्याभ्यो भिन्ना व्याख्या राधाकान्तबहादुरप्रकाशितास्तदीयशब्दकल्पद्रुमप्रस्तावनातो ज्ञेयाः ॥

अधुनैतद्देशे प्रचुरप्रचाराया व्याख्यासुधाया मुद्रणं वाराणस्यां जातम् । तथापि प्रायो दुर्लभतामवेक्ष्य पुनर्मुद्रणं मुम्बईस्थनिर्णयसागराध्यक्षश्रीयुतजावजीदादाजीभिर्वाञ्छितम् । तैः प्रेरितेन मया उक्तव्याख्यानां द्वित्रपुस्तकसंपादनपूर्वकं व्याख्यासुधोपस्कारो यथाबुद्धि समस्कारि ॥ यैर्महात्मभिरत्रावसरे पुस्तकं दत्तं तेषां नामान्यपि धन्यवादपूर्वकं प्रकाश्यन्ते—

| | |
|---|---|
| अमरकोषोद्घाटनस्य पुस्तकम् | जयपुरराजगुरुपुरोहितश्रीबलदेवचन्द्रशर्मणाम् ॥ |
| ,, | वचूणग्रामवास्तव्यदाधीचकाशीनाथशर्मणाम् ॥ |
| पदचन्द्रिकापुस्तकम् | तैलिङ्गान्वयरामकृष्णशर्मणाम् ॥ |
| ,, | पण्डितवरसरयूप्रसादशर्मणाम् ॥ |
| ,, | दाधीचरामप्रतापशर्मणाम् ॥ |
| बुधमनोहरा | दाधीचव्यासबालावकसशर्मणाम् ॥ |
| पीयूषम् | जयपुरराजगुरुभट्टश्रीलक्ष्मीदत्तसुतश्रीदत्तशर्मणाम् ॥ |
| व्याख्यासुधा | ,, |
| ,, | काव्यमालानिष्पादकपण्डितवरदुर्गाप्रसादशर्मणाम् ॥ |
| ,, | पण्डितवरनारायणशास्त्रिणाम् ॥ |
| ,, | ज्योतिर्विद्वरबालचन्द्रशर्मणाम् ॥ |
| अनेकार्थकैरवाकरकौमुदी (हैमनानार्थव्याख्या)<br>त्रिकाण्डशेषः<br>हारावली | जयपुरराजगुरुपर्वणीकरोपाह्वश्रीयुतनारायणभट्टानाम् ॥ |

अभिधानचिन्तामणिः (सटीकहैमनाममाला) प्रागुक्तश्रीदत्तशर्मणाम् ॥

तत्र टीकाभागे प्रमापकनामानि तु—

अमरः १४ पृष्ठे ३४ पङ्क्तौ. अमरटीका १२।२०. अमरशेषः ९६।१७. अलंकारकृताम् २७।३७. उत्पलः ८०।७. कात्यः १८।१३. कामन्दकिः ११४।१६. कालिदासः ८६।१२. कौटल्यः १७।३४. कौशिकः ३८।१५. क्षीरस्वामी ७५।१२. गौडः १०।२९. चाणक्यः

८३।३१. चान्द्रः ३६।३६. त्रिषष्टिशलाकापुरुषचरिते ( स्वकृते ) ४।२९. दुर्गः १५।१४. द्रमिलाः ३५।१२. धनपालः १९।१४. धनुर्वेदः ६६।३८. धन्वन्तरिः ५६।१६. नारदः ७६।२६. निघण्टुः (स्वकृतः) १०१।३४. नैरुक्ताः ४२।२. पालकाप्यः १०३।२९. पुराणम् १७।३८. प्रमाणमीमांसा (स्वकृता) १५।२२. प्राच्याः ११५।१४. बौद्धाः २५।१४ भट्टतोतः ७।२८. भट्टिः १२२।३२. भरतः ३०।१५. भागुरिः १७।२८. भोजः ३६।२५. मङ्खः ६८।३०. मनुः १६।१६ मनु. (कोषः) ३९।११. महाभारते २०।१५. माघः २३।५. माला १७।२२. मुनिः ५५।१८. याज्ञवल्क्यः १०१।२२. वाचस्पतिः ८।२५. वामनपुराणे १२।३५. विश्वदन्तः १३।१७. विष्णुपुराणे १७।२८. वेदे १०।१६. वैजयन्ती २७।१५. वैद्याः ५५।१०. व्याडिः १०।७. शाब्दिकाः ८१।३८. शाश्वतः १६।२३. श्रीहर्षः २८।३८. श्रुतेः १५।१२. स्मृतिः १०।१८. हलायुधः ३३।३८.

इत्थमुपलभ्यन्ते ॥

विश्वकोषः }
हैमकोषः } जयपुरराजवैद्यश्रीयुतश्रीकृष्णरामकविवर्याणाम् ॥

इत्थं कोशव्याख्यापुस्तकान्येकीकृत्य यथाबुद्धिविभवं विचार्य व्याख्यासुधायाः शोधनं टिप्पणीदानं चाकार्षम् । तदत्र शोधने क्वचिन्मम प्रमादो जातः स क्षन्तव्य एव । तथा चोक्तम्—

'गच्छतस्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥'

इति विज्ञापयति

जयपुरसंस्कृतपाठशालाध्यापकः

शिवदत्तशर्मा ।

# चतुर्थावृत्तिप्रस्तावना ।

नामलिङ्गानुशासनीयानेकव्याख्याग्रेसरत्वेन वरीवर्ति रामाश्रम्यपरपर्यायेयं व्याख्यासुधाख्या व्याख्या । अस्याः पूर्वसंस्करणं विद्वल्ललामायमानैर्जयपुरसंस्कृतपाठशालामुख्याध्यापकैर्दाधिमथकुलावतंसैः पण्डितवरशिवदत्तशर्मभिरसाधारणायासादनेकविद्वद्भ्योऽनेकविधटीकापुस्तकसंपादनयोजनेनेतरविद्वत्कर्तृकपुनःसंस्करणनिरपेक्षं शोधनमकारीति निर्विचिकित्सं पूर्वावृत्तिमुद्रितपुस्तकादवगम्यत एव । एतावतास्यान्येन पुनःसंस्करणकरणं पिष्टपेषणायितं स्यादिति न कल्पनीयं संख्यावद्भिः । प्रतिमुद्रणावृत्ति पूर्वावशेषदोषापाकरणकं संस्करणमावश्यकमेव । तदपि प्राथमिकशोधकद्वारैवापेक्षितमिति निर्विवादम् । तथापि पुनरङ्कनकालेऽनवसरतया शोधकस्य च दविष्ठत्वेन कालातिक्रमभिया चास्या द्वितीयावृत्तेः शोधनाय **श्रीमद्भिः तुकाराम जावजीश्रेष्ठिभिर्नियुक्तोऽस्मि** । उररीकृत्य च सादरं तन्निदेशं केवलं पूर्वतनसंस्कारकालीनमानुषशेमुषीनैसर्गिकदृगादिदोषकारणकानामुपरि निर्दिष्टपण्डितवरैः शोधनपत्रकेषूद्घाटितानामनुद्घाटितानां च मद्दृष्टिसरणिमापतितानां स्खलितानां यावद्बुद्धिबलं मार्जनमकारि । विशेषतश्चामरस्थस्य कस्यचिद्वस्तुनो यथासंभवं नाम्नां नाम्नोर्नाम्नश्च व्याख्यावसरेऽमुकस्य वस्तुन इमानीमे इदं वा नामेति व्यवस्था व्याख्यासुधायां कुत्रचनासीद्बहुत्र च नासीत्सापि व्युत्पित्सूनामनायासतोऽवगमाय तत्र तत्रेमानीयन्त्यमुकस्य वस्तुनो नामानीति स्थूलाक्षरविन्यासेन कृता ॥

अभ्यर्थये च नामंनाममत्रापि स्खलितं क्षमध्वमिति करुणावरुणालयेभ्यो विद्वद्भ्योऽहं सविनयं

पणशीकरोपाह्वलक्ष्मणशर्मसूनुः

वासुदेवशर्मा ।

---

### ४६ पृष्ठव्याख्यासुधाटिप्पणीशेषपूर्तिः—

"सा दृष्टेन्दुः सिनीवाली" इति मूलं 'सा अमावास्या दृष्टेन्दुः चतुर्दशीयोगात् दृष्टचन्द्रा चेत् सिनीवालीपदवाच्या भवति' इत्येवं फलितार्थकत्वेन व्याख्यातुर्व्याख्यासुधाकारस्याशयस्तु—

'तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूः स्मृता ।'

इति प्रचेतोवाक्यानुसारेण अमावास्याक्षयदिने सूर्योदयतः प्राक् चन्द्रोदयकाले अमावास्याया असत्त्वाच्चतुर्दश्या एव सत्त्वेन तद्दिन एवागत्या अमावास्याकार्यस्यापि करणीयत्वेनामात्वव्यवहारश्चतुर्दशीदिन एवेत्येवं बोधनीयः ॥ परं त्विदं न सार्वदिकम् । व्यर्कचन्द्रस्य ( चन्द्रसूर्योभयान्तरस्य ) द्वादशभ्योंऽशेभ्योऽनधिकत्वे चन्द्रादर्शनस्य अनल्पत्वे चन्द्रदर्शनस्य नियमनं 'दस्रेन्दवः १२' इति वाक्येन यद्यपि तिथ्याद्यानयनेऽनुपयुक्ततया शरसंस्काररहितस्यैव कृतमिति प्रतीयते तथापि शृङ्गोन्नतिचन्द्रदर्शनशौक्ल्यमानानयनप्रकरणे शरसंस्कारस्यापि दानात् चन्द्रदर्शने शरसंस्कारदानस्यात्यावश्यकत्वमिति व्यक्तीकृतम् ॥ तथा चोपपञ्चाशकस्य चन्द्रशरस्योत्तरदिक्कत्वे अमावास्याप्रथमतुर्यांशेपि शुक्लप्रतिपच्चरमतुर्यांशेऽपि चन्द्रदर्शनं भवत्येव । एवं चन्द्रशरस्य दक्षिणदिक्कत्वे कृष्णचतुर्दशीचरमतुर्यांशे शुक्लद्वितीयाप्रथमतुर्यांशेऽपि चन्द्रदर्शनं नैव भवति । दक्षिणोत्तरशरतारतम्यमेवात्र प्रधानं बीजमिति व्यञ्जयितुमेव **'अमाक्षये सिनीवाली'** इत्यनुक्त्वा 'सा दृष्टेन्दुः सिनीवाली' इत्येवोक्तं सर्वविदा कोषकारेणेति निवेदयति टिप्पणीकर्ता दाधिमथः ॥

---

॥ श्रीः ॥

## श्रीमदमरसिंहविरचितः

# अमरकोषः ।

## व्याख्यासुधाख्यया व्याख्यया समेतः ।

## प्रथमं काण्डम् ।

बल्लवीवल्लभं नत्वा गुरुं(गिरं) भट्टोजिदीक्षितम् ।
आ(अ)मरे विदधे व्याख्यां मुनित्रयमतानुगाम् ॥

प्रारिप्सितप्रत्यूहापनुत्तये कृतं मङ्गलं शिष्यशिक्षार्थमादौ निबबन्ध—

**यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः ।**
**सेव्यतामक्षयो धीराः स श्रिये चामृताय च ॥ १ ॥**

**यस्येति** ॥ हे अनघाः, भवद्भिः स धीराः सेव्यताम् । न अघं पापं येषां तेऽनघा निष्पापाः । सुकृतिन इति यावत् । सुकृतिन एव तं सेवितुं प्रभवन्तीति त एव संबोध्यन्ते । 'धर्मेण पापमपनुदति' इति श्रुतेः । धियं राति ददाति । 'रा दाने' (अ० प० अ०) अस्मात् 'क्विप् च' (३।२।७६) इति क्विप् । धीरा ज्ञानप्रदो गुरुः । अनेन 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति श्रुत्यर्थ उपदिष्टः । 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति गुरुसेवायाः फलमाह—श्रिये चामृताय चेति । चद्वयमुभयोः प्राधान्यद्योतनाय । भुक्तिमुक्तिप्राप्तिर्गुरुसेवातो भवति । 'क्रियार्थोपपदस्य–' (२।३।१४) इति चतुर्थी । तादर्थ्ये (वा० २।३।१३) वा । तदुक्तं भागवते—'योगर्द्धिमापुरुभयीं यदुहैहयाद्याः' इति । ननु गुरोः श्रियोऽभावात्ततः कथं सा प्रार्थ्य(प्य)त इत्याशङ्क्याह—यस्येति । अस्य गुरोरी लक्ष्मीरस्ति, गुणाश्च सन्ति । तदुक्तं भागवते—'ऋते भवत्पादपरायणान्न मां विन्दन्त्यहं त्वद्धृदया यतोऽजित' इति । 'सत्यं शौचं दया क्षान्तिस्त्यागः संतोष आर्जवम् । शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम् ॥ ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः । स्वातन्त्र्यं कौशलं कान्तिर्धैर्यं मार्दवमेव च ॥' इत्यादयो गुणाः । कीदृशस्यास्य—ज्ञानदयासिन्धोः । ज्ञायतेऽनेनेति ज्ञानं शास्त्रम्, दया निष्कारणपरदुःखप्रहाणेच्छा, तयोः सिन्धोरिव । शास्त्रसंपन्नस्य, दयापूर्णस्य च । अनेन 'श्रोत्रियं ब्रह्मनिष्ठम्' इति विशेषणयोर्मध्ये श्रोत्रियत्वमुक्तम् । स ज्ञानवानपि किमर्थं दास्यतीत्यतो दयावत्त्वमुक्तम् । 'दयालोरसमर्थस्य दुःखायैव दयालुता' इत्यतो ज्ञानवत्त्वमुक्तम् । कीदृशस्य—अगाधस्य । न गाधस्तलस्पर्शो यस्य गम्भीरस्य । विषयानाकृष्टस्येति यावत् । यद्वा अगं शैलं वृक्षं वा आप्नोति । 'अन्येभ्योऽपि दृश्यते' (वा० ३।२।१०१) इति आप्नोतेः (आप्लृ व्याप्तौ । स्वा० प० अ०) डः । टिलोपः (६।४।१४३) । सवर्णदीर्घः (६।१।१०१) तमगं दधाति मनसेत्यगाधः । तस्य । परमेश्वरभक्तस्येति यावत् । कीदृशो धीराः—अक्षयः । अः वासुदेवः, तस्मिन् क्षयो ज्ञानं निवासो वास्य सोऽक्षयः । अनेन ब्रह्मनिष्ठतारूपं द्वितीयं विशेषणमुक्तम् । यद्वा न क्षयो हिंसा यस्य । 'क्षीष् हिंसायाम्' (क्र्या० प० अ०) 'एरच्' (३।३।५६) । पूर्वत्र तु 'क्षि निवासगत्योः' (तु० प० अ०) । परपीडापहारकः । 'यस्मान्नोद्विजते लोकः' इति गीता । **अथवा** स धीराः मया सेव्यताम् । स कः । यस्य गुणा अनघाः । न अघं येभ्यस्तेऽनघाः । पापनिवर्तका इति यावत् । 'यशः कलिमलापहम्' इति भागवतात् । शेषं समानम् । 'आशिषि लिङ्लोटौ' (३।३।१७३) इति कर्मणि लोट् । इत्थं हि गुरुसेवापरान् प्रति कर्तव्यत्वेनोपदिश्यते स्वयं वा प्रार्थ्यते । गुरुसेवामाहात्म्यं च ब्रह्मवैवर्तादौ प्रसिद्धम् । भागवतेऽपि—'यथाऽहं ज्ञानदो गुरुः' इति, 'तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा' इति च । एवं 'लक्ष्मीवान्, कल्याण(निर्मल)गुणः, शास्त्रसंपन्नो, दयापूर्णो, विषयानाकृष्टो, विष्णुभक्तो, विष्णुसाक्षात्कारवान्, ज्ञानदो; गुरुः संपत्प्राप्त्यर्थं मोक्षप्राप्त्यर्थं च निष्पापैरधिकारिभिः, मया वा सेव्यताम्' इति परेभ्यो हितमुपदिशन्, स्वहितमाशंसमानो वा ग्रन्थकृदाशीर्वादलक्षणम् (इति) लक्ष्मीस्मरणलक्षणं च मङ्गलमाचचार । यत्तु मुकुटः—'स्वेष्टदेवतासंकीर्तनाद्विशिष्टमुत्पिपादयिषुः' इत्यवोचत् । तन्न । देवतावाचकपदस्यात्रादर्शनात्, आशीर्लोटो दर्शनाच्च । स्वामी तु—'जिनमनुस्मृत्य' इति स्मरणलक्षणं मङ्गलमाह । तन्न । जिनवाचकपदस्यात्रादर्शनात्,

सामान्यशब्दानां जिनलक्षणविशेषपरत्वेन व्याख्यानस्य वैदिकानामनुचितत्वात्, अमरकर्तुर्जैनत्वे प्रमाणाभावाच्च । प्राञ्चस्तु—'हे धीराः, स भगवान् सेव्यतामाराध्यताम् । धैर्यशालिन एव सेवितुं शक्नुवन्तीति तानेव संबोधयति । प्रकृतत्वाद्युष्माभिर्हितेच्छुभिः । स कः—यस्य गुणा मैत्रीमर्यादादयोऽणिमादयो वा अनघा निष्पापाः । रागाद्यसंवलिता इति यावत् । यद्वा, हृद्याः । तथा च धरणिः—'अनघोऽपापहृद्ययोः' इति । किंभूतस्य—ज्ञानदयासिन्धोः । ज्ञानं समस्तविद्या(षया)वबोधः । दृष्टं स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा दया । तयोरम्बुतुल्ययोः सिन्धोरिव सिन्धोर्विपुलाधारस्य, अगाधस्य अनवच्छिन्नमहिम्नः । अन्यैरनधिगतज्ञानपारत्वादपरिच्छेद्य(यं गाम्भीर्यं य)गाम्भीर्यस्य वा । स किंभूतः—परहितापादनेषु नास्ति क्षयो विरामो यस्य, मरणादिराहित्याद्वा । फलाधीनैव प्रेक्षावतां प्रवृत्तिरत आह—श्रिये चेत्यादि । श्रीरत्र त्रिवर्गसंपत्तिः, तां प्राप्तुम्, अमृताय मोक्षाय च । यद्वा—स सिन्धुः सेव्यताम् । स कः—'यस्य अगाधस्यातलस्पर्शस्य, अक्षयस्य सदा परिपूर्णस्य, अस्य विष्णोः क्षयस्य निवासस्य वा गुणाः अनघा रत्नादिमत्त्वान्नैर्मल्यादयः, श्रिये लक्ष्म्यै, अमृताय च पीयूषाय च' इत्याहुः । अत्र समुद्रपक्षस्तु न सम्यगिव । ज्ञानेत्यस्यानन्वयात् । 'अक्षयः' इत्यस्य प्रथमान्तस्य षष्ठ्यन्तत्वेन व्याख्यानस्यानुचितत्वात् । 'अभीष्टदेवतानमस्काराद्युपनीतमदृष्टं हि—' इत्यादिस्वग्रन्थविरोधाच्च । आशीर्नमस्क्रियावस्तुनिर्देशेष्वनन्तर्भावात् । 'ज्ञानदययोः स्यन्दते प्रवर्तते देवतारूपत्वात्' इति वा, 'ज्ञानदये स्यन्देते प्रवर्तेते देवतारूपेऽस्मिन्' इति ... समाधेयम् । षष्ठ्यर्थोऽप्यार्थिकार्थत्वेन समाधातुं शक्यः । 'स्यन्दतेः संप्रसारणं धश्च' (उ० १।१२...) इत्युः । यत्तु मुकुटः—'ताभ्यां सिन्धुरिवेति प्रकृत्यादित्वात् (२।३।१८ वा०) तृतीया । 'तृतीया' (२।१।३०) इति 'योगविभागात्समासः' इति 'सर्वधरादयः' इति । तदपि न सम्यक् । अर्थासंगतेः । प्रातिपदिकार्थे हि सा, तस्य न भेदेनाभेदेन वात्रान्वयः संभवति । अभेदे हि तृतीया व्यर्था । प्रथमाया एवौचित्यात् ॥

अभिधेयप्रयोजने दर्शयति—

**समाहृत्यान्यतन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः ।**
**संपूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम् ॥ २ ॥**

**समेति** ॥ मया, अन्येषां व्याड्यादीनां तन्त्राणि नाम, लिङ्गानुशासनानि, सिद्धान्तान्वा । समाहृत्यैकीकृत्य, संगृह्य वा । नामान्याख्याः, लिङ्गानि च स्त्रीपुंनपुंसकानि, अनुशिष्यन्ते विविच्य बोध्यन्तेऽस्मिन्ननेन वेति नामलिङ्गानुशासनम्, 'करणाधिकरणयोश्च' (३।३।११७) इति ल्युट् । संपूर्णं न्यूनत्वदोषरहितम् । उच्यते । कीदृशम्—वर्गैः प्रकरणैर्युक्तम् । कीदृशैः—संक्षिप्तैः स्वल्पशब्दैः । पुनः कीदृशैः—प्रतिसंस्कृतैः प्रत्येकं क्रमकथनेन कृतोत्कर्षैः । यद्वा । असारांशरहितैः शब्दरचनाविशेषवद्भिः । त्रिकाण्डोत्पलिन्यादीनि नाममात्रप्रतिपादकानि । वररुच्यादिकृतानि तु लिङ्गमात्रप्रतिपादकानि । अत्र तूभयार्थसंग्रहादिदमेव सर्वैः पाठ्यमिति भावः ॥

लिङ्गज्ञानोपायं परिभाषते—

**प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित् ।**
**स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित् ॥ ३ ॥**
**भेदाख्यानाय न द्वन्द्वो नैकशेषो न संकरः ।**
**कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते ॥ ४ ॥**
**त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति ।**
**निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक् ॥ ५ ॥**

**प्रायश इति** ॥ 'बह्वल्पार्थाच्छस्—' (५।४।४२) इति शस्, प्रायशो बाहुल्येन, रूपभेदेन ङ्याब्विसर्गबिन्दुरूपेण । स्त्रीपुंनपुंसकं बोध्यम् । यथा—'पद्मालया पद्मा,' 'पिनाकोऽजगवं धनुः' । क्वचिद्विशेषणपदस्थेन सर्वनामपदस्थेनापि रूपभेदेन स्त्रीपुंनपुंसकं ज्ञेयम् । यथा—'तत्परो हनुः' । अत्र तत्पर इति विशेषणाद्धनोः पुंस्त्वम् । '(कुतूः कृत्तेः स्नेहपात्रम्) सैवाल्पा कुतुपः पुमान्' । (अत्र) 'सा' इत्युक्त्या कुत्वाः स्त्रीत्वम् । निश्चितलिङ्गेनानन्तर्यं साहचर्यम् । रूपभेदाभावेऽपि क्वचित्तेनापि लिङ्गं ज्ञेयम् । यथा—'अश्वयुगश्विनी' 'भानुः करः' 'वियद्विष्णुपदम्' । अत्राश्वयुग्भानुवियन्ति साहचर्यात्स्त्रीपुंनपुंसकानि ज्ञेयानि । ... स्त्रीपुंनपुंसकस्य विशेषोपादानात्तज्ज्ञेयम् । यथा—'भेरी स्त्री दुन्दुभिः पुमान्' 'रोचिः शोचिरुभे क्लीबे' ॥३॥ ...

---

१—'प्रत्येकं परिपाटीस्थापनादिना कृतोत्कर्षैः' पाठान्तरम् ।
२—अत्रामरकोषे भिन्नलिङ्गानां प्रातिपद्येनानुक्तानां भेदमाख्यातुं द्वन्द्वो न कृतः । परवल्लिङ्गं हि स्यात् । नावयवलिङ्गम् । यथा 'कुलिशं भिदुरं पविः', नतु 'कुलिशभिदुरपवयः' इति । तथा एकशेषो न कृतः । शिष्यमाणलिङ्गस्यैव हि प्रतीतिः स्यात् । यथा 'नभः खं श्रावणो नभाः', नतु 'खश्रावणौ तु नभसी' इति । तथा संकरो व्यामिश्रतापि न कृता । साहचर्यात्तल्लिङ्गत्वं हि स्यात् । यथा 'स्तवः स्तोत्रं स्तुतिर्नुतिः', नतु 'स्तुतिः स्तोत्रं स्तवो नुतिः' इति । एतच्च क्रमादृते यत्र संग्रहश्लोकादौ क्रममात्रं विवक्षितम्, तत्रानुक्तानां भिन्नलिङ्गानां द्वन्द्वादयः कृता एव । यथा 'वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः । नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः' इत्यत्र द्वन्द्वसंकरौ । भ्रात्रादावेकशेषश्च कृतः । उपाध्यायश्च 'क्रमादृते' इत्यन्तर्गडुं मन्वानः 'क्रमेणादृते परिपाट्योपादेये ग्रन्थे' इति व्यददरत् । गौडोऽपीत्थमबुद्ध्वा यथात्रायं संकरः क्रमादृते अनुक्रमं विना भिन्नलिङ्गानां न कृतः । अभिधानानुक्रमेणैवाभिधातुं तु कृत एव । यथा 'कपर्दोऽस्य जटाजूटः पिनाकोऽजगवं धनुः । प्रमथाः स्युः पारिषदाः' इति । मालाकारो हि स्त्रीलिङ्गादीन्प्रकरणैर्निरदिक्षत् । श्रीभोजस्त्वन्यथा व्याख्यत् । 'यथैते द्वन्द्वैकशेषसंकराः, क्रमादृते पर्यायनिर्देशं विना भिन्नलिङ्गा यद्युक्ता न स्युः' तदा न कृताः ।

कोशे, अनुक्तानां स्वपर्यायेष्वपठितानाम्, भिन्नं लिङ्गं येषां तेषाम्, लिङ्गभेदमाख्यातुम्, द्वन्द्व एकशेषश्च न कृतः। यथा—'देवतादैवतामराः' इति न कृतम्। परवल्लिङ्गता स्यात्। यथा वा–'खं नभः श्रावणो नभाः' इत्यत्र 'खश्रावणौ तु नभसी' इति न कृतम्। शिष्यमाणलिङ्गतैव स्यात्। समानलिङ्गानां तु तौ कृतावेव। यथा—'स्वर्गनाकत्रिदिवत्रिदशालयाः', 'पादा रश्म्यङ्घ्रितुर्यांशाः'। स्थानान्तरनिर्दिष्टानां तु भिन्नलिङ्गानामपि तौ कृतावेव। यथा—'अप्सरोयक्षरक्षोगन्धर्वकिंनराः', 'मातापितरौ पितरौ'। एते स्वस्वपर्यायेषूक्ता एव। तथा तेषां क्रमादृते क्रमं विना संकरो न कृतः। स्त्रीपुंनपुंसकानि क्रमेण पठितानि, तेषु क्रमेण पठ्यमानेषु नान्तरीयकस्तु संकरो न दोष इति भावः। संकरो नाम भिन्नलिङ्गानां मिश्रतारूपः। यथा—'स्तवः' इति पुंलिङ्गमुक्त्वा, 'स्तोत्रं' नपुंसकमुक्त्वा, 'नुतिः स्तुतिः' इति स्त्रीलिङ्गावुक्तौ। नतु 'स्तुतिः स्तोत्रं स्तवो नुतिः' इति कृतम्। एवं 'जनुर्जननजन्मानि' इति नपुंसकलिङ्गान्निरूप्य, 'जनिरुत्पत्तिः' इति स्त्रीलिङ्गावुक्त्वा, उद्भवशब्दः पुंलिङ्ग उक्तः। यत्तु स्वामिनोक्तम्—'एतच्च क्रमादृते। यत्र संग्रहश्लोकादौ क्रममात्रं विवक्षितम्, तत्र अनुक्तानां भिन्नलिङ्गानां द्वन्द्वादयः कृता एव। यथा 'वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधि–' इत्यादौ द्वन्द्वसंकरौ, 'भ्रात्रादावेकशेषश्च कृतः' इति। तन्न। इत्थं हि 'पृथ्वीपुर–' इत्यादिनिर्वाहेऽपि भ्रात्रादावनिर्वाह एव। तत्र क्रममात्रस्याप्रतिपिपादयिषितत्वात्। अत एव 'अप्सरोयक्षरक्षोगन्धर्वकिंनराः' इत्यादावप्यनिर्वाहः। यदपि 'उपाध्यायश्च 'क्रमादृते' इत्यन्तर्गडुं मन्वानः 'क्रमेणादृते परिपाट्योपादेये ग्रन्थे' इति व्याख्यत्' इति स्वामी। तदपि न। अन्तर्गडुमानस्य निर्बीजत्वात्। अस्मदुक्तरीत्या

---

पर्यायनिर्देशं विना तूक्तानां कृता एव। यथा 'विद्याधराप्सरोयक्षरक्षोगन्धर्वकिन्नराः' तथा 'पुत्रौ पुत्रश्च दुहिता च'। तथा नानार्थे 'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना' इति ॥ ४ ॥ इति क्षीरस्वाम्युत्प्रेक्षितममरकोशोद्घाटनम् ॥

द्वन्द्वैकशेषयो रूपभेदकृतलिङ्गनिर्णयाभावाल्लिङ्गज्ञानोपायं संकरदोषपरिहारं चाह—**भेदेति**। अत्रामरकोषे भिन्नलिङ्गानां लिङ्गमाख्यातुं द्वन्द्व एकशेषश्च न कृतः। द्वन्द्वो यथा 'दैवतादेवता' इति न कृतम्। एकशेषो यथा 'खं नभः श्रावणो नभाः' 'खश्रावणौ तु नभसी' इति न कृतम्। एकलिङ्गानां तु कृतावेव। यथा '–स्वर्गनाकत्रिदिवत्रिदशालयाः', 'अजा विष्णुहरच्छागाः' इति। ननु भिन्नलिङ्गानामपि तौ कृतौ। यथा '–अप्सरोयक्षरक्षोगन्धर्वकिंनराः' इति, 'मातापितरौ पितरौ' इत्यत आह—अनुक्तानामिति। स्थानान्तरेऽनिर्दिष्टानां न कृतौ, निर्दिष्टानां तु कृतावेव। इह तु स्थानान्तरनिर्देशो यथा 'स्त्रियां बहुष्वप्सरसः', नैर्ऋतो यातुरक्षसी', 'जनयित्री प्रसूर्माता', 'तातस्तु जनकः पिता' इति। ननु रत्नकोषादिवत्स्त्रीपुंनपुंसककाण्डविधानेनैव कथनमुचितम्। तथासति रूपभेदसाहचर्यादिप्रतिपत्तिगौरवमपि न स्यात्। तत्किमिति लिङ्गसंकरः क्रियते, इत्यत आह—क्रमादृते इति। क्रमं विना संकरो न कृतः। क्रमानुरोधात्तु कृत इति तात्पर्यम्। संकरस्तु भिन्नलिङ्गानां मिश्रस्वरूपः। क्रमः प्रक्रमः। प्रस्ताव इति यावत्। यथा स्वर्गप्रक्रमे द्योदिवौ भिन्नलिङ्गे अप्यवश्यवाच्यत्वात्कथिते। विष्णुप्रस्तावे च लक्ष्मीनाम, इति। यद्वा क्रमं विना भिन्नलिङ्गानां संकरो व्यामिश्रभावो न कृतः। क्रमेण तु कृत एव। यथा 'सुरलोकः' इत्यन्तेन पुंलिङ्गशब्दान्निरूप्य 'द्योदिवौ' इति स्त्रीलिङ्गशब्दावुक्त्वा क्लीबे 'त्रिविष्टपम्' इत्युक्तम्। एवं 'जनुर्जननजन्मानि' इति क्लीबलिङ्गान्निरूप्य 'जनिरुत्पत्तिः' इति स्त्रीलिङ्गावुक्त्वा उद्भवशब्दः पुंलिङ्ग उक्तः। इह तु क्षीरस्वामिकृतव्याख्याविशेषो ग्रन्थगौरवभयान्न लिखितः ॥ ४ ॥ इति रायमुकुटकृतपदचन्द्रिका ॥

**भेदेति**। अत्र ग्रन्थे भिन्नलिङ्गानां भेदाख्यानाय लिङ्गभेदमाख्यातुं द्वन्द्वो न कृतः। यथा 'देवतादैवतामराः' इति द्वन्द्वो न कृतः। एवं कृते '–दैवतानि पुंसि वा देवता स्त्रियाम्' इति लिङ्गज्ञानं न स्यात्। तथा 'खश्रावणौ तु नभसी' इत्येकशेषो न कृतः' 'खं नभः श्रावणो नभाः' इति पुंनपुंसकलिङ्गज्ञानाय। समानलिङ्गानां तु तौ कृतावेव। यथा 'स्वर्गनाकत्रिदिवत्रिदशालयाः' 'अजा विष्णुहरच्छागाः'। किंभूतानां भिन्नलिङ्गानाम्। अनुक्तानाम्। रूपभेदसाहचर्यविशेषविधिभिरज्ञापितलिङ्गानाम्। ज्ञापितलिङ्गानां तु द्वन्द्वैकशेषौ कृतावेव। यथा 'स्त्रियां बहुष्वप्सरसः', 'यक्षैकपिङ्गैलविल–' इति 'यातुरक्षसी' इति ज्ञापितलिङ्गानाम् 'अप्सरोयक्षरक्षोगन्धर्वकिंनराः' इति द्वन्द्वः कृतः। यथा 'जनयित्री प्रसूर्माता', 'तातस्तु जनकः पिता' इति ज्ञापितलिङ्गानां 'मातापितरौ पितरौ' इत्येकशेषः कृतः। तथा भिन्नलिङ्गानां क्रमादृते क्रमेण विना संकरोऽपि न कृतः। क्रमः प्रस्तावः। संकरो मिश्रत्वम्। अत्र तु वज्रप्रस्तावे 'कुलिशं भिदुरं पविः' इति पुंनपुंसकयोः संकरो न कृतः। स्वर्गप्रस्तावे 'सुरलोको द्योदिवौ द्वे स्त्रियाम्' इति स्त्रीपुंसयोः। स्तुतिप्रस्तावे 'स्तवः स्तोत्रं नुतिः स्तुतिः' इति स्त्रीपुंनपुंसकानाम् ॥ ४ ॥ इति दीक्षितरामकृष्णविरचितपीयूषाख्यव्याख्या ॥

### अत्रेयं विचारणा—

एकशेषाभावोदाहरणं 'खं नभः श्रावणो नभाः' इत्यत्र 'खश्रावणौ तु नभसी' इति व्याख्यासु व्यक्तम्। तन्न संगच्छते। 'नभोऽन्तरीक्षं गगनम्', 'नभाः श्रावणिकश्च सः' इति स्वपर्याये लिङ्गभेदस्य ज्ञापितत्वेन 'मातापितरौ पितरौ' इत्यतो वैलक्षण्याभावादेकशेषेऽपि दोषाभावात् तस्माद् 'ओकः सद्माश्रयश्चौकाः' इत्युदाहर्तव्यम्। यच्चोक्तं–'समानलिङ्गानां तु कृतावेव' इति। तदपि न समञ्जसम्। 'पयः क्षीरं पयोऽम्बु च' इत्यत्र समानलिङ्गत्वेऽप्येकशेषाकरणात्। तस्मादियं परिभाषा न सार्वत्रिकी। किंतु 'समानलिङ्गानामेव, स्वपर्यायेषूक्तानामेव वा कृतः' इति परिसंख्यारूपेण व्याख्योचिता। तथा च 'समे यजेत' इत्यत्र यागकरणाकरणयोरिवात्राप्येकशेषादिकरणाकरणयोश्चेच्छैव नियामिका–इति मम प्रतिभाति (समाधानान्तरं चेत्सुधीभिर्लेख्यम् ॥ इति शिवदत्तः ॥

तस्य सामञ्जस्यात् ॥ ४ ॥ त्रयाणां लिङ्गानां समाहारस्त्रिलिङ्गी, तत्र 'त्रिषु' इति पदं ज्ञेयम् । इति परिभाष्यते । यथा—'त्रिषु स्फुलिङ्गोऽग्निकणः' । न्यायसिद्धं चैतत् । त्रिलिङ्ग्यतिरिक्तस्यार्थ[र्थान्तर]स्यासंभवात् । अयोगाच्च । स्त्रीपुंसौ मिथुनम्, तत्र 'द्वयोः' इति पदं ज्ञेयम् । यथा—'द्वयोर्ज्वालकीलौ' । 'द्वयोः' इति द्विशब्दप्रयोगोपलक्षणम् । तेन 'द्विहीनं प्रसवे सर्वम्', 'द्वयहीने कुकुन्दरे' इत्याद्युपपद्यते । तथा निषिद्धं लिङ्गं यस्य तन्निषिद्धलिङ्गं पदं, शेषार्थं शेषलिङ्गकं ज्ञेयम् । इदमपि न्यायसिद्धम् । विशेषनिषेधे शेषाभ्यनुज्ञानात् । यथा—'वज्रमस्त्री' इति । तुरन्ते यस्य तत्त्वन्तम्, अथ आदिर्यस्य तदथादि, त्वन्तं च अथादि च नामपदं लिङ्गपदं सर्वनामपदं अव्ययपदं च पूर्वान्वयि न भवति । किं तूत्तरान्वयि । 'नगरी त्वमरावती' 'जवोऽथ शीघ्रं त्वरितम्' इति च नामपदम् । 'पुंसि स्वन्तर्धिः' 'शस्तं चाथ त्रिषु द्रव्ये' इति लिङ्गपदम् । 'तस्य तु प्रिया' इति सर्वनामपदम् । 'वा तु पुंसि' इत्यव्ययपदम् । अथशब्दोऽथोशब्दस्याप्युपलक्षणम् । यथा—'अनुक्रोशोऽप्यथो हसः' । न्यायसिद्धमिदम् । तुना पूर्वस्माद्विशेषद्योतनात् । अथशब्देन चार्थान्तरारम्भात् । भ्रमविषयं चैतत् । 'उदपानं तु पुंसि वा' इत्यादौ तु न दोषः । उत्तरस्यानामत्वात् । लिङ्गवाचिनाऽन्वयेऽपि दोषाभावात् । वस्तुतस्तु अत्र पादपूरणाय चकारादेव पठितुं युक्तम् ॥ ५ ॥

**स्वरव्ययं स्वर्ग-नाक-त्रिदिव-त्रिदशालयाः ।**

**सुरलोको द्यो-दिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ॥६॥**

**स्वरिति** ॥ यद्यपि 'चतुष्टयी शब्दानां प्रवृत्तिः' इति पक्षे संज्ञाशब्देषु व्युत्पत्तिर्नावश्यकी, तथापि शाकटायनाद्यभिमतत्रयीपक्षे व्युत्पत्तिः प्रदर्श्यते ॥*॥ स्वर्यते स्तूयते इति स्वः । 'स्वृ शब्दोपतापयोः' (भ्वा० प० अ०) । 'अन्येभ्योऽपि दृश्यन्ते' (३।२।७५) इति विच् । बाहुलकात्कर्मणि गुणः (७।३।८४) रपरत्वम् (१।१।५१) इत्याहुः । तन्न । निर्बीजबाहुलकाश्रयणस्यायुक्तत्वात् । 'स्वरति शब्दायते' इति व्युत्पत्तिरप्ययुक्ता । उक्तार्थस्य तत्रासंभवात् । स्वरत्यग्रास्या उपतापयति । 'नैनं कृताकृते तपतः' इति श्रुतेः । स्वरादि (१।१।३७) पाठादव्ययत्वम् । 'अव्ययोऽस्त्री शब्दभेदे नाविष्णौ निर्व्यये त्रिषु' । स्वःशब्दस्य मङ्गलार्थमादौ प्रयोगः ('स्वः प्रेत्य व्योम्नि नाके च') ॥(१)॥*॥ सुष्ठु अर्ज्यते स्वर्गः । 'अर्ज अर्जने' (भ्वा० प० से०) कर्मणि (३।३।१९) घञ् । ऋज्यतेऽस्मिन्निति वा । 'ऋज गतिस्थानार्जनोपार्जनेषु' (भ्वा० आ० से०) 'हलश्च' (३।३।१२१) इति घञ् । न्यङ्क्वादित्वात् (७।३।५३) कुत्वम् । यत्तु मुकुटः—'चजोः'–(७।३।५२) इति कुत्वमाह । तन्न । 'निष्ठायामनिटः कुत्वम्' (७।३।५९) इति वार्तिकात् ॥(२)॥*॥ 'कं सुखं तद्विरुद्धम् अकं दुःखम्, नास्त्यकमत्र' इति नाकः । 'नभ्राण्नपात्–' (६।३।७५) इति नलोपो न । को ब्रह्मा, तदभावो नात्रेति वा । '**नाकस्तु** त्रिदिवेऽम्बरे' ॥(३)॥*॥ तिसृष्वप्यवस्थासु त्रयो ब्रह्मविष्णुरुद्रा वा दीव्यन्त्यत्रेति त्रिदिवः ।—'घञर्थे कविधानम्' (वा० ३।३।५८) इति कः– इत्याहुः । तन्न । 'स्थास्नापाव्यधिहनियुध्यर्थम्' (उक्तवार्तिकशेषे) इति परिगणनात् । उदाहरणत्वेन व्याख्यानस्य निर्मूलत्वात् । यदपि—मूलविभुजादित्वात् (वा० ३।२।५) कप्रत्ययः–इति । तदपि न । अधिकरणव्युत्पत्तिप्रदर्शनस्यासंगतत्वात् । तत्र 'कर्तरि कृत्' (३।४।६७) इति वाक्यशेषात् । तस्मात्—'हलश्च' (३।३।१२१) इति घञ् । संज्ञापूर्वकत्वात् न गुणः–इति व्याख्येयम् । यद्वा—ब्राह्मवैष्णवरौद्रभेदेन सात्त्विकराजसतामसभेदेन वा त्रिविधो दीव्यति व्यवहरति प्रकाशते वा ('दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' । (दि० प० से०) 'इगुपधत्वात्' (३।१।१३५) कः । '**त्रिदिवं** तु खे । स्वर्गे च **त्रिदिवा** नद्याम्' इति मेदिनीदर्शनात् क्लीबेऽपि ॥ (४) ॥*॥ त्रिदशानामालयः ॥ (५) ॥ स्वर्गसुरादयः शब्दाः स्वरूपपराः । लक्षणया त्वर्थपराः । अतः समानार्थत्वाभावादेकशेषो न ॥*॥ सुराणां लोकः ॥ (६) ॥ सुरसद्मादीनामप्युपलक्षकमेतत् । एवं यौगिकेषु सर्वत्रोन्नेयम् ॥*॥ द्योतन्तेऽस्यां द्यौः गोवत् । बाहुलकात् (३।३।१) द्युतेः ('द्युत दीप्तौ') (भ्वा० आ० से०) डोः । द्यौति 'द्यु अभिगमने' (आ० प० अ०) । विच् (३।२।७५) वा । ('**द्यौस्तु** स्वर्गविहायसोः') ॥ (७) ॥*॥ दीव्यन्त्यस्यामिति बाहुलकात् (३।३।१) दिवेः (दिवु क्रीडादिषु । दि० प० से०) दिविः । द्यौः, दिवौ, दिवः, द्युभ्याम् । ('**द्यौः** स्वर्नभसोः') ॥ (८) ॥ यत्तु—'दिवेर्ड्यौः' इति ड्योप्रत्ययः–इत्याह मुकुटः । तन्न । उक्तसूत्रस्यादर्शनात् । स्वामी तु—द्योशब्दोऽप्योकारान्तोऽस्ति । भाष्ये (६।१।९३) 'गोतो णित्' (७।१।९०) इत्यत्र 'ओतो णित्' इति पाठान्तराम्नानात्' इत्याह । तदपि न । स्मृत उर्येन स स्मृतौरित्यत्र वृद्धिविधानेन पाठस्योपक्षीणत्वात् । यदपि—दिवेः क्विप् (३।२।७६) इत्युक्तम् । तदपि न । दिवौ दिव इत्यादौ 'च्छ्वोः शूड्–' (६।४।१९) इत्यूठः प्रसङ्गात् । सुभूतिस्तु—'द्यु अभिगमने' द्यूयते अभिगम्यते बाहुलकात्कर्मणि डोप्रत्ययः–इत्याह । '**द्यौः** स्त्री स्वर्गे च गगने **दिवं** क्लीबं तयोः स्मृतम्' । यत्तु—स्वामिना 'दिवशब्दो वृत्तिविषयः' इत्युक्तम् । तदेतेन परास्तम् । उक्तमेदिन्यां वृत्तिविषयत्वानभिधानात् । 'मन्दरः सैरिभः शक्रभव(सद) नं खं दिवं नभः' इति त्रिकाण्डशेषाच्च ॥*॥ विशन्त्यस्मिन् सुकृतिन इति विशेः ('विश प्रवेशने' तु० प० अ०) कप्रत्ययः, तस्य च तुट् । 'व्रश्च–' (८।२।३६) इति षत्वम् । 'यत्र ब्रध्नस्य विष्टपम्' इति वैदिकः प्रयोगः । तृतीयं विष्टपं त्रिविष्टपम् ॥ (९) ॥ पूरणप्रत्ययस्तु वृत्तौ गतार्थत्वान्न

१—अयं पाठस्तु हैम उपलभ्यते ।

प्रयुज्यते । (रूपभेदेनैव क्लीबत्वे लब्धे रूपभेदलब्धलिङ्गविशेषस्यानित्यत्वज्ञापनार्थं क्लीब इत्युक्तम् । तस्य फलं 'कर्म क्रिया तत्सातत्ये गम्ये स्युरपरस्पराः' इत्यत्र नपुंसकत्व उक्तेऽपि पुंलिङ्गत्वं सिद्धम् । अतः 'कर्म व्याप्ये क्रियायां च पुंनपुंसकयोर्मतम्' इति रुद्रकोशेन सह न विरोधः शङ्कनीयः ) । केचित्तु—'पिष्टप' इति सूत्रे पठित्वा विशतेरादेः पो निपात्यते— इत्याहुः । अयं पुंस्यपि । तथा चामरमाला—'पिष्टपो विष्टपोऽप्यस्त्री भुवनं च नपुंसकम्' इति । 'नभो विष्टपं त्रयो गौर्ना पृश्निश्चापि सुरालयः' इति रत्नमाला । एवं शक्रभवनफलोदयावरोहोर्ध्वलोकादयोऽप्यूह्याः । नव '**स्वर्गस्य**' ॥

**अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः ।**
**सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ॥ ७ ॥**
**आदितेया दिविषदो लेखा अदितिनन्दनाः ।**
**आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः ॥८॥**
**बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः ।**
**वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम् ॥९॥**

**अमरा इति** ॥ न म्रियन्ते 'मृङ् प्राणत्यागे' ( तु० आ० अ० ) । पचाद्यच् (३।१।१३४) । '**अमर**स्त्रिदशेऽप्यस्थिसंहारे कुलिशद्रुमे । स्त्री गुडूच्यमरावल्योः स्थूणादूर्वाजरायुषु' ॥(१) ॥*॥ जराया निष्क्रान्ताः । '**निर्जरः** स्यात्पुमान्देवे जरात्यक्ते च वाच्यवत् । **निर्जरा** तु गुडूच्यां च तालपर्ण्यामपि स्त्रियाम्' ॥ (२) ॥*॥ दीव्यन्तीति देवाः । पचादिषु (३।१।१३४) पाठादच् । '**देवः** सुरे घने राज्ञि **देव**माख्यातमिन्द्रिये । **देवी** कृताभिषेकायां तेजनीस्पृक्कयोरपि' ॥(३) ॥*॥ तृतीया यौवनाख्या दशा सदा येषाम् । त्रिशब्दस्य तृतीयार्थता त्रिभागवत् । त्रिर्दश[३] वा । 'संख्ययाऽव्यया—' (२।२।२५) इति बहुव्रीहिः । 'बहुव्रीहौ संख्येये—' (५।४।७३) इति डच् । जन्मसत्ताविनाशाख्यास्तिस्रो दशा येषामिति वा । 'त्रीन् तापान् दशन्ति 'दंश दशने' ( भ्वा० प० अ० ) पचाद्यचि पृषोदरादित्वात् (६।३।१०९) 'न लोपः' इति राजदेवः । तन्न । उक्तविग्रहे कर्मण्यणः ( ३।२।१ ) प्रसङ्गेनाचोऽप्राप्तेः । मूलविभुजादित्वादित्येके ( ३।२।५ वा० ) वा समाधेयम् ॥(४) ॥*॥ विशिष्टो बुधो येषाम् । त्रिकालज्ञजीव—शिष्यत्वात् । विशेषेण बुध्यन्ते वा । 'बुध अवगमने' (भ्वा० प० से०, दि० आ० अ० ) । 'इगुपध—' ( ३।१।१३५ ) इति कः । '**विबुधो** ज्ञे सुरे' ॥ (५) ॥*॥ सुरन्तीति सुराः । 'षुर प्रसवैश्वर्ययोः' (तु० प० से० ) । 'इगुपध—' (३।१।१३५) इति कः । यद्वा सुष्ठु राजते । 'राजृ दीप्तौ' ( भ्वा० उ० से० ) 'अन्येभ्योऽपि—' ( ३।२।१०१ वा० ) इति डः । '**सुरा** चषकमद्ययोः । पुंलिङ्गस्त्रिदिवेशे स्यात्' ॥ (६) ॥*॥ सुष्ठु पर्व अमावास्यादिचरितम्, अङ्गुल्यादिग्रन्थिः, उत्सवो वा येषां सुपर्वाणः । '**सुपर्वा** ना शरे वंशे पर्वधूमसुरेषु च ॥' (७) ॥*॥ शोभनं मनो येषां ते सुमनसः । '**सुमनाः** पुष्पमालत्योः स्त्रियां, ना धीरदेवयोः ॥' (८) ॥*॥ त्रिदिवस्येशाः ॥ (९) ॥*॥ दिवमोको येषां ते दिवौकसः । दिवशब्दोऽदन्तः । 'मन्दरः सैरिभः शक्रभव(सदनं) खं दिवं नभः' इति त्रिकाण्डशेषात् । द्यौरोको येषामिति विग्रहे '**दिवोकसः**' अपि । '**स्याद्दिवौका दिवोकाश्च** देवे चापीह पक्षिणि' इति रन्तिदेवः । '**दिवोकाश्च दिवौकाश्च** पुंसि देवे च चातके' । शब्दपरविप्रतिषेधात्परस्य यणादेशः । स्थानिवत्त्वेन पूर्वस्य न यण् । 'सकृद्गतौ' (१।४।२ प०) इति न्यायात् ॥ (१०) ॥*॥ 'नञो दाञो डितिः' इति शाकटायनः । यद्वा द्यति । 'दो अवखण्डने' ( दि० प० अ० ) । 'क्तिच् क्तौ च—' (३।३।१७४) इति क्तिच् । 'द्यतिस्यति—' (७।४।४०) इति इत्त्वम् । दितिभिन्ना अदितिः । अदित्या अपत्यानि । 'कृदिकारादक्तिनः' (४।१।४५ ग०) इति ङीषन्तात् 'स्त्रीभ्यो ढक्' (४।१।१२०) ॥ (११) ॥*॥ दिवि सीदन्ति वर्तन्ते 'षद्लृ विशरणगत्यवसादनेषु' (भ्वा० प० अ०, तु० प० अ०) । 'सत्सूद्विष—' (३।२।६१) इति क्विप् । 'हृद्द्युभ्यां च' (६।३।९ वा०) इति ङेरलुक् । 'सुषामादिषु च' (८।३।९८) इति षत्वम् ॥*॥ 'तत्पुरुषे कृति बहुलम्' (६।३।१४) इति ङेर्लुकि 'द्युसदः' अपि । 'मनःसु येन द्युसदां न्यधीयत' इति माघः ॥ (१२) ॥*॥ चित्रादौ लिख्यन्ते । 'लिख अक्षरविन्यासे' (तु० प० से०) । 'अकर्तरि—' (३।३।१९) इति कर्मणि घञ् । ग्रीवाहस्तपादेषु तिस्रो लेखाः सन्त्येषामिति वा । 'अर्श आद्यच्' (५।२।१२७) । '**लेखो** लेख्ये सुरे **लेखा** लिपिराजिकयोर्मता' ॥ (१३) ॥*॥ अदितेर्नन्दनाः ॥(१४)॥*॥ अदितेरपत्यानि । 'दित्यदित्या—' (४।१।८५) इति ण्यः । लिङ्गविशिष्ट (४।१।१) परिभाषाया अनित्यत्वान्ङ्यन्ताण्ण्यो न । '**आदित्यो** भास्करे देवे' ॥ (१५) ॥*॥ ऋशब्दवाच्यः स्वर्गः, अदितिर्वा । स्वरादि (१।१।३७) पाठादव्ययत्वम् । तत्र ततो वा भवन्ति । 'मितद्र्वादित्वात्' (वा० ३।२।१८०) डुः ॥*॥ क्विपि (३।२।७६) 'ऋभुवः' अपि-इत्यन्ये ॥ (१६) ॥*॥ अविद्यमानः स्वप्नो येषाम् ॥ (१७) ॥*॥ म्रियन्तेऽस्मिन्निति मर्तो भूलोकः । 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्' (उ० ३।८६) । तत्र भवा अप्युपचारान्मर्ताः । ततश्च 'नवसूरमर्तयविष्ठेभ्यो यत्' (वा० ५।४।३६) इति स्वार्थे यत् । तद्भिन्नाः ॥ (१८)॥*॥ अमृतमन्धोऽन्नं येषां ते ॥ (१९)॥*॥

१—अयं पाठो बहुत्र नोपलब्धः । २—अस्थिसंहारे गङ्गादिप्रक्षेप्याणामस्थामेकत्र मीलने—इत्यनेकार्थकैरवाकरकौमुदी । ३—दश दशद्वर्गाः । 'श्रियं विन्दति सौमित्रे पञ्चविंशति वर्षवत्' इति रामायणवाक्येन सदा देवानां पञ्चविंशवर्षात्मकत्वेन तृतीये दशेत्येव वर्तमानत्वमिति भावः ।

१—इदं च 'दिव उत्' (६।१।१३१) इति वकारस्योत्त्वे कृते बोध्यम् ।

बर्हिरभिर्मुखं येषां ते ॥ (२०) ॥*॥ क्रतून् क्रतुषु वा भुञ्जते । 'भुज पालनाभ्यवहारयोः' (रु० आ० अ०) क्विप् (३।२।७६) ॥ (२१) ॥*॥ गीरेव निग्रहानुग्रहसमर्था बाणोऽस्त्रं येषाम् ॥*॥ दन्तोष्ठ्यपाठे गिरं वन्वते स्तुतिप्रियत्वात् । 'वनु याचने' (त० आ० से०) 'कर्मण्यण्' (३।२।१) । 'पूर्वपदात्—' (८।४।३) इति णत्वम् ॥ (२२) ॥*॥ दानवानामरयः ॥ (२३) ॥*॥ प्रशस्तं वृन्दं येषाम् । 'शृङ्गवृन्दाभ्यामारकन्' (५।२।१२० वा०) । ('वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु') ॥ (२४) ॥*॥ देवशब्दात्स्वार्थे तल् (५।४।२७) । ततः स्वार्थे प्रज्ञाद्यण् (५।४।३८) । विशेषविधेः पुंस्त्वम् । रूपभेदात्क्लीबत्वम् ॥ (२५) ॥*॥ देवताः ॥ (२६) ॥ स्त्रियाम् । रूपभेदादेव स्त्रीत्वे सिद्धे बहुवचनान्तपुंलिङ्गशङ्कावारणार्थं 'स्त्रियाम्' इति—मुकुटः । तन्न । रूपभेदेनैव वारणाद्विसर्गं विना पुंलिङ्गकोटेरनुत्थानात् । अन्यथा 'पद्मा गदा' इत्यादौ तस्या अनिवारणात् । अतो 'देवपर्यायाः पुंसि' इति वक्ष्यति । तद्बाधनार्थमिदम् । षड्विंशतिः **'देवानाम्'** ॥

**आदित्य-विश्व-वसवस्तुषिताभास्वरानिलाः ।**
**महाराजिक-साध्याश्च रुद्राश्च गणदेवताः ॥ १० ॥**

आदित्यादयः प्रत्येकं गणदेवताः समुदायचारिण्यो देवताः । एकत्वं तु समुदायवृत्तानामवयववृत्तेरप्यभ्युपगमात् । 'आदित्या द्वादश प्रोक्ता विश्वेदेवा दश स्मृताः । वसवश्चाष्टसंख्याताः षट्त्रिंशत्तुषिता मताः । आभास्वराश्चतुःषष्टिर्वाताः पञ्चाशदूनकाः । महाराजिकनामानो द्वे शते विंशतिस्तथा । साध्या द्वादश विख्याता रुद्राश्चैकादश स्मृताः ॥' ॥१॥*॥ विशन्ति कर्मस्विति विश्वे । 'विश प्रवेशने' (तु० प० अ०) । 'अशू प्रुषि-लटि-कणि-कटि-विशिभ्यः क्वन्' (उ० १।१५१) । सर्वनामसंज्ञोऽयम् । आधुनिकसंज्ञास्वेव सर्वनामत्वपर्युदासात् । मुकुटस्तु—सर्वेषां विश्वे(षां) देवानां नाम इति कृत्वा सर्वनामसंज्ञः—इत्याह । तन्न । एकशब्दस्य बहुषु संकेतितस्य संज्ञात्वौचित्यात् । यथा प्राचीनबर्हिषः पुत्रेषु संकेतितस्य प्रचेतःशब्दस्य । 'यथा पूर्वजन्मवृत्तिः पूर्वशब्दः' इति तदीयदृष्टान्तोऽपि चिन्त्यः । पूर्वजन्मवृत्तेः पूर्वशब्दस्य व्यवस्थायां सत्त्वात्संज्ञात्वोक्तिसंभवाभावात् (**'विश्वा** त्वतिविषायां स्त्री जगति स्यान्नपुंसकम् । न ना शुण्ठ्यां पुंसि देवप्रभेदेष्वखिले त्रिषु') ॥ (२) ॥*॥ वसन्तीति वसवः । 'वस निवासे' 'शृ-स्वृ-स्निहि-त्रप्यसि-वसि-हनि-क्लिदि-बन्धि-मनिभ्यश्च' (उ० १।१०) इति उः । 'विश्वस्य वसुराटोः' (६।३।१२८) इति दीर्घो न । असंज्ञात्वात् । (**'वसुस्त्वग्नौ** देवभेदे नृपे रुचौ । योक्त्रे शुष्के **वसु** स्वादौ रत्ने वृद्ध्यौषधे धने') ॥ (३) ॥*॥ तुष्यन्ति । 'तुष तुष्टौ' । 'रुचिकुटिरुषिभ्यः कितच्' (उ० ४।१८६) इति बाहुलकात् कितच् । यद्वा—तोषणं तुट् । संपदादिः (वा० ३।३।१०८) । ततः 'तारकादित्वादितच्' (५।२।३६) ॥ (४) ॥*॥ आ समन्ताद्भासनशीलाः । 'भासृ दीप्तौ' (भ्वा० आ० से०) । 'स्थेशभासपिसकसो वरच्' (३।२।१७५) ॥ (५) ॥*॥ अनन्त्यनेन । 'अन प्राणने' (आ० प० से०) 'सलिकल्यनिमहिभण्डिमण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच्' (उ० १।५४) **'अनिलो** वसुवातयोः' ॥ (६) ॥*॥ महती राजिः पङ्क्तिर्येषाम् । 'शेषाद्विभाषा' (५।४।१५४) इति कप् ॥*॥ **'माहाराजिक'** इति पाठे महाराजो देवता येषाम् । 'महाराजप्रोष्ठपदाट्ठञ्' (४।२।३५) इति ठञ् । यद्यपि—सूक्तहविर्भागिन एव देवतात्वम्, तथापि 'आग्नेयो वै ब्राह्मणः' इतिवदुपचारो बोध्यः ॥ (७) ॥*॥ साध्यं सिद्धिः । 'साध संसिद्धौ' (स्वा० प० अ०) । 'ऋहलोर्ण्यत्' (३।१।१२४) इति भावे ण्यत् । साऽस्त्येषाम् । अर्शआद्यच् (५।२।१२७) । **'साध्यो** योगान्तरे सुरे । गणदेवविशेषे च साधनीये च वाच्यवत्' ॥ (८) ॥*॥ रोदयन्त्यसुरान् । 'रुदिर् अश्रुविमोचने' (अ० प० से०) ॥ 'रोदेर्णिलुक् च' (उ० २।२२) इति रक् णेश्च लुक् ॥ (९) ॥ नव **'गणदेवानाम्'** ॥

**विद्याधरोऽप्सरो-यक्ष-रक्षो-गन्धर्व-किंनराः ।**
**पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥ ११ ॥**

**विद्येति** ॥ 'विद्याधरोऽप्सरो—' इति पाठः । भिन्नलिङ्गत्वादग्रेऽनभिधानादसमासः । विद्याया गुटिकाञ्जनादिविषयिण्या धरो धारकः । यत्तु—'विद्यां धरति' इति मुकुट आह । तन्न । पचाद्यचः (३।१।१३४) अपवादत्वाद (३।२।१) प्रसङ्गात् ॥ (१) ॥*॥ अद्भ्यः सरन्ति । 'सरतेरसुन्' (उ० ४।२३७) ॥ (२) ॥*॥ यक्ष्यते पूज्यते 'यक्ष पूजायाम्' (चु० आ० से०) । 'अकर्तरि च कारके संज्ञायाम्' (३।३।१९) इति कर्मणि घञ् । **'यक्षो** गुह्यकमात्रे च गुह्यकाधीश्वरेऽपि च' । इः कामः, तस्येवाक्षिणी अस्येति वा, इरक्षिषु यस्येति वा । 'बहुव्रीहौ सक्थ्यक्ष्णोः—' (५।४।४३) इति षच् ॥ (३) ॥*॥ रक्ष्यन्त्येभ्यो रक्षांसि । 'रक्ष पालने' (भ्वा० प० से०) । 'सर्वधातुभ्योऽसुन्' (उ० ४।१८९) ॥ (४) ॥*॥ गन्धं सौरभमर्वति गन्धर्वः । 'अर्व गतौ' (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१) शकन्ध्वादिः (वा० ६।१।९४) ॥ (५) ॥*॥ अश्वमुखत्वात्कुत्सिता नराः । 'किं क्षेपे' (२।१।६४) इति समासः ॥ (६) ॥*॥ पिशितमश्नाति । 'अश भोजने' (क्र्या० प० से) । 'कर्मण्यण्' (३।२।१) 'पृषोदरादिः' (६।३।१०९) । मध्यतालव्यः ॥ (७) ॥*॥ गूहति निधिं रक्षति । 'गुहू संवरणे' (भ्वा० उ० से०) । 'ण्वुल्' (३।१।१३३) । पृषोदरादित्वाद्यगागमः । तथा च व्याडिः—'निधिं रक्षन्ति ये यक्षास्ते स्युर्गुह्यकसंज्ञकाः' इति । यद्वा गुह्यं कुत्सितं कायति । 'कै शब्दे' (भ्वा० प० अ०) 'आतोऽनुपसर्गे कः' (३।२।३) गुह्यं गोपनीयं

१—सूत्रं 'रुचिवचिकुचिकुटिभ्यः कितच्' इत्येवमुणादिषूपलभ्यते ।

कं सुखं यस्येति वा । अनयोः पक्षयोः 'शंसिदुहिगुहिभ्यो वा' ( वा० ३।१।१०९ ) इति काशिकाकारवचनाद्गुहेः क्यप् । तत्र दुहिगुह्योर्ग्रहणं निर्मूलमिति भट्टोजीदीक्षिताः । तन्मते ण्यति संज्ञापूर्वकत्वान्न गुणः ॥ (८) ॥*॥ असेधीदिति सिद्धः । 'षिधु हिंसासंराद्ध्योः' ( दि० प० से० ) । 'गत्यर्थाकर्मक-' ( ३।४।७२ ) इति कर्तरि क्तः । सिद्धिरस्यास्तीति वा । अर्श-आद्यच् ( ५।२।१२७ ) । ('**सिद्धो** व्यासादिके देवयोनौ निष्पन्नमुक्तयोः । नित्ये प्रसिद्धे') ॥ (९) ॥*॥ भूतिरस्यास्ति । अर्श-आद्यच् ( ५।२।१२७ ) । भूतः । ('**भूतं** क्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिषूचिते । प्राप्ते वित्ते समे सत्ये देवयोन्यन्तरेषु ना' । भवति इष्टं प्राप्नोति । 'भू प्राप्तौ' ( चु० आ० से० ) । 'गत्यर्थाकर्मक-' ( ३।४।७२ ) इति क्तः-इति मुकुटः । तन्न । प्राप्त्यर्थस्यागत्यर्थाकर्मकत्वात् वर्तमानविग्रहायोगाच्च ॥ (१०) ॥*॥ अमी विद्याधरादयो दश देवा योनिरेषां ते देवयोनयः । देवांशका इत्यर्थः । यत्तु—'देवानामिव योनिरुत्पत्तिकारणमविभाव्यमेषाम्' इति मुकुटो व्याख्यत् । तन्न । व्यधिकरणबहुव्रीहिप्रसङ्गात् । श्लोकोपक्रमस्थग्रन्थविरोधाच्च । दश '**देवयोनयः**' ॥

**असुरा दैत्य-दैतेय-दनुजेन्द्रारि-दानवाः ।**
**शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः ॥ १२ ॥**

**असुरा इति** ॥ अस्यन्ति क्षिपन्ति देवान् असुराः । 'असु क्षेपणे' ( दि० प० से० ) । 'असेरुरन्' ( उ० १।४२ ) इत्युरन् । सुरविरुद्धत्वाद्वा । 'नञ्' ( २।२।६ ) इति तत्पुरुषः । प्रज्ञाद्यणि ( ५।४।३८ ) '**आसुराश्च**' । असुषु रमन्ते वा । 'अन्येभ्योऽपि-' ( वा० ३।२।१०१ ) इति डः । ('**असुरः** सूर्यदैत्ययोः । **असुरा** रजनीवेश्योः' ) ॥ (१) ॥*॥ दितेरपत्यानि । 'दित्यदित्या-' ( ४।१।८५ ) इति ण्यः । ( '**दैत्यो**ऽसुरे मुरायां तु **दैत्या** चण्डौषधावपि' ) ॥ (२) ॥*॥ ङीषन्तात् । 'स्त्रीभ्यो ढक्' ( ४।१।१२० ) ॥ (३) ॥*॥ दनोर्दनौ वा जाताः । 'सप्तम्यां जनेर्डः', 'पञ्चम्यामजातौ' ( ३।२।९७, ९८ ) ॥ (४) ॥*॥ इन्द्रस्यारयः ॥ (५) ॥*॥ दनोरपत्यानि ॥ (६) ॥*॥ शुक्रस्य शिष्याः ॥ (७) ॥*॥ दितेः सुताः ॥ (८) ॥*॥ पूर्वे च ते देवाश्च । 'पूर्वापरप्रथम-' ( २।१।५८ ) इत्यादिना समासः । यद्वा पूर्वं देवाः । अन्यायाद्धि देवत्वाद्भ्रष्टाः । 'सुप्सुपा' ( २।१।४ ) इति समासः । पूर्वे देवा येभ्यो वा । 'अनेकमन्यपदार्थे' ( २।२।२४ ) इति बहुव्रीहिः ॥ (९) ॥*॥ सुरान् द्विषन्ति । 'द्विष अप्रीतौ' (अ० उ० अ० ) 'सत्सूद्विष-' ( ३।२।६१ ) इति क्विप् ॥(१०) ॥*॥ यद्यपि पातालवासित्वेन पातालवर्गे वक्तुं युक्ताः, तथापि देवविरोधित्वेन बुद्ध्युपारोहादिहैवोक्ताः । दश नामानि '**असुराणाम्**' ॥

१—वासी तक्षोपकरणम् ।

**सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः ।**
**समन्तभद्रो भगवान्मारजिल्लोकजिज्जिनः ॥ १३ ॥**
**षडभिज्ञो दशबलोऽद्वयवादी विनायकः ।**
**मुनीन्द्रः श्रीघनः शास्ता मुनिः**

**सर्वज्ञ इत्यादि** ॥ सर्वं जानाति । 'ज्ञा अवबोधने' ( क्र्या० प० अ० ) । 'आतोऽनुपसर्गे कः' ( ३।२।३ ) यद्वा सर्वे ज्ञा यस्य । स्वात्मनः सर्वस्यापरोक्षत्वात् । 'यः साक्षादपरोक्षात्' इति श्रुतेः । यद्वा सर्वे ज्ञा यस्मात् । 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्ति' इति श्रुतेः । यद्वा सर्वे ज्ञा येन । 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः । ('**सर्वज्ञस्तु** जिनेन्द्रे स्यात्सुगते शंकरेऽपि च') ॥ (१) ॥*॥ शोभनं गतं ज्ञानमस्य ॥ (२) ॥*॥ प्रशस्ता बुद्धिरस्य । अर्शआद्यच् ( ५।२।१२७ ) । यद्वा बुध्यते । 'मतिबुद्धि-' ( ३।२।१८८ ) इति क्तः ॥*॥ 'इगुपध-' ( ३।१।१३५ ) इति के '**बुधः**' अपि । 'सर्वज्ञः सुगतो बुधः' इति व्याडिः ॥ (३) ॥*॥ धर्मेण राजते । पचाद्यच् (३।१।१३४) । धर्मस्य राजेति वा । 'राजाहःसखिभ्यष्टच्' ( ४।४।९१ ) । ('**धर्मराजो** यमे बुद्धे युधिष्ठिरनृपे पुमान्' ) ॥ (४) ॥*॥ तथा सत्यं गतं ज्ञानं यस्य ॥ (५) ॥*॥ समन्तं भद्रमस्य सः । समन्ताद्भद्रमस्येति तु व्यधिकरणत्वादनुचितम् ॥ (६) ॥*॥ भगं माहात्म्यमस्यास्ति । मतुप् ( ५।२।९४ ) ॥ (७) ॥*॥ मारं कामं जयति । 'सत्सूद्विष-' ( ३।२।६१ ) इति क्विप् ॥ (८) ॥*॥ लोकं जयति ॥ (९) ॥*॥ जयति जिनः । 'इण्षिञ्जिदीङुष्यविभ्यो नक्' ( उ० ३।२ ) 'जिनाति' इति स्वामिमुकुटौ । तन्न । 'अङ्गस्य' 'हलः' ( ६।४।१,२ ) इति दीर्घप्रसङ्गात् । ( '**जिनो**ऽर्हति च बुद्धे च पुंसि स्याज्जित्वरे त्रिषु' ) ॥ ( १० ) ॥*॥ दिव्यं चक्षुः श्रोत्रम्, परचित्तज्ञानम्, पूर्वनिवासानुस्मृतिः, आत्मज्ञानम्, वियद्गमनम्, कायव्यूहसिद्धिश्चेति षट् अभितो ज्ञायमानानि यस्य सः । षट्सु दानशीलक्षान्तिवीर्यध्यानप्रज्ञासु अभिज्ञा आर्यं ज्ञानमस्येति वा ॥ ( ११ ) ॥*॥ दश बलान्यस्य । यदाहुः—'दानं शीलं क्षमा वीर्यं ध्यानप्रज्ञाबलानि च । उपायः प्रणिधिर्ज्ञानं दश बुद्धबलानि वै' इति ॥ ( १२ ) ॥*॥ अद्वयमद्वैतं वदत्यवश्यम् । आवश्यके ( ३।३।१७० ) णिनिः ॥ ( १३ ) ॥*॥ विनयत्यनुशास्ति । 'णीञ् प्रापणे' ( भ्वा० उ० अ० ) । ण्वुल् ( ३।१।१३३ ) ( '**विनायकस्तु** हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ' ॥ ( १४ ) ॥*॥ मुनिषु इन्द्रः ॥ ( १५ ) ॥*॥ श्रिया घनः पूर्णः । क्षुभ्नादित्वात् ( ८।४।३९ ) न णत्वम् ॥ ( १६ )

१—बृहदारण्यकोपनिषत्सु 'यत्' इति श्रूयते व्याख्यायते च शंकरभगवत्पादैः—'यत् ब्रह्म साक्षादव्यवहितं केनचित्, अद्रष्टुपरोक्षादगौणम्' इति ।

॥*॥ शास्तीति शास्ता। 'तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ' ( उ० २।९४ ) इति तृन् तृज्वा । पितृवच्छास्तृशब्दः । नप्त्रादिग्रहणस्य ( ६।४।११ ) नियमार्थत्वात् । चान्द्रे शासेः क्विचि शिष्टिरित्यत्र 'शास्ता' इति प्रत्युदाहरणेऽनौणादिकतृच एव रत्नमतिना दर्शितत्वाद्बुद्धवाचिनोऽपि दीर्घः—इति सुभूतिः । तन्न । तृचस्तस्येत्प्रसङ्गात् । अनौणादिकतृच एवेत्यत्र प्रमाणाभावाच्च । ( '**शास्ता** समन्तभद्रे ना शासके पुनरन्यवत्' ) ॥ ( १७ ) ॥*॥ मन्यते मुनिः । 'मनेरुच्च' ( उ० ४।१२३ ) इतीन् । ('**मुनि**र्वाचंयमेऽर्हति । प्रियालागस्तिपालाशे' ) ॥ (१८) ॥*॥ अष्टादश '**बुद्धस्य**' ॥

**शाक्यमुनिस्तु यः ॥ १४ ॥**
**स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः ।**
**गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः ॥ १५ ॥**

**शाक्येत्यादि** ॥ (यः) । शकोऽभिजनोऽस्य । 'शण्डिकादिभ्यो ञ्यः' ( ४।३।९२ ) । यद्वा 'शाकवृक्षप्रतिच्छन्नं वासं यस्माच्च चक्रिरे । तस्मादिक्ष्वाकुवंश्यास्ते शाक्या इति भुवि स्मृताः' इत्यागमात् शाके भवाः शाक्याः । दिगादित्वाद्यत् ( ४।३।५४ ) प्रत्ययः । तद्वंशावतीर्णो मुनिः । शाक्यश्चासौ मुनिश्चेति ॥ (१) ॥*॥ (सः) । शाक्यः सिंह इव । 'उपमितं व्याघ्रा–' ( २।१।५६ ) इति समासः ॥*॥ भीमवत् 'शाक्यः' अपि ॥ (२) ॥*॥ सर्वार्थेषु सिद्धो निष्पन्नः । 'सिद्धशुष्क–' ( २।१।४१ ) इति समासः । सर्वोऽर्थः सिद्धोऽस्येति वा ॥*॥ '**सिद्धार्थः**' अपि । '**सिद्धार्थौ** बुद्धसर्षपौ' इति शाश्वतः ॥ (३) ॥*॥ शुद्ध ओदनोऽस्येति । शकन्ध्वादिः ( वा० ६।१।९४ ) । शुद्धोदनस्यापत्यम् । 'अत इञ्' ( ४।१।९५ ) ॥ (४) ॥*॥ गोतमस्यायं शिष्यः । 'तस्येदम्' ( ४।३।१२० ) इत्यण् । 'तद्गोत्रावतारात्' इति स्वामी । ( '**गौतमो** गणभृद्भेदे शाक्यसिंहर्षिभेदयोः । **गौतम्यु**मायां रोचन्याम्' ) ॥ (५) ॥*॥ अर्कस्य बन्धुः । सूर्यवंशजत्वात् ॥ (६) ॥*॥ माया चासौ देवी च । तस्याः सुतः ॥ (७) ॥*॥ यद्यपि वेदविरुद्धार्थानुष्ठातृत्वाज्जिनशाक्यौ नरकवर्गे वक्तुमुचितौ । तथापि देवविरोधित्वेन बुद्ध्युपारोहादत्रैवोक्तौ । सप्त '**शाक्यस्य**' ॥

**ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः ।**
**हिरण्यगर्भो लोकेशः स्वयंभूश्चतुराननः ॥ १६ ॥**
**धाताब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः ।**
**स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड्विधिः ॥ १७ ॥**

**ब्रह्मेत्यादि** ॥ बृंहति वर्धयति प्रजा इति ब्रह्मा । 'बृहि वृद्धौ' ( भ्वा० प० से० ) । अन्तर्भावितण्यर्थः । 'बृंहेर्नोऽच्च' ( उ० ४।१४६ ) इति मनिन् । धातोर्नस्याकारादेशः । बृंहति वर्धत इति वा । यत्तु—व्योमादित्व ( उ० ४।१५१ ) कल्पनमस्य मुकुटेन कृतम्, तत्तूक्तसूत्रास्मरणमूलकम् । ('**ब्रह्म** तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे चाध्यात्मज्ञानयोस्तथा') ॥ (१) ॥*॥ आत्मनो विष्णोः सकाशात्, आत्मना स्वयमेव वा भवति । 'भुवः संज्ञान्तरयोः' ( ३।२।१७९ ) इति क्विप् । ('**आत्मभू**र्ना विधौ कामे') ॥ (२) ॥*॥ सुरेषु ज्येष्ठः ॥ (३) ॥*॥ परमे व्योमनि, चिदाकाशे, ब्रह्मपदे, वा तिष्ठति । 'परमे स्थः कित्' ( उ० ४।१० ) इतीनिः । 'तत्पुरुषे कृति–' ( ६।३।१४ ) इत्यलुक् 'स्थास्थिन्स्थृणाम्' ( वा० ८।३।९७ ) इति षत्वम् ॥ (४) ॥*॥ लोकपितॄणां मरीच्यादीनामर्यमादीनां वा पिता पितामहः । 'पितृव्यमातुल–' ( ४।२।३६ ) इति साधुः । ('**पितामहः** पद्मयोनौ जनके जनकस्य च') ॥ (५) ॥*॥ हिरण्यं हिरण्मयमण्डं तस्य गर्भ इव । 'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्' इति मनूक्तेः । तद्वा गर्भोऽस्य ॥ (६) ॥*॥ लोकानामीशः ॥ (७) ॥*॥ स्वयमेव भवति । 'भुवः–' ( ३।२।१७९ ) इति क्विप् ॥ (८) ॥*॥ चत्वार्याननान्यस्य ॥ (९) ॥*॥ दधाति । 'डुधाञ् धारणपोषणयोः' ( जु० उ० अ० ) । तृच् ( ३।१।१३३ ) । ('**धाता** वेधसि पालके') ॥ (१०) ॥*॥ अब्जं योनिरस्य ॥ (११) ॥*॥ द्रुह्यति दुष्टेभ्यः । 'द्रुह जिघांसायाम्' ( दि० प० से० ) ।–'द्रुहक्षिभ्यामिनन्' ( उ० २।५० ) इतीनन्–इति मुकुटः । तन्न । 'द्रुदक्षिभ्याम्' इति तत्र पाठात् । 'द्रविणं दक्षिणा' इत्युदाहरणात् । अतः 'बहुलमन्यत्रापि' (उ० २।४९ ) इतीनच् । बाहुलकाद्गुणाभावः ॥*॥ '**द्रुघणः**' अपि । 'ब्रह्मात्मभूः स्याद्द्रुहिणो **द्रुघणश्च** पितामहः' इति भागुरेः । 'करणेऽयोविद्रुषु' (३।३।८२) इति हन्तेः करणेऽप् घनादेशश्च । पूर्वपदात्–' ( ८।४।३ ) इति णत्वम् । द्रुः संसारवृक्षो हन्यतेऽनेनेत्यर्थः । ('**द्रुघणो** मुद्गरेऽपि स्याद्द्रुहिणे **च** परश्वधे') ॥ (१२) ॥*॥ विरचयतीति विरिञ्चिः । 'रच प्रतियत्ने' (चु० उ० से०) । स्वार्थण्यन्तात् 'अच इः' (उ० ४।१३९) । पृषोदरादित्वात् ( ६।३।१०९ ) अकारस्येत्वं नुमागमश्च । ( क्वचिदित्वाभावे '**विरञ्चिः**' अपि । 'चिरं विरञ्चिर्न चिरं विरञ्चिः' इत्यादौ प्रयोगदर्शनात् ) ॥*॥ पचाद्यचि ( ३।१।१३४ ) '**विरिञ्चः**' अपि । ('**विरिञ्चो** द्रुहिणः शिञ्जो विरिञ्चिर्द्रुघणो मतः') इति शब्दार्णवात् । यत्तु—'रिच वियोजनसंपर्चनयोः' चुरादिः । 'अच इः' ( उ० ४।१३९ ) । पृषोदरादित्वात् ( ६।३।१०९ ) नुम्, कुञ्जरवदुपधाह्रस्वत्वं च–इति मुकुटः । तन्न । 'रिच

---

१—क्वचित्पुस्तके इत उत्तरम् 'सर्वज्ञो वीतरागोऽर्हन्केवली तीर्थकृज्जिनः' । जिनदेवतानामानि षट् । इत्यधिकम् ॥

१—अयं पाठः सर्वत्र नोपलभ्यते ॥ २—उक्तप्रयोगे परसवर्णस्य (८।४।५३) नित्यत्वेन विलोमस्यासाधुत्वान्न सर्वसंमतत्वम् ॥

वियोजनसंपर्चनयोः' इति चुरादौ पाठदर्शनाद्ध्रस्वविधानस्यानुपयोगात् । कुञ्जरवदिति दृष्टान्तोऽप्ययुक्तः । तत्र ह्रस्वविधानाभावात् ॥ (१३) ॥*॥ कमलमासनं यस्य ॥(१४)॥*॥ सृजति । तृच् (३।१।१३३) । 'सृजिदृशोः–' (६।१।५८) इत्यम् ॥ (१५) ॥*॥ प्रजानां पतिः । **'प्रजापतिर्ना** दक्षादौ महीपाले विधातरि' । (**'प्रजापति**र्ब्रह्मराज्ञोर्जामातरि दिवाकरे । वह्नौ त्वष्टरि दक्षादौ') ॥ (१६) ॥*॥ विदधाति । 'विधाञो वेध च' (उ०४।२२५) इति वेधादेशोऽसिप्रत्ययश्च । मुकुटस्तु—असुन्–इत्याह । तन्न । (६।१।१९७) आद्युदात्तत्वापत्तेः । 'मिथुनेऽसिः' (उ०४।२२३) इत्युपक्रमाच्च । (**'वेधाः** पुंसि हृषीकेशे बुधे च परमेष्ठिनि') ॥ (१७) ॥*॥ विशेषेण दधाति । विरन्यौपसर्गनिवृत्त्यर्थः । (**'विधाता** द्रुहिणे कार्ये') ॥ (१८) ॥*॥ विश्वं सृजति । 'क्विप्' (३।२।७६) 'क्विन्प्रत्ययस्य–' (८।२।६२) इति कुत्वं तु न । 'रज्जुसृड्भ्याम्' इति (७।२।११४) भाष्यप्रयोगात् । यद्वा सृजियज्योः पदान्ते षत्वविधेः कुत्वापवादत्वात् । यत्तु मुकुटेनोक्तम्—'क्विन्प्रत्यय' इति तद्गुणसंविज्ञानपक्षे क्विन्नन्तस्य कुत्वम्, न क्विबन्तस्य–'इति । तन्न । प्रत्ययग्रहणवैयर्थ्यात्, दृक् स्पृगित्याद्यसिद्धिप्रसङ्गाच्च, तत्पक्षस्यात्राग्रहणात् । यद्यपि—'अतद्गुणसंविज्ञानपक्षे तु क्विन् उपलक्षणत्वात्तदभावे क्विबन्तस्यापि कुत्वम्' इत्युक्तम् । तदप्यस्मदुक्तप्रकारद्वयेन प्रत्युक्तम् ॥ (१९) ॥*॥ विधत्ते इति विधिः । 'उपसर्गे घोः किः' (३।३।९२) बाहुलकात् (३।३।११३) कर्तरि । यद्वा 'विध विधाने' (तु० प० से०) । इन् 'इगुपधात्कित्' (उ० ४।१२०) इति कित्त्वान्न गुणः । (**'विधि**र्ब्रह्मविधानयोः । **विधि**र्वाक्ये च दैवे च प्रकारे कालकल्पयोः') ॥ (२०) ॥*॥ विंशतिः **'ब्रह्मणः'** ॥

**विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः ।**
**दामोदरो हृषीकेशः केशवो माधवः स्वभूः ॥ १८ ॥**
**दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः ।**
**पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः १९**
**उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः ।**
**पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः ॥ २० ॥**
**देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः ।**
**वनमाली बलिध्वंसी कंसारातिरधोक्षजः ॥ २१ ॥**
**विश्वंभरः कैटभजिद्विधुः श्रीवत्सलाञ्छनः ।**

**विष्णुरित्यादि** ॥ वेवेष्टि । 'विष्लृ व्याप्तौ' (जु० उ० अ०) । 'विषेः किच्च' (उ० ३।३९) इति नुः ॥ (१) ॥*॥ नराणां समूहो नारम् । 'तस्य समूहः' (४।२।३७) इत्यण् । तदयनं यस्य । 'पूर्वपदात्–' (८।४।३) इति णत्वम् ॥*॥ नरा अयनं यस्येति विग्रहे **'नरायणः'** अपि । 'पृषोदरादित्वात्' (६।३।१०९) इति मुकुटस्तु चिन्त्यः । 'अथ नारायणो विष्णुरूर्ध्वकर्मा नरायणः' इति शब्दार्णवः । **'वासुनारायण-पुनर्वसु-विश्वरूपाः'** इति त्रिकाण्डशेषश्च । नरस्यापत्यम् 'नडादिभ्यः फक्' (४।१।९९) इति वा । संज्ञापूर्वकत्वाद्वृद्ध्यभावो वा । नराज्जाताः नारा आपः तत्त्वानि वा अयनं (यस्य) नारम् अयते जानाति वा, आययति प्रवर्तयति वा 'अय गतौ' (भ्वा० आ० से०) णिजन्तोऽपि । 'कृत्यल्युटः–' (३।३।११३) इति ल्युट् । (**'नारायणस्तु** केशवे **नारायणी** शतावर्युमा श्रीः') ॥ (२) ॥*॥ कृष्णो वर्णोऽस्यास्तीति 'कृषेर्वर्णे' (उ०३।४) इति नगन्तात् 'गुणवचनेभ्यो मतुपो लुक्' (वा० ५।२।९४) इति लुक् । कर्षत्यरीनिति वा बाहुलकाद्वर्णं विनापि कृषेः 'कृष विलेखने' (भ्वा० प० अ०) नक् । (**'कृष्णः** सत्यवतीपुत्रे वायसे केशवेऽर्जुने । **कृष्णा** स्याद्द्रौपदी नील्यां पिप्पलीद्राक्षयोरपि । मेचके वाच्यलिङ्गः स्यात्क्लीबे मरिचलोहयोः')[3] ॥ (३) ॥*॥ विकुण्ठाया अपत्यम् । शिवादित्वात् (४।१।११२) अण् । विगता कुण्ठा नाशोऽस्य, विकुण्ठं ज्ञानं स्थानं वास्ति स्वरूपत्वेनाश्रयत्वेन वास्य । ज्योत्स्नादित्वात् (वा० ५।२।१०३) अण् । यद्वा विकुण्ठानां जीवानामयं नियन्ता ज्ञानदो वा । 'तस्येदम्' (४।३।१२०) इति, 'शेषे' (४।२।९२) इति वाण् । विगता कुण्ठा यस्मात् । प्रज्ञाद्यण् (५।४।३८) वा । ('वैकुण्ठो वासवे विष्णौ') ॥४॥*॥ विष्टरे श्रूयते । असुन् (उ० ४।१८९) । विष्टरो वृक्षः । **'पलाशी विष्टरः स्थिरः'** इति त्रिकाण्डशेषः । तरुश्चात्राश्वत्थोऽभिमतः । 'अश्वत्थः सर्ववृक्षाणाम्' इत्युक्तेः । विष्टरो दर्भमुष्टिरिव श्रवसी कर्णावस्येति वा ॥ (५) ॥*॥ दाम उदरे यस्य । सप्तम्यन्तस्य वैयधिकरण्येऽपि समासः । 'सप्तमीविशेषणे बहुव्रीहौ' (२।२।३५) इति लिङ्गात् । गमकत्वादिति मुकुटोक्तो हेतुस्त्वप्रयोजकः ॥ (६) ॥*॥ हृषीकाणामिन्द्रियाणामीशः ॥ (७) ॥*॥ प्रशस्ताः केशाः सन्त्यस्य । कश्च ईशश्च केशौ पुत्रपौत्रौ स्तोऽस्य । 'केशाद्वः–' (५।२।१०९) इति वः । केशौ वाति वा । 'वा गतौ' (अ० प० अ०) । 'आतः–' (३।२।३) इति कः । 'शंभोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः' इति पाद्मोक्तेः । (यत्तु)—हन्त्यर्थाद्वधेः केशिनं हतवान् । 'अन्येभ्योऽपि दृश्यते' (वा० ३।२।१०१) इति डः । पृषोदरादित्वात् (६।३।१०९) केशिशब्दस्येकारस्याकारे नलोपे च

१—'आपो वै नरसूनवः' इति मनूक्तेः, इति मुकुटः ॥ २—'नराज्जातानि तत्त्वानि' इति मन्त्रवर्णादिति मुकुटः ॥ ३—मुकुटस्तु 'कृषिरुत्कृष्टवचनो नश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' इति त्वौपनिषदाः । उत्कृष्टा निर्वृतिरस्मादिति व्युत्पत्तिरित्याह ॥ ४—'यस्मात्त्वयैष दुष्टात्मा हतः केशी जनार्दन । तस्मात्केशवनामा त्वं लोके ख्यातो भविष्यसि' इति हरिवंशोक्तेः, इति मुकुटः ॥

केशवः-इति मुकुटः । तन्न । [१]वधधातोरभावात् । वध इत्यादौ वधादेशविधानात् । ('**केशवो**ऽजे च पुंनागे पुंसि केशवति त्रिषु') ॥ (८) ॥*॥ माया लक्ष्म्या धवः । यद्वा [२]मधोरपत्यम् । तद्वंश्यत्वात् ( मधोर्हन्तेति वा ।) 'शेषे' (४।२।९२) इत्यण् । मा नास्ति धवोऽस्य वा । ('**माधवो**ऽजे मधौ राधे माधवे ना स्त्रियां मिसौ । मधु शर्करावासन्तीकुट्टनीमदिरासु च') ॥ (९) ॥*॥ स्वतो भवति । 'भुवः-' (३।२।१७९) इति क्विप् । ('**स्वभूर्ना** ब्रह्मणि हरौ') ॥ (१०) ॥*॥ दैत्यानामरिः ('**दैत्यारिः** पुंसि सामान्यदेवे च गरुडध्वजे') ॥ (११) ॥*॥ पुण्डरीकमिवाक्षिणी यस्य । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' (५।४।७३) । पुण्डरीकेष्वक्षि यस्य वा । एतच्च 'हरिस्ते साहस्रं कमलबलिमादाय' इत्यत्र व्यक्तम् । यद्वा पुण्डरीकं लोकात्मकम् अक्षति । 'अक्षू व्याप्तौ' (भ्वा० प० वे०) । 'कर्मण्यण्' (३।२।१) तत् क्षायति वा । 'क्षै क्षये' (भ्वा० प० अ०) 'आतोऽनुप-' (३।२।३) इति कः । 'अन्येषामपि-' (६।३।१३७) इति दीर्घः । आङ्प्रश्लेषो वा । तत्र 'सुपि' (३।२।४) इति (योगविभागात्) 'मूलविभुजादि' (वा० ३।२।५) इति कः ॥ (१२) ॥*॥ गां भुवं धेनुं स्वर्गं वेदं वा अविदत् (विन्दति) । 'विद्लृ लाभे' (तु० उ० प्र०) । 'गवादिषु विन्देः संज्ञायाम्' (वा० ३।१।१३८) इति शः । वराहरूपेणोद्धरणात् । कामधेनोरैश्वर्यप्राप्तेः । इन्द्रेण स्वर्गस्य निवेदनात् । मत्स्यादिरूपेण वेदाहरणाद्वा । ('**गोविन्दो** वासुदेवे स्याद्गवाध्यक्षे बृहस्पतौ') ॥ (१३) ॥*॥ गरुडो ध्वजश्चिह्नमस्य ॥ (१४) ॥*॥ पीतमम्बरं यस्य । ('**पीताम्बर**स्तु शैलूषे पुंसि कैटभसूदने') ॥ (१५) ॥*॥ नास्ति च्युतं स्खलनं स्वपदाद्यस्य । नाच्योष्ट इति वा । 'च्युङ् गतौ' (भ्वा० आ० अ०) । 'गत्यर्था-' (३।४।७२) इति क्तः । ('**अच्युत**स्तु हरौ पुंसि त्रिषु स्थिरे') ॥ (१६) ॥*॥ शृङ्गस्य विकारः शार्ङ्गं धनुः । 'अनुदात्तादेश्च-' (४।३।१४०) इत्यञ् । तदस्यास्ति । 'अत इनिठनौ' (५।२।११५) इति इनिः ॥ (१७) ॥*॥ विषुशब्दो नानार्थो निपातः । विषु नाना अञ्चति । 'ऋत्विग्-' (३।२।५९) इति क्विन् । 'उगितश्च' (४।१।६) इति ङीप् । विषूची सेना यस्य । गकारपरत्वात् 'एति संज्ञायामगात्' (८।३।९९) इति न षत्वम् । विष्वक्सेनः । 'विष्वग् विश्वक् स्मृतो विश्वैर्विषुवं विशुवं तथा' इति द्विरूपकोशात् तालव्यमध्योऽपि । 'तालव्या मूर्धन्याश्चैते शब्दाः शटी च परिवेषः । **विश्वक्सेनो** भ्रेषः प्रतिष्कशः कोशविशदौ च' इत्यूष्मविवेकाच्च । '**विश्वक्सेना** फलिन्यां स्यात् **विश्वक्सेनो** जनार्दने' । मुकुटस्तु—'पूर्वपदात्संज्ञायामगः' (८।४।३) इति न णत्वम् । विष्वक्शब्दस्य गकारान्तत्वात् । गकारान्तत्वं च णत्वे कर्तव्ये परस्य 'खरि च' (८।४।५५, भा० ६१) इति [३]चर्त्वस्यासिद्धत्वात्-इत्याह । तन्न । 'अट्कुप्वाङ्-' (८।४।२) इत्यधिकारात्सकारव्यवाये प्राप्तेरेवाभावात् ॥ (१८) ॥*॥ जननं जनः । भावे घञ् (३।३।१८) । 'जनिवध्योश्च' (७।३।३५) इति न वृद्धिः । जनो जन्म । तमर्दयति जनार्दनः । 'अर्द हिंसायाम्' (चु० उ० से०) नन्द्यादित्वात् (३।१।१३४) ल्युः । जनाः समुद्रस्थदैत्यभेदाः, तेषामर्दन इति वा [ जनैरर्थ्यत इति वा । 'अर्द गतौ याचने च' । 'कृत्यल्युटः-' (३।३।११३) इति कर्मणि ल्युट् ॥ ] ॥ (१९) ॥*॥ इन्द्रमुपगतोऽनुजत्वात् । उपेन्द्रः । 'कुगति-' (२।२।१८) इति समासः । यत्तु—उपगत इन्द्रोऽस्य-इति । तन्न । 'कुगति-' (२।२।१८) इत्युपन्यासविरोधात् ॥ (२०) ॥*॥ इन्द्रस्यावरं जातः । 'अन्येष्वपि-' (३।२।१०१) इति डः । [ इन्द्रः अवरजोऽस्य वा ॥ ] (२१) ॥*॥ चक्रं पाणौ यस्य । 'प्रहरणार्थेभ्यः-' (वा० २।२।३६) इति सप्तम्याः परत्वम् ॥ (२२) ॥*॥ चत्वारो भुजा यस्य । यद्वा 'भुङ्क्ते भुनक्ति' इति भुजः । चतुर्णां धर्मार्थकाममोक्षाणां भुजः ॥ (२३) ॥*॥ पद्मं नाभौ यस्य । ( गड्वादित्वात् (वा० २।२।३५) सप्तम्याः परनिपातः ) । 'अच् प्रत्यन्वव-' (५।४।७५) इत्यत्र 'अच्' इति [१]योगविभागादच् ॥ (२४) ॥*॥ मधोरसुरस्य रिपुः ॥ (२५) ॥*॥ वसुदेवस्यापत्यम् । 'ऋष्यन्धक-' (४।१।११४) इत्यण् । यद्वा वसतीति वासुः । 'बाहुलकादुण्' । वासुश्चासौ देवश्च । 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते' इति विष्णुपुराणात् । वसुदेवे शुद्धान्तःकरणे प्रकाशते इति वा । 'शेषे' (४।२।९२) इत्यण् ॥*॥ **वासुर**पि । 'वासुर्नरायणपुनर्वसुविश्वरूपाः' इति त्रिकाण्डशेषात् ॥ (२६) ॥*॥ त्रिषु लोकेषु गुणेषु वा, त्रयो वा विक्रमाः पादविन्यासा यस्य ॥ (२७) ॥*॥ देवक्या नन्दनः । देवकशब्दस्य तदपत्ये लक्षणया वृत्तौ 'पुंयोगात्-' (४।१।४८) इति ङीष् । 'नहि तत्र दांपत्यलक्षण एव पुंयोगः, किं तु जन्यत्वाद्यपि' इति हरदत्तादयः । अत एव 'प्राक् केकयीतो भरतस्ततोऽभूत्' इति भट्टिः । एवं रेवतीरमणोऽपि ॥*॥ अणि तु **दैवकी** । '**दैवकी देवकी** च' इति द्विरूपकोषः ॥*॥ देवकानाचष्टे इति णिजन्तात् 'अच इः' (उ० ४।१३९) । 'ततो ङीष्' (वा० ४।१।४५) इति,

१—इदं च—'वध हिंसायाम् । वधकः' इति कृदन्तसिद्धान्तकौमुदीविस्मरणमूलकम् । नहि तत्र वधादेशप्राप्तिरस्ति । किंच वधादेशस्यादन्तत्वेन वृद्धेरप्राप्तौ 'जनिवध्योश्च' (७।३।३५) इति सूत्रं व्यर्थमेव स्यात् । तस्मान्मुकुटोक्तिः सम्यगेव । 'हतवान्' इत्युक्तिस्तु हरिवंशश्लोक्तिसानुकूला ॥ २—यदोर्ज्येष्ठः पुत्रो मधुः तद्वंश्याः सर्वेऽपि माधवाः । अत एव 'प्रहितः प्रधनाय माधवान्' इति माघः, इति मुकुटः ॥ ३—चर्त्वस्यासिद्धत्वादिति मुकुटः ॥

१—मुकुटस्तु योगविभागस्य हि पूर्वाचार्येष्टमात्रसाधकत्वम् । नतु नाम्यन्तस्य सर्वत्रैवाच् समासान्त इति नियमः । तेन 'प्रजा इवाङ्गादरविन्दनाभेः' इति माघः—इत्यप्याह ॥

देवकस्यापत्यं वा । 'अत इञ्' ( ४।१।९५ ) संज्ञापूर्वकत्वाद्वृद्ध्यभावः । 'इतो मनुष्यजातेः' ( ४।१।६५ ) इति ङीष्—इति च मुकुटः ॥ ( २८ ) ॥*॥ शूरस्यापत्यम्, तद्वंशजत्वात् । वृष्णित्वेऽपि बाह्वादित्वात् ( ४।१।९६ ) इञ् ॥*॥ 'सूरो यादवे दन्त्यवान्' इति माधवी । **'सौरिः'** अपि ॥ ( २९ ) ॥*॥ श्रियः पतिः ( **'श्रीपतिर्**विष्णुभूपयोः' ) ॥ ( ३० ) ॥*॥ पुरुषेषूत्तमः, पुरुषाणां पुरुषेभ्यो वोत्तमः ॥ ( ३१ ) ॥*॥ 'आपादपद्मं या माला वनमालेति सा मता' इति कलिङ्गः । सास्यास्ति । व्रीह्यादित्वात् ( ५।२।११६ ) इनिः । वनं मलितुं शीलमस्य इति वा । 'मल धारणे' ( भ्वा० आ० से० ) । 'सुपि—' ( ३।२।७८ ) इति णिनिः । ( **'वनमाली** तु गोविन्दे वाराह्यां **वनमालिनी'** ) ( ३२ ) ॥*॥ बलिमसुरं ध्वंसितुं शीलमस्य । ताच्छील्ये ( ३।२।७८ ) णिनिः । बलिना पूजादिना विद्यां ध्वंसितुं शीलमस्येति वा ॥ ( ३३ ) ॥*॥ कंसस्यारातिः ॥ ( ३४ ) ॥*॥ अधः कृतम् अक्षजमैन्द्रियकं ज्ञानं येन, अधोक्षाणां जितेन्द्रियाणां जायते प्रत्यक्षो भवति वा, अधः अक्षजं ज्ञानं यस्येति वा[२] ॥ ( ३५ ) ॥*॥ विश्वं बिभर्ति । 'संज्ञायां भृतॄवृजि—' ( ३।२।४६ ) इति खच् । 'अरुर्द्विषद्—' ( ६।३।६७ ) इति मुम् । **'विश्वंभरो**ऽच्युते शक्रे पुंसि, **विश्वंभरा** भुवि' ॥ ( ३६ ) ॥*॥ कैटभमजैषीत् । 'सत्सूद्विष—' ( ३।२।६१ ) इति क्विप् ॥ ( ३७ ) ॥*॥ विध्यत्यसुरान् । 'पृभिदिव्यधिगृधिधृषिभ्यः' ( उणा० १।२३ ) इति कुः । ( **'विधुश्च**न्द्रेऽच्युते' ) ॥ ( ३८ ) ॥*॥ वदति महत्त्वम् । 'वृ-तॄ-वदि-वन्चि-वसि-हनि-कमि-कषिभ्यः सः' ( उ० ३।६२ ) वत्सः । श्रीयुक्तो वत्सः श्रीवत्सो महत्त्वलक्षणं श्वेतै[३]रोमावर्तविशेषो लाञ्छनं यस्य ॥*॥ 'शौरिश्रीवत्सदैत्यारिविष्वक्सेनजनार्दनाः' इति शब्दार्णवात् । **'श्रीवत्सः'** अपि ॥ ( ३९ ) ॥*॥ ऊनचत्वारिंशत् **'विष्णोः'** ॥

**वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः ॥ २२ ॥**

**वसुदेव इत्यादि** ॥ वसुषु दीव्यति । 'दिवु क्रिडादौ' ( दि० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । यत्तु—'वसुभिर्दीव्यति' इति विगृह्य पचाद्यच् ( ३।१।१३४ )—इत्याह मुकुटः । तन्न । 'कर्मण्यण्' ( ३।२।१ ) इत्यपवादस्य सत्त्वात् । 'दिवः कर्म च' ( १।४।४३ ) इति कर्मकरणसंज्ञयोः समावेशस्य सत्त्वात् । वसूनि दीव्यतीति विग्रहस्य वैयर्थ्याच्च ॥ ( १ ) ॥*॥ आनकैर्दुन्दुभिभिश्चोपलक्षितः । वसुदेवजन्मनि देवैरानकदुन्दुभिवादनात् । हरौ जाते, कृष्णे जाते, इति स्वामिमुकुटोक्तिस्तु भागवताद्यश्रवणमूलिका । 'आनकदुन्दुभो वसुदेवपिता' इत्यपि निर्मूलम् ॥ ( २ ) ॥*॥ विष्णुनामसु, कृष्णनामोपगमात्कृष्णस्यैव विष्णुत्वमभिप्रैति ग्रन्थकृत् । अवतारान्तराणां तु तदंशत्वात्तन्नामानि नोक्तानि । 'अन्ये त्वंशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्' इति वदतो व्यासस्याप्ययमाशयो लभ्यते । अत एव कृष्णजनकस्यात्र नामोक्तम्, न तु जमदग्निदशरथादेः । द्वे **'कृष्णपितुः'** ॥

**बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः ।**
**रेवतीरमणो रामः कामपालो हलायुधः ॥ २३ ॥**
**नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली ।**
**संकर्षणः सीरपाणिः कालिन्दीभेदनो बलः ॥ २४ ॥**

**बलभद्र इत्यादि** ॥ बलं भद्रं श्रेष्ठमस्य, बलेन भद्र इति वा । **'बलभद्रा** त्रायमाणाकुमार्योः, पुंसि सीरिणि,' ( **'बलभद्र**स्त्वनन्ते बलशालिनि' ) ॥ (१) ॥*॥ प्रलम्बं हतवान् । मूलविभुजादित्वात् ( वा० ३।२।५ ) कः ॥ (२) ॥*॥ बलेन दीव्यति । ( **'बलदेवो** बले वाते त्रायमाणौषधौ स्त्रियाम्' ) ॥ (३) ॥*॥ अच्युतस्याग्रजः ॥ (४) ॥*॥ रेवत्या रमणः । नन्द्यादित्वात् ( ३।१।१३४ ) ल्युः ॥ (५) ॥*॥ रमते । 'ज्वलितिकसन्तेभ्यः—' ( ३।१।१४० ) इति णः । रमन्तेऽस्मिन्योगिनः, इति वा । 'हलश्च' ( ३।३।१२१ ) इति घञ् । यत्तु—रमयति मोदयति प्रजा रूपमस्य—इति मुकुटेनोक्तम् । तन्न । णिजन्तस्य ज्वलादित्वाभावात् । प्रत्ययान्तानां धात्वन्तरत्वात् । ( **'रामा** योषा हिङ्गुनद्योः क्लीबं वास्तुककुष्ठयोः । ना राघवे च वरुणे रैणुकेये हलायुधे । हये च पशुभेदे च त्रिषु चारौ सितेऽसिते' ) ॥ (६) ॥*॥ कामान् पालयति । 'पाल रक्षणे' ( चु० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) यत्तु—'पॄ पालनपूरणयोः' ( जु० प० से० ) इत्युक्तं मुकुटेन । तच्चिन्त्यम् ॥ (७) ॥*॥ हलमायुधं यस्य ॥ (८) ॥*॥ नीलमम्बरं यस्य । ( **'नीलाम्बरो** रौहिणेये कौणपे च शनैश्चरे' ) ॥ (९) ॥*॥ रोहिण्या अपत्यम् । शुभ्रादित्वात् ( ४।१।१२३ ) ढक् । ( **'रौहिणेयो**ऽन्यवद्वत्से ना बुधे च हलायुधे' ) ॥ (१०) ॥*॥ तालोऽङ्को ध्वजो यस्य । ( **'तालाङ्कः** करपत्रे स्याच्छाकभेदेऽच्युताग्रजे । महालक्षणसंपन्नपुरुषे पुस्तके हरे' ) ॥ (११) ॥*॥ 'मुस खण्डने' ( दि० प० से० ) । वृषादित्वात् ( उ० १।१०६ ) कलच् । मुसलमस्त्यस्य ॥*॥ मूर्धन्यमध्योऽपीत्येके । तत्र 'मुष स्तेये' ( क्र्या० प० से० ) ॥ (१२) ॥*॥ हलमस्त्यस्य । ( **'हली** कृषकसीरिणोः' ) ॥ (१३) ॥*॥ संकर्षति, सम्यक् कृष्यते वा । आद्ये नन्द्यादित्वात् ( ३।१।१३४ ) ल्युः । द्वितीये कर्मणि ( ३।३।११३ ) ल्युट् ॥ (१४) ॥*॥ सीरः पाणौ यस्य । 'अजगरसर्पे शीरस्तालव्यादिः कविभिराख्यातः । लाङ्गलवचनो नित्यं दन्त्यादिर्दृश्यते शास्त्रे' इत्यूष्मविवेकः ॥ (१५) ॥ कालिन्द्या भेदनः ।

---

१—'शर्वः शिवे केशव एव शौरिः' इति शकारभेदात्तालव्यादिः, इत्यपि मुकुटः ॥ २—मुकुटस्तु—अधो न क्षीयते जात्विति । पृषोदरादित्वात् ( ६।३।१०९ ) अधोक्षजः । तथा चोद्योगपर्वणि—'अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः' इति । इत्यप्याह ॥ ३—क्रुद्धस्य दुर्वाससः पदाघातरूपो रेखाविशेषः श्रीवत्स इति पञ्जिका—इति मुकुटः ॥

ल्युः ( ३।१।१३४ ) ॥ (१६) ॥*॥ बलमस्यास्ति । अर्शआद्यच् ( ५।२।१२७ ) । ( '**बलं** गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः । पुमान्हलायुधे दैत्यप्रभेदे वायसेऽपि च' ) ॥ (१७) ॥*॥ सप्तदश '**बलभद्रस्य**' ॥

**मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः ।**
**कंदर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः ॥ २५ ॥**
**संबरारिर्मनसिजः कुसुमेषुरनन्यजः ।**
**पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः ॥ २६ ॥**
**ब्रह्मसूर्विश्वकेतुः स्यात्**

**मदन इत्यादि** ॥ मदयति । 'मदी हर्षग्लेपनयोः' ( भ्वा० प० से० ) घटादिः । ल्युः ( ३।१।१३४ ) ( '**मदनः** सिक्थके स्मरे । राढे वसन्ते धत्तूरे' ) ॥ (१) ॥*॥ मननं मत्=चेतना । संपदादि क्विप् ( वा० ३।३।१०८ ) । 'गमादीनां क्वौ' ( वा० ६।४।४० ) इति नलोपः । 'ह्रस्वस्य' ( ६।१।७१ ) इति तुक् । मथतीति मथः । 'मथे विलोडने' ( भ्वा० प० से० ) । अच् ( ३।२।१३४ ) । मतो मथः=मन्मथः । '**मन्मथः** कामचिन्तायां कपित्थे कुसुमायुधे' । यत्तु—'अनुदात्तोपदेश—' ( ६।४।३७ ) इत्यनुनासिकलोपः, इति स्वामिमुकुटावूचतुः । तन्न । क्विपो झलादित्वाभावात् ॥ (२) ॥*॥ म्रियन्तेऽनेन । करणे घञ् ( ३।३।१९ ) । मारयति वा । अच् ( ३।१।१३४ ) ( '**मारो**ऽनङ्गे मृतौ विघ्ने **मारी** चण्ड्यां जनक्षये' ) ॥ (३) ॥*॥ प्रकृष्टं द्युम्नं बलमस्य ॥ (४) ॥*॥ मीनशब्दो जलचरोपलक्षणार्थः । मीनो मकरः केतनं ध्वजो यस्य ॥ (५) ॥*॥ 'कम्' इत्यव्यये कुत्सायाम् । कुत्सितो दर्पोऽस्य कंदर्पः । यद्वा कं सुखम् तत्र तेन वा दृप्यति । 'दृप हर्षमोहनयोः' ( दि० प० अ० ) । पचाद्यच् ( ३।१।१३४ ) ॥ (६) ॥*॥ दर्पयति ॥ ण्वुल् ( ५।१।१३३ ) ॥ (७) ॥*॥ नास्त्यङ्गमस्य । न अङ्गं ज्ञानमस्मादिति वा । '**अनङ्गो** मदनेऽनङ्गमाकाशमनसोरपि' ॥ (८) ॥*॥ काम्यतेऽनेन । 'पुंसि संज्ञायाम्—' ( ३।३।११८ ) इति घः । ( '**कामः** स्मरेच्छयोः पुमान् । रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम्' ) ॥ (९) ॥*॥ पञ्च शरा अस्य । 'उन्मादनस्तापनश्च शोषणः स्तम्भनस्तथा । संमोहनश्च कामस्य पञ्च बाणाः प्रकीर्तिताः' ॥ (१०) ॥*॥ स्मरयत्युत्कण्ठयति 'स्मृ आध्याने' ( भ्वा० प० अ० ) पचाद्यच् ( ३।१।१३४ ) । स्मर्यतेऽनेनेति वा । 'पुंसि संज्ञायाम्—' ( ३।३।११८ ) इति घः ॥ (११) ॥*॥ संबरस्यारिः[1] । 'क्लीबं तु **संबरं** नीवौ बौद्धव्रतविशेषयोः । विशेषे पुंसि दैत्यस्य मत्स्यस्य हरिणस्य च' इति दन्त्यादौ रभसः ॥*॥ '**शंवरं**[2] सलिले पुंसि मृगदैत्यविशेषयोः' इति तालव्यादौ मेदिनीकारात् तालव्यादिरपि ॥ (१२) ॥*॥

१—संवरणं संवरः, इति मुकुटः ॥ २—दैत्यानां शं कल्याणं वृणोति । 'शमि धातोः' ( ३।२।१४ ) इत्यादिनाऽच् इत्यपि मुकुटः ॥

शृङ्गाररूपेण मनसि जायते स्म । 'सप्तम्यां जनेर्डः' ( ३।२।९७ ) । 'तत्पुरुषे कृति' ( ६।३।१४ ) इत्यलुक् ॥*॥ लुकि तु '**मनोजः**' ॥ ( १३ ) ॥*॥ कुसुमानीषवो यस्य ॥ ( १४ ) ॥*॥ नास्त्यन्यद्यस्मादनन्यो विष्णुः । ततो जातः । मनसोऽन्यस्माच्च जायते इति वा ॥ ( १५ ) ॥*॥ पुष्पं धनुरस्य । 'वा संज्ञायाम्' ( ५।४।१३३ ) इत्यनङ् ॥*॥ तदभावे सान्तः ( **पुष्पधनुः** ) अपि ॥ (१६) ॥*॥ रतेः पतिः ॥ (१७) ॥*॥ मकरो ध्वजोऽस्य ॥ (१८) ॥*॥ आत्मना भवति । 'भुवः' ( ३।२।१७९ ) इति क्विप् ॥ (१९) ॥*॥ ब्रह्म तपः, ब्रह्माणं वा सुवति चालयति । 'षू प्रेरणे' ( तु० प० से० ) । 'अन्येभ्योऽपि—' ( ३।२।७६ ) इति क्विप् ॥ (२०) ॥*॥ विश्वस्मिन् केतुरस्य । 'पताकायां द्युतौ **केतु**र्ग्रहोत्पातादिलक्ष्मसु' इति रभसः ॥*॥ 'खड्गायुधोऽनिरुद्धः स्यात्तथा चैवर्श्यकेतनः' इति साम्बपुराणात् '**ऋश्यकेतुः**' अपि । ऋश्यो मृगविशेषः । '**एणः कुरङ्गमो रिश्यः स्यादृश्यश्चारुलोचनः**' इति पुरुषोत्तमात् ॥ (२१) ॥*॥ 'आत्मभूर्ब्रह्मसूः कामः' इत्यमरमालादर्शनादिदं द्वयं कामस्य । 'अनिरुद्धो विश्वकेतुर्ब्रह्मसूरप्युषापतिः' इति, 'ब्रह्मसूस्त्वनिरुद्धः स्यात्' इति च बृहदमरशब्दार्णवाभ्याम्, 'ब्रह्मसूर्विश्वकेतुश्च **विश्वक्सेनात्मजात्मजः**' इति भागुरेश्च ब्रह्मस्वादिचतुष्टयमनिरुद्धस्येत्यन्ये ॥*॥ एकविंशतिः '**कामस्य**' ॥

**अनिरुद्ध उषापतिः ।**

**अनिरुद्ध इत्यादि** ॥ न निरुद्धः ॥ (१) ॥*॥ उषायाः पतिः ॥*॥ '**ऊषा** बाणस्य पुत्री स्याद**निरुद्धगृहिण्युषा**' इत्यजयात् ( **ऊषापतिः** ) दीर्घादिरपि ॥ (२) ॥*॥ द्वे '**अनिरुद्धस्य**' ॥

**लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया ॥२७॥**

**लक्ष्मीरित्यादि** ॥ लक्षयति पश्यति नीतिज्ञम् । 'लक्ष दर्शनाङ्कनयोः' ( चु० प० से० ) । 'लक्षेर्मुट् च' ( उणा० ३।१६० ) इति ईप्रत्ययः, तस्य च मुट् । '**लक्ष्मीः** संपत्तिशोभयोः । ऋद्ध्यौषधौ च पद्मायां वृद्धिनामौषधेऽपि च' ॥ (१) ॥*॥ पद्ममालयोऽस्याः ॥ (२) ॥*॥ पद्ममस्त्यस्याः । अर्शआद्यच् ( ५।२।१२७ ) । '**पद्मो**ऽस्त्री पद्मके व्यूहे निधिसंख्यान्तरेऽम्बुजे । ना नागे स्त्री फञ्जिकाश्रीचारटीपन्नगीषु च' ॥ (३) ॥*॥ कमलैवम् । '**कमलं** सलिले ताम्रे जलजे क्लो-(व्यो)म्नि भूषणे । मृगभेदे तु **कमलः**, **कमला** श्रीवरस्त्रियोः'[1] ॥ (४) ॥*॥ श्रयति हरिम् । 'क्विब्वचि—' ( वा० ३।२।१७८ ) इति क्विब्दीर्घौ । यत्तु मुकुटेन 'संप्रसारणनिषेधश्च' इत्युक्तम् तच्चिन्त्यम् । श्रयतेस्तदविधानात् । यत्तु—श्रीयते सर्वैः—इति विगृहीतम् । तन्न । क्विपः कृत्त्वेन कर्तरि विधानेन कर्मण्यसंभवात् । बाहुलकस्य लगतिकगतित्वात् ।

१—त्रिकाण्डशेषात् ॥

'लक्ष्मीसरस्वतीधात्रिवर्गसंपद्विभूतिशोभासु । उपकरणवेशरचनाविधानेषु च **श्री**रिति प्रथिता' इति व्याडिः ॥ (५) ॥*॥ श्रीलक्ष्मीशब्दौ **'कृदिकारात्–'** (ग० ४।१।४५) इति ङीषन्ताविति मैत्रेयः । तन्न । कारग्रहणस्य तपरत्वार्थस्य वैयर्थ्यप्रसङ्गात् । अन्यथा 'कृदिवर्णात्–' 'कृदेः' इति वा वदेत् । 'कारग्रहणाच्च' इति मनोरमायां उणादौ दीक्षिताः ॥*॥ हरेः प्रिया ॥ (६) ॥*॥ षड् **'लक्ष्म्याः'** ॥

**शङ्खो लक्ष्मीपतेः पाञ्चजन्यः**

**शङ्ख इति** ॥ पञ्चजने दैत्यभेदे भवः । 'पञ्चजनात्' (वा० ४।३।५८) इति यञ् । यत्तु मुकुटः 'बहिर्देवपञ्चजनेभ्यः' इत्युपसंख्यानाञ्ञ्यः—इति । तन्न । एतादृशवार्तिकाभावात् । पञ्चजने पाताले भव इति स्वामी । (**'पाञ्चजन्यः** पोटगले विष्णुशङ्खे हुताशने') ॥ (१) ॥*॥ एकम् **'विष्णुशङ्खस्य'** ॥

**चक्रं सुदर्शनः ।**

**चक्रमिति** ॥ शोभनं दर्शनमस्य । सुखेन दृश्यत इति वा । 'भाषायां शासियुधिदृशिमुषिभ्यो युच्' (वा० ३।३।१३०) । **'सुदर्शनो** हरेश्चक्रे मेरुजम्बुद्रुमे पुमान् । न द्वयोः शक्रनगरे आ(प्रा)ज्ञौषधिभिदोः स्त्रियाम्' । **'सुदर्शनोऽस्त्रियां चक्रे'** इति नामनिधानात् क्लीबेऽपि ॥ (१) ॥*॥ एकम् **'विष्णुचक्रस्य'** ॥

**कौमोदकी गदा**

**कौमोदकीति** ॥ पालकत्वात् कोः पृथिव्या मोदकः कुमोदको विष्णुः । 'विष्णुः **कुमोदकः** शौरिः' इति दुर्गः । तस्येयम् ॥*॥ कूपोदकाज्जातत्वात् **कौपोदकी** इति तु स्वामी ॥ (१) ॥*॥ गदति । पचाद्यच् (३।१।१३४) । **'गदो** भ्रातरि विष्णोश्च आमये नायुधे **गदा'** । एकम् **'विष्णुगदायाः'** ॥

**खड्गो नन्दकः**

**खड्ग इति** ॥ नन्दयति देवान् ण्वुल् । (३।१।१३३) । **'नन्दको** हरिखड्गे च हर्षके कुलपालके' ॥ (१) ॥*॥ एकम् **'विष्णोः खड्गस्य'** ॥

**कौस्तुभो मणिः ॥ २८ ॥**

**कौस्तुभ इति** ॥ कुं भुवं स्तुभ्नाति व्याप्नोति कुस्तुभोऽब्धिः । तत्र भवः । कुं स्तोभते कुस्तुभो विष्णुः । 'ष्टुभ स्तम्भे' (भ्वा० आ० से०) । मूलविभुजादित्वात् (वा० ३।२।५) कः । तस्यायमिति वा ॥ (१) ॥*॥ 'लक्ष्मीपतेः' इति एतत्पर्यन्तं संबध्यते । एकम् **'विष्णोर्मणेः'** ॥

**गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः ।**
**नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः ॥ २९ ॥**

**गरुत्मानिति** ॥ गरुतः पक्षाः सन्त्यस्य । मतुप् (५।२।९४) यवादित्वात् (८।२।९) 'झयः' (८।२।१०) इति वत्वं न ॥ (१) ॥*॥ गरुद्भिर्डयते । 'डीङ् विहायसा गतौ' (भ्वा० आ० से०) । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । पृषोदरादित्वात् (६।३।१०९) तलोपः ॥ (२) ॥*॥ तार्क्ष्यस्य कश्यपस्यापत्यम् । ऋष्यण् (४।१।११४) । बहुत्वे तार्क्ष्याः । तृक्षस्यापत्यम् गर्गादित्वात् (४।१।१०५) यञ्वा । बहुत्वे तृक्षाः इत्यन्ये । (**'तार्क्ष्यस्तु** स्यन्दने वाहे गरुडे गरुडाग्रजे । अश्वकर्णाह्वयतरौ स्यात्तार्क्ष्यं तु रसाञ्जने । अहौ च') ॥ (३) ॥*॥ विनताया अपत्यम् । 'स्त्रीभ्यो ढक्' (४।१।१२०) । (**'वैनतेयस्तु** गरुडे स्यात्प्रभाकरसारथौ') ॥ (४) ॥*॥ खगानामीश्वरः ॥ (५) ॥*॥ नागानामन्तकः ॥ (६) ॥*॥ विष्णोः रथ इव । यद्वा **'रथः** पौरुषदेहयोः' इति त्रिकाण्डशेषः । विष्णो रथः पौरुषं देहो वा । 'वैनतेयश्च पक्षिणाम्' इति गीता ॥ (७) ॥*॥ कनकमयत्वात्कनकवर्णत्वाद्वा शोभने पर्णे पक्षावस्य । (**'सुपर्णः** स्वर्णचूडे च गरुडे कृतमालके । **सुपर्णा** कमलिन्यां च वैनतेयस्य मातरि') ॥ (८) ॥*॥ पन्नगानश्नाति । 'अश भोजने' (आ० प० से०) । ल्युः (३।१।१३४) । पन्नगा अशनं यस्येति वा ॥ (९) ॥*॥ नव **'गरुडस्य'** ॥

**शंभुरीशः पशुपतिः शिवः शूली महेश्वरः ।**
**ईश्वरः शर्व ईशानः शंकरश्चन्द्रशेखरः ॥ ३० ॥**
**भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः ।**
**मृत्युंजयः कृत्तिवासाः पिनाकी प्रमथाधिपः ॥३१॥**
**उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ।**
**वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ॥ ३२ ॥**
**कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः ।**
**हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः ॥ ३३ ॥**
**गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः ।**
**व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः ॥३४॥**

**शंभुरित्यादि** ॥ शं सुखं भवति । अन्तर्भावितण्यर्थात्

---

१—'तां दृष्ट्वा श्रीमिवायतीम्' इति प्रयोगः–इति मुकुटः ॥ २—कारग्रहणस्य तपरार्थत्वे 'तथेकारोकारौ । ऋकारस्त्रिशतः' इति सिद्धान्तकौमुद्यामेव लिखितत्वान्न मानम् । अत एव 'नहि कारग्रहणे केवलग्रहणम्' इति मुनित्रयेण परिभाषितमिति रक्षितग्रन्थानुवादो मनोरमोणादावेव कृतः ॥ ३—'अन्तः पूर्वपदाद्'–(४।३।६०) इति सूत्रे 'बाह्यो दैव्यः पाञ्चजन्योऽथ गम्भीराञ्ञ्य इष्यते' इति वदता भाष्यकृता ध्वनितस्य 'गम्भीराञ्ञ्यः' (४।३।५८) इति सूत्रे 'बहिर्देवपञ्चजनेभ्यः' इति वार्तिकस्य काशिकायां दृश्यमानत्वेन बाह्यदैव्ययोः 'बहिषष्टिलोपो यञ्च' 'देवाद्यञञौ' इति वार्तिकान्तरेण सिद्धौ पाञ्चजन्यस्य साधनाय केवलं 'पञ्चजनाद्' इत्यस्यैवावश्यकत्वमित्यभिमन्तृदीक्षितेन कौमुद्यामलेखनेनैव वार्तिकाभावादित्युक्तिश्चिन्त्यैवेति शम् ॥ ४—'अमरावत्यां ङयन्तः । लिङ्गानुशासनकाराभिप्रायेण तु पुंसि । गौडमतेन तु क्लीबे' इत्यनेकार्थकैरवाकरकौमुदी ॥

मितद्र्वादित्वात् ( वा० ३।२।१८० ) डुः । यत्तु 'शं भवत्यस्माद्' इति स्वामिमुकुटौ । तन्न । कर्तरि कृतो विधानादपादाने डुप्रत्ययाभावात् । ('शंभुर्ब्रह्मार्हतोः शिवे') ॥ (१) ॥*॥ ईष्टे । 'ईश ऐश्वर्ये' ( अ० आ० से० ) । इगुपधत्वात् कः । ( ३।१।१३५ ) । ('ईशः स्वामिनि रुद्रे च स्यादीशा हलदण्डके') ॥ (२) ॥*॥ पशूनां जीवानां पतिः । 'तिर्यग्जातौ पशुः प्रोक्तः सर्वप्राणिषु पुंस्ययम्' । प्रमथानामिति वा । 'पशुर्मृगादौ छगले प्रमथे च पुमानयम्' इति ताल्व्यान्ते रभसात् । ('पशुपतिः पिनाकिनि हुताशने' ) ॥ (३) ॥*॥ शिवमस्यास्ति । अर्शआद्यच् (५।२।१२७) ॥ शिवयतीति वा । 'तत्करोति–' (वा० ३।१।२६ ) इति ण्यन्तात्पचाद्यच् (३।१।१३४) । ( 'शिवो मोक्षे महादेवे कीलकग्रहयोगयोः । बालके गुग्गुलौ वेदे पुंडरीकद्रुमेऽपि च । सुखे क्षेमे जले क्लीबम्') ॥ (४) ॥*॥ शूलमस्यास्ति । इनिः (५।२।११५) ॥ (५) ॥*॥ महांश्चासावीश्वरश्च । 'सन्महत्–' ( २।१।६१ ) इति समासः । ( 'महेश्वरो महादेवे कथितोऽधीश्वरेऽपि च' ) ॥ ( ६ ) ॥*॥ ईशितुं शीलमस्य । 'स्थेशभास–' ( ३।२।१७५ ) इति वरच् । ( 'ईश्वरो मन्मथे शंभौ नाथ्ये स्वामिनि वाच्यवत् । ईश्वरी चेश्वरोमायाम्') ॥ (७) ॥*॥ शृणाति 'शॄ हिंसायाम्' ( क्र्या० प० से० ) । 'कॄगृशॄदृभ्यो वः' ( उणा० १।१५५ ) ॥*॥ 'षर्व गतौ' ( भ्वा० प० से० ) । इत्यतः 'षर्व हिंसायाम्' (भ्वा० प० से०) । इत्यतो वा वबयोरभेदात् पचाद्यचि ( ३।१।१३४ ) । 'सर्वः' अपि । 'सर्वस्तु शर्वो भगवाञ् शंभुः कालंजरः शिवः' इति नामनिधानात् । ('कालंजरो योगिचक्रे मेलके भैरवे गिरौ' ) ॥ ( ८ ) ॥ * ॥ ईष्टे तच्छीलः । 'ताच्छील्य–' ( ३।२।१२९) इति चानश् । ( 'ईशानं ज्योतिषि क्लीबं पुंलिङ्गः स्यात्त्रिलोचने' ) ॥ ( ९ ) ॥*॥ शं करोति । 'शमि धातोः संज्ञायाम्' ( ३।२।१४ ) इत्यच् । यत्तु 'कृञो हेतु–' ( ३।२।२० ) इति टः– इति स्वामी । तन्न । अस्यैव टापवादत्वात् ॥ ( १० ) ॥ * ॥ चन्द्रः शेखरो यस्य ॥ ( ११ ) ॥*॥ भूतानामीशः ॥ ( १२ ) ॥*॥ खण्डयतीति खण्डः परशुरस्य ॥ * ॥ 'खण्डपर्शुः' अपि । 'खण्डपर्शुः पर्शुरामे शंकरे चूर्णलेपिनि । ( खण्डामलकभैषज्ये सिंहिकातनयेऽपि च)' इति विश्वात् ॥ (१३) ॥*॥ गिरेरीशः । ('गिरीशोऽद्रिपतौ वाचस्पतिशंकरयोः पुमान्' ) ॥ ( १४ ) ॥*॥ गिरिराश्रयत्वेनास्यास्ति । लोमादित्वात् (५।२।१००) शः । स्वामी तु 'गिरिं श्यति उपभोगेन तनूकरोति,' गिरौ शेते वा । गिरौ डश्छन्दसि ( वा० ३।२।१५ ) । लोके तु 'आशुशुक्षणिवत्' इत्याह ॥ ( १५ ) ॥*॥ मृडति । 'मृड सुखने' (तु० प० से०) इगुपधत्वात्कः ( ३।१।१३५ ) मृड्णाति वा । 'मृड च' चात्क्षोदे (क्र्या० प० से०) ॥ (१६) ॥*॥ मृत्युं जयति ॥ 'संज्ञायां भृतॄवृजि' ( ३।२।४६ ) इति खच् । मुम् ( ६।३।६७ ) ॥ ( १७ ) ॥*॥ कृत्तिश्चर्म वासोऽस्य ॥ (१८) ॥*॥ पिनाकोऽस्यास्ति । इनिः ( ५।२।११५ ) ॥ (१९) ॥*॥ प्रमथानामधिपः ॥ (२०) ॥*॥ उच्यति क्रुधा संबध्यते-उग्रः । 'उच समवाये' (दि० प० से०) 'ऋज्र'–( २।२८ उ० ) इत्यादिना रन् गश्चान्तादेशः । ( 'उग्रः क्षत्रियतः शूद्र्यां सूनावुत्कटरुद्रयोः । उग्रा वचाछिक्किकयोः') ॥ ( २१ ) ॥*॥ कपर्दोऽस्यास्ति । इनिः ( ५।२।११५ ) ॥ ( २२ ) ॥ * ॥ श्रीः शोभा कण्ठेऽस्य । ( 'श्रीकण्ठः कुरुजाङ्गले । शंकरे च' ) ॥ ( २३ ) ॥*॥ शितिः कालः कण्ठोऽस्य ॥ (२४) ॥*॥ कपालं बिभर्ति ॥ ( २५ ) ॥*॥ वामयति दुष्टानां मदमिति वामः । 'टुवमु उद्गिरणे' ( भ्वा० प० से० ) । णिच् (३।१।२६) पचाद्यच् ( ३।१।१३४ ) । वामश्चासौ देवश्च । लोकविपरीतत्वाद्वा वामः । ( 'वामं धने, हरे पुंसि कामदेवे पयोधरे' ) यत्तु घञि ( ३।३।१८, १९ ) 'नोदात्तोपदेश–' ( ७।३।३४ ) इत्यादिना वृद्धिनिषेधे प्राप्ते 'अनाचमेः' ( ७।३।३४ ) इति 'कम्यमिवमि'–इत्यादिना निषेधः, इति मुकुटेनोक्तम् । तन्न । कर्तरि घञोऽसंभवात् । भवादौ संभवेऽपि देवेन सामानाधिकरण्यासंभवात् । लोकाचारविपरीतत्वाद्वामो देवः क्रीडा यस्येति वा समाधेयम् । वामेषु श्रेष्ठेषु देवो द्योतो यस्येति वा ॥ ( २६ ) ॥ * ॥ महांश्चासौ देवश्च । महान् देवो नृत्यादिरूपा क्रीडा यस्येति वा ॥ (२७) ॥*॥ विविधानि रविचन्द्राग्निरूपाण्यक्षीण्यस्य । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' ( ५।४।११३ ) । विरूपेष्वपि अक्षि कृपादृष्टिर्यस्येति वा । विविधरूपाणि विविधरूपेषु वा अक्षाणीन्द्रियाण्यस्येति वा ॥ ( २८ ) ॥*॥ त्रीणि लोचनानि यस्य । त्रिषु कालेषु लोकेषु गुणेषु वेदेषु लोचनं ज्ञानं यस्येति वा । त्रयो वेदा वर्णा अकारोकारमकारा वा लोचनानि यस्मिन् वा ॥ ( २९ ) ॥*॥ कृशानौ रेतो यस्य कृशानुः सूतरूपो रेतोऽस्येति वा ॥ (३०) ॥*॥ सर्वं जानाति । 'आतोऽनुपसर्गे' (३।२।३) इति कः ॥ ( ३१ ) ॥*॥ धूर्भारभूता जटिर्यस्य । 'जट, झट, संघाते' (भ्वा० प० से०) । 'सर्वधातुभ्यः' ( ४।११८ उणा० ) इतीन् । 'जटिर्जटा' इति द्विरूपकोशः । 'धूर्गङ्गा जटास्वस्य' इति स्वामी । तन्न । जटिस्वस्यति वक्तुमुचितत्वात् ॥ ( ३२ ) ॥ * ॥ नीलश्चासौ लोहितश्च कण्ठे जटासु च ॥ ( ३३ ) ॥ * ॥ हरति । पचाद्यच् ( ३।१।१३४ ) । ( 'हरो नाशकरुद्रयोः । वैश्वानरेऽपि

---

१—तथा च स्कान्दे । 'शं करोमि सदा ध्यानात्परमं यन्निरामयम् । भूतानामसकृद्यस्मात्तेनाहं शंकरः स्मृतः' इत्यपि मुकुटः ॥

१—'धृतं कण्ठे विषं घोरं ततः श्रीकण्ठतामगात्' इति नीलकण्ठस्तवः इत्यपि मुकुटः ॥ २—'पूज्यते यत्सुरैः सर्वैर्महांश्चैव प्रमाणतः । धातुर्महेति पूजायां महादेवस्ततः स्मृतः' इति शिवपुराणे इति मुकुटः ॥ ३—पृषोदरादित्वात् (६।३।१०९) आकारस्येकार इति स्वामी भ्रान्तः । उक्तरूपेण जटिसाधनात् इति मुकुटः ॥ ४—स्कान्दे 'नीलं येन ममाङ्गं तु रसात्कं, लोहितं त्विषा । नीललोहित इत्येव ततोऽहं परिकीर्तितः' इति वा–इत्यपि मुकुटः ॥

च' ) ॥*॥ हीरः अपि । 'हीरः कपर्दी शमिरः' इति संसारावर्तात् । ( 'हीरो वज्रे हरे सर्पे हीरा पिपीलिका-श्रियोः' ) ॥ ( ३४ ) ॥*॥ स्मरं हरति । 'हरतेरनुद्यमनेऽच्' ( ३।२।९ ) ॥ ( ३५ ) ॥*॥ भर्जते । 'भृजी भर्जने' ( भ्वा० आ० से० ) । पचाद्यच् ( ३।१।१३४ ) न्यङ्क्वादित्वात् ( ७।३।५३ ) कुत्वम् । भृज्यन्ते कामादयोऽनेनेति वा । 'हलश्च' ( ३।३।१२१ ) इति घञ् ॥*॥ 'भर्ग्यः' इति पाठे ण्यत् ( ३।१।१२४ ) ॥ ( ३६ ) ॥*॥ त्रीण्यम्बकान्यस्य । त्रिष्वम्बकमस्येति वा । 'अम्बकं नयनं दृष्टिः' इति हलायुधः । त्रयाणां लोकानामम्बकः पिता इति वा । त्रीन्वेदानम्बते शब्दायते वा । 'अबि शब्दे' ( भ्वा० आ० से० ) । 'कर्मण्यण्' ( ३।२।१ ) । 'संज्ञायाम्' ( ५।३।८७ ) इति कः( न् ) । त्रिषु लोकेषु कालेषु वा अम्बः शब्दो वेदलक्षणो यस्येति वा । त्रयः अकारोकारमकारा अम्बाः शब्दा वाचका यस्येति वा । तिस्रोऽम्बाः द्यौर्भूम्यापो यस्येति तु भारतम् ॥ ( ३७ ) ॥*॥ त्रयाणां धातूनां पुराणि, तेषामन्तकः । त्र्यवयवं पुरं त्रिपुरम्, तस्यान्तक इति वा । त्रयाणां पुराणां समाहारः । 'पात्रादिः' ( वा० २।४।३० ) इति प्राञ्चः । तन्न । तथा सति 'पञ्चपात्री' इतिवत् 'त्रिपुरी' इति प्रयोगभावप्रसङ्गात् ॥ (३८) ॥*॥ धरतीति धरः । पचाद्यच् ( ३।१।१३४ ) । गङ्गाया धरः ॥ ( ३९ ) ॥*॥ अन्धकस्य दैत्यस्य रिपुः ॥ ( ४० ) ॥*॥ क्रतुं ध्वंसयति । 'सुपि-' ( ३।२।७८ ) इति णिनिः ॥ ( ४१ ) ॥*॥ वृषो ध्वजश्चिह्नमस्य ॥ ( ४२ ) ॥*॥ व्योम्नि केशा यस्य ॥ ( ४३ ) ॥*॥ भवति भवते वा सर्वम् । 'भू प्राप्तौ' ( चु० आ० से० ) । पचाद्यच् ( ३।१।१३४ ) । यत्तु भवत्यस्माद्विश्वम् । बाहुलकाद् ( ३।३।११३ ) अप् । विश्वमस्त्यस्मिन् इति वा । अस्त्यादेशाद्भुवः ( २।४।५२ ) अप् ( ३।३।५७ ) । 'श्रिणीभुवः-' ( ३।३।२४ ) इत्यत्र श्रिणीसाहचर्याद्भुवो भौवादिकादेव घञ्-इति मुकुटः । तन्न । बाहुलकस्यागतिकगतित्वात् । अत्र चोक्तरीत्या गतिसंभवात् । अधिकरणे ल्युटो बाधकसत्त्वादपोऽसंभवात् । 'क्षजब्भ्यां स्त्रीखलनाः' ( ३।३।१२६ ) इति वार्तिकोक्तेः साहचर्याभ्युपगमोऽप्यनुचितः । 'गातिस्था-' ( २।४।७७ ) इत्यत्रापि पासाहचर्यादस्त्यादेशस्याग्रहणप्रसङ्गात् । ( 'भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः' ) ॥ ( ४४ ) ॥*॥ बिभेत्यस्मात् । 'भीमादयोऽपादाने' ( ३।४।७४ ) । 'भियः षुक् वा' ( उ० १।१४८ ) इति मक् । 'भीमोऽम्लवेतसे घोरे शंभौ मध्यमपाण्डवे ॥ ( ४५ ) ॥*॥ तिष्ठति । 'स्थाणुः' ( उ० ३।३७ ) ( 'स्थाणुः कीले हरे पुमान् । अस्त्री ध्रुवे' ) ॥ ( ४६ ) ॥*॥ रोदयति । 'रोदेर्णिलुक् च' ( उ० २।२२ ) इति रक् ॥ ( ४७ ) ॥*॥ उमायाः पतिः ॥ ( ४८ ) ॥*॥ अष्टचत्वारिंशत् 'शंभोः' ॥

१—पृषोदरादित्वात् ( ६।३।१०९ ) ईकार इति मुकुटः ॥

**कपर्दोऽस्य जटाजूटः**

**कपर्द इति** ॥ 'पर्व पूरणे' ( भ्वा० प० से० ) । संपदादित्वात् ( वा० ३।३।१०८ ) भावे क्विप् । 'राल्लोपः' ( ६।४।२१ ) केन सुखेन जलेन वा परं पूर्तिं ददाति । 'सुपि' ( ३।२।४ ) इति योगविभागात् कः । कस्य जलस्य परा पूरणेन दायतीति वा । 'दैप् शोधने' ( भ्वा० प० अ० ) । ( 'कपर्दः पार्वतीभर्तुर्जटाजूटे वराटके' ) । अर्शआद्यजन्तः शिवेऽपि ॥ ( १ ) ॥*॥ जटानां जूटो बन्धः । एकम् 'जटाबन्धस्य' ॥

**पिनाकोऽजगवं धनुः ।**

**पिनाक इति** ॥ पाति । 'पिनाकादयश्च' ( उ० ४।१५ ) इति पातेराक इत्वं नुम् च । ( 'पिनाकः शिवकोदण्डे पांशुवृष्टित्रिशूलयोः' ) ॥ ( १ ) ॥*॥ अजेन ब्रह्मणा गम्यते । इति 'अन्येष्वपि दृश्यते' ( वा० ३।२।४८ ) इति डः । अजं छागं गच्छति यज्ञत्वेन प्रविशतीति वा । अजगो विष्णुरस्ति शरत्वेनास्मिन्निति । 'गाण्ड्यजगात्संज्ञायाम्' ( ५।२।११० ) इति वः ॥*॥ प्रज्ञादित्वात् ( ५।४।३८ ) अणि 'आजगवम्' अपि । 'आजगवमजस्य वा पिनाकं वा' इति बोपालितः । 'स्थाणोर्धनुराजगवम्' इत्यमरमाला च ॥*॥ अजो विष्णुः, को ब्रह्मा, ताववतीति 'अजकावम्' अपि 'धनुस्त्वजगवं युग्यमजकावमजीजकम्' इति शब्दार्णवात् ॥*॥ अजकौ विष्णुब्रह्माणौ वातीति 'अजकवम्' अपि । 'सुपि' ( ३।२।४ ) इति ( योगविभागात् ) 'अतोऽनुपसर्गे-' ( ३।२।३ ) इति वा कः ॥ ( २ ) ॥*॥ द्वे 'शिवधनुषः' ॥

**प्रमथाः स्युः पारिषदाः**

**प्रमथा इति** ॥ दुष्टान्प्रमथ्नन्ति । 'मथे विलोडने' ( भ्वा०प०से० ) । पचाद्यच् ( ३।१।१३४ ) । प्रमथ्यन्ते मन्त्रादिना । 'खनो घ च' ( ३।३।१२५ ) इति घो वा ॥ ( १ ) ॥*॥ परिषदि साधवः । 'परिषदो ण्यः' ( ४।४।१०१ ) इत्यत्र 'परिषदः' इति योगविभागात् 'णः' । 'अण्' इति तु मुकुटस्य प्रमादः । 'भक्ताण्णः' ( ४।४।१०० ) इत्यनुवृत्तेः ॥*॥ ण्ये तु पारिषद्याः । 'पर्षदो ण्यः' ( ४।४।१०१ ) इति पाठे पार्षद-पार्षद्या-वपि । 'भूताः शिवस्य पार्षद्या पार्षदाः' इति संसारावर्तात् ॥ ( २ ) ॥*॥ द्वे 'शिवानुचराणाम्' ॥

**ब्राह्मीत्याद्यास्तु मातरः ॥३५॥**

**ब्राह्मीति** ॥ 'मान पूजायाम्' ( भ्वा०प०से०, चु०उ०से० ) । मान्यन्ते पूज्यन्ते लोकमातृत्वात् इति मातरः । 'नप्तृनेष्टृ-' ( उ० २।९५ ) इति सूत्रेण निपातितः । मान्ति शिवपरिवारत्वेन समाविशन्तीति वा ॥ ( १ ) ॥*॥ ब्रह्मण इयं ब्राह्मी । 'तस्येदम्' ( ४।३।१२० ) इत्यणि 'ब्राह्मो जातौ' ( ६।४।१७१ ) इति टिलोपः । ( 'ब्राह्मी तु भारती । शाकभेदः पङ्कगण्डी

१—'स पार्षदैरम्बरमापुपूरे' इति जाम्बवत्यां पाणिनिः-इति मुकुटः ॥

हञ्जिका सोमवल्लरी । ब्रह्मशक्तिः' ) ॥*॥ **'ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी** तथा। **कौमारीत्यपि चामुण्डा चर्चिकेत्यष्ट** मातरः' । 'ब्राह्म्याद्या मातरः स्मृताः' इति भागुरिः । **'ब्रह्माण्यास्तु'** इति पाठे ब्रह्माणमणति कीर्तयति । 'अण शब्दे' ( भ्वा०प०से० ) । 'कर्मण्यण्' ( ३।२।१ ) 'टिड्ढा–' (४।१।१५) इति ङीप्। 'ब्रह्माण्याद्याः स्मृताः सप्त देवता मातरो बुधैः' इति हलायुधः । स हि 'कौबेरीत्यपि कौमारी सप्तैव मातरः स्मृताः' इति पठति ॥ **'ब्रह्मादिशक्तिदेवतानाम्'** एकैकम् ॥

**विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा ।**

**विभूतिरित्यादि** ॥ भवनं भूतिः । 'स्त्रियां क्तिन्' ( ३।३।९४ ) **'भूति**र्भस्मनि संपत्तौ हस्तिशृङ्गारयोः स्त्रियाम्' । मांसपाकविशेषोत्पातयोरपि ॥ ) ॥ ( २ ) ॥*॥ विभूतिरिति कथनमन्यप्राप्तिनिवृत्त्यर्थम् ॥ ( १ ) ॥*॥ ईश्वरस्य भावः । 'गुणवचन–' ( ५।१।१२४ ) इति ष्यञ् ॥ (३) ॥*॥ **'अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा** तथा । **ईशिता वशिता** चैव तथा **कामावशायिता'** । तत्र, अणोर्भावः 'इमनिच्' ( ५।१।१२२ ) ॥*॥ लघोर्भावः ॥*॥ प्राप्तिरङ्गुल्यग्रेण चन्द्रादेः ॥*॥ प्रकामस्य भावः इच्छानभिघातः ॥*॥ महतो भावः । येन ब्रह्माण्डेऽपि न माति ॥*॥ ईशोऽस्यास्ति । 'अतः–' ( ५।२।११५ ) इतीनिः । ईशिनो भावः । तल् ( ५।१।११९ ) । प्रभुत्वम् । येन स्थावरा अप्याज्ञाकारिणः ॥*॥ वशोऽस्यास्ति । इनिः ( ५।२।११५ ) वशिनो भावो वशिता । यया भूमावप्युन्मज्जननिमज्जने ॥*॥ कामानवशेते । शीङः ( अ० आ० से० ) णिनिः ( ३।२।७८ ) । कामावशायिनो भावः सत्यसंकल्पता । स्यतेः (द्वि०प०अ०) णिनिना ( ३।२।७८ ) दन्त्यमध्यं **(कामावसायिता)** कश्चिन्मन्यते ॥*॥ नामत्रयम् **( अणुताद्यष्टविधप्रभावस्य )** ॥

**उमा कात्यायनी गौरी काली हैमवतीश्वरा ॥ ३६ ॥**
**शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला ।**
**अपर्णा पार्वती दुर्गा मृडानी चण्डिकाम्बिका ॥३७॥**

**उमेत्यादि** ॥ ओर्महेशस्य मा लक्ष्मीः । 'उ मा' इति मात्रा तपसे निषिद्धत्वाद्वा । आकारान्तादपि टाप् । (४।१।४)। 'टायाम्' ( २।४।३२ ) इति भाष्यप्रयोगात् । अजादित्वात् (४।१।४) वा । ( **'उमा** गौर्यां हरिद्रायां कीर्तिकान्त्यतसीषु च' ) ॥ ( १ ) ॥*॥ कतस्यापत्यम् । गर्गादित्वात् ( ४।१।१०५ ) यञ् । 'सर्वत्र लोहितादिकतन्तेभ्यः' ( ४।१।१८ ) इति ष्फः । षित्वान्ङीष् ( ४।१।४१ ) ( **'कात्यायनो** वररुचौ **कात्यायनी** तु पार्वती । कषायवस्त्रविधवार्धवृद्धमहिलापि च' ) ॥ ( २ ) ॥*॥ गौरो वर्णोऽस्त्यस्याः । गौरादित्वात् ( ४।१।४१ ) ङीष् । ( **'गौरी** त्वसंजातरजःकन्याशंकरभार्ययोः । रोचनीरजनीपिङ्गाप्रियङ्गुवसुधासु च । आपगाया विशेषेऽपि यादसांपतियोषिति' ) ॥ ( ३ ) ॥*॥ एवं काली । 'जानपद–' ( ४।१।४२ ) इत्यादिना ङीष् । ( **'काली** गौर्यां क्षीरकीटे कालिकामातृभेदयोः । नव्यमेघौघपरिवादयोः' ) ॥*॥ वर्णस्याविवक्षायां **काला** । 'उमा कात्यायनी दुर्गा काली हैमवतीश्वरी । **काला कालंजरी गौरा'** इति वाचस्पतिः ॥ ( ४ ) ॥*॥ हिमवतोऽपत्यम् । 'तस्यापत्यम्' ( ४।१।९२ ) इत्यण् । **'हैमवत्य**भयास्वर्णक्षीर्योः श्वेतवचोमयोः' ॥ ( ५ ) ॥*॥ ईष्टे । 'ईश ऐश्वर्ये' ( अ० आ० से० ) । 'स्थेशभास–' ( ३।२।१७५ ) इति वरच् । टाप् ( ४।१।४ ) ॥*॥ वनिपि ( ३।२।६५ ) 'वनो र च' ( ४।१।७ ) इति ङीब्रौ । अत **'ईश्वरी'** अपि । यद्वा अश्नुते । 'अशूङ् व्याप्तौ' ( स्वा० आ० से० ) 'अश्नोतेराशुकर्मणि वरट् ई चोपधायाः' ( उ० ५।५७ ) । टित्वात् ( ४।१।१५ ) ङीप् । **ईश्वरः** शंकरेऽधीशे तत्पत्न्या**मीश्वरीश्वरा'** इति बोपालितः ॥ ( ६ ) ॥*॥ शिवयति । शिवमस्त्यस्याः । शिवो वास्ति भर्तृत्वेन यस्या इति वा । **'शिवं** भद्रं **शिवः** शंभुः **शिवा** गौरी **शिवा**भया' इति शाश्वतः ॥*॥ पुंयोगे तु **शिवी** ॥ ( ७ ) ॥*॥ भवस्य स्त्री । 'इन्द्रवरुण–' ( ४।१।४९ ) इति ङीषानुकौ ॥ ( ८ ) ॥*॥ एवं रुद्राण्यादयः ॥ ( ९ ) ॥ ( ११ ) ॥ ( १५ ) ॥*॥ सर्वेभ्यः सर्वेषां वा मङ्गला । सर्वाणि मङ्गलान्यस्याः, इति वा ॥*॥ **'मङ्गला'** इत्यपि । **'मङ्गला**ऽसितदूर्वायामुमायां पुंसि भूमिजे । नपुंसकं तु कल्याणे पुंसि सर्वार्थदक्षिणे' ॥ ( १२ ) ॥*॥ न पर्णान्यस्याः । तपस्यन्त्या पर्णानामपि त्यागात् ॥ ( १३ ) ॥*॥ पर्वतस्येयम् । पार्वती । 'तस्येदम्' ( ४।३।१२० ) इत्यण् । अपत्यार्थे त्वपवादत्वादिञ् ( ४।१।९५ ) स्यात् । 'इतो मनुष्य–' ( ४।१।६५ ) इति न ङीष् । मनुष्यजातिवाचित्वाभावात् । 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' इति वा समाधेयम् ॥ ( १४ ) ॥*॥ दुःखेन गम्यते ज्ञायतेऽस्याम् 'सुदुरोरधिकरणे' ( वा० ३।२।४८ ) इति डः । दुःखेन दुष्टैर्वा गीयते स्तूयते । **'गै शब्दे'** ( भ्वा० प० अ० ) । 'आतश्चोपसर्गे' ( ३।३।१०६ ) इत्यङ् । **'दुर्गं** कोट्टे दुर्गमे स्या**द्दुर्गा** तु नीलिकोमयोः' इति हेमचन्द्रः ॥ ( १५ ) ॥*॥ चण्डते । 'चडि कोपे' ( भ्वा० आ० से० ) । ण्वुल् ( ३।१।१३३ ) ॥*॥ पचाद्यच् ( वा० ३।१।१३४ ) 'बह्वादिभ्यश्च' ( ४।१।४५ ) इति ङीषि **'चण्डी'** इत्यपि । **'चण्डी** कात्यायनी देव्यां हिंस्रकोपनयोषितोः' ॥ ( १६ ) ॥*॥ अम्बैवाम्बिका । जगन्मातृत्वात् **'अम्बिका** पार्वतीमात्रोर्धृतराष्ट्रस्य मातरि' ॥ ( १७ ) ॥*॥ सप्तदश **'उमायाः'** ॥

**विनायको विघ्नराजद्वैमातुरगणाधिपाः ।**
**अप्येकदन्तहेरम्बलम्बोदरगजाननाः ॥ ३८ ॥**

**विनायकेत्यादि** ॥ विनयति । ण्वुल् ( ३।१।१३३ ) । विशिष्टो नायक इति वा । विगतो नायको नियन्तास्य इति वा । **'विनायक**स्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ' ॥ ( १ ) ॥*॥ विघ्नानां राजा । 'राजाहःसखिभ्यष्टच्' ( ५।४।९१ ) ॥

( २ ) ॥*॥ द्वयोर्मात्रोरपत्यम् । 'मातुरुत्संख्यासंभद्रपूर्वायाः' ( ४।१।११५ ) इत्यणि उत्वं रपरत्वं च । दुर्गाचामुण्डाभ्यां पालितत्वात् । गजमुखतया हस्तिन्या अपत्यत्वात् । गङ्गाया अपत्यत्वाद्वा । '**द्वैमातुरो** जरासंधवारणाननयोः पुमान्' ॥ ( ३ ) ॥*॥ गणानां प्रमथानामधिपः ॥ ( ४ ) ॥*॥ एको दन्तोऽस्य । स्कन्देनोत्पाटितदन्तत्वात् ॥ ( ५ ) ॥*॥ हे रम्बते । '**हः** शंकरे हरौ हंसे रणरोमाश्ववाजिषु' इति नानार्थरत्नमाला । 'अबि रबि शब्दे' पचाद्यच् ( ३।१।१३४ ) । 'तत्पुरुषे कृति–' ( ६।३।१४ ) इत्यलुक् । हे उपसि रम्बते इति स्वामी । ( '**हेरम्बः** शौर्यगर्विते । महिषे विघ्नराजे च' ) ॥ ( ६ ) ॥*॥ लम्बमुदरमस्य । ( '**लम्बोदरः** स्यादुद्ध्माने प्रमथानां च नायके' ) ॥ ( ७ ) ॥*॥ गज आननमस्य । 'समुदायशब्दा अवयवेऽपि वर्तन्ते' इति गजमुखपरो गजशब्दः ॥ ( ८ ) ॥*॥ (नन्वत्र द्वन्द्वो न प्राप्नोति । 'विरूपाणामपि समानार्थानाम्' ( वा० १।२।६४ ) इत्येकशेषविधानात् । मैवम् । स्वरूपपदार्थकानामेषां द्वन्द्वविधानात् । स्वरूपस्य च प्रतिशब्दं भिन्नत्वेन समानार्थताया एवाभावात् । अर्थपरता तु लक्षणया ज्ञेया । तारतम्यशब्दवत् । सर्वत्रैवं बोध्यम् ) ॥ अष्टौ '**गणेशस्य**' ॥

**कार्तिकेयो महासेनः शरजन्मा षडाननः ।**
**पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ॥ ३९ ॥**
**बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः ।**
**षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ॥ ४० ॥**

**कार्तिकेय इत्यादि** ॥ कृत्तिकानामपत्यम् । 'स्त्रीभ्यो ढक्' (४।१।१२०) ॥ ( १ ) ॥*॥ महती सेना यस्य । ('**महासेनो** महासैन्ये स्कन्देऽपि') ॥ (२) ॥*॥ शरेषु जन्मास्य ॥ ( ३ ) ॥*॥ षड् आननान्यस्य ॥ ( ४ ) ॥*॥ पार्वत्या नन्दनः ॥ (५) ॥*॥ स्कन्दति । पचाद्यच् (३।१।१३४) ॥ (६) ॥*॥ सेनां नयति । 'सत्सूद्विष–' ( ३।२।६१ ) इति क्विप् । '**सेनानी** स्यात्पुमान्कार्तिकेये सेनापतौ पुमान्' ॥ ( ७ ) ॥*॥ अग्नेर्भवति । 'भुवः–' (३।२।१७९) इति क्विप् ॥ ( ८ ) ॥*॥ गूहति रक्षति सेनाम् । 'गुहू संवरणे' (भ्वा०उ०से०) । 'इगुपध–' (३।१।१३५) इति कः । 'गुहः षाण्मातुरे गुहा । सिंहपुच्छ्यां च गर्ते च पर्वतादेश्च कंदरे' ॥ (९) ॥*॥ बहुलानां कृत्तिकानामपत्यम् । 'स्त्रीभ्यो ढक्' ( ४।१।१२० ) ॥ ( १० ) ॥*॥ तारकं जयति ॥ ( ११ ) ॥*॥ विशाखति । 'शाखृ श्लाखृ व्याप्तौ' (भ्वा०प०से०) । पचाद्यच् (३।१।१३४) । विशाखायां जात इति वा । 'संधिवेलादि–' (४।३।१६) इत्यणः 'श्रविष्ठाफाल्गुनी–' (४।३।३४) इत्यादिना लुकि 'लुक्तद्धितलुकि' ( १।२।४९ ) । ( '**विशाखो** याचके स्कन्दे विशाखा मे कटिल्लके' ) ॥ ( १२ ) ॥*॥ शिखी मयूरो वाहनमस्य ॥ (१३) ॥*॥ षण्णां मातॄणामपत्यम् । 'मातुरुत्संख्यासं' (४।१।११५) । (१४) ॥*॥ शक्तिधरः ॥ ( १५ ) ॥*॥ कुमारयति क्रीडति । 'कुमार क्रीडायाम्' (चु०उ०से०) । पचाद्यच् (३।१।१३४) कुत्सितो मारोऽस्येति वा । 'कुः पापेपदर्थयोः' । कौ मारयति दुष्टान् । पचाद्यच् ( ३।१।१३४ ) । यत्तु–ब्रह्मचारित्वात्कुमारः–इति स्वामिनोक्तम् । तन्न । 'शतक्रतो रूपवती देवसेनेति या सुता । सा महेन्द्रेण रत्यर्थं भार्यात्वेनोपपादिता ॥ उदीर्णसेनापतये महासेनाय सुव्रत' इति वायुपुराणात् । '**कुमारः** स्याच्छुके स्कन्दे युवराजेऽश्ववारके । बालके वरुणद्रौ ना न द्वयोर्जात्यकाञ्चने') ॥ (१६) ॥*॥ क्रुञ्चः (भ्वा०प०से०) क्विन् (३।१।५९) । प्रज्ञाद्यण् ( ५।४।३८ ) । क्रौञ्चस्य पर्वतस्य दारणः । 'दॄ विदारणे' (भ्वा०प०से०) ण्यन्तात् ( ३।१।२६ ) ल्युः ( ३।१।१३४ ) ॥*॥ 'कैलासे धनदावासे **कौञ्चः क्रौञ्चो**ऽभिधीयते' इति बृहद्धारावली । अतः '**कौञ्चदारणः**' अपि ॥ ( १७ ) ॥*॥ सप्तदश '**कार्तिकेयस्य**' ॥

**इन्द्रो मरुत्वान्मघवा बिडौजाः पाकशासनः ।**
**वृद्धश्रवाः सुनासीरः पुरुहूतः पुरंदरः ॥ ४१ ॥**
**जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ।**
**सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा ॥ ४२ ॥**
**वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ।**
**जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः ॥ ४३ ॥**
**संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ।**
**आखण्डलः सहस्राक्ष ऋभुक्षाः**

**इन्द्र इत्यादि** ॥ इन्दति । 'इदि परमैश्वर्ये' ( भ्वा० प० से० ) । 'ऋज्रेन्द्र–' (उ० २।२८) इत्यादिना रन् । 'रग्' इति मुकुटः । तन्न । अन्तोदात्तत्वापत्तेः । '**इन्द्रः** शक्रादित्यभेदयोगभेदान्तरात्मसु' । '**इन्द्रः** फणिज्झकेऽक्षी स्यात्' ॥ ( १ ) ॥*॥ मरुतः सन्त्यस्य । मतुप् ( ५।२।९४ ) । 'झयः' (८।२।१०) इति वत्वम् । 'तसौ मत्वर्थे' ( १।४।१९ ) इति भत्वाज्जश्त्वाभावः ॥ (२) ॥*॥ मह्यते पूज्यते । 'मह पूजायाम्' (भ्वा०प०से०, चु०उ०से० ) । 'श्वन्नुक्षन्–' (उ० १।१५९) इत्यादिना '**मघवन्**' इति निपातितम् ॥*॥ 'मघवा बहुलम्' ( ६।४।१२८) इति त्रादेशपक्षे तु '**मघवान्**' इत्यपि बोध्यम् । यत्तु 'त्रादेशे दीर्घाभावात् मघवन्' इति स्वामिनोक्तम् । तन्न । 'सर्वनामस्थाने चासंबुद्धौ' (६।४।८) । इति दीर्घसंभवात् । नच संयोगान्तलोपस्य ( ८।२।२३ ) असिद्धत्वम् । 'मघवा बहुलम्' ( ६।४।१२८ ) इति बहुलग्रहणेन तद्बाधनात् । अत एव मतुपा ( ५।२।९३ ) त्रन्तादेशप्रत्याख्यानपरं वार्तिकं तद्भाष्यं च ( ६।४।१२८ ) संगच्छते । 'हविर्जक्षिति निःशङ्को मखेषु मघवानसौ' इति भट्टिः । एतेन

१—अयं पाठो न सर्वत्रोपलभ्यते । क्वचिदुपलब्धोऽपि पुनरुक्तप्रायः ।

मघवा मघवन् मघवान् इति त्रैरूप्यं वदन्मुकुटोऽपि प्रत्युक्तः । भाष्यवार्तिकैकमत्यानुरोधेन सूत्रकारमतेऽपि 'मघवान्' इत्यस्यैवाभ्युपगमात् । मतभेदे हि प्रत्याख्याना-संभवात् । भवतु वा मतभेदः, तथापि 'होतृ लृकारः' इत्यत्र सूत्ररीत्या यणादेशः प्राप्तो वार्तिकरीत्या दीर्घेण बाध्यते यथा, एवं सूत्ररीत्या 'मघवन्' इति प्रयोगः प्राप्तो भाष्यवा-र्तिककृतप्रत्याख्यानरीत्या 'मघवान्' इति प्रयोगेण बाध्यते ॥ (३) ॥*॥ विडति । 'विड भेदने' (तु०प०से०) । 'इगुपध-' (३।१।१३५) इति कः । विडं भेदकमोजोऽस्य । सान्तः ॥*॥ विट्सु प्रजासु मनुष्येषु वा ओजोऽस्येति **'विडोजाः'** इति केचित् ॥ (४) ॥*॥ पाकस्य दैत्यभेदस्य शासनः । शास-यति । 'शासु अनुशिष्टौ' (अ० प० से०) । णिजन्तात् (३।१।२६) नन्द्यादित्वात् (३।१।१३४) ल्युः ॥ (५) ॥*॥ वृद्धेभ्यः शृणोति । 'श्रु श्रवणे' (भ्वा० प० अ०) । असुन् (उ० ४।१९६) वृद्धे श्रवसी यस्येति वा । वृद्धेषु पण्डितेषु श्रवो यशो यस्येति वा ॥ (६) ॥*॥ 'णास्र शब्दे' (भ्वा० आ० से०) बाहुलकादीरन् (उ० ४।३०) सुष्ठु नासीरं सेनामुखम्, नासीरा अग्रेसरा वा यस्य द्विदन्त्यः ॥*॥ शु इत्यव्ययस्य पूजार्थकत्वात् **(शुनासीरः)** तालव्यादिरपि ॥*॥ 'शुनाशीरशीतशिवशङ्खाः' इति तालव्यादावूष्मविवेकः । शुनो वायुः, शीरः सूर्यः, तावस्य स्तः इति अर्शआद्यचि (५।२।१२७) 'अन्येषामपि-' (६।३।१३७) इति दीर्घः इति व्युत्पत्त्या **(शुनाशीरः)** द्वितालव्योऽपि ॥ (७) ॥*॥ पुरु प्रचुरं हूतमाह्वानं यज्ञेष्वस्य । पुरूणि हूतानि नामान्यस्येति वा ॥ (८) ॥*॥ पुरोऽरीणां दारयति । 'पूःसर्वयोर्दारिसहोः' (३।२।४१) इति खच् । 'वाचंयमपुरंदरौ च' (६।३।६९) इति निपातितः ॥ (९) ॥*॥ जयति । 'जि जये, अभिभवे वा' (भ्वा० प० अ०) । 'ग्लाजिस्थश्च-' (३।२।१३९) इति ग्स्नुः । **'जिष्णु**र्ना वासवेऽर्जुने । जित्वरे वाच्यवत्प्रोक्तो विष्णावर्के वसुष्वपि' ॥ (१०) ॥*॥ लेखेषु ऋषभः । 'सप्तमी' (२।१।४०) इति योगविभागात्समासः । लेख ऋषभ इवेति वा । 'उपमितं व्याघ्रा-' (२।१।५६) इति समासः ॥ (११) ॥*॥ शक्नोति । 'शक्लृ शक्तौ' (स्वा० प० अ०) । 'स्फायि-तञ्चि-' (उ० २।१३) इत्यादिना रक् । **'शक्रः** पुमान्देव-राजे कुटजार्जुनभूरुहोः' ॥ (१२) ॥*॥ शतं मन्यवो यागा अस्य । शते दैत्येषु मन्युः क्रोधोऽस्येति वा । शतं मन्यवो दैन्यान्यस्येति वा दैत्यैः पराजितत्वात् ॥ (१३) ॥*॥ दिवः पतिः । 'तत्पुरुषे कृति-' (६।३।१४) इत्यत्र बहुलग्रहणादकुल्-प्यलुग् इति मुकुटः । तन्न । 'पातेर्डतिः' (४।५७) इत्युणादिसू-त्रसत्त्वात् । वस्तुतस्तु 'षष्ठ्याः पतिपुत्र-' (८।३।५३) इति सत्वविधानसामर्थ्याल्लोकवेदसाधारण्येन 'वृद्धकुमारीवर' न्या-येनालुक् ज्ञापितः । कस्कादित्वात् (८।४।४८) सः । यत्तु-'षष्ठ्याः पतिपुत्र-' (८।३।५३) इति सत्वम्-इति मुकुटेनो-क्तम् । तन्न । तत्र छन्दोऽधिकारात् ॥ (१४) ॥*॥ सुष्ठु त्रायते । 'त्रैङ् पालने' (भ्वा० आ० से०) । 'आतो मनिन्-' (३।२।७४) ॥*॥ सु उद् इत्युपसर्गद्वयप्रयोगे तु **'सूत्रामा'** दीर्घादिरपि । एतेन 'अन्येषामपि' (६।३।१३७) इति दीर्घत्वे 'सूत्रामा' इति वदन्मुकुटः प्रत्युक्तः ॥ (१५) ॥*॥ गोत्रान् गिरीन् भिनत्ति । 'सत्सूद्विष-' (३।२।६१) इति भिदेः क्विप् ॥ (१६) ॥*॥ वज्रोऽस्यास्ति । 'अत इनि-' (५।२।११५) **('वज्री** तु बुद्धे देवाधिपे पुमान्') ॥ (१७) ॥*॥ वसवो देवाः, वसूनि रत्नान्यस्य वा सन्ति । ज्योत्स्नादित्वात् (वा० ५।२।१०३) अण् । वसोरपत्यमिति वा । दैत्यानां वासं वाति वा । 'वा गतिगन्धनयोः' (अ० प० अ०) । कः (३।२।३) ॥ (१८) ॥*॥ वृत्रं हतवान् । 'ब्रह्मभ्रूणवृत्रेषु-' (३।२।८७) इति क्विप् ॥ (१९) ॥*॥ वर्षति । 'वृषु सेचने' (भ्वा० प० से०) । 'कनिन् युवृषि-' (उ० १।१५६) इति कनिन् । **'वृषा** तु वासवे । वृषभे तुरगे पुंसि' ॥ (२०) ॥*॥ वास्तो-र्गृहक्षेत्रस्य पतिरधिष्ठाता । 'वास्तोष्पतिगृहमेधाच्छ च' (४।२।३२) इति निपातनादलुक् षत्वं चेत्येके । इणः परत्वात् 'कस्कादिषु च' (८।३।४८) इति षत्वम् । यत्तु मुकुटः 'षष्ठ्याः पतिपुत्र-' (८।३।५३) इति सत्वे इणः परत्वान्मूर्धन्यः इति तन्न । तत्र छन्दोऽधिकारात् । 'अपदान्तस्य' (८।३।५५) इत्यधिकारात् ॥ (२१) ॥*॥ सुराणां पतिः ॥ (२२) ॥*॥ बलस्यासुरस्यारातिः ॥ (२३) ॥*॥ शच्याः पतिः ॥ (२४) ॥*॥ जम्भमसुरं भेत्तुं शीलमस्य । 'सुप्यजातौ-' (३।२।७८) इति णिनिः ॥ (२५) ॥*॥ हरिर्हयो यस्य । 'त्वक्केशवालरो-माणि सुवर्णाभानि यस्य तु । हरिः स वर्णतोऽश्वस्तु पीत-कौशेयसप्रभः' इति शालिहोत्रम् ॥ (२६) ॥*॥ स्वः स्वर्गे राजते । स्वेषु देवेषु, स्वेन धनेन वा, आ राजते वा । 'सत्सू-' (३।२।६१) इति क्विप् । 'रो रि' (८।३।१४) इति लोपे 'ढ्रलोपे-' (६।३।१११) इति दीर्घः । जान्तः ॥ (२७) ॥*॥ न मुञ्चति । 'मुच्लृ मोक्षणे' (तु० उ० अ०) । 'इगुपधा-त्कित्-' (४।१२०) इतीन् । 'नभ्राण्नपाद्-' (६।३।७५) इति नञ् प्रकृत्या । नमुचेर्दैत्यस्य सूदनः । 'षूद क्षरणे' (भ्वा० आ० से०; चु० उ० से०) । नन्द्यादित्वात् (३।१।१३४) ल्युः ॥ (२८) ॥*॥ संक्रन्दयति । 'क्रदि आह्वाने रोदने च'

१—वृत्रभ्रातुरिति मुकुटः ।

१—अयं न्यायश्च 'न मु ने' (८।२।३) इति सूत्रे भाष्यकृता एवमुपन्यस्तः—'वृद्धकुमारी इन्द्रेणोक्ता वरं वृणीष्व' इति। सा वरमवृणीत 'पुत्रा मे बहुक्षीरघृतमोदनं कांस्यपात्र्यां भुञ्जीरन्' इति । न च तावदस्याः पतिर्भवति, कुतः पुत्राः । कुतो गावः । कुतो धान्यम् । तत्रानया एकेन वाक्येन 'पतिः, पुत्राः, गावः, धान्यम्' इति सर्वं संगृहीतं भवति' इति ॥

(भ्वा० प० से०)। ल्युः (३।१।१३४) ॥ (२९) ॥*॥ दुःखेन दुष्टं दुष्टेषु वा च्यवनमस्य। दुःसहश्च्यवनो मुनिरस्येति वा ॥ (३०) ॥*॥ तुतोर्तिन्=तुरः। 'तुर त्वरणे' (जु० प० से०)। 'इगुपध-' (३।१।१३५) इति कः। तुरं वेगवन्तं साहयत्यभिभवति। 'अधेः प्रसहने' (१।३।३३) इति सूत्रे 'प्रसहनमभिभवः' इति वृत्तेः। ण्यन्तात् (३।१।२६) सहेः (भ्वा० आ० से०) क्विप् (३।२।७६)। 'सहेः साडः सः' (८।३।५६) इति षत्वम्। 'अन्येषामपि-' (६।३।१३७) इति पूर्वपदस्य दीर्घः। आङ्प्रश्लेषो वा। 'नहिवृतिवृषि-' (६।३।११६) इति वा दीर्घः। एकदेशविकृतस्यानन्यत्वात्। 'दीर्घ-त्रिघौ' (१।१।५८) इति, 'क्विलुग्-' (वा० १।१५८) इति वा (णिलोपस्य) स्थानिवत्त्वनिषेधात्क्विप्परत्वानपायात्। यत्तु—तुरं सहते इति विगृह्य 'छन्दसि सहः' (३।२।६३) इति ण्विः—इति स्वामी। तन्न। छान्दसस्य लोके प्रयोगाभावात्। यदपि—'नहिवृतिवृषि-' (६।३।११६) इति 'पूर्वपदस्य दीर्घः-' इत्युक्तम्। तदपि न। क्विबन्तेषु नह्यादिष्वस्य प्रवृत्तेर्ण्यन्तेऽस्योपन्यासस्यान्याय्यत्वात्। एतेन—'तुरं' वेगवन्तं सहते इति वा, तुरस्त्वरितः सन् परबलानि सहते इति वा' इति विगृह्य 'छन्दसि सहः' (३।२।६३) इति ण्विः—इत्युपन्यस्यन् मुकुटोऽपि प्रत्युक्तः ॥ (३१) ॥*॥ मेघा वाहनमस्य। मेघान् वाहयतीति वा। ल्युः (३।१।१३४) ॥ (३२) ॥*॥ आखण्डयति। 'खडि भेदने' (चु० प० से०)। 'वृषादिभ्यः कलच्' (उ० १।१०६) ॥ (३३) ॥*॥ सहस्रमक्षीण्यस्य। 'बहुव्रीहौ सक्थ्यक्ष्णोः' (५।४।७३) इति षच् ॥ (३४) ॥*॥ ऋभवः क्षियन्त्यत्र। 'क्षि निवासगत्योः' (तु० प० अ०)। डः (वा० ३।२।१०१) 'ऋभुक्षः स्वर्गवज्रयोः' इति विश्वः। सोऽस्यास्तीति ऋभुक्षाः। इनिः (५।२।११५)। पथिवत्। यद्वा ऋच्छति इयर्तीति वा। अर्तेर्भुक्षिनक् प्रत्ययः ॥ (३५) ॥*॥ पञ्चत्रिंशत् 'इन्द्रस्य' ॥

**तस्य तु प्रिया ॥ ४४ ॥**

**पुलोमजा शचीन्द्राणी**

(तस्येन्द्रस्य प्रिया तु ॥) **पुलोमजेत्यादि**। पुलोम्नो मुनेर्जाता। 'पञ्चम्यामजातौ' (३।२।९८) इति डः ॥*॥ अत एव **'पौलोमि'** अपि। 'तस्यापत्यम्' (४।१।९२) इत्यण्। गोत्रत्वेन जातित्वान्ङीष् (४।१।६३) ॥ (१) ॥*॥ शचते। 'शच व्यक्तायां वाचि' (भ्वा० आ० से०)। इन् (उ० ४।११८)। 'कृदिकाराद्-' (ग० सू० ४।१।४५) इति ङीष्। (**'शचीन्द्राण्यां** शतावर्यां तथा स्त्रीकरणान्तरे')। 'अथ शची स्यादिन्द्राणी **शतावरी। चारुधारा महेन्द्राणी शक्राणी जयवादिनी'** इति रभसः। शक्रमणति आनयति जीवयतीति वा शक्राणी ॥*॥ सर्वेन्द्रियेषु सचते। 'षच समवाये' (भ्वा० आ० से०)। इन् (उ० ४।११८)। **सची** दन्त्यादिरपि ॥ (२) ॥*॥ इन्द्रस्य स्त्री। 'इन्द्रवरुण-' (४।१।४९) इति ङीषानुकौ। (**'इन्द्राणी** शच्यां निर्गुण्ड्यां स्त्रीकरणेऽपि') ॥ (३) ॥*॥ यत्तु—आनुकि कर्तव्ये दीर्घोकारमानुकं शास्ति, तज्ज्ञापयति 'यतो विहितस्ततोऽन्यत्रापि भवति'। तेन किर्याणी गिर्याणी इत्यादि सिद्धं भवति—इति धातुपारायणम्। अतएव 'शक्राणी' इति मुकुटश्च। तन्न। आनुकि कृते 'अतो गुणे' (६।१।९७) इति पररूपप्रसङ्गात्। नन्वकारोच्चारणसामर्थ्याद्दीर्घो भविष्यति। अन्यथा हि नुकमेव कुर्यात्—इति चेत्। न। 'अल्लोपोऽनः' (६।४।१३४) इत्यस्य बाधेन चरितार्थत्वात्, 'पत्युर्नः' (४।१।३३) इति वदादेशे कर्तव्ये आगमलिङ्गककारोच्चारणसामर्थ्यादेव अल्लोपो न भविष्यति—इति चेत्। न। शर्वशब्दे ककारस्य चारितार्थ्यात्। न हि तत्र लोपोऽस्ति। 'न संयोगात्-' (६।४।१३७) इति निषेधात्। तस्मात् ककाराकारयोः सामर्थ्यविरहे पररूपबाधनार्थं दीर्घोच्चारणमावश्यकम्। प्रयोगनिर्वाहस्तूक्त एव ॥ त्रीणि **'इन्द्रपत्न्याः'** ॥

**नगरी त्वमरावती।**

(**नगरी त्विति** ॥) अमराः सन्त्यस्याम्। मतुप् (५।२।९४)। 'मतौ बह्वचोऽनजिरादीनाम्' (६।३।११९) इति दीर्घः ॥ (१) ॥*॥ एकम् **'इन्द्रपुरस्य'** ॥

**हय उच्चैःश्रवाः**

(**हय इति** ॥) उच्चैः श्रवसी यस्य। उच्चैः शृणोतीति वा। असुन् (उ० ४।१८९) उच्चैर्महच् श्रवो यशो यस्येति वा ॥ (१) ॥*॥ एकम् **'इन्द्राश्वस्य'** ॥

**सूतो मातलिः**

(**सूत इति** ॥) मतं लाति। 'आतोऽनुप-' (३।२।३) इति कः। मतलस्यापत्यम्। 'अत इञ्' (४।१।९५) ॥ (१) ॥*॥ एकम् **'इन्द्रसारथेः'** ॥

**नन्दनं वनम् ॥ ४५ ॥**

(**नन्दनमिति** ॥) नन्दयति। 'टुनदि समृद्धौ' (भ्वा० प० से०)। ल्युः (३।१।१३४)। 'अथ **नन्दनम्**। इन्द्रोद्याने, **नन्दनस्तु** तनये हर्षकारिणि' इति हैमः ॥ (१) ॥*॥ एकम् **'इन्द्रवनस्य'** ॥

**स्यात्प्रासादो वैजयन्तः**

**स्यादिति** ॥ वैजयन्त्यः पताकाः सन्त्यस्य। अर्शआद्यच् (५।२।१२७)। **'वैजयन्तो** महेन्द्रस्य ध्वजप्रासादयोः पुमान्। **वैजयन्ती** पताकायां जयन्तीपादपे स्त्रियाम्' ॥ (१) ॥*॥ एकम् **'इन्द्रगृहस्य'** ॥

**जयन्तः पाकशासनिः।**

(**जयन्त इति** ॥) जयति। 'तॄभूवहि-' (उ० ३।१२८) इत्यादिना झच्। 'झोऽन्तः' (७।१।२)। ( **'जय-**

न्तावैन्द्रिगिरिशौ **जयन्त्युमापताकयोः** । जीवन्त्यां सिंहपुच्छयां च इन्द्रपुत्र्यां च') ॥ (१) ॥*॥ पाकशासनस्यापत्यम् । 'अत इञ्' (४।१।९५) ॥ (२) ॥*॥ द्वे **'इन्द्रपुत्रस्य'** ॥

**ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः ॥ ४६ ॥**

**(ऐरावत इति ॥)** इरा उदकानि सन्त्यस्मिन् । मतुप् (५।२।९४) ईरावत्यब्धौ भवः । 'तत्र भवः' (४।३।५३) इत्यण् । (**'ऐरावतोऽभ्रमातङ्गे** नारङ्गे लकुचद्रुमे । नागभेदे च पुंसि स्याद्विद्युत्तद्भेदयोः स्त्रियाम् । नपुंसकं महेन्द्रस्य ऋजुदीर्घशरासने') ॥ (१) ॥*॥ अभ्रं मेघः, तदात्मको मातङ्गः । शाकपार्थिवादिः (२।१।६९) । अभ्र आकाशे मेघे वा विद्यमानो मातङ्ग इति वा ॥ (२) ॥*॥ इरया उदकेन वणति 'वण शब्दे' ( भ्वा० प० से० ) पचाद्यच् (३।१।१३४) । इरावणः । ततः प्रज्ञाद्यण् (५।४।३८) । इरा सुरा वनमुदकं यस्मिन् । 'पूर्वपदात्–' (८।४।३) इति णत्वम् । इरावणे भवः । 'तत्र भवः' (४।३।५३) इत्यण् । स्वामी तु—इरावणे भवः । 'तत्र भवः' (४।३।५३) इत्यण् । 'विभाषौषधि–' (८।४।६) इति वा णत्वम्–इति । तन्न । 'ऐरावन' इत्यस्यापि प्राप्तेः ॥ (३) ॥*॥ अभ्रे खे माति, न भ्राम्यति वा, मन्थरगामिनीत्वात् । बाहुलकादुः । अभ्रमोर्वल्लभः ॥ (४) ॥*॥ चत्वारि **'इन्द्रहस्तिनः'** ॥

**ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः ।**
**शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ॥ ४७ ॥**

**ह्रादिनीत्यादि ॥** ह्रादतेऽवश्यम् । 'ह्राद अव्यक्ते शब्दे' ( भ्वा० आ० से० ) । आवश्यके णिनिः (३।२।७८) । ह्रादोऽस्त्यस्या इति वा । इनिः (५।२।११५) **'ह्रादिनी** वज्रविद्युतोः' ॥ (१) ॥*॥ वजति । 'वज गतौ' ( भ्वा० प० से० ) । 'ऋज्रेन्द्र–' ( उ० २।२८ ) इति रन् ॥*॥ अस्त्री इति पूर्वोत्तराभ्यामन्वेति । संनिधानाविशेषात् । 'अस्त्रियौ वज्रकुलिशौ' इति संसारावर्ताच्च । 'वज्रोऽस्त्री' इति वक्ष्यमाणं तस्यैवानुवादः । (**'वज्रं** स्याद्बालके धान्यां क्लीबं योगान्तरे पुमान् । **वज्रा** स्नुह्यां गुडूच्यां च **वज्री** स्नुह्यन्तरे स्मृता । दम्भोलौ हीरकेऽप्यस्त्री') ॥ (२) ॥*॥ **'कुलिर्हस्तो** भुजादलः' इति त्रिकाण्डशेषः । कुलौ शेते । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । कुलिनः पर्वतान् श्यति वा । 'शो तनूकरणे' ( दि० प० अ० ) । 'आतोऽनुपसर्गे–' (३।२।३) इति कः । कुत्सितमीषद्वा लिशति । 'लिश अल्पीभावे' ( तु० प० से० ) । 'इगुपध–' (३।१।१३५) इति कः । **'कुलिशो** न त्रियां प्रोक्तो दम्भोलौ, ना झषान्तरे' ॥ (३) ॥*॥ भिनत्ति । 'विदिभिदिच्छिदेः कुरच्' (३।२।१६२) । यत्तु—'कर्मकर्तरि चायमिष्यते, इत्यत्र चकारः कर्तरीत्यनुकर्षणार्थः' तेनाकर्मकर्तर्यपि भवति, इति वामनः–इति मुकुटेनोक्तम् । तन्न । भाष्येऽस्यार्थस्यादर्शनात् । निष्फलत्वाच्च । **'भिदिरम्'** इति पाठे तु 'इषिमदि–' ( उ० १।५१ ) इत्यादिना किरच् ॥ (४) ॥*॥ पुनाति । 'अच इः' ( उ० ४।१३९ ) ॥ (५) ॥*॥ शतं कोट्यो धारा अस्य ॥ (६) ॥*॥ स्वरति । 'स्वृ शब्दोपतापयोः' (भ्वा० प० अ० ) । 'शृस्वृस्निहि' ( उ० १।१० ) इति उः । (**'स्वरुः** पुमान् यूपखण्डे भिदुरेऽप्यध्वरे शरे' ) ॥*॥ शोभनान्यरूंषि धारा अस्येति **(स्वरुस्)** सान्तोऽपि ॥ (७) ॥*॥ शाम्यत्यरीन् । अन्तर्भावितण्यर्थाच्छमेर्वन् । ( उ० ४।९४ ) । शं शुभमस्यास्त्यमेदत्वात् इति वा । 'कंशंभ्याम्–' (५।२।१३८) इति वः । पक्षद्वयेऽपि दन्त्योष्ठ्यः ॥*॥ 'शम्ब संबन्धने' चुरादिः (प० से० ) । 'शम्बयति संबध्नाति शत्रून्' इति विग्रहे तु **(शम्बः)** पवर्गतृतीयान्तः । **'शम्बः** स्यान्मुसलाग्रस्थलोहमण्डलके पवौ । शुभान्विते त्रिषु' ॥*॥ सम्बयतेः ( चु० प० से० ) विग्रहे तु **(सम्बः)** दन्त्यादिरपि । 'ताळव्या अपि दन्त्याश्च **सम्ब**सूकरपांसवः' इत्यूष्मविवेकः ॥ (८) ॥*॥ 'दम्भु रोधने' ( स्वा० प० से० ) । असुन् ( उ० ४।१८९ ) दम्भसि रोधने अलिः समर्थः । 'अलं भूषणपर्याप्तिवारणेषु' ( भ्वा० प० से० ) । इन् (४।११८) । दश्नोति खेदयति । 'दम्भु दम्भने' ( स्वा० प० से० ) । औणादिक ओलिरिति वा ॥ (९) ॥*॥ अश्नाति, अश्यतेऽनेनेति वा 'अर्तिसृधृधम्यम्यश्यतिहभ्यो निः' (२।१०२) ॥*॥ इह **'वज्राशनिः'** इति समुदितमपि बोध्यम् । **'वज्राशनिं** विदुर्**वज्रम्'** इति त्रिकाण्डशेषात् । 'अथ **वज्राशनि**र्द्वयोः' इति नामनिधानाच्च ॥ (१०) ॥*॥ दश **'वज्रस्य'** ॥

**व्योमयानं विमानोऽस्त्री**

**व्योमयानमित्यादि ॥** व्योम्नि यान्त्यनेन । करणे ल्युट् (३।३।११७) । व्योम याति । 'कृत्यल्युटः–' (३।३।११४) इति कर्तरि ल्युट् इति वा ॥ (१) ॥*॥ विशिष्टं मानयन्त्यनेन । 'पुंसि संज्ञायाम्' (३।३।११८) इति करणे घः । 'घञ्' इति मुकुटः । तन्न । परत्वाल्ल्युट्प्रसङ्गात् । घस्तु करणाधिकरणयोर्विहितः । विशेषेण मान्त्यस्मिन्निति वा । अधिकरणे ल्युट् (६।३।११७) । विगतं मानमुपमास्येति वा । **'विमानो** व्योमयाने च सप्तभूमिगृहेऽपि च । घोटके यानमात्रे च पुंनपुंसकयोर्मतः ॥' (२) ॥*॥ द्वे **'देवरथस्य'** ॥

**नारदाद्याः सुरर्षयः ।**

**(नारदाद्या इति ॥)** नरस्य धर्म्यम् । 'नराच्चेति वक्तव्यम्' ( वा० ४।४।४९ ) इत्यण् (ञ्) । नारं ददाति । 'आतोऽनुप–' (३।२।३) इति कः । यद्वा 'नारं पानीयमित्युक्तं तत्

---

१—इरावती कश्यपजानपत्नी पुलहप्रिया, तया संभृतत्वाद्वा— तथा चागमः—'इरावत्या भृतः पुत्रस्यार्थे ऐरावतस्ततः' इति । इत्यपि मुकुटः ॥ २—मितद्वादित्वम् ( वा० ३।२।१८० ) तु युक्तम् ॥

पितृभ्यः सदा भवान्। ददाति तेन ते नाम नारदेति भविष्यति' इत्यागमः। नारं नरसमूहं द्यति कलहेनेति वा। नुरिदं नारमज्ञानम्। तद्द्यति ज्ञानोपदेशेनेति वा। 'दो अवखण्डने' (दि० प० अ०)। कः (३।२।३)॥ (१) ॥*॥ आद्येन तुम्बुरुभरतपर्वतदेवलादयः। सुराश्च ते ब्रह्मादिपुत्रत्वादृषयश्च। षष्ठीसमासो वा॥ एकम् 'देवर्षेः'॥

**स्यात्सुधर्मा देवसभा**

**(स्यादिति॥)** शोभनो धर्मोऽस्याम्। 'धर्मादनिच् केवलात्' (५।४।१२४)। 'डाबुभाभ्याम्' (४।१।१३) इति पक्षे डाप्। 'अनो बहुव्रीहेः' (४।१।१२) इति ङीप् (४।१।१५) न॥ (१) ॥*॥ सह भान्त्यस्याम्। 'सभा राजामनुष्यपूर्वा' (२।४।२३) इति निपातनादङ्। देवानां सभा आस्थानगृहम्॥ (२) ॥*॥ द्वे 'देवसभायाः'॥

**पीयूषममृतं सुधा॥ ४८॥**

**(पीयूषमिति॥)** पीयते। 'पीय' इति सौत्रो धातुः। 'पीयेरूषन्' (उ० ४।७६)। बहुलवचनात्पक्षे गुणः। 'स्यात्पेयुषं च पीयूषं नवक्षीरेऽमृतेऽपि च' इति हारावली। 'पीयूषं सप्तदिवसावधिक्षीरे तथाऽमृते'॥ (१) ॥*॥ न म्रियन्तेऽनेन। 'तनिमृङ्भ्यां किच्च' (उ० ३।८८) इति तन्। 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते। अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः'॥ (२) ॥*॥ सुखेन धीयते। 'धेट् पाने' (भ्वा० प० अ०)। 'आतश्चोपसर्गे' (३।३।१०६) इति कर्मण्यङ्। यत्तु—अङ्विधौ (३।३।१०४,५,६,) कारकाधिकारः (३।३।१९,९३) निवृत्तः—इति मुकुटः। तदाकरविरुद्धम्। द्वितीयभावग्रहणस्य (३।३।९५) कारकाधिकारनिवृत्त्यर्थत्वात्'—इति हेतुरपि स्वरूपासिद्धः। 'अभिविधौ भावे—' (३।३।३४) इत्यस्याग्रेऽनुवर्तनात्। यदपि—सुष्ठु दधाति पुष्णाति शरीरमिति पचाद्यजन्तात् (३।१।१३४) टाप् (४।१।४) इति—तदपि न। नित्यत्वादन्तरङ्गत्वाच्चैकादेशेऽदन्तत्वाभावेन टाबयोगात्। एकादेशस्य पूर्वान्तत्वेन ग्रहणात्तस्यालोपप्रसङ्गाच्च। 'आतश्चोपसर्गे' (३।१।१३६) कप्रत्ययो वक्तुमुचितः। ('सुधा गङ्गेष्टिकास्नुह्योर्मूर्वालेपामृतेषु च')॥ (३) ॥*॥ त्रीणि 'अमृतस्य'॥

**मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका।**

**मन्दाकिनीत्यादि॥** मन्दमकितुं शीलमस्याः। 'अक कुटिलायां गतौ' (भ्वा० प० से०)। 'सुपि—' (३।२।७८) इति णिनिः॥ (१) ॥*॥ वियति वियतो वा गङ्गा॥ (२) ॥*॥ स्वः स्वर्गस्य नदी। पूर्वपदात्संज्ञायाम्—(८।४।३) इति णत्वम्॥ (३) ॥*॥ सुराणां दीर्घिकेव॥ (४) ॥*॥ चत्वारि 'देवगङ्गायाः'॥

**मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः॥ ४९॥**

**मेरुरित्यादि॥** मिनोत्युच्चत्वाज्ज्योतींषि। 'डुमिञ् प्रक्षेपणे' (स्वा० उ० अ०)। 'मिपीभ्यां रुः' (उ० ४।१०१)। 'मापो रुरिच्च' इति मुकुटः। तन्न। उज्ज्वलदत्तादावस्य सूत्रस्यानुपलब्धेः॥ (१) ॥*॥ सुमेरुरित्युपसर्गान्तरनिवृत्त्यर्थमुक्तम्॥ (२) ॥*॥ हेम्नोऽद्रिः॥ (३) ॥*॥ रत्नानि सानावस्य॥ (४) ॥*॥ सुराणामालयः॥ (५) ॥*॥ पञ्च 'मेरोः'॥

**पञ्चैते देवतरवो मन्दारः पारिजातकः।**

**संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्॥ ५०॥**

**पञ्चेति॥** (एते पञ्च देववृक्षाः) मन्दयते मोदयति। 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' (भ्वा० प० से०)। 'अङ्गिमदिमन्दिभ्य आरन्' (उ० ३।१३४)। मन्दा आरा धारा अस्य, सरलत्वादिति वा। ('मन्दारः स्यात्सुरद्रुमे। पारिभद्रेऽर्कपर्णे च मन्दारो हस्तिधूर्तयोः')॥ (१) ॥*॥ पारिणोऽब्धेर्जातः। ततः स्वार्थे कन् (५।३।८७)। यत्तु पारिजातो जन्यत्वेनास्यास्ति। अर्शआद्यच् (५।२।१२७)। पारिजातः समुद्रः। 'तत्र भवः' (४।३।५३) इत्यणि पारिजातः—इति मुकुटः। तन्न। वृद्धाच्छस्य (४।२।११४) अपवादस्य सत्त्वादणोऽप्रसङ्गात्। वैयर्थ्यात् जन्यस्यैव नामनिर्वचनासिद्धेश्च। ('पारिजातस्तु मन्दारे पारिभद्रे सुरद्रुमे')॥ (१) ॥*॥ सम्यक् तनोति पुष्पाति। 'ज्वलिति—' (३।१।१४०) इति सूत्रे तनोतेरुपसंख्यानात् णः। सम्यक्तन्यन्ते पुष्पाण्यस्मिन्नित्यधिकरणे 'हलश्च' (३।३।१२१) इति घञ् वा। ('संतानः संततौ गोत्रे स्यादपत्ये सुरद्रुमे'॥ (१) ॥*॥ कल्पः संकल्पितोऽर्थः, तस्य वृक्षः। जन्यजनकभावसंबन्धे षष्ठी॥ (१) ॥*॥ चन्दयति। 'चदि आह्लादने' (भ्वा० प० से०) ण्यन्तः (३।१।२६) ल्युः (३।१।१३४)। हरेश्चन्दनः। 'हरिचन्दनमस्त्री स्यात्त्रिदशानां महीरुहे। नपुंसकं तु गोशीर्षे ज्योत्स्नाकुङ्कुमयोरपि'॥ (१) ॥*॥ पञ्चानां 'देववृक्षाणाम्' एकैकम्॥

**सनत्कुमारो वैधात्रः**

**सनत्कुमार इत्यादि॥** सनत् नित्यं कुमारः ॥*॥ 'सनात्कुमारः' अपि। यद्वा 'हंसगो गृहिणः सनत्' इति ब्रह्मपर्याये रभसः। तस्य कुमारोऽपत्यम्। दन्त्यादिः॥ (१) ॥*॥ विधातुरपत्यम्। अण् (४।१।९२)॥ (२) ॥*॥ वेदसंहिताप्रणेतृत्वात्स्वर्वैद्यपर्यायसंनिधौ कथनम्। द्वे 'ब्रह्मपुत्रस्य'॥

**स्वर्वैद्यावश्विनीसुतौ।**

**नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ॥ ५१॥**

**स्वर्वैद्यावित्यादि॥** स्वः स्वर्गस्य वैद्यौ॥ (१) ॥*॥ अश्विन्याः सुतौ॥ (२) ॥*॥ न सत्यं ययोस्तावसत्यौ, न असत्यौ। 'नभ्राण्नपात्—' (६।३।७४) इति नञः प्रकृतिभावः॥ (३) ॥*॥ प्रशस्ता अश्वाः सन्ति ययोः। इनिः

(५।२।११५) । यद्वा अश्विन्यां जातौ । 'संधिवेला-' (४।३।१६) इत्यणः 'नक्षत्रेभ्यो बहुलम्' (४।३।३७) इति लुकि 'लुक् तद्धितलुकि' (१।२।४९) इति ङीपो लुक् । अश्वोऽस्ति जनकत्वेन ययोर्वा । इन् (५।२।११५) ॥ (४) ॥*॥ दस्रतः क्षिपतो रोगान् । 'दसु उपक्षये' (दि० प० से०) । 'स्फायितञ्चि-' (उ० २।१३) इति रक् । ('दस्रः खरेऽश्विनीसुते') ॥ (५) ॥*॥ अश्विन्या अपत्ये । 'स्त्रीभ्यो ढक्' (४।१।१२०) ॥ (६) ॥*॥ 'तावुभाविति द्वित्वादिष्टत्वादेकवचनाभावः-' इति स्वामी । अयं च प्रायोवादः । 'देव्यां तस्यामजायेतां नासत्यो दस्र एव च' इति मार्कण्डेयात् । 'नासत्यौ' इति 'दस्रौ' चैकवाचकयोभयोः प्रयोगो गौणः ॥ षट् '**अश्विनोः**' ॥

**स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः ।**

**स्त्रियामिति** ॥ अद्भ्यः सरन्ति । 'सर्तेरसुन्' (उ० ४।२३७) ॥ (१) ॥*॥ 'बहुषु' इति प्रायोवादः । 'अनचि च' (८।४।४७) इति सूत्रे 'अप्सराः' इति भाष्यप्रयोगात् । 'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि' इति शब्दार्णवाच्च—अस्य शुभंयाशब्दवद्रूपम्-इति मुकुटोक्तं चिन्त्यम् । अप्सरःशब्दस्य सान्तत्वात् ॥*॥ स्वः स्वर्गस्य वेश्याः ॥ (२) ॥*॥ उरून्महतोऽश्नुते व्याप्नोति वशीकरोतीति यावत् । 'कर्मण्यण्' (३।२।१) संज्ञापूर्वकस्य विधेरनित्यत्वान्न वृद्धिः । मूलविभुजादित्वात् (वा० ३।२।५) को वा । उरु अश्नातीति वा (३) ॥*॥ मुखशब्देनाद्यर्थेन रम्भा-मेनका-घृताची-तिलोत्तमादीनां ग्रहणम् ॥ एकम् '**उर्वश्यादेः**' ॥

**हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम् ॥ ५२ ॥**

**(हाहेति ॥)** अव्युत्पत्तिपक्षे 'आतो धातोः' (६।४।१४०) इत्यस्याप्राप्तेः शसि हाहान्, 'ओः सुपि' (६।४।८३) इत्यस्याप्राप्तेर्हूहून्, इत्यादि । यत्तु—'आतो धातोः' (६।४।१४०) इति योगविभागादाकारलोपः–इति मुकुटेनोक्तम्, तच्चिन्त्यम् । निर्णीतरूपस्य योगविभागेन निर्वाहस्यौचित्यात् । अप्रयुक्तस्य तेन साधनस्यानुचितत्वात् । हा इति शोकव्यञ्जकशब्दं जहाति । 'ओहाक् त्यागे' (जु० प० अ०) । विच् (३।२।७२) शसि हाहः । हू इति ह्वयति । ह्वेञः (भ्वा० उ० अ०) क्विप् (३।२।१७८) । 'वचिस्वपि-' (६।१।१५) इति संप्रसारणम् । 'हलः' (६।४।२) इति दीर्घः । बाहुलकाड्डुप्रत्यये तु (हाहाः) व्युत्पन्नोऽधातुश्च । एवं हूप्रत्यये हूहूरपि बोध्यः । हाहाः सान्तोऽपि । '**गन्धर्वौ** वीतिहाहसोः' इति संसारावर्तात् । '**गन्धर्वो** हाहसि प्रोक्तः' इति रत्नकोषाच्च । भोजस्तु हहाहुहुशब्दयोरव्ययत्वमाह । '**हहाः**' इत्यादिहस्वः । '**हुहुः**' इत्युभयहस्वश्च । '**हंसो हहाहुहू** च द्वौ वृषणश्चश्च **तुम्बुरुः**' इति शब्दार्णवात् । 'गीतमाधुर्यसंपत्त्यौ विख्यातौ च **हहाहुहू**' इति व्यासोक्तेश्च ॥*॥ गन्धं सौरभमर्वति । 'अर्व गतौ' (भ्वा० प० से० पवर्गीयान्तः) 'कर्मण्यण्' (३।२।१) । शकन्ध्वादिः (वा० ६।१।९४) । ('**गन्धर्वस्तु** नभश्चरे । पुंस्कोकिले गायने च मृगभेदे तुरंगमे । अन्तराभवदेहे च') ॥*॥ प्रज्ञाद्यणि (५।४।३८) (**गान्धर्वः**) दीर्घादिरप्ययम् । 'अपि **गन्धर्वगान्धर्वौ** दिव्यगायनगातवः' इति शब्दार्णवात् ॥ (१) ॥*॥ आद्येन तुम्बुरु-विश्वावसु-चित्ररथादीनां संग्रहः ॥ '**देवगायकानाम्**' एकम् ॥

**अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनंजयः ।**
**कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ॥ ५३ ॥**
**बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः ।**
**आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ॥५४॥**
**लोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः ।**
**हिरण्यरेता हुतभुग् दहनो हव्यवाहनः ॥ ५५ ॥**
**सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ।**
**शुचिरप्पित्तम्**

**अग्निरित्यादि** ॥ अङ्गति । 'अगि गतौ' ( भ्वा० प० से० ) । 'अङ्गेर्नलोपश्च' (उ० ४।५०) इति निर्नलोपश्च । ('**अग्निर्**वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान्') ॥ (१) ॥*॥ विश्वे नरा अस्य । 'नरे संज्ञायाम्' (६।३।१२९) इति विश्वशब्दस्य दीर्घः । विश्वानरस्यापत्यम् । ऋष्यण् (४।१।११४) । यत्तु—बिदादित्वात् (४।१।१०४) अञ् । बहुत्वे च 'यञञोश्च' (२।४।६४) इति लुक् । विश्वानराः–इति मुकुटः । तन्न । 'विश्वे वैश्वानरा उत' इत्यत्र लुकोऽदर्शनात् । 'वैश्वानराय मीढुषे' इत्यादावन्तोदात्तदर्शनाच्च । ऋषिभ्यो गोत्रापत्येऽञो विहितत्वेनानन्तरापत्ये प्रसक्त्यभावाच्च । एतेन बिदादित्वात् (४।१।१०४) अञ्—इति वदन् स्वाम्यपि प्रत्युक्तः ॥ (२) ॥*॥ वहति हव्यम् । 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' (उ० ४।६१) इति निः । निच्च । ('**वह्निर्**वैश्वानरेऽपि स्याच्चित्रकाख्यौषधे पुमान्') ॥ (३) ॥*॥ 'वी गतिप्रजनकान्त्यसनखादनेषु' (अ० प० अ०) । कर्मणि क्तिन् (३।३।९४) वीतिर्भक्ष्यं पुरोडाशादिर्हूयतेऽस्मिन् । 'हु दानादनयोः' (जु० प० से०) । 'हुयामा-' (उ० ४।१६८) इति त्रन् । वीतिरश्वो होत्रं हवनमस्येति वा । ('**वीतिहोत्रो**ऽनलेऽर्के च') ॥ (४) ॥*॥ धनं जयति ।

१—उज्ज्वलदत्तादौ तु 'अप्सराः' इत्येव सूत्रं दृश्यते ॥
२—द्वे उर्वश्यादेरिति मुकुटः ॥

१—'यञञोश्च' (२।४।६४) इत्यनेन गोत्रविहितयञञोर्लुग्विधायकेन लुको दर्शितत्वेनात्रानन्तरापत्येऽञ्चिकीर्षितत्वेन, गोत्रापत्ये एव चिकीर्षितत्वेन, लौकिके लुगभावस्य 'छन्दोवत्कवयः कुर्वन्ति न ह्येषा इष्टिरस्ति' (१।४।३) इति भाष्येणासाधुताध्वननात् वैदिके 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति परिभाषया, अन्तोदात्तत्वस्य 'सुप्तिङुपग्रह-' (३।१।८५) इति-भाष्योक्त्या, स्वरव्यत्ययेन सिद्धौ बिदादिगणे तत्पाठवैयर्थ्यापत्तिश्चिन्त्यमेतत् ॥

'संज्ञायां भृतृ-' ( ३।२।४६ ) इति खच् । ( 'धनंजयः सर्पभेदे ककुभे देहमारुते । पार्थेऽग्नौ' ) ॥ (५) ॥*॥ कूपीटस्य जलस्य योनिः । 'कूपीटमुदरे जले' इति रत्नकोषात् । 'अग्नेरापः' इति श्रुतेः । कूपीटं योनिरस्येति वा । अद्भ्योऽग्निर्ब्रह्मतः क्षत्रम्' इति मनुः ॥ (६) ॥*॥ ज्वलति । 'जुचङ्क्रम्य-' (३।२।१५०) इति युच् ॥ (७) ॥*॥ विद्यते लभ्यते । 'विद्लृ लाभे' ( तु० उ० अ० ) । असुन् ( उ० ४।१८९ ) । जातं वेदो धनं यस्मात् । जाते जाते विद्यते इति वा । 'विद सत्तायाम्' ( दि० आ० अ० ) । जातं वेत्ति वेदयते वा । 'विद चेतनादौ' ( अ० प० से०, रु० आ० अ०, ण्यन्तः, चु० आ० से० ) । असुन् ( उ० ४।१८९ ) ॥ (८) ॥*॥ तनूं शरीरं न पातयति । 'नभ्राण्नपात्-' ( ६।३।७५ ) इति निपातितः । तनूनपातौ । 'तनूनपातमुषसस्य निंसाते' इति मन्त्रः ॥*॥ तनूं स्वं स्वरूपं न पाति न रक्षति आशुविनाशित्वाद् इति 'तनूनपात्' शत्रन्तः । 'उगिदचाम्-' ( ७।१।७० ) इति नुमि तनूनपात्, तनूनपान्तौ, तनूनपान्तः इति वा ॥*॥ तन्वा ऊनं कृशं पाति । तनूनपं घृतादि, तदत्ति । 'अदोऽनन्ने' (३।२।६८) इति विट् । तनूनपादौ, तनूनपादः इति वा ॥ (९) ॥*॥ बृंहति । 'बृहि वृद्धौ' ( भ्वा० प० से० ) । 'बृंहेर्नलोपश्च' ( उ० २।१०९ ) इति इस् । पुंलिङ्गोऽयम् । 'बर्हिरुक्तो बृहद्भानुः' इत्यमरमालापुंस्काण्डे पाठात् ॥ (१०) ॥*॥ 'शुक्रो वैश्वानरो वह्निर्बर्हिःशुष्मा तनूनपात्' इति शब्दार्णवात् 'बर्हिः शुष्मा' इति व्यस्तं समस्तं नाम इति कश्चित् । तत्र समस्तपक्षे बर्हिः कुशः शुष्म बलमस्येति विग्रहः । बर्हिः सान्तः ('बर्हिः पुंसि हुताशने । न स्त्री कुशे') । बर्हिरिदन्तः । 'शुष्मा' इति नान्तः पृथग्-इत्यन्यः ॥*॥ शुष्यत्यनेनेति शुष्मा । 'शुष शोषणे' ( दि० प० अ० ) । 'अन्येभ्योऽपि-' (३।२।७५) इति मनिन् । संज्ञापूर्वकत्वान्न गुणः ॥*॥ शुष्यति जलम् । शुषेरन्तर्भावितण्यर्थात् 'अविसिविसिशुषिभ्यः कित्' ( उ० १।१४५ ) इति मनिप्रत्यये 'शुष्मः' अदन्तोऽपि ॥ (११) ॥*॥ कृष्णो धूमो वर्त्मास्य । नान्तः । ('कृष्णवर्त्मा विधुंतुदे । दुराचारे हुताशे च') ॥ (१२) ॥*॥ शोचींषि ज्वालाः केशा इवास्य । 'नित्यं समासेऽनुत्तरपदस्थस्य' (८।३।४५) इति षत्वम् ॥ (१३) ॥*॥ 'उषः प्रभाते संध्यायाम्' इति विश्वः । उषः संध्यायां बुध्यते प्रकाशते । इगुपधत्वात् (३।१।१३५) कः । 'अहरादीनां पत्यादिषु वा रेफः-' ( वा० ८।२।७० ) । स च व्यवस्थितविभाषयेह नित्यम् ॥ (१४) ॥*॥ आश्रयमाधारमश्नाति । 'कर्मण्यण्' (३।२।१) । ( 'आश्रयाशः पुमान्वह्नौ त्रिषु चाश्रयनाशके' ) ॥*॥ 'आशयाशः' इति पाठान्तरम् । आशेरतेऽत्रेत्याशयः । 'एरच्' (३।३।५६) । तमश्नाति ॥ (१५) ॥*॥ बृहन्तो भानवोऽस्येति ॥ (१६) ॥*॥ 'कृश तनूकरणे' ( दि० प० से० ) । कृश्यति । 'कृतन्यञ्जि-' (उ० ४।२) इत्यानुक् ॥ (१७) ॥*॥ पुनाति । 'पूञ् पवने' ( क्र्या० उ० से० ) । ण्वुल् (३।१।१३३) । ('पावकोऽग्नौ सदाचारे वह्निमन्थे च चित्रके । भल्लातके विडङ्गे च शोधयितृनरेऽपि च') ॥ (१८) ॥*॥ अनित्यनेन । पुषादित्वात् (उ० १।१०६) कलच् । 'अनलो वसुभेदेऽग्नौ' । ( 'अनलोऽनिले । वसुदेवे वसौ वह्नौ' ) ॥ (१९) ॥*॥ लोहिता अश्वा यस्य । 'वरुणस्त्वसितानश्वान्कुबेरः कुमुदोपमान् । हुताशनः किंशुकाभान्वायुर्बभ्रूंस्तथावृणोत्' इति शालिहोत्रात् । रोहितो मृगोऽश्वो वाहनमस्येति वा । ('रोहिताश्वश्चित्रभानौ हरिश्चन्द्रनृपात्मजे') ॥ (२०) ॥*॥ वायोः सखा । 'राजाहःसखिभ्यष्टच्' (५।४।९१) ॥*॥ वायुः सखास्येति ( वायुसखा ) वा । अस्मिन्पक्षे टजभावात् 'अनङ् सौ' (७।१।९३) इत्यनङ् ॥ (२१) ॥*॥ शिखाः सन्त्यस्य । मतुप् (५।२।९४) ॥*॥ व्रीह्यादित्वात् (५।२।११६) इनिप्रत्यये 'शिखी' अपि । 'शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे । मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गकः' ॥ (२२) ॥*॥ ( आशोष्टुमिच्छति ) आङ्पूर्वाच्छुष्यतेः ( दि० प० अ० ) सन्नन्तात् 'अङ्गि शुषेः सनश्छन्दसि' (उ० २।१०६) इत्यनिः । छान्दसानामपि क्वचिद्भाषायां प्रयोगः । 'अध्वर्युक्रतुः-' (२।४।४) इति ज्ञापकात् । आशु शीघ्रं आशुं व्रीहिं वा शु क्षणोति । 'क्षणु हिंसायाम्' ( त० उ० से० ) । इन् (उ० ४।११८) । शु इति पूजार्थमव्ययम् ॥ (२३) ॥*॥ हिरण्यं रेतोऽस्य । सान्तः । 'हिरण्यरेताः पुंसि स्याद्दिवाकरहविर्भुजोः' ॥ (२४) ॥*॥ हुतं भुङ्क्ते । क्विप् (३।२।१७८) । जान्तः ॥ (२५) ॥*॥ दहति । ल्युः (३।१।१३४) ('दहनश्चित्रके भल्लातकेऽग्नौ दुष्टचेष्टिते') ॥ (२६) ॥*॥ हव्यं वाहयति । ण्यन्ताद्वहेः ( भ्वा० उ० अ० ) ल्युः (३।१।१३४) यत्तु स्वामी—'हव्यं वाहयति' इति विगृह्य 'हव्यपुरीषपुरीष्येषु ञ्युट्' (३।२।६५)—इत्याह । तन्न । उदाहृतपाठस्यानुपलम्भात् । 'कव्यपुरीषपुरीष्येषु-' इति पाठस्योपलम्भात् । 'वहश्च' (३।२।६४) इत्यनुवृत्तेर्ण्यन्तादसंभवाच्च । मुकुटोऽपि—'वाहयति' इति विगृह्य 'हव्येऽनन्तः पादम्' (३।२।६६) इति वहेर्ञ्युट्-इत्याह । तदपि न । ञ्युटश्छान्दसत्वात् । 'वहश्च' (३।२।६४) इत्यनुवृत्तेर्ण्यन्तादसंभवाच्च ॥ (२७) ॥*॥ सप्तार्चिषो यस्य । काली-कराली-मनोजवा-सुलोहिता-सुधूम्रवर्णा-स्फुलिङ्गिनी-विश्वदासाख्याः सप्त वह्नेर्जिह्वाः । ('सप्तार्चिः पावके पुंसि क्रूरचक्षुषि च त्रिषु') ॥ (२८) ॥*॥ 'दमु उपशमे' (दि० प० से०) । अन्तर्भावितण्यर्थाद् 'दमेरुनसिः' (उ०४।२३५) । दाम्यति । दमुनाः, दमुनसौ ॥*॥ दीर्घमध्योऽपि । 'दमूना दमुनाः प्राचीनबर्हिः शुचिबर्हिषौ' इति नामनिधानात् ॥ (२९) ॥*॥ शोचयति । 'ऋज्रेन्द्र-' (उ० २।२८) इति निपा-

१—इन्धनाभावे इति मुकुटः ॥

१—सप्तार्चयो यस्येति । इदन्तोऽपि ॥

तितः । शुक्रं रेतोऽस्यास्तीति वा । अर्शआद्यच् (५।२।१२७) । शुक्लवर्णत्वादिति वा । रलयोरेकत्वम् । (**'शुक्रः** स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान् । रेतोऽक्षिरुग्भिदोः क्लीबम्') ॥ (३०) ॥*॥ चित्रा भानवोऽस्य । शुभ्रादिः (८।४।३९) । (**'चित्रभानुः** पुमान्वैश्वानरे चाहस्करेऽपि च') ॥ (३१) ॥*॥ विभा प्रभा वसु धनं यस्य । (**'विभावसुस्तु** भास्करे । हुताशने हारभेदे चन्द्रे') ॥ (३२) ॥*॥ शुचिं पवित्रं करोति शुचयति । 'तत्करोति–' (वा० ३।१।२६) इति ण्यन्ताद् 'अच इः' (उ० ४।१३९) । यद्वा शोचति । अन्तर्भावितण्यर्थाच्छुचेः (भ्वा० प० से) 'इगुपधात्–' (उ० ४।१२०) इतीन् । (**'शुचिर्ग्रीष्माग्निशृङ्गारेष्वषाढे शुद्धमन्त्रिणि** । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु') ॥ (३३) ॥*॥ अपां पित्तमिव । दाहकत्वात् ॥ (३४) ॥*॥ चतुस्त्रिंशत् **'अग्नेः'** ॥

**और्वस्तु बाडवो बडवानलः ॥ ५६ ॥**

**(और्व इति ॥)** उर्वस्य मुनेरपत्यम् । यत्तु बिदाद्यञ् (४।१।१०४) बहुत्वे 'यञञोश्च' (२।४।६४) इति लुकि उर्वाः–इति मुकुटः । तन्न । अनन्तरापत्येऽञोऽसंभवात् । तस्मादृष्यण् (४।१।११४) ॥ (१) ॥*॥ बडवायां भवः । 'तत्र भवः' (४।३।५३) इत्यण् । (**'बाडवं** करणे स्त्रीणां घोटकौघे नपुंसकम् । पाताले न स्त्रियां पुंसि ब्राह्मणे बडवानले') ॥ (२) ॥*॥ बडवाया अनलः । आधाराधेयभाव एव संबन्धत्वेन षष्ठ्यर्थः ॥ (३) ॥*॥ त्रीणि **'बाडवाग्नेः'** ॥

**वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम् ।**

**(वह्नेरिति ॥)** 'वह्नेः' इति प्रायोवादः । **'हेतिः** स्यादायुधज्वालासूर्यतेजःसु योषिति' इति दर्शनात् । ज्वलति । ...कसन्तेभ्यो णः' (३।१।१४०) ॥*॥ स्त्रियां टाप् । (१) ॥*॥ 'कील बन्धे' (भ्वा प० से०) । 'इगुपध–' (३।१।१३५) इति कः ॥*॥ स्त्रियां ...।४) (**'कीलो**ऽग्नितेजसि । कूर्परस्तम्भयोः शङ्कौ ...रतहतावपि') ॥ (२) ॥*॥ अर्च्यते । 'अर्च पूजायाम्' ...।० प० से०, चु० उ० अ०) । 'अर्चिशुचिहुसृपिच्छा...च्छर्दिभ्य इसिः' (उ० २।१०८) अर्चिः सान्तः ॥*॥ इनि (उ० ४।११८) त्विदन्तोऽपि । 'अग्नेर्भ्राजन्ते अर्चयः' इति

१—बाहुलकात्क्वचिदलुगपि 'सोङ्घ्रिपांसैरपां पित्तमिन्धानः शर्वरीं नयेत्' इति प्रयोगात् इत्यपि मुकुटः ॥ २—'उर्वेण किलायोनिजपुत्रार्थिना ऊरुर्मथितः, तत्र ज्वालामयः पुरुषो जातः, तस्य च समुद्र आधार आसीत्' इति श्रुतिः—इति मुकुटः ॥ ३—बिदादिगणे उर्वशब्दपाठवैयर्थ्यापत्त्या वैश्वानरशब्दव्याख्यानोक्तदिशा चिन्त्यमिति शम् ॥ ४—वयं तु ब्रूमः पञ्चैव वाचकान्यर्चिषः । वह्नेरिति तु 'तेजोमात्रवाचिकाप्यर्चिर्विशेषणाग्निद्युतौ वर्तते धातुरिव गैरिके' इत्येतत्सूचनार्थम्—इति मुकुटः ॥

श्रुतेः ॥*॥ 'स्त्रियाम्' इति अर्चिरादिभिः संबध्यते । तत्रार्चिषः 'ज्वालाभासोर्नपुंस्यर्चिः' इति क्लीबत्वमपि वक्ष्यते । (**'अर्चिर्मयूखशिखयोः'**) ॥ (३) ॥*॥ हिनोति, हन्ति वा । 'हि गतौ' (स्वा० प० अ०) । 'ऊतियूति–' (३।३।९७) इत्यादिना क्तिन्नन्तो निपातितः । (**'हेतिर्ज्वालास्त्रसूर्यांशुषु'**) ॥ (४) ॥*॥ शेते । 'शीङः किद्ध्रस्वश्च' (उ० ५।२४) इति खः । **'शिखा** ज्वालाबर्हिचूडालाङ्गलक्यग्रमात्रके' ॥ (५) ॥*॥ पञ्च **'ज्वालायाः'** ॥

**त्रिषु स्फुलिङ्गोऽग्निकणः**

**(त्रिष्विति ॥)** 'स्फु' इत्यनुकरणशब्दः । स्फुना फूत्कारेण लिङ्गति । 'लिगि गतौ' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) ॥*॥ स्फुलिङ्गा जातावपि । अजादित्वाट्टाप् ॥ (१) ॥*॥ अग्नेः कणः ॥ (२) ॥*॥ द्वे **'अग्निकणस्य'** ॥

**संतापः संज्वरः समौ ॥ ५७ ॥**

**(संताप इत्यादि ॥)** संतापयति । 'तप संतापे' (भ्वा० प० अ०) ॥ (१) ॥*॥ 'ज्वर रोगे' (भ्वा० प० से०) ण्यन्तौ । संज्वरयति । पचाद्यच् (३।१।१३४) ॥ (२) ॥*॥ यत्तु—संतापनं संतापः । घञ् (३।३।१८) । संज्वरयति संज्वरः । अच् (३।१।१३४)—इति मुकुटेनोक्तम् । तन्न । वैषम्ये प्रमाणाभावात् । भावकर्त्रभिधायिनोः समानार्थकत्वाभावात् । समौ समानार्थकौ समलिङ्गौ ॥ द्वे **'संतापस्य'** ॥

**धर्मराजः पितृपतिः समवर्ती परेतराट् ।**
**कृतान्तो यमुनाभ्राता शमनो यमराड्यमः ॥ ५८ ॥**
**कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः ।**

**धर्मराज इत्यादि ॥** धर्मस्य राजा । 'राजाहः–' (५।४।९१) इति टच् ॥ (१) ॥*॥ पितॄणां पतिः ॥ (२) ॥*॥ समं वर्तितुं शीलमस्य । 'सुप्यजातौ–' (३।२।७८) इति णिनिः ॥ (३) ॥*॥ परेतेषु मृतेषु राजते । 'सत्सूद्विष–' (३।२।६१) इति क्विप् । जान्तः ॥ (४) ॥*॥ कृतोऽन्तो विनाशो येन । (**'कृतान्तो** यमसिद्धान्तदैवाकुशलकर्मसु') (५) ॥*॥ यमुनाया भ्राता ॥ (६) ॥*॥ शमयति । ल्युः (३।१।१३४) । (**'शमनं** शान्तिवधयोः । **शमनः** श्राद्धदेवते') ॥ (७) ॥*॥ यमेन संयमेन राजते । क्विप् (३।२।६१) जान्तः ॥ (८) ॥*॥ यमयति । अच् (३।१।१३४) । **'यमो** दण्डधरे ध्वाङ्क्षे संयमे यमजेऽपि च' इति विश्वः ॥ (९) ॥*॥—कलयत्यायुः । 'कल संख्याने' (चु० उ० से०) पचाद्यजन्तात् (३।१।१३४) प्रज्ञाद्यण् (५।४।३८)–इति मुकुटः । तन्न । कलेर्मित्त्वाभावात् । प्रज्ञाद्यणि रूपद्वयप्रसङ्गाच्च । एतेन स्वाम्यपि परास्तः । तस्मात् 'काल-

१—मित्त्वाभावेऽपि अदन्तत्वादेव वृद्धेरप्राप्त्या 'कलयति' इति मुकुटोक्तमेव समञ्जसम् ॥

यति' इति विग्रह उचितः । कालवर्णत्वाद्वा । ('**कालो** मृत्यौ महाकाले समये यमकृष्णयोः') ॥ (१०) ॥*॥ दण्डस्य धरः । दण्डं धरतीति विग्रहे 'कर्मण्यण्' (३।२।१) इत्यणि '**दण्डधारः**' अपि । ('**दण्डधारो** यमे राज्ञि') ॥ (११) ॥*॥ श्राद्धस्य देवः अंशभाक्त्वात् । पितृपतित्वाद्वा ॥ (१२) ॥*॥ विवस्वतोऽपत्यम् 'तस्यापत्यम्' (४।१।९२) इत्यण् ॥ (१३) ॥*॥ अन्तं करोति=अन्तयति । 'तत्करोति—' (वा० ३।१।२६) इति ण्यन्ताद् ण्वुल् (३।१।१३३) ॥ (१४) ॥*॥ '**यमस्य**' चतुर्दश ॥

**राक्षसः कौणपः क्रव्यात्क्रव्यादोऽस्रप आशरः ॥५९॥**
**रात्रिंचरो रात्रिचरः कर्बुरो निकषात्मजः ।**
**यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी ॥ ६० ॥**

(**राक्षस इत्यादि** ॥) रक्षन्त्यस्मात् । 'रक्ष पालने' (भ्वा० प० से०) असुन् (उ० ४।१८९) प्रज्ञाद्यणि (५।४।३८) राक्षसः 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि' (प० ५।३।६८) इति पुंस्त्वम् । ('**राक्षसो** यातुधाने स्याच्चण्डायां **राक्षसी** स्मृता') ॥ (१) ॥*॥ कुणपं शवं भक्षयितुं शीलमस्य । 'शीलम्' (४।४।६१) इत्यण् । कोणं पाति । 'आतः'— (३।२।३) इति कः । कोणपस्य निर्ऋतेरयम्—कौणपः । 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (२) ॥*॥ क्रव्यमाममांसमत्ति । 'क्रव्ये च' (३।२।६९) इति विट् । 'अदोऽनन्ने' (३।२।६८) इत्येव सिद्धेऽण् (३।२।१) बाधनार्थमिदम् । तेनाममांसभक्षके 'क्रव्यादः' इति न भवत्येव । ('**क्रव्या**न्मांसाशिरक्षसोः') ॥ (३) ॥*॥ कृत्तं छिन्नं तदेव पुनर्विशेषतः कृतं पक्वं च भुङ्क्ते इति क्रव्यादः । 'कृत्तविकृतपक्वशब्दस्य पृषोदरादित्वात् (६।३।१०९) क्रव्यादेशः' (३।२।६९) इति काशिका । शब्दार्णवेऽपि कृदध्याये—'सदान्नादकणादौ च स्यात्क्रव्यादाममांसभुक् । क्रव्यादः कृत्तविकृतपक्वमांसभुगुच्यते' इत्युक्तेः । तस्माद्योगार्थस्य व्यवस्थितत्वेऽपि गौण्या उभयोः सामान्येन प्रयोगः ॥ (४) ॥*॥ अस्रं रक्तं पिबति । 'आतोऽनुप—' (३।२।३) इति कः । नतु टक् (३।२।८) 'पिबतेः सुराशीध्वोः' (वा० ३।२।८) इति वचनात् । दन्त्यसवान् । ('**अस्रपा** तु जलौकायां डाकिन्यां राक्षसे तु ना') ॥*॥ न श्रपयति क्रव्यात्त्वात् **अश्रपः** । पचाद्यच् (३।१।१३४) तालव्यशवान् ॥ (५) ॥*॥ आशृणाति । 'शॄ हिंसायाम्' (क्र्या० प० से०) पचाद्यच् (३।१।१३४) ॥*॥ '**आशिरः**' इति पाठे 'अशेर्णिच्च' (उ० ११५२) इति किरच् । '**आशिरो** धनुषः शङ्कुः क्रव्यादोऽस्रप आशरः' इति संसारावर्तः । ('**आशिरो**ऽर्के राक्षसेऽग्नौ') ॥ (६) ॥*॥ रात्रौ चरति । 'चरेष्टः' (३।२।१६) । 'रात्रेः कृति विभाषा—' (६।३।७२) इति पक्षे मुम् ॥ (७) ॥*॥ (८) ॥*॥ कुर्वुरो वर्णेन । यद्वा—कर्वति । 'कर्व हिंसायाम्' (भ्वा० प० से०) 'मद्गुरादयश्च' (उ० ११४१) इति कुरच् । ('**कर्बुरं** सलिले हेम्नि **कर्बुरः** पापरक्षसोः । **कर्बुरा** कृष्णवृन्तायां शबले पुनरन्यवत्') ॥*॥ '**कर्वरः**' इति पाठान्तरम् । 'नैर्ऋतः **कर्वरः** क्रव्यात् कर्बुरो यातुरक्षसी' इति शब्दार्णवः । 'कॄ हिंसायाम्' (क्र्या० उ० से०) । कृणाति । 'कॄगॄशॄवृचतिभ्यः ष्वरच्' (उ० २।१२१) ॥ (९) ॥*॥ निकषाया आत्मजः । मूर्धन्यः षः ॥ (१०) ॥*॥ यातूनि रक्षांसि दधाति पुष्णाति स्वजातिपोषकत्वात् । धाञो 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् । 'कृत्यल्युटः—' (३।३।११३) इति ल्युट् वा । यातूनि यातनाः धीयन्तेऽस्मिन्निति वा । ल्युट् (३।३।११७) । अन्तस्थादिः ॥*॥ जातु कदाचित् धानं संनिधानमस्येति (**जातुधानः**) चवर्गादिरपि ॥ (११) ॥*॥ विरुद्धलक्षणया पुण्यश्चासौ जनश्च । ('अथ **पुण्यजनो** यक्षे राक्षसे सज्जनेऽपि च') ॥ (१२) ॥*॥ निर्ऋतेरपत्यम् ॥ (१३) ॥*॥ याति । 'कमिमनिजनिगाभायाहिभ्यश्च' (उ० १।७३) इति तुः । अर्धर्चादिः (ग० २।४।३१) ॥ (१४) ॥*॥ रक्षन्त्यस्मात् । असुन् (उ० ४।१८९) 'भीमादयोऽपादाने' (३।४।७४) ॥ (१५) ॥*॥ पञ्चदश '**राक्षसस्य**' ॥

**प्रचेता वरुणः पाशी यादसांपतिरप्पतिः ।**

(**प्रचेता इत्यादि** ॥) प्रचेतयति । प्रकृष्टं चेतोऽस्येति वा । 'चिती संज्ञाने' (भ्वा० प० से०) । असुन् (उ० ४।१८९) । '**प्रचेताः** पाशिनि[1] मुनौ ना प्रकृष्टहृदि त्रिषु' ॥ (१) ॥*॥ व्रियते वृणोति वा । 'वृञ् वरणे' (स्वा० उ० से०) । 'कृवृदारिभ्य उनन्' (उ० ३।५३) । '**वरुण**स्तरुभेदेऽप्सु प्रतीचीपतिसूर्ययोः' ॥*॥ युचि (उ० २।७४) '**वरणः**' अपि । 'वरं वृणन्ति तं देवा वरदश्च वरार्थिनाम् । धातुर्वै वरणे प्रोक्तस्तस्मात्स **वरणः** स्मृतः' इति साम्बपुराणम् ॥ (२) ॥*॥ पाशोऽस्यास्ति । इनिः (५।२।११५) । '**पाशी** पाशधरेऽप्पतौ' इति विश्वः ॥ (३) ॥*॥ यादसां पतिः । 'तत्पुरुषे कृति—' (६।३।१४) इत्यलुक् । ('**यादसांपति**रम्भोधौ पश्चिमाशापतावपि') ॥*॥ लुकि तु '**यादःपतिः**' अपि ॥ (४) ॥*॥ अपां पतिः ॥*॥ लुकि[2] '**अप्पतिः**' अपि ॥ (५) ॥*॥ पञ्च '**वरुणस्य**' ॥

**श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ॥ ६१ ॥**
**पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः ।**
**समीरमारुतमरुज्जगत्प्राणसमीरणाः ॥ ६२ ॥**
**नभस्वद्वातपवनपवमानप्रभञ्जनाः ।**

(**श्वसन इत्यादि** ॥) श्वसित्यनेन । 'श्वस प्राणने' (अ०

१—'पाशिनिपुणे पुंसि कृष्णे च वाच्यवत्' इति पुस्तकान्तरे ॥
२—अलुकि 'अपांपतिः' इत्यपि—मुकुटोक्तमेव युक्तम् । लुकि तु यादःपतिरपीत्यत्रापिना यादसांपतिरित्यस्य मूलकृत्संमतत्वेन अपांपतिरित्यस्य मूले छन्दोनुरोधादपाठात् ॥

प० से०) ल्युट् (३।३।११७)। (**'श्वसनं** श्वसिते पुंसि मारुते मदनद्रुमे') ॥ (१) ॥*॥ स्पृशति । 'स्पृश स्पर्शने' (तु० प० अ०) । 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् । **'स्पर्शनो** मारुते स्पर्शदानयोः **स्पर्शनं** मतम्' इति विश्वः ॥ (२) ॥*॥ वाति । 'वा गतिगन्धनयोः' (अ० प० अ०)। 'कृवापाजि–' (उ० १।१) इत्युण् । 'आतो युक्' (७।३।३३) इति 'युक्' ॥ (३) ॥*॥ 'मातरि' इति सप्तम्यन्तप्रतिरूपकम् । मातरि अन्तरिक्षे श्वयति संचरति । 'टुओश्वि गतिवृद्ध्योः' (भ्वा० प० से०) । यद्वा मातरि जनन्यां श्वयति वर्धते सप्तसप्तकरूपत्वात् । 'श्वन्नुक्षन्–' (उ० १।१५९) इति निपातनात्सप्तम्या अलुक ॥ (४) ॥*॥ सदा गतिरस्य (**'सदागति**र्नाकवातनिर्वाणेषु सदीश्वरे') ॥ (५) ॥*॥ पृषद् मृगभेदोऽश्वो वाहनमस्य । पृषतामम्बुकणानामश्व इवेति वा । यत्तु—पृषन्त्यम्बुकणा अश्वोऽस्य–इति मुकुटः । तन्न । वाह्यवाहकभावस्य विपरीतत्वात् ॥ (६) ॥*॥ वहति । पचाद्यच् (३।१।१३४)॥ गन्धस्य वहः । यत्तु—गन्धस्य वहः–इति विगृह्य 'अकारादनुपपदात्सोपपदो भवति विप्रतिषेधेन' (वा० ३।२।१) इत्यस्य प्रायिकत्वात् पचाद्यच् (३।१।१३४)–इति मुकुटः । तन्न । प्रायिकत्वकल्पनाया निर्मूलत्वात् । उपपदाविवक्षायामचः (३।१।१३४) सिद्धत्वाच्च ॥ (७) ॥*॥ गन्धं वहति । 'कर्मण्यण्' (३।२।१) (**'गन्धवाहो** मृगेऽनिले । **गन्धवाहा** तु नासायाम्') ॥ (८) ॥*॥ अनित्यनेन । 'सलिकल्यनि–' (उ० १।५४) इति इलच् । (**'अनिलो** वसुवातयोः') ॥ (९) ॥*॥ आशु गच्छति । 'अन्यत्रापि–' (वा० ३।२।४८) इति डः । (**'आशुगोऽर्के** शरे वायौ') ॥ (१०) ॥*॥ सम्यग् ईर्ते गच्छति, ईरयति प्रेरयति वा । 'ईर गतौ' (अ० आ० से०) । अच् (३।१।१३४) ॥ (११) ॥*॥ युचि (३।२।१४८) तु समीरणः । (**'समीरणः** स्यात्पवने पथिके च फणिज्जके') ॥ (१५) ॥*॥ म्रियन्तेऽनेन वृद्धेन विना वा । मरुत् । 'मृग्रोरुतिः' (उ० १।९४) । (**'मरुद्देवे** समीरे ना ग्रन्थिपर्णे नपुंसकम्') ॥ (१३) ॥*॥ ततः प्रज्ञाद्यण् (५।४।३८) ॥*॥ **मरुतशब्दो**ऽपि बोध्यः । **'मरुतः** स्पर्शनः **प्राणः** समीरो मारुतो मरुत्' इति विक्रमादित्यकोशात् । **'मारुतः** श्वसनः **प्राणः** समीरो **मारुतो मरुत्**' इति संसारावर्ताच्च । ॥ (१२) ॥ अतएव जगत्प्राणौ पृथगपि । **'जगत्** स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु' इति रुद्रकोषः । **'जगदाख्या** स्मृता वाते विष्टपे जङ्गमेऽपि च । **जगती** भुवने ख्याता छन्दोभेदे जलेऽपि च' इति विश्वः । तत्र 'द्युतिगमिजुहोतीनां द्वे च' (वा० ३।२।१७८) इति क्विपि द्वित्वे 'गमः क्वौ' (६।४।४०) इति मलोपे तुकि जगत्, जगतौ ॥*॥ यदा तु 'वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च' (उ० २।८४) इति व्युत्पाद्यते, तदा 'उगिदचाम्–' (७।१।७०) इति नुम् । जगत्, जगन्तौ ॥*॥ यत्तु—मुकुटः 'यदा वर्तमाने पृषद्बृहन्महज्जगच्छतृवद् इत्येतन्नास्ति'–इत्यवोचत् । तन्न । उणादिसूत्रस्यासत्त्वे मानाभावात् । उगित्कार्यार्थत्वाच्च ॥*॥ एकत्वे तु जगतां प्राणः ॥ (१४) ॥*॥ नभोऽस्याश्रयत्वेनास्ति । मतुप (५।२।९४) 'तसौ मत्वर्थे' (१।४।१९) इति भत्वाद्रुत्वाभावः ॥ (१६) ॥*॥ वाति । 'हसिमृग्रिण्–' (उ० ३।८६) इति तन् ॥*॥ 'क्तिच्क्तौ च संज्ञायाम्' (३।३।१७४) इति क्तिचि **'वातिः'** अपि । 'वायुर्मरुत्वान्श्वसनः पवनो मरुतोऽनिलः । नभस्वान् **क्षिपणुर्वातिः शुषिणो नैघटो वहः**' इति साहसाङ्कः ॥ (१७) ॥*॥ पुनाति । 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् (**'पवनं** कुम्भकारस्य पाकस्थाने नपुंसकम् । निष्पावमरुतोः पुंसि') ॥ (१८) ॥*॥ पवते । 'पूङ्यजोः शानन्' (३।२।१२८) । 'आने मुक्' (७।२।८२) ॥ (१९) ॥*॥ प्रकृष्टं भनक्ति । 'भञ्जो आमर्दने' (रुधा० प० अ०) युच् (उ० २।७८) ॥ (२०) ॥*॥ विंशतिः **'वातस्य'** ॥

**प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ॥ ६३ ॥**
**शरीरस्था इमे**

**(प्राण इति ॥)** प्रसरणेन, अपसरणेन, समन्तात्, ऊर्ध्वेन व्याप्त्या च अनित्यनेन । 'हलश्च' (३।३।१२१) इति घञ्–इति मुकुटः । अन्ये तु—प्राणयति, अपानयति, समन्तादानयति । आनयतेः । (ण्यन्तात् 'अन प्राणने' (अ० प० से०) इत्यस्मात्) डः (वा० ३।२।१०१) अच् (३।१।१३४) वा–इत्याहुः । इमे प्राणादयः शरीरस्था वायवः । तत्र 'हृदि प्राणो, गुदेऽपानः, समानो नाभिसंस्थितः । उदानः कण्ठदेशे स्याद्, व्यानः सर्वशरीरगः । अन्नप्रवेशनं मूत्राद्युत्सर्गोऽन्नविपाचनम् । भाषणादिनिमेषादि तद्व्यापाराः क्रमादमी । प्राणः' इत्यत्र 'अनितेः' (८।४।१९) इति णत्वम् । **'प्राणो** हृन्मारुते बोले काव्यजीवेऽनिले बले । पुंलिङ्गः, पूरिते वाच्यलिङ्गः, पुंभूम्नि चासुषु' ।(**'अपानं** तु गुदे क्लीबं, पुंसि स्यात्तस्य मारुते') । **'उदानो**ऽप्युदरावर्ते वायुभेदे भुजंगमे' । (**'समानं** सत्समैकेषु त्रिषु, ना नाभिमारुते') ॥ प्रत्येकं **'देहस्थपञ्चवायूनाम्'** ॥

**रंहस्तरसी तु रयः स्यदः ।**
**जवः**

**(रंह इत्यादि ॥)** रमतेऽनेन । 'रमेर्हुक्च' (उ० ४।२१४) इत्यसुन् हुगागमश्च । रंहत्यनेन वा । 'रहि गतौ' (भ्वा० प० से०) । असुन् (उ० ४।१८९) ॥ (१) ॥*॥ तरन्त्यनेन । 'तॄ प्लवनतरणयोः' (भ्वा० प० से०) असुन् (उ० ४।१८९)

---

१—भाष्ये तु कर्मोपपद इति पाठो दृश्यते ॥

१ वायुर्हि नभःस्वामी । तथा च वायुपुराणम्—'शब्दाकाशबलानां च वायुरीशस्तथा कृतः' इति मुकुटः ॥ २—'नशब्दः स्वागते बन्धौ वृक्षे सूर्ये च कीर्तितः' इति कोशतः नान् वृक्षान् घटयति चेष्टयते नघटः ।

॥ (२) ॥*॥रिणात्यनेन । 'री गतिरेषणयोः' ( क्र्या० प० अ० )। 'एरच्' ( ३।३।५६ ) । रयः–इति स्वामिमुकुटौ । तन्न । करणे ल्युटो बाधकस्य सत्त्वात् । तस्मात् 'पुंसि–' ( ३।३।११८ ) इति घः । रयतेऽनेन वा । 'रय गतौ' ( भ्वा० आ० से० ) 'पुंसि–' ( ३।३।११८ ) इति घः । 'हलश्च' ( ३।३।१२१ ) इति घञि तु संज्ञापूर्वकत्वाद्वृद्ध्यभावः ॥ (३) ॥*॥ स्यन्दतेऽनेन । 'स्यदो जवे' ( ६।४।२८ ) इति घञन्तो निपातितः ॥ (४) ॥*॥ 'जु' इति सौत्रो ( ३।२।१५० ) धातुः । जवनम् । 'ऋदोरप्' ( ३।३।५७ ) । चवर्गादिः । ( '**जवो** वेगवति त्रिषु । पुंलिङ्गस्तु भवेद्वेगे चौण्ड्रपुष्पे **जवा** स्मृता' ) ॥ (५) ॥*॥ इति मुकुटः। वस्तुतस्तु रंहआदिष्वपि भावव्युत्पत्तिरेव न्याय्या ॥ पञ्च '**वेगस्य**' ॥

**अथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम् ॥ ६४ ॥**
**सत्वरं चपलं तूर्णमविलम्बितमाशु च ।**

( **अथेति** ॥ ) रंहआदयः सवेगगतिवचनाः । शीघ्रादयस्तु धर्मवचना एव । अतएव 'शीघ्रं पचति' इति प्रयोगः, न तु 'जवं पचति' इति–इति वदन्ति । वस्तुतस्तु रंहःप्रभृतयो वेगाख्यगुणपराः, शीघ्रादयस्तु कालाल्पत्वपराः–इति । शिङ्घति व्याप्नोति । 'शिघि आघ्राणे' ( भ्वा०प०से० ) । 'शीघ्रादयश्च' (?) इति रगन्तो निपातितः । ( '**शीघ्रं** नलदे चक्राङ्गे क्लीबं द्रुतगतौ त्रिषु' ) ॥(१) ॥*॥ त्वरते स्म । 'ञित्वरा संभ्रमे'(भ्वा०प०से०)। 'गत्यर्थाकर्मक–' ( ३।४।७२ ) इति कर्तरि क्तः । 'रुष्यमत्वरसंघुषास्वनाम्' ( ७।२।२८ ) इति वेट् । ( '**त्वरितं** वेगतद्वतोः' ) ॥ (२) ॥*॥ इडभावे **तूर्णम्** । 'ज्वरत्वर–' ( ६।४।२० ) इत्यूठ् । 'रदाभ्याम्–' ( ८।२।४२ ) इति नत्वम् । 'रषाभ्याम्–' ( ८।४।१ ) इति णत्वम् ॥ (९) ॥*॥ 'लघि गतौ' ( भ्वा० आ० से० ) लङ्घते । 'लङ्घिबंह्योर्नलोपश्च' ( उ० १।२९ ) इति कुः, नलोपश्च ।—'लघि शोषणे' ( भ्वा० प० से० )–इति तु मुकुटस्य प्रमादः । ( '**लघु**रगुरौ च मनोज्ञे निःसारे वाच्यवत्क्लीबम् । शीघ्रे च कृष्णागुरुणि स्पृक्कानामौषधौ तु स्त्री' ) ॥*॥ ( 'वालमूललघ्वलमङ्गुलीनां वा लो रमापद्यते' ) ( वा० ८।२।१८ ) इति रत्वपक्षे '**रघु**' इत्यपि । 'वरुणस्य रघुस्यदः' इति प्रयोगात् ॥ (३) ॥*॥ क्षिपति । 'क्षिप प्रेरणे' ( तु० उ० अ० ) । 'स्फायितञ्चि–' ( उ० २।१३ ) इति रक् ॥ (४) ॥*॥ ऋच्छति, इयर्ति वा । 'ऋ गतौ' ( भ्वा०, जु० प० अ० ) । पचाद्यच् ( ३।१।१३४ ) । '**अरम**ङ्गे रथाङ्गस्य शीघ्रशीघ्रगयोरपि' इति शाश्वतः । 'अलम्' इत्यव्ययस्य 'वालमूल–' ( वा० ८।२।१८ ) इत्यादिना रेफपक्षे तु 'अरम्' इत्यव्ययमपि ।—अप् ( ३।३।५७ ) बाहुलकात् क्लीबत्वम्–इति मुकुटस्य प्रमादः । बाहुलकस्यागतिकगतित्वात् । अत्र तूक्तगतेः सत्त्वात् । एतेन स्वाम्युक्तिरपि परास्ता ॥ (५) ॥*॥ द्रवति स्म । 'द्रु गतौ' ( भ्वा० प० अ० ) । 'गत्यर्था–' ( ३।४।७२ ) इति कर्तरि क्तः । ( 'अथ **द्रुतं** त्रिषु । शीघ्रे विलीने विद्राणे' ) । यत्तु—भावे क्तः–इति मुकुटेनोक्तम् । तन्न । त्वरितमित्यादावपि तथात्वप्रसङ्गात् । वैषम्ये बीजाभावात् । एतेन 'लङ्घयते' इति कर्मव्युत्पत्तिरपि परास्ता ॥ (६) ॥*॥ सह त्वरया वर्तते ॥ (७) ॥*॥ चोपति । 'चुप मन्दायां गतौ' ( भ्वा० प० से० ) । 'चुपेरच्चोपधायाः' ( उ० १।१११ ) इति कलः प्रत्ययः । ( '**चपलः** पारदे मीने चोरके प्रस्तरान्तरे । **चपला** कमला विद्युत्पुंश्चलीपिप्पलीषु च ॥ नपुंसकं तु शीघ्रे स्याद्वाच्यवत्तरले चले' ) ॥ (८) ॥*॥ विलम्बते स्म । 'लबि अवस्रंसने' ( भ्वा० आ० से० ) । अकर्मकत्वात् ( ३।४।७२ ) कर्तरि क्तः । नञ्समासः ।—भावे क्तः–इति मुकुटस्तु पूर्ववत् ॥ (१०) ॥*॥ अश्नुते । 'अशू व्याप्तौ' ( स्वा०आ०से० )। 'कृवापाजि–' ( उ० १।१ ) इत्युण् । '**आशु**स्तु व्रीहिशीघ्रयोः' ॥ (११) ॥*॥ एकादश '**शीघ्रस्य**' ॥

**सततानारताश्रान्तसंततविरतानिशम् ॥ ६५ ॥**
**नित्यानवरताजस्रमपि**

( **सततेत्यादि** ॥ ) संतन्यते स्म । 'तनु विस्तारे' ( त० उ० से० ) । क्तः ( ३।४।७२ ) । 'अनुदात्तोपदेश–' ( ६।४।३७ ) इति नलोपः । 'समो वा हिततततयोः' ( वा० ६।१।१४४ ) इति वा समो मलोपः ॥ (१) ॥*॥ पक्षे संततम् ॥ (४) ॥*॥ आङ्पूर्वो रमिर्विरामे । अविद्यमानमारतं यस्मिन् ॥ (२) ॥*॥ 'श्रमु तपसि खेदे च' ( दि० प० से० ) । भावे क्तः ( ३।३।११४ ) 'अनुनासिकस्य–' ( ६।४।१५ ) इति दीर्घः । अविद्यमानं श्रान्तमत्र ॥ (३) ॥*॥ नास्ति विरतमस्य ॥ (५) ॥*॥ निशाव्यापाराराहित्यमुपचारात् । नास्ति निशास्मिन् ॥ (६) ॥*॥ नियमेन भवम् । 'त्यब्नेर्ध्रुवे' (वा० ४।२।१०४) ( '**नित्यं** स्यात्संततेऽपि च । शाश्वते त्रिषु' ) ॥ (७) ॥*॥ नास्त्यवरतं यत्र ॥ (८) ॥*॥ न जस्यति । 'जसु मोक्षणे' ( दि०प०से० ) । 'नमिकम्पि–' ( ३।२।१५७ ) इति रः ॥*॥ सततम्, अजस्रम्, शब्दावव्ययावपि नित्यपर्यायौ स्तः । '**शश्वदभीक्ष्णं नित्यं सदा** सततमजस्रमिति सातत्ये' इत्यव्ययप्रकरणे आपिशलेः ॥ (९) ॥*॥ नव '**निरन्तरस्य**'[2] ॥

**अथातिशयो भरः ।**
**अतिवेल-भृशात्यर्थातिमात्रोद्गाढ-निर्भरम् ॥ ६६ ॥**
**तीव्रैकान्त-नितान्तानि गाढ-बाढ-दृढानि च ।**

( **अथेति** ॥ ) सततं क्रियान्तरैरव्यवधानम्, अतिशयस्तु पौनःपुन्यम्, इति भेदः । अतिशेते । पचाद्यच् ( ३।१।१३४ ) यद्वा अतिशयनम् । 'एरच्' ( ३।३।५६ ) भावे[1] ।—अतिशेतेऽभिभवत्यनेन । अतिपूर्वाच्छीङः 'एरच्' ( ३।३।५६ ) इति मुकुटः । तन्न । ल्युट्प्रसङ्गात् । 'भरः पूर्णता' इति स्वव्याख्यानविरोधाच्च ॥ (१) ॥*॥—'भृ भर्त्सने' ( क्र्या०

१—भावे क्तः ( ३।३।११४ ) इति मुकुटः ॥ २—निरन्तरक्रियाकरणस्येति मुकुटः ॥

प० से० )। करणे 'ऋदोरप्' ( ३।३।५७ )–इति स्वामिमुकुटौ । तन्न । ल्युटा बाधप्रसङ्गात्। भरति। 'भृ भरणे' ( भ्वा० उ० अ० )। पचाद्यच् ( ३।१।१३४ ) । यद्वा–'भरणम्। 'पुंसि–' ( ३।३।११८ ) इति घः, अप् ( ३।३।४५ ) वा ॥ (२) ॥*॥ उपसर्गान्तरनिवृत्त्यर्थं 'निर्भरः' इत्युक्तम् ॥*॥ अतिक्रान्तं वेलां मर्यादाम् । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' ( वा० २।२।१८ ) इति समासः ॥ (३) ॥*॥ भृंशते । 'भृशु भ्रंशु अधःपतने' (?) अन्तर्भावितण्यर्थात् 'इगुपध–' ( ३।१।१३५ ) इति कः। भृशम् ॥ (४) ॥*॥ अर्थो निवृत्तिर्विषयो वा, तमतिक्रान्तम् अत्यर्थम् ॥ (५) ॥*॥ मात्रा स्तोकम्, तामतिक्रान्तम् । 'गोस्त्रियोः–' ( १।२।४८ ) इति ह्रस्वः ॥ (६) ॥*॥ उद्गाहते स्म। 'गाहू विलोडने' ( भ्वा० आ० से० ) । क्तः ( ३।४।७२ ) ॥ (७) ॥*॥ निःशेषेण भरोऽत्र ॥ (८) ॥*॥ तीवति। 'तीव स्थौल्ये' ( भ्वा०प०से०। दन्त्योष्ठ्यान्तः )। बाहुलकाद् रक् ( उ० ) ॥ ( ९ ) ॥*॥ एकोऽन्तो निश्चयोऽत्रेति ॥ ( १० ) ॥*॥ नितामयति स्म। 'तमु काङ्क्षायाम्' ( दि० प० से० ) । अकर्मकत्वात् कर्तरि क्तः ( ३।४।७२ )। 'अनुनासिकस्य–' ( ६।४।१५ ) इति दीर्घः ॥ ( ११ ) ॥*॥ गाढमुद्गाढवत् ॥ ( १२ ) ॥*॥ 'बाहृ प्रयत्ने' ( भ्वा० आ० से० ) । 'क्षुब्धस्वान्त–' ( ७।२।१८ ) इति निपातितम्। ( 'बाढं भृशप्रतिज्ञयोः' ) ॥ ( १३ ) ॥*॥ 'दृह दृहि वृद्धौ' ( भ्वा० प० से० )। 'दृढः स्थूलबलयोः' ( ७।२।२७ ) इति निपातितम्। ( 'दृढः स्थूले भृशे शक्ते' ) ॥ (१४) ॥*॥ चतुर्दश '**अतिशयस्य**' ॥

**क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां सत्त्वगामि यत् ६७**

**( क्लीब इति ॥ )** शीघ्रादिदृढपर्यन्तं क्रियाविशेषणत्वाददृव्ये वर्तमानं क्लीबे स्यात्। यथा शीघ्रं जुहोति, सततं भुङ्क्ते। एषां मध्ये यत् सत्त्वगामि द्रव्यगामि तत् त्रिषु वाच्यलिङ्गम् इत्यर्थः । शीघ्रा जरा, शीघ्रो मृत्युः, शीघ्रं वयः, इत्यादि। अतिशयभरयोरसत्त्ववचनत्वेऽपि पुंस्त्वमेव । पुंलिङ्गेन निर्देशात् । 'गाढैकान्तनितान्तानि पुमानतिशयो भरः' इति रभसाच्च। 'अतिशयं पचति' इति प्रयोगस्तु क्रियाविशेषणत्वात्कर्मत्वेन **द्वितीयया।** क्लीबता तु न, नियतलिङ्गत्वात्। शीघ्रादीनामनियतलिङ्गानां हि क्रियाविशेषणत्वे क्लीबता, न तु नियतलिङ्गानाम्। क्वचिद् '**मेघगामि**' इति पाठः तस्य विशेष्यगामीत्यर्थः ॥

१—भृंशयतीति युक्तम्, अस्य दिवादिष्वेवोपलभ्यमानत्वात् ॥

२—जवादीनां शीघ्रादीनां चापरं भेदमाह । क्लीब इत्यादि। कलिङ्गस्त्वाह—तत्र सत्त्वगामिनः शीघ्रपर्याया आशुशब्दरहिताः सततपर्याया अनिशाजस्ररहिताः, अतिशयपर्याया अतिशयभररहिताः, इति ॥ तत्राशुशब्दवर्जनमसम्यक् । तथा च—कालिदासः—'मेरुमेत्य मरुदाशुवाहनः' इति । अत आशुशब्दोऽपि त्रिष्वित्यन्ये। एवम् अनिशशब्दस्यापि त्रिलिङ्गतां कोऽपि मन्यते इति सर्वधरः–इत्यपि मुकुटः ॥

**कुबेरस्त्र्यम्बकसखो यक्षराड्गुह्यकेश्वरः।**
**मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥ ६८ ॥**
**किंनरेशो वैश्रवणः पौलस्त्यो नरवाहनः।**
**यक्षैकपिङ्गैडविडश्रीदपुण्यजनेश्वराः ॥ ६९ ॥**

**(कुबेर इत्यादि ॥)** कुत्सितं बेरं शरीरमस्य। कुष्ठित्वात्। कुत्सायां क्विपि शब्दोऽयं शरीरं बेरमुच्यते। 'कुबेरः कुशरीरत्वान्नाम्ना तेनैव सोऽङ्कितः' इति वायुपुराणम् । यद्वा—कुम्बति धनम् । 'कुबि आच्छादने' ( भ्वा० प० से० )। 'कुम्बेर्नलोपश्च' ( उ० १।५९ ) इत्येरक् ॥ (१) ॥*॥ त्र्यम्बकस्य सखा। 'राजा–' ( ५।४।९१ ) इति टच् ॥ (२) ॥*॥ यक्षेषु राजते। 'सत्सू–' ( ३।२।६१ ) इति क्विप् ॥ (३) ॥*॥ गुह्यं कायति । 'आतोऽनुप–' ( ३।२।३ ) इति कः। गुह्यकानामीश्वरः ॥ (४) ॥*॥ मनुष्यस्येव धर्मं आचारः श्मश्रुलत्वादिर्वास्य। 'धर्मादनिच् केवलात्' ( ५।४।१२४ ) ॥ (५) ॥*॥ धनं दयते। 'देङ् पालने' ( भ्वा० आ० अ० ) 'आतः' ( ३।२।४ ) इति कः ॥ (६) ॥*॥ राज्ञां यक्षाणां राजा। 'राजा–' ( ५।४।९१ ) इति टच् । 'यक्षे चन्द्रे च **राजा** स्यात्'. इति त्रिकाण्डशेषः ॥ (७) ॥*॥ धनानामधिपः ॥ (८) ॥*॥ किंनराणामीशः ॥ (९) ॥*॥ विश्रवसोऽपत्यम्। शिवादिषु ( ४।१।११२ ) विश्रवसो विश्रवणरवणावादेशौ निपातितौ अण् च ॥ ( १० ) ॥*॥ पुलस्तेर्गोत्रापत्यम्। 'गर्गादिभ्यो यञ्' ( ४।१।१०५ ) बहुत्वे पुलस्तयः।—अपत्यं गोत्रं वा–इति मुकुटः । तन्न । अनन्तरापत्ये यञोऽसंभवात् ॥ (११) ॥*॥ नरो वाहनमस्य। क्षुभ्नादित्वात् ( ८।४।३९ ) न णत्वम् ॥ ( १२ ) ॥*॥ ईं लक्ष्मीमक्ष्णोति व्याप्नोति । 'अक्षू व्याप्तौ' ( भ्वा० प० से० ) 'कर्मण्यण्' ( ३।२।१ )। यक्ष्यते। 'यक्ष पूजायाम्' ( चु० आ० से० )। 'अकर्तरि–' ( ३।३।१९ ) इति घञ् 'पुंसि–' ( ३।३।११८ ) इति घो वा। यजति शिवम्। इज्यते लोकेन वा। बाहुलकात्सो वा ॥ (१३) ॥*॥ सासूयं गौरीनिरीक्षणे वामे चक्षुषि रुद्रानुनयात्पिङ्गतामगात्। अत एकं पिङ्गमस्य ॥ ( १४ ) ॥*॥ इडविडोऽपत्यम्। 'तस्यापत्यम्' (४।१।९२ ) इत्यण् ॥*॥ डलयोरेकत्वस्मरणाद् '**पलविलः**' अपि। इलविलाया अपत्यमिति वा विग्रहः । तत्र 'अवृद्धाभ्यो नदीमानुषी–' ( ४।१।११३ ) इत्यण् । इडविलास्ति मातृत्वेनास्य। ज्योत्स्नादित्वात् ( वा० ५।२।१०३ ) अण् इति वा ॥ (१५) ॥*॥ श्रियं दयते, ददाति, वा ॥ ( १६ ) ॥*॥ पुण्यजननामीश्वरः ॥ (१७) ॥*॥ सप्तदश '**कुबेरस्य**' ॥

**अस्योद्यानं चैत्ररथम्**

**(अस्येति ॥)** उद्यान्ति अस्मिन्। 'या प्रापणे' ( अ० प०

१—'इलविला पुलस्तिभार्या'–इति मुकुटः॥

से० )। ल्युट् (३।३।११७) ॥*॥ चित्ररथेन निर्वृत्तम् 'तेन निर्वृत्तम्–' (४।२।६८) ॥ इत्यण् ॥ (१) ॥*॥ एकम् **'कुवेराक्रीडस्य'** ॥

**पुत्रस्तु नलकूवरः ।**

**(पुत्रस्त्विति ॥)** नलः कूवरो युगंधरो यस्य । त्रिकाण्डशेषे तु–'पुत्रौ तु नलकूवरौ' इत्युक्तम् । तत्तु 'नासत्यौ' इतिवदौपचारिकं बोध्यम् । नलकूवर-मणिग्रीवयोस्तत्पुत्रयोः पुराणप्रसिद्धत्वात् । 'नलकूवरमणिग्रीवाविति ख्यातौ श्रियान्वितौ' इति भागवतम् ॥ (१) ॥*॥ एकम् **'कुवेरपुत्रस्य'** ॥

**कैलासः स्थानम्**

**(कैलास इति ॥)** के जले लासो लसनमस्य । केलासः स्फटिकः । 'हलदन्तात्–' (६।३।९) इत्यलुक् । तस्यायं कैलासः । यद्वा केलीनां समूहः कैलम् । 'तस्य समूहः' (४।२।३७) इत्यण् । तेन आस्यतेऽत्र । 'आस उपवेशने' (अ० आ० से० ) । 'हलश्च' (३।३।१२१) इति घञ् ॥ (१) ॥*॥ एकम् **'कुवेरस्थानस्य'** ॥

**अलका पूः**

**(अलकेति ॥)** अलति भूषयति । 'अल भूषणादिषु' (भ्वा० प० से०) । 'कुन् शिल्पिसंज्ञयोरपूर्वस्यापि' (उ० २।३२) इति कुन् । क्षिपकादित्वात् (वा० ७।३।४५) नेत्वम् । **'अलका** कुवेरपुर्यामस्त्रियां चूर्णकुन्तले' ॥ (१) ॥*॥ एकम् **'कुवेरपुर्याः'** ॥

**विमानं तु पुष्पकम् ॥७०॥**

**(विमानमिति ॥)** पुष्यति । 'पुष्प विकसने' (दि० प० से०) । कुन् (उ० २।३२) । पुष्पमिव वा । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । 'विमानं तु पुष्पकोऽस्त्री नगरी त्वलका प्रभा' इति शब्दार्णवात् पुंस्त्वमपि । (**'पुष्पकं** रीतिपुष्पे च विमाने धनदस्य च । नेत्ररोगे तथा रत्नकङ्कणे च रसाञ्जने । लोहकांस्ये मृदङ्गारशकट्यां च नपुंसकम्') ॥ (१) ॥*॥ एकम् **'कुवेरविमानस्य'** ॥

**स्यात्किंनरः किंपुरुषस्तुरंगवदनो मयुः ।**

**(स्यादिति ॥)** किंचित् कुत्सितो वा नरः 'किं क्षेपे' (२।१।६४) इति समासः ॥ (१) ॥*॥ एवं किंपुरुषः । कुत्सा च कस्यचिन्नरमुखाश्वकायत्वात्, कस्यचिदश्वमुखनरशरीरत्वात् । 'अथ **किंपुरुषो** लोकभेदकिंनरयोः पुमान्' ॥ (२) ॥*॥ तुरंगस्येव वदनमस्य ॥ (३) ॥*॥ मिनोति । 'डुमिञ् प्रक्षेपणे' (स्वा० उ० अ० ) । 'भृमृशीङ्–' (उ० १।७) इत्युः । 'मीनाति–' (६।१।५०) इत्यात्वं तु बाहुलकान्न । (**'मयुर्मृगा**श्वमुखयोः') ॥ (४) ॥*॥ चत्वारि **'किंनरस्य'** ॥

**निधिर्ना शेवधिः**

**(निधिरिति ॥)** नितरां धीयते । धाञः (जु० उ० अ०) किः (३।३।९२) । नितरां दधाति पोषयत्यनेन । निधीयते वा । 'धि धारणे' ( तु० प० अ० ) । संपदादिः (वा० ३।३।१०८) । आगमशासनस्यानित्यत्वान्न नुक् ॥ (१) ॥*॥ शेः कल्याणे मोहे वावधिः । 'तत्पुरुषे–' (६।३।१४) इत्यलुक् । यद्वा शेतेऽनेन शेवं सुखम् । 'इण्शीभ्यां वन्' (उ० १।१५२) । शेवं धीयतेऽस्मिन् । धाञः (जु० उ० अ०) 'कर्मण्यधिकरणे च' (३।३।९३) इति किः ॥ (२) ॥*॥ द्वे **'सामान्यनिधेः'** ॥

**भेदाः पद्मशङ्खादयो निधेः ॥ ७१ ॥**

**(भेदा इति ॥)** पद्मा लक्ष्मीरस्मिन्नस्ति । अर्शआद्यच् (५।२।१२७) ॥ (१) ॥*॥ शाम्यत्यम्बु दुःखं वा ध्मातेनानेन । 'शमेः खः' (उ० १।१०२) (**'शङ्खः** कम्बौ निधेर्भेदे स्याच्छङ्ख्यामलिकास्थनि । वलने दिनभागे च नागभेदे') ॥ (१) ॥*॥ **'पद्मोऽस्त्रियां महापद्मः शङ्खो मकर-कच्छपौ । मुकुन्द-कुन्द-नीलाश्च** खर्वश्च निधयो नव' इति शब्दार्णवः ॥ **'निधिविशेषस्य'** प्रत्येकम् ॥

**इति स्वर्गवर्गविवरणम् ॥**

---

**द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् ।**
**नभोऽन्तरीक्षं गगनमनन्तं सुरवर्त्म खम् ॥ १ ॥**
**वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ।**

**(द्योदिवाविति ॥)** न बिभर्ति किंचित् । मूलविभुजादित्वात् (वा० ३।२।५) कः । यद्वा–'आपो भ्रश्यन्त्यस्मात् । अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । यद्वा–अभ्रति स्थैर्यं गच्छति । अच् (३।१।१३४) । 'अभ्र वभ्र मभ्र चर गत्यर्थाः' (भ्वा० प० से०) । यद्वा–न भ्राजते । 'भ्राजृ दीप्तौ' (भ्वा० प० से०) 'अन्येभ्योऽपि–' (३।२।१०१) इति डः । **'अभ्रं** मेघे च गगने धातुभेदे च काञ्चने' ॥ (३) ॥*॥ व्ययति । 'व्येञ् संवरणे' । 'नामन्सीमन्–' (उ० ४।१५१) इत्यादिना मन्नन्तं निपातितम् । यद्वा व्यवति । विपूर्वादवतेर्मनिन् (३।२।७५) । 'ज्वरत्वर–' (६।४।२०) इत्यूठौ । सवर्णदीर्घः (६।१।१०१) । 'सार्वधातुका–' (७।३।८४) इति गुणः । (**'व्योम** वारिणि चाकाशे भास्करस्यार्चनाश्रये') ॥ (४) ॥*॥ पुष्यति । 'पुष पुष्टौ' (दि० प० अ०) । 'पुषः कित्' (उ० ४।४) इति करच् कित्त्वं च । पुष्कं वारि राति–इति स्वामी । **'पुष्करं** गगनपद्मवारिषु' । (**'पुष्करं** द्वीपतीर्थाहिखगरागौषधान्तरे । तूर्यास्येऽसिफले काण्डे शुण्डाग्रे') ॥ (५) ॥*॥ 'अबि शब्दे' (भ्वा० आ० से०) । भावे घञ् (३।३।१८) अम्बः शब्दः तं राति । अम्बरम् । (**'अम्बरं** न द्वयोर्व्योम्नि सुगन्ध्यन्तरवस्त्रयोः') ॥ (६) ॥*॥ नह्यते

---

१–अत्र पक्षे अभ्रशब्दे बसंयुक्तो भकार इति मुकुटः ॥

मेघैः । 'णह बन्धने' ( दि० उ० अ० ) । 'नहेर्दिवि भश्च' (उ० ४।२११) इत्यसुन् भश्चान्तादेशः । न बभस्तीति वा क्विप् (३।२।१७८) । नभते । 'णभ हिंसायाम्' (भ्वा० आ० से०) । असुन् (उ० ४।१८९) । सान्तम् । '**नभः** क्लीबं व्योम्नि पुमान् घने । घ्राणश्रावणवर्षासु बिसतन्तौ पतद्ग्रहे' । '**नभो** व्योम्नि **नभा** मेघे श्रावणे च पतद्ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च **नभाः** स्मृतः' इति विश्वः ॥*॥ 'अत्यविचमितमि–' (उ० ३।११७) इत्यसच्प्रत्यये तु नभसमदन्तमपि । नभसः पुंसि–इत्युणादिवृत्तौ । ('**नभसस्तु** नदीपतौ । गगने प्रावृषि') ॥ (७) ॥*॥ द्यावापृथिव्योरन्तरीक्ष्यते । 'ईक्ष दर्शने' (भ्वा० आ० से०) । कर्मणि घञ् (३।३।१९) । वेदे तु छान्दसं ह्रस्वत्वम् । अन्तर् ऋक्षा (णि नक्षत्रा) ण्यस्य । पृषोदरादित्वात् (६।३।१०९) इत्वम् । अस्मिन् पक्षे '**अन्तरिक्षम्**' इति ह्रस्वमध्यः । अधिकरणव्युत्पत्तिस्तु नोचिता । ल्युटा घञो बाधप्रसङ्गात् ॥ (८) ॥*॥ गच्छन्त्यनेनास्मिन्वा । 'गमेर्गश्च' (उ० २।७७) इति युच् गश्चान्तादेशः ॥ (९) ॥*॥ नास्त्यन्तो यस्य । ('**अनन्तः** केशवे शेषे पुमाननवधौ त्रिषु । **अनन्ता** च विशल्यायां शारिवादूर्वयोरपि ॥ कणा दुरालभापथ्यापार्वत्यामलकीषु च । विश्वंभरागुडूच्योः स्यादनन्तं सुरवर्त्मनि') ॥ (१०) ॥*॥ सुराणां वर्त्म ॥ (११) ॥*॥ खन्यते । 'खनु अवदारणे' (भ्वा० उ० से०) । डः (वा० ३।२।१०१) '**खं** खः संविदि व्योमनीन्द्रिये । शून्ये बिन्दौ मुखे खस्तु सूर्ये' इति हैमः । खर्वत्यस्मिन् वा । 'खर्व गतौ' (भ्वा० प० से०) । डः (वा० ३।२।१०१) ॥ (१२) ॥*॥ वि विश्वत इति व्याप्नोति । इणः (अ० प० अ०) शतृ (३।२।१२४) । वियच्छति न विरमति वा । विपूर्वाद्यमेः (भ्वा० प० अ०) 'अन्येभ्योऽपि–' (३।२।७५) इति क्विप् । 'कौ च गमादीनाम्' (वा० ६।४।४०) इति मलोपे तुक् (६।१।७१) ॥ (१३) ॥*॥ विष्णोः पदम् आस्पदम् स्वरूपं वा । विष्णोः पदं क्रमोऽत्र–इति स्वामी । तन्न । व्यधिकरणबहुव्रीहिप्रसङ्गात् । ('**विष्णुपदं** नभोऽब्जयोः । **विष्णुपदस्तु** क्षीरोदे **विष्णुपदी** सुरापगा । संक्रान्तिर्द्वारिका चापि') ॥ (१४) ॥*॥ आ समन्तात् काशन्ते सूर्यादयोऽत्र । 'काशृ दीप्तौ' (भ्वा० आ० से०) । 'हलश्च' (३।३।१२१) इति घञ् ॥ (१५) ॥*॥ विशेषेण हापयति गमयति विमानादीन् । 'हय गतौ' (भ्वा० प० से०) । ण्यन्ताद् असुन् (उ० ४।१८९) । विजहाति भुवं वा 'वहिहाधाञ्भ्यश्छन्दसि' (उ० ४।२२१) इत्यसुन् । णिदित्यस्यानुवृत्तेर्युक् (७।३।३३) ।—विपूर्वाज्जहातेर्बाहुलकादसुन्–इति मुकुटः । तन्न । असुनो धातुमात्रात् (उ० ४।१८९) विहितत्वेन बाहुलकस्यानुपयोगात् । यकारस्याश्रवणप्रसङ्गाच्च ॥ (१६) ॥*॥ 'वा तु पुंसि–' इति तुशब्दादुत्तरान्वयि । तेन आकाशः, विहायाश्च । 'विदुर्विहायसं व्योम पक्षिणश्च विहायसः' इति शाश्वतः । '**विहायाः** शकुनौ पुंसि गगने पुंनपुंसकम्' ॥ षोडश '**आकाशस्य**' ॥

**इति व्योमवर्गविवरणम् ॥**

---

**दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ।**

(**दिश इति ॥**) दिशत्यवकाशम् । 'दिश अतिसर्जने' (तु० उ० अ०) क्विन् 'ऋत्विग्दधृक्–' (३।२।५९) इत्यादिना निपातनात् । यत्तु—मुकुटः कर्मण्येव क्विन्, कर्तरि तु क्विबेव–इत्याह । तन्निर्मूलम्, आकरविरुद्धं च ॥*॥ भागुरिमतेन टापि **दिशा** । 'दिक् तु स्त्रियां **दिशा दान्ती** ककुब् **देववधूः पविः**' इति शब्दार्णवः ॥ (१) ॥*॥ ककते । 'कक लौल्ये' (भ्वा० प० से०) बाहुलकादुभ् प्रत्ययः । यद्वा—कं वातं स्कुभ्नाति विस्तारयति । 'स्कुभु' इति सौत्राद्धातोः क्विप् (३।२।१७८) । पृषोदरादित्वात् (६।३।१०९) सलोपः । '**ककुप्** स्त्रियां प्रवेणीदिक्शोभासु चम्पकस्रजि' ।—केनादित्येन जलेन वा कुत्सितानि भानि नक्षत्राण्यत्रेति टाबन्तोऽपि इति कश्चित् । तन्न । व्यधिकरणबहुव्रीहिप्रसङ्गात् ॥ (२) ॥*॥ काशते । 'काशृ दीप्तौ' (भ्वा० आ० से०) । 'हनिकुषि–' (उ० २।२) इति क्थन् । ('**काष्ठा** दारुहरिद्रायां कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम्') ॥ (३) ॥*॥ आ समन्ताद् अश्नुते व्याप्नोति । 'अशू व्याप्तौ' (स्वा० आ० से०) । अच् (३।१।१३४) । ('**आशा** तृष्णादिशोः स्त्रियाम्') ॥ (४) ॥*॥ हरन्ति नयन्त्यनया । 'हृसृरुहियुषिभ्य इतिः' (उ० १।९७) । 'हरिद्दिशि स्त्रियां पुंसि हयवर्णविशेषयोः । अस्त्रियां स्यात्तृणे' ॥ (५) ॥*॥ ता इत्यनेन स्त्रीत्वं व्यनक्ति । दिशां बहुत्वाद्बहुवचनम् ॥ पञ्च '**दिशः**' ॥

**प्राच्यपाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः ॥ १ ॥**
**उत्तरा दिगुदीची स्यात्**

(**प्राच्येति ॥**) प्राथम्ये प्रशब्दोऽत्र । प्राञ्चति प्राप्नोति सूर्यम् । 'अञ्चु गतिपूजनयोः' (भ्वा० प० से०) । 'ऋत्विग्–' (३।२।५९) इत्यादिना क्विन् प्रत्ययः । प्राञ्चति रविरस्याम् । बाहुलकादधिकरणे क्विन्–इति मुकुटः । तन्न । बाहुलकस्यागतिकगतित्वात् । एवमग्रेऽपि बोध्यम् ॥ (१) ॥*॥ अह्नो मध्येऽञ्चत्यस्याम् । अपाची । 'अप' इत्यव्ययं मध्यार्थेऽपदिशमितिवत् । अपाञ्चति सूर्यम्–इत्युचितम् । कर्तरि कृद्विधानात् । अवाची–इत्यपपाठ एव । अवपूर्वस्याञ्चतेरधोमुखीभावे वृत्तेः । स्वामी त्ववशब्दस्य मध्यार्थतामाह ॥ (१) ॥*॥ प्रति पश्चाद् दिनान्तेऽञ्चति सूर्यम् । सूर्योऽस्याम्–इति तु दुष्टम् ॥ (१) ॥*॥ पूर्वदक्षिणेत्यत्र 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' (वा० ५।३।२८) । उद् ऊर्ध्वं तरन्त्यत्र । 'तॄ प्लवनसंतरणयोः' (भ्वा० प० से०) 'ऋदोरप्' (३।३।५७) । ('**उत्तरा** दिग्विशेषे च स्नुषायामर्जुनस्य च') ॥*॥ उत्

उत्तरमक्षत्सर्कम् । उत्क्रान्तं दृष्टिपथमश्नति सूर्यं वा । अश्यामिति तु न युक्तम् । 'उद ईत्' ( ६।४।१३९ ) इत्यश्नतेरत ईकारः ॥ (१) ॥*॥ प्रत्येकं द्वे द्वे **'चतसृणाम्'** ॥

**दिश्यं तु त्रिषु दिग्भवे ।**

**( दिश्यमिति ॥ )** दिशि भवं दिश्यम् । 'दिगादिभ्यो यत्' ( ४।३।५४ ) ॥ (१) ॥*॥ एकं **'दिग्भवस्य'** ॥

**इन्द्रो वह्निः पितृपतिर्नैरृतो वरुणो मरुत् ॥ २ ॥**
**कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ।**

**( इन्द्र इति ॥ )** एवं च प्राच्यादीनामैन्द्रीत्यादिनामानि । इन्द्रादीनां प्राचीपतिरित्यादीनि नामानीति भावः ॥

**ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ॥ ३ ॥**
**पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ।**

**( ऐरावत इत्यादि ॥ )** पुण्डरीकवर्णयोगात् । अर्शआद्यच् ( ५।२।१२७ ) । ( **'पुण्डरीकं** सिताम्बुजे । सितच्छत्रे भेषजे च **पुण्डरीकोऽ**ग्निदिग्गजे ॥ सहकारे गणधरे राजिलाहौ गजज्वरे । कोषकारान्तरे व्याघ्रे' ) (१) ॥*॥ खर्वत्वाद्वामनः । ( **'वामनो**ऽप्यतिखर्वे च त्रिषु पुंसि तु दिग्गजे । हरावङ्कोटवृक्षे' ) ॥ (१) ॥*॥ कुमुदं रक्तोत्पलं तत्तुल्यवर्णत्वात् । **'कुमुदं** कैरवे रक्तपद्मे स्त्री कुम्भिकोषधौ । गम्भार्यां पुंसि दिङ्नागे नागे शाखामृगान्तरे' । कौ मोदते वा । 'इगुपध–' इति कः । 'मुद हर्षे' ( भ्वा० आ० से० ) ।—'मूलविभुज–' ( वा० ३।२।५ ) इति कः—इति मुकुटः । तन्न । अनुपयोगात् ॥ (१) ॥*॥ अञ्जनवर्णत्वात् अञ्जनः । ( **'अञ्जनं** कज्जले चार्कौ सौवीरे च रसाञ्जने । पुंसि ज्येष्ठादिग्गजयोरञ्ज**ना** वानरीभिदि । **अञ्जनी** लेप्यनार्यां च' ) ॥ (१) ॥*॥ पुष्पमिव दन्ता यस्य । ( **'पुष्पदन्तस्तु** दिङ्नागभेदे विद्याधरान्तरे' ) ॥ (१) ॥*॥ सर्वस्यां भूमौ विदितः । 'तत्र विदितः' ( ५।१।४३ ) इत्यण् । अनुशतिकादिः ( ७।३।२० ) । ( **'सार्वभौमस्तु** दिग्गजे चक्रवर्तिनि' ) ॥ (१) ॥*॥ शोभनाः प्रतीका अवयवा यस्य । **'सुप्रतीको** दिगीशेभे शोभनावयवे त्रिषु' ॥ (१) ॥*॥ दिक्षु विख्याता गजाः । दिगीशा गजा इति वा । 'शाकपार्थिवादिः' ( २।१।६९ ) ॥ **'इन्द्रादिगजानाम्'** एकैकम् ॥

**करिण्योऽभ्रमु-कपिला-पिङ्गलानुपमाः क्रमात् ॥४॥**
**ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती ।**

**( करिण्य इति ॥ )** अभ्र अकाश एव माति । 'मा माने' ( अ० प० अ० ) । मित्रय्वादित्वात् ( उ० १।३७ ) कुः न भ्राम्यति । 'मृतृचरि–' ( उ० १।७ ) इत्युः । मन्थरगामिनीत्यर्थ इति वा ॥ (१) ॥*॥ कपिलपिङ्गलवर्णत्वात्कपिलापिङ्गले । ( **'कपिला** रेणुकायां च शिंशपा गोविशेषयोः । पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम् ॥ नानले वासुदेवे च मुनिभेदे च कुकुरे' ) । ( **'पिङ्गलो** नागभिद्रुद्रचण्डांशुपारिपार्श्वके । निधिभेदे कपावग्नौ पुंसि स्यात्कपिलेऽन्यवत् ॥ स्त्रियां वेश्याविशेषे च करिण्यां कुमुदस्य च । नाडीभेदे कर्णिकायाम्' ) ॥ (१) ॥*॥ श्रेष्ठत्वान्नास्त्युपमास्याः । ( **'अनुपमस्तु** भवेदयम् । उपमारहितेऽनुपमेभ्याम्' ) ॥ (१) ॥*॥ ताम्रौ कर्णौ यस्याः । 'पाककर्ण–' ( ४।१।६४ ) इत्यादिना ङीष् । 'नासिको–' ( ४।१।५५ ) इति वा ॥ (१) ॥*॥ शुभ्रौ दन्तावस्याः । 'नासिकोदरौष्ठ–' ( ४।१।५५ ) इति ङीष् । ( **'शुभ्रदन्ती** सुदन्त्यां स्यात्पुष्पदन्तेभयोषिति' ) । **शुभदन्ती** इति वा पाठः । शुभौ दन्तावस्याः ॥ (१) ॥*॥ अङ्गति । 'अगि गतौ' ( भ्वा० प० से० ) । युच् ( उ० २।७८ ) । कल्याणान्यङ्गान्यस्याः इति वा । 'अङ्गात्कल्याणे' ( ग० ५।२।१०० ) इति नः ॥ (१) ॥*॥ अञ्जनवर्णत्वादञ्जनमस्त्यस्याः । 'मतौ बह्वचः–' ( ६।३।११९ ) इति दीर्घः ॥ (१) ॥*॥ क्रमेण **'ऐरावतादीनां हस्तिनीनां'** एकैकम् ॥

**क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम् ॥५॥**

**( क्लीबेति ॥ )** क्लीबाव्ययमिति कर्मधारयोऽव्ययीभावत्वसूचनार्थः । 'अव्ययीभावश्च–' ( १।१।४१, २।४।१८ ) इति सूत्राभ्यां क्लीबत्वाव्ययत्वयोर्विधानात् । तेन 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' ( २।४।८३ ) इत्यादिप्रवृत्तिः । 'अप' इति मध्यवाची । शरदादित्वात् ( ५।४।१०७ ) टच् । आवन्तेन समासे तु टज्नापेक्षितः ।—दिशोरिदमपदिशम्, विभक्त्यर्थेऽव्ययीभावः—इति स्वामी । तन्न । संबन्धमात्रस्य विभक्त्यर्थत्वेऽपि मध्यस्य तदर्थत्वाभावात् ॥ (१) ॥*॥ दिग्भ्यां विनिर्गता । **विदिक्** शान्ता ॥*॥ सैव **प्रदिक्** । 'याम्यासामन्तरालानि **प्रदिशो** विदिशश्च ताः' इत्यमरमाला ॥ (२) ॥*॥ द्वे **'अग्न्यादिकोणस्य'** ॥

**अभ्यन्तरं त्वन्तरालम्**

**( अभ्यन्तरमिति ॥ )** अभिगतमन्तरम् ॥ (१) ॥*॥ अन्तरं लाति । 'आतोऽनुप–' ( ३।२।३ ) इति कः । 'अन्येषामपि–' ( ६।३।१३७ ) इति दीर्घः । आङ्प्रश्लेषो वा । मूलविभुजादित्वात् ( वा० ३।२।५ ) कः ॥२॥*॥ द्वे **'मध्यमात्रस्य'** ॥

**चक्रवालं तु मण्डलम् ।**

**( चक्रेति ॥ )** चक्राकारेण वलते । 'वल संवरणे' ( भ्वा० आ० से० ) । अच् ( ३।१।१३४ ) । 'अन्येषामपि–' ( ६।३।१३७ ) दीर्घः । यद्वा—भावे घञि वालः । चक्रमिव वालो यस्य । यद्वा—चक्राकारेण वाडते । 'वाडृ आप्लाव्ये' ( भ्वा० आ० से० ) अच् ( ३।१।१३४ ) चक्रवाडम् । डलयोरेकत्वस्मरणाच्चक्रवालम् । ( **'चक्रवालोऽ**द्रिभेदे स्याच्चक्रवालं

१—ऋषभदेवे ॥ २—इक्षुविशेषे ॥ ३—'अञ्जनः' इत्युत्तरं अञ्जनवद्वर्णोऽस्य । यद्वा—अनक्ति 'अञ्जू व्यक्त्यादौ' । ल्युः 'युट् वा' इत्यधिकः पाठः पुस्तकान्तरे ॥

तु मण्डले' ॥ (१) ॥*॥ मण्डयति । 'मडि भूषायाम्' (चु० प० से० )। वृषादित्वात् (उ० १।१०६) कलच् । मण्डं भूषां लाति-इति वा । ('मण्डलं देशबिम्बयोः । भुजंगभेदे परिधौ शुनि द्वादशराजके । संघाते कुष्ठभेदे च') ॥ (२) ॥*॥ द्वे 'मण्डलाकारेण परिणतसमूहस्य' ॥

**अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ॥ ६ ॥**
**धाराधरो जलधरस्तडित्वान्वारिदोऽम्बुभृत् ।**
**घन-जीमूत-मुदिर-जलमुग्धूमयोनयः ॥ ७ ॥**

(अभ्रमित्यादि ॥) अपो बिभर्ति । मूलविभुजादित्वात् (३।२।५) कः । अभ्रति । 'अभ्र गतौ' (भ्वा० प० से० )। अच् (३।१।१३४)। न भ्रश्यन्त्यापो यस्मात् । 'भ्रंशु अधःपतने'। 'अन्येभ्योऽपि-' (वा० ३।२।१०१) इति डः-इति वा । 'अभ्रं मेघे च गगने धातुभेदे च काञ्चने' ॥ (१) ॥*॥ मेहति । 'मिह सेचने' (भ्वा० प० से० )। अच् (३।१।१३४)। न्यङ्क्वादित्वात् (७।३।५३) कुत्वम् । 'मेघो मुस्ताजलदयोः पुमान्' ॥ (२) ॥*॥ वारि वहति । 'कर्मण्यण्' (३।२।१) ॥ (३) ॥*॥ स्तनयति । 'स्तनगदी देवशब्दे' (चु० उ० से० ) चुरादावदन्तः । 'स्तनिहृषि-' (उ० ३।२९) इतीत्नुच् । 'अयामन्ता-' (६।४।५५) इति णेरय् ॥ (४) ॥*॥ वारिवाहकः । पृषोदरादिः (६।३।१०९)। बलाकाभिर्हीयते गम्यते । 'ओहाङ् गतौ' (जु० आ० अ० )। कर्मणि कुन् (उ० २।३७)। पृषोदरादिः (६।३।१०९)। बलेन हीयते आहायते वा । कुन् (उ० २।३७)। ('बलाहको गिरौ मेघे दैत्यनागप्रभेदयोः') ॥ (५) ॥*॥ धाराणां जलस्य च धरः । 'धाराधरोऽसिमेघयोः' ॥ (६) ॥*॥ (जलधरस्तोयधरादीनामप्युपलक्षणम् । 'तोयधरो मुस्तासुनिषण्णौषधीघने') ॥ (७) ॥*॥ तडितः सन्त्यस्मिन् । मतुप् (५।२।९४)। 'झयः' (८।२।१०) इति वत्वम् ॥ (८) ॥*॥ वारि ददाति । 'आतोऽनुप-' (३।२।३) इति कः । (जलदतोयदादीनामप्युपलक्षणम् । 'जलदो मुस्तके मेघे'। 'तोयदो मुस्तके मेघे पुमानाज्ये नपुंसकम्') ॥ (९) ॥*॥ अम्बु बिभर्ति । क्विप् (३।२।७६) ॥ (१०) ॥*॥ हन्यते वायुना । 'मूर्तौ घनः' (३।३।७७) इत्यप् कुत्वं च । ('घनं स्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः । ना मुस्ताब्दौघदार्ढ्येषु विस्तारे लोहमुद्गरे । त्रिषु सान्द्रे दृढे') ॥ (११) ॥*॥ जीवनं जलं मूतं बद्धमनेन । 'मूङ् बन्धने' (भ्वा० आ० से० ) कर्मणि क्तः (३।२।१०२, ३।४।७०)। पृषोदरादिः (६।३।१०९)। ज्यानं जीः । 'ज्या वयोहानौ' (क्र्या० प० अ० )। संपदादित्वात् (वा० ३।३।१०८)। क्विप् । जिया वयोहान्या मूतो बद्ध इति वा । ('जीमूतो वासनेऽम्बुदे । घोषकेऽद्रौ भृतिकरे') ॥ (१२) ॥*॥ मोदन्तेऽनेन । 'मुद हर्षे' (भ्वा० आ० से० )। 'इषिमदिमुदि-' (उ० १।५१) इति किरच् । 'मुदिरः कामुके मेघे' ॥ (१३) ॥*॥ जलं मुञ्चति । 'मुच्लृ मोक्षणे' (तु०उ०अ० )। क्विप् (३।२।७६) ॥ (१४) ॥*॥ धूमो योनिरस्य ॥ (१५) ॥*॥ यद्यपि शब्दार्णवे । 'मेघास्तु त्रिविधास्तत्र वह्निजा धूमयोनयः । निःश्वासजास्तु जीमूतास्ते ज्ञेया जीवरूपिणः । यज्ञजास्तु घना घोराः पुष्करावर्तकादयः' इति विशेषपरत्वमुक्तम् । तथाप्यन्यत्रापि वृत्तिर्न विरुद्धा ॥ पञ्चदश 'मेघस्य' ॥

**कादम्बिनी मेघमाला**

(कादम्बिनीति ॥) कादम्बाः कलहंसा बलाकावन्मेघमनुधावन्ति । ते सन्त्यस्याः । इनिः (५।२।११५) यत्तु ज्योत्स्नादित्वात् (वा० ५।२।१०३) अणि ङीप् (४।१।१५) इति मुकुटः । तन्न । एवं हि 'कादम्बी' इति प्रयोगप्रसक्तेः । कदम्बस्य विकासः=कादम्बोऽस्त्यस्याः कार्यत्वेनेति वा ॥ (१) ॥*॥ मेघानां माला ॥ (२) ॥*॥ द्वे 'मेघपङ्क्तेः' ॥

**त्रिषु मेघभवेऽभ्रियम् ।**

(त्रिष्विति ॥) अभ्रे भवम् । 'समुद्राभ्राद्घः' (४।४।११८) छान्दसत्वं प्रायिकम् । स्त्रियामभ्रिया ॥ (१) ॥*॥ एकम् 'मेघभवस्य' ॥

**स्तनितं गर्जितं मेघनिर्घोषो रसितादि च ॥ ८ ॥**

(स्तनितमिति ॥) 'स्तनगदी देवशब्दे' (चु०उ०से० )। 'गर्ज शब्दे' (भ्वा०, चु० प० से० )। 'रस शब्दे' (भ्वा० प० से० )। 'एभ्यो भावे क्तः' (३।३।११४) ॥*॥ मेघस्य निर्घोषः ॥ (३) ॥*॥ आदिना ध्वनित-ह्राद-रासादयः ॥ चत्वारि 'मेघध्वनेः' ॥

**शंपा शतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा ।**
**तडित्सौदामनी विद्युच्चञ्चला चपला अपि ॥ ९ ॥**

(शंपेति ॥) भयंकरत्वाच्छं सुखं पिबति । 'आतोऽनुप-' (३।२।३) इति कः । टाप (४।१।४) ॥ (१) ॥*॥ शतं ह्रादा अव्यक्ताः शब्दा यस्याः । पृषोदरादित्वात् (६।३।१०९) ह्रस्वः । शतं ह्रदा अर्चींषि, अगाधजलाशया वा । सन्त्यस्या इति वा अच् । (५।२।१२७)। ('शतह्रदा स्त्रियां वज्रे सौदामिन्यां च कीर्तिता') ॥ (२) ॥*॥ ह्रादते । आवश्यके णिनिः (३।२।७८)। ह्रादोऽस्ति यस्या वा । इनिः (५।२।११५)।

---

१—के अभ्रं बकारवदिति वैयाकरणाः—इति मुकुटः । २—इति पाराणिकाः । तदुक्तम् 'न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्यतः' इतीति स्वामिमुकुटौ । अत एव बकाररहितत्वेन 'समयावनौघनमदभ्रमराणि' इति षष्ठे माघे यमकितम्—इति मुकुटः ॥

१—'शम्बा' इति प्राच्याः शम्बयति नाशयन् तेजः-इति व्याख्यन्-इति स्वामी ॥ २—बहुव्रीहिणैव रूपसिद्धौ मत्वर्थीयप्रत्ययकरणस्य निष्प्रयोजनता ॥

'**ह्रादिनी** वज्रतडितोः' ॥ (३) ॥*॥ इरा आपः सन्त्यस्य=इरावान् मेघः । तस्येयम् । 'तस्येदम्' (४।३।१२०) इत्यण् । ऐरावतेनैकदिक् । 'तेनैदिक्' (४।३।११२) इत्यण् इति वा ॥ (४) ॥*॥ क्षणं प्रभास्याः ॥ (५) ॥*॥ ताडयति । 'तड आघाते' (चु० प० से०) । 'ताडेर्णिलुक्च' (उ० १। ९८) इतीतिः । डलयोरेकत्वात् '**तलित्**' अपि । 'दूरेचित्संतलिदिवातिरोचसे' इति मन्त्रः ॥ (६) ॥*॥ '**श्वेतद्विपः सुदामा**' इति त्रिकाण्डशेषे ऐरावतपर्यायौ । 'तेनैकदिक्' (४।३।११२) इत्यण् । 'अन्' (६।४।१६७) इति प्रकृतिभावाट्टिलोपाल्लोपौ न भवतः । 'सुदाम्नाद्रिणा–' इति वा । '**सुदामा** तु पुमान्वारिधरपर्वतभेदयोः' । सुदाम्नि मेघे भवा वा । 'सौदामिनी' इत्यपपाठः । '**सौदाम**न्यप्सरोभेदे तडित्तद्भेदयोः स्त्रियाम्' ॥ (७) ॥*॥ विशेषेण द्योतते । 'द्युत दीप्तौ' (भ्वा० आ० से०) । 'भ्राजभास–' (३। २।१७७) इति क्विप् । ('**विद्युत्तडिति** संध्यायां स्त्रियां त्रिषु तु निष्प्रभे') ॥ (८) ॥*॥ 'चञ्चु गतौ' (भ्वा० प० से०) । घञ् (३।३।१८) । चञ्चं लाति । कः (३।२।३) । '**चञ्चला** तु तडिल्लक्ष्म्योश्चञ्चलश्चपलेऽनिले' ॥ (९) ॥*॥ चोपति । 'चुप मन्दायां गतौ' (भ्वा० प० से०) । 'चुपेरच्चोपधायाः' (उ० १।१११) इति कलच् । '**चपला** कमलाविद्युत्पुंश्चलीपिप्पलीषु च । नपुंसकं तु शीघ्रे स्याद्वाच्यवत्तरले चले' ॥ (१०) ॥*॥ दश '**विद्युतः**' ॥

**स्फूर्जथुर्वज्रनिर्घोषे**

(**स्फूर्जथुरिति** ॥) स्फूर्जनं स्फूर्जथुः । 'टुओस्फूर्जा वज्रघोषे' (भ्वा० प० से०) । 'ट्वितोऽथुच्' (३।३।८९) ॥ (१) ॥*॥ वज्रनिर्घोषोऽशनिशब्दः । '**वज्रनिष्पेषे**' इति पाठे 'पिष्लृ संचूर्णने' (रु० प० अ०) घञ् (३।३।१८) । 'इदुदुपधस्य–' (८।३।४१) इति षः । निष्पेषशब्दस्तदुत्थशब्दपरः । संघट्टमात्रपरः–इत्यन्ये॥(२)॥*॥ द्वे '**वज्रध्वनेः**'॥

**मेघज्योतिरिरंमदः ।**

(**मेघेति** ॥) अन्योन्यस्य संघट्टेन मेघान्निःसृत्य वृक्षादौ ज्योतिः पतति स इरंमदः । इरया जलेन माद्यति दीप्यते । अबिन्धनत्वात् । 'उग्रंपश्येरंमद–' (३।२।३७) इति साधुः । मेघेत्युपलक्षणम् । तेन वाडवोऽपि । अत एव 'मेघाग्न्यादिरिरंमदः' इति शब्दार्णवः ॥ द्वे '**वज्राग्नेः**' ॥

१—तथाच हरिप्रबोधे 'खेऽभ्रं जगाम काञ्चनसरसमसौदाम नीलता धामास्तम् । कुवलयमिव हि सरजसं सरसमसौदामनी लताधामास्तम् । इति यमकितम्'—इति मुकुटः ॥ २—केचित्तु (स्फूर्जः) इति दीर्घं नेच्छन्ति । तेषां 'सिपि धातो रुर्वा' (८।२।७४) इत्यतो 'हलि च' (८।२।७७) वाग्रहणानुवृत्तौ व्यवस्थितविभाषाविज्ञानान्न भवतीति मैत्रेयः–इति मुकुटः ।



**इन्द्रायुधं शक्रधनुः**

(**इन्द्रेति** ॥) इन्द्रस्यायुधम् ॥ (१) ॥*॥ शक्रस्य धनुः ॥ (२) ॥*॥ द्वे '**इन्द्रधनुषः**' ॥

**तदेव ऋजु रोहितम् ॥ १० ॥**

(**तदिति** ॥) तदिन्द्रधनुरुत्पातादिना ऋजु अवक्रं सद्रोहितं स्यात् । 'रुहे रश्च लो वा' (उ० ३।९४) इतीतन् । '**रोहितं** रुधिरे धीरऋजुशक्रशरासने । **रोहितो** मीनमृगयोर्भेदे रोहितकद्रुमे' इति विश्वः । यद्वा—रोहणं रोहः संजातोऽस्येति । तारकादित्वात् (५।२।३६) इतच् ॥ (१) ॥*॥ एकम् '**ऋजोरिन्द्रधनुषः**' ॥

**वृष्टिर्वर्षम्**

(**वृष्टिरिति** ॥) वर्षणम् । 'वृषु सेचने' (भ्वा०प०से०) । 'स्त्रियां क्तिन्' (३।३।९४) ॥ (१) ॥*॥ 'अज्विधौ भयादीनामुपसंख्यानम्' (वा० ३।३।५६) इत्यचि वर्षम् । ल्युटि (३।३।११५) वर्षणमपि । नचाचा ('नपुंसके क्तादिनिवृत्त्यर्थम्' इति (३।३।५६) भाष्योक्त्या क्तस्येव) ल्युटो बाधः । 'वृषभो वर्षणात्' (पस्पशायाम्) इति भाष्यप्रयोगात् । 'अथ वृष्टिर्वर्षमस्त्री केचिदिच्छन्ति **वर्षणम्**' इति शब्दार्णवः । '**वर्षस्तु** समाद्वीपांशवृष्टिषु । वर्षवैरेऽपि **वर्षास्तु** प्रावृषि' इति हैमः ॥२॥*॥ द्वे '**वृष्टेः**' ॥

**तद्विघातेऽवग्राहावग्रहौ समौ ।**

(**तद्विघात इति** ॥) तस्या वृष्टेर्विघाते द्वौ । 'अवे ग्रहो वर्षप्रतिबन्धे' (३।३।५१) इति अवपूर्वाद्ग्रहेर्वा घञ् ॥ (१) ॥*॥ 'ग्रहवृदृनिश्चिगमश्च' (३।३।५८) इत्यपि अवग्रहः । ('**अवग्रहस्तु** ज्ञानभेदे गजालिके । प्रतिबन्धे वृष्टिरोधे') । ॥ (२) ॥*॥ द्वे '**वृष्टिविघातस्य**' ॥

**धारासंपात आसारः**

(**धारेति** ॥) धाराणां संपातः संभूय पतनम् । पतेर्भावे घञ् (३।३।१८) ॥ (१) ॥*॥ 'सृ गतौ' (भ्वा० प० अ०) । आसरणम् । घञ् (३।३।१८) । '**आसारः** स्यात्प्रसरणे वेगवर्षे सुहृद्बले' विश्वः ॥ (२) ॥*॥ द्वे '**महावृष्टेः**' ॥

**शीकरोऽम्बुकणाः स्मृताः ॥११॥**

(**शीकर इति** ॥) सृता वायुना इतस्ततः प्रेरिता अम्बुकणाः शीकराः तालव्यादिः । 'शम्बशीकरपांशवः' इति तालव्यप्रकरणे ऊष्मविवेकात् । 'शीकृ सेचने' (भ्वा० आ० से०) । 'कृच्छेररन्' (उ० ३।१३१) इति बाहुलकादरन् । ('**शीकरं** सरले वातघृताम्बुकणयोः पुमान्') ॥*॥ (**सीकरः**) 'दन्त्यादिरयम्' इति धनपालादयः ॥ (१) ॥*॥ एकम् '**वातप्रक्षिप्तजलकणस्य**' ॥

१—कुङ्कुमे ॥ २—'वर्षवरः षण्ढः' इत्यनेकार्थकैरवाकरकौमुदी ॥

**वर्षोपलस्तु करका**

( **वर्षोपल इति** ॥ ) कृणोति 'कृञ् हिंसायाम्' ( स्वा० उ० अ० ) । 'कृञादिभ्यः संज्ञायां वुन्' (उ० ५।३५) । क्षिपकादित्वात् (वा० ७।३।४५) इत्वाभावः । पुंस्यपि । 'वर्षोपलस्तु **करका** करकोपि च दृश्यते' । ('**करकस्तु** पुमान्पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघोपले न स्त्री करङ्के च कमण्डलौ') ॥१॥*॥ एकं '**वर्षोपलस्य**' ॥

**मेघच्छन्नेऽह्नि दुर्दिनम् ।**

(**मेघेति**॥) मेघच्छन्ने मेघान्धकारिते । अह्नीति रात्रेरप्युपलक्षणम् । रात्रावपि दुर्दिनम् । '**दुर्दिनं** जलदध्वान्तम्' इति रत्नकोषः । दुर्निन्दितं दिनम् । '**बादलं** दुर्दिने मेघे' इति ॥ १ ॥*॥ एकं '**मेघान्धकारितस्य**' ॥

**अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् ॥ १२ ॥**

**अपिधान-तिरोधान-पिधानाच्छादनानि च ।**

( **अन्तर्धेति** ॥ ) अन्तर्धानम् । व्यवधानम् । डुधाञः ( जु० उ० अ० ) अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वात् ( वा० १।४।६५ ) 'आतश्चोपसर्गे' ( ३।३।१०६ ) इत्यङ् ॥ (१) ॥ (२) ॥*॥ 'उपसर्गे घोः–' (३।३।९२) इति किप्रत्ययेऽन्तर्धिः ॥ ३ ॥*॥ 'वृञ् आच्छादने' ( चु० उ० से० ) चुरादिण्यन्ताद्भावे ल्युट् (३।३।११५) ॥ (४) ॥*॥ 'वष्टि भागुरिः–' इति वाल्लोपः ॥ ( ५ ) ॥ ( ६ ) ॥*॥ 'तिरोऽन्तर्धौ' (१।४।७१) इति गतित्वे 'कुगति–' ( २।२।१८ ) इति समासः ॥ ( ७ ) ॥*॥ 'छद अपवारणे' (चु० उ० से०) । ण्यन्ताल्ल्युट् ( ३।३।११५ ) ॥*॥ अण्यन्ताल्ल्युटि तु **छदनम्** । यत्तु—छदनमिति 'छादेर्घे' (६।४।८९) योगविभागाद् ह्रस्वत्वम्-इति मुकुटेनोक्तम् । तच्चिन्त्यम् । उक्तरीत्या प्रयोगद्वयनिर्वाहे योगविभागस्य निष्प्रयोजनत्वात् ॥ (८) ॥*॥ अष्टौ '**अन्तर्धानस्य**' ॥

**हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ॥ १३ ॥**

**विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः ।**

**अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः १४**

**द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ।**

( **हिमांशुरित्यादि** ॥ ) हिमा अंशवो यस्य ॥ (१) ॥*॥ चन्द्रं कर्पूरं सादृश्येन माति तुलयति । 'चन्द्रे मो डिच्' (उ० ४।२२८) इत्यसुन् । चन्द्रमाह्लादं मिमीते निर्मिमीते इति वा । बाहुलकात्केवलादप्यसिः 'मिमीते आनन्दम्' इति माः=चन्द्रः । 'मास्शब्दः केवलोऽपीह संमतो बहुदृश्वनाम्'–इत्युत्पलिनी । ('**माश्चन्द्रमासयोः पुमान्**') कालं मिमीते । माश्चासौ चन्द्रश्च= चन्द्रमाः–इति वा । राजदन्तादिः (२।२।३१) ॥ (२) ॥*॥ चन्दति । 'चदि आह्लादने' (भ्वा० प० से०) 'स्फायितञ्चि–' (उ० २।१३) इति रक् । '**चन्द्रो**ऽम्बुकाम्ययोः । स्वर्णे सुधांशौ कर्पूरे काम्पिल्ये मेचकेऽपि च' इति हैमः ॥*॥ अचि (३।३।१३४) रेफशून्योऽपि । 'हिमांशुश्चन्द्रमाश्चन्द्रः **शशी चन्द्रो हिमद्युतिः**' इति शब्दार्णवात् ॥ (३) ॥*॥ उनत्ति । 'उन्दी क्लेदने' ( रु० प० से० ) 'उन्देरिच्चादेः' (उ० १।१२) इत्युः । यत्तु स्वामिमुकुटौ–उन्दते, उन्दति–इत्याहतुः । तच्चिन्त्यम् । उन्दे रौधादिकत्वात् ॥ (४) ॥*॥ कुमुदानां बान्धवः ॥ (५) ॥*॥ विशेषेण धयन्त्येनं सुराः । धेट् पाने । बाहुलकात्कुः (उ० १।२२) । '**विधुः** शशाङ्के कर्पूरे हृषीकेशे च राक्षसे' इति विश्वः ॥ (६) ॥*॥ सुधायुक्ता अंशवो यस्य ॥ (७) ॥*॥ शुभ्रा अंशवो यस्य ॥ (८) ॥*॥ ओषधीनामीशः ॥ (९) ॥*॥ निशायाः पतिः ॥ (१०) ॥*॥ अप्सु जातः । 'पञ्चम्यामजातौ' (३।२।९८) इति डः । '**अब्जो**ऽस्त्री शङ्खे ना निचुले धन्वन्तरौ च हिमकिरणे । क्लीबं पद्मे' इति विश्वः ॥ (११) ॥*॥ जीवयति । अन्तर्भावितण्यर्थः । 'जीवेः' इत्यनुवृत्तौ 'आतृकन् वृद्धिश्च' ( उ० १।७९ ) इति साधुः । '**जैवातृकः** पुमान् सोमे कृषकायुष्मतोस्त्रिषु' ॥ (१२) ॥*॥ अमृतं सूते–सोमः । 'अर्तिस्तुसू–' (उ० १।१४०) इत्यादिना मन् । '**सोमस्**त्वोषधीतद्रसेन्दुषु । दिव्यौषध्यां घनसारे समीरे पितृदैवते ॥ वसुप्रभेदे सलिले वानरे किंनरेश्वरे' इति हैमः ॥*॥ **सोमा** नकारान्तोऽपि । 'नामन्सीमन्सोमन्–' इत्यादिना दशपाद्यां निपातनात् । यत्तु मुकुटेनोक्तम्–सूयते जायते 'नवो नवो भवति जायमानः' इति श्रुतेः, सूयते यज्ञाङ्गस्थानं वा करोति, सूतेऽमृतं वा सोम इति 'षुञ् अभिषवे' । 'षू प्रेरणे' वा–इति । तन्न । सूयतेः सकर्मकत्वेन जायते इति प्रतिपदासंभवात् । श्रुत्युपन्यासोऽप्यसंबद्धः । जायमान इति जनेरकर्मकस्य ग्रहणात् । एतेनैव स्वाम्युक्तिरपि प्रत्युक्ता । सूयत इत्यस्य यज्ञाङ्गस्थानं वा करोति–इत्यर्थकथनमप्यसंगतम् । प्राणिगर्भविमोचनार्थकस्य तदसंभवात् । सुनोतेः सुवतेश्चोपन्यासः पूर्वान्वयी स्वतन्त्रो वा । नाद्यः । षूङ्ा विगृह्य तदुपन्यासस्यासंगतत्वात् । द्वितीयेऽपि 'अर्तिस्तु–' इति ह्रस्वस्य ग्रहणे सुवतेरुपन्यासोऽसंगतः । दीर्घग्रहणे सुनोतेरुपन्यासोऽसंगतः ॥ (१३) ॥*॥ ग्लायति । 'ग्लै हर्षक्षये' (भ्वा० प० अ० ) । 'ग्लानुदिभ्यां डौः' (उ० २।६४) ॥ ( १४ ) ॥*॥ मृगोऽङ्कोऽस्य ॥ (१५) ॥*॥ कला निधीयन्तेऽत्र । डुधाञः 'कर्मण्यधिकरणे च' (३।३।९३) इति किः ॥ (१६) ॥*॥ द्विजानां राजा । 'राजा–' (५।४।९१) इति टच् । '**द्विजराजः** शशधरे सुपर्णेऽनन्तभोगिनि' इति विश्वः ॥ (१७) ॥*॥ शशस्य धरः ॥ (१८) ॥*॥ नक्षत्राणामीशः ॥ (१९) ॥*॥

---

१—ओषधीविशेषे ॥ २—मयूरपिच्छस्थरेखात्रये ॥ ३—स्वामिग्रन्थे तु तुनत्तीति पाठ एव दृश्यते ॥ ४—मेदिन्यामेवैतादृशः पाठो दृश्यते । विश्वकोषे तु नोपलभ्यते ॥

क्षपां करोति । 'कृञो हेतु-' (३।२।२०) इति टः ॥ (२०) ॥*॥ विंशतिः **'चन्द्रस्य'** ॥

**कला तु षोडशो भागो**

**(कलेति॥)** चन्द्रस्य षोडशो भागः । कलयति । 'कल संख्याने' (चु० उ० से०) पचाद्यच् (३।१।१३४) । कल्यते वा । 'पुंसि-' (३।३।११८) इति घः । (**'कलं** त्वजीर्णरेतसोः । अव्यक्तमधुरध्वाने) **कला** स्यादंशशिल्पयोः । (कलने मूलरैवृद्धौ षोडशांशे विधोरपि') इति हैमः ॥१॥*॥ एकम् **'चन्द्रषोडशांशस्य'** ॥

**बिम्बोऽस्त्री मण्डलं त्रिषु ॥१५॥**

**(बिम्ब इति ॥)** वेति शोभते । 'वी गतौ' (अ० प० से०) । 'उल्वादयश्च' (उ० ४।९५) इति बनुमागमहस्वत्वानि । **'बिम्बं** तु प्रतिबिम्बे स्यान्मण्डले बिम्बिकाफले' इति (पवर्गमध्ये) हैमः ॥ (१) ॥*॥ मण्डयति, मण्ड्यते, वा । 'मडि भूषायाम्' (चु० प० से०) । वृषादित्वात् (उ० १।१०६) कलच् । गौरादित्वात् (४।१।४१) ङीष् । मण्डली । 'स्यान्म**ण्डलं** द्वादशराजके च देशे च बिम्बे च कदम्बके च । कुष्ठप्रभेदेऽप्युपसूर्यकेऽपि भुजंगभेदे शुनि मण्डलः स्यात्' इति विश्वः ॥ (२) ॥*॥ द्वे **'रविचन्द्रमण्डलस्य'** ॥

**भित्तं शकलखण्डे वा पुंस्यर्धः**

**(भित्तमिति ॥)** भिद्यते स्म । 'भित्तं शकलम्' (८।२।५९) इति निपातितम् ॥ (१) ॥*॥ शक्नोति, शक्यते वा । 'शक्लृ शक्तौ' (स्वा० प० अ०) । 'शकिशम्योर्नित्' (उ० १।११२) इति कलच् । **'शकलं** त्वचि खण्डे च रागवस्तुनि वल्कले' इति विश्वः ॥ (२) ॥*॥ 'खडि भेदने' (चु० प० से०) । खण्ड्यते । कर्मणि घञ् (३।३।१९) ।—भावे घञ् (३।३।१८) इति मुकुटोक्तिरसंगता । खण्डनक्रियाया एव ग्रहणप्रसङ्गात् । खण्ड्यमानस्याग्रहणप्रसङ्गात् । 'खनु अवदारणे' (भ्वा० उ० से०) । 'अमन्ताड्डः' (उ० १।११४) इति वा । **'खण्डोऽर्धे** ऐक्षवे । मणिदोषे च' इति हैमः । (**'खण्डोऽस्त्री** शकले नेक्षुविकारमणिदोषयोः । खण्डः पानान्तरे भेदे') । वा पुंसि-इति पूर्वोत्तराभ्यां संबध्यते ॥ (३) ॥*॥ 'ऋधु वृद्धौ' (स्वा० प० से०) । ऋध्नोत्यनेन । **'हलश्च'** (३।३।१२१) इति घञ् । विशेष्यनिघ्नः ॥ (४) ॥*॥ चत्वारि **'खण्डमात्रस्य'** ॥

**अर्धं समेंऽशके ।**

**(अर्धमिति ॥)** समप्रविभागेऽर्धशब्दः क्लीबमेव ॥ (१) ॥*॥ तुल्यस्य खण्डद्वयस्य मध्ये **'एकखण्डस्य'** एकम् ॥

**चन्द्रिका कौमुदी ज्योत्स्ना**

**(चन्द्रिकेति ॥)** चन्द्रोऽस्त्यस्याः । ठन् (५।२।११५) ।—चन्द्रं कायति वा-इति मुकुटः । तन्न । इत्वाभावप्रसङ्गात् । चन्द्रयति । 'तत्करोति-' (वा० ३।१।२६) इति ण्यन्तात् ण्वुल् (३।१।१३३) इति वा । 'चन्द्रिका चन्द्रिमा **चार्वी'** इति शब्दार्णवः ॥ (१) ॥*॥ कुमुदानामियम् । 'तस्येदम्' (४।३।१२०) इत्यण् । (**'कौमुदः** स्यात्कार्तिकके चन्द्रिकायां तु **कौमुदी'**) ॥ (२) ॥*॥ ज्योतिरस्त्यस्याम् । 'ज्योत्स्नातमिस्रा-' (५।२।११४) इति निपात्यते । **'ज्योत्स्ना** चन्द्रातपेऽपि स्याज्ज्योत्स्नायुक्तनिशि स्मृता' ॥ (३) ॥*॥ त्रीणि **'ज्योत्स्नायाः'** ॥

**प्रसादस्तु प्रसन्नता ॥१६॥**

**(प्रसाद इति ॥)** 'षद्लृ विशरणादौ' (भ्वा० तु० प० अ०) । भावे घञ् (३।३।१८) । **'प्रसादो**ऽनुग्रहस्वास्थ्यप्रसत्तिषु । काव्यगुणे' इति हैमः ॥ (१) ॥*॥ प्रसीदति स्म । 'गत्यर्थ-' (३।४।७२) इति क्तः । प्रसन्नस्य भावः । तल् (५।१।११९) ॥ (२) ॥*॥ द्वयं **'नैर्मल्यस्य'** ॥

**कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् ।**

**(कलङ्केति ॥)** कं ब्रह्माणं लङ्कयति हीनतां गमयति, ज्ञापयति, वा । 'लकि गतौ' (चुरादिः) । 'कर्मण्यण्' (३।२।१)। ('कलङ्कोऽङ्केऽपवादे च कालायसमलेऽपि च') ॥ (१) ॥*॥ अङ्क्यतेऽनेन । 'अकि लक्षणे' (भ्वा० प० से०) । 'हलश्च' (३।३।१२१) इति घञ् । (**'अङ्को** भूषारूपकलक्ष्मसु चित्राजौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागसोः') ॥ (२) ॥*॥ 'लच्छ, लाच्छि, लक्षणे' (भ्वा० प० से) । लाञ्छ्यतेऽनेन । ल्युट् (३।३।११५) । **'लाच्छनं** लक्ष्मसंज्ञयोः' इति हैमः ॥*॥ लच्छ्यतेऽनेन इति विग्रहे ल्युटि **'लच्छनम्'** अपि ज्ञेयम् ॥ (३) ॥*॥ चाहयति, चह्यतेऽनेन वा । 'चह परिकल्कने' (भ्वा० प० से०) । बाहुलकात्कक् । उपधाया इत्वं च । **'चिह्नं** लक्ष्मपताकयोः' इति मेदिनी ॥ (४) ॥*॥ लक्षयति । 'लक्ष दर्शनाङ्कनयोः' (चु० प० से०) मनिन् (३।३।७५) । (**'लक्ष्म** प्रधानचिह्नयोः') ॥ (५) ॥*॥ ल्युटि लक्षणम् । 'लक्षेरट् च' (उ० ३।७) इति नः । (**'लक्षणं** नाम्नि चिह्ने च सारस्यां **लक्षणा** क्वचित्') ॥*॥ 'मुड्वा' (उ० ३।७) इति लक्ष्मणमपि । 'ज्योतिष्मत्यां च सारस्यां स्त्री, क्लीबे नामचिह्नयोः । स्याद्यक्षे **लक्षणः** पुंसि सौमित्रौ, श्रीमति त्रिषु' इति रभसात् । लक्ष्मीवति तु पामादित्वात् (५।२।१००) नः । 'लक्ष्म्या अच्च' इति गणसूत्रेणात्वं बोध्यम् ॥ (६) ॥*॥ षट् **'चिह्नस्य'** ॥

**सुषमा परमा शोभा**

**(सुषमेति ॥)** शोभनं समं सर्वमनया । 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' (८।३।८८) इति षत्वम् । एतेन सुषामादित्वात् (८।३।९८) षत्वम्—इति स्वाम्युक्तिः परास्ता । उक्तरीत्या निर्वाहे सुषामादित्वकल्पनस्य निर्बीजत्वात् । (**'सुषमं**

१—हैमेऽपि 'स्यात्कालशिल्पयोः' इत्येव दृश्यते ॥

रुचिरे समे। सुषमा तु स्यात्परमशोभायां कालभिद्यपि') ॥ (१) ॥*॥ 'उत्कृष्टशोभायाः' एकम् ॥

**शोभा कान्तिर्द्युतिश्छविः॥१७॥**

**(शोभेति ॥)** शोभयति 'शुभ शुम्भ शोभायाम्' (तु० प० से०) । पचाद्यच् (३।१।१३६) । यत्तु मुकुटेनोक्तम्—शोभतेऽनया । 'शुभ शुम्भ शोभार्थौ' इति निर्देशात् 'गुरोश्च हलः' (३।३।१०३) इत्यकारः-इति । तन्न । अर्थनिर्देशस्यानार्षत्वात्। यदपि—'गुरोश्च हलः' इति चकाराद्-प्रत्ययः इति तु वयम्-इति । तदपि न । आकरे तथानुक्तेः । उक्तरीत्या निर्वाहाच्च । ('शोभा कान्तीच्छयोर्मता') ॥*॥ शुम्भयतीति **शुम्भा**पि बोध्या ॥ (१) ॥*॥ काम्यते । क्तिन् (३।३।९४) । 'अनुनासिकस्य–' (६।४।१५) इति दीर्घः-इति मुकुटेनोक्तम्। तन्न । 'काम्यते' इति विगृहीतत्वात्तत्रान्तरङ्गत्वाण्णिङ्निमित्तवृद्धेः संभवात् । 'आयादयः–' (३।१।३१) इति णिङभावे वा बोध्यम् । ('**कान्तिः** शोभेच्छयोः स्त्रियाम्') ॥ (२) ॥*॥ 'द्युत दीप्तौ' (भ्वा० आ० से०) । द्योततेऽनया ।—'इगुपधात्किः' इति–मुकुटः । तन्न । 'इगुपधात्कित्' (उ० ४।१२०) इत्यनेन इन्विधानात्तस्य कित्वातिदेशात् । ('**द्युतिस्तु** शोभादीधित्योः') ॥*॥ ङीषि (ग० ४।१।४५) **द्युती** च द्युयते वा । 'द्यु अभिगमने' क्तिन् ॥*॥ क्तिनि (३।३।९४) **द्युत्तिः** ॥ (३) ॥*॥ छ्यति । छिनत्त्यसारमिति वा । 'छो छेदने' (दि० प० अ०) । 'छिदिर् द्वैधीकरणे' (रु० उ० अ०) । 'क्रुविघृष्विच्छवि–' (उ० ४।५६) इति क्विन्नन्तो निपातितः । ('**छविस्तु** रुचिशोभयोः') ॥ (४) ॥*॥ एषु भावे वा प्रत्ययाः । शोभेत्यत्र 'खनो घ च' (३।३।१२५) इति घः । द्युतिरित्यत्र 'इक् कृष्यादिभ्यः' (वा० ३।३।१०८) इति दिक् ॥ चत्वारि '**शोभायाः**' ॥

**अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्।**
**प्रालेयं मिहिका च**

**(अवश्याय इति ॥)** अवश्यायते शैत्यमापाद्यते। 'श्यैङ् गतौ' (भ्वा० आ० अ०) । 'श्याद्व्यध–' (३।१।१४१) इति णः । ('**अवश्यायो** हिमे दर्पे') ॥ (१) ॥*॥ निह्रियते । 'हृञ् हरणे' (भ्वा० उ० अ०) । घञ् (३।३।१९) । 'उपसर्गस्य घञि–' (६।३।१२२) इति दीर्घः । यत्तु—'अध्यायन्याय–' (३।३।१२२) इत्यत्र चकाराद्घञ्-इति मुकुटेनोक्तम्। तन्न । 'अकर्तरि च–' (३।३।१९) इति घञः सिद्धत्वात् ॥ (२) ॥*॥ तोषयति । तुषेः (दि० प० अ०) अन्तर्भावितण्यर्थात् 'कमेः कित्' इत्यनुवृत्तौ 'तुषारादयश्च' (उ० ३।१३९) इत्यारन् किच्च । ('**तुषारो** हिमदेशयोः। शीकरे हिमभेदे च') ॥ (३) ॥*॥ तोहति । 'तुहिर् दुहिर्

अर्दने' (भ्वा० प० से०) । 'वेपितुह्योर्ह्रस्वश्च' (उ० २।५२) इतीनन् ॥ (४) ॥*॥ हन्ति 'हन्तेर्हि च' (उ० १।१४७) इति मक् । हिनोति वर्धते । 'हि गतौ वृद्धौ च' (स्वा० प० अ०) । मन् (उ० १।१४१। बाहुलकेन) इति वा । संज्ञापूर्वकत्वान्न गुणः । '**हिमं** तुषारमलयोद्भवयोः स्याच्च पुंसकम् । शीतले वाच्यलिङ्गं स्यात्' ॥ (५) ॥*॥ प्रलीयन्ते पदार्था अत्रेति हिमाद्रिः प्रलयः । तत आगतम् । अण् (४।३।७४) 'केकय–' (७।३।२) इत्यादिना यादेरियः ॥ (६) ॥*॥ मह्यते । 'मह पूजायाम्' (भ्वा० प० से०) । 'कुन् शिल्पिसंज्ञयोः–' (उ० २।३२) ॥*॥ '**मिहिका**' इति पाठे 'मिह सेचने' (भ्वा० प० अ०) । कुन् (उ० २।३२) ॥ (७) ॥*॥ **धूमिका धूममहिषी** च बोध्या ॥ सप्त '**हिमस्य**' ॥

**अथ हिमानी हिमसंहतिः ॥ १८ ॥**

**(अथेति ॥)** हिमानां संहतिः ॥ (२) ॥*॥ महद्धिमम् । 'हिमारण्ययोर्महत्त्वे' (वा० ४।१।४९) इति ङीषानुकौ ॥ (१) ॥*॥ द्वे '**हिमसमूहस्य**' ॥

**शीतं गुणे**

**(शीतमिति ॥)** गुणे स्पर्शविशेषे शीतम् । '**शीतं** हिमगुणे क्लीबं शीतलालसयोस्त्रिषु । वानीरे बहुवारे ना' । 'श्यैङ् गतौ' (भ्वा० प० अ०) । भावे क्तः (३।३।११४) । 'द्रवमूर्तिस्पर्शयोः श्यः' (६।१।४५) इति संप्रसारणम् । 'श्योऽस्पर्शे' (८।२।४७) इति पर्युदासान्न निष्ठानत्वम् ॥ (१) ॥*॥ एकं '**शीतगुणस्य**' ॥

**तद्वदर्थाः सुषीमः शिशिरो जडः ।**
**तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः ॥१९॥**

**(तद्वदिति ॥)** सुषीमादयः सप्त तु तद्वाञ्शीतगुणवानर्थो येषां ते तद्वदर्थाः । ते च अन्यलिङ्गका विशेष्यलिङ्गाः । सुष्ठु सीमा मर्यादा यस्य । 'सुषामादिषु च' (८।३।९८) इति षत्वम् । स्वामी तु—'सुष्ठु श्यायते' इति विगृह्य (**सुशीमः** तालव्यमध्यमाह । तत्र बाहुलकान्मक् संप्रसारणं च । मुकुटस्तु—'तदयुक्तम् । 'सुषीमश्च सुषेणश्च सुषन्धिः सर्षपोऽपि च' इति 'दन्त्यमूर्धन्य ऊष्मविवेकाद्'–इत्याह । ('**सुषीमः** शीतले चारौ त्रिषु, ना पन्नगान्तरे') ॥ (१) ॥*॥ 'शश प्लुतगतौ' (भ्वा० प० से०) । 'अजिरशिशिर–' (उ० १।५३) इति किरच्, उपधाया इत्वं च निपात्यते । 'शश्वच्छशाङ्कशिशिराण्यपि शूकशिम्बिस्तालव्यशद्वययुताः कथिताः कियन्तः' इति शभेदः । ('**शिशिरो** ना हिमे न स्त्री ऋतुभेदे जडे त्रिषु') ॥ (२) ॥*॥ जलति घनीभवति । 'जल घातने' (भ्वा० प० से०) । अच् (३।१।१३४) । डलयोरेकत्वस्मरणात् 'जडः' । ('**जडो** मूर्खे हिमाघाते **जडा** स्याच्छूकशिम्बिका') ॥ (३) ॥*॥ शीतं गुणोऽस्यास्ति । सिध्मादित्वात् (५।२।९७) लच् । शीतं लाति । कः (३।२।३) वा ('शी-

---

१—'इति तेन' इत्यपि पाठः ॥ २—दिगन्तः पाठः क्वत्र नास्त्यपि ॥

**तलं** पुष्पकाशीसे शैलजे मलयोद्भवे । पुमानासनपर्ण्यां स्याच्छिशिरे वाच्यलिङ्गकम्') ॥ (५) ॥*॥ अर्शआद्यचि ( ५।२।१२७ ) शीतः ॥ (६) ॥*॥ सप्त **'शीतलद्रव्यस्य'** ॥

## ध्रुव औत्तानपादिः स्याद्

(**ध्रुव इति** ॥) ध्रुवति स्थिरो भवति । 'ध्रु गतिस्थैर्ययोः' ( तु० प० अ० ) । अच् ( ३।१।१३४ ) । कुटादित्वात् ( १।२।१ ) ङित्वम् । यत्तु मुकुटेन—( उकारान्तधातुमुपन्यस्य ) इगुपधत्वात् ( ३।१।१३५ ) कः–इत्युक्तम् । तद्भ्रमसात् । वकारान्तधातौ वा तद्बोध्यम् । **'ध्रुवः** शङ्के हरे विष्णौ वटे चोत्तानपादजे । वसुयोगभिदोः पुंसि **ध्रुवं** खेऽजस्रतर्कयोः । स्त्री मूर्वाब्ज्योः शालपर्ण्यां गीतिसुग्भेदयोस्त्रिषु । स्थिरे नित्ये निश्चिते च ध्रुवं क्लीबं प्रकीर्तितम्' ॥ (१) ॥*॥ उत्तानपादस्यापत्यम् । 'अत इञ्' ( ४।१।९५ ) । मुकुटस्तु—ऋषित्वात् 'ऋष्यन्धक–' ( ४।१।११४ ) इत्यणि प्राप्ते बाह्वादित्वात् ( ४।१।९६ ) इञ्–इत्याह । तन्न । उत्तानपादस्य ऋषित्वे मानाभावात् ॥ (२) ॥*॥ द्वे **'ध्रुवस्य'** ॥

## अगस्त्यः कुम्भसंभवः ।
## मैत्रावरुणिः

(**अगस्त्य इति** ॥) अगं विन्ध्यं स्त्यायति स्तभ्नोति । 'आतोऽनुपसर्गे कः' ( ३।२।३ ) । 'अगस्त्यः स्यात्कुम्भयोनौ वङ्गसेनतरावपि' ॥*॥–अगमस्यतीत्यप्यगस्तिः । 'वसेस्तिः' ( उ० ४।१८० ) बाहुलकादस्यतेरपि–इति मुकुटः । वस्तुतस्तु 'क्तिच्क्तौ च–' ( ३।३।१७४ ) इति क्तिजुचितः । बाहुलकाश्रयस्यागतिकगतित्वात् । शकन्ध्वादिः ( वा० ६।१।९४ ) । 'अथागस्त्यः **कुम्भयोनिरगस्तिः कलशीसुतः'** इति शब्दार्णवः ॥ (१) ॥*॥ कुम्भः संभव उत्पत्तिस्थानमस्य ॥ (२) ॥*॥ मित्रावरुणौ देवर्षी । 'देवताद्वन्द्वे च' ( ६।३।२५ ) इत्यनङ् ।—ऋषिसमुदायस्यानृषित्वादपत्ये 'अत इञ्' ( ४।१।९५ )–इति मुकुटः । तन्न । एतयोः ऋषित्वे मानाभावात् ॥*॥ वारुणिरपि । 'मित्रावरुणयोः सूनुरौर्वशेयश्च **वारुणिः'** इति व्याडिः । अणपि दृश्यते । 'और्वशेयागस्त्य**मैत्रावरुणास्त्वाग्निमारुताः'** इति नामनिधानात् ॥ (३) ॥*॥ त्रीणि **'अगस्त्यस्य'** ॥

## अस्यैव लोपामुद्रा सधर्मिणी ॥ २० ॥

(**अस्यैवेति** ॥) अस्यैव पत्नी लोपामुद्रा । न मुदं राति । **'आतोऽनुप–'** ( ३।२।३ ) इति कः । लोपे धर्मलोपे अमुद्रा=हर्ष न लभते इत्यर्थः । स्वाम्युक्तेऽस्य पृषोदरादित्वे ( ६।३।१०९ ) फलं चिन्त्यम् । यत्तु—लोपयति योषितां रूपाभिमानम् । पचाद्यच् ( ३।१।१३४ ) । टाप् ( ४।१।४ ) । लोपा । मुद्रयति स्त्रष्टुः सृष्टिमिति मुद्रा । ततः कर्मधारयः ( २।१।५७ )–इति मुकुटेनोक्तम् । तच्चिन्त्यम् । लोपाशब्दस्यैव भाषितपुंस्कत्वात्पुंवद्भावप्रसङ्गात् । आङ्प्रश्लेषेण वा तत्समाधेयम् ॥ (१) ॥*॥ समानो धर्मोऽस्यस्याः । इनिः ( ५।२।११५ ) । 'समानस्य–' ( ६।३।८४ ) इति सः ॥ एकम् **'अगस्त्यपत्न्याः'** ॥

## नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम् ।

(**नक्षत्रमिति** ॥) न क्षदते हिनस्ति । 'क्षद' इति सौत्रो धातुर्हिंसार्थ आत्मनेपदी । ष्ट्रन् ( उ० ४।१५९ ) । 'नभ्राणनपाद्–' ( ६।३।७५ ) इति नञः प्रकृतिभावः । यत्तु क्षदतीति विग्रहप्रदर्शनं मुकुटेन कृतम् । तच्चिन्त्यम् । यद्वा 'णक्ष गतौ' ( भ्वा० प० से० ) । नक्षति । 'अभिनक्षिकलिभ्योऽत्रन्' ( उ० ३।१०५ ) । न क्षणोति वा । 'क्षणु हिंसायाम्' ( त०उ०से० ) । ष्ट्रन् ( उ० ४।१५९ ) । बाहुलकाण्णलोपः । न क्षत्रं वा । देवत्वात्क्षत्रभिन्नत्वात् ॥ (१) ॥*॥ ऋषति । 'ऋषी गतौ' (तु० प० से०) । 'स्नु व्रश्चिकृत्यृषिभ्यः कित्' (उ० ३।६६) इति सः । 'षढोः–' ( ८।२।४१ ) इति कः । 'ऋक्षस्तु स्यान्नक्षत्राच्छभल्लयोः । महीधरविशेषे च शोणके लक्ष्यवेधने' इति हैमः ॥ (२) ॥*॥ भाति । 'अन्येष्वपि–' ( ३।१।१०१ ) इति डः । **'भं** नक्षत्रे गभस्तौ स्त्री पुंसि स्याद्भृगुनन्दने । (भवने च तथा भः स्यात्) भ्रमरो भः प्रकीर्तितः' इत्येकाक्षरः ॥ (३) ॥*॥ तरन्त्यनया । भिदादित्वात् ( ३।३।१०४ ) अङ् । गुणः ( ७।४।१६ ) । निपातनाद्दीर्घः ॥*॥ तारयतेः पचाद्यचि ( ३।१।१३४ ) । तारोऽपि 'नक्षत्रे नेत्रमध्ये च **तारा** स्यात्तार इत्यपि' इति व्याडिः । (**'तारो** वानरभिन्मुक्ताविशुद्ध्योः शुद्धमौक्तिके । ना, नक्षत्रेऽक्षिमध्ये च न ना, रूप्ये नपुंसकम् । स्त्री बुद्धदेवताभेदे वालिगीर्पतिभार्ययोः । त्रिलिङ्गोऽत्युच्चशब्दे च' ) ॥ (४) ॥*॥ ण्वुलि ( ३।१।१३३ ) तारका । 'तारका ज्योतिषि' ( वा० ७।३।४५ ) इतीत्वाभावः । अपिशब्दात्तारकापि वा स्त्रियाम् । स्त्रीत्वाभावे क्लीबत्वमुडु, साहचर्यात् । 'नक्षत्रे चाक्षिमध्ये च **तारकं तारकापि** च' इति शाश्वतः । (**'तारको** दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि । कनीनिकायामृक्षे च न पुमांस्त्रातरि त्रिषु' ) ॥ (५) ॥*॥ अवतीति—ऊः । क्विप् ( ३।२।१७८ ) । 'ज्वरत्वर–' ( ६।४।२० ) इत्यूठौ । 'ह्रस्वो नपुंसके–' ( १।२।४७ ) इति ह्रस्वः । समासोत्तरम् 'इको ह्रस्वोऽङ्यः–'इति वा ह्रस्वः । डयतेर्डुः डीङो मितद्र्वादित्वात् ( वा० ३।२।१८० ) डुः । 'उ च तड्डु च' इति विग्रहः । स्त्रियां तु 'ऊश्चासौ डुश्च' इति ज्ञेयः । उड्डुः, उड्डू, उडवः, इत्यादि धेनुवत् । यद्वा 'उ संबुद्धौ रुषोक्तौ च शिववाची त्वनव्ययम् । उ प्रश्ने च' इति हैमः । उ क्रोधं डयते, उना शंभुना डीयते वा । 'मितद्र्वादिभ्यः' (३।२।१८०) इति डुः ॥ (६) ॥*॥ षड् **'नक्षत्रसामान्यस्य'** ॥

---

१—एतत्पक्षद्वये तकारैक्यम् । पूर्वत्र तु तद्द्वयम् ॥ २—'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इत्युचितम् ॥

**दाक्षायण्योऽश्विनीत्यादि ताराः**

**( दाक्षायण्य इति ॥ )** दक्षस्यापत्यानि। 'वा नामधेयस्य' ( वा० १।१।७३ ) इति वृद्धसंज्ञायाम् 'उदीचां वृद्धादगोत्रात्' ( ४।१।१५७ ) इति फिञ्। गौरादित्वात् ( ४।१।४१ ) ङीष्। यत्तु—'आसुरेरुपसंख्यानम्' ( वा० ४।१।१९ ) इत्यत्र केचिद् 'आसुरिदाक्ष्योः' इति—इति मुकुट आह। तन्न। भाष्ये दाक्षेरदर्शनात्। यदपि—गोत्रत्वमुपचर्य 'गोत्रे कुञ्जादिभ्यश्च्फञ्' ( ४।१।९८ ) इति च्फञि 'जातेरस्त्रीविषयादयोपधात्' ( ४।१।६३ ) इति ङीष् इत्याह। तदपि न। कुञ्जादिगणेऽस्य पाठाभावात्। उक्तरीत्योपचारं विना निर्वाहाच्च। यत्तु—'अत इञ्' ( ४।१।९५ )। अनन्तरापत्येऽपि द्वैपायनवत् 'यञिञोश्च' ( ४।१।१०१ ) इति फक्—इति स्वाम्याह। तदपि न। अनन्तरापत्ये फकोऽदर्शनात्। द्वीपमयनमस्य द्वीपायनः। द्वीपायनस्यापत्यं द्वैपायनः। ऋष्यण् ( ४।१।११४ ) इति द्वैपायनशब्दव्युत्पत्तेर्दृष्टान्तासंभवाच्च। यदपि—'इतो मनुष्यजातेः' ( ४।१।६५ ) इत्यत्र 'इञः' उपसंख्यानान्ङीष्। 'कौरव्यमाण्डूकाभ्यां च' ( ४।१।१९ ) इति चकारादासुरायणीवत् फः—इति। तदपि न। त्वदुक्तोपसंख्यानाप्रसिद्धेः। चकारस्यानुक्तसमुच्चयार्थत्वे मानाभावाच्च। यदपि—दक्षमयते। ल्युः ( ३।१।१३४ )। प्रज्ञाद्यण् ( ५।४।३८ )—इत्याह मुकुटः। तदपि न। प्रज्ञप्राज्ञवद्रूपद्वयप्रसङ्गात्। अश्विन्याद्याः सप्तविंशतितारका दाक्षायण्य उच्यन्ते। ( '**दाक्षायणी** त्वपर्णायामश्विन्याद्युडुषु स्त्रियाम्' ) ॥ (१) ॥*॥ एकम् '**अश्विन्यादिभानाम्**' ॥

**अश्वयुगश्विनी ॥ २१ ॥**

**अश्वयुगिति ॥** अश्वं युनक्ति रूपेणानुकरोति। 'सत्सूद्विष—' ( ३।२।६१ ) इति क्विप्। यत्तु—'ऋत्विग्—' ( ३।२।५९ ) इत्यादिना क्विन्—इति मुकुटः। तन्न। युजेः केवलात्क्विन्विधानात् ॥ (१) ॥*॥ अश्वः अश्वरूपमस्त्यस्याः। इनिः ( ५।२।११५ ) ॥ (२) ॥*॥ द्वे '**अश्विन्याः**' ॥

**राधा विशाखा**

**(राधेति ॥)** राध्नोति कार्यमनया। 'राध संसिद्धौ' ( स्वा० प० अ० )। 'गुरोश्च हलः' ( ३।३।१०३ ) इत्यकारः। राधयति। अच् (३।१।१३४) इति वा। '**राधा** विद्युद्विशाखयोः। विष्णुकान्तामलक्योश्च गोपीवैध्यविशेषयोः' इति हैमः ॥ (१) ॥*॥ विशाखति। 'शाखृ व्याप्तौ' ( भ्वा० प० से० )। अच् ( ३।१।१३४ )। '**विशाखो** याचके स्कन्दे **विशाखा** कठिल्लके' इति हैमः ॥ (२) ॥*॥ द्वे '**विशाखायाः**' ॥

**पुष्ये तु सिध्यतिष्यौ**

**( पुष्ये त्विति ॥ )** पुष्णाति कार्याणि। '**पुष्यः** कलियुगे स्मृतः। मासनक्षत्रयोर्भेदे' ॥ (१) ॥*॥ सिध्यन्त्यस्मिन्। 'पुष्यसिध्यौ नक्षत्रे' ( ३।१।११६ ) इति क्यपि निपातितः ॥ (२) ॥*॥ ( तुष तुष्टौ ) तुष्यन्त्यस्मिन्। 'सूर्यतिष्य—' ( ६।४।१४९ ) इति निपातनात्क्यप् उपधेत्वं च। '**तिष्यो** नक्षत्रभेदे स्यात्कलौ धात्र्यां च योषिति' ॥ (३) ॥*॥ त्रीणि '**पुष्यस्य**' ॥

**श्रविष्ठया।**

**समा धनिष्ठा**

**(श्रविष्ठयेति ॥ )** श्रवणं श्रवः। 'ऋदोरप्' ( ३।३।५७ )। प्रसिद्धिः। श्रवोऽस्त्यस्याः। मतुप् ( ५।२।९४ )। अतिशयेन श्रववती। इष्ठन् ( ५।३।५५ )। 'विन्मतोर्लुक्' ( ५।३।६५ ) इति मतुपो लुक् ॥ (१) ॥*॥ एवमतिशयेन धनवती ॥ (२) ॥*॥ सा श्रविष्ठया समेत्यन्वयः ॥ द्वे '**धनिष्ठायाः**' ॥

**स्युः प्रोष्ठपदा भद्रपदाः स्त्रियः ॥२२॥**

**(स्युरिति ॥)** प्रोष्ठो गौः, तस्येव पादा यासाम्। 'सुप्रातसुश्व—' ( ५।४।१२० ) इत्यादिना बहुव्रीहावच् पद्भावश्च निपातितः। प्रोष्ठपदयोर्द्वित्वेऽपि 'फल्गुनीप्रोष्ठपदानाम्—' (१।२।६०) इति नक्षत्रात्पाक्षिकं बहुत्वम् ॥ (१) ॥*॥ भद्रं पदं यासां ताः। अत्रारोपाद्बहुत्वम्। यत्तु—'सुप्रात—' ( ५।४।१२० ) इति प्रोष्ठपदा भद्रपदाश्च निपातिताः—इति मुकुटः। तन्न। भद्रपदाशब्दस्य तत्राग्रहणात्। एतेन—अर्थग्रहणाद्भद्रपदा—इति स्वाम्युक्तिरपि परास्ता ॥ (२) ॥*॥ द्वे '**पूर्वभद्रपदोत्तरभद्रपदानाम्**' ॥

**मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी।**

**मृगेति ॥** आकृत्या मृगस्य शीर्षमिव शीर्षं शिरो यस्य ॥ (१)

---

१—लिङ्गज्ञानं तेषामन्यतोऽवधार्यम्। तथा च तन्त्रान्तरे—'हस्तस्वातिश्रवणा अक्लीबे, मृगशिरो न पुंसि स्यात्। पुंसि पुनर्वसुपुष्यौ, मूलं त्वस्त्री, स्त्रियः शेषाः' इति वचनज्ञानं कर्मप्रदीपानुसारेण। तथाहि—'आग्नेयाद्येऽथ सर्पाद्ये विशाखाद्ये तथैव च। आषाढाद्ये धनिष्ठाद्ये अश्विन्याद्ये तथैव च ॥ द्वन्द्वान्येतानि बहुवृक्षाणां जुहुयात्सदा। द्वन्द्वद्वयं द्विवच्छेषमवशिष्टान्यथैकवत् ॥' इति। एवं चाद्याश्वतस्रः स्त्रियां बहुत्वे, मृगशिराः स्त्रीक्लीबयोरेकत्वे, आर्द्रा स्त्र्येकत्वे, पुनर्वसुपुष्यौ पुंस्येकत्वे, आश्लेषाद्ये स्त्रीबहुत्वे, फल्गुन्यौ स्त्रीद्वित्वे, हस्तो मिथुनैकत्वे, चित्रा स्त्र्येकत्वे, स्वातिर्मिथुनैकत्वे, विशाखाद्ये स्त्रीबहुत्वे, ज्येष्ठा स्त्र्येकत्वे, मूलमस्त्रियामेकत्वे, आषाढाद्ये स्त्रीबहुत्वे, श्रवणो मिथुनैकत्वे, धनिष्ठाद्ये स्त्रीबहुत्वे, भाद्रपदाद्वयं स्त्रीद्वित्वे, रेवती स्त्र्येकत्वे इति निष्कर्षः। मुकुटस्तु अश्विनीभरणीरोहिणीमृगशिरआर्द्रापुष्याश्लेषाहस्तचित्रास्वात्यनुराधाज्येष्ठामूलाषाढाश्रवणधनिष्ठाशतभिषग्रेवतीनामेकवचनान्तत्वम्, पुनर्वसुफल्गुनीविशाखाभाद्रपदानां द्विवचनान्तत्वम्, कृत्तिकामघयोर्बहुवचनान्तत्वमाह। तत्रोक्तार्षवाक्यविरोधः स्पष्ट एव। अस्य कात्यायनवाक्यस्य होममात्रविषयत्वम् जुहुयात्पदोपादानात् कल्पनीयम् ॥

१—हस्तादिरेवायम्। 'ग्रहपतिरिव भद्रपदानुगतः' इति श्लेषात्—इति मुकुटः ॥

॥*॥ मृगः शिरोऽस्य । रूपभेदात्क्लीबम् । 'सौम्या मृगशिरः स्युर्मृगशिराः' इति बोपालितः क्लीबत्वमप्याह ॥*॥ मृगोऽपि । 'मृगशीर्षे हस्तिजातौ **मृगः** पशुकुरङ्गयोः' इति व्याडिः ॥ (२) ॥*॥ अग्रे हायनमस्याः । मार्गशीर्षमारभ्य वर्षप्रवृत्तेः । प्रज्ञाद्यण् (५।४।३८)। 'पूर्वपदात्–' (८।४।३) इति णत्वम्। आग्रहायणी पौर्णमासी । तद्योगान्नक्षत्रमपि तथा । यत्तु– 'आग्रहायण्यश्वत्थाट्ठक्' (४।२।२२) इति निर्देशात्स्वार्थेऽण् । गौरादित्वात् (४।१।४१) ङीष् । अणन्तत्वादेव ङीपि सिद्धे गौरादिषु पाठोऽस्य पुंवद्भावनिषेधार्थः । तेनाग्रहायणीभार्य इति सिध्यति–इति मुकुटः । तन्न । अपसिद्धान्तात् । नहि गौरादित्वं पुंवद्भावप्रतिषेधार्थम्, किं तु ङीष्विधानार्थम् । नच पाठसामर्थ्यम् । तस्य स्वरभेदार्थत्वात् । नचोदात्तनिवृत्तिस्वरेण तदभावः । पाठसामर्थ्यादुदात्तनिवृत्तिस्वरस्यैव बाधसंभवात् । अस्य गौरादिकत्वमप्रामाणिकमिति सुवचत्वाच्च ॥ (३) ॥*॥ त्रीणि '**मृगशिरसः**' ॥

**इन्वकास्तच्छिरोदेशे तारका निवसन्ति याः ॥२३॥**

(**इन्वका इति** ॥) ईन्वन्ति प्रीणयन्ति । 'इवि व्याप्तौ प्रीणने च' (भ्वा० प० से०) इदित्वात् (७।१।५८) नुम् । संज्ञायां क्वुन् (उ० २।३२)। क्षिपकादित्वात् (वा० ७।३।४५) इत्वाभावः ॥*॥ '**इल्वलाः**' इति पाठे तु 'इल स्वप्ने क्षेपणे च' (तु० प० से०)। 'सानसिवर्णसि–' (उ० ४।१०७) इति वलच् गुणाभावश्च निपात्यते । ('**इल्वलास्तारकाभेदेऽपील्वलो** मत्स्यदैत्ययोः') ॥ (१) ॥*॥ मृगशीर्षशिरोदेशस्थानां पञ्चानां '**स्वल्पतारकाणां**' एकम् ॥

**बृहस्पतिः सुराचार्यो गीर्पतिर्धिषणो गुरुः ।**
**जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः ॥२४॥**

(**बृहस्पतिरित्यादि** ॥) बृहतां पतिः । 'तद्बृहतोः–' (वा० ६।१।१५७) इति सुट्तलोपौ ॥*॥ अलुकि '**बृहतां पतिः**' इत्यपि ॥ (१) ॥*॥ सुराणामाचार्यः ॥ (२) ॥*॥ गिरां पतिः । 'अहरादीनां–' (वा० ८।२।७०) इति वा रेफः ॥*॥ पक्षे (विसर्गोपध्मानीयौ)। कस्कादित्वात् (८।३।४८) षः–इति केचित्[2] ॥ (३) ॥*॥ प्रशस्ता धिषणास्य । अर्शआद्यच् (५।२।१२७)। यद्वा धृष्णोति । 'ञिधृषा प्रागल्भ्ये' (स्वा० प० से०)। 'धृषेर्धिष च–' (उ० २।८२) इति क्युः । ('**धिषण**स्त्रिदशाचार्ये धिषणा तु धियां मता') ॥ (४) ॥*॥ गृणाति उपदिशति । 'गॄ शब्दे' (क्र्या० प० से०)। 'कृग्रोरुच्च' (उ० १।२४) इति कुः उश्चान्तादेशः (रपरः)। '**गुरु**र्महत्याङ्गिरसे पित्रादौ धर्मदेशके । अलघौ दुर्जरे चापि' इति हैमः ॥ (५) ॥*॥ जीवयति । अच् (३।१।१३४)। मृतसंजीवनमन्त्रज्ञत्वात्। '**जीवः** स्यात्त्रिदशाचार्ये द्रुमभेदे शरीरिणि' इति हैमः ॥ (६) ॥*॥ 'अगि गतौ' (भ्वा० प० से०)। 'अङ्गिराः' (उ० ४।२३६) इत्यसुन्नन्तो निपातितः । अङ्गिरसोऽपत्यम् । 'ऋष्यन्धक–' (४।१।११४) इत्यण् । बहुत्वे 'अत्रिभृगु–' (२।४।६५) इति लुक् । आङ्गिरसः, आङ्गिरसौ, अङ्गिरसः ॥ (७) ॥*॥ वाचस्पतिरित्यत्र 'षष्ठ्याः पतिपुत्र–' (८।३।५३) इति सत्वविधानात्षष्ठ्या अलुक् ॥*॥ लुक्पक्षे '**वाक्पतिः**' अपि ॥ (८) ॥*॥ 'ऋषयः सप्त धीमद्भिः स्मृताश्चित्रशिखण्डिनः' इति हारावली । तदन्तर्गतादङ्गिरसो जातत्वाच्चित्रशिखण्डिनो जातः । 'पञ्चम्याम्–' (३।२।९८) इति डः ॥ (९) ॥*॥ नव '**बृहस्पतेः**' ॥

**शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः ।**

(**शुक्र इति** ॥) माहेश्वरशुक्रद्वारा निर्गतत्वाच्छुक्रः । शोचति । 'शुच शोके' (भ्वा० प० से०) 'ऋज्रेन्द्र–' (उ० २।२८) इति रक् इति वा ॥ (१) ॥*॥ दैत्यानां गुरुः ॥ (२) ॥*॥ 'कुङ् शब्दे' (भ्वा० आ० अ०) । कोतुमवश्यमाख्यातुमर्हत्वात् काव्यः । 'ओरावश्यके' (३।१।१२५) इति ण्यत् । कावेरपत्यम् । 'कुर्वादिभ्यो ण्यः' (४।१।१५१) इति वा । ('**काव्यं** ग्रन्थे पुमाञ् शुक्रे काव्या स्यात्पूतनाधियोः') ॥ (३) ॥*॥ 'वश कान्तौ' (अ० प० से०)। वष्टि । 'वशेः कनसिः' (उ० ४।२३९) । ग्रह्यादित्वात्संप्रसारणम् (६।१।१६)। 'ऋदुशनस्–' (७।१।९४) इत्यनङ् ॥ (४) ॥*॥ भृगोरपत्यम् । ऋष्यण् (४।१।११४)। बहुत्वे तु लुक् (२।४।६५)। भृगवः । ('**भार्गवः** परशुरामे सुधन्वनि मतङ्गजे । दैत्याचार्ये **भार्गवी** तु कृष्णदूर्वोमयोः स्त्रियाम्') ॥ (५) ॥*॥ कवते । 'कुङ् शब्दे' (भ्वा० आ० अ०) । 'अच इः' (उ० ४।१३९)। कौतीति वा । ('**कवि**र्वाल्मीकिशुक्रयोः । सूरौ काव्यकरे पुंसि खलीने स्यात्तु योषिति') ॥ (६) ॥*॥ षट् '**शुक्रस्य**' ॥

**अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः ॥ २५ ॥**

(**अङ्गारक इति** ॥) अङ्गानि इयर्ति पीनत्वात् 'ऋ गतौ' (जु० प० अ०) । 'कर्मण्यण्' (३।२।१)। अङ्गति वा । 'अगि गतौ' (भ्वा० प० से०) 'अङ्गिमदि–' (उ० ३।१३४) इत्यारन् । संज्ञायां कन् (५।३।९७)। अङ्गार इव । कन् (५।३।९६) रक्तवर्णत्वादिति वा । '**अङ्गारकः** कुजेऽपि स्यादुल्मुकांशे कुरुण्टके । भवे**दङ्गारिका** चेक्षुकाण्डे किंशुककोरके' ॥ (१) ॥*॥ कोः पृथिव्या जातः । 'पञ्चम्याम्–' (३।२।९८) इति डः । ('**कुजा** भवान्यां वृक्षे तु **कुजो** नरकभौमयोः') ॥ (२) ॥*॥ भूमेरपत्यम् । शिवादित्वात्

१—'इन्वका नक्षत्रम्' इति श्रुतेः—इति स्वामी ॥ २—केचिदित्यनेन स्वामिचान्द्रोक्तेऽरुचिः सूचिता । गीष्पतिरित्यसाधुरिति मुकुटः । अतएव भाष्ये गीर्पतिः, गीᳲपतिः, गीःपतिः, इति रूपत्रयमेवोदाहृतम् । एतेन कस्कादिषु पाठकल्पनमपि निरस्तम् ॥

१—तथा च रामायणे 'अनात्तान्नष्टसंज्ञांश्च आहतासुन्बृहस्पतिः । दिव्याभिर्मन्त्रयुक्ताभिरोषधीभिरजीवयत्' इति मुकुटः ॥

( ४।१।११८ ) अण् । 'भौमो मङ्गलदेहलयोः' इति हैमः ॥ (३) ॥*॥ लोहिताङ्गस्यापत्यम् ॥ (४) ॥*॥ मह्याः सुतः ॥ (५) ॥*॥ पञ्च 'मङ्गलस्य' ॥

**रौहिणेयो बुधः सौम्यः**

**( रौहिणेय इति ॥ )** रोहिण्या अपत्यम् । 'स्त्रीभ्यो ढक्' ( ४।१।१२० ) । '**रौहिणेयो** बलेऽश्मभेदे रेवतीरमणे बुधे' इति मेदिनी ॥ (१) ॥*॥ बुध्यते । 'बुध अवगमने' ( दि० आ० अ० ) । कः ( ३।१।१३५ ) ( '**बुधः** सौम्ये कवौ' ) ॥ (२) ॥*॥ सोम इव । सौम्यः । 'शाखादिभ्यो यः' ( ५।३।१०३ ) । ततः प्रज्ञाद्यण् ( ५।४।३८ ) । ( '**सौम्यः** सोमात्मजेऽनुग्रे मनोज्ञे सोमदैवते । **सौम्याः** पुनर्मृगशिरः शिरःस्थाः पञ्च तारकाः' ) ॥ (३) ॥*॥ त्रीणि '**बुधस्य**' ॥

**समौ सौरिशनैश्चरौ ।**

**(समाविति ॥)** सूरस्यार्कस्यापत्यम् । 'अत इञ्' ( ४।१।९५ ) ॥*॥ 'तस्येदम्' ( ४।३।१२० ) इत्यणि '**सौरः**' अपि ॥ (१) ॥*॥ शनैश्चरति पङ्गुत्वात् । अच् ( ३।१।१३४ ) ॥*॥ '**शनि**सौरिशनैश्चराः' इति रभसाच्छनिरपि ॥*॥ 'शनैश्चरे **मन्दः**' इति वाचस्पतिः ॥ (२) ॥*॥ द्वे '**शनेः**' ॥

**तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुंतुदः ॥ २६ ॥**

**( तम इति ॥ )** ताम्यति । 'तमु ग्लानौ' ( दि० प० से० ) । असुन् ( उ० ४।१८९ ) । 'तमु काङ्क्षायाम्' ( दि० प० से० ) इति मुकुटस्य प्रमादः । ताम्यतीति विगृहीतत्वात् । '**तमांसि** गुणाति मिरसैंहिकेयाः' इति त्रिकाण्डशेषः ॥*॥ पचाद्यचि ( ३।१।१३४ ) अदन्तः पुंलिङ्गोऽपि । 'स्वर्भानुस्तु तमो राहुः' इति पुंस्काण्डे रत्नकोषामरमालयोर्दर्शनात् ॥ (१) ॥*॥ रहति गृहीत्वा त्यजति चन्द्राकौं । 'रह त्यागे' ( भ्वा० प० से० ) भ्वादिः । बाहुलकादुण् ।—'रहश्च' इत्युण्–इति मुकुटस्य प्रमादः । एतादृशसूत्रादर्शनात् ॥ (२) ॥*॥ स्वराकाशे विपरीतलक्षणया भाति । 'दाभाभ्यां नुः' ( उ० ३।३२ ) । क्षुभ्नादिः ( ८।४।३९ ) ॥ (३) ॥*॥ सिंहिकाया अपत्यम् । 'स्त्रीभ्यो ढक्' ( ४।१।१२० ) ॥ (४) ॥*॥ विधुं तुदति । 'विध्वरुषोस्तुदः' ( ३।२।३५ ) इति खश् । 'अरुर्–' ( ६।३।६७ ) इति मुम् ॥ (५) ॥*॥ पञ्च '**राहोः**' ॥

**केतुः** ॥ ( '**केतुर्ना** रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि' ) ॥ (१) ॥*॥ शिखी । ( '**शिखी** वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे । मयूरे कुक्कुटे चाश्वे, शिखावत्यन्यलिङ्गकः' ) इति स्वामी ॥ (२) ॥*॥ द्वे '**केतोः**' ॥

**सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः ।**

**सप्तेति** ॥ सप्त च ते ऋषयश्च । 'दिक्संख्ये–' ( २।१।५० ) इति द्विगुः । 'चित्रः शिखण्डश्चूडाविशेषोऽस्त्येषाम्' इति व्युत्पत्त्या प्रत्येकं समापि चित्रशिखण्डिनः । 'मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः' ॥ (१) ॥*॥ एकम् '**सप्तर्षीणाम्**'[१] ॥

**राशीनामुदयो लग्नं**

**(राशीनामिति ॥)** अश्नुवते व्याप्नुवन्ति । 'अशू व्याप्तौ' ( स्वा० आ० से० ) । 'अशिपणाय्यो रुडायलुकौ च' ( उ० ४।१३३ ) इति रुडागम इण्प्रत्ययश्च ॥ (१) ॥*॥ लगति फले । 'लगे सङ्गे' ( भ्वा० प० से० ) 'क्षुब्धस्वान्त–' ( ७।२।१८ ) इति क्तस्येडभावः, तस्य नश्च निपात्यते । यत्तु—लगति साध्ये निजे, इति विग्रहं प्रदर्श्य 'ओलजी ओलस्जी व्रीडे' ( तु० आ० से० )—इति धातोरुपन्यसनं मुकुटेन कृतम् । तन्न । उक्तधातोर्लगतिरूपाभावात् । प्रकृतेऽर्थासंगतेश्च । अतः 'श्वीदितो निष्ठायाम्' ( ७।२।१४ ) 'ओदितश्च' ( ८।२।४५ ) इति सूत्रयोरुपन्यासो व्यर्थः । '**लग्नं** राश्युदये क्लीबं सक्तलज्जितयोस्त्रिषु' ॥ एकम् '**राश्युदयस्य**' ॥

**ते तु मेषवृषादयः ॥ २७ ॥**

**(ते त्विति ॥)** ते राशयः । मेषवृषौ आदी येषां ते[२] ॥ प्रत्येकं एकम् ॥

**सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः ।**
**भास्कराहस्करब्रध्नप्रभाकरविभाकराः ॥ २८ ॥**
**भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः ।**
**विकर्तनार्कमार्तण्डमिहिरारुणपूषणः ॥ २९ ॥**
**द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ।**
**विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ॥ ३० ॥**
**भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ।**

**(सूरेति ॥)** सुवति प्रेरयति कर्मणि लोकम् । 'षू प्रेरणे' ( तु० प० से० ) । 'सुसूधाञ्गृधिभ्यः क्रन्' ( उ० २।२४ ) । दन्त्यादिः ॥*॥ शवति । 'शु गतौ' ( सौत्रः ) 'शुसिचिमीनां दीर्घश्च' ( उ० २।२५ ) इति क्रनि शूरश्च । '**शूर**श्चारुभटे सूर्ये' इति विश्वः । 'सुभटे **शूरः** सूर्ये च दन्त्योऽपि' इत्यूष्मविवेकः । शूरयते वा । 'शूर विक्रान्तौ' ( चु० आ० से० ) । अच् ( ३।१।१३४ ) यत्तु–सूते प्रेरयत्यन्धकारम्, इति विग्रहं प्रदर्श्य 'षू प्रेरणे' ( तु० प० से० ) इति धातोरुपन्यसनं मुकुटेन कृतम् । तन्न । उक्तधातोस्तादृशरूपाभावात् ॥ (१) ॥*॥ सरति । 'सृ गतौ' ( भ्वा० प० अ० ) सुवति प्रेरयति कर्मणि लोकान्, इति वा । 'षू प्रेरणे' ( तु० प० से० ) । 'राजसूयसूर्य–' ( ३।१।११४ ) इति निपातितः । '**सूर्यो**ऽर्कपर्णे

१—'पुंक्लीबलिङ्गम्' इति हैमेन व्याख्यातम् । दृश्यन्ते च प्रयोगा अपि ॥ २—ते राशयः 'मेषो वृषोऽथ मिथुनं कर्कटः सिंहकन्यके । तुलाथ वृश्चिको धन्वी मकरः कुम्भमीनकौ' इति स्वाम्युक्ता ज्ञेयाः । ३—'वारुणी वारुणीभूतसौरभा सौरभास्पदम्' इति दण्डियमकात् 'कुमुदाकरा इवासोढशूरभासः' इति वासवदत्ताश्लेषाच्चालव्यादिरपि— इति मुकुटः ॥

तपने स्त्री तद्भार्यौषधीमित्योः' ॥ (२) ॥*॥ इयर्ति। 'श्वन्नुक्षन्पूषन्–' (उ० ११५९) इति निपातितः। ('**अर्यमा** पितृदैवते। तरणौ सूर्यभक्तायाम्') ॥ (३) ॥*॥ अदितेरपत्यम्। 'दित्यदित्या–' (४।१।८५) इति ण्यः। ('**आदित्यस्त्रिदशार्कयोः**') ॥ (४) ॥*॥ द्वादश आत्मानो मूर्तयो यस्य ॥ (५) ॥*॥ दिवा दिनं करोति। 'दिवाविभा–' (३।२।२१) इति टः ॥ (६) ॥*॥ एवं भास्करादिषु। (कस्कादित्वात् ८।३।४८) भास्कराहस्करौ–इति स्वामी)। (**भास्करो** वह्निसूर्ययोः') ॥ (७) ॥*॥ (८) ॥*॥ तिमिरं बध्नाति। 'बन्धेर्ब्रधिबुधी च' (उ० ३।५) इति नक् ॥ (९) ॥*॥ (१०) ॥*॥ (११) ॥*॥ भासः सन्त्यस्य। मतुप् (५।२।९४)। ('**भास्वान्दीप्ते** रवौ') ॥ (१२) ॥*॥ विविधं वस्ते आच्छादयति। 'वस आच्छादने' (अ० आ० अ०)। क्विप् (३।२।७६)। विवो रश्मिः। विवोऽस्यास्ति। मतुप् (५।२।९४)। 'तसौ मत्वर्थे' (१।४।१९) इति भत्वाद्रुत्वाभावः। ('**विवस्वान्विबुधे** सूर्ये तत्रगर्या **विवस्वती**') ॥ (१३) ॥*॥ सप्ताश्वा यस्य ॥ (१४) ॥*॥ हरितोऽश्वा यस्य ॥ (१५) ॥*॥ उष्णा रश्मयोऽस्य ॥ (१६) ॥*॥ विशेषेण कर्तनं यस्य। विश्वकर्मणा यन्त्रोल्लीढत्वात्। विकर्तयति भक्तरोगान् इति वा। 'कृती छेदने' (रु० प० से०)। णिजन्ताल्ल्युट् (३।३।११३) ॥ (१७) ॥*॥ अर्च्यते। 'अर्च पूजायाम्' (भ्वा० प० से०)। कर्मणि घञ् (३।३।१८) 'चजोः–' (७।३।५२) इति कुत्वम्। यद्वा 'कृदाधारार्चिकलिभ्यः कः' (उ० ३।४०)। 'चोः कुः' (८।२।३०)। ('झरो झरि' (८।४।६५) कलोपः)। यद्वा 'अर्क स्तवने' (चु० प० से०)। चुरादिः। अर्क्यते। 'एरच्' (३।३।५६) 'एरजण्यन्तानाम्' इति मते घञ्। (**अर्को** द्रुमभेदे स्फटिके ताम्रे सूर्ये बिडौजसि') (१८) ॥*॥ मृतेऽण्डे भवः। शकन्ध्वादिः (वा० ६।१।९४)। 'परा मार्ताण्डमास्यत्'। 'पुनर्मार्ताण्डमाभरत्' इत्यादिमन्त्राद्दीर्घोऽपि 'अथ मार्तण्डमार्ताण्डौ' इति नामनिधानाच्छब्दार्णवाच्च। '**मार्तण्डः** क्रोडसूर्ययोः' ॥ (१९) ॥*॥ मेहति। 'मिह सेचने' (भ्वा० प० अ०)। 'इषिमदि–' (उ० १।५१) इति किरच्। '**मिहिरः** सूर्यवृद्धयोः' ॥*॥ महेः किरचि महिरोऽपि। '**महिरमिहिरगीथाः कालकूटपद्मपाणिः**' इति त्रिकाण्डशेषात् ॥ (२०) ॥*॥ ऋच्छति। 'अर्तेश्च' (उ० ३।६०) इत्युनन्। ('**अरुणो**ऽव्यक्तरागेऽर्के संध्यारागेऽर्कसारथौ। निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु ॥ **अरुणा**तिविषाश्यामामञ्जिष्ठात्रिवृतासु च') ॥ (२१) ॥*॥ पुनाति। पूषति वा। 'पुष पुष्टौ' (क्र्या० प० से०)। 'पूष वृद्धौ' (भ्वा० प० से०) वा 'श्वन्नुक्षन्–' (उ० ११५९) इति निपातितः ॥ (२२) ॥*॥ दिवो मणिरिव ॥ (२३) ॥*॥ तरन्त्यनेन संसारम्। तरणिः। 'अर्तिसृधृ–' (उ० २।१०२) इत्यादिना तरतेरनिः। '**तरणि**र्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्' ॥ (२४) ॥*॥ मेद्यति। 'ञिमिदा स्नेहने' (दि० प० से०)। 'अमिचिमिदिशसिभ्यः क्त्रः' (उ० ४।१६४) इति क्त्रः। ('मित्रं सुहृदि न द्वयोः। सूर्ये पुंसि') ॥ (२५) ॥*॥ चित्रा भानवोऽस्य। '**चित्रभानुः** पुमान्वैश्वानरे चाहस्करेऽपि च' ॥ (२६) ॥*॥ विरोचते। 'रुच दीप्तौ' (भ्वा० आ० से०)। 'अनुदात्तेतश्च–' (३।२।१४९) इति युच्। '**विरोचनः** प्रह्लादस्य तनयेऽर्केऽग्निचन्द्रयोः' ॥ (२७) ॥*॥ विभैव वसु यस्य। '**विभावसुः** पुमान्सूर्ये हारभेदे च पावके' ॥ (२८) ॥*॥ ग्रहाणां पतिः ॥ (२९) ॥*॥ त्विषां पतिः। अलुक् ॥ (३०) ॥*॥ अह्नः पतिः। अहर्पतिः ॥ (३१) ॥*॥ भाति। 'दाभाभ्यां नुः' (उ० ३।३२)। ('**भानु**रंशौ रवौ दिने') ॥ (३२) ॥*॥ हन्ति। 'वृतॄवदिहनि–' (उ० ३।६२) इति सः। '**हंसः** स्यान्मानसौकसि। निर्लोभनृपविष्ण्वर्कपरमात्मनि मत्सरे[1] ॥ योगिभेदे मन्त्रभेदे शारीरमरुदन्तरे। तुरंगमप्रभेदे च' ॥ (३३) ॥*॥ सहस्रमंशवो यस्य ॥ (३४) ॥*॥ तपति। ल्युः (३।१।१३४) '**तपनो**ऽरुष्करेऽपि स्याद्भास्करे निरयान्तरे'। प्रज्ञाद्यणि (५।४।३८) तापनोऽपि। तापयति वा। ल्युः (३।१।१३४)। 'तपनस्तापनो रविः' इति संसारावर्तात् ॥ (३५) ॥*॥ सुवति। 'षू प्रेरणे' (तु० प० से०)। तृच् (३।१।१३३)। यत्तु—सूयते, सूते–इति स्वामिमुकुटाभ्यामुक्तम्। तन्न। 'स्वरतिसूतिसूयति–' (७।२।४४) इतीड्विकल्पात्पक्षे 'सोता' इति रूपप्रसङ्गात्। उक्तधात्वोरर्थासंगतेश्च ॥ (३६) ॥*॥ रूयते, स्तूयते, रवते, वा। रविः 'रु शब्दे' (अ० प० से०)। 'रुङ् गतौ' (भ्वा० आ० अ०) वा। 'अच इः' (उ० ४।१३९) ॥ (३७) ॥*॥ **चण्डांशुः**, अपि। 'चण्डांशोः पारिपार्श्विकाः' इति वक्ष्यमाणत्वात् ॥*॥ सप्तत्रिंशत् '**सूर्यस्य**' ॥

**माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्विकाः ॥३१॥**

(**माठर इति** ॥) मनुते मठरः। स एव माठरः। 'जनेररष्ठश्च' (उ० ५।३८) इत्यनुवर्तमाने 'वचिमनिभ्यां चिच्च' (उ० ५।३९) इत्यरप्रत्ययः ठश्चान्तादेशः। ततः प्रज्ञाद्यण् (५।४।३८)। मठति। 'मठ मदनिवासयोः' (भ्वा० प० से०) बाहुलकादरच्। मठरस्यापत्यमिति वा। ऋष्यण् (४।१।११४)। मठन्त्यनेन मठः। 'पुंसि–' (३।३।११८) इति घः। मठं राति। 'रा दाने' (अ० प० से०)। कः (३।२।३) ('**माठरो** व्यासविप्रयोः। सूर्यानुगे') ॥ (१) ॥*॥ पिङ्गलो वर्णोऽस्यास्ति। अर्श आद्यच्

१—'स्त्री तु नार्यौषधी' इति पाठः ॥ २—मते इत्यनेन 'एरजण्यन्तानामिति वचनमनार्षम्' इति कैयटबोधिता रुचिः सूचिता ॥

१—मत्सरो द्वेषः। तत्र यथा 'मुनौ विहंसे सरसीव शुष्के' इत्यनेकार्थकैरवाकरकौमुदी ॥

( ५।२।१२७ ) । पिङ्गं वर्णं लातीति वा । कः ( ३।२।३ ) ॥ ( १ ) ॥*॥ दण्डोऽस्यास्ति । अच् ( ५।२।१२७ ) दण्डयतीति वा । ( 'दण्डः सैन्ये दमे यमे । मानव्यूहप्रभेदेऽश्वेऽर्कानुचरे मथि ॥ प्रकाण्डे लगुडे कोणे चतुर्थोपायवर्गयोः' ॥ ( १ ) ॥*॥ पार्श्वे इति परिपार्श्वम् । विभक्त्यर्थेऽव्ययीभावः ( २।१।६ ) । परिपार्श्वं वर्तते, इत्यर्थे 'परिमुखं च' ( ४।४।२९ ) इति चकाराट्ठक् । सूर्यपार्श्वस्थानां **'माठरादित्रयाणां'** एकैकम् ॥

**सूर्यसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः ।**

( **सूर्येति** ॥ ) सूर्यस्य सूतः ॥ ( १ ) ॥*॥ अरुणो वर्णोऽस्यास्ति । अच् ( ५।२।१२७ ) । 'गुण-' ( वा० ५।२।९४ ) इति मतुपो लुग्वा ॥ ( २ ) ॥*॥ अविद्यमानावूरू यस्य ॥ ( ३ ) ॥*॥ कश्यपस्यापत्यम् । बाह्वादित्वात् ( ४।१।९६ ) इञ् ॥ ( ४ ) ॥*॥ गरुडस्याग्रजः ॥ ( ५ ) ॥*॥ पञ्च **'सूर्यसारथेः'** ॥

**परिवेषस्तु परिधिरुपसूर्यकमण्डले ॥ ३२ ॥**

( **परिवेष इति** ॥ ) परितो विष्यतेऽनेन । 'विष्लृ व्याप्तौ' ( जु० उ० अ० ) । घञ् ( ३।३।१८ ) । **'परिवेषः** स्यात्परिधौ परिवेषणे' इति मूर्धन्यान्ते रुद्रः ॥*॥ 'विश प्रवेशने' ( तु० प० अ० ) अस्माद्घञि तु तालव्यान्तः । 'वेष्टने **परिवेशः** स्याद्भानोः सविधमण्डले' इति तालव्यान्ते रभसः ॥ ( १ ) ॥*॥ परितो धीयतेऽनेन । 'उप-' ( ३।३।९२ ) इति किः । ( **'परिधिर्**यज्ञियतरोः शाखायामुपसूर्यके' ) ॥ ( २ ) ॥*॥ उपगतं सूर्यमुपसूर्यम् । प्रादिसमासः ( २।२।१८ ) । ततः स्वार्थे कन् ( ५।३।९७ ) ॥ ( ३ ) ॥*॥ 'मडि भूषायाम्' ( भ्वा० प० से० ) मन्दति । वृषादित्वात् ( उ० १।१०६ ) कलच् ॥ ( ४ ) ॥*॥ 'मण्डलं परिवेशश्च परिधिश्चोपसूर्यकम्' इति भागुरिः ॥ चत्वारि **'चन्द्रसूर्ययोरुत्पातादिजातमण्डलस्य'** ॥

**किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयः ।**
**भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ॥ ३३ ॥**

( **किरण इति** ॥ ) कीर्यते । 'कॄ विक्षेपे' ( तु० प० से० ) । 'कॄपॄवृजि-' ( उ० २।८१ ) इति क्युः ॥ ( १ ) ॥*॥ वसन्ति रसा अस्मिन् । 'वस निवासे' ( भ्वा० प० अ० ) । 'स्फायितञ्चि-' ( उ० २।१३ ) इति रक् । यजादित्वात् । ( ६।१।१५ ) संप्रसारणम् । 'न रपर-' ( ८।३।११० ) इति न षत्वम् । ( **'उस्रो** वृषे च किरणेऽप्युस्रार्जुन्युपचित्रयोः' ) ॥ ( २ ) ॥*॥ मिमीते । 'माङ ऊखो मय च' ( उ० ५।२५ ) इत्यूखप्रत्ययो मयादेशश्च । एतेन मापयन् प्रमापयन् गगनमोखति गच्छति । 'मा माने' ( अ० प० अ० ) । 'उखउखि-' ( भ्वा० प० से० ) इति दण्डकोक्तो गत्यर्थः । अच् ( ३।१।१३४ ) । पृषोदरादिः ( ६।३।१०९ ) इति मुकुटः परास्तः । धातुसमुदायात्प्रत्ययानामविधानात् । पृषोदरादित्वाश्रयणस्य निर्मूलत्वाच्च । ( **'मयूखः** किरणेऽपि च । ज्वालायामपि शोभायाम्' ) ॥ ( ३ ) ॥*॥ अंशयति । 'अंश विभाजने' चुरादिः । मृगय्वादित्वात् ( उ० १।३७ ) कुः । **'अंशुर्**लेशे रवौ रश्मौ' इति विश्वः । **'अंशुः** सूत्रादिसूक्ष्मांशे किरणे चण्डदीधितौ' ॥ ( ४ ) ॥*॥ गम्यते । 'अन्यत्रापि' ( वा० ३।२।४८ ) इति डः । गो ज्ञेयवर्गः । तं बभस्ति दीपयति ॥ गभस्तिः । 'भस भर्त्सनदीप्त्योः' ( जु० प० से० ) । जुहोत्यादिः 'क्तिच्क्तौ च-' ( ३।३।१७४ ) इति क्तिच् । एवं च-गगने भसति दीप्यते । 'भस भर्त्सनदीप्त्योः' । 'वसेस्तिः' ( उ० ४।१८० ) इति बाहुलकात्तिप्रत्ययः । पृषोदरादित्वात् ( ६।३।१०९ ) गनभागलोपः- इति मुकुटकृतं क्लिष्टकल्पनमनुपादेयम् । भसतीति विगृह्योक्तधातोरुपन्यसनं प्रामादिकम् । ( **'गभस्तिः** किरणे सूर्ये ना स्वाहायां तु योषिति' ) ॥ ( ५ ) ॥*॥ जिघर्ति । 'घृ क्षरणदीप्त्योः' ( जु० प० अ० ) जुहोत्यादिः । छान्दसस्यापि भाषायां प्रयोगः-इति प्राञ्चः । वस्तुतस्तु घरति । 'घृ सेचने' ( भ्वा० प० अ० ) भ्वादिः । 'घृणिपृश्नि-' ( उ० ४।५२ ) इति निप्रत्ययो गुणाभावश्च निपातितः । ( **'घृणिः** पुनः । अंशुज्वालातरङ्गेषु' ) ॥ ( ६ ) ॥*॥ धृष्णोति । 'ञिधृषा प्रागल्भ्ये' ( स्वा० प० से० ) । 'वृषिधृषिभ्यां कित्' इति निः किच्च-इति मुकुटः । तन्न । तादृशसूत्राभावात् । अतो बाहुलकान्निः, गुणाभावश्च ॥ * ॥ **'वृष्णिः'** इति पाठान्तरम् । 'वृषु सेचने' ( भ्वा० प० से० ) । 'सृवृषिभ्यां कित्' ( उ० ४।४९ ) इति निः पिच्च ॥*॥ **'पृश्निः'** इत्येके पेठुः । 'स्पृश संस्पर्शने' ( तु० प० अ० ) । अस्य सलोपो गुणाभावश्च 'घृणिपृश्नि-' ( उ० ४।५२ ) इति निपातितः । पर्शति । 'पृशु सेचने' ( भ्वा० प० से० ) वा ॥ ( ७ ) ॥*॥ भाति । भानुः ॥ ( ८ ) ॥*॥ कीर्यते । 'कॄ विक्षेपे' ( तु० प० से० ) 'ॠदोरप्' ( ३।३।५७ ) । ( **'करो** वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः' ) ॥ ( ९ ) ॥*॥ म्रियते तमोऽस्मिन् । 'मृकणिभ्यामीचिः' ( उ० ४।७० ) स्त्रीपुंसाधिकारे—'त्रुटिमसिमरीचयः' इति लिङ्गानुशासनम् । 'द्वयोर्मरीचिः किरणो भानुरुस्रः करः **पदम्'** इति शब्दार्णवः । **'मरीचिर्**मुनिभेदे ना गभस्तावनपुंसकम्' ॥ ( १० ) ॥*॥ दीधीते दीप्यते । 'दीधीङ् दीप्तिदेवनयोः' ( अ० आ० से० ) क्तिच् ( ३।३।१७४ ) । 'तितुत्र-' ( ७।२।९ ) इतीण्निषेधस्तु न । 'अग्रहादीनाम्'

१—इन्द्रादयो ह्यष्टादश नामान्तरेणार्कपरिचारकाः । यत्सौरम् । 'तत्र शक्रो वामपार्श्वे दण्डाख्यो दण्डनायकः । वह्निस्तु दक्षिणे पार्श्वे पिङ्गलो वामनश्च सः ॥ यमोऽपि दक्षिणे पार्श्वे भवेन्माठरसंज्ञया । एवमन्ये गुहहरराहु(केतु)स्त्वरादयः । तेषु प्राधान्यात्त्रय एवोक्ताः ।' इति स्वामिमुकुटौ ॥

१—तालव्यान्तः 'अथोडुबन्धुश्च भयंकरे करे महौषधीनष्टकरांशुभे शुभे' इति जानकीहरणे यमकादिति मुकुटः ॥

इति वार्तिकात् । 'यीवर्णयोः–' ( ७।४।५३) इतीकारलोपः । अयं स्त्रियामेव । 'दीधितिः स्त्रियाम्' इति लिङ्गानुशासनात् । काकाक्षिगोलकन्यायेन 'दीधितिः' इत्यत्र स्त्रियामिति संबध्यते। उत्तरत्रापि ॥ (११) ॥*॥ एकादश '**किरणानाम्**' ॥

**स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः । रोचिः शोचिरुभे क्लीबे**

(**स्युरिति** ॥) प्रभाति । 'आतश्चोपसर्गे' (३।१।१३६) इति कः ॥ (१) ॥*॥ रोचते । 'रुच दीप्तौ' ( भ्वा० आ० से० ) । क्विप् (३।२।१७८) । ('**रुक्** शोभाकिरणेच्छासु') ॥ (२) ॥*॥ 'इगुपधात्कित्' ( उ० ४।१२० ) इतीन् । '**रुचि**र्दीप्तौ च शोभायामभिष्वङ्गाभिलाषयोः' ॥ ( ३ ) ॥*॥ त्वेषति । 'त्विष दीप्तौ ( भ्वा० उ० से० ) क्विप् (३।२।१७८) । ('**त्विट्** शोभायां जिगीषायां व्यवसाये रुचौ गिरि' ) ॥ (४) ॥*॥ 'भा दीप्तौ' ( अ० प० से० ) । दृशिग्रहणात् ( वा० ३।२।१०१ )डः । टाप् (४।१।४) । '**भा** भुव्यलंकृतौ दीप्तौ स्त्रियां भाः किरणे द्युतौ' इति नानार्थरत्नमाला । यद्वा क्विप् ( ३।२।१७८ ) । आबन्तत्वाभावान्न सुलोपादिः । भाः विश्वपावत् ॥ (५) ॥*॥ 'भास दीप्तौ' ( भ्वा० आ० से० ) । क्विप् ( ३।२।१७७ ) भाः, भासौ । ('**भाः** प्रभावे मयूखे च') ॥ (६) ॥*॥ छ्यति छिनत्ति वा तमः । 'कृविघृष्विच्छवि–' (उ० ४।५६) इति क्विन्नन्तो निपातितः ॥ (७) ॥*॥ 'द्युत दीप्तौ' ( भ्वा० आ० से० ) द्योततेऽनया । 'इगुदधात्कित्' (उ० ४।१२०) इतीन् ॥ (८) ॥*॥ दीप्यतेऽनया । 'दीपी दीप्तौ' ( दि० आ० से० ) । 'क्तिन्नाबादिभ्यः' (वा० ३।३।९४) ॥ (९) ॥*॥ 'रुच दीप्तौ' (भ्वा० आ० से०)' रोचतेऽनेन । 'अर्चिशुचि–' (उ० २।१०८) इति इसिः ॥ ( १० ) ॥*॥ 'ईशुचिर् पूतीभावे' । ( दि० उ० से० ) । शुच्यति पूतीभवत्यनेन । इसिः ॥ ( ११ ) ॥*॥ एकादश '**प्रभायाः**' ॥

**प्रकाशो द्योत आतपः ॥ ३४ ॥**

( **प्रकाश इति** ॥ ) प्रकाशद्योताविति भावे (३।३।१८) करणे (३।३।१९) वा घञन्तौ । ('**प्रकाशः** स्फुटहासयोः । उद्द्योतेऽतिप्रसिद्धे च') ॥ (१) ॥*॥ (२) ॥*॥ आतपस्तु पाचाद्यजन्तः ॥ (३) ॥*॥ त्रीणि '**आतपस्य**' ॥

**कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिपु तद्वति ।**

**कोष्णमिति** ॥ ईषदुष्णं कोष्णम् । 'ईषदर्थे' (६।३।१०५) इति कादेशः ॥ (१) ॥*॥ 'कवं चोष्णे' (६।३।१०७ ) इति कोः कवादेशः ॥ (२) ॥*॥ कदादेशश्च ॥ (४) ॥*॥ मन्दं च तदुष्णं च ॥ (३) ॥*॥ एते गुणे क्लीबाः । गुणिनि विशेष्यनिघ्नाः ॥ चत्वारि '**ईषदुष्णस्य**' ॥

**तिग्मं तीक्ष्णं खरं तद्वत्**

( **तिग्ममिति** ॥ ) तेजयति । 'तिज निशाने' (चु० प० से ०) । 'युजिरुचितिजां कुश्च' (उ० १।१४६) इति मक् कवर्गश्चान्तादेशः ॥ (१) ॥*॥ 'तिजेर्दीर्घश्च' (उ० ३।१८) इति क्स्नप्रत्यये तीक्ष्णम् । '**तीक्ष्णं** सामुद्रलवणे विषलोहाजिमुष्कके । क्लीबं यवाग्रके पुंसि तिग्मार्थत्यागिनोस्त्रिषु' ॥ (२) ॥*॥ खमिन्द्रियं रात्यभिभवति । 'रा दाने' (अ० प० अ० ) । कः (३।२।३) । '**खरं** स्यात्तीक्ष्णघर्मयोः । गर्दभेऽस्त्री देवताडे' ॥ (३) ॥*॥ तद्वत्–गुणे क्लीबम्, तद्वति त्रिषु, इत्यर्थः । त्रीणि '**अत्युष्णस्य**' । तीक्ष्णोऽसिः इत्यादावुपचारात्प्रयोगः ॥

**मृगतृष्णा मरीचिका ॥ ३५ ॥**

( **मृगेति** ) ॥ मृगाणां तृष्णाऽस्त्यस्याम् । अर्शआद्यच् (५।२।१२७) ॥ (१) ॥*॥ मरीचिरिव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥ (२) ॥*॥ द्वे '**मृगतृष्णायाः**' ॥

**इति दिग्वर्गविवरणम् ॥**

**कालो दिष्टोऽप्यनेहापि समयोऽपि**

**काल इति** ॥ कल्यते । 'कल संख्याने शब्दे च' (भ्वा० आ० से० ) । कर्मणि घञ् (३।३।१९) कालयति सर्वम्, इति वा । ण्यन्तात्पचाद्यच् (३।१।१३४) '**कालो** मृत्यौ महाकाले समये यमकृष्णयोः' ॥ (१) ॥*॥ दिशति । 'दिश अतिसर्जने' (तु० उ० अ०) । 'क्तिच्क्तौ च संज्ञायाम्' ( ३।३।१७४ ) इति क्तः । '**दिष्टं** दैवे पुमान्काले' ॥ (२) ॥*॥ नाहन्ति नागच्छति, नाहन्यते, इति वा । 'नञ्याहन एह च' ( उ० ४।२२४ ) इत्यसुन्, एहादेशश्च । सौ 'ऋदुशनस्–' ( ७।१।९४ ) इत्यनङ् । 'तस्यान्नुडचि' (६।३।७४) इति नुट् । सान्तः ॥ (३) ॥*॥ सम्यग् एति । 'इण् गतौ' (अ० प० अ० ) पचाद्यच् ( ३।१।१३४ ) । ('**समयः** शपथे भाषासंपदोः कालसंविदोः । सिद्धान्ताचारसंकेतनियमावसरेषु च ॥ क्रियाकारे निर्देशे च') ॥ (४) ॥*॥ चत्वारि '**सामान्यकालस्य**' ॥

**अथ पक्षतिः ।**

**प्रतिपद् द्वे इमे स्त्रीत्वे**

( **अथेति** ॥ ) पक्षस्य मूलम् । 'पक्षात्तिः' ( ५।२।२५ ) 'सर्वतोऽक्तिन्नर्थात्–' ( वा० ४।१।४५ ) इति ङीषि तु पक्षती । '**पक्षतिस्तु** भवेत्पक्षमूले च प्रतिपत्तिथौ' ॥ (१) ॥*॥ प्रतिपद्यते उपक्रम्यतेऽनया मासादिः । संपदादित्वात् ( वा० ३।३।१०८ ) क्विप् दान्ता । '**प्रतिपत्स्त्री** तिथौ मतौ' ॥ (२) ॥*॥ द्वे '**प्रतिपत्तिथेः**' ॥

**तदाद्यास्तिथयो द्वयोः ॥ १ ॥**

( **तदाद्या इति** ॥ ) सा प्रतिपद् आद्या यासां ताः ।

---

१—पचाद्यजन्त इत्युत्तरं 'खनो घ च' इति घो वा इत्यपि पाठः ॥

'अत सातत्यगमने' ( भ्वा० प० से० ) 'ऋतन्यञ्जि-' (उ० ४।२ ) इत्यतेरिथिन्। पृषोदरादित्वात् (६।३।१०९) अल्लोपः ॥ (१) ॥*॥ द्वयोरित्यत्र श्रुतत्वात्तिथिशब्द एव संबध्यते ॥ एकं **'सामान्यतिथेः'** ॥

**घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ।**

**घस्र इति** ॥ घसत्यन्धकारम्। 'घस्लृ अदने' (भ्वा० प० अ० ) 'स्फायितञ्चि-'(उ० २।१३) इति रक्। **'घस्रस्तु** दिवसे हिंस्रे' ॥ (१) ॥*॥ दीयते क्षीणं भवति। 'दीङ् क्षये' ( दि० आ० अ० ) दिवादिः। 'इणसिञ्जिदीङ्-' (उ० ३।२ ) इति नक्। बाहुलकाद्ध्रस्वः। द्यति तमो, निर्व्यापारस्थितिं चेति वा। द्यतेः किनन् ( उ० २।४९) ॥ (२) ॥*॥ न जहाति। 'नञि जहातेः' ( उ० १।१५८ ) इति कनिन्। 'रोऽसुपि' (८।२।६९) इति रः। यत्तु—'अहन्' (८।२।६८) इति रुत्वम्-इति मुकुटेनोक्तम्। तन्न। रत्वस्य रुत्वापवादत्वात् ॥ (३) ॥*॥ दीव्यन्त्यत्र। 'दिवादिभ्यः कित्' (उ० ३।१२१ ) इत्यसच् ॥ (४) ॥*॥ वासयति। वसतेर्ण्यन्तात् 'अर्तिकमिभ्रमि-' ( उ० ३।१३२ ) इत्यरप्रत्ययः। **'वास**रस्तु पुमान्नागप्रभेदे दिनयोरपि' ॥ (५) ॥*॥ पञ्च **'दिनस्य'** ॥

**प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि ॥ २ ॥ प्रभातं च**

**प्रत्यूष इति** ॥ प्रत्यूषति रुजति कामुकान्। 'ऊष रुजायाम्' (भ्वा० प० से० ) 'इगुपध-' ( ३।१।१३५ ) इति कः। **'प्रत्यूषोऽहर्मुखे वसौ'** ॥ (१) ॥*॥ अह्नो मुखम् ॥ (२) ॥*॥ कलयति चेष्टाम्। 'अघ्न्यादयश्च' ( उ० ४।११२ ) इति कलेर्यक्। ततः प्रज्ञादित्वादणि (५।४।३८) **काल्यम्,** अपि। **'कल्यं** प्रभाते क्लीबं **स्यात्कल्यो** वाक्श्रुतिवर्जिते। सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च ॥ उपायवचनेऽपि स्यात्त्रिषु मद्ये तु योषिति' ॥ (३) ॥*॥ ओषत्यन्धकारम्। 'उष दाहे' (भ्वा० प० से० )। 'उषः किच्च' ( उ० ४।२३४ ) इत्यसिः। अन्योपसर्गनिवृत्तये प्रति। **'उषः** प्रत्युषसि क्लीबं पितृप्रस्वां च योषिति' ॥ (४) ॥*॥ (५) ॥*॥ भातुं प्रवृत्तम्। प्रभातम्। आदिकर्मणि ( ३।४।७१ ) क्तः ॥ (६) ॥*॥ षट् **'प्रभातस्य'** ॥

**दिनान्ते तु सायः**

( **दिनेति** ॥ ) दिनस्यान्तः। स्यति समापयति दिनम्। 'षोऽन्तकर्मणि' ( दि० प० अ० )। 'श्याद्व्यधा-' (३।१।१४१) इति णः। **'सायः** काण्डे दिनान्ते च' ॥*॥ मान्तमव्ययं त्वव्ययवर्गे वक्ष्यति ॥ (१) ॥*॥ एकम् **'दिनान्तस्य'** ॥

**संध्या पितृप्रसूः।**

( **संध्येति** ॥ ) सम्यग् ध्यायन्त्यस्याम्। 'ध्यै चिन्तायाम्' ( भ्वा० प० अ० )। 'आतश्चोपसर्गे ( ३।३।१०६ ) इत्यङ्। **'संध्या** पितृप्रसूनद्यन्तरयोर्युगसंधिषु' ॥*॥ निर्यकारोऽपि। संधीयतेऽनुसंधीतेऽस्याम्। डुधाञः ( जु० उ० अ० ) अङ् ( ३।३।१०६ )। 'संध्या पितृप्रसूः **संधा'** इति शब्दार्णवः ॥ (१) ॥*॥ पितॄन् प्रसूते। क्विप् ( ३।२।७६ )। द्वे **'संध्यायाः'** ॥

**प्राह्णापराह्णमध्याह्नास्त्रिसंध्यम्**

**प्राह्णेति** ॥ अहःशब्दस्तदवयवे। प्रथमं च तदहश्च प्राह्णः। 'राजाहः-' ( ५।४।९१ ) इति टच्। 'अह्नोऽह्नः-' ( ५।४।८८ ) इत्यह्नादेशः। 'अह्नोऽदन्तात्' ( ८।४।७ ) इति णत्वम् ॥ (१) ॥*॥ अह्नोपरम्-अपराह्णः। 'पूर्वापर-' (२।२।१) इत्येकदेशिसमासः ॥ (१) ॥*॥ अह्नो मध्यम् 'संख्याविसाय-' ( ६।३।११० ) इति ज्ञापकात्समासः। 'रात्राह्नाहाः पुंसि' ( २।४।२९ ) मध्यं च तदहश्चेति वा ॥*॥ तिसृणां संध्यानां समाहारः। 'आबन्तो वा' ( वा० २।४।३० ) इति पाक्षिकी क्लीबता, पक्षे त्रिसंध्यी ॥ ( १ ) ॥*॥ एकं **'दिनाद्यन्तमध्यानाम्'** ॥

**अथ शर्वरी ॥ ३ ॥**

**निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा। विभावरीतमस्विन्यौ रजनी यामिनी तमी ॥ ४ ॥**

( **अथेति** ॥ ) शृणाति चेष्टाः। 'शॄ हिंसायाम्' ( क्र्या० प० से०)। 'कॄगॄशॄवृञ्चतिभ्यः ष्वरच्' (उ० २।१२१) 'षिद्गौरा-' ( ४।१।४१ ) इति ङीष्। **'शर्वरी** यामिनीस्त्रियोः' ॥*॥ प्रज्ञाद्यणि शार्वर्यपि। 'शर्वरी **शार्वरी शर्या'** इति शब्दार्णवः ॥ (१) ॥*॥ नितरां श्यति तनूकरोति व्यापारान्। 'शो तनूकरणे' (दि० प० से०)। 'आतश्चोपसर्गे' (३।१।१३६) इति कः। **'निशा** दारुहरिद्रायां स्यात्रियामाहरिद्रयोः' इति विश्वः ॥*॥ 'निशीथिनी निशा **निट्** च **श्यामा तुङ्गी तमा** तमी' इति नामनिधानात् 'निट्' पृषोदरादित्वात् (६।३।१०९ ) शान्तापि ॥ (२) ॥*॥ निशीथोऽस्त्यस्याम्। इनिः ( ५।२।११५ ) ॥ (३) ॥*॥ राति सुखम्। 'रा दाने' (अ० प० से०) 'राशदिभ्यां त्रिप्' (उ० ४।६७) ॥*॥ 'कृदिकारात्-' (ग० ४।१।४५) इति ङीषि रात्रीत्यपि। **'रात्री** रात्रिस्तमस्विनी' इति शब्दार्णवः ॥ (४) ॥*॥ त्रयो यामा यस्याः। आद्यन्तयोरर्धयामयोश्चेष्टाकालत्वेन दिनप्रायत्वात्। यद्वा त्रीन्धर्मादीन् यापयति निरवकाशीकरोति कामप्रधान-

१—दन्त्यमध्यः 'रविर्मनाग्दर्शितवासरः सरः' इति जानकीहरणम्। 'बद्धो वासरसङ्गः' इति भट्टिभाषासमावेशः—इति मुकुटः ॥ २—दीर्घमध्यः 'प्रत्यूषस्फुटितकमलामोदमैत्रीकषायः' इति माघः—इति मुकुटः ॥ ३—'कल्यं प्रधाने' इति पाठः ॥

१—'संधोज्ज्वलितः' इति वासवदत्ता—इति मुकुटः ॥ २—'गुणसंधी पुंसि' इति पाठोऽपि दृश्यते ॥

लात् । अन्तर्भावितण्यर्थाद्यातेः 'अर्तिस्तुसु–' ( उ० १।१४० ) इति मन् ॥ (५) ॥*॥ क्षणम् उत्सवं निर्व्यापारस्थितिं वा ददाति । कः (३।२।३) । '**क्षणदो** गणके, रात्रौ **क्षणदा, क्षणदं** जले' ॥ (६) ॥*॥ क्षपयति चेष्टाम् । 'क्षै क्षये' ( भ्वा० प० से० ) अस्माण्ण्यन्तान्मितः पचाद्यच् ॥ (७) ॥*॥ विभाति नक्षत्रादिभिः । क्वनिप् (३।२।७४) । 'वनो र च' (४।१।७) इति ङीब्रौ । '**विभावरी** निशारात्र्योः कुट्टन्यां चक्रयोषिति । विवादे वस्त्रकुट्यां च' ॥ (८) ॥*॥ तमोऽस्त्यस्याम् । 'अस्माया–' (५।२।१२१) इति विनिः ॥ (९) ॥*॥ रजन्त्यनुरक्ता भवन्ति रागिणोऽस्याम् । 'क्षिपेः किच्च' ( उ० २।१०७ ) इति चकारादनिः । कित्त्वान्नलोपः (६।४।२४) । ङीप् ( ग० ४।१।४५ ) । '**रजनी** नीलिनीरात्रिहरिद्राजतुकासु च' । ङीषभावे **रजनिरपि** ॥ (१०) ॥*॥ भीतिहेतुत्वान्निन्दिता यामा यस्याः । निन्दायामिनिः (५।२।११५) ॥ (११) ॥*॥ ताम्यन्त्यस्याम् । 'तमु ग्लानौ' ( दि० प० से० ) । इन् ( उ० ४।११८ ) । 'कृदिकाराद्–' ( ग० ४।१।४५ ) इति ङीष् ॥*॥ पक्षे तमिः ॥*॥ पचाद्यचि '**तमा**' अपि ॥ (१२) ॥*॥ द्वादश '**रात्रेः**' ॥

**तमिस्रा तामसी रात्रिर्**

(**तमिस्रेति** ॥) तमो बहुलमस्त्यस्याम् । 'ज्योत्स्नातमिस्रा–' (५।२।११४) इति निपातिता । '**तमिस्रं** तिमिरे कोपे पुंसि स्त्री तु तमस्ततौ । कृष्णपक्षनिशायां च' ॥ (१) ॥*॥ ज्योत्स्नादिभ्य उपसंख्यानात् ( वा० ५।२।१०३ ) मत्वर्थेऽण् । '**तामसी** निशि दुर्गायां **तामसो** भुजगे खले' ॥ (२) ॥*॥ द्वे '**अत्यन्धकाररात्रेः**' ॥

**ज्यौत्स्नी चन्द्रिकयान्विता ।**

( **ज्यौत्स्नीति** ॥ ) ज्योत्स्नास्त्यस्याम् । प्राग्वदण् ( वा० ५।२।१०३ ) ( '**ज्योत्स्नी** पटोलिकायां स्याज्ज्योत्स्नायुक्तनिशि स्त्रियाम्' ) ॥ (१) ॥*॥ एकम् '**ज्योत्स्नावद्रात्रेः**' ॥

**आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी ॥ ५ ॥**

( **आगामीति** ॥ ) आगामिवर्तमाने च ते अहनी च । इति कर्मधारये टच् (५।३।९१) । सरेफपाठे तु समासान्तविधेरनित्यताश्रयणीया । आगामिवर्तमाने अहनी युक्ते यस्यामिति बहुव्रीहिर्वा । पूर्वापरदिने पक्षाविव स्तो यस्याम् । 'अत इनि–' (५।२।११५) ॥*॥ निशीत्युपलक्षणम् । तेन पूर्वोत्तररात्रियुक्तदिनमपि पक्षिणीति हरदत्तादयः । '**पक्षिणी** पूर्णिमायां स्याद्विहग्यां शाकिनीभिदि । आगामिवर्तमानाहर्युक्तरात्रावपि स्त्रियाम्' ॥ (१) ॥*॥ एकं '**दिनद्वयमध्यगतरात्रेः**'॥

**गणरात्रं निशा बह्व्यः**

(**गणेति** ॥) गणानां बह्वीनां रात्रीणां समाहारः । गणशब्दस्य संख्यावात् (१।१।२३) 'तद्धितार्थ–' (२।१।५१) इति द्विगुः । 'अहःसर्वैकदेश–' (५।४।८७) इत्यच् । 'रात्राह्नाहाः पुंसि' (२।४।२९) इति पुंस्त्वं तु न । 'संख्यापूर्वा रात्रिः' इति लिङ्गानुशासनसूत्रेण क्लीबत्वविधानात् । 'भवति नपुंसकयोगः संख्यापूर्वस्य रात्रशब्दस्य' इति वररुचिवचनाच्च । 'रात्रं प्राक् संख्ययान्वितम्' इति वक्ष्यमाणत्वाच्च । एतेन स्वामिमुकुटयोर्नपुंसकत्वसमर्थनसंभ्रमः परास्तः ॥ (१) ॥*॥ एकम् '**रात्रिसमूहस्य**' ॥

**प्रदोषो रजनीमुखम् ।**

(**प्रदोष इति** ॥) दुष्यति । 'दुष वैकृत्ये' (दि० प० अ०) । पचाद्यच् (३।१।१३४) । टाप् (४।१।४) । ('**दोषा** रात्रौ भुजेऽपि च') । प्रारम्भो दोषायाः । प्रादिसमासः (२।२।१८)। प्रारब्धा दोषा यस्मिन्निति वा । 'गोस्त्रियोः–' (१।२।४८) इति ह्रस्वः ॥*॥ 'दोषा' इत्यव्ययमप्यस्ति । '**नक्तं दोषा** च रजनौ' इति वक्ष्यते । ('**प्रदोषः** कालदोषयोः') ॥ (१) ॥*॥ रजन्या मुखमिव ॥ (२) ॥*॥ द्वे '**रात्रिप्रारम्भस्य**' ॥

**अर्धरात्रनिशीथौ द्वौ**

(**अर्धेति** ॥) अर्धं रात्रेः । 'अहःसर्वैकदेश–' (५।४।८७) इत्यच् ॥ (१) ॥*॥ निशेरतेऽस्मिन् । 'शीङ् स्वप्ने' ( अ० आ० से० ) । 'निशीथगोपीथावगथाः' ( उ० २।९ ) इति थक् । '**निशीथस्तु** पुमानर्धरात्रे स्याद्रात्रिमात्रके' ॥ (२) ॥*॥ द्वाविति । समावित्याकृष्यते ॥ द्वे '**रात्रिमध्यस्य**' ॥

**द्वौ यामप्रहरौ समौ ॥ ६ ॥**

( **द्वाविति** ॥ ) याति । 'अर्तिस्तुसु–' ( उ० १।१४० ) इति मन् । यत्तु—'यातेर्मग्' इति मग्—इति मुकुटेनोक्तम् । तन्न । उक्तसूत्रस्योत्प्रेक्षितत्वेन निर्मूलत्वात् । '**यामस्तु** पुंसि प्रहरे संयमेऽपि प्रकीर्तितः' ॥ (१) ॥*॥ प्रह्रियते ढक्कादिरस्मिन् । 'पुंसि संज्ञायाम्–' (३।३।११८) इति घः ॥ (२) ॥*॥ द्वे '**प्रहरस्य**' ॥

**स पर्वसंधिः प्रतिपत्पञ्चदश्योर्यदन्तरम् ।**

(**स इति** ॥) प्रतिपत्पञ्चदश्योर्यदन्तरम् स संधिः । स एव पर्व अपि । 'प्रतिपत्पञ्चदश्योस्तु संधिः **पर्व** प्रदिक् ककुप्' इति दुर्गः । 'संधिमभितो यजेत्' इत्यादौ प्रसिद्धः स एव । '**पर्व** क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपि' ॥ (१) ॥*॥ 'पर्वसंधिः' इत्येकं नाम, इति प्राञ्चः ॥ एकम् '**पर्वसंधेः**' ॥

---

१—'स तमीं तमोभिरभिगम्य ताम्' इति माघदर्शनात्–इति मुकुटः॥
२—'हा राम हा देवर तात मातः' इति विदग्धमुखमण्डनम्—इति मुकुटः ॥ ३—खगे इति पाठान्तरम् ॥ ४—'स्याद्वितूण्यां' इति पाठः ॥

१—तथा च भट्टिः 'ततः कथाभिः समतीत्य दोषामारुह्य सैन्यैः सह पुष्पकं ते' इति–इति मुकुटः॥ २—अव्ययस्य स्त्रीलिङ्गाभावेन ह्रस्वाप्राप्त्या न रूपसिद्धिः ॥

**पक्षान्तौ पञ्चदश्यौ द्वे**

( **पक्षेति** ॥ ) द्वे पञ्चदश्यौ पूर्णिमामावास्ये पक्षस्यान्तौ ॥ (१) ॥*॥ एकम् **'पक्षान्तस्य'** ॥

**पौर्णमासी तु पूर्णिमा ॥ ७ ॥**

(**पौर्णेति** ॥) पूर्णो मासोऽस्याम् । बहुव्रीहौ कृते स्वार्थेऽण् । प्रज्ञादेः (५।४।३८) आकृतिगणत्वात् । 'सास्मिन्पौर्णमासी' (४।२।२१) इति निर्देशाद्वा । यद्वा माश्चन्द्रः । पूर्णो माः पूर्णमाः । तस्येयम् । यद्वा 'महाराजप्रोष्ठपदाट्ठञ्' (४।२।३५) इति सूत्रे 'तदस्मिन्वर्तते' इत्यर्थे 'पूर्णमासादणः' उपसंख्यानादण् । (**'पौर्णमासः** पुमान्यज्ञभेदे स्त्री पूर्णिमातिथौ' ) ॥ (१) ॥*॥ 'पूरी आप्यायने' ( दि० आ० से० ) । भावे क्तः (३।३।११४) पूर्णं चन्द्रस्य पूरणम् । तेन निर्वृत्ता पूर्णिमा । भावप्रत्ययान्तात् 'तेन निर्वृत्तम्' इत्यर्थे इमप् ( वा० ४।४।२० ) टाप् (४।१।४) ॥ (२) ॥*॥ द्वे **'पूर्णिमायाः'** ॥

**कलाहीने सानुमतिः**

**कलेति** ॥ सा पूर्णिमा उदयकाले प्रतिपद्योगात्कलाहीने चन्द्रे । अनुमन्यते-अनुमतिः । क्तिच् (३।३।१७४) । 'अथा**नुमति**रूनेन्दुपूर्णिमानुज्ञयोरपि' ॥ (१) ॥*॥ एकं **'सानुमत्याः'** ॥

**पूर्णे राका निशाकरे ।**

(**पूर्ण इति** ॥) चन्द्रे पूर्णे तु । राति शुभम् । 'रा दाने' ( अ० प० अ० ) । 'कृदाधारा-' ( उ० ३।४० ) इति कः । बाहुलकाद्ध्रस्वः । **'राका** नद्यन्तरे कच्छ्वां नवजातरजःस्त्रियाम् । संपूर्णेन्दुतिथौ' ॥ (१) ॥*॥ एकम् **'राकायाः'** ॥

**अमावास्या त्वमावस्या दर्शः सूर्येन्दुसंगमः ॥ ८ ॥**

( **अमेति** ॥ ) अमा सह वसतोऽस्यां चन्द्रार्कौ । 'अमावस्यदन्यतरस्याम्' (३।१।१२२) इति ण्यत्, पक्षे वृद्ध्यभावश्च निपात्यते ॥*॥ नामैकदेशे नामग्रहणात् **'अमा'** अपि ॥*॥ वसतेरिन्प्रत्यये ( उ० ४।११८ ) ततो ङीषि ( ग० ४। १।४५ ) अमावसी ॥*॥ 'इणजादिभ्यः' ( वा० ३।३।१०८ ) इतीणि अमावासी ॥*॥ 'मसी परिणामे' ( दि० प० से० ) । अमा चन्द्रसूर्यौ साहचर्येण मस्यतः परिच्छिन्तोऽस्यां मासम् । अमामासी । इण् ( वा० ३।३।१०८ ) ॥*॥ अमामसी । इन् ( उ० ४।११८ ) ॥*॥ 'दर्शो**माऽमावसी** च स्यात्' इति रभसः । 'अप्य**मावस्यमावासी** चा**मामस्यप्यमामसी**' इति शब्दार्णवः ॥ (१) ॥*॥ (२) ॥*॥ दृश्यते शास्त्रेण । 'पुंसि संज्ञायाम्' (३।३।११८) इति घः । 'पक्षान्तेऽब्धौ दर्शने च **दर्शः** सूर्येन्दुसंगमे' ॥ (३) ॥*॥ सूर्येन्दू संगच्छतोऽस्मिन् । घः (३।३।११८) ॥ (४) ॥*॥ चत्वारि **'दर्शस्य'**

**सा दृष्टेन्दुः सिनीवाली**

(**सेति** ॥) चतुर्दशीयोगाद्दृष्टचन्द्रा सती सा अमा सिनीवाली । एन विष्णुना सह वर्तते सा लक्ष्मीः । तद्योगात् । सिनी चन्द्रकला । व्रीह्यादित्वात् (५।२।११६) इनिः । सिनीं वलति धारयति । 'कर्मण्यण्' (३।२।१) यत्तु—'स्त्रियाः पुंवत्-' (६।३।३४) इति न पुंवत्त्वम् । 'संज्ञापूरण्योश्च' (६।३।३८) इति निषेधात्-इति मुकुटः । तन्न । सिनीवालीत्यत्र सामानाधिकरण्याभावात्, असंज्ञात्वात्, अभाषितपुंस्कत्वाच्च । यदपि—सिनी चन्द्रकला सा बालाल्पात्र-इति तेन विगृहीतम् । तदपि न । बालेत्यस्य विशेषणत्वेन पूर्वनिपातप्रसङ्गात् । स्वामी तु—सिनी सिता बालास्यस्याम्-इत्याह । तन्न । पुंवद्भावप्रसङ्गात् । (**'सिनीवाली** तु दृष्टेन्दुकलामादुर्गयोः स्त्रियाम्' ) ॥ (१) ॥*॥ एकम् **'सिनीवाल्याः'** ॥

**सा नष्टेन्दुकला कुहूः ।**

( **सेति** ॥ ) उदये अमायोगान्नष्टचन्द्रकला सा अमा कुहूः । कुहयति । 'कुह विस्मापने' ( चु० उ० से० ) चुरादिः । 'नृतिशृध्योः कूः' ( उ० १।९१ ) इति कूप्रत्ययो बाहुलकादिहापि ॥*॥ मृगय्वादित्वाद्ध्रस्वोऽपीत्यन्ये । 'धेनूरुरज्जुकुहुसरयुतनुकरेणवः स्त्रियाम्' इति विन्ध्यवासी ॥*॥ **'कुहूः** स्त्री कोकिलालापनष्टेन्दुकलदर्शयोः' ॥ (१) ॥*॥ एकम् **'कुह्वाः'** ॥

**उपरागो ग्रहः**

(**उपराग इति** ॥) उपरज्यतेऽनेन । 'रञ्ज रागे' ( भ्वा० उ० अ० ) । 'हलश्च' (३।३।१२१) इति घञ् । 'घञि च भावकरणयोः' (६।४।२७) इति नलोपः । भावे वा घञ् । (३।३।१८) । **'उपराग**स्तु पुंसि स्याद्राहुग्रासेऽर्कचन्द्रयोः । दुर्नये ग्रहकल्लोले व्यसनेऽपि निगद्यते' ॥ (१) ॥*॥ ग्रहणं ग्रहः 'ग्रहवृदृ०' (३।३।५८) इत्यप् । **'ग्रहो** निग्रहनिर्बन्धग्रहणेषु रणोद्यमे । सूर्यादौ **पूतनादौ** च सैंहिकेयोपरागयोः' ॥ (२) ॥*॥ द्वे **'ग्रहणस्य'** ॥

**राहुग्रस्ते त्विन्दौ च पूष्णि च ॥ ९ ॥**
**सोपप्लवोपरक्तौ द्वौ**

( **राह्विति** ॥ ) **'उपप्लवः** सैंहिकेये विप्लवोत्पातयोरपि' । सहोपप्लवेन । 'वोपसर्जनस्य' (६।३।८२) इति सभावः ॥ (१) ॥*॥ उपरज्यते स्म । कर्मणि क्तः (३।२।१०२।४।७०) । **'उपरक्तो** व्यसनार्ते राहुग्रस्तेन्दुसूर्ययोः ॥' (२) ॥*॥ इमौ द्वौ **'राहुणा ग्रस्ते सूर्ये'** च ॥

**अग्न्युत्पात उपाहितः ।**

( **अग्न्युत्पात इति** ॥ ) अग्नेरुत्पतनम् उत्पातो वैकृतम् ॥ (१) ॥*॥ उप आसन्नम् आहितं फलं यस्य । **'उपाहितो**ऽनलोत्पाते पुमानारोपिते त्रिषु' ॥ (२) ॥*॥ द्वे **'आकाशादिष्वग्निविकारस्य'** ॥

---

१—हैममेदिन्योरपि-'अनुग्रह' इति पाठो दृश्यते । व्याख्यातं चानेकार्थकैरवाकरकौमुद्याम् 'अनुग्रहे प्रसादे ग्रहशब्दः सत्यभामायां भामाशब्दवत्' इति ॥

**एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ॥ १० ॥**

(**एकयेति** ॥) 'पुष्प विकसने' ( दि० प० से० )। भावे घञ् (३।३।१८)। पुष्पो विकासः प्रकाशश्च । तद्वन्तौ । मतुप् (५।२।९४)। एकयोक्त्या साधारणवचनेन । प्रत्येकं 'पुष्पवान्' इति न प्रयोक्तव्यमिति भावः। अकारान्तोऽपि पुष्पवन्तशब्दः । 'अव रक्षणे' ( भ्वा० प० से० )। 'जॄविशिभ्यां झच्' ( उ० ३।१२६ ) इति बाहुलकादवतेरपि झच्। 'झोऽन्तः' (७।१।३)। पुष्पस्यावन्तौ इति विग्रहे शकन्ध्वादिः ( वा० ६।१।९४ )। 'रविशशिनौ पुष्पवन्ताख्यौ' इति नाममाला। 'पुष्पवन्ताभ्याम्, पुष्पवन्तयोः' इत्यादि। ( '**पुष्पदन्तौ** पुष्पवन्तावेकोक्त्या शशिभास्करौ'। '**पुष्पदन्तौ** च चन्द्रार्कावेकोक्त्या' इति हैमतः 'पुष्पदन्तौ' अपि बोध्यौ ) ॥ (१) ॥*॥ एकम् '**समुच्चितसूर्यचन्द्रयोः**' ॥

**अष्टादश निमेषास्तु काष्ठा**

(**अष्टादशेति** ॥) 'क्षणद्वयं **लवः** प्रोक्तो **निमेषस्तु** लवद्वयम्' इत्यादिशास्त्रसिद्धा निमेषाः। तेऽष्टादश काष्ठा । काशते । 'हनिकुषि-' ( उ० २।२ ) इति क्थन्। '**काष्ठा** दारुहरिद्रायां कालमानप्रकर्षयोः। स्याद्दिशि स्थानमात्रे च **काष्ठ**माख्यातमिन्द्रिये' इति विश्वः ॥ (१) ॥*॥ एकम् '**काष्ठायाः**' ॥

**त्रिंशत्तु ताः कला ।**

( **त्रिंशदिति** ॥ ) ताः काष्ठाः त्रिंशत् कला ॥ कलयति । 'कल संख्याने' ( चु० उ० से० )। पचाद्यच् (३।१।१३४)। ( '**कला** स्यात्कालशिल्पयोः' ) ॥ (१) ॥*॥ एकम् '**कलायाः**' ॥

**तास्तु त्रिंशत्क्षणः**

( **ता इति** ॥ ) ताः कलाः। क्षणोति। 'क्षणु हिंसायाम्' ( त० उ० से० ) । अच् (३।१।१३४)। '**क्षणाः** पर्वोत्सवेऽपि स्यात्तथा मानेऽप्यनेहसः' ॥ (१) ॥*॥ एकम् '**क्षणस्य**' ॥

**ते तु मुहूर्तो द्वादशास्त्रियाम् ॥ ११ ॥**

(**ते त्विति** ॥) ते तु क्षणाः ( द्वादश ) 'हुर्छा कौटिल्ये' ( भ्वा० प० से० )। बाहुलकात् 'अञ्जिघृसि-' ( उ० ३।८९ ) इति क्तो मुडागमश्च। 'राल्लोपः' (६।४।२१) इति छलोपः। 'हलि च' (८।२।७७) इति दीर्घः। 'लिङ्‌ चोर्ध्वमौहूर्तिके' (३।३।१६४) इति निर्देशाद्वा मुहूर्तः ॥ (१) ॥*॥ एकम् '**मुहूर्तस्य**' ॥

**ते तु त्रिंशदहोरात्रः**

(**ते त्विति** ॥) ते तु मुहूर्ताः। अहश्च रात्रिश्च तयोः समाहारः। 'अहःसर्वैकदेश-' (५।४।८७) इत्यच्। 'रात्राह्नाहाः पुंसि' (२।४।२९)। यत्तु—'अह्ना सहिता रात्रिः' इति विग्रहं प्रदर्श्य 'अहोरात्रः-' इत्युपन्यस्तं मुकुटेन। तन्न। तथा सत्यजभावप्रसङ्गात्। अहःपूर्वाद्रात्रिशब्दाद्द्वन्द्व एवाज्विधानात्। 'गणरात्रवदज्' इति दृष्टान्तोऽप्यसंमतः। चकारात्संख्याव्ययादेरप्यज्विधानात्। अत्र तदादित्वाभावात्। यदपि—समाहारे क्लीबमप्यहोरात्रम्–इत्युक्तम्। तदपि न। समाहारेऽपि 'रात्राह्नाहाः पुंसि' (२।४।२९) इत्यनेन परत्वात्पुंस्त्वविधानात्। यदपि—वामनलिङ्गानुशासने 'द्विगुरपि पात्राद्यदन्तः' इति नपुंसकत्वेन 'अहोरात्रं द्विरात्रम्' इत्युदाहृतम्–इति संमतिप्रदर्शनं कृतम्। तदपि न। 'रात्रं प्राक्संख्ययान्वितम्' इति द्विरात्रस्य नपुंसकत्वेऽपि अहोरात्रस्य तदयोगात् ॥ (१) ॥*॥ एकम् '**अहोरात्रस्य**' ॥

**पक्षस्ते दश पञ्च च ।**

( **पक्ष इति** ॥ ) तेऽहोरात्राः । पक्ष्यते । 'पक्ष परिग्रहे' ( भ्वा०, चु० प० से० )। कर्मणि घञ् (३।३।१९) '**पक्षो** मासार्धके गेहे पार्श्वसाध्यविशेषयोः। केशादेः परतो वृन्दे **बले** सखिसहाययोः ॥ चुल्लीरन्ध्रे पतत्रे च राजकुञ्जरपार्श्वयोः' ॥ (१) ॥*॥ एकम् '**पक्षस्य**' ॥

**पक्षौ पूर्वापरौ शुक्लकृष्णौ**

( **पक्षाविति** ॥ ) शुक्लपक्षः पूर्वसंज्ञः ॥ (१) ॥*॥ कृष्णपक्षोऽपरसंज्ञः ॥ (१) ॥*॥ क्रमेणैकैकम् '**शुक्लकृष्णपक्षयोः**' ॥

**मासस्तु तावुभौ ॥ १२ ॥**

( **मास इति** ॥ ) तौ पक्षौ। मस्यते परिमीयतेऽयम्, अनेन वा। 'मसी परिमाणे' ( दि० प० से० )। कर्मणि घञ् (३।३।१९)। 'हलश्च' (३।३।१२१) इति वा ॥ (१) ॥*॥ एकम् '**मासस्य**' ॥

**द्वौ द्वौ मार्गादिमासौ स्यादृतुः**

(**द्वाविति** ॥) इयर्ति, ऋच्छति वा। 'अर्तेश्च-' ( उ० १।७२ ) इति तुः। चात् कित्त्वम्। ( '**ऋतुः** स्त्रीकुसुमे मासि वसन्तादीषुधारयोः' ) ॥*॥ मार्गादीनां युगैर्हेमन्तादीनृतून् वक्ष्यति। तदेकदेशमयनपरिच्छेदार्थमनुवदति द्वौ द्वाविति ॥ (१) ॥*॥ एकम् '**ऋतोः**' ॥

---

१—'देवताद्वन्द्वे च' (६।३।२६) इति नानङ्। तत्र 'आनङृतो द्वन्द्वे' ( ६।३।२५ ) इत्यतो द्वन्द्वग्रहणेऽनुवर्तमाने पुनर्द्वन्द्वग्रहणेन वेदलोकसहचरितद्वन्द्वस्य ग्रहणात्। अस्य तु द्वन्द्वस्यातथात्वात्। अत एव 'रविचन्द्रावपि नोपलक्षितौ' इति घटखर्परः—इति मुकुटः ॥ २—'प्रावप्रलक्ष्मधरणीधरशिखरस्थितपुष्पवन्ताभ्याम्' इत्याश्चर्यमञ्जर्यामदन्तत्वदर्शनात्—इति मुकुटः ॥ ३—अनेकार्थकैरवाकरकौमुद्यां व्याख्यातं च। पुष्पे इव पुष्पे, दन्ताविव दन्तौ, पुष्पे च ते दन्तौ च पुष्पदन्तौ। यथा च। 'विश्वस्यास्य विलोचने निरयतो यत्पुष्पदन्तौ तमः' इति ॥

१—अत एव भाष्ये 'अहर्ग्रहणं द्वन्द्वार्थं द्रष्टव्यम्' इत्युक्तम् ॥
२—तेऽहोरात्रा इत्युत्तरं दश पञ्च' इत्यपि दृश्यते ॥

**तैरयनं त्रिभिः ।**

(**तैरिति** ॥ ) तैर्ऋतुभिः । अयतेऽर्कोऽनेन । ल्युट् (३।३।११७) । यत्तु—'अयतेऽर्थोऽनेन' इति विगृह्य 'इण् गतौ' ( अ० प० अ० ) इति धातोरुपन्यसनं-मुकुटेन कृतम् । तदसंगतम् । इति स्पष्टमेव । '**अयनं** पथि भानोरप्युदग्दक्षिणतो गतौ' ॥ (१) ॥*॥ एकम् '**अयनस्य**' ॥

**अयने द्वे गतिरुदग्दक्षिणार्कस्य**

(**अयने इति** ॥ ) अयने तु द्वे । अर्कस्योत्तरा गतिः, दक्षिणा च उत्तरदक्षिणाख्ये द्वे अयने तु वत्सरः–इति वक्तव्ये 'अर्कस्य' इति ग्रहणं चान्द्रत्वव्यावृत्त्यर्थम् । पक्षादिकं तु चान्द्रमुक्तम् । अयनं तु न चान्द्रं किं तु सौरमेव ॥ (१) ॥*॥ '**अयनद्वयस्य**' एकैकम् ॥

**वत्सरः ॥ १३ ॥**

(**वत्सर इति** ॥ ) वसन्त्यस्मिन् । 'वसेश्च' (उ० ३।७१) इति सरप्रत्ययः । 'सः स्यार्धधातुके' (७।४।४९) इति सस्य तः ॥

**समरात्रिन्दिवे काले विषुवद्विषुवं च तत् ।**

(**समेति** ॥) रात्रिश्च दिवा च रात्रिन्दिवम् । 'अचतुर–' (५।४।७७) इत्यादिना साधु । तत् समं यस्मिन् तादृशे काले तुलामेषावच्छिन्ने । विषु साम्येऽव्ययम् । ततो मतुप् (५।२।९४) । 'संज्ञायाम्' (८।२।११) इति वत्वम् ॥ (१) ॥*॥ 'वप्रकरणेऽन्यत्रापि' (५।२।१०९) इत्युक्तेर्वः । तेन विषुवम् । '**विषुवान्** समरात्रिवासरः' इति पुंस्काण्डे बोपालितः ॥*॥ **विषुणोऽपि** । विषु नानारूपं गमनं विष्वक् । तदस्यास्तीति विग्रहे 'विष्वगित्युत्तरपदलोपश्चाकृतसंधेः' (५।२।१००) इति पामाद्यन्तर्गणसूत्रेण नप्रत्ययः । णत्वम् (८।४।२) ॥ (२) ॥*॥ द्वे '**समरात्रिन्दिवकालस्य**' ॥

**मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ॥ १४ ॥**

(**मार्गेति** ॥ ) मृगशिरसा युक्ता पौर्णमासी । 'नक्षत्रेण युक्तः कालः' (४।२।३) इत्यण् । 'अचि शीर्षः' (६।१।६२) । मार्गशीर्षी पौर्णमास्यस्मिन्मासे । 'सास्मिन्पौर्णमासी' (४।२।२१) इत्यण् । एतेन 'पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा । नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे' इति क्वचित्पठ्यमानं व्याख्यातम् ॥ (१) ॥*॥ सहते 'षह मर्षणे' (भ्वा० उ० आ०) असुन् ( उ० ४।१८९ ) सान्तः । ( '**सहो** बले ज्योतिषि च **सहा** हेमन्तमार्गयोः' ) ॥*॥ पचाद्यजन्तोऽपि । 'मार्गे **सहः** सहाः' इति शब्दार्णवः ॥ (२) ॥*॥ एकदेशप्रयोगात् मृगोऽपि । 'मृगशिरा **मृगः**' इति रुद्रकोषः । तद्युक्ता पौर्णमासी मार्गी । सास्मिन्नस्ति । ( '**मार्गो** मृगमदे मासे सौम्यर्क्षेऽन्वेषणे पथि' ) ॥ ३ ॥*॥ आग्रहायण्या युक्ता पौर्णमास्यस्मिन् । 'आग्रहायण्यश्वत्थाट्ठक्' (४।२।२२) ॥*॥ ज्योत्स्नादित्वात् ( वा० ५।२।१०३ ) अणि '**आग्रहायणः**' अपीति पुरुषोत्तमः ॥ (४) ॥*॥ चत्वारि '**मार्गशीर्षस्य**' ॥

**पौषे तैषसहस्यौ द्वौ**

(**पौष इति** ॥) पुष्येण तिष्येण च युक्ता पौर्णमास्यस्मिन् । 'नक्षत्रेण–' (४।२।३) इत्यण् । 'तिष्यपुष्ययोर्नक्षत्राणि यलोपः' ( वा० ६।४।१४९ ) ङीप् (४।१।१५) ततः 'सास्मिन्' (४।२।२१) इत्यण् । ( '**पौषो** मासप्रभेदे स्यात्**पोषं** तु महयुद्धयोः' ) ॥ (१) ॥*॥ (२) ॥*॥ सहसि बले साधुः । 'तत्र साधुः' (४।४।९८) इति यत् ॥ (३) ॥*॥ त्रीणि '**पौषस्य**' ॥

**तपा माघे**

(**तपा इति** ॥ ) तपन्त्यस्मिन् । असुन् । ( उ० ४।१८९ ) सान्तः । '**तपो** लोकान्तरेऽपि च । चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः' ॥ (१) ॥*॥ मघया युक्ता पौर्णमास्यस्मिन् ॥ (२) ॥*॥ द्वे '**माघमासस्य**' ॥

**अथ फाल्गुने ।**

**स्यात्तपस्यः फाल्गुनिकः**

(**अथेति** ॥ ) फलति निष्पादयति । 'फल निष्पत्तौ' ( भ्वा० प० से० ) 'फलेर्गुक्च' ( उ० ३।५६ ) इत्युनन् गुगागमश्च । '**फल्गुन**स्त्वर्जुने मासे नक्षत्रे **फल्गुनी** स्मृता' इति गोवर्धनानन्दः ॥*॥ प्रज्ञाद्यणि (५।४।३८) । वृद्धिः (७।२।११७) '**फाल्गुन**स्त्वर्जुने मासे **फाल्गुनी** चास्य पूर्णिमा' इति धरणिः ॥*॥ फल्गुनीभिर्युक्ता पौर्णमासी फाल्गुनी । सास्मिन्नस्ति फाल्गुनः फाल्गुनिकश्च । '**फाल्गुन**स्तु गुडाकेशे नदीजार्जुनभूरुहे । तपस्यसंज्ञमासे तत्पूर्णिमायां तु फाल्गुनी' । 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः' (४।२।२३) इति ठक् । पक्षेऽण् ॥ (१) ॥*॥ (३) ॥*॥ तपसि साधुः । 'तत्र साधुः' (४।४।९८) इति यत् । ( '**तपस्यः** फाल्गुने मासे **तपस्या** नियमस्थितौ' ) ॥ (२) ॥*॥ त्रीणि '**फाल्गुनमासस्य**' ॥

**स्याच्चैत्रे चैत्रिको मधुः ॥ १५ ॥**

(**स्यादिति** ॥ ) चित्रया युक्ता पौर्णमास्यस्मिन् । अण्ठकौ (४।२।२३) । ( '**चैत्रं** मृते देवकुले ना भूभृन्मासभेदयोः' ) (१) ॥*॥ (२) ॥*॥ मन्यते एतं मधुः । 'मन ज्ञाने' ( दि० आ० अ० ) । 'फलिपाटि–' ( उ० १।१८ ) इत्युधश्चान्तादेशः । '**मधु** पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति' ॥ (३) ॥*॥ त्रीणि '**चैत्रस्य**' ॥

**वैशाखे माधवो राधः**

(**वैशाख इति** ॥ ) विशाखया युक्ता पौर्णमास्यस्मि-

१—भाष्ये तु 'अन्येभ्योऽपि' इति दृश्यते ॥

न्नस्ति । ('**वैशाखः** स्थानके मासे मन्थानेऽपि') ॥ (१) ॥*॥ मधु मकरन्दः । सोऽस्मिन्नस्ति । 'मधोर्ञ च' (४।४।१२९) इति ञः (२) ॥*॥ राधा विशाखा । तद्वती पौर्णमासी राधी । सास्मिन्नस्ति ॥ (३) ॥*॥ त्रीणि '**वैशाखस्य**' ॥

**ज्यैष्ठे शुक्रः**

(**ज्यैष्ठ इति** ॥) पूर्ववदण्द्वयेन ज्यैष्ठः ॥*॥ संज्ञापूर्वकस्य विधेरनित्यत्वाद्वृद्ध्यभावे ज्येष्ठोऽपि । '**ज्येष्ठो** मासि च वृद्धे च **ज्येष्ठा** च गृहगोधिका' इति त्रिकाण्डशेषः । ('**ज्येष्ठः** स्यादग्रजे श्रेष्ठे मासभेदातिवृद्धयोः । **ज्येष्ठा** भे गृहगोधिकायाम्') ॥ (१) ॥*॥ विरहिणः शोचन्त्यस्मिन् । 'शुच शोके' (भ्वा० प० से०) 'ऋज्रेन्द्र–' (उ० २।२८) इति रक्, चकारस्य ककारश्च । '**शुक्रः** स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान् । रेतोऽक्षिरुग्भिदोः क्लीबम्' ॥ (२) ॥*॥ द्वे '**ज्येष्ठमासस्य**' ॥

**शुचिस्त्वयम् ।**
**आषाढे**

(**शुचिरिति** ॥) अयमिति शुचेः पुंस्त्वाभिव्यक्त्यर्थम् । शोचन्ति विरहिणोऽस्मिन् । 'इगुपधात्कित्' (उ० ४।१२०) इतीन् किच्च ॥ (१) ॥*॥ अषाढया युक्ता पौर्णमास्यस्मिन् । '**आषाढो** व्रतिनां दण्डे मासे मलयपर्वते । स्त्री पूर्णिमायाम्' । आषाढाभिराख्यातः, इति विग्रहे तु 'अषाढकः' अपि । आख्यानण्यन्तात् (वा० ३।१।२६) 'क्वुन् शिल्पिसंज्ञयोः' (उ० २।३२) । 'स्यादाषाढे **त्वषाढकः**' इति शब्दार्णवः ॥ (२) ॥*॥ द्वे '**आषाढस्य**' ॥

**श्रावणे तु स्यान्नभाः श्रावणिकश्च सः ॥१६॥**

(**श्रावण इति** ॥) 'स्त्रीपुंसयोर्ऋक्षभेदे **श्रवणं** श्रुतिकर्णयोः' इति रभसः । श्रवणेन युक्ता पौर्णमासी श्रवणा । 'लुबविशेषे' (४।२।४) इति प्राप्तो लुब् यद्यपि 'पौर्णमास्यां नेष्यते' इत्युत्सर्गः । 'विभाषा फाल्गुनी–' (४।२।२३) इति लिङ्गात् । तथापि श्रवणशब्दादिष्यत एव । तत्रैव (४।२।२३) सूत्रे 'श्रवणा' इति निर्देशात् । 'अबाधकान्यपि निपातनानि' इति 'श्रावणी' इत्यपि । ततः 'सास्मिन्' (४।२।२१) इत्यणि श्रावणः । '**श्रावणो** मासि पाखण्डे दध्याल्यां **श्रावणा** मता' इति हैमः ॥ (१) ॥*॥ विरहिणो नभ्यति, नभ्नाति, नभते, वा नभाः । 'णभ हिंसायाम्' (भ्वा० प० से०, दि० प० से०, क्र्या० आ० से०) । असुन् (उ० ४।१८९) । स्वामी तु—न भासते मेघच्छन्नत्वात्—इत्याह । तन्न । नभासौ, नभासः, नभाभ्याम्, नभाभिः, नभासु, इत्यादिरूपप्रसङ्गात् । 'नभः खं श्रावणो नभाः' इत्यनुपपत्तेश्च । ह्रस्वदीर्घोपधयोः शब्दभेदात् । 'भासते इत्यर्थकथनमात्रम्' इत्यभिप्रेत्य 'भस दीप्तौ' (जु० प० से०) इति जुहोत्यादेः 'न बभस्ति' इति व्युत्पत्त्याश्रयणे तु 'अत्वसन्तस्य–' (६।४।१४) इति दीर्घो न स्यात् । 'धनुर्धरे त्रिषु **नभाः** क्लीबं व्योम्नि पुमान्घने । घ्राण**श्रावण**वर्षासु बिसतन्तौ पतद्ग्रहे' ॥ (२) ॥*॥ 'विभाषा फाल्गुनी–' (४।२।२३) इति ठकि श्रावणिकः ॥ (३) ॥*॥ त्रीणि '**श्रावणमासस्य**' ॥

**स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः ।**

(**स्युरिति** ॥) नभा अभ्रम् । तत्र साधुर्नभस्यः ॥ (१) ॥*॥ प्रोष्ठपदाभिर्युक्ता प्रौष्ठपदी । भद्रा भद्रपदा । ताभिर्युक्ता भाद्री भाद्रपदी च पौर्णमासी । ततः 'सास्मिन्' (४।२।२१) इत्यण् ॥ (२) ॥*॥ (३) ॥*॥ (४) ॥*॥ चत्वारि '**भाद्रपदमासस्य**' ॥

**स्यादाश्विन इषोऽप्याश्वयुजोऽपि**

(**स्यादिति** ॥) अश्विन्या युक्ता पौर्णमास्यस्मिन्नस्ति ॥ (१) ॥*॥ 'इष गतौ' (दि० प० से०) एषणमिट् यात्रा । क्विप् (३।२।१७८) सास्मिन्मासे जिगीषूणामस्ति । अर्शआद्यच् (५।२।१२७) ॥ (२) ॥*॥ अश्वयुजा युक्ता पौर्णमास्यस्मिन् । अण्द्वयम् (४।२।३,२१) ॥*॥ संज्ञापूर्वकत्वाद्वृद्ध्यभावे अश्वयुजोऽपि । 'आश्विनोऽश्वयुजश्चेषः' इत्यमरमाला ॥ (३) ॥*॥ त्रीणि '**आश्विनमासस्य**' ॥

**स्यात्तु कार्तिके ॥ १७ ॥**
**बाहुलोर्जौ कार्तिकिकः**

(**स्यादिति** ॥) कृत्तिकाभिर्युक्ता पौर्णमास्यस्मिन् ॥ (१) ॥*॥ बहुलाः कृत्तिकाः । अण्द्वयम् (४।२।३, २१) ॥ (२) ॥*॥ ऊर्जयति उत्साहयति जिगीषून् । 'ऊर्ज बलप्राणनयोः' (चु० प० से०) ण्यन्तात् । (३।१।२६) पचाद्यच् (३।१।१३४) । '**ऊर्जः** कार्तिके बले' इति हैमः ॥ (३) ॥*॥ 'विभाषा फाल्गुनी–' (४।२।२३) इति ठकि कार्तिकिकः ॥ (४) ॥*॥ चत्वारि '**कार्तिकमासस्य**' ॥

**हेमन्तः**

(**हेमन्त इति** ॥) हन्ति । 'हन्तेर्मुट् हि च' (उ० ३।१२९) इति झच् हिरादेशो मुडागमः । गुणः (७।३।८४) ॥*॥ '**हेमा**' अपि । 'सर्वत्राण् च–' (४।३।२२) इति सूत्रे यद्भाष्यम् 'हेमन्तस्य तलोपवचनानर्थक्यं हेम्नः प्रकृत्यन्तरस्य सत्त्वात्' इति । हिनोति वर्धयति बलम् । 'हि गतौ वृद्धौ च' (स्वा० प० अ०) । अन्तर्भावितण्यर्थात् 'अन्येभ्योऽपि' (३।२।७५) इति मनिन् ॥ (१) ॥*॥ '**मार्गपौषाभ्यां निष्पन्नस्य ऋतोः**' एकम् ॥

१—मेदिन्यामेवायं पाठः ॥

१—मूर्धन्यान्तः 'ध्वनिमिषे निमिषे क्षणमग्रतः' इति माघयमकात्–इति मुकुटः ॥

**शिशिरोऽस्त्रियाम्।**

(**शिशिर इति** ॥) 'शश प्लुतगतौ' (भ्वा० प० से०) 'अजिरशिशिर–' (उ० १।५३) इति किरजन्तो निपातितः। शशन्ति धावन्ति यस्मिन्पथिकाः। '**शिशिरः** स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्' इति विश्वः ॥ (१) ॥*॥ एकम् '**माघफाल्गुनाभ्यामृतोः**' ॥

**वसन्ते पुष्पसमयः सुरभिः**

(**वसन्त इति** ॥) वसन्त्यत्र मदनोत्सवाः। 'तॄभूवहिवसि–' (उ० ३।१२८) इति झच् ॥ (१) ॥*॥ पुष्पाणां समयः ॥ (१) ॥*॥ सुष्ठु रमन्ते रभसयुक्ता भवन्त्यत्र। 'रभ राभस्ये' (भ्वा० आ० अ०)। इन् (उ० ४।११८) '**सुरभि**र्हेम्नि चम्पके। जातीफले मातृभेदे रम्ये चैत्रवसन्तयोः ॥ सुगन्धौ गवि शल्लक्याम्' इति हैमः ॥ (३) ॥*॥ त्रीणि '**चैत्रवैशाखाभ्यामृतोः**' ॥

**ग्रीष्म ऊष्मकः ॥ १८ ॥**

**निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः।**

(**ग्रीष्म इति** ॥) ग्रसते रसान्। 'ग्रसु अदने' (भ्वा० आ० अ०)। आतो मक्, धातोर्ग्रीभावः, पुगागमश्च 'ग्रीष्मः' (१।१४९) इत्युणादिसूत्रेण निपातितः। '**ग्रीष्म** ऊष्मर्तुभेदयोः' ॥ (१) ॥*॥ ऊषति रुजति। 'ऊष रुजायाम्' (भ्वा० प० से०)। 'अन्येभ्यः–' (३।२।७५) इति मनिन्। ('ऊष्माणस्तु निदाघोष्णग्रीष्माः शषसहा अपि')। यावादित्वात् (५।४।२९) कन् ॥*॥ मकि (बाहुलकात्) अदन्तोऽपि। '**ऊष्मो** घर्मेऽशुणि तथा ज्येष्ठे, **ऊष्मा** स्त्रियां त्विषि' इति बोपालितः ॥ (२) ॥*॥ नितरां दह्यतेऽत्र। 'दह भस्मीकरणे' (भ्वा० प० अ०)। 'हलश्च' (३।३।१२१) इति घञ्। न्यङ्क्वादित्वात् (७।३।५३) कुत्वम्। '**निदाघो** ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि' ॥ (३) ॥*॥ उष्णमुपगममत्र ॥ (४) ॥*॥ ओषति। 'उष दाहे' (भ्वा० प० से०)। 'इणसिजिदीङुष्यविभ्यो नक्' (उ० ३।२)। '**उष्णो** ग्रीष्मे पुमान्, दक्षाशीतयोरन्यलिङ्गकः' ॥ (५) ॥*॥ 'ऊष रुजायाम्' (भ्वा० प० से०)। मनिन् (३।२।७५) आगच्छति। पचाद्यच् (३।१।१३४) ऊष्मा तप आगमोऽत्र ॥*॥ 'ऊष्मा' अपि। '**ऊष्मा**तपनिदाघयोः' इति नान्ते बोपालितः ॥ (६) ॥*॥ तपति। पचाद्यच् (३।१।१३४) ॥ (७) ॥*॥ सप्त '**ज्येष्ठाषाढाभ्यामृतोः**' ॥

**स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः**

(**स्त्रियामिति** ॥) वर्षणं वृट्। 'वृषु सेचने' (भ्वा० प० से०)। संपदादित्वात् (वा० ३।३।१०८) क्विप्। प्रकृष्टा वृडत्र। 'नहिवृति–' (६।३।११६) इति दीर्घः ॥ (१) ॥*॥ वर्षं वर्षणमत्रास्ति। अर्शआद्यच् (५।२।१२७)। टाप् (४।१।४)। भूम्नि, बहुत्वे। तेन नित्यबहुवचनान्तः ॥ (२) ॥*॥ वर्षर्तोर्द्वे '**श्रावणभाद्राभ्यामृतोः**' ॥

**अथ शरत्स्त्रियाम् ॥ १९ ॥**

(**अथेति** ॥) शीर्यन्तेऽस्यां पाकेनौषधयः। 'शॄ हिंसायाम्' (क्र्या० प० से०) 'शॄदॄभसोऽदिः' (उ० १।१३०)। ('**शरत्** स्त्री वत्सरेऽप्यृतौ) ॥*॥ भागुरिमते टापि शरदा च। 'शरद्भवेच्छरदया प्रावृट् प्रावृषया सह' इति विश्वः ॥ (१) ॥*॥ एकम् '**आश्विनकार्तिकाभ्यामृतोः**' ॥

**षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात्।**

(**षडिति** ॥) अमी हेमन्तादयः। 'ऋ गतौ' 'अर्तेश्च' (उ० १।७२) इति तुः, चात्कित्। यत्तु मुकुटेनोक्तम्—केलादय इति तुन्–इति। तन्न। गुणप्रसङ्गात्, अपाणिनीयत्वाच्च। (१) ॥*॥ '**हेमन्तादीनां षण्णाम्**' एकम् ॥

**संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः २०**

(**संवत्सर इति** ॥) संवसन्त्यृतवोऽत्र। 'वसेश्च' (३।७१) 'संपूर्वाच्चित्' (उ० ३।७२) इति सरप्रत्ययः। 'सः स्यार्धधातुके' (७।४।४९) इति तः ॥ (१) ॥*॥ एवं वत्सरोऽपि ॥ (२) ॥*॥ आप्यते 'आप्लृ व्याप्तौ' (स्वा० प० अ०)। 'अब्दादयश्च' (उ० ४।९८) इति दन् ह्रस्वत्वं च। '**अब्दः** संवत्सरे वारिवाहमुस्तकयोः पुमान्' ॥ (३) ॥*॥ भावाञ्जहाति, जिहीते वा। 'हश्च व्रीहिकालयोः'। (३।१।१४८) इति ण्युट्। 'हायनः स्त्री' इति पाठे शरदा संबन्धः। '**हायनो** न स्त्रियां वर्षे पुंस्यर्चिर्व्रीहिभेदयोः' ॥ (४) ॥*॥ शृणाति। 'शॄ हिंसायाम्' (क्र्या० प० से०) 'शॄदॄभसोऽदिः' (उ० १।१३०) इत्यादिः ॥*॥ प्रज्ञाद्यणि (५।४।३८) शारदोऽपि। 'समायोषिति, **शारदः**' इति रत्नकोषः ॥ (५) ॥*॥ 'षम ष्टम वैक्लव्ये' (भ्वा० प० से०)। समन्ति विक्लवं कुर्वन्ति सर्वम्। पचाद्यचि (३।१।१३४) टाप् (४।१।४)। 'बहुवचननिर्देशात्प्रायेणायं बहुवचनान्तः' इति ध्वनयति। क्वचिद्वचनान्तरमपि। 'समां समां विजायते–' (५।२।१२) इति सूत्रात्। 'समायां समायाम्' इति तत्र भाष्याच्च। संमान्ति सह वर्तन्ते ऋतवोऽस्यामिति वा। 'मा माने' (अ० प० अ०)। 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ्। 'समां समाम्' (५।२।१२) इति निर्देशान्मलोपः। '**समाः** संवत्सरे

---

१—'ननु द्वे अयने वत्सरः' इत्युक्तम्। तत्रैव वत्सरपर्याया वक्तुमुचिताः। सत्यम्। पूर्वमयनद्वयपुरस्कारेणोक्तम्। तेन माघादिः सौरो वत्सरः, अत्र तु हेमन्तादिपुरस्कारेण मार्गादिश्चान्द्रः संवत्सरः, इति न पौनरुक्त्यम्। लोकैस्तु 'द्वादशमासाः संवत्सरः' इति मासपुरस्कारेणैव प्रयुज्यते—' इति पीयूषव्याख्या ॥

स्त्रियाम् । सर्वैसाधुसमानेषु **समं** स्यादभिधेयवत्' ॥ (६) ॥*॥ षट् **'संवत्सरस्य'** ॥

**मासेन स्यादहोरात्रः पैत्रः**

**(मासेनेति ॥)** नृणां मासेन । पितॄणामयं पैत्रोऽहोरात्रः तत्र कृष्णपक्षो दिनम् । शुक्लपक्षो रात्रिः ॥

**वर्षेण दैवतः ।**

**(वर्षेणेति ॥)** नृणां वर्षेण । देवतानामयं दैवतोऽहोरात्रः । तत्रोत्तरायणं दिनम् । दक्षिणायनं रात्रिः ॥

**दैवे युगसहस्रे द्वे ब्राह्मः**

**(दैव इति ॥)** देवानां युगसहस्रद्वयेन ब्रह्मणोऽयम् 'ब्राह्मोऽजातौ' (६।४।१७१) ब्राह्मोऽहोरात्रः । दैवैः षष्ट्यधिकैस्त्रिभिरहोरात्रशतैर्दिव्यं वर्षम् । तैर्द्वादशभिः सहस्रैर्मानुषं चतुर्युगम् । तच्च देवानामेकं युगम् । तत्सहस्रं ब्रह्मणो दिनं भूतानां स्थितिकालः । तावत्येव रात्रिः प्रलयकालः ॥

**कल्पौ तु तौ नृणाम् ॥२१॥**

**(कल्पाविति ॥)** ये दैवे युगसहस्रे तौ । कल्पयतः स्थितिं प्रलयं च । 'कृपू सामर्थ्ये' (भ्वा० आ० से०) । ण्यन्तात् (३।१।१२) पचाद्यच् (३।१।१३४) । **'कल्पः** शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने' ॥ (१) ॥*॥ एकम् **'ब्रह्मणो दिनस्य'** ॥

१—'सर्वेषातु' इति पाठः । २—इदं च मनूक्तमपि निशीथतो दिनान्तरप्रवृत्तिमते । वस्तुतस्तु कृष्णाष्टम्यर्धे सूर्योदयः, अमान्ते मध्याह्नः, शुक्लाष्टम्यर्धे सूर्यास्तः, पूर्णिमान्ते निशीथः पितॄणां भवति ॥ ३—इदमपि तथैव । देवानां सूर्योदयो मेषविषुवे, मध्याह्नो मिथुनान्ते, सूर्यास्तस्तुलाविषुवे, निशीथो धनुरन्ते भवति ॥ ४—'कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् । प्रोच्यते तत्सहस्रं तु ब्रह्मणो दिनमुच्यते ॥' इति विष्णुपुराणतो युगानां नामानि ज्ञेयानि । तन्मानं च मनुनेत्थमभिहितम्—'चत्वार्याहुः सहस्राणि वर्षाणां तु कृतं युगम् । तस्य तावच्छती संख्या संध्यांशश्च तथाविधः ॥ इतरेषु ससंध्येषु ससंध्यांशेषु च त्रिषु । एकापायेन वर्तन्ते सहस्राणि शतानि च ॥ एतद्द्वादशसाहस्रं देवानां युगमुच्यते । दैविकानां युगानां तु सहस्रं परिसंख्यया । ब्राह्ममेकमहर्ज्ञेयं तावतीं रात्रिमेव च ॥' इति । अस्य निष्कृष्टोऽर्थस्तु 'कृतयुगमानं दैववर्षैः ४८००, वर्षदिन ३६० गुणितं जातं मानुषवर्षमानम् १७२८०००। त्रेता दिव्यैर्वर्षैः ३६०० मानुषैः १२९६००० । द्वापरं दिव्यैः २४००, मानुषैः ८६४०००। कलिर्दिव्यैः १२०० मानुषैः ४३२००० । चतुर्युगं दिव्यैः १२००० मानुषैः ४३२०००० । ब्रह्मदिनं दिव्यैः १२०००००० मानुषैः ४३२००००००० इत्थमवसेयः ॥

**मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः ।**

**(मन्वन्तरमिति ॥)** 'मनोरन्तरमवकाशः' इति विग्रहः ॥*॥ एकाधिका सप्ततिः । सा च किंचिदधिकेति बोध्यम् । एकम् **'मन्वन्तरस्य'** ॥

**संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ॥ २२ ॥**

**(संवर्त इति ॥)** संवर्तते जगदत्र । 'हलश्च' (३।३।१२१) इति घञ् । **'संवर्तः** प्रलयेऽब्दे' इति हैमः ॥ (१) ॥*॥ प्रलीयतेऽत्र 'लीङ् श्लेषणे' (दि० आ० अ०) 'एरच्' (३।३।५६) 'प्रलयो मृतौ । संहारे नष्टचेष्टत्वे' इति हैमः ॥ (२) ॥*॥ 'कृपू सामर्थ्ये' (भ्वा० आ० से०) कल्प्यन्ते विरुद्धलक्षणया क्षीयन्तेऽत्र । 'पुंसि–' (३।३।११८) इति घः । **'कल्पो** विकल्पे कल्पद्रौ संवर्ते ब्रह्मवासरे । शास्त्रे न्याये विधौ' इति हेमचन्द्रः ॥ (३) ॥*॥ क्षीयन्ते प्राणिनोऽत्र । 'क्षि क्षये' (भ्वा० प० से०) । 'एरच्' (३।३।५६) 'पुंसि' (३।३।११८) इति घो वा । 'क्षयो गेहे च कल्पान्तेऽपचये रुजि' इति हैमः ॥ (४) ॥*॥ कल्पस्यान्तोऽवधिः । **'कल्पः** शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने' इति शाश्वतः ॥ (५) ॥*॥ पञ्च **'प्रलयस्य'** ॥

**अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषम् ।**
**कलुषं वृजिनैनोघमंहोदुरितदुष्कृतम् ॥ २३ ॥**

**(अस्त्रीति ॥)** पच्यते दुःखमनेन । 'पचि व्यक्तीकरणे, विस्तारे वा' (भ्वा० आ० से०) । करणे घञ् (३।३।१९) कुत्वम् (७।३।५२) । यद्वा-पञ्चनं पङ्को व्यक्तीकरणम्, विस्तारो वा । तं करोति । 'तत्करोति–' (वा० ३।१।२६) इति णिच् । ततः पचाद्यच् (३।१।१३४) । 'पङ्कोऽघे कर्दमे' इति हैमः ॥ (१) ॥*॥ आप्नोति व्याप्नोति लोकान् । 'आपॢ व्याप्तौ' (स्वा० प० अ०) 'नामन्सीमन्–' (उ० ४।१६५) इति सूत्रेण निपातितः ॥ (२) ॥*॥ पान्त्यस्मादात्मानम् । 'पा रक्षणे' (अ० प० अ०) । 'पानीविषिभ्यः पः' (उ० ३।२३) । भीमादित्वात् (३।४।७४) अपादाने । यद्वा पिबति

१—मनवो ब्रह्मसुताश्चतुर्दशैव । तथा च विष्णुपुराणे–'मनुः स्वायंभुवो नाम मनुः स्वारोचिषस्तथा । औत्तमिस्तामसिश्चैव रैवतश्चाक्षुषस्तथा ॥ एते तु मनवोऽतीताः सप्तमस्तु रवेः सुतः । वैवस्वतोऽयं यस्यैतत् सप्तमो वर्तते युगम् ॥ सावर्णिर्दक्षसावर्णो ब्रह्मसावर्ण इत्यपि । धर्मसावर्णरुद्रस्तु सावर्णो रौच्यभौत्यवत् ॥' इति मन्वन्तरमानानयनं । नामनिधाने सर्वज्ञश्रीनारायणचरणाः–'दैविकानां युगानां तु सहस्रं ब्रह्मणो दिनम् । मन्वन्तरं तथैवैकं तस्य भागाश्चतुर्दश ॥' इत्यनेन स्फुटमेवोक्तवन्तः । तथा चैकस्य मन्वन्तरस्य ३०८५७१४२८ वर्षाणि, ६ मासाः, २५ दिनानि, ४२ घटिकाः, साग्राण्येकपञ्चाशत् पलानि भवन्तीति-मुकुटाशयः ॥ २ 'क्षुद्रे' इति पाठः ॥

भक्षयति कर्तारम्। 'पा पाने' (भ्वा० प० अ०) ॥ (३) ॥*॥ केलयति क्रीडयति विषयेषु। 'किल श्वैत्यक्रीडनयोः' (तु० प० से०)। 'किलेर्बुक्च' (उ० १।५०) इति टिषच् बुगागमश्च। ('**किल्बिषं** पापरोगयोः। अपराधेऽपि') ॥ (४) ॥*॥ शुभं कर्म स्यति समाप्तं करोति। 'षोऽन्तकर्मणि' (दि० प० अ०)। 'आतोऽनुप-' (३।२।३) इति कः। पृषोदरादित्वात् (६।३।१०९) लत्वषत्वे। '**कल्मषं** किल्बिषे क्लीबं पुंसि स्यान्नरकान्तारे' ॥ (५) ॥*॥ कलयति वशीकरोति। 'कल गतौ, संख्याने' (चु० उ० से०)। 'पृनहिकलिभ्य उषच्' (उ० ४।७५)। '**कलुषं** त्वाविले पापे' ॥ (६) ॥*॥ वृज्यते। 'वृजी वर्जने' (अ० आ० से०)। 'वृजेः किच्च' (उ० २।४७) इतीनच्। '**वृजिनं** कल्मषे क्लीबं केशे ना कुटिले त्रिषु' ॥ (७) ॥ यन्त्यधोऽनेन। एति गच्छति प्रायश्चित्तेनेति वा। 'इण् गतौ' (अ० प० से०)। 'इण आगसि' (उ० ४।१९८) इत्यसुन्, नुडागमश्च। ('**एनः** पापापराधयोः') ॥ (८) ॥*॥ अङ्कते गच्छति दानादिना। 'अघि गतौ' (भ्वा० आ० अ०)। पचाद्यच् (३।१।१३४) आगमशास्त्रस्यानित्यत्वान्न नुम्। '**अघं** दुःखे व्यसनैनसोः' इति हैमः ॥ (९) ॥*॥ अमति गच्छति। 'अम गत्यादिषु' (भ्वा० प० से०)। 'अमेर्हुक्च' (उ० ४।२१३) इत्यसुन्, हुगागमश्च। यद्वा अंहति। 'अहि गतौ' (भ्वा० प० से०)। असुन् (उ० ४।१८९) '**अङ्कः**' इति केचित्पठन्ति। तन्न 'अघि गतौ' (भ्वा० आ० से०) धातुर्बोध्यः ॥ (१०) ॥*॥ इणो भावे क्तः (३।३।११४)। दुष्टमितं गमनमनेन ॥ (११) ॥*॥ दुष्टं कृतं करणमनेन। 'इदुदुपधस्य-' (८।३।४१) इति षः ॥ (१२) ॥*॥ द्वादश '**पापस्य**' ॥

**स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः।**

(**स्यादिति** ॥) धरति विश्वम्। 'धृञ् धारणे' (भ्वा० उ० से०)। 'अर्तिस्तुसु-' (उ० १।१४०) इत्यादिना मन्। '**धर्मो**ऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ। अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे' ॥ (१) ॥*॥ पुनाति। 'पूञो यण् णुक् ह्रस्वश्च' (उ० ५।१५) इति यत् णुक् ह्रस्वश्च। यद्वा पुणति। 'पुण कर्मणि शुभे' (तु० प० से०)। 'इगुपध-' (३।१।१३५) इति कः। पुणमर्हति। तत्र साधुर्वा। यत् (४।४।९८) ('**पुण्यं** तु सुन्दरे। सुकृते पावने धर्मे') ॥ (२) ॥*॥ अतिशयेन प्रशस्यम्। 'द्विवचन-' (५।३।५७) इतीयसुन्। 'प्रशस्यस्य श्रः' (५।३।६०)। '**श्रेयो** मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत्' ॥ (३) ॥*॥ सुष्ठु कृतम्। प्रादिसमासः (२।२।१८) ('**सुकृतं** तु शुभे पुण्ये क्लीबं सुविहिते त्रिषु') ॥ (४) ॥*॥ वर्षति फलम्। 'वृषु सेचने' (भ्वा० प० से०)। इगुपधलक्षणः (३।१।१३५) कः। '**वृषो** गव्याखुधर्मयोः। पुंराशिभेदयोः शृङ्ग्यां वासके शुक्लेऽपि च ॥ श्रेष्ठे स्यादुत्तरस्थश्च' इति हैमः ॥ (५) ॥*॥ पञ्च '**धर्मस्य**' ॥

**मुत्प्रीतिः प्रमदो हर्षप्रमोदामोदसंमदाः ॥ २४ ॥**
**स्यादानन्दथुरानन्दशर्मशातसुखानि च।**

(**मुदिति** ॥) मोदनम्। मुद्। 'मुद् हर्षे' (भ्वा० आ० से०)। संपदादि (वा० ३।३।१०८) ॥ (१) ॥*॥ 'प्रीञ् तर्पणे' (क्र्या० उ० से०)। भावे क्तिन् (३।३।९४)। ('**प्रीति**र्योगान्तरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम्') ॥ (२) ॥*॥ 'मदी हर्षे' (दि० प० से०)। 'प्रमदसंमदौ हर्षे' (३।३।६८) इत्यप्। '**प्रमदः** संमदे मत्ते स्त्रियामुन्मदयोषिति' ॥ (३) ॥*॥ (७) ॥*॥ 'हृष तुष्टौ' (दि० प० से०)। घञ्। (३।३।१८) ॥ (४) ॥*॥ प्रमोदामोदौ घञन्तौ। '**आमोदो** गन्धहर्षयोः' ॥ (५) ॥*॥ (६) ॥*॥ 'टुनदि समृद्धौ' (भ्वा० प० से०)। 'ट्वितोऽथुच्' (३।३।८९) ॥ (८) ॥*॥ आनन्दो घञन्तः ॥ (९) ॥*॥ शृणात्यशुभम्। 'शॄ हिंसायाम्' (क्र्या० प० से०)। 'सर्वधातुभ्यो मनिन्' (उ० ४।१४५)। भावे वा ॥ (१०) ॥*॥ श्यति दुःखम्। 'शो तनूकरणे' (दि० प० अ०)। बाहुलकात्तन् (उ० ३।८५) भावे वा। यत्तु—श्यतेः सौत्रात्-इत्युक्तं मुकुटेन तन्न। तस्य गणपठितत्वात्। सौत्रस्य तस्यादर्शनात् ॥*॥ 'अनुपसर्गाल्लिम्प-' (३।१।१३८) इति सूत्रपठितात् 'सातेः' पचाद्यचि (३।१।१३४) '**सातम्**' दैन्त्यादि। यत्तु—सिनोत्यशुभम्। सातम्। 'षै क्षये' (भ्वा० प० अ०)-इत्युक्तं मुकुटेन। तन्न। सिनोतीति विग्रहोक्तधातूपन्यासस्य विरुद्धत्वात्। यदपि-स्यति दुःखम्। सातम्। 'षोऽन्तकर्मणि' (दि० प० अ०)-इति स्वामिनोक्तम्। तदपि न। स्यतेः क्ते 'द्यति-स्यति' (७।४।४०) इतीत्वप्रसङ्गात्। तनस्त्वविधानात्। बाहुलकस्य त्वगतिकगतित्वात्। अत्र तूक्तगतेः सत्त्वात् ॥ (११) ॥*॥ शोभनानि खान्यनेन। 'सुख, दुःख, तत्क्रियायाम्' (चु० उ० से०)। भावेऽच् (३।३।५६) वा। ('**सुखं** शर्मणि नाके च **सुखा** पुर्यां प्रचेतसः') ॥ (१२) ॥*॥ द्वादश '**आनन्दस्य**' ॥

**श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ॥ २५ ॥**
**भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्।**
**शस्तं च**

(**श्वःश्रेयसमिति** ॥) श्व आगामि श्रेयोऽत्र। श्वःश्रेयसम्। 'श्वसो वसीयः श्रेयसः' (५।४।८०) इत्यच् समासान्तः 'श्वःश्रेयसं तु कल्याणे परमात्मनि शर्मणि' ॥*॥ **श्वोवसीयस**मपि बोध्यम् ॥ (१) ॥*॥ शेतेऽनेन। शिवम्। 'शीङ् स्वप्ने' (अ० आ० से०)। 'सर्वनिघृष्व-' (उ० १।१५३) इति वन्, ह्रस्वश्च निपातितः। '**शिवं** तु मोक्षे क्षेमे सुखे जले। **शिवो** योगान्तरे वेदे गुग्गुलौ

१—तथा च देवीशतके अनुलोमप्रतिलोमयमकम् 'सातं वर्मानन-स्यारहसिहरिहरस्याननर्मावर्तसा' इति—मुकुटः ॥

बालके हरे । पुण्डरीकद्रुमे कीले' ॥ (२) ॥*॥ भन्दते 'भदि कल्याणे' ( भ्वा० आ० से० ) । 'ऋज्रेन्द्र–' ( उ० २। २८ ) इति रनि निपात्यते । **'भद्रः** शिवे खञ्जरीटे वृषभे च कदम्बके । करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः ॥ काञ्चने च स्त्रियां रास्नाकृष्णाव्योमनदीषु च । तिथिभेदे प्रसारिण्यां कट्फलानन्तयोरपि ॥ त्रिषु श्रेष्ठे च साधौ च न पुंसि करणान्तरे' ॥*॥ पचाद्यचि ( ३।१।१३४ ) भन्दम् । **'भन्दं** भद्रं शिवं तथा' इति त्रिकाण्डशेषः । (**'भन्दं** कल्याणे सौख्ये च' ) ॥ (३) ॥*॥ कल्यं नीरुजत्वमाणयति । 'कर्मण्यण्' ( ३।२।१ ) । कल्ये प्रातःकाले अण्यते । 'अण शब्दे' ( भ्वा० प० से० ) । 'अकर्तरि–' (३।३।१९) इति घञ्वा । **'कल्याणं** हेम्नि मङ्गले' ॥ (४) ॥*॥ 'मगि सर्पणे' (भ्वा० प० से०) । मङ्गति, मङ्ग्यते वा 'मङ्गेरलच्' ( उ० ५।७० ) । **'मङ्गलं** पुनः । कल्याणे, **मङ्गलो** भौमे **मङ्गला** श्वेतदूर्विका' ॥ (५) ॥*॥ शोभते । 'शुभ शोभायाम्' ( भ्वा० आ० से० ) । 'इगुपध–' (३।१।१३४) इति कः ॥*॥ शु पूजितं भाति । 'आतः–' (३।२।३) इति को वा । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१) इति डो वा । **'शुभो** योगे **शुभं** भद्रे' ॥ (६) ॥*॥ भवनशीलम् । 'भू प्राप्तौ' (चु० आ० से०) । 'लषपतपद–' (३।२।१५४) इत्युकञ् ॥ (७) ॥*॥ **'भवो** भद्राप्तिसत्तयोः' इत्यजयः । भवो भद्राप्तिरत्रास्ति । 'अत इनिठनौ' (५।२।११५) ॥ (८) ॥*॥ भवति । 'भव्यगेय–' (३। ४।६८ ) इति साधुः । (**'भव्यं** शुभे च सत्ये च योग्ये भाविनि तु त्रिषु । कर्मरङ्गतरौ पुंसि स्त्रियां करिकणोमयोः ॥ क्लीबमस्थनि') ॥ (९) ॥*॥ कुत्सितं शलते संवृणोति । 'शल चलने संवरणे च' ( भ्वा० आ० से० ) । पचाद्यच्[१] ( ३।१। १३४ ) **'कुशलं** क्षेमपुण्ययोः । पर्याप्तौ **कुशलो**ऽभिज्ञे' ॥ (१०) ॥*॥ क्षयत्यशुभम् । 'क्षि क्षये' ( भ्वा० प० अ० ) । मन् ( उ० १।१४० ) । अस्त्रियामिति क्षेममात्रान्वयि । यत्तु—क्षिणोत्यशुभमिति विगृह्य 'क्षि क्षये' इति धातोरुपन्यसनं मुकुटेन कृतम् । तदसंगतम् । **'क्षेमस्तु** मङ्गले । लब्धसंरक्षणे मोक्षे **क्षेमो**माधनद्यपि' ॥ (११) ॥*॥ 'शंसु स्तुतौ' (भ्वा० प० से०) शस्यते स्म । क्तः (३।२।१०२) ।—शस्यते । भावे क्तः (३।३।११४)—इति मुकुटः । **'शस्तं** क्षेमे प्रशस्ते च' ॥ (१२) ॥*॥ द्वादश **'कल्याणमात्रस्य'** ॥

**अथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च ॥२६॥**

**(अथेति ॥)** पापपुण्यशब्दौ सुखादि च शस्तान्तं शब्दजातं द्रव्ये वर्तमानं त्रिषु बोध्यम् । तत्र स्त्रियां कल्याणी । अन्ये टाबन्ताः ॥

**मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि**

**मतल्लिकेति ॥** मतल्लिकादयो नियतलिङ्गाः, अव्युत्पन्नाश्चेति प्राञ्चः । व्युत्पत्तिरपि संभवति । मतं मतिमलति । 'अल भूषणादौ' ( भ्वा० प० से० ) ण्वुल् ( ३।१।१३३ ), क्वुन् (उ० २।३२) वा । पृषोदरादित्वात् (६।३।१०९) अस्य लः ॥ (१) ॥*॥ मं शंभुं चर्चति । 'चर्च अध्ययने' ( चु० उ० से० ) । ण्वुल् (३।१।१३३) क्वुन् (उ० २।२८) वा । **'मः** पुनः शम्भौ' इति हैमः ॥ (२) ॥*॥ प्रकृष्टं काण्डमवसरो, रसो वास्य । प्रगतः काण्डो धर्मोऽस्मादिति वा । **'प्रकाण्डो** विटपे शस्ते मूलस्कन्धान्तरे तरोः' इति विश्वः । (३) ॥*॥ उद्धशब्दस्तु 'संघोद्धौ गणप्रशंसयोः' (३।३।८६) इति निपातितः । उत्पूर्वाद्धन्तेरप्, टिलोपः, घत्वं च निपात्यते । 'उद्धो हस्तपुटे वह्नौ श्लाघायां देहजागिले' इति हैमः ॥ (४) ॥*॥ प्रशस्तः पुरुषः=पुरुषमतल्लिका । ब्राह्मणमचर्चिका । गोप्रकाण्डम् । मनुष्योद्धः ॥*॥ लजतीति लजः । 'लज कान्तौ' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । तद्वल्लजः तल्लजः । कुमारीतल्लजः ॥ (५) ॥*॥ प्रकाण्डः पुंस्यपि । 'अस्त्री **प्रकाण्डो** विटपे तरुस्कन्धप्रशस्तयोः' । मतल्लिकादीनां रूढिशब्दत्वात् 'प्रशंसावचनैश्च' (२।१।६६) इति समासः । कृष्णसर्पवाप्यश्वादिवदेते नित्यसमासाः । उद्धस्त्वसमस्तोऽपीति स्वाम्यादयः ॥ पञ्च **'प्रशस्तस्य'** ॥

**अयः शुभावहो विधिः ॥२७॥**

**(अय इति ॥)** इत्यनेन सुखम् । 'इण् गतौ–' ( अ० प० से० ) 'पुंसि संज्ञायाम्' (३।३।११८) इति घः ॥ (१) ॥*॥ एकम् **'शुभावहविधेः'** ॥

**दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ।**

**(दैवमिति)** ॥ देवादागतम् । 'तत आगतः' (४।३।७४) इत्यण् ॥ (१) ॥*॥ दिश्यते उपदिश्यते स्म । 'दिश अतिसर्जने' ( तु० उ० अ० ) । क्तः ( ३।२।१०२ ) ॥*॥ 'भाग्यैकदेशयोर्**भागः'** इति रुद्रः । भाग एव । 'भागरूपनामभ्यो धेयः' (वा० ५।४।३५) । (**'भागधेयं** मतं भाग्ये भागप्रत्यययोः पुमान्') ॥ (३) ॥*॥ भज्यते । 'भज सेवायाम्' (भ्वा० उ० अ०) । 'ऋहलोर्ण्यत्' (३।१।१२४) । 'चजोः–' (७।३।५२) इति कुत्वम् ।—'भागाद्यच्च' (५।१।४९) इति स्वामी । **'भाग्यं** कर्म शुभाशुभम्' ॥ (४) ॥*॥ नियम्यतेऽनया । क्तिन् (३।३।९४) । नियच्छति । 'क्तिच्क्तौ च–' (३।३।१७४) इति क्तिज् वा । अत एव 'स्त्री' इति विधानं सार्थकम् । **'नियति**र्नियमे दैवे' इति विश्वः ॥ (५) ॥*॥

१—पचाद्यच् इत्युत्तरं 'यद्वा–कुश्यति । कुश संश्लेषणे' 'वृषादित्वात् किलच्' इत्यपि पाठः ॥ २—कुशलं तालव्यमध्यम् । 'कुशलवर्धितः' इति विदग्धमुखमण्डनम् । 'कुशलवयो रूपोच्छ्रायः' इति वासवदत्ताश्लेषः । 'कुष निष्कर्षे' इत्यतो मूर्धन्यमध्योऽपि, इत्यलंकारोऽमूलः—इति मुकुटः । पीयूषकृता तु कुषलं मूर्धन्यमध्यमपि—इत्युक्तम् ॥

१ इत्युत्तरं 'नतु विशेष्यनिघ्नाः' इति पुस्तकान्तरे पाठः ॥

विधीयतेऽनेन । डुधाञः 'उपसर्गे घोः किः' (३।३।९२)। 'विधिर्ब्रह्मविधानयोः। विधिवाक्ये च दैवे च प्रकारे कालकल्पयोः' ॥ (६) ॥*॥ षट् '**प्राक्तनशुभाशुभकर्मणः**' ॥

**हेतुर्ना कारणं बीजम्**

**(हेतुरिति ॥**) हिनोति व्याप्नोति कार्यम्।'हि गतौ' (स्वा० प० अ०) । 'कमिमनि–' (उ० १।७३) इति तुन् ॥ (१) ॥*॥ कार्यतेऽनेन । ण्यन्ताल्ल्युट् (३।३।११७) ॥—करोतीति 'ल्युट् च' (३।३।११५) इति चकाराल्ल्युट्–इति मुकुटस्त्वसंगतः। '**कारणं** घातने हेतौ करणे, **कारणा** पुनः। यातना कार्मणं मन्त्रादियोगे कर्मकारके' इति हैमः ॥ (२) ॥*॥ विशेषेण जायतेऽनेन। 'उपसर्गे च संज्ञायाम्' (३।२।९९) इति डः । 'अन्येषामपि–' (६।३।१३७) इति दीर्घः । यद्वा वीयते । 'व्येञ् संवरणे' (भ्वा० उ० अ०)। संपदादि क्विप् (वा० ३।३।१०८) विर्यं संवृतं जायते जनयति । अन्तर्भावितण्यर्थः । 'अन्येष्वपि–' (३।१।१०१) इति डः । विशेषेण एः कामात्, इना वा जायते । विशिष्टा ई लक्ष्मीर्जायतेऽस्मादिति वा । वजति कार्यं गच्छति । 'वज गतौ' । (भ्वा० प० से०)। अच् (३।१।१३४)। पृषोदरादित्वात् (६।३।१०९) ईत्वम्। बवयोरभेदाद्बीजम्। 'बीजं तु रेतसि। स्यादाधाने च तत्त्वे च हेतावङ्कुरकारणे' इति हैमः ॥ (३) ॥*॥ त्रीणि '**कारणस्य**' ॥

**निदानं त्वादिकारणम् ॥ २८ ॥**

**(निदानमिति ॥**) नितरां दीयतेऽसाधारणतया जन्यतेऽनेन। 'डुदाञ्' (जु० उ० अ०)। 'करणा–' (३।३।११७) इति ल्युट्। '**निदानं** कारणे शुद्धौ तपसः फलयाचने। वत्सदाम्न्यवसाने च' ॥ (१) ॥*॥ आदिर्मुख्यं कारणम् ॥ (२) ॥*॥ द्वे '**मुख्यकारणस्य**' ॥

**क्षेत्रज्ञ आत्मा पुरुषः**

**(क्षेत्रज्ञ इति ॥**) क्षीयते इति क्षेत्रं शरीरम्। तज्जानाति। 'ज्ञा अवबोधने' (क्र्या० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः। यत्तु—क्षेत्रे जानाति–इति मुकुटः। तन्न। 'एतद्यो वेत्ति–' इति प्रागुपन्यस्तगीताविरोधात्। '**क्षेत्रज्ञा**वात्मनिपुणौ' इति हैमः ॥ (१) ॥*॥ अतति। 'अत सातत्यगमने' (भ्वा० प० से०) । 'सातिभ्यां मनिन्मनिणौ' (उ० ४।१५३) इति मनिण्। ('**आत्मा** चित्ते धृतौ यत्ने धिषणायां कलेवरे। परमात्मनि जीवेऽर्के हुताशनसमीरयोः ॥ स्वभावे') ॥ (२) ॥*॥ पुरति। 'पुर अग्रगमने' (तु० प० से०)। 'पुरः कुषन्' (उ० ४।७४)। 'अन्येषामपि–' (६।३।१३७) इति दीर्घत्वे '**पूरुषः**' अपि। पूरयति। 'पूरी आप्यायने' (दि० आ० से०)। बाहुलकात्कुषन्।

'**पुरुष**स्त्वात्मनि नरे पुंनागे च' इति हैमः ॥ (३) ॥*॥ त्रीणि '**आत्मनः**' ॥

**प्रधानं प्रकृतिः स्त्रियाम् ।**

**(प्रधानमिति ॥**) प्रधत्तेऽत्र सर्वम्। ल्युट् (३।३।११७), प्रधत्ते सर्वमात्मनीति वा। 'बहुलमन्यत्रापि' (उ० २।७८) इति युच्। प्रकृष्टं धानमनेन वा। '**प्रधानं** प्रकृतौ बुद्धावुत्तमे परमात्मनि। महामात्रे' इति हैमः ॥ (१) ॥*॥ प्रकृष्टा कृतिः कार्यं यस्याः, प्रकरोतीति वा। क्तिच् (३।३।१७४)। '**प्रकृति**र्गुणसाम्ये स्यादमात्यादिस्वभावयोः। योनौ लिङ्गे पौरवर्गे ॥' (२) ॥*॥ द्वे '**मायायाः**' ॥

**विशेषः कालिकोऽवस्था**

**(विशेष इति ॥**) कालकृतो धर्मो यौवनादिर्विशेषोऽवस्था। कालेन निर्वृत्तः। 'निर्वृत्तेऽक्षद्यूतादिभ्यः' (४।४।१९) इति ठक्। अवपूर्वात्तिष्ठतेरङ् (३।३।१०६)। 'व्यवस्थायाम्' (१।१।३४) इति ज्ञापकात् ॥ (१) ॥*॥ एकम् '**कालावस्थायाः**' ॥

**गुणाः सत्त्वं रजस्तमः ॥ २९ ॥**

**(गुणा इति ॥**) सतो भावः सत्त्वम्। सीदन्त्यस्मिन् गुणादय इति वा। सदेस्त्वन् (उ० ४।१०५) '**सत्त्वं**[1] द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः। पिशाचादावात्मभावे बले प्राणेषु जन्तुषु' ॥ (१) ॥*॥ रञ्जयति। 'भूरञ्जिभ्यां कित्' (उ० ४।२१७) इत्यसुन्। ('**रजो** रेणुपरागयोः। स्त्रीपुष्पे गुणभेदे च') ॥ (१) ॥*॥ ताम्यत्यनेन। 'तमु ग्लानौ' (दि० प० से०)। असुन् ॥*॥ कप्रत्यये 'रजतमौ' अदन्तपुंलिङ्गावपि। 'पुष्पे वेशे गुणे चैव **रजो**ऽयं रजसा सह' इत्युत्पलिनी। '**रजो**ऽयं रजसा सार्धं स्त्रीपुष्पगुणधूलिषु' इत्यजयः ॥ (१) ॥*॥ '**त्रयाणां गुणानामपि**' एकैकम् ॥

**जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ।**

**(जनुरिति ॥**) जननम्। 'जनी प्रादुर्भावे' (दि० आ० से०) 'जनेरुसिः' (उ० २।११५) ॥ (१) ॥*॥ ल्युटि (३।३।११५) जननम्। यत्तु—'जन जनने' (जु० प० से०)—इति मुकुटेनोक्तम्। तन्न। तस्य छान्दसत्वात्। ('**जननी** तु दयामात्रोर्**जननं** वंशजन्मनोः') ॥ (२) ॥*॥ मनिनि (उ० ४।१४५) जन्म ॥*॥ 'इषियुधीन्धि–' (उ० १।१४५) इति मकि **जन्म**शब्दोऽदन्तः पुंलिङ्गः। 'क्लीबोऽपि' इत्युज्ज्वलदत्तः ॥ (३) ॥*॥ 'जनिघसिभ्यामिण्' (उ० ४।१३०)। 'जनिवध्योश्च' (७।३।३५) इति वृद्धिनिषेधः। उत्पत्तिसाहचर्याज्जनेः स्त्रीत्वम्[2] ॥ (४) ॥*॥ उत्पदनम्। 'पद गतौ' (दि०

---

१—इदं तु न प्रकृतोपयोगि ॥

१—'सत्त्वं वदन्ति ते कस्मादसत्त्वं नीरजस्तमाः' इति प्रयोगात्–इति मुकुटबुधमनोहरे ॥ २—'किमर्थं जनिना जन्तोः' इत्यादिप्रयोगदर्शनात्पुंस्त्वमपि—इति मुकुटपीयूषौ ॥

आ० अ० ) । क्तिन् ( ३।३।९४ ) ॥ (५) ॥*॥ उद्भवनम् । 'ऋदोरप्' (३।३।५७) ॥ (६) ॥*॥ षट् **'जननस्य'** ॥

**प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः ॥३०॥**

**(प्राणीति ॥)** प्राणाः सन्त्यस्य । 'अत इनि–' (५।२।११५) इतीनिः ॥ (१) ॥*॥ चेतयते, चेतति वा । नन्द्यादिः (३।१।१३४) । ( **'चेतनः** स्यात्सहृदयप्राणिनोश्चेतना तु धीः') ॥ (२) ॥*॥ जन्मास्यास्ति । 'अत इनि–' (५।२।११५) । नान्तात्तु व्रीह्यादित्वात् (५।२।११६) ॥ (३) ॥*॥ जायते । 'कमिगमिजनि–' (उ० १।७३) इति तुन् ॥ (४) ॥*॥ 'यजिमनि–' (उ० ३।२०) इति युच् । ( **'जन्युः** स्याज्जन्तुमात्रे च पावके परमेष्ठिनि') ॥ (५) ॥*॥ जन्यु शरीरमस्यास्ति । इनिः (५।२।११५) ॥ (६) ॥*॥ षट् **'प्राणिनः'** ॥

**जातिर्जातं च सामान्यम्**

**(जातिरिति ॥)** जायते । 'जनी प्रादुर्भावे' (दि० आ० से०) । 'क्तिच्क्तौ च–' (३।३।१७४) इति क्तिच् । 'जनसन–' (६।४।४२) इत्यादिनात्वम् । 'तितुत्र–' (७।२।९) इति नेट् । **'जातिः** सामान्यगोत्रयोः । मालत्यामामलक्यां च चुल्ल्यां कम्पिल्लजन्मनोः ॥ जातीफले छन्दसि च' इति हैमः ॥ (१) ॥*॥ क्ते (३।३।१७४) जातम् । **'जातं** व्यक्तौघजन्मसु । क्लीबं, त्रिलिङ्गमुत्पन्ने' ॥ (२) ॥*॥ समानानां भावः । 'गुणवचन–' (५।१।१२४) इति ष्यञ् ॥ (३) ॥*॥ त्रीणि **'घटत्वादिजातेः'** ॥

**व्यक्तिस्तु पृथगात्मता ।**

**(व्यक्तिरिति ॥)** व्यज्यतेऽनया । 'अञ्जू व्यक्त्यादौ' (रु० प० से०) 'स्त्रियां क्तिन्' (३।३।९४) । व्यनक्ति वा । क्तिच् (३।३।१७४) ॥ (१) ॥*॥ पृथगात्मा यस्य तस्य भावः । तल् (५।१।११०) ॥ (२) ॥*॥ द्वे **'घटादिव्यक्तेः'** ॥

**चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ॥ ३१ ॥**

**(चित्तमिति ॥)** 'चिती संज्ञाने' ( भ्वा० प० से० ) । भावे क्तः (३।३।११४) । 'श्वीदितः–' (७।२।१४) इतीण्निषेधः ॥ (१) ॥*॥ असुनि (उ० ४।१८९) चेतः ॥ (२) ॥*॥ ह्रियते विषयैः 'वृहोः षुग्दुकौ च' (उ० ४।१००) इति कयन् दुगागमश्च । हरति आहरति विषयानिति वा । (**'हृदयं** वक्षसि स्वान्ते वुक्कायाम्') ॥ (३) ॥*॥ 'स्वन शब्दे' (भ्वा० प० से०) । स्वन्यते स्म । 'क्षुब्धस्वान्त–' (७।२।१८) इति मनसि निपातितम् । (**'स्वान्तं** चेतसि गह्वरे') ॥ (४) ॥*॥ हृदयस्य 'पद्दन्नस्–' (६।१।६३) इति हृदादेशः । प्रभृतिग्रहणस्य प्रकारार्थत्वात्क्वचित्स्वादावपि । हरतेः क्विप् (३।२।१७८) । तुक् (६।१।७१) । व्यत्ययेन तस्य द इत्यन्ये । (**'हृत्** क्लीबं वुक्कचित्तयोः') ॥ (५) ॥*॥ मन्यतेऽनेन । असुन् (उ० ४।१८९) । प्रज्ञाद्यणि (५।४।३८) मानसम् । (**'मानसं** स्वान्तसरसोः') ॥ (६) ॥*॥ तदभावे मनः । ( **'मन**श्चित्ते मनीषायाम्') । अर्धर्चादिः (२।४।३१) अयम्–इत्येके । तदा 'मनाः' इत्यपि ॥ (७) सप्त **'मनसः'** ॥

१—हैमे तु 'जात्योघ' इति पठितम् । जातिः सामान्यम् । तत्र यथा 'रत्नं सुजातं कनकावदातम्' इत्यनेकार्थकैरवाकरकौमुदी ॥

**॥ इति कालवर्गविवरणम् ॥**

---

**बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः । प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः ॥ १ ॥**

**(बुद्धिरिति ॥)** बुध्यतेऽनया । बोधनं वा । क्तिन् (३।३।९४) ॥ (१) ॥*॥ 'ईष गतिहिंसादर्शनेषु' (भ्वा० आ० से०) । 'गुरोश्च हलः' (३।३।१०३) इत्यप्रत्ययः । मनस ईषा । शकन्ध्वादित्वात् ( वा० ६।१।९४ ) टेः पररूपम् ॥ (२) ॥*॥ धृष्णुवन्त्यनया । 'ञिधृषा प्रागल्भ्ये' (स्वा० प० से०) 'धृषेर्धिष् च संज्ञायाम्' (उ० २।८२) इति युच् ॥ (३) ॥*॥ ध्यायत्यनया । ध्यानं वा । 'ध्यायतेः संप्रसारणं च' (वा० ३।२।१७८) इति क्विप् । 'हलः' (६।४।२) इति दीर्घः । (**'धी**र्ज्ञाने ज्ञानभेदेऽपि') ॥ (४) ॥*॥ प्रज्ञायतेऽनया । प्रज्ञानं वा । 'ज्ञावबोधने' ( क्र्या० प० अ० ) । 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् । (**'प्रज्ञ**स्तु पण्डिते वाच्यलिङ्गो, बुद्धौ तु योषिति') ॥*॥ श्रद्धापि । 'प्रज्ञा **श्रद्धा धरा** ज्ञप्तिः **पण्डा संवेदनं विदा'** इति शब्दार्णवात् ॥ (५) ॥*॥ शेते । शेः विच् (३।२।७५) । मोहः । तं मुष्णाति । शेमुषी । 'मुष स्तेये' ( क्र्या० प० से० ) मूलविभुजादित्वात् ( वा० ३।२।५ ) कः । गौरादित्वात् (४।१।४१) ङीष् ॥ (६) ॥*॥ मन्यतेऽनया । मननं वा । 'मन ज्ञाने' (दि० आ० अ०) । क्तिन् (३।३।९४) । (**'मति**र्बुद्धीच्छयोः') ॥ (७) ॥*॥ प्रकृष्टमीक्षणम् । अनया 'गुरोश्च–' (३।३।१०३) इत्यः । टाप् (४।१।४) । **'प्रेक्षा**धीरीक्षणं नृत्तम्' इति हैमः ॥ (८) ॥*॥ उपलम्भनम् । उपलभ्यतेऽनया वा । 'डुलभष् प्राप्तौ' ( भ्वा० आ० अ० ) । षित्त्वात् (३।३।१०४) अङि प्राप्ते आबादिलात् (वा० ३।३।९४) बाहुलकाद्वा क्तिन् । (**'उपलब्धि**र्मतौ प्राप्तौ') ॥ (९) ॥* ॥ 'चिती संज्ञाने' (भ्वा० प० से०) संपदादित्वात् (३।३।१०८) क्विप् । चित् तान्ता ॥ (१०) ॥*॥ संवेदनम् । 'विद ज्ञाने' (अ० प० से०) । (**'संवित्** संभाषणे ज्ञाने संग्रामे नाम्नि तोषणे । क्रियाकारे प्रतिज्ञायां संकेताचारयोरपि') (११) ॥*॥ प्रतिपदनम् । 'पद गतौ' ( दि० आ० से ) । संपदादित्वात् (वा० ३।३।१०८) । क्विप् । करणे वा ॥ (१२) ॥*॥ 'ज्ञप मिच्च' (चु० प० से०) चुरादिः । ण्यन्तत्वाद्युचि (३।३।१०७) प्राप्ते आवादित्वात् (वा० ३।३।९४) बाहुलकाद्वा क्तिन् । यदा तु चुरादीनां णिजभावे सामान्यापेक्षं ज्ञापकम् । तदा क्तिन् न्याय्य

एव । 'तितुत्र–' (७।२।९) इति नेट् ॥ (१३) ॥*॥ 'चित संचेतने' (चु० आ० से०) चुरादिः । 'ण्यासश्रन्थः–' (३।३।१०७) इति युच् । '**चेतना** संविदि स्त्रियाम् । वाच्यवत्प्राणयुक्ते'[१] ॥ (१४) ॥*॥ चतुर्दश '**बुद्धेः**' ॥

**धीर्धारणावती मेधा**

(**धीरिति** ॥) धारणाशक्तियुक्ता धीः । 'मेधृ संगमे' (भ्वा० उ० से०) मेधते संगच्छते सर्वमस्याम् । 'गुरोश्च–' (३।३।१०३) इत्यकारः । ('**मेधा** बुद्धौ, क्रतौ पुमान्') ॥ (१) ॥*॥ एकम् '**धारणावद्बुद्धेः**' ॥

**संकल्पः कर्म मानसम् ।**

(**संकल्प इति** ॥) इदमिदं कुर्यामिति मनसः कर्म व्यापारः । संकल्पनम् । 'कृपू सामर्थ्ये' (भ्वा० आ० से०) । भावे घञ् (३।३।१८) ॥ (१) ॥*॥ एकम् '**मनोव्यापारस्य**' ॥

**चित्ताभोगो मनस्कारः**

(**चित्तेति** ॥) चित्तस्य मनस आभोगस्तदेकप्रवणता पूर्णता वा '**आभोगो** वारुणच्छत्रे पूर्णतायत्नयोरपि' । 'भुज पालनाभ्यवहारयोः' (रु० प० अ०) । भावे घञ् (३।३।१८) ॥ (१) ॥*॥ मनसः कारो व्यापारविशेषः । 'डुकृञ्' (त० उ० अ०) । भावे घञ् (३।३।१८) । 'अतः कृकमि–' (८।३।४६) इति सत्वम् ॥ (२) ॥*॥ द्वे '**मनसः सुखादौ तत्परत्वस्य**' ॥

**चर्चा संख्या विचारणा ॥२॥**

(**चर्चेति** ॥) 'चर्च अध्ययने' (चु० उ० से०) चुरादिण्यन्ताद्भावे 'चिन्तिपूजि–' (३।३।१०५) इत्यङ् । ('**चर्चा** स्याच्चर्चमुण्डायां चिन्तास्थासकयोरपि') ॥ (१) ॥*॥ संख्यानम् । 'चक्षिङः ख्याञ्' । (२।४।५४) । 'आतश्च–' (३।३।१०६) इत्यङ् । '**संख्यै**कादौ विचारे च' ॥ (२) ॥*॥ 'चर असंशये' (चु० उ० से०) चुरादिः । 'ण्यास–' (३।३।१०७) इति युच् ॥ (३) ॥*॥ त्रीणि '**विचारणस्य**' ॥

**अध्याहारस्तर्क ऊहः**

(**अध्याहार इति** ॥) अध्याहरणम् । अध्याङ्पूर्वो हृञ् । (भ्वा० उ० अ०) भावे घञ् (३।३।१८) ॥ (१) ॥*॥ अपूर्वोत्प्रेक्षणं तर्कणम् । 'तर्क भाषार्थः' चुरादौ 'पटपुट–' इति दण्डके पठितः । भावे घञ् (३।३।१८) कृन्तति, कृन्तते वा अच् (३।१।१३४) घञौ (३।३।१९) । पृषोदरादित्वात् (६।३।१०९) वर्णविपर्ययः । '**तर्को** वितर्के काङ्क्षायामूहकर्मविशेषयोः' इति हैमः ॥ (२) ॥*॥ ऊहनम् 'ऊह वितर्के' (भ्वा० आ० से०) । भावे घञ् (३।३।१८) ॥ (३) त्रीणि '**तर्कस्य**' ॥

**विचिकित्सा तु संशयः ।**

**संदेहद्वापरौ च**

(**विचिकित्सेति** ॥) 'कित संशये' (भ्वा० प० से०) । 'गुप्तिज्किद्भ्यः सन्' (३।१।५) । 'अ प्रत्ययात्' (३।३।१०२) । विचिकित्सा ॥ (१) ॥*॥ 'शीङ्' (अ० आ० से०) । 'एरच्' (३।३।५६) । संशयः ॥ (२) ॥*॥ 'दिह उपचये' (अ० उ० अ०) । संदेहनम् । घञ् (३।३।१८) ॥ (३) ॥*॥ द्वौ परौ प्रकारौ यस्य । 'सर्वनामसंख्ययोः–' (वा० २।२।३५) इति द्विशब्दस्य पूर्वनिपातः । पृषोदरादित्वात् (६।३।१०९) आत्वम् । ( '**द्वापरं** संशये युगे' ) ॥ ॥*॥ चत्वारि '**एकधर्मिणि विरुद्धानेककोट्यवगाहिज्ञानस्य**' ॥

**अथ समौ निर्णयनिश्चयौ ॥ ३ ॥**

(**अथेति** ॥) 'णीञ् प्रापणे' (भ्वा० उ० अ०) । निर्णयनम् । 'एरच्' (३।३।५६) । 'उपसर्गादसमासेऽपि–' (८।४।१४) इति णत्वम् ॥ (१) ॥*॥ 'चिञ् चयने' (स्वा० उ० अ०) निश्चयनम् । 'ग्रहवृद–' (३।३।५८) इत्यप् ॥ (२) ॥*॥ द्वे '**निश्चयस्य**' ॥

**मिथ्यादृष्टिर्नास्तिकता**

(**मिथ्येति** ॥) 'मिथ्या' इत्यपह्नवे । तद्विषयिणी दृष्टिः ॥ (१) ॥*॥ नास्ति परलोक इति मतिरस्य । 'अस्तिनास्तिदिष्टंमतिः' (४।४।६०) इति ठक् । तस्य भावो नास्तिकता ॥ (२) ॥*॥ द्वे '**परलोको नास्तीत्यादिबुद्धेः**' ॥

**व्यापादो द्रोहचिन्तनम् ।**

(**व्यापाद इति** ॥) 'पद गतौ' (दि० आ० अ०) व्याङ्पूर्वः । व्यापादनम् । ण्यन्तात् (३।१।२६) घञ् (३।३।१८) ॥ (१) ॥*॥ द्रोहस्य चिन्तनम् । 'ल्युट् च' (३।३।११५) ॥ बाहुलकाल्ल्युट्–इति मुकुटः । तन्न । स्त्रीत्वविशिष्टे भावे अङः (३।३।१०५) विहितत्वेन नपुंसकत्वविशिष्टे भावे ल्युटो निरपवादत्वात् ॥ (२) ॥*॥ द्वे '**द्रोहचिन्तनस्य**' ॥

**समौ सिद्धान्तराद्धान्तौ**

(**समाविति** ॥) सिद्धोऽन्तो निश्चयो यस्मिन् ॥ (१) ॥*॥ राद्धः सिद्धोऽन्तो निश्चयोऽस्मिन् ॥ (२) ॥*॥ द्वे '**सिद्धान्तस्य**' ॥

**भ्रान्तिर्मिथ्यामतिर्भ्रमः ॥ ४ ॥**

(**भ्रान्तिरिति** ॥) 'भ्रमु चलने' (भ्वा० प० से०) । भावे क्तिन् (३।३।९४) 'अनुनासिकस्य–' (६।४।१५) इति दीर्घः । '**भ्रान्तिर**नवस्थितौ । मिथ्यामतौ च भ्रमणे' ॥ (१) ॥*॥ 'मिथ्या' इत्यव्ययम् । तेन कर्मधारयः ॥ (२) ॥*॥ भावे घञि (३।३।१८) भ्रमः । 'नोदात्तोपदेश–' (७।३।३४) इति न वृद्धिः । '**भ्रमोऽ**म्बुनिर्गमे भ्रान्तौ कुन्दभ्रमणयोरपि' ॥ (३) ॥*॥ त्रीणि '**अतस्मिंस्तज्ज्ञानस्य**' ॥

---

१—वाच्यप्रमाणस्त्वर्गे ॥

**संविदागूः प्रतिज्ञानं नियमाश्रव-संश्रवाः ।**
**अङ्गीकाराभ्युपगम-प्रतिश्रव-समाधयः ॥ ५ ॥**

(**संविदिति** ॥) संवेदनम् । 'विद ज्ञाने' (अ० प० से०)। संपदादित्वात् (वा० ३।३।१०८) क्विप् ॥ (१) ॥*॥ आगमनम् । आगूः । 'गमेः' इत्यनुवर्तमाने 'आमेश्च डूः' (उ० २।६८)। डित्त्वाट्टिलोपः (६।४।१४३) । वधूशब्दवत् । यदा तु क्विपि (वा० ३।३।१०८) 'गमः क्वौ' (६।४।४०) इत्यन्तलोपे 'ऊङ् च गमादीनाम्' (वा० ६।४।४०) इत्यूकारादेशः । तदा 'ओः सुपि' (६।४।८३) इति यणि अमि शसि च 'आग्वम्, आग्वः' इति विशेषः । 'गुरी उद्यमने' (तु० आ० से०) । अस्मात् क्विपि (वा० ३।३।१०८) तु आगूः, आगुरौ, आगुरः, इति धूर्वत् ॥ (२) ॥*॥ जानातेर्ल्युट् (३।३।११५) ॥ (३) ॥*॥ 'यमः समुपनिविषु च' (३।३।६३) इत्यप् । 'नियमो यन्त्रणायां च प्रतिज्ञानिश्चयव्रते' ॥ (४) ॥*॥ आङ्पूर्वाच्छृणोतेः 'ऋदोः–' (३।३।५७) इत्यप् । '**आश्रवो**ऽङ्गीकृतौ क्लेशे नान्यवद्वचनस्थिते' ॥ (५) ॥*॥ एवं संश्रव (६) प्रतिश्रवौ (९) ॥*॥ 'अङ्गी' इति च्व्यन्तमव्ययम् । तत्पूर्वात्कृञो भावे घञ् (३।३।१८) ॥ (७) ॥*॥ 'अभ्युप' इत्युपसर्गद्वयपूर्वाद्गमेः 'ग्रहवृदृ–' (३।३।५८) इत्यप् । '**अभ्युपगम**स्तु पुंसि स्वीकारे निकटगमने च' ॥ (८) ॥*॥ समाङ्पूर्वाद्धाञो भावे किः (३।३।९२) । '**समाधि**र्ना समर्थने । ध्याने वैरस्यनियमे काव्यस्य च गुणान्तरे' ॥ (१०) ॥*॥ दश '**अङ्गीकारस्य**' ॥

**मोक्षे धीर्ज्ञानम्**

(**मोक्षे इति** ॥) मोक्षफलिका धीर्ज्ञानम् ॥ (१) ॥*॥ एकम् '**मोक्षोपयोगिबुद्धेः**' ॥

**अन्यत्र विज्ञानं शिल्पशास्त्रयोः ।**

(**अन्यत्रेति** ॥) अन्यफलिका शिल्पे शास्त्रे च या धीः सा विज्ञानम् । '**विज्ञानं** कार्मणे ज्ञाने' इति हैमः । मुकुटस्तु— 'मोक्ष इति निमित्तसप्तमी । मोक्षनिमित्तं शिल्पशास्त्रयोर्धीर्ज्ञानमुच्यते । अन्यनिमित्तं या तयोर्धीः सा विज्ञानम्' इति व्याख्यत् । 'तन्न । शिल्पज्ञानस्य मोक्षेऽनुपयोगात्' ॥ (१) ॥*॥ एकम् '**शिल्पादिविषयकबुद्धेः**' ॥

**मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ॥ ६ ॥**
**मोक्षोऽपवर्गः**

(**मुक्तिरिति** ॥) मोचनम् । 'मुच्लृ मोक्षणे' (तु० उ० अ०) । क्तिन् (३।३।९४) । '**मुक्ति**र्मोचनमोक्षयोः' इति हैमः ॥ (१) ॥*॥ बन्धविरहात्केवलस्य भावः । 'गुणवचन–' (५।१।१२४) इति ष्यञ् ॥ (२) ॥*॥ निर्वान्त्यत्र । भावे वा । 'क्तोऽधिकरणे च' (३।४।७६) इति 'नपुंसके भावे (३।३।११४) इति वा क्तः । 'निर्वाणोऽवाते–' (८।२।५०) इति निष्ठानत्वम् । यद्वा अधिकरणे भावे वा ल्युट् । बन्धान्निर्गमनमित्यर्थः । '**निर्वाणं** मोक्षनिर्वृत्योर्विधाने करिमज्जने' इति हैमः ॥ (३) ॥*॥ अतिशयेन प्रशस्यं श्रेयः । '**श्रेयो** मुक्तौ शुभे धर्मेऽतिप्रशस्ते तु वाच्यवत्' ॥ (४) ॥*॥ नितरां श्रेयः निःश्रेयसम् । 'अचतुर–' (५।४।७७) इति निपातितम् । '**निःश्रेयसं** तु कल्याणमोक्षयोः शंकरे पुमान्' ॥ (५) ॥*॥ अविद्यमानं मृतं मरणमत्र । '**अमृतं** यज्ञशेषे स्यात्पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः' ॥ (६) ॥*॥ 'मोक्ष अवसाने' (चु० उ० से०) अवसानं क्षेपः । चुरादिः । 'एरच्' (३।३।५६) । घञ् (३।३।१८) वा । '**मोक्षो** निःश्रेयसे वृक्षविशेषे मोचने मृतौ' इति हैमः ॥ (७) ॥*॥ अपवर्जनम् । 'वृजी वर्जने' (अ० आ० से०) । घञ् '**अपवर्ग**स्त्यागमोक्षयोः । क्रियावसाने साकल्ये' इति हैमः ॥ (८) ॥*॥ अष्टौ '**मोक्षस्य**' ॥

**अथाज्ञानमविद्याहंमतिः स्त्रियाम् ।**

(**अथेति** ॥) ज्ञानविरुद्धम् । ज्ञाननिवर्त्यत्वात् ॥ (१) ॥*॥ 'विद ज्ञाने' (अ० प० से०) । वेदनम् 'संज्ञायां समज–' (३।३।९९) इति क्यप् । अविद्या विद्याविरुद्धा ॥ (२) ॥*॥ अहमिति विभक्तिप्रतिरूपकमव्ययमहंकारार्थम् । अहंप्रधाना मतिः ॥ (३) ॥*॥ त्रीणि '**अज्ञानस्य**' ॥

**रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी ॥ ७ ॥**
**गोचरा इन्द्रियार्थाश्च**

(**रूपमिति** ॥) रोपयति विमोहयति । 'रुपु विमोहने' (दि० प० से०) । अच् (३।१।१३४) । 'अन्येषामपि–' (६।३।१३७) इति दीर्घः । यद्वा 'रूप रूपकरणे' (चु० उ० से०) इति चौरादिकस्यायमप्यर्थः । यद्वा रूयते स्तूयते । 'रु शब्दे' (अ० प० अ०) । 'खष्पशिल्प–' (उ० ३।२८) इति पप्रत्ययो दीर्घश्च निपातितः । 'रूपं तु श्लोकशब्दयोः । पशावाकाशे सौन्दर्ये, नाणके नाटकादिके ॥ ग्रन्थावृत्तौ स्वभावे च' इति हैमः ॥ (१) ॥*॥ शप्यते आक्रुश्यते । 'शप आक्रोशे' (भ्वा०, दि० उ० अ०) 'शाशपिभ्यां ददनौ' (उ० ४।९७) इति दन् । '**शब्दो**ऽक्षरे यशोगीत्योर्वाक्ये खे श्रवणे ध्वनौ' इति हैमः ॥ (१) ॥*॥ गन्धयति । 'गन्ध अर्दने' (चु० आ० से०) । अच् (३।१।१३४) । '**गन्धः** संबन्धलेशयोः । गन्धकामोदगर्वेषु' इति हैमः ॥ (१) ॥*॥ रस्यते । 'रस आस्वादने' (चु० प० से०) चुरादिः । 'एरच्' (३।३।५६) । घञ् (३।३।१८) वा । '**रसो** गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः ॥ देहधातुप्रभेदे च पारदस्वादयोः पुमान्' इति हैमः ॥ (१) ॥*॥ 'स्पृश संस्पर्शने' (तु० प० से०) ।

---

१ अयं पाठः कुत्रचिन्नोपलभ्यते ॥

१—मेदिन्यामेवोपलभ्यते ॥

'अकर्तरि च' (३।३।१९) इति घञ्। '**स्पर्शो** वर्गाक्षरे दाने स्पर्शने स्पर्शके रुजि' इति हैमः ॥ (१) ॥*॥ विसिन्वन्ति निबध्नन्तीन्द्रियाणि। 'षिञ् बन्धने' (स्वा० उ० अ०)। पचाद्यच् (३।१।१३४)। 'परिनिवि-' (८।३।७०) इति षत्वम्। '**विषयो** यस्य यो ज्ञातस्तत्र गोचरदेशयोः। शब्दादौ जनपदे च' इति हैमः ॥ (१) ॥*॥ गाव इन्द्रियाणि चरन्त्येषु। 'करणाधिकरणयोः' इत्यधिकारे 'गोचरसंचर-' (३।३।११९) इति निपातितः ॥ (२) ॥*॥ इन्द्रियैरर्थ्यन्ते। 'अर्थ याच्ञायाम्' (चु० आ० से०)। कर्मणि घञ् (३।३।११९) ॥ (३) ॥*॥ पञ्चानामपि प्रत्येकं त्रीणि '**विषयाणाम्**' ॥

**हृषीकं विषयीन्द्रियम्।**

(**हृषीकमिति** ॥) हृष्यन्त्यनेन। 'हृषु अलीके' (भ्वा० प० से०)। 'अलिहृषिभ्यां कित्' (उ० ४।१७) इति करणे ईकन् ॥ (१) ॥*॥ विषयोऽस्यास्ति। इनिः (५।२।११५)। ('**विषयी** विषयासक्ते वाच्यवत्, क्लीबमिन्द्रिये। पुंसि स्यान्नृपतौ कामदेवे वैषयिकेऽपि च') ॥ (२) ॥*॥ इन्द्रस्यात्मनो लिङ्गम्। 'इन्द्रियमिन्द्रलिङ्गम्-' (५।२।९३) इत्यादिना घच् निपातितः। '**इन्द्रियं** तु चक्षुरादिषु रेतसि' इति हैमः ॥ (३) ॥*॥ त्रीणि '**इन्द्रियाणाम्**' ॥

**कर्मेन्द्रियं तु पाय्वादि**

(**कर्मेति** ॥) कर्मसाधकमिन्द्रियं कर्मेन्द्रियमुच्यते ॥ (१) ॥*॥ पायति शोषयति तैलमिति पायुः। 'पै शोषणे' (भ्वा० प० अ०) 'कृवापाजि-' (उ० १।१) इत्युण्। 'आतो युक्-' (७।३।३३) 'पायूपस्थे पाणिपादौ वाक्चेतीन्द्रियसंग्रहः। उत्सर्गानन्दनादानगत्यालापाश्च तत्क्रियाः' इति कामन्दकीये ॥ एकम् '**गुह्यादीन्द्रियस्य**' ॥

**मनोनेत्रादि धीन्द्रियम् ॥ ८ ॥**

(**मन इति** ॥) धीसाधनमिन्द्रियं धीन्द्रियम् ॥ (१) ॥*॥ 'मनः कर्णौ तथा नेत्रं रसना च त्वचा सह। नासिका चेति षट् तानि धीन्द्रियाणि प्रचक्षते' ॥ एकम् '**ज्ञानेन्द्रियस्य**' ॥

**तुवरस्तु कषायोऽस्त्री**

(**तुवर इति** ॥) 'तुः' सौत्रो धातुः। तवीति हिनस्ति रोगान्। 'छित्वरछत्वर-' (उ० ३।१) इत्यादिना ष्वरच्। ('**तुवरस्तु** कषाये स्यात्काक्ष्याढक्योस्**तुवर्यपि**') ॥*॥ दीर्घादिरपि। 'नरेऽश्मश्रुणि शृङ्गाभ्यां रहिते गवि **तूवरः**। काले प्राप्ते कषाये च **रसे** पुंव्यञ्जने च्युते' इत्युत्पलिनी। 'नापि कषायस्तुवरः' इति बोपालितः। 'पुंसि कषायस्तुवरम्' इति क्लीबकाण्डे रत्नकोषः ॥ (१) ॥*॥ कषति कण्ठम्। 'कष हिंसायाम्' (भ्वा० प० से०)। बाहुलकादायः। '**कषायः** सुरभौ रसे। रागवस्तुनि निर्यासे क्रोधादिषु विलेपने' इति हैमः ॥ (२) ॥*॥ अस्त्रीत्युभयान्वयि। उक्तकोषाभ्याम्। '**कुवरस्तु** कषायोऽस्त्री' इत्येके पठन्ति ॥ द्वे '**कषायरसस्य**' ॥

**मधुरो**

(**मधुर इति** ॥) मधु माधुर्यमस्यास्ति। 'ऊषसुषि-' (५।२।१०७) इति रः। ('**मधुरं** विषे)। **मधुरस्तु** प्रिये स्वादौ रसे च रसवत्यपि। **मधुरा** मथुरापुर्यां यष्टीमेदामधूलिषु। मधुकुक्कुटिकायां च मिश्रेयाशतपुष्पयोः' इति हैमः ॥ (१) ॥*॥ एकम् '**मधुरस्य**' ॥

**लवणः**

(**लवण इति** ॥) लुनाति जाड्यम्। 'लूञ् छेदने' (क्र्या० उ० से०)। नन्द्यादित्युः (३।१।१३४)। लवणाल्लुक् (४।४।२४) इति लिङ्गाण्णत्वम्। '**लवणो** राक्षसे रसे। अस्थिभेदे **लवणा** त्विट्' इति हैमः ॥ (१) ॥*॥ एकम् '**लवणस्य**' ॥

**कटुः।**

(**कटुरिति** ॥) कटत्यावृणोति तीक्ष्णतया मुखम्। 'कटे वर्षावरणयोः' (भ्वा० प० से०)। 'कटिवटिभ्यां च' (उ० १।८) इत्युः। 'कट्वकार्ये मत्सरे च दूषणे च **कटू** रसे। तिक्ते प्रियङ्गुसुरभौ **कटुका** राजिकास्वपि' इति हैमः ॥ (१) ॥*॥ एकम् '**कटोः**' ॥

**तिक्तः**

(**तिक्त इति** ॥) तेजयति स्म। 'तिज निशाने' (चु० प० से०)। सामान्यापेक्षज्ञापकाच्चुरादीनां णिजभावे 'गत्यर्थाकर्मक-' (३।४।७२) इति क्तः। पक्षान्तरे तु संज्ञापूर्वकत्वाद्गुणाभावः। '**तिक्तस्तु** सुरभौ रसे। **तिक्ता** तु कटुरोहिण्यां **तिक्तं** पर्पटकौषधे' इति हैमः ॥ (१) ॥*॥ एकम् '**तिक्तस्य**' ॥

**अम्ब्लश्च**

(**अम्ब्ल इति** ॥) अम्ब्यते शब्द्यते भोक्तृभिः। 'अबि शब्दे' (भ्वा० प० से०)। 'मृशक्यविभ्यः क्लः' (उ० ४।१०८)। अम्ब्लः ॥*॥ 'अम रोगे' (चु० उ० से०)। अमति रुजत्यरुचिम्। बाहुलकात्क्ले अम्लोऽपि। '**अम्लो** रसेऽम्लवेतसे। (**अम्ली** चाङ्गेर्याम्)' इति हैमः ॥ (१) ॥*॥ एकम् '**अम्लस्य**' ॥

---

१—वर्गाक्षराणि कादयो मावसानाः पञ्चविंशतिः। 'ते वर्गाः पञ्च पञ्च' इति कातन्त्रसूत्रात् ॥

१—अत्र दीर्घे त्वार्याभङ्गः स्यात्-इति मुकुटः ॥ २—अस्थि भेदो भालकर्णान्तरास्थि। तत्र यथा प्रयोगः। 'शृणाति लवणाघातः' इत्यनेकार्थकैरवाकरकौमुदी ॥

**रसाः पुंसि**

(**रसा इति** ॥) 'रस आस्वादने' (चु० उ० से०) अदन्तः । रस्यन्ते आस्वाद्यन्ते । 'एरच्' (३।३।५६) घञ् (३।३।१९) वा । तुवरादयः षट् रसशब्दवाच्याः । तत्र तुवरकषाययोरक्लीवत्वस्योक्तत्वादितरेषां लिङ्गनिर्णयमाह–'पुंसि' इति । 'गुणमात्रे वर्तमाना मधुरादयः पञ्च पुंसि' इत्यर्थः ॥

**तद्वत्सु षडमी त्रिषु ॥ ९ ॥**

(**तद्वत्स्विति** ॥) अमी षट् । षण्णामपि वाचकास्तुवरादयः सप्तापि गुणिनि त्रिलिङ्गा इत्यर्थः । कटुशब्दात्स्त्रियाम् 'वोतो गुण–' (४।१।४४) इति वा ङीष् ॥

**विमर्दोत्थे परिमलो गन्धे जनमनोहरे ।**

(**विमर्दोत्थ इति** ॥) सुरतादिविमर्दोत्थे माल्यादिगन्धे, घर्षणसमुद्भवे चन्दनादिगन्धे, च जनानां मनोहरे, परिमलः । 'मल धारणे' (भ्वा० आ० से) । मल्यते । कर्मणि घञ् (३।३।१९) । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । 'खनो घ च' (३।३।१२५) इति घो वा । घित्करणात् 'अन्येभ्योऽपि' इत्यभ्युपगमात् । यद्वा मलते धारयति जनमनांसि पचाद्यच् (३।१।१३४) । 'स्यात्परिमलो विमर्दातिमनोहरगन्धयोश्चापि । सुरतोपमर्दविकसच्छरीरसङ्गादिसारम्भे पुंसि' ॥ (१) ॥*॥ एकम् '**परिमलस्य**' ॥

**आमोदः सोऽतिनिर्हारी**

(**आमोद इति** ॥) स परिमलोऽतिनिर्हारी अत्यन्तमनोहरश्चेत् । आसमन्तान्मोदयति, इत्यामोदः । 'मुद हर्षे' (भ्वा० आ० से०) ण्यन्तः । अच् (३।१।१३४) । '**आमोदो** गन्धहर्षयोः' ॥ (१) ॥*॥ एकम् '**सुगन्धस्य**' ॥

**वाच्यलिङ्गत्वमागुणात् ॥ १० ॥**

(**वाच्येति** ॥) आ गुणात् 'गुणे शुक्लादयः पुंसि' इत्यतः प्राक् । अतः परं 'वाच्यलिङ्गता' इत्यधिक्रियते ॥

**समाकर्षी तु निर्हारी**

(**समाकर्षीति** ॥) समाकर्षत्यवश्यं मनः 'आवश्यका–' (३।३।१७१) इति णिनिः । यद्वा समाकर्षणशीलः । 'सुप्यजातौ–' (३।२।७८) इति णिनिः ॥ (१) ॥*॥ एवं निर्हारी ॥ (२) ॥*॥ द्वे '**दूरगामिगन्धस्य**' ॥

**सुरभिर्घ्राणतर्पणः ।**

**इष्टगन्धः सुगन्धिः स्यात्**

(**सुरभिरिति** ॥) सुष्ठु रमन्तेऽत्र सुरभिः । इन् (उ० ४।११८) ॥ (१) ॥*॥ घ्राणं तर्पयति । नन्द्यादित्वाल्ल्युः (३।१।१३४) ॥ (२) ॥*॥ इष्टो गन्धोऽस्य । '**इष्टगन्धः** सुगन्धौ स्यात्त्रिषु क्लीबं तु वालुके' ॥ (३) ॥*॥ सुष्ठु गन्धोऽस्य । 'गन्धस्येत्–' (५।४।१३५) इति समासान्त इकारः । '**सुगन्धिः** स्यादिष्टगन्धे त्रिषु क्षीरे नपुंसकम्' ॥ (४) ॥*॥ चत्वारि '**इष्टगन्धस्य**' ॥

**आमोदी मुखवासनः ॥ ११ ॥**

(**आमोदीति** ॥) आमोदयति । 'सुप्यजातौ–' (३।२।७८) इति णिनिः ॥ (१) ॥*॥ मुखं वासयति । नन्द्यादिल्युः (३।१।१३४) ॥ (२) ॥*॥ द्वे '**मुखवासनगुटिकादेः**' ॥

**पूतिगन्धिस्तु दुर्गन्धः**

(**पूतीति** ॥) 'पूयी विशरणे दुर्गन्धे च' (भ्वा० आ० से०) । पूय्यते । पूतिः । क्तिन् (३।३।९४) । पूतिर्दुष्टो गन्धोऽस्य 'गन्धस्येत्–'[१] (५।४।१३५) इतीकारः ॥ (१) ॥*॥ दुर्गन्धे त्विकारो नेति विशेषः ॥ (२) ॥*॥ द्वे '**दुर्गन्धस्य**' ॥

**विस्रं स्यादामगन्धि यत् ।**

(**विस्रमिति** ॥) विस्यति । 'विस प्रेरणे' (दि० प० से०) 'स्फायि–' (उ० २।१३) इति बाहुलकाद्रक् । 'विस उत्सर्गे' इति तु भट्टः । 'विस्रंसते' इति वा 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । बवयोरभेदः ॥ (१) ॥*॥ आमोऽपक्वो मलः । तस्येव गन्धोऽस्य । 'उपमानाच्च' (५।४।१३६) इति समासान्त इत् ॥ (२) ॥*॥ द्वे '**अपक्वमांसादिगन्धस्य**' ॥

शब्दार्णवे तु 'कस्तूरिकायामामोदः कर्पूरे मुखवासनः । बकुले स्यात्परिमलश्चम्पके सुरभिस्तथा ॥' इति ॥

**शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः ॥ १२ ॥**
**अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः ।**

(**शुक्लेति** ॥) शोकति मनोऽस्मिन् । 'शुक गतौ' (भ्वा प० से०) । 'ऋज्रेन्द्र–' (उ० २।२८) इति निपातितः । '**शुक्लो** योगान्तरे सिते । नपुंसकं तु रजते' ॥ (१) ॥*॥ शोभते । 'शुभ दीप्तौ, शोभायां वा' (भ्वा० आ० से०) । 'स्फायि–' (उ० २।१३) इति रक् । '**शुभ्रं** दीप्तेऽभ्रके सिते' इति हैमः ॥ (२) ॥*॥ 'शुच दीप्तौ' (*) । इक् (वा० ३।३।१०८) ॥ (३) ॥*॥ 'श्विता वर्णे' (भ्वा० आ० से०) श्वादिः । श्वेतम् । घञ् (३।३।१८) '**श्वेतो**[३] द्वीपादिभेदयोः । **श्वेता** वराटिकाकाष्ठपाटलाशङ्खिनीषु च । क्लीबं रूप्ये(ऽन्यवच्छुक्ले)' ॥ (४) ॥*॥ विशीयते । 'शद्लृ शातने' (भ्वा०, तु० प०

१—'गन्धस्येत्–' (५।४।१३५) इति सूत्रे दुरोऽपाठात् । केचित्तु मत्वर्थीयेत्यन्तं पठित्वा कर्मधारयादिनि व्याचक्षते । तन्न । 'कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिरेवेष्टो लाघवात्' इति कात्यायनोक्तेः । अपरे तु लाघवमनादृत्य मत्वर्थीयमिच्छन्ति । 'बिसकिसलयच्छेदपाथेयवन्तः' इतिवत् । प्रयोगश्च 'यद्दुर्गन्धि मदाविलं मलशतैर्यत्पूतिनाडीमयम्' इति शृङ्गारप्रकाशे । इति बुधमनोहरायाम् ॥ २—विस्रं दन्त्योष्ठ्यादि । 'विस्रजम्बालशेषम्' इति दमयन्तीश्लेषात् ॥ ३—तालव्यशः 'श्वेतो धावति' इति महाभाष्यश्लेषात् ॥

अ०)। अच् (३।१।१३४)। 'विशदः पाण्डरे व्यक्ते' इति हैमः॥ (५) ॥*॥ श्यायते। 'श्यैङ् गतौ' (भ्वा० आ० अ०)। 'हृश्याभ्यामितन्' (उणा० ३।९३)॥ (६) ॥*॥ पण्डते मनोऽस्मिन्। 'पडि गतौ' (भ्वा० आ० से०) बाहुलकादरो दीर्घश्च॥ (७) ॥*॥ अवदायते स्म। 'दैप् शोधने' (भ्वा० प० अ०)। कर्मणि क्तः (३।२।१०२)। 'अवदातं तु विमले मनोज्ञे सितपीतयोः' इति हैमः॥ (८) ॥*॥ सिनोति मनः। 'षिञ् बन्धने' (स्वा० उ० अ०)। 'अञ्जिघृसिभ्यः क्तः' (उ० ३।८९)। 'सितस्त्ववसिते बद्धे वर्णे सिता तु शर्करा' इति हैमः॥ (९) ॥*॥ गुरते उद्युङ्क्ते मनोऽस्मिन्। 'गुरी उद्यमने' (तु० आ० से०)। 'ऋज्रेन्द्र–' (उ० २।२८) इति निपातितः। 'गौरः श्वेतेऽरुणे पीते विशुद्धे चन्द्रमस्यपि। विशदे गौरं तु श्वेतसर्षपे पद्मकेसरे' इति हैमः। यत्तु—'गोरते' इति स्वामी, 'गोरति' इति मुकुटश्च तन्न। 'गुरी उद्यमने' इति धातुमुपन्यस्योक्तरूपोपन्यासस्यासंभवात्॥ (१०) ॥*॥ अवैलक्ष्यते। घञ् (३।३।१९)। 'वष्टि भागुरिः–' इत्यल्लोपः। यद्वा वलति। 'वल चलने' (भ्वा० प० से०)। क्विप् (३।२।१७८)। वल्। अक्ष्णोत्यस्मात्। 'अक्षू व्याप्तौ संघाते च' (भ्वा० प० से०) घञ् (३।३।१९) वल् चासौ अक्षश्च। यद्वा वलं क्षायति। 'क्षै क्षये' (भ्वा० प० अ०)। 'आतोऽनुप–' (३।१।३) इति कः॥ (११) ॥*॥ धावति मनोऽत्र। 'धावु गतिशुद्ध्योः' (भ्वा० उ० से०)। वृषादित्वात् (उ० १।१०६) कलच्। बाहुलकाद्ध्रस्वः। यद्वा धवनं धवः। 'धूञ् कम्पने' (क्र्या० उ० से०)। 'ऋदोरप्–' (३।३।५७) धवं लाति। 'ला दाने' (अ० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः। 'अथ धवलो महोक्षे सुन्दरे सिते। धवली गौः' इति हैमः॥ (१२) ॥*॥ अर्ज्यते। 'अर्ज अर्जने' (भ्वा० प० से०)। 'अर्जेर्णिलुक् च' (उ० ३।५१) इत्युनन्। 'अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः। मातुरेकसुतेऽपि स्याद्धवले पुनरन्यवत्॥ नपुंसकं तृणे नेत्ररोगे स्यादर्जुनी गवि'॥ (१३) ॥*॥ त्रयोदश 'शुक्लवर्णस्य'॥

शब्दार्णवे तु 'श्वेतस्तु समपीतोऽसौ रक्तेतरजपारुचिः। वलक्षस्तु सितश्यावः कदलीकुसुमोपमः। अर्जुनस्तु सितः कृष्णवेशवान्कुमुदच्छविः' इत्युक्तम्॥

शुद्धशब्दोऽप्यत्र। तथा च धरणिः। 'शुद्धः शुक्ले च पूते च केवले च प्रयुज्यते' इति॥

१—तालव्यशः 'विशदाविशदामत्तसारसं शारसं जलं' इति दण्डियमकात्॥ २—दन्त्यादिः 'विकसितं सितम्' इति कीचकवधयमकात्॥ ३—कषसंयोगवान् 'अथ स वलक्षोभानां पतिरिव' इति वृन्दावनश्लेषात् इति मुकुटः॥

**हरिणः पाण्डुरः पाण्डुः**

**(हरिण इति॥)** हरति मनः। 'श्यास्त्याहृञ्विभ्य इनच्' (उ० २।४६)। 'हरिणौ पाण्डुसारङ्गौ हरिणी चारुयोषिति। सुवर्णप्रतिमायां च हरितावृत्तभेदयोः' इति हैमः॥ (१) ॥*॥ पाण्डुत्वमस्यास्ति। 'नगपांसुपाण्डुभ्यो रः'। 'पाण्डुरो वर्णतद्वतोः। पाण्डुरं तु मरुबके' इति हैमः॥ (२) ॥*॥ पण्ड्यते ज्ञायते। 'पडि गतौ' (भ्वा० आ० से०) मृगय्वादित्वात् (उ० १।३७) कुः। पृषोदरादित्वात् (६।३।१०९) दीर्घः। 'पाण्डुस्तु पीतभागार्धः केतकीधूलिसंनिभः' इति शब्दार्णवः। 'पाण्डुः कुन्तीपतौ सिते' इति हैमः॥ (३) ॥*॥ त्रीणि 'पीतसंवलितशुक्लस्य'॥

**ईषत्पाण्डुस्तु धूसरः॥१३॥**

**(ईषदिति॥)** धूनोति चेतः। 'धू विधूनने' (स्वा० आ० से०)। 'कृधूमदिभ्यः क्सरः' (उ० ३।७३)। बाहुलकादषत्वम्। यद्वा धूसनम्। 'धूस कान्तौ' (चु० प० से०) चुरादिः। 'एरच्' (३।३।५६)। धूसं राति। 'रा दाने' (अ० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः। 'धूसरी किंनरीभेदे, ना खरे, त्रिषु पाण्डुरे'। 'धूसरस्तु सितः पीतलेशवान्बकुलच्छविः' इति शब्दार्णवः॥ (१) ॥*॥ एकं 'धूसरवर्णस्य'॥

**कृष्णे नीलासितश्यामकालश्यालमेचकाः।**

**(कृष्ण इति॥)** कर्षति मनः। 'कृषेर्वर्णे' (उ० ३।४) इति नक्। 'कृष्णः काके पिके वर्णे विष्णौ व्यासेऽर्जुने कलौ। कृष्णा तु नील्यां द्रौपद्यां पिप्पलीद्राक्षयोरपि॥ कृष्णं तु मरिचे लोहे' इति हैमः॥ (१) ॥*॥ नीलति। 'णील वर्णे' (भ्वा० प० से०)। 'इगुपध–' (३।१।१३५) इति कः। 'नीलो वर्णे मणौ शैले निधिवानरभेदयोः। नील्योषध्यां लाञ्छने च' इति हैमः॥ (२) ॥*॥ सितविरुद्धोऽसितः (३) ॥*॥ श्यायते मनोऽस्मात्। 'श्यैङ् गतौ' (भ्वा० आ० अ०)। 'इषियुधीन्धि–' (उ० १।१४५) इति मक्। 'श्यामोऽम्बुदे शितौ। हरिते प्रयागवटे कोकिले वृद्धदारुके। श्यामं सैन्धवे मरिचे श्यामा सोमलतानिशोः' इति हैमः॥ (४) ॥*॥ कल्यते। कालः। 'कल संख्याने' (भ्वा० आ० से०) घञ् (३।३।१९)। 'कालः पुनः कृष्णवर्णे महाकालकृतान्तयोः॥ मरणानेहसोः काली कालिकाक्षीरकीटयोः। मातृभेदोमयोर्नव्यमेघौघपरिवादयोः॥ काला कृष्णत्रिवृन्नील्योर्जङ्घायाम्' इति हैमः॥ (५) ॥*॥ श्यामः श्यामत्वमस्यास्तीति। सिध्मादित्वात् (५।२।९७) लच्। 'श्यामलः पिप्पले श्यामे' इति हैमः॥ (६) ॥*॥ मचति मिश्रीभवति

१—व्याकरणान्तरोक्तमपीदमेकदेशामुमत्या 'नगाच्च' (वा० ५।२।१०७) इति वार्तिकेनानुमतमेव प्रथमादिसंज्ञाविधानादिवत्॥ २—'कालः पादे' इति पाठः.

वर्णान्तरेण । 'मच मुचि कल्कने' ( भ्वा० आ० से० ) । 'कृञादिभ्यः संज्ञायां वुन्' (५।३५) । 'पञ्चिमच्योरिच्चोपधायाः' ( उ० ५।३७ ) इतीत्वे लघूपधगुणः ( ७।३।८६ ) । 'मेचकः श्यामले कृष्णे तिमिरे बर्हिचन्द्रके' इति हैमः ॥ (७) ॥*॥ सप्त 'कृष्णस्य' । शब्दार्णवे तु 'मेचकः कृष्णनीलः स्यादतसीपुष्पसंनिभः' इत्युक्तम् ॥

**पीतो गौरो हरिद्राभः**

**(पीत इति ॥)** पीयते पिबति वर्णान्तरम् । औणादिकः क्तः ( बाहुलकात् ३।८९ ) । 'पीतं पाने हरिद्रायां त्रियां, गौरेऽभिधेयवत्' । यत्तु—पीयते वर्णान् । पातेर्बाहुलकात् 'अञ्जिघृषिभ्यः क्तः' ( उ० ३।८९ ) 'घुमास्थागा–' ( ६।४।६६ ) इत्यादिना ईत्वम्–इति मुकुटेनोक्तम् । तदसंबद्धमिति स्फुटमेव ॥ (१) ॥*॥ (२) ॥*॥ हरिद्रेवाभा दीप्तिरस्य ॥ (३) ॥*॥ त्रीणि 'पीतवर्णस्य' ॥

**पालाशो हरितो हरित् ॥ १४ ॥**

**(पालाश इति ॥)** पलाशस्य पत्रस्यायम् । 'तस्येदम्' ( ४।३।१२० ) इत्यण् ॥*॥ 'पत्रं पलाशं ना रक्षःशठीहरितकिंशुके' इति रुद्राद्रस्वादिरपि । तत्र संज्ञापूर्वकत्वाद्वृद्ध्यभावः । यद्वा पलमश्नाति । 'अश भोजने' (क्र्या० प० से०) । 'कर्मण्यण्' ( ३।२।१ ) । ततः प्रज्ञाद्यण् ( ५।४।३८ ) । 'पलाशः किंशुके शठ्यां । हरिद्वर्णे राक्षसश्च पलाशं छदने स्मृतम्' इति हैमः ॥–'शेषे' ( ४।२।९२ ) इत्यस्य विधित्वाङ्गीकारादण्–इत्याहुः । तन्न । 'तस्येदम्' इति सिद्धे शेषत्वाभावात् ॥ (१) ॥*॥ हरति । 'हृश्याभ्यामितन्' ( उ० ३।९३ ) । 'हरिता स्त्री च दूर्वायां हरिद्वर्णयुतेऽन्यवत्' ॥ (२) ॥*॥ 'हृसृरुहियुषिभ्य इतिः' ( उ० १।९७ ) । हरित् । ('हरिद्दिशि त्रियां पुंसि हयवर्णविशेषयोः । अस्त्रियां स्यात्तृणे च') ॥ (३) ॥*॥ त्रीणि 'हरितवर्णस्य' ॥

**रोहितो लोहितो रक्तः**

**(रोहित इति ॥)** रोहति । 'रुह बीजजन्मनि प्रादुर्भावे च' ( भ्वा० प० अ० ) । 'रुहे रश्च लो वा' ( उ० ३।९४ ) इतीतन् ॥ (१) ॥*॥ 'लोहितो मङ्गले नदे । वर्णभेदे लोहितं तु कुङ्कुमे रक्तचन्दने ॥ गोशीर्षे रुधिरे युद्धे' इति हैमः ॥ (२) ॥*॥ रजति स्म । 'रञ्ज रागे' ( भ्वा० उ० अ० ) । क्तः ( ३।२।१०२ ) । यद्वा रच्यते स्म । 'रच प्रतियत्ने' ( चु० उ० से० ) । 'अनितस्यन्ताक्षुरादयः' इति णिजभावे क्तः ( ३।२।१०२ ) । 'अतो लोपः' ( ६।४।४८ ) । 'चोः कुः' ( ८।२।३० ) । 'रक्तं नील्यादिरञ्जिते । कुङ्कुमेऽसृज्यनुरक्ते प्राचीनामलकेऽरुणे' इति हैमः ॥ (३) ॥*॥ त्रीणि 'रक्तवर्णस्य' ॥

**शोणः कोकनदच्छविः ।**

**(शोण इति ॥)** शोणयति । 'शोणृ वर्णे' (भ्वा० प० से०) । पचाद्यच् ( ३।१।१३४ ) । 'शोणः कृशानौ स्योनाके लोहिताश्वे नदे पुमान् । त्रिषु कोकनदच्छाये' ॥ (१) ॥*॥ कोकनदं रक्तोत्पलमिव छविर्यस्य ॥ (२) ॥*॥ द्वे 'शोणवर्णस्य' ॥

**अव्यक्तरागस्त्वरुणः**

**(अव्यक्तेति ॥)** अव्यक्तो रागो यस्य । किंचिल्लोहितः ॥ (१) ॥*॥ ऋच्छति । 'ऋ गतौ' ( भ्वा० प० अ० ) 'अर्तेरुनन्' ( उ० ३।६० ) । 'अरुणः कृष्णलोहितः' इत्यमरमाला । 'अरुणोऽव्यक्तरागेऽर्के संध्यारागेऽर्कसारथौ । निःशब्दे कपिले कुष्ठभेदे ना, गुणिनि त्रिषु ॥ अरुणातिविषाश्यामामञ्जिष्ठात्रिवृतासु च' ॥ (२) ॥*॥ द्वे 'अरुणवर्णस्य' ॥

**श्वेतरक्तस्तु पाटलः ॥ १५ ॥**

**(श्वेतेति ॥)** श्वेतरक्तः ॥ (१) ॥*॥ पाटयति । 'पट गतौ' ( भ्वा० प० से० ) ण्यन्ताद्वृषादित्वात् ( उ० १।१०६ ) कलच् । पाटलाकुसुमाभः पाटलः । 'पाटलं तु कुङ्कुमश्वेतरक्तयोः । पाटलः स्यादाशुव्रीहौ पाटला पाटलिद्रुमे' इति हैमः ॥ (२) ॥*॥ द्वे 'श्वेतरक्तवर्णस्य' ॥

**श्यावः स्यात्कपिशः**

**(श्याव इति ॥)** श्यायते । 'श्यैङ् गतौ' ( भ्वा० आ० अ० ) बाहुलकात् 'कृसृगृदृभ्यो वः' ( उ० १।१५५ ) ॥ (१) ॥*॥ कपिर्वर्णविशेषः । सोऽस्यास्ति । लोमादित्वात् (५।२।१०० ) शः । कपिर्मर्कटः । तद्वर्णत्वादिति वा । 'कपिशा त्रिषु श्यामे, स्त्री माधव्यां, सिह्लके पुमान्' ॥ (२) ॥*॥ 'कृष्णपीतस्य' द्वे ॥

**धूम्रधूमलौ कृष्णलोहिते ।**

**(धूम्रेति ॥)** धूमं राति । कः ( ३।२।३ ) । पृषोदरादिः ( ६।३।१०९ ) ॥ (१) ॥*॥ धूमं लाति । 'रा, ला, आदाने' ( अ० प० अ० ) । कः ( ३।२।३ ) ॥ (२) ॥*॥ कृष्णमिश्रो लोहितः ॥ (३) ॥*॥ त्रीणि 'कृष्णलोहितस्य' ॥

**कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ ॥ १६ ॥**

**(कडार इति ॥)** गडति । 'गड सेचने' (भ्वा० प० से०) 'गडेः कड च' ( उ० ३।१३२ ) इत्यारन् । यद्वा कडनम् ।

---

१—विश्वकोषस्थोऽयं पाठः ॥ २—हैमे तु नोपलभ्यते ॥ ३—मेदिन्यामुपलभ्यते ॥ ४—हैमे तु 'पलाशः किंशुकेऽस्रपे । हरिते पलाशं पत्रे' इत्येव पाठः ॥

१—तालव्यान्तः 'राजन्कपिशताकीर्णे' इति द्विसंधानश्लेषात् 'कपिशितं पिशितं मदनाग्निना' इति माघात् ॥ २—तालव्यमध्यः । तथा च माघे 'परिपाकपिशङ्गलतारजसा रोधश्चकास्ति कपिशं गलता' इति—इति मुकुटः ॥

कडः। 'खनो घ च' (३।३।१२५) इति घः। कडमृच्छति। 'ऋ गतौ' (भ्वा० प० अ०) 'कर्मण्यण्' (३।२।३)। ('**कडारः** पिङ्गले दासे') ॥ (१) ॥*॥ 'कबृ वर्णे' (भ्वा० आ० से०)। 'कबेः पश्च' (उ० १।५५) इति इलच्प्रत्ययः। पकारश्चान्तादेशः। कपिं वर्णं लातीति वा। 'पुण्डरीकक-रिण्यां तु शिंशिपागोविशेषयोः। स्त्री रेणुकायां **कपिला** वर्णे ना कुक्कुरे मुनौ ॥ अनले वासुदेवे च **कपिलः** परिकीर्तितः' ॥ (२) ॥*॥ पिञ्जयति। 'पिजि वर्णे' (अ० आ० से०)। अच् (३।१।१३४)। न्यङ्क्वादिः (७।३।५३)। '**पिङ्गा** गोरोच-नाहिङ्गुनाडिकाचण्डिकासु च। **पिङ्गी** शम्यां पिशङ्गे ना बालके तु नपुंसकम्' ॥ (३) ॥*॥ पेशति। 'पिश अवयवे' (तु० उ० से०) 'विडादिभ्यः कित्' (उ० १।१२१) इत्यङ्गच् ॥ (४) ॥*॥ कन्दति। 'कदि अह्वाने रोदने च' (भ्वा० प० से०)। मृगय्वादित्वात् (उ० १।३७) साधुः। '**कद्रु**स्त्रिषु स्वर्णपिङ्गे नागानां मातरि स्त्रियाम्' ॥ (५) ॥*॥ पिञ्जति। 'पिजि वर्णे' (अ०।०।०)। वृषादित्वात् (उ० १।१०६) कलच्। 'न्यङ्क्वादीनां च' (७।३।५३) इति कुत्वम्। पिङ्गं लातीति वा। '**पिङ्गलः** कपिले बभ्रौ रुद्रेऽर्कपारिपार्श्विके। कपौ मुनौ निधेर्भेदे **पिङ्गला** कुमुदस्त्रियाम्' ॥ (६) ॥*॥ षट् '**कपिलवर्णस्य**' ॥

शब्दार्णवे तु 'सितपीतहरिद्रक्तः **कडार**स्तृणवह्निवत्। अयं तूद्रिक्तपीताङ्गः **कपिलो** गोविभूषणः ॥ हरितांशेऽधि-केऽसौ तु **पिशङ्गः** पद्मधूलिवत्। पिशङ्गस्त्वसितावेशात् **पिङ्गो** दीपशिखादिषु ॥ **पिङ्गल**स्तु परच्छायः पिङ्गे शुक्लाङ्ग-खण्डवत्' इति ॥

## चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे।

(**चित्रमिति** ॥) चीयते। 'चिञ् चयने' (भ्वा० उ० अ०) 'अमिचिमिदि–' (उ० ४।१६४) इति क्तः। चित्तं त्रायते वा। 'त्रैङ् पालने' (भ्वा० आ० अ०)। कः (३।२।३)। 'चित्रकिर्मीर–' इति समासमकृत्वा पृथग्रूपभेददर्शनं 'गुणे शुक्लादयः पुंसि' इत्यस्य बाधनार्थम्। '**चित्रा**खुपर्णीगोडु-म्बासुभद्रादन्तिकासु च। मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम्। तिलकालेख्ययोः क्लीबं कर्बुराद्भुतयोरपि। तद्युक्त-योस्त्वन्यलिङ्गम्'। नामलिङ्गानुशासने तु नानार्थपुंस्काण्डेऽयं पठितः। तदनुरोधेनेहापि 'चित्रकिर्मीर–' इति समस्तं केचित्पठन्ति ॥ (१) ॥*॥ कीर्यते। 'कॄ विक्षेपे' (तु० प० से०)। 'गम्भीरादयश्च' इति किरतेरीरन्, मुडागमः। '**किर्मीरो** ना नागरङ्गे (कर्बुरे राक्षसान्तरे)' ॥ (२) ॥*॥ कलयति क्विप् (३।२।१७८)। कल्। माषयत्यभिभवति वर्णान्। माषः। 'मष हिंसायाम्' (भ्वा० प० से०)। 'हन्त्यर्थाश्च' इति चुरादौ पाठात् णिच्। कल् चासौ माषश्च। '**कल्माषः** कर्बुरे कृष्णे' इति मूर्धन्यान्ते रभसः। '**कल्माषो** राक्षसे कृष्णे शबलेऽपि' इति हैमः ॥ (३) ॥*॥ शपत्याक्रोशति वर्णान्। 'शप आक्रोशे' (भ्वा० उ० अ०)। 'शपेर्बश्च' (उ० १।१०५) इति कलः, बत्वं च ॥ (४) ॥*॥ एति वर्णान्। एतेर्वर्णे तन् (उ० ३।८६)। '**एतः** कर्बुर आगते' ॥ (५) ॥*॥ 'कर्ब हिंसायाम्' (भ्वा० प० से०)। 'मद्गुरादयश्च' (उ० १।४१) इति निपातनात्कुरच्। बवयो-रभेदात्कर्बुरः। '**कर्बुरं** सलिले हेम्नि **कर्बुरः** पापरक्षसोः। **कर्बुरा** कृष्णवृन्तायां शबले पुनरन्यवत्' ॥ (६) ॥*॥ षड् '**नानावर्णस्य**' ॥

## गुणे शुक्लादयः पुंसि

(**गुण इति** ॥) यद्यपि 'शुक्लं रूपम्' इत्यादौ विशेष्यनि-घ्नतैवेष्यते। तथापि विशेष्यानुपादाने प्राप्तस्य 'सामान्ये नपुंसकम्' इत्यस्यापवादोऽयम्। पटस्य शुक्ल इत्यादि बोध्यम् ॥

अपवादान्तरमाह—

## गुणिलिङ्गास्तु तद्वति ॥ १७ ॥

(**गुणीति** ॥) विशेष्यस्यानुपादाने यदेव यल्लिङ्गं प्रतिपि-पादयिषितम्, तल्लिङ्गा इत्यर्थः। यथा शुक्लम्, शुक्लः, शुक्ला, इत्यादि ॥

## इति धीवर्गविवरणम् ॥

## ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती।

(**ब्राह्मीत्यादि** ॥) ब्रह्मणः इयम्। 'ब्राह्मोऽजातौ' (६।४।१७१) इति टिलोपे 'टिड्ढा–' (४।१।१५) इति ङीप्। '**ब्राह्मी** तु भारती। शाकभेदः पङ्कगण्डी हञ्जिका सोमव-ल्ल्यपि। ब्रह्मशक्तिः' इति हैमः ॥ (१) ॥*॥ बिभर्ति। 'भृमृदृशि–' (उ० ३।११०) इत्यतच्। ततः प्रज्ञादणि (५।४।३८) ङीप् (४।१।१५)। भरतस्येयमिति वा। 'अथ **भारती**। वचने च सरस्वत्यां पक्षिवृत्तिप्रभेदयोः' ॥ (२) ॥*॥ भाष्यते। 'भाष व्यक्तायां वाचि' (भ्वा० आ० से०)। 'गुरोश्च हलः' (३।३।१०३) इत्यप्रत्ययः ॥ (३) ॥*॥ गृणन्त्येताम्। 'गॄ शब्दे' (क्र्या० प० से०)। संपदादित्वात् (वा० ३।३।१०८) क्विप्। ('**गीः** स्त्री भाषा-सरस्वत्योः') ॥*॥ भागुरिमते गिरापि। '**ब्रह्माणी वचनं वाचा जल्पितं गदितं गिरा**' इति शब्दार्णवः (४) ॥*॥ उच्यते। वाक्। 'वच् परिभाषणे' (अ० प० अ०)। 'क्वि-ब्वचि–' (वा० ३।३।१७८) इत्यादिना क्विप्, दीर्घोऽसं-प्रसारणं च। ('**वाग्वाचे** भारत्यां वचने स्त्रियौ') ॥ (५) ॥*॥ वण्यते 'वण शब्दे' (भ्वा० प० से०)। इञ् (वा०

१—'एकं चेत्तत्कथं चित्रं चित्रं चेदेकता कुतः' इति धर्मकीर्तिप्रयो-गश्चोपलभ्यते इति मुकुटबुधमनोहरे ॥

१—'ब्राह्मी गौर्भारती' इति क्वचित्पाठः इति बुधमनोहरा ॥

( ३।३।१०८ ) ( 'वाणिरम्बुदे । व्यूतौ मूल्ये सरस्वत्याम्' इति हैमः । 'वाणिः स्याद्व्यूतिभारत्योर्वाणि मूल्ये बालाहके' इति विश्वः ) 'कृदिकारात्—' ( ग० ४।१।४५ )इति ङीष्[१]। घञि ( ३।३।१९ ) गौरादित्वात् ( ४।१।४१ ) वा ॥ (६) ॥*॥ सरोऽस्त्यस्याः । मतुप् ( ५।२।९४ ) 'सरस्वती सरिद्भिदि । वाच्यापगायां स्त्रीरत्ने गोवाग्देवतयोरपि' इति हैमः ॥ (७) ॥*॥ सप्त 'अधिष्ठातृदेवतायाः' ॥

**व्याहार उक्तिर्लपितं भाषितं वचनं वचः ॥ १ ॥**

**(व्याहार इति ॥)** व्याहरणम् । व्याङ्पूर्वाद्धृञो भावे घञ् ( ३।३।१८ ) ॥ (१) ॥*॥ 'वच परिभाषणे' (अ० प० अ० ) । क्तिन् ( ३।३।९४ ) । संप्रसारणम् ( ६।१।१५ ) ॥ (२) ॥*॥ 'लप व्यक्तायां वाचि' ( भ्वा० प० से० ) । भावे क्तः ( ३।३।११४ ) ॥ (३) ॥*॥ 'भाष व्यक्तायां वाचि' ( भ्वा० आ० से० ) । भाषणं भाषितम् । भावे क्तः ( ३।३।११४ ) ॥ (४) ॥*॥ वचेर्भावे ल्युट् ( ३।३।११५ ) ॥ (५) ॥*॥ असुनि ( उ० ४।१९९ ) वचः ॥ (६) ॥*॥ षट् 'भाषणस्य' ॥

केचित्तु 'आह्वयाद्यास्त्रयोदश ( वचनस्य ) पर्यायाः' इत्याहुः ॥

**अपभ्रंशोऽपशब्दः स्यात्**

**(अपभ्रंश इति ॥)** संस्कृतादपभ्रश्यति । 'भ्रंशु अधःपतने' ( दि० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । ('अपभ्रंशस्तु पतने भाषाभेदापशब्दयोः') ॥ (१) ॥*॥ अपभ्रष्टः शब्दोऽपशब्दः ॥ (२) ॥*॥ द्वे 'व्याकरणानिष्पन्नस्य गावीत्यादेः' ॥

**शास्त्रे शब्दस्तु वाचकः ।**

**(शास्त्र इति ॥)** शास्त्रे व्याकरणादौ यो वाचकः साधुः स शब्दः स एव निरुपपदेन शब्दशब्देन व्यवह्रियते ॥ एकम् 'वाचकस्य' ॥

**तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता ॥२॥**

**(तिङ्ङिति ॥)** तिङन्तानां चयः 'पचति पश्य' 'पचति भवति' पाको भवतीत्यर्थः । सुबन्तानां चयः । 'प्रकृतिसिद्धमिदं हि महात्मनाम्' इत्यादि । 'भवति' इत्यध्याहारस्य भाष्यकारमते आवश्यकत्वाभावात्स वाक्यम्[१] । **क्रियेत्यादि** । वाशब्दः समुच्चये[२] । 'कारकान्वितक्रियाबोधकम् 'घटमानय' इत्यादि तिङ्सुप्चयात्मकमपि वाक्यम्' इत्यर्थः ।

---

१—'मेण्ठे स्वर्द्विरदाधिरोहिणि, वशं याते सुबन्धौ विधेः शान्ते हन्त च भारवौ विघटिते बाणे विषादस्पृशः । वाग्देव्या विरमन्तु मन्तुविधुरा द्राग्दृष्टयश्चेष्टते शिष्टः कश्चन स प्रसादयति तां यद्वाणिसद्वाणिनी ।' २१५३ श्रीकण्ठचरिताद्ध्रस्वान्तो वाणिशब्दः ॥ २—'बलीवर्दपङ्क्तिरिव समाधुर्या वाणी मनोहरति' इति दमयन्तीश्लेषाद्दीर्घान्तोऽपि वाणीशब्दः ॥

१—'इदं च 'अनभिहिते' ( २।३।१ ) इति सूत्रव्याख्यावसरे 'नीलमिदं, न तु रक्तम्' इत्यादौ विशेषणान्तरनिवृत्तितात्पर्यकेऽस्तिक्रियाया अनावश्यकत्वात्' इति मनोरमायां भाष्यभ्रान्त्या ॥ भाष्ये तु प्रत्युत 'तिङ्समानाधिकरणे प्रथमा' इत्युक्त्वा 'वृक्षः' इत्यादौ तिङोऽप्रयोगे प्रथमासिद्ध्यर्थम् 'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति' इति वृक्षः प्लक्षः 'अस्ति' इति गम्यते' इत्येवोक्तम् ॥ अध्याहारं विना तत्र प्रथमैव न स्यात् ॥ 'शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरः तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्' इति विभूतिपादीये योगसूत्रे भाष्यकृच्छ्रीवेदव्यासोऽपि 'सर्वपदेषु चास्ति वाक्यशक्तिः । 'वृक्षः' इत्युक्ते 'अस्ति' इति गम्यते । 'न सत्तां पदार्थो व्यभिचरति' इत्युक्तवान् ॥ तस्मात् क्रियाध्याहार आवश्यक एव ॥ 'त्रयः कालाः' इत्यत्रापि 'सन्ति' इत्येवाध्याहार्यम् इति 'अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम्' इति कैवल्यपादीययोगसूत्रभाष्ये व्यक्तम् ॥ अत एव बुधमनोहराख्यव्याख्यायामपि 'तिङ्सुबन्तचयः' 'चैत्रः पचति' इत्यादिः ॥ 'पाको भवति' इत्याद्यर्थके 'पचति भवति' इत्यादावव्याप्तेराह—**क्रिया वेति ।** 'कारकविशिष्टक्रियाबोधकं शब्दजातं वाक्यम्' इत्यर्थः । विस्तरोऽन्यत्र । 'क्रियारहिते तदध्याहार आवश्यकः' इत्युक्तम् ॥ २—'अत्र वाशब्दश्चेदर्थे । बोध्य' इति शेषः । 'कारकान्वितक्रियाबोधकसुप्तिङन्तचयः' इत्यर्थः । सुप् च तिङ् च सुप्तिङ् । सुब्विशिष्टं तिङ् सुप्तिङ् । तयोरेकशेषेऽन्तशब्देन समासः । तेन सुबन्तचय–तिङन्तचय–सुप्तिङन्तचयानां त्रयाणामपि लाभः । तत्र सुबन्तचयः–'चैत्रेण शयितव्यम्' इति । तिङन्तचयः–'पचति भवति' इत्यादिः । अन्त्यः–'चैत्रः पचति' इत्यादिः । 'क्रिया वा' इत्यनेन निरर्थकपदसमुदायव्यावृत्तिः । सुप्तिङन्तचयपदेन केवलस्य 'पचति' इत्यादेर्व्यावृत्तिः । तस्यापि 'कर्त्रादिविशिष्टक्रियाबोधकत्वात्' इति मञ्जूषोक्तदिशा एकमेव वाक्यलक्षणमिदम् ॥ अत एव समर्थ (२।१।१) सूत्रभाष्ये वार्तिककृतापि 'आख्यातं सविशेषणं वाक्यम्' इति वाक्यलक्षणमुक्तम् ॥ असत्त्वभावप्रत्ययान्तानामप्याख्यातत्वमेव ॥ अत एव हेमचन्द्रेणापि नाममालायाम् 'सविशेषणमाख्यातं वाक्यम्' इत्येकमेव वाक्यलक्षणमुक्त्वा 'प्रयुज्यमानमप्रयुज्यमानं व्याख्यातं प्रयुज्यमानैरप्रयुज्यमानैर्वा कर्त्रादिभिर्विशेषणैः सहितं वाक्यमुच्यते । तथा 'धर्मो वो रक्षतु' । अप्रयुज्यमानमाख्यातं यथा 'शीलं ते स्वम्' । अत्र 'अस्ति' इति गम्यते । अप्रयुज्यमानविशेषणं यथा—'प्रविश' । अत्र 'गृहम्' इति गम्यते । अनयोरर्थात्प्रकरणाद्वा आख्यातादेरवगमादप्रयोगः । 'आख्यातम्' इत्यत्र चैकत्वस्य विवक्षितत्वात् 'ओदनं पच तव भविष्यति' इत्यादौ वाक्यभेदः' इति स्वयमेवाभिधानचिन्तामणौ व्याख्यातम् इति दिक् ॥

केचित्तु—भाष्यकारमतेन प्रथमः पक्षः 'एकतिङ् वाक्यम्' (वा० २।१।१।) इति वार्तिकाभिप्रायेणापरा-इत्याहुः । यत्तु—पूर्वं शब्दात्मकस्य वाक्यस्य लक्षणम् । 'क्रिया-' इत्यादि त्वर्थात्मकस्य-इत्याहुः । तत्तु 'वचोऽशब्दसंज्ञायाम्' (७।३।६७) 'इति कुत्वनिषेधकसूत्रस्याननुगुणम्' । 'उच्यते' इति वाक्यम् । वचेः (अ० प० अ०) ण्यत् (३।१।१२४)। 'चजोः-' (७।३।५२) इति कुत्वं शब्दसंज्ञायाम् । अन्यत्र तु वाच्यम् । ('**वाक्यं** तु कुत्सिते हीने वचनार्हे च वाच्यवत्') ॥ (१) ॥*॥ एकम् '**वाक्यस्य**' ॥

### श्रुतिः स्त्री वेद आम्नायस्त्रयी

(**श्रुतिरिति** ॥) श्रूयते । 'श्रु श्रवणे' (भ्वा० प० अ०)। कर्मणि क्तिन् (३।३।९४) । 'श्रूयते धर्मोऽनया' इति वा । 'श्रूयजीषिस्तुभ्यः करणे' (वा० ३।३।९४) इति क्तिन्। '**श्रुतिः** श्रोत्रे च तत्कर्मण्याम्नायवार्तयोः स्त्रियाम्' ॥ (१) ॥*॥ विदन्त्यनेन धर्मम् 'विद ज्ञाने' (अ० प० से०)। 'हलश्च' (३।३।१२१) इति घञ् । '**वेदः** श्रुतौ च वित्तौ च' ॥ (२) ॥*॥ आम्नायते अभ्यस्यते । 'म्ना अभ्यासे' (भ्वा० प० अ०) । कर्मणि घञ् (३।३।१९) 'आमनन्त्युपदिश्यति धर्माधर्मौ' इति वा । 'श्याद्व्यधा-' (३।१।१४१) इति णः । '**आम्नायः** कुल आगमे । उपदेशे च' इति हैमः ॥ (३) ॥*॥ (यत्तु)—त्रीणि वेदस्य । **त्रयीति** । त्रय्या धर्मस्त्रयीधर्मः । तया त्रय्या विधिर्विधीयमानो यज्ञादिस्तद्विधिः । 'विधानमृग्यजुःसाम्नां त्रयीधर्मं विदुर्बुधाः' । एकम् ।—इति मुकुटः । तन्न । 'तानि धर्माणि' 'धर्मेण पापमपनुदति,' 'वेदोऽखिलो धर्ममूलं धर्ममूलमिदं स्मृतम्', 'अथातो धर्मजिज्ञासा', 'चोदनालक्षणोऽर्थो धर्मः', श्रेयान्स्वधर्मः', 'धर्मक्षेत्रे कुरुक्षेत्रे', 'धर्मः प्रोज्झितकैतवः', 'धर्मस्य ह्यापवर्ग्यस्य', 'धनं च धर्मैकफलम्', 'धर्मादर्थश्च', 'धर्मो रक्षति रक्षितः', 'धर्माधर्मौ तद्विपाकाः', 'धर्मं जिज्ञासमानेन' इत्यादिषु बहुषु ग्रन्थेषु धर्मशब्दस्यैव प्रयोगदर्शनात्। देवदत्तो दत्तः, इतिवदेते प्रयोगाः सन्त्विति चेत् । न । वैषम्यात् । देवदत्तशब्दस्यानेकस्थले प्रयोगो दृष्टः । क्वचिद्दत्तशब्दस्यापि प्रयोगे दृष्टे पूर्वपदलोपादिकं कल्प्यते । प्रकृते तु धर्मशब्दस्यैव प्रयोगो दृष्टः । 'एवं त्रयीधर्मम्' इत्यादौ च क्वचित्त्रयीधर्मशब्दस्यापि प्रयोगे लब्धे षष्ठीसमासः कल्प्यते । प्रतिपाद्यप्रतिपादकभावः संबन्धः षष्ठ्यर्थः । तान्त्रिकसौगतादिधर्मव्यावृत्त्यर्थमिदं धर्मस्य विशेषणं संगच्छते । 'धर्मस्य च चतुर्दश' इति नियमात् । अतस्त्रय्यन्तानि चत्वारि वेदस्य नामानि । न च 'वेदास्त्रयस्त्रयी' इत्यनेन पौनरुक्त्यं शङ्क्यम् । सामान्यविशेषरूपेणोभयसंभवात् । 'ब्राह्मणक्षत्रियवैश्या द्विजाः, विप्रोऽपि द्विजः' इति यथा । नच 'धर्ममस्त्रियाम्' इत्यनेन पौनरुक्त्यम् । तत्र धर्मपर्यायाणामभिधानात् । इह तु धर्मस्वरूपस्य धर्मप्रमाणस्य चाभिधानात् । यदपि—समासे गुणीभूतस्यापि त्रयीशब्दस्य बहुविवक्षावशात्तच्छब्देन परामर्शः—इत्युक्तम् । तदपि न । तन्मते त्रयीधर्मशब्दस्य विधेयत्वात्तदेकदेशस्य त्रयीशब्दस्यानुवाद्यत्वासंभवात् । वेदस्यैव तच्छब्देन परामर्शसंभवाच्च । यदपि—यथा शब्दानुशासनम्—इति दृष्टान्तप्रदर्शनम् । तदप्येतेन प्रत्युक्तम् । वेदस्यैव परामर्शसंभवात् ॥ त्रीणि '**वेदस्य**' ॥

### धर्मस्तु तद्विधिः ।

(**धर्म इति** ॥) तेन वेदेन विधीयते यज्ञादिः । एतेन वेदविहितत्वं धर्मत्वम्, वेदश्च धर्मे प्रमाणम्—इत्युक्तम् । धरति लोकान् । ध्रियते वा जनैरिति धर्मः 'अर्तिस्तुसु-' (उ० १।१४०) इत्यादिना धृञो मन् ॥ (१) ॥*॥ (एकं '**वेदविहितकर्मणः**') ॥

### स्त्रियामृक् सामयजुषी

(**स्त्रियामिति** ॥) ऋच्यन्ते स्तूयन्ते देवा अनया । 'ऋच स्तुतौ' (तु० प० से०) । क्विप् (वा० ३।३।१०८) ॥ (१) ॥*॥ स्यति पापम् । 'षोऽन्तकर्मणि' (दि० प० अ०) मनिन् (उ० ४।१५३, ३।२।७४) । '**साम** क्लीबमुपायस्य भेदे वेदान्तरेऽपि च' ॥ (१) ॥*॥ इज्यतेऽनेन । 'आर्तिपृवपि-' (उ० २।११७) इत्युस् ॥ (१) ॥*॥ '**वेदानां**' प्रत्येकमेकैकम् ॥

### इति वेदास्त्रयस्त्रयी ॥ ३ ॥

(**इतीति** ॥) इति एते त्रयो वेदास्त्रयी । त्रयोऽवयवा यस्याः सा संहतिः । त्रिशब्दात् 'संख्याया अवयवे तयप्' (५।२।४२)। 'द्वित्रिभ्यां तयस्य-' (५।२।४३) इत्ययच् । 'टिड्ढा-' (५।१।१५) इति ङीप् । '**त्रयी** त्रिवेद्यां त्रितये पुरंध्र्यां सुमतावपि' इति हैमः ॥ (१) ॥*॥ '**वेदत्रयसंघातस्य**' एकम् ॥

### शिक्षेत्यादि श्रुतेरङ्गम्

(**शिक्षेति** ॥) श्रुतेर्वेदस्य शिक्षेत्याद्यङ्गम् । 'शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः । छन्दोविचितिरित्येतैः षडङ्गो

---

१—कश्मीरलिखितपुस्तके तु एतदुत्तरम्-धर्मो रक्षतीत्यादौ तु सत्यभामेतिवत्पूर्वपदलोपो द्रष्टव्यः। नव्यास्तु त्रयी, इत्यन्तं चतुष्टयं वेदसामान्यस्य नाम। त्रयीशब्दो वेदसामान्ये त्रिवेद्यां च वर्तते। (यथा) द्विजशब्दो ब्राह्मणे त्रिवर्ण्यां च। त्रयीधर्मः, इत्यादौ त्रय्या धर्मस्त्रयीधर्मः इति विग्रहो बोध्यः। त्रयीविशेषणं त्वागमादिव्यावृत्त्यर्थम्। आगमादिप्रोक्तस्य धर्मत्वाभावात्-इत्याहुः। एकम्। 'ऋच स्तुतौ' ऋच्यन्ते स्तूयन्ते देवा अनया—इति पाठ उपलब्धः ॥

१—स्मृत्युक्तोऽपि वैदिक एव, वेदमूलकत्वात्स्मृतीनाम् इति क्षीरस्वामी ॥ २—आथर्वणस्तु त्रय्यनुवाद एवेति स्वामी ॥

वेद उच्यते'। शिक्ष्यते स्थानादिकमनया। 'शिक्ष विद्योपादाने' (भ्वा० आ० से०) 'गुरोश्च–' (३।३।१०३) इत्यप्रत्ययः ॥*॥ अङ्ग्यते ज्ञायतेऽनेन। 'अगि गतौ' (भ्वा० प० से०)। घः (३।३।११८) घञ् (३।३।१२१) वा ॥ (१) ॥*॥ एकं **'वेदाङ्गस्य'** ॥

**ओंकारप्रणवौ समौ।**

**ओंकारेति** ॥ अवति। 'अवतेष्टिलोपश्च' (उ० १।१४२) इति मन्प्रत्ययस्यैव टिलोपः 'ज्वरत्वर–' (६।४।२०) इत्यूठ्। गुणः (७।३।८४)। 'वषट्कारः' (१।२।३५) इति लिङ्गात्समुदायादपि कारप्रत्ययः (वा० ३।३।१०८) ॥ (१) ॥*॥ प्रणूयते स्तूयते। 'णु स्तुतौ' (अ० प० अ०)। 'ऋदोरप्' (३।३।५७)। 'उपसर्गात्–' (८।४।१४) इति णत्वम् ॥ (२) ॥*॥ द्वे **'ॐकारस्य'** ॥

**इतिहासः पुरावृत्तम्**

**इतीति** ॥ 'इतिह' इति पारम्पर्योपदेशेऽव्ययम्। तदास्तेऽस्मिन्। 'आस उपवेशने' (अ० अ० से०)। 'हलश्च' (३।३।१२१) इति घञ् ॥ (१) ॥*॥ पुरावृत्तमाचष्टे पुरावृत्तम्। आख्यानण्यन्तात् (वा० ३।१।२६) पचाद्यच् (३।१।१३४) ॥ (२) ॥*॥ **'पूर्वाचरितप्रतिपादकग्रन्थस्य'** द्वे ॥

**उदात्ताद्यास्त्रयः स्वराः ॥ ४॥**

**उदात्तेति** ॥ 'उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः। चतुर्थः प्रचितो नोक्तो यतोऽसौ छान्दसः स्मृतः'। स्वरन्ति शब्दायन्ते। 'स्वृ शब्दोपतापयोः' (भ्वा० प० अ०)। पचाद्यच् (३।१।१३४)। यद्वा—स्वर्यन्ते अर्था एभिः। 'पुंसि–' (३।३।११८) इति घः। यद्वा—स्वेन राजन्ते। 'राजृ दीप्तौ' (भ्वा० उ० से०)। 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः। स्वरा अचः। तद्धर्मत्वादुदात्तादयोऽपि। **'स्वरो** नासासमीरे स्यान्मध्यमादित्रिकस्वरे। उदात्तादावकारादौ षड्जादौ च ध्वनौ पुमान्' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ उत् उच्चैरादीयते उच्चार्यते स्म क्तः (३।२।१०२)। 'अच उपसर्गात्तः' (७।४।४७)। **'उदात्तो** दातृमहतोर्हृद्ये च स्वरभिद्यपि' इति हैमः ॥*॥ एकम् **'स्वराणाम्'** ॥

**आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः।**

**आन्वीक्षिकीति** ॥ अनु श्रवणोत्तरमीक्षणं परीक्षणम्—अन्वीक्षा। सा प्रयोजनमस्याः 'प्रयोजनम्' (५।१।१०९) इति ठक् ॥ (१) ॥*॥ दम्यतेऽनेन। 'दमु उपशमे' (दि० प० से०)। 'अमन्ताड्डः' (उ० १।११४) दण्डो नीयते बोध्यतेऽनया दण्डनीतिः। क्तिन् (३।३।९४) यद्वा दण्डं लयति दण्ड्यान्प्रति प्रापयति। क्तिच् (३।३।१७४) आन्वीक्षिकीसाहचर्यात्स्त्रीत्वम् ॥ (१) ॥*॥ एतौ द्वौ क्रमात्तर्कविद्यायां न्यायरूपायाम्, अर्थशास्त्रे च वर्तेते। अर्यते गम्यते। 'ऋ गतौ' (भ्वा० प० अ०)। 'उषिकुषि–' (उ० २।३) इति थन्। अर्थस्य भूम्यादेः शास्त्रम्। एकैकम् **'दण्डनीतेः'** ॥



**आख्यायिकोपलब्धार्था**

**आख्येति** ॥ आचष्टे। 'चक्षिङः ख्याञ्' (२।४।५४) ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ उपलब्धो ज्ञातोऽर्थो यस्याः सा। एकं **'ज्ञातसत्यार्थभूतायाः कथायाः'** ॥

**पुराणं पञ्चलक्षणम् ॥ ५ ॥**

**पुराणमिति** ॥ पुरा भवम्। 'सायंचिरम्–' (४।३।२३) इति ट्युट्युलौ। 'पूर्वकालैक–' (२।१।४९) इति सूत्रे निपातनात्तुडभावः। यद्वा पुरापि नवं पुराणम्। 'पुराणप्रोक्तेषु' (४।३।१०५) इति सूत्रे निपातितम्। यद्वा पुरा अतीतानागतावर्थावणति। 'अण शब्दे' (भ्वा० प० से०)। पचाद्यच्। **'पुराणं** पञ्चलक्षणे। पणे पुंसि, त्रिषु प्रत्ने'[1] ॥ (१) ॥*॥ पञ्च लक्षणान्यस्य। 'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। भूम्यादेश्चैव संस्थानं पुराणं पञ्चलक्षणम्'। क्वचिदिह 'वंशानुचरितं चैव' इति तृतीयपादे पाठान्तरम् ॥ (२) ॥*॥ द्वे **'व्यासादिप्रणीतमत्स्यपुराणादेः'** ॥

**प्रबन्धकल्पना कथा**

**प्रबन्धेति** ॥ प्रबन्धस्य कल्पना रचना स्तोकसत्या ॥ (१) ॥*॥ 'कथ वाक्यप्रबन्धे' (चु० उ० से०)। 'चिन्तिपूजिकथि–' (३।३।११५) इत्यङ्। कथा कादम्बर्यादिः ॥ (२) ॥*॥ द्वे **'कथायाः'** ॥

**प्रवह्लिका प्रहेलिका।**

**प्रवेति** ॥ प्रवल्हते आच्छादयति। वर्ह वल्ह परिभाषणहिंसाच्छादनेषु' (भ्वा० आ० से०)। दन्त्योष्ठ्यादिर्हान्तः 'क्वुन् शिल्पिसंज्ञयोः–' (उ० २।३२)। वुल् (३।१।१३३) वा ॥ (१) ॥*॥ प्रहेलयति अभिप्रायं सूचयति। 'हिल भावकरणे' (तु० प० से०)। ण्वुल् (३।१।११३)। 'व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात्। यत्र बाह्यार्थसंबन्धः कथ्यते सा **प्रहेलिका'** ॥*॥ यद्वा प्रवल्हतेरिनि (उ० ४।११८) प्रवल्हिः ततः **'कृदिकारात्'** (ग० ४।१।४५) इति ङीष्। उभाभ्यां स्वार्थे कन्। 'प्रहेलिका **प्रवल्ही** च **प्रश्नदूती विपादिका'** इत्युत्पलिनी ॥ (२) ॥*॥ द्वे **'दुर्विज्ञानार्थस्य प्रश्नस्य'** ॥

**स्मृतिस्तु धर्मसंहिता**

**स्मृतिरिति** ॥ वेदार्थस्मरणपूर्वकं रचितत्वात्स्मृतिः। **'स्मृतिर्धर्मशास्त्रस्मरणयोः स्त्रियाम्'** ॥ (१) ॥*॥ धर्मबोधार्थं रचिता संहिता। संपूर्वाद्धधातेः कर्मणि क्ते 'दधातेर्हिः' (७।४।४२) ॥ (२) ॥*॥ द्वे **'मन्वादिस्मृतेः'** ॥

१—हैमकोशे तु षोडशपणस्य पुराणसंज्ञाभिहिता। 'यदाह–षोडशपणः पुराणः पणो भवेत्काकिणी चतुष्केण—' इत्यनेकार्थकैरवाकरकौमुदी ॥

**समाहृतिस्तु संग्रहः ॥ ६ ॥**

**समेति** ॥ समाहरणम् । क्तिन् (३।३।९४) ॥ (१) ॥*॥ संग्रहणम् । 'ग्रहवृदृ-' (३।३।५८) इत्यप् । 'विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः । निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः । **संग्रहो** बृहदुद्रङ्गे मुष्टिसंक्षेपयोरपि' इति मेदिनी[१] ॥ (२) ॥*॥ द्वे **'संग्रहस्य'** ॥

**समस्या तु समासार्था**

**समेति** ॥ समसनम् । 'असु क्षेपणे' ( दि० प० से० ) । ण्यत् (३।१।१२४) । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । यद्वा समं कृत्स्नम् । तद्विषयिणीच्छा समस्या । तत्प्रयोज्यत्वाच्छब्दोऽपि सा । समशब्दात्क्यचि (३।१।८) 'सर्वप्रातिपदिकेभ्यः' (वा० ७।१।५१) इति सुगागमे 'अ प्रत्ययात्' (३।३।१०२) इत्यः टाप् (४।१।४) ॥ (१) ॥*॥ समसनं समासः । घञ् (३।३।१८) । समासोऽर्थो यस्याः पूरणसाकाङ्क्षा । कविशक्तिपरीक्षार्थमपूर्णतयैव पठ्यमाना । यथा 'शतचन्द्रं नभस्तलम्' इति । तत्र 'दामोदरकराघातविह्वलीकृतचेतसा । दृष्टं चाणूरमल्लेन' इत्यादिना सा पूर्यते ॥ (२) ॥*॥ 'असमासार्था' इति पाठे तु 'अपरिपूरणार्था' इत्यर्थः ॥ द्वे **'समस्यायाः'** ॥

**किंवदन्ती जनश्रुतिः ।**

**किंवदन्तीति** ॥ कोऽपि वादः । किंपूर्वाद्वदेः 'भूतृवहिवसि' (उ० ३।१२८) इति झच् । 'झोऽन्तः' (७।१।३) 'गौरादित्वात्' (४।१।४१) ङीष् । यद्वा 'किंवदन्ति' इत्याख्यायमाना । अनुकरणशब्दादाख्यातण्यन्तात् (वा० ३।१।२६) 'अच इः' (उ० ४।१३९) । 'कृदिकारात्-' (ग० ४।१।४५) इति ङीष् ॥ (१) ॥*॥ जनेभ्यः श्रूयते । क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे **'लोकप्रवादस्य'** ॥

**वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्**

**वार्तेति** ॥ वृत्तिर्लोकवृत्तम् । तदस्त्यस्याम् । 'वृत्तेश्च' (वा० ५।२।१०१) इति वार्तिकेन णः । यत्तु—'प्रज्ञाश्रद्धा-' (५।२।१०१) इत्यादिना णः-इति मुकुटेनोक्तम् । तन्न । 'तत्र वृत्तिशब्दस्य पाठोऽप्रामाणिकः' इत्युक्तवार्तिकेनैव ज्ञापितत्वात् । **'वार्ता** तु वर्तने वातिङ्गणे कृष्याद्युदन्तयोः । निःसारारोग्ययोः क्लीबम्' ॥ (१) ॥*॥ प्रवर्तते व्याप्नोति वृत्तेः ( भ्वा० आ० से० ) क्तिच् (३।३।१७४) । **'प्रवृत्तिर्वृत्तवृत्तान्तप्रवाहेषु** प्रवर्तने' इति हैमः ॥ (२) ॥*॥ वृत्तोऽनुवर्तनीयो गवेषणीयोऽन्तः समाप्तिर्यस्य । **'वृत्तान्तस्तु** प्रकरणे कार्त्स्न्ये वार्ताप्रकारयोः' इति हैमः ॥ (३) ॥*॥ उद्गतोऽन्तो यस्य । **'उदन्तः** साधुवार्तयोः' ॥ (४) ॥*॥ चत्वारि **'वार्तायाः'** ॥

**अथाह्वयः ॥ ७ ॥**

**आख्याह्वे अभिधानं च नामधेयं च नाम च ।**

**अथेति** ॥ आह्वयन्त्याह्वाः । 'आतश्चोपसर्गे' (३।१।१३६) इति के प्राप्ते 'प्रसारणिभ्यो डो वक्तव्यः' (वा० ३।२।३) इति डः । तैर्यायते प्राप्यते । 'या प्रापणे' (अ० प० अ०) । घञर्थे कः (वा० ३।३।५८) । 'अन्यत्रापि' (वा० ३।२।४८) इति डो वा । यद्वा आह्वानमाह्वः । संपदादिः (वा० ३।३।१०८) तस्या अयः ॥ (१) ॥*॥ आख्यानम् । 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् ॥ (२) ॥*॥ एवमाह्वा ॥ (३) ॥*॥ अभिधीयते । कर्मणि ल्युट् (३।३।११३) ॥ (४) ॥*॥ म्नायते । 'म्ना अभ्यासे' ( भ्वा० प० से० ) । यद्वा नम्यतेऽभिधीयतेऽर्थोऽनेन । 'णम प्रह्वत्वे शब्दे च' ( भ्वा० प० अ० ) । 'नामन्सीमन्-' (उ० ४।१५१) इति निपातितः । 'भागरूपनामभ्यो धेयः' (वा० ५।४।३५) इति स्वार्थे वा धेयः ॥ (५) ॥*॥ (६) ॥*॥ षट् **'नाम्नः'** ॥

**हूतिराकारणाह्वानम्**

**हूतिरिति** ॥ ह्वानम् । ह्वेञः ( भ्वा० उ० अ० ) । क्तिन् (३।३।९४) ॥ (१) ॥*॥ आकारणम् । कृञो ण्यन्तात् (३।१।२६) युच् (३।३।१०७) ॥ (२) ॥*॥ (ह्वेञः) ल्युटि (३।३।११५) आह्वानम् ॥ (३) ॥*॥ त्रीणि **'आह्वानस्य'** ॥

**संहूतिर्बहुभिः कृता ॥ ८ ॥**

**संहूतिरिति** ॥ बहुकर्तृका हूतिश्चेत् संहूतिः ॥ (१) ॥*॥ एकम् **'बहुकर्तृकाह्वानस्य'** ॥

**विवादो व्यवहारः स्यात्**

**विवाद इति** ॥ विरुद्धो वादः ॥ (१) ॥*॥ 'वि नानार्थेऽव संदेहे हरणं हार उच्यते । नानासंदेहरणाद्व्यवहार इति स्मृतः' इति कात्यायनः । **'व्यवहारः** स्थितौ पणे । द्रुमभेदे[२]' इति हैमः ॥ (२) ॥*॥ द्वे **'ऋणादिन्यायस्य'** ॥

**उपन्यासस्तु वाङ्मुखम् ।**

**उपेति** ॥ उपन्यसनम् । 'असु क्षेपणे' ( दि० प० से० ) । घञ् (३।३।१८) ॥ (१) ॥*॥ वाचो मुखमिव मुखमुपक्रमः ॥ (२) ॥*॥ द्वे **'वचनोपक्रमस्य'** ॥

**उपोद्घात उदाहारः**

**उपोद्घात इति** ॥ उप समीपे उद्धननं ज्ञापनम् । भावे घञ् (३।३।१८) ॥ (१) ॥*॥ उदाहरणम् । घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे **'वक्ष्यमाणोपयोग्यर्थवर्णनस्य'** । प्रकृतोपपादकस्य दृष्टान्तादेरित्यन्ये ॥

**शपनं शपथः पुमान् ॥ ९ ॥**

**शपनमिति** ॥ 'शप आक्रोशे' ( दि० उ० अ० ) । ल्युट्

---

१—हैमे तु संग्रहो बृहदुद्धारे ग्रहसंक्षेपयोरपि' इत्युपलभ्यते । संचयेऽपीति मङ्खः—इत्यनेकार्थकैरवाकरकौमुदी ॥ २—हैमे तु 'प्रवृत्तिर्वृत्तौ वार्तायां प्रवाहे' इत्युपलभ्यते ।

१—भाष्ये तु 'अन्येष्वपि' इति दृश्यते ॥ २—'द्रुमभेदे व्यवहारेऽपि' इति पाठान्तरम् ॥

(३।३।११५) ॥ (१) ॥*॥ 'शीङ्शप–' (उ० ३।११३) इत्यर्थः । '**शपथः** कार आक्रोशे शपने च सुतादिभिः' इति हैमः ॥ (२) ॥*॥ द्वे '**सुतस्पर्शादिना शपथकरणस्य**' ॥

**प्रश्नोऽनुयोगः पृच्छा च**

**प्रश्न इति** ॥ प्रच्छनम् । 'यजयाच–' (३।३।९०) इति नङ् । 'प्रश्ने चा–' (३।२।११७) इति लिङ्गाच्च संप्रसारणम् ॥ (१) ॥*॥ अनुयोजनम् । युजेर्घञ् (३।३।१८) ॥ (२) ॥*॥ प्रच्छनम् । 'गुरोश्च हलः' (३।३।१०३) इत्यङ् । संप्रसारणम् (६।१।१६) ॥ (३) ॥*॥ त्रीणि '**प्रश्नस्य**' ॥

**प्रतिवाक्योत्तरे समे ।**

**प्रतीति** ॥ प्रतिवचनन् । ण्यत् (३।१।१२४) ॥ (१) ॥*॥ उत्तरणम् । 'ऋदोरप्' (३।३।५७) । ('**उत्तरं** प्रवर्णोर्ध्वयोः । उदीच्यप्रतिवचसोरुत्तरस्तु विराटजे') ॥ (२) ॥*॥ द्वे '**उत्तरस्य**' ॥

**मिथ्याभियोगोऽभ्याख्यानम्**

**मिथ्येति** ॥ मिथ्या चासावभियोगश्च ॥ (१) ॥*॥ चक्षिङः (अ० अ० से०) अभ्याङ्पूर्वाद्भावे ल्युट् (३।३।११५)॥ (२) ॥*॥ द्वे 'शतं मे धारयसि' इत्यादि '**मिथ्याविवादस्य**' ॥

**अथ मिथ्याभिशंसनम् ॥ १० ॥**

**अभिशापः**

**अथेति** ॥ अभिशंसेः (भ्वा० प० से०) भावे ल्युट् (३।३।११५) ॥ (१) ॥*॥ अभिशपनम् । घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे '**मिथ्यारोपस्य सुरापानादिविषयस्य**' ॥

**प्रणादस्तु शब्दः स्यादनुरागजः ।**

**प्रणाद इति** ॥ प्रणदनम् । घञ् (३।३।१८) । 'प्रणादस्तु पुमांस्तारशब्दे च श्रवणामये । अनुरागकृते शब्दे **प्रणादः** सीत्कृतं नृणाम्' इति शब्दार्णवः ॥ (१) ॥*॥ एकं प्रीतिविशेषजनितस्य '**मुखकण्ठादिशब्दस्य**' ॥

**यशः कीर्तिः समज्ञा च**

**यश इत्यादि** ॥ अश्नुते व्याप्नोति । 'अशू व्याप्तौ' (स्वा० आ० से०) 'अशेर्देवने युट् च' (उ० ४।१९१) इत्यसुन् ॥ (१) ॥*॥ कीर्त्यते । 'कृत संशब्दने' (चु० प० से०) । 'ऊतियूति–' (३।३।९७) इति निपातितः । '**कीर्तिः** प्रसादयशसोर्विस्तारे कर्दमेऽपि च' ॥ (२) ॥*॥ समैः सर्वैर्ज्ञायते । 'ज्ञा अवबोधने' (क्र्या० प० से०) घञर्थे कः (वा० ३।३।५८) (अन्यत्रापीति) ङो वा ॥*॥ '**समाज्ञा**' इति समाङ्पूर्वाज्ज्ञः (क्र्या० प० से०) । 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् ॥*॥ '**समज्या**' इति पाठे (समाङ्पूर्वात्) 'अज गतौ' (भ्वा० प० से०) । 'संज्ञायां समज–' (३।३।९९) इति क्यप् । 'क्यपि प्रतिषेधः' (वा० २।४।५६) इति न वीलम्॥ (३) ॥*॥ त्रीणि '**कीर्तेः**' ॥

**स्तवः स्तोत्रं स्तुतिर्नुतिः ॥ ११ ॥**

**स्तव इत्यादि** ॥ स्तूयतेऽनेन । 'ऋदोरप्' (३।३।५७) ॥ (१) ॥*॥ 'दाम्नी–' (३।२।१८२) इति ष्ट्रनि स्तोत्रम् ॥ (२) ॥*॥ क्तिनि (३।३।९४) स्तुतिः ॥ (३) ॥*॥ 'णु स्तुतौ' (अ० प० अ०) । नुतिः ॥ (४) ॥*॥ चत्वारि '**स्तुतेः**' ॥

**आम्रेडितं द्विस्त्रिरुक्तम्**

**आम्रेडितमिति** ॥ आम्रेड्यते आधिक्येनोच्यते स्म । 'म्रेडृ उन्मादे' (भ्वा० प० से०) । क्तः (३।२।१०२) । यथा 'सर्पः सर्पः' इति ॥ (१) ॥*॥ एकम् '**द्विरुक्तेः**' ॥

**उच्चैर्घुष्टं तु घोषणा ।**

**उच्चैर्घुष्टमित्यादि** ॥ उच्चैर्घुष्यते स्म । 'घुषिर् शब्दे' (चु० उ० से०) । क्तः (३।२।१०२) । 'घुषिरविशब्दने' (७।२।२३) इतीण्निषेधः । विशब्दनं स्वाभिप्रायप्रकाशनम् । तच्च प्रकृते नाभिप्रेतम् ॥ (१) ॥*॥ 'ण्यास–' (३।३।१०७) इति युच् ॥ (२) ॥*॥ '**उच्चैःशब्दनस्य**' द्वे ॥

**काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः ।**

**काकुरिति** ॥ आदिना कामक्रोधादेर्ग्रहः । कक्यते । 'कक लौल्योपतापयोः' ॥ (*) ॥ बाहुलकादुण् ॥ (१) ॥*॥ एकम् '**शोकादिना विकृतशब्दस्य**' ॥

**अवर्णाक्षेपनिर्वादपरीवादापवादवत् ।**
**उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ॥१२॥**

**अवर्णेत्यादि** ॥ यथा अवर्णादयो निन्दायाम्, तथोपक्रोशादयोऽपीत्यर्थः । वर्ण्यते । 'वर्ण वर्णने' (चु० प० से०) । घञ् (३।३।१८) वर्णः प्रशंसा । तद्विरुद्धोऽवर्णः । '**वर्णो** द्विजादिशुक्लादियशोगुणकथासु च । स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेपने' ॥ (१) ॥*॥ 'क्षिप प्रेरणे' (तु० उ० से०) । घञ् (३।३।१८) । '**आक्षेपो** भर्त्सनाकृष्टिकाव्यालंकृतिषु स्मृतः' ॥ (२) ॥*॥ निरादिपूर्वाद्वदेः (भ्वा० प० से०) घञ् (३।३।१८) । '**निर्वादः** स्याल्लोकवादपरिनिष्ठितवादयोः' ॥ (३) ॥*॥ 'उपसर्गस्य घञि' (६।३।१२२) इति (वा) दीर्घः । '**परिवादोऽ**पवादे स्याद्वीणावादनवस्तुनि' ॥ (४) ॥*॥ '**अपवादस्तु** निन्दायामाज्ञाविश्रम्भयोरपि' ॥ (५) ॥*॥ 'क्रुश आह्वाने' (भ्वा० प० से०) । घञ् (३।३।१८) ॥ (६) ॥*॥ 'गुप गोपनकुत्सनयोः' (भ्वा० आ० से०) । गुपेर्निन्दायां सन् (३।१।५) । 'अप्रत्ययात्' (३।३।१०२) ॥ (७) ॥*॥ 'कुत्स अवक्षेपणे'

१—लोकवादोऽपवादः । तत्र यथा 'खलनिर्वादकथायां वदिता यत्खलजनोऽपि स्यात्' ॥ परिनिष्ठितवादस्त्यक्तवादः । तत्र यथा 'निर्वादा वादिनः कृताः' ॥ २—मेदिनीहैमयोस्तु '**अववादः**' इति दृश्यते । व्याख्यातमुदाहृतं च तदेवानेकार्थकैरवाकरकौमुद्याम् ॥

( चु० आ० से० )। 'गुरोश्च' (३।३।१०३) इत्यः ॥ (८) ॥*॥ 'णिदि कुत्सायाम्' ( भ्वा० प० से० )। 'गुरोश्च' (३।३।१०३) इत्यः । '**निन्दा** स्यादपवादेऽपि कुत्सायामपि योषिति' ॥ (९) ॥*॥ 'गर्ह गल्ह कुत्सायाम्' ( भ्वा० आ० से० ) । ल्युट् (३।३।११५) ॥ (१०) ॥*॥ दश '**निन्दायाः**' ॥

**पारुष्यमतिवादः स्यात्**

**पारुष्यमित्यादि** ॥ परुषो निष्ठुरभाषी । तस्य भावः पारुष्यम् । ब्राह्मणादित्वात् (५।१।१२४) ष्यञ् । '**पारुष्यं** परुषत्वे च दुर्वाक्ये पुंसि गीर्पतौ' ॥ (१) ॥*॥ अतिक्रम्योक्तिरतिवादः ॥ (२) ॥*॥ द्वे '**अप्रियवचसः**' ॥

**भर्त्सनं त्वपकारगीः ।**

**भर्त्सनमित्यादि** ॥ अपकारार्था गीः ॥ (१) ॥*॥ 'भर्त्स तर्ज संतर्जने' ( चु० आ० से० ) । ल्युट् (३।३।११५) (२) ॥*॥ द्वे 'चौरोऽसि घातयिष्यामि त्वाम्' इत्यादि '**अपकारार्थवाक्यस्य**' ॥

**यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् ॥ १४ ॥**

**य इति** ॥ उपालम्भो द्वेधा । गुणाविष्करणपूर्वको निन्दापूर्वकश्च । आद्यो यथा 'महाकुलीनस्य तव किमुचितमिदम्' । द्वितीयस्तु 'बन्धकीसुतस्य तवोचितमेवेदम्' इति । तत्र यो द्वितीयः स परिभाषणम् । 'भाष व्यक्तायां वाचि' ( भ्वा० आ० से० ) । ल्युट् (३।३।११५) ॥*॥ अप्रत्यये (३।३।१०२) '**परिभाषा**' अपि । 'परिभाषाश्च ततो भविष्यन्ति' इति 'हेतुमति च' (३।१।२६) इति सूत्रे भाष्यात् । '**परिभाषणं** सनिन्दोपालम्भे नियमेऽपि च' (१) ॥*॥ एकम् '**सनिन्दभाषणस्य**' ॥

**तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति ।**

**तत्रेति** ॥ 'क्षर संचलने' ( भ्वा० प० से० ) प्रयोजकण्यन्ताद्युच् (३।३।१०७) । ल्युटि (३।३।११५) '**आक्षारणम्**' अपि । 'क्षरणाक्षारणाक्रोशाः साभिशापाभिमैथुनाः' ( इति दुर्गः ) । क्लीबमपि । 'नीचैर्माक्षारणं यः स आक्रोशो मैथुनं प्रति' इति शब्दार्णवः ॥ (१) ॥*॥ परस्त्रीनिमित्तं पुंसः, परपुरुषनिमित्तं स्त्रियाश्च '**आक्रोशनस्य**' एकम् ॥

**स्यादाभषाणमालापः**

**स्यादिति** ॥ आभाषेः ( भ्वा० आ० से० ) ल्युट् (३।३।११४) ॥ (१) ॥*॥ 'लप व्यक्तायां वाचि' ( भ्वा० प० से० ) । घञ् (३।३।१८) ॥ (२) ॥*॥ '**संभाषणस्य**' द्वे ॥

**प्रलापोऽनर्थकं वचः ॥ १५ ॥**

**प्रलाप इति** ॥ प्रलपनम् । घञ् (३।३।१८) ॥ (१) ॥*॥ '**प्रयोजनशून्यस्योन्मत्तादिवचनस्य**' एकम् ॥

**अनुलापो मुहुर्भाषा**

**अनुलाप इत्यादि** ॥ मुहुः पुनःपुनर्भाषणम् । घञ् (३।३।१८) ॥ (१) ॥*॥ अनुलपनम् । घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे '**वारंवारं भाषणस्य**' ॥

**विलापः परिदेवनम् ।**

**विलाप इत्यादि** ॥ विलपनम् । घञ् (३।३।१८) ॥ (१) ॥*॥ परिदेवनम् । 'दिवु परिदेवने' ( चु० आ० से० ) चुरादिः । ल्युट् (३।३।११५) ॥*॥ युचि (३।३।१०७) '**परिदेवना**' अपि ॥ (२) ॥*॥ द्वे '**अनुशोचनोक्तेः**' ॥

**विप्रलापो विरोधोक्तिः**

**विप्रविलाप इत्यादि** ॥ विरुद्धः प्रलापः । '**विप्रलापो** विरुद्धोक्तावनर्थकवचस्यपि' इति हैमः ॥ (१) ॥*॥ विरोधस्य उक्तिः ॥ (२) ॥*॥ द्वे '**अन्योन्यविरुद्धवचनस्य**' ॥

**संलापो भाषणं मिथः ॥ १६ ॥**

**संलाप इति** ॥ संलपनम् । घञ् (३।३।१८) ॥ (१) ॥*॥ मिथोऽन्योन्यं प्रति भाषणम् । आलापस्त्वेकेनापि क्रियते ॥ एकम् '**मिथोभाषणस्य**' ॥

**सुप्रलापः सुवचनम्**

**सुप्रेत्यादि** ॥ सुष्ठु प्रकृष्टं लपनम् । घञ् (३।३।१८) ॥ (१) ॥*॥ (२) ॥*॥ द्वे '**शोभनवचनस्य**' ॥

**अपलापस्तु निह्नवः ।**

**अपलाप इति** ॥ अपलपनम् । घञ् (३।३।१८) '**अपलापः** प्रेम्ण्यपह्नवे' ॥ (१) ॥*॥ निह्नवनम् । 'ह्नुङ् अपनयने' ( अ० आ० अ० ) । 'ऋदोरप्' (३।३।५७) । ( '**निह्नवः** स्यादविश्वासेऽपलापे निकृतावपि' ) ॥ (२) ॥*॥ द्वे धार्यमाणे 'न धारयामि' इत्यादि '**निह्नवोक्तेः**' ॥

**संदेशवाग्वाचिकं स्याद्**

**संदेशेति** ॥ संदिश्यते घञ् (३।३।१८) । संदेशोऽर्थः । तस्य वाक् ॥ (१) ॥*॥ संदिष्टोऽर्थो ययोच्यते सा वाचिकम् । 'वाचो व्याहृतार्थायाम्' (५।४।३५) इति ठक् ॥ (२) ॥*॥ द्वे '**संदेशवचनस्य**' ॥

**वाग्भेदास्तु त्रिषूत्तरे ॥१७॥**

**वाग्भेदा इति** ॥ उत्तरे वक्ष्यमाणा वाग्भेदा रुशत्यादयः सम्यगन्ताः ॥

**रुशती वागकल्याणी**

**रुशतीति** ॥ 'रुश हिंसायाम्' ( तु० प० अ० ) तालव्यान्तस्तौदादिकः । शत्रन्तान्ङीप् । 'आच्छीनद्योः' (७।१।८०) इति नुमो विकल्पः । रुशती हिंसा । रुशन् शब्दः । रुशद्वचनम् । मुकुटस्तु ( **उषती** इति पाठे ) 'उष दाहे' ( भ्वा० प० से० ) इत्यस्य शत्रन्तस्य 'उषती' इति रूपमाह ।

१—'नीचम्' इति पुंविहीनस्य संज्ञा इति मुकुटः ॥

तत्र । तस्माच्छपि ( ३।१।६८ ) 'पुगन्त–' ( ७।३।८६ ) इति गुणस्य 'शप्श्यनोर्नित्यम्' ( ७।१।८१ ) इति नुमश्च प्रसङ्गात् ॥ (१) ॥*॥ एकम् **'अकल्याणवाचः'** ॥

**स्यात्कल्या तु शुभात्मिका ।**

**स्यादिति** ॥ कलासु साधुः । 'तत्र साधुः' ( ४।४।९८ ) इति यत् ॥*॥ **'काल्या'** अपि–इति स्वामी । तत्र काले साधुः ॥ (१) ॥*॥ एकम् **'शुभवचनस्य'** ॥

**अत्यर्थमधुरं सान्त्वम्**

**अत्यर्थेति** ॥ सान्त्वयति । 'षान्त्व सामप्रयोगे' (चु० प० से०) चुरादिः । पचाद्यच् (३।१।१३४) । ('**सान्त्वं** सामनि दाक्षिण्ये') ॥ (१) ॥*॥ एकम् **'सान्त्ववचनस्य'** ॥

**संगतं हृदयंगमम् ॥ १८ ॥**

**संगतमिति** ॥ संगच्छते स्म । 'गत्यर्था–' (३।४।७२) इति कर्तरि क्तः ॥ (१) ॥*॥ हृदयं गच्छति । 'गमश्च' (३।२।४७) इति खच् ॥ (२) ॥*॥ द्वे **'युक्त्या मिलितस्य वचनस्य'** ॥

**निष्ठुरं परुषम्**

**निष्ठुरमिति** ॥ नितिष्ठति । 'मद्गुरादयश्च' ( उ० १।४१) इति कुरच् । 'उपसर्गात्सुनोति–' (८।३।६५) इति षत्वम् ॥ (१) ॥*॥ पिपर्ति पूरयति अलंबुद्धिं करोति । 'पॄ पालनपूरणयोः' (जु० प० से०) 'पॄनहि–' (उ० ४।७५) इत्युषच् । **'परुषं** कर्बुरे रूक्षे स्यान्निष्ठुरवचस्यपि' इति हैमः ॥ (२) ॥*॥ द्वे **'कर्कशवचनस्य'** ॥

**ग्राम्यमश्लीलम्**

**ग्राम्यमिति** ॥ ग्रामे भवम् । 'ग्रामाद्यखञौ' (४।२।९४) इति यत् । **'ग्राम्यं** स्त्रीकरणे क्लीबेऽश्लीलप्राकृतयोस्त्रिषु' ॥ (१) ॥*॥ श्रियं लाति । 'आतोऽनुप–' (३।२।३) इति कः । तद्भिन्नम् । कपिलकादित्वात् (वा० ८।२।१८) लत्वम् ॥ (२) ॥*॥ द्वे **'भण्डादिवचनस्य'** ॥

**सूनृतं प्रिये ।**

**सत्ये**

**सूनृतमिति** ॥ प्रीणाति । 'प्रीञ् तर्पणे' ( क्र्या० प० अ० ) । 'इगुपध–' ( ३।१।१३५ ) इति कः ॥*॥ सत्सु साधु । यत् ( ४।४।९८ ) ॥*॥ प्रियं यत्सत्यम् तस्मिन् । सुष्ठु नृत्यन्त्यनेन । घञर्थे कः ( वा० ३।३।५८ ) यद्वा 'हलश्च' (३।३।१२१) इति घञ् । संज्ञापूर्वकत्वाद्गुणाभावः । 'अन्येषामपि' ( ६।३।१३७ ) इति दीर्घः । यत्तु—'मूलविभुजादित्वात् ( वा० ३।२।५ ) कः'–इति मुकुटेनोक्तम् । तन्न । तस्य कर्तरि विधानात् । **'सूनृतं** मङ्गलेऽपि स्यात्प्रियसत्ये वचस्यपि' ॥ (१) ॥*॥ एकम् **'सत्यस्य'** ॥

**अथ संकुलक्लिष्टे परस्परपराहते ॥ १९ ॥**

**अथेति** ॥ संकुलति । 'कुल संस्त्याने' ( भ्वा० प० से० ) कः ( ३।१।१३५ ) **'संकुलं** त्रिषु विस्पष्टवाचि व्याप्ते' ॥ (१) ॥*॥ क्लिश्यते स्म । 'क्लिशू विबाधने' ( क्र्या० प० से० ) क्तः ।–( ३।२।१०२ ) 'यस्य विभाषा' (७।२।१५) इतीडभावः–इति मुकुटः । वस्तुतस्तु 'क्लिशः क्त्वानिष्ठयोः' ( ७।२।५० ) इति वेट् ॥ (२) ॥*॥ पराऽघानि । हन्तेः कर्मणि क्तः (३।२।१०२) । परस्परेण पराहतम् ॥ (३) ॥*॥ 'माता मे वन्ध्या' इतिवत् ॥ **'विरुद्धार्थस्य वचनस्य'** त्रीणि ॥

**लुप्तवर्णपदं ग्रस्तम्**

**लुप्तेति** ॥ लुप्तो वर्णः पदं वा यत्र पदे वाक्ये वा ॥ (१) ॥*॥ ग्रस्यते स्म । 'ग्रसु अदने' (भ्वा० आ० से०) । क्तः (३।२।१०२) । **'ग्रस्तं** ग्रासीकृतेऽपि स्याल्लुप्तवर्णपदोदिते' ॥ (२) ॥*॥ **'अशक्त्यादिनासंपूर्णोच्चारितस्य'** द्वे ॥

**निरस्तं त्वरितोदितम् ।**

**निरस्तमिति** ॥ त्वरितमुदितम् ॥ (१) ॥*॥ निरस्यते स्म । 'असु क्षेपणे' ( दि० प० से० ) । क्तः ( ३।२।१०२ ) । **'निरस्तः** प्रेषितशरे संत्यक्ते त्वरितोदिते । निष्ठ्यूते प्रतिहते च' इति हैमः ॥ (२) ॥*॥ द्वे **'शीघ्रोच्चारितस्य वचसः'** ॥

**अम्बूकृतं सनिष्ठेवम्**

**अम्बूकृतमिति** ॥ निष्ठेवनम् । 'ष्ठिवु निरसने' ( भ्वा० प० से० ) । घञ् (३।३।१८) । लघूपधगुणः ( ७।३।८६ ) । **'सनिष्ठीवम्'** इति पाठे तु पृषोदरादित्वात् ( ६।३।१०९ ) ईकारः । सह निष्ठेवेन श्लेष्मकणादिनिर्गमेनेति सनिष्ठेवम् ॥ (*) ॥ अम्बुशब्द उपचारात्तद्वति । अनम्बु अम्बु अकारि । च्विः (५।४।५०) 'च्वौ च' (६।३।१३८) इति दीर्घः । क्तः (३।२।१०२) ॥ (१) ॥*॥ एकं **'श्लेष्मनिर्गमसहितवचनस्य'** ॥

**अबद्धं स्यादनर्थकम् ॥२०॥**

**अबद्धमिति** ॥ न बध्यते स्म । 'बन्ध बन्धने' ( क्र्या० प० अ० ) । क्तः (३।२।१०२) ॥ (१) ॥*॥ न अर्थो यस्य ।

१—गुणस्य 'संज्ञापूर्वकत्वेन नुम आगमशासनत्वेन, अनित्यत्वेन तेनैव वारितत्वेनाकिंचित्करमेतत् । पीयूषव्याख्यायामपि उषति' इति पाठं प्रदर्श्य, 'रुशती' इत्येके–इत्युक्तम् ॥ २—'दिष्ट्या रमसे सामनि परमे वचसां त्वं सुजनो हि वदति मित्रं परमेव च सान्त्वम्' इति शिवभद्रे यमकादन्त्यादिः ॥ ३—'अपरुषो दायादा वाग्विभवश्च' इति दमयन्तीश्लेषात्, 'अपि सपत्नजनेन च तेन वागपरुषा परुषाक्षरमीरिता' इति यमकाच्च मूर्धन्यवान् ॥ ४—कर्बुरवर्णे यथा 'विरक्तसंध्यापरुषं पुरस्ताद्यथा रजः पार्थिवमुज्जिहीते' इत्यनेकार्थकैरवाकरकौमुदी । इह तु 'कठिने' इति लिखितमासीत् ॥

१—'असूनृतं दधदपि सूनृतभाषी' इति वासवदत्ताविरुद्धालंकारदर्शनश्लेषात् दीर्घान्त्यदन्त्यादि–इति मुकुटः ॥

'अर्थान्नञः' इत्युरःप्रभृतिषु (५।४।१५१) पाठान्नित्यं कप् समासान्तः। अनर्थकं जरद्गवादिवाक्यम्। **'अवध्यं स्याद्'** इति पाठ इति कौमुदी। **'अवध्यमवधार्हे स्यादनर्थकवचस्यपि'** इति (हैममेदिन्योः) दर्शनात् ॥ (२) ॥*॥ द्वे **'समुदायार्थशून्यस्य वचनस्य'** ॥

**अनक्षरमवाच्यं स्याद्**

**अनक्षरमिति** ॥ न प्रशस्तान्यक्षराणि यस्मिन्। अक्षराणामप्राशस्त्यं चार्थद्वारकम् ॥ (१) ॥*॥ न वचनार्हम्। ण्यत् (३।१।१२४)। 'वचोऽशब्दसंज्ञायाम्' (७।३।६७) इति न कुत्वम् ॥ (२) ॥*॥ द्वे **'निन्दावचनस्य'** ॥

**आहतं तु मृषार्थकम्।**

**आहतमिति** ॥ आहन्यते स्म। क्तः (३।२।१०२)। **'आहतं** गुणिते चापि ताडिते च मृषार्थके। स्यात्पुरातनवस्त्रेऽपि नववस्त्रे वितानके' ॥ (१) ॥ मृषाऽर्थो यस्य ॥*॥ 'एष वन्ध्यासुतो याति' इत्यादिवचनस्य **'मृषावचनस्य'** एकम् ॥

**'सोल्लुण्ठनं तु सोत्प्रासम्**

**सोल्लुण्ठनमिति** ॥ 'लुठि आलस्ये प्रतीघाते च' (भ्वा० प० से०)। ल्युट् (३।३।११५)। उल्लुण्ठनेन सहितम् ॥ (१) ॥*॥ उत्प्रासनम्। 'असु क्षेपणे' (दि० प० से०)। घञ् (३।३।१८) उत्प्रास उपहासः। तत्सहितम् ॥ (२) ॥*॥ द्वे **'सोपहासस्य'** ॥

**मणितं रतिकूजितम्।'** इति क्वचित्पठ्यते ॥

**मणितमिति** ॥ 'मण कूजने' (भ्वा० प० से०)। भावे क्तः (३।३।११४) ॥ (१) ॥*॥ रतौ कूजितम् ॥ (२) ॥*॥ द्वे **'रतिकूजितस्य'** ॥

**अथ म्लिष्टमविस्पष्टम्**

**अथेति** ॥ म्लेच्छयते स्म। 'म्लेच्छ अव्यक्ते शब्दे' (भ्वा० प० से०)। 'क्षुब्धस्वान्त-' (७।२।१८) इति निपातितम्। **'म्लिष्टं** त्रिष्वव्यक्तवाचि म्लाने' ॥ (१) ॥*॥ न विस्पश्यते स्म। 'स्पश बाधनस्पर्शनयोः' (*) कर्मणि क्तः (३।२।१०२)। 'अविस्पष्ट-' (७।२।१८) इति निर्देशादिडभावः ॥ (२) ॥*॥ द्वे **'अप्रकटवचनस्य'** ॥

**वितथं त्वनृतं वचः ॥ २१ ॥**

**वितथमिति** ॥ विगतं तथा सत्यं यस्माद्वितथम्। 'अच्' (५।४।७५) इति योगविभागात्समासान्तोऽच्। यद्वा वितन्यते। बाहुलकात्क्थन्। 'अनुदात्तो-' (६।४।३७) इति नलोपः ॥ (१) ॥*॥ न ऋतम्। 'अनृतं कृषावसत्येऽपि' ॥ (२) ॥*॥ द्वे **'असत्यवचसः'** ॥

**सत्यं तथ्यमृतं सम्यग्**

**सत्यमित्यादि** ॥ सति साधु सत्यम्। **'सत्यं** कृते च शपथे तथ्ये च त्रिषु तद्वति' ॥ (१) ॥*॥ तथा सत्ये साधु तथ्यम् ॥ (२) ॥*॥ अर्यते स्म। 'ऋ गतौ' (भ्वा०प०अ०)। क्तः (३।२।१०२)। (**'ऋतं** शिलोञ्छे पानीये पूजिते दीप्तसत्ययोः') ॥ (३) ॥*॥ समञ्चति संगच्छते। 'अञ्चु गतौ' (भ्वा० प० से०) क्विन् (३।२।५९) सम्यक्। सम्यङ् पुंसि स्त्रियां समीची ॥ (४) ॥*॥ चत्वारि **'सत्यवचसः'** ॥

**अमूनि त्रिषु तद्वति।**

**अमूनीति** ॥ अमूनि (सत्यादीनि) उपचारात्तद्वति वर्तमानानि त्रिषु। 'त्रिषूत्तरे' (प्रागुक्तेन) इत्यनेन वाग्विशेषपराणां त्रिलिङ्गत्वमुक्तम्। अनेन तु वक्तृपराणाम्–इति विशेषः ॥

**शब्दे निनादनिनदध्वनिध्वानरवस्वनाः ॥ २२ ॥**
**स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः।**
**आरवारावसंरावविरावाः**

**शब्द इति** ॥ शब्दनम्। 'शब्द शब्दकरणे' (चु० उ० से०)। 'एरच्' (३।३।५६)। घञ् (३।३।१८) वा ॥ (१) ॥*॥ 'णद् अव्यक्ते शब्दे' (भ्वा० प० से०)। 'नौ गदनद-' (३।३।६४) इत्यप् ॥ (२) ॥*॥ पक्षे घञ् (३।३।१८) ॥ (३) ॥*॥ 'ध्वन शब्दे' (भ्वा० प० से०)। 'खनिकषि' (उ० ४।१४०) इति इः ॥ (४) ॥*॥ घञि ध्वानः (३।३।१८) ॥ (५) ॥*॥ रवणम्। 'रु शब्दे' (अ० प० से०)। 'ऋदोरप्' (३।३।५७) ॥ (६) ॥*॥ 'स्वनहसोर्वा' (३।३।६२) इत्यप्घञौ ॥ (७) ॥*॥ (८) ॥*॥ 'घुष घुष्टौ' (भ्वा० उ० से०)। 'ह्राद अव्यक्ते शब्दे' (भ्वा० आ० से०)। घञ् (३।३।१८) ॥ (९) ॥*॥ (१०) ॥*॥ 'विभाषा ङि रुप्लुवोः' (३।३।५०) इति घञ् ॥ (१५) ॥*॥ पक्षे अप् (३।३।५७) ॥ (१४) ॥*॥ 'उपसर्गे रुवः' (३।३।२२) इति घञ् ॥ (१६) ॥*॥ (१७) ॥*॥ सप्तदश **'शब्दस्य'** ॥

**अथ मर्मरः ॥ २३ ॥**

**स्वनिते वस्त्रपर्णानाम्**

**अथेति** ॥ वस्त्राणां पर्णानां च स्वनिते मर्मरः। शब्दानुकरणमिति स्वामी। 'मृङ् प्राणत्यागे' (तु० आ० अ०)। 'कृदरादयश्च' (उ० ५।४१) इत्यरन् मुगागमो गुणश्च—इत्यन्ये। मर्म राति वा। कः (३।२।३)। **'मर्मरो** वस्त्र-

---

१—'जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मङ्गलानि। तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्थः' इति मुकुटः ॥
२—म्लाने विच्छाये यथा 'म्लिष्टं चित्रममित्रवासभवने वक्ति त्वदीयं यशः' अनेकार्थकैरवाकरकौमुदी ॥

१ '—वाग्भेदास्तु त्रिषूत्तरे' इत्यस्यावधिर्दर्शितः–इति मुकुटः ॥

भेदे च शुष्कपर्णध्वनौ तथा । पुंसि स्त्रियां पुनः प्रोक्ता मर्मरी पीतदारुणि' ॥ (१) ॥*॥ एकं **'वस्त्रपर्णध्वनेः'** ॥

**भूषणानां च शिञ्जितम् ।**

**निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि ॥ २४ ॥**

**भूषणानामिति** ॥ भूषणानां ध्वनौ । 'शिजि अव्यक्ते शब्दे' (अ० आ० से०) तालव्यादिः । भावे क्तः (३।३।११४) ॥*॥ 'गुरोश्च–' (३।३।१०३) इत्यप्रत्यये **'शिञ्जा'** अपि–इति स्वामी ॥ (१) ॥*॥ 'नौ' (३।३।६४) इति 'अनुपसर्गे' (३।३।६१) इति चानुवर्तमाने 'क्वणो वीणायां च' (३।३।६५) इत्यप् ॥ (३) ॥*॥ (५) ॥*॥ पक्षे घञ् (३।३।१८) ॥ (२) ॥*॥ (४) ल्युट् (३।३।११५) ॥ (६) ॥*॥ (यत्तु) पञ्च वीणाया अन्यस्य च किंनरादेः क्वणने–इति मुकुटः । तन्न । अपिशब्देन पूर्वान्वयस्य बोधनात् । अतः षडपि **'भूषणध्वनेः'** ॥

**वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः ।**

**वीणाया इति** ॥ प्रादेरिति । उपसर्गात् । 'वीणायां च' (३।३।६५) इत्यंशेन सोपसर्गादपि विधानात् । आदिशब्दादुपक्वणादयः ॥*॥ **'वीणाक्वणनस्य'** इमे ॥

**कोलाहलः कलकलः**

**कोलाहल इति** ॥ 'कुल संस्त्याने' (भ्वा० प० से०) । कोलनम् । कोल एकीभावः । तमाहलति । 'हल विलेखने' (भ्वा० प० से०) । अच् (३।३।१३४) कः (३।२।३) वा ॥ (१) ॥*॥ 'कल शब्दे' (भ्वा० आ० से०) । घञ् (३।३।१८) । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । कलादपि कलः । (यत्तु) कोलान्सूकरानाहते त्रासयति–इति स्वाम्याह । तन्न । 'आङो यमहनः' (१।३।२८) इत्यकर्मकात्स्वाङ्गकर्मकाच्च हन्तेरात्मनेपदविधानात् । यदपि—आभीक्ष्ण्ये द्विर्भावः (८।१।४) इति । तदपि न तस्य तिङव्ययकृन्मात्रविषयत्वात् । **'कलकल** उक्तः कोलाहले तथा सर्जनिर्यासे' ॥ (२) ॥*॥ द्वे **'बहुभिः कृतस्य महाध्वनेः'** ॥

**तिरश्चां वाशितं रुतम् ॥ २५ ॥**

**तिरश्चामिति** ॥ तिरोऽञ्चन्ति ते तिर्यञ्चः । तेषां यद्रुतम् तद्वाशितम् । 'वाशृ शब्दे' (दि० आ० से०) तालव्यान्तः । भावे क्तः (३।३।११४) । **'वाशिता**[2] करिणीनार्योर्**वाशितं** भाविते रुते' । (**'वासिता** करिणीनार्योर्**वासितं** सुरभीकृते । ज्ञानमात्रे खगारावे वासितं वस्त्रवेष्टिते') इति विश्वकोषादिदर्शनेन तु दन्त्यवानपि ॥ (१) ॥*॥ एकम् **'पक्षिशब्दस्य'** ॥

**स्त्री प्रतिश्रुत्प्रतिध्वाने**

**स्त्रीति** ॥ 'श्रु श्रवणे' (भ्वा० प० से०) । संपदादित्वात् (वा० ३।३।१०८) क्विप् । प्रति प्रथमशब्दं लक्ष्यीकृत्य श्रूयते प्रतिश्रुत् ॥ (१) ॥*॥ (२) ॥*॥ द्वे **'प्रतिध्वनेः'** ॥

**गीतं गानमिमे समे ।**

**गीतमिति** ॥ गीयते । भावे क्तः (३।३।११४)–ल्युटौ (३।३।११५) । **'गीतं** शब्दितगानयोः' इति हैमः ॥ (१) ॥*॥ (२) ॥*॥ द्वे **'गानस्य'** ॥

**इति शब्दादिवर्गविवरणम् ॥ ६ ॥**

---

**निषादर्षभगान्धारषड्जमध्यमधैवताः ।**
**पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥ १ ॥**

**निषादेति** ॥ निषीदति मनोऽस्मिन् । 'षद्लृ विशरणगत्यवसादनेषु' (भ्वा०, तु० प० अ०) । 'हलश्च' (३।३।१२१) इति घञ् । 'सदिरप्रतेः' (८।३।६६) इति षत्वम् । **'निषादः** स्वरभेदेऽपि चण्डाले धीवरान्तरे' ॥ (१) ॥*॥ ऋषति बलीवर्दस्वरसादृश्यं गच्छति । 'ऋषी गतौ' (तु० प० से०) । 'ऋषिवृषिभ्यां कित्' (उणा० ३।१२३) इत्यभच् । **'ऋषभ**स्त्वौषधान्तरे । स्वरभिद्वृषयोः कर्णरन्ध्रकुम्भीरपुच्छयोः ॥ उत्तरस्थः स्मृतः श्रेष्ठे स्त्री नराकारयोषिति । शूकशिम्ब्यां सिरालायां विधवायां क्वचिन्मता' ('आदिजिनेऽपि' ॥ (१) ॥*॥ गन्धारदेशे भवः । अण् (४।३।५३) । **'गान्धारो** रागसिन्दूरस्वरेषु नीवृदन्तरे' इति हैमः ॥ (१) ॥*॥ षड्भ्यो जातः । 'पञ्चम्याम्–' (३।२।९८) इति डः । 'नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संस्पृशन् । षड्भ्यः संजायते यस्मात्तस्मात्षड्ज इति स्मृतः' ॥ (१) ॥*॥ मध्ये भवः । 'मध्यान्मः' (४।३।८) । 'तद्वदेवोत्थितो वायुरुरःकण्ठसमाहतः । नाभिं प्राप्तो महानादो मध्यस्थस्तेन मध्यमः' । **'मध्यमो** मध्यजे स्वरे । देहमध्ये मध्यदेशे (**मध्यमा** कर्णिकाङ्गुलिः । रा[1]कारजस्वला चापि)' इति हैमः । **'मध्यमो** मध्यजेऽन्यवत् । पुमान्स्वरे मध्यदेशेऽप्यवलग्ने तु न स्त्रियाम् ॥ स्त्रियां दृष्टरजोनार्यां कर्णिकाङ्गुलिभेदयोः । त्र्यक्षरच्छन्दसि तथा' ॥ (१) ॥*॥ धीमतामयं धैवतः पृषोदरादिः (६।३।१०९) 'संज्ञा[2]याम्' (८।२।११) इति वा वत्वम् ॥ (१) ॥*॥ 'वायुः समुद्गतो नाभेरुरोहृत्कण्ठमूर्धसु । विचरन्पञ्चमस्थानप्राप्त्या पञ्चम उच्यते' । तज्जन्यत्वात्स्वरः पञ्चमः । पञ्चानां पूरणः 'तस्य पूरणे–'

---

१—पीयूषविवेकयोरपि 'शिञ्जितम्' इत्येकं भूषणध्वनेः । निक्वाणादयः पञ्च वीणाकिंनरादिस्वनितस्य । इत्येव दृश्यते । अग्निपुराणान्तर्गतनामलिङ्गानुशासने 'भूषणानां च शिञ्जितम् । वीणाया निक्वणः क्वाणः' इति पाठस्यैव दर्शनेनापि निक्वाणादीनां भूषणध्वनिवाचकत्वाप्राप्तेः ॥ २—अयं च श्लोकक्रमो मेदिनीस्थः । परंतु तत्रापि दन्त्यमध्य एवोपलभ्यते ॥

१—राका पूर्णिमा । तत्र यथा 'अमृतममृतरश्मिर्मध्यमामध्यरात्रे' इति ॥ २—अयं पाठः कुत्रचिदुपलभ्यते ॥

(५।२।४८) इति डट्। 'नान्तात्–' (५।२।४९) इति मट्। 'पञ्चमो रागभेदे स्यात्स्वरभेदे च पञ्चमी । पाण्डवानां च पत्न्यां स्त्री पञ्चानां पूरणे त्रिषु'। 'पञ्चमो रुचिरे दक्षे' ॥ (१) ॥*॥ अमी सप्त स्वरास्तन्त्रीतः कण्ठाच्चोच्चरन्ति । 'दारवी गात्रवीणा च द्वे वीणे स्वरधारिके' इति वचनात् वंशमुरजादयस्तु अनुकरणमात्रोपयोगिन इति भावः । नारदः– 'षड्जं रौति मयूरस्तु गावो नर्दन्ति चर्षभम् । अजाविकौ च गान्धारं क्रौञ्चो नदति मध्यमम् ॥ पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् । अश्वस्तु धैवतं रौति निषादं रौति कुञ्जरः' इति 'स्वराणां पृथक्पृथक्' एकैकम् ॥

**काकली तु कले सूक्ष्मे**

**काकलीति** ॥ ईषत्कलः काकली । 'ईषदर्थे च' (६।३।१०५) इति कोः कादेशः । गौरादित्वात् (४।१।४१) ङीष् । अन्ये तु—कलेः (भ्वा० आ० से०) इन् (उ० ४।११८)। कलिः शब्द ईषदत्रेति **काकलिः** । ततः 'कृदिकारात्–' (ग० ४।१।४५) इति ङीष् । अत एव 'साधूदितं काकलिभिः कुलीनैः' इत्यभिनन्दप्रयोगः संगच्छते— इत्याहुः ॥ (१) ॥*॥ एकम् 'सूक्ष्मध्वनेः' ॥

**ध्वनौ तु मधुरास्फुटे ।**

**कलः**

**ध्वनाविति** ॥ मधुरः श्रुतिसुखः । स चासावस्फुटोऽव्यक्ताक्षरश्च । तादृशे ध्वनौ कलः । 'कड मदे' (भ्वा० प० से०)। कडति माद्यत्यनेन । 'हलश्च' (३।३।१२१) इति घञ् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । डलयोरेकत्वस्मरणम् । यद्वा कलनम् । 'कल संख्याने' (भ्वा० आ० से०) । 'खनो घ च' (३।३।१२५) इति घः । यद्वा कलते । पचाद्यच् (३।१।१३४)। 'कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके । षोडशांशे च चन्द्रस्य कलनाकालमानयोः ॥ कलं शुक्रे त्रिष्वजीर्णे नाव्यक्तमधुरध्वनौ ॥ (१) ॥*॥ एकम् 'अव्यक्तमधुरध्वनेः' ॥

**मन्द्रस्तु गम्भीरे**

**मन्द्र इति** ॥ गम्भीरे मेघादिध्वनौ । मन्दते । 'मदि स्तुत्यादौ' (भ्वा० अ० से०) 'स्फायि–' (उ० २।१३) इति रक् ॥ (१) ॥*॥ एकम् 'गम्भीरशब्दस्य' ॥

**तारोऽत्युच्चैः**

**तार इति** ॥ तारयति अतिक्रामत्यन्याञ्शब्दान् । 'बहुलमेतन्निदर्शनम्' इति चुरादिगणसूत्रात्स्वार्थे णिच् । पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ एकम् 'उच्चशब्दस्य' ॥

**त्रयस्त्रिषु ॥ २ ॥**

**त्रय इति** ॥ त्रयः कलमन्द्रताराः (त्रिषु विशेष्यनिघ्नाः) ॥

**समन्वितलयस्त्वेकतालः**

**समन्वितेति** ॥ सम्यगन्वितो लयो नृत्यगीतवाद्यानां साम्यं यत्र स एकः समस्तालो मानमस्येत्येकतालः ॥ (१) ॥*॥ एकम् 'गीतवाद्यलयसाम्यस्य' ॥

**वीणा तु वल्लकी ।**

**विपञ्ची**

**वीणेति** ॥ वेति जायते स्वरोऽस्याम् । 'वी गत्यादिषु' (अ० प० अ०) 'रास्नासास्ना–' (उ० ३।१५) इत्यादिना नप्रत्ययो णत्वं गुणाभावश्च निपातितः । 'वीणा विद्युति वल्लक्याम्' ॥ (१) ॥*॥ वल्लते । 'वल वल्ल संवरणे' (भ्वा० आ० से०) क्वुन् (उ० २।३२)। गौरादित्वात् (४।१।४२) ङीष् ॥ (२) ॥*॥ विपञ्चयति विस्तारयति शब्दम् । 'पचि विस्तारे' (चु० प० से०) । ण्यन्तादच् (३।१।१३४)। गौरादिः (४।१।४१) । 'विपञ्ची केलिवीणयोः' ॥ (३) ॥*॥ त्रीणि 'वीणायाः' ॥

**सा तु तन्त्रीभिः सप्तभिः परिवादिनी ॥ ३ ॥**

**सेति** ॥ सैव सप्तभिस्तन्त्रीभिरुपलक्षिता परिवदति स्वरान्। 'सुपि' (३।२।७८) इति णिनिः ॥ (१) ॥*॥ एकम् 'सतार इति ख्यातस्य' ॥

**ततं वीणादिकं वाद्यम्**

**ततमिति** ॥ वीणादि यद्वाद्यं वादनीयम् तत्ततम् । आदिना सैरन्ध्रीरावणहस्तकिंनरादि तन्यते 'तनिमृङ्भ्यां किच्च' (उ० ३।८८) इति तन् । 'अथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम् । क्लीबं वीणादिवाद्ये स्यात्पुंलिङ्गस्तु सदागतौ' ॥ (१) ॥*॥ एकम् 'वीणादिवाद्यस्य' ॥

**आनद्धं मुरजादिकम् ।**

**आनद्धमिति** ॥ आनह्यते स्म मुखे चर्मणा बध्यते स्म । 'णह बन्धने' (दि० उ० अ०) । क्तः (३।२।१०२)। 'नहो धः' (८।२।३४)। आदिपदात्पटहादि । 'आनद्धं मुरजादौ च क्लीबं स्यात्संदिते त्रिषु' ॥ (१) ॥*॥ एकम् 'मुरजादिवाद्यस्य' ॥

**वंशादिकं तु शुषिरम्**

**वंशेति** ॥ वंशो वेणुः । आदिपदात्काहलादि । शुषिश्छिद्रमस्यास्ति । 'ऊषशुषि–' (५।२।१०७) इति रः । 'शुषिरं वंशादिवाद्ये विवरेऽपि नपुंसकम् । शुषिरो न स्त्रियां गर्ते, वह्नौ, रन्ध्रान्विते त्रिषु' । 'सूर्म्यं सुषिरामिव' (पस्पशाह्निकभाष्यस्थश्रुतौ) इति प्रयोगात् (सुषिरम्) दन्त्यादि अपि ।

१—मन्द्रोऽपि इति स्वामी ॥

१—क्वचिन्मेदिनीपुस्तके तु 'मूषिके ना स्त्रियां नाल्पौषधौ रन्ध्रान्विते त्रिषु' इति पाठ उपलभ्यते ॥

प्राच्यास्तु 'तालव्यावेव' इत्याहुः ॥ (१) ॥*॥ एकम् **'वंशवाद्यस्य'** ॥

**कांस्यतालादिकं घनम् ॥ ४ ॥**

**कांस्येति** ॥ कांस्यमयस्तालः कांस्यतालः । आदिना घण्टादि घनं निबिडत्वात् । हन्यते । 'हन हिंसागत्योः' ( अ० प० अ० ) । 'मूर्तौ घनः' ( ३।३।७७ ) इत्यप् घनादेशश्च । 'घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे । सङ्घे मुस्ते घनं मध्यनृत्तवाद्यप्रभेदयोः' इति हैमः ॥ (१) ॥*॥ एकम् **'कांस्यतालादेः'** ॥

**चतुर्विधमिदं वाद्यवादित्रातोद्यनामकम् ।**

**चतुरिति** ॥ इदं ततादि चतुर्विधं वाद्यादित्रिकनामकम् । वाद्यते ध्वन्यते । वदेः ( भ्वा० प० से० ) ण्यन्तात् ( ३।१।२६ ) 'अचो यत्' ( ३।१।९७ ) ॥ (१) ॥*॥ 'भूवादिगृभ्यो णित्रन्' ( उ० ४।१७१ ) ॥ (२) ॥*॥ आसमन्तात्तुद्यते ताड्यते । 'तुद व्यथने' ( तु० उ० अ० ) । ण्यत् ( ३।१।१२४ ) ॥ (३) ॥*॥ त्रीणि **'ततादिचतुष्टयस्य'** ॥

**मृदङ्गा मुरजाः**

**मृदङ्गा इति** ॥ मृद्यन्ते । 'मृद क्षोदे' ( क्र्या० प० से० ) । 'विडादिभ्यः कित्' ( उ० १।१२१ ) इत्यङ्गच् । मृत् अङ्गमस्येति वा । **'मृदङ्गो** घोषवाद्ययोः' इति हैमः ॥ (१) ॥*॥ मुराद्वेष्टनाज्जातः । 'मुर संवेष्टने' ( तु० प० से० ) तुदादिः । 'पञ्चम्याम्–' ( ३।२।९८ ) इति डः । मुरं वेष्टनं जातमस्येति वा ॥ (२) ॥*॥ द्वे **'मृदङ्गस्य'** ॥

**भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयः ॥ ५ ॥**

**भेदा इति** ॥ तेषां भेदास्तु त्रयः । अङ्के उत्सङ्गे भवः । शरीरावयवाद्यत् ( ४।३।५५ ) ॥ (१) ॥*॥ आलिङ्ग्यते । 'लिगि गतौ' ( भ्वा० प० से० ) । ण्यत् ( ३।१।१२४ ) ॥ (१) ॥*॥ ऊर्ध्वः कायति शब्दायते । 'कै शब्दे' ( भ्वा० प० से० ) । 'सुपि' ( ३।२।४ योगविभागेन ) इति कः । तदुक्तम्—'हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वकः । आलिङ्ग्यश्चैव गोपुच्छो मध्यदक्षिणवामगाः' इति ॥*॥ ऊर्ध्वशब्दं निर्वेकारमपि केचित्पठन्ति ॥ (१) ॥*॥ प्रत्येकमेकैकम् ॥

**स्याद्यशःपटहो ढक्का**

**स्यादिति** ॥ यशोऽर्थः पटहः । शाकपार्थिवादिः ( २।१।६९ ) ॥ (१) ॥*॥ 'ढक्' इति कायति । 'कै शब्दे' ( भ्वा० प० से० ) । 'आतोऽनुप–' ( ३।२।३ ) इति 'सुपि' ( ३।२।४ योगविभागात् ) इति वा कः ॥ (२) ॥*॥ द्वे **'यशःपटहस्य'** ॥

**भेर्यामानकदुन्दुभी ।**

**भेर्यामिति** ॥ बिभेत्यस्य रवात्। 'ञिभी भये' ( जु० प० से० ) । 'ऋज्रेन्द्र–' ( उ० २।२८ ) इति रन् । गौरादित्वात् ( ४।१।४१ ) ङीष् ॥*॥ 'वङ्क्र्यादयश्च' ( उ० ४।६६ ) इति रिप्रत्यये '[1]रिः' अपि ॥ (१) ॥*॥ आनित्यनेन वादितेन । क्वुन् ( उ० २।३२ ) । आनयति प्राणयति सोत्साहान्करोति योधान् । ण्वुल् ( ३।१।१३३ ) वा । **'आनकः** पटहे भेर्यां मृदङ्गे ध्वनदम्बुदे' ॥ (२) ॥*॥ 'दुन्दु' इति शब्देन भाति । बाहुलकात्किः । यद्वा द्यामुभति शब्देन । 'उभ पूरणे' ( तु० प० से० ) । पृषोदरादिः ( ६।३।१०९ ) । यत्त्वौणादिक इः—इति कौमुदी । तन्न । आतो लोपस्याप्रसङ्गात् । ( **'दुन्दुभिस्तु** भेर्यां दितिसुते विषे । अक्षबिन्दुत्रिकद्वन्द्वे' ) ॥ (३) ॥*॥ स्वामी तु **'भेरी स्त्री दुन्दुभिः पुमान्'** इति पठति ॥ [2]द्वे **'भेर्याः'** ॥

**आनकः पटहोऽस्त्री स्यात्**

**आनक इति** ॥ (१) ॥*॥ पटेन हन्यते । डः ( वा० ३।२।१०१ ) 'पट' इति शब्दं जहाति । 'अतोऽनुप–' ( ३।२।३ ) इति कः इति वा । **'पटहो** ना समारम्भे आनके पुंनपुंसकम्' । अस्त्रीति पूर्वान्वयि । 'उपवासं गृहं देहं लोहं पटहमित्यपि' इति पुंनपुंसकाधिकारे चन्द्रगोम्युक्तेः ॥ द्वे **'पटहस्य'** ॥

**कोणो वीणादिवादनम् ॥ ६ ॥**

**कोण इति** ॥ वीणादि वाद्यते येन धनुराद्याकृतिना स कोणः । कुण्यते । 'कुण शब्दोपकरणयोः' ( तु० प० से० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् । 'द्वयोस्तु **कोणो** वीणादेर्वादनं **सारिका** च सा' इति शब्दार्णवः । **'कोणो** वाद्यप्रभेदे स्याद्वीणादीनां च वादने । एकदेशे गृहादीनामस्रौ च लगुडेऽपि च' इति मेदिनी । **'कोणो** वीणादिवादने । लगुडेऽस्रौ लोहिताङ्गे' इति हैमः ॥ (१) ॥*॥ एकम् **'वीणादिवादनस्य'** ॥

**वीणादण्डः प्रवालः स्यात्**

**वीणेति** ॥ वीणाया दण्डः ॥ (१) ॥*॥ प्रकर्षेण वल्यते संव्रियते । 'वल संवरणे' ( भ्वा० प० से० ) । घञ् ( ३।३।१९ ) **'प्रवालो** विद्रुमे वीणादण्डेऽभिनवपल्लवे' इति हैमः ॥ (२) ॥*॥ द्वे **'वीणादण्डस्य'** ॥

**ककुभस्तु प्रसेवकः ।**

**ककुभ इति** ॥ कं वातं स्कुभ्नाति । स्कुभेः सौत्रान्मूल-

---

१—'शुषिरं शिष्यं शीर्षं तालव्यादयः' इति समेदकोषदर्शनस्य मुकुटेन कारितत्वात् । परं त्वग्रे पातालभोगिवर्गान्तर्गतशुषिपदव्याख्यायाम् दन्त्यादिरप्ययं शब्दः । 'विवराभिधायिनि शुषिरादौ शास्त्रेषु दन्त्यतालव्यौ' इत्यूष्मविवेकात् इति तेनैवोक्तेन विरोधादनुपादेयमिदम् । न चोक्तसमेदकोषवैयर्थ्यमिति वाच्यम् । तस्य वह्निवाचकशुषिरशब्दे नियामकत्वादित्यरुचिराङ्कुरित्यनेन सूचिता ॥ २—'कुर्वतीरुपलैस्तु-ङ्गैर्भुवनं नीचमूर्ध्वजैः । तस्या वनालीरन्वेति चित्रा नागचमूर्ध्वजैः' इति कीचकवधयमकाद्ककारवानूर्ध्वशब्दः ॥

१—'रवः प्रगल्भाहतभेरिसंभवः प्रकाशयामास समन्ततस्ततः' इति कुमारदासः—इति मुकुटः । २—त्रीणीत्युचितम् ॥

विभुजादित्वात् ( ३।२।५ ) कः पृषोदरादित्वात्सलोपः ( ६।३।१०९ )। यद्वा कश्च कुश्च ककू । ते भाति । 'भा दीप्तौ' ( अ० प० अ० ) अन्तर्भावितण्यर्थः । 'आतोऽनुप—' ( ३।२।३ ) इति कः । '**ककुभो** रागभेदेऽपि वीणाङ्केऽर्जुनपादपे' ॥ (१) ॥*॥ प्रसेव्यते । 'षेवृ सेवने' ( भ्वा० आ० से० ) । कुन् ( उ० २।३२ ) । अचि ( ३।१।१३४ ) प्रसेवः अपि । '**प्रसेवस्तु** वीणाङ्गस्यूतयोर्द्दतौ' ॥ (२) ॥*॥ द्वे '**वीणादण्डाधःस्थितशब्दगाम्भीर्यार्थचर्मावनद्धदारुमयभाण्डस्य**' । वीणाप्रान्तस्थवक्रकाष्ठविशेषस्येत्यन्ये ॥

**कोलम्बकस्तु कायोऽस्याः**

**कोलम्बक इति** ॥ अस्या वीणायाः कायः अलाबुदण्डककुभसमुदायस्तन्त्रीरहितः । 'कुल संस्त्याने' ( भ्वा० प० से० ) बाहुलकादम्बच् । ततः कन् ( ५।३।९७ ) । यद्वा कुलेर्विच् ( ३।२।७५ ) । अम्बते । अम्ब्यते वा । 'अबि शब्दे' ( भ्वा० आ० से० ) । ण्वुल् ( ३।२।१३३ ) । क्वुन् ( उ० ३।३२ ) वा कोल् चासावम्बकश्च ॥ (१) ॥*॥ एकम् '**तन्त्रीहीनवीणायाः**' ॥

**उपनाहो निबन्धनम् ॥ ७ ॥**

**उपनाह इति** ॥ उपनह्यतेऽनेनास्मिन् वा । 'णह बन्धने' ( दि० उ० अ० ) 'हलश्च' ( ३।३।१२१ ) इति घञ् । '**उपनाहो** व्रणालेपपिण्डे वीणानिबन्धने' ॥ (१) ॥*॥ निबध्यतेऽनेनास्मिन्वा । 'बन्ध बन्धने' ( क्र्या० प० अ० ) । 'करणाधिकरणयोश्च' ( ३।३।११७ ) इति ल्युट् ॥ (२) ॥*॥ द्वे '**यत्र तन्त्र्यो निबध्यन्ते तस्योर्ध्वभागस्य**' ॥

**वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः ।**
**मर्दलः पणवोऽन्ये च**

**वाद्येति** ॥ 'डम्' इति शब्दमियर्ति । मृगय्वादित्वात् ( उ० १।३७ ) अर्तेः कुः । गणपाठादेव गुणः ॥ (१) ॥*॥ स एव महान् मड्डुः । 'टुमस्जो शुद्धौ' ( तु० प० अ० ) । 'भृमृशी—' ( उ० १।७ ) इत्यादिना उः । पृषोदरादित्वात् ( ६।३।१०९ ) जस्य डः ॥ (१) ॥*॥ 'डिण्डि' इति शब्दं मिनोति प्रकाशयति । डः ( वा० ३।२।१०१ ) ॥ (१) ॥*॥ झर्झशब्दं राति । 'आतः—' ( ३।२।३ ) इति कः । यद्वा 'झर्झ शब्दे' ( भ्वा०, तु० प० से० ) । अरन् (*) । '**झर्झरः** स्यात्कलियुगे वाद्यभाण्डे नदान्तरे । **झल्लरी झर्झरी** च द्वे केशचक्रे तु वाद्यके' ॥ (१) ॥*॥ मर्दमुपमर्दं लाति । 'आतः' ( ३।२।३ ) इति कः ॥ (१) ॥*॥ पणं व्यवहारं वाति गच्छति । कः ( ३।२।३ ) ॥ (१) ॥*॥ अन्ये गोमुखहुडुक्कादयः । ( '**गोमुखं** कुटिलागारे वाद्यभाण्डे च लेपने' । '**हुडुक्कं** मदमत्ते स्याद्दात्यूहे वाद्यभिदपि' ) । '**वाद्यविशेषाणां पृथक् पृथक्**' एकैकम् ॥

**नर्तकीलासिके समे ॥ ८ ॥**

**नर्तकीति** ॥ नृत्यति । 'नृती गात्रविक्षेपे' ( दि० प० से० ) 'शिल्पिनि ष्वुन्' ( ३।१।१४५ ) । षित्त्वात् ( ४।१।४१ ) ङीष् । '**नर्तकः** केवले पोटगलचारणयोर्नटे । **नर्तकी** लासिकायां च करेण्वामपि योषिति' ॥ (१) ॥*॥ लसति । 'लस श्लेषणक्रीडनयोः' ( भ्वा० प० से० ) ण्वुल् ( ३।१।१३३ ) । अनयोः क्रियोपाधिकतया वाच्यलिङ्गत्वात्पुंस्त्वनिर्देशस्यौत्सर्गिकत्वात् 'नर्तको लासकः समौ' इति वक्तव्ये स्त्रीनिर्देशो ङीष्टापोर्विवेकार्थः । '**लासकौ** केकिनर्तकौ' इति हैमः ॥ (२) ॥*॥ द्वे '**नर्तक्याः**' ॥

**विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ।**

**विलम्बितमिति** ॥ विलम्बन्ते करचरणादयोऽत्र । 'लबि अवस्रंसने' ( भ्वा० आ० से० ) ॥ (१) ॥*॥ द्रवन्ति शीघ्रं गच्छन्त्यत्र । 'द्रु गतौ' ( भ्वा० प० अ० ) । उभयत्रापि 'क्तोऽधिकरणे च' ( ३।४।७६ ) इति क्तः । यत्तु—'भावे क्तः' ( ३।३।११४ )— इति मुकुटः । तन्न । अन्यपदार्थस्य नृत्यस्यालाभप्रसङ्गात् । '**द्रुतं** त्रिषु । शीघ्रे विलीने विद्राणे' ॥ (२) ॥*॥ तयोर्मध्ये भवत्वान्मध्यम् । 'अ सांप्रतिके' ( ४।३।९ ) इत्यः । 'मध्यं वैलग्ने न स्त्री स्यान्न्याय्येऽन्तरेऽधमे त्रिषु' ॥ (३) ॥*॥ एषु यथाक्रमं तत्त्वादित्रयम् । तननम् । तत् । संपदादित्वात् ( वा० ३।३।१०८ ) क्विप् । तदस्यास्ति । 'वप्रकरणेऽन्यत्रापि' ( वा० ५।२।१०९ ) इति वः । 'तसौ मत्वर्थे' ( १।४।१९ ) इति भत्वान्न जश्त्वम् । '**तत्त्वं** परात्मनि । वाद्यभेदे स्वरूपे च' इति हैमः ॥ (१) ॥*॥ ओचनम् । 'उच समवाये' ( दि० प० से० ) । घञ् ( ३।३।१८ ) । पृषोदरादित्वात् ( ६।३।१०९ ) घः । '**ओघो** वेगे जलस्य च । वृन्दे परम्परायां च द्रुतनृत्योपदेशयोः' ॥ (२) ॥*॥ हननम् । 'हन हिंसागत्योः' ( अ० प० अ० ) । 'मूर्तौ घनः' ( ३।३।७७ ) इत्यप् घनादेशश्च । 'संघे मुस्ते **घनं** मध्यनृत्तवाद्यप्रभेदयोः' इति हैमः ॥ (३) ॥*॥ '**विलम्बितद्रुतमध्यानां नृत्यगीतवाद्यानां**' तत्त्वादिक्रमेणैकैकम् ॥

**तालः कालक्रियामानम्**

**ताल इति** ॥ तलनम् । 'तल प्रतिष्ठाकरणयोः' ( चु० प० से० ) । घञ् ( ३।३।१८ ) '**तालः** करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते । गीताकालक्रियामाने करास्फाले द्रुमान्तरे ॥ वाद्यभाण्डे च कांस्यस्य त्सरौ **ताली** जटौषधौ । क्लीबं तु हरिताले स्यात्' इति विश्वमेदिन्यौ ॥ (१) ॥*॥

१—हैमे तु 'केलके' इत्युक्तम् । क्रीडके' इति व्याख्यातमनेकार्थकैरवाकरकौमुद्याम् ॥ २—वलग्ने कायमध्यभागे यथा 'ननाम मध्योऽतिगुरुत्वभाजा नितान्तमाक्रान्त इवाङ्गनानाम्' इत्यनेकार्थकैरवाकरकौमुद्याम् । अत्र तु 'विलम्बे' इति लिखितमासीत् ॥ ३—भाष्ये तु 'अन्येभ्योऽपि' इति दृश्यते ॥

कालस्य क्रियया आवापनिष्क्रमादिकया मानं परिच्छेदनम् ॥*॥ एकम् 'तालस्य' ॥

**लयः साम्यम्**

**लय इति** ॥ गीतवाद्यपादादिन्यासानां क्रियाकालयोः साम्यं लयः । लयनम् । 'लीङ् श्लेषणे' ( दि० आ० अ० ) । 'एरच्' ( ३।३।५६ ) । यत्तु—'लय गतौ' 'एरच्—' इति मुकुटेनोक्तम् । तन्न । लयधातोरिकारान्तत्वाभावात् । 'लयस्तूर्यत्रयीसाम्ये संश्लेषणविलासयोः' इति हैमः ॥ (१) ॥*॥ एकम् 'गानतन्त्रीलयस्य' ॥

**अथास्त्रियाम् ॥ ९ ॥**

**ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने ।**

**अथेति** ॥ अस्त्रियां ताण्डवम्, इत्यन्वयः । तण्डुना प्रोक्तं ताण्डवम् । 'तेन प्रोक्तम्' ( ४।३।१०१ ) इत्यण् । 'ताण्डवं तृणभिन्नाट्यभेदयोः' इति हैममेदिन्यौ ॥ (१) ॥*॥ 'नट अवस्कन्दने' ( भ्वा० प० से० ) । ल्युट् ( ३।३।११५ ) ॥ (२) ॥*॥ नटस्य कर्म । ष्यञ् ( ५।१।१२४ ) । नटेर्ण्यत् ( ३।१।१२४ ) वा । 'नाट्यं तौर्यत्रिके लास्ये' ॥ (३) ॥*॥ 'लस श्लेषणक्रीडनयोः' ( भ्वा० प० से० ) । ण्यत् ( ३।१।१२४ ) । 'लास्यं तौर्यत्रिके मतम् । नृत्ये च' इति विश्वः ॥ (४) ॥*॥ नृती ( दि० प० से० ) । 'ऋदुपधाच्च' ( ३।१।११० ) इति क्यप् ॥ (५) ॥ भावे क्ते (३।३।११४) 'नृत्तम्' अपि ॥*॥ ल्युटि ( ३।३।११५ ) नर्तनम् ॥ (६) ॥*॥ 'नृत्यं स्यात्सततेऽपि च' । 'शाश्वते त्रिषु' । षट् 'नृत्यस्य' ॥

**तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् ॥ १० ॥**

**तौर्येति** ॥ नृत्यगीतवाद्यं तौर्यत्रिकम् । 'तुरि त्वरायाम्' ( जु० प० से० ) । 'ऋहलोर्ण्यत्' ( ३।१।१२४ ) गुणं बाधित्वा बाहुलकात् 'हलि च' ( ८।२।७७ ) इति दीर्घः । तूर्यं मुरजादिः । तत्र भवं तौर्यं शब्दः । त्रयोऽशा यस्य त्रिकम् । 'संख्याया अतिशदन्तायाः कन्' ( ५।१।२२ ) । 'संख्यायाः संज्ञासङ्घ—' ( ५।१।५८ ) इति वा । 'तौर्योपलक्षितं त्रिकम्' इति विग्रहः ॥ (१) ॥*॥ इदमेव नृत्यादित्रयं नाट्यमपि । नटस्येदम् । 'छन्दोगौक्थिक—' ( ४।३।१२९ ) इति ञ्यः ॥ (२) ॥*॥ द्वे 'नाट्यस्य' ॥

१—विकासे यथा 'किसलयैः सलयैरिव पाणिभिः' इत्यनेकार्थकैरवाकरकौमुदी । अत्र तु 'विनाशयोः' इति पाठ उपलभ्यते । २—मेदिन्यां 'नित्यम्' इत्येवोपलभ्यते । इत्थं तु नैवोपलभ्यते । नृत्यस्यैतदर्थकत्वासंभवादिदं प्रकृतोपयोगी न इति ॥ ३—इदं च मुकुटानुरोधेन । दिवादिगणस्थदीर्घोपधाङ्गीकारे तु नागतिकगतिकल्पना ॥

**भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः । स्त्रीवेषधारी पुरुषः**

**भ्रकुंस इति** ॥ यः पुरुषः स्त्रीवेषधारी नृत्यति तस्मिन् भ्रकुंसादित्रयम् । 'पटपुट—' इति दण्डकोक्त 'कुंसि' धातोश्चुरादिण्यन्तात् 'एरच्' ( ३।३।५६ ) । भ्रुवोर्भ्रुवा वा कुंसो भाषणमस्य । भ्रुवा कुंसयति वा । अच् ( ३।१।१३४ ) 'इको ह्रस्वोऽङ्यो गालवस्य' ( ६।३।६१ ) इति सूत्रे 'इयङुवङ्भाविनां न' ( वा० ) इति निषेधोत्तरं पठितस्य 'अभ्रुकुंसादीनाम्' इति वार्तिकस्य ह्रस्वनिषेधपर्युदासपरतया, अकारादेशपरतया च व्याख्यानद्वयाद्रूपत्रयम् । पृषोदरादित्वात् ( ६।३।१०९ ) ऋवर्णवानपि । 'भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्च भृकुंसवत्' इति शब्दार्णवः ॥ (३) ॥*॥ त्रीणि 'स्त्रीवेषधारिणो नृत्यस्य' ॥

**नाट्योक्तौ**

**नाट्योक्ताविति** ॥ 'नाट्योक्तौ' इत्यधिकारः प्रागङ्गहारात् ॥

**गणिकाज्जुका ॥ ११ ॥**

**गणिकेति** ॥ गणिका अज्जुका ज्ञेया । 'गणिका यूथिवेश्येभीतर्कारीषु ना तु दैवज्ञे' ॥*॥ 'अर्ज अर्जने' ( भ्वा० प० से० ) । 'समिकसेः—' (*) इति बाहुलकादुकन्, रस्य जः ॥ (१) ॥*॥ एकम् 'अज्जुकायाः' ॥

**भगिनीपतिरावुत्तः**

**भगिनीति** ॥ आपनमाप् । संपदादिक्विप् ( ३।३।९४ ) आपमुत्तनोति । 'अन्येभ्योऽपि' ( वा० ३।२।१०१ ) । इति डः । आवुत्तः ॥ (१) ॥*॥ भगिन्याः पतिः । एकम् 'भगिनीपतेः ॥

**भावो विद्वान्**

**भाव इति** ॥ भावयति परिभावयति । पचाद्यच् ॥ ( ३।१।१३४ ) । 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु । क्रियालीलापदार्थेषु बुधजन्तुविभूतिषु । रत्यादौ च' ॥ (१) ॥*॥ एकम् 'विदुषः' ॥

**अथावुकः ।**

**जनकः**

**अथेति** ॥ अवति । 'अव रक्षणे' ( भ्वा० प० से० ) । बाहुलकादुकण् । णित्त्वादुपधावृद्धिः ( ७।२।११६ ) ॥ (१) ॥*॥ 'जनकः पितृभूपयोः' । एकम् 'जनकस्य' ॥

**युवराजस्तु कुमारो भर्तृदारकः ॥ १२ ॥**

**युवराज इति** ॥ युवा चासौ राजा च । 'राजा—' ( ५।४।९१ ) इति टच् ॥*॥ कुमारयति । 'कुमार क्रीडायाम्' चु० उ० से० ) । अच् ( ३।१।१३४ ) । 'कुमारोऽश्वानुचारके । युवराजे शिशौ स्कन्दे शुके वरुणपादपे ॥ कुमारं जात्यकनके **कुमारी** त्वपराजिता । नदीभिद्ग्रामतरुणी कन्यका

नवमाल्युमा ॥ जम्बूद्वीपविभागश्च' इति हैमः ॥ (१) ॥*॥ द्रियते। 'दृङ् आदरे' तुदादिः। ण्वुल् ( ३।१।१३३ )। भर्तू राज्ञो दारकः ॥ (२) ॥*॥ द्वे **'युवराजस्य'** ॥

**राजा भट्टारको देवः**

**राजेति** ॥ भटति। 'भट परिभाषणे' ( भ्वा० प० से० )। क्विप् ( ३।२।१७८ ) भट् चासौ तारकश्च। पृषोदरादित्वात् ( ६।३।१०९ ) ष्टुत्वनिषेधो न। यद्वा टलति। 'टल विक्लवे' ( भ्वा० प० से० )। ण्वुल् ( ३।१।१३३ )। रलयोरेकत्वस्मरणम्। भट् चासौ टारकश्च। भट्टं स्वामित्वमृच्छति वा। 'ऋ गतौ' ( भ्वा० प० से० )। 'कर्मण्यण्' ( ३।२।१ ) ततः स्वार्थे कन् ( ५।३।७७ )। **'भट्टारको** नृपे नाट्यवाचा, देवे तपोधने' इति मेदिनी ॥ (१) ॥*॥ दीव्यति। अच् ( ३।३।१३४ )। **'देवं** हृषीके **देवस्तु** नृपतौ तोयदे सुरे' इति हैमः ॥ (२) ॥*॥ द्वे **'राज्ञः'** ॥

**तत्सुता भर्तृदारिका।**

**तत्सुतेति** ॥ भर्तू राज्ञो दारिका ॥ (१) ॥*॥ एकम् **'राज्ञः सुतायाः'** ॥

**देवी कृताभिषेकायाम्**

**देवीति** ॥ अच् ( ३।१।१३४ ) टित्त्वात् ङीप् ( ४।१।१५ )। 'देवी कृताभिषेकायां तेजनीस्पृक्कयोरपि' इति हेमचन्द्रः ॥ (१) ॥*॥ **'बद्धपट्टाया राज्ञ्याः'** एकम् ॥

**इतरासु तु भट्टिनी ॥ १३ ॥**

**इतरास्विति** ॥ भटेः ( भ्वा० प० से० ) तनि ( बाहुलकात् ) भट्टः। सोऽस्त्यस्याः पतित्वेन। भट्टिनी। इनिः ( ५।२।११५ )। **'भट्टिनी** द्विजभार्यायां, नाट्योक्त्या राजयोषिति' ॥ (१) ॥*॥ एकम् **'इतरराज्ञ्याः'**। अत्र विशेषः शब्दार्णवे-'गणिकानुचरैरज्जुकेति नाम्ना नृपेण सा। युवराजस्तु सर्वेण कुमारो भर्तृदारकः ॥ भट्टारको वा देवो वा वाच्यो भृत्यजनेन सः। ब्राह्मणेन तु नाम्नैव राजन्नित्यृषिभिः स च ॥ वयस्य राजन्निति वा विदूषक इमं वदेत्। अभिषिक्ता तु राज्ञासौ देवीत्यन्या तु भोगिनी ॥ भट्टिनीत्यपरैरन्या नीचैर्गोस्वामिनीति सा' इति ॥

**अब्रह्मण्यमवध्योक्तौ**

**अब्रह्मण्यमिति** ॥ वधं नार्हति, इत्युक्तौ। ब्रह्मणि साधु। 'तत्र साधुः' ( ४।४।९८ ) इति यत्। 'ब्रह्मण्यं स्याद्ब्रह्मसाधुब्रह्मदारुशनैश्चरे'। ततो नञ्समासः ( २।२।६ ) ॥ (१) ॥*॥ 'अवध याच्ञायाम्'। इत्येके। एकम् **'वध्यस्य ब्राह्मणादेर्दोषोक्तेः'** ॥

**राजश्यालस्तु राष्ट्रियः।**

**राजेति** ॥ राष्ट्रेऽधिकृतः। 'राष्ट्रावारपाराद्घखौ' ( ४।२।९३ ) इति घः ॥ (१) ॥*॥ एकम् **'राज्ञः श्यालस्य'** ॥

**अम्बा माता**

**अम्बेति** ॥ अम्ब्यते शब्द्यते। 'अबि शब्दे' ( भ्वा० आ० से० ) 'गुरोश्च हलः' ( ३।३।१०३ ) इत्यः ॥ (१) ॥*॥ **'नाट्योक्तौ'** इत्यधिकारस्य प्रायिकत्वादम्बादीनां केषांचिदन्यत्रापि प्रयोगः ॥ एकम् **'मातुः'** ॥

**अथ बाला स्याद्वासूः**

**अथेति** ॥ बाला कुमारी वासूः वास्यते स्वगृहे। वसेः ( भ्वा० प० अ० ) ण्यन्ताद्बाहुलकादूः ॥ (१) ॥*॥ एकम् **'कुमार्याः'** ॥

**आर्यस्तु मारिष ॥ १४ ॥**

**आर्य इति** ॥ अर्तुं योग्यः। 'ऋ गतौ' ( भ्वा० प० अ० )। 'ऋहलोर्ण्यत्' ( ३।१।१२४ )। 'कर्तव्यमाचरन्काममकर्तव्यमनाचरन्। तिष्ठति प्रकृताचारे स तु **आर्य** इति स्मृतः' इति वसिष्ठः। ( आर्यौ सज्जनसौविदौ' ) ॥*॥ मर्षणात्सहनात् मारिषः। पृषोदरादिः ( ६।३।१०९ )। हिंसानिवारकत्वाद्वा। 'रिष हिंसायाम्' ( भ्वा० प० से० )। 'इगुपध-' ( ३।१।१३५ ) इति कः। प्रतिषेधार्थकमाशब्देन समासः। **'मारिषः** शाकभिद्यार्ये नाट्योक्तौ पुंसि भाषितः' इति मूर्धन्यान्ते रभसः। **मार्षश्च**। 'आर्ये मारिष**मार्षकौ'** इति शब्दार्णवात्। **'मारिषः** शाकभिद्यार्ये नाट्योक्त्या पुंसि, योषिति। दक्षाम्बायाम्' ॥ (१) ॥*॥ एकं **'मान्यस्य'** ॥

**अत्तिका भगिनी ज्येष्ठा**

**अत्तिकेति** ॥ अत्ता माता। सैव। 'संज्ञायां कन्' ( ५।३।९७ )। 'अत्तिका **चान्तिका** तथा' इति द्विरूपकोशादन्तिकापि। **'अन्तिकं** निकटे वाच्यलिङ्गं स्त्री सातलौषधौ। चुल्ल्यां ज्येष्ठभगिन्यां च नाट्योक्त्यां कीर्त्यतेऽन्तिका' ॥ (१) ॥*॥ एकम् **'ज्येष्ठभगिन्याः'** ॥

**निष्ठा निर्वहणे समे।**

**निष्ठेति** ॥ नियतं स्थानम्। निष्ठा। 'आतश्चोपसर्गे' ( ३।३।१०६ ) इत्यङ्। 'उपसर्गात्सुनोति-' ( ८।३।६५ ) इति षः। **'निष्ठो**त्कर्षव्यवस्थयोः। क्लेशे निष्पत्तौ नाशेऽन्ते निर्वाहे याचने व्रते' ॥ (१) ॥*॥ निर्वाहो निर्वहणम्। मुख-प्रतिमुख-गर्व-विमर्श-निर्वहणाख्याः पञ्च नाटके संधयः।

---

१—'तातेनाम्ब विहीनोऽसि' 'बालभावेऽहमम्बया' इत्यादावनाट्योक्तावप्यम्बाशब्दप्रयोगः। 'तत्र मातः किमसदृशं करणं वचस्ते' इति वेणीसंहारादौ नाट्योक्तावपि मात्रादीनां प्रयोगः। तस्मादम्बादीनां नाट्ये प्रायशः प्रयोगाद्विधिरयम्। अज्जुकादीनां त्वन्यत्राप्रयोगान्नियमः। एतदेवाह शब्दार्णवकारः—'अथैषां रूपकाराणामुक्तीर्वक्ष्याम्यशेषतः। कासुचिन्नियमस्तत्र विधिरेव च कासुचित्' इति—इति मुकुटः॥ २—सौविदे यथा 'अन्तःपुरं समर्यादमार्यैरेव हि कार्यते' इत्यनेकार्थकैरवाकरकौमुदी ॥ ३—'दक्षस्य मुनेरम्बा जननी' इत्यनेकार्थकैरवाकरकौमुदी ॥ ४—'शोभनौषधेः' इति पाठः ॥

तत्र पञ्चमस्य संधेर्वृत्ते । प्रस्तुतकथासमापनस्येत्यन्ये । 'निर्वहणं तु निष्ठा स्त्री संहारश्च समापने' इति शब्दार्णवः । समे इति । समानार्थे, न तु समानलिङ्गे । शब्दार्णवे लिङ्गभेददर्शनात् । निष्ठा निर्वहणे वर्तते, इति योजना ॥ (२) ॥*॥ द्वे 'निर्वहणस्य' ॥

**हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति ॥ १५ ॥**

**हण्ड इति** ॥ नीचां प्रत्याह्वानं हण्डे । चेटीं प्रति हञ्जे । सखीं प्रति हला । त्रीण्यव्ययानि । हिण्डते । 'हिडि गत्यनादरयोः' (भ्वा० आ० से०) । बाहुलकादेप्रत्ययः, इतोऽकारश्च ॥ (१) ॥*॥ हञ्जे इत्यत्र डस्य जोऽपि ॥ (२) ॥*॥ हलति । 'हल विलेखने' (भ्वा० प० से० ) । बाहुलकादाप्रत्ययः ॥ (३) ॥*॥ हलाशब्दष्टाबन्तोऽपि सखीपर्यायः । तत्र पचाद्यच् (३।१।१३४) । 'बाला वासूः सखी हला' इति स्त्रीकाण्डे बोपालितात् ॥ 'प्रत्येकमेकैकम्' ॥

**अङ्गहारोऽङ्गविक्षेपः**

**अङ्गेति** ॥ अङ्गस्य स्थानात् स्थानान्तरे नयनमङ्गहारः । अङ्गस्य हरणम् । 'हृञ् हरणे' (भ्वा० उ० अ०) । घञ् (३।३।१८) अङ्गुल्यादिविन्यासः ॥ (१) ॥*॥ अङ्गानां विक्षेपः । 'क्षिप प्रेरणे' (तु० उ० अ०) । घञ् (३।३।१८) । 'अङ्गहारस्त्वङ्गहारिर्द्वित्रादिमाम्बिकाम्बिका' इति शब्दार्णवः ॥ (२) ॥*॥ द्वे 'नृत्यविशेषस्य' ॥

**व्यञ्जकाभिनयौ समौ ।**

**व्यञ्जकेति** ॥ व्यनक्ति । 'अञ्जू व्यक्त्यादौ' (रु०प०से०) । ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ अभिनयत्यर्थम् । पचाद्यच् (३।१।१३४) । वाचिकाङ्गिकाहार्यसात्विकभेदाच्चतुर्विधः ॥ (२) ॥*॥ द्वे 'मनोगतभावाभिव्यञ्जकस्य' ॥

**निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके ॥१६॥**

**निर्वृत्ते इति** ॥ अङ्गेन निर्वृत्तं भ्रूविक्षेपादि सत्त्वेन मनोवृत्त्या निर्वृत्तं स्तम्भादि । 'निर्वृत्तेऽक्षद्यूतादिभ्यः' (४।४।१९) इति प्राग्वहतीयष्ठक् ॥ (१) ॥*॥ (२) ॥*॥ 'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका गुणाः' क्रमेणैकैकम् ॥

**शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ।**
**बीभत्सरौद्रौ च रसाः**

**शृङ्गारेति** ॥ शृङ्गारादयोऽष्टौ रसाः । चशब्दाच्छान्तोऽपि नवमः । वात्सल्यं दशमः । रस्यन्ते । 'रस आस्वादने' चुराद्यदन्तः । कर्मणि घञ् (३।३।१९) । 'रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः ॥ देहधातुप्रभेदे च पारदस्वादयोः पुमान् । स्त्रियां तु रसना पाटा शल्लकी कङ्गुभूमिषु' इति विश्वमेदिन्यौ ॥*॥ एकैकम् 'शृङ्गारादिरसानाम्' ॥

**शृङ्गारः शुचिरुज्ज्वलः ॥ १७ ॥**

**शृङ्गार इति** ॥ शृङ्गं प्राधान्यमियर्ति । 'कर्मण्यण्' ( ३।२।१) । 'शृङ्गारो गजमण्डने । सुरते रसभेदे च शृङ्गारं नागसंभवे । (चूर्णे लवङ्गपुष्पे च)' इति हैमः ॥ (१) ॥*॥ उत्तमयुवप्रकृतिकत्वेन जुगुप्सारहितत्वाच्छुचिः । शोचन्त्यनेन वा । 'इगुपधात्कित्' ( उ० ४।१२०) इतीन् । 'शुचिः शुद्धे सितेऽनले । ग्रीष्माषाढानुपहतेषूपधाशुद्धमन्त्रिणि । शृङ्गारे च' इति हेमचन्द्रः ॥ (२) ॥*॥ उच्चैर्ज्वलति प्रकाशते । अच् । (३।१।१३४) । न तु 'ज्वलति—' (३।१।१४०) इति णः । तत्र 'अनुपसर्गात्' इत्यनुवृत्तेः । 'उज्ज्वलस्तु विकासिनी । शृङ्गारे विशदे दीप्तेऽपि' इति हैमः ॥ (३) ॥*॥ त्रीणि 'शृङ्गारस्य' ॥

**उत्साहवर्धनो वीरः**

**उत्साहेति** ॥ उत्साहेन वर्धते । 'वृधु वृद्धौ' (भ्वा० आ० से०) । युच् (३।२।१४९) । उत्साहं वर्धयतीति वा । ल्युः (३।१।१३३) ॥ (१) ॥*॥ वीरमति । 'शूर वीर विक्रान्तौ' चुरादिः । पचाद्यच् (३।१।१३४) । यद्वा विशेषेण ईर्ते ईरयति वा । 'ईर गतौ' (अ० आ० से०) कः (३।१।१३५) । अजति वा रक् (उ० २।१३) । 'वीरो जिने भटे श्रेष्ठे वीरं शृङ्ग्यां नतेऽपि च । वीरा गम्भारिकारम्भातामलक्येलवालुषु ॥ मदिराक्षीरकाकोली काष्ठोदुम्बरिकासु च । पतिपुत्रवतीक्षीरविदारीदुग्धिकास्वपि' इति हेमचन्द्रः ॥ (२) ॥*॥ द्वे 'वीररसस्य' ॥

---

१—शान्तस्यालौकिकत्वेन, वत्सलस्य पुत्रादिस्नेहरूपत्वाद्रत्यात्मकत्वेन, न निर्दिष्टौ—इति स्वामिमुकुटौ । रसा इति । तत्र 'विभावैरनुभावैश्च युक्तो वा व्यभिचारिभिः । आस्वाद्यत्वात्प्रधानत्वात्स्थाय्येव तु रसो भवेत्' इत्युक्तेः रत्यादिः स्थायीभाव एव सामाजिकैश्चर्व्यमाणो रसपदव्यपदेश्यो भवति । तत्र रतिस्थायिभावकः कान्ताद्यालम्बनकः स्रक्चन्दनाद्युद्दीपितः कटाक्षाद्यनुभावितो व्रीडादिसंचारितः शृङ्गारः ।१। उत्साहस्थायिभावको द्विषद्द्विजनादीनालम्बनकोऽपकारगुणापद्युद्दीपितः प्रतीकारकरणदानाद्यनुभावितो हर्षावेशचिन्तादिसंचारितो वीरः ।२। शोकस्थायिभावको मृताद्यालम्बनकस्तद्गुणाद्युद्दीपितो रोदनाद्यनुभावितो दैन्यादिसंचारितः करुणः ।३। विस्मयस्थायिको विस्मयजनककर्मकर्त्रालम्बनको विस्मयकर्माद्युद्दीपितश्चकितताद्यनुभावितो हर्षादिसंचारितोऽद्भुतः ।४। हासस्थायिभावको विकृतकृदालम्बनको वैकृताद्युद्दीपितो गल्लफुल्लनाद्यनुभावितः श्रमादिसंचारितो हास्यः ।५। भयस्थायिभावको विकटाद्यालम्बनकस्तद्विकटकर्माद्युद्दीपितः पलायनाद्यनुभावितो जडतादिसंचारितो भयानकः ।६। जुगुप्सास्थायिभावको विण्मूत्राद्यालम्बनको दुर्गन्धाद्युद्दीपितो निष्ठीवनाद्यनुभावितो ग्लान्यादिसंचारितो बीभत्सः ।७। क्रोधस्थायिभावको द्विषदालम्बनकस्तदपकाराद्युद्दीपितो विकत्थनाद्यनुभावितो गर्वादिसंचारितो रौद्रः ।८। इति तत्तल्लक्षणं बोध्यम् ॥

**कारुण्यं करुणा घृणा ।**
**कृपा दयानुकम्पा स्यादनुक्रोशोऽपि**

**कारुण्यमिति** ॥ करुणः करुणावान् । तस्य भावः । ब्राह्मणादित्वात् (५।१।१२४) ष्यञ् ॥ (१) ॥*॥ करणम् । 'कृवृदारिभ्य उनन्' (उ० ३।५३)। '**करुणो** रसवृक्षयोः । **करुणा** तु कृपायां स्यात्' इति हैमः ॥ (२) ॥*॥ घ्रियन्तेऽनया । 'घृ सेचने' (भ्वा० प० अ०)। बाहुलकान्नक् । '**घृणा** तु स्याज्जुगुप्सायां करुणायाम्' इति हैमः ॥ (३) ॥*॥ कृपणम् । 'कृप कृपायाम्' (भ्वा० आ० से०) । 'कृपेः संप्रसारणं च' (ग० ३।३।१०४) इति भिदादिपाठादङ् । '**कृपो** द्रोणश्यालके स्याद्द्रोणपत्न्यां **कृपी** स्मृता । **कृपा** दयायाम्' ॥ (४) ॥*॥ दयते रक्षत्यनया । 'दय दानगतिहिंसारक्षणेषु' । भिदाद्यङ् (३।३।१०४) ॥ (५) ॥*॥ अनुकम्पनम् । 'कपि किंचिच्चलने' (भ्वा० आ० से०)। 'गुरोश्च' (३।३।१०३) इत्यः ॥ (६) ॥*॥ अनुक्रोशान्त्यनेन । 'क्रुश आह्वाने रोदने च' (भ्वा० प० अ०) । 'हलश्च' (३।३।१२१) इति घञ् ॥ (७) ॥*॥ सप्त '**करुणरसस्य**' ॥

**अथो हसः ॥ १८ ॥**

**हासो हास्यं च**

**अथविति** ॥ हसनम् । 'हसे हसने' (भ्वा० प० से०) 'स्वनहसोर्वा' (३।३।६२) इत्यप् । हसः ॥ (१) ॥*॥ घञि (३।३।१८) हासः ॥ (२) ॥*॥ ण्यति (३।१।१२४) हास्यम् ॥*॥ धात्वर्थनिर्देशे ण्वुलि (वा० ३।३।१०८) हसिकाऽपि । 'तत्र हासो हसो हास्यं **घर्घरं हासिका** स्त्रियाम्' इति शब्दार्णवः ॥ (३) ॥*॥ त्रीणि '**हास्यरसस्य**' ॥

**बीभत्सं विकृतं त्रिष्विदं द्वयम् ।**

**बीभत्समिति** ॥ बधेर्निन्दायां सन् (३।१।६) भावे घञ् (३।३।१८) यद्वा 'अ प्रत्ययात्' (३।३।१०२)। बीभत्साऽस्त्यत्र । अर्श आद्यच् (५।२।१२७) । '**बीभत्सो** नाऽर्जुने, क्रूरघृणात्मविकृते त्रिषु' ॥ (१) ॥*॥ विकरणम्—विकृतम् । जुगुप्साप्रभवत्वात् । 'विष्ठाकामज उद्वेगी क्षोभणो रुधिरादिजः । बीभत्सो द्विविधः' । बीभत्सादिद्वयं तद्वति त्रिलिङ्गम् । प्रज्ञादणि (५।४।३८) वैकृतोऽपि । 'विकृतो वैकृतोऽथाग्रहायण्यामग्रहायणम्' इति शब्दार्णवात् । '**विकृतं** त्रिषु बीभत्से रोगितेऽसंस्कृतेऽपि च' इति विश्वः ॥ (२) ॥*॥ द्वे '**बीभत्सस्य**' ॥

**विस्मयोऽद्भुतमाश्चर्यं चित्रमपि**

**विस्मय इति** ॥ विस्मयनम् । 'स्मिङ् ईषद्धसने' (भ्वा० आ० अ०) । 'एरच्' (३।३।५६) '**विस्मयो**ऽद्भुतदर्पयोः' इति हैमः ॥ (१) ॥*॥ अत् आश्चर्यार्थेऽव्ययम् । तस्य भवनम् । 'अदिभुवो डुतच्' (उ० ५।१) ॥ (२) ॥*॥ आ इति चर्यते अभिनीयते । 'आश्चर्यमनित्ये' (६।१।१४७) इति साधु ॥ (३) ॥*॥ चित्रयति । 'चित्र चित्रकरणे' (चु० उ० से०) ण्यन्तात् पचाद्यच् (३।१।१३४)। ('**चित्रं** खे तिलकेऽद्भुते । आलेख्ये कर्बुरे) **चित्रा**ऽऽखुपर्णीसुभद्रयोः । गोडुम्बाप्सरसोर्दन्त्यां नक्षत्रोरगभेदयोः' इति हेमचन्द्रः ॥ (४) ॥*॥ चत्वारि '**अद्भुतस्य**' ॥

**अथ भैरवम् ॥ १९ ॥**

**दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् ।**
**भयंकरं प्रतिभयम्**

**अथेति** ॥ भीरोरिदम् 'तस्येदम्' (४।३।१२०) इत्यण् । '**भैरवः** पुंसि शंकरे, भीषणे त्रिषु । (रागभेदे च)' ॥ (१) ॥*॥ दारयति चित्तम् । 'दॄ भये' (भ्वा० प० से०) । 'कृविदारिभ्य उनन्' (उ० ३।५३)। '**दारुणो** रसभेदे ना त्रिषु तु स्याद्भयावहे' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ भीषयते । ल्युः (३।१।१३४) षुच् (३।३।१०७) वा । '**भीषणं** रसे शल्लक्यां, ना गाढे दारुणे त्रिषु' ॥ (३) ॥*॥ बिभेत्यस्मात् । 'भियः षुग्वा' (उ० १।१४८) इति मक् षुगागमश्च । '**भीष्मो** रुद्रे च गाङ्गेये राक्षसे च भयंकरे' इति हैमः ॥ (४) ॥*॥ 'भीमादयोऽपादाने' (३।४।७४) । मकि षुगभावे । '**भीमो** वृकोदरे घोरे शंकरेऽप्यम्लवेतसे' इति हैमः ॥ (५) ॥*॥ घोरयति । 'घुर भीमार्थशब्दयोः' (तु० प० से०)। ण्यन्तात् (३।१।२६) अच् (३।१।१३४)। हन्ति वा । 'हन्तेर्घुरच्च' (उ० ५।६४) इत्यच् प्रत्ययो घुरादेशश्च । '**घोरो** हरे दारुणे च' इति हैमः ॥ (६) ॥*॥ बिभेत्यस्मात् । 'ञिभी भये' (जु० प० अ०)। 'आनकः शीङ्भियः–' (उ० ३।८२)। '**भयानकः** स्मृतो व्याघ्रे रसे राहौ भयंकरे' ॥ (७) ॥*॥ भयं करोति । 'मेघर्तिभयेषु कृञः' (३।२।४३) इति खच् ॥ (८) ॥*॥ प्रतिगतं भयेन । प्रादिसमासः (वा० २।२।१८)। प्रति गतं भयमस्मिन् । 'प्रादिभ्यो धातुजस्य–' (वा० २।२।२४) इति वा । '**प्रतिभयं** भये भीष्मे' इति हैमः ॥ (९) ॥*॥ नव '**भयानकरसस्य**' । भेदेन कीर्तनं त्वेषां धर्ममात्रपरत्वात् । भैरवादयस्तु धर्मे धर्मिणि च वर्तन्ते इति भेदः ॥

**रौद्रं तूग्रम्**

**रौद्रमिति** ॥ रुद्रस्येदम् । अण् (४।३।१२०) यत्तु–रुद्रो देवताऽस्य–इति मुकुटेनोक्तम् । तन्न । मन्त्रहविःस्वामिन्या एव देवतात्वात् । '**रौद्रो** भीष्मे रसे तीव्रे **रौद्री** गौर्याम्' इति हैमः ॥ (१) ॥*॥ 'उच समवाये' (दि० प० से०) । 'ऋज्रेन्द्र'–(उ० २।२८) इति रन् । '**उग्रः** शूद्रासुते क्षत्राद्रुद्रे

१—इतः पूर्वं 'दूर्वायाम्' इति लिखितमासीत् । परंतु तत्र भार्गवीशब्दार्थकथनम्—इति न प्रकृतोपयोगि ॥ २—'शृङ्गारो विष्णुदेवः स्याद्धास्यः प्रमथदैवतः । करुणो यमदैवस्तु स्याद्रौद्रो रुद्रदैवतः' इति भरतवाक्यात् ॥

पुंसि, त्रिषूत्कटे । स्त्री वचाक्षुद्रयोः' ॥ (२) ॥*॥ द्वे 'उग्ररसस्य' । महतः क्रोधस्य इति मुकुटः । तन्न रसप्रकरणात् । क्रोधस्य वक्ष्यमाणत्वाच्च ॥

**अमी त्रिषु ॥ २० ॥**

**चतुर्दश**

**अमीति** ॥ अमी अद्भुताद्याश्चतुर्दश तद्वति त्रिषु । स्त्रियां रौद्री भैरवी ॥

**दरस्त्रासो भीतिर्भीः साध्वसं भयम् ।**

**दरेति** ॥ दीर्यतेऽस्मात् । 'दॄ भये' (भ्वा० प० से०) । अप् (३।३।५७) 'दरः स्याद्भयगर्तयोः । दरी तु कन्दरे' इति हैमः ॥ (१) ॥*॥ 'त्रसी उद्वेगे' (दि० प० से०) । घञ् (३।३।१८) । 'त्रासो भये मणेर्दोषे' इति हैमः ॥ (२) ॥*॥ 'ञिभी भये' (जु० प० से०) । क्तिन् (३।३।९४) । 'भीतिर्भये स्त्रियाम् । भीतं भये भीतियुते त्रिषु' ॥ (३) ॥*॥ संपदादित्वात् क्विपि (वा० ३।३।१०८) भीः ॥ (४) ॥*॥ (यत्तु)–साधूनस्यति । अच् (३।१।१३४)–इति मुकुटः । तन्न । अणः (३।२।१) प्रसङ्गात् । तस्मात् 'साधूनामसनम्' ॥ (५) ॥*॥ 'अज्विधौ भयादीनामुपसंख्यानम्' (वा० ३।३।५६) 'भयं भीतौ भयंकरे । कुब्जकपुष्पे' इति हैमः ॥*॥ बाहुलकादङि भिया । 'स्यादर्तनमृतीया च गर्हा, चाथ भयं भिया । (त्रासोत्रासौ दरो भीतमातङ्को भीश्च साध्वसम्)' इति शब्दार्णवात् । 'आशङ्का साध्वसं दरः । भिया च' इति हैमाच्च ॥ (६) ॥*॥ षट् 'भयस्य' ॥

**विकारो मानसो भावः**

**विकार इति** ॥ मनोविकारो रत्यादिर्भावः । भावयति करोति रसान् इति । 'भावोऽभिप्रायवस्तुनोः' इति हैमः ॥ (१) ॥*॥ एकं 'मनोविकारस्य' ॥

**अनुभावो भावबोधकः ॥ २१ ॥**

**अन्विति** ॥ भावस्य सूचको गुणक्रियादिः । 'अनुभावयति' इत्यनुभावः । अनुभावः प्रभावे स्यान्निश्चये भावसूचने' इति मेदिनी ॥ (१) ॥*॥ एकं 'रत्यादिसूचकरोमाञ्चादेः' ॥

**गर्वोऽभिमानोऽहंकारः**

**गर्व इति** ॥ 'गर्व माने' (चु० आ० से०) । घञ् (३।३।१८) ॥ (१) ॥*॥ अभि सर्वतो मानः । 'अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः' ॥ (२) ॥*॥ 'अहम्' इति करणमहंकारः ॥ (३) ॥*॥ त्रीणि 'अहंकारस्य' ॥

**मानश्चित्तसमुन्नतिः ॥ २० ॥**

**मान इति** ॥ (मत्समो नास्ति, इति) मननम् । 'मनु अवबोधने' (त० आ० से०) । घञ् (३।३।१८) । 'मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ ग्रहे' इति हैमः ॥ (१) ॥*॥ चित्तस्य समुन्नतिः ॥ (२) ॥*॥ द्वे (अतियोग्यमपि प्रतिचित्तोत्कर्षप्रत्ययस्य) । गर्वादयः पञ्चापि पर्याया इति तु युक्तम् ॥

**अनादरः परिभवः परीभावस्तिरस्क्रिया ॥ २२ ॥**
**रीढावमाननावज्ञावहेलनमसूर्क्षणम् ।**

**अनादर इति** ॥ न आदरः ॥ (१) ॥*॥ 'परौ भुवः' (।३।३।५५) इति घञो वैकल्पिकत्वात् 'ऋदोरप्' (३।३।५७) ॥*॥ (परापूर्वकादपि भुवोऽपि पराभवः । 'पराभवस्तिरस्कारे नाशे' इति हैमः । 'व्रजन्ति ते मूढधियः पराभवम्' इति प्रयोगश्च) ॥ (२) ॥*॥ 'उपसर्गस्य घञि' (६।३।१२२) इति दीर्घः ॥ (३) ॥*॥ तिरस्करणम् । 'कृञः श च' (३।३।१००) इति शः । 'तिरसोऽन्यतरस्याम्' (८।३।४२) इति सत्वम् ॥ (४) ॥*॥ रेहणम् । 'रिह वधे' (तु० प० से०) औणादिकः क्तः । स्त्रीत्वं लोकात् ॥ (५) ॥*॥ अवमाननम् । मनेर्ण्यन्ताद्युच् (३।३।१०७) ॥ (६) ॥*॥ अवज्ञानम् 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् ॥ (७) ॥*॥ अवहेलनम् । 'हेडृ अनादरे' (भ्वा० आ० से०) । घञ् (३।३।१८) । डलयोरेकत्वम् । 'घञन्ताः पुंसि' इत्यस्य बाधनात् क्लीबत्वम् ॥ (८) ॥*॥ 'सूर्क्ष आदरे' (भ्वा० प० से०) सरेफः । 'नतुं सूर्क्षेत' । 'तत्तत्रसूर्क्ष्यम्' इति (तैत्तिरीयब्राह्मणे) दर्शनात् । तस्माल्ल्युट् (३।३।११५) । नञ्समासः । 'अत्र मुकुटस्य वृथाक्लेश उपेक्षणीयः ॥' (९) ॥*॥ नव 'परिभवस्य' ॥

**मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा**

**मन्दाक्षमिति** ॥ मन्दमक्षं यागायत्र ॥ (१) ॥*॥ 'ह्री लज्जायाम्' (जु० प० अ०) । संपदादि क्विप् ॥ (२) ॥*॥ 'त्रपूष् लज्जायाम्' (भ्वा० आ० से०) । षित्वात् (३।३।१०४) अङ् । 'त्रपा लज्जाकुलटयोः' इति हैमः ॥ (३) ॥*॥ 'व्रीड लज्जायाम्' (दि० प० से०) । 'गुरोश्च' (३।३।१०३) इत्यप्रत्यये व्रीडा ॥*॥ घञि (३।३।१८) 'व्रीडः' अपि । 'गण्डूषगर्जभुजजागरहारकीलज्वालाजटारभसवर्तकगर्धश्रृङ्गाः । व्रीडादयश्च वरटश्च वराटकश्च उत्कण्ठवाणकरकाश्च समामयाश्च' इति स्त्रीपुंलिङ्गकथने रभसः । ('व्रीडोऽक्लीबे त्रपा लज्जा' इति च तेनोक्तम्) ॥ (४) ॥*॥ लज्जनम् । 'ओलस्जी व्रीडे' (तु० प० से०) । अप्रत्ययः (३।३।१०३) । 'झलां जश् झशि' (८।४।५३) ॥ (५) ॥*॥ पञ्च 'लज्जायाः' ॥

**सापत्रपान्यतः ॥ २३ ॥**

**सेति** ॥ सा लज्जा अन्यतश्चेत् सापत्रपा अयं ह्रीमात्रेऽपि । 'ह्रीर्लज्जापत्रपा व्रीडा' इति रत्नकोषात् ॥ (१) ॥*॥ एकम् 'पित्रादेः पुरतो जातलज्जायाः' ॥

---

१—असूक्षणमिति पाठे असूनामुक्षणं तापो यतः इति बोध्यम् । न विद्यते शोभनः क्षणो यस्मात् 'असुक्षणम्' ह्रस्वमध्यमपीति कश्चित् । 'सूर्क्ष अनादरे' ह्रस्वोकारकः । तस्मात्संपूर्वाल्ल्युटि संसूर्क्षणम् । 'संसुर्क्षणमनादरे' इति कोषान्तरेऽपीति धातुप्रदीपः । एवं चाकारादित्वमिह प्रामादिकमित्याहुः इत्यपि मुकुटबुधमनोहरे ॥

**क्षान्तिस्तितिक्षा**

**क्षान्तिरिति** ॥ क्षमणम् । 'क्षमू सहने' दिवादिः । अस्या- षित्त्वात्क्तिन् ( ३।३।९४ ) । 'अनुनासिकस्य क्वि-' ( ६।४। १५) इति दीर्घः ॥*॥ भ्वादेस्तु षित्त्वात् अङ् (३।३।१०४) । तदुक्तम् 'अषितः क्षाम्यतेः क्षान्तिः षितस्तु क्षमतेः क्षमा' इति । ('**क्षमः** शक्ते हिते युक्ते क्षमावति । **क्षमा** क्षान्तौ क्षितौ' इति हैमः ) ॥ (१) ॥*॥ तिजेः ( भ्वा० आ० से० ) क्षमायां सन् (३।१।५) तदन्तादप्रत्यये ( ३।३।१०२ ) टाप् (४।१।४) ॥ (२) ॥*॥ द्वे '**क्षमायाः**' ॥

**अभिध्या तु परस्य विषये स्पृहा ।**

**अभिध्येति** ॥ अभिध्यानम् । 'ध्यै आध्याने' ( भ्वा० आ० से० ) । 'आतश्च' ( ३।३।१०६ ) इत्यङ् ॥ (१) ॥*॥ परस्य विषये चौर्यादिना स्पृहा । '**परस्वविषयस्पृहा**' इति पाठे परस्वे विषयेन चौर्यादिना लिप्सा-इति मुकुटः । वस्तु- तस्तु-परस्वविषयविषयिणीच्छेत्यर्थः ॥ (१) ॥*॥ एकम् '**परद्रव्येच्छायाः**' ॥

**अक्षान्तिरीर्ष्या**

**अक्षान्तिरिति** ॥ न क्षमणम् । क्षाम्यतेः क्तिनि नञ्स- मासः ॥ (१) ॥*॥ ईर्ष्यणम् । 'ईर्ष्य ईर्ष्यायाम्' ( भ्वा० प० से० ) । 'गुरोश्च' ( ३।३।१०३ ) इत्यः ॥ (२) ॥*॥ द्वे '**परोत्कर्षासहिष्णुत्वस्य**' ॥

**असूया तु दोषारोपो गुणेष्वपि ॥ २४ ॥**

**असूयेति** ॥ असूयनम् । 'असूञ् असूयायाम्' । कण्ड्वा- दित्वाद्यकि (३।१।२७) 'अ प्रत्ययात्' (३।३।१०२) इत्यः । 'असूया त्वभ्यसूया च' इति शब्दार्णवः ॥ (१) ॥*॥ '**अर्थदानादिषु गुणेषु दम्भकत्वादिरूपदोषारोप- णस्य**' एकम् ॥

**वैरं विरोधो विद्वेषः**

**वैरमिति** ॥ वीरस्य कर्म । '-वैरमैथुनिकयोः' ( ४।३। १२५) इति निर्देशात् । युवादित्वात् (५।१।१३०) वाण् ॥*॥ (१) ॥*॥ विरोधनम् । विद्वेषणम् । 'रुधिर् आवरणे' (रु० उ० अ०) । 'द्विष अप्रीतौ' (अ० उ० से०) । घञ् (३।३।१८) ॥ (२) ॥*॥ (३) ॥*॥ त्रीणि '**वैरस्य**' ॥

**मन्युशोकौ तु शुक् स्त्रियाम् ।**

**मन्विति** ॥ 'मन ज्ञाने' ( दि० आ० अ० ) । 'मनिज- निदसिभ्यो युः' (उ० ३।२०) '**मन्यु**र्दैन्ये[1] क्रतौ क्रुधि' इति हैमः ॥ (१) ॥*॥ 'शुच शोके' (भ्वा० प० से० ) । घञ् (३।३।१८) ॥ (२) ॥*॥ संपदादित्वात् क्विप् (वा० ३।३। १०८) ॥ (३) ॥*॥ त्रीणि '**शोकस्य**' ॥

१—दैन्ये यथा—'तीव्राभिषङ्गप्रभवेण मन्युना' । क्रोधे यथा- 'मन्युना तेन मन्येऽहं वने वसति केसरी' इत्यनेकार्थकैरवाकरकौमुदी ॥

**पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि ॥ २५ ॥**

**पश्चादिति** ॥ पश्चात्तपनम् । अनुतपनम् । 'तप संतापे' (भ्वा० प० अ०) घञ् (३।३।१८) ॥ (१) ॥*॥ (२) ॥*॥ वितिप्रसरणम् । 'सृ गतौ' (भ्वा० प० अ०) घञ् (३।३।१८) । 'उपसर्गस्य घञि' (६।३।१२२) इति वा दीर्घः । '**विप्रती- सार** उद्दिष्टः कौकृत्येऽनुशये रुषि' इति मेदिनी ॥*॥ (पक्षे ह्रस्वतृतीयोऽपि । '**विप्रतिसार**[1]स्त्वनुशये रुषि । कौकृत्ये' इति हैमः) ॥ (३) ॥*॥ त्रीणि '**किंचित्कृत्वा पश्चात्ता- पस्य**' ॥

**कोपक्रोधामर्ष[2]रोषप्रतिघा रुट्क्रुधौ स्त्रियौ ।**

**कोपेति** । 'कुप क्रोधे' ( दि० प० से० ) । 'क्रुध कोपे' ( दि० प० अ० ) घञ् (३।३।१८) भावे ॥ (१) ॥*॥ (२) ॥*॥ 'मृष तितिक्षायाम्' (दि० उ० से०) । घञ् (३।३।१८) । नञ्समासः (२।२।६) ॥ (३) ॥*॥ 'रुष हिंसायाम्' ( भ्वा० प० से० ) । घञ् (३।३।१८) ॥ (४) ॥*॥ प्रतिहननम् । 'अन्यत्रापि' ( वा० ३।२।४८ ) इति डे न्यङ्क्वादित्वात् (७ ३।५३) कुत्वम् । '**प्रतिघौ** रुट्प्रतीघातौ' इति हैमः ॥*॥ रुट्क्रुधौ संपदादी ( वा० ३।३।१०८ ) ॥*॥ टापि (भागुरि- मतेन) 'क्रोधो **भामः** क्रुधा **रुषा**' इति शब्दार्णवः ॥ (६) ॥*॥ (७) ॥*॥ ('**भामः** क्रोधे रवौ दीप्तौ' ) ॥ सप्त '**कोपस्य**' ॥

**शुचौ तु चरिते शीलम्**

**शुचाविति** ॥ 'शुचौ' इति भाषितपुंस्कत्वात्पुंवद्भावः (७।१।७४) ॥*॥ 'शील समाधाने' (भ्वा० प० से०) । ण्यन्तात् (३।१।२६) ॥ घञ् (३।३।१८) । यद्वा 'शीङो धुक्लुक्वल- न्वालनः' (उ० ८।३८) इति लक् । अर्धर्चादिः (२।४।३१) । '**शीलं** स्वभावे सद्वृत्ते' इति विश्वः । चरित्रमात्रेऽपि शीलम् । '**निष्ठा** च शीलं **चारित्रं चरित्रं चरितं** तथा' इति रत्नको- षात् ॥ (१) ॥*॥ एकम् '**सुस्वभावस्य**' ॥

**उन्मादश्चित्तविभ्रमः ॥ २६ ॥**

**उन्माद इति** ॥ उन्मदनम् 'मदी हर्षे' (दि० प० से०) । घञ् (३।३।१८) ॥ (१) ॥*॥ चित्तस्य विभ्रमोऽनवस्थानम् ॥ (२) ॥*॥ द्वे '**चित्तविभ्रमस्य**' ॥

**प्रेमा ना प्रियता हार्दं प्रेम स्नेहः**

**प्रेमेति** ॥ प्रीणाति प्रियः । 'प्रीञ् तर्पणे' ( क्र्या० उ० से० ) 'इगुपध-' (३।१।१३५) इति कः । तस्य भावः । 'पृ-

१—'प्रापि चेतसि सविप्रतिसारे' इति माघः ॥ २—अमर्षो ह्रस्वादिः । 'किमप्यमर्षोऽनुनये भृशायते' इति भारविः । 'वधूरमर्षात्' इति माघः । 'अन्येषामपि' (६।३।१३७) इति दीर्घत्वे 'दीर्घादिरपि'— इति हट्टचन्द्रः । 'निरुद्योगं निरामर्षं निर्वीर्यमरिनन्दनम्' इति विशाखः इति मुकुटबुधमनोहरे ॥

थ्वादिभ्य इमनिच्' (५।१।१२२) । 'प्रियस्थिर–' (६।४।१५६) इति प्रादेशः । 'प्रेमाक्षी स्नेहनर्मणोः' ॥ (१) ॥*॥ तल् (५।१।११९) प्रियता ॥ (२) ॥*॥ हृदयस्य कर्म। युवादित्वात् (५।१।१३०) अण्। 'हृदयस्य हृल्लेख–' (६।३।५०) इति हृदादेशः ॥ (३) ॥*॥ प्रयणम्। 'प्रीञ् तर्पणे' (क्र्या० उ० से०)। मनिन् (३।२।७५)। प्रेमं नान्तं क्लीबम् ॥ (४) ॥*॥ स्नेहनम्। 'ष्णिह प्रीतौ' (दि० प० से०)। घञ् (३।३।१८)। '**स्नेहः** प्रेम्णि घृतादिके' ॥ (५) ॥*॥ पञ्च '**स्नेहस्य**' ॥

### अथ दोहदम्।

### इच्छा काङ्क्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः २७ कामोऽभिलाषस्तर्षश्च

**अथेति** ॥ दोहमाकर्षं ददाति। 'आतोऽनुप–' (३।२।३) इति कः। अयमिच्छामात्रवाच्यपि विशेषेण गर्भिणीच्छायां प्रयुज्यते। '**दोहदो** गर्भलक्षणे। अभिलाषे तथा गर्भे' इति हैमः ॥ (१) ॥*॥ एषणम्। इच्छा। 'इच्छा' (३।३।१०१) इति सूत्रेण इषेः शप्रत्यये निपातितः ॥ (२) ॥*॥ 'काक्षि वाञ्छि इच्छायाम्' (भ्वा० प० से०)। 'गुरोश्च' (३।३।१०३) इत्यः ॥ (३) ॥*॥ (७) ॥*॥ 'स्पृह ईप्सायाम्' (चु० उ० से०)। भिदादेराकृतिगणत्वादङ् (३।३।१०६) ॥ (४) ॥*॥ 'ईह चेष्टायाम्' (भ्वा० आ० से०)। 'गुरोश्च' (३।३।१०३) इत्यः। ('**ईहो**द्यमवाञ्छयोः')॥ (५) ॥*॥ तर्षणम्। 'ञितृष पिपासायाम्' (दि० प० से०)। संपदादि क्विप् (वा० ३।३।१०८)। ('तृट् लिप्सायामुदन्यायां स्वरपुत्र्यामपि स्त्रियाम्') ॥*॥ (टाबन्तापि भागुरिमते)। ('**तृषा** लिप्सातृषोः स्त्रियाम्') इति मेदिनी ॥ (६) ॥*॥ घञि (३।३।१८)। '**तर्षो** लिप्सोदन्ययोः' ॥ (१२) ॥*॥ लभेः सन्नन्तादः (३।३।१०२) ॥ (८) ॥*॥ मन एव रथोऽत्र। मनो रथ इव वा ॥ (९) ॥*॥ कामनम्। 'कमु कान्तौ' (भ्वा० आ० से०) घञ् (३।३।१८)। '**कामः** स्मरेच्छयोः पुमान्। रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम्' ॥ (१०) ॥*॥ अभिलषणम्। 'लष कान्तौ' (भ्वा० उ० से०)। घञ् (३।३।१८) ॥ (११) ॥*॥ द्वादश '**इच्छायाः**' ॥

### सोऽत्यर्थे लालसा द्वयोः।

**स इति** ॥ स तर्षो महांश्चेत् 'लल ईप्सायाम्' (*)। औणादिकोऽसण्। यद्वा 'लस कान्तौ' (*)। भृशं लसनम्, इत्यर्थे यङन्तादः (३।३।१०२) टाप् (४।१।१०२) घञि तु लालसः। स्त्रीनिर्देश आबन्ततासूचनार्थः। '**लालसौ**त्सुक्यतृष्णातिरेकयाच्ञासु च द्वयोः' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ एकम् '**अतिप्रीतेः**' ॥

### उपाधिर्ना धर्मचिन्ता

**उपाधिरिति** ॥ समीप आधेः। उपपन्न आधिर्वा। '**उपाधिस्तु** धर्मध्याने विशेषणे। कुटुम्बव्यापृते छद्मनि' इति हैमः ॥ (१) ॥*॥ धर्मस्य चिन्ता ॥ (२) ॥*॥ द्वे '**धर्मविचारस्य**' ॥

### पुंस्याधिर्मानसी व्यथा ॥ २८ ॥

**पुंसीति** ॥ आधीयते दुःखमनेन। 'डुधाञ्' (जु० उ० अ०) 'उपसर्गे घोः किः' (३।३।९२) (**आधिर्म**नोतौ व्यसनेऽधिष्ठाने बन्धकाशयोः') ॥ (१) ॥*॥ एकं '**मनःपीडायाः**' ॥

### स्याच्चिन्ता स्मृतिराध्यानम्

**स्यादिति** ॥ चिन्तनम्। 'चिति स्मृत्याम्' (चु० प० से०)। 'चिन्तिपूजि–' (३।३।१०५) इत्यङ्। यत्तु—अप्रत्यये कार्ये 'चिन्तिपूजि–' इत्यङ्विधानं गुणाभावार्थम्। तत्सामर्थ्याण्णिलोपाभावोऽपि, इति '**चिन्तया**' इत्यपि–इति मुकुटेनोक्तम्। तन्न। 'भिदा' इत्यादौ ङित्त्वस्य चरितार्थत्वेन 'व्यवधा' इत्यत्रातोलोपार्थत्वेनोत्तरार्थत्वेन सामर्थ्यविरहात् ॥ (१) ॥*॥ स्मरणम्। 'स्मृ आध्याने' (भ्वा० प० अ०)। क्तिन् (३।३।९४) '**स्मृतिः** स्मरणधीच्छासु शास्त्रे' इति हैमः ॥ (३) ॥*॥ उपधीयते 'ध्यै चिन्तायाम्' (भ्वा० प० अ०)। ल्युट् (३।३।११५) ॥ (३) ॥*॥ त्रीणि '**स्मरणस्य**' ॥

### उत्कण्ठोत्कलिके समे।

**उत्कण्ठेति** ॥ 'कठि शोके' (भ्वा० आ० से०)। उत्कण्ठनम्। 'गुरोश्च–' (३।३।१०३) इत्यः ॥ (१) ॥*॥ उत्कलेः

---

१—नर्मणि यथा—'विधत्ते मत्तेयं निधुवनविधौ प्रेमकलहम्' इत्यनेकार्थकैरवाकरकौमुदी। मेदिन्यां तु 'हर्षयोः' इत्युपलभ्यते। अत्र तु 'मर्मणोः' इति लिखितमासीत् ॥ २—'प्रेम पश्यति भयान्यपदेऽपि' इति भारविः इति मुकुटबुधमनोहरे ॥ ३—हैमे तु नोपलभ्यते ॥ ४—'तृषापि न कृशा मम' इति प्रयोग इति मुकुटबुधमनोहरे ॥

१—धर्मध्याने यथा 'विनोपाधिं शास्त्रं तृणतुषबुसप्रख्यमधुना' ॥ विशेषणे यथा 'नह्युपाधेरुपाधिर्भवति'। कुटुम्बव्यापृते यथा 'उपाधिं बाधन्ते विविधविधिभिर्बान्धवजनाः'। छद्मनि यथा 'चिद्रूपानन्दमयो निःशेषोपाधिवर्जितः शुद्धः' इत्यनेकार्थकैरवाकरकौमुदी ॥ २—बन्धको यदधमर्णेनोत्तमर्णस्य भूम्याद्यायत्तं क्रियते। तत्र यथा–'न भोक्तव्यो बलादाधिः'। आशायां यथा–'धनाधिना धावति जीवलोकः' इत्यनेकार्थकैरवाकरकौमुदी ॥ ३—स्वस्मिन्नुत्तरत्र च चारितार्थ्येऽपि मध्ये 'चिन्तिपूजि–' इत्यत्र ङितोऽनुवृत्तिचारितार्थ्याभावात् 'इह किंचित्तपो' इतिवदत्रापि णिलोपाभावसाधकत्वकल्पने बाधकाभावमभिप्रेत्यैव पीयूषबुधमनोहरयोरपि 'चिन्तिया च' इत्युक्तम्। अतएव 'स्याच्चिन्ता चिन्तिया' इति त्रिकाण्डशेष उक्तम् ॥

'कृञादिभ्यो वुन्' (उ० ५।३५)। क्वुन् (उ० २।३२) वा। ('उत्कलिका तु हेलायां तरङ्गोत्कण्ठयोरपि')॥ (२) ॥*॥ स्त्रीत्वेनापि साम्यम्। द्वे 'कामादिजस्मृतेः'। 'चिन्ता तु स्मृतिराध्यानं स्मरणं, सस्पृहे पुनः। उत्कण्ठोत्कलिके तस्मिन्, अभिध्या तूभयोरपि' इति शब्दार्णवः॥

**उत्साहोऽध्यवसायः स्यात्**

**उत्साह इति**॥ उत्सहनम्। 'षह मर्षणे' (भ्वा० आ० से०) घञ् (३।३।१८)। 'उत्साहस्तूद्यमे सूत्रे'॥ (१) ॥*॥ अध्यवसानम्। 'षोऽन्तकर्मणि' (दि० प० अ०)। घञ् (३।३।१८) 'आतो युक्' (७।३।३३)॥ (२) ॥*॥ द्वे 'उत्साहस्य'॥

**स वीर्यमतिशक्तिभाक्॥ २९॥**

**स इति**॥ स उत्साहः अतिशक्तिभाक्। वीरे साधु। 'तत्र साधुः' (४।४।९८) इति यत्। ('वीर्यं तेजःप्रभावयोः। शुक्रे शक्तौ च') 'अतिशयशक्तिर्वीर्या' इति त्वमरमालायां स्त्रीत्वम्॥ (१) ॥*॥ एकम् 'अतिशयिताध्यवसायस्य'॥

**कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे।**
**कुसृतिर्निकृतिः शाठ्यम्**

**कपट इति**॥ के मूर्ध्नि पट इवाच्छादकः। यद्वा पटतीति पटः। 'पट गतौ' (भ्वा० प० से०)। पचाद्यच् (३।१।१३५)। कस्य ब्रह्मणोऽपि पटो व्यापकः॥ (१) ॥*॥ व्यजन्ति क्षिपन्त्यनेन। 'अज गतिक्षेपणयोः' (भ्वा० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। निष्ठायां सेट्त्वाच्च कुत्वम्। 'व्याजः शाठ्येऽपदेशे च' इति विश्वः॥ (२) ॥*॥ दभ्यतेऽनेन। 'दम्भु दम्भने' (स्वा० प० से०)। घञ् (३।३।१८)। 'दम्भः कल्के कैतवे च' इति हेमचन्द्रः॥ (३) ॥*॥ उपधीयत आरोप्यतेऽनेन। 'उपसर्गे घोः किः' (३।३।९२)। 'उपधिर्व्याजचक्रयोः'॥ (४) ॥*॥ छाद्यतेऽनेन। 'छद अपवारणे' (चु० उ० से०) मनिन् (३।२।७५)। 'इस्मन्त्रन्क्विषु च' (६।४।९७) इति ह्रस्वः। ('छद्म शाठ्येऽपदेशे घातिकर्मणि')॥ (५) ॥*॥ कितवस्य कर्म। युवादित्वात् (५।१।१३०) अण्। 'कैतवं द्यूतदम्भयोः' इति हैमः॥ (६) ॥*॥ कुत्सिता सृतिः। 'सृ गतौ' (भ्वा० प० से०)। क्तिच् (३।३।१७४)। 'कुगति-' (२।२।१८) इति समासः॥ (७) ॥*॥ निकृष्टा कृतिः क्रिया परप्रतारणरूपा, यद्वा पराभीष्टस्य निकर्तनम्। 'कृती छेदने' (तु० प० से०) 'इक् कृष्यादिभ्यः' (वा० ३।३।१०८) इतीक्। 'निकृतिर्भर्त्सने क्षेपे शठे शाठ्येऽपि च स्त्रियाम्' इति विश्वमेदिन्यौ॥ (८) ॥*॥ शठति। 'शठ कैतवे' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। शठस्य कर्म। ब्राह्मणादित्वात् (५।१।१२४) ष्यञ्। यद्वा शठनम्। 'ऋहलोर्ण्यत्' (।३।१।१२४)॥ (९) ॥*॥ नव 'कपटस्य'॥

**प्रमादोऽनवधानता॥ ३०॥**

**प्रमाद इति**॥ 'मदी हर्षे' (दि० प० से०)। भावे घञ् (३।३।१८)। '+प्रमादः संमदे मत्ते स्त्रियामुन्मदयोषिति+'॥ (१) ॥*॥ न अवधानमस्य। तस्य भावः॥ (२) ॥*॥ द्वे 'अविमृष्टकृत्यस्य'॥

**कौतूहलं कौतुकं च कुतुकं च कुतूहलम्।**

**कौतूहलमिति**॥ कुतूं चर्मनिर्मितस्नेहपात्रं हलति। 'हल विलेखने' (भ्वा० प० से०)। मूलविभुजादित्वात् (वा० ३।२।५) कः। यद्वा हलति। पचाद्यच् (३।१।१३४)। कृत्वा हलम्। प्रज्ञाद्यणि (५।४।३८) कौतूहलम्॥ (१) ॥*॥ (अणभावे) 'कुतूहलं कौतुके स्यात्प्रशस्तेऽपि च दृश्यते'॥ (४) ॥*॥ कुतूं कायति। 'कै शब्दे' (भ्वा० प० अ०)। 'आतोऽनुप-' (३।२।३) इति कः। उपपदसमासः (२।२।१९)। 'इको ह्रस्वोऽङ्यः-' (६।३।६१) इति ह्रस्वः। प्रज्ञाद्यण् (५।४।३८) वा। यद्वा कुतौ भवम्। अध्यात्मादित्वात् (वा० ४।३।६०) ठञ्। 'इसुसुक्-' (७।३।५१) इति कः। 'केऽणः' (७।४।१३) इति ह्रस्वः। संज्ञापूर्वकत्वात्पक्षे वृद्ध्यभावः। यत्तु-'तुज हिंसायाम्' (भ्वा० प० से०)। कुं तुजति। 'मूलविभुज-' (वा० ३।२।५) इति कः। न्यङ्क्वादित्वात् (७।३।५३) कुत्वम्-इति मुकुटेनोक्तम्। तन्न। कुत्वे आन्तरतम्याज्जस्य गत्वप्रसङ्गात्। ('कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि। पारम्पर्यागतख्यातमङ्गलोद्वाहसूत्रयोः। गीतादौ भोगकाले च')॥ (२) ॥*॥ (३) ॥*॥ चत्वारि 'कौतुकस्य'॥

**स्त्रीणां विलासबिब्बोकविभ्रमा ललितं तथा॥ ३१॥**
**हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः।**

**स्त्रीणामिति**॥ शृङ्गाराद्रत्यादेः भावान्मनोविकाराच्च जाताः (स्त्रीणाम्) क्रियाश्चेष्टा अलंकाराख्या विलासादिका हावशब्दवाच्याः। हवनम्। 'हु दानादनयोः' (जु० प० अ०)। 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' इत्यविषये घञ् (३।३।१८)। यत्तु—मुकुट आह-शृङ्गारभावो रतिः। तज्जा-इति। तन्न। 'शृङ्गारभावः' इति समुदायस्य रतिवाचकत्वाभावात्। यदपि—ह्वृ हवने-

१—एतदग्रे 'कैतवः कितवे शत्रौ' इत्यपि लिखितमासीत्। परंतु हैममेदिन्योः कैरवशब्दस्यैव दर्शनात् अनेकार्थकैरवाकरकौमुद्यामपि 'त्वयि भास्वत्युदिते सर्वतेजोभिभाविनि। उन्मीलति धरानाथ किं, कैरवकुलं क्वचित्' इत्येवोदाहृतम्। इति न प्रकृतोपयुक्तम्॥

१—प्रमदशब्दव्याख्यायामस्य कोशस्योपन्यस्तत्वेन, प्रमदाशब्दव्याख्यायामुपन्यसिष्यमाणत्वेन च तत्र मेदिन्यां च प्रमदशब्दस्यैवोपादानेन नेदं प्रकृतोपयोगि॥

इत्युक्तम् । तदपि न । एतादृशस्य धातोरभावात् । यदपि—उक्तार्थे भरतस्य संमतिरुपन्यस्ता । ‘अलंकारश्च नाट्यज्ञैर्ज्ञेया भावरसाश्रयाः । यौवनेऽभ्यधिकाः स्त्रीणां विकारा वक्त्रगात्रजाः’ इति । तत्रापि ‘भावरसाश्रयाः’ इत्यनेनास्मदुक्त एवार्थो लभ्यते, न भवदुक्तः । यत्तु—ह्वयन्त्यनेनेति हावः—इति स्वामिनोक्तम् । तन्न । ह्वेञो घञि संप्रसारणाविधानात् ॥ (१) ॥*॥ विलसनम् । ‘लस श्लेषणे’ (भ्वा० प० से०) घञ् (३।३।१८) । ‘**विलासो**[1]ऽङ्गे विशेषो यः प्रियाप्तावासनादिषु’ । ‘**विलासो** हावभेदे स्याल्लीलायामपि पुंस्ययम्[2]’ ॥ (१) ॥*॥ विवानम् । ‘वा गतौ’ (अ० प० अ०) विवुर्गतिविशेषः । (यत्तु) ‘अपष्ठ्वादयः’ इति कुः—इति मुकुटः । तन्न । तादृशसूत्रादर्शनात् । ‘मृगय्वादयश्च’ (उ० १।३७) इति तूचितम् । उच्यते समवैत्यत्र । ‘उच समवाये’ (दि० प० से०) । ‘हलश्च’ (३।३।१२१) इति घञर्थे । यद्वा ‘कः’ (वा० ३।३।५८) । ‘ओक उचः के’ (७।३।६४) इति निपातितः । विवोरोकः स्थानम् । **विव्वोको**[3]ऽभिमतप्राप्तावपिगर्वादनादरः ॥ (१) ॥*॥ विभ्रमणम् ‘भ्रमु अनवस्थाने’ (दि० प० से०) घञ् (३।३।१८) । ‘नोदात्तोपदेश—’ (७।३।३४) इति न वृद्धिः । ‘चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो[4] मतः’ । ‘अथ **विभ्रमः** । शोभायां संशये हावे’ इति हैमः । ‘**विभ्रमो** भ्रान्तिहावयोः[5]’ ॥ (१) ॥*॥ ‘लल ईप्सायाम्’ ॥ (*) ॥ ‘लड विलासे’ (भ्वा० प० से०) वा । डलयोरभेदः भावे क्तः (३।३।११४) ‘अनाचार्योपदिष्टं स्याल्ललितं[6] रतिचेष्टितम्’ । (‘**ललित**मीप्सिते । लडिते हावभेदे स्यात्’) ॥ (१) ॥*॥ ‘हिल भावकरणे’ (तु० प० से०) । ‘हेडृ अनादरे’ (भ्वा० आ० से०) भावे घञ् (३।३।१८) । ‘स्याद्भावसूचको हावो हेलाऽस्यैवानुभावनम्’ । ‘प्रौढेच्छा सुरते हेला[1]’ इति वा । (‘**हेला** स्त्रियामवज्ञायां विलासे वारयोषिताम्’) ॥ (१) ॥*॥ लयनम् । लीः । ‘लीङ् श्लेषणे’ (दि० आ० अ०) । संपदादित्वात् (वा० ३।३।१०८) क्विप् । लियं लाति । ‘ला आदाने’ (अ० प० अ०) । ‘आतोऽनुप—’ (३।२।३) इति कः । ‘प्रियस्यानुकृतिर्लीला[2] श्लिष्टा वाग्वेषचेष्टितैः’ । ‘**लीला** केलिर्विलासश्च शृङ्गारभावजा क्रिया’ ॥ (१) ॥*॥ इति शब्दार्णवात्प्रकारार्थादन्येऽपि ज्ञेयाः । ‘लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् । मोट्टायितं कुट्टमितं विव्वोको ललितं तथा ॥ विहृतं चेति मन्तव्या दश स्त्रीणां स्वभावजाः’ इति नाटकरत्नकोशः । विच्छेदनम् । ‘च्छिदिर् द्वैधीकरणे’ (रु० उ० अ०) । क्तिन् (३।३।९४) । ‘मण्डनानादरन्यासो विच्छित्ती[3] रूपदर्पतः’ (‘**विच्छित्तिः** स्यादङ्गरागे हावविच्छेदयोरपि’) ॥ (१) ॥*॥ किलकिञ्चितमत्र । हर्षाद्रुदितगीतादिव्यामिश्रं **किलकिञ्चितम्**’ । स्वामी तु—किलकिञ्चितम्[4]—इति पाठं मन्यते । यदाह ‘किलीति कण्ठकूजितम्’ वा । यथा ‘किलिकिलारावः’ इति ॥ (१) ॥*॥ मोटनम् । ‘मुट प्रमर्दने’ (तु० प० से०) । घञ् (३।३।१८) । बाहुलकाद्धनस्तुट् । भृशादि (३।१।१२) क्यङन्ताद्भावे क्तः (३।३।११४) । ‘**मोट्टायितं**[5] प्रियं स्मृत्वा साङ्गभङ्गविजृम्भणम्’ । यत्तु—मोट्टनम् । मोट्टः—इति मुकुटः । तन्न । मोट्टधातोरदर्शनात् । यदपि—लोहितादि (३।१।१३) क्यषन्ताद्भावे क्तः—इति ॥ तदपि न । ‘लोहितादिडाज्भ्यः क्यष्वचनम्’ ‘भृशादिष्वितराणि’ इति वार्तिकविरोधात् ॥ (१) ॥*॥ कुट्टनम् । ‘कुट्ट छेदनादौ’ (चु० प० से०) घञ् (३।३।१८) कुट्टेन निर्वृत्तम् । भावप्रत्ययान्तादिमप् ( वा० ४।४।२० ) । ततो ण्यन्तात् ( वा० ३।१।२६) भावे क्तः (३।३।११४) ॥ तारकादित्वात् (५।२।३६) इतच् वा । ‘दुःखोपचारः सौख्येऽपि हर्षात्**कुट्टमितं**[6] मतम्’ ॥ (१) ॥*॥ विहरणम् । भावे क्तः

---

१—तत्र प्रियसमीपगमने यः स्थानासनगमनविलोकितेषु विकारोऽकस्माच्च क्रोधस्मितचमत्कारमुखविक्लवनं स विलासः ॥ २—एतदग्रे ‘**वीतंसो** बन्धनोपाये मृगाणामपि पक्षिणाम् । तेषामेव च विश्वासहेतौ प्रावरणेऽपि च’ इत्यपि लिखितमस्ति । तत्तु वीतंसशब्दार्थबोधकतया प्रकृतानुपयुक्तम् ॥ ३—अभिमतप्राप्तावपि गर्वादनादरः, सापराधस्य स्रक्चन्दनादिना संयमनं ताडनं च विव्वोकः ॥ ४—मदरागहर्षजनितो विपर्यासो विभ्रमः । यथा अनिमित्तमासनादुत्थायान्यत्र गमनम्, प्रियारब्धकथामाक्षिप्य सख्या सहालापनम्, मुधैव रुषितक्रोधौ, पुष्पादीनां याच्ञा सहसैव तत्परित्यागः, वस्त्राभरणमाल्यानामकारणतः खण्डनम्, मननं च इति । योषितां यौवनजो विकारो विभ्रमः इत्येके ॥ ५—एतदग्रे ‘विभ्रमो रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम्’ इति लिखितमस्ति । परंतु मेदिन्यादिषु ‘विद्रुमः’ इत्यस्यैवोपलम्भेन न प्रकृतोपयोगि ॥ ६—सुकुमारविधानेन भ्रूनेत्रादिक्रियासचिवकरचरणाङ्गन्यासो ललितम् । यथा—चरणनिपातझणज्झणनूपुरमसृणसंचरणे रेखाविशेषस्थितत्रिवलिभङ्गसंस्थानसमुल्लसितभुजम्, उरःस्थलप्रसारणाद्द्विगुणपृथुकृतं स्तनस्तबकम्, स्कन्धासक्तैककुण्डलम्, उल्लसितभ्रूसाचीकृतविलोलितम् इति ॥ प्रियं प्रति भावाविष्कृतं ललितमित्यन्ये ॥

१—सुरते प्रौढेच्छा हेला ॥ २—अलब्धप्रियसमागमया स्वचित्तविनोदार्थं प्रियस्य या वेषगतिदृष्टिहसितभणितैरनुकृतिः क्रियते सा लीला ॥ ३—आभरणविलेपनादीनां कुतश्चित्प्रियापराधादीर्ष्ययानादरेण त्यक्तानां सखीनां प्रयत्नाद्धारणं विच्छित्तिः ॥ प्रियेण दत्तं प्रीतिनिबन्धनं स्वल्पमपि भूषणं विच्छित्तिरित्यन्ये ॥ ४—इष्टजनदर्शनवशात् शुष्करुदितहसितत्रसितक्रोधश्रमाभिलापानां संकरीकरणं किलिकिञ्चितम् ॥ ५—प्रियकथासु साङ्गभङ्गजृम्भणं कर्णकण्डूयनं मोट्टायितम् ॥ ६—सुरतेषु गाढपरिपीडने केशस्तनादिग्रहणे च हर्षात्सुखेऽपि दुःखाविक्रिया, दुःखेऽपि सुखाविक्रिया कुट्टमितम् ॥

(३।३।११४)। 'वक्तव्यभाषणं व्याजाद्विहृतं दर्शितेङ्गितम्' ॥ (१) ॥*॥ इति ॥

**द्रवकेलिपरीहासाः क्रीडा खेला च नर्म च ॥ ३२ ॥**

**द्रवेति** ॥ द्रवणम् । 'द्रु गतौ' (भ्वा० प० अ०)। 'ऋदोरप्' (३।३।५७)। '**द्रवो** विद्रवनर्मणोः । प्राद्रवे रसगत्योश्च' इति हैमः ॥ (१) ॥*॥ केलनम् । 'किल क्रीडायाम्' (तु० प० से०)। 'केलृ चलने' (भ्वा० प० से०) वा । इन् (उ० ४।११८)। (**केली** इति स्त्रियामपि । 'केलीषु तद्गानगुणान्निपीय' इति नैषधात् । इति मुकुटः) ॥ (२) ॥*॥ परिहसनम् 'हसे हसने' (भ्वा० प० से०)। घञ् (३।३।१८)। 'उपसर्गस्य घञि' (६।३।१२२) इति दीर्घः ॥ (३) ॥*॥ क्रीडनम् । 'क्रीडृ विहारे' (भ्वा० प० से०)। 'गुरोश्च–' (३।३।१०३) इत्यः । '**क्रीडा** केलिप्रकारे स्यात्खेलावेज्ञानयोरपि' (इति विश्वमेदिन्यौ) ॥ (४) ॥*॥ खेलनम् । 'खेलृ चलने' (भ्वा० प० से०)। 'गुरोश्च–' (३।३।१०३) इत्यः । मुकुटस्तु 'खेला' इत्यस्य स्थाने 'लीला' इति पठति ॥ (५) ॥*॥ नरणम् । 'नॄ नये' (भ्वा० प० से०)। मनिन् (३।२।७५) ॥ (६) ॥*॥ षट् '**क्रीडायाः**' ॥

**व्याजोऽपदेशो लक्ष्यं च**

**व्याज इति** ॥ (१) ॥*॥ अपदेशनम् । 'दिश अतिसर्जने' (तु० उ० अ०)। घञ् (३।३।१८)। ('**अपदेशः** पुमाँल्लक्ष्ये निमित्तव्याजयोरपि') ॥ (२) ॥*॥ लक्षणम् । 'लक्ष आलोचने' (चु० आ० से०)। ण्यत् (३।३।१२४)। '**लक्ष्यं** स्यादपदेशेऽपि शरव्येऽपि नपुंसकम्' इति मेदिनी ॥*॥ घञन्तोऽपि । 'संख्यायां च न ना **लक्षं** क्लीबं व्याजशरव्ययोः' इति मूर्धन्यान्ते रभसात् ॥ (३) ॥*॥ त्रीणि '**स्वरूपाच्छादनस्य**' ॥

**क्रीडा खेला च कूर्दनम् ।**

**क्रीडेति** ॥ (१) ॥*॥ खेलनम् । 'गुरोश्च' (३।३।१०३) इत्यः ॥ (२) ॥*॥ 'कुर्द क्रीडायाम्' (भ्वा० प० से०)। ल्युट् (३।३।११५)। 'र्वोरुपधायाः–' (८।२।७६) इति दीर्घः । यत्तु—'स्फूर्ज' इति लिङ्गात् कुर्दादीनां न दीर्घः (इति धर्मदासः)। 'र्वोः' इति विधेरनित्यत्वम्—इति कश्चित् (पूर्णचन्द्रः) आह । तन्न । 'स्फूर्ज' इति स्वरूपनिर्देशार्थं दीर्घानुच्चारणात् । दीर्घविधेः सत्त्वाच्च । यदि 'विधिप्राप्तं कृत्वैव निर्देष्टव्यम्' इति नियमः स्वीक्रियते तदा 'एशिरेचोरेत्वाभावस्याज्ञापकत्वं स्यात्' एत्वस्य लक्षणप्राप्तत्वात् । अतएव 'दीर्घाभावस्तु चिन्त्यः' इति स्वामिग्रन्थोऽपि संगच्छते ॥ (३) ॥*॥ त्रीणि '**कन्दुकादिक्रीडनस्य**' ॥

**घर्मो निदाघः स्वेदः स्यात्**

**घर्म इति** ॥ जिघर्त्यङ्गमनेन । 'घृ क्षरणदीप्त्योः' (जु० प० अ०)। 'घर्म–' (उ० १।१४९) इति निपातितः । यत्तु–'घरति' इति विग्रहप्रदर्शनं मुकुटेन कृतम् । तत्तु 'घृ क्षरणे' इति धातूपन्यसनेन विरुध्यते । घरत्यङ्गमनेन वा । 'घृ सेके' (भ्वा० प० अ०)। ('**घर्मः** स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्बुनोरपि') ॥ (१) ॥*॥ निदह्यतेऽनेन । 'हलश्च' (३।३।१२१) इति घञ् । न्यङ्क्वादिः (७।३।५३) ॥ (२) ॥*॥ स्विद्यतेऽनेनाङ्गम् । घञ् (३।३।१२१)। '**स्वेदो** घर्मे स्वेदने च' इति हैमः ॥ (३) ॥*॥ त्रीणि '**प्रस्वेदहेतोस्तापस्य**' ।—अङ्गजलस्य–इति मुकुटः । तन्न । स्वकृतकरणविग्रहविरोधात् । नहि जलेन प्रस्विद्यते । वस्तुतस्तु-भावकर्मव्युत्पत्त्या सोऽप्यर्थः ॥

**प्रलयो नष्टचेष्टता ॥ ३३ ॥**

**प्रलय इति** ॥ प्रलयनम् । लीङ् (दि० आ० अ०)। 'एरच्' (३।३।५६)। '**प्रलयो** मृत्युकल्पान्तमूर्च्छापायेषु पुंस्ययम्' ॥ (१) ॥*॥ नष्टा चेष्टा यस्य । तस्य भावः । तल् (५।१।११९) ॥ (२) ॥*॥ द्वे '**सात्त्विकभावस्य**' मूर्च्छापरपर्यायस्य । हर्षशोकादिभिः सकलचेष्टानाशस्येत्यर्थः ॥

**अवहित्थाकारगुप्तिः**

**अवेति** ॥ अवहिः स्थितिरवहित्था । 'सुपि स्थः' (३।२।४) इत्यत्र 'स्थः' इति योगविभागात्कः । पृषोदरादिः (६।३।१०९) ॥ (१) ॥*॥ आकारस्य शोकादिजनितमुखम्लान्यादेर्गोपनम् । क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे '**आकारगोपनस्य**' ॥

**समौ संवेगसंभ्रमौ ।**

**समाविति** ॥ संवेजनं संचलनम् । 'ओविजी भयचलनयोः' (तु० आ० से०)। घञ् (३।३।१८) ॥ (१) ॥*॥ संभ्रमणम् । घञ् (३।३।१८)। '**संभ्रमः** साध्वसेऽपि स्यात्संवेगादरयोरपि' ॥ (२) ॥*॥ द्वे '**हर्षादिना कर्मसु त्वरणस्य**' ॥

---

१—'अवसरागतं वचनं व्याजादिना हृतं विहृतम्'–इति मुकुटः ॥ २—विद्रवे पलायने यथा 'द्रवन् द्रविडराजोऽपि शिश्रिये त्वरया द्रुतम्' । प्राद्रवे प्रस्रवणे यथा—'जालेन चन्द्रमणिनैव महीधरस्य संचार्यते द्रवमयो मनसो विकारः' इत्यनेकार्थकैरवाकरकौमुदी ॥ ३—'आसवे' इति पाठः पुस्तकान्तरे ॥ ४—अवज्ञाने अनादरे यथा—'तस्य द्वयमपि क्रीडा क्रीडा दलितदन्तिनः' इत्यनेकार्थकैरवाकरकौमुदी ॥ ५—परिहासस्य–इति बुधमनोहरा ॥ ६—व्याजोऽत्र स्वरूपाच्छादनम् । यथा 'ध्यानव्याजमुपेत्य चिन्तयसि काम्' इति । पूर्वोक्तो व्याजः परद्रोहफलः । तथा च पञ्चिकायाम्—'कपटार्थो व्याजः परद्रोहफलः, अपदेशार्थस्त्वन्यदुद्दिश्यान्यार्थमनुष्ठानम् । यथा जलक्रीडामपदिश्यान्यार्थं याति' इति—इति मुकुटः ॥

१—'अवहित्थमथोग्रता' इति भरतोक्तेः क्लीबमपि—इति मुकुटपीयूषबुधमनोहराः ॥

**स्यादाच्छुरितकं हासः सोत्प्रासः**

**स्यादिति** ॥ उत्प्रासनम् । 'असु क्षेपणे' (दि० प० से०) । 'अस गतिदीप्त्यादानेषु' ( भ्वा० उ० से० ) । वा घञ् ( ३।३।१८ ) । उत्प्रासेनाधिक्येन क्षेपणेन वा सहितः सोत्प्रासः । आच्छुरणं परच्छेदनं । 'छुर छेदने' ( तु० प० से० ) । भावे क्तः (३।३।११४) । स्वार्थे कन् (५।३।७७) भावे '**स्यादाच्छुरितकं** हासनखराघातभेदयोः' ॥ (१) ॥*॥ एकं '**परस्यामर्षजनकहासस्य**' ॥

**स मनाक् स्मितम् ॥ ३४ ॥**

**स इति** ॥ स हासो मनागल्पः । 'स्मिङ् ईषद्धसने' (वा० आ० अ०) । भावे क्तः (३।३।११४) 'ईषद्विकसितैर्दन्तैः कटाक्षैः सौष्ठवान्वितैः । अलक्षितद्विजद्वारमुत्तमानां स्मितं भवेत्' ॥ (१) ॥*॥ एकम् '**ईषद्धासस्य**' ॥

**मध्यमः स्याद्विहसितम्**

**मध्यम इति** ॥ स हासो मध्यमो महत्त्वाल्पत्वहीनः । 'हसे हसने' ( भ्वा० प० से० ) । भावे क्तः ( ३।३।११४ ) 'आकुञ्चितकपोलाक्षं सस्वनं निःस्वनं तथा । प्रस्तावोत्थं सानुरागमाहुर्विहसितं बुधाः' ॥ (१) ॥*॥ एकम् '**मध्यमहासस्य**' ॥

**रोमाञ्चो रोमहर्षणम् ।**

**रोमाञ्च इति** ॥ रोम्णामञ्चनं पूजनम् । घञ् (३।३।११८) 'चजोः–' (७।४।५२) इति सूत्रे 'निष्ठायामनिटः' इति पूरितलादस्मात्तु 'अञ्चेः पूजायाम्' (७।२।५३) इति क्त्वानिष्ठयोरिड्विधानाच्च कुत्वम् । यत्तु—'न क्वादेः' (७।३।५९) इति योगविभागाच्च कुत्वम्—इति भाषावृत्त्युपन्यसनं मुकुटस्य । तन्न । तस्य वार्तिककृता ( 'निष्ठायामनिटः' इति वार्तिकेन ) प्रत्याख्यानात् । यथोत्तरं मुनीनां प्रामाण्यात् ॥ (१) ॥*॥ रोम्णां हर्षणम् ॥ (२) ॥*॥ पुलक-कण्टक रोमविक्रिया–रोमोद्गमाश्चात्रैव । ('**पुलको** गजान्नपिण्डे रोमाञ्चे प्रस्तरान्तरे । असुराज्यां मणिदोषे चषके तालके कृमौ' ) । ( '**कण्टकः** क्षुद्रवैरिणि । वेणौ द्रुमाङ्गे रोमाञ्चे' । 'पुलकः पुनः । रोमाञ्चकण्टकौ रोमविक्रिया रोमहर्षणम् । **रोमोद्गम उद्धर्षणमुल्लासनक**मित्यपि' । इति हैमात् ) । द्वे '**रोमाञ्चस्य**' ॥

**क्रन्दितं रुदितं क्रुष्टम्**

**क्रन्दितमिति** ॥ 'क्रदि रोदने' ( भ्वा० प० से० ) । क्तः ( ३।३।११४ ) 'अथ **क्रन्दित**माह्वाने रुदिते च नपुंसकम्' ॥ (१) ॥*॥ 'रुदिर् अश्रुविमोचने' ( अ० प० से० ) । भावे क्तः ( ३।३।११४ ) ॥ (२) ॥*॥ 'क्रुश रोदने' (भ्वा० प० से० ) । क्तः ( ३।३।११४ ) । ( '**क्रुष्टं** रोदनरावयोः' ॥ (३) ॥*॥ त्रीणि '**रोदनस्य**' ॥

**जृम्भस्तु त्रिषु जृम्भणम् ॥ ३५ ॥**

**जृम्भ इति** ॥ 'जृभि गात्रविनामे' ( भ्वा० आ० से० ) । घञ् ( ३।३।१८ ) 'गुरोश्च–' ( ३।३।१०३ ) इत्यः । '**जृम्भा** विकासजृम्भणयोस्त्रिषु' । घञन्तस्यैव क्लीबत्वमपि । 'लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः' इति वक्ष्यमाणत्वात् । यत्तु—जृम्भं तु, अज्विधौ भयाधिपाठात्–इति मुकुटेनोक्तम् । तन्न । 'अज्विधौ' इत्युक्तत्वेन क्लीबत्वस्याविधानात् ॥ (१) ॥*॥ ल्युटि (३।३।११५) जृम्भणम् ॥ (२) ॥*॥ द्वे '**मुखादिविकासस्य**' ॥

**विप्रलम्भो विसंवादः**

**विप्रेति** ॥ विशेषेण प्रलम्भनम् । 'डुलभष् प्राप्तौ' (भ्वा० आ० अ० ) । विरुद्धं सम्यक् वदनम् । घञ् ( ३।३।१८ ) ॥ (१) ॥*॥ (२) ॥*॥ द्वे '**अङ्गीकृतासंपादनस्य**' ॥

**रिङ्गणं स्खलनं समे ।**

**रिङ्गणमिति** ॥ 'रिगि गतौ' (भ्वा० प० से० ) । 'स्खल संचलने' ( भ्वा० प० से० ) । भावे ल्युट् ( ३।३।११५ ) ॥ (१) ॥*॥ (२) ॥*॥ 'रिखि गतौ' ( भ्वा० प० से० ) इत्येके ( तन्मते रिङ्खणम् ) । द्वे '**धर्मादेश्चलनस्य**'—इति स्वामी, बालानां हस्तपादगमनस्य–इत्यन्ये, पिच्छिलादौ पतनस्य इत्यपरे ॥

**स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ॥ ३६ ॥**

**स्यादिति** ॥ निद्राणम् । 'द्रा कुत्सायां गतौ' ( आ० प० अ० ) । 'आतश्चोप–' ( ३।३।१०५ ) इत्यङ् । निन्दनम्, निन्द्यतेऽनया, इति वा । 'निन्देर्नलोपश्च' ( उ० २।१७ ) इति रग्, इति वा ॥ (१) ॥*॥ 'शीङ् स्वप्ने' ( अ० आ० से० ) । भावे ल्युट् ( ३।३।११५ ) । '**शयनं** सुरते निद्राशय्ययोश्च नपुंसकम्' ॥ (२) ॥*॥ 'ञिष्वप् शये' ( अ० प० अ० ) । घञ् (३।३।१८) । '**स्वापः** शयननिद्रयोः । स्पर्शाज्ञतायामज्ञाने' ॥ (३) ॥*॥ 'स्वपो नन्' ( ३।३।९१ ) । '**स्वप्नः** स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्' ॥ (४) ॥*॥ संवेशनम् । 'विश प्रवेशने' (तु० प० अ०) । घञ् (३।३।१८) । '**संवेशः** स्वापस्त्रीरतबन्धयोः' ॥ (५) ॥*॥ 'सुप्तिः' अप्यत्र । ('**सुप्तिः** स्पर्शाज्ञतानिद्राविश्रम्भे शयने स्त्रियाम्' इति मेदिनीतः ) ॥*॥ पञ्च '**निद्रायाः**' ॥

**तन्द्री प्रमीला**

**तन्द्रीति** ॥ तत्पूर्वाद्द्रातेः 'स्पृहिगृहि–' ( ३।२।१५८ ) इत्यादिना 'तन्द्रा' इति निपात्यते । तन्द्रायाः करणम् । 'तत्करोति–' ( वा० ३।१।२६ ) इति ण्यन्ताद् 'अच इः' ( उ० ४।१३९ ) । **तन्द्रिः** । 'कृदिकारात्–' ( ग० ४।१।४५ ) इति ङीष् वा । '**तन्द्री** निद्राप्रमीलयोः' । णिजभावे '**तन्द्रा**' इत्यपि । मुकुटस्तु—इन्द्रियाणां तननं द्रात्यस्याम् । तन्द्रधातोः सौत्रान्मूर्च्छार्थात् 'तन्द्रेरिवीतौ' इति ह्रस्वेकार-

प्रत्यये तन्द्रिः। ङीषि तन्द्री। दीर्घेकारप्रत्यये लक्ष्मीशब्दवच–इत्याह। तन्न। द्रातिना विगृह्य सौत्रधातोरुपन्यासस्य विरुद्धत्वात्। 'तंद्रो नान्तत्वनिपातनाभ्युपगमविरोधात्'। 'तन्द्रेरिदीतौ' इति सूत्रस्यादर्शनाच्च। ईप्रत्ययविधायकाभावाच्च। (यदपि) 'तन्द्रिस्तन्द्री तन्द्रीस्तन्द्रा' इति रूपचतुष्टयम्। इत्युक्तम्। तदपि न। दीर्घविसर्गान्ते प्रमाणाभावात् ॥ (१) ॥*॥ प्रमीलनम्। 'मील निमेषणे' (भ्वा० प० से०) 'गुरोश्च' (३।३।१०३) इत्यः ॥ (२) ॥*॥ द्वे 'अत्यन्तश्रमादिना सर्वेन्द्रियासामर्थ्यस्य' ॥

**भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम्।**

**भ्रकुटिरिति** ॥ 'कुट कौटिल्ये' (तु० प० से०)। 'इगुपधात्कित्' (उ० ४।१२०) इतीन्। 'भ्रुवोः कुटिः, भ्रकुंसवत्त्रैरूप्यम्। 'पृषोदरादित्वादीकारे **भृकुटी**' इत्यपि ॥ (३) ॥*॥ त्रीणि **'क्रोधादिना ललाटसंकोचनस्य'** ॥

**अदृष्टिः स्यादसौम्येऽक्ष्णि**

**अदृष्टिरिति** ॥ विरुद्धा दृष्टिः ॥ (१) ॥*॥ असौम्येऽसुन्दरे ॥ एकं **'क्रूराया दृष्टेः'** ॥

**संसिद्धिप्रकृती त्विमे ॥ ३७ ॥**

**स्वरूपं च स्वभावश्च निसर्गश्च**

**संसिद्धीति** ॥ संसेधनम्। 'षिध संराद्धौ' (दि० प० अ०)। क्तिन् (३।३।९४)। (**'संसिद्धिः** प्रकृतौ सिद्धौ मदोन्मायामपि स्त्रियाम्') ॥ (१) ॥*॥ प्रकरणम्। 'डुकृञ्' (त० उ० अ०)। क्तिन् (३।३।९४) ॥ (२) ॥*॥ इमे इति द्वयोः स्त्रीत्वबोधनार्थमुक्तम्। स्वं रूपम् ॥ (३) ॥*॥ स्वो भावः ॥ (४) ॥*॥ विसर्जनम्। 'सृज विसर्गे' (तु० प० अ०)। घञ् (३।३।१८)। **'निसर्गः** सृष्टौ स्वभावे च' इति हैमः ॥ (५) ॥*॥ पञ्च **'स्वभावस्य'** ॥

**अथ वेपथुः।**

**कम्पः**

**अथेति** ॥ वेपनम्। 'टुवेपृ कम्पने' (भ्वा० आ० से०)। 'द्वितोऽथुच्' (३।३।८९) ॥ (१) ॥*॥ 'कपि किंचिच्चिलने' (भ्वा० आ० से०)। घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे **'कम्पस्य'** ॥

**अथ क्षण उद्धर्षौ मह उद्धव उत्सवः ॥ ३८ ॥**

**अथेति** ॥ क्षणोति दुःखम्। 'क्षणु हिंसायाम्' (त० उ० से०)। पचाद्यच् (३।१।१३४)। (**'क्षणः** कालविशेषे स्यात्पर्वण्यवसरे महे। व्यापारविकलत्वे च परतन्त्रत्वमध्ययोः' इति हैमः ॥ (१) ॥*॥ उद्धर्षयति। 'हृषु अलीके' (भ्वा० प० से०) णिजन्तः। अच् (३।१।१३४)। उद्गतो हर्षोऽत्रेति वा ॥ (२) ॥*॥ महनम् 'मह पूजायाम्' (भ्वा० प० से०) घञ् (३।३।१८)। संज्ञापूर्वकत्वाद्वृद्ध्यभावः। घः (३।३।११८) वा। यद्वा महति। अच् (३।१।१३४)। **'मही** नद्यन्तरे भूमौ **मह** उद्ध(त्स)वतेजसोः'। (यत्तु) मह्यते-नेन। 'पुंसि–' (३।३।११८) इति घः–इति मुकुटः। तन्न। 'हलश्च'–(३।३।१२१) इति घञ्प्रसङ्गात् ॥ (३) ॥*॥ उद्धुनोति। दुःखम्। 'धूञ् कम्पने' (स्वा० उ० अ०)। अच् (३।१।१३४)। **'उद्धवो** यादवभिदि महे च क्रतुपावके' ॥ (४) ॥*॥ उत्सुवति। 'षू प्रेरणे' (तु० प० से०)। अच् (३।१।१३४)। **'उत्सवो** मह उत्सेके इच्छाप्रसरकोपयोः' ॥ (५) ॥*॥ पञ्च **'उत्सवस्य'** ॥

**इति स्वर्गवर्गः ॥**

**इतीति** ॥ स्वर्गप्रधानो वर्गः। एतत्पर्यन्तं स्वर्गसंगतार्थनिरूपणात् ॥

**इति नाट्यवर्गविवरणम् ॥**

---

**अधोभुवनपातालबलिसद्मरसातलम्।**

**नागलोकः**

**अध इति** ॥ अधश्च तद्भुवनं च ॥*॥ 'अधः अपि'। **'अधो**ऽव्ययं स्यात्पाताले' इति त्रिकाण्डशेषात् ॥ (१) ॥*॥ पतन्त्यत्र पापात्। 'पतिचण्डिभ्यामालञ्' (उ० १।११७)। **'पातालं** वडवानले। रसातले च' इति हैमः ॥ (२) ॥*॥ बलेः सद्म ॥ (३) ॥*॥ रसायास्तलमधः ॥ (४) ॥*॥ नागानां लोकः ॥ (५) ॥*॥ **अधोलोक–फणिभुवना**दयः अप्यत्र ॥*॥ पञ्च **'पातालस्य'** ॥

**अथ कुहरं शुषिरं विवरं बिलम् ॥ १ ॥**

**छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः।**

**अथेति** ॥ कुं हरति। 'हरतेरनुद्यमनेऽच्' (३।२।९)। यद्वा 'कुह विस्मापने' (चु० आ० से०)। इगुपधत्वात् (३।१।१३५) कः। कुहं राति। 'रा दाने' (अ० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः। **'कुहरं** गह्वरे च्छिद्रे क्लीबं नागान्तरे पुमान्' ॥ (१) ॥*॥ शोषणम्। 'शुष शोषणे' (दि० प० अ०)। 'इगुपधात्कित्' (उ० ४।१२०)। शुषिरस्यास्ति। 'ऊषशुषि–' (५।२।१०७) इति रः। **'शुषिरं** वंशादिवाद्ये विवरेऽपि नपुंसकम्। शुषिरो न स्त्रियां गर्ते वह्नौ रन्ध्रान्विते त्रिषु' ॥ (२) ॥*॥ विवृणोति। 'वृञ् वरणे' (स्वा० उ० से०)। पचाद्यच् (३।१।१३४)। यद्वा विवृ-

---

१—तदो नान्तत्वनिपातनाभ्युपगमपाठो मुकुटपुस्तकत्रये तु नोपलभ्यते ॥ २—एतत्स्थाने-'तन्द्रिस्तन्द्रीस्तन्द्रा' इति त्रिरूपकोशाच्च-इति लिखितमासीत्। परंतु मुकुटपुस्तकत्रयदृष्टं मया लिखितम् ॥

१—मूषिके ना स्त्रियां नालवौषधौ, मूषिके नास्त्रियां वर्गे, इत्येवं पाठो मूलमेदिन्यां दृश्यते ॥

यते। 'गृहवृहनिश्चिगमश्च' (३।३।५८) इत्यप्। विगतो वरोऽस्माद्वा। वीनां पक्षिणां वरं वा। '**विवरं** दूषणे गर्ते' ॥ (३) ॥*॥ विलति भिनत्ति। 'विल भेदने' (तु० प० से०)। 'इगुपध–' (३।१।१३५) इति कः। विल्यते वा। 'कृत्यल्युटो बहुलम्' (३।३।११३) सूत्रे 'कृल्युटः' इति (वार्तिकेन) इति 'इगुपध–' (३।१।१३५) इति कः। घञर्थे कः (वा० ३।३।५८) वा। 'खनो घ च' (३।३।१२५) इति घे संज्ञापूर्वकत्वाद्गुणाभावो वा। '**बिलं** छिद्रे गुहायां च पुमानुच्चैःश्रवोहये' ॥ (४) ॥*॥ छिद्यते। 'छिद्र भेदने' (चु० उ० से०)। घञ् (३।३।१८) यद्वा छिद्यते 'छिदिर् द्वैधीकरणे' (रु० उ० अ०)। 'स्फायि–' (उ० २।१३) इति रक्। '**छिद्रं विवररन्ध्रवत्**। गर्ते दोषे' इति हैमः॥ (५) ॥*॥ 'व्यथ भयचलनयोः' (भ्वा० आ० से०)। भावे ल्युट् (३।३।११५)। निश्चयेन व्यथनं भयं चलनं वा यत्र। यत्तु—अधिकरणे ल्युट् (३।३।११६)-इति मुकुट आह। तन्न। व्यथनमिति भावप्रत्यये बहुव्रीहिणा गतार्थत्वात् ॥ (६) ॥*॥ रोचतेऽत्र। 'रुच दीप्तौ' (भ्वा० आ० से०) 'हलश्च' (३।३।१२१) इति घञ्। निष्ठायां सेट्त्वान्नयङ्क्वादित्वात् (७।३।५३) कुत्वम्। यत्तु मुकुटः—रोचते प्रकाशते। घः (३।३।११८)—इत्याह। तन्न। कर्तरि घस्याविधानात्। '**रोकं** क्रयणभेदे ना वि (वरे)थाविले चले। **रोकों**ऽशौ' इति हेमचन्द्रः॥ (७) ॥*॥ रमणम्। संपदादि (३।३।१०८)। संज्ञापूर्वकत्वान्न दीर्घः। रमं क्रीडां धरति। मूलविभुजादिः (वा० ३।२।५)। रन्धयति। 'रध हिंसासंराद्ध्योः' (दि० प० से०)। बाहुलकाद्रक् वा। '**रन्ध्रं** तु दूषणे च्छिद्रे' इति विश्वमेदिन्यौ॥ (८) ॥*॥ श्वभ्रयति। 'श्वभ्र गतौ' (चु० प० से०) ण्यन्तात्पचाद्यच्। शु शोभनमभ्रं व्योमात्र वा। तालव्यादि॥ (९) ॥*॥ उप्यतेऽत्र। '**डुवप्**' (भ्वा० उ० अ०)। भिदादिः (३।३।१०४)। ('**वपा** विवरमेदसोः')॥ (१०) ॥*॥ शुष्यत्यत्र। 'शुष शोषणे' (दि० प० अ०)। 'इगुपधात्कित्' (उ० ४।१२०)। '**शुषिः** शोषे बिलेऽस्त्री स्यात्' इति मेदिनी ॥*॥ सुष्ठु स्यति। 'षोऽन्तकर्मणि' (दि० प० अ०)। बाहुलकात् किः। (**सुषिः**)। 'विवराभिधायिनि शुषिरादौ शास्त्रेषु दन्त्यतालव्यौ' इत्यूष्मविवेकः॥ (११) ॥*॥ एकादश '**बिलस्य**'॥

**गर्तावटौ भुवि श्वभ्रे**

**गर्तेति** ॥ गिरति 'गॄ निगरणे' (तु० प० से०)। 'हसिमृग–' (उ० ३।८६) इति तन्। स्त्रियां टाप् (४।१।५) 'शरट-कृसर-गर्त-शृङ्गाः' इति स्त्रीपुंसप्रकरणे रभसात्। 'गर्तोऽवटे कुकुन्दरे। त्रिगर्तांशे' इति हैमः॥ (१) ॥*॥ अवन्त्यस्मात्। 'अव रक्षणादौ' (भ्वा० प० से०)। 'शकादिभ्योऽटन्' (उ० ४।८१)। इदन्तोऽपि। 'दर्भेऽपि पवित्र**मवटि**रवटेऽपि' इति हलायुधः। '**अवटः** कूपबिलयोर्गर्ते कुहकजीविनि' इति हैमः॥ (२) ॥*॥ द्वे '**रन्ध्रमात्रस्य**'॥

**सरन्ध्रे शुषिरं त्रिषु ॥ २ ॥**

**सरन्ध्र इति** ॥ शुषिरस्यास्ति 'ऊषशुषि–' (५।२।१०७) इति रः॥ (१) ॥*॥ एकम् '**भूरन्ध्रस्य**'॥

**अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः।**

**अन्धेति** ॥ 'अन्ध दृष्ट्युपघाते' (चु० उ० से०) चुरादिः। अन्धनम् घञ् (३।३।१८)। अन्धं करोति। 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ ध्वन्यते। 'ध्वन शब्दे' (भ्वा० प० वे०)। 'क्षुब्धस्वान्त–' (७।२।१८) इति निपातितम् ॥ (२) ॥*॥ तमोऽस्त्यत्र। भावप्रधानो निर्देशः। 'ज्योत्स्नातमिस्रा–' (५।२।११४) इति साधु ॥*॥ तमिस्रास्त्याश्रयत्वेनास्येति वा (अर्शआद्यच्) (५।२।१२७)। '**तमिस्रं** तिमिरे कोपे, **तमिस्रा** तु तमस्ततौ। कृष्णपक्षनिशायां च' इति विश्वमेदिन्यौ॥ (३) ॥*॥ तिम्यति। 'तिम आर्द्रीभावे' (दि० प० से०)। किरच् (बाहुलकात्)। '**तिमिरं** ध्वान्ते नेत्रामयान्तरे' ॥ (४) ॥*॥ ताम्यत्यनेन। 'तमु ग्लानौ' (दि० प० से०)। असुन् (४।१८९)। ('**तमो** ध्वान्ते गुणे शोके क्लीबं, वा ना विधुंतुदे') इति मेदिनी ॥*॥ (उ० ३।११७ असचि) तमसमपि। '**तमसं** तु निशाचर्म' इति त्रिकाण्डशेषात्। (स्त्रियां तु तमसा नदीविशेषे)॥ (५) ॥*॥ पञ्च '**अन्धकारस्य**'॥

**ध्वान्ते गाढेऽन्धतमसम्**

**ध्वान्त इति** ॥ अन्धयति। अन्धं च तत्तमश्च। 'अवसमन्धेभ्यस्तमसः' (५।४।७९) इत्यच्॥ (१) ॥*॥ एकं '**घनान्धकारस्य**'॥

**क्षीणेऽवतमसम्**

**क्षीण इति** ॥ क्षीणे तु ध्वान्ते। अव हीनं तमः अच् (५।४।७९) ॥ (१) ॥*॥ एकम् '**क्षीणतमसः**'॥

**तमः ॥ ३ ॥**

**विष्वक् संतमसम्**

**तम इति** ॥ विष्वक् सर्वतः तमः समन्तात्तमः। अच् (५।४।७९) ॥ (१) ॥*॥ एकम् '**व्यापकतमसः**'॥

**नागाः काद्रवेयाः**

**नागा इति** ॥ नगे भवाः। 'तत्र भवः' (४।३।५३) इत्यण्। यद्वा—न गच्छन्ति। अगाः। न अगाः। 'सुप्सुपा'

१—'विवराभिधायिनि–' इत्यूष्मविवेकतो दन्त्यादित्वे तु 'सुष्ठु अभ्रम्' इति विग्रहः इति पञ्चिकाशयः—इति मुकुटपीयूषबुधमनोहराशयः॥

१—कुहकमिन्द्रजालम्॥

( २।१।४ ) इति समासः। अनन्त्वान्न नलोपः। ('नागो-मतङ्गजे सर्पे पुंनागे नागकेसरे। क्रूराचारे नागदन्ते मुस्तके वारिदेऽपि च॥ देहानिलविशेषे च श्रेष्ठे स्यादुत्तरस्थितः। नागं रङ्गे सीसपत्रे स्त्रीबन्धे कारणान्तरे' इति हैमः॥ (१) ॥*॥ कद्रवा अपत्यानि। 'स्त्रीभ्यो ढक्' (४।१।१२०) 'ढे लोपोऽकद्र्वाः' (६।४।१४७) इति टिलोपाभावे 'ओर्गुणः' (६।४।१४६)। यत्तु-स्वामी-शुभ्रादित्वात् (४।१।१२३) ढक्। न तु 'स्त्रीभ्यो ढक्'। कद्रुकमण्डल्वोश्छन्दस्यूङ्निषेधः-इत्याह। तन्न। 'संज्ञायाम्' (४।१।७२) इति लोकेऽप्यूङ्विधानात्॥ (२) ॥*॥ सर्पेभ्योऽन्ये देवयोनयोऽमी द्वे **'फणालाङ्गलवतो नराकारसर्पस्य'** ॥

**तदीश्वरः।**

**शेषोऽनन्तः**

**तदीति** ॥ तेषामीश्वरः। शिष्यते। 'शिष्लृ विशेषणे' (रु० प० अ०) घञ् (३।३।१८)। **'शेषो**ऽनन्ते वधे सीरिण्युपयुक्तेतरेऽपि च। **शेषा** निर्माल्यदाने स्यात्' इति हैमः॥ (१) ॥*॥ न अन्तोऽस्य। **'अनन्तः** केशवे शेषे पुमान्, निरवधौ त्रिषु'॥ (२) ॥*॥ द्वे **'नागानां स्वामिनः'** ॥

**वासुकिस्तु सर्पराजः**

**वासुकिरिति** ॥ वसु रत्नं के मूर्ध्नि यस्य। वसु कायति वा। 'कै शब्दे' (भ्वा० प० अ०)। कः (३।२।३)। वसुकः। तस्यापत्यम्। 'अत इञ्' (४।१।९५)॥ (१) ॥*॥ सर्पाणां राजा। 'राजा-' (५।४।९१) इति टच्॥ (२) ॥*॥ द्वे[१] **'नागराजस्य'** ॥

**अथ गोनसे ॥ ४ ॥**

**तिलित्सः स्यात्**

**अथेति** ॥ गोरिव नासिका यस्य। 'अञ्नासिकायाः' (५।४।११८) इत्यच्, नसादेशः ॥*॥ गोनासोऽप्यत्र। **'गोनास**गोनसौ' इति त्रिकाण्डशेषात्॥ (१) ॥*॥ तेलति 'तिल गतौ' (प० से०) भ्वादिः। तिलति। 'तिल स्नेहने' (प० से०) तुदादिः। 'तिल इदुक् च' इति स इदुगागमश्च—इति मुकुटः। तन्न। उज्ज्वलदत्तादिधृतसूत्राभावात् तेलनम्। तिल्। संपदादिक्विप् (वा० ३।३।१०८) तिलमेति। 'इण् गतौ' (अ० प० अ०) क्विप् (३।२।१७८)। तुक् (६।१।७१)। तिलित्। तिलितं स्यति। 'षोऽन्तकर्मणि' (दि० प० अ०)। कः (३।२।३) यद्वा तेलनम्। तिलिः। कृष्यादित्वात् (वा० ३।३।१०८) इक्। तिलिं गतिं त्सरति। 'त्सर छद्मगतौ' (भ्वा० प० से०)। 'अन्येभ्योऽपि' (वा० ३।२।१०२)। इति डः॥ (२) ॥*॥ 'गोनसी **मण्डली घोडः'** इति तु विक्रमादित्यः॥ द्वे **'सर्पविशेषस्य'** ॥

**अजगरे शयुर्वाहस इत्युभौ।**

**अजेति** ॥ गिरति। 'गॄ निगरणे' (तु० प० से०)। पचाद्यच् (३।१।१३४)। अजस्य गरः। अजो नित्यो गरो विषं यस्येति वा। यत्तु—अजं छागमपि गिरति। पचाद्यच्-इति मुकुटः। तन्न। कर्मण्यणः प्रसङ्गात्। **'अजगरः** स्मृतः सर्पभेदेऽपि कवचे बुधैः'॥ (१) ॥*॥ शेते। 'शीङ् स्वप्ने' (अ० आ० से०) 'भृमृशी-' (उ० १।७) इत्युः॥ (२) ॥*॥ वहति। 'वहियुभ्यां णित्' (उ० ३।११९) इत्यसच्। णित्वाद्वृद्धिः। वाहं गतिं स्यति-इति वा। 'आतोऽनुप-' (३।२।३) इति कः। **'वाहसो**ऽजगरे वारिनिर्याणसुनिषण्णयोः' इति हैमः॥ (३) ॥*॥ त्रीणि **'अजगरस्य'** ॥

**अलगर्दो जलव्यालः**

**अलेति** ॥ लगति 'लगे सङ्गे' (भ्वा० प० से०)। क्विप् (३।२।१७८)। अर्दयति। अच् (३।१।१३४)। लक् चासावर्दश्च। लग्नः सन् पीडक इत्यर्थः। निर्विषत्वात्तद्भिन्नोऽलगर्दः। यद्वा—अलति। 'अल गत्यादौ' (भ्वा० प० से०)। गर्दति। 'गर्द शब्दे' (भ्वा० प० से०)। अच् (३।१।१३४)। अलश्चासौ गर्दश्च ॥*॥ **'अलगर्धः'** इति तु मुकुटः। अलं गृध्यति। 'गृधु अभिकाङ्क्षायाम्' (दि० प० से०)। पृषोदरादिः (६।३।१०९) पचाद्यच् (३।१।१३४)॥ (१) ॥*॥ जलस्थो व्यालः॥ (२) ॥*॥ द्वे **'जलव्यालस्य'** ॥

**समौ राजिलडुण्डुभौ ॥ ५ ॥**

**समाविति** ॥ राजी रेखास्यास्ति। सिध्मादित्वाल्लच् (५।२।९७)। यद्वा—राजिं लाति। 'ला दाने' (अ० प० अ०)। 'आतोऽनुप-' (३।२।३) इति कः॥ (१) ॥*॥ 'डुण्डु' इत्यनुकरणशब्दः। तं भणति, तेन भाति, इति वा॥ 'अन्येभ्योऽपि-' (वा० ३।२।१०२) इति डः। लण्ड्यते। 'ओ लडि उत्क्षेपणे' (चु० प० से०)। घञ् (३।३।१८)। डलयोरेकत्वम्। उभति। 'उभ पूरणे' (तु० प० से०)। 'इगुपध-' (३।१।१३५) इति कः। डुण्डश्चासावुभश्च। पृषोदरादिः (६।३।१०९)। यत्तु—'डुडि तुडि निमज्जने'। घञ् (३।३।१८)। डुण्डेन भाति। 'आतोऽनुप-' (३।२।३) इति कः। 'कर्तृकरणे कृता-' (२।१।३२) इति समासः। पृषोदरादिः (६।३।१०९)। तवर्गतृतीयादिरपि। अत एव 'दो डो दो लक्ष्व' इति नरसिंहः-इति मुकुटः। 'दण्ड भाषणे'। 'दण्डुभः' इत्येके-इति स्वामी। तन्न। 'उक्तधातूनामदर्शनात्। 'आतोऽनुप-' (३।२।३) इति कस्य कर्मण्युपपदे

१—इह यद्यपि शेषवासुक्योर्भेदः। तथापि गतानुगतिकतया कवयोऽभेदेन प्रयुञ्जते यथा 'स्वमिव भुजंगविशेषं व्युपधाय स्वपिति यो भुजंगविशेषम्' इति वृन्दावने। 'वलयायितशेषशायिनः सखितामादित पीतवाससः' इति नैषधे। इति मुकुटः॥ २—'गोनासाय नियोजिता गदरजाः' इति राजशेखरः—इति मुकुटः॥

विधानात्। परत्वादुपपदसमासस्य (२।२।१९) न्याय्यत्वाच्च ॥ (२) ॥*॥ द्वे 'निर्विषस्य द्विमुखस्य सर्पस्य' ॥

**मालुधानो मातुलाहिः**

**मालिवति** ॥ मालुरोषधी। तत्र धानमस्य। '**मालुधान**श्चित्रसर्पे महापद्मे च दृश्यते' इत्युत्पलिनी। '**मालुधानो** मातुलाहौ **मालुधानी** लतान्तरे' इति विश्वः॥ (१) ॥*॥ मां तुलयति। कः। मूलविभुजादिः (वा० ३।२।५)। मातुलश्चासावहिश्च ॥ (२) ॥*॥ द्वे '**चित्रसर्पस्य**' ॥

**निर्मुक्तो मुक्तकञ्चुकः।**

**निर्मुक्त इति** ॥ अमोचि। मुक्तः-कञ्चुकः। नास्ति मुक्तोऽस्य। 'निर्निश्चयनिषेधयोः'। **निर्मुक्त**स्त्यक्तसङ्गे स्यान्मुक्तकञ्चुकभोगिनि' ॥ (१) ॥*॥ मुक्तः कञ्चुको येन ॥ (२) ॥*॥ द्वे '**मुक्तत्वचः सर्पस्य**' ॥

**सर्पः पृदाकुर्भुजगो भुजंगोऽहिर्भुजंगमः ॥ ६ ॥**
**आशीविषो विषधरश्चक्री व्यालः सरीसृपः।**
**कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥ ७ ॥**
**दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः।**
**उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥ ८ ॥**

**सर्प इति** ॥ सर्पति। 'सृप्लृ गतौ' (भ्वा० प० से०)। अच् (३।१।१३४) 'इगुपध-' (३।१।१३५) इति को वा। 'नोक्तमनित्यम्' इति गुणः। यद्वा सर्पणम्। भावे घञ्। सर्पः। सोऽस्यास्ति। अर्शआद्यच्। (५।२।१२७) स्त्रियां जातित्वान्ङीष् (४।१।६३) ॥ (१) ॥*॥ पर्दते। 'पर्द कुत्सिते शब्दे' (भ्वा० आ० से०)। 'पर्देर्नित्संप्रसारणमल्लोपश्च' (उ० ३।८०) इति काकुः प्रत्ययः। पिपर्ति स्वम्। 'पिपर्तेर्दाकुर्ह्रस्वश्च' (*) इति वा। '**पृदाकु**र्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमान्' ॥ (२) ॥*॥ 'भुजो कौटिल्ये' (तु० प० अ०) इगुपधत्वात् (३।१।१३५) कः। भुजः सन् गच्छति। 'अन्यत्रापि' (वा० ३।२।४८) इति डः ॥ (३) ॥*॥ 'भुजेन कौटिल्येन गच्छति' वा। 'गमेः सुपि' 'खच्च डिद्वा' (वा० ३।२।३८) इति खचि डित्त्वे टिलोपे भुजंगः। **भुजंगः** सर्पखिड्गयोः' इति हैमः ॥ (४) ॥*॥ आहन्ति। 'आङि श्रिहनिभ्यां ह्रस्वश्च' (उ० ४।१३८) इतीन् डित्। '**अहि**र्वृत्रासुरे सर्पे पुंसि' ॥ (५) ॥*॥ खच्यडित्त्वे भुजंगमः ॥ (६) ॥*॥ 'आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति'। तत्र विषमस्य। पृषोदरादित्वात् (६।३।१०९) दीर्घसलोपौ। केचित्त्वीकारान्तमाशीशब्दमाहुः। 'आशीमिव कलामिन्दोः' इति राजशेखरः ॥ (७) ॥*॥ विषस्य धरः ॥ (८) ॥*॥ चक्रमस्यास्ति। 'अत इनिः' (५।२।११५)। '**चक्री** कोके कुलालेऽहौ वैकुण्ठे चक्रवर्तिनि' इति हैमः ॥ (९) ॥*॥ व्याडति। 'अड उद्यमे' (भ्वा० प० से०) व्याङ्पूर्वः। अच् (३।१।१३४)। ('**व्याडो** हिंस्रपशौ सर्पे') ॥*॥ डलयोरेकत्वस्मरणात् व्यालोऽपि। '**व्यालो** दुष्टगजे सर्पे खले श्वापदसिंहयोः' इति विश्वमेदिन्यौ ॥ (१०) ॥*॥ कुटिलं सर्पति। 'नित्यं कौटिल्ये गतौ' (३।१।२३) इति यङ्। पचाद्यच् (३।१।१३४)। 'यङोऽचि च' (२।४।७४)। 'संसार-सारस-सरीसृप-सस्य-सास्नाः' इति द्विदन्त्ये ऊष्मविवेकः ॥ (११) ॥*॥ कुण्डलं कुण्डलाकारतास्यास्ति। इनिः (५।२।११५)। यत्तु मुकुटः—वयं तु कुण्डलमनुकरोतीति 'कुण्डलशब्दात् प्रातिपदिकाद्धात्वर्थेणिजन्तात् घञर्थे के (वा० ३।३।५८) कुण्डलं कुण्डलनं कुण्डलानुकरणम्। तद्योगाद् 'इनिः' (५।२।११५) 'कुण्डली' इति ब्रूमहे-इत्याह। तन्न। परिगणनात् काभावात्। प्राचामेव फलितार्थस्य लाभात्। '**कुण्डली** वरुणे सर्पे मयूरे कुण्डलान्विते' ॥ (१२) ॥*॥ गूढाः पादा अस्य। पृषोदरादिः (६।३।१०९) 'पादानामपि विज्ञेये द्वे शते द्वे च विंशती' इत्यागमः। यद्वा गूढं पादयति। 'पद गतौ' (दि० आ० अ०)। ण्यन्तात् (३।१।२६) क्विप् (३।२।१७८) ॥ (१३) ॥*॥ चक्षुः श्रवः कर्णोऽस्य। सान्तः ॥*॥ अत एव 'गोकर्णः' अपि। ('**गोकर्णः** प्रमथान्तरे। अङ्गुष्ठानामिकोन्माने मृगेऽश्वतरसर्पयोः') ॥ (१४) ॥*॥ काकस्येवोदरमस्य। यद्वा—ईषदकति। 'अक कुटिलायां गतौ' (भ्वा० प० से०)। 'ईषदर्थे च' (६।३।१०५) कोः कादेशः काकम्—ईषत्कुटिलगतिमद्-उदरमस्य ॥ (१५) ॥*॥ फणास्यास्ति। व्रीह्यादिः (५।२।११६) फणोऽस्यास्ति वा। अत इनिः (५।२।१०५) ॥ (१६) ॥*॥ दर्व्याकारः फण एव करो यस्य प्रहारसाधनत्वात्। दर्वी फणं करोति, इति वा। 'कृञो हेतु-' (३।२।२०) इति टः ॥ (१७) ॥*॥ दीर्घं पृष्ठमस्य ॥ (१८) ॥*॥ गर्हितं दशति। 'लुपसद-' (३।१।२४) इति यङ्। 'जपजभ-' (७।४।८४) इति नुकि अनुस्वारः (८।२।१२४)। 'यजजप-' (३।२।१६६) इत्यूकः। '**दन्दशूक**स्तु पुंलिङ्गो राक्षसे च सरीसृपे' ॥ (१९) ॥*॥ बिले शेते। 'अधिकरणे शेतेः' (३।२।१५) इत्यच्। 'शयवास-' (६।३।१८) इत्यलुक्। '**बिलेशयो** मूषिकेऽहौ' इति हैमः ॥ (२०) ॥*॥ उरसा गच्छति। 'उरसो लोपश्च' (वा० ३।२।४८) इति डः ॥ (२१) ॥*॥ पन्नं पतितं यथा तथा गच्छति। 'सर्वत्रपन्नयोः' (वा० ३।२।४८) इति डः। '**पन्नग**श्चौषधीभेदे तथैव पवनाशने' ॥ (२२) ॥*॥ भोगः फणो वक्रगतिर्वास्यास्ति। इनिः (५।२।११५)। '**भोगी** भुजंगमेऽपि स्याद्ग्राममात्रे नृपे पुमान्। विहाय महिषीमन्यराजयोषिति **भोगिनी**' ॥ (२३) ॥*॥ जिह्मं कुटिलं गच्छति। 'अन्येभ्योऽपि-' (वा० ३।२।१०१) इति

१—लक्ष्यं च। 'किं महोरगविसर्पिविक्रमो राजिलेषु गरुडः प्रवर्तते' इति स्वामी ॥ २—भाष्ये तु 'अन्येष्वपि' इति दृश्यते ॥

१—अत्र तु कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि च। काञ्चनद्रुगुडूच्योः स्त्री केवलः कुहनेऽपि च' इत्युपलभ्यते ॥ तत्तु न सर्पपर्यायबोधकम् ॥

ङः। 'जिह्मगोऽह्नौ च मन्दगे' इति विश्वः ॥ (२४) ॥*॥ पवनोऽशनं यस्य ॥ (२५) ॥*॥ पञ्चविंशतिः **'सर्पमात्रस्य'** ॥

**त्रिष्वाहेयं विषास्थ्यादि**

**त्रिष्विति** ॥ अहौ भवम्। 'दृतिकुक्षि-' (४।३।५६) इति ढञ् स्त्रियां 'टिड्ढा-' (४।१।१५) इति ङीप् ॥ (१) ॥*॥ आदिना कञ्चुकादि ॥ एकम् **'सर्पविषास्थ्यादेः'** ॥

**स्फटायां तु फणा द्वयोः।**

**स्फटायामिति** ॥ स्फटति। 'स्फट विकसने' (चु० प० से०) चौरादिकः। णिजभावे पचाद्यच् (३।१।१३४) ॥*॥ 'फटा' इति क्वचित्पाठः। पृषोदरादिः (६।३।१०९) (**'फटा** तु कितवे फणे') ॥ (१) ॥*॥ फणति। 'फण गतौ' (भ्वा० प० से०)। अच् (३।१।१३४) ॥ (२) ॥*॥ 'द्वयोः' इत्यनेन 'स्फटा' अपि संबध्यते—इति स्वामी ॥ द्वे **'फणायाः'** ॥

**समौ कञ्चुकनिर्मोकौ**

**समाविति** ॥ कञ्चते। 'कचि दीप्तिबन्धनयोः' (भ्वा० आ० से०)। बाहुलकादुकन्। **'कञ्चुको** वारबाणे स्यान्निर्मोके कवचेऽपि च। वर्धापकगृहीताङ्गस्थितवस्त्रे च चोलके। **कञ्चुक्यौ**षधिभेदे च' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ निश्चयेन मुच्यते ॥ कर्मणि घञ् (३।३।१९)। **'निर्मोको** मोचने व्योम्नि संनाहे सर्पकञ्चुके' ॥ (२) ॥*॥ द्वे **'सर्पत्वचः'** ॥

**क्ष्वेडस्तु गरलं विषम् ॥९॥**

**क्ष्वेड इति** ॥ क्ष्वेडते मोहयति। अच् (३।१।१३४)। क्ष्विद्यन्त्यनेन वा। 'ञिक्ष्विदा स्नेहनमोचनयोः'। 'मोहनयोः' इत्येके (भ्वा० प० से०, दि० प०)। 'हलश्च' (३।३।१२१) इति घञ्। पृषोदरादिः (६।३।१०९)। **'क्ष्वेडो** ध्वनौ कर्णामये विषे। **क्ष्वेडा** वंशशलाकायां सिंहनादे च योषिति। लोहितार्कपर्णफले घोषपुष्पे नपुंसकम्। दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्तितः' ॥ (१) ॥*॥ गिरति जीवम् 'गॄ निगरणे' (तु० प० से०)। अच् (३।१।१३४)। गरं लाति। 'ला दाने' (अ० प० अ०)। कः (३।२।३)। भावपरत्वं, गरशब्दस्य। गिरतेर्बाहुलकादलच् वा। **'गरलं** पन्नगविषे तृणपूलकमानयोः' इति हैमः ॥ (२) ॥*॥ वेवेष्टि कायम्। 'विष्लृ व्याप्तौ' (जु० उ० अ०) 'विष विप्रयोगे' (क्र्या० प० से०) वा। 'इगुपध-' (३।१।१३५) इति कः। 'गरले **विषम**म्भसि च, स्त्रियामतिविषायाम्' इत्यूष्मविवेकान्मूर्धन्यान्तम्। 'पुंसि क्लीबे च' इति विषेणापि संबध्यते-इति केचित् ॥ (३) ॥*॥ त्रीणि **'विषमात्रस्य'** ॥

**पुंसि क्लीबे च काकोलकालकूटहलाहलाः।**
**सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः ॥ १० ॥**
**दारदो वत्सनाभश्च विषभेदा अमी नव।**

**पुंसीति** ॥ ईषत् कोलति। 'कुल संस्त्याने' (भ्वा० प० से०) अच् (३।१।१३४)। 'ईषदर्थे च' (६।३।१०५) इति कोः कादेशः। **'काकोलो** नरकान्तरे, नाकुलाले द्रोणकाके, विषभेदे च न स्त्रियाम्' ॥ (१) ॥*॥ कालमपि कूटयति। 'कूट परिदाहे' (उ० से०) चुरादिः। 'कर्मण्यण्' (३।२।१)। कालस्य कर्मणो मृत्योर्वा कूटो राशिरिव-इति वा ॥ (१) ॥*॥ हलति जठरम् 'हल विलेखने' (भ्वा० प० से०)। न हलति आहलति वा अच् (३।१।१३४)। अहलम्—आहलम्, वा। ततः कर्मधारयः। हाला इव, हलतीति वा। हलमिव हलति। अच् (३।१।१३४) प्रज्ञाद्यण् (५।४।३८)। **'हालाहलं हालहलं** वदन्त्यपि **हलाहलम्'** इति द्विरूपकोषः। 'गोनासगोनसौ, हालाहलं हालहलं विषम्' इति त्रिकाण्डशेषः। **'हलाहल**स्तु ह्यलालोरगे विषे। ज्येष्ठ्यां च' इति हैमः ॥ (१) ॥ एते त्रयः क्लीबपुंसोः ॥*॥ सौराष्ट्रे देशभेदे भवः। अध्यात्मादित्वात् (वा० ४।३।६०) ठञ्। **'सारोष्ट्रिकः'** इति पाठः-इति मुकुटः। सुराष्ट्रे भव इति तु स्वामी ॥ (१) ॥*॥ शुक्लिके देशे भवः। 'दृतिकुक्षि-' (४।३।५६) इति योगविभागाड्ढञ् ॥ (१) ॥*॥ ब्रह्मणः पुत्रः। (**ब्रह्मपुत्रः** क्ष्वेडभेदे नदभेदे च पुंस्ययम्') ॥ (१) ॥*॥ प्रदीपयति णिच् (३।१।२६) नन्द्यादिल्युः (३।१।१३४) ॥ (१) ॥*॥ दरदि देशे भवः। **'दारदो** विषभेदे स्यात्पारदे हिङ्गुले पुमान्' ॥ (१) ॥*॥ वत्सान् नभ्नाति। 'णभ हिंसायाम्' (क्र्या० प० से०)। 'कर्मण्यण्' (३।२।१) वत्सस्य नाभिरिव नाभिरस्येति वा। अच् प्रत्यन्ववपूर्वात्- (५।४।७) इति योगविभागादच् ॥ (१) ॥*॥ **'स्थावरविषभेदानां'** प्रत्येकम् ॥

**विषवैद्यो जाङ्गुलिकः**

**विषेति** ॥ विद्यामधीते वेत्ति वा। 'तदधीते तद्वेद' (४।२।५९) इत्यण्। विषस्य वैद्यः ॥ (१) ॥*॥ जाङ्गुलीं विषविद्यामधीते वेद वा। वसन्तादित्वात् (४।२।६३) ठक्। 'परीक्षितं समश्नीयाज्जाङ्गुलीभिर्भिषग्व्रतः ॥' जाङ्गुल्या दीव्यतीति वा। 'तेन दीव्यति' (४।४।२) इति ठक् ॥ (२) ॥*॥ द्वे **'गारुडिकस्य'** ॥

**व्यालग्राह्यहितुण्डिकः ॥ ११ ॥**

**व्यालेति** ॥ व्यालं गृह्णाति। 'नन्दिग्रहि-' (३।१।१३४) इति णिनिः ॥ (१) ॥*॥ अहेस्तुण्डं मुखम्। तेन दीव्यति।

---

१—'द्वयोर्वर्तमानायां स्फटायां फणापि द्वयोः' इति केचित्। नैषा ग्रन्थकृद्रीतिः—इति पीयूषम् ॥

१—यथा 'स्निग्धं भवत्यमृततुल्यमहो कलत्रं हालाहलं विषमिवापगुणं तदेव' यथा 'काममपायि मयेन्द्रियकुण्डैर्यद्यपि दुष्कृतहालहलौघः' यथा वा 'मधु तिष्ठति वाचि योषितां हृदये हालहलं महाविषम्' इति स्वामी। 'कस्य सद्यो हलाहलः' इत्यनेकार्थकैरवाकरकौमुदी ॥ २—गोनासगोनसौ श्लोकार्धपतितत्वेनोक्तौ न प्रकृतोपयुक्तौ ॥ ३—'त्वं विष ब्रह्मणः पुत्रः सत्ये धर्मे व्यवस्थितः' इति याज्ञवल्क्योक्तेः-इतिस्वामिमुकुटबुधमनोहराः ॥

ठक् (४।४।२)। संज्ञापूर्वकत्वाद्वृद्ध्यभावे 'अहितुण्डिकः' अपि । 'व्यालग्राहोऽहितुण्डिकः' इत्यमरमाला ॥ (२) ॥*॥ द्वे **'सर्पग्राहिणः'** ॥

## ॥ इति पाताल-भोगिवर्गविवरणम् ॥

---

**स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् ।**

**स्यादिति** ॥ नरति, नृणाति वा, । 'नृ नये' (भ्वा०, क्र्या० प० से०)। 'कृञादिभ्यः संज्ञायां वुन्' (उ० ५।३५)। **'नरकः** पुंसि निरयदेवारातिप्रभेदयोः' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ प्रज्ञाद्यणि (५।४।३८) नारकः । यत्तु—'अन्येषामपि–' (६।३।१३७) इति दीर्घत्वम्–इति स्वामिमुकुटौ । तन्न । अणि वृद्धिसंभवात् । उत्तरपदपरत्वाभावाच्च । यदपि—नराः कायन्त्यत्र । मूलविभुजादित्वात् (वा० ३।२।५) के नरकः,—इति तु स्वामी-इति मुकुटः । तन्न । अधिकरणे उक्तवार्तिकाप्रवृत्तेः । 'कर्तरि कृत्' (३।४।६७) इति बाधात् ॥ (१) ॥*॥ निर्गतोऽयात् ॥ (३) ॥*॥ दुष्टा गतिः । **'दुर्गतिः।** नरके निःस्वतायां च' इति हैमः ॥ (४) ॥*॥ चत्वारि **'नरकस्य'** ॥

**तद्भेदास्तपनावीचिमहारौरवरौरवाः ॥ १ ॥**
**संहारः कालसूत्रं चेत्याद्याः**

**तदिति** ॥ तस्य नरकस्य भेदाः । तपति । ल्युः (३।१।१३४)। **'तपनो**ऽरुष्करेऽपि स्याद्भास्करे निरयान्तरे' ॥ (१) ॥*॥ **'वीचिः** स्वल्पतरङ्गे स्यादवकाशे सुखेऽपि च' इति विश्वः । नास्ति वीचिः सुखमत्र । **'अवीचिस्त्वन्त-**[१]**रङ्गे नरकान्तरे'** इति हैमः ॥ (१) ॥*॥ रुरुर्नाम प्राणी (मृग)-विशेषः । तस्यायम् । 'तस्येदम्' (४।३।१२०) इत्यण् । महतो रुरोरयम् ॥ (१) ॥*॥ **'रौरवो** नरके घोरे' इति [३]मेदिनी ॥ (१) ॥*॥ हरणं हारः । घञ् (३।३।१८)। सम्यग् हारोऽत्र ॥*॥ सम्यग् घातोऽत्र (**'संघातः** पुंसि घाते च संहतौ नरकान्तरे' इति मेदिनी)। इत्येके ॥ (१) ॥*॥ कालान्ययोमयानि सूत्राण्यत्र ॥ (१) ॥*॥ आद्यशब्देन तामिस्रान्धतामिस्रासिपत्रवनादयः । **'नरकभेदानां'** पृथक् पृथक् ॥

**सत्त्वास्तु नारकाः ।**
**प्रेताः**

**सत्त्वा इति** ॥ नरकस्थाः सत्त्वाः जन्तवः । नरके भवाः । 'तत्र भवः' (४।३।५३) इत्यण् । प्रागुः 'इण् गतौ' (अ० प० अ०)। 'गत्यर्था–' (३।४।७२) इति क्तः । **'प्रेतो** भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः' ॥ (१) ॥*॥ [१]द्वे **'नरकस्थप्राणिनाम्'** ॥

**वैतरणी सिन्धुः**

**वैतेति** ॥ नारकी नदी । विगतस्तरणिर्यत्र तत्र भवा । अण् (४।३।५३)। विगता तरणिर्नौर्यत्र वा प्रज्ञाद्यण् (५।४।३८)। वितरणेन दानेन लङ्घ्यते इति वा । 'शेषे' (४।२।९२) इत्यण् । 'नारका जन्तवः प्रेता नदी वैतरणी स्मृता' इति त्रिकाण्डशेषः । **'वैतरणी** नद्यां प्रेतानां, यातुमातरि' ॥ (१) ॥*॥ एकम् **'वैतरण्याः'** ॥

**स्यादलक्ष्मीस्तु निर्ऋतिः ॥ २ ॥**

**स्यादिति** ॥ लक्ष्मीविरुद्धा ॥ (१) ॥*॥ नियता ऋतिर्घृणा यस्याः । **'ऋतिर्**गतौ घृणायां च स्पर्धायां च शुभेऽपि च' इति रभसः । निर्गता ऋतेः शुभात्–इति वा । **'निर्ऋतिः** स्यादलक्ष्म्यां स्त्री, दिशां पालान्तरे पुमान्' ॥ (२) ॥*॥ द्वे **'नारकीयाया अलक्ष्म्याः'** ॥

**विष्टिराजूः**

**विष्टिरिति** ॥ विशति क्लेशम् । 'विश प्रवेशने' (तु० प० अ०)। क्तिच् (३।३।१७४)। यद्वा विष्णाति । 'विष विप्रयोगे' (क्र्या० प० से०)। 'क्तिच्क्तौ च–' (३।३।१७४) इति क्तिच् । यद्वा विष्यते । कर्मणि क्तिन् (३।३।९४)। यत्तु—वेतनेन विमुच्यतेऽनेन । 'विष्लृ विप्रयोगे' करणे क्तिन्–इति मुकुटो व्याख्यत् । तन्न । विग्रहादिप्रदर्शनस्य परस्परविरुद्धत्वात् । ल्युटा क्तिनो बाधप्रसङ्गाच्च । **'विष्टिः** कर्मकरे मूल्ये भद्राजूप्रेषणेषु च' इति हैमः ॥ (१) ॥*॥ आजवते । 'जू गतौ' (भ्वा० आ० अ०)। 'क्विब्वचिप्रच्छि–' (वा–३।२।१७८) इति क्विब्दीर्घौ । आ अज्यते वा । 'आजूर्वेतनयोर्विष्टिः कर्मकृत्कर्मणोरपि' इति शाश्वतः–इति स्वामी । यत्तु—आजू रेफान्तापि, इति पञ्चिका स्वामी च इति मुकुटः । तन्न । पूर्वप्रदर्शितस्वाम्युक्तविग्रहद्वयेनापि रेफान्ततायाः अलाभात् ॥ (२) ॥*॥ द्वे स्त्रियौ । द्वे निर्मूल्यक-

---

१—अत्र तु 'दारिद्र्ये नरके चापि' इति लिखितमासीत् । परंतु हैमे नोपलभ्यते ॥ २—अतरङ्गे कल्लोलरहिते यथा 'अवीचिर्निर्वाते सरससरसीवेयमबला' इत्यादौ वाच्यलिङ्गः ॥ इत्यनेकार्थकैरवाकरकौमुदी ॥ नरके तु तपनसाहचर्यात्पुंलिङ्गः 'अवीचिं गाहन्ते हुतवहशिखापूरितमपि' इति शिल्पलेखः इति—सर्वधरः स्वामी पञ्चिका च—इति मुकुटः ॥ ३—हैमे तु 'भीषणे नरकान्तरे' इत्युपलभ्यते ॥

१—मुकुटोक्तम् 'एकम्' इत्येवोचितम् ॥ २—निरुपद्रवे च वाच्यलिङ्गो यथा 'निर्ऋतिर्धर्मैकमठः' इति हैमानेकार्थकैरवाकरकौमुदी ॥ ३—विष्टिः कर्मकरे तु वाच्यलिङ्गो यथा 'विशन्तु विष्टयः सर्वे रुद्रा इव महौजसः' इत्यनेकार्थकैरवाकरकौमुदी ॥ ४—'हठादभृतिकः क्लेशो विष्टिराजूश्च कीर्त्यते' इति कोषान्तरादिति मुकुटबुधमनोहरे ॥

र्मकरणे इति मुकुटः, नरके हठात्प्रक्षेपस्येति स्वामी, 'भद्राख्यकरणस्य' इत्यन्ये ॥

**कारणा तु यातना तीव्रवेदना।**

**कारणेति** ॥ 'कॄञ् हिंसायाम्' ( क्र्या० उ० से० )। 'यत निकारोपस्कारयोः' ( चु० उ० से० )। आभ्यां णिच् (३।१।२६)। 'ण्यासश्रन्थ–' ( ३।३।१०७ ) इति युच्। '**कारणं** करणे हेतुवधयोश्च नपुंसकम्। स्त्री यातनायां च' ॥ (१) ॥*॥ (२) ॥*॥ 'विद वेदनाख्यानविवासेषु' ( चु० आ० से० )। णिच् (३।१।२६)। युच् (३।३।१०७)। तीव्रा चासौ वेदना च ॥ (३) ॥*॥ त्रीणि '**तीव्रदुःखस्य**' ॥ नरकरुज इति स्वामी ॥

**पीडाबाधाव्यथा दुःखमामनस्यं प्रसूतिजम् ॥ ३ ॥**
**स्यात्कष्टं कृच्छ्रमाभीलम्**

**पीडेति** ॥ 'पीड अवगाहने' ( प० से० ) चौरादिकः। भिदाद्यङ् (३।३।१०४)। '**पीडा**र्तिमर्दनोत्तंसकृपासु सरलद्रुमे' इति हैमः ॥ (१) ॥*॥ 'बाधृ विलोडने' ( भ्वा० आ० से० )। 'गुरोश्च–' (३।३।१०३) इत्यः। '**बाधा** दुःखे निषेधे च' इति मेदिनी ॥*॥ 'आबाधा' इति वा छेदः। '**आबाधा वेदना** दुःखम्' इति हलायुधः ॥ (२) ॥*॥ 'व्यथ भयसंचलनयोः' ( भ्वा० आ० से० ) 'घटादयः षितः' इति षित्त्वातिदेशादङ् (३।३।१०४) ॥ (३) ॥*॥ दुष्टानि खान्यस्मिन्। यद्वा दुर्निन्दितं खनति। 'अन्येभ्योऽपि–' ( वा० ३।२।१०१) इति डः। यद्वा दुःखयति। 'सुख दुःख तत्क्रियायाम्' ( उ० से० ) चुरादिः। पचाद्यच् (३।१।१३४) ॥ (४) ॥*॥ मानसे साधु। 'तत्र साधुः' (४।४।९८) इति यत्। मानस्याद्भिन्नम्। 'प्रसूतिजममानस्यं कृच्छ्रं कष्टं **कलाकलम्**' इति वाचस्पतिः ॥*॥ अमनसो भावः आमनस्यम्। ब्राह्मणादित्वात् (५।१।१२४) ष्यञ्–इति स्वामी (५) ॥*॥ प्रसूतेर्जातम्। 'पञ्चम्याम्–' (३।२।९८) इति डः ॥ (६) ॥*॥ द्वे वैमनस्यस्य इति स्वामी। षडपि मनःपीडार्थाः–इति सभ्याः। 'दुःखप्रसूतिजे क्लीबे पीडा बाधा च वेदना' इति माला। कषति। 'कष हिंसायाम्' ( भ्वा० प० से० )। क्तः (३।३।१७४)। 'कृच्छ्रगहनयोः कषः' (७।२।२२) इतीडभावः। '**कष्टं** तु गहने कृच्छ्रे' ॥ (७) ॥*॥ कृन्तति। 'कृती छेदने' ( तु० प० से० )। 'कृतेश्छः क्रू च' (उ० २।२१) इति रक् छश्च। '**कृच्छ्र**मंहसि। कष्टे सान्तपने' इति हैमः ॥ (८) ॥*॥ आ समन्ताद् भियं लाति। कः (३।२।३)। '**आभीलं** भीषणे कृच्छ्रेऽपि' इति हैमः ॥ (९) ॥*॥ त्रीणि '**शरीरपीडायाः**' ॥ नवापि '**दुःखस्य**' इत्येके ॥

१—अंहसि पापे यथा 'कृत्स्नानि कृच्छ्राणि रविर्लुनातु' इत्यनेकार्थकैरवाकरकौमुदी ॥ इह त्वम्भसीति लिखितमासीत् ॥

**त्रिष्वेषां भेद्यगामि यत् ॥**

**त्रिष्विति** ॥ एषां मध्ये यद्भेद्यगामि द्रव्यगामि तत्त्रिषु। दुःखा सेवा। दुःखः सुतो निर्गुणः। सर्वं दुःखं विवेकिनः ॥

**॥ इति नरकवर्गविवरणम् ॥**

---

**समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः।**
**उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः ॥ १ ॥**
**रत्नाकरो जलनिधिर्यादःपतिरपांपतिः।**

**समुद्र इति** ॥ समुनत्ति। 'उन्दी क्लेदने' (रु० प० से०)। 'स्फायि–' (उ० २।१३) इति रक्। समीचीना उद्रा जलचरविशेषा यस्मिन्निति वा। सह मुद्रया मर्यादया वर्तते इति वा ॥ (१) ॥*॥ आपो धीयन्तेऽत्र। 'कर्मण्यधिकरणे च' (३।३।९३) इति धाञः किः। ( '**अब्धिर्ना** सरसि वारिधौ' ) ॥ (२) ॥*॥ कुं पृथ्वीं पिपर्ति। 'पॄ पालनपूरणयोः' ( जु० प० से० )। 'कर्मण्यण्' (३।२।१)। 'अन्येषामपि–' (६।३।१३७) इति दीर्घः। नञ्समासः (२।२।१८) यद्वा। न कूपमृच्छति। 'ऋ गतौ' ( भ्वा० प० अ० )। अगाधत्वात् खनितुमशक्यः कुश्च उश्च कौ पिपर्ति। 'पॄ पालनपूरणयोः' ( जु० प० से० )। 'कर्मण्यण्' (३।२।१) तद्भिन्नः। ('**अकूपारः** कूर्मराजसमुद्रयोः') ॥ (३) ॥*॥ पारमावृणोति। 'वृञ् वरणे' ( स्वा० उ० से०)। 'कर्मण्यण्' (३।२।१)। पारावारावस्य स्त इति वा। अर्शआद्यच् (५।२।१२७)। '**पारावारः** पयोराशौ **पारावारं** तटद्वये' ॥*॥ पारमपारमस्येति (**पारापारः**[2]) पवर्गादिमध्यः–इति कश्चित् ॥ (४) ॥*॥ सरितां पतिः ॥ (५) ॥*॥ उदकानि सन्त्यत्र 'उदन्वानुदधौ च' (८।२।१३) 'इति मलन्तो निपातितः ॥' (६) ॥*॥ उदकानि धीयन्तेऽत्र। 'कर्मण्यधिकरणे च' (३।३।९३) इति किः। 'पेषंवासवाहनधिषु च' (६।३।५८) इत्युदः। 'उदकस्य–' (६।३।५७) इति वा ॥ (७) ॥*॥ स्यन्दन्ते आपोऽत्र। 'स्यन्दू प्रस्रवणे' ( भ्वा० आ० से० )। 'स्यन्देः संप्रसारणं धश्च' (उ० १।११) इत्युः। '**सिन्धु**र्वमथुदेशाब्धिनदे ना, सरिति स्त्रियाम्' इति विश्वमेदिन्यौ ॥ (८) ॥*॥ '**सरो** नीरे तडागे च' इति रुद्रः। सरो नीरं गतिर्वास्त्यस्मिन्। मतुप् (५।२।९५)। 'तसौ मत्वर्थे' (१।४।१९) इति भत्वम्। '**सरस्वांस्तु** नदे वार्धौ ना, न्यवद्रसिके, स्त्रियाम्। वाणीस्त्रीरत्नवाग्देवीगोनदीषु नदीभिदि। मनुपत्न्यामपि' ॥ (९) ॥*॥ सगरस्य राज्ञोऽयम्। 'तस्येदम्' (४।३।१२०) इत्यण्। न गरो येनामृतेन मणिना वा सह तेन वा ॥ (१०)

१—एषां दुःखादीनाम्–इति स्वामी ॥ २—तथा च हरिप्रबोधे संदृश्यमकम्—'सतमाः सतमालतया पारापारास्तः सदारोदारः। लोकालोकानुकृतिः सद्यः स ह्ययमनभ्रकूटैः कूटैः' इति मुकुटबुधमनोहरे ॥

॥*॥ अर्णांस्यत्र सन्ति । 'अर्णसो लोपश्च' ( ५।२ ) इति वः सलोपश्च ॥ (११) ॥*॥ रत्नानामाकरः ॥ (१२) ॥*॥ जलानि धीयन्तेऽत्र । 'कर्मण्यधिकरणे च' ( ३।३।९३ ) इति किः । जलानां निधिरिति वा ॥ (१३) ॥*॥ यादसां जलजन्तूनां पतिः ॥ (१४) ॥*॥ अपां पतिः ॥ (१५) ॥*॥ पञ्चदश **'समुद्रस्य'** ॥

**तस्य प्रभेदाः क्षीरोदो लवणोदस्तथापरे ॥ २ ॥**

**तस्येति** ॥ क्षीरमुदकं यस्य । 'उत्तरपदस्य च' ( वा० ६।३।५७ ) इत्युदः ॥ (१) ॥*॥ एवं लवणोदः, इक्षुरसोदः, सुरोदः, दधिमण्डोदः, स्वादूदः, घृतोदः ॥ **'समुद्रविशेषाणां'** पृथक्पृथगेकैकम् ॥

**आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ।**
**पयः कीलालममृतं जीवनं भुवनं वनम् ॥ ३ ॥**
**कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।**
**अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशंवरम् ॥ ४ ॥**
**मेघपुष्पं घनरसः**

**आप इति** ॥ आप्नुवन्ति, आप्यन्ते वा । 'आप्लृ व्याप्तौ' ( स्वा० प० अ० ) । 'आप्नोतेर्ह्रस्वश्च' ( उ० २।५८ ) इति क्विप् ह्रस्वत्वं च ॥*॥ असुनि ( उ० ४।२०८ ) आपः सौन्तं क्लीबं च । 'कबन्धमुदकमापोनीरवार्वारिनारम् । क्लीबमपि' इति संसारावर्तात् ॥ (१) ॥*॥ वारयति । वृञो ण्यन्तात् ( ३।१।२६ ) क्विप् ( ३।२।१७८ ) । वार् क्लीबैमुक्तसंसारावर्तात् ॥ (२) ॥*॥ 'वसिवपि–' ( उ० ४।१२५ ) इतीञि वारि च । ( **'वारि** ह्रीबेरनीरयोः । **वारि**र्घट्यां सरस्वत्यां गजबन्धनभुव्यपि' ) ॥ (३) ॥*॥ सलति । 'षल गतौ' ( भ्वा० प० से० ) । 'सलिकलि–' ( उ० १।५४ ) इतीलच् । रलयोरेकत्वम् । **'सरिलं सलिरं** सलिलम्' इति वाचस्पतिः ॥ (४) ॥*॥ कम्यते । 'कमु कान्तौ' ( भ्वा० आ० से० ) । वृषादित्वात् ( उ० १।१०६ ) कलच् । **'कमला** श्रीर्जलं पद्मं **कमलं कमलो** मृगः' इति धरणिदर्शनात् 'कमलम्' इत्येकं नाम । **'मलं** क्लोम्नि भेषजे । पङ्कजे सलिले ताम्रे **कमल**स्तु मृगान्तरे । **कमला** श्रीवरनार्योः' इति हेमचन्द्रः ॥ (५) ॥*॥ जलति । 'जल अपवारणे' ( चु० प० से० ) पचाद्यच् ( ३।१।१३४ ) । **'जलं** गोकलले नीरे ह्रीबेरेऽप्यन्यवज्जडे' इति मेदिनी ॥ (६) ॥*॥ पयते पीयते, वा । 'पय गतौ' ( भ्वा० आ० से० ) । 'पीङ् पाने' ( दि० आ० अ० ) वा असुन् ( उ० ४।१८९ ) । **'पयः** क्षीरे च नीरे च' इति हैमः ॥ (७) ॥*॥ कीलां ज्वालामलति वारयति 'अल भूषणादौ' ( भ्वा० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) । और्वाग्नेः कीलां लाति वा । **'कीलालं** रुधिरे तोये' इति हैमः ॥ (८) ॥*॥ न मृतं मरणमस्त्यस्मिन् । प्राणस्यापोमयत्वात् । **'अमृतं** यज्ञशेषे स्यात्पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः । **अमृता** मागधीपथ्यागुडूच्यामलकीषु च' ॥ (९) ॥*॥ जीव्यतेऽनेन । 'जीव प्राणधारणे' ( भ्वा० प० से० ) । करणे ल्युट् ( ३।३।११६ ) । **'जीवनं** वर्तने नीरप्राणधारणयोरपि । **जीवनी जीवना** चापि जीवन्तीभेदयोः क्रमात्' ॥ (१०) ॥*॥ भूयते । 'भू प्राप्तौ' ( चु० आ० से० ) । 'भूसूधूभ्रस्जिभ्यश्छन्दसि' ( उ० २।८० ) इति क्युन् । यद्वा भवन्त्युत्पद्यन्तेऽनेन । करणे ल्युट् ( ३।३।११६ ) संज्ञापूर्वकत्वाद्वृणाभावः । **'भुवनं** विष्टपेऽपि स्यात्सलिले गगने जले' ॥ (११) ॥*॥ वन्यते संभज्यते सेव्यते वा । वन 'संभक्तौ' ( भ्वा० प० से० ) । 'वनु याचने' ( तु० आ० से० ) वा । कर्मणि घञ् ( ३।३।१९ ) । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । यत्तु—भुवनवद्बाहुलकात् क्युनि 'अनुदात्तोपदेश–' ( ६।४।३७ ) इत्यादिना नलोपे वनम्,—इत्युज्ज्वलदत्तः–इति मुकुटः । तन्न । 'अनुदात्तोपदेश–' ( ६।४।३७ ) इत्यनुनासिकलोपस्य क्ङिति झलि विधानात्क्युनि तदप्रसङ्गात् । अन्यथा वन्यत इत्यादावपि प्रसङ्गात् । **'वनं** प्रस्रवणे गेहे प्रवासेऽम्भसि कानने' इति हैमः ॥ (१२) ॥*॥ कं सुखं बध्नाति । 'बन्ध बन्धने' ( क्र्या० प० अ० ) । 'कर्मण्यण्' ( ३।२।१ ) । **'कबन्धं** सलिले रुण्डे' इति शाश्वतादिदमेकं नाम । **'कबन्धो**ऽस्त्री क्रियायुक्तमपमूर्धकलेवरे । क्लीबं जले, पुंस्युदरे राहुरक्षोविशेषयोः' ॥*॥ केचित्तु–**'कमन्धम्'** इति पठित्वा द्वे नामनी–इत्याहुः ॥ (१३) ॥*॥ उनत्ति । 'उन्दी क्लेदने' ( रु० प० से० ) । 'उदकम्' ( उ० २।३९ ) इत्युणादिसूत्रेण साधु । यत्तु—उन्दति–इति विगृहीतवन्तौ स्वामिमुकुटौ । तच्चिन्त्यम् । उन्दे रौधादिकत्वात् ॥ (१४) ॥*॥ पाति । 'पा रक्षणे' ( अ० प० से० ) । 'उदके थुट्च' ( उ० ४।२०४ ) इत्यसुन् थुट् । यत्तु—पीयते–इति विग्रहप्रदर्शनं स्वामिमुकुटाभ्यां कृतम् । तन्न । 'पातेर्बले जुट्' इत्यनुवृत्तिविरोधात् ।

---

१—बाहुलकात्पष्ठ्या अलुक् ॥ वाक्येनैव नामेति सर्वधरः—इति मुकुटः ॥ 'सुगममेव हि मध्यमपांपतेः' इति दर्शनात्—इति स्वामी ॥ २—'आपोभिर्मार्जनं कृत्वा' इति स्मृतेः—इति मुकुटबुधमनोहरे ॥ ३—प्रयोगश्च 'वारि पतन्ति नदन्ति मयूराः' इति पूर्वघटकर्परः ॥—पूर्वसाहचर्यात्स्त्रीत्वं वारः इति तु कलिङ्गः ॥ पूर्वोत्तरसाहचर्यात् स्त्रीक्लीबयोर्वार इति तु पञ्जिका इति मुकुटः ॥

१—अत्र तु 'प्रसूरश्वा जनन्यपि' इत्यपि लिखितमासीत् ॥ तच्च न प्रकृतोपयुक्तम् ॥ २—प्रवासे यथा 'आहूतस्याभिषेकाय विसृष्टस्य वनाय च' इत्यनेकार्थकैरवाकरकौमुदी । अत्र तु 'प्रवाहे' इति लिखितमासीत् ॥ ३—'समरसरसि नृत्यत्कबन्धे' इति वासवदत्तायाम् 'चलितोद्धतकबन्धसंपदाः' इति माघे च प्रयोगात्–इति मुकुटः ॥ ४—'उदकशब्दसमानार्थ उदशब्दो विद्यते' । तथा च 'प्रसन्नोदम्, इत्यसंज्ञायामप्युदशब्दः प्रयुज्यते' इति (६।३।५७ सूत्रे) कैयट–इति मुकुटः ॥

तत्र पातेर्ग्रहणम्, न पिबतेः॥ (१५) ॥*॥ पुष्णाति। 'पुष पुष्टौ' (क्र्या० प० से०)। 'पुषः कित्' (उ० ४।४) इति करन्। '**पुष्करं** पङ्कजे व्योम्नि पयःकरिकराग्रयोः। ओषधीद्वीपविहगतीर्थराजोरगान्तरे। **पुष्करं** तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च' ॥ (१६) ॥*॥ सर्वतो मुखान्यस्य। सर्वदिग्गमनात्। '**सर्वतोमुख** उग्रे च क्षेत्रज्ञब्रह्मणोः पुमान्। नपुंसकं तु पानीये सुरवर्त्मन्यपि स्मृतम्' ॥ (१७) ॥*॥ आप्नोति, आप्यते वा। 'आप्लृ व्याप्तौ' (स्वा० प० अ०) 'उदके नुम्भौ च' (उ० ४।२१०) इत्यसुन् ह्रस्वो भान्तादेशो नुमागमश्च। अम्भते वा। 'अभि शब्दे' (भ्वा० आ० से०)। असुन् (उ० ४।१८९)। यत्तु—अमति–इति विग्रहप्रदर्शनं स्वामिमुकुटाभ्यां कृतम्। यच्च–अमेर्भुक् च–इति सूत्रोपन्यसनं मुकुटेन कृतम्। तन्न। तदुक्तसूत्रस्योज्ज्वलदत्तादावनुपलम्भात्। अस्मदुपन्यस्तस्योपलम्भाच्च ॥ (१८) ॥*॥ ऋच्छति। 'ऋ गतौ' (भ्वा० प० अ०)। 'उदके नुट् च' (उ० ४।१९७) इत्यसुन् नुडागमश्च। यत्तु—ऋणोति–इति विगृहीतं स्वामिना। तन्न। 'अर्तेरुच' इत्यतः 'अर्तेः' इत्यनुवृत्तेः स्वादेस्तत्राग्रहणात् ॥ (१९) ॥*॥ तौति। तुः सौत्र आवरणार्थः। औणादिको यः (४।११२) ॥ (२०) ॥*॥ पीयते। 'पा पाने' (भ्वा० प० से०)। अनीयर् (३।१।९६)। पायते वा। 'पै शोषणे' (भ्वा० प० अ०)। '**पानीयं** पेयजलयोः' इति हैमः ॥ (२१) ॥*॥ नीयते। 'णीञ् प्रापणे' (भ्वा० उ० से०)। 'स्फायि–' (उ० २।१३) इति रक्। निर्गतं रादग्नेर्वा। 'निरादयः–' (वा० २।२।१८) इति समासः। 'अग्नेरापः' इति (तैत्तिरीय) श्रुतेः। निष्क्रान्तो रोऽस्मात्। 'प्रादिभ्यो धातुजस्य–' (वा० २।२।२४) इति बहुव्रीहिः। 'अद्भ्योऽग्निः' इति स्मृतेः। यत्तु–'ढ्रलोपे–' (६।३।१११) इति दीर्घेण 'नीरम्' इति स्वामी–इति मुकुटः। तन्न। नयति 'नीरम्' इति स्वामिग्रन्थादुक्तार्थानवगमात्। निश्चयेन राति सुखम्। 'रा दाने' (अ० प० अ०)। 'आतश्चोपसर्गे' (३।१।१३६) इति को वा ॥*॥ 'नीरवार्वारिनारम्' इति संसारावर्तसंमते 'नार' इति पाठे नरस्येदम्। 'तस्येदम्' (४।३।१२०) इत्यण्। 'आपो वै नरसूनवः' इति स्मृतेः। ('**नार**स्तर्णकनीरयोः' इति मेदिनी) ॥ (२२) ॥*॥ क्षियति। 'क्षि निवासगत्योः' (तु० प० अ०)। 'शुसिचि(क्षि)मीनां दीर्घश्च' (उ० २।२५) इति क्रन् दीर्घत्वं च। यद्वा घस्यते। 'घसेः किच्च' (उ० ४।३४) इतीरन्। 'गमहनजन–' (६।४।९८) इत्युपधालोपः। यत्तु—क्षयति–इति विग्रहप्रदर्शनं मुकुटेन कृतम्। तन्न। उपन्यस्तधातोस्तादृशरूपाभावात्। '**क्षीरं** पानीयदुग्धयोः' इति हैमः ॥ (२३) ॥*॥ अम्बते। 'अबि शब्दे' (भ्वा० आ० से०)। बाहुलकादुः। यत्तु—अम्बति इति स्वामिना विगृहीतम्। तच्चिन्त्यम्। अस्यात्मनेपदित्वात् ॥ (२४) ॥*॥ शं वृणोति। 'वृञ् वरणे' (स्वा० उ० से०)। पचाद्यच् (३।१।१३४)। शंवं संवरणं राति–इति वा। संवयति। 'षंव संबन्धने'। 'शंव च' (चु० प० से०)। बाहुलकादरन्, इति वा। दन्त्यादिस्तालव्यादिश्च। '**शंवरं** सलिले, पुंसि मृगदैत्यविशेषयोः। **शंवरी** चाखुपर्ण्यां स्यात्' इति विश्वः ॥ (२५) ॥*॥ मेघस्य पुष्पमिव। '**मेघपुष्पं** पिण्डाभ्राम्बुनादेये ना हरेर्हये' ॥ (२६) ॥*॥ घनस्य रसः। 'पुंलिङ्गः स्याद् **घनरसः** सान्द्रनिर्यासनीरयोः' इति रभसः। 'नारं घनरसः पुमान्' इति शब्दार्णवः। 'अप्स्वपि शंव-(शम्ब) **रपिप्पलकुशकमलकाण्ड**विषवनपयांसि। घनरसमम्बु क्षीरं घृतममृतं जीवनं भुवनम्' इति रत्नकोषात् क्लीबमपि ॥ (२७) ॥*॥ दकशब्दोप्यत्र। 'प्रोक्तं प्राज्ञैर्भुवनममृतं **जीवनीयं दकं** च' इति हलायुधात् ॥*॥ सप्तविंशतिः '**जलस्य**' ॥

## त्रिषु द्वे आप्यमम्मयम्।

**त्रिष्विति** ॥ अपां विकारः। 'तस्य विकारः' (४।३।१३४) इत्यणन्ताच्चतुर्वर्णादित्वात् (वा० ५।१।१२४) स्वार्थे ष्यञ्। स्त्रियाम् आप्या ॥ (१) ॥*॥ 'एकाचो नित्यम्' ( ) इति मयट्। स्त्रियामम्मयी ॥ (२) ॥*॥ द्वे '**जलविकारस्य**' ॥

## भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः

**भङ्ग इति** ॥ भज्यते 'भञ्जो आमर्दने' (रु० प० अ०)। कर्मणि घञ् (३।३।१९)। 'भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये। कौटिल्ये भयविच्छित्त्योः। (**भङ्गा** शाणे)' इति हैमः ॥ (१) ॥*॥ तरति। 'तॄ प्लवनसंतरणयोः' (भ्वा० प० से०)। 'तरत्यादिभ्यश्च' (उ० १।१२०) इत्यङ्गच् ॥ (२) ॥*॥ ऋच्छति। 'ऋ गतौ' (भ्वा० प० अ०)। 'अर्तेरुच' (उ० ४।४४) इति मिः। अर्तेरुदादेशः (रपरः)। 'वा स्त्रियाम्' इति काकाक्षिगोलकन्यायेनोर्मिवीचिभ्यां संबध्यते। 'पुंलिङ्गस्त्रीलिङ्गयोर्वीचिमणियष्टिमुष्टयः' 'अशनित्रुटिशमिपाटलिशाल्मलितरणिश्रेण्यूर्मयः'। 'वस्तिश्च' इति वामनः। '**ऊर्मिः** पीडाजवोत्कण्ठाभङ्गप्राकाश्यवीचिषु। वस्त्रसंकोचलेखायाम्' इति हैमः ॥ (३) ॥*॥ वयति, ऊयते वा। 'वेञ् तन्तुसंताने' (भ्वा० उ० अ०) 'वेञो डिच्च' (उ० ४।७२) इतीचिः। यत्तु—वाति। 'वा गतिगन्धनयोः' (अ० प० अ०)। 'वातेः कित्'–इति मुकुटः। तन्न। तथासति 'विः' इति रूपप्रसङ्गात्। 'वातेर्डिच्च' (उ० ४।१३४) इति सूत्रे 'जनि-

१—एतदुत्तरम् 'आप्यं मुखे च तन्मध्ये तद्भवे च स्त्रियां स्थितौ। इज्यादानेऽध्वरेऽर्चायां संगमेऽस्त्री गुरौ त्रिषु' इति लिखितमस्ति। परंतु पूर्वार्धे आप्यस्य स्थाने आस्यशब्दस्यैव हैमविश्वमेदिनीषूपलम्भात् स्वयमपि आस्यशब्दव्याख्यायामस्यैव कोशस्यास्यशब्दघटितस्येवोपन्यस्तत्वाच्च आस्यशब्दस्यैव तदर्थकत्वस्यानुभवसिद्धत्वाच्च न प्रकृतोपयुक्तम् ॥ उत्तरार्धस्य इज्याशब्दार्थबोधकत्वान्न प्रकृतोपयोगि ॥

२—भङ्गो विच्छित्तिः इत्यनेकार्थकैरवाकरकौमुदी ॥

घसिभ्यामिण्' (उ० ४।१३०) इति सूत्रात् 'इण्' इत्यनुवृत्तेः 'वीचिर्नित्यं स्त्री' इति स्वामी। 'वीचिः स्वल्पतरङ्गे स्यादवकाशे सुखे द्वयोः' ॥ (४) ॥*॥ चत्वारि 'तरङ्गस्य' ॥

अथोर्मिषु ॥ ५ ॥

महत्सूल्लोलकल्लोलौ

अथेति ॥ उत् लोडयति । 'लोड़ उन्मादे' ( भ्वा० प० से० ) णिच् ( ३।१।२६ ) । पचाद्यच् ( ३।१।१३४) डलयोरेकत्वम् । यत्तु—लोलयतीति लोलः । पचाद्यच् ( ३।१। १३४ )। उद्गतश्चासौ लोलश्चेति उल्लोलः, इति स्वामी–इति मुकुटः। तन्न। ऊर्ध्वं लोलयति इति स्वामिना विगृहीतत्वात्। स्वकृतनिर्वचनाविशेषाच्च ॥ ( १ ) ॥*॥ कं जलम्। तस्य लोल उन्मादः। 'वा पदान्तस्य' ( ८।४।५९ ) इत्यनुस्वारस्य लकारः। कल्लन्तेऽनेन नद्यः। 'कल्ल अव्यक्ते शब्दे' ( भ्वा० आ० से० ) । बाहुलकादोलच्–इति वा ॥ (२) ॥*॥ द्वे 'महातरङ्गस्य' ॥

स्यादावर्तोऽम्भसां भ्रमः।

स्यादिति ॥ आवर्तनम्। 'वृतु वर्तने' (भ्वा० प० से०)। भावे घञ् ( ३।३।१८ )। 'आवर्तश्चिन्तने वारिभ्रमे चावर्तने पुमान्' ॥ (१) ॥*॥ 'जलानां भ्रमणस्य' एकम् ॥

पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियः ॥ ६ ॥

पृषन्तीति ॥ पर्षति। 'पृषु सेचने' ( भ्वा० प० से० ) । 'पृषद्बृहन्महत्–' ( उ० २।८४ ) इति साधु। बहुवचनमतन्त्रम्। 'पृषन्मृगे पुमान्, बिन्दौ न द्वयोः, पृषतोऽपि ना। अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ' ॥ (१) ॥*॥ विन्दति। 'बिदि अवयवे' ( भ्वा० प० से० )। बाहुलकादुः। 'बिन्दुर्दन्तक्षतान्तरे। भ्रुवोर्मध्ये रूपकाव्यकृतौ च पृषते पुमान्। वेदितर्यन्यलिङ्गः स्यात्' ॥ (२) ॥*॥ पर्षन्ति। 'पृषिरञ्जिभ्यां कित्' (उ० ३।१११) इत्यतच्। 'पृषतस्तु मृगे बिन्दौ खरोहिते। श्वेतबिन्दुयुतेऽपि स्यात्' इति हैमः ॥ (३) ॥*॥ 'प्रुषु प्लुषु दाहे' ( भ्वा० प० से० ) । संपदादित्वात् ( वा० ३।३।१०८ ) भावे क्विप्। विगता प्रुड्वा प्रुट् दाहोऽस्मात् ॥ (४) ॥*॥ चत्वारि 'जलकणस्य' ॥

वक्राणि पुटभेदाः स्युः

वक्राणीति ॥ वञ्चन्ति। 'वञ्चु गतौ' (भ्वा० प० से०)। 'स्फायितञ्चि'– ( उ० २।१३ ) इति रक्। 'न्यङ्क्वादीनां च' (७।३।५३) इति कुत्वम्। 'वक्रं पुटभेदे वक्रः कुटिले क्रूरभौमयोः' इति हैमः। 'वक्रः शनैश्चरे पुंसि, पुटभेदे नपुंसकम्। त्रिषु क्रूरे च कुटिले'। स्वामी तु–चक्राकारेण यान्त्यधः–इति विगृह्णन् चवर्गादित्वं मन्यते। 'चक्रः कोके पुमान्, क्लीबं व्रजे सैन्यरथाङ्गयोः। राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः। जलावर्तेऽपि' इति चादौ मेदिनी ॥ ( १ ) ॥*॥ पुटं संश्लिष्टं भिन्दन्ति। 'भिदिर् विदारणे' ( रु० उ० अ० )। 'कर्मण्यण्' ( ३।२।१ )। 'पुटभेदस्तु नगरातोद्ययोस्तटिनी मुखे' इति हैमः ॥ ( २ ) ॥*॥ द्वे 'चक्राकारेण जलानामधोयानस्य' ॥

भ्रमाश्च जलनिर्गमाः।

भ्रमा इति ॥ भ्रमन्ति जलान्यत्र। 'हलश्च' (३।३।१२१) इति घञ्। 'भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दभ्रमणयोरपि' ॥ (१) ॥*॥ निर्गमनानि। 'गम्लृ गतौ' ( भ्वा० प० अ० )। 'ग्रहवृदृनिश्चिगमश्च' ( ३।३।५८ ) इत्यप्। करणे वा। 'खनो घ च' ( ३।३।१२५ )। इति घः। जलानां निर्गमाः ॥ (२) ॥*॥ द्वे 'जलनिःसरणजालकस्य' ॥ नद्यादौ अधःस्थजलस्योर्ध्वनिःसरणस्येत्यन्ये। स्वामी तु–चत्वार्येकार्थानि–इत्याह ॥

कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ॥ ७ ॥

कूलमिति ॥ कूलयति। 'कूल आवरणे' (भ्वा० प० से०)। पचाद्यच् ( ३।१।१३४ )। 'कूलं तटे सैन्यपृष्ठे तडागस्तूभयोरपि' इति हैमः ॥ ( १ ) ॥*॥ रुणद्धि। 'रुधिर् आवरणे' ( रु० उ० से० ) । असुन् ( उ० ४।१८९ ) ॥*॥ अदन्तोऽपि। 'रोधः प्रोक्तश्च रोधसि' इति संसारावर्तात्। तत्राच् ( ३।१।१३४ ) ॥ (२) ॥*॥ तीरयति। 'पार तीर कर्मसमाप्तौ' ( चु० उ० से० ) । पचाद्यच् ( ३।१।१३४ )। यत्तु मुकुटः—तीर्यते तरणकर्म समाप्यतेऽनेनात्र वा। चुरादिण्यन्तात् 'एरच्' ( ३।३।५६)–इत्याह। तन्न। 'अजब्भ्यां स्त्रीखलनाः' ( वा० ३।३।१२६ ) इति ल्युट्प्रसङ्गात्। 'पुंसि संज्ञायाम्'—(३।३।११८) इति घप्रसङ्गाच्च। 'तीरो वङ्गे तीरं पुनस्तटे' इति हैमः ॥ (३) ॥*॥ +एवं पारम्+ प्रतीरमित्युपसर्गान्तरनिवृत्त्यर्थम् ॥ (४) ॥*॥ तटति। 'तट उच्छ्राये' ( भ्वा० प० से० )। पचाद्यच् ( ३।१।१३४ ) स्त्रियां तटी। 'जातेः–' ( ४।१।६३ ) इति ङीष् ॥ (५) ॥*॥ पञ्च 'तीरस्य' ॥

पारावारे परार्वाची तीरे

पारेति ॥ परं तीरं पारम्। 'पारं प्रान्ते परतटे' इति हैमः ॥ (१) ॥*॥ अर्वाक् तीरम्–अवारम्। अव अर्यते। 'ऋ गतौ' ( भ्वा० प० अ० )। कर्मणि घञ् (३।३।११९)। न वार् अस्त्यत्र–इति वा। अर्शआद्यच् ( ५।२।१२७) ॥ (१) ॥*॥ 'परतीरावरतीरयोः' एकैकम् ॥

---

१—'पृषन्ति बिन्दुपृषताः' इति त्रिभिर्द्वन्द्व इत्यन्ये। तथा च 'पयःपृषन्तिभिः स्पृष्टा वान्ति वाताः शनैः शनैः' इति जाम्बवतीविजयवाक्यम्–इति मुकुटपीयूषबुधमनोहराः ॥

१—जलनिःसरणजालके यथा माघे 'भ्रमागतैरम्बुभिरम्बुराशिः' इति—इति मुकुटः ॥ २—दीर्घेकारादि 'समुद्रतीरञ्जितसर्वलोका सेनापगा व्यासवती बलेन' इति द्विसंधानश्लेषात् ॥ ३ इदं वक्ष्यमाणोपयोगि ॥

पात्रं तदन्तरम् ।

**पात्रमिति** ॥ तयोः पारावारयोरन्तरं मध्यम् । पिबन्त्यत्र पान्त्यस्माद्वा । पिबतेः पातेर्वा ष्ट्रन् ( उ० ४।१५९ ) । '**पात्रं** तु कूलयोर्मध्ये पर्णे नृपतिमन्त्रिणि । योग्यभाजनयोर्यज्ञभाण्डे नाट्यानुकर्तरि' इति हैमः ॥ (१) ॥*॥ एकम् '**तटमध्यवर्तिप्रवाहस्य**' ॥

**द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ॥ ८ ॥**

**द्वीप इति** ॥ द्विर्गता अन्तर्गता वा आपोऽत्र । 'ऋक्पूर्-' ( ५।४।७४ ) इत्यः । समासान्तः 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' ( ६।३।९७ ) काकाक्षिवत् 'अस्त्रियाम्' इत्युभाभ्यां संबध्यते ॥ (१) ॥*॥ ( २ ) ॥*॥ द्वे '**जलमध्यस्थस्थानस्य**' ॥

**तोयोत्थितं तत्पुलिनम्**

**तोय इति** ॥ पुलति । 'पुल महत्त्वे' (भ्वा० प० से०) । 'तलिपुलिभ्यां च' ( उ० २।५३ ) इतीनन् । त्रिकाण्डशेषे तु 'पुलिनं द्वीपमुच्यते' इत्यभिहितम् ॥ (१) ॥*॥ एकं '**जलादचिरनिर्गततटस्य**' ॥

**सैकतं सिकतामयम् ।**

**सैकतमिति** ॥ सिकताः सन्त्यस्मिन् । 'सिकताशर्कराभ्यां च' ( ५।२।१०४ ) इति मत्वर्थेऽण् ॥ (१) ॥*॥ सिकतानां विकारः । 'मयड्वैतयोः-' ( ४।३।१४३ ) इति मयट् ॥ (२) ॥*॥ द्वे '**वालुकामयतटस्य**' ॥

**निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ ॥ ९ ॥**

**निषेति** ॥ निषीदन्त्यत्र । 'षद्लृ विशरणगत्यवसादनेषु' (भ्वा०, तु० प० अ० ) । 'नौ सदेः' ( उ० २।१२२ ) इति ष्वरच् । 'सदिरप्रतेः' ( ८।३।३६ ) इति षत्वम् । यद्वा निषदनम् । संपदादि क्विप् ( वा० ३।३।१०८ ) । निषद आसनस्य वर आवारकः । 'वृञ् आवरणे' ( चु० उ० से० ) आधृषीयः । पचाद्यच् (३।१।१३४) । '**निषद्वरः** स्मरे पङ्के निशायां तु **निषद्वरी**' इति विश्वः ॥ (१) ॥*॥ जमति । 'जमु अदने' (भ्वा० प० से०) । बाहुलकाद्वालन् । यद्वा ।-'जम्ब अदने' ( ) इति धातुः । भावे घञ् (३।३।१८) । जम्बम् आलाति । 'ला दाने' (अ० प० अ०) । 'आतोऽनुप-' (३।२।३) इति कः । '**जम्बालः** शैवले पङ्के' ॥ (२) ॥*॥ पच्यते । 'पचि विस्तारे' (चु० प० से० ) । कर्मणि घञ् (३।३।१९) । 'हलश्च' (३।३।१२१) इति करणे वा । '**पङ्कोऽस्त्री** कर्दमे पापे' इति मेदिनी ॥ (३) ॥*॥ शीयन्तेऽस्मिन्ननेन वा । 'शद्लृ शातने' ( भ्वा० तु० प० अ० ) । घञ् (३।३।१२१) । यद्वा शीयते नश्यति । ज्वलितिकसन्तेभ्यो णः' ( ३।१।१४० ) । यद्वा श्यति । 'शो तनूकरणे' ( दि० प० अ० ) । 'शशपिभ्यां ददनौ' ( उ० ४।९७ ) इति दः । '**शादः** कर्दमशष्पयोः' इति हैमः ॥ (४) ॥*॥ कर्दति । 'कर्द कुत्सिते शब्दे' ( भ्वा० प० से० ) । 'कलिकर्द्योरमः' (उ० ४।८४) ॥ (५) ॥*॥ पञ्च '**कर्दमस्य**' ॥

**जलोच्छ्वासाः परीवाहाः**

**जलोच्छ्वासा इति** ॥ जलान्युच्छ्वसन्ति परिवहन्त्येभिः । 'श्वस प्राणने' ( अ० प० से० ) । 'वह प्रापणे' (भ्वा० उ० अ० ) । 'हलश्च' (३।३।१२१) । इति घञ् । 'उपसर्गस्य घञि-' (६।३।१२२) इति वा दीर्घः । यद्वा जलानामुच्छ्वसनम् । परिवहनम् च । भावे घञ् (३।३।१८) ॥ (१) ॥*॥ '**परीवाहो** जलोच्छ्वासे महीभृद्योग्यवस्तुनि' ॥ ( २ ) ॥*॥ द्वे '**प्रवृद्धजलस्य निर्गममार्गस्य**' । समधिकजलस्य सर्वतो वहनस्य वा ॥

**कूपकास्तु विदारकाः ।**

**कूपका इति** ॥ कुत्सिताः कूपाः । 'कुत्सिते' ( ५।३।७४) इति कः । कूपस्य प्रतिकृतिः इति वा । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । '**कूपको** गुणवृक्षे स्यात्तैलपात्रे कुकुन्दरे । उदपाने चितायां च ( **कूपिकाम्भोगतोपले** )' ॥ (१) ॥*॥ विदार्यन्ते । 'दॄ विदारणे' ( क्र्या० प० से० ) णिच् (३।१।२६) बाहुलकात्कर्मणि ण्वुल् । यद्वा विदार्यन्ते । कर्मणि घञ् (३।३।१९) । कुत्सिता विदाराः । कुत्सायां कः (५।३।७४) ॥ (२) ॥*॥ द्वे '**शुष्कनद्यादौ कृतगर्तस्य**' ॥

**नाव्यं त्रिलिङ्गं नौतार्ये**

**नाव्यमिति** ॥ नावा तार्यम् । 'नौवयोधर्म-' ( ४।४।९१ ) इति यत् । 'वान्तो यि- ( ६।१।७९ ) इत्यवादेशः ॥ (१) ॥*॥ एकं '**नौतरणयोग्यजलस्य**' ॥

**स्त्रियां नौस्तरणिस्तरिः ॥ १० ॥**

**स्त्रियामिति** ॥ नुद्यते । 'णुद प्रेरणे' ( तु० उ० अ० ) 'ग्लानुदिभ्यां डौः' ( उ० २।६४ ) । यद्वा नयति । 'णीञ् प्रापणे' ( भ्वा० उ० अ० ) । 'अन्येभ्योऽपि-' ( वा० ३।२।१०१ ) इति डः । नम् अवति क्विप् ( ३।२।७६ ) 'ज्वरत्वर-' (६।४।२०) इत्यूठौ । वृद्धिः (६।१।८९) ॥ (१) ॥*॥ तरन्त्यनया । 'तॄ प्लवनतरणयोः' ( भ्वा० प० से० ) । 'अर्तिसृधृधम्यश्यवितृभ्योऽनिः' ( उ० २।१०२ ) । '**तरणिस्तरणे**ऽर्केऽशौ कुमार्योषधिनौकयोः । यष्ट्यावब्धौ' इति हैमः ॥ (२) ॥*॥ 'अश इः' उ० ( ४।१३९ ) । 'कृदिकारात्-' (ग० ४।१४५) इति ङीष् वा । तरणी । तरी । '**तरिर्दशायां** वेडायां वस्त्रादीनां च पेटके' इति हैमः ॥ (३) ॥*॥ त्रीणि '**नौकायाः**' ॥

१—एतदग्रे '**जगलो** मदनद्रुमे । मेदके पिष्टमद्ये च पुंसि धूर्तेऽभिधेयवत्' इति लिखितमासीत् ॥ तत्तु जगलशब्दार्थबोधकतया न प्रकृतोपयुक्तम् ॥

१—'उपार्जितानामर्थानां त्याग एव हि रक्षणम् । तडागोदकसंस्थानां परीवाह इवाम्भसाम्' इति दीर्घलक्ष्यम् इति स्वामिमुकुटबुधमनोहराः पक्षे दीर्घाभावे 'परिवाहो जगतः करोति किम्' इति माघः—इति मुकुटबुधमनोहरे ॥ २—विश्वमेदिनीपुस्तके तु 'च्युतायाम्' इत्युपलभ्यते ॥

**उडुपं तु प्लवः कोलः**

**उडुपमिति** ॥ उडूनो जलात् पाति । 'पा रक्षणे' (अ० प० अ०) 'सुपि स्थः' (३।२।४) इत्यत्र 'सुपि' इति योगविभागात्कः । उडूनीव पाति, इति वा । 'उडुपश्चन्द्रमेलयोः' इति धरणिः ॥ (१) ॥*॥ प्लवते । 'प्लुङ् गतौ' (भ्वा० आ० अ०) । पचाद्यच् (३।१।१३४) । '**प्लवः** प्लक्षे प्लुतौ कपौ । शब्दे कारण्डवे म्लेच्छजातौ मेलकभेकयोः । क्रमनिम्नमहीभागे कुलके जलवायसे । जलान्तरे **प्लवं** गन्धतृणे मुस्तकभिद्यपि' इति हैमः ॥ (२) ॥*॥ कोलति । 'कुल संस्त्याने' (भ्वा० प० से०) 'ज्वलिति–' (३।१।१४०) इति णः । 'पोतृप्लवकयोः **कोलः कोलं** तु बदरीफलम्' इति शाश्वतः । '**कोलो** मेलक उत्सङ्गेऽङ्कपाल्यां चित्रके किरौ । **कोलं** तु बदरे **कोला** पिप्पल्यां चव्यभेषजे' इति हैमः ॥ (३) ॥*॥ त्रीणि '**तृणादिनिर्मिततरणसाधनस्य**' ॥

**स्रोतोऽम्बुसरणं स्वतः ।**

**स्रोत इति** ॥ स्रवति । 'स्रु गतौ' (भ्वा० प० अ०) । 'स्रुरीभ्यां तुट् च' (उ० ४।२०२) इत्यसुन् तुडागमः । स्रोतो दन्त्यादिः । 'स्रोतः सद्यःसकलसलिलम्' इति दन्त्यादिषूष्मविवेकात् । '**स्रोतो**ऽम्बुवेग इन्द्रिये' ॥ (१) ॥*॥ एकम् '**अकृत्रिमजलवहनस्य**' ॥

**आतरस्तरपण्यं स्यात्**

**आतर इति** ॥ आतरन्त्यनेन । 'पुंसि संज्ञायाम्' (३।३।११८) इति घः । यत्तु—'ऋदोरप्' (३।३।५७)—इति मुकुटः । तन्न । परत्वाल्ल्युटः प्रसङ्गात् । 'आतरस्[२]तरपण्यं स्यादनुत्तरम्' इति बोपालितः ॥ (१) ॥*॥ तरणम् । 'ऋदोरप्' (३।३।५७) । तरस्य पण्यम् ॥ (२) ॥*॥ द्वे '**नद्यादितरणे देयमूल्यस्य**' ॥

**द्रोणी काष्ठाम्बुवाहिनी ॥ ११ ॥**

**द्रोणीति** ॥ द्रवति । 'द्रु गतौ' (भ्वा० प० अ०) । 'वह्निश्रि' (उ० ४।५१) इति निः । 'कृदिकारात्–' (ग० ४।१।४५) इति ङीष् । '[३]द्रोणिः काष्ठाम्बुसेचनी **द्रुणिश्च**' इति रूपरत्नाकरात् द्रुणिरपि । 'द्रुण हिंसागत्योः' (तु० प० से०) । 'इगुपधात् कित्' (उ० ४।१२०) । (ङीषि द्रुणी । '**द्रुण्य**म्बुद्रोणिकच्छप्योः' इति मेदिनी) । '**द्रो[४]णी** काष्ठाम्बुवाहिन्यां गवादन्यामपीष्यते' ॥ (१) ॥*॥ पुनः पुनरम्बुवहति । 'बहुलमाभीक्ष्ण्ये' (३।३।८१) इति णिनिः ॥ (२) ॥*॥ द्वे '**काष्ठपाषाणकृतनौकाकाराम्बुसेचन्याः**' ॥

**सांयात्रिकः पोतवणिक्**

**सांये[१]ति** ॥ समुदितानां गमनं द्वीपान्तरगमनं वा संयात्रा । सा प्रयोजनमस्य । 'तदस्य प्रयोजनम्' (५।१।१०९) इति ठञ् ॥ (१) ॥*॥ पोतेनोपलक्षितो वणिक् ॥ (२) ॥*॥ द्वे '**वहित्रगामिनो वणिजः**' ॥

**कर्णधारस्तु नाविकः ।**

**कर्णेति** ॥ '**कर्णः** श्रोत्रमरित्रं च' इति दुर्गः । तं धरति । 'धृञ् धारणे' (भ्वा० उ० अ०) । 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ नावा तरति । 'नौ द्व्यचष्ठन्' (४।४।७) ॥ (२) ॥*॥ द्वे '**नाविकस्य**' ॥ नौपृष्ठदण्डधारकस्य—इत्यन्ये ॥

**नियामकाः पोतवाहाः**

**नियेति** ॥ नियच्छन्ति पोतम् । 'यम नियमने' (भ्वा० प० अ०) ण्वुल् (३।१।१३३) । '**नियामकः** पोतवाहे कर्म(र्णे) धारे नियन्तरि' ॥ (१) ॥*॥ पोतं वहन्ति । 'कर्मण्यण' (३।२।१) ॥ (२) ॥*॥ द्वे '**वहित्रवाहकस्य**' ॥

**कूपको गुणवृक्षकः ॥ १२ ॥**

**कूपेति** ॥ कूपे कायति । 'कै शब्दे' (भ्वा० प० अ०) । 'सुपि' (३।२।४) इति कः ॥ (१) ॥*॥ गुणानां रज्जूनां वृक्षः । 'संज्ञायां कन्' (५।३।७५) ॥ (२) ॥*॥ द्वे '**नौमध्यस्थरज्जुबन्धनकाष्ठस्य**' । नौबन्धनकीलकस्येत्यन्ये ॥

**नौकादण्डः क्षिपणी स्यात्**

**नौकेति** ॥ नौकाया दण्डः ॥ (१) ॥*॥ क्षिप्यतेऽनया । 'क्षिपेः किच्च' (उ० २।१०७) इत्यनिः ॥*॥ बाहुलका[२]द्गुणे क्षेपणिरपि । '**क्षेपणं** प्रेरणे, नौकादण्डजालभिदोः स्त्रियाम्' ॥ (२) ॥*॥ द्वे '**नौकापार्श्वद्वयबद्धचालनकाष्ठस्य**' ॥

**अरित्रं केनिपातकः ।**

**अरित्रमिति** ॥ ऋच्छत्यनेन । 'ऋ गतौ' (भ्वा० प० अ०) । 'अर्तिलूधू–' (३।२।१८४) इतीत्रः ॥ (१) ॥*॥ के जले निपातोऽस्य । 'हलदन्तात्–' (६।३।९) इत्यलुक् । 'शेषात्–' (५।४।१५४) इति कप । 'संज्ञायां कन्' (५।३।७४) वा (२) ॥*॥ द्वे '**नौपृष्ठस्थचालनकाष्ठस्य**' ॥

**अभ्रिः स्त्री काष्ठकुद्दालः**

**अभ्रिरिति** ॥ अभ्रति । 'अभ्र गतौ' (भ्वा० प० से०) इन् (उ० ४।११८) ॥ (१) ॥*॥ कुम् उद्दालयति । 'दल विशरणे' (भ्वा० प० से०) 'कर्मण्यण्' (३।२।१) शकन्ध्वादिः (वा० ६।१।९४) । काष्ठस्य कुद्दालः ॥ (२) ॥*॥ द्वे '**पोतादेर्मलापनयनार्थं काष्ठादिरचितकुद्दालस्य**' ॥

---

१—'प्लवंगे च' इति पाठः ॥ २—मुकुटबुधमनोहरयोस्तु '**आतारानुत्तरावप्यत्र**' इत्युक्त्वा दीर्घमध्यमेवेदमुदाहृतम् ॥ ३—'मरकतमणिद्रोणिसरला' इति पूर्वकविप्रयोगः—इति मुकुटबुधमनोहरे ॥ ४—'द्रोणीभिरम्भसि चरन्ति महार्णवस्य'—इत्यनेकार्थकैरवाकरकौमुदी ॥

१—'संपूर्वस्य यातेर्द्वीपान्तरगमने वृत्तिः' इति चाणक्यटीकेति कलिङ्गः—इति मुकुटः ॥ २—'आतिदैशिककार्यस्यानित्यत्वाद्गुणाभावाभावे क्षेपणिः । 'कृदिकारात्' ग० (४।१।४५) इति ङीषि क्षेपणी च' इति माधवी—इति मुकुटः ॥

सेकपात्रं तु सेचनम् ॥ १३ ॥

**सेकेति** ॥ सेकस्य पात्रम् ॥ (१) ॥*॥ सिच्यतेऽनेन । 'करणा–' ( ३।३।११५ ) इति ल्युट् । '**सेचनं** रक्षणे सेके नौकायाः सेकभाजने' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ द्वे '**नौस्थजलनिःसारणपात्रस्य**' ॥

क्लीबेऽर्धनावं नावोऽर्धे

**क्लीब इति** ॥ नावोऽर्धम् । 'अर्धं नपुंसकम्' (२।२।२) इति तत्पुरुषः । 'नावो द्विगोः' ( ५।४।९९ ) 'अर्धाच्च' ( ५।४। १००) इति टच् ॥ (१) ॥*॥ एकम् '**अर्धनौकायाः**' ॥

अतीतनौकेऽतिनु त्रिषु ।

**अतीतेति** ॥ अतीता नौर्येन । 'उरःप्रभृतिभ्यः–' (५।४ १५१) इति कप् ॥ (१) ॥*॥ नावमतिक्रान्तम् । 'अत्यादयः' (वा० २।२।१८) इति तत्पुरुषः । अतिनौः पुमान् स्त्री वा ॥ (२) ॥*॥ द्वे '**नौकामतिक्रान्तजलादेः**' ॥

त्रिष्वागाधात्

**त्रिष्विति** ॥ अगाधमभिव्याप्य त्रिषु ॥

प्रसन्नोऽच्छः

**प्रसन्न इति** ॥ प्रासदत् । 'षद्लृ विशरणादौ' (भ्वा०, तु० प० अ० ) । 'गत्यर्थ–' ( ३।३।१७२ ) इति क्तः । '**प्रसन्ना** स्त्री सुरायां स्वादच्छसंतुष्टयोस्त्रिषु' ॥ (१) ॥*॥ 'छो छेदने' (दि० प० अ०) न च्छ्यति दृष्टिम् । 'सुपि' (३।२।४) इति कः । न च्छाद्यते वा । 'अन्येष्वपि–' (३।२।१०१) इति डः । '**अच्छो** भल्लूके स्फटिकेऽमलेऽच्छाऽभिमुखोऽव्ययम्' इति हैमः ॥ (२) ॥*॥ द्वे '**निर्मलस्य**' ॥

कलुषोऽनच्छ आविलः ॥ १४ ॥

**कलुष इति** ॥ लुषति । 'लुष हिंसायाम्' ( ) 'इगुपध–' ( ३।१।१३५) इति कः । कस्य जलस्य लुषो घातकः । '**कलुषं** त्वाविले पापे' इति विश्वः ॥ (१) ॥*॥ भिन्नोऽच्छात् । नञ्तत्पुरुषः । 'नलोपो नञः' (६।३।७३) । 'तस्मान्नुडचि' ( ६।३।७४ ) ॥ (२) ॥*॥ आविलति । 'विल भेदने' (तु० प० से०) । 'इगुपध–' ( ३।१।१३५ ) इति कः ॥ (३) ॥*॥ त्रीणि '**मलिनजलस्य**' ॥

निम्नं गभीरं गम्भीरम्

**निम्नमिति** ॥ निमनति 'म्ना अभ्यासे' (भ्वा० प० अ०) 'आतश्च–' ( ३।१।१३६ ) इति कः ॥ (१) ॥*॥ गाते जलजन्तवोऽत्र । गच्छन्ति वा । 'गाङ् गतौ' ( अ० आ० अ० ) 'गम्लृ गतौ' ( भ्वा० प० से० ) । 'गभीरादयश्च' इति 'गभीरगम्भीरौ' (उ० ४।३५) इति वा निपातितौ ॥ (२) ॥*॥ (३) ॥*॥ त्रीणि '**गम्भीरस्य**' ॥

१—'येनातिवेगवज्जलादिनातिक्रान्ता नौस्तज्जलस्य नामैकम्' इति पाठः ॥

उत्तानं तद्विपर्यये ।

**उत्तानमिति** ॥ उद्गतस्तानो विस्तारोऽस्मात् ॥ (१) ॥*॥ तस्य गम्भीरस्य विपर्यये । 'उत्तानमगभीरे स्यादूर्ध्वास्यशयिते त्रिषु' ॥ (१) ॥*॥ एकम् '**उत्तानस्य**' ॥

अगाधमतलस्पर्शे

**अगाधमिति** ॥ नास्ति गाधः स्थितिरत्र । 'नञोऽस्त्यर्थानाम्–' ( वा० २।२।२४ ) इति बहुव्रीहिः ॥ (१) ॥*॥ तलस्याधोभागस्य स्पर्शः न सोऽत्र । '**अगाधमतलस्पर्शे** त्रिषु, श्वभ्रे नपुंसकम्' ॥ (२) ॥*॥ द्वे '**अतिनिम्नस्य**' ॥

कैवर्ते दाशधीवरौ ॥ १५ ॥

**कैवर्त इति** ॥ के जले वर्तन्ते । 'वृतु वर्तने' ( भ्वा० आ० से० ) पचाद्यच् ( ३।१।१३४ ) केवर्तानां मत्स्यानामयं घातकः । 'तस्येदम्' ( ४।३।१२० ) इत्यण् ॥ (१) ॥*॥ दशति मत्स्यान् । 'दंश दशने' ( भ्वा० प० अ० ) । 'दंशेश्च' (उ० ५।११) इति टटनौ न आ च । यद्वा दाश्यते मूल्यमस्मै । 'दाशृ दाने' (भ्वा० उ० से०) घञ् ( ३।३।१८ ) । 'शालो झषे, धीवर एव **दाशः**' इति शभेदात्तालव्यान्तः । 'कैवर्तभृत्ययोर्**दासो दासो** बाणा च चेटिका' इति रुद्राद् दन्त्यान्तः । '**दासो** भृत्ये च शूद्रे च ज्ञानेऽर्थिनि च **धीवरे**' ॥ (२) ॥*॥ दधाति मत्स्यान् । 'छित्वरछत्वर–' ( उ० ३।१ ) इति निपातितः ॥ (३) ॥*॥ त्रीणि '**धीवरस्य**' ॥

आनायः पुंसि जालं स्यात्

**आनाय इति** ॥ नयनम् । 'णीञ् प्रापणे' ( भ्वा० उ० अ० ) । 'श्रिणीभुवः–' (३।३।२४) इति घञ् । आसमन्तान्नायोऽनेन । आनयन्ति मत्स्यान् अनेन । 'जालमानायः' (३।३।१२४ ) इति घञन्तो निपातितो वा ॥ (१) ॥*॥ जले क्षियते । 'शेषे' ( ४।२।९२ ) इत्यण् । जलति घनीभवति । 'जल धान्ये' ( भ्वा० प० से० ) 'ज्वलिति–' ( ३।१।१४० ) इति णः । '**जालं** वृन्दगवाक्षयोः । क्षारकानायदम्भेषु, नीपे ना, स्त्री तु घोषके' इति रभसः ॥ (२) ॥*॥ द्वे '**शणसूत्रजालस्य**' ॥

शणसूत्रं पवित्रकम् ।

**शणेति** ॥ शणति । 'शण गतौ' (वा० प० से०) पचाद्यच् ( ३।१।१३४ ) । शणस्य सूत्रम् ॥ (१) ॥*॥ पवित्रमुपवीतम् । तद्वदिव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । पवित्राद्विपरीतलक्षणया संज्ञायां कः (५।३।७४) ॥ (२) ॥*॥ द्वे '**शणसूत्रजालस्य**' ॥

मत्स्याधानी कुवेणी स्याद्

**मत्स्येति** ॥ मत्स्या आधीयन्तेऽत्र । 'डुधाञ् धारणपोषणयोः' ( जु० उ० अ० ) । 'करणाधिकरणयोः–' ( ३।३। ११७) इति ल्युट् ॥ (१) ॥*॥ कुत्सितं वेणन्त्यस्यां मत्स्याः ।

'वेणृ गतौ' ( भ्वा० उ० से० )। 'हलश्च' ( ३।३।१२१ ) इति घञ्। गौरादिङीष् ( ४।१।४१ ) ॥ (२) ॥*॥ द्वे **'मत्स्यस्थापनपात्रस्य'** ॥

**बलिशं मत्स्यवेधनम् ॥ १६ ॥**

**बलिशमिति** ॥ बलिनो मत्स्यान् श्यति । 'शो तनूकरणे' (दि० प० अ०) 'आतोऽनुप–' ( ३।२।३ ) इति कः ॥*॥ डलयोरैक्याद् **'बडिशम्'** अपि । स्त्रियां बडिशापचये तु बडिशी ॥ (१) ॥*॥ विध्यतेऽनेन । 'विध विधाने' ( तु० प० से० ) 'करणा–' ( ३।३।११७ ) इति ल्युट्। मत्स्यानां वेधनम् ॥ (२) ॥*॥ द्वे **'मत्स्यवेधनस्य'** ॥

**पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः।
विसारः शकली च**

**पृथ्विति** ॥ पृथूनि रोमाण्यस्य । रोम पक्षोऽत्र–इति स्वामी। वल्कलम्–इति सर्वधरः ॥ (१) ॥*॥ झषति 'झष हिंसार्थः' ( भ्वा० प० से० )। पचाद्यच् ( ३।१।१३४ ) यद्वा झष्यते। 'खनो घ च' ( ३।३।१२५ ) इति घः । मुकुटस्तु—'पुंसि' ( ३।३।११८ ) इति घः–इत्याह । तन्न । 'हलश्च' ( ३।३।१२१ ) इति घञस्तदपवादत्वात् । 'करणाधिकरणयोः' ( ३।३।११७ ) इत्यनुवर्तनाच्च । **'झषा** नागबलायां स्त्री, तापमत्स्याटवीषु ना' ॥ (२) ॥*॥ माद्यति । 'मदी हर्षे' ( दि० प० से० )। 'ऋतन्यञ्जि–' ( उ० ४।२ ) इति स्यन्। 'मत्स्यो मीनेऽथ पुंभूम्नि देशे' ॥ (३) ॥*॥ मीनाति, मीयते वा। 'मीञ् हिंसायाम्' ( क्र्या० उ० से० )। 'फेनमीनौ' ( उ० ३।३ ) इति निपातितः। '(**मीनो** राश्यन्तरे झषे)' ॥ (४) ॥*॥ विविधं सरति। 'सृ गतौ' ( भ्वा० प० अ० )। प्रह्यादित्वाण्णिनिः। विसारी। 'विसारिणो मत्स्ये' ( ५।४।१६ ) इति स्वार्थेऽण् ॥ (५) ॥*॥ अण्डाज्जायते स्म । 'जनी प्रादुर्भावे' ( दि० आ० से० )। 'पञ्चम्यामजातौ' ( ३।२।९८ ) इति डः। **'अण्डजो** मृगनाभौ, ना सरटेऽहौ खगे झषे' इति [2]मेदिनी ॥ (६) ॥*॥ विशेषेण सरति। 'सृ गतौ' (भ्वा० प० अ०)। 'व्याधिमत्स्यबलेषु' ( वा० ३।३।१७ ) इति घञ् ॥ (७) ॥*॥ शकलमस्यास्ति। 'अत इनिः' ( ५।२।११५ )। **'शकलं** वल्कलेऽर्धे च' इति तालव्यादावजयः ॥ (८) ॥*॥ अष्टौ **'मत्स्यसामान्यस्य'** ॥

**अथ गडकः शकुलार्भकः ॥ १७ ॥**

**अथेति** ॥ गडति । 'गड सेचने' ( भ्वा० प० से० )। 'कुन् शिल्पिसंज्ञयोः' ( उ० २।३२ )। ( पचाद्यचि ३।१।१३४ ) ( गडोऽपि )। **'गडो** मीनान्तरायययोः' ॥ (१) ॥*॥ शकुलोऽत्र मत्स्यमात्रे,–इति स्वामी । तस्यार्भकः ॥ (२) ॥*॥ द्वे **'मत्स्यविशेषस्य'** ॥

**सहस्रदंष्ट्रः पाठीनः**

**सहेति** ॥ सहस्रं दंष्ट्रा यस्य ॥ (१) ॥*॥ पाठीं पृष्ठं नमयति। 'णम प्रह्वत्वे' ( भ्वा० प० अ० )। णिच् ( ३।१।२६ )। 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति डः । 'अन्येषामपि' ( ६।३।१३७ ) इति दीर्घः । अवश्यं पठति। 'पठ व्यक्तायां वाचि' ( भ्वा० प० से० )। आवश्यके णिनिः ( ३।३।१७० )। पाठी द्विजः । तस्येन इवापेक्षितः, हव्यकव्ययोः प्रशस्तत्वाद्वा । **'पाठीनो** गुग्गुलद्रुमे । पाठके मीनभेदे च' इति हैमः ॥ (२) ॥*॥ द्वे **'बहुदंष्ट्रस्य मत्स्यस्य'** ॥

**उलूपी शिशुकः समौ ।**

**उलूपीति** ॥ उ विस्मयजनकं रूपमस्यास्ति। अत इनिः ( ५।२।११५ )। रलयोरैक्यम्। ओः शंभो रूपं– उरूपमस्यास्ति, इति वा ॥ (१) ॥*॥ शिशुः शिशुमारः । तस्य प्रतिकृतिरिव। 'इवे प्रतिकृतौ' ( ५।३।९६ ) इति कन्। **'शिशुकः** शिशुमारे स्याद्बालकोलूपिनोरपि' ॥ (२) ॥*॥ द्वे **'सौंस इति ख्यातमत्स्यविशेषस्य'** ॥

**नलमीनश्चिलिचिमः**

**नलेति** ॥ नलवनस्थो मीनः । नडाभो मीन इति वा ॥*॥ **'तलमीनः'** इति केचित्पठन्ति ॥ (१) ॥*॥ 'चिल विलसने' ( तु० प० से० )। 'इगुपधात्कित्' ( उ० ४।१२० )। वीप्सायां द्वित्वम् ( ८।१।४ )। चिलिं चिलिं विलासं मिमीते। 'माङ् माने' ( जु० आ० अ० )। 'आतोऽनुप–' ( ३।२।३ ) इति कः। ( पृषोदरादिः ) ( ६।३।१०९ )। त्रीकारोऽदन्तः। 'नलमीन**श्चिलीचिमो** बृहन्मीनोऽब्धिजस्तिमिः' इति रत्नमाला । 'लक्ष्मणा सारसी क्रौञ्ची नलमीन**चिलीचिमिः'** इति वोपालिताच्चतुरिकारवान्मध्यदीर्घ इदन्तोऽपि ॥ (२) ॥*॥ द्वे **'नलवनचारिणो मत्स्यविशेषस्य'** ॥

**प्रोष्ठी तु शफरी द्वयोः ॥ १८ ॥**

**प्रोष्ठीति** ॥ प्रकृष्ट ओष्ठोऽस्याः । 'ओत्वोष्ठयोः' ( वा० ६।१।९४ ) इति पररूपम् । 'नासिकोदरौष्ठ–' ( ४।१।५५ ) इति 'जातेः' ( ४।१।६३ ) इति वा, ङीष् । [2]'द्वयोः' इत्यनेन संबन्धात् 'प्रोष्ठः' अपि ॥ (१) ॥*॥ शफं राति । 'रा दाने' ( अ० प० अ० ) । 'आतोऽनुप–' ( ३।२।३ ) इति कः । 'जातेः' ( ४।१।६३ ) इति ङीष्। पुंसि शफरः ॥ (२) ॥*॥ द्वे **'मत्स्यविशेषस्य'** ॥

---

१—'पाणिनिप्रत्याहार इव महाप्राणसमाश्लिष्टो झषालिङ्गितश्च समुद्रः' इत्याश्चर्यमञ्जरी ॥ अतो मूर्धन्यान्तः—इति मुकुटबुधमनोहरे ॥ २—विश्वकोशे तु **'अण्डजः** कृकलासे स्यात्खगे मीने भुजंगमे। कस्तूर्यामण्डजा प्रोक्ता' इत्युपलभ्यते ॥

१—हैमे तु 'सहस्रदंष्ट्रे वादालः, पाठीने चित्रवल्लिकः, शकुले स्यात्कलकः' इति विशेषमत्स्यत्वेनोक्तः ॥ २—पञ्जिकाकृतः 'द्वयोः' इति प्रोष्ठ्यापि संबध्नन्ति । नैषा ग्रन्थरीतिः, भिन्नपदत्वात्—इति पीयूषव्याख्या ॥

**क्षुद्राण्डमत्स्यसंघातः पोताधानम्**

**क्षुद्रेति** ॥ क्षुद्रादण्डाज्जाता मत्स्याः-क्षुद्राण्डमत्स्याः । तेषां संघातः ॥ (१) ॥*॥ पोते वहित्रे आधीयते । धाञः (जु० उ० अ०) कर्मणि ल्युट् (३।३।११३) यद्वा पोतोऽर्भक आधीयतेऽत्र । अधिकरणे ल्युट् (३।३।११७) ॥ (२) ॥*॥ द्वे **'अण्डादचिरनिर्गतमत्स्यसङ्घस्य'** ॥

**अथो झषाः।**

**रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ॥ १९ ॥**

**तिमिंगिलादयश्च**

**अथविति** ॥ अथो झषविशेषा उच्यन्ते । रोहति । 'रुह बीजजन्मनि प्रादुर्भावे च' (भ्वा० प० अ०) 'रुहे रश्च लो वा' (उ० ३।९४) इतीतच् । रोहणम् । घञ् (३।३।१८) । रोहो जातोऽस्य । तारकादित्वात् (५।२।३६) इतज्वा । **'रोहितं** कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे लोहितकद्रुमे' ॥ (१) ॥*॥ मज्जति । 'टुमस्जो शुद्धौ' (तु० प० अ०) । 'मद्गुरादयश्च' (उ० १।४१) इति निपातितः ॥ (१) ॥*॥ शाल्यते । 'शाडृ श्लाघायाम्' (भ्वा० आ० से०) । कर्मणि घञ् (३।३।१९) । डलयोरैक्यम् । **'शालो** झषे, धीवर एव दाशः'. इत्यूष्मभेदात्तालव्यादिः । ('कैवर्त इव बद्धराजीवोत्पलसालो वसन्तकालः' इति वासवदत्ताश्लेषाद्दन्त्यादिश्च । कैवर्तपक्षे सालो मत्स्यभेदः । वसन्तपक्षे सालं पुष्पम्) । सालं पुष्पे क्लीबं वृक्षे तु पुमान् । 'पुंसि भूरुहमात्रेऽपि **सालो** वरणसर्जयोः' इति रभसे तु दन्त्यादिः । **'शालो** हाले मत्स्यभेदे **शालौ**कस्तत्प्रदेशयोः' इति हैमः ॥ (१) ॥*॥ राजी रेखास्यास्ति । 'अन्यत्रापि दृश्यते' (५।२।१०९) इति वः । 'अथ **राजीवो** मीनसारङ्गभेदयोः । **राजीव**मब्जे' इति हैमः ॥ (१) ॥*॥ शक्नोति गन्तुं वेगेन । 'शक्लृ शक्तौ' (स्वा० प०अ०) । बाहुलकादुलच् ॥ (१) ॥*॥ ताम्यति । 'तमु ग्लानौ' (दि० प० से०) । 'क्रमितमिशतिस्तम्भामत इच्च' (उ० ४।१२२) इतीन् ॥ (१) ॥*॥ तिमिं गिरति । 'गॄ निगरणे' (तु० प० से०) । 'मूलविभुजा–' (वा० ३।२।५) इति कः । 'अचि विभाषा' (८।२।२१) इति लः । 'गिलेऽगिलस्य' (वा० ६।३।७०) इति नुम् ॥ (१) ॥*॥ आदिशब्दात् तिमिंगिलगिलनन्दीवर्तादयः ॥*॥ **'मत्स्यविशेषाणां'** पृथगेकैकम् ॥

**अथ यादांसि जलजन्तवः।**

**अथेति** ॥ यान्ति वेगेन । 'या प्रापणे' (अ० प० अ०) । असुन् (उ० ४।१८९) । बाहुलकादुक् । यद्वा याति । क्विप् (३।२।१७८) यामत्ति । 'अद भक्षणे' (अ० प० अ०) । असुन् (उ० ४।१८९) यां दस्यति वा । 'दसु उपक्षये' (दि० प० से०) । क्विप् (३।२।१७८) । साहचर्यस्य सर्वत्रानियामकत्वात् 'सान्त–' (६।४।१०) इति दीर्घः ॥ (१) ॥*॥ जलानां जन्तवः ॥ (२) ॥*॥ द्वे **'जलचरमात्रस्य'** ॥

**तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः ॥ २० ॥**

**तद्भेदा इति** ॥ तेषां जलजन्तूनां भेदा उच्यन्ते ॥ शिशून् मारयति । 'मृङ् प्राणत्यागे' (तु० आ० अ०) । णिच् (३।२।२६) । 'कर्मण्यण्'(३।२।१)। **'शिशुमारो**ऽम्बुसंभूतजन्तौ तारात्मकाच्युते' इति विश्वमेदिन्यौ ॥१॥*॥ उनत्ति । 'उन्दी क्लेदने' (रु० प० से०) । 'स्फायि–'(उ० २।१३) इति रक् ॥ (१) ॥*॥ शङ्कतेऽस्मात् । 'शकि शङ्कायाम्' (भ्वा० आ० से०) । 'खरुशङ्कुपीयु–' (उ० १।३६) इति निपातितः । **'शङ्कुः** पत्रशिराजाले संख्याकीलकशंभुषु । यादोऽस्त्रभेदयोर्मेंढ्रे' इति हैमः ॥ (१) ॥*॥ कृणाति । 'कॄ हिंसायाम्' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । मनुष्याणां करः । पृषोदरादिः (६।३।१०९) । यद्वा मङ्कते । 'मकि भूषायाम्' (भ्वा० आ० से०) । अच् (३।१।१३४) । आगमशास्त्रस्यानित्यत्वान्न नुम् । मकं राति । 'रा दाने' (अ० प० अ०) । कः (३।२।३) । **'मकरो** निधौ । नक्रे राशिविशेषे च' इति हैमः ॥ (१) ॥*॥ आदिना ग्राहकुम्भीरादयः ॥*॥ **'जलजन्तुविशेषाणां'** पृथक्पृथक् ॥

**स्यात्कुलीरः कर्कटकः**

**स्यादिति** ॥ कुलति । 'कुल संस्त्याने' (भ्वा० प० से०) । 'गम्भीरादयश्च' इतीरन् । कौ लीयते । 'लीङ् श्लेषणे' (दि० आ० अ०) । बाहुलकाद् रक् । यद्वा कुलमस्यास्ति । 'अत इनिः' (५।२।११५) । तमीरयति । 'कर्मण्यण्' (३।२।१) । जनकभक्षकत्वात् । लयनम्–लीः । संपदादिः (वा० ३।३।१०८) । कुत्सिता लीः । तां राति वा ॥ (१) ॥*॥ कृणाति । 'कृ हिंसायाम्' (क्र्या० प० से०) । 'अन्येभ्योऽपि' (३।२।७५) इति विच् । कटति । 'कटे वर्षावरणयोः' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । कर् चासौ कटश्च । 'अहरादीनां पत्यादिषु वा रेफः' (वा० ८।२।७०) ततः स्वार्थे कन् (५।३।७४) । 'कर्क' इति सौत्रो धातुः । 'शकादिभ्योऽटन्' (उ० ४।८१) वा० । कर्कं श्वेतवर्णं टलति । 'टल गतौ' (भ्वा० प० से०) । डः (वा० ३।२।१०१) वा० । **कर्कटः** । 'कुलीरे करणे स्त्रीणां राशौ खगे' इति हैमः ॥ (२) ॥*॥ द्वे **'कुलीरस्य'** ॥

**कूर्मे कमठकच्छपौ।**

**कूर्म इति** ॥ कुत्सितः कौ वा ऊर्मिर्वेगोऽस्य । 'अच्प्रत्यन्वव–' (५।४।७५) इत्यत्र 'अच्' इति योगविभागादच् समासान्तः । **'ऊर्मिः** स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्ग्योः' इति रभसः ॥ (१) ॥*॥ काम्यते । 'कमु कान्तौ'

---

१—वस्तुतस्तु 'गडकः शकुलार्भकः। क्षुद्राण्डमत्स्यसंघातः पोताधानमथो झषाः। सहस्रदंष्ट्रः पाठीनः' इति श्लोकः 'रोहितो मद्गुरः' इति पाठः—इति पीयूषम् ॥

(भ्वा० आ० से०)। 'कमरेठः' (उ० १।१००)। के जले मठति, इति वा। 'मठ मदनिवासयोः' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। **'कमठः** कच्छपे पुंसि भाण्डभेदे नपुंसकम्' ॥ (२) ॥*॥ कच्छेन पिबति। 'पा पाने' (भ्वा० प० अ०)। 'सुपि' (३।२।४) इति योगविभागात्कः। **'कच्छपी** वल्लकीभेदे द्रुलौ क्षुद्रगदान्तरे। पुंसि विध्यन्तरे कूर्मे मल्लबन्धान्तरेऽपि च' इति विश्वमेदिन्यौ ॥ (३) ॥*॥ त्रीणि **'कूर्मस्य'** ॥

**ग्राहोऽवहारः**

**ग्राह इति** ॥ गृह्णाति। 'ग्रह उपादाने' (क्र्या० उ० से०) 'विभाषा ग्रहः' (३।१।१४३) इति णः। **'ग्राहो** ग्रहे जलचरे' इति हैमः ॥ (१) ॥*॥ अवहरति। अवपूर्वो हृञ्। 'श्याद्व्यधा-' (३।१।१४१) इति णः। **'अवहारस्तु** युद्धादिविश्रान्तौ ग्राहचौरयोः। निमन्त्रणोपनेतव्ये' इति हैमः ॥ (२) ॥*॥ द्वे **'ग्राहस्य'** ॥

**नक्रस्तु कुम्भीरः**

**नक्र इति** ॥ क्रामति दूरस्थलम्। 'क्रमु पादविक्षेपे' (भ्वा० प० से०)। 'अन्यत्रापि-' (वा० ३।२।४८) इति डः। 'न भ्राड्-' (६।३।७५) इति नलोपो न **'नक्रं** नासाग्रदारुणोः। **नक्रो** यादसि' इति हैमः ॥ (१) ॥*॥ कुम्भिनं हस्तिनमीरयति। 'कर्मण्यण्' (३।२।१) ॥ (२) ॥*॥ द्वे **'नक्रस्य'** ॥

**अथ महीलता ॥ २१ ॥**

**गण्डूपदः किंचुलुकः**

**अथेति** ॥ मह्या लतेव। कृशत्वदीर्घत्वाभ्याम् ॥ (१) ॥*॥ गण्डवो ग्रन्थयः पदान्यस्य ॥ (२) ॥*॥ किंचिच्चुलुम्पति। 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' (वा० ३।१।३५) इति वार्तिकनिर्दिष्टश्चुलुम्पधातुः। 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः। 'टेः' (६।४।१४३) इति उकारमकारपकाराणां लोपः। ततः 'संज्ञायां कन्' (५।३।७५) ॥ (३) ॥*॥ त्रीणि **'केंचुवा'** इति ख्यातस्य ॥

**निहाका गोधिका समे।**

**निहाकेति** ॥ नियतं जहाति भुवम्। 'नौ ह्रश्च' (उ० ३।४४) इति हाकः कन्। बाहुलकान्न ह्रस्वः ॥ (१) ॥*॥ गुध्यति। 'गुध परिवेष्टने' (दि० प० से०)। ण्वुल् (३।१।१३३)। (पचाद्यचि) (३।१।१३४) गोधापि। **'गोधा** तलनिहाकयोः' ॥ (२) ॥*॥ द्वे **'गोह' 'जलगोधिका'** इति ख्यातायाः ॥

**रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ॥२२॥**

**रक्तपेति** ॥ रक्तं पिबति। 'आतोऽनुप-' (३।२।३) इति कः। **'रक्तपा** स्याज्जलौकायां डाकिन्यां, ना तु राक्षसे' ॥ (१) ॥*॥ जलमोकोऽस्याः। 'ओक उचः के' (७।३।६४) इति निपातितोऽदन्त ओकशब्दः ॥ (२) ॥*॥ सान्तोऽपि। **'जलोरगी जलोका** तु जलौका च जलौकसि' इति संसारावर्ताद्बहुवचनं प्रायिकम्। 'जलौकापि जलोका स्याज्जलूका जलजन्तुका' इति तारपालः ॥ (३) ॥*॥ त्रीणि **'जलूकायाः'** ॥

**मुक्तास्फोटः स्त्रियां शुक्तिः**

**मुक्तेति** ॥ मुक्ताः स्फुटन्त्यत्र। 'स्फुट विकसने' (तु० प० से०)। 'हलश्च' (३।३।१२१) इति घञ् ॥ (१) ॥*॥ शुच्यति, शोचति, शोकति, वा। 'शुच्य अभिषवे' (भ्वा० प० से०)। 'शुच शोके' (भ्वा० प० से०)। शुक्तिः गतौ (भ्वा० प०) वा। क्तिच् (३।३।१७४)। **'शुक्तिः** कपालशकले शङ्खे शङ्खनकेऽपि च। नख्यश्वावर्तदुर्नाममुक्तास्फोटेषु च स्त्रियाम्' ॥ (२) ॥*॥ द्वे **'शुक्तिकायाः'** ॥

**शङ्खः स्यात्कम्बुरस्त्रियौ।**

**शङ्ख इति** ॥ शं खनति जनयति। 'खनु अवदारणे' (भ्वा० उ० से०)। 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः। शं खम् अस्य-इति वा। शाम्यत्यलक्ष्मीं वा। 'शमु उपशमे' (दि० प० से०)। अन्तर्भावितण्यर्थः। 'शमेः खः' (उ० १।१०२)। **'शङ्खः** कम्बौ न योषित्, ना भालास्थिनिधिभिन्नखे' ॥ (१) ॥*॥ काम्यते। 'कमु कान्तौ' (भ्वा० आ० से०)। 'जत्र्वादयश्च' (उ० ४।१०२) इति निपातितः। **'कम्बुर्**वलयशङ्खयोः। गजे शम्बूके कर्चूरे ग्रीवायामलिकेऽपि च' इति हैमः ॥ (२) ॥*॥ एतौ पुंनपुंसके ॥ द्वे **'शङ्खस्य'** ॥

**क्षुद्रशङ्खाः शङ्खनकाः**

**क्षुद्रेति** ॥ क्षुद्राश्च ते शङ्खाश्च ॥ (१) ॥*॥ शङ्कते। 'शकि शङ्कायाम्' (भ्वा० आ० से०)। कर्तरि 'अनुदात्तेतश्च हलादेः' (३।२।१४९) इति युच्। 'संज्ञायां कन्' (५।३।८५)।—शङ्खस्य नखा इव **(शङ्खनखाः)**—इति तु मुकुटः। शं खनन्ति। 'बहुलमन्यत्रापि' (उ० २।७८) इति युच्। ल्युट् (  ) वा स्वार्थे कन् (५।३।७५)। (शङ्खनकाः)—इत्यन्ये ॥ (२) ॥*॥ द्वे **'सूक्ष्मशङ्खानाम्'** ॥

---

१—निमन्त्रणोपनेतव्यम्=शर्करादिस्वादूकृतं भक्ष्यम् ॥ तत्र यथा 'पतसिन्विषयावहारविषमे संसारवारांनिधौ' इत्यनेकार्थकैरवाकरकौमुदी ॥ २—अस्याग्रे 'नक्रः कुम्भीरके पुंसि नक्रं तर्णकनीरयोः' इति लिखितमस्ति ॥ परंतु मेदिन्यां द्वितीयचरणे नारशब्दस्यार्थबोधकताया बोधनेन प्रक्षिप्तप्रायम् ॥

१ 'जलौकसेनेव रक्ताकृष्टिनिपुणेन वेश्याजनेन' इति वासवदत्तायाम् 'जलं च तदोकश्चे'ति जलौकः। ततोऽर्शआद्यचि (५।२।१२७) एकवचनमदन्तत्वं चोपपाद्यम्—इति मुकुटबुधमनोहरे ॥

**शम्बूका जलशुक्तयः ॥ २३ ॥**

**शम्बूका इति** ॥ शाम्यति । 'शम उपशमे' ( दि० प० से० ) । 'उलूकादयश्च' ( उ० ४।४१ ) इति निपातितः । 'शम्बूकपिण्याकमधूकफेनः' इत्यमरमालायां पुंलिङ्गः । ( '**शम्बूको** गजकुम्भान्ते घोङ्के च शूद्रतापसे । जलजन्तुविशेषे च) **शम्बूका** न नपुंसके' इति मेदिनेर्द्विलिङ्गता । 'शम्बूकः **शम्बुक**श्चैव पूर्वः कान्तस्तु सर्वदा । कारणेन विना शेषो **(शम्बुः)** दृश्यते ग्रन्थविस्तरे' इत्युत्पलिनी ॥ (१) ॥*॥ जलजाः शुक्तयः ॥ (२) ॥*॥ द्वे '**सर्वजलशुक्तिकानाम्**' ॥

**मेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः ।**

**मेके इति** ॥ बिभेति । 'जिभी भये' (जु० प० अ० ) । 'इण्भीका–' ( उ० ३।४३ ) इति कन् । 'भेको मण्डूकमेघयोः' ॥ (१) ॥*॥ मण्डयति जलाशयम् । मण्डते वा । '**मडि भूषायाम्**' ( भ्वा० प० से० ) । 'शलमण्डिभ्यामूकण्' ( उ० ४।४२ ) । '**मण्डूकी** मण्डूकपर्ण्यां **मण्डूको** भेकशोणयोः' इति हैमः ॥ (२) ॥*॥ वर्षासु भवति । 'भुवः संज्ञान्तरयोः' ( ३।२।१७९ ) इति क्विप् । '**वर्षाभूः** स्त्री च शोथघ्न्यां भूलताप्लवयोः पुमान्' इति विश्वमेदिन्यौ ॥ (३) ॥*॥ शाडते । 'शाडृ गतौ' ( भ्वा० आ० से० ) । 'खर्जिपिञ्जादिभ्य ऊरोलचौ' ( उ० ४।९० ) इत्यूरः । डलयोरैक्यम् । शालते वा । 'शाल कत्थने' ( भ्वा० आ० से० ) । 'परिसरक्ककलासस्वेद**सालूर**–' इत्यूष्मविवेकाद्दन्त्यादिरपि ॥ (४) ॥*॥ प्लवते । 'प्लुङ् गतौ' (भ्वा० आ० अ० ) । अच् (३।१।१३४) '**प्लवः** प्लक्षे प्लुतौ कपौ । शब्दे कारण्डवे म्लेच्छजातौ भेलकमेकयोः । क्रमनिम्नमहीभागे कुलके जलवायसे' । 'कैवर्तीमुस्तके गन्धतृणेऽपि स्यान्नपुंसकम्' ॥ (५) ॥*॥ दृणाति शब्दैः कर्णौ 'दॄ विदारणे' ( क्र्या० प० से० ) । 'मुकुरदर्दुरौ' ( उ० १।४० ) इति निपातितः । '**दर्दुर**स्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः । **दर्दुरी** चण्डिकायां स्याद्ग्रामजाले नपुंसकम्' ॥ (६) ॥*॥ षट् '**मण्डूकस्य**' ॥

**शिली गण्डूपदी**

**शिलीति** ॥ शिलति । 'शिल उञ्छे' ( तु० प० से० ) । 'इगुपध–' । (३।१।१३५) इति कः । 'जातेरस्त्री–' (४।१।६३) इति ङीष् । ( '**शिल**मुञ्छे स्याद्, गण्डूपद्यां **शिली** मता । स्तम्भशीर्षे **शिलाशिल्यौ, शिला** तु प्रस्तरे मता । तथा मनःशिलायां च द्वाराधःस्थितदारुणि') ॥ (१) ॥*॥ (२) ॥*॥ 'द्वे किंचुलकभार्यायाः'–इति स्वामी । '**क्षुद्रकिंचुलकजातेः**' ॥

**भेकी वर्षाभ्वी**

**भेकीति** ॥ 'वर्षाभ्वी' इत्यसाधु । ङीब्विधायकाभावात् स्त्रियामपि 'वर्षाभूः' इत्येव । 'भेक्यां पुनर्नवायां स्त्री **वर्षाभू**र्दर्दुरे पुमान्' इति यादवः । अन्ये तु—गौरादित्वात् (४।१।४१) ङीषमिच्छन्ति । अत एव भागुर्यमरमालयोः 'वर्षाभ्वी' इति दृश्यते ॥२॥*॥ द्वे '**मण्डूक्याः**' । क्षुद्रमण्डूकस्येत्यन्ये ॥

**कमठी दुलिः ॥ २४ ॥**

**कमठीति** ॥ 'जातेः–' ( ४।१।६३ ) इति 'पुंयोगात्–' (४।१।४८) इति वा ङीष् । कमठी ॥ (१) ॥*॥ दोलति 'दुल उत्क्षेपे' ( चु० प० से० ) । आधृषीयः । 'इगुपधात्–' ( उ० ४।१२० ) इति किः । '**दुलिः** स्त्रियाम् । कमठ्यां, ना मुनौ'[1] ॥ (२) ॥*॥ द्वे '**कच्छप्याः**' ॥

**मद्गुरस्य प्रिया शृङ्गी**

**मद्गुरस्येति** ॥ मद्गुरो मत्स्यभेदः । योग्यतया सादृश्याद्वा तस्य प्रिया स्त्री शृणाति । 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'शृणातेर्ह्रस्वश्च' (उ० १।१२६) इति गन् ह्रस्वत्वं कित्त्वं नुडागमश्च । 'पुंयोगात्–' (४।१।४८) 'इति जातेः–' (४।१।६३) इति वा ङीष् । 'मद्गुरी' इत्यपि । 'भार्या भेकस्य वर्षाभ्वी शृङ्गी स्यान्मद्गुरस्य तु । शिली गण्डूपदस्यापि दुलिः स्यात्कमठस्य तु' इत्यमरमाला । ('**शृङ्गी** स्वर्णमीनविशेषयोः । विषायामृषभौषध्याम्') ॥ (१) ॥*॥ एकम् '**मद्गुरस्त्रियाः**' ॥

**दुर्नामा दीर्घकोशिका ।**

**दुर्नामेति** ॥ दुर्निन्दितं नामास्याः । 'अनो बहुव्रीहेः' (४।१।१२) इति ङीब्न । ('**दुर्नाम** क्लीबमर्शसि । स्याद्दीर्घकोषिकायां स्त्री' ) ॥*॥ 'डाबुभाभ्याम्–' (४।१।१३) ॥*॥ 'अन उपधा–' (४।१।२८) इति वा ङीप् । दुर्नाम्नी । क्षुभ्नादित्वात् ( ८।४।३९ ) न णत्वम् ॥ (१) ॥*॥ दीर्घः कोशो यस्याः । 'जातेः–' ( ४।१।६३ ) इति ङीष् । 'संज्ञायां कन्' (५।३।७५) । 'केऽणः' (७।४।१३) इति ह्रस्वः । ( मूर्धन्यषान्ता च) । 'तालव्या मूर्धन्याश्चैते शटी च परिवेशः । विश्वक्सेनो भ्रेशः प्रतिष्कशः कोशविशदौ च' इत्यूष्मविवेकः ॥ (२) ॥*॥ द्वे '**झिनाजी**' इति ख्यातस्य '**जलूकाकारस्य जलचरस्य**' ॥

---

१—दैत्यविशेषेऽपि यथा 'भ्रत बूत भटाः क स क्र स नरः शम्बूकजीवाहरः' इत्यनेकार्थकैरवाकरकौमुदी ॥ २—भीरौ च यथा 'भेकाः केकारवैः पान्थाः' इत्यनेकार्थकैरवाकरकौमुदी । ३—'मण्डूकौ भेकशोणकौ' इति पाठः ॥ ४—'भेलकतैलयोः' इति पाठः ॥ ५—इतःपूर्वम्—'दुर्दरः पर्वते पुंसि त्रिष्वीषद्भिन्नभाजने' इत्यपि लिखितमस्ति । परंतु मेदिनीहैमयोरकारमध्यस्यैव पाठेन समानानुपूर्वीकत्वे पर्वतार्थकतापौनरुक्त्यस्यापि संभवेन न प्रकृतोपयोगि ॥

[1]—'क्रीडनेति' लिखितमस्ति । परंत्वेतदानुपूर्वीघटितमेदिन्यां विश्वे च 'मुनौ' इत्येवोपलब्धम् ॥

**जलाशया जलाधाराः**

**जलेति** ॥ जलम् आशयो हृदयम् अस्य । जलम् आशेते तिष्ठति अत्र, इति वा । 'पुंसि' ( ३।३।११८ ) इति घः । '**जलाशयो** जलाधारे स्यादुशीरे नपुंसकम्' ॥ (१) ॥*॥ आध्रियतेऽत्र । 'धृङ् अवस्थाने' ( तु० आ० अ० ) । 'अध्यायन्याय–' ( ३।३।१२२ ) इति घञ् । जलस्याधाराः ॥ (२) ॥*॥ द्वे '**तडागादीनाम्**' ॥

**तत्रागाधजलो ह्रदः ॥ २५ ॥**

**तत्रेति** ॥ तत्र तेषु मध्ये । अगाधं जलं यत्र स जलाशयः । ह्रादते । 'ह्राद अव्यक्ते शब्दे' ( भ्वा० आ० से० ) । पचाद्यच् ( ३।१।१३४ ) पृषोदरादित्वात् ( ६।३।१०९ ) ह्रस्वः ॥ (१) ॥*॥ एकम् '**अगाधजलकूपस्य**' ॥

**आहावस्तु निपानं स्यादुपकूपजलाशये ।**

**आहाव इति** ॥ आहूयन्तेऽत्र । 'ह्वेञ् स्पर्धायां शब्दे च' ( भ्वा० उ० अ० ) । 'निपानमाहावः' ( ३।३।७४ ) ॥ (१) ॥*॥ नियतं पिबन्त्यस्मिन् । 'करणा–' इति ल्युट् ॥ (२) ॥*॥ द्वे '**कूपसमीपरचितजलाधारस्य**' ॥

**पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा ॥ २६ ॥**

**पुंसीति** ॥ अम्यते । 'अम गत्यादौ' ( भ्वा० प० से० ) । 'अर्जिदृशिकम्यमि–' ( १।२७ ) इति कुः धुक् च । यद्वा अन्धयति । 'अन्ध दृष्ट्युपघाते' ( चु० उ० से० ) । मृगय्वादित्वात् ( १।३७ ) कुः ॥ (१) ॥*॥ प्रह्रियते । 'प्रे हरतेः कूपे' ( उ० ४।१३५ ) इति इः डिच्च ॥ (२) ॥*॥ कौति । 'कु शब्दे' ( अ० प० से० ) । 'कुयुभ्यां च' ( उ० ३।२७ ) इति पो दीर्घश्च । कुत्सिता ईषद्वा आपोऽत्र । 'ऋक्पूर–' ( ५।४।७४ ) इत्यः । 'ऊदनोः–' ( ६।३।९८ ) इत्यत्र दीर्घनिर्देशादन्यत्राप्यत्, इति वा । '**कूपः** कूपक–मृन्मीने गर्तान्धुगुणवृक्षके' ॥ (३) ॥*॥ उदकं पिबन्त्यस्मिन् । अधिकरणे ल्युट् ( ३।३।११७ ) । 'उदकस्योदः–' ( ६।३।५७ ) ॥ (४) ॥*॥ तु–स्थाने च उचितः ॥*॥ चत्वारि '**कूपस्य**' ॥

**नेमिस्त्रिकास्य**

**नेमिरिति** ॥ अस्य कूपस्य । नयन्त्यनया 'नियो मिः' ( उ० ४।४३ ) । '**नेमिर्ना** तिनिशे, कूपत्रिकाचकान्तयोः स्त्रियाम्' ॥ (१) ॥*॥ तिस्रोऽस्रयोऽस्याः । 'संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' ( ५।१।५८ ) इति कन् । '**त्रिका** कूपस्य नेमौ स्यात्त्रिकं पृष्ठाधरे त्रये' इति विश्वमेदिन्यौ ॥ (२) ॥*॥

१—अत्र तु 'अन्यलिङ्गकम्' इति लिखितमासीत् । परं तु मूलमेदिनीदृष्टं हैमविश्वानुगुणं गृहीतम् ॥ २—मृन्माने काचभाण्डे यथा—'कूपेषु रूपे क्षिप गन्धतैलम्' इत्यनेकार्थकैरवाकरकौमुदी ॥ ३—उदपानस्य त्वन्तत्वात् 'पुंसि वा' इत्यनेन संबन्धः । पूर्वेषां तु 'पुंस्येव' इत्यनेन—इति मुकुटबुधमनोहरे ॥ ४—त्रये यथा 'तत्रापि त्रिकदर्शनम्' इत्यनेकार्थकैरवाकरकौमुदी ॥

द्वे '**कूपस्यान्तरे रज्ज्वादिधारणार्थदारुयन्त्रस्य**' ॥

**वीनाहो मुखबन्धनमस्य यत् ।**

**वीनाह इति** ॥ विनह्यतेऽनेन । 'णह बन्धने' ( दि० उ० अ० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् । 'उपसर्गस्य घञि' ( ६।३।१२२ ) इति दीर्घः ॥ (१) ॥*॥ '**कूपमुखे इष्टकादिभिर्बद्धस्य**' एकम् ॥

**पुष्करिण्यां तु खातं स्यात्**

**पुष्केति** ॥ पुष्कराणि सन्त्यस्याम् । 'पुष्करादिभ्यो देशे' ( ५।२।१३५ ) इतीनिः । '**पुष्करिणी** नद्यां सरोजिन्यां जलाशये' ॥ (१) ॥*॥ अखानि । 'खनु अवदारणे' ( भ्वा० उ० से० ) । क्तः ( ३।२।१०२ ) । 'जनसनखनाम्–' ( ६।४।४२ ) इत्यात्वम् ॥ (२) ॥*॥ द्वे '**समचतुरस्रखातस्य**' ॥

**अखातं देवखातकम् ॥ २७ ॥**

**अखातमिति** ॥ खाताद्भिन्नम् ॥ (१) ॥*॥ देवेन खातम् ॥ (२) ॥*॥ 'अखातो देवखातकः' इति पुंस्काण्डेऽमरदत्तात् पुंस्यपि ॥*॥ द्वे '**अकृत्रिमजलाशयस्य**' ॥ देवद्वारस्थजलाशयस्येत्यन्ये ॥

**पद्माकरस्तडागोऽस्त्री**

**पद्मेति** ॥ पद्मानामाकरः ॥ (१) ॥*॥ तड्यते । 'तड आघाते' ( चु० प० से० ) । 'तडागादयश्च' इति निपातितः । '**तडागस्तु** जलाधारविशेषे यन्त्रकूपके' इति मेदिनी । पिनाकादित्वात् ( उ० ४।१५ ) '**तडाकः**' इति कश्चित् ॥*॥ तटम् अकति, अगति वा । 'अक अग कुटिलायां गतौ' ( भ्वा० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) । ( **तटाकः, तटागः** ) इत्येके ॥ (२) ॥*॥ द्वे '**सपद्मागाधजलाशयस्य**' ॥

**कासारः सरसी सरः ।**

**कासार इति** ॥ कासते । 'कासृ शब्दे' ( भ्वा० आ० से० ) । 'तुषारादयश्च' ( उ० ३।१३९ ) इत्यारन् । यदा ईषत् सारोऽस्य । 'ईषदर्थे च' ( ६।३।१०५ ) इति कोः कादेशः । कासोऽस्यास्तीति वा । अर्शआद्यच् । कासमृच्छति 'ऋ गतौ' ( भ्वा० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) इति वा ॥ (१) ॥*॥ स्रियते 'सृ गतौ' ( भ्वा० प० से० ) । कर्मण्यसुन् ( उ० ४।१८९ ) । ( '**सरो** नीरतडागयोः' ) ॥ (२) ॥*॥ तत एव महत्त्वे गौरादित्वात् ( ४।१।४१ ) ङीष् । ( '**सरसी** विश्वकासारे' ) ॥३॥*॥ त्रीणि '**कृत्रिमपद्माकरस्य**' । पद्मापि सरोमात्रस्येत्यन्ये ॥

**वेशन्तः पल्वलं चाल्पसरः**

**वेशन्त इति** ॥ विशन्त्यत्र भेकादयः । 'विश प्रवेशने'

१—विश्वे तु 'कटकेऽपि च' इति दृश्यते । मेदिनीमूलपुस्तके तु 'यन्त्रकूटके' इत्युपलभ्यते ॥

(तु० प० अ०)। 'जॄविशिभ्यां झच्' (उ० ३।१२६)॥ (१) ॥*॥ पलति पल्यते वा । 'पल गतौ' (भ्वा० प० से०)। 'सानसिपर्णसि'– (उ० ४।१०७) इति वलच् । 'वेशन्तः पल्वलोऽस्त्री' इति वाचस्पतिः॥ (२) ॥*॥ अल्पं च तत्सरश्च॥ (३) ॥*॥ त्रीणि **'स्वल्पसरोवरस्य'**॥

**वापी तु दीर्घिका॥ २८॥**

**वापीति**॥ उप्यते पद्माद्यस्याम् । 'डुवप् बीजतन्तुसंताने' (भ्वा० उ० अ०)। 'वसिवपियजिराजि–' (उ० ४। १२५) इतीञ् । 'कृदिकारात्–' (ग० ४।१।४५) इति वा ङीष् । 'वाप्यां वापिरपि स्मृता' इति द्विरूपकोषः॥ (१) ॥*॥ दीर्घैव। 'संज्ञायां कन्' (५।३।७५)॥ (२) ॥*॥ द्वे **'वाप्याः'**॥

**खेयं तु परिखा**

**खेयमिति**॥ खन्यते । 'खनु अवदारणे' (भ्वा० उ० से०)। 'ई च खनः' (३।१।१११) इति यत्॥ (१) ॥*॥ परितः खन्यते, इति । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः॥ (२) ॥*॥ द्वे **'दुर्गादिपरितः खातस्य'**॥

**आधारस्त्वम्भसां यत्र धारणम्।**

**आधार इति**॥ आध्रियते जलमस्मिन् । 'अध्यायन्याय–' (३।३।१२२) इति घञ् । **'आधार**श्चाधिकरणेऽप्यालवालेऽम्बुधारणे'॥ (१) ॥*॥ एकं **'बांध'** इति ख्यातस्य॥

**स्यादालवालमावालमावापः**

**स्यादिति**॥ आ समन्ताज्जलस्य लवम् आलाति । 'ला आदाने' (अ० प० अ०)। मूलविभुजादित्वात् (वा० ३। २।५) कः ॥*॥ लवमालाति । तद्भिन्नम्। नञ्समासे (**अंलवालः**) हस्वादिः–इत्यन्ये॥ (१) ॥*॥ आवलतेऽम्भोऽनेन। 'वल संवरणे' (भ्वा० प० से०) 'अलश्च' (३।३।१२१) इति घञ्। आ ईषत् वाला वृक्षा अत्र वा॥ (२) ॥*॥ आवपन्ति जलमत्र। 'डुवप् बीजतन्तुसंताने' (भ्वा० उ० से०)। 'हलश्च' (३।३।१२१) इति घञ् । **'आवापो** भाण्डपचने परिक्षेपालवालयोः'॥ (३) ॥*॥ त्रीणि **'वृक्षमूलकृतजलाधारस्य'**॥

१—'इहैव जम्बूतरुमालवालवत्परीयुषोच्चैर्भरतेऽब्धिना वृते' इति प्रयोगादीर्घादिः॥ २—'अलवारोपिषु पयःसु बिभ्रतः सपलाशिराशिरिव मूलसंततिः' इति माघाद्ध्रस्वादिः—इति मुकुटबुधमनोहरे॥ ३—भाण्डपचनमापाकस्थानम् । तत्र यथा—'आवापधूमपरिधूसरमन्तरिक्षम्'॥ अरिचिन्तायामपि यथा 'परं प्रत्यावापः फलति कृतसेकस्तरुरिव'॥ वलयेऽपि यथा 'प्रकोष्ठः शुशुभे' तस्या गतोऽप्यावापशून्यताम्'—इत्यनेकार्थकैरवाकरकौमुदी॥ ४—'भाण्डवपने' इति पाठः॥

**अथ नदी सरित्॥ २९॥**

**तरङ्गिणी शैवलिनी तटिनी ह्रदिनी धुनी।**
**स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा॥ ३०॥**

**अथेति**॥ नदति । 'णद अव्यक्ते शब्दे' (भ्वा० प० से०)। पचादिषु (३।१।१३४) 'नदट्' इति टित्त्वनिपातनात् 'टिड्ढा–' (४।१।१५) इति ङीष्। (**'नदी** सरिति, शोणादौ ना')॥ (१) ॥*॥ सरति । 'सृ गतौ' (भ्वा० प० से०)। सरतेरिनिः (उ० १।९७)॥ (२) ॥*॥ तरङ्गाः सन्त्यस्याम्। अत इनिः (५।२।११५)॥ (३) ॥*॥ शैवलमस्त्यस्याम्॥ (४) ॥*॥ तटमस्त्यस्याः॥ (५) ॥*॥ ह्रदाः सन्त्यस्याम्। **'ह्लादिनी'** इत्यन्ये॥ (६) ॥*॥ धुनोति वेतसादीन्। क्विप् (३।२।१७८) पृषोदरादित्वात् (६।३।१०९) नुक्। नान्तत्वान्ङीप् (४।१।५)॥ (७) ॥*॥ स्रोतांसि सन्त्यस्याम्। मतुप् (५।२।९४) ॥*॥ 'अस्माया–' (५।२।१२१) इति विनौ तु **'स्रोतस्विनी'** इत्यपि॥ (८) ॥*॥ द्वीपमस्त्यस्याम्। मतुप् (५।२।९४)॥ (९) ॥*॥ स्रवति। 'लटः शतृ–' (३।२।१२४)। 'उगितश्च' (४।१।६) इति ङीप् । 'शप्श्यनोः–' (७।१।८१) इति नुम्॥ (१०) ॥*॥ निम्नं गच्छति। 'गम्लृ गतौ' (भ्वा० प० अ०)। 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः॥ (११)॥ अपां समूह आपम्। तेन गच्छति। डः (वा० ३।२।४८)॥–॥ अप गच्छति । डः (वा० ३।२।१०१) । ह्रस्वादिरपि । 'विद्यादगारमागारमपगामापगामपि' इति द्विरूपकोषः॥ (१२) ॥*॥ द्वादश **'नद्याः'**॥

**गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा।**
**भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि॥ ३१॥**

**गङ्गेति**॥ गच्छति। 'गन् गम्यद्योः' (उ० १।१२३) (१) ॥*॥ विष्णुः पदं स्थानं यस्याः। गौरादिः (४।१।४१)। **'विष्णुपदं** नभोऽब्जयोः **विष्णुपदस्तु** क्षीरोदे **विष्णुपदी** सुरापगा । (संक्रान्तिर्द्वारिका चापि)' इति हैमः॥ (२) ॥*॥ जह्नो राजर्षेस्तनया॥ (३) ॥*॥ सुराणां निम्नगा। क्षुभ्नादिः (८।४।३९)॥ (४) ॥*॥ भगीरथस्येयम्। 'तस्येदम्' (४।३।१२०) इत्यण्॥ (५) ॥*॥ त्रीन् पथो गच्छति। डः (वा० ३।२।४८) यद्वा त्रयाणां पथां समाहारः त्रिपथम्। तेन गच्छति। डः (३।२।४८)॥ (६) ॥*॥ त्रीणि स्रोतांसि यस्याः, (**'त्रिस्रोता** जह्नुकन्यायां स्रोतस्त्वन्तरे स्त्रियाम्') (७) ॥*॥ भीष्मं सूते। 'षूङ् प्राणिप्रसवे' (अ० आ० अ०)। क्विप् (३।२।१७८)॥ (८) ॥*॥ अष्टौ **'भागीरथ्याः'**॥

१—'तुहिनाचल इव पुण्यभागीरथीसहितो नलः' इति दमयन्तीश्लेषः॥ २—तथा च भारते—'क्षितौ तारयते मर्त्यान्नागांस्तारयतेऽप्यधः। दिवि तारयते देवांस्तेन त्रिपथगा स्मृता' इति—इति मुकुटः॥

**कालिन्दी सूर्यतनया यमुना शमनस्वसा ।**

**कालिन्दीति** ॥ कलिन्दस्येयम् । 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (१) ॥*॥ सूर्यस्य तनया ॥ (२) ॥*॥ यच्छति । 'यम उपरमे' (भ्वा० प० अ०) । 'अर्जियमिशीङ्भ्यश्च' (उ० ३।६१) इत्युनन् ॥ (३) ॥*॥ शमनस्य स्वसा ॥ (४) ॥*॥ चत्वारि **'यमुनायाः'** ॥

**रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ॥ ३२ ॥**

**रेवेति** ॥ रेवते । 'रेवृ प्लवगतौ' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ नर्म ददाति द्यति वा । 'डुदाञ् दाने' (जु० उ० अ०) । 'दो अवखण्डने' (दि० प० से०) वा । 'आतोऽनुप–' (३।२।३) इति कः ॥ **'नर्मदः** केलिसचिवे **नर्मदा** सरिदन्तरे' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ सोमात्सोमवंशजात् पुरूरवस उद्भवति । तेनावतारितत्वात् । यद्वा सोमोऽमृतमुद्भवत्यस्याः । स्वर्गप्रदत्वात् । अप् (३।३।५७) । सोमाद्रुद्राद्भवति । पचाद्यच् (३।१।१३४) ॥ (३) ॥*॥ मेकलस्य ऋषेरद्रेर्वा कन्यका ॥ (४) ॥*॥ चत्वारि **'नर्मदायाः'** ॥

**करतोया सदानीरा**

**करेति** ॥ करस्य तोयम् । तदत्रास्ति । अर्शआद्यच् (५।२।१२७) । गौरीविवाहे शंकरहस्तच्युतम् ॥ (१) ॥*॥ सदा नीरं यस्याः । 'प्रथमं कर्कटे देवी त्र्यहं गङ्गा रजस्वला । सर्वा रक्तवहा नद्यः करतोयाम्बुवाहिनी' इति स्मृतेः ॥ (२) ॥*॥ द्वे **'गौरीविवाहे कन्यादानोदकाज्जातनद्याः'** ॥

**बाहुदा सैतावाहिनी ।**

**बाहुदेति** ॥ बाहुं छिन्नं दत्तवती लिखितस्य ऋषेः । 'डुदाञ्' (जु० उ० अ०) । 'आतोऽनुप–' (३।२।३) इति कः । यद्वा बहुदस्य कार्तवीर्यस्येयम् । तेनावतारितत्वात् । 'तस्येदम्' (४।३।१२०) इत्यण् । अजादित्वात् (४।१।४) टाप् ॥ (१) ॥*॥ सितानि वाहनानि यस्यार्जुनस्य । तस्येयम् । यद्वा सितस्यार्जुनस्येयम् । सैती चासौ वाहिनी नदी च ॥ (२) ॥*॥ द्वे **'कार्तवीर्यावतारितनद्याः'** ॥

**शतद्रुस्तु शुतुद्रिः स्यात्**

**शतेति** ॥ शतधा द्रवति । 'द्रु गतौ' (भ्वा० प० अ०) । 'हरिमितयोर्द्रुवः' (उ० १।३४) 'शते च' (उ० १।३५) इत्युडिंत् ॥ (१) ॥*॥ शु पूजितं तुदति । 'तुद व्यथने' (तु० उ० अ०) 'इगुपधात्कित्' (उ० ४।१२०) इतीन् । बाहुलकाद्रुक् । 'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि' इति हि श्रुतिः । यत्तु मुकुटः—शतद्रुरेव पृषोदरादित्वात् (६।३।१०९) आदिवर्णविकारे 'शतद्रुः' इति स्वामी, शितं तीक्ष्णं द्रुता शितद्रुः इति कौमुदी, इत्याह । तन्न । 'एतदबुध्यमानाः शितद्रुः सितद्रुर्वेत्याहुः' इत्यनेन (स्वामिग्रन्थेन) तेनास्यार्थस्य दूषितत्वात् । व्युत्पत्त्यन्तरस्य कृतत्वाच्च ॥ (२) ॥*॥ द्वे **'शतद्र्वाः'** ॥

**विपाशा तु विपाट् स्त्रियाम् ॥ ३३ ॥**

**विपाशेति** ॥ पाशं विमोचयति । 'सत्यापपाश–' (३।१।२५) इत्यादिना 'पाशान्मोचने' इति णिच् । पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ तस्मादेव 'क्विप् च' (३।२।७६) इति क्विपि विपाट् ॥ (२) ॥*॥ द्वे **'पापमोचिन्याः'** ॥

**शोणो हिरण्यबाहुः स्यात्**

**शोण इति** ॥ शोणति । 'शोणृ वर्णगत्योः' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । **'शोणः** कृशानौ स्योनाके लोहिताश्वे नदे पुमान् । त्रिषु कोकनदच्छाये' ॥ (१) ॥*॥ हिरण्यं बाहावस्य ॥*॥ हिरण्यं वहति । 'कर्मण्यण्' (३।२।१) अदन्तः (**हिरण्यवाहः**) ॥ (२) ॥*॥ द्वे **'नरविशेषस्य'** ॥

**कुल्याल्पा कृत्रिमा सरित् ।**

**कुल्येति** ॥ कुले प्राणिगणे कुटुम्बे दांपत्ये वा साधुः 'तत्र साधुः' (४।४।९८) इति यत् । **'कुल्या** नदी **कुल्य**मस्थि **कुल्या** वारिप्रणालिका' इति धरणेर्नदीमात्रेऽपि । (**'कुल्यं** स्यात्कीकसेऽप्यष्टद्रोणीशूर्पामिषेषु च । **कुल्या** पयःप्रणाल्यां च नद्यां जीवन्तिकौषधौ । कुलोद्भवे कुलहिते त्रिषु मान्ये पुनः पुमान्') ॥ (१) ॥*॥ एकं **'कृत्रिमस्वल्पनद्याः'** ॥

**शरावती वेत्रवती चान्द्रभागी सरस्वती ॥ ३४ ॥**
**कावेरी**

**शरावतीति** ॥ शराः सन्त्यस्याम् । मतुप् (५।२।९५) । 'शरादीनां च' (६।३।१२०) इति दीर्घः ॥ (१) ॥*॥ वेत्रमस्त्यस्याम् । मतुप् (५।२।९४) ॥ (१) ॥*॥ चन्द्रभागयोः पर्वतयोरियम् । तत्प्रभवत्वात् । 'तस्येदम्' (४।३।१२०) इत्यण् । 'टिड्ढा–' । (४।१।१५) इति ङीप् प्राप्तः 'चन्द्रभागान्नद्याम्' (४।१।४५) इति बाह्वादिगणसूत्रान्न भवति । स्वरूपयोरविशेषात् । **'तापी तु तपती सैत्या, चान्द्रभागी तु चन्द्रिका । चान्द्रभागा, शारदा** तु कश्मीरेषु सरस्वती' इति शब्दार्णवः । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । **'चन्द्रभागा चान्द्रभागा चान्द्रभागी** च सा मता । **चन्द्रभागी** च सैवोक्ता' इति द्विरूपकोषः ॥ (१) ॥*॥ सरांसि सन्त्यस्याम् । मतुप् (५।२।९४) । **'सरस्वांस्तु** नदे वार्धौ नाऽन्यवद्रसिके, स्त्रियाम् ।

१—स्वमध्योऽपि । तथा च महाकविप्रयोगः—'यन्मेखला भवति मेखलशैलपुत्री'—इति पञ्जिकासर्वधरादयः—इति मुकुटः ॥ २—फलितार्थकथनमेतत् । विग्रहस्तु सिताश्च ते वाहाश्च ते सन्त्यस्यासौ सितवाही अर्जुनः । तस्येयम्—इति बोध्यः ॥ यथाच्युतस्यैव व्याख्यानत्वे उपोत्तमे इकाराश्रवणानापत्तिः ॥

१—'पशुपतिजटाबन्ध इव चन्द्रभागालंकृतो देशः' इति दमयन्तीश्लेषः ॥ २—पक्षे टाप्—इति मुकुटः ॥

वाणी-क्षीरत्नवाग्देवी-गो-नदीषु नदीभिदि । मनुपत्न्यामपि' ॥ ( १ ) ॥*॥ कस्य जलस्य वेरं शरीरम् । तस्येयम् । ईषद्वेरमस्या वा । 'कावेरी स्यात्सरिद्भेदे पण्यनारीहरिद्रयोः' ॥ ( १ ) ॥*॥ ( नदीविशेषाणां पृथक्पृथक् ) ॥

**सरितोऽन्याश्च**

**सरित इति** ॥ अन्याः कौशिकी-गण्डकी-चर्मण्वती-गोदावर्यादयः ॥

**संभेदः सिन्धुसंगमः ।**

**समिति** ॥ संभिद्यन्ते मिलन्त्यत्र । 'भिदिर् विदारणे' (रु० उ० अ० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् । 'संभेदः स्फुटने सङ्गे' ॥ ( १ ) ॥*॥ सिन्ध्वोः संगमः ॥*॥ एकं **'नद्यादिसंगमस्य'** ॥

**द्वयोः प्रणाली पयसः पदव्याम्**

**द्वयोरिति** ॥ नल्यते । 'णल बन्धने' ( भ्वा० प० से० ) । कर्मणि घञ् ( ३।३।१९ ) । 'उपसर्गात्–' ( ८।४।१४ ) इति णत्वम् । गौरादिङीष् ( ४।१।४१ ) ॥ (१) ॥*॥ **'कृत्रिमजलनिःसरणमार्गस्य'** एकम् ॥

**त्रिषु तूत्तरौ ॥ ३५ ॥**

**देविकायां सरय्वां च भवे दाविकसारवौ ।**

**त्रिष्विति** ॥ दीव्यति । 'दिवु क्रीडादौ' ( दि० प० से० ) । ण्वुल् ( ३।१।१३३ ) । देविकायां नद्याम् । सरति । 'सर्तेरयुः ( उ० ३।२२ ) । 'अयुः' इत्येके । सरय्वां च भवे । 'तत्र भवः' ( ४।३।५३ ) इत्यण् । 'देविकाशिंशपा–' ( ७।३।१ ) इत्यचामादेरात्त्वम् । 'दाण्डिनायन–' (६।४।१७४) इति लोपः । स्त्रियां 'टिड्ढा–' (४।१।१५) इति ङीप् ॥ ( १ ) ॥*॥ **'देविकासरयूद्भवयोः'** क्रमेणैकैकम् ॥

**सौगन्धिकं तु कह्लारम्**

**सौगन्धिकमिति** ॥ सुगन्ध्येव । स्वार्थे 'विनयादिभ्यष्ठक्' ( ५।४।३४ ) । शोभनो गन्धः प्रयोजनमस्य । 'प्रयोजनम्' ( ५।१।१०९ ) इति ठक्, इति वा । 'सौगन्धिकं तु कह्लारे पद्मरागे च कत्तृणे । (पुंलिङ्गो गन्धपाषाणे सुगन्धव्यवहारिणि') ॥ ( १ ) ॥*॥ कस्य जलस्य हार इव । के ह्लादते वा । अच् (३।१।१३४) । पृषोदरादिः ( ६।३।१०९ ) ॥ (२) ॥*॥ द्वे **'शुक्लकह्लारस्य'** । 'मुण्डी' इति ख्यातस्य इत्यन्ये ॥

**हल्लकं रक्तसंध्यकम् ॥ ३६ ॥**

**हल्लकमिति** ॥ हल्लति । 'हल्ल विकसने' ( ) । ण्वुल् (३।१।१३३) । यद्वा हलनम् । संपदादिः (वा० ३।३।१०८) । हलं लाति 'ला दाने' ( अ० प० अ० ) । 'आतोऽनुप–' ( ३।२।३ ) इति कः । 'संज्ञायां कन्' ( ५।३।७५ ) ॥ (१) ॥*॥ रक्तं संध्येव । इवार्थे कन् (५।३।९६) 'केऽणः' (७।४।१३) । रक्तान् संधीन् अकति । 'अक कुटिलायां गतौ' ( भ्वा० प० से० ) मूलविभुजादिः ( वा० ३।२।५ ) इति वा ॥ (२) ॥*॥ द्वे **'रक्तकह्लारस्य'** द्वे रक्तवर्णत्रिकालविकासितपुष्पस्य वा ॥

**स्यादुत्पलं कुवलयम्**

**स्यादिति** ॥ उपलति । 'पल गतौ' ( भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) ॥ (१) ॥*॥ कोर्वलयमिव । शोभाकरत्वात् । 'कुवलं तूत्पलं कुवम्' इति त्रिकाण्डशेषः । तत्र कौ वलते । 'वल संवरणे' (भ्वा०आ०से०) । पचाद्यच् (३।१।१३)। ( 'कुवलं चोत्पले मुक्ताफलेऽपि बदरीफले' ) ॥*॥ 'अन्येभ्योऽपि–'( वा०३।२।१०१) इति डे कुवम् । यद्वा कुवते । 'कुङ् शब्दे' (तु०आ०से०) कुटादिः । पचाद्यचि (३।१।१३४) उवङ् (६।४।७७) ॥ ( २ ) ॥*॥ द्वे **'कमलकुमुदादीनां'** सामान्येन । अत एव 'इन्दीवरे मांसशून्ये उत्पलं कुष्ठभूरुहे' इति रभसः, 'श्यामं शितिकण्ठनीलं कुवलयमिन्दीवरं च नीलाब्जम्' इति नाममाला च ॥

**अथ नीलाम्बुजन्म च ।**

**इन्दीवरं च नीलेऽस्मिन्**

**अथेति** ॥ नीलं च तदम्बुजन्म च ॥ (१) ॥*॥ इन्दति । 'इदि परमैश्वर्ये' ( भ्वा० प० से ) । इन् ( उ० ४।११८ ) । 'कृदिकारात्–' ( ग० ४।१।४५ ) इति ङीष् । इन्दी लक्ष्मीः । तस्या वरमिष्टम् । 'इन्दीवरं कुवलये शतावर्यां च योषिति' ॥*॥ 'कुवलयं स्यादिन्दीवारमित्यपि' इति व्याडेरिन्दीवारमपि ॥ ( २ ) ॥*॥ द्वे **'नीलोत्पलस्य'** ॥

**सिते कुमुदकैरवे ॥ ३७ ॥**

**सिते इति** ॥ कौ मोदते । 'मुद हर्षे' (भ्वा०आ०से०) । मूलविभुजादिः ( वा० ३।२।५ ) । 'इगुपध–' ( ३।१।१३६ ) इति को वा । 'कुमुदं कैरवे रक्तपद्मे, स्त्री कुम्भिकोषधौ । गम्भार्यां, पुंसि दिङ्नागे नागशाखामृगान्तरे' ॥*॥ ( क्विपि ( ३।२।१७८ ) कुमुद् । 'कुमुद् त्रिषु स्यात्कृपणे कैरवे तु नपुंसकम्' इति मेदिनी ) ॥ ( १ ) ॥*॥ के जले रौति । 'रु शब्दे' ( अ० प० अ० ) । पचाद्यच् ( ३।१।१३४ ) 'तत्पुरुषे कृति–' (६।३।१४) इत्यलुक् । केरवस्य हंसस्येदं प्रियम् । 'कैरवं चन्द्रकान्तं गर्दभं कुमुदं कुमुदे' इति माधवः । ( 'कैरवं कितवे रिपौ । नपुंसकं च कुमुदे, चन्द्रिकायां तु कैरवी ) । 'चन्द्रकान्तं तु कैरवे । चन्द्रकान्तो रत्नभेदे ॥ ( २ ) ॥*॥ द्वे **'शुक्लोत्पलस्य'** ॥

---

१—कुवलयं चन्द्रविकासि, पद्मं तु सूर्यविकासि, इत्यनयोर्भेदः । 'इन्दोरस्य च मण्डलं कुवलयालंकारकारि ध्रुवम्' इति लक्ष्यसंवादोऽपि —इति बुधमनोहरौ । २—नन्वेवं कथमुत्पलमित्युक्ते नीलोत्पलादिष्वेव बुद्धिर्जायते, न पद्मादौ इति चेत् ॥ उच्यते । यथा सामान्येऽपि धान्यार्थे 'धान्यम्' इत्युक्ते कलमादिष्वेव बुद्धिर्भवति, न मुद्गादौ, एवमिहाप्यदोष इति सर्वधरादयः इति मुकुटः ॥ ३—'गन्धकान्तम्'—इति लिखितम् ॥

**शालूकमेषां कन्दः स्याद्**

**शालूकमिति** ॥ एषां सौगन्धिकादीनां कन्दो मूलम् । शल्यते, शलति वा 'शल चलनसंवरणयोः' (भ्वा० आ० से०)। 'शलिमण्डिभ्यामूकण्' (उ० ४।४२) वृद्धिः (७।२।११६) च ॥ (१) ॥*॥ एकम् **'उत्पलकन्दस्य'** ॥

**वारिपर्णी तु कुम्भिका ।**

**वारीति** ॥ वारिणि पर्णान्यस्याः । 'पाककर्ण–' (४।१।६४) इति ङीष् । यद्वा वारि पिपर्ति । 'पॄ पालनपूरणयोः' (जु० प० से०) । 'धापॄवस्यज्यतिभ्यो नः' (उ० ३।६) । 'जातेः–' (४।१।६३) इति । ङीप् । अत एव 'कुम्भीको वारिपर्णः स्यात्–' इत्येके पठन्ति ॥ (१) ॥*॥ कुम्भोऽस्त्यस्याः । ठन् (५।२।११५) ॥ (२) ॥*॥ द्वे **'जलकुम्भिकायाः'** ॥

**जलनीली तु शेवालं शैवलः**

**जलेति** ॥ जलं नीलयति । 'णील वर्णे' (भ्वा० प० से०) णिच् (३।१।२५) । 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ जले शेते तिष्ठति । 'शीङो वलञ्वलन्वालनः' (उ० ४।३८) **'शेवलश्चैव शेवालः शैवलो** जलनीलिका' (इति वाचस्पतिः) ॥ (२) ॥*॥ (३) ॥*॥ त्रीणि **'शैवालस्य'** ॥

**अथ कुमुद्वती ॥ ३८ ॥**

**कुमुदिन्याम्**

**अथेति** ॥ कुमुदान्यत्र देशे सन्ति 'कुमुदनडवेतसेभ्यो ड्मतुप्' (४।२।८७) 'झयः' (८।२।१०) इति वत्वम् । (**'कुमुद्वती** कैरविण्यां दयितायां कुशस्य च') ॥ (१) ॥*॥ 'पुष्करादिभ्यः–' (५।२।१३५) इतीनौ कुमुदिनी ॥ (२) ॥*॥ द्वे कुमुदयुक्तदेशस्य । कुमुदलताया इत्यन्ये ॥

**नलिन्यां तु बिसिनीपद्मिनीमुखाः ।**

**नलिन्यामिति** ॥ नडाः सन्त्यत्र । 'पुष्करादिभ्यः–' (५।२।१३५) इतीनिः । डलयोरैक्यम् । यद्वा नलमत्रास्ति । 'खलादिभ्यः' (वा० ४।२।५१) इतीनिः (**'नलः** पोटगले राज्ञि पितृदेवे कपीश्वरे ।)' **'नली** मनःशिलायां तु नलिनेऽपि **नलं** मतम्' इति विश्वः । **नलिनी** पुनः । पद्माकरे गङ्गाब्जिन्योः' इति हैमः ॥ (१) ॥*॥ **बिसमस्त्यस्याः । पूर्ववदिनिः** (वा० ४।२।५१) ॥ (२) ॥*॥ एवं पद्मिनी । मुखशब्दादाद्यर्थात् मृणालिनी कमलिनी पुटकिनीत्यादयः । **'पद्मिनी** पद्मसंघाते स्त्रीविशेषे सरोऽम्बुजे' इति मेदिनी । **पद्मिनी** योषिदन्तरे । 'अब्जेऽब्जिन्यां सरस्यां च' इति हैमः ॥ (३) ॥*॥ ( त्रीणि **'पद्मसंघातस्य'** कमलिन्यां इत्यन्ये ) ॥

**वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ॥ ३९ ॥**
**सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ।**
**पङ्केरुहं तामरसं सारसं सरसीरुहम् ॥ ४० ॥**
**बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च ।**

**वेति** ॥ पद्यते । 'पद गतौ' (दि० आ० अ०) । 'अर्तिस्तुसु–' (उ० १।१४०) इति मन् । **'पद्मोऽस्त्री** पद्मके व्यूहनिधिसंख्यान्तरेऽम्बुजे । ना नागे, स्त्री फञ्जिकाश्रीचार्वाटीपन्नगीषु च' ॥ (१) ॥*॥ नलति । 'णल गन्धे' (भ्वा० प० से०) इनन् (उ० २।४९) **'नलिनं** नलिकातोयाम्बुजेषु' ॥ (२) ॥*॥ अरं शीघ्रं लिप्सां विन्दति । 'गवादिषु विन्देः–' (वा० ३।१।१३८) इति शः । 'शे मुचादीनाम्' (७।१।५९) इति नुम् । अराकाराणि पत्राणि विन्दति वा ॥ (३) ॥*॥ महच्च तदुत्पलं च । **'उत्पलं** कुष्टभूरुहे । इन्दीवरे मांसशून्ये' इति हैमः ॥ (४) ॥*॥ सहस्रं पत्राण्यस्य ॥ (५) ॥*॥ कं जलमलति । 'अल भूषणादौ' (भ्वा० प० से०) । मूलविभुजादित्वात् (वा० ३।२।५) कः । यद्वा काम्यते । 'कमु कान्तौ' (भ्वा० आ० से०) । 'वृषादिभ्यः' (उ० १।१०६) इति कलच् । **'कमलं** क्लोम्नि भेषजे । पङ्कजे सलिले ताम्रे **कमलस्तु** मृगान्तरे । **कमला** श्रीवरनार्योः' इति हैमः ॥ (६) ॥*॥ शतं पत्राण्यस्य । **'शतपत्रः** शिखण्डिनि । दार्वाघाटे सारसे च कमले तु नपुंसकम्' इति विश्वमेदिन्यौ ॥ (७) ॥*॥ कुशे जले शेते । 'अधिकरणे शेतेः' (३।२।१५) इत्यच् । 'शयवास–' (६।३।१८) इत्यलुक् ॥ (८) ॥*॥ पङ्के रोहति । 'रुह प्रादुर्भावे' ( भ्वा० प० अ० ) । 'इगुपध–' ( ३।१।१३६ ) इति कः । 'तत्पुरुषे कृति' ( ६।३।१४ ) इत्यलुक् ॥ ( ९ ) ॥*॥ **'तामरं** घृतमर्णश्च' इति रुद्रः । तत्र सस्ति । 'षस स्वप्ने' (अ० प० से०) । 'अन्येभ्योऽपि–' (वा० ३।२।१७१) इति डः । यद्वा तम्यते । 'तमु काङ्क्षायाम्' (दि० प० से०) । घञ् (३।३।१९।) 'नोदात्तोपदेशस्य–' (७।३।३४) इति निषेधस्यानित्यत्वान्न वृद्धिनिषेधः । रस्यते । 'रस आस्वादने' चुरादावदन्तः । 'एरच्' (३।३।५६) । तामं

१—'सकलशेकलशेवलमालिका' इति कथिताभ्युदयात्—इति मुकुटः ॥ २—इतःप्रभृति सूर्यविकासिनामानि । 'निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम्', 'तीव्रतपनतापप्रियाम्भोजिनी न सहते स्तोकमप्यमृतमुचो रुचश्चन्द्रस्य', 'चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम्' इत्यादि महाकविवर्णनात् ॥ ३—इतः पूर्वं 'नलिकातोयाम्बुजेषु' इति लिखितमासीत् । परंतु तस्य नलिनशब्दार्थताया हैमादिषूपलम्भने नलिनशब्दार्थे एव निवेशितम् ॥

१—तथा च 'सुरगज इव बिभ्रत् पद्मिनीं दन्तलग्नाम्' इत्यादयश्च प्रयोगाः—इति मुकुटः ॥ २—क्लोम हृदयस्य दक्षिणपार्श्वे उदर्यो जलाधारः—इत्यनेकार्थकैरवाकरकौमुदी । 'व्योम्नि' इति लिखितमासीत् ॥

च तद्रसं च । 'तामरसं पद्मे ताम्रकाञ्चनयोरपि' ॥ (१०) ॥*॥ सरसि भवम् । 'तत्र भवः' (४।३।५३) इत्यण् । 'सारसं सरसीरुहे ।' 'सारसः पुष्कराख्येन्द्वोः' इति हैमः ॥ (११) ॥*॥ सैरस्यां रोहति । 'इगुपध–' (३।१।१३६) इति कः ॥ (१२) ॥*॥ बिसस्य प्रसूनम् ॥ (१३) ॥*॥ केसरस्य राज्यस्यास्ति । 'अन्येभ्योऽपि दृश्यते' (वा० ५।२।१०९) इति डः । 'राजीवं नलिने, ना तु भेदे हरिणमीनयोः' ॥ (१४) ॥*॥ पुष्णाति । 'पुष पुष्टौ' (दि० प० अ०) 'पुषः कित्' (उ० ४१४) इति करन् । 'पुष्करं द्वीपतीर्थाहिखगरागौषधान्तरे । तूर्यास्येऽसिफले काण्डे शुण्डाग्रे खे जलेऽम्बुजे' इति हैमः ॥ (१५) ॥*॥ अम्भसि रोहति ॥ (१६) ॥*॥ षोडश 'पद्मसामान्यस्य' ॥

**पुण्डरीकं सिताम्भोजम्**

**पुण्डेति** ॥ पुण्डयति । 'मडि भूषायाम्' । 'पुडि च' (भ्वा० प० से०) । 'कर्करीकादयश्च' (उ० ४।२०) इत्यरीकन् । 'पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे । पुंसि व्याघ्रेऽग्निदिग्वर्गे कोषकारान्तरेऽपि च' ॥ (१) ॥*॥ सितं शुक्लं च तदम्भोजं च ॥ (२) ॥*॥ द्वे 'शुभ्रकमलस्य' ॥

**अथ रक्तसरोरुहे ॥ ४१ ॥**

**रक्तोत्पलं कोकनदम्**

**अथेति** ॥ रक्तं च तत्सरोरुहं च ॥ (१) ॥*॥ रक्तं च तदुत्पलं च ॥ (२) ॥*॥ कोकांश्चक्रवाकान् नदति । 'णद अव्यक्ते शब्दे' (भ्वा० प० से०) । अन्तर्भावितण्यर्थः । मूलविभुजादिः (वा० ३।२।५) । 'अथ कोकनदं रक्तकुमुदे रक्तपङ्कजे' इति मेदिनी ॥ (३) ॥*॥ त्रीणि 'रक्तकमलस्य' ॥

**नाला नालम्**

**नालेति** ॥ नलति । 'णल बन्धे' (भ्वा० प० से०) । 'ज्वलिति–' (३।१।१०९) इति णः । 'नालं नं ना पद्मदण्डे नाली शाककलम्बके' ॥ (१) ॥*॥ (२) ॥*॥ द्वे 'उत्पलादिदण्डस्य' ॥

**अथास्त्रियाम् ।**

**मृणालं बिसम्**

**अथेति** ॥ मृण्यते । 'मृण हिंसायाम्' (तु० प० से०) 'तमिविशिबिडिमृणि–' (उ० १।११८) इति कालन् । अपचयविवक्षायां गौरादित्वात् (४।१।४१) ङीषि 'मृणाली' इत्यपि । 'मृणालं नलदे क्लीबं, पुंनपुंसकयोर्बिसे ।' इति मेदिनी ॥ (१) ॥*॥ बिस्यति । 'बिस प्रेरणे' (दि० प० से०) । 'इगुपध–' (३।१।१३६) इति कः । 'मृणाले तु बिसं बिशम्' इति द्विरूपकोशः ॥ (४) ॥*॥ द्वे 'अब्जादीनां मूलस्य' ॥

**अब्जादिकदम्बे षण्डमस्त्रियाम् ॥ ४२ ॥**

**अब्जेति** ॥ सनोति । 'षणु दाने' (तु० उ० से० ) । 'अमन्ताड्डः (उ० ११।११४) बाहुलकात्सत्वाभावः । 'षण्डः स्मृतो बलीवर्दे भवेत् पण्डं तु कानने' इति मूर्धन्यादावजयः । 'षण्डं पद्मादिसंघाते न स्त्री स्याद् गोपतौ पुमान्' 'शडि रुजायां संघाते च' (भ्वा० आ० से०) घञ् (३।३।१८) 'तालव्यो मूर्धन्योऽब्जादिकदम्बे शण्डशब्दोऽयम् । मूर्धन्य एव वृषभे पूर्वाचार्यैर्विनिर्दिष्टः' इत्यूष्मविवेकः । 'मकुरमुकुरौ दर्पणे, षण्डः समूहे, दारदोऽम्बुधौ' इति सारस्वतकोशः ॥ (१) ॥*॥ एकम् 'अब्जादीनां समूहस्य' ॥

**करहाटः शिफाकन्दः**

**करेति** ॥ करं हाटयति । 'हट दीप्तौ' (भ्वा० प० से०) ण्यन्तः । 'कर्मण्यण्' (३।२।१) । (यत्तु)—'कं जलं रहति त्यजति । करहं पद्मम् । ततो हटति बहिर्गच्छति—इति मुकुटः । तन्न । 'करहहाटः' इति प्रसङ्गात् । (अटतीति विग्रहेऽपि) वृद्धिप्रसङ्गाच्च । 'करहाटः पद्मकन्दे देशेद्रुमविशेषयोः' इति हैमः ॥ (१) ॥*॥ शिफा मूलतरप्ररोहः तत्सहितः कन्दो मूलम् ॥*॥ 'शिफा' इति 'कन्दम्' इति च पृथक् नामनी इत्यन्ये ॥ (२) ॥*॥ द्वे 'पद्मकन्दस्य' ॥

**किंजल्कः केसरोऽस्त्रियाम् ।**

**किंजल्क इति** ॥ किंचिज्जलति । 'जल अपवारणे' (चु० प० से०) । बाहुलकात्कः ॥ (१) ॥*॥ के जले सरति । 'सृ गतौ' (भ्वा० प० से०) पचाद्यच् (३।१।१३४) । 'हलदन्तात्–' (६।३।९) इत्यलुक् । दन्त्यसः । ('सवितृ-

१—'दुर्जन इव सतामरसः' इति वासवदत्तायां वसन्तवर्णनम्–इति मुकुटः ॥ २—इन्दौ चन्द्रे यथा 'सिञ्जतीव सुधासारैः सारसः सारसैः करैः' इत्यनेकार्थकैरवाकरकौमुदी ॥ ३—सरसि रोहति । 'तत्पुरुषे कृति–' (६।३।१४) इत्यलुकि ह्रस्वेकारोऽपि । तथा च भारविः । 'अयमच्युतस्य वचनैः सरसीरुहजन्मनः' इति–इति मुकुटः ॥ ४—'काश्चिद्राक्षसप्रमदा इव रक्तोत्पलाकृष्टिव्यसनिन्यः' इति दमयन्तीश्लेषः ॥ ५—नाला इत्यपि दृश्यते ॥

१—तथा च 'सान्द्रं चन्दनमङ्गले वलयिता पाणौ मृणालीलता' इति राजशेखरः–इति मुकुटः ॥ २—क्वचिन्मेदिनीपुस्तके तु 'स्त्रीनपुंसकयोः' इत्युपलभ्यते । एवं चोक्तराजशेखरोक्तिरप्यनुकूलैव ॥ ३—बिसं दन्त्यान्तम् । तथाच 'हंसपङ्क्तिरिव बिसंवादिनी' इति वासवदत्ता इति मुकुटः ॥ 'मुनय इव बिसाधारा जलपक्षिणः' इति दमयन्ती ॥ ४—बलीवर्द उत्सृष्टवृषः । तत्र यथा 'चौरैरपहृते षण्डे पृष्ठतः कोऽनुधावति' । कानने यथा 'कुमुदकमलषण्डे तुल्यरूपामवस्थाम्' इत्यनेकार्थकैरवाकरकौमुदी ॥ ५—वृद्ध्यप्रसङ्गात् ॥ चौरादिकस्यादन्तस्य रहधातोर्वृद्ध्यप्रसङ्गे ततोऽटतीति विग्रहे तु न काप्यनुपपत्तिः ॥ ६—'पुष्पं' इति पाठः ॥ ७—अतएव 'करहाटः शिफा च स्यात् कन्दे सलिलजन्मनाम्' इति हैमनाममालायामुक्तम् ॥

किसलयकसरसभाः' इति समेदात् ) ॥*॥ के शीर्यते । 'शॄ हिंसायाम्' ( क्र्या० प० से० ) । 'ऋदोरप्' ( ३।३।५७ ) । तालव्यशः । '**केसरं** हिङ्गुनि क्लीबं, किंजल्के न स्त्रियां, पुमान् । सिंहच्छटायां पुंनागे बकुले नागकेसरे' ॥ (२) ॥*॥ द्वे '**पद्मकेसरस्य**' ॥

**संवर्तिका नवदलम्**

**समिति** ॥ संवर्तते । 'वृतु वर्तने' ( भ्वा० आ० से० ) । 'हृपिशिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च' ( उ० ४।११९ ) इतीन् । '**संवर्ति**र्नवपत्रिका' इति वोपालितः ततः स्वार्थे कन् ( ५। ३।७५ ) ॥ (१) ॥*॥ नवं च तद्दलं च ॥ (२) ॥*॥ द्वे '**पद्मादीनां नवपत्रस्य**' ॥

**बीजकोषो वराटकः ॥ ४३ ॥**

**बीजेति** ॥ बीजस्य कोषः पात्रमाधारः । तालव्यान्तोऽपि ॥ (१) ॥*॥ व्रियते दलैः । 'वृञ् आवरणे' (     ) । 'अन्येभ्योऽपि' (     ) इत्याटच् । ततः स्वार्थे कन् ( ५। ३।७५ ) । यद्वा—वरं दलवरणम् अटति । 'अट गतौ' ( भ्वा० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) ततः स्वार्थे कन् ( ५।३।७५ ) । '**वराटकः** पद्मबीजकोशे रज्जौ कपर्दके' ॥ (२) ॥*॥ द्वे '**पद्मबीजस्य**' ॥

**इति वारिवर्गविवरणम् ॥**

---

उक्तान्वर्गान् संगृह्णाति—

**उक्तं स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकम् ।**
**पातालभोगिनरकं वारि चैषां च संगतम् ॥ ४४ ॥**
**इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।**
**स्वरादिकाण्डः प्रथमः साङ्ग एव समर्थितः ॥ ४५ ॥**

**उक्तमिति** ॥ अत्रैकादश वर्गाः ॥

इति श्रीवघेलवंशोद्भवश्रीमहीधरविषयाधिपश्री**कीर्तिसिंह**देवाज्ञया श्री**भट्टोजिदीक्षित**ात्मजश्री**भानुजीदीक्षित**विरचितायाममरटीकायां व्याख्यासुधायां प्रथमकाण्डः संपूर्णतामगात् ।

---

१—'आन्दोलकुसुमकेशरशरेणमुखी' इति वासवदत्तायां तालव्यमध्यदर्शनात् ॥—इति मुकुटः ॥

१—आदिशब्देन पातालस्य ग्रहणम् इति मुकुटः ॥ अत्रायं भावः—अस्मिन्काण्डे द्वावेव मुख्यवर्गौ स्वर्गः पातालश्च । तत्र नाट्यवर्गपर्यन्तं स्वर्गसाधारणपदार्थानां निरूपणात्स्वर्गवर्गत्वम् । तदुत्तरं पातालसंगतार्थनिरूपणात्पातालवर्गत्वम् ॥ अतएवाग्निपुराणे प्रथमकाण्डे एतानेव पदार्थानुक्त्वा उपसंहृतम् 'स्वर्गपातालवर्गाद्या उक्ताः' इति ॥ तत्राद्यशब्देनावान्तरवर्गग्रहणम्—इत्यपि मुकुटे व्यक्तम् ॥

॥ श्रीः ॥

## श्रीमदमरसिंहविरचितः

# अमरकोषः ।

### व्याख्यासुधाख्यया व्याख्यया समेतः ।

## द्वितीयं काण्डम् ।

**वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः ।**
**नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥ १ ॥**

**वर्गा इति** ॥ इह द्वितीयकाण्डे वर्गा उक्ता वदितुमारब्धाः । आदिकर्मणि क्तः ( ३।४।७१ ) । कीदृशाः, साङ्गोपाङ्गैः, पृथिव्यादिभिरुपलक्षिताः । तत्राङ्गानि मृदादीनि । उपाङ्गानि खिलादीनि । आपणादीनि विपण्यादीनि । शिलादीनि मनःशिलादीनि । वृक्षादीनि पुष्पादीनि । मृगशब्द आरण्यपशुमात्रपरः । 'आरण्याः पशवो मृगाः' इति स्मृतेः । आदिशब्देन पक्षिकीटादीनां ग्रहणम् । तस्य चाङ्गोपाङ्गानि पक्षिपक्षादीनि । यद्वा—मृगानत्तुं शीलं यस्य स मृगादी सिंहः ॥

**भूर्भूमिरचलानन्ता रसा विश्वंभरा स्थिरा ।**
**धरा धरित्री धरणी क्षोणी ज्या काश्यपी क्षितिः २**
**सर्वंसहा वसुमती वसुधोर्वी वसुंधरा ।**
**गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही ॥३॥**

**भूरिति** ॥ भवति । कर्तरि क्विप् ( ३।२।१७८ ) । '**भूः** स्थानमात्रे कथिता धरण्यामपि योषिति' । यत्तु—'भवत्यस्यां सर्वम्' इति भूः । बहुलवचनात् ( ३।३।११३ )—अधिकरणे क्विप् ( ३।३।१७८ )—इत्याह मुकुटः । तन्न । उक्तरीत्या निर्वाहात् । 'अद्भ्यः पृथिवी' इति श्रुतिविरोधाच्च ॥ (१) ॥*॥ भवति । 'भुवः कित्' ( उ० ४।४५ ) इति मिः ।—'भुवः क्मिन्'—इति मुकुटः । तन्न । तादृशसूत्रादर्शनात् । 'कृदिकारात्–' ( ग० ४।१।४५ ) इति ङीष् वा । '**भूमिः** क्षितौ स्थानमात्रे' इति हैमः ॥ (२) ॥*॥ न चलति । 'चल कम्पने ( )। पचाद्यच् ( ३।१।१३४ ) । अचलाः सन्त्यस्याम्, इति वा । अच् ( ५।२।१२७ ) । '**अचलस्तु** गिरिकीलयोः । **अचला** भुवि' इति हैमः ॥ (३) ॥*॥ नास्त्यन्तोऽस्याः । यद्वा अनन्तोऽस्ति धारको यस्याः । '**अनन्तः** केशवे शेषे पुमान्, अनवधौ[१] त्रिषु । **अनन्ता** च विशल्यायां शारिवादूर्वयोरपि । कणादुरालभापथ्यापार्वत्यामलकीषु च । विश्वंभरागुडूच्योः स्यादनन्तं सुरवर्त्मनि' ॥ (४) ॥*॥ रसोऽस्यामस्ति । अर्शआद्यच् ( ५।२।१२७ ) । रस्यते वा । 'रस आस्वादने' चुरादावदन्तः । घञ् ( ३।३।११३ ) । अच् ( ३।३।५६ ) वा । यत्तु—घञर्थे को ( ३।३।५८ ) वा—इति मुकुटः । तन्न । परिगणनात् । अचः सत्वाच्च । ( '**रसा** तु रसनापाठासल्लकीक्षितिकङ्गुषु–' ) ॥ (५) ॥*॥ विश्वं बिभर्ति । 'डुभृञ्' 'संज्ञायां भृतॄवृजि–' ( ३।२।४६ ) इति खच् । '**विश्वंभरो**ऽच्युते शक्रे पुंसि, **विश्वंभरा** भुवि' ॥ (६) ॥*॥ तिष्ठति । अजिरादित्वात् ( उ० १।५३ ) किरच् । '**स्थिरा** भूशालपर्ण्योर् ना शनौ मोक्षेऽचले त्रिषु' ॥ (७) ॥*॥ धरति विश्वम् । 'धृञ् धारणे' ( भ्वा० उ० अ० ) । यद्वा ध्रियते । 'धृङ् अवस्थाने' । ( तु० आ० अ० ) । पचाद्यच् ( ३।१।१३४ ) । धराः सन्त्यस्यां वा । '**धरः** कूर्माधिपे गिरौ । कर्पासतूलेऽथ **धरा** मेदोभूमिजरायुषु' इति हैमः ॥ ( ८ ) ॥*॥ 'अशित्रादिभ्य इत्रोत्रौ' ( उ० ४।१७३ ) । गौरादिङीष् ( ४।१।४१ ) ॥ (९) ॥*॥ 'अर्तिसृधृ–' ( उ० २।१०२ ) इत्यनिः । 'कृदिकारात्–' ( ग० ४।१।४५ ) इति ङीष्[२] ।—गौरादित्वान्ङीष्' ( ४।१।४१ )—इति मुकुटस्य प्रमादः । ( '**धरणो**ऽहिपतौ लोके स्तने धान्ये दिवाकरे ) । **धरणं** धारणे मानविशेषे **धरणी** भुवि' इति हैमः ॥ ( १० ) ॥*॥ क्षौति । 'टुक्षु शब्दे' ( अ० प० अ० ) । बाहुलकान्निः । ( 'कृदिकारात्–' ( ग० ४।१।४५ ) इति ङीष्वा ) ॥ ( ११ ) ॥*॥ जिनाति । 'ज्या वयोहानौ' ( क्र्या० प० अ० ) । अघ्न्यादित्वाद्यदन्तो ( उ० ४।११२ ) निपातितः । '**ज्या** मौर्वी **ज्या** वसुंधरा'

---

१—'निरवधौ' इति पाठः ॥ २—अत एव ह्रस्वेकारान्तोऽपि यथा—'विलसितमनुकुर्वती पुरस्ताद्धरणिरुहाधिरुहैर्वधूलतायाः' इत्यनेकार्थकैरवाकरकौमुदी ॥

इति शाश्वतः । ('ज्या तु मातरि' इति हैमः) ॥ (१२) ॥*॥ कश्यपस्येयम् । '**काश्यप** उक्तो मुनिमृगयोर्भेदे च **काश्यपी** क्षमायाम्' इति मेदिनी ॥ (१३) ॥*॥ क्षियति । 'क्षि निवासगत्योः' (तु० प० अ०) । 'क्तिच्क्तौ च-' इति (३।३।१७४) क्तिच् । यत्तु—क्षियन्त्यत्र—इति मुकुटः । तन्न । 'अजब्भ्याम्-' (वा० (३।३।१२६) इति ल्युटा बाधात् । '**क्षिति**र्गेहे भुवि क्षये' इति हैमः ॥ (१४) ॥*॥ सर्वं सहते 'षह मर्षणे' (भ्वा० आ० अ०) । 'पूःसर्वयोः-' (३।२।४१) इति खच् । ('**सर्वसहः** सहिष्णौ स्यात्**सर्वसहा** पुनः क्षितौ' ॥ (१५) ॥*॥ वसु घनमस्त्यस्याम् । मतुप् (५।२।९४) ॥ (१६) ॥*॥ वसु दधाति । 'आतोऽनुप-' (३।२।३) इति कः ॥ (१७) ॥*॥ ऊर्णोति, ऊर्णूयते, वा । 'ऊर्णुञ् आच्छादने' (अ० उ० से०) । 'महति ह्रस्वश्च' (उ० १।३१) इत्युः, नुलोपः, ह्रस्वः, च । 'वोतो गुणवचनात्' (४।१।४४) इति ङीष् ॥ (१८) ॥*॥ वसु धारयति । 'संज्ञायां भृतॄवृजि-' (३।२।४६) इति खच् 'खचि ह्रस्वः' (६।४।९४) ॥ (१९) ॥*॥ गोत्राः शैलाः सन्त्यस्याम् । अर्शआद्यच् (५।२।१२७) । गां जलं त्रायते वा । 'त्रैङ् पालने' (भ्वा० आ० अ०) । 'आतोऽनुप-' (३।२।३) इति कः ॥ (२०) ॥*॥ कुवते । 'कुङ् शब्दे' ( ) । मितद्र्वादित्वाद् (वा० ३।२।१८०) डुः ॥ (२१) ॥*॥ प्रथते । 'प्रथ विस्तारे' ( ) । 'प्रथेः षिवन् संप्रसारणं च' (उ० १।१४९) । षित्त्वात् (४।१।४१) ङीष् ॥*॥ 'षवन्' इत्येके । 'पृथिवी **पृथवी** पृथ्वी' इति शब्दार्णवः ॥ (२२) ॥*॥ ('प्रथिम्रदि-') (उ० १।२८) इति उप्रत्यये संप्रसारणे 'वोतो गुण-' (४।१।४४) इति ङीषि पृथ्वी । '**पृथ्वी** भूमौ महत्यां च लक्पत्र्यां कृष्णजीरके' ॥ (२३) ॥*॥ क्षमते । 'क्षमूष् सहने' ( ) । 'क्षमेरुपधालोपश्च' (उ० ५।६५) इत्यच् । यत्तु—पृषोदरादित्वात् (६।३।१०९) । अल्लोपः । बाहुलकान्मन् टिलोपश्च—इति मुकुटः । तन्न । उक्तरीत्या निर्वाहात् ॥*॥ पचाद्यचि (३।१।१३४) क्षमा च ॥ (२४) ॥*॥ अवति अव्यते वा । 'अव रक्षणादौ' (भ्वा० प० से०) । 'अर्तिसृधृ-' (उ० २।१०२) इत्यनिः ॥ (२५) ॥*॥ मेदमस्त्यस्याम् । अत इनिः (५।२।११५) । 'मलघ्नो मेदकुष्ठहा' इति शालिहोत्रः । मेद्यति वा । 'ञिमिदा-' (दि० प० से०) । ग्रह्यादित्वात् (३।१।१३४) इनिः ॥ (२६) ॥*॥ मह्यते । 'मह पूजायाम्' चुरादावदन्तः । ण्यन्तात् 'अच इः' (उ० ४।१३९) । महिः । 'कृदिकारात्-' (ग० ४।१।४५) इति ङीष् । यत्तु—मह्यन्ते भूतान्यस्याम्, मह्यते, वा । 'पुंसि' (३।३।११८) इति घः । गौरादिङीष् (४।१।४१)—इति मुकुटः । तन्न । 'हलश्च' (३।३।१२१) इति घञ्प्रसङ्गात् । कर्मणि घस्याप्रसङ्गाच्च । 'करणाधिकरणयोः' अनुवर्तनात् । 'वीचिः पङ्क्तिर्महिः केलिरित्याद्या ह्रस्वदीर्घयोः' इति वाचस्पतिः । यद्वा—महीयते । 'महीङ् पूजायाम्' कण्ड्वादियगन्तः । 'क्विप् च' (३।२।७५) इति क्विप्यलोपयलोपौ । 'कृदिकारात्-' (ग० ४।१।४५) इति ङीष् । तदभावे विसर्गः—इति कश्चित् । तन्न 'कारग्रहणान्न' इत्युक्तत्वात् । '**मही** नद्यन्तरे भूमौ मह उद्भवतेजसोः' इति हैमः ॥ २७ ॥*॥ सप्तविंशतिः '**भूमेः**' ॥

१—विश्वकोषे तु, **काश्यपः** स्यान्मुनौ मीनभेदे भूमौ तु **काश्यपी**' इति पाठ उपलभ्यते ॥

## मृन्मृत्तिका

**मृदिति** ॥ मृद्यते । 'मृद क्षोदे' (क्र्या० प० से०) । संपदादिः (वा० ३।३।१०८) ॥ (१) ॥*॥ स्वार्थे 'मृदस्तिकन्' (५।४।३९) ॥ (२) ॥*॥ द्वे '**मृदः**' ॥

## प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका ।

**प्रशस्तेति** ॥ मृच्छब्दात् 'सस्नौ प्रशंसायाम्' (५।४।४०) ॥ (१) ॥*॥ (२) ॥*॥ द्वे '**प्रशस्तमृदः**' ॥

## उर्वरा सर्वसस्याढ्या

**उर्वरेति** ॥ ऋच्छति । 'ऋ गतौ' (भ्वा० प० अ०) । पचाद्यच् (३।१।१३४) । यद्वा ईर्यते । 'ॠ गतौ' (क्र्या० प० से०) । 'ॠदोरप्' (३।३।५७) । उरूणामरा । यद्वा—उर्व्यते । 'उर्वी हिंसायाम्' (भ्वा० प० से०) । 'खनो घ च' (३।३।१२५) इति घः । 'उपधायां च' (८।२।७८) इति दीर्घस्तु संज्ञापूर्वकत्वान्न । उर्वं राति । कः (३।२।३) । यद्वा संपदादि क्विप् (वा० ३।३।१०८) । 'राल्लोपः' (६।४।२१) । उरू चासौ वरा च । उरु वरा वा । '**ऊर्वरा** तु भूमात्रे सर्वसस्याढ्यभुव्यपि' इति हैमः ॥ (१) ॥*॥ सर्वाणि च तानि सस्यानि च । तैराढ्या मृत् । एकम् '**सस्याढ्यभूमेः**' ॥

## स्यादूषः क्षारमृत्तिका ॥ ४ ॥

**स्यादिति** ॥ ऊषति । 'ऊष रुजायाम्' (भ्वा० प० से०) । 'इगुपध-' (३।१।१३५) इति कः । ('**ऊषः** क्षारमृदि प्रोक्तः प्रभातेऽपि पुमानयम् । तत्संध्यायां च रन्ध्रे च चन्दनाद्रौ श्रवो विले' इति मेदिनी) ॥ (१) ॥*॥ क्षारयति । 'क्षर संचलने' (भ्वा० प० से०) । णिच् (३।१।२६) । पचाद्यच् (३।१।१३४) । क्षारा चासौ मृत्तिका च ॥ (२) ॥*॥ द्वे '**क्षारमृत्तिकायाः**' ॥

## ऊषवानूषरो द्वावप्यन्यलिङ्गौ

**ऊषेति** ॥ ऊषोऽस्त्यस्मिन् । मतुप् (५।२।९४) ॥ (१) ॥*॥ 'ऊषसुषि-' (५।२।१०७) इति रः ॥ (२) ॥*॥ द्वे '**क्षारमृद्विशेषस्य**' ॥

## स्थलं स्थली ।

**स्थलमिति** ॥ स्थलति । 'ष्ठल स्थाने' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । यत्तु—स्थल्यतेऽत्र । 'घञर्थे कः'

( वा० ३।३।५८ )—इति मुकुटः। तन्न। परिगणनात् ॥ (१) ॥*॥ स्थली अकृत्रिमा। 'जानपद–' (४।१।४२) इति ङीष्। कृत्रिमा स्थला। स्थलं तूभयसाधारणम् ॥ (२) ॥*॥ द्वे **'स्थलस्य'** ॥

**समानौ मरुधन्वानौ**

**समानाविति** ॥ म्रियन्तेऽस्मिन्भूतानि। 'भृमृशी–' (उ० १।७) इत्युः। **'मरुर्ना गिरिधन्वनोः'** ॥ (१) ॥*॥ धन्व्यतेऽस्मात्।—धविर्गत्यर्थः सौत्रः इति मुकुटः। तन्न। ( धातुपाठे ( भ्वा० प० से० ) दर्शनात्। 'कनिन् युवृषि–' (उ० १।१५६) इति कनिन्। **'धन्वा तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च'** ॥ (२) ॥*॥ द्वे **'निर्जलदेशस्य'** ॥

**द्वे खिलाप्रहते समे ॥ ५ ॥**

**त्रिषु**

**द्वे इति** ॥ खिलति। 'खिल उञ्छे' ( तु० प० से० )। 'इगुपध–' (३।१।१३५) इति कः। खिल्यते वास्मिन्। 'हलश्च' (३।३।१२१) इति घञ्। संज्ञापूर्वकत्वान्न गुणः। ( 'खिलमप्रहते क्लीबं सारसंक्षिप्तवेधसोः' ) ॥ (१) ॥*॥ न प्रहन्यते स्म। 'हन हिंसागत्योः' ( अ० प० अ० )। कर्मणि क्तः (३।२।१०२) ॥ (२) ॥*॥ समे समानार्थे। द्वे **'हलाद्यकृष्टस्य'**। ( त्रिषु लिङ्गत्रये। स्त्रियां खिला अप्रहता ) ॥

**अथो जगती लोको विष्टपं भुवनं जगत्।**

**अथविति** ॥ गच्छति। 'गम्लृ गतौ' ( भ्वा० प० उ० )। **'पृषद्बृहन्महज्जगत्–'** ( उ० २।८४ ) इति निपातितः। शतृवद्भावात् 'उगितश्च' (४।१।६) इति ङीप्। **'जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च'** ॥ (१) ॥*॥ लोक्यते। 'लोकृ दर्शने' ( भ्वा० आ० से० )। घञ् (३।३।१४)। **'लोको विश्वे जने'** इति हैमः ॥ (२) ॥*॥ विशन्त्यत्र। 'विश प्रवेशने' ( तु० प० अ० )। 'विटपविष्टपविशिपोलपाः' ( उ० ३।१४५ ) ॥*॥ पादिपाठे तु—पिष्यते पिश्यते, वात्र। 'पिश गतौ' (   )। 'पिष्लृ संचूर्णने' ( रु० उ० अ० ) वा। ( **'भुवनं) पिष्टपः पुमान्'** इति बोपालितः ॥ (३) ॥ भवन्त्यस्मिन्। 'रञ्जेः क्युन्' (२।७९) 'भूसूधूभ्रस्जिभ्यः' ( उ० २।८० ) इति क्युन्। ( **'भुवनं** विष्टपेऽपि स्यात्सलिले गगने जले' ) ॥ (४) ॥*॥ यत्तु—जङ्गम्यते–इति स्वामिना विगृहीतम्। यच्च—पुनः पुनर्वृद्धिक्षयो गच्छति–इति मुकुटेन। तन्न। 'वर्तमाने बृहत्–' ( उ० २।८४ ) इति सूत्रे यङर्थस्य वृत्तिकृद्भिरनुक्तेः। गत्यर्थानां कौटिल्य एव यङ्विधानाच्च। **'जगत्** स्याद्विष्टपे क्लीबं, वायौ ना, जङ्गमे त्रिषु' ॥ (५) ॥*॥ 'एकं महाभूतं पृथ्वी, पञ्चमहाभूतेन्द्रियविषयात्मकं तु जगत्' इति पृथ्वीजगतोर्भेदः ॥ पञ्च **'भूतलस्य'** ॥

**लोकोऽयं भारतं वर्षम्**

**लोक इति** ॥ अयं जम्बूद्वीपनवमांशः। भरतस्य राज्ञ इदम्। 'तस्येदम्' (४।३।१२०) इत्यण्। 'महर्षिव्यासरचिते जम्बूद्वीपे **च भारतम्'** इति रभसः ॥ (१) ॥*॥ वृष्यते 'वृषु सेचने' ( भ्वा० प० से० )। 'भयादीनामुपसंख्यानम्' (वा० ३।३।५६) इत्यच्। 'पुंनपुंसकयोर्वर्षं जम्बूद्वीपाब्दवृष्टिषु' इति रुद्रः। 'वर्षं स्थानं विदुः प्राज्ञा इमं लोकं च भारतम्' इति भारविः। 'उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्। वर्षं तद्भारतं नाम भारती यत्र संततिः'। **'वर्षो**ऽस्त्री भारतादौ च जम्बूद्वीपाब्दवृष्टिषु' ॥ एकम् **'भारतवर्षस्य'** ॥

**शरावत्यास्तु योऽवधेः ॥ ६ ॥**

**देशः प्राग्दक्षिणः प्राच्यः**

**शरेति** ॥ शरावत्या नद्या मर्यादायाः। प्राचा सहितो दक्षिणो देशः। प्राच्यां भवः। 'द्युप्रागपाग्–' (४।२।१०१) इति यत् ॥ (१) ॥*॥ एकम् **'प्राच्यदेशस्य'** ॥

**उदीच्यः पश्चिमोत्तरः।**

**उदीच्य इति** ॥ तत एवावधेः। पश्चिमेन सहित उत्तरो देशः। उदीच्यां भवः। 'द्युप्राग्–' (४।२।१०१) इति यत् ॥ (१) ॥*॥ एकम् **'उदीच्यदेशस्य'** ॥

**प्रत्यन्तो म्लेच्छदेशः स्यात्**

**प्रत्यन्त इति** ॥ प्रतिगतोऽन्तम्। 'अत्यादयः क्रान्ताद्यर्थे–' (वा० २।२।१८) इति समासः ॥ (१) ॥*॥ म्लेच्छानां देशः ॥ (२) ॥*॥ 'चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते। तं म्लेच्छविषयं प्राहुरार्यावर्तमतः परम्' ॥ द्वे **'शिष्टाचाररहितखशादिदेशस्य'** ॥

**मध्यदेशस्तु मध्यमः ॥७॥**

**मध्येति** ॥ मध्यश्चासौ देशश्च ॥ (१) ॥*॥ मध्ये भवः

---

१—अत्र 'घञ्यपि संज्ञापूर्वकत्वाद्वृद्ध्यभावाच्च' इत्यधिकः पाठः ॥ २—वेधसि विष्णौ यथा हरिवंशस्य 'खिलस्य विष्णोरिषवो गुणा यत्र' इति व्युत्पत्त्यां 'खिलेषु' इति संज्ञा ॥ ३—इतः पूर्वम् जगत्स्यादिति लिखितमासीत्। तदत्रैव जगच्छब्दव्याख्याने लिखितम् ॥

१—मुकुटे तु एतदग्रे—अत एव सामान्यविशेषभावाज्जम्बूद्वीपे तदेकदेशे च भारतप्रयोगः। प्रकरणादिभिस्तु तदवगमः। यथा 'एष दूरगुरुभारभारतं वर्षमद्य मम वर्तते वशे' इति माघः। तथा 'एतेन भारतमिलावृतवद्विभाति' इति च। अन्यान्यपि वर्षाणि। यथा 'स्याद्भारतं किंपुरुषं हरिवर्षं च दक्षिणाः। रम्यं हिरण्मयकुरू सुमेरोरुत्तरास्त्रयः। भद्राश्वकेतुमालौ तु द्वौ वर्षौ पूर्वपश्चिमौ। इलावृतं तु मध्यस्थं सुमेरुर्यत्र तिष्ठति' इति वाचस्पतिः–इत्यप्युक्तम् ॥ २—यदाह 'प्रागुदञ्चौ विभजते हंसः क्षीरोदकं यथा। विदुषां शब्दसिध्यर्थं सा नः पातु शरावती'—इति क्षीरस्वामी ॥

'मध्यान्मः' (४।३।८) ॥ (२) ॥*॥ 'हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः' (२।२१) इति मनुः। विनशनं कुरुक्षेत्रम्। द्वे **'मध्यदेशस्य'** ॥

**आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोः ।**

**आर्येति** ॥ आर्या आ समन्ताद् वर्तन्तेऽत्र । 'हलश्च' (३।३।१२१) इति घञ् ॥ (१) ॥*॥ पुण्यस्य भूमिः । पुण्या चासौ भूमिश्च, इति वा ॥ (२) ॥*॥ 'आ समुद्रात्तु वै पूर्वादा समुद्राच्च पश्चिमात्। तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः' इति (२।२२) मनुः । हिमप्रधानोऽगः हिमागः । **'हिमालयोः'** इति पाठे तु हिमेन अल्यते । 'अल भूषणादौ' (भ्वा० प० से०)। घञ् (३।३।१५)। द्वे **'विन्ध्यहिमागमध्यदेशस्य'** ॥

**नीवृज्जनपदः**

**नीवृदिति** ॥ नियतो वर्तते । अधिकरणस्य कर्तृत्वविवक्षात्र। 'वृतु वर्तने' (भ्वा० आ० से०)। क्विप् (३।२।१७८)। 'नहिवृति–' (६।३।११६) इति दीर्घः। यत्तु—'नियमेनावश्यतया, नियतं वा वर्तन्ते वसन्ति जना अत्र' इति पुंसि बाहुलकात्, संपदादित्वात् (वा० ३।३।१०८), 'अन्येभ्योऽपि दृश्यते' (३।२।१७८) इति, वा अधिकरणे क्विप् इति मुकुटः । तन्न । बाहुलकस्यागतिकगतित्वात् ॥ (१) ॥*॥ जनः पदं वस्तु यत्र । 'भवेज् **जनपदो जानपदो**ऽपि जनदेशयोः' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ द्वे **'जननिवासस्थानस्य'** ॥

**देशविषयौ तूपवर्तनम् ॥ ८ ॥**

**देशेति** ॥ दिशति। 'दिश अतिसर्जने' (तु० उ० अ०)। पचाद्यच् (३।१।१३४)। दिश्यते वा। घञ् (३।३।१४) ॥ (१) ॥*॥ विसिनोति 'षिञ् बन्धने' (स्वा० उ० अ०)। पचाद्यच् (३।१।१३४)। 'परिनिविभ्यः–' (८।३।७०) इति षत्वम्।—विसीयन्तेऽत्रेति, 'एरच्' (३।३।५६)-इति विग्रहे तु मूर्धन्योऽनुपपन्नः। '–सितसय–' (८।३।७०) इति स्वाजन्तयोः सूत्रेऽनुवादात्। **'विषयो** यस्य यो ज्ञातस्तत्र गोचरदेशयोः। शब्दादौ जनपदे च' इति हैमः ॥ (२) ॥*॥ उपवर्तन्तेऽत्र।—ल्युट् (३।३।११४) इति मुकुटः। तन्न। घञो ल्युडपवादत्वात्। अतः–'अन्यत्रापि' (उ० २।७८) इति युच् ॥ (३) ॥*॥ त्रीणि **'ग्रामसमुदायलक्षणस्य स्थानमात्रस्य'** ॥

**त्रिष्वागोष्ठात्**

**त्रिष्विति** ॥ आगोष्ठात् गोष्ठशब्दमभिव्याप्य ॥

**नडप्राये नड्वान्नड्वल इत्यपि ।**

**नडेति** ॥ नडाः प्राया यत्र । 'कुमुदनडवेतसेभ्यो ड्मतुप्' (४।२।८७)। 'झयः' (८।२।१०) इति 'मादुपधायाः' (८।२।९) इति वा वत्वम् ॥ (१) ॥*॥ नडाः सन्त्यस्मिन्। 'नडशादाड् ड्वलच्' (४।२।८८) ॥ (२) ॥*॥ द्वे **'नडाधिकदेशस्य'** ॥

**कुमुद्वान्कुमुदप्राये**

**कुमुद्वानिति** ॥ कुमुदानि सन्त्यत्र ॥ (१) ॥*॥ कुमुदानि प्रायाण्यत्र ॥ एकम् **'कुमुदबहुलदेशे'** ॥

**वेतस्वान्बहुवेतसे ॥ ९ ॥**

**वेतेति** ॥ वेतसाः सन्त्यत्र ॥ (१) ॥*॥ बहवो वेतसा यत्र ॥ एकम् **'बहुवेतसदेशे'** ॥

**शाद्वलः शादहरिते**

**शाद्वल इति** ॥ शीयते। 'शद्लृ शातने' (भ्वा०, तु० प० अ०)। ज्वलादित्वात् (३।१।१४०) णः। शीयतेऽस्मिन्निति वा। 'हलश्च' (३।३।१२१) इति घञ्। शादो बालतृणमस्मिन्। ड्वलच् (४।२।८८) ॥ (१) ॥*॥ शादैर्बालतृणैर्हरितः ॥ एकं **'नवतृणप्रचुरस्य'** ॥

**सजम्बाले तु पङ्किलः ।**

**सजम्बेति** ॥ जम्बालेन पङ्केन सह । 'पङ्कोऽस्मिन्नस्ति। पिच्छादित्वात् (५।२।१००) इलच् ॥ (१) ॥*॥ द्वे **'सकर्दमस्य'** ॥

**जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः ॥ १० ॥**

**जलेति** ॥ जलं प्रायं यत्र ॥ (१) ॥*॥ अनुगता आपोऽत्र। 'ऋक्पूर्–' (५।४।७४) इत्यः। 'ऊदनोर्देशे' (६।३।९८)। ('अनूपो महिषे नाऽम्बुप्रायदेशे तु वाच्यवत्' इति मेदिनी) ॥ (२) ॥*॥ तथाविधो जलप्रायः। कं जलं छ्यति परिच्छिनत्ति। 'छो छेदने' (दि० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः। 'कच्छमनूपम्' इति बोपालितः। (**'कच्छो** द्रुमभेदे नौकाङ्गेऽनूपप्राये तटेऽपि च। **कच्छास्तु** देशे, **कच्छा** स्यात्परिधानापराञ्चले[1]। चीर्यां[2] वाराह्याम्[3]' इति हैमः)। 'त्रिषु' इत्यस्य बाधनार्थं 'पुंसि' इति ॥ (३) ॥*॥ त्रीणि **'जलाधिकदेशस्य'** ॥

**स्त्री शर्करा शर्करिलः शार्करः शर्करावति ।**

**स्त्रीति** ॥ (**'शर्करा** खण्डविकृतौ कर्परांशे[4] रुगन्तरे। उपलायाम्' इति हैमः)। शर्करा (अश्मप्राया मृत्) अस्त्यत्र। 'देशे लुबिलचौ च' (५।२।१०५) ॥ (१) ॥*॥ (२) ॥*॥ 'सिकताशर्कराभ्यां च' (५।२।१०४) इत्यण्। (**'शार्करः** स्याद्दुग्धफेने शर्करान्वितदेशयोः' इति मेदिनी) ॥ (३) ॥*॥

१—परिधानापराञ्चले यथा—'प्रलम्बकच्छाः किल दाक्षिणात्याः' ॥ २—चीरी पक्षिविशेषः ॥ ३—वाराही—वराहाक्रान्ता ओषधी । इत्यनेकार्थकैरवाकरकौमुदी ॥ ४—कर्परांशो मृत्कपालखण्डम्, उपला अश्मरूपा मृत्, तयोर्यथा 'नगतरुशिखरामर्दी सशर्करो मारुतश्चण्डः' इत्यनेकार्थकैरवाकरकौमुदी ॥

'अन्यतरस्याम्' (५।२।९७) ग्रहणान्मतुप् (५।२।९४) च ॥ (४) ॥*॥ चत्वारि **'अश्मप्रायमृदधिकस्य वालुकायुक्तदेशस्य'** ॥

**देश एवादिमौ**

**देशे इति** ॥ (तत्र) आदौ भवौ। +'मध्यान्मः' (४।३।८) इत्यत्र 'आदेश्च' इति वचनान्मः+ ॥ आदिमौ शर्करा-शर्करिलौ देशे एव नान्यत्र। 'शार्करः, शर्करावान्' इतीमौ तु **'देशादेशयोः'** ॥

**एवमुन्नेयाः सिकतावति ॥ ११ ॥**

**एवमिति** ॥ एवं **'सिकता' 'सिकतिलः'** इतीमौ देश एव। **'सैकतः' 'सिकतावान्'** इति तु देशादेशयोः। केचित्तु सिकताशर्कराशब्दौ बहुवचनान्तावाहुः ॥ (४) ॥*॥ चत्वारि **'वालुकाबहुलदेशस्य'** ॥

**देशो नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः।**
**स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥ १२ ॥**

**देश इति** ॥ नद्यम्बुभिर्वृष्ट्यम्बुभिश्च संपन्नैर्धान्यैः पालितः। नदी मातास्य। 'नद्यृतश्च' (५।४।१५३) इति कप् ॥ (१) ॥*॥ देवो मातास्य। 'देवो मेघे सुरे राज्ञि' ॥ (१) ॥*॥ क्रमेण एकैकम् **'नद्यम्बुभिर्वृष्ट्यम्बुभिः संपन्नदेशस्य'** ॥

**सुराज्ञि देशे राजन्वान् स्यात्**

**सुराज्ञीति** ॥ शोभनो राजा यत्र।—'न पूजनात्' (५।४।६९) इति टचोऽभावः-इति मुकुटः। तन्न। बहुव्रीहौ टचोऽप्रसङ्गात्। मतुप् (५।२।९४) प्रशंसायाम् (वा० ५।२।९४) 'राजन्वान्सौराज्ये' (८।२।१४) इति साधुः ॥ (१) ॥*॥ एकं **'स्वधर्मपरराजयुक्तदेशस्य'** ॥

**ततोऽन्यत्र राजवान्।**

**तत इति** ॥ अन्यत्र राजमात्रयुक्तदेशे ॥ (१) ॥*॥ एकम् **'सामान्यराजयुक्तदेशस्य'** ॥

**गोष्ठं गोस्थानकम्**

**गोष्ठमिति** ॥ गावस्तिष्ठन्ति यत्र। 'घञर्थे-' (वा० ३।३।५८) इति कः। 'अम्बाम्ब-' (८।३।९७) इति षत्वम्। **'गोष्ठं** गोस्थानके, **गोष्ठी** सभासंलापयोः स्त्रियाम्' ॥ (१) ॥*॥ गवां स्थानम्। स्वार्थे कः (५।३।७५) ॥ (२) ॥*॥ द्वे **'गवां स्थानस्य'** ॥

**तत्तु गौष्ठीनं भूतपूर्वकम् ॥ १३ ॥**

**तत्त्विति** ॥ पूर्वं भूतं गोष्ठम्। 'गोष्ठात्खञ् भूतपूर्वे' (५।२।१८) इति खञ् ॥ (१) ॥*॥ एकम् **'भूतपूर्वगोष्ठस्य'** ॥

**पर्यन्तभूः परिसरः**

**पर्यन्तेति** ॥ पर्यन्ते भूः ॥ (१) ॥*॥ परितः सरन्त्यत्र। 'पुंसि' (३।३।१८) इति घः। (**'परिसरः** प्रान्तभू-दैवयोर्मृतौ') ॥ (२) ॥*॥ द्वे **'नद्यादिसमीपभूमेः'** ॥

**सेतुरालौ स्त्रियां पुमान्।**

**सेतुरिति** ॥ स्त्रियां वर्तमानायाम् आलौ सेतुः (पुमान्) सिनोति, सीयते वा। 'षिञ् बन्धने' (स्वा० उ० अ०)। 'सितनि-' (उ० १।६९) इति तुन् ॥ (१) ॥*॥ आ अलम्भः। 'अल वारणे' (भ्वा० प० से०)। इन् (उ० ४।११८)। यद्वा—अल्यतेऽनया। 'इणजादिभ्यः' (वा० ३।३।१०८) ॥ (२) ॥*॥ द्वे **'सेतोः' 'पुल'** इति ख्यातस्य ॥

**वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम् ॥ १४ ॥**

**वामेति** ॥ वामैर्वामं वा लूयते। 'लूञ् छेदने' (क्र्या० उ० से०)। बाहुलकाद्रक् ॥ (१) ॥*॥ न अकति। 'अक कुटिलायां गतौ' (भ्वा० प० से०) बाहुलकादुः। यद्वा नम्यते भूरनेन। 'णम प्रह्वत्वे शब्दे च' (भ्वा० प० अ०)। 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च' (उ० १।१८) इत्युः, नाकिश्च। इकार उच्चारणार्थः। (**'नाकुर्मुन्यन्तरे** पृथ्वीधर-वल्मीकयोः पुमान्') ॥ (२) ॥*॥ बलन्ते प्राणिनोऽत्र। 'अलीकादयश्च' (उ० ४।२५) इति निपातितः। (**'व-(ब)ल्मीको** नाकुवाल्मीक्यो रोगभेदे') ॥ (३) ॥*॥ त्रीणि **'पिपीलिकादिनिष्कासितमृत्पुञ्जस्य'** ॥

**अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः।**
**सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ॥ १५ ॥**

**अयनमिति** ॥ अयन्ते ईयते वानेन। 'करणा-' (३।३।११७) इति मुकुटः। तन्न। घञो ल्युडपवादत्वात्। आतो युच् (उ० २।७८) कर्मणि वा ल्युट् (३।३।११३)। **'अयनं** पथि गेहेऽर्कस्योदग्दक्षिणतो गतौ' इति हैमः ॥ (१) ॥*॥ वृत्तं तत्। वर्ततेऽत्र वर्तन्तेऽनेन वा। मनिन् (उ० ४।१४५) ॥ (२) ॥*॥ मृज्यते वितृणीक्रियते पादैः। 'मृजू शुद्धौ' (अ० प० से०)। मार्ग्यते। 'मार्ग अन्वेषणे' (चु० उ० से०) वा। यत्तु—मृग्यतेऽनेन—इति मुकुटेनोक्तम्। तन्न। अल्लोपस्य स्थानिवत्त्वाल्लक्षणाभावान्नोपधावृद्धिः स्यात्। **'मार्गो** मृगमदे मासे सौम्यर्क्षेऽन्वेषणे पथि' इति हैमः ॥ (३) ॥*॥ अत्ति बलम् (पथिकानाम्) 'अद भक्षणे' (अ० प० अ०)। 'अदेर्धश्च' (उ० ४।११६) इति क्वनिप्, धश्चान्तादेशः। यत्तु—अत्यते सततं गम्यते अनेन—इति मुकुटेनोक्तम्। तन्न। उक्तसूत्रविरोधात्। अततेर्ध्वक्वनिपोरविधा-

१—'चात् मतुप्' इति तु वक्तुं युक्तम्। अत एव 'देशे लुप्' इति सूत्रे 'चादण्मतुप् च' इति सिद्धान्तकौमुद्यामुक्तम् ॥ २—'मध्यान्मः' इति सूत्रे भाष्ये तु 'आदेश्च' इति वचनं नोपलभ्यते। तस्मात् 'अग्रादिपश्चाड्डिमच्' (४।३।२३ सूत्रे) इति वचनादादेर्डिमच् वक्तव्यः ॥

१—वाल्मीकौ प्राचेतसे यथा 'पीयूषमेव नालीकं वल्मीकस्य कवेर्गिरि' इत्यनेकार्थकैरवाकरकौमुदी ॥

नात् । ( '**अध्वा** ना पथि संस्थाने सास्रवस्कन्धकालयोः' ) ॥ (४) ॥*॥ पथन्तेऽनेन । 'पथे गतौ' ( भ्वा० प० से० ) । 'पथिमथिभ्यामिनिः' ( ) पतन्त्यनेन इति वा । 'पतेस्थश्च' इतीनिः, थोऽन्तादेशश्च ॥*॥ 'पथः' इत्यदन्तोऽपि । '**वाटः पथश्च** मार्गश्च' इति त्रिकाण्डशेषः ॥ (५) ॥*॥ पद्यतेऽनया । 'पद्यटिभ्यामविः' ( ) । 'कृदिकारात्—' ( ग० ४।१।४५ ) इति ङीष् ॥ (६) ॥*॥ सरन्त्यनया । 'सृ गतौ' ( भ्वा० प० अ० ) ।—क्तिन् ( ३।३।९४ )—इति मुकुटः । तन्न । 'अजब्भ्याम्—' ( वा० ३।३।१२६ ) इति ल्युट्प्रसङ्गात् । ( अतः ) करणस्यापि कर्तृत्वविवक्षायां 'क्तिच्क्तौ च' ( ३।३। १७४ ) इति क्तिच् । '**सृति**र्गतौ पथि' इति हैमः ॥ (७) ॥*॥ 'अर्ति—' ( उ० २।१०२ ) इत्यनिः । '**सरणिः** श्रेणिवर्त्मनोः' इति दन्त्यादौ रभसः । '**शुभं** शुभे प्रदीप्ते च, **शरणिः** पथि चावलौ' इति तालव्यादावजयात्तालव्यादिरपि । तत्र 'शॄ हिंसायाम्' ( क्र्या० प० से० ) । बाहुलकादनिः ॥ (८) ॥*॥ पादाभ्यां हन्यते । 'हन हिंसागत्योः' ( अ० प० अ० ) । क्तिन् ( ३।३।९४ ) । 'हिमकाषिहतिषु च' ( ६।३।५४ ) इति पद्भावः । '**पद्धतिः** पथि पङ्क्तौ च' इति हैमः ॥ (९) ॥*॥ पादाय हिता । 'शरीरावयवाद्यत्' ( ५।१।६ ) । 'पद्यत्यतदर्थे' ( ६।३।५३ ) इति पद्भावः । 'पदमस्मिन्दृश्यम्' ( ४।४।८७ ) इति वा ॥ ( १० ) ॥*॥ वर्तन्तेऽनया । 'वृतेश्च' ( उ० २।१०६ ) इत्यनिः । '**वर्तनी** पथि । वर्तने तर्कुपिण्डे च' इति हैमः ॥*॥ 'चात् ( २।१०६ उणादिसूत्रेण ) मुट्' इत्येके । तत्र **वर्त्मनि** ॥ (११) ॥*॥ एकः पादोऽस्याम् । 'कुम्भपदीषु च' ( ५।४।१३९ ) इति निपातितः । यद्वा 'संख्यासुपूर्वस्य' ( ५।४।१४० ) इति पादस्यान्तलोपः । 'पादोऽन्यतरस्याम्' ( ४।१।८ ) इति वा ङीप् । 'पादः पत्' ( ६।४।१४० ) ॥*॥ अत्र पक्षे 'एकपाद्' इत्यपि रूपान्तरम् । '**एकपदं** तत्काले नपुंसकं, वर्त्मनि स्त्री स्यात्' ॥ (१२) ॥*॥ द्वादश '**मार्गस्य**' ॥

**अतिपन्थाः सुपन्थाश्च सत्पथश्चार्चितेऽध्वनि ।**

**अतीति** ॥ स्वती पूजायाम् । 'कुगति—' ( २।२।१८ ) इति समासः । 'न पूजनात्' ( ५।४।६९ ) ॥ (१) ॥ ( २ ) ॥*॥ संश्चासौ पन्थाश्च । 'सन्महत्—' ( २।१।६१ ) इति तत्पुरुषः 'ऋक्पूर्' ( ५।४।७४ ) इत्यः ॥ ( ३ ) ॥*॥ त्रीणि '**शोभनमार्गस्य**' ॥

**व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः ॥१६॥**

**व्यध्व इति** ॥ विरुद्धोऽध्वा । 'प्रादयो गताद्यर्थे' ( वा० २।२।१८ ) इति समासः । 'उपसर्गादध्वनः' ( ५।४।८५ ) इत्यच् ॥ (१) ॥*॥ दुष्टोऽध्वा ॥ (२) ॥*॥ विरुद्धः पन्थाः 'ऋक्पूर्—' ( ५।४।७४ ) इत्यः—इति मुकुटः । तन्न । ( 'पथः संख्याव्ययादेः' ) ( वा० २।४।३० ) इति क्लीबताप्रसङ्गात् । अतः 'विरुद्धः पथः' इति विग्रहीतव्यम् ॥ ( ३ ) ॥*॥ कुत्सितोऽध्वा । 'कुगति—' ( ३।२।१८ ) इति समासः । 'कोः कत्तत्पुरुषेऽचि' ( ६।३।१०१ ) ॥ ( ४ ) ॥*॥ 'ईषदर्थे च' ( ६।३।१०५ ) इति कादेशः । कुमार्गोऽपीषन्मार्गो भवति । कुत्सितः पथः । 'वाटः पथश्च मार्गश्च' इति त्रिकाण्डशेषाददन्तः पथशब्दः । पथशब्देन समासेन पुंस्त्वं निर्बाध्यम् । पथिन्शब्देन समासे 'का पथ्यक्षयोः' ( ६।३।१०४ ) इति कादेशे 'पथः संख्याव्ययादेः' ( वा० २।४।३० ) इति क्लीबत्वं भवति । 'सत्पथस्तु सुपन्थाः स्याद् व्यध्वो विपथकापथौ' इति रभसोऽप्येवम् । ( '**कापथः** कुत्सितपथे उशीरे क्लीबमिष्यते' ) ॥*॥ कुत्सितार्थकुशब्दस्य पथशब्देन समासे **कुपथः**, अपि ॥ (५) ॥*॥ पञ्च '**दुर्मार्गस्य**' ॥

**अपन्थास्त्वपथं तुल्ये**

**अपन्था इति** ॥ पथोऽभावः । 'नञ्' ( १।२।६ ) इति तत्पुरुषः ॥ (१) ॥*॥ 'पथो विभाषा' ( ५।४।७२ ) इत्यः । 'अपथं नपुंसकम्' ( २।४।३० ) ॥ ( २ ) ॥*॥ द्वे '**मार्गाभावस्य**' ॥

**शृङ्गाटकचतुष्पथे ।**

**शृङ्गेति** ॥ शृङ्गं प्राधान्यमटति । 'अट गतौ' ( भ्वा० प० से० ) । 'कर्मण्यण्' ( ३।२।१ ) । 'संज्ञायां कन्' ( ५।३। ७५ ) । ( '**शृङ्गाटकं** भवेद्वारिकण्टके च चतुष्पथे' ) ॥ (१) ॥*॥ चतुर्णां पथां समाहारः । 'तद्धितार्थो—' ( २।१।५१ ) इति समासः 'ऋक्पूर्—' ( ५।४।७४ ) इति समासान्तः । 'इदुदुपधस्य—' ( ८।३।४१ ) इति षत्वम् । 'पथः संख्या—' ( वा० २।४।३० ) इति क्लीबत्वम् । ( '**चतुष्पथं** चतुर्मार्गसंगमे, ब्राह्मणे तु ना' ) ॥ (२) ॥*॥ द्वे '**चतुष्पथस्य**' ॥

**प्रान्तरं दूरशून्योऽध्वा**

**प्रान्तरमिति** ॥ प्रकृष्टमन्तरमत्र । 'प्रादिभ्यः—' ( वा० २। २।२४ ) इति बहुव्रीहिः । ( '**प्रान्तरं** कोटरेऽरण्ये दूरशून्यपथेऽपि च' ) ॥ (१) ॥*॥ दूरश्चासौ शून्यश्च ॥ एकम् '**दूरशून्यच्छायाजलादिवर्जितमार्गस्य**' ॥

**कान्तारं वर्त्म दुर्गमम् ॥ १७ ॥**

**कान्तारमिति** ॥ कस्य जलस्य सुखस्य वान्तः । कान्तमृच्छति । 'ऋ गतौ' ( भ्वा० प० से० ) । 'कर्मण्यण्' ( ३। २।१ ) ॥ (१) ॥*॥ एकम् '**चोराद्युपद्रवैर्दुर्गममार्गस्य**' ॥

**गव्यूतिः स्त्री क्रोशयुगम्**

**गव्यूतिरिति** ॥ 'गोर्यूतौ छन्दस्युपसंख्यानम्', 'अध्वपरिमाणे च' ( वा० ६।१।७९ ) इत्यवादेशः । 'धन्वन्तरसहस्रं

१—आस्रवः कर्मबन्धहेतुक्रिया हिंसादिः तेन सह वर्तते यः स्कन्धः शरीरभावापन्नो रूपरसादिसमूहः सः सास्रवस्कन्धः । इत्यनेकार्थकैरवाकरकौमुदी ॥

तु कोशः क्रोशद्वयं पुनः । **गव्यूतं** स्त्री तु **गव्यूतिर्गोरुतं गोमतं** च तत्' इति वाचस्पतिः । 'धनुर्हस्तचतुष्टयम्' 'द्वाभ्यां धनुःसहस्राभ्यां **गव्यूतिः** पुंसि भाषितः' इति शब्दार्णवः ॥ (१) ॥*॥ क्रोशयोर्युगम् ॥ (२) ॥*॥ द्वे **'क्रोशद्वयपरिमितस्य'** ॥

**नल्वः किष्कुचतुःशतम् ।**

**नल्व इति** ॥ किष्कूणां हस्तानां चतुःशती । 'चतुःशतम्' इति तु पात्रादित्वात् (वा० २।४।३०) । चतुर्गुणं शतम्, इति वा । शाकपार्थिवादिः (वा० २।१।६९) । नल्यते । 'णल बन्धने' (भ्वा० प० से०) । उल्वादित्वात् (उ० ४।९५) वः । कौलस्तु 'नल्वं हस्तशतम्' इत्याह ॥ एकम् **'चतुःशतहस्तपरिमितस्य'** ॥

**घण्टापथः संसरणम्**

**घण्टेति** ॥ घण्टोपलक्षितः पन्थाः । शाकपार्थिवादिः (वा० २।१।६९) । यद्वा घण्टानां पन्थाः । घण्टाग्रहणं वादित्राणां तद्वतां हस्त्यादीनां चोपलक्षणम् । 'ऋक्पूर्–' (५।४।७४) इत्यः ॥ (१) ॥*॥ संभूय सरन्त्यत्र, अनेन, वा । 'सृ गतौ' (भ्वा० प० अ०) ।—'करणा–' (३।३।११७) इति ल्युट्–इति मुकुटः । तन्न । घस्य ल्युडपवादत्वात् । बाहुलकाद्वा ल्युट् (३।३।११३) युच् (उ० २।७८) तु युक्तः ॥ (२) ॥*॥ 'दश धन्वन्तरो राजमार्गो घण्टापथः स्मृतः' इति चाणक्यः ॥ द्वे **'राजमार्गस्य'** ॥

**तत्पुरस्योपनिष्करम् ॥ १८ ॥**

**तदिति** ॥ तत् संसरणम् । पुरस्य चेद्भवति तदा । उपनिष्किरन्ति निस्सरन्ति सैन्यान्यत्र । 'कॄ विक्षेपे' (तु० प० से०) ।—'ऋदोरप्' (३।३।५७) इति मुकुटः । तन्न । अपो बाधकस्य ल्युटोऽपि 'पुंसि' (३।३।११८) इति घस्यापवादत्वात् । यद्वा उपनिःकीर्यते सैन्यैर्हन्यते । 'कॄञ् हिंसायाम्' (क्र्या० उ० से०) । 'कर्मण्यण्' (३।३।५७) । 'इदुदुपधस्य–' (८।३।४१) इति षः ॥ (१) ॥*॥ एकम् **'पुरमार्गस्य'** ॥

इति भूमिवर्गविवरणम् ॥

**पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् ।**
**स्थानीयं निगमः**

**पूरिति** ॥ पिपर्ति । 'पॄ पालनपूरणयोः' (जु० प० से०) 'भ्राजभास–' (३।३।१७७) इति क्विप् । 'उदोष्ठ्य–' (७।१।१०२) इत्युत्वम् ।—'हलि च' (८।२।७७) इति दीर्घः– इति मुकुटः । तन्न । 'र्वोः' (८।२।७६) इत्यस्य विषयात् । पूर्यते । 'पुर अग्रगमने' (तु० प० से०) । संपदादि क्विप् (वा० ३।३।१०८) वा । यत्तु—पिपर्ति, पूरयति, वा इति विगृह्य 'पॄ पालने' इति धातुमुपन्यस्य 'भ्राजभास–' इति क्विप्– इति मुकुटः । तन्न । उक्तधातोः 'पूरयति' इति रूपासंभवात् । 'पूरी आप्यायने' (चु० उ० से०) इत्यस्मादुक्तसूत्रेण क्विपोऽविधानात् । सर्वत्र दीर्घोच्चारणश्रवणप्रसङ्गाच्च । ('पूः शरीरे पत्तने च') ॥ (१) ॥*॥ यदपि—'पॄ पालने' इत्यस्माद् 'ऋदोरप्' (३।३।५७) । पूर्वविप्रतिषेधेन गुणादुत्वम्— इत्युक्तम् । तदपि न । पूर्वविप्रतिषेधे प्रमाणाभावात् । 'पिपर्ति' इत्यादावतिप्रसङ्गाच्च । पुरति । 'इगुपध–' (३।१।१३५) इति कः । कर्मणः कर्तृत्वविवक्षात्र । गौरादित्वात् (४।१।४१) 'जातेः'– (४।१।६३) इति वा ङीष् ॥ (२) ॥*॥ नगाः सन्त्यत्र । 'नगपांसुपाण्डुभ्यो रः' (वा० ५।२।१०७) ॥ (३) ॥*॥ पक्षे क्लीबत्वं पत्तनसाहचर्यात् ॥*॥ पतन्ति जना यत्र । 'वीपतिभ्यां तनन्' (उ० ३।१५०) ॥*॥ 'पट्टनं पुटभेदनम्' इति वाचस्पतिः । बाहुलकात् पटेस्तनन् ॥ (४) ॥*॥ पुटानि पात्राणि भिद्यन्तेऽत्र । 'भिदिर् विदारणे' (रु० उ० अ०) ।—अधिकरणे ल्युट् (३।३।११७)—इति मुकुटः । तन्न । 'हलश्च' (३।३।१२१) इति घञो ल्युडपवादत्वात् । युच् (उ० २।७८) तूचितः ॥ (५) ॥*॥ स्थानाय हितम् । 'तस्मै हितम्' (५।१।५) इति छः ॥ (६) ॥*॥ नितरां गच्छन्त्यत्र । 'गोचर–' (३।३।११९) इति निपातितः । **'निगमाः** पूर्वणिग्वेदनिश्चयाध्ववणिक्पथाः' इति हैमः ॥ (७) ॥*॥ सप्त **'नगरस्य'** ॥

**अन्यत्तु यन्मूलनगरात् पुरम् ॥ १ ॥**
**तच्छाखानगरम्**

**अन्यदिति** ॥ मूलनगरं राजधानी । ततोऽन्यत् यत्तु पुरम् । शाखेव नगरम् ॥ (१) ॥*॥ एकम् **'शाखानगरस्य'** ॥

**वेशो वेश्याजनसमाश्रयः ।**

**वेश इति** ॥ विशन्त्यत्र । 'विश प्रवेशने' (तु० प० ण०) । 'हलश्च' (३।३।१२१) घञ् । 'नेपथ्ये गृहमात्रे च वेशो वेश्यागृहेऽपि च' इति तालव्यान्ते रभसः । 'गृहमात्रे गणिकायाः सद्मनि वेशो भवेत्तु तालव्यः । तालव्यो मूर्धन्योऽलंकरणे कथित आचार्यैः' इत्यूष्मविवेकः ॥ (१) ॥*॥ वेश्याजनस्य समाश्रयो वासस्थानम् ॥ (२) ॥*॥ द्वे **'वेश्यानिवासस्य'** ॥

**आपणस्तु निषद्यायाम्**

**आपण इति** ॥ आ समन्तात् पणायन्तेऽत्र, पणन्तेऽत्र वा । 'पण व्यवहारे' (भ्वा० आ० से०) । 'गोचरसंचर–' (३।३।११९) इति साधुः ॥ (१) ॥*॥ निषीदन्त्यस्यां जनाः 'षद्लृ विशरणगत्यवसादनेषु' (भ्वा०, तु० प० अ०) 'संज्ञायां समज–' (३।३।९९) इति क्यप् । 'सदिरप्रतेः' (८।३।६६) इतिः ॥ (२) ॥*॥ द्वे **'हट्टस्य' 'क्रय्यवस्तुशालायाः'** ॥

१—भट्टक्षीरस्वामी तु 'नल्वं विंशहस्तशतम्' इति दर्शितवान् मुकुटस्तु 'नल्वो विंशं हस्तशतम्' इति दर्शितवान् ॥

१—भाष्ये तु 'नगाच्च' इत्येव दृश्यते ॥

**विपणिः पण्यवीथिका ॥ २ ॥**

**विपणिरिति** ॥ विपणन्तेऽत्र 'पण व्यवहारे' (भ्वा० आ० से०)। 'इक् कृष्यादिभ्यः' (वा० ३।३।१०८) 'कृदिकारात्–' (ग० ४।१) इति ङीष् ॥ (१) ॥*॥ पण्यानां वीथी स्वार्थे कन् (५।३।७५) ॥ (२) ॥*॥ द्वे हट्टशून्यविक्रयस्थानस्य । हट्टमार्गस्य इति स्वामी । 'आपणः पण्यवीथी च द्वयं वीथीति संज्ञितम्' इति शाश्वतः । 'आपणः पण्यवीथ्यां च पण्ये च विपणिः स्त्रियाम्' इति रभसः ॥ **'द्वयं क्रय्यवस्तुशालापङ्क्तेः'** ॥

**रथ्या प्रतोली विशिखा**

**रथ्येति** ॥ रथं वहति । 'तद्वहति रथयुग–' (४।४।७६) इति यत् । **'रथ्या** तु रथसंघाते प्रतोल्यां पथि चत्वरे' इति हैमः ॥ (१) ॥*॥ प्रतोलयति 'तुल उन्माने' चुरादिः । पचाद्यच् (३।१।१३४) । गौरादिङीष् (४।१।४१) । यत्तु—'एरच्' (३।३।५६)–इति मुकुटेनोक्तम् । तन्न । 'प्रतोलयति' इति विग्रहप्रदर्शनात् । अकर्तरि कारके भावे च एरचो विधानात् ॥ (२) ॥*॥ विशेते 'शीङः किद्ध्रस्वश्च' (उ० ५।२४) इति खः । **'विशिखाः** खनित्रिकायां रथ्यायां विशिखः शरे' इति हैमः ॥ (३) ॥*॥ त्रीणि **'ग्राममध्यमार्गस्य'** ॥

**स्याच्चयो वप्रमस्त्रियाम् ।**

**स्यादिति** ॥ चीयते । 'चिञ् चयने' (स्वा० उ० अ०)। कर्मणि 'एरच्' (३।३।५६) ॥ (१) ॥*॥ उप्यतेऽत्र । 'डुवप् बीजतन्तुसंताने' (भ्वा० उ० अ०)। 'वपिवृधिभ्यां रन्' (उ० २।२७)। **'वप्र**श्चावरणे वृन्दे प्राकारे मूलबन्धने' इति धरणिः । **'वप्र**स्ताते पुमान्, अस्त्री रेणौ क्षेत्रे चये तटे' इति मेदिनी (२) ॥*॥ द्वे **'प्रकाराधारस्य', 'परिखोद्धृतमृत्तिकाकूटस्य'** ॥

**प्राकारो वरणः सालः**

**प्राकार इति** ॥ प्र क्रियते । 'डुकृञ् करणे' (त० उ० अ०)। कर्मणि घञ् (३।३।१९)। 'उपसर्गस्य घञि' (६।३।१२२) इति दीर्घः । आङ् वा–'सादकारयोः कृत्रिमे' इति दीर्घः–इति स्वामिमुकुटौ । तन्न । [१]अस्यादर्शनात् ॥ (१) ॥*॥ वृणोति । 'वृञ् वरणे' (स्वा० उ० से०) कर्तरि ल्युट् (३।३।११३)। करणे (३।३।११७) वा । **'वरणो** वरणद्रुमे । प्राकारे, **वरणं** वृत्याम्' इति हैमः ॥ (२) ॥*॥ सल्यते । 'षल गतौ' (भ्वा० प० से०)। कर्मणि घञ् (३।३।१९)। **'सालो** वरणसर्जयोः' इति रभसः ॥*॥ 'तालव्यो नृपझषयोः **शालो,** वृक्षे वृतौ द्रुमभेदे च । तालव्यदन्त्य उक्तस्तथा स्त्रियां वृक्षशाखायाम्' इत्यूष्मविवेकः । तत्र 'शल गतौ' (भ्वा० प० से०) धातुर्बोध्यः ॥ (३) ॥*॥ त्रीणि **'यष्टिकाकण्टकादिरचितवेष्टनस्य'** ॥

**प्राचीनं प्रान्ततो वृतिः ॥ ३ ॥**

**प्राचीनमिति** ॥ प्रागेव । 'विभाषाञ्चेरदिक् स्त्रियाम्' (५।४।८) इति खः ॥*॥ **'प्राचीरम्'** इति पाठे तु प्राचीयते । प्राङ्पूर्वः । 'चिञ् चयने' (स्वा० उ० अ०) । 'शुसिचिमीनां दीर्घश्च' (उ० २।२५) इति क्रन्दीर्घौ ॥ (१) ॥*॥ प्रान्ततः, सप्तम्यास्तसिः ( ) । वरणं वृतिः । 'वृञ् वरणे' (स्वा० उ० अ०) । क्तिन् (३।३।९४) ।—व्रियतेऽनया, इति 'वृतिः' इत्यपि नाम, इति स्वामी–इति मुकुटः । तन्न । करणे ल्युट्प्रसङ्गात् ॥*॥ एकं **'ग्रामादेरन्ते कण्टकादिवेष्टनस्य'** ॥

**भित्तिः स्त्री कुड्यम्**

**भित्तिरिति** ॥ भिद्यते । 'भिदिर् विदारणे' (रु० उ० अ०) । क्तिन् (३।३।९४) । **'भित्तिः** कुड्ये प्रभेदे च' इति हैमः ॥ (१) ॥*॥ कुड्यां साधु । 'तत्र साधुः' (४।४।९८) इति यत् । पृषोदरादिः (६।३।१०९) । कुड्यते वा । 'कुडि कार्कश्ये' ( ) । ण्यत् (३।१।१२४) । (**'कुड्यं** भित्तौ विलेपने' इति मेदिनी) ॥ (२) ॥*॥ द्वे **'भित्तेः'** ॥

**एडूकं यदन्तर्न्यस्तकीकसम् ।**

**एडूकमिति** ॥ यत् कुड्यं मध्यन्यस्तास्थि तत् ईड्यते । 'ईड स्तुतौ' (अ० आ० से०) 'उलूकादयश्च' (उ० ४।४१) इति साधु । 'भवेदेडोकमेडूकमेडुकं च' इति द्विरूपकोशः ॥ (१) ॥*॥ एकम् **'अस्थ्यादिमयकुड्यस्य'** ॥

**गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ॥ ४ ॥**
**निशान्तवस्त्यसदनं भवनागारमन्दिरम् ।**
**गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः ॥ ५ ॥**

**गृहमिति** ॥ गृह्णाति । 'ग्रह उपादाने' (क्र्या० उ० से०)

---

१—मुकुटस्तु—'चत्वार्येव हट्टस्य' इत्यन्ये । 'पर्याप्तपतत्क्रयिकलोकमगण्यपण्यपूर्णापणं विपणिनो विपणिं विमेजुः' इति माघे । 'विपणिर्हट्टः' इति वल्लभेन व्याख्यातम् । अत एव प्रयोगादविपणेः पुंस्त्वमपि—इति सर्वधरः—इत्यप्याह ॥ अत एव हैममेदिन्योः **'विपणिः** पण्यवीथ्यां च भवेदापणपण्ययोः' इत्युपलभ्यते ॥
२—केचित्तु 'विपण्यादीन्पञ्चैकार्थानाहुः । तथा च कौटिल्यः 'विशिखायां सौवर्णिप्रचारः' इति तु भट्टक्षीरस्वामी—इति मुकुटः ॥
३—मुकुटपुस्तकयोस्तु **'चयः'** इत्युपलभ्यते ॥

१—अस्य वार्तिकस्य, उदाहरणप्रत्युदाहरणयोश्च (६।३।१२२) सूत्रे भाष्ये उपलब्धेरकिंचित्करमेतत् ॥ २—कौ द्योतते इति डप्रकरणे 'अन्यत्रापि' इति डः इति सोमनन्दी । एतेन दकारोऽत्र, न डकारः इति स्वामी—इति मुकुटः ॥

'गेहे कः' (३।१।१४४)। ( 'गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि' इति मेदिनी ) ॥ (१) ॥*॥ गेन गणेशेन ईह्यते काम्यते। 'ईह चेष्टायाम्' (भ्वा० आ० से०)। कर्मणि घञ् (३।३।१९)। गो गणेशो गन्धर्वो वा ईह ईप्सितो यस्मिन्वा। 'गेहमस्त्री, शालासमे स्त्रियाम्' इति वाचस्पतिः ॥ (२) ॥*॥ उत् ऊर्ध्वम् अवसीयते स्म। 'षोऽन्तकर्मणि' (दि० प० अ०) 'षिञ् बन्धने' (स्वा० उ० अ०) वा। क्तः (३।२।१०२)। 'द्यतिस्यति–' (७।४।४०) इतीत्वम् 'अवसितमृद्धे ज्ञातेऽप्यवसानगते च वाच्यलिङ्गं स्यात्' ॥ (३) ॥*॥ विशन्त्यत्र। 'विश प्रवेशने' (तु० प० अ०)। मनिन् (उ० ४।१४५) ॥ (४) ॥*॥ सीदन्त्यत्र। 'षद्लृ विशरणादौ' (भ्वा० तु० प० अ०)। मनिन् (उ० ४।१४५) ('सद्म स्यान्मन्दिरे नीरे' इति मेदिनी ) ॥ (५) ॥*॥ नि केत्यतेऽस्मिन् 'कित निवासे' (भ्वा० प० से०)। अधिकरणे युच् (उ० २।७८) ॥ (६) ॥*॥ निशायामम्यते स्म। 'अम गत्यादौ' (भ्वा० प० से०)। क्तः (३।२।१०२)। 'रुष्यमत्वर–' (७।२।२८) इति नेट्। 'निशान्तं सदनं वस्त्यमगारं मन्दिरं पुरम्' इति वाचस्पतिः। ( 'निशान्तं त्रिषु शान्ते स्यात्क्लीबं तु भवनोषसोः' इति मेदिनी ) ॥ (७) ॥*॥ वसनम्। 'वस निवासे' (भ्वा० प० अ०)। 'वसेस्तिः' (उ० ४।१८०)। तत्र साधुः। यत् (४।४।९८)। अप स्त्यायति संहतं भवति। 'स्त्यै ष्ट्यै शब्दसंघातयोः' (भ्वा० प० अ०)। 'आतश्चोपसर्गे' (३।१।१३६) इति कः पृषोदरादिः (६।३।१०९)।—'वष्टि भागुरिः' इत्यल्लोपः—इति स्वामिमुकुटौ। तन्न। तत्रापस्याग्रहणात्। 'कुलोदवसितं पस्त्यम्' इति वाचस्पतिः ॥ (८) ॥*॥ सीदन्त्यत्र। 'षद्लृ' (भ्वा० प० अ०)। अधिकरणे युच् (उ० २।७८)। 'सदनं मन्दिरे तोये' ॥*॥ स्वार्थण्यन्ताद्युचि सादनमपि। 'सदनं सादनम्' इति द्विरूपकोशः ॥ (९) ॥*॥ ('सदनं मन्दिरे तोये')। भवन्त्यत्र। 'भू' (भ्वा० प० से०)। युच् (उ० २।६८)। भवनमस्त्यत्र वा अर्श आद्यच् (५।२।१२७)। 'भवनं सदने भावे' इति हैमः ॥ (१०) ॥*॥ अगान् ऋच्छति। 'ऋ गतौ' (भ्वा० प० अ०)। 'कर्मण्यण्' (३।२।१) ॥*॥ आ अग्यते। 'अग कुटिलायां गतौ' (भ्वा० से०)। कर्मणि घञ् (३।३।१९)। 'विद्यादगारमागारमपगामापगामपि' इति द्विरूपकोशः ॥ (११) ॥*॥ मन्द्यते सुप्यतेऽत्र। 'मदि स्तुत्यादौ' (भ्वा० आ० से०)। 'इषिमदि–' (उ० १।५१) इति किरच्। 'मन्दिरो मकरावासे मन्दिरं नगरे गृहे' इति हैमः ॥ (१२) ॥*॥ गृहशब्दो भूम्न्येव पुंसि। चात् क्लीबे ॥ (१३) ॥*॥ निचीयते धान्यादिकमत्र। 'चिञ् चयने' (स्वा० उ० अ०)। 'पाय्यसांनाय्य–' (३।१।१२९) इति साधुः। ('निवासचिति–') (३।३।४१) इति घञि निकायोऽपि। 'निकायः सद्मसंघयोः। परमात्मनि लक्ष्ये च' इति हैमः ॥ (१४) ॥*॥ निलीयतेऽत्र। 'लीङ् श्लेषणे' (दि० आ० अ०)। 'पुंसि' (३।३।११९) इति घः। 'एरच्' (३।३।५६) वा। 'निलयोऽस्तमये गृहे। गोपनस्य प्रदेशेऽपि' इति हैमः ॥ (१५) ॥*॥ एवम् आलयः ॥ (१६) ॥*॥ षोडश 'गृहस्य' ॥

**वासः कुटी द्वयोः शाला सभा**

वसन्त्यत्र। 'हलश्च' (३।३।१२१) इति घञ्। 'वासो वेश्मन्यवस्थाने वासा स्यादाटरूषके' इति हैमः ॥ (१७) ॥*॥ कुटति कुटिलीभवति। 'कुट कौटिल्ये' (तु० प० से०)। 'इगुपध–' (३।१।१३५) इति कः। 'इगुपधात् कित्' (उ० ४।१२०) इति, इनि 'कृदिकारात्–' (ग० ४।१।४५) इति ङीष् वा। 'कुटः कोट्टे शिलाकुटे घटे गेहे कुटी सुरा। चित्रगुच्छा कुम्भदासी' इति हैमः। ('कूटः कोटे पुमानस्त्री घटे, स्त्रीपुंसयोर्गृहे। कुटी स्यात्कुम्भदास्यां तु सुरायां चित्रगुच्छके–' इति मेदिनी ) ॥ (१८) ॥*॥ शलन्त्यत्र। 'शल गतौ' (भ्वा० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। 'शालो हाले मत्स्यभेदे शालौकस्तत्प्रदेशयोः। स्कन्धशाखायाम्' इति हैमः ॥ (१९) ॥*॥ सह भान्त्यत्र। 'अन्येभ्योऽपि' (वा० ३।३।१०१) इति ङः 'सभा द्यूतसमूहयोः। गोष्ठ्यां सभ्येषु शालायाम्' इति हैमः ॥ (२०) ॥*॥ चत्वारि 'सभागृहस्य' ॥

**संजवनं त्विदम्।**

**चतुःशालम्**

**संजेति** ॥ संजवन्त्यत्र। 'जु गतौ' सौत्रः। अधिकरणे ल्युट् (३।३।११८) ॥ (१) ॥*॥ चतस्रः शालाः समाहृताः 'आबन्तो वा' (वा० २।४।३०) इति वा क्लीबलम् ॥*॥ एकम् 'अन्योन्याभिमुखशालाचतुष्टयगृहस्य' ॥

**मुनीनां तु पर्णशालोटजोऽस्त्रियाम् ॥ ६ ॥**

**मुनीनामिति** ॥ पर्णनिर्मिता शाला। शाकपार्थिवादिः (वा० २।१।६९) ॥ (१) ॥*॥ 'उटस्तृणपर्णादिः' इति देशीकोशः।

---

१—'अन्यत्रापि–' इत्यधिकरणे युच् इति पाठः ॥ २—अत एव हैमनाममालायाम् 'सभोदवसितं कुलम्' इत्यत्र कुलशब्द उपलभ्यते। 'दिव्यदेवकुलालंकृताः स्वर्गा इव मार्गाः' इति दमयन्तीश्लेषश्च। कुत्रचित् 'नल' इति लिखितमासीत् ॥ ३—इदं तु न प्रकृतोपयोगि ॥

१—एकयकारवान्। अत एवानेकार्थकैरवाकरकौमुद्यां घञन्तत्वेनैव व्याख्यातः। युक्तं चैतत्। ण्यदन्तस्य निवासार्थे एव निपातितत्वात्। घञन्तस्यैव तु संघार्थकता संभवति। निकाय्यः ॥ २—हैमसटीकपुस्तके तु नोपलभ्यते ॥ ३—'इनि प्रत्यये' इति वा पाठः ॥ ४—अन्यत्रापि पाठः ॥ ५—द्वे इति मुकुटः ॥ ६—ह्रस्वोकारादिः। तथा च रघुः 'सौधजालमुटजेषु विस्मृतम्' इति—इति मुकुटः ॥

उटाज्जायते। 'पञ्चम्याम्–' (३।२।९८) इति डः ॥ (२) ॥*॥ द्वे 'मुनीनां गृहस्य' ॥

**चैत्यमायतनं तुल्ये**

**चैत्यमिति** ॥ चीयते। 'चित्याग्निचित्ये च' (३।१।१३२) इति साधुः। चित्याया इदम्। 'तस्येदम्' (४।३।१२०) इत्यण्।—तस्येदम्—इति विग्रहप्रदर्शनं मुकुटस्य प्रमादः। चित्यायाः स्त्रीलिङ्गत्वात्। 'चैत्यमायतने बुद्धबिम्बेऽप्युद्देश्यपादपे' इति रुद्रः ॥ (१) ॥*॥ आयतन्तेऽत्र। 'यती प्रयत्ने' (भ्वा० आ० से०)। अधिकरणे ल्युट् (३।३।११८) ॥ (२) ॥*॥ द्वे 'यज्ञस्थानस्य'। उद्देश्यवृक्षस्येत्यन्ये ॥

**वाजिशाला तु मन्दुरा।**

**वाजीति** ॥ वाजिनां शाला ॥ (१) ॥*॥ मन्दन्तेऽत्र। 'मदि स्तुत्यादौ' (भ्वा० आ० से०)। 'मन्दिवाशि–' (उ० १।३८)। इत्युरच्। 'मन्दुरा वाजिशालायां शयनीयार्थवस्तुनि' ॥ (२) ॥*॥ द्वे 'अश्वशालायाः' ॥

**आवेशनं शिल्पिशाला**

**आवेशनमिति** ॥ आविशन्त्यत्र। 'विश प्रवेशने' (तु० प० अ०)। 'करणा–' (३।३।११८) इति ल्युट्। युच् (उ० २।७८) वा। 'आवेशनं शिल्पिशाले भूतावेशप्रवेशयोः' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ शिल्पिनां शाला ॥*॥ शिल्पस्य शाला, इति तु स्वामी ॥ (२) ॥*॥ द्वे 'स्वर्णकारादीनां शालायाः' ॥

**प्रपा पानीयशालिका ॥ ७ ॥**

**प्रपेति** ॥ प्रपिबन्त्यस्याम्। 'पा पाने' (भ्वा० प० अ०)। 'आतश्चोप–' (३।३।१०६) इत्यङ् ॥ (१) ॥*॥ पानीयस्य शाला। स्वार्थे कन् (५।३) ॥ (२) ॥*॥ द्वे 'जलशालायाः ॥

**मठश्छात्रादिनिलयः**

**मठ इति** ॥ मठन्त्यत्र 'मठ मदनिवासयोः' (भ्वा० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। संज्ञापूर्वकत्वान्न वृद्धिः। यद्वा मठति निवासयति। पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ छात्रोऽन्तेवासी आदिर्येषां परिव्राजक-क्षपणकादीनां तेषां निलयः। बौद्धानां तु विहारोऽस्त्री ॥*॥ एकम् 'शिष्याणां गृहस्य=मठस्य' ॥

**गञ्जा तु मदिरागृहम्।**

**गञ्जेति** ॥ गञ्जन्त्यस्याम्। 'गजि शब्दार्थः' (भ्वा० प० से०)। 'गुरोश्च हलः' (३।३।१०३) इत्यः। 'गञ्जा खनौ सुरागृहे। गञ्जः स्यात्पुंसि रीढायां भाण्डागारे तु न स्त्रियाम्' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ मदिराया गृहम् ॥ (२) ॥*॥ द्वे 'मद्यसंधानगृहस्य' ॥

**गर्भागारं वासगृहम्**

**गर्भेति** ॥ गर्भ इवागारम् ॥ (१) ॥*॥ वासस्य गृहम् ॥ (२) ॥*॥ द्वे 'गृहमध्यभागस्य' ॥

**अरिष्टं सूतिकागृहम् ॥ ८ ॥**

**अरिष्टमिति** ॥ नास्ति रिष्टमत्र। न रिष्यते स्म हिंस्रैः इति वा। 'रिष हिंसायाम्' (भ्वा० प० से०)। क्तः (३।२।१०२)। 'अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः। अरिष्टमशुभे तक्रे सूतिकागार आसवे। शुभे मरणचिह्ने च' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ सूतैव सूतिका। 'सूतकादीनां वा' (वा० ७।३।४५) सूतिकाया गृहम् ॥ (२) ॥*॥ द्वे 'प्रसवस्थानस्य' चत्वारः पर्यायाः, इत्यन्ये ॥

**वातायनं गवाक्षः**

**वातेति** ॥ ईयतेऽनेन। 'इण् गतौ' (अ० प० अ०) करणे ल्युट् (३।३।११८)। युच् (उ० २।७८) वा। वातस्यायनम् ॥ (१) ॥*॥ गवामक्षीव। 'अक्ष्णोऽदर्शनात्' (५।४।७६) इत्यच्। गावो जलानि किरणा वाक्षन्ति व्याप्नुवन्ति एनमनेन वा। 'अक्षू व्याप्तौ' (भ्वा० प० से०)। अकर्तर्यर्थे घञ् (३।३।१९)। यत्तु—'इन्द्राक्षयोः समासे च' इत्यवङ् इति स्वामिनोक्तम्। तन्न। एतद्वचनस्यादर्शनात्। 'गवाक्षी शक्रवारुण्यां गवाक्षो जालके कपौ' ॥ (२) ॥*॥ द्वे 'जालकस्य' ॥

**अथ मण्डपोऽस्त्री जनाश्रयः।**

**अथेति** ॥ मण्डनं मण्डः। 'मडि भूषायाम्' (भ्वा० प० से०)। घञ् (३।३।१८) मण्डं पाति। 'पा रक्षणे' (अ० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः। मण्डं पिबति वा ॥ (१) ॥*॥ जनानामाश्रयः ॥ (२) ॥*॥ द्वे 'स्त्रीवासोचितमण्डपस्य' ॥

**हर्म्यादि धनिनां वासः**

**हर्म्येति** ॥ हरति मनः। 'हृञ् हरणे' (भ्वा० उ० अ०)। अघ्न्यादित्वात् (उ० ४।११२) यत् मुट् च ॥ (१) ॥*॥ आदिना स्वस्तिकादि ॥ एकम् 'धनवतां वासगृहस्य' ॥

**प्रासादो देवभूभुजाम् ॥ ९ ॥**

**प्रासेति** ॥ देवानां भूभुजां च गृहम्। प्रसीदति मनोऽत्र। 'हलश्च' (३।३।१२१) इति घञ्। 'उपसर्गस्य घञि' (६।३।१२२) इति दीर्घः। आङ् वा ॥ (१) ॥*॥ एकम् 'देवानां राज्ञां च गृहस्य' ॥

**सौधोऽस्त्री राजसदनम्**

**सौध इति** ॥ 'सुधा स्त्री लेपने मूर्व्यां स्नुहि गङ्गेष्टिकामृते'। सुधा लेपोऽस्यास्ति। ज्योत्स्नादित्वात् (वा० ५।२।१०३) अण् ॥ (१) ॥*॥ राज्ञः सदनं योग्यत्वात्। यद्वा

---

१—अन्यत्रापि ॥ २—'विभाषा सेना–' (२।४।२५) इति क्लीबतायां 'शिल्पिशालम्' अपि ॥

१—भाष्ये तु 'वा सूतिकापुत्रिकावृन्दारकाणाम्' इत्युपलभ्यते ॥

सदनानां राजा। राजदन्तादिः (२।२।३१) ॥ (२) ॥*॥ द्वे 'राजगृहस्य' ॥

**उपकार्योपकारिका।**

**उपेति** ॥ उपक्रियते। कर्मणि 'ऋहलोर्ण्यत्' (३।१।१२४)। ('उपकार्या राजसद्मन्युपकारोचितेऽन्यवत्')॥ (१) ॥*॥ उपकरोति ण्वुल् (३।३।१३३)। ('उपकारिकोपकर्त्र्यां पिष्टभेदे नृपालये') ॥*॥ 'उपकार्युपकारिका' इति द्विरूपकोशदर्शनादुपकार्यपि। तत्र उपकारयति पचाद्यचि (३।१।१३४) गौरादि (४।१।४१) ङीष्। यत्तु—उप अधिकं करोतीति विगृह्य 'कर्मण्यण्' (३।२।१) इत्युक्तं मुकुटेन। तन्न। निपातानामसत्त्वार्थकत्वेन कारकत्वायोगात्[१]॥ (२) ॥*॥ द्वे 'राजगृहसामान्यस्य' ॥

**स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ॥ १० ॥**
**विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम्।**

**स्वस्तिक इत्यादि** ॥ स्वस्ति क्षेमं कायति। 'कै शब्दे' (भ्वा० प० अ०) 'आतोऽनुप—' (३।२।३) इति कः। ('स्वस्तिको मङ्गलद्रव्ये चतुष्क-गृहभेदयोः') ॥ (१) ॥*॥ सर्वतो भद्रमत्र ॥ (१) ॥*॥ नन्दयतीति नन्दी आवर्तोऽत्र। ('नन्द्यावर्तः पुमान्वेश्मप्रभेदे भगवद्द्रुमे') ॥ (१) ॥*॥ ॥१०॥ विशिष्टच्छन्दोऽत्र। यद्वा विशिष्टाञ्छन्दयति साभिलाषान्करोति। ण्वुल् (३।१।१३३) कुन् (उ० २।३२) वा ॥*॥ 'विच्छर्दकः' इति पाठः—इति स्वामी। तत्र 'उच्छृदिर् दीप्तौ' (रु० उ० से०)। ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ आदिना रुचक-वर्धमानादिपरिग्रहः ॥ 'ईश्वरगृहविशेषाणां' पृथगेकैकम् ॥

**स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् ॥ ११ ॥**
**शुद्धान्तश्चावरोधश्च**

**स्त्र्येति** ॥ स्त्रीणामगारम्। अन्तरभ्यन्तरे पुरं गृहम् ॥ (१) ॥*॥ अवरुध्यन्तेऽत्र ल्युट् (३।३।११७) ॥ (२) ॥*॥ घञि (३।३।१४) त्ववरोधः। ('अवरोधस्तिरोधाने राजदारेषु तद्गृहे') ॥ (४) ॥*॥ शुद्धा उपधाशुद्धा रक्षका अन्ते समीपेऽस्य ॥ (३) ॥*॥ चत्वारि 'राज्ञां स्त्रीगृहस्य' ॥

**स्यादट्टः क्षौममस्त्रियाम्।**

**स्यादिति** ॥ अट्यते। 'अट्ट अतिक्रमणे' (भ्वा० आ० से०)। कर्मणि घञ् (३।३।१४)। अट्यति वा। अच् (३।३।१३४) ॥ (१) ॥*॥ क्षुवन्त्यत्र। 'टुक्षु शब्दे' (अ० प० से)। 'अर्तिस्तु' (उ० १।१४०) इति मः ॥*॥ प्रज्ञायणि (५।४।३८) 'क्षौमः' अपि ॥ (२) ॥*॥ द्वे 'हर्म्याद्युपरिगृहस्य' ॥

**प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ॥ १२ ॥**

**प्रघाणेति** ॥ प्रहण्यते। 'अगारैकदेशे प्रघणः प्रघाणश्च' (३।३।७९) ॥ (१) ॥*॥ 'प्रघणोऽलिन्दके ताम्रकलशे लोहमुद्गरे' इति हैमः ॥ (२) ॥*॥ अल्यते भूष्यते। 'अल भूषणादौ' (भ्वा० प० से०) बाहुलकात्किन्दच् ॥*॥ प्रज्ञायणि 'आलिन्दः' अपि। 'गृहैकदेशे आलिन्दः प्रघाणः प्रघणस्तथा' इत्यमरमाला। 'अलिन्दस्त्वल्पपिण्डिका' इति सुभूतिः[१] ॥ (३) ॥*॥ त्रीणि 'द्वारप्रकोष्ठाद्बहिर्द्वाराग्रवर्तिचतुष्कस्य' ॥

**गृहावग्रहणी देहली**

**गृहेति** ॥ गृहमवगृह्यतेऽनया। 'ग्रह उपादाने' (क्र्या० उ० से०)। 'करणा—' (३।३।११७) इति ल्युट्[२] ॥ (१) ॥*॥ देहनम् 'दिह उपचये' (अ० उ० अ०) भावे घञ् (३।३।१३) देहं गोमयाद्युपलेपं लाति। 'ला दाने' (अ०प०अ०)। 'आतोऽनुप—' (३।२।३) इति कः। गौरादिः (४।१।४१) ॥ (२) ॥*॥ द्वे 'उदुम्बरस्य' ॥

**अङ्गनं चत्वराजिरे।**

**अङ्गनमिति** ॥ अङ्गन्त्यत्र। 'अगि गतौ' (भ्वा० प० से०)। 'करणा—' (३।३।११७) इति ल्युट्। 'अङ्गनं प्राङ्गणे याने कामिन्यामङ्गना मता' इति नान्तवर्गे विश्वः। 'अङ्गणम्[३]' इति पाठे तु पृषोदरादिः (६।३।१०९) ॥ (१) ॥*॥ चत्यते। 'चते याचने' (भ्वा० उ० से०)। 'कृगृशॄवृतिभ्यः ष्वरच्' (उ० २।१२१)। 'चत्वरं स्यात्पथां श्लेषे स्थण्डिलाङ्गनयो-

१—असत्त्वार्थकानामपि कारकत्वं 'पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति' इति 'भूवादि—' (१।३।१) सूत्रस्थभाष्यतो लभ्यते ॥ २—एतदग्रे युज्वेति पाठः।

१—अलिन्दो ह्रस्वादिः 'यस्यामलिन्देषु न चक्रुरेव' इति माघः—इत्यपि मुकुटः ॥ २—एतदग्रे 'युचि तु गौरादित्वम्, इति पाठः ॥ ३—यच्च मालतीमाधवव्याख्यायां जगद्धरः 'अङ्गणशब्दे विधायकाभावाण्णत्वश्रुतिरयुक्ता। पृषोदरादित्वाण्णत्वमित्यपि वचोऽमूलकमेव' इति। यदपि मुरारिव्याख्यायां रुचिपतिः अङ्गनशब्दो णकारान्त इति केचित्पठन्ति। तदप्रामाणिकम्। नच पृषोदरादिपाठेन णत्वमिति वाच्यम्। पृषोदरादिपाठे प्रमाणाभावात्। तथाविधानुप्रासयमकादेरदर्शनाच्च' इति तदुभयमपि मन्दम्। 'कानि पृषोदरादीनि, पृषोदरप्रकाराणि। कानि पृषोदरप्रकाराणि, येषु लोपागमवर्णविकाराः श्रूयन्ते, न चोच्यन्ते' इति भाष्यतः 'कानीति। किमादिशब्दः प्रकारे, अथ व्यवस्थायाम्, इति संदेहात्प्रश्नः। पृषोदरप्रकाराणीति ॥ प्रकार आदिशब्दः, व्यवस्थार्थे ह्यादिशब्दे यथोपदिष्टग्रहणमनर्थकं स्यात्' इति कैयटतश्च श्रूयमाणाप्रसलोपागमवर्णविकारस्यैव पृषोदरादित्वस्य लाभात्। गणपाठस्याप्रामाणिकत्वात् प्रामाणिकत्वेऽपि तस्याकृतिगणत्वेनाङ्गणशब्दस्य पृषोदरादित्वे बाधकाभावात् ॥ नच शिष्टाद्युक्तत्वेनाप्रामाणिकतेति वाच्यम्। 'अध्यास्य सौरभेयं मौक्तिकरुचिरङ्गणेषु विहितमतिः' इति शृङ्गारवैराग्यार्थद्वयप्रतिपादकरसिकरञ्जन—काव्ये श्लेषस्य णान्तत्वमन्तरासंभवेन तस्यावश्यकत्वात् ॥

रपि' इति हैमः ॥ (२) ॥*॥ अजन्त्यत्र । 'अज गतौ' (भ्वा० प० से०)। 'अजिरशिशिर–' (उ० १।५३) इति किरच् ॥ (३) ॥*॥ त्रीणि **'प्राङ्गणस्य'** ॥

**अधस्ताद्दारुणि शिला**

**अध इति** ॥ शिलति । 'शिल उञ्छे' (तु० प० से०)। 'इगुपध–' (३।१।१३५) इति कः । **'शिल** उञ्छे स्त्रियां ग्राव-द्वाराधःस्थितदारुणोः' इति तालव्यादौ रभसः ॥*॥ 'तल-दारु **शिली** योषित्[1]नासा दारूर्ध्वमस्य यत्[1]' इति बोपा-लितात् 'शिली' इत्यपि ॥ (१) ॥*॥ एकम् **'द्वारस्तम्भा-धःस्थितकाष्ठस्य'** ॥

**नासा दारूपरि स्थितम् ॥ १३ ॥**

**नासेति** ॥ नास्यते । 'णास शब्दे' (भ्वा० आ० से०)। 'गुरोश्च–' (३।३।१०३) इत्यः । 'विज्ञेया नासिका **नासा** **नासा** द्वारोर्ध्वदारु च' इति दन्त्यान्ते रुद्रः । **नासा** दारू-परि द्वारस्य । 'अधोदारु[2] शिला स्त्रियाम्–' इति नाममाला ॥ (१) ॥*॥ **'स्तम्भद्वारस्थकाष्ठस्य'**। **'उपरिभित्तिधा-रकस्य काष्ठस्य'** वा एकम् ॥

**प्रच्छन्नमन्तर्द्वारं स्यात्**

**प्रच्छन्नेति** ॥ प्रकर्षेण छन्नं द्वारम् । 'कुगति–' (२।२।१८) इति समासः ॥ (१) ॥*॥ अन्तःस्थितं द्वारम् । शाक-पार्थिवादिः (२।१।६९) एकं (द्वे) **'सौधादौ गुप्तद्वारस्य'** (**खिडकी**) इति ख्यातस्य ॥

**पक्षद्वारं तु पक्षकः ।**

**पक्षेति** ॥ पक्षे पार्श्वे द्वारम् ॥ (१) ॥*॥ पक्ष इव । 'इवे प्रतिकृतौ' (५।३।९६) कन् । संज्ञायां (५।३।९७) वा । (**'पक्षकस्तु** पुमान्पार्श्वद्वारे च पार्श्वमात्रके') ॥ (२) ॥*॥ द्वे **'पार्श्वद्वारस्य'**। 'प्रच्छन्नमन्तर्द्वारं स्यात्पक्षद्वारं तदुच्यते' इति कात्यात् पूर्वान्वयी–इत्यन्ये ॥

**वलीकनीध्रे पटलप्रान्ते**

**वलीकेति** ॥ वलत्यावृणोति भित्त्यादि 'अलीकादयश्च' (उ० ४।२५) इति निपातः । **'वलीकः** पटलप्रान्ते' इति पुंस्काण्डे बोपालितात् पुंस्त्वमपि ॥ (१) ॥*॥ नितरां ध्रि-यते । 'धृङ् अवस्थाने' (तु० आ० अ०)। 'निश्चयेन धरति जलम्' इति वा । 'धृञ् धारणे' (भ्वा० उ० अ०)। मूल-विभुजादिः (वा० ३।२।५)। 'अन्येषामपि' (६।३।१३७) इति दीर्घः । निश्चयेन इन्धे । 'ञि इन्धी दीप्तौ' (रु० आ० से०)। 'स्फायि–' (उ० २।१३) इति रक् । मुकुटोक्ता कर-णव्युत्पत्तिस्तु नादर्तव्या 'कर्तरि कृत्' (३।४।६७) इति वाक्य-शेषात् । **'नीध्रं**(ध्रं) नेमौ वलीकेन्दौ रेवतीभेऽपि का-नने' ॥ (२) ॥*॥ पटलस्य छदिषः प्रान्ते ॥ (३) ॥*॥ त्रीणि **'पटलप्रान्ते गृहाच्छादनस्य'** ॥

**अथ पटलं छदिः ॥ १४ ॥**

**अथेति** ॥ पटं लाति । 'ला दाने' (अ० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः । पटति उदकं वा । 'पट गतौ' (भ्वा० प० से०) अन्तर्भावितण्यर्थः । वृषादिः (उ० १।१०६)। **'पटलं** तिलके नेत्ररोगे छदिषि संचये । पिटके परिवारे च' इति हैमः ॥ (१) ॥*॥ छादयति 'छद अपवा-रणे' चुरादिः । 'अर्चिशुचि–' (उ० २।१०८) इतीसिः । 'इ-स्मन्–' (६।४।९७) इति ह्रस्वः ।—'साहचर्यात् सान्तं क्ली-बम्–' इति मुकुटः । तन्न । 'छदिः स्त्रियाम्' इति लिङ्गानु-शासनसूत्रात् ॥ (२) ॥*॥ **'पटम्'** **'चालम्'** अप्यत्र ॥ द्वे **'छादनस्य'** ॥

**गोपनसी तु वलभीच्छादने वक्रदारुणि ।**

**गोपेति** ॥ गोपायति । 'गुपू रक्षणे' (भ्वा० प० से०)। बाहुलकान्नसट् प्रत्ययः । अल्लोप (६।४।४८) यलोपौ (६।१।६६)। यद्वा गवां गोभिर्वा पानं गोपानं किरणानां किरणैर्वा शोषणम् । तत् स्यति निवर्तयति । 'षो अन्तकर्मणि' (दि० प० अ०) 'आतोऽनुप–' (३।२।३) इति कः । गौरादिः (४।१।४१) ॥ (१) ॥*॥ वलति । 'वल संवरणे' (भ्वा० प० से०)। बाहुलकादभच् । गौरादिः । 'शुद्धान्ते **वलभीचन्द्र-शाले** सौधोर्ध्ववेश्मनि' इति रभसः ॥ (२) ॥*॥ वक्राणि दारूणि यस्मिन् । [2]द्वे **'कुड्येषु छादनार्थं दत्तस्य वक्र-**

---

१—'नासा दारूर्ध्वमस्य यत्' इति लिखितमपि न प्रकृतोप-योगि ॥ २—'अथो दारु शिला स्त्रियाम्' इति तु न प्रकृतो-पयोगि ॥

१—अत एव 'पटलछदिषी समे' इति हैमे उक्तम् । व्याख्यातं च तद्व्याख्यात्रा 'छदिः क्लीबलिङ्गः' इति । अतएव भट्टक्षीरस्वामिनापि 'छदिरिसन्तः क्लीबे' इत्येवोक्तम् । किंच छदिषः क्लीबत्वाभावे 'रूपभेदसाहचर्यविशेषविध्यन्यतरेण लिङ्गग्रहः' इति परिभा-षायां न्यूनतापत्तिः स्यात् । तस्माद्धैमकोशतः स्वपरिभाषया च छदिषः क्लीबत्वमेव मन्तव्यम् ॥ लिङ्गानुशासनसूत्रे तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्येणानादरणीयतैव बोधितेति तु प्रतिभाति । फलभेदे प्रत्याख्यानासंभवादिति दिक् ॥

२—मुकुटस्तु—वलभ्याश्चन्द्रशालायाः सौधोर्ध्ववेश्मनश्छादने गोपानसीशब्दो वर्तते इति दर्शयन् 'एकम्' इत्येवोक्तवान् ॥ अतएव 'गोपानसीषु क्षणमाश्रितानाम्' इति माघव्याख्यायां वल्लभ-देवोऽपि 'वलभीच्छादनं दारुवक्रं गोपानसीं विदुः' इति कोषान्तर-मुपन्यस्तवान् ॥ अत एव मुकुटेन 'छलेन वलभ्यप्युक्ता' इति प्रोक्तम् ॥ समासघटकतयोक्त्या 'छलत्वनिर्वाहः । यदि च वलभ्यपि नामत्वे-नोक्ता भवेत्तदा छलपदोपादानमनर्थकं स्यात् ॥ तस्मादुक्तरभसको-षप्रामाण्येन वलभी चन्द्रशालापर्यायाऽङ्गीकार्या । अत एव 'रम्या इति प्राप्तवतीः पताकाः' इति माघव्याख्यायां वल्लभदेवो वलभीरुप-रिवसतीः' इति व्याख्यत् । ह्रस्वान्तापि वलभिः । अत एव 'तां कस्यां-

काष्ठस्य' (छ(स)ज्जा) इति ख्यातस्य ॥ पटलाधारवंशपञ्जरस्य इत्यन्ये ॥

**कपोतपालिकायां तु विटङ्कं पुंनपुंसकम् ॥ १५ ॥**

**कपोतेति** ॥ पालयति । 'पाल रक्षणे' ( चु० प० से० )। ण्वुल् (३।१।१३३) । कपोतानां पालिका । कपोतान्पालयति कर्मण्यण् (३।२।१) । ङीप् (४।१।१५) । 'संज्ञायां कन्' (५।३।७५) इति वा ॥ (१) ॥*॥ विशेषेण टङ्क्यन्तेऽत्र । 'टकि बन्धने' ( चु० प० से० ) । 'हलश्च' (३।३।१२१) इति घञ् ।—कर्मण्यच् (३।३।५६) वा—इति मुकुटस्य प्रमादः ॥ (२) ॥*॥ द्वे **'गृहप्रान्ते रचितपक्षिस्थानस्य'** ॥

**स्त्री द्वार्द्वारं प्रतीहारः**

**स्त्रीति** ॥ द्वारयति 'द्वृ वरणे' ( ) णिजन्तः । विच् (३।२।७५) । यद्वा द्वार्यते । संपदादिः (३।३।१०८) ॥ (१) ॥*॥ पचाद्यचि (३।१।१३४) द्वारम् । **'द्वारं** निर्गमेऽभ्युपाये' इति हैमः ॥ (२) ॥*॥ प्रतिह्रियते आव्रियते । कर्मणि घञ् (३।३।१४) 'उपसर्गस्य घञि—' (६।३।१०९) इति वा दीर्घः । **'प्रतीहारो** द्वारि द्वाःस्थे द्वाःस्थितायां तु योषिति' ॥ (३) ॥*॥ त्रीणि **'द्वारस्य'** ॥

**स्याद्वितर्दिस्तु वेदिका ।**

**स्यादिति** ॥ विगता तर्दिर्हिंसाऽस्याः । 'तर्द हिंसायाम्' (भ्वा० प० से० ) । 'सर्वधातुभ्य इन्' ( उ० ४।११८ ) इतीन् ॥ (१) ॥*॥ विदन्त्यस्याम् । इन्नन्तात् 'कृदिकारात्—' ( ग० ४।१।४५) इति वा ङीष् । स्वार्थे कन् (५।३।७५) ॥ (२) ॥*॥ द्वे **'प्राङ्गणादिषु कृतस्योपवेशस्थानस्य'** ॥

**तोरणोऽस्त्री बहिर्द्वारम्**

**तोरेति** ॥ तुरन्त्यत्र । 'तुर त्वरणहिंसनयोः' ( ) । अधिकरणे ल्युट् (३।३।११७) । 'तोलयन्त्यत्र,' इति वा । 'तुल उन्माने' ( चु० प० से० ) । रलयोरेकत्वम् । 'तुतुरत्सनेन 'तुर त्वरणे' जौहोत्यादिकः ॥ (१) ॥*॥ बहिर्द्वारात् । 'अपपरि—' (२।१।१२) इति समासः ) । 'बहिश्च तद्वारं च' इति वा ॥ (२) ॥*॥ द्वे **'द्वारबाह्यभागस्य'** ॥

**पुरद्वारं तु गोपुरम् ॥ १६ ॥**

**पुरेति** ॥ पुरस्य द्वारम् ॥ (१) ॥*॥ गोपायति । 'गुपू रक्षणे' ( भ्वा० प० से० ) बाहुलकादुरच् । यद्वा पोलति । 'पुल महत्त्वे' ( भ्वा० प० से० ) । इगुपधत्वात्कः (३।१।१३५) रलयोरभेदः । गोभिः पुरम् । गाः पुरति । 'पुर अग्रगमने' ( तु० प० से० ) ण्यर्थः । 'मूलविभुजा—' ( वा० ३।२।५) इति कः ॥ (२) ॥*॥ द्वे **'नगरद्वारस्य'** ॥

**कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्**

**कूटमिति** ॥ हस्तिनो नख इव । हस्तिना न खन्यते । इति वा । 'खनु अवदारणे' ( भ्वा० उ० से० ) 'अन्येभ्योऽपि' (वा० ३।२।१०२ ) इति डः ॥ (१) ॥*॥ एकं **'पुरद्वारेऽवतारणार्थं कृतस्य क्रमनिम्नस्य मृत्कूटस्य'** ॥

**अथ त्रिषु ।**

**कपाटमररं तुल्ये**

**अथेति** ॥ कं वातं शिरो वा पाटयति । 'पट गतौ' ( भ्वा० प० से० ) । 'कर्मण्यण्' (३।२।१) ॥*॥ 'कवाटम्' इत्यन्ये । तत्र कं वातं वटति । 'वट वेष्टने' ( भ्वा० प० से० ) । स्त्रियाम् 'टिड्ढा—' (४।१।१५) इति ङीप् । 'कुङ् शब्दे' ( तु० आ० अ० ) । 'ऋदोरप्' (३।३।५७) । कवं शब्दमटतीति वा ॥ (१) ॥*॥ इयर्ति । 'अर्तिकमि—' ( उ० ३।१३२ ) इत्यरन् । स्त्रियाम् गौरादिङीष् (४।१।४१)—इति पञ्जिका । 'कपाटश्च **कवाटश्च** त्रिषु स्यादररं न ना' इति वाचस्पतिः । **'अररं** छदकपाटयोः' इति विश्वमेदिन्यौ ॥*॥ ऋच्छति विच् (३।२।७५) । अरम् ऋच्छति । 'सर्वधातुभ्यः' ( उ० ४।११८) इतीनि 'अररिः' इदन्तोऽपि । ('अररं पुनः । कपाटोऽररिः कवाटः' इति हैमः ) ॥ (२) ॥*॥ द्वे **'कपाटस्य'** ॥

**तद्विष्कम्भोऽर्गलं न ना ॥ १७ ॥**

**तदिति** ॥ तत् कपाटं विष्कभ्नाति । 'स्कम्भुः' सौत्रो रोधनार्थः । 'कर्मण्यण्' (३।२।३) ।—मुकुटस्तु—आवश्यके णिनिः (३।३।१७०) इति वदन् 'तद्विष्कम्भार्गलम्' इति मूलपाठं मन्यते । 'वेः स्कभ्नातेर्नित्यम्' (८।३।७७) इति षत्वम् ॥*॥ अर्ज्यते । 'अर्ज अर्जने' ( भ्वा० प० से० ) वृषादित्वात् ( उ० १।१०६ ) कलच् । न्यङ्क्वादित्वात् (७।३।५३) कुत्वम् । (**'स्यादर्गलं** तु कल्लोले परिघेऽपि' ) । स्त्रियां टाप् (४।१।४) लघुत्वविवक्षायां ङीष् (४।१।५५)—इति पञ्जिका ॥ (१) ॥*॥ एकं **'कपाटरोधनकाष्ठस्य'** ॥

**आरोहणं स्यात्सोपानम्**

**आरोहेति** ॥ आरुह्यतेऽनेन । 'रुह प्रादुर्भावे' ( भ्वा० प० अ० ) । करणे ल्युट् (३।३।११७) । **'आरोहणं** स्यात्सोपाने समारोहे प्ररोहणे' ॥ (१) ॥*॥ सह विद्यमान उप उपरि आनो गमनमनेन ॥ (२) ॥*॥ द्वे **'पाषाणादिकृतसौधाद्यारोहणमार्गस्य'** ॥

---

चिद्भवनवलभौ', 'चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते' इति मेघदूतः । 'दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था' इत्यादिप्रयोगानुरोधाद्दीर्घान्तापि । नह्येतैर्लक्ष्यैर्वलभ्या गोपानसीपर्यायत्वं संभवति । गोपानस्यां वासस्य सुखपूर्वकत्वानुपपत्तेः । प्राचीनतत्तत्काव्याविरोधाच्च । तस्माद्वलभिशब्दे बाहुलकादभिच् प्रत्ययः । 'कृदिकारात्—' इति ङीषि दीर्घान्ततेति दिक् ॥

१—इत उत्तरं 'युच् (उ० २।७८) वा' इति वा पाठः ॥

१—तथाच कथिताभ्युदये—'प्रेयन्तेऽमी परमररयो हर्म्यवातायनानाम्' इति मुकुटः । २—सोपानं दन्त्यादि 'सोपानपथमुत्सृज्य वायुवेगसमुद्धतः' इत्यत्राश्लीलसमश्लेषात् । इति मुकुटः ॥

**निश्रेणिस्त्वधिरोहणी ।**

**निश्रेणिरिति** ॥ नियता श्रेणिः पङ्क्तिरत्र ॥*॥ सविसर्गपाठे निश्चिता श्रेणिरत्र । परसाहचर्यात्स्त्रीत्वम् । '**निश्रेणिर**धिरोहण्यां खर्जूरीपादपेऽपि च' इति हैमः ॥ (१) ॥*॥ अधिरुह्यतेऽनया । ल्युट् (३।३।११७) ॥ (२) ॥*॥ द्वे '**काष्ठादिकृतारोहणमार्गस्य**' ॥

**संमार्जनी शोधनी स्यात्**

**संमेति** ॥ संमृज्यतेऽनया । ल्युट् (३।३।११७) 'मृजेर्वृद्धिः' (७।२।११४) ॥ (१)॥*॥ शोध्यतेऽनया । 'शुध शौचे' (दि० प० अ०) ण्यन्तात्ल्युट् (३।३।११७) ॥ (२) ॥*॥ एषु कर्तरि ल्युट् (३।३।११३) वा । 'वर्धनी' अप्यत्र । ('संमार्जनी **बहुकरी वर्धनी** च **समूहनी**' इति हैमात्) ॥ द्वे '**गृहादिसंमार्जन्याः**' '**झाडू**' इति ख्यातायाः ॥

**संकरोऽवकरस्तया ॥ १८ ॥**

**क्षिप्ते**

**समिति** ॥ संकीर्यते । 'कॄ विक्षेपे' (तु० प० से०) । हिंसायाम् (क्र्या० उ० से०) वा । 'ॠदोरप्' (३।३।५७) ॥*॥ 'संकारः' इति पाठे तु कर्मणि घञ् (३।३।१४) । ['अथ **संस्कारो**ऽवकारेऽग्निचटत्कृतौ । **संकारी** भुक्तकन्यायाम्' इति हैमः ॥ मेदिनीकोशे तु ह्रस्वमध्यः] ॥ (१) ॥*॥ अवकीर्यते ॥ (२) ॥*॥ (तया शोधन्या) क्षिप्ते धूल्यादौ ॥ '**कचरा**' इति ख्यातस्य ॥

**मुखं निःसरणम्**

**मुखमिति** ॥ खन्यते । 'खनु अवदारणे' (भ्वा० उ० से०) । 'डित्खनेर्मुट् चोदात्तः' (उ० ५।२०) इत्यच् आदेर्मुडागमः । '**मुखमु**पाये प्रारम्भे श्रेष्ठे निःसरणास्ययोः' इति हैमः ॥ (१) ॥*॥ निःसरन्त्यनेन । 'सृ गतौ' (भ्वा० प० अ०) ल्युट् (३।३।११७) । '**निःसरणे** मृतौ । उपाये गेहादिमुखे निर्वाणे निर्गमेऽपि च' इति हैमः ॥ (२) ॥*॥ द्वे '**निर्गमनप्रवेशमार्गस्य**' ॥

**संनिवेशो निकर्षणः ।**

**समिति** ॥ संनिविशन्तेऽत्र । 'विश प्रवेशने' (तु० प० अ०) 'हलश्च' (३।३।१२१) इति घञ् ॥ (१) ॥*॥ कर्षणान्निर्गतः । 'निरादयः–' (वा० २।२।१८) इति समासः ॥ (२) ॥*॥ द्वे '**पुरादौ गृहादिरचनापरिच्छिन्नदेशस्य**' ॥

**समौ संवसथग्रामौ**

**समाविति** ॥ संवसन्त्यत्र । 'वस निवासे' (भ्वा० प० अ०) 'उपसर्गे वसः' (उ० ३।११६) इत्यथच् ॥ (१) ॥*॥ ग्रसते । 'ग्रसु अदने' (भ्वा० आ० से०) । 'ग्रसेरा च' (उ० १।१४३) इति मन् आत्वम् । '**ग्रामः** स्वरे संवसथे+ग्रीष्मे ऊष्मर्तुभेदयोः' ॥ (२) ॥*॥ द्वे '**ग्रामस्य**' ॥

१—इदं तु ग्रीष्मशब्दार्थबोधकत्वान्न प्रकृतोपयोगि ॥

**वेश्मभूर्वास्तुरस्त्रियाम् ॥ १९ ॥**

**वेश्मेति** ॥ वेश्मनो भूः ॥ (१) ॥*॥ वसन्त्यत्र । 'वसेस्तुन्नगारे णिच्च' (उ० १।७०) इति तुन् । ('**वास्तु** स्याद्गृहभूपुर्योर्गृहे सीमसुरङ्गयोः' ॥ (२) ॥*॥ द्वे '**गृहरचनावच्छिन्नभूमेः**' ॥

**ग्रामान्त उपशल्यं स्यात्**

**ग्रामेति** ॥ ग्रामस्यान्तं समीपम् ॥ (१) ॥*॥ शल्यमुपगतः प्रादिसमासः (वा० २।२।१८) ॥ (२) ॥*॥ ग्रामग्रहणं चोपलक्षणम् । अत एव '**उपकण्ठो**पशल्ये द्वे' इति त्रिकाण्डशेषः ॥*॥ द्वे '**ग्रामादिसमीपदेशस्य**' ॥

**सीमसीमे स्त्रियामुभौ ।**

**सीमेति** ॥ सीयते । 'षिञ् बन्धने' (स्वा० उ० अ०) । 'नामन्सीमन्–' (उ० ४।१५१) इत्यादिना निपातितः 'मनः' (४।१।११) इति न ङीप् ॥ (१) ॥*॥ 'डाबुभाभ्याम्–' (४।१।१३) इति पक्षे डाप् । ('**सीमा** घाटस्थितिक्षेत्रेष्वण्डकोषेऽपि च स्त्रियाम्' ॥ (२) ॥*॥ 'आघाटशब्दोऽप्यत्र' ॥*॥ द्वे '**सीमायाः**' ॥ चत्वार्येकार्थानि इत्यन्ये ॥

**घोष आभीरपल्ली स्यात्**

**घोष इति** ॥ घोषन्ति गावोऽत्र । 'घुषिरविशब्दने' (भ्वा० प० से०) । 'हलश्च' (३।३।१२१) इति घञ् । '**घोष** आभीरपल्ल्यां स्याद्गोपालध्वनिघोषके । कांस्ये चाम्बुदनादे ना **घोषा** मधुरिकौषधौ' ॥ (१) ॥*॥ आभीराणां पल्लिः । 'कुटिग्रामकयोः **पल्लिः**' इति शाश्वतः ॥ (२) ॥*॥ द्वे '**गोपग्रामस्य**' ॥

**पक्कणः शबरालयः ॥ २० ॥**

**पक्कण इति** ॥ पचन्ति । क्विप् (३।२।१७८) । कणन्ति । 'कण शब्दे' (भ्वा प० से०) पचाद्यच् (३।१।१३४) । पचः कणा यत्र । पाककलहायेव प्रधानं तत्र नान्यत् ॥ (१) ॥*॥ शमं रान्ति शबराः । तेषामालयः ॥ (२) ॥*॥ द्वे '**भिल्लग्रामस्य**' ॥

**इति पुरवर्गविवरणम् ॥**

---

**महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः ।**
**अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ॥ १ ॥**

**महीध्र इत्यादि** ॥ महीं धरति । 'धृञ् धारणे' (भ्वा० उ० अ०) । मूलविभुजादित्वात् (वा० ३।२।५) कः ॥ (१) ॥*॥ शिखरमस्यास्ति । अत इनिः (५।२।११५) । '**शिखरी** स्यादपामार्गे शैलपादपयोः पुमान्' ॥ (२) ॥*॥ क्ष्मां बिभर्ति । 'डुभृञ् धारणपोषणयोः' (जु० उ० अ०) । 'क्विप् च' (३।२।

१—तथाच माघः 'शैलोपशल्यनिपतद्रथनेमिधारा–' इति– इति मुकुटः ॥ २—तथाच प्रयोगः 'दिग्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते' इति—इति मुकुटः ॥

७६ ) इति क्विप् ॥(३)॥*॥ ह्रियते । 'हृञ् हरणे' (भ्वा० उ० अ०)। 'ऋहलोर्ण्यत्' (३।१।१२४)। न ह्रार्यः । **'अहार्यो** हर्तुमशक्ये शैलेऽपि' इति हैमः ॥ (४)॥*॥ धरति । 'धृञ् धारणे' (भ्वा० उ० अ०) । पचाद्यच् (३।१।१३५) । 'धरः कूर्माधिपे गिरौ । कार्पासतूलेऽथ **धरा** मेदोभूमिजरायुषु' इति हैमः ॥ (५)॥*॥ पर्वाणि सन्त्यत्र । 'तप् पर्वमरुद्भ्यां' (वा० ५।२।१२२) यद्वा पर्वति । 'पर्व पूरणे' ( भ्वा० प० से ) । 'भृमृदृशि–' (उ० ३।११० ) इत्यतच् । ( **'पर्वतः** पादपे पुंसि शाकमत्स्यप्रभेदयोः । देवमुन्यन्तरे शैले' ॥ (६) ॥*॥ अत्ति, अद्यते, वा 'अद भक्षणे' ( अ० प० अ० ) 'अदिशदिभूशुभिभ्यः क्रिन्' (उ० ४।६५ ) । **'अद्रिस्तु** पर्वते । सूर्ये शाखिनि च' इति हैमः ॥ (७) ॥*॥ गां त्रायते । 'त्रैङ् पालने' (भ्वा० आ० अ० ) । 'आतः–' (३।२।३ ) इति कः । **'गोत्रं** क्षेत्रेऽन्वये छत्रे संभाव्ये बोधवर्त्मनोः । वने नाम्नि च, **गोत्रोऽद्रौ, गोत्रा** भुवि गवां गणे' इति हैमः ॥ (८) ॥*॥ गिरति 'गॄ निगरणे' (तु० प० से० ) । बाहुलकात्किः । 'ऋत इद्धातोः' (७।१।१००) । **'गिरिः** पूज्येऽक्षिरुजि कन्दुके । शैले गैरेयके गीर्णावपि' इति हैमः ॥ (९) ॥*॥ ग्रसते । 'ग्रसु अदने' ( भ्वा आ० से० ) 'अन्येभ्योऽपि–' (३।२।७५) इति वनिप् । पृषोदरादिः (६।३।१०९) ॥ (१०) ॥*॥ न चलति । 'चल कम्पने' (भ्वा० प० से० ) । पचाद्यच् (३।१।१३५) । **'अचलस्तु** गिरिकीलयोः । **अचला** भुवि' इति हैमः ॥ (११) ॥*॥ प्रचुराः शिलाः सन्त्यत्र । ज्योत्स्नादित्वादण् ( वा० ५।२।१०३) ॥ **'शैलो** भूभृति **शैलं** तु शैलेये तार्क्ष्यशैलके' इति हैमः ॥ (१२) ॥*॥ शिलाभिरुच्चीयते । 'चिञ् चयने' ( स्वा० उ० अ० ) । 'एरच्' ( ३।३।५६ ) ॥ (१३) ॥*॥ त्रयोदश **'पर्वतसामान्यस्य'** ॥

**लोकालोकश्चक्रवालः**

**लोकेति** ॥ 'लोकृ दर्शने' (भ्वा० आ० से० ) । भावे घञ् ( ३।३।१३ ) । न लोकः । लोकालोकौ प्रकाशान्धकारावत्र स्तः । अन्तर्बहिः सूर्यकिरणानां स्पर्शास्पर्शाभ्याम् ॥ (१) ॥*॥ चक्रं भूमण्डलं वलते । 'वल वेष्टने' (भ्वा० आ० से०) । 'कर्मण्यण्' ( ३।२।१ ) । डलयोरेकत्वस्मरणात् 'चक्रवाडः' अपि । यद्वा चक्राकारेण वाडते । 'वाडृ आप्लाव्ये' (भ्वा० आ० से० ) पचाद्यच् ( ३।१।१३५ ) । 'चक्रवालमस्यास्ति' इति वा । अर्शआद्यच् ( ५।२।१२७ ) । **'चक्रवालोऽद्रिभेदे** स्याच्चक्रवालं तु मण्डले' इति हैमः ॥ (२) ॥*॥ द्वे **'सप्तद्वीपवत्या भूमेः'** ॥

**त्रिकूटस्त्रिककुत्समौ ।**

**त्रिकूट इति** ॥ त्रीणि कूटान्यस्य । **'त्रिकूटं** सिन्धुलवणे **त्रिकूटः** पर्वतान्तरे' इति हैमः ॥ (१) ॥*॥ त्रीणि ककुदसदृशानि शृङ्गाण्यस्य । 'त्रिककुत् पर्वते' (५।४।१४७) ॥ (२) ॥*॥ द्वे **'लङ्काधिष्ठानपर्वतस्य'** ॥

**अस्तस्तु चरमक्ष्माभृत्**

**अस्त इति** ॥ असति स्म । 'अस दीप्तौ' ( भ्वा० उ० से० ) 'गत्यर्था–' ( ३।४।७२ ) इति क्तः । यद्वा अस्यते स्म । 'असु क्षेपणे' (दि० प० से०) । क्तः (३।४।७२ ) । **'अस्तं** क्षिप्तेऽप्यवसिते त्रिषु, ना पश्चिमाचले' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ चरन्त्यत्र । 'चर गतौ' ( भ्वा० प० से ) 'चरेरमः' (उ० ५।६९) ॥ (२) ॥*॥ **'पश्चिमपर्वतस्य'** द्वे ॥

**उदयः पूर्वपर्वतः ॥ २ ॥**

**उदय इति** ॥ उद्यन्ति ग्रहा अस्मात् । 'इण् गतौ' ( अ० प० अ० ) 'एरच्' (३।३।५६) **'उदयः** पर्वतोन्नत्योः' इति हैमः ॥ (१) ॥*॥ पूर्वः पर्वतः ॥ (२) ॥*॥ द्वे **'उदयाचलस्य'** ॥

**हिमवान्निषधो विन्ध्यो माल्यवान्पारियात्रकः ।**
**गन्धमादनमन्ये च हेमकूटादयो नगाः ॥ ३ ॥**

**हिमेति** ॥ हिममस्मिन्नस्ति । मतुप् (५।२।९५) ॥ (१) ॥*॥ निषीदति । पचाद्यच् (३।१।१३४) । पृषोदरादिः (६।३।१०९) । **'निषधः** कठिने देशे तद्राजे पर्वतान्तरे' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ विरुद्धं ध्यायति । 'ध्यै चिन्तायाम्' ( भ्वा० प० अ० ) । 'आतश्चोपसर्गे' ( ३।१।१३६ ) इति कः । पृषोदरादिः । (६।३।१०९) यद्वा वि इध्यते । 'ञि इन्धी दीप्तौ' (रु० आ० से० ) । ण्यत् (३।१।१२४) अन्तर्भावितण्यर्थः । शकन्ध्वादिः (६।१।९४) । वीन्धे वा । अघ्न्यादिः (उ० ४।१२२) । **'विन्ध्या** स्त्रियां लवल्यां स्यात्पुंसि व्याधाद्रिभेदयोः' ॥ (१) ॥*॥ माल्याकारतास्यास्ति । मतुप् (५।२।९५) ॥ (१) ॥*॥ परितो यात्रया दृश्यते । 'शेषे' (४।२।९२) इत्यण् । स्वार्थे कन् (५।३।७५) ॥ (१) ॥*॥ गन्धेन मादयति । 'मदी हर्षे' ( दि० प० से० ) । णिजन्तः । नन्द्यादिः ( ३।१।१३४ ) । **'स्याद्गन्धमादनो** भृङ्गे गन्धके वानरान्तरे । स्त्री सुरायां नगे न स्त्री'+चिरंजीवि द्विकाजयोः+ ॥ (१) ॥*॥ हेम्नः कूटो राशिः ॥ (१) ॥*॥ आदिशब्दात् **मलय-दर्दुर-चित्रकूट-मैनाक-सह्या**-दिसंग्रहः ॥

**पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ।**

**पाषाणेति** ॥ पिनष्टि । 'पिष्लृ संचूर्णने' (रु० प० अ०)।

---

१—हैमे तु 'त्रिकूटस्तु सुवेलके' इति पाठो दृश्यते । उक्तपाठस्तु मेदिन्यां दृश्यते ॥

१—पारियात्रकोऽन्तस्तृतीयः । तथाच 'भुङ्क्ते महीमत्र विधाय यात्रां ससह्यविन्ध्याचलपारियात्राम्' इत्यन्तयमके वराहः—इति मुकुटः ॥ २—'इदं तु न प्रकृतोपयोगि । चिरजीविककाकयोः' इति पाठः ॥

बाहुलकादानच् । पृषोदरादिः (६।३।१०९) । मूर्धन्यषः । पषत्यनेन । 'पष बाधे ग्रन्थे च' ( ) । 'हलश्च' (३।३।१२१) इति घञ् । अणति । 'अण शब्दे' (भ्वा० प० से०) अच् (३।१।१३४) पाषश्चासावणश्च । यत्तु—'पषेर्णित्' इत्यानच्—इति मुकुटः । तन्न । उक्तसूत्रादर्शनात् ॥ (१) ॥*॥ प्रस्तृणाति । 'स्तृञ् आच्छादने' (क्र्या० उ० अ०) पचाद्यच् (३।१।१३४) । 'प्रस्तरो ग्रावणि मणौ' इति हैमः ॥ (२) ॥*॥ गिरति, गृणाति, वा । 'गॄ निगरणे' (तु० प० से०) 'शब्दे' (क्र्या० प० से०) वा । 'अन्येभ्योऽपि' (३।२।७५) इति वनिप् । पृषोदरादिः (६।३।१०९) । यद्वा गरति । 'गृ सेके' (भ्वा० प० अ०) । मूलविभुजादिः (वा० ३।२।५) । अवति । 'अव रक्षणादौ' (भ्वा० प० से०) । बाहुलकात्कनिः । ग्रश्चासाववा च । 'ग्रावा तु प्रस्तरे पृथ्वीधरे पुंसि' इति मेदिनी ॥ (३) ॥*॥ उप लाति । 'ला दाने' (अ० प० अ०) । 'आतश्चोप–' (३।१।१३६) इति कः । यद्वा पलति । 'पल गतौ' (भ्वा० प० से०) अच् (३।१।१३४) । ओः शंभोः पलो बोधकः । 'उपलो ग्रावरत्नयोः । उपला तु शर्करायाम्' इति हैमः ॥ (४) ॥*॥ अश्नुते । 'अशूङ् व्याप्तौ संघाते च' (स्वा० आ० से०) । 'अन्येभ्योऽपि' (३।२।७५) इति मनिन् ॥ (५) ॥*॥ शिलति । 'शिल उञ्छे' (तु० प० से०) तालव्यादिः । 'इगुपध–' (३।१।१३५) इति कः ॥ (६) ॥*॥ दृणाति । 'दॄ विदारणे' (क्र्या० प० से०) । 'दृणातेः पुग्ग्रस्वश्च' (उ० १।१३१) इत्यादिः । 'दृषत्पाषाणमात्रके । निष्पेषणार्थपट्टेऽपि' । ('कषायः कूष्माण्डो महिष) वृषभव्योषदृषदः' इत्यूष्मभेदान्मूर्धन्यमध्यः ॥ (७) ॥*॥ सप्त 'पाषाणस्य' ॥

## कूटोऽस्त्री शिखरं शृङ्गम्

**कूट इति** ॥ कूटयति । 'कूट दाहे' (चु० उ० से०) । पचाद्यच् (३।१।१३४) । यत्तु—'इगुपध–' (३।१।१३५) इति कः—इति मुकुटः । तन्न । कूटेश्चुरादित्वेन णिजन्तत्वादिगुपधत्वासंभवात् । णिजभावे वा । कूट्यते वा घञ् (३।३।१४) 'कूटं पूर्दार्यंयन्त्रयोः । मायादम्भाद्रिशृङ्गेषु सीराङ्गेऽनृततुच्छयोः । निश्चलेऽयोघने राशौ' इति हैमः ॥ (१) ॥*॥ शिखाऽस्यास्ति । 'शिखाया हस्वश्च' (५।२) इति रः । शिखां राति, इति वा । 'ङ्यापोः–' (६।३।६३) इति ह्रस्वः । 'शिखरं पुलकाग्रयोः । पक्वदाडिमबीजाभमाणिक्यशकलेऽपि च । गिरिवृक्षाग्रकक्षासु' इति हैमः । 'अस्त्री' इति पूर्वोत्तराभ्यां संबध्यते ॥ (२) ॥*॥ शृणाति । 'शॄ हिंसायाम्' (क्र्या० प० से०) 'शृणातेर्ह्रस्वश्च' (उ० १।१२६) इति गन्नुड्ह्रस्वाः । 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ शृङ्गः कूर्चकशीर्षके । स्त्री विषायां स्वर्णमीनभेदयोर्ऋषभौषधौ' इति मेदिनी ॥ (३) ॥*॥ त्रीणि 'पर्वताग्रस्य' ॥

## प्रपातस्त्वतटो भृगुः ॥ ४ ॥

**प्रपात इति** ॥ प्रपतन्त्यस्मात् । 'पत्लृ गतौ' (भ्वा० प० से०) । 'अकर्तरि–' (३।३।१४) इति घञ् । 'प्रपातो निर्झरे भृगौ । अवटे पतने कच्छे' इति हैमः ॥ (१) ॥*॥ न तटमत्र ॥ (२) ॥*॥ भृज्जति भृज्ज्यते वा । 'भ्रस्ज पाके' (तु० उ० अ०) । 'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च' (उ० १।२८) । न्यङ्क्वादित्वात् कुत्वं (७।३।५३) । 'भृगुः सानौ जमदग्निप्रपातयोः । शुक्रे रुद्रे च' इति हैमः । 'प्रपातस्तु तटो भृगुः' इति पाठे प्रपत्यते यतस्तटात्स भृगुः ॥ (३) ॥*॥ त्रीणि 'पर्वतात्पतनस्थानस्य' ॥

## कटकोऽस्त्री नितम्बोऽद्रेः

**कटक इति** ॥ कटति, कट्यते, वा । 'कटे वर्षावरणयोः' (भ्वा० प० से०) । 'क्वुन् शिल्पिसंज्ञयोः' (उ० २।३२) । 'कटकस्त्वद्रिनितम्बे बाहुभूषणे । (सेनायां राजधान्यां च)' इति हैमः ॥ (१) ॥*॥ एकं 'पर्वतमध्यभागस्य मेखलाख्यस्य' ॥

## स्नुः प्रस्थः सानुरस्त्रियौ ।

**स्नुरिति** ॥ स्नौति जलम्, स्नाति वा । 'ष्णु प्रस्नवणे'

१—'संदृषत्पाषाणपुरीषदूषिकानिषेधदुःषेधमृषानुषङ्गिणः' इत्यूष्मविवेकात्—इति मुकुटः ॥ २—मेदिनीस्थोऽयं पाठः । हैमे तु 'प्रस्तारे' इत्यधिकः पाठः ॥ ३—दृषदः शिलासाहचर्यात्स्त्रीत्वम्—इति मुकुटः ॥ ४—यन्त्रे मृगादिबन्धनार्थे । छले यथा 'छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुराम्' इत्यनेकार्थकैरवाकरकौमुदी ॥

१—रोमाञ्चाग्रमात्रयोर्यथा 'रुचिरैः शिखरैः काम्या गृहस्थी च मृगेक्षणा' । पक्वदाडिमबीजाभमाणिक्यखण्डे यथा–'तन्वी श्यामा शिखरदशना' इत्यनेकार्थकैरवाकरकौमुदी ॥ २—हैमे तु 'वृक्षाग्रे पर्वताग्रे च' इति पाठ उपलभ्यते ॥ ३—शृङ्गशब्दः पुंस्यपीति स्वामी पञ्जिका च । तथाच 'जिगाय जम्बूजनितश्रियः श्रियं सुमेरुशृङ्गस्य तदा तदासनम्' इति माघः—इति मुकुटः ॥ ४—हैमे तु 'प्रपातः सौप्तिके भृगौ' इत्येतावदेव पाठ उपलभ्यते । व्याख्यातं च 'सौप्तिको रात्रिधावी' इति । तत्र यथा 'यस्य प्रपातभयतो निशि न प्रसुप्ताः' इत्यनेकार्थकैरवाकरकौमुद्याम् ॥ ५—अनयोः स्नुनितम्बयोः साहचर्यादस्त्रीत्वम् । 'पुमानेव स्नुः' इति सर्वधरः—इति मुकुटः ॥ 'हैमाभिधाननाममालाव्याख्यायामपि स्नुः पुंलिङ्गः' इत्युक्तम् ॥ अत्रेदं प्रतिभाति । सानुशब्दस्यास्त्रीस्नुशब्दस्याप्यस्त्रीत्वमेव । 'पद्दन्नो–' (६।१) इति सूत्रे स्नुमादेशं विधाय तस्य स्थानितायाः सानुशब्दस्यैव भाष्यकृता दर्शितत्वात् । स्थान्यादेशयोर्भिन्नलिङ्गत्वे 'स्थान्यर्थाभिधानसमर्थस्यैवादेशता' इति सिद्धान्तभङ्गापत्तेः । पञ्चकपक्षे लिङ्गस्यापि प्रातिपदिकार्थत्वादिति ॥

(अ० प० अ०)। 'ष्णा शौचे' (अ० प० से०) वा। मितद्र्वादित्वात् (वा० ३।२।१८०) डुः॥ (१) ॥*॥ प्रतिष्ठन्तेऽत्र। घञर्थे कः (वा० ३।३।१०८)। 'प्रस्थोऽस्त्रियां मानभेदे सानावुन्मितवस्तुनि' ॥ (२) ॥*॥ सनोति। 'षणु दाने' (त० उ० से०)। 'दृसनिजनि-' (उ० १।३) इति ञुण्। 'सानुरस्त्री वने प्रस्थे वात्यामार्गाग्र्यके विदे' ॥ (३) ॥*॥ द्वित्वात्प्रस्थोऽप्यस्त्री। त्रीणि 'पर्वतसमभूभागस्य' ॥

**उत्सः प्रस्रवणम्**

**उत्स इति** ॥ उनत्ति जलेन 'उन्दी क्लेदने' (रु० प० से०)। 'उन्दिगुधिकुषिभ्यश्च' (उ० ३।६८) इति सः। 'कित्' इत्यनुवृत्तेर्नलोपः। 'उन्दति' इति मुकुटेन कृतं विग्रहप्रदर्शनं प्रामादिकम्। उन्दे रौधादिकत्वात्॥ (१) ॥*॥ प्रस्रवन्त्यापोऽस्मात् 'स्रु गतौ' (भ्वा० प० अ०)। 'भीमादयः-' (३।४।७४) इति 'कृत्यल्युटः-' (३।३।११३) इति वाऽपादाने ल्युट्॥ (२) ॥*॥ द्वे 'यतो जलं स्रवति तस्य स्थानस्य' ॥

**वारिप्रवाहो निर्झरो झरः ॥ ५ ॥**

**वारीति** ॥ वारिणः प्रवाहः ॥*॥ निर्झरणम्। 'झॄष् वयोहानौ' (दि० प० से०) 'ॠदोरप्' (३।३।५७)। यत्तु निर्झरन्त्यनेन—इति विग्रहप्रदर्शनं मुकुटेन कृतम्। तन्न। करणेऽपो दुर्लभत्वात्। ल्युटा बाधात्। शबपि दुर्लभः। झॄषो दैवादिकत्वात्॥ (१) ॥*॥ एवं झरः ॥ षित्त्वात् (३।३।१०४) अङि 'झरा' ॥*॥ 'अच इः' (उ० ४।२३९) 'झरिः' ॥*॥ ततो ङीषि (ग० ४।१।४५) 'झरी' च ॥ (२) ॥*॥ उपसर्गान्तरनिवृत्त्यर्थो निर्॥*॥ द्वे 'उत्सान्निर्गतजलप्रवाहस्य'। पञ्चापि पर्याया इत्यन्ये ॥

**दरी तु कंदरो वा स्त्री**

**दरीति** ॥ दृणाति। 'दॄ विदारणे' (क्र्या० प० से०)। पचाद्यौ (३।१।१३४) 'दरट्' इति पाठात् 'टिड्ढा-' (४।१।१५) इति ङीप्। 'दरोऽस्त्री साध्वसे गर्ते कंदरे तु दरी स्मृता। दराऽव्ययं मनागर्थे' ॥ (१) ॥*॥ कं जलम्। तेन दीर्यते। 'ॠदोरप्' (३।३।५७)। ('कंदरोऽङ्कुशे। विवरे च गुहायां च') ॥*॥ स्त्रियां टाप्[१] (४।१।४) ॥ (२) ॥*॥ द्वे 'कृत्रिमस्य गृहाकारस्य गिरिविवरस्य' ॥

**देवखातबिले गुहा।**

**गह्वरम्**

**देवेति** ॥ अकृत्रिमे पर्वतस्य बिले। बिलति। 'बिल भेदने' (तु० प० से०)। 'इगुपध-' (३।१।१३५) इति कः (१) ॥*॥ गूहति। 'गुहू संवरणे' (भ्वा० प० से०)। 'इगुपध-' (३।१।१३५) इति कः। यत्तु—गुह्यतेऽनया। भिदाद्यङ् (३।३।१०४)—इति मुकुटः। तन्न। 'अजब्भ्याम्' (वा० ३।३।१२६) इति वार्तिकविरोधात्। 'गुहः षाण्मातुरे गुहा। सिंहपुच्छयां च गर्ते च पर्वतादेश्च गह्वरे' ॥ (२) ॥*॥ गाह्यते। 'गाहू विलोडने' (भ्वा० आ० से०)। 'छित्वरछत्वर-' (उ० ३।१) इति ष्वरजन्तं निपात्यते। ('अथ गह्वरम्। गुहागहनदम्भेषु निकुञ्जे तु पुमानयम्') ॥ (३) ॥*॥ केचित्तु—'देवखाते बिलं गुहा' इति काल्यात् 'गह्वरं[१] बिलदम्भयोः' इति शाश्वताच्च। ('बिलं रन्ध्रे गुहायां च' इति हैमतश्च) चत्वारि नामानि—इत्याहुः ॥ त्रीणि 'अकृत्रिमस्य गिरिबिलस्य' ॥

**गण्डशैलास्तु च्युताः स्थूलोपला[२] गिरेः ॥ ६ ॥**

**गण्डेति** ॥ 'गण्डः कपोले पिटके' इति विश्वः। गण्ड इव शैलाः। शैलशब्दस्तदवयवे वर्तते। 'विशेषणं विशेष्येण-' (२।१।५७) इति समासः। शैलानां गण्डा इव, इति वा। राजदन्तादिः (२।२।३१)। 'गण्डशैलो ललाटे स्याच्च्युतस्थूलोपले गिरेः' ॥ (१) ॥*॥ एकम्। 'गिरेः पतितस्थूलपाषाणस्य' ॥

**खनिः स्त्रियामाकरः स्यात्**

**खनिरिति** ॥ खन्यते। 'खनु अवदारणे' (भ्वा उ० से०)। 'खनिकषि-' (उ० ४।१४०) इति इः ॥*॥ 'कृदिकारात्-' (ग० ४।१।४५) इति वा ङीष्[३] ॥*॥ 'इञजादिभ्यः' (वा० ३।३।१०८) इतीञ्। 'खनिरेव मता खानिः' इति द्विरूपकोशः ॥ (१) ॥*॥ आकुर्वन्त्यत्र। 'डुकृञ्' (त० उ० अ०)। आकीर्यन्ते धातवोऽत्र। 'कॄ विक्षेपे' (तु० प० से०)। 'पुंसि संज्ञायाम्' (३।३।११९) इति कः। 'आकरो निकरे खनौ' ॥ (२) ॥*॥ द्वे 'रत्नाद्युत्पत्तिस्थानस्य' ॥

**पादाः प्रत्यन्तपर्वताः।**

**पादा इति** ॥ पद्यते एभिः। 'पद गतौ' (दि० आ० अ०)। 'हलश्च' (३।३।१२१) इति घञ्। 'पादो मूलोऽस्तुर्यांशाङ्घ्रिषु प्रत्यन्तपर्वते' इति हैमः ॥ (१) ॥*॥ प्रत्यन्ते महाद्रीणां समीपे ये क्षुद्राः पर्वताः ॥ (२) ॥*॥ द्वे 'पर्वतसमीपस्थाल्पपर्वतानाम्' ॥

१—'अत्युच्चवस्तुनि' इति पाठान्तरम्॥ २—अग्रके पल्लवे। अत एव विश्वकोषे 'सानुः शृङ्गे बुधे मार्गे वात्यायां पल्लवे वने' इति पाठ उपलभ्यते॥ ३—तथाच 'कन्दरासु तरुणीरिह नयति रविः' इति माघः—इति मुकुटः॥

१—गह्वरं क्लीबमेव। गह्वरा गह्वरी तूपचारात्, इति तु पञ्जिका—इति मुकुटः। हैमाभिधानचिन्तामणिनाममालाव्याख्यायां तु 'गह्वरः पुंक्लीबलिङ्गः' इत्युक्तम्॥ २—'स्थूलोपलाः' इत्युपलक्षणम्। तेन 'लीलां दधौ राजतगण्डशैलः' इति माघप्रयोग उपपद्यते—इति मुकुटः॥ ३—अतएव 'धृतगम्भीरखनीखनीलिमा' इति नैषधः—इति मुकुटः॥

**उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ॥ ७ ॥**

**उपेति** ॥ उप आसन्ना । अधि आरूढा । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' (५।२।३४) इति त्यकन् ॥ (१) ॥*॥ एकैकम् **'अद्रेरधऊर्ध्वासन्नभूमेः'** ॥

**धातुर्मनःशिलाद्यद्रेः**

**धातुरिति** ॥ दधाति शोभाम् । 'सितनि-' (उ० १। ६९) इति तुन् ॥ (१) ॥*॥ 'सुवर्णरूप्यताम्राणि हरितालं मनःशिला । गैरिकाञ्जनकासीससीसलोहाः सहिङ्गुलाः । गन्धकोऽभ्रकमित्याद्या धातवो गिरिसंभवाः' ॥*॥ एकम् **'मनःशिलादिधातोः'** ॥

**गैरिकं तु विशेषतः ।**

**गैरीति** ॥ गिरौ भवम् इति विग्रहे गिरिकशब्दादण् (४। ३।५३) । अव्यविकन्यायात् । अध्यात्मादित्वात् (वा० ४। ३।६०) ठञ् वा । गैरिकं तु विशेषेण धातुः । धातुशब्देनैव प्रसिद्धत्वात् । **'गैरिकं** धातुरुक्मयोः' ॥ (१) ॥*॥ एकम् **'धातुविशेषस्य'** ॥

**निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ॥ ८ ॥**

**निकुञ्जेति** ॥ कावजनि । 'जनी प्रादुर्भावे' (दि० आ० से०) । 'सप्तम्यां जनेर्डः' (३।२।९७) । पृषोदरादिः (६।३। १०९) ।—कुञ्जन्त्यत्र । 'कुजि अव्यक्ते शब्दे' (भ्वा० प० से०) । 'हलश्च' (३।३।१२१) इति घञ्—इति मुकुटः । तन्न । कुंजिधातोर्धातुपाठेऽदर्शनात् । यत्तु 'न्युङ्क्वादेः' इति कुत्वाभावः—इति तदपि न । 'न्युङ्क्वादेः' इत्यस्य कुत्वविधायकत्वात् । निरत्रोपसर्गान्तरव्यावृत्त्यर्थम् । कुञ्जिरावरणार्थो लोकात्—इति क्षीरस्वामी । **'कुञ्जोऽस्त्रियां** निकुञ्जेऽपि हनौ दन्ते च दन्तिनाम्' इति विश्वः । द्वे **'लतादिभिः पिहितस्य स्थानस्य'** ॥

**इति शैलवर्गविवरणम् ॥**

---

**अटव्यरण्यं विपिनं गहनं काननं वनम् ।**

**अटवीति** ॥ अटन्त्यत्र । 'अट गतौ' (भ्वा० प० से०) । 'पद्यटिभ्यामविः' ( ) । 'कृदिकारात्–' (ग० ४।१।४५) इति ङीष् । यत्तु मुकुटः—अटा वयः पक्षिणोऽत्र । पूर्ववन्ङीष् । संज्ञाशब्दत्वात् 'अनुपसर्जनात्' इति स्त्रीप्रत्ययस्य न निषेधः—इत्याह । तन्न । अटविशब्दस्य कृदन्तत्वाभावात् । 'संज्ञाशब्दत्वात्' इति हेतोरप्रयोजकत्वात् समुदायस्यानुपसर्जनत्वाच्च ॥ (१) ॥*॥ अर्यते । 'ऋ गतौ' (भ्वा० प० से०) । 'अर्तेर्नित्' (उ० ३।१०२) इत्यन्यः ॥ (२) ॥*॥ वेपन्तेऽत्र । 'टुवेपृ कम्पने' (भ्वा० आ० से०) 'वेपितुह्योर्ह्रस्वश्च' (उ० २।५२) इतीनन् । विशेषेण पियन्त्यत्र वा । 'पि गतौ' (तु० प० से०) । बाहुलकान्नक् ॥ (३) ॥*॥ गाह्यते । 'गाहू विलोडने' (भ्वा० आ० से०) । 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् । 'कृच्छ्रगहनयोः' (७।२।२२) इति निर्देशाद्ध्रस्वः । **'गहनं** वनदुःखयोः । गह्वरे कलिले चापि' इति हैमः ॥ (४) ॥*॥ कानयति दीपयति स्वरादि 'कनी दीप्तिकान्तिगतिषु' (भ्वा० प० से०) । युच् (उ० २।७८) । ल्युः (३।१।१३४) वा । 'कं जलम् अननं जीवनमस्य' इति वा । **'काननं** तु ब्रह्मास्ये विपिने गृहे' इति हैमः ॥ (५) ॥*॥ वनति । 'वन संभक्तौ' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४)[1] ॥ यत्तु—वन्यते । अच्—इति मुकुटः । तन्न । कर्मणि पचाद्यचोऽसंभवात् । **'वनं** नपुंसकं नीरे निवासालयकानने' ॥ (६) ॥*॥ षट् **'अरण्यस्य'** ॥

**महारण्यमरण्यानी**

**महेति** ॥ महच्च तदरण्यं च । 'सन्महत्–' (२।१।६१) इति समासः ॥ (१) ॥*॥ महदरण्यम् । 'हिमारण्ययोर्महत्त्वे' (वा० ४।१।४९) इति ङीषानुकौ ॥ (२) ॥*॥ द्वे **'महतो वनस्य'** ॥

**गृहारामास्तु निष्कुटाः ॥ १ ॥**

**गृहेति** ॥ गृहस्यारामाः ॥ (१) ॥ कुटाद्गृहान्निष्क्रान्ताः 'निरादयः–' (वा० २।२।१८) इति समासः । 'निष्कुटस्तु गृहोद्याने स्यात्केदारकवाटयोः' ॥ (२) ॥*॥ द्वे **'गृहसमीपोपवनस्य'** ॥

**आरामः स्यादुपवनं कृत्रिमं वनमेव यत् ।**

**आरेति** ॥ आरमन्त्यत्र । 'हलश्च' (३।३।१२१) इति घञ् ॥ (१) ॥*॥ उपगतं वनम् । 'प्रादयो गताद्यर्थे' (वा० २।२।१८) इति समासः ॥ (२) ॥*॥ एवकारादकृत्रिमवनव्युदासः ॥*॥ द्वे **'कृत्रिमवृक्षसमूहस्य'** ॥

**अमात्यगणिकागेहोपवने वृक्षवाटिका ॥ २ ॥**

**अमेति** ॥ वव्यते । 'वट वेष्टने' (भ्वा० प० से) । 'संज्ञायाम्' (३।३।१०९) इति ण्वुल् । 'वुन्' इति मुकुटस्य प्रमादः । टाप् (४।१।४) । 'प्रत्ययस्थात्–' (७।३।४४) इती-

---

१—'अद्रेरित्यस्य संबन्धिमात्रोपलक्षकत्वादन्यत्रापि ।' 'समुद्रोपत्यका हैमी पर्वताधित्यका पुरी' इति भट्टिरिति स्वाम्यादयः—इति मुकुटः ॥ २—'अथ शुचादयो व्रजन्ता द्विसप्ततिः परस्मैभाषाः' इति प्रतिज्ञायां द्विसप्ततिसंख्याकथनानुरोधेन जगुः, 'गुजि अव्यक्ते शब्दे' इत्यत्र कुजिरपि पूर्वमासीदिति प्रतिभाति । कुजिं विना द्विसप्ततिसंख्यानुपपत्तिरस्त्येव ॥ ३—'कुत्वाभावः' इत्युक्त्वा 'न क्वादेः' (७।३।५९) इति हि सूत्रं तेनोपन्यस्तम् । पश्चाल्लेखकादिप्रमादात्तथा पाठो जातः—इति सम्यक् । 'न्यङ्क्वादीनां च' इत्येवं सूत्रस्त्वेन न्युङ्क्वादेः' इत्येवं सूत्रस्यानुपलम्भेन 'कुत्वविधायकत्वात्' इत्युक्तिर्यादृशी । तत्तु धीमद्भिराकलनीयम् ॥

१—गौरादिङीषि (४।१।४१) वनी च । 'स्ववनी संप्रवदस्पिकापि का' इति नैषधकाव्यात्—इति मुकुटः ॥

त्वम्। वृक्षाणां सा ॥ (१) ॥*॥ एकं **'मन्त्रिणो वेश्यायाश्च गृहस्योपवनस्य'** ॥

**पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम्।**

**पुमानिति** ॥ आक्रीडन्त्यत्र। 'क्रीडृ विहारे' (भ्वा० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। 'ज्ञेयमाक्रीडमुद्यानम्' इत्यमरमालायां तु क्लीबमुक्तम् ॥ (१) ॥*॥ उद्यान्त्यत्र। 'या प्रापणे' (अ० प० अ०)। अधिकरणे ल्युट् (३।३।११७)। **'उद्यानं** स्यान्निःसरणे वनभेदे प्रयोजने' (२) ॥*॥ द्वे **'राज्ञः सर्वोपभोग्यवनस्य'** ॥

**स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ॥ ३ ॥**

**स्यादिति** ॥ प्रमदानां वनम्। 'ङ्यापोः—' (६।३।६३) इति ह्रस्वः ॥ (१) ॥*॥ **'यत्र सस्त्रीको राजा क्रीडति तस्य'** एकम् ॥

**वीथ्यालिरावलिः पङ्क्तिः श्रेणी**

**वीति** ॥ विथ्यते। 'विथृ याचने' (भ्वा० आ० से०)। 'इगुपधात्कित्—' (उ० ४।१२०) इतीन्। बाहुलकाद्दीर्घः। 'कृदिकारात्—' (ग० ४।१।४५) इति वा ङीष्। **'वीथी** वर्त्मनि पङ्क्तौ च गृहाङ्गे नाट्यरूपके' इति हैमः ॥ (१) ॥*॥ आलति। 'अल भूषणादौ' (भ्वा० प० से०)। आङि। इन् (उ० ४।११८)। **'आलिः** सख्यावलीसेत्वनर्थेषु विशदाशये' इति हैमः ॥ (२) ॥*॥ आ वलति। 'वल संवरणे' (भ्वा० प० से०)। आङि। इन् (उ० ४।११८) ॥ (३) ॥*॥ पच्यते। 'पचि विस्तारे' (भ्वा० आ० से०)। क्तिच् (३।३।१७४)। **'पङ्क्तिश्छन्दःश्रेण्योः'** इति हैमः ॥ (४) ॥*॥ श्रीयते। 'श्रिञ् सेवायाम्' (भ्वा० उ० से०)। 'वहिश्रि—' (उ० ४।५३) इति निः। **'श्रेण्या**ल्यां कारुसंहतौ' इति हैमः ॥ (५) ॥*॥ पञ्च **'सान्तर्पङ्क्तेः'** ॥

**लेखास्तु राजयः।**

**लेखा इति** ॥ लिख्यते। 'लिख अक्षरविन्यासे' (तु० प० से०)। भिदादौ (३।३।१०४) पाठादङ्गुणौ। **'लेखो** लेख्ये दैवते च **लेखा** राज्यां लिपावपि' इति हैमः ॥*॥ रलयोरेकत्वस्मरणात् **'रेखा'** अपि ॥ (१) ॥*॥ राजति 'राजृ दीप्तौ' (भ्वा० उ० से०)। इन् (उ० ४।११८)। 'वपिवसि—' (उ० ४।१२५) इतीञ् वा। **'राजी** रेखायां पङ्क्तौ च' इति हैमः ॥ (२) ॥*॥ द्वे **'निरन्तरपङ्क्त्यपङ्क्तिसाधारणायाः'** ॥

**वन्या वनसमूहे स्याद्**

**वन्येति** ॥ वनानां समूहः। 'पाशादिभ्यो यः' (४।२।४९)। (**'वन्यं** त्रिषु वनोद्भूते स्त्री वनाम्बुसमूहयोः') ॥ (१) ॥*॥ एकम् **'वनसमूहस्य'** ॥

**अङ्कुरोऽभिनवोद्भिदि ॥ ४ ॥**

**अङ्कुर ति** ॥ अङ्क्यते। 'अकि लक्षणे' (भ्वा० आ० से०)। 'मन्दिवाशिमथि—' (उ० १।३८) इत्युरच्। **'अङ्कुरो** रोम्णि सलिले रुधिरेऽभिनवोद्गमे' इति हैमः ॥*॥ खर्जूरादित्वात् ऊरः 'अङ्कूरश्चाङ्कुरः प्रोक्तः' इति हलायुधः ॥ (१) ॥*॥ उद्भिनत्ति भुवम्। 'भिदिर् विदारणे' (रु० उ० अ०)। 'सत्सूद्विष—' (३।२।६१) इति क्विप्। अभिनवश्चासावुद्भिच्च ॥ (२) ॥*॥ द्वे **'नूतनाङ्कुरस्य'** ॥

**वृक्षो महीरुहः शाखी विटपी पादपस्तरुः।**
**अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः ॥ ५ ॥**

**वृक्ष इति** ॥ वृक्षति। 'वृक्ष वरणे' ( )। पचाद्यच् (३।१।१३४) वृश्च्यते वा। 'ओव्रश्चू छेदने' (तु० प० से०)। सक् (उ० ३।६६) ॥ (१) ॥*॥ मह्यां रोहति 'रुह बीजजन्मनि प्रादुर्भावे च' (भ्वा० प० अ०)।—मूलविभुजादित्वात् (वा० ३।२।५)कः—इति मुकुटः। तन्न। 'इगुपध—' (३।१।१३५) इत्यस्य सत्त्वात् ॥ (२) ॥*॥ शाखास्यास्ति। व्रीह्यादित्वात् (५।२।११६) इनिः। यद्वा अवश्यं शाखति। 'शाखृ व्याप्तौ' (भ्वा० प० से०)। आवश्यके णिनिः (३।३।१७०)। **'शाखी** स्यात्पादपे वेदे तुरुष्काख्यजने पुमान्' ॥ (३) ॥*॥ विटपः शाखाविस्तारोऽस्यास्ति। 'अत इनिः—' (५।२।११५) ॥ (४) ॥*॥ पादैः पिबति। 'पा पाने' (भ्वा० प० अ०)। 'सुपि' (३।२।४) इति कः। **'पादपः** पादपीठेऽद्रौ पादुकायां तु **पादपा'** इति विश्वः ॥ (५) ॥*॥ तरति। तरन्त्यनेन इति वा। 'तॄ प्लवनसंतरणयोः' (भ्वा० प० से०)। 'भृमृशीङ्—' (उ० १।७) इत्युः ॥ (६) ॥*॥ अनसः शकटस्याकं गतिं हन्ति। 'अन्येष्वपि—' (३।२।१०१) इति हन्तेर्डः ॥ (७) ॥*॥ कुटति। 'कुट कौटिल्ये' (तु० प० से०)। पचाद्यच् (३।१।१३४) 'इगुपध—' (३।१।१३५) इति को वा। मुकुटस्तु—'कौति शब्दायते पक्ष्यत्र' इति। 'कणेष्टः' बाहुलकात् अन्येभ्योऽपि टः कुटादित्वात् (१।२।१) ङित्त्वे गुणाभावः। बाहुलकान्नैकादेशः—इति वदन् टवर्गद्वितीयं मन्यते। तत्र 'कौति' इति विगृह्य कुटादित्वोक्तिः प्रामादिकी। आदादिकस्य 'कौति' इति रूपसंभवात्। तौदादिकस्य 'कुवते' इति रूपस्य संभवात् ॥ (८) ॥*॥ सल्यते। 'षल गतौ' (भ्वा० प० से०)। 'अकर्तरि—' (३।३।१४) इति घञ्। मुकुटस्तु—सलति। वायुना चलति। 'ज्वलतिकसन्तेभ्यो णः' (३।१।१४०)—इत्याह। तन्न। दन्त्यादेस्तत्र पाठाभावात्। तालव्योष्मादेस्तत्र पाठात्। 'पुंसि भूरुहमात्रेऽपि **सालो** वरणसर्जयोः' इति दन्त्यादौ र-

१—ह्रस्वाभावोऽपि। 'प्रविष्टः प्रमदावनम्' इति भट्टिः—इति मुकुटः ॥ २—ङीषभावे ह्रस्वान्तापि 'घनवीथिवीथिम्' इति माघः—इति मुकुटः ॥ ३—सेतुष्वनर्थे इति पाठः ॥

१—'पादपो वृक्षपीठयोः' इति हैमः इति वा पाठः ॥

भसः। 'सालः सर्जतरौ वृक्षमात्रप्राकारयोरपि' ॥ (९) ॥*॥ पलाशानि सन्त्यस्य। अत इनिः (५।२।११५)। 'पलाशी वृक्षरक्षसोः' इति विश्वमेदिन्यौ ॥ (१०) ॥*॥ द्रवत्यूर्ध्वम् 'द्रु गतौ' (भ्वा० प० अ०)। मितद्र्वादित्वात् (वा० ३।२।१८०) डुः ॥ (११)॥*॥ 'समुदाये वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते' इति न्यायात् द्रुः शाखाऽस्यास्ति। 'द्युद्रुभ्यां मः' (५।२।१०८)। 'द्रुमस्तु पादपे पारिजाते किंपुरुषेश्वरे' इति हैमः ॥ (१२) ॥*॥ न गच्छति। 'गम्लृ गतौ' (भ्वा० प० अ०)। पचाद्यच् (३।१।१३४) ॥ (१३) ॥*॥ त्रयोदश 'वृक्षस्य' ॥

**वानस्पत्यः फलैः पुष्पात्**

**वानेति** ॥ वनस्य पतिः। 'पारस्करप्रभृतीनि' (६।१।१५७) इति सुट्। वनस्पतौ भवः 'दित्यदित्या–' (४।१।८५) इति ण्यः ॥ (१) ॥*॥ पुष्पाज्जातैः फलैर्हेतुभिः ॥*॥ एकम् 'पुष्पाज्जातफलोपलक्षितवृक्षस्य' ॥

**तैरपुष्पाद्वनस्पतिः।**

**तैरिति** ॥ 'वनस्पतिर्ना द्रुमात्रे विना पुष्पं फलिद्रुमे' ॥ (१) ॥*॥ एकम् 'आम्रादिवृक्षस्य' ॥

**ओषधिः फलपाकान्ता**

**ओषेति** ॥ ओषः प्लोषो दीप्तिर्वा धीयतेऽत्र। 'डुधाञ् धारणपोषणयोः' (जु० उ० अ०)। 'कर्मण्यधिकरणे च' (३।३।९३) इति किः ॥*॥ ('कृदिकारात्' (ग० ४।१।४५) इति ङीषि 'ओषधी' अपि) ॥ (१) ॥*॥ फलपाक एवान्तो यस्याः। रूपभेदात्स्त्रीत्वम् ॥ एकं 'व्रीहियवादेः' ॥

**स्यादवन्ध्यः फलेग्रहिः ॥ ६ ॥**

**स्यादिति** ॥ फलानि गृह्णाति। 'ग्रह उपादाने' (क्र्या० उ० से०) 'फलेग्रहिरात्मंभरिश्च' (३।२।२६) इति साधुः ॥ (२) ॥*॥ द्वे 'फलसमये फलग्राहकस्य' ॥

**वन्ध्योऽफलोऽवकेशी च**

**वन्ध्य इति** ॥ 'बन्धस्त्वबाधौ च बन्धने'। बन्धे साधुः 'तत्र साधुः' (४।४।९८) इति यत्। यत्तु मुकुटः—दिगादित्वात् (४।३।५४) यत्–इत्याह। तन्न। अस्य सूत्रस्य 'तत्र भवः' (४।३।५३) इत्यत्र पाठात्। 'तत्र साधुः' इत्यस्य 'प्राग्घिताद्यत्' (४।४।७५) इत्यधिकारे पाठात् ॥ (१) ॥*॥ न फलान्यस्य ॥ (२) ॥*॥ अवसन्नाः केशा यस्य सोऽवकेशो निष्केशः। सोऽस्ति दृष्टान्तत्वेनास्य। 'अत इनिः' (५।२।११५)। स यथा निष्केशः। एवमयं निष्फलः। अवकं शून्यमीष्टे तच्छीलः। 'सुप्यजातौ–' (३।२।७८) इति 'णिनिः' इति वा ॥ (३) ॥*॥ त्रीणि 'ऋतावपि फलरहितस्य' ॥

**फलवान्फलिनः फली।**

**फलेति** ॥ फलान्यस्य सन्ति। मतुप् (५।२।९५) ॥ (१) ॥*॥ 'फलबर्हाभ्यामिनच्' (वा० ५।२।१२२) ॥ (२) ॥*॥ 'अत इनिः' (५।२।११५) ॥ (३) ॥*॥ त्रीणि 'फलसहितवृक्षस्य' ॥

**प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ॥ ७ ॥**
**फुल्लश्चैते विकसिते**

**प्रफुल्लविति** ॥ फलति। 'ञिफला विशरणे' (भ्वा० प० से०)। 'ञीतः क्तः' (३।२।१८७)। 'आदितश्च' (७।२।१६) इतीडभावः। 'अनुपसर्गात्फुल्लक्षीब–' (८।२।५५) इति तस्य लः ॥ (७) ॥*॥ प्रादिसमासः (वा० २।२।१८)। प्रफुल्लति वा। 'फुल्ल विकसने' (भ्वा० प० से०)। अच् (३।१।१३४) ॥ (१) ॥*॥ 'उत्फुल्लसंफुल्लयोरुपसंख्यानम्' (वा० ८।२।५५)। 'उत्फुल्लं करणे स्त्रीणामुत्ताने च विकस्वरे' ॥ (२) ॥*॥ (३) ॥*॥ व्यावृत्तः कोशः संकोचोऽस्मात्। 'प्रादिभ्यो धातुजस्य–' (वा० २।२।२४) इति समासः ॥*॥ मूर्धन्यान्तो वा ॥ (४) ॥*॥ कचति। 'कच बन्धने' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। विगतः कचोऽस्मात्। 'विकचाः क्षेपणे केतौ ना केशे स्फुटितेऽन्यवत्' ॥ (५) ॥*॥ स्फुटति 'स्फुट विकसने' (तु० प० से०)। 'इगुपध–' (३।१।१३५) इति कः। 'स्फुटो व्यक्तप्रफुल्लयोः। सिते व्याप्ते' इति हैमः ॥ (६) ॥*॥ व्यकासीत्। 'कस गतौ' (भ्वा० प० से०)। 'गत्यर्था–' (३।४।७२) इति क्तः ॥ (८) ॥*॥ अष्टौ 'प्रफुल्लितवृक्षस्य' ॥

**स्युरवन्ध्यादयस्त्रिषु।**

**स्युरिति** ॥ अवन्ध्यादयो विकसितान्तास्त्रिलिङ्ग्यां स्युः ॥

**स्थाणुर्वा ना ध्रुवः शङ्कुः**

**स्थेति** ॥ तिष्ठतीति स्थाणुः। यत्तु सुभूतिः—धेन्वादित्वान्नुः, णत्वं च–इत्याह। तन्न। 'स्थोः णुः' (उ० ३।३७) इति सूत्रस्य सत्त्वात्। धेन्वादिसूत्राभावाच्च। 'वा ना' इति पुंस्त्वम्। रूपभेदात् क्लीबत्वम्। 'स्थाणुरस्त्री' इति वा पाठः। 'स्थाणुः कीले हरे पुमान्। अस्त्री ध्रुवे' इति मेदिनी ॥ (१) ॥*॥ ध्रुवति। 'ध्रुव गतिस्थैर्ययोः' (तु० प० से०)। 'इगुपध–' (३।१।१३५) इति कः। 'ध्रुवो वटे। वसुयोगभिदोः शंभौ शङ्कावुत्तानपादजे। स्थिरे नित्ये निश्चिते च ध्रुवं खेऽजस्रतर्कयोः। ध्रुवा मूर्वाशालिपर्ण्योः स्रुग्भेदे गीतभिद्यपि' इति हैमः ॥ (१) ॥*॥ शङ्कतेऽस्मात्। 'शकि शङ्कायाम् (भ्वा० आ० से०)। 'खरुशङ्कु–' (उ० १।३६)

१—'यत्रौषधयो रजन्याम्' इति कुमारः—इति मुकुटः। 'यत्रान्या ओषधयो म्लायन्ते' इति श्रुतिः ॥ २—ग्रहिर्धारणार्थः विकारार्थश्च। तत्र धारणार्थे वृक्ष एव रूढिः। स्वीकारार्थे तु 'फलेग्रहीन्हंसि वनस्पतीनाम्' इति भट्टिः—इति मुकुटः ॥

१—'विकसितं सितम्' इति कीचकवधयमकाद्न्त्यमध्यः—इति मुकुटः ॥

इति साधुः । 'शङ्कुः पत्रशिराजाले संख्याकीलकशंभुषु । यादोऽस्त्रभेदयोर्मेढ्रे' इति हैमः ॥ (३) ॥*॥ त्रीणि 'शाखापत्ररहिततरोः' ॥

**ह्रस्वशाखाशिफः क्षुपः ॥ ८ ॥**

**ह्रस्वेति** ॥ शाखा च शिफा=मूलं च ते । ह्रस्वे शाखाशिफे यस्य ॥*॥ क्षौति । 'टु क्षु शब्दे' ( अ० प० से० ) । बाहुलकात्पोऽगुणश्च ॥ (१) ॥*॥ एकं 'सूक्ष्मशाखामूलस्य शाखोटकादेः' ॥

**अप्रकाण्डे स्तम्बगुल्मौ**

**अप्रकाण्ड इति** ॥ न प्रकाण्डोऽस्य ॥*॥ तिष्ठति । 'ष्ठा गतिनिवृत्तौ' (भ्वा० प० से०) । 'स्थः स्तोऽम्बजबकौ' (उ० ४।९६ ) । 'स्तम्बो गुल्मे तृणादीनामकाण्डद्रुमगुच्छयोः' ॥ (१) ॥*॥ गुडति । 'गुड रक्षायाम्' ( तु० प० से० ) । बाहुलकान्मन् । डलयोरैक्यम् । 'गुल्मः सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदोः । स्तम्बे, स्त्रियामामलक्यैलावनी वस्त्रवेश्मसु' ॥ (२) ॥*॥ द्वे 'स्कन्धरहितस्य' ॥

**वल्ली तु व्रततिर्लता ।**

**वल्लीति** ॥ वल्लते । 'वल वल्ल संवरणे' ( भ्वा० आ० से० ) । 'सर्वधातुभ्य इन्' (उ० ४।११८) । ('कृदिकारात्–' (ग० ४।१।४५) इति वा ङीष्) ।—पचाद्यच् (३।२।१३४) गौरादित्वात् (४।१।४१) । ङीष्—इति मुकुटोक्तिश्चिन्त्या । 'वल्ली स्यादजमोदायां लतायां कुसुमान्तरे' इति हैमः ॥*॥ ( वेल्ल ( भ्वा० प० से० ) धातोरिनि 'वेल्लिः' इत्यपि । अत एव ) । 'वल्ली तु वेल्लिः सरणौ' इति वाचस्पतिः ॥ (१) ॥*॥ प्रतनोति । 'तनु विस्तारे' ( त० उ० से० ) । 'क्तिच्क्तौ च संज्ञायाम्' ( ३।३।१७४ ) । पृषोदरादित्वात् ( ६।३।१०९ ) पस्य वो वा । 'प्रततिर्व्रततिस्तथा' इति हलायुधः ॥*॥ यद्वा व्रतमिव करोति । व्रतशब्दात् 'तत्करोति–' (वा० ३।१।२६) इति ण्यन्ताद्बाहुलकादतिः । 'व्रततिस्तु[३] प्रतानिन्यां विस्तारेऽपि' इति हैमः ॥ ( २ ) ॥*॥ लतति । 'लतिः' सौत्रो धातुर्वेष्टनार्थः । पचाद्यच् ( ३।१।१३४ ) । 'लता ज्योतिष्मती दूर्वा शाखावल्लीप्रियङ्गुषु । स्पृक्कामाधव्योः कस्तूर्याम्' इति हैमः ॥ (३) ॥*॥ त्रीणि 'लतामात्रस्य' ॥

**लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि ॥ ९ ॥**

**लतेति** ॥ शाखापत्रसंचयः प्रतानः । सोऽस्त्यस्याः । सा प्रतानिनी । ईदृशी लतावीरुदादिशब्दत्रयवाच्या ॥*॥ विरुणद्धि । 'रुधिर् आवरणे' ( रु० उ० अ० ) । क्विप् (३।२।१७८) । 'अन्येषामपि–' (६।३।१३७) इति दीर्घः । —'नहिवृति–' ( ६।३।११६ ) इति दीर्घः । न्यङ्क्वादित्वात् ( ७।३।५३ ) । कुत्वम्—इति स्वाम्युक्तिश्चिन्त्या । रुधेस्तत्रादर्शनात् कुत्वादर्शनाच्च । 'वीरुल्लताविटपयोः स्त्रियाम्' ॥ (१) ॥*॥ गुल्मः प्रतानोऽस्त्यस्याः । 'अत इनि–' (५।१।११५) वा ॥ (२) ॥*॥ वलति । 'वल संवरणे' ( भ्वा० आ० से० ) । 'विटपविष्टपविशिपोलपाः' ( उ० ३।१४५ ) इति 'वलेः संप्रसारणं कपश्च' ॥—उल्यते । उलः सौत्र आवरणार्थो दाहार्थो वा । 'कपश्चाक्रवर्मणस्य' इति कपो वा । 'विटपादयः' इत्यपः–इति स्वामिमुकुटौ । तन्न । तादृशसूत्राभावात् । 'उलपस्तु गुल्मिनीतृणभेदयोः' इति हैमः ॥ (३) ॥*॥ इति त्रीणि 'शाखादिभिर्विस्तृतवल्ल्याः' ॥

**नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ।**

**नगेति** ॥ नगस्य तरोः ॥*॥ आरोहणम् । भावे घञ् ( ३।३।१८ ) दैर्घ्यम् । 'आरोहो दैर्घ्य उच्छ्रये । आरोहणे गजारोहे स्त्रीकट्यां मानभिद्यपि[२]' इति हैमः ॥ आदिना-गिरिदेवालयादिग्रहः ॥*॥ उच्छ्रयणम् । 'श्रिञ् सेवायाम्' ( भ्वा० उ० से० ) 'उदि श्रयति–' ( ३।३।४९ ) इति घञ् ॥ (१) ॥*॥ उत्सेधनम् 'षिध गत्याम्' ( भ्वा० प० से० ) । 'भावे' ( ३।३।१८ ) इति घञ् । 'उत्सेधस्तूच्छ्रये न स्त्री क्लीबं संनहनेऽपि च' ॥ ( २ ) ॥*॥ श्रिञो बाहुलकात् 'एरच्' ( ३।३।५६ ) अपि ॥ (३) ॥*॥ त्रीणि 'वृक्षादिदैर्घ्यस्य' ॥

**अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः ॥ १० ॥**

**अस्त्रीति** ॥ प्रकाण्ड्यते । 'कड मेदने' चुरादिः 'एरच्' (३।३।५६) । पृषोदरादिः (६।३।१०९) काम्यते । 'कमु कान्तौ' (भ्वा० आ० से० ) । णिङ् ( ३।१।३० ) 'वरण्डादयश्च' ( ) इति डो वा । 'प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरोः' इति विश्वः ॥ ( १ ) ॥*॥ स्कन्द्यते । 'स्कन्दिर् गतिशोषणयोः' ( भ्वा० प० अ० ) । कर्मणि घञ् ( ३।३।१९) पृषोदरादिः (६।३।१०९) यत्तु मुकुटेन—उणादौ स्कन्दिर् धातौ 'कन्देरच् स्वाङ्गे' ( उ० ४। २०७) इत्यच् प्रत्ययो धश्चान्तादेशः–इत्युक्तम् । तन्न । त-

१—आमलकी एला च वृक्षौ । वनी ह्रस्वं वनम्—इत्यनेकार्थकैरवाकरकौमुदी ॥ अत्र तु 'वल्ली' इति पाठ आसीत् ॥ २—वल्लिर्ह्रस्वान्ता च 'हिरण्मयोर्वीरुहवल्लितन्तुभिः' इति माघः—इति मुकुटः ॥ 'वल्लीवल्कपिनद्धधूसरशिराः' इति दमयन्त्यां दीर्घान्ता ॥ ३—'कृदिकारात्' इति ङीषि दीर्घान्तापि 'धराधरेन्द्रं व्रततीततीरिव' इति माघः–इति मुकुटः ॥

१—'विरोचते वीरुत्' । इति पाठस्य स्वामिग्रन्थे उपलम्भाद्दीर्घोपपत्तेः ॥ न्यङ्क्वादिगणे 'वीरुत्' इति पाठस्योपलम्भेन स्वामिग्रन्थे च न्यङ्क्वादित्वाद्धत्वम्' इति पाठस्यैवोपलम्भेन 'वकारस्य धत्वं निपात्यते' इत्यर्थस्य स्फुटं प्रतीयमानत्वेपि खण्डनोक्तिः प्रतारणपरैव ॥ २—'आरोहणे गजारोहे' इति हैमे ॥

त्रासुनो विधानात् । अचोऽविधानात् । '**स्कन्धः** स्यान्नृपतावंसे संपरायसमूहयोः । काये तरुप्रकाण्डे च आत्रादौ छन्दसो भिदि' इति धान्तेषु मेदिनी ॥ ( २ ) ॥*॥ द्वे '**मूलमारभ्य शाखावधिभागस्य**' ॥

**समे शाखालते**

**समे इति** ॥ शाखति । 'शाखृ व्याप्तौ' ( भ्वा० प० से० ) पचाद्यच् ( ३।१।१३४ ) । यत्तु—शाख्यते वृक्षोऽनया । 'गुरोश्च' ( ३।३।१०३ ) इत्यः—इति मुकुटः । तन्न । 'अजब्भ्याम्–' ( वा० ३।३।१२६ ) इति वार्तिकविरोधात् । '**शाखा** द्रुमांशे वेदांशे भुजे पक्षान्तरेऽन्तिके' इति हैमः । ( १ ) ॥*॥ द्वे '**शाखायाः**' ॥

**स्कन्धशाखाशाले**

**स्कन्धेति** ॥ स्कन्धजा शाखा ॥ ( १ ) ॥*॥ शलति । 'शल चलने' ( भ्वा० प० से० ) 'ज्वलिति–' ( ३।१।१४० ) इति णः । '**शाला** तरुस्कन्धशाखा **शाला** भवनमिष्यते' इति शाश्वतः ॥ ( २ ) ॥*॥ द्वे '**स्कन्धात्प्रथमोत्पन्नशाशाखायाः**' ॥

**शिफाजटे ।**

**शिफेति** ॥ शेते । 'शीङ् स्वप्ने' ( अ० आ० से० ) । बाहुलकात् फक् ह्रस्वश्च । '**शिफा** जटायां सरिति मांसिकायां च मातरि' ॥ ( १ ) ॥*॥ जटति । 'जट संघाते' ( भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) ॥ ( २ ) ॥*॥ द्वे '**तरुमूलस्य जटाप्रस्य**' ॥

**शाखाशिफावरोहः स्यात्**

**शाखेति** ॥ वटादेः शाखाया अवलम्बिनी शिफा ॥*॥ अवरोहति लम्बते । 'रुह बीजजन्मनि प्रादुर्भावे च' ( भ्वा० प० अ० ) । पचाद्यच् ( ३।१।१३४ ) 'अवरोहोऽवतरणेऽप्यारोहे च लतोद्गमे' ॥ ( १ ) ॥*॥ एकम् '**शाखामूलस्य**' ॥

**मूलाच्चाग्रं गता लता ॥११॥**

**मूलादिति** ॥ मूलादूर्ध्वं गता शिफा लता यत् । मुकुटस्तु 'प्रसङ्गादवरोहस्यार्थान्तरमाह । तरुमूलात्प्रभृति वृक्षाग्रपर्यन्तं गता गुडूच्यादिलताप्यवरोहः' इत्याह ॥ ( १ ) ॥*॥ एकम् '**वृक्षाग्रगामिन्या लतायाः**' ॥

**शिरोऽग्रं शिखरं वा ना**

**शिर इति** ॥ श्रियते । 'श्रीञ् सेवायाम्' ( भ्वा०उ०से० ) । 'श्रयतेः स्वाङ्गे शिरः किच्च' ( उ० ४।१९४ ) इत्यसुन् धातोः शिरादेशश्च । यत्तु—शेते स्वाङ्गोपरि तिष्ठति । 'शीङः किच्च' इत्यसुन् शिरादेशश्च—इति मुकुटः । तन्न । उज्ज्वलदत्तादिधृक्तसूत्रादर्शनात् । '**शिरः** प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च' ॥ ( १ ) ॥*॥ अगति । 'अग कुटिलायां गतौ' ( भ्वा० प० से० ) । 'ऋज्रेन्द्राग्रवज्र–' ( उ० २।२८ ) इति साधु । '**अग्रं** पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत्' ॥ ( २ ) ॥*॥ शिखां राति । 'रा दाने' ( अ० प० अ० ) कः ( ३।२।३ ) । 'शिखरोऽस्त्री द्रुमाग्रे चाद्रिश्रृङ्गपुलकाग्रयोः' ॥ ( ३ ) ॥*॥ त्रीणि '**शिखरस्य**' ॥

**मूलं बुध्नोऽङ्घ्रिनामकः ।**

**मूलमिति** ॥ मूलति । 'मूल प्रतिष्ठायाम्' ( भ्वा० प० से० ) । 'इगुपध–' ( ३।१।१३५ ) इति कः । '**मूलं** शफाद्ययोः । भे निकुञ्जेऽन्तिके वा ना' ॥ ( १ ) ॥*॥ बध्नाति बध्यते वा । 'बन्ध बन्धने' ( क्र्या० प० अ० ) । 'बन्धेर्ब्रधिबुधी च' ( उ० ३।५ ) इति नक् । 'बुध्नो ना मूलरुद्रयोः' ॥ ( २ ) ॥*॥ अङ्घ्रिर्नाम नाम यस्य । 'अङ्घ्रिर्ना पादमूलयोः' ॥ ( ३ ) ॥*॥ त्रीणि '**मूलमात्रस्य**' ॥

**सारो मज्जा नरि**

**सारविति** ॥ सरति कालान्तरम् । 'सृ गतौ' ( भ्वा० प० अ० ) । 'सृ स्थिरे' ( ३।३।१७ ) इति घञ् । '**सारो** बले मज्जनि च स्थिरांशे, न्याय्ये च नीरे च धने च सारम् , वरेऽन्यवत् **सारमुदाहरन्ति**' ॥ ( १ ) ॥*॥ मज्जति । 'टुमस्जो शुद्धौ' ( तु० प० अ० ) । 'श्वन्नुक्षन्–' ( उ० १।१५९ ) इति साधुः ॥*॥ **समौ** समानलिङ्गौ । '**नरि**' इति वा पाठः । पुंसीत्यर्थः ॥*॥ 'लज्जावद्राजवन्मज्जा मांससारास्थिसारयोः' इति भागुरेराबन्तोऽपि । 'मज्जोक्ता मज्जया सह' इति द्विरूपकोषाच्च ॥ ( २ ) ॥*॥ द्वे '**वृक्षादेः स्थिरांशस्य**' ॥

**त्वक् स्त्री वल्कं वल्कलमस्त्रियाम् ॥ १२ ॥**

**त्वगिति** ॥ त्वचति । 'त्वच संवरणे' ( तु० प० से० ) । क्विप् ( ३।२।१८० ) यद्वा तनोति, तन्यते वा । 'तनु विस्तारे' ( त० उ० से० ) । 'तनोतेरनश्च वः' ( उ० २।६३ ) चाचिक् । ('**त्वक्** स्त्री चर्मणि वल्के च गुडत्वचि विशेषतः') ॥ ( १ ) ॥*॥ वलति । 'वल संवरणे' ( भ्वा० आ० से० ) । 'शुकवल्कोल्काः' ( उ० ३।४२ ) इति कन् । यद्वा 'वल्क परिभाषणे' ( चु० प० से० ) । वल्कयति । पचाद्यच् ( ३।१।१३४ ) । ('**वल्कं** वल्कलशल्कयोः') ॥ ( २ ) ॥*॥ वलते । बाहुलकात्कलः । वल्कं लाति, इति तु स्वामी । यत्तु—वलतेः कलच्—इति मुकुटः । तन्न । उक्तसूत्रादर्शनात् ॥ ( ३ ) ॥*॥ त्रीणि '**त्वचः**' ॥

**काष्ठं दारु**

**काष्ठमिति** ॥ काशते । 'काशृ दीप्तौ' ( भ्वा०आ०से० ) । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' ( उ० २।२ ) । 'तितुत्र–' ( ७।२।९ ) इति नेट् । '**काष्ठं** दारुणि **काष्ठा** च प्रकर्षे स्थानमात्रके । दिशि दारुहरिद्रायां कालमानप्रभिद्यपि' इति हैमः ॥ ( १ ) ॥*॥ दीर्यते । 'दॄ विदारणे' ( क्र्या० प० से० ) । 'दॄसनिजनि' ( उ० १।३ ) इति ञुण् । 'पुंनपुंसकयो**र्दारुः**' इति

त्रिकाण्डशेषः । 'दारु स्यात्पित्तले काष्ठे देवदारौ नपुंसकम्' ॥ ( २ ) ॥*॥ द्वे 'काष्ठमात्रस्य' ॥

**इन्धनं त्वेध इध्ममेधः समित् स्त्रियाम् ।**

**इन्धेति** ॥ इन्धेऽग्निरनेन । 'ञि इन्धी दीप्तौ' ( रु० आ० से० ) । 'करणा–' ( ३।३।११७ ) इति ल्युट् ॥ ( १ ) ॥*॥ एधतेऽनेन । असुन् (उ० ४।१८९) ॥ यत्तु—बाहुलकान्नलोपो गुणश्च—इति मुकुटः । तन्न । एधतेरुभयासंभवात् ॥ ( २ ) ॥*॥ इध्यतेऽनेन । 'ञि इन्धी दीप्तौ' ( रु० आ० से० ) । 'इषियुधीन्धि–' ( उ० १।१४५ ) इति मक् । 'अनिदिताम्–' ( ६।४।२४ ) इति नलोपः ॥ (३) ॥*॥ एधेः 'हलश्च' ( ३।३।१२१ ) इति करणे घञ् । 'ञि इन्धी' ( रु० आ० से० ) । 'अवेदैधौध–' ( ६।४।२९ ) इति निपातो वा । एधः पुंस्येधम् ॥ ( ४ ) ॥*॥ समिध्यतेऽनया । संपदादिः ( वा० ३।३।१०८ ) ॥ (५) ॥*॥ 'त्रीण्यग्निसंदीपनतृणकाष्ठादेः' ॥ द्वे 'यागादौ हूयमानस्य काष्ठस्य' ॥ पञ्चापि पर्याया इति स्वामी ॥

**निष्कुहः कोटरं वा ना**

**नीति** ॥ निश्चयेन कुहयते । 'कुह विस्मापने' ( चु० आ० से० ) । पचाद्यच् ( ३।१।१३४ )—निश्चयेन कुहयति । 'कुह विस्मापने' । 'इगुपध–' (३।१।१३५) इति कः—इति मुकुटः । तन्न । कुहेश्चुरादावदन्तादात्मनेपदित्वात् ॥ ( १ ) ॥*॥ कुटनं कोटः । 'कुट कौटिल्ये' ( तु० प० से० ) । भावे घञ् ( ३।३।१८ ) । कोटं राति । 'रा दाने' ( अ० प० अ० ) । 'आतोऽनुप–' ( ३।२।३ ) इति कः ॥ (२) ॥*॥ द्वे 'वृक्षादिरन्ध्रस्य' ॥

**वल्लिर्मञ्जरिः स्त्रियौ ॥ १३ ॥**

**वल्लेति** ॥ वल्लते । 'वल्ल संवरणे' ( भ्वा० आ० से० ) । क्विप् (३।२।१८०) । ऋच्छति । 'ऋ गतौ' (भ्वा०प०अ०) । 'अच इः' ( उ० ४।१३९ ) । वल् चासावरिश्च । यद्वा वल्लेः संपदादित्वात् ( वा० ३।३।१०८ ) क्विप् । वल्लमृच्छति । 'अच इः' ( उ० ४।१३९ ) ॥ (१) ॥*॥ मृजुत्वमृच्छति 'अच इः' (उ० ४।१३९) । शकन्ध्वादिः (वा० ६।१।९४) ॥ (२) ॥*॥ द्वे 'तुलस्यादेरभिनवोद्भिदि' ॥

**पत्त्रं पलाशं छदनं दलं पर्णं छदः पुमान् ।**

**पत्त्रमिति** ॥ पतति । 'पत्लृ गतौ' ( भ्वा० प० से० ) । ष्ट्रन् ( उ० ४।१५९ ) । 'पत्त्रं तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः' ॥ ( १ ) ॥*॥ 'पलमुन्मानमांसयोः' । पलं मांसमश्नाति । 'अश भोजने' ( क्र्या० प० से० ) । कर्मण्यण् ( ३।२।१ ) । मुकुटस्तु—'पल गतौ' ( भ्वा० प० से० ) 'घञर्थे कः' । ( ३।३।५८ ) । पलति रक्षति जलादेः । 'पाल रक्षणे' पचादिः ( ३।१।१३४ ) । पलं चलनमश्नुते व्याप्नोति—इत्याह । तन्न । 'घञर्थे कः' इति न । 'स्थास्नापाव्यधिहनियुध्यर्थम्' इति परिगणनात् । 'पाल रक्षणे' इति धातोरसत्त्वात् । पचाद्यजन्तस्य 'पलं चलनम्' इति वाक्यासंभवात् । 'पलाशं छदने मतम् । शती किंशुकरक्षःसु पुंसि स्याद्धरिते त्रिषु' इति मेदिनी । 'पलाशः किंशुकेऽस्रपे । हरिते, पलाशं पत्रे' इति हैमः ॥ (२) ॥*॥ छद्यतेऽनेन । 'छद अपवारणे' ( चु० उ० से० ) । 'आधृषाद्वा' ( ग० ३।१।२५ ) इति णिजभावे पक्षे करणे ल्युट् ( ३।३।११७ ) । 'छदनं च दले पक्षे पिधाने' ॥ (३) ॥*॥ दलति । 'दल विदारणे' ( चु० उ० से० ) । पचाद्यच् ( ३।१।१३४ ) । 'दलमुत्सेधखण्डयोः । शस्त्रीछदेऽप्यद्रव्ये पत्रे' ॥ ( ४ ) ॥*॥ पिपर्ति । 'पॄ पालनपूरणयोः' ( जु० प० से० ) । 'कॄपॄविषिधाभ्यो नः' । यद्वा पृणति । 'पृण प्रीणने' (तु० प० से०) पचाद्यच् (३।१।१३४) । यद्वा पर्णयति । 'पर्ण हरितभावे' ( चु० उ० से० ) पचाद्यच् ( ३।१।१३४ ) यत्तु मुकुटः—पिपर्ति प्रीणयति । 'पॄ प्रीणने' । पचाद्यचि ( ३।१।१३४ ) वा पर्णम् इत्याह । तन्न । असंभवात् । 'पर्णस्त्रिपर्णे पर्णं तु पत्रे' इति हैमः ॥ (५) ॥*॥ छाद्यतेऽनेन । णिजभावे 'पुंसि संज्ञायाम्' ( ३।३।११९ ) इति घः । णिजन्तस्यापि छाद्यतेऽनेन । 'छादेर्घे–' ( ६।४।९६ ) इति ह्रस्वः । 'छदः पलाशे गरुति ग्रन्थिपर्णतमालयोः' । 'पुमान्' इति विशेषणं सान्तक्लीबभ्रमनिरासार्थम् ॥ (६)॥*॥ 'षट् पत्रमात्रस्य' ॥

**पल्लवोऽस्त्री किसलयम् ।**

**पल्लव इति** ॥ पल्यते । संपदादिः ( वा० ३।३।१०८ ) । लूयते । 'ऋदोरप्' ( ३।३।५७ ) । पल् चासौ लवश्च । पल्यां लूयते वा । 'ऋदोरप्' ( ३।३।५७ ) । पादवाचकः पच्छब्दोऽस्ति 'तोर्लि' ( ८।४।६० ) 'पल्लवः किसले बले । विटपे विस्तरेऽलक्तरागे शृङ्गारषिङ्गयोः' । व्याडिस्तु–'पुंसि क्लीबे च पल्लवः' ॥ ( १ ) ॥*॥ किंचित्सलति । 'षल गतौ' ( भ्वा०

१—'इन्धेर्बाहुलकान्नलोपः, गुणः' इत्येवंपाठस्य मुकुटपुस्तकेषु दर्शनेन सर्वसंगत्या प्रतारणपरमेवैतत् ॥ २—'एधान् हुताशनवतः' इति कालिदासः—इति मुकुटः ॥ ३—ङीपि दीर्घान्ते अपि । 'व्यवृणुत वेष्ठितबाहुवल्लरीका' इति माघः । 'नववकुलमञ्जरीसनाथकरम्' इति काव्यप्रकाशे—इति मुकुटः ॥

१ पत्रं तकारद्वयवत् । 'विपत्त्राः साधवो न तरवः' इति दमयन्तीश्लेषात् ॥ २ पलाशं तालव्यान्तम् 'नवपलाशपलाशवनं पुरः' इति माघयमकात्—इति मुकुटः ॥ ३—पतादृशसूत्रं तु नोपलभ्यते । किं तु 'भापूवस्यज्यतिभ्यो नः' ( उ० ३।६ ) इत्येवं सूत्रमुज्ज्वलदत्तादिषूपलभ्यते ॥ ४—लकारद्वयवान् । 'दृश्यन्ते न तु लोकस्य कदापि च विपल्लवाः' इति दमयन्तीयमकात् ॥ ५—दन्त्यसकारवान् 'किसलयैः सलयैरिव' इति रघुयमकात्—इति मुकुटः ॥

प० से० )। बाहुलकात् कयन् प्रत्ययः । पृषोदरादिः (६।३।१०९) ॥ (२) ॥*॥ द्वे **'नवपत्रस्य'** ॥

**विस्तारो विटपोऽस्त्रियाम् ॥ १४ ॥**

**विस्तेति** ॥ विस्तरणम् । 'स्तृञ् आच्छादने' ( स्वा० उ० अ० )। 'प्रथने वावशब्दे' (३।३।३३) इति भावे घञ् । **'विस्तारस्ततौ** विटपे' ॥ (१) ॥*॥ विटान् पाति । 'पा रक्षणे' ( अ० प० अ० )। 'आतोऽनुप–' (३।२।३) इति कः । यद्वा विटानां पानम् । 'पा पाने' ( भ्वा० प० अ० )। 'घञर्थे कः' (वा० ३।३।५८)। यद्वा विटति, विट्यते वा । 'विट आक्रोशे' ( भ्वा० प० से० )। 'विटपविष्टप–' (उ० ३।१४५) इति कपन् । यत्तु—वट्यते वेष्ट्यतेऽनेन 'वट वेष्टने' ( भ्वा० प० से० )। 'विटपादयश्च' इति सूत्रमुपन्यस्तं मुकुटेन । तन्न । एतादृशसूत्रादर्शनात् । **'विटपो** न स्त्रियां स्तम्बशाखाविस्तारपल्लवे । विटाधिपे ना' ॥ (२) ॥*॥ द्वे **'शाखादिविस्तारस्य'** । केचित्तु—उक्तमेदिनीकोषादेव पल्लवादिचतुष्टयमेकार्थमाहुः । 'शाखायां पल्लवे स्तम्बे विस्तारे विटपोऽस्त्रियाम्' इति रभसाच्च । 'स्कन्धादूर्ध्वं तरोः शाखा कटप्रो[१] विटपो मतः' इति कात्याच्च ॥

**वृक्षादीनां फलं सस्यम्**

**वृक्षादीति** ॥ आदिना लतागुल्मादिग्रहः । केचित्तु 'वृक्षादीनाम्' इति पूर्वेणापि संबध्नन्ति । फलति । 'फल निष्पत्तौ' ( भ्वा० प० से० )। पचाद्यच् (३।१।१३४)। फलं निष्पन्नं सस्यशब्दवाच्यम् । **'फलं** हेतुकृते जातीफले फलकसस्ययोः । ( त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः )' ॥ ॥*॥ सस्ति । 'शस षस्ति स्वप्ने' ( अ० प० से० ) 'माछाससिभ्यो यः' (उ० ४।१०९) ॥*॥ तालव्यादिपाठे तु 'शसु हिंसायाम्' ( भ्वा० प० से० )। शस्यते । 'तकिशसिचति–' (वा० ३।१।९७) इति यत् ।—'क्यपि' इति मुकुटोक्तिश्चिन्त्या । 'अचो यत्' (३।१।९७) इत्यत्र हरीतक्यादीनामुपसंख्यानात् । षसेर्द्विदन्त्यस्य 'तकि–' (वा० ३।१।९७) इत्यत्राग्रहणाच्च ॥ (२) ॥*॥ द्वे **'फलस्य'** ॥

**वृन्तं प्रसवबन्धनम् ।**

**वृन्तमिति** ॥ वृणोति । 'वृञ् वरणे' ( स्वा० उ० से० )। बाहुलकात् 'अञ्जिघृसि–' (उ० ३।८९) इति क्तः, नुम् च । मुकुटस्तु 'वृणोतेर्नुक्च' इति सूत्रं कल्पितवान् ।—बाहुल्याच्च णत्वम् इति चिन्त्यम् । अनुस्वारं प्रति णत्वस्य (णत्वं प्रति परसवर्णस्य) असिद्धत्वात् । **'वृन्तं** प्रसवबन्धे च घटीधाराकुचाग्रयोः' ॥ (१) ॥*॥ प्रसूयते । 'षु प्रसवे' ( भ्वा० प० अ० )। 'ऋदोरप्' (३।३।५७) बध्यतेऽनेन । 'बन्ध बन्धने' ( क्र्या० प० से० ) करणे ल्युट् (३।३।११७)। प्रसवस्य पुष्पफलपत्रस्य बन्धनम् ॥ (५) ॥*॥ द्वे **'पुष्पादिमूलाधारवृन्तस्य'** ॥

**आमे फले शलाटुः स्यात्**

**आम इति** ॥ शलति 'शल चलनसंवरणयोः' ( भ्वा० प० से० )। पचाद्यच् (३।१।१३४) अटति । 'अट गतौ' ( भ्वा० प० से० ) मृगय्वादित्वात् (उ० १।३७) कुः । शलश्चासावटुश्च । तालव्यादिः । 'शटीशटितं शलाटुः' इत्यूष्मभेदात् ॥ (१) ॥*॥ एकम् **'अपक्वफलस्य'** ॥

**शुष्के वानम्**

**शुष्क इति** ॥ 'फले' इत्येव ॥ वायति स्म । 'पै ओवै शोषणे' ( भ्वा० प० अ० )। 'गत्यर्थाकर्मक–' (३।४।७२) इति कर्तरि क्तः । 'ओदितश्च' (८।२।४५) इति णत्वम् । वन्यते । 'वनु याचने' ( त० आ० से० ) घञ् (३।३।१८) वा **'वानं** शुष्कफले शुष्के सीवने गमने कटे । जलसंस्रुतवातोर्मिसुरङ्गासौरभेषु च' इति हैमः ॥ (१) ॥*॥ एकम् **'शुष्कफलस्य'** ॥

**उभे त्रिषु ॥ १५ ॥**

**उभे इति** ॥ उभे शलाटुवाने त्रिषु ॥ स्त्रियां 'वा ना' ॥*॥

**क्षारको जालकं क्लीबे**

**क्षारक इति** ॥ क्षरति । 'क्षर संचलने' ( भ्वा० प० से० ) ण्वुल् (३।१।१३३)। **'क्षारको** रसे । कोरके पक्ष्यादिपाशे' इति हैमः । **'क्षारकः** पक्षिमत्स्यादिपिटके जालकेऽपि च' ॥ (१) ॥*॥ जालमिव । 'इवे प्रति–' (५।३।९६) इति कन् । **'जालकं** कोरके दम्भे कुलायानाययोरपि । न पुंसि मोचनफले स्त्रियां तु वसनान्तरे । गिरिसारजलौकायामपि स्याद्विधवास्त्रियाम् । भटानामश्मरञ्चिताङ्गरक्षिण्यां च **जालिका'** ॥ (२) ॥*॥ द्वे **'नवकलिकावृन्दस्य'** ॥

**कलिका कोरकः पुमान् ।**

**कलिकेति** ॥ कलयति 'कल गतौ संख्याने च' (चुरादिः)। 'अच इः' (उ० ४।१३९)। स्वार्थे कन् (५।३।७५) ॥ (१) ॥*॥ कुर्यते । 'कुर शब्दे' ( तु० प० से० ) 'कृञादिभ्यः संज्ञायाम्' (उ० ५।३५) इति वुन् । 'कोरकोऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः' ॥ (२) ॥*॥ द्वे **'अविकसितकलिकायाः'** ॥

**स्याद्गुत्सकस्तु स्तबकः**

**स्यादिति** ॥ गुध्यते 'गुध परिवेष्टने' ( दि० प० से० )। 'उन्दिगुधिकुषिभ्यश्च' (उ० ३।६८) इति सः कित् । 'स्तबके

---

१—कटपो इति पाठः ॥ २—सस्यं दन्त्यादि 'ग्राम्यकविकथाबन्ध इव नारसस्यमनोहर आर्यावर्तः' इति दमयन्तीश्लेषात् ॥

१—पुंसि प्रचुरप्रयोगदर्शनादुक्तम् । न तु नियमार्थम् । क्लीबलिङ्गोऽपि । 'कोरकोऽस्त्री कुड्मलेऽपि' इत्यादिमेदिन्यादिदर्शनात् । अत एव 'समुपहरन् विचकार कोरकाणि' इति माघः—इति मुकुटः ।

हारभेदे च **गुत्सः** स्तम्बेऽपि कीर्तितः' इति दन्त्यान्तेषु रुद्रः ॥*॥ श्रीभोजस्तु 'शस्यादिभ्यश्छक्' इत्याह । स्वार्थे कन् (५।३।७५) । 'पुष्पादिस्तबके **गुच्छो** मुक्ताहारकलापयोः' इति चवर्गान्ते रन्तिदेवः ॥ (१) ॥*॥ स्तूयते । 'ष्टुञ् स्तुतौ' ( अ० प० अ० ) । 'कृञादिभ्यः' (उ० ५।३५) इति वुन् । यद्वा तिष्ठति । 'स्थः स्तोऽम्बजबकौ' (उ० ४।९६) ॥ (२) ॥*॥ द्वे **'विकासोन्मुखकलिकायाः'** इति मुकुटः ॥ कलिकादिकदम्बस्येत्यन्ये ॥

**कुड्मलो मुकुलोऽस्त्रियाम् ॥ १६ ॥**

**कुड्मल इति** ॥ कुट्यते, कुटति, वा । 'कुट छेदने' ( ) 'कौटिल्ये' ( तु० प० से० ) वा । 'कुटिकशिभ्यां क्मलन्' (उ० १।१०९) इति क्मलन्चि ॥*॥ बाहुलकात् 'कुडेः' ( तु० प० से० ) अपि ( क्मनि **'कुड्मलः'** ) । ( **'कुड्मलो** मुकुले पुंसि न द्वयोर्नरकान्तरे' ) ॥ (१) ॥*॥ मुञ्चति कलिकात्वम् । 'मुच्लृ मोक्षणे' (तु० उ० अ० ) । बाहुलकादुलक् ॥—'मुचेरलक् कत्वमुत्वं चातः' इति स्वामिमुकुटौ । तन्न । तादृशसूत्राभावात् ॥ (२) ॥*॥ **'ईषद्विकासोन्मुखकलिकायाः'** द्वे ॥

**स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्[१] ।**

**स्त्रिय इति** ॥ सुष्ठु मन्यन्ते आभिः । 'मन ज्ञाने' ( दि० प० से० ) । असुन् (उ० ४।१८९) । मुकुटस्तु—'सुप्रीतं मनो आभिः' इति विगृह्य 'प्रादिसमासः' इत्याह । तन्न । अन्यपदार्थत्वालाभात् । 'भूम्नि स्त्रियां सुमनसः' इति रत्नकोषः । **'सुमनाः** पुष्पमालत्योः स्त्रियां ना धीरदेवयोः' इति मेदिन्यादेरेकत्वमपि । 'पुष्पं सुमनाः कुसुमम्' इति नाममाला ॥ (१) ॥*॥ पुष्प्यति । 'पुष्प विकसने' ( दि० प० से० ) । पचाद्यच् (३।१।१३४) । **'पुष्पं** विकास आर्तवे । धनदस्य विमाने च कुसुमे नेत्ररुज्यपि' इति हैमः ॥ (२) ॥*॥ प्रसूयते स्म । 'षूङ् प्राणिप्रसवे' ( दि० आ० से० ) । 'स्वादय ओदितः' (ग० ३।३।१) । 'ओदितश्च' (८।२।४५) इति निष्ठानत्वम् । **'प्रसूनं** तु प्रसूते फलपुष्पयोः' इति हैमः ॥ (३) ॥*॥ कुस्यति । 'कुस संश्लेषणे' ( दि० प० से० ) । 'कुसेरुम्भोमेदेताः' (उ० ४।१०६) इत्युमः । संज्ञापूर्वकत्वान्न गुणः । **'कुसुमं** स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः' ॥ (४) ॥*॥ 'सर्वसाधुसमानेषु **समं** स्यादभिधेयवत्' (इति मेदिनी) ॥*॥ चत्वारि **'पुष्पसामान्यस्य'** ॥

**मकरन्दः पुष्परसः**

**मकरन्द इति** ॥ मकरमपि द्यति । कामजनकत्वात् । 'दो अवखण्डने' ( दि० प० अ० ) । 'आतोऽनुप–' (३।२।३) इति कः । पृषोदरादिः (६।३।१०९) । यद्वा मकरमप्यन्दति । 'अदि बन्धने' ( भ्वा० प० से० ) । 'कर्मण्यण्' (३।२।१) । शकन्ध्वादिः (वा० ६।१।९४) । यत्तु–'गतिकारकोपपदानाम्–' (प० २।२।१९) इत्युक्तेः सुबुत्पत्तेः प्राक् समासे प्रध्ययनवत् पररूपत्वम्—इति मुकुटः । तन्न । उत्तरदले विभक्त्यनुत्पत्तावपि पूर्वदले विभक्तिसत्त्वात् । अन्यथा 'राजदर्शी' 'चर्मकारः' इत्यादौ नलोपो न स्यात् । दृष्टान्तोऽप्यसंगतः । 'प्राध्ययनम्' इत्यस्यैवेष्टत्वात् ॥ (१) ॥*॥ पुष्पस्य रसः ॥ (२) ॥*॥ द्वे **पुष्पमधोः'** ॥

**परागः सुमनोरजः ॥ १७ ॥**

**पराग इति** ॥ परा गच्छति । 'गम्लृ गतौ' ( भ्वा० प० अ० ) 'अन्येष्वपि–' (वा० ३।२।४८) इति डः । 'परागः सुमनोरेणौ[१] धूलीस्नानीययोरपि । गिरिप्रभेदे विख्याताबुपरागे च चन्दने' ॥ (१) ॥*॥ सुमनसां रजः ॥ (२) ॥*॥ द्वे **'पुष्परेणोः'** ॥

**द्विहीनं प्रसवे सर्वम्**

**द्वीति** ॥ द्वाभ्यां स्त्रीपुंसाभ्यां हीनं फले पुष्पे पत्रे च । वक्ष्यमाणमश्वत्थादि फलपुष्पादिषु वर्तमानं नपुंसकं लिङ्गं ज्ञेयमित्यर्थः । विकारावयवयोरुत्पन्नस्य प्रत्ययस्य 'फले लुक्' (४।३।१६३) । 'पुष्पमूलेषु बहुलम्' (वा० ४।३।१६६) इति लुक् ॥

**हरीतक्यादयः स्त्रियाम् ।**

**हरीति** ॥ पूर्वोक्तापवादः । 'स्त्रियां' इति हरीतक्याः फलम् । 'हरीतक्यादिभ्यश्च' (४।३।१६७) इति लुप् । 'लुपि युक्तवद्व्यक्तिवचने' (१।२।५१) 'हरीतक्यादिषु व्यक्तिः' (वा० १।२।५२) इति लिङ्गमेव प्रकृतिवत् । न संख्या । आदिना 'कोशातकी (द्राक्षा) बदरी कण्टकारिका' इत्यादयः ॥

**आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले ॥ १८ ॥**
**बार्हतं च**

**आश्वत्थेति** ॥ अश्वत्थस्य फलम् । आश्वत्थम् । 'प्लक्षादिभ्योऽण्' (४।३।१६४) ॥ (१) ॥*॥ वेणोः । 'बिल्वादिभ्योऽण्' (४।३।१३६) । ( मयटि (४।३।१४३) प्रकृते अणः ) विधेर्नाणो लुक् ॥ (१) ॥*॥ 'न्यग्रोधस्य च केवलस्य' (७।३।५) इत्यैच् ॥ (१) ॥*॥ इङ्गुद्या इदम् ॥ (१) ॥*॥ बृहत्याः फलम् ॥ (१) ॥*॥ **'अश्वत्थादिफलानाम्'** पृथक्पृथगेकैकम् ॥

**फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम् ।**

**फले इति** ॥ जमति । 'जमु अदने' (भ्वा० प० से०) । 'अन्दूदृम्भूजम्बू–' (उ० १।९३) इत्यनेन कूप्रत्ययो बुगाग-

१—कचित्पुस्तके 'सुमम्' इति पाठ उपलभ्यते ॥ २—'प्रादिसमासः' इत्यनेन 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः' इति वार्तिकस्मरणे तु न काप्यनुपपत्तिः ॥ ३'वेश्या श्मशानसुमना इव वर्जनीया' इति शूद्रकप्रयोगः— इति मुकुटः ॥

१—'कौसुमे रेणौ' इति पाठः ॥

मश्च निपातितः । 'जम्बूः स्यात्पादपान्तरे । तथा सुमेरुसरिति द्वीपभेदेऽपि च स्त्रियाम्' । जम्ब्वाः फलम् । 'जम्ब्वा वा' (४।३।१६५) इत्यण् । तस्य विधानसामर्थ्यान्न लुक् । पक्षे 'ओरञ्' (४।१।१३९) तस्य 'लुप् च' (४।३।१६६) इति वा लुप् । 'लुपि युक्तवत्–' (१।२।५१) । पक्षे 'फले लुक्' (४।३।१६३) । लुपि जम्बूः ॥ (१) ॥*॥ लुकि 'ह्रस्वो नपुंसके–' (१।२।४८) इति ह्रस्वे जम्बु ॥ (२) ॥*॥ अणि जाम्बवम् ॥ (३) ॥*॥ त्रीणि 'जम्बूफलस्य' ॥

**पुष्पे जातिप्रभृतयः स्वलिङ्गाः**

**पुष्प इति** ॥ जात्याः पुष्पम् । जातिः । 'पुष्पमूलेषु बहुलम्' (वा० ४।३।१६६) इति 'अनुदात्तादेरञ्' (४।३।१४०) अणः (४।३।) च लुप् । 'यूथिकाशेफालिकामल्लिकाद्याः' ॥

**व्रीहयः फले ॥ १९ ॥**

**व्रीति** ॥ यवानां फलानि । यवाः । 'अवयवे च प्राण्योष–' (४।३।१३५) इत्यण् । 'फलपाकशुषामु–' (वा० ४।३।१६६) इति लुप् । माषाः । मुद्गाः ॥

**विदार्याद्यास्तु मूलेऽपि**

**वीति** ॥ विदार्या भूकूष्माण्ड्या मूलं पुष्पं फलमपि । विदारी । गम्भारी । शालपर्णी ॥

**पुष्पे क्लीबेऽपि पाटला ।**

**पुष्प इति** ॥ पाटलायाः पुष्पम् । लुकि (वा० ४।२।१६६) पाटलम् । 'पाटलः कुसुमे वर्णेऽप्याशुव्रीहिश्च पाटलः' इति शाश्वतात् पुंलिङ्गोऽपि ॥

**बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः ॥ २० ॥ अश्वत्थे**

**बोधीति** ॥ बुध्यते । 'बुध अवगमने' (दि० आ० अ०) । 'सर्वधातुभ्य इन्' (उ० ४।११८) । 'नोक्तमनिलम्' इति न गुणनिषेधः । 'बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे' । रत्नकोषेऽपि 'पिप्पलो बोधिरश्वत्थः' इति । बोधिश्चासौ द्रुमश्च ॥ (१) ॥*॥ चलं दलमस्य ॥ (२) ॥*॥ पिप्पलं जलमस्यास्ति । मूले सिक्तत्वात् । अर्शआद्यच् (५।२।१२७) । 'पिप्पलं सलिले वस्त्रच्छेदभेदे च ना तरौ' ॥ (३) ॥*॥ कुञ्जरेणाश्यते । 'अश भोजने' (क्र्या० प० से०) कर्मणि ल्युट् (३।३।११३) ॥ (४) ॥*॥ शाल्मलिवटाद्यपेक्षया न श्वश्चिरं तिष्ठति । 'सुपि स्थः' (३।२।४) इति कः । पृषोदरादिः (६।३।१०९) । यद्वा अश्वत्थं जलमस्यास्ति । अर्शआद्यच् (५।२।१२७) । 'आपः प्रजाहितं शीतमश्वत्थं पवनं विषम्' इति केशरमाला । 'अश्वत्थः पिप्पलद्रौ स्यादश्वत्था पूर्णिमा मता' ॥ (५) ॥*॥ पञ्च 'पिप्पलवृक्षस्य' ॥

**अथ कपित्थे स्युर्दधित्थग्राहिमन्मथाः ।**
**तस्मिन्दधिफलः पुष्पफलदन्तशठावपि ॥ २१ ॥**

**अथेति** ॥ कपयस्तिष्ठन्त्यत्र । पृषोदरादिः (६।३।१०९) ॥*॥ अमरमालायां पवर्गतृतीयमध्यः (कबित्थः) अपि पृषोदरादिः ॥ (१) ॥*॥ दधिवर्णो द्रवस्तिष्ठत्यस्मिन् ॥ (२) ॥*॥ गृह्णाति । 'ग्रह उपादाने' (क्र्या० प० से०) । ग्रहादित्वात् (३।१।१३४) णिनिः ॥ (३) ॥*॥ मननम् । 'मन ज्ञाने' (दि० आ० अ०) । संपदादिः (वा० ३।३।१०८) । 'गमः क्वौ' 'गमादीनाम्' (६।४।४०) इति नलोपः । तुक् (६।१।७१) मथति । 'मथे विलोडने' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । मतो मथः । 'मन्मथः कामचिन्तायां कपित्थे कुसुमायुधे' ॥ (४) ॥*॥ दधि फलेऽस्य ॥ (५) ॥*॥ पुष्पयुक्तं फलमस्य ॥ (६) ॥*॥ दन्तानां शठ इव । अपकारित्वात् ॥ (७) ॥*॥ सप्त 'कपित्थस्य' 'कैथ' इति ख्यातस्य ॥

**उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ।**

**उद्विति** ॥ उल्लङ्घितमम्बरमनेन । उदतिशयेनाम्बते वा । 'अबि शब्दे' (भ्वा० आ० से०) । बाहुलकादरन् । पृषोदरादिः (६।३।१०९) । 'उदुम्बरस्तु देहल्यां वृक्षभेदे च पण्डके । कुष्ठभेदेऽपि च पुमांस्ताम्रेऽपि स्यान्नपुंसकम्' इति मेदिनी । मुकुटस्तु मेदिनीसंमत्या टवर्गतृतीयमध्यमप्याह । तन्न । तत्र मध्यवर्णनियमाभावात् । आद्यन्तयोरेव नियमात् ॥ (१) ॥*॥ जन्तवः फलेऽस्य ॥ (२) ॥*॥ यज्ञमङ्गति । अगिर्गत्यर्थः (भ्वा० प० से०) । कर्मण्यण् (३।२।१) ॥ (३) ॥*॥ हेमवर्णं दुग्धमस्य ॥ (४) ॥*॥ चत्वारि 'उदुम्बरस्य' ॥

**कोविदारे चमरिकः कुद्दालो युगपत्रकः ॥ २२ ॥**

**कोवीति** ॥ कुं भूमिं विदृणाति 'दॄ विदारणे' (क्र्या० प० से०) । 'कर्मण्यण्' (३।२।१) पृषोदरादिः (६।३।१०९) ॥ (१) ॥*॥ चमरमस्यास्ति । 'अत इनिठनौ' (५।२।११५) ॥ (२) ॥*॥ कुमुद्दालयति । 'दल विदारणे' (चु० उ० से०) । 'कर्मण्यण्' (३।२।१) । शकन्ध्वादिः (वा० ६।१।९४) । ('कुद्दालः स्यात्पुमान्भूमिदारणे युगपत्रके') ॥ (३) ॥*॥ युगं युग्मं पत्रमस्य ॥ (४) ॥*॥ चत्वारि 'कोविदारस्य', 'कचनार' इति ख्यातस्य ॥

१—'परिणतजम्बुफलोपभोगहृष्टा' इति किराते ह्रस्वान्तप्रयोगः । तत्र 'फल उत्तरपदे 'इको ह्रस्वोऽङ्यो गालवस्य' (६।३।६१) इति ह्रस्वत्वम्' इति वामनः । अत एव 'जलजम्बूजलाविलास्रवन्त्यः' इति वृक्षेऽपि 'इको ह्रस्वः' इति ह्रस्वत्वम् । 'जम्बुः' इति प्रकृत्यन्तरमस्ति । 'तस्माज्जम्बोः फलरसो नदी भूत्वा प्रवर्तते' इति संसारावर्तः—इति मुकुटः ॥ २—शाश्वतेऽपि स्वामिपुस्तकयोः 'पाटलम्' इति क्लीबपाठस्यैवोपलम्भेन 'पाटला पाटली स्त्री स्यादस्य पुष्पे पुनर्न ना' इति मेदिन्यां पुंस्त्वस्य निषेधान्न पुंलिङ्गः ॥

**सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ।**

**सप्तेति** ॥ काण्डे काण्डे सप्त पर्णान्यस्य ॥ (१) ॥*॥ विशाला त्वगस्य ॥ (२) ॥*॥ शरदि पुष्प्यति । 'कालात्साधुपुष्प्यत्–' (४।३।४३) इत्यण् ॥*॥ शारदी ङयन्तापि । **'शारदी** तोयपिप्पल्यां सप्तपर्णे च शारदी' इति दन्त्यान्तेषु रुद्रः । (**'शारदो**ऽब्दे, स्त्रियां तोयपिप्पलीसप्तपर्णयोः । सस्ये क्लीबं, शरज्जातनूतनाप्रतिभे त्रिषु' इति मेदिनी' ॥ (३) ॥*॥ विषमाश्छदा यस्य ॥ (४) ॥*॥ चत्वारि **'सप्तपर्णस्य', 'छतवती'** इति ख्यातस्य ॥

**आरग्वधे राजवृक्षसंपाकचतुरङ्गुलाः ॥ २३ ॥**
**आरेवतव्याधिघातकृतमालसुवर्णकाः ।**

**आरगिति** ॥ आ रगणम् । 'रगे शङ्कायाम्' ( भ्वा० प० से० ) । संपदादिः (वा० ३।३।१०८)। आरगं रोगशङ्कामपि हन्ति । 'कर्मण्यण्' (३।२।१)। 'बहुलं तणि' (वा० २।४।५४) इति हन्तेर्वधोऽदन्तः। 'ण्यल्लोपौ' ( वा० ६।४।४८ ) इत्यल्लोपः। **'रज** रागे' (भ्वा०, दि० उ० अ०) । संपदादिः (वा० ३। ३।१०८) आरजं रोगरागमपि हन्ति । यत्तु मुकुटः—आ समन्तात् रुजं वधति छिनत्ति । 'वध छेदनसेवनपूरणेषु' । पृषोदरादिः (६।३।१०९)—इत्याह । तन्न । उक्तधातोः पाणिनीये कुत्राप्यदर्शनात् । यत्तु—वधिः प्रकृत्यन्तरम्—इति 'जनिवध्योश्च' (७।३।३५) इति सूत्रेऽपि वृत्तिः । तन्न । मुनित्रयविरोधात्, इति प्रपञ्चितं मनोरमामण्डने । यदपि स्वामिनोक्तम्—आ समन्ताद् रुजां वधोऽत्र—इति । तदपि न । व्यधिकरणबहुव्रीहित्व-पृषोदरादि (६।३।१०९)-त्वकल्पनप्रसङ्गात् ॥*॥ न्यच्कोऽपि ह्रस्वादिरपि । 'आरग्वधोऽथ संपाकः कृतमालस्तथारग्वधः' इति रत्नकोषात् ॥ (१) ॥*॥ राजा चासौ वृक्षश्च । वृक्षाणां राजा । राजदन्तादिः (२।२।३१) इति वा । रोगाणां राजानं वृश्चति, इति वा । 'ओव्रश्चू छेदने' (तु० प० से०) । बाहुलकात् सक् ॥ (२)॥*॥ 'सम्यक् पाकोऽस्य । दन्त्यादिः । **'संपाक**स्तर्कके, धृष्टे त्रिषु ना चतुरङ्गुले' ॥*॥ शं कल्याणं पाकोऽस्य, इति **(शंपाकः)** तालव्यादिरपि ॥*॥ स्वामी तु—शर्मीं शिविम् अकति, इति विगृह्णन् **'शम्याकः'** इति पाठं मन्यते ॥ (३) ॥*॥ चतस्रोऽङ्गुलयः प्रमाणमस्य पर्वणः । तद्योगाद् वृक्षोऽपि ॥ (४) ॥*॥ आरेवयति निःसारयति मलं सारकत्वात् । 'रेवृ, प्लव, गतौ' (भ्वा० आ० से०) । णिच् (३।१।२६) । विच् (३।२।७५) । अतति । 'अत सातत्यगमने' ( भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) आरेव् चासावतश्च ॥ (५) ॥*॥ व्याधीन् हन्ति । 'कर्मण्यण्' (३।२।१) 'हनस्तोऽचिण्णलोः' (७।३।३२) ॥ (६) ॥*॥ कृता मालास्य पुष्पैः ॥ (७) ॥*॥ शोभनो वर्णोऽस्य ॥*॥ सुष्ठु पर्णान्यस्य, इति वा पाठः । (**'सुपर्णः** स्वर्णचूडे च गरुडे कृतमालके । **सुपर्णी** 'कमलिन्यां च वैनतेयस्य मातरि' ) ॥ (८) ॥*॥ अष्टौ **'सोनालु धनवहेढ'** इति ख्यातस्य ॥

**स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ॥ २४ ॥**

**स्युरिति** ॥ जम्यते । 'जमु अदने' (भ्वा० प० से०)। 'गम्भीरादयश्च' ( उ० ४।३५ ) इति साधुः । **'जम्बीरः** प्रस्थपुष्पे स्यात्तथा 'दन्तशठद्रुमे' ॥ ( १ ) ॥*॥ दन्तानां शठ इव । (**'स्याद्दन्तशठो** जम्बीरे कपित्थे कर्मरङ्गके । नागरङ्गेऽपि च पुमान्, स्याच्चाङ्गेर्यां तु योषिति' ॥ (२) ॥*॥ जम्भयत्यम्लत्वात् । 'जभी गात्रविनामे' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३४) । 'रधिजभोः–' (७।१।६१) इति नुम् । **'जम्भः** स्याद्दानवान्तरे । दन्तभोजनयोरंसे हनौ जम्बीरतूनयोः' ॥ (३) ॥*॥ गम्भीरादित्वात् (उ० ४।३५) इरन् ॥ (४) ॥*॥ वृषादित्वात् (उ० १।१०६) कलच् । (**'जम्भलः** पुंसि जम्बीरे बुद्धदेवान्तरेऽपि च' ) ॥ (५) ॥*॥ पञ्च **'जम्बीरस्य', 'जम्भेरी'** इति ख्यातस्य ॥

**वरणे वरुणः सेतुस्तिक्तशाकः कुमारकः ।**

**वरेति** ॥ वृणोति । 'वृञ् वरणे' (स्वा० उ० से०) । कर्तरि ल्युट् (३।३।११३) । कर्तरि ल्युट् (३।३।११३) (३।३।११७) वा ॥ (१) ॥*॥ 'कृवृदारिभ्य उनन्' (उ० ३।५३) । **'वरुणस्त्व**रुभेदेऽप्सु प्रतीचीपतिसूर्ययोः' ॥ ( २ ) ॥*॥ **सिनोति,** सीयते, वा । 'षिञ् बन्धने' (स्वा० उ० अ०) 'सितनि–' ( उ० १।६९ ) इति तुन् । **'सेतुर्**नालौ कुमारके' ॥ (३) ॥*॥ तिक्तः शाकोऽस्य । शाकत्वं चास्य पत्राणां शाकमध्ये पाठात् । **'तिक्तशाकस्तु** खदिरे वरुणे पत्रसुन्दरे' ॥ (४) ॥*॥ कुमारश्चिरतरुणत्वात् । कुमारयति । 'कुमारक्रीडायाम्' (चु० उ० से०) । पचाद्यच् ( ३।१।१३४ ) । कुमार इव 'इवे प्रकृतिकृतौ' ( ५।३।९६ ) इति कन् ॥ (५) ॥*॥ पञ्च **'वरणस्य'** ॥

**पुंनागे पुरुषस्तुङ्गः केसरो देववल्लभः ॥ २५ ॥**

**पुंनेति** ॥ पुमान् नाग इव । 'उपमितं व्याघ्रा–' (२।१।५६) इति समासः । 'पुंनागो नृश्रेष्ठः । प्राधान्यात्स इव । **'पुंनागस्तु** सितोत्पले । जातीफले नरश्रेष्ठे पाण्डुनागे द्रुमान्तरे ॥' (२) ॥*॥ पुरति । 'पुर अग्रगमने' (तु० प० से०)। 'पुरः कुषन्' (उ० ४।७४) । यत्तु—'पिपर्ति' इति विगृह्य 'पुरः कुषन्' 'इत्युपन्यस्तं मुकुटेन । तद्भसात् । **'पुरुष**स्त्वात्मनि नरे पुंनागे च' ॥ (२) ॥*॥ तुङ्ग्यते । 'तुजि हिंसायाम्' (भ्वा० प० से, चु० उ०) । घञ् (३।३।१८) । न्यङ्क्वादिः (७।३।५३) । उच्चत्वाद्वा । **'तुङ्गः** पुंनागनगयोर्बुधे स्यादुन्नतेऽन्यवत् । **तुङ्गी** प्रोक्ता हरिद्रायां वर्वरायामपीष्यते' इति हैमः ॥ (३) ॥*॥ प्रशस्ताः केसरा अस्य । अर्शआद्यच् (५।२।१२७) । **'केसरो** नागकेसरे । तुरंगसिंहयोः

स्कन्धकेशेषु बकुलद्रुमे । पुंनागवृक्षे किंजल्के स्यात्केसरं तु हिङ्गुनि' इति हैमः ॥ (४) ॥*॥ देवानां वल्लभः ॥ (५) ॥*॥ पञ्च 'पुंनागस्य' गुर्जरदेशे 'संदेशरा' इति ख्यातस्य ॥

**पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ।**

**पारीति** ॥ पारमस्यास्ति । 'अत इनिः' (५।२।११५) पारि पारं गतं भद्रमस्य, परितो भद्रमस्य, इति वा । प्रज्ञाद्यण् (५।४।३८) । 'पारिभद्रस्तु निम्बद्रौ मन्दारे देवदारुणि' ॥ (१) ॥*॥ नियमयति । 'यम उपरमे' ( भ्वा० प० से० ) । पृषोदरादिः (६।३।१०९) । निंवति । 'णिवि सेचने' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । बवयोरैक्यम् । कर्मणि घञ् (३।३।१९) वा । निम्बसंज्ञकस्तरुः । शाकपार्थिवादिः (वा० २।१।६९) ॥ (२) ॥*॥ मन्दा अरा यस्य । मन्दमृच्छति वा । 'ऋ गतौ' ( भ्वा० प० से० ) । 'कर्मण्यण्' (३।२।१) यद्वा मन्दते । 'मदि स्तुत्यादौ' (भ्वा० आ० से०) । 'अञ्जिमदिमन्दिभ्य आरन्' (उ० ३।१३४) ॥ (३) ॥*॥ पारि पारं गतं जातं जन्मास्य । पारिणः समुद्राज्जातो वा । स्वार्थे कन् (५।३।७५) ॥ (४) ॥*॥ चत्वारि **'निम्बतरोः' 'वकायिनी'** इति ख्यातस्य ॥

**तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ॥ २६ ॥**
**वञ्जुलश्चित्रकृच्च**

**तिनीति** ॥ अतिशयेन नेशति । 'णिश समाधौ' ( भ्वा० प० से० ) 'इगुपध–' (३।१।१३५) इति कः । यद्वा अतिक्रान्तो निशाः । 'अत्यादयः–' (वा० २।२।१८) इति समासः । पृषोदरादिः (६।३।१०९) ॥ (१) ॥*॥ स्यन्दते । 'स्यन्दू प्रस्रवणे' ( भ्वा आ० से० ) । 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् । **'स्यन्दनं** तु स्मृतं क्लीबे रथाङ्गे तिनिशे नरि' इति रभसः । **'स्यन्दनं** तु स्रुतौ नीरे, तिनिशे ना, रथेऽस्त्रियाम्' ॥ (२) ॥*॥ नयति । 'णीञ् प्रापणे' ( भ्वा० प० से० ) । 'नियो मिः' (उ० ४।४३) । 'पुंलिङ्गस्तिनिशे **नेमिश्**चक्रप्रान्ते स्त्रियामपि' इति रुद्रः । 'ढ्रलोपे–' (६।३।१११) इति दीर्घः ॥ (३) ॥*॥ रथस्य द्रुः । तत्रोपयुक्तत्वात् ॥ (४) ॥*॥ अतिशयितो मुक्तो विस्तारोऽस्य । कप् (५।४।१५४) ॥ (५) ॥*॥ वञ्च्यते । 'वञ्चु गतौ' ( भ्वा० प० से० ) । बाहुलकादुलो जत्वं च । **'वञ्जुलः** पुंसि तिनिशे वेतसाशोकयोरपि' ॥ (६) ॥*॥ चित्रं करोति । अतिदार्ढ्येऽपि लघुत्वात् । क्विप् (३।२।७६) ॥*॥ सप्त **'तिनिशस्य'** ॥

**अथ द्वौ पीतनकपीतनौ ।**
**आम्रातके**

**अथेति** ॥ पीतं करोति । 'तत् करोति–' (वा० ३।१।२६) इति णिच् । 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् ॥ (१) ॥*॥ तनोति । 'तनु विस्तारे' ( त० उ० से० ) । पचाद्यच् (३।१।१३४) कपीनां कपेर्वर्णस्य वा तनः । 'अन्येषामपि' (६।३।१३७) इति दीर्घः । यद्वा याः लक्ष्म्यास्तन ईतनः, कपीनां कपेर्वा ईतनः ॥ (२) ॥*॥ आम्रमतति 'अत सातत्यगमने' ( भ्वा० प० से० ) 'कृञादिभ्यो वुन्' (उ० ५।३५) ॥*॥ ह्रस्वादिरपि । अम्लत्वमतति । रलयोरैक्यम् । **'कपिचूतोऽम्रातकोऽस्य** फले पञ्चहरीतकी' इति त्रिकाण्डशेषः ॥ (३) ॥*॥ त्रीणि **'आम्रातकस्य' 'अंबाडा'** इति ख्यातस्य ॥

**मधूके तु गुडपुष्पमधुद्रुमौ ॥ २७ ॥**
**वानप्रस्थमधुष्ठीलौ**

**मध्विति** ॥ मह्यते मन्यते वा । 'मह पूजायाम्' ( भ्वा० प० से० ) 'मन ज्ञाने' (दि० आ० अ०) वा । 'उल्कादयश्च' (उ० ४।४१) इति साधुः ॥ (१) ॥*॥ गुड इव पुष्पमस्य ॥ (२) ॥*॥ मधुनामा द्रुमः ॥ (३) ॥*॥ वनप्रस्थे वनैकदेशे भवः । 'तत्र भवः' (४।३।५३) इत्यण् । **'वानप्रस्थो** मधूकेऽपि स्यात्तृतीयाश्रमे पुमान्' ॥ (४) ॥*॥ मधु ष्ठीवति । 'ष्ठिवु निरसने' (भ्वा० प० से०) । 'इगुपध–' (३।१।१३५) इति कः । पृषोदरादिः (६।३।१०९) । मधु ष्ठीले गर्भेऽस्य, इति वा ॥ (५) ॥*॥ पञ्च **'मधूकस्य' 'महुआ'** इति ख्यातस्य ॥

**जलजेऽत्र मधूलकः ।**

**जलेति** ॥ अत्र मधूके । मधु लाति । 'ला दाने' ( अ० प० अ० ) । 'आतोऽनुप–' (३।२।३) इति कः । 'अन्येषामपि–' (६।३।१३७) इति दीर्घः । स्वार्थे कन् (५।३।७५) ॥ (१) ॥*॥ 'गिरिजेऽत्र' इति मूलपाठः–इति सुभूत्यादयः । 'गौरशाको मधूकोऽन्यो गिरिजः सोऽल्पपत्रकः' इति माधवः । 'मधूकोऽन्यो मधूलस्तु जलजो दीर्घपत्रकः' इति स्वामी ॥ एकम् **'जलजमधूकस्य'** ॥

**पीलौ गुडफलः स्रंसी**

**पीलाविति** ॥ पीलति । 'पील प्रतिष्टम्भे' (भ्वा० प० से०) । मृगय्वादित्वात् (उ० १।३७) उः । (**'पीलुः** पुमान् प्रसूने स्यात् परमाणौ मतङ्गजे । अस्थिखण्डे च तालस्य काण्डपादपभेदयोः') ॥ (१) ॥*॥ गुड इव फलमस्य ॥ (२) ॥*॥ स्रंसयति मलम् । 'स्रंसु अधःपतने' ( भ्वा० आ० से० ) । आवश्यके णिनिः (३।३।१७०) ॥ (३) ॥*॥ त्रीणि गुर्जरदेशे **'पीलु'** इति ख्यातस्य ॥

**तस्मिंस्तु गिरिसंभवे ॥ २८ ॥**
**अक्षोटकर्परालौ द्वौ**

**तस्मिन्निति** ॥ तस्मिन् पीलौ गिरिजे । अक्ष्णोति 'अक्षू व्याप्तौ संघाते च' (भ्वा० प० से०) । बाहुलकादोटः । 'अक्षस्येवोटाः पर्णान्यस्य' इति वा ॥ (१) ॥*॥ कर्परमालति । 'अल भूषणादौ' (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१) । यद्वा कर्परास्यास्ति । सिध्मादित्वात् (५।२।९७)

लच् ॥*॥ 'कन्दरालः' इति वा पाठः । पूर्ववत् ॥ (२) ॥*॥ द्वे 'पर्वतपीलोः' 'अखरोट' इति ख्यातस्य ॥

**अङ्कोटे तु निकोचकः ।**

**अङ्कोट इति** ॥ अङ्क्यते 'अकि लक्षणे' ( भ्वा० आ० से० ) । बाहुलकादोटः ॥ (१) ॥*॥ निकुच्यते । 'कुच शब्दे तारे' (भ्वा० प० से०) 'कुञादिभ्यो वुन्' (उ० ५।३५) ॥ (२) ॥*॥ 'अङ्कोलः' अपि[१]॥*॥ द्वे 'अङ्कोलस्य' 'ढेरा' इति ख्यातस्य ॥

**पलाशे किंशुकः पर्णो वातपोथः**

**पलेति** ॥ प्रशस्तानि पलाशान्यस्य । अर्शआद्यच् (५।२।१२७) । यद्वा पलं मांसमश्नाति । 'अश भोजने' (क्र्या० प० से०) । 'कर्मण्यण्' (३।२।१) । 'पलाशः किंशुकेऽस्रपे । हरिते पलाशं पत्रे' इति हैमः ॥ (१) ॥*॥ किंचित् शुक इव । शुकतुण्डाभपुष्पत्वात् ॥ (२) ॥*॥ पृणति । 'पृण प्रीणने' ( तु० प० से० ) अच् (३।१।१३४) । यद्वा प्रशस्तानि पर्णान्यस्य । अर्शआद्यच् (५।२।१२७) । यद्वा पिपर्ति । 'पृ पालनपूरणयोः' (जु० प० से०) 'कृपॄवृषिभ्याञ्भ्यो नः' । 'पर्णं पत्रे किंशुके ना' ॥ (३) ॥*॥ वातं पोथयति 'पुथ हिंसायाम्' ( दि० प० से० ) । 'कर्मण्यण्' (३।२।१) ॥ (४) ॥*॥ चत्वारि 'पलाशस्य' ॥

**अथ वेतसे ॥ २९ ॥**

**रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः ।**

**अथेति** ॥ अयनम् । 'इण् गतौ' ( अ० प० अ० ) । 'नपुंसके' (३।३।११४) इति क्तः । वा विकल्पस्येतं ज्ञानं स्यति । 'षोऽन्तकर्मणि' ( दि० प० अ० ) । 'आतोऽनुप–' (३।२।३) इति कः । यद्वा ऊयते । 'वेञ् तन्तुसन्ताने' (भ्वा० उ० अ०) । 'वेञस्तुट् च' (उ० ३।११८) इत्यसच् । बाहुलकादात्वं न । यत्तु—'वेतसवाहसपनसाः' इत्यसनि निपातनादेव तुट्–इत्याह मुकुटः । तन्न । उणादिषु तत्सूत्रादर्शनात् ॥ (१) ॥*॥ रम्यतेऽत्र । 'रमु क्रीडायाम्' (भ्वा० आ० अ० ) । 'हनिकुषिणीरमिकाशिभ्यः क्थन्' (उ० २।२) । 'रथौ स्यन्दनवानीरौ' इत्यजयः । 'रथः पुमानवयवे स्यन्दने वेतसेऽपि च' ॥ (२) ॥*॥ अभ्रमिव अभ्रसमये वा पुष्पमस्य ॥ (३) ॥*॥ वेत्ति, विद्यते, वा । बाहुलकादुलच् गुणाभावश्च । 'विदुलस्तु पुमानम्बुवेतसे वेतसेऽपि च' ॥ (४) ॥*॥ शीतमस्यास्ति । अच् (५।२।१२७) । 'वेतसे बहुवारे ना गुणे शीतं हिमे त्रिषु' इति रभसः । क्लीबलिङ्गमपि । 'शीतं तुषारवानीरबहुवारद्रुमेषु च' इत्यजयात् ॥ (५) ॥*॥ वायति । 'ओवै शोषणे' (भ्वा० प० अ० ) क्विप् (३।२।१७८) । वां शुष्कम् आ समन्तान्नीरमस्य ॥ (६) ॥*॥ वजति 'वज गतौ' ( भ्वा० प० से० ) । बाहुकादुलच्, नुम् च । 'वञ्जुलः पुंसि तिनिशे वेतसाशोकयोरपि' ॥ (७) ॥*॥ सप्त 'वेत' इति ख्यातस्य ॥

**द्वौ परिव्याधविदुलौ नादेयी चाम्बुवेतसे ॥ ३० ॥**

**द्वाविति** ॥ परिविध्यते । 'व्यध ताडने' (दि० प० अ०) । घञ् (३।३।१९) । 'परिव्याधस्तु पुंसि स्याद्वेतसे च द्रुमोत्पले' ॥ (१) ॥*॥ नद्यां भवा । 'नद्यादिभ्यो ढक्' (४।२।९७) । 'नादेयी नागरङ्गे स्याज्जयायां जलवेतसे । भूमिजम्ब्वां च जम्ब्वां च काकुङ्गेऽपि च योषिति' ॥ (२) ॥*॥ अम्बुनि जातो वेतसः । शाकपार्थिवादिः (वा० २।१।६९) ॥ (४) ॥*॥ चत्वारि 'जलजातवेतसस्य' ॥

**शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः ।**

**शोभेति** ॥ शोभामनक्ति । 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' ( रु० प० से० ) । कर्तरि ल्युट् (३।३।११३) । 'बहुलमन्यत्रापि' (उ० २।७८) इति युज्वा ॥*॥ प्रज्ञाद्यणि (५।३।४८) 'शौभाञ्जनः' ॥*॥ सुष्ठु भा तामनक्ति । ल्युट् (३।३।११३) । प्रज्ञाद्यणि (५।४।३८) ('सौभाञ्जनः'[२]) दन्त्यादिरपि ॥ (१) ॥*॥ शिनोति । 'शिञ् निशाने' (स्वा० उ० अ०) । 'जञ्वादयश्च' (उ० ४।१०२) इति निपातितः । 'शिग्रुर्ना शाकमात्रे च शोभाञ्जनमहीरुहे' ॥ (२) ॥*॥ तीक्ष्णो गन्धोऽस्य । 'शेषाद्विभाषा' (५।४।१५४) इति कप् ॥ (३) ॥*॥ अक्षीवते, आक्षीवयति वा । 'क्षीवृ मदे' (भ्वा० आ० से०) । पचाद्यच् (३।१।१२४) ॥*॥ ह्रस्वादिरपि । 'अक्षीवं वशिरे, शिग्रौ ना, ऽमत्ते पुनरन्यवत्' ॥ (४) ॥*॥ मोचयति । 'मुच्लृ मोक्षणे' (तु० प० अ०) । णिच् (३।१।२६) । अच् (३।१।१३४) । 'मोचः शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयोः' । ततः स्वार्थे कन् (५।३।७५) ॥ (५) ॥*॥ पञ्च 'शिग्रोः' 'सहेजँन' इति ख्यातस्य ॥

**रक्तोऽसौ मधुशिग्रुः स्यात्**

**रक्त इति** ॥ असौ शोभाञ्जनः । रक्तपुष्पः । मधुप्रधानः शिग्रुः–इति मुकुटः । रक्तो मधुकरः । 'रक्तकण्ठानाम्' इति दर्शनात् । मधुर्मधुरः । शिग्रुः–इत्येके ॥ (१) ॥*॥ एकम् 'मधुशिग्रोः' 'मगुना' इति ख्यातस्य ॥

**अरिष्टः फेनिलः समौ ॥ ३१ ॥**

**अरीति** ॥ न रिष्टमसात् । 'अरिष्टो लशुने निम्बे फे-

१—लयनम् लीः संश्लेषः । क्विप् (वा० ३।३।१०८) । तया कोचको व्यथाजनकः । 'लिकोचकः' इति तु श्रीकरः—इति मुकुटः ॥
२—'पलाशः किंशुकः शटी । हरिद्वर्णो राक्षसश्च पलाशं छेदने स्मृतम्' इति पाठः ॥

१—'काक्षीर' इति रान्तमिदम्,–इत्यन्ये—इति मुकुटः ।
२—'तरुणीजन इवाधिगतशोभाञ्जनो वसन्तसमयः प्रादुरासीत्' इत्याश्चर्यमञ्जरीतस्तालव्यादिः–इति मुकुटः ॥

निले काककङ्कयोः' ॥*॥ रिष्टोऽपि । 'रिष्टं क्षेमाशुभाभावे पुंसि खड्गे च फेनिले' ॥ (१) ॥*॥ फेनोऽस्यास्ति । 'फेनादिलच्च' (५।२।९९) । ('फेनिलोऽरिष्टपादपे । फेनिलं मदनफले बदरे फेनवत्यपि') ॥ (२) ॥*॥ द्वे 'अरिष्टस्य' 'रीठा' इति ख्यातस्य ॥

**बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि ।**

**बीति** ॥ बिलति । 'बिल भेदने' (तु० प० से०) । उल्वादिः (उ० ४।९५) ('बिल्वं फले श्रीफले ना') ॥ (१) ॥*॥ शण्डते । 'शडि रुजायाम्' (भ्वा० आ० से०) । 'सलि–' (उ० १।५४) इत्यादिनेलच् । शाण्डिलस्य गोत्रापत्यम् । 'गर्गादिभ्यो यञ्' (४।१।१०५) शाण्डिल्य इव, इति । शण्डयति रुचं करोति वा । इलच्चि (उ० १।५४) स्वार्थे ष्यञ् (वा० ५।१।१२४) । 'शाण्डिल्यः पावकान्तरे । बिल्वे मुनौ च' इति हैमः ॥ (२) ॥*॥ शिलूषस्यापत्यम् । शैलूष इव इति वा । 'नटे बिल्वे च शैलूषः' इति तालव्यादिमूर्धन्यान्ते रभसः ॥ (३) ॥*॥ मां लक्ष्मीं परेषां लुनाति । 'लूञ् छेदने' (क्र्या० उ० से०) । बाहुलकाद्रक् ॥ (४) ॥*॥ श्रीपदं श्रीप्रियं वा फलमस्य । शाकपार्थिवादिः (वा० २।१।६९) । 'श्रीफलः पुंसि मालूरे धात्रीनीलिकयोः स्त्रियाम्' ॥ (५) ॥*॥ पञ्च 'बिल्ववृक्षस्य' ॥

**प्लक्षो जटी पर्कटी स्यात्**

**प्लेति** ॥ प्रक्षरति । 'क्षर संचलने' (भ्वा० प० से०) । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । कपिलिकादिः (वा० ८।२।१८) । यद्वा प्लक्ष्यते । 'प्लक्ष भक्षणे' (भ्वा० उ० से०) । कर्मणि घञ् (३।३।१९) । प्लक्षति अधो गच्छति वा । अच् (३।१।१३४) । 'प्लक्षो जटीगर्दभाण्डद्वीपभित्कुञ्जराशने' ॥ (१) ॥*॥ जटति । 'जट संघाते' (भ्वा० प० से०) । 'सर्वधातुभ्य इन्' (उ० ४।११८) । ङीष् (ग० ४।१।४५) वा । 'जटा लग्नकचे मूले मांस्यां, प्लक्षे पुनर्जटी' । रुद्रे तु—'गर्दभाण्डे जटीप्लक्षौ' ॥ (२) ॥*॥ पृच्यते । 'पृची संपर्के' (रु० प० से०) । बाहुलकात् कटः । गौरादिङीष् (४।१।४१) । 'पर्कटी नूतनपल्ले पूगादेः प्लक्षपादपे' । 'शाश्वतेऽपि विज्ञेया पर्कटी प्लक्षः प्लक्षः पिप्पलपादपः' ॥ (३) ॥*॥ त्रीणि 'प्लक्षस्य' 'पाकर' इति ख्यातस्य ॥

**न्यग्रोधो बहुपाद्वटः ॥ ३२ ॥**

**न्यगिति** ॥ न्यक् रुणद्धि । 'रुधिर् आवरणे' (रु० उ० अ०) 'कर्मण्यण्' (३।२।१) । 'न्यग्रोधस्तु पुमान् व्यामवटयोश्च शमीतरौ । न्यग्रोधी तूपचित्रायाम्' ॥ (१) ॥*॥ बहवः पादा अस्य । 'संख्यासुपूर्वस्य' (५।४।१४०) ॥ (२) ॥*॥ वटति । 'वट वेष्टने' (भ्वा० प० से०) । अच् (३।१।१३४) । 'वटी–त्रिषु गुणे पुंसि स्यान्न्यग्रोधकपर्दयोः' ॥ (३) ॥*॥ त्रीणि 'वटस्य' ॥

**गालवः शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ ।**

**गालेति** ॥ गालवस्यापत्यम् । 'ऋष्यन्धक–' (४।१।११४) इत्यण् । गालं नेत्रस्रवं वायति । 'ओवै शोषणे' (भ्वा० प० अ०) । 'आतोऽनुप–' (३।२।३) इति को वा । 'गालवो मुनिभेदे स्याल्लोध्रवृक्षे च कीर्तितः' ॥ (१) ॥*॥ शबराणामयम् 'तस्येदम्' (४।३।१२०) इत्यण् । 'शाबरी शूकशिम्ब्यां स्यात् पुंसि पापापराधयोः । लोध्रे च' इति तालव्यादिः ॥*॥ दन्त्यादिरपि । 'सावराख्यापराधे च लोध्रे पापे च पठ्यते' इति दन्त्यादावजयः ॥ (२) ॥*॥ रुणद्धि 'रुधिर् आवरणे' (रु० उ० अ०) बाहुलकाद्रन् । 'शूद्रादयः' इति रन्—इति मुकुटः । तन्न । तादृशसूत्राभावात् । कपिलिकादिः (वा० ८।२।१८) । (रोध्रोऽपि लत्वाभावे । 'रोध्रो ना गालवे क्लीबमपराधे च किल्बिषे' इति मेदिनी) ॥ (३) ॥*॥ तीर्यते मलमनेन । 'कृतॄकृपिभ्यः कीटन्' (उ० ४।१८५) । इत्वम् (७।१।१००) । रपरत्वम् (१।१।५१) ॥ (४) ॥*॥ तिलत्यनेनाङ्गम् । 'तिल स्नेहने' (तु० प० से०) । उल्वादिः (उ० ४।९५) ॥ (५) ॥*॥ मार्ष्टेऽनेन । 'मृजू शुद्धौ' (अ० प० से०) । ल्युट् (३।३।११७) ।—नन्द्यादिल्युः (३।१।१३४)—इति मुकुटः । तन्न । तस्य कर्तरि विधानात् । 'मार्जनं न द्वयोर्मार्ष्टौ पुंसि स्याल्लोध्रशाखिनि' ॥ (६) ॥*॥ षट् 'श्वेतलोध्रस्य' । आद्यौ श्वेतलोध्रे, शेषा रक्तलोध्रे इति स्वामी ॥

**आम्रश्चूतो रसालः**

**आम्र इति** ॥ अम्यते । 'अम गत्यादौ' (भ्वा० प० से०) 'अमितम्योर्दीर्घश्च' (उ० २।१६) इति रक् दीर्घश्च ॥ (१) ॥*॥ चूष्यते स्म । 'चूष पाने' (भ्वा० प० से०) । क्तः (३।२।१०२) । पृषोदरादिः (६।३।१०९) । च्योतति रसम् इति वा । 'च्युतिर् क्षरणे' (भ्वा० प० से०) । अच् (३।१।१३४) ॥ (२) ॥*॥ रसमलति । 'अल भूषणादौ' (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१) ॥ (३) ॥*॥ त्रीणि 'आम्रवृक्षस्य' ॥

**असौ सहकारोऽतिसौरभः ॥ ३३ ॥**

**असाविति** ॥ सह कारयति मेलयति द्वन्द्वम् । अच् (३।१।१३४) ॥ (१) ॥*॥ अतिशयितं सौरभमस्य ॥*॥ एकम् 'अतिसुगन्धाम्रस्य' ॥

१—'विटे मुनौ' इति पाठः ॥ २—'सवटोऽप्यवटसंकुलः' इति दमयन्तीश्लेषः ॥

१—इतः परम् 'शांकरिः पुंसि कार्तिकेये गणाधिपे' इत्यपि लिखितमासीत् । परंतु तत्र प्रकृतोपयुक्तम् ॥

**कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः।**

**किति** ॥ 'कुम्भोलूखलकम्' इति संघातविगृहीतम्। 'कार्मुके वारनार्यां च **कुम्भः** क्लीबं तु गुग्गुलौ' इति रभसः। 'उदूखले गुग्गुलौ च क्लीबमुक्तम**ुलूखलम्**' इति रुद्रः। '**कुम्भोलूखलकं कुम्भं कुम्भोलुः खलकं** वरम्' इति वाचस्पतिः ॥*॥ कसुम्भति। 'उम्भ पूरणे' (तु० प० से०)। 'कर्मण्यण्' (३।२।१)। शकन्ध्वादिः (वा० ६।१।९४) ॥ (१) ॥*॥ ऊर्ध्वं खम् उलूखम्। पृषोदरादिः (६।३।१०९)। उलूखं लाति। 'ला दाने' (अ० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः। ततः स्वार्थे कन् (५।३।७५) ॥ (२) ॥*॥ कुम्भोलूखलकाकाराद् वृक्षकोशान्निर्यातम् ॥*॥ कोशे भवः। अध्यात्मादिठञ् (वा० ४।३।६०) '**कौशिको** नकुले व्यालग्राहे गुग्गुलुशक्रयोः। कोशजोलूकयोश्च स्याद्विश्वामित्रमुनावपि। **कौशिकी** चण्डिकायां च नदीभेदे च योषिति' ॥ (३) ॥*॥ गोजति। 'गुज स्तेये' (भ्वा० प० से०)। क्विप् (३।२।१७८) गुजो व्याधेर्गुडति। 'गुड रक्षणे' (तु० प० से०)। बाहुलकादुः। डलयोरेकत्वम् ॥ (४) ॥*॥ पुरति। 'पुर अग्रगमने' (तु० प० से०)। 'इगुपध–' (३।१।१३५) इति कः। **पुरं** पाटलिपुत्रेऽङ्गे गुग्गुलौ तु पुमानयम्' इति रभसः। यत्तु—पिपर्ति। पुरः। 'इगुपध–' इति कः। 'उदोष्ठ्यपूर्वस्य' (७।१।१०२) इत्युत्—इति स्वाम्याह। तन्न 'प्रीञ् तर्पणे कान्तौ च' (क्र्या० उ० से०) इत्यस्य तत्र ग्रहणात्। 'प्रीणातीति प्रियः' इति वृत्तिकृता विगृहीतत्वात्। 'प्रीणातीति प्रियः' इत्युक्त्वा 'इगुपधज्ञाप्रीकिरः कः' इति माधवोक्तेश्च ॥ (५) ॥*॥ पञ्च '**गुग्गुलवृक्षस्य**' ॥

**शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ॥ ३४ ॥**

**शेलुरिति** ॥ शिलति। 'शिल उञ्छे' (तु० प० से०)। बाहुलकादुः ॥ (१) ॥*॥ श्लेष्माणमतति। 'अत सातत्यगमने' (भ्वा० प० से०)। 'क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि' (उ० २।३२) ॥ (२) ॥*॥ श्यायते स्म। 'श्यैङ् गतौ' (भ्वा० आ० अ०)। 'गत्यर्थाकर्मक–' (३।४।७२) इति क्तः। 'द्रवमूर्ति–' (६।१।२४) इति संप्रसारणम्। 'हलः' (६।४।२) इति दीर्घः ॥ (३) ॥*॥ उद्दालयति। 'दल विशरणे' (भ्वा० प० से०) णिच् (३।१।२६)। अच् (३।१।१३४) ॥ (४) ॥*॥ बहून् वारयति। 'वृञ् वरणे' (स्वा० उ० से०)। णिजन्तः (३।१।२६) 'क्वुन् शिल्पिसंज्ञयोः' (उ० २।३२) ॥ (५) ॥*॥ पञ्च '**उद्दालकस्य**' '**बहुआर**' इति '**लसोडा**' इति ख्यातस्य ॥

**राजादनं पियालः स्यात्सन्नकद्रुर्धनुष्पटः।**

**राजेति** ॥ राजभिरद्यते। 'अद भक्षणे' (अ० प० अ०)। कर्मणि ल्युट् (३।३।११३)। '**राजादनं** क्षीरिकायां पियाले किंशुकेऽपि च' ॥*॥ 'राजातनम्' इति पाठे राजानमतति, इति वा ल्युः (३।१।१३४)। 'राजादनं **प्रसरको** राजातनः' इति वाचस्पतिः ॥ (१) ॥*॥ पीयते। 'पीयुः' सौत्रो धातुः। 'पीयुक्कणिभ्यां कालन् ह्रस्वः' (उ० ३।७६) ॥*॥ बाहुलकात् प्रीणातेः कालनि प्रियालश्च। '**प्रियालश्च पियालकः**' इति माधवः ॥ (२) ॥*॥ सन्नो लीनः कद्रुर्वर्णोऽस्य ॥ (३) ॥ दधन्ति धारयति। 'धन धान्ये' (जु० प० से०)। 'भृमृशी–' (उ० १।७) इत्युः। 'धनुः पियालद्रुमः' इति रूपरत्नाकरः। '**धनुः** पुमान् प्रियालद्रौ राशिभेदे शरासने' इति नान्तेषु मेदिनी ॥*॥ उसिः (२।११७) वा। '**धनुः** पियाले ना, न स्त्री राशिभेदे शरासने' इति सान्तेषु च मेदिनी ॥*॥ पटति। 'पट गतौ' (भ्वा० प० से०)। अच् (३।१।१३४)। '**पटः** प्रियालवृक्षे ना सुचेले पुंनपुंसकम्' इति रभसः ॥*॥ 'धनुष इव पटो विस्तारोऽस्य, समस्तं नाम' इति स्वामी ॥ (४) ॥*॥ चत्वारि '**प्रियालस्य**' '**चार**' इति ख्यातस्य ॥

**गंभारी सर्वतोभद्रा काश्मरी मधुपर्णिका ॥ ३५ ॥**
**श्रीपर्णी भद्रपर्णी च काश्मर्यश्चापि**

**गमिति** ॥ कं जलं बिभर्ति। 'डुभृञ् धारणपोषणयोः' (जु० उ० अ०)। 'कर्मण्यण्' (३।२।१)। पृषोदरादित्वात् गत्वम् ॥*॥ '**कंभारी**' इत्यपि ॥ (१) ॥*॥ सर्वतो भद्रं यस्याः। '**सर्वतोभद्र** इत्युक्तः काव्यचित्रे गृहान्तरे। निम्बे ना **सर्वतोभद्रा** गंभारी नटयोषितोः' इति मेदिनी ॥ (२) ॥*॥ काशते। 'काशृ दीप्तौ' (भ्वा० आ० से०)। 'अन्येभ्योऽपि' (३।२।७५) इति मनिन्। 'वनो र च' (४।१।७) इति ङीब्रौ ॥ (३) ॥*॥ मध्विव पर्णान्यस्याः। 'पापकर्ण–' (४।१।६४) इति ङीष्। स्वार्थे कन् (५।३।७५) ॥ (४) ॥*॥ श्रीयुक्तानि पर्णान्यस्याः। '**श्रीपर्ण**स्त्वग्निमन्थेऽब्जे **श्रीपर्णी** शाल्मलौ हठे' इति हैमः। '**श्रीपर्णी** काश्मरीकुम्भ्योः क्लीबे पद्माग्निमन्थयोः' ॥ (५) ॥*॥ भद्राणि पर्णान्यस्याः ॥ (६) ॥*॥ काश्मरीशब्दोऽस्त्यस्य। 'अन्येभ्योऽपि दृश्यते' (वा० ५।२।१२०) इति यप् ॥ (७) ॥*॥ सप्त '**काश्मर्याः**' '**खंभारी**' इति ख्यातस्य ॥

**अथ द्वयोः।**

**कर्कंधूर्बदरी कोली**

**अथेति** ॥ कर्कं कण्टकं दधाति। 'डुधाञ्' (जु० उ० अ०)। 'अन्दूदृन्भू–' (उ० १।९३) इति निपातितः कूप्रत्ययान्तः ॥—शकन्ध्वादित्वात् (वा० ६।१।९४) पररूपम्—

---

१—कर्मण्यणि स्वार्थे कन् इति मुकुटोक्तं तु युक्तम्। 'वानीरे बहुवारे' इत्यादि रुद्रादिकोशलिखित 'बहुवारे' इति प्रयोगात् ॥

१—'प्रियालपनसाराणि यौवनानीव वनानि' इति दमयन्तीश्लेषात् ॥ २—सन्नः, कद्रुश्च, इति नामनी इति सोमनन्दी—इति मुकुटः ॥

इति स्वामी चिन्त्यः ॥ (१) ॥*॥ बदति । 'बद स्थैर्ये' (भ्वा० प० से०) । 'दिवि भ्रमि–' (उ० ३।११७) इत्यमरः । गौरादिङीष् (४।१।४१) । यत्तु—'द्वयोः' इत्युक्तेः कर्कन्धूर्बदरश्च—इति मुकुटः । तन्न । '**बदरी** कोले, क्लीबं तु तत्फले' इति मेदिनीविरोधात् ॥ (२) ॥*॥ कोलति घनीभवति । 'कुल संस्त्याने' (भ्वा० प० से०) । अच् (३।१।१३४) । गौरादिङीष् (४।१।४१) । मुकुटस्तु—इन् (उ० ४।११८) प्रत्यये वा ङीष् (ग० ४।१।४५)—इत्याह । तन्न । कोल्याः फले अण् (४।३।१३४) लुकोः (४।३।१६४) ङीषो लुकि (१।२।४९) च 'कोलि' इति रूपापत्तेः । ('कोलम्' इति रूपानुपपत्तेः) ॥*॥ इनि (उ० ४।११८) (**कोलिः**) ह्रस्वान्तोऽपि ॥ (३) ॥*॥ कौ वलति । 'वल प्राणने' (भ्वा० प० से०) । अच् (३।१।१३४) । **कुवली**शब्दोऽप्यत्र ॥*॥ त्रीणि '**बदर्याः**' ॥

**कोलं कुवलफेनिले ॥ ३६ ॥**

**सौवीरं बदरं घोण्टापि**

**कोलमिति** ॥ कोलीकुवलीबदरीणां फलेऽण् (४।३।१३४) लुकौ (४।३।१६४) । 'लुक् तद्धितलुकि' (१।२।४९) इति ङीषो लुक् । '**कोलं** कोलिफले क्लीबं पिप्पलीचव्ययोः स्त्रियाम्' ॥ (१) ॥*॥ ('**कुवलं** चोत्पले मुक्ताफलेऽपि बदरीफले') ॥ (२) ॥*॥ फेनोऽस्यास्ति । 'फेनादिलच्च' (५।२।९९) ॥ (३) ॥*॥ सुविरदेशे भवम् । 'तत्र भवः' (४।३।५३) इत्यण् । 'स्रोतोऽञ्जने तु **सौवीरं** बदरे काञ्जिकेऽपि च' इति दन्त्यादौ रभसः ॥ (४) ॥*॥ (५) ॥*॥ घोणते । 'घुण भ्रमणे' (भ्वा० आ० से०) बाहुलकाट्टः । '**घोण्टा** तु बदरीपूगवृक्षयोरपि योषिति' (इति मेदिनी) । 'बदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत् । अटव्यामेव सा घोण्टा गोपघोण्टेति चोच्यते' ॥ (६) ॥*॥ षट् '**कर्कंधूफलस्य**' । स्वामी तु—आद्यास्त्रयो वृक्षार्थाः । अन्ये फलार्थाः । घोण्टा तूभयार्था—इत्याह । स्वामी तु घोण्टाकोले व्यत्यासेन पठति ॥

**अथ स्यात्स्वादुकण्टकः ।**

**विकङ्कतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि ॥ ३७ ॥**

**अथेति** ॥ कण्टकोऽस्यास्ति । अर्श आद्यच् (५।२।१२७) स्वादुश्चासौ कण्टकश्च ॥ (१) ॥*॥ विकङ्कते । 'ककिर्गत्यर्थः' (भ्वा० आ० से०) । अतच् प्रत्ययः ॥ (२) ॥*॥ स्रुवाया वृक्षः । '**स्रुवा** द्वयोर्होमपात्रे सल्लकीमूर्वयोः स्त्रियाम्' ॥ (३) ॥*॥ ग्रन्थिरस्यास्ति सिध्मादित्वाल्लच् (५।२।९७) ॥ (४) ॥*॥ व्याघ्रस्य पादा इव पादा मूलान्यस्य । 'पादस्य लोपः–' (५।४।१३८) इत्यकारलोपः ॥ (५) ॥*॥ पञ्च '**विकङ्कतस्य**' '**कठेर**' इति ख्यातस्य ॥

**ऐरावतो नागरङ्गः**

**ऐरेति** ॥ इरावत्या विद्युत इवायम् । 'तस्येदम्' (४।३।१२०) इत्यण् । '**ऐरावतो**ऽभ्रमातङ्गे नारङ्गे लकुटद्रुमे । नागभेदे च पुंसि स्याद्विद्युत्तद्भेदयोः स्त्रियाम् । नपुंसके महेन्द्रस्य ऋजुदीर्घशरासने' ॥ (१) ॥*॥ नागा रज्जन्त्यत्र । 'रञ्ज रागे' (भ्वा० उ० अ०) । 'हलश्च' (३।३।१२१) इति घञ् । नागस्य सिन्दूरस्येव रङ्गोऽस्य, इति वा ॥*॥ 'नागरङ्गे तु **नारङ्गो नार्यङ्गस्तक्रवासनः**' इति वाचस्पतिः । '**नारङ्गः** पिप्पलीरसे । यमजप्राणिनि विटे नागरङ्गद्रुमेऽपि च' ॥ (२) ॥*॥ द्वे '**नारङ्गी**' इति ख्यातस्य ॥

**नादेयी भूमिजम्बुका ।**

**नेति** ॥ नद्यां भवा । 'नद्यादिभ्यो ढक्' (४।२।९७) । '**नादेयी** नागरङ्गे स्याज्जयायां जलवेतसे । भूमिजम्ब्वां जपायां च काङ्कुष्ठे च समीक्ष्यते' इति विश्वः ॥ (१) ॥*॥ भूमेर्जम्बूः ह्रस्वत्वात्स्वार्थे कन् (५।३।८६) ॥ (२) ॥*॥ द्वे '**नारङ्गस्य**', चत्वारि '**नारङ्गस्य**' इत्यन्ये ॥

**तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ३८**

**तीति** ॥ तिम्यति । 'तिम आर्द्रत्वे' (दि० प० से०) । मृगय्वादिः (उ० १।३७) 'संज्ञायां कन्' (५।३।७५) ॥ (१) ॥*॥ स्फूर्जति । 'टुओ स्फूर्जा वज्रनिर्घोषे' (भ्वा० प० से०) । ण्वुल् (३।१।१३३) ॥ (२) ॥*॥ कालः स्कन्धो यस्य । '**कालस्कन्ध**स्तमाले स्यात्तिन्दुके जीवकद्रुमे' इति विश्वः ॥ (३) ॥*॥ शिति कालः सारो मज्जा यस्य ॥ (४) ॥*॥ चत्वारि '**तिन्दुकस्य**' '**तेंदुँ**' इति ख्यातस्य ॥

**काकेन्दुः कुलकः काकपीलुकः काकतिन्दुके ।**

**केति** ॥ काकानां काकवर्णो वा तिन्दुः ॥ (४) ॥*॥ पृषोदरादिः (६।३।१०९) ॥ (१) ॥*॥ कुलस्य गृहस्य प्रतिकृतिरिव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । '**कुलकं** तु पटोले स्यात्संबद्धश्लोकसंहतौ । पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ काकैः पील्यते । 'पील प्रतिष्टम्भे' (भ्वा० प० से०) । बाहुलकादुः । 'काकानां पीलुरिव' इति वा ॥ (३) ॥*॥ चत्वारि '**कटुतिन्दुकस्य**', '**कुचिला**' इति ख्यातस्य इत्यन्ये ॥

१—नृणाति । बाहुलकादङ्गच् । गकारान्तोऽयम् । 'भवद्वैरिवधूवदने वने च नारङ्गतरूपशोभे भान्ति गण्डशैलस्थलालंकारधारिण्यो लोध्रलताः' इति दमयन्तीश्लेषात् ॥ २—उक्तं च समन्वयप्रदीपे—'यत्र वाक्यार्थविश्रान्तिः श्लोकेनैकेन जायते । तन्मुक्तकं युगं द्वाभ्यां त्रिभिः स्यात्तिलकं पुनः । चतुर्भिः स्याच्चकलकं पञ्चभिः कुलकं ततः । महाकुलकमित्यार्याः कथयन्ति ततः परम् ॥' इति । तिलकपर्यायान्तरं वैशेषिकम् ॥

**गोलीढो झाटलो घण्टापाटलिर्मोक्षमुष्ककौ ॥ ३९ ॥**

**गोलीति** ॥ गोभिर्लिह्यते स्म । 'लिह आस्वादने' (अ० उ० अ०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ झाटं संघातं लाति 'आतोऽनुप–' (३।२।३) इति कः ॥ (२) ॥*॥ अहानि । घण्टा । बाहुलकाद्धन्तेष्टो घत्वं च । 'पट गतौ' (भ्वा० प० से०) । घञ् (३।३।१८) । पाटं लाति । बाहुलकाड्डिः । घण्टा चासौ पाटलिश्च ॥*॥ स्वामी तु (घण्टा, पाटलिः) इति नामद्वयमाह ॥ (३) ॥*॥ मोक्षयति रोगम् । मुचेः (तु० प० अ०) सन्नन्तादकर्मकाण्णिजन्तादच् (३।१।१३४) **'मोक्षस्तु** मुक्तिपाटलिमोचने' । यत्तु—'मोक्ष अवसाने' चुरादिः—इति मुकुटः । तन्निर्मूलम् ॥ (४) ॥*॥ मुष्णाति रोगम् । 'मुष स्तेये' (क्र्या० प० से०) । 'सृवृभूशुषिमुषिभ्यः कक्' (उ० ३।४१) । स्वार्थे कन् (५।३।७५) । यत्तु—'मुष्णाति' इति विगृह्य 'मुष खण्डने' इत्युपन्यस्तम् । तदयुक्तम् । तस्य (दि० प० से०) दन्त्यान्तत्वात् । त्र्यादिषु पाठाभावाच्च । 'मुष्को मोक्षकवृक्षे स्यात्संघाते वृषणेऽपि च' ॥ (५) ॥*॥ पञ्च **'लोध्रविशेषस्य'** ॥

**तिलकः क्षुरकः श्रीमान्**

**तिलेति** ॥ तिलति । 'तिल स्नेहने' (तु० प० से०) । 'क्वुन् शिल्पिसंज्ञयोः' (उ० २।३२) तिल इव, इति वा । कन् (५।३।९६) । **'तिलको** द्रुमभेदेऽश्वभेदे च तिलकालके । क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके' ॥ (१) ॥*॥ क्षुरति । 'क्षुर विलेखने' (तु० प० से०) । क्वुन् (उ० २।३२) । **'क्षुरकः** कोकिलाक्षे स्याद्गोक्षुरे तिलकद्रुमे' ॥ (२) ॥*॥ श्रीरस्त्यस्य । मतुप् (५।२।९४) । **'श्रीमां**स्तिलकवृक्षे ना मनोज्ञे धनिके त्रिषु' ॥ (३) ॥*॥ त्रीणि **'तिलकस्य'** ॥

**समौ पिचुलझावुकौ ।**

**सेति** ॥ **'पिचुः** स्यात्तूलकर्षयोः' इति धरणिः । पिचुं तूलं लाति । **'पिचुलो** झावुकेऽपि स्यान्निचुले जलवायसे' ॥ (१) ॥*॥ 'झा' इति शब्दं वेति गच्छति । 'वी गत्यादिषु' (अ० प० अ०) मितद्र्वादित्वात् (वा० ३।२।१८०) डुः । ततः 'संज्ञायां कन्' (५।३।७५) ॥ (२) ॥*॥ द्वे **'झावुकस्य' 'झातु'** इति ख्यातस्य ॥

**श्रीपर्णिका कुमुदिका कुम्भी कैटर्यकट्फलौ ॥ ४० ॥**

**श्रीति** ॥ श्रीः पर्णेषु यस्याः । 'पाककर्णपर्ण–' (४।१।६४) इति ङीप् । स्वार्थे कन् (५।३।७५) । **'श्रीपर्णी** काश्मरीकुम्भ्योः क्लीबे पद्माग्निमन्थयोः' ॥ (१) ॥*॥ कौ मोदते । 'मुदी हर्षे' (भ्वा० अ० से०) 'इगुपध–' (३।१।१३५) इति कः । स्वार्थे कन् (५।३।७५) । **'कुमुदं** कैरवे रक्तपद्मे स्त्री कुम्भिकौषधौ । गंभार्यां पुंसि दिङ्नागे नागशाखामृगान्तरे' ॥ (२) ॥*॥ कुम्भीव कुम्भी रसाधारत्वात् । **'वृश्चिकायां च कुम्भी** स्यात्पाटलौ कट्फलेऽपि च' इति रन्तिदेवः ॥ (३) ॥*॥ केटनम् । 'किट त्रासे' (भ्वा० प० से०) घञ् (३।३।१८) । केटं राति अतितिक्तत्वात् चतुर्वर्णादित्वात् (वा० ५।१।१२४) ष्यञ् ॥ (४) ॥*॥ कटति । 'कटे वर्षावरणयोः' (भ्वा० प० से०) क्विप् (३।२।१७८) कट् फलमस्य ॥ (५) ॥*॥ पञ्च **'कुम्भ्याः', 'कायफल'** इति ख्यातस्य ॥

**क्रमुकः पट्टिकाख्यः स्यात्पट्टी लाक्षाप्रसादनः ।**

**क्रेति** ॥ क्रामति । 'क्रमु पादविक्षेपे' (भ्वा० प० से०) । बाहुलकादुः । **'क्रमुकः** पट्टिकालोध्रे गुवाके भद्रमुस्तके' । यत्तु—'शिल्पिसंज्ञयोः–' (उ० २।३२) इति क्वुनि वा–इत्याह मुकुटः । तन्न । 'क्रमक' इति रूपापत्तेः ॥ (१) ॥*॥ पट्टिका आख्या यस्य ॥ (२) ॥*॥ पट्टोऽस्यास्ति । 'अत इनि–' (५।२।११५) । **'पट्टः** पेषणपाषाणे व्रणादीनां च बन्धने । चतुष्पथे च राजादिशासनान्तरपीठयोः' ॥*॥ यद्वा पट्टिशब्दात् क्तिजन्तान्ङीष् (ग० ४।१।४५) । (**'पट्टिः** स्त्री पट्टभेदे स्याल्ललाटे क्रमुकद्रुमे' । **'पट्टी** ललाटभूषायां **पट्टी** लाक्षाप्रसादने' इति टवर्गान्ते विश्वः) ॥ (३) ॥*॥ लाक्षा प्रसीदत्यनेन । युच् (उ० २।७८) करणे । लाक्षां प्रसादयति वा । 'कृत्यल्युटः' (३।३।११३) इति ल्युट् ॥ (४) ॥*॥ चत्वारि **'लोहितलोध्रभेदस्य'** ॥

**नूदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ॥ ४१ ॥ तूलं च**

**नूद इति** ॥ नुदति पापम् । 'णुद प्रेरणे' (तु० उ० अ०) 'इगुपध–' (३।१।१३५) इति कः । पृषोदरादिः (६।३।१०९) ।—'अन्येषामपि' (६।३।१३७) इति दीर्घः–इति मुकुटः । तन्न । तत्र 'उत्तरपदे' इत्यधिकारात् ।—'घञर्थे कः'—इत्यपि न । यद्वा नुवदति । 'वद व्यक्तायां वाचि' (भ्वा० प० से०) । मूलविभुजादिः (वा० ३।२।५) । कर्मणः कर्तृत्वम् । यद्वा नूयते । 'णू स्तुतौ' (तु० प० से०) कुटादिः । बाहुलकाद्दः ॥*॥ **'तूदः'** इति स्वामी । तत्र 'तुद व्यथने' (तु० उ० अ०) । 'इगुपध–' (३।१।१३५) । इति कः । पृषोदरादिः (६।३।१०९) ॥ (१) ॥*॥ युवन्त्यनेन । 'यु मिश्रणामिश्रणयोः' (अ० प० से०) । 'कुयुभ्यां च' (उ० ३।२७) इति पो दीर्घश्च । मुकुटस्तु—'पूष वृद्धौ' (भ्वा० प० से०) । इगुपधत्वात् (३।१।१३५) कः । पवते वा । 'यूष्वोर्लोपश्च' इति पवतेरूषन् धात्वन्तलोपः—इति वदन् **'पूषः'** इति पाठं मन्यते । किंतु 'यूष्वोर्लोपश्च' इति सूत्रमुज्ज्वलदत्तादौ न दृश्यते ॥ (२) ॥*॥ क्रामति । 'क्रमु पादविक्षेपे' (भ्वा० प० से०) । बाहुलकादुकन् । **'क्रमुको** भद्रमुस्तके । गुवाके पट्टिकालोध्रे' इति हैमः ॥ (३) ॥*॥ 'ब्रह्मणि वैदिके साधुः' 'तत्र साधुः' । (४।४।९८) इति यत् । 'ये चाभावकर्मणोः' ।

१—'कुम्भिकाद्रुमे' इति पाठः ।

(६।४।१६८) इत्यन् प्रकृत्या । ('ब्रह्मण्यो ब्रह्मसाधौ स्याद्ब्रह्मदा(से) शनैश्चरे') ॥ (४) ॥*॥ ब्रह्मणो ब्रह्मणि वा दारु ॥ (५) ॥*॥ तूलयति, तूल्यते वा । 'तूल निष्कर्षे' (भ्वा० प० से०) । 'इगुपध–' (३।१।१३५) इति कः । घञ् (३।३।१९) वा । 'पुंलिङ्गस्तु पिचौ **तूलः** क्लीबं स्याद्ब्रह्मदारुणि' इति रुद्रः ॥ (६) ॥*॥ षट् **'अश्वत्थाकारस्य' 'पार्श्वपिप्पल'** इति ख्यातस्य । **'तूँत'** इति ख्यातस्य इत्यन्ये ॥

**नीपप्रियककदम्बास्तु हलिप्रिये ।**

**नीपेति** ॥ नयति, नीयते वा 'णीञ् प्रापणे' (भ्वा० उ० अ०) 'पानीविषिभ्यः पः' (उ० ३।२३) बाहुलकाद्गुणाभावः । **'नीपः** कदम्बबन्धूकनीलाशोकद्रुमेषु च' ॥ (१) ॥*॥ प्रीणाति । 'प्रीञ् तर्पणे' (क्र्या० उ० अ०) । 'कुन् शिल्पिसंज्ञयोः' (उ० २।३२) । **'प्रियकः** पीतसारके । नीपे चित्रमृगे चालौ प्रियंगौ कुङ्कुमेऽपि च' ॥ (२) ॥*॥ कदति । 'कद' सौत्रो हिंसार्थः । 'कृकदिकडिकटिभ्योऽम्बच्' (उ० ४।८२) ।—'कदेर्णिद्वा' इत्यम्बच्—इति मुकुटः । तन्न । तादृशसूत्राभावात् । **'कदम्बं** निकुरम्बे स्यान्नीपसर्षपयोः पुमान्' ॥ (३) ॥*॥ हलिनः प्रियः । सुराया अधिवासनात् ॥ (४) ॥*॥ चत्वारि **'कदम्ब'** इति ख्यातस्य ॥

**वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु ॥ ४२ ॥**

**वीरेति** ॥ वीर इव वृक्षो दुःस्पर्शत्वात् । **'वीरवृक्षस्तु** भल्लातकार्जुनद्रुमयोः पुमान्' ॥ (१) ॥*॥ अरुर्व्रणं करोति 'दिवाविभा–' (३।२।२१) इति टः । 'नित्यं समासेऽनुत्तरपदस्थस्य' (८।३।४५) इति षः । **'अरुष्करो** व्रणकृति त्रिषु, भल्लातके पुमान्' ॥ (२) ॥*॥ अग्निरिव मुखमस्याः, गौरादिः (४।१।४१) । **'भवेदग्निमुखो** देवे विप्रे भल्लातके स्त्रियाम्' ॥ (३) ॥*॥ भल्ल इवातति । 'अत सातत्यगमने' (भ्वा० प० से०) । कुन् (उ० २।३२) । 'जातेः' (४।१।६३) इति ङीष् ॥ (४) ॥*॥ चत्वारि **'भल्लातक्याः' 'भेलावा'** इति ख्यातस्य ॥

**गर्दभाण्डे कंदरालकपीतनसुपार्श्वकाः ।**
**प्लक्षश्च**

**गर्देति** ॥ **'गर्दभो** गन्धभिद्यपि' । गर्दभममिति । 'अम गत्यादिषु' (भ्वा० प० से०) । 'अमन्ताड्डः' (उ० १।११४) ॥ (१) ॥*॥ कंदरां लाति । 'आतः–' (३।२।३) इति कः । **'कंदरालः** पुमान् गर्दभाण्डे प्लक्षतरावपि' ॥ (२) ॥*॥ या लक्ष्म्यास्तन ईतनः । कपीनां कपेर्वर्णस्य वा ईतनः । **'कपीतनो** गर्दभाण्डशिरीषाम्रातकेषु च । अश्वत्थे च' इति विश्वः ॥ (३) ॥*॥ शोभनं पार्श्वमस्य ॥ (४) ॥*॥ प्रक्षरति । 'क्षर संचलने' (भ्वा० प० से०) । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । 'कपिलिकादित्वात्' (वा० ८।२।१८) लत्वम् । **'प्लक्षो** द्वीपे गर्दभाण्डेऽश्वत्थे जटिनि पक्षके' इति हैमः ॥ (५) ॥*॥ पञ्च **'प्लक्षस्य' 'गेढी'** इति ख्यातस्य ॥

**तिन्तिडी चिञ्चाम्लिका**

**तिन्तीति** ॥ तिम्यति । 'तिम आर्द्रीभावे' (दि० प० से०) 'अलीकादयश्च' (उ० ४।२५) इति निपातः । 'तिन्तिडी त्वम्लिका चिञ्चा तिन्तिडीका कपिप्रिया' इति वाचस्पतिः । (**'तिन्तिडी** चुक्रे चिञ्चायाम्' ॥ (१) ॥*॥ 'चिम्' इत्यव्यक्तं शब्दं चिनोति । 'चिञ् चयने' (स्वा० उ० अ०) । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः ॥ (२) ॥*॥ अम्लो रसोऽस्यास्ति । 'अतः' (५।२।११५) इति ठन् । 'अम्लीका चाम्लिका चिञ्चा तिन्तिडीका च तिन्तिला' इति चन्द्रः । (**'अम्लिका** तिन्तिडीकाम्लोद्गारचाङ्गेरिकासु च') ॥ (३) ॥*॥ त्रीणि **'चिञ्चायाः'** ॥

**अथो पीतसालके ॥ ४३ ॥**

**सर्जकासनबन्धूकपुष्पप्रियकजीवकाः ।**

**अथविति** ॥ पीतः सारोऽस्य रलयोरैकत्वम् ॥ (१) ॥*॥ सृजति 'सृज विसर्गे' (तु० प० अ०) ण्वुल् (३।१।१३३) । यद्वा सर्ज्यते । 'षर्ज अर्जने' (भ्वा० प० से०) । कुन् (उ० २।३२) ॥ (२) ॥*॥ अस्यति रुजम् । 'असु क्षेपणे' (दि० प० से०) । ल्युः (३।१।१३३) । 'प्रियको जीवकोऽसनः' इति रत्नकोशः । **'असनं** क्षेपणे क्लीबं पुंसि स्याज्जीवकद्रुमे' । प्रज्ञाद्यण् (५।४।३८) । 'पीठेभस्कन्धयोः क्लीब**मासनं** ना तु जीवके' इति रुद्ररभसौ ॥ (३) ॥*॥ बन्धूकस्येव पुष्पाण्यस्य ॥ (४) ॥*॥ प्रीणाति । 'प्रीञ् तर्पणे' (क्र्या० उ० अ०) । कुन् (उ० २।३२) । **'प्रियकः** पीतसारके । नीपे चित्रमृगे चालौ प्रियंगौ कुङ्कुमेऽपि च' ॥ (५) ॥*॥ जीवयति । 'जीव प्राणधारणे' (भ्वा० प० से०) । ण्वुल् (३।१।१३३) । **'जीवकः** प्राणके पीतसारकृपणयोरपि । कूर्चशीर्षे च पुंसि स्यात्' ॥ (६) ॥*॥ षट् **'जीवकस्य' 'विजयसार'** इति ख्यातस्य ॥

**साले तु सर्जकार्श्याश्वकर्णकाः सस्यसंवरः ॥ ४४ ॥**

**सेति** ॥ सल्यते । 'षल गतौ' (भ्वा० प० से०) कर्मणि घञ् (३।३।१९) । सारो दार्ढ्यमतिशयितमस्य । अर्शआद्यच् (५।२।१२७) वा । 'पुंसि भूरुहमात्रेऽपि **सालो**[२] वरणसर्जयोः' इति दन्त्यादौ रभसः ॥ (१) ॥*॥ सर्ज्यते । 'षर्ज अर्जने' (भ्वा० प० से०) । ण्यन्तादच् (३।३।५६) ॥ (२) ॥*॥ कृषति । 'कृष विलेखने' (तु० उ० अ०) । 'इगुपध–'

---

१—ह्रस्वादि दन्त्यमध्यम् । 'निरसनैरसनैः' इति माघयमकात् ॥ ह्रस्वादितालव्यमध्यमपि । 'विकसितकंदलदर्शनैर्यो वमति दरी मुखैश्च कं दलदशनैः' इति वृन्दावनयमकात्—इति मुकुटः ॥ २—सालो दन्त्यादिः—'सालकाननशोभिनी' इति दण्डिश्लेषात् ॥ 'सालसदृशं भुजवनं भवानी च' इति दमयन्तीश्लेषाच्च ॥

(३।१।१३५) इति कः । चातुर्वर्ण्यादित्वात् ( वा० ५।१।१२४) ष्यञ् ॥ (३) ॥*॥ अश्वकर्ण इव पत्रमस्य ॥ (४) ॥*॥ सस्यैः संव्रियते । 'वृञ् वरणे' (स्वा० उ० से०) । 'ग्रहवृद-' (३।३।५८) इत्यप् ॥ (५) ॥*॥ पञ्च **'सालस्य' 'शालवृक्षस्य'** ॥

**नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः ।**

**नेति** ॥ नद्याः सर्जः ॥ (१) ॥*॥ वीरश्चासौ तरुश्च । दृढकाष्ठत्वात् ॥ (२) ॥*॥ इन्द्रस्य, इन्द्र इव वा द्रुः ॥ (३) **'ककुप्** स्त्रियां प्रवेणीदिक्शोभासु चम्पकस्रजि' । ककुभो दिशः सन्त्यस्य । बहुविस्तारत्वात् । अर्शआद्यच् ( ५।२।१२७) । 'ककुभो रागभेदेऽपि वीणाङ्केऽर्जुनपादपे' ॥ (४) ॥*॥ अर्ज्यते । 'अर्ज अर्जने' ( भ्वा० प० से० ) । 'अर्जेर्णिलुक् च' (उ० ३।५८) इत्युनन् ॥*॥ **'पार्थस्तु** ककुभे जिष्णौ' इति विश्वात् पार्थोऽपि ॥ (५) ॥*॥ पञ्च **'अर्जुनवृक्षस्य' 'कौपीतक'** इति ख्यातस्य ॥

**राजादनः फलाध्यक्षः क्षीरिकायाम्**

**राजेति** ॥ राजभिरद्यते । 'अद भक्षणे' (अ० प० अ०) कर्मणि ल्युट् (३।३।११४) । **'राजादनं** क्षीरिकायां पियाले किंशुकेऽपि च' । **'राजादनः** पियालद्रौ क्षीरिकायां त्रिपत्रके' इति हैमात् पुंलिङ्गोऽपि ॥ (१) ॥*॥ फलानामध्यक्षः ॥ (२) ॥*॥ क्षीरमस्त्यस्याः । 'अतः' (५।२।११५) इति ठन् ॥ (३) ॥*॥ त्रीणि **'क्षीरिकायाः' 'खिरणी'** इति ख्यातस्य ॥

**अथ द्वयोः ॥ ४५ ॥**

**इङ्गुदी तापसतरुः**

**अथेति** ॥ इङ्गनम् । 'इगि गतौ' (भ्वा० प० से०) । घञ् ( ३।३।१८) । इङ्गं द्यति 'दो अवखण्डने' (दी०प०अ०)। 'आतोऽनुप-' ( ३।२।३ ) इति कः । पृषोदरादिः ( ६।३।१०९) । 'जातेः' (४।१।५३) इति ङीष् ॥ (१) ॥*॥ तपस्विन उपयुक्तस्तरुः ॥ (२) ॥*॥ द्वे **'इङ्गुद्याः' 'इङ्गुआ'** इति ख्यातस्य **'जियापूता'** इति ख्यातस्य-इति मुकुटः ॥

**भूर्जे चर्मिमृदुत्वचौ ।**

**भ्विति** ॥ ऊर्जनमूर्जः । 'ऊर्ज बलप्राणनयोः' (चु० प० से०) घञ् (३।३।११८) । भूरूर्जोऽस्य ॥ (१) ॥*॥ प्रशस्तं चर्मास्यास्ति । व्रीह्यादित्वात् (५।२।११६) इनिः । **'चर्मी** फलकपाणौ स्याद्भूर्जे भृङ्गिरिटावपि' ॥ (२) ॥*॥ मृदुस्त्वगस्य ॥ (३) ॥*॥ त्रीणि **'भोजपत्रवृक्षस्य'** ॥

**पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ४६**

**पीति** ॥ पिच्छा शाल्मलिनिर्यासोऽस्या अस्ति । पिच्छादित्वात् (५।२।१००) इलच् ॥ (१) ॥*॥ पूरयति । 'पूरी आप्यायने' ( चु० उ० से० ) । ल्युट् ( ३।३।११४ ) । 'टिड्ढा-' (४।१।१५) इति ङीप् । यत्तु मुकुटः—'वोंः-' (८।२।७६) इत्यादिना दीर्घः—इत्याह । तन्न । हलुपदान्तयोरभावात् । धातोर्दीर्घोपधत्वाच्च । **'पूरणः** पूरके त्रिषु । क्लीबं पिष्टप्रभेदे च **पूरणी** शाल्मलिद्रुमे । ( पटारम्भकसूत्रेषु)' ॥ (२) ॥*॥ मुञ्चति रसम् । 'मुच्लृ मोक्षणे' (तु० उ० अ०) । पचाद्यच् (३।१।१३४) । **'मोचः** शोभाञ्जने पुंसि **मोचा** शाल्मलिरम्भयोः' ॥ (३) ॥*॥ स्थिरमायुर्यस्याः । 'षष्टिं वर्षसहस्राणि वने जीवति शाल्मलिः' इति वचनात् ॥ (४) ॥*॥ शालयति । 'शल संचलने' (भ्वा० आ० से०) णिजन्तः । क्विप् (३।२।१७८) । मलते । 'मल धारणे' (भ्वा० आ० से०) । 'सर्वधातुभ्य इन्' ( उ० ४।११८ ) । शाल् चासौ मलिश्च ॥ (५) ॥*॥ पञ्च **'शाल्मल्याः' 'सेंबर'** इति ख्यातस्य ॥

**पिच्छा तु शाल्मलीवेष्टे**

**पीति** ॥ पतितुमिच्छति । 'पत्लृ गतौ' (भ्वा० प० से०) सन्नन्तः । पचाद्यच् (३।१।१३४) । पृषोदरादिः ( ६।३।१०९) । यद्वा पिच्छ(य)ति, पिच्छयते, वा । 'पिच्छ बाधे' (चु० प० से०) । अच् (३।१।१३४) । घञ् ( ३।३।१९ ) वा ॥ (१) ॥*॥ शाल्मल्या वेष्टः । **'क्वाथः कषायो निर्यूषो निर्यासो वेष्टक**स्तथा' इति रभसः ॥ (२) ॥*॥ द्वे **'शाल्मलिकाथस्य' 'सेंवरीगोंद'** इति ख्यातस्य ॥

**रोचनः कूटशाल्मलिः ।**

**रोचेति** ॥ रोचते । 'रुच दीप्तौ' (भ्वा० आ० से०) । 'अनुदात्तेतश्च-' (३।२।१४९) इति युच् । **'रोचना** रक्तकह्लारे गोपित्तवरयोषितोः । **रोचनः** कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिषु' ॥ (१) ॥*॥ कूटश्चासौ शाल्मलिश्च ॥ (२) ॥*॥ द्वे **'कृष्णशाल्मलेः'** । कुत्सितशाल्मलेः इत्येके ॥

**चिरविल्वो नक्तमालः करजश्च करञ्जके ॥ ४७ ॥**

**चिरेति** ॥ चिरं विलति । 'विल भेदने' (तु० प० से०) बाहुलकाद्वः ॥*॥ **'चिरिबिल्वः'** इत्यन्ये ॥ (१) ॥*॥ नक्तं मालो धारणमस्य । नक्तमा अलति वा । 'अल भूषणादौ' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) ॥*॥ **'रक्तमालः'** इति स्वामी ॥ (२) ॥*॥ करेण जन्यते । 'अन्यत्रापि' (३।२।१०१) इति डः । कं सुखं जलं वा रञ्जयति । 'कर्मण्यण्' । (३।२।१)-'त्यजरज-' (३।२।१४२) इति निर्देशादकिल्यपि नलोपः । संज्ञापूर्वकत्वान्न वृद्धिः । —णिलोपस्य स्थानिवत्त्वान्नोपधावृद्धिः—इति मुकुटः । तन्न । एवमपि णिनिमित्तवृद्धेर्दुर्वारत्वात् । **'करजं** स्याद्व्याघ्रनखे करञ्जनखयोः पुमान्' ॥ (३) ॥*॥ कं रञ्जयति । 'कर्मण्यण्' (३।२।१) । ('ज्ञापकसिद्धं न सर्वत्र' इत्युक्तेर्नलोपाभावः) । स्वार्थे कन् (५।३।७५) ॥ (४)॥*॥ चत्वारि **'करञ्जवृक्षस्य'**॥

**प्रकीर्यः पूतिकरजः पूतीकः कलिमारकः ।**

**प्रकीति** ॥ प्रकीर्यते । 'कॄ विक्षेपे' (तु० प० से०)। अघ्न्यादित्वात् (उ० ४।११२) यक् ।—ण्यति पूर्वविप्रतिषेधाद्दीर्घरपरत्वे च-इति मुकुटः । तन्न । पूर्वविप्रतिषेधस्य निर्मूलत्वात् । 'इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन' (वा० ७।१।१००) इति वचनाच्च । '**प्रकीर्यः** पूतिकरजे विप्रकीर्णे तु वाच्यवत्' ॥ (१) ॥*॥ पूतिश्चासौ करजश्च ॥ (२) ॥*॥ पुनाति । 'पूञ् पवने' (क्र्या० उ० से०) । 'तिन्तिडीकादयश्च' (उ० ४।२०) इतीकन् तुक्च ॥*॥ ('पूतिकः' इति पाठे पूतिं कायति । 'पूतीकः **पूतिकः**' इति माधवः) ॥ (३) ॥*॥ कलिं मारयति । यदाहेन्दुः—'**पूतीकरञ्जः सुमना**स्तथा कलहनाशनः । मुकुटस्तु—कलिं करोति । 'कर्मण्यण्' (३।२।१) स्वार्थे कन् (५।३।७५) । **कलिकारकः**—इत्याह ॥ (४) ॥*॥ चत्वारि '**कण्टकवत्करञ्जस्य**' ॥

**करञ्जभेदाः षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ॥ ४८ ॥**

**केति** ॥ षड् ग्रन्थयो यस्य । 'अच्' 'प्रत्यन्ववपूर्वात्–' (५।४।७५) इत्यत्र 'अच्' इति योगविभागादच् । षड् ग्रन्था यस्य वा । '**षड्ग्रन्था** तु वचायां स्त्री स्यात्करञ्जान्तरे पुमान्' ॥ (१) ॥*॥ मर्कति 'मर्क' सौत्रो धातुः । 'शकादिभ्योऽटन्' (उ० ४।८१) । गौरादिः (४।१।४१) । 'अथ **मर्कटी** । करञ्जभिच्छूकशिम्ब्योः पुंसि वानरलूतयोः' ॥ (१) ॥*॥ अङ्गारवर्णपर्णा वल्लरी ॥ (१) ॥*॥ '**करञ्जभेदानाम्**' एकैकम् ॥

**रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ।**

**रोहीति** ॥ अवश्यं रोहति 'आवश्यका–' (३।३।१७०) इति णिनिः । '**रोही** रोहितकेऽश्वत्थवटपादपयोः पुमान्' (१) ॥*॥ रोहितो वर्णोऽस्यास्ति । 'अर्शआद्यच्' (५।२।१२७) । स्वार्थे कन् (५।३।७५) । '**रोहितं** कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे ना रोहितद्रुमे' ॥ (२) ॥*॥ 'प्लीहशत्रुर्वनतिक्तश्च **रोहितः**' इति माधवः । प्लीहः शत्रुः ॥ (३) ॥*॥ दाडिमस्य पुष्पमिव पुष्पमस्य ॥ (४) ॥*॥ चत्वारि '**रोहितकस्य**' '**रोहिड**' इति ख्यातस्य ॥

**गायत्री बालतनयः खदिरो दन्तधावनः ॥ ४९ ॥**

**गायेति** ॥ गायन्तं त्रायते । 'त्रैङ् पालने' (भ्वा० आ० अ०) । 'आतोऽनुप–' (३।२।३) इति कः । '**गायत्री** खदिरे स्त्री स्यात्' इति रभसः । '**गायत्री** त्रिपदादेवीछन्दोभित्खदिरेषु च' ॥*॥ 'वह्निगायत्रिणां तथा' इति वैद्यकाम्नान्तोऽपि । व्रीह्यादित्वात् (५।२।११६) इनिः ॥ (१) ॥*॥ बालास्तनयाः पत्राण्यस्य ॥*॥ 'बालपत्रश्च' इति मूलपाठः—इत्यन्ये । '**बालपत्रो** यवासः खदिरश्च' इति प्राञ्चः । आह च—'खदिरो **रक्तसार**श्च गायत्री दन्तधावनः । **कण्टकी बालपत्रश्च जिह्मशल्यः क्षितिक्षमः**' ॥ (२) ॥*॥ खदति । 'खद स्थैर्ये हिंसायां च' (भ्वा० प० से०) । 'इषिमदिमुदि–' (उ० १।५१) इति किरच् । '**खदिरी** शाकभेदे स्त्री ना चन्द्रे दन्तधावने' ॥ (३) ॥*॥ दन्तान् धावति । 'धावु गतिशुद्ध्योः' (भ्वा० उ० से०) । ल्युट् (३।३।११४) ॥ (४) ॥*॥ चत्वारि '**खदिरस्य**' ॥

**अरिमेदो विट्खदिरे**

**अरीति** ॥ अरिरिव मेदः स्नेहोऽस्य ॥ (१) ॥*॥ विङ्गन्धिः खदिरः ॥ (२) ॥*॥ द्वे '**दुर्गन्धिखदिरस्य**' ॥

**कदरः खदिरे सिते ।**

**सोमवल्कोऽपि**

**कदेति** ॥ दृणाति । 'दॄ विदारणे' (क्र्या० प० से०) पचाद्यच् (३।१।१३४) । कस्य जलस्य दरः । '**कदरः** श्वेतखदिरे क्रकचव्याधिभेदयोः' ॥ (१) ॥*॥ सोम इव वल्कोऽस्य । '**सोमवल्कस्तु** धवलखदिरे कट्फलेऽपि च' ॥ (२) ॥*॥ द्वे '**श्वेतखदिरस्य**' ॥

**अथ व्याघ्रपुच्छगन्धर्वहस्तकौ ॥ ५० ॥**

**एरण्ड उरुबूकश्च रुचकश्चित्रकश्च सः ।**

**चञ्चुः पञ्चाङ्गुलो मण्डवर्धमानव्यडम्बकाः ॥ ५१ ॥**

**अथेति** ॥ व्याघ्रस्य पुच्छमिव पुच्छमस्य ॥ (१) ॥*॥ गन्धर्वस्य मृगभेदस्य हस्त इव (हस्तः) पत्रमस्य ॥ (२) ॥*॥ आ ईरयति वायुम् । 'ईर गतौ कम्पने च' (अ० आ० से०) । अस्माण्णिजन्ताद्बाहुलकादण्डच् ॥ (३) ॥*॥ उरुं महान्तं वायुं वायति । 'ओवै शोषणे' (भ्वा० प० अ०) 'उलूकादयश्च' (उणा० ४।४१) इत्यूकः । 'खपुरः क्रमुको, निचुलो हिज्जल, एरण्ड उरुबूकः' इति बोपालितः । 'उरुबूको-रुबुकव्याघ्रदलाश्च' इति रभसः ॥ (४) ॥*॥ रोचते । 'रुच दीप्तौ' (भ्वा० आ० से०) 'कुन् शिल्पिसंज्ञयोः' (उ० २।३२) इति कुन् ॥ (५) ॥*॥ चित्रयति । 'चित्र अद्भुतादौ' (चु० उ० से०) । कुन् (उ० २।३२) '**चित्रकं** तिलके ना तु व्याघ्रभिच्चञ्चुपाठिषु' ॥ (६) ॥*॥ चञ्चति । 'चञ्चु गत्यर्थः' (भ्वा० प० से०) । यत्तु—'चकि, मकि गतौ' इति धातूपन्यसनं मुकुटस्य । तच्चिन्त्यम् । बाहुलकादुः । 'चञ्चुस्त्रोट्यां स्त्रियां पुंसि गोनाडीके व्यडम्बके' ॥ (७) ॥*॥ पञ्चाङ्गुलयोऽस्य । 'तत्पुरुषस्याङ्गुलेः–' (५।४।८६) इत्यच् । यत्तु—'द्वित्रिभ्याम्–' (५।४।१०२) इत्यच्—इति मुकुटेनोक्तम् । तच्चिन्त्यम् ॥ (८) ॥*॥ मण्डयति । 'मडि भूषा-

१—'दीर्घप्रयोजकरेफकारत्वे' इत्यर्थः ॥ २—आधुनिकपुस्तकेषु तु 'पर्फरीकादयश्च' इति सूत्रमुपलभ्यते ॥

१—आधुनिकपुस्तकेषु तु खिदेरत्र सूत्रे पाठः । खदिरसिद्धिरतु (उ० १।५३ सूत्रेण) भवति ॥

याम्' (भ्वा० प० से०) । णिच् (३।१।२६) । पचाद्यच् (३।१।१३४) । 'आमलक्यां स्त्रियां **मण्ड** एरण्डे मोचपिच्छयोः' इति रभसः । '**मण्डः** पञ्चाङ्गुले शाके पुंसि क्लीबं तु मस्तुनि । आमलक्यां स्त्रियां **मण्डा**थास्त्रियां सारपिच्छयोः' ॥*॥ अकारप्रश्लेषोऽपि । '**अमण्ड**पञ्चाङ्गुलवर्धमानगन्धर्वहस्ताः' इति हारावली ॥*॥ आकारादिरपि । 'गन्धर्वहस्तकोऽमण्ड **आमण्डो व्याघ्रपुच्छकः**' इति तारपालः ॥*॥ '**आदण्डः**' इत्येके । (दीर्घदण्डत्वात्)—इति स्वामी ॥ (९) ॥*॥ वर्धते । 'वर्ध छेदनपूरणयोः' (चु० प० से०) । चानश् (३।२।१२९) । '**वर्धमानः** प्रभभेदे शरावैरण्डविष्णुषु' ॥ (१०) ॥*॥ व्यडं मलमम्बयति । 'अबि स्रंसने' (भ्वा० आ० से०) । णिच् (३।१।२६) । ण्वुल् (३।१।३३) ॥*॥ '**व्यडम्बनः**' इति स्वामी । तत्र ल्युट् (३।३।११४) । युच् (उ० २।७८) वा ॥ (११) ॥*॥ एकादश '**एरण्डस्य**' ॥

**अल्पा शमी शमीरः स्यात्**

**अल्पेति** ॥ अल्पा शमी । 'कुटीशमीशुण्डाभ्यो रः' (५।३।८८) ॥ (१) ॥*॥ एकम् '**अल्पशम्याः**' ॥

**शमी सक्तुफला शिवा ।**

**शमीति** ॥ शमयति रोगान् । पचाद्यच् (३।१।१३४) । गौरादिः (४।१।४१) । '**शमी** सक्तुफलायां च शिम्बिकायां च वेलुलौ' ॥ (१) ॥*॥ सक्तुवत् फलमस्याः । अजादिः (४।१।४) ॥ (२) ॥*॥ शिवं करोति । 'तत्करोति–' (वा० ३।१।२६) इति णिच् । पचाद्यच् (३।१।१३४) । '**शिवा** झाटामलौषधौ । अभयामलकीगौरीफेरुसक्तुफलासु च' ॥ (३) ॥*॥ त्रीणि '**शम्याः**' ॥

**पिण्डीतको मरुवकः श्वसनः करहाटकः ॥ ५२ ॥**
**शल्यश्च मदने**

**पिण्डीति** ॥ पिण्डीं तनोति । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । 'संज्ञायां कन्' (५।३।७५) । '**पिण्डीतकः** स्यात्तगरे मदनाख्यमहीरुहे' ॥ (१) ॥*॥ मरुं वाति । कुन् (उ० २।३२) ॥ (२) ॥*॥ निर्जलेऽपि श्वसिति । नन्द्यादिः (३।१।१३४) । '**श्वसनं** श्वसिते पुंसि मारुते मदनद्रुमे' ॥ (३) ॥*॥ करं हाटयति । 'हट दीप्तौ' (भ्वा० प० से०) । णिच् (३।१।२६) । 'कर्मण्यण्' (३।२।१) । स्वार्थे कन् (५।३।७५) । '**करहाटः** शिफाकन्दे पद्मस्य मदनद्रुमे' ॥ (४) ॥*॥ शलति । 'शल गतौ' (भ्वा० प० से०) । अघ्न्यादित्वात् (उ० ४।११२) यक् । 'क्ष्वेडाशङ्कुशरे **शल्यं** ना श्वाविन्मदनद्रुमे' इति तालव्यादौ रभसः ॥ (५) ॥*॥ मदयति । 'मदी हर्षग्लेपनयोः' (भ्वा० प० से०) ।

१—'गुग्गुलौ' इति पाठः ॥ 'वागुलौ' इति वा पाठः ॥

ल्युः (३।१।१३४) । '**मदनः** स्मरवसन्तद्रुभिद्वृत्तूरसिह्लके' ॥ (६) ॥*॥ षट् '**मदनस्य**' '**मयनफलाख्यवृक्षस्य**' ॥

**शक्रपादपः पारिभद्रकः ।**
**भद्रदारु द्रुकिलिमं पीतदारु च दारु च ॥ ५३ ॥**
**पूतिकाष्ठं च सप्त स्युर्देवदारुणि**

**शक्रेति** ॥ शक्रस्य पादपः ॥ (१) ॥*॥ पारि निष्ठां प्राप्तं भद्रमस्य । '**पारिभद्रस्तु** निम्बद्रौ मन्दारे देवदारुणि' ॥ (२) ॥*॥ भद्रं दारु । 'भद्रदारुणि च क्लीबम्' इत्यमरमाला । 'पुंनपुंसकयो**र्दारुः**' इति त्रिकाण्डशेषात् पुंस्यपि ॥ (३) ॥*॥ किलति । 'किल श्वैत्यक्रीडनयोः' (तु० प० से०) । बाहुलकात् किमच् । द्रुश्चासौ किलिमं च ॥ (४) ॥*॥ पीतं च तद्दारु च ॥ (५) ॥*॥ दीर्यते । 'दॄ विदारणे' (क्र्या० प० से०) । 'दृसनिजनि–' (उ० १।३) इति ञुण् । 'पुंनपुंसकयोर्दारु' इति त्रिकाण्डशेषः ॥ (६) ॥*॥ पूति च तत्काष्ठं च ॥ (७) ॥*॥ देवस्य दारु ॥ (८) ॥*॥ अष्ट '**देवदारुवृक्षस्य**' ॥

**अथ द्वयोः ।**

**पाटलिः पाटलाऽमोघा काचस्थाली फलेरुहा ॥५४॥**
**कृष्णवृन्ता कुबेराक्षी**

**अथेति** ॥ पाति । क्विप् (३।२।१७८) । टलति । 'टल वैक्लव्ये' (भ्वा० प० से०) । 'सर्वधातुभ्य इन्' (उ० ४।११८) । पाश्चासौ टलिश्च ॥ (१) ॥*॥ पाटं लाति । 'आतोऽनुप–' (३।२।३) इति कः । '**पाटला** पाटलौ स्त्री स्यादस्याः पुष्पे पुनर्न ना' ॥ (२) ॥*॥ न मोघा । '**अलिप्रिया विशालाग्राप्यमोघा** पाटलिर्द्वयोः' इति वाचस्पतिः ॥*॥ '**मोघा** स्त्री पाटलावृक्षे **मोघं** त्रिषु निरर्थके' इति रुद्रात् 'मोघा' अपि । मोहयति । पचाद्यच् (३।१।१३४) न्यङ्क्वादिः (७।३।५३) ॥ (३) ॥*॥ काचस्य कार्ण्यस्य स्थाली पात्रम् ॥*॥ स्वामी तु '**काला**' '**स्थाली**' इति पठति । कालो वर्णोऽस्या अस्ति । अर्शआद्यच् (५।२।१२७) अजादिः (४।१।४) । '**काला** तु कृष्णवृन्ताख्यामञ्जिष्ठानीलिकासु च' ॥*॥ तिष्ठति । 'ष्ठा गतिनिवृत्तौ' (भ्वा० प० अ०) । 'स्थाचतिमृजेरालज्वालजालीयचः' (उ० १।११६) । '**स्थाली** स्यात्पाटलोखयोः' ॥ (४) ॥*॥ फले रोहति । 'इगुपध–' (३।१।१३५) इति कः । 'तत्पुरुषे कृति–' (६।३।१४) इत्यलुक् ॥ (५) ॥*॥ कृष्णं वृन्तमस्याः । '**कृष्णवृन्ता** पाटलायां माषपर्ण्यां च योषिति' ॥ (६) ॥*॥ कुबेरस्येवाक्षि यस्याः । 'अक्ष्णोऽदर्शनात्' (५।४।७६) इत्यच् । गौरादिः (४।१।४१) । मुकुटस्तु—'बहुव्रीहौ सक्थि–' (५।४।११३) इत्यादिना षच्—इत्याह । तन्न । अस्वाङ्गत्वात् वृक्षस्याप्राणित्वात् ॥ (७) ॥*॥ सप्त '**पाटलायाः**' '**पाडली**' इति ख्यातस्य ॥

**श्यामा तु महिलाह्वया।**

**लता गोवन्दनी गुन्द्रा प्रियंगुः फलिनी फली ॥५५॥**

**विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सः।**

**श्यामेति** ॥ श्यामो वर्णोऽस्त्यस्याः। अर्शआदिः (५।२।१२७)। '**श्यामो** वटे प्रयागस्य वारिदे वृद्धदारके। पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु। मरिचे सिन्धुलवणे क्लीबं स्त्री शारिवौषधौ। अप्रसूताङ्गनायां च प्रियंगावपि वल्गुलौ। यमुनायां त्रियामायां कृष्णत्रिवृतिकौषधौ'। (नीलिकायाम्) ॥ (१) ॥*॥ महिलाया आह्वय आह्वयो यस्याः। '–सप्तम्युपमान–' (६।२।२) इति साधुः ॥ (२) ॥*॥ लतति। 'लतिः' सौत्रो धातुः। पचाद्यच् (३।१।१३४)। 'प्रियंगुनखयोर्**लता**। स्पृक्काज्योतिष्मतीवल्लीलताकस्तूरिकासु च' ॥ (३) ॥*॥ गवि भूमौ वन्द्यते। 'वदि अभिवादनस्तुत्योः' (भ्वा० आ० से०)। कर्मणि ल्युट् (३।३।११३) ॥ (४) ॥*॥ गुन्द्रयति। 'गुद्रि क्षोदे' ( ) अच् (३।१।१३४)। '**गुन्द्र**स्तेजनके स्त्री तु प्रियंगौ भद्रमुस्तके' ॥ (५) ॥*॥ प्रियं गच्छति। मृगय्वादौ (उ० १३७) निपातः। '**प्रियंगुः** स्त्री राजिकाकणयोरपि। फलिन्यां कङ्गुसस्ये च' ॥ (६) ॥*॥ फलमस्त्यस्याः। 'अतः–' (५।२।११५) इतीनिः। '**फलि**न्यग्निशिखायां स्त्री फलिन्यां फलिने त्रिषु' ॥ (७) ॥*॥ गौरादित्वात् (४।१।४१) ङीष्। '**फली** फलिन्याम्' ॥ (८) ॥*॥ विष्वक् सिनोति। 'षिञ् बन्धने' (स्वा० उ० अ०)। 'कृवृजृसि–' (उ० ३।१०) इति नः।—अच् (३।१।१३४)–इति मुकुटोक्तिश्चिन्त्या। '**विष्वक्सेना** फलिन्यां स्याद् **विष्वक्सेनो** जनार्दने' ॥ (९) ॥*॥ गन्धवत् फलमस्याः। 'पाककर्ण–' (४।१।६४) इति ङीष्। '**गन्धफल्यपि** गुन्द्रायां चम्पकस्य च कोरके' ॥ (१०) ॥*॥ ईषद् रम्भा। 'ईषदर्थे च' (६।३।१०५) इति कोः का ॥ (११) ॥*॥ प्रीणाति। 'प्रीञ् तर्पणे' (क्र्या० उ० से०)। कुन् (उ० २।३२) '**प्रियकः** पीतसारके। नीपे चित्रमृगे चालौ प्रियंगौ कुङ्कुमेऽपि च' ॥ (१२) ॥*॥ द्वादश '**प्रियङ्गुवृक्षस्य**' ॥

**मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः ॥ ५६ ॥**

**स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः।**

**शोणकश्चारलौ**

**मण्डूकेति** ॥ मण्डूक इव पर्णमस्य ॥ (१) ॥*॥ पत्रे ऊर्णाऽस्य। '**पत्रोर्णं** धौतकौशेये क्लीबं स्याच्छोणके पुमान्' ॥ (२) ॥*॥ नटति। 'णट नृत्तौ' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४) ॥ (३) ॥*॥ कटून्यङ्गान्यस्य ॥ (४) ॥*॥ 'टुण्टु' इति कायति। 'कै शब्दे' (भ्वा० प० अ०)। 'आतोऽनुप–' (३।२।३।) इति कः। '**टुण्टुकः** शोणकाल्पयोः' ॥ (५) ॥*॥ सीव्यति। 'षिवु तन्तुसंताने' (दि० प० से०)। बाहुलकान्नः। अन्तरङ्गत्वाद्यण् (६।१।७७)। '**स्योनः** किरणसूर्ययोः' तेनाकति, अक्यते, वा। 'अक कुटिलायां गतौ' (भ्वा० प० से०)। अच् (३।१।१३४) घञ् (३।३।१९) वा ॥*॥ श्यायते। 'श्यैङ् गतौ' (भ्वा० प० अ०)। पिनाकादौ (उ० ४।१५) निपातितः। '**श्योनाकः**' तालव्यादिरपि ॥ (६) ॥*॥ शुकनासा इव पुष्पमस्यास्ति। अर्शआद्यच् (५।२।१२७) ॥ (७) ॥*॥ ऋषति। 'ऋषी गतौ' (तु० प० से०)। 'स्नुव्रश्चिकृत्यृषिभ्यः कित्' (उ० ३।६६) इति सेः। '**ऋक्षः** पर्वतराजे स्याद्भल्लूके शोणके पुमान्' ॥ (८) ॥*॥ दीर्घं वृन्तमस्य ॥ (९) ॥*॥ कुटन् वक्रीभवन् नटति। 'नट स्पन्दने' ( ) पचाद्यच् (३।१।१३४) ॥ (१०) ॥*॥ शोणति। 'शोणृ वर्णे' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। ('**शोणः** कृशानौ श्योनाके लोहिताश्वे नदे पुमान्। त्रिषु कोकनदच्छाये')। स्वार्थे कन् (५।३।७५) ॥*॥ स्वामी तु—शवति। **शोनकः**—इत्याह ॥ (११) ॥*॥ इयर्ति। 'अर्तेररुः' (उ० ४।७९)। कपिलिकादिः (वा० ८।२।१८) ॥ (१२) ॥*॥ द्वादश '**शोणकस्य**' ॥

**तिष्यफला त्वामलकी त्रिषु ॥ ५७ ॥**

**अमृता च वयस्था च**

**तिष्येति** ॥ 'नित्यमामलके लक्ष्मीर्नित्यं हरितगोमये। नित्यं शङ्खे च पद्मे च नित्यं शुक्ले च वाससि' इति श्रवणात् तिष्यं मङ्गल्यं फलमस्याः। अजादित्वात् (४।१।४) टाप्। तिष्ये कलियुगे फलमस्याः सेवया, इति वा ॥ (१) ॥*॥ आमलते। 'मल धारणे' (भ्वा० आ० से०)। कुन् (उ० २।३२)। 'जातेः' (४।१।५३) इति ङीष्। गौरादित्वकल्पनं तु चिन्त्यम् ॥ (२) ॥*॥ न म्रियन्तेऽनया। 'तनिमृङ्भ्यां किच्च' (उ० ३।८८) इति तन्। '**अमृता** मागधीपथ्यागुडूच्यामलकीषु च' ॥ (३) ॥*॥ वयो यौवनं तिष्ठत्यनया। घञर्थे कः (३।३।५८)। '**वयस्था** तु स्त्रियां ब्राह्मीगुडूच्यामलकीषु च। सूक्ष्मैलायां च काकोल्यां पथ्यायां तरुणे त्रिषु' ॥*॥ कायस्थाऽपि। '**कायस्था** तु हरीतक्यामलक्योश्च प्रकीर्तिता' इति रभसः ॥ (४) ॥*॥ चत्वारि '**आमलक्याः**' ॥

**त्रिलिङ्गस्तु विभीतकः।**

**नाऽक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ॥५८॥**

**त्रीति** ॥ विगतं भीतं रोगभयमस्मात्। 'जातेः' (४।१।५३) इति ङीष्। गौरादित्वकल्पनं त्वयुक्तम्। विशिष्टं भीतमस्माद्वा, भूतकल्योराश्रयत्वात् ॥ (१) ॥*॥ अक्षति। 'अक्षू व्याप्तौ' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। '**अक्षो**

१—प्रियंगुर्गकारवती। 'सरलप्रियंगुणाढ्यम्' इति दमयन्तीश्लेषात् ॥

ज्ञानात्मशकटव्यवहारेषु पाशके । रुद्राक्षे रावणौ सर्पे विभीतकतरावपि । चक्रे कर्षे पुमान् क्लीबं तुत्थे सौवर्चलेन्द्रिये' ॥ (२) ॥*॥ तुष्यति । 'तुष तुष्टौ' (दि० प० से०) । 'इगुपध–' (३।१।१३५) इति कः ।—'घञर्थे कः' (वा० ३।३।५८)—इत्युक्तिश्चिन्त्या । परिगणनात् 'धान्यत्वचि तुषः पुंसि विभीतकतरावपि' इति मूर्धन्यान्ते रुद्रः ॥ (३) ॥*॥ कर्षः फलमस्य ॥ (४) ॥*॥ भूतानामावासः ॥ (५) ॥*॥ कलेर्द्रुमः ॥ (६) ॥*॥ षट् 'विभीतकस्य' 'वहेडा' इति ख्यातस्य ॥

**अभया त्वव्यथा पथ्या कायस्था पूतनाऽमृता ।**
**हरीतकी हैमवती चेतकी श्रेयसी शिवा ॥ ५९ ॥**

**अभेति** ॥ न भयमस्याः । 'अभया स्त्री हरीतक्यामुशीरे च नपुंसकम् । निर्भये वाच्यलिङ्गः स्यात्' इति मेदिनी ॥ (१) ॥*॥ न व्यथा यस्याः । 'अव्यथो निर्व्यथे सर्पे चारटीपथ्ययोः स्त्रियाम्' इति मेदिनी ॥ (२) ॥*॥ पथोऽनपेता । 'धर्मपथ्यर्थन्यायादनपेते' (४।४।९२) इति यत् । 'पथ्या स्त्री हरीतक्यां हिते त्रिषु' इति मेदिनी ॥ (३) ॥*॥ काये तिष्ठत्यनया । 'घञर्थे कः' (३।३।५८) । 'कायस्था तु हरीतक्यामलक्योश्च प्रकीर्तिता' इति रभसः । 'कायस्थः परमात्मनि । नरजातिविशेषे ना हरीतक्यां तु योषिति' इति मेदिनी ॥ (४) ॥*॥ पूतं करोति 'तत्करोति–' (वा० ३।३।२६) इति णिच् । 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् । 'पूतना तु हरीतक्यां दानवीरोगभेदयोः' इति मेदिनी ॥ (५) ॥*॥ (अमृता व्याख्याता) ॥ (६) ॥*॥ हरिर्वर्णं इतो यस्याम् । 'संज्ञायां कन्' (५।३।७५) । गौरादिः (४।१।४१) ॥ (७) ॥*॥ हिमवति जाता । 'तत्र जातः' (४।३।२५) इत्यण् । 'हैमवत्यभयास्वर्णक्षीर्योः श्वेतवचोभयोः' इति विश्वमेदिन्यौ ॥ (८) ॥*॥ चेतयति । 'चिती संज्ञाने' ( भ्वा० आ० से० ) । ण्वुल् (३।१।१३३) । गौरादिः (४।१।४१) ॥ (९) ॥*॥ अतिप्रशस्ता । ईयसुन् (५।३।५७) 'प्रशस्यस्य श्रः' (५।३।६०) । 'उगितश्च' (४।१।६) इति ङीप् । 'श्रेयसी करिपिप्पल्यामभयापाठयोरपि' इति मेदिनी ॥ (१०) ॥*॥ शिवं करोति । 'तत्करोति–' (वा० ३।१।२६) इति णिच् । पचाद्यच् (३।१।१३४) । 'शिवो मोक्षे महादेवे कीलकग्रहयोगयोः । वालुके गुग्गुलौ वेदे पुण्डरीकद्रुमे पुमान् । सुखे क्षेमे जले क्लीबं शिवा ज्ञाटामलौषधौ । अभयामलकीगौरीफेरुसक्तुफलासु च' इति मेदिनी ॥ (११) ॥*॥ एकादश 'हरीतक्याः' ॥

**पीतद्रुः सरलः पूतिकाष्ठं च**

**पीति** ॥ पीतश्चासौ द्रुश्च ।—पीयते चक्षुषाऽयम् । 'पा पाने' (भ्वा० प० से०) । 'पः किच्च' इति तः । 'घुमास्था–' (६।४।६६) इतीत्वम्–इति मुकुटः । तच्चिन्त्यम् । उक्तसूत्रादर्शनात् । क्तप्रत्ययेन गतार्थत्वाच्च ॥ (१) ॥*॥ सरति । 'सृ गतौ' (भ्वा० प० अ०) । बाहुलकादलच् । 'सरलः । पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिषु' इति मेदिनी ॥ (२) ॥*॥ पूतेः पावनस्य काष्ठम् । 'पूतिकाष्ठं च सरलदेवदारुमहीरुहोः' इति मेदिनी ॥ (३) ॥*॥ त्रीणि 'सरला' इति ख्यातस्य ॥

**अथ द्रुमोत्पलः ।**

**कर्णिकारः परिव्याधे**

**अथेति** ॥ द्रुमे उत्पलं तदाकारं पुष्पमस्य ।—'सप्तमी–' (२।१।४०) इति योगविभागात् समासः—इति मुकुटोक्तिश्चिन्त्या । बहुव्रीहिविग्रहस्य प्रदर्शनात् ॥ (१) ॥*॥ कर्णिकामियर्ति । 'ऋ गतौ' (जु० प० अ०) । 'कर्मण्यण्' (३।२।१) । 'कर्णिकारः पुमानारग्वधद्रौ च द्रुमोत्पले' इति मेदिनी ॥ (२) ॥*॥ परिविध्यति । 'व्यध ताडने' (दि० प० अ०) । 'श्याद्व्यधा–' (३।१।१४१) इति णः । 'परिव्याधस्तु पुंसि स्याद्वेतसे च द्रुमोत्पले' इति मेदिनी ॥ (३) ॥*॥ त्रीणि 'कर्णिकारस्य' 'कठचम्पा' इति ख्यातस्य ॥

**लकुचो लिकुचो डहुः ॥ ६० ॥**

**लेति** ॥ लक्यते । 'लक आस्वादने' (   ) । बाहुलकादुचः ॥ (१) ॥*॥ पृषोदरादित्वात् (६।३।१०९) इत्वे लिकुचोऽपि ॥ (२) ॥*॥ दहति, तोहति, वा । 'दह भस्मीकरणे' (भ्वा० प० अ०) । 'तुहिर् अर्दने' (भ्वा० प० से०) । मृगय्वादित्वात् (उ० १।३७) निपातितः ॥*॥ 'अडहुः' इत्यपि—इति स्वामी ॥ (३) ॥*॥ त्रीणि 'लिकुचस्य' 'वडहर' इति ख्यातस्य ॥

**पनसः कण्टकिफलः**

**पनेति** ॥ पनाय्यते स्तूयते 'वेतसैवाहस–' इत्यसजन्तो निपातितः । 'पनसः कण्टकिफले कण्टके वानरान्तरे । स्त्रियां रोगप्रभेदे स्यात्' इति मेदिनी । 'पणसः' इत्यपि पाठः ॥ (१) ॥*॥ कण्टकाः सन्त्यस्य । 'अतः–' (५।२।११५) इतीनिः । कण्टकिफलमस्य ॥ (२) ॥*॥ द्वे 'पनसस्य' 'कटहर' इति ख्यातस्य ॥

---

१—शकटे यथा 'हस्तिभिस्तुरगैरक्षैः संबाधेऽस्मिन् रणाङ्गणे' । 'समुदाये प्रवृत्ता अवयवेष्वपि वर्तन्ते' इति रथावयवेऽपि वर्तते । विश्वेऽपि 'शकटव्यवहारयोः' इत्युपलभ्यते ॥ २—व्यवहार आयव्ययादिर्न्यायः । तत्र यथा 'राजाध्यक्षः' इत्यनेकार्थकैरवाकरकौमुदी ॥

१—उज्ज्वलदत्तादौ तु अदः सूत्रं नोपलभ्यते । किं तु 'अल्यविचमि–' (उ० ३।११७) इति सूत्रेणासच् ॥ २—पनसो दन्त्यान्त्यः । 'प्रियालपनसाराणि यौवनानीव वनानि' इति दमयन्तीश्लेषात् ॥

**निचुलो हिज्जलोऽम्बुजः ।**

**नीति** ॥ निचोलति । 'चुल समुच्छ्राये' (चु० प० से०) चुरादीनां णिज्वा । 'इगुपध-' (३।१।१३५) इति कः । यत्तु—'निचोल्यते' इति विगृह्य 'घञर्थे कः' (वा० ३।३।५८) इत्युक्तं मुकुटेन । तन्न । परिगणनविरोधात् । 'अन्तरङ्गत्वेन (णिजाश्रय) गुणप्रसङ्गाच्च । '**निचुलस्तु** निचोले स्याद्धिज्जलाख्यमहीरुहे' इति मेदिनी ॥ (१) ॥*॥ हिनोति । 'हि गतौ वृद्धौ च' (स्वा० प० अ०) क्विप् (३।२।१७८) हित् जलमस्य ॥*॥ 'इज्जलः' इत्यपि पाठः । एति । 'इण् गतौ' (अ० प० अ०) । क्विप् (३।२।१७८) तुक् (६।१।७१) इत् जलमस्य । 'निचुलेज्जलहिज्जलाः' इति रभसः ॥ (२) ॥*॥ अम्बुनि जातः । 'जनी प्रादुर्भावे' (दि० आ० से) 'सप्तम्यां जनेर्डः' (३।२।९७) ॥ (३) ॥*॥ त्रीणि '**स्थलवेतसस्य**' 'वानीरे कविभेदे स्यान्निचुलः स्थलवेतसे' इति शब्दार्णवात् । '**समुद्रफलस्य**' इत्यन्ये ॥

**काकोदुम्बरिका फल्गुर्मलपूर्जघनेफला ॥ ६१ ॥**

**केति** ॥ काकप्रिया उदुम्बरी । 'संज्ञायां कन्' (५।३।७५) ॥ (१) ॥*॥ फलति । 'फल निष्पत्तौ' (भ्वा० प० से०) । 'फलिपाटि-' (उ० १।१८) इति साधुः । '**फल्गु** वासारेऽभिधेयवत् । नदीभेदे मलप्वां स्त्री' इति मेदिनी ॥ (२) ॥*॥ '**मलं** पापे च किट्टे च वर्चस्के कृपणे **मलः**' इति धरणिः । मलात् पापात् पुनाति । 'पूञ् पवने' (क्र्या० प० से०) । क्विप् (३।२।१७८) मलं यवते । 'यु जुगुप्सायाम्' (चु० आ० से०) । क्विप् (३।२।१७८) बाहुलकाद्दीर्घः । यद्वा मलते । 'मल धारणे' (भ्वा० आ० से०) बाहुलकादयूः । '**मलयूः**' इति वा पाठः ॥ (३) ॥*॥ जघने फलं यस्याः । 'अमूर्धम-' (६।३।१२) इति सप्तम्या अलुक् ॥ (४) ॥*॥ चत्वारि '**मलय्वाः**' '**कदुम्बरी**' इति ख्यातस्य ॥

**अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः ।**
**पिचुमर्दश्च निम्बे**

**अरीति** ॥ न रिष्टमशुभमस्मात् । '**अरिष्टो** लशुने निम्बे फेनिले काककङ्कयोः । **अरिष्टम**शुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च' इति मेदिनी ॥ (१) ॥*॥ सर्वतो भद्रं यस्मात् । '**सर्वतोभद्र** इत्युक्तः काव्यचित्रे गृहान्तरे । निम्बे ना **सर्वतोभद्रा** गम्भारीनटयोषितोः' इति मेदिनी ॥ (२) ॥*॥ हिङ्ग्वाकारो हिङ्गुगन्धो वा निर्यासोऽस्य । '**हिङ्गुनिर्यास** इत्येष निम्बे हिङ्गुरसेऽपि च' इति मेदिनी ॥ (३) ॥*॥ मलते । 'मल धारणे' (भ्वा० आ० से०) ण्वुल् (३।१।१३३) । परस्मैपदं वुन्प्रत्ययविधानं च चिन्त्यम् ॥ (४) ॥*॥ पिचुं कुष्ठभेदं मर्दयति । 'मृद क्षोदे' (क्र्या० प० से०) । णिच् (३।१।२६) 'कर्मण्यण्' (३।२।१) ॥*॥ पिचुं मन्दयति, इति '**पिचुमन्दः**' इति स्वामी ॥ (५) ॥*॥ निम्बति स्वास्थ्यम् । 'णिवि सेचने' (भ्वा० प० से०) पचाद्यच् (३।१।१३४) वबयोरेकत्वम् ॥ (६) ॥*॥ षट् '**नीम्ब**' इति ख्यातस्य ॥

**अथ पिच्छिलाऽगुरुशिंशपा ॥ ६२ ॥**

**अथेति** ॥ पिच्छास्त्यस्याः । पिच्छादित्वात् (५।२।१००) इलच् । '**पिच्छिलं** विजिलेऽन्यवत् । स्त्री पोतिकाशिंशपयोः शाल्मलीसिन्धुभेदयोः' ॥ (१) ॥*॥ न गुरुरस्मात् । '**अगुरु** क्लीबे शिंशपायां जोङ्गके, लघुनि त्रिषु' इति रुद्रः ॥ (२) ॥*॥ शीघ्रं शीर्षं वा पाति । 'आतः' (३।२।३) इति कः । पृषोदरादिः (६।३।१०९) । यद्वा 'शिम्' इत्यव्यक्तं शब्दं शब्देन वा शपति । 'शप आक्रोशे' (भ्वा० उ० अ०) पचाद्यच् (३।१।१३४) । शिम्बाभिः शपति, इति वा । 'देविकाशिंशपा-' (७।३।१) इति निर्देशाद्दाशब्दलोपः । द्वितालव्या शिंशपा । 'श्वश्रूस्तथा श्वसुरशाश्वतशिंशपाश्च' इति शभेदात् ॥*॥ अगुरुसारा शिंशपा 'अगरुशिंशपा' इत्येकं नाम—इति स्वामी । तन्न । उक्तरुद्रविरोधात् ॥ (३) ॥*॥ त्रीणि '**सिसँव**' इति ख्यातस्य ॥

**कपिला भस्मगर्भा सा**

**केति** ॥ सा कपिलवर्णपुष्पा सती भस्मगर्भोच्यते । भस्म गर्भे यस्याः शुक्लसारत्वात् ॥ (१) ॥*॥ एकम् '**कपिलवर्णायाः**' ॥

**शिरीषस्तु कपीतनः ।**
**भण्डिलोऽपि**

**शीति** ॥ शृणाति शीर्यते वा । 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'शॄपॄभ्यां कित्' (उ० ४।२७) इतीषन् ॥ (१) ॥*॥ तनोति । 'तनु विस्तारे' (त० उ० से०) । अच् (३।१।१३४) । यास्तनः ईतनः । कपीनां कपेर्वर्णस्य वा ईतनः ॥ (२) ॥*॥ भण्डति । 'भडि कल्याणे' (चु० प० से०) । 'सलिकल्यनि-' (उ० १।५४) इतीलच् ।—बाहुलकात्—इति मुकुटस्तु चिन्त्यः ॥*॥ रलयोरेकत्वात् भण्डिरोऽपि । '**भण्डिरो** भण्डिलो ना' इति वाचस्पतिः ॥ (३) ॥*॥ त्रीणि '**शिरीषस्य**' '**सिरीस**' इति ख्यातस्य ॥

**अथ चाम्पेयश्चम्पको हेमपुष्पकः ॥ ६३ ॥**

**अथेति** ॥ चम्पाया अपत्यम् । 'स्त्रीभ्यो ढक्' (४।१।१२०) । '**चाम्पेयश्च**म्पके स्वर्णे किंजल्के नागकेसरे' इति मेदिनी ॥ (१) ॥*॥ चम्पयति, चम्प्यते वा । 'चपि गत्याम्' (चु० प० से०), कुन् (उ० २।३२) ॥ (२) ॥*॥ हेमवर्णं पुष्पम-

१—वस्तुतस्तु कपिलादिकमपि शिंशपासामान्यपर्यायमेव । अत एव '**कपिला** रेणुकायां च शिंशपागोविशेषयोः' इति मेदिनी । '**कपिलो** वह्निपिङ्गयोः । कुकुरे मुनिभेदे च **कपिला** शिंशपातरौ । पुण्डरीककरिण्यां च रेणुकागोविशेषयोः' इति हैमश्च संगच्छते तस्मात् 'पञ्च नामानि' इति युक्तम् ॥

स्य । ('हेमपुष्पं तु चम्पके । अशोकद्रौ जपापुष्पे') । कन् (५।३।७५) ॥ (३) ॥*॥ त्रीणि 'चम्पकस्य' ॥

**एतस्य कलिका गन्धफली स्यात्**

**एतेति** ॥ गन्धः फलं साध्यमस्याः । 'पाककर्ण–' (४।१।५४) इति ङीष् । 'प्रियंगौ स्त्री **गन्धफली** चम्पकस्य च कोरके' इति रुद्रः ॥ (१) ॥*॥ एकं 'चम्पककलिकायाः' ॥

**अथ केसरे ।**

**वकुलः**

**अथेति** ॥ केसराः सन्त्यस्य । अर्श आद्यच् (५।२।१२७) । के जले सरति । 'सृ गतौ' (भ्वा० प० अ०) । पचाद्यच् (३।१।१३४) वा । **'केसरं** हिङ्गुनि क्लीबं किंजल्के न स्त्रियां पुमान् । सिंहच्छटायां पुंनागे बकुले नागकेसरे' इति मेदिनी ॥ (१) ॥*॥ वङ्क्ते 'वकिर्गत्यर्थः' (भ्वा० आ० से० ) । बाहुलकादुलच् । 'आगमशासनमनित्यम्' इति न नुम् ॥ (२) ॥*॥ द्वे **'बकुलस्य' 'मौंसरी'** इति ख्यातस्य ॥

**वञ्जुलोऽशोके**

**वञ्चिति** ॥ वजति 'वज गतौ' (भ्वा० प० से०) । 'बाहुलकादुलच् नुम्' ॥ (१) ॥*॥ न शोकोऽस्मात् । **'अशोक**स्त्रिषु निःशोके पुंसि कङ्केलिपादपे । स्त्रियां तु कटुरोहिण्यां पारदे स्यान्नपुंसकम्' इति मेदिनी ॥ (२) ॥*॥ द्वे **'अशोकस्य'** ॥

**समौ करकदाडिमौ ॥ ६४ ॥**

**समाविति** ॥ करोति दोषाभावम् 'कृञादिभ्यो वुन्' (उ० ५।३५) । **'करकस्तु** पुमान् पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघोपले, न स्त्री करङ्के च कमण्डलौ' इति मेदिनी ॥ (१) ॥*॥ दलनं दालः । 'दल विशरणे' (भ्वा० प० से०) । घञ् (३।३।१८) दालेन निर्वृत्तः । 'भावप्रत्ययान्तादिमप्' ( वा० ४।४।२० ) डलयोरेकत्वम् । **'दाडिमस्तु** त्रिलिङ्गः स्यादेलायां करके त्रिषु' इति मेदिनी ॥*॥ दाडिम्बोऽपि । **'दाडिम्बसारपिण्डीरस्वाद्वम्लशुकवल्लभाः'** इति रभसात् ॥ (२) ॥*॥ द्वे **'दाडिमस्य'** ॥

१—वकुलोऽन्तस्थादिः । अत एव मुकुटेन 'उच्यते वर्ण्यते कविभिः' इति विग्रहो दर्शितः । नापि व्याख्यात्रा निम्बवत् 'बवयोरभेदः' इत्युक्तम् । तथा च 'भवद्वैरिनगरमिवानेकविधवकुलसंकुलम्' इति दमयन्ती ॥ नच बवयोरैक्येन निर्वाहः । 'व्यालम्बिना' इत्यादौ यत्र बवयोर्व्याकरणेन निर्णयस्तत्रैव तदङ्गीकारात् । नहि वकुलशब्दे व्याकरणेन स्पर्शादित्वं संभवति । अत एव दमयन्तीव्याख्यात्रापि 'महाव्रतिकान्तःपातिभिः' इत्यत्रैव 'बवयोरैक्यम्' इत्युक्तम् । नत्वत्रापि इति दिक् ॥

**चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः ।**

**चेति** ॥ चम्पाया अपत्यम् । **'चाम्पेयश्चम्पके** स्वर्णे किंजल्के नागकेसरे' इति मेदिनी ॥ (१) ॥*॥ केसराः सन्त्यस्य अर्शआद्यच् (५।२।१२७) ॥ (२) ॥*॥ नागाख्यः केसरः । **'स्वर्णभसर्पाख्यो** नागकेसरः **षट्पदप्रियः'** इति रभसः ॥ (३) ॥*॥ काञ्चनस्याह्वय आह्वा यस्य ॥ (४) ॥*॥ चत्वारि **'चाम्पेयस्य'** ॥

**जया जयन्ती तर्कारी नादेयी वैजयन्तिका ॥ ६५ ॥**

**जयेति** ॥ जयति । 'जि जये' ( भ्वा० प० अ० ) । पचाद्यच् ( ३।१।१३४ ) **'जया** जयन्तीतिथिभित्पथ्योमातत्सखीषु च । अग्निमन्थे ना जयन्ते विजये च युधिष्ठिरे' इति मेदिनी ॥ (२) ॥*॥ 'तृभूवहि–' (उ० ३।१२८) इति झच् । 'षित्' इत्यनुवृत्तेर्ङीष् (४।१।४१) । **'जयन्ती** वृक्षभिद्दौर्योरिन्द्रपुत्रीपताकयोः । पुमानैन्द्रौ हरे भीमे' इति मेदिनी ॥ (२) ॥*॥ तर्कमृच्छति । 'ऋ गतौ' (भ्वा० प० अ०) । कर्मण्यण् (३।२।१) ॥ (३) ॥*॥ नद्यां भवा । 'नद्यादिभ्यो ढक्' (४।२।९७) 'टिड्ढा–' । (४।१।१५) इति ङीप् ॥ (४) ॥*॥ विजयन्तस्येयम् । 'तस्येदम्' ( ४।३।१२० ) इत्यण् । स्वार्थे कन् (५।३।७५) । यद्वा वैजयन्ती पताकेव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥ (५) ॥*॥ पञ्च **'वैजयन्तिकायाः' 'अरणी'** इति ख्यातायाः । **'जाही'** इति ख्याताया इत्यन्ये ॥

**श्रीपर्णमग्निमन्थः स्यात्कणिका गणिकारिका ।**

**जया**

**श्रीति** ॥ श्रीः पर्णेषु यस्य । **'श्रीपर्ण**मग्निमन्थेऽब्जे **श्रीपर्णी** शाल्मलौ हठे' इति हैमः ॥ (१) ॥*॥ अग्निं मथ्नाति । 'मन्थ विलोडने' (क्र्या० प० से०) । 'कर्मण्यण्' (३।२।१) ॥ (२) ॥*॥ कणति । 'कण शब्दे' (भ्वा० प० से०) । कुन् (उ० २।३२) । गणाः सन्त्यस्या वा । अतः इति ठन् । **'कणिका** सूक्ष्मवस्तुनि । अग्निमन्थे' इति हैमः ॥ (३) ॥*॥ गणनम् । 'गण संख्याने' (चु० उ० से०) । 'इक् कृष्यादिभ्यः' ( वा० ३।३।१०८ ) । गणिं करोति । 'कर्मण्यण्' (३।२।१) । ङीप् (४।१।१५) । स्वार्थे कन् ( ५।३।७५) । यद्वा गणयति । ऋच्छति । ण्वुल् ( ३।१।१३३ ) गणिका चासावारिका च ॥ (४) ॥*॥ जयति । पचाद्यच् (३।१।१३४) । **'जया** जयन्तीतिथिभित्पथ्योमातत्सखीषु च । अग्निमन्थे ना जयन्ते विजये च युधिष्ठिरे' इति मेदिनी ॥ (५) ॥*॥ पञ्च **'जयपर्णस्य'** । **'अरणी'** इति ख्याताया इत्येके । दशाप्यरणिपर्यायाः इति स्वामी ॥

**अथ कुटजः शक्रो वत्सको गिरिमल्लिका ॥ ६६ ॥**

**अथेति** ॥ कूटे शृङ्गे जायते स्म । 'सप्तम्यां जनेर्डः' (३।२।९७) । पृषोदरादिः (६।३।१०९) ॥*॥ शक्नोति

(५।४।३८) कौटजश्च । '**कौटजः** कुटजः **कोटी**' इति चन्द्रः । ('**कुटजो** वृक्षभेदे स्यादगस्त्यद्रोणयोरपि') ॥ (१) ॥*॥ शक्नोति । 'शक्लृ शक्तौ' (स्वा० प० अ०) । 'स्फायितञ्चि' (उ० २।१३) इतिरक् । '**शक्रः** पुमान् देवराजे कुटजार्जुन-भूरुहोः' ॥ (२) ॥*॥ वदति । 'वद व्यक्तायां वाचि' (भ्वा० प० से०) । 'वृतॄवदिवचिहनिकमिकषिभ्यः सः' (उ० ३।६२) । ततः 'संज्ञायां कन्' (५।३।७५) ॥ (३) ॥*॥ गिरिमल्लीव । इवार्थे कन् (५।३।९६) ॥ (४) ॥*॥ चत्वारि '**कुटजस्य**' '**कुरैया**' इति ख्यातस्य ॥

**एतस्यैव कलिङ्गेन्द्रयवभद्रयवं फले ।**

**एतेति** । कलिं गच्छति । अन्तर्भावितण्यर्थाद्गमेः 'अन्यत्रापि' (वा० ३।२।४८) इति डः ।–'खच्च डिद्वा' (३।२।३८) –इति मुकुटः ।–कलिं गायति इति स्वामी ॥ (१) ॥*॥ यवाकारबीजत्वाद्यवम् । इन्द्रसंज्ञस्य वृक्षस्य यवम् ॥ (२) ॥*॥ भद्रं च तद्यवं च ॥ (३) ॥*॥ 'कलिङ्गेन्द्रयवः पुमान्' इत्यमरमालादर्शनादिन्द्रयवः पुमानपि । तत्रैव स्त्रीकाण्डपाठात् कलिङ्गा च ॥*॥ त्रीणि '**इन्द्रयवस्य**' कुटजबीजस्य ॥

**कृष्णपाकफलाविग्नसुषेणाः करमर्दके ॥ ६७ ॥**

**कृष्णेति** ॥ कृष्णः पाकोऽस्य । कृष्णपाकं फलमस्य ॥ (१) ॥*॥ आ विजते स्म । 'ओविजी भयचलनयोः' (तु० प० से०) आङ्पूर्वः । 'गत्यर्थाकर्मक–' (३।४।७२) इति क्तः । 'श्वीदितः–' (७।२।१४) इतीण्निषेधः । 'ओदितश्च' (८।२।४५) इति नत्वम् ॥*॥ केचित्तु 'नञ्पूर्वः' इत्याहुः ॥ (२) ॥*॥ शोभना सेना यस्य । 'एति संज्ञायामगात्' (८।३।९९) इति षत्वम् । 'रषाभ्याम्–' (८।४।१) इति णत्वम् । मुकुटस्तु—सुष्ठु सिनोति । 'षिञ् बन्धने' (स्वा० उ० अ०) । 'कृवृतॄक्षपिसिद्धिभ्यो नः'–इत्याह । उज्ज्वलदत्तादौ तूणादिसूत्रस्य 'कृवृजॄसिद्रुपन्यनिस्वपिभ्यो नित्' (३।१०) इति पाठो दृश्यते । ('**सुषेणः** करमर्दे स्याद्विष्णुसुग्रीववैद्ययोः' इति मेदिनी) ॥ (३) ॥*॥ करं मृद्नाति । 'मृद क्षोदे' (क्र्या० प० से०) । 'कर्मण्यण्' (३।२।१) । स्वार्थे कन् (५।३।७५) । 'मकरन्दः करमर्दः शिरीषो मूर्धपुष्पकः' इति शुभाङ्गः ।—करो मर्दकोऽस्य—इति मुकुटः । तच्च । उक्तकोशविरोधात् ॥ (४) ॥*॥ चत्वारि '**करमर्दकस्य**' '**करोंदा**' इति ख्यातस्य ॥

**कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि**

**कालेति** ॥ कालः स्कन्धोऽस्य । '**कालस्कन्ध**स्तमाले स्यात्तिन्दुके जीवकद्रुमे' इति मेदिनी ॥ (१) ॥*॥ ताम्यति । 'तमु ग्लानौ' (दि० प० से०) 'तमिविशि–' (उ० १।११८) इति कालन् । '**तमाल**स्तिलके खड्गे तापिच्छे वरुणद्रुमे' इति मेदिनी ॥ (२) ॥*॥ तापिनं छादयति । 'छद अपवारणे' (चु० उ० से०) । 'कर्मण्यण्' (३।२।१) । पृषोदरादिः (६।३।१०९) यत्तु—'तत्पुरुषे कृति–' (६।३।१४) इत्यमोऽलुकि 'तापिंछः'–इति मुकुटः । तन्न । अलौकिकविग्रहेऽमः प्रवेशाभावात् ॥ (३) ॥*॥ त्रीणि '**तमालस्य**' ॥

१—काव्यकल्पलतायाम् 'रविमिव तापिच्छविराजितं वनम्' इति श्लेषान्निरनुस्वारः–इति मुकुटः ॥

**अथ सिन्दुकः ।**

**सिन्दुवारेन्द्रसुरसा निर्गुण्डीन्द्राणिकेत्यपि ॥ ६८ ॥**

**अथेति** ॥ स्यन्दते । 'स्यन्दू प्रस्रवणे' (भ्वा० आ० से०) 'स्यन्देः संप्रसारणं धश्च' (उ० १।११) इत्युः । बाहुलकादत्र धो न ॥*॥ मुकुटस्तु धमिच्छति । स्वार्थे 'संज्ञायां कन्' (५।३।७५) तदुक्तम्—'सिन्दुवारः श्वेतपुष्पः सिन्दुकः सिन्धुवारितः । नीलपुष्पः सीतसहो निर्गुण्डी नीनसिन्धुकः' इति ॥ (१) ॥*॥ सिन्दुं वृणोति, वारयति वा । 'वृञ् वरणे' (स्वा० उ० से०) । 'वृञ् आवरणे' (चु० उ० से०) वा । 'कर्मण्यण्' (३।२।१) ॥ (२) ॥*॥ शोभनो रसोऽस्य । इन्द्रस्य सुरसः ॥*॥ '**इन्द्रसुरिसः**' इति स्वामी ॥ (३) ॥*॥ निर्गुडति । 'गुड रक्षायाम्' (तु० प० से०) । 'इगुपध–' (३।१।१३५) इति कः । पृषोदरादिः (६।३।१०९) । गुडाद्वेष्टनान्निर्गता, इति स्वामी । गौरादिः (४।१।४१) । मुकुटस्तु—'गुडिः' अपठितोऽपि भूवादेराकृतिगणत्वाद्बोध्यः—इत्याह । '**निर्गुण्डी** नीलशेफाल्यां सिन्दुवारद्रुमेऽपि च' इति मेदिनी ॥ (४) ॥*॥ इन्द्रस्य जन्या 'इन्द्रवरुण–' (४।१।४९) इति ङीषानुकौ, जन्यजनकभावलक्षणोऽपि च पुंयोगस्तत्र गृह्यते ।—इन्द्रमानयति । अनेर्ण्यन्तात् 'कर्मण्यण्' (३।२।१) ङीप् (४।१।१५) । कन् (५।३।७५) ह्रस्वत्वम् (७।४।१३) च इति मुकुटः । '**इन्द्राणी** करणे स्त्रीणां पौलोमीसिन्दुवारयोः' इति मेदिनी ॥ (५) ॥*॥ पञ्च 'सिन्दुवारस्य' '**सँभौडी**' इति ख्यातस्य ॥

**वेणी खरा गरी देवताडो जीमूत इत्यपि ।**

**वेणीति** ॥ वेणीव । 'देवताडेऽपि **वेणी** स्यात्प्रवेण्यामपि योषिति' इति रभसः ॥ (१) ॥*॥ तीक्ष्णत्वात् खरा । 'देवताडे **खरा** तीक्ष्णे त्रिषु स्याद्गर्दभे पुमान्' इति रभसः ॥ (२) ॥*॥ गृणाति । 'गॄ शब्दे' (क्र्या० प० से०) । पचाद्यच् । (गौरादिः) (४।१।४१) । '**गरी** खरायां करणे क्लीबं नागविषे विषे' ॥*॥ खरं विषमागिरति । मूषकविषघ्नत्वात् । '**खरागरी**' इत्येकमाहुः ॥*॥—गरामागिरति । 'गरागरी' इति तु स्वामी ॥ तदुक्तम्—'जीमूतको देवताडो **वृन्तकोशो गरागरी**' इति ॥ (३) ॥*॥ '**देवो** मेघे सुरे राज्ञि स्यात्पुंसकमिन्द्रिये' इति मेदिनी ॥ देवमिन्द्रियं ताडयति । 'तड आघाते' (चु० प० से०) । 'कर्मण्यण्' (३।२।१) । '**देवताडः** सैंहिकेये जीमूते च हुताशने' इति मेदिनी ॥ (४)

॥*॥ जीमूत इव 'जीमूतोऽद्रौ भृतिकरे देवताडे पयोधरे' इति मेदिनी ॥ (५) ॥*॥ पञ्च 'देवतालस्य' ॥

**श्रीहस्तिनी तु भूरुण्डी**

**श्रीति** ॥ श्रिया हस्तः। श्रीहस्तो विद्यतेऽस्याः। 'अतः' (५।२।११५) इतीनिः। हस्तं गृह्णाति, हस्तयति, अवश्यं श्रियं हस्तयति। 'आवश्यका-' (३।३।१७०) इति णिनिः, इति वा ॥ (१) ॥*॥ भुवं रुण्डयति आच्छादयति। 'रुटि लुटि स्तेयकरणे' (भ्वा० प० से०) इत्यत्र माधवीयायां वृत्तौ 'रुडि, लुडि, इत्यपरे' इति पाठान्तरमुपन्यस्तम्। 'कर्मण्यण्' (३।२।१) ॥ (२) ॥*॥ हस्तिकर्णपत्रा शाकविशेष इति स्वामी। द्वे (माषादिक्षेत्रभवाया वकुलपुष्पाभलोहितपुष्पायाः 'हस्तिकर्णाभपत्रस्य' 'शिरीहथिनी' इति ख्यातायाः) ॥

**तृणशून्यं तु मल्लिका ॥ ६९ ॥**

**भूपदी शीतभीरुश्च**

**तृणेति** ॥ 'इतो धत्तूरान्तानि पुष्पाणि' इति स्वामी। तृणशून्ये स्थाने साधु। 'तत्र साधुः' (४।४।९८) इति यत्। हलो यमाम् (८।४।६४) यलोपः। 'तृणशून्यं मल्लिकायां तथा स्यात्केतकीफले' इति विश्वमेदिन्यौ ॥*॥—'तृणशूले गुल्मे साधु तृणशूल्यम्'— इति तु स्वामी ॥ (१) ॥*॥ मल्लते गन्धम्। मल्यते वा। 'मल्ल धारणे' (भ्वा० आ० से०)। 'सर्वधातुभ्य इन्' (उ० ४।११८)। वा ङीष् (ग० ४।१।४५)। स्वार्थे कन् (५।३।७५)। 'मल्लिको हंसभिद्यपि। मल्लिका तृणशून्येऽपि मीनमृत्पात्रभेदयोः' इति मेदिनी ॥ (२) ॥*॥ भुवि पदमस्याः। गौरादिः (४।१।४१) ॥ (३) ॥*॥ शीताद्भीरुः ॥*॥ 'शतभीरुः' इति वा पाठः। शतं वियोगिनो भीरवोऽस्याः। 'मल्लिका शतभीरुश्च गवाक्षी भद्रमल्लिका। शीतभीरुर्मदायन्ती भूपदी तृणशून्यकम्' इति वाचस्पतिः ॥ (४) ॥*॥ चत्वारि 'मल्लिकायाः' 'वेलि' इति ख्यातायाः ॥

**सैवास्फोता वनोद्भवा।**

**सैवेति** ॥ आस्फोटयति। 'स्फुटिर् विकसने' (भ्वा० प० से०)। पचाद्यच्। पृषोदरादित्वात् (६।३।१०९) टस्य तो वा। 'आस्फोता विष्णुकान्तायां वनमल्ल्यर्कपर्णयोः' इति रभसः। 'आस्फोतस्तु पुमानर्कपर्णे स्यात्कोविदारके। आस्फोता गिरिकर्ण्यां च वनमल्ल्यां च योषिति' इति मेदिनी ॥ (१) ॥*॥ एकं 'वनमल्ल्याः' ॥

**शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ७०**

**शेफेति** ॥ शेरते शेफा अलयोऽस्याम्। वा ङीष् ( )। स्वार्थे रकन् (५।३।७५) ॥ (१) ॥*॥ सुष्ठु वहत्यामोदम्। 'वह प्रापणे' (भ्वा० उ० अ०)। पचाद्यच् (३।१।१३४)। 'सुवहा सल्लक्येलापर्णीगोधापदीषु वीणायाम्। रास्नाशेफालिकयोः स्त्री, सुखवाह्येऽन्यलिङ्गः स्यात्' (इति मेदिनी) ॥ (२) ॥*॥ नीलवर्णा। 'नीलादौषधौ' 'प्राणिनि च' (वा० ४।१।४२) इति ङीष्। स्वार्थे कन् (५।३।७५)। 'नीलिका नीलिनीक्षुद्ररोगशेफालिकासु च' (इति मेदिनी) ॥ (४) ॥*॥ चत्वारि 'कृष्णपुष्पाया निर्गुण्ड्याः' 'न्यवारी' इति ख्यातायाः ॥

१—(कनभावे) शेफालीत्यपि-'कथमितरथा शेफालीषु स्खलत्कुसुमास्वपि' इति प्रयोगदर्शनात्-इति मुकुटः ॥

**सितासौ श्वेतसुरसा भूतवेशी**

**सितेति** ॥ शोभनो रसोऽस्याः। श्वेता चासौ सुरसा च ॥ (१) ॥*॥ भूतानि विशति। 'विश प्रवेशने' (तु० प० अ०)। 'कर्मण्यण्' ॥ (२) ॥*॥ द्वे 'श्वेतनिर्गुण्ड्याः' ॥

**अथ मागधी।**

**गणिका यूथिकाम्बष्ठा**

**अथेति** ॥ मगधे देशे भवा। 'तत्र भवः' (४।३।५३) इत्यण्। 'मागधो मगधोद्भूते शुक्लजीरकबन्दिनोः। वैश्यतः क्षत्रियापुत्रे मागधी स्यात्तु पिप्पली ॥ यूथी भाषाविशेषश्च' इति हैमः ॥ (१) ॥*॥ चित्ताकर्षकत्वाद्गणिकेव। 'गणिका यूथीवेश्येभीतर्कारीषु ना तु दैवज्ञे' इति मेदिनी ॥ (२) ॥*॥ यूथमस्त्यस्याः। 'अत इनिठनौ' (५।२।११५) 'यूथिकाम्रातके पुष्पविशेषेऽपि च योषिति' इति मेदिनी ॥ (३) ॥*॥ अम्बेव मातेव तिष्ठति। 'सुपि स्थः' (३।२।४) इति कः। 'अम्बाम्ब-' (८।३।९७) इति षत्वम्। 'ङ्यापोः' (६।३।६३) इति ह्रस्वः। —अम्बे तिष्ठति—इति स्वामी। 'अम्बष्ठो देशभेदेऽपि विप्राद्वैश्यासुतेऽपि च'। 'अम्बष्ठाप्यम्ललोण्यां स्यात्पाठायूथिकयोरपि' इति विश्वमेदिन्यौ ॥ (४) ॥*॥ चत्वारि 'यूथिकायाः' 'जूही' इति ख्यातायाः ॥

**सा पीता हेमपुष्पिका ॥ ७१ ॥**

**सेति** ॥ हेमवर्णं पुष्पमस्याः। 'पाककर्ण-' (४।१।५४) इति ङीष्। 'स्याद्धेमपुष्पिका यूथ्यां चम्पको हेमपुष्पकः' (इति मेदिनी) ॥ (१) ॥*॥ एकं 'तस्या एव पीतपुष्पायाः' ॥

**अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता।**

**अतीति** ॥ अतिक्रान्तो मुक्तां शौक्ल्यात्। 'अत्यादयः' (वा० २।२।१८)। इति तत्पुरुषः। 'गोस्त्रियोः-' (१।२।४८) इति ह्रस्वः। यद्वा मुक्तान् विरक्तान्। 'अतिमुक्तस्तु निःसङ्गे वासन्त्यां तिनिशेऽपि च' (इति मेदिनी) ॥ (१) ॥*॥ पुण्डति पुण्ड्यते वा 'मुडि खण्डने' 'पुडि च' (भ्वा० प० से०)। 'स्फायि-' (उ० २।१३) इति रक्। स्वार्थे कन् (५।३।७५) ॥ (२) ॥*॥ वसन्ते पुष्यति। 'कालात्साधुपुष्प्यत्-' (४।३।४३) इत्यण्। 'वासन्ती माधवीयूथ्योरुष्ट्रे नावहिते त्रिषु' (इति मेदिनी) ॥ (३) ॥*॥ मधौ पुष्यति। 'मा-

१—'अतिरक्तत्वात्' इति भट्टक्षीरस्वामी ॥

धवोऽजे मधौ राधे वसन्ते न स्त्रियां सितौ । वासन्ती कुट्टनीमद्यमधुशर्करासु स्त्रियाम्' इति मेदिनी । रन्तिदेवोऽपि 'वैशाखे **माधवः** कृष्णे **माधवी** चातिमुक्तके' ॥ (४) ॥*॥ पञ्च **'कुन्दभेदस्य'** ॥

**सुमना मालती जातिः**

**स्विति** ॥ सुष्ठु मन्यते । 'मन ज्ञाने' (दि० आ० अ० ) असुन् (उ० ४।१८९) । यद्वा शोभनं मनोऽस्याम् । 'स्त्रियां **सुमनसो** भूम्नि पुष्पे, जातौ तु भेदतः । विदुष्यपि यदा दृष्टस्तदा भेदेन शिष्यते' इति व्याडिः ॥*॥ 'सुमनायाश्च पत्रेण' इति सुश्रुतदर्शनात् टाबन्तापि ॥ (१) ॥*॥ मां लक्ष्मीं लतति । 'लत' सौत्रो वेष्टनार्थः । मूलविभुजादित्वात् (वा० ३।२।५) कः । गौरादिः (४।१।४१) । मालं तनोति वा । 'अन्येभ्योऽपि' (वा० ३।२।१००) इति डः । **'मालती** युवतौ काकमाच्यां जातिविशल्ययोः । ज्योत्स्नायां निशि नद्यां च' (इति हैमः) ॥ (२) ॥*॥ जायते । 'जनी प्रादुर्भावे' ( दि० आ० से० ) । क्तिच् (३।३।१७४) । 'जनसन–' (६।४।४२) इत्यात्वम् । वा ङीष् (ग० ४।१।४१) यत्तु—जायते प्रीतिरनयेति बाहुलकाज्जनेः कर्तरि क्तिच्–इत्याह तन्न । 'अनया' इति करणविग्रहं प्रदर्श्य 'कर्तरि' इति कथनं व्याहतम् । 'बाहुलकात्' इति च । 'क्तिच्क्तौ च' (३।३।१७४) इति सूत्रस्य सत्त्वात् । **'जातिः** स्त्री गोत्रजन्मनोः । अश्मन्तिकामलक्योश्च सामान्यच्छन्दसोरपि । जातीफले च मालत्याम्' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि **'जातेः' 'चँबेली'** इति ख्यातायाः ॥

**सप्तला नवमालिका ॥ ७२ ॥**

**सप्तेति** ॥ सप्त पर्णानि मनोबुद्धीन्द्रियाणि वा लाति । 'ला दाने' ( अ० प० अ० ) । 'आतोऽनुप–' (३।२।३) । इति कः । 'अथ सप्तला । नवमालाचर्मकषागुञ्जासु पाटलौ स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ नवा स्तुत्या मालास्याः । कप् (५।४।१५४) ॥ (२) ॥*॥ द्वे **'नवमालिकायाः'** ॥

**माध्यं कुन्दम्**

**मेति** ॥ माघे साधु, 'तत्र साधुः' (४।४।९८) इति यत् ।– माघे भवम् । दिगादित्वात् (४।३।५४) यत्–इति प्राञ्चः ॥ (१) ॥*॥ कुं भुवं दायति, द्यति वा । 'दैप् शोधने' (भ्वा० प० अ०) 'दो अवखण्डने' (दि० प० अ०) वा । 'आतः' (३।२।३) इति कः । पृषोदरादिः (६।३।१०९) कुणति । 'कुण शब्दे' (तु० प० से०) । 'अब्दादयश्च' (उ० ४।९८) इति दो वा । यत्तु—'तत्पुरुषे' (६।३।१४) इति द्वितीयाया अलुक्–इति मुकुटः । तन्न । अलौकिकविग्रहे द्वितीयाया अप्रवेशात् । षष्ठ्याः प्रवेशाच्च । 'माध्यः कुन्दः कुरण्टकः' इति पुंस्काण्डे रत्नकोषात् पुंस्त्वमपि । **'कुन्दो** माघ्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'कुन्दस्य'** ॥

**रक्तकस्तु बन्धूको बन्धुजीवकः ।**

**रक्तेति** ॥ रक्तपुष्पत्वाद्रक्तः । स्वार्थे कन् (५।३।७५) । (**'रक्तको**ऽम्लानबन्धूकरक्तवस्त्रानुरागिषु' इति मेदिनी) ॥ (१) ॥*॥ बध्नाति चित्तम् । 'बन्ध बन्धने' (क्र्या० प० अ०) । 'उलूकादयश्च' (उ० ४।४१) इत्यूकः । **'बन्धूकं** बन्धुजीवे स्याद्बन्धूकः पीतसारके' (इति मेदिनी) ॥ (२) ॥*॥ बन्धुरिव जीवं जलमस्य ॥ (३) ॥*॥ त्रीणि **'बन्धूकस्य' 'दोपहरिया'** इति ख्यातस्य ॥

**सहा कुमारी तरणिः**

**सहेति** ॥ आतपं सहते । 'षह मर्षणे' (भ्वा० आ० से०) । अच् (३।१।१३४) टाप् (४।१।४) । **'सहो** बले न स्त्रियां स्यात्स्त्रियां तु नखभेषजे । दण्डोत्पलामुद्गपर्णीकुमारीपृथिवीषु च' (इति मेदिनी) ॥ (१) ॥*॥ कुमारीव । यद्वा कुमारयति । 'कुमार क्रीडायाम्' (चु० उ० से०) । अच् (३।१।१३४) । गौरादिः (४।१।४१) । यद्वा कामयते । 'कमु कान्तौ' (भ्वा० आ० से०) । 'कमेः किदुच्चोपधायाः' (उ० ३।१३८) इत्यारन् । 'वयसि प्रथमे' (४।१।२०) इति ङीप् । **'कुमारी** रामतरुण्यां नवमाल्ये नदीभिदि । कन्याऽपराजितागौरीजम्बूद्वीपेषु च स्मृता' (इति विश्वः) ॥ (२) ॥*॥ तरत्यनया । 'तॄ प्लवनतरणयोः' (भ्वा० प० से०) । 'अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः' (उ० २।१०२) । **'तरणि**र्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि **'कुमार्याः' 'घीउकुआरी'** इति ख्यातायाः ॥

**अम्लानस्तु महासहा ॥ ७३ ॥**

**अम्लेति** ॥ न म्लायति स्म । 'गत्यर्थाकर्मक–' (३।४।७२) इति क्तः । 'संयोगादेरातो धातोर्यण्वतः' (८।२।४३) इति नत्वम् । **'अम्लान**स्त्वमले झिंटीभेदे' इति हैमः । **'अम्लानो** महासहायां ना वाच्यलिङ्गस्तु निर्मले' इति मेदिनी ॥ (१) ॥*॥ महती चासौ सहा च । 'सन्महत्–' (२।१।६१) इति तत्पुरुषः । 'आन्महतः–' (६।३।४३) इत्यात्वम् ।— महतो विमर्दस्य सहा वा–इति मुकुटः । तन्न । असामानाधिकरण्येनात्वाप्रसङ्गात् । **'महासहा** माषपर्ण्यामम्लानेऽपि च योषिति' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'महासहायाः' 'कटसरया'**-सामान्यस्य ॥

**तत्र शोणे कुरबकः**

**तत्रेति** ॥ तत्राम्लाने शोणे रक्ते । कुत्सित ईषद्वालीनां

---

१—पूर्वार्धं तु मेदिनीपठितम् । उत्तरार्धानुपूर्वी तु मेदिन्यां नोपलभ्यते किंतु 'मधुशर्करावासन्ती—कुट्टिनीमदिराञ्च च' इत्थमुपलभ्यते ॥

अल्पमकरन्दत्वाद् रवोऽत्र। बहुव्रीहित्वान्न कादेशः। 'कुरवकः शोणाम्लानझिंटीप्रभेदयोः' (इति मेदिनी) ॥*॥ कु ईषद्रौति। संज्ञायां क्वुन् (उ० २।३२)। उवङ् (६।४।७७) उकारद्वयवान् (कुरुवकः) इति मुकुटः ॥ (१) ॥*॥ (एकम्) 'रक्तवर्णायाः' ॥

**तत्र पीते कुरुण्टकः।**

तत्रेति ॥ रुण्टति। 'रुटि स्तेयकरणे' (भ्वा० प० से०)। ण्वुल् (३।१।१३३)। क्वुन् (उ० २।३२) वा। कुत्सितः कोर्वा रुण्टकः। 'कुगति-' (२।२।१८) इति समासः। 'कुरुण्टकः पीतपुष्पाम्लानझिंटिकयोः पुमान्' (इति मेदिनी) ॥*॥-कुर्यते। 'कुर छेदने' (तु० प० से०)। बाहुलकादण्टः। स्वार्थे कन् (५।३।७५)। ('कुरण्टी दारुपुत्र्यां ना झिंव्यम्लानप्रभेदयोः' इति मेदिनी)। इत्येकोकारवान् इति कश्चित्। तन्न 'कुर शब्दे' (तु० प० से०) इति पठितुं युक्तम् ॥ (१) ॥*॥ रक्तपीतपुष्पयुक्त-'कुरुण्टकः' 'कुटसरया'-इति ख्याताया एकैकम् ॥

**नीला झिंटी द्वयोर्बाणा दासी चार्तगलश्च सा ॥७४॥**

नीलेति ॥ वण्यते। 'वण शब्दे' (भ्वा० प० से०)। कर्मणि घञ् (३।३।१९)। 'वाणा तु वाणमूले स्त्री नीलझिंव्यां पुनर्द्वयोः' (इति मेदिनी) ॥ (१) ॥*॥ दस्यते। 'दसु उपक्षये' (दि० प० से०)। कर्मणि घञ् (३।३।१९)। गौरादिः (४।१।४१)। 'दासी बाणाभुजिष्ययोः' (इति मेदिनी) ॥ (२) ॥*॥ आर्तः क्षीणो गलति। 'गल अदने' (भ्वा० प० से०)। अच् (३।१।१३४) ॥ (३) ॥*॥ त्रीणि 'नीलझिंटिकायाः' ॥

**सैरीयकस्तु झिंटी स्यात्**

सैरीयेति ॥ सीरे भवः। 'तत्र भवः' (४।३।५३) इत्यण्। कर्षः। तत्र भवः 'वृद्धाच्छः' (४।२।११४)। 'संज्ञायां कन्' (५।३।७५)। 'सैरेयकः' इति पाठे 'नद्यादिभ्यो ढक्' (४।२।९७)। 'सैरीयकः सहचरः सैरेयश्च सहाचरः। पीतो रक्तोऽथ नीलश्च कुसुमैस्तं विभावयेत्। पीतः कुरुण्टको ज्ञेयो रक्तः कुरवकः स्मृतः। नील आर्तगलो दासीवाणा ओदनपाक्यपि' ॥ (१) ॥*॥ 'झिम्' इति रटति अच् (३।१।१३४)। पृषोदरादिः (६।३।१०९)। गौरादिङीष् (४।१।४१) ॥ (२) ॥*॥ द्वे 'झिंटीसामान्यस्य' ॥

**तस्मिन् कुरवकोऽरुणे।**

तस्मिन्निति ॥ तस्मिन् सैरेयके ॥ (१) ॥*॥ एकम् 'रक्तकुरुण्टकस्य' ॥

**पीता कुरण्टको झिंटी तस्मिन् सहचरी द्वयोः ॥७५॥**

पीतेति ॥ सह चरति। पचादौ 'चरट्' इति टित्त्वनिपातनात् ङीप् (४।१।१५)। यत्तु—'भिक्षासेना-' (३।२।१७) इति चकारस्यानुक्तसमुच्चयार्थत्वात् 'चरेष्टः'—इत्याह मुकुटः। तन्न। तत्र प्रमाणाभावात्। ('भवेत्सहचरो झिंव्यां द्वयोरनुचरे त्रिषु' इति मेदिनी) ॥ (१) ॥*॥ 'अन्येषामपि' (६।३।१३७) इति दीर्घत्वे 'सहाचरः' इत्यपि, इति स्वामी-इति मुकुटः। तदपि न। आङैव सिद्धत्वात् ॥ (२) ॥*॥ द्वे 'पीतकुरुण्टकस्य' ॥

**ओड्रपुष्पं जवा**

ओड्रेति ॥ आ ईषदुनत्ति। 'उन्दी क्लेदने' (रु० प० से०) 'स्फायितञ्चि-' (उ० २।१३) इति रक्, बाहुलकाद्रस्य डत्वम्। ओड्रं पुष्पमस्य। यत्तु—'उड श्लेषणे'। बाहुलकाद्रन्—इति मुकुटः। तन्न। धातुपाठे उडेरदर्शनात्। ('ओड्राः पुंभूम्नि नीवृति। ओड्रः ख्यातो जवापुष्पे' इति मेदिनी) ॥ (१) ॥*॥ जवति 'जु' सौत्रो धातुर्गतौ वेगे च। अच् (३।१।१३४) ॥ (१) ॥*॥ जपति। अच् (३।१।१३४)। 'जवायां तु जपा स्मृता' इति धर्मदासः। 'ओड्रपुष्पेऽपि वृक्षेऽपि जवाशब्दः प्रकीर्तितः' इति त्रिकाण्डशेषः ॥ (२) ॥*॥ द्वे 'जपायाः' 'ओडर' इति ख्यातायाः ॥

**पुष्पं वज्रपुष्पं तिलस्य यत्।**

पुष्पमिति ॥ वज्रमिव पुष्पम् ॥ (१) ॥*॥ तिलस्य (यत्) पुष्पम् ॥*॥ एकम् 'तिलपुष्पस्य' ॥

**प्रतिहासशतप्रासचण्डातहयमारकाः ॥ ७६ ॥**
**करवीरे**

प्रतीति ॥ प्रतीपो हासो विकासोऽस्य ॥ (१) ॥*॥ शतं प्रासाः कुन्ता इव पत्राण्यस्य। शतं पुष्पाणि प्रास्यति वा। 'असु क्षेपणे' (दि० प० से०)। 'कर्मण्यण्' (३।२।१) ॥ (२) ॥*॥ चण्डमतति। 'अत सातत्यगमने' (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१) ॥ (३) ॥*॥ हयानां मारकः ॥ (४) ॥*॥ करं वीरयति। 'वीर विक्रान्तौ' (चु० उ० से०)। 'कर्मण्यण्' (३।२।१)। 'करवीरः कृपाणे स्याद्दैत्यभेदाश्वमारयोः। करवीर्यदितीश्रेष्ठगवीपुत्रवतीषु च' (इति मेदिनी) ॥ (५) ॥*॥ पञ्च 'करवीरस्य' 'कणेर' इति ख्यातस्य ॥

**करीरे तु क्रकरग्रन्थिलावुभौ।**

करीति ॥ किरति। 'कॄ विक्षेपे' (तु० प० से०) 'कॄशॄपॄकटिशौटिभ्य ईरन्' (उ० ४।३०)। यत्तु—'कॄगॄशौडिभ्य ईरच्'—इति मुकुटः। तन्न। उणादिवृत्तिषु तत्पाठस्यादर्शनात्। करिणमीरयति वा। 'वंशाङ्कुरे करीरोऽस्त्री

---

१—अत्र रेफो निरुकारः 'कुरवकारवकारणताम्' इति रघुः—इति मुकुटः। 'कुरवकैः कुजन्मभिः सह संवससि' इति दमयन्तीश्लेषश्च ॥ २—'किरातिके कुरु कुरवकाञ्चितां चिताम्' इति बाणः—इति मुकुटः ॥ ३—अस्यार्धश्लोकस्य 'सैरेयकस्तु झिंटी स्यात्तस्मिन्कुरवकोऽरुणे' इत्यर्धव्याख्योत्तरं व्याख्या युक्ता ॥

वृक्षभिद्धटयोः पुमान् । **करीरी** चीरिकायां च दन्तमूले च दन्तिनाम्' (इति मेदिनी) ॥ (१) ॥*॥ 'क' इति करोति । अच् (३।१।१३४) । टः (३।२।२०) वा । **'क्रकरः** करीरवृक्षे दीने क्रकचे च पक्षिभेदे च' (इति मेदिनी) ॥ (२) ॥*॥ ग्रन्थिरस्यास्ति । सिध्मादित्वात् (५।२।९७) लच् । ग्रन्थिं लाति वा । **'ग्रन्थिलस्तु** करीरद्रौ विकङ्कततरौ पुमान् । सग्रन्थौ त्रिषु' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि **'करीरस्य'** **'करील'** इति ख्यातस्य ॥

**उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः ॥ ७७ ॥**
**मातुलो मदनश्च**

**उन्मत्त इति** ॥ उन्मत्तयति । 'तत्करोति–' (वा० ३।१।२६) इति णिच् । पचाद्यच् (३।१।१३४) **'उन्मत्त** उन्मादवति धूस्तूरमुचुकुन्दयोः' (इति मेदिनी) ॥ (१) ॥*॥ कितवाः सन्त्यस्य ग्राहकाः । अर्शआद्यच् (५।२।१२७) । कितान् निवसतो वञ्चति 'वञ्चु गतौ' (भ्वा० प० से०) 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । **'कितवो** धूर्तवन्मत्ते वञ्चके कनकाह्वये' (इति विश्वः) ॥ (२) ॥*॥ धूर्व्यते स्म । 'धुर्वी हिंसायाम्' (भ्वा० प० से०) कर्मणि क्तः (३।२।१०२) ।—धूर्वेति—इति तु प्राञ्चः । तत्र कर्तरि क्तो दुर्लभः । 'मतिबुद्धिपूजार्थेभ्यश्च' (३।२।१८८) इति चकाराद्वा बोध्यः । यद्वा धूर्वणं धूर्तम् । भावे क्तः (३।३।११३) । तदस्यास्ति । अर्शआद्यच् (५।२।१२७) । **'धूर्तं** तु खण्डलवने धूस्तूरे ना विटे त्रिषु' (इति मेदिनी) ॥ (३) ॥*॥ धयति धातून् । 'धेट् पाने' (भ्वा० प० अ०) बाहुलकादूरच् । पृषोदरादिः (६।३।१०९) । 'धत्तूरस्तु स्मृतो धूर्तो **देविता** कितवः **शठः'** इति स्वामी ॥*॥ धूसयति । 'धूस कान्तिकरणे' (चु० प० से०) । क्विप् (३।२।१७८) तूर्यते । 'तूरी त्वरणहिंसयोः' (दि० आ० से०) । इगुपधत्वात् कः (३।१।१३५) । धूश्चासौ तूरश्च । **'धुस्तुरस्तु पुण्डरीको धूस्तूरः** कनकाह्वयः' इति शब्दार्णवः–इति मुकुटः ॥ (४) ॥*॥ कनकमाह्वयो यस्य । **'कनकं** हेम्नि पुंसि स्यात्किंशुके नागकेसरे । धत्तूरे काञ्चनारे च कालीये चम्पकेऽपि च' (इति मेदिनी) ॥ (५) ॥*॥ मास्ति नास्ति तुला यस्य । मा श्रीस्तुलास्य, इति वा । कनकनामत्वात् । **'मातुलो** व्रीहिभिन्मातृभ्रात्रोश्च मदनद्रुमे । धत्तूरे' (इति मेदिनी) ॥ (६) ॥*॥ मदयति । 'मदी हर्षग्लेपनयोः' (भ्वा० प० से०) । ल्युः (३।१।१३४) । **'मदनः** स्मरवसन्तद्रुभिद्धत्तूरसिह्लके' (इति मेदिनी) ॥ (७) ॥*॥ सप्त **'धत्तूरस्य'** ॥

**अस्य फले मातुलपुत्रकः ।**

**अस्येति** ॥ मातुलस्य पुत्र इव । कन् (५।३।९६) **'मातुलपुत्रक** इत्यपि मामकतनये फले च धूर्तस्य' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'धत्तूरफलस्य'** ॥

**फलपूरो बीजपूरः**

**फलेति** ॥ फलेन पूर्यते । 'पूरी आप्यायने' (दि० आ० से०) 'इगुपध–' (३।१।१३४) इति कः । कर्मणि घञ् (३।३।१९) वा । मुकुटस्तु—फलं बीजं च पूरयति । कः—इत्याह । तत्राणुचितः । इगुपधत्वाभावाण्णिजन्तस्य ॥ (१) ॥*॥ एवं बीजपूरः ॥ (२) ॥*॥ द्वे **'मातुलिङ्गस्य'** **'विजौरा'** इति ख्यातस्य ॥

**रुचको मातुलुङ्गके ॥ ७८ ॥**

**रुचेति** ॥ रोचते । 'रुच दीप्तावभिप्रीतौ च' (भ्वा० आ० से०) अन्तर्भावितण्यर्थः । क्वुन् (उ० ३।३२) । **'रुचको** बीजपूरे च निष्के दन्तकपोतयोः । न द्वयोः सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययोः । सौवर्चलेऽपि मङ्गल्यद्रव्ये चाप्युत्कटेऽपि च'[1] (इति मेदिनी) ॥ (१) ॥*॥ मीनात्स्रुचिम् 'मीञ् हिंसायाम्' (क्र्या० उ० अ०) । बाहुलकात्तुन् । लुङ्ग्यते । 'लुजि भासार्थः' (चु० प० से०) । घञ् (३।३।१९) न्यङ्क्वादिः (७।३।५३) मातुश्चासौ लुङ्गश्च । स्वार्थे कन् (५।३।७५) ॥ (२) ॥*॥ द्वे **'मातुलिङ्गस्य'** । स्वामी तु चतुर्णां पर्यायतामाह । तदुक्तम्—'फलपूरो बीजपूरः **केसरी बीजपूरकः । बीजकः केसराम्लश्च** मातुलुङ्गश्च पूरकः' । अनेकार्थे—'सौवर्चलं मातुलुङ्गं शिलाचन्दनपेषणी । ग्रीवाभरणकं चैषु चतुर्षु रुचकं स्मृतम्'—इति ॥

**समीरणो मरुवकः प्रस्थपुष्पः फणिज्जकः ।**
**जम्बीरोऽपि**

**समीति** ॥ समीरयति 'ईर गतौ' (अ० आ० से०) । ल्युः । **'समीरणस्तु** पवने पथिके च फणिज्जके' (इति मेदिनी) ॥ (१) ॥*॥ मरौ वाति । क्वुन् । (उ० २।३२) । 'भवेन्**मरुवकः** पुष्पभिच्छल्यद्रुफणिज्जके' ॥ (२) ॥*॥ प्रस्थे सानौ पुष्प्यति । 'पुष्प विकसने' (दि० प० से०) । अच् (३।१।१३४) ॥ (३) ॥*॥ फणी जातोऽस्मात् । फणाभपत्रपुष्पत्वात् । फणी उज्झको वर्जकोऽस्य, इति केचित् । उभौ पृषोदरादी (६।३।१०९) ॥ (४) ॥*॥ जम्यते । 'जमु अदने' (भ्वा० प० से०) विच् (३।२।७५) । वीरयति । अच् (३।१।१३४) । जम् चासौ वीरश्च । **'जंबीरः** प्रस्थपुष्पे स्यात्तथा दन्तशठद्रुमे' (इति मेदिनी) ॥ (५) ॥*॥ पञ्च **'जम्बीरस्य'** **'मरुआ'** इति ख्यातस्य ॥

**अथ पार्णास्ते कठिंजरकुठेरकौ ॥ ७९ ॥**

**अथेति** ॥ पर्णान्यस्यति । 'असु क्षेपणे' (दि० प० से०) । 'कर्मण्यण्' (३।२।१) । यद्वा पर्णैरसति । 'अस दीप्तौ' (भ्वा० उ० से०) । पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ कठिनं

१—इतःपरम् 'भद्रायाम्' इत्यपि लिखितमासीत् । तथापि मेदिन्यां तदपाठात्त्यक्तम् ॥

[1] 'पि कटके' इति पाठः ॥

भ्रंशने। 'कृप' (दि० प० से०) ण्यन्तः। 'कर्मण्यण्' (३।२।१)। पृषोदरादिः (६।३।१०९) ॥ (२) ॥*॥ कुण्ठति। 'कुठ प्रतीघाते' 'कुठि च' (भ्वा० प० से०)। 'पति-कठि-कुठि-' (उ० ५।५८) इत्येरक्। आगमशास्त्रस्यानित्यत्वान्न नुम् ॥—'कुठ पुठ प्रतीघाते' 'कुठी च' इत्यतो 'दर्दुरादयश्च' (उ० ५।१०) इति रक्। पृषोदरादित्वात् (उ० ६।३।१०९) अनुनासिकागमः—इति मुकुटः। तन्न। कुठ-धातोः सत्वे पृषोदरादित्वकल्पनावैयर्थ्यात्। रक्कल्पनाऽपि व्यर्था। एरकासिद्धत्वात् ॥ (३) ॥*॥ त्रीणि **'पर्णासस्य'** ॥

**सितेऽर्जकोऽत्र**

**सीति** ॥ अत्र पर्णासे। अर्जयति। 'अर्ज सर्ज अर्जने' (भ्वा० प० से०)। 'ऋज गतिस्थानार्जनोपार्जनेषु' (भ्वा० आ० से०) वा ण्यन्तः। ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ एकं **'श्वेतपर्णासस्य'** ॥

**पाठी तु चित्रको वह्निसंज्ञकः।**

**पेति** ॥ पाठोऽस्यास्ति। 'अतः' (५।२।११५) इतीनिः ॥ (१) ॥*॥ चित्तं बुद्धिं त्रायते। 'त्रैङ् पालने' (भ्वा० आ० अ०)। 'आतोऽनुप-' (३।२।३) इति कः। स्वार्थे कन् (५।३।७५)। **'चित्रकं** तिलके ना तु व्याघ्रभिच्चक्षुपाठिषु' (इति मेदिनी) ॥ (२) ॥*॥ वह्निः संज्ञा यस्य। वह्निपर्यायनामक इत्यर्थः ॥ (३) ॥*॥ त्रीणि **'चित्रकस्य' 'चीता'** इति ख्यातस्य ॥

**अर्काह्ववसुकास्फोतगणरूपविकीरणाः ॥ ८० ॥ मन्दारश्चार्कपर्णे**

**अर्केति** ॥ अर्क आह्वा यस्य। **'अर्कोऽ**र्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ' (इति मेदिनी) ॥ (१) ॥*॥ वसति। 'वस निवासे' (भ्वा० प० अ०)। 'शृस्वृस्निहि-' (उ० १।१०) इत्युः। स्वार्थे कन् (५।३।७५)। **'वसुकं** रोमके पुंसि शिवमल्यर्कपर्णयोः' (इति मेदिनी)।—बाहुलकात् 'भृमृ-' इत्युः—इति मुकुटः। तन्न। उक्तसूत्रे वसतेर्ग्रहणात् ॥ (२) ॥*॥ आ स्फोटयति। 'स्फुटिर् विकसने'। (भ्वा० प० से०)। अच् (३।१।१३४)। पृषोदरादिः (६।१।१०९)। **'आस्फोतस्तु** पुमानर्कपर्णे स्यात् कोविदारके। **आस्फोता** गिरिकर्ण्यां च वनमल्यां च योषिति' (इति मेदिनी) ॥ (३) ॥*॥ गणा बहूनि रूपाण्यस्य ॥ (४) ॥*॥ विकिरति। 'कॄ विक्षेपे' (तु० प० से०)। 'कृपॄ-' (उ० २।८१) इति क्युन्। इत्वम् (७।१।१००) रपरत्वम् (१।१।५१) बाहुलकाद्दीर्घः ॥*॥ विविधः किरणोऽस्य, इत्यन्ये ॥ (५) ॥*॥ मन्दान् इयर्ति। अण् (३।२।१) मन्दैरर्यते वा। घञ् (३।३।१९)। **'मन्दारः** स्यात्सुरद्रुमे। पारिभद्रेऽर्कपर्णे च **मन्दारो** हस्तिधूर्तयोः'[1] (इति मेदिनी) ॥ (६) ॥*॥ अर्का-

१—'धूर्तयोः' इति पाठः ॥

भानि तीक्ष्णानि पत्राण्यस्य ॥ (७) ॥*॥ सप्त **'अर्कस्य' 'आक'** इति ख्यातस्य ॥

**अत्र शुक्लेऽलर्कप्रतापसौ।**

**अत्रेति** ॥ अस्मिन् शुक्ले। अलति। 'अल भूषणादौ' (भ्वा० प० से०) क्विप् (३।२।७६)। अल् चासावर्कश्च। **'अलर्को** धवलार्के स्याद्योगोन्मादितकुक्कुरे' (इति मेदिनी)।—अलयति-इति मुकुटः। तन्न। णावुपधावृद्धिप्रसङ्गात् ॥ (१) ॥*॥ प्रतापं चक्षुस्तेजः स्यति। 'षोऽन्तकर्मणि' (दि० प० अ०)। कः (३।२।३)। प्रकृतास्तापसा येन वा ॥ (२) ॥*॥ द्वे **'श्वेतार्कस्य'** ॥

**शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः ॥ ८१ ॥**

**शिवेति** ॥ शिवप्रिया मल्ली ॥ (१) ॥*॥ पशुपतेरयम्। तत्प्रियत्वात्। **'पाशुपतो** वकपुष्पे स्यात्पशुपत्यधिदैवते च तद्भक्ते' (इति मेदिनी) ॥ (२) ॥*॥ एकमस्थि लाति। 'सुषामादित्वात्' (८।३।९८) षत्वं दीर्घत्वं च। **'एकाष्ठीला** वनतिक्तकौषधौ पुंसि बकपुष्पे' (इति मेदिनी) ॥ (३) ॥*॥ वाति। बाहुलकात् कुकः। कुनोऽकारस्योत्वं वा ॥*॥ **'बकः'** इति पाठे कुन् (उ० २।३२)। **'बकस्तु** बकपुष्पे स्यात्कङ्के श्रीदे च रक्षसि' (इति मेदिनी) ॥ (४) ॥*॥ वस्ते, वसति वा। 'शस्वृस्निहित्रप्यसिवसि-' (उ० १।१०) इत्युः। **'ब (व)-सुर्ना** देवभेदाग्निभायोक्त्रकराजसु। (क्लीबं वृद्ध्यौषधेऽश्वे च रैरत्नमधुरे त्रिषु') इति मेदिनी) ॥ (५) ॥*॥ पञ्च **'गुलमा'** इति ख्यातस्य **'बकपुष्पस्य'** ॥

**बन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि।**

**बन्देति** ॥ बन्द्यते। 'वदि अभिवादनस्तुत्योः' (भ्वा० आ० से०)। 'गुरोश्च' (३।३।१०३) इत्यः। (**'बन्दा** लतान्तरे स्मृता। भिक्षुक्यामपि बन्द्यां च') (इति सर्वादौ मेदिनी) ॥ (१) ॥*॥ वृक्षमत्ति। 'अद भक्षणे' (अ० प० अ०) ल्युट् (३।३।११३)। **'वृक्षादनी** तु बन्दायां विदारीकन्देऽपि च' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ वृक्षं **रोहति**। मूलविभुजादित्वात् (३।२।५) कः। वृक्षे रोहति इति वा। 'इगुपध-' (३।१।१३५) इति कः ॥ (३) ॥*॥ जीवति। 'रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि' (उ० ३।१२७) इति झच् षित्त्वात् (४।१।४१) ङीष्। कन् (५।३।७५)। **'जीवन्तिका** गुडूच्यां च जीवाख्यशाकबन्दयोः' (इति मेदिनी) ॥ (४) ॥ चत्वारि **'वृक्षोपरिजाततलताविशेषस्य'** ॥

**वत्सादनी छिन्नरुहा गुडूची तन्त्रिकाऽमृता ॥ ८२ ॥**
**जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि।**

**वत्सेति** ॥ वत्सैरद्यते। 'अद भक्षणे' (अ० प० अ०)। ल्युट् (३।१।११३) ॥ (१) ॥*॥ छिन्ना रोहति। 'इगुपध-' (३।१।१३५) इति कः। 'ङ्यापोः' (६।३।६३) इति ह्रस्वः ॥ (२) ॥*॥ गुडति। 'गुड रक्षणे' (तु० प० से०)। बाहुल-

कादूचट् ॥ (३) ॥*॥ तन्त्रयति । 'तन्त्रि कुटुम्बधारणे' (चु० उ० से०)। ण्वुल् (३।१।१३३) ॥ (४) ॥*॥ न मृतमस्याः। '**अमृता** मागधीपथ्यागुडूच्यामलकीषु च' (इति मेदिनी) ॥ (५) ॥*॥ जीवति । झच् (उ० ३।१२७)। '**जीवन्तिका** गुडूच्यां च जीवाख्यशाकबन्दयोः' इति मेदिनी ॥ (६) ॥*॥ सोमस्य वल्ली ॥(७) ॥*॥ विगतं शल्यमस्याः । '**विशल्या**ऽग्निशिखादन्तीगुडूचीत्रिपुटासु च' (इति मेदिनी) ॥ (८) ॥*॥ मधुमयानि पर्णान्यस्याः । 'पाककर्ण–' (४।१।५४) इति ङीष् ॥ (९) ॥*॥ नव '**गुडूच्याः**' ॥

**मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा ॥ ८३ ॥**
**मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ।**

**मूर्वेति** ॥ मूर्वति । 'मुर्वी बन्धने' (भ्वा० प० से०)। अच् (३।१।१३४) ॥ (१) ॥*॥ दीव्यति । पचादौ (ग० ३।१।१३४) 'देवट्' इति निपातनात् (४।१।४५) ङीप् । मुकुटोक्तं गौरादित्वं चिन्त्यम् । '**देवी** कृताभिषेकायां तेजनीस्पृक्कयोरपि' (इति मेदिनी ) ॥ (२) ॥*॥ मधु रसोऽस्याः । 'भवेन्**मधुरसा** द्राक्षामूर्विकादुग्धिकासु च' (इति मेदिनी) ॥ (३) ॥*॥ मुरति । 'मुर संवेष्टने' । 'शकादिभ्योऽटन्' ( उ० ४।८१)। ('**मोरटं** तु भवेदिक्षुमूलाङ्कोटप्रसूनयोः ।) सप्तरात्रात्परक्षीरे, मूर्विकायां तु **मोरटा**' (इति मेदिनी) ॥ (४) ॥*॥ तेजति । 'तेज पालने' (भ्वा० प० से०) । ल्युट् (३।३।११३) ॥ (५) ॥*॥ स्रवति । 'स्रु गतौ' (भ्वा० प० अ० अच् (३।१।१३४) ॥*॥ संज्ञापूर्वकत्वाद्गुणाभावे स्रुवाऽपि । '**स्रुवा** द्वयोर्होमपात्रे सल्लकीमूर्वयोः स्त्रियाम्' (इति मेदिनी) ॥ (६) ॥*॥ मधु लाति । 'आतोऽनुप–' (३।२।३) इति कः । 'अन्येषामपि' ( ६।३।१३७ ) इति दीर्घः ॥ (७) ॥*॥ मधुनः श्रेणिरत्र ॥ (८) ॥*॥ गोः कर्ण इव, गौः कर्णो यस्याः, इति वा । 'पाककर्ण–' (४।१।५४) इति ङीष् '**गोकर्णो**ऽश्वतरेऽपि स्यान्मृगसर्पगणान्तरे । अङ्गुष्ठानामिकोन्माने **गोकर्णी** मूर्विकौषधौ' इति विश्वः ॥ (९) ॥*॥ पीलोरिव पर्णान्यस्याः । 'पाककर्ण–' (४।१।५४) इति ङीष् । '**पीलुपर्णी** चिञ्चिकायां मूर्वायामौषधीभिदि' (इति मेदिनी) ॥ (१०) ॥*॥ दश '**मूर्वायाः**' '**मुहार**' इति ख्यातायाः ॥

**पाठाऽम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा ॥८४॥**
**एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ।**

**पाठेति** ॥ पठ्यते । 'पठ व्यक्तायां वाचि' ( भ्वा० प० से०)। कर्मणि घञ् (३।३।१९)। '**पाठस्तु** पठने ख्यातो विद्धकर्ण्यां तु योषिति' (इति मेदिनी) ॥ (१) ॥*॥ '**अम्बष्ठा**ऽप्यम्ललोण्यां स्यात् पाठायूथिकयोरपि' (इति मेदिनी) ॥ (२) ॥*॥ विद्धौ कर्णौ यया ॥*॥—अविद्धोऽच्छिद्रः पर्णरूपः कर्णोऽस्याः—इति मुकुटः ॥ (३) ॥*॥ स्थापयति । ल्युट् (३।३।११३) । '**स्थापनं** रोपणे, पुंसि वने, पाठौषधौ स्त्रियाम्' (इति मेदिनी) ॥ (४) ॥*॥ अतिशयेन प्रशस्ता । 'प्रशस्यस्य श्रः' (५।३।६०) । '**श्रेयसी** करिपिप्पल्यामभयापाठयोरपि' (इति मेदिनी) ॥ (५) ॥*॥ रस्यते 'रस आस्वादने' (चु० उ० से०) । कर्मणि घञ् (३।३।१९) अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । '**रसो** गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः । देहधातुप्रभेदे च पारदस्वादयोः पुमान् । स्त्रियां तु रसनापाठासल्लकीकङ्गुभूमिषु' (इति मेदिनी) ॥ (६) ॥*॥ (७) ॥*॥ पापे चलति । 'चल विलसने' (तु० प०से०) । पचादौ 'चेलट्' इति निपातनात् ङीप् (४।१।१५) । 'गौरादित्वकल्पनं मुकुटकृतं व्यर्थम् । पचेर्यङन्तादच्चि 'पापक्ति' इति पापचो वायुः । तमीरयति वा । अण् (३।२।१) ॥ (८) ॥*॥ प्राचि भवा । 'विभाषाञ्चेः' (५।४।८) इति खः ॥ (९) ॥*॥ वने तिक्ता । स्वार्थे कन् (५।३।७५) ॥ (१०) ॥*॥ दश '**पाठा**' इति ख्यातायाः ॥

**कटुः कटंवराऽशोकरोहिणी कटुरोहिणी ॥ ८५ ॥**
**मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी ।**

**केति** ॥ कटति 'कटे वर्षावरणयोः' (भ्वा० प० से०)। 'श्रस्वृस्निहि–' (उ० १।१०) इत्यत्र चकाराद्उः ।—'वटिकटिभ्यां च' इत्युः—इति मुकुटः । तन्न । उज्ज्वलदत्तादिषु तत्सूत्रस्यादर्शनात् । '**कटुः** स्त्री कटुरोहिण्यां लताराजिकयोरपि । (नपुंसकमकार्ये स्यात्पुंलिङ्गे रसमात्रके । त्रिषु तद्वत्सुगन्ध्योश्च मत्सरेऽपि खरेऽपि च') (इति मेदिनी) ॥ (१) ॥*॥ कटति । अच् (३।१।१३४) । कटं (**रोगम्**) वृणोति । 'वृञ् वरणे' (स्वा० उ० से०) । 'संज्ञायां भृतृ–' (३।२।४६) इति खच् । 'अरुर्द्विषत्–' (६।३।६७) इति मुम् ॥*॥—'कटंभरा' इति पाठः—इत्यन्ये । '**कटंभरा** प्रसारण्यां रोहिण्यां गजयोषिति । कलम्बिकायां गोलायां वर्षाभूमूर्वयोरपि' (इति मेदिनी) ॥ (२) ॥*॥ अशोक इव रोहति । 'कर्तर्युपमाने' (३।२।७९) इति णिनिः । 'अशोकरोहिणी शक्ता चक्राङ्गी शकुलादनी' इति निघण्टुः ॥*॥ व्यस्तमपीदं नाम । '**अशोकः** कटुरोहिण्याम**शोको** वञ्जुलद्रुमे' इति रभसः । ('**अशोक**स्त्रिषु निःशोके पुंसि कङ्केलिपादपे । स्त्रियां तु कटुरोहिण्यां पारदे स्यान्नपुंसकम्' (इति मेदिनी) ॥*॥ '**रोहिणी** कटुरोहिण्याम्' इति रुद्रः । '**रोहिणी** कण्ठरुग्भिदि । अभित्कटंभरासोमवल्केषु लोहितागवोः' ( इति मेदिनी ) ॥ (३) ॥*॥ कटुश्चासौ रोहिणी च । 'कटुरोहिण्यरिष्टा च प्रोक्ता तिक्तकरोहिणी'

१—विश्वे तु 'गोकर्णोऽश्वतरे सर्पे सारङ्गे प्रमथान्तरे' इत्येवं पाठ उपलभ्यते ॥

इति निघण्टुः ॥ (४) ॥*॥ मत्स्यानां पित्तमिव । तद्वत्स्वादुत्वात् ॥ (५) ॥*॥ कृष्णो वर्णेन भेदश्छेदोऽस्याः । कृष्णं मलं भिनत्ति वा । 'कर्मण्यण्' (३।२।१) । ङीप् (४।१।१५) । 'कृष्णभेदा चण्डरुहा' इति निघण्टुः ॥ (६) ॥*॥ चक्राकारमङ्गमस्याः । गौरादिः ( ४।१।४१ ) । 'अङ्गगात्र–' इति निर्मूलम् । '**चक्राङ्गो** मानसौकसि । **चक्राङ्गी** कटुरोहिण्याम्' इति मेदिनी ॥ (७) ॥*॥ शकुलैर्मत्स्यभेदैरद्यते । अत्तेः कर्मणि ल्युट् (३।३।११३) । '**शकुलादनी** स्त्रियां कृष्णभेदे कटुकशाकयोः' (इति मेदिनी) ॥ (८) ॥*॥ अष्टौ '**कटुरोहिण्याः**' '**कुटकी**' इति ख्यातायाः ॥

**आत्मगुप्ता जडाऽव्यण्डा कण्डूरा प्रावृषायणी ॥८६॥**
**ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छुश्च मर्कटी ।**

**आत्मेति** ॥ आत्मना गुप्ता । दुःस्पर्शत्वात् । 'कर्तृकरण–' (२।१।३२) इति समासः ॥ (१) ॥*॥ जडयति । 'तत्करोति–' (वा० ३।१।२६) इति णिजन्तादच् ( ३।१।१३४) । '**जडा** स्त्रियाम् । शूकशिम्ब्यां हिमग्रस्तमूकाप्रज्ञेषु तु त्रिषु' (इति मेदिनी) । मुकुटस्तु—कण्ड्वादिना दौःस्थ्यजननादिन्द्रियाणि जडयति स्तम्भयति । 'जल अपवारणे' (चु० प० से०)—इत्यवोचत् । तन्न । णौ वृद्धिप्रसङ्गात् । जडति वा । डलयोरैक्यात् ॥*॥—न जहाति शूकान् । अजहा । 'ज्ञेया **जाङ्गलिका** सैव साऽ**जहा** प्रावृषायणी' इतीन्दुः—इति स्वामी ॥ (२) ॥*॥ न विगतमण्डमस्याः । 'अव्यण्डा **वृषभी गुप्ता**' इतीन्दुः । मुकुटस्तु—अधिकमण्डं बीजमस्याः, अधिकममति । 'अम रोगे' ( भ्वा० प० से०) 'अमन्ताड्डः' ( पु० १।११४ ) वा । अध्यण्डा—इत्याह । तत्र मूलं मृग्यम् ॥ (३) ॥*॥ कण्डूं राति । 'रा दाने' (अ० प० अ०) । 'आतोऽनुप–' (३।२।३) इति कः ॥*॥ पृषोदरादित्वात् (६।३।१०९) ह्रस्वत्वमपि । 'कपिकच्छूश्च कण्डूरा **कण्डुरा** शूकशिम्बिका' इतीन्दुः । मुकुटस्तु—कण्डूरस्त्यस्याः । 'कण्डूकच्छूभ्यां ह्रस्वश्च' इति रो ह्रस्वत्वं च—इत्याह । तन्न । उक्तवार्तिकस्यादर्शनात् ॥ (४) ॥*॥ '**प्रावृषा** तु जलार्णवे' इति त्रिकाण्डशेषः । प्रावृषामेति अयते, वा । कर्तरि ल्युट् (३।३।११३) । 'कृत्यचः' (८।४।२९) इति णत्वम् ॥ (५) ॥*॥ ऋष्यैर्मृगैः प्रोक्ता । ऋषिभिरप्रोक्ता, इति वा । '**ऋष्यप्रोक्ता** शतावर्यतिबलाशूकशिम्बिषु' इति (मेदिनी) ॥ (६) ॥*॥ 'शूकयुक्ता शिम्बिः' । 'शश्वच्छशाङ्कशिशिराणि च शूकशिम्बिः' इत्यूष्मविवेकात् द्वितालव्या । 'शूकशिम्बिस्तु मर्कटी । **शूकशिम्बा** च' इति वाचस्पतिः ॥ (७) ॥*॥ कपीनां कच्छूः । कण्डूहेतुत्वात् ॥ (८) ॥*॥ मर्कटीव । विविधचेष्टाहेतुत्वात् । 'अथ मर्कटी । करञ्जभिच्छूकशिम्ब्योः पुंसि वानरलूतयोः' (इति मेदिनी) ॥ (९) ॥*॥ नव '**मर्कट्याः**' '**कँवाच**' इति ख्यातायाः ॥

**चित्रोपचित्रा न्यग्रोधी द्रवन्ती शंबरी वृषा ॥ ८७ ॥**
**प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि ।**

**चित्रेति** ॥ चित्रं रूपमस्याः । '**चित्रा**खुपर्णीगोडुम्बासुभद्रादन्तिकासु च । मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ उपगता चित्रम् ॥ (२) ॥*॥—न्यग् रुणद्धि । बहुमूलत्वात् । अच् ( ३।१।१३४) । गौरादिः (४।१।४१)—इति प्राञ्चः । न्यञ्चं रुणद्धि, इति वा । 'कर्मण्यण्' (३।२।१) । '(**न्यग्रोधस्तु** पुमान्व्योमवटयोश्च शमीतरौ) । **न्यग्रोधी** तूपचित्रायाम्' ( इति मेदिनी) ॥ (३) ॥*॥ द्रवति । 'द्रु गतौ' (भ्वा० प० से०) । लटः शतृ (३।२।१२४) ॥ (४) ॥*॥ शं वृणोति । 'वृञ् वरणे' (स्वा० उ० से०) । 'शमि धातोः' (३।२।१४) इत्यच् । गौरादिः (४।१।४१) । मुकुटस्तु—खच् (३।२।४६)—इत्याह । '(**शंबरं** सलिले पुंसि मृगदैत्यविशेषयोः ।) **शंबरी** चाखुपर्ण्यां स्यात्' (इति तालव्यादौ मेदिनी) ॥ (५) ॥*॥ वर्षति । 'वृषु सेचने' (भ्वा० प० से०) । 'इगुपध–' ( ३।१।१३५) इति कः । ( '**वृषो** धर्मे बलीवर्दे शृङ्ग्यां पुंराशिभेदयोः । श्रेष्ठे स्यादुत्तरस्थश्च व्यासमूषिकशुक्रले । तथा वास्तुस्थानभेदे पुमानेष प्रकीर्तितः । **वृषा** मूषिकपर्ण्यां च, यतीनामासने **वृषी**') ॥ (६) ॥*॥ प्रतीची श्रेणी यस्याः ॥ (७) ॥*॥ सुतानां श्रेणी यस्याः ॥ (८) ॥*॥ रमन्तेऽत्र । 'रमु क्रीडायाम्' (भ्वा० आ० अ०) । 'अमन्ताड्डः' (उ० १।११४) । '**रण्डा**मूषिकपर्ण्यां च विधवायां च योषिति'(इति मेदिनी) ॥*॥ स्वामी तु—चण्ड्यते । 'चण्डा' । 'प्रत्यक्श्रेणी वृषा **चण्डा** पुत्रश्रेण्या**खुपर्णिका**' इति निघण्टुः—इत्याह ॥ (९) ॥*॥ मूषिकः पर्णमस्याः । मूषिककर्णाकारपत्रत्वात् । 'पाककर्ण–' (४।१।५४) इति ङीष् ॥ (१०) ॥*॥ दश '**मूषिकपर्ण्याः**' '**मूसाकर्णी**' इति ख्यातायाः ॥

**अपामार्गः शैखरिको धामार्गवमयूरकौ ॥ ८८ ॥**
**प्रत्यक्पर्णी कीशपर्णी किणिहीखरमञ्जरिः ।**

**अपेति** ॥ अपमार्जन्त्यनेन । 'हलश्च' (३।३।१२१) इति घञ् । निष्ठायामनिट्त्वात् कुत्वम् (७।३।५२) । 'उपसर्गस्य घञि' (६।३।१२२) इति दीर्घः । अपकृष्ट आसमन्तान् मार्गोऽस्य, इति वा ॥ (१) ॥*॥ शिखरे प्रायेण भवति । अध्यात्मादित्वात् (वा० ४।३।६०) ठक् ॥ (२) ॥*॥ धाम्नोऽर्गः । धामार्गं वाति । 'आतोऽनुप–' (३।२।३) इति कः । '**धामार्गवस्तु** पुंसि स्यादपामार्गे च घोषके' (इति मेदिनी) ॥*॥—'अधामार्गवः'[1] । **अधामार्गवो**ऽपामार्गः कोशातकी च इति द्व्यर्थे—इति स्वामी ॥ (३) ॥*॥ मयूरप्रतिकृतिः । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । '**मयूरको**ऽप्यपामार्गे क्लीबं

१—आधुनिकासदुपलब्धप्राचीनस्वामिपुस्तकद्वये तु अकारादित्वं नोपलभ्यते ॥

तुत्थाञ्जने पुनः' ( इति मेदिनी ) ॥ (४) ॥*॥ प्रत्यक्श्रि पर्णान्यस्याः । 'पाककर्ण-' (४।१।५४) इति ङीष् ॥ (५) ॥*॥ कपिलोमतुल्यानि लोमशानि पर्णान्यस्याः ॥*॥ **'केशपर्णी'** इति स्वामी ॥ (६) ॥*॥ किणिनो व्रणान् जिहीते । 'ओहाङ् गतौ' ( जु० आ० अ० ) । 'आतोऽनुप-' (३।२।३) इति कः । गौरादिः (४।१।४१) । किणिनो व्रणान् हन्ति वा । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः ॥ (७) ॥*॥ खरा ञ्जमारिरस्याः ॥*॥ गौरादिः (४।१।४१) वा ॥ (८) ॥*॥ अष्टौ **'अपामार्गस्य'** ॥

**हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ॥८९॥**
**अङ्गारवल्ली बालेयशाकवर्वरवर्धकाः ।**

**हञ्जीति** ॥ हन्ति रोगान् । पचाद्यच् (३।१।१३४) । पृषोदरादिः (६।३।१०९) । 'अङ्गारवल्ली **हञ्जी** च वर्दो वर्वरकस्तथा' (इति निघण्टुः) ॥*॥ भनक्ति रोगान् । 'भञ्जो आमर्दने' (रु० प० अ०) । ण्वुल् (३।१।१३३) वा । पृषोदरादिः (६।३।१०९) ( **फञ्जिका,** इति वा-इति मुकुटः ) ॥ (१) ॥*॥ ब्रह्मण इयम् । **'ब्राह्मणं** ब्रह्मसंघाते वेदभागे नपुंसकम् । भूमिदेवे तु पुंलिङ्गः फञ्जिकापृक्कयोः स्त्रियाम्' (इति मेदिनी) ॥ (२) ॥*॥ पद्माभं पुष्पमस्याः । **'पद्मोऽस्त्री** पद्मके व्यूहनिधिसंख्यान्तरेऽम्बुजे । ना नागे, स्त्री फञ्जिकाश्रीचार्वोटीपञ्चगीषु च' (इति मेदिनी) ॥ (३) ॥*॥ भर्जनम् । 'भ्रस्ज पाके' (तु० उ० से०) । घञ् (३।३।१८) 'भ्रस्जो रोपधयो रमन्यतरस्याम्' (६।४।४७) इति रमागमः । 'चजोः—' (७।३।५२) इति कुत्वम् । 'भृजी भर्जने' (भ्वा० आ० से०) वा । घञ् (३।३।१८) भर्गोऽस्त्यस्याः । ज्योत्स्नाद्यण् (वा० ५।२।१०३) ॥ (४) ॥*॥ ब्राह्मणयष्टिरिव । तादृशप्रकाण्डत्वात् 'इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥ (५) ॥*॥ अङ्गारवद्वल्ल्यस्याः । समासान्तविधेरनित्यत्वान्न कप् ॥ (६) ॥*॥ बालेयस्य शाकः । गर्दभभक्ष्यशाकत्वात् ॥ (७) ॥*॥ वर्वर्ति । 'वृञ् वरणे' ( स्वा० उ० से० ) यङ्लुगन्तः । पचाद्यच् (३।१।१३४) ॥ (८) ॥*॥ वर्धते । 'वृधु छेदने' (भ्वा० आ से०) । ण्वुल् (३।१।१३३) ॥ (९) ॥*॥ नव **'भार्ग्याः'** ॥

**मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ॥९०॥**
**मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ।**

**मञ्जिति** ॥ मञ्जौ शोभने वर्णे तिष्ठति । 'सुपि स्थः' (३।२।४) इति कः । 'अम्बाम्ब—' (८।३।९७) इति षत्वम् । पृषोदरादिः (६।३।१०९) यद्वा अतिशयेन मञ्जुः । 'अतिशायने तमबिष्ठनौ' (५।३।५५) ॥ (१) ॥*॥ विकसति । 'कष गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) ॥*॥—विकषति । 'कष हिंसायाम्' ( भ्वा० प० से० ) । **(विकषा)**— इति मुकुटः ॥ (२) ॥*॥ जिङ्गति । 'जिगि गतौ' इति केचित्पठन्ति । गौरादिः (४।१।४१) ॥ (३) ॥*॥ समन्ततोऽङ्गति । 'अगि गतौ' ( भ्वा० प० से० ) अच् (३।१।१३४) ॥ (४) ॥*॥ काले मिश्यते 'मिश शब्दे' (भ्वा० प० से०) कर्मणि घञ् (३।३।१९) । गौरादिः (४।१।४१) स्वार्थे कन् (५।३।७५) ॥*॥ कालं वर्णं मिषति । 'मिष स्पर्धायाम्' ( तु० प० से० ) । पूर्ववत् । मूर्धन्यषा इति वा । 'मञ्जिष्ठा **कालमेषी** च' इति निघण्टुः ॥ (५) ॥*॥ मण्डूकवत् पर्णमस्याः । 'पाककर्ण—' (४।१।५३) इति ङीष् । **'मण्डूकपर्णी** मञ्जिष्ठाब्राह्मण्योर्ना तु शोणके' (इति मेदिनी) ॥ (६) ॥*॥ भण्डति । 'भण्ड आभण्डने' ।—'भडि गतौ'—इति स्वामी । बाहुलकादीरन् । गौरादिः (४।१।४१) भण्डीरी ॥*॥ प्रज्ञाद्यण् (५।४।३८) । **'हेमपुष्पी च भाण्डीरी'** इति रभसः ॥ (७) ॥*॥ पचाद्यच् (३।१।१३४) । गौरादिः (४।१।४१) 'भण्डी योजनवल्ल्यपि । **रक्ता** भण्डीरिका च' इतीन्दुः ॥ (८) ॥*॥ योजनगामिनी वल्ली ॥ (९) ॥*॥ नव **'मञ्जिष्ठायाः' 'मँजीठ'** इति ख्यातायाः ॥

**यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ॥९१॥**
**रोदनी कच्छुराऽनन्ता समुद्रान्ता दुरालभा ।**

**येति** ॥ यसनम् 'यसु प्रयत्ने' (दि० प० से०) । भावे घञ् (३।३।१८) यासोऽस्त्यस्य । अर्शआद्यच् (५।२।१२७) । याति । बाहुलकादसच् वा ॥ (१) ॥*॥ यौति 'यु मिश्रणामिश्रणयोः' ( अ० प० से० ) । 'ऋतन्यञ्जि-' (उ० ४।२) इत्यासः (२) ॥*॥ दुःखेन स्पृश्यते । 'स्पृश संस्पर्शने' (तु० प० अ०) घञ् । (३।३।१९) । खल् (३।३।१२६) वा । **'दुःस्पर्शो** धन्वयासे ना कण्टकार्यां स्त्रियां त्रिषु । खरस्पर्शे' (इति मेदिनी) ॥ (३) ॥*॥ धन्वनो यासः । मरुभवत्वात् ॥ (४) ॥*॥ कुं नाशयति 'णश अदर्शने' (दि० प० अ०) ण्यन्तः । पचाद्यच् (३।१।१३४) । स्वार्थे कन् ॥ (५) ॥*॥ रोदयति । 'रुदिर् अश्रुविमोचने' (अ० प० से०) । ल्युट् (३।३।११३) । **'रोदनं** क्रन्दनेऽस्त्रेऽपि दुरालम्भौषधौ स्त्रियाम्' (इति मेदिनी) ॥*॥ **'चोदनी'** (इति स्वामी) ॥ (६) ॥*॥ कच्छूं राति । 'रा दाने' ( अ० प० अ० ) । 'आतः—' (३।२।३) इति कः । पृषोदरादित्वात् (६।३।१०९) ह्रस्वः । **'कच्छुरा** शूकशिम्ब्यां च शटीदुःस्पर्शयोरपि' (इति मेदिनी) ॥ (७) ॥*॥ नान्तोऽस्याः । **'अनन्ता** च विशल्यायां शारिवादूर्वयोरपि । कणादुरालभापथ्यापार्वत्यामलकीषु च । (विश्वंभरागुडूच्योः स्यात्)' (इति मेदिनी) ॥ (८) ॥*॥ समुद्रान्तोऽस्त्यस्याः । अर्शआद्यच् (५।२।१२७) । समुद्रोऽन्तोऽस्या । **'समुद्रान्ता** तु कार्पासीपृक्कादुरालभासु च' (इति मेदिनी) ॥ (९) ॥*॥ दुःखेनालभ्यते । 'डुलभष् प्राप्तौ' (भ्वा० आ० अ०) । 'ईषद्दुःसुषु—' (३।३।१२६) इति खल् । आगमशासनस्यानित्यत्वान्न नुम् ॥ (१०) ॥*॥ दश **'धन्वयासस्य' 'यवासा'** इति ख्यातस्य ॥

**पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिपर्णिका ॥ ९२ ॥**
**क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनिर्गुहा ।**

**पृश्नीति** ॥ पृश्निरल्पं पर्णमस्याः । 'पाककर्ण-' (४।१।५४) इति ङीष् ॥ (१) ॥*॥ पृथगसक्तं पर्णमस्याः । ङीष् (४।१।५४) ॥ (२) ॥*॥ चित्रं पर्णमस्याः ॥ (३) ॥*॥ अङ्घ्रेरारभ्य पर्णान्यस्याः । ङीष् (४।१।५४) स्वार्थे कन् (५।१।७५) ॥*॥ —अङ्घ्रिं मूलमारभ्य वल्लिरस्याः । '**अङ्घ्रिवल्लिका**'— इति मुकुटः ॥ (४) ॥*॥ क्रोष्टुभिर्विन्ना विचारितेव । दत्तेव, इति वा ॥ (५) ॥*॥ सिंहपुच्छमस्याः सिंहपुच्छाकारपुष्पत्वात् । 'उपमानात् पक्षाच्च पुच्छाच्च' (वा० ४।१।५) इति ङीष् ॥ (६) ॥*॥ '**कलं** शुक्रे त्रिष्वजीर्णे' (इति मेदिनी) । कलं श्यति । 'शो तनूकरणे' (दि० प० अ०) । इन् (उ० ४। ११८) । बाहुलकादाकारलोपः ॥ (७) ॥*॥ धावति । 'धावु गतिशुद्ध्योः' (भ्वा० उ० से०) । बाहुलकादनिः ॥ (८) ॥*॥ गूहति । 'गुहू संवरणे' (भ्वा० उ० से०) । 'इगुपध-' (३।१। १३५) इति कः ॥ (९) ॥*॥ नव '**सिंहपुच्छयाः**' '**पिठवनी**' इति ख्यातायाः ॥

**निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ९३**
**प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि ।**

**निदीति** ॥ निदिह्यते स्म । 'दिह उपचये' (अ०उ०अ०) । क्तः (३।२।१०२) । टाप् (४।१।४) स्वार्थे कन् (५।३।७५) ॥ (१) ॥*॥ स्पृशति । 'स्पृश संस्पर्शने' (तु० प० अ०) । इगुपध-' (३।१।१३५) इति कः ।—'स्पृश बाधनस्पर्शनयोः'— इति मुकुटोक्तं निर्मूलम् । गौरादिः (४।१।४१) ॥ (२) ॥*॥ व्याजिघ्रति 'व्याघ्रादिभिः-' (२।१।५६) इति लिङ्गात् 'आतश्चोपसर्गे' (३।१।१३६) इति कः । न तु 'पाघ्रा-' (३।१। १३७) इति शः । गौरादिः (४।१।४१) ॥ (३) ॥*॥ बृहति । 'बृह वृद्धौ' (भ्वा० प० आ०) । 'वर्तमाने पृषद्बृहत्-' (उ० २।८४) इति निपातः । शतृवत्त्वान् ङीप् (४।१।६) । 'क्षुद्रायां क्षुद्रवार्ताक्यां **बृहती** छन्दसि क्वचित्' इति शाश्वतः ॥ (४) ॥*॥ कण्टकानियर्ति । 'ऋ गतौ' (जु० प० अ०) । 'कर्मण्यण्' (३।२।१) । स्वार्थे कन् (५।३।७५) ॥ (५) ॥*॥ प्रचोदयति । 'चुद संचोदने' (चु० प० से०) । ल्युट् (३।३।११३) ॥ (६) ॥*॥ कोलति । 'कुल संस्त्याने' (भ्वा० प० से०) । 'इगुपध-' (३।१।१३५) इति कः । गौरादिः (४।१।४१) ।—णिजन्तेन विगृह्य 'कः'—इत्यभिधानं मुकुटस्य चिन्त्यम् । णिजन्तस्येगुपधत्वाभावात् अनुपयोगाच्च ॥ (७) ॥*॥ क्षुणत्ति । 'क्षुदिर् संपेषणे' (रु० उ० अ०) । 'स्फायि-' (उ० २।१३) इति रक् । यत्तु—'क्षुद संप्रेरणे'—इति धातुरुपन्यस्तो मुकुटेन । स धातुपाठे न लभ्यते । '**क्षुद्रा** व्यङ्गानटीकण्टकारिकासरघासु च । चाङ्गेरीवेश्ययोर्हिंस्रामक्षिकामात्रयोरपि' (इति मेदिनी) ॥ (८) ॥*॥ दुस्पृश्यते । 'ईषद्दुर्-' (३।३।१२६) इति खल् ॥ (९) ॥*॥ '**राष्ट्रं** स्यात्तूपवर्तने । उपद्रवे क्लीबपुंसोः' (इति मेदिनी) । राष्ट्रमस्त्यस्याः । 'अतः-' (५।२। ११५) इति ठन् ॥ (१०) ॥*॥ दश '**कण्टकारिकायाः**' '**भटकटा**' इति ख्यातायाः ॥

**नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ॥९४॥**
**रञ्जनी श्रीफली तुत्था द्रोणी दोला च नीलिनी ।**

**नीलीति** ॥ 'नीलादोषधौ' (वा० ४।१।४३) इति ङीष् । '**नीली** रुग्भेदनीलिन्योः' (इति मेदिनी) ॥ (१) ॥*॥ कल्यते । 'कल क्षेपे' (चु० प० से०) । कर्मणि घञ् (३।३।१९) । यत्तु—कर्मणि 'एरच्' (३।३।५६)—इति मुकुटेनोक्तम् । तन्न । कलधातोरिवर्णान्तत्वाभावात् । वृद्ध्यभावप्रसङ्गाच्च । ण्यन्तत्वे 'कल्यते' इति विग्रहप्रदर्शनस्यासंभवाच्च । वर्णत्वाभावान्न ङीष् । 'काला तु कृष्णत्रिवृतामञ्जिष्ठानीलिकासु च' (इति मेदिनी) ॥ (२) ॥*॥ क्लीतकं क्रयोऽस्त्यस्याः । कपिलिकादित्वात् (वा० ८।२।१८) लत्वम् । 'अतः' (५।२।११५) इति ठन् । 'क्रीतकं विनिमयः' इति स्वामिमुकुटौ ॥ (३) ॥*॥ ग्रामे भवा । 'ग्रामाद्यखञौ' (४।२।९४) । '**ग्रामीणा** नीलिकायां स्त्री ग्रामोद्भूतेऽभिधेयवत्' (इति मेदिनी) ॥ (४) ॥*॥ मधुराणि पर्णान्यस्याः । 'पाककर्ण-' (४।१।५४) इति ङीष् । '**मधुपर्णी तु** गंभार्यां नीलीसंज्ञौषधावपि' (इति मेदिनी) ॥ (५) ॥*॥ रञ्जयति । ल्युट् (३।३।११३) । णिलोपस्य स्थानिवद्भावात् 'असनयोश्च' इति नलोपो न । रज्यतेऽनया, इति विग्रहे तु 'करणा-' (३।३।११७) इति ल्युटि भवत्येव । 'रञ्जेः क्युन्' (उ० २।७९) इति वा । 'गुडारोचनिकानीलीमञ्जिष्ठासु च **रञ्जनी । रजनी** नीलिनीरात्रिहरिद्राजतुकासु च' (इति मेदिनी) ॥ (६) ॥*॥ श्रीमत् फलमस्याः । '**श्रीफलः** पुंसि माल्रूरे धात्रीनीलिकयोः स्त्रियाम्' (इति मेदिनी) ॥ (७) ॥*॥ तुद्यते । 'तुद व्यथने' (तु० उ० अ०) । 'पातृतुदि-' (उ० २।६) इति थक् । तुत्थयति वा । 'तुत्थ आवरणे' । पचाद्यच् (३।१।१३४) । '**तुत्थ**मञ्जनभेदे स्यान्नीलीसूक्ष्मैलयोः स्त्रियाम्' (इति मेदिनी) ॥ (८) ॥*॥ द्रवति । 'द्रु गतौ' (भ्वा० प० अ०) 'वहिश्रि-' (उ० ४।५१) इति निः ॥*॥ 'तूणी' इति स्वामी । 'तूण पूरणे' (चु० आ० से०) । तूण्यतेऽनया । 'हलश्च' (३।३।१२१) इति घञ् । गौरादिः (४।१।४१) । '**तूणी** नील्यां निषङ्गे ना' (इति मेदिनी) ॥ (९) ॥*॥ दोलयति । 'दुल उत्क्षेपे' (चु० प० से०) । पचाद्यच् '**दोला** नील्यां यानान्तरेऽपि च' (इति

१—'अनिदिताम्—' (६।४।२४) इति सूत्रे भाष्ये 'रजकरजनरजःसूपसंख्यानम्' इति वार्तिकेन 'रजकरजनरजःसु कित्वादिसिद्धम् । कित एवैत औणादिकाः' इति भाष्येण तत्रत्यकैयटेन 'असनयोश्च' इति वाक्यस्याभावध्वननेन ल्युटि नलोपाप्राप्त्या 'णिलोपस्येत्यादिभवत्येवेत्यन्तग्रन्थोऽसंगत एवेति बोध्यम् ॥

मेदिनी ) ॥*॥ 'मेला' इति स्वामी । 'तुत्था श्रीफलिका **मेला सारवाही** च रञ्जनी' इति निघण्टुः ॥ (१०) ॥*॥ नीलो वर्णोऽस्त्यस्याः । 'अतः' (५।२।११५) इतीनिः ॥ (११) ॥*॥ एकादश **'नील्याः' 'नील'** इति ख्यातस्य ॥

**अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ॥ ९५ ॥**
**कालमेषी कृष्णफला वाकुची पूतिफल्यपि ।**

**अवेति** ॥ अवल्गोरशोभनाज्जातः ॥ (१) ॥*॥ सोम इव सोमेन वा राजति । 'राजृ दीप्तौ' (भ्वा० उ० से०) । '–उपमाने' (३।२।७९) इति 'सुप्यजातौ–' ( ३।२।७८ ) इति वा णिनिः ॥ (२) ॥*॥ शोभना वल्लिरस्याः ॥ (३) ॥*॥ सोमस्य वल्लिः । स्वार्थे कन् (५।३।७५) ॥ (४) ॥*॥ कालं मिषति । 'मिष स्पर्धायाम्' (तु० प० से०) । 'कर्मण्यण्' (३।२।१) ॥ (५) ॥*॥ कृष्णं फलमस्याः । अजादित्वात् (४।१।४) टाप् ॥ (६) ॥*॥ वातं कोचयति । 'कुच शब्दे तारे' (भ्वा० प० से०) । मूलविभुजादित्वात् (वा० ३।२।५) कः । पृषोदरादिः (६।३।१०९) ॥*॥ मुकुटस्तु—वाचं गुञ्जति । **'वागुजी'** इत्याह । 'गुजि अव्यक्ते शब्दे' (भ्वा० प० से० ) । पूर्ववत् । गौरादिः ( ४।१।४१ ) ॥ ( ७ ) ॥*॥ पूतिः फलेष्वस्याः 'पाककर्ण–' ( ४।३।५३ ) इति ङीष् ॥ ( ८ ॥*॥ अष्टौ **'वकुची'** इति ख्यातायाः ॥

**कृष्णोपकुल्या वैदेही मागधी चपला कणा ॥ ९६ ॥**
**उषणा पिप्पली शौण्डी कोला**

**कृष्णेति** ॥ कृष्णो वर्णोऽस्त्यस्याः । अर्शआद्यच् ( ५।२।१२७ ) । **'कृष्णा** स्याद्द्रौपदीनीलीकणाद्राक्षासु योषिति' ( इति मेदिनी ) ॥ ( १ ) ॥*॥ उपकोलति । 'कुल संस्त्याने बन्धुषु च' ( भ्वा० प० से० ) अघ्न्यादिः ( उ० ४।११२ ) ॥*॥ उपगता कुल्याम्, इति वा ॥ ( २ ) ॥*॥ विदेहेषु भवा । **'वैदेही** रोचनासीतावणिक्स्त्रीपिप्पलीषु च' ( इति मेदिनी ) ॥ ( ३ ) ॥*॥ मगधेषु भवा । **'मागधी** स्त्री कणायूथ्योर्वाच्यवन्मगधोद्भवे । पुंसि वैश्यात्क्षत्रियाजे शुक्लजीरकबन्दिनोः' ॥ ( ४ ) ॥*॥ चपति । 'चप सान्त्वने' ( भ्वा० प० से० ) । वृषादित्वात् ( उ० १।१।१०६ ) कलच् । **'चपला** कमलाविद्युत्पुंश्चलीपिप्पलीषु च' ( इति मेदिनी ) ॥ ( ५ ) ॥*॥ कणति । 'कण शब्दे' ( भ्वा० प० से० ) अन्तर्भावितण्यर्थः । पचाद्यच् ( ३।१।१३४ ) । **'कणा** जीरककुम्भीरमक्षिकापिप्पलीषु च' (इति मेदिनी ) ॥ ( ६ ) ॥*॥ ओषति । 'उष दाहे' ( भ्वा० प० से० ) । बाहुलकात् क्युन् ( उ० २।७८ ) ॥*॥ दीर्घादिरपि । ऊषति । 'ऊष रुजायाम्' ( भ्वा० प० से० ) **'ऊषणं** मरिचे क्लीबं कणायामूषणा स्त्रियाम्' ( इति मेदिनी ) ॥ ( ७ ) ॥*॥ पिपर्ति । 'पृ पालनपूरणयोः' ( जु० प० से० ) । बाहुलकादलच् । पृषोदरादिः । गौरादिः ( ४।१।४१ ) । **'पिप्पलं** सलिले वस्त्रच्छेदभेदे च ना तरौ । निरर्गले पक्षिभेदे कणायां **पिप्पली** स्मृता' ( इति मेदिनी ) ॥ ( ८ ) ॥*॥ शुण्डायां मद्यपानगृहे भवा । **'शौण्डो** मत्ते च विख्याते पिप्पल्यां तु भवेत्स्त्रियाम्' ( इति मेदिनी ) ॥ ( ९ ) ॥*॥ कोलति । 'कुल संस्त्याने' ( भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । **'कोलं** कोलफले क्लीबं पिप्पलीचव्ययोः स्त्रियाम्' ( इति मेदिनी ) ॥ ( १० ) ॥*॥ दश **'पिप्पल्याः'** ॥

**अथ करिपिप्पली ।**

**कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान् ॥ ९७ ॥**

**अथेति** ॥ करीव पिप्पली । बृहत्त्वात् ॥ ( १ ) ॥*॥ कपिरिव वल्ली ॥*॥ कोल इव वल्ली । तयोस्तुल्यरोमत्वात् ॥ ( २ ) ॥*॥ ( ३ ) ॥*॥ अतिशयेन प्रशस्ता । **'श्रेयसी** करिपिप्पल्यामभयापाठयोरपि' ( इति मेदिनी ) ॥ ( ४ ) ॥*॥ वस्ते । 'वस आच्छादने' ( अ० आ० से० ) । बाहुलकातिकरच् ॥*॥ तालव्यपाठे तु । वष्टि । 'वश कान्तौ' ( अ० प० से० ) । संज्ञापूर्वकत्वान्न संप्रसारणम् । **'वशिरः** पुमान् । किणिहीहस्तिपिप्पल्योः', 'क्लीबेऽब्धिलवणे स्मृतम्' ( इति मेदिनी ) ॥ (५) ॥*॥ पञ्च **'गजपिप्पली'** इति ख्यातायाः ॥

**चव्यं तु चविकम्**

**चेति** ॥ चर्व्यते । 'चर्व अदने' ( भ्वा० प० से० ) । ण्यत् ( ३।१।१२५ ) । पृषोदरादिः (६।३।१०९) **'चव्यं** तु चविके क्लीबं वचायामपि योषिति' ( इति मेदिनी ) ॥ ( १ ) ॥*॥ कुन् ( उ० २।३२ ) । चविकम् ॥ ( २ ) ॥*॥ स्त्रियामपि । **'चव्या कोला** च **चविका** चव्यं **कुञ्जरपिप्पली'** इति हट्टचन्द्रः ॥ ( १ ) ॥*॥ द्वे **'चव्य'** इति ख्यातस्य । केचित्तु पूर्वान्वयमाहुः । यदाह चन्द्रनन्दनः– 'चव्या कोलाथ चविका श्रेयसी गजपिप्पली । **च्यवना** कोलवल्ली तु चव्यं कुञ्जरपिप्पली' । अत्र पक्षे तुस्थाने चः पाठ्यः ॥

**काकचिंचागुञ्जे तु कृष्णला ।**

**काकेति** ॥ काकवर्णा चिंचा ॥*॥ गौरादिः ( ४।१।४१ )–इति स्वामी ॥ ( १ ) ॥*॥ गुञ्जति । 'गुजि अव्यक्ते शब्दे' ( भ्वा० प० से० ) । पचाद्यच् (३।१।१३४) । **'गुञ्जा** तु काकचिंचायां पटहे च कलध्वनौ' ( इति मेदिनी ) ॥ (२) ॥*॥ कृष्णं वर्णं लाति ॥ ( ३ ) ॥*॥ त्रीणि **'गुञ्जायाः' 'घोंगची'** इति ख्यातायाः ॥

**पलंकषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ॥ ९८ ॥**
**गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ।**

**पलमिति** ॥ पलं मांसं कषति । 'कष हिंसार्थः' ( भ्वा० प० से० ) । मूलविभुजादित्वात् ( वा० ३।२।५ ) कः । पृषोदरादिः ( ६।३।१०९ ) ।—'तत्पुरुषे–' (६।३।१४) इति द्वितीयाया अलुक्—इति मुकुटः । तन्न । अलौकिकविग्रहेऽमोऽप्रवेशात् । **'पलंकषा** गोक्षुरके स्त्रियां राक्षापलाशयोः' इति मूर्धन्यान्तेषु रभसः । यत्तु—'कर्षति' इति विगृह्य 'पृषोदरा-

दिः' ( ६।३।१०९ )—इत्युक्तम्। तच्चिन्त्यम्। कश्चितिनैव सिद्धत्वात्। अच्प्रत्ययविधानमपि चिन्त्यम्। कर्मण्यणः प्रसङ्गात्। **'पलंकषा** गोक्षुरके रास्नागुग्गुलुकिंशुके। तु ( सु ) ण्डीरीलाक्षयोश्च स्त्री राक्षसे तु पलंकषः' ( इति विश्वमेदिन्यौ ) ॥ (१) ॥*॥ इक्षुगन्ध इव गन्धोऽस्याः। समासान्तो विधिरनित्यः। **'इक्षुगन्धा** कोकिलाक्षे क्रोष्ट्र्यां काशे च गोक्षुरे' ( इति मेदिनी ) ॥ (२) ॥*॥ शुनो दंष्ट्रेव। संज्ञापूर्वकत्वान्न दीर्घः ॥ (३) ॥*॥ स्वादुः कण्टकोऽस्य ॥ (४) ॥*॥ गोर्धेनोः पृथिव्या वा कण्टकः। **'गोकण्टको** गोक्षुरके स्थपुटे च गवां खुरे' ( इति मेदिनी ) ॥ (५) ॥*॥ क्षुरति 'क्षुर विलेखने' ( तु० प० से० )। 'इगुपध-' (३।१।१३५) इति कः स्वार्थे कन् (५।३।७५) गोगौर्वा क्षुरकः ॥ (६) ॥*॥ वनस्य शृङ्गाट इव। 'श्वदंष्ट्रो गोक्षुरस्त्रिकण्टकपुटः श्वदंष्ट्रा स्वादुकण्टकः' इति रभसः ॥ (७) ॥*॥ सप्त **'गोक्षुरस्य' 'गोखुरू'** इति ख्यातस्य ॥

**विश्वा विषा प्रतिविषातिविषोपविषारुणा ॥ ९९ ॥**
**शृङ्गी महौषधं च**

**वीति** ॥ विशति। 'विश प्रवेशने' ( तु० प० अ० )। 'अशूप्रुषि-' ( उ० १।१५१ ) इति क्वन्। **'विश्वं** समस्ते जगति, **विश्वे** देवेषु, नागरे। **विश्वा** चातिविषायां स्यात्' (इति विश्वः) ॥ (१) ॥*॥ वेवेष्टि। 'विष्लृ व्याप्तौ' (जु० उ० से०)। 'इगुपध-' ( ३।१।१३५ ) इति कः। **'विषं** जलेऽतिविषायां स्त्रियां, क्ष्वेडे तु न स्त्रियाम्' ॥ (२) ॥*॥ प्रतीपं विषमस्याः ॥ (३) ॥*॥ विषमतिक्रान्ता ॥ (४) ॥*॥ विषमुपगता ॥ (५) ॥*॥ अरुणो वर्णोऽस्याः। **'अरुणा**तिविषाश्यामामञ्जिष्ठात्रिवृतासु च' ( इति मेदिनी ) ॥ (६)॥*॥ शृणाति। 'शॄ हिंसायाम्' ( क्र्या० प० से० )। 'शृणातेर्ह्रस्वश्च' (उ० १।१२६) इति गन् कित् नुट् च। गौरादिः ( ४।१।४१ )। **'शृङ्गी** विषायामृषभे स्वर्णमीनविशेषयोः' इति विश्वः ॥ (७) ॥*॥ महच्च तदौषधं च। **'महौषधं** तु शुण्ठ्यां स्याद्विषायां लशुनेऽपि च' ( इति मेदिनी ) ॥ (८) ॥*॥ अष्टौ **'अतिविषायाः' 'अतीस'** इति ख्यातस्य ॥

**अथ क्षीरावी दुग्धिका समे।**

**अथेति** ॥ क्षीरमवति। 'अव रक्षणादौ' (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ दुग्धमस्त्यस्याः। ठन् ( ५।२।११५ ) ॥ (४) ॥*॥ द्वे **दुग्धिकायाः' 'दुधी'** इति ख्यातायाः ॥

**शतमूली बहुसुताऽभीरुरिन्दीवरी वरी ॥ १०० ॥**
**ऋष्यप्रोक्ताभीरुपत्रीनारायण्यः शतावरी।**
**अहेरुः**

**शतेति** ॥ शतं मूलान्यस्याः ॥ (१) ॥*॥ बहवः सुता यस्याः ॥ (२) ॥*॥ न भीरुः। स्थिरपत्रत्वात् ॥ (३) ॥*॥ नीलोत्पलाकारपुष्पत्वाद् इन्दीवरमस्त्यस्याः। अर्शआद्यच् (५।२।१२७)। **'इन्दीवरं** कुवलये शतावर्यां तु योषिति' (इति मेदिनी) ॥ (४) ॥*॥ वृणोति (गन्धेनेन्द्रियम्)। पचाद्यच् (३।१।१३४)। गौरादिः (४।१।४१) ॥ (५) ॥*॥ ऋष्यैः प्रोक्ता। **'ऋष्यप्रोक्ता** शतावर्यतिबलाशूकशिम्बिषु' (इति मेदिनी) ॥ (६) ॥*॥ अभीरूणि पत्राण्यस्याः। 'पाककर्ण-' (४।१।६४) इति ङीष् ॥ (७) ॥*॥ नारायणाज्जाता। **'नारायणो**ऽच्युतेऽभीरुगौर्यो**र्नारायणी** मता' (इति मेदिनी) ॥ (८) ॥*॥ शतेनावृणोति। पचाद्यच् (३।१।१३४)। गौरादिः (४।१।४१)। **'शतावरी** तु शच्यां स्यादिन्दीवर्यामपि स्त्रियाम्' (इति मेदिनी) ॥ (९) ॥*॥ न हिनोति। 'हि गतौ' (स्वा० प० अ०) बाहुलकाद्रुः ॥ (१०) ॥*॥ दश **'सहस्रमूल्याः' 'शतावरी'** इति ख्यातायाः ॥

**अथ पीतद्रुकालेयकहरिद्रवः ॥ १०१ ॥**
**दार्वी पचंपचा दारुहरिद्रा पर्जनीत्यपि।**

**अथेति** ॥ पीतं द्रवति। 'द्रु गतौ' (भ्वा० प० अ०)। मितद्र्वादित्वात् (वा० ३।२।१८०) डुः। यत्तु मुकुटेनोक्तम्—'अपष्ठ्वादयः' इति कुः—इति। तन्न। टिलोपस्यालाभात्। एतादृशसूत्राभावाच्च ॥ (१) ॥*॥ कलेरयम्। 'सर्वत्राग्निकलिभ्यां ढक्' (वा० ४।२।८) स्वार्थे कन् (५।३।७५) ॥*॥ 'कालीयकः' इति वा पाठः। कालस्य वर्णस्यायम्। 'वृद्धाच्छः' (४।२।११४)। 'निर्दिष्टा वै **कटङ्किनी** स च **कालेयकः** स्मृतः। **कालीयको दारुनिशा'** इति रुद्रः ॥ (२) ॥*॥ हरिः पिङ्गः पीतो वा द्रुरस्य। 'हरिद्रुः **पीतचन्दनम्'** इति निघण्टुः ॥ (३) ॥*॥ दीर्यते। 'दॄ विदारणे' ( क्र्या० प० से०) 'दृसनि-' (उ० १।३) इति ञुण्। 'वोतः-' (४।१।४४) इति '-गौरादिभ्यः-' (४।१।४१) इति वा ङीष्। **'दार्वी** दारुहरिद्रायां तथा गोजिह्विकौषधौ' (इति मेदिनी) ॥ (४) ॥*॥ पचति। पचाद्यच् (३।१।१३४)। पृषोदरादिः (६।३।१०९)। **'पीतदारु** पचंपचा' इति निघण्टुः ॥ (५) ॥*॥ दारुश्चासौ हरिद्रा च ॥ (६) ॥*॥ पिपर्ति। 'पॄ पालनपूरणयोः' (जु० प० से०)। विच् (३।२।७५)। पर् चासौ जनी च। परं पालकं स्वास्थ्यं जनयति वा। 'जनी प्रादुर्भावे' (दि० आ० से०) ण्यन्तः। 'कर्मण्यण्' (३।२।१) ॥ (७) ॥*॥ सप्त **'पर्जन्याः' 'दारुहलदी'** इति ख्यातायाः ॥

**वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ॥१०२॥**

**वेति** ॥ वक्ति वचेरन्तर्भावितण्यर्थात् पचाद्यच् (३।१।१३४)। (**'वचः** कीरे **वचौषधौ**। शारिकायां च' (इति मेदिनी) ॥ (१) ॥*॥ उग्रो गन्धोऽस्याः। **'उग्रगन्धा**जमोदायां वचायां छिक्किकोषधौ' (इति मेदिनी) ॥ (२) ॥*॥ षड् ग्रन्था ग्रन्थयो यस्याः। **'षड्ग्रन्था** तु वचायां स्त्री स्यात्करञ्जान्तरे पुमान्' (इति मेदिनी) ॥ (३) ॥*॥ गौर्लो-

मास्याः । गोशब्दो गोलोमसदृशे लाक्षणिकः । अच् (५।४।७५) योगविभागात् समासान्तः । गौरादिङीष् (४।१।४१) । 'गोलोमी श्वेतदूर्वायां स्याद्वचाभूतकेशयोः' (इति मेदिनी) ॥ (४) ॥*॥ शतं पर्वाण्यस्याः सन्ति । व्रीह्यादित्वात् (५।२।११६) ठन् । डाबन्तात्स्वार्थे कन् (५।३।७५) वा । 'शतपर्विका तु दूर्वायां वचायामपि योषिति' (इति मेदिनी) ॥ (५) ॥*॥ पञ्च 'वचायाः' 'वच' इति ख्यातायाः ॥

**शुक्ला हैमवती**

**शुक्लेति** ॥ हिमवति भवा । 'हैमवत्यभयास्वर्णक्षीर्योः श्वेतवचोमयोः' (इति मेदिनी) ॥ (१) ॥*॥ एकम् 'श्वेतमूलवचायाः' ॥

**वैद्यमातृसिंह्यौ तु वाशिका ।**

**वृषोऽटरूषः सिंहास्यो वासको वाजिदन्तकः ॥१०३॥**

**वैद्येति** ॥ वैद्यस्य मातेव ॥ (१) ॥*॥ हिनस्ति । 'हिंसि हिंसायाम्' ( रु० प० से० ) । पचाद्यच् (३।१।१३४) । पृषोदरादिः (६।३।१०९) । गौरादिः (४।१।४१) । 'सिंही तु कण्टकार्यां स्यात् ( वार्ताकौ वासकेऽपि च' इति मेदिनी ) । 'सिंही स्वर्भानुमातरि । वासाबृहत्योः क्षुद्रायाम्' ( इति हैमः ) ॥ (२) ॥*॥ वाश्यते । 'वाश्ट शब्दे' ( दि० आ० से० ) । 'गुरोश्च' (३।३।१०३) इत्यः । स्वार्थे कन् । यद्वा उश्यते । 'वश कान्तौ' ( आ० प० से० ) 'संज्ञायाम्' (३।३।१०९) इति ण्वुल् ॥*॥ दन्त्यान्तोऽपि । वासयति । पचाद्यच् (३।१।१३४) । 'वासो गृहेऽप्यवस्थाने वासा स्यादटरूषके' इति रुद्रः ॥ (३) ॥*॥ वर्षति मधु । 'वृषु सेचने' ( भ्वा० प० से० ) । 'इगुपध-' (३।१।१३५) इति कः । 'वृषः स्याद्वासके धर्मे सौरभेये च शुक्रले' इति मूर्धन्यान्ते विश्वः । यत्तु—वृष्यते पीयते । 'वृष पाने' । 'घञर्थे कः' (वा० ३।३।५८)—इति मुकुटेनोक्तम् । तन्न । धातुपाठेऽदर्शनात् । परिगणनाच्च ॥ (४) ॥*॥ अटान् गच्छतो रोषति । 'रुष हिंसायाम्' ( स्वा० प० से० ) मूलविभुजादिः (वा० ३।२।५) । अटै रूषति । 'रूष मिश्रणे' ( भ्वा० प० से० ) । 'इगुपध-' (३।१।१३५) इति के दीर्घोऽकारवानपि । 'वैद्यमाताटरूषकः । सिंहास्यो वाजिदन्तकः' इति रभसः । 'वृषो वासाटरूषकः' इति माधवः ॥ (५) ॥*॥ सिंह आस्यमस्य । सिंहास्यसदृशपुष्पत्वात् ॥ (६) ॥*॥ वासयति ण्वुल् (३।१।१३३) । वस्ते आच्छादयति वा ॥ (७) ॥*॥ वाजी दन्तोऽस्य । वाजिदन्ताभकेसरत्वात् । तादृशपुष्पत्वाद्वा ॥ (८) ॥*॥ अष्टौ 'अटरूषस्य' 'अरडूसा' इति ख्यातस्य ॥

**आस्फोटा गिरिकर्णी स्याद्विष्णुक्रान्तापराजिता ।**

**आस्फोटेति** ॥ आस्फोटयति । 'स्फुटिर् विकसने' ( भ्वा० प० से० ) ण्यन्तः । अच् (३।१।१३४) । पृषोदरादिः (६।३।१०९) । 'आस्फोता गिरिकर्ण्यां च वनमल्ल्यां च योषिति' (इति मेदिनी) ॥ (१) ॥*॥ गिरिर्बालमूषिका कर्णोऽस्याः तत्कर्णतुल्यपत्रत्वात् ॥ (२) ॥*॥ विष्णुना क्रान्ता ॥ (३) ॥*॥ न पराजिता । 'अपराजित ईशाजेष्वन्तरे नाऽजिते त्रिषु । गिरिकर्णीजयादुर्गाशालपर्णीषु योषिति' (इति मेदिनी) ॥ (४) ॥*॥ चत्वारि 'विष्णुक्रान्तायाः' । स्वामी तु वासकपर्यायानिमान् मन्यते ॥

**इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः ॥ १०४ ॥**

**ईति** ॥ इक्षुः गन्धोऽस्य । इक्षुशब्द इक्षुगन्धसदृशे लाक्षणिकः । 'इक्षुगन्धा कोकिलाक्षे क्रोष्ट्र्यां काशे च गोक्षुरे' (इति मेदिनी) ॥ (१) ॥*॥ काण्डेनेक्षुरिव ॥ (२) ॥*॥ कोकिलोऽक्षि यस्य । कोकिलशब्दः कोकिलाक्षिसदृशे लाक्षणिकः । 'अक्ष्णोऽदर्शनात्' (५।४।७६) इत्यच् ॥ (३) ॥*॥ इक्षुमिक्षुगन्धं राति । 'आतोऽनुप-' (३।२।३) इति कः ॥ ॥ (४) ॥*॥ क्षुर इव । 'क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे' इति विश्वः ॥ (५) ॥*॥ पञ्च 'कोकिलाक्षस्य' 'तालमखाना' इति ख्यातस्य ॥

**शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः । मिश्रेयोऽपि**

**शेति** ॥ शालीनां भवनं क्षेत्रं शालेयम् । तदस्यास्ति । अर्शआद्यच् (५।२।१२७) । 'शालेयः स्यान्मिसौ पुमान् । त्रिषु शाल्युद्भवे क्षेत्रे' ( इति मेदिनी ) ॥ (१) ॥*॥ शीतमस्यास्ति । अच् (५।२।१२७) । शिवमस्यास्ति । अच् (५।२।१२७) । शीतश्चासौ शिवश्च । 'अथ शीतशिवं क्लीबं शैलेयमणिमन्थयोः । पुंसि सक्तुफलावृक्षे तथा मधुरिकौषधौ' (इति मेदिनी) ॥ (२) ॥*॥ छत्रमस्यास्ति । छत्राकारस्तबकत्वात् । 'छत्रा मिसावतिच्छत्रे कुस्तुम्बुरुशिलीन्ध्रयोः । नपुंसकं चातपत्रे' ( इति मेदिनी ) ॥ (३) ॥*॥ मधुरो रसोऽस्त्यस्याः । अच् (५।२।११५) । 'मधुरा शतपुष्पायां मिश्रेयानगरीभिदोः । मधुकुक्कुटिकामेदामधूलीयष्टिकासु च । क्लीबं विषे पुंसि रसे तद्वत्स्वादुप्रियेऽन्यवत्' ( इति मेदिनी) ॥ (४) ॥*॥ मस्यते । 'मसी परिमाणे' ( दि० प० से० ) । इन् (उ० ४।११८) । बाहुलकादत इः । 'स्यान्मांस्यां शतपुष्पायां मधुरायां मिसिः स्त्रियाम्' इति दन्त्यान्ते रभसः । 'मिसिः स्त्री मधुरामांस्योः शतपुष्पाजमोदयोः' ( इति मेदिनी) ॥*॥ सोमनन्दी तु 'मिशी' 'मिशिः' इति तालव्यान्ते आह । मि(मे)शति । 'मिश शब्दे' ( भ्वा० प० से० ) 'इगुपधात् कित्' (उ० ४।१२०) इति इन् ङीष् (ग० ४।१।४५) वा ॥ (५) ॥*॥ मिश्रयति । अच् (३।१।१३४) । ईर्यते । 'इण् गतौ' ( अ० प० अ० ) । 'अचो यत्' (३।१।९७) । मिश्रा चासावेया च । शकन्ध्वादिः (वा० ६।१।९४) ॥ (६)

१—'इयते' इत्युत्तरं 'ईङ् ( दि० आ० अ० )' इति वा पाठः ।

॥*॥ षट् **'मधुरिकायाः' 'वनसौंफ'** इति ख्यातायाः॥

**अथ सीहुण्डो वज्रद्रुः स्नुक्स्नुही गुडा॥ १०५॥ समन्तदुग्धा**

**अथेति** ॥ 'सी' इति हुण्डते। 'हुडी वरणे' (भ्वा० आ० से०) पचाद्यच् (३।१।१३४)।-सिंहतुण्डस्यापभ्रंशोऽयम्—इति स्वामी। पृषोदरादिः। **'वज्रद्रुमः सिहुण्डोऽथ'** इति रभसाद्रस्वादिरपि॥ (१) ॥*॥ 'वज्रद्रुः स्नुक् स्नुही' इति पाठः।—वज्रनामा द्रुः—इति मुकुटः। स्वामी तु **'वज्रः** स्नुक् स्त्री स्नुही गुडा' इति पठति। **'वज्रा** स्नुह्यां गुडूच्यां च **वज्री** स्नुह्यन्तरे स्मृता' (इति मेदिनी)॥ (२) ॥*॥ (स्नुह्यति)। 'ष्णुह उद्गिरणे' (दि० प० से०)। क्विप् (३।२।१७८)। 'वा द्रुह-' (८।२।३३) इति कुत्वम् ॥*॥ भागुरिमते टाप्। 'स्नुही च **स्नुहा** स्नुग्भा स्नुङ्' इत्यमरदत्तः॥ (३) ॥*॥ 'इगुपधात् कित्' (उ० ४।१२०)। वा ङीष् (ग० ४।१।४५)॥ (४) ॥*॥ गुडति। 'गुड वेष्टने' (तु० प० से०)। 'इगुपध-' (३।१।१३५) इति कः। **'गुडो** गोलेक्षुविकृती स्नुहीगुडिकयो**र्गुडा'** इति रुद्रः। **'गुडश्च** स्नुहीगुडयो**र्गुड** ऐक्षवगोलयोः' इत्यजयः॥ (५) ॥*॥ समन्ताद् दुग्धमस्याः॥ (६) ॥*॥ षट् **'सेहुण्ड'** इति ख्यातस्य॥

**अथो वेल्लममोघा चित्रतण्डुला।**
**तण्डुलश्च कृमिघ्नश्च विडङ्गं पुंनपुंसकम्॥ १०६॥**

**अथविति** ॥ वेल्लति। 'वेल्ल चलने' (भ्वा० प० से०)। अच् (३।१।१३५) 'अथ **वेल्लं** कृमिघ्नतण्डुलौ' इति रभसः॥ (१) ॥*॥ न मोघा। **'अमोघं** सफले वाच्यवत् स्त्री पथ्याविडङ्गयोः' (इति मेदिनी) ॥*॥ मोघापि। 'कृमिघ्नं तण्डुलं **मोघा'** इति वाचस्पतिः॥ (२) ॥*॥ चित्रास्तण्डुला अस्याः॥ (३) ॥*॥ तड्यते। 'तड आघाते' (चु० प० से०)। 'सानसिवर्णसि-' (उ० १।१०७) निपातः। **'तण्डुलः** स्याद्विडङ्गेऽपि धान्यादिनिकरे पुमान्' (इति मेदिनी) ॥*॥ तन्तुं कृमिसूत्रं लाति। कः (३।२।३)। **'तन्दूलः'** इति मुकुटः॥ (४) ॥*॥ कृमीन् हन्ति 'अमनुष्यकर्तृके च' (३।२।५३) इति ठक्॥ (५) ॥*॥ विडति। 'विड भेदने' (तु० प० से०)। 'विडादिभ्यः कित्' (उ० १।१२१) इत्यङ्गच्। **'विडङ्गस्त्रि**ष्वभिज्ञे स्यात्कृमिघ्ने पुंनपुंसकम्' (इति मेदिनी)॥ (५) ॥*॥ षट् **'विडङ्गस्य'**॥

**बला वाट्यालकः**

**बेति** ॥ बलति 'वल संवरणे' (भ्वा० आ० से०)। पचाद्यच् (३।१।१३४)। बलमस्त्यस्याः इति वा। अर्शआद्यच् (५।२।११५)। 'बलयुक्तेऽन्यलिङ्गः स्याद्**बला** वाट्यालके स्त्रियाम्' (इति मेदिनी)॥ (१) ॥*॥ वाटीमलति। 'अल भूषणादौ' (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१) स्वार्थे कन् (५।३।७५)। वाट्या आलकः॥ (२) ॥*॥ द्वे **'बलायाः' 'वलिआर'** इति ख्यातस्य॥

**घण्टारवा तु शणपुष्पिका।**

**घण्टेति** ॥ घण्टेवारौति। अच् (३।१।१३४)॥ (१) ॥*॥ शणः पुष्पं यस्याः। शणशब्दस्तत्पुष्पसदृशे लाक्षणिकः। 'पाककर्ण-' (४।१।६४) इति ङीष्। स्वार्थे कन् (५।३।७५)॥ (२) ॥*॥ द्वे **'शणपुष्पिकायाः' 'घण्टा'** इति ख्यातायाः॥

**मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च १०७**

**मृद्वीति** ॥ मृद्नाति। मृद्यते वा। 'मृद क्षोदे' (क्र्या० प० से०) 'किङ्किणीकादयश्च' इति निपातः॥ (१) ॥*॥ गौः स्तनोऽस्याः। गोस्तनसदृशे गोशब्दो गौणः। 'स्वाङ्गाच्चोपसर्जनात्-' (४।१।५४) इति ङीष्। **'गोस्तनो** हारभेदे ना द्राक्षायां **गोस्तनी** स्त्रियाम्' (इति मेदिनी)॥ (२) ॥*॥ द्राङ्क्ष्यते। द्राक्षि काङ्क्षायाम्' (भ्वा० प० से०)। कर्मणि घञ् (३।३।१९)। आगमशासनमनित्यम्॥ (३) ॥*॥ स्वद्यते। स्वद आस्वादने' (भ्वा० आ० से०) 'कृवापा-' (उ० १।१) इत्युण्। 'वोतो गुण-' (४।१।४४) इति ङीष्॥ (४) ॥*॥ मधू रसोऽस्याः। 'भवेन्**मधुरसा** द्राक्षामूर्वाकादुग्धिकासु च' (इति मेदिनी)॥ (५) ॥*॥ पञ्च **'द्राक्षायाः' 'दाख'** इति ख्यातायाः॥

**सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत्।**
**त्रिभण्डी रोचनी**

**सर्वेति** ॥ सर्वा अनुभूतयोऽस्याम्। सर्वैरनुभूयते। कर्मणि क्तिन् (३।३।९४) इति वा॥ (१) ॥*॥ सरति। 'सृ गतौ' (भ्वा० प० से०)। बाहुलकादलन्॥*॥ 'सरणा' इति पाठे युच् (३।२।१५०)। 'सर्वानुभूतिः **सरला** त्रिपुटा रेचनी **सरा'** इति वाचस्पतिः॥ (२) ॥*॥ त्रयः पुटा यस्याः। **'त्रिपुटा** मल्लिकायां च सूक्ष्मैलात्रिवृतोः स्त्रियाम्' (इति मेदिनी) ॥*॥ 'त्रिपुटी' इत्यपि। **'त्रिपुटी** महती स्वाशा' इति वाचस्पतिः॥ (३) ॥*॥ त्रिभिरवयवैर्वृता॥ (४) ॥*॥ त्रीनवयवान् वृणोति। 'वृञ् वरणे' (स्वा० उ० से०)। क्विप् (३।२।१७८)। तुक् (६।१।७१)॥ (५) ॥*॥ त्रीन् दोषान् भण्डते। 'भडि परिभाषणे' (भ्वा० आ० से०)। 'कर्मण्यण्' (३।२।१)॥ (६) ॥*॥ रोचते। 'रुच दीप्तावभिप्रीतौ च' (भ्वा० आ० से०) ल्युट् (३।३।११३) ॥*॥ 'रेचनी' इति पाठे 'रिचिर् विरेचने' (रु० उ० अ०)। **'रेचनी** त्रिवृतादन्त्योः'। **'रोचनी** कर्कशे

१—उज्ज्वलदत्तादिष्वेवं सूत्रं नोपलभ्यते। तस्मात् 'अलीकादयश्च' (उ० ४।२५) इति निपातः।

स्मृता' ( इति मेदिनी ) ॥ (७) ॥*॥ सप्त 'शुक्लत्रिधारा' इति ख्यातायाः ॥

**श्यामापालिन्द्यौ तु सुषेणिका ॥ १०८ ॥**

**काला मसूरविदलार्धचन्द्रा कालमेषिका ।**

**श्येति** ॥ श्यायते । 'श्यैङ् गतौ' (भ्वा० आ० अ०) 'इषियुधि–' (उ० १।१४५) इति मक् ॥ (१) ॥*॥ पालयति । 'पाल रक्षणे' ( चु० प० से० ) । बाहुलकात् किन्दच् । गौरादिः (४।१।४१) ॥ (२) ॥*॥ सुष्ठु सेनया याति । सेनाशब्दात् 'सत्यापपाश–' (३।१।२५) इति णिच् । पचाद्यच् । 'एति संज्ञायामगात्' (८।३।९९) इति षत्वम् । स्वार्थे कन् (५।३।७५) ॥ (३) ॥*॥ कालयति । 'कल विल क्षेपे' ( चु० प० से० ) ण्यन्तः । पचाद्यच् (३।१।१३४) ॥ (४) ॥*॥ मसूरवद् विदलमस्याः ॥ (५) ॥*॥ अर्धश्चन्द्रो यस्याः । एतद्विदलस्यार्धचन्द्राकारत्वात् ॥ (६) ॥*॥ कालं मिषति । 'मिष स्पर्धायाम्' ( तु० प० से० ) । 'कर्मण्यण्' (३।२।१) ॥ (७) ॥*॥ सप्त 'श्यामत्रिधारा' इति ख्यातायाः ॥

**मधुकं क्लीतकं यष्टीमधुकं मधुयष्टिका ॥ १०९ ॥**

**मेति** ॥ मध्विव । 'इवे–' (५।३।९६) इति कन् । 'मधुकं क्लीतके खगे । वन्यन्तरे ना' ( इति मेदिनी ) ॥ (१) ॥*॥ क्लीबनम् । 'क्लीबृ अधार्ष्ट्ये' (भ्वा० आ० से० ) । भावे क्तः (३।३।११४) । आगमशासनमनित्यम् । क्लीतमधार्ष्ट्यं कलति । 'कल क्षेपे' ( चु० प० से० ) । 'चुरादिभ्यो णिज्वा' इति णिजभावः । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । यत्तु—'क्लीबृ मदे' इत्युक्तं मुकुटेन । तत् 'क्षीबृ मदे' इत्यस्य भ्रमात् । यद्वा संपदादि क्विप् (वा० ३।३।१०८) । बाहुलकाद्वलोपः । क्लीं क्लीबत्वं तकति । वृष्यत्वात् । 'तक हसने' ( भ्वा० प० से० ) । मूलविभुजादिकः (वा० ३।२।५) ॥ (२) ॥*॥ यष्टी मध्विवास्याः । कप् (५।४।१५४) (३) ॥*॥ मधुयष्टीव । 'इवे–' (५।३।९६) इति कन् । 'मधुयष्टी च यष्टी च यष्टीमधुकमेव च' इति वाचस्पतिः ॥ (४) ॥*॥ चत्वारि 'यष्टिमधुकस्य' 'जेठीमधु' इति ख्यातस्य ॥

**विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री च यासिता ।**

**वीति** ॥ विदारयति । 'दॄ विदारणे' (क्र्या० प० से० ) । ण्यन्तः । पचाद्यच् (३।१।१३४) । गौरादिः (४।१।४१) 'विदारी शालपर्ण्यां च रोगभेदेक्षुगन्धयोः' ( इति मेदिनी ) ॥ (१) ॥*॥ क्षीरमिव शुक्ला ॥ (२) ॥*॥ इक्षुर्गन्धोऽस्याः । इक्षुशब्दस्तद्गन्धसदृशे गौणः । समासान्तविधेरनित्यत्वान्नेत्वम् ॥ (३) ॥*॥ क्रोशति । 'क्रुश आह्वाने' ( भ्वा० प० से० ) । 'सितनि–' (उ० १।६९) इति तुन् । 'स्त्रियां च' (७।१।९६) इति तृज्वत् । 'ऋन्नेभ्यो ङीप्' (४।१।५) । मुकुटस्तु—ऋनि षित्त्वान् ङीप्—इत्याह । 'क्रोष्ट्री शृगालिकाकृष्णविदारीलाङ्गलीषु च' ( इति मेदिनी ) ॥ (४) ॥*॥ चत्वारि 'कृष्णभूकूष्माण्डस्य' । मुकुटस्तु–शुक्लस्य इत्याह । तन्न । 'कृष्णविदारी' इति मेदिनीविरोधात् । एतेन–या सिता शुक्ला —इत्यपास्तम् । 'या असिता' इति छेत्तुमुचितत्वात् । स्वामी तु—विदार्यादित्रयं पठित्वा 'कृष्णो भूकूष्माण्डोऽयं प्राक्षु देशेषु' इत्युक्त्वा 'क्रोष्ट्री तु या सिता' इति पठित्वा 'शुक्लो भूकूष्माण्डः' इत्युक्त्वा 'अन्या क्षीरविदारी–' इति त्रयं पपाठ । तत्र विभागत्रयमनुचितम् । उक्तमेदिनीविरोधात् ॥

**अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका ॥११०॥**

**अन्येति** ॥ क्षीरवती विदारी ॥ (१) ॥*॥ महती चासौ श्वेता च ॥ (२) ॥*॥ ऋक्षान् गन्धयति । 'गन्ध अर्दने' (चु० आ० से० ) । मूलविभुजादिः (वा० ३।२।५) कन् (५।३।७५) यद्वा ऋक्षो गन्धोऽस्याः । ऋक्षशब्दस्तद्गन्धसदृशे गौणः ॥ (३) ॥*॥ अन्या असितायाः शुक्ला—कृष्णा—इति मुकुटोक्तं चिन्त्यम् । त्रीणि 'शुक्लभूकूष्माण्डस्य' ॥

**लाङ्गली शारदी तोयपिप्पली शकुलादनी ।**

**लेति** ॥ लाङ्गलाकारोऽस्त्यस्याः । अर्शआद्यच् (५।२।१२७) गौरादिः (३।१।४१) । 'लाङ्गली तोयपिप्पल्यां क्लीबं तु कुसुमान्तरे । गोदारणे तृणराजगृहदारुविशेषयोः' (इति मेदिनी) ॥ (१) ॥*॥ शरदि भवा । 'संधिवेला–' (४।३।१६) इत्यण् । 'शारदो वत्सरे नवे । शरद्भवे पीतमुद्गे शालीनेऽप्यथ शारदी । सप्तपर्णाम्बुपिप्पल्योः' इति हैमः ॥ (२) ॥*॥ तोयस्य पिप्पलीव ॥ (३) ॥*॥ शकुलैरद्यते । 'अद भक्षणे' ( अ० प० अ० ) । 'कृत्यल्युटः–' (३।३।११३) इति ल्युट् । 'टिड्ढा–' (४।१।१५) इति ङीप् । युचि (उ० २।७८) तु गौरादित्वम् (४।१।४१) । 'शकुलादनी स्त्रियां कृष्णभेदीकचट (?)-

१—विदार्यादीनां कृष्णभूकूष्माण्डवाचकत्वे स्वोक्तस्य 'क्षीरमिव शुक्ला' इति विग्रहस्यैव विरोधः स्पष्ट एव । क्षीरविदार्यादीनां शुक्लभूकूष्माण्डवाचकत्वे 'क्रोष्ट्री क्षीरविदारिका' इति हैमस्य क्रोष्ट्री शृगालिकाक्षीरविदारीलाङ्गलीषु च' इति विश्वस्य च विरोधः स्पष्ट एव । क्रोष्ट्रीशब्दस्य कृष्णवाचकत्वाङ्गीकारात् । तस्मात् विदार्यादीनां त्रयाणां शुक्लभूकूष्माण्डवाचकत्वं मुकुटोक्तं सम्यक् । ततः 'क्रोष्ट्री तु' इति पाठः स्वाम्युक्तः साधुः । 'असिता' इति व्याख्यासुधोक्तश्छेदः समीचीनः । तथा च अन्या या असिता कृष्णा सा तु 'क्रोष्ट्री क्षीरविदारी महाश्वेता ऋक्षगन्धिका' इति शब्दचतुष्टयवाच्या । अतो न मेदिनीविरोधः । नापि हैमविश्वयोर्विरोधः । एवं च विदार्यादित्रयं शुक्लवाचकम् । क्रोष्ट्र्यादिचतुष्टयं कृष्णवाचकम्' इति मन्तव्यम् । नच 'महाश्वेता' इति नाम्नो यौगिकत्वानुपपत्तिः । महती परिमाणेन । अत एव अश्वेता अश्वेनेता । महती चासावश्वेता च' इति शुना श्वाकारेणेता श्वेता, इति वा योगसंभवात् । अत एव मुकुटेन 'महाप्रमाणा' इत्युक्तम् ॥

शाकयोः' (इति मेदिनी) ॥ (४) ॥*॥ चत्वारि 'जलपिप्पली' इति ख्यातस्य शाकभेदस्य ॥

**खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः ॥१११॥**

**खरेति** ॥ खरमश्नुते । खरैरश्यते वा । 'अशूङ् व्याप्तौ संघाते च' (स्वा० आ० से०) 'अश भोजने' वा । 'उल्वादयश्च' (उ० ४।९५) इति वः । 'अशिप्रुषि–' (उ० १।१५१) इति क्वन् वा ॥ (१) ॥*॥ केन जलेन रौति । 'रु शब्दे' (अ० प० अ०) । पचाद्यच् (३।१।१३४) । करवस्य मयूरस्येयम् । 'तस्येदम्' (४।३।१२०) इत्यण् । यत्तु—'कारोरियम्' कारवस्येयं वा—इति व्याख्यातं मुकुटेन । तन्न । वृद्धत्वाच्छप्रसक्तत्वात् । 'कारवी मधुरादीप्यत्वक्पत्रीकृष्णजीरके' (इति मेदिनी) ॥ (२) ॥*॥ दीपनम् । घञ् (३।३।१८) दीपे साधुः । 'तत्र साधुः' (४।४।९८) इति यत् ॥*॥ 'दीपकः' अपि । 'अलंकारे यवान्यां च दीपको लोचमस्तके' इति रभसः ॥ (३) ॥*॥ मीनाति रोगम् । 'मीञ् हिंसायाम्' (क्र्या० उ० अ०) । मीनातेरूरन्' (उ० १।६७) । मुकुटस्तु—मिनोति प्रक्षिपत्यमिमान्यमिति खर्जूरादित्वात् उरच्—इत्याह । तन्मन्दम् । 'मीनातेरूरन्' इति सूत्रस्य सत्त्वात् । 'मयूरो नीलकण्ठेऽपि स्यान्मयूरशिखौषधौ' इति रभसः ॥ (४) ॥*॥ लोच्यते । 'लोचृ दर्शने' (भ्वा० आ० से०) । घञ् (३।३।१९) यद्वा लोचयति । 'लोचृ भासने' (चु० उ० से०) । पचाद्यच् (३।१।१३४) । लोचो दर्शनीयो भासमानो वा मस्तकोऽस्य । मुकुटस्तु—लुच्यते—इति विगृहीतवान् । तन्न । 'लुञ्च अपनयने' (भ्वा० प० से०) अस्मात् घञि नलोपविधायकाभावात् ।–'लोचमर्कटः' इत्यपि—इति स्वामी ॥ (५) ॥*॥ पञ्च 'मयूरशिखायाः' ॥

**गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा ।**

**गोपीति** ॥ गोपायति 'गुपू रक्षणे' (भ्वा० प० से०) आयाभावे पचाद्यच् (३।१।१३४) । गौरादिङीष् (४।१।४१) ॥*॥ केचित्तु अजादित्वात् (४।१।४) टापमाहुः । 'गोपी श्यामा गोपवल्ली गोपा गोपालिका च सा' इति वाचस्पतिः ॥ (१) ॥*॥ श्यायते । 'श्यैङ् गतौ' (भ्वा० आ० अ०) । 'इषियुधि–' (उ० १।१४५) इति मक् ॥ (२) ॥*॥ शारणम् । 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'कॄगॄशॄपॄकुटि–' इतीण् । शारिरस्त्यस्याः । 'अन्येभ्योऽपि' (वा० ५।१।१०९) इति वः ॥ (३) ॥*॥ न अन्तोऽस्याः । 'अनन्ता च विशल्यायां शारिवादूर्वयोरपि' (इति मेदिनी) ॥ (४) ॥*॥ उत्पलमस्त्यस्याः । उत्पलाकारपुष्पत्वात् । अर्शआद्यच् (५।२।१२७) । यद्वा उद्गतं पलमनया । उत्पला चासौ शारिवा च ॥ (५) ॥*॥ पञ्च 'उत्पलशारिवायाः' 'गुलीसर' इति ख्यातस्य ॥

—उज्ज्वलदत्तादिषु तु 'श्वः शकुनौ' (४।२२८) इत्येव सूत्रमुपलभ्यते ॥

**योग्यमृद्धिः सिद्धिलक्ष्म्यौ**

**योग्यमिति** ॥ युज्यते । 'युजिर् योगे' (रु० उ० अ०) । 'ऋहलोर्ण्यत्' (३।१।१२४) । यद्वा योगाय प्रभवति । 'योगाद्यच्च' (५।१।१०२) । 'योग्यः प्रवीणयोगार्होपायिशक्तेषु वाच्यवत् । क्लीबमृद्धोषधौ, पुष्पे नाक्र्यभ्यासार्कयोषितोः' (इति मेदिनी) ॥ (१) ॥*॥ ऋध्नोति । 'ऋधु वृद्धौ' (स्वा० प० से०) । क्तिन् (३।३।९४) । 'ऋद्धिः स्यादौषधीभेदे समृद्धावति योषिति' (इति मेदिनी) ॥ (२) ॥*॥ सिध्यति । 'षिधु संराद्धौ' (दि० प० अ०) । क्तिन् (३।३।९४) । 'सिद्धिस्तु मोक्षे निष्पत्तियोगयोः' इति हैमः । ('सिद्धिः स्त्री योगनिष्पत्तिपादुकान्तर्धिवृद्धिषु' इति मेदिनी) ॥ (३) ॥*॥ लक्ष (य) ति । लक्ष्यते वा । 'लक्ष दर्शने' (चु० प० से०) । 'लक्षेर्मुट् च' (उ० ३।१६०) इतीः । 'लक्ष्मीः संपत्तिशोभयोः । ऋद्ध्योषधौ च पद्मायां वृद्धिनामौषधेऽपि च' (इति मेदिनी) ॥ (४) ॥*॥ चत्वारि 'ऋद्ध्याख्यौषधेः' ॥

**वृद्धेरप्याह्वया इमे ॥ ११२ ॥**

**वृद्धेरिति** ॥ इमे उक्ताश्चत्वारो वृद्ध्याख्यौषधेरप्याह्वया नामानि ॥ (४) ॥*॥ वर्धतेऽनया । 'वृधु वृद्धौ' (भ्वा० आ० से०) । क्तिन् (३।३।९५) । 'वृद्धिस्तु वर्धने योगेऽप्यष्टवर्गौषधान्तरे । कालान्तरे चाभ्युदये समृद्धावपि योषिति' (इति मेदिनी) ॥ (५) ॥*॥ पञ्च 'वृद्ध्याख्यौषधेः' ॥

**कदली वारणबुसा रम्भा मोचांशुमत्फला । काष्ठिला**

**कदेति** ॥ कन्दते । कन्द्यते वा । 'कदि आह्वाने रोदने च' (भ्वा० आ० से०) । वृषादित्वात् (उ० १।१०६) साधुः (आगमशासनमनित्यम्) । केन वायुना दल्यते वा । 'दल विशरणे' (भ्वा० प० से०) 'खनो घ च' (३।३।१२५) इति घः । गौरादिः (४।१।४१) । यत्तु—घञर्थे कः (वा० ३।३।५८)—इति मुकुटः । तन्न । परिगणनात् । मुकुटस्तु—कदेः सौत्रात् 'कदल्यादयः' इत्यलच्—इत्याह । तन्न । कदेः सौत्रस्य धातोरभावात् । उज्ज्वलदत्ताद्युणादिवृत्तिषूक्तसूत्रस्यादर्शनात् । 'कदला कदलौ पृश्न्यां कदली-कदलौ पुनः । रम्भावृक्षेऽथ कदली पताकामृगभेदयोः । कदला डिम्बिकायां च शाल्मलीभूरुहेऽपि च' (इति मेदिनी) ॥*॥ अजादित्वात् (४।१।४) टापि कदला । 'कदलश्च कदल्यासौ' इति व्याडिः ॥ (१) ॥*॥ वारणानां बुसा । बुस्यति बुस्यते वा । 'बुस उत्सर्गे' (दि० प० से०) । 'इगुपध–' (३।१।१३५) इति कः । भिदाद्यङ् (३।३।१०४) वा । 'घञर्थे कः' इति परिगणनान्नेह प्रवर्तते ॥*॥ 'बुषा' इति मूर्धन्यान्ता' इति केचित् ॥ (२) ॥*॥ रभति । 'रभ राभस्ये' (भ्वा० आ० अ०) । पचाद्यच् (३।१।१३४) । 'रभेरशब्लिटोः' (७।१।६३) इति नुम् । रयते वा । घञ् (३।३।१९) । मुकुट-

खु—रभन्तेऽनया । 'घञर्थे कः' (वा० ३।३।५८) इत्याह । तन्न । परिगणनात् कस्याप्राप्तेः । सति तु के 'अनिदिताम्–' (६।४।२४) इति नलोपप्रसङ्गाच्च । **'रम्भा** कदल्यप्सरसोर्ना वेणौ वारणान्तरे' (इति मेदिनी) ॥ (३) ॥*॥ मुञ्चति । 'मुच्लृ मोक्षणे' (तु० प० अ०) । पचाद्यच् (३।१।१३४) । (**'मोचः** शोभाञ्जने पुंसि **मोचा** शाल्मलिरम्भयोः' इति मेदिनी) ॥ (४) ॥*॥ अंशुमन्ति सूक्ष्मावयववन्ति फलान्यस्याः । यद्वा अंशुमानिव फलान्यस्याः । अजादिः (४।१।४) । 'कदली **सुकुमारा** च रम्भा **भानुफला** मता' इति धन्वन्तरिः ॥ (५) ॥*॥ काष्ठिना इल्यते । 'इल स्वप्नक्षेपणयोः' (तु० प० से०) । घञ् (३।३।१९) ॥ (६) ॥*॥ षट् **'कदल्याः'** ॥

**मुद्गपर्णी तु काकमुद्गा सहेत्यपि ॥ ११३ ॥**

**मुद्गेति** ॥ मुद्गः पर्णमस्याः । मुद्गशब्देन मुद्गपर्णसदृशं पर्णं लक्ष्यते । 'पाककर्ण–' (४।१।६४) इति ङीष् ॥ (१) ॥*॥ ईषत् कम् । 'ईषदर्थे च' (६।३।१०५) इति कोः कादेशः । काकेनेषज्जलेन मुदं गच्छति । 'गमश्च' (३।२।४७) इति डः । यद्वा काका मुद्गा हर्षप्राप्ता यस्याम् ॥ (२) ॥*॥ सहते । 'षह मर्षणे' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३४) **'सहो** बले न स्त्रियां स्यात् स्त्रियां तु नखमेषजे । दण्डोत्पलामुद्गपर्णीकुमारीपृथिवीषु च' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि **'काकमुद्गायाः' 'मुगौनी'** इति ख्यातायाः ॥

**वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षणी ।**

**वार्तेति** ॥ वार्तमारोग्यमाकयति । 'अक कुटिलायां गतौ' (भ्वा० प० से०) ण्यन्तः । 'कर्मण्यण्' (३।२।१) यद्वा वार्तं फल्गु अकं यस्याः । 'जातेः' (४।१।६३) इति ङीष् । **'वातिङ्गणस्तु वार्ताङ्गो वार्ताकः शाकबिल्वकः'** इति रभसात् पुंस्यपि ॥*॥ **'वार्ता** वातिङ्गणे वृत्तौ' इति विश्वरूद् 'वार्ता' अपि ॥*॥ 'वार्ताकरेषा गुणसम्प्रयुक्ता' इति वैद्यकात् ('वातिङ्गणश्च **वार्ताकुः'** इति त्रिकाण्डशेषाच्च) 'वार्ताकुः' अपि ॥ (१) ॥*॥ हिङ्गु लाति । 'आतोऽनुप–' (३।२।३) इति कः । गौरादि ङीष् (४।१।४१) । **'हिङ्गुलो** वर्णकद्रव्ये ना भण्टाक्यां तु हिङ्गुली' (इति मेदिनी) ॥ (२) ॥*॥ हिनस्ति । 'हिसि हिंसायाम्' (रु० प० से०) । पचाद्यच् । पृषोदरादिः (६।३।१०९) । **'सिंहस्तु** राशिभेदे मृगाधिपे । श्रेष्ठे स्यादुत्तरस्थश्च **सिंही** स्वर्भानुमातरि । वासावृहत्योः क्षुद्रायाम्' इति हैमः ॥ (३) ॥*॥ भव्यते । भण्यते वा । 'भट भृतौ' (भ्वा० प० से०) । 'भण शब्दे' (भ्वा० प० से०) वा । 'पिनाकादयश्च' (उ० ४।१५) इति साधुः ॥ (४) ॥*॥ दुःखेन प्रधृष्यते । 'ञिधृषा प्रागल्भ्ये' (स्वा० प० से०) । कर्मणि ल्युट् (३।३।११३) ॥*॥ आभीक्ष्ण्ये णिनौ (३।२।८१) तु **'दुष्प्रधर्षिणी'** ॥ (५) ॥*॥ पञ्च **'भण्टाक्याः'** ॥

**नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ॥ ११४ ॥**
**नकुलेष्टा भुजंगाक्षी छत्राकी सुवहा च सा ।**

**नेति** ॥ नकुलानामियम् । प्रियत्वात् । 'तस्येदम्' (४।३।१२०) इत्यण् । न आकुलत्वं यया वा । **'नाकुली** कुक्कुटीकन्दे रास्नायां चव्यके स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ शोभनो रसोऽस्याः । **'सुरसं** तु त्रिषु स्वादौ, पर्णासे तु नपुंसकम् । स्त्री रास्नानागमात्रोश्च' (इति मेदिनी) ॥ (२) ॥*॥ राति । रायते वा । रस्यते वा । 'रा दाने' (अ० प० अ०) । 'रस आस्वादने' (चु० उ० से०) । 'रास्नासास्ना–' (उ० ३।१५) इति साधुः ।—'रास्नादयः' इत्यानुपूर्वी मुकुटोक्तोज्ज्वलदत्तादिषु नास्ति । **'रास्ना** तु स्याद्भुजंगाक्ष्यामेलापर्ण्यामपि स्त्रियाम्' (इति मेदिनी) ॥ (३) ॥*॥ शोभनो गन्धः सुगन्धः । 'कुगति–' (२) । (२।१८) इति समासः । सुगन्धोऽस्त्यस्याः । मुकुटस्तु—शोभनो गन्धोऽस्याम् । अर्शआद्यच् (५।२।१२७)—इत्याह । तन्न । 'गन्धस्येत्–' (५।४।१३५) इतीत्प्रसङ्गात् । बहुव्रीहिणोक्तार्थत्वादचोऽप्रसङ्गात् । मत्वर्थे बहुव्रीहिविधानात् ॥*॥ स्वामी तु रास्नासुगन्धयोः स्थाने **'नागसुगन्धा'** इति पठित्वा 'सर्पसुगन्धा' इति व्याख्यत् ॥ (४) ॥*॥ गन्धवती नाकुली ॥ (५) ॥*॥ नकुलानामिष्टा ॥ (६) ॥*॥ भुजंगानक्षति । 'अक्षू व्याप्तौ' (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१) यद्वा भुजंगोऽक्षि यस्याः । 'अक्ष्णोऽदर्शनात्' (५।४।७६) इत्यच् । 'जातेः–' (४।१।६३) इति—'गौरादिः–' (४।१।४१) इति वा ङीष् । भुजंगशब्दस्य भुजंगाक्षिसदृशे लक्षणा ॥ (७) ॥*॥ छत्रमकति । 'अक कुटिलायां गतौ' (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१) ॥ (८) ॥*॥ सुष्ठु वहति । पचाद्यच् (३।१।१३४) । **'सुवहा** सल्लक्येलापर्णीगोधापदीषु वीणायाम् । रास्नाशेफालिकयोः स्त्री मुखवाह्येऽन्यलिङ्गः स्यात्' (इति मेदिनी) ॥ (९) ॥*॥ नव **'रासना'** इति ख्यातायाः ॥

**विदारिगन्धांशुमती सालपर्णी स्थिरा ध्रुवा ॥ ११५ ॥**

**विदेति** ॥ विदार्या गन्धः । विदारिगन्धः । 'ङ्यापोः–' (६।३।६३) इति ह्रस्वः सोऽस्त्यस्याः । मुकुटस्तु—विदारीगन्ध इव गन्धोऽस्याः—इति विववार । तच्चिन्त्यम् । 'उपमानाच्च' (५।४।१३७) इतीकारप्रसङ्गात् ॥ (१) ॥*॥ अंशवः सन्त्यस्याः । दीर्घमूलत्वात् । **'अंशुमान्** भास्करे सालपर्ण्यामंशुमती स्मृता' (इति मेदिनी) ॥ (२) ॥*॥ सालः पर्णमस्याः । सालशब्दस्य सालपर्णसदृशे लक्षणा ॥*॥ तालव्यशापि **(शालपर्णी)** इत्येके ॥ (३) ॥*॥ तिष्ठति, 'अजिरशिशिर–' (उ० १।५३) इति साधुः । अन्तर्भावितण्यर्थो वा

---

१—'गमश्च' इति सूत्रेऽस्य खचो विधानादसंगतमिदम् ॥ तस्मात् 'अन्येष्वपि–' (३।२।४८) इति वार्तिकेन डो विधेयः ॥

१—अत्र 'छत्राकारपर्णत्वात्' इत्यपि पाठः ॥

तिष्ठतिः । '**स्थिरा** भूसालपर्ण्योर्ना शनौ मोक्षेऽचले त्रिषु' (इति मेदिनी) ॥ (४) ॥*॥ ध्रुवति । 'ध्रुवँ स्थैर्ये' (तु० प० अ०) । '**ध्रुवो** वटे । वसुयोगभिदोः शंभौ शङ्कावुत्तानपादजे । स्थिरे नित्ये निश्चिते च **ध्रुवं** खेऽजस्रतर्कयोः । **ध्रुवा** मूर्वाशालपर्ण्योः स्रुग्भेदे गीतभिद्यपि' (इति हैमः) ॥ (५) ॥*॥ पञ्च '**शालपर्ण्याः**' ॥

**तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च ।**

**तुण्डीति** ॥ तुण्डिकाञ्शरीराणि ईरयति । 'ईर गतिप्रेरणयोः' (अ० आ० से०) । 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ समुद्रोऽन्तो यस्याः । यद्वा मुद्रया सह वर्तमानोऽन्तः समीपं यस्याः । आच्छादकत्वात् ॥ (२) ॥*॥ करोति क्रियते वा । 'कृञः पासः' (उ० ५।४५) । जातित्वात् (४।१। ६३) गौरादित्वात् (४।१।४१) वा ङीष् । पृषोदरादिः (५। ३।१०९)—इति मुकुटोक्तिस्तु चिन्त्या । कर्पासीशब्दस्य हस्वादित्वात् । दीर्घादित्वे प्रामाणिके तु प्रज्ञाद्यणा (५।४।३८) सिद्धत्वात् ॥ (३) ॥*॥ बदति । 'बद स्थैर्ये' (भ्वा० प० से०) । बाहुलकादरः ॥ (४) ॥*॥ चत्वारि '**कार्पास्याः**' '**कपास**' इति ख्यातस्य ॥

**भारद्वाजी तु सा वन्या**

**भारेति** ॥ भरद्वाजस्य मुनेरियम् । तेन निर्मितत्वात् । 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (१) ॥*॥ सा कर्पासी वन्या चेत्तदा भारद्वाजी । 'वनकर्पासिकायां तु सहा चन्दनवीजिका । भारद्वाजी महावीर्या कुष्ठला कुष्ठनाशिनी' इति वाचस्पतिः । एकं '**वनकर्पास्याः**' '**नर्मा**' इति ख्यातायाः ॥

**शृङ्गी तु ऋषभो वृषः ॥ ११६ ॥**

**शृङ्गीति** ॥ शृणाति गदम् । 'शॄ हिंसायाम्' (त्र्या० प० से०) । 'शृणातेर्हस्वश्च' (उ० १।१२६) इति गन् नुम् च । गौरादित्वात् (४।१।४१) ङीष् । 'ऋषभेऽतिविषायां च शृङ्गी मद्गुरवल्लभा' इति रुद्राजयौ ॥ (१) ॥*॥ ऋषति । 'ऋषी गतौ' (तु० प० से०) । 'ऋषिवृषिभ्यां कित्' (उ० ३।१२३) इत्यभच् । '**ऋषभस्त्वौषधान्तरे** । स्वरभिद्वृषयोः कर्णरन्ध्रकुम्भीरपुच्छयोः' (इति मेदिनी) ॥ (२) ॥*॥ वर्षति । 'वृषु सेचने' (भ्वा० प० से०) । 'इगुपध-' (३।१।१३५) इति कः ॥ (३) ॥*॥ त्रीणि '**ऋषभाख्यौषधेः**' '**काकडासिंगी**' इति ख्यातायाः ॥

**गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका ।**

**गेति** ॥ गाङ्गं जलमीरयति । 'ईर गतौ क्षेपणे च' (अ० आ० से०) । 'मृगय्वादयश्च' (उ० १।३७) इति साधुः । कन् (५।३।७५) । गौरादिः (४।१।४१) ॥ (१) ॥*॥ नागानां हस्तिनां बला ॥ (२) ॥*॥ झषति वातम् । 'झष हिंसार्थः' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । '**झषा** नागबलायां स्त्री तापमत्स्याटवीषु ना' (इति मेदिनी) ॥ (३) ॥*॥ गवि भूमावेधते । 'एध वृद्धौ' (भ्वा० आ० से०) । बाहुलकादुः । 'संज्ञायां कन्' (५।३।७५) । ह्रस्वा चासौ गवेधुका च ॥ (४) ॥*॥ चत्वारि '**बलायाः**' '**कंकही**' '**गंगेरण**' इति ख्यातायाः ॥

**धामार्गवो घोषकः स्यात्**

**धामेति** ॥ धाम ऋच्छति । 'ऋ गतौ' (भ्वा० प० अ०) । 'अन्येभ्योऽपि' (३।२।७५) इति विच् । धामार् चासौ गौश्च । 'गोरतद्धितलुकि' (५।४।९२) इति टच् । '**धामार्गवस्तु** पुंसि स्यादपामार्गे च घोषके' (इति मेदिनी) ॥*॥ घोषति । 'घुषिर विशब्दने' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । स्वार्थे कन् (५।३।७५) । '**घोष** आभीरपल्ल्यां स्याद्गोपालध्वानघोषके । कांस्ये चाम्बुदनादे ना **घोषा** मधुरिकौषधौ' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**घोषवल्ल्याः**' '**श्वेतपुष्पतोरयी**' इति ख्यातायाः ॥

**महाजाली स पीतकः ॥ ११७ ॥**

**महेति** ॥ जालयति । 'जल आच्छादने' चुरादिः । पचाद्यच् (३।१।१३४) । गौरादिः (४।१।४१) । महती चासौ जाली च ॥ (१) ॥*॥ एकम् '**पीतघोषवल्ल्याः**' '**घीया**' इति ख्यातायाः ॥

**ज्यौत्स्नी पटोलिका जाली**

**ज्यौत्स्नीति** ॥ ज्योत्स्नास्त्यस्याः 'ज्योत्स्नादिभ्य उपसंख्यानम्' (वा० ५।२।१०१) इत्यण् । '**ज्यौत्स्नी** पटोली ज्योत्स्नावनिशोः' इति हैमः ॥*॥ संज्ञापूर्वकत्वात् वृद्ध्यभावे '**ज्योत्स्नी**' अपि ॥ (१) ॥*॥ पटति । 'पट गतौ' (भ्वा० प० से०) । 'कपिगडिगण्डि–' (उ० १।६६) इत्योलच् । गौरादिः (४।१। ४१) स्वार्थे कन् (१।३।७५) । '**पटोलं** वस्त्रभेदे नौषधौ ज्योत्स्न्यां तु योषिति' (इति मेदिनी) ॥ (२) ॥*॥ जलति । 'जल धान्ये' (भ्वा० प० से०) । 'ज्वलिति–' (३।१।१४०) इति णः । 'जातेः–' इति '–गौरा–' (४।१४१) इति वा ङीष् । '**जालं** गवाक्ष आनाये क्षारके दम्भवृन्दयोः । **जालो** नीपद्रुमे **जाली** पटोलिकौषधौ स्त्रियाम्' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि '**पटोलिकायाः**' '**छिछिंडा**' '**तोरयी**' इति ख्यातस्य ॥

**नादेयी भूमिजम्बुका ।**

**नादेति** ॥ नद्यां भवा । 'नद्यादिभ्यो ढक्' (४।२।९७) । '**नादेयी** नागरङ्गे स्याज्जयायां जलवेतसे । भूमिजम्ब्वां च जम्ब्वां च अङ्कुष्ठेऽपि च योषिति' (इति मेदिनी) ॥ (१) ॥*॥ भूमिलग्ना जम्बुका । शाकपार्थिवादिः (२।१।६९) । भूमिलग्नपत्रत्वात् ॥ (२) ॥*॥—प्रागुक्तापि भ्रमात्पुनरिहोक्ता–इति स्वामी । द्वे '**भूमिजम्बुकायाः**' ॥

---

१—अत्र 'ध्रुव स्थैर्ये' इत्युत्तरं 'इगुपध–' इति कः इति पाठः ।

**स्याल्लाङ्गलिक्यग्निशिखा**

**स्यादिति** ॥ लाङ्गलं पुष्पविशेषोऽस्त्यस्याः । ठन् (५।२।११५) । 'जातेः' (४।१।६३) इति '–गौरादि–' (४।१।४१) इति वा ङीष् । लाङ्गलवत् खनति भूमिम् । 'तेन दीव्यति–' (४।४।२) इति ठक् । 'टिड्ढा–' (४।१।१५) इति ङीप् ॥ (१) ॥*॥ अग्नेरिव शिखास्याः । '**अग्निज्वाला** लाङ्गलिकी' इति वाचस्पतिः ॥ (२) ॥*॥ द्वे '**लाङ्गल्याः**' '**करिहारी**' इति ख्यातायाः ॥

**काकाङ्गी काकनासिका ॥ ११८ ॥**

**काकेति** ॥ काकस्येवाङ्गं नासारूपं फलमस्याः गौरादिः (४।१।४१) ॥ (१) ॥*॥ काकस्येव नासिका यस्याः ॥ (२) ॥*॥ द्वे '**काकजङ्घायाः**' '**कौवाठोंठी**' इति ख्यातायाः ॥

**गोधापदी तु सुवहा**

**गोधेति** ॥ गोधाया इव पादो मूलमस्याः । 'कुम्भपदीषु च' (५।४।१३९) इति साधुः ॥ (१) ॥*॥ सुवहति । पचाद्यच् (३।१।१३४) । 'गोधापदी तु सुवहा **त्रिफला हंसपद्यपि**' इति कोषान्तरम् ॥ (२) ॥*॥ द्वे '**हंसपद्याः**' ॥

**मुसली तालमूलिका ।**

**मुसेति** ॥ मुसति । 'मुस खण्डने' ( दि० प० से० ) । वृषादिः (उ० ११०६) । '**मुसलं** स्यादयोग्रे च पुंनपुंसकयोः स्त्रियाम् । तालमूल्यामाखुपर्णीगृहगोधिकयोरपि' ( इति मेदिनी ) ॥ (१) ॥*॥ तालो मूलमस्याः । तालशब्दस्तालमूलसदृशे लाक्षणिकः । 'पाककर्ण–' (४।१।६४) इति ङीष् । स्वार्थे कन् (५।३।७५) ॥ (२) ॥*॥ द्वे '**मुसली**' इति ख्यातायाः ॥

**अजशृङ्गी विषाणी स्यात्**

**अजेति** ॥ अजः शृङ्गमस्याः । अजशब्दोऽजशृङ्गसदृशे लाक्षणिकः । गौरादिः (४।१।४१) ॥ (१) ॥*॥ फलस्याजशृङ्गसदृशत्वात् विषाणमस्त्यस्याः । अर्शआद्यच् (५।२।१२७) । गौरादिङीष् (४।१।४१) । '**विषाणी** क्षीरकाकोल्यामजशृङ्ग्यां च योषिति । कुष्ठनामौषधे क्लीबं त्रिषु शृङ्गेभदन्तयोः' ( इति मेदिनी ) ॥ (२) ॥*॥ द्वे '**अजशृङ्ग्याः**' '**मेडासींगी**' इति ख्यातायाः ॥

**गोजिह्वादर्विके समे ॥ ११९ ॥**

**गोजीति** ॥ गोजिह्वेव ॥ (१) ॥*॥ दर्वीव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥*॥ 'दार्विका' इति पाठे दारयति । 'दॄ विदारणे' ( क्र्या० प० से० ) । उल्वादित्वात् (उ० ४।९५) साधुः । '**दार्वी** दारुहरिद्रायां तथा गोजिह्विकौषधौ' ( इति मेदिनी ) ॥ (२) ॥*॥ द्वे '**गोजिह्वायाः**' '**गोभी**' इति ख्यातायाः ॥

**ताम्बूलवल्ली ताम्बूली नागवल्ल्यपि**

**तेति** ॥ ताम्यति । 'तमु ग्लानौ' ( दि० प० से० ) । क्विप् (३।२।१७८) । 'अनुनासिकस्य–' (६।४।१५) इति दीर्घः । बोलति । 'बुल् मज्जने' ( चु० प० से० ) चुरादीनां णिज्वा । 'इगुपध–' (३।१।१३५) इति कः । ताम् चासौ बुली च । पृषोदरादिः (६।३।१०९) । ताम्बूलाख्या वल्ली शाकपार्थिवादिः (वा० २।१।६९) ॥ (१) ॥*॥ गौरादिः (४।१।४१) । '**ताम्बूली** नागवल्ल्यां स्त्री क्रमुके तु नपुंसकम्' ( इति मेदिनी ) ॥ (२) ॥*॥ नागलोकस्य वल्ली ॥ (३) ॥*॥ त्रीणि '**नागवेली**' इति ख्यातायाः ॥

**अथ द्विजा ।**

**हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ॥ १२० ॥**

**अथेति** ॥ द्विर्जाता । 'जनी' ( दि० आ० से० ) । 'अन्येष्वपि–' (३।२।१०१) इति डः । '**द्विजो** विप्रक्षत्रिययोर्वैश्ये दन्ते विहंगमे । **द्विजा** भार्गीरेणुकयोः' इति हेमचन्द्रः ॥ (१) ॥*॥ हरति । 'कृहृभ्यामेणुः' (उ० ३।१) । 'ढ्लोपे–' (६।३।१११) इति दीर्घः । 'कषायेऽपि हरेणुर्ना रेणुकायां स्त्रियां भवेत्' इति रुद्रः ॥ (२) ॥*॥ रेणुरस्या अस्ति । व्रीह्यादित्वात् (५।२।११६) ठन् । 'इसुसुक्तान्तात्कः' (७।३।५१) । रेणुरेव । 'संज्ञायाम्' (५।३।७५) इति कन् वा । मुकुटस्तु—रेणुं करोति । डः (वा० ३।२।१०१) । टाप् (४।१।४) रेणुका । पृषोदरादिः (६।३।१०९)—इत्याह । तत्र 'पृषोदरादिः' इत्युक्तिश्चिन्त्या । '**रेणुकापि** हरेणौ च जामदग्न्यस्य मातरि' ( इति मेदिनी ) ॥ (३) ॥*॥ कुन्तिषु देशेषु भवा । 'तत्र भवः' (४।३।५३) । इत्यण् ॥ (४) ॥*॥ कपिलो वर्णोऽस्त्यस्याः । अर्शआद्यच् (५।२।१२७) । '**कपिला** रेणुकायां च शिंशपागोविशेषयोः । पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम् । नानले वासुदेवे च मुनिभेदे च कुक्कुरे' (इति मेदिनी) ॥ (५) ॥*॥ भस्मनो गन्धः । भस्मगन्धोऽस्त्यस्याः । 'अतः–' (५।२।११५) इतीनिः ॥ (६) ॥*॥ षट् '**हरेणुकायाः**' ॥

**एलावालुकमैलेयं सुगन्धि हरिवालुकम् ।**

**वालुकं च**

**एलेति** ॥ एलयति 'इल प्रेरणे' ( चु० प० से० ) । पचाद्यच् (३।१।१३४) । टाप् (४।१।४) । एला इव बलति । 'बल प्राणने' ( भ्वा० प० से० ) । बाहुलकादुण् । स्वार्थे कन् (५।३।७५) ॥*॥ 'एलबालुकम्' इति स्वामी । तत्र 'ङ्यापोः–' (६।३।६३) इति ह्रस्वः ॥ (१) ॥*॥ इलाया अपत्यम् । 'स्त्रीभ्यो ढक्' (४।१।१२०) ॥ (२) ॥*॥ शोभनो गन्धोऽस्य । 'गन्धस्येत्–' (५।४।१३५) इतीत्त्वम् ॥ (३) ॥*॥ हरिवर्णं बालुकम् (४) ॥*॥ ('**बालुका** सिकतासु स्याद्वालुकं त्वेलबालुके' ( इति मेदिनी ) ॥ (५) ॥*॥ पञ्च '**बालुकाख्यगन्धद्रव्यस्य**' ॥

अथ पालङ्क्यां मुकुन्दः कुन्दकुन्दुरू ॥ १२१ ॥

अथेति ॥ पालनम् । 'पाल रक्षणे' ( चु० प० से० ) । संपदादिः (वा० ३।३।१०८) । पाला अङ्क्यते । 'अङ्क पदे लक्षणे च' (चु० उ० से०) अदन्तः । 'अचो यत्' (३।१।९७) ॥ (१) ॥*॥ मुक्तिं ददाति । 'दाण्' ( जु० उ० अ० ) । 'आतोऽनुप–' (३।२।३) इति कः । पृषोदरादिः (६।३।१०९) 'मुकुन्दः पारदे विष्णौ रत्नभेदे च कुन्दुरौ' ॥ (२) ॥*॥ कुं भूमिमुनत्ति । 'उन्दी क्लेदने' ( रु० प० से० ) । 'कर्मण्यण्' (३।२।१) । शकन्ध्वादिः (वा० ६।१।९४) । 'कुन्दो माघ्ये-ऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना' (इति मेदिनी) ॥ (३) ॥*॥ कुमुनत्ति । उन्दयति वा । 'जत्वादयश्च' (उ० ४।१०२) इति साधुः ॥ (४) ॥*॥ चत्वारि 'कुन्दस्य' 'पालक' इति ख्यातशाकस्य । 'कुन्दुरु' इति ख्यातस्य वा ॥

वालं ह्रीवेरबर्हिष्ठोदीच्यं केशाम्बुनाम च ।

वेति ॥ वालयति । 'वल संवरणे' ( भ्वा० आ० से० ) ण्यन्तः । पचाद्यच् (३।१।१३४) । 'बालो ना कुन्तलेऽश्वस्य करिणश्चापि बालधौ । वाच्यलिङ्गोऽर्भके मूर्खे ह्रीवेरे पुंनपुंसकम् । अलंकारान्तरे मेध्ये बाली बाला त्रुटौ स्त्रियाम्' ( इति सर्शादौ मेदिनी ) ॥ (१) ॥*॥ ह्रीयुक्तं वेरमस्य । 'वेरं कलेवरे क्लीबं वार्ताकौ कुङ्कुमेऽपि च' (इति मेदिनी) ॥ (२) ॥*॥ बर्हिषि कुशे तिष्ठति । 'सुपि स्थः' (३।२।४) इति कः । 'अम्बाम्ब–' (८।३।९७) इति षत्वम् ॥ (३) ॥*॥ उदीचि जातम् । 'द्युप्रागपा–' (४।२।१०१) इति यत् ॥ (४) ॥*॥ केशाम्बुनोर्नाम नाम यस्य ॥ (५) ॥*॥ पञ्च 'ह्रीवेरस्य' 'नेत्रवाला' इति ख्यातस्य ॥

कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु ॥ १२२ ॥
शैलेयम्

केति ॥ कालेनानुस्रियते । 'ऋहलोर्ण्यत्' (३।१।१२४) ॥ (१) ॥*॥ वर्धते स्म । 'वृधु वृद्धौ' ( भ्वा० आ० से० ) । 'गत्यर्थाकर्मक–' (३।४।७२) इति क्तः । 'वृद्धो जीर्णे प्रवृद्धे ऽपि त्रिषु क्लीबं तु शैलजे' (इति मेदिनी) ॥ (२) ॥*॥ अश्मनः पुष्पमिव । अश्मप्रभवत्वात् ॥ (३) ॥*॥ शीतं च तच्छिवं च ॥ (४) ॥*॥ शिलायां भवम् 'नद्यादिभ्यः' (४।२।९७) इति ढक् । 'शैलेयं तालपर्ण्यां च सैन्धवे । शैलजे ना तु मधुपे शिलातुल्येऽन्यलिङ्गकम्' ( इति मेदिनी ) ॥ (५) ॥*॥ पञ्च 'शैलेयस्य' 'शिलाजित' इति ख्यातस्य ॥

तालपर्णी तु दैत्या गन्धकुटी मुरा ।
गन्धिनी

तालेति ॥ तालः पर्णमस्याः । तालशब्दस्तालपर्णसदृशे लाक्षणिकः । 'पाककर्ण–' (४।१।६४) इति ङीष् ॥ (१) ॥*॥ दितेरियम् । 'दित्यदित्या–' (४।१।८५) इति ण्यः ॥ (२) ॥*॥ गन्धस्य कुटीव ॥ (३) ॥*॥ मुरति । 'मुर वेष्टने' ( तु० प० से० ) । इगुपधलक्षणात् (३।१।१३५) कः । ('मुरा गन्धद्रव्ये दैत्यान्तरे पुमान्' इति मेदिनी) ॥ (४) ॥*॥ प्रशस्तो गन्धोऽस्याः । 'अत इनिठनौ' (५।२।११५) ॥ (५) ॥*॥ पञ्च 'मुराख्यसुगन्धिद्रव्यस्य' ॥

गजभक्ष्या तु सुवहा सुरभी रसा ॥ १२३ ॥
महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ।

गजेति ॥ गजैर्भक्ष्यते । ण्यत् (३।१।१२४) ॥*॥ घञि (३।३।१९) 'गजभक्षा' वा ॥ (१) ॥*॥ सुवहति । पचाद्यच् (३।१।१३४) ॥ (२) ॥*॥ सुष्ठु रभते । 'सर्वधातुभ्य इन्' (उ० ४।११८) । आगमानित्यत्वान्न नुम् (७।१।६३) । 'सुरभिः सल्लकीमातृभिन्मुरागोषु योषिति' (इति मेदिनी) ॥ (३) ॥*॥ रस्यते । 'रस आस्वादने' (चु० उ० से०) अदन्तः । घञ् (३।३।१९) । 'रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे । बोले रागे गृहे धातौ तिक्तादौ पारदेऽपि च' इति हैमः ॥ (४) ॥*॥ महदीरणमस्याः । महमुत्सवमीरयति वा । ल्युः (३।१।१३४) ॥ (५) ॥*॥ कुन्दुरुरिव प्रतिकृतिः । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । गौरादिः (४।१।४१) ॥ (६) ॥*॥ सलति । 'षल गतौ' ( भ्वा० प० से० ) । क्कुन् (उ० २।३२) । पृषोदरादिः (६।३।१०९) । गौरादिः (४।१।४१) । सत्कृत्य लक्यते वा । 'लक आस्वादने' क्कुन् (उ० २।३२) ॥*॥ 'सल्लकी सिल्लकी ह्लादा' इति रुद्रः ॥*॥ 'श्वाविड्भेदौ शल्लक्यौ' इति तालव्यादौ रभसः । तत्र 'शल चलने' ( भ्वा० प० से० ) धातुः ॥ (७) ॥*॥ ह्लादयत्यवश्यम् । 'ह्लादी सुखे च' ( भ्वा० आ० से० ) । 'आवश्यका–' (३।३।१७०) णिनिः ॥ (८) ॥*॥ अष्टौ 'कुन्दुरुक्याः' 'साला' इति ख्यातायाः ॥

अग्निज्वालासुभिक्षे तु धातकी धातृपुष्पिका ॥ १२४ ॥

अग्नीति ॥ अग्नेर्ज्वालेव । रक्तपुष्पत्वात् ॥ (१) ॥*॥ सुष्ठु भिक्ष्यते । घञ् (३।३।१९) ॥ (२) ॥*॥ धातुं करोति । 'तत्करोति–' (वा० ३।१।२६) इति ण्यन्तात् ण्वुल् (३।१।१३३) । गौरादिः (४।१।४१) ॥ (३) ॥*॥ धातृ पुष्पमस्याः । शैषिकः कप् (५।४।१५४) ॥ (४) ॥*॥ चत्वारि 'धातक्याः' 'धवा' इति ख्यातायाः ॥

पृथ्वीका चन्द्रबालैला निष्कुटिर्बहुला

पृथ्वीति ॥ प्रथते । 'प्रथ प्रख्याने' (भ्वा० आ० से०) । 'फर्फरीकादयश्च' (उ० ४।२०) इति साधुः ॥ (१) ॥*॥ चन्द्रस्य कर्पूरस्य बालेव । कर्पूरगन्धित्वात् ॥ (२) ॥*॥ एलयति । 'इल प्रेरणे' (चु० प० से०) पचाद्यच् (३।१।१३४) ॥ (३) ॥*॥ निश्चिता कुटिः कौटिल्यमस्याः । निष्क्रान्ता कुटेर्वा ॥*॥ 'कृदिकारात्–' (ग० ४।१।४५) इति वा ङीष् ।

(निष्कुटी) ॥ (४) ॥*॥ बहूनि बीजानि लाति । 'आतोऽनुप-' (३।२।३) इति कः । 'बहुला नीलिकायां स्यादेलायां गवि योषिति । कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम् । पुंस्यग्नौ कृष्णपक्षे च वाच्यवत्प्राज्यकृष्णयोः' (इति मेदिनी) ॥ (५) ॥*॥ पञ्च 'एलायाः' 'एलायची' इति ख्यातायाः ॥

अथ सा ।

**सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः १२५**

**अथेति** ॥ उपकुञ्चति । 'कुञ्च कौटिल्याल्पीभावयोः' (भ्वा० प० से०) । ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ तुदति । 'तुद व्यथने' (तु० उ० अ०) । 'पातृतुदि-' (उ० २।७) इति थक् । 'तुत्थमञ्जनभेदे स्यान्नीलीसूक्ष्मैलयोः स्त्रियाम्' (इति मेदिनी) ॥ (२) ॥*॥ कुरति । 'कुर शब्दे' (तु० प० से०) । बाहुलकादङ्गच् । गौरादिः (४।१।४१) ॥ (३) ॥*॥ त्रयः पुटा यस्याः । 'त्रिपुटा मल्लिकायां च सूक्ष्मैलात्रिवृतोः स्त्रियाम् । सतीनके च तीरे च त्रिपुटः समुदाहृतः' (इति मेदिनी) ॥ (४) ॥*॥ त्रुटति । 'त्रुट छेदे' (तु० प० से०) । 'इगुपधात्-' (उ० ४।१२०) इतीन् । 'त्रुटिः स्त्रीसंशये स्वल्पे सूक्ष्मैलाकालमानयोः' (इति मेदिनी) ॥ (५) ॥*॥ पञ्च 'सूक्ष्मैलायाः' ॥

**व्याधिः कुष्ठं पारिभाव्यं व्याप्यं पाकलमुत्पलम् ।**

**व्येति** ॥ विगत आधिरनेन । 'कौबेरं भास्वरं कुष्ठं पारिभाव्यं गदाह्वयम्' इति रभसः । 'व्याधिः कुष्ठे च रोगे ना' (इति मेदिनी) ॥ (१) ॥*॥ कुष्णाति रोगम् । 'कुष निष्कर्षे' (क्र्या० प० से०) । 'हनिकुषि-' (उ० २।२) इति क्थन् । 'कुष्ठं रोगे पुष्करेऽस्त्री' (इति मेदिनी) ॥ (२) ॥*॥ परिभावे साधुः । 'तत्र साधुः' (४।४।९८) इति यत् । स्वार्थेऽण् (५।४।३८) ॥ (३) ॥*॥ व्याप्यते । 'आप्लृ व्याप्तौ' (स्वा० प० अ०) । 'ऋहलोर्ण्यत्' (३।१।१२४) ॥*॥ वाप्यां भवम् । 'वाप्यम्' इति क्वचित्पाठः । उप्यते । 'डुवप् बीजसंताने' (भ्वा० प० अ०) । ण्यत् (३।१।१२४) वा ॥*॥ 'आप्यम्' इति च ॥ (४) ॥*॥ पाकं लाति । 'पाकलं कुष्ठभैषज्ये पुंसि स्यात्कुञ्जरे ज्वरे' (इति मेदिनी) ॥ (५) ॥*॥ उत्पलति । 'पल गतौ' (भ्वा० प० से०) अच् (३।१।१३४) 'उत्पला तुषपर्व्यां क्लीबं कुष्ठप्रसूनयोः' (इति मेदिनी) ॥ (६) ॥*॥ षट् 'कुष्ठस्य' 'कुठ' इति ख्यातस्य ॥

**शङ्खिनी चोरपुष्पी स्यात्केशिनी**

**शङ्खीति** ॥ शङ्खाः सन्त्यस्याः । शङ्खाकारपुष्पत्वात् । 'अतः' (५।२।११५) इतीनिः । 'शङ्खिनी श्वेतचुक्रायां चोरपुष्प्यां वधूभिदि' (इति मेदिनी) ॥ (१) ॥*॥ चोर इव पुष्पं यस्याः । रात्रिविकासित्वात् । 'पाककर्ण-' (४।१।६४) इति ङीष् ॥ (२) ॥*॥ केशाः सन्त्यस्याः । 'अतः' (५।२।११५) इतीनिः । 'केशी केशवति त्रिषु । दैत्ये ना चोरपुष्प्यां स्त्री' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि 'चोरवल्ल्याः' 'शांखाहुली' इति ख्यातायाः ॥

अथ वितुन्नकः ॥ १२६ ॥

**झटाऽमलाऽज्झटा ताली शिवा तामलकीति च ।**

**अथेति** ॥ वितुद्यते स्म । 'तुद व्यथने' (तु० उ० अ०) । क्तः (३।२।१०२) । स्वार्थे कन् (५।३।७५) ॥ (१) ॥*॥ झट्यते । 'झट संघाते' (भ्वा० प० से०) । घञ् (३।३।१८) संज्ञापूर्वकत्वान्न वृद्धिः । झटति वा अच् (३।१।१३४) ॥ (२) ॥*॥ न मलो यस्याः ॥ (३) ॥*॥ अदव्ययमाश्चर्ये । अत आश्चर्यस्य झटः संघातोऽस्याम् । अस्ति । क्विप् (३।२।१७८) झटति । अच् । (३।१।१३४) । टाप् (४।१।४) । अथासौ झटा च ॥ (४) ॥*॥ तालयति । 'तल प्रतिष्ठायाम्' (चु० प० से०) ण्यन्तः । अच् (३।१।१३४) । 'तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते । गीतकालक्रियामाने करस्फाले द्रुमान्तरे । वाद्यभाण्डे च कांस्यस्य त्सरौ ताली झटौषधौ । क्लीबं तु हरिताले स्यात्' (इति मेदिनी) ॥ (५) ॥*॥ शिवमस्त्यस्याम् । अर्शआद्यच् (५।२।१२७) । 'शिवा झटामलौषधौ । अभयामलकीगौरीफेरुसक्तुफलासु च' (इति मेदिनी) (६) ॥*॥ तनुश्वासावामलकी च । पृषोदरादिः ॥ (७) ॥*॥ षट् (सप्त) 'भूम्यामलक्याः' ॥

**प्रपौण्डरीकं पुण्डर्यम्**

**प्रेति** ॥ पुण्डरीकेण सदृशम् । 'शेषे' (४।२।९२) इत्यण् । प्रकृष्टं पौण्डरीकम् । यद्वा स्वार्थेऽण् (५।४।३८) । 'साधुपुष्पं स्थलपद्मं दृष्टिकृत् पुण्डरीककम्' इति रभसः ॥ (१) ॥*॥ पुण्डयति । 'पुडि खण्डने' (भ्वा० प० से०) । अच् (३।१।१३४) पुण्डस्य अर्थं प्रधानम् । शकन्ध्वादिः (वा० ६।१।९४) ॥ (२) ॥*॥ द्वे 'पौण्डर्यस्य' 'पुण्डरीया' इति ख्यातस्य ॥

अथ तुन्नः कुबेरकः ॥ १२७ ॥

**कुणिः कच्छः कान्तलको नन्दिवृक्षः**

**अथेति** ॥ तुद्यते स्म । 'तुद व्यथने' (तु० उ० अ०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ कुत्सितं वेरमस्य । 'कुबेरकः कुबेरे स्यात्पुंसि नन्द्याख्यपादपे' । ('कुबेरः स्यात्पुंसि नन्दिवृक्षे पुण्यजनेश्वरे' इति मेदिनी) ॥ (२) ॥*॥ कुणति । 'कुण संकोचे' (तु० प० से०) । 'इगुपधात् कित्' (उ० ४।१२०) इतीन् । 'कुणिस्तुन्नकवृक्षे ना कुकरे त्वभिधेयवत्' (इति मेदिनी) ॥*॥ 'तुणिः' इति क्वचित् पाठः । तूणयति । 'तूण संकोचे' (चु० आ० से०) । 'अच इः' (उ० ४।१३९) । पृषोदरादिः (६।३।१०९) ॥ (३) ॥*॥ कचति । 'कची दीप्तौ' (भ्वा० आ० से०) । बाहुलकाच्छः । यद्वा केन छृणत्ति । 'छृदिर् दीप्त्यादौ' (रु० उ० से०) ।

'अन्येभ्योऽपि–' ( वा ३।२।१०१ ) इति डः । '**अथ कच्छः** स्यादनूपे तुन्नकद्रुमे । नौकाङ्गे पुंसि वाराह्यां चीरिकायां च योषिति' ( इति मेदिनी ) ॥ (४) ॥*॥ काम्यते । 'कमु कान्तौ' ( भ्वा० आ० से० ) । 'मतिबुद्धिपूजार्थेभ्यश्च' (३।२।१८८) इति क्तः । लकति । 'लक आस्वादने' अच् (३।१।१३४) । कान्तश्चासौ लकश्च ॥ (५) ॥*॥ नन्दनम् । 'टु नदि समृद्धौ' ( भ्वा० प० से० ) । इन् ( उ० ४।११८ ) । ङीष् ( ग० ४।१।४५ ) वा । नन्द्या वृक्षः ॥ (६) ॥*॥ षट् '**नन्दिवृक्षस्य**' '**तुणी**' इति ख्यातस्य ॥

## अथ राक्षसी ।

**चण्डा धनहरी क्षेमदुष्पत्रगणहासकाः ॥ १२८ ॥**

**अथेति** ॥ रक्षस इयम् । 'तस्येदम्' (४।३।१२०) इत्यण् (१) ॥*॥ चण्डते । 'चडि कोपे' ( भ्वा० आ० से० ) अच् (३।१।१३४) । '**चण्डा** धनहरीशङ्खपुष्प्योस्त्रिष्वतिकोपने । तीव्रेऽपि' ( इति मेदिनी ) ॥ (२) ॥*॥ धनं हरति । 'हरतेरनुद्यमनेऽच्' (३।२।९) गौरादिः (४।१।४१) । '**दुष्कुलीना** धनहरी **विरोकः क्रोधमूर्च्छितः**' इति वाचस्पतिः ॥ (३) ॥*॥ क्षिणोति । 'क्षिणु हिंसायाम्' ( त० उ० से ) । 'अर्तिस्तु–' ( उ० १।१४० ) इति मन् । '**क्षेमोऽस्त्री** लब्धरक्षणे । चण्डायां ना शुभे न स्त्री कात्यायन्यां च योषिति' ( इति मेदिनी ) ॥ (४) ॥*॥ दुष्टानि पत्राण्यस्य ॥ (५) ॥*॥ गणं हासयति । 'हसे हसने' ( भ्वा० प० से० ) ण्यन्तः । ण्वुल् (३।१।१३३) ॥*॥ 'गणः' इत्यप्यस्य नाम । '**गणः** प्रमथसंख्यौघे चण्डासैन्यप्रभेदयोः' इति रुद्रः ॥ (६) ॥*॥ षट् '**चोरा**' इत्याख्यगन्धद्रव्यस्य ॥

**व्याडायुधं व्याघ्रनखं करजं चक्रकारकम् ।**

**व्याडेति** ॥ व्याडस्य व्याघ्रस्यायुधमिव ॥ (१) ॥*॥ व्याघ्रस्य नखमिव । क्षुभ्नादिः (८।४।३९) । '**भवेद्व्याघ्रनखं** कन्दगन्धद्रव्यविशेषयोः । नखक्षतान्तरे क्लीबम्' ( इति मेदिनी ) (२) ॥*॥ करजं नखम् । तदिव ॥ (३) ॥*॥ चक्रस्य कारकम् ॥ (४) ॥*॥ चत्वारि '**व्याघ्रनखा**'ख्यगन्धद्रव्यस्य ॥

**शुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली ॥ १२९ ॥**

**शुषीति** ॥ शुषिरस्त्यस्याः । 'ऊषशुषि–' (५।२।१०७) इति रः । शुषिरमस्त्यस्यां वा । 'अर्शआदिभ्योऽच्' (५।२।१२७) ॥ (१) ॥*॥ विद्रुमस्येव लता ॥ (२) ॥*॥ कपोतस्याङ्घ्रिरिव ॥ (३) ॥*॥ नटति । 'नट स्पन्दने' ( चु० प० से० ) । अच् (३।१।१३४) । गौरादिः (४।१।४१) ॥ (४) ॥*॥ नलति । 'णल गन्धे' ( भ्वा० प० से० ) अच् (३।१।१३४) गौरादिः (४।१।४१) । ( '**नलः** पोटगले राज्ञि पितृदेवे कपीश्वरे । कमलेऽपि च नल्यां च क्रमेण क्लीबयोषितोः' ( इति मेदिनी ) ॥ (५) ॥*॥ पञ्च '**मालकांगणी**' इति ख्यातायाः ॥

**धमन्यञ्जनकेशी च हनुर्हट्टविलासिनी ।**

**धमेति** ॥ धम्यते । 'धमिः सौत्रः' । 'अर्तिसृधृ–' ( उ० २।१०२ ) इत्यनिः । ङीष् ( ग० ४।१।४५ ) वा । '**धमनो** नाऽनले भस्त्राध्मापकक्रूरयोस्त्रिषु । **धमनी** तु शिराहट्टविलासिन्योश्च योषिति' ( इति मेदिनी ) ॥ (१) ॥*॥ अञ्जनमिव केशा अस्याः ॥ (२) ॥*॥ केचित्तु—इदं द्वयं पूर्वान्वयि—इत्याहुः ॥*॥ हन्ति 'शृस्वृस्निहि–' ( उ० १।१० ) इत्युः । '**हनुर्हट्टविलासिन्यां** मृत्यावस्त्रे गदे स्त्रियाम् । द्वयोः कपोलावयवे' ( इति मेदिनी ) ॥ (३) ॥*॥ हट्टे विलसति तच्छीला । 'लस क्रीडायाम्' ( भ्वा० प० से० ) 'सुपि–' ( ३।२।७८ ) इति णिनिः ॥ (४) ॥*॥ चत्वारि '**अञ्जनकेश्याः**' ॥

**शुक्ति शङ्खः खुरः कोलदलं नखम्**

**शुक्तिरिति** ॥ शोचति । 'शुच शोके' ( भ्वा० प० से० ) क्तिच् (३।३।७४) । '**शुक्तिः** शङ्खनखे शङ्खे कपालखण्डहृद्गुजोः । नख्यश्वावर्तयोर्मुक्तास्फोटदुर्नामयोरपि' इति हैमः ॥ (१) ॥*॥ शाम्यति । 'शमेः खः' ( उ० १।१०२ ) । '**शङ्खः** कम्बौ निधेर्भेदे स्यान्नख्यामलिकास्थनि' इति हैमः ॥ (२) ॥*॥ खुरति । 'खुर छेदने' ( तु० प० से० ) । 'इगुपध–' ( ३।१।१३५ ) इति कः । '**खुरः** शफे कोलदके' इति हैमः ॥ (३) ॥*॥ कोलस्य बदर्या इव दलम् ॥ (४) ॥*॥ न खनति । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति डः । '**नखं** पुनर्गन्धद्रव्ये **नखः** करजषण्ढयोः' इति हैमः ॥ ( '**नखी** स्त्रीक्लीबयोः शुक्तौ नखरे पुंनपुंसकम्' इति मेदिनी ) ॥ (५) ॥*॥ पञ्च '**नखाख्यगन्धद्रव्यस्य**' ॥

## अथाढकी ॥ १३० ॥

**काक्षी मृत्स्ना तुवरिका मृतालकसुराष्ट्रजे ।**

**अथेति** ॥ आढकमस्त्यस्याः परिच्छेदकत्वेन । अर्शआद्यच् (५।२।१२७) । आढौकते वा । 'ढौकृ गतौ' ( भ्वा० आ० से० ) । अच् (३।१।१३४) । पृषोदरादिः (६।३।१०९) । गौरादिः (४।१।४१) । '**आढकी** तु तुवर्यां स्त्री परिमाणान्तरे त्रिषु' ( इति मेदिनी ) ॥ (१) ॥*॥ कक्षे भवा । 'तत्र भवः' (४।३।५३) इत्यण् । '**काक्षी** तुवरिकायां च सौराष्ट्रमृद्यपि स्त्रियाम्' ( इति मेदिनी ) ॥ (२) ॥*॥ मृत्स्नाऽस्त्यस्याः क्षेत्रत्वेन । अर्शआद्यच् (५।२।१२७) । '**मृत्स्ना** मृत्सातुवर्योः स्त्री' ( इति मेदिनी ) ॥ (३) ॥*॥ तुवरोऽस्त्यस्याः ठन् (५।२।११५) टाप् (४।१।४) ॥*॥ 'वार्षिका मल्लिका **तूवर्याढकी** कच्छुरा छटी' इति बोपालितात् 'तूवरी' च ॥ (४) ॥*॥ मृतमालयति । 'अल भूषणादौ' ( भ्वा प० से० ) ण्यन्तः । अण् (३।२।१) । 'संज्ञायां कन्' (५।३।७५) ॥*॥

१—प्रथमसंख्येये ॥

१—नृत्यारम्भे ॥

'अजिता तुवरा स्तुत्या मृत्स्ना मृत्तालकम्' इति कोशाद् द्वितकारं च । मृदि तालः प्रतिष्ठास्य ॥ (५) ॥*॥ सुराष्ट्रे जातम् । 'जनी' (दि० आ० से०) । 'सप्तम्यां जनेर्डः' (३।२।९७) ॥ (६) ॥*॥ षट् 'तुवरिकायाः' 'तुवर्' इति ख्यातायाः ॥

## कुटन्नटं दाशपुरं वानेयं परिपेलवम् ॥ १३१ ॥
## प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च ।

किति ॥ कुटन् वक्रीभवन् नटति । 'नट स्पन्दने' (चु० प० से०) अच् (३।१।१३४) ॥ (१) ॥*॥ दाशान् कैवर्तान् पिपर्ति । 'पॄ पालनपूरणयोः' (जु० प० से०) । मूलविभुजादित्वात् (वा० ३।२।५) कः ॥*॥ 'दशपूरम्' इति 'दशपुरं' इति च क्वचित् पाठः । दश पूरयति । 'पूर पूर्तौ' । 'कर्मण्यण्' (३।२।१) । यत्तु—दश पूरयति—इति विगृह्य इगुपधत्वात् (३।१।१३५) 'कः'—इत्याह मुकुटः । तन्न । 'णिजन्तस्येगुपधत्वाभावात् । अकारान्निरुपपदात्सोपपदो विप्रतिषेधेन' (३।२।१)इति वार्तिकाद् अण् प्रसङ्गाच्च ॥*॥ दश पुरोऽस्याः 'ऋक्पूरब्धूर्–' (५।४।७४) इति समासान्तः । 'दशपूरं दशपुरं प्लवनं जीविताह्वयम्' इति वाचस्पतिः ॥ (२) ॥*॥ वने पानीये जायते । 'नद्यादित्वात्' (४।३।९७) ढक् ॥*॥ वन्यं च । 'परिपेलवं प्लवं वन्यं तत् कुटन्नटसंज्ञकम् । जायते मण्डूकाकारं शैवालदलसंचये । कैवर्तीमुस्तके क्लीबं शोणके वा कुटन्नटः' इत्यजयः ॥ (३) ॥*॥ परितः पेलवं मृदु ॥ (४) ॥*॥ प्लवते । 'प्लुङ् गतौ' (भ्वा० आ० अ०) । अच् (३।१।१३४) । 'प्लवः कारण्डवे भेके कुलके भेलके कपौ । शब्दे प्लुतिगतौ प्लक्षे चण्डालजलकाकयोः । प्लवं गन्धतृणे प्रोक्तं कैवर्तीमुस्तकेऽपि च' (इति विश्वः) । 'प्लवगो वानरे भेके सारथौ चोष्णदीधितेः' (इति मेदिनी) ॥ (५) ॥*॥ गां जलं पिपर्ति । 'पॄ पालने' (जु० प० से०) मूलविभुजादिः (३।२।५) गौर्जलं पुरमस्य, इति वा ॥ (६) ॥*॥ गां जलं नर्दयति । 'नर्द शब्दे' (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१) ॥ (७) ॥*॥ कैवर्तानां जातिः कैवर्ती । कैवर्त्या मुस्तकम् ॥ (८) ॥*॥ अष्टौ 'कैवर्तीमुस्तकस्य' 'मोथा' इति ख्यातस्य ॥

## ग्रन्थिपर्णं शुकं बर्हिपुष्पं स्थौणेयकुक्कुरे ॥ १३२ ॥

ग्रन्थीति ॥ ग्रन्थौ पर्णान्यस्य । ग्रन्थय इव पर्णान्यस्य, इति वा ॥ (१) ॥*॥ शोचति । 'शुच शोके' (भ्वा० प० से०) । 'शु गतौ' ( ) वा । 'शुकवल्कोल्काः' (उ० ३।४२) इति निपातः । 'ग्रन्थिपर्णे शिरीषे च शुकः स्यात्' इति विश्वः । 'शुको व्याससुते कीरे रावणस्य च मन्त्रिणि । शिरीषपादपे पुंसि, ग्रन्थिपर्णे नपुंसकम्' (इति मेदिनी) ॥*॥—शुकस्येव बर्हाणि पर्णान्यस्य ('शुकबर्हम्') इत्येकं नाम—इत्येके ॥ (२) ॥*॥ बर्हं पत्रं प्रशस्तमस्य । इनिः (५।२।११५) ॥ पुष्प्यति । 'पुष्प विकसने' (दि० प० से०) । अच् (३।१।१३४) । 'बर्हिपुष्पम्' इत्येकं नाम—इत्येके ॥*॥ 'बर्हपुष्पम्' इत्यन्ये ॥*॥ 'बर्हम्' इति पृथग् नाम, इति कश्चित् ॥ (३) ॥*॥ स्थूणाया अपत्यम् । 'स्त्रीभ्यो ढक्' (४।१।१२०) ॥४॥*॥ कुक्कुरोऽस्यास्ति । कुक्कुरशब्दस्तद्गन्धे लाक्षणिकः । अर्शआद्यच् (५।२।१२७) ॥ (५) ॥*॥ 'मरुत्' इत्यत्राप्यन्वेति । 'मरुद्देवे समीरे ना ग्रन्थिपर्णे नपुंसकम्' (इति मेदिनी) ॥*॥ पञ्च 'ग्रन्थिपर्णस्य' 'कुक्कुरवद्रा' इति ख्यातस्य ॥

## मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः ।
## समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि ॥ १३३ ॥

मरुदिति ॥ मरुद्भिर्मल्यते । 'मल धारणे' (भ्वा० आ० से०) । घञ् (३।३।१९) । व्यस्तं समस्तं च नामेदम् । 'स्पृक्का तु ब्राह्मणी देवी मरुन्माला लता लघुः । समुद्रान्तावधूः कोटिवर्षा लङ्कोपिका मरुत् । मुनिर्माल्यवती माला मोहना कुटिला लता' इति वाचस्पतिः । म्रियते । 'मृङ् प्राणत्यागे' (तु० आ० से०) । 'मृग्रोरुतिः' (उ० १।९४) ॥*॥ मल्यते । 'मल धारणे' (भ्वा० आ० से०) । घञ् (३।३।१९)॥ (१) ॥*॥ पिंशति । 'पिश अवयवे' (तु० प० से०) । 'क्षुधिपिशिमिथिभ्यः कित्' (उ० ३।५५) इत्यूनन् । 'पिशुनं कुङ्कुमेऽपि च । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु । पृक्कायां पिशुना स्त्री स्यात्' (इति मेदिनी) ॥ (२) ॥*॥ स्पृश्यते । 'स्पृश संस्पर्शने' (तु० प० अ०) । बाहुलकात्कक् ॥*॥ पृषोदरादित्वात् (६।३।१०९) सलोपे 'पृक्का' अपि ॥ (३) ॥*॥ दीव्यति 'देवी कृताभिषेकायां तेजनीपृक्कयोरपि' (इति मेदिनी) ॥ (४) ॥*॥ लतति । 'लत आघाते' सौत्रः । अच् (३।१।१३४) । 'लता प्रियंगुशाखयोः । पृक्काज्योतिष्मतीवल्लीलताकस्तूरिकासु च । माधवीदूर्वयोः–' (इति मेदिनी) ॥ (५) ॥*॥ लङ्घते । 'लघि गतौ' (भ्वा० आ० से०) । लङ्घिबंह्योर्नलोपश्च' (उ० १।२९) इत्युः । 'लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबम् । शीघ्रे कृष्णागरुणि पृक्कानामौषधौ तु स्त्री' (इति मेदिनी) ॥ (६) ॥*॥ समुद्रोऽन्तोऽस्याः ॥ (७)॥*॥ वहति । उह्यते वा । 'वहो धश्च' (उ० १।८३) इत्यूः । 'वधूः स्त्री शारिवौषधौ । स्नुषाशटीनवोढासु भार्यापृक्काङ्गनासु च' (इति मेदिनी) । 'पृक्का च महिला वधूः' इति त्रिकाण्डशेषः॥ (८) ॥*॥कोटिभिरग्रैर्वर्षति मधु । 'वृषु सेचने' (भ्वा० प० से०) । अच् (३।१।१३४) ॥ (९) ॥*॥ लङ्कायामुप्यते 'डुवप्' (भ्वा० उ० अ०) क्वुन् (उ० २।३२) 'वन्विक्षपि–' (६।१।

१—इदं मेदिनीवाक्यं प्लवगशब्दार्थबोधकत्वादत्र प्लवगशब्दाच्चोपेक्षणीयम् ॥

१५) इति वस्य उः ॥ (१०) ॥*॥ दश **'स्पृक्कायाः' 'असबर'** इति ख्यातस्य ॥

**तपस्विनी जटा मांसी जटिला लोमशा मिसी ।**

**तपेति** ॥ तपोऽस्त्यस्याः । जटिलत्वात् । 'अस्माया–'(५।२।१२१) इति विनिः ॥ (१) ॥*॥ जटाऽस्त्यस्याः । अर्श आद्यच् (५।२।१२७) यद्वा जटति 'जट संघाते' (भ्वा० प० से०)। अच् (३।१।१३४) ॥ (२) ॥*॥ मन्यते । 'मनेर्दीर्घश्च' (उ० ३।६४) इति सः । गौरादिः (४।१।४१) । **'मांसं** स्यादामिषे क्लीबं कक्कोलीजटयोः स्त्रियाम्' (इति मेदिनी) ॥ (३) ॥*॥ जटाऽस्त्यस्याः । पिच्छादीलच् (५।२।१००) । **'जटिला** पिप्पलीमांस्योर्जटायुक्ते तु वाच्यवत्' 'इति ( मेदिनी ) ॥ (४) ॥*॥ लोमानि सन्त्यस्याः । लोमादिशः (५।२।१०० ) **'लोमशो** मुनिमेषयोः । (लोमान्विते स्त्रियां काकजङ्घामांसीवचासु च । शूकशिम्बिमहामेदाकासीसे डाकिनीभिदि)' (इति मेदिनी) ॥ (५)॥*॥—मांसीत्वादामिषी—इति स्वाम्युक्तो विग्रहोऽयुक्तः । तथा पाठस्य क्वचिददर्शनात् । मस्यति । 'मसी परिणामे' (दि० प० से०) । सर्वधातुभ्य इन् (उ० ४।११८) । 'कृदिकारात्' (ग० ४।१।४५) इति वा ङीष् । पृषोदरादिः (६।३।१०९) ॥ (६) ॥*॥ षट् **'जटामांसी'** इति ख्यातायाः ॥

**त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम् ॥१३४॥**

**त्वगिति** ॥ त्वगिव पत्रमस्य ॥*॥ 'त्वग्' अपि नामास्य । **'त्वक्** स्त्री चर्मणि वल्के च गुडत्वचि विशेषतः' ( इति मेदिनी ) ॥ (१) ॥*॥ अन्यत उत्कटगन्धित्वात् 'संप्रोदश्च कटच्' (५।२।२९) ॥ (२) ॥*॥ बिभर्ति । 'भृञः किञ्चुट् च' (१।१२५) इति गन् ॥ (३) ॥*॥ प्रशस्ता त्वगस्यास्ति । 'अर्शआद्यच्' (५।२।१२७) ॥ (४) ॥*॥ प्रशस्तं चोचमस्यास्ति । 'अर्शआद्यच्' (५।२।१२७) **'त्वक्त्वचचोचशब्दाः** स्युर्वल्के चर्मणि पत्रके' इति धरणिः ॥ (५) ॥*॥ वरमङ्गमस्य । 'शेषाद्विभाषा' (५।४।१५४) इति कप् ॥ (६) ॥*॥ षट् **'त्वक्पत्रस्य' 'तज'** इति ख्यातस्य ॥

**कर्चूरको द्राविडकः काल्पको वेधमुख्यकः ।**

**केति** ॥ कर्जति । 'कर्ज व्यथने' (भ्वा० प० से०) । खर्जादित्वात् (उ० ४।९०) ऊरः । पृषोदरादिः (६।३।१०९) । स्वार्थे कन् (५।३।७५) ॥ (१) ॥*॥ द्रविडे देशे जातः । 'तत्र जातः' (४।३।२५) इत्यण् । स्वार्थे कन् (५।३।७५) ॥ (२) ॥*॥ कल्पे विधौ भवः । 'तत्र भवः' (४।३।५३) इत्यण् । कन् (५।३।७५) ॥*॥ पाठान्तरे काले साधुः । 'तत्र साधुः' (४।४।९८) इति यत् । स्वार्थे कन् (५।३।७५) ॥ (३) ॥*॥ वेधे मुख्यः । स्वार्थे कन् (५।३।७५) ॥ (४) ॥*॥ चत्वारि **'कर्चूर'** इति ख्यातस्य ॥

**ओषध्यो जातिमात्रे स्युः**

**ओषेति** ॥ जातिमात्रविवक्षायाम् **'ओषधी'** शब्दप्रयोगः ॥

**अजातौ सर्वमौषधम् ॥ १३५ ॥**

**अजेति** ॥ द्रव्यमात्रविवक्षायां तु **'औषध'** शब्दप्रयोगः । 'ओषधेरजातौ' (५।४।३७) इत्यण् 'सर्वम्' इत्यनेन—'घृततैलादिकमप्यौषधशब्दवाच्यम्'—इत्युक्तम् ॥

**शाकाख्यं पत्रपुष्पादि**

**शाकेति** ॥ शक्यते भोक्तुम् । 'शक्लृ शक्तौ' (स्वा० प० अ०) । घञ् (३।३।१९) यद्वा श्यति । 'शो तनूकरणे' (दि० प० से०) । बाहुलकात् कः ॥ (१) ॥*॥ आदिना फलनाड्यग्रमूलादिपरिग्रहः । 'मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् । त्वक् पुष्पं कवकं चैव शाकं दशविधं स्मृतम्' । अधिरूढकं तालबीजाङ्कुरास्थिमज्जादि ॥

**तण्डुलीयोऽल्पमारिषः ।**

**तेति** ॥ तण्डुलाय हितः । 'तस्मै हितम्' (५।१।५) इति छः । **'तण्डुलीयः** शाकभेदे विडङ्गतरुताप्ययोः' (इति हैममेदिन्यौ) ॥ (१) ॥*॥ **'मारिषः** शाकभिद्यार्थे नाव्योक्त्या पुंसि, योषिति । (दक्षाम्बायाम्)' (इति मेदिनी) । अल्पश्चासौ मारिषश्च ॥ (२) ॥*॥ द्वे **'तण्डुलीयस्य' 'चउराई'** इति ख्यातस्य ॥

**विशल्याऽग्निशिखाऽनन्ता फलिनी शक्रपुष्प्यपि ॥ १३६ ॥**

**विशेति** ॥ विगतं शल्यमनया । **'विशल्या** लाङ्गलीदन्तीगुडूचीत्रिपुटासु च । शल्येन रहितायां च प्रियायां लक्ष्मणस्य च' इति हेमचन्द्रः ॥ (१) ॥*॥ अग्नेरिव शिखा संतापो यस्याः । 'अथाग्निशिखमुद्दिष्टं कुसुम्भे कुङ्कुमेऽपि च । लाङ्गलिक्याख्यौषधौ च विशल्यायां च योषिति' (इति मेदिनी) ॥ (२) ॥*॥ न अन्तो यस्याः ॥ (३) ॥*॥ फलानि सन्त्यस्याः । इनिः (५।२।११५) । **'फलिन्य**ग्निशिखायां स्त्री फलिन्यां फलिने त्रिषु' (इति मेदिनी) ॥ (४) ॥*॥ शक्रोऽर्जुनतरुः पुष्पमस्याः । शक्रशब्दः पुष्पे लाक्षणिकः । 'पाककर्ण–' (४।१।६४) इति ङीष् ॥ (५) ॥*॥ पञ्च **'अग्निशिखायाः' 'इन्द्रपुष्पी'** इति ख्यातायाः ॥

**स्यादृक्षगन्धा छगलान्त्यावेगी वृद्धदारकः । जुङ्गः**

**स्यादिति** ॥ ऋक्षस्येव गन्धोऽस्याः । समासान्तस्यानि-

१—मूलं मूलकादेः, पत्रं वास्तुकादेः, करीरं वंशाङ्कुरम्, अग्रं वेत्रादेः, फलं कूष्माण्डादेः, काण्डमुत्पलादेर्नालम्, त्वक् मातुलुङ्गादेः, पुष्पं तिन्तिडीकोविदारादेः, कवकं छत्राकं—इति मुकुटः ॥

त्वलात् 'उपमानाच्च' (५।४।१३७) इतीत्त्व ॥*॥ **'ऋष्यगन्धा'** इति पाठान्तरम् ॥ (१) ॥*॥ छगलस्येवान्त्रमस्याः ॥*॥ 'छगला' इति पृथग् नाम—इत्यन्ये । 'छागे तु छगलश्छागीवृद्धदारकयोः स्त्रियाम्' इत्यनेकार्थकोशः ॥ (२) ॥*॥ आवेगोऽस्त्यस्याः 'अर्शआद्यच्' (५।२।१२७) । गौरादिः (४।१।४१) ॥ (३) ॥*॥ वृद्धो दारकोऽस्मात् । वृद्धत्वं दारयति वा । ण्वुल् (३।१।१३३) ॥ (४) ॥*॥ जुङ्गति । 'जुगि वर्जने' ( भ्वा० प० से० ) । अच् (३।१।१३४) जुङ्ग्यते वा । घञ् (३।३।१९) ॥ (५) ॥*॥ पञ्च **'वृद्धदारकस्य'** ॥

**ब्राह्मी तु मत्स्याक्षी वयस्था सोमवल्लरी ॥ १३७ ॥**

**ब्राह्मीति** ॥ ब्रह्मण इयम् । 'ब्राह्मोऽजातौ' (६।४।१७१) इत्यणि टिलोपः ॥ (१) ॥*॥ मत्स्याक्षीव पुष्पमस्याः । मत्स्यशब्दः स्वावयवे गौणः । 'बहुव्रीहौ–' (५।४।११३) इति षच् ङीष् (४।१।४१) ॥ (२) ॥*॥ वयसि तिष्ठत्यनया । 'घञर्थे कः' (वा० ३।३।५८) । **'वयस्था** तु स्त्रियां ब्राह्मीगुडूच्यामलकीषु च । सूक्ष्मैलायां च काकोल्यां पथ्यायां तरुणे त्रिषु' ( इति मेदिनी ) ॥ (३) ॥*॥ सोमस्य वल्लरी ॥ (४) ॥*॥ चत्वारि **'ब्राह्म्याः'** ॥

**पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती ।**

**पट्विति** ॥ पटूनि पर्णान्यस्याः । 'पाककर्ण–' (४।१।६४) इति ङीष् ॥ (१) ॥*॥ हिमवति जाता । 'तत्र जातः' (४।३।२५) इत्यण् ॥ (२) ॥*॥ स्वर्णमिव क्षीरमस्याः । गौरादिः (४।१।४१) ॥ (३) ॥*॥ हिममस्त्यस्याः । मतुप् (५।२।९४) । 'शरादीनां च' (६।३।१२०) इति दीर्घः ॥ (४) ॥*॥ 'हेमवर्णं पयस्तस्या हिमवद्भूमिसंभवा । सा नागजिह्विकाकारा तन्मूलं वणिजौषधम्' ॥*॥ चत्वारि **'स्वर्णक्षीर्याः'** **'मको'** इति ख्यातायाः ॥

**हयपुच्छी तु काम्बोजी माषपर्णी महासहा ॥ १३८ ॥**

**हयेति** ॥ हयपुच्छमिव पर्णान्यस्याः । गौरादिः (४।१।४१) ॥ (१) ॥*॥ कम्बोजे देशे भवा । 'तत्र भवः' (४।३।५३) इत्यण् ॥ (२) ॥*॥ माषस्येव पर्णान्यस्याः । 'पाककर्ण–' (४।१।६४) इति ङीष् ॥ (३) ॥*॥ महती सहा 'आन्महतः–' (६।३।४६) इत्यात्वम् **'महासहा** माषपर्ण्याममम्लानेऽपि च योषिति' ( इति मेदिनी ) ॥ (४) ॥*॥ चत्वारि **'माषपर्ण्याः'** ॥

**तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि ।**

**तुण्डीति** ॥ तुण्डं चञ्चुरस्ति येषाम् । 'अतः' (५।२।११५) इति ठन् । तुण्डिकानीरयति । 'ईर प्रेरणे' (अ० आ० से० ) । 'कर्मण्यण्' (३।२।१) ॥*॥ **(तुण्डकेरी)** इति पाठान्तरे प्रशस्तं तुण्डम् । 'प्रशंसायां कन्' (      ) । तुण्डकमीर्ते । अण् (३।२।१) ॥ (१) ॥*॥ रक्तं फलमस्याः । अजादिटाप् (४।१।४) ॥ (२) ॥*॥ बिम्बीं कायति । 'कै शब्दे' ( भ्वा० प० से० ) । 'आतोऽनुप–' (३।२।३) इति कः । 'ङ्यापोः' (६।३।६३) इति ह्रस्वः ॥ (३) ॥*॥ पीलोरिव पर्णमस्याः । पीलुशब्दः स्वावयवे गौणः । 'पाककर्ण–' (४।१।६४) इति ङीष् ॥ (४) ॥*॥ चत्वारि **'तुण्डिकेर्याः'** **'कुण्डूरी'** इति ख्यातायाः ॥

**वर्वरा कवरी तुङ्गी खरपुष्पाजगन्धिका ॥ १३९ ॥**

**वर्वेति** ॥ वृणोति । 'वृञ् वरणे' ( स्वा० उ० से० ) । 'कृगॄ–' (उ० २।१२१) इति ष्वरच् । अनित्यः षित्वां ङीष् । **'वर्वरः** पामरे केशे चक्रले नीवृदन्तरे । फञ्जिकायां पुमान् शाकभेदपुष्पभिदोः स्त्रियाम्' ( इति मेदिनी ) ॥ (१) ॥*॥ वृणोति । अच् (३।१।१३४) । गौरादिः (४।१।४१) । कस्य शिरसो वरी । **'कवरं** लवणाम्लयोः । **कवरी** केशविन्यासशाकयोः' इति हैमः ॥ (२) ॥*॥ तुञ्जति । 'तुजि हिंसायाम्' ( भ्वा० प० से० ) अच् (३।१।१३५) । न्यङ्क्वादिः (७।३।५३) । **'तुङ्गः** पुंनागगनगयोर्बुधे स्यादुन्नतेऽन्यवत् । **तुङ्गी** प्रोक्ता हरिद्रायां वर्वरायामपीष्यते' (इति हैमः) ॥ (३) ॥*॥ खरं पुष्पमस्याः ॥ (४) ॥*॥ अजस्येव गन्धोऽस्याः । अजशब्दः स्वगन्धे लाक्षणिकः ॥ (५) ॥*॥ पञ्च **'खरपुष्पायाः'** ॥

**एलापर्णी तु सुवहा रास्ना युक्तरसा च सा ।**

**एलेति** ॥ एलाया इव पर्णान्यस्याः । 'पाक–' (४।१।६४) इति ङीष् ॥ (१) ॥*॥ सुवहति । अच् (३।१।१३४) । **'सुवहा** शल्लक्येलापर्णीगोधापदीषु वीणायाम् । रास्नाशेफालिकयोः स्त्री सुखवाह्येऽन्यलिङ्गः स्यात्' (इति मेदिनी) ॥ (२) ॥*॥ रासते । 'रासृ शब्दे' ( भ्वा० आ० से० ) । रास्यते वा । 'रास्नासास्ना–' (उ० ३।१५) इति साधुः ॥ (३) ॥*॥ युक्तो रसो यस्याः ॥ (४) ॥*॥ चत्वारि **'एलापर्ण्याः'** ॥

**चाङ्गेरी चुक्रिका दन्तशठाऽम्बष्ठाऽम्ललोणिका १४०**

**चेति** ॥ **'चाङ्गस्तु** शोभने दक्षे' (इति मेदिनी)। चाङ्गमीरयति । 'ईर् गतौ' ( अ० आ० से० ) । 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ चुक्यति । 'चुक्क व्यथने' (चु०प०से०) । 'ऋज्रेन्द्र–' ( उ० २।२८ ) इति साधु । स्वार्थे कन् (५।३।७५) । चुक्रमिव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् वा ॥ (२) ॥*॥ शठति । 'शठ हिंसाक्लेशकैतवे' ( भ्वा० प० से० ) । पचाद्यच् (३।१।१३४) दन्तानां शठा । 'स्या**द्दन्तशठो** जम्बीरे कपित्थे करमर्दके । नागरङ्गेऽपि च पुमान् स्याच्चाङ्गेर्यां च योषिति' ( इति मेदिनी ) ॥ (३) ॥*॥ अम्बे

१—'ऋज्रेन्द्र–' (उ० २।२८) इत्यत्र तु 'चुम्र' इत्युपलभ्यते ॥

तिष्ठति । 'सुपि–' । (३।२।४) इति कः । 'अम्बाम्ब–' (८।३।९७) । इति षत्वम् । **'अम्बष्ठो** देशभेदेऽपि विप्राद्वैश्यासुतेऽपि च । **अम्बष्ठा**प्यम्ललोण्यां स्यात्पाठायूथिकयोरपि' (इति मेदिनी) ॥ (४) ॥*॥ अम्ललेभ्य ऊना । स्वार्थे कन् (५।३।७५) । पृषोदरादित्वात् (६।३।१९) णः ॥ (५) ॥*॥ पञ्च **'अम्ललोणिकायाः' 'लोनिज़ा'** इति ख्यातायाः ॥

**सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि ।**

**सहेति** ॥ सहस्रं शतं वा वेधितुं शीलमस्य । 'विध विधाने' (तु० प० से०) । 'सुपि–' (३।२।७८) इति णिनिः ॥ (१) ॥*॥ चुक्रयत्यनेन । 'ऋज्रेन्द्र–' (उ० २।२८) इति साधुः ॥ (२) ॥*॥ अम्लश्चासौ वेतसश्च । नम्रत्वात् ॥ (३) ॥*॥ चत्वारि **'अम्लवेतसस्य' 'अम्लवेद'** इति ख्यातस्य ॥

**नमस्कारी गण्डकाली समङ्गा खदिरेत्यपि ॥ १४१ ॥**

**नमेति** ॥ नमस्करणशीला । 'सुपि' (३।२।७८) इति णिनिः ॥ (१) ॥*॥ गण्डेषु ग्रन्थिषु काली ॥ (२) ॥*॥ समङ्गति । 'अगि गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) ॥ (३) ॥*॥ खदति । 'खद स्थैर्ये' (भ्वा० प० से०) । 'अजिरशिशिर–' (उ० १।५३) इति साधुः । **'खदिरा** शाकभेदे स्त्री ना चन्द्रे दन्तधावने' (इति मेदिनी) ॥ (४) ॥*॥ चत्वारि **'खदिरायाः' 'हाताजोडी'** इति ख्यातायाः ।—नव **'लजालू'** इति ख्यातस्य—इति मुकुटः ॥

**जीवन्ती जीवनी जीवा जीवनीया मधुः स्रवा ।**

**जीवेति** ॥ जीवति । 'जीव प्राणधारणे' (भ्वा० प० से०) । शता (३।२।१२४) । 'उगितश्च' (४।१।६) इति ङीप् । **'जीवन्ती** जीवनीशम्योर्गुडूचीवन्दयोरपि' (इति मेदिनी) ॥ (१) ॥*॥ जीव्यतेऽनया । 'करणा–' (३।३।११७) इति ल्युट् । युच् (उ० २।३७) वा । **'जीवनी जीवना** चापि जीवन्तीभेदयोः क्रमात्' (इति मेदिनी) ॥ (२) ॥*॥ जीवयति । पचाद्यच् (३।१।१३४) । **'जीवा** जीवन्तिकामौर्वीवचाशिञ्जितभूमिषु । न स्त्री तु जीविते' (इति मेदिनी) ॥ (३) ॥*॥ जीवनाय हिता । 'तस्मै हितम्' (५।१।५) इति छः ॥ (४) ॥*॥ मन्यते । 'मन ज्ञाने' (दि० आ० अ०) । 'फलिपाटि–' (उ० १।१८) इत्युः धश्च । **'मधु** पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति' (इति मेदिनी) ॥ (५) ॥*॥ स्रवति । 'स्रु गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) ॥*॥ **'मधुस्रवा'** इत्येकं नाम—इत्यन्ये ॥ (६) ॥*॥ षट् **'जीवन्तिकायाः'** गुर्जरदेशे **'दोडी'** इति ख्यातायाः ॥

**कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः ॥ १४२ ॥**

**कूर्चेति** ॥ कूर्चं श्मश्रु । तद्वच्छीर्षमस्य ॥ (१) ॥*॥ मधुर एव । स्वार्थे कन् (५।३।७५) । 'स्याद्रस्वाङ्गो मधुरको **मुकुरश्चिरजीवकः'** इति रभसः ॥ (२) ॥*॥ शृणाति । 'शॄ हिंसायाम्' (क्र्या० प० से०) 'शृणातेर्ह्रस्वश्च' (उ० १।१२६) इति गन् नुट् च । **'शृङ्गं** प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके । स्त्री विषायां स्वर्णमीनभेदयोर्ऋषभौषधौ' (इति मेदिनी) ॥ (३) ॥*॥ ह्रस्वान्यङ्गान्यस्याः ॥ (४) ॥*॥ जीवयति । ण्वुल् (३।१।१३३) । **'जीवकः** प्राणके पीतसारकृपणयोरपि । कूर्चशीर्षे च पुंसि स्यादाजीवे **जीविका** मता । त्रिषु सेविनि वृद्ध्याशीर्जीविनोराहितुण्डिके' (इति मेदिनी) ॥ (५) ॥*॥ पञ्च **'अष्टवर्गान्तर्गतजीवकस्य'** इति मुकुटः ॥

**किराततिक्तो भूनिम्बोऽनार्यतिक्तः**

**किरेति** ॥ किरातदेशोऽस्ति जन्मस्थानमस्य 'अर्शआद्यच्' (५।२।१२७) । किरातश्चासौ तिक्तश्च ॥ (१) ॥*॥ भुवो निम्ब इव ॥ (२) ॥*॥ अनार्यप्रियश्चासौ तिक्तश्च । शाकपार्थिवादिः (वा० २।१।७८) ॥ (३) ॥*॥ 'चिरात्तिक्तः' अपि । **'किरातश्चिरात्तिक्तश्च भूनिम्बहिमकावपि'** इति रभसः ॥*॥ त्रीणि **'भूनिम्बस्य' 'चिरायता'** इति ख्यातस्य ॥

**अथ सप्तला ।**

**विमला सातला भूरिफेना चर्मकषेत्यपि ॥ १४३ ॥**

**अथेति** ॥ सप्त लाति । 'आतोऽनुप–' (३।२।३) इति कः । 'अथ **सप्तला** । वनमालाचर्मकषागुञ्जासु पाटलौ स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ विगता मला यया । 'स्याद्विमला स्त्रियाम् । सातलायां भुवो भेदे निर्मले त्वभिधेयवत्' (इति मेदिनी) ॥ (२) ॥*॥ सातं सुखं लाति । 'आतोऽनुप–' (३।२।३) इति कः ॥ (३) ॥*॥ भूरयः फेना यस्याः ॥ (४) ॥*॥ चर्मणः कषा ॥ (५) ॥*॥ पञ्च **'सप्तलायाः' 'सीहुण्ड'** भेदस्य चर्मघासस्य इत्यन्ये ॥

**वायसोली स्वादुरसा वयस्था**

**वायेति** ॥ वायसान् ओलण्डति । 'ओलडि उत्क्षेपणे' (चु० प० से०) । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । शकन्ध्वादिः (वा० ६।१।९४) ॥ (१) ॥*॥ स्वादू रसोऽस्याः ॥ (२) ॥*॥ वयसि स्थीयतेऽनया । 'घञर्थे कः' (वा० ३।३।५८) । **'वयस्था** तु स्त्रियां ब्राह्मीगुडूच्यामलकीषु च । सूक्ष्मैलायां च काकोल्यां पथ्यायां तरुणे त्रिषु' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि **'वयस्थायाः' 'ककोडी'** इति ख्यातायाः ॥

**अथ मकूलकः ।**

**निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि ॥ १४४ ॥**

**अथेति** ॥ मङ्कते । 'मकि मण्डने' (भ्वा० आ० से०) । पिञ्जादिभ्य ऊलच् (उ० ४।९०) । स्वार्थे कन् । आगमशासनस्यानित्यत्वान्न नुम् ॥*॥ पृषोदरादित्वात् (६।३।१०९) उत्वे

'मुकूलकः' अपि-इत्यन्ये ॥ (१) ॥*॥ कुं भूमिं बिभर्ति। 'संज्ञायां भृतृ-' (३।२।४६) इति खच्। 'खच्च डिद्वा' (३।२।३८) नियतः कुम्भः। 'प्रादयो गता-' (२।२।१८) इति समासः। 'निकुम्भः कुम्भकर्णस्य तनये दन्तिकौषधौ' (इति मेदिनी) ॥ (२) ॥*॥ दाम्यति। दम्यते वा। 'दमु उपशमे' (दि० प० से०)। 'हसिमृग्रिण्-' (उ० ३।८६) इति तन्। स्वार्थे कन् (५।३।७५)। 'दन्तोऽद्रिकटके कुञ्जे दशनेऽथौषधौ स्त्रियाम्' (इति मेदिनी) ॥ (३) ॥*॥ प्रत्यक्श्रेण्यस्याः। समासान्तानित्यत्वान्न कप् ॥ (४) ॥*॥ उदुम्बरस्येव पर्णान्यस्याः। 'पाककर्ण-' (४।१।६४) इति ङीष् ॥ (५) ॥*॥ पञ्च 'वज्रदन्त्याः' ॥

**अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका।**

अजेति ॥ अजं मोदयति। 'मुद हर्षे' (भ्वा० आ० से०) ण्यन्तः। 'कर्मण्यण्' (३।२।१)। अजादित्वात् (४।१।४) टाप्। अजेन मोदते मोद्यते, वा। पचाद्यच् (३।१।१३४)। घञ् (३।३।१८) वा ॥ (१) ॥*॥ उग्रो गन्धोऽस्याः। 'उग्रगन्धा वचाक्षेत्रयवान्योश्छिक्किकौषधौ' इति हैमः ॥ (२) ॥*॥ ब्रह्मणा दभ्यते। 'दभि ग्रन्थे' (तु० प० से०)। घञ् (३।३।१९)। 'कर्तृकरणे कृता-' (२।१।३२) इति समासः ॥ (३) ॥*॥ दुष्टो यवः। 'इन्द्रवरुण-' (४।१।४९) इति ङीषानुकौ। इवार्थे (५।३।९६) स्वार्थे (५।३।७५) वा कन् ॥*॥ ('यमानिका' इति) समकारपाठे यमेनानिति। 'अन प्राणने' (अ० प० से०)। ण्वुल् (३।१।१३३) ॥ (४) ॥*॥ 'यवानीद्वयस्य' द्वे द्वे नामनी।—चत्वारः पर्यायाः—इत्येके ॥

**मूले पुष्करकाश्मीरपद्मपत्राणि पौष्करे ॥ १४५ ॥**

मूल इति ॥ पौष्करे मूले, इत्यन्वयः। पुष्णाति, पुष्यति वा 'पुष पुष्टौ' (दि० प० अ०, क्र्या० प० से०)। 'पुषः कित्' (उ० ४।४) इति करन्। 'पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः। ओषधिद्वीपविहगतीर्थरागोरगान्तरे। पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च' (इति विश्वः) ॥ (१) ॥*॥ कश्मीरेषु भवम्। 'तत्र भवः' (४।३।५३) इत्यण् ॥ (२) ॥*॥ पद्मस्येव पत्रमस्य ॥*॥ 'पद्मवर्णम्' इति क्वचित् पाठः ॥ (३) ॥*॥ त्रीणि 'पुष्करमूलस्य' ॥

**अव्यथाऽतिचरा पद्मा चारटी पद्मचारिणी।**

अव्येति ॥ न व्यथते 'व्यथ दुःखसंचलनयोः' (भ्वा० आ० से०)। पचाद्यच् (३।१।१३४)। 'अव्यथो निर्व्यथे सर्पे चारटीपथ्ययोः स्त्रियाम्' (इति विश्वमेदिन्यौ) ॥ (१) ॥*॥ अति चरति। अच् (३।१।१३४) ॥ (२) ॥*॥ पद्यते। 'पद गतौ' (दि० आ० अ०)। 'अर्तिस्तु-' (उ० १।१४०) इति मन् ॥ (३) ॥*॥ चारयति। 'शकादिभ्योऽटन्' (उ० ४।८१) ॥ (४) ॥*॥ पद्मे चरितं शीलमस्याः। 'सुपि-' (३।२।७८) इति णिनिः ॥ (५) ॥*॥ पञ्च 'पद्माकस्य' ॥

**काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि १४६**

केति ॥ कम्पिलाया अदूरभवः। संकाशादित्वात् (४।२।८०) ण्यः ॥*॥ कम्पते। 'कपि किंचिच्चलने' (भ्वा० आ० से०) बाहुलकादिलः। 'प्रज्ञाद्यण्' (५।४।३८)। कं जलं पीलयति श्लेष्मघ्नत्वात्। 'पील प्रतिष्टम्भे' (भ्वा० प० से०)। कंपूर्वात् 'इगुपध-' (३।१।१३५) इति कः। इति मुकुटः। तन्न। ण्यन्तस्येगुपधत्वाभावात्। अण्यन्तादप्यणः प्रसङ्गाच्च। —इत्थं निर्यकारम् ('काम्पिल्लः' इति) मन्यते—इत्येके ॥ (१) ॥*॥ करे कशति। 'कश शब्दे' ( )। पचाद्यच् (३।१।१३४)। अन्तर्भावितण्यर्थो वा। शकन्ध्वादिः (वा० ६।१।९४) ॥ (२) ॥*॥ चन्दति। 'चदि आह्लादने' (भ्वा० प० से०) 'स्फायितञ्चि-' (उ० २।१३) इति रक्। 'चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु' (इति मेदिनी) ॥ (३) ॥*॥ रक्तमङ्गमस्य। 'रक्ताङ्गस्तु महीसुते। कम्पिल्ले स्त्री तु जीवन्त्यां क्लीबं विद्रुमधीरयोः' (इति मेदिनी) ॥ (४) ॥*॥ रोचते। 'रुच दीप्तौ' (भ्वा० आ० से०)। 'कृत्यल्युट-' (३।३।११३) इति ल्युट्। 'रोचनी कर्कशे स्त्रियाम्' (इति मेदिनी) ॥*॥ 'रेचनी' इति क्वचित् पाठः ॥ (५) ॥*॥ पञ्च 'रोचन्याः' 'कपीला' इति ख्यातायाः ॥

**प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः।**
**पद्माट उरणाख्यश्च**

प्रपुन्नेति ॥ पुमांसं नाडयति। 'नड भ्रंशे' चुरादिः। 'कर्मण्यण्' (३।२।१) मस्यानुस्वारे (८।२।२३) परसवर्णः (८।४।५८)। प्रकृष्टः प्रगतो वा पुन्नाडः ॥ (१) ॥*॥ एडो मेष एव गजो यस्य। भञ्जकत्वात्। यद्वा एलनम्। 'इल प्रक्षेपे स्वप्ने च' (तु० प० से०)। घञ् (३।३।१८)। डलयोरेकत्वम्। एडे स्वप्ने गजति। 'गज मदे शब्दे च' (भ्वा० प० से०)। अच् (३।१।१३४) ॥ (२) ॥*॥ दद्रुं हन्ति। 'अमनुष्यकर्तृके च' (३।२।५३) इति टक्। 'अत्पूर्वस्य' (८।४।२२) इति नियमान्न णत्वम्।—क्षुभ्नादित्वात् (८।४।३९)—इति मुकुटस्तु चिन्त्यः ॥ (३) ॥*॥ चक्रं दद्रुं मृद्नाति। 'मृद क्षोदे' (क्र्या० प० से०)। 'कर्मण्यण्' (३।२।१)। स्वार्थे कन् (५।३।७५) ॥ (४) ॥*॥ पद्ममिव पद्मां वा पद्मसमूहं वाऽटति। 'अट गतौ' (भ्वा० प० से०)। अण् (३।२।१) ॥ (५) ॥*॥ उरणस्य मेषस्याख्याऽस्य ॥*॥ उरणस्याक्षीवाक्षि

१—अस्य वार्तिकस्य 'गमेः सुपि' इति प्रकरणपठितत्वेन 'विहंगः' इत्युदाहरणस्यैव भाष्यकृता दत्तत्वेन च गमेरेव विहितस्य खचो डित्त्वेन खच्सामान्यस्य डित्वाग्रहणे मानाभावः। तस्मात्—नि भृशं स्कुभ्नाति विस्तारयति मूलम्। 'स्कुभिः सौत्रो धातुः'। ततोऽच्च् पृषोदरादिः—इति मुकुटोक्तं सम्यक् ॥

१—अत्र 'रूपासिद्धेश्च' इत्यपि पाठः ॥

यस्य। तत्तुल्यपुष्पत्वात् । 'अक्ष्णोऽदर्शनाद्' (५।४।७६) इत्यच्- इति स्वामी ॥ (६) ॥*॥ षट् **'पन्नाटस्य' 'पुआड'** इति ख्यातस्य ॥

**पलाण्डुस्तु सुकन्दकः ॥ १४७ ॥**

**पलेति** ॥ पलति । 'पल रक्षणे' ( भ्वा० प० से० ) बाहुलकाद् आण्डुप्रत्ययः ॥ (१) ॥*॥ शोभनमतीव वा कन्दयति । भक्षकजातिभ्रंशकत्वात् । 'कदि रोदने' ( भ्वा० प० से० ) अच् (३।१।१३४) । स्वार्थे कन् (५।३।७५) । ण्वुल् (३।१।१३३) वा ॥ (२) ॥*॥ द्वे **'पलाण्डोः' 'प्याज'** इति ख्यातस्य ॥

**लतार्कदुर्द्रुमौ तत्र हरिते**

**लतेति** ॥ लतासु अर्क्यते, अर्च्यते विरुद्धलक्षणया निन्द्यते वा । 'अर्क स्तवने' ( भ्वा० प० से० ) । 'अर्च पूजायाम्' ( भ्वा० प० से० ) वा । घञ् (३।३।१९) ॥ (१) ॥*॥ दुष्टो द्रुमः ॥ (२) ॥*॥ तत्र पलाण्डौ । हरिते पालाशे ॥*॥ द्वे **'हरिद्वर्णपलाण्डोः'** ॥

**अथ महौषधम् ।**

**लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ॥ १४८ ॥**

**अथेति** ॥ महच्च तदौषधं च । **'महौषधं** तु शुण्ठ्यां स्याद्विषायां लशुनेऽपि च' ( इति मेदिनी ) ॥ (१) ॥*॥ अश्नाति । अश्नुते वा । 'अश भोजने' ( क्र्या० प० से० ) । 'अशूङ् व्याप्तौ' ( स्वा० आ० से० ) । 'अशेर्लश् च' (उ० ३। ५७) इत्युनन् ॥ (२) ॥*॥ गृञ्जते=भक्ष्यत्वेन कथ्यते रोगेषु । 'गृजि शब्दे' (भ्वा० प० से०) । कर्मणि ल्युट् । **'गृञ्जनम्** । विषदिग्धपशोर्मांसे क्लीबं, पुंसि रसोनके' ( इति मेदिनी ) । 'लशुनं गृञ्जनं चैव पलाण्डुकवकानि च । वृत्ताकारालिकालाबुजातीया जातिदूषितम्' इति । श्वेतकन्दः पलाण्डुविशेषो गृञ्जनम् । 'लशुनं दीर्घपत्रश्च पिच्छगन्धो महौषधम् । फरणश्च पलाण्डुश्च लतार्कश्चापराजिता । गृञ्जनं यवनेष्टश्च पलाण्डोर्दश जातयः' इति सुश्रुतेनोक्तत्वात् । 'गन्धाकृतिरसैस्तुल्यो गृञ्जनस्तु पलाण्डुना । दीर्घनालाग्रपत्रत्वात् भिद्यतेऽसौ पलाण्डुतः' ॥ (३) ॥*॥ न रिष्टमशुभमस्मात् । **'अरिष्टो** लशुने निम्बे फेनिले काककङ्कयोः । **अरिष्ट**मशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च' ( इति मेदिनी ) ॥ (४) ॥*॥ महत् कन्दमस्य ॥ (५) ॥*॥ रसे आस्वादने ऊन्यते पातकहेतुत्वात् । 'ऊन परिहाणे' ( चु० उ० से० ) । 'एरच्' (३।३। ५६) । घञ् (३।३।१९) वा । स्वार्थे कन् (५।३।७५) क्वुन् (उ० २।३२) वा ॥ (६) ॥*॥ षट् **'लशुन'** इति ख्यातस्य ॥

**पुनर्नवा तु शोथघ्नी**

**पुनेति** ॥ पुनरभीक्ष्णं नवा । नूयते वा 'ऋदोरप्' (३। ३।५७) । क्षुभ्नादिः (८।४।३९) ॥ (१) ॥*॥ शोथं हन्ति । 'अमनुष्य-' (३।२।५३) इति टक् । 'टिड्ढा-' (४।१।१५) इति ङीप् ॥ (२) ॥*॥ द्वे **'पुनर्नवायाः' 'गदहपूर्णा'** इति ख्यातायाः ॥

**वितुन्नं सुनिषण्णकम् ।**

**वीति** ॥ विगतं तुन्नं व्यथनमस्मात् । **'वितुन्नं** सुनिषण्णे च शैवाले च नपुंसकम्' (इति मेदिनी) ॥ (१) ॥*॥ सुष्ठु निषण्णमस्मात् ॥ (२) ॥*॥ द्वे **'वितुन्नस्य' 'विषखपरिआ'** इति ख्यातस्य ॥

**स्याद्वातकः शीतलोऽपराजिता शणपर्ण्यपि ॥१४९॥**

**स्यादिति** ॥ वातं करोति 'अन्येभ्योऽपि-' (वा० ३।२। १०१) इति डः ॥ (१) ॥*॥ शीतं लाति । 'आतोऽनुप-' (३।२।३) इति कः ॥*॥ 'शीतलवातकः' इत्यपि नाम । 'शणपर्णी **शीतलवातकः'** इति धन्वन्तरिः ॥ (२) ॥*॥ न पराजिता । **'अपराजित** ईशाज्येष्वन्तरे नाऽजिते त्रिषु । गिरिकर्णी जयादुर्गाऽशणपर्णीषु योषिति' (इति मेदिनी) ॥ (३) ॥*॥ शणः पर्णान्यस्याः । शणशब्दः शणपर्णसदृशे लाक्षणिकः 'पाककर्ण-' (४।१।६४) इति ङीष् ॥*॥—अशन इव पर्णमस्याः । **(अशनपर्णी)**-इति कश्चित् ॥ (४) ॥*॥ चत्वारि **'शतपर्ण्याः' 'पटशण'** इति ख्यातस्य ॥

**पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ।**

**पारेति** ॥ पारावत इवाङ्घ्रिरस्याः ॥ (१) ॥*॥ कटवद्भाति । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । गौरादिः (४।१।४१) ॥ (२) ॥*॥ पण्यते । 'पण व्यवहारे' ( भ्वा० आ० से० ) । 'अवद्यपण्य-' (३।१।१०१) इति साधुः ॥ (३) ॥*॥ ज्योतिरस्त्यस्याः । मतुप् (५।२।९४) ॥ (४) ॥*॥ लतति । 'लतिः सौत्रः' । अच् (३।१।१३४) ॥ (५) ॥*॥ पञ्च **'ज्योतिष्मत्याः' 'मालकांगणी'** इति ख्यातायाः ॥

**वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका ॥ १५० ॥**

**वेति** ॥ वर्षासु भवं जातं वा । 'वर्षाभ्यष्ठक्' (४।३। १८) । **'वार्षिकं** त्रायमाणायां क्लीबं वर्षाभवे त्रिषु' (इति मेदिनी) ॥ (१) ॥*॥ त्रायते । 'त्रैङ् पालने' (भ्वा० आ० अ०) । शानच् (३।२।१२४) चानश् (३।२।१२९) वा । (**'त्रायमाणा** वार्षिके स्त्री रक्ष्यमाणेऽभिधेयवत्' इति मेदिनी) ॥ (२) ॥*॥ त्राणम् । त्राः । संपदादिः (वा० ३।३।१०८) त्रा अयति । 'इ गतौ' ( भ्वा० प० से० ) । शता (३।२। १२४) । (ङीप् ४।१।६) । 'शप्श्यनोः-' (७।१।८१) इति नुम् ) ॥ (३) ॥*॥ बलेन भद्रा । स्वार्थे कन् (५।३।७५) ॥ (४) ॥*॥ चत्वारि **'त्रायमाण'** इति ख्यातस्य ॥

**विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेति च ।**

**वीति** ॥ विष्वक्सेनस्य प्रिया ॥ (१) ॥*॥ गृह्णाति ।

क्विन् (३।३।१७४) । पृषोदरादिः (६।३।१०९) । यत्तु—'गर्षति हिनस्ति रोगम्' 'गृषु हिंसायाम्' क्तिन् (३।३।९४)—इति व्याख्यातं मुकुटेन । तन्न । उक्तधातोरदर्शनात् । कर्तरि क्तिनोऽसंभवाच्च । 'अथ **गृष्टिः** सकृत्सूतगवीबदरयोः स्त्रियाम्' (इति मेदिनी) ॥*॥ 'घृष्टिः' इति पाठान्तरम् । घर्षति । 'घृषु संघर्षे' (भ्वा० प० से०) । क्तिच् (३।३।१७४) । '**घृष्टिः** स्त्री घर्षणस्पर्धाविष्णुक्रान्तासु ना किरौ' (इति मेदिनी) ॥ (२) ॥*॥ वराहस्येयम् । प्रियत्वात् । 'तस्येदम्' (४।३।१२०) इत्यण् '**वाराही** मातृभेदे स्याद्विष्वक्सेनप्रियौषधौ' (इति मेदिनी) ॥ (३) ॥*॥ बदति । 'बद स्थैर्ये' (भ्वा० प० से०) । बाहुलकादरन् । '**ब (व) दरा** गृष्टिकार्पास्योरेलापर्ण्यां स्त्रियां, पुमान् । कर्पासस्यास्थि, **बदरी** कोले क्लीबं तु तत्फले' (इति मेदिनी) ॥ (४) ॥*॥ चत्वारि '**वाराहीकन्द**' इति ख्यातायाः ॥

**मार्कवो भृङ्गराजः स्यात्**

**मार्केति** ॥ मारयति । क्विप् (३।२।१७८) । मारि केशशौक्ल्यनाशने कूयते । 'कुङ् शब्दे' (भ्वा० आ० अ०) । 'ऋदोरप्' (३।३।५७) ॥ (१) ॥*॥ भृङ्ग इव राजते । 'राजृ दीप्तौ' (भ्वा० उ० से०) । अच् (३।१।१३४) । ('अथ **भृङ्गराज** उक्तः पक्षिविशेषे च मार्कवे भ्रमरे' (इति मेदिनी) । 'भृङ्गरजः' इति पाठे भृङ्ग इव रजोऽस्य । सान्तोऽदन्तोऽपि । रजशब्दस्य द्वैविध्यात् । 'स्यान्मार्कवो **भृङ्गरजः** भृङ्गराजः सुजागरः' इति रभसात् ॥ (२) ॥*॥ द्वे '**भृङ्गराज**' इति ख्यातस्य ॥

**काकमाची तु वायसी ॥ १५१ ॥**

**काकेति** ॥ काकान् मञ्चते । 'मचि धारणोच्छ्रायपूजनेषु' (भ्वा० आ० से०) । 'कर्मण्यण्' (३।२।१) । आगमशास्त्रस्यानित्यत्वान्न नुम् ॥ (१) ॥*॥ वायसानामियम् । 'तस्येदम्' (४।३।१२०) इत्यण् । 'काकोदुम्बरिकायां च काकमाच्यां च **वायसी**' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**काकमाच्याः**' '**कवप्रिया**' इति ख्यातायाः ॥

**शतपुष्पा सितच्छत्राऽतिच्छत्रा मधुरा मिसिः ।**
**अवाक्पुष्पी कारवी च**

**शतेति** ॥ शतं पुष्पाण्यस्याः । 'सदच्काण्ड–' (ग० ४।१।४) इति टाप् ॥ (१) ॥*॥ सितं बद्धं शुभ्रं वा छत्रमस्याः ॥ (२) ॥*॥ छत्रमतिक्रान्ता । 'अत्यादयः–' (वा० २।२।१८) इति समासः ॥ (३) ॥*॥ मधुरस्त्यस्याः । 'ऊषशुषि–' (५।२।१०७) इति रः । '**मधुरा** शतपुष्पायां मिश्रेयानगरीभिदोः' (इति मेदिनी) ॥ (४) ॥*॥ मस्यति । 'मसी परिणामे' (दि० प० से०) । इन् (उ० ४।११८) । पृषोदरादिः (६।३।१०९) । '**मिसिः** स्त्री मधुरामांस्योः शतपुष्पाजमोदयोः' (इति मेदिनी) ॥ (५) ॥*॥ अवाञ्चि पुष्पाण्यस्याः । गौरादित्वात् (४।१।४१) ङीष् । यत्तु—'पाककर्ण–' (४।१।६४) इति ङीष्—इत्याह मुकुटः । तन्न । 'सदच्काण्ड–' (ग० ४।१।४) (वा० ६४) इत्यस्य तदपवादत्वात् ॥ (६) ॥*॥ के आरौति । पचाद्यच् । यत्तु मुकुट आह—कारोरियम् कारवी इति । तन्न । 'वृद्धाच्छः' (४।२।११४) इत्यस्याणपवादत्वात् । '**कारवी** मधुरादीप्यत्वक्पत्रीकृष्णजीरके' इति मेदिनी ॥ (७) ॥*॥ सप्त '**मधुरायाः**' '**सौंफ**' इति ख्यातायाः । अन्त्यद्वयम् '**उंधावली**' इति ख्यातायाः—इत्येके ॥

**सरणा तु प्रसारिणी ॥ १५२ ॥**
**तस्यां कटंभरा राजबला भद्रबलेति च ।**

**सरेति** ॥ सरति । 'सृ गतौ' (भ्वा० प० अ०) । 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् ॥*॥ ल्युटि (३।३।११३) 'सरणी' इत्यपि । 'सरणा **सरणी** चार्वी कटंभरा **महाबला**' इति रुद्रः ॥ (१) ॥*॥ प्रसार्यतेऽङ्गमनया । 'करणा–' (३।३।११३) इति ल्युट् ॥*॥ 'सारणी' इत्यपि । ('**सारणो** राक्षसान्तरे') । रुग्भेदे ना, प्रसारण्यां स्वल्पनद्यां च **सारिणी**' (इति मेदिनी) ॥ (२) ॥*॥ कटं बिभर्ति । 'संज्ञायां भृतृ–' (३।२।४६) इति खच् ॥ (३) ॥*॥ बलानां बलप्रदानां राजेव । राजदन्तादिः (२।२।३१) ॥ (४) ॥*॥ भद्रं बलमस्याः ॥ (५) ॥ ॥*॥ पञ्च '**कुब्जप्रसारिणी**' इति ख्यातायाः ॥

**जनी जतूका रजनी जतुकृच्चक्रवर्तिनी ॥ १५३ ॥**
**संस्पर्शा**

**जनीति** ॥ जायते आरोग्यमनया । 'जनिघसिभ्यामिण्' (उ० ४।१३०) । 'जनिवध्योश्च' (७।३।३५) इति न वृद्धिः । 'कृदि–' (ग० ४।१।४५) इति वा ङीष् । '**जनी** सीमन्तिनीवध्वोरुत्पत्तावोषधीभिदि' (इति मेदिनी) ॥ (१) ॥*॥ जायते । 'जनी' (दि० आ० से०) । 'उलूकादयश्च' (उ० ४।४१) इति साधुः ॥*॥ जतुशब्दात् 'संज्ञायां–' (५।३।७५) इति कनि '**जतुका**' च ॥ (२) ॥*॥ रज्यतेऽनया । 'रञ्ज रागे' (भ्वा० उ० अ०) । 'करणा–' (३।३।११७) इति ल्युट् ।–'ल्यजरज–' (३।२।१४२) इति निपातनात् क्वचिद-

---

१—इदं च 'घिनुणि च' । घिनुणि चोपसंख्यानं कर्तव्यम् । रागी । घिणुनि निपातनात्सिद्धम् । किं निपातनम् । '–त्यजरज–' (३।२।१४२) इति । अशक्यं धातुनिर्देशे निपातनत्वमाश्रयितुम् । इह हि दोषः स्यात् । '–दशनदंशः करणे' (३।२।१८२) । दंष्ट्रा । नैतद्धातुनिपातनम् । किं तर्हि प्रत्ययान्तस्यैतद्रूपम् । तस्मिंश्च प्रत्यये लोपो भवति' इति भाष्येण प्रत्ययान्तस्येति । शबन्तस्येत्यर्थः । यङ्लुङ्निवृत्त्यर्थश्च तत्र शब्निर्देशः । यङ्लुडन्ताद्रञ्जेर्न भवति' इति कैयटेन च विरुद्धम् । तस्मात् 'रञ्जेः क्युन्' (उ० २।७९) इति क्युनि कित्वान्न लोपः । गौरादित्वात् (४।१।४१) ङीष् इति बोध्यम् ॥

ङिप्यपि नलोपः । 'रजनी नीलिनीरात्रिहरिद्राजतुकासु च' (इति मेदिनी) ॥ (३) ॥*॥ जतु करोति । क्विप् (३।२।१७८) ॥ (४) ॥*॥ चक्रं चक्रमिव वा वर्तितुं शीलमस्याः । 'सुपि–' (३।२।७८) इति णिनिः ॥ (५) ॥*॥ सम्यक् स्पृशति स्पृश्यते वा । 'स्पृश सर्शने' ( तु० प० से० )। 'पदरुज–' (३।३।१६) इति घञ् । पचाद्यच् (३।१।१३४) वा । कर्मणि घञ् (३।३।१९) वा ॥ (६) ॥*॥ षट् 'चक्रवर्तिन्याः' 'चकवत' इति ख्यातस्य ॥

**अथ शटी गन्धमूली शङ्ग्रन्थिकेत्यपि ।**
**कर्चूरोऽपि पलाशः**

**अथेति** ॥ शटति । 'शट रुजादौ' ( भ्वा० प० से० )। अच् (३।१।१३३) गौरादिः (४।१।४१) ॥ (१) ॥*॥ गन्धं मूलमस्याः ॥ (२) ॥*॥ षड् बहवो ग्रन्थयोऽस्याः ॥ (३) ॥*॥ कर्चति 'कर्च गतौ' (   )। खर्जादित्वात् (उ० ४।९०) ऊरः । '**कर्चूरः** स्यात् पुमाञ्शठ्यां सुवर्णे तु नपुंसकम्' (इति मेदिनी) ॥*॥ '**कर्बुरः**' अपि ॥ (४) ॥* पलमश्नाति । 'अश भोजने' ( क्र्या० प० से० ) । 'कर्मण्यण्' (३।२।१) पले मांसे आशा यस्य वा । '**पलाशः** किंशुकः शटी । हरिद्वर्णो राक्षसश्च पलाशं छदने मतम्' इति हैमः ॥ (५) ॥*॥ पञ्च '**शट्याः**' '**कचूर**' इति ख्यातस्य ॥

**अथ कारवेल्लः कठिल्लकः ॥ १५४ ॥**
**सुषवी च**

**अथेति** ॥ '**कारो** वधे निश्चये च वलौ यत्ने यतावपि । (तुषारशैलेऽपि पुमान् स्त्रियां दूत्यां प्रसेवके । सुकर्णकारिकायां च बन्धनागारबन्धयोः)' (इति मेदिनी) । कारं वेल्लति । 'वेल्ल चलने' ( भ्वा० प० से० ) । 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ कटति । 'कटे वर्षावरणयोः' ( भ्वा० प० से० )। बाहुलकादिल्लः ॥*॥ कठति । 'कठ शोके' (भ्वा० प० से० )। अस्मादिल्लः, इत्यन्ये । स्वार्थे कन् (५।३।७५) । '**कठिल्लकस्तु** पर्णासे वर्षाभूकारवेल्लयोः' इति विश्वमेदिनीन्यौ ॥ (२) ॥*॥ सुसुवति । 'षू प्रेरणे' ( तु० प० से० ) । अच् (३।१।१३४) । 'उपसर्गात्सुनोति–' (८।३।६५) इति षः । गौरादिः (४।१।४१) '**सुषवी** कृष्णजीरके । कारवेल्ले च जीरे च' इति हैमः ॥ (३) ॥*॥ त्रीणि '**कारवेल्लस्य**' '**करेला**' इति ख्यातस्य ॥

**अथ कुलकं पटोलस्तिक्तकः पटुः ।**

**अथेति** ॥ कोलति । 'कुल संस्त्याने' (भ्वा० प० से०) । 'इगुपध–' (३।१।१३५) इति कः । स्वार्थे कन् कुन् (उ० २।३२) वा । '**कुलकं** तु पटोले स्यात्संबद्धश्लोकसंहतौ । पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते' (इति मेदिनी) ॥ (१) ॥*॥ पटति । 'पट गतौ' ( भ्वा० प० से० ) । अन्तर्भावितण्यर्थो वा । 'कपिगडिगण्डि–' (उ० १।६६) इत्योलच् । '**पटोलं** वस्त्रभेदे, नौषधौ ज्यौत्स्न्यां तु योषिति' (इति मेदिनी) ॥ (२) ॥*॥ तिक्त एव । स्वार्थे कन् (५।३।७५) ॥ (३) ॥*॥ पाटयति । 'पट गतौ' ( भ्वा० प० से० ) । 'फलिपाटि–' (उ० १।१८) इत्युः पटिरादेशश्च । '**पटुर्दक्षे** च नीरोगे चतुरेऽप्यभिधेयवत् । पटोले तु पुमान् क्लीबे छत्रालवणयोरपि' (इति मेदिनी) ॥ (४) ॥*॥ चत्वारि '**पटोलस्य**' '**परवर**' इति ख्यातस्य ॥

**कूष्माण्डकस्तु कर्कारुः**

**किति** ॥ कु ईषद् ऊष्मा अण्डेषु बीजेषु यस्य । पित्तलत्वात् । 'कूष्माण्ड्युमायां स्त्री, पुंसि कर्कारौ च गणान्तरे । भ्रूणान्तरे' (इति मेदिनी) ॥ (१) ॥*॥ कर्कं शुक्लवर्णमृच्छति । 'ऋ गतौ' ( भ्वा० प० अ० ) । बाहुलकादुण् ॥ (२) ॥*॥ द्वे '**कूष्माण्डस्य**' ॥

**ईर्वारुः कर्कटी स्त्रियौ ॥ १५५ ॥**

**ईर्वेति** ॥ ईरणं 'ईर गतौ' ( अ० आ० से० ) । संपदादिः (वा० ३।३।१०८) । ईरं वृणोति, वारयति वा । 'वृञ् वरणे' ( स्वा० उ० से० ) । बाहुलकादुण् । 'तुर्यस्वरादिर्' '**ईर्वारुः** कर्कट्यां पठ्यते बुधैः' ॥*॥ ह्रस्वादिरपि । 'उन्मत्तो (?) धुस्तुर **इर्वारुः** कर्कटिः स्यात्' इति पुंस्काण्डे रत्नकोषात् ॥*॥ '**पर्वारुः**' इति पाठे आङ् बोध्यः ॥*॥ ('उर्वारुकमिव बन्धनात्' इति श्रुतेः पृषोदरादित्वेनादेरुत्वे '**उर्वारुः**' इति च) ॥ (१) ॥*॥ करं कटति । 'कटे वर्षादौ' ( भ्वा० प० से० ) । इन् (उ० ४।११८) । शकन्ध्वादिः (वा० ६।१।९४) । ङीष् (वा० ४।१।४१) वा ॥ (२) ॥*॥ द्वे '**काकडी**' इति ख्यातायाः ॥

**इक्ष्वाकुः कटुतुम्बी स्यात्**

**ईति** ॥ इक्षुमाकरोति । मितद्र्वादित्वात् (वा० ३।२।१८०) डुः । यद्वा छिकायां जातम् 'इक्षु' इति शब्दमकति । 'अक गतौ' ( भ्वा० प० से० ) । बाहुलकादुण् । '**इक्ष्वाकुः** कटुतुम्ब्यां स्त्री सूर्यवंशनृपे पुमान्' ( इति मेदिनी ) ॥ (१) ॥*॥ कटुश्चासौ तुम्बी च ॥ (२) ॥*॥ द्वे '**कटुतुम्ब्याः**' ॥

**तुम्ब्यलाबूरुभे समे ।**

**त्विति** ॥ तुम्बति रुचिम् । 'तुबि अर्दने' ( भ्वा० प० से० ) । अच् (३।१।१३४) । गौरादिः (४।१।४१) । इन् (उ० ४।११८) वा । 'कृत्–' (उ० ४।१।४५) इति वा ङीष् ॥ (१) ॥*॥ न लम्बते । 'लबि अवस्रंसने' ( भ्वा० आ० से० ) । 'नञि लम्बेर्नलोपश्च' (उ० १।८७) इत्यूर्णित् ।

१—प्रथमोपात्तचरणस्तु विश्वे संभवति । चरमोपात्तचरणस्तु मेदिन्यामुपलभ्यते । हैमे तु मध्यस्थोऽपि नोपलभ्यते ॥

'अलाम्बुस्तु **पिण्डफला तुम्बिस्तुम्बी महाफला । तुम्बा** तु वर्तुलाऽलाबूनि(र्नि)म्बचूर्णा तु लाबुका' इति वाचस्पतिः । 'अलाबूस्**तुम्बकः** प्रोक्तः' इति चन्द्रः ॥ (२) ॥*॥ द्वे **'तुम्बा'** इति ख्यातायाः ॥

**चित्रा गवाक्षी गोडुबा**

**चित्रेति** ॥ चीयते । 'चिञ् चयने' ( स्वा० उ० अ० ) । 'अमिचि-' (उ० ४।१६४) इति क्तः । **'चित्रा**खुपर्णी गोडुम्बासुभद्रादन्तिकासु च । मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ गां भूमिमक्ष्णोति । 'अक्षू व्याप्तौ' ( भ्वा० प० से० ) । 'कर्मण्यण्' (३।२।१) । **'गवाक्षी** त्विन्द्रवारुण्यां **गवाक्षो** जालके कपौ' इति हैमः ॥ (२) ॥*॥ गां भुवं तुम्बति । 'तुबि अर्दने' ( भ्वा० प० से० ) । मूलविभुजादिकः (वा० ३।२।५) । टाप् (४।१।४) । पृषोदरादिः (६।३।१०९) । मुकुटस्तु—गां डुम्बयति । 'डुबि अर्दने' अण् (३।२।१)—इत्याह । तन्न । धातुपाठेषु डुबिधातोरदर्शनात् । अणि ङीप्प्रसङ्गाच्च ॥ (३) ॥*॥ त्रीणि **'कर्कटीविशेषस्य'** ॥

**विशाला त्विन्द्रवारुणी ॥ १५६ ॥**

**विशेति** ॥ वि शलति । 'शल चलने' ( भ्वा० प० से० ) । 'ज्वलति-' (३।१।१४०) इति णः । टाप् (४।१।४) विशति वा । अत्र वा । 'विश प्रवेशने' ( तु० प० से० ) । 'तमिविशिविडि-' (उ० १।११८) इति कालन् । 'विशाला त्विन्द्रवारुण्यामुज्जयिन्यां तु योषिति । नृपवृक्षभिदोः पुंसि पृथुलेऽप्यभिधेयवत्' (इति मेदिनी) ॥ (१) ॥*॥ इन्द्रं वारयति । 'वृञ् वरणे' चुरादिः । 'कृवृदारि-' (उ० ३।५३) इति बाहुलकाद् ण्यन्तादप्युनन् । यत्तु मुकुटः—इन्द्रवरुणौ देवते अस्याः । अण् (४।२।२४) । 'उत्तरपदस्य च' (७।३।१०) इत्युत्तरपदवृद्धिः—इत्याह । तन्न । मन्त्रहविषोरेव स्वामिनि देवतात्वव्यवहारात् । 'उत्तरपदस्य च' (७।३।१०) इत्यस्याधिकारत्वेन वृद्धिविधायकत्वाभावाच्च ॥ (२) ॥*॥ द्वे **'इन्द्रवारुणी'** इति ख्यातायाः ॥

**अर्शोघ्नः शूरणः कन्दः**

**अर्शविति** ॥ अर्शांसि हन्ति । 'अमनुष्य-' (३।२।५३) इति टक् ॥ (१) ॥*॥ शूर्यते । 'शूरी हिंसायाम्' ( दि० आ० से० ) । 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् । कर्तरि ल्युट् (३।३।११३) वा । यत्तु-शूरति—इति विगृहीतं मुकुटेन । तन्न । शूरीधातोर्दिवाद्यात्मनेपदित्वात् ॥*॥ सूर्यते । 'सूरी हिंसायाम्' । युच् (उ० २।७८) । ल्युट् (३।१।११३) वा । इति (**सूरणः**) दन्त्यादिरपि ॥ (२) ॥*॥ कन्दति । कन्दयति । कन्द्यते वा । अच् (३।१।१३४) । घञ् (३।३।१९) वा । **'कन्दो**ऽस्त्री सूरणे सस्यमूले जलधरे पुमान्' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि **'सूरण'** इति ख्यातस्य ॥

**गण्डीरस्तु समष्ठिला ।**

**गण्डीति** ॥ गण्डति, गण्ड्यते, वा । 'गडि वदनैकदेशे' ( भ्वा० प० से० ) । बाहुलकादीरन् । यद्वा गण्डीन् ग्रन्थीनीरयति । 'ईर प्रेरणे' ( अ० आ० से० ) 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ समे तिष्ठति । 'मिथिलादयश्च' (उ० १।५७) इति साधुः । यद्वा सम्यगष्ठिला बीजं यस्याः । 'गण्डीरो ना समष्ठिला' इति माला ॥ (२) ॥*॥ द्वे **'गाण्डरदूवी'** इति ख्यातस्यानूपजशाकभेदस्य । **'गडिनी'** इति भाषा ॥

**कलम्बी**

**केति** ॥ कडति । 'कड मदे' ( भ्वा० प० से० ) । 'कृकदिकडिकटिभ्योऽम्बच्' (उ० ४।८२) । डलयोरेकत्वम् । के जले लम्बते । 'लबि अवस्रंसने' ( भ्वा० आ० से० ) । पचाद्यच् (३।१।१३४) । गौरादिः (४।१।४१) । 'कलम्बी तु शतपर्वा कलम्बूर्वासु वीरुधः' इति वाचस्पतिः । **'कलम्बी** शाकभेदेऽपि कदम्बशरयोः पुमान्' (इति मेदिनी) ॥ (१) ॥*॥ एकं **'करेम्बु'** इति ख्यातस्य ॥

**उपोदका**

**उपेति** ॥ उपाधिकमुदकमस्याम् । '—उत्तरपदस्य च' (वा० ६।३।५७) इत्युदः । कप् (५।४।१५४) । टाप् (४।१।४) ॥*॥—अपगतोदका । जाङ्गलत्वात् । **'अपोदका'**—इति स्वामी ॥ (१) ॥*॥ एकम् **'पोई'** इति ख्यातस्य ॥

**अस्त्री तु मूलकं**

मूलति ॥ 'मूल प्रतिष्ठायाम्' ( भ्वा० प० से० ) । क्वुन् (उ० २।३२) । यद्वा मूलयति । 'मूल रोहणे' चुरादिः । अच् (३।१।१३४) । 'संज्ञायां कन्' (५।३।७५) ॥ (१) ॥*॥ एकम् **'मूली'** इति ख्यातस्य ॥

**हिलमोचिका ॥ १५७ ॥**

**हिलेति** ॥ हिलति । 'हिल भावकरणे' (तु० प० से०) । 'इगुपध-' (३।१।१३५) इति कः । मोचयति । ण्वुल् (३।१।१३३) । हिला चासौ मोचिका च । 'ङ्यापोः-' (६।३।६३) इति ह्रस्वः ॥ (१) ॥*॥ एकम् **'हिलसाल'** इति ख्यातस्य ॥

**वास्तुकम्**

**वेति** ॥ वसति देहे । चिरं गुणा वाऽस्मिन् वसन्ति । 'वस निवासे' ( भ्वा० प० अ० ) । 'उल्कादयश्च' (उ० ४।४१) इति साधु ॥*॥ वास्तौ भवम् । अध्यात्मादिठञ् (वा० ४।३।६०) । 'इसुसुक्-' (७।३।५१) इति कः । एवं (**वास्तुकम्**) ह्रस्वमध्यमपि ॥ (१) ॥*॥ एकं **'वथुवा'** इति ख्यातस्य ॥

१—'रम्या वास्तववास्तुकस्तबकिता' इति प्रयोगात्—इति मुकुटः ॥

**शाकभेदाः स्युः**

**शाकेति** ॥ कलम्ब्याद्याः पञ्च शाकभेदाः स्युः। 'शाकाख्यं पत्रपुष्पादि' इत्यत आरभ्य च। 'मण्डूकपर्णी पालङ्क्या चिल्लिका चाप्युपोदिका। चाङ्गेरी हिलमोचा च कलम्बी शाकजातयः' इति माला ॥

**दूर्वा तु शतपर्विका।**
**सहस्रवीर्याभार्गव्यौ रुहानन्ता**

**दूर्वेति** ॥ दूर्वति, दूर्व्यते वा। 'दूर्वी हिंसायाम्' ( भ्वा० प० से० )। अच् (३।१।१३४)। घञ् (३।३।१९) वा। 'उपधायां च' (८।२।७८) इति दीर्घः ॥ (१) ॥*॥ शतं पर्वाण्यस्याः। 'शेषात्' (५।४।१५४) इति कप्। शतं पर्वति। 'पर्व पूरणे' (भ्वा० प० से०)। ण्वुल् (३।१।१३३)। '**शतपर्विका** तु दूर्वायां वचायामपि योषिति' (इति मेदिनी) ॥ (२) ॥*॥ सहस्रं वीर्याण्यस्याः ॥ (३) ॥*॥ भृगोरियम्। '**भार्गवी** पार्वतीश्रियोः। दूर्वायाम्' (इति मेदिनी) ॥ (४) ॥*॥ छिन्नापि रोहति। 'इगुपध-' (३।१।१३५) इति कः ॥ (५) ॥*॥ न अन्तो यस्याः। '**अनन्ता** च विशल्यायां शारिवादूर्वयोरपि। कणादुरालभापथ्यापार्वत्यामलकीषु च। विश्वंभरागुडूच्योः स्यादनन्तं सुरवर्त्मनि। **अनन्तः** केशवे शेषे पुमान्निरवधौ त्रिषु' (इति मेदिनी) ॥ (६) ॥*॥ षट् '**दूर्वायाः**' ॥

**अथ सा सिता ॥ १५८ ॥**
**गोलोमी शतवीर्या च गण्डाली शकुलाक्षकः।**

**अथेति** ॥ सा दूर्वा। सिता शुक्ला। गोलोमसु जाता। 'तत्र जातः' (४।३।२५) इत्यण्। संज्ञापूर्वकत्वान्न वृद्धिः। '**गोलोमी** श्वेतदूर्वायां स्याद्वचाभूतकेशयोः' ( इति मेदिनी ) ॥ (१) ॥*॥ शतं वीर्याण्यस्याः ॥ (२) ॥*॥ गण्डति। 'गडि वदनैकदेशे' ( भ्वा० प० से० )। बाहुलकादालच्। गण्डमलति वा। 'कर्मण्यण्' (३।२।१)। 'टिड्ढा-' (४।१।१५) इति ङीप्। गौरादिः (४।१।४१) वा ॥ (३) ॥*॥ शकुलस्य मत्स्यस्येवाक्षि यस्य। 'अक्ष्णोऽदर्शनात्' (५।४।७६) इत्यच्। स्वार्थे कन् (५।३।७५) ॥ (४) ॥*॥ चत्वारि '**शुक्लदूर्वायाः**'। स्वामी तु—परे द्वे दूर्वाभेदस्य—इत्याह ॥

**कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम् ॥१५९॥**

**कुर्विति** ॥ कुरून् विन्दति। 'विदॢ लाभे' ( तु० उ० अ० )। 'अनुपसर्गाल्लिम्प०' (३।१।१३८) इति शः। '**कुरुविन्दं** रत्नभेदे मुस्ताकुल्माषयोः पुमान्' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ मेघनामानि नामान्यस्य ॥ (२) ॥*॥ मुस्तयति। 'मुस्त संघाते' चुरादिः। अच् (३।१।१३४) ॥ (३) ॥*॥ ण्वुल् (३।१।१३३) ॥ (४) ॥*॥ चत्वारि '**मुस्तायाः**' '**मोथा**' इति ख्यातायाः ॥

**स्याद्भद्रमुस्तको गुन्द्रा**

**स्यादिति** ॥ भन्दते। 'भदि कल्याणे' ( भ्वा० आ० से० ) 'ऋज्रेन्द्र-' (उ० २।१८) इति साधुः। भद्रं करोति वा। 'तत्करोति' (वा० ३।१।२६) इति ण्यन्तादच् (३।१।१३४)। भद्रश्चासौ मुस्तकश्च ॥*॥ 'भद्रम्' अपि नाम। '**भद्रं** स्यान्मङ्गले हेम्नि मुस्तके करणान्तरे' इति रुद्रः ॥ (१) ॥*॥ गां जलं द्राति। 'द्रा गतौ' ( अ० प० अ० ) 'आतोऽनुप-'(३।२।३) इति कः। पृषोदरादिः (६।३।१०९)। '**गुन्द्र**-स्तेजनके स्त्री तु प्रियंगौ भद्रमुस्तके' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**नागरमोथा**' इति ख्यातस्य ॥

**चूडाला चक्रलोच्चटा।**

**चूडेति** ॥ चूडास्त्यस्याः। 'प्राणिस्थादातो लजन्यतरस्याम्' (५।२।९६)। '**चूडाला** तूच्चटायां स्त्री चूडावति च वाच्यवत्' ( इति मेदिनी) ॥ (१) ॥*॥ चक्रं लाति। 'आतोऽनुप-' (३।२।३) इति कः ॥ (२) ॥*॥ उच्चटति। 'चट गतौ' ( भ्वा० प० से० ) अन्तर्भावितण्यर्थः। अच् (३।१।१३४) ॥ (३) ॥*॥ त्रीणि '**मुस्ताविशेषस्य**' ॥

**वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः ॥ १६० ॥**
**शतपर्वा यवफलो वेणुमस्करतेजनाः।**

**वंशे इति** ॥—वमति। 'टुवम उद्गिरणे' ( भ्वा० प० से० ) 'वृभृवमिकुभ्यः शक्'—इति मुकुटः। तन्न। उक्तसूत्रस्योज्ज्वलदत्तादिवृत्तिष्वदर्शनात्। अनुनासिकलोपस्य (६।४।३७) उपधादीर्घस्य (६।४।१५) च प्रसङ्गाच्च। कुशभृशयोर्धात्वन्तरेण सिद्धत्वाच्च। वनति, वन्यते, वा। 'वन शब्दे' ( भ्वा० प० से० )। बाहुलकाच् शः। उश्यते, वष्टि, वा। 'वश कान्तौ' ( अ० प० से० ) घञ् (३।३।१९)। संज्ञापूर्वकत्वान्न वृद्धिः। अच् (३।१।१३४)। 'संख्या वंश्येन' (२।१।१९) इति निर्देशान्नुम्। '**वंशो** वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च' (इति विश्वः) ॥ (१) ॥*॥ त्वक् त्वचि वा सारोऽस्य ॥ (२) ॥*॥ कर्म क्रियामृच्छति। 'कर्मण्यण्' (३।२।१) ॥ (३) ॥*॥ 'हलदन्तात्-' (६।३।९) इति वा लुक् ॥ (४) ॥*॥ तृणेषु ध्वज इव ॥ (५) ॥*॥ शतं पर्वाण्यस्य ॥ (६) ॥*॥ यव इव फलान्यस्य। '**यवफलो** मांसिकायां कुटजत्वचिसारयोः' इति हैमः ॥ (७) ॥*॥ वेणति। 'वेणृ निशामनवादित्रादानगमनज्ञानचिन्तासु' ( भ्वा० उ० से० )। बाहुलकादुः। यद्वा अजति 'अजिवृरीभ्यो निच्च' (उ० ३।३८) इति णुः। 'अजेर्वी-' (२।४।५६)।—वयन्ति शोभन्ते ह्यनेन। 'वी' धातोः 'धेन्वादयश्च' इति नुः, णत्वं च—इति सुभूतिः। तन्न उक्तसूत्राभावात्। 'वी' धातोरादादिकत्वेन 'वयन्ति' इति रूपाभावाच्च। '**वेणुर्नृ**पान्तरे। त्वक्सारेऽपि च पुंसि स्यात्' (इति मेदिनी) ॥ (८) ॥*॥ मस्कते, अनेन वा। 'मस्क गतौ' ( भ्वा० आ० से० )। बाहुलकादरः। यद्वा-

मङ्क्ते । 'मकि मण्डने' (भ्वा० आ० से०) अरः । आगमशास्त्रस्यानित्यत्वान्न नुम् । 'मस्करमस्करिणौ वेणुपरिव्राजकयोः' (६।१।१५४) इति सुट् ॥ (९) ॥*॥ तेजयति शस्त्रमग्निं वा । नन्द्यादिल्युः (३।१।१३४) । युच् (उ० २।७८) वा ॥ (१०) ॥*॥ दश 'वेणोः' ॥

**वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ॥१६१॥**

**वेणेति** ॥ ये वेणवोऽनिलेनोद्धतास्ताडिताश्चालिता वा शब्दायन्ते । चीकति । चीकयते वा । शब्दायते । 'चीक मर्षणे' (चु० उ० से०) । 'चीकयतेराद्यन्तविपर्ययश्च' (उ० ५।३६) इति वुन् ।—पृषोदरादित्वात् (६।३।१०९) आद्यन्तविपर्ययश्च —इति मुकुटः । तद् उक्तसूत्रादर्शनमूलकम् । यद्वा 'की' इत्यव्यक्तम् चकते । 'चक तृप्त्यादौ' (भ्वा० आ० से०) । अच् (३।१।१३४) । 'संज्ञायां कन्' (५।३।७५) क्वुन् (उ० २।३२) वा । 'कीच' इत्यव्यक्तं कायति मूलविभुजादिकः (वा० ३।२।५) 'अन्येभ्योऽपि-'(वा० ३।२।१०१) इति डो वा । **'कीचको** दैत्यभिद्वाताहतसस्वनवंशयोः' (इति मेदिनी) ॥ (१) ॥*॥ एकम् 'वाताहतवेणूनाम्' ॥

**ग्रन्थिर्ना पर्वपरुषी**

**ग्रन्थिरिति** ॥ ग्रन्थते 'ग्रथि कौटिल्ये' (भ्वा० आ० से०) 'सर्वधातुभ्य इन्' (उ० ४।११८) **'ग्रन्थिस्तु** ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोः' (इति मेदिनी) ॥ (१) ॥*॥ पर्वति । 'पर्व पूरणे' (भ्वा० प० से०) । बाहुलकात्कनिन् । **'पर्व** क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपि' (इति मेदिनी) ॥ (२) ॥*॥ पिपर्ति 'पॄ पालनपूरणयोः' (जु० प० से०) । 'अर्तिपॄवपि-' (उ० २।११७) इत्युस् ॥*॥ बाहुलकादुप्रत्यये उदन्तोऽपि । 'मज्जा सारो, ग्रन्थिः **परुः**, परागः कुसुमरेणुः' इति पुंस्काण्डे रत्नकोषात् ॥ (३) ॥*॥ त्रीणि **'वंशादिग्रन्थेः'** ॥

**गुन्द्रस्तेजनकः शरः ।**

**गिवति** ॥ गोदते । 'गुद क्रीडायाम्' (भ्वा० आ० से०) । बाहुलकाद्रक् । पृषोदरादिः (६।३।१०९) । **'गुन्द्रस्**तेजनके स्त्री तु प्रियंगौ भद्रमुस्तके' (इति मेदिनी) ॥ (१) ॥*॥ तेजयति । 'तिज निशाने' चुरादिः । ण्वुल् (३।१।१३३) । क्वुन् (उ० २।३२) वा ॥ (२) ॥*॥ शृणाति । 'शॄ हिंसायाम्' (क्र्या० प० से०) अच् (३।१।१३४) । **'शरस्**तेजनके बाणे दध्यग्रे ना **शरं** जले' (इति मेदिनी) ॥*॥ **'सुरस्तु मुञ्जो बाणाख्यो** गुन्द्रस्तेजनकः शरः' इति वाचस्पतेर्दन्त्यादिश्च । सरति । 'सृ गतौ' ( भ्वा० प० से० ) । अच् (३।१।१३४) ॥ (३) ॥*॥ त्रीणि **'शरस्य'** **'सरहरी'** इति ख्यातस्य ॥

**नडस्तु धमनः पोटगलः**

**नड इति** ॥ नडति 'नड गहने' ( ) । अच् (३।१।१३४) ॥ (१) ॥*॥ धमति । 'धम ध्माने' सौत्रः । धम्यते वा 'बहुलम्-' (उ० २।७८) इति युच् । यत्तु—'ध्मो धमश्च' इति नप्रत्ययो धमादेशश्च—इत्याह मुकुटः । तन्न । उज्ज्वलदत्तादिष्वेतत्सूत्रस्यादर्शनात् । क्वुन्प्रकरणे दर्शनात् । सौत्रधातुना गतार्थत्वाच्च । **'धमनो** नले । क्रूरे भस्त्राध्मापके च **धमनी** कंधरा शिरा । हरिद्रा च' इति हैमः ॥ (२) ॥*॥ पोटेन संश्लेषेण । गलति 'गल अदने' (भ्वा० प० से०) । स्रवणे (चु० आ० से०) अच् (३।१।१३४) । 'अथ **पोटगलः** पुंसि नले च काशमत्स्ययोः' (इति मेदिनी) (३) ॥*॥ त्रीणि **'धमनस्य'** **'नलः'** इति ख्यातस्य ॥

**अथो काशमस्त्रियाम् ॥१६२॥**

**इक्षुगन्धा पोटगलः**

**अथविति** ॥ काशते । 'काशृ दीप्तौ' (भ्वा० आ० से०) । अच् (३।१।१३४) **'काशस्तृणे रोगभेदे'** (इति हैमः) । **'काशी**वाराणसीपुरी' (इति मेदिनी) । **'काशीकाशश्च** तृणवाचकः' इति शभेदः । गौरादिङीष् (४।१।४१) ॥ (१) ॥*॥ इक्षुवद्गन्धोऽस्याः । समासान्तविधेरनित्यत्वान्नेत्त्वम् (५।४।१३५) । **'इक्षुगन्धा** कोकिलाक्षे क्रोष्ट्र्यां काशे च गोक्षुरे' (इति मेदिनी) ॥ (२) ॥*॥ (पोटगलो व्याख्यातः) ॥ (३) ॥*॥ त्रीणि **'काशस्य'** ॥

**पुंभूमनि तु वल्वजाः ।**

**पुमिति** ॥ वलते । 'वल संवरणे' (भ्वा० आ० से०) क्विप् (३।२।१७८) वजति । 'वज गतौ (भ्वा० प० से०) । अच् ( ३।१।१३४ ) वल् चासौ वजश्च 'एको वल्वजः' इति ( १।२।४५ सूत्रे ) भाष्यकारवचनादेकत्वेऽपि ॥ (१) ॥*॥ एकम् **'वगइ'** इति ख्यातस्य ॥

**रसाल इक्षुः**

**रसेति** ॥ रसेनालति, अल्यते, वा=पूरयति पूर्यते, वा । 'अल भूषणादौ' (भ्वा० प० से०) । अच् (३।१।१३४) घञ् (३।३।१९) वा । **'रसालं** सिह्लके वोले **रसाल**श्चेक्षुचूतयोः' (इति मेदिनी) ॥ (१) ॥*॥ इष्यते । 'इष इच्छायाम्' (तु० प० से० ) 'इषेः क्सुः' (उ० ३।१५७) । 'षढोः कः सि' (८।२।४१) ॥ (२) ॥*॥ द्वे **'इक्षोः'** ॥

**तद्भेदाः पुण्ड्रकान्तारकादयः ॥ १६३ ॥**

**तदिति** ॥ कोषकाराद्या आदिना गृह्यन्ते । 'इक्षुः कर्कटको वंशः कान्तारो वेणुनिःसृतः । इक्षुरन्यः पौण्ड्रकश्च रसालः सुकुमारकः' । पुण्ड्यन्ते । 'पुडि खण्डने' ( भ्वा० प० से० ) ।

१—'संज्ञायां कन्' (५।३।७५) । क्वुन् । (उ० २।३२) वाइति लिखितमस्ति । तत्तु ककारत्रयश्रवणापत्त्या प्रक्षिप्तमिव भाति । चकधातोर्डप्रत्यये कनः संगतावपि क्वुनः सर्वथाऽसंगतेः ॥

'स्फायी-' (उ० २।१३) इत्यादिना रक् ॥*॥ प्रज्ञाद्यणि (५।४।३८)। पौण्ड्रः। **'पुण्ड्रेऽक्षौ पुण्ड्रकः सेव्यः पौण्ड्रकोऽतिरसो मधुः'** इति वाचस्पतिः। **'पुण्ड्रो** दैत्यविशेषेक्षुभेदयोरतिमुक्तके। ( चित्रे क्रमौ पुण्डरीके पुंभूम्नि नीवृदन्तरे ॥ )' (इति मेदिनी) ॥ (१) ॥*॥ कान्तं रसमृच्छति। 'ऋ गतौ' (भ्वा० प० अ०)। 'कर्मण्यण्' (३।२।१)। स्वार्थे कन् (५।३।७५) ण्वुल् (३।१।१३३) वा ॥ (२) ॥*॥ द्वे **'इक्षुभेदस्य'** ॥

**स्याद्वीरणं वीरतरम्**

**स्यादिति** ॥ विं पक्षिणमीरयति। ल्युः (३।१।१३४)। युच् (उ० २।७८) वा।—विशिष्टजनमीरयति। 'शूर वीर विक्रान्तौ' ( चु० आ० से० )—इति मुकुटः। तन्न। विग्रहप्रदर्शनधातूपन्यसनयोर्विरुद्धत्वात् ॥ (१) ॥*॥ अच् (३।१।१३४)। अतिशयितं वीरम्। 'द्विवचन-' (५।३।५७) इति तरप्। 'स्याद्वीरणे **वीरतरं** वीरश्रेष्ठे शवे च ना' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'तृणभेदस्य' 'गाँडर'** इति ख्यातस्य ॥

**मूलेऽस्योशीरमस्त्रियाम्।**
**अभयं नलदं सेव्यममृणालं जलाशयम् ॥ १६४ ॥**
**लामज्जकं लघुलयमवदाहेष्टकापथे।**

**मूल इति** ॥ वीरणस्य मूले। उश्यते। 'वश कान्तौ' ( अ० प० से० ) 'वशेः कित्' (उ० ४।३१) इतीरन् ॥ (१) ॥*॥ न भयमस्मात्। **'अभया** स्त्री हरीतक्यामुशीरे च नपुंसकम्। निर्भये वाच्यलिङ्गः स्यात्' ( इति मेदिनी ) ॥ (२) ॥*॥ नलं गन्धं ददाति, दयते वा। 'डुदाञ् दाने' ( जु० प० अ० ), 'देङ् पालने' ( भ्वा० आ० अ० ) वा। 'आतोऽनुप-' (३।२।३) इति कः। **'नलदं** स्यात्पुष्परसोशीरमांसीषु न द्वयोः' ( इति मेदिनी ) ॥ (३) ॥*॥ सेवितुमर्हम्। 'षेवृ सेवने' ( भ्वा० आ० से० )। अर्हे ण्यत् (३।३।१६९)। **'सेव्यं** क्लीबमुशीरे स्यात्सेवार्हे पुनरन्यवत्' ( इति मेदिनी ) ॥ (४) ॥*॥ मृणालमिव। सादृश्येऽत्र नञ् ॥*॥ 'मृणालम् अप्यत्र'। **'मृणालं** नलदे क्लीबं पुंनपुंसकयोर्बिसे' (इति मेदिनी) ॥ (५) ॥*॥ जले आशेते। अच् (३।१।१३४) यद्वा जलो जड आशयो यस्य। **'जलाशयो** जलाधारे स्यादुशीरे नपुंसकम्' (इति मेदिनी) ॥ (६) ॥*॥ लाति दोषान् अच् (३।१।१३४) क्विप् (३।२।१७८) वा। ला मज्जा सारोऽस्य। कप् (५।४।१५४) इति मुकुटस्तु चिन्त्यः ॥ (७) ॥*॥ लङ्घते रोगान्। लङ्घ्यते वा भूस्थत्वात्। 'लघि गतौ' ( भ्वा० आ० से० )। 'लङ्घिबंह्योर्नलोपश्च' (उ० १।२९) लघु लीयते। 'लीङ् श्लेषणे' ( दि० आ० अ० )। अच् (३।१।१३४) समस्तं नाम ॥*॥ व्यस्तमपि। 'लामज्जकं **सुवासं** स्यादमृणालं **लयं लघु'** इति सुश्रुतः। 'लामज्जकं **सुनालः** स्यादमृणालं लयं लघु' ॥ (८) ॥*॥ अवलीयते दाहोऽस्मात्।—अवदीयते दाहोऽनेन, इति-'अवदानम्' इति तु स्वामी—इति मुकुटः। तन्न। स्वामिग्रन्थेऽदर्शनात्। 'अवदीयते दाहोऽनेन' इति स्वामिना व्याख्यातत्वाच्च ॥*॥ केचित्तु—'अवदाहेष्टम्' 'कापथम्' इति नामद्वयमाहुः। 'लामज्जकं लघुलयमवदाहेष्टकापथे। **अवदानमिन्द्रगुप्तमवदाहेष्टकापथे'** इति वाचस्पतिः ॥ (९) ॥*॥ इष्टं कापथमस्य। अधोवायुकरत्वात्। यद्वा इष्टकेव दृढः पन्था यस्य, इष्टकायामपि पन्था यस्य, इति वा ॥ (१०) ॥*॥ दश **'वीरणमूलस्य' 'खश'** इति ख्यातस्य ॥

**नलादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ॥ १६५ ॥**

**नलेति** ॥ तृणजातयः। तृण्यते। 'तृणु अदने' (त० उ० से०)। घञ् (३।३।१९)। संज्ञापूर्वकत्वाद्गुणो न। घञर्थे कस्तु परिगणनान्न ॥ (१) ॥*॥ गिरति, गीर्यते वा। 'गॄ निगरणे' ( तु० प० से० )। 'ग्रो मुट् च' (उ० १।९५) इत्युतिः ( ) ॥ (१) ॥*॥ श्यायते। 'श्यैङ् गतौ' (भ्वा० आ० अ०) 'पिनाकादयश्च' (उ० ४।१५) इति साधुः। यद्वा श्यामं वर्णमकति। 'अक गतौ' ( भ्वा० प० से० )। अण् (३।२।१) ॥*॥ 'श्यामाकः **श्यामको**ऽपि च' इति हलायुधः। तत्र मूलविभुजादिके (वा० ३।२।५) शकन्ध्वादित्वम् (वा० ६।१।९४) बोध्यम्। यत्तु—'श्यात्लूधूभ्यो मकन्'—इत्याह मुकुटः। तन्न। तस्योणादिवृत्तावदर्शनात् ( **साँवा** इति ख्यातः) ॥ (१) ॥*॥ प्रमुखशब्दान्नीवाराद्याः। मुकुटस्तु—अनन्तराः कुशादयो व्यवहिताश्च कङ्कुकोद्रवादयो गृहीताः—इत्याह। कोद्रवादीनामेवं सति हविष्यत्वापातात् ॥

**अस्त्री कुशं कुथो दर्भः पवित्रम्**

**अस्त्रीति** ॥ कौ शेते। 'अन्येभ्योऽपि-'(वा० ३।२।१०१) इति डः। यद्वा कुशयति। 'कुशिर श्लेषे' ( )। 'इगुपध-' (३।१।१३५) इति कः। **'कुशो** रामसुते द्वीपे पापिष्ठे योक्त्रमत्तयोः। **कुशी** फाले **कुशो** दर्भे कुशा वल्गा **कुशं** जले' इति हैमः) ॥ (१) ॥*॥ कुथ्यति। 'कुथ पूतीभावे' ( भ्वा० प० से० ) 'इगुपध-' (३।१।१३५) इति कः। –'कुथति'–इति स्वाम्युक्तविग्रहश्चिन्त्यः। **'कुथः** स्त्रीपुंसयोर्वर्णे कम्बलै पुंसि बर्हिषि' ( इति मेदिनी ) ॥ (२) ॥*॥ दृभ्यते। 'दृभी ग्रन्थे' ( तु० प० से० )। घञ् (३।३।१९) ॥ (३) ॥*॥ पूयतेऽनेन। 'पुवः संज्ञायाम्' (३।२।१८५) इतीत्रः। **'पवित्रं** वर्षणे कुशे। ताम्रे पयसि च क्लीबं मेध्ये स्यादभिधेयवत्' ( इति मेदिनी ) ॥ (४) ॥*॥ चत्वारि **'दर्भविशेषस्य'** ॥

**अथ कत्तृणम्।**
**पौरसौगन्धिकध्यामदेवजग्धकरौहिषम् ॥ १६६ ॥**

**अथेति** ॥ कुत्सितं तृणम्। 'तृणे च जातौ' (६।३।१०३) इति कोः कदादेशः। (**'कत्तृणं** तृणभित्पृश्न्योः' इति मेदिनी)

॥ (१) ॥*॥ पुरे भवम् । 'तत्र भवः' ( ४।३।५३ ) इत्यण् । 'पौरं त्रिषु पुरोद्भूते कत्तृणे पुंनपुंसकम्' (इति मेदिनी) ॥ (२) ॥*॥ शोभनो गन्धः । सुगन्धः प्रयोजनमस्य । 'प्रयोजनम्' (५।१।१०९) इति ठञ् । 'सौगन्धिको गन्धवणिक् सौगन्धिकं तु कत्तृणे । गन्धोत्पले पद्मरागे कह्लारे' इति हैमः ॥ (३) ॥*॥ ध्यायन्ते पशुभिः । 'ध्यै चिन्तायाम्' (भ्वा० प० अ० ) । बाहुलकान्मक् । ( 'ध्यामं दमनके गन्धतृणे श्यामेऽभिधेयवत्' इति विश्वः ) ॥ (४) ॥*॥ देवैरद्यते स्म । क्तः (३।२।१०२) 'अदो जग्धिर्ल्यप्ति किति' (२।४।३६) ॥ (५) ॥*॥ रोहति । 'रुहेर्वृद्धिश्च' ( उ० १।४७ ) इति टिषच् । 'कत्तृणे रौहिषं क्लीबं पुंलिङ्गो हरिणान्तरे' इति मूर्धन्यान्ते रभसः ॥ (६) ॥*॥ षट् 'रोहिस' इति ख्याततृणविशेषस्य ॥

**छत्रातिच्छत्रपालघ्नौ**

**छत्रेति** ॥ छदति, छादयति, वा । छद अपवारणे । त्रन् ( उ० ४।१५९ ) 'इस्मन्त्रन्क्विषु च' ( ६।४।९७ ) इति ह्रस्वः । 'छत्रा मिसावतिच्छत्रे कुस्तुम्बुरुशिलीन्ध्रयोः । नपुंसकं चातपत्रे' ( इति मेदिनी ) ॥ (१) ॥*॥ अतिक्रान्तश्छत्रम् ॥ (२) ॥*॥ पालं क्षेत्रं हन्ति । 'अमनुष्य–' (३।२।५२) इति ठक् ॥ (३) ॥*॥ त्रीणि 'जलजतृणविशेषस्य' ॥

**मालातृणकभूस्तृणौ ।**

**मालेति** ॥ मालाकाराणि तृणान्यस्य ॥ ( १ ) ॥*॥ भुवस्तृणम् । पारस्करादित्वात् ( ६।१।१५७ ) सुट् । 'भूर्' अव्ययं वा ॥ (२) ॥*॥ द्वे 'तृणविशेषस्य' । स्वामी तु—छत्रादिपञ्च पर्यायानाह ॥

**शष्पं बालतृणम्**

**शष्पमिति** ॥ शस्यते । शुष्यति, वा 'शसु हिंसायाम्' (भ्वा० प० से०) । 'शुष शोषणे' (दि० प० अ०) वा । 'खष्पशिल्पशष्प–' ( उ० ३।२८ ) इति साधुः ।—'नीपादयः' इति पः—इति मुकुटस्तु चिन्त्यः । उज्ज्वलदत्तादिवृत्तिषु 'नीपादयः' इति सूत्राभावात् । 'शष्पं बालतृणे स्मृतम् । पुंसि स्यात् प्रतिमाहानौ' ( इति मेदिनी ) ॥ (१) ॥*॥ बालं तृणम् ॥ (२) ॥*॥ द्वे 'नवतृणस्य' ॥

**घासो यवसम्**

**घेति** ॥ अद्यते । घञ् (३।३।१९) 'घञपोश्च' (२।४।३८) इत्यदेर्घस्लृ ।—'घस्यते'—इति विगृह्णन्तौ स्वामिमुकुटौ चिन्त्यौ । घसेः सर्वत्र प्रयोगाभावात् । अन्यथा 'घञपोश्च' (२।४।३८) इति सूत्रवैयर्थ्यापातात् ॥ (१) ॥*॥ यौति, यूयते, वा । 'यु मिश्रणेऽमिश्रणे च' ( अ० प० से० ) । 'वहियुभ्यां णित्' (उ० ३।११९) इत्यसच् । संज्ञापूर्वकत्वान्न वृद्धिः ॥ (२) ॥*॥ द्वे 'गवाद्यदनीयतृणविशेषस्य' ॥

**तृणमर्जुनम् ॥ १६७ ॥**

( **तृणमिति** ॥ तृण्यते । 'तृणु अदने' ( त० उ० से० ) । घञ् (३।३।१९) संज्ञापूर्वकत्वान्न गुणः ॥ (१) ॥*॥ अर्ज्यते । 'अर्ज अर्जने' ( भ्वा० प० से० ) । 'तृणाख्यायां चित्' ( उ० ३।५९ ) इत्युनन् । 'अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः । मातुरेकसुतेऽपि स्याद् धवले पुनरन्यवत् । नपुंसकं तृणे नेत्ररोगे स्याद् अर्जुनीगवि । उषायां बाहुदानद्यां कुट्टन्यामपि च क्वचित्' (इति मेदिनी) ॥ (२) ॥*॥ द्वे 'तृणमात्रस्य' ॥

**तृणानां संहतिस्तृण्या**

**तृणेति** ॥ तृणानां संहतिः समूहः । 'पाशादिभ्यो यः' (४।२।४९) ॥ (१) ॥*॥ एकम् 'तृणसमूहस्य' ॥

**नड्या तु नडसंहतिः ।**

**नेति** ॥ नडानां संहतिः । 'पाशादिभ्यो यः' ( ४।२।४९ ) ॥ (१) ॥*॥ एकम् 'नडसमूहस्य' ॥

**तृणराजाह्वयस्तालः**

**तृणेति** ॥ तृणानां राजा । 'राजाहःसखिभ्यष्टच्' (५।४।९१) तृणराज इत्याह्वयो यस्य ॥ (१) ॥*॥ तालयति । 'तल प्रतिष्ठायाम्' चुरादिः । पचाद्यच् ( ३।१।१३४ ) । 'तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते । गीतकालक्रियामाने करस्फाले द्रुमान्तरे । वाद्यभाण्डे च कांस्यस्य त्सरौ ताली जटौषधौ । क्लीबं तु हरिताले स्यात्' ( इति मेदिनी ) ॥*॥ तलति । अच् (३।१।१३४) 'तलश्चपेटे तालद्रौ तलं ज्याघातवारणे । त्सरौ स्वभावधरयोस्तन्त्रीघाते च संमतम्' ॥ (२) ॥*॥ द्वे 'तालस्य' ॥

**नालिकेरस्तु लाङ्गली ॥ १६८ ॥**

**नालीति** ॥ नलति, नल्यते, वा । 'णल गन्धे' ( भ्वा० प० से० ) । बाहुलकादिण् । केन वायुना ईर्यते । 'ईर प्रेरणे' (अ० आ० से०) । घञ् (३।३।१९) नालिश्चासौ केरश्च ॥*॥ कपिलिकादिः (वा० ८।२।१८) ( नारिकेलः ) ॥ (१) ॥*॥ लङ्गति, 'लगि गतौ' ( भ्वा० प० से० ) । बाहुलकाद् अलच् दीर्घश्च । गौरादिः ( ४।१।४१ ) ॥ (२) ॥*॥ द्वे 'नारिकेलस्य' ॥

**घोण्टा तु पूगः क्रमुको गुवाकः खपुरः**

**घोण्टेति** ॥ घोणते । 'घुण भ्रमणे' (भ्वा० आ० से०) । बाहुलकात् टः । 'घोण्टा तु बदरीपूगवृक्षयोरपि योषिति' ( इति मेदिनी ) ॥ (१) ॥*॥ पवते, पुनाति, वा । 'पूञ् पवने' ( भ्वा० आ० से० ) । 'छापूखडिभ्यः कित्' ( उ० १।१२४ ) इति गन् । मुकुटस्तु—पूज्यते मान्यते सेचनादिना फलद्वारेण, अनेन, वा । घञि कुत्वे पूगः—इत्याह । तन्न । पूजेश्चुरादिण्यन्तत्वेन णिलोपस्य स्थानिवत्त्वेन कुत्वाप्रसङ्गात् ।

१—लद्वितीयरेफचतुर्थः 'नालिकेरान्वितस्तिलकः' इति दमयन्तीश्लेषात् । २—रद्वितीयलचतुर्थः 'नारिकेलीमहाकीरैरिव नारिकेलीवनैः' इति वासवदत्ताश्लेषात् ॥

'निष्ठायामनिटः' ( ७।३।५३ ) इति वार्तिकाच्च । '**पूगः** क्रमुकसंघयोः' इति हैमः ॥ (२) ॥*॥ क्रामति । 'क्रमु पादविक्षेपे' (भ्वा० प० से०) । बाहुलकादुः 'संज्ञायां कन्' (५।३।७५) । '**क्रमुकस्तु** पुमान् भद्रमुस्तके ब्रह्मदारुणि । फले कार्पासिकायाश्च पट्टिकालोध्रपूगयोः' ( इति मेदिनी ) ॥ (३) ॥*॥ गुवन्त्यनेन । स्रंसकत्वात् । 'गु पुरीषोत्सर्गे' (तु० प० अ०) । 'पिनाकादयश्च' ( उ० ४।१५ ) इति साधुः । यत्तु मुकुटः—बाहुलकाद्गुणाभाव इति । तन्न । अस्य कुटादित्वात् ॥*॥ 'गुवाकोऽपि च **गूवाकः**' इति तारपालः । तत्र बाहुलकाद्दीर्घः ॥ (४) ॥*॥ खमिन्द्रियमाकाशं वा पिपर्ति । 'पॄ पालनपूरणयोः' (जु० प० से०) । मूलविभुजादिकः ( वा० ३।२।५ ) । 'उदोष्ठ्यपूर्वस्य' ( ७।१।१०२ ) । यत्तु—अचि ( ३।१।१३४ ) उत्वम् ( ७।१।१०२ ) आह मुकुटः । तन्न । 'इत्वोत्वाभ्यां गुणवृद्धी–' ( ७।१।१०२ ) इति वार्तिकविरोधात् । यदपि—'पूरी आप्यायने' ( दि० आ० से० )—इत्ययं धातुरुपन्यस्तः । तदपि न । 'खपूरः' इति रूपप्रसङ्गात् । ( '**खपुरः** क्रमुके भद्रमुस्तकेऽलसकेऽपि च' इति मेदिनी ) ॥ (५) ॥*॥ पञ्च '**पूगवृक्षस्य**' '**सोपारी**' इति ख्यातस्य ॥

**अस्य तु ।**

**फलमुद्वेगम्**

**अस्येति** ॥ अस्य पूगस्य । उद्गतो वेगोऽस्मात् । स्रंसकत्वात् । उद्विजन्तेऽनेन । 'ओविजी–' (तु० आ० से०) । 'हलश्च' (३।३।१२१) इति घञ् ॥ (१) ॥*॥ एकं '**क्रमुकफलस्य**' ॥

**एते च हिंतालसहितास्त्रयः ॥ १६९ ॥**
**खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः ।**

**एत इति** ॥ एते नालिकेराद्यास्त्रयो हिंतालेन चतुर्थेन सहिताः खर्जूराद्याश्च चत्वारः । तृणजातीया द्रुमाः । शाकपार्थिवादिः ( वा० २।१।७८ ) हीनोऽल्पस्तालः । पृषोदरादिः ( ६।३।१०९ ) ॥ (१) ॥*॥ खर्जति 'खर्ज व्यथने' ( भ्वा० प० से० ) । 'खर्जिपिञ्जादिभ्य ऊरोलचौ' ( उ० ४।९० ) इत्यूरः । '**खर्जूरं** रूप्यफलयोः **खर्जूरः** कीटवृक्षयोः' ( इति हैमः ) ॥ (१) ॥*॥ 'जातेरस्त्री–' ( ४।१।६३ ) इति ङीष् । गौरादिः ( ४।१।४१ ) वा । '**वनखजूरी**' इति ख्याता ॥ (१) ॥*॥ केतयति । कित निवासे ( भ्वा० प० से० ) । क्वुन् (उ० २।३२) ण्वुल् (३।१।१३४) वा गौरादिः (४।१।४१) ॥ (१) ॥*॥ तालयति । 'तल प्रतिष्ठायाम्' चुरादिः । अच् (३।१।१३४) । जातित्वात् (४।१।६३) गौरादित्वात् ( ४।१।४१) वा ङीष् ॥ (१) ॥*॥ '**तृणद्रुमभेदानां पृथक्**' एकैकम् ॥

**इति वनौषधिवर्गविवरणम् ॥**

---

**सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ।**

**सिंह इति** ॥ सिञ्चति । 'षिच क्षरणे' (तु० उ० अ०) । 'सिञ्चेः संज्ञायां हनुमौ कश्च' ( उ० ५।६२ ) । यद्वा हिनस्ति । 'हिसि हिंसायाम्' (रु० प० से०) अच् (३।१।१३४) । पृषोदरादिः (६।३।१०९) । '**सिंहः** कण्ठीरवे राशौ सत्तमे चोत्तरस्थितः । **सिंही** तु कण्टकार्यां स्यात्' ( इति मेदिनी ) । '**सिंही** स्वर्भानुमातरि । वासाबृहत्योः क्षुद्रायाम्' (इति हैमः) ॥ (१) ॥*॥ मृगाणामिन्द्रः ॥ (२) ॥*॥ पञ्चते । 'पचि विस्तारे' (भ्वा० आ० से०) पञ्चं विस्तृतमास्यमस्य । यद्वा मुखं पादाश्च पञ्च आस्यानीव यस्य । युद्धे मुख्यत्वात् ॥ (३) ॥*॥ हरिणी पिङ्गले अक्षिणी यस्य । 'बहुव्रीहौ–' (५।४।११३) इति षच् ॥ (४) ॥*॥ केसराः स्कन्धबालाः सन्त्यस्य । 'अतः–' (५।२।११५) इतीनिः । '**केसरी** तुरगे सिंहे पुंनागे नागकेसरे' ( इति मेदिनी ) ॥*॥ केचित् ( **केसरी** ) इति तालव्योष्ममध्यमाहुः । के वारि शिरसि वा शीर्यते । 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'ऋदोरप्' ( ३।३।५७ ) । 'हलदन्तात्–' ( ६।३।९ ) इत्यलुक् । सोऽस्त्यस्य । इन् ( ५।२।११५ ) ॥ (५) ॥*॥ हरति । 'अच इः' ( उ० ४।१३९ ) । '**हरि**श्चन्द्रार्कवाताश्वशुकभेकयमाहिषु । कपौ सिंहे हरेऽजेंऽशौ शक्रे लोकान्तरे पुमान् । वाच्यवत् पिङ्गहरितोः' ( इति मेदिनी ) ॥ (६) ॥*॥ षट् '**सिंहस्य**' ॥

**शार्दूलद्वीपिनौ व्याघ्रे**

**शार्द्विति** ॥ शारयति । 'शॄ हिंसायाम्' (क्र्या० प० से०) । स्वार्थणिचः क्विप् । दूयते । 'दूङ् परितापे' ( दि० आ० से० ) । अन्तर्भावितण्यर्थः । बाहुलकाल्लक् । यद्वा शृणाति । पिञ्जाद्यूलच् ( उ० ४।९० ) बाहुलकादुक्वृद्धी । '**शार्दूलो** राक्षसान्तरे । व्याघ्रे च पशुभेदे च सत्तमे तूत्तरस्थितः' ( इति मेदिनी ) ॥ (१) ॥*॥ द्वौ वर्णौ ईयते । 'इङ् गतौ' ( दि० आ० अ० ) । बाहुलकात् पो गुणाभावश्च । द्वीपाकाररेखावत्त्वाद् द्वीपं चर्मास्त्यस्य । 'अतः–' (५।२।११५) इतीनिः ॥ (२) ॥*॥ व्याजिघ्रति । 'घ्रा गन्धोपादाने' ( भ्वा० प० अ० ) 'व्याङि घ्रातेश्च जातौ' ( उ० ५।६३ ) इति कः । यद्वा 'आतश्चोपसर्गे' ( ३।१।१३६ ) इति कः । 'पाघ्रा–' ( ३।१।१३७ ) इति शो न । 'जिघ्रः संज्ञायाम्–' ( वा० ३।१।१३७ ) इति निषेधात् । '**व्याघ्रः** स्यात्पुंसि शार्दूले रक्तैरण्डकरञ्जयोः । श्रेष्ठे नरादुत्तरस्थः कण्टकार्यां तु योषिति' ( इति मेदिनी ) ॥३ ॥*॥ त्रीणि '**वाघ**' इति ख्यातस्य ॥

**तरक्षुस्तु मृगादनः ॥ १ ॥**

**तरेति** ॥ तरं गतिं मार्गं वा क्षिणोति । 'क्षिणु हिंसायाम्' ( त० उ० से० ) । मितद्र्वादिड्डुः ( वा० ३।२।१८० ) ॥ (१) ॥*॥ मृगमत्ति । 'अद भक्षणे' ( अ० प० अ० )

ल्युः ( ३।१।१३३ ) ॥ ( २ ) ॥*॥ द्वे 'तेंदुआवाघ' इति ख्यातस्य—इत्यन्ये । 'हुण्डातर' इति ख्यातस्य—इति मुकुटः ॥

**वराहः सूकरो घृष्टिः कोलः पोत्री किरः किटिः ।**
**दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ॥ २ ॥**

**वरेति** ॥ वरं श्रेष्ठमाहन्ति । 'अन्येभ्योऽपि' ( वा० ३।२।१०१ ) इति डः । '**वराहो** नाणके किरौ । मेघे मुस्ते गिरौ विष्णौ' इति हैमः ॥ ( १ ) ॥*॥ सवनम् । 'षूङ् प्राणिगर्भविमोचने' ( अ० आ० से० ) । संपदादिः ( वा० ३।३।१०८ ) । सुवं प्रसवं करोति । 'कृञो हेतु–' ( ३।२।२० ) इति टः ॥*॥ 'तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः' इति शभेदः । शूकोऽस्त्यस्य । खररोमत्वात् । रः । यद्वा शूकं राति । 'रा आदाने' ( अ० प० अ० ) । 'आतोऽनुप–' (३।२।३) इति कः । यद्वा 'शू' इति ध्वनिं करोति । अच् ( ३।१।१३४ ) । टः (३।२।२०) वा ॥ (२) ॥*॥ घर्षति । 'घृषु संघर्षे' ( भ्वा० प० से० ) । क्तिच् (३।३।१७४) । '**घृष्टिः** स्त्री घर्षणस्पर्धाविष्णुक्रान्तासु ना किरौ' इति विश्वः ॥ (३) ॥*॥ कोलति पीनत्वात् । 'कुल संस्त्याने' (भ्वा०प०से०)। अच् ( ३।१।१३४ ) । यद्वा कोलन्त्यङ्गान्यत्र । 'हलश्च' (३।३।१२१) इति घञ् । '**कोलो** भेलक उत्सङ्गेऽङ्कपाल्यां चित्रके किरौ । **कोलं** च बदरे **कोला** पिप्पल्यां चव्यभेषजे' इति हैमः ॥ (४)॥*॥ पोत्रं मुखाग्रमस्त्यस्य । 'अतः–' (५।२।११५) इतीनिः ॥ (५) ॥*॥ किरति । 'कॄ विक्षेपे' (तु० प० से०) । 'इगुपध–' ( ३।१।१३५ ) । इति कः ॥*॥ 'किरिः' इति पाठे बाहुलकात् किः । ('अथ किरः **किरिः** । भूदारः शूकरः' इति हैमः ) ॥ (६) ॥*॥ केटति । 'किट गतौ' (भ्वा० प० से०)। 'इगुपधात् कित्' ( उ० ४।१२० ) ।—किटति—इति मुकुटश्चिन्त्यः । किटेस्तौदादिकत्वाभावात् ॥ (७) ॥*॥ दंष्ट्रास्त्यस्य । व्रीह्यादीनिः ( ५।२।११६ ) ॥ (८) ॥*॥ घोणा नासास्य । व्रीह्यादिः ( ५।२।११६ ) ॥ (९) ॥*॥ स्तब्धानि रोमाणि यस्य ॥ (१०) ॥*॥—कुडति । 'कुड घनत्वे' ( तु० प० से० ) । अच् ( ३।१।१३४ )—इति मुकुटः । तन्न कुटादित्वाद्गुणाप्रसङ्गात् । कुडनम् । घञ् ( ३।३।१९ ) । क्रोडोऽस्यास्ति । अर्श आद्यच् ( ५।२।१२७ ) ॥ (११) ॥*॥ भुवं दारयति । 'कर्मण्यण्' ( ३।२।१ ) ॥ (१२) ॥*॥ द्वादश '**सूकरस्य**' ॥

**कपिप्लवंगप्लवगशाखामृगवलीमुखाः ।**
**मर्कटो वानरः कीशो वनौकाः**

**केति** ॥ कम्पते । 'कपि चलने' ( भ्वा० आ० से० ) । 'कुण्ठिकम्प्योर्नलोपश्च' ( उ० ४।१४४ ) इतीन् । '**कपिर्ना** सिह्लके शाखामृगे च मधुसूदने' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ प्लवनम् । 'प्लुङ् गतौ' ( भ्वा० आ० अ० ) । 'ऋदोरप्' ( ३।३।५७ ) प्लवेन गच्छति । 'गमश्च' ( ३।२।४७ ) इति खच् । 'खच्च डिद्वा' ( वा० ३।२।३८ ) ॥*॥ डित्त्वाभावे 'प्लवंगमः' च । '**प्लवंगमश्च** मण्डूके तथा शाखामृगेऽपि च' ( इति मेदिनी ) (२) ॥*॥ 'अन्येष्वपि–' ( वा० ३।३।४८ ) इति डः । '**प्लवगः** कपिभेकयोः । अर्कसूते' इति हैमः ॥ (३) ॥*॥ शाखाचारी मृगः पशुः । शाकपार्थिवादिः ( वा० २।१।७८ ) ॥ (४) ॥*॥ वलीयुक्तं मुखमस्य । वली मुखेऽस्य—इति वा ॥ (५) ॥*॥ मर्कति । 'मर्क' धातुर्ग्रहणे । 'शकादिभ्योऽटन्' ( उ० ४।८१ ) मुकुटस्तु—मर्केः सौत्राद्गत्यर्थात्कुरादित्वाद्विकल्पितणिचः 'शकादिभ्योऽटन्'—इत्याह । तच्चिन्त्यम् । मर्केश्चौरादित्वाभावात् । यदपि—म्रियते । 'जटमर्कटौ' इति मृङोऽटन्ककारश्चान्तादेशः—इत्युक्तम् । तदपि निर्मूलत्वादुपेक्ष्यम् ॥ (६) ॥*॥ वने भवं फलादि । अण् ( ४।३।५३ ) वानं राति । 'रा आदाने' ( अ० प० अ० ) 'आतोऽनुप–' ( ३।२।३ ) इति कः । वानम् । 'वा गत्यादौ' ( अ० प० से० ) । संपदादि क्विप् ( वा० ३।३।१०८ ) । विगमनेऽपि नृणाति बालकम् । 'नॄ नये' ( क्र्या० प० से० ) अच् ( ३।१।१३४ ) । वा किंचित् नरो वा ॥ (७) ॥*॥ 'की' इति शब्दमीष्टे । 'ईश ऐश्वर्ये' ( अ० आ० से० ) 'मूलविभुजा–' ( वा० ३।२।१५ ) इति कः । यद्वा कस्य वायोरपत्यम् । 'अत इञ्' ( ४।१।९५ ) । किर्हनुमान् ईशो यस्य ॥ (८) ॥*॥ वनमोकोऽस्य ॥ (९) ॥*॥ नव '**वानरस्य**' ॥

**मथ भल्लुके ॥ ३ ॥**

**ऋक्षाच्छभल्लभाल्लूकाः**

**अथेति** ॥ भल्लते । 'भल्ल हिंसायाम्' ( भ्वा० आ० से० ) । बाहुलकादुः । 'संज्ञायां कन्' ( ५।३।७५ ) । यत्तु मुकुटेन 'यूकादयश्च' इति सूत्रमुक्तम् । तदुज्ज्वलदत्तादौ न दृश्यते ।—भल्लति—इत्युक्तिः स्वामिमुकुटयोश्चिन्त्या ॥*॥ उलूकादित्वात् ( उ० ४।४१ ) दीर्घमध्योऽपि । '**भल्लूको** भल्लुको भल्ल इत्युलूकादयश्च सः' इति पुरुषोत्तमः ॥*॥ प्रज्ञाद्यणि (५।४।३८) '**भाल्लूकः**' '**भाल्लुकः**' च ॥ (१) ॥*॥ ऋक्ष्णोति । 'ऋक्ष हिंसायाम्' ( स्वा० प० से० ) । अच् ( ३।१।१३४ ) । '**ऋक्षः** पर्वतभेदे स्याद्भल्लूके शोणके पुमान् । कृतवेधनेऽन्यलिङ्गं नक्षत्रे च नपुंसकम्' ( इति मेदिनी ) ।—ऋक्षति—इति स्वामी चिन्त्यः । ऋक्षेः सौवादिकत्वात् ॥ (२) ॥*॥ अच्छ आभिमुख्येन भल्लते । अच् ( ३।१।१३४ ।—भल्लति—इत्युक्तिः स्वामिमुकुटयोश्चिन्त्या ॥*॥ संघातविगृहीतमिदं नाम । '**अच्छः** स्फटिकभल्लूकनिर्मलेष्वच्छमव्ययम् । आभिमुख्ये' ( इति मेदिनी ) । ( '**भल्लः** स्यात् पुंसि भल्लूके

१—'दधति कुहरभाजां यत्र भल्लूकयूनाम्' इति प्रयोगात्—इति स्वामिमुकुटौ । २—'अच्छभल्लपरिषद्विहरन्ती' इत्यभिनन्दः—इति मुकुटः ।

शस्त्रभेदे तु न द्वयोः। भल्लातक्यां स्त्रियां 'भल्ली' इति मेदिनी ॥ (३) ॥*॥ भालयते। 'भल आभण्डने' चुरादिराकुस्मीयः।—भालयति—इति मुकुटश्चिन्त्यः ॥ (४) ॥*॥ चत्वारि 'भालु' इति ख्यातस्य ॥

**गण्डके खड्गखड्गिनौ।**

**गण्डेति** ॥ गच्छति। 'गम्लृ गतौ' ( भ्वा० प० अ० )। 'अमन्ताड्डः' ( उ० १।११४ )। स्वार्थे कन् (५।३।७५)। यद्वा गण्डति संहतो भवति। 'गडि वदनैकदेशे' ( भ्वा० प० से० ) ण्वुल् ( ३।१।१३३ ) 'गण्डकः पुंसि खड्गे स्यात् संख्याविद्याप्रभेदयोः। अवच्छेदेऽन्तराये च गण्डकी सरिदन्तरे' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ खडति। 'खड भेदने' ( चु० प० से० )। 'छापूखडिभ्यः कित्' ( उ० १।१२४ ) इति गन्। 'खड्गो गण्डकशृङ्गासिबुद्धभेदेषु गण्डके' (इति विश्वमेदिन्यौ)। (२) ॥*॥ खड्गः शृङ्गमस्त्यस्य। इनिः ( ५।२।११५ )। 'खड्गी ना गण्डके मञ्जुघोषे खड्गधरे त्रिषु' ( इति मेदिनी ) ॥ (३) ॥*॥ त्रीणि 'गेंडा' इति ख्यातस्य ॥

**लुलापो महिषो वाहद्विषत्कासरसैरिभाः ॥ ४ ॥**

**लुलेति** ॥ लुडति पङ्के। 'लुड संश्लेषे' ( तु० प० से० )। प्नोति। 'आप्लृ व्याप्तौ' 'इगुपध–' ( ३।१।१३५ ) इति कः। डलयोरेकत्वम्। आ ( स्वा० प० अ० )। अच् ( ३।१।१३४ )। लुलश्चासावापश्च। यद्वा। लुड्यन्ते। 'लुड विलोडने' ( ) भिदाद्यङ् ( ३।३।१०४ )। लुला विलोडिता आपो येन। 'लुल विमर्दने' इति सौत्रो धातुर्वा ॥*॥ ( 'लुलायः' इति ) अन्तस्थयकारान्तपाठे बाहुलकादायङ्प्रत्ययः।—'लुलिकुलिकषिभ्य आयः'—इति मुकुटलिखितसूत्रमुज्ज्वलदत्तादिषु न पश्यामः। यद्वा अयते। 'अय गतौ' ( भ्वा० आ० से० )। अच् ( ३।१।१३४ )। लुलश्चासावयश्च ॥ (१) ॥*॥ महति, मह्यते, वा। 'मह पूजायाम्' ( भ्वा० प० से० )। 'अविमह्योष्टिषच्' ( उ० १।४५ )। यद्वा मंहते। 'महिङ् वृद्धौ' ( भ्वा० आ० से० )। आगमशासनस्यानित्यत्वान्न नुम्। 'टिड्ढा–' ( ४।१।१५ ) इति ङीप् ॥ (२) ॥*॥ वाहानां द्विषन्। वाहेषु द्विषन् वा। 'सप्तमी' ( २।१।४० ) इति योगविभागात् समासः ॥ (३) ॥*॥ के जले आसरति। 'सृ गतौ' ( भ्वा० आ० अ० )। अच् ( ३।१।१३४ )। यद्वा ईषत् सरति। स्थूलकायत्वात्। 'ईषदर्थे च' ( ६।३।१०५ ) इति कोः कादेशः ॥ (४) ॥*॥ सीरोऽस्त्येषाम्। इनिः (५।२।११५)। सीरिणां कर्षकाणामिभ इव। शकन्ध्वादिः ( वा० ६।१।९४ )। प्रज्ञाद्यण् ( ५।४।३८ )। यद्वा 'सीरोऽर्कहलयोः पुंसि' ( इति मेदिनी )। सीरस्य सूर्यस्य इभ इव। पुत्रवाहनत्वात्। पूर्ववत् ॥ (५) ॥*॥ पञ्च 'महिषस्य' ॥

**स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः।**
**सृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः ॥ ५ ॥**

**स्त्रियामिति** ॥ शिवः शिवा वा देवताऽस्त्यस्याः। अर्श-आद्यच् ( ५।२।१२७ )। शकुनावेदकत्वात्। 'शिवः किलः शिवा क्रोष्ट्री भवेदामलकी शिवा' इति शाश्वताच्छृगालेऽपि स्त्रीलिङ्गः। चतुष्पदां द्विलिङ्गता वक्ष्यते। तदपवादोऽयम् ॥ (१) ॥*॥ भूरयो माया यस्य ॥ (२) ॥*॥ गां विकृतां वाचं मिनोति। 'डुमिञ् प्रक्षेपणे' ( स्वा० उ० से० )। 'कृवापा–' ( उ० १।१ ) इत्युण् ॥ (३) ॥*॥ मृगेषु धूर्त इव 'संज्ञायां कन्' ( ५।३।७५ ) ॥ (४) ॥*॥ सृजति मायाम्। 'सृज विसर्गे' ( तु० प० अ० )। बाहुलकात् कालन्। न्यङ्क्वादिः ( ७।३।५३ )। असृग् आलाति वा। कः ( ३।२।३ )। पृषोदरादिः ( ६।३।१०९ ) ॥*॥ 'तालव्या अपि दन्त्याश्च शम्बशम्बरशूकराः। रशनापि च जिह्वायां शृगालः कलशोऽपि च' इति शभेदः। शृङ्गं न लाति। पूर्ववत्। 'शृगालो वञ्चके दैत्ये शृगालं डमरे विदुः' इति विश्वः ॥ (५) ॥*॥ वञ्चयते 'वञ्चु प्रलम्भने' ( चु० आ० से० )। ण्वुल् ( ३।१।१३३ )।—वञ्चयति—इति मुकुटोक्तिश्चिन्त्या। आकुस्मीयस्य वञ्चेरात्मनेपदित्वात्। 'वञ्चकस्तु खले धूर्ते गृहबभ्रौ च जम्बुके' ( इति मेदिनी ) ॥ (६) ॥*॥ क्रोशति। 'क्रुश आह्वाने' ( भ्वा० प० से० )। 'सितनि–' ( उ० १।६९ ) इति तुन्। 'तृज्वत् क्रोष्टुः' ( ७।१।९५ ) ॥ (७) ॥*॥ 'फे' इत्यव्यक्तं रौति। मितद्र्वादित्वात् ( वा० ३।२।१८० ) डुः ॥ (८) ॥*॥ 'फे' इत्यव्यक्तो रवोऽस्य। 'गुहारूपं वृषमेरुः फेरवस्तारवः शिवा। सूकरोऽतिरुजः फेरुः श्वभीरुर्मण्डलाहितः' इति साहसाङ्कः ॥ (९) ॥*॥ जमति। 'जमु अदने' ( भ्वा० प० से० )। मृगय्वादिः ( उ० १।३७ )।—मितद्र्वादित्वात् ( वा० ३।२।१८० ) डुः, वुक्च—इति मुकुटश्चिन्त्यः। पिलोपप्रसङ्गात्। वुकोऽप्रसङ्गाच्च ॥*॥ उलूकादित्वात् (उ० ४।४१) जम्बूकश्च। 'खरोष्ट्रकपिजम्बूकवायसाजम्बरो यमः' इति वाचस्पतिः ॥ (१०) ॥*॥ दश 'जम्बुकस्य' ॥

**ओतुर्विडालो मार्जारो वृषदंशक आखुभुक्।**

**ओतुरिति** ॥ अवति विष्ठाम्, आखुभ्यो गृहम्, वा। 'अव रक्षणादौ' ( भ्वा० प० से० ) 'सितनि–' ( उ० १।६९ ) इति तुन्। 'ज्वरत्वर–' ( ६।४।२० ) इत्यूठौ। दीर्घः ( ६।१।१०१ ) गुणः ( ७।३।८४ ) ॥ (१) ॥*॥ वेडति। विड्यते, वा। 'विड आक्रोशे' ( भ्वा० )। 'तमिविशिविडि' ( उ० १।११८ ) इति कालन्। 'विडालो नेत्रपिण्डे स्याद्वृषदंशकके पुमान्' ( इति मेदिनी ) ॥ (२) ॥*॥ मार्ष्टि मुखम्। 'मृजू शुद्धौ' ( अ० प० से० )। 'कञ्जिमृजिभ्यां चित्' ( उ० ३।

---

१ तथा च प्रयोगो दृश्यते 'खुरविधुतधरित्रीच्चित्रकायो लुलायः' इति—इति मुकुटः ॥

-१३७) इत्यारन्। 'मृजेर्वृद्धिः' (७।२।११४)। '**मार्जार** ओतौ खट्वांशे' (इति मेदिनी)॥ (३)॥*॥ वृषान् मूषकान् दशति। 'दंश दशने' (भ्वा० प० अ०)। 'कर्मण्यण्' (३।२।१) स्वार्थे कन् (५।३।७५)॥ (४)॥*॥ आखून् भुङ्क्ते। आखुभ्यो भुनक्ति वा। 'भुज पालनाभ्यवहारयोः' (रु० प० अ०)। क्विप् (३।२।१७८)॥ (५)॥*॥ पञ्च '**मार्जारस्य**'॥

**त्रयो गौधारगौधेरगौधेया गोधिकात्मजे ॥ ६ ॥**

**त्रेति**॥ गोधाया अपत्यम्। 'गोधाया ढ्रक्' (४।१।१२९)॥ (१)॥*॥ 'आरगुदीचाम्' (४।१।१३०)॥ (२)॥*॥ शुभ्रादित्वात् (४।१।१२३) ढक्॥ (३)॥*॥ त्रीणि सर्पाद्गोधायां जातस्य '**चन्दनगोहा**' इति ख्यातस्य॥

**श्वावित्तु शल्यः**

**श्वेति**॥ श्वानं विध्यति। 'व्यध ताडने' (दि० प० अ०) क्विप् (३।२।१७८)। 'नहिवृति-' (६।३।११६) इति दीर्घः॥ (१)॥*॥ शलति। 'शल चलने' (भ्वा० प० से०)। अघ्न्यादित्वात् (उ० ४।११२) यः। '**शल्यं** तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषुतोमरे। मदनद्रुश्वाविधोर्ना' (इति मेदिनी)॥ (२)॥*॥ द्वे '**शल्यस्य**' '**सेह**' इति ख्यातस्य॥

**तल्लोम्नि शलली शललं शलम्।**

**तदिति**॥ तस्य श्वाविधो लोमनि। शलति। वृषादित्वात् (उ० १।१०६) कलच्। गौरादित्वात् (४।१।४१) जातित्वात् (४।१।६४) वा ङीष् स्त्रियाम्॥ (१)॥*॥ स्त्रीत्वाविवक्षायां शललम्। ('तच्छलाकायां **शललं** शलमित्यपि' इति हैमनाममाला)। 'शललस्तु नृशण्ढयोः' इत्यमरमाला॥ (२)॥*॥ पचाद्यचि। '**शलं** तु शल्लकीलोम्नि **शलो** भृङ्गे गणे विधौ' (इति विश्वः)॥ (३)॥*॥ त्रीणि '**शल्यरोम्णाम्**'॥

**वातप्रमीर्वातमृगः**

**वातेति**॥ वातं प्रमिमीते—वाताभिमुखधावनात्। 'वातप्रमीः' (४।१) इत्युणादिसूत्रेण माङ ईप्रत्ययः कित्। 'वातप्रमीर्वातमृगः' इति पुंस्काण्डेऽमरमाला। 'योषिति वातप्रमीः **समीरमृगः**' इति बोपालितात् स्त्रीत्वमप्यस्य—'-कृदिकारात्' (ग० ४।१।४५) इति वा ङीष्—इत्येके। अन्ये तु—कारग्रहणस्य तपरार्थत्वाद्दीर्घान् ङीष् न—इत्याहुः॥ (१)॥*॥ वात इव वातस्य वा मृगः॥ (२)॥*॥ द्वे '**मृगभेदस्य**'॥

**कोक ईहामृगो वृकः ॥ ७ ॥**

**कोक इति**॥ कोकते। 'कुक आदाने' (भ्वा० आ० से०)। अच् (३।१।१३४)॥ (१)॥*॥ ईहा मृगेष्वस्य। ईहां मृगयते वा। 'कर्मण्यण्' (३।२।१)।—मृगयति—इति मुकुटश्चिन्त्यः। 'मृग अन्वेषणे' इत्यस्यात्मनेपदित्वात्। ईहाप्रधानो मृगो वा। शाकपार्थिवादिः (वा० २।१।७८)। '**ईहामृग**स्तु पुंसि स्यात् कोकरूपकभेदयोः' (इति मेदिनी)॥ (२)॥*॥ वर्कते। 'वृक आदाने' (भ्वा० आ० से०)। 'इगुपध-' (३।१।१३५) इति कः। यद्वा वृणोति। 'वृञ् वरणे' (स्वा० उ० से०)। 'सृवृभूशुषिमुषिभ्यः कक्' (उ० ३।४१)॥ (३)॥*॥ त्रीणि '**वृकस्य**' '**विग**' इति ख्यातस्य॥

**मृगे कुरङ्गवातायुहरिणाजिनयोनयः।**

**मृग इति**॥ मृग्यते व्याधैः। 'मृग अन्वेषणे' (चु० आ० से०) घञ् (३।३।१९)।—'घञर्थे कः' (वा० ३।३।५८)—इति मुकुटः। तन्न। परिगणनात्। घञापि रूपसिद्धेः। अदन्तत्वाद्गुणाप्रसङ्गात्। 'मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः। अन्वेषणायां याच्ञायां **मृगी** तु वनितान्तरे' इति विश्वमेदिन्यौ॥ (१)॥*॥ कौ रङ्गति। 'रगि गतौ' (भ्वा० प० से०)। अच् (५।२।१२७)। कौ रङ्गोऽस्त्यस्य वा॥ (२)॥*॥ वातमयते। 'अय गतौ' (भ्वा० आ० से०)। बाहुलकादुण्॥*॥ '**वानायुः**' इत्येके। वनभवमयते॥ (३)॥*॥ हरति मनः, ह्रियते गीतेन वा। 'श्यास्त्याहृञ्विभ्य इनच्' (उ० ११४६)। '**हरिणः** पुंसि सारङ्गे विशदे त्वभिधेयवत्। **हरिणी** हरितायां च नारीभिद्वृत्तभेदयोः। सुवर्णप्रतिमायां च' (इति मेदिनी)॥ (४)॥*॥ अजिनस्य योनिः॥*॥ 'विश्वाची चारुलोचनः' इति रभसः। पञ्च '**हरिणस्य**'॥

**ऐणेयमेण्याश्चर्माद्यम्**

**ऐणयिति**॥ मृग्याश्चर्मास्थिमांसादि। एण्या विकारोऽवयवो वा। 'एण्या ढञ्' (४।३।१५९)॥ (१)॥*॥ (एकम्) '**हरिणाजिनस्य**'॥

**एणस्यैणम्**

**एणेति**॥ एणस्य मृगस्य विकारोऽवयवो वा। 'प्राणिरजतादिभ्योऽञ्' (४।३।१५४)॥ (१)॥*॥ (एकम्)॥

**उभे त्रिषु ॥ ८ ॥**

**उभे इति**॥ उभे ऐणेयैणे॥

**कदली कन्दली चीनश्चमूरुप्रियकावपि।**
**समूरुश्चेति हरिणा अमी अजिनयोनयः ॥ ९ ॥**

**केति**॥ षडेते हरिणभेदा अजिनयोनयः स्युः। के दलति। 'दल विशरणे' (भ्वा० प० से०)। अच् (४।१।१३४)।—'कन्देर्नलोपश्च' इत्यरन्—इति मुकुटस्तु चिन्त्यः। उज्ज्वलदत्तादिधृतसूत्रदर्शनात्। ङीष् (४।१।६३)। '**कदली** हरिणान्तरे। रम्भायां वैजयन्त्यां च' इति (लान्तेषु) हैमः। 'रम्भावृक्षे च **कदली** पताकामृगभेदयोः' (इति लान्तेषु मेदिनी)। '**कदलं** त्रिषु' इत्यमरमाला॥ (१)॥*॥ कन्दे सस्यमूले लीयते। 'लीङ् श्लेषणे' (दि० आ० अ०)। 'अन्येभ्योऽपि-' (वा० ३।२।१०१) इति डः। यद्वा कन्दति। 'कदि आह्वाने' (भ्वा० प० से०)। वृषादित्वात् (उ० १।१०६)

कलच्। गौरादिः (४।१।४१)। ('कन्दलं त्रिषु कपालेऽप्युपरागे नवाङ्कुरे')। 'कलध्वानौ कन्दली तु मृगगुल्मप्रभेदयोः' इति लान्तेषु मेदिनी)। अत एव—इन्नन्तावेतौ—इति स्वामी चिन्त्यः ॥ (१) ॥*॥ चिनोति। 'चिञ् चयने' (स्वा० उ० अ०)। बाहुलकाद् नक् दीर्घश्च। 'चीनो देशांशुकव्रीहिभेदे तन्तौ मृगान्तरे' (इति मेदिनी) ॥ (१) ॥*॥ चमति। 'चमु अदने' (भ्वा० प० से०) खर्जादित्वात् (उ० ४।९०) ऊरः। पृषोदरादित्वात् (६।३।१०९) अत उत्। यद्वा चमूः चम्वां वा ऊरुर्यस्य ॥ (१) ॥*॥ प्रीणाति। प्रीयते वा। 'प्रीञ् तर्पणे' (क्र्या० उ० अ०)। 'प्रीङ् प्रीणने' (दि० आ० अ०) वा। 'इगुपध-' (३।१।१३५) इति कः। स्वार्थे कन् (५।३।७५) ॥ (१) ॥*॥ शोभनावूरू यस्य ॥ (१) ॥*॥ 'अजिनजातीयमृगाणाम्' पृथक् ॥

**कृष्णसाररुरुन्यङ्कुरङ्कुशंबररौहिषाः।**
**गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ॥ १० ॥**

**कृष्णेति** ॥ कृष्णेन सारः शबलः। 'तृतीया-' (२।१।३०) इति समासः। '**कृष्णसारः** शिंशपायां मृगभेदे स्नुहीतरौ' इति हैमः ॥*॥ ('**कृष्णशारः**' इति) तालव्यपाठे। कृष्णश्चासौ शारश्च। 'वर्णो वर्णेन' (२।१।७८) इति समासः। '**शारः** शबलवातयोः' इति तालव्यादौ रभसः ॥ (१) ॥*॥ रौति। 'रु शब्दे' (अ० प० से०)। 'जन्वादयश्च' (उ० ४।१०२) इति साधुः। '**रुरुर्दैत्ये** मृगेऽपि च' इति हैमः ॥ (१) ॥*॥ नितरामञ्चति। 'नावञ्चेः' (उ० १।१७) इति कुः। न्यङ्क्वादित्वात् (७।३।५३) कुत्वम्। '**न्यङ्कुर्मृगे** मुनौ' इति हेमचन्द्रः ॥ (१) ॥*॥ रमते रज्यते वा। मृगय्वादित्वात् (उ० १।३७) साधुः। मुकुटस्तु—रङ्कति गच्छति—इति व्याख्यत्। तन्न। रङ्किधातोर्धातुपाठेऽदर्शनात् ॥ (१) ॥*॥ शं वृणोति। 'वृञ् वरणे' (स्वा० उ० से०)। 'शमि धातोः संज्ञायाम्' (३।२।१४) इत्यच्। '**शंवरो** दानवान्तरे। मत्स्यैणगिरिभेदेषु **शंवरी** पुनरोषधौ' इति हैमः ॥ (१) ॥*॥ रौहिषं तृणभेदमत्ति। 'शेषे' (४।२।९२) इत्यण्। '**रौहिषं** कत्तृणे क्लीबं पुंसि स्याद्धरिणान्तरे' (इति मेदिनी) ॥ (१) ॥*॥ गोरिव कर्णावस्य। '**गोकर्णो**ऽश्वतरे सर्पे सारङ्गे च गणान्तरे। अङ्गुष्ठानामिकोन्माने **गोकर्णी** मूर्विकौषधौ' इति मेदिनी ॥ (१) ॥*॥ पृषताः सन्त्यस्य। अर्शआद्यच् (५।२।१२७) यद्वा पर्षति। 'पृषु सेचने' (भ्वा० प० से०)। 'पृषिरञ्जिभ्यां कित्' (उ० ३।१११) इत्यतच्। 'मृगो विन्दुः पृषंश्चैव पृषतश्च प्रकीर्तितः' इति व्याडिः। ('पृषतवत् पृषन्मृगे। विन्दौ' इति हैमः)। '**पृषतस्तु** मृगे बिन्दौ खरोहिते। श्वेतविन्दुयुतेऽपि स्यात्' इति हेमचन्द्रः ॥ (१) ॥*॥ एति। बाहुलकाण्णः ॥ (१) ॥*॥ ऋच्छति। इयर्ति वा बाहुलकात् श्यन् ॥*॥ (**ऋष्यः**) मूर्धन्यान्तोऽपि ऋषति। 'ऋषी गतौ' (तु० प० से०) अघ्न्यादित्वात् (उ० ४।११२) साधुः ॥*॥ 'रिष्यः' अपि। रिष्यते। 'रिष हिंसायाम्' (दि० प० से०)। अघ्न्यादिः (उ० ४।११२)। 'एणः **कुरङ्गे मारिष्यः** स्यादृश्यश्चारुलोचनः' इति त्रिकाण्डशेषः ॥ (१) ॥*॥ रोहति। 'रुह बीजजन्मनि प्रादुर्भावे च' (भ्वा० प० अ०)। 'रुहे रश्च लो वा' (उ० ३।९४) इतीतच् ॥ (१) ॥*॥ चमति, चम्यते, वा। 'चमु अदने' (भ्वा० प० से०)। 'अर्तिकमिभ्रमिचमि-' (उ० ३।१३२) इत्यरः। '**चमरं** चामरे स्त्री तु मञ्जरीमृगभेदयोः' (इति मेदिनी) ॥ (१) ॥*॥ एते द्वादश '**मृगभेदाः**' ॥

**गन्धर्वः शरभो रामः सृमरो गवयः शशः।**
**इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः ॥ ११ ॥**

**गन्धेति** ॥ गन्धयति, गन्ध्यते, वा। 'गन्ध अर्दने' चुरादिः। अच् (३।१।१३४)। घञ् (३।३।१९) वा। अर्बति। 'अर्ब गतौ' (भ्वा० प० से०)। अच् (३।१।१३४)। गन्धश्चासावर्बश्च शकन्ध्वादिः (वा० ६।१।९४) यद्वा गन्धे अर्बो बोधोऽस्य। '**गन्धर्वः** पशुभेदे पुंस्कोकिलतुरंगयोः। अन्तराभवसत्त्वे च गायने खेचरेऽपि च' इति (सर्शान्ते) विश्वमेदिन्यौ ॥ (१) ॥*॥ शृणाति। 'शॄ हिंसायाम्' (क्र्या० प० से०)। 'कृशृशलिकलिगर्दिभ्योऽभच्' (उ० ३।१२२)। 'अष्टापदे च करभे **शरभः** स्यान्मृगान्तरे' इति तालव्यादौ रभसः। '**शरभस्तु** पशोर्भिदि। करभे वानरभिदि' (इति मेदिनी) ॥ (१) ॥*॥ **रमते** अन्तर्भावितण्यर्थो वा। 'ज्वलिति-' (३।१।१४०) इति णः। रमन्तेऽस्मिन्ननेन वा। 'हलश्च' (३।३।१२१) इति घञ्। '**रामा** योषाहिङ्गुलिन्योः क्लीबं वास्तुककुष्ठयोः। ना राघवे च वरुणे रैणुकेये हलायुधे। हये च पशुभेदे च त्रिषु चारौ सितेऽसिते' (इति मेदिनी) ॥ (१) ॥*॥ सरणशीलः। 'सृ गतौ' (भ्वा० प० अ०)। 'सृघस्यदः क्मरच्' (३।२।१६०) ॥ (१) ॥*॥ गवते 'गुङ् शब्दे' (भ्वा० आ० अ०)। बाहुलकादयः। यद्वा गवनम्। 'ऋदोरप्' (३।३।५७) गवं गवेन वा याति। मूलविभुजादिकः (वा० ३।२।५) ॥ (१) ॥*॥ शशति। 'शश प्लुतगतौ' (भ्वा० प० से०) अच् (३।१।१३४) ॥ (१) ॥*॥ इत्यादयो येऽत्रोक्ताः, ये च पूर्वोक्ताः सिंहादयः, वक्ष्यमाणाश्च ये गोमेषहस्त्यश्वादयः, सर्वे ते पशुजातयः पशुशब्दवाच्याः। पश्यति सर्वमविशेषेण। 'दृशिर् प्रेक्षणे' (भ्वा० प० अ०)।

१—हैमे तु 'कलापे' इति लिखितम्। 'समूहे' इति व्याख्यातमनेकार्थकैरवाकरकौमुद्याम्। २ रौहिट् हलन्तोऽपि 'स एव रौहिषां मध्ये चरति' इति भवभूतिः। 'तृणाढ्ये कश्चित् क्रमे द्रुतरौहिषी' इत्यभिनन्दः—इति मुकुटः ॥

१—हैमसटीकपुस्तके तु नोपलभ्यते ॥

'अर्जिदृशि–'(उ० १।२७) इत्युः पशिरादेशश्च । यत्तु मुकुटः—पशेः सौत्रधातोः 'अपष्ठ्वादयः इति कुः' इति सुभूतिः—इत्याह । तदुक्तसूत्रास्मरणमूलकम् ।—पाश्यन्ते पाशैः—इति स्वाम्यप्येवम् । '**मृगभेदानाम्**' पृथक् ॥

**उन्दुरुर्मूषिकोऽप्याखुः**

**उन्द्विति** ॥ उनत्ति । 'उन्दी क्लेदने' (रु० प० से०) । बाहुलकादुरुः । '**कन्दुरुन्दुरुरुन्दुरः**' इति शब्दार्णवः ॥ (१) ॥*॥ मुष्णाति । 'मुष स्तेये' (क्र्या० प० से०) । 'मुष्णातेर्दीर्घश्च' (उ० २।४२) इति किकन् ॥*॥ 'मूष स्तेये' (भ्वा० प० से०) दीर्घोपधोऽस्ति । मूषति । ण्वुल् (३।१।१३३) । '**भद्रमूषिक आसन्दी** कुन्दुरुन्दुरुरुन्दुरः । **मूषको वज्रदशनः क्रमः काण्डो बिलेशयः**' इति वाचस्पतिः ॥ (२) ॥*॥ आ खनति । 'खनु अवदारणे' (भ्वा० उ० से०) । 'आङ्परयोः खनिशृभ्यां डिच्च' (उ० १।३३) इत्युः । मुकुटस्तु—'आङि खनिवंच्योर्नलोपश्च' इति कुर्नलोपश्च । बाहुलकादलोपः—इति सूत्रमुपन्यास्थत् । तच्चिन्त्यम् । उज्ज्वलदत्तादिविरोधात् ॥ (३) ॥*॥ त्रीणि '**मूषिकस्य**' ॥

**गिरिका बालमूषिका ।**

**गिरीति** ॥ गिरति 'कृगॄपृकुटि–' (उ० ४।१४३) इति इः किच्च । 'ऋत इत्–'(७।१।१००) संज्ञायां कन् (५।३।७५) ॥ (१) ॥*॥ क्षुद्रत्वात् बाला चासौ मूषिका च । '**खर्वा-खुर्बालमूषिका**' इति दुर्गः ॥ (२) ॥*॥ द्वे '**स्वल्पमूषकजातेः**' ॥

**सरटः कृकलासः स्यात्**

**सरेति** ॥ सरति । 'सृ गतौ' (भ्वा० प० अ०) । 'शकादिभ्योऽटन्' (उ० ४।८१) ॥ (१) ॥*॥ कृकं शिरो ग्रीवां कण्ठं च लासयति चालयति । 'लस शिल्पयोगे' चुरादिः 'कर्मण्यण्' (३।२।१) ॥ (२) ॥*॥ द्वे '**सरटस्य**' '**किर्काट**' इति ख्यातस्य ॥

**मुसली गृहगोधिका ॥ १२ ॥**

**मुसेति** ॥ मुस्यति संशयम् । 'मुस खण्डने' (दि० प० से०) वृषादित्वात् (उ० १।१०६) कलच् । गौरादित्वान्ङीष् ।—जातौ ङीष् (४।१।६३)—इति मुकुटः । तन्न । स्त्रीविषयत्वात् । '**मुसलं** स्यादयोग्रे च पुंनपुंसकयोः स्त्रियाम् । तालमूल्यामाखुपर्णीगृहगोधिकयोरपि' (इति मेदिनी) ॥*॥ तालव्यमध्या (**मुशली**) इति स्वामी ॥ (१) ॥*॥ अल्पा गोधा 'अल्पे' (५।३।८५) इति कन् । गृहस्य गोधिका । '**ज्येष्ठा स्त्री कुड्यमत्स्या च गृहगोधा गृहालिका**' इति साहसाङ्कः ।—'**गृहगोलिका**' इति पाठः सभ्यः इति स्वामी ॥ (२) ॥*॥ द्वे '**गृहगोधायाः**' '**विछुत्तिया**' इति ख्यातायाः ॥

**लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः ।**

**लूतेति** ॥ लुनाति । 'लूञ् छेदने' (क्र्या० उ० से०) । 'हसिमृग्रि–' (उ० ३।८६) इति तन् । संज्ञापूर्वकत्वाद्गुणाभावः ।—बाहुलकात्तन्—इति मुकुटस्त्वेतत्सूत्राज्ञानमूलकः । 'लूता **लूतका**' इत्यमरदत्तः । '**लूता** तु रोगे पिपीलिकोर्णनाभयोः' इति हेमचन्द्रः ॥ (१) ॥*॥ तन्तून् वयति । 'वेञ् तन्तुसंताने' (भ्वा० उ० अ०) । 'ह्वावामश्च' (३।२।२) इत्यण् ॥*॥ तन्त्रं तन्तून् वयति '**तन्त्रवायः**' इति स्वामी ॥ (२) ॥*॥ ऊर्णेव तन्तुर्नाभावस्य । 'अच्' (५।४।७५) इति योगविभागादच् । 'ङ्यापोः–' (६।३।६३) इति ह्रस्वः ॥*॥ मर्कति । 'मर्क' सौत्रो धातुर्ग्रहणार्थः । शकादित्वात् (उ० ४।८१) अटन् । 'संज्ञायां कन्' (५।३।७५) 'अथ **मर्कटकः** सस्यभेदे वानरलूतयोः' इति मेदिनी ॥ (४) ॥*॥ चत्वारि '**ऊर्णनाभस्य**' '**मकडी**' इति ख्यातस्य ॥

**नीलङ्गुस्तु क्रिमिः**

**नीति** ॥ नितरां लङ्गति । 'लगि गतौ' (भ्वा० प० से०) । नीलति वा । 'णील वर्णे' (भ्वा० प० से०) 'खरुशङ्कु–' (उ० १।३६) साधुः । 'नीलङ्गुरपि **नीलाङ्गुः**' इति द्विरूपकोशः । '**नीलङ्गुः** स्यात् कृमौ पुंसि भम्भराल्यां तु योषिति' इति मेदिनी ॥ (१) ॥*॥ क्रामति । 'क्रमु पादविक्षेपे' (भ्वा० प० से०) । 'क्रमितमिशस्तम्भामत इत्' (उ० ४।१२२) इति किः ॥*॥ बाहुलकात् संप्रसारणमपि । 'द्रुमामये भवेत्पुंसि कीटे च **क्रिमिवत् कृमिः**' इति रभसः । '**क्रिमिर्ना कृमिवत्** कीटे लाक्षायां कृमिले खरे' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**सुनकीडा**' इति ख्यातस्य ॥

**कर्णजलौका शतपद्युभे ॥ १३ ॥**

**कर्णेति** ॥ कर्णस्य जलौकेव ॥*॥ (**कर्णजलौकाः**) सान्ता वा ॥ (१) ॥*॥ शतं पादा यस्याः । 'कुम्भपदीषु च' (५।४।१३९) इति साधुः ॥ (२) ॥*॥ सान्तत्वेऽपि स्त्रीत्वबोधनाय—'उभे' इति । द्वे '**कर्णजलौकायाः**' '**गोजर**' इति ख्यातस्य ॥

**वृश्चिकः शूककीटः स्यात्**

**वृश्चीति** ॥ वृश्चति । 'ओ व्रश्चू छेदने' (तु० प० से०) 'व्रश्चिकृष्योः किकन्' (उ० २।४०) । 'ग्रहिज्या–' (६।१।१६) इति संप्रसारणम् । '**वृश्चिकस्तु** द्रुणे राशौ शूककीटौषधीभिदोः' (इति मेदिनी) ॥ (१) ॥*॥ शूकयुक्तः कीटः ।

१ अचि (३।१।१३४) । गौरादित्वात् (४।१।४१) जातित्वात् (४।१।६३) वा ङीषि '**मूषी**' अपि ॥ 'हन्ति कीटविषं सर्वं तथा मूषीविषं च यत्' इति शालिहोत्रे—इति मुकुटः ॥
२—'**मुषली**' मूर्धन्यमध्या च इति वर्णदेशना—इति मुकुटः ॥

१—अनेकार्थकैरवाकरकौमुद्यां तु 'कर्दमे गदे' इति व्याख्यातं मङ्खप्रामाण्येन ॥

शाकपार्थिवादिः (वा० २।१।७८) ॥ (२) ॥*॥ द्वे 'ऊर्णादिभक्षककृमिविशेषस्य' ॥

अलिद्रुणौ तु वृश्चिके।

**अलीति** ॥ अलति—दंशे समर्थो भवति। 'अल भूषणादौ' (भ्वा० प० से०)। 'सर्वधातुभ्य इन्' (उ० ४।११८)। 'भङ्गवृश्चिकयोरलिः' इति रभसः ॥*॥ बाहुलकादिण्प्रत्यये दीर्घादिरपि। 'वृश्चिको द्रुण आलिः स्यात्' इति बोपालितः ॥*॥ नान्तोऽप्यस्ति अलमर्थोऽस्यास्ति। 'व्रीह्यादित्वात्' (५।२।११६) इनिः। 'अव्ययानां भमात्रे टिलोपः' (वा० ६।४।१४४) इति टिलोपः। 'अथाली स्याद्वृश्चिके भ्रमरे पुमान्' (इति मेदिनी) ॥ (१) ॥*॥ द्रुणति। 'द्रुण हिंसागतिकौटिल्येषु' (तु० प० से०)। 'इगुपध—' (३।१।१३५) इति कः। 'द्रुणं चापेऽलिनि द्रुणः' (इति मेदिनी) ॥*॥ अचि (३।१।१३४) 'द्रोणः' इत्येके—इति स्वामी ॥ (२) ॥*॥ (३) ॥*॥ त्रीणि 'वृश्चिकस्य' 'वीछी' इति ख्यातस्य ॥

पारावतः कलरवः कपोतः

**पारेति** ॥ परं जीवमवति। पराच्छत्रोरहंकाराद्वा ज्ञानोपदेशेन। 'अव रक्षणादौ' (भ्वा० प० से०)। शतृप्रत्ययः (३।२।१२४) । 'द्वितीया' (२।१।२४) 'पञ्चमी' (२।१।३७) इति योगविभागात् समासः। परावतो दत्तात्रेयस्यायं गुरुः। 'तस्येदम्' (४।३।१२०) इत्यण् ॥*॥ 'पारापतः' इति पाठे पारादप्यापतति प्रेम्णा। 'पत्लृ गतौ' (भ्वा० प० से०)। अच् (३।१।१३४)। 'पारावतश्च छेद्यश्च कपोतो रक्तलोचनः। पारापतः कलरवः' इति रभसः ॥ (१) ॥*॥ कलो रवोऽस्य ॥ (२) ॥*॥ कस्य वायोः पोत इव, को वायुः पोतो नौरिवास्य वा। 'पारावतः कपोतः स्यात्कपोतो विहगान्तरे' इति विश्वः ॥ (३) ॥*॥ त्रीणि 'पारावतस्य' 'परेवा' इति ख्यातस्य ॥

अथ शशादनः ॥ १४ ॥

पत्री श्येनः

**अथेति** ॥ शशमत्ति। 'अद भक्षणे' (अ० प० अ०)। ल्युः (३।१।१३३)। ल्युट् (३।३।११३) वा। युच् (उ० २।७८)। 'श्येने पत्रिशशादनौ' (इत्यमरमाला) ॥ (१) ॥*॥ 'अतिशयितं प्रशस्तं वा पत्रमस्य। 'अतः—' (५।२।११५) इतीनिः। 'श्येनाख्यो विहगः पत्री पत्रिणौ शरपक्षिणौ' इति शाश्वतः ॥ (२) ॥*॥ श्यायते। 'श्यैङ् गतौ' (भ्वा० आ० अ०)। 'श्यास्त्याहृञविभ्य इनच्' (उ० २।४६)। ('श्येनः पक्षिणि पाण्डुरे' इति मेदिनी) ॥ (३) ॥*॥ त्रीणि 'श्येनस्य' 'वाज' इति ख्यातस्य ॥

१—भाष्ये तु 'अव्ययानां च' इत्येव वार्तिकमुपलभ्यते ॥

उलूके तु वायसारातिपेचकौ।

**उल्विति** ॥ उचति। 'उच समवाये' (तु० प० से०)। 'उलूकादयश्च' (उ० ४।४१) इति साधुः। 'उलूकः पुंसि काकाराविन्द्रे भारतयोधिनि' (इति मेदिनी) ॥ (१) ॥*॥ वायसस्य काकस्यारातिः ॥ (२) ॥*॥ पचति—संतप्रति, पच्यते वा दुःखेन। 'डुपचष् पाके' (भ्वा० उ० अ०)। 'पचिमच्योरिच्चोपधायाः' (उ० ५।३७) इति वुन्। अत इत्वम्। 'पुगन्त—' (७।३।८६) इति गुणः। यत्तु मुकुटः—कृञादित्वात् (उ० ५।३५) वुन्। पृषोदरादित्वात् (६।३।१०९) अत एत्वम्—इत्याह। तन्न। 'पचिमच्योः' इति सूत्रस्य सत्त्वात्। पृषोदरादित्वकल्पनाया अन्याय्यत्वात्। 'अथ शकाख्यो दिवान्धो वक्रनासिकः। हरिनेत्रो दिवाभीतो नखाशी पीयुघर्घरौ। काकभीरुर्नक्तचारी' इति त्रिकाण्डशेषः ॥ (३) ॥*॥ त्रीणि 'घूकस्य' ॥

व्याघ्राटः स्याद्भरद्वाजः

**व्याघ्रेति** ॥ व्याघ्रमटति। 'अट गतौ' (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१)। व्याघ्र इवाटति वा। अच् (३।१।१३४) (१) ॥*॥ भरन् धारको वाजोऽस्य। यद्वा भरद्वाजस्यापत्यम्। ऋष्यण् (४।१।११४)। संज्ञापूर्वकत्वाद्वृद्ध्यभावः। 'भरद्वाजो गुरोः पुत्रे व्याघ्राटाख्यविहंगमे' (इति मेदिनी) ॥ (२) ॥*॥ द्वे 'भरद्वाजपक्षिणः' 'मर्दुल' इति ख्यातस्य ॥

खञ्जरीटस्तु खञ्जनः ॥ १५ ॥

**खञ्जेति** ॥ खञ्ज इव ऋच्छति। 'ऋ गतौ' (भ्वा० प० अ०)। बाहुलकात् कीटन् ॥ (१) ॥*॥ खञ्जति। 'खजि गतिवैकल्ये' (भ्वा० प० से०)। नन्द्यादित्वात् (३।१।१३४) ल्युः। 'खञ्जनः खञ्जरीटे, स्त्री सर्षप्यां, खञ्जनं गतौ' (इति मेदिनी) ॥ (२) ॥*॥ द्वे 'खञ्जन' इति ख्यातस्य ॥

लोहपृष्ठस्तु कङ्कः स्यात्

**लोहेति** ॥ लोहमिव पृष्ठमस्य ॥ (१) ॥*॥ कङ्कते। 'ककि गतौ' (भ्वा० आ० से०)। अच् (३।१।१३४)। 'कङ्कश्छद्मद्विजे ख्यातो लोहपृष्ठकृतान्तयोः' (इति मेदिनी) ॥ (२) ॥*॥ द्वे 'बाणोपयोगिपत्रस्य पक्षिभेदस्य' 'कंकहड' इति ख्यातस्य ॥

अथ चाषः किकीदिविः।

**अथेति** ॥ चाषयति। 'चष हिंसायाम्' (चु० प० से०) स्वार्थण्यन्तः। 'चष भक्षणे' (भ्वा० उ० से०) हेतुमण्ण्यन्तो वा। अच् (३।१।१३४)। 'चासः' अपि। 'इक्षुपक्षिभिदोश्चासः' इति दन्त्यान्तेषु रभसः ॥ (१) ॥*॥ 'किकी' इति दीव्यति वाशते। 'दिवु क्रीडादौ' (दि० प० से०)।

'कृविघृष्वि–' (उ० ४।५६) इति साधुः । 'किकीदिविश्च चाषः स्यात्' इति रत्नकोषः । 'चाषो दिविः किकिः स्मृतः' इति व्याडिः ॥ (२) ॥*॥ द्वे 'चाषस्य' 'चास' इति ख्यातस्य ॥

**कलिङ्गभृङ्गधूम्याटाः**

**केति** ॥ के मूर्ध्नि लिङ्गं चूडास्य । कलिं कलहं गच्छति वा । 'गमश्च' (३।२।४७) इति खच् । 'खच् डिद्वक्तव्यः' (वा० ३।२।३८) । 'कलिङ्गः पूतिकरजे धूम्याटे भूम्नि नीवृति । न द्वयोः कौटजफले महिलायां तु योषिति' (इति मेदिनी) ॥ (१) ॥*॥ भृङ्ग इव । कृष्णत्वात् । यद्वा बिभर्ति कुलम् । 'भृञः किन्नुट् च' (उ० १।१२५) इति गन् । 'भृङ्गो धूम्याटषिङ्गयोः । मधुव्रते भृङ्गराजे पुंसि भृङ्गं गुडत्वचि' (इति मेदिनी) ॥ (२) ॥*॥ धूम्या धूमसमूह इवाटति । अच् (३।१।१३४) ॥ (३) ॥*॥ त्रीणि 'भृङ्गस्य' ॥

**अथ स्याच्छतपत्रकः ॥ १६ ॥**

**दार्वाघाटः**

**अथेति** ॥ शतं पत्राण्यस्य ॥ (१) ॥*॥ दारु आहन्ति । 'दारावाहनोऽणन्त्यस्य च टः–' (वा० ३।२।४९) । वासार्थं दारु आघाटयति । 'घट संघाते' चुरादिः । अण् (३।२।१) ॥ सुभूतिस्तु चिन्त्यः । घट्टिना विगृहीतत्वात् । 'काष्ठकुट्टः शतच्छदः' इति त्रिकाण्डशेषः ॥ (२) ॥*॥ द्वे 'काष्ठकुट्टस्य' 'काठकोरा' इति ख्यातस्य ॥

**अथ शारङ्गः स्तोककश्चातकः समाः ।**

**अथेति** ॥ शारयति, शार्यते, वातपादिना । 'शॄ हिंसायाम्' (क्र्या० प० से०) ण्यन्तः । 'तरत्यादिभ्यश्च' (उ० १।१२०) इत्यङ्गच् ।—शारेरङ्गच्—इति मुकुटः । तन्न । उज्ज्वलदत्तादिवृत्तिष्वेतत्सूत्रादर्शनात् । 'शारङ्गश्चातके ख्यातः शबले हरिणेऽपि च' इति तालव्यादावजयः ॥*॥ सरति । 'सृवृञोर्वृद्धिश्च' (उ० १।११२) इत्यङ्गच् ।—'सृ गतौ' (भ्वा० प० अ०) । णिच् (३।१।२६) पूर्ववत् । अण् (३।२।१) वृद्धिश्च—इति मुकुटश्चिन्त्यः । अणोऽप्रसङ्गात् । 'सृवृञोः' इति सिद्धत्वाच्च । णिचः प्रयोजनाभावाच्च । 'चातके हरिणे पुंसि सारङ्गः शबले त्रिषु' इति दन्त्यादौ रभसात् । यद्वा सारमङ्गमस्य । शकन्ध्वादिः (वा० ६।१।९४) । 'सारङ्गः पुंसि हरिणे चातके च मतङ्गजे । शबले त्रिषु' (इति मेदिनी) ॥ (१) ॥*॥ स्तोकं कं जलमस्य । स्तोकं कायति वा । 'कै शब्दे' (भ्वा० प० अ०) । 'आतोऽनुप–' (३।२।३) इति कः ॥ (२) ॥*॥ चतति । 'चते याचने' (भ्वा० प० से०) । ण्वुल् (३।१।१३३) (३) ॥*॥ त्रीणि 'चातकपक्षिणः' 'पपिहा' इति ख्यातस्य ॥

१ 'अण्' इत्यस्य स्थाने 'कर्मण्यण्' इति वा पाठः ।



**कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ १७ ॥**

**कृकेति** ॥ कृकेन गलेन वक्ति । 'वच परिभाषणे' (अ० प० अ०) । 'कृके वचः कुश्च' (उ० १।६) इत्युण् । 'कृकवाकुर्मयूरेऽपि सरटे चरणायुधे' इति विश्वः ॥ (१) ॥*॥ ताम्रा चूडास्य ॥ (२) ॥*॥ कोकनम् । 'कुक आदाने' (भ्वा० आ० से०) । संपदादिभ्यः क्विप् (वा० ३।३।१०८) । कुटति । 'कुट कौटिल्ये' (तु० प० से०) । 'इगुपध–' (३।१।१३५) इति कः । कुका कुटः । 'कर्तृकरणे–' (२।१।३२) इति समासः । कुत्सितः कुटो वा । कोः पृथिव्याः कुटो वा । पृषोदरादिः (६।३।१०९) वा ।—कुं पृथ्वीं कुटति । इगुपधत्वात् (३।१।१३५) कः—इति मुकुटः । तन्न । अणस्तदपवादत्वात् । 'अकारान्निरुपपदात्सोपपदो विप्रतिषेधेन' (३।२।१) इति वार्तिकाद्वा । मूलविभुजादित्वम् (वा० ३।२।५) युक्तम् । 'कुक्कुट्यनृतचर्यायां पुंसि स्याच्चरणायुधे । निषादशूद्रयोः पुत्रे तृणोल्कायां च कुक्कुभे' इति विश्वमेदिन्यौ ॥ (३) ॥*॥ चरणआयुधमस्य ॥ (४) ॥*॥ चत्वारि 'कुक्कुटस्य' ॥

**चटकः कलविङ्कः स्यात्**

**चटेति** ॥ चटति । 'चट भेदने' (भ्वा० प० से०) । क्वुन् (उ० २।३२) ॥ (१) ॥*॥ कलं वङ्कते । 'वकि गतौ' (भ्वा० आ० से०) । अण् (३।२।१) पृषोदरादिः (६।३।१०९) । 'कलविङ्कः पुमान् ग्रामचटकेऽपि कलिङ्गके' (इति मेदिनी) ॥ (२) ॥*॥ द्वे 'चटकस्य' ॥

**तस्य स्त्री चटका**

**तस्येति** ॥ चटकस्य स्त्रीति स्त्रीत्वविवक्षायां 'पुंयोगात्–' (४।१।४८) इति प्राप्तो ङीप् जातिलक्षणङीष् (४।१।६३) च अजादि (४।१।४) पाठाद्बाध्यते । क्षिपकादित्वात् (७।३।४५) नेत्वम् ॥ (१) ॥*॥ एकम् 'चटकस्त्रियाः' ॥

**तयोः ।**

**पुमपत्ये चाटकैरः**

**तयोरिति** ॥ चटकायाश्चटकस्य वा पुमपत्यम् । 'चटकाया ऐरक्' (४।१।१२८) 'चटकादपीति वक्तव्यम्' (४।१।१२८) फलितम् । तयोश्चटकाचटकयोः—इति मुकुटः । तन्न । 'पुमान् स्त्रिया' (१।२।६६) इत्यन्तरङ्गैकशेषप्रवृत्त्या द्वन्द्वासंभवात् ॥ (१) ॥*॥ एकम् 'चटकपुमपत्यस्य' ॥

**स्त्र्यपत्ये चटकैव हि ॥ १८ ॥**

**स्त्र्येति** ॥ स्त्री च तदपत्यं चेति । तस्मिन् । 'स्त्रियामपत्ये लुग्वक्तव्यः' (वा० ४।१।१२८) इत्यैरको लुक् । 'लुक्तद्धितलुकि' (१।२।४९) । पुनष्टाप् (४।१।४) ॥ (१) ॥*॥ एकम् 'चटकस्त्र्यपत्यस्य' ॥

**कर्करेटुः करेटुः स्यात्**

**कर्केति** ॥ 'कर्क' इति रेटति । 'रेटृ भाषणे' (भ्वा० उ०

से०)। मृगय्वादिः (उ० १।३७)।—'अपष्ठ्वादयश्च'—इति मुकुटस्तु चिन्त्यः। उज्ज्वलदत्तादिष्वस्य सूत्रस्यादर्शनात्॥ (१) ॥*॥ के वायौ जले वा रेटति। पूर्ववत्। 'कर्करेटुः करेटुः स्यात् करटुः **कर्कराटुकः**' इति रभसः॥ (२) ॥*॥ द्वे **'अशुभवादिपक्षिभेदस्य'**॥

**कृकणक्रकरौ समौ।**

**कृकेति**॥ 'कृ' इति कणति। 'कण शब्दे' (भ्वा० प० से०)। अच् (३।१।१३४)। कृकेण कण्ठेन अणति वा। 'अण शब्दे' (भ्वा० प० से०)। अच् (३।१।१३४)। शकन्ध्वादिः (वा० ६।१।९४)॥ (१) ॥*॥ 'क्र' इति शब्दकरणशीलः। 'कृञो हेतुताच्छील्य–' (३।२।२०) इति टः॥ (२) ॥*॥ द्वे **'अशुभपक्षिभेदस्य'**॥

**वनप्रियः परभृतः कोकिलः पिक इत्यपि॥ १९॥**

**वनेति**॥ वनं प्रियमस्य॥ (१) ॥*॥ परेण काकेन भृतः॥ (२) ॥*॥ कोकते। 'कुक आदाने' (भ्वा० आ० से०)। 'सलिकल्यनि–' (उ० १।५४) इति लच्।—'अजिरादयश्च' इति किरः—इति मुकुटः। तन्न। किरचि गुणाभावप्रसङ्गात्। कोकतेरजिरादयनन्तर्भावात् उज्ज्वलदत्तादिष्वस्य सूत्रस्यादर्शनाच्च॥ (३) ॥*॥ अपि कायति। 'आतश्चोपसर्गे' (३।१।१३६) इति कः। 'वष्टि भागुरिः' इत्यल्लोपः॥ (४) ॥*॥ चत्वारि **'कोकिलस्य'**॥

**काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः।**
**ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि॥ २०॥**

**काके इति**॥ कायति। 'कै शब्दे' (भ्वा० प० से०)। 'इण्भीका–' (उ० ३।४३) इति कन्। **'काकः** स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि। शिरोवक्षालने मानप्रभेदद्वीपभेदयोः॥ **काका** स्यात्काकनासायां काकोलीकाकजङ्घयोः। रक्तिकायां मलय्वां च काकमाच्यां च योषिति॥ **काकं** सुरतबन्धे स्यात् काकानामपि संहतौ' इति विश्वमेदिन्यौ॥ (१) ॥*॥ करोति शकुनम्। 'शक्यादिभ्योऽटन्' (उ० ४।८१)। के रटति। 'रट परिभाषणे' (भ्वा० प० से०)। अच् (३।१।१३४) वा। **'करटो** गजगण्डे स्यात्कुसुम्भे निन्द्यजीवने। एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे। (**करटो** वाद्यभेदे') (इति विश्वमेदिन्यौ)॥ (२) ॥*॥ न रिष्टमस्य। **'अरिष्टो** लशुने निम्बे फेनिले काककङ्कयोः' (इति मेदिनी)॥ (३) ॥*॥ बलिना पुष्टः॥ (४) ॥*॥ सकृत् प्रजा यस्य॥ (५) ॥*॥ ध्वाङ्क्षति। 'ध्वाक्षि घोरवाशिते च' (भ्वा० प० से०) अच् (३।१।१३४)। **'ध्वाङ्क्षः** काके बकेऽर्थिनि। गृहे[1], **ध्वाङ्क्षी** तु काकोल्याम्' (इति हैमः)॥ (६) ॥*॥ 'काँ, काँ,' इति शब्दनात् आत्मानं घोषयति। 'घुषिर् विशब्दने' (चु० उ० से०)। अण् (३।२।१)॥ (७) ॥*॥ परं बिभर्ति। 'डुभृञ्' (जु० उ० से०)। क्विप् (३।२।७५)॥ (८) ॥*॥ बलिं भुङ्क्ते। 'भुज पालनादौ' (रु० प० अ०)। क्विप् (३।२।७५)॥ (९) ॥*॥ वयते। 'वय गतौ' (भ्वा० आ० से०)। 'वयश्च' (उ० ३।१२०) इत्यसच्।—वयति—इति मुकुटश्चिन्त्यः। वयतेरात्मनेपदित्वात्। **'वायसो**ऽगुरुवृक्षेऽपि श्रीवासध्वाङ्क्षयोः पुमान्' (इति मेदिनी)॥ (१०) ॥*॥ दश **'काकस्य'**॥

**द्रोणकाकस्तु काकोलः**

**द्रोणेति**॥ द्रुणति। 'द्रुण हिंसागतिकौटिल्येषु' (तु० प० से०) अच् (३।१।१३४)। द्रोणाख्यः काकः। **'द्रोणो** ना दग्धकाके स्यादश्वत्थाम्नो गुरावपि' इति रुद्रः। **'द्रोणो**ऽस्त्रियामाढके स्यादाढकानां चतुष्टये। पुमान् कृपीपतौ कृष्णकाके, स्त्री नीवृदन्तरे॥ तथा काष्ठाम्बुवाहिन्यां गवादन्यामपीष्यते' इति मेदिनी॥ (१) ॥*॥ काकयति। 'कक लौल्ये' (भ्वा० आ० से०) स्वार्थण्यन्तः। बाहुलकादोलच्। **'काकोलं** नरकान्तरे, । ना कुलाले द्रोणकाके, विषभेदे तु न स्त्रियाम्' (इति मेदिनी)॥ (२) ॥*॥ 'द्रोणकाको **दग्धकाको वृद्धकाको वनाश्रयः'** इति त्रिकाण्डशेषः। द्वे **'डोडकाक'** इति ख्यातस्य॥

**दात्यूहः कालकण्ठकः।**

**देति**॥ 'दाप् लवने' (अ० प० अ०)। क्तिन् (३।३।९४)। दातिं मारणमूहते। 'ऊह वितर्के' (भ्वा० आ० से०) अण् (३।२।१)। यद्वा दित्यौहोऽयम्। 'तस्येदम्' (४।३।१२०) इत्यण्। 'देविकाशिंशपा–' (७।३।१) इत्यात्वम्। 'वाह ऊठ्' (६।४।१३२)। शकन्ध्वादिः (वा० ६।१।९४)। **'दात्यूहः** कालकण्ठके। चातकेऽपि' इति हैमः॥ (१) ॥*॥ काले वर्षाकाले कण्ठो ध्वनिरस्य। **'कण्ठः** स्वरेऽन्तिके गले' इति रुद्रः। कालः कण्ठोऽस्य। कप् (५।४।१५४) **'कालकण्ठनीलकण्ठौ** पीतसारे महेश्वरे। दात्यूहे ग्रामचटके खञ्जरीटे शिखावले' इति हेमचन्द्रः॥ (२) ॥*॥ द्वे **'दात्यूहस्य'**॥

**आतायिचिल्लौ**

**आतेति**॥ आतायते तच्छीलः। 'तायृ संतानपालनयोः' (भ्वा० आ० से०)। 'सुप्यजातौ–' (३।२।७८) इति णिनिः। यद्यप्यत्र वृत्तिकारादिभिः—'अनुपसर्गे'—इत्युक्तम्। तथा भाष्ये उपसर्गेपि णिनिः स्वीकृतः॥*॥ स्वामी तु—आतपति—इति विगृह्णन् **'आतापी'** इति पाठं मन्यते॥ (१) ॥*॥ चिल्लति। 'चिल्ल शैथिल्ये हावकृतौ च' (भ्वा० प० से०) अच् (३।१।१३४)। **'चिल्लः** खगे स **चुल्लश्च पिल्ल-**

---

[1] १—गृहं गृहविशेषः। यथाहुः—'ध्वजो धूमश्च सिंहश्च श्वा वृषश्च खरो गजः। ध्वाङ्क्षोऽष्टमस्तु प्राच्याद्या ईशानान्ताः क्रमादमी॥' इत्यनेकार्थकैरवाकरकौमुदी।—'ध्वाङ्क्षी काकोलिकायां स्यात्–' इति पाठस्तु मेदिनीस्थः॥

वत् क्लिन्नलोचने । क्लिन्नाक्षिण' इति हैमः ॥ (२) ॥*॥ द्वे **'चील'** इति ख्यातस्य ॥

### दाक्षाय्यगृध्रौ

**दाक्षेति** ॥ दक्षते । 'दक्ष वृद्धौ शीघ्रार्थे च' (भ्वा० आ० से०)। 'श्रुदक्षिस्पृहिगृहिभ्य आय्यः' (उ० ३।९६) दक्षाय्यस्यायम् । अण् (४।३।१२०) ॥ (१) ॥*॥ गृध्यति । 'गृधु अभिकाङ्क्षायाम्' (दि० प० से०)। 'सुसूधाञ्गृधिभ्यः क्रन्' (उ० २।२४)। **'गृध्रः** खगान्तरे पुंसि वाच्यलिङ्गस्तु लुब्धके' (इति मेदिनी) ।—गर्धते—इति मुकुटश्चिन्त्यः । गृधेर्दैवादिकत्वात् ॥ (२) ॥*॥ द्वे **'गृध्रस्य' 'गीध'** इति ख्यातस्य ॥

### कीरशुकौ

**कीरेति** ॥ 'कि' इति ईरयति । **अच्** (३।१।१३४)—इगुपधत्वात् (३।१।१३५) कः—इति मुकुटः । तन्न । णिजन्तविग्रहप्रदर्शनादिगुपधत्वाभावात् । **'कीरः** शुके पुंभूम्नि नीवृति' (इति मेदिनी) ॥ (१) ॥*॥ शोकति । 'शुक गतौ' (        ) । 'इगुपध–' (३।१।१३५) इति कः । यद्वा शोभते । शवति वा । 'शुभ दीप्तौ' (भ्वा० आ० से०) । 'शु गतौ' (        ) वा । 'शुकवल्कोल्काः' (उ० ३।४२) इति साधुः । **'शुको** व्याससुते कीरे रावणस्य तु मन्त्रिणि । शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम्' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'कीरस्य'** ॥

**समौ ॥ २१ ॥**

**सेति** ॥ 'समौ' इति त्रिषु योज्यम् ॥

**कुङ् क्रौञ्चः**

**कुङिति** ॥ कुञ्चति । 'कुञ्च कौटिल्याल्पीभावयोः' (भ्वा० प० से०) । 'ऋत्विग्दधृक्–' (३।२।५९) इति साधुः ॥ (१) ॥*॥ प्रज्ञाद्यण् (५।४।३८) **'क्रौञ्चो** द्वीपप्रभेदे स्यात् पक्षिपर्वतभेदयोः' (इति मेदिनी) । स्त्रियामजादित्वाट्टाप् ॥*॥ **'कुञ्चः'** इति पाठे पचाद्यच् (३।१।१३४) ॥ (२) ॥*॥ द्वे **'क्रौञ्चस्य' 'करांगुळ'** इति ख्यातस्य ॥

**अथ बकः कह्वः**

**अथेति** ॥ वङ्कते । 'वकि कौटिल्ये गतौ च' (भ्वा० आ० से०)। अच् (३।१।१३४) । आगमशास्त्रस्यानित्यत्वान्न नुम् । वबयोरैक्यम् । यद्वा वाति, वायति, वा । 'वा गत्यादौ' (अ० प० से०) 'ओ वै शोषणे' (भ्वा० प० से०) वा कुन् (उ० २।३२)। 'आतो लोपः–' (६।४।६४) 'व' इति कायति वा । मूलविभुजादिः (वा ३।२।५) । वक्ति वा । अच् (३।१।१४) न्यङ्क्वादिः (७।३।५३) । 'बकस्तु बकपुष्पे स्यात् कह्वे श्रीदे च रक्षसि' (इति मेदिनी) ॥ (१) ॥*॥ 'क' इति शब्दम्, के जले वा ह्वयति । 'ह्वेञ् स्पर्धायां शब्दे च' (भ्वा० उ० अ०) मूलविभुजादित्वात् (वा० ३।२।५) कः ॥ (२) ॥*॥ 'दीर्घजङ्घो निशैडः(तः) स्याद्बकोटः शुक्लवायसः । कङ्केरुर्दोहबलिभुक् शिखीचन्द्रविहंगमः' इति त्रिकाण्डशेषः ॥*॥ द्वे **'बकस्य'** ॥

### पुष्कराह्वस्तु सारसः ।

**पुष्केति** ॥ पुष्करं पद्मं तस्याह्वा आह्वा यस्य ॥ (१) ॥*॥ सरसि भवः । 'तत्र भवः' (४।२।५३) इत्यण् । **'सारसः** पक्षिभेदेन्द्वोः क्लीबं तु सरसीरुहे' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'सारसस्य'** ॥

### कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥ २२ ॥

**कोकेति** ॥ कोकते । 'कुक आदाने' (भ्वा० आ० से०)। अच् (३।१।१३४) । **'कोकश्चक्रे** वृके ज्येष्ठ्यां खर्जूरीद्रुममेकयोः' (इति विश्वः) ॥ (१) ॥*॥ क्रियते निशया वियोगी ।—घञर्थे कः—इति मुकुटः । तन्न । परिगणनात्[१] । वस्तुतस्तु 'ढकि लोपः' (४।१।१३३) इति वत् 'के कृञादीनाम्' (वा० ६।१।१२) इत्यनेनैव कः द्वित्वं च । चकते । 'चक तृप्तौ' (भ्वा० आ० से०) । रक् (उ० २।१३) वा । **'चक्रः** कोके पुमान्, क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः । जलावर्तेऽपि' (इति मेदिनी) ॥(२)॥*॥ चक्रशब्देनोच्यते । 'वच भाषणे' (अ०प०अ०)। घञ् (३।३।१९) ॥ (३) ॥*॥ रथाङ्गस्य चक्रस्याह्वयो नाम यस्य ॥ (४) ॥*॥ चत्वारि **'चक्रवाकस्य' 'चकवा'** इति ख्यातस्य ॥

**कादम्बः कलहंसः स्यात्**

**कादेति** ॥ कदम्बे समूहे भवः 'तत्र भवः' (४।३।५३) इत्यण् । **'कादम्बः** स्यात् पुमान्पक्षिविशेषे सायकेऽपि च' (इति मेदिनी) ॥ (१) ॥*॥ कलो मधुरवाक् हंसः । **'कलहंसस्तु** कादम्बे राजहंसे नृपोत्तमे' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'कादम्बस्य' 'वतक'** इति ख्यातस्य ॥

### उत्क्रोशकुररौ समौ ।

**उदिति** ॥ उत्क्रोशति । 'क्रुश आह्वाने' (भ्वा०प०से०)। अच् (३।१।१३४) ॥ (१) ॥*॥ कवते । 'कुङ् शब्दे' (भ्वा० आ० अ०) 'कुवः क्रन्' (उ० ३।१३३) ।—कुरति । 'कुर शब्दे' (तु० प० से०)। 'कुर छेदने' (तु० प० से०)। बाहुलकात् अरक्—इति स्वामिमुकुटौ 'कुवः क्रन्' इति सूत्रानुसरणमूलकौ ज्ञेयौ ॥ (२) ॥*॥ द्वे **'कुररस्य'** ॥

---

१ वस्तुतस्तु भाष्ये परिगणनताया अनुक्तेरुदाहरणतासंभवेनाकिंचित्करमिदम् । अत एव कैयटेनापि (६।१।१२) उक्तवार्तिकव्याख्यायां 'चक्रः' इत्यत्र 'घञर्थे कः' इत्येवोक्तम् सैन्यपर्यायचक्रशब्दव्याख्यायां स्वयमपि 'घञर्थे कः' इत्युक्तत्वात्पूर्वापरविरुद्धं च ॥

**हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥ २३ ॥**

**हंसा इति** ॥ हन्ति गच्छति । 'वृतृवदिहनि–' ( उ० ३।६२) इति सः । यद्वा अचि (३।१।१३४) । 'भवेद्वर्णागमाद्धंसः' इति सक् । '**हंसः** स्यान्मानसौकसि । निर्लोभनृपविष्ण्वर्कपरमात्मन्यमत्सरे । योगभेदे मन्त्रभेदे शारीरमरुदन्तरे । तुरंगमप्रभेदे च' ( इति मेदिनी ) ॥ (१) ॥*॥ श्वेता गरुतोऽस्य ॥ (२) ॥*॥ चक्राण्यङ्गान्यस्य । '**चक्राङ्गो** मानसौकसि । **चक्राङ्गी** कटुरोहिण्याम्' (इति मेदिनी) ॥ (३) ॥*॥ मानसं सर ओकोऽस्य ॥ (४) ॥*॥ चत्वारि '**हंसस्य**' ॥

**राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ।**

**राजेति** ॥ चञ्चुसहितैश्चरणैः । शाकपार्थिवादिः ( वा० २।१।७८) । यद्वा चञ्चुभिश्चरणैश्चेति द्वन्द्वः । 'द्वन्द्वश्च प्राणितूर्य–' (२।४।२) इत्येकत्वं तु न भवति । 'मुखनासिका–' (१।१।८) इति 'ह्रस्वदीर्घप्लुतः' (१।२।२७) इति च निर्देशेन तस्यानित्यत्वज्ञापनात् ।[1] तैर्लोहितैरुपलक्षिताः । हंसानां राजा । राजदन्तादिः (२।२।३१) । '**राजहंस**स्तु कादम्बे कलहंसे नृपोत्तमे' ( इति हैममेदिन्यौ ) ॥ (१) ॥*॥ एकम् '**राजहंसस्य**' ॥

**मलिनैर्मल्लिकाख्यास्ते**

**मलीति** ॥ किंचिद्धूम्रवर्णैश्चञ्चुचरणैरुपलक्षिताः । 'मल्लिक' इति आख्या येषां ते । मल्लते 'मल्ल धारणे' ( भ्वा० आ० से० ) । 'सर्वधातुभ्य इन्' ( उ० ४।११८ ) । स्वार्थे कन् (५।३।७५) ।—'अच इः' ( उ० ४।१३९ ) —इति मुकुटः । तन्न । मल्लेर्लान्तत्वात् । '**मल्लिको** हंसभेदे स्यात् तृणशून्येऽपि **मल्लिका**' इति रुद्रः । '**मल्लिको** हंसभिद्यपि । **मल्लिका** तृणशून्येऽपि मीनमृत्पात्रभेदयोः' (इति मेदिनी) ॥*॥—मल्लिकाकारमक्षि यस्य । शुक्लापाङ्गत्वात् (इति '**मल्लिकाक्षः**')—इति स्वामी । 'बहुव्रीहौ सक्थ्यक्ष्णोः' (५।४।११३) इति षच् ॥ (१) ॥*॥ एकं '**हंसभेदस्य**' ॥

**धार्तराष्ट्राः सितेतरैः ॥ २४ ॥**

**धार्तेति** ॥ कृष्णैश्चञ्चुचरणैरुपलक्षिताः । धृतराष्ट्रे भवाः । 'तत्र भवः' (४।३।५३) इत्यण् । '**धृतराष्ट्रः** सुराज्ञि स्यात् पक्षिक्षत्रियभेदयोः' इति रभसः । ( '**धृतराष्ट्रः** खगे सर्पे सुराज्ञि क्षत्रियान्तरे । **धृतराष्ट्री** हंसपद्याम्' इति हैमः ) ॥ (१) ॥*॥ एकम् '**कृष्णचञ्चुचरणहंसस्य**' ॥

**शरारिराटिराडिश्च**

**शरेति** ॥ शरं नीरमृच्छति । शरं हिंसां वा । 'ऋ गतौ' (भ्वा० प० अ०) । 'अच इः' (उ० ४।१३९) । 'गुन्द्रेष्वोर्ना **शरं नीरे**' इति तालव्यादौ रभसः ॥*॥ कपिलिकादित्वात् ( वा० ८।२।१८ ) लत्वे '**शरालिः**' अपि ॥*॥ '**शराटिः**' इति पाठान्तरम् । शरमतति । 'अत सातत्यगमने' (भ्वा० प० से०) । 'अज्यतिभ्यां च' ( उ० ४।१३१ ) इतीण् ॥ (१) ॥*॥ आ अटति । इन् ( उ० ४।११८ ) ॥ (२) ॥*॥ आ अडति 'अड्ड उद्यमने' (भ्वा० प० से०) । इन् (उ० ४।११८) ॥—'अक्ष्यडिभ्यामिण्'—इति मुकुटः । तन्न । उज्ज्वलदत्तादावेतत्सूत्रादर्शनात् ॥ (३) ॥*॥ त्रयोऽपि स्त्रीलिङ्गाः । 'आडिः **शरालि**र्वरटी गन्धोली, वानरी कपी' इति स्त्रीलिङ्गकाण्डे रत्नकोषात् ॥*॥ त्रीणि '**शरार्याः**' '**आडी**' इति ख्यातायाः ॥

**बलाका बिसकण्ठिका ।**

**बलेति** ॥ वलते । 'वल संवरणे' ( भ्वा० आ० से० ) । 'वलाकादयश्च' (उ० ४।१४) इति साधुः । बलेनाकति वा । अच् (३।१।१३४) ॥ (१) ॥*॥ बिसवत् कण्ठोऽस्याः ॥ (२) ॥*॥ द्वे '**बकभेदस्य**' ॥

**हंसस्य योषिद्वरटा**

**हंसेति** ॥ वृणीते सेवते सरः । 'वृङ् संभक्तौ' ( क्र्या० आ० से० ) । 'शकादिभ्योऽटन्' (उ० ४।८१) । '**वरटा,** द्वयोर्वरट्यां, स्त्री हंस्यां तु, तत्पतौ पुमान्' ( इति मेदिनी ) ॥ (१) ॥*॥ एकम् '**हंसस्त्रियाः**' ॥

**सारसस्य तु लक्ष्मणा ॥ २५ ॥**

**सारेति** ॥ लक्ष्मीरस्त्यस्याः । 'लक्ष्म्या अच्च' ( ग० ५।२।१००) इति नः । '**सारस्यां लक्ष्मणा** ना तु सौमित्रौ श्रीमति त्रिषु' इति रुद्रः । '**लक्ष्मणा** त्वोषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत्' इति मेदिनी ॥*॥ निर्मकारोऽपि । '**लक्षणश्चैव** सारसे' इत्यमरमाला । '**लक्ष्मणं** नाम्नि चिह्नेऽथ सारस्यां **लक्ष्मणा** क्वचित्' (इति मेदिनी) ॥ (१) ॥*॥ एकम् '**सारसस्त्रियाः**' ॥

**जतुकाऽजिनपत्रा स्यात्**[2]

**जत्विति** ॥ जत्विव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । 'रामठे **जतुकं** चर्मपत्राजतुकृतोः स्त्रियाम्' इति चवर्गतृतीयादौ रभसः ॥ (१) ॥*॥ अजिनमिव पत्रमस्याः ॥ (२) ॥*॥ द्वे '**जतुकायाः**' '**चामचिरयि**' इति ख्यातायाः ॥

**परोष्णी तैलपायिका ।**

**पेति** ॥ परं शत्रुं उष्णं यस्याः । गौरादिः (४।१।४१) ।—'जातेः' (४।१।६३) 'इति ङीष्–' इति मुकुटः । तन्न । 'स्त्री-

[1]—तत्तत्सूत्रभाष्यकैयटानालोचनसूचकमेतत् ॥

१—'महापुरुषमिव प्रकटमीनशङ्खलक्षणं सरः' इति कादम्बरीश्लेषश्च—इति मुकुटः ॥ [2]—'दीर्घमध्या च जतुका निशाशश्वद्व्यापिस्थितघनजतूकापटलकम्' इति पूर्वकविप्रयोगदर्शनात्—इति मुकुटः ॥

स्त्राविष्टा जातिरियम्' इति स्वयमेव व्याख्यातत्वेन—'अस्त्रीविषयात्–' (४।१।६३) इति ङीषो निषेधात् ॥ (१) ॥*॥ तैलं पिबति । 'पा पाने' ( भ्वा० प० अ० ) ण्वुल् (३।१।१३३) ॥ (२) ॥*॥ 'तनुकृमिस्त्विन्द्रगोपः, परोष्णी तैलपायिका । तैलाभ्यक्ता खलाधारा हीरा पिप्पलिका स्त्रियाम्' इति रभसः ॥*॥ द्वे मुखविष्टा **'वागुलिकादिनासिकायाः'** ॥

**वर्वणा मक्षिका नीला**

**वर्वेति** ॥ 'वर' इति वणति । 'वण शब्दे' ( भ्वा० प० से० ) । अच् (३।१।१३४) । यद्वा । बर्बति । 'बर्ब गतौ' ( भ्वा० प० से० ) । युच् (उ० २।७८) ॥ (१) ॥*॥ मशति 'मश शब्दे' ( भ्वा० प० से० ) । 'हनिमशिभ्यां सिकन्' (उ० ४।१५४) । मक्षति वा । 'मक्ष रोषे संघाते च' ( भ्वा० प० से०) । कुन् (उ० २।३२) ण्वुल् (३।१।१३३) वा ॥ (२) ॥*॥ नीलति । 'णील वर्णे' (भ्वा० प० से० ) । अच् (३।१।१३४) । 'नीला' इति क्रियाशब्दोऽयं विवक्षितो न तु गुणशब्दः । अतो न ङीष् । गुणविवक्षायां 'नीली' इति भवत्येव ॥ (३) ॥*॥ **'नीलवर्णमक्षिकायाः'** एकम् । केचित्तु नामत्रयमिदमाहुः । तदा तु 'वा संज्ञायाम्' (वा० ४।१।४२) इति युक्त एव ङीषभावः ॥

**सरघा मधुमक्षिका ॥ २६ ॥**

**सरेति** ॥ सरं गतिमन्तं घातयति । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । णिलोपे (६।४।५१) टिलोपः (६।४।१४३) । यद्वा रङ्घणं रघः । 'रघि गतौ' ( भ्वा० आ० से० ) । 'खनो घ च' (३।३।१२५) इति घित्करणात् 'अन्येभ्योऽपि' इति घः । आगमशास्त्रस्यानित्यत्वान्न नुम् । सह रघेण गत्या वर्तते ॥ (१) ॥*॥ मधुकर्त्री मक्षिका ॥ (२) ॥*॥ द्वे **'मधुमक्षिकायाः'** ॥

**पतङ्गिका पुत्तिका स्यात्**

**पेति** ॥ पतति । 'पतेरङ्गच् पक्षिणि' (उ० १।११९) इत्यङ्गच् । स्वार्थे कन् (५।३।७५) संज्ञायां वा ॥ (१) ॥*॥ पुत् कुत्सितं तायते । 'तायृ संतानपालनयोः' (भ्वा० आ० से०) । बाहुलकात् कः यलोपः (६।१।६६) । 'केऽणः' (७।४।१३) इति ह्रस्वः । 'प्रत्ययस्थात्–' (७।३।४४) इतीत्वम् । पुत् कुत्सितं शब्दं तनोति वा । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः स्वार्थे कन् (५।३।७५) ॥ (२) ॥*॥ द्वे **'मधुमक्षिकाविशेषस्य'** ॥

**दंशस्तु वनमक्षिका ।**

**दंश इति** ॥ दशति 'दंश दशने' ( भ्वा० प० अ० ) । अच् (३।१।१३४) । **'दंशः** कीटविशेषे च वर्मदर्शनयोः पुमान्' (इति मेदिनी) ॥ (१) ॥*॥ वनस्य मक्षिका ॥ (२) ॥*॥ द्वे **'वनमक्षिकायाः'** ॥

**दंशी तज्जातिरल्पा स्याद्**

**दंशीति** ॥ अल्पा दंशजातिः । अपचयविवक्षायां गौरादित्वात् (४।१।४१) ङीष् ।—'जातेः–' (४।१।६३) इति ङीष —इति मुकुटः ॥ (१) ॥*॥ एकम् **'मक्षिकाल्पजातेः'** ॥

**गन्धोली वरटा द्वयोः ॥ २७ ॥**

**गन्धविति** ॥ गन्धयते । 'गन्ध अर्दने' (चु० आ० से०) । बाहुलकादोलच् । गौरादिः (४।१।४१) (**'गन्धोली** वरटाशुण्ठ्योर्भद्रायाम्' इति हैमः ) ॥ (१) ॥*॥ वृणोति । 'वृञ् वरणे' ( स्वा० उ० से० ) । 'शकादिभ्योऽटन्' (उ० ४।८१) ॥*॥ ङीषि (४।१।४१) **'वरटी'** अपि । **'वरटा** वरटीहंस्योस्तत्पतौ **वरटः** स्मृतः' इति तारपालः ॥ (२) ॥*॥ द्वे **'वरटायाः' 'वरडे'** इति ख्यातायाः ॥

**भृङ्गारी चीरुका चीरी झिल्लिका च समा इमाः ।**

**भृङ्गेति** ॥ भृङ्गं भृङ्गरूपम् आ राति । 'रा दाने' (अ० प० अ० ) । मूलविभुजादिः (वा० ३।२।५) । गौरादिः (४।१।४१) यद्वा बिभर्ति । 'शृङ्गारभृङ्गारौ' (उ० ३।१३६) इति साधुः । यद्वा रूपेण भृङ्गमृच्छति । 'ऋ गतौ' ( भ्वा० प० अ० ) अण् (३।१।२) । 'भृङ्गारी झिल्लिकायां च कनकालौ पुनः पुमान्' ( इति मेदिनी ) ॥ (१) ॥*॥ 'ची' इति रौति । 'रु शब्दे' ( अ० प० अ० ) । बाहुलकात् कक् ॥*॥ **'झीरुका'** इति मुकुटः ॥ (२) ॥*॥ चिनोति । 'चिञ् चयने' ( स्वा० उ० अ० ) 'शुसिचिमीनां दीर्घश्च' (उ० २।२५) इति क्रन् ।**'जीरी** झिल्ल्यां, नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालेखनभेदयोः' (इति मेदिनी) ॥ (३) ॥*॥ चिल्लति । 'चिल्ल शैथिल्ये' ( भ्वा० प० से० ) । अच् (३।१।१३४) पृषोदरादित्वाचस्य झः । गौरादिः (४।१।४१) । स्वार्थे कन् (५।३।७५) । **'झिल्ली** चीर्यातपरुचोर्वर्त्यामुद्वर्तनांशके' (इति मेदिनी) ॥ (४) ॥*॥ चत्वारि **'झिल्लिकायाः' 'झिंगुरी'** इति ख्यातायाः ॥

**समौ पतङ्गशलभौ**

**समाविति** । पतति । 'पतेरङ्गच् पक्षिणि' (उ० १।११९) इत्यङ्गच् । **'पतङ्गः** शलभे शालिप्रभेदे पक्षिसूर्ययोः । क्लीबं सूते' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ शलति 'शल चलने' (भ्वा० प० से०) । 'कृशृशलिकलिगर्दिभ्योऽभच्' (उ० ३।१२२) ॥ (२) ॥*॥ द्वे **'पतंगस्य' 'फणिग'** इति ख्यातस्य ॥

**खद्योतो ज्योतिरिङ्गणः ॥२८॥**

**खेति** ॥ खे द्योतते । 'द्युत दीप्तौ' ( भ्वा० आ० से० ) । अच् (३।१।१३४) । खं द्योतयति । अण् (३।२।१) वा ॥ (१) ॥*॥ ज्योतिर्नक्षत्रम् । तद्वदिङ्गति । 'इगि गतौ' (भ्वा० प० से० ) । 'चलनशब्दार्थात्–' (३।२।१४८) इति युच् ॥ (२) ॥*॥ द्वे **'खद्योतस्य'** ॥

**मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ।**
**द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥ २९ ॥**

**मध्विति** ॥ मधु व्रतं भक्ष्यं यस्य ॥ (१) ॥*॥ मधु करोति तच्छीलः । 'कृञो हेतु–' (३।२।२०) इति टः ॥ (२) ॥*॥ मधु लेढि 'लिह आस्वादने' ( अ० उ० अ० ) । क्विप् (३।२।७६) ॥ (३) ॥*॥ एवं पुष्पलिट् ॥ (७) ॥*॥ मधु पिबति 'पा पाने' ( भ्वा० प० अ० ) । 'आतोऽनुप–' (३।२।३) इति कः । 'पिबतेः सुरासीध्वोः' (वा० ३।२।८) इति नियमान्न टक् (३।२।८) ॥ (४) ॥*॥ अलो वृश्चिकलाङ्गूलम् । तदिवास्य । 'अतः–' (५।२।११५) इतीनिः ॥ (५) ॥*॥ द्वौ रेफौ नाम्नि यस्य ॥ (६) ॥*॥ बिभर्ति । 'भृञः किन्नुट् च' (उ० १।१२५) इति कन् ।—'भृङ्गाङ्गभृङ्गाः' इति—इति मुकुटश्चिन्त्यः । उणादिषु तादृशसूत्राभावात् ॥ (८) ॥*॥ षट् पदान्यस्य ॥ (९) ॥*॥ भ्रमति । 'भ्रमु अनवस्थाने' ( दि० प० से० ) । 'अर्तिकमिभ्रमिचमि–' (उ० ३।१३२) इति करन् । **'भ्रमरः** कामुके भृङ्गे' (इति मेदिनी) ॥ (१०) ॥*॥ अलति । 'अल भूषणादौ' ( भ्वा० प० से० ) । 'सर्वधातुभ्य इन्' (उ० ४।११८) । **'अलिः** सुरापुष्पलिहोः' (इति मेदिनी) ॥ (११) ॥*॥ एकादश **'भ्रमरस्य'** ॥

**मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् ।**
**शिखावलः शिखी केकी मेघनादानुलास्यपि ॥३०॥**

**मेति** ॥ मयते । 'मय गतौ' (भ्वा० आ० से० ) । खर्जादित्वात् (उ० ४।९०) ऊरः । मह्यां रौति वा । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । पृषोदरादिः (६।३।१०९) ॥ (१) ॥*॥ बर्हमस्त्यस्य । 'फलबर्हाभ्यामिनन्' (वा० ५।२।१२२) ॥ (२) ॥*॥ इनिः (५।२।११५) ॥ (३) ॥*॥ नीलः कण्ठोऽस्य ॥ (४) ॥*॥ भुजंगं भुङ्क्ते । 'भुज पालनादौ' (रु० प० अ० ) । क्विप् (३।२।७६) ॥ (५) ॥*॥ शिखास्त्यस्य । 'दन्तशिखात् संज्ञायाम्' (५।२।११३) इति वलच् ॥ (६) ॥*॥ पक्षे व्रीह्यादित्वात् । (५।२।११६) इनिः । **'शिखी** वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे । मयूरे कुकुटे पुंसि शिखावत्यन्यलिङ्गकः' (इति मेदिनी) ॥ (७) ॥*॥ केकास्त्यस्य । व्रीह्यादित्वात् (५।२।११६) इनिः ॥ (८) ॥*॥ मेघनादेनानुलसति तच्छीलः 'लस श्लेषणक्रीडनयोः' ( भ्वा० प० से० ) । 'सुप्यजातौ–' (३।२।७८) इति णिनिः ॥ (९) ॥*॥ नव **'मयूरस्य'** ॥

**केका वाणी मयूरस्य**

**केकेति** ॥ के मूर्धनि कायति । 'कै शब्दे' ( भ्वा० प० अ० ) । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । 'हलदन्तात्–' (६।१।९) इत्यलुक् ॥ (१) ॥*॥ एकम् **'मयूरवाण्याः'** ॥

**समौ चन्द्रकमेचकौ ।**

**समाविति** ॥ चन्द्र इव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥ (१) ॥*॥ मेचको वर्णोऽस्त्यस्य । अच् (५।२।१२७) । 'बर्हिकण्ठसमं वर्णं मेचकं ब्रुवते बुधाः' इति कात्यः । **'मेचकः** श्यामले कृष्णे तिमिरे बर्हिचन्द्रके' इति हैमः ॥ (२) ॥*॥ द्वे **'पिच्छस्थचन्द्राकृतेः'** ॥

**शिखा चूडा**

**शीति** ॥ शेते । 'शीङो ह्रस्वश्च' (उ० ५।२४) इति खः । **'शिखा** शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च' ( इति मेदिनी ) ॥ (१) ॥*॥ चुड्यते । 'चुड समुच्छ्राये' ( तु० प० से० ) भिदादिपाठाद् (३।३।१०४) अङ् दीर्घः । **'चूडा** वडभौ शिखायां बाहुभूषणे' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'मयूरशिखायाः'** ॥

**शिखण्डस्तु पिच्छबर्हे नपुंसके ॥३१॥**

**शिखेति** ॥ शिखिनाम्यते । 'अम गत्यादिषु' ( भ्वा० प० से० ) । 'अमन्ताड्डः' (उ० १।११४) । शकन्ध्वादिः (वा० ६।१।९४) । **'शिखण्डो** बर्हचूडयोः' इति हेमचन्द्रः ॥ (१) ॥*॥ 'पिच्छयति । पिच्छयते वा । 'पिच्छ कुट्टने' ( चु० प० से० ) । अच् । (३।३।१३४) घञ् (३।३।१९) वा । **'पिच्छा** पूगच्छटाकोषमोचाशाल्मलिवेष्टके । भक्तसंभूतमण्डे च पङ्क्तावश्वपदामये । स्त्रियां, पुंसि तु लाङ्गूले न द्वयोर्बर्हचूडयोः' (इति मेदिनी) ॥ (२) ॥*॥ बर्हति । 'बृह वृद्धौ' ( भ्वा० प० से० ) । अच् (३।१।१३४) । **'बर्हं** पिच्छे दलेऽस्त्रियाम्' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि **'मयूरपिच्छस्य'** ॥

**खगे विहंगविहगविहंगमविहायसः ।**
**शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ॥ ३२ ॥**
**पतत्रिपत्त्रिपतगपतत्पत्त्ररथाण्डजाः ।**
**नगौकोवाजिविकिरविविष्किरपतत्रयः ॥ ३३ ॥**
**नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमाः ।**

**खग इति** ॥ खे गच्छन्ति । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । **'खगः** सूर्ये ग्रहे देवे मार्गणे च विहंगमे' (इति मेदिनी) ॥ (१) ॥*॥ विहायसि गच्छन्ति । 'गमश्च' (३।२।४७) इति खच् । 'विहायसो विह च' (वा० ३।२।३८) । 'खच्च डिद्वा' (वा० ३।२।३८) ॥ (२) ॥*॥ (४) शुगे ॥*॥ डे (वा० ३।२।४८) तु । **'विहगस्तु** त्रिलिङ्गः स्यादाशुगे ना विहंगमे' (इति मेदिनी) ॥ (३) ॥*॥ विजहाति भुवम् । 'ओहाक् त्यागे' ( जु० प० अ० ) 'वहिहाधाञ्भ्यश्छन्दसि' (उ० ४।२२१) इत्यसुन् णिच्च । क्वचिच्छान्दसा अपि भाषायां प्रयुज्यन्ते । तेन लोकेऽपि । यद्वा विहाययति । 'हय गतौ' ( भ्वा० प० से० ) । 'हि गतौ' ( स्वा० प०अ० ) वा स्वार्थण्यन्तः । 'सर्वधातुभ्योऽसुन्' (उ० ४।१८९) **'विहायाः** शकुनौ पुंसि गगने पुंनपुंसकम्' ( इति

मेदिनी ) ॥ (५) ॥*॥ शक्नोति । 'शक्लृ शक्तौ' ( स्वा० प० अ० ) । 'शके रुनोन्तोन्त्युनयः' ( उ० ३।४९ ) इति प्रत्ययचतुष्टयम् ॥ (६) ॥*॥ पक्षावस्य स्तः । इनिः (५।२।११५) ॥ (७) ॥*॥ **'शकुनिः** पुंसि विहगे सौबले करणान्तरे' (इति मेदिनी) ॥ (८) ॥*॥ **'शकुन्तः** कीटभेदे स्याद्भासपक्षिविहंगयोः' इति मेदिनी ॥ (९) ॥*॥ **'शकुन्तस्तु** पुमान् पक्षिमात्रपक्षिविशेषयोः । शुभशंसिनिमित्ते च **शकुनं** स्यान्नपुंसकम्' (इति मेदिनी) ॥ (१०) ॥*॥ द्विर्जायते । 'अन्येष्वपि' (३।२।१०१) इति डः । **'द्विजः** स्याद्ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु ना । **द्विजा** भार्ग्यां हरेणौ च' (इति मेदिनी) ॥ (११) ॥*॥ पतत्रमस्त्यस्य । इनिः (५।२।११५) ॥ (१२) ॥*॥ एवं पत्री । **'पत्री** श्येने पत्ररथे काण्डद्धरथिकाद्रिषु' (इति मेदिनी) ॥ (१३) ॥*॥ पतेन पक्षेण गच्छति । डः (वा० ३।२।४८ ) ॥ (१४) ॥*॥ पतति । 'पत्लृ गतौ' ( भ्वा० प० से० ) । शता (३।२।१२४) ॥ (१५) ॥*॥ पत्रं पतत्रं रथ इव यस्य ॥ (१६) ॥*॥ अण्डाज्जायते स्म । 'पञ्चम्याम्–' (३।२।९८) इति डः । **'अण्डजो** मृगनाभौ स्यात्सरटेऽहौ खगे झषे' (इति मेदिनी) ॥ (१७) ॥*॥ नगो वृक्षः, नगे वा ओको यस्य । **'नगौकाः** पुंसि शरभे पक्षिपञ्चास्ययोरपि' इति मेदिनी—जलौकावद् 'आदन्तः' अपि—इति मुकुटः ॥ (१८) ॥*॥ वाजाः पक्षाः सन्त्यस्य । इनिः (५।२।११५) । (**'वाजी** बाणाश्वपक्षिषु' इति मेदिनी) ॥ (१९) ॥*॥ विकिरति । 'कॄ विक्षेपे' (तु० प० से०) । 'इगुपध–' (३।१।१३५) इति कः ॥ (२०) ॥*॥ वाति । 'वा गतौ' ( अ० प० अ० ) 'वातेर्डिच्च' (उ० ४।१३४) इतीण् ॥—'वेञो डित्' (उ० ४।७२)—इति स्वामिमुकुटौ चिन्त्यौ । ईचिप्रत्ययप्रकरणेऽस्य पाठाद् 'वीचिः' इति रूपापत्तेः ॥ (२१) ॥*॥ 'विष्किरः शकुनिर्वा' (६।१।१५०) इति पक्षे सुट् । 'परिनिविभ्यः–' (८।३।७०) इति षत्वम् ॥ (२२) ॥*॥ पतति । 'पतेरत्रिन्' (उ० ४।६९) ।—'उणादयो बहुलम्' (३।३।१) इति पतेरत्रिः—इति मुकुट एतत्सूत्राज्ञानमूलकः ॥ (२३) ॥*॥ नीडे उद्भवो येषाम् ॥ (२४) ॥*॥ गरुतः पक्षाः सन्त्यस्य । मतुप् (५।२।९४) 'झयः' (८।२।१०) इति वत्वं तु न । यवादित्वात् (८।२।९) 'तसौ मत्वर्थे' (१।४।१९) इति भत्वम् ॥ (२५) ॥*॥ पतितुमिच्छवः । लटः शता (३।२।१२४) । 'सनि मीमा–' (७।४।५४) इतीस् ॥ (२६) ॥*॥ 'नभसं खं मेघवर्त्म विहायसम्' इति निगमाददन्तम् । नभसं गच्छति । 'गमश्च' (३।२।४७) इति खच् ॥ (२७) ॥*॥ सप्तविंशतिः **'पक्षिमात्रस्य'** ॥

**तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ॥ ३४ ॥**
**तित्तिरिः कुक्कुभो लावो जीवंजीवश्चकोरकः ।**
**कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः ॥ ३५ ॥**

**तेषामिति** ॥ एते पक्षिणां भेदाः । **'हारिः** पथिकसंतानद्यूतादिभङ्गयोः स्त्रियाम्' (इति मेदिनी) । हारिमित ईतो वा हारोऽस्त्यस्मिन् । इनिः (५।२।११५) । हारि मनोहरम् इतं गमनमस्य । यद्वा हारयति 'क्विप्–' (३।२।१७८) । एति स्म । 'ई गतौ' (अ० प० अ०) गत्यर्था–' (३।४।७२) इति क्तः । हा चासावीतश्च । **'हरितो** विहगान्तरे । मुनौ छन्दसि' इति हेमचन्द्रः । (**'हरियाल'** इति ख्यातः) ॥ (१) ॥*॥ मज्जति । 'टुमस्जो शुद्धौ' ( तु० प० अ० ) 'भृमृशी–' ( उ० १।७ ) इत्युः । न्यङ्क्वादिः (७।३।५३) । सस्य जश्त्वेन (८।४।५३) दः । **'मद्गुः** पानीयकाकिका' इति रभसः ॥ (१) ॥*॥ रमणम् । 'अमताङ्गः' (उ० १।११४) इति रमेर्डः । ईषद्रण्डः । 'ईषदर्थे च' (६।३।१०५) इति कोः का । कारण्डं वाति । 'आतोऽनुप–' (३।२।३) इति कः ॥ (१) ॥*॥ प्लवते । 'प्लुङ् गतौ' ( भ्वा० आ० अ० ) । अच् (३।१।१३४) ॥ **'प्लवः** प्लक्षे प्लुतौ कपौ । शब्दे कारण्डवे म्लेच्छजातौ मेलकमेकयोः । क्रमनिम्नमहीभागे कुलके जलवायसे । जलान्तरे **प्लवं** गन्धतृणे मुस्तकविद्यपि' इति हेमचन्द्रः ॥ (१) ॥*॥ 'तित्तिशब्दं' राति । बाहुलकात्किः । **'तित्तिरिः** पक्षिणि मुनौ' इति हैमः ॥*॥ अदन्तपक्षे 'आतोऽनुप–' (३।२।३) इति कः । 'कपोतलाव**तित्तिराः**' इति वाचस्पतिः ॥ (१) ॥ ॥*॥ 'कुक' इति शब्दं कौति । 'कु शब्दे' (अ० प० अ०) बाहुलकाड्डुक् । 'कुक्कु' शब्दं भाषते । 'भाष व्यक्तायां वाचि' ( भ्वा० आ० से० ) । 'अन्येभ्योऽपि' ( वा० ३।२।१०१ ) इति डः । वनकुक्कुटोऽयम् ॥ (१) ॥*॥ लावयति । 'लूञ् छेदने' ( क्र्या० उ० से० ) स्वार्थण्यन्तः । अच् ( ३।१।१३४) ॥ (१) ॥*॥ जीवं जीवयति । तद्दर्शनेन विषनाशकत्वात् । 'कृत्यल्युटो बहुलम्' ( वा० ३।३।११३ ) इति बाहुलकात्खच् । **'जीवंजीवः** खगान्तरे । द्रुमभेदे चकोरे च' इति हैमः ॥ (१) ॥*॥ चकति । 'चक तृप्तौ' ( भ्वा० प० से०) । 'कठिचकिभ्यामोरन्' (उ० १।६४) स्वार्थे कन् (५।३।७५) ॥१॥*॥ कं जलं यष्टिरिवास्य । पृषोदरादिः (६।३।१०९) ॥ (१) ॥*॥ 'टिट्टि' शब्दं भाषते । 'टिट्टि' शब्देन भाति वा । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । कन् (५।३।७५) ॥ (१) ॥*॥ वर्तते 'वृतु वर्तने' । ण्वुल् (३।१।१३३) ॥ (१) ॥*॥—उदीचां तु स्त्रियामित्त्वम् । प्राचां न (वा० ७।३।४५) । इति स्त्रियां रूपद्वैयप्रदर्शनाय 'वर्तिका'ग्रहणम्,—इति प्राञ्चः ॥ वस्तुतस्तु 'वृतेस्तिकन्' (उ० ३।१४६) इति तिकन्नन्तस्य मूषिकवत् पुंस्यपि 'वर्तिकः' इति रूपकथनमिदम् । **'वर्तकस्तु** खुरेऽश्वस्य विहगे **वर्तिका** द्वयोः' ( इति मेदिनी ) ॥ (१) ॥*॥ आदिना शारकादयो ज्ञेयाः । **'पक्षिजातिविशेषाः'** ॥

---

१—'अव्यक्तशब्दं' इत्यपि पाठः ॥ २—'कोयष्टिष्टिट्टिभः कोकः क्रकरो वर्तिकादयः' इति क्षीरस्वामिव्याख्यानपाठे तु न रूपद्वयप्रदर्शनम्—इति बोध्यम् ॥

**गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम्।**

**गरुदिति** ॥ गिरति। 'गॄ निगरणे' (तु० प० से०)। यद्वा गृणाति। 'गॄ शब्दे' (क्र्या० प० से०)। 'मृग्रोरुतिः' (उ० ११९४) ॥ (१) ॥*॥ पक्षयति। पक्ष्यते वा। 'पक्ष परिग्रहे' (चु० प० से०)। अच् (३।१।१३४)। घञ् (३।३।१९) वा। '**पक्षस्तु** मासार्धे गृहसाध्ययोः। चुल्लीरन्ध्रे बले पार्श्वे वर्गे केशात्परश्चये। पिच्छे विरोधे देहाङ्गे सहाये राजकुञ्जरे' इति (मूर्धन्यषान्तेषु) हैमः ॥*॥ सान्तोऽपि। '**पक्षसी** च स्मृतौ पक्षौ' इति शुभाङ्कः ॥ (२) ॥*॥ छाद्यतेऽनेनाङ्गम्। 'छद संवरणे' (चु० उ० से०)। ण्यन्तः। 'पुंसि–' (३।३।१२१) इति घः। 'छादेर्घे–' (६।४।९६) इति ह्रस्वः। 'गरुत्पक्षौ नरौ **छदम्**' इति बोपालितात्क्लीबमपि ॥ (३) ॥*॥ पतत्यनेन। 'दाम्नी–' (३।२।१८२) इति ष्ट्रन्। '**पत्रं** तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः' इति मेदिनी ॥ (४) ॥*॥ पतन्तं त्रायते। 'त्रैङ् रक्षणे' (भ्वा० आ० अ०)। 'आतोऽनुप–' (३।२।३) इति कः। पतेर्बाहुलकादत्रन् वा ॥ (५) ॥*॥ तन्वां रोहति। 'इगुपध–' (३।१।१३५) इति कः ॥ (६) ॥*॥ षट् '**पक्षस्य**' ॥

**स्त्री पक्षतिः पक्षमूलम्**

**स्त्रीति** ॥ पक्षस्य मूलम्। 'पक्षात्तिः' (५।२।२५) ॥ (१) ॥*॥ (२) ॥*॥ द्वे '**पक्षमूलस्य**' ॥

**चञ्चुस्त्रोटिरुभे स्त्रियौ ॥ ३६ ॥**

**चञ्चुरिति** ॥ चञ्चति। 'चञ्चु गतौ' (भ्वा० प० से०)। बाहुलकादुः। 'चञ्चूश्चञ्चुस्तथा त्रोटिः' इति हलायुधः। मित्रघ्वादौ (१) निपातितः। अपपाठादित्वादित्यन्ये—इति मुकुटः। तन्न। गणद्वयस्योज्ज्वलदत्तादिष्वदर्शनात्। '**चञ्चुः** पचाङ्गुले त्रोट्याम्' इति हैमः ॥ (१) ॥*॥ त्रोट्यते। 'त्रुट छेदने' (चु० आ० से०) चुरादिः। 'अच इः' (उ० ४।१३९)। '**त्रोटि**श्चञ्च्वां खगान्तरे। मीनकट्फलयोः' इति हैमः ॥ (२) ॥*॥ द्वे '**पक्षितुण्डस्य**' '**चोंच**' इति ख्यातस्य ॥

**प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः।**

**प्रेति** ॥ प्रथमम्, ऊर्ध्वम्, संगतम्, वा डयनम्, 'डीङ् विहायसा गतौ' (दि० आ० अ०)। 'नपुंसके भावे क्तः' (३।३।११४)। 'स्वादय ओदितः' (दि० गणसूत्रम्) इत्योदित्त्वात् (८।२।४५) निष्ठानत्वम् ॥—प्रडीनं तिर्यग्गमनम्—इत्यन्ये ॥ (१) ॥*॥ (२) ॥*॥ (३) ॥*॥ 'एताः' इत्यनेन हि डीनाद्या बोध्याः ॥*॥ '**पक्षिणां गतिविशेषाणां**' पृथक्पृथगेकैकम् ॥

**पेशी कोषो द्विहीनेऽण्डम्**

**पेशीति** ॥ पिंशति। 'पिश अवयवे' (तु० प० से०)। 'हृपिशिरुहि–' (उ० ४।११९) इतीन्। 'कृदिकारात्–' (ग० ४।१।४५) इति वा ङीष्। '**पेशी** सुपक्वकणिके मांस्यां खड्गपिधानके। मांसपिण्ड्यामण्डभेदे' (इति तालव्यान्तेषु मेदिनी) ॥ (१) ॥*॥ कुष्यति निष्कामत्यस्मात्स्वयमेव। 'अकर्तरि च' (३।३।१९) इति घञ्। '**कोषो**ऽस्त्री कुड्मले पात्रे पेश्यां शब्दादिसंग्रहे। जातिकोशेऽर्थसंघाते दिव्ये खड्गपिधानके' (इति मूर्धन्यान्ते मेदिनी) ॥*॥ तालव्यान्तोऽप्ययम् ॥ '**कोशो**ऽस्त्री–' (इति तालव्यान्तेषु मेदिनी) यथा पठितम् ॥ (२) ॥*॥ नामद्वयमिदम् ॥ स्वामी तु—पेशीनां मांसखण्डानां कोशो भाण्डागारः—इति व्याचक्षाणो नामैकमिदमिच्छति ॥*॥ द्वाभ्यां हीने क्लीब इत्यर्थः। अमत्यस्मात्। 'अम गत्यादिषु' (भ्वा० प० से०) 'जमन्ताड्डः' (उ० ११११४) ॥ '**अण्डं** मुष्के च पेश्यां स्यात्' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि '**अण्डस्य**' '**अण्डा**' इति ख्यातस्य ॥

**कुलायो नीडमस्त्रियाम् ॥ ३७ ॥**

**कुलेति** ॥ कुलं पक्षिसंतानोऽयतेऽत्र। 'अय गतौ' (भ्वा० अ० से०) 'हलश्च' (३।३।१२१) इति घञ्। यद्वा कौ लायो गतिरस्मात्।—कुलान्ययन्ते निःसरन्त्यतः। 'हलश्च' (३।३।१२१) इति घञ्—इति मुकुटः। तन्न। 'हलश्च' (३।३।१२१) इत्यत्र 'करणाधिकरणयोः' (३।३।११७) इत्यनुवृत्तेरपादानेऽप्राप्तेः। '**कुलायस्तु** पुमान्स्थानमात्रे स्यात् पक्षिवासके' (इति मेदिनी) ॥ (१) ॥*॥ नितराम् ईड्यते। घञ् (३।३।१९)। यद्वा निश्चिता इलन्त्यत्र। 'इल स्वप्ने' (तु० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। संज्ञापूर्वकत्वान्न गुणः। डलयोरेकत्वम्। '**नीडं** स्थानकुलाययोः' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**पक्षिवासस्य**' ॥

**पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः।**

**पोत इति** ॥ पुनाति, पवते वा। 'पूञ् पवने' (क्र्या० उ० से०) 'पूङ् पवने' (भ्वा० आ० से०) वा 'हसिमृग्रिण्–' (उ० ३।८६) इति तन्। स्त्रियाम् 'पोती'। 'वयसि प्रथमे' (४।१।२०) इति ङीप्। '**पोतः** शिशौ वहित्रे च गृहस्थाने च वाससि' इति मेदिनी ॥ (१) ॥*॥ पायते। पिबति वा। 'पा रक्षणे' (अ० प० अ०)। 'पा पाने' (भ्वा० प० अ०) वा। 'अर्भकपृथुकपाका वयसि' (उ० ५।५३) इति साधुः। स्त्रियाम् अजादित्वात् (४।१।४) टाप्। **मुकुटस्तु**—'इण्भीका–' (उ० ३।४३) इति कन्। पच्यते परिणम्यतेऽनेन। 'हलश्च' (३।३।१२१) इति घञि वा इत्याह। तन्न। अवयसि चरितार्थयोरनयोर्वयसि 'अर्भक–' (उ० ५।५३) इत्यनेन बाधनात्। '**पाकः** परिणतौ शिशौ। केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च' (इति मेदिनी)। इत्येतेष्वर्थेषु शिशुभिन्नेषु मुकुटव्याख्या युक्ता। शिशौ त्वस्मदीया—इति ध्येयम् ॥ (२) ॥*॥ अर्यते वृद्धिं प्राप्यते 'ऋ गतौ प्रा-

१—केशशब्दात्परीभूतः पक्षशब्दश्चयार्थक इत्यर्थः ॥

पणेऽपि च' ( भ्वा० प० से० )। 'अर्भकपृथुकपाका वयसि' ( उ० ५।५३ ) इति साधुः । मुकुटस्तु—सदैव इयर्ति चलति, वृद्धिं गच्छति वा । 'अर्तिगृभ्यां भः' ( उ० ३।१५२ ) ततः स्वार्थे कन् ( ५।३।७५ )-इति व्याख्यत् । तन्न । '**अर्भकः** कथितो बाले मूर्खेऽपि च कृशेऽपि च' ( इति मेदिनी ) इत्यत्र बालभिन्नेऽर्थे सावकाशस्यास्य 'वयसि अर्भक' ( उ० ।५।५३ ) इत्यनेन बाधनात् ॥ ( ३ ) ॥*॥ डिम्भयति । 'डिभडिभि संघे' चुरादिः । अच् (३।१।१३४) । '**डिम्भो**ऽपि बालिशे बाले' ( इति मेदिनी ) डीङ् आत्मनेपदित्वात्—'डयति–' इति स्वामी,—डयनं डीः । डिया भाति—इत्यादि मुकुटश्चोपेक्ष्यौ ॥ (४) ॥*॥ पर्थयति । पर्थ्यते वा 'पृथु प्रक्षेपे' चुरादिः । प्रथते वा । 'प्रथ प्रख्याने' ( भ्वा० आ० से० )। 'अर्भकपृथुकपाका वयसि' ( उ० ५।५३ ) इति साधुः ।— पृथु कायति इति स्वामिमुकुटौ चिन्त्यौ । '**पृथुकः** पुंसि चिपिटे शिशौ स्यादभिधेयवत्' ( इति मेदिनी ) इत्यत्र पूर्ववदवयसि चरितार्थत्वेनास्य वयसि बाधनात् ॥ ( ५ ) ॥*॥ शव्यते । 'शव गतौ' ( भ्वा० प० से० )। घञ् (३।३।१९ )। स्वार्थे कन् ( ५।३।७५ ) ॥(६) ॥*॥ श्यति, शायते, वा । 'शो तनूकरणे' ( दि० प० अ० )। 'शः कित् सन्वच्च' ( उ० १।२० ) इत्युः सन्वद्भावाद्द्वित्वेत्वे ।—शशति प्लुतेन गच्छति । 'शश प्लुतगतौ' ( भ्वा० प० से० ) । 'शशिरपोरतः' इति (कुः)—इति मुकुटश्चिन्त्यः । उज्ज्वलदत्तादिषु 'शशिरपोरतः' इति सूत्रादर्शनात् ॥ (७) ॥*॥ सप्त '**शिशुमात्रस्य**' ॥

**स्त्रीपुंसौ मिथुनं द्वन्द्वम्**

**स्त्रीति** ॥ स्त्री च पुमांश्च 'अचतुर–' ( ५।४।७७ ) इति अच् ॥ (१) ॥*॥ मेथति । 'मिथृ मेथृ संगमे' ( भ्वा० उ० से० )। 'क्षुधिपिशिमिथिभ्यः कित्' (उ० ३।५५) इत्युनन् ।– बाहुलकाद्गुणाभावः—इति मुकुटस्तु एतत्सूत्राज्ञानमूलकः । '**मिथुनं** न द्वयो राशिभेदे स्त्रीपुंसयुग्मके' ( इति मेदिनी ) ॥ (२) ॥*॥ द्वौ द्वौ । 'द्वन्द्वं रहस्य–' (८।१।१५) इति साधुः ॥ '**द्वन्द्वं** रहस्ये कलहे तथा मिथुनयुग्मयोः' ( इति मेदिनी ) ॥ (३) ॥*॥ त्रीणि '**स्त्रीपुरुषरूपयुग्मस्य**' । मुकुटस्तु द्वन्द्वस्योत्तरान्वयित्वमेव स्वीकुर्वन्नुक्तमेदि'नीविरोधादुपेक्ष्यः ॥

**युग्मं तु युगलं युगम् ॥ ३८ ॥**

**युग्ममिति** ॥ युज्यते । 'युजिर् योगे' ( रु० उ० अ० )। 'युजिरुचितिजां कुश्च' ( उ० १।१४६ ) इति मक् । 'युग्मं **यमलयामले**' इति रभसः ॥ (१) ॥*॥ वृषादित्वात् (उ० १।१०६) कलच् । न्यङ्क्वादित्वात् ( ७।३।५३ ) कुत्वम् । युगं लाति वा । युगमस्त्यस्य वा । सिध्मादित्वात् ( ५।२।९७ ) लच् ॥ (२) ॥*॥ युज्यते । घञ् ( ३।३।१९ ) । कुत्वम् ( ७। ३।६२ ) संज्ञापूर्वकत्वात्—'रथयुगप्रासङ्गम्' ( ४।४।७६ ) इति लिङ्गाद्वा गुणाभावः । '**युगो** रथहलाद्यङ्गे न द्वयोस्तु कृतादिषु । युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च' ( इति मेदिनी ) ॥ (३) ॥*॥ त्रीणि '**यमलस्य**' ॥

**समूहनिवहव्यूहसंदोहविसरव्रजाः ।**
**स्तोमौघनिकरव्रातवारसंघातसंचयाः ॥ ३९ ॥**
**समुदायः समुदयः समवायश्चयो गणः ।**
**स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥ ४० ॥**

**समूहेति** ॥ समूह्यते । 'ऊह वितर्के' (भ्वा० आ० से०)। घञ् ( ३।३।१९ ) ।—'हलश्च' ( ३।३।१२१ ) इति मुकुटस्य प्रमादः । तत्र 'करणाधिकरणयोः' इत्यस्यानुवर्तनात् ॥ ( १ ) ॥*॥ नितरामुह्यते । 'वह प्रापणे' ( भ्वा० उ० अ० )। 'पुंसि–' (३।३।११८) इति घः । 'खनो घ च' (३।३।१२५) इति वा । वहति वा । अच् (३।१।१३४) ॥ (२) ॥*॥ व्यूह्यते । घञ् (३।३।१९) । '**व्यूहः** स्याद्बलविन्यासे निर्माणे वृन्दतर्कयोः' ( इति मेदिनी ) ॥ (३) ॥*॥ संदुह्यते । 'दुह प्रपूरणे' (अ० उ० अ०) । घञ् (३।३।१९) ॥ (४) ॥*॥ विसरति । 'सृ गतौ' (भ्वा० प० अ०) । अच् (३।१।१३४) । ('**विसरः** प्रसरे व्रजे' इति मेदिनी ) ॥ (५) ॥*॥ व्रजति । 'व्रज गतौ' ( भ्वा० प० से०) अच् (३।१।१३४) । '**व्रजो** गोष्ठाध्ववृन्देषु' ( इति मेदिनी ) । करणाधिकरणव्युत्पत्तौ तु 'गोचरसंचर–' ( ३।३।११९ ) इति निपातितः ॥ (६) ॥*॥ स्तूयते । 'ष्टुञ् स्तुतौ' ( अ० उ० अ० ) । 'अर्तिस्तुसु–' (उ० १।१४०) इति मन् ॥ (७) ॥*॥ आ उह्यतेऽनेन 'हलश्च' (३।३।१२१) इति घञ् । न्यङ्क्वादित्वात् (७।३।५३) कुत्वम् । '**ओघो** वेगे जलस्य च । वृन्दे परम्परायां च द्रुतनृत्योपदेशयोः' इति मेदिनी ॥ (८) ॥*॥ निकीर्यते 'कॄ विक्षेपे' (तु० प० से०) । 'ॠदोरप्' (३।३।५७) । '**निकरो** निवहे सारे न्यायदेयधने निधौ' (इति मेदिनी) ॥ (९) ॥*॥ व्रात्यते नियम्यते । 'मुण्डमिश्र–' ( ३।१।२१ ) इति ण्यन्ताद्व्रतशब्दाद् घञ् ( ३।३।१९ ) । अच् ( ३।३।५६ ) वा 'व्रातचफञोः–' ( ५।३।११३ ) इति लिङ्गाद्वृद्धिः ॥ ( १० ) ॥*॥ वार्यते आच्छाद्यतेऽनेन 'वृ वरणे' चुरादिः । 'पुंसि–' ( ३। ३।११८ ) इति घः । '**वारः** सूर्यादिवासरे । द्वारे हरे कुब्जवृक्षे वृन्दावसरयोः क्षणे' ( इति मेदिनी ) ॥ (११) ॥*॥ संहन्यते । घञ् (३।३।१९) 'हनस्तोऽचिण्णलोः–' (७।३।३२) । 'हो हन्तेः–' ( ७।३।५४ ) इति घः । '**संघातः** पुंसि घाते च संहतौ नरकान्तरे' ( इति मेदिनी ) ॥ ( १२ ) ॥*॥ संचीयते । 'चिञ् चयने' (स्वा० उ० अ०) । 'एरच्' (३।३।५६) ॥ (१३) ॥*॥ समुदायते । 'अय गतौ' ( भ्वा० आ० से० ) । आङ् । अच् ( ३।१।१३४ ) '**समुदायः** समूहे स्याद्युद्धे' ( इति मेदिनी ) ॥ ( १४ ) ॥*॥ समुदीयते । 'इण् गतौ'

१—मेदिनीतस्तु द्वन्द्वस्य युग्मपर्यायताया अपि प्रतीत्या तद्विरोधः । किं तु 'त्वन्ताथादि न पूर्वभाक्' इति प्रतिज्ञाविरोधादुपेक्ष्यः ॥

( अ० प० अ० ) 'ई गतौ' ( अ० प० अ० ) वा । 'एरच्' ( ३।३।५६ ) । 'भवेत्समुदयः संघे संयुगे च समुद्गमे' ( इति मेदिनी ) ॥ (१५) ॥*॥ समवाय्यते । 'अय गतौ' ( भ्वा० आ० से० ) । घञ् (३।३।१९) समवयन्त्यनेनास्मिन् वा । घञ् ( ३।३।१९ )—इति मुकुटः । तन्न । 'अजब्भ्याम्–' ( वा० ३।३।१२३ ) इति वार्तिकविरोधात् । बाहुलकस्यागतिकगतित्वात् ॥ (१६) ॥*॥ चीयते । 'चिञ् चयने' (स्वा० उ० अ०) । 'एरच्' (३।३।५६) । 'चयः समूहे प्राकारमूलबन्धे समाहृतौ' (इति मेदिनी) ॥ (१७) ॥*॥ गण्यते । 'गण संघाते' (चु० उ० से० ) । घञ् (३।३।१९) । 'एरच्' (३।३।५६) वा । अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । 'गणः प्रमथसंख्यौघे चण्डीसैन्यप्रभेदयोः' ( इति मेदिनी ) ॥ (१८) ॥*॥ संहन्यते । क्तिन् ( ३।३।९४ ) ॥ (१९) ॥*॥ वृण्यते । 'वृणु भक्षणे' ( तु० प० से० ) । वृणोति वा । 'अब्दादयश्च' ( उ० ४।९८ ) इति साधुः ॥ (२०) ॥*॥ निकुरति । निकुर्यते वा । 'कुर छेदने' ( तु० प० से० ) । बाहुलकादम्बच् अत उत्वं च ॥ ( २१ ) ॥*॥ कुत्सितमम्बते, अम्ब्यते वा । 'अबि शब्दे' ( भ्वा० आ० से० ) । अच् (३।१।१३४) 'कोः कत्–' ( ६।३।१०१ ) घञ् (३।३।१९) वा कदति, कद्यते वा । 'कदिः' सौत्रः । बाहुलकादम्बच् ॥ 'कदम्बं निकुरम्बे स्यान्नीपसर्षपयोः पुमान्' ( इति मेदिनी ) ॥ (२२) ॥*॥ द्वाविंशतिः 'समूहस्य' ॥

**वृन्दभेदाः**

**वृन्देति** ॥ समूहविशेषा उच्यन्ते ॥

### समैर्वर्गः

**सेति** ॥ समैरुपलक्षितम् । वृज्यते 'वृजी वर्जने' ( अ० आ० से० ) । घञ् ( ३।३।१९ ) । कुलम् ( ७।३।५२ ) ॥ (१) ॥*॥

### संघसार्थौ तु जन्तुभिः ।

**संघेति** ॥ संहन्यते । घञ् (३।३।१९) । 'संघोद्घौ गणप्रशंसयोः' ( ३।३।८६ ) इति साधुः ॥ (१) ॥*॥ सरति, स्रियते, वा । 'सृ गतौ' ( भ्वा० प० अ० ) । 'सर्तेर्णितः' ( उ० २।५ ) इति थन् । 'सार्थो वणिक्समूहे स्यादपि संघातमात्रके' ( इति मेदिनी ) । 'यूथादयश्च'—इति मुकुटश्चिन्त्यः ॥ (२) ॥*॥ भागुरिस्तु पर्यायतामाह—'संघसंघातपुञ्जौघसार्थयूथकदम्बकाः' इति ॥

**सजातीयैः कुलम्**

**सजेति** ॥ सजातीयैरेव जन्मभिरुपलक्षितम् । कोलति । 'कुल संस्त्याने बन्धुषु च' ( भ्वा० प० से० ) । 'इगुपध–' (३।१।१३५) इति कः । 'कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीबम्' (इति मेदिनी) ॥ (१) ॥*॥

### यूथं तिरश्चां पुंनपुंसकम् ॥ ४१ ॥

**यूथमिति** ॥ यौति । यूयते, वा । 'यु मिश्रणे' (अ० प० से०) । 'तिथपृष्ठगूथयूथप्रोथाः' ( उ० २।१२ ) इति साधुः । 'यूथं तिर्यक्समूहेऽस्त्री पुष्पभेदे च योषिति' ( इति मेदिनी ) ॥ (१) ॥*॥

**पशूनां समजः**

**पेति** ॥ संवीयतेऽत्र । 'अज गतिक्षेपणयोः' ( भ्वा० प० से० ) । 'समुदोरजः पशुषु' ( ३।३।६९ ) इत्यप् । 'समजः पशुवृन्दे ना विपिने तु नपुंसकम्' ( इति मेदिनी ) ॥ (१) ॥*॥ एकं 'पशुसंघस्य' ॥

### अन्येषां समाजः

**अन्येषामिति** ॥ अन्येषां संघः । संवीयतेऽत्र । घञ् (३।३।१९) ॥ (१) ॥*॥ एकं 'पशुभिन्नसंघस्य' ॥

### अथ सधर्मिणाम् ।

**स्यान्निकायः**

**अथेति** ॥ निचीयते । 'चिञ् चयने' (स्वा० उ० अ०) । 'संघे चानौत्तराधर्ये' (३।३।४२) इति घञ् आदेः कश्च ॥ 'निकायस्तु पुमाँल्लक्ष्ये सधर्मिप्राणिसंहतौ' । ( 'समुच्चये संहतानां निलये परमात्मनि' इति मेदिनी ) ॥ (१) ॥*॥ 'वृन्दभेदानां' पृथक् पृथक् ॥

### पुञ्जराशी तूत्करः कूटमस्त्रियाम् ॥ ४२ ॥

**पुञ्जेति** ॥ पिञ्जयति, पिञ्ज्यते वा । 'पिजि हिंसाबलादाननिकेतनेषु' ( चु० प० से० ) । अच् ( ३।१।१३४ ) । घञ् ( ३।३।१९ ) वा पृषोदरादिः ( ६।३।१०९ ) । यद्वा उच्चत्या पुमांसं जयति । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति डः ।—पुञ्ज्यते । पुञ्जः—इति स्वामी ॥ (१) ॥*॥ अश्नुते । 'अशू व्याप्तौ' ( स्वा० आ० से० ) । 'अशिपणाय्यो रुडायलुकौ च' (उ० ४।१३३) इतीण् धातोरुडागमः । यद्वा रश्यते । रशः सौत्रः शब्दार्थः ।—दीप्त्यर्थः—इति स्वामी । बाहुलकादिण् । ण्यन्तात् 'अच इः' ( उ० ४।१३९ ) वा । 'राशिर्मेषादिपुञ्जयोः ( इति मेदिनी ) ॥ (२) ॥*॥ उत्कीर्यते । 'कॄ विक्षेपे' (तु० प० से०) । 'ॠदोरप्' (३।३।५७) ॥ (३) ॥*॥ कूटयति । कूट्यते वा । 'कूट आप्रदाने' ( चु० आ० से० ) 'कूट दाहे मन्त्रणे' ( चु० उ० से० ) वा अच् ( ३।१।१३४ ) घञ् ( ३।३।१९ ) वा 'कूटं पूर्द्वारयन्त्रयोः । मायादम्भाद्रिशृङ्गेषु सीराङ्गेऽनृततुच्छयोः । निश्चलेऽयोघने राशौ' इति हेमचन्द्रः ॥ (४) ॥*॥ चत्वारि 'धान्यादेरुच्छ्रितवृन्दस्य' ॥

### कापोतशौकमायूरतैत्तिरादीनि तद्गणे ।

**केति** ॥ तेषां कपोतशुकमयूरतित्तिरीणां गणे । कपोतानाम्, शुकानाम्, मयूराणाम्, तित्तिरीणाम्, च गणः ।

'अनुदात्तादेरञ्' (४।२।४४)। शुकात्तु 'तस्य समूहः' (४।२।३७) इत्यण्। आदिना काकवर्तकोलूकादीनां ग्रहः। '**कापोतो** स्वचके, क्लीबं कपोतौघेऽञ्जनान्तरे' (इति मेदिनी) ॥ (१) ॥*॥ '**शौकं** शुकगणे स्त्रीणां करणे' (इति मेदिनी) ॥ (२) ॥*॥ '**कपोतादीनां गणस्य**' पृथक् पृथक् ॥

**गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ॥४३॥**

**गृहेति** ॥ छ्यति, छीयते, वा 'छो छेदने' (दि० प० अ०) बाहुलकादीकन्। '**छेको** गृहाश्रितमृगपक्षिणोर्नागरे त्रिषु' (इति मेदिनी)। '**छेक**स्त्रिषु विदग्धेषु गृहासक्तमृगाण्डजे' इति चवर्गादौ रभसः ॥ (१) ॥*॥ गृह्यते। 'ग्रह उपादाने' (क्र्या० उ० से०)। 'पदास्वैरिबाह्यापक्ष्येषु च' (३।१।११९) इति क्यप्। '**गृह्यं** गुदे ग्रन्थभेदे क्लीबं, शाखापुरे स्त्रियाम्। गृहासक्तमृगादौ ना, त्रिषु चास्वैरिपक्ष्ययोः' (इति मेदिनी)। ततोऽनुकम्पायां कन् (५।३।७६)। '**गृह्यको** निघ्नके छेके' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**गृहासक्तपक्षिणाम्**' ॥

**इति सिंहादिवर्गविवरणम् ॥**

---

**मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।**

**मनुष्या इति** ॥ मनोरपत्यम्। 'मनोर्जातावञ्यतौ षुक् च' (४।१।१६१)। स्त्रियाम् '–हयगवय–' (वा० ४।१।६३) इति प्रतिप्रसवेन ङीप् (४।१।६३)। 'हलस्तद्धितस्य' (६।४।१५०) इति यलोपः। मनुषी। 'टिड्ढा–' (४।१।१५) इति ङीपि मानुषी। जातिविवक्षायां ङीषः (४।१।६३) परत्वादञन्तत्वात् (४।१।७३) ङीन् ॥ (१) ॥*॥ (२) ॥*॥ म्रियते। 'मृङ् प्राणत्यागे' (तु० आ० अ०)। 'हसिमृग्रिण्–' (उ० ३।८६) इति तन्। स्वार्थे यत् (वा० ५।४।३६) ॥ (३) ॥*॥ मनोर्जातः। 'जनी प्रादुर्भावे' (दि० आ० से०)। 'पञ्चम्याम्–' (३।२।९८) इति डः ॥ (४) ॥*॥ मनोरयम्। 'तस्येदम्' (४।३।१२०) इत्यण्। यद्वा मनोरपत्यम्। 'ब्राह्मणमाणव—' (४।२।४२) इति ज्ञापकादण्। अञि षुगभावो वा।—औपसंख्यानिकोऽण्—इति मुकुटश्चिन्त्यः। उपसंख्यानाभावात् ॥ (५) ॥*॥ नरति नृणाति वा। 'नॄ नये' (भ्वा० क्र्या० प० से०)। अच् (३।१।१३४) '**नरो**ऽजे मनुजेऽर्जुने। क्लीबं तु रामकर्पूरे' (इति मेदिनी)।—नयन्ति पूर्वपुरुषानुत्तमां गतिम्। 'नयतेर्डिच्च' (उ० २।१००) इति ऋन्। डित्वाट्टिलोपः—इति मुकुटः। तन्न एवं सत्यदन्तरूपानुपपत्तेः। ऋदन्तरूपापत्तेश्च। ऋदन्तस्य वक्ष्यमाणत्वाच्च ॥ (६) ॥*॥ षट् '**मनुष्यमात्रस्य**' ॥

**स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ १ ॥**

**स्युरिति** ॥ पाति। 'पा रक्षणे' (अ० प० अ०)। 'पातेर्डुमसुन्' (उ० ४।१७८) क्वचित् 'पूञो डुमसुन्' इति पाठः। पुनाति 'पूञ् पवने' (क्र्या० उ० से०) ॥ (१) ॥*॥ पञ्चभिभूतैर्जन्यते। घञ् (३।३।१९)। 'जनिवध्योश्च' (७।३।३५) इति न वृद्धिः। यद्वा पञ्च जना उत्पादका यस्य ॥ (२) ॥*॥ पुरति। 'पुर अग्रगमने' (तु० प० से०)। 'पुरः कुषन्' (उ० ४।७४) ॥ (३) पृषोदरादित्वात् (६।३।१०९) दीर्घः। यद्वा 'पूरी आप्यायने' (दि० आ० से०)। बाहुलकात्कुषन् ॥ (४) ॥*॥ नयति। 'नयतेर्डिच्च' (उ० २।१००) इत्यृन् ॥ (५) ॥*॥ पञ्च '**मनुष्यजातौ पुरुषस्य**' ॥

**स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।**
**प्रतीपदर्शिनी वामा वनिता महिला तथा ॥ २ ॥**

**स्त्रीति** ॥ स्त्यायति गर्भोऽस्याम्। 'स्त्यायतेर्ड्रट्' (उ० ४।१६६)। टिलोपः (६।४।१४३)। यलोपः (६।१।६६)। 'टिड्ढा–' (४।१।१५) इति ङीप् ॥ (१) ॥*॥ योषति। युष्यते वा। 'युष' सौत्रः सेवायाम्। 'हृसृरुहियुषिभ्य इतिः' (उ० १।९७) ॥*॥ योष्यते स्म। णिजन्तात्कर्मणि क्तः (३।२।१०२)। '**स्त्रीवधूर्योषिता रामा**' इति त्रिकाण्डशेषः ॥ (२) ॥*॥ अल्पं बलमस्याः। अल्पार्थे नञ् ॥ (३) ॥*॥ योषति, योषयति वा। अच् (३।१।१३४)। युष्यते। योष्यते वा। घञ् (३।३।१९) ॥*॥ ('**जोषा**' इति) चवर्गादिपाठे जुषते, जुष्यते वा। 'जुषी प्रीतिसेवनयोः' (तु० आ० से०) अच्। (३।१।१३४)। घञ् (३।३।१९) वा।—जुषति—इति मुकुटस्य प्रमादः ॥ (४) ॥*॥ 'नृनरयोर्वृद्धिश्च' इति शार्ङ्गरवादि- (४।१।७३) गणे पाठान्ङीन्। जातिलक्षणस्य (४।१।६३) ङीषोऽपवादः, ङीन्संनियोगेन वृद्धिश्च। मुकुटस्तु—नुर्नरस्य वा धर्म आचारोऽस्याः। 'नृनराभ्यां च' (वा० ४।४।४९) इत्यञ्। वृद्धिः (७।२।११७)। 'टिड्ढा–' (४।१।१५) इति ङीप्। नारी। नुर्नरस्य वेयम्। 'तस्येदम्' (४।३।१२०) इत्यणि वृद्धौ (७।२।११७) नारी, इति वा इत्याह। तन्न। 'नृनराभ्याम्' इत्यस्याप्रसिद्धत्वात्। 'तस्येदम्' (४।३।१२०) इत्यणि 'नृनरयोः' इत्यस्य वैयर्थ्यप्रसङ्गात्। ङीप्ङीनोः स्वरभेदाच्च ॥ (५) ॥*॥ सीमन्तोऽस्त्यस्याः, 'शकन्ध्वादिः' (वा० ६।१।९४)। सीमन्तोऽस्त्यस्याः, इनिः (५।२।११५) ॥ (६) ॥*॥ वहति, उह्यते वा। 'वहो धश्च' (उ० १।८३) इत्यूः। मुकुटस्तु—बध्नात्यविद्यया। 'चमितनिबन्धिभ्यः' इत्यूः—इत्याह। तन्न। 'कृषिचमितमिधनिसर्जिखर्जिभ्य ऊः' (उ० १।८०) इति सूत्रे बन्धेरग्रहणात् नलोपविधेरदर्शनाच्च ॥ (७) ॥*॥ प्रतीपं द्रष्टुं शीलमस्याः। अपाङ्गनिरीक्षणात्। 'सुप्यजातौ–' (३।२।७८) इति णिनिः ॥ (८) ॥*॥ वमति स्नेहम्। 'टुवम उद्गिरणे' (भ्वा० प० से०)

---

१—अत्र 'शौकमव्ययम्' इति तु मेदिन्यामदर्शनास्यक्तम् ॥

१—इदं तु भाष्यकैयटानभिज्ञत्वसूचकम् ॥

ज्वलादित्वात् (३।१।१४०) णः । यद्वा वामः कामोऽस्त्यस्याः । अर्शआद्यच् (५।२।१२७) । '**वामं** धने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियाम्' (इति मेदिनी) ॥ (९) ॥*॥ वनति । 'वन संभक्तौ' (भ्वा० प० से०) । बाहुलकादितन् । यद्वा वन्यते स्म । क्तः (३।२।१०२) '**वनिता** जातरागस्त्रीस्त्रियोस्त्री त्रिषु याचिते । सेविते' (इति मेदिनी) ॥ (१०) ॥*॥ महति, मह्यते वा । 'मह पूजायाम्' (भ्वा० प० से०) । 'सलिकल्यनिमहि–' (उ० १।५४) इतीलच् । ('**महिला** फलिनीस्त्रियोः' इति मेदिनी) ॥*॥ महस्योत्सवस्य इला भूमिः, इति विग्रहे '**महेला**' अपि ॥ (११) ॥*॥ एकादश '**स्त्रीमात्रस्य**' ॥

**विशेषास्तु**

**वीति** ॥ स्त्रीणां विशेषा भेदाः ॥

**अङ्गना भीरुः कामिनी वामलोचना ।**
**प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥ ३ ॥**
**सुन्दरी रमणी रामा**

**अङ्गनेत्यादि** ॥ प्रशस्तान्यङ्गान्यस्याः । 'अङ्गात्कल्याणे' (ग० ५।२।१००) इति नः । '**अङ्गनं** प्राङ्गणे यानेऽप्यङ्गना तु नितम्बिनी' इति हैमः ॥ (१) ॥*॥ भयशीला । 'ञिभी भये' (जु० प० अ०) । 'भियः क्रुक्लुकनौ' (३।२।१७४) इति क्रुः । '**भीरुः** स्यात्कातरे नार्याम्' इत्यजयः । '**भीरु**रार्ते जने स्त्रियाम्' इति रभसः । '**भीरु**रार्ते त्रिलिङ्गः स्याद्वरयोषिति योषिति' (इति मेदिनी) ॥ (१) ॥*॥ भूयान् कामोऽस्याः । इनिः (५।२।११५) । '**कामिनी** भीरुवन्दयोः' (इति मेदिनी) ॥ (१) ॥*॥ वामः कामो लोचने आलोचने नेत्रे वास्याः । यद्वा वामे सुन्दरे लोचने चक्षुषी यस्याः ॥ (१) ॥*॥ प्रमदो हर्षोऽस्त्यस्याः । '**प्रमदः** संमदे मत्ते स्त्रियामुन्मदयोषिति' (इति मेदिनी) ॥ (१) ॥*॥ '**मान**श्चित्तोन्नतौ गृहे । क्लीबं प्रमाणे प्रस्थादौ' (इति मेदिनी) । मानोऽस्त्यस्याः । इनिः (५।२।११५) । '**मानिनी** तु स्त्रियां फल्यां **मानी** मानवति त्रिषु' (इति मेदिनी) ॥ (१) ॥*॥ कम्यते स्म । 'कमु कान्तौ' (भ्वा० आ० से०) । णिङभावे क्तः (३।२।१०२) । '**कान्ता** नार्यां प्रियंगौ स्त्री शोभने त्रिषु ना धवे । लोहे च चन्द्रसूर्याश्मःपर्यायान्तःशिलासु च' (इति मेदिनी) ॥ (१) ॥*॥ ललते । 'लल ईप्सायाम्' । 'चुरादीनां वा णिच्' इति पक्षे ल्युः (३।१।१३४) युच् (उ० २।७८) वा । यद्वा लडति । 'लड विलासे' (भ्वा० प० से०) । 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् । डलयोरेकत्वम् । '**ललना** कामिनीनारीभेदजिह्वासु योषिति' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ अतिशयितो नितम्बो यस्याः । इनिः (५।२।११५) ॥ (१) ॥*॥ अतीवोनत्ति । 'उन्दी क्लेदने' (रु० प० से०) सुपूर्वः । बाहुलकादरः । शकन्ध्वादिः (वा० ६।१।९४) । गौरादिः (४।१।४१) । '**सुन्दरी** तरुभिन्नारीभिदोः स्त्री रुचिरेऽन्यवत्' (इति मेदिनी) ॥ (१) ॥*॥ रमयति । रम्यते वा । अस्यां वा रम्यते । ल्युट् (३।३।११३, ११७) ॥ (१) ॥*॥ रमते । ज्वलादित्वात् (३।१।१४०) णः ।—रमयति—इति तु मुकुटस्य प्रमादः । ण्यन्तस्य ज्वलादित्वाभावात् । मित्वाण्णिनिमित्तवृद्ध्यभावाच्च । '**रामः** श्यामे हलायुधे । पशुभेदे सिते चारौ राघवे रेणुकासुते । **रामं** तु वास्तुके कुष्ठे **रामा** हिङ्गुलिनीस्त्रियोः' इति हैमः ॥ (१) ॥*॥ उत्कृष्टस्त्रीविशेषाणां पृथक् पृथक् । एते द्वादश भेदाः '**स्त्रीणाम्**' ॥

**कोपना सैव भामिनी ।**

**कोपेति** ॥ कुप्यति तच्छीला । 'कुप क्रोधे' (दि० प० से०) 'क्रुधमण्डार्थेभ्यश्च' (३।२।१५१) इति युच् ॥ (१) ॥*॥ अवश्यं भामते । 'भाम क्रोधे' (भ्वा० आ० से०) । 'आवश्यका–' (३।३।१७०) इति णिनिः । ग्रह्यादिणिनिः (३।१।१३४) वा ॥ (२) ॥*॥ द्वे '**कोपनस्त्रियाः**' ॥

**वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ ४ ॥**

**वरेति** ॥ वर आरोहो नितम्बोऽस्याः ॥ (१) ॥*॥ मत्ता क्षीबेव काशते भाति । 'कर्तर्युपमाने' (३।२।७९) इति णिनिः ॥*॥ दन्त्यसपक्षे 'कस गतिशासनयोः' (अ० आ० से०) ॥ (२) ॥*॥ उत्कर्षार्थात् 'उत्' शब्दात्तमप् (५।३।५५) । द्रव्यप्रकार्षान्नामुः (५।४।११) ॥ (३) ॥*॥ वरवर्णोऽस्त्यस्याः । इनिः (५।२।११५) । 'शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला । भर्तृभक्ता च या नारी सा भवेद्**वरवर्णिनी**' इति रुद्रः ॥ (४) ॥*॥ चत्वारि '**अत्यन्तोत्कृष्टस्त्रियाः**' ॥

**कृताभिषेका महिषी**

**कृतेति** ॥ कृतोऽभिषेकोऽस्याः । मह्यते । 'मह पूजायाम्' (भ्वा० प० से०) 'अविमह्योष्टिषच्' (उ० १।४५) । '**महिषी** नृपयोषिति । सैरिभ्यामौषधीभेदे' इति हेमचन्द्रः ॥ (१) ॥*॥ एकम् '**पट्टाभिषिक्तनृपस्त्रियाः**' ॥

**भोगिन्योऽन्या नृपस्त्रियः ।**

**भोगीति** ॥ अतिशयितो भोगोऽस्याः । इनिः (५।२।११५) । 'विहाय महिषीमन्यराजयोषिति **भोगिनी**' (इति मेदिनी) ॥ (१) ॥*॥ एकम् '**अन्यराजस्त्रियाम्**' ॥

**पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५ ॥**
**भार्या जायाथ पुंभूम्नि दाराः**

---

१—तथा च रसिकरञ्जनश्लेषः 'चिरमीक्षे महिलास्यम्' इति शृङ्गारवैराग्यार्थद्वयपरः । २—तथा च दमयन्तीश्लेषः 'परमहेलारतोऽप्यपारदारिकः' इति । ३—भावः शृङ्गारचेष्टाविशेषः । तद्युक्ता 'भाविनी' —इति तु मुकुटः ॥

१—अथशब्दात् पुंभूम्नो न पूर्वभाक्त्वम्—इति स्वामी ॥

**पत्नीति** ॥ पत्युर्यज्ञे संयोगो यया । दंपत्योः सहाधिकारात् 'पत्युर्नो यज्ञसंयोगे' (४।१।३३) ॥ (१) ॥*॥ पाणिगृहीतोऽस्याः । 'पाणिगृहीती भार्यायाम्' (वा० ४।१।५२) इति ङीष् ॥ (२) ॥*॥ द्वयोः पूरणी । 'द्वेस्तीयः' (५।२।५४)। '**द्वितीया** तिथिगेहिन्योर्**द्वितीयः** पूरणे द्वयोः' इति हेमचन्द्रः ॥ (३) ॥*॥ सह धर्मोऽस्त्यस्याः । पत्या सह कर्मस्वधिकारात् । 'धर्मशीलवर्णान्ताच्च' (५।२।१३२) इतीनिः । वोपसर्जनस्य' (६।३।८२) इति सहस्य वा सः ॥ (४) ॥*॥ भ्रियते । भूर्यते वा । 'डुभृञ् धारणपोषणयोः' (जु० प० अ० )। 'भृ भरणादौ' ( क्र्या० प० से० ) वा ण्यत् (३।१।१२४) । यत्तु—संज्ञायां भृञः (भ्वा० उ० अ०) 'ऋहलोर्ण्यत्' (३।१।१२४)—इति स्वामी व्याख्यत् । तन्न । 'संज्ञायां समजनिषद्–' (३।३।९९) इति क्यपा भाव्यं परत्वात् । संज्ञापर्युदासः (३।१।११२) तु पुंलिङ्गे सावकाशः । 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' (प० ४।२।९) इति न्यायाङ्कुश एव क्यप् । न डुभृञः ॥ (५) ॥*॥ जायतेऽस्याम् । 'जनेर्यक्' (उ० ४।१११) । 'जायायास्तद्धि जायात्वं यदस्यां जायते पुनः' (९।८) इति मनुः ॥ (६) ॥*॥ दारयन्ति भ्रातॄन् 'दॄ विदारणे' ( क्र्या० प० से० ) । णिजन्तः । 'दारजारौ कर्तरि णिलुक् च' (वा० ३।३।२०) इति घञ् । यद्यपि दारयतेः पचाद्यचा (३।१।१३४) सिद्धम् । स्वरश्च समः । 'कर्षात्वतः–' (६।१।१५९) इति घञन्तस्यान्तोदात्तत्वात् । तथापि 'अच्कावशक्तौ' (६।२।१५७) इति स्वरबाधनार्थमिदम् ॥*॥ टाबन्तोऽपि । क्रोडा हारा तथा **दारा** त्रय एते यथाक्रमम् । 'क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिः' इति व्याडिशुभाङ्कौ ॥ (७) ॥*॥ सप्त '**परिणीतायाः स्त्रियाः**' ॥

**स्यात्तु कुटुम्बिनी ।**

**पुरंध्री**

**स्यादिति** ॥ कुटुम्बमस्त्यस्याः । इनिः (५।२।११५)। '**कुटुम्बं** पोष्यवर्गे च' इत्यमरमाला ॥ (१) ॥*॥ '**पुरं** नपुंसकं गेहे' (इति मेदिनी)। पुरं धारयति । 'धृञ् धारणे' (भ्वा० उ० अ० )। स्वार्थण्यन्तः । 'संज्ञायां भृतॄवृ–' (३।२।४६) इति खच् । 'खचि ह्रस्वः' (६।४।९४) । गौरादिः (४।१।४१) । पृषोदरादिः (६।३।१०९ ) हलन्तात् 'इगुपधात् किः'—इति मुकुटः । तन्न । धरतेर्हलन्तत्वेगुपधत्वयोरभावात् ॥ (२) ॥*॥ द्वे '**पुत्रादिमत्याः सधवायाः**' ॥

१—'हट्टचन्द्रः' इति वा पाठः ॥ २—(पुरं धरति । 'अच इः', (उ० ४।१३९) । पृषोदरादित्वात् (६।३।१०९) धात्वकारलोपमुमागमौ । पुरंध्रिर्ह्रस्वान्तापि । तथा च । 'तौ स्नातकैर्बन्धुमता च राज्ञा पुरंध्रिभिश्च क्रमशः प्रयुक्तम्' इति रघुः—इति मुकुटः ॥

**सुचरित्रा तु सती साध्वी पतिव्रता ॥ ६ ॥**

**सुचेति** ॥ शोभनं चरित्रमस्याः ॥ (१) ॥*॥ अस्ति एकस्मिन् पत्यौ । 'अस भुवि' ( अ० प० से० )। शतृ (३।२।१२४) । 'श्नसोरल्लोपः' (६।४।१११) । 'उगितश्च' (४।१।६) इति ङीप् । '**सन्** साधौ धीरशस्तयोः । मान्ये सत्ये विद्यमाने त्रिषु साध्व्युमयोः स्त्रियाम्' (इति मेदिनी) ॥ (२) ॥*॥ साध्नोति परकार्यं परलोकं वा । 'साध संसिद्धौ' (स्वा० प० अ० ) 'कृवापा–' (उ० ११) इत्युण् 'वोतो गुण–' (४।१।४४) इति वा ङीष् ॥ (३) ॥*॥ पत्यौ व्रतं नियमोऽस्याः ॥ पतिर्व्रतमस्याः । पतिशब्दः पतिसेवायां लाक्षणिकः ॥ (४) ॥*॥ चत्वारि '**पतिसेवातत्परायाः**' ॥

**कृतसापत्निकाध्यूढाधिविन्ना**

**कृतेति** ॥ सपत्न्येव स्वार्थे कन् (५।३।७५) । कृता सपत्निका यस्याः ॥*॥ '**कृतसापत्निका**' इति क्वचित् पाठः । सपत्न्या भावः । ष्यञ् (५।१।१२४) । ङीष् (४।१।४१) यलोपः ( ६।४।१५० ) स्वार्थे कन् ( ५।३।७५ ) ह्रस्वत्वम् (७।४।१३) च । कृता सापत्निका यस्याः ॥*॥ क्वचित् '**कृतसापत्नका**' इति पाठः । सपत्न्या आगतम् । 'तत आगतः' (४।३।७४) इत्यण् । स्वार्थे कन् (५।३।७५) । कृतं सपत्नकमस्याः । '–असुपः' (७।३।४४) इति पर्युदासान्नेत्वम् ॥ (१) ॥*॥ अधि उपरि ऊढमुद्वहनमस्याः । '**अध्यूढा** कृतसापत्न्यनार्यामध्यूढ ईश्वरे' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ अधि उपरि विन्नं लाभोऽस्याः । यद्वा अधिका विन्ना लब्धा यस्याः ॥ (३) ॥*॥ त्रीणि अनेकभार्यस्य '**प्रथममूढायाः**' ॥

**अथ स्वयंवरा ।**

**पतिंवरा च वर्या च**

**अथेति** ॥ स्वयं वृणीते । 'वृङ् संभक्तौ' ( क्र्या० आ० से० ) । 'संज्ञायां भृतॄवृजि–' (३।२।४६) इति खच् ॥ (१) ॥*॥ एवं पतिं वृणोति ॥ (२) ॥*) व्रियतेऽनया । 'अवद्यपण्य–' (३।१।१०१) इत्यनिरोधे यत् । ( '**वर्या** पतिंवरायां स्त्री, वरेण्ये त्रिषु, ना स्मरे' इति मेदिनी) ॥ (३) ॥*॥ त्रीणि '**स्वेच्छाकृतपतिवरणायाः**' ॥

**कुलस्त्री कुलपालिका ॥ ७ ॥**

**कुलेति** ॥ कुलपालिका स्त्री । शाकपार्थिवादिः । (वा० २।१।७८) ॥ (१) ॥*॥ कुलं पालयति । 'पाल रक्षणे' (चु० प० से० ) । 'कर्मण्यण्' (३।२।१) । स्वार्थे कन् (५।३।७५) ॥ (२) ॥*॥ द्वे '**व्यभिचारवारणेन कृतकुलरक्षायाः**' ॥

**कन्या कुमारी**

**केति** ॥ कनति । कन्यते वा । 'कनी दीप्तौ' (भ्वा० प० से०) । अघ्न्यादिः (उ० ४।११२) । '**कन्या** नार्यां कुमार्यां च राश्यौषधिविशेषयोः' इति हैमः । '**कन्या** कुमारिकानार्यो-

रौषधिराशिभेदयोः' (इति मेदिनी) ॥ (१) ॥*॥ कम्यते। 'कमु कान्तौ' ( भ्वा० आ० से० )। 'कमेः किदुच्चोपधायाः' (उ० ३।१३८) इत्यारन्। 'वयसि प्रथमे' (४।१।२०) इति ङीप्। पूर्वेण तु न। 'कन्यायाः कनीन च' (४।१।११६) इति लिङ्गात्। यद्वा कुमारयति। 'कुमार क्रीडायाम्' (चु० उ० से०)। अच् (३।१।१३४)। कुत्सितो मारोऽस्या वा। '**कुमारः** स्याच्छुके स्कन्दे युवराजेऽश्ववारके। बालके वरुणद्रौ ना न द्वयोर्जात्यकाञ्चने' (इति मेदिनी)। '**कुमारी** रामतरुणीनवमाल्योर्नदीभिदि। कन्यापराजितागौरीजम्बूद्वीपेषु च स्मृता' इति विश्वः। ('जम्बूद्वीपविभागे च' इति हैमः) ॥ (२) ॥*॥ द्वे '**प्रथमवयस्ककन्यायाः**' ॥

**गौरी तु नग्निकानागतार्तवा।**

**गौरीति** ॥ गूयते। 'गुङ् शब्दे' ( भ्वा० आ० अ० ) 'ऋजेन्द्र–' (उ० २।२८) इत्यादिना रन्नन्तो निपातितः। गौरादित्वात् (४।१।४१) ङीष्। '**गौरी** त्वसंजातरजःकन्याशंकरभार्ययोः। रोचनीरजनीपिङ्गाप्रियंगुवसुधासु च। आपगाया विशेषेऽपि यादसांपतियोषिति' (इति मेदिनी) ॥ (१) ॥*॥ नजते स्म। 'ओणजी व्रीडे' (तु० आ० से०) ॥ 'गत्यर्था–' (३।४।७२) इति क्तः। 'ओदितश्च' (८।२।४५) इति नत्वम्। स्वार्थे कन् (५।३।७५)। '**नग्निका** तु कुमार्यां स्यात् पुमान् क्षपणबन्दिनोः' (इति मेदिनी) ॥ (२) ॥*॥ अनागतमार्तवं रजोऽस्याः ॥ (३) ॥*॥ त्रीणि '**अदृष्टरजस्कायाः**' ॥

**स्यान्मध्यमा दृष्टरजाः**

**स्यादिति** ॥ बाल्ययौवनयोर्मध्ये भवा। 'मध्यान्मः' (४।३।८) तयोर्मध्ये मा शोभा यस्याम्, वा। '**मध्यमो** मध्यजेऽन्यवत्। पुमान् स्वरे मध्यदेशेऽप्यवलग्ने तु न स्त्रियाम्। स्त्रियां दृष्टरजोनार्यां कर्णिकाङ्गुलिभेदयोः। त्र्यक्षरच्छन्दसि तथा' (इति मेदिनी) ॥ (१) ॥*॥ दृष्टं रजो यस्याः, यया, वा ॥ (२) ॥*॥ द्वे '**प्रथमप्राप्तरजोयोगायाः**' ॥

**तरुणी युवतिः समे ॥ ८ ॥**

**तेति** ॥ तरति। 'तॄ प्लवनतरणयोः' ( भ्वा० प० से० )। 'त्रो रश्च लो वा' (उ० ३।५४) इत्युनन्। 'वयसि–'(४।१।२०) इति ङीप्। 'नञ्स्नञीकक्–' (वा० ४।१।१५) इति वा। 'तरुणी **तलुनीति** च' इति शब्दभेदः। ('**तलुनः** पवने यूनि युवत्यां **तलुनी** स्मृता' इति मेदिनी) ॥ (१) ॥*॥ यौति। 'यु मिश्रणे' ( अ० प० अ० )। 'कनिन्युवृषि–' (उ० १।१५६) इति कनिन्। 'यूनस्तिः' (४।१।७७)। यत्तु—'यौतेः कतिः' इति कतिप्रत्ययान्तात् पाक्षिके ङीषि (ग० ४।१।४५) '**युवती**'—इति मुकुटो व्याचख्यौ। तन्न। यौतेः शत्रन्तात्–' ङीपि (४।१।१५) युवतिशब्दाद्वा 'सर्वतोऽक्तिन्नर्थात्' (ग० ४।१।१५) इति ङीषा गतार्थत्वात्। उज्ज्वलदत्तादिधृतसूत्राभावाच्च। स्त्रीसामान्येऽप्ययम्। 'प्रमदा चेति विज्ञेया युवतिस्तु तथा स्मृता' इति भागुरिः ॥ (२) ॥*॥ द्वे '**मध्यमवयसि वर्तमानायाः**' ॥

**समाः स्नुषाजनीवध्वः**

**समा इति** ॥ स्नौति। 'ष्णु प्रस्रवणे' ( अ० प० से० )। 'स्नुव्रश्चिकृत्यृषिभ्यः कित्' (उ० ३।६६) इति सः ॥ (१) ॥*॥ जायते वंशोऽस्याम्। 'जनिघसिभ्यामिण्' (उ० ४।१३०)। 'जनिवध्योश्च' (७।३।३५) इति न वृद्धिः। 'कृदि–' (ग० ४।१।४५) इति वा ङीष्। '**जनो** लोके जगद्भेदे पृथग्जने। जनी स्नुषावनितयोः' इति हैमः। '**जनी** सीमन्तिनी वध्वोरुत्पत्तावौषधीभिदि' (इति मेदिनी) ॥ (२) ॥*॥ वहति। 'वहो धश्च' (उ० १।८३) इत्यूः। '**वधूः** पत्न्यां स्नुषानार्योः स्पृक्कासारिवयोरपि। नवपरिणीतायां च' इति हैमः ॥ (३) ॥*॥ त्रीणि '**पुत्रभार्यायाः**' ॥

**चिरण्टी तु सुवासिनी।**

**चिरेति** ॥ चिरेणाटति पितृगेहाद्भर्तृगेहम्। अच् (३।१।१४) पृषोदरादिः (६।३।१०९)। 'वयस्यचरमे' (वा० ४।१।२०) इति ङीप् ॥*॥ चरति। बाहुलकादण्टप्रत्यये '**चरण्टी**' इत्येके ॥*॥—चिरिणोति चिरण्टी।—इति स्वामी। तत्र 'चिरि हिंसायाम्' (स्वा० प० से०) इति धातुः; पृषोदरादिः। (**चिरिण्टी** तु सुवासिन्यां स्याद्द्वितीयवयःस्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ सु अतीव वसति पितृगृहे तच्छीला। 'सुप्यजातौ–' (३।२।७८) इति णिनिः ॥*॥ '**स्ववासिनी**' इत्यपि पाठः। स्वेषु पित्रादिषु वस्तुं शीलमस्याः। '**स्ववासिन्यां** चिरिण्टी स्याद्द्वितीयवयसि स्त्रियाम्' इति रुद्रः ॥ (२) ॥*॥ द्वे '**प्राप्तयौवनायाः पितृगेहस्थायाः**' ॥

**इच्छावती कामुका स्यात्**

**इच्छेति** ॥ इच्छास्त्यस्याः। 'मतुप्' (५।२।११५) ॥ (१) ॥*॥ कामयते। 'कमु कान्तौ' ( भ्वा० आ० से० )। 'लषपतपद–' (३।२।१५४) इत्युकञ्। '**कामुकाः** कमने-

---

१ मुकुटस्तु—लजते। 'ओलजी व्रीडे' (तु० उ० से०)। पृषोदरादित्वादादेर्नत्वम्। केचित्तु 'नोलजी' इति तवर्गपञ्चमादिं पठन्ति—इत्याह ॥

१—पितृकुलस्नेहाच्चिरमिटति गच्छति। 'चिरम्' इत्युपपदे 'इट गतौ' इत्यत 'इगुपध–' इति के पृषोदरादित्वाच्चिराकारनाशे इकारस्य विपर्यये मकारस्य परसवर्णत्वे 'वयसि प्रथमे ङीपि चिरिण्टी' —इति मुकुटः। हैमस्तु स्वोपज्ञनाममालाव्याख्यायाम्—चिरिः सौत्रः स्वादिः। चिरिणोति चिरिण्टी। 'डिण्टश्चर् च वा' इति साधुः। 'चरिण्टी' इत्यपि। 'चिरण्टी' इत्यमरः। 'चरण्टी' इत्यन्ये—इति प्रोक्तवान् ॥

ऽशोकपादपे चातिमुक्तके' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'धनादीच्छायुक्तायाः' 'यभनादीच्छावत्याः'** वा ॥

**वृषस्यन्ती तु कामुकी ॥ ९ ॥**

**वृषेति** ॥ **'वृषो** नरो **वृषः** कालः' इत्यनेकार्थमञ्जरी । वृषं नरं शुक्लं वेच्छत्यात्मनः । 'सुप आत्मनः क्यच्' (३।१।८) । 'अश्वक्षीर–' (७।१।५१) इत्यत्र 'अश्ववृषयोर्मैथुनेच्छायाम्' इति वचनादसुक् । लटः शता (३।२।१२४) । 'उगितश्च' (४।१।६) इति ङीप् । 'आच्छीनद्योर्नुम्' (७।१।८०) ॥ (१) ॥*॥ 'जानपद–' (४।१।४२) इति ङीष् । कामुकी ॥ (२) ॥*॥ द्वे **'मैथुनेच्छावत्याः'** ॥

**कान्तार्थिनी तु या याति संकेतं साभिसारिका ।**

**कान्तेति** ॥ अभिसरति । 'सृ गतौ' (भ्वा० प० अ०) ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ एकं **'भर्त्रिच्छया रतिस्थानं गच्छन्त्याः'** ॥

**पुंश्चली चर्षणी बन्धक्यसती कुलटेत्वरी ॥ १० ॥**
**स्वैरिणी पांशुला च स्यात्**

**पुंश्चलीति** ॥ पुंसो भर्तुः सकाशाचलति पुरुषान्तरं गच्छति । 'चल गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) । गौरादिः (४।१।४१) ।—पुमांसं वृत्ताचालयति च्यावयति । कर्मण्यणन्तान्ङीप् (४।१।१५)—इति मुकुटः । तन्न । 'चल कम्पने' इत्यनेन कम्पनादन्यत्र मित्त्वाविधानाद्वृद्धिप्रसङ्गात् । संज्ञापूर्वकत्वं वा वृद्धेः ॥ (१) ॥*॥—कर्षति मनः । 'कृष विलेखने' (भ्वा० प० अ०) । 'कृषेरादेश्च चः' (२।१०४) इत्यनिः—इति स्वामी ॥*॥ 'धर्षणी' इति वा पाठः । धर्षयति । 'ञिधृषा प्रागल्भ्ये' (स्वा० प० से०) । ल्युट् (३।३।११३) । **'धर्षणं** स्यात्परिभवे रतेऽसत्यां तु **'धर्षणी'** (इति मेदिनी) ॥*॥ **'धर्षिणी'** इति क्वचित् पाठः । 'आवश्यका–' (३।३।१७०) इति णिनिः ॥ (२) ॥*॥ बध्नाति मनोऽन्न । 'बन्ध बन्धने' (क्र्या० प० अ०) । ण्वुल् (३।१।१३३) । गौरादिः (४।१।४१) । (**'बन्धकः** स्याद्विनिमये पुंश्चल्यां स्याच्च **बन्धकी'** इति मेदिनी) ॥ (३) ॥*॥ सत्यात् भिन्ना ॥ (४) ॥*॥ अटति । 'अट गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) । **'कुलं** जनपदे गेहे' इति विश्वः । कुलस्य अटा । शकन्ध्वादिः (वा० ६।१।९४) । **'कुलटा** मनःशिलायां नेपाल्यामपि योषिति' (इति मेदिनी) ॥ (५) ॥*॥ एति तच्छीला 'इण्नशजि–' (३।२।१६३) इति करप् । 'टिड्ढा–' (४।१।१५) इति ङीप् । **'इत्वर्य**सत्यां पथिके क्रूरकर्मणि च त्रिषु' (इति मेदिनी) ॥ (६) ॥*॥ स्वया, इच्छया स्वेन स्वातन्त्र्येण, वा ईरितुं शीलमस्याः । 'ईर गतौ' (अ० आ० से०) । 'सुपि–' (३।२।७८) इति णिनिः । 'स्वादीरेरिणोः' (वा० ६।१।८९) इति वृद्धिः ॥ (७) ॥*॥ पांशु पापमस्त्यस्याः 'खमुख–' (वा० ५।२।१०७) इति रः । 'कपिलकादिः' (वा० ८।२।१८) सिध्मादित्वात् (५।२।९७) लच् वा । पांशु लाति वा । 'आतोऽनुप–' (३।२।३) इति कः ॥ (८) ॥*॥ अष्टौ **'असत्याः' 'स्वैरिण्याः'** ॥

**अशिश्वी शिशुना विना ।**

**अशीति** ॥ न शिशुर्यस्याः । 'सख्यशिश्वी–' (४।१।६२) इति साधुः ॥ (१) ॥*॥ एकम् **'अपत्यरहितायाः'** ॥

**अवीरा निष्पतिसुता**

**अवीति** ॥ वीरयति । 'वीर विक्रान्तौ' (चु० उ० से०) । अच् (३।१।१३४) 'पतिपुत्रवती **वीरा'** इति नाममाला । वीराया भिन्ना ॥ (१) ॥*॥ **'पतिपुत्ररहितायाः** ॥

**विश्वस्ता विधवे समे ॥ ११ ॥**

**विश्वेति** ॥ विफलं श्वसिति स्म । 'गत्यर्था–' (३।४।७२) इति क्तः । आगमशासनस्यानित्यत्वान्नेट् । **'विश्वस्तो** जातविश्वासे **विश्वस्ता** विधवास्त्रियाम्' इति मेदिनी ॥ (१) ॥*॥ विगतो धवोऽस्याः ॥ (२) ॥*॥ 'विश्वस्ताविधवे तुल्ये विशस्तापतिनी च सा' इति वाचस्पतिः ॥*॥ द्वे **'रण्डायाः'** ॥

**आलिः सखी वयस्या च**

**आलिरिति** ॥ आलयति । 'अल भूषणादौ' (भ्वा० प० से०) । णिच् (३।१।२६) । 'अच इः' (उ० ४।१३९) । बाहुलकादिण्—इति मुकुटो व्यर्थः । **'आलिः** सखी सेतुरालिरालिरावलिरिष्यते' इति शाश्वतः ॥ (१) ॥*॥ समानं ख्यायते जनैः । 'समाने ख्यः स चोदात्तः' (उ० ४।१३७) इतीण् डित् समानस्य स च । 'सख्यशिश्वी–' (४।१।६२) इति ङीष् । **'सखा** मित्रे सहाये ना वयस्यायां **सखी** मता' (इति मेदिनी) ॥ (२) ॥*॥ वयसा तुल्या । 'नौवयोधर्म–' (४।४।९१) इति यत् ॥ (३) ॥*॥ त्रीणि **'सख्याः'** ॥

**पतिवत्नी सभर्तृका ।**

**पतीति** ॥ पतिरस्त्यस्याः । मतुप् (५।२।९४) । 'अन्तर्वत्पतिवतोर्नुक्' (४।१।३१) इति साधुः ॥ (१) ॥*॥ सह भर्त्रास्ति । 'नद्यृतश्च' (५।४।१५३) इति कप् ॥ (२) ॥*॥ द्वे **'जीवद्भर्तृकायाः'** ॥

**वृद्धा पलिक्नी**

**वृद्धेति** ॥ वर्धते स्म 'वृधु वृद्धौ' (भ्वा० आ० से०) । 'गत्यर्था–' (३।४।७२) इति क्तः । **'वृद्धो** जीर्णे प्रवृद्धे ज्ञे त्रिषु क्लीबं तु शैलजे' (इति मेदिनी) ॥ (१) ॥*॥ पलितमस्त्यस्याः । अच् (५।२।१२७) । 'असितपलितयोः प्रतिषेधः'

१—भाष्ये त्वसिन् वार्तिके पांशुशब्दपाठो नोपलभ्यते ॥

'छन्दसि क्रमेके' (वा० ४।१।३९)। नान्तत्वात् (४।१।५) ङीप्॥ (२) द्वे **'पक्वकेश्याः'**॥

**प्रज्ञा तु प्राज्ञी**

**प्रज्ञेति**॥ प्रजानाति। 'आतश्चोपसर्गे' (३।१।१३६) इति कः। **'प्रज्ञस्तु** पण्डिते वाच्यलिङ्गो बुद्धौ तु योषिति'॥ (१)॥*॥ प्रज्ञायण् (५।४।३८) वा॥ (२)॥*॥ द्वे **'स्वयंज्ञाज्ञ्याः'**॥

**प्राज्ञा तु धीमती॥ १२॥**

**प्राज्ञेति**॥ प्रज्ञास्त्यस्याः। 'प्रज्ञाश्रद्धा-' (५।२।१०१) इति णः॥ (१)॥*॥ धीरस्त्यस्याः। मतुप् (५।२।९४)॥ (२)॥*॥ द्वे **'प्रशस्तबुद्धेः'**॥

**शूद्री शूद्रस्य भार्या स्यात्**

**शूद्रीति**॥ शूद्रस्य स्त्री। 'पुंयोगा-' (४।१।४८) इति ङीष्॥ (१)॥*॥ एकं भिन्नजातीयाया अपि **'शूद्रभार्यायाः'**॥

**शूद्रा तज्जातिरेव च।**

**शूद्रेति**॥ 'शूद्रा चामहत्पूर्वा जातिः' (भ्वा० ४।१।४) इति टाप्॥ (१)॥*॥ एकमन्यभार्याया अपि **'शूद्रजातीयायाः'**॥

**आभीरी तु महाशूद्री जातिपुंयोगयोः समा॥ १३॥**

**आभीति**॥ आभीरस्य स्त्री, तज्जातीया वा। 'पुंयोगात्-' (४।१।४८) इति 'जातेः-' (४।१।६३) इति च ङीष्॥ (१)॥*॥ एवं महाशूद्री॥*॥ या तु महती शूद्रा। तत्र **'महाशूद्रा'** इत्येव॥ (२)॥*॥ द्वे **'आभीर्याः'**॥

**अर्याणी स्वयमर्या स्यात्**

**अर्येति**॥ स्वयं पुंयोगं विना जातिमात्रे। 'अर्यक्षत्रियाभ्यां वा' (वा० ४।१।४९) इति स्वार्थे ङीषानुकौ॥ (१)॥*॥ (२)॥*॥ द्वे **'वैश्यजातीयायाः'**॥

**क्षत्रिया क्षत्रियाण्यपि।**

**क्षत्रियेति**॥ एवम्॥ (१)॥*॥ (२)॥*॥ द्वे **'क्षत्रियजातीयायाः'**॥

**उपाध्यायाप्युपाध्यायी**

**उपेति**॥ उपेत्याधीयतेऽस्याः। 'इङश्च' (३।३।२१) इत्यत्र 'अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्' इति (वार्तिकेन) घञ्॥ (१)॥*॥ (२)॥*॥ द्वे **'स्वयं विद्योपदेशिन्याः'**॥

**स्यादाचार्यापि च स्वतः॥ १४॥**

**स्यादिति**॥ अः चर्यते। 'चर गतौ' (भ्वा० प० से०)। 'ऋहलोर्ण्यत्' (३।१।१२४)॥ (१)॥*॥ एकं **'स्वयं मन्त्रव्याख्यात्र्याः'**॥

**आचार्यानी तु पुंयोगे**

**आचेति**॥ आचार्यस्य स्त्री। 'इन्द्रवरुण-' (४।१।४९) इति ङीषानुकौ। आचार्यादणत्वं च' (वा० ४।१।४९) इति णत्वाभावः॥ (१)॥*॥ एकम् **'आचार्यभार्यायाः'**॥

**स्यादर्यी**

**स्यादिति**॥ अर्यस्य स्त्री। 'पुंयोगात्-' (४।१।४८) इति ङीष्॥ (१)॥*॥ एकं **'वैश्यपत्न्या अन्यजातीयाया अपि'**॥

**क्षत्रियी तथा।**

**क्षेति**॥ एवम्। क्षत्रियस्य स्त्री॥ (१)॥*॥ एकम् **'अन्यजातीयाया अपि क्षत्रियपत्न्याः'**॥

**उपाध्यान्युपाध्यायी**

**उपेति**॥ उपाध्यायस्य स्त्री। 'मातुलोपाध्याय-' (वा० ४।१।४९) ङीषानुकौ॥ (१)॥*॥ (२)॥*॥ द्वे **'विद्योपदेष्टृभार्यायाः'**॥

**पोटा स्त्रीपुंसलक्षणा॥ १५॥**

**पोटेति**॥ पोटयति। 'पुट भासने' चुरादि। अच् (३।१।१३४)।—पुटति। 'पुट संश्लेषणे' (तु० प० से०)। अच् (३।१।१३४)—इति स्वामीमुकुटौ। तन्न। पुटेः कुटादित्वाद्गुणाभावप्रसङ्गात्॥ (१)॥*॥ एकं **'स्त्रीपुंसयोः स्तनश्मश्र्वादिचिह्नयुक्तायाः'**॥

**वीरपत्नी वीरभार्या**

**वीति**॥ वीरः पतिरस्याः। 'नित्यं सपत्न्यादिषु' (४।१।३५) इति साधुः॥ (१)॥*॥ वीरस्य भार्या॥ (२)॥*॥ द्वे **'वीरस्य भार्यायाः'**॥

**वीरमाता तु वीरसूः।**

**वीरमेति**॥ वीरस्य माता॥ (१)॥*॥ वीरं सूते। 'षूङ् प्राणिगर्भविमोचने' (अ० आ० से०) 'सत्सूद्विष-' (३।२।६१) इति क्विप्॥ (२)॥*॥ द्वे **'वीरस्य मातरि'**॥

**जातापत्या प्रजाता च प्रसूता च प्रसूतिका॥ १६॥**

**जातेति**॥ जातमपत्यमस्याः॥ (१)॥*॥ प्रजायते स्म। अन्तर्भावितण्यर्थोऽत्र जनिः। 'गत्यर्था-' (३।४।७२) इति क्तः॥ (२)॥*॥ प्रासविष्ट। षूङुक्तः। प्राग्वत्॥ (३)॥*॥ स्वार्थे कन् (५।३।७५) 'सूतिकापुत्रिका-' (वा० ७।३।४५) इतीत्वं वा। **'प्रसूतं** कुसुमे क्लीबं त्रिषु संजातसूनयोः' (इति मेदिनी)॥ (४)॥*॥ चत्वारि **'प्रसूतायाः'**॥

**स्त्री नग्निका कोटवी स्यात्**

**स्त्रीति**॥ नजते स्म। 'ओ लजी व्रीडे' (तु० आ० से०)। 'गत्यर्था-' (३।४।७२) इति क्तः। 'ओदितश्च' (८।२।४५) इति नत्वम्। स्वार्थे कन् (५।३।७५)॥ **'नग्नो** बन्दिक्षपण-

योः पुंसि, त्रिषु विवाससि' (इति मेदिनी) ॥ (१) ॥*॥ कोटनम्। 'कुट कौटिल्ये' (तु० प० से०)। घञ् (३।३।१८)। कोटं वाति। 'आतोऽनुप-' (३।२।३) इति कः। गौरादिः (४।१।४१) ॥*॥ **'कोट्टवी'** इति पाठे 'कुट्ट छेदने' (चु० प० से०)। बाहुलकाद्वुणः ॥ (२) ॥*॥ द्वे **'नग्नायाः'** ॥

**दूतीसंचारिके समे ।**

**दूतीति** ॥ दवति। 'दु गतौ' (भ्वा० प० अ०)। दुनोति 'टु दु उपतापे' (स्वा० प० अ०) वा। 'दुतनिभ्यां दीर्घश्च' (उ० ३।९०) इति क्तः। गौरादिः (४।१।४१) यद्वा दूयते 'दूङ् परितापे' (दि० आ० से०)। क्तिच् (३।३।१७४)। दूयन्तेऽनया वा। बाहुलकात् क्तिन्। 'कृत्-' (ग० ४।१।४५) इति वा ङीष्। गौरादिः (४।१।४१) वा ॥ (१) ॥*॥ संचरति। संचारयति, वा। 'चर गतौ' (भ्वा० प० से०)। ण्वुल् (३।१।१३३) **'संचारिका** तु युगले कुट्टनीघ्राणयोरपि' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ द्वे **'दूत्याः'** ॥

**कात्यायन्यर्धवृद्धा या काषायवसनाधवा ॥ १७ ॥**

**केति** ॥ कतस्यापत्यम्। 'गर्गादिभ्यो यञ्' (४।१।१०५)। 'सर्वत्र लोहितादि-' (४।१।१८) इति ष्फः। ऋषिपत्नीसदृशत्वात्। **'कात्यायनो** वररुचौ विशेषे च मुनेः पुमान्। काषायवस्त्रविधवार्धजरत्युभयोः स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ एकं **'विशेषणत्रयवत्याः'** ॥

**सैरंध्री परवेश्मस्था स्ववशा शिल्पकारिका ।**

**सायिति** ॥ सीरं धरति। 'धृञ् धारणे' (भ्वा० उ० अ०)। मूलविभुजादिकः (वा० ३।२।५) बाहुलकान्मुक्। सीरंध्रस्येयम्। 'तस्येदम्' (४।३।१२१) इत्यण्। शिल्पकरणात् कर्षकस्त्रीव। यद्वा स्वैरं स्वाच्छन्द्यं धरति। प्राग्वत् कः। पृषोदरादिः (६।३।१०९)। गौरादिः। (४।१।४१)। **'सैरंध्री** परवेश्मस्थशिल्पकृत्स्ववशस्त्रियाम्' इति दन्त्यादौ रभसः। 'चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी। प्रसाधनोपचारज्ञा **सैरंध्री** परिकीर्तिता' इति कात्यः (**'सैरिंध्री'** इति) इकारमध्यपाठे पृषोदरादित्वं (६।३।१०९) बोध्यम् ॥ (१) ॥*॥ एकं **'विशेषणत्रयवत्याः'** ॥

**असिक्नी स्यादवृद्धा या प्रेष्यान्तःपुरचारिणी ॥ १८ ॥**

**असीति** ॥ सिनोति 'षिञ् बन्धने' (स्वा० उ० अ०)। 'अञ्जिघृसिभ्यः क्तः' (उ० ३।८९)। यद्वा सीयते स्म। क्तः (३।२।१०२) 'द्यतिस्यतिमास्थामित्ति किति' (७।४।४०) इतीत्वम्। सिता शुक्लकेशा। तद्भिन्ना। 'छन्दसि क्नमेके' (वा० ४।१।३९) इति तस्य क्नः। नान्तत्वान्ङीप् (४।१।५)।—द्वे वाक्ये (**'असिक्न्यन्तःपुरप्रेष्या'** इति हैमात्)—इत्येके ॥ **'असिक्निका** स्यादवृद्धा या प्रेष्यान्तःपुरोषिता' इति कात्यः ॥ (१) ॥*॥ एकं **'कृष्णकेशादित्रिविशेषणायाः'** ॥



**वारस्त्री गणिका वेश्या रूपाजीवा**

**वारेति** ॥ वारस्य वृन्दस्य स्त्री साधारणत्वात् ॥ (१) ॥*॥ गणः समूहोऽस्त्यस्याः भर्तृत्वेन। ठन् (५।२।११५) ॥ गणयति। 'गण संख्याने' (चु० उ० से०)। ण्वुल् (३।१।१३३) वा ॥ (२) ॥*॥ **'वेशो** वेश्यागृहे गृहे। नेपथ्ये च' (इति मेदिनी)। वेशेन नेपथ्येन शोभते। 'कर्मवेशाद्यत्' (५।१।१००)। वेशे वेश्यावाटे भवा वा। 'दिगादिभ्यो यत्' (४।३।५४) वेशः प्रवेशोऽस्त्यस्याः। 'अन्येभ्योऽपि-' (वा० ५।४।१२०) इति यन् वा। **'वेश्यं** वेश्यागृहे क्लीबं गणिकायां तु योषिति' (इति मेदिनी) ॥*॥ **'वेष्या'** इति मूर्धन्यमध्यपाठोऽपि। वेवेष्टि। 'विष्लृ व्याप्तौ' (जु० उ० अ०)। अघ्न्यादिः (उ० ४।११२) ॥ (३) ॥*॥ रूपमाजीवोऽस्याः ॥ (४) ॥*॥ चत्वारि **'वेश्यायाः'** ॥

**अथ सा जनैः ।**

**सत्कृता वारमुख्या स्यात्**

**अथेति** ॥ वारे वेश्यावृन्दे मुख्या ॥ (१) ॥*॥ एकम् **'जनैः सत्कृतवेश्यायाः'** ॥

**कुट्टनी शंभली समे ॥ १९ ॥**

**कुट्टेति** ॥ कुट्टयति। 'कुट्ट छेदने' (चु० प० से०)। ल्युट् (३।३।११३) ॥ (१) ॥*॥ शं सुखं भलते। 'भल परिभाषणे' (भ्वा० आ० से०)। अच् (३।१।१३४)। गौरादिः (४।१।४१)। 'शाल्मकं शंभलीशल्लशुष्क-' इति शभेदात्तालव्यादिः ॥*॥ सं भलते। इति (**संभली**) दन्त्यादिरपि ॥ (२) ॥*॥ द्वे **'परनारीं पुंसा संयोजयित्र्याः'** ॥

**विप्रश्निका त्वीक्षणिका दैवज्ञा**

**विप्रेति** ॥ विविधः प्रश्नोऽस्त्यस्याः। ठन् (५।२।११५) ॥ (१) ॥*॥ शुभाशुभयोरीक्षणमस्त्यस्याः। ठन् (५।२।११५) ॥ (२) ॥*॥ दैवं शुभाशुभं जानाति। 'आतोऽनुप-' (३।२।३) इति कः। **'दैवज्ञो** गणके पुमान्। दैवज्ञेक्षणिकायां स्त्री' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि **'लक्षणादिना शुभाशुभे जानत्याः'** ॥

**अथ रजस्वला ।**

**स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि ॥ २० ॥**
**ऋतुमत्यप्युदक्यापि**

**अथेति** ॥ रजोऽस्त्यस्याः। 'रजःकृष्या-' (५।२।११२) इति वलच्। 'तसौ मत्वर्थे' (१।४।१९) इति भत्वान्न रुत्वम् ॥ (१) ॥*॥ स्त्रीधर्मो रजोऽस्त्यस्याः। इनिः (५।२।११५) ॥ (२) ॥*॥ अवति लज्जया। 'अव रक्षणादौ' (भ्वा० प० से०)। 'अवितृस्तृतन्त्रिभ्य ईः' (उ० ३।१५८) ॥*॥ 'अविं स्त्रीधर्मिणीं विद्यात्' इति कात्यात् (**अविः**) ह्रस्वान्तापि। 'सर्वधातुभ्य इन्' (उ० ४।११८) ॥ (३) ॥*॥ अत्रेरपत्यम्।

'इतश्चानिञः' (४।१।१२२) इति ढक्। आत्रेयीवागम्यत्वात्। 'आत्रेयो मुनिरात्रेयी पुष्पवत्यां सरिद्भिदि' इति हैमः॥ (४) ॥*॥ मलमस्त्यस्याः। इनिः (५।२।११५)। 'मलिनं कृष्णदोषयोः। मलिनी रजस्वलायाम्' इति हैमः॥ (५) ॥*॥ पुष्पं रजोऽस्त्यस्याः। मतुप् (५।२।९४)॥ (६) ॥*॥ ऋतुरस्त्यस्याः। मतुप् (५।२।९४)॥ (७) ॥*॥ उदकमर्हति। 'संज्ञायाम्' (      ) इति यत्॥ (८) ॥*॥ अष्टौ 'रजस्वलायाः'॥

**स्याद्रजः पुष्पमार्तवम्।**

**स्यादिति**॥ रज्यतेऽनेन। 'भूरञ्जिभ्यां कित्' (उ० ४। २१६) इत्यसुन्। 'रजः क्लीबं गुणान्तरे। आर्तवे च परागे च रेणुमात्रे च दृश्यते' (इति मेदिनी)॥ (१) ॥*॥ पुष्यते। 'पुष विकसने' (दि० प० से०)। घञ् (३।३।१९)। 'पुष्पं विकासिकुसुमस्त्रीरजःसु नपुंसकम्' (इति मेदिनी)॥ (२) ॥*॥ ऋतुरेव। प्रज्ञाद्यण्। (५।४।३८) 'आर्तवं स्त्रीरजे पुष्पे क्लीबं स्यादृतुजे त्रिषु' (इति मेदिनी)॥ (३) ॥*॥ (त्रीणि 'स्त्रीपुष्पस्य')॥

**श्रद्धालुर्दोहदवती**

**श्रेति**॥ श्रद्धत्ते तच्छीला। 'स्पृहिगृहि-' (३।२।१५८) इत्यालुच्। 'श्रद्धालुर्दोहदिन्यां स्त्री श्रद्धायुक्ते च वाच्यवत्' (इति मेदिनी)॥ (१) ॥*॥ दोहदं गर्भिण्यभिलाषोऽस्त्यस्याः। मतुप् (५।२।९४)॥ (२) ॥*॥ द्वे (गर्भवशात्) 'अभिलाषविशेषवत्याः'॥

**निष्कला विगतार्तवा॥ २१॥**

**नीति**॥ 'कलं शुक्रे त्रिष्वजीर्णे नाव्यक्तमधुरध्वनौ' (इति मेदिनी)। कलान्निष्क्रान्ता। 'निरादयः क्रान्ताद्यर्थे' (वा० २।२।१८) इति समासः। निर्गतं कलं शुक्रमस्या वा। 'निष्कलं तु कलाशून्ये नष्टवीर्ये तु वाच्यवत्' (इति मेदिनी)॥ (१) ॥*॥ विगतमार्तवं रजोऽस्याः॥ (२) ॥*॥ द्वे 'रजोहीनायाः'॥

**आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी।**

**आपेति**॥ आपन्नः सत्त्वो जन्तुरनया, अस्यां वा (१) ॥*॥ 'गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि' (इति मेदिनी)। गुरुर्दुर्जरोऽलघुर्वा गर्भोऽस्त्यस्याः। व्रीह्यादीनिः (५।२।११६)। संज्ञापूर्वकत्वान्न गुणः (६।४।१४६)। यद्वा गर्वति। 'गर्वेरत उच्च' (उ० २।५४) इतीनन्। गौरादिः (४।१।४१)॥ (२) ॥*॥ अन्तरस्त्यस्यां गर्भः। 'अन्तर्वत्पतिवतोर्नुक्' (४।१। ३२) इति साधुः॥ (३) ॥*॥ गर्भोऽस्त्यस्याः। इनिः (५।२। ११५)॥ (४) ॥*॥ चत्वारि 'गर्भिण्याः'॥

**गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे॥ २२॥**

**गेति**॥ गणिकानां समूहः। 'गणिकायाश्च यञ् वाच्यः' (वा० ४।२।४०)॥ (१) ॥*॥ गर्भिणीनां समूहः। 'भिक्षादिभ्योऽण्' (४।२।३८) 'भस्याढे तद्धिते' (वा० ६।३।३५) इति पुंवद्भावः। 'नस्तद्धिते' (६।४।१४४) इति टेर्लोपे प्राप्ते 'इनण्यनपत्ये' (६।४।१६४) इति प्रकृतिभावः॥ (१) ॥*॥ युवतीनां समूहः। भिक्षादिभ्योऽण् (४।२।३८)। 'भस्याढे तद्धिते' (वा० ६।३।३५) इति पुंवद्भावः। यौतेः शत्रन्तात् 'उगितश्च' (४।१।६) इति ङचन्तो युवतीशब्दोऽयम्। 'यूनस्तिः' (४।१।७७) इति त्यन्तस्य तु अणि (४।२।३७) विवक्षिते पुंवद्भावे (वा० ६।३।३५) 'अन्' (६।४।१६७) इति प्रकृतिभावे च 'यौवनम्' इत्येव रूपम्। नच—भिक्षादिषु (४।२।३८) 'युवति' शब्दपाठसामर्थ्यान्न पुंवत्त्वम्। अन्यथा पुंवद्भावेन तैर्निवृत्तावनुदात्तादित्वाभावात् 'अञः' (४।२।४४) अप्राप्तौ 'तस्य समूहः' (४।२।३७) इत्यणि सिद्धे भिक्षादिपाठवैयर्थ्यात्—इति वाच्यम्। भिक्षादिषु 'युवति' शब्दपाठस्य ('भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात्प्रत्ययविधौ' इत्यादिग्रन्थेन) भाष्ये (४।२।३८) प्रत्याख्यानात्। एतेन—'युवत्या अपुंवत्' इति गणपाठात्—इति स्वामी—युवतीशब्दस्य भिक्षादिषु पाठाङ्गीकारकृतो मतभेदः—इति मुकुटश्च प्रत्युक्तः॥ (१) ॥*॥ एकैकम् 'समूहस्य'॥

**पुनर्भूर्दिधिषूरूढा द्विः**

**पुनरिति**॥ पुनर्भवति संस्कृता। क्विप् (३।२।७६)॥ (१) ॥*॥ दधाति पापम्। 'डुधाञ् धारणपोषणयोः' (जु० उ० अ०)। धिष्यते। 'धिष शब्दे' (जु० प० से०)। 'अन्दूदृम्भू-' (उ० १।९३) इति साधुः। यद्वा दिधिं धैर्यं स्यति। 'षोऽन्तकर्मणि' (दि०प०अ०)। प्राग्वत्॥ (२) ॥*॥ द्वौवारौ ऊढा। 'द्वित्रिचतुर्भ्यः सुच्' (५।४।१८) 'अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः' (याज्ञवल्क्यः १।६७) ॥*॥ द्वे 'द्विवारं वृतायाः'॥

**तस्या दिधिषुः पतिः।**

**तेति**॥ तस्या दिधिष्वाः। दिधिषूमात्मन इच्छति। 'सुप आत्मनः क्यच्' (३।१।८)। क्विप् (३।२।१७८)। 'पुनर्भूपतिरुक्तश्च पुनर्भूर्दिधिषूस्तथा' इत्येषोऽप्यूदन्त इति स्वामी ॥*॥ मुकुटस्तु (दिधिषुम्) ह्रस्वमाह बाहुलकात्॥ (१) ॥*॥ एकम् 'ऊढापत्युः'॥

मनुस्तु—'ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा। सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता' ( ) इत्याह॥

**स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी २३**

**स इति**॥ अग्रे प्रधानं दिधिषूर्यस्य। 'अग्रे' इति विभक्तिप्रतिरूपको निपातः। समासान्तविधेरनित्यत्वान्न कप् (५।४। १५३)॥ (१) ॥*॥ द्विजः क्षत्रियादिरपि। 'दिधिषूः परपूर्वाग्रेदिधिषूस्तत्पुरंध्रिकः' इति नाममाला ॥*॥ एकं 'पुनर्भूप्रधानभार्यस्य'॥

**कानीनः कन्यकाजातः सुतः**

**कानीति** ॥ कन्याया अपत्यम् । 'कन्यायाः कनीन च' (४।१।११६) इत्यण् ।'**कानीनः** कन्यकासुते । कर्णे व्यासे' इति हेमचन्द्रः ॥ (१) ॥*॥ कन्यकया जातः ॥ (२) ॥*॥ द्वे '**अनूढापत्यस्य**' ॥

**अथ सुभगासुतः।**

**सौभागिनेयः**

**अथेति** ॥ सुभगायाः सुतः ॥ (१) ॥*॥ सुभगाया अपत्यम् । 'कल्याण्यादीनामिनङ्' (४।१।१२६) इति ढक् । 'हृद्भग–' (७।३।१९) इत्युभयपदवृद्धिः ॥ (२) ॥*॥ द्वे '**सुभगापुत्रस्य**' ॥

**स्यात्पारस्त्रैणेयस्तु परस्त्रियाः ॥ २४ ॥**

**स्यादिति** ॥ परस्त्रिया अपत्यम् । प्राग्वत् । 'अनुशतिकादीनां च' (७।३।२०) इत्युभयपदवृद्धिः ॥ (१) ॥*॥ एकं '**परभार्यापुत्रस्य**' ॥

**पैतृष्वसेयः स्यात् पैतृष्वस्रीयश्च पितृष्वसुः । सुतः**

**पैत्रिति** ॥ पितृष्वसुरपत्यम् । 'ढकि लोपः' (४।१।१३३) ॥ (१) ॥*॥ 'पितृष्वसुश्छण्' (४।१।१३२) ॥ (२) ॥*॥ द्वे '**पितृष्वसुः सुतस्य**' ॥

**मातृष्वसुश्चैवम्**

**मात्रिति** ॥ मातृष्वसुरपत्यम् । 'मातृष्वसुश्च' (४।१।१३४) इति प्राग्वत् । (**मातृष्वसेयः । मातृष्वस्रीयः**) ॥ (१) ॥*॥ (२) ॥*॥ द्वे '**मातृष्वसुः सुतस्य**' ॥

**वैमात्रेयो विमातृजः ॥ २५ ॥**

**वैमेति** ॥ विरुद्धा माता । 'प्रादयो गता–' (वा० २।१।१८) इति समासः । विमातुरपत्यम् । शुभ्रादित्वात् (४।१।१२३) ढक् ॥ (१) ॥*॥ विमातुर्जातः । 'पञ्चम्यामजातौ' (३।२।९८) इति डः ॥ (२) ॥*॥ द्वे '**अपरमातृसुतस्य**' ॥

**अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः । कौलटेयः कौलटेरः**

**अथेति** ॥ बन्धक्या अपत्यम् । 'कल्याण्यादीनामिनङ्' (४।१।१२६) इति ढक् ॥ (१) ॥*॥ बन्धून् लाति ॥ (२) ॥*॥ असत्याः सुतः ॥ (३) ॥*॥ कुटलाया अपत्यम् । 'स्त्रीभ्यो ढक्' (४।१।१२०) ॥ (४) ॥*॥ 'क्षुद्राभ्यो वा' (४।१।१३१) इति ढक् ॥ (५) ॥*॥ यत्तु–'कुलटाया वा' (४।१।१२७) इति ढक्—इति मुकुटः । तन्न । अनेनेनङो विकल्पनात् ॥*॥ पञ्च '**कुटलायाः पुत्रस्य**' ॥

**भिक्षुकी तु सती यदि ॥ २६ ॥**
**तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः ।**

**भीति** ॥ कुटलाया अपत्यम् । 'कुलटाया वा' (४।१।१२७) इतीनङ् वा 'स्त्रीभ्यो ढक्' (४।१।१२०) । क्षुद्रात्वाभावान्न ढ्रक् । अङ्गहीना शीलहीना हि क्षुद्रा ॥ (१) ॥*॥ (२) ॥*॥ द्वे '**सत्या भिक्षार्थं गेहं गेहमटन्त्याः पुत्रस्य**' ॥

**आत्मजस्तनयः सूनुः सुतः पुत्रः**

**आत्मेति** ॥ आत्मनो देहाज्जातः । 'पञ्चम्याम्–' (३।२।९८) इति डः ॥ (१) ॥*॥ तनोति कुलम् । तन्यते वा । 'तनु विस्तारे' (तु० उ० से०) । 'वलिमलितनिभ्यः कयन्' (उ० ४।९९) ॥ (२) ॥*॥ सूयते । 'षुङ् प्राणिप्रसवे' (दि० आ० से०) । 'सुवः कित्' (उ० ३।३५) इति नुः । '**सूनुः** पुत्रेऽनुजेऽर्के ना' (इति मेदिनी) ॥ (३) ॥*॥ सूयते स्म । 'षु प्रसवे' (भ्वा० प० अ०) । क्तः (३।२।१०२) ।—सुवति—इति स्वामी । तन्न । दीर्घश्रवणप्रसङ्गात् । क्तस्याप्राप्तेश्च । '**सुतस्तु** पार्थिवे पुत्रे, स्त्र्यपत्ये तु **सुता** स्मृता' (इति मेदिनी) ॥ (४) ॥*॥ पुनाति, पूयते, वा 'पूञ् पवने' (क्र्या० उ० से०) । 'पुवो ह्रस्वश्च' (उ० ४।१६५) इति क्तः । यद्वा पुन्नरकात्त्रायते । 'सुपि' (३।२।४) इति कः । 'पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः । तस्मात् 'पुत्र' इति प्रोक्तः स्वयमेव स्वयंभुवा' (मनुः ९।१३८) ॥ (५) ॥*॥ पञ्च '**पुत्रस्य**' ॥

**स्त्रियां त्वमी ॥ २७ ॥**

**आहुर्दुहितरं सर्वे**

**स्त्रियामिति** ॥ अमी आत्मजाद्याः स्त्रियां वर्तमानाः सन्तो दुहितरं वदन्ति शार्ङ्गरवादित्वात् (४।१।७३) ङीनि 'पुत्री' ।—गौरादौ (४।१।४१) 'पुत्री'—इति स्वामिनः प्रमादः । '**सुता तु दुहिता पुत्री**' इति त्रिकाण्डशेषः ॥ (५) ॥*॥ दोग्धि । 'दुह प्रपूरणे' (अ० उ० अ०) । दहति । 'दह भस्मीकरणे' (भ्वा० प० अ०) । 'नप्तृनेष्टृ–' (उ० २।९५) इति साधु । स्वस्रादित्वात् (४।१।१०) न ङीप् (४।१।५) ॥ (६) ॥*॥

**अपत्यं तोकं तयोः समे ।**

**अपेति** ॥ न पतन्ति पितरोऽनेन । 'पत्लृ गतौ' (भ्वा० प० से०) । बाहुलकाद्यः । अघ्न्यादिः (उ० ४।११२) वा ॥ (१) ॥*॥ तौति । 'तुः' सौत्रो हिंसावृत्तिपूर्तिषु । बाहुलकात् कः । '**तोकं** संतानसुतयोः' इति हैमः ॥ (२) ॥*॥ तयोस्तनयदुहित्रोः । समे समानलिङ्गे ॥

**स्वजाते त्वौरसोरस्यौ**

**स्वेति** । '**उरो** वक्षसि च श्रेष्ठे' (इति मेदिनी) । उरसा निर्मितः । 'उरसोऽण् च' (४।४।९४) इत्यण् ॥ (१) ॥*॥ चायत् ॥ (२) ॥*॥ स्वस्माज्जातः, इति कुण्डगोलकादिवारणम् ॥*॥ द्वे '**स्वस्माज्जातस्य पुत्रस्य**' ॥

---

१—स्वस्मात्स्वपाणिगृहीतायां जातः । तथा च मनुः—'स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् । तमौरसं विजानीयात् पुत्रं प्राथमकल्पिकम्' (९।१६६) इति । नातः परभार्यायां स्वजन्येऽतिव्याप्तिः । अतएवाभिप्रेत्य मूलकृतापि 'स्वीयायाम्' इति 'स्वकीयः' इति च परित्यज्य 'स्वाभ्यां जाते' इत्यर्थकमेवोक्तम् ॥

**तातस्तु जनकः पिता ॥ २८ ॥**

**तातेति** ॥ तनोति । 'दुतनिभ्यां दीर्घश्च' (उ० ३।९० इति क्तः । 'अनुदात्त–' (६।४।३७) इति नलोपः ।—'तातपलितजर्तुसूरताः' इति तनोतेः क्तः, नलोपदीर्घौ च–इति मुकुटस्तु चिन्त्यः । तादृशसूत्राभावात् । '**तातो**ऽनुकम्प्ये पितरि' इति हेमचन्द्रः ॥ (१) ॥*॥ जनयति । ण्वुल् (३।१।१३३) । 'जनिवध्योश्च' (७।३।३५) इति न वृद्धिः । '**जनकः** पितृभूपयोः' इति हैमः ॥ (२) ॥*॥ पाति । 'नप्तृनेष्टृ–' (उ० २।९५) इति साधुः ।—'पित्रादयः' इति तृच् इत्वं च —इति सुभूतिः । तन्न । तादृशसूत्राभावात् ॥ (३) ॥*॥ त्रीणि '**पितुः**' ॥

**जनयित्री प्रसूर्माता जननी**

**जनेति** ॥ जनयति । तृच् (३।१।१३३)। 'ऋन्नेभ्यो ङीप्' (४।१।५) ॥*॥ अन्तर्भावितण्यर्थात् '**जनित्री**' ॥ (१) ॥*॥ प्रसूयते । 'सत्सूद्विष–' (३।२।६१) इति क्विप् ॥ (२) ॥*॥ मान्यते । 'मान पूजायाम्' (भ्वा० आ० से०) माति वा । माति गर्भोऽस्यां वा । 'मा माने' (अ० प० अ०) । 'नप्तृनेष्टृ–' (उ० २।९५) इति साधुः । '**माता** गौर्दुर्गा जननी मही । **मातरश्च** ब्रह्माण्याद्याः' इति हैमः ॥ (३) ॥*॥ जनयति । 'कृत्यल्युटः–' (३।३।११३) इति ल्युट् ॥ (४) ॥*॥ चत्वारि '**जनन्याः**' ॥

**भगिनी स्वसा ।**

**भेति** ॥ भगं कल्याणं यत्नो वा इच्छा वास्त्यस्याः । इनिः (५।२।११५) ॥ (१) ॥*॥ सुष्ठु असति, अस्यते वा । 'असु क्षेपणे' (दि० प० से०) । 'सावसे ऋन्' (उ० २।९६) ॥ (२) ॥*॥ द्वे '**स्वसुः**' ॥

**ननन्दा तु स्वसा पत्युः**

**ननेति** ॥ न नन्दति–न तुष्यति । 'न नन्दयति भ्रातृजायाम्' इति वा । 'नञि च नन्देः' (उ० २।९८) इति ऋन् ॥*॥ केचित् पूर्वसूत्रात् (२।९७) वृद्धिग्रहणमनुवर्तयन्ति । 'ननन्दा तु स्वसा पत्यु**र्ननान्दा नन्दिनी** च सा' इति रभसः ।—'नञि च नन्देर्दीर्घश्च'—इति मुकुटः । तन्न । उज्ज्वलदत्तादावभावात् ॥ (१) ॥*॥ एकं '**भर्तृभगिन्याः**' ॥

**नप्त्री पौत्री सुतात्मजा ॥२९॥**

**नप्त्रीति** ॥ न पतन्ति पितरोऽनेन । 'नप्तृनेष्टृ–' (उ० २।९५) इति साधुः । 'ऋन्नेभ्यो ङीप्' (४।१।५) । 'नप्ता, नप्त्री च पौत्रिका' इति रभसः ॥ (१) ॥*॥ पुत्रस्य पुत्र्याश्चापत्यम् । 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' (४।१।१०४) ॥ (२) ॥*॥ सुतस्य सुतायाश्चात्मजा ॥ (३) ॥*॥ त्रीणि '**सुतकन्यकयोरपत्यस्य**' ॥

**भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।**

**भेति** ॥ यतते । 'यती प्रयत्ने' (भ्वा० आ० से०) । 'यतेर्वृद्धिश्च' (उ० ३।९७) इत्यृन् ॥ (१) ॥*॥ एकम् '**परस्परं भ्रातृभार्याणाम्**' ॥

**प्रजावती भ्रातृजाया**

**प्रेति** ॥ प्रजास्त्यस्याः । मतुप् (५।२।९४) । यत्तु—जायायां प्रविश्य पुनः पुनर्जायते । 'उपसर्गे च संज्ञायाम्' (३।२।९९) इति डः । प्रजः पतिस्तद्योगात् मतुप् (५।२।९४) 'शरादीनां च' (६।३।१२०) इति दीर्घः—इति मुकुटः । तन्न । 'प्रजः' इत्यस्य संज्ञात्वेनाप्रसिद्धत्वात् । अस्मदुक्तरीत्या निर्वाहेनोक्तकल्पनाया व्यर्थत्वाच्च ॥ (१) ॥*॥ भ्रातुर्जाया । (२) ॥*॥ द्वे '**भ्रातृपत्न्याः**' ॥

**मातुलानी तु मातुली ॥ ३० ॥**

**मेति** ॥ मातुलस्य स्त्री । 'पुंयोगात्–' (४।१।४८) इति ङीष् । 'मातुलोपाध्याय–' इत्यानुग् वा ॥ (१) ॥*॥ (२) ॥*॥ द्वे '**मातुलभार्यायाः**' ॥

**पतिपत्न्योः प्रसूः श्वश्रूः**

**पेति** ॥ पत्युर्माता पत्न्याः श्वश्रूः । पत्न्या माता पत्युः श्वश्रूः । श्वशुरस्य स्त्री । 'श्वशुरस्योकाराकारलोपश्च' इत्यूङ् । पुंयोगलक्षणङीषोऽपवादः ॥ (१) ॥*॥ एकम् '**श्वश्र्वाः**' ॥

**श्वशुरस्तु पिता तयोः ।**

**श्वेति** ॥ तयोः पतिपत्न्योः पिता परस्परं श्वशुरः । 'शु' इति आश्चर्ये पूजायां वा । शु आशु अश्नुते, अश्यते वा । 'अशू व्याप्तौ संघाते च' (स्वा० आ० से०) । 'शावशेराप्तौ' (उ० १।४४) इत्युरन् । द्वितालव्यः 'श्वश्रूः शिशुश्वशुरः' इति शभेदात् ॥ (१) ॥*॥ एकम् '**श्वशुरस्य**' ॥

**पितुर्भ्राता पितृव्यः स्यात्**

**पित्रिति** ॥ 'पितृव्यमातुल–' (४।२।३६) इति निपातितः ॥ (१) ॥*॥ द्वे[2] '**पितृव्यस्य**' ॥

**मातुर्भ्राता तु मातुलः ॥ ३१ ॥**

**मेति** ॥ ('पितृव्यमातुल–' (४।२।३६) इति निपातितः ।) '**मातुलो** मदनद्रुमे । धत्तूरेह्वित्रीहिभिदोः पितुः श्यालेऽपि' इति हैमः ॥ (१) ॥*॥ द्वे '**मातुलस्य**' ॥

**श्यालाः स्युर्भ्रातरः पत्न्याः**

**श्येति** ॥ श्यायते । 'श्यैङ् गतौ' (भ्वा० आ० अ०) । बाहुलकात्कालन् ।—उच्छिष्टमधुपर्कवाची '**श्या**' शब्दः । श्यां लाति । 'आतोऽनुप–' (३।२।३) इति कः—इति मुकुटः

१—एतच्च वचनं 'श्वशुरः श्वश्र्वा' (१।२।७१) इति निर्देशसिद्धार्थकथनपरम्—इति मनोरमा ॥ २—मुकुटादिभिस्तु—एकम् इत्युक्तम् ॥

॥*॥—स्यामयति । 'स्यम वितर्के' चुरादिः । अच् (३।१।१३४) पृषोदरादित्वात् (६।३।१०९) मस्य लः—इति स्वामी । 'स्यालसालसमसूरसूरयः' इति समेदाद्न्त्यादिः ।—'स्याल वितर्के'—इति मुकुटस्य प्रमादः । स्याल धातोरभावात् ॥ (१) ॥*॥ पत्युः श्यालाः स्युः ॥*॥ एकम् '**पत्नीभ्रातुः**' ॥

**स्वामिनो देवृदेवरौ ।**

**स्वेति** ॥ पत्युर्भ्राता पत्न्याः । दीव्यति । 'दिवेर्ऋः' (उ० २।९९) ॥ (१) ॥*॥ देवते । 'देवृ देवने' (भ्वा० आ० से०) 'अर्तिकमिभ्रमि–' (उ० ३।१३२) इत्यरः ॥ (२) ॥*॥ 'देवृदेवरदेवानः' इति शब्दार्णवः ॥*॥ द्वे '**पत्युः कनिष्ठभ्रातुः**' इति स्वामी । ज्येष्ठस्तु श्वशुर एवेति सुभूत्यादयः ॥

**स्वस्रीयो भागिनेयः स्यात्**

**स्वेति** ॥ स्वसुरपत्यम् । 'स्वसुश्छः' (४।१।१४३) ॥ (१) ॥*॥ भगिन्या अपत्यम् । 'स्त्रीभ्यो ढक्' (४।१।१२०) ॥ (२) ॥*॥ द्वे '**भगिनीसुतस्य**' ॥

**जामाता दुहितुः पतिः ॥ ३२ ॥**

**जेति** ॥ जायां मिमीते । मिनोति, वा । 'माङ् माने' (जु० आ० अ०) 'डुमिञ् प्रक्षेपणे' (स्वा० उ० अ०) वा । 'नप्तृनेष्टृ–' (उ० २।९५) इति साधुः ॥ (१) ॥*॥ 'विभाषा स्वसृपत्योः' (६।३।२४) इति वालुक् ॥ (२) ॥*॥ द्वे '**जामातुः**' ॥

**पितामहः पितृपिता**

**पितेति** ॥ पितुः पिता ॥ (२) ॥*॥ 'मातृपितृभ्यां पितरि डामहच्' 'मातरि षिच्च' (वा० ४।२।३६) । '**पितामहः** पद्मयोनौ जनके जनकस्य च' इति हैमः ॥ (१) ॥*॥ द्वे '**पितामहस्य**' ॥

**तत्पिता प्रपितामहः ।**

**तदिति** ॥ तस्य पितामहस्य पिता । प्रकर्षेण पितामहः । 'प्रादयो गता–' (वा० २।२।१८) इति समासः ॥ (१) ॥*॥ एकम् '**प्रपितामहस्य**' ॥

**मातुर्मातामहाद्येवम्**

**मेति** ॥ मातुः पितरि डामहच् (वा० ४।२।३६) । प्रकृष्टो मातामहः (**प्रमातामहः**) ॥ (१) ॥*॥ एकैकम् '**मातामहस्य**' ॥

**सपिण्डास्तु सनाभयः ॥ ३३ ॥**

**सेति** ॥ समानः पिण्डो देहो मूलपुरुषो निर्वाप्यो वास्य । 'वान्यस्मिन्सपिण्डे–' (४।१।१६५) इत्यादिनिर्देशात् समानस्य सः । यद्वा सह पिण्डेन वर्तते । 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते' (मनुः ५।६०) ॥ (१) ॥*॥ समानो नाभिर्मूलपुरुषोऽस्य । 'ज्योतिर्जनपद–' (६।३।८५) इति समानस्य सः ॥ (२) ॥*॥ द्वे '**सप्तपुरुषावधिज्ञातिषु**' ॥

**समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ।**

**समेति** ॥ समान उदरे शयितः । 'समानोदरे शयितः' (४।४।१०८) इति यत् ॥ (१) ॥*॥ 'विभाषोदरे' (६।३।८८) इति समानस्य वा सः । 'सोदराद्यः' (४।४।१०९) ॥ (२) ॥*॥ समाने गर्भे भवः । 'सगर्भसयूथ–' (४।४।११४) इति यत् । 'सगर्भ' इति निर्देशात्सः । यद्वा सह तुल्ये गर्भे कुक्षौ भवः । '**सह** साकल्यसादृश्ययौगपद्यसमृद्धिषु' इति विश्वः ॥ (३) ॥*॥ सह तुल्य उदरे जातः । 'अन्येष्वपि–' (३।३।१०१) इति डः ॥ (४) ॥*॥ सह उदरेण वर्तते । 'वोपसर्जनस्य' (६।३।८२) इति सः । 'सोदरः' 'सहोदरः' चात्र । ('**भ्राता तु** स्यात्**सहोदरः** । समानोदर्यसोदर्यसगर्भ्यसहजा अपि । **सोदरश्च**' इति नाममाला ) ।—'सहस्य सोऽन्यतरस्याम्' इति पाक्षिके सभावे—इति मुकुटश्चिन्त्यः तादृशसूत्राभावात् ॥*॥ चत्वारि '**एकोदरोत्पन्नभ्रातुः**' ॥

**सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥ ३४ ॥**

**सेति** ॥ समानं गोत्रं कुलमस्य । 'ज्योतिर्जनपद–' (६।३।८५) इति सः ॥ (१) ॥*॥ बध्नाति । 'बन्ध बन्धने' (क्र्या० प० अ०) । 'शृस्वृस्निहि–' (उ० १।१०) इत्युः । प्रज्ञाद्यण् (५।४।३८) वा । '**बान्धवो** बन्धुमित्रयोः' इति हैमः ॥ (२) ॥*॥ '**बन्धुर्मातृबान्धवयोः**' इति हैमः ॥ (४) ॥*॥ जानाति । क्तिच् (३।३।१७४) । ज्ञायते वा । क्तिन्[१] (३।३।९४) । ('**ज्ञातिस्तातसगोत्रयोः**' इति मेदिनी) ॥ (३) ॥*॥ स्वनति । 'स्वन शब्दे' (भ्वा० प० से०) । 'अन्येभ्योऽपि–' (वा० ३।३।१०१) इति डः ॥ (५) ॥*॥ स्व आत्मीयश्चासौ जनश्च ॥ (६) ॥*॥ षट् '**सगोत्रस्य**' ॥

**ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः ।**

**ज्ञेति** ॥ ज्ञातेर्भावः । 'कपिज्ञात्योर्ढक्' (५।१।१२७) ॥ (१) ॥*॥ बन्धूनां समूहः । 'ग्रामजनबन्धुभ्यस्तल्' (४।२।४३) ॥ (२) ॥*॥ एकैकम् '**ज्ञातिसमूहस्य**' ॥

**धवः प्रियः पतिर्भर्ता**

**धेति** ॥ धवति, धूयते, वा । 'धूञ् कम्पने' (चु० उ० से०) । 'आधृषाद्वा' (चु० गण०) इति वा णिच् । अच् (३।१।१३४) । घञ् (३।३।१९) वा । संज्ञापूर्वकत्वान्न वृद्धिः । 'ऋदोरप्' (३।३।५७) वा । '**धवः** पुमान्नरे धूर्ते पत्यौ वृक्षान्तरेऽपि च' ( इति मेदिनी ) ॥ (१) ॥*॥ प्रीणाति । 'प्रीञ् तर्पणे' (क्र्या० उ० से०) । 'इगुपध–' (३।१।१३५)

१—क्तिनः स्त्रियां विधानेन स्त्रीलिङ्गत्वापत्त्या 'स्वस्वपर्यायैश्चनुक्तानां द्वन्द्वो न कृतः' इति प्रतिज्ञानुरोधात् 'ज्ञाति' शब्दस्य द्वन्द्वानुपपत्तिः । अतोऽत्र क्तिन्न संगतः ॥

इति कः । 'प्रियो वृद्ध्योषधौ हृद्ये धवे' इति हैमः ॥ (२) ॥*॥ पाति । 'पा रक्षणे' (अ० प० अ०) । 'पातेर्डतिः' (उ० ४।५७) ॥ (३) ॥*॥ बिभर्ति । 'डुभृञ् धारणपोषणयोः' (जु० उ० से०) । तृच् (३।१।१३३) ॥ (४) ॥*॥ चत्वारि 'पत्युः' ॥

**जारस्तूपपतिः समौ ॥ ३५ ॥**

**जेति** ॥ जारयति । 'जॄष् वयोहानौ' (भ्वा० प० से०) 'दारजारौ कर्तरि णिलुक् च' (वा० ३।३।२०) इति घञ् । यत्तु—जीर्यतेऽनेन । करणे घञ् (३।३।११९) इति—मुकुटः । तन्न । 'अजब्भ्याम्–' (वा० ३।३।१२६) इति वार्तिकविरोधात् । 'जारस्तूपपतौ जार्यौषधीभिदि' इति हैमः ॥ (१) ॥*॥ उपमितः पत्या । 'अवादयः क्रुष्टाद्यर्थे तृतीयया' (वा० २।२।१८) इति समासः । उपसृष्टा पतिरनेन वा । 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपश्च' (वा० २।२।२४) इति समासः ॥ (२) ॥*॥ द्वे 'मुख्यादन्यस्य भर्तुः' ॥

**अमृते जारजः कुण्डः**

**अम्रिति** ॥ जाराज्जातः । कुण्ड्यते कुलमनेन । 'कुडि दाहे' (भ्वा० आ० से०) । घञ् (३।३।१९) । 'कुण्डमग्न्यालये मानभेदे देवजलाशये । कुण्डी कमण्डलौ, जारा(पतिवत्नीसुते पुमान् । पिठरे तु न ना' (इति मेदिनी) । सुते पुमान् । सुतायां तु जातिलक्षणः (४।१।६३) ङीष् भवत्येव ॥ (१) ॥*॥ एकम् 'जीवति पत्यौ जारजातस्य' ॥

**मृते भर्तरि गोलकः ।**

**म्रिति** ॥ 'जारजः' इत्येव । गुड्यते । 'गुड रक्षायाम्' (तु० प० से०) घञ् (३।३।१९) । स्वार्थे कन् (ज्ञा० ५।४।५) । 'गोलको विधवापुत्रे जारात्, स्यान्मणिके गुडे' (इति मेदिनी) ॥ (१) ॥*॥ एकं 'विधवायां जारजातस्य' ॥

**भ्रात्रीयो भ्रातृजः**

**भ्रात्रीति** ॥ भ्रातुरपत्यम् । 'भ्रातुर्व्यच्च' (४।१।१४४) इति चकाराच्छः ॥ (१) ॥*॥ भ्रातुर्जातः । डः (३।२।९८) ॥ (२) ॥*॥ द्वे 'भ्रातृपुत्रस्य' ॥

**भ्रातृभगिन्यौ भ्रातरावुभौ ॥ ३६ ॥**

**भ्रात्रिति** ॥ भ्राता च भगिनी च ॥ (१) ॥*॥ भ्राजते । 'भ्राजृ दीप्तौ' (भ्वा० आ० से०) । 'नप्तृनेष्टृ–' (उ० २।९५) इति साधुः । यत्तु—बिभर्ति । 'पित्रादयः' इति तृच् । भ्रादेशश्च—इति—भ्राजते । 'स्वस्रादयः' इति ऋन् । जस्य तत्वे—इति च मुकुटेनोक्तम् । तदुपेक्ष्यम् । अपाणिनीयत्वात् । स्वसा च भ्राता च 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' (१।२।६८) इत्येकशेषः ॥ (२) ॥*॥ द्वे 'भ्रातृभगिन्योः' ॥

**मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।**

**मेति** ॥ माता च पिता च । 'आनङ्ऋतो द्वन्द्वे' (६।३।२५) । 'अभ्यर्हितं च' (वा० २।२।३४) इति मातुः पूर्वनिपातः ॥ (१) ॥*॥ 'पिता मात्रा' (१।२।७०) इत्येकशेषो वा ॥ (२) ॥*॥ 'मातरपितरावुदीचाम्' (६।३।३२) इति मातुरङन्तादेशो वा ॥ (३) ॥*॥ त्रीणि 'मातापित्रोः' ॥

**श्वश्रूश्वशुरौ श्वशुरौ**

**श्वेति** ॥ श्वश्रूश्च श्वशुरश्च ॥ (१) ॥*॥ 'श्वशुरः श्वश्र्वा' (१।२।७१) इत्येकशेषो वा ॥ (२) ॥*॥ द्वे 'सहोक्तयोः श्वश्रूश्वशुरयोः' ॥

**पुत्रौ पुत्रश्च दुहिता च ॥ ३७ ॥**

**पुत्राविति** ॥ पुत्रश्च दुहिता च । 'भ्रातृपुत्रौ–' (१।२।६८) इत्येकशेषः ॥ (१) ॥*॥ 'पुत्रकन्ययोः' एकम् ॥

**दंपती जंपती जायापती भार्यापती च तौ ।**

**दंपेति** ॥ जाया च पतिश्च । राजदन्तादि (२।२।३१) गणे पाठाज्जायाशब्दस्य 'दम्' 'जम्' भावो वा निपात्यते ॥ 'दाराः पुंसि बहुत्वे च दं कलत्रे नपुंसकम्' इत्यमरमाला ॥ 'पत्न्यां जं दमलिङ्गत्वे' इति नामप्रपञ्चः ॥ (१) ॥*॥(२)॥*॥ (३) ॥*॥ भार्या च पतिश्च ॥ (४) ॥*॥ 'तौ इत्यनेन पुंस्त्वमुक्तम्' । 'शाल्मली मैथिली मैत्री दंपती जंपती च सा' इति वाचस्पतौ स्त्रीत्वमप्युक्तम् ॥*॥ चत्वारि 'जायापत्योः' ॥

**गर्भाशयो जरायुः स्यात्**

**गर्भेति** ॥ गर्भ आशेते अत्र । 'पुंसि–' (३।३।११८) इति घः ॥ (२) ॥*॥ जरामेति । 'किंजरयोः श्रिणः' (उ० १।४) इति ञुण् ॥ (१) ॥*॥ द्वे 'गर्भवेष्टनचर्मणः' ॥

**उल्वं च कललोऽस्त्रियाम् ॥ ३८ ॥**

**उल्वमिति** ॥ उल्लीयते 'लीङ् श्लेषणे' (दि० आ० अ०) । 'उल्वादयश्च' (उ० ४।९५) इति साधुः । यद्वा ओलति, उल्यते, वा । 'उल' सौत्रो दाहे । वल्यते वा । 'वल प्राणने' (भ्वा० प० से०) प्राग्वत् ॥ (१) ॥*॥ कल्यते । 'कल संख्याने' (चु० उ० से०) । 'वृषादिभ्यश्चित्' (उ० १।१०६) इति कलः ॥ (२) ॥*॥ द्वे 'शुक्रशोणितसंपातस्य' । चत्वारि गर्भवेष्टनस्य इत्यन्ये ॥

**सूतिमासो वैजननः**

**स्विति** ॥ सूतेः प्रसवस्य मासः ॥ (१) ॥*॥ विजायतेऽस्मिन् । 'करणा–' (३।३।११७) इति ल्युट् । विजनन एव । प्रज्ञाद्यण् (५।४।३८) । यद्वा विजननस्य गर्भमोचनस्यायम् । 'तस्येदम्' (४।३।१२०) इत्यण् । 'नवमे दशमे वापि प्रबलैः सूतिमारुतैः । निःसार्यते बाण इव जन्तुश्छिद्रेण सत्वरः' ( ) ॥ (२) ॥*॥ द्वे 'प्रसवमासस्य' ॥

**गर्भो भ्रूण इमौ समौ ।**

**गर्भ इति** ॥ गीर्यते उद्गीर्यते शब्द्यते वा । 'गॄ निगरणे'

( तु० प० से० ) 'गॄ शब्दे' ( क्र्या० प० से० ) वा । 'अर्तिगृभ्यां भन्' ( उ० ३।१५२ ) । '**गर्भो** भ्रूणेऽर्भके कुक्षौ संधौ पनसकण्टके' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ भ्रूण्यते । 'भ्रूण आशाविशङ्कयोः' ( चु० आ० से० ) । घञ् (३।३।१९) । 'भ्रूणः स्त्रीगर्भडिम्भयोः' ( इति मेदिनी ) ॥ (२) ॥*॥ द्वे '**कुक्षिस्थगर्भस्य**' ॥

**तृतीया प्रकृतिः शण्ढः क्लीबः पण्डो नपुंसकम् ३९**

**तृतीति** ॥ स्त्रीपुंसावपेक्ष्य तृतीया प्रकृतिः–तृतीयः प्रकारः । असमस्तमेतत् ॥*॥ समासे तु '**तृतीयप्रकृतिः**' ॥ (१) ॥*॥ शाम्यति । 'शमु उपशमे' ( दि० प० से० ) । 'शमेर्ढः' ( उ० १।९९ ) । 'क्लीबं **शण्ढश्च** कञ्चुकी' इति तालव्यादौ रभसः । '**शण्ढः** स्यात्पुंसि गोपतौ । आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि' ( इति मेदिनी ) ( '**शण्डशण्ढौ** तु सौविदौ । वन्ध्यपुंसीड्वरे क्लीबे' इति हैमः ) ॥ (२) ॥*॥ क्लीबते । 'क्लीबृ अधार्ष्ट्ये' ( भ्वा० आ० से० ) । 'इगुपध–' (३।१।१३५) इति कः । 'अस्त्री नपुंसके **क्लीबं** वाच्यलिङ्गस्त्वविक्रमे' इति रुद्रः ॥ (३) ॥*॥ पण्डते । 'पडि गतौ' ( भ्वा० आ० से० ) । अच् (३।१।१३४) । यद्वा पणते । 'पण व्यवहारे स्तुतौ च' ( भ्वा० आ० से० ) । 'अमन्ताड्डः' ( उ० १।११४ ) ॥ '**पण्डः** षण्ढे, धियि स्त्री स्यात्' ( इति मेदिनी ) ॥ (४) ॥*॥ 'न स्त्री न पुमान्' इत्यस्य नपुंसकभावो 'नभ्राट्–' (६।३।७५) इत्यत्र निपातनात् । 'स नपुंसको भवेत्' ( ) इति 'भाष्यात्पुंस्यप्ययम्' ॥ (५) ॥*॥ पञ्च '**नपुंसकस्य**' ॥

**शिशुत्वं शैशवं बाल्यम्**

**शिश्विति** ॥ शिशोर्भावः । 'तस्य भावस्त्वतलौ' (५।१।११९) । 'आ च त्वात्' (५।१।१२०) इति वा त्वः ॥ (१) ॥*॥ 'इगन्ताच्च लघुपूर्वात्' (५।१।१३१) इत्यण् ॥ (२) ॥*॥ बालस्य भावः । ब्राह्मणादित्वात् (५।१।१२४) ष्यञ् ॥ (३) ॥*॥ त्रीणि '**बाल्यत्वे**' ॥

**तारुण्यं यौवनं समे ।**

**तेति** ॥ तरुणस्य भावः । ष्यञ् (५।१।१२४) ॥ (१) ॥*॥ यूनो भावः । 'हायनान्तयुवादिभ्योऽण्' (५।१।१३०) । 'अन्' (६।४।१६७) इति प्रकृतिभावः ॥ (२) ॥*॥ द्वे '**तारुण्यस्य**' ॥

**स्यात्स्थाविरं तु वृद्धत्वम्**

**स्यादिति** ॥ स्थविरस्य भावः । कर्म वा । युवादित्वात् (५।१।१३९) अण् ॥ (१) ॥*॥ वृद्धस्य भावः । त्वः (५।१।१२०) ॥ (२) ॥*॥ द्वे '**वृद्धत्वस्य**' ॥

**वृद्धसंघेऽपि वार्धकम् ॥ ४० ॥**

**वृद्धेति** ॥ वृद्धानां संघः ॥ (१) ॥*॥ वृद्धानां समूहः । 'वृद्धाच्च' ( वा० ४।२।३९ ) इति वुञ् । भावकर्मणोस्तु मनोज्ञादित्वात् (५।१।१३३) वुञ् । अपिशब्दाद्वृद्धत्वेऽपि । वार्धकशब्दात् चतुर्वर्णादित्वात् ( वा० ५।१।१२४ ) स्वार्थे ष्यञि '**वार्धक्यम्**' अपि । '**वार्धकं** वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि' इति विश्वः ॥ (२) ॥*॥ द्वे '**वृद्धसमूहस्य**' ॥

**पलितं जरसा शौक्ल्यं केशादौ**

**पेति** ॥ फलति । फलनम्, वा । 'फल निष्पत्तौ' 'ञिफला विशरणे' वा ( भ्वा० प० से० ) । 'लोष्टपलितौ' ( उ० ३।९२ ) इति साधुः । यद्वा पलति स्म । 'पल गतौ' ( भ्वा० प० से० ) । 'गत्यर्था–' (३।४।७२) इति क्तः । पलनं वा । 'नपुंसके भावे क्तः' (३।३।११४) '**पलितं** शैलजे तापे केशपाके च कर्दमे' ( इति मेदिनी ) ॥ (१) ॥*॥ आदिना लोमश्मश्रुणोः ॥*॥ एकम् '**जरया शुक्लस्य**' ॥

**विस्रसा जरा ।**

**वीति** ॥ विस्रस्यतेऽनया 'स्रंसु अधःपतने' ( भ्वा० आ० से० ) भिदाद्यङ् (३।३।१०४) ॥ (१) ॥*॥ जीर्यतेऽनया । 'जॄष् वयोहानौ' ( दि० प० से० ) 'षिद्भिदादिभ्योऽङ्' (३।३।१०४) । यद्वा जरणम् । भावेऽङ् (३।३।१०४) । 'ऋदृशोऽङि गुणः' (७।४।१६) ॥ (२) ॥*॥ द्वे '**जरायाः**' ॥

**स्यादुत्तानशया डिम्भा स्तनपा च स्तनंधयी ॥ ४१ ॥**

**स्यादिति** ॥ उत्ताना शेते । 'उत्तानादिषु कर्तृषु' ( वा० ३।२।१५ ) इत्यच् ॥ (१) ॥*॥ डिम्भयति । 'डिभि संघे' चुरादिः । अच् (३।१।१३४) डिम्भ्यते वा । घञ् (३।३।१९) अच् (३।३।५६) वा । '**डिम्भोऽपि** बालिशे बाले' ( इति मेदिनी ) ॥ (२) ॥*॥ स्तनौ पिबति । 'आतोऽनुप–' (३।२।३) इति कः ।—'सुपि' (३।३।४) इति योगविभागात्कः— इति स्वामिमुकुटौ चिन्त्यौ ॥ (३) ॥*॥ स्तनं धयति । 'धेट् पाने' ( भ्वा० प० अ० ) । 'नासिकास्तनयोः–' (३।२।२९) इति खश् । घेटष्टित्त्वात् (४।१।१५) ङीप् ॥ (४) ॥ एषु त्रिलिङ्गता । 'त्रिषु जरावराः' इति वक्ष्यमाणत्वात् । स्त्रीलिङ्गनिर्देशः स्त्रीप्रत्ययप्रदर्शनार्थः ॥*॥ चत्वारि '**अतिबालिकायाः**' ॥

**बालस्तु स्यान्माणवकः**

**बाल इति** ॥ बल्यते, बलते, वा । 'बल संचलने' ( भ्वा० आ० से० ) घञ् (३।३।१९) । ज्वलादि (३।१।१४०) णो वा । '**बालो**ऽज्ञेऽश्वेभपुच्छयोः । शिशौ ह्रीवेरकचयोर्बाला तु त्रुटियोषितोः । **बाली** भूषान्तरे मेघौ' इति हैमः ॥ (१) ॥*॥ मनोरयम् । 'तस्येदम्' (४।३।१२०) इत्यण् 'ब्राह्मणमाणव–' (४।२।४२) इति निपातनाण्णत्वम् । 'अल्पे' (५।३।८५) इति कन् । 'हारभेदे **माणवको** बाले कुपुरुषेऽपि च' इति रभसः ॥ (२) ॥*॥ द्वे '**बालस्य**' ॥

**वयस्थस्तरुणो युवा।**

**वयेति** ॥ 'वयः पक्षिणि बाल्यादौ वयो यौवनमात्रके' इति विश्वः। वयसि तिष्ठति। 'सुपि-' (३।२।४) इति योगविभागात् कः ॥ (१) ॥*॥ तरति। 'तॄ प्लवनतरणयोः' (भ्वा० प० से०) 'त्रो रश्च लो वा' (उ० ३।५४) इत्युनन्। 'तरुणं कुब्जपुष्पे ना रुचके यूनि तु त्रिषु' इति विश्वः ॥ (२) ॥*॥ यौति। 'यु मिश्रणे' (अ० प० से०)। 'कनिन्युवृषि-' (उ० १।१५६) इति कनिन् ॥ (३) ॥*॥ त्रीणि **'यूनः'** ॥

**प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥ ४२ ॥**

**प्रेति** ॥ प्रगतं वयोऽस्य ॥ (१) ॥*॥ तिष्ठति। 'अजिरशिशिर-' (उ० १।५३) इति निपातः।—'स्थिरादयः इति किरन्—इति मुकुटस्त्वपाणिनीयः' ॥ (२) ॥*॥ वर्धते स्म। 'वृधु वृद्धौ' (भ्वा० आ० से०)। 'गत्यर्था-' (३।४।७२) इति क्तः। **'वृद्धः** प्राज्ञे च स्थविरे **वृद्धं** शैलेयरूढयोः' इति हैमः ॥ (३) ॥*॥ जिनाति स्म। प्राग्वत् क्तः (३।४।७२)। 'ग्रहिज्या-' (६।१।१६) इति संप्रसारणम्। 'हलः' (६।४।२) इति दीर्घः। 'ल्वादिभ्यश्च' (८।२।४४) इति नत्वम् ॥ (४) ॥*॥ जीर्यति स्म। 'जॄष् वयोहानौ' (दि० प० से०)। 'गत्यर्था-' (३।४।७२) इति क्तः। (**'जीर्णं** परिपक्वपुराणयोः' इति मेदिनी) ॥ (५) ॥*॥ 'जीर्यतेरतृन्' (३।२।१०४) ॥ (६) ॥*॥ षट् **'वृद्धस्य'** ॥

**वर्षीयान्दशमी ज्यायान्**

**वेति** ॥ अतिशयेन वृद्धः। 'द्विवचन-' (५।३।५७) इतीयसुन्। 'प्रियस्थिर-' (६।४।१५७) इति वर्षादेशः ॥ (१) ॥*॥ दशमोऽवस्थाविशेषोऽस्यास्ति। 'वयसि पूरणात्' (५।२।१३०) इतीनिः ॥ (२) ॥*॥ अतिशयेन वृद्धः। 'वृद्धस्य च' (५।३।६२) इति ज्यादेशः। 'ज्यादादीयसः' (६।४।१६०) इत्यात्वम् ॥ (३) ॥*॥ त्रीणि **'अतिवृद्धस्य'** ॥

**पूर्वजस्त्वग्रियोऽग्रजः।**

**पूर्वेति** ॥ पूर्वस्मिन्काले जातः। 'सप्तम्यां जनेर्डः' (३।२।९७) ॥ (१) ॥*॥ अग्रे जातः। 'अग्रायत्' (४।४।११६) 'घच्छौ च' (४।४।११७) इति घः ॥*॥ अग्र्याग्रीयौ च ॥*॥ क्वचित् **'अग्रीमः'** इति पाठः। 'अग्रादिपश्चाड्डिमच्' (वा० ४।३।२३) ॥ (२) ॥*॥ अग्रे जातः। डः (३।२।९७) ॥ (३) ॥*॥ त्रीणि **'प्रथमजातस्य'** ॥

**जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः ॥ ४३ ॥**

**जघेति** ॥ जघन्येऽवरकाले जातः। डः (३।२।९७) ॥ (१) ॥*॥ अतिशयेन युवा। 'अतिशायने तमबिष्ठनौ' (५।३।५५)। 'युवाल्पयोः कनन्यतरस्याम्' (५।३।६४) ॥*॥ 'द्विवचन-' (५।३।५७) इतीयसुनि **'कनीयान्'** अपि ॥ (२) ॥*॥ पक्षे 'स्थूलदूर-' (६।४।१५६) इति यणादिलोपगुणौ ॥ (३) ॥*॥ अवरस्मिन् काले जातः। डः (३।२।९७) ॥ (४) ॥*॥ अनु पश्चाज्जातः। 'उपसर्गे च' (३।२।९९) इति डः ॥ (५) ॥*॥ पञ्च **'कनिष्ठभ्रातुः'** ॥

**अमांसो दुर्बलश्छातः**

**अमेति** ॥ न अल्पं मांसमस्य अल्पार्थे नञ् ॥ (१) ॥*॥ दुष्टं बलमस्य ॥ (२) ॥*॥ छ्यति स्म। 'छो छेदने' (दि० प० अ०)। 'गत्यर्था-' (३।४।७२) इति क्तः। छायते स्म वा। क्तः (३।२।१०२)। 'शाच्छोरन्यतरस्याम्' (७।४।४१) इत्वम् ॥*॥ 'शातः' इति वा पाठः। तत्र 'शैङ् गतौ' (भ्वा० आ० अ०)। क्तः (३।२।१०२)। 'दुर्बले निशिते स्यातां **शितशातावि**मौ त्रिषु' इति ताल्व्यादौ रभसः ॥ (३) ॥*॥ त्रीणि **'निर्बलस्य'** ॥

**बलवान्मांसलोंऽसलः।**

**बलेति** ॥ बलमस्यास्ति। मतुप् (५।२।९४) ॥ (१) ॥*॥ मांसमस्त्यस्य। सिध्मादिलच् (५।२।९७) ॥ (२) ॥*॥ अंसोऽस्यास्ति। 'वत्सांसाभ्यां कामबले' (५।२।९८) इति लच् ॥ (३) ॥*॥ त्रीणि **'बलवतः'** ॥

**तुन्दिलस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचिण्डिलः ४४**

**त्विति** ॥ अतिशयितं तुन्दमुदरमस्य। 'तुन्दादिलच्' (५।२।११७)। चादिनिठनौ। **'तुन्दिभः'** इति पाठे तु 'तुन्दिबलिवटेर्भः' (४।२।१३९) ॥ (१) ॥*॥ (२) ॥*॥ (३) ॥*॥ बृहन् कुक्षिरस्य ॥ (४) ॥*॥ अतिशयितं पिचिण्डमुदरमस्य। पिच्छादिलात् (५।२।१०८) इलच् ॥ (५) ॥*॥ पञ्च **'स्थूलोदरस्य'** ॥

**अवटीटोऽवनाटश्चावभ्रटो नतनासिके।**

**अवेति** ॥ अवनमनं नासिकायाः। 'नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः' (५।२।३१)। अवटीटम्, अवनाटम्, अवभ्रटम्, च=नासिकाया नतमस्त्यस्याः। अर्शआद्यच् (५।२।१२७)। अवटीटा, अवनाटा, अवभ्रटा, च नासिकास्त्यस्य पुरुषस्य। अर्शआद्यच् (५।२।१२७) ॥ (१) ॥*॥ (२) ॥*॥ (३) ॥ त्रीणि **'चिपिटनासस्य'** ॥

**केशवः केशिकः केशी**

**केशेति** ॥ प्रशस्ताः केशा यस्य। 'केशाद्वोऽन्यतरस्याम्' (५।२।१०९) ॥ (१) ॥*॥ पक्षे इनिठनौ (५।२।११५) (२) ॥*॥ (३) ॥*॥ त्रीणि **'प्रशस्तकेशस्य'** स्थूलकेशस्य वा ॥

**बलिनो बलिभः समौ ॥ ४५ ॥**

**बलीति** ॥ बलिस्त्वक्संकोचोऽस्यास्ति। पामादित्वान्नः

१—शो इति धातोस्तूचितम्। अत एव शितशातयोः स्वरसत एव पर्यायत्वं संभवति। श्यैङ् धातुस्तु नोपलभ्यते। 'श्यैङ्' धातौ यकाररहितत्वकल्पनं वा गुरुभूतमप्यङ्गीकार्यम् ॥

(५।२।१००) ॥ (१) ॥*॥ 'तुन्दिबलि–' (५।२।१३९) इति भः ॥ (२) ॥*॥ द्वे **'श्लथचर्मवतः'** ॥

**विकलाङ्गस्तु पोगण्डः**

**पीति** ॥ विकलमङ्गमस्य ॥ (१) ॥*॥ पवते, पुनाति, वा । विच् (३।२।७५) । पौगण्ड एकदेशोऽस्य । अपकृष्टं गच्छति वा । 'जमन्ताड्डः' (उ० १।११४) इति गमेर्डः । पृषोदरादिः (६।३।१०९) । 'पोगण्डो विकलाङ्गकः' इति रत्नकोषः । 'पोगण्डो विकलाङ्गः स्यात्' (इति हलायुधः) ॥*॥ 'अपोगण्डः' इति पाठे नञ्समासः । **'अपोगण्डस्तु** शिशुके विकलाङ्गे च भीरुके' इति विश्वः ॥ (२) ॥*॥ द्वे **'स्वभावन्यूनाधिकाङ्गस्य'** ॥

**खर्वो ह्रस्वश्च वामनः ।**

**खेति** ॥ खर्वति । 'खर्व गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) । **'खर्वं** संख्यान्तरे क्लीबं नीचि वामनके त्रिषु' (इति मेदिनी) ॥ (१) ॥*॥ ह्रसति । ह्रस्यते वा । 'ह्रस शब्दे' (भ्वा० प० से०) । उल्वादिः (उ० ४।९५) **'ह्रस्वो** न्यक्खर्वयोस्त्रिषु' (इति मेदिनी) ॥ (२) ॥*॥ वामयति । 'टुवम उद्गिरणे' (भ्वा० प० से०) । नन्द्यादिल्युः (३।१।१३४) ल्युट् (३।३।११४) वा । 'मितां ह्रस्वः' (६।४।९२) इत्यत्र 'वा चित्तविरागे' (६।४।९१) इत्यतो 'वा' इत्यनुवर्तते—इति वृत्तिकृत् । **'वामनो** नीचि खर्वे च त्रिषु पुंसि तु दिग्गजे । हरावङ्कोटवृक्षे' (इति मेदिनी) ।—वामोऽस्यास्ति । पामादित्वात् (५।२।१००) नः—इति स्वामी ।—स्त्रियां वामनी—इति मुकुटः ॥ (३) ॥*॥ त्रीणि खर्वपुंसः । **'ह्रस्वस्य'** ॥

**खरणाः स्यात्खरणसः**

**खरेति** ॥ खरा तीक्ष्णा नासिकास्य । 'खुरखराभ्यां वा नस्' (वा० ५।४।११८) ॥ (१) ॥*॥ पक्षे 'अञ् नासिकायाः–' (५।४।११८) इत्यच् नसादेशश्च । 'पूर्वपदात्–' (८।४।३) इति णत्वम् ॥ (२) ॥*॥ द्वे **'तीक्ष्णनासिकस्य'** ॥

**विग्रस्तु गतनासिके ॥ ४६ ॥**

**विग्रेति** ॥ विगता नासिका यस्य । 'प्रादिभ्यो धातुजस्य–' (२।२।२४) इति समासः । 'वेर्ग्रो व्यक्तव्यः' (वा० ५।१।११८) ॥ (१)॥*॥ 'खुख्यौ च' इति शाकटायनः । 'ख्यश्च' (वा० ५।४।११८) **'विखुः' 'विखः' 'विख्यः'** । 'विग्रो विखुर्विनासिकः' इति रभसः । 'विनसा हतबान्धवा' इति तु टे 'पद्दन्–' (६।१।६३) इति नस् । विगतया नासिकयोपलक्षिता इत्यर्थः ॥ (२) ॥*॥ द्वे **'गतनासिकस्य'** ॥

**खुरणाः स्यात्खुरणसः**

**खुरेति** ॥ खुर इव नासिकास्य । प्राग्वत् ॥*॥ द्वे **'पशुखुरसदृशनासिकस्य'** ॥

**प्रज्ञुः प्रगतजानुकः ।**

**प्रेति** ॥ प्रगते विरले जानुनी यस्य । 'प्रसंभ्यां जानुनोर्ज्ञुः' (५।४।१२९) ॥ (१) ॥*॥ द्वे **'वातादिना विरलजानुकस्य'** ॥

**ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्**

**ऊर्ध्वेति** ॥ ऊर्ध्वे जानुनी यस्य । 'ऊर्ध्वाद्विभाषा' (५।४।१३०) इति ज्ञुः ॥ (१) ॥*॥ द्वे **'ऊर्ध्वजानुकस्य'** ॥

**संज्ञुः संहतजानुकः ॥ ४७ ॥**

**समिति** ॥ संहते जानुनी यस्य । प्राग्वत् ज्ञुः (५।४।१२९) (१) ॥*॥ द्वे संलग्नजानुकस्य । 'प्रज्ञुः प्रगतजानुः स्यात् **प्रज्ञो**ऽप्यत्रैव दृश्यते । संज्ञुः संहतजानौ च भवेत् **संज्ञो**ऽपि तत्र हि । ऊर्ध्वज्ञुरूर्ध्वजानुः स्यादू**र्ध्वज्ञो**ऽप्यूर्ध्वजानुके' इति साहसाङ्कः । द्वे **'संलग्नजानुकस्य'** ॥

**स्यादेडे बधिरः**

**स्यादिति** ॥ आ इलति । 'इल स्वप्ने' (तु० प० से०) । अच् (३।१।१३४) । डलयोरैक्यम् । यद्वा आ सर्वत ईड्यते, ईट्टे, वा । 'ईड स्तुतौ' (अ० आ० से०) । घञ् (३।३।१९) । अच् (३।१।१३४) वा ॥ (१) ॥*॥ बध्नाति कर्णम्, बध्यते वा । 'बन्ध बन्धने' (क्र्या० प० अ०) 'इषिमदि–' (उ० १।५१) इति किरच् ॥ (२) ॥*॥ द्वे **'श्रवणशक्तिहीनस्य'** ॥

**कुब्जे गडुलः**

**किति** ॥ कौ उब्जति । 'उब्ज आर्जवे' (तु० प० से०) । अच् (३।१।१३४) । यद्वा कु ईषदुब्जमार्जवमस्य । शकन्ध्वादिः (वा० ६।१।९४) । **'कुब्जो** वृक्षप्रभेदे ना न्युब्जे स्याद्वाच्यलिङ्गकः' (इति मेदिनी) ॥ (१) ॥*॥ गडति, गड्यते, वा । 'गड सेचने' (भ्वा० प० से०) । बाहुलकादुः । गडुरस्यास्ति । सिध्मादित्वात् (५।२।९७) लच् । **'गडुः** पृष्ठगुडे कुब्जे' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'कुब्जस्य'** ॥

**कुकरे कुणिः ।**

**कुकेति** ॥ कुत्सितः करोऽस्य ॥ (१) ॥*॥ कुणति, कुण्यते, वा । 'कुण शब्दोपकरणयोः' (तु० प० से०) । 'इगुपधात् कित्' (उ० ४।१२०) इतीन् । **'कुणिस्तुन्नकवृक्षे** ना कुकरे त्वभिधेयवत्' (इति मेदिनी) ॥*॥ 'निसर्गतः **कूणि**पङ्गुपौगण्डाः' इति नाममालायामार्यापाठाद्दीर्घोकारवानपि ॥ (२) ॥*॥ द्वे **'रोगादिना वक्रकरस्य'** ॥

**पृश्निरल्पतनौ**

**प्रिति** ॥ पृशति, पृश्यते, वा । 'स्पृश संस्पर्शे' (तु० प० अ०) । 'घृणिपृश्निपार्ष्णि–' (उ० ४।५२) इति साधुः । पृच्छति, पृच्छ्यते, वा 'प्रच्छ ज्ञीप्सायाम्' (तु० प० अ०) ।

पर्षति, पृष्यते, वा । 'पृषु सेचने' ( भ्वा० प० से० ) वा ॥ (१) ॥*॥ अल्पा तनुरस्य ॥ (२) ॥*॥ द्वे **'अल्पशरीरस्य'** ॥

**श्रोणः पङ्गौ**

**श्रविति** ॥ श्रोणति । 'श्रोणृ संघाते' (भ्वा० प० से०) । अच् (३।१।१३४) । यत्तु—शृणोति । 'रास्नादयः' इति नक् प्रत्ययादिः—इति मुकुटः । तन्न । 'रास्नादयः' इति सूत्राभावात् । नगादेर्विधायकाभावाच्च ॥ (१) ॥*॥ पनते । 'पन स्तुतौ' ( भ्वा० आ० से० ) । बाहुलकाद् गुः । स्त्रियाम् 'पङ्गोश्च' (४।१।६८) इत्यूङ् ॥ (२) ॥*॥ द्वे **'जङ्घाहीनस्य'** ॥

**मुण्डस्तु मुण्डिते ॥ ४८ ॥**

**मुण्डेति** ॥ मुण्ड्यते । 'मुडि खण्डने' (भ्वा० प० से०) । घञ् (३।३।१९) । **'मुण्डो** मुण्डितशीर्षयोः । राहौ दैत्यान्तरे' इति हैमः ॥ (१) ॥*॥ मुण्ड्यते स्म । क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे **'खण्डितकेशस्य'** ॥

**वलिरः केकरे**

**वेति** ॥ वलते । 'वल संवरणे, संचलने वा' ( भ्वा० आ० से० ) बाहुलकात् किरच् ॥ (१) ॥*॥ के मूर्ध्नि कर्तुं शीलमस्य । 'कृञो हेतु–' (३।२।२०) इति टः । 'हलदन्तात्–' (६।३।९) इत्यलुक् ॥ (२) ॥*॥ **'टेरे** वलिरकेकरौ' इति रभसः ॥*॥ द्वे **'नेत्रवियुक्तस्य'** ॥

**खोडे खञ्जः**

**खविति** ॥ खोडति । 'खोडृ गतिप्रतिघाते' ( भ्वा० प० से० ) । अच् (३।१।१३४) ॥ (१) ॥*॥ खञ्जति । 'खजि गतिवैकल्ये' ( भ्वा० प० से० ) । अच् (३।१।१३४) ॥ (२) ॥*॥ 'अथ **खञ्जके खोडखोरौ'** इति रभसः ॥*॥ द्वे **'गतिविकलस्य'** ॥

**त्रिषु जरावराः ।**

**त्रिष्विति** ॥ जराशब्दादवरा अर्वाचीना उत्तानशयाद्यास्त्रिलिङ्गाः ॥

**जडुलः कालकः पिप्लुः**

**जेति** ॥ जलति । 'जल घातने' ( भ्वा० प० से० ) । बाहुलकादुलच् ॥*॥ **'जडुलः'** इति मुकुटः । 'जट संघाते' ( भ्वा० प० से० ) ॥ (१) ॥*॥ कालयति । 'कल क्षेपे' चुरादिः । ण्वुल् (३।१।१३३) ॥ (२) ॥*॥ अपि प्लवते । 'प्लुङ् गतौ' ( भ्वा० आ० से० ) । मितद्र्वादित्वात् (वा० ३।२।१८०) डुः । 'वष्टि भागुरिः–' इत्यल्लोपः ॥ (३) ॥*॥ त्रीणि **'कृष्णवर्णदेहगतचिह्नस्य' 'लसुन'** इति ख्यातस्य ॥

**तिलकस्तिलकालकः ॥ ४९ ॥**

**तीति** ॥ तिल इव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥ (१) ॥*॥ तिल इव कालकः ॥ (२) ॥*॥ द्वे **'देहस्थतिलस्य'** ॥

**अनामयं स्यादारोग्यम्**

**अनेति** ॥ आमयस्याभावः । अर्थाभावेऽव्ययीभावः (२।१।६) ॥ (१) ॥*॥ न रोगोऽस्य । अरोगस्य भावः । ब्राह्मणादित्वात् (५।१।१२४) ष्यञ् ॥ (२) ॥*॥ द्वे **'रोगाभावस्य'** ॥

**चिकित्सा रुक्प्रतिक्रिया ।**

**चिकीति** ॥ 'कितेर्व्याधिप्रतीकारे' इति सन् । चिकित्सनम् । 'अ प्रत्ययात्' (३।३।१०२) ॥ (१) ॥*॥ रुजः प्रतिक्रिया निरसनम् ॥ (२) ॥*॥ द्वे **'रोगनिवारणस्य'** ॥

**भेषजौषधभैषज्यान्यगदो जायुरित्यपि ॥ ५० ॥**

**भेषेति** ॥ भेषयति । 'भेषृ भये' ( भ्वा० उ० से० ) । ण्यन्तः । अच् (३।१।१३४) । भेषं रोगं जयति । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । भेषं जयति वा । 'जै क्षये' ( भ्वा० प० से० ) । 'आतोऽनुप–' (३।२।३) इति कः ।—भिषज इदम् । 'तस्येदम्' (४।३।१२०) इत्यण् । 'अनन्तावसथेतिहभेषजात्' (५।४।२३) इति निर्देशादेत्वम्—इत्यन्ये ॥ (१) ॥*॥ ओषधेरिदम् । 'ओषधेरजातौ' (५।४।३७) इत्यण् ॥ (२) ॥*॥ भेषजमेव । 'अनन्ता–' (५।४।२३) इति ष्यः ॥ (३) ॥*॥ गदविरुद्धम् । न गदोऽस्मात्, इति वा ॥ (४) ॥*॥ जयति रोगान् । 'जि अभिभवे' ( भ्वा० प० अ० ) । 'कृवापाजि–' (उ० १।१) इत्युण् ॥ (५) ॥*॥ पञ्च **'औषधस्य'** ॥

**स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः ।**

**स्त्रीति** ॥ रुजति देहम् । 'रुजो भङ्गे' ( तु० प० अ० ) । क्विप् (३।२।१७८) रोजनं वा । संपदादि क्विप् (वा० ३।३।१०८) ॥ (१) ॥*॥ 'इगुपध–' (३।१।१३४) इति कः । टाप् (४।१।४) । भिदाद्यङ् वा (३।३।१०५) **'रुजा** लामयभङ्गयोः' इति हैमः ॥ (२) ॥*॥ उपतापयति । 'तप दाहे' चुरादिः । अच् (३।१।१३५) । उपतपनं वा । 'तप संतापे' ( भ्वा० प० अ० ) । घञ् (३।३।१८) । **'उपतापो** गदे तापे' इति हैमः ॥ (३) ॥*॥ रुजति । 'पदरुज–' (३।३।१६) इति घञ् । रोजनं वा । भावे घञ् (३।३।१८) ॥ (४) ॥*॥ विविधा आधयोऽस्मात् । व्याधानं वा । 'उपसर्गे घोः किः' (३।३।९२) ॥ (५) ॥*॥ गदति । अच् (३।१।१३४) । **'गदः** कृष्णानुजे रोगे **गदा** प्रहरणान्तरे' इति हैमः ॥ (६) ॥*॥ 'अम रोगे' ( भ्वा० प० से० ) । भावे घञ् (३।३।१८) । आमं यान्त्यनेन । 'या प्रापणे' ( अ० प० अ० ) । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१) इति डः । यद्वा । आमयनम् । अनेन । 'मीङ् हिंसायाम्' ( दि० आ०

अ० ) 'एरच्' (३।३।५६) । घः (३।३।११८) वा ॥ (७) ॥*॥ सप्त **'रोगस्य'** ॥

**क्षयः शोषश्च यक्ष्मा च**

**क्षय इति** ॥ क्षयति देयम् । 'क्षि क्षये' ( भ्वा० प० अ० ) अन्तर्भावितण्यर्थः । अच् (३।१।१३४) । **'क्षयो** गेहे कल्पान्तेऽपचये रुजि' इति हैमः ॥ (१) ॥*॥ शोषयति । 'शुष शोषणे' ( दि० प० अ० ) । अच् (३।१।१३४) । **'शोषः** शोषणयक्ष्मणोः' इति हैमः ॥ (२) ॥*॥ यक्षयते, यक्ष्यते, वा । 'यक्ष पूजायाम्' चुरादिः । मनिन् (उ० ४। १४५) ॥ (३) ॥*॥ त्रीणि **'राजयक्ष्मणः'** ॥

**प्रतिश्यायस्तु पीनसः ॥ ५१ ॥**

**प्रेति** ॥ प्रतिक्षणं श्यायते । 'श्यैङ् गतौ' ( भ्वा० आ० अ० ) । 'श्याद्व्यधा-' (३।१।१४१) इति णः ॥*॥ प्रतिश्यायतेऽनया । 'आतश्चोपसर्गे' (३।३।१०६) इत्यङि 'प्रतिश्या' अपि ॥ (१) ॥*॥ पीनं स्यति, सायति, वा । 'षोऽन्तकर्मणि' ( दि० प० अ० ) । 'क्षै क्षये' ( भ्वा० प० अ० ) वा । 'आतोऽनुप-' (३।२।३) इति कः ॥ (२) ॥*॥ **'आपीनसः प्रतिश्या** स्यात्' इति रभसः ॥*॥ द्वे **'नासारोगस्य'** ॥

**स्त्री क्षुत् क्षुतं क्षवः पुंसि**

**स्त्रीति** ॥ क्षवणम् । 'टुक्षु शब्दे' ( अ० प० से० ) । संपदादिः (वा० ३।३।१०८) ॥ (१) ॥*॥ भावे क्तः (३। ३।११४) ॥ (२) ॥*॥ 'ऋदोरप्' (३।३।५७) ॥ (३) ॥*॥ 'स्त्रियां क्षुत् क्षुतं **हंछिका'** इति रभसः ॥*॥ त्रीणि **'छिक्कायाः'** ॥

**कासस्तु क्षवथुः पुमान् ।**

**केति** ॥ कासतेऽनेन । 'कासृ शब्दकुत्सायाम्' ( भ्वा० आ० से० ) । 'हलश्च' (३।३।१२१) इति घञ् । (**'काश**स्तृणे रोगभेदे' इति हैमः । 'वाराणस्यां भवे**त्काशी** क्षवथौ ना तृणेऽस्त्रियाम्' इति तालव्यान्ते रभसाच्च तालव्यान्तोऽपि) ॥ (१) ॥*॥ क्षौत्यनेन । 'टुक्षु शब्दे' ( अ० प० से० ) 'द्वितोऽथुच्' (३।३।८९) । **'क्षवथुः** कासे छिक्कायाम्' इति हेमचन्द्रः ॥ (२) ॥*॥ द्वे **'कासरोगस्य'** ॥

**शोफस्तु श्वयथुः शोथः**

**शविति** ॥ शवति । 'शव गतौ' ( भ्वा० प० से० ) । बाहुलकात् फः । थश्च । 'च्छ्वोः-' (६।४।१९) इत्यूठ् । 'आद्गुणः' (६।१।८७) । संज्ञापूर्वकत्वात् 'एत्येध-' (६।१।८९) इति न वृद्धिः । यद्वा शवति । 'शु गतौ' (      ) । **'शोफ** ओषधिभेदे स्यादुत्कृते लग्विवर्धने' इति हैमः ॥ (१) ॥*॥ श्वयति अनेन । 'टु ओश्वि गतिवृद्ध्योः' ( भ्वा० प० से० ) । 'द्वितोऽथुच्' (३।३।८९) ॥ (२) ॥*॥ यत्तु—'शु गतौ' । 'यूथादयश्च'—इति मुकुटेनोक्तम् । तन्निर्मूलम् ॥ (३) ॥*॥ त्रीणि **'शोथस्य'** ॥

**पादस्फोटो विपादिका ॥ ५२ ॥**

**पेति** ॥ स्फुटनम् । 'स्फुट विकसने' ( तु० प० से० ) । घञ् (३।३।१८) पादस्य स्फोटः । पादौ स्फोटयति वा । 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ विपद्यतेऽनया । 'पद गतौ' ( दि० आ० अ० ) । 'रोगाख्यायां ण्वुल् बहुलम्' (३। ३।१०८) ॥ (२) ॥*॥ द्वे **'पादस्फोटनरोगस्य'** ॥

**किलाससिध्मे**

**कीति** ॥ किलति । 'किल श्वैत्यक्रीडनयोः' ( तु० प० से० ) । 'इगुपध-' (३।१।१३५) इति कः । अस्यति । 'असु क्षेपणे' ( दि० प० से० ) । अच् (३।१।१३४) । किलं च तदसं च । यद्वा केलनम् । बिदाद्यङ् (३।३।१०४) । किलमस्यति । अण् (३।२।१) । किलेन श्वैत्येन असति वा । 'अस दीप्तौ' ( भ्वा० उ० से० ) । अच् (३।१।१३४) ॥ (१) ॥*॥ सिध्यति 'षिधु गत्याम्' '(संराद्धौ)' ( दि० प० अ० ) । बाहुलकान्मक् । यत्तु—पामादित्वान्मनिन्—इति मुकुटः । तन्न । पामादेर्मनिन्विधानाभावात् । धातोः पामादिप्रत्ययाभावात् ॥ (२) ॥*॥ 'पादस्फोटोऽथ **त्वक्पुष्पी** किलासं सिध्मलीति च' इति रभसः ॥*॥ द्वे **'सेहुवा'** इति ख्यातस्य ॥

**कच्छ्वां तु पाम पामा विचर्चिका ।**

**केति** ॥ कषति । 'कष हिंसायाम्' ( भ्वा० प० से० ) । 'कषेश्छ च' (उ० ११८४) इत्यूः ॥ (१) ॥*॥ पायत्यङ्गम् । 'पै शोषणे' ( भ्वा० प० से० ) । मनिन् (उ० ४।१४५) । पायते देहोऽस्माद्वा । 'पा रक्षणे' ( अ० प० अ० ) । पिबति देहं वा ॥ (२) ॥*॥ स्त्रियां तु 'मनः' (४।१।११) इति न ङीप् । 'डाबुभाभ्याम्-' (४।१।१३) इति डाप् वा ॥ (३) ॥*॥ विचर्च्यते । 'चर्च अध्ययने' ( चु० उ० से० ) । 'रोगाख्यायां ण्वुल्-' (३।३।१०८) ॥ (४) ॥*॥ चत्वारि **'खसुरोगस्य'** ॥

**कण्डूः खर्जूश्च कण्डूया**

**केति** ॥ कण्डूयनम् । 'कण्डूञ् गात्रविघर्षणे' ( कण्ड्वादिः ) । 'कण्ड्वादिभ्यो यक्' (३।१।२७) संपदादि क्विप्

१—'क्षुवः क्षुते राजिकायाम्' इत्यपि पाठः ।

१—सटीकहैमपुस्तके तु नोपलभ्यते । २—'सिध्मं किलासं त्वक्पुष्पं सिध्म' इति हैमनाममालोक्तनान्तसिध्मशब्दस्य मनिनमन्तरा साधनाभावेन तत्र मनिनर्थम् 'पामादिवन्मनिन्' इत्युक्तमपाठस्य संभवे लेखकप्रमादजातपाठेन खण्डनकरणं स्वीयमेधातिशयबोधनाय ॥

(वा० ३।३।१०८) ॥ (१) ॥*॥ 'अ प्रत्ययात्' (३।३।१०२) ॥ (३) ॥*॥ खर्जनम् । 'खर्ज मार्जने च । चाव्यथने' (भ्वा० प० से०) । 'कृषिचमि–' (उ० १।८०) इत्यूः । 'खर्जूः खर्जूरीकीटकण्डुषु' इति हैमः ॥ (२) ॥*॥ त्रीणि 'गात्रविघर्षणस्य' ॥

**विस्फोटः पिटकस्त्रिषु ॥ ५३ ॥**

**वीति** ॥ विस्फोटति 'स्फुटिर् विशरणे' (भ्वा० प० से०) । अच् (३।१।१३४) । करणे घञ् (३।३।१९) वा ॥ (१)॥*॥ पेटति । 'पिट शब्दसंघातयोः' (भ्वा०प० से०) क्वुन् (उ० २।३२) । 'पिटकः स्यात्तु विस्फोटे मञ्जूषायामपीष्यते' इति हेमचन्द्रः । स्त्रियां पिटका । क्षिपकादिः (वा० ७।३।४५) ॥*॥ 'विस्फोटा विटिका स्त्रियाम्' इत्यमरमालायां वकारादिरपि ॥ (२) ॥*॥ द्वे 'फोडा' इति ख्यातस्य ॥

**व्रणोऽस्त्रियामीर्ममरुः क्लीबे**

**व्रेति** ॥ व्रणति । 'व्रण शब्दे' (भ्वा० प० से०) । अच् (३।१।१३४) । यद्वा व्रणयति । 'व्रण गात्रविचूर्णने' (चु० उ० से०) । अदन्तः । अच् (३।१।१३४) ॥ (१) ॥*॥ ईरयति सुखम् । 'ईर गतिप्रेरणयोः' (अ० आ० से०) । बाहुलकान्मन् ॥ (२) ॥*॥ इयर्ति । 'ऋ गतौ' (जु० प० अ०) । 'अर्तिपृवपि–' (उ० २।११७) इत्युस् ॥ (३) ॥*॥ त्रीणि 'व्रणस्य' ॥

**नाडीव्रणः पुमान् ।**

**नेति** ॥ नाड्यां व्रणः ॥ (१) ॥*॥ एकं 'सदा गलतो व्रणस्य' ॥

**कोठो मण्डलकम्**

**कविति** ॥ कुण्ठति । 'कुठि प्रतिघाते' (भ्वा० प० से०) । अच् (३।१।१३४) । आगमशास्त्रस्यानित्यत्वान्न नुम् ॥ (१) ॥*॥ मण्डलमिव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥ (२) ॥*॥ द्वे 'मण्डलाकारकुष्ठस्य' ॥

**कुष्ठश्वित्रे**

**किति** ॥ कुष्णात्यङ्गम् । 'कुष निष्कर्षे' (क्र्या० प० से०) । 'निकुषि–' (उ० २।२) इति क्थन् । कुत्सितं तिष्ठति वा । 'सुपि–' (३।२।४) इति कः । 'अम्बाम्ब–' (८।३।९७) इति षः । 'कुष्ठं भेषजरोगयोः' इति हैमः ॥ (१) ॥*॥ श्वेतते । 'श्विता वर्णे' (भ्वा० आ० से०) । 'स्फायीतञ्चि–' (उ० २।१३) इति रक् ॥ (२) ॥*॥ द्वे 'श्वेतकुष्ठस्य' ॥

**दुर्नामकार्शसी ॥ ५४ ॥**

**दुरिति** ॥ दुष्टं नामास्य । पापरोगत्वात् । क्षुभ्नादिः (८।४।३९) ॥ (१) ॥*॥ ऋच्छति । 'ऋ गतौ' (भ्वा० प० अ०) । 'अर्तेर्व्याधौ शुट च' (उ० ४।१९६) इत्यसुन् ॥ (२) ॥*॥ द्वे 'गुदरोगस्य' अर्शाख्यस्य ॥

**आनाहस्तु विबन्धः स्यात्**

**आनेति** ॥ आनहनम् । 'णह बन्धने' (दि० उ० अ०) । घञ् (३।३।१८) ॥ (१) ॥*॥ विबन्धनम् । 'बन्ध बन्धने' (क्र्या० प० अ०) । घञ् (३।३।१८) ॥ (२) ॥*॥ आभ्यां करणे वा घञ् (३।३।१९) ॥*॥ द्वे आध्मानस्य 'मलमूत्रनिरोधस्य' ॥

**ग्रहणी रुक् प्रवाहिका ।**

**ग्रेति** ॥ गृह्णाति जठराग्निम् । 'ग्रह उपादाने' (क्र्या० उ० से०) । 'कृत्यल्युटः–' (३।३।११३) इति ल्युट् ॥ (१) ॥*॥ प्रवहति । ण्वुल् (३।१।१३३) । प्रवहणम् । 'रोगाख्यायां ण्वुल्–' (३।३।१०८) ॥ (२) ॥*॥ रुक् रोगः । प्रवाहिका रोगो ग्रहणी स्यात् ॥*॥ द्वे 'संग्रहणीरोगस्य' ॥

**प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः ॥५५॥**

**प्रेति** ॥ प्रच्छर्दनम् । 'छर्द वमने' (चु० प० से०) । 'रोगाख्या–' (३।३।१०८) इति ण्वुल् ॥ (१) ॥*॥ वमनम् । 'टु वम उद्गिरणे' (भ्वा० प० से०) । 'इक् कृष्यादिभ्यः' (वा० ३।३।१०८) ॥ (२) ॥*॥ 'ट्वितोऽथुच्' (३।३।८९) । 'वमथुः पुंसि वमने गजस्य करसीकरे' इति (मेदिनी) ॥ (३) ॥*॥ त्रीणि 'वमनस्य' ॥

**व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगंदराः ।**

**व्येति** ॥ वेदनम् । छिद्रम् । 'बहुलमन्यत्रापि संज्ञाछन्दसोः' इति रक् । यद्वा विद्राति । 'द्रा स्वप्ने पलायने' (अ० प० अ०) । 'आतश्चोपसर्गे' (३।१।१३६) इति कः । विद्रं दीयतेऽस्याम् । 'डुधाञ्' । 'कर्मण्यधिकरणे च' (३।३।९३) इति किः । यद्वा विद्रस्य धानम् । 'इकृष्यादिभ्यः' (वा० ३।३।१०८) ॥ (१) ॥*॥ ज्वरति । 'ज्वर रोगे' (भ्वा० प० से०) । अच् (३।१।१३४) । ज्वरणं वा । ण्यन्तात् घञ् (३।३।१८) णिलोपस्य स्थानिवत्त्वान्न वृद्धिः । 'एरच्' (३।३।५६) वा ॥ (१) ॥*॥ मेहति । 'मिह सेचने' (भ्वा प० अ०) । अच् (३।१।१३४) । मेहनं वा । घञ् (३।३।१८) ॥ (१) ॥*॥ भगं दारयति । 'भगे च दारेः' (काशिका०) इति खच् ॥ (१) ॥*॥

**अश्मरी मूत्रकृच्छ्रं स्यात्**

**अश्मेति** ॥ अश्मानं राति । 'आतोऽनुप–' (३।१।३) इति कः । गौरादिः (४।१।४१) ॥ (१) ॥*॥ मूत्रे कृच्छ्रमत्र ॥ (१) ॥*॥ 'विद्रध्यादीनां व्याधिप्रभेदानां' प्रत्येकमेकैकम् ।—अश्मर्यास्तु द्वे नाम्नी—इत्येके ॥

**पूर्वे शुक्रावधेस्त्रिषु ॥ ५६ ॥**

**पूर्विति** ॥ इतः परं शुक्रशब्दात् प्राक्पठिता वाच्यलिङ्गा इत्यर्थः ॥

**रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके ।**

**रोगेति** ॥ रोगं हरति तच्छीलः । 'सुपि–' (३।२।७८) इति णिनिः ॥ (१) ॥*॥ अगदमरोगं जन्तुं करोति 'कर्मण्यण्' (३।२।१) 'कारे सत्यागदस्य' (६।३।७०) इति मुम् ॥ (२) ॥*॥ भिषज्यति । 'भिषज रुजये' । 'कण्ड्वादिभ्यो यक्' (३।१।२७) । क्विप् (३।१।१७८) ॥ (३) ॥*॥ विद्यामधीते । 'तदधीते तद्वेद' (४।२।५९) इत्यण् ॥ (४) ॥*॥ चिकित्सति । 'कितेर्व्याधिप्रतीकारे' इति सन्नन्तात् ण्वुल् (३।१।१३३) ॥ (५) ॥*॥ पञ्च **'वैद्यस्य'** ॥

**वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ५७**

**वेति** ॥ वृत्तिरस्यास्ति । 'वृत्तेश्च' (वा० ५।२।१०१) णः । **'वार्ता** तु वर्तने वार्तिङ्गणे कृष्याद्युदन्तयोः । निःसारारोग्ययोः क्लीबं वृत्तिमन्नीरुजोस्त्रिषु' (इति मेदिनी) ॥ (१) ॥*॥ निष्क्रान्त आमयात् । 'निरादयः–' (वा० २।२।१८) इति समासः । **'निरामय**स्तु पुंसि स्यादिडिक्के विगतामये' इति हैमः । **'निरामय**स्तु पुंसि स्यादिडिक्के त्रिषु नीरुजे' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ कलासु साधुः । 'तत्र साधुः' (४।४।९८) इति यत् । **'कल्यं** प्रभाते मधुनि सज्ये दक्षे निरामये । **कल्या** कल्याणवाचि स्यात्' इति हैमः ॥ (३) ॥*॥ उल्लाघते स्म । 'लाघृ सामर्थ्ये' (भ्वा० आ० से०) । 'गत्यर्था–' (३।४।७२) इति क्तः । 'उल्लाघ्यते स्म' इति वा । 'अनुपसर्गात्फुल्ल–' (८।२।५५) इति साधुः । **'उल्लाघो** निपुणे हृष्टे शुचिनीरोगयोरपि' इति हैमः ॥ (४) ॥*॥ चत्वारि **'रोगनिर्मुक्तस्य'** ॥

**ग्लानग्लास्नू**

**ग्लेति** ॥ ग्लायति स्म । 'ग्लै हर्षक्षये' (भ्वा० प० अ०) । 'गत्यर्था–' (३।४।७२) इति क्तः । 'संयोगादेः–' (८।२।४३) इति नत्वम् ॥ (१) ॥*॥ ग्लानशीलः । 'ग्लाजिस्थश्च ग्स्नुः' (३।२।१३९) ॥ (२) ॥*॥ द्वे **'रोगेण क्षीणस्य'** ॥

**आमयावी विकृतो व्याधितोऽपटुः ।**

**आतुरोऽभ्यमितोऽभ्यान्तः**

**आमेति** ॥ आमयोऽस्यास्ति । 'आमयस्य दीर्घश्च' (वा० ५।२।१२२) इति विनिः ॥ (१) ॥*॥ विक्रियते स्म । क्तः (३।२।१०२) । **'विकृतो** रोग्यसंस्कृतः' । 'बीभत्सश्च' इति हैमः ॥ (२) ॥*॥ व्याधिः संजातोऽस्य । 'तदस्य संजातं तारकादिभ्य इतच्' (५।२।३६) ॥ (३) ॥*॥ **'पटुर्दक्षे** च नीरोगे' (इति मेदिनी) । पटोरन्यः ॥ (४) ॥*॥ आतोतोर्ति । 'तुर त्वरणे' ह्वादिः । 'छान्दसा अपि क्वचिद्भाषायां प्रयुज्यन्ते' । 'इगुपध–' (३।१।१३४) इति कः । मुकुटस्तु—आतुरयति=अस्वस्थत्वादतित्वरते । 'तुण त्वरणे' (चु० प० से०) । अत इगुपधःकः—इति व्याचख्यौ । तत्र ण्यन्त उपधागुणाभावश्चिन्त्यः । ण्यन्तस्येगुपधत्वाभावात्कप्रत्ययोऽपि । —आतोरति । आतुरः । आतरति रोगं वा—इति स्वाम्यपि चिन्त्यः । तुरेरुक्तरूपाभावात् । तरतेरिष्टरूपासंभवाच्च ॥ (५) ॥*॥ अभ्यम्यते स्म । 'अम रोगे' (चु० उ० से०) । क्तः (३।२।१०२) । चुरादीनां णिचो वैकल्पिकत्वाण्णिजभाव इदम् । अभ्यमतिस्म वा । 'अम गतौ' (भ्वा० प० से०) । 'गत्यर्था–' (३।४।७२) इति क्तः । 'रुष्यमत्वर–' (७।२।२८) इति वेट् ॥ (६) ॥*॥ इडभावे 'अनुनासिकस्य—' (६।४।१५) इति दीर्घः ॥ (७) ॥*॥ सप्त **'रोगिणः'** ॥

**समौ पामनकच्छुरौ ॥ ५८ ॥**

**सेति** ॥ पामास्यास्ति । पामादित्वात् (५।२।१००) नः ॥ (१) ॥*॥ कच्छूरस्यास्ति । 'कच्छ्वा ह्रस्वश्च' ( ) इति रः । **'कच्छुरा** शूकशिम्ब्यां च शटीदुःस्पर्शयोरपि । **कच्छुरं** वाच्यवत्प्राहुः पामने पुंश्चलेऽपि च' इति विश्वः ॥ (२) ॥*॥ द्वे **'विचर्चिकायुक्तस्य'** ॥

**दर्द्रुणो दद्रुरोगी स्यात्**

**देति** ॥ दरिद्राति । 'दरिद्रा दुर्गतौ' (अ० प० से०) । 'दरिद्रातेर्यालोपश्च' (उ० ११९०) इति साधुः । दर्द्रूरस्यास्ति । 'शाकीपलाशीदर्द्रूणां ह्रस्वश्च' इति पामादिषु (ग० ५।२।१००) पाठान्नः ॥ (१) ॥*॥ दर्द्रूश्चासौ रोगश्च । 'इको ह्रस्वोऽङ्यः–' (६।३।६१) इति ह्रस्वः । दद्रुरोगोऽस्यास्ति । 'द्वन्द्वोपताप–' (५।२।१२८) इतीनिः ॥ (२) ॥*॥ द्वे **'दर्द्रुयुक्तस्य'** ॥

**अर्शोरोगयुतोऽर्शसः ।**

**अर्शविति** ॥ अर्शोरोगेण युतः ॥ (१) ॥*॥ अर्शांसि सन्त्यस्य । 'अर्शआदिभ्योऽच्' (५।२।१२७) ॥ (२) ॥*॥ द्वे **'मूलव्याधिमतः'** ॥

**वातकी वातरोगी स्यात्**

**वातेति** ॥ वातोऽतिशयितोऽस्य । 'वातातीसाराभ्यां कुक् च' (५।२।१२९) इतीनिः ॥ (१) ॥*॥ वातरोगोऽस्यास्ति । 'द्वन्द्वोपताप–' (५।२।१२८) इतीनिः ॥ (२) ॥*॥ द्वे **'वातरोगिणः'** ॥

**सातिसारोऽतिसारकी ॥ ५९ ॥**

**सेति** ॥ सहातिसारेण वर्तते ॥ (१) ॥*॥ अतिसारोऽस्यास्ति । प्राग्वत् (५।२।१२९) इनिः कुक् च ॥ (२) ॥*॥ द्वे **'अतीसारवतः'** ॥

**स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी ।**

**स्युरिति** ॥ (वा० ५।२।३३) क्लिन्नस्य ल्प्रत्ययः । चुल्

१—अक्ष्णि तु नपुंसकानि । 'अमी' इति पुंस्त्वं तु शब्दापेक्षया–' इति मुकुटः ॥

चिल्, पिल्, आदेशाः 'अस्य चक्षुषि' इत्यर्थे । चक्षुर्गतः क्लेदरोगश्चुल्लादिवाच्यः । तद्योगाच्चक्षुश्चुल्लादिवाच्यम् । तच्चक्षुर्योगात्पुरुषोऽपि । 'चिल्लः खगे सचुल्लश्च पिल्लवत् क्लिन्नलोचने । क्लिन्नाक्षिण' इति हैमः ॥ (१) ॥*॥ (२) ॥*॥ (३) ॥*॥ त्रीणि '**क्लिन्ननेत्रतद्वतोः**' ॥

**उन्मत्त उन्मादवति**

**उन्मेति** ॥ उन्मादयति स्म । 'मदी हर्षे' ( दि० प० से० ) । 'गत्यर्था-' (३।४।७२) इति क्तः । 'न ध्याख्या-' (८।२।५७) इति नत्वं न । '**उन्मत्तो** मुचुकुन्दे स्याद्धत्तूरोन्मादयुक्तयोः' इति हैमः ॥ (१) ॥*॥ उन्मदनम् । घञ् (३।३।१८) । उन्मादोऽस्यास्ति । मतुप् (५।२।९४) ॥ (२) ॥*॥ द्वे '**वातकृतचित्तविभ्रमस्य**' ॥

**श्लेष्मलः श्लेष्मणः कफी ॥ ६० ॥**

**श्लेष्मेति** ॥ श्लेष्मास्यास्ति । 'सिध्मादिभ्यश्च' (५।२।९६) इति लच् ॥ (१) ॥*॥ पामादित्वात् (५।२।१००) नः ॥ (२) ॥*॥ कफोऽस्यास्ति । 'द्वन्द्वोप-' (५।२।१२८) इतीनिः ॥ (३) ॥*॥ त्रीणि '**कफवतः**' ॥

**न्युब्जो भुग्ने रुजा**

**न्युबिति** ॥ न्युब्जनम् 'उब्ज आर्जवे' ( तु० प० से० ) । घञ् (३।५।१८) । 'भुजन्युब्जौ पाण्युपतापयोः' (७।३।३१) इति साधुः । न्युब्जः पृष्ठवक्रत्वकारी यस्यास्ति । अर्शआद्यच् (५।२।१२७) । रुजा रोगेण भुग्ने पुरुषे न्युब्जो वर्तते । 'न्युब्जः कुब्जे कुशस्रुचि । अधोमुखेऽपि च न्युब्जं कर्मरङ्गतरोः फले' इति हैमः ॥ (१) ॥*॥ एकम् '**कुब्जस्य**' ॥

**वृद्धनाभौ तुण्डिभतुण्डिलौ ।**

**वृद्धेति** ॥ वृद्धा उन्नता नाभिरस्य ॥ (१) ॥*॥ तुण्ड्यते । 'तुडि तोडने' ( भ्वा० आ० से० ) । 'सर्वधातुभ्य इन्' (उ० ४।११८) । 'तुण्डिवलिवटेर्भः' (५।२।१३९) ॥ (२) ॥*॥ सिध्मादित्वात् (५।२।९६) लच् ॥*॥ '**तुन्दिल**' इति पाठे 'तुन्दादिभ्य इलच्' (३।२।११७) ॥ (३) ॥*॥ त्रीणि '**उन्नतनाभियुक्तपुरुषस्य**' ॥

**किलासी सिध्मलः**

**कीति** ॥ किलासमस्यास्ति । 'द्वन्द्वोप-' (५।५।१२८) इतीनिः ॥ (१) ॥*॥ सिध्ममस्यास्ति । 'सिध्मादिभ्यश्च' (५।२।९६) इति लच् । '**सिध्मला** मत्स्यविकृतौ वाच्यवत्तु किलासिनि' इति मेदिनी ॥ (२) ॥*॥ द्वे '**सिध्मयुक्तस्य**' ॥

**अन्धोऽदृक्**

**अन्ध इति** ॥ अन्धयति । 'अन्ध दृष्ट्युपघाते' (चु० उ० से० ) अच् (३।१।१३४) । ('**अन्धं** स्यात्तिमिरे क्लीबं चक्षुर्हीनेऽभिधेयवत्' इति मेदिनी) ॥ (१) ॥*॥ न दृगस्य ॥ (२) ॥*॥ द्वे '**अचक्षुषः**' ॥

**मूर्च्छाले मूर्च्छमूर्च्छितौ ॥६१॥**

**म्विति** ॥ मूर्च्छास्यास्ति । सिध्मादिषु (ग० ५।२।९६) 'क्षुद्रजन्तूपतापाच्च' इति पठितत्वाल्लच् । 'प्राणिस्थादातः—' (५।२।९५) इति न भवति । 'प्राण्यङ्गादेव' इति (वार्तिकरूपव्याख्यानात् ॥ (१) ॥*॥ मूर्च्छति स्म । 'मूर्च्छा मोहसमुच्छ्राययोः' ( भ्वा० प० से० ) । क्तः (३।४।७२) । 'राल्लोपः' (३।४।२१) । 'न ध्याख्या-' (८।२।५७) इति न नत्वम् । '**मूर्त** स्यात्रिषु मूर्च्छाले कठिने मूर्तिमत्यपि' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ मूर्च्छा जातास्य । तारकादित्वात् (५।२।३६) इतच् । '**मूर्च्छितं** सोच्छ्रये मूढे' इति हैमः ॥*॥ त्रीणि '**मूर्च्छावतः**' ॥

**शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च ।**

**श्विति** ॥ शोचत्यनेन । 'शुच शोके' ( भ्वा० प० से० ) शोचयति वा । 'ऋज्रेन्द्र-' (उ० २।२८) इति साधुः । '**शुक्रं** तु रेतोऽक्षिरुजोः' इति हैमः ॥ (१) ॥*॥ तेजयति । 'तिज निशाने' ( भ्वा० आ० से० ) । असुन् (उ० ४। १८९) ॥ (२) ॥*॥ रिणाति । 'री गतिरेषणयोः' ( क्र्या० प० अ० ) । 'स्रुरीभ्यां तुट् च' (उ० ४।२०२) इत्यसुन् ॥ (३) ॥*॥ विशेषेण ईजते । 'ईज गतिकुत्सनयोः' ( भ्वा० आ० से० ) । अच् (३।१।१३४) बवयोरभेदः । वीज्यते वा । घञ् (३।३।१९) । कुत्वं तु न भवति । 'चजोः-' (७। ३।५२) इत्यत्र 'निष्ठायामनिटः' इति वार्तिककृता पूरितत्वात् । अस्य च निष्ठायां सेट्त्वात् । यद्वा वीजयति, वीज्यते वा । अनेन वा । 'वीज व्यजने' ( ) । अच् (३।१।१३४) । घञ् (३।३।१८,१९) वा । '**बीजं** तु रेतसि । स्यादाधाने च तत्त्वे च हेतावङ्कुरकारणे' इति हैमः ॥ (४) ॥*॥ वीरेऽक्लीबे साधुः । 'तत्र साधुः' (४।४।९८) इति यत् । यद्वा वीरयति । वीर्यते वा । अनेन वा । 'वीर विक्रान्तौ' ( चु० उ० से० ) । अघ्न्यादिः (उ० ५।११२) । 'अचो यत्' (३। १।९७) वा । '**वीर्यं** तेजःप्रभावयोः । शुक्रे शक्तौ च' इति हैमः ॥ (५) ॥*॥ इन्द्रस्यात्मनो लिङ्गम् । 'इन्द्रियमिन्द्रलिङ्ग-' (५।२।९३) इति साधुः । '**इन्द्रियं** तु चक्षुरादिषु रेतसि' इति हेमचन्द्रः ॥ (६) ॥*॥ षट् '**रेतसः**' ॥

**मायुः पित्तम्**

**मेति** ॥ मिनोति देहे ऊष्माणम् । 'डुमिञ् प्रक्षेपणे' ( स्वा० उ० अ० ) । 'कृवापाजि-' (उ० ११) इत्युण् ॥ (१) ॥*॥ अपि दीयते स्म । 'दो अवखण्डने' (दि० प० अ०) । 'देङ् पालने' ( भ्वा० वा० अ० ) वा । क्तः (३।२।१०२) । 'अच उपसर्गात्तः' (७।४।४७) । 'वष्टि भागुरिः-' इत्यल्लोपः ।

संज्ञापूर्वकत्वात् 'दक्षि' (६।३।१२४) इति दीर्घो न ॥ (२) ॥*॥ द्वे **'पित्तस्य'** ॥

**कफः श्लेष्मा**

**केति** ॥ केन जलेन फलति । 'फल निष्पत्तौ' (भ्वा० प० से०)। 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः। यद्वा के शिरसि फणति, फक्कति, वा। प्राग्वत् डः (वा० ३।२।१०१) ॥ (१) ॥*॥ श्लिष्यति। 'श्लिष आलिङ्गने' (दि० प० अ०)। 'सर्वधातुभ्यो मनिन्' (उ० ४।१४५) ॥ (२) ॥*॥ द्वे **'कफस्य'** ॥

**स्त्रियां तु त्वगसृग्धरा ॥ ६२ ॥**

**त्वीति** ॥ त्वचति। 'त्वच संवरणे' (उ० प० से०)। क्विप् (३।२।१७८) यद्वा तनोति। 'तनोतेरनश्च वः' (उ० २।६३) इति चिक् च। **'त्वक्** स्त्री चर्मणि वल्के च गुडत्वचि विशेषतः' (इति मेदिनी) ॥*॥ 'पुंसि–' (३।३।११८) इति घे 'त्वच' इत्यदन्तोऽपि। **त्वक्त्वचचोच**शब्दाः स्युर्वल्के चर्मणि पत्रके' इति धरणिः[1] ॥ (१) ॥*॥ असृजो रक्तस्य धरा ॥*॥ **'असृग्धरा'** इत्येके ॥ (२) ॥*॥ द्वे **'चर्मणः'** ॥

**पिशितं तरसं मांसं पललं क्रव्यमामिषम् ।**

**पिशीति** ॥ पिंशति। 'पिश अवयवे' (तु० प० से०) 'पिशेः किच्च' (उ० ३।९५) इतीतन्। पिश्यते स्म वा क्तः (३।२।१०२)। **'पिशितं** मांसं **पिशिता** मांसिका' इति हैमः ॥ (१) ॥*॥ **'तरो** जवे बले' इति हैमः। तरो बलमस्त्यस्मिन्। अर्शआद्यच् (५।२।१२७) ॥ (२) ॥*॥ मन्यते। 'मन ज्ञाने' (दि० आ० अ०)। 'मनेर्दीर्घश्च' (उ० ३।६४) इति सः ॥ (३) ॥*॥ पलति, पल्यते वा। अनेन वा। 'पल गतौ' (भ्वा० प० से०)। 'वृषादिभ्यश्चित्' (उ० १।१०६) इति कलः। **'पललं** तिलमिश्रे स्यात् **पललं** पिशितेऽपि च' इति शाश्वतः। **'पललं** पङ्कमांसयोः। तिलचूर्णे **पललस्तु** राक्षसे' इति हैमः ॥ (४) ॥*॥ क्रवते। क्रव्यतेऽस्माद्वा। 'क्लव भये' ( )। न्यन्तो मित्। 'अचो यत्' (३।१।९७) रलयोरेकत्वम्।—क्रूयते। 'क्रुङ् गतौ' (भ्वा० आ० अ०)—इति स्वामी ॥ (५) ॥*॥ आमिषति। 'मिष स्पर्धायाम्' (तु० प० से०)। मेषति वा। 'मिषु सेचने' (भ्वा० प० से०)। 'इगुपध–' (३।१।१३५) इति कः ॥ (६) ॥*॥ षट् **'मांसस्य'** ॥

**उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम् ॥ ६३ ॥**

**उत्तेति** ॥ उत्तप्यते स्म। 'तप संतापे' (भ्वा० प० से०)। क्तः (३।२।१०२)। **'उत्तप्तं** चञ्चले शुष्कमांससंतप्तयोरपि' इति हैमः ॥ (१) ॥*॥ शुष्कं च तन्मांसं च ॥ (२) ॥*॥ वल्लते, वल्ल्यते वा 'वल्ल संवरणे' (भ्वा० आ० से०)। खर्जादित्वात् (उ० ४।९०) ऊरः। **'वल्लूरं** स्याद्वनक्षेत्रे, वाहनोषरयोरपि। **वल्लूरा** त्रिषु संशुष्कमांसशूकरमांसयोः' इति मेदिनी) ॥ (३) ॥*॥ त्रीणि **'शुष्कमांसस्य'** ॥

**रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम् ।**

**रुधीति** ॥ रुणद्धि। रुध्यते वा। 'रुधिर् आवरणे' (रु० उ० अ०)। 'इषिमदिमुदि–' (उ० १।५१) इति किरच्। **'रुधिरोऽ**ङ्गारके पुंसि क्लीबं तु कुङ्कुमासृजोः' (इति मेदिनी) ॥ (१) ॥*॥ अस्यते। 'असु क्षेपणे' (दि० प० से०)। बाहुलकादृजः। न सृजति वा। 'सृज विसर्गे' (तु० प० अ०)। क्विप्। 'क्विन्प्रत्ययस्य–' (८।२।६२) इति कुः। 'क्विन् प्रत्ययो यस्मात्' इति बहुव्रीहिः। 'ऋत्विग्दधृक्स्रक्–' (३।२।५९) इति हि सृजेः क्विन् विहितः ॥ (२) ॥*॥ रोहति। रुह्यते वा। 'रुहे रश्च लो वा' (उ० ३।९४) इतीतच्। **'लोहितं** रक्तगोशीर्षे **कुङ्कुमे** रक्तचन्दने। पुमान्नदान्तरे भौमे वर्णे च त्रिषु तद्वति' (इति मेदिनी) ॥ (३) ॥*॥ अस्यते। 'बहुलमन्यत्रापि' इति रक्। **'अस्रः** कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' (इति मेदिनी) ॥ (४) ॥*॥ रज्यते स्म। 'रञ्ज रागे' (भ्वा० उ० अ०)। क्तः (३।२।१०२)। **'रक्तो**ऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु। क्लीबं तु कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि' (इति मेदिनी) ॥ (५) ॥*॥ क्षताज्जातम्। डः (३।२।९८) ॥ (६) ॥*॥ शोणति स्म। 'शोणृ वर्णगत्योः' (वा० प० से०)। 'गत्यर्था–' (३।४।७२) इति क्तः।—शोणते—इति मुकुटश्चिन्त्यः ॥ (७) ॥*॥ सप्त **'रक्तस्य'** ॥

**वुक्काऽग्रमांसम्**

**विवति** ॥ वुक्कयते स्वादुत्वान्मृग्यते। 'वुक्क भषणे' (भ्वा० प० से०)। घञ् (३।३।१९)। 'शोणितेषु स्त्रियां **वृक्का वुक्कं** सुरसमद्वयोः' इति रभसः। 'उरस्यपि वुक्कायां हृदयं मानसेऽपि च' इति त्रिकाण्डशेषः[1] ॥ (१) ॥*॥ अग्रं मुख्यं मांसम् ॥ (२) ॥*॥ द्वे **'हृदयान्तर्गतमांसविशेषस्य'** ॥

**हृदयं हृत्**

**हिति** ॥ हरति। ह्रियते वा। 'वृह्रोः षुक्दुकौ च' (उ० ४।१००) इति कयन्। **'हृदयं** मानसे वुक्कोरसोरपि नपुंसकम्' (इति मेदिनी) ॥ (१) ॥*॥ बाहुलकात्केवलोऽपि दुक् ॥ (२) ॥*॥ 'पद्मकोशप्रतीकाशं रुचिरं चाप्यधोमुखम्। हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्' इति ॥*॥ द्वे **'हृदयकमलस्य'**। चत्वारि पर्याया इत्येके ॥

१—'धरणिः' इत्येतत्स्थाने, 'रत्नकोषः' इति वा पाठः ॥

१—हैमनाममालायामपि 'वुक्का हृद् हृदयं वृक्का सुरसं च तदग्रिमम्' इत्युपलभ्यते। 'स्त्रियां वुक्का वुक्कस्तु समयोर्द्वयोः' इति पाठान्तरम् ॥

**मेदस्तु वपा वसा ॥ ६४ ॥**

**मयिति** ॥ मेद्यति। 'ञिमिदा स्नेहने' ( दि० प० से० )। असुन् ( उ० ४।१८९ ) ॥*॥—घञ् (३।३।१९)—इत्यन्ये ॥ (१) ॥*॥ वपति। उप्यते वा। 'डुवप् बीजतन्तुसंताने' (भ्वा० उ० अ० )। अच् (३।१।१३४)। भिदाद्यङ् (३।३।१०२) वा। **'वपा** विवरमेदसोः' इति हैमः ॥ (२) ॥*॥ वसति, वस्ते, वा। 'वस निवासे' (भ्वा० प० अ० )। 'वस आच्छादने' (अ० आ० से० ) वा। अच् (३।१।१३४) ॥ (३) ॥*॥ त्रीणि **'शुद्धमांसस्नेहस्य'** ॥

**पश्चाद्ग्रीवासिरा मन्या**

**पेति** ॥ पश्चाद्भागे ग्रीवायाः सिरा। मन्यतेऽनया। 'संज्ञायां समज-' (३।३।९९) इति क्यप् ॥ (१) ॥*॥ एकं **'ग्रीवायाः** पश्चाद्भागे स्थितसिरायाः' ॥

**नाडी तु धमनिः सिरा।**

**नेति** ॥ नाडयति, नाड्यते, वा। 'नड भ्रंशे' ( चुरादिः। 'अच इः' ) ( उ० ४।१३९ )। **'नाडी** नाले व्रणान्तरे। शिरायां गण्डदूर्वायां चर्यायां कुहनस्य च। तथा षट्क्षणकालेऽपि' ( इति मेदिनी ) ॥ (१) ॥*॥ धमति। ध्वाने धमिः सौत्रः। 'अर्तिसृधृ-' ( उ० २।१०२ ) इत्यनिः। ङीष् ( ग० ४।१।४५)। **'धमनी** तु शिराहट्टविलासिन्योश्च योषिति' ( इति मेदिनी ) ॥ (२) ॥*॥ सिनोति। 'षिञ् बन्धने' (स्वा० उ० अ० )। 'बहुलमन्यत्रापि' इति रक् ॥*॥ तालव्यादिरपि। 'शिरो ना पिप्पलीमूले स्याद्धमन्यां च योषिति' इति तालव्यादौ रभसात्। शिनोति। 'शिञ् निशाने' ( स्वा० उ० अ० )। 'बहुलमन्यत्रापि' इति रक् ॥ (३) ॥*॥ त्रीणि **'धमन्याः'** ॥

**तिलकं क्लोम**

**तीति** ॥ तेलति। 'तिल गतौ' (भ्वा० प० से० )। तिलति वा। 'तिल स्नेहने' (तु० प० से० )। 'इगुपध-' (३।१।१३५) इति कः। स्वार्थे कन् ( ज्ञापि० ५।४।५ ) क्वुन् ( उ० २।३२ ) वा। **'तिलको** द्रुमरोगाश्वभेदेषु तिलकालके। क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ क्लवते। 'क्लुङ् गतौ' (भ्वा० आ० अ० )। मनिन् ( उ० ४।१४५ ) ॥ (२) ॥*॥ द्वे **'उदर्यजलाशयस्य'** ॥

**मस्तिष्कं गोर्दम्**

**मेति** ॥ मस्यते, मसनं वा। 'मसी परिणामे' ( दि० प० से० )। क्तिन् (३।३।९४)। मस्तिं मस्कते 'मस्क गतौ' (भ्वा० आ० से० )। अच् (३।१।१३४)। पृषोदरादिः (६।३।१०९) ॥ (१) ॥*॥ गूर्यते। गुरते वा। 'गुरी उद्यमने' (तु० आ० से० )। 'अब्दादयः' ( उ० ४।९८ ) इति साधुः ॥ (२) ॥*॥ द्वे **'मस्तकभवस्नेहस्य'** ॥

**किट्टं मलोऽस्त्रियाम् ॥ ६५ ॥**

**कीति** ॥ केटति स्म। 'किट गतौ' (भ्वा० प० से० )। 'गत्यर्था-' (३।४।७२) इति क्तः। आगमशास्त्रस्यानित्यत्वान्नेट् (१) ॥*॥ मलते। 'मल धारणे' (भ्वा० आ० से० )। अच् (३।१।१३४)। **'मलो**ऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्' ( इति मेदिनी )। 'वसा शुक्रमसृग्मज्जा कर्णविड्मूत्रविड्नखाः। श्लेष्माश्रुदूषिकाः खेदो द्वादशैते नृणां मलाः' ॥ (२) ॥*॥ द्वे **'मलस्य'** ॥

**अन्त्रं पुरीतत्**

**अन्त्रमिति** ॥ अमति, अनेन, वा। 'अम गतौ' (भ्वा० प० से० )। 'सर्वधातुभ्यः ष्ट्रन्' ( उ० ४।१५९ )। 'अमिचिमिदिशसिभ्यः क्त्रः' ( उ० ४।१६४ )। संज्ञापूर्वकत्वान्न दीर्घः। अन्तति। 'अति बन्धने' (भ्वा० प० से० ) ष्ट्रन् ( उ० ४।१५९ ) वा।—'अमियमिमिदेस्त्रक्'—इति मुकुटोपन्यस्तं सूत्रं त्वपाणिनीयम् ॥ (१) ॥*॥ पुरीं शरीरं तनोति। क्विप् (३।२।७६)। 'गमादीनां क्वौ' (वा० ६।४।४० ) इत्यनुनासिकलोपः। तुक् (६।१।७१)। 'पुरीं तनोति' इति पक्षे 'नहिवृति-' (६।३।११६) इति दीर्घः। 'अनुदात्तोपदेश-' (६।४।३७) इति नलोपः—इति मुकुटस्य प्रमादः। वस्य झल्त्वाभावात्। 'पुरीतदस्त्रियाम्' इति वाचस्पतिः ॥ (२) ॥*॥ द्वे **'आंत'** इति ख्यातस्य ॥

**गुल्मस्तु प्लीहा पुंसि**

**ग्विति** ॥ गुड्यतेऽस्मात् 'गुड रक्षायाम्' (तु० प० से० ) मक्। 'भीमादयोऽपादाने' (३।४।७४) ॥ (१) ॥*॥ प्लेहते। 'प्लिह गतौ' (भ्वा० आ० से० )। 'श्वन्नुक्षन्पूषन्प्लीहन्-' (उ० १।१५९) इति साधुः ॥ (२) ॥*॥ द्वे **'कुक्षिवामपार्श्वे मांसखण्डस्य'** ॥

**अथ वस्नसा।**

**स्नायुः स्त्रियाम्**

**अथेति** ॥ वस्ते शरीरम्। 'वस आच्छादने' (अ० आ० से० )। 'धापॄवस्यज्यतिभ्यो नः' ( उ० ३।६ )। वस्नं चर्म स्यति। 'षोऽन्तकर्मणि' ( दि० प० अ० )। 'आतोऽनुप-' (३।२।३) इति कः ॥ (१) ॥*॥ स्नाति। 'ष्णा शौचे' (अ० प० अ० )। बाहुलकादुण्। 'आतो युक् चिण्कृतोः' (७।३।३३) ॥ (२) ॥*॥ द्वे **'अङ्गप्रत्यङ्गसन्धिबन्धनरूपायाः स्नायोः'** ॥

**कालखण्डयकृती तु समे इमे ॥ ६६ ॥**

**कालेति** ॥ कालं च तत्खण्डं च ॥ (१) ॥*॥ यमनम्। संपदादिः (वा० ३।३।१०८)। 'गमादीनाम्-' (वा० ६।४।४० ) इति मलोपः। आगमानित्यत्वान्न तुक्। यं संयमं

१—प्लीहा टाबन्ता च। 'यकृत्प्लीहे च संबद्धे' इति पालकाप्यात्—इति मुकुटः ॥

करोति क्विप् (३।२।७६) । तुक् (६।१।७१) ॥ (२) ॥*॥ 'करण्डो तु महास्नायुः, कालेयं कालखण्डके' इति रभसः ॥*॥ द्वे 'कुक्षेर्दक्षिणभागस्थमांसखण्डस्य' 'कलेजा' इति ख्यातस्य ॥

**सृणिका स्यन्दिनी लाला**

**स्रिति** ॥ सरति 'सृवृषिभ्यां कित्' (उ० ४।४९) इति निः । 'संज्ञायां कन्' (५।३।७५) ॥*॥ 'सर्तेर्नुम् च' (उ० ४।२३) ईकन् कित्त्वं नुम् च । इति (**सृणीका**) दीर्घमध्यापि ॥ (१) ॥*॥ अवश्यं स्यन्दते । 'आवश्यका–' (३।३।१७०) इति णिनिः । ङीप् (४।१।१५) ॥ (२) ॥*॥ लालयते । 'लल ईप्सायाम्' चुरादिः । अच् (३।१।१३४) ॥ (३) ॥*॥ त्रीणि '**लाळ**' इति ख्यातायाः ॥

**दूषिका नेत्रयोर्मलम् ।**

**द्विति** ॥ दूषयति । 'दुष वैकृत्ये' (दि० प० अ०) ण्यन्तः । 'दोषो णौ' (६।४।९०) इत्यूत्वम् । ण्वुल् (३।१।१३३) । 'अत इः' (उ० ४।१३९) । 'कृत्' (ग० ४।१४५) इति ङीष् वा । स्वार्थे कन् (ज्ञापि० ५।४।५) अपि । '**पिचोण्डकं नेत्रमलं दूषी** च दूषिकापि च' इति वाचस्पतिः ॥*॥ 'कषिदूषिभ्यामीकन्' (उ० ४।१६) इति '**दूषीका**' अपि ॥ (१) ॥*॥ एकम् '**नेत्रमलस्य**' ॥

**मूत्रं प्रस्रावः**

**स्विति** ॥ मूत्र्यते । 'मूत्र प्रस्रवणे' (चु० उ० से०) । घञ् (३।३।१९) ॥ (१) ॥*॥ प्रस्रूयते । 'स्रु प्रस्रवणे' (भ्वा० प० अ०) । 'श्रि द्रुस्तुस्रुवः' (३।३।२७) इति घञ् । करणे तु परत्वाल्ल्युट्प्रसङ्गः ॥ (२) ॥*॥ द्वे '**मूत्रस्य**' ॥

**उच्चारावस्करौ शमलं शकृत् ॥ ६७ ॥**

**गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविषौ स्त्रियौ ।**

**उच्चेति** ॥ उच्चार्यते त्यज्यते । 'चर गतौ' (भ्वा० प० से०) । ण्यन्तः । घञ् (३।३।१९) अच् (३।३।५६) वा ॥ (१) ॥*॥ अवकीर्यते अधः क्षिप्यते । 'कॄ विक्षेपे' (तु० प० से०) 'ॠदोरप्' (३।३।५७) । 'वर्चस्केऽवस्करः' (६।१।१४८) इति सुट् ॥ (२) ॥*॥ शाम्यति, शम्यते वा । 'शकिशम्योर्नित्' (उ० १।११२) इति कलः ।—'शकिशमिवहिभ्योऽलः'–इति मुकुटोपन्यस्तमपाणिनीयम् ॥ (३) ॥*॥ शक्नोति, शक्यते वा निःसर्तुं निःसारयितुं वा । 'शकेर्ऋतिन्' (उ० ४।५८) ॥ (४) ॥*॥ गूयते । 'गुङ् शब्दे' (भ्वा० आ० अ०) । 'गु पुरीषोत्सर्गे' (तु० प० अ०) वा । 'तिथपृष्ठगूथ–' (उ० २।१२) इति साधुः ॥ (५) ॥*॥ पिपर्ति शरीरम् । 'पॄ पालनपूरणयोः' (जु० प० से०) । 'कृतॄभ्यामीषन्' (उ० ४।२६) । 'शॄपॄभ्यां किच्च' (उ० ४।२७) इतीषन् किच्च । 'उदोष्ठ्यपूर्वस्य' (७।१।१०२) ॥ (६) ॥*॥ वर्चते, वर्च्यते वा । 'वर्च दीप्तौ' (भ्वा० आ० से०) । असुन् (उ० ४।१८९) । कुत्सायां कन् (५।३।७४) ॥ (७) ॥*॥ वितिष्ठते उदरे । अनया वा पुरुषः । 'आतश्चोपसर्गे' (३।१।१३६) इति कः । अङ् (३।३।१०६) वा । 'उपसर्गात्–' (८।३।६५) इति षत्वम् ॥ (८) ॥*॥ वेवेष्टि । 'विष्लृ व्याप्तौ' (जु० प० अ०) । क्विप् (३।२।१७८) ॥*॥ ('विश्' इति) तालव्यान्तपाठे विशति । 'विश प्रवेशने' (तु० प० अ०) । क्विप् (३।२।१७८) ॥ (९) ॥*॥ नव '**विष्ठायाः**' ॥

**स्यात्कर्परः कपालोऽस्त्री**

**स्यादिति** ॥ कल्पते । 'कृपू सामर्थ्ये' (भ्वा० आ० से०) बाहुलकादरः, लत्वाभावश्च । ('**कर्परस्तु** कटाहे स्याच्छस्त्रभेदकपालयोः' इति हैमः) ॥ (१) ॥*॥ कं पालयति । 'कर्मण्यण्' (३।२।१) । कम्पते । 'कपि चलने' (भ्वा० आ० से०) । 'तमिविशि–' (उ० १।११८) इति कालन् । 'कपि' इति निर्देशान्नलोपः । आगमशास्त्रस्यानित्यत्वं वा । '**कपालो**ऽस्त्री शिरोऽस्थि स्यात् घटादेः शकले व्रजे' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**शिरोस्थिखण्डस्य**' ॥

**कीकसं कुल्यमस्थि च ॥ ६८ ॥**

**कीति** ॥ 'कि' इति कसति । 'कस गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) । '**कीकसः** कृमिजातौ स्यात्पुंसि कुल्ये नपुंसकम्' (इति मेदिनी) ॥ (१) ॥*॥ 'सजातीयगणे गोत्रे देहेऽपि कथितं **कुलम्**' इति विश्वः । कुले भवम् । साधु वा । दिगादित्वात् (४।३।५४) यत् । 'तत्र साधुः' (४।४।९८) इति वा । कोलति, कुल्यते वा 'कुल संस्त्याने' (भ्वा० प० से०) । अघ्न्यादिः (उ० ४।११२) । '**कुल्यः** कुलोद्भवे मान्ये कुलस्यातिहितेऽपि च । **कुल्यं** स्यात्कीकसेऽप्यष्टद्रोणीशूर्पामिषेषु च । पयःप्रणालीसरितोः **कुल्या** जीवन्तिकौषधौ' इति विश्वः ॥ (२) ॥*॥ अस्यते । 'असिमञ्जिभ्यां क्थिन्' (उ० ३।१५४) ॥ (३) ॥*॥ त्रीणि '**अस्थिमात्रस्य**' ॥

**स्याच्छरीरास्थि कङ्कालः**

**स्यादिति** ॥ 'कम्' इत्यव्ययं सुखे शिरसि च । कं कालयति । 'कल क्षेपे' चुरादिः । अच् (३।१।१३४) । यद्वा कङ्कते । 'ककि गतौ' (भ्वा० आ० से०) । बाहुलकात्कालन् ॥ (१) ॥*॥ एकं '**त्वङ्मांसरहितशरीरास्थ्नः**' ॥

**पृष्ठास्थि तु कशेरुका ।**

**पृष्ठेति** ॥ कं वायुं श्रृणाति । केन शीर्यते वा । 'के श्र एरङ् चास्य' (उ० १।८८) इत्युः । 'संज्ञायां कन्' (५।३।७५) । 'केऽणः' (७।४।१३) इति ह्रस्वः । यद्वा कशति । कश्यते वा । 'कश शब्दे' ( ) । बाहुलकादेरुः ।

१—इदं तु न प्रकृतोपयोगि ॥

स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१) ॥*॥ एकं '**पृष्ठवंशस्य**' ॥

**शिरोऽस्थनि करोटिः स्त्री**

**शीति** ॥ कं वायुं रोटते । 'रुट दीप्तौ प्रतिघाते च' (भ्वा० आ० से०) । केन रुध्यते वा । इन् (उ० ४।११८) । वा ङीष् (ग० ४।१।४५) । कं रोटयति वा । 'रुट दीप्तौ' चुरादिः । 'अच इः' (उ० ४।१३९) ॥ (२) ॥*॥ द्वे '**मस्तकास्थ्नः**' ॥

**पार्श्वास्थनि तु पर्शुका ॥ ६९ ॥**

**पेति** ॥ स्पृशति, पृश्यते, वा । 'स्पृश संस्पर्शने' (तु० प० अ०) । 'स्पृशेः श्वण्शुनौ पृ च' (उ० ५।२७) । स्वार्थे कन् (ज्ञापि० ५।४।५) । यद्वा परं शृणाति । 'आङ्परयोः खनिशॄभ्यां डिच्च' (उ० १।३३) इति कुः । बाहुलकात्परस्याकारलोपः । पर्शुरिव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥*॥ 'अप्राणिजातेश्च–' (वा० ४।१।६६) इत्यूङि '**पर्शूः**' अपि ॥ (१) ॥*॥ एकं '**पार्श्वास्थ्नः**' ॥

**अङ्गं प्रतीकोऽवयवोऽपघनः**

**अङ्गमिति** ॥ अङ्गति । 'अगि गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) । 'अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति । क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके' (इति मेदिनी) ॥ (१) ॥*॥ प्रत्येति । प्रतीयते वा । 'इण् गतौ' (अ० प० अ०) । 'अलीकादयश्च' (उ० ४।२५) इति साधुः । '**प्रतीको**ऽवयवेऽपि स्यात्प्रतिकूलविलोमयोः' (इति मेदिनी) ॥ (२) ॥*॥ अव यौति । 'यु मिश्रणे' (अ० प० अ०) । अच् (३।१।१३४) ॥ (३) ॥*॥ अपहन्यते 'अपघनोऽङ्गम्' (३।१।१३४) इति साधुः ॥ (४) ॥*॥ चत्वारि '**देहावयवस्य**' ॥

**अथ कलेवरम् ।**

**गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ७० ॥**
**कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।**

**अथेति** ॥ कले शुक्रे मधुराव्यक्तध्वनौ वा वरं श्रेष्ठम् । 'हलदन्तात्–' (६।३।९) इत्यलुक् । यत्तु–कले रेतसि त्रियते उपयुज्यते । 'कर्मण्यण्' (३।२।१)-इति मुकुटः । तन्न । कर्मोपपदत्वाभावात् । कर्मणि कारके विधायकाभावात् । वृद्धिप्रसङ्गाच्च ॥ (१) ॥*॥ गाते 'गाङ् गतौ' (अ० आ० अ०) । ष्ट्रन् (उ० ४।१५९) इति वा । 'बहुलं तणि' (वा० २।४।५४) इति इणो गा । '**गात्रं** गजाग्रजङ्घादिभागेऽप्यङ्गे कलेवरे' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ वपति, उप्यते, वा । 'डुवप्' । 'अर्तिपृवपि–' (उ० २।११७) इत्युसिः । '**वपुः** क्लीबं तनौ शस्ताकृतावपि' (इति मेदिनी) ॥ (३) ॥*॥ संहन्ति । संहन्यते वा । 'कृत्यल्युटः–' (३।३।११३) इति ल्युट । यद्वा संहन्यन्तेऽस्मिन् भूतानि । 'करणा–' (३।३।११७) इति ल्युट् ॥ (४) ॥*॥ शृणाति । शीर्यते वा । 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'कॄशॄपॄकटि–' (उ० ४।३०) इतीरन् ॥ (५) ॥*॥ वर्षति, वृष्यते, वा । 'वृषु सेचने' (भ्वा० प० से०) । मनिन् (उ० ४।१४५) ॥ (६) ॥*॥ विविधं सुखादि गृह्णाति । अच् (३।१।१३४) । विविधैर्व्याधिभिर्गृह्यते वा । 'ग्रहवृद–' (३।३।५८) इत्यप् । '**विग्रहः** कायविस्तारविभागे ना रणेऽस्त्रियाम्' (इति मेदिनी) ॥ (७) ॥*॥ चीयतेऽन्नादिभिः । 'चिञ् चयने' (स्वा० उ० अ०) । 'निवासचिति–' (३।३।४१) इति घञ् । चस्य कः । '**कायः** कदैवते मूर्तौ संघे लक्षस्वभावयोः । मनुष्यतीर्थे **कायं** स्यात्' (इति मेदिनी) ॥ (८) ॥*॥ दिह्यते । 'दिह उपचये' (अ० उ० अ०) । घञ् (३।३।१९) ॥ (९) ॥*॥ मूर्च्छति । 'मूर्च्छा मोहसमुच्छ्राययोः' (भ्वा० प० से०) । क्तिच् (३।३।१७४) । 'राल्लोपः' (६।४।२१) । '**मूर्तिः** पुनः प्रतिमायां कायकाठिन्ययोरपि' इति हैमः ॥ (१०) ॥*॥ तनोति, तन्यते, वा । 'भृमृशि–' (उ० १।७) इत्युः । '**तनु**र्वपुस्त्वचोः । विरलेऽल्पे कृशे' (इति हैमः) । '**तनुः** काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे' इति (नान्तेषु) विश्वमेदिन्यौ ॥*॥ 'अर्तिपृवपि–' (उ० २।११७) इत्यादिना उसि '**तनु**' सान्तापि ॥*॥ 'प्राणिजातेः–' (    ) ईत्यूङ् ॥ (११) ॥*॥ एकादश '**देहस्य**' ॥

**पादाग्रं प्रपदम्**

**प्रेति** ॥ पादस्याग्रम् ॥ (१) ॥*॥ प्रकृष्टं प्रारब्धं प्रगतं वा पदम् । 'प्रादयो गता–' (वा० २।२।१८) इति समासः ॥ (२) ॥*॥ द्वे '**पादाग्रस्य**' ॥

**पादः पदंघ्रिश्चरणोऽस्त्रियाम् ॥ ७१ ॥**

**पाद इति** ॥ पद्यते । 'पद गतौ' (दि० आ० अ०) । 'पदरुज–' (३।३।१६) इति घञ् । '**पादो** बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे च' (इति मेदिनी) ॥ (१) ॥*॥ पद्यते । क्विप् (३।२।१७८) । स्वामी तु–'पदोऽङ्घ्रिः'—इति पठन् दान्तं न मन्यते । 'पद्दन्–' (६।१।६३) इत्यादेशविधानाज्ज्ञापकात् । अन्ये तु—पादादेश एवायं पठितः—इत्याहुः । प्रभृतिग्रहणस्य प्रकारार्थत्वेन शसाद्यनन्तर्भूतेऽपि तत्प्रवृत्तेः संभवात् । अत एव औङः श्याम् 'ककुद्दोषणी' इति (प्रकृतसूत्रे) भाष्योदाहरणमपि संगच्छते । पद्यतेऽनेन । 'खनो घ च' (३।३।१२५) इति घो घित्करणात् 'अन्यतोऽपि' इति पदशब्दोऽन्तः स्वाम्युक्तः ॥ (२)

१—'तनुषे तनुषे कम्' इति वासवदत्तायमकात्—इति मुकुटः ॥
२—'वरतनु संप्रवदन्ति कुकुटाः' इति भारविः—'इति मुकुटः' ॥ क्षेमेन्द्रेण तु औचित्यविचारचर्चायां यथा कुमारदासस्य 'अयि विजहीहि दृढोपगूहनं त्यज नवसंगमभीरु वल्लभम् । अरुणकरोद्गम एष वर्तते वरतनु संप्रवदन्ति कुकुटाः' इत्युक्तम् ॥

॥*॥ अंहते, अनेन वा । 'अहि गतौ' (भ्वा० आ० से०)। 'वङ्क्यादयश्च' (उ० ४।६६) इति साधुः ॥*॥ 'अंहो रंहो द्रुहितः संहर्षांह्री च घश्रुतयः' ॥ (३) ॥*॥ चरन्त्यनेन। 'करणा-' (३।३।११७) इति ल्युट्। '**चरणो**ऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च । भ्रमणे भक्षणे चापि नपुंसक उदाहृतः' इति मेदिनी ॥ (४) ॥*॥ चत्वारि '**चरणस्य**' ॥

**तद्ग्रन्थी घुटिके गुल्फौ**

**तदिति** ॥ तस्य पादस्य ग्रन्थी । घोटतेऽनया । 'घुट परिवर्तने' (भ्वा० आ० से०)। क्वुन् (उ० २।३२) ॥ (१) ॥*॥ गलति, गल्यते वा । 'गल अदने' (भ्वा० प० से०)। 'कलिगलिभ्यां फगस्योच्च' (उ० ५।५६) इति फक्। अत उत्त्वं च ॥ (२) ॥*॥ द्वे '**पादग्रन्थ्योः**' ॥

**पुमान्पार्ष्णिस्तयोरधः ।**

**पुमेति** ॥ तयोर्गुल्फयोरधः । पृष्यते अनेन वा । 'पृषु सेचने' (भ्वा० प० से०)। 'घृणिपृश्निपार्ष्णि-' (उ० ४। ५२) इति साधुः ।—'पार्ष्ण्यादयश्च' इति त्वपानीणियम् । '**पार्ष्णिः** स्त्रीपुंसयोः पादमूले स्याद् ध्वजिनीकटौ' इति रन्तिदेवः ॥ (१) ॥*॥ एकं '**पादपश्चाद्भागस्य**' ॥

**जङ्घा तु प्रसृता**

**जेति** ॥ जायते । 'जनी प्रादुर्भावे' (दि० आ० से०)। 'अच् तस्य जङ्घ च' (उ० ५।३१)। यद्वा जङ्घन्यते कुटिलं गच्छति । हन्तेर्यङ्लुगन्तात् 'अन्येभ्योऽपि' (वा० ३।१०१) इति डः ॥ (१) ॥*॥ प्रसरति स्म, प्रस्रियते स्म, वा । 'गत्यर्था-' (३।४।७२) इति कर्मणि क्तः (३।२।१०२) वा । प्रकृष्टं सृतं गमनमनया वा ॥ (२) ॥*॥ द्वे '**जङ्घायाः**' ॥

**जानूरुपर्वाष्ठीवदस्त्रियाम् ॥ ७२ ॥**

**जान्विति** ॥ जायते । 'दसनिजनिचरि-' (उ० १।३) इति ञुण्। 'जनिवध्योश्च' (७।३।३५) इति न प्रवर्तते । अनुबन्धद्वयसामर्थ्यात् । जानुरर्धर्चादिः (२।४।३१) । 'अस्त्रियाम्' इति त्रिभिः संबध्यते । (समस्तत्वात्) ॥ (१) ॥*॥ ऊर्णूयते । 'ऊर्णोतेर्नुलोपश्च' (उ० १।३०) इति कुः । ऊरोः पर्व ॥ (२) ॥*॥ अतिशयितमस्थि यस्मिन् । मतुप् (५।२। ९४)। 'आसन्दीवत्-' (८।२।१२) इति साधुः ॥ (३) ॥*॥ त्रीणि '**जानूरुसंधेः**' ॥

**सक्थि क्लीबे पुमानूरुः**

**सेति** ॥ सजति, सज्यते, वा । 'षञ्ज सङ्गे' (भ्वा० प० अ०) 'सञ्जसिभ्यां क्थिन्' (उ० ३।१५४) ॥ (१) ॥*॥ अर्यतेऽनेन । 'ऋ गतौ' (भ्वा० प० से०)। 'अर्तेरुरच् च' इति कुः, ऊरादेशश्च । ऊरुः—इति मुकुटः । तदपाणिनीयम् ।—ऊर्वीति । 'ऊर्वी हिंसायाम्' (भ्वा० प० से०)।—इति स्वामी । तदपि न । उप्रत्ययवलोपयोर्विधायकाभावाच्च । 'ऊर्णोतेर्नुलोपश्च' (उ० १।३०) इत्यस्य 'सत्त्वाच्च' ॥ (२) ॥*॥ द्वे '**जानूपरिभागस्य**' ॥

**तत्संधिः पुंसि वङ्क्षणः ।**

**तदिति** ॥ तस्य ऊरोः । वाङ्क्षति वाङ्क्ष्यते, वा । 'वाक्षि काङ्क्षायाम्' (भ्वा० प० से०) ल्युट् (३।३।११३)। बाहुलकाद्धातोर्ह्रस्वः । वङ्क्षते । वङ्क्षणः—इति स्वामी । यद्वा वक्षति । 'वक्ष रोषसंहत्योः' (भ्वा० प० से०)। ल्युट् (३।३।११३) 'आच्छीनद्योर्नुम्' (७।१।८०) इत्यत्र 'नुम्' इति योगविभागान्नुम् ॥ (१) ॥*॥ एकम् '**ऊरुसंधेः**' ॥

**गुदं त्वपानं पायुर्ना**

**गिवति** ॥ गोदते । 'गुद क्रीडायाम्' (भ्वा० आ० से०)। 'इगुपध-' (३।१।१३५) इति कः ।—गुध्यति—इति मुकुटस्य प्रमादः । यद्वा गूयतेऽनेन 'गु पुरीषोत्सर्गे' (तु० प० अ०)। गवते । 'गुङ् शब्दे' (भ्वा० आ० अ०) वा 'अब्दादयश्च' (उ० ४।९८) इति साधु ।—'गुदादयः'—इति मुकुटस्त्वपाणिनीयत्वादुपेक्ष्यः ॥ (१) ॥*॥ अपानित्यनेन । 'अन प्राणने' (अ० प० से०)। 'हलश्च' (३।३।१२१) इति घञ् ॥ ॥ (२) ॥*॥ पाति मलनिःसारणेन । 'पा रक्षणे' (अ० प० अ०) 'कृवापा-' (उ० १।१) इत्युण् । यद्वा पिबति वस्त्यौषधम् । 'पा पाने-' (भ्वा० प० अ०)। प्राग्वत् ॥ (३) ॥*॥ त्रीणि '**विष्ठानिर्गममार्गस्य**' ॥

**वस्तिर्नाभेरधो द्वयोः ॥ ७३ ॥**

**वेति** ॥ वसति मूत्रमत्र । यद्वा वस्ते, वस्यते, वा । 'वस निवासे' (भ्वा० प० अ०)। 'वस आच्छादने' वा । (अ० आ० से०) 'वसेस्तिः' (उ० ४।१८०)।—'दवसिभ्यां क्तिन्-' इति मुकुटस्त्वपाणिनीयः ॥*॥ '**मूत्राशयपुटे** वस्तिः' इति रत्नमाला ॥ (१) ॥*॥ एकं '**नाभ्यधोभागस्य**' ॥

**कटो ना श्रोणिफलकं**

**केति** ॥ कटते । 'कटे वर्षावरणयोः' (भ्वा० प० से०)। 'पुंसि-' (३।३।११८) इति घः । 'शवे श्रोणौ किलिञ्जे च गजगण्डे भृशे **कटः**' इति शाश्वतः ॥ (१) ॥*॥ श्रोणेः फलकमिव । चर्माकारत्वात् ॥ (२) ॥*॥ द्वे '**कटीफलकस्य**' ॥

**कटिः श्रोणिः ककुद्मती ।**

**केति** ॥ कट्यते । 'कटे वर्षावरणयोः' (भ्वा० प० से०) इन् (उ० ४।१।११८)। वा ङीष् (ग० ४।१।४५) ॥ (१)

१—आशयश्च पुटं च । मूत्रादाशयपुटे । मूत्राशयः मूत्रपुटम्, इत्यर्थः । अतएव हैमीयनाममालायां 'नाभेरधो मूत्रपुटं बस्तिर्मूत्राशयोऽपि च' इत्युक्तम् ॥

॥*॥ श्रोणति । 'श्रोणृ संघाते' ( वा० प० से० ) । इन् ( उ० ४।११८ ) । वा ङीष् ( ग० ४।१।४५ ) ॥ (२) ॥*॥ ककुद् वृषांस इव मांसपिण्डः ककुत् । सोऽतिशयितोऽस्याम् मतुप् (५।२।९४) । यवादित्वात् (८।२।९) न वत्वम् ॥ (३) ॥*॥ त्रीणि **'कटेः'** ॥ पश्चापि पर्याया इत्यन्ये ॥

**पश्चान्नितम्बः स्त्रीकट्याः**

**पेति** ॥ नितम्बति । नितम्ब्यते, वा । 'तम्ब गतौ' ( )। अच् (३।१।१३४) घञ् । (३।३।१९) वा । यद्वा निभृतं तम्यते कामुकैः । 'तमु काङ्क्षायाम्' ( दि० प० से० ) । तम्यति सुरतसंमर्दाद्वा । 'तमु ग्लानौ' ( दि० प० से० ) । 'उल्वादयश्च' ( उ० ४।९५ ) इति साधुः ॥ (१) ॥*॥ एकं **'स्त्रीकट्याः पश्चाद्भागस्य'** ॥

**क्लीबे तु जघनं पुरः ॥ ७४ ॥**

**क्लीति** ॥ हन्यते । हन्तेः शरीरावयवे द्वे च' ( उ० ५। ३२ ) इत्यच् ।—'हनो जघ-' इति क्युर्जघादेशश्च—इति मुकुटस्त्वपाणिनीयः । यद्वा वक्रं हन्ति । यङ्लुगन्तात् 'अच—' (३।१।१३४) । 'अनित्यमागमशासनम्' इत्यभ्यासस्य नुक् न । मुकुटस्तु—भृशं हन्यते । हनो यङन्तात् पचाद्यचि नैरुक्ते नलोपे वा—इत्याह । तन्न । हिंसार्थस्य ञ्नीभावप्रसङ्गात् । गत्यर्थस्य 'भृशं हन्यते' इति विग्रहासंभवात् । गत्यर्थानां कौटिल्य एव यङ्विधानात् । 'हन्यते' इति कर्मविग्रहे पचाद्यचोऽसंभवाच्च । **'जघनं** स्यात् स्त्रियाः श्रोणिपुरोभागे कटावपि' ( इति मेदिनी ) ॥ (१) ॥*॥ एकं **'स्त्रीकट्या अग्रभागस्य'** ॥

**कूपकौ तु नितम्बस्थौ द्वयहीने कुकुन्दरे ।**

**कूपेति** ॥ कूपाविव । 'इवे-' (५।३।९६) इति कन् । **'कूपको** गुणवृक्षे स्यात्तैलपात्रे कुकुन्दरे' इति हैमः ॥*॥ नितम्बे तिष्ठतः । 'सुपि' (३।२।४) इति कः ॥*॥ कुं भूमिं दारयति । 'दॄ भये' ( क्र्या प० से० ) ण्यन्तः । 'कर्मण्यण्' (३।२।१) णिलोपस्य स्थानिवत्त्वान्न वृद्धिः । पृषोदरादिः (६। ३।१०९) । कुत्सितं कुंदरम् । ईषत् कुन्दरमत्र, इति वा । यद्वा स्कुन्द्यते कामिना । 'स्कुदि आप्लवने' ( भ्वा० आ० से० ) 'मद्गुरादयश्च' ( उ० १।४१ ) इति साधुः ॥ (१) ॥*॥ द्वयेन हीने ॥*॥ एकं **'पृष्ठवंशादधोगर्तयोः'** ॥

**स्त्रियां स्फिचौ कटिप्रोथौ**

**स्त्रीति** ॥ स्फायते । 'स्फायी वृद्धौ' ( भ्वा० आ० से० ) । बाहुलकात् डिच् प्रत्ययः ।—स्फेटयति । 'स्फिट हिंसायाम्' ( चु० प० से० ) । क्विप् (३।२।१७८) । 'स्फिगपूत-' (६। २।१८७) इति निपातनाट्टस्य चः—इति मुकुटः ॥ (१) ॥*॥ प्रोथति । 'प्रोथृ पर्याप्तौ' ( भ्वा० उ० से० ) । 'पुंसि-' (३, ३।११८) इति घः । कट्याः प्रोथौ मांसपिण्डौ ॥*॥ कटी, प्रोथौ, इति नामद्वयं वा । 'स्त्रियां स्फिचौ कटिप्रोथौ **कटीप्रोथौ** च **पूलकौ'** इति रभसः । 'प्रोथोऽश्वघोणाध्वगयोः कट्याम्' इति हैमः ॥ (२) ॥*॥ द्वे **'कटिस्थमांसपिण्डयोः'** ॥

**उपस्थो वक्ष्यमाणयोः ॥ ७५ ॥**

**उपेति** ॥ भगशिश्नयोः । उपतिष्ठते । 'सुपि-' (३।२।४) इति कः । अर्धर्चादिः (२।४।३१) । **'उपस्थः** शेफसि क्रोडे तथा मदनमन्दिरे' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ **'भगशिश्नयोः'** एकम् ॥

**भगं योनिर्द्वयोः**

**भेति** ॥ भज्यते । 'भज सेवायाम्' ( भ्वा० उ० अ० ) 'खनो घ च' (३।३।१२५) इति घित्वात् 'भजेः' अपि घः । **'भगं** श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु । माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षे च ना रवौ' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ यौति । 'यु मिश्रणे' ( अ० प० से० ) । 'वहिश्रि-' ( उ० ४।५१ ) इति निः । 'द्वयोः' इति **'योनिः** स्त्रीपुंसयोश्च स्यादाकारे स्मरमन्दिरे' इति मेदिनी । **'योनिः** कारणे भगतोययोः' इति हैमः ॥ (२) ॥*॥ द्वे **'स्त्रीणामुपस्थस्य'** ॥

**शिश्नो मेढ्रं मेहनशेफसी ।**

**शीति** ॥ शशति । 'शश प्लुतगतौ' ( भ्वा० प० से० ) । शिनोति । 'शिञ् निशाने' ( स्वा० उ० अ० ) । बाहुलकान्नक् । पृषोदरादिः (६।३।१०९) ।—रास्नादिनिपातान्नक्—इति मुकुटोऽपाणिनीयः ॥ (१) ॥*॥ मेहन्त्यनेन । 'मिह सेचने' ( भ्वा० प० अ० ) । 'दाम्नी-' (३।२।१८२) इति ष्ट्रन् ॥ (२) ॥*॥ करणे ल्युट् (३।३।११७) । **'मेहनं** मूत्रशिश्नयोः' ( इति मेदिनी ) ॥ (३) ॥*॥ शेते रेतःपाते । 'वृशीङ्भ्यां फुट् च' ( उ० ४।२०१ ) इत्यसुन् ॥*॥ 'पुट् च' इति वा पाठः । **'शेपः'** ॥*॥ बाहुलकात् प-फ-प्रत्ययाभ्यामदन्तावप्येतौ ( **शेफशेपौ** ) । अत एव 'शेपपुच्छ-' (६। ३।२१) इति वार्तिकं संगच्छते ॥ (४) ॥*॥ चत्वारि **'शिश्नस्य'** ॥

**मुष्कोऽण्डकोशो वृषणः**

**म्विति** ॥ मुष्णाति रेतः । 'मुष स्तेये' ( क्र्या० प० से० ) । 'सृवृभूशुषिमुषिभ्यः कक्' ( उ० ३।४१ ) ।—'भूशुषिमुषिभ्यः कः कित्' इति कः—इति मुकुटोऽपाणिनीयः । **'मुष्को** मोक्षकवृक्षे स्यात्संघाते वृषणेऽपि च' ( इति मेदिनी ) ॥ (१) ॥*॥ अण्डयोः कोशः ॥ (२) ॥*॥ वर्षति । 'वृषु सेचने' ( भ्वा० प० से० ) । बाहुलकात् क्युः । 'बहुलमन्यत्रापि' ( उ० २।७८ ) इति युचि वा संज्ञापूर्वकत्वाद्गुणाभावः ॥ (३) ॥*॥ त्रीणि **'अण्डकोशस्य'** ॥

**पृष्ठवंशाधरे त्रिकम् ॥ ७६ ॥**

**पृष्ठेति** ॥ पृष्ठवंशस्याधोभागे ॥ त्रयाणां संघः । 'संख्यायाः संज्ञासंघ-' (५।१।५८) । इति कन् । **'त्रिका** कू-

पस्य नेमौ स्यात्रिकं पृष्ठाधरे त्रये' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'पृष्ठवंशाधोभागस्य'** ॥

**पिचण्डकुक्षी जठरोदरं तुन्दम्**

**पीति** ॥ अपि चमत्यन्नम् । अमन्ताड्डः (उ० १।११४) । 'वष्टि भागुरि–' इत्यल्लोपः । अपि चण्ड्यतेऽनेन हेतुना । 'चडि कोपे' (भ्वा० आ० से०) । 'पुंसि–' (३।३।११८) । इति घो वा । **'पिचण्ड** उदरे पशोरवयवे पुमान्' (इति मेदिनी) ॥*॥ (पिचिण्डः, इति) इकारद्वयवत्त्वे तु पृषोदरादिः (६।३।१०९) ॥ (१) ॥*॥ कुष्यते निष्कास्यते मलोऽस्मात् । 'कुष निष्कर्षे' (क्र्या० प० से०) । 'प्लुषिकुषिशुषिभ्यः क्सिः' (उ० ३।१५५) ।—'कुषः सिः'—इति मुकुटवाक्यमपाणिनीयम् ॥ (२) ॥*॥ जायतेऽत्र जन्तुर्मलो वा । 'जनेररष्ठ च' (उ० ५।३८) इत्यरप्रत्यये ठोऽन्त्यादेशः । **'जठरो** न स्त्रियां कुक्षौ, बद्धकक्खटयोस्त्रिषु' (इति मेदिनी) । मुकुटस्तु—जनयत्यन्नादिना स्वभरणम् । बाहुलकादरन् । पृषोदरादित्वात् (६।३।१०९) अन्त्यस्य ठः—इति । स उक्तसूत्रास्मरणप्रयुक्तः ।—जमत्याहारम् । जठरम्—इति स्वाम्यप्येवम् ॥ (३) ॥*॥ उद्दृणाति । 'ॠ गतौ' (क्र्या० प० से०) । अच् (३।१।१३४) । यद्वा उदृच्छति, उदियर्ति, वा । 'ऋ गतौ' (भ्वा०, जु० प० अ०) । अच् (३।१।१३४) । यद्वा उद् दृणाति । 'दॄ विदारणे' (क्र्या० प० से०) । 'उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च' (उ० ५।१९) । **'उदरं** तुन्दरणयोः' इति हैमः ॥ (४) ॥*॥ तुदति । 'तुद व्यथने' (तु० उ० अ०) । 'इगुपध–' (३।१।१३५) इति कः । 'आच्छीनद्योः–' (७।१।८०) इत्यत्र 'नुम्' इति योगविभागान्नुम् । यद्वा तर्णोत्यन्नम् 'तृणु अदने' (त० उ० से०) । 'अब्दादयश्च' (उ० ४।९८) इति साधुः ॥ (५) ॥*॥ पञ्च **'जठरस्य'** ॥

**स्तनौ कुचौ ।**

**स्तेति** ॥ स्तनति कथयति यौवनोदयम् । स्तन्यते शब्द्यते वा कामुकैः । 'ष्टन शब्दे' (भ्वा० प० से०) । अच् (३।१।१३४) । 'पुंसि–' (३।३।११८) इति घो वा ॥ (१) ॥*॥ कुचति । 'कुच संकोचे' (तु० प० से०) । 'इगुपध–' (३।१।१३५) इति कः ॥ (२) ॥*॥ द्वे **'वक्षोजस्य'** ॥

**चूचुकं तु कुचाग्रं स्यात्**

**चिवति** ॥ चूष्यते । 'चूष पाने' (भ्वा० प० से०) । बाहुलकादुकः । पृषोदरादिः (६।३।१०९) । 'चूचु' इत्यव्यक्तं कायति पीयमानम् । 'अन्येभ्योऽपि—' (वा० ३।२।१०१) इति डः ॥ (१) ॥*॥ कुचस्याग्रम् ॥ (२) ॥*॥ 'चूचुको ना **कुचाननम्'** इति रत्नकोषः ॥*॥ द्वे **'स्तनाग्रस्य'** ॥

१ पिचण्डः 'पिचण्डो जठरे प्रोक्तः पशोरवयवेऽपि च' इति हैमः इति वा पाठः । परंतु सटीकहैमपुस्तके नोपलभ्यते ॥

**न ना क्रोडं भुजान्तरम् ॥ ७७ ॥**

**नेति** ॥ क्रुड्यते । 'क्रुड बाल्येऽदने' (तु० प० से०) । घञ् (३।३।१९) । मुकुटस्तु—क्रोडति घनीभवति । 'क्रुड घनत्वे' । अच् (३।१।१३४) ।—इत्याह । तन्न । घनत्वार्थस्य ऋदुपधत्वात् । उदुपधत्वेऽपि कुटादित्वेनाचि गुणासंभवाच्च । **'क्रोडः** कोले शनौ **क्रोडमङ्के'** इति हैमः । **'क्रोडः** शनौ सूकरे ना, न पुमानङ्करक्षसोः' इति मेदिनी ॥ (१) ॥*॥ भुजयोरन्तरम् ॥ (२) ॥*॥ द्वे **'अङ्कस्य'** ॥

**उरो वत्सं च वक्षश्च**

**उरविति** ॥ इयर्ति । 'ऋ गतौ' (जु० प० अ०) । 'अर्तेरुच्च' (उ० ४।१९५) इत्यसुन्, उरादेशः किच्च । **'उरो** वक्षसि मुख्ये स्यात्' इति हैमः ॥ (१) ॥*॥ वदति सामर्थ्यम् । 'वद व्यक्तायां वाचि' (भ्वा० प० से०) । 'वद स्थैर्ये' (भ्वा० प० से०) वा । 'वृतॄवदिहनि–' (उ० ३।६२) इति सः । **'वत्सः** पुत्रादिवर्षयोः । तर्णके नोरसि क्लीबम्' इति मेदिनी । 'पुत्रादौ तर्णके वर्षे **वत्सो वत्सं** तु वक्षसि' इति रुद्रः ॥ (२) ॥*॥ वक्षति । 'वक्ष संघाते' (भ्वा० प० से०) । असुन् (उ० ४।१८९) ॥ (३) ॥*॥ त्रीणि **'उरसः'** ॥—पञ्चापि वत्सस्य—इत्यन्ये ॥

**पृष्ठं तु चरमं तनोः ।**

**प्रिति** ॥ पृष्यते 'पृषु सेचने' (भ्वा० प० से०) । 'तिथपृष्ठगूथ–' (उ० २।१२) इति साधु । **'पृष्ठं** चरममात्रे स्याद्देहस्यावयवान्तरे' (इति मेदिनी) ॥ (१) ॥*॥ एकं **'देहपश्चाद्भागस्य'** ॥

**स्कन्धो भुजशिरोंऽसोऽस्त्री**

**स्केति** ॥ स्कद्यते । 'स्कन्दिर् गतिशोषणयोः' (भ्वा० प० अ०) । घञ् (३।३।१९) । 'स्कन्देश्च स्वाङ्गे' (उ० ४।२०७) इति बाहुलकादनसुन्यपि धः । **'स्कन्धः** प्रकाण्डे कार्योंऽसे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च' इति हैमः ॥ (१) ॥*॥ भुजस्य शिरः ॥ (२) ॥*॥ अस्यते समाहन्यते भारादिना । 'अंस समाघाते' (चु० उ० से०) । घञ् (३।३।१९) यद्वा अमति, अम्यते, वा । 'अम गतौ' (भ्वा० प० से०) । 'अमेः सन्' (उ० ५।२१) । **'अंसः** स्कन्धे विभागे स्यात्' इति हैमः ॥ (३) ॥*॥ त्रीणि **'भुजशिरसः'** ॥

**संधी तस्यैव जत्रुणी ॥ ७८ ॥**

**समिति** ॥ जायते बाहुरस्मात् । 'जवादयश्च' (उ० ४।१०२) इति साधु ॥ (१) ॥*॥ एकम् **'अंसकक्षयोः संधेः'** ॥

**बाहुमूले उभे कक्षौ**

**वेति** ॥ कष्यते । 'कष हिंसायाम्' (भ्वा० प० से०)

'वृतॄवदिहनिकमिकषिभ्यः सः' (उ० ३।६२)। '**कक्षा** स्याद्न्तरीयस्य पश्चादञ्चलपल्लवे । स्पर्धापदे, ना दोर्मूल**कच्छ**वीरुत्तृणेषु च' (इति मेदिनी) ॥*॥ बाहोर्मूलम् ॥ (१) ॥ द्वे '**कक्षस्य**' ॥

**पार्श्वमस्त्री तयोरधः ।**

**पेति** ॥ स्पृश्यते । 'स्पृश संस्पर्शने' (तु० प० अ०) 'स्पृशेः श्वणूशुनौ पृ च' (उ० ५।२७)। णिलाद्वृद्धिः (७।२।११५)। यद्वा पर्शूनां समूहः । 'पर्श्वा णस् वक्तव्यः' (वा० ४।२।४३) सित्त्वात् (१।४।१६) पदत्वेन भत्वाभावाद् 'ओर्गुणः' (६। ४।१४६) इति न । '**पार्श्व**मन्तिके । कक्षाधोऽवयवे चक्रोपान्ते पर्शुगणेऽपि च' (इति हैमः) ॥ (१) ॥*॥ एकं '**कक्षयोरधोभागस्य**' ॥

**मध्यमं चावलग्नं च मध्योऽस्त्री**

**मेति** ॥ मध्ये भवम् । 'मध्यान्मः' (४।३।८) । '**मध्यमो** मध्यजेऽन्यवत् । पुमान्स्वरे मध्यदेशेऽप्यवलग्ने तु न स्त्रियाम् । स्त्रियां दृष्टरजोनार्यां कर्णिकाङ्गुलिभेदयोः । त्र्यक्षरच्छन्दसि तथा' (इति मेदिनी) ॥ (१) ॥*॥ लग्यते स्म । 'लगे सङ्गे' (भ्वा० प० से०) । 'क्षुब्धस्वान्त–' (७।२।१८) इति साधुः । यद्वा । लज्जते स्म । 'ओलस्जी व्रीडे' (तु० आ० से०) । 'गत्यर्था–' (३।४।७२) इति क्तः । 'स्कोः–' (८।२।२९) इति सलोपः । 'ओदितश्च' (८।२।४५) इति नत्वम् । 'श्वीदितः' (७।२।१४) इति नेट् । अवकृष्टम्, अवसन्नम्, वा लग्नम् । 'प्रादयो गता–' (वा० २।२।१८) इति समासः । '**अवलग्नो**ऽस्त्रियां मध्ये त्रिषु स्याल्लग्नमात्रके' (इति मेदिनी) ॥ (२) ॥*॥ मध्ये शरीरस्य भवम् । 'अ सांप्रतिके' (४।३।९) इत्यः । यद्वा मां शोभां धत्ते । 'अघ्न्याद्यश्च' (उ० ४।११२) इति साधुः । '**मध्यं** विलग्ने न स्त्री स्यान्न्याय्येऽन्तरेऽधमे त्रिषु' (इति मेदिनी) ॥ (३) ॥*॥ ('मध्योऽवलग्नं **विलग्नं** मध्यमः' इति नाममाला) ॥*॥ त्रीणि '**देहमध्यस्य**' ॥

**द्वौ परौ द्वयोः ॥ ७९ ॥**

**भुजबाहू प्रवेष्टो दोः स्यात्**

**द्वाविति** ॥ परौ भुजबाहू । भुज्यतेऽनेन । 'भुज पालनाभ्यवहारयोः' (रु० प० अ०) । 'भुजन्युब्जौ–' (७।३। ६१) इति साधुः । यद्वा भुजति । 'भुजो कौटिल्ये' (तु० प० से०) । 'इगुपध–' (३।१।१३४) इति कः । 'अधो भुजौ । द्वयोर्बाहौ करे' (इति मेदिनी) ॥ (१) ॥*॥ बाधते । 'बाधृ विलोडने' (भ्वा० आ० से०) । 'अर्जिदृशिकम्यमि–' (उ० १।२७) इत्युः, हश्चान्त्यस्य । मुकुटस्तु—बहन्त्यनेन । 'वहिरहितलिपशिभ्यश्च' इत्युण्—इत्याह । तदपाणिनीयत्वादुपेक्ष्यम् ॥*॥ वहेः 'हलश्च' (३।३।१२१) इति घञ् । वाहते । 'वाहृ प्रयत्ने' (भ्वा० आ० से०) । अच् (३।१।१३४) वा '**वाहो**ऽश्वभुजयोः पुमान्' इति दामोदरः । '**वाहो** बाहुरिति स्मृतः' इति देशी कोषः । '(**वाहो**ऽश्वमानयोः । वृषे, **वाहा** तु बाहौ स्यात्' इति हैमः) ॥ (२) ॥*॥ प्रवेष्टते । 'वेष्ट वेष्टने' (भ्वा० आ० से०) । अच् (३।१।१३४) । (३) ॥*॥ दाम्यत्यनेन । 'दमु उपशमे' (दि० प० से०) । 'दमेर्डोस्' (उ० २।६९) ॥*॥ भागुरिमते टाप् ॥ (४) ॥ 'दोर्दोषा च भुजो बाहुः, पाणिर्हस्तः **कर**स्तथा' इति धनंजयः ॥*॥ चत्वारि '**भुजस्य**' ॥

**कफोणिस्तु कूर्परः ।**

**केति** ॥ कं सुखं स्फोरयति । 'स्फुर स्फुरणे संचलने च' (तु० प० से०) । ण्यन्तः 'अच इः' (उ० ४।१३९) । पृषोदरादिः (६।३।१०९) । यद्वा केन सुखेन फणति, स्फुरति, वा । 'फण गतौ' (भ्वा० प० से०) । 'स्फुर संचलने' (तु० प० से०) वा । **इन्** (उ० ४।११८) । पृषोदरादिः (६।३। १०९) । 'कफोणिः **कफ**णिर्द्वयोः' इति शब्दार्णवः ॥ (१) ॥*॥ कुरति । 'कुर शब्दे' (तु० प० से०) क्विप् (३।२। १७८) । कोरणम् । संपदादिः (वा० ३।३।१०८) वा पिपर्ति । 'पॄ पालनपूरणयोः' (जु० प० से०) । अच् (३।१। १३४) । कूर् चासौ परश्च । यद्वा कुरा शब्देन परः यद्वा कुप्यत्यनेन वा । 'कुप क्रोधे' (दि० प० से०) । बाहुलकादरन् दीर्घश्च ॥ (२) ॥*॥ 'कफोणिः कूर्परोऽरत्नेः पृष्ठम्' इति नाममाला । द्वे '**कूर्णी**' इति ख्यातस्य भुजमध्यग्रन्थेः ॥

**अस्योपरि प्रगण्डः स्यात्**

**अस्येति** ॥ कूर्परस्योर्ध्वे प्रत्यासन्नो गण्डः कपोशोऽस्य ॥ (१) ॥*॥ एकम् '**कूर्परोपरिभागस्य**' ॥

**प्रकोष्ठस्तस्य चास्यधः ॥ ८० ॥**

**प्रेति** ॥ प्रकुष्यतेऽनेन कुसूलादन्नम् । 'कुष निष्कर्षे' (क्र्या० प० से०) । 'उषिकुषिगार्तिभ्यस्थन्' (उ० २।४) प्रविष्टः कोष्ठं कुसूलम् । 'अत्यादयः क्रान्ता–' (वा० २।२। १८) इति समासो वा । '**प्रकोष्ठ**मन्तरं विद्यादरत्निमणिबन्धयोः' इति कात्यः । '**प्रकोष्ठो** मणिबन्धस्य कूर्परस्यान्त-

१—बाहौ यथा—'उद्वेलद्भुजवल्लिकंकणझणत्कारस्तदा दुःसहः' । करे यथा 'चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्य'—इत्यनेकार्थकैरवाकरकौमुदी ॥

१—'सुवाहा' इति सुबन्धुः । स्वश्वा, सुभुजा च इति मुकुटः ॥ २—'शाम्यन्ति भोगेन न जातु कामा न वाहया वा सुतरः समुद्रः' इत्यनेकार्थकैरवाकरकौमुदी ॥ ३—'बहुदोषो गुरुध्वंसी गोहन्ता जनपीडकः' इति विदग्धमुखमण्डनम्—इति मुकुटः ॥ ४—प्रसङ्गेनोक्तम् । न त्वत्रास्योपयोगः ॥ किंतु पाणिपर्यायकथनम् ॥ ५—दीर्घमात्रकरणे रेफश्रवणानुपपत्तिः । तस्मात्पृषोदरादित्वमङ्गीकार्यम् ॥

रेऽपि च । भूपकक्षान्तरेऽपि स्यात्' ( इति मेदिनी ) ॥ (१) ॥*॥ एकं **'कफोणेरधो मणिबन्धपर्यन्तस्य'** ॥

**मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।**

**मणीति** ॥ मणिर्बध्यतेऽत्र । 'बन्ध बन्धने' ( क्र्या० प० अ० ) । 'हलश्च' (३।४।१२१) इति घञ् । (**'मणिबन्धः पाणिमूलम्'** इति हलायुधः । 'करेऽस्यादौ **मणिबन्धौ मणिश्च** सः' इति हैमनाममाला) ॥*॥ कनिष्ठाया आ । 'आङ् मर्यादाभिविध्योः' (२।१।१३) इत्यव्ययीभावः ॥*॥ कृणाति । 'कॄ हिंसायाम्' ( क्र्या० प० से० ) । किरत्यनेन । 'कॄ विक्षेपे' ( तु० प० से० ) वा । 'कृशृशलिकलिगर्दिभ्योऽभच्' (उ० ३।१२२ ) ।—'कृशृगर्दिराशिवल्भिभ्योऽभच्' इति मुकुटोऽपाणिनीयः । करे भाति । 'भा दीप्तौ' ( अ० प० अ० ) । 'सुपि-'(३।२।४) इति को वा । **'करभो** मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते' (इति मेदिनी) ॥ (१) ॥*॥ 'ज्ञापकसिद्धं न सर्वत्र' इति बहिर्योगे पञ्चमी (ज्ञापि० २।१।१२) न ॥*॥ एकम् **'करबहिर्भागस्य'** ॥

**पञ्चशाखः शयः पाणिः**

**पञ्चेति** ॥ पञ्च शाखा इवाङ्गुलयोऽस्य ॥ (१) ॥*॥ शेतेऽस्मिन् सर्वम् । 'पुंसि-' (३।३।१२१) इति घः । **'शयः** शय्याहिपाणिषु' (इति मेदिनी) ॥*॥ 'शमः' इति पाठान्तरम् । शाम्यति कण्डूर्मलो वानेन । 'शमु उपशमे' ( दि० प० से० ) । 'हलश्च' (३।३।१२१) इति घञ् । 'नोदात्तोपदेश-' (७।३।३४) इति न वृद्धिः । 'पाणिः **शमः** शयो हस्तः' इत्यमरमाला ॥ (२) ॥*॥ पणायन्त्यनेन । 'पण व्यवहारे' ( भ्वा० आ० से० ) । 'अशिपणाय्यो रुडायलुकौ च' (उ० ४।१३३) इतीण् अयप्रत्ययस्य लुक् च ।—पण्यतेऽनेन । बाहुलकात् इञ्—इति मुकुटस्तूक्तसूत्रास्मरणमूलकः ॥ (३) ॥*॥ त्रीणि **'हस्तस्य'** ॥

**तर्जनी स्यात्प्रदेशनी ॥ ८१ ॥**

**तेति** ॥ तर्ज्यतेऽनया । 'तर्ज भर्त्सने' (भ्वा० प० से०) । 'करणा-' (३।३।११७) इति ल्युट् ॥ (१) ॥*॥ प्रदिश्यतेऽनया । 'दिश अतिसर्जने' ( तु० उ० अ० ) । ल्युट् (३।३।११७) ॥*॥ **'प्रदेशिनी'** इति पाठान्तरम् । प्रदिशति । 'सुपि-' (३।२।७८) इति णिनिः । प्रदेशोऽस्त्यस्याः । इनिः (५।२।११५) वा ॥ (२) ॥*॥ द्वे **'अङ्गुष्ठसमीपाङ्गुल्याः'**॥

**अङ्गुल्यः करशाखाः स्युः**

**अङ्ग्विति** ॥ अङ्गति । 'अगि गतौ' (भ्वा० प० से०) । 'ऋतन्यञ्जि-' (उ० ४।२) इत्युलिः । अङ्गं पाणिपादमवयवं लाति । बाहुलकाड्डिर्वा । **'अङ्गुलिः** करशाखायां कर्णिकायां गजस्य च' इति हैमविश्वप्रकाशौ ॥*॥ 'बालमूललघ्वङ्गुलीनां वा लो रः' (वा० ८।२।१८) । (**अङ्गुरिः**) ॥*॥ 'अङ्गुलस्तु यवो मतः' इत्यमरदत्तः । 'अङ्गुलो ना यवमानम्' इति वाचस्पतिः । तत्राङ्गेर्बाहुलकादुलः ॥ (१) ॥*॥ करस्य शाखा इव ॥ (२) ॥*॥ द्वे **'अङ्गुलिमात्रस्य'** ॥

**पुंस्यङ्गुष्ठः प्रदेशिनी ।**

**मध्यमानामिका चापि कनिष्ठा चेति ताः क्रमात् ८२**

**पुंसीति** ॥ अङ्गुशब्दोऽङ्गवाची । अङ्गौ पाणौ तिष्ठति । 'सुपि-' (३।२।४) इति कः । 'अम्बाम्ब-' (८।३।९७) इति षत्वम् ॥ (१) ॥*॥ तर्जन्युक्तापि यथासंख्याय पुनरुक्ता ॥ (१) ॥*॥ मध्यभवा । 'मध्यान्मः' (४।३।८) । **'मध्यमो** मध्यजे स्वरे । देहमध्ये मध्यदेशे **मध्यमा** कर्णिकाङ्गुलिः । राका रजस्वला चापि' इति हैमः ॥ (१) ॥*॥ न नाम ग्रहणयोग्यमस्याः ब्रह्मणोऽनया शिरश्छेदनात् । अत एवास्यां पवित्रीक्रियते ॥ (१) ॥*॥ अत्यल्पा । 'अतिशायने-' (५।३।५५) इतीष्ठन् । 'युवाल्पयोः कन्-' (५।३।६४) **'कनिष्ठो**ऽल्पेऽनुजे यूनि **कनिष्ठा** त्वन्तिमाङ्गुलौ' इति हैमः ॥ (१) ॥*॥ क्रमेण एकैकम् **'अङ्गुलीनाम्'** ॥

**पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।**

**पुविति** ॥ पुनर्भवति । अच् (३।१।१३४) ॥*॥ **'पुनर्नवः'** इति वा पाठः ॥ (१) ॥*॥ करे रोहति । 'इगुपध-' (३।१।१३५) इति कः ॥ (२) ॥*॥ न खमस्य । 'न भ्राट्-' (६।३।७५) इति साधुः । **'नखी** स्त्रीपुंसयोः शुक्तौ नखरे पुंनपुंसकम्' (इति मेदिनी) ॥ (३) ॥*॥ न खनति, खन्यते वा । 'डडरेकवकाः' (वा० ३।३।१२५) । नखं राति वा । 'नखरं त्रिषु' इत्यमरमाला ॥ (४) ॥*॥ चत्वारि **'नखस्य'** ॥

**प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ॥ ८३ ॥**

**प्रेति** ॥ प्रदिश्यते । 'दिश अतिसर्जने' ( तु० उ० अ० ) । 'हलश्च' (३।३।१२१) इति घञ् । 'उपसर्गस्य-' (६।३।१२२) इति वा दीर्घः । **'प्रदेशो** देशमात्रे स्यात्तर्जन्यङ्गुष्ठसंमिते' (इति मेदिनी) ॥ (१) ॥*॥ तलत्यत्र । 'तल प्रतिष्ठायाम्' ( चु० प० से० ) । 'हलश्च' (३।३।१२१) इति घञ् । **'तालः** करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते । गीतकालक्रियामाने करस्फाले द्रुमान्तरे' (इति मेदिनी) ॥ (१) ॥*॥ गोः कर्ण इव । **'गोकर्णो**ऽश्वतरे सर्पे सारङ्गे प्रमथान्तरे । अङ्गुष्ठानामिकोन्माने **गोकर्णी** मूर्विकौषधौ' (इति विश्वः) ॥ (१) ॥*॥ **'तर्जन्यादिसहिते विस्तृतेऽङ्गुष्ठे'** क्रमेणैकैकम् ॥

**अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः ।**

**पेति** ॥ कनिष्ठया सह विततेऽङ्गुष्ठे । वितस्यति । वितस्यते वा । 'तसु उपक्षये' ( दि० प० से० ) । 'वौ तसेः' (उ० ४।१८२) इति तिः ॥—बाहुलकात्तिः—इति मुकुट एतत्सूत्रा-

१—करशब्दोपादानम् 'अस्य' इत्यनेन परामर्शार्थम् ॥

१—'द्विवचन-' (५।३।५७) इतीष्ठन्—इति पाठ आसीत् । तथाप्यनेनेष्ठनो विधानाभावादुपेक्षितः ॥

स्मरणमूलकः ॥ (१) ॥*॥ द्वादश अङ्गुलयः प्रमाणमस्य। 'तद्धितार्थोत्तर–' (२।१।५१) इति द्विगुः। 'द्विगोर्नित्यम्' (वा० ५।२।३७) इति मात्रचो लुक्। 'तत्पुरुषस्याङ्गुलेः' (५।४।८६) इत्यच्॥ (२) ॥*॥ द्वे **'वितस्तेः'** ॥

**पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ॥ ८४ ॥**

**पेति** ॥ चपति। 'चप सान्त्वने' ( भ्वा० प० से० )। अच् (३।१।१३४)। एटति। 'इट गतौ' (भ्वा० प० से०)। 'इगुपध–' (३।१।१३५) इति कः। चपश्चासाविटश्च ॥*॥ 'चर्पटः' अप्यत्र। **'चर्पटः** स्फारविपुले चपेटे पर्पटेऽपि च' (इति विश्वमेदिन्यौ) ॥ (१) ॥*॥ प्रतलति 'तल प्रतिष्ठायाम्' ( चु० प० से० )। अच् (३।१।१३४)। **'प्रतलं** पातालभेदे तताङ्गुलिकरे पुमान्' (इति मेदिनी) ॥*॥ 'तलम्' अप्यत्र। **'तलं** स्वरूपाधरयोः खड्गमुष्टिचपेटयोः' इति विश्वः। (**'तल**-श्चपेटे तालद्रौ' इति हैमतः। '–पुंसि तालमहीरुहे। चपेटे च' इति मेदिनीतश्च पुंस्त्वयम्) ॥ (२) ॥*॥ प्रसृतो हस्तः। 'प्रादयो गता–' (वा० २।२।१८) इति समासः ॥ (३) ॥*॥ त्रीणि **'विस्तृताङ्गुलौ पाणौ'** ॥

**द्वौ संहतौ सिंहतलप्रतलौ वामदक्षिणौ।**

**द्वाविति** ॥ सिंहस्येव तलमत्र ॥*॥ **'संहतलः'** इति पाठान्तरम्। संहतं संघट्टं लाति। 'आतोऽनुप–' (३।२।३) इति कः ॥ (१) ॥*॥ प्रतते प्रश्लिष्टे वा तले अत्र ॥ (२) ॥*॥ द्वे **'वामदक्षिणयोः पाण्योर्मिलितयोर्विस्तृताङ्गुल्योः'** ॥

**पाणिर्निकुब्जः प्रसृतिः**

**पेति** ॥ नितरां कुब्जा प्रकृतिरस्य। प्रसरत्यनेन। क्तिन् (३।३।९४) ॥*॥ 'प्रसृतः' इति वा पाठः। तत्र प्रकृष्टं सृतमस्य। **'प्रसृतः** सप्रसारे स्याद्विनीते वेगिते त्रिषु। अर्धाञ्जलौ तु पुंलिङ्गो जङ्घायां **प्रसृता** मता' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'प्रसृतेः'** ॥

**तौ युतावञ्जलिः पुमान् ॥ ८५ ॥**

**ताविति** ॥ तौ प्रसृतौ मिलितौ। अज्यतेऽनेन। 'अञ्जू व्यक्त्यादौ' ( रु० प० से० )। 'ऋतन्यञ्जि–' (उ० ४।२) इत्यलिः। **'अञ्जलिस्तु** पुमान् हस्तसंपुटे कुडवेऽपि च' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'अञ्जलेः'** ॥

**प्रकोष्ठे विस्तृतकरे हस्तः**

**प्रेति** ॥ बाहौ प्रसारितपाणौ हस्तः। हसति, हस्यतेऽनेन वा। 'हसे हसने' ( भ्वा० प० से० )। 'हसिमृग्–' (उ० ३। ८६) इति तन्। **'हस्तः** करे करिकरे सप्रकोष्ठकरेऽपि च। ऋक्षे केशात्परो व्राते' (इति मेदिनी) ॥ (१) ॥*॥ विस्तृतः करो यस्य तस्मिन्॥ एकम् **'विस्तृतकरस्य'** ॥

**मुष्ट्या तु बद्धया।**

**स रत्निः स्यात्**

**म्विति** ॥ स हस्तः मुष्यतेऽनया 'मुष स्तेये' ( क्र्या० प० से० )। 'स्त्रियां क्तिन्' (३।३।९४)। यद्वा मुष्णाति। क्तिच् (३।३।१७४)। ('संपीडिताङ्गुलि**र्मुष्टिः**' इति हलायुधः) (**'मुष्टि**र्द्वयोः फले। बद्धपाणौ त्सरौ' इति मेदिनी)। बद्धया मुष्ट्योपलक्षितः ॥*॥ ऋच्छति। अर्यतेऽनेन वा। 'ऋ गतौ' ( भ्वा० प० अ० )। 'ऋतनि' (उ० ४।२) इति कत्निच्। **'रत्न्यरत्नी** स्त्रियौ बद्धमुष्टिततताङ्गुली' इत्यमरमाला ॥ (१) ॥*॥ एकम् **'बद्धमुष्टिहस्तस्य'** ॥

**अरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥ ८६ ॥**

**अरेति** ॥ रत्निभिन्नः। नञ्समासः। **'नारत्निः** कफोणौ हस्ते सप्रकोष्ठे चाङ्गुलौ' इति रुद्रः। **'अरत्नि**र्ना सप्रकोष्ठतताङ्गुलिकरेऽपि च। कफोणावपि' (इति मेदिनी) ॥ (१) ॥*॥ निर्गता कनिष्ठा यस्मात्तेन मुष्टिनोपलक्षितः ॥*॥ एकम् **'अरत्निहस्तस्य'** ॥

**व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्।**

**व्येति** ॥ विशेषेण अम्यतेऽनेन। 'अम गतौ' ( भ्वा० प० से० )। 'हलश्च' (३।३।१२१) इति घञ्। मुकुटस्तु—व्यामीयतेऽनेन। माङो मूलविभुजादित्वात् (वा० ३।२।५) कः—इति व्याख्यत्। तन्न। 'कृत्कर्तरि' (३।४।६७) इत्यस्य प्रवृत्त्या करणे कस्यासंभवात्।—व्यामीयते रज्ज्वाद्यनेन—इति स्वाम्यप्येवम् ॥ (१) ॥*॥ स्वे स्वे पार्श्वे प्रसारितयोर्बाह्वोर्मध्यम् ॥*॥ एकम् **'व्यामस्य'** ॥

**ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु ॥ ८७ ॥**

**ऊर्ध्वेति** ॥ दोषौ च पाणी च। तत्। ऊर्ध्वं विस्तृतं दोःपाणि येन सः। तादृशो ना। तस्य यन्मानं परिमाणम्। तेन पुंसा वा यन्मीयते तत्र ॥*॥ पुरुषः प्रमाणमस्य। 'पुरुषहस्तिभ्यामण् च' (५।२।३८)। पौरुषो नदः, पौरुषी नदी, पौरुषं सरः। **'पौरुषं** पुरुषस्य स्याद्भावे कर्मणि तेजसि। ऊर्ध्वविस्तृतदोःपाणिनृमाने त्वभिधेयवत्' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'पुरुषप्रमाणस्य'** ॥

**कण्ठो गलः**

**केति** ॥ कणति। 'कण शब्दे' ( भ्वा० प० से० )। 'कणेष्ठः' (उ० १।१०३)। कण्ठते। 'कठि शोके' ( भ्वा० आ० से० )। अच् (३।१।१३४)। 'समीपगलशब्देषु त्रिषु **कण्ठं** विदुर्बुधाः' इति शाश्वतः। **'कण्ठो** गले संनिधाने ध्वनौ

१—मुकुटस्तु—'संहतलः प्रतलौ' इति सविसर्गपाठमाश्रित्य द्वौ वामदक्षिणौ प्रतलौ मिलितौ संहतल उच्यते। प्रतलद्वयं मिलितं **संहतलः** स्यादित्यर्थः—इत्युक्त्वा एकम्' इत्येवोक्तवान् ॥

१—बाहुशब्दस्य प्रकोष्ठवाचकत्वाभावः। 'चतुर्विंशत्यङ्गुलो हस्तः' इति सकलसिद्धान्तभङ्गश्च ॥

मदनपादपे' इति विश्वः ॥ (१) ॥*॥ गिलति । 'गॄ निगरणे' ( तु० प० से० ) । अच् (३।१।१३४) । 'अचि विभाषा' (८।२।२१) इति वा लः । गीर्यतेऽनेन । 'पुंसि–' (३।३।११८) इति घः । यद्वा गलति । 'गल अदने' ( भ्वा० प० से० ) । अच् (३।१।१३४) । **'गलः** कण्ठे सर्जरसे' ( इति मेदिनी ) ॥ (२) ॥*॥ द्वे **'ग्रीवाग्रभागस्य'** ॥

**अथ ग्रीवायां शिरोधिः कंधरेत्यपि ।**

**अथेति** ॥ गीर्यतेऽनया । 'शेवयह्वजिह्वाग्रीवा–' (१।१५४) इति साधुः । **'ग्रीवे** शिरोधितच्छिरे' ( इति हैमः )॥ (१) ॥*॥ शिरो धीयतेऽस्याम् । 'कर्मण्यधिकरणे च' (३।३।९३) इति किः ॥ (२) ॥*॥ कं शिरो धारयति । 'संज्ञायां भृतॄवृजि–' (३।२।४६) इति खच् । 'खचि ह्रस्वः' (६।४।९४) । यद्वा धरति । 'धृञ् धारणे' ( भ्वा० उ० अ० ) । अच् । कं शिरसो धरा कंधरा । (३।१।१३४) **'कंधरो** वारिवाहे स्याद्ग्रीवायां **कंधरा** मता' ( इति विश्वः ) ॥ (३) ॥*॥ त्रीणि **'कंधरायाः'** ॥

**कम्बुग्रीवा त्रिरेखा सा**

**केति** ॥ कम्बुः शङ्ख इव ग्रीवा ॥ (१) ॥*॥ तिस्रो रेखा यस्याम् ॥*॥ एकम् **'शङ्खाकारग्रीवायाः'** ॥

**अवटुर्घाटा कृकाटिका ॥ ८८ ॥**

**अवेति** ॥ अवटलति । 'टल वैक्लव्ये' ( भ्वा० प० से० ) । अव टीकते । 'टीकृ गतौ' ( भ्वा० आ० से० ) । मितद्र्वादित्वात् ( वा० ३।२।१८० ) डुः । यद्वा न वटति । 'वट वेष्टने' ( भ्वा० प० से० ) 'वट भाषणे' ( चु० उ० से० ) बाहुलकादुः । 'अवटुः पुरुषे कृकाटिका घाटा' इति बोपालितः ॥ (१) ॥*॥ घाटयति घाट्यते, वा । 'घट संघाते' चुरादिः । अच् (३।१।१३४) घञ् (३।३।१९) वा ॥ (२) ॥*॥ कृकं कण्ठमटति । 'अट गतौ' ( भ्वा० प० से० ) । इन् ( उ० ४।११८ ) । स्वार्थे कन् ( ज्ञापि० ५।४।५ ) । ण्वुल् तु परत्वादणा बाधान्न प्राप्नोति ॥ (३) ॥*॥ त्रीणि **'ग्रीवायामुन्नतभागस्य'** **'घाटी'** इति ख्यातस्य ।—ग्रीवापश्चाद्भागस्य–इति स्वामिमुकुटौ ॥

**वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।**

**वेति** ॥ उच्यतेऽनेन । 'वच परिभाषणे' ( अ० प० अ० )। ब्रूञो वचिः (२।४।५३) वा । 'गुधृवीपचिवचि–' ( उ० ४।१६७ ) इति त्रः । **'वक्त्र**मास्ये छन्दसि च' इति हेमचन्द्रः ॥ (१) ॥*॥ आस्यन्दते अम्लादिना प्रस्रवति । आस्यन्द्यते वाद्यादिना द्रवीक्रियते । 'स्यन्दू प्रस्रवणे' ( भ्वा० आ० से० ) । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) । इति डः । यद्वा अस्यन्ते वर्णा येन । अस्यते वास्मिन् ग्रासः । 'असु क्षेपणे' ( दि० प० से० ) 'कृत्यल्युटः–' (३।३।११३) इति ण्यत् । 'मुखं मुखान्तरालं च द्वयमा**स्यमितीरितम्'** इति शाश्वतः । **'आस्यं** मुखे च तन्मध्ये तद्भवे च स्त्रियां स्थितौ' ( इति मेदिनी ) ॥ (२) ॥*॥ वदन्त्यनेन 'वद व्यक्तायां वाचि' ( भ्वा० प० से० ) । करणे ल्युट् (३।३।११७) ॥ (३) ॥*॥ तुण्डति । 'तुडि तोडने' ( भ्वा० प० से० ) । अच् (३।१।१३४) ॥ (४) ॥*॥ आनन्त्यनेन । 'अन प्राणने' ( अ० प० से० )। ल्युट् (३।३।११७) ॥ (५) ॥*॥ लप्यतेऽनेन । 'लप व्यक्तायां वाचि' ( भ्वा० प० से० ) ल्युट् (३।३।११७) ॥ (६) ॥*॥ खन्यते । अनेन वा । 'खनु अवदारणे' ( भ्वा० उ० से० ) । 'डित् खनेर्मुट् चोदात्तः' ( उ० ५।२० ) इत्यच् स च डित् धातोर्मुडागमः । 'प्राक् खनो मुडुदात्तश्च ततोऽच्च प्रत्ययो भवेत् । प्रजासृजा यतः खातं तस्मादाहुर्मुखं बुधाः' इति निरुक्तम् । **'मुख**मुपाये प्रारम्भे श्रेष्ठे निःसरणास्ययोः' इति हैमः ॥ (७) ॥*॥ सप्त **'मुखबिलस्य'** । तदुपलक्षिते समुदाये तूपचरात् ॥

**क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ८९**

**क्लीबे इति** ॥ घ्रायतेऽनेन । 'घ्रा गन्धोपादाने' ( भ्वा० प० अ० ) । ल्युट् (३।३।११७) **'घ्राणं** क्लीबं नासिकायां घ्राते स्याद्वाच्यलिङ्गकम्' ( इति मेदिनी ) ॥ (१) ॥*॥ वहति 'वह प्रापणे' ( भ्वा० उ० अ० ) । अच् (३।१।१३४) । गन्धस्य वहा । 'स्याद्ग**न्धवहा** नासायां पुंलिङ्गे मातरिश्वनि' ( इति मेदिनी ) ॥ (२) ॥*॥ घोणति । अनया वा । 'घुण भ्रमणे' ( भ्वा०प०से० ) । अच् (३।१।१३४) । 'हलश्च' (३।३।१२१) इति घञ् वा ॥ (३) ॥*॥ नासते । अनया वा । 'णासृ शब्दे' ( भ्वा० आ० से० ) । प्राग्वत् । **'नासा** तु नासिकायां च द्वारोर्ध्वदारुणि स्त्रियाम्' ( इति मेदिनी ) ॥ (४) ॥*॥ नासेर्ण्वुल् (३।१।१३३) । 'घ्राणं गन्धवहा नासा **नसा नस्या** च नासिका' इति साहसाङ्कः । **'कुल्या** गन्धवहा घोणा घ्राणं नासा च नासिका' इति काल्यः ॥ (५) ॥*॥ पञ्च **'नासिकायाः'** ॥

**ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ।**

**ओष्ठेति** ॥ उष्यते उष्णाहारेण । 'उष दाहे' ( भ्वा० प० से० ) । 'उषिकुषि–' ( उ० २।४ ) इति थन् ॥ (१) ॥*॥ न ध्रियते । 'धृङ् अनवस्थाने' ( तु० आ० अ० ) । 'पुंसि–' (३।३।११८) इति घः । नञ् समासः (२।२।६) । **'अधरस्तु** पुमानोष्ठे, हीनेऽनूर्ध्वे च वाच्यवत्' ( इति मेदिनी ) ॥ (२) ॥*॥ 'द्वन्द्वश्च प्राणि–' इत्येकत्वं तु न भवति । अनित्यत्वात् । 'ओष्ठाभ्यां युतावधरौ' इति शाकपार्थिवादिः ( वा० २।१।७८ ) वा ॥*॥ रदनाः छाद्यन्तेऽनेन 'छद संवरणे' चुरादिः । 'पुंसि–' (३।३।११८) इति घः । 'छादेर्घे–' (६।४।९६) इति ह्रस्वः ॥ (३) ॥*॥ दशनानां वाससी इव । आवरकत्वात् ॥ (४) ॥*॥ चत्वारि **'उत्तराधरोष्ठ**[१]**मात्रस्य'** ॥

१—'मां विवक्षुरसि किं चलदोष्ठः' इति योगात्—इति मुकुटः ॥

**अधस्ताच्चिबुकम्**

**अधेति** ॥ चीवति, चीव्यते, वा । 'चीवृ आदानसंवरणयोः' ( भ्वा० उ० से० ) । मृगय्वादिः ( उ० १।३७ ) । स्वार्थे कन् ( ज्ञापि० ५।४।५ ) । चिनोति शोभां वा । प्राग्वत् ॥ (१) ॥*॥ 'अधस्तादधरोष्ठस्य **चिबुः** स्याच्चिबुकं तथा' इति निगमः ॥ (१) ॥*॥ एकम् **'ओष्ठाधोभागस्य'** ॥

**गण्डौ कपोलौ**

**गेति** ॥ गण्डति । 'गडि वदनैकदेशे' ( भ्वा० प० से० ) अच् (३।१।१३४) । **'गण्डः** स्यात्पुंसि खड्गिनि । ग्रहयोगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च । चिह्नवीरकपोलेषु हयभूषणबुद्बुदे' ( इति मेदिनी ) ॥ (१) ॥*॥ कम्पते । 'कपि चलने' ( भ्वा० आ० से० ) । 'कपिगडिगण्डि–' ( उ० १।६६ ) इत्योलच् । 'कपि' इति निर्देशान्नलोपः । कं सुखं पोलति । 'पुल महत्त्वे' ( भ्वा० प० से० ) । 'कर्मण्यण्' ( वा० ३।२।१ ) ॥ (२) ॥*॥ द्वे **'कपोलस्य'** ॥

**तत्परो हनुः ॥ ९० ॥**

**तदिति** ॥ ताभ्यां कपोलाभ्यां परः । हन्ति । 'शस्वृस्निहि–' ( उ० १।१० ) इत्युः । **'हनुर्**हट्टविलासिन्यां मृत्यावस्त्रे गदे स्त्रियाम् । द्वयोः कपोलावयवे' ( इति मेदिनी ) ॥ (१) ॥*॥ एकं **'कपोलाधोभागस्य'** ॥

**रदना दशना दन्ता रदाः**

**रेति** ॥ रद्यतेऽनेन । 'रद विलेखने' ( भ्वा० प० से० ) । 'करणा–' (३।३।११७) इति ल्युट् ॥ (१) ॥*॥ दश्यतेऽनेन । करणे ल्युट् (३।३।११७) । '–दद्दश–' (३।१।२४) इति निर्देशात्क्वचिदङ्क्तित्यपि लोपः । यद्वा कर्तरि ल्युट् (३।३।११३) ॥ (२) ॥*॥ दाम्यति । 'दमु उपशमे' ( दि० प० से० ) । अन्तर्भावितण्यर्थाद्बाहुलकात्तन् । **'दन्तो**ऽद्रिकटके कुञ्जे दशनेऽथौषधौ स्त्रियाम्' ( इति मेदिनी ) ॥ (३) ॥*॥ रदति अच् (३।१।१३४) ॥ (४) ॥*॥ चत्वारि **'दन्तस्य'** ॥

**तालु तु काकुदम् ।**

**तेति** ॥ तरन्त्यनेन । 'तॄ प्लवनतरणयोः' (भ्वा०प०से०) । 'त्रो रश्च लः' (उ० १।५) इति ञुण् । तालयति । 'तल प्रतिष्ठायाम्' चुरादिः । मृगय्वादिः ( उ० १।३७ ) वा ॥ (१) ॥*॥ काकुर्जिह्वा उद्यतेऽस्मिन् । अनेकार्थत्वाद्वदिरुत्क्षेपणे वर्तते । घञर्थे कः ( वा० ३।३।३८ ) । पृषोदरादिः (६।३।१०९) । ईषत् कवते । 'कुङ् शब्दे' । ( भ्वा० आ० अ० ) अब्दादित्वात् ( उ० ४।९८ ) साधुर्वा । यद्वा 'निश्चेष्टं ककुदं शिरः' । ककुदे भवम् । 'तत्र भवः' (४।३।५३) इत्यण् ॥ (२) ॥*॥ द्वे **'तालुनः'** ॥

**रसज्ञा रसना जिह्वा**

**रेति** ॥ रसं जानाति । 'ज्ञा अवबोधने' ( क्र्या० प० अ० ) । 'आतोऽनुप–' (३।२।३) इति कः ॥ (१) ॥*॥ रसयति । 'रस आस्वादने' ( चु० उ० से० ) । नन्द्यादित्वात् (३।१।१३४) ल्युः । यद्वा रसयन्त्यनया । 'ण्यासश्रन्थो युच्' (३।३।१०७) । रसति । 'रस शब्दे' ( भ्वा० प० से० ) । 'बहुलमन्यत्रापि' ( उ० २।७८ ) इति युच् वा । **'रसनं** स्वने ध्वनौ । जिह्वायां तु न पुंसि स्यात्' ( इति मेदिनी ) । 'ताल्व्या अपि दन्त्याश्च' इत्यादौ 'जिह्वायां **रशना** तथा' इत्युक्तेर्दन्त्यतालव्यमध्योऽयम् । **'रसनं** तु ध्वनौ स्वादे रसज्ञारास्नयोः स्त्रियाम्' इति रभसः ।—रसेः सौत्रात् 'रसिरुचिरुवृञो युच्'—इति मुकुटोऽपाणिनीयः ॥ (२) ॥*॥ लेढि । लिहन्त्यनया वा । 'लिह आस्वादने' ( अ० उ० अ० ) । 'शेवयह्वजिह्वा–' ( उ० १।१५४ ) इति साधुः ।—'लिहेः पूर्वजिह्वग्रीवा' इति वन्प्रत्ययः—इति मुकुटोऽपाणिनीयः ॥ (३) ॥*॥ त्रीणि **'जिह्वायाः'** ॥

**प्रान्तावोष्ठस्य सृक्कणी ॥ ९१ ॥**

**प्रेति** ॥ सृजति लालादि । 'सृज विसर्गे' ( उ० प० अ० ), बाहुलकात्क्वनिन् । 'प्रान्तावोष्ठस्य सृक्कणी' इति क्लीबकाण्डेऽमरदत्तः ॥*॥ 'कवयुक्तम्' ( सृक्कणी ) इत्यन्ये ॥*॥ **(सृक्कणी)** ङ्यन्ता—इत्येके ॥*॥—अदन्तं सृक्कम्—इत्यपरे ॥*॥ 'सृक्कि' शब्द इकारान्तः क्लीबम् । तत्र बाहुलकात्किः ॥ (१) ॥*॥ एकम् **'ओष्ठप्रान्तयोः'** ॥

**ललाटमलिकं गोधिः**

**लेति** ॥ ललनम् । 'लल ईप्सायाम्' ( चु० आ० से० ) । 'लड विलासे' ( भ्वा० प० से० ) वा । डलयोरेकत्वम् । ललं विलासमीप्सां वा अटति । 'अट गतौ' ( भ्वा० प० से० ) । ललति । उक्तधातुभ्यां बाहुलकादाटच् ॥ (१) ॥*॥ अलति । अल्यते, वा । 'अल भूषणादौ' ( भ्वा० प० से० ) । 'अलीकादयश्च' इतीकन् । ( उ० ४।२७ ) । **'अलीक**महितेऽपि' इति कात्यः ॥*॥ बाहुलकादिकन्नपि । **'अलिकं** ह्रस्वदीर्घम-

१—औणादिकः क्युन् युक्तः—इति भाष्यकैयटयोः ( ६।४।२६ ) सिद्धान्तः ॥

१—'महासृक्कायशोभितो नृसिंहनखाग्रवत्' इति लताश्लेषात् कद्वयम् ॥ 'स्मितस्य संभावय सृक्कणा कणान्' इति श्रीहर्षप्रयोगात् वकारयुक्तं च । 'न संयोगाद्वमन्तात्' (५।४।१३७) इत्यल्लोपो न ॥ 'स सृक्कणीप्रान्तमसृक्प्रदिग्धं प्रलेलिहानो हरिणारिरुच्चैः' इति पाणिनेर्ङीबन्ता च ॥ 'सृक्के द्वे चैव विज्ञेये चत्वारिंशच्च वक्त्रजाः' इति वचनाददन्तं सृक्कमपि ॥ 'सृक्कणि' इतीदन्तमपि 'क्लीबे वारिशब्दवत्' इत्युक्तेः ॥ 'सृक्कि'शब्दो ह्रस्वेकारान्तोऽपि क्लीबः—इत्यपरे । 'सक्थ्यक्षिदधिसृक्कि तथा वारि स्यात्' इत्यरुणः—इति मुकुटः ॥ २—आधुनिकपुस्तकेषु तु 'अनि' इति पाठ उपलभ्यते ॥ ३—अतएव हैमनाममालायाम् 'भाले गोध्यलिकालीकललाटानि' इत्युपलभ्यते ॥

ध्यम्' इति राजदेवः ॥ (२) ॥*॥ गुध्यते । 'गुध परिवेष्टने' (दि० प० से०)। इन् (उ० ४।११८)। गावौ नेत्रे धीयते पुंस्त्ययम् । 'कर्मण्यधिकरणे च' (३।३।९३) इति किर्वा । पुंस्त्ययम् । 'गोधिभालौ महाशङ्खः' इति त्रिकाण्डशेषात् ॥ (३) ॥*॥ त्रीणि 'भालस्य' ॥

**ऊर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ ।**

**ऊर्ध्वे इति** ॥ भ्रमति । 'भ्रमु चलने' (भ्वा० प० से०)। 'भ्रमेर्डूः' (उ० २।६८) । यद्वा भ्राम्यति । 'भ्रमु अनवस्थाने' ( दि० प० से० ) । क्विप् (३।२।१७८)। 'ऊङ् च गमादीनाम्' इति 'गमः क्वौ' (६।४।४०) इत्यत्र वार्तिकेन मलोप ऊङ् चादेशः ॥ (१) ॥*॥ एकं 'नेत्रोपरिभागस्थरोमराजेः' ॥

**कूर्चमस्त्री भ्रुवोर्मध्यं**

**कुेति** ॥ कुरति । कूर्यते, वा । बाहुलकाच्चट् । 'कूर्चमस्त्री भ्रुवोर्मध्ये कत्थनश्मश्रुकैतवे' (इति मेदिनी) ॥ (१) ॥*॥ एकं 'नासोपरिभ्रूद्वयमध्यस्य' ॥

**तारकाक्ष्णः कनीनिका ॥ ९२ ॥**

**तेति** ॥ तारयति । 'तॄ प्लवनादौ' ( भ्वा० प० से० )। 'ण्वुल्' (३।१।१३३)। 'तारका ज्योतिषि' (वा० ७।३।४५) इतीत्वाभावः । 'तारको दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि । कनीनिकायामृक्षे च न पुमांस्तारतरि त्रिषु' (इति मेदिनी) ॥ (१) ॥*॥ कनति । 'कनी दीप्तौ' ( भ्वा० प० से० ) । बाहुलकादीनः । स्वार्थे कन् (ज्ञापि० ५।४।५) । टाप् (४।१।४)। इत्वम् (७।३।४४)। 'कनीनिका तारकेऽक्ष्णः स्यात्कनिष्ठाङ्गुलावपि' (इति मेदिनी) ॥ (२) ॥*॥ 'अक्ष्णः' इति खेचरीव्यावृत्त्यर्थम् ॥*॥ द्वे 'नेत्रकनीनिकायाः' ॥

**लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।**
**दृग्दृष्टी च**

**लविति** ॥ लोच्यतेऽनेन । 'लोचृ दर्शने' ( भ्वा० आ० से० ) । ल्युट् (३।३।११७) ॥ (१) ॥*॥ नीयतेऽनेन । 'णीञ् प्रापणे' ( भ्वा० उ० से० ) । ल्युट् (३।३।११७) ॥ (२) ॥*॥ 'दाम्नी' (३।२।१८२) इति पक्षे ष्ट्रन् । 'नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च । रथे चक्षुषि नद्यां तु नेत्री नेतरि वाच्यवत्' (इति मेदिनी) ॥ (३) ॥*॥ ईक्ष्यतेऽनेन । 'ईक्ष दर्शने' ( भ्वा० आ० से० ) । ल्युट् (३।३।११७) 'ईक्षणं दर्शने दृशि' (इति मेदिनी) ॥ (४) ॥*॥ चष्टे । चक्षतेऽनेन, वा । 'चक्षिङ्' ( अ० आ० अ० )। 'चक्षेः शिच्च' (उ० ३।११९) इत्युसिः । शित्त्वादनार्धधातुकत्वात् ख्याञ् न ॥—बाहुलकात् ख्याञ् न—इति मुकुटस्त्वपाणिनीयः ॥ (५) ॥*॥ अश्नुते अनेन वा । 'अशू व्याप्तौ' ( स्वा० आ० से० )। 'अशेर्नित्' (उ० ३।१५६) इति क्सिः ।—'अशेः षिच्—' इति मुकुटोऽपाणिनीयः । यद्वाक्षति । 'अक्षू व्याप्तौ' ( भ्वा० प० से० ) । इन् (उ० ४।११८) ॥ (६) ॥*॥ पश्यति । 'दृशिर् प्रेक्षणे' ( भ्वा० प० अ० ) । क्विप् (३।२।७८) । यद्वा दृश्यतेऽनया । संपदादित्वात् (वा० ३।३।१०८) क्विप् । 'क्विन्प्रत्ययस्य' (८।२।६२) इति बहुव्रीह्याश्रयणात् क्विप्यपि कुत्वम् ॥ (७) ॥*॥ क्तिन् (३।३।९४)। 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इति हैमः ॥ (८) ॥*॥ अष्ट 'नेत्रस्य' ॥

**अस्रु नेत्राम्बु रोदनं चास्रमश्रु च ॥ ९३ ॥**

**अस्रिवति** ॥ अस्यति । अश्नुते वा कण्ठम् । 'अस्त्वादित्वात्' (उ० ५।२९) इति रुक्पक्षे । 'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' (इति मेदिनी) ॥*॥ 'जगरे चाश्रमश्रुणि' इत्यूष्मभेदात्तालव्यप्रकरणोक्तेश्च तालव्यशमपि ॥ (१) ॥*॥ नेत्रयोरम्बु ॥ (२) ॥*॥ रुद्यते । 'रुदिर् अश्रुविमोचने' ( अ० प० से० ) । कर्मणि ल्युट् (३।३।११३) बाहुलकात् । 'रोदनं क्रन्दनेऽस्रेऽपि दुरालम्भौषधौ स्त्रियाम्' इति मेदिनी ॥ (३) ॥*॥ (४) ॥*॥ (५) ॥*॥ पञ्च 'नेत्रोदकस्य' ॥

**अपाङ्गौ नेत्रयोरन्तौ**

**अपेति** ॥ अपाङ्गति 'अगि गतौ' ( भ्वा० प० से० ) । अच् (३।१।१३४) अपकृष्टोऽङ्गाद्वा । अपकृष्टान्यङ्गान्यस्माद्वा । 'अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च' इति विश्वः ॥ (१) ॥*॥ 'बाह्यौ' इति शेषः ॥*॥ एकम् 'नेत्रप्रान्तयोः' ॥

**कटाक्षोऽपाङ्गदर्शने ।**

**केति** ॥ कटावतिशयितावक्षिणी यत्र । 'बहुव्रीहौ सक्थ्यक्ष्णोः—' (५।४।११३) इति षच् । कटं गण्डमक्षति वा । 'अक्षू व्याप्तौ' ( भ्वा० प० से० ) । 'कर्मण्यण्' (३।२।१) । 'कटाक्षकाक्षौ' इति रभसात् काक्षोऽपि ॥ (१) ॥*॥ अपाङ्गेन दर्शनम् ॥ (२) ॥*॥ द्वे 'कटाक्षस्य' ॥

**कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ॥ ९४ ॥**

**केति** ॥ कीर्यते शब्दग्रहणाय क्षिप्यते । यद्वा कीर्यते शब्दोऽस्मिन् । किरति शरीरे मुखं वा । 'कॄ विक्षेपे' (तु० प० से० ) । 'कॄवृजॄसि—' (उ० ३।१०) इति नः । यद्वा कर्णयति । 'कर्ण भेदने' (चु० उ० से०) अदन्तः । अच् (३।३।१३४)। 'कर्णः पृथासुते ज्येष्ठे सुवर्णालौ श्रुतावपि' (इति मेदिनी)। यत्तु—करोति शब्दज्ञानम्—इति मुकुटः । तन्न । ह्रस्वान्नप्रत्ययाविधानात् ॥ (१) ॥*॥ शब्दो गृह्यतेऽनेन । 'ग्रहवृदृ—' (३।३।५८) इत्यप् । संज्ञायां 'हलश्च' (३।३।१२१) इति घञ् विधीयते घापवादत्वात् । योगार्थमात्रे तु स न ॥ (२) ॥*॥ श्रूयतेऽनेन । 'श्रु श्रवणे' ( भ्वा० प० अ० ) ।

१—'प्रावर्तयन्नदीमस्त्रैर्द्विषां तद्योषितां च सः' इति माघे रक्तार्थेन सह श्लेषादस्रं दन्त्यसम्'—इति मुकुटः ॥

श्रुन् (उ० ४।१५९) ॥ (३) ॥*॥ श्रूयतेऽनया । क्तिन् (३।३।९४) । '**श्रुतिः** श्रोत्रे च तत्कर्मण्याम्नायवार्तयोः स्त्रियाम्' (इति मेदिनी) ॥ (४) ॥*॥ ल्युट् वा करणे (३।३।११७) । '**श्रवणं** श्रुतौ च कर्णे नक्षत्रे न नपुंसकम्' (इति मेदिनी) ॥ (५) ॥*॥ 'सर्वधातुभ्योऽसुन्' (उ० ४।१८९) ॥ (६) ॥*॥ षट् '**कर्णस्य**' ॥

**उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ।**

**उत्तेति** ॥ उत्तमं च तदङ्गं च 'सन्महत्–' (२।१।६१) इति समासः ॥ (१) ॥*॥ श्रीयते उष्णीषादिना । 'श्रयतेः स्वाङ्गे शिरः किच्च' (उ० ४।१९४) इत्यसुन् । '**शिरः** प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च' (इति मेदिनी) ॥*॥ 'शिरोवाची **शिरो**ऽदन्तो, रजोवाची **रजस्तथा**' ॥ (२) ॥*॥ 'कुमारशीर्षयोः' (३।२।५१) इति ज्ञापकाच्छिरःशब्दस्य शीर्षादेशः ॥ (३) ॥*॥ मुह्यत्यस्मिन्नाहते । 'मुह वैचित्त्ये' (दि० प० से० ) । 'श्वन्नुक्षन्–' (उ० १।१५९) इति साधुः ॥ (४) ॥*॥ मस्यते स्म । 'मसी परणामे परिमाणे वा' (दि० प० से० ) । क्तः (३।२।१०२) । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (५) ॥*॥ पञ्च '**शिरसः**' ॥

**चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः ॥९५॥**

**चीति** ॥ 'चि' इति अव्यक्तं कुरति । 'कुर शब्दे' (तु० प० से० ) 'इगुपध–' (३।१।१३५) इति कः ॥*॥ 'कुन्तला **मूर्धजास्त्वस्त्राश्चिकुराश्चिकुराः** कचाः' इति दुर्गः ॥ (१) ॥*॥ कुन्तं कुन्ताग्राकारं लाति । 'आतोऽनुप–' (३।२।३) इति कः । '**कुन्तलश्चषके** वाले यवे ना भूम्नि नीवृति' इति मेदिनी ॥ (२) ॥*॥ बलति । 'बल प्राणने' (भ्वा० प० से० ) । जलादित्वात् (३।१।१४०) णः । बल्यतेऽवरुध्यते वा । घञ् (३।३।१९) । '**बालो** ना कुन्तलेऽश्वस्य गजस्यापि च बालधौ । नालिकेरे हरिद्रायां मल्लिकाभिद्यपि स्त्रियाम् । वाच्यलिङ्गोऽर्भके मूर्खे ह्रीवेरे पुंनपुंसकम् । अलंकारान्तरे मेध्ये **बाली बाला** त्रुटिस्त्रियोः' इति (पवर्गीयादौ) मेदिनी ॥ (३) ॥*॥ कच्यते । 'कच बन्धने' (भ्वा० प० से० ) । 'पुंसि–' (३।३।११८) इति घः । कचत्यात्मानं वा । अच् (३।१।१३४) । '**कचः** शुष्कव्रणे केशे बन्धे पुत्रे च गीर्पतेः । **कचा** करेण्वाम्' इति हैमः ॥ (४) ॥*॥ क्लिश्यते 'क्लिश बन्धे' (      ) । 'क्लिश उपतापे' (दि० आ० से०) वा । क्लिश्नाति । 'क्लिशू विबाधायाम्' (क्र्या० प० से०) 'क्लिशेरन् लो लोपश्च' (उ० ५।३३) । के शेते वा । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । 'हलदन्तात्–' (६।३।९) इत्यलुक् । कस्य शिरस ईशो वा । '**केशः** स्यात्पुंसि वरुणे ह्रीबेरे कुन्तलेऽपि च' (इति मेदिनी) ॥ (५) ॥*॥ शिरसि रोहति । 'इगुपध–' (३।१।१३५) इति कः ॥ (६) ॥*॥ षट् '**केशस्य**' ॥

**तद्वृन्दे कैशिकं कैश्यम्**

**तदिति** ॥ केशानां समूहः । 'अचित्तहस्ति–' (४।२।४७) इति ठक् ॥ (१) ॥*॥ 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' (४।२।४८) (२) ॥*॥ द्वे '**केशवृन्तस्य**' ॥

**अलकाश्चूर्णकुन्तलाः ।**

**अलेति** ॥ अलति, अल्यते, वा । 'अल भूषणादौ' (भ्वा० प० से० ) । 'कृञादिभ्यो वुन्' (उ० ५।३५) । '**अलका** कुबेरपुर्यामस्त्रियां चूर्णकुन्तले' (इति मेदिनी) ॥ (१) ॥*॥ चूर्णस्य कर्चूरादिक्षोदस्य कुन्तलाः ॥ (२) ॥*॥ द्वे '**कुटिलकेशानाम्**' ॥

**ते ललाटे भ्रमरकाः**

**त इति** ॥ भ्रमर इव 'इवे प्रतिकृतौ (५।३।९६) इति कन् । 'अथ **भ्रमरको** भृङ्गे गैरिके चूर्णकुन्तले' (इति मेदिनी) ॥ (१) ॥*॥ एकम् '**ललाटगतकेशानाम्**' ॥

**काकपक्षः शिखण्डकः ॥ ९६ ॥**

**काकेति** ॥ काकस्य पक्ष इव ॥ (१) ॥*॥ शिखाया अण्ड इव । 'इवे–' (५।३।९६) इति, स्वार्थे (ज्ञापि० ५।४।५) वा कन् । शकन्ध्वादिः (वा० ६।१।९४) । '**शिखण्डौ** तु शिखाबर्हौ' इति तालव्यादौ रभसः । '**शिखण्डो** बर्हचूडयोः' (इति मेदिनी) ॥*॥ शकन्ध्वादित्वं केचिन्नेच्छन्ति । '**शिखाण्डक**शिखण्डकौ' इति वाचस्पतिसुभूती ॥ (२) ॥*॥ द्वे '**सामान्येन शिखायाः**' । बालानां शिखाया वा । 'बालानां तु शिरः कार्यं त्रिशिखं मुण्डमेव वा' ॥

**कबरी केशवेशः**

**केति** ॥ कूयते । 'कुङ् शब्दे' (भ्वा० आ० अ० ) । 'कोररन्' (उ० ४।१५५) । 'जानपद–' (४।१।४२) इति ङीष् ।—कं शिरो वृणोत्याच्छादयति । '–कबर–' (४।१।४२) इति निर्देशादणं बाधित्वाच् (३।१।१३४)—इति मुकुटः । —कृष्णवर्णां कं वृणोति वा—इति स्वामी चोक्तसूत्रादर्शनमूलकौ । '**कबरं** लवणाम्लयोः । **कबरी** केशविन्यासशाकयोः' (इति हैमः) ॥ (१) ॥*॥ केशानां वेशो मार्जनाबन्धविशेषः ॥ (२) ॥*॥ द्वे '**केशबन्धरचनायाः**' ॥

**अथ धम्मिल्लः संयताः कचाः ।**

**अथेति** ॥ धमति । 'धम ध्वाने' सौत्रः । विच् (३।२।७५) । मिलति । 'मिल संगमे' (तु० प० से०) । बाहुलकाल्लक् । धम् चासौ मिल्लश्च । 'मो नो धातोः' (८।२।६४) इति सौत्रेषु न भवति ॥ (१) ॥*॥ एकं '**चूडा**' इति ख्यातस्य ॥

**शिखा चूडा केशपाशी**

**शीति** ॥ शेते । 'शीङो ह्रस्वश्च' (उ० ५।२४) इति खः । '**शिखा** शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शि-

फायां च ज्वालायां प्रपदेऽपि च' (इति मेदिनी) ॥ (१) ॥*॥ चुड्यते । 'चुड समुच्छ्राये' (चु० प० से०)। 'चुरादीनां णिज्वा' इति पक्षे भिदादिपाठात् (३।३।१०४) अङ्। दीर्घत्वे । '**चूडा** शिखाग्रयोः । बाहुभूषावलभ्योश्च' इति हैमः ॥ (२) ॥*॥ केशानां पाशः । अल्पः केशपाशो गौरादिः (४।१।४१) ॥ (३) ॥*॥ त्रीणि '**शिरोमध्यस्थचूडायाः**' '**चोटी**' इति ख्यातायाः ॥

**व्रतिनस्तु जटा सटा ॥ ९७ ॥**

**व्रेति** ॥ व्रतिनः शिखा । जायते, जन्यते वा । 'जनेष्टन् नलोपश्च' (उ० ३।३०) । यद्वा जटति । 'जट संघाते' (भ्वा० प० से०) । अच् (३।१।१३४) । '**जटा** लग्नकचे मूले मांस्यां लक्षे पुनर्जटी' (इति मेदिनी) ॥ (१) ॥*॥ सटति । 'षट अवयवे' (भ्वा० प० से०) । अच् (३।१।१३४) । '**सटा** जटाकेसरयोः' (इति मेदिनी) ॥ (२) ॥*॥ '**कोटीरस्तु** जटा सटा' इति रभसः ॥*॥ द्वे '**व्रतिनः शिखायाम्**' ॥

**वेणिप्रवेणी**

**वेणीति** ॥ वेणति । 'वेणृ निशामनवादित्रादानगमनज्ञानचिन्तासु' (भ्वा० उ० से०) । इन् (उ० ४।११८) ॥ (१) ॥*॥ प्रग्रह उपसर्गान्तरव्यावृत्त्यर्थः ॥ (२) ॥*॥ 'करणिश्रोणिवेणयः' इति स्त्रीकाण्डे निगमः ॥*॥ '**वेणी** सेतुप्रवाहयोः । देवताडे केशबन्धे' इति हैमः ॥*॥ द्वे '**प्रोषितभर्तृकादिधार्यकेशरचनाविशेषस्य**' ॥

**शीर्षण्यशिरस्यौ विशदे कचे ।**

**शीति** ॥ शिरसि भवः । 'शरीरावयवाच्च' (४।३।५५) इति यत् । 'ये च तद्धिते' (६।१।६१) इत्यत्र 'वा केशेषु' इति वचनाद्वा शीर्षन् । '**शीर्षण्यं** तु शीर्षके । सुकेशे पुंसि' (इति मेदिनी) ॥ (१) ॥*॥ (२) ॥*॥ द्वे '**अन्योन्यासंपृक्ते स्नानादिनिर्मले वा केशे**' ॥

**पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥ ९८ ॥**

**पेति** ॥ पाश्यते । 'पश बन्धे' चुरादिः । घञ् (३।३।१९) । घः (३।१।११८) वा । '**पाशस्तु** मृगपक्ष्यादिबन्धने । कर्णान्ते शोभनार्थः स्यात्कचान्ते निकरार्थकः । छात्राद्यन्ते च निन्दार्थः' इति हैमः ॥ (१) ॥*॥ पक्ष्यते । 'पक्ष परिग्रहे' (भ्वा० प० से०) । घञ् (३।३।१९) । घः (३।३।११८) वा । '**पक्षो** मासार्धके गेहपार्श्वसाध्यविशेषयोः । केशादेः परतो वृन्दे बले सखिसहाययोः' (इति मेदिनी) ॥ (२) ॥*॥ हसति, हस्यते, वा । 'हसे हसने' (भ्वा० प० से०) । 'हसिमृग्रिण्–' (उ० ३।८६) इति तन् । '**हस्तः** करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परो व्राते' (इति मेदिनी) ॥ (३) ॥*॥ कचवाचकात् परे सन्तः । कलापोऽर्थो येषाम् ॥*॥ त्रीणि '**कलापार्थस्य**' ॥

**तनूरुहं रोम लोम**

**तेति** ॥ तन्वां रोहति । मूलविभुजादिकः (वा० ३।२।५)। '**तनूरुहं** तु लोम्नि स्यात्पतत्रे च नपुंसकम्' इति मेदिनी । '**तनूरुहस्तु** पुत्रे गरुति लोम्नि च' इति हैमः ॥ (१) ॥*॥ रोहति । 'नामन् सीमन् व्योमन् रोमन् लोमन्' (उ० ४।१५१) इति साधुः । यद्वा रूयते । 'रु शब्दे' (अ०प०अ०) । मनिन् (३।२।७५) ॥ (२) ॥*॥ कपिलकादित्वात् (वा० ८।२।१८) ललम् । लूयते वा । मनिन् (३।२।७५) ॥ (३) ॥*॥ त्रीणि '**रोम्णः**' ॥

**तद्वृद्धौ श्मश्रु पुंमुखे ।**

**तदिति** ॥ तस्य वृद्धिस्तस्याम् । श्म मुखं श्रयति । 'श्रिञ् सेवायाम्' (भ्वा० उ० से०) । श्मनि मुखे श्रूयते । 'श्रु श्रवणे' (भ्वा० प० से०) मितद्र्वादित्वात् (वा० ३।२।१८०) डुः । संपदादिक्विप् (वा० ३।३।१०८) वा । आगमशास्त्रस्यानित्यत्वान्न तुक् ॥ (१) ॥*॥ पुंसो मुखे ॥*॥ एकं '**दाढिकायाः**' ॥

**आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥ ९९ ॥**

**आकेति** ॥ आकल्पनम् । 'क्रृपू सामर्थ्ये' (भ्वा० आ० से०) । घञ् (३।३।१८) । 'क्रृपो रो लः' (८।२।१८) । अकल्प्यते वा । आकल्पयति वा । स्वार्थण्यन्तः । अच् (३।१।१३४) । '**आकल्पः** कल्पने वेशे' (इति मेदिनी) ॥ (१) ॥*॥ वेषणम्, विष्यते, वा । 'विष्लृ व्याप्तौ' (जु०प०से०) । घञ् (३।३।१८,१९) । वेवेष्टि वा । अच् (३।१।१३४) ॥*॥ तालव्यशान्तोऽपि । वेशनम् । विश्यते वा । विशति वा । 'विश प्रवेशने' (तु० प० अ०) । प्राग्वत् । त्रिष्वप्यधिकरणे घञ् (३।३।१९) वा । '**वेशो** वेश्यागृहे गृहे । नेपथ्ये च' (इति मेदिनी) ॥ (२) ॥*॥ नयति । णिच् (३।२।७५) । गुणः (७।३।८४) । निनो नेत्रस्य, नेर्नेतुर्वा पथ्यम् । संज्ञापूर्वकत्वान्न ह्रस्वः । '**नेपथ्यं** तु प्रसाधने । रङ्गभूमौ वेषभेदे' इति हैमः ॥ (३) ॥*॥ प्रत्यङ्गं प्रतिख्यातं वा कर्म । शाकपार्थिवादिः (वा० २।१।७८) ॥ (४) ॥*॥ प्रसाध्यतेऽनेनाङ्गम् । करणे ल्युट् (३।३।११७) ॥ (५) ॥*॥ पञ्च '**अलंकाररचनादिकृतशोभायाः**' ॥

**दशैते त्रिषु**

**देति** ॥ एते वक्ष्यमाणा रोचिष्णुपर्यन्ताः ॥

१—केषुचिन्मूलपुस्तकेषु तु 'व्रतिनः स्रा' इति पाठ उपलभ्यते । '**स्रा** जटायां च राक्षस्यां पतने दुर्भगस्त्रियाम्' इति क्वचित्पुस्तके हैमः ॥ 'सुप्तोऽपि प्रबुद्धः' इति कादम्बरीश्लेषश्च ॥

१–रु शब्दे इत्युत्तरम् 'रुङ् गतौ भाषणे वा' इत्यपि पाठः ।

**अलंकर्तालंकरिष्णुश्च**

**अलमिति** ॥ अलं करोति । 'तृन्' (३।२।१३५) ॥(१) ॥*॥ 'अलंकृञ्–' (३।२।१३६) इतीष्णुच् ॥ (२) ॥*॥ द्वे **'अलंकरणशीलस्य'** ॥

**मण्डितः ।**

**प्रसाधितोऽलंकृतश्च भूषितश्च परिष्कृतः ॥ १०० ॥**

**मेति** ॥ मण्ड्यते स्म । 'मडि भूषायाम्' (भ्वा०प०से०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ प्रसाध्यते स्म । 'साध संसिद्धौ' (स्वा० प० अ०) स्वार्थण्यन्तः । क्तः (३।३।१०२) ॥ (२) ॥*॥ अलं क्रियते स्म ॥ (३) ॥*॥ भूष्यते स्म । 'भूष अलंकारे' (भ्वा० प० से०) ॥ (४) ॥*॥ परिष्क्रियते स्म । क्तः (३।२।१०२) । 'संपदिभ्याम्–' (६।१।१३७) इति सुट् । 'परिनिविभ्यः–' (८।३।७०) इति षत्वम् ॥ (५) ॥*॥ पञ्च **'भूषितस्य'** ॥

**विभ्राड् भ्राजिष्णुरोचिष्णू**

**वीति** ॥ भ्राजते तच्छीलः । 'भ्राजभास–' (३।२।१७७) इति क्विप् ॥ (१) ॥*॥ 'भुवश्च' (३।२।१३८) इति चाद् भ्राजेरपि इष्णुच् ॥ (२) ॥*॥ रोचते तच्छीलः । 'अलंकृञ्–' (३।२।१३६) इतीष्णुच् ॥ (३) ॥*॥ त्रीणि **'अलंकारादिना शोभमानस्य'** ॥

**भूषा तु स्यादलंक्रिया ।**

**भ्विति** ॥ भूषणम् । 'गुरोश्च–' (३।३।१०३) इत्यः ॥ (१) ॥*॥ अलंकरणम् । 'कृञः श च' (३।३।१००) ॥ (२) ॥*॥ द्वे **'भूषणक्रियायाः'** ॥

**अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ॥ १०१ ॥**
**मण्डनं च**

**अलमिति** ॥ अलंक्रियतेऽनेन । घञ् (३।३।१९) । **'अलंकारः** कंकणादिषु । उपमादौ' इति हैमः ॥ (१) ॥*॥ एवं परिष्कारोऽपि ॥ (३) ॥*॥ आ भ्रियतेऽनेन । 'भृञ् भरणे' (भ्वा० उ० अ०) । ल्युट् (३।३।११७) ॥ (२) ॥*॥ विभूष्यतेऽनेन ॥ (४) ॥*॥ मण्ड्यतेऽनेन । 'मडि भूषायाम्' (भ्वा० प० से०) । ल्युट् (३।३।११७) । **'मण्डनं** तु प्रसाधने । **मण्डनो**ऽलंकरिष्णौ' इति हैमः ॥ (५) ॥*॥ पञ्च **'भूषाणाम्'** ॥

**अथ मुकुटं किरीटं पुंनपुंसकम् ।**

**अथेति** ॥ मङ्कतेऽनेन वा । 'मकि मण्डने' (भ्वा० आ० से०) बाहुलकादुटः । आगमशास्त्रस्यानित्यत्वान्न नुम्, एकोकारम् ॥*॥ (**मुकुटम्,** इति) ह्युकारपाठे बाहुलकाद् धातोरत उः ॥ (१) ॥*॥ किरति । अनेन वा । 'कॄ विक्षेपे' (तु० प० से०) । 'कृतॄकृपेः कीटन्' (उ० ४।१८५) ॥ (२) ॥*॥ द्वे **'किरीटस्य'** ॥

**चूडामणिः शिरोरत्नम्**

**चूडेति** ॥ चूडाया मणिः । **'चूडामणिः** काकचिंचाफले मूर्धमणावपि' इति हैमः ॥ (१) ॥*॥ शिरसो रत्नम् ॥ (२) ॥*॥ द्वे **'शिरोमणेः'** ॥

**तरलो हारमध्यगः ॥ १०२ ॥**

**तेति** ॥ **'तरस्तु** तरणे पुंसि' (इति मेदिनी) । तरं लाति । 'आतोऽनुप–' (३।२।३) इति कः । **'तरलं** चञ्चले षिङ्गे भास्वरेऽपि त्रिलिङ्गकम् । हारमध्यमणौ पुंसि यवागूसुरयोः स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ हारस्य मध्यं हारमध्यं गच्छति । 'अन्येष्वपि–' (वा० ३।३।४८) इति डः ॥*॥ एकम् **'हारमध्यमणेः'** ॥

**बालपाश्या पारितथ्या**

**बेति** ॥ बालपाशे केशसमूहे साधुः । 'तत्र साधुः' (४।४।९८) इति यत् । बालेषु पाश्या पाशसमूहो वा ॥ (१) ॥*॥ परितस्तथाभूताः परितथा एव । चतुर्वर्णादित्वात् (वा० ५।१।१२४) स्वार्थे ष्यञ् ॥ (२) ॥*॥ द्वे **'सीमन्तस्थितायाः स्वर्णादिपट्टिकायाः'** । स्वामी तु—प्रथमं बालबन्धनमुक्तावलीनाम्—इत्याह ॥

**पत्रपाश्या ललाटिका ।**

**पत्रेति** ॥ पाशसमूहः पाश्या पत्रमिव पाश्या ॥ (१) ॥*॥ ललाटस्यालंकारः । 'कर्णललाटात्कनलंकारे' (४।३।६५) ॥ (२) ॥*॥ द्वे **'ललाटाभरणस्य'** ॥

**कर्णिका तालपत्रं स्यात्**

**केति** ॥ कर्णस्यालंकारः । प्राग्वत् । **'कर्णिका** कर्णभूषणे । बीजकोशे सरोजस्य करमध्याङ्गुलावपि । कुट्टिन्यां हस्तिहस्ताग्रे' इति हैमः ॥ (१) ॥*॥ तालस्य पत्रम् । **'तालपत्रं** तु कुण्डले । स्यात्**तालपत्री** रण्डायाम्' इति हैमः ॥ (२) ॥*॥ **'ताटङ्कः'** अप्यत्र । सुवर्णरचितस्यापीदमेव नाम ॥*॥ द्वे **'कर्णाभरणस्य'** ॥

**कुण्डलं कर्णवेष्टनम् ॥ १०३ ॥**

**कुण्डेति** ॥ कुण्डते, कुण्ड्यते, वा । 'कुडि दाहे' (भ्वा० आ० से०) । 'कुडि रक्षायाम्' (चु० प० से०) वा । वृषादिलात् (उ० १।१०६) कलच् । कुण्डं कुण्डलाकारं लाति वा । **'कुण्डलं** कर्णभूषायां पाशेऽपि वलयेऽपि च । काञ्चनद्रुगुडूच्योः स्त्री' (इति मेदिनी) ॥ (१) ॥*॥ कर्णस्य वेष्टनम् । वेष्ट्यतेऽनेन । 'वेष्ट वेष्टने' (भ्वा० आ० से०) । ल्युट् (३।३।११७) ॥ (२) ॥*॥ द्वे **'कुण्डलस्य'** ॥

**ग्रैवेयकं कण्ठभूषा**

**ग्रैवेयेति** ॥ ग्रीवायां भवम् । 'कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु' (४।२।९६) इति ढकञ् ॥*॥ –'ग्रीवाया अण्

च' (४।३।५७) इति ढञि '**ग्रैवेयम्**' अपि—इति मुकुटः ॥ (१) ॥*॥ भूष्यतेऽनया । 'भूष अलंकारे' (भ्वा० प० से०)। 'गुरोश्च–' (३।३।१०३) इत्यः । कण्ठस्य भूषा ॥ (२) ॥*॥ द्वे '**ग्रीवाभरणस्य**' '**कण्ठा**' इति ख्यातस्य ॥

**लम्बनं स्याल्ललन्तिका ।**

**लेति** ॥ लम्बते । 'लबि अवस्रंसने' (भ्वा० आ० से०)। ल्युः (३।१।१३४) ॥ (१) ॥*॥ लडति । 'लड विलासे' (भ्वा० प० से०)। 'लटः शतृ–' (३।२।१२४) 'उगितश्च' (४।१।६) इति ङीप् । 'शप्श्यनोर्नित्यम्' (७।१।८१) इति नुम् । डलयोरेकत्वम् । ललन्त्येव । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे '**किंचिल्लम्बमानकण्ठभूषणस्य**' ॥

**स्वर्णैः प्रालम्बिका**

**स्वेति** ॥ सैव ललन्तिका सुवर्णैः कृता प्रालम्बते । ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ एकं '**लम्बकण्ठिकायाः**' ॥

**अथोरःसूत्रिका मौक्तिकैः कृता ॥ १०४ ॥**

**अथेति** ॥ सैव ललन्तिका मुक्ताभिः कृता ॥*॥ उरसः सूत्रमिव । 'इवे–' (५।३।९६) इति कन् ॥ (१) ॥*॥ एकम् '**मौक्तिकमालायाः**' ॥

**हारो मुक्तावली**

**हेति** ॥ ह्रियते मनोऽनेन । ह्रियते वा । घञ् (३।३।१९) यद्वा हारयति मनः । स्वार्थण्यन्तादच् (३।१।१३४) ॥ '**हारो** मुक्तासरे युधि' (इति मेदिनी) ॥ (१) ॥*॥ मुक्तानामावली दीर्घा पङ्क्तिः ॥ (२) ॥*॥ भिदादिपाठात् (३।३।१०६) अङि हारा । '**हारा** मुक्तावली हारः' इति रभसः ॥*॥ द्वे '**मुक्ताहारस्य**' ॥

**देवच्छन्दोऽसौ शतयष्टिकः ।**

**देवेति** ॥ 'हारः' शतयष्टिकः सन् । देवैश्छन्द्यते । 'छदि संवरणे' (चु० प० से०)। घञ् (३।३।१९) ॥ (१) ॥*॥ '**यष्टि**र्हारलताशस्त्रभेदयोः' इति विश्वः । '**यष्टिर्लता सरः सरिः**' इत्यनेकार्थमाधवी ॥*॥ एकं '**शतलतिकहारस्य**' ॥

**हारभेदा यष्टिभेदाद्गुत्सगुत्सार्धगोस्तनाः ॥ १०५ ॥**
**अर्धहारो माणवक एकावल्येकयष्टिका ।**
**सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ॥ १०६ ॥**

**हारेति** ॥ यष्टीनां भेदात् हारभेदाः स्युः । गुध्यते । 'गुध परिवेष्टने' (दि० प० से०)। 'उन्दिगुधिकुषिभ्यश्च' (उ० ३।६८) इति सः कित् । बाहुलकाद्भष्भावो न । 'गुत्सः स्यात्स्तबके स्तम्बे हारभिद्ग्रन्थिपर्णयोः' इति दन्त्यान्तेषु मेदिनी ॥*॥ छान्तोऽपि । 'स्याद् **गुच्छः** स्तबके स्तम्बे हारभेदकलापयोः' (इति मेदिनी)। गूयते । 'गुङ् शब्दे' (भ्वा० आ० अ०)। बाहुलकाच्छक् । 'द्वात्रिंशल्लतिको **गुच्छः**' ॥ (१) ॥*॥ '**गुच्छार्ध**स्तत्त्वसंख्यकः' । गुत्सः गुत्सस्यार्धः । समप्रविभागाभावात् पुंस्त्वम् । चतुर्विंशतियष्टिको हारो गुत्सार्धः ॥ (१) ॥*॥ 'चतुस्त्रिंशल्लतो **हार**श्चतुःसरिश्च **गोस्तनः**' । गोः स्तन इव ॥ (१) ॥*॥ 'विंशतियष्टिको हारो माणवः परिकीर्तितः' । 'अर्धैनैकदेशेन कृतो हारः । शाकपार्थिवादिः (वा० २।१।७२) ॥ (१) ॥*॥ माणवो बालः । स इव । यावादित्वात् (५।४।२९) कन् । '**माणवको** हारभेदे बाले कुपुरुषे बटौ' (इति मेदिनी) ॥ (१) ॥*॥ एकसरा । एका चासावावली च ॥ (१) ॥*॥ एकावृत्येव सप्तविंशतिमुक्ताभिः कृता । नक्षत्राणां मालेव ॥ (१) ॥*॥ प्रत्येकमेकैकम् ॥

**आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् ।**

**आवेति** ॥ आ उप्यते । 'डुवप्' (भ्वा० उ० अ०)। कर्मणि घञ् (३।३।१९)। स्वार्थे (ज्ञापि० ५।४।५) संज्ञायां (५।३।७५) वा कन् ॥ (१) ॥*॥ परिह्रियते 'ऋहलोर्ण्यत्' (३।१।१२४)। परिहार्य एव । प्रज्ञाद्यण् (५।४।३८)। यद्वा घञन्ताच्चतुर्वर्णादित्वात् (वा० ५।१।१२०) स्वार्थे ष्यञ् । (२) ॥*॥ कटति कट्यते वा । 'कटे वर्षावरणयोः' (भ्वा० प० से०) क्वुन् (उ० २।३२)। '**कटको**ऽस्त्री नितम्बेऽद्रेर्दन्तिनां दन्तमण्डने । सामुद्रलवणे राजधानीवलययोरपि' (इति मेदिनी) ॥ (३) ॥*॥ वलते । 'वल संवरणे' (भ्वा० आ० से०)। 'वलिमलितनिभ्यः कयन्' (उ० ४।९९) ॥ '**वलयः** कण्ठरोगे ना कङ्कणे पुंनपुंसकम्' (इति मेदिनी) ॥ (४) ॥*॥ चत्वारि '**प्रकोष्ठाभरणस्य**' ॥

**केयूरमङ्गदं तुल्ये**

**कयिति** ॥ के बाहुशिरसि यौति । 'यु मिश्रणे' (अ० प० से०)। खर्जादित्वात् (४।९०) ऊरः । बाहुलकाट्टिलोपः । 'हलदन्तात्–' (६।३।९) इति सप्तम्या अलुक् ॥ (१) ॥*॥ अङ्गं दयते, दायति, द्यति वा । 'देङ् पालने' (भ्वा० आ० अ०)। 'दैप् शोधने' (भ्वा० प० अ०) वा । 'दो अवखण्डने' (दि० प० अ०) वा । 'आतोऽनुप–' (३।२।३) इति कः । '**अङ्गदः** कपिभेदे ना केयूरे तु नपुंसकम् । **अङ्गदा** याम्यदिग्दन्तिहस्तिन्यामपि योषिति' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**प्रगण्डभूषणस्य**' ॥

**अङ्गुलीयकमूर्मिका ॥ १०७ ॥**

**अङ्गुलीति** ॥ अङ्गुलौ भवम् । 'जिह्वामूलाङ्गुलेश्छः' (४।

---

१—'सग्रैवेयस्त्वमसि फणिना' इति राजशेखरः इति मुकुटः ॥
२—हैमे तु 'अर्धहारश्चतुःषष्टिर्गुच्छमाणवमन्दराः । अपि गोस्तनगोपुच्छावर्धमर्धं यथोत्तरम्' इत्युक्तम् । अन्ये तु 'चतुःषष्टिलतो हारोऽथाष्टहीना यथोत्तरम् । रश्मिकलापौ माणवकोऽर्धहारोऽर्धगुच्छकः । कलापच्छन्दो मन्दरश्च गुच्छः सप्ततियष्टिकः' इत्याहुः ॥

३।६२)। स्वार्थे कन् ( ज्ञापि० ५।४।५ ) ॥—कपिलकादित्वात् ( वा० ८।२।१८ ) 'अङ्गुलीयकम्'—इति मुकुटः ॥ तन्न। तत्र रेफानुवादेन लविधानात्। लानुवादेन रेफविधानाभावात्। 'वालमूल–' ( वा० ८।२।१८ ) इति वक्तुं शक्यत्वात् ॥ (१) ॥*॥ ऊर्मिरिव। 'इवे–' (५।३।९६) इति कन्। ऊर्मिं प्रकाशं कायति वा ॥ 'ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः' ( इति मेदिनी ) ॥ (२) ॥*॥ द्वे 'अङ्गुलीभूषणस्य' ॥

**साक्षराङ्गुलिमुद्रा सा**

**सेति** ॥ सा ऊर्मिका। अक्षरैः सहिता चेत्। अङ्गुल्यां मुदं राति। 'आतः' (३।२।३) इति कः। मोदते वा। 'मुद हर्षे' ( भ्वा० आ० से० )। 'स्फायितञ्चि–' ( उ० २।१३ ) इति रक्। अङ्गुल्या मुद्रा ॥ (१) ॥*॥ एकम् ॥

**कङ्कणं करभूषणम् ।**

**कङ्केति** ॥ कं शुभं कणति। 'कण शब्दे' ( भ्वा० प० से० )। अच् (३।१।१३४)। कङ्कते वा। 'कक लौल्ये' ( भ्वा० आ० से० )। 'बहुलमन्यत्रापि' ( उ० २।७८ ) इति 'अनुदात्तेतश्च हलादेः' (३।२।१४९) इति वा युच्। पृषोदरादित्वात् (६।३।१०९) णत्वम्। 'कङ्कणं करभूषायां सूत्रमण्डनयोरपि' ( इति मेदिनी ) ॥ (१) ॥*॥ करं भूषयति। करो भूष्यतेऽनेन वा। ल्युट् (३।३।११३,११७)। 'क्लीबं मण्डने सूत्रे कङ्कणं करभूषणम्' इति रभसः। 'हस्तमण्डनसूत्रे स्यात् कङ्कणो ना प्रतीसरः' इति रत्नकोषः ॥ (२) ॥*॥ द्वे 'मणिबन्धभूषणस्य' ॥

**स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा १०८**
**क्लीबे सारसनं च**

**स्त्रीति** ॥ मखं गतिं लाति। कः (३।२।३)। पृषोदरादिः (६।३।१०९)।—मीयते। 'डुमिञ् प्रक्षेपणे' ( स्वा० उ० अ० )। 'कलम्बादयश्च' इति साधुः—इति मुकुटश्चिन्त्यः। तत्सूत्रस्योज्ज्वलदत्तादिष्वदर्शनात्। 'मेखलाद्रिनितम्बे स्याद्रशनाखड्गबन्धयोः' इति हैमः ॥ (१) ॥*॥ काञ्चते। 'काचि दीप्तिबन्धनयोः' ( भ्वा० आ० से० )। इन् ( उ० ४।११८ )। वा ङीष् ( ग० ४।१।४५ )।—'अन्येभ्योऽपि' इति दीर्घः—इति मुकुटश्चिन्त्यः। धातोरेकदीर्घवत्त्वात्। 'अन्येभ्योऽपि' इत्येतादृशस्य दीर्घविधायकस्याभावात् 'अन्येषामपि' (६।३।१३७) इति वक्तुं युक्तत्वाच्च। 'काञ्ची स्यान्मेखलादाम्नि प्रभेदे नगरस्य च' ( इति मेदिनी ) ॥ (२) ॥*॥ सपति। 'षप समवाये' ( भ्वा० प० से० )। बाहुलकात्तन्। स्वार्थे ( ज्ञापि० ५।४।५ ) कन्। सप्तभिरनेकाभिः किङ्किणीभिः, सप्त स्वरान् वा कायति। 'आतः' (३।१।१३६,२।३) इति कः। गौरादिः (४।१।४१)।—कायन्ति अस्याम्। मूलविभुजादित्वात् ( वा० ३।२।५ ) कः—इति मुकुटश्चिन्त्यः। अधिकरणे तत्प्रवृत्तेरसंभवात् ॥ (३) ॥*॥ अश्यते 'अशूङ् व्याप्तौ संघाते च' ( स्वा० आ० से० )। अश्नाति। 'अश भोजने' ( क्र्या० प० से० )। 'अशे रश् च' ( उ० २।७५ ) इति यू रशादेशः। यद्वा, रशति। 'रश शब्दे' सौत्रः। 'बहुलमन्यत्रापि' ( उ० २।७८ ) इति युच्। तालव्यमध्या ॥*॥ दन्त्यमध्यापि। 'रस शब्दे' ( भ्वा० प० से० )। 'रस आस्वादने' ( चु० उ० से० )। 'बहुलम्' ( उ० २।७८ ) इति युच्। 'ण्यासश्रन्थ–' (३।३।१०७) इति वा युच्। 'तालव्या अपि दन्त्याश्च शम्बशम्बलशूकराः। **रशना**पि च जिह्वायाम्'। '**रसनं** निस्वने स्वादे **रसना** काञ्चिजिह्वयोः' इत्यजयधरणी। '**रसनं** स्वदने ध्वाने **रसना** काञ्चिजिह्वयोः। रसनं चापि रास्नायाम्' इति विश्वप्रकाशः। एवमुभयमुभयत्र साधु ॥ (४) ॥*॥ सारमुत्कृष्टं सनमस्य। 'षण संभक्तौ' ( भ्वा० प० से० )। घः (३।३।११८)। सहारसनेनाल्पशब्देन वा। 'मेखलायां **सारसन**मुरस्त्रे च तनुत्रिणाम्' इति दन्त्यादौ रभसः ॥ (५) ॥*॥ पञ्च '**स्त्रीकटिभूषणस्य**' ॥ 'स्त्री' इत्यविवक्षितम्। पुंस्कटिभूषणेऽपि।—स्त्रीकट्यां वस्त्रग्रन्थने—इति स्वामी। '–एका यष्टिर्भवेत्**काञ्ची मेखला** त्वष्टयष्टिकाः। **रसना** षोडश ज्ञेयाः **कलापः** पञ्चविंशकः'—इति भेदस्त्विह न विवक्षितः ॥

**अथ पुंस्कट्यां शृङ्खलं त्रिषु ।**

**अथेति** ॥ पुंसां कट्यां चेत् काञ्ची। शृङ्गैः खलति। 'खल संचये' ( भ्वा० प० से० )। अच् (३।१।१३४)। पृषोदरादि. (६।३।१०९)। '**शृङ्खलं** पुंस्कटीकाञ्च्यां लोहरज्जौ च बन्धने' ( इति हैमः ) ॥ (१) ॥*॥ एकम् '**पुरुषकटीस्थकाञ्च्याः**' ॥

**पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ॥१०९॥**

**पेति** ॥ पादस्याङ्गदमिव। यद्वा पाद एवाङ्गम्। पादाङ्गं द्यति, दायति, दयते, वा। 'दो अवखण्डने' ( दि० प० अ० )। 'दैप् शोधने' ( भ्वा० प० अ० )। 'देङ् पालने' ( भ्वा० आ० अ० )। 'आतोऽनुप–' (३।२।३) इति कः ॥ (१) ॥*॥ तुलां तुलया वा कोटयति। 'कुट प्रतापने' चुरादिः। 'अच इः' ( उ० ४।१३९ )। तुलाकारं कोटिरग्रमस्य। '**तुलाकोटि**र्मानभेदेऽम्बुदे स्यान्नूपुरेऽपि च' इति हैमः ॥ (२) ॥*॥

---

१—पुंलिङ्गोऽप्ययम् 'अयं मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुरीयकः' इति भट्टिप्रयोगात्—इति मुकुटः ॥ २—'काञ्चीगुणस्थानमनिन्दितायाः' इति कुमारः 'काञ्चिदामपिहितैकतरोरुः' इति माघः—इति मुकुटः ॥

१—'क्षुभितसिन्धुमनीरशनैः शनैः' इति भारवियमकात्—इति मुकुटः ॥ २—'रसनाबन्धो रतिकलहेषु, न दानानुमतिषु' इति वासवदत्ताश्लेषात्—इति मुकुटः ॥

मञ्जति । 'मजि ध्वनौ' सौत्रः । बाहुलकादीरन् ।—'गम्भीरादयश्च' इतीरन्—इति मुकुटोऽपाणिनीयो गम्भीरादिगणाभावात् ॥ (३) ॥*॥ 'नुवनम्' नूयते, वा । 'णू स्तुतौ' ( तु० प० से० ) । संपदादिः (वा० ३।३।१०८) । नुवि पुरति । 'पुर अग्रगमने' ( तु० प० से० ) । 'इगुपध–' (३।१।१३५) इति कः । '**मञ्जीरोऽस्त्री स नूपुरः**' इति रभसः ॥ (४) ॥*॥ चत्वारि '**नूपुरस्य**' ॥

**हंसकः पादकटकः**

**हंसेति** ॥ हंस इव कायति । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । हंस इव । 'इवे–' (५।३।९६) इति कन् वा ॥ (१) ॥*॥ पादस्य कटको वलयः ॥ (२) ॥*॥ द्वे '**नूपुरस्य**' ॥—षडपि पर्यायाः—इत्येके ॥

**किंकिणी क्षुद्रघण्टिका ।**

**किमिति** ॥ किंचित् किणं करोति । किणशब्दात् 'तत्करोति' (वा० ३।१।२६) इति ण्यन्तादच् (३।१।१३४) । गौरादिः (४।१।४१) ॥*॥—**कङ्कणी**—इति स्वामी ॥ कङ्कनम् । 'ककि गतौ' ( भ्वा० प० से० ) । घञ् (३।३।१८) । कङ्के गतावणति । 'अण शब्दे' ( भ्वा० प० से० ) । अच् ३।१।१३४) । गौरादिः (४।१।४१) शकन्ध्वादिः (वा० ६।१।९४) । यद्वा कं सुखं कणति । 'कण शब्दे' ( भ्वा० प० से० ) । अच् (३।१।१३४) । '**कङ्कणः** स्यात्प्रतिसरः **कङ्कणी** क्षुद्रघण्टिका' इति भागुरिः ॥ (१) ॥*॥ घण्टेव । 'इवे–' (५।३।९६) इति कन् । यद्वा घण्टति, घण्टयति, वा 'घटि दीप्तौ' ( चु० उ० से० ) । ण्वुल् (३।१।१३३) । क्षुद्रा चासौ घण्टिका च ॥ (२) ॥*॥ द्वे '**क्षुद्रघण्टिकायाः**' । '**घुघुराख्यस्य**' ॥

**त्वक्फलकृमिरोमाणि वस्त्रयोनिः**

**त्वेति** ॥ त्वगादि । वस्त्रस्य योनिः कारणम् ॥ (१) ॥*॥ एकम् '**वस्त्रयोनेः**' ॥

**दश त्रिषु ॥ ११० ॥**

**देति** ॥ वक्ष्यमाणानि तन्त्रकान्तानि दश[१] ॥

**वाल्कं क्षौमादि**

**वेति** ॥ वल्कस्य विकारः । 'तस्य विकारः' (४।३।१३४) इत्यण् ॥ (१) ॥*॥ क्षुमाया विकारः । प्राग्वत् ॥ क्षौमादि वाल्कम् । '**क्षौमं** वल्कलजांशुके । शणजेऽतसीजे' (इति मेदिनी) । '**क्षौमवस्त्रस्य**' एकम् ॥

**फालं तु कार्पासं बादरं च तत् ।**

**फेति** ॥ फलस्य विकारः । 'तस्य विकारः' (४।३।१३४) इत्यण् । '**फालं** तु वसने **फाल** उत्प्लुतौ' (इति हैमः) 'क्लीबं सीरोपकरणे' (इति मेदिनी) 'पुंसि शंकरसीरिणोः' ॥ (१) ॥*॥ कर्पास्या बदरायाश्च विकारः फलम् । 'अवयवे च–' (४।३।१३५) इत्यण् । तस्य 'फले लुक्' (४।३।१६३) । कार्पासस्य बदरस्य च विकारः । प्राग्वदण् (४।३।१३४) ॥ (२) ॥*॥ (३) ॥*॥ त्रीणि '**कार्पासवस्त्रस्य**' ॥

**कौशेयं कृमिकोशोत्थम्**

**काविति** ॥ कोशे संभूतः । 'कोशाड्ढञ्' (४।३।४२) ॥ (१) ॥*॥ एकम् '**पीताम्बरादेः**' ॥

**राङ्कवं मृगरोमजम् ॥ १११ ॥**

**रेति** ॥ रङ्कौ भवम् । 'रङ्कोरमनुष्येऽण् च' (४।२।१००) इत्यण् । 'मृगरोमजम्' मृगशब्देन पशुमात्रं ग्राह्यम् । तेन कम्बलाद्यपि राङ्कवम् ॥ (१) ॥*॥ एकम् '**ऊर्णादेः**' ॥

**अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे ।**

**अनेति** ॥ न आहतम् ॥ (१) ॥*॥ प्रोयतेऽनया । 'वेञ् तन्तुसंताने' ( भ्वा० उ० अ० ) । 'करणा–' (३।३।११७) इति ल्युट् । निर्गता प्रवाणी तन्तुवायशलाकास्मात् । 'निष्प्रवाणिश्च' (५।४।१६०) इति साधु ॥ (२) ॥*॥ तन्त्रादचिरापहृतम् । 'तन्त्रादचिरापहृते' (५।२।७०) इति साधु ॥ (३) ॥*॥ नवं च तदम्बरं च ॥ (४) ॥*॥ चत्वारि '**छेदभोगक्षालनरहितवस्त्रस्य**' ॥

**तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ॥ ११२ ॥**

**तदिति** ॥ धौतयोः प्रक्षालितयोर्वस्त्रयोर्युगम् । उद्गम्यतेऽभिलष्यते । 'गम्लृ गतौ' ( भ्वा० प० अ० ) । अनीयर् (३।१।९६) ॥ (१) ॥*॥ 'युगम्' इत्यविवक्षितम् ॥*॥ एकम् '**धौतवस्त्रयुगस्य**' ॥

**पत्रोर्णं धौतकौशेयम्**

**पेति** ॥ पत्रेषु कृतोर्णा पत्रोर्णास्त्यत्र । अर्शआद्यच् (५।२।१२७) । 'पत्रोर्णं धौतकौशेये **पत्रोर्णः** शोणकद्रुमे' इति हैमः ॥ (१) ॥*॥ धाव्यते स्म । 'धावु गतिशुद्ध्योः' (भ्वा० उ० से० ) । क्तः (३।२।१०२) धौतं च तत्कौशेयं च ॥ (२) ॥*॥ द्वे '**धौतकौशेयस्य**' ।—प्रक्षालितकौशेयमेव पत्रोर्णाख्यम्—इत्यन्ये ॥

**बहुमूल्यं महाधनम् ।**

**बेति** ॥ बहु मूल्यमस्य ॥ (१) ॥*॥ महद् धनं मूल्यमस्य ॥ (२) ॥*॥ द्वे '**बहुमूल्यवस्तुनः**' ॥

**क्षौमं दुकूलं स्यात्**

**क्षाविति** ॥ क्षौति, क्षूयते, वा । '**टु क्षु शब्दे**' (अ०

---

[१]—वाल्कक्षौमफालकार्पासबादरकौशेयराङ्कवानाहतनिष्प्रवाणितन्त्रकाणि—इति स्वामी ॥—वक्ष्यमाणानि क्षौमादिवर्जवाल्कफालादीनि निष्प्रवाण्यन्तानि दश त्रिषु त्रिलिङ्गानि । चकारादेकादशं तन्त्रकम्, इति सुभूतिः—इति मुकुटः ॥

प० से० )। 'अर्तिस्तुसु–' (उ० १।१४०) इति मन्। 'क्षोमपट्टे दुकूलेऽस्त्री' (इति मेदिनी) ॥*॥—क्षुमाया विकारः। क्षौमम्—इति स्वामी। पर्यायान्तराभिधानाय पुनरभिहितम् ॥ (१) ॥*॥ दुष्टं कूलति। 'कूल आवरणे' (भ्वा० प० से० ) 'इगुपध–' (३।१।१३५) इति कः। पृषोदरादिः (६।३।१०९) ॥ (२) ॥*॥ द्वे 'पट्टवस्त्रस्य' ॥

**द्वे तु निवीतं प्रावृतं त्रिषु ॥ ११३ ॥**

**द्वे इति** ॥ नि वीयते स्म। 'व्येञ् संवरणे' ( भ्वा० उ० अ० )। क्तः (३।२।१०२)। संप्रसारणादि (६।१।१५)। (६।१।१०८) (६।४।२) ॥*॥—निवृत्तम्—इति स्वामी ॥ (१) ॥*॥ प्राव्रियते स्म 'वृञ् वरणे' ( स्वा० उ० से० )। क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे 'प्रावृतवस्त्रस्य' ॥

**स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयोर्द्वयोः।**

**स्त्रीति** ॥ दश्यते। 'दंश दशने' ( भ्वा० प० अ० ) भिदाद्यङ् (३।३।१०६)। '**दशा** वर्त्यामवस्थायां वस्त्रान्ते भूम्नि पुंस्त्रियोः' इति रभसः ॥ (१) ॥*॥ वस्यते। 'वस आच्छादने' ( आ० आ० से० )। 'वस स्नेहनादौ' चुरादिः। चुरादीनां णिज्वा। 'वसेस्तिः' (उ० ४।१८०)। '**वस्तिर्द्वयो**र्निरूहे नाभ्यधो भूम्नि दशासु च' (इति मेदिनी) ॥ (२) ॥*॥ द्वे 'वस्त्रान्तावयवानाम्' ॥

**दैर्घ्यमायाम आनाहः**

**दायिति** ॥ दीर्घस्य भावः। 'गुण–' (५।१।१२४) इति ष्यञ् ॥ (१) ॥*॥ आयम्यतेऽनेन घञ् (३।३।१९)। आयमनं वा। आयाति वा। 'या प्रापणे' ( अ० प० अ० )। 'अर्तिस्तुसु–' (उ० १।१४०) इति मन् ॥ (२) ॥*॥ आनह्यतेऽनेन। 'णह बन्धने' ( दि० उ० अ० ) घञ् (३।३।१९) ॥*॥ '**आरोहः**' इति क्वचित्पाठः। आरुह्यतेऽनेन। घञ् (३।३।१९)। '**आरोह**स्त्ववरोहे च वरयोषित्कटावपि। आरोहणे गजारोहे दीर्घत्वे च समुच्छ्रये' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि **वस्त्रादेर्दैर्घ्यस्य** ॥

**परिणाहो विशालता ॥ ११४ ॥**

**पेति** ॥ परिणह्यतेऽनेन। घञ् (३।३।१९) ॥ (१) ॥*॥ विशालस्य भावः तल् (५।१।११९) ॥ (२) ॥*॥ द्वे '**विस्तारस्य**' '**पनहा**' इति ख्यातस्य ॥

**पटच्चरं जीर्णवस्त्रम्**

**पेति** ॥ पटति। 'पट गतौ' ( भ्वा० प० से० )। बाहुलकादतत्। भूतपूर्वं पटत्। 'भूतपूर्वे चरट्' (५।३।५३) यद्वा 'पटत्' इत्यव्यक्तं शब्दं चरति करोति। अच् (३।१।१३४)। यद्वा पट इवाचरति। 'सर्वप्रातिपदिकेभ्यः क्विब्वा' (वा० ३।१)। शत्रन्ताच्चरट् (५।३।५३) ॥ (१) ॥*॥ जीर्णं च तद्वस्त्रं च ॥ (२) ॥*॥ द्वे '**जीर्णवस्त्रस्य**' ॥

**समौ नक्तककर्पटौ।**

**सेति** ॥ नजते। 'ओ नजी व्रीडे' ( तु० आ० से० ) बाहुलकात्तन्। स्वार्थे कन् (ज्ञापि० ५।४।५)। नक्तं कं सुखमस्माद्वा। पृषोदरादित्वात् (६।३।१०९) मलोपः ॥*॥ क्वचित् '**लक्तकः**' इति पाठः। लक्यते स्म। 'लक आस्वादने' (      )। क्तः (३।२।१०२)। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१) ॥*॥ किरति। 'कॄ विक्षेपे' ( तु० प० से० )। कृणाति। 'कॄ हिंसायाम्' ( क्र्या० प० से० ) वा। करोति। 'डुकृञ्' ( तु० उ० अ० ) वा। विच् (३।२।७५) कर् चासौ पटश्च। यद्वा करस्य पटः। शकन्ध्वादिः (वा० ६।१।९४) ॥ (२) ॥*॥ द्वे '**प्रस्वेदादिमार्जनार्थहस्तस्थवस्त्रखण्डस्य**'। स्वामी तु—द्रवद्रव्यं येन पूयते तत्र रूढोऽयम्—इत्याह। मुकुटस्तु—मलिनत्वादिदुष्टजीर्णवस्त्रखण्डस्य ॥

**वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम् ॥ ११५ ॥**

**वेति** ॥ वस्यतेऽनेन। 'वस आच्छादने' ( अ० आ० से० )। ष्ट्रन् (उ० ४।१५९) ॥ (१) ॥*॥ आच्छाद्यतेऽनेन ल्युट् (३।३।११७) ॥ (२) ॥*॥ वस्यतेऽनेन। 'वसेर्णित्' (उ० ४।११८) इत्यसुन् ॥ (३) ॥*॥ चिल्यतेऽनेन। 'चिल वसने' ( तु० प० से० )। घञ् (३।३।१९)। गौरादिः (४।१।४१)।—'कल्पचेलट्–' (६।३।४३) इति टित्त्वनिपातनाद्वा ङीप्। '**चेलो** नीचेऽधमे त्रिषु। नपुंसकं तु वसने'। इति मेदिनी ॥ (४) ॥*॥ वस्यतेऽनेन। ल्युट् (३।३।११७) '**वसनं** छादने वस्त्रे' (इति मेदिनी) ॥ (५) ॥*॥ '**अंशुः** सूत्रादिसूक्ष्मांशे किरणे चण्डदीधितेः' (इति हैमः)। अंशून् कायति। कः (३।२।३)। यद्वा अंशुभिः काशते। 'काशृ दीप्तौ' ( भ्वा० आ० से० )। अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः। '**अंशुकं** श्लक्ष्णवस्त्रे स्याद्वस्त्रमात्रोत्तरीययोः' (इति मेदिनी) ॥ (६) ॥*॥ '**पटोऽस्त्री कर्पटः शाटः सिचयप्रोतलक्तकाः**' इति रभसः ॥*॥ षट् '**वस्त्रस्य**' ॥

**सुचेलकः पटोऽस्त्री**

**स्विति** ॥ शोभनं चेलमेव। स्वार्थे कन् (ज्ञापि० ५।४।५)। स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि, (५।      ) ॥ (१) ॥*॥ पटति। 'पट गतौ' (भ्वा० प० से० )। 'पट विस्तारे' (चु० उ० से०) वा। अच् (३।१।१३४)। यद्वा पट्यतेऽनेन। 'पट भासने' (चु० उ० से० )। 'खनो घ च' (३।३।१२१) इति घो घिलादन्यस्मादपि। 'हलश्च' (३।३।१२१) इति घञि संज्ञापूर्वकत्वाद्वृद्ध्यभावः। 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' (      ) इति घञ्विषये 'पुंसि–' (३।३।१५८) इति घो वा—'घञर्थे कः' (वा० ३।३।५८)—इति मुकुटः। तन्न। परिगणनात्। '**पटश्चित्रपटे वस्त्रेऽस्त्री**, प्रियालद्रुमे

पुमान्' (इति मेदिनी) ।—'अस्त्री' इति चिन्त्यम् । द्वयोरदर्शनात्—इति स्वाम्येव चिन्त्यः । उक्तरभसमेदिन्योः 'अस्त्री' इति दर्शनात् ॥ (२) ॥*॥ द्वे '**शोभनवस्त्रस्य**' ॥

**ना वराशिः स्थूलशाटकः ।**

**नेति** ॥ वरं श्रेष्ठं वरणं वा अश्नुते । इन् (उ० ४।११८) । 'वराशिर्ना' इति ताल्व्यान्ते शाब्दिकः ॥*॥ '**वरासिः** स्यात्खड्गवरे **वरासिः** स्थूलशाटके' इति दन्त्यान्तेषु रभसः ॥ (१) ॥*॥ शटति । 'शट रुजादौ' (भ्वा० प० से०) । ण्वुल् (३।१।१३३) । स्थूलश्चासौ शाटकश्च ॥ (२) ॥*॥ 'वराशिर्ना' इत्यन्वयः ॥*॥ द्वे '**स्थूलपटस्य**' ।—चत्वार एकार्थाः—इत्येके ॥

**निचोलः प्रच्छदपटः**

**नीति** ॥ निचोल्यते । 'चुल समुच्छ्राये' चुरादिः । घञ् (३।३।१९) । यद्वा चोड्यते । 'चुड कृतौ' चुरादिः । घञ् (३।३।१९) डलयोरेकत्वम् । '**निचोलं** तु नपुंसकम्' इति रभसः ।—स्त्रियां '**निचोली**' इत्यपि—इति राजदेवः ॥*॥ निचुलोऽपि । '**निचुलस्तु** निचोले स्यादिज्जलाख्यमहीरुहे' (इति मेदिनी) ॥ (१) ॥*॥ प्रच्छदति । प्रच्छाद्यते वा । 'छद संवरणे' (चु० उ० से०) । अच् (३।१।१३४) । घः (३।३।११८) वा प्रच्छाद्यतेऽनेन वा । चुरादिण्यन्तात् घः (३।३।१८) । 'छादेर्घे–' (६।४।९६) इति ह्रस्वः । प्रच्छदश्चासौ पटश्च ॥ (२) ॥*॥ द्वे '**डोलिकाद्यावरणपटस्य**' ।—स्त्रीपिधानपटस्य '**बुरका**' इति ख्यातस्य—इत्यन्ये ॥—येन तूलशय्यादि प्रच्छाद्यते तस्य—इति स्वामी ॥

**समौ रल्लककम्बलौ ॥ ११६ ॥**

**सेति** ॥ रमते । क्विप् । (३।२।१७८) । 'गमादीनां क्वौ' (वा० ६।४।४०) इति मलोपः । तुक् (६।१।७१) ॥ लाति । क्विप् (३।२।१७८) । रत् चासौ लश्च । स्वार्थे कन् (ज्ञापि० ५।४।५) । 'केऽणः' (७।४।१३) इति ह्रस्वः । यद्वा रमणम् । संपदादिः (वा० ३।३।१०८) । रत् क्रीडा लक्ष्यतेऽनेन । 'लक आस्वादने' ( ) घः (३।३।११८) । रतं लाति । क्वुन् (उ० २।३२) वा । '**रल्लकः** कम्बले स्मृतः । तथैव कम्बलमृगे' इति हैमः ॥ (१) ॥*॥ कम्बति, कम्ब्यते वा 'कम्ब गतौ' ( ) । वृषादित्वात् (उ० १।१०६) कलच् । संज्ञापूर्वकत्वान्नलोपो न । '**कम्बलः** क्रिमिसास्नयोः । नागप्रभेदे प्रावारे वैकक्ष्ये **कम्बलं** जले' इति हैमः ॥ (२) ॥*॥ द्वे '**कम्बलस्य**' ॥

**अन्तरीयोपसंव्यानपरिधानान्यधोंशुके ।**

**अन्तेति** ॥ अन्तरे भवम् । गहादित्वात् (४।२।१३८) छः ॥ (१) ॥*॥ उपसंवीयतेऽनेन । 'व्येञ् संवरणे' (भ्वा० उ० से०) । ल्युट् (३।३।११७) ॥ (२) ॥*॥ परिधीयते । 'डुधाञ् धारणे' (जु० उ० अ०) । 'कृत्यल्युटः–' (३।३।११३) इति ल्युट् ॥ (३) ॥*॥ अधोदेहभागस्थांशुकम् ॥ (४) ॥*॥ चत्वारि '**परिधानवस्त्रस्य**' ॥

**द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥ ११७ ॥**
**संव्यानमुत्तरीयं च**

**द्वाविति** ॥ प्र व्रियतेऽनेन । 'वृञ् वरणे' (स्वा० उ० से०) । 'वृणोतेराच्छादने' (३।३।५४) इति घञ् । 'उपसर्गस्य घञि' (६।३।१२२) इति दीर्घः ॥ (१) ॥*॥ उत्तरे ऊर्ध्वभागे आसज्यते । 'षञ्ज सङ्गे' (भ्वा० प० अ०) । घञ् (३।३।१९) ॥ (२) ॥*॥ '**बृहती** वसनान्तरे' (इति मेदिनी) ॥ बृहत्येव । 'बृहत्या आच्छादने' (५।४।६) इति कन् ॥ (३) ॥*॥ संवीयतेऽनेन । ल्युट् (३।३।११७) । '**संव्यानं** छदनेंऽशुके' इति विश्वमेदिन्यौ ॥ (४) ॥*॥ उत्तरस्मिन्देहभागे भवम् । गहादित्वात् (४।२।१३८) छः ॥ (५) ॥*॥ पञ्च '**उपरिवस्त्रस्य**' ॥

**चोलकूर्पासकौ स्त्रियाः ।**

**चोलेति** ॥ चोल्यतेऽनेन । 'चुल समुच्छ्राये' (चु० प० से०) अच् (३।३।५६) । घः (३।३।११८) वा । अल्पश्चोलः । गौरादिः (४।१।४१) । चोली ॥ (१) ॥*॥ '**कूर्परः** स्यात्कफोणौ च जानुन्यपि च पुंस्ययम्' (इति मेदिनी) । कूर्परेऽस्यते कूर्परोऽस्यतेऽत्र वा । 'असु क्षेपणे' (दि० प० से०) । कूर्परे आस्ते वा । 'आस उपवेशने' (अ० आ० से०) । घञ् (३।३।१९) । अच् (३।१।१३४) वा । पृषोदरादिः (६।३।१०९) । स्वार्थे कन् (ज्ञापि० ५।४।५) । '**कूर्पासस्त्वर्धचोलकः**' इति हारावली ॥ (१) ॥*॥—आप्रपदीनकञ्चुकस्य, '**स्त्रीणां कञ्चुलिकाख्यस्य**' द्वे—इति स्वामी ॥

**नीशारः स्यात्प्रावरणे हिमानिलनिवारणे ॥ ११८ ॥**

**नीति** ॥ नितरां शीर्यते हिमानिलावत्र । अनेन वा । 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'शॄ वायुवर्णनिवृतेषु' (वा० ३।३।२१) इति घञ् । 'उपसर्गस्य घञि' (६।३।१२२) इति दीर्घः ॥ (१) ॥*॥ एकम् '**प्रावरणस्य**' ॥

**अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम् ।**

**अर्धेति** ॥ 'ऊरोरर्धम्' । 'अर्धं नपुंसकम्' (२।२।२) इति समासः । अर्धोरौ काशते । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः ॥*॥ चण्डां कोपनां वरस्त्रियमतति । क्वुन् (उ० २।३२) । 'अर्धोरुकं वरस्त्रीणां वासश्चण्डातकः स्मृतः' इति पुंस्काण्डे बोपालितात्पुंलिङ्गोऽपि ॥ (१) ॥*॥ एकं '**लहंगा**' इति ख्यातस्य ॥

---

१—'स्त्रियाः' इति विशेषेणोक्तम् । पुंसोऽप्येतावुपमानादिति सुभूतिः । 'द्वे स्त्रीपुंसकंचुलिकायाः'—इति मुकुटः ॥

**स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ॥ ११९ ॥**

**स्यादिति** ॥ आप्रपदं प्राप्नोति । 'आप्रपदं प्राप्नोति' (५।२।८) ॥ (१) ॥*॥ यदाप्रपदं प्राप्नोति तदाप्रपदीनम् ॥*॥ एकं **'पादाग्रपर्यन्तलम्बमानवस्त्रस्य'** ॥

**अस्त्री वितानमुल्लोचः**

**अस्त्रीति** ॥ वितन्यते । घञ् (३।३।१९) । **'वितानो** यज्ञ उल्लोचे विस्तारे पुंनपुंसकम् । क्लीबं वृत्तविशेषे स्यात्त्रिलिङ्गो मन्दतुच्छयोः' (इति मेदिनी) ॥ (१) ॥*॥ ऊर्ध्वं लोचति । 'लोचृ भासने' (चु० उ० से०) । ऊर्ध्वं लोच्यते । 'लोचृ दर्शने' (भ्वा० आ० से०) वा । अच् (३।१।१३४) । घञ् (३।३।१९) वा ॥ कुत्वं तु 'निष्ठायामनिटः' (वा० ७।३।५३) इति वचनादस्य तु तत्र सेट्त्वात् ॥ (२) ॥*॥ द्वे **'वितानस्य' 'चंदवा'** इति ख्यातस्य ॥

**दूष्याद्यं वस्त्रवेश्मनि ।**

**द्विति** ॥ दूष्यते । 'दुष वैकृत्ये' (दि० प० अ०) । ण्यन्तात् 'अचो यत्' (३।१।९७) । 'दोषो णौ' (६।४।९०) इत्यूः । **'दूष्यं** त्रिषु दूषणीये क्लीबं वस्त्रे च तद्गृहे' (इति मेदिनी) ॥ (१) ॥*॥ आद्येन कुटरपटकुटीपटवासादिग्रहः । एकं **'वस्त्रगेहस्य'** ॥

**प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा ॥१२०॥**

**प्रतीति** ॥ प्रति सिनोति । प्रतिसीयते । वा । 'षिञ् बन्धने' (स्वा० उ० अ०) । 'शुसिचिमीनां दीर्घश्च' (उ० २।१३) इति रक् ॥ (१) ॥*॥ जवत्यस्याम् । 'जुः' सौत्रो गतौ वेगे च । ल्युट् (३।३।११७) । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥*॥ **'यमनिका'** इति वा पाठः । यमयति । 'यम उपरमे' (भ्वा० प० अ०) । ल्युट् (३।३।११७) । कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ तिरस्करोति । ग्रह्यादित्वात् (३।१।१३४) णिनिः । निपातनाद्वृद्ध्यभावः । संज्ञापूर्वकत्वाद्वा ॥*॥ तिरस्क्रियतेऽनया । ल्युट् (३।१।११७) । **'तिरस्करणी'** ॥ (३) ॥*॥ त्रीणि **'व्यवधानपट्याः' 'कनात'** इति ख्यातायाः ॥

क्वचित् 'पर्यङ्किका परिकरः पर्यङ्कश्चावसक्थिका । अञ्चलं स्वंशुकान्ते स्यान्नीवी सारसनश्च यः' ॥

**परिकर्माङ्गसंस्कारः**

**पेति** ॥ परि मलवर्जनार्था क्रिया परिकर्म स्नानोद्वर्तनादि ॥*॥ **'प्रतिकर्म'** इति क्वचित्पाठः ॥ (१) ॥*॥ अङ्गं संस्क्रियतेऽनेन । घञ् (३।३।१९) ॥ (२) ॥*॥ द्वे **'शरीरशोभाधायककर्मणः'** ॥

**स्यान्मार्ष्टिर्मार्जना मृजा ।**

**स्यादिति** ॥ मार्जनम् । 'मृजू शौचालंकरणयोः' चुरादिः । ॥बादित्वात् (वा० ३।३।९४) क्तिन् । 'तितुत्र—' (७।२।९) इति नेट् । णिलोपः (६।४।५१) ।—बाहुलकात्क्तिः—इत्यन्ये ॥ (१) ॥*॥ 'ण्यासश्रन्थो युच्' (३।३।१०७) । **'मार्जनो** लोध्रशाखिनि । **मार्जनं** शुद्धिकरणे **मार्जना** मुरजध्वनौ' इति हैमः ॥ (२) ॥*॥ भिदाद्यङ् (३।३।१०४) ॥ (३) ॥*॥ त्रीणि **'प्रोञ्छनादिनाङ्गनिर्मलीकरणस्य'** ॥

**उद्वर्तनोत्सादने द्वे समे**

**उद्वेति** ॥ उद्वर्त्यतेऽनेन । 'वृतु वर्तने' (भ्वा०आ०से०) । ण्यन्तः । ल्युट् (३।३।११७) ॥ (१) ॥*॥ उत्साद्यतेऽनेन । 'षद्लृ विशरणादौ' (तु० प० अ०) । ण्यन्तः । ल्युट् (३।३।११७) । **'उत्सादनं** समुल्लेखोद्वर्तनोद्वाहनेषु च' इति हैममेदिन्यौ ॥ (२) ॥*॥ द्वे **'उद्वर्तनद्रव्येणाङ्गनिर्मलीकरणस्य'** ॥

**आप्लाव आप्लवः ॥ १२१ ॥**

**स्नानम्**

**आप्लेति** ॥ आप्लवनम् । 'प्लुङ् गतौ' (भ्वा० आ० से०) । 'विभाषाङि रुप्लुवोः' (३।३।५०) इति वा घञ् ॥ (१) ॥*॥ पक्षे 'ऋदोरप्' (३।३।५७) ॥ (२) ॥*॥ 'ष्णा शौचे' (अ० प० अ०) । भावे ल्युट् (३।३।११५) ॥ (३) ॥*॥ त्रीणि **'स्नानस्य'** ॥

**चर्चा तु चार्चिक्यं स्थासकः**

**चेति** ॥ चर्चनम् । 'चर्च अध्ययने' (चु० उ० से०) । 'चिन्तिपूजिकथि—' (३।३।१०५) इत्यङ् । **'चर्चा** स्याच्चर्ममुण्डायां चिन्तास्थासकयोरपि' (इति हैमः) ॥ (१) ॥*॥ 'धात्वर्थनिर्देशे ण्वुल्' (वा० ३।३।१०८) । **'चार्चिका'** । ततः स्वार्थे ष्यञ् (वा० ५।१।१२४) ॥ (२) ॥*॥ तिष्ठति । 'ष्ठा गतिनिवृत्तौ' (भ्वा० प० से०) । बाहुलकात्सः । स्वार्थे कन् (ज्ञापि० ५।४।५) । **'स्थासकः** पुंसि चार्चिक्ये जलादेरपि बुद्बुदे' इति मेदिनी ॥ (३) ॥*॥ त्रीणि **'चन्दनादिना देहविलेपनस्य'** ॥

**अथ प्रबोधनम् ।**

**अनुबोधः**

**अथेति** ॥ प्रबुद्धिः । 'बुध अवगमने' (दि० आ० अ०) । भावे ल्युट् (३।३।११५) ॥ (१) ॥*॥ अनुपूर्वाद्भावे घञ् ॥ (२) ॥*॥ द्वे **'गतगन्धस्य प्रयत्नेनोद्बोधनस्य'** । यथा कस्तूरिकादेर्मद्यादिना ॥

**पत्रलेखा पत्राङ्गुलिरिमे समे ॥ १२२ ॥**

**पेति** ॥ पत्राकारा लेखा । शाकपार्थिवादिः (वा० २।१।७८) ॥ (१) ॥*॥ पत्रार्थोऽङ्गुलिरङ्गुलिव्यापारः ॥ (२) ॥*॥ समे स्त्रियाम् ॥*॥ द्वे **'स्तनकपोलादौ केसरादिना रचितस्य तिलकविशेषस्य'** ॥

**तमालपत्रतिलकचित्रकाणि विशेषकम् ।**
**द्वितीयं च तुरीयं च न स्त्रियाम्**

**तेति** ॥ तमालपत्रमिव । तदाकृतित्वात् । '**तमालपत्रं** तापिच्छे तिलके पत्रके' इति विश्वः ॥*॥ '**तमालस्तिलके** खड्गे' इति विश्वात्तमालोऽपि ॥ (१) ॥*॥ तिलति । 'तिल स्नेहने' (तु० प० से०) । क्वुन् (उ० २।३२) । 'तिलकोऽश्वद्रुमभिदोः पुण्ड्रके तिलकालके । **तिलकं** रुचके लोम्नि' इति हैमः ॥ (२) ॥*॥ चित्रयति । 'चित्र चित्रक्रियायाम्' (चु० उ० से०) । क्वुन् (उ० २।३२) । चित्रं करोति वा । 'अन्येभ्योऽपि (वा० ३।२।१०१) इति डः । '**चित्रकं** तिलके ना तु व्याघ्रभिच्चक्षुपादिषु' (इति मेदिनी) ॥ (३) ॥*॥ विशिनष्टि । 'शिष्लृ विशेषणे' (रु० उ० अ०) । ण्वुल् (३।१।१३३) । '**विशेषको**ऽस्त्री तिलके विशेषयितरि त्रिषु' (इति मेदिनी) ॥ (४) ॥*॥ द्वितीयं तिलकम्, तुरीयं विशेषकं, च स्त्रियां न भवतः । किं तु पुंनपुंसकयोः ॥*॥ चत्वारि '**ललाटकृतस्य तिलकस्य**' ॥

**अथ कुङ्कुमम् ॥ १२३ ॥**

**काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतनम् ।**
**रक्तसंकोचपिशुनं धीरलोहितचन्दनम् ॥ १२४ ॥**

**अथेति** ॥ 'कुङ्कुम्' इति शब्दोऽस्ति वाचकत्वेनास्य । अर्शआद्यच् (५।२।१२७) । यद्वा कुक्यते । 'कुक आदाने' (भ्वा० आ० से०) । बाहुलकादुमच् । 'आच्छी–' (७।१।८०) इत्यत्र 'नुम्' इति योगविभागान्नुम् ॥ (१) ॥*॥ कशति, कश्यते वा 'कश शब्दे' ( ) । 'कशेर्मुट् च' (उ० ४।३२) इतीरन् ।—'गम्भीरादयश्च'–इति मुकुट एतत्सूत्रादर्शनमूलकः । कश्मीरे जन्मास्य । '**काश्मीरं** कुङ्कुमेऽपि स्याट्टङ्कपुष्करमूलयोः' (इति मेदिनी) ॥ (२) ॥*॥ अग्निरिव शिखा केसरोऽस्य । 'अथा**ग्निशिख**मुद्दिष्टं कुसुम्भे कुङ्कुमेऽपि च' (इति मेदिनी) ॥ (३) ॥*॥ व्रियते । 'वृञ् वरणे' (स्वा० उ० से०) । 'ग्रहवृदृ–' (३।३।५८) इत्यप् । '**वरो** वृतौ । विटे जामातरि श्रेष्ठे देवतादेरभीप्सिते । **वरं तु घुसृणे** किंचिदिष्टे' इति हैमः । '**काश्मीरजं वह्निशिखं** बाह्लीकं पीतनं वरम्' (इति वाचस्पतिः) ॥ (४) ॥*॥ वल्हते । 'वल्ह प्राधान्ये' ( भ्वा० आ० से० ) । बाहुलकादीकन् । वल्हीकदेशे भवम् 'कच्छादिभ्यश्च' (४।२।१३३) इत्यण् । '**बाल्हीकं वाल्हिकं** धीरहिङ्गुनोर्नाश्मदेशयोः' ( इति त्रिकाण्डशेषः) ॥*॥ 'काश्मीरं **चारु** वाल्हीकं संकोचं पिशुनं वरम्' इति हलायुधाच्चार्वपि ॥ (५) ॥*॥ पीतं करोति । 'तत्करोति–' (वा० ३।१।२६) इति ण्यन्ताल्ल्युः (३।१।१३३) । यद्वा पीयते । 'पीङ् पाने' (दि० आ० अ०) । बाहुलकात्तनन्, गुणाभावश्च । '**पीतनं** पीतदारुणि । कुङ्कुमे हरिताले च पुमानाम्रातके मतः' (इति मेदिनी) ॥ (६) ॥*॥ रज्यते स्म । 'गत्यर्था–' (३।४।७२) इति क्तः ॥ '**रक्तं** नील्यादिरञ्जिते । कुङ्कुमेऽसृज्यनुरक्ते प्राचीनामलकेऽरुणे ॥' (इति हैमः) ॥ (७) ॥*॥ संकोचति, संकुच्यते, वा । यद्वा संकोचयति, संकोच्यते, वा । 'कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु' (भ्वा० प० से०) । अच् (३।१।१३४) । घञ् (३।३।१९) वा ।—संकुचति—इति मुकुटो न सम्यक् ॥ 'कुच संकोचने' इत्यस्य कुटादित्वेनाजि गुणाभावप्रसङ्गात् । '**संकोचो** मीनभेदे च बन्धं क्लीबं तु कुङ्कुमे' इति मेदिनी ॥ (८) ॥*॥ पिंशति । 'पिश अवयवे' (तु० प० से०) । 'क्षुधिपिशिमिथिभ्यः कित्' (उ० ३।५५) इत्युनन् । '**पिशुनं** कुङ्कुमेऽपि च । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु । पृक्कायां **पिशुना** स्त्री स्यात्' (इति मेदिनी) ॥ (९) ॥*॥ दधाति । धीयते वा । 'डुधाञ् धारणादौ' (जु० उ० से०) । 'सुसूधाञ्गृधिभ्यः क्रन्' (उ० २।२४) । 'घुमास्था–' (६।४।६६) इतीत्वम् । '**धीरो** धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे ॥' (१०) ॥*॥ लोहितं च ॥*॥ लोहितमपि । '**लोहितं** रक्तगोशीर्षे कुङ्कुमे रक्तचन्दने' (इति मेदिनी) ॥ (११) ॥*॥ एकादश '**कुङ्कुमस्य' 'केसर'** इति ख्यातस्य ॥

**राक्षा लाक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः ।**

**रेति** ॥ रक्ष्यते । अनया वा । 'रक्ष पालने' ( भ्वा० प० से०) । 'गुरोश्च–' (३।३।१०३) इत्यः । प्रज्ञाद्यण् (५।४।३८) । अजादित्वात् (४।१।४) टाप् । अत एव 'लाक्षायां रक्षणे **रक्षा**' इति रुद्रः ॥ (१) ॥*॥ लक्ष्यते । अनया वा । 'लक्ष दर्शने' (चु० प० से०) । प्राग्वत् ॥ (२) ॥*॥ जायते । 'फलिपाटि–' (उ० १।१८) इत्युः तोऽन्तादेशः । यत्तु—बाहुलकात्तुगत्वाभावश्च—इति मुकुटः स उक्तसूत्रास्मरणमूलकः ॥ (३) ॥*॥ यौति । यूयते वा । अच् (३।१।१३४) । 'ऋदोरप्' (३।३।५७) वा यव एव । प्रज्ञाद्यण् (५।४।३८) । 'यावोऽलक्ते पाकभेदे' इति हैमः ॥ (४) ॥*॥ न लज्जते स्म । 'ओ लस्जी व्रीडे' ( तु० आ० से० ) । बाहुलकात्तन् । यद्वा न लक्यते स्म । अभक्ष्यत्वात् । क्तः (३।२।१०२) यद्वा न रक्तोऽस्मात् । 'कपिलिकादित्वात्' (वा० ८।२।१८) लत्वम् ॥ (५) ॥*॥ द्रुमाणामामयः ॥ (६) ॥*॥ षट् '**लाक्षाः' 'महावर'** इति ख्यातस्य ॥

**लवङ्गं देवकुसुमं श्रीसंज्ञम्**

**लेति** ॥ लुनाति, लूयते, वा । 'तरत्यादिभ्यश्च' (उ० १।१२०) इत्यङ्गच् ॥ (१) ॥*॥ देवानां कुसुमम् । कुसुमेषु देव इव । राजदन्तादिः (२।२।३१) । देवयोग्यं कुसुमं वा । शाकपार्थिवादिः (वा० २।१।७८) ॥ (२) ॥*॥ श्रियः संज्ञा संज्ञा यस्य ॥ (३) ॥*॥ त्रीणि '**लवङ्गस्य**' ॥

**अथ जायकम् ॥ १२५ ॥**

**कालीयकं च कालानुसार्यं च**

**अथेति** ॥ जयति गन्धान्तरम् । 'जि अभिभवे' (भ्वा०

प० से०) ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ कालस्य वर्णभेदम्। 'वृद्धाच्छः' (४।२।११४)। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥*॥ क्वचित् 'कालेयकम्' इति पाठः। कलेरिदम्। 'सर्वत्राग्निकलिभ्याम्' (वा० ४।२। ) इति ढक्। 'कालीयकं च **कालेयं** वर्णकं कान्तिदायकम्' इति व्याडिः ॥ (२) ॥*॥ अनुस्रियते। 'सृ गतौ' (भ्वा० प० अ०)। ण्यत् (३।१।१२४)। कालेन वस्तुनानुसार्यम्। **'कालानुसार्यं** शैलेये कालीये शिंशपाद्रुमे' इति विश्वमेदिन्यौ ॥ (३) ॥*॥ त्रीणि **'सुगन्धद्रव्यभेदस्य'** ॥

**अथ समार्थकम्।**

**वंशकागुरुराजार्हलोहं कृमिजजोङ्गकम् ॥ १२६ ॥**

**अथेति** ॥ वंश इव। 'इवे प्रति–' (५।३।८६) इति कन् ॥*॥ क्वचित् 'वंशिक' इति पाठः। वंशोऽस्त्यत्र। ठन् (५।२।११५)। 'राजार्हं **वंशिकं नतम्। वनद्रुमः परमदो** वंशकं लोहनामकम्' इति वाचस्पतिः ॥ (१) ॥*॥ न गुरु। यस्माद्वा। 'कुसुम्बुरुकधान्याकमगुरु वा पुंसि **लघु**नाम च' इति बोपालितः। 'अगुरुस्त्वगरौ लघौ। शिंशिपायाम्' इति हैमः। ( **'अगुर्वगरु** राजार्हम्' इति **हैमः** ) ॥ (२) ॥*॥ राजानमर्हति। 'अर्हः प्रशंसायाम्' (३।२।१३३) इत्यच्। **'राजार्हं** जोङ्गके क्लीबं राजयोग्येऽभिधेयवत्' इति मेदिनी ॥ (३) ॥*॥ लुह्यते। 'लुह गार्ध्ये' ( )। घञ् (४।३।१९)। रोहति। अच् (३।१।१३४)। रलयोरैक्यम्। वा।—'लुलो हः'—इति मुकुटस्त्वपाणिनीयः। **'लोहो**ऽस्त्री शस्त्रके **लोहं** जोङ्गके सर्वतैजसे' (इति मेदिनी) ॥ (४) ॥*॥ कृमिभिर्जन्यते। 'अन्येष्वपि' (३।२।१०१) इति डः ॥ (५) ॥*॥ जुङ्गति। जुङ्ग्यते, वा 'जुगि वर्जने' (भ्वा० प० से०) क्कुन् (उ० २।३२)। पृषोदरादिः (६।३।१०९)। बाहुलकाद्गुणो वा ॥ (६) ॥*॥ ('अगुरु **प्रवरं** लोहं **क्रिमिजग्धमनार्यजम्'** इति शाश्वतः ॥*॥ षट् **'अगुरुणः'** ॥

**कालागुर्वगुरु**

**केति** ॥ कालं च तदगुरु च ॥ (१) ॥*॥—'कालागुर्वप्यगुरूच्यते'—इति सुभूतिः। द्वे **'कालागुरुणः'** ॥

**स्यात्तन्मङ्गल्या मल्लिगन्धि यत्।**

**स्यादिति** ॥ मल्लिकापुष्पस्येव गन्धो यस्य। 'उपमानाच्च' (५।४।१३७) इतीत्। यदगुरु मल्लिगन्धि तत् मङ्गल्या स्यात्। मङ्गले साधुः। 'तत्र साधुः' (४।३।९८) इति यत्। **'मङ्गल्यः'** स्यात्त्रायमाणाश्वत्थबिल्वमसूरके। स्त्रियां शम्यामधःपुष्पीमिसिशुक्लवचासु च। रोचनायामथो दध्नि क्लीबं शिवकरे त्रिषु' इति मेदिनी ॥ (१) ॥*॥ एकम् **'माङ्गल्यायाः'** ॥

१—'नागरुचितस्तिलकः' इति दमयन्तीश्लेषः ॥

**यक्षधूपः सर्जरसो रालसर्वरसावपि ॥ १२७ ॥**
**बहुरूपोऽपि**

**यक्षेति** ॥ यक्षान् धूपायति। 'धूप संतापे' (भ्वा० प० से०)। 'आयादय आर्धधातुके वा' (३।१।३१) 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ सर्जस्य सालस्य रसः ॥ (२) ॥*॥ न राति दुःखम्। बाहुलकात्क् ॥*॥—**रालः**—इति स्वामी। **'अरालः** सर्जवक्रियोः' इति, **'रालः** सर्वरसोऽरालो **धूपको वह्निवल्लभः'** इति च रभसः ॥ (३) ॥*॥ सर्वैं रस्यते। 'रस आस्वादने' (चु० उ० से०) अदन्तः। ण्यन्तः। घञ् (३।३।१९)। अच् (३।३।५६) वा। सर्वे रसा यस्मिन् वा। नानाकृतिगन्धत्वात् ॥ (४) ॥*॥ बहूनि रूपाण्यस्य। **'बहुरूपः** सरे विष्णौ सरटे धूपके शिवे' इति हैमः ॥ (५) ॥*॥ पञ्च **'रालस्य'** ॥

**अथ वृकधूपकृत्रिमधूपकौ।**

**अथेति** ॥ वृक इव धूपः। **'वृकधूप**स्तु सरलद्रवकृत्रिमधूपयोः' (इति मेदिनी) ॥ (१) ॥*॥ कृत्रिमश्चासौ धूपश्च। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे **'नानासुगन्धिकृतस्य दशाङ्गादिधूपस्य'** ॥

**तुरुष्कः पिण्डकः सिल्हो यावनोऽपि**

**त्विति** ॥ तुतोर्ति। 'तुर त्वरणे' (जु० प० से०)। बाहुलकादुस्, गुणाभावश्च। स्वार्थे कन् (ज्ञापि० ५।४।५)। **'तुरुष्कः** सिल्हके म्लेच्छजातौ देशान्तरेऽपि च' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ पिण्डते। 'पिडि संघाते' (भ्वा० आ० से०)। अच् (३।१।१३४)। स्वार्थे कन् (ज्ञापि० ५।४।५)।—पिण्डति। 'पिडि गतौ'—इति मुकुटश्चिन्त्यः। 'पडि गतौ' इत्यस्यात्मनेपदिषु पाठात्। 'पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः। देहमात्रे निवापे च गोलसिल्हकयोरपि। ओड्रपुष्पे च पुंसि स्यात् क्लीबमाजीवनायसोः। **पिण्डी** तु पिण्डतगरेऽलाबूखर्जूरभेदयोः' (इति मेदिनी ॥ (२) ॥*॥ सिह्यति 'सिह प्रीतौ' (दि० प० से०)। अन्तर्भावितण्यर्थः। बाहुलकाल्लक्। पृषोदरादिः (६।३।१०९) ॥ (२) ॥*॥ यवनदेशे भवः। 'तत्र भवः' (४।३।५२) इत्यण्। याव्यते वा। यौतेर्ण्यन्ताद्युद् (३।३।११३) ॥ (४) ॥*॥ चत्वारि **'सिल्हाख्यगन्धद्रव्यस्य' 'लोहवात'** इति ख्यातस्य ॥

**अथ पायसः ॥ १२८ ॥**
**श्रीवासो वृकधूपोऽपि श्रीवेष्टसरलद्रवौ।**

**अथेति** ॥ पय एव। प्रज्ञाद्यण् (५।४।३८)। पयसो विकारो वा। 'तस्य विकारः' (४।३।१३३) इत्यण्। 'सरलद्रवः **श्रीपिष्टो दधिक्षीरघृताह्वयः'** इति रभसः। **'पायस**स्तु क्लीबपुंसोः श्रीवासपरमान्नयोः' (इति मेदिनी)। (१) ॥*॥ श्रियो वासः। **'श्रीवासो** वृकधूपे स्यात् पङ्कजे मधुसूदने' (इति मेदिनी) ॥*॥ श्रीश्चासौ **वासश्च**, इति वा।

'श्रीर्वेषरचनाशोभाभारतीसरलद्रवे' इति विश्वः ॥ (२) ॥*॥ 'वृकः स्यात् कृत्रिमेऽनेकधूपेऽपि सरलद्रवे' इति रभसः धूप्यतेऽनेन । 'धूप संतापे' ( भ्वा० प० से० ) । घञ् (३।३। १८) । वृकनामा धूपः । शाकपार्थिवादिः (वा० २।१।७८) ॥ (३) ॥*॥ श्रियः सरलद्रवस्य पिष्टः । तच्चूर्णेन जनितत्वात्— इति मुकुटः ॥*॥ अन्ये तु—श्रीसंज्ञकः श्रियो वा वेष्टो निर्यासः—इत्याहुः ॥ (४) ॥*॥ सरलस्य देवदारोर्द्रवः ॥ (५) ॥*॥ पञ्च **'सरलद्रवस्य'** ॥

**मृगनाभिर्मृगमदः कस्तूरी च**

**मृगेति** ॥ मृगस्य नाभिः ॥ (१) ॥*॥ मृगस्य मदः ॥ (२) ॥*॥ कसति गन्धोऽस्याः । 'कस गतौ' (भ्वा० प० से०) । खर्जादित्वात् (उ० ४।९०) ऊरः । पृषोदरादिः (६।३।१०९) ॥ (३) ॥*॥ 'मृगनाभिर्मृगमदो **मृगः** कस्तूरिकापि च' इति माधवात् 'मृगः' अपि ॥*॥ 'मदः' अपि । '**मदो** रेतसि कस्तूर्याम्' इति मेदिनी ॥*॥ 'मुख्यराट्क्षत्रिये **नाभिः** पुंसि, प्राण्यङ्गके द्वयोः । चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे' इति रभसात् 'नाभिः' अपि ॥*॥ त्रीणि **'कस्तूर्याः'** ॥

**अथ कोलकम् ॥ १२९ ॥**

**कक्कोलकं कोशफलम्**

**अथेति** ॥ कोलति । 'कुल संस्त्याने' (भ्वा० प० से०) । ण्वुल् (३।१।१३३) ॥*॥ रलयोरेकत्वात् 'कोरकम्' अपि । '**कोरको**ऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः' (इति मेदिनी )॥ (१) ॥*॥ ककन्तेऽत्र । 'कक लौल्ये' ( भ्वा० आ० से० ) । संपदादिः (वा० ३।३।१०८) कोलति । ज्वलादित्वात् (३।१। १४०) णः । कक् च तत् कोलं च । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ कोशे फलमस्य ॥ (३) ॥*॥ त्रीणि **'फलकर्पूरस्य' 'गहुला'** इति ख्यातस्य ॥

**अथ कर्पूरमस्त्रियाम् ।**

**घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका ॥ १३० ॥**

**अथेति** ॥ किरति । 'कॄ विक्षेपे' (तु०प०से०) । कृणाति । 'कॄञ् हिंसायाम्' ( क्र्या० उ० से० ) वा । करोति । 'डुकृञ् करणे' (त० उ० अ०) वा । विच् (३।२।७) । पूर्यते । 'पूरी आप्यायने' ( दि० आ० से० ) । 'इगुपध–' (३।३।१३५) इति कः । कर् चासौ पूरश्च ।—कल्पते । 'कृपू सामर्थ्ये' (भ्वा० आ० से०) । खर्जादित्वात् (उ० ४।९०) ऊरः—इति स्वामिमुकुटौ । तच्चिन्त्यम् । 'कृपो रो लः' (८।२।१८) इति लत्वस्य दुर्वारत्वात् । बाहुलकात्तदभावो वा बोध्यः ॥ (१) ॥*॥ घनो दृढः सारोऽस्य । '**घनः** सान्द्रे दृढे दार्ढ्ये' इति विश्वः । घनस्य सार इव वा । शीतत्वात् शिताभ्राकारत्वाच । **'घनसारस्तु कर्पूरे दक्षिणावर्तपारदे'** इति हैमः ॥ (२) ॥*॥ चन्द्रस्य संज्ञा संज्ञा यस्य ॥ (३) ॥*॥ सितं श्वेतं बन्धनं वा चन्द्रं वा अभ्रति । 'अभ्र गतौ' (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१) । सितं शौक्ल्यमभ्रयति स्वसंबद्धम्, इति वा । शुक्लत्वात् सिताभ्रमिव वा ॥*॥ **'सिताभः'** इति वा पाठः । सिता आभा यस्य ॥ (४) ॥*॥ हिमा चासौ वालुका च ॥ (४) ॥*॥ 'वेणुसारस्तु (रेणुकावर्ण) कर्पूरो **चन्द्रभस्म हिमाह्वयम् । वेधकः'** इति त्रिकाण्डशेषः ॥*॥ पञ्च **'कर्पूरस्य'** ॥

**गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।**

**गन्धेति** ॥ गन्धवान् सारः स्थिरभागोऽस्य । गन्ध एव सारोऽस्य वा ॥ (१) ॥*॥ मलये जातः । सप्तम्यां जनेर्डः' (३।२।९७) ॥ (२) ॥*॥ भद्रा श्रीरस्य । 'हस्तिजात्यन्तरे **भद्रो** वाच्यवच्छ्रेष्ठसाधुनोः' इति विश्वः ॥ (३) ॥*॥ चन्दयति । 'चदि आह्लादे' ( भ्वा० प० से० ) ण्यन्तः । ल्युट् (३।४।११३) ॥ (४) ॥*॥ **'मालयस्तु स्याच्छ्रीखण्डो रौहिणश्च** सः' इति त्रिकाण्डशेषः ॥*॥ चत्वारि **'चन्दनस्य'** ॥

**तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ॥ १३१ ॥**

**तैलेति** ॥ तिलपर्णे वृक्षभेदे जाता । 'तत्र जातः' (४। ३।२५) इत्यण् । ङीप् (४।१।५) । स्वार्थे कन् (ज्ञादि० ५। ४।५) । 'केऽणः' (७।४।१३) इति ह्रस्वः । '**तैलपर्णी** मलयजे श्रीवासे सिह्लकेऽपि च' (इति मेदिनी) ॥ (१) ॥*॥ गोः शीर्षमिव ।—तैलपर्णगोशीर्षौ गिरी आकरावस्य—इति स्वामी ॥ (१) ॥*॥ हरेरिन्द्रस्य चन्दनम् । हरिः कपिलवर्णं चन्दनम् । '**हरिचन्दनम**स्त्री स्यात्त्रिदशानां महीरुहे । नपुंसकं तु गोशीर्षे ज्योत्स्नाकुङ्कुमयोरपि' (इति मेदिनी) ॥ (१) ॥*॥ **'चन्दनविशेषाणां'** पृथक् पृथक् ॥

**तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ।**

**कुचन्दनं च**

**तिलेति** ॥ तिलस्येव पर्णान्यस्याः । 'पाककर्ण–' (४।१। ६४) इति ङीष् । यद्वा तिलपर्णी नदी आकरोऽस्याः ॥ (१) ॥*॥ पत्रमेवाङ्गमस्य । पत्रैर्ष्वङ्गति । 'अगि गतौ' (भ्वा० प० से०) अच् (३।१।१३४) । 'पत्राङ्गं न द्वयोर्भूर्जे पद्मके रक्तचन्दने' (इति मेदिनी) ॥ (२) ॥*॥ रञ्जयति । 'रञ्ज रागे' ( भ्वा० उ० अ० ) ण्यन्तः । युच् (उ० २।७८) । ल्युट् (३।३।११३) वा । '**रञ्जनो** रागजनने **रञ्जनं** रक्तचन्दने' (इति मेदिनी) ॥ (३) ॥*॥ रक्तं च तच्चन्दनं च ॥ (४) ॥*॥ निर्गन्धत्वात् कुत्सितं चन्दनम् । कौ चन्दनम् । इव वा । कुत्सितान्यन्यचन्दनान्यस्माद्वा । '**कुचन्दनं** च पत्राङ्गे द्रुमभेदे रक्तचन्दने' इति विश्वमेदिन्यौ ॥ (५) ॥*॥ पञ्च **'रक्तचन्दनस्य'** ॥

**अथ जातीकोशजातीफले समे ॥ १३२ ॥**

**अथेति** ॥ जात्याः कोशः ॥*॥ **जाति**रपि । 'जातिर्जाती-

फलेऽपि च' इति रभसः ॥*॥ 'कोषोऽप्रकृते पेश्यां पात्रे जातिकोषे' इति रभसः ॥ (१) ॥*॥ जात्याः फलम् ॥*॥ 'फलम्' अपि। 'फलं लाभे जातिकोषे बाणाग्रे फलकेऽपि च' इति रुद्रः ॥ (२) ॥*॥ द्वे **'जातीफलस्य' 'जाईफल'** इति ख्यातस्य ॥

**कर्पूरागरुकस्तूरीकक्कोलैर्यक्षकर्दमः।**

**केति** ॥ कर्पूरादिभिः समभागैः। यक्षप्रियः कर्दमः ॥ (१) ॥*॥ 'कर्पूरागुरुकस्तूरीकक्कोलघुसृणानि च। एकीकृतमिदं सर्वं यक्षकर्दम इष्यते' इति व्याडिः। 'कुङ्कुमागरुकस्तूरी कर्पूरं चन्दनं तथा। महासुगन्धमित्युक्तं नामतो यक्षकर्दमः' इति 'धन्वन्तरिः' ॥*॥ एकम् **'लेपविशेषस्य'** ॥

**गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम् ॥ १३३ ॥**

**गेति** ॥ गात्रमनुलिप्यते यया। 'करणा–' (३।३।११७) इति ल्युट् ॥ (१) ॥*॥ वर्त्यते। 'वृतु वर्तने' (भ्वा० आ० से०)। ण्यतः। 'अच इः' (उ० ४।१३९) **'वर्तिर्भेषजनिर्माणे** नयनाञ्जनलेखयोः। गात्रानुलेपनी दीपदशादीपेषु योषिति' (इति मेदिनी) ॥ (२) ॥*॥ वर्णं करोति। ण्वुल् (३।१।१३३) ॥ (३) ॥*॥ विलिप्यतेऽनेन। 'लिप उपदेहे' (तु० उ० अ०)। ल्युट् (३।३।११७) ॥ (४) ॥*॥ चत्वारि **'गात्रानुलेपयोग्यस्य पिष्टघृष्टसुगन्धिद्रव्यस्य'**। द्वौ द्वौ भिन्नार्थौ—इत्येके। 'गात्रानुलेपनी वर्तिर्**विगन्ध्यथ** विलेपनम्। वर्णकं चाथ **विच्छित्तिः स्त्रीकषायोऽङ्गरागके'**[1] इति रभसात्। आद्यं द्वयमुक्तार्थमेव। वर्णकादिद्वयं घृष्टचन्दनादिलेपमात्रस्य ॥

**चूर्णानि वासयोगाः स्युः**

**चिवति** ॥ चूर्ण्यते। 'चूर्ण प्रेरणे' (चु० प० से०)। घञ् (३।३।१९)। **'चूर्णो** धूलौ क्षारभेदे चूर्णानि वासयुक्तिषु' (इति मेदिनी) ॥ (१) ॥*॥ वासे सुगन्धिकरणे योगा उपायाः ॥ (२) ॥*॥ द्वे **'पटवासादिक्षोदस्य'** ॥

**भावितं वासितं त्रिषु।**

**भेति** ॥ भाव्यते स्म। 'भुवोऽवकल्कने' (चु० ग० सू०) इति ण्यन्तात् क्तः (३।२।१०२)। 'भावितं वासिते प्राप्ते' इति हैमः ॥ (१) ॥*॥ वास्यते स्म। 'वस स्नेहनादौ' (चु० उ० से०)। क्तः (३।२।१०२)। **'वासितं** भाविते रुते' इति मेदिनी ॥ (२) ॥*॥ द्वे **'द्रव्यान्तरभावितस्य'** ॥

**संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् १३४**

**संस्केति** ॥ माङ्गल्यधूपादिभिर्वस्त्रादीनां ताम्बूलादीनां च यः संस्कारः तत्। अधिकं वास्यते। 'वास उपसेवायाम्' चुरादिः। ल्युट् (३।३।११३) ॥ (१) ॥*॥ एकम् **'गन्धपुष्पोपचारस्य'** ॥

**माल्यं मालास्रजौ मूर्ध्नि**

**मेति** ॥ मूर्ध्नि शिरसि। इदमतन्त्रम्। अन्यत्रापि माला भवत्येव। मल्यते। 'मल धारणे' (भ्वा० आ० से०)। ण्यत् (३।१।१२४)। मालैव वा। चतुर्वर्णादिष्यञ् (वा० ५।१।१२४)। **'माल्यं** कुसुमतत्स्रजोः' (इति मेदिनी) ॥ (१) ॥*॥ घञ् (३।३।१९)। मां लाति वा। कः (३।२।३)। **'माला तु** पङ्क्तौ पुष्पादिदामनि' (इति हैमः) ॥ (२) ॥*॥ सृज्यते। सृजति सुखं वा। 'सृज विसर्गे' (तु० प० अ०)। 'ऋत्विग्–' (३।२।५९) इति क्विन् ॥ (३) ॥*॥ त्रीणि **'मूर्ध्निधृतायाः कुसुमावलेः'** ॥

**केशमध्ये तु गर्भकः।**

**केशेति** ॥ गर्भ इव। 'इवे–' (५।३।९६) इति कन् ॥ (१) ॥*॥ एकम् **'केशमध्यगर्भस्य'** ॥

**प्रभ्रष्टकं शिखालम्बि**

**प्रेति** ॥ शिखातो लम्बमानम्। प्रभ्रंशितुं प्रवृत्तम्। 'भ्रंशु अधःपतने' (दि० प० से०)। 'आदिकर्मणि क्तः कर्तरि च' (३।४।७१)। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१) ॥*॥ एकम् **'शिखायां लम्बमानपुष्पस्य'** ॥

**पुरो न्यस्तं ललामकम् ॥ १३५ ॥**

**प्विति** ॥ तदेव माल्यं पुरोभागे न्यस्तं ललाटपर्यन्तम्। ललाममिव। इवार्थे कन् (५।३।९६) ॥ (१) ॥*॥ एकम् **'ललाटधृतपुष्पस्य'** ॥

**प्रालम्बमृजुलम्बि स्यात्कण्ठात्**

**प्रेति** ॥ माल्यमेव कण्ठादूर्ध्वं लम्बमानम्। प्रालम्बते। 'लबि अवस्रंसने' (भ्वा० आ० से०)। अच् (३।१।१३४) ॥ (१) ॥*॥ ऋजु लम्बितुं शीलमस्य। 'सुपि–' (३।२।७८) इति णिनिः ॥*॥ एकम् **'कण्ठे ऋजुलम्बमानपुष्पस्य'** ॥

**वैकक्षकं तु तत्।**

**यत्तिर्यक् क्षिप्तमुरसि**

**वैकेति** ॥ विशिष्टः कक्षोऽस्माद्विकक्षमुरः। तत्र भवम्। 'तत्र भवः' (४।३।५३) इत्यण्। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१) ॥*॥ यदुरसि उपवीतवत्तिर्यक् क्षिप्तम्। तत् ॥*॥ एकम् **'यज्ञोपवीतवत्तिर्यग्धृतपुष्पस्य'** ॥

**शिखास्वापीडशेखरौ ॥ १३६ ॥**

**शीति** ॥ शिखाक्षिप्तं माल्यम्। आपीडयति। 'पीड अवगाहने' (चु० प० से०) अच् (३।१।१३४) ॥ (१) ॥*॥ शिङ्खति। 'शिखि गतौ' (भ्वा० प० से०) बाहुलकादरः। आगमशास्त्रस्यानित्यत्वान्न नुम् ॥ (२) ॥*॥ द्वे **'शिखास्थमाल्यस्य'** ॥

---

१—विच्छित्यादित्रीणि अङ्गरागस्य नामानि ॥

**रचना स्यात्परिस्पन्दः**

**रेति** ॥ 'रच प्रतियत्ने' अदन्तश्चुरादिः । 'ण्यासश्रन्थो युच्' (३।३।१०७) ॥ (१) ॥*॥ परिस्पन्दनम् । 'स्पदि किंचिच्चलने' (भ्वा० आ० से०) । भावे घञ् (३।३।१८) । अधिकरणे (३।३।१९) च ॥*॥ **'परिस्यन्दः'** इति वा पाठः । 'स्यन्दू प्रस्रवणे' (भ्वा० आ० से०) ॥ (२) ॥*॥ द्वे **'शिल्पादिरचनायाः'** ॥

**आभोगः परिपूर्णता ।**

**आभोग इति** ॥ आभोजनम् । प्राग्वत् घञ् (३।३।१८) । **'आभोगो** वरुणच्छत्रे पूर्णतायत्नयोरपि' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ परितः पूर्यते स्म 'पूरी आप्यायने' (दि० आ० से०) । 'गत्यर्था–' (३।४।७२) इति क्तः । 'रदाभ्याम्–' (८।२।४२) इति निष्ठानत्वम् । परिपूर्णस्य भावः । तल् (५।१।११९) ॥ (२) ॥*॥ द्वे **'सर्वोपचारपरिपूर्णतायाः'** ॥

**उपधानं तूपबर्हः**

**उपेति** ॥ उपधीयते शिरोऽत्र । 'डुधाञ्' (जु० उ० अ०) । 'करणा–' (३।३।११७) इति ल्युट् ॥ (१) ॥*॥ उपबृह्यतेऽत्र । अनेन वा । 'बृह वृद्धौ' (भ्वा० प० से०) । 'बृहू उद्यमने' (तु० प० से०) वा । घञ् (३।३।१९) ॥ (२) ॥*॥ द्वे **'शिरोनिधानस्य'** ॥

**शय्यायां शयनीयवत् ॥ १३७ ॥**

**शयनम्**

**शेति** ॥ शय्यतेऽत्र । 'शीङ् स्वप्ने' (अ० आ० से०) 'संज्ञायां समज–' (३।३।९९) इति क्यप् । 'अयङ् यि–' (७।४।२२) इत्ययङ् । **'शय्या** स्याच्छयनीयेऽपि गुम्फनेऽपि च योषिति' (इति मेदिनी) ॥ (१) ॥*॥ 'कृत्यल्युटः–'(३।३।११३) इत्यधिकरणेऽनीयर् ॥ (२) ॥*॥ ल्युट् (३।३।११७) अपि । **'शयनं** सुरते निद्राशय्ययोश्च नपुंसकम्' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि **'तूलिकादेः'** । मुकुटस्तु—शय्यामात्रस्य—इति व्याख्यत् ॥

**मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः ।**

**मेति** ॥ मञ्चते । 'मचि धारणोच्छ्रायपूजनेषु' (भ्वा० आ० से०) । अच् (३।१।१३४) ॥ (१) ॥*॥ परितोऽङ्क्यते । 'अकि लक्षणे' (भ्वा० आ० से०) । घञ् (३।२।१९) । 'परेश्च घाङ्कयोः' (८।२।२२) इति वा लत्वम् । **'पल्यङ्को** मञ्चपर्यङ्कवृषीपर्यस्तिकासु च' (इति मेदिनी) ॥ (२) ॥*॥ (३) ॥*॥ खट्यते निद्रालुभिः । 'खट काङ्क्षायाम्' (भ्वा० प० से०) । 'अशूप्रुषि–' (उ० १।१५१) इति क्वन् ॥ (४) ॥*॥ चत्वारि **'पर्यङ्कस्य'** ॥

**गेन्दुकः कन्दुकः**

**गयेति** ॥ गाते । 'गाङ् गतौ' (अ० आ० अ०) । विच् (३।२।७५) । गा गच्छन्निन्दुरिव । 'इवे' (५।३।९६) इति कन् । गे गगने इन्दुरिव, इति वा ॥ (१) ॥*॥ कन्द्यते । 'कदि आह्वाने रोदने च' (भ्वा० प० से०) । बाहुलकादुः । कं सुखं ददाति, दयते, द्यति, यच्छति, वा । मितद्र्वादित्वात् (वा० ३।२।१८०) डुः । स्वार्थे कन् (ज्ञापि० ५।४।५) कं शिरो दुनोति, दवति, वा । 'टु दु उपतापे' (भ्वा० प० अ०) । 'दु गतौ' (भ्वा० प० अ०) वा । प्राग्वत् ॥ (२) ॥*॥ **'वीटा'** इत्यपि भारते ॥*॥ द्वे **'कन्दुकस्य'** **'गेंद'** इति ख्यातस्य ।—**'गालमसूरिया'** इति ख्यातस्य—इत्यन्ये ॥

**दीपः प्रदीपः**

**दीति** ॥ दीप्यते । अनेन वा । दीपयति वा । 'दीपी दीप्तौ' (दि० आ० से०) । इगुपधत्वात् (३।१।१३४) कः घञ् (३।३।१९) वा अच् (३।१।१३४) वा ॥ (१) ॥*॥ अन्योपसर्गनिवृत्त्यर्थः प्रः ॥ (२) ॥*॥ 'दीपस्तु स्नेहाशः कज्जलध्वजः । दशेन्धनो गृहमणिर्दोषातिलक इत्यपि । शिखातरुर्दीपवृक्षो ज्योत्स्नावृक्षोऽथ लोचकः[1]' इति त्रिकाण्डशेषः ॥*॥ द्वे **'दीपस्य'** ॥

**पीठमासनम् ॥ १३८ ॥**

**पीति** ॥ पठन्त्यत्र । 'पिठ हिंसासंक्लेशनयोः' (भ्वा० प० से०) । 'हलश्च' (३।३।१२१) इति घञ् । बाहुलकाद्दीर्घः । पीयतेऽत्र वा । 'पीङ् पाने' (दि० आ० अ०) । बाहुलकाट्ठक् । **'विष्टरः** पीठमस्त्रियाम्' इति त्रिकाण्डशेषः ॥ (१) ॥*॥ आस्यतेऽत्र । 'आस उपवेशने' (अ० आ० से०) । 'करणा–' (३।३।११७) इति ल्युट् ॥ (२) ॥*॥ द्वे **'आसनस्य'** ॥

**समुद्गकः संपुटकः**

**सेति** ॥ समुद् गच्छति । 'अन्येष्वपि' (वा० ३।२।४८) इति डः । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१) ॥*॥ संपुट्यते । 'पुट संश्लेषणे' (तु० प० से०) । क्वन् (उ० २।३२) ॥ (२) ॥*॥ द्वे **'संपुटस्य'** ॥

**प्रतिग्राहः पतद्ग्रहः ।**

**प्रेति** ॥ प्रति गृह्णाति । 'विभाषा ग्रहः' (३।१।१४३) इति णः ॥*॥ पक्षेऽच् (३।१।१३४) । **'प्रतिग्रहः** स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे । योग्येभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे' इति मेदिनी ॥ (१) ॥*॥ पततो ग्रहः ॥ (२) ॥*॥ द्वे **'पीकदानी'** इति ख्यातायाः ॥

**प्रसाधनी कङ्कतिका**

**प्रसेति** ॥ प्रसाध्यतेऽनया । 'साध संसिद्धौ' (भ्वा० प० अ०) । ल्युट् (३।३।११७) । **'प्रसाधनी** तु कङ्कत्यां सिद्धौ,

१—कज्जलस्येदं नाम ॥ २—अनिकारककारा 'कङ्कतिकोपान्तेन केशम्' इति दमयन्तीश्लेषात् ॥

वेशे प्रसाधनम्' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ कङ्कते । 'ककि गतौ' (भ्वा० आ० से०)। बाहुलकादतच् । गौरादिः (४।१।४१)। स्वार्थे कन् (ज्ञापि० ५।४।५)। 'केऽणः' (७। ४।१३) इति ह्रस्वः। यद्वा कस्य शिरसोऽङ्कः। शकन्ध्वादिः (वा० ६।१।९४)। कङ्केष्वतति। क्वुन् (उ० २।३२) ।—कङ्कति। 'ककि लौल्ये'—इति मुकुटः। तन्न। तस्यानिदित्त्वात्। आत्मनेपदित्वाच्च। 'कङ्कती तु प्रसाधनी' इति स्त्रीकाण्डेऽमरमाला। 'कङ्कतं तु प्रसाधनम्' इति क्लीबकाण्डे च ॥ (२) ॥*॥ द्वे 'केशमार्जन्याः' 'कङ्ही' इति ख्यातायाः ॥

**पिष्टातः पटवासकः ॥ १३९ ॥**

**पीति** ॥ पिष्टमतति। 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ पटो वास्यतेऽनेन। 'वास उपसेवायाम्' चुरादिः। घः (३।३। ११८)। स्वार्थे कन् (ज्ञापि० ५।४।५)। पटं वासयति। 'कर्मण्यण्' (३।२।१) वा। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे 'पिष्टातस्य' 'बुक्का' इति ख्यातस्य ॥

**दर्पणे मकुरादर्शौ**

**देति** ॥ दर्पयति। 'दृप हर्षमोचनयोः' (दि० प० अ०) ण्यन्तः। नन्द्यादिः (३।१।१३४)। 'दृप संदीपने' चुरादिर्वा। 'आदर्शो दर्पणः प्रोक्तः' इत्यमरमाला ॥ (१) ॥*॥ मङ्कते। 'मकि मण्डने' (भ्वा० आ० से०) 'मकुरदर्दुरौ' (उ० १४०) इति साधुः ॥*॥ मुञ्चति ज्योतिः। 'मुच्लृ मोचने'। अत्र पक्षे मुकुरो वुकारः। 'मकुरः स्यान्मुकुरवद्दर्पणे बकुलद्रुमे। कुलालदण्डे' (इति मेदिनी) ॥*॥—'मङ्कुरः'—इत्यन्ये ॥ (२) ॥*॥ आदृश्यते रूपमत्र। 'दृशिर् प्रेक्षणे' (भ्वा० प० अ०)। 'हलश्च' (३।३।१२१) इति घञ्। 'आदर्शो दर्पणे टीकाप्रतिपुस्तकयोरपि' (इति मेदिनी) ॥*॥ त्रीणि 'दर्पणस्य' ॥

**व्यजनं तालवृन्तकम् ।**

**व्येति** ॥ व्यजन्त्यनेन। 'अज गतिक्षेपणयोः' (भ्वा० प० से०)। करणे ल्युट् (३।३।११७)। 'वा यौ' (२।४।५७) इति पक्षे वी न। 'बहुलं तणि' (वा० २।४।५४) इति वा वीभावो न ॥ (१) ॥*॥ तालस्येव वृन्तमस्य। ताले करतले वृन्तमिव बन्धनमस्य। 'वृन्तं प्रसवबन्धे स्याद्घटधाराकुचाग्रयोः' इति विश्वः ॥ (२) ॥*॥ द्वे 'व्यजनस्य' ॥

इति नृवर्गविवरणम् ॥

---

**संततिर्गोत्रजननकुलान्यभिजनान्वयौ ।**
**वंशोऽन्ववायः संतानः**

**समिति** ॥ संतन्यते। 'तनु विस्तारे' (तु० उ० से०)। क्तिन् (३।३।९४) 'संततिः स्यात्पङ्क्तौ गोत्रे पारम्पर्ये च पुत्रपौत्राणाम्' (इति मेदिनी) ॥ (१) ॥*॥ गूयते। 'गुङ् शब्दे' (भ्वा० प० से०)। ष्ट्रन् (उ० ४।१४५)। 'गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः। संभावनीयबोधे च काननक्षेत्रवर्त्मसु' (इति मेदिनी) ॥ (२) ॥*॥ जन्यते। 'जनी प्रादुर्भावे' (दि० आ० से०)। 'जन जनने' वा (जु० प० से०)। ण्यन्तः। 'कर्मणि ल्युट्' (३।३।११३)। 'जननं वंशजन्मनोः' (इति मेदिनी) ॥ (३) ॥*॥ कूयते। 'कुङ् शब्दे' (भ्वा०आ०से०)। बाहुलकाल्लक्। कोलति। 'कुल संस्त्याने' (भ्वा० प० से०) 'इगुपध—' (३।१।१३५) इति को वा। कुं भूमिं लाति। कः (३।२।३) वा। कौ लीयते। 'लीङ् श्लेषणे' (दि० आ० अ०)। 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः। 'कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीबं कण्टकार्योषधौ कुली' (इति मेदिनी) ॥ (४) ॥*॥ अभिजन्यते। कर्मणि घञ् (३।३।१९)। णिलोपस्य स्थानिवत्त्वात् 'जनिवध्योश्च' (७।३।३५) इति निषेधाद्वा वृद्धिर्न। यद्वा अभितोऽभिमुखो वा जनो जन्मात्र। 'भवेदभिजनः ख्यातौ जन्मभूम्यां कुलध्वजे। कुलेऽपि च पुमान्' (इति मेदिनी) ॥ (५) ॥*॥ अन्वीयते। 'इ गतौ' (भ्वा० प० अ०)। 'इण् गतौ' (अ० प० अ०) वा। 'एरच्' (३। ३।५६) ॥ (६) ॥*॥ उश्यते। 'वश कान्तौ' (अ० प० से०)। घञ् (३।३।१९)। 'आच्छीनद्योः' (७।१।८०) इत्यत्र 'नुम्' इति योगविभागान्नुम्। यद्वा वन्यते। 'वन संभक्तौ' (भ्वा० प० से०)। बाहुलकाच्छः—वमति। 'भुवसिकुभ्यः' इति शक्—इति मुकुटः। तन्न। उक्तसूत्रस्योज्ज्वलदत्तादिष्वदर्शनात्। 'वंशो वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च' इति विश्वमेदिन्यौ ॥ (७) ॥*॥ अन्ववाय्यते। 'अय गतौ' (भ्वा० आ० से०)। घञ् (३।३।१९) ॥ (८) ॥*॥ संतन्यते। घञ् (३।३।१९)। 'संतानः संततौ गोत्रे स्यादपत्ये सुरद्रुमे' (इति मेदिनी)। कर्तृकरणाधिकरणेष्वपि विग्रहः संभवति। आद्ये 'तनोतेः' (वा० ३।१।१४०) इति णः। अन्यत्र 'हलश्च' (३।३।१२१) इति घञ् ॥ (९) ॥*॥ नव 'वंशस्य' ॥

**वर्णाः स्युर्ब्राह्मणादयः ॥ १ ॥**

**वेति** ॥ वर्ण्यते। 'वर्ण प्रेरणे' (चु० प० से०) घञ् (३। ३।१९)। वर्णयति। अच् (३।१।१३४) वा। 'वर्णो द्विजादिशुक्लादियज्ञे गुणकथासु च। स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेपने' (इति मेदिनी) ॥ (१) ॥*॥ एकम् 'ब्राह्मणादिवर्णचतुष्टयवाचकस्य' वर्णा इत्येकम् ॥

**विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् ।**

**वीति** ॥ विप्रश्च क्षत्रियश्च विट् च शूद्रश्च। चत्वार एव वर्णाः 'चतुर्वर्णादीनाम्' (वा० ५।१।१२४) इति स्वार्थे ष्यञ् ॥

---

१—'किं तद्दर्पणमस्ति यत्र सकलम्' इति धर्मसेनः। अतः क्लीबमपि—इति मुकुटः ॥

**राजबीजी राजवंश्यः**

**रेति** ॥ राज्ञो बीजयितुं शीलमस्य । 'बीज व्यजने' अदन्तः । 'सुपि–' (३।२।७८) इति णिनिः । यद्वा राज्ञो बीजम् । राजबीजमस्यास्ति । इनिः (५।२।११५) ॥ (१) ॥*॥ वंशे भवः । दिगादियत् (४।३।५३) । राज्ञो वंश्यः । राजवंशे साधुः । 'तत्र साधुः' (४।४।९८) इति यत् ॥ (२) ॥*॥ द्वे **'राजवंशोत्पन्नस्य'** ॥

**बीज्यस्तु कुलसंभवः ॥ २ ॥**

**बीति** ॥ बीज्यते । 'अचो यत्' (३।१।९७) यद्वा बीजमस्यास्ति । 'अन्यत्रापि दृश्यते' (वा० ५।२।१२०) इति यप् । 'बीजे भवः' । साधुः, वा ॥ (१) ॥*॥ कुले संभवति । अच् (३।१।१३४) । कुले संभवोऽस्य वा । यद्वा संभवत्यस्मात् । 'ऋदोरप्' (३।३।५७) कुलस्य संभवः ॥ (३) ॥*॥ द्वे **'कुलमात्रोत्पन्नस्य'** ॥

**महाकुलकुलीनार्यसभ्यसज्जनसाधवः ।**

**मेति** ॥ महच्च तत् कुलं च । महाकुलस्यापत्यम् । 'महाकुलादञ्खञौ' (४।१।१४१) ॥*॥ महत् कुलमस्य, इति विग्रहे तु **(महाकुलः)** हस्वादिरपि ॥ (१) ॥*॥ कुलस्यापत्यम् । 'कुलात्खः' (४।१।१३९) ॥*॥ 'अपूर्वपदादन्यतरस्यां यड्ढकञौ' (४।१।१४०) ॥ **'कौलेयकः** सारमेये कुलीने' (इति मेदिनी) ॥*॥ **'कुल्यं** स्यात्कीकसेऽप्यष्टद्रोणीसूर्यामिषेषु च । कुल्या पयःप्रणाल्यां च नद्यां जीवन्तिकौषधौ । कुलोद्भवे कुलहिते त्रिषु मान्ये पुनः पुमान्' (इति मेदिनी) ॥ (२) ॥*॥ अर्यते । 'ऋ गतौ' (भ्वा० प० अ०) । 'ऋहलोर्ण्यत्' (३।१।१२४) ॥ (३) ॥*॥ सभायां साधुः । 'सभाया यः' (४।४।१०५) ॥ (४) ॥*॥ संश्चासौ जनश्च । **'सज्जनं** तु भवेत्क्लीबमुपरक्षणघट्टयोः । वाच्यलिङ्गं कुलीने स्यात् कल्पनायां च योषिति' (इति मेदिनी) ॥ (५) ॥*॥ साध्नोति धर्मम् । 'साध संसिद्धौ' (स्वा० प० अ०) । 'कृवापा–' (उ० १।१) इत्युण् । **'साधुर्वार्धुषिके** चारौ सज्जने चाभिधेयवत्' (इति मेदिनी) ॥ (६) ॥*॥ षट् **'कुलीनस्य'** ॥

**ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥ ३ ॥**

**आश्रमोऽस्त्री**

**ब्रेति** ॥ ब्रह्म वेदः । तदध्ययनार्थं व्रतमप्युपचाराद्ब्रह्म । ब्रह्म चरितुं शीलमस्य । 'व्रते' (३।२।८०) इति 'सुपि–' (३।२।७८) इति वा णिनिः । यद्वा ब्रह्म तपो ज्ञानं वा चरत्यर्जयत्यवश्यम् । 'आवश्यका–' (३।३।१७०) इति णिनिः ॥ (१) ॥*॥ गृहा दाराः सन्त्यस्य । इनिः (५।२।११५) ॥ (१) ॥*॥ वनमेव प्रस्थो, वनस्य वा प्रस्थः प्रदेशः । वनप्रस्थे भवः । 'तत्र भवः' (४।३।५३) इत्यण् ॥ (१) ॥*॥ भिक्षणशीलः । 'भिक्ष याच्ञायाम्' (भ्वा० आ० से०) । 'सनाशंसभिक्ष उः' (३।२।१६८) ॥ (१) ॥*॥ चत्वारोऽवयवा यस्य । 'संख्याया अवयवे तयप्' (५।२।४२) ॥ चतुरवयवसमुदाये ॥*॥ आश्राम्यन्त्यत्र । अनेन वा । 'श्रमु तपसि' (दि० प० से०) । घञ् (३।३।१९) । 'नोदात्तोपदेशस्य–' (७।३।३४) इति वृद्धिर्न । यद्वा आसमन्ताच्छ्रमोऽत्र । स्वधर्मसाधनक्लेशात् । **'आश्रमो** ब्रह्मचर्यादौ वानप्रस्थे वने मठे । अस्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ एकैकम् **'ब्रह्मचार्यादीनाम्'** ॥

**द्विजात्यग्रजन्मभूदेववाडवाः ।**

**विप्रश्च ब्राह्मणः**

**द्वीति** ॥ द्वे जाती जन्मनी यस्य । 'मातुरग्रेऽधि(वि)जननं द्वितीयं मौञ्जिबन्धनात्' (मनुः २।१६९) । **'द्विजाति-** र्विप्राण्डजयोश्च पुंलिङ्गः' (इति मेदिनी) ॥ (१) ॥*॥ अग्र आदौ जन्मास्य । अग्रान्मुखाद्वा जन्मास्य । **'अग्रजन्मा** द्विजश्रेष्ठे भ्रातरि ब्रह्मणि स्मृतः' इति विश्वः ॥ (२) ॥*॥ भुवो भुवि वा देव इव ॥ (३) ॥*॥ **'वडवा** कुम्भदास्यश्वास्त्रीविशेषो द्विजन्मनाम्' इति रभसः ॥ **'(वडवाऽश्वाकुम्भ**दास्योः स्त्रीविशेषे द्विजस्त्रियाम्' इति विश्वः) वडवायां जातः । 'तत्र जातः' (४।३।२५) इत्यण् । वाडव इव वा । वाडनम् । 'वाडृ आप्लाव्ये' (भ्वा० आ० से०) घञ् (३।३।१८) । वालनम् । 'वल निरूपणे' चुरादिर्वा । घञ् (३।३।१८) डलयोरेकत्वम् । वाडोऽस्यास्ति । 'अन्यत्रापि (न्येभ्योऽपि) दृश्यते' (वा० ५।२।१०९) इति वः । वाडं वाति । कः (३।२।३) वा । **'वाडवं** करणे स्त्रीणां घोटिकौघे नपुंसकम् । पाताले न स्त्रियां पुंसि ब्राह्मणे वडवानले' इति मेदिनी ॥ (४) ॥*॥ विप्राति । 'प्रा पूर्तौ' (अ० प० अ०) । 'आतश्चोपसर्गे' (३।१।१३६) इति कः । उप्यतेऽत्र वा । 'ऋज्रेन्द्र–' (उ० २।१८) इति साधुः । विपाति । विपति । 'विप क्षेपे' ( ) वा ॥ (५) ॥*॥ ब्रह्मणोऽपत्यम् । 'तस्यापत्यम्' (४।१।९२) इत्यण् 'अन्' (६।४।१६७) इति टिलोपो न । ब्रह्माधीते । 'तदधीते तद्वेद' (४।२।५९) इत्यण् वा । ब्रह्म जानाति । 'शेषे' (४।२।९२) इत्यण् वा ॥ (६) ॥*॥ **'वक्त्रजस्त्वनमो विप्रो वर्णज्येष्ठः कचो(ठो)द्विजः । मैत्रः पुनरुक्तजन्मा स्यात्'** इति त्रिकाण्डशेषः । **'सूत्रकण्ठः** पुमान् विप्रे खञ्जरीटकपोतयोः' (इति मेदिनी) ॥*॥ षट् **'ब्राह्मणस्य'** ॥

**असौ षट्कर्मा यागादिभिर्युतः ॥ ४ ॥**

**असाविति** ॥ असौ विप्रः । षट् कर्माण्यस्य । 'इज्याध्ययनदानानि याजनाध्यापने तथा । प्रतिग्रहश्च तैर्युक्तः षट्कर्मा विप्र उच्यते' ( ) ॥ (१) ॥*॥ एकं **'षट्कर्मणो विप्रस्य'** ॥

**विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः ।**
**धीरो मनीषी ज्ञः प्राज्ञः संख्यावान्पण्डितः कविः ५**
**धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ।**
**दूरदर्शी दीर्घदर्शी**

**वीति** ॥ वेत्ति । 'विद ज्ञाने' (अ० प० से०) । 'लटः

शतृ' (३।२।१२४)। 'विदेः शतुर्वसुः' (७।१।३६) वा। **'विद्वान्** ज्ञानिनि धीरे च **विद्वान**ध्यात्मवेदके' इति धरणिः। **'विद्वाना**त्मविदि प्राज्ञे पण्डिते चाभिधेयवत्' इति विश्वः॥ (१) ॥*॥ प्रकृष्टं निश्चिनोति, चेतति, चिन्तयति, वा। पृषोदरादिः (६।३।१०९)॥ (२) ॥*॥ दोषं जानाति। 'आतोऽनुप–' (३।२।१) इति कः॥ (३) ॥*॥ अस्ति। शता (३।२।१२४)। 'श्नसोरल्लोपः' (६।४।१११)। **'सन्साधौ** धीरशस्तयोः। मान्ये सत्ये विद्यमाने त्रिषु साध्व्युभयोः स्त्रियाम्' (इति मेदिनी)॥ (४) ॥*॥ सु सुष्ठु ध्यायति। 'ध्यै चिन्तायाम्' (भ्वा० प० अ०)। 'ध्यायतेः संप्रसारणं च' (वा० ३।२।१८०) इति क्विप् संप्रसारणं च॥ (५) ॥*॥ कौति धर्मादि। 'कु शब्दे' (अ० प० से०)। कवते वा। 'कुङ् शब्दे' (भ्वा० आ० अ०)। विच् (३।२।७५)। गुणः (७।३।८४)। कोर्वेदस्य विदः। वेत्ति। 'इगुपध–' (३।१।१३५) इति कः। यद्वा कवि वेदे विदा यस्य। **'विदा** ज्ञाने च निर्दिष्टा मनीषायां च योषिति' (इति मेदिनी)॥ (६) ॥*॥ बुध्यते। 'बुध ज्ञाने' (दि० आ० अ०)। 'इगुपध–' (३।१।१३५) इति कः। **'बुधः** सौम्ये च पण्डिते' (इति मेदिनी)॥ (७) ॥*॥ धियं राति। 'रा दाने' (अ० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः। धियमीरयति। 'ईर गतौ' (अ० आ० से०)। अण् (३।२।१) वा **'धीरो** धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे। स्त्रियां श्रवणतुल्यायाम्' ॥ (८) ॥*॥ मनीषास्यास्ति। व्रीह्यादित्वात् (५।२।११६) इनिः॥ (९) ॥*॥ जानाति। 'इगुपध–' (३।१।१३५) इति कः। **'ज्ञो** ब्रह्मबुधविद्वत्सु' (इति मेदिनी)॥ (१०) ॥*॥ एवं प्रज्ञः। **'प्रज्ञस्तु** पण्डिते वाच्यलिङ्गो बुद्धौ तु योषिति' (इति मेदिनी) ॥*॥ **'प्राज्ञः'** इति पाठे तु प्रज्ञास्यास्ति। 'प्रज्ञाश्रद्धा–' (५।२।१०१) इति णः॥ (११) ॥*॥ संख्या विचारणास्त्यस्य। मतुप् (५।२।९४)॥ (१२) ॥*॥ पण्ड्यतेऽनया। 'पडि गतौ' (भ्वा० आ० से०) 'गुरोश्च' (३।३।१०३) इत्यः। **'पण्डः** षण्डे धियि स्त्री स्यात्' (इति मेदिनी)। पण्डा जातास्य। तारकादित्वात् (५।२।३६) इतच्। यद्वा पण्डते स्म। 'गत्यर्था–' (३।४।७४) इति क्तः। इट् (७।२।३५)॥ (१३) ॥*॥ कवते, कौति, वा। 'कुङ् शब्दे' (भ्वा० आ० अ०)। 'कु शब्दे' (अ० प० अ०) वा। 'अच इः' (उ० ४।१३९)।—'कबृ वर्णे'—इति मुकुटश्चिन्त्यः। तस्यौष्ठ्यान्तत्वात्। कविशब्दस्य दन्तोष्ठ्यान्तेषु पाठात्। 'कविर्वाल्मीकिकाव्ययोः। सूरौ काव्यकरे पुंसि स्यात्खलीने तु योषिति' (इति मेदिनी)॥ (१४) ॥*॥ धीरस्यास्ति। मतुप् (५।२।११५)। **'धीमान्** पण्डिते च बृहस्पतौ' (इति मेदिनी)॥ (१५) ॥*॥ सूते, सूयते, वा। 'षूङ् प्रसवे' (अ० आ० से०)। 'षूङ् प्राणिगर्भविमोचने' (दि० आ० से०) वा। 'सूङः क्रिः' (उ० ४।६४)। एतेन—सुवति—इति विगृह्णन् स्वामी प्रत्युक्तः। उक्तनिर्देशासंभवात्।—सुनोति। 'सुञो दीर्घश्च' इति रिदीर्घौ—इति वदन्मुकुटोऽपि। उज्ज्वलदत्तादिष्वस्यादर्शनात्॥*॥ केचित्तु **'सूरो**ऽर्कहलयोः पुंसि'। सूरः सूर्योऽस्त्युपास्यतयास्य। अत इनौ (**सूरी**) नान्तम्—इत्याहुः। **'दूरदृक्** कोविदः **सूरी'** इति रभसः॥ (१६) ॥*॥ प्रशस्तं कृतं कर्मास्य। इनिः (५।२।११५)। कृतमनेन। 'इष्टादिभ्यश्च' (५।२।८८) इतीनिर्वा। **'कृती** स्यात्पण्डिते योग्ये' इति हैमः॥ (१७) ॥*॥ कर्षति। 'कृष विलेखने' (भ्वा० प० अ०)। क्तिच् (३।३।१७४)। बाहुलकात्तिर्वा। संज्ञापूर्वकत्वान्न गुणः। **'कृष्टिः** स्यादाकर्षे स्त्री बुधे पुमान्' (इति मेदिनी)। रन्तिदेवोऽपि—'आकर्षणे स्त्रियां **कृष्टि**र्भवेन्ना तु विपश्चिति' इति॥ (१८) ॥*॥ लब्धो वर्णः स्तुतिर्येन॥ (१९) ॥*॥ विचष्टे। 'चक्षिङ् व्यक्तायां वाचि' (अ० आ० से०)। 'अनुदात्तेतश्च हलादेः' (३।२।१४९) इति युच्। 'असनयोः' (वा० २।४।५४) 'बहुलं तणि' (वा० २।४।५४) इति वा ख्याञ् न॥ (२०) ॥*॥ दूरान् दूराद्वा पश्यति 'दृशिर् प्रेक्षणे' (भ्वा० प० अ०)। ग्रह्यादिणिनिः (३।१।१३४)। 'सुपि०' (३।२।७८) इति वा॥ (२१) ॥*॥ एवं दीर्घदर्शी॥ (२२) ॥*॥ द्वाविंशतिः **'पण्डितस्य'**॥

**श्रोत्रियच्छान्दसौ समौ॥ ६॥**

**श्रोत्रीति**॥ छन्दोऽधीते। 'श्रोत्रियंश्छन्दोऽधीते' (५।२।८४) इति वा श्रोत्रियन्निपात्यते॥ (१) ॥*॥ पक्षे 'तदधीते तद्वेद' (४।२।५९) इत्यण्॥ (२) ॥*॥ द्वे **'संपूर्णशाखाध्यायिनः'**॥

**उपाध्यायोऽध्यापकः**

**उपेति**॥ उपेत्याधीयतेऽस्मात्। 'इङश्च' (३।३।२१) इति घञ्॥ (१) ॥*॥ अध्यापयति। ण्वुल् (३।१।१३३)॥ (२) ॥*॥ 'एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः। योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते' (मनुः २।१४१) ॥*॥ द्वे **'उपाध्यायस्य'**॥

**अथ स निषेकादिकृद्गुरुः।**

**अथेति**॥ सोऽध्यापकः। निषेको गर्भाधानमादिर्यस्य सीमन्तोन्नयनादेस्तस्य कर्ता। गृणाति धर्मादि। गिरत्यज्ञानं वा। 'गॄ शब्दे' (क्र्या० प० से०)। 'गॄ निगरणे' (तु० प० से०) वा। 'कृग्रोरुच्च' (उ० १।२४) इत्युः। 'गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि। पुमान्निषेकादिकरे पित्रादौ सुरमन्त्रिणि' (इति मेदिनी)। मनुश्च (२।१४२) 'निषेकादीनि कर्माणि यः करोति यथाविधि। संभावयति चान्नेन स विप्रो गुरुरुच्यते' ॥ (१) ॥*॥ एकम् **'संस्कारादिकर्तुर्गुरोः'**॥

१—मेदिन्यां 'सीर' शब्दघटितत्वेनास्य प्रमादकृतत्वम्॥ तस्मात् 'सूरश्चारुभटे सूर्ये' इति विश्वस्योपन्यासः कर्तुं योग्यः॥

**मन्त्रव्याख्याकृदाचार्यः**

**मेति** ॥ मन्त्रस्य वेदस्य व्याख्यानं करोति क्विप् (३।२।७६) तुक् । (६।१।७१) ॥ (१) ॥*॥ आचर्यते । 'चर गतौ' ( भ्वा० प० से० ) । ण्यत् (३।१।१२४) । मनुः— 'उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षते' (२।१४०) ॥ (२) ॥*॥ द्वे '**मन्त्रव्याख्याकर्तुः**' ॥

**आदेष्टा त्वध्वरे व्रती ॥ ७ ॥**

**यष्टा च यजमानश्च**

**येति** ॥ आदिशत्यृत्विजो यागे स्वेष्टसंपादनाय प्रेरयति । 'दिश अतिसर्जने' ( तु० प० अ० ) । तृच् (३।१।१३३) ॥*॥ 'आदिष्टी' इति पाठे आदिष्टमनेन । 'इष्टादिभ्यश्च' (५।२।८८) इतीनिः । 'क्तस्येन्विषयस्य कर्मणि' (वा० २।३।३६) इति सप्तमी ॥*॥ व्रतं भोजनादिनियमोऽस्यास्ति । 'अतः—' (५।२।११५) इतीनिः । यद्वा व्रतयति । 'व्रताद्भोजनतन्निवृत्त्योः' (　　　) इति णिच् । 'व्रते' (३।२।८०) इति णिनिः ॥ (१) ॥*॥ यजते तृच् (३।१।१३३) ॥ (२) ॥*॥ 'पूङ्यजोः शानन्' (३।२।१२८) । शानच् (३।२।१२४) वा ॥ (३) ॥*॥ त्रीणि '**यजमानस्य**' ॥

**स सोमवति दीक्षितः ।**

**स इति** ॥ स व्रती सोमपानवति यागे आदेष्टा सन् ॥*॥ दीक्षते स्म । 'दीक्ष मौण्ड्येज्योपनयनादौ' ( भ्वा० आ० से० ) । 'गत्यर्था—' (३।४।७२) इति क्तः । यद्वा दीक्षा जातास्य । तारकादीतच् (५।२।३६) ॥ (१) ॥*॥ एकम् '**सोमयाजिनः**' ॥

**इज्याशीलो यायजूकः**

**ईति** ॥ इज्या शीलमस्य । इज्यां शीलति । 'शील समाधौ' ( भ्वा० प० से० ) । 'शीलिकामि—' (वा० ३।२।१) इति णः ॥ (१) ॥*॥ पुनः पुनः भृशं वा यजते । '—क्रियासमभिहारे—' (३।१।२२) इति यङ् । 'यजजपदशां यङः' (३।२।१६६) इत्यूकः ॥ (२) ॥*॥ द्वे '**यजनशीलस्य**' ॥

**यज्वा तु विधिनेष्टवान् ॥ ८ ॥**

**येति** ॥ यजते स्म । 'सुयजोर्ङ्वनिप्' (३।२।१०३) ॥ (१) ॥*॥ एकम् '**विधिवद्धोतुः**' ॥

**स गीर्पतीष्ट्या स्थपतिः**

**स इति** ॥ स यज्वा बृहस्पतिसवनामकयागेनेष्टवान् सन् । स्थानम् स्थः । 'सुपि स्थः' (३।२।४) इत्यत्र 'स्थः' इति योगविभागात् कः । घञर्थे (वा० ३।३।५८) वा । स्थः पतिः '**स्थपतिः** कञ्चुकिन्यपि । जीवेष्टियाजके शिल्पिभेदे ना सत्तमे त्रिषु' (इति मेदिनी) ॥ (१) ॥*॥ एकम् '**बृहस्पतियागकर्तुः**' ॥

**सोमपीती तु सोमपः ।**

**सवित** ॥ सोमस्य पीतम् । सोमपीतमस्यास्ति । इनिः (५।२।१७५) ।—'इष्टादिभ्यश्च' (५।२।८८) इतीनिः—इति मुकुटः ॥*॥ स्वामी तु—पानं पीथम् । 'पातृतुदिवचि—' (उ० २।७) इति थक् । 'घुमास्था—' (६।४।६६) इतीत्वम् । 'सोमपीथः'—इत्याह ॥ (१) ॥*॥ सोमं पिबति । 'आतोऽनुप—' (३।२।३) इति कः ॥*॥ ('सोमपाः' इति) दीर्घपाठे तु क्विप् (३।२।७६) ॥ (२) ॥*॥ सर्वेदायम् । दीक्षितस्तु तत्कालम् ॥*॥ द्वे '**सोमयाजिनः**' ॥

**सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥ ९ ॥**

**सेति** ॥ सर्वस्वं दक्षिणा यत्र विश्वजिदादौ स येनेष्टः कृतः । सर्वं वेदयति । विद्लृ लाभे' ( तु० उ० अ० ) । ण्यन्तः । सर्वं विन्दति वा । असुन् (उ० ४।१८९) ॥ (१) ॥*॥ एकम् '**विश्वजिदादियष्टुः**' ॥

**अनूचानः प्रवचने साङ्गेऽधीती**

**अन्विति** ॥ अन्ववोचत् । 'उपेयिवान्—' (३।२।१०९) इति साधुः । '**अनूचानो** विनीते स्यात्साङ्गवेदविचक्षणे' इति विश्वः ॥ (१) ॥*॥ शिक्षाद्यङ्गषट्कोपेते । प्रोच्यते । ल्युट् (३।३।११३) । प्रवचनो वेदस्तत्र । अधीतमनेन । 'इष्टादिभ्यश्च' (५।२।८८) इतीनिः । 'क्तस्येन्विषयस्य—' (वा० २।३।३६) इति सप्तमी ॥*॥ एकम् '**साङ्गवेदाध्येतुः**' ॥

**गुरोस्तु यः ।**

**लब्धानुज्ञः समावृत्तः**

**ग्विति** ॥ गुरोः सकाशाल्लब्धा प्राप्तानुज्ञा आज्ञा येन । समावर्तते स्म । 'गत्यर्था—' (३।४।७४) इति क्तः ॥ (१) ॥*॥ '**गुरुकुलवासान्निवृत्तस्य**' एकम् ॥

**सुत्वा त्वभिषवे कृते ॥ १० ॥**

**स्विति** ॥ सुतवान् 'षुञ् अभिषवे' ( स्वा० उ० अ० ) । 'सुयजोर्ङ्वनिप्' (३।२।१०३) । तुक् (६।१।७१) ॥ (१) ॥*॥ अभिषवेऽवभृथस्नाने ॥*॥ एकम् '**स्नातकस्य**' ॥

**छात्रान्तेवासिनौ शिष्ये**

**छेति** ॥ गुरुदोषाच्छादनं छत्रम् । तच्छीलमस्य । 'छत्रादिभ्यो णः' (४।४।६२) ॥ (१) ॥*॥ अन्ते समीपे वस्तुं शीलमस्य । 'सुपि—' (३।२।७८) इति णिनिः । 'शयवासवासि—' (६।३।१८) इत्यलुक् । '**अन्तेवासी** भवेच्छिष्ये चण्डाले प्रान्तगेऽपि च' इति विश्वः ॥ (२) ॥*॥ शिष्यते । 'शासु अनुशिष्टौ' ( अ० प० से० ) । 'एतिस्तुशास्—' (३।१।१०९) इति क्यप् । 'शास इदङ्हलोः' (६।४।३४) 'शासिवसि—' (८।३।६०) इति षः ॥ (३) ॥*॥ त्रीणि '**शिष्यस्य**' ॥

**शैक्षाः प्राथमकल्पिकाः ।**

**शायिति** ॥ शिक्षामधीयते । 'तदधीते—' (४।२।५९)

इत्यण्। शिक्षाया इमे। तत्र भवा वा। यद्वा शिक्षां लभन्ते। 'शेषे' (४।२।९२) इत्यण् ॥ (१) ॥*॥ प्रथमकल्पः आद्यारम्भः प्रयोजनं येषां ते। 'प्रयोजनम्' (५।१।१०९) इति ठक्। यद्वा प्रथमकल्पमधीयते। 'विद्यालक्षणकल्पान्ताच्च' (वा० ४।२।६०) इति ठक्। 'कल्पः शास्त्रे विधौ न्याये' (इति मेदिनी) ॥ (२) ॥*॥ द्वे 'प्रथमारब्धवेदानाम्' ॥

**एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ॥ ११ ॥**

**एकेति** ॥ ब्रह्म वेदस्तदध्ययनव्रतमप्युपचाराद्ब्रह्म। एकस्मिन् ब्रह्मणि व्रताचरणं येषां ते। मिथः परस्परम् ॥*॥ समानं ब्रह्म चरन्ति। 'व्रते' (३।२।८०) इति णिनिः 'चरणे ब्रह्मचारिणि' (६।३।८६) इति समानस्य सः ॥ (१) ॥*॥ एकम् 'समानशाखाध्येतॄणाम्' ॥

**सतीर्थ्यास्त्वेकगुरवः**

**सेति** ॥ समाने तीर्थे वसन्ति। 'समानतीर्थे वासी' (४।४।१०७) इति यत्। 'तीर्थे ये' (६।३।८७) इति समानस्य सः ॥ (१) ॥*॥ एको गुरुर्येषां ते ॥ (२) ॥*॥ द्वे 'सहाध्यायिनाम्' ॥

**चितवानग्निमग्निचित्।**

**चीति** ॥ अग्निमचैषीत्। 'चिञ् चयने' ( स्वा० उ० अ० ) 'अग्नौ चेः' (३।२।९१) इति क्विप्। तुक् (६।१।७१) ॥ (१) ॥*) एकम् 'अग्न्युपासकस्य' ॥

**पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ॥ १२ ॥**

**पेति** ॥ परम्परया आगतः। 'तत आगतः' (४।३।७४) इत्यण्। चतुर्वर्णादित्वात् (५।१।१२४) ष्यञ्। पारम्पर्यश्चासावुपदेशश्च। तस्मिन् ॥*॥ 'अनन्तावसथेति ह-' (५।४।२३) इति ञ्यः ॥ (१) ॥*॥ इत्येवं ह किल ॥ (५) ॥*॥ यत्तु मुकुटेनोक्तम्—'पूर्वे च पूर्वतराश्च' इति द्वन्द्वे 'परोवरपरम्परपुत्रपौत्रमनुभवति' (५।२।१०) इति निर्देशात् परम्परादेशे टापि परम्परा। तदुक्तम् 'विनापि प्रत्ययं परम्पराशब्दो दृश्यते' ( ) तच्चिन्त्यम्। संनियोगशिष्टन्यायेन खप्रत्ययसंनियोग एव परम्परादेशविधानात्। परम्पराशब्दस्य त्वव्युत्पन्नत्वात्। तदुक्तम्—'अस्ति हि परम्पराशब्दोऽव्युत्पन्नं प्रातिपदिकम्' इति। यद्वा परं पिपर्ति। पचाद्यच् (३।१।१३४)। स्वपचाजारभरावत्। पृषोदरादिः (६।३।१०९) ॥*॥ द्वे 'परंपरोपदेशस्य' ॥

**उपज्ञा ज्ञानमाद्यं स्यात्**

**उपेति** ॥ उपज्ञानम्। 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् ॥ (१) ॥*॥ यथोपदेशं विना श्लोकनिर्माणे वाल्मीकेर्ज्ञानम् ॥*॥ एकम् 'आद्यज्ञानस्य' ॥

**ज्ञात्वारम्भ उपक्रमः।**

**ज्ञेति** ॥ उप प्रथमं क्रमणम्। 'क्रमु पादविक्षेपे' ( भ्वा० प० से० )। भावे घञ् (३।३।१८)। 'नोदात्तोपदेश-' (७।३।३४) इति न वृद्धिः। 'उपक्रमस्तूपधायां ज्ञात्वारम्भे च विक्रमे। चिकित्सायाम्' (इति मेदिनी) ॥ (१) ॥*॥ यथा माने नन्दस्य प्रथमारम्भ उपक्रमः सः। एकं 'ज्ञात्वा प्रथमारम्भस्य' ॥

**यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ॥ १३ ॥**

**येति** ॥ इज्यते। अनेन वा। अत्र वा। 'यज देवपूजादौ' ( भ्वा० उ० अ० )। 'यजयाच-' (३।३।९०) इति नङ्। 'यज्ञः स्यादात्मनि मखे नारायणहुताशयोः' इति हैमः ॥ (१) ॥*॥ सूयते सोमोऽत्र। 'षुञ् अभिषवे' ( स्वा० उ० अ० )। 'ऋदोरप्' (३।३।५७)। यद्वा सूयतेऽत्र। अनेन वा। 'षू प्रेरणे' ( तु० प० से० )। अप् (३।३।५७)। घः (३।३।११८) वा। 'सवो यज्ञे च संधाने' इति मेदिनी ॥ (२) ॥*॥ न ध्वरति। 'ध्वृ कौटिल्ये' ( भ्वा० प० अ० )। अच् (३।१।१३४)। अध्वानं राति वा। 'आतोऽनुप-' (३।२।३) इति को वा। 'अध्वरः सावधाने स्याद्वसुभेदे क्रतौ पुमान्' (इति मेदिनी) ॥ (३) ॥*॥ इज्यते। अनेन वा। अत्र वा। यजेर्घञ् (३।३।१९) ॥ (४) ॥ सप्तभिश्छन्दोभिरग्निजिह्वाभिर्वा तन्यते। यद्वा तानि सप्त तन्यन्तेऽत्र 'सितनिगमि-' (उ० १।६९) इति तुन् ॥ (५) ॥*॥ मखन्ति देवा अत्र। अनेन वा। 'मख गतौ' ( भ्वा० प० से० ) 'हलश्च' (३।३।१२१) इति घञ्। संज्ञापूर्वकत्वान्न वृद्धिः। यद्वा 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' ( ) इति घञ्विषयेऽपि 'पुंसि-' (३।३।११८) इति घः ॥ (६) ॥*॥ करोति। क्रियते वा। 'कृञः कतुः' ( )। 'क्रतुर्यज्ञे मुनौ पुंसि (इति मेदिनी) ॥ (७) ॥*॥ सप्त 'यज्ञस्य' ॥

**पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः।**
**एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः ॥ १४ ॥**

**पेति** ॥ पठनम्। पाठनम् वा। भावे घञ् (३।३।१८) 'पाठश्च पठने ख्यातो विद्वपर्ण्यां तु योषिति' (इति मेदिनी) ॥ (१) ॥*॥ हवनम्। 'हु दानादनयोः' ( जु० प० अ० )। 'अर्तिस्तुसुहुसृ-' (उणा० १।१४०) इति मन् ॥ (१) ॥*॥ अतिथीनामदृष्टपूर्वाणां गृहमागतानाम्। सपर्यणम्। 'सपर पूजायाम्'। 'कण्ड्वादिभ्यो यक्' (३।१।२७)। 'अ प्रत्ययात्' (३।३।१०२)। सपर्या पूजा ॥ (१) ॥*॥ तृप्यति[1]। 'तृप प्रीणने' ( दि० प० अ० )। भावे ल्युट् (३।३।११५) ॥ (१) ॥*॥ वलनम्। 'वल दाने' (संवरणे) ( भ्वा० आ० से० )।

१—'तृप्यति' इति तु प्रमादलिखितम् ॥

इन् (उ० ४।११८) । 'बलिर्दैत्योपहारयोः । करे चामरदण्डे च गृहदारुशरांशयोः । त्वक्संकोचे गन्धके च' इति हैमः ॥ (१) ॥*॥ महान्तश्च ते यज्ञाश्च । ब्रह्मयज्ञ आदिर्येषां तानि ब्रह्मयज्ञादीनि नामानि येषां ते ॥*॥ मनुः—'अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्' (३।७०) इति 'पाठादीनाम्' एकैकम् ॥

**समज्या परिषद्गोष्ठी सभासमितिसंसदः ।**
**आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥१५॥**

**सेति** ॥ समजन्त्यस्याम् । 'अज गतौ' (भ्वा० प० से०) । 'संज्ञायां समज–' (३।३।९९) इति क्यप् । 'क्यपि च' (वा० २।४।५६) इति वीभावो न ॥ (१) ॥*॥ परितः सीदन्त्यस्याम् 'षद्लृ विशरणादौ' (भ्वा०, तु० प० अ०) । संपदादि क्विप् (वा० ३।३।१०८) । 'सदिरप्रतेः' (८।३।६६) इति षत्वम् ॥*॥ 'बाहुलकात्परेरन्त्यलोपे **पर्षद्**' च ॥ (२) ॥*॥ गावोऽनेका वाचस्तिष्ठन्त्यस्याम् । घनर्थे कः (वा० ३।३।१०८) । 'अम्बाम्ब–' (८।३।९७) इति षत्वम् । गौरादिङीष् (४।१।४१) । '**गोष्ठी** सभासंलापयोः स्त्रियाम्' (इति मेदिनी) ॥ (३) ॥*॥ सह भान्त्यस्याम् । 'भा दीप्तौ' (अ० प० अ०) । भिदाद्यङ् (३।३।१०६) । 'समाना भान्त्यस्याम्' इति वा । 'समानस्य' (६।३।८४) इति योगविभागात् 'सभा'– (२।४।२३) इति निर्देशाद्वा समानस्य सः । '**सभा** सामाजिके गोष्ठ्यां द्यूतमन्दिरयोरपि' (इति मेदिनी) ॥ (४) ॥*॥ समयन्त्यस्याम् । 'इ गतौ' (भ्वा० प० अ०) । क्तिन् (३।३।९४) । सह विद्यमाना मिलितैर्वा मितिः प्रमाऽस्याम्, इति वा । '**समितिः** संपराये स्यात्सभायां संगमेऽपि च' (इति मेदिनी) ॥ (५) ॥*॥ संसीदन्त्यस्याम् । क्विप् (वा० ३।३।१०८) ॥ (६) ॥*॥ आतिष्ठन्त्यस्याम् । अधिकरणे ल्युट् (३।३।११७) ॥ (७) ॥*॥ (८) ॥*॥ सीदन्त्यस्याम् । असुन् (उ० ४।१८९) ॥ (९) ॥*॥ नव '**सभायाः**' ॥

**प्राग्वंशः प्राग्हविर्गेहात्**

**प्रेति** ॥ प्राञ्चति । 'अञ्चु गतिपूजनयोः' (भ्वा० प० से०) । 'ऋत्विग्–' (३।२।५९) इति क्विन् । प्राङ् वंशो गोत्रं स्थूणा वात्र ॥ (१) ॥*॥ हविःशालायाः पूर्वभागे यजमानादीनां स्थित्यर्थे गेहे प्राग्वंशशब्दो वर्तते ॥*॥ एकम् '**प्राग्वंशस्य**' ॥

**सदस्या विधिदर्शिनः ।**

**सेति** ॥ सदसि साधवः । 'तत्र साधुः' (४।४।९८) इति यत् ॥ (१) ॥*॥ विधिं द्रष्टुं शीलं येषां ते । 'सुपि–' (३।२।७८) इति दृशेर्णिनिः । न्यूनाधिकविचारका ऋत्विग्विशेषाः ॥*॥ एकम् '**सदस्यस्य**' ॥

**सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते १६**

**सेति** ॥ सभायां सीदन्ति । 'सत्सूद्विष–' (३।२।६१) इति क्विप् ॥ (१) ॥*॥ सभां स्तृणन्ति । 'स्तृञ् आच्छादने' (क्र्या० प० से०) । 'कर्मण्यण्' (३।२।१) ॥ (२) ॥*॥ सभायां साधवः । 'सभाया यः' (४।४।१०५) ॥ (३) ॥*॥ समाजं समवयन्ति । 'समवायान्समवैति' (४।४।४३) इति ठक् । समाजं रक्षन्ति वा । 'रक्षति' (४।४।३३) इति ठक् ॥ (४) ॥*॥ चत्वारि '**सभ्येषु**' ॥

**अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् ।**

**अध्वेति** ॥ अध्वरमिच्छति । 'सुपः–' (३।१।८) इति क्यच् । 'कव्यध्वरपृतनस्य–' (७।४।३९) इति लोपः । 'क्याच्छन्दसि' (३।२।१७०) इत्युः । यद्वा न ध्वरति । 'ध्वृ कौटिल्ये' (भ्वा० प० अ०) । विच् (३।२।७५) अध्वरं याति, यौति, वा । मितद्र्वादित्वात् (वा० ३।२।१८०) डुः ।—अप्द्वादि—इति मुकुटश्चिन्त्यः । गणाभावात् ॥ (१) ॥*॥ उद्गायति साम । 'गै शब्दे' (भ्वा० प० अ०) । 'तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ' (उ० २।९४) ॥ (१) ॥*॥ जुहोति । 'नप्तृनेष्टृत्वष्टृहोतृपोतृ–' (उ० २।९५) इति साधुः ॥ (१) ॥*॥ यजुश्च सामानि च ऋचश्च । 'चार्थे द्वन्द्वः' (२।२।२९) । समासान्तविधेरनित्यत्वात् 'ऋक्पूर्–' (५।४।७४) इत्यकारो न । यजुः सामर्चो विदन्ति । 'सत्सूद्विष–' (३।२।६१) इति क्विप् । यजुर्विदध्वर्युः । सामविदुद्गाता । ऋग्विद् होता । '**ऋत्विग्विशेषाणां**' क्रमादेकैकम् ॥

**आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते ॥१७॥**

**आग्नीति** ॥ अग्नीनिन्धे । 'ञि इन्धी दीप्तौ' (रु० आ० से०) । क्विप् (३।२।७६) । नलोपः (६।४।२४) । अग्नीद्त्विक् । अग्नीधः स्थानम् । 'अग्नीधः शरणे रण् भं च' (वा० ४।३।१२०) । आग्नीध्रं स्थानम् । तात्स्थ्यात्सोऽपि । 'स्फायि–' (उ० २।१३) इति रक् । नलोपः (६।४।२४) । अग्नीध्रः—इति मुकुटः । तन्न । स्फाय्यादिष्विन्धेरपाठात् । अस्मदुक्तप्रक्रियायाः सत्त्वाच्च । आग्नीध्र आद्यो येषां ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणाच्छंसिअच्छावाकनेष्ट्रादीनां षोडशानाम् ॥ (१) ॥*॥ धनैर्हेतुभिः वरणे करणैर्वा व्रियन्ते । 'वृङ् संभक्तौ' (क्र्या० आ० से०) । ण्यत् (३।१।१२४) । क्यप् (३।१।१०९) तु वृञ एव ॥*॥ ऋतौ यजति । 'ऋत्विग्–' (३।२।५९) इति साधुः ॥ (२) ॥*॥ यजन्ति । ण्वुल् (३।१।१३३) । '**याजकस्तु** गजे राज्ञो याज्ञिकेऽपि' इति मेदिनी ॥ (३) ॥*॥ त्रीणि ।—'वृताः कुर्वन्ति ये यज्ञमृत्विजो याजकाश्च ते' इति कात्यः—इति मते द्वे '**ऋत्विजाम्**' ॥

**वेदिः परिष्कृता भूमिः**

**वेदिरिति** ॥ विद्यते शोधनेन ज्ञायते, विचार्यते, प्राप्यते, वा । 'तृ पिषिरुहिवृति–' (उ० ४।११९) इतीन् । यद्वा वेदयति, वेद्यते वा । 'विद निवासादौ' चुरादिः । 'अच इः' (उ० ४।१३९) । '**वेदिः** स्यात्पण्डिते पुमान् । स्त्रियामङ्गुलि-

मुद्रायां स्यात् परिष्कृतभूतले' (इति मेदिनी) ॥ (१) ॥*॥ परितः कृता संस्कृता । 'संपरिभ्याम्–' (६।१।१३७) इति सुट् । 'परिनिवि–' (८।३।७०) इति षत्वम् ॥*॥ एकम् **'यज्ञवेद्याः'** ॥

**समे स्थण्डिलचत्वरे ।**

**सेति** ॥ स्थलन्त्यस्मिन् । 'ष्ठल स्थाने' (भ्वा० प० से०) । 'मिथिलादयश्च' (उ० १।५७) इति साधुः ॥ (१) ॥*॥ चतन्त्यस्मिन् । 'चते याचने' (भ्वा० उ० से०) 'कृबृशृवृञ्चतिभ्यः ष्वरच्' (उ० २।१२१) **'चत्वरं** स्थण्डिलेऽङ्गणे' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'यागार्थं संस्कृतभूमेः'** ॥—यज्ञार्थं परिष्कृतायाः अनिम्नोन्नताया यज्ञभूमेः—इति मुकुटः ॥

**चषालो यूपकटकः**

**चेति** ॥ चषति । चष्यते वा । 'चष भक्षणे' (भ्वा० उ० से०) । 'सानसिवर्णसि–' (उ० ४।१०७) इति साधुः ॥ (१) ॥*॥ यूपस्याग्रे कृतः कटकाकारः ॥ (२) ॥*॥ द्वे **'यूपकटकस्य'** ॥

**कुम्बा सुगहना वृतिः ॥ १८ ॥**

**किति** ॥ कुम्ब्यते अनया, वा । 'कुबि आच्छादने' (भ्वा०, चु० प० से०) । 'चिन्तिपूजिकथि–' (३।३।१०७) इत्यङ् ॥ (१) ॥*॥ सुगहना निबिडा वृतिर्वेष्टनम् । एकम् **'निबिडवेष्टनस्य'** ॥

**यूपाग्रं तर्म**

**यिवति** ॥ यूपस्याग्रम् ॥ (१) ॥*॥ तरति, मनिन् (३।२।७५) ॥ (२) ॥*॥ द्वे **'यूपाग्रे'** ॥

**निर्मन्थ्यदारुणि त्वरणिर्द्वयोः ।**

**नीति** ॥ निर्मथ्यते । 'मन्थ विलोडने' (भ्वा० प० से०) । ण्यत् (३।१।१२४) निर्मन्थ्यं च तद्दारु च ॥*॥ ऋच्छति । 'ऋ गतिप्रापणयोः' (भ्वा० प० अ०) । 'अर्तिसृधृधमि–' (उ० २।१०२) इत्यनिः । **'अरणिर्वह्निमन्थे** ना द्वयोर्निर्मन्थ्यदारुणि' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'अरणेः'** ॥

**दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥ १९ ॥**

**देति** ॥ दक्षिणोऽग्निः । 'दिक्संख्ये संज्ञायाम्' (२।१।५०) इति समासः । मुकुटस्तु—दक्षिणाया दिशोऽग्निः । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' (वा० ५।३।२८) । दक्षिणाग्निः—इत्याह । तन्न । संज्ञात्वेन 'दिक्संख्ये–' इत्येतत्सूत्रोदाहरणत्वात् । तत्र च 'समानाधिकरणेन' इत्यधिकारात् ॥ (१) ॥*॥ गृहपतिना संयुक्तः । 'गृहपतिना संयुक्ते ञ्यः' (४।४।९०) ॥ (१) ॥*॥ आहूयते प्रणीयते प्रक्षिप्यते वा हविरत्र । 'कृत्यल्युटः–' (३।३।११३) इत्यधिकरणेऽनीयर् । यद्वा आह्वनमर्हति । 'तदर्हति' (५।१।६३) इति छः ॥ (१) ॥*॥ क्वचित्तु त्रयाणां द्वन्द्वः पठ्यते ॥ एकैकं **'अग्निविशेषस्य'** ॥

**अग्नित्रयमिदं त्रेता**

**अग्नीति** ॥ त्राणम् । त्राः सदा संधुक्षणम् । तामिता । यद्वा त्रायन्ते त्रा आहुतयः । ताभिरिता । त्रित्वमिता, इति वा । पृषोदरादिः (६।३।१०९) । **'त्रेता** युगेऽग्नित्रये च' इति हैमः ॥ (१) ॥*॥ एकम् **'अग्नित्रयस्य'** ॥

**प्रणीतः संस्कृतोऽनलः ।**

**प्रेति** ॥ प्रकर्षं नीतः । **'प्रणीत** उपसंपन्ने कृते क्षिप्ते प्रवेशिते । 'संस्कृताग्नौ च' इति हेमचन्द्रः ॥ (१) ॥*॥ एकम् **'संस्कृताग्नेः'** ॥

**समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः ॥ २० ॥**

**सेति** ॥ समुह्यते, समूह्यते, वा । 'वह प्रापणे' (भ्वा० उ० अ०) । 'ऊह वितर्के' (भ्वा० आ० से०) वा ॥ (१) ॥*॥ परिचीयते ॥ (२) ॥*॥ उपचीयते ॥ (३) ॥ 'अग्नौ परिचाय्योपचाय्यसमूह्याः' (३।१।१३१) इति साधवः ॥*॥ प्रयोगोऽस्ति येषां ते । अग्नौ प्रयोक्तव्या अग्निनामानीत्यर्थः । **'त्रीण्यग्नौ प्रयोगिणाम्'** ॥

**यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ।**
**तस्मिन्नानाय्यः**

**य इति** ॥ दक्षिणाग्नित्वेन संस्क्रियते ॥*॥ आनीयते 'आनाय्योऽनित्ये' (३।१।१२७) इति साधुः ॥*॥ यस्तु त्राश्वैश्यकुलयोनिः स 'आनेयः' ॥*॥ एकम् **'दक्षिणाग्नितः संस्कृताग्नेः'** ॥

**अथाग्नायी स्वाहा च हुतभुक्प्रिया ॥ २१ ॥**

**अथेति** ॥ अग्नेः स्त्री । 'वृषाकप्यग्नि–' (४।१।३७) इत्यैङीष् च ॥ (१) ॥*॥ सुष्ठु आहूयन्ते देवा अनया । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । स्वाहास्त्यस्या वा । अर्शआद्यच् (५।२।१२७) ॥ (२) ॥*॥ हुतभुजः प्रिया ॥ (३) ॥*॥ त्रीणि **'अग्नेः प्रियायाम्'** ॥

**ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने ।**

**ऋगिति** ॥ समिधामाधानी । 'समिधामाधाने षेण्यण्' (वा० ४।३।१२०) । षित्वात् (४।१।४१) ङीष् । 'हलः'[१] (६।४।४९) इति यलोपः ॥ (१) ॥*॥ धीयते पुष्यतेऽग्निरनया । 'पाय्यसांनाय्यनिकाय्यधाय्या–' (३।१।१२९) इति साधुः ॥ (२) ॥*॥ अग्नेः समिन्धने समुद्दीपने या ऋक् तत्र ॥*॥ द्वे **'समित्प्रक्षेपेण वह्निप्रज्वलने या ऋक् प्रयुज्यते तस्याः'** ॥

**गायत्रीप्रमुखं छन्दः**

**गेति** ॥ गायन्तं त्रायते । 'आतोऽनुप–' (३।२।३) इति

१—सकलपुस्तकोपलब्धः 'यस्य हलः' (६।४।४९) इत्यस्योपन्यासः प्रामादिकः । तत्सूत्रस्यार्धधातुकाधिकारीयत्वात् । तस्मात् 'हलस्तद्धितस्य' (६।४।१५०) इत्यस्योपन्यासो योग्यः ॥

कः । गौरादिः (४।१।४१) । यद्वा गानम् । गायः । घञ् (३।३।१८) । युक् (७।३।३३) गायेन गानेन त्रायते । 'त्रैङ् पालने' ( भ्वा० आ० अ० ) । 'सुपि' (३।२।४) इति योगविभागात् कः । मूलविभुजादित्वकल्पनमपार्थकम् । तस्यानाकारान्तार्थत्वात् 'गायत्री त्रिपदादेवीछन्दोभित्खदिरेषु च' (इति मेदिनी) ॥ (१) ॥*॥ षडक्षरपदा गायत्री । प्रमुखपदेन उष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्करीत्यादि एकाक्षरवृद्ध्या बोध्यम् ॥*॥ चन्दते । 'चदि आह्लादने दीप्तौ च' (भ्वा० आ० से०) 'चन्देरादेश्च छः' (उ० ४।२१९) इत्यसुन् ॥ (१) ॥*॥ प्रथमप्रमुखे चोभे प्रधाने च प्रकीर्तिते' इत्यजयः ॥*॥ एकम् 'छन्दसाम्' ॥

**हव्यपाके चरुः पुमान् ॥ २२ ॥**

**हेति** ॥ पच्यते । कर्मणि घञ् (३।३।१९) । हव्यं च तत् पाकश्च । यद्वा भावे घञ् (३।३।१८) । पचनं पाकः । हव्यस्य पाकः । 'अनवस्रावितान्तरूष्मपाक ओदनश्चरुः' इति याज्ञिकाः ॥*॥ चर्यते भक्ष्यते । 'चर गतौ भक्षणे च' ( भ्वा० प० से० ) । 'भृमृशीतृचरि–' (उ० १।७) इत्युः । मीमांसकैरपि त्रिवृच्चर्वधिकरणे (       ) अन्नपरत्वं चरुशब्दस्याभ्युपगतम् । 'उगवादिभ्यो यत्' (५।१।२) इति सूत्रे कैयटस्तु(टार्थस्तु) 'स्थालीवाची चरुशब्दः तात्स्थ्यादोदने भाक्तः' इत्याह । विश्वप्रकाशे तु 'चरुर्भाण्डे च हव्यान्ने' इत्यनेकार्थतोक्ता । 'अथ चरुः पुमान्हव्यान्नभाण्डयोः' इति मेदिनी च । स्वामी तु—पक्वं होतव्यं चरुः । चर्यते रध्यते इति । स्थाल्यपि चरुः हव्यस्य पाकोऽत्र—इत्याह । एतेन—केचित्तु 'पच्यतेऽत्रेति । 'हलश्च' (३।३।१२१) इति घञ् । 'पाकं व्युत्पाद्य हव्यपाकस्थाल्यादिरुच्यते । अन्यत्रौपचारिकः' इत्याहुः । तदसत् ।—इति मुकुटः प्रत्युक्तः । प्रयोगदर्शनमपि सूपपादमनेकार्थकतायाम् ॥ (१) ॥*॥ एकम् 'चरोः' ॥

**आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः ।**

**आमीति** ॥ आमिष्यते । 'मिषु सेचने' ( भ्वा० प० से० ) बाहुलकात् सक् । यद्वा आ मक्षति । 'मक्ष रोषे संघाते च' ( भ्वा० प० से० ) । अच् (३।१।१३४) । पृषोदरादिः ॥ (१) ॥*॥ शृते क्वथिते तप्ते च पयसि दध्नो योजनात् या स्यात् । यत्तु—'आङ्पूर्वान्मिहेर्दीर्घश्च' इति स उपधादीर्घत्वं च इति दीर्घमध्यं मुकुट आचख्यौ तच्चिन्त्यम् । उज्ज्वलदत्तादावदर्शनात् । एकम् 'आमिक्षायाः' ॥

**धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा ॥ २३ ॥**

**धेति** ॥ धूयतेऽनेन । 'धूञ् कम्पने' (क्र्या० उ० से०) । 'धू विधूनने' ( तु० प० से० ) वा । 'अर्तिलूधूसू–' (३।२।१८४) इतीत्रः ॥*॥ धुवतेः कुटादित्वेन (१।२।१) ङित्वाद्गुणाभावादुवङि 'धुवित्रम्' इत्येके ॥ (१) ॥*॥ एकम् 'अग्नेः संधुक्षणाय मृगत्वचा रचितस्य व्यजनस्य' ॥

**पृषदाज्यं सदध्याज्ये**

**प्रेति** ॥ पर्षति, पृष्यते वा । 'पृषु सेचने' ( भ्वा० प० से० ) । 'वर्तमाने पृषत्–' (उ० २।८४) इति साधुः । पृषच्च तदाज्यं च । यद्वा पृषद्भिः सहितमाज्यम् ॥ (१) ॥*॥ दध्ना सहिते घृते । 'पृषातकं सदध्याज्ये पृषदाज्यं तदुच्यते' ॥ ॥*॥ एकं 'दधिमिश्रितघृतस्य' ॥

**परमान्नं तु पायसम् ।**

**पेति** ॥ परमं च तदन्नं च । 'सन्महत्–' (२।१।६१) इति समासः । यद्वा परमाणामुत्तमानामन्नम् ॥ (१) ॥*॥ पयसि–संस्कृतम् । 'संस्कृतं भक्षाः' (४।२।१६) इत्यण् । पयसा इति तु मुकुटस्य प्रमादः । 'तत्रोद्धृतम्–' (४।२।१४) इत्यतः 'तत्र' इत्यनुवृत्तेः । 'पायसः श्रीवासे च पायसं परमान्नके' इति हैमः । 'पायसस्तु क्लीबपुंसोः श्रीवासपरमान्नयोः' (इति मेदिनी) ॥ (२) ॥*॥ द्वे 'क्षीरान्नस्य' ॥

**हव्यकव्ये दैवपैत्रे अन्ने**

**हेति** ॥ हूयन्ते प्रीण्यन्ते देवा येन । हूयते प्रक्षिप्यते वा । 'हु दानादनयोः' ( जु० प० अ० ) । 'अचो यत्' (३।१।९७) ॥ (१) ॥*॥ कूयते पितृभ्यः । 'कु शब्दे' ( अ० प० अ० ) । 'अचो यत्' (३।१।९७) ।—'कव्रृ वर्णे ( भ्वा० आ० से० ) । पोरदुपधात्' (३।१।९८) इति यत्—इति मुकुटस्य प्रमादः । तस्य चित्ररूपपरस्य प्रकृतेऽन्वयासंभवात् । 'श्विता वर्णे' ( भ्वा० आ० से० ) 'णील वर्णे' ( भ्वा० प० से० ) इत्यादाविव वर्णस्य रूपार्थकत्वात् ॥ (१) ॥*॥ देवानामिदम् । पितॄणामिदम् 'तस्येदम्' (४।३।१२०) इत्यण् । 'पित्र्ये' इति पाठे पितरो देवता यस्य । 'वाय्वृतु–' (४।२।३१) इति यत् । देवान्नं हव्यम् । पित्रन्नं कव्यम् । द्वे 'हव्यकव्ययोः' ॥

**पात्रं स्रुवादिकम् ॥ २४ ॥**

**पेति** ॥ पाति, पिबत्यनेन वा । ष्ट्रन् (उ० ४।१५९) ।—'दादिभ्यः ष्ट्रन्'—इति मुकुटश्चिन्त्यः । तादृशसूत्रादर्शनात् । 'पात्रं तु भाजने योग्ये स्रुवादौ राजमन्त्रिणि । तीरद्वयान्तरे च' (इति मेदिनी) ॥ (१) ॥*॥ स्रवति घृतादिकम् । 'स्रु स्रवणे' ( भ्वा० प० अ० ) । 'स्रुवः कः' (उ० २।६१) ।—'घञर्थे कः'—इति मुकुटश्चिन्त्यः । 'स्रुवः कः' इतिपदोक्तस्य सत्वात् । आदिना चमसोलूखलमुसलस्फ्यादि ॥

---

१—हव्यान्ने यथा—'हेमपात्रे कृतं दोर्भ्यामाददानः पयश्चरुम्' । भाण्डे यथा—'उत्पलकान्तिकचरुः (लः काञ्चनचरुः) स्वात्मनः पार्श्वदाहकः'—इत्यनेकार्थकैरवाकरकौमुदी ॥

१—'पात्रमात्रे त्रिषु क्लीबं स्रुवादौ राजमन्त्रिणि । तीरद्वयान्तरे योग्ये' इति पाठः ॥

**ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः।**

**ध्रुवेति** ॥ ध्रुवति 'ध्रुव स्थैर्ये' (तु० प० से०)। 'इगुपध–' (३।१।१३५) इति कः। यद्वा 'ध्रु स्थैर्ये' (तु० प० अ०)। अच् (३।१।१३४)। कुटादित्वात् (१।२।१) ङित्वम्। उवङ् (६।४।७७)। '**ध्रुवः** शङ्कौ हरे विष्णौ वटे चोत्तानपादजे। वसुयोगभिदोः पुंसि क्लीबं निश्चिततर्कयोः। स्त्री मूर्वाख्योशालपर्ण्यां गीतीस्रुग्भेदयोस्त्रिषु। संतते शाश्वते च' (इति मेदिनी)॥ (१) ॥*॥ उपबिभर्ति। 'डु भृञ्' (जु० उ० अ०) क्विप् (३।२।७६)॥ (१) ॥*॥ जुहोति। 'द्युतिगमिजुहोतीनां द्वे च' 'जुहोतेर्दीर्घश्च' (वा० ३।२।१७८) इति क्विप् दीर्घश्च॥ (१) ॥*॥ स्रवति। 'स्रु स्रवणे' (भ्वा० प० अ०)। 'स्रुवः कः' (उ० २।६१)। 'स्रुवः पुमान्। **स्रुवो** द्वयोर्होमपात्रे शल्लकीमूर्वयोः स्त्रियाम्' (इति मेदिनी)॥ (१) ॥*॥ 'चिक् च' (उ० २।६२) इति स्रवतेश्चिक्प्रत्ययः। स्रुक् चान्ता॥ (१) ॥*॥ एते च स्रुचो विशेषाः स्त्रियः स्त्रीलिङ्गाः। स्रुवस्तु पुंलिङ्गः। मुकुटस्तु—'अन्येभ्योऽपि दृश्यते' (३।२।१७८) इति क्विप्। दृशिग्रहणाद्विध्यन्तरोपसंग्रहणार्थत्वात्। धातोश्चुगागमः—इति व्याख्यत्। तन्न। 'चिक् च' (उ० २।६२) इति सूत्रस्य जागरूकत्वात्। क्विबविधानाच्च। यदपि—'स्रुचः' इति बहुवचननिर्देशाद्बहुत्वम्—इति। तदपि न भेदापेक्षया स्रुचः षष्ठ्यन्तत्वात्। यदपि—ध्रुवासाहचर्याद्वयोः स्त्रीत्वमेव—इति। तदपि न 'स्त्रियः' इति विशेषविधेः सत्वात्। यथा 'स्रुवः' इति रूपभेदात्पुंस्त्वे सिद्धे 'ना' इति पुंस्त्वविधिः। तथा 'स्त्रियः' इति स्त्रीत्वविधिर्बोध्यः। नच—स्रुचो विधानाभावे षष्ठ्यानुवादः कथम्। 'चण्डांशोः पारिपार्श्विकाः', 'मुष्ट्या तु बद्धया' इत्यादिवदुपपत्तेः। 'स्त्रियाः' इत्यस्य षष्ठ्यन्तत्वकल्पनं व्यर्थम्॥*॥ क्वचित् 'स्रुवः' इति षष्ठ्यन्तपाठः। स्रवति। 'क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च' (उ० ६।५७) इति क्विब्दीर्घौ। (स्रूः) ॥*॥ '**यज्ञपात्राणां**' पृथक् पृथक्॥

**उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः॥ २५॥**

**उपेति** ॥ उपाक्रियते स्म। 'कृञ् हिंसायाम्' (स्वा० उ० अ०)। क्तः (३।२।१०२)। '**कूपाकृतो**ऽध्वरहते पशौ गोपद्रुते त्रिषु' इति विश्वमेदिन्यौ॥ (१) ॥*॥ अभितो मन्त्रयित्वा। 'मन्त्रि गुप्तभाषणे' (चु० प० से०)। क्त्वा (३।४।२१)। ल्यप् (७।१।३७)। हतो हन्तुमारब्धः॥*॥ एकं '**क्रतावभिमन्त्रितपशोः**'॥

१—ध्रुवा वटपत्राकृतिः। उपभृच्चक्राकृतिः। जुहूरर्धचन्द्राकृतिः—इति मुकुटः॥ २—'किमर्थमिदमुच्यते। न 'क्विप् च' (३।२।७६) 'अन्येभ्योऽपि दृश्यते' इत्येव सिद्धम्। 'क्विब्विधिरनुपपदार्थः। अनुपपदार्थोऽयमारम्भः' इति भाष्यत एव क्विब्विधानाङ्गीकारेण अकिंचित्करमेतत्॥

**परंपराकं शमनं प्रोक्षणं च वधार्थकम्।**

**पेति** ॥ अकनम्। आकः। परम्पराया आकम्। 'अक कुटिलायां गतौ' (भ्वा० प० से०)। भावे घञ् (३।३।१८)। अञ्चतेर्घञ् वा। यद्वा 'परम्' अतिशयेऽव्ययम्। परं परः श्रेष्ठ आकोऽस्य। अस्माद्वा॥ (१) ॥*॥ 'शमु उपशमे' दि० प० से०) भावे ल्युट् (३।३।११५)। '**शमनं** शान्तिवधयोः **शमनः** श्राद्धदेवते' इति विश्वमेदिन्यौ। '**शमन**स्तु यमे प्रोक्तः। **शमनं** शान्तिहिंसयोः' इति हैमः॥*॥ 'शसनम्' इति स्वामी। 'शसु हिंसायाम्' (भ्वा० प० से०)। ल्युट् (३।३।११५) ॥*॥ '**ससनम्**' इत्यन्ये। 'षस स्वप्ने' (अ० प० से०)॥ (२) ॥*॥ प्रकृष्टमुक्षणम्। 'उक्ष सेचने' (भ्वा० प० से०)। ल्युट् (३।३।११५)। '**प्रोक्षणं** सेकवधयोः' इति हैमः॥ (३) ॥*॥ वधो हिंसार्थोऽस्य॥*॥ त्रीणि '**यज्ञार्थं पशुहननस्य**'॥

**वाच्यलिङ्गाः प्रमीतोपसंपन्नप्रोक्षिता हते॥ २६॥**

**वेति** ॥ प्रमीयते स्म। 'मीङ्' (दि० आ० अ०) 'मीञ्' (क्र्या० उ० अ०) वा हिंसायाम्। क्तः (३।२।१०२)। '**प्रमीतं** वाच्यलिङ्गं स्यात्प्रोक्षितेऽपि मृतेऽपि च' इति मेदिनी॥ (१) ॥*॥ उपसंपद्यते स्म। 'पद गतौ' (दि० आ० अ०)। कर्तरि (३।४।७२) कर्मणि (३।२।१०२) वा क्तः। '**उपसंपन्न**मुद्दिष्टं निहते च सुसंस्कृते' इति विश्वमेदिन्यौ॥ (२) ॥*॥ प्रोक्ष्यते स्म। 'उक्ष सेचने' (भ्वा० प० से०)। क्तः (३।२।१०२)। '**प्रोक्षितं** निहते सिक्ते' इति रभसः॥ (३) ॥*॥ त्रीणि '**यज्ञहतपशोः**'॥

**सांनाय्यं हविः**

**सामिति** ॥ संनीयते। 'णीञ् प्रापणे' (भ्वा० उ० अ०)। 'पाय्यसांनाय्य–' (३।१।१२९) इति साधुः॥ (१) ॥*॥ हूयते। 'अर्चिशुचि–' (उ० २।१०८) इतीसिः॥ (२) ॥*॥ सांनाय्यं हविर्विशेषः॥*॥ द्वे '**हविषः**'॥

**अग्नौ तु हुतं त्रिषु वषट्कृतम्।**

**अग्नाविति** ॥ हुतं प्रक्षिप्तम्॥ (१) ॥*॥ 'वषट्' इति मन्त्रोपलक्षणम्। वषट्मन्त्रेण कृतं प्रक्षिप्तम्॥ (२) ॥*॥ द्वे '**हुतस्य**'॥

**दीक्षान्तोऽवभृथो यज्ञः**

**दीति** ॥ अवभ्रियतेऽनेन। 'डुभृञ्' (जु० उ० अ०)। 'भृञ् भरणे' (भ्वा० उ० अ०) वा। 'अवे भृञः' (उ० २।३) इति क्थन्॥ (१) ॥*॥ दीक्षाया अन्तः प्रधानकर्मसमाप्तौ क्रियमाणो यो यज्ञः इष्टिविशेषस्तस्य। एकम् '**अवभृथस्नानस्य**'॥

**तत्कर्मार्हं तु यज्ञियम्॥ २७॥**

**त्रिषु**

**तदिति** ॥ तस्य यज्ञस्य क्रियामर्हति। 'अर्हः' (३।२।

१२) इत्यच् ॥*॥ यज्ञमर्हति । 'यज्ञर्त्विग्भ्याम्–' (५।१।७१) इत्यत्र 'तत्कर्मार्हति' इत्युपसंख्यानाद् घः ॥ (१) ॥*॥ एकं **'क्रतुक्रियासंपादनयोग्यद्विजद्रव्यादेः'** 'त्रिषु' इति यज्ञियान्वितम् ॥

**अथ क्रतुकर्मेष्टम्**

**अथेति** ॥ क्रतुश्च यज्ञः, कर्म च दानादि तदिष्टशब्दवाच्यम् । यजनम् । 'नपुंसके भावे क्तः' (३।३।११४)। **'इष्टं** यागे च दाने च वाञ्छितेऽपि प्रयुज्यते' इत्यजयः। 'एकाग्निकर्म हवनं त्रेतायां यच्च हूयते । अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते' (      ) इति मनुः । **'इष्ट**माशंसितेऽपि स्यात्पूजिते प्रेयसि त्रिषु । सप्ततन्तौ पुमान् क्लीबे संस्कारे क्रतुकर्मणि' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'इष्टकर्मणः'** ॥

**पूर्तं खातादिकर्मणि ।**

**प्विति** ॥ खातं पुष्करिणीखननमादिर्यस्य देवालयारामादिनिर्माणस्य । खातादि च तत्कर्म च क्रिया तस्मिन् । पूरणम् । पूर्यन्ते स्म वा । 'पॄ पालनपूरणयोः' (जु० प० से०)। भावे (३।३।११४) कर्मणि (३।२।१०२) वा क्तः । 'न ध्याख्या–' (८।२।५७) इति निष्ठानत्वं न । 'पुष्करिण्यः सभावापीदेवतायतनानि च । आरामाश्च विशेषेण पूर्तं कर्म विनिर्दिशेत्' इति स्मृतिः । **'पूर्तं** त्रिषु पूरिते स्यात्क्लीबं खातादिकर्मणि' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'पूर्तकर्मणः'** ॥

**अमृतं विघसो यज्ञशेषभोजनशेषयोः ॥ २८ ॥**

**अम्रिति** ॥ अमृतमिव । अमृतसाधनत्वात् । **'अमृतं** यज्ञशेषे स्यात् पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः' (इति मेदिनी) ॥ (१) ॥*॥ विशिष्टैरद्यते । 'अद भक्षणे' ( अ० प० अ० )। 'उपसर्गेऽदः' (३।३।५९) इत्यप् । 'घञपोश्च' (२।४।३८) इति घस्लृ ॥ (१) ॥*॥ यज्ञस्य शेषो होमावशिष्टाज्यपुरोडाशादिः । देवपित्रतिथिगुर्वादिभुक्तस्य शेषः । तयोः । **'यज्ञियशेषस्य'** क्रमेणैकैकम् ॥

**त्यागो विहायितं दानमुत्सर्जनविसर्जने ।**
**विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥ २९ ॥**
**प्रादेशनं निर्वपणमपवर्जनमंहतिः ।**

**त्येति** ॥ त्यजनम् । 'त्यज हानौ' ( भ्वा० प० अ० )। घञ् (३।३।१८)। **'त्यागो** दाने च वर्जने' (इति मेदिनी) ॥ (१) ॥*॥ विहायनम् । हाको ( जु० प० अ० ) ण्यन्ताद्भावे क्तः (३।३।११४) ॥ (२) ॥*॥ दत्तम् । दाञः ( जु० प० अ० ) भावे ल्युट् (३।३।११५)। **'दानं** गजमदे त्यागे पालनच्छेदशुद्धिषु' इति विश्वमेदिन्यौ ॥ (३) ॥*॥ सृजेः (तु० प० अ० ) च ल्युट् (३।३।११५) ॥ (४) ॥*॥ **'विसर्जनं** परित्यागे दाने संप्रेषणेऽपि च' (इति मेदिनी) ॥ (५) ॥*॥

विपूर्वात् 'श्रणु दाने' इति चुरादेश्च ॥ (६) ॥*॥ वितरतेश्च ॥ ॥*॥ (७) ॥ 'स्पृश संस्पर्शे' ( तु० प० अ० )। **'स्पर्शनो** मारुते पुंसि दाने स्पर्शे नपुंसकम्' इति मेदिनी ॥ (८) ॥*॥ 'पद गतौ' (दि० आ० अ०)। ण्यन्तः । **'प्रतिपादनं** तु दाने च प्रतिपत्तौ प्रबोधने' इति मेदिनी ॥ (९) ॥*॥ 'दिश अतिसर्जने (तु० उ० अ०) ॥ (१०) ॥*॥ 'डुवप्' (भ्वा० उ० अ० ) ॥ (११) ॥*॥ 'वृजी वर्जने' ( अ० आ०, रु० प०; चु० उ० से० ) ॥ (१२) ॥*॥ हन्ति दुरितमनया । 'हन्तेरंह च' (उ० ४।६२) इत्यतिः । **'अंहतिस्त्यागरोगयोः'** इति हैमः ॥ (१३) ॥*॥ त्रयोदश **'दानस्य'** ॥

**मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदेहिकम् ॥ ३० ॥**

**म्रिति** ॥ मृतायेदम् । 'अर्थेन नित्यसमासः' (२।१।३६)। तच्च तदहश्च । 'तस्याहः' इति वा । 'राजाहः–' (५।४।९१) इति टच् । तदहे प्रेतदिने । देहादूर्ध्वम् । ऊर्ध्वदेहः । राजदन्तादिः (२।२।३१) ऊर्ध्वदेहे भवम् । अध्यात्मादित्वात् (वा० ४।३।६०) ठञ् । अनुशतिकादित्वात् (७।३।२०) उभयपदवृद्धिः ॥*॥ केचिदुत्तरपदवृद्धिं नेच्छन्ति ॥ (१) ॥*॥ प्रेतमुद्दिश्य मरणदिनमारभ्य सपिण्डीकरणपर्यन्तं प्रत्यहं दीयमानस्य जलपिण्डादेरेकम् । 'तदहर्दानम्' इति पाठे तु समासान्तविधेरनित्यत्वान्न टच् । **'और्ध्वदैहिकदानस्य'** एकम् ॥

**पितृदानं निवापः स्यात्**

**पीति** ॥ पितृभ्यो दानम् ॥ (१) ॥*॥ न्युप्यते, निवपनं वा 'डुवप्' (भ्वा० उ० अ०)। कर्मणि (३।३।१९) भावे (३।३।१८) वा घञ् ॥ (२) ॥*॥ द्वे **'सपिण्डनादूर्ध्वं पित्रुद्देशेन दानस्य'** ॥

**श्राद्धं तत्कर्म शास्त्रतः ।**

**श्रेति** ॥ श्रद्धात्रास्ति । 'प्रज्ञाश्रद्धा–' (५।२।१०१) इति णः ॥ (१) ॥*॥ तेषां पितॄणां कर्म । शास्त्रविधानेन ॥*॥ एकम् **'श्राद्धकर्मणः'** ॥

**अन्वाहार्थं मासिकः**

**अन्वेति** ॥ अनु आ ह्रियते । 'हृञ् हरणे' ( भ्वा० उ० अ० )। 'ऋहलोर्ण्यत्' (३।१।१२४) ॥ (१) ॥*॥ मासे भवम् । 'कालाट्ठञ्' (४।३।११) ॥ (२) ॥*॥ 'पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्' (३।१२२) इति मनुः ॥ द्वे **'मासिकस्य'** ॥

**अंशोऽष्टमोऽह्नः कुतपोऽस्त्रियाम् ॥ ३१ ॥**

**अंश इति** ॥ पञ्चदशमुहूर्तात्मकस्य दिनस्याष्टमो भागः। कुत्सितं तपति । 'तप संतापे' ( भ्वा० प० अ० )। 'संज्ञायाम्–' (३।२।४६) इति खच् 'अनव्ययस्य' (६।३।६६) इत्यनुवृत्तेर्न मुम् (६।३।६७)। यद्वा कुं भुवं तपति आगमशास्त्रस्यानित्यत्वाच्च मुम् । 'दिवसस्याष्टमे भागे मन्दीभवति भास्करः । स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम्' इति शातातपः ।

'कुतपोऽस्त्रियां दौहित्रे वाद्ये छागजकम्बले। कुशे दिनस्याष्टमांशे ना सूर्ये' 'कुतपी पुनः। विट्सारिकायाम्' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'अह्नोऽष्टमभागस्य'** ॥

**पर्येषणा परीष्टिश्चान्वेषणा च गवेषणा।**

**पेति** ॥ 'इषेरनिच्छार्थस्य' (वा० ३।३।१०७) युच् 'परेर्वा' (वा० ३।३।१०७) ॥ (१) ॥*॥ पक्षे क्तिन् (३।३।९४)। **'परीष्टिः** परिचर्यायां प्राकाम्येऽन्वेषणे स्त्रियाम्' इति मेदिनी ॥ (२) ॥*॥ (३) ॥*॥ 'गवेष मार्गणे'। चुरादिण्यन्ताद्युच् (३।३।१०७) ॥ (४) ॥*॥ चत्वारि **'धर्माद्यन्वेषणस्य'** ॥

**सनिस्त्वध्येषणा**

**सेति** ॥ सननम्। 'षणु दाने' (तु० उ० से०)। इन् (उ० ४।११८) ॥ (१) ॥*॥ अध्येषणम्। इषेः प्राग्वद्युच् (वा० ३।३।१०७) ॥ (२) ॥*॥ द्वे **'गुर्वाद्याराधनस्य'**।—गुर्वादेः प्रार्थनया क्वचिदर्थे नियोजनस्य—इति स्वामी ॥

**याच्ञाभिशस्तिर्याचनार्थना ॥ ३२ ॥**

**येति** ॥ याचनम्। 'टु याचृ याच्ञायाम्' (भ्वा०उ०से०)। 'यजयाच–' (३।३।९०) इति नङ् ॥ (१) ॥*॥ अभिशंसनम्। 'शंसु स्तुतौ याचने च' (भ्वा० प० से०)। क्तिन् (३।३।९४)। **'अभिशस्तिः** पुनर्लोकापवादे प्रार्थितेऽपि च' इति हैमः ॥*॥ स्वामी तु—अभिषसनम्। 'षस स्वप्ने' (अ० प० से०)। क्तिन् (३।३।९४)। सुषामादित्वात् (८।३।९८) 'पूर्वपदात्' (८।३।१०६) इति वा षत्वम्। **(अभिषस्तिः**।—इत्यवोचत् ॥ (२) ॥*॥ याचेः चुरादि(स्वार्थिक)ण्यन्तात् 'ण्यास–' (३।३।१०७) इति युच् ॥ (३) ॥*॥ एवम् 'अर्थ याच्ञायाम्' (चु० उ० से०)। युच् (३।३।१०७) ॥ (४) ॥*॥ चत्वारि **'याचनस्य'** ॥

**षट् तु त्रिषु**

**षेति** ॥ आगन्तुपर्यन्ताः षट् ॥

**अर्घ्यमर्घार्थे पाद्यं पादाय वारिणि।**

**अर्घ्येति** ॥ अर्घायेदम्। 'पादार्घाभ्यां च' (५।३।२४) इति यत्। अर्घार्थे जले ॥ (१) ॥*॥ पादायेदम् ॥ (१) ॥*॥ एकैकम् **'अर्घ्यपाद्ययोः'** ॥

**क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि ॥ ३३ ॥**

**क्रेति** ॥ अतिथय इदम्। 'अतिथेर्ञ्यः' (५।५।२६) ॥ (१) ॥*॥ अतिथौ साधु। 'पथ्यतिथि–' (४।४।१०४) इति ढञ् ॥ (१) ॥*॥ एकैकम् **'आतिथ्यस्य'** ॥

**स्युरावेशिक आगन्तुरतिथिर्ना गृहागते।**

**स्युरिति** ॥ **'वेशो** वेश्यागृहे गृहे' (इति मेदिनी)। अवेशेऽगृहे भवः। अध्यात्मादित्वात् (वा० ४।३।६०) ठञ्। 'नैकग्रामीणमतिथिं विप्रं सांगतिकं तथा' (म० ३।१०३) ॥ (१) ॥*॥ आगच्छति। 'सितनिगमि–' (उ० १।६९) इति तुन् ॥ (२) ॥*॥ अतति। 'ऋतन्यञ्जि–' (उ० ४।२) इति इथिन्। 'अध्वनीनोऽतिथिर्ज्ञेयः' इति स्मृतिः। **'अतिथिः** कुशपुत्रे स्यात्पुमानागन्तुकेऽपि च' इति विश्वमेदिन्यौ। **'प्राघुणस्त्वतिथिर्द्वयोः'** इति त्रिकाण्डशेषः ॥ (३) ॥*॥ त्रीणि **'गृहागतस्य'** ॥

**पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः ॥ ३४ ॥**

**पूर्वेति** ॥ पूजनम्। 'पूज पूजायाम्' (चु० प० से०) 'चिन्तिपूजि–' (३।३।१०५) इत्यङ् ॥ (१) ॥ नमस्करणम्। 'नमोवरिवस्–' (३।१।१९) इति क्यच्। 'अ प्रत्ययात्' (३।३।१०२) इत्यकारः ॥ (२) ॥*॥ चायनम् 'चायृ पूजानिशामनयोः' (भ्वा० उ० से०)। 'वायतेः क्तिनि चिभावो वाच्यः' ( ) ॥ (३) ॥*॥ कण्ड्वादौ 'सपर पूजायाम्' इति पठ्यते। यक् (३।१।२७)। 'अ प्रत्ययात्' (३।३।१०२) ॥ (४) ॥*॥ 'अर्ह पूजायाम्' (भ्वा० प० से०)। 'गुरोश्च हलः' (३।३।१०३) इत्यः ॥ (५) ॥*॥ 'अर्ह पूजायाम्' चुरादिः। 'ण्यासश्रन्थ–' (३।३।१०७) इति युच् ॥ (६) ॥*॥ षट् **'पूजनस्य'** ॥

**वरिवस्या तु शुश्रूषा परिचर्याप्युपासना।**

**वेति** ॥ वरिवसः करणम्। 'वरिवस्' शब्दः पूजार्थः। 'नमोवरिवस्–' (३।१।१९) इति क्यच्। 'अ प्रत्ययात्' (३।३।१०२) ॥ (१) ॥*॥ शुश्रूषणम्। 'श्रु श्रवणे' (भ्वा० प० अ०)। सन्नन्तः। 'अ प्रत्ययात्' (३।३।१०२) ॥ (२) ॥*॥ परिचरणम्। '–परिचर्यापरिसर्या–' (वा० ३।३।१०१) इति परिचर्या निपात्यते। 'परिचर्या तु सपर्येष्टिः' इति भागुरिः ॥ (३) ॥*॥ उपासनम्। 'आस उपवेशने' (अ० आ० से०)। 'ण्यास–' (३।३।१०७) इति युच् ॥*॥ **'उपासनम्'** इति पाठे ल्युट् (३।३।११५)। **'उपासनं** शराभ्यासेऽप्युपास्तावासनेऽपि च' इति विश्वमेदिन्यौ ॥ (४) ॥*॥ चत्वारि **'सेवायाः'** ॥

**व्रज्याटाट्या पर्यटनम्**

**व्रेति** ॥ 'व्रज गतौ' (भ्वा० प० से०) 'व्रजयजोः–' (३।३।९८) इति भावे क्यप् ॥ (१) ॥*॥ अटनम्। '—परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्' (वा० ३।३।१०१) इत्यटाट्या निपातिता ॥ (२) ॥*॥ ल्युट् (३।३।११५) ॥ (३) **'अटा** पर्यटनं **भ्रमः'** इति रत्नकोषादटापि ॥*॥ त्रीणि **'अटनस्य'** ॥

**चर्या त्वीर्यापथस्थितिः ॥ ३५ ॥**

**चेति** ॥ चरणम्। 'गदमदचरयमश्च–' (३।१।१००)

१—हैमविश्वसंवादप्राप्तप्रामाण्यमेदिनीपुस्तके 'कुणपी' इति पाठस्योपलम्भेन प्रकृतानुपयुक्तमिदम् ॥

इति यत्। यद्वा 'परिचर्या' इत्यत्र 'परि' इत्यस्याविवक्षणात् 'चर्या' इति साधुः ॥ (१) ईर्यते ज्ञायते। 'ईर गतौ' (अ० आ० से०)। ण्यत् (३।१।१२४) ईर्यायाः पन्थाः। 'ऋक्पूर्-' (५।४।७४) इत्यः। **'ईर्यापथे ध्यानाद्युपाये परिव्राजकादीनां स्थितेः'** एकम् ॥

**उपस्पर्शस्त्वाचमनम्**

**उपेति** ॥ उपसर्शनम्। 'स्पृश संस्पर्शे (तु० प० अ०)। घञ् (३।३।१८)। यद्वा उपस्पृश्यन्ते वारीण्यत्र। 'हलश्च' (३।३।१२१) इति घञ्। **'उपस्पर्शः** स्पर्शमात्रे स्नानाचमनयोरपि' (इति मेदिनी) ॥ (१) ॥*॥ 'चमु अदने' (भ्वा० प० से०) ल्युट् (३।३।११५)। आचम्यतेऽम्भोऽत्र। अधिकरणे ल्युट् (३।३।११७) वा ॥ (२) ॥*॥ द्वे **'आचमनस्य'** ॥

**अथ मौनमभाषणम्।**

**अथेति** ॥ मुनेः कर्म, भावो वा। 'इगन्ताच्च-' (५।१।१३१) इत्यण् ॥ (१) ॥*॥ न भाषणम्। 'भाष व्यक्तायां वाचि' (भ्वा० आ० से०)। भावे ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे **'मौनस्य'** ॥

**आनुपूर्वी स्त्रियां वावृत्परिपाटी अनुक्रमः ॥ ३६ ॥ पर्यायश्च**

**आन्विति** ॥ पूर्वं पूर्वम्। पूर्वानुक्रमेण वा। वीप्सायां योग्यतायां वाव्ययीभावः (२।१।६)। अनुपूर्वं भावः। 'वर्णदृढादिभ्यः' (५।१।१२३) इति ष्यञ्। षित्वात् (४।१।४१) ङीष्। 'हलस्तद्धितस्य' (६।४।१५०) इति यलोपः। 'स्त्रियां वा' इति पक्षे क्लीबता। **(आनुपूर्व्यम्)** ॥ (१) ॥*॥ आवर्तनम्। अत्र वा। 'वृतु वर्तने (भ्वा० आ० से०)। संपदादि क्विप् (वा० ३।३।१०८) ॥ (२) ॥*॥ परिपाटनम्। 'पट गतौ' (भ्वा० प० से०) स्वार्थण्यन्तः। 'अच इः' (उ० ४।१३९)। द्विवचनत्वान्न यण् ॥ (३) ॥*॥ अनुक्रमणम्। 'क्रमु पादविक्षेपे' (भ्वा० प० से०)। घञ् (३।३।१८)। 'नोदात्तोपदेशस्य-' (७।३।३४) इति न वृद्धिः ॥ (४) ॥*॥ पर्ययणम्। 'इण् गतौ' (अ० प० अ०)। 'परावनुपात्यय इणः' (३।३।३८) इति घञ्। **'पर्यायः** प्रकारेऽवसरे क्रमे' इति विश्वमेदिन्यौ ॥ (५) ॥*॥ पञ्च **'क्रमस्य'** ॥

**अतिपातस्तु स्यात्पर्यय उपात्ययः।**

**अतीति** ॥ अतिक्रम्य पतनम्। 'पत्लृ गतौ (भ्वा० प० से०)। घञ् (३।३।१८) ॥ (१) ॥*॥ पर्ययणम्। 'इण् गतौ' (अ० प० से०)। 'एरच्' (३।३।५६) ॥ (२) ॥*॥ उपगतस्यातिक्रम्यायनम्। 'एरच्' (३।३।५६) ॥ (३) ॥*॥ त्रीणि **'क्रमोल्लङ्घनस्य'** ॥

**नियमो व्रतमस्त्री**

**नीति** ॥ नियमनम्। 'यमः समुपनिविषु च' (३।३।६३) इत्यप्। **'नियमो** यन्त्रणायां च प्रतिज्ञानिश्चये व्रते' (इति मेदिनी) ॥ (१) ॥*॥ व्रियते। 'वृञ्' (स्वा० उ० से०) 'वृङ्' (क्र्या० आ० से०) वा। 'पृषिरञ्जिभ्यां कित्' (उ० ३।१११) इत्यतच् बाहुलकाद्वृञ्वृङ्भ्यामपि। कित्त्वान्न गुणः। यद्वा व्रजन्त्यनेन स्वर्गम्। गोचरसंचर-' (३।३।११९) इति घः। पृषोदरादिः (६।३।१०९) ॥ (२) ॥*॥ द्वे **'व्रतमात्रस्य'** ॥

**तच्चोपवासादि पुण्यकम् ॥ ३७ ॥**

**तेति** ॥ उपवास आदिर्यस्य कृच्छ्रचान्द्रायणप्राजापत्यनक्तभोजनादेः, तदुपवासादि व्रतम्। पुण्यमेव। 'संज्ञायां कन्' (५।३।७५) ॥ (१) ॥*॥ एकं **'उपवासादेर्विहितव्रतस्य'** ॥

**औपवस्तं तूपवासः**

**औपेति** ॥ उपवसनम्। 'वसु स्तम्भे' (दि० प० से०)। भावे क्तः (३।३।११४)। अनेकार्थत्वादभोजने वृत्तिः। प्रज्ञाद्यणि (५।४।३८) **'औपवस्तम्'** ॥*॥ क्वचित् **'औपवस्त्रम्'** इति पाठः। उपवसति। तृच् (३।१।१३३) उपवस्तुरिदं कर्म। 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (१) ॥*॥ उपवसनम्। 'वस निवासे' (भ्वा० प० अ०)। घञ् (३।३।१८) ॥*॥ भावे क्ते (३।३।११४) **'उपोषितम्'** ॥*॥ **उपोषणं** तु 'उष दाहे' (भ्वा० प० से०) इत्यस्य ॥ (२) ॥*॥ द्वे **'भोजनविरहस्य'** ॥

**विवेकः पृथगात्मता।**

**वीति** ॥ विवेचनम्। 'विचिर् पृथग्भावे' (रु० उ० अ०)। घञ् (३।३।१८)। **'विवेकः** स्याज्जलद्रोण्यां पृथग्भावविचारयोः' (इति मेदिनी) ॥ (१) ॥*॥ पृथगात्मा यस्य सः। तस्य भावः। तल् (५।१।११९) ॥ (२) ॥*॥ द्वे **'प्रकृतिपुरुषादिभेदज्ञानस्य'** ॥

**स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिः**

**स्यादिति** ॥ ब्रह्मणो वेदस्य तपसो वा वर्चः। 'ब्रह्महस्तिभ्यां वर्चसः' (५।४।७८) इत्यच् ॥ (१) ॥*॥ वृत्तं चाचारः, अध्ययनं च गुरुमुखाद्वेदाक्षरग्रहणम्। तयोर्ऋद्धिः ॥ (२) ॥*॥ द्वे **'ब्रह्मवर्चसस्य'** ॥

**अथाञ्जलिः ॥ ३८ ॥**

**पाठे ब्रह्माञ्जलिः**

**अथेति** ॥ ब्रह्मणोऽञ्जलिः ॥ (१) ॥*॥ एकं **'वेदपाठकाले कृतस्याञ्जलेः'** ॥

---

१—'उपस्पृश्यते खान्यत्र' इत्यपि पाठः ॥ २—'कृदिकारात्' (गण० ४।१।४५) इति ङीषि परिपाटी च। 'कृता लङ्काभर्तुर्वदनपरिपाटीषु घटना' इति पूर्वप्रयोगः—इति मुकुटः ॥

पाठे विप्रुषो ब्रह्मबिन्दवः।

पेति ॥ वेदपाठे मुखान्निर्गतबिन्दवः। ब्रह्मणो बिन्दवः॥ (१) ॥*॥ एकम् 'मुखनिर्गतबिन्दूनाम्' ॥

ध्यानयोगासने ब्रह्मासनम्

ध्येति ॥ ध्यानं प्रत्ययैकतानता च, योगश्चित्तवृत्तिनिरोधश्च, तयोरासनम्। यद्वा ध्यानस्य योग उपायः। ध्यानमेव योगो वा। तस्यासनं स्वस्तिकसिद्धपद्मादि। ब्रह्मणः संबन्धि आसनम्॥ (१) ॥*॥ एकम् 'ब्रह्मासनस्य' ॥

कल्पे विधिक्रमौ ॥ ३९ ॥

केति ॥ कल्पते। अनेन वा। 'कृपू सामर्थ्ये' (भ्वा० आ० से०)। अच् (३।१।१३३)। घञ् (३।३।१८) वा। 'कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने' (इति मेदिनी)॥ (१) ॥*॥ वेधनम्। 'विध विधाने' (तु० प० से०)। 'इगुपधात्कित्' (उ० ४।१२०) इतीन्। यद्वा विधानम्। अनेन वा। धाञः (जु० प० अ०)। 'उपसर्गे घोः किः' (३।३।९२)। 'विधिर्ना नियतौ काले विधाने परमेष्ठिनि' (इति मेदिनी)॥ (२) ॥*॥ क्रमणम्। अनेन वा। घञ् (३।३।१८, १९)। 'नोदात्तोप-' (७।३।३४) इति न वृद्धिः। 'क्रमश्चानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च' (इति मेदिनी)॥ (३) ॥*॥ त्रीणि 'विधानस्य' ॥

मुख्यः स्यात्प्रथमः कल्पो

म्विति ॥ मुखमिव। 'शाखादिभ्यो यः' (५।३।१०३)। 'व्रीहिभिर्यजेत' इति यथा॥ (१) ॥*॥ एकम् 'आद्यविधेः' ॥

अनुकल्पस्ततोऽधमः।

अन्विति ॥ अनु हीनः कल्पः। प्रादिसमासः (वा० २।२।१८)॥ (१) ॥*॥ व्रीह्यभावे 'नीवारैः' इति यथा ॥*॥ एकं 'गौणविधेः' ॥

संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः ॥ ४० ॥

समिति ॥ संस्कार उपनयनं पूर्वं यत्र तत्। श्रुतेर्ग्रहणम्। उपाक्रियतेऽनेन। ल्युट्॥ (१) ॥*॥ एकं 'वेदपाठारम्भविधिविशेषस्य' ॥

समे तु पादग्रहणमभिवादनमित्युभे।

सेति ॥ पादयोर्ग्रहणं स्पर्शः॥ (१) ॥*॥ अभिमुखीकरणार्थं वादनम्। 'वद संदेशवचने' चुरादिः। ल्युट् (३।३।११५)। आभिमुख्येन वाद्यते आशीः कार्यतेऽनेन इति वा। ण्यन्ताद्वदेः करणे ल्युट् (३।३।११७)॥ (२) ॥*॥ द्वे 'नामोच्चारणपूर्वकसंस्कृतप्रयोगेण नमस्कारस्य' ॥

भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ॥४१॥

भीति ॥ भिक्षणशीलः। 'भिक्ष याच्ञायाम्' (भ्वा० आ० से०)। 'सनाशंसभिक्ष उः' (३।२।१६८)॥ (१) ॥*॥ परित्यज्य सर्वं व्रजति। 'व्रज गतौ' (भ्वा० प० से०)। 'परौ व्रजेः षः पदान्ते' (उ० २।५९) इति क्विप् दीर्घश्च पदान्तविषये षत्वं च।—विण्—इति तु स्वामिनः प्रमादः। उणादौ विणोऽप्रकृत्वात्॥ (२) ॥*॥ कर्मन्देन प्रोक्तं भिक्षुसूत्रमधीते। 'कर्मन्दकृशाश्वादिनिः' (४।३।१११)॥ (३) ॥*॥ पराशरस्य गोत्रापत्यम्। 'गर्गादिभ्यो यञ्' (४।१।१०५)। पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीते। 'पाराशर्यशिलालिभ्याम्-' (४।३।११०) इति णिनिः॥ (४) ॥*॥ मस्कनम्। 'मस्क गतौ' (भ्वा० आ० से०)। बाहुलकादरः। मस्करो ज्ञानं गतिर्वास्यास्ति। 'मस्करमस्करिणौ' (६।१।१५४) इति इनिः। यद्वा मस्करो वेणुरस्यास्ति। इनिः (५।२।११५)। यद्वा मा कर्तुं कर्म निषेद्धुं शीलमस्य। 'मस्करमस्करिणौ-' (६।१।१५४) इति साधुः। यद्वा मुकुर इव शुद्धमन्तःकरणमस्यास्ति। प्राग्वन्निपातः। यद्वा मङ्कते। 'मकि मण्डने' (भ्वा० आ० से०)। बाहुलकादरः। आगमशास्त्रस्यानित्यत्वान्न नुम्। मकरो निधिभेदोऽस्यास्ति। प्राग्वन्निपातः॥ (५) ॥*॥ पञ्च 'संन्यासिनाम्' ॥

तपस्वी तापसः पारिकाङ्क्षी

तेति ॥ तपोऽस्यास्ति। 'तपःसहस्राभ्याम्-' (५।२।१०२) इति विनिः। 'तपस्वी तापसे चानुकम्प्ये त्रिष्वथ योषिति। मांसिकाकटुरोहिण्योः' (इति मेदिनी)॥ (१) ॥*॥ 'अण् च' (५।२।१०३)॥ (२) ॥*॥ परिकाङ्क्षितुं शीलमस्य। 'काङ्क्षि परिवर्जने' (भ्वा० प० से०)। 'सुपि-' (३।२।७८) इति णिनिः। पृषोदरादिः। यद्वा पारमत्रास्ति इनिः (५।२।११५)। पारि ब्रह्मज्ञानं काङ्क्षति॥ (३) ॥*॥ त्रीणि 'तपस्विनः' ॥

वाचंयमो मुनिः।

वेति ॥ वाचं यच्छति। 'यम उपरमे' (भ्वा० प० अ०)। 'वाचि यमो व्रते' (३।२।४०) इति खच्। 'वाचंयमपुरंदरौ च' (६।३।६९)॥ (१) ॥*॥ मन्यते। 'मन ज्ञाने' (दि० आ० अ०)। 'मनेरुच्' (उ० ४।१२३) इतीन्। 'मुनिः पुंसि वसिष्ठादौ वङ्गसेनतरौ जिने' (इति मेदिनी)॥ (२) ॥*॥ द्वे 'मौनव्रतिनः' ॥

तपःक्लेशसहो दान्तः

तेति ॥ तपसः क्लेशः। तं सहते। 'षह मर्षणे' (भ्वा०

१—इदं तु 'मस्करिग्रहणं शक्यमकर्तुम्। कथं 'मस्करी परिव्राजकः' इति इनिनैतन्मत्वर्थीयेन सिद्धम्, मस्करोऽस्यास्तीति मस्करी। न वै मस्करो यस्यास्तीति मस्करी परिव्राजकः' इति भाष्यविरोधादुपेक्ष्यम्॥ २—इदमेव 'किं तर्हि। मा कृत कर्माणि शान्तिर्वः श्रेयसी, इत्याह। अतो मस्करी परिव्राजकः' इति भाष्यसंमतम्॥

आ० अ० ) अच् (३।१।१३४) । तपःक्लेशस्य सहः ॥ (१) ॥*॥ दाम्यति स्म । 'दमु उपशमे' ( दि० प० अ० ) । 'गत्यर्था-' (३।४।७२) इति क्तः । 'यस्य विभाषा' (७।२।१५) इति नेट् । 'अनुनासिकस्य-' (६।४।१५) इति दीर्घः ।—'वा दान्त-' (७।२।२७) इति साधुः इति स्वामिनः प्रमादः । तस्य णिजन्तात्कर्मकान्तविषयत्वात् । 'दान्तस्तु दमितेऽपि स्यात्तपःक्लेशसहे त्रिषु' (इति मेदिनी) ॥ (२) ॥*॥ द्वे 'तपःक्लेशसहस्य' ॥

**वर्णिनो ब्रह्मचारिणः ॥ ४२ ॥**

**वेति** ॥ वर्णः स्तुतिरस्यास्ति । 'वर्णाद्ब्रह्मचारिणि' (५।२।१३४) इतीनिः । 'वर्णी स्याल्लेखके चित्रकरेऽपि ब्रह्मचारिणि' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ ब्रह्म वेदाध्ययनव्रतं चरति । तच्छीलो वा 'व्रते' (३।२।८०) इति 'सुपि-' (३।२।७८) इति वा णिनिः ॥ (२) ॥*॥ द्वे 'ब्रह्मचारिणः' ॥

**ऋषयः सत्यवचसः**

**ऋषेति** ॥ ऋषन्ति जानन्ति । 'ऋषी गतौ' ( तु० प० से० ) । 'इगुपधात्कित्' (उ० ४।१२०) इतीन् । 'ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम्' (इति मेदिनी) । स्त्रियां वा ङीष् (ग० ४।१।४५) ॥ (१) ॥*॥ सत्यं वचो येषाम् ॥ (२) ॥*॥ द्वे 'ऋषिसामान्यस्य' ॥

**स्नातकस्त्वाप्लुवव्रती ।**

**स्नेति** ॥ स्नाति स्म । 'ष्णा शौचे' ( अ० प० अ० ) । 'गत्यर्था-' (३।४।७२) इति क्तः । 'संज्ञायां कन्' (५।३।७५) ।—'स्नाताद्वेदसमाप्तौ' (उ० ५।४।२९) इति कन्—इति मुकुटः । तन्न । उक्तवचनादर्शनात् ॥ (१) ॥*॥ आप्लवते । 'प्लुङ् गतौ' ( भ्वा० आ० अ० ) । पचाद्यच् (३।१।१३४) । आप्लवश्चासौ व्रती च ॥*॥ 'आप्लुतव्रती' इति पाठे 'गत्यर्था- (३।४।७२) इति क्तः । मुकुटस्तु—आप्लव आप्लुतं वा स्नानम् । तत्र व्रती नित्यस्नायी इत्याह ॥ (२) ॥*॥ द्वे 'समाप्तवेदव्रतस्याश्रमान्तरमगतस्य' ॥

**ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ॥ ४३ ॥**

**ये इति** ॥ इन्द्रियाणां ग्रामः । निर्जित इन्द्रियग्रामो यैस्ते ॥ (१) ॥*॥ यमनम् । 'यम उपरमे' ( भ्वा० प० अ० ) । भावे क्तः (३।३।११४) । मलोपः (६।४।३७) । यतमुपरमणमस्ति नित्यं वा येषाम् । 'अतः' (५।२।११५) इतीनिः ॥ (२) ॥*॥ यतन्ते । 'यती प्रयत्ने' ( भ्वा० आ० से० ) । इन् (उ० ४।१०८) ।—'यमेस्तिक्' इति त्वपाणिनीयम् । 'यतिः स्त्रीपाठविच्छेदे निकारयतिनोः पुमान्' (इति मेदिनी) । अत्र पक्षे यमः क्तिच् (३।३।१७४) अपि सुवचः ॥ (३) ॥*॥ त्रीणि 'निर्जितसर्वेन्द्रियस्य' ॥

**यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ । स्थाण्डिलश्च**

**य इति** ॥ स्थण्डिले शेते । 'व्रते' (३।२।८०) इति इनिः ॥ (१) ॥*॥ 'स्थण्डिलाच्छयितरि व्रते' (४।२।१५) इत्यण् ॥ (२) ॥*॥ द्वे 'अनास्तृतभूमिशयनव्रतिनः' ॥

**अथ विरजस्तमसः स्युर्द्वयातिगाः ॥ ४४ ॥**

**अथेति** ॥ रजस्तमोभ्यां विगताः । 'निरादयः-' (वा० २।२।१८) इति समासः । विगते रजस्तमसी येभ्यः इति वा ॥ (१) ॥*॥ द्वयमतिगच्छन्ति । 'अन्येष्वपि-' (वा० ३।२।४८) इति डः ॥ (२) ॥*॥ द्वे 'निवृत्तरजस्तमोगुणानाम्' ॥

**पवित्रः प्रयतः पूतः**

**पेति** ॥ पवते । 'पूङ् पवने' ( भ्वा० आ० से० ) । पुनाति । 'पूञ् पवने' ( क्र्या० उ० से० ) वा । 'अशित्रादिभ्य इत्रोत्रौ' (उ० ४।१७३) । 'पवित्रं वर्षणे कुशे । ताम्रे पयसि च क्लीबं मेध्ये स्यादभिधेयवत्' (इति मेदिनी) ॥ (१) ॥*॥ प्रयच्छति स्म । यमेरकर्मकत्वात्कर्तरि क्तः (३।४।७२) । यद्वा प्रयतते । 'यती प्रयत्ने' ( भ्वा० आ० से० ) । अच् (३।१।१३४) ॥ (२) ॥*॥ पवते स्म 'पूङ् पवने' ( भ्वा० आ० से० ) । 'गत्यर्था-' (३।४।७२) इति क्तः । 'पूतं त्रिषु पवित्रे च शटिते बहुलीकृते' ( इति मेदिनी ) ॥ (२) ॥*॥ त्रीणि 'पवित्रस्य' ॥

**पाषण्डाः सर्वलिङ्गिनः ।**

**पेति** ॥ पापं सनोति । 'षणु दाने' ( त० उ० से० ) । सनति । 'षण संभक्तौ' ( भ्वा० प० से० ) वा । 'अमन्ताड्डः' (उ० १।११४) पृषोदरादिः (३।३।१०९) । मूर्धन्यमध्यः ॥*॥ कवर्गद्वितीयमध्यपाठे तु पाखण्डयति । 'खडि भेदने' ( चु० प० से० ) । अच् (३।१।१३४) । पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते । तं खण्डयन्ति ते यस्मात् पाखण्डास्तेन हेतुना' ॥ (१) ॥*॥ सर्वाणि च तानि लिङ्गानि, सर्वेषां लिङ्गानि वा, सर्वलिङ्गानि सन्ति येषाम् । 'अतः' (५।२।११५) इतीनिः ॥ (२) ॥*॥ द्वे 'दुःशास्त्रवर्तिषु' ॥

**पालाशो दण्ड आषाढो व्रते**

**पेति** ॥ आषाढी पूर्णिमा प्रयोजनमस्य । 'विशाखाषाढादण् मन्थदण्डयोः' (५।१।११०) इत्यण् । 'आषाढो व्रतिनां दण्डे मासे मलयपर्वते । स्त्री पूर्णिमायाम्' (इति मेदिनी) ॥

१—रिषिर्व्यञ्जनादिश्च । 'विद्याविदग्धमतयो रिषयः प्रवृद्धाः' इति बालपण्डितजातकात् । ते च सप्तविधाः—'...महर्षिदेवर्षिब्रह्मर्षिपरमर्षयः । काण्डर्षिश्च श्रुतर्षिश्च......क्रमावराः' इति रत्नकोषः—इति मुकुटः ॥ २—इदं तु यावादिगणे (५।४।२९) अस्योपलम्भादकिंचित्करम् ॥

१—स्त्रियाम् ॥ २—क्तिन् (३।३।९४) इति पाठान्तरम् ॥

(१) ॥*॥ तस्य विकारः। 'पलाशादिभ्यो वा' (४।३।१४१) इत्यञ् ॥*॥ व्रते ब्रह्मचर्ये ॥*॥ एकम् **'पालाशदण्डस्य'** ॥

**राम्भस्तु वैणवः ॥ ४५ ॥**

**रेति** ॥ **'रम्भा** कदल्यप्सरसोर्ना वेणौ वानरान्तरे' इति मेदिनी। रम्भस्य वेणोर्विकारः। प्राग्वदञ् (४।३।१४१) ॥ (१) ॥*॥ व्रत इत्येव। अन्यत्र वैणव एव ॥*॥ एकम् **'वैणवदण्डस्य'** ॥

**अस्त्री कमण्डलुः कुण्डी**

**अस्त्रीति** ॥ कस्य प्रजापतेर्जलस्य वा मण्डः सारः। तं लाति लभते वा। मितद्र्वादिः (वा० ३।२।१८०) मण्डनम्। **'मडि** भूषायाम्' (भ्वा० प० से०) ॥ (१)॥*॥ घञ्। कुणति। 'कुण शब्दोपकरणयोः' ( तु० प० से० )। 'अमन्ताड्डः' (उ० १।११४)। 'जानपद–' (४।१४२) इति ङीष्। **'कुण्डम**ग्न्यालये मानभेदे देवजलाशये। कुण्डीकमण्डलौ, जारात्पतिवत्नीसुते पुमान्। पिठरे तु न ना' (इति मेदिनी) ॥ (२) ॥*॥ सुतायां तु जातिलक्षणो ङीष् ॥*॥ द्वे **'व्रतिनां जलपात्रस्य'** ॥

**व्रतिनामासनं वृषी।**

**वेति** ॥ ब्रुवन्तः सीदन्त्यस्याम्। 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः। पृषोदरादिः (६।३।१०९)। वर्षति सुखं वा। 'वृषु सेचने' ( भ्वा० प० से० )। 'इगुपध–' (३।१।१३५) इति दन्त्यान्ते कः। गौरादिः (४।१।४१)। मूर्धन्यान्तः ॥*॥ 'अतसी **वृसी** मांसी' इत्यन्ते चन्द्रगोमिदर्शनाद्दन्त्यान्तापि ॥ (१) ॥*॥ एकं **'ब्रह्मचर्याद्यासनस्य'** ॥

**अजिनं चर्म कृत्तिः स्त्री**

**अजीति** ॥ अजति। अज्यते, वा। 'अज गतौ' ( भ्वा० प० से० )। 'अजेरज च' (उ० २।४८) इतीनच् ॥ (१) ॥*॥ चरति। चर्यते, वा। 'चर गतौ' ( भ्वा० प० से० )। मनिन् (उ० ४।१४)। **'चर्म** कृत्तौ च फलके' (इति मेदिनी) ॥ (२) ॥*॥ कृत्यते। 'कृती छेदने' ( तु० प० से० )। क्तिन् (३।३।९४)। **'कृत्तिश्च**र्मैलचोर्भूर्जे कृत्तिकायां द्वयं स्त्रियाम्' ( इति मेदिनी ) ॥ (३) ॥*॥ त्रीणि **'मृगादेश्चर्मणि'** ॥

**भैक्षं भिक्षाकदम्बकम् ॥ ४६ ॥**

**भायिति** ॥ भिक्ष्यते। 'भिक्ष याच्ञायाम्' ( भ्वा० आ० से० )। 'गुरोश्च' (३।३।१०२) इत्यः। भिक्षाणां समूहः। 'भिक्षादिभ्योऽण्' (४।२।३८) ॥ (१) ॥*॥ एकम् **'भिक्षाद्रव्यस्य'** ॥

**स्वाध्यायः स्याज्जपः**

**स्वेति** ॥ सु अतीव आवृत्त्या अध्ययनम्। 'इङश्च' (३।३।२१) इति घञ्। स्वार्थमध्ययनं वा ॥ (१) ॥*॥ जपनम्। 'जप मानसे च' (भ्वा० प० से०)। 'व्यधजपोः' (३।३।६१) इत्यप् ॥ (२) ॥*॥ द्वे **'वेदाध्ययनस्य'** ॥

**सुत्याभिषवः सवनं च सा।**

**स्विति** ॥ सवनम्। 'षुञ् अभिषवे' ( स्वा० उ० से० ) 'संज्ञायां समज–' (३।३।९९) इति क्यप् ॥ (१) ॥*॥ 'ऋदोरप्' (३।३।४७)। 'उपसर्गात्–' (८।३।६५) इति षत्वम्। 'भवेद**भिषवः** स्नाने मद्यसंधानयज्ञयोः' (इति मेदिनी) ॥ (२) ॥*॥ 'ल्युट् च' (३।३।११५)। **'सवनं** लध्वरे स्नाने सोमनिर्दलनेऽपि च' (इति मेदिनी) ॥ (३) ॥*॥ 'सा' इति सुत्या ॥*॥ त्रीणि **'सोमलताकण्डनस्य'** ॥

**सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ॥ ४७ ॥**

**सेति** ॥ सर्वाणि एनांसि मानसादिपापानि अपध्वंसयितुं शीलमस्य। 'सुपि–' (३।२।७८) इति णिनिः। जप्यते। 'जप मानसे च' ( भ्वा० प० से० )। 'पोरदुपधात्' (३।१।९८) इति यत् ॥*॥ अघं मर्षति। 'मृषु सहने' (भ्वा० प० से०) सहनमभिभवः। यद्वा मृष्यति। ल्युट् (३।३।११३)। स्त्रियां टित्वात् (४।१।१५) ङीष् ॥ (१) ॥*॥ एकम् **'अघमर्षणस्य'** ॥

**दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक्।**

**देति** ॥ दर्शे अमावास्यायां क्रियमाणत्वादुपचाराद्दर्शशब्देन याग उच्यते। 'पक्षान्तेष्टौ दर्शने च **दर्शः** सूर्येन्दुसंगमे'। (**'दर्श**स्तु स्यादमावास्या यागभेदावलोकने' इति मेदिनी) ॥ (१) ॥*॥ पौर्णमास्यां भवः। 'संधिवेलाद्यृतु–' (४।३।१६) इत्यण्। **'पौर्णमासः** पुमान्यज्ञभेदे स्त्री पूर्णिमातिथौ' इति मेदिनी) ॥ (१) ॥*॥ पक्षान्तयोरमावास्यापौर्णमास्योः। पृथग् भिन्नौ। न तु पर्यायः 'दर्शपौर्णमासयोः' **क्रमेणैकैकम्** ॥

**शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः ॥ ४८ ॥**

**शेति** ॥ यच्छति। अनेन वा। यमनं वा। पचाद्यच् (३।

---

१—इदं च प्रागपि 'अमृते जारजः कुण्डः' इत्येतद्व्याख्यायामभिहितम् ॥ २—'गण्डूषा मञ्जूषा वृषी' इति मूर्धन्यान्तेषु लिङ्गकारिका—इति मुकुटः ॥

१—बाहुलकाद् घञ्। 'जापः' इति रक्षितः ॥ तेन 'शूद्रस्य मन्त्रजापं प्रत्यनधिकारात्' (      ) इत्यादिसिद्धिः—इति मुकुटः ॥ 'प्रजापो ब्राह्मण इव क्षत्रियोऽपि न लिप्यते पापैः' इति दमयन्तीश्लेषाच्च ॥ तद्व्याख्यायां चण्डपालश्च 'जपनं जापः' इत्यभिहितवान् ॥

१।१३४) 'यमः समुपनिविषु च' (३।३।६३) इत्यप् वा । 'यमोऽन्यलिङ्गो यमजे ना काके शमने शनौ । शरीरसाधनापेक्षनित्यकर्मणि संयमे' (इति मेदिनी) ॥ (१) ॥*॥ शरीरमात्रेण साध्यं यावज्जीवं कार्यं सत्यास्तेयाहिंसादि यत् तस्यैकम् **'नैत्यिककर्मणः'** ॥

**नियमस्तु स यत्कर्माऽनित्यमागन्तुसाधनम् ।**

**नीति** ॥ यत् कर्म अनित्यं न तु यावज्जीवं कर्तव्यम्, आगन्तुभिः कादाचित्कैः कामनया समयविशेषादिभिः साधनैः साध्यमुपवासस्नानजपादि । तत् । नियमः । प्राग्वत् । **'नियमो** यन्त्रणायां च प्रतिज्ञानिश्चये व्रते' (इति मेदिनी) ॥१॥*॥ एकम् **'नियमस्य'** ॥

**उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे ॥ ४९ ॥**

**उपेति** ॥ प्रोद्धृते बहिष्कृते सति वामस्कन्धार्पितम् । यज्ञस्य सूत्रम्, यज्ञार्थं धृतं सूत्रं वा । शाकपार्थिवादिः (वा० २।१।७८) ॥ (२) ॥*॥ उपवीयते स्म । 'अज गतिक्षेपणयोः' (भ्वा० प० से०) । 'अजेर्व्यघञपोः' (२।४।५६) । 'वी गत्यादिषु' ( अ० प० अ० ) वा । क्तः (३।२।१०२) । यद्वा उपाजति स्म । उपवेति स्म वा । 'गत्यर्था—' (३।४।७२) इति क्तः ॥ (१) ॥*॥ द्वे **'यज्ञोपवीतस्य'** ॥

**प्राचीनावीतमन्यस्मिन्**

**प्रेति** ॥ प्राचीनं प्रदक्षिणम् आवीयते स्म । प्राग्वत् ॥ (१) ॥*॥ अन्यस्मिन् वामकरे प्रोद्धृते सति ॥*॥ एकम् **'विपरीतधृतयज्ञोपवीतस्य'** ॥

**निवीतं कण्ठलम्बितम् ।**

**नीति** ॥ नि वीयते स्म । प्राग्वत् । नि अधोभागे वीतं गमनमस्य वा । 'नि' इति प्रकृते 'राश्यधोभावविन्यासे' (इति मेदिनी) ॥ (१) ॥*॥ कण्ठाल्लम्बितम् ॥*॥ एकं **'करद्वये बहिष्कृते सति ऋजुभावेन स्थापितयज्ञसूत्रस्य'** ॥

**अङ्गुल्यग्रे तीर्थं दैवम्**

**अङ्गुल्विति** ॥ अङ्गुलीनामग्रे । देवानामिदम् । 'तस्येदम्' (४।३।१२०) इत्यण् । देवो देवतास्य 'सास्य देवता' (४।१।२४) इत्यण् । 'देवाद्य (वस्यय) ञञौ' (वा० ४।१।८५) इत्यञ् वा ॥ (१) ॥*॥ एकम् **'देवतीर्थस्य'** ॥

**स्वल्पाङ्गुल्योर्मूले कायम् ॥ ५० ॥**

**स्वेति** ॥ स्वल्पाङ्गुल्योः कनिष्ठिकयोरधोभागे । कः प्रजापतिर्देवतास्य । 'कस्येत्' (४।२।२५) इत्यण् इदन्तादेशश्च ।—'तस्येदम्' (४।२।१२०) इत्यण्—इति मुकुटश्चिन्त्यः । **'कायः** कदैवते मूर्तौ संघे लक्ष्यभावयोः । मनुष्यतीर्थे **कायं** स्यात्' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'कायतीर्थस्य'** ॥

**मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यम्**

**मेति** ॥ अङ्गुष्ठतर्जन्योः । पितरो देवतास्य । 'वाय्वृतुपित्रुषसो यत्' (४।२।३१) ।—पितॄणामिदम् । पैत्रम् । 'तस्येदम्' (४।३।१२०) इत्यण्—इति मुकुटः ॥ (१) ॥*॥ एकम् **'पितृतीर्थस्य'** ॥

**मूले त्वङ्गुष्ठस्य ब्राह्मम् ।**

**म्विति** ॥ 'हि:' अवधारणे । 'ब्रह्मा देवतास्य' 'सास्य देवता' (४।२।२४) इत्यण् 'ब्राह्मोऽजातौ' (६।४।७१) इति साधु ॥ (१) ॥*॥ एकम् **'ब्राह्मतीर्थस्य'** ॥

**स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ॥ ५१ ॥**

**स्यादिति** ॥ ब्रह्मणो भावः । 'भुवो भावे' (३।१।१०७) इति क्यप् ॥ (१) ॥*॥ 'तस्य भावस्त्वतलौ' (५।१।११९) ॥ (२) ॥*॥ युनक्ति 'युजिर् योगे' ( रु० उ० अ० ) । 'इगुपध—' (३।१।१३५) इति कः । युजेन सह । 'तेन सह—' (२।२।२८) इति बहुव्रीहिः । 'वोपसर्जनस्य' (६।३।८२) इति सहस्य सः । यद्वा योजनम् । युक् संपदादि क्विप् (वा० ३।३।१०८) । सह युजा सयुज्यस्य सयुजो वा भावः । ब्राह्मणादित्वात् (५।१।१२४) ष्यञ् ब्रह्मणः सायुज्यम् ॥ (३) ॥*॥ त्रीणि **'ब्रह्मभावस्य'** ॥

**देवभूयादिकं तद्वत्**

**देवेति** ॥ देवस्य भावः । देवभूयमादिर्यस्य । **'देवत्वम्', 'देवसायुज्यम्'** । तद्वत् ब्रह्मभूयादिवत् त्रिरूपी ॥

**कृच्छ्रं सांतपनादिकम् ।**

**क्रिति** ॥ कृन्तति । अनेन वा । 'कृती छेदने' (तु० प० से०) । 'कृतेश्छः क्रू च' (उ० २।२१) इति रक् छोऽन्तादेशश्च । **'कृच्छ्रमाख्यातमामीले** पापसांतपनादिनोः' (इति मेदिनी) ॥ (१) ॥*॥ सम्यक्तपनमत्र । प्रज्ञाद्यण् (५।४।३८) । यद्वा संतपति । ल्युट् (३।३।११३) । तस्येदं कर्म । अण् (४।३।१२०) । 'गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सांतपनं स्मृतम्' (मनुः ११।२१२) आदिना चान्द्रायणप्राजापत्यपराकादिग्रहः । एकम् **'प्रायश्चित्तस्य'** ॥

**संन्यासवत्यनशने पुमान् प्रायः**

**समिति** ॥ सम्यक् न्यासः आत्यन्तिकस्त्यागः । तद्युक्तेनशनेऽभोजने । प्रकृष्टमयनम् । 'इण् गतौ' (अ० प० अ०) ।

---

१—तथा च पातञ्जलसूत्रम् 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' (२।३०) इति ॥ २—तथा च पातञ्जलसूत्रम् 'शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' (२।३२) इति ॥ ३—तथा च गोभिलसूत्रम् 'दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति दक्षिणं कक्षमन्ववलम्बं भवतीत्येवं यज्ञोपवीती भवति' (१।२।२) इति ॥ ४—तथा च गोभिलसूत्रम् 'सव्यं बाहुमुद्धृत्य शिरोवधाय दक्षिणेंऽसे प्रतिष्ठापयति सव्यं कक्षमन्ववलम्बं भवत्येवं प्राचीनावीती भवति' (१।२।३) इति ॥

'एरच्' (३।३।५६)। 'अय गतौ' ( भ्वा० आ० से० )। घञ् (३।३।१८)। 'प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययोः' (इति मेदिनी) ॥ (१) ॥*॥ एकम् 'प्रायोपवेशस्य' ॥

**अथ वीरहा ॥ ५२ ॥**

**नष्टाग्निः**

**अथेति** ॥ वीरोऽग्निः । तं हन्ति । 'क्विप् च' (३।२।७६) ॥ (१) ॥*॥ नष्टोऽग्निर्यस्य ॥ (२) ॥*॥ द्वे 'प्रमादादिना यस्याग्निहोत्रिणोऽग्निर्नष्टस्तस्य' ॥

**कुहना लोभान्मिथ्येर्यापथकल्पना ।**

**क्विति** ॥ कुहनम् । 'कुह विस्मापने' चुराद्यदन्तः । 'ण्यासश्रन्थो युच्' (३।३।१०७) । 'कुहना ग्रामजालं स्यात्' इति रत्नकोषः । 'कुहना दम्भचर्यायामीर्ष्यालौ कुहनस्त्रिषु' (इति मेदिनी) ॥ (१) ॥*॥ मिथ्यातत्त्वे ईर्यापथस्याचारभेदस्य कल्पना संपादना ॥*॥ एकं 'दम्भेन कृतध्यानमौनादेः' । अर्थलिप्सया मिथ्याधर्माश्रयणस्य वा ॥

**व्रात्यः संस्कारहीनः स्यात्**

**व्रेति** ॥ शरीरायासजीवी व्याधादिर्व्रातः स इव । 'शाखादिभ्यो यः' (५।३।१०३) यद्वा व्रातमर्हति । 'दण्डादिभ्यो यः' (५।१।६६) ॥ (१) ॥*॥ संस्कारैर्गर्भाधानादिभिरुपनयनादिभिर्वा हीनः ॥ (२) ॥*॥ द्वे 'संस्कारहीनस्य' ॥

**अस्वाध्यायो निराकृतिः ॥ ५३ ॥**

**अस्वेति** ॥ न स्वाध्यायो वेदाध्ययनमस्य ॥ (१) ॥*॥ आकृतेरध्ययनचेष्टाया निर्गतः ॥ (२) ॥*॥ द्वे 'वेदाध्ययनरहितस्य' ।—चत्वार्येकार्थानि—इत्येके ॥

**धर्मध्वजी लिङ्गवृत्तिः**

**धेति** ॥ धर्मस्य ध्वजश्चिह्नम् । धर्मो ध्वज इव वा । धर्मध्वजोऽस्यास्ति । इनिः (५।२।११५) ॥ (१) ॥*॥ लिङ्गमाश्रमादिचिह्नधारणं वृत्तिर्जीविकाहेतुर्यस्य ॥ (२) ॥*॥ द्वे 'भिक्षाद्यर्थं जटादिधारिणः' ॥

**अवकीर्णी क्षतव्रतः ।**

**अवेति** ॥ अवकरणम् । 'कॄ विक्षेपे' ( तु० प० से० ) । 'कॄञ् हिंसायाम्' ( क्र्या० उ० से० ) वा । भावे क्तः (३।३।११४) । अवकीर्णं विक्षिप्तं हिंसितं वा व्रतमनेन । 'इष्टादिभ्यश्च' (५।२।८८) इतीनिः ॥ (१) ॥*॥ क्षतं खण्डितं व्रतमस्य ॥ (२) ॥*॥ द्वे 'खण्डितब्रह्मचर्यादेः' ॥

**सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ॥ ५४ ॥**
**अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् ।**

**स्विति** ॥ अभि सर्वतः सायंतनेन कर्मणा निश्चयेन मुक्तः, अभि सर्वं सायंतनं कर्म निश्चयेन मुक्तं येन वा ॥ (१) ॥*॥ अभि सर्वत उद् अतिशयेन इतं गतं प्रातस्तनं कर्मास्मात् ॥ (१) ॥*॥ एकैकम् 'अभिनिर्मुक्ताभ्युदितयोः' ॥

**परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ॥ ५५ ॥**

**पेति** ॥ परिविन्दति ज्येष्ठं परित्यज्य भार्यां लभते । 'विदॢ लाभे' ( तु० उ० अ० ) । 'तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ' (उ० २।९४) ॥ (१) ॥*॥ एकं 'ज्येष्ठे विवाहरहिते कृतदारपरिग्रहस्य कनिष्ठस्य' ॥

**परिवित्तिस्तु तज्ज्यायान्**

**पेति** ॥ परि वर्जनं विन्दति लभते । क्तिच् (३।३।१७४) ॥ (१) ॥*॥ तस्य परिवेत्तुः । ज्यायान् ज्येष्ठः ॥*॥ एकं 'परिवेत्तुर्ज्येष्ठभ्रातुः' ॥

**विवाहोपयमौ समौ ।**
**तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ॥ ५६ ॥**

**वीति** ॥ विशिष्टं वहनम् । घञ् (३।३।१८) ॥ (१) ॥*॥ उपयमनम् । 'यमः समुपनिविषु च' (३।३।६३) इत्यप् ॥ (२) ॥*॥ चाद् घञ् ॥ (३) ॥*॥ परिणयनम् । 'एरच्' (३।३।५६) ॥ (४) ॥*॥ (उद्वाहस्तु विवाहवत्) ॥ (५) ॥*॥ पाणेः पीडनं ग्रहणम् । 'कृद्योगा च' (वा० २।२।८) इति समासः ॥ (६) ॥*॥ षट् 'विवाहस्य' ॥

**व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ।**

**व्येति** ॥ व्यवायनम् । 'इण् गतौ' ( अ० प० अ० ) । 'एरच्' (३।३।५६) 'अय गतौ' । घञ् (३।३।१८) वा । ( भ्वा० आ० से० ) वा ॥ (१) ॥*॥ ग्रामे भवः 'ग्रामाद्यखञौ' (४।२।९४) । ग्राम्याणां जनानां धर्मः ॥ (२) ॥*॥ मिथुनस्य कर्म । 'प्राणभृज्जाति-' (५।१।१२९) इत्यण् । युवादित्वात् (५।१।१३०) वाण् ॥ (३) ॥*॥ नितरां धुवनं हस्तपादादिचालनमत्र ॥ (४) ॥*॥ रमणम् । 'नपुंसके भावे क्तः' (३।३।११४) । 'अनुदात्तोपदेश-' (६।४।३७) इति मलोपः ॥ (५) ॥*॥ पञ्च 'मैथुनस्य' ॥

**त्रिवर्गो धर्मकामार्थैः**

**त्रीति** ॥ त्रयाणां वर्गः समूहः ॥ (१) ॥*॥ धर्मश्च कामश्च अर्थश्च तैः कृत्वा ॥*॥ एकम् 'त्रिवर्गस्य' ॥

**चतुर्वर्गः समोक्षकैः ॥ ५७ ॥**

**चेति** ॥ चतुर्णां वर्गः ॥ (१) ॥*॥ मोक्षेण सहितैर्धर्मकामार्थैः कृत्वा । उपलक्षितो वा ॥*॥ एकम् 'चतुर्वर्गस्य' ॥

**सबलैस्तैश्चतुर्भद्रम्**

**सेति** ॥ बलेन सहितैर्धर्मादिभिः । चत्वारि भद्राणि श्रेष्ठान्यत्र वृन्दे । यद्वा चत्वारि भद्राणि । 'दिक्संख्ये संज्ञायाम्' (२।१।५०) इति समासः । 'भद्रो वाच्यवच्छ्रेष्ठसाधुनोः' इति विश्वः ॥ (१) ॥*॥ एकम् 'चतुर्भद्रस्य' ॥

**जन्याः स्निग्धा वरस्य ये ।**

**जेति** ॥ जनीं वधूं वहन्ति । 'संज्ञायां जन्या' (४।४।८२) इति यदन्तो निपातितः ॥ (१) ॥*॥ वरस्य जामातुर्ये स्निग्धास्तत्पक्षा वयस्यादयः । 'जन्यो वरवधूज्ञातिप्रियभृत्यहितेषु च' इति विश्वः ॥ (१) ॥*॥ 'वरपक्षीयाणाम्' ॥

**इति सव्याख्यामरकोषे ब्रह्मवर्गः ॥**

**मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्।**

**म्विति** ॥ मूर्धन्यभिषिक्तः। राज्यदानसमये मूर्धन्यभिषिच्यते। तत्प्रभवत्वात्सर्वोऽपि मूर्धाभिषिक्तः ॥ (१) ॥*॥ राज्ञोऽपत्यम्। 'राजश्वशुराद्यत्' (४।१।१३७)। 'ये चाभावकर्मणोः' (६।४।१६८) इति प्रकृत्या। यद्वा राजति। 'राजृ दीप्तौ' (भ्वा० उ० से०)। 'राजेरन्यः' (उ० ३।१००) ॥ (२) ॥*॥ बाहुभ्यां जातः। 'पञ्चम्यामजातौ' (३।२।९८) इति डः। बाह्वोर्जातो वा। 'सप्तम्यां जनेर्डः' (३।२।९७)। **'बाहुजः** क्षत्रिये कीरे स्वयंजाततिलेऽपि च' इति विश्वमेदिन्यौ ॥ (३) ॥*॥ क्षदति। 'क्षद संवरणे' सौत्रः। ष्ट्रन् (उ० ४।१५९)। क्षतात्त्रायते वा। पृषोदरादिः (६।३।१०९)। क्षत्रस्यापत्यम्। 'क्षत्राद्घः' (४।१।१३८) ॥ (४) ॥*॥ विशेषेण राजति। 'सत्सूद्विष–' (३।२।६१) इति क्विप् ॥ (५) ॥*॥ पञ्च **'क्षत्रियस्य'** ॥

**राज्ञि राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः ॥ १ ॥**

**रेति** ॥ राजति। 'कनिन् युवृषि–' (उ० १।१५६) इति कनिन्। **'राजा** प्रभौ च नृपतौ क्षत्रिये रजनीपतौ। यक्षे शक्रे च पुंसि स्यात्' (इति मेदिनी) ॥ (१) ॥*॥ 'सत्सूद्विष–' (३।१।६१) इति क्विप् ॥ (२) (*) 'पृथिव्या ईश्वरः'। 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यनुवर्तमाने 'तस्येश्वरः' (५।१।४२) इत्यञ्। **'पार्थिवो** नृपतौ भूमिविकारे पार्थिवोऽन्यवत्' (इति विश्वः)। **'पर्थिवो** नृपे। **पार्थिवी** स्यात्तु सीतायां पृथिव्या विकृतौ त्रिषु' (इति मेदिनी) ॥ (३) ॥*॥ क्ष्मां बिभर्ति। क्विप् (३।२।७६)। तुक् (६।१।७१) ॥*॥ **'क्ष्माभुक्'** इति पाठे क्ष्मां भुनक्ति पालयति। क्विप् (३।२।७६) ॥ (४) ॥*॥ तृन्। पाति। 'पा रक्षणे' (अ० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः ॥ (५) ॥*॥ भुवं पाति ॥ (६) ॥*॥ महीं क्षियति। 'क्षि निवासगत्योः' (तु० प० अ०) मह्यां क्षियति वा। 'क्षि क्षयैश्वर्ययोः' (भ्वा० प० अ०)। क्विप् (३।२।७६)। तुक् (६।१।७१) ॥ (७) ॥*॥ सप्त **'राज्ञः'** ॥

**राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः।**

**रेति** ॥ संलग्नोऽन्त एकदेशोऽस्याः। 'प्रादिभ्यो धातुजस्य–' (वा० २।२।२४) इति समासः। समन्तायाः स्वदेशाव्यवहितभूमेरिमे राजानः। 'तस्येदम्' (४।३।१२०) इत्यण्। प्रणता अशेषाः सामन्ताः स्वदेशानन्तरराजा यस्य ॥*॥ अधिक ईश्वरः ॥ (१) ॥*॥ एकं **'सर्वसंनिहितनृपवशकारिणः'** ॥

**चक्रवर्ती सार्वभौमः**

**चेति** ॥ चक्रे भूमण्डले राजमण्डले वा वर्तितुं शीलमस्य। 'सुपि–' (३।२।७८) इति णिनिः। **'चक्रं** गणे चक्रवाके' इति विश्वः। यद्वा चक्रं सैन्यं वर्तयितुं सर्वभूमौ चालयितुं शीलमस्य। अवश्यं वा चक्रं वर्तयति। 'आवश्यका–' (३।३।१७०) इति णिनिः ॥ (१) ॥*॥ सर्वभूमेरीश्वरः। 'तस्येश्वरः' (५।१।४२) इत्यण्। अनुशतिकादिः (७।३।२०)। 'सार्वभौमस्तु दिङ्नागे सर्वपृथ्वीपतावपि' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ द्वे **'समुद्रपर्यन्तभूमीश्वरस्य'** ॥

**नृपोऽन्यो मण्डलेश्वरः ॥ २ ॥**

**त्रिति** ॥ मण्डलस्य भूम्येकदेशस्य ईश्वरः। 'स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च' इति विश्वः ॥ (१) ॥*॥ एकम् **'माण्डलिकस्य'** ॥

**येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः।**
**शास्ति यश्चाज्ञया राज्ञः स सम्राट्**

**येनेति** ॥ सम्यग् राजति। 'सत्सू–' (३।२।६१) इति क्विप्। 'मो राजि समः क्वौ' (८।३।२५) ॥ (१) ॥*॥ एकं **'सार्वभौमविशेषस्य'** ॥ केचित्तु पृथक् त्रीणि नामान्याहुः। राजसूयकर्ता सम्राट्। द्वादशराजमण्डलस्येश्वरोऽपि सम्राट्। सर्वनृपतीनां शासकोऽपि सम्राट् ॥

**अथ राजकम् ॥ ३ ॥**

**राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात्।**

**अथेति** ॥ राज्ञां समूहः। 'गोत्रोक्षोष्ट्रोरभ्र–' (४।२।३९) इति वुञ् ॥ (१) ॥*॥ राजन्यानां समूहः। प्राग्वत् ॥ (१) ॥*॥ एकैकम् **'राजसमूहस्य'** ॥

**मन्त्री धीसचिवोऽमात्यः**

**मेति** ॥ मन्त्रो गुप्तभाषणमस्यास्ति। 'अतः–' (५।२।११५) इतीनिः। यद्वावश्यं मन्त्रयते। 'मन्त्रि गुप्तभाषणे' (चु० आ० से०)। 'आवश्यक–' (३।३।१७०) इति णिनिः ॥ (१) ॥*॥ धिया धियां वा सचिवः सहायः। धीप्रधानः सचिवो वा ॥ (२) ॥*॥ अमा सह समीपे वा भवः। 'अव्ययात्त्यप्' (४।२।१०४) ॥ (३) ॥*॥ त्रीणि **'मन्त्रिणः'** ॥

**अन्ये कर्मसचिवास्ततः ॥ ४ ॥**

**अन्य इति** ॥ ततो धीसचिवादन्ये 'कर्मसु सचिवाः सहायाः ॥ (१) ॥*॥ एकम् **'सहायकारिणाम्'** ॥

**महामात्राः प्रधानानि**

**मेति** ॥ **'मात्रा** कर्णविभूषायां वित्ते माने परिच्छदे। (अक्षरावयवे स्वल्पे क्लीबं कार्त्स्न्येऽवधारणे)' (इति मेदिनी)। महती मात्रा येषां ते। **'महामात्रः** समृद्धे चामात्ये हस्तिपकाधिपे' (इति मेदिनी) ॥ (१) ॥*॥ प्रकर्षेण धीयन्ते। 'डुधाञ् धारणपोषणयोः' (जु० प० अ०)। 'कृत्यल्युटः–' (३।३।११३) इति कर्मणि ल्युट्। **'प्रधानं** स्यान्महामात्रे प्रकृतौ परमात्मनि। प्रज्ञायामपि च क्लीबमेकत्वे तूत्तमे सदा' (इति मेदिनी) इति क्लीबत्वम्। पुंलिङ्गोऽपि। 'महामात्रः

प्रधानः स्यात्' इति पुंस्काण्डे बोपालितात् ॥ (२) ॥*॥ द्वे **'प्रधानस्य'**। त्रीणि कर्मसहायानाम्—इत्येके ॥

**पुरोधास्तु पुरोहितः।**

**प्विति** ॥ पुरोऽग्रे धीयते। 'पुरसि च' (उ० ४।२।३१) इति धाञोऽसिः ॥ (१) ॥*॥ पुरो धीयते स्म। क्तः (३।२।१०२)। 'दधातेर्हिः' (७।४।४२) ॥ (२) ॥*॥ द्वे **'धर्माध्यक्षस्य'** ॥

**द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ ॥ ५ ॥**

**द्रेति** ॥ ऋणादानादीन्यष्टादश विवादस्थानानि व्यवहाराः। तेषां द्रष्टरि निर्णेतरि। प्रच्छनम्। 'क्विब्वचिप्रच्छिश्री–' (उ० २।२७) इत्युणादिसूत्रेण क्विब्दीर्घौ संप्रसारणाभावश्च। विवचनम् घञ् (३।३।१८)। प्राट् च विवाकश्च। प्राड्विवाकौ प्रश्नविवेकावस्य स्तः। अर्शआद्यच् (५।२।१२७) 'प्रश्नविचारयोः कुशल इत्यर्थः। 'विवादानुगतं पृष्ट्वा पूर्ववाक्यं प्रयत्नतः। विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः' ( ) ॥ (१) ॥*॥ **'अक्षः** कर्षे तुषे चक्रे शकटव्यवहारयोः' इति विश्वः। पश्यति। ण्वुल् (३।१।१३३)। अक्षाणां व्यवहाराणां दर्शकः ॥ (२) ॥*॥ द्वे **'व्यवहाराणां द्रष्टरि'** ॥

**प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः।**

**प्रेति** ॥ प्रतिहरणम्। घञ् (३।३।१८)। 'उपसर्गस्य घञि–' (६।२।१२२) इति वा दीर्घः। प्रतीहारो जनवारणमस्त्यस्य। अर्शआद्यच् (५।२।१२७)। मुकुटस्तु—प्रतिराभिमुख्ये। राज्ञोऽभिमुखं जनान् प्रतिहरति बहिः प्रापयति। 'ज्वलितिकसन्तेभ्यो णः' (३।१।१४०)—इति व्याख्यत्। तन्न। हृञो ज्वलादावपाठात्। ज्वलादेराकृतिगणत्वाभावाच्च। **'प्रतीहारो** द्वारि द्वाःस्थे द्वाःस्थितायां तु योषिति' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ द्वारं पालयति। 'कर्मण्यण्' (३।२।१) ॥ (२) ॥*॥ द्वारि तिष्ठति। 'सुपि–' (३।२।४) इति कः ॥ (३) ॥*॥ द्वारि तिष्ठति स्म। 'गत्यर्थाकर्मक–' (३।४।७२) इति क्तः। 'द्वाःस्थितः, दर्शकः' इति व्यस्तं नाम। (**'द्वाःस्थितो वेत्रधारकः'** इति त्रिकाण्डशेषः)। 'स्याद्दर्शको दर्शयिता प्रतीहारोऽपि **दर्शकः'** इति रुद्रः। (द्वाःस्थितस्य दर्शकः इति) समस्तं नाम (इत्यन्ये)। **'द्वारपो द्वाःस्थितादर्शी'** इति रभसः ॥ (४) ॥*॥ (५) ॥*॥ पञ्च **'द्वारपालस्य'** ॥

**रक्षिवर्गस्त्वनीकस्थः**

**रेति** ॥ अवश्यं रक्षन्ति। 'रक्ष पालने' (भ्वा० प० से०)। 'आवश्यका–' (३।३।१७०) इति णिनिः। रक्षिणां वर्गः ॥ (१) ॥*॥ अनीकेन, अनीके वा तिष्ठति। 'सुपि–' (३।२।४) इति कः। **'अनीकस्थो** रणगते हस्तिशिक्षाविचक्षणे। राजरक्षिणि चिह्ने च वीरमर्दनकेऽपि च ॥' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ द्वे **'रक्षकगणस्य'** ॥

**अथाध्यक्षाधिकृतौ समौ ॥ ६ ॥**

**अथेति** ॥ अधिगतोऽक्षं व्यवहारम्। 'अत्यादयः–' (वा० २।२।१८) इति समासः। यद्वा अध्यक्षति। 'अक्षू व्याप्तौ' (भ्वा० प० से०)। अच् (३।१।१३४)। 'अध्यक्षोऽधिकृते प्रोक्तः प्रत्यक्षे त्वभिधेयवत्' (इति मेदिनी) ॥ (१) ॥*॥ अधिकमुपरि वा क्रियते स्म। क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे **'व्यापारितस्य'** ॥

**स्थयुकोऽधिकृतो ग्रामे**

**स्थेति** ॥ स्थातुं शीलमस्य। 'लषपदपदस्था–' (३।२।१५४) इत्युकञ् ॥ (१) ॥*॥ एकम् **'एकग्रामाधिकृतस्य'** ॥

**गोपो ग्रामेषु भूरिषु।**

**गविति** ॥ गोपायति। 'गुपू रक्षणे' (भ्वा० प० से०) 'आयादय आर्धधातुके वा' (३।१।३१)। अच् (३।१।१३४)। **'गोपो** गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि। ग्रामौघाधिकृते पुंसि शारिवाख्यौषधौ स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ एकं **'बहुग्रामाधिकृतस्य'** ॥

**भौरिकः कनकाध्यक्षः**

**भाविति** ॥ भूरिणि सुवर्णे नियुक्तः। 'तत्र नियुक्तः' (४।४।६९) इति ठक् ॥ (१) ॥*॥ कनकस्याध्यक्षः ॥ (२) ॥*॥ द्वे **'सुवर्णाधिकृतस्य'** ॥

**रूप्याध्यक्षस्तु नैष्किकः ॥ ७ ॥**

**रूप्येति** ॥ **'रूप्यः** स्यात्सुन्दरे त्रिषु। आहतस्वर्णरजते रजते च नपुंसकम्' (इति मेदिनी)। रूप्यस्याध्यक्षः ॥ (१) ॥*॥ निष्के हेम्नि नियुक्तः प्राग्वत्। 'टङ्कपतिर्नैष्किको **रजताध्यक्षः'** इति रभसः ॥ (२) ॥*॥ द्वे **'टङ्कादिशालायां नियुक्तस्य'** ॥

**अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः।**

**अन्तेति** ॥ अन्तर् अभ्यन्तरो वंशो गृहम्। अन्तर्वंशे नियुक्तः। 'तत्र नियुक्तः' (४।४।६९) इति ठक्। संज्ञापूर्वकत्वान्न वृद्धिः। यद्वा अन्तर्वंशोऽस्यास्ति। 'अत इनिठनौ' (५।२।११५) ॥ (१) ॥*॥ एकम् **'अन्तःपुराधिकृतस्य जनस्य'** ॥

**सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥८॥**

**साविति** ॥ सुष्ठु विदन्तं विद्वांसमपि लान्ति वशवर्तिनं कुर्वन्ति। सुविदल्लाः स्त्रियः। तासामिमे रक्षकाः। 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (१) ॥*॥ 'कञ्चुकश्चोलकोऽस्त्येषाम्'। इनिः (५।२।११५)। **'कञ्चुकी** जोङ्गकतरौ मल्ले पन्नगे विटे' इति हैमः ॥ (२) ॥*॥ तिष्ठन्त्येषु पुरुषाः। 'घञर्थे

कः' (वा० ३।३।५८) । स्थानां दाराणां पतयः पालकाः स्थपतय एव । चतुर्वर्णादित्वात् (वा० ५।१।१२४) स्वार्थे ष्यञ् । **'स्थपतिः** कञ्चुकिन्यपि' (इति मेदिनी) ॥ (३) ॥*॥ सुविदन्ति । 'इगुपध–' (३।१।१३५) इति कः । सुविदा एव । प्रज्ञादित्वात् (५।४।३८) स्वार्थेऽण् । यद्वा सुवेदनम् । संपदादि क्विप् (वा० ३।३।१०८) । सुविद् सुज्ञानमस्त्येषाम् । ज्योत्स्नादित्वात् (वा० ५।२।१०३) अण् । यद्वा सुविज्ञाश्चतुराः स्त्रियस्तासामिमे रक्षकाः । 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (४) ॥*॥ चत्वारि **'राज्ञां ह्यगारे वही रक्षाधिकृतस्य'** ॥

**शण्ढो वर्षवरस्तुल्यौ**

**शेति** ॥ शाम्यति शिश्नाभावात् । 'शमु उपशमे' ( दि० प० से० ) । 'शमेर्ढः' (उ० १।९९) । **'शण्ढः** क्लीबस्तु कञ्चुकी' इति (तालव्यादौ) रभसः । **'शण्ढः** स्यात्पुंसि गोपतौ । आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि' (इति मेदिनी) । (**'शण्ढषण्ढौ** तु सौविदौ । वन्ध्यपुंसीद्वरे क्लीबे' इति हैमः) ॥ (१) ॥*॥ वृणोति । 'वृञ् वरणे' ( स्वा० उ० से० ) । वरति 'वर आवरणे' (      ) वा । अच् (३।१।१३४) । वर्षस्य रेतःपातस्य वरः । 'ये त्वल्पसत्त्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः । जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः' ॥ (२) ॥*॥ द्वे **'अत्यन्तान्तर्महल्लकानाम्'** ॥

**सेवकार्थ्यनुजीविनः ।**

**सेवेति** ॥ सेवते । 'सेवृ सेवने' ( भ्वा० आ० से० ) । ण्वुल् (३।१।१३३) । **'सेवकस्तु** प्रसेवे ना वाच्यलिङ्गोऽनुजीविनि' (इति मेदिनी) ॥ (१) ॥*॥ अर्थोऽसंनिहितोऽस्यास्ति । 'अर्थाच्चासंनिहिते' (५।२।१३५) इतीनिः । **'अर्थी** पुमान्याचके स्यात्सेवके च विवादिनि' (इति मेदिनी) ॥ (२) ॥*॥ अनुजीवितुं शीलः । 'सुपि–' (३।२।७८) इति णिनिः ॥ (३) ॥*॥ त्रीणि **'सेवकस्य'** ॥

**विषयानन्तरो राजा शत्रुः**

**वीति** ॥ शातयति 'शद्लृ शातने' ( भ्वा० प० अ० ) । ण्यन्तः । 'रुशातिभ्यां क्रुन्' (उ० ४।१०४) । 'बहुलमन्यत्रापि' ( उ० १८० ) इति णिलुक् ।—शदेः 'जत्र्वादयश्च' (उ० ४।१०२) इति त्रुः ह्रस्वश्च—इति मुकुटः । तन्न । उक्तरीत्या निर्वाहात् ॥ (१) ॥*॥ एकं **'स्वदेशाव्यवहितदेशस्य राज्ञः'** ॥

**मित्रमतः परम् ॥ ९ ॥**

**मीति** ॥ मेद्यति । 'ञिमिदा स्नेहने' ( दि० प० से० ) 'अमिचिमिदिशसिभ्यः क्त्रः' (उ० ४।१६४) ।—क्त्रन् (उ० ४।१५९)—इति मुकुटः । तन्न । गुणप्रसङ्गात् । सूत्रस्य सत्त्वाच्च । **'मित्रं** सुहृदि न द्वयोः । सूर्ये पुंसि स्त्रियां गन्धद्रव्ये दैत्यान्तरे पुमान्' (इति मेदिनी) ॥ (१) ॥*॥ अतः शत्रोः ॥*॥ एकम् **'मित्रस्य'** ॥

**उदासीनः परतरः**

**वीति** ॥ अतिशयितः परः परतरः । उदास्ते । 'आस उपवेशने' ( अ० आ० से० ) । लटः शानच् (३।२।१२४) । 'ईदासः' (७।२।८३) इति ईत्वम् ॥ (१) ॥*॥ एकं **'शत्रुमित्राभ्यां परस्य राज्ञः'** ॥

**पार्ष्णिग्राहस्तु पृष्ठतः ।**

**पेति** ॥ पार्ष्णिं पश्चात्पदं गृह्णाति । 'कर्मण्यण्' (३।२।१) । 'सैन्यपृष्ठे पुमान् **पार्ष्णिः** पश्चात्पदजिगीषयोः' इति विश्वः ॥ (१) ॥*॥ एकं **'जिगीषोः पृष्ठभागस्थितस्य राज्ञः'** ॥

**रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥ १० ॥**
**द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः ।**
**अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ॥ ११॥**

**रीति** ॥ रपति दोषम् । 'रप व्यक्तायां वाचि' (भ्वा० प० से०) । 'रपेरिच्चोपधायाः' (उ० १।२६) इति कुः ॥ (१) ॥*॥ वीरस्य कर्म भावो वा । युवादित्वात् (५।१।१३०) '–वैरमैथुनिकयोः' (४।३।१२५) इति निर्देशाद्वाऽण् । वैरमस्यास्ति । इनिः (५।२।११५) ॥ (२) ॥*॥ सपत्नीव । 'व्यन् सपत्ने' (४।१।१४५) इति निर्देशादकारः ॥ (३) ॥*॥ इयर्ति विरोधम् । 'ऋ गतौ' ( जु० प० अ० ) । 'अच इः' (उ० ४।११९) ॥ (४) ॥*॥ द्वेष्टि 'द्विष अप्रीतौ' (अ० उ० अ०) 'द्विषोऽमित्रे' (३।२।१३१) इति शतृ ॥ (५) ॥*॥ द्वेषशीलः । 'क्रुधमण्डार्थेभ्यश्च' (३।२।१५१) इति युच् ॥ (६) ॥*॥ दुष्टं हृदयमस्य । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' (५।४।१५०) इति साधुः ॥ (७) ॥*॥ द्वेष्टि । क्विप् (३।२।६१) ॥ (८) ॥*॥ विरुद्धः पक्षोऽस्य । **'पक्षो** मासार्धके पार्श्वे ग्रहे साध्यविरोधयोः' (इति विश्वमेदिन्यौ) । विविधः पक्षोऽस्य वा ॥ (९) ॥*॥ न हितमस्मात् ॥ (१०) ॥*॥ अमति गच्छति । 'अम गतौ' (भ्वा० प० से० ) 'अम रोगे' ( चु० उ० से० ) 'अमेर्द्विषति चित्' (उ० ४।१७४) । इतीत्रन् ॥ (११) ॥*॥ दस्यति । 'दसु उपक्षये' । ( दि० प० से० ) । 'यजिमनिशुन्धिदसिजनिभ्यो युच्' (उ० ३।२०) बाहुलकादनादेशस्य (७।१।१) अभावः ॥ (१२) ॥*॥ शातयति । 'रुशातिभ्यां क्रुन्' (उ० ४।१०४) ॥ (१३) ॥*॥ शत्रुरेव । प्रज्ञाद्यण् (५।४।३८) ॥ (१४) ॥*॥ अभिहन्तुं शीलः । 'सुपि–' (३।२।७८) इति णिनिः ॥*॥ **'द्वेष्योऽभियातिरमित्रः'** इति रत्नकोशः । तत्राभियातेः क्तिच् (३।३।१७४) । बाहुलकात्तिर्वा ॥ (१५) ॥*॥ पिपर्ति रोषम् । 'पॄ पालनपूरणयोः' ( जु० प० से० ) । अच् (३।१।१३४) ॥ (१६) ॥*॥ न राति सुखम् । 'रा दाने' (अ० प० अ०) । क्तिच् (३।३।१७४) तिर्वा ॥ (१७) ॥*॥ प्रतिकूलमर्थयितुं शीलः 'अर्थ याच्ञायाम्' ( चु० उ० से० ) । 'सुपि–' (३।२।७८) इति णिनिः ॥ (१८) ॥*॥ परि दोषा-

१—'अनुनासिकपरत्वाभावादनादेशो न इति तु भाष्यसिद्धान्तः ॥'

ख्याने पन्थयितुं शीलः । 'पथि गतौ' चुरादिः । णिनिः (३।२।७८) । 'परि' शब्दश्च प्रकृते 'दोषाख्याने निरसने पूजाव्याप्त्योश्च भूषणे' (इति मेदिनी) ॥ (१९) ॥*॥ ऊनविंशतिः 'शत्रोः' ॥

**वयस्यः स्निग्धः सवयाः**

**वेति** ॥ वयसा तुल्यः । 'नौवयोधर्म–' (४।४।९१) इति यत् ॥ (१) ॥*॥ स्निह्यति 'ष्णिह प्रीतौ' ( दि० प० से० ) । 'मतिबुद्धिपूजार्थेभ्यश्च' (३।२।१८८) इति चाद्वर्तमाने क्तः ॥ (२) ॥*॥ समानं वयोऽस्य । 'ज्योतिर्जनपद–' (६।३।८५) इति समानस्य सः ॥ (३) ॥*॥ त्रीणि 'तुल्यवयसः' ॥

**अथ मित्रं सखा सुहृत् ।**

**अथेति** ॥ मेद्यति । 'ञिमिदा स्नेहने' ( दि० प० अ० ) 'अमिचिमिदिशसिभ्यः क्त्रः' (उ० ४।१६४) ।—क्त्रन् (उ० ४।१५९)–इति मुकुटश्चिन्त्यः ॥ (१) ॥*॥ समानः ख्यायते लोकैः । 'समाने ख्यः सः चोदात्तः' (उ० ४।१३७) इतीण् स च डित् । टिलोपः (६।४।१४३) । 'नौ व्यो यलोपः' इत्यतोऽनुवर्तनाद्यलोपः समानस्य सभावः ॥ (२) ॥*॥ शोभनं हृदयमस्य । 'सुहृद्दुर्हृदौ–' (५।४।१५०) इति साधुः ॥ (३) ॥*॥ त्रीणि 'मित्रस्य' ॥

**सख्यं साप्तपदीनं स्यात्**

**सेति** ॥ सख्युर्भावः कर्म वा । 'सख्युर्यः' (५।१।१२६) ॥ (१) ॥*॥ सप्तभिः पदैरवाप्यते । 'साप्तपदीनं सख्यम्' (५।२।२२) इति साधु ॥ (२) ॥*॥ द्वे 'सख्युर्धर्मकर्मणोः' ॥

**अनुरोधोऽनुवर्तनम् ॥ १२ ॥**

**अन्विति** ॥ अनुगम्य रोधनम् 'रुधिर् आवरणे' (रु० उ० से०) । घञ् (३।३।१८) ॥ (१) ॥*॥ अनुगम्य वर्तनं चित्ताराधनम् ॥ (२) ॥*॥ द्वे 'आराध्यादेरिष्टसंपादनस्य' ॥

**यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः ।**
**चारश्च गूढपुरुषश्च**

**येति** ॥ अर्हति । 'अर्ह पूजायाम्' ( भ्वा० प० से० ) । अच् (३।१।१३४) । यो योऽर्हः । यथार्हं वर्णो रूपमस्य । 'वर्णः स्याद्भेदरूपयोः' इति धरणिः ॥ (१) ॥*॥ प्रकर्षेण निधीयते ज्ञेयमत्र । 'उपसर्गे घोः किः' (३।३।९२) 'प्रणिधिर्याचने चरे' (इति हैमः) ॥ (२) ॥*॥ अपसर्पति । 'सृप्लृ गतौ' ( भ्वा० प० से० ) । अच् (३।१।१३४) ॥ (३) ॥*॥ चरति । 'चर गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) । 'चरोऽक्षद्यूतभेदे च भौमे चारे त्रसे चले' (इति मेदिनी) ॥ (४) ॥*॥ प्रज्ञाद्यणि (५।४।३८) 'चारः' अपि ॥*॥ 'चारः पियालवृक्षे स्याद्गतौ बन्धापसर्पयोः' (इति मेदिनी) ॥ (५) ॥*॥ स्पशति । 'स्पश बाधनस्पर्शनयोः' (भ्वा० उ० से०) अच् (३।१।१३४) । 'स्पशः स्यात्संपराये च प्रणिधावपि पुंस्ययम्' (इति मेदिनी) ॥ (६) ॥*॥ गूढश्चासौ पुरुषश्च ॥ (७) ॥*॥ सप्त 'चारपुरुषस्य' ॥

**आप्तः प्रत्ययितस्त्रिषु ॥ १३ ॥**

**आप्त इति** ॥ आप्यते स्म । 'आप्लृ व्याप्तौ' (स्वा० प० अ०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ प्रत्ययो विश्वासः संजातोऽस्य । 'तदस्य संजातम्–' (५।२।३६) इतीतच् । 'प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु' इति विश्वः ॥ (२) ॥*॥ द्वे 'विश्वासाधारस्य' ॥

**सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि ।**
**स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि ॥ १४ ॥**

**सांवेति** ॥ संवत्सरं वेत्ति । 'तदधीते तद्वेद' (४।२।५९) इत्यण् ॥ (१) ॥*॥ ज्योतिर्नक्षत्राद्यधिकृत्य कृतो ग्रन्थः । 'अधिकृत्य कृते ग्रन्थे' (४।३।८७) इत्यण् । संज्ञापूर्वकत्वान्न वृद्धिः । ज्योतिषमधीते वेद वा । 'क्रतूक्थादि–' (४।२।६०) इति ठक् ॥ (२) ॥*॥ दैवं प्राक्कृतं शुभाशुभं कर्म जानाति । 'आतोऽनुप–' (३।२।३) इति कः ॥ (३) ॥*॥ गणयति । 'गण संख्याने' (चु० उ० से०) । ण्वुल् (३।१।१३३) ॥ (४) ॥*॥ मुहूर्तम् (अधिकृत्य कृतं ग्रन्थम्) अधीते । प्राग्वदण्-ठकौ ॥ (५) ॥*॥ ज्ञानमस्यास्ति । इनिः ॥ (६) ॥*॥ ५।२।११५) ॥ (७) ॥*॥ कृतान्तं वेत्ति । उक्थादिठक् (४।२।६०) ॥ (८) ॥*॥ अष्टौ 'ज्यौतिषिकस्य' ॥

**तान्त्रिको ज्ञातसिद्धान्तः**

**तेति** ॥ तन्त्रं सिद्धान्तमधीते वेद वा । प्राग्वट्ठक् (४।२।६०) ॥ (१) ॥*॥ ज्ञातः सिद्धान्तो येन ॥ (२) ॥*॥ द्वे 'तत्त्वार्थज्ञातुः' ॥

**सत्री गृहपतिः समौ ।**

**सेति** ॥ सत्रमस्यास्ति । इनिः (५।२।११५) । 'सत्रमाच्छादने यज्ञे सदादाने च कैतवे' इति विश्वः ॥ (१) ॥*॥ गृहस्य पतिः ॥ (२) ॥*॥ द्वे 'सदान्नादिदानकर्तुर्गृहस्थस्य' ॥

**लिपिंकरोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके ॥ १५ ॥**

**लीति** ॥ लिपिं करोति । 'दिवाविभा–' (३।२।२१) इति टः ॥*॥ एवं 'लिबिंकरः' अपि ॥ (१) ॥*॥ अक्षरैर्वित्तः । 'तेन वित्तः–' (५।२।५६) इति चणप् ॥ (२) ॥*॥ एवम् 'अक्षरचुञ्चुः' अपि ॥ (३) ॥*॥ लिखति । 'लिख अक्षरविन्यासे' (तु० प० से०) । 'शिल्पिनि ष्वुन्' (३।१।१४५) । ण्वुल् (३।१।१३३) वा ॥ (४) ॥*॥ चत्वारि 'लेखकस्य' ॥

**लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ ।**

**लिखीति** ॥ लिख्यते स्म । क्तः (३।२।१०२) ॥*॥ अक्षराणां विन्यासः ॥*॥ लिखितं चाक्षरविन्यासश्च । अनयोः

समाहारः । तस्मिन् । कर्मधारयो वा ॥*॥ लिप्यते । 'लिप उपदेहे' (तु० उ० अ०) । 'इक् कृष्यादिभ्यः' (वा० ३।३।१०८) । 'इगुपधात् कित्' (उ० ४।१२०) इतीन् वा ॥ (१) ॥*॥ '-किंलिपिलिबि-' (३।२।२१) इति लिङ्गात् पस्य बो वा ॥ (२) ॥*॥—'लिबिः' सौत्रो धातुः—इति मुकुटः ॥ (२) ॥*॥ द्वे । चत्वार्येव नामानि—इति केचित् ।—'लिखिताक्षरसंस्थाने' इत्येकमेकपदम्—इत्यन्ये । द्वे **'लेखनस्य'** ॥

**स्यात्संदेशहरो दूतः**

**स्यादिति** ॥ संदेशं वाचिकं हरति । 'हरतेरनुद्यमनेऽच्' (३।२।९) ॥ (१) ॥*॥ दवति । 'दु गतौ' (भ्वा० प० से०) । 'दुतनिभ्यां दीर्घश्च' (उ० ३।९०) इति क्तः । यद्वा दूयते स्म । 'दूङ् परितापे' (दि० आ० से०) । 'गत्यर्था-' (३।४।७२) इति क्तः ॥ (२) ॥*॥ द्वे **'संदेशहरस्य'** ॥

**दूत्यं तद्भावकर्मणी ॥ १६ ॥**

**द्विति** ॥ दूतस्य भावः कर्म वा । 'दूतवणिग्भ्यां च' इति यः ॥*॥ ब्राह्मणादित्वात् (५।१।१२४) ष्यञि **'दौत्यम्'** अपि । केचित्तु—'दूत्यं तद्भागकर्मणी'—इति पाठं मन्यते । तत्र 'दूतस्य भागकर्मणी' (४।४।१२०) इति यत् ॥ (१) ॥*॥ एकम् **'दूतकर्मणः'** ॥

**अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।**

**अध्वेति** ॥ अध्वानमलं गच्छति 'अध्वनो यत्खौ' (५।२।१६) । 'आत्माध्वानौ खे' (६।४।१६९) ॥ (१) ॥*॥ 'ये चाभावकर्मणोः' (६।४।१६८) इति टिलोपो न ॥ (३) ॥*॥ अध्वानं गच्छति । 'अन्तात्यन्ताध्व-' (३।२।४८) इति डः ॥ (२) ॥*॥ पन्थानं नित्यं गच्छति । 'पन्थो ण नित्यम्' (५।१।७६) स्त्रियां पान्था ॥ (४) ॥*॥ 'पथः ष्कन्' (५।१।७५) । षित्वात् ङीष् (४।१।४१) पथिकी ॥ (५) ॥*॥ पञ्च **'पान्थस्य'** ॥

**स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च ॥ १७ ॥**
**राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ।**

**स्वेति** ॥ स्वामी राजा ।—पुरोहितः—इति श्रीधरः । अमात्यो मन्त्री । सुहृद् मित्रम् । कोशो भण्डारः । राष्ट्रं देशः । पर्वतादि दुर्गाणि । बलं सैन्यम् ॥*॥ राज्यस्य राजकर्मणोऽङ्गानि ॥ (१) ॥*॥ प्रकृष्टं कुर्वन्ति राज्यम् । क्तिच् (३।३।१७४) ॥ (२) ॥*॥ पौराणां नागराणाम् । श्रयन्ति, श्रीयन्ते, वा । 'वहिश्री-' (उ० ४।५१) इति निः । एके मुख्याः सजातीयसमूहाः ॥*॥ कामन्दकीये—'स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् । परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते' । 'पौरश्रेणिभिः सहाष्टाङ्गमपि राज्यम्' इति दर्शितम् । द्वे **'राज्याङ्गानाम्'** ॥

**संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ॥ १८ ॥**
**षड् गुणाः**

**समिति** ॥ संधानम् । 'उपसर्गे घोः किः' (३।३।९२) ॥ (१) ॥*॥ विरुद्धं विविधं वा ग्रहणम् । 'ग्रहवृदृ-' (३।३।५८) इत्यप् ॥ (१) ॥*॥ यात्यत्र । ल्युट् (३।३।११७) ॥ (१) ॥*॥ आसनम् 'आस उपवेशने' (अ० आ० से०) । ल्युट् (३।३।११५) ॥ (१) ॥*॥ द्विप्रकारम् । 'संख्याया विधार्थे धा' (५।३।४२) । 'द्वित्र्योश्च धमुञ्' (५।३।४५) ॥ (१) ॥*॥ आश्रयणम् । 'श्रिञ् सेवायाम्' (भ्वा० उ० से०) । 'एरच्' (३।३।५६) ॥ (१) ॥*॥ एतानि षड् **'गुणशब्दवाच्यानि'** ॥

---

१—काशिकास्थमिदम् । भाष्ये तु नास्त्येव—इति सिद्धान्तकौमुदी ॥

१—स्वर्णादिदानेन (पर)बन्धुभिः प्रीत्युत्पादना मित्रीकरणं **संधिः** । अयं च बहुविधो ग्रन्थविस्तरभिया न लिखितः ॥*॥ परमण्डले दाहलुण्ठनच्छेदादि **विग्रहः** ॥ तं च प्रकाशकूटतूष्णींभेदेन त्रिविधमाह ॥*॥ उपचितशक्तेः कृतमूलराष्ट्ररक्षकस्य शत्रोरवस्कन्दनाय यात्रा **यानम्** ॥ तच्च विगृह्ययानम्, संधाययानम्, संभूययानम्, प्रसङ्गयानम्, उपेक्ष्ययानम्, च इति पञ्चविधम् । पश्चात्स्थायिनः शत्रोर्बलद्रव्यजनपदवासादिकं हृत्वा पुरोवर्तिनि शत्रौ या यात्रा तद्विगृह्ययानम् । शून्यराज्यग्रहणसमर्थेन शत्रुणा संधिं विधायारेः संमुखगमनं संधाययानम् । बलवदरिणा संधाय संमील्य तैः सह कातरेऽरौ यद्यानं तत् संभूययानम् । एकप्रकृतयानस्यान्तरोपस्थितेऽनुद्देश्येऽपि यद्यानं तत्प्रसङ्गयानम् । शत्रोर्बलाधानाय पथि प्राप्तेषु शत्रुमित्रेषु अवरेषु वा बलिषु शत्रुमुपेक्ष्य यद्यानं तदुपेक्ष्ययानम् ॥*॥ 'नाहमिदानीं योद्धुं समर्थः' इति कालादिप्रतीक्षया विजिगीषोर्दुर्गादीन् वर्धयतः स्थिति**रासनम्** । तदपि विगृह्यासनम्, संधायासनमित्यादि पूर्ववत् पञ्चविधम् । विग्रहेण शत्रोरवस्कन्देऽशक्तस्य तद्देशादिकं विनाश्य दुर्गं प्रविश्यावस्थानं विगृह्यासनम् । तुल्यबलत्वाद्युद्धे क्षीयमाणयोः संधिं कृत्वावस्थानं संधायासनम् । बलिनः शत्रोर्जयेऽशक्तस्य दुर्गाश्रयेणापि स्थातुमशक्यत्वाद्बलिना मित्रेण शत्रुणा वा मिलित्वावस्थानं संभूयासनम् । शत्रुमभिगच्छतो मित्रागमनादेरुत्सवस्य च प्रसङ्गेनान्तरा स्थितिः प्रसङ्गासनम् । बलिनमपि शत्रुं दुर्नयादिना नित्यमपचीयमानमुपेक्ष्य तदपचयापेक्षया स्थितिरुपेक्ष्यासनम् ॥*॥ बलिनोर्वैरिणोर्मध्ये काकाक्षिवदलक्षितस्योभयत्र वाचा समर्पणम् (इत्येकम्) द्वैधम् ॥ बलिना सह संधिः अबलेन सह विग्रहः इत्यपरम् । शत्रोर्वा मूलप्रकृतिभिः सह संधाय शत्रुणा सह विग्रहः इति तृतीयम् । शत्रुणैव वा संधिविग्रहसमुदायहेतोर्दुर्गाश्रयस्य व्यापारः, इति चतुर्थम्—इति चतुर्विधं **द्वैधम्** ॥*॥ बलवतारिणोच्छिद्यमानस्य हीनशक्तेर्यद्बलवद्धर्मविजयिसमाश्रयणं तदाश्रयः ॥ तस्यैव वा बलिनः शत्रोः सेवया कोषादिदानेन वाश्रयणमाश्रयः—इति द्विविध **आश्रयः** । उक्तं च— 'उच्छिद्यमानो रिपुणा निरुपायप्रतिक्रियः । शक्तिहीनः संश्रयते बलिनं धार्मिकं नृपम्' इति ॥—इति मुकुटे विशेषः ॥

**शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः।**

**शेति** ॥ शक्यते जेतुमनया। 'स्त्रियां क्तिन्' (३।३।९४)। शक्तिशब्दवाच्याः ॥*॥ भवत्यनेन। 'श्रिणीभुवः–' (३।३।२४) इति घञ्। प्रकृष्टो भावः। उक्तं हि—'कोशदण्डबलं प्रभुशक्तिः' इति ॥ (१) ॥*॥ उत्सहतेऽनेन 'षह मर्षणे' (भ्वा० आ० से०)। 'हलश्च' (३।३।१२१) इति घञ्। उक्तं हि 'विक्रमबलमुत्साहशक्तिः' इति ॥*॥ संध्यादीनां सामादीनां च यथावस्थापनम्, न तु ज्ञानबलं मन्त्रशक्तिः।—'पञ्चाङ्गमन्त्रो मन्त्रशक्तिः' इत्यन्ये ॥ **'तिसृणां शक्तीनाम्'** ॥

**क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्॥१९॥**

**क्षेति** ॥ क्षयनम्। 'एरच्' (३।३।५६)। अष्टवर्गस्यापचयः क्षयः ॥ (१) ॥*॥ उपचयो वृद्धिः ॥ (१) ॥*॥ उपचयापचयाभावः स्थानम् ॥ (१) ॥*॥ 'कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम्। खन्याकरबलादानं शून्यानां च विवेचनम्' इत्यष्टवर्गः ॥*॥ त्रयाणां वर्गः ॥ (१) ॥*॥ इति **'नीतिवेदिनां त्रिवर्गः'** ॥

**स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्।**

**स इति** ॥ प्रतापयत्यनेन। 'तप संतापे' (भ्वा० प० अ०) ण्यन्तः। 'पुंसि–' (३।३।११८) इति घः। प्रतपनं वा। भावे घञ् (३।३।१८) ॥ (१) ॥*॥ भवत्यनेन। 'श्रिणीभुवः–' (३।३।२४) इति घञ्। प्रकृष्टो भावः। प्रभवनं वा। भावे घञ् (३।३।१८) ॥ (२) ॥*॥ 'अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत्। प्राणात्यये प्र(प्य)सहनं तत्तेजः समुदाहृतम्' इति भरतः। कोशो धनम्। दण्डो दमः सैन्यं च। ताभ्यां जातम्। 'पञ्चम्याम्–' (३।२।९८) इति डः ॥*॥ द्वे **'कोशदण्डजतेजसः'** ॥

**भेदो[1] दण्डः साम दानमित्युपायचतुष्टयम् ॥ २० ॥**

**भयिति**। भेदनम्। 'भिदिर् विदारणे' (रु० उ० अ०)। घञ् (३।३।१८)। शत्रोरमात्यादीनामुपायेन परतो विश्लिष्यात्मसात्करणं भेदः ॥ (१) ॥*॥ दमनम्। 'दमु उपशमे (दि० प० से०)। 'अमन्ताड्डः' (उ० १।११४)। दण्डः शास्तिः ॥ (१) ॥*॥ सामनम्। 'साम सान्त्वप्रयोगे' (चु० उ० से०)। बाहुलकात्कनिन्। यद्वा स्यति रोषमनेन। 'षोऽन्तकर्मणि' (दि०प० अ०)। 'सातिभ्यां मनिन्मनिणौ' (उ० ४।१५३) इति मनिन्। मुकुटस्तु–'सामन्दामन्हेमन्' इत्यादिना निपात्यते—इत्याह। तन्न। उज्ज्वलदत्तादिषु तादृशसूत्रादर्शनात्। प्रियवचनादिना क्रोधोपशमनं साम। 'परस्परोपकाराणां दर्शनं गुणकीर्तनम्। संबन्धस्य समाख्यानमायत्याः संप्रकाशनम्। वाचां पेशलया साधु तवाहमिति चार्पणम्। इति सामविधानज्ञैः साम पञ्चविधं स्मृतम्' ॥ (१) ॥*॥ स्वधनस्य परेभ्यः प्रतिपादनं दानम् ॥ (१) ॥*॥ उपायतेऽनेन। 'हलश्च' (३।३।१२१) इति घञ्। **'उपायः** सामभेदादौ तथैवोपगतौ पुमान्' (इति मेदिनी)। उपायानां चतुष्टयम्। अन्यत्र सप्तोपाया उक्ताः। 'साम दानं च भेदश्च दण्डश्चेति चतुष्टयम्। मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः' ॥ इति **'उपायचतुष्टयम्'** ॥

**साहसं तु दमो दण्डः**

**सेति** ॥ सहसि बले भवम्। 'तत्र भवः' (४।३।५३) इत्यण्। **'साहसं** तु दमे दुष्करकर्मणि। अविमृश्यकृतौ धार्ष्ट्ये' इति हैमः ॥ (१) ॥*॥ दमनम्। 'दमु उपशमे' (दि० प० से०) घञ् (३।३।१८)। 'नोदात्तोपदेश–' (७।३।३४) इति न वृद्धिः। **'दमः** स्यात्कर्दमे दण्डे दमने दमथेऽपि च' इति हेमचन्द्रः ॥ (२) ॥*॥ 'अमन्ताड्डः' (उ० १।११४)। **'दण्डः** सैन्ये दमे यमे। मानव्यूहग्रहभेदेष्वश्वेऽर्थानुचरे मथि। प्रकाण्डे लगुडे कोणे चतुर्थोपायगर्वयोः' इति हैमः ॥ (३) ॥*॥ त्रीणि **'दण्डस्य'** ॥

**साम सान्त्वम्**

**सामेति** ॥ 'साम व्याख्यातम्' ॥ (१) ॥*॥ सान्त्वनम्। 'सान्त्व सामप्रयोगे' (चु० प० से०) अदन्तः[1]। 'एरच्' (३।३।५६)। घञ् (३।३।१८) वा ॥ (२) ॥*॥ द्वे **'साम्नः'** ॥

**अथो समौ। भेदोपजापौ**

**अथविति** ॥ **'भेदो** द्वैधे विशेषे स्यादुपजापे विदारणे' (इति विश्वमेदिन्यौ) ॥ (१) ॥*॥ उपांशु जपनम्। 'जप व्यक्तायां वाचि' 'जप मानसे च' (भ्वा० प० से०)। घञ् (३।३।१८) ॥*॥ द्वे **'संहतयोर्द्वैधीकरणस्य'** ॥

**उपधा धर्माद्यैर्यत्परीक्षणम् ॥ २१ ॥**

**उपेति** ॥ उपधीयते शुद्धिज्ञानमत्र। 'डुधाञ्' (जु० उ० अ०)। 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् ॥ (१) ॥*॥ आद्येन कामार्थभयग्रहः ॥*॥ एकं **'राज्ञा धर्मार्थकामभयैरमात्यादेः परीक्षणस्य'** ॥

---

[1]—भेदस्त्रिविधः। तदुक्तम्—'स्नेहरागापनयनं संहर्षोत्पादनं तथा। संतर्जनं च भेदज्ञैर्भेदस्तु त्रिविधः स्मृतः' इति। राज्ञो द्रोहाय शपथपूर्वकम् 'अमीषामैकमत्यं जातम्' इत्यस्यार्थस्य कपटलेखादीनां राजसदसि प्रक्षेपाद्राज्ञोऽनुयायिषु स्नेहस्य परिजनानां च प्रभौ भक्तेरपनयनमित्येकः। अनुयायिनामेव परस्पराभिभवसंजननं संहर्षोत्पादनम्—इति द्वितीयः ॥*॥ दण्डोऽपि त्रिविधः। तदुक्तम्—'वधोऽर्थग्रहणं चैव परिक्लेशस्तथैव च। इति दण्डविधानज्ञैर्दण्डोऽपि त्रिविधः स्मृतः' इति ॥ परिक्लेशो बन्धनताडनादिः ॥*॥ 'प्रतिदानं तथा तस्य गृहीतस्यानुमोचनम्। द्रव्यादानमपूर्वं च स्वयंग्राहप्रवर्तनम्। देयस्य प्रतिमोक्षश्च दानं पञ्चविधं स्मृतम्'–इति मुकुटे विशेषः ॥

[1]—अदन्तप्रतिज्ञामध्येऽस्य पाठाभावादिदमसंगतम् ॥

**पञ्च त्रिषु**

**पेति** ॥ निःशलाकान्ताः पञ्च ॥

**अषडक्षीणो यस्तृतीयाद्यगोचरः ।**

**अषेति** ॥ अविद्यमानानि षड् अक्षीण्यत्र । 'अषडक्षाशितंग्वलंकर्मा–' (५।४।७) इति खः स्वार्थे ॥ (१) ॥*॥ एकं **'द्वाभ्यामेव कृतस्य मन्त्रस्य'** ॥

**विविक्तविजनच्छन्ननिःशलाकास्तथा रहः ॥ २२ ॥**
**रहश्चोपांशु चालिङ्गे**

**वीति** ॥ विविञ्चन्ति जना अत्र । 'विचिर् पृथग्भावे' (रु० उ० अ०) ध्रौव्यार्थत्वाद्गत्यर्थत्वाद्वा 'क्तोऽधिकरणे च–' (३।४।७६) इति क्तः । **'विविक्तं** त्रिष्वसंपृक्ते रहःपूतविवेकिषु (वसुनन्दे ना)' इति मेदिनी ॥ (१) ॥*॥ विगतो जनोऽस्मात्॥ (२) ॥*॥ छद्यते स्म 'छद अपवारणे' (चु० उ० से०) । क्तः (३।२।१०२) । आगमशास्त्रस्यानित्यत्वान्नेट् । **छिन्नं** तु रहसि क्लीबं छादिते वाच्यलिङ्गकम्' (इति मेदिनी) । मुकुटस्तु—'वा दान्तशान्त–' (७।२।२७) इति निपातनात्—इत्याह । तन्न । णिजन्तस्य निपातनात् ॥ (३) ॥*॥ 'शलाका शारिका मदनशारिका' इति पर्यायः । 'शल्यं श्वाविच्छलाका स्याच्छवो मदनशारिका' इति तालव्यादौ रभसः । निर्गता शलाकाप्यस्मात् । शलाकाया निर्गतो वा ॥ (४) ॥*॥ 'तथा' शब्दः समुच्चये ॥*॥ रह्यते । 'रह त्यागे' (भ्वा० प० से०) । असुन् (उ० ४।१८९) यद्वा रमन्तेऽत्र । 'देशे ह च' (उ० ४।२१५) इत्यसुन् । होऽन्तादेशश्च । **'रहस्तत्त्वे** रते गुह्ये' (इति मेदिनी) । रभसोऽपि—**'रहो** निधुवनेऽपि स्याद्रहो गुह्ये नपुंसकम्' इति ॥ (५) ॥*॥ (६) ॥ उपगता अंशवः किरणा अत्र । **'उपांशुर्जपभेदे** स्यादु**पांशु** विजनेऽव्ययम्' ( इति विश्वहैममेदिन्यः ) ॥ (७) ॥*॥ अलिङ्गे द्वे अव्यये ॥*॥ सप्त **'एकान्तस्य'** ॥

**रहस्यं तद्भवे त्रिषु ।**

**रेति** ॥ रहो भवम् । दिगादित्वात् (४।३।५४) यत् । **'रहस्या** स्त्री नदीभेदे गोपनीयेऽभिधेयवत्' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'रहस्यस्य'** ॥

**समौ विस्रम्भविश्वासौ**

**सेति** ॥ विस्रम्भणम् 'स्रम्भु विश्वासे' (भ्वा० आ० से०) दन्त्यादिः । तालव्यादिश्च । घञ् (३।३।१८) । **'विश्रम्भः** केलिकलहे विश्वासे प्रणयेऽपि च' (इति विश्वमेदिन्यौ) ॥ (१) ॥*॥ विश्वसनम् । 'श्वस प्राणने' (अ० प० से०) । घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे **'विश्वासस्य'** ॥

**भ्रेषो भ्रंशो यथोचितात् ॥२३॥**

**भ्रयिति** ॥ यथोचिताद् यथाप्राप्तात् भ्रंशोऽधःपतनम् । 'भ्रेषृ चलने' (भ्वा० उ० से०) । भ्रेषणम् । घञ् (३।३।१८) ॥ (१) ॥*॥ एकम् **'भ्रंशस्य'** ॥

**अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् ।**

**अभ्र इति** ॥ भ्रेषादन्यः ॥ (१) ॥*॥ नियमेन ईयते । 'परिन्योर्नीणोः–' (३।३।३७) इति घञ् ॥ (२) ॥*॥ कल्पनम् । 'कृपू सामर्थ्ये' (भ्वा० आ० से०) । घञ् (३।३।१८) । लत्वम् (८।२।१८) । **'कल्पः** शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने' (इति मेदिनी) ॥ (३) ॥*॥ दिश्यते । 'दिश अतिसर्जने' (तु० उ० अ०) । घञ् (३।३।१९) । देशो रूपमस्य । दिश्यमानस्योचितस्य रूपम् । यद्वा देशनम् । घञ् (३।३।१८)। प्रशस्तं देशनं वा । 'प्रशंसायां रूपप्' (५।३।६६) ॥ (४) ॥*॥ सम्यगञ्जोऽत्र 'अच् प्रत्यन्वव–' (५।४।७५) इत्यत्र 'अच्' इति योगविभागादच् । यद्वा संमतमञ्जसा तत्त्वमत्र 'ह्रस्वो नपुंसके–' (१।२।४७) इति ह्रस्वत्वम् ॥ (५) ॥*॥ पञ्च **'चित्तस्य'** ॥

**युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ॥ २४ ॥**
**न्याय्यं च त्रिषु षट्**

**युवेति** ॥ युज्यते स्म । 'युजिर् योगे' (रु० उ० अ०) । क्तः (३।२।१०२) । **'युक्तो** युक्ते पृथग्भूते क्लीबं हस्तचतुष्टये' (इति मेदिनी) ॥ (१) ॥*॥ उपयन्त्यनेन । 'एरच्' (३।३।५६) । उपाय एव । 'उपायाद्ध्रस्वश्च' (ग० ५।४।३४) इति ठक् ह्रस्वश्च ॥ (२) ॥*॥ लभ्यते 'पोरदुपधात्' (३।१।९८) इति यत् । **'लभ्यं** युक्ते च लब्धव्ये' (इति मेदिनी)॥(३)॥*॥ भजते फलमनुबध्नाति । 'भज सेवायाम्' (भ्वा० उ० अ०) । 'ताच्छील्य–' (३।२।१२९) इति चानश् । शानच् (३।२।१२४) वा ॥ (४) ॥*॥ अभिनीयते स्म । 'णीञ् प्रापणे' (भ्वा० उ० अ०) । क्तः (३।२।१०२) । अभिनीतेन तुल्यम् । **'अभिनीतं** संस्कृतं (ते) च न्याय्ये चामर्षणे(र्षिणि) त्रिषु' इति रुद्रः । **'अभिनीतं** त्रिषु न्याय्ये संस्कृतामार्षिणोरपि' (इति मेदिनी) ॥ (५) ॥*॥ न्यायादनपेतम् । 'धर्मपथ्यर्थ–' (४।४।९२) इति यत् ॥ (६) ॥*॥ युक्तादयः षट् त्रिषु । षट् **'न्यायागतस्य'** ॥

**संप्रधारणा तु समर्थनम् ।**

**समिति** ॥ संप्रधारणम् 'धृञ् धारणे' (भ्वा० उ० अ०) ण्यन्तः । 'ण्यास–' (३।३।१०७) इति युच् ॥ (१) ॥*॥ 'अर्थ उपयाच्ञायाम्' (चु० उ० से०) संपूर्वः । ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे **'इदमुचितमेव'** इति निश्चयस्य ॥

**अववादस्तु निर्देशो निदेशः शासनं च सः ॥ २५ ॥**
**शिष्टिश्चाज्ञा च**

**अवेति** ॥ 'अव अवलम्बने' । कार्यमवलम्ब्य वदनमत्र ।

१—'तालव्यादिस्तु प्रमादे गतः'—इति तु सिद्धान्तकौमुदी ॥

१—विश्वहैमसंवादप्राप्तप्रामाण्यमेदिनीपुस्तके 'युतः' इति पाठस्योपलम्भेन योग्यत्वेन चात्रास्योपन्यासः प्रामादिकः ॥

वदनम् । घञ् (३।३।१८) ॥ (१) ॥*॥ निर्देशः कार्यादेशः । घञ् (३।३।१८) ॥ (२) ॥*॥ एवं निदेशः । (**'निदेशः** शासनोपान्तकथनेषु प्रयुज्यते' इति विश्वः) ॥ (३) ॥*॥ शासेर्ल्युट् (३।३।११५) । (**'शासनं** राजदत्तोर्व्यां लेखाज्ञाशास्त्रशान्तिषु' इति मेदिनी ) ॥ (४) ॥*॥ 'क्तिन्नाबादिभ्यः' (३।३।९४) इति क्तिन् ॥*॥ बाहुलकात्तिः । **'शास्तिः'** ॥ (५) ॥*॥ आज्ञापनम् । 'ज्ञा अवबोधने' (क्र्या० प० से०) । 'आतश्चोपसर्गे' ( ३।३।१०६ ) इत्यङ् ॥ (६) ॥*॥ षट् **'आज्ञायाः'** ॥

**संस्था तु मर्यादा धारणा स्थितिः ।**

**समिति** ॥ संतिष्ठतेऽनया । सम्यगवस्थानं वा । प्राग्वदङ् । (**'संस्थश्चरे**ऽवस्थिते, स्त्री स्थितौ सादृश्यनाशयोः' (इति मेदिनी) ॥ (१) ॥*॥ 'मर्या इति सीमार्थेऽव्ययम्' तत्र दीयते । प्राग्वदङ् ॥ (२) ॥*॥ धारयति धर्मम् । नन्द्यादि ल्युः (३।१।१३४) । युच् (उ० २।७८) वा । **"धारणा**ऽङ्गे च योगेऽस्य न पुंसि स्याद्विधारणे' इति मेदिनी) ॥ (३) ॥*॥ तिष्ठन्त्यत्र । बाहुलकादधिकरणे क्तिन् । स्थानं वा । 'स्थागापा-' (३।३।९५) इति क्तिन् ॥ (४) ॥*॥ चत्वारि **'न्याय्यपथस्थितेः'** ॥

**आगोऽपराधो मन्तुश्च**

**आग इति** ॥ एति । 'इण् गतौ' (अ० प० अ०) । 'इणआगअपराधे च' (उ० ४।२१२) इत्यसुन् आगादेशश्च–अगति । 'अग गतौ' (भ्वा० प० से०) । 'वस्यजिभ्यां णित्' इत्यसुन्—इति सुभूतिः । तन्न । उज्ज्वलदत्तादिषूक्तसूत्रस्यादर्शनात् । **'आगो**ऽपराधे पापे स्यात्' (इति मेदिनी) । सान्तं क्लीबम् ॥(१)॥*॥ अपराधनम् । 'राध संसिद्धौ' (स्वा०प०अ०)। घञ् (३।३।१८) ॥(२) ॥*॥ मन्यते । 'मन ज्ञाने' (दि० आ० अ०)। 'कमिमनिजनि-' ( उ० १।७१ ) इति तुः । 'मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ' ( इति मेदिनी ) ॥ (३) ॥*॥ त्रीणि **'अपराधस्य'** ॥

**समे तूद्दानबन्धने ॥ २६ ॥**

**सेति** ॥ उत्पूर्वाद् द्यतेर्भावे ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'बन्ध बन्धने' ( क्र्या० प० अ० ) । भावे ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे **'बन्धनस्य'** ॥

**द्विपाद्यो द्विगुणो दण्डः**

**द्वीति** ॥ द्वौ पादौ परिमाणमस्य । 'पणपाद-' ( ५।१।३४) इति यत् । 'पद्यत्यतदर्थे' ( ६।३।५३ ) इति (न) पद्भावः । प्राण्यङ्गस्यैव पादस्य तत्र ग्रहणात् ॥ (१) ॥*॥ एकम् **'अपराधे शास्त्रेण बोधितदण्डाद्द्विगुणदण्डस्य'** ॥

१—'सोढाहे शतमागांसि' इति माघात्—इति मुकुटः ॥

**भागधेयः करो बलिः ।**

**भेति** ॥ भाग एव । 'नामरूप-' (वा० ५।४।३५) इति धेयः ॥ (१) ॥*॥ कीर्यते । 'कॄ विक्षेपे' ( तु० प० से० ) । 'ऋदोरप्' ( ३।३।५७ ) । **'करो** वर्षोपले पाणौ रश्मौ प्रत्ययशुण्डयोः' (इति मेदिनी) । प्रज्ञादणि ( ५।४।३८ ) **'कारो** वधे निश्चये च बलौ रत्ने यतावपि' ( इति विश्वमेदिन्यौ) ॥ (२) ॥*॥ बल्यते । 'बल वधे, दाने' ( ) । इन् (उ० ४।११८) । 'बलिर्दैत्यप्रभेदे च करचामरदण्डयोः । उपहारे पुमानस्त्री जरया श्लथचर्मणि । गृहदारुप्रभेदे च जठरावयवेऽपि च' (इति मेदिनी) ॥ (३) ॥*॥ (**'अर्थागमो** भवेदायो भागधेयो बलिः करः' इति हलायुधः ) ॥*॥ त्रीणि **'कर्षकादिभ्यो राजग्राह्यभागस्य'** ॥

**घट्टादिदेयं शुल्कोऽस्त्री**

**घेति** ॥ घट्टादौ देयम् ॥*॥ शुल्क्यते । 'शुल्क अतिसर्जने' ( चु० प० से० ) । घञ् (३।३।१९) । **शुल्कं** घट्टादिदेये स्याद्वरादर्वग्रहेऽस्त्रियाम्' (इति मेदिनी) । मुकुटस्तु—शलति प्रतिबन्धोऽनेन 'शुल्कवल्कोल्काः' इति निपातः—इत्याह । तन्न । उज्ज्वलदत्तादिषु 'शुकवल्कोल्काः' ( उ० ३।४२) इति पाठस्य दर्शनात् । धातुपाठे 'शुल्क' धातोर्दर्शनाच्च ॥ (१) ॥*॥ आदिना गुल्मप्रतोल्यादिग्रहः ॥*॥ एकम् **'शुल्कस्य'** ॥

**प्राभृतं तु प्रदेशनम् ॥ २७ ॥**

**प्रेति** ॥ प्राभ्रियते स्म । भृञ् भरणे' (भ्वा० उ० अ०) । 'डुभृञ् धारणपोषणयोः' (जु० उ० अ० ) वा । क्तः (३।२।१०२) ॥ (१) ॥*॥ प्रदिश्यते । 'दिश अतिसर्जने' ( तु० उ० अ०) । 'कृत्यल्युटः-' (३।३।११३) इति कर्मणि ल्युट् ॥ (२) ॥*॥ द्वे **'देवताभ्यो मित्रादिभ्यश्च दीयमानस्य'**॥

**उपायनमुपग्राह्यमुपहारस्तथोपदा ।**

**उपेति** ॥ उपेयते । 'इण् गतौ' (अ० प० अ० ) । उपाय्यते । 'अय गतौ' (भ्वा० आ० से०) वा । कर्मणि ल्युट् (३।३।११३) ॥ (१) ॥*॥ उपगृह्यते । 'ग्रह उपादाने' (क्र्या० उ० से०) । ण्यत् (३।३।१२४) ॥ (२) ॥*॥ उपह्रियते । घञ् (३।३।१९) ॥ (३) ॥*॥ उपदीयते । 'डुदाञ् दाने' ( जु० उ० से० ) । 'आतश्चोपसर्गे' ( ३।३।१०६ ) इत्यङ् ॥ (४) ॥*॥ चत्वारि **'उपढौकनस्य'** ।—षडप्युपढौकनस्य–इत्यन्ये । 'उपायनमुपग्राह्यं प्राभृतं चोपदा स्त्रियाम्' इत्यमरमाला ॥

**यौतकादि तु यद्देयं सुदायो हरणं च तत् ॥ २८ ॥**

**याविति** ॥ युतकं योनिसंबन्धः । तत्र भवम् । 'तत्र भवः' (४।३।५३) इत्यण् । युतयोर्वरवध्वोरिदम् । 'तस्येदम्'

(४।३।१२०) इत्यण् वा । **'युतकं** युगले युक्ते संशयेऽपि च' इति रभसः । **'युतकं** संशये युगे । नारीवस्त्राञ्चले युक्ते चलताग्रे च यौतके' (इति मेदिनी) । 'यौतकं यौतुकं च तत्' इति वाचस्पतेरुमध्यमपि । आदिना व्रतभिक्षादिपरिग्रहः ॥*॥ सुदीयते । 'डुदाञ्' ( जु० उ० अ० ) । घञ् (३।३।१९) । युगागमः (७।३।३३) ॥ (१) ॥*॥ ह्रियते । कर्मणि ल्युट् (३।३।११३) । **'हरणं** यौतकादीनां द्रव्ये भुजे हृतावपि' (इति मेदिनी) ॥ (२) ॥*॥ द्वे (**'कन्यादानकाले व्रतभिक्षादौ च दीयमानद्रव्यस्य'**) ॥

**तत्कालस्तु तदात्वं स्यात्**

**तेति** ॥ स चासौ कालश्च ॥ (१) ॥*॥ 'तदा' इत्यस्य भावः ॥ (२) ॥*॥ द्वे **'वर्तमानकालस्य'** ॥

**उत्तरः काल आयतिः ।**

**उत्तेति** ॥ आयंस्यन्तेऽत्र । 'यम उपरमे' ( भ्वा० प० अ० ) । क्तिन् (३।३।९४) । आयास्यति वा । यातेर्बाहुलकाड्डतिः । **'आयतिस्तु** स्त्रियां दैर्घ्ये प्रभावागामिकालयोः' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'उत्तरकालस्य'** ॥

**सांदृष्टिकं फलं सद्यः**

**सामिति** ॥ संदृष्टौ प्रत्यक्षे भवम् । अध्यात्मादित्वात् (वा० ४।२।६०) ठञ् ॥ (१) ॥*॥ एकं **'व्यापारानन्तरं जायमानस्य फलस्य'** ॥

**उदर्कः फलमुत्तरम् ॥ २९ ॥**

**विति** ॥ उदर्च्यते । 'अर्क स्तवने' ( चु० प० से० ) । घञ् (३।३।१९) । उदर्च्यते । 'अर्च पूजायाम्' ( भ्वा० प० से० ) वा । उदृच्यते । 'ऋच् स्तुतौ' ( तु० प० से० ) वा । घञ् (३।३।१९) । **'उदर्क** एष्यत्कालीनफले मदनकण्टके' (इति मेदिनी) ॥ (१) ॥*॥ एकं **'भाविनः कर्मफलस्य'** ॥

**अदृष्टं वह्नितोयादि**

**अद्रिति** ॥ वह्निश्च तोयं चादिर्यस्य । भयहेतुत्वाद्भयम् । आदिना 'हुताशनो जलं व्याधिर्दुर्भिक्षं मरकस्तथा । अतिवृष्टिरनावृष्टिर्मूषिकाः शलभादयः' गृह्यन्ते । अदृष्टहेतुकत्वाददृष्टम् ॥ (१) ॥*॥ एकम् **'अग्न्यादिकृतस्य भयस्य'** ॥

**दृष्टं स्वपरचक्रजम् ।**

**द्रिति** ॥ दृश्यते स्म क्तः (३।२।१०२) ॥ (१) ॥*॥ स्वश्च परश्च स्वपरौ । तयोश्चक्रे सैन्ये । ताभ्यां जातम् । 'पञ्चम्यामजातौ' (३।२।९८) इति डः ॥*॥ एकं **'स्वपरसैन्यात् परराष्ट्रजाचौराटविकादेः परचक्राद्दाहविलोपादेर्भयस्य'** ॥

**महीभुजामहिभयं स्वपक्षप्रभवं भयम् ॥ ३० ॥**

**मेति** ॥ अहिरिव । गृहस्थत्वात्, आवृताकारत्वाच्च स्वस्य पक्ष एवाहिः । अहेर्भयम् ॥ (१) ॥*॥ 'निजोऽथ मैत्रश्च समाश्रितश्च संबन्धतः कार्यसमुद्भवश्च । भृत्या गृहीतो विविधोपचारैः पक्षं बुधाः सप्तविधं वदन्ति' । स्वपक्षात्प्रभवति । पचाद्यच् (३।१।१३४) ॥*॥ एकं **'स्वसहायाज्जातभयस्य'** । 'भयम्' इति पूर्वाभ्यामपि संबध्यते ॥

**प्रक्रिया त्वधिकारः स्यात्**

**प्रेति** ॥ प्रकर्षाय करणम् । 'कृञः श च' (३।३।१००) । रिङ् (७।४।२८) । **'प्रक्रिया** तूत्पादने स्यादधिकारप्रकारयोः' इति हेमचन्द्रः ॥ (१) ॥*॥ अधि आधिक्यस्य करणम् । घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे **'राज्ञां छत्रधारणादिव्यापारस्य'** ॥

**चामरं तु प्रकीर्णकम् ।**

**चेति** ॥ चमति, चम्यते, वा । अनेन वा । 'चमु अदने' ( भ्वा० प० से० ) । 'अर्तिकमिभ्रमिचमि–' (उ० ३।१३२) इत्यमरः । **'चमरं** चामरे स्त्री तु मञ्जरीमृगभेदयोः' (इति मेदिनी) । **'चमरश्चामरे** दैत्ये **चमरी** तु मृगान्तरे' इति हैमः ॥*॥ प्रज्ञाद्यण् (५।४।३८) वा । अजादित्वात् (४।१।४) टाप् । **'चामरा चामरं बालव्यजनं रोमगुच्छकम्'** इति रभसः । **'चामरं चामरापि** च । दण्डे च बालव्यजने' (इति मेदिनी) ॥ (१) ॥*॥ प्रकीर्यते स्म । 'कॄ विक्षेपे' ( तु० प० से० ) । क्तः (३।२।१०२) । 'संज्ञायां कन्' (५।३।७५) । **'प्रकीर्णकं** चामरे स्याद्विस्तरे ना तुरंगमे' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'चामरस्य'** ॥

**नृपासनं तु यद्भद्रासनम्**

**त्रिति** ॥ नृपस्यासनम् ॥ (१) ॥*॥ भद्रं च तदासनम् ॥ (२) ॥*॥ द्वे **'मण्यादिकृतराजासनस्य'** ॥

**सिंहासनं तु तत् ॥ ३१ ॥**

**हैमम्**

**सिंहेति** ॥ हेमविकारः । नृपासनम् ॥*॥ सिंहाकारमासनम् । सिंह इव वासनम् ॥ (१) ॥*॥ एकं **'सुवर्णकृतराजासनस्य'** ॥

**छत्रं त्वातपत्रम्**

**छेति** ॥ छादयति । अनेन वा । 'छद अपवारणे' ( चु० उ० से० ) । ण्यन्तः । ष्ट्रन् (उ० ४।१५९) । 'इस्मन्त्रन्क्विषु च' (६।४।९७) इति ह्रस्वः ॥ (१) ॥*॥ आतपात्त्रायते । 'आतोऽनुप–' (३।२।३) इति कः ॥ (२) ॥*॥ द्वे **'छत्रस्य'** ॥

**राज्ञस्तु नृपलक्ष्म तत् ।**

**रेति** ॥ तत् छत्रम् । नृपस्य लक्ष्म ॥ (१) ॥*॥ एकं **'नृपच्छत्रस्य'** ॥

---

१—अनेन कर्मण्युपपद एव कप्रत्ययस्य सर्वैरङ्गीकृतत्वाच्चिन्त्यमेतत् । तस्मात्—'सुपि' (३।२।४) इति मुकुटोक्तं सम्यक् ॥

**भद्रकुम्भः पूर्णकुम्भः**

**भेति** ॥ भद्रस्य, भद्रो वा कुम्भः ॥ (१) ॥*॥ पूर्णः कुम्भः ॥ (२) ॥*॥ द्वे **'पूर्णघटस्य'** ॥

**भृङ्गारः कनकालुका ॥ ३२ ॥**

**भ्रिति** ॥ बिभर्ति जलम्। 'डु भृञ्' ( जु० उ० अ० ) 'भृङ्गारभृङ्गारौ च' (उ० ३।१३६) इति साधुः ॥ (१) ॥*॥ कनकस्यालुः। 'संज्ञायां कन्' (५।३।७५) ॥ (२) ॥*॥ द्वे **'सुवर्णकृतजलपात्रस्य'** ॥

**निवेशः शिबिरं षण्ढे**

**नीति** ॥ निविशन्तेऽत्र। 'विश प्रवेशने' (तु० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। **'निवेशः** सैन्यविन्यासे न्यासे रङ्गविवाहयोः' इति हैमः ॥ (१) ॥*॥ शवन्त्यत्र। 'शव गतौ' ( भ्वा० प० से० )। बाहुलकात् किरच् अन इत्वं च ॥ (२) ॥*॥ (षण्ढे) क्लीबे ॥*॥ द्वे **'आगन्तुकसैन्यवसतेः'** ॥

**सज्जनं तूपरक्षणम्।**

**सेति** ॥ सज्जन्ते (न्त्य) नेन। 'षस्ज गतौ' ( भ्वा० प० से० )। ल्युट् (३।३।११७)। सत् शोभनं जन्यतेऽनेन वा। 'जनी प्रादुर्भावे' ( दि० आ० से० )। घञ् (३।३।१९)। 'जनिवध्योश्च' (७।३।३५) इति न वृद्धिः ॥ (१) ॥*॥ उपरक्ष्यते अनेन। ल्युट् (३।३।११७) ॥ (२) ॥*॥ द्वे **'सैन्यरक्षणाय नियुक्तप्रहरिकादिन्यासस्य'** ॥

**हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥ ३३ ॥**

**हेति** ॥ पदातीनां समूहः। 'भिक्षादिभ्योऽण्' (४।२।३८)। हस्तिनश्च अश्वाश्च रथाश्च पादातं च। सेनाङ्गत्वादेकवद्भावः (२।४।२) ॥*॥ सेनाया अङ्गम् ॥ (१) ॥*॥ चत्वारोऽवयवा यस्य। 'संख्याया अवयवे तयप्' (५।२।४२) ॥*॥—नाविकाटविकादीनां पदातावन्तर्भावः। नौकानां रथेष्वन्तर्भावः। महिषादीनां गजाश्वेऽन्तर्भावः—इति मुकुटः ॥ एकम् **'सेनाङ्गस्य'** ॥

**दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः।**
**मतङ्गजो गजो नागः कुञ्जरो वारणः करी ॥ ३४ ॥**
**इभः स्तम्बेरमः पद्मी**

**देति** ॥ अतिशयितौ दन्तावस्य। इनिः (५।२।१७५) ॥ (१) ॥*॥ 'दन्तशिखात् संज्ञायाम्' (५।२।११३) इति वलच्। 'वले' (६।३।११८) इति दीर्घः ॥ (२) ॥*॥ हस्तः शुण्डास्यास्ति। 'हस्ताज्जातौ' (५।२।१३३) इतीनिः ॥ (३) ॥*॥ एवम् 'करी' च ॥ (   ) ॥*॥ द्वौ रदावस्य ॥ (४) ॥*॥ अनेकेन करेण मुखेन च पिबति। 'सुपि' (३।२।४) इति कः ॥ (५) ॥*॥ द्वाभ्यां पिबति। प्राग्वत्कः ॥ (६) ॥*॥ मतङ्गादृषेर्जातः। 'पञ्चम्यामजातौ' (३।२।९८) इति डः ॥ (७) ॥*॥ गजति। 'गज मदने' ( भ्वा० प० से० )। अच् (३।१।१३४) ॥ (८) ॥*॥ न अगः। नगे भवो वा। अण् (४।३।५३)। **'नागो** मतङ्गजे सर्पे पुंनागे नागकेसरे। क्रूराचारे नागदन्ते मुस्तके वारिदेऽपि च। देहानिलविशेषे च श्रेष्ठे स्यादुत्तरस्थितः। **नागं** रङ्गे सीसपत्रे स्त्रीबन्धे करणान्तरे' इति हैमः ॥ (९) ॥*॥ अतिशयितः कुञ्जो हनुरस्य। 'खमुखकुञ्जेभ्यो रः' (वा० ५।२।१०७)। **'कुञ्जरोऽ**नेकपे केशे **कुञ्जरा** धातकीद्रुमे। पाटलायां च' इति हेमचन्द्रः ॥ (१०) ॥*॥ वारयति शत्रुबलम्। ल्युः (३।१।१३४)। **'वारणं** प्रतिषेधे स्याद्वारणस्तु मतङ्गजे' इति विश्वः ॥ (११) ॥*॥ करोऽस्यास्ति। इनिः (५।२।११५) ॥ (१२) ॥*॥ एति ईयते वा। 'इणः कित्' (उ० ३।१५३) इति भः ॥ (१३) ॥*॥ **'स्तम्बो** गुल्मे तृणादीनामकाण्डद्रुमगुच्छयोः' (इति विश्वः)। स्तम्बे रमते। 'स्तम्बकर्णयो रमिजपोः' (३।२।१३) इत्यच् 'हलदन्तात्–' (६।३।९) इत्यलुक् ॥ (१४) ॥*॥ पद्मं बिन्दुजालमस्यास्य। इनिः (५।२।११५) ॥ (१५) ॥*॥ पञ्चदश **'हस्तिनः'** ॥

**यूथनाथस्तु यूथपः।**

**यिवति** ॥ यूथस्य हस्तिवृन्दस्य नाथः ॥ (१) ॥*॥ यूथं पाति। 'आतोऽनुप–' (३।२।३) इति कः ॥ (२) ॥*॥ द्वे **'यूथमुख्यहस्तिनः'** ॥

**मदोत्कटो मदकलः**

**मेति** ॥ मदेन दानाम्बुनोत्कटो मत्तः ॥ (१) ॥*॥ मदेन कलते। 'कल शब्दसंख्यानयोः' ( भ्वा० आ० से० ) अच् (३।१।१३४)। मदे सति कलो ध्वनिर्यस्य, इति वा ॥ (२) ॥*॥ द्वे **'अन्तर्मदस्य हस्तिनः'** ॥

**कलभः करिशावकः ॥ ३५ ॥**

**केति** ॥ कलयति। 'कल गतिसंख्यानयोः' (चु० उ० से०) कलते वा। 'कल शब्दसंख्यानयोः' (भ्वा० आ० से०) कलं भाषते वा। 'अन्येभ्योऽपि–' (वा० ३।२।१०२) इति डः ॥ (१) ॥*॥ **'करभो**[१] मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुतः' (इति मेदिनी) ॥*॥ करिणः शावकः ॥ (२) ॥*॥ द्वे **'करिपोतस्य'** ॥

**प्रभिन्नो गर्जितो मत्तः**

**प्रेति** ॥ प्रकर्षेण भिद्यते स्म। क्तः (३।२।१०२) ॥ (१) ॥*॥ गर्जयति। 'गर्ज शब्दे' ( चु० प० से० )। अकर्मकत्वात् (३।४।७२) कर्तरि क्तः। गर्जो जातोऽस्य। तारकादित्वात् (५।२।३६) इतच्। **गर्जितं** वारिवाहादिध्वनौ ना मत्त-

१—योगरूढित्वात्तस्यैव तथोच्यते' नान्यः इति— मुकुटः ॥

१—अत्र करभशब्दस्यानुप्रक्रान्तत्वादनुपयुक्तमेतत् ॥

'कुञ्जरे' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ माद्यति । 'मदी हर्षे' (दि० प० से०) । प्राग्वत् क्तः (३।४।७२) । 'न ध्याख्या–' (८।२।५७) इति निष्ठानत्वाभावः ॥ (३) ॥*॥ त्रीणि **'जातमदस्य'** ॥

**समावुद्वान्तनिर्मदौ ।**

**सेति** ॥ उद्वतं वान्तं मदवमनमस्मात् । **'उद्वान्त** उद्गीर्णे निर्मदद्विपे' इति हैमः ॥ (१) ॥*॥ मदान्निर्गतः । निर्गतो मदोऽस्माद्वा ॥ (२) ॥*॥ द्वे **'गतमदस्य'** ॥

**हास्तिकं गजता वृन्दे**

**हेति** ॥ हस्तिनां समूहः । 'अचित्तहस्तिधेनोष्ठक्' (४।२।४७) ॥ (१) ॥*॥ गजानां समूहः । 'गजसहायाभ्यां च' (वा० ४।२।४३) इति तल् ॥ (२) ॥*॥ द्वे **'हस्तिनां वृन्दे'** ॥

**करिणी धेनुका वशा ॥ ३६ ॥**

**केति** ॥ करोऽस्त्यस्याः । इनिः (५।२।११५) । 'ऋन्नेभ्यो ङीप् (४।१।५) ॥ (१) ॥*॥ धेनुरिव । 'इवे प्रति–' (५।३।९६) इति कन् । 'स्याद्धेनुका करिण्यां च धेनावपि पुंसि दानवविशेषे' (इति मेदिनी) ॥ (२) ॥*॥ उश्यते । 'वश कान्तौ' (अ० प० से०) । 'वशिरण्योश्च' (वा० ३।३।५८) इत्यप् । वष्टि वा । अच् (३।१।१३४) **'वशा** नार्यां बन्ध्यगव्यां हस्तिन्यां दुहितर्यपि' (इति हैमः) । तालव्यशा । **'वशा** वन्ध्यासुतायोषास्त्रीगवीकरिणीषु च' इति तालव्यान्तेषु विश्वात् ॥ (३) ॥*॥ त्रीणि **'हस्तिन्याः'** ॥

**गण्डः कटः**

**गेति** ॥ गण्डति । 'गडि वदनैकदेशे' (भ्वा० प० से०) अच् (३।१।१३४) **'गण्डः** स्यात्पुंसि खड्गिनि । ग्रहयोगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च । चिह्नवीरकपोलेषु हयभूषणबुद्बुदे' (इति मेदिनी) ॥ (१) ॥*॥ कटति । 'कटे वर्षावरणयोः' (भ्वा० प० से०) । अच् (३।१।१३४) । **'कटः** श्रोणौ द्वयोः पुंसि कलिञ्जेऽतिशये शवे । समये गजगण्डेऽपि पिप्पली तु **कटी** मता' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'गजगण्डयोः'** ॥

**मदो दानम्**

**मेति** ॥ माद्यत्यनेन । 'मदी हर्षे' (दि० प० से०) । 'मदोऽनुपसर्गे' (३।३।६७) इत्यप् । मदयति वा । अच् (३।१।१३४) । **'मदो** रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः' (इति मेदिनी) ॥ (१) ॥*॥ दीयतेऽनेन । 'दो अवखण्डने' (दि० प० अ०) ल्युट् (३।३।११७) । **'दानं** गजमदे त्यागे पालनच्छेदशुद्धिषु' (इति विश्वमेदिन्यौ) ॥ (२) ॥*॥ द्वे **'मदपतनस्य'** ॥

**वमथुः करशीकरः ।**

**वेति** ॥ वम्यते । 'टु वम उद्गिरणे' (भ्वा० प० से०) 'ट्वितोऽथुच्' (३।३।८९) **'वमथुर्वमने घासे मातङ्गकरशीकरे'** (इति हैमः) ॥ (१) ॥*॥ करस्य शीकरः ॥ (२) ॥*॥ द्वे **'शुण्डान्निर्गतजलस्य'** ॥

**कुम्भौ तु पिण्डौ शिरसः**

**किति** ॥ कुं भुवमुम्भति 'उम्भ पूरणे' (तु० प० से०) । 'कर्मण्यण्' (३।२।१) । शकन्ध्वादिः (वा० ६।१।९४) । **'कुम्भो** राश्यन्तरे हस्तिमूर्धांशे राक्षसान्तरे । कार्मुके वारनार्यां च घटे क्लीबं तु गुग्गुलौ' (इति मेदिनी) ॥ (१) ॥*॥ पिण्डते । 'पिडि संघाते' (भ्वा० आ० से०) । अच् (३।१।१३४) । **'पिण्डो** बाले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिल्हकयोरपि । ओड्रपुष्पे च पुंसि स्यात् क्लीबमाजीवनायसोः । **पिण्डी** तु पिण्डतगरेऽलाबूखर्जूरभेदयोः' (इति मेदिनी) ॥*॥ एकम् **'गजकुम्भस्य'** ॥

**तयोर्मध्ये विदुः पुमान् ॥ ३७ ॥**

**तेति** ॥ तयोः कुम्भयोः । वेत्ति संज्ञामत्र घातेन । 'विद ज्ञाने' (अ० प० से०) । बाहुलकात्कुः ॥ (१) ॥*॥ एकम् **'गजकुम्भमध्यभागस्य'** ॥

**अवग्रहो ललाटं स्यात्**

**अवेति** ॥ अवगृह्यतेऽङ्कुशेन । 'ग्रहवृदृ–' (३।३।५८) इत्यप् । **'अवग्रहो** वृष्टिरोधे प्रतिबन्धे गजालिके' (इति मेदिनी) । रुद्रोऽपि—'गजालिके वृष्टिरोधे प्रतिबन्धेऽप्यवग्रहः' इति ॥ (१) ॥*॥ एकम् **'गजललाटस्य'** ॥

**इषीका त्वक्षिकूटकम् ।**

**इषीति** ॥ ईष्यते । 'ईष उञ्छे' (भ्वा० प० से०) 'ईष गतिहिंसादानेषु' (भ्वा० आ० से०) वा० । 'ईषेः किद्ध्रस्वश्च' (उ० ४।२१) इतीकन् धातोर्ह्रस्वश्च । (ह्रस्वादिदीर्घमध्या) ॥*॥ ईषा लाङ्गलकीलिका । सेव । 'इवे प्रति–' (५।३।९६) इति कनि (ह्रस्वमध्या—**ईषिका**), दीर्घादिरपि ॥ (१) ॥*॥ अक्षिकूटकं चक्षुर्गोलकम् ॥*॥ एकम् **'नेत्रगोलकस्य'** ॥

**अपाङ्गदेशो निर्याणम्**

**अपेति** ॥ अपाङ्गस्य । अपाङ्गो वा देशः ॥*॥ निर्यात्यनेन । करणे ल्युट् (३।३।११७) । **'निर्याणं** वारणापाङ्गदेशे मोक्षेऽध्वनिर्गमे' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'गजापाङ्गदेशस्य'** ॥

**कर्णमूलं तु चूलिका ॥ ३८ ॥**

**केति** ॥ कर्णस्य मूलम् ॥*॥ चूल्यतेऽनया । 'चूल समु-

१—'ऐषीकमस्त्रमधिकृत्य तदा तमक्षणा' इति मुरारिः । 'तस्मिन्नस्यदिषीकास्त्रम्'–इति रघुः—इति मुकुटः । २—चुरादौ तु ह्रस्वादिर्दृश्यते ॥

च्छ्राये' ( )। 'संज्ञायाम्' (३।३।१०९) इति ण्वुल्। **'चूलिका** नाटकस्याङ्गे कर्णमूले च हस्तिनाम्' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'गजकर्णमूलस्य'** ॥

**अधः कुम्भस्य वाहित्थम्**

**अध इति** ॥ कुम्भोऽत्र वातकुम्भः। **'वाहित्थं** वातकुम्भाधः' इति भागुरिः। स च ललाटाधोभागः। (कुम्भयोरन्तरं **विदुः। वातकुम्भ**स्तु तस्याधो **वाहित्थं** तु ततोऽप्यधः' इति हैमनाममाला) ॥*॥ अवश्यं वहति। 'आवश्यका–' (३।३।१७०) इति णिनिः। स तिष्ठत्यत्र। 'घञर्थे कः' (वा० ३।३।५८)। पृषोदरादित्वात् सस्य तः ॥ (१) ॥*॥ एकम् **'गजकुम्भाधोभागस्य'** ॥

**प्रतिमानमधोऽस्य यत्।**

**प्रेति** ॥ प्रतिमीयतेऽनेन 'मीञ् हिंसायाम्' (क्र्या० उ० अ०)। 'मीनाति मिनोति–' (६।१।५०) इत्यात्वम्। 'करणा–' (३।३।११७) इति ल्युट्। **'प्रतिमानं** प्रतिच्छाया गजदन्तान्तरालयोः' इति रुद्रः ॥ (१) ॥*॥ एकं **'वाहित्थाधोभागस्य दन्तमध्यस्य'** ॥

**आसनं स्कन्धदेशः स्यात्**

**आसेति** ॥ आस्यतेऽत्र। ल्युट् (३।३।११७)। **'आसनं** द्विरदस्कन्धे पीठे यात्रानिवर्तने' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ स्कन्ध एव देशः ॥ (२) ॥*॥ द्वे **'गजस्कन्धदेशस्य'** ॥

**पद्मकं बिन्दुजालकम् ॥ ३९ ॥**

**पेति** ॥ पद्ममिव। 'इवे प्रति–' (५।३।९६) इति कन्। **'पद्मकं** स्यात्पद्मकाष्ठबिन्दुजालकयोरपि' (इति मेदिनी) ॥ (१) ॥*॥ बिन्दूनां जालकमिव ॥ (२) ॥*॥ द्वे **'गजमुखादिस्थबिन्दुसमूहस्य'** ॥

**पक्षभागः पार्श्वभागः**

**पक्षेति** ॥ पक्षयत्यनेन। 'पक्ष परिग्रहे' चुरादिः। 'पुंसि–' (३।३।११८) इति घः। पक्षस्य, पक्ष एव वा भागः ॥ (१) ॥*॥ पार्श्वस्य पार्श्वमेव वा भागः ॥ (२) ॥*॥ द्वे **'गजपार्श्वस्य'** ॥

**दन्तभागस्तु योऽग्रतः।**

**देति** ॥ दन्तस्य भागः। दन्तसंबन्धी भागो वा। शाकपार्थिवादिः (वा० २।१।७८) ॥ (१) ॥*॥ एकम् **'अग्रभागस्य'** ॥

**द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात् ॥ ४० ॥**

**द्वाविति** ॥ पूर्वा च पश्चाच्च पूर्वपश्चाच्च ते जङ्घे च। पूर्वपश्चाज्जङ्घे आदी यस्य सः। पूर्वपश्चादिश्चासौ देशश्च। पूर्वजङ्घाभागो गात्रम्। पश्चाज्जङ्घाभागोऽवरम् ॥*॥ गातेऽनेन। 'गाङ् गतौ' (अ० आ० अ०) यद्वा एत्यनेन। 'इण् गतौ' (अ० प० अ०)। 'बहुलं तणि' (वा० २।४।५४) इति गादेशः। ष्ट्रन् (उ० ४।१५९)। **'गात्रं** गजाग्रजङ्घादिभागेऽप्यङ्गे कलेवरे' (इति मेदिनी) ॥ (१) ॥*॥ अव राति। 'रा दाने' (अ० प० अ०)। 'आतश्चोपसर्गे' (३।१।१३६) इति कः। यद्वा न वृणोति, व्रियते, वा। 'वृञ् वरणे' (स्वा० उ० से०)। अच् (३।१।१३४)। 'ग्रहवृदृ–' (३।३।५८) इत्यब् वा। **'अवरं** गजान्त्यजङ्घादिदेशे चरमे त्रिषु' (इति मेदिनी)। 'गजान्त्यजङ्घादिदेशेऽवरं स्याच्चरमे त्रिषु' इति रुद्रः ॥ (१) ॥*॥ **'गात्रावरे** पूर्वपश्चात्पादयोः परिभाषिते' इति भागुरिः। 'द्वौ पूर्वपश्चाज्जङ्घादिदेशौ **गात्रावरे** न ना' इति रभसः। कश्चित्तु—अष्ठीवद्भागादूर्ध्वमवरम्। अधस्तु गात्रम्—इत्याह ॥*॥ अपरा पवर्गादिमध्या च। **'अपरं** तूत्तरार्धे स्यात्पश्चाद्भागे च दन्तिनाम्' इति विश्वः ॥*॥ क्रमेणैकैकम् **'गजजङ्घापूर्वापरभागयोः'** ॥

**तोत्रं वैणुकम्**

**तविति** ॥ तुद्यतेऽनेन। 'तुद व्यथने' (तु० उ० अ०) 'दाम्नी–' (३।२।१८२) इति ष्ट्रन्। **'तोत्रं** तु प्राजने वैणुकेऽपि च' (इति मेदिनी) ॥ (१) ॥*॥ वेणुना निर्वृत्तम्। 'निर्वृत्तेऽक्षद्यूतादिभ्यः' (४।४।१९) इति ठक्। 'इसुसुक्तान्तात्कः' (७।३।५१) ॥*॥ **'वेणुकम्'** इति पाठान्तरम्। संज्ञापूर्वकत्वान्न वृद्धिः ॥ (२) ॥*॥ द्वे **'तोदनदण्डस्य'** ॥

**आलानं बन्धस्तम्भे**

**आलेति** ॥ आलीयतेऽत्र। 'लीङ् श्लेषणे' (दि० आ० अ०)। अधिकरणे ल्युट् (३।३।११७)। ('विभाषा लीयतेः' (६।१।५१) इत्यात्वम्) ॥ (१) ॥*॥ बन्धस्य बन्धनस्य स्तम्भः ॥ (२) ॥*॥ द्वे **'बन्धनस्तम्भस्य'** ॥

**अथ शृङ्खला।**

**अन्दुको निगडोऽस्त्री स्यात्**

**अथेति** ॥ शृङ्गं प्राधान्यं खलति। 'खल संचलने, संचये च' (भ्वा० प० से०)। अन्तर्भावितण्यर्थः। अच् (३।१।१३४)। यद्वा शृङ्गात्प्राधान्यात् खलत्यनेन। 'पुंसि' (३।३।११८) इति घः। भिदाद्यङ् (३।३।१०४) वा। पृषोदरादिः (६।३।१०९) (**'शृङ्खला** पुंस्कटीकाञ्च्यां लोहरज्जौ च बन्धने' (इति हैमः) (**'शृङ्खला** पुंस्कटीवस्त्रबन्धेऽपि निगडे त्रिषु' इति मेदिनी) ॥ (१) ॥*॥ अन्द्यतेऽनेन। 'अदि बन्धने' (भ्वा० आ० से०)। 'अन्दूदृम्भू–' (उ० १।९३) इति कूः। स्वार्थे कन् (ज्ञापि० ५।४।५)। 'अन्दूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च। (इति मेदिनी)। 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि' (५ ) इति पुंस्त्वम्। यद्वा विनयादित्वात्

१—तथा च माघश्लेषः—'बध्वापराणि परितो निगडान्यलावीत्' इति—इति मुकुटः ॥

(५।४।३४) ठक् । 'इसुसु–' (७।३।५१) इति कादेशः । 'केऽणः' (७।४।१३) इति ह्रस्वः ॥ (२) ॥*॥ निर्गतो गडः सेचनमस्मात् । कठिनत्वात् । निगलति वा । 'गल अदने' (भ्वा० प० से०) । अच् (३।१।१३४) । डलयोरेकत्वम् ॥ (३) ॥*॥ त्रीणि '**शृङ्खलस्य**' '**बेडी**' इति ख्यातस्य ॥

**अङ्कुशोऽस्त्री सृणिः स्त्रियाम् ॥ ४१ ॥**

**अङ्किति** ॥ अङ्क्यतेऽनेन । 'अकि लक्षणे' (भ्वा० आ० से०) । 'सानसिवर्णसि–' (उ० ४।१०७) इति साधुः ॥ (१) ॥*॥ सरति अन्तर्गच्छति । अनया वा । 'सृ गतौ' (भ्वा० प० अ०) । 'सृवृषिभ्यां कित्' (उ० ४।४९) इति निः ॥*॥ तालव्योष्मादिरपि । शृणाति । 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'शृणिपृष्णिपार्ष्णि–' (उ० ४।५२) इति साधुः । '**शृणिरङ्कुशवाची च काशश्च** तृणवाचकः' इति शभेदः ॥ (२) ॥*॥ 'आरक्षमग्नमवमस्य सृणिं शिताग्रम्' इति तु माघस्य प्रमादः । सृणेः स्त्रीत्वात् ॥*॥ द्वे '**अङ्कुशस्य**' ॥

**दूष्या कक्ष्या वरत्रा च**

**द्विति** ॥ दूष्यतेऽनया । 'दूष वैकृत्ये' (दि० प० अ०) । ण्यन्तः । 'दोषो णौ' (६।४।९०) इत्यूत् 'अचो यत्' (३।१।९६) । '**दूष्यं** त्रिषु दूषणीये क्लीबं वस्त्रे च तद्गृहे' (इति मेदिनी) ।—चूष्यते पीयते पृष्ठमांसेनादृश्यतां नीयते । 'चूष पाने' (भ्वा० प० से०) । कर्मणि 'घञर्थे कः' (वा० ३।३।५८) । ('**चूषा**') इति मुकुटः ॥ (१) ॥*॥ कक्षे भवा । 'शरीरावयवाच्च' (४।३।५५) इति यत् । '**कक्ष्या** बृहतिकायां स्यात्काञ्च्यां मध्येभबन्धने । हर्म्यादीनां प्रकोष्ठे च' । (कौर्यं हेतौ प्रयोजने' (इति मेदिनी) ॥ (२) ॥*॥ व्रियतेऽनया । 'वृञ् वरणे' (स्वा० उ० से०) । बाहुलकादत्रः । यद्वा वरं त्रायते । 'त्रैङ् पालने' (भ्वा० आ० अ०) । 'आतोऽनुप–' (३।२।३) इति कः ॥ (३) ॥*॥ त्रीणि '**गजमध्यबन्धनस्य**' ॥

**कल्पना सज्जना समे ।**

**केति** ॥ कल्पनम् । 'कृपू सामर्थ्ये' (भ्वा० आ० से०) । ण्यन्तः । 'ण्यासश्रन्थ–' (३।३।१०७) इति युच् । 'अथ **कल्पना** । करिणः सज्जनायां स्त्री क्लीबं क्लृप्तौ च कल्पने' (इति मेदिनी) ॥ (१) ॥*॥ एवं 'षस्ज गतौ' (भ्वा० प० से०) । ण्यन्ताद्युच् (३।३।१०७) । '**सज्जनं** तु भवेत्क्लीबमुपरक्षणघट्टयोः । वाच्यलिङ्गं कुलीने स्यात्कल्पनायां च योषिति' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**पल्याणाद्यारोपणेन सज्जीकरणस्य**' ॥

१ घृणिः किरणः—इति तु सिद्धान्तकौमुदी ॥ २—'स्त्रियाम्' इत्येकदेशेन स्त्रीपुंसशब्दसमुदायो लक्ष्यते । तेन सृणेः पुंस्त्वमपि' इति सुभूत्यादयः । स्त्रियामिति प्रायिकत्वादुक्तम्, इति तु वयम्—इति मुकुटः ॥ ३—इदं च कार्यशब्दार्थबोधकत्वात्प्रकृतानुपयुक्तम् ॥

**प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ॥ ४२ ॥**

**प्रेति** ॥ प्रकर्षेण वीयतेऽस्याम् । 'वी गत्यादिषु' (अ० प० अ०) 'वीज्यात्वरिभ्यो निः' (उ० ४।४८) । '**प्रवेणिः** स्त्री कुथावेण्योः' (इति मेदिनी) । 'कृदिकारात्' (ग० ४।१।४५) इति वा ङीष् । आस्तीर्यते अनेन वा । 'स्तृञ् आच्छादने' (क्र्या० उ० से०) । कर्मणि (३।३।११३) करणे (३।३।११७) वा ल्युट् ॥ (२) ॥*॥ व्रियतेऽनेन । 'वृञ् वरणे' (स्वा० उ० से०) । 'कॄवृदृभ्यो नः' (उ० ३।१०) यद्वा बहवो वर्णाः सन्त्यस्य । अर्शआद्यच् (५।२।१२७) । '**वर्णः** स्वर्णे व्रते स्तुतौ । रूपे द्विजादौ शुक्लादौ कुथायामक्षरे गुणे । भेदे गीतक्रमे चित्रे यशस्तालविशेषयोः । अङ्गरागे च **वर्णं** तु कुङ्कुमे' इति हैमः ॥ (३) ॥*॥ परिस्तूयते । 'ष्टुञ् स्तुतौ' (अ० उ० अ०) । 'अर्तिस्तुसु–' (उ० १।१४०) इति मन् । परिगतः स्तोमोऽत्र । वर्णस्तोमवत्त्वात् । यद्वा-परिगतः सोमोऽत्र । 'यत्क्रियायुक्ताः (तं प्रति)' (वा० १।४।५९) इति परेः स्तौतिं प्रत्यनुपसर्गत्वाच्च षः (८।३।६५) ॥ (४) ॥*॥ कुथ्नाति । 'कुन्थ दीप्तौ' (क्र्या० प० से०) । अच् (३।१।१३४) । '–दहदश–' (३।१।२४) इति निर्देशात्क्वचिदक्तित्यपि नलोपः । यद्वा कुन्थत्यशोभाम् 'कुथि हिंसायाम्' (भ्वा० प० से०) । आगमशास्त्रस्यानित्यत्वान्न नुम् । 'इगुपध–' (३।१।१३५) इति कः । यद्वा कुथ्यति । 'कुथ पूतीभावे' (दि० प० से०) । 'इगुपध–' (३।१।३१५) इति कः । 'कुथः स्त्रीपुंसयोर्वर्णकम्बले पुंसि बर्हिषि' (इति मेदिनी) । क्लीबेऽपि । 'स्त्री प्रवेणी' । 'कुथं त्रिषु' इति बोपालितः ॥ (५) ॥*॥ पञ्च '**गजोपर्यास्तरणचित्रकम्बलस्य**' ॥

**वीतं त्वसारं हस्त्यश्वम्**

**वीति** ॥ वेति, स्म युद्धादिकर्मणः । 'वी गत्यादौ' (अ० प० से०) । अजति स्म वा । 'अज गतौ' (भ्वा० प० से०) । 'गत्यर्था–' (३।४।७२) इति क्तः । '**वीत**मसारगजे स्यादङ्कुशकर्मण्यसारतुरगे च' (इति मेदिनी) ॥ (१) ॥*॥ सारो बलमस्य । हस्ती चाश्वश्च । सेनाङ्गत्वादेकत्वम् (२।४।२) ॥*॥ एकम् '**निर्बलहस्तिगजसमूहस्य**' ॥

**वारी तु गजबन्धनी ।**

**वेति** ॥ वार्यतेऽनया । 'वृञ्' (स्वा० उ० से०) ण्यन्तः । 'वसिवपियजि–' (उ० ४।१२५) इतीञ् । '**वारी**

१ सिद्धान्तकौमुद्यां तु 'कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्' इति पाठो दृश्यते ॥ २—मुकुटस्तु—उपसर्गप्रतिरूपकत्वात्परेर्न 'उपसर्गात्' (८।३।६५) इत्यादिना षत्वम्—इत्याह । युक्तं चैतत् । अन्यथा पूर्वकल्पे षत्वं दुर्वारम् ॥ ३—अस्यार्थस्य भाष्यविरुद्धत्वात्तृतीयप्रकार एव साधुः ॥

स्यादूजबन्धन्यां कलश्यामपि योषिति । वारिर्वाग्गजबन्धन्योः स्त्री क्लीबेऽम्बुनि वालुके' (इति मेदिनी) ॥ (१) ॥*॥ बध्यतेऽस्याम् । 'बन्ध बन्धने' ( क्र्या० प० अ० ) । अधिकरणे ल्युट् (३।३।११७) । गजस्य बन्धनी ॥ (२) ॥*॥ द्वे 'गजबन्धनशालायाः' ॥

**घोटके पीतितुरगतुरंगाश्वतुरंगमाः ॥ ४३ ॥**
**वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।**

**घोटेति** ॥ घोटते । 'घुट परिवर्तने' ( भ्वा० आ० से० ) । ण्वुल् (३।१।१३३) ॥*॥ पचाद्यचि '**घोटः**' अपि । '**घोट**सैन्धवगन्धर्वा हयवाजितुरंगमाः' इति रभसः ॥ (१) ॥*॥ पिबति । 'पा पाने' ( भ्वा० प० अ० ) । क्तिन् (३।३।१७४) । 'घुमास्था–' (६।४।६६) इतीत्वम् । '**पीति**र्नाश्वे स्त्रियां पाने' (इति मेदिनी) ॥ 'वीति' इति पाठे । वेति । 'वी गत्यादिषु' ( अ० प० अ० ) । क्तिच् (३।३।१७४) । '**वीति**रश्वेऽशने गतौ । प्रजने धावने दीप्तौ' इति हैमः ॥ (२) ॥*॥ तोरणम् । 'तुर त्वरणे' ( जु० प० से० ) । 'घञर्थे कः' (वा० ३।३।५८) बाहुलकात् । घञ् (३।३।१८) वा । संज्ञापूर्वकत्वान्न गुणः । तुरेण त्वरया गच्छति । 'अन्येभ्योऽपि–' (वा० ३।२।४८) इति डः । '**तुरगी** चाश्वगन्धायां **तुरग**श्चित्तवाजिनोः' (इति मेदिनी) ॥ (३) ॥*॥ अश्नुते । 'अशू व्याप्तौ' ( स्वा० आ० से० ) । 'अशूप्रुषिलटि–' (उ० १।१५१) इति क्वन् ॥ (५) ॥*॥ तुरेण गच्छति । 'गमेश्च' (३।२।४७) इति खच् । 'खच्च वा डित्' (वा० ३।२।३८) । 'अरुर्द्विष–' (६।३।६७) इति मुम् ॥ (४) ॥*॥ (६) ॥*॥ अवश्यं वजति । 'वज गतौ' ( भ्वा० प० से० ) । 'आवश्यका–' (३।३।१७०) इति णिनिः । यद्वा वाजाः पक्षा अभूवन् यस्य । इनिः (५।२।११५) । 'वाजी बाणाश्वपक्षिषु' (इति मेदिनी) ॥ (७) ॥*॥ उह्यते । अनेन वा । 'वह प्रापणे' (भ्वा० उ० अ०) । कर्मणि करणे वा घञ् (३।३।१९) । वाह्यतेवाण्यन्तः । अच् (३।३।५६) । वाहते । 'वाहृ प्रयत्ने' ( भ्वा० आ० से० ) । अच् (३।३।१३४) । '**वाहो** भुजे पुमान्मानभेदाश्ववृषवायुषु' (इति मेदिनी) ॥ (८) ॥*॥ ऋच्छति । 'ऋ गतौ' (भ्वा० प० से०) । 'अन्येभ्योऽपि–' (३।२।७५) इति वनिप् । मुकुटस्तु—'स्नामदिपद्यर्तिपृशकिभ्यो वनिप्' (उ० ४।११३)—इत्याह । तन्न । तत्र क्वनिपो विधानाद्गुणाभावप्रसङ्गात् । यद्वा अर्वति । 'अर्व गतौ' ( भ्वा० प० से० ) । बाहुलकात् कनिन् । मुकुटस्तु—बाहुलकाद्वनिप् । 'राल्लोपः' (६।४।२१) । इति (सुभूतिः)—इत्याह । तन्न । वनिब्विधौ बाहुलकस्यानुपयोगात् । 'अन्येभ्योऽपि' (३।२।७५) इति वनिपः सर्वेभ्यः सिद्धत्वात् । उणादिषु वनिपो दर्शनात् । क्वौ झलादौ किति अनुनासिके च राल्लोपस्य विहितत्वेन वनिपि तदसंभवात् । लोपं विनापि रूपसिद्धेश्च । '**अर्वा** तुरंगमे पुंसि कुत्सिते वाच्यलिङ्गकः' (इति मेदिनी) ॥ (९) ॥*॥ गन्धमर्वति । 'अर्व गतौ' (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१) । शकन्ध्वादिः (वा० ६।१।९४) । '**गन्धर्व**स्तु नभश्चरे । पुंस्कोकिले गायने च मृगभेदे तुरंगमे । अन्तराभवदेहे च' (इति हैमः) ॥ (१०) ॥*॥ हयति । 'हय गतौ' ( भ्वा० प० से० ) । अच् (३।१।१३४) । हिनोति वा । 'हि गतौ' ( स्वा० प० अ० ) । अन् (३।१।१३४) ॥ (११) ॥*॥ सिन्धुषु भवः । 'तत्र भवः' (४।३।५३) इत्यण् । '**सैन्धव**स्तु सिन्धुदेशोद्भवे हये । मणिमन्थेऽपि' इति हैमः ॥ (१२) ॥*॥ सपति सेनायां समवैति । 'षप समवाये' ( भ्वा० प० से० ) । क्तिच् (३।३।१७४) । बाहुलकात्तिर्वा ॥ (१३) ॥*॥ त्रयोदश '**घोटकस्य**' ॥

**आजानेयाः कुलीनाः स्युः**

**आजेति** ॥ अजनम् । 'अज गतिक्षेपणयोः' ( भ्वा० प० से० ) । घञ् (३।३।१८) । आजेन क्षेपेणानेयाः प्रापणीया आयत्ता वा । 'अश्वं कुलीनमाजानेयं, शावं किशोरं ब्रुवते' इति नाममाला । 'शक्तिभिर्भिन्नहृदयाः स्खलन्तश्च पदे पदे । आजानन्ति यतः संज्ञामाजानेयास्ततः स्मृताः' इत्यश्वशास्त्रम् ॥ (१) ॥*॥ कुलस्यापत्यानि । 'कुलात् खः' (५।१।१३९) ॥ (२) ॥*॥ द्वे '**कुलीनाश्वानाम्**' ॥

**विनीताः साधुवाहिनः ॥ ४४ ॥**

**वीति** ॥ विनीयन्ते स्म । 'णीञ् प्रापणे' ( भ्वा० उ० अ० ) । क्तः (३।२।१०२) । सुशिक्षिताः । '**विनीतः** सुवहाश्वे स्याद्वणिज्यपि पुमांस्त्रिषु । जितेन्द्रियेऽपनीते च निभृते विनयान्विते' (इति मेदिनी) ॥ (१) ॥*॥ साधुवहनशीलाः । 'वह प्रापणे' ( भ्वा० उ० अ० ) । 'सुपि–' (३।२।७८) इति णिनिः । मुकुटस्तु—'साधुकारिणि च' (वा० ३।१।७८) इति णिनिः—इत्याह । तन्न । एवं सति णिनिना गतार्थत्वात् साधुशब्दस्य प्रयोगो न स्यात् ॥ (२) ॥*॥ द्वे '**सम्यग्गतिमतां वाजिनाम्**' ॥

**वनायुजाः पारसीकाः काम्बोजा बाल्हिका हयाः ।**

**वेति** ॥ वनायुषु देशेषु जाताः । 'सप्तम्यां जनेर्डः' (३।२।९७) । 'आजानेयः कुलजो, वनायुजः पारसीक उक्तः' इति रत्नकोषः ॥*॥ प्रज्ञाद्यण् (५।४।३८) वा ॥ (१) ॥*॥ पारसीके देशे भवाः । 'कोपधाच्च' (४।३।१३७) इत्यण् ॥ (१) ॥*॥ कम्बोजेषु भवाः । 'तत्र भवः' (४।३।५३) इत्यर्थे कच्छाद्यण् (४।२।१३३) ॥ (१) ॥*॥ बल्हिकादेशे भवाः । 'कोपधाच्च' (४।३।१३७) इत्यण् । '**वाल्हीकं बाल्हिकं** धीरहिङ्गुनोर्नाश्वदेशयोः' इति त्रिकाण्डशेषतो

१—सिद्धान्तकौमुद्यामपि प्रकृतसूत्रव्याख्याने 'अर्वा तुरगगर्ह्ययोः' 'पर्व ग्रन्थिः प्रस्तावश्च' इत्युदाहरणे गुणाङ्गीकारेण चिन्त्यमेतत् ॥

दीर्घमध्योऽपि ॥ (१) ॥*॥ एते हयविशेषाः प्रत्येकं भिन्नाः। —'वनायुजः पारसीक उक्तः' इति रत्नकोषात्, 'श्वेताश्वे कर्काख्यं, वनायुजमपि पारसीकं तु' इति नाममालायाश्च द्वयोः पर्यायता—इत्यपरे ॥ एकं **'भिन्नदेशीयाश्वानाम्'** ॥

**ययुरश्वोऽश्वमेधीयः**

**येति** ॥ याति। 'या प्रापणे' (अ० प० अ०)। 'यो द्वे च' (उ० १।२१) इति कुः। **'ययुः** पुमानश्वमेधतुरगे च तुरंगमे' (इति मेदिनी) ॥ (१) ॥*॥ अश्वमेधाय हितः। 'अश्वमेधाच्छ च' ( ) ॥ (२) ॥*॥ द्वे **'अश्वमेधीयवाहस्य'** ॥

**जवनस्तु जवाधिकः ॥ ४५ ॥**

**जेति** ॥ जवनशीलः। 'जु' इति 'सौत्रो धातुर्गतौ वेगे च'। 'जुचङ्क्रम्य–' (३।२।१५०) इति युच्। **'जवनं** तु स्यदे वेगिहये ना वेगिनि त्रिषु' (इति मेदिनी) ॥ (१) ॥*॥ जवेन वेगेनाधिकः ॥ (२) ॥*॥ द्वे **'अधिकवेगस्य'** ॥

**पृष्ठ्यः स्थौरी**

**प्रिति** ॥ प्रशस्तमतिशयितं वा पृष्ठमस्य। 'अन्येभ्योऽपि–' (वा० ५।२।१२०) इति यप् ॥ (१) ॥*॥ स्थूलस्येदम्। 'तस्येदम्' (४।३।१२०) इत्यण्। रलयोरेकत्वम्। स्थौरं बलमस्यास्ति। इनिः (५।२।११५)। 'स्थौरी पृष्ठ्यः **पृष्ठवहः'** इति बोपालितः ॥ (२) ॥*॥ द्वे **'भारवाहिनोऽश्वस्य'** ॥

**सितः कर्कः**

**सीति** ॥ करोति, क्रियते वा। 'कृदाधा–' (उ० ३।४०) इति कः। **'कर्कः** कर्केतने वह्नौ शुक्लाश्वे दर्पणे घटे' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'शुक्लाश्वस्य'** ॥

**रथ्यो वोढा रथस्य यः।**

**रेति** ॥ रथं वहति। 'तद्वहति रथयुगप्रासङ्गम्' (४।४।७६) इति यत्। **'रथ्या** रथौघविशिखावर्तनीषु च योषिति। रथवोढरि पुंलिङ्गः' (इति मेदिनी) ॥ (१) ॥*॥ एकं **'रथवाहकाश्वस्य'** ॥

**बालः किशोरः**

**बेति** ॥ कशति। 'कश शब्दे' ( )। किंचिच्छवति वा। 'शु गतौ' (भ्वा० प० अ०)। 'शव गतौ' (भ्वा० प० से०) वा। 'किशोरादयः' (उ० १।६५) इति साधुः। ('अथ **किशोरो**ऽश्वस्य शावके। तैलपर्ण्यौषधौ च स्यात्तरुणावस्थसूर्ययोः' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'अश्वबालस्य'** ॥

**वाम्यश्वा वडवा**

**वेति** ॥ वामयति। 'टु वम उद्गिरणे' (भ्वा० प० से०) स्वार्थण्यन्तः। अच् (३।१।१३४)। 'मितां ह्रस्वः' (६।४।९२) इत्यत्र 'वा' इत्यनुवृत्तेर्न ह्रस्वः[1]। गौरादिः (४।१।४१)। यद्वा वं वरुणममति। तेनाम्यते वा। 'अम गत्यादिषु' (भ्वा० प० से०)। 'कर्मण्यण्' (३।३।१) घञ् (३।३।१९) वा। मुकुटस्तु—वमत्युद्गिरति गर्भम्। 'ज्वलिति–' (३।१।१४०) इति णः—इत्याह। तन्न। 'नोदात्तोपदेशस्य–' (६।३।३४) इति वृद्धिनिषेधात्[2]। **'वामी** शृगालीवडवारासभीकरभीषु च' (इति मेदिनी) ॥ (१) ॥*॥ अश्वजातिः। अजादि (४।१।४) पाठाट्टाप् ॥ (२) ॥*॥ बलं सामर्थ्यमतिशयितमस्याः। 'अन्येभ्योऽपि–' (वा० ५।१।१०९) इति वः। बलं वाति वा। 'आतोऽनुप–' (३।२।३) इति कः। बलेन वजति वा। 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः। डलयोरेकत्वम्। **'वडवा** द्विजयोषिति। अश्वायां कुम्भदास्यां च नारीजात्यन्तरेऽपि च' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि **'वडवायाः'** ॥

**वाडवं गणे ॥ ४६ ॥**

**वेति** ॥ वडवानां समूहः। 'खण्डिकादिभ्यश्च' (४।२।४५) इत्यञ्। **'वाडवं** करणे स्त्रीणां घोटिकौघे नपुंसकम्। पाताले न स्त्रियां पुंसि ब्राह्मणे वडवानले' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'अश्वसमूहस्य'** ॥

**त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते।**

**त्रीति** ॥ अश्वेन एकाहेनातिक्रम्यते। 'अश्वस्यैकाहगमः' (५।२।१९) इति खञ् ॥ (१) ॥*॥ एकम् **'एकदिनगम्यदेशस्य'** ॥

**कश्यं तु मध्यमश्वानाम्**

**केति** ॥ अश्वादेस्ताडनी, ताडनं वा कशा। तामर्हति। दण्डादित्वात् (५।१।६६) यः। **'कश्यं** त्रिषु कशार्हे स्यात्क्लीबं मद्याश्वमध्ययोः' (इति मेदिनी) ॥ (१) ॥*॥ एकम् **'अश्वमध्यस्य'** ॥

**हेषा ह्रेषा च निस्वनः ॥ ४७ ॥**

**हेषेति** ॥ हेषणम्। ह्रेषणम्। 'हेषृ ह्रेषृ शब्दे' (भ्वा० आ० से०)। 'गुरोश्च हलः' (३।३।१०३) इत्यः ॥ (१) ॥*॥ (२) ॥*॥ द्वे **'अश्वशब्दस्य'** ॥

**निगालस्तु गलोद्देशे**

**नीति** ॥ निगलत्यनेन। 'गल अदने' (भ्वा० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। निगरत्यनेन वा। 'गॄ निगरणे' (तु० प० से०)। 'उन्न्योर्ग्रः' (३।३।२९) इति

---

१—विकल्पद्वयमध्यस्थस्य विधेर्नित्यत्वस्यैव सर्वैरङ्गीकाराद् विकल्पानुवृत्तौ मानाभावः। अत एवारुचेः सिद्धान्तकौमुद्यां 'वृत्तिकृत्' इत्युक्तम्। अत एव 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' इत्यन्तर्गणसूत्रे 'वा' पदसार्थक्यम्। तस्मात् 'ग्लास्नावनुवमां च' इत्यत्र सर्वसंमत'वा' पदानुवृत्त्या मित्त्वस्यैव पाक्षिकत्वम् ॥ २—इदं च 'अनाचमिकमिवमीनाम्' (वा० ७।३।३४) इत्यस्यास्मरणमूलकम् ॥

घञ् । 'अचि विभाषा' (८।२।३१) इति वा लः ॥ (१) ॥*॥ गलस्योद्देशः समीपभागः ॥ (२) ॥*॥ 'घण्टाबन्धसमीपस्थो निगालः कीर्तितो बुधैः । तस्मिन्नेव मणिर्नाम रोमजः शुभकृन्मतः' इत्यश्वशास्त्रम् ॥*॥ द्वे **'ग्रीवायाः समीपभागस्य'** ॥

**वृन्दे त्वाश्वीयमाश्ववत् ।**

**व्विति** ॥ अश्वानां समूहः । 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' (४।२।४८) ॥ (१) ॥*॥ पक्षे 'तस्य समूहः' (४।२।३७) इत्यण् । —'अनुदात्तादेरञ्–' (४।२।४४)— इति मुकुटः । तन्न । क्वन्नन्तत्वेनाश्वशब्दस्याद्युदात्तत्वात् ॥ (२) ॥*॥ द्वे **'अश्ववृन्दस्य'** ॥

**आस्कन्दितं धोरितकं रेचितं वल्गितं प्लुतम् ॥४८॥**
**गतयोऽमूः पञ्च धाराः**

**आस्केति** ॥ आस्कन्दनम् । 'स्कन्दिर् गतिशोषणयोः' (भ्वा० प० अ०) स्वार्थण्यन्तः । भावे क्तः (३।३।११४) । आस्कन्दः संजातोऽस्य वा, तारकादित्वात् (५।२।३६) इतच् । एवमिण्णलोपाभावश्च नानुपपन्नः ( **'उत्तेरितमुपकण्ठमास्कन्दितकमित्यपि** । उत्प्लुत्योत्प्लुत्य गमनं कोपादेवाखिलैः पदैः' इति हैममाला) ॥ (१) ॥*॥ धोरणम् । 'धोर्ऋ गतिचातुर्ये' (भ्वा० प० से०) । भावे क्तः (३।३।११४) । स्वार्थे कन् (ज्ञापि० ५।४।५) । 'अथ **धौरितकं** धौर्यं धा(धो)**रणं धौरितं** च तत्' इति वाचस्पतिः । वृद्धिमत्पाठे प्रज्ञाद्यण् (५।४।३८) बोध्यः । ('तत्र धौरितकं धौर्यं धोरणं धोरितं च तत् । बभ्रुकङ्कशिखिक्रोडगतिवत्' इति हैमनाममाला) ॥ (१) ॥*॥ रेचनम् । 'रिचिर् विरेचने' (रु० उ० अ०) ण्यन्तः । क्तः (३।३।११४) (**'उत्तेजितं** रेचितं स्यान्मध्यवेगेन या गतिः' इति हैमनाममाला) ॥ (१) ॥*॥ वल्गनम् । 'वल्ग गतौ' (          ) । क्तः (३।३।११४) । (**'वल्गितं** पुनः । अग्रकायसमुल्लासात्कुञ्चितास्यं नतत्रिकम्' इति नाममाला) ॥ (१) ॥*॥ प्लवनम् । 'प्लुङ् गतौ' (भ्वा० आ० अ०) । क्तः (३।३।११४) । (**'प्लुतं** तु लङ्घनं पक्षिमृगगत्यनुहारकम्' इति हैमः ) । **'प्लुतमश्वस्य** गतौ प्लुतस्त्रिमात्रके' इति हैमः ॥ (१) ॥*॥ अमूरश्वानां पञ्च गतयः ॥*॥ धार्यन्तेऽश्वा अत्र, अनया वा 'धृञ् धारणे' ण्यन्तः । (भ्वा० उ० अ०) । भिदाद्यङ् (३।३।१०४) । (**'धारा** सैन्याग्रिमस्कन्धे तुरंगगतिपञ्चके' इति मेदिनी) ॥ (१) ॥*॥ **'गतिविशेषाणाम्'** एकैककम् ॥

**घोणा तु प्रोथमस्त्रियाम् ।**

**घविति** ॥ घोणते । 'घुण भ्रमणे' (भ्वा० आ० से०) । अच् (३।१।१३४) ॥ (१) ॥*॥ प्रोथति । 'प्रोथृ पर्याप्तौ' (भ्वा० उ० से०) । अच् ( ३।१।१३४ ) । **'प्रोथो**ऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'अश्वभ्रमणस्य'** ॥

**कविका तु खलीनोऽस्त्री**

**केति** ॥ कवते 'कुङ् शब्दे' ( भ्वा० आ० अ० ) । 'अच इः' (उ० ४।१३९) । स्वार्थे कन् ( ज्ञापि० ५।४।५) । यद्वा 'कृञादिभ्यो वुन्–' ( उ० ५।३५ ) । टाप् (४।१।४) इत्वम् (७।३।४४) ॥ (१) ॥*॥ खे मुखबिले लीनः ॥ (२) ॥*॥ द्वे **'खलीनस्य' 'कडिआली'** इति ख्यातायाः ॥

**शफं क्लीबे खुरः पुमान् ॥ ४९ ॥**

**शेति** ॥ शं फणति । 'फण गतौ' (भ्वा० प० से०) । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । पृषोदरादिः (६।२।१०९) । **'शफं** मूले तरूणां स्याद्गवादीनां खुरेऽपि च' (इति मेदिनी) ॥ (१) ॥*॥ खुरति । 'खुर छेदने' (तु० प० से०) । 'इगुपध–' (३।१।१३५) इति कः । **'खुरः** कोलदले शफे' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'पादस्य'** ॥

**पुच्छोऽस्त्री लूमलाङ्गूले**

**प्विति** ॥ पुच्छति । 'पुच्छ प्रमादे' (          ) अच् (३।१।१३४) । पृषोदरादिः (६।३।१०९) । 'पुच्छभाण्ड–' (३।१।२०) इति निपातनाद्वा ।—इगुपधत्वात्को वा—इति मुकुटश्चिन्त्यः । अन्तरङ्गत्वात्तुकि सतीगुपधत्वाभावात् । **'पुच्छः** पश्चात्प्रदेशः स्याल्लाङ्गूले **पुच्छ**मिष्यते' इति मेदिनी ॥ (१) ॥*॥ लूयते । बाहुलकान्मक् ॥ (२) ॥*॥ 'लङ्गति' । 'लगि गतौ' (भ्वा० प० से०) । 'खर्जिपिञ्जादिभ्य ऊरोलचौ' (उ० ४।९०) प्रज्ञाद्यण् (५।४।३८) । 'लाङ्गूलं पुच्छशेफयोः' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि **'पुच्छस्य'** ॥

**बालहस्तश्च बालधिः ।**

**बेति** ॥ 'बालो ना कुन्तलेऽश्वस्य गजस्यापि च बालधौ' (इति पवर्गीयादौ मेदिनी) बालो हस्त इव । दंशादिनिवारकत्वात् । बालानां हस्तः समूहो वा ॥ (१) ॥*॥ बाला धीयन्तेऽत्र । 'कर्मण्यधिकरणे च' (३।३।९३) इति किः ॥ (२) ॥*॥ द्वे **'केशवल्लाङ्गूलमात्रस्य'** ॥

**त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि ॥ ५० ॥**

**त्रीति** ॥ उपावर्तते स । 'वृतु वर्तने' ( भ्वा० आ० से०) अकर्मकत्वात् (३।४।७२) क्तः ॥ (१) ॥*॥ लुठति स । 'लुठ प्रतिघाते' (तु० प० से०) । क्तः (३।४।७२) ॥ (२) ॥*॥ द्वे **'श्रमशान्त्यर्थं पुनःपुनर्भूमौ लुठितस्याश्वस्य'** ॥

**याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः ।**

**येति** ॥ यान्त्यनेन । 'या प्रापणे' ( अ० प० अ० ) । 'करणा–' ( ३।३।११७) इति ल्युट् । चक्रमस्यास्ति

इनिः (५।२।११५)। युद्धायेदम् । तस्मिन् ॥*॥ शतमङ्गान्यवयवा यस्य ॥ (१) ॥*॥ स्यन्दते 'स्यन्दू प्रस्रवणे' (भ्वा० आ० से०)। 'चलनशब्दार्थादकर्मकाद्युच्' (३।२।१४८)। 'स्यन्दनं तु स्रुतौ नीरे, तिनिशे ना रथेऽस्त्रियाम्' (इति मेदिनी) ॥ (२) ॥*॥ रमन्तेऽत्र । अनेन वा । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' (उ० २।२)मलोपः (६।४।३७)। 'रथः पुमानवयवे स्यन्दने वेतसेऽपि च' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि 'रथस्य' ॥

**असौ पुष्यरथश्चक्रयानं न समराय यत् ॥ ५१ ॥**

**असाविति** ॥ पुष्य इव रथः । पुष्ये यात्रोत्सवादौ रथो वा । अन्तस्थमध्या ॥*॥ पकारमध्यपाठे तु सुकुमारत्वात् 'पुष्पमिव रथः' इति विग्रहः ॥ (१) ॥*॥ एकं 'युद्धं विना यात्रोत्सवादौ सुखभ्रमणार्थस्य रथस्य' ॥

**कर्णीरथः प्रवहणं डयनं च समं त्रयम् ।**

**केति** ॥ कर्णसाध्या श्रवणक्रियोपचारात्कर्णः । कर्णोऽस्यास्ति । इनिः (५।२।११५)। कर्णी चासौ रथश्च शब्दमात्रेण रथः । नतु वस्तुतो रथः । यद्वा सामीप्यात्कर्णशब्देन स्कन्दो लक्ष्यते । कर्णः स्कन्धः । सोऽस्त्यस्य वाहकत्वेन । स्कन्धवाह्यः । स चासौ रथश्च । 'अन्येषामपि-' (६।३।१३७) इति दीर्घः ॥ (१) ॥*॥ प्रोह्यते । अनेन वा । 'वह प्रापणे' (भ्वा० उ० अ०)। ल्युट् (३।३।११३,११७) ॥ (२) ॥*॥ डीयतेऽनेन 'डीङ् विहायसा गतौ' (दि० आ० से०) ल्युट् (३।३।११७) ॥*॥ 'हयनम्' इति पाठे 'हय गतौ' (भ्वा० प० से०)। ल्युट् (३।३।११७) ॥ (३) ॥*॥ त्रीणि 'पुरुषस्कन्धवाह्यस्य यानविशेषस्य' 'डोला' इति ख्यातस्य ॥

**क्लीबेऽनः शकटोऽस्त्री स्यात्**

**क्लीति** ॥ अनिति चीत्करोति । 'अन प्राणने' (अ० प० से०)। असुन् (उ० ४।१८९)।—करणेऽसुन्—इति मुकुटः। तन्न । करणत्वासंभवात् । कर्तृत्वौचित्याच्च ॥ (१) ॥*॥ शक्नोति भारं वोढुम् । जीवयितुं वा । तदुक्तम्—'शकटः शाकिनी गावो यानमास्कन्दनं स्वनम् । अनूपः पर्वतो राजा दुर्भिक्षे नव वृत्तयः' इति । 'शक्लृ शक्तौ' (स्वा० प० अ०)। 'शकादिभ्योऽटन्' (उ० ४।८१) ॥ (२) ॥*॥ द्वे 'शकटस्य' ॥

**गन्त्री कम्बलिवाह्यकम् ॥ ५२ ॥**

**गेति** ॥ गम्यतेऽनया । ष्ट्रन् (उ०४।१४९)। षित्त्वान्ङीष् (४।१।४१) ॥ (१) ॥*॥ कम्बलः सास्नास्यास्ति । इनिः (५।२।११५)। कम्बलिभिर्वृषैरुह्यते । ण्यत् (३।१।१२४)। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे 'शकटिकायाः ॥'

**शिबिका याप्ययानं स्यात्**

**शीति** ॥ शिवैव । 'संज्ञायां कन्' (५।३।७५)। यद्वा शिवं करोति । 'तत्करोति-' (वा० ३।१।२६) इति ण्यन्ताद् ण्वुल् ॥ (१) ॥*॥ याप्यैरधमैर्वाह्यं यानम् ॥ (२) ॥*॥ द्वे 'पालकी' इति ख्यातायाः ॥

**दोला प्रेङ्खादिका स्त्रियाम् ।**

**दविति** ॥ दोलयति । दोल्यते वा । 'दुल उत्क्षेपे' चुरादिः । अच् (३।१।१३४) घञ् (३।३।१९) वा (१) ॥*॥ प्रेङ्ख्यते । 'इखि गतौ' (भ्वा० प० से०)। घञ् (३।३।१९)। 'दोला प्रेङ्खः पुमान् प्रेङ्खा, निश्रेणिरधिरोहणी' इति रत्नकोषः ॥ (२) ॥*॥ आदिना शयनखट्वावाह्यादिदोला ॥*॥ द्वे 'दोलायाः' 'हिंदोला' इति ख्यातायाः । 'डोली' इति ख्याताया वा ॥

**उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे ॥ ५३ ॥**

**उभाविति** ॥ द्वीपिनो व्याघ्रस्य च विकारः । 'प्राणिरजतादिभ्योऽञ्' (४।३।१५४)। द्वैपेन वैयाघ्रेण च चर्मणा परिवृतो रथः । 'द्वैपवैयाघ्रादञ्' (४।२।१२) ॥ (१) ॥*॥ (२) ॥*॥ 'व्याघ्रचर्मवेष्टितरथस्य' द्वे ॥

**पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बली ।**

**पेति** ॥ 'स्यात्पाण्डुकम्बलः श्वेतप्रावारग्रावभेदयोः' (इति मेदिनी)। पाण्डुकम्बलेन परिवृतो रथः । 'पाण्डुकम्बलादिनिः' (४।२।११) ॥ (१) ॥*॥ एकं 'शुक्लकम्बलवेष्टितरथस्य' ॥

**रथे काम्बलवस्त्राद्याः कम्बलादिभिरावृते ॥ ५४ ॥**

**रेति** ॥ कम्बलेन वस्त्रेण च प्रावृतो रथः । 'परिवृतो रथः' (४।२।१०) इत्यण् ॥ (१) ॥*॥ आदिना चार्मक्षौमदौकूलादिग्रहः ॥*॥ एकैकम् 'कम्बलाद्यावृतरथस्य' ॥

**त्रिषु द्वैपादयः**

**त्रीति** ॥ (द्वैपादयो वास्त्रान्ताः) ॥

**रथ्या रथकट्या रथव्रजे ।**

**रेति** ॥ रथानां समूहः । 'खलगोरथात्' (४।२।५०) इति यत् । 'रथ्यो रथांशे रथवोढरि । रथ्या तु रथसंघाते प्रतोल्यां पथि चत्वरे' इति हैमः ॥ (१) ॥*॥ 'इनित्रकट्यचश्च' (४।२।५१) ॥ (२) ॥*॥ रथानां व्रजः ॥ (३) ॥*॥ त्रीणि 'रथसमूहस्य' ॥

**धूः स्त्री क्लीबे यानमुखं**

**ध्विति** ॥ धूर्वति । 'धुर्वी हिंसायाम्' (भ्वा० प० से०) 'भ्राजभास-' (३।२।१७७) इति क्विप् । 'राल्लोपः' (६।४।२१)। 'र्वोः-' (८।२।७६) इति दीर्घः । ('धूर्यानमुखभारयोः' इति हैमः) ॥ (१) ॥*॥ यानस्य मुखं पुरोभागः ॥ (२) ॥*॥ द्वे 'वोढृबन्धनस्थानस्य' ॥

**स्याद्रथाङ्गमपस्करः ॥ ५५ ॥**

**स्येति** ॥ रथस्याङ्गम् ॥ (१) ॥*॥ अपकीर्यते स्वस्थाने

१—इदं च प्रकृतानुपयुक्तम् ॥

क्षिप्यते। 'कृ विक्षेपे' (तु० प० से०) 'ऋदोरप्' (३।३।५७)। 'अपस्करो रथाङ्गम्' (६।१।१४९) इति साधुः ॥ (२) ॥*॥ द्वे **'चक्रभिन्नस्य रथारम्भकस्य'** ॥

**चक्रं रथाङ्गम्**

**चेति** ॥ क्रियते गतिरनेन। 'घञर्थे कः' (वा० ३।३।५८)। 'कृञादीनां के' (वा० ६।१।१२) इति द्विलम्। 'चक्रः कोके पुमान्, क्लीबं व्रजे सैन्यरथाङ्गयोः। राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः। जलावर्तेऽपि' (इति मेदिनी) ॥ (१) ॥*॥ रथस्याङ्गम्। **'रथाङ्गं** न द्वयोश्चक्रे ना चक्राङ्गविहंगमे' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'चक्रस्य'** ॥

**तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान्।**

**तेति** ॥ तस्य चक्रस्यान्तो भूस्पर्शिभागः ॥*॥ नयति रथम्। 'नियो मिः' (उ० ४।४३)। **'नेमिर्ना** तिनिशे कूपत्रिकावक्रान्तयोः स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ प्रधीयतेऽनेन। 'डु धाञ्' ( जु० उ० अ० )। 'उपसर्गे घोः किः' (३।३।९२) ॥ (२) ॥*॥ द्वे **'चक्रस्यान्तस्य'** ॥

**पिण्डिका नाभिः**

**पीति** ॥ पिण्ड्यतेऽरा यस्याम्। 'पिडि संघाते' ( भ्वा० आ० से० )। 'हलश्च' (३।३।१२१) इति घञ्। गौरादिः (४।१।४१)। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१) ॥*॥ नह्यन्तेऽरा अत्र। 'णह बन्धने' ( दि० उ० अ० )। 'नहो भश्च' (उ० ४।१२६) इतीञ् हस्य भः। यद्वा नभ्यतेऽक्षेण। 'णभ हिंसायाम्' (भ्वा० आ० से०)। 'इञ(ण)जादिभ्यः' (वा० ३।३।१०८)। **'नाभिर्मुख्यनृपे** चक्रमध्यक्षत्रिययोः पुमान्। द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'रथचक्रमध्ये मण्डलाकारायाः'** ॥

**अक्षाग्रकीलके तु द्वयोरणिः ॥ ५६ ॥**

**अक्षेति** ॥ अक्षस्य नाभिक्षेप्यस्यान्ते कीलके। अणति। 'अण शब्दे' (भ्वा० प० से०)। इन् (उ०४।११८)। 'अणिराणिवदक्षाग्रकीले स्यादश्रिसीमयोः' इति विश्वः। 'अणिराणिदक्षाग्रकीलाश्रिसीमसु द्वयोः' (इति मेदिनी) ॥ (१) ॥*॥ द्वे **'अक्षाग्रकीलकस्य'** ॥

**रथगुप्तिर्वरूथो ना**

**रेति** ॥ रथस्य गुप्तिरावरणम् ॥ (१) ॥*॥ व्रियते रथोऽनेन। 'जॄवृञ्भ्यामूथन्' (उ० २।६)। (**'वरूथो** रथगुप्तौ स्यात्) वरूथं चर्मवेश्मनोः' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'परप्रहाणाभिघातरक्षार्थं रथसंनाहवदावरणस्य'** ॥

**कूबरस्तु युगंधरः।**

**किति** ॥ कूवते। 'कूङ् शब्दे' (तु० आ० से०)। बाहुलकाद्वरच्। कुटादिः। **'कूवरस्त्रिषु** चारौ ना कुब्जकेऽस्त्री युगंधरे' (इति मेदिनी)।—कूयते—इति स्वामी ॥ (१) ॥*॥ युगं वोढृबन्धनकाष्ठं धारयति। 'संज्ञायां भृतॄवृजि–' (३।२।४६) इति खच्। 'अरुर्द्विष–' (६।३।६७) इति मुम् ॥ (२) ॥*॥ द्वे **'युगकाष्ठबन्धनस्थानस्य'** ॥

**अनुकर्षो दार्वधःस्थम्**

**अन्विति** ॥ अनुकृष्यते। 'कृष विलेखने' ( भ्वा० प० अ० )। घञ् (३।३।१९)। **'अनुकर्षो** रथाधःस्थदारुण्यप्यनुकर्षणे' (इति मेदिनी) ॥*॥ नान्तोऽप्ययम्। **'अनुकर्षा** नाक्षतलदारु' इति बोपालितात् ॥ (१) ॥*॥ एकं **'रथस्याधस्तलभागदारुणः'** ॥

**प्रासङ्गो ना युगान्तरम् ॥ ५७ ॥**

**प्रेति** ॥ प्रसज्यते। 'षञ्ज सङ्गे' ( भ्वा० प० अ० )। घञ् (३।३।१९)। 'उपसर्गस्य घञि–' (६।३।१२२) इति दीर्घः ॥ (१) ॥*॥ रथाद्यङ्गयुगादन्यद्युगं वृषभाणां दमनकाले यदासज्यते तस्यैकम्। स्वामी तु ('युगाद्युगः' इति पाठमाश्रित्य)—युगेनातति। युगाद्रथादिः। तस्य युगो ना–इत्याह। अन्येतु—युगान्तरं यद्बध्यते। तस्य—इत्याहुः। 'युगं द्वितीयं प्रासङ्गः' इति कात्यः। एकं **'अन्यवृषयुग्मस्य'** ॥

**सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम्।**

**सेति** ॥ सर्वं हस्त्यश्वरथादिदोलान्तम्। वाहयति। वहेः स्वार्थण्यन्तात्कर्तरि ल्युट् (३।३।११३)। अन्ये तु—वहत्यनेन। 'करणा–' (३।३।११७) इति ल्युट्। 'वाहनमाहितात्' (८।४।८) इति निपातनाद्दीर्घः—इत्याहुः ॥ (१) ॥*॥ यान्त्यनेन। करणे ल्युट् (३।३।११७) **'यानं** स्याद्वाहने गतौ' (इति मेदिनी) ॥ (२) ॥*॥ युज्यते अनेन वा। 'युजिर् योगे' ( रु० उ० अ० )। 'युग्यं च पत्रे' (३।१।१२१) इति क्यबन्तो निपातः ॥ (३) ॥*॥ पतन्त्यनेन 'पतॢ गतौ' ( भ्वा० प० अ० )। 'दाम्नी–' (३।२।१८२) इति ष्ट्रन्। **'पत्रं** तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोः' (इति मेदिनी) ॥ (४) ॥*॥ धोरति। अनेन वा। धोरयति वा। 'धोर्ॠ गति-

---

१—इदं च 'रथारम्भकं चक्रादन्यत्' इति भट्टक्षीरस्वामिग्रन्थानुरोधेनोक्तम्। मुकुटस्तु—सामान्येन रथस्याङ्गमक्षयुगचक्रादिकमपस्करः—इति, अग्रे—रथाङ्गत्वेनैव गतार्थस्यापि 'चक्रम्' इति विशेषतो नामान्तरप्रतिपादनाय 'तस्यान्ते नेमिः' इत्युक्तये च रथाङ्गस्यानुवादः—इति च प्रोक्तवान् ॥ २—'कृदिकारात्' इति ङीषि 'अणी' आणी च। 'समाधुर्या वाणीमनो हरति' इति दमयन्तीश्लेषात् ॥

१—हेमचन्द्रोऽपि स्वोपज्ञनाममालायां 'प्रासङ्गस्तु युगान्तरम्' इति पठित्वा—'द्वितीयं युगं युगान्तरम्। यत्काष्ठं वत्सानां दमनकाले स्कन्ध आसज्यते। यन्मुनिः—'युगं द्वितीयं प्रासङ्गः'—इति व्याख्यातवान् ॥

चातुर्ये' (भ्वा० प० से०) ल्युः (३।१।१३४)। ल्युट् (३।३।११३) वा ॥ (५) ॥*॥ पञ्च **'वाहनमात्रस्य'** ॥

**परम्परावाहनं यत्तद्वैनीतकमस्त्रियाम् ॥ ५८ ॥**

**पेति** ॥ विनीतकानामिदम् । यद्वा विनीयते स्म । क्तः (३।२।१०२)। 'संज्ञायां कन्' (५।३।७५)। प्रज्ञाद्यण् (५।४।३८) ॥ (१) ॥*॥ परम्परया यद्वाह्यं वहति । शकटं यथारूढम्। तस्यैकम् **'परम्परावाहनस्य'** ॥

**आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ।**

**आधविति** ॥ आधोरयन्ति । ल्युः (३।१।१३४) ॥ (१) ॥*॥ हस्तिनं पान्ति । 'पा रक्षणे' (अ० प० अ०) । 'आतोऽनुप-' (३।२।३) इति कः । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ हस्तिनमारोहयन्ति । 'कर्मण्यण्' (३।२।१) ॥ (३) ॥*॥ निषीदन्त्यवश्यम्। 'षद्लृ विशरणादिषु' (भ्वा० प० अ०) । आवश्यके णिनिः (३।३।१७०) । यद्वा निषादयन्त्युपवेशयन्ति हस्तिनम् । ग्रह्यादित्वात् (३।१।१३४) आवश्यके (३।३।१७०) वा णिनिः ॥ (४) ॥*॥ चत्वारि **'हस्तिपकेषु'** ॥

**नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः ५९**
**सव्येष्टृदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः ।**

**नीति** ॥ नियच्छति । अन्तर्भावितण्यर्थो वा । 'यमु उपरमे' (भ्वा० प० अ०)। तृच् (३।१।१३३) ॥ (१) ॥*॥ प्राजति । 'अज गत्यादौ' (भ्वा० प० से०) । तृच् अन्तर्भावितण्यर्थो वा । 'वलादावार्धधतुके वेष्यते' ( भाष्य० २।४।५६) इति वी न ।—प्राजयति—इति स्वामिमुकुटोक्तं चिन्त्यम्। णिचि वीभावस्य नित्यत्वात् । 'प्राजयिता' इति रूपप्रसङ्गाच्च । यदपि—वानुवृत्तेर्वीभावो नास्ति—इति स्वामिनोक्तम्। तदपि चिन्त्यम्। वृत्त्यादौ वानुवृत्तेरदर्शनात् ॥ (२) ॥*॥ यच्छति । तृच् (३।१।१३३) ॥ (३) ॥*॥ सुवति गमयति स्वाश्वान्। 'षू प्रेरणे' (तु० प० से०) । क्तः (३।२।१०२)। **'सूतस्तु** सारथौ तक्षिण क्षत्रियाद्ब्राह्मणीसुते । वन्दिपारदयोः ( पुंसि, प्रसूते प्रेरिते त्रिषु )' इति विश्वमेदिन्यौ ॥ (४) ॥*॥ क्षदति । 'क्षद संवरणे' सौत्रः । 'तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ' (उ० २।९४) । मुकुटस्तु 'नप्तृनेष्टृत्वष्टृ-' (उ० २।९५) । इति तृच्—इत्याह । तन्न । नप्त्रादिषु क्षत्तुरग्रहणात्। यदपि—'क्षद स्थैर्ये हिंसायां च' इत्यतस्तृच् (३।१।१३३) तृन् (३।२।१३५) वा—इत्युक्तम्। तदपि न । उक्तपाठस्यादर्शनात्। 'खद स्थैर्ये' ( भ्वा० प० से०) इति पाठस्य दर्शनाच्च ॥ (५) ॥*॥ सरत्यश्वान् । 'सृ गतौ' (भ्वा० प० अ०) । अन्तर्भावितण्यर्थः । 'सर्तेर्णिच्च' (उ० ४।८९) इति घथिन्। सरथस्यापत्यम्, वा ॥ (६) ॥*॥ सव्ये वामे तिष्ठति । 'सव्ये स्थश्छन्दसि' (उ० २।१०१) इत्यृन् डिच्च । 'स्थास्थिन्स्थृणाम्' (८।३।९७) इति वक्तव्यात् षत्वम्। 'स्थास्थिन्स्थूनाम्' इति पाठे तु सुषामादित्वात् (८।३।९८) षत्वम्। 'हलदन्तात्' (६।३।९) इत्यलुक् ॥*॥ 'सव्येष्ठः' इत्यदन्तोऽपि । 'प्राजिता दक्षिणस्थश्च **सादी** सारथिरुच्यते । सूतः क्षत्ता नियन्ता च यन्ता सव्येष्ठ एव च' इत्यमरमाला ॥ (७) ॥*॥ दक्षिणे तिष्ठति । 'सुपि-' (३।२।४) इति कः ॥ (८) ॥*॥ रथं कुटुम्बयितुं शीलमस्य । 'कुटुम्ब धारणे' (चु० आ० से०) । 'सुपि-' (३।२।७८) इति णिनिः । यद्वा रथ एव कुटुम्बम्। रथ कुटुम्बमस्यास्ति । इनिः (५।२।११५) तस्य अष्टौ **'रथकुटुम्बिनः'** ॥

**रथिनः स्यन्दनारोहाः**

**रेति** ॥ रथोऽस्यास्ति । इनिः । (५।२।११५) ॥ (१) ॥*॥ स्यन्दनमारोहन्ति । 'रुह बीजजन्मनि प्रादुर्भावे च' (भ्वा० प० अ०)। अण् (३।२।१) ॥ (२) ॥*॥ द्वे **'रथारूढस्य योद्धुः'** ॥

**अश्वारोहास्तु सादिनः ॥ ६० ॥**

**अश्वेति** ॥ अश्वमारोहन्ति प्राग्वत् ॥ (१) ॥*॥ सीदन्त्यवश्यम्। 'षद्लृ विशरणादौ' (तु० प० अ०) । 'आवश्यका-' (३।३।१७०) इति णिनिः । **'सादी** तुरंगमातङ्गरथारोहेषु दृश्यते' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'अश्ववाराणां' 'असवार'** इति ख्यातस्य ॥

**भटा योधाश्च योद्धारः**

**भेति** ॥ भटति । 'भट भृतौ, परिभाषणे वा' ( भ्वा० प० से०)। अच् (३।१।१३४)। **'भटः** स्यात् पुंसि वीरे च विशेषे पामरस्य च' (इति मेदिनी) ॥ (१) ॥*॥ युध्यते । 'युध संप्रहारे' (दि० आ० अ०)। अच् (३।१।१३४) ॥ (२) ॥*॥ तृच् (३।१।१३३) ॥ (३) ॥*॥ त्रीणि **'योद्धुः'** ॥

**सेनारक्षास्तु सैनिकाः ।**

**सेनेति** ॥ सेनां रक्षन्ति । 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ 'रक्षति' (४।४।३३) इति ठक् । **'सैनिकः** सैन्यरक्षे च स्यात्सेनासमवेतके' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'प्रहरिकादेः'** ॥

**सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ॥६१ ॥**

**सेनेति** ॥ सेनायां समवैति । 'सेनाया वा' (४।४।५५) इति ण्यः। **'सैन्यं** सैनिकसेनयोः' इति हैमः ॥ (१) ॥*॥ पक्षे ठक् (४।४।१) ॥ (२) ॥*॥ द्वे **'सेनायां मिलितस्यैकदेशीभूतस्य'** ॥

---

१—'इदमस्ति । चक्षिङः ख्याञ् । वा लिटि । ततो वक्ष्यामि 'अजेर्वीभावो भवति वा । व्यवस्थितविभाषा' इति' इति भाष्ये स्पष्टमेव विकल्पानुवृत्तेरुपलम्भादकिंचित्करमेतत् ॥

१—तुना—प्रकृतवार्तिकोदाहरणेषु भाष्यकृता 'सव्येष्ठा सारथिः' इत्युदाहरणदानेन कैयटेन 'स्यृशब्द ऋप्रत्ययान्त' इत्येवमुक्तत्वेन चोकारान्तपाठोऽप्रामाणिकः—इत्यरुचिः सूचिता ॥

**बलिनो ये सहस्रेण साहस्रास्ते सहस्रिणः ।**

**वेति** ॥ सहस्रं बलानि सन्ति येषाम् । 'तपःसहस्राभ्यां विनीनी' (५।२।१०२) ॥ (२) ॥*॥ 'अण् च' (५।२।१०३) इत्यण् ॥ (१) ॥*॥ द्वे **'सहस्रसंख्याकेन गजादिना बलवतः'** ॥

**परिधिस्थः परिचरः**

**पेति** ॥ परिधौ सेनान्ते तिष्ठति । 'सुपि–' (३।२।४) इति कः ॥ (१) ॥*॥ परितश्चरति । अच् (३।१।१३४) ॥ (२) ॥*॥ द्वे **'सेनायां राज्ञो दण्डकारिणः'** । 'प्रयाणे सामन्तस्यापकर्षकस्य'—इत्यन्ये । रथगजादेश्चक्रपादादिरक्षकस्य—इति केचित् ॥

**सेनानीर्वाहिनीपतिः ॥ ६२ ॥**

**सेनेति** ॥ सेनां नयति । 'णीञ् प्रापणे' (भ्वा० उ० अ०) । 'सत्सू–' (३।२।६१) इति क्विप् । **'सेनानीः** स्यात् पुमान् कार्तिकेये सेनापतौ पुमान्' (इति मेदिनी) ॥ (१) ॥*॥ वाहिन्याः पतिः ॥ (२) ॥*॥ द्वे **'सेनापतेः'** ॥

**कञ्चुको वारबाणोऽस्त्री**

**केति** ॥ कच्यते । 'कचि दीप्तिबन्धनयोः' (भ्वा० आ० से०) । बाहुलकादुकः । **'कञ्चुको** वारबाणे स्यान्निर्मोके कवचेऽपि च । वर्धापकगृहीताङ्गस्थितवस्त्रे च चोलके । कञ्चुक्यौषधिभेदे' (इति मेदिनी) ॥ (१) ॥*॥ बाणं वारयति, वृणोति वा । 'वृञ् वरणे' (स्वा० उ० से०) । ण्यन्तो वा । 'कर्मण्यण्' (३।२।१) । (मयूरव्यंसकादित्वात् '२।१।७२') । राजदन्तादित्वात् (२।२।३१) वा परनिपातः । यद्वा वारमाच्छादकं बाणमस्य । 'पूर्वपदात्–' (८।४।३) इति णत्वम् ॥ (२) ॥*॥ द्वे **'चोलकाकृतिसंनाहस्य'** ॥

**यत्तु मध्ये सकञ्चुकाः ।**

**बध्नन्ति तत्सारसनमधिकाङ्गः**

**बेति** ॥ सारं सनोति । 'षणु दाने' (तु० प० से०) । कर्मणः शेषत्वविवक्षायामच् (३।१।१३४) । यद्वा सारं बलमस्यते दीप्यतेऽनेन । 'अस गतिदीप्त्यादानेषु' (भ्वा० उ० से०) । 'करणा–' (३।३।११७) इति ल्युट् । शकन्ध्वादिः (वा० ६।१।९४) । **'सारसन**मप्युरस्त्रे तनुत्रिणां मेखलायां च' (इति मेदिनी) । विश्वोऽपि—**'सारसनं** मेखलायामुरस्त्रे च तनुत्रिणाम्' इति ॥ (१) ॥*॥ अधिकमङ्गात् ॥*॥ क्वचित्तु 'सारसनाधिपाङ्गे' इति पाठः । यत्कात्यः—'अधिपाङ्गं सारसनम्' इति ॥*॥ दुर्गस्तु—'तस्य सारसनं ज्ञेयं धिपाङ्गं च निबन्धनम्' इति ॥ (२) ॥*॥ द्वे **'कञ्चुकदार्ढ्यार्थं मध्यकाये निबद्धस्य'** ॥

**अथ शीर्षकम् ॥ ६३ ॥**

**शीर्षण्यं च शिरस्त्रे**

**अथेति** ॥ शीर्षस्य प्रतिकृतिः । 'इवे–' (५।३।९६) इति कन् । शीर्षे कं सुखमस्माद्वा ॥ (१) ॥*॥ शिरसे हितम् । 'शरीरावयवाद्यत्' (५।१।६) । 'ये च तद्धिते' (६।१।६१) इति शिरःशब्दस्य शीर्षन्नादेशः । 'ये चाभाव–' (६।४।१६८) इति टिलोपो न । **शीर्षण्यं** शीर्षरक्षणे । **'शीर्षण्यो** विशदे कचे' इति हैमः ॥ (२) ॥*॥ शिरस्त्रायते । 'त्रैङ् पालने' (भ्वा० आ० अ०) । 'आतोऽनुप–' (३।२।३) इति कः ॥ (३) ॥*॥ त्रीणि **'शिरस्त्रस्य' 'टोप'** इति ख्यातस्य ॥

**अथ तनुत्रं वर्म दंशनम् ।**

**उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् ॥६४॥**

**अथेति** ॥ तनुं त्रायते । प्राग्वत् ॥ (१) ॥*॥ वृणोति देहम् । 'वृञ् वरणे' (स्वा० उ० से०) । मनिन् (३।२।७५)॥ (२) ॥*॥ दंश्यतेऽनेन । 'दशि दंशनस्पर्शनयोः' (चु० आ० से०) 'करणा–'(३।३।११७) इति ल्युट् । **'दंशनं** वर्मदंशयोः' इति हैमः ॥ (३) ॥*॥ उरश्छाद्यतेऽनेन । 'छद अपवारणे' (चु० उ० से०) । 'पुंसि–' (३।३।११८) इति घः । 'छादेर्घे–' (६।४।९६) इति ह्रस्वः ॥ (४) ॥*॥ कङ्कते । 'ककि लौल्ये' (भ्वा० आ० से० ) 'शकादिभ्योऽटन्' ( उ० ४।८१ ) स्वार्थे कन् (ज्ञापि० ५।४।५) यद्वा कं सुखं कटति । 'कटे वर्षादौ' (भ्वा० प० से०) अच् (३।१।१३४) । मूलविभुजादिकः (वा० ३।२।५) वा ॥ (५) ॥*॥ जगता गृह्यते । 'प्रातिपदिकाद्धात्वर्थे–' (चु० ग० सू०) इति णिच् (टिलोपश्च) । बाहुलकादरः । जागर्ति । अच् (३।१।१३४) । पृषोदरादिः (६।३।१०९) वा । 'जगरः **कङ्कटो योगः संनाहः** स्यादुरश्छदः' इति बोपालितः ॥ (६) ॥*॥ कं वातं वञ्चति । 'वञ्चु गतौ' (भ्वा० प० से०) । अन्तर्भावितण्यर्थो वा । मूलविभुजादिकः । **'कवचो** गर्दभाण्डे च संनाहे पटहेऽपि च' (इति विश्वमेदिन्यौ) ॥ (७) ॥*॥ सप्त **'संनाहस्य'** ॥

**आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ।**

**आम्विति** ॥ आमुच्यते स्म । 'मुच्लृ मोक्षणे' (तु० उ० अ०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ प्रतेरपि ॥ (२) ॥*॥ अपि नह्यते स्म । 'णह बन्धने' (दि० उ० अ०) । क्तः (३।२।१०२) । 'वष्टि भागुरिः–' इत्यल्लोपः ॥ (३) ॥*॥ (४) ॥*॥ चत्वारि **'परिहितकवचादेः'** ॥ (परिहितस्य वस्त्रादेः–इति मुकुटः) ॥

**संनद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ॥६५॥**

**समिति** ॥ संनह्यति, संनह्यते, स्म वा । अकर्मकत्वात्कर्तरि (३।४।७२) कर्मणि (३।२।१०२) वा क्तः । **'संनद्धो** वर्मिते व्यूढे' (इति मेदिनी) ॥ (१) ॥*॥ वर्मणा नह्यते स्म । 'सत्याप–' (३।१।२५) इति णिच् । 'णाविष्ठवत्' (वा० ६।४।११५) इति टिलोपः । वर्म संजातमस्य वा । तारकादित्वात् (५।२।३६) इतच् ॥ (२) ॥*॥ सज्जति ।

'षस्ज गतौ' (भ्वा० प० से०)। अच् (३।१।१३४)। 'अथ **सज्जः** स्यात्संनद्धे संभृते त्रिषु' (इति मेदिनी) ॥ (३) ॥*॥ दंशः संजातोऽस्य। इतच् (५।२।३६)। यद्वा–दंश्यते स्म। 'दशि दंशनादौ' (चु० आ० से०)। क्तः (३।२।१०२) ॥ (४) ॥*॥ व्यूढो धृतः कङ्कटो येन ॥ (५) ॥*॥ पञ्च '**धृतसंनाहस्य**' ॥

**त्रिष्वामुक्तादयः**

**त्रीति** ॥ आमुक्तादयो व्यूढकङ्कटान्ताः ॥

**वर्मभृतां कावचिकं गणे।**

**वेति** ॥ कवचिनां समूहः। 'ठञ् कवचिनश्च' (४।२।४१) ॥ (१) ॥*॥ एकं '**धृतसंनाहानां गणस्य**' ॥

**पदातिपत्तिपदगपादातिकपदाजयः ॥ ६६ ॥**
**पद्गश्च पदिकश्च**

**पेति** ॥ पादाभ्यामतति। 'अत सातत्यगमने' (भ्वा० प० से०)। 'अज्यतिभ्यां च' (उ० ४।१३०) 'पादे च' (उ० ४।१३१) इतीण्। 'पादस्य पदाज्यातिगोपहतेषु' (६।३।५२) इति पदः ॥ (१) ॥*॥ एवं पदाजिः ॥ (५) ॥*॥ मुकुटस्तु—'इनजादिभ्यः' (वा० ३।३।१०८) इतीञ्—इत्याह। तन्न। 'स्त्रियाम्' 'अकर्तरि च कारके' 'भावे' इत्यधिकारे तस्य विहितत्वेन 'अतति' 'अजति' इति विग्रहस्य विरुद्धत्वात् ॥ (१) ॥*॥ पद्यते। 'पद गतौ' (दि० आ० अ०)। बाहुलकात्तिः। क्तिच् (३।३।१७४) वा। '**पत्तिः** सेनाभित्पद्गयोर्गतौ' इति हैमः ॥ (२) ॥*॥ पादाभ्यां गच्छति। 'अन्येष्वपि–' (वा० ३।२।४८) इति डः। 'पादस्य–' (६।३।५२) इति पदः ॥ (३) ॥*॥ पदातिरेव। विनयादित्वात् (५।४।३४) ठक्। पादाभ्याममतति। बाहुलकादिको वा ॥*॥ '**पादाविकः**' इति क्वचित्पाठः। पादाभ्यामवति। 'अव रक्षणादौ' (भ्वा० प० से०)। बाहुलकादिकः। यद्वा पादेनावो रक्षणम्। तत्र नियुक्तः। 'तत्र नियुक्तः' (४।४।६९) इति ठक् ॥ (४) ॥*॥ पद्भ्यां गच्छति। पादेन समानार्थः पच्छब्दोऽस्ति। डः (वा० ३।२।४८) ॥ (६) ॥*॥ पादाभ्यां चरति। 'पर्पादिभ्यः ष्ठन्' (४।४।१०)। 'इके चरतौ' (वा० ६।३।५३) इति पद्भावः ॥ (७) ॥*॥ पादातशब्दोऽप्यत्र। 'पदातिपत्तिपादातपादाविकपदाजयः' इत्यमरमाला। यत्तु मुकुटेनोक्तम्—मूलविभुजादिके पादातः—इति। तन्न। 'पादाभ्यां अतति' इति विग्रहेण पचाद्यचा गतार्थत्वात् ॥*॥ सप्त '**पदातेः**' ॥

**अथ पादातं पत्तिसंहतिः।**

**अथेति** ॥ पदातीनां समूहः। 'भिक्षादिभ्योऽण्' (४।२।३८) ॥ (१) ॥*॥ पत्तीनां संहतिः ॥ (२) ॥*॥ द्वे '**पदातिसमूहस्य**' ॥

**शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः ॥६७॥**

**शेति** ॥ शस्त्रमाजीवति उपजीवति। 'जीव प्राणधारणे' (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१) ॥(१) ॥*॥ काण्डानि शस्त्राणि पृष्ठे यस्य ॥*॥ '**काण्डस्पृष्टः**' इति मुकुटः। स्पृष्टं गृहीतं काण्डं शस्त्रं येन। 'वाहिताग्न्यादिषु' (२।२।३७) इति परनिपातः ॥ (२) ॥*॥ आयुधेन जीवति। 'आयुधाच्छ च' (४।४।१४) ॥ (३) ॥*॥ चात् ठन् ॥ (४) ॥*॥ चत्वारि '**शस्त्रजीविनः**' ॥

**कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत्।**

**क्रिति** ॥ कृतोऽभ्यस्तो हस्तो यस्य ॥ (१) ॥*॥ शोभनः प्रयोगोऽस्य। सुप्रयोगो विशिखोऽस्य ॥ (२) ॥*॥ कृतोऽभ्यस्तः पुङ्खः पुङ्खयुक्तः शरो येन ॥ (३) ॥*॥ त्रीणि '**सम्यक्कृतशराभ्यासस्य**' ॥

**अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः ॥ ६८ ॥**

**अपेति** ॥ अपराद्धः पृषत्को बाणोऽस्य ॥ (१) ॥*॥ लक्ष्याद्वेध्यात् च्युतो भ्रष्टः सायको यस्य ॥*॥ एकं '**लक्ष्याप्राप्तशरस्य**' ॥

**धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः।**

**धेति** ॥ '**धन्वा** तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च' (इति मेदिनी)। धन्वास्यास्ति। व्रीह्यादित्वात् (५।२।११६) इनिः ॥ (१) ॥*॥ धनुरस्यास्ति। मतुप् (५।२।९४)। 'तसौ मत्वर्थे' (१।४।१९) इति भत्वम् ॥ (२) ॥*॥ धनुः प्रहरणमस्य। 'तदस्य प्रहरणम्' (४।४।५७) इति ठक्। 'इसुसुक्तान्तात्कः' (७।३।५१) ॥ (३) ॥*॥ निषङ्गोऽस्यास्ति। इनिः (५।२।११५) ॥ (४) ॥*॥ '**अस्त्रं** प्रहरणे चापे' इति विश्वः। अस्त्रमस्यास्ति। इनिः (५।२।११५) ॥ (५) ॥*॥ धरति। 'धृञ् धारणे' (भ्वा० उ० अ०)। अच् (३।१।१३४)। धनुषो धरः ॥ (६) ॥*॥ षट् '**धनुर्धरस्य**' ॥

**स्यात्काण्डवांस्तु काण्डीरः**

**स्यादिति** ॥ '**काण्डः** स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः। कुत्सिते वृक्षभिन्नाडीबन्धे रहसि न स्त्रियाम्' (इति मेदिनी)। काण्डो बाणोऽस्यास्ति। मतुप् (५।२।११५) ॥ (१) ॥*॥ 'काण्डाण्डादीरन्नीरचौ' (५।२।१११) ॥ (२) ॥*॥ द्वे '**बाणधारकस्य**' ॥

**शाक्तीकः शक्तिहेतिकः ॥ ६९ ॥**

**शेति** ॥ शक्तिः प्रहरणमस्य। 'शक्तियष्ट्योरीकक्'[1] (४।४।५९) ॥ (१) ॥*॥ शक्तिर्हेतिर्यस्य ॥ (२) ॥*॥ द्वे '**शक्त्यायुधधारिणः**' ॥

१—'तदस्य इत्यंशस्तु पूर्वसूत्रादनुवृत्तः सूत्रं त्ववशिष्टमेव ॥

**याष्टीकपारश्वधिकौ यष्टिपर्श्वधहेतिकौ।**

**येति** ॥ यष्टिः प्रहरणमस्य (ईकन् '४।४।५९') ॥ (१) ॥*॥ परश्वधः परशुः प्रहरणमस्य। 'परश्वधाट्ठञ्च' (४।४।५८) ॥ (१) ॥*॥ यष्टिश्च पर्श्वधश्च हेती ययोः ॥*॥ एकैकम् '**यष्टि-परशुधृतोः**' ॥

**नैस्त्रिंशिकोऽसिहेतिः स्यात्**

**नायिति** ॥ निस्त्रिंशः प्रहरणमस्य। 'प्रहरणम्' (४।४।५७) इति ठक् ॥ (१) ॥*॥ असिर्हेतिर्यस्य ॥ (२) ॥*॥ द्वे '**खड्गायुधस्य**' ॥

**समौ प्रासिककौन्तिकौ ॥ ७० ॥**

**सेति** ॥ प्रासः कुन्तश्च प्रहरणमस्य। प्राग्वत् (४।४।५७) ॥ (१) ॥*॥ एकैकम् '**प्रासकुन्तायुधिनोः**' ॥

**चर्मी फलकपाणिः स्यात्**

**चेति** ॥ चर्मास्यास्ति। व्रीह्यादित्वात् (५।२।११६) इनिः ॥ (१) ॥*॥ फलकं पाणावस्य ॥ (२) ॥*॥ द्वे '**फल-कधारकस्य**' ॥

**पताकी वैजयन्तिकः।**

**पेति** ॥ पताकास्यास्ति। व्रीह्यादीनिः (५।२।११५) ॥ (१) ॥*॥ वैजयन्त्यस्यास्ति। व्रीह्यादित्वात् (५।२।११६) ठन्। यद्वा वैजयन्त्या चरति। 'चरति' (४।४।८) इति ठक् ॥ (२) ॥*॥ द्वे '**ध्वजधारकस्य**' ॥

**अनुप्लवः सहायश्चानुचरोऽभिसरः समाः ॥ ७१ ॥**

**अन्विति** ॥ अनु पश्चात् प्लवते। 'प्लुङ् गतौ' (भ्वा० आ० अ०)। अच् (३।१।१३५) ॥ (१) ॥*॥ सह अयते। 'अय गतौ' (भ्वा० आ० से०)। एति वा। 'इण् गतौ' (अ० प० अ०)। अच् (३।१।१३४) ॥ (२) ॥*॥ अनु चरति। 'चरेष्टः' (३।२।१६) ॥ (३) ॥*॥ अभितः सरति। अच् (३।१।१३४) ॥ (४) ॥*॥ चत्वारि '**सहायस्य**' ॥

**पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः।**
**पुरोगमः पुरोगामी**

**प्विति** ॥ पुरो गच्छति। 'अन्येष्वपि-' (वा० ३।२।४८) इति डः ॥ (१) ॥*॥ अग्रे सरति। 'पुरोऽग्रतोऽग्रेषु-' (३।२।१८) इति टः ॥ (२) ॥*॥ प्रतिष्ठते गच्छति। 'आतश्चो-पसर्गे-' (३।१।१३६) इति कः। 'प्रष्ठोऽग्रगामिनि' (८।३।९२) इति षः। '**प्रष्ठ**स्त्रिष्वग्रगे श्रेष्ठे पुंसि चाण्डालिकौषधौ' (इति मेदिनी) ॥ (३) ॥*॥ अग्रतः सरति ॥ पुरः सरति। 'पुरोऽग्रतः-' (३।२।१८) इति टः ॥ (४) ॥*॥ (५) ॥*॥ पुरो गच्छति। अच् (३।१।१३४)। 'गमश्च' (३।२।४७) इति खच् वा ॥ (६) ॥*॥ 'सुप्यजातौ-' (३।२।७८) इति णिनिः ॥ (७) ॥*॥ सप्त '**अग्रेसराणाम्**' ॥

**मन्दगामी तु मन्थरः ॥ ७२ ॥**

**मेति** ॥ मन्दं गच्छति तच्छीलः। प्राग्वत् (३।२।७८) ॥ (१) ॥*॥ मन्थति पादौ। 'मथि हिंसासंक्लेशनयोः' (भ्वा० प० से०)। बाहुलकादरन्। मन्थं राति। 'आतोऽनुप-' (३।२।३) इति कः। '**मन्थरः** कोशफलयोर्बाधमन्थानयोः पुमान्। कुसुम्भ्यां न द्वयोर्मन्दे पृथौ वक्रेऽभिधेयवत्' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**शनैर्गमनशीलस्य**' ॥

**जङ्घालोऽतिजवस्तुल्यौ**

**जेति** ॥ अतिशयिता जङ्घास्य। सिध्मादित्वात् (५।२।९७) लच् ॥*॥ पिच्छादित्वात् (५।२।१००) इलचि जङ्घिलोऽपि। 'प्रज्ञालप्रज्ञिलौ तुल्यौ जङ्घाल**जङ्घिलादयः**' इति वाचस्पतिः ॥ (१) ॥*॥ अतिशयितो जवो वेगो यस्य ॥ (२) ॥*॥ द्वे '**अतिवेगवतः**' ॥

**जङ्घाकरिकजाङ्घिकौ।**

**जेति** ॥ जङ्घासाध्यत्वादुपचाराद्गतिर्जङ्घा। सैव करो राज-देयो भागः, आकरः श्रेष्ठो वा। जङ्घाकरोऽस्यास्ति। ठन् (५।२।११५) जङ्घैव करी हस्ती यस्य, इति वा ॥ (१) ॥*॥ जङ्घाभ्यां जीवति। 'वेतनादिभ्यो जीवति' (४।४।१२) इति ठक् ॥ (२) ॥*॥ द्वे '**जङ्घाजीविनः**' ॥

**तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥ ७३ ॥**

**तेति** ॥ तरो वेगोऽस्यास्ति। 'अस्मायामेधा-' (५।२।१२१) इति विनिः। '**तरस्वी** शूरवेगिनोः' (इति मेदिनी) ॥ (१) ॥*॥ त्वरते। 'ञित्वरा संभ्रमे' (भ्वा० आ० से०)। 'ञीतः क्तः' (३।२।१८७)। त्वरा संजातास्य इति वा। इतच् (५।२।३६)। '**त्वरितं** वेगतद्वतोः' (इति हैमः) ॥ (२) ॥*॥ अतिशयितो वेगोऽस्य। इनिः (५।२।११५) ॥ (३) ॥*॥ प्रजवति 'जुः' सौत्रो वेगे गतौ च। 'प्रजोरिनिः' (३।२।१५६) ॥ (४) ॥*॥ 'जुचङ्क्रम्य-' (३।२।१५०) इति युच्। '**जवनं** तु स्यदे वेगिहये ना वेगिनि त्रिषु' (इति मेदिनी) ॥ (५) ॥*॥ अच् (३।१।१३४) '(**जवो** वेगवति त्रिषु)। पुंलिङ्गस्तु भवेद्वेगे चौण्ड्रपुष्पे **जवा** मता' (इति मेदिनी) ॥ (६) ॥*॥ षड् '**वेगवन्मात्रस्य**' ॥

**जय्यो यः शक्यते जेतुम्**

**जेति** ॥ जेतुं शक्यः। 'जि जये, अभिभवे वा' (भ्वा० प० अ०)। 'शकि लिङ् च' (३।३।१७२) इति शक्तौ 'अचो यत्' (३।१।९७)। 'क्षय्यजय्यौ शक्यार्थे' (६।१।८१) ॥ (१) ॥*॥ एकम् '**जेतुं शक्यस्य**' ॥

**जेयो जेतव्यमात्रके।**

**जयिति** ॥ शक्यार्थादन्यत्र 'अर्हे कृत्यतृचश्च' (३।३।१६९) इति योग्यतायाम् 'अचो यत्' (३।१।९७) ॥ (१) ॥*॥ एकं '**जेतुं योग्यस्य**' ॥

**जैत्रस्तु जेता**

**जायिति** ॥ जयनशीलः । 'तृन्' (३।२।१३५) । प्रज्ञाद्यण् (५।४।३८) ॥ (१) ॥*॥ (२) ॥*॥ द्वे **'जयवतः'** ॥

**यो गच्छत्यलं विद्विषतः प्रति ॥ ७४ ॥**
**सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि ॥**

**य इति** ॥ अमित्रस्याभिमुखम् । 'लक्षणेनाभिप्रती' (२।१।१४) इत्यव्ययीभावः । अभ्यमित्रमलंगामी । 'अभ्यमित्राच्छ च' (५।२।१७) चाद् यत्खौ ॥ (१) ॥*॥ (२) ॥*॥ (३) ॥*॥ त्रीणि **'सामर्थ्येन शत्रूणां संमुखं गच्छतः'** ॥

**ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जातिशयान्वितः ॥७५॥**

**ऊर्जेति** ॥ **'ऊर्जस्तु** कार्तिकोत्साहबलेषु प्राणनेऽपि च' (इति मेदिनी) । अतिशयित ऊर्जोऽस्यास्ति । 'ज्योत्स्नातमिस्रा–' (५।२।११४) इति वलज्विनी । ऊर्जशब्दोऽदन्तः सान्तश्च । आद्ये सगपि निपात्यः । मुकुटस्तु 'ऊर्जा' शब्दमाबन्तं पठित्वा 'ह्रस्वत्वं च' इत्याह । तन्न । उक्तमेदिनीकोशविरोधात् ॥ (१) ॥*॥ (२) ॥*॥ ऊर्जस्यातिशयः । ऊर्जातिशयेनान्वितः ॥ (३) ॥*॥ 'ऊर्ज बलप्राणनयोः' ( चु० प० से०) । भावे घञ् (३।३।१८) । 'गुरोश्च–' (३।३।१०२) । इत्यप्रत्यये टाप्याबन्तोऽपि संभवति । परं तु निपातने स न ग्राह्यः । ह्रस्वस्यापि निपातनीयत्वेन गौरवप्रसङ्गात् । वृत्तिकारस्त्वसुन्नन्तं मन्यते । तत्तु न सम्यक् । 'अस्माया–' (५।२।१२१) इति सिद्धत्वेन निपातनस्य वैयर्थ्यप्रसङ्गात् ॥*॥ त्रीणि **'बलातिशयवतः'** ॥

**स्यादुरस्वानुरसिलः**

**स्येति** ॥ प्रशस्तमतिशयितं वा उरो यस्य । विशालत्वात् । मतुप् (५।२।९४) । 'मादुपधाया–' (८।२।९) इति वः ।—'झयः' (८।२।१०) इति वत्वम्—इति तु मुकुटस्य प्रमादः । सस्य झयत्वाभावात् ॥ (१) ॥*॥ पिच्छादित्वात् (५।२।१००) इलच् ॥ (२) ॥*॥–उरसा बलं लक्ष्यते—इति स्वामी ॥*॥ द्वे **'विपुलोरसः'** ॥

**रथिनो रथिको रथी ।**

**रेति** ॥ रथोऽस्यास्ति । 'मेधारथाभ्यामिरन्निनचौ' । स्वामी तु—'मेधारथाभ्यामिरन्निरचौ' (वा० ५।२।१०९) इति पठित्वा **'रथिरः'** इति व्याख्याय–'रथिनः' इत्यपपाठः—इत्याह ।– रथस्येनः प्रभुः । शकन्ध्वादिः (वा० ६।१।९४)—इत्यन्ये ॥ (१) ॥*॥ 'अत इनिठनौ' (५।२।११५) ॥ (२) ॥*॥ (३) ॥*॥ त्रीणि **'रथस्वामिनः'** ॥

**कामंगाम्यनुकामीनः**

**केति** ॥ कामं यथेच्छं गमनशीलः । 'कामम्' इत्यव्ययम् । 'सुपि' (३।२।७८) इति णिनिः ॥ (१) ॥*॥ कामस्य सदृशम् । यथार्थेऽव्ययीभावः (२।१।६) । अनुकामं गामी 'अवारपार–' (५।२।११) इति खः ॥ (२) ॥*॥ द्वे **'यथेष्टं गमनशीलस्य'** ॥

**ह्यत्यन्तीनस्तथा भृशम् ॥ ७६ ॥**

**ह्येति** ॥ अन्तस्यात्ययः । अत्ययेऽव्ययीभावः (२।१।६) । अत्यन्तं गामी । 'अवार–' (५।२।११) इति खः ॥ (१) ॥*॥ 'भृशं गामी' इत्यन्वयः ॥*॥ एकम् **'अतिगमनशीलस्य'** ॥

**शूरो वीरश्च विक्रान्तः**

**श्विति** ॥ शूरयति । 'शूर, वीर, विक्रान्तौ' (चु० उ० से०) अच् (३।१।१३४) । **'शूरः** स्याद्यादवे भटे' ( इति मेदिनी) ॥ (१) ॥*॥ वीरयति । **'वीरो** रसविशेषे स्यादुत्तरे सुभटे त्रिषु । स्त्री सुराक्षीरकाकोलीतामलक्येलवालुके । पतिपुत्रवतीरम्भाविदारीदुग्धिकासु च । मल्यूक्षीरविदार्योः क्लीबं शृङ्ग्यां नतेऽपि च' इति (पवर्गतृतीयादौ मेदिनी) ॥ (२)॥*॥ विक्रामति स्म । 'क्रमु पादविक्षेपे' (भ्वा० प० से०) । 'गत्यर्था–' (३।४।७२) । इति क्तः ॥ (३) ॥*॥ त्रीणि **'शूरस्य'** ॥

**जेता जिष्णुश्च जित्वरः ।**

**जयिति** ॥ जयनशीलः । 'तृन्' (३।२।१३५) ॥ (१) ॥*॥ 'ग्लाजिस्थश्च ग्स्नुः' (३।२।१३९) । **'जिष्णुर्ना** वासवेऽर्जुने । जित्वरे वाच्यवत्' (इति मेदिनी) ॥ (२) ॥*॥ 'इण्नशजि–' (३।२।१६३) इति क्वरप् ॥ (३) ॥*॥ त्रीणि **'जयशीलस्य'** ॥

**सांयुगीनो रणे साधुः**

**सामिति** ॥ संयुगे रणे साधुः । 'प्रतिजनादिभ्यः खञ्' (४।४।९९) ॥ (१) ॥*॥ एकं **'युद्धकुशलस्य'** ॥

**शस्त्राजीवादयस्त्रिषु ॥ ७७ ॥**

**शेति** ॥ शस्त्राजीवादयः सांयुगीनान्ताः ॥

**ध्वजिनी वाहिनी सेना पृतनानीकिनी चमूः ।**
**वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥७८॥**

**ध्वेति** ॥ ध्वजाः सन्त्यस्याम् । इनिः (५।२।११५) ॥ (१) ॥*॥ वाहाः सन्त्यस्याम् ॥ (२) ॥*॥ सिनोति । 'षिञ् बन्धने' (स्वा० उ० अ०) । 'कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्' (उ० ३।१०) इति नः । सह इनेन वा ॥ (३) ॥*॥ प्रियते । 'पृङ् व्यायामे' ( तु० आ० अ० ) । बाहुलकात्तनन् । गुणाभावश्च । **'पृतना** तु स्त्रियां सेनामात्रसेनाविशेषयोः' (इति मेदिनी) ॥ (४) ॥*॥ अनीकं रणोऽस्ति प्रयोजनत्वेन यस्याः । इनिः (५।२।११५) । **'अनीकिनी** स्त्रियां सेनामात्रसेनाविशेषयोः' ( इति मेदिनी ) ॥ (५) ॥*॥ चमति शत्रून् । 'कृषिचमितनि–' (उ० १।८०) इत्यूः ।—'चमित-

१—स्वामिना तु भाष्याङ्गीकृतमेवोक्तम् । मुकुटोऽपि प्राथम्येन 'रथिरः' इत्येवोक्तवान् । इनज्घटितवार्तिकं तु भाष्ये नोपलभ्यते ॥

मिवधिभ्य ऊः'–इति मुकुटः । तन्न । तादृशसूत्राभावात् । '**चमूः** सेनाविशेषे च सेनामात्रे च योषिति' (इति मेदिनी) ॥ (६) ॥*॥ वरूथाः सन्त्यस्याम् । इनिः ( ५।२।११५ ) (७) ॥*॥ बलति । 'बल प्राणने' (भ्वा० प० से०)। अच् (३।१।१३४)। यद्वा वलते । 'वल संवरणे, संचलने च' (भ्वा० आ० से०) ॥ (८) ॥*॥ सेनैव । चतुर्वर्णादित्वात् ( वा० ५।१।१२४ ) ष्यञ् ॥ (९) ॥*॥ क्रियतेऽनेन । 'घञर्थे कः' (वा० ३।३५८) । 'के कृञादीनाम्' (वा० ६। १।१२) इति द्वित्वम् ॥ (१०) ॥*॥ अनित्यनेन । 'अन प्राणने' ( अ० प० से । ) । 'अनिहृषिभ्यां किच्च' उ० ४। १७) इतीकन् । '**अनीको**ऽस्त्री रणे सैन्ये' (इति मेदिनी) ॥ (११) ॥*॥ एकादश '**सेनायाः**' ॥

**व्यूहस्तु बलविन्यासः**

**व्यिवति** ॥ व्यूह्यते । 'ऊह वितर्के' (भ्वा० आ० से०) । घञ् (३।३।१८) । '**व्यूहः** स्याद्बलविन्यासे निर्माणे वृन्दतर्कयोः' (इति मेदिनी) ॥ (१) ॥*॥ बलस्य सेनाया विन्यासो विभज्य स्थापनम् ॥ (२) ॥*॥ द्वे '**व्यूहस्य**' ॥

**भेदा दण्डादयो युधि ।**

**भयिति** ॥ भेदा विशेषाः । यदाह कामन्दकिः–'तिर्यग्वृत्तिस्तु दण्डः स्याद्भोगोऽन्वावृत्तिरेव च । मण्डलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः' इति ॥ दण्डवदवस्थानं **दण्डः** । अन्योन्यानुगतावृति**र्भोगः** । सर्पशरीरवदवस्था **मण्डलः** । गजादीनां विजातीयैरमिश्रितानां स्थानम**संहतः** । शकट–मकर–पताका–सर्वतोभद्र–दुर्जयादयोऽपि ॥

**प्रत्यासारो व्यूहपार्ष्णिः**

**प्रेति** ॥ प्रतीपमासारयति भग्नान् । 'सृ गतौ' (भ्वा० प० अ०) । ण्यन्तः । अच् ॥ (१) ॥*॥ व्यूहस्य पार्ष्णिः पृष्ठभागः । '**पार्ष्णिः** स्यादुन्मदस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ द्वे '**व्यूहस्य पृष्ठभागस्य**' ॥

**सैन्यपृष्ठे प्रतिग्रहः ॥ ७९ ॥**

**सैन्येति** ॥ सैन्यस्य पृष्ठे धनुःशतद्वयान्तरे स्थितं सैन्यम् । प्रतिगृह्यतेऽनेन 'ग्रहवृदृ–' (३।३।५८) इत्यप् । '**प्रतिग्रहः** स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे । योग्येभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे' (इति मेदिनी) ॥ (१) ॥*॥ एकं '**सैन्यस्य पश्चाद्भिन्नसंघातस्यानीकस्य**' ॥

**एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ।**

**एकेति** ॥ एक इभो यस्याम् । एको रथो यस्याम् । त्रयोऽश्वा यस्याम् । पञ्च पदातयो यस्याम् । पद्यते । 'पद गतौ' (दि० आ० अ०)। पत्यते वा । 'पतॄ गतौ' (भ्वा० प० अ०) । 'स्त्रियां क्तिन्' (३।३।९४) । क्तिच् (३।३। १७४) वा । '**पत्तिर्ना** पदगे, स्त्रियाम् । गतावेकरथैकेभत्र्यश्वपञ्चपदातिके' (इति मेदिनी) । भरतः—'एको रथो गजश्चैको नराः पञ्च पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते' ॥ (१) ॥*॥ एकं '**सेनाविशेषस्य**' ॥

**पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥८०॥**

**सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।**

**अनीकिनी**

**पेति** ॥ तिस्रः पत्तयः सेनामुखम् । त्रिभिः सेनामुखैर्गुल्मः । त्रयो गुल्मा गणः । त्रयो गणा वाहिनी । तिस्रो वाहिन्यः पृतना । तिस्रः पृतनाश्चमूः । तिस्रश्चम्बोऽनीकिनी ॥*॥ सेनाया मुखमुपक्रमः ॥ (१) ॥*॥ गुडति, गुड्यते, वा । 'गुड रक्षायाम्' (तु० प० से०)। बाहुलकान्मः । डलयोरेकत्वम् । '**गुल्मः** सेनाघट्टभिदोः सेनारक्षणरुग्भिदोः । स्तम्बेऽस्त्रियामामलक्येलावली वस्त्रवेश्मसु' (इति मेदिनी) ॥ (१) ॥*॥ गण्यते । गणयति वा । 'गण संख्याने' (चु० उ० से०) । घञ् (३।३।१९) । अच् (३।१।१३४) वा । '**गणः** प्रथमसंख्यौघे चण्डीसैन्यप्रभेदयोः' (इति मेदिनी) ॥ (१)॥*॥ एकैकं '**सेनाविशेषस्य**' ॥

**दशानीकिन्योऽक्षौहिणी**

**देति** ॥ दशानीकिन्योऽक्षोहिणी । ऊहः समूहोऽस्त्यस्याः । इनिः (५।२।११५) । अक्षाणामूहिनी । 'पूर्वपदात्–' (८।४ ३) इति णत्वम् । 'अक्षादूहिन्याम्' (वा० ६।१।८९) इति वृद्धिः । यत्तु—सर्वेषामक्षाणामिन्द्रियाणामूहः सविकल्पकं ज्ञानमक्षोहः । सोऽस्त्यस्याः इनिः । (५।२।११५) 'अकृतव्यूहाः–' इति परिभाषया गुणं बाधित्वा वृद्धिः (वा० ६।१। ८९)—इति मुकुटेनोक्तम् । तन्न । ऊहिनीशब्देन विग्रहे वृद्धेश्चरितार्थत्वात् । 'अपवादोऽप्यन्यत्र चरितार्थश्चेत्तदाऽन्तरङ्गेण बाध्यते' । तथा 'सर्व इह' इत्यत्रापवादोऽपि सवर्णदीर्घो गुणेन बाध्यते । 'अक्षौहिण्यामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः । संख्या युक्ता सहस्राणि गजानामेकविंशतिः । एवमेव रथानां तु संख्यानं कीर्तितं बुधैः । पञ्चषष्टिः सहस्राणि षट्

**१—तत्तत्सेनाविशेषे गजादीनां निर्णयाय चक्रमिदम् ॥**

| सेना | पत्तिः | सेना-मुखम् | गुल्मः | गणः | वाहिनी | पृतना | चमूः | अनीकिनी | अक्षौहिणी |
|---|---|---|---|---|---|---|---|---|---|
| गजाः, रथाः ………… | १ | ३ | ९ | २७ | ८१ | २४३ | ७२९ | २१८७ | २१८७० |
| अश्वाः……………… | ३ | ९ | २७ | ८१ | २४३ | ७२९ | २१८७ | ६५६१ | ६५६१० |
| पदातयः……………… | ५ | १५ | ४५ | १३५ | ४०५ | १२२५ | ३६४५ | १०९३५ | १०९३५० |

शतानि दशैव तु । संख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरंगमैः । नृणां शतसहस्रं तु सहस्राणि नवैव तु । शतानि त्रीणि चान्यानि पञ्चाशच्च पदातयः' ॥ (१) ॥*॥ एकम् **'अक्षौहिण्याः'** ॥

**अथ संपदि ॥ ८१ ॥**

**संपत्तिः श्रीश्च लक्ष्मीश्च**

**अथेति** ॥ संपदनम् अनया वा । 'पद गतौ' (दि० आ० अ०)। संपदादित्वात् (वा० ३।३।१०८) क्विप् ॥ (१) ॥*॥ 'स्त्रियां क्तिन्' (३।३।९४) ।—'संपत्तिसाकल्यान्तवचनेषु' (२।१।६) इति निर्देशात् स्त्र्यधिकारेऽपि 'वासरूप–' (३।१।९४) न्यायः क्वचित्प्रवर्तते ॥ (२) ॥*॥ श्रीयते सर्वैः। 'श्रिञ् सेवायाम्' (भ्वा० उ० से०)। 'क्विब्वचि–' (उ० २-५७) इत्युणादिसूत्रेण क्विप् । **श्री**र्वेषरचना शोभा भारतीसरलद्रुमे । लक्ष्म्यां त्रिवर्गसंपत्तौ वेषोपकरणे मतौ' (इति विश्वमेदिन्यौ) ॥ (३) ॥*॥ लक्ष्यते । 'लक्ष दर्शने' (चु० प० से०)। 'लक्षेर्मुट् च' (उ० ३।१६०) इतीप्रत्ययः। **'लक्ष्मीः** श्रीशोभासंपत्प्रियंगुषु' धनोत्कर्षस्य इति हेमचन्द्रः ॥ (४) ॥*॥ चत्वारि **'धनोत्कर्षस्य'** ॥

**विपत्तौ विपदापदौ ।**

**वीति** ॥ विपदनम्। अनया वा। संपदादि क्विप् (वा० ३।३।१०८) ॥ (१) ॥*॥ क्तिन् (३।३।९४) ॥ (२) ॥*॥ एवमापत्। **आपत्तिः** ॥ (३) ॥*॥ त्रीणि **'आपदः'** ॥

**आयुधं तु प्रहरणं शस्त्रमस्त्रम्**

**आयुधमिति** ॥ आयुध्यन्तेऽनेन । 'युध संप्रहारे' (दि० आ० अ०)। 'घञर्थे कविधानम्, स्थास्नापाव्यधिहनियुध्यर्थम्' (वा० ३।३।५८) ॥ (१) ॥*॥ प्रह्रियतेऽनेन । 'करणा–' (३।३।११७) इति ल्युट् ॥ (२) ॥*॥ शस्यतेऽनेन । 'शसु हिंसायाम्' (भ्वा० प० से०)। 'दाम्नीशस–' (३।२।१८२) इति ष्ट्रन् ॥ (३) ॥*॥ अस्यते । 'असु क्षेपणे' (दि० प० से०) असति वा । 'अस दीप्तौ' (भ्वा० उ० से०) ष्ट्रन् (उ० ४।१४९) ॥ (४) ॥*॥ चत्वारि **'प्रहरणमात्रस्य'** ॥

**अथास्त्रियौ ॥ ८२ ॥**

**धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ।**
**इष्वासोऽपि**

**अथेति** ॥ धनति। 'धन शब्दे' (भ्वा०   )। 'अर्तिपृवपि–' (उ० ४।११७) इत्युसुः । **'धनुः** पियाले ना न स्त्री राशिभेदे शरासने । धनुर्धरे त्रिषु' (इति सान्तेषु मेदिनी) ॥*॥ 'भृमृशी–' (उ० १।७) इत्युप्रत्यये उदन्तोऽपि । (**'धनुः** पुमान् पियालद्रौ राशिभेदे शरासने' इति नान्तेषु मेदिनी) ॥*॥ ('कृषिचमितनिधनि–' (उ० १।८०) इत्यूप्रत्ययान्तः) स्त्रियामपि । (**स्थावरं** तु धनुर्गुणी)। **'शराचापो धनूः** स्त्री स्यात् (**तृणता त्रिणता**पि च)' इति त्रिकाण्डशेषात् ॥ (१) ॥*॥ चपस्य वंशभेदस्य विकारः । 'अवयवे च प्राण्यौषधि–' (४।३।१३५) इत्यण् ॥ (२) ॥*॥ धन्वति । 'धवि गतौ' (भ्वा० प० से०) 'कनिन् युवृषि–' (उ० १।१५६) इति कनिन्। **'धन्वा** तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च' (इति मेदिनी) ॥ (३) ॥*॥ शरा अस्यन्तेऽनेन । 'असु क्षेपणे' (दि० प० अ०) । 'करणा–' (३।३।११७) ॥ (४) ॥*॥ कोटति । 'कुट अनृतभाषणे' (   ) । बाहुलकाद्दण्डन् । पृषोदरादिः (६।३।१०९)। कौति। विच् (३।२।७५) कौर्दण्डो वंशोऽस्य वा। **'कोदण्डं** कार्मुके देशभेदभूतलयोरपि' इति हेमचन्द्रः ॥ (५) ॥*॥ कर्मणे प्रभवति। 'कर्मण उकञ्' (५।१।१०३)। 'अथ **कार्मुकः**। वंशे **कार्मुक**मिष्वासे कर्मठे' इति हैमः ॥ (६) ॥*॥ इषवो बाणा अस्यन्तेऽनेन। 'हलश्च' (३।३।१२१) इति घञ्। **'इष्वासो** धन्वधन्विनोः' इति हैमः ॥ (७) ॥*॥ सप्त **'धनुषः'** ॥

**अथ कर्णस्य कालपृष्ठं शरासनम् ॥ ८३ ॥**

**अथेति** ॥ कालो यम इव पृष्ठमस्य । कालवर्णं वा पृष्ठमस्य । **'कालपृष्ठं** कर्णचापे पुंसि कङ्कविहंगमे' (इति मेदिनी) ॥*॥ **'कालपृष्ठं** तु कोदण्डमात्रके कर्णधन्वनि । **कालपृष्ठो** मृगभेदे कङ्के' इति हैमः ॥ (१) ॥*॥ एकं **'कर्णधनुषः'** ॥

**कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ ।**

**केति** ॥ कपिर्हनुमान् ध्वजो ध्वजे वा यस्य ॥*॥ गाण्डिर्ग्रन्थिरस्यास्ति। 'कृदिकारात्' (ग० ४।१।४५) इति वा ङीष्। 'गाण्ड्यजगात्–' (५।२।११०) इति वः । अत्र संहितया ह्रस्वदीर्घयोर्ग्रहः । 'जिष्णोर्धनुषि कोदण्डे **गाण्डीवं गाण्डिवं** तथा' इति शाश्वतः । कोदण्डे धनुर्मात्रेऽपि ॥ (१) ॥*॥ (२) ॥*॥ द्वे **'अर्जुनधनुषः'** ॥

**कोटिरस्याटनी**

**कवितिति** ॥ कोटयते । अनया वा । 'कुट प्रतापने' चुरादिः। 'अच इः' (उ० ४।१३९)। **'कोटिः** स्त्रीधनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः' (इति मेदिनी) ॥ (१) ॥*॥ अटति गुणोऽत्र। 'अट गतौ' (भ्वा० प० से०)। बाहुलकादनिः। वा ङीष् (ग० ४।१।४५) ॥ (२) ॥*॥ द्वे **'धनुषोऽन्त्यस्य'** ॥

**गोधे तले ज्याघातवारणे ॥ ८४ ॥**

**गवितिति** ॥ गुध्येते बाहुभ्याम्। 'गुध परिवेष्टने' (दि० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। 'गोधा तलनिहाकयोः' (इति मेदिनी) ॥ (१) ॥*॥ तलति । 'तल प्रतिष्ठायाम्' (भ्वा० प० से०) । अच् (३।१।१३४)। **'तलश्च**पेटे तालद्रौ **तलं** ज्याघातवारणे । त्सरौ स्वभावाधरयोस्तन्त्रीघाते च सन्यतः । **तलं** स्वरूपेऽनूर्ध्वेऽस्त्री क्लीबं

ज्याघातवारणे' ( इति मेदिनी ) ॥ (२) ॥*॥ व्यक्तिद्वयाद्वित्वम् ॥ द्वे **'ज्याया गुणस्याघातस्य वारणे'** ॥

**लस्तकस्तु धनुर्मध्यम्**

**लेति** ॥ लसते स्म । 'लस श्लेषणक्रीडनयोः' ( भ्वा० प० से० )। कर्मणि क्तः ( ३।२।१०२ )। आगमशास्त्रस्यानित्यत्वान्नेट् । स्वार्थे कन् ( ५।४।३८ ) ॥ (१) ॥*॥ धनुषो मध्यम् ॥ (२) ॥*॥ द्वे **'धनुर्मध्यभागस्य'** ॥

**मौर्वी ज्या शिञ्जिनी गुणः ।**

**माविति** ॥ मूर्वाया विकारः । 'अवयवे च प्राण्योषधि–' ( ४।३।१३५ ) इत्यण् ॥ (१) ॥*॥ जिनाति । 'ज्या वयोहानौ' ( क्र्या० प० अ० ) । 'अन्येभ्योऽपि–' ( वा० ३।२।१०१ ) इति डः ॥ (२) ॥*॥ शिङ्क्ते । 'शिजि अव्यक्ते शब्दे' ( अ० आ० से० ) । आवश्यके णिनिः ( ३।३।१७० ) ॥ (३) ॥*॥ गुण्यते । 'गुण आमन्त्रणे' ( चु० उ० से० ) । घञ् ( ३।३।१९ )। अच् वा। (३।३।५६)। **'गुणो** ज्यासूत्रतन्तुषु । रज्जौ सत्त्वादौ संध्यादौ शौर्यादौ भीम इन्द्रिये । रूपादावप्रधाने च दोषान्यस्मिन् विशेषणे' इति हैमः ॥ (४) ॥*॥ चत्वारि **'धनुर्गुणस्य'** ॥

**स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ॥८५॥**

**स्येति** ॥ प्रत्यालेहनम् । 'लिह आस्वादने' ( अ० उ० अ० ) । 'नपुंसके भावे क्तः' ( ३।३।११३ ) । **'प्रत्यालीढं** तु चरणन्यासभेदेऽशिते त्रिषु' ( इति मेदिनी ) ॥ (१) ॥*॥ एवमालीढम् । **'आलीढं** पादन्यासे शिते त्रिषु' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ तत्र 'ऊर्ध्वस्थस्य वामपादप्रसारे दक्षिणपादसंकोचे आद्यम् । विपर्ययेऽन्त्यम् ॥*॥ आदिना **समपद** (३) **विशाख** (४) **मण्डल** (५) ग्रहः । वितस्त्यन्तरेण स्थिते पादद्वये विशाखः रभसस्त्वाह—'वैष्णवं समपादं च वैशाखं मण्डलं तथा । प्रत्यालीढमथालीढं स्थानान्येतानि षड् नृणाम्' इति ॥*॥ पञ्च **'धन्विनां स्थानभेदानाम्'** ॥

**लक्षं लक्ष्यं शरव्यं च**

**लेति** ॥ लक्ष्यते । 'लक्ष आलोचने' ( चु० आ० से० ) । घञ् ( ३।३।१९ ) । **'लक्षं** व्याजशरव्ययोः ( संख्यायामपि )' ( इति हैमः ) ॥ (१) ॥*॥ 'अचो यत्' ( ३।१।९७ ) ॥ (२) ॥*॥ शरवे हिंसायै हितम् । 'उगवादिभ्यो यत्' ( ५।१।२ ) यद्वा शरान् व्ययति । 'व्येञ् संवरणे' ( भ्वा० उ० अ० ) 'संप्रसारणिभ्यो डः' ( वा० ३।२।३ )।—'आतः–' ( ३।२।३ ) इति कः । संप्रसारणम् ( ६।१।१५ ) । यणि ( ६।४।८२ ) च—इति मुकुटः ॥ (३) ॥*॥ त्रीणि **'वेधस्य' 'वेझा-(निसाणा)'** इति ख्यातस्य ॥

[१]—भरत इत्यपि पाठान्तरम् ।

**शराभ्यास उपासनम् ।**

**शेति** ॥ शरमोक्षस्याभ्यासः ॥ (१) ॥*॥ उपपूर्वः 'असु क्षेपणे' ( दि० प० से० ) । 'आस उपवेशने' ( अ० आ० से० ) वा । भावे ल्युट् ( ३।३।११५ ) **'उपासन**मासने । शुश्रूषायां शराभ्यासेऽपि' इति हैमः ॥ (२) ॥*॥ द्वे **'शरक्षेपाभ्यासस्य'** ॥

**पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ ८६ ॥**

**कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः ।**

**प्रिति** ॥ पर्षति । 'पृषु सेचने' ( भ्वा० प० से० ) 'लटः शतृ' ( ३।२।१२४ ) संज्ञापूर्वकत्वान्न गुणः । यद्वा 'वर्तमाने पृषद्बृहन्महत्–' ( उ० २।८४ ) इति साधुः । स्वार्थे कन् ( ज्ञापि० ५।४।५ ) ॥ (१) ॥*॥ वणनम् । 'वण शब्दे' ( भ्वा० प० से० )। घञ् ( ३।३।१८ )। बाणः शब्दोऽस्त्यस्य। अर्शआद्यच् ( ५।२।१२७ ) । 'बाणः स्याद्गोस्तने दैत्यभेदे केवलकाण्डयोः । बाणा तु बाणमूले स्त्री नीलझिण्ट्यां पुनर्द्वयोः' ( इति मेदिनी ) ॥ (२) ॥*॥ विशिष्टा शिखाग्रमस्य । **'विशिखा** खनित्रिकायां रथ्यायां **विशिखः** शरे' ( इति हैमः ) ॥ (३) ॥*॥ जिह्मस्याभावः । अजिह्ममृजु गच्छति । 'अन्येष्वपि' ( वा० ३।२।४८ ) इति डः ॥ (४) ॥*॥ खं गच्छति । 'अन्येष्वपि–' ( वा० ३।२।४८ ) इति डः । **'खगो**ऽर्कग्रहपक्षिषु । शरे देवेऽपि' इति हैमः ॥ (५) ॥*॥ आशु गच्छति । 'अन्येष्वपि' ( वा० ३।२।४८ ) इति डः । **'आशुगो**ऽर्के शरे वायौ' इति हेमचन्द्रः ॥ (६) ॥*॥ कल्यते । 'कल क्षेपे' ( चु० प० से० ) । कृकदिकलिकडिभ्योऽम्बच्' ( उ० ४।८२ ) । **'कलम्बी** शाकभेदेऽपि कदम्बशरयोः पुमान्' ( इति मेदिनी ) ॥ (७) ॥*॥ मार्गयति । 'मार्ग अन्वेषणे' ( चु० उ० से० ) । ल्युः ( ३।१।१३४ ) । मार्ग्यते वा । 'कृत्यल्युटः' ( ३।३।११३ ) इति ल्युट् । **'मार्गणं** याचनेऽन्वेषे **मार्गण**स्तु शरेऽर्थिनि' इति हैमः ॥ (८) ॥*॥ शृणाति । अनेन वा । 'शॄ हिंसायाम्' ( क्र्या० प० से० ) । 'ऋदोरप्' ( ३।३।५७ ) वा । **'शर**स्तु तेजने बाणे दध्यग्रे ना **शरं** जले' इति विश्वमेदिन्यौ ॥*॥ दन्त्यादिपाठे तु सरति । 'सृ गतौ' ( भ्वा० प० से० ) । अच् ( ३।१।१३४ ) । '[१]( बाणः स्याद**स्त्रकण्टकः । स्थूलक्ष्वेडो विपाट**श्च ) **चित्रपुङ्खः** शरः **सरः । ( पत्रवाहो विकर्षः** )' इति त्रिकाण्डशेषात् ॥ (९) ॥*॥ पत्राणि पक्षाः सन्त्यस्य । इनिः ( ५।२।११५ ) । **'पत्री** काण्डे खगे द्रुमे ।

१—पृषन् असृजा सिञ्चन् कषति हिनस्ति । 'अन्येभ्योऽपि' (वा० ३।२।१०२) इति डः—इति मुकुटः ॥ २—सिद्धान्तकौमुद्यादिलिखितकल्यघटितपाठे तु कीर्यते । 'कॄ विक्षेपे' रलयोरेकत्वम् ॥

रथेऽद्रौ रथिके श्येने' इति हेमचन्द्रः ॥ (१०) ॥*॥ रोप्यते अनेन वा । 'रुपु विमोहने' ( दि० प० से० ) ण्यन्तः । घञ् (३।३।१९)। यद्वा रुप्यतेऽनेन । 'हलश्च' (३।३।१२१) इति घञ् । '**रोपो** रोपणबाणयोः' इति विश्वः ॥ (११) ॥*॥ ईष्यतेऽनेन । 'ईष गतिहिंसादर्शनेषु' ( भ्वा० आ० से० ) । 'ईषेः किच्च' (उ० ११३) इत्युः, आदेरिच्च ॥ (१२) ॥*॥ द्वादश '**बाणस्य**' ॥

**प्रक्ष्वेडनास्तु नाराचाः**

**प्रेति** ॥ प्रकर्षेण क्ष्वेदन्ते । 'ञिक्ष्विदा अव्यक्ते शब्दे' ( भ्वा० आ० से० ) । ल्युः (३।१।१३४) । पृषोदरादिः (६। ३।१०९) ॥ (१) ॥*॥ नराना‌चामन्ति । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । प्रज्ञाद्यण् (५।४।३८) । यद्वा नराणां समूहो नारम् । नारमाचामति । डः (वा० ३।२। १०१) ॥ (२) ॥*॥ द्वे '**सर्वलोहमयस्य शरस्य**' ॥

**पक्षो वाजः**

**पेति** ॥ पक्षति । पक्षतेऽनेन वा । 'पक्ष परिग्रहे' ( भ्वा० प० से० ) । अच् (३।१।१३४) । घञ् (३।३।१९) वा ॥ (१) ॥*॥ वजत्यनेन । 'वज गतौ' ( भ्वा० प० से० ) । 'हलश्च' (३।३।१२१) । निष्ठायां सेट्त्वान्न कुत्वम् । वाजयति वा ण्यन्तः । पचाद्यच् (३।१।१३४) ।– न्यङ्क्वादित्वात् (७।३।५३) अकुत्वम्—इति मुकुटश्चिन्त्यः । ('**वाजो** निस्वनपक्षयोः । वेगे पुमानथ क्लीबे घृतयज्ञान्नवारिषु' इति मेदिनी) ॥ (२) ॥*॥ द्वे '**शरपक्षस्य**' ॥

**त्रिषूत्तरे ॥ ८७ ॥**

**त्रीति** ॥ वक्ष्यमाणा लिप्तकान्ताः ॥

**निरस्तः प्रहिते बाणे**

**नीति** ॥ निरस्यते स्म । 'असु क्षेपणे' (दि० प० से०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ एकं '**प्रक्षिप्तबाणस्य**' ॥

**विषाक्ते दिग्धलिप्तकौ ।**

**वीति** ॥ दिह्यते स्म । 'दिह उपचये' (अ० उ० अ०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ लिप्यते स्म । 'लिप उपदेहे' (तु० उ० अ०) । क्तः (३।२।१०२) । स्वार्थे कन् (ज्ञापि० ५। ४।५) ॥ (२) ॥*॥ द्वे '**विषसंबद्धबाणस्य**' ॥

**तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ॥ ८८ ॥**

**तूण्याम्**

**त्विति** ॥ तूणयति । 'तूण संकोचे' ( चु० आ० से० ) । पचाद्यच् (३।१।१३४) । तूण्यते शरैः । घञ् (३।३।१९) वा ॥*॥ तूणा च । 'स्त्रियां **तूणे**षुधी उपासङ्गः' इति रत्नकोषः ॥ (१) ॥*॥ गौरादित्वात् (४।१।४१) ङीषपि । ('**तूणी** नील्यां निषङ्गे वा ना' (इति मेदिनी) । '**तूणी** तु नील्यां **तूणौ** निषङ्गके' इति विश्वः) ॥ (६) ॥*॥ एवं निषङ्गः । 'उपसर्गात्–' (८।३।६५) इति षत्वम् ॥ (४) ॥*॥ उपासज्यन्तेऽत्र शराः । 'षञ्ज सङ्गे' ( भ्वा० प० अ० ) 'हलश्च' (३।३।१२१) इति घञ् ॥ (२) ॥*॥ तूणीं तूणत्वमीर्ते । 'ईर गतौ' ( अ० आ० से० ) । 'कर्मण्यण्' (३।२।१) । यद्वा तूणीं शरैः संकोचं राति । 'रा दाने आदाने च' (अ० प० अ०) । 'आतोऽनुप'– (३।२।३) इति कः ॥ (३) ॥*॥ इषवो धीयन्तेऽत्र । 'डुधाञ्' (जु० उ० अ०) । कर्मण्यधिकरणे च (३।३।९३) इति किः ॥ (५) ॥*॥ षट् '**शराधारस्य**' ॥

**खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः ।**
**कौक्षेयको मण्डलाग्रः करपालः कृपाणवत् ॥ ८९ ॥**

**खेति** ॥ खण्डति परम् । खण्ड्यतेऽनेन वा । 'खडि भेदने' 'छापूखडिभ्यः कित्' (उ० १२४) इति गन् । आगमशास्त्रस्यानित्यत्वान्न नुम् । '**खड्गो** गण्डकशृङ्गासिबुद्धभेदेषु गण्डके' (इति विश्वमेदिन्यौ) ॥ (१) ॥*॥ निर्गतस्त्रिंशतोऽङ्गुलिभ्यः । 'निरादयः क्रान्ता–' (वा० २।२।१८) इति समासः । 'संख्यायास्तत्पुरुषस्य' (वा० ५।४।७३) इति डच् ।—'बहुव्रीहौ संख्येये–' (५।४।७३) इति डच्—इति मुकुटश्चिन्त्यः । बहुव्रीहेरभावात् । '**निस्त्रिंशो** निर्घृणे खड्गे' इति हैमः ॥ (२) ॥*॥ चन्द्र इव हासः प्रभास्य । चन्द्रं हसति वा । द्युतिमत्त्वात् । 'हसे हसने' ( भ्वा० प० से० ) । '**चन्द्रहासो**ऽसिमात्रके । दशग्रीवकृपाणे च, कनीयसि च गुग्गुलौ' (इति हैमः) ॥ (३) ॥*॥ अस्यते । 'असु क्षेपणे' ( दि० प० से० ) । असति । 'अस दीप्तौ' ( भ्वा० उ० से० ) । 'सर्वधातुभ्य इन्' (उ० ४। ११८) ।—बाहुलकादिः—इति मुकुटश्चिन्त्यः । '**असिः** खड्गे नदीभिदि' इति हैमः ॥ (४) ॥*॥ रेषति । 'रिषु हिंसायाम्' ( भ्वा० प० से० ) । रिशति वा । 'रिश हिंसायाम् ।' (तु० प० अ) । क्तिच् (३।३।१७४) । '**रिष्टिः** खड्गे ना शुभे स्त्री (इति मेदिनी) ॥*॥ अजादिरिति स्वाम्यादिः । ऋषति । 'ऋषी गतौ' (तु०प०से०) । क्तिच् (३।३।१७४) । '**करवालमण्डलाग्रकालेयका**सिरिष्टयः । **ऋष्टिः खड्गस्तरवारिः** कौक्षेयकौ च **नन्दकः**' इति रभसः ॥ (५) ॥*॥ कुक्षौ भवः 'कलकुक्षिग्रीवाभ्यः–' (४।२।९६) इति ढकञ् ॥ (६) ॥*॥ मण्डलमग्रमस्य ॥ (७) ॥*॥ करं पालयति । 'पाल रक्षणे' (चु० प० से०) । 'कर्मण्यण्' (३।२।१) ॥*॥ 'करवालः' इति पाठान्तरम् । करं वलति । 'वल प्राणने' (भ्वा० प० से० ) । 'कर्मण्यण्' (३।२।१) । करेण वलति वा ज्वलादिणः (३।१। १४०) । यद्वा वलनम् वालः । 'वल वेष्टने' ( भ्वा० आ० से० ) । घञ् (३।३।१८) । करे वालो यस्य । करेण वल्यते वा कर्मणि घञ् (३।३।१९) ॥ (८) ॥*॥ कृपां नुदति । 'नुद

१—इदं विश्वहैममेदिनीषु तु चन्द्रहासस्यैतदर्थकत्वं न लभ्यते, इति प्रमादजातम् ॥ २—'शिलाशूलर्ष्टिमुद्गरम्' इति भट्टिश्च—इति मुकुटः । ३—'करपालकः पालकः' इति यमकम्—इति मुकुटः ॥

प्रेरणे' ( तु० उ० अ० ) । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । 'पूर्वपदात्–' (८।४।३) इति णत्वम् ॥ (९) ॥*॥ नव **'खड्गस्य'** ॥

**त्सरुः खड्गादिमुष्टौ स्यात्**

**त्सेति** ॥ त्सरति । 'त्सर छद्मगतौ' ( भ्वा० प० से० ) 'भृमृशी–' (उ० १।७) इत्युः ॥ (१) ॥*॥ आदिना कटित-लच्छुरिकादिग्रहः ॥*॥ एकम् **'खड्गाद्यायुधमुष्टीनाम्'** ॥

**मेखला तन्निबन्धनम् ।**

**मयिति** ॥ मां लक्ष्मीमीखति । मा ईखति वा । माशब्दो निषेधे । 'ईख गतौ' ( भ्वा० प० से० ) । बाहुलकात्कलच् । यद्वा मां ई लक्ष्मीं खलति । 'खल संचलने संचये च' ( भ्वा० प० से० ) । मूलविभुजादिकः (वा० ३।२।५) । अणि वृद्धिः स्यात् ।—मिखेः 'कम्बलादयश्च' इति कलप्रत्ययो गुणश्च निपात्यते—इति मुकुटश्चिन्त्यः । उज्ज्वलदत्तादिषूक्त-सूत्रादर्शनात् । **'मेखला** खड्गबन्धे स्यात्काञ्ची शैलनितम्बयोः' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'खड्गादेश्चर्मादिनिर्मितकटिबन्धनस्य'** । युद्धे हस्तात्पतनवारणाय मणिबन्धे प्रध्रियमाणस्य चर्मादेर्वा ॥

**फलकोऽस्त्री फलं चर्म**

**फेति** ॥ फलति । 'त्रिफला विशरणे' 'फल निष्पत्तौ' (भ्वा० प० से०) । 'कृञादिभ्यो वुन्–' (उ०५।३५) ॥ (१) ॥*॥ अच् (३।१।१३४) । **'फलं** हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः' (इति) ( मेदिनी ) ॥ (२) ॥*॥ चरति । चर्यते वा । अनेन वा । मनिन् (उ० ४।१४५) । **'चर्म** कृत्तौ च फलके' इति विश्वः (३) ॥*॥ त्रीणि **'चर्मणः' 'फरि'** इति ख्यातस्य ॥

**संग्राहो मुष्टिरस्य यः ॥ ९० ॥**

**समिति** ॥ संगृह्यते । 'ग्रह उपादाने' (क्र्या० उ० से०) । 'समि मुष्टौ' (३।३।३६) इति कर्मणि घञ् ॥ (१) ॥*॥ अस्य फलस्य ॥*॥ एकम् **'मुष्टेः'** ॥

**द्रुघणे मुद्गरघनौ**

**द्रिति** ॥ द्रुर्वृक्षो हन्यतेऽनेन । 'करणेऽयोविद्रुषु' (३।३।८२) इत्यप्, घनादेशश्च । 'पूर्वपदात्–' (८।४।३) इति णत्वम् । **'द्रुघणो** मुद्गरेऽपि स्याद्द्रुहिणे च परश्वधे' इति विश्वमेदिन्यौ ॥*॥ केचित्तु—क्षुभ्नादित्वात् (८।४।३९) न (णत्वम्) **'द्रुघनः'**—इत्याहुः ॥ (१) ॥*॥ गिरति । 'गॄ निगरणे' (तु० प० से० ) अच् (३।१।१३४) । मुदं गरः ॥ (२) ॥*॥ हन्यतेऽनेन । 'मूर्तौ घनः' (३।३।८१) इत्यब्घनादेशौ । **'घनः** सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे । संघे मुस्ते **घनं** मध्यनृत्यवाद्यप्रकारयोः' इति हैमः ॥ (३) ॥*॥ त्रीणि **'मुद्गरस्य' 'गुर्जा'** इति ख्यातस्य ॥

**स्यादीली करवालिका ।**

**स्येति** ॥ ईर्ते । ईर्यते वा । 'ईर गतौ' (अ० आ० से०) । 'इगुपधात् कित्' (उ० ४।१२९) इति इन् । 'कृदिकारात्' (उ० ४।१४५) इति ङीष् वा । कपिलिकादिः (वा० ८।२।१८) ईड्यते वा । 'ईड स्तुतौ' (अ०आ०से०) । डलयोरेकत्वम् ।—'इगुपधात्किः'-इति मुकुटस्त्वपाणिनीयः । 'इगुपधात् कित्' इति सूत्रपाठात् । तत्रेनोऽनुवर्तनात् ॥*॥ **('इलि'** इति) ह्रस्वादिपाठे तु 'इल गतौ क्षेपे च' । (तु० प० चु० से०) इति धातुर्बोध्यः ॥ (१) ॥*॥ करं पालयति । 'पाल रक्षणे' (चु० प० से०) । अण् (३।२।१) ङीप् (४।१।१५) कन् (ज्ञापि० ५।४।५) ॥*॥ **'कारवालिका'** इति पाठे तु करं वलते 'वल हिंसादानयोः' ( भ्वा० आ० से० ) । अण् (३।२।१) करेण वाल्यते वा । णिजन्तात् 'अच इः' (उ० ४।१३९) । कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे **'तरवार'** इति ख्यातस्य ।–**'गुप्ती'** इति ख्यातस्य—इत्यन्ये ॥

**भिन्दिपालः सृगस्तुल्यौ**

**भीति** ॥ भिन्दति । 'भिदि अवयवे' ( भ्वा० प० से० ) इन् (उ० ४।११८) । 'भिन्दिर्द्वादशतालं तु दशकुन्तोऽभिधीयते' इति भरतः । तदवच्छिन्नः कालोऽपि भिन्दिः । भिन्दिं पालयति । अण् (३।२।१) ॥ (१) ॥*॥ सरति । 'सृ गतौ' ( भ्वा० प० अ० ) । बाहुलकाद्गक् ॥ (२) ॥*॥ द्वे **'अश्मप्रक्षेपसाधनस्य' 'गोफण'** इति ख्यातस्य ।—नालिकास्त्रस्य—इत्यन्ये ॥

**परिघः परिघातनः ॥ ९१ ॥**

**पेति** ॥ परितो हन्यतेऽनेन । 'परौ घः' (३।३।८४) इति साधुः । **'परिघोऽस्त्रे** योगभेदे परिघातेऽर्गलेऽपि च' इति हैमः ॥ (१) ॥*॥ परितो घातयत्यनेन । ल्युट् (३।३।११७) ॥ (२) ॥*॥ द्वे **'लोहबद्धस्य लगुडभेदस्य'** ॥ **'लोहाङ्गी'** इति ख्यातस्य ॥

**द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ।**

**द्वेति** ॥ कुठे गतिप्रतिघाते आरो गतिरस्य । जातित्वात् (४।१।६३) ङीष् । कुटं वृक्षमृच्छति वा । 'ऋ गतौ' ( भ्वा० प० अ० ) अण् (३।२।१) ॥ (१) ॥*॥ स्वं धियति । 'धि धारणे' ( तु० प० अ० ) । क्तिच् (३।३।१७४) ॥ (२) ॥*॥ परं शृणाति । 'शॄ हिंसायाम्' ( क्र्या० प० से० ) । 'आङ्परयोः खनिशॄभ्यां डिच्च' (उ० १।३३) इति कुः ॥ (३) ॥*॥ परस्य श्वयनम् । 'टु ओ श्वि गतिवृद्ध्योः' ( भ्वा० प० से ) । 'अन्येभ्योऽपि' (वा० ३।२।१०२) इति डः । परश्वं धयति । 'अतोऽनुप–' (३।२।३) इति कः ॥*॥ **('पर्श्वधः')** अपि । यदाह–'यष्टिपर्श्वधहेतिकौ' इति—इति स्वामी ॥*॥ 'परस्वधः' इति पाठे तु परस्य स्वं दधाति । काष्ठदण्डधारकत्वात् । कुठारः स्त्री च स्वधितिः परशुश्च

**परश्वधः** । कुटाटङ्कः पर्शुः' । 'अथ छुरिका **कोशशायिका**' इति रभसः ॥ (४) ॥*॥ चत्वारि '**कुठारस्य**' ॥

**स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका॥९२॥**

**स्येति** ॥ शस्यतेऽनया । 'शसु हिंसायाम्' (भ्वा० प० से०) । 'दाम्नीशस–' (३।२।१८२) इति ष्ट्रन् । ङीष् (४।१।४१) । '**शस्त्र**मायुधे । लोहे **शस्त्री** छुरिकायाम्' इति हैमः ॥ (१) ॥*॥ असेः पुत्री ॥ (२) ॥*॥ छुरति । 'छुर छेदने' (तु० प० से०) । क्वुन् (उ० २।३५) । 'इगुपध–' (३।१।१३५) इति के कन् (ज्ञापि० ५।४।५) वा ॥ (३) ॥*॥ असेर्धेनुरिव ॥ (४) ॥*॥ चत्वारि '**छुरिकायाः**' ॥

**वा पुंसि शल्यं शङ्कुर्ना**

**वेति** ॥ शलति । 'शल गतौ' (भ्वा० प० से०) । 'अघ्न्यादित्वात् (उ० ४।११२) यः । '**शल्यं** तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषु तोमरे । मदनद्रुश्वाविधोर्ना' इति मेदिनी ॥ (१) ॥*॥ शङ्कतेऽस्मात् । 'शकि शङ्कायाम्' (भ्वा० आ० से०) । 'खरुशङ्कुपीयु–' (उ० १।३६) इति साधुः । '**शङ्कुः** पत्रशिराजाले संख्याकीलकशम्भुषु । यादोऽस्त्रभेदयोर्मेढ्रे' इति हैमः । 'संख्याकीलकयोः **शङ्कुः शङ्कुः** प्रहरणान्तरे' इति शाश्वतः ॥ (२) ॥*॥ द्वे '**बाणाग्रस्य**' '**बर्ची**' इति ख्यातस्य ।—'**शेल**' इति ख्यातस्य इत्यन्ये ॥

**शर्वला तोमरोऽस्त्रियाम् ।**

**शेति** ॥ शर्वति । 'शर्व गतौ' (भ्वा० प० से०) । ताल्व्यादिः (पवर्गीयान्तः) वृषादित्वात् (उ० १।१०६) कलच् । 'शार्दूलशर्वलाशलाटुः' इति शभेदः ॥*॥ स्वामी तु—'सर्वं लाति' इति विगृह्णन् (**सर्वलायाः**) दन्त्यादितामभिप्रैति ॥ (१) ॥*॥ तौति । 'तुः' सौत्रो गतौ । विच् (३।२।७५) । म्रियते । 'मृङ् प्राणत्यागे' (तु० आ० अ०) । अन्तर्भावितण्यर्थः । अच् (३।१।१३४) । तोश्चासौ मरश्च । तौर्गन्ता म्रियतेऽनेन वा । 'पुंसि–' (३।३।११८) इति घः ॥ (२) ॥*॥ द्वे '**तोमरस्य**' '**गँडासा**' इति ख्यातस्य ।—'**शावली**' इति ख्यातायाः—इत्यन्ये ॥

**प्रासस्तु कुन्तः**

**प्रेति** ॥ प्रास्यते । 'असु क्षेपणे' (दि० प० से०) । कर्मणि घञ् (३।३।१९) ॥ (१) ॥*॥ कुं शरीरमुनत्ति । 'उन्दी क्लेदने' (रु० प० से०) । बाहुलकात्तः । शकन्ध्वादिः (वा० ६।१।९४) । 'कुन्तः प्रासे चण्डभावे क्षुद्रजातौ गवेधुके । **कुन्ती** पाण्डुप्रियायां च शल्लक्यां गुग्गुलद्रुमे' इति विश्वः ॥ (२) ॥*॥ द्वे '**प्रासस्य**' '**भाला**' इति ख्यातस्य ॥

**कोणस्तु स्त्रियः पाल्यश्रिकोटयः ॥ ९३ ॥**

**कविति** ॥ कुणत्यनेन 'कुण शब्दे' (तु० प० से०) 'हलश्च' (३।३।१२१) इति घञ् । कर्तर्यच् (३।१।१३४) वा । '**कोणो** वाद्यप्रभेदे स्याद्वीणादीनां च वादने । एकदेशे गृहादीनामश्रौ च लगुडेऽपि च' (इति मेदिनी) ॥ (१) ॥*॥ पालयति । 'पाल रक्षणे' (चु० प० से०) । 'अच इः' (उ० ४।१३९) । मुकुटस्तु—पाति । 'ऋतन्यञ्जि–' (उ० ४।२) इत्यादिनालिः—इत्याह । तच्च । तत्र पातेः पाठाभावात् । '**पालिः** कर्णलताग्रेऽश्रौ पङ्क्तावङ्कप्रभेदयोः । छात्रादिदेये स्त्री **पाली** यूकास्श्मश्रुयोषितोः' (इति मेदिनी) ॥ (२) ॥*॥ अश्नाति । 'अश भोजने' (क्र्या० प० से०) । अश्नुते वा । 'अशू व्याप्तौ' (स्वा० आ० से०) । अङ्क्र्या (वङ्क्र्या) दिः (उ० ४।६६) । मुकुटस्तु—आश्रीयते प्रहारार्थम्, इति । 'आङि श्रिहनिभ्यां ह्रस्वश्च' (उ० ४।१३७) इतीण् डिच्च । डित्त्वात् (६।४।१४३) टिलोपः । 'आङो ह्रस्वश्च'—इत्याह । तच्च । उक्तसूत्रादर्शनात् । '**अश्रि** कोणैकदेशयोः' इति धरणिः ॥*॥ '**अस्त्रः** कोणे शिरसिजे' इति विश्वात् 'अस्त्रः' अपि ॥ (३) ॥*॥ कोटयति, कोट्यते, वा । 'कुट कौटिल्ये' (तु०प०से०) । 'अच इः' (उ० ४।१३९) । कुट्यते वा । 'इञ(ण)जादिभ्यः' (वा० ३।३।१०८) इतीञ् (ण्) । '**कोटिः** स्त्री धनुषोऽग्रेऽश्रौ सङ्ख्याभेदप्रकर्षयोः' (इति मेदिनी) ॥ (४) ॥*॥ चत्वारि '**कोणभागस्य**' ॥

**सर्वाभिसारः सर्वौघः सर्वसंनहनार्थकः ।**

**सेति** ॥ सर्वेणाभिसरणम् । 'सृ गतौ' (भ्वा० प० से०) । भावे घञ् (३।३।१८) ॥ (१) ॥*॥ सर्वस्यौघः । '**सर्वौघो** गुरुवेगे च सर्वसंनहने पुमान्' (इति मेदिनी) ॥ (२) ॥*॥ सर्वेषां संनहनम् । सर्वसंनहनमर्थो यस्य ॥ (३) ॥*॥ त्रीणि '**सर्वसैन्यसंनहनस्य**' ॥

**लोहाभिहारोऽस्त्रभृतां राज्ञां नीराजनाविधिः॥९४॥**

**लोहेति** ॥ '**लोहो**ऽस्त्री शस्त्रके लौहे' (इति मेदिनी) । लोहस्य शस्त्रस्याभितो हरणम् । 'हृञ् हरणे' (भ्वा०उ०अ०) । भावे घञ् (३।३।१८) । 'लोहाभिहार इत्युक्तो विधिर्नीराजनोत्तरः' इत्यमरमाला ॥*॥ '**लोहाभिसार**' इति पाठे तु 'सृ गतौ' (भ्वा० प० से०) धातुर्बोध्यः ॥ (१) ॥*॥ निःशेषेण नितरां वा राजनम् । 'राजृ दीप्तौ' (भ्वा० उ० से०) । ण्यन्तः । 'ण्यासश्रन्थ–' (३।३।१०७) इति भावे युच् । तस्याः सैव वा विधिः । 'नीराजनो विधिः' इति पाठे तु 'निःशेषेण राजनमत्र' इति बहुव्रीहिर्बोध्यः ॥*॥ 'एकं **महानवम्यां प्रस्थानात्प्राक् शस्त्रवाहनादिपूजनविधेः**' ॥

**यत्सेनयाभिगमनमरौ तदभिषेणनम् ।**

**यदिति** ॥ सेनयाभियानम् । 'सत्याप–' (३।१।२५) इति सेनाशब्दाण्णिच् । ल्युट् (३।३।११५) । 'उपसर्गात् सुनोति–'

---

१—'अथ' इत्यादि छुरिकानाम ॥

१—इदं तु सिद्धान्तकौमुद्यामपि स्पष्टमुपलभ्यमानत्वादकिंचित्करम् ॥

(८।३।६५) इति षत्वम् ॥ (१) ॥*॥ एकम् **'शत्रौ ससैन्यगमनस्य'** ॥

**यात्रा व्रज्याभिनिर्याणं प्रस्थानं गमनं गमः ॥ ९५ ॥**

**येति** ॥ यानम् । 'या प्रापणे' (अ० प० अ०) । 'हुयामाश्रमसिभ्यस्त्रन्' (उ० ४।१६८) । **'यात्रा** तु यापनेऽपि स्याद्गमनोत्सवयोः स्त्रियाम्' इति मेदिनी ॥ (१) ॥*॥ व्रजनम् । 'व्रज गतौ' (भ्वा० प० से०) । 'व्रजयजोः–' (३।३।९८) इति क्यप् ॥(२) ॥*॥ अभिनिर्या (३)॥*॥ प्रस्था (४) ॥*॥ गमि (५) ॥*॥ भ्यो ल्युट् (३।३।११५) ॥*॥ गमेः 'ग्रहवृदृ–' (३।३।५८) इत्यप् । **'गमो** नाक्षविवर्ते स्यादपर्यालोचितेऽध्वनि' (इति मेदिनी) ॥ (६) ॥*॥ षट् **'प्रस्थानमात्रस्य'** ॥

**स्यादासारः प्रसरणम्**

**स्येति** ॥ आसरणम् । 'सृ गतौ' (भ्वा० प० अ०) । घञ् (३।३।१८) । **'आसारः** स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले' इति विश्वः ॥ (१) ॥*॥ प्रसरणे ल्युट् (३।३।११५) ॥*॥ **'प्रसरणी'** इति पाठे 'अर्चिसृधृ–' (उ० २।१०२) इत्यनिः । 'कृदिकारात्' (ग० ४।१।४५) इति ङीष् ॥ (२) ॥*॥ द्वे **'सर्वतोव्यापिसैन्यप्रसरणस्य'** ॥

**प्रचक्रं चलितार्थकम् ।**

**प्रेति** ॥ प्रस्थितं चक्रं सैन्यम् ॥ (१) ॥*॥ चलितशब्दस्य समानार्थकम् । 'प्रचक्रं चलितं त्रिषु' इत्यमरमाला ॥ (२) ॥*॥ द्वे **'प्रस्थितसैन्यस्य'** ॥

**अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः ॥ ९६ ॥**

**अहीति** ॥ अभिक्रमणम् । 'क्रमु पादविक्षेपे' (भ्वा० प० से०) । भावे घञ् (३।३।१८) । 'नोदात्तोपदेश–' (७।३।३४) इति न वृद्धिः ॥ (१) ॥*॥ एकम् **'निर्भीकयायिनः'** ॥

**वैतालिका बोधकराः**

**वायिति** ॥ विविधेन तालेन शब्देन चरन्ति । 'चरति' (४।४।८) इति ठक् । स प्रयोजनमस्य । 'प्रयोजनम्' (५।१।१०९) इति ठक्, वा ॥ (१) ॥*॥ बोधं करोति । 'कृञो हेतु–' (३।२।२०) इति टः ॥ (२) ॥*॥ द्वे **'प्रातर्जागरणकारिणः'** ॥

**चाक्रिका घाण्टिकार्थकाः ।**

**चेति** ॥ चक्रेण समूहेन चरन्ति । 'चरति' (४।४।८) इति ठक् ॥ (१) ॥*॥ घण्टया चरन्ति । ठक् (४।४।८) ॥ (२) ॥*॥ बहवो मिलिता ये राज्ञां स्तुत्यादि पठन्ति, तेषां द्वे । क्वचित्तु **'चक्रिका घटिकार्थकाः'** इति पाठः । तत्र चक्रमस्ति वाद्यत्वेन यस्य । ठन् (५।२।११५) ॥ (१) ॥*॥ घटीं कायति । 'कै शब्दे' (भ्वा० प० अ०) कः (३।२।३) । 'ङ्यापोः–' (६।३।६३) इति ह्रस्वः ॥ (२) ॥*॥ द्वे **'बन्दिविशेषेषु'** । **'घडियारी'** इति ख्यातस्य घटिकावादकस्य ॥

**स्युर्मागधास्तु मगधाः**

**स्युरिति** ॥ मगध्यन्ति याचन्ते । 'मगध' इति याच्ञार्थः कण्ड्वादियगन्तः । अच् (३।१।१३४) । 'यस्य हलः' (६।४।४९) इति यलोपः । प्रज्ञाद्यण् (५।४।३८) वा ॥ (१) ॥*॥ मुकुटस्तु 'मधु मधुरं कायन्ति' इति विगृह्णन् **'मधुकाः'** इति पाठं मन्यते ॥ (२) ॥*॥ द्वे **'वंशपरम्पराशंसकानाम्'** ॥

**वन्दिनः स्तुतिपाठकाः ॥ ९७ ॥**

**वेति** ॥ वदन्ते । 'वदि अभिवादनस्तुत्योः' (भ्वा० आ० से०) । ग्रह्यादित्वात् (३।१।१३४), 'आवश्यका–' (३।३।१७०) इति वा णिनिः ॥ (१) ॥*॥ स्तुतेः पाठकाः ॥ (२) ॥*॥ 'वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः' ॥*॥ द्वे **'राजादिस्तुतिपाठकेषु' 'भाट'** इति ख्यातस्य । ('चत्वार एकार्थाः' इत्येके—इति स्वामी) ॥

**संशप्तकास्तु समयात्संग्रामादनिवर्तिनः ।**

**समिति** ॥ संशपनम् । 'शप आक्रोशे' (भ्वा० उ० अ०) भावे क्तः (३।३।११४) संशप्तं शपथं कुर्वन्ति । 'तत्करोति' (वा० ३।१।२६) इति णिच् । ण्वुल् (३।१।१३४) । क्वुन् (उ० २।३५) वा । सम्यक् शप्तं सत्यं येषां ते इति वा ॥ (१) ॥*॥ समयाच्छपथाद्धेतोराचाराद्वा ॥*॥ एकम् **'शपथवशात्संग्रामादपरावर्तिनः'** ॥

**रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः ॥९८॥**

**रयिति** ॥ रिणाति । रीयते वा । 'री गतिश्लेषणयोः' (क्र्या० प० अ०) । 'अजिवृरीभ्यो निच्च' (उ० ३।३८) इति णुः । **'रेणुः** स्त्रीपुंसयोर्धूलौ पुंलिङ्गः पर्पटे पुनः' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ धुवति । धूयते, वा । 'धू विधूनने' (तु० प० से०) । बाहुलकाल्लिः । धवनम् । 'धूञ् कम्पने' (क्र्या० उ० से०) । संपदादिः (वा० ३।३।१०८) । धुवा लीयते । 'इकृष्यादिभ्यः' (वा० ३।३।१०८) ॥ (२) ॥*॥ पंशति 'पशि नाशने' (चु० प० से०) । 'अर्जिदृशिकम्यमि–' (उ० ११२७) इति साधुः ॥*॥ 'तालव्या अपि दन्त्याश्च शंबशूकरपांशवः' इति शभेदात् **(पांसुः)** दन्त्यान्तश्च ॥ (३) ॥*॥ रजति । 'रञ्ज रागे' (भ्वा० उ० अ०) । 'भूरञ्जिभ्यां कित्' (उ० ४।२१७) इत्यसुन् ॥ (४) ॥*॥ चत्वारि **'रजसः'** ॥

---

१—यच्छ्रीभोजः—'कमर्थिनः कुषुभ्यन्तु कं मगध्यन्तु मागधाः । कमिषुध्यन्तु यज्वानो रामेऽरण्यं मु(तु)रण्यति' इति–इति स्वामिमुकुटौ ॥ २—'अपांसुवसनाः सागरा इव नागराः' इति दमयन्तीश्लेषात् ।

**चूर्णे क्षोदः**

**च्विति** ॥ चूर्ण्यते । 'चूर्ण पेषणे' चुरादिः । 'एरच्' (३।३।५६) '**चूर्णा**नि वासयोगाः स्युश्चूर्णो धूलिः सशर्करा' इति शाश्वतः ॥ (१) ॥*॥ क्षुद्यते । 'क्षुदिर् संपेषणे' (रु० उ० अ०)। घञ् (३।३।१८)। '**क्षोदः** पेषणचूर्णयोः' इति हैमः ॥ (२) ॥*॥ द्वे '**पिष्टस्य रजसः**'।—षडेव रजसः—इत्येके ॥

**समुत्पिञ्जपिञ्जलौ भृशमाकुले ।**

**सेति** ॥ समुत्पिञ्ज(य)ति । 'पिजि हिंसायाम्' (चु० प० से०)। ण्यन्तः । 'एरच्' (३।३।५६) ॥ (१) ॥*॥ बाहुलकादलच् । पिञ्जं लाति वा ॥ (२) ॥*॥ द्वे '**अतिसंकुलस्य**' ॥

**पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् ॥९९॥**

**पेति** ॥ पतति पत्यतेऽनया वा । 'पतॢ गतौ' (भ्वा० प० से०)। 'बलाकादयश्च' (उ० ४।१४ इत्याकः)। यत्तु—'शलिपदिपतिभ्यो नित्' (उ० ४।१४) इत्याकः—इति मुकुटः। तन्न । अपाणिनीयत्वात् । '**पताका** वैजयन्त्यां स्यात्सौभाग्यनाटकाङ्कयोः' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ विजयते । 'जि अभिभवे' (भ्वा० प० अ०)। 'तॄभूवहि—' (उ० ३।१२८) इति झच् । 'विजयन्तस्येयम्' 'तस्येदम्' (४।३।१२०) इत्यण् । '**वैजयन्तो** गृहे शक्रप्रासादध्वजयोः पुमान् । **वैजयन्ती** पताकायां जयन्तीपादपे स्त्रियाम्' (इति मेदिनी) ॥ (२) ॥*॥ केत्यते ज्ञायतेऽनेन । 'कित संशयादौ' (भ्वा० प० से०)। 'करणा—' (३।३।११७) इति ल्युट् । '**केतनं** तु निमन्त्रणे । गृहे केतौ च कृत्ये च' इति मेदिनी ॥ (३) ॥*॥ ध्वजति 'ध्वज गतौ' (भ्वा० प० से०)। अन्तर्भावितण्यर्थो वा । पचाद्यच् (३।१।१३४)। '**ध्वजः** पूर्वदिशो गृहे । शिश्ने चिह्ने पताकायां खट्वाङ्गे शौण्डिकेऽपि च' इति हैमः ॥ (४) ॥*॥ चत्वारि '**पताकायाः**' ॥

**सा वीराशंसनं युद्धभूमिर्यातिभयप्रदा ।**

**सेति** ॥ वीरा आशंसन्तेऽत्र । 'आङः शसि इच्छायाम्' (भ्वा० आ० से०)। ल्युट् (३।३।११५) ॥ (१) ॥*॥ एकम् '**भयंकरयुद्धभूमेः**' ॥

**अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम् ॥ १०० ॥**

**अहमिति** ॥ अहं पूर्वम् । 'सुप् सुपा' (२।१।४) इति समासः । स्वार्थे कन् (ज्ञापि० ५।४।५)। 'अहं पूर्वम्' इत्यस्याम् । ठन् (५।२।११५) वा ॥ (१) ॥*॥ एकं '**अहं पूर्वमहं पूर्वम्**' इति योधानां धावनक्रियायाः ॥

१—उत्पिञ्जलश्च । 'कुर्वाणमुत्पिञ्जलजातपत्त्रैः' इति माघः—इति मुकुटः। केचित्तु पिञ्जलमाकुलमाहुः—इति वल्लभः ॥ २—इदं च फलितसूत्रकथनम् ॥



**आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि ।**

**आहविति** ॥ अहो अहं पुरुषः । 'सुप्सुपा' (२।१।४) इति समासः । अहोपुरुषस्य भावः । मनोज्ञादित्वात् (५।१।१३३) वुञ् ॥ (१) ॥*॥ एकम् '**आत्मनि शक्त्याविष्करणस्य**' ॥

**अहमहमिका तु सा स्यात्परस्परं यो भवत्यहंकारः ॥ १०१ ॥**

**अहेति** ॥ अहमहंशब्दोऽस्त्यत्र । वीप्सायां द्वित्वम् (८।१।२)। व्रीह्यादित्वात् (५।२।११६) ठन् । अनित्यत्वात् 'अव्ययानाम्—' (वा० ६।४।१४४) इति न टिलोपः ॥ (१) ॥*॥ एकम् '**परस्पराहंकारस्य**' ॥

**द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च ॥**
**शक्तिः पराक्रमप्राणौ**

**द्रेति** ॥ द्रवत्यनेन । 'द्रु गतौ' (भ्वा० प० अ०)। 'द्रुदक्षिभ्यामिनन्' (उ० २।५०)। '**द्रविणं** काञ्चने धने । पराक्रमे बलेऽपि स्यात्' इति हेमचन्द्रः ॥ (१) ॥*॥ तरत्यनेन । 'तॄ प्लवनादौ' (भ्वा० प० से०)। असुन् (उ० ४।१८९) '**तरो** जवे बले' इति हैमः ॥ (२) ॥*॥ सह्यतेऽनेन । 'षह अभिभवे' (भ्वा० प० अ०)। असुन् (उ० ४।१८९)। '**सहो** बले ज्योतिषि च **सहा** हेमन्तमार्गयोः' इति सान्तेषु हैमः ॥*॥ दण्डोत्पला मुद्गपर्णी कुमारीनखभेषजे । **सहा** स्त्रियां बले न स्त्री' इति रभसाददन्तमपि ॥ (३) ॥*॥ वलते(ल्य)नेन । 'बल प्राणने' (भ्वा० प० से०)। 'खनो घ च' (३।३।१२५) इति घः । '**बलं** गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः । पुमान् हलायुधे दैत्यप्रभेदे वायसेऽपि च । बलयुक्तेऽन्यलिङ्गः स्याद्वाव्यालके तु योषिति' (इति मेदिनी) ॥ (४) ॥*॥ शूरस्य भावः कर्म वा । ष्यञ् (५।१।१२४)। '**शौर्य**मारभटीशक्त्योः' इति विश्वः ॥ (५) ॥*॥ तिष्ठत्यनेन । 'सर्वधातुभ्यो मनिन्' (उ० ४।१४५)।—'आतो मनिन्—' (३।२।७५)—इति मुकुटस्तु चिन्त्यः । तस्य कर्तरि विधानात् ॥ (६) ॥*॥ शुष्यत्यनेनारिः । 'शुष शोषणे' (दि० प० अ०)। 'अविसिविसिशुषिभ्यः कित्' (उ० १।१४४) इति मन् । '**शुष्मं** तेजसि, सूर्ये ना' (इति मेदिनी) ॥ (७) ॥*॥ शक्यतेऽनया । 'शक्लृ शक्तौ' (स्वा० प० अ०)। 'स्त्रियां क्तिन्' (३।३।९४)। '**शक्तिरायुधभेदे** स्यादुत्साहादौ बले स्त्रियाम्' इति हैमः ॥ (८) ॥*॥ पराक्रम्यतेऽनेन । 'क्रमु पादविक्षेपे' (भ्वा० प० से०)। 'हलश्च' (३।३।१२१) इति घञ् । '**पराक्रमो** विक्रमे स्यात्सामर्थ्योद्योगयोरपि' इति विश्वः ॥ (९) ॥*॥ प्राणित्यनेन । 'अन प्राणने' (अ० प० से०)। 'हलश्च' (३।३।१२१) इति घञ् । '**प्राणो** हृन्मारुते बोले काव्यजीवेऽनिले बले । पुंलिङ्गः पूरिते वाच्यलिङ्गः, पुंभूम्नि चासुषु' (इति मेदिनी) ॥ (१०) ॥*॥ दश '**सामर्थ्यस्य**' ॥

**विक्रमस्त्वतिशक्तिता ॥ १०२ ॥**

**वीति** ॥ विक्रमणम् । घञ् (३।३।१८) । **'विक्रमस्तु** पुमान्क्रान्तिमात्रे स्याच्छक्तिसंपदि' (इति मेदिनी) ॥ (१) ॥*॥ अतिशयिता शक्तिर्यस्य । तस्य भावः । तल् (५।१। ११९) ॥ (२) ॥*॥ द्वे **'अतिपराक्रमस्य'** ॥

**वीरपाणं तु तत्पानं वृत्ते भाविनि वा रणे ।**

**वीति** ॥ वीराणां पानम् । 'वा भावकारणयोः' (८। ४।१०) इति णत्वम् ॥ (१) ॥*॥ एकम् **'युद्धारम्भेऽन्ते वा पानकर्मणः'** ॥

**युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ॥ १०३ ॥**
**मृधमास्कन्दनं संख्यं समीकं संपरायकम् ।**
**अस्त्रियां समरानीकरणाः कलहविग्रहौ ॥ १०४ ॥**
**संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ।**
**अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः ॥ १०५ ॥**
**समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ।**

**युद्धेति** ॥ योधनम् । 'युध संप्रहारे' (दि० आ० अ०) (क्तः ३।३।११४) भावे क्तल्युटौ (३।३।११५) ॥ (१) ॥*॥ (२) ॥*॥ जननम् । 'जनेर्यक्' (उ० ४।१११) । जायते वा । 'भव्यगेय-' (३।४।६८) इति साधुः । **'जन्यं** हट्टे परीवादे संग्रामे च नपुंसकम् । **जन्या** मातृवयस्यायां **जन्यः** स्याज्जनके पुमान् । त्रिषूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययोः । वरस्निग्धे' इति विश्वमेदिन्यौ ॥ (३) ॥*॥ प्रधानम् । 'डु धाञ्' (जु० उ० अ०) । 'कृपृवृजिमन्दिनिधाञः क्युः' (उ०२।८१)। **'प्रधनं** युधि दारणे' इति हैमः ॥ (४) ॥*॥ 'दॄ विदारणे' (क्र्या० प०से०) । ण्यन्ताद्भावे ल्युट् । **'प्रविदारण**माख्यातं संपरायेऽवदारणे' (इति मेदिनी) ॥ (५) ॥*॥ मर्धनम् । 'मृधु हिंसायाम्' (भ्वा० उ० से०) । बाहुलकाद्भावे घञर्थे वा कः ॥ (६) ॥*॥ 'स्कन्दिर् गतिशोषणयोः' (भ्वा० प० अ०) । भावे ल्युट् (३।३।११५) । **'आस्कन्दनं** तिरस्कारे रणे संशोषणेऽपि च' इति विश्वः ॥ (७) ॥*॥ संख्यानम् । चक्षिङः ख्यातेर्वा भावे कः । **'संख्य**माहवे । **संख्यै**कादौ विचारे च' इति हैमः ॥ (८) ॥*॥ समनम् । 'षम वैक्लव्ये' (भ्वा० प० से०) । 'अलीकादयश्च' (उ० ४।२५) इति कीकन् । सम्यगयनम्, वा । 'ई गत्यादौ' (अ० प० अ०) । बाहुलकात् कः ॥ (९) ॥*॥ संपरायनम् । 'अय गतौ' (भ्वा० आ० से०) । 'इ गतौ' (भ्वा० प० अ०) वा । घञ् (३।३।१८) । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥*॥ विनयादित्वात् (५।४।३४) ठकि **'सांपरायिकः'** अपि ॥ (१०) ॥*॥ समरणम् । 'ऋ गतौ' (क्र्या प० से०) घः (३।३। ११८) ॥ 'ॠदोरप्' (३।३।५७) वा । यत्तु—ऋच्छन्त्यत्र । 'ॠ गतौ' (भ्वा० प० अ०) । 'ॠदोरप्' (३।३।५७)—इति मुकुटेनोक्तम् । तन्न । ऋषन्तादपो विधानात् ॥ (११) ॥*॥ अननम् । 'अन गतौ' ( ) 'प्राणने' (अ० प० से०) वा । 'अनीकादकश्च' इति साधुः । न नयनम् । 'णीञ् प्रापणे' (भ्वा० उ० अ०) । बाहुलकात्कन् । नञ्समासः (२।२।६) **'अनीको**ऽस्त्री रणे सैन्ये' इति मेदिनी ॥ (१२) ॥*॥ रणनम् । 'रण शब्दे' (भ्वा० प० से०) । 'वशिरण्योश्च' (वा० ३।२।५८) इत्यप् । **'रणः** कोणे क्वणे पुंसि समरे पुंनपुंसकम्' (इति मेदिनी) ॥ (१३) ॥*॥ **'कलं** तु मधुरध्वनौ' इति धरणिः । कलस्य हननम् । 'अन्येभ्योऽपि' (वा० ३।२। १०१) इति डः ॥ (१४) ॥*॥ विग्रहणम् । 'ग्रहवृदृ-' (३।३।५८) इत्यप् । **'विग्रहो** युधि विस्तारे प्रविभागशरीरयोः' इति हैमः ॥ (१५) ॥*॥ संप्रहरणम् । 'हृञ् हरणे' (भ्वा० उ० अ०) । घञ् (३।३।१८) । **'संप्रहारो** गतौ रणे' इति हैमः ॥ (१६) ॥*॥ अभिसंपतनम् । 'पत्लृ गतौ' (भ्वा० प० से०) । घञ् (३।३।१८) ॥ (१७) ॥*॥ कलनम् । 'कल शब्दादौ' (भ्वा० आ० से०) । इन् (उ० ४।११८) ।—'कलेरिः'—इति मुकुटः । तन्न । तादृशसूत्राभावात् । **'कलि**र्बिभीतके शूरे विवादेऽन्त्ययुगे युधि' इति हैमः ॥ (१८) ॥*॥ संस्फोटनम् 'स्फुटिर् विशरणे' (भ्वा० प० से०) । घञ् (३।३।१८) । **'संस्फेटः'** इति तु स्वामी । तत्र 'स्फिट अनादरे' (चु० प० से०) ॥ (१९) ॥*॥ संयोजनम् । 'युजिर् योगे' (रुधा० उ० अ०) । घञ् (३।३।१८) ।—'रथयुग-' (४। ४।७६) इति निर्देशाद्गुणाभावः । प्रतिजनादिषु (४।४।९९ गणे) 'संयुग' शब्दपाठाद्वा ॥ (२०) ॥*॥ अभ्यामर्दनम् । 'मृद क्षोदे' (क्र्या० प० से०) । घञ् (३।३।१८) । **'अभिमर्दस्तु** पुंसि स्यादवमर्दे संपराये च' (इति मेदिनी) ॥ (२१) ॥*॥ समाहननम् । घञ् (३।३।११८) । **'समाघातो** वधे युद्धे' (इति मेदिनी) ॥ (२२) ॥*॥ संग्रामणम् । 'संग्राम युद्धे' (चु० उ० स०) ण्यन्तः । 'एरच्' (३।३।५६) ॥ (२३) ॥*॥ अभ्यागमनम् । 'ग्रहवृदृ-' (३।३।५८) इत्यप् । **'अभ्यागमः** समरेऽन्तिके । घाते रोधेऽभ्युपगमे' इति हैमः ॥ (२४) ॥*॥ आह्वानम् । 'ह्वेञ् स्पर्धायां शब्दे च' (भ्वा० उ० अ०) । 'आङि युद्धे' (३।३।७३) इत्यप् संप्रसारणं च । **'आहवः** संगरे यज्ञे' इति हैमः ॥ (२५) ॥*॥ समुदयनम् । 'अय गतौ' (भ्वा० आ० से०) । घञ् (३।३।१८) ॥ (२६) ॥*॥ संयतनम् । 'यती प्रयत्ने' (भ्वा० अ० से०) संयमनम् । 'यम उपरमे' (भ्वा० प० अ०) वा संपदादिः (वा० ३।३।१०८) । 'गमादीनाम्' (वा० ६।४।४०) इति मलोपः । तुक् (६।१।

१—स्वामिमुकुटाभ्यां तु प्रदन्धन्ति । धनिर्मारणार्थोऽत्र निधनवत् —इत्युक्तम् ॥

१—सिद्धान्तकौमुद्यादौ तु 'अनीकादयश्च' इति सूत्रं नोपलभ्यते किंतु 'अनिहृषिभ्यां किच्च' (उ० ४।१७) इति सूत्रमुपलभ्यते ॥

७१)[1] ॥ (२७) ॥*॥ समयनम् । 'इ गतौ' (भ्वा० प० से०)। क्तिच् (३।३।१७४)। '**समिति**र्युधि संगमे । साम्ये सभायाम्' इति हेमचन्द्रः ॥ (२८) ॥*॥ अजनम् । 'अज गतौ' ( भ्वा० प० से० ) । 'इणजादिभ्यः' ( वा० ३।३। १०८)। इञ्(ण)विधानसामर्थ्यादजेर्न वी । अन्यथा 'व्यादिभ्यः' इत्येवावक्ष्यत् । 'बहुलं तणि' (वा० २।४।५४) इति वा । '**आजिः** स्त्री समभूमौ संग्रामे' इति मेदिनी ॥ (२९) ॥*॥ समयनम् । 'इ गतौ' (भ्वा० प० अ०) । संपदादिः (वा० ३।३।१०८)। तुक् (६।१।७१) ॥ (३०) ॥*॥ योधनम् । 'युध संप्रहारे' (दि० आ० अ०) । संपदादिः (वा० ३।३।१०८) ॥ (३१) ॥*॥—एषु अनेकार्थत्वात् सर्वे धातवो युद्धार्थाः । सर्वत्राधिकरणे प्रत्ययः—इति मुकुटः ॥*॥ एकत्रिंशत् '**प्रहरणक्रियायाः**' ॥

**नियुद्धं बाहुयुद्धे स्यात्**

**नीति** ॥ निगृह्य नितरां वा युद्धम् ॥ (१) ॥*॥ बाहुयुद्धम् ॥ (२) ॥*॥ द्वे '**बाहुयुद्धस्य**' ॥

**तुमुलं रणसंकुले ॥ १०६ ॥**

**त्विति** ॥ तवनम् । तौति वा । 'तु' सौत्रः । बाहुलकान्मुलक् । ('**तुमुलं** रणसंकुले । **तुमुलो** बिभीतकद्रौ' इति हैमः)। '**तुमुलं** व्याकुले रणे' इति त्रिकाण्डशेषः ॥ (१) ॥*॥ रणस्य '**संकुलम्**' ॥ (२) ॥*॥ द्वे '**रणव्याकुलतायाः**' ॥

**क्ष्वेडा तु सिंहनादः स्यात्**

**क्ष्वेडेति** ॥ क्ष्वेदनम् । 'ञिक्ष्विदा स्नेहनमोचनयोः' (भ्वा० आ० से०) अव्यक्ते शब्दे वा घञ् (३।३।१८)। पृषोदरादिः (६।३।१०९)। रूपभेदात्स्त्रीत्वम् । 'विशेषैर्यद्यबाधितः' इति परिभाषणात्र पुंस्त्वम् । '**क्ष्वेडो** ध्वनौ कणामये विषे । **क्ष्वेडा** वंशशलाकायां सिंहनादे च योषिति । लोहिताकर्पर्णफले घोषपुष्पे नपुंसकम् । दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्तितः' ॥ (१) ॥*॥ सिंहवन्नदनम् । 'णद अव्यक्ते शब्दे' ( भ्वा० प० से०)। घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे '**योधानां सिंहनादस्य**' ॥

**करिणां घटना घटा ।**

**केति** ॥ घटनम् । 'घट संघाते' चुरादिः । 'ण्यासश्रन्थः–' (३।३।१०७) इति युच् ॥ (१) ॥*॥ 'घटादयः षितः' (भ्वा० ग० सू०) इति षित्त्वात् (३।३।१०३) अङ् । '**घटः** समाधिभेदेभशिरःकूटकुटेषु च । **घटा** घटनगोष्ठीभघटनासु च योषिति' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**हस्तिसंघस्य**' ॥

**क्रन्दनं योधसंरावः**

**केति** ॥ 'क्रदि आह्वाने' (भ्वा० प० से०) । भावे ल्युट् (३।३।११५)। '**क्रन्दनं** रोदनेऽपि स्यादाह्वानेऽपि' इति मेदिनी ॥ (१) ॥*॥ योधानां संवरणम् । 'रु शब्दे' (अ० प० अ०)। 'उपसर्गे रुवः' (३।३।२२) इति घञ् ॥ (२) ॥*॥ द्वे '**अन्योन्यस्पर्धया योधानामाह्वानस्य**' ॥

**बृंहितं करिगर्जितम् ॥ १०७ ॥**

**बृंति** ॥ बृंहणम् । 'बृहि वृद्धौ' (भ्वा० प० से०) 'नपुंसके' (३।३।११४) इति क्तः ॥ (१) ॥*॥ करिणां गर्जनम् । 'गर्ज शब्दे' (भ्वा० प० से०)। पूर्ववत् क्तः (३।३।११४) ॥ (२) ॥*॥ द्वे '**हस्तिगर्जनस्य**' ॥

**विस्फारो धनुषः स्वानः**

**वीति** ॥ विस्फरणम् । 'स्फर स्फुरणे' (तु० प० से०)। घञ् (३।३।१८) । विस्फुरणम् । 'स्फुर स्फुरणे' (तु० प० से० ) वा 'स्फुरतिस्फुलत्योर्घञि' (६।१।४७) इत्यात्वम् ॥ (१) ॥*॥ एकम् '**धनुषः शब्दस्य**' ॥

**पटहाडम्बरौ समौ ।**

**पेति** ॥ पटं हन्ति । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । '**पटहो** ना समारम्भे आनके पुंनपुंसकम्' (इति मेदिनी) ॥ (१) ॥*॥ आडम्बयति । 'डबि क्षेपे' ( ) बाहुलकादरच् । यद्वा डम्बनम् । भावे घञ् (३।३।१८) । डम्बं राति । रायति वा । 'आतोऽनुप–' (३।२।३) इति कः । 'आडम्बरः समारम्भे गजगर्जिततूर्ययोः' इति विश्वः ॥ (२) ॥*॥ द्वे '**युद्धपटहस्य**' '**दमदमा**' इति ख्यातस्य ॥

**प्रसभं तु बलात्कारो हठः**

**प्रेति** ॥ प्रगता सभा विचारोऽस्मात् । सभायाः प्रगतो वा । 'क्लीबे तु प्रसभं हठः' इति बोपालितः ॥ (१) ॥*॥ —'बलात्' इति निपातो 'हठार्थः'—इति स्वामी । बलात्करणम् । भावे घञ् ( ३।३।१८) ॥ (२) ॥*॥ हठनम् । 'हठ प्लुतिशठत्वयोः' ( भ्वा० प० से० ) । 'पुंसि–' (३।३। ११८) इति 'खनो घ च' (३।३।१२५) इति वा घः ॥ '**हठः** स्यात्प्रसभे प्रश्यांम्' '**हेठो** बाधाविहेठयोः' इति मेदिनी ॥ (३) ॥*॥ त्रीणि '**बलात्कारस्य**' ॥

**अथ स्खलितं छलम् ॥ १०८ ॥**

**अथेति** ॥ स्खलम् । 'स्खल संचलने' (भ्वा० प० से०)। क्तः (३।३।११४)। '**स्खलितं** छलिते भ्रेषे' (इति हैमः) ॥ (१) ॥*॥ छालम् । 'छो छेदने' (दि० प० अ०) । वृषादित्वात् (उ० १।१०५) कलच् । 'आतो लोप–' ( ६।४।६४ ) इत्याकारलोपः । ('**छलं** छद्मस्खलितयोः' इति हैमः) ॥ (२) ॥*॥ द्वे '**युद्धमर्यादायाश्चलनस्य**' ॥

**अजन्यं क्लीब उत्पात उपसर्गः समं त्रयम् ।**

**अजेति** ॥ न जने साधुः । 'तत्र साधुः' (४।४।९८) इति यत् । न जन्यते वा । 'जनेर्यक्' ( उ० ४।११ ) ।

[1] —'संयत्' पुंस्यपि । 'रवेजि संयत्यतुलास्त्रगौरवे' इति दण्डी—इति मुकुटः ॥

१—हेठशब्दार्थबोधकस्यापि प्रसङ्गादुक्तिः ॥

'तकिशसि' (वा० ३।१।९७) इति ॥ यद्वा ॥ (१) ॥*॥ उत्पतनम्। 'पत्लृ गतौ' (भ्वा० प० से०)। घञ् (३।३।१८)। उत्पतति। ज्वलादिः (३।१।१४०) वा ॥ (२) ॥*॥ उपसर्जनम्। उपसृज्यते वा घञ् (३।३।१८, १९)। '**उपसर्गः** पुमान् रोगभेदोपप्लवयोरपि' इति मेदिनी ॥ (३) ॥*॥ त्रीणि '**शुभाशुभसूचकमहाभूतविकारस्य**' ॥

**मूर्च्छा तु कश्मलं मोहोऽपि**

**म्विति** ॥ मूर्च्छनम्। 'मूर्च्छा मोहादौ' (भ्वा० प० से०)। 'गुरोश्च हलः' (३।३।१०३) इत्यः। 'उपधायां च' (८।२।७८) इति दीर्घः ॥ (१) ॥*॥ कशनम्। 'कश गतौ' (अ० आ० से०)। 'कुटिकशिकौतिभ्यः प्रत्ययस्य मुट्' (उ० १।१०९) इति कलः। बाहुलकात्—इति मुकुटस्तूपेक्ष्यः ॥ (२) ॥*॥ मोहनम्। 'मुह वैचित्त्ये' (दि० प० से०)। घञ् (३।३।१८)। 'अथ **मोहो** नृलिङ्गः स्यादविद्यायां च मूर्च्छने' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि '**मूर्च्छायाः**' ॥

**अवमर्दस्तु पीडनम् ॥ १०९ ॥**

**अवेति** ॥ अवमर्दनम्। 'मृद क्षोदे' (क्र्या० प० से०) घञ् (३।३।१८) ॥ (१) ॥*॥ 'पीड अवगाहने' (चु० प० से०) ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे '**देशादेरुपद्रवदानस्य**' ॥

**अभ्यवस्कन्दनं त्वभ्यासादनम्**

**अभ्येति** ॥ 'स्कन्दिर्' (भ्वा० प० अ०)। ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'षद्लृ विशरणादौ' चुरादिः। ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे '**प्रहारादिना निःशक्तीकरणस्य**' ॥

**विजयो जयः।**

**वीति** ॥ विजयनम्। 'जि जये' (भ्वा० प० अ०)। 'एरच्' (३।३।५६)। '**विजयः** स्याज्जये पार्थे स्त्रियां तिथ्यन्तरे स्मृता। उमासख्याम्' (इति मेदिनी) ॥ (१) ॥*॥ '**जया** जयन्तीतिथिभित्पथ्योमातत्सखीषु च। अग्निमन्थे ना जयन्ते विजये च युधिष्ठिरे' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**लब्धस्योत्कर्षस्य**' ॥

**वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ॥ ११० ॥**

**वायिति** ॥ वैरस्य शुद्धिः ॥ (१) ॥*॥ प्रतिकरणम्। घञ् (३।३।१८)। 'उपसर्गस्य–' (६।२।१२२) इति दीर्घः ॥ (२) ॥*॥ वैरस्य निर्यातनम्। 'यत निराकारादौ' चुरादिः। ल्युट् (३।३।११५) ॥ (३) ॥*॥ त्रीणि '**वैरशोधनस्य**' ॥

**प्रद्रावोद्द्रावसंद्रावसंदावा विद्रवो द्रवः।**
**अपक्रमोऽपयानं च**

**प्रेति** ॥ प्रद्रवणम् 'द्रु गतौ' (भ्वा० प० अ०)। 'श्रिणीभुवः' (३।३।२४) इति घञ् ॥ (१) ॥*॥ उद्द्रवणम्। 'उदि श्रयति–' (३।३।४९) इत्यादिना घञ् ॥ (२) ॥*॥ संद्रवणम्। संदवनम्। 'दु द्रु गतौ' (भ्वा० प० अ०)। 'समि युद्रुदुवः' (३।३।२३) इति घञ् ॥ (३) ॥*॥ (४) ॥*॥ विद्रवणम्। 'ऋदोरप्' (३।३।५७) ॥ (५) ॥*॥ '**द्रवः** प्रद्रावनर्मणोः। विद्रवे रसगत्योश्च' (इति हैमः) ॥ (६) ॥*॥ अपक्रमणम्। घञ् (३।३।१८) ॥ (७) ॥*॥ यातेर्ल्युट् (३।३।११५) ॥ (८) ॥*॥ अष्टौ '**पलायनस्य**' ॥

**रणे भङ्गः पराजयः ॥१११॥**

**रेति** ॥ भञ्जनम् 'भञ्जो आमर्दने' (रु० प० अ०)। घञ् (३।३।१८)। '**भङ्गो** जयविपर्यये। भेदरोगतरङ्गेषु **भङ्गा** सस्यान्तरे स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ पराजयम्। 'जि अभिभवे' (भ्वा० प० अ०)। 'एरच्' (३।३।५६) ॥ (२) ॥*॥ द्वे '**पराजयस्य**' ॥

**पराजितपराभूतौ**

**पेति** ॥ पराजीयते स्म। परैराजीयते स्म वा। 'जि अभिभवे' (भ्वा० प० अ०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ पराभूयते स्म। क्तः (३।३।१०२) ॥ (२) ॥*॥ द्वे '**प्राप्ताभिभवस्य**' ॥

**त्रिषु नष्टतिरोहितौ।**

**त्रीति** ॥ 'त्रिषु' इति पूर्वाभ्यामपि संबध्यते। नश्यति स्म। 'णश अदर्शने' (दि० प० से०)। 'गत्यर्था–' (३।४।७२) इति कर्तरि क्तः ॥ (१) ॥*॥ तिरो धीयते स्म। 'डुधाञ्' हिनोति स्म वा। 'हि गतौ' वा। 'गत्यर्था–' (३।४।७२) इति कर्तरि क्तः। धाञस्तु कर्मणि क्तः (३।२।१०२) ॥ (२) ॥*॥ भावक्तान्तेभ्योऽर्शआद्यच् (५।२।१२७) वा ॥*॥ द्वे '**निलीनस्य**' ॥

**प्रमापणं निबर्हणं निकारणं विशारणम् ॥ ११२ ॥**
**प्रवासनं परासनं निषूदनं निहिंसनम्।**
**निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ॥ ११३ ॥**
**निस्तर्हणं निहननं क्षणनं परिवर्जनम्।**
**निर्वापणं विशसनं मारणं प्रतिघातनम् ॥ ११४ ॥**
**उद्वासनप्रमथनक्रथनोज्जासनानि च।**
**आलम्भपिञ्जविशरघातोन्माथवधा अपि ॥ ११५ ॥**

**प्रेति** ॥ 'मीञ् हिंसायाम्' (क्र्या० प० अ०) स्वार्थण्यन्तः ॥ (१) ॥*॥ 'बर्ह हिंसायाम्' (चु० प० से०) ॥ (२) ॥*॥ 'कॄञ् हिंसायाम्' (क्र्या० उ० से०) ॥ (३) ॥*॥ 'शॄ हिंसायाम्' (क्र्या० प० से०) ॥ (४) ॥*॥ स्वार्थण्यन्तौ। 'वस छेदे' (चुरादिः)। प्र (५) निर् (९) उत् (२१) पूर्वः। 'असु क्षेपणे' (दि० प० से०) ॥ (६) ॥*॥ (१२) ॥*॥ 'षूद क्षरणे' (भ्वा० आ० से०) ॥ (७) ॥*॥ 'हिसि हिंसायाम्' (रु० प० से०) ॥ (८) ॥*॥ 'मारणतोषणनिशामनेषु ज्ञा' (भ्वा० प० अ०)। 'ज्ञप मिच्च' (चु० प० से०)

इति वा ॥ (१०) ॥*॥ 'ग्रथि कौटिल्ये' (भ्वा० आ० से०)। 'निर्गन्धनम्' इत्यन्ये । तत्र 'गन्ध अर्दने' (चु० आ० से०) अयं धातुः ॥ (११) ॥*॥ 'तृह हिंसायाम्' (रु० प० से०)। निर्पूर्वः। 'तृन्हू' (तु० प० से०) वा ॥ (१३) ॥*॥ 'हन हिंसायाम्' (अ० प० अ०) ॥ (१४) ॥*॥ 'क्षणु हिंसायाम्' (त० उ० से०) ॥ (१५) ॥*॥ 'वृजी वर्तने' (रु० प० से०) ॥ (१६) ॥*॥ 'डुवप् बीजसंताने' (भ्वा० उ० अ०)। स्वार्थण्यन्तः 'ओ वै शोषणे' (भ्वा० प० अ०) वा ॥ (१७) ॥*॥ 'शसु हिंसायाम्' (भ्वा० प० से०) ॥ (१८) ॥*॥ 'मृ हिंसायाम्' (क्र्या० प० से०) ॥ (१९) ॥*॥ 'हन हिंसायाम्' (अ० प० अ०) ॥ (२०) ॥*॥ स्वार्थण्यन्तौ। 'मथे हिंसायाम्' (भ्वा० प० से०) ॥ (२२) ॥*॥ 'क्रथ हिंसायाम्' (भ्वा० प० से०) ॥ (२३) ॥*॥ 'जसु हिंसायाम्' (दि० प० से०) स्वार्थण्यन्तः ॥ (२४) ॥*॥ एभ्यो भावे ल्युट् (३।३।११५) ॥*॥ आलम्भनम्। 'डुलभष् प्राप्तौ' (भ्वा० आ० अ०)। घञ् (३।३।१८) 'लभेश्च' (७।१।६४) 'उपसर्गात्खल्घञोः' (७।१।६७) इति नुम् ॥ (२५) ॥*॥ पिञ्जनम्। 'पिजि हिंसायाम्' चुरादिः। अप् (३।३।५६) ॥ (२६) ॥*॥ विशरणम्। 'शॄ हिंसायाम्' (क्र्या० प० से०)। 'ऋदोरप्' (३।३।५७) ॥ (२७) ॥*॥ हननम्। 'हन हिंसायाम्' (अ० प० अ०)। घञ् (३।३।१८)। 'हनस्तोऽचिण्णलोः' (७।३।३२) 'हो हन्तेर्ञ्णिन्नेषु' (७।३।५४) ॥ (२८) ॥*॥ उन्मथनम्। 'मथे हिंसायाम्' (भ्वा० प० से०) घञ् (३।३।१८) ॥*॥—मन्थतेर्घञ्—इति मुकुटः। तन्मते 'उन्मन्थः' इति पाठः ॥ (२९) ॥*॥ हननम्। 'हनो वध च' (३।३।७६) इत्यप् ॥ (३०) ॥*॥ त्रिंशत् 'मारणस्य' ॥

**स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः।**
**अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनो स्त्रियाम्॥११६॥**

**स्यादिति** ॥ पञ्चानां भावः। तल् (५।१।११९) ॥ 'पञ्चता पञ्चभावे स्यान्मरणे च योषिति' (इति मेदिनी) ॥ (१) ॥*॥ कालस्य धर्मः ॥ (२) ॥*॥ दिष्टस्य दैवस्यान्तः ॥ (३) प्रलयनम् 'लीङ् श्लेषणे' (दि० आ० अ०)। 'एरच्' (३।३।५६) ॥ (४) ॥*॥ अत्ययनम्। 'इण् गतौ' (अ० प० अ०)। 'इ गतौ' (भ्वा० प० अ०)। 'एरच्' (३।३।५६)। 'अत्ययोऽतिक्रमे दण्डे विनाशे दोषकृच्छ्रयोः' इति मेदिनी ॥ (५) ॥*॥ अन्तनम्। 'अति बन्धने' (भ्वा० प० से०)। घञ् (३।३।१८)। 'अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। अवयवेऽपि' इति हैमः ॥ (६) ॥*॥ 'णश अदर्शने' (दि० प० से०)। घञ् (३।३।१८) ॥ 'नाशः पलायने मृत्यौ परिध्वस्तावदर्शने' इति हेमचन्द्रः ॥ (७) ॥*॥ मरणम्। 'मृङ् प्राणत्यागे' (तु० आ० अ०)। 'भुजिमृङ्भ्यां युक्त्युकौ' (उ० ३।२१) इति त्युक्। 'मृत्युर्ना मरणे यमे' इति मेदिनी ॥ (८) ॥*॥ 'ल्युट् च' (३।३।११५) ॥ (९) ॥*॥ निधानम्। कृपृवृजिमन्दिनिधाञः क्युः (उ० २।८१)। 'निधनं स्यात् कुले नाशे' (इति मेदिनी) ॥ (१०) ॥*॥ दश 'मरणस्य' ॥

**परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः।**
**मृतप्रमीतौ त्रिष्वेते**

**पेति** ॥ परागता असवोऽस्मात् ॥ (१) ॥*॥ प्राप्तं पञ्चत्वं येन ॥ (२) ॥*॥ परं लोकमितः। परा दूरमितो वा। 'परेतो वाच्यलिङ्गः स्यान्मृते भूतान्तरे पुमान्' (इति मेदिनी) ॥ (३) ॥*॥ प्रकर्षेण इतः। 'प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः' (इति मेदिनी) ॥ (४) ॥*॥ संतिष्ठते स्म। 'गत्यर्था–' (३।४।७२) इति क्तः ॥ (५) ॥*॥ म्रियते स्म। 'मृङ् प्राणत्यागे' (तु० आ० अ०)। 'गत्यर्था–' (३।४।७२)। 'मृतं मृत्यौ याचिते च' इति हैमः ॥ (६) ॥*॥ प्रमीयते स्म। 'मीङ् हिंसायाम्' (क्र्या० आ० अ०)। 'गत्यर्था–' (३।४।७२) इति क्तः। 'प्रमीतं वाच्यलिङ्गं स्यात्प्रोक्षितेऽपि मृतेऽपि च' इति मेदिनी ॥ (७) ॥*॥ त्रिषु परास्वादयः ॥*॥ सप्त 'मृतस्य' ॥

**चिता चित्या चितिः स्त्रियाम्॥ ११७ ॥**

**चीति** ॥ चीयते स्म। क्तः (३।२।१०२)। 'चितं छन्ने त्रिषु चिता चित्यायां संहतौ स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ 'चित्याग्निचित्ये च' (३।१।१३२) इति क्यप्। 'चित्यं मृतकचैत्ये स्याच्चित्या मृतचितौ स्त्रियाम्' (इति मेदिनी) ॥ (२) ॥*॥ क्तिन् (३।३।९४)। 'चितिश्चित्यावृन्दयोः स्त्री' (इति मेदिनी) ॥ (३) ॥*॥ अधिकरणे वा प्रत्ययः ॥*॥ त्रीणि 'चित्यायाः' ॥

**कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्।**

**केति** ॥ कं बध्यते छिद्यतेऽस्मात्। 'बन्ध बन्धने' (क्र्या० प० अ०)। घञ् (३।३।१९)। केन वायुना बध्यते वा। 'कबन्धमुदके रुण्डे कबन्धो राहुरक्षसोः' इति हैमः ॥ (१) ॥*॥ एकम् 'छिन्नशिरसो देहस्य' ॥

**श्मशानं स्यात्पितृवनम्**

**श्मेति** ॥ शवाः शेरतेऽत्र। पृषोदरादिः (६।३।१०९) द्वितालव्यम् ॥ (१) ॥*॥ पितॄणां वनम्। पितॄन् वनति वा। 'वन संभक्तौ' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। 'वनं नपुंसकं नीरे निवासालयकानने' इति मेदिनी ॥ (२) ॥*॥ द्वे 'प्रेतभूमेः' ॥

**कुणपः शवमस्त्रियाम्॥ ११८ ॥**

**किति** ॥ क्वणति। 'क्वण शब्दे' (भ्वा० प० से०)। 'क्वणेः संप्रसारणं च' (उ० ३।१४३) इति कपन्। '(कुणपी पुनः। विट्सारिकायां) कुणपः पूतिगन्धे शवेऽपि च' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ शवति। 'शव गतौ' (भ्वा० प० से०)। अच् (३।१।१३४)। ('शवः स्यात्कुणपे

'तकिशसि' (वा० ३।१।९७) इति ॥ यद्वा ॥ (१) ॥*॥ उत्पतनम्। 'पत्ऌ गतौ' (भ्वा० प० से०)। घञ् (३।३।१८)। उत्पतति। ज्वलादिः (३।१।१४०) वा ॥ (२) ॥*॥ उपसर्जनम्। उपसृज्यते वा घञ् (३।३।१८, १९)। **'उपसर्गः** पुमान् रोगभेदोपप्लवयोरपि' इति मेदिनी ॥ (३) ॥*॥ त्रीणि **'शुभाशुभसूचकमहाभूतविकारस्य'** ॥

**मूर्च्छा तु कश्मलं मोहोऽपि**

**म्विति** ॥ मूर्च्छनम्। 'मूर्च्छा मोहादौ' (भ्वा० प० से०)। 'गुरोश्च हलः' (३।३।१०२) इत्यः। 'उपधायां च' (८।२।७८) इति दीर्घः ॥ (१) ॥*॥ कशनम्। 'कश गतौ' (अ० आ० से०)। 'कुटिकशिकौतिभ्यः प्रत्ययस्य मुट्' (उ० १।१०९) इति कलः। बाहुलकात्—इति मुकुटस्तूपेक्ष्यः ॥ (२) ॥*॥ मोहनम्। 'मुह वैचित्त्ये' (दि० प० से०)। घञ् (३।३।१८)। 'अथ **मोहो** नृलिङ्गः स्यादविद्यायां च मूर्च्छने' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि **'मूर्च्छायाः'** ॥

**अवमर्दस्तु पीडनम् ॥ १०९ ॥**

**अवेति** ॥ अवमर्दनम्। 'मृद क्षोदे' (क्र्या० प० से०) घञ् (३।३।१८) ॥ (१) ॥*॥ 'पीड अवगाहने' (चु० प० से०) ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे **'देशादेरुपद्रवदानस्य'** ॥

**अभ्यवस्कन्दनं त्वभ्यासादनम्**

**अभ्येति** ॥ 'स्कन्दिर्' (भ्वा० प० अ०)। ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'षद्ऌ विशरणादौ' चुरादिः। ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे **'प्रहारादिना निःशक्तीकरणस्य'** ॥

**विजयो जयः।**

**वीति** ॥ विजयनम्। 'जि जये' (भ्वा० प० अ०)। 'एरच्' (३।३।५६)। **'विजयः** स्याज्जये पार्थे स्त्रियां तिथ्यन्तरे स्मृता। उमासख्याम्' (इति मेदिनी) ॥ (१) ॥*॥ **'जया** जयन्तीतिथिभित्पथ्योमातसखीषु च। अभिमन्थे ना जयन्ते विजये च युधिष्ठिरे' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'लब्धस्योत्कर्षस्य'** ॥

**वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ॥ ११० ॥**

**वायिति** ॥ वैरस्य शुद्धिः ॥ (१) ॥*॥ प्रतिकरणम्। घञ् (३।३।१८)। 'उपसर्गस्य—' (६।२।१२२) इति दीर्घः ॥ (२) ॥*॥ वैरस्य निर्यातनम्। 'यत निराकारादौ' चुरादिः। ल्युट् (३।३।११५) ॥ (३) ॥*॥ त्रीणि **'वैरशोधनस्य'** ॥

**प्रद्रावोद्द्रावसंद्रावसंदावा विद्रवो द्रवः।**
**अपक्रमोऽपयानं च**

**प्रेति** ॥ प्रद्रवणम् 'द्रु गतौ' (भ्वा० प० अ०)। 'श्रि णीभुवः' (३।३।२४) इति घञ् ॥ (१) ॥*॥ उद्द्रवणम्। 'उदि श्रयति—' (३।३।४९) इत्यादिना घञ् ॥ (२) ॥*॥ संद्रवणम्। संदवनम्। 'दु द्रु गतौ' (भ्वा० प० अ०)। 'समि युद्रुदुवः' (३।३।२३) इति घञ् ॥ (३) ॥*॥ (४) ॥*॥ विद्रवणम्। 'ऋदोरप्' (३।३।५७) ॥ (५) ॥*॥ **'द्रवः** प्रद्रावनर्मणोः। विद्रवे रसगत्योश्च' (इति हैमः) ॥ (६) ॥*॥ अपक्रमणम्। घञ् (३।३।१८) ॥ (७) ॥*॥ यातेर्ल्युट् (३।३।११५) ॥ (८) ॥*॥ अष्टौ **'पलायनस्य'** ॥

**रणे भङ्गः पराजयः ॥१११॥**

**रेति** ॥ भञ्जनम् 'भञ्जो आमर्दने' (रु० प० अ०)। घञ् (३।३।१८)। **'भङ्गो** जयविपर्यये। भेदरोगतरङ्गेषु **भङ्गा** सस्यान्तरे स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ पराजयम्। 'जि अभिभवे' (भ्वा० प० अ०)। 'एरच्' (३।३।५६) ॥ (२) ॥*॥ द्वे **'पराजयस्य'** ॥

**पराजितपराभूतौ**

**पेति** ॥ पराजीयते स्म। परैराजीयते स्म वा। 'जि अभिभवे' (भ्वा० प० अ०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ पराभूयते स्म। क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे **'प्राप्ताभिभवस्य'** ॥

**त्रिषु नष्टतिरोहितौ।**

**त्रीति** ॥ 'त्रिषु' इति पूर्वाभ्यामपि संबध्यते। नश्यति स्म। 'णश अदर्शने' (दि० प० से०)। 'गत्यर्था—' (३।४।७२) इति कर्तरि क्तः ॥ (१) ॥*॥ तिरो धीयते स्म। 'डुधाञ्' हिनोति स्म वा। 'हि गतौ' वा। 'गत्यर्था—' (३।४।७२) इति कर्तरि क्तः। धाञस्तु कर्मणि क्तः (३।२।१०२) ॥ (२) ॥*॥ भावक्तान्तेभ्योऽर्शआद्यच् (५।२।१२७) वा ॥*॥ द्वे **'निलीनस्य'** ॥

**प्रमापणं निबर्हणं निकारणं विशारणम् ॥ ११२ ॥**
**प्रवासनं परासनं निषूदनं निहिंसनम्।**
**निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ॥ ११३ ॥**
**निस्तर्हणं निहननं क्षणनं परिवर्जनम्।**
**निर्वापणं विशसनं मारणं प्रतिघातनम् ॥ ११४ ॥**
**उद्वासनप्रमथनक्रथनोज्जासनानि च।**
**आलम्भपिञ्जविशरघातोन्माथवधा अपि ॥ ११५ ॥**

**प्रेति** ॥ 'मीञ् हिंसायाम्' (क्र्या० प० अ०) स्वार्थण्यन्तः ॥ (१) ॥*॥ 'बर्ह हिंसायाम्' (चु० प० से०) ॥ (२) ॥*॥ 'कॄञ् हिंसायाम्' (क्र्या० उ० से०) ॥ (३) ॥*॥ 'शॄ हिंसायाम्' (क्र्या० प० से०) ॥ (४) ॥*॥ स्वार्थण्यन्तौ। 'वस छेदे' (चुरादिः)। प्र (५) निर् (९) उत् (२१) पूर्वः। 'असु क्षेपणे' (दि० प० से०) ॥ (६) ॥*॥ (१२) ॥*॥ 'षूद क्षरणे' (भ्वा० आ० से०) ॥ (७) ॥*॥ 'हिसि हिंसायाम्' (रु० प० से०) ॥ (८) ॥*॥ 'मारणतोषणनिशामनेषु ज्ञा' (भ्वा० प० अ०)। 'ज्ञप मिच्च' (चु० प० से०)

इति वा ॥ (१०) ॥*॥ 'ग्रथि कौटिल्ये' (भ्वा० आ० से०)। 'निर्गन्धनम्' इत्यन्ये । तत्र 'गन्ध अर्दने' (चु० आ० से०) अयं धातुः ॥ (११) ॥*॥ 'तृह हिंसायाम्' (रु० प० से०)। निर्पूर्वः। 'तृन्हू' (तु० प० से०) वा ॥ (१३) ॥*॥ 'हन हिंसायाम्' (अ० प० अ०) ॥ (१४) ॥*॥ 'क्षुणु हिंसायाम्' (त० उ० से०) ॥ (१५) ॥*॥ 'वृजी वर्तने' (रु० प० से०) ॥ (१६) ॥*॥ 'डुवप् बीजसंताने' (भ्वा० उ० अ०)। स्वार्थण्यन्तः 'ओ वै शोषणे' (भ्वा० प० अ०) वा ॥ (१७) ॥*॥ 'शसु हिंसायाम्' (भ्वा० प० से०) ॥ (१८) ॥*॥ 'मृ हिंसायाम्' (क्र्या० प० से०) ॥ (१९) ॥*॥ 'हन हिंसायाम्' (अ० प० अ०) ॥ (२०) ॥*॥ स्वार्थण्यन्तौ। 'मथे हिंसायाम्' (भ्वा० प० से०) ॥ (२२) ॥*॥ 'क्रथ हिंसायाम्' (भ्वा० प० से०) ॥ (२३) ॥*॥ 'जसु हिंसायाम्' (दि० प० से०) स्वार्थण्यन्तः ॥ (२४) ॥*॥ एभ्यो भावे ल्युट् (३।३।११५) ॥*॥ आलम्भनम्। 'डुलभष् प्राप्तौ' (भ्वा० आ० अ०)। घञ् (३।३।१८) 'लभेश्च' (७।१।६४) 'उपसर्गात्खल्घञोः' (७।१।६७) इति नुम् ॥ (२५) ॥*॥ पिञ्जनम्। 'पिजि हिंसायाम्' चुरादिः। अच् (३।३।५६) ॥ (२६) ॥*॥ विशरणम्। 'शॄ हिंसायाम्' (क्र्या० प० से०)। 'ऋदोरप्' (३।३।५७) ॥ (२७) ॥*॥ हननम्। 'हन हिंसायाम्' (अ० प० अ०)। घञ् (३।३।१८)। 'हनस्तोऽचिण्णलोः' (७।३।३२) 'हो हन्तेर्ञ्णिन्नेषु' (७।३।५४) ॥ (२८) ॥*॥ उन्मथनम्। 'मथे हिंसायाम्' (भ्वा० प० से०) घञ् (३।३।१८) ॥*॥—मन्थतेर्घञ्—इति मुकुटः। तन्मते 'उन्मन्थः' इति पाठः ॥ (२९) ॥*॥ हननम्। 'हनो वध च' (३।३।७६) इत्यप् ॥ (३०) ॥*॥ त्रिंशत् 'मारणस्य' ॥

**स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः।**
**अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनो स्त्रियाम्॥११६॥**

**स्यादिति** ॥ पञ्चानां भावः। तल् (५।१।११९) ॥ 'पञ्चता पञ्चभावे स्यान्मरणे च योषिति' (इति मेदिनी) ॥ (१) ॥*॥ कालस्य धर्मः ॥ (२) ॥*॥ दिष्टस्य दैवस्यान्तः ॥ (३) प्रलयनम् 'लीङ् श्लेषणे' (दि० आ० अ०)। 'एरच्' (३।३।५६) ॥ (४) ॥*॥ अत्ययनम्। 'इण् गतौ' (अ० प० अ०)। 'इ गतौ' (भ्वा० प० अ०)। 'एरच्' (३।३।५६)। 'अत्ययोऽतिक्रमे दण्डे विनाशे दोषकृच्छ्रयोः' इति मेदिनी ॥ (५) ॥*॥ अन्तनम्। 'अति बन्धने' (भ्वा० प० से०)। घञ् (३।३।१८)। 'अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। अवयवेऽपि' इति हैमः ॥ (६) ॥*॥ 'णश अदर्शने' (दि० प० से०)। घञ् (३।३।१८) ॥ 'नाशः पलायने मृत्यौ परिध्वस्तावदर्शने' इति हेमचन्द्रः ॥ (७) ॥*॥ मरणम्। 'मृङ् प्राणत्यागे' (तु० आ० अ०)। 'भुजिमृङ्भ्यां युक्त्युकौ' (उ० ३।२१) इति त्युक्। 'मृत्युर्ना मरणे यमे' इति मेदिनी ॥ (८) ॥*॥ 'ल्युट् च' (३।३।११५) ॥ (९) ॥*॥ निधानम्। कृपॄवृजिमन्दिनिधाञः क्युः (उ० २।८१)। 'निधनं स्यात् कुले नाशे' (इति मेदिनी) ॥ (१०) ॥*॥ दश 'मरणस्य' ॥

**परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः।**
**मृतप्रमीतौ त्रिष्वेते**

**पेति** ॥ परागता असवोऽस्मात् ॥ (१) ॥*॥ प्राप्तं पञ्चत्वं येन ॥ (२) ॥*॥ परं लोकमितः। परा दूरमितो वा। 'परेतो वाच्यलिङ्गः स्यान्मृते भूतान्तरे पुमान्' (इति मेदिनी) ॥ (३) ॥*॥ प्रकर्षेण इतः। 'प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः' (इति मेदिनी) ॥ (४) ॥*॥ संतिष्ठते स्म। 'गत्यर्था—' (३।४।७२) इति क्तः ॥ (५) ॥*॥ म्रियते स्म। 'मृङ् प्राणत्यागे' (तु० आ० अ०)। 'गत्यर्था—' (३।४।७२)। 'मृतं मृत्यौ याचिते च' इति हैमः ॥ (६) ॥*॥ प्रमीयते स्म। 'मीङ् हिंसायाम्' (क्र्या० आ० अ०)। 'गत्यर्था—' (३।४।७२) इति क्तः। 'प्रमीतं वाच्यलिङ्गं स्यात्प्रोक्षितेऽपि मृतेऽपि च' इति मेदिनी ॥ (७) ॥*॥ त्रिषु परास्वादयः ॥*॥ सप्त 'मृतस्य' ॥

**चिता चित्या चितिः स्त्रियाम् ॥ ११७ ॥**

**चीति** ॥ चीयते स्म। क्तः (३।२।१०२)। 'चितं छन्ने त्रिषु चिता चित्यायां संहतौ स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ 'चित्याग्निचित्ये च' (३।१।१३२) इति क्यप्। 'चित्यं मृतकचैत्ये स्याच्चित्या मृतचितौ स्त्रियाम्' (इति मेदिनी) ॥ (२) ॥*॥ क्तिन् (३।३।९४)। 'चितिश्चित्यावृन्दयोः स्त्री' (इति मेदिनी) ॥ (३) ॥*॥ अधिकरणे वा प्रत्ययः ॥*॥ त्रीणि 'चित्यायाः' ॥

**कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्।**

**केति** ॥ कं बध्यते छिद्यतेऽस्मात्। 'बन्ध बन्धने' (क्र्या० प० अ०)। घञ् (३।३।११९)। केन वायुना बध्यते वा। 'कबन्धमुदके रुण्डे कबन्धो राहुरक्षसोः' इति हैमः ॥ (१) ॥*॥ एकम् 'छिन्नशिरसो देहस्य' ॥

**श्मशानं स्यात्पितृवनम्**

**श्मेति** ॥ शवाः शेरतेऽत्र। पृषोदरादिः (६।३।१०९) द्वितालव्यम् ॥ (१) ॥*॥ पितॄणां वनम्। पितॄन् वनति वा। 'वन संभक्तौ' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। 'वनं नपुंसकं नीरे निवासालयकानने' इति मेदिनी ॥ (२) ॥*॥ द्वे 'प्रेतभूमेः' ॥

**कुणपः शवमस्त्रियाम् ॥ ११८ ॥**

**किति** ॥ क्वणति। 'क्वण शब्दे' (भ्वा० प० से०)। 'क्वणेः संप्रसारणं च' (उ० ३।१४३) इति कपन्। '(कुणपी पुनः। विदसारिकायां) कुणपः पूतिगन्धे शवेऽपि च' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ शवति। 'शव गतौ' (भ्वा० प० से०)। अच् (३।१।१३४)। ('शवः स्यात्कुणपे

पुमान्। नपुंसकं तु पानीये' इति (मेदिनी) ॥ (२) ॥*॥ द्वे **'मृतशरीरस्य'** ॥

**प्रग्रहोपग्रहौ वन्द्यां**

**प्रेति** ॥ गृह्यते। 'ग्रह उपादाने' (क्र्या० उ० से०)। 'गृहवृद्द–' (३।३।५८) इत्यप्। **'प्रग्रहस्तु** तुलासूत्रे वन्द्यां नियमने भुजे। हयादिरश्मौ रश्मौ च सुवर्णहरिपादपे'। (इति मेदिनी) ॥ (१) ॥*॥ **'उपग्रहः** पुमान् वन्द्यामुपयोगेऽनुकूलने' (इति मेदिनी) ॥ (२) ॥*॥ वन्द्यते, वन्दते वा। 'वदि अभिवादनस्तुत्योः' (भ्वा० आ० से०)। इन् (उ० ४।११८) ङीष् (ग० ४।१।४५) ॥ (३) ॥*॥ त्रीणि **'बन्दिशालायाः'** ॥

**कारा स्याद्बन्धनालये।**

**केति** ॥ कीर्यतेऽत्र। 'कॄ विक्षेपे' (तु० प० से०)। 'भिदादिपाठात्' (३।३।१०४) अङ्दीर्घौ। **'कारो** वधे निश्चये च वलौ यत्ने यतावपि। कारस्तुषारशैले च **कारा** दूत्यां प्रसेवके। बन्धने बन्धनागारे हेमकारिकयोरपि' इति विश्वः) ॥ (१) ॥*॥ बन्धनस्यालयः ॥ (२) ॥*॥ द्वे **'बन्धनगृहस्य'** ॥

**पुंसि भूम्न्यसवः प्राणाश्चैवम्**

**पुमिति** ॥ अस्यन्ते, अस्यन्ति, वा। 'असु क्षेपणे' (दि० प० से०)। अस्यत एभिः, इति वा। 'अस दीप्तौ' (भ्वा० उ० से०)। 'शॄस्वृस्निहि–' (उ० १।१०) इत्युः। —बाहुलकात्—इति मुकुटस्तूपेक्ष्यः ॥ (१) ॥*॥ प्राणन्त्येभिः। 'अन प्राणने' (अ० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। **'प्राणो** हृन्मारुते बोले काव्यजीवेऽनिले बले। पुंलिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चासुषु' (इति मेदिनी)। एवं पुंसि भूम्नि च ॥ (२) ॥*॥ द्वे **'पञ्चवायूनाम्'** ॥

**जीवोऽसुधारणम् ॥ ११९ ॥**

**जीति** ॥ जीवनम्। 'जीव प्राणधारणे' (भ्वा० प० से०)। घञ् (३।३।१८)। **'जीवः** प्राणिनि वृत्तौ च वृक्षभेदे बृहस्पतौ। जीवा जीवन्तिकामौर्वीवचाशिञ्जितभूमिषु। न स्त्री तु जीविते' (इति मेदिनी) ॥ (१) ॥*॥ असूनां धारणम् ॥ (२) ॥*॥ द्वे **'जीवनस्य'** ॥

**आयुर्जीवितकालो ना**

**आयुरिति** ॥ एति। 'इण् गतौ' (अ० प० अ०)। [illegible]र्णिच्च' (उ० २।११८) इत्युसिः ॥ (१) ॥*॥ जीवितस्य [illegible]ः ॥ (२) ॥*॥ द्वे **'जीवावच्छिन्नकालस्य'** ॥

**जीवातुर्जीवनौषधम्।**

**नेति** ॥ जीवत्यनेन। 'जीव प्राणधारणे' (भ्वा० प० [illegible])। 'जीवेरातुः' (उ० १।७८)। **'जीवातुरस्त्रियां** भक्ते जीविते जीवनौषधे' (इति मेदिनी) ॥ (१) ॥*॥ जीवनस्यौषधम् ॥ (२) ॥*॥ द्वे **'मृतसंजीवनौषधस्य'** ॥

**इति क्षत्रियवर्गविवरणम् ॥**

---

**ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः।**

**विति** ॥ ब्रह्मण ऊर्वोर्भवाः। 'शरीरावयवात्–' (४।३।५५) इति यत् ॥ (१) ॥*॥ ऊरोर्जाताः। 'जनी प्रादुर्भावे' (दि० आ० से०)। 'पञ्चम्यामजातौ' (३।२।९८) इति डः ॥ (२) ॥*॥ अर्यते। 'ऋ गतौ' (भ्वा० प० से०)। 'अर्यः स्वामिवैश्ययोः' (३।१।१०३) ॥ (३) ॥*॥ विशन्ति। 'विश प्रवेशने' (तु० प० अ०)। क्विप् (३।२।१७८) ॥ (६) ॥*॥ स्वार्थे ष्यञ् (वा० ५।१।१२४) ॥ (४) ॥*॥ भूमिं स्पृशन्ति। 'स्पृश संस्पर्शने' (तु० प० अ०)। 'स्पृशोऽनुदके क्विन्' (३।२।५८)। **'भूमिस्पृक्** पुंसि मानववैश्ययोः' (इति मेदिनी) ॥ (५) ॥*॥ षट् **'वैश्यस्य'** ॥

**आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने ॥ १ ॥**

**आजीति** ॥ आजीव्यतेऽनेन। 'हलश्च' (३।३।१२१) इति घञ् ॥ (१) ॥*॥ जीव्यतेऽनया 'गुरोश्च हलः' (३।३।१०३) इत्यः। 'संज्ञायां कन्' (५।३।७५)। क्वुन् (उ० २।३२) वा। **'जीवकः** प्राणके पीतसारकृपणयोरपि। कूर्चशीर्षे च पुंसि स्यादाजीवे **जीविका** मता। त्रिषु सेविनि वृद्ध्याशीर्जीविनोराहितुण्डिके' (इति मेदिनी) ॥ (२) ॥*॥ वृत्तिरस्त्यस्याम् 'वृत्तेश्च' (वा० ५।२।१०१) इति णः। **'वार्ता** तु वर्तने वातिङ्गणे कृष्याद्युदन्तयोः। निःसाररोग्ययोः क्लीबे (वृत्तिमन्नीरुजोस्त्रिषु)' इति मेदिनी ॥ (३) ॥*॥ वर्ततेऽनया। क्तिन् (३।३।९४)। '(**वृत्ति**र्विवरणाजीवकैशिक्यादिप्रवर्तने' इति मेदिनी) ॥ (४) ॥*॥ वर्तन्ते जीवन्त्यनेन। ल्युट् (३।३।११७)। **'वर्तनो** वामने क्लीबं वृत्तौ स्त्री पेषणाध्वनोः। न पुंसि पूलनालायां तर्कुपिण्डे च जीवने। वर्तिष्णौ त्रिषु' (इति मेदिनी) ॥ (५) ॥*॥ जीवत्यनेन। ल्युट् (३।३।११७) ॥ (६) ॥*॥ षट् **'जीवनोपायस्य'** ॥

**स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः।**

**स्त्रीति** ॥ कर्षणम्। 'कृष विलेखने' (भ्वा० प० अ०) 'इक्कृष्यादिभ्यः' (वा० ३।३।१०८) ॥ (१) ॥*॥ पशून् पालयति। 'पाल रक्षणे' (चु० प० से०) 'कर्मण्यण्' (३।२।१)। तस्य कर्म भावो वा। ष्यञ् (५।१।१२४) ॥ (१) ॥*॥ वणिजां कर्म भावो वा। ष्यञ् (५।१।१२४) ॥*॥ 'दूतवणिग्भ्यां च'[1] इति यप्रत्यये **'वणिज्या'** च। (सत्यानृतं तु वाणिज्यं वणिज्या') इति हैमनाममाला ॥ (१) ॥*॥ प्रत्येकं **'जीवानोपायस्यैकैकम्'** ॥

---

१—भाष्ये तु 'दूतवणिग्भ्यां च' इति नास्त्येव इति सिद्धान्तकौमुदी ॥

**सेवा श्ववृत्तिः**

**सयिति** ॥ सेवनम्। 'षेवृ सेवने' (भ्वा० आ० से०)। 'गुरोश्च हलः' (३।३।१०३) इत्यः ॥ (१) ॥*॥ शुनो वृत्तिरिव, शुन इव वृत्तिर्वा ॥ (२) ॥*॥ द्वे '**परचित्तानुवर्तनस्य**' ॥

**अनृतं कृषिः**

**अन्निति** ॥ न ऋतम्। 'शुनो वृत्तिः स्मृता सेवा गर्हितं तद्द्विजन्मनाम्। हिंसादोषप्रधानत्वादनृतं कृषिरुच्यते' इति। '**अनृतं** कृषावसत्ये च' इति रुद्रः ॥*॥—'**प्रमृतम्**' इति तु सभ्यः पाठः—इति स्वामी। 'प्रमृतं कर्षणं स्मृतम्' (४।५) इति मनुः ॥ (१) ॥ (२) ॥*॥ द्वे '**कर्षणस्य**' ॥

**उञ्छशिलं त्वृतम् ॥ २ ॥**

**वितिं** ॥ उञ्छनम्। 'उञ्छि उञ्छे' (तु० प० से०)। घञ् (३।३।१८) ॥ (१) ॥*॥ शिलनम्। 'शिल उञ्छे' (तु० प० से०)। कः (वा० ३।३।५८) घञ् (३।३।१८) वा। संज्ञापूर्वकत्वान्न गुणः। '**उञ्छः** कणश आदानं कणिशाद्यर्जनं **शिलम्**' इति यादवः ॥ (२) ॥*॥ अर्यते। ऋच्छति वा। 'निष्ठा' (३।२।१०२) इति 'गत्यर्था–' (३।४।७२) इति वा क्तः। 'ऋतमुञ्छशिलं स्मृतम्' (४।५) इति मनुः। 'पुमानुञ्छः शिलमृतम्' इति बोपालितः ॥ (३) ॥*॥ त्रीणि '**खलादिपतितधान्यसंग्रहस्य**' ॥

**द्वे याचितायाचितयोर्यथासंख्यं मृतामृते।**

**द्वे इति** ॥ मृतं चामृतं च ॥ (१) ॥*॥ प्रार्थनाऽप्रार्थनक्रिययोस्तत्कर्मणोर्वा एकैकम् '**याचितायाचितयोः**' ॥

**सत्यानृतं वणिग्भावः स्यात्**

**सेति** ॥ सत्यसहितमनृतम्। शाकपार्थिवादिः (वा० २।१।७८) ॥ (१) ॥*॥ वणिजो भावः (२) ॥*॥ द्वे '**वाणिज्यस्य**' ॥

**ऋणं पर्युदञ्चनम् ॥ ३ ॥**

**उद्धारः**

**ऋणमिति** ॥ अर्यते स्म। 'ऋ गतौ' (भ्वा० प० अ०)। क्तः (३।२।१०२)। 'ऋणमाधमर्ण्ये' (८।२।६०) इति नत्वम्। '**ऋणं** देये जले दुर्गे' इति हैमः ॥ (१) ॥*॥ परित उदञ्च्यते। 'अञ्चु गतौ' (भ्वा० प० से०)। 'कृत्यल्युटः–' (३।३।११३) इति कर्मणि ल्युट् ॥ (२) ॥*॥ उद्ध्रियते। 'हृञ् हरणे' (भ्वा० उ० अ०)। 'धृञ् धारणे' (भ्वा० उ० अ०) वा। कर्मणि घञ् (३।३।१९)। '**उद्धारश्चोद्धृतावृणे**' इति मेदिनी ॥ (३) ॥*॥ त्रीणि '**ऋणस्य**' ॥

**अर्थप्रयोगस्तु कुसीदं वृद्धिजीविका।**

**अर्थेति** ॥ अर्थस्य प्रयोगः ॥ (१) ॥*॥ कुस्यते। कुस संश्लेषणे' (दि० प० से०)। 'कुसेरुम्भो मेदेताः', (उ० ४।१०६) इतीदः। '**कुसीदं** वृद्धिजीवने। वृद्ध्याजीवे' इति हैमः ॥ (२) ॥*॥ वृद्ध्याजीविका ॥ (३) ॥*॥ त्रीणि '**ऋणसंबन्धिकालान्तरद्रव्येण लोके जीविकायाम्**' ॥

**याच्ञयाप्तं याचितकम्**

**येति** ॥ याचितेन याच्ञया निर्वृत्तम्। 'अपमित्ययाचिताभ्यां कक्कनौ' (४।४।२१) ॥ (१) ॥*॥ एकम् '**याच्ञया प्राप्तस्य**' ॥

**निमयादापमित्यकम् ॥ ४ ॥**

**नीति** ॥ अपमानम्। 'मेङ् प्रणिदाने' (भ्वा० आ० अ०) 'उदीचां माङो व्यतीहारे' (३।४।१९) इति क्त्वा। 'कुगति–' (२।२।१८) इति समासः। 'समासेऽनञ्' (७।१।३७) इति ल्यबादेशः। 'मयतेरिदन्यतरस्याम्' (६।४।७०) इतीत्वम्। तुक् (६।१।७१)। 'अपमित्य–' आप्तम्। 'अपमित्य–' (४।४।२१) इति कक् ॥ (१) ॥*॥ 'नियमात्' इति 'विभाषा गुणेऽस्त्रियाम्' (२।३।२५) इति पञ्चमी ॥*॥ एकं '**परिवर्तनेनाप्तस्य**' ॥

**उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात्।**

**उत्तेति** ॥ उत्तममृणमस्य ॥ (१) ॥*॥ अधममृणमस्य ॥ (१) ॥*॥ '**ऋणव्यवहारे धनस्वामिधनग्राहकयोः**' क्रमेणैकैकम् ॥

**कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः ॥ ५ ॥**

**किति** ॥ कुसीदार्थं प्रयच्छति। 'कुसीददशैक–' (४।४।३१) इति ष्ठन् ॥ (१) ॥*॥ वृद्धिं गर्ह्यां प्रयच्छति। 'प्रयच्छति गर्ह्यम्' (४।४।३०) इति ठक्। 'वृद्धेर्वृधुषिभावः' (वा० ४।४।३०) ॥ (२) ॥*॥ वृद्धिराजीवो जीविकास्य ॥ (३) ॥*॥ पृषोदरादित्वात् (६।३।१०९) कलोपे वार्धुषिः ॥ (४) ॥*॥ चत्वारि '**ऋणं दत्त्वा तद्वृद्ध्या जीविनः**' ॥

**क्षेत्राजीवः कर्षकश्च कृषकश्च कृषीवलः।**

**क्षेत्रेति** ॥ क्षेत्रमाजीवोऽस्य ॥ (१) ॥*॥ कर्षति। 'कृष विलेखने' (भ्वा० प० अ०)। ण्वुल् (३।१।१३३) ॥ (२) ॥*॥ कर्षति। 'कृषेर्वृद्धिश्चोदीचाम्' (उ० २।३८) इति क्वुन् ॥*॥ वृद्धिपक्षे '**कार्षकः**' अपि ॥ (३) ॥*॥ कर्षणम्। 'इकृष्यादिभ्यः' (वा० ३।३।१०८)। कृषिरस्यास्ति। 'रजःकृषि–' (५।२।११२) इति वलच्। 'वले' (६।३।११८) इति दीर्घः ॥ (४) ॥*॥ चत्वारि '**कृषीवलस्य**' ॥

**क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम् ॥ ६ ॥**

**क्षयिति** ॥ व्रीहीणाम् (१) शालीनाम् (१) च भवनं क्षेत्रम्। 'व्रीहिशाल्योर्ढक्' (५।२।२) ॥*॥ '**धान्यसामा-**

१—लक्ष्यादिवन्तोऽपि। 'श्रोत्रियस्य कदर्यस्य वदान्यस्यापि वार्धुषी'—इति स्वामी ॥

न्यस्य' **'कलमादेश्चोत्पत्तियोग्यक्षेत्रस्य'** एकैकम् ॥

**यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि तत्।**

**येति** ॥ यवानाम् (१) यवकानाम् (१) षष्टिकानाम् (१) च भवनं क्षेत्रम्। 'यवयवकषष्टिकाद्यत्' (५।२।३) ॥*॥ यवकः शूकशून्यो यवः ॥*॥ एकैकम् **'यवादिभवनस्य'** ॥

**तिल्यतैलीनवन्माषोमाणुभङ्गाद्द्विरूपता ॥ ७ ॥**

**तीति** ॥ तिलानाम् (१) माषाणाम् (१) उमानाम् (१) अणूनाम् (१) भङ्गानाम् (१) च भवनं क्षेत्रम्। 'विभाषा तिल-' (५।२।४) इति यत्खञौ (१) ॥ (२) ॥*॥ **माष्यम्** ॥ (१) ॥*॥ **माषीणम्** ॥ (२) ॥*॥ **उम्यम्** ॥ (१) **औमीनम्** ॥ (२) ॥*॥ **अणव्यम्** ॥ (१) ॥*॥ **अणवीनम्** ॥ (२) ॥ **भङ्ग्यम्** ॥ (१) ॥ **भाङ्गीनम्** (२) ॥*॥ **'तिलादिभवनस्य'** प्रत्येकं द्वयं द्वयम् ॥

**मौद्गीनकौद्रवीणादि शेषधान्योद्भवक्षमम्।**

**मौद्गीति** ॥ मुद्गानाम् (१) कोद्रवाणाम् (१) च भवनं क्षेत्रम्। 'धान्यानां भवने' (५।२।१) इति खञ् ॥*॥ आदिना **गौधूमीनम्** ॥ (१) ॥*॥ **कालायीनम्** ॥ (१) ॥*॥ **कौलत्थीनम्** ॥ (१) ॥*॥ **प्रैयङ्गवीणम्** ॥ (१) ॥*॥ **चाणकीनम्** ॥ (१) ॥*॥ इत्यादि ज्ञेयम् **'धान्योद्भवक्षेत्रस्य'** ॥

**वीजाकृतं तूप्तकृष्टम्**

**वीति** ॥ वीजेन सहकृतं कृष्टम्। 'कृञो द्वितीयतृतीयशम्बवीजात्कृषौ' (५।४।५८) इति डाच्।—अवीजं सवीजं संपन्नम्। वीजाकृतम्—इति स्वामी। तत्र। 'अभूततद्भावे' इत्यस्यानुवृत्तेः ॥ (१) ॥*॥ (पूर्वम्) उप्तं च तत् (पश्चात्) कृष्टं च। 'पूर्वकाल-' (२।१।४९) इति समासः ॥ (२) ॥*॥ द्वे **'वीजवापोत्तरं कृष्टस्य'** ॥

**सीत्यं कृष्टं च हल्यवत् ॥ ८ ॥**

**सीति** ॥ सीतया संमितम्। 'नौवयोधर्म-' (४।४।९१) इति यत् ॥ (१) ॥*॥ कृष्यते स्म। क्तः (३।२।१०२) ॥ (२) ॥*॥ हलेन कृष्टम्। 'मतजनहलात्करणजल्पकर्षेषु' (४।४।९७) इति यत् ॥ (३) ॥*॥ हल्येन तुल्यम्। 'तेन तुल्यम्' (५।१।११५) इति वतिः ॥*॥ त्रीणि **'कृष्टमात्रस्य'** ॥

**त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपि तस्मिन्**

**त्रीति** ॥ त्रिगुणं कृतम्। 'संख्यायाश्च गुणान्तायाः' (५।४।५९) इति डाच् ॥ (१) ॥*॥ तृतीयं कृतम्। 'कृञो द्वितीय-' (५।४।५८) इति डाच् ॥ (२) ॥*॥ त्रिवारं हलेन कृष्टम्। 'मतजन-' (४।४।९७) इति यत्। 'रथसीताहलेभ्यो यद्विधौ' (वा० १।१।७२) इति तदन्तविधेः ॥ (३) ॥*॥ त्रिवारं सीतया संमितम्। यत् (४।४।९१) ॥ (४) ॥*॥ चत्वारि **'वारत्रयकृष्टस्य'** ॥

**द्विगुणाकृते तु सर्वं पूर्वं शम्बाकृतमपीह ॥ ९ ॥**

**द्वीति** ॥ **द्वितीयाकृतम्** ॥ (२) ॥*॥ द्विहल्यम् ॥*॥ (३) ॥*॥ **द्विसीत्यम्** ॥ (४) ॥*॥ शममस्यास्ति 'कंशंभ्याम्' (५।२।१३८) इति वा। शम्बशब्दो द्वितीयकर्षणे वर्तते। शम्बं कृतम्। 'कृञो द्वितीय-' (५।४।५८) इति डाच् ॥*॥ 'सरित्तैरिभ**सम्बाकृतम्'** इति दन्त्यादौ वर्णदेशना। तत्र 'षम्ब संबन्धे' (चु० प० से०) ण्यन्तः। सम्ब्यते। घञ् (३।३।१९)। अच् (३।३।५६) वा ॥ (५) ॥*॥ पञ्च **'द्विवारकृष्टस्य'** ॥

**द्रोणाढकादिवापादौ द्रौणिकाढकिकादयः।**

**द्रोणेति** ॥ द्रोणस्य वापः। 'तस्य वापः' (५।१।४५) इति ठञ् ॥ (१) ॥*॥ आढकस्य वापः (५।१।४५) ॥ (१) ॥*॥ आदिना—प्रस्थस्य वापः। **प्रास्थिकः** ॥ (१) ॥*॥ कुडवस्य वापः। **कौडविकः** ॥ (१) ॥ 'वापादौ' इत्यादिना पचाद्यर्थग्रहः। द्रोणम्, आढकं च पचति (इत्यादि)। 'संभवत्यवहरति पचति' (५।१।५२) इति ठक् ॥*॥ **'द्रोणादिपरिमितव्रीह्यादिवापयोग्यक्षेत्रस्य'** एकैकम् ॥

**खारीवापस्तु खारीकः**

**खेति** ॥ खार्या वापः। 'खार्या ईकन्' (५।१।३३) ॥ (१) ॥*॥ एकम् **'खारीवापस्य'** ॥

**उत्तमर्णादयस्त्रिषु ॥ १० ॥**

**उत्तेति** ॥ (खारीकान्ता वाच्यलिङ्गाः) ॥

**पुंनपुंसकयोर्वप्रः केदारः क्षेत्रम्**

**पुमिति** ॥ उप्यतेऽत्र। 'डुवप् बीजसंताने' (भ्वा० उ० अ०)। 'वृधिवपिभ्यां रन्' (उ० २।२७) 'वप्रस्ताते पुमान्नस्त्री रेणौ क्षेत्रे चये तटे' इति विश्वः (मेदिनी)। **'वप्रः** प्राकाररोधसोः। क्षेत्रे ताते चये रेणौ' इति हैमः ॥ (१) ॥*॥ के जले शिरसि वा दारोऽस्य। 'हलदन्तात्-' (६।३।९) इत्यलुक्। केन जलेन दीर्यत इति वा। 'दॄ विदारणे' (क्र्या० प० से०)। कर्मणि घञ् (३।३।१९)। 'केदाराद्यञ्च' (४।२।४०) इति निर्देशादेत्वम्। **'के**[१]**दारो** ऽस्त्री शिवे क्षेत्रे भूमिभेदालवालयोः' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ क्षीयते धान्यैरत्र। 'क्षि निवासगत्योः' (तु० प० अ०)। ष्ट्रन् (उ० ४।१५९)। **'क्षेत्रं** भारतादौ भगाङ्गयोः। केदारे सिद्धभूपत्न्योः' इति हैमः। **'क्षेत्रं** शरीरे केदारे सिद्धस्थानकलत्रयोः' इति विश्वः ॥ (३) ॥*॥ त्रीणि **'क्षेत्रस्य'** ॥

---

१—केदार एकारवान् 'नमिताः फलभारेण नमिताः शालिमञ्जरीः। केदारेषु च पश्यन्तः के दारेषु विनिःस्पृहाः' इति दमयन्तीयमकात् ॥

अस्य तु ।

**कैदारकं स्यात्कैदार्यं क्षैत्रं कैदारिकं गणे ॥ ११ ॥**

**अस्येति** ॥ केदाराणां समूहः । 'केदाराद्यञ्च' (४।२।४०) ॥ (२) ॥*॥ चात् (४।२।४०) वुञ् ॥ (१) ॥*॥ क्षेत्राणां समूहः । 'भिक्षादिभ्यः–' (४।२।३८) इत्यण् ।—'तस्य समूहः' (४।२।३७) इत्यण्—इति मुकुटः । तन्न । 'अचित्त–' (४।२।४७) इति ठकस्तदपवादत्वात् ॥ (३) ॥*॥ 'ठञ् कवचिनश्च' (४।२।४१) चात् केदारादपि ॥ (४) ॥*॥ चत्वारि **'क्षेत्रगणस्य'** ॥

**लोष्टानि लेष्टवः पुंसि**

**लविति** ॥ लोष्टति । 'लोष्ट संघाते' (भ्वा० आ० से०) पचाद्यच् (३।१।१३४) पुंलिङ्गोऽप्ययम् । 'लेष्टुः शण्डे(ठे)ऽपि लोष्टः स्यात्' इति बोपालितः ॥ (१) ॥*॥ लिश्यते, लिशति, वा । 'लिश गतौ' (तु० प० से०) । बाहुलकात्तुन् ।—'क्तादयश्च'—इति मुकुटस्त्वपाणिनीयः ॥ (२) ॥*॥ द्वे **'मृत्तिकाखण्डस्य'** ॥

**कोटिशो लोष्टभेदनः ।**

**कविति** ॥ कोटिना अग्रेण श्यति 'शो तनूकरणे' (दि० प० अ०) । 'सुपि' (३।२।४) इति कः । कोटिरस्यास्तीति वा । लोमादित्वात् (५।२।१००) शः ॥ (१) ॥*॥ लोष्टानां भेदनः ॥ (२) ॥*॥ द्वे **'लोष्टभेदनकाष्ठस्य'** **'हेंगा'** इति ख्यातस्य ॥

**प्राजनं तोदनं तोत्रम्**

**प्रेति** ॥ प्रवीयतेऽनेन 'अज गतिक्षेपणयोः' (भ्वा० प० से०) ल्युट् (३।३।११५) । 'वा यौ' (२।४।५७) इति वी न ॥ (१) ॥*॥ तुद्यतेऽनेन 'तुद व्यथने' (तु० उ० अ०) ल्युट् (३।३।११५) ॥ (२) ॥*॥ 'दाम्नी–' (३।२।१८२) इति ष्ट्रन् । **'तोत्रं** तु प्राजने वेणुकेऽपि च' इति विश्वः (मेदिनी) ॥ (४) ॥*॥ त्रीणि **'वृषभादिप्रेरणदण्डस्य'** ॥

**खनित्रमवदारणम् ॥ १२ ॥**

**खेति** ॥ खन्यतेऽवदार्यतेऽनेन । 'खन खनने' (भ्वा० उ० से०) । 'अर्तिलूधू–' (३।२।१८४) इतीत्रः ॥ (१) ॥*॥ अवदार्यतेऽनेन । 'दॄ विदारणे' (क्र्या० प० से०) । ण्यन्तः । ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे **'कुद्दालादेः'** ॥

**दात्रं लवित्रम्**

**देति** ॥ दात्यनेन । 'दाप् लवने' (अ० प० अ०) । 'दाम्नी–' (३।२।१८२) इति ष्ट्रन् ॥ (१) ॥*॥ लूयतेऽनेन । 'लूञ्' (क्र्या० उ० से०) । 'अर्ति–' (३।२।१८४) इतीत्रः ॥ (२) ॥*॥ द्वे **'लवित्रस्य'** ॥

**आबन्धो योत्रं योक्त्रम्**

**आबेति** ॥ आबध्यतेऽनेन । 'बन्ध बन्धने' (क्र्या० प० अ०) । 'हलश्च' (३।३।१२१) इति घञ् ॥ (१) ॥*॥ यूयतेऽनेन । 'यु मिश्रणे' (अ० प० से०) । 'दाम्नी–' (३।२।१८२) इति ष्ट्रन् ॥ (२) ॥*॥ युज्यतेऽनेन । 'युजिर् योगे' (रु० उ० अ०) ष्ट्रन् (३।२।१८२) ॥ (३) ॥*॥ त्रीणि **'वृषादेर्गले युगबन्धनस्य'** ॥

**अथो फलम् ।**

**निरीशं कुटकं फालः कृषिकः**

**अथविति** ॥ फलति । 'ञिफला विशरणे' (भ्वा० प० से०) । अच् (३।१।१३४) । **'फलं** हेतुफले जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः । **फली** फलिन्याम्' इति हैमः । स्वामी तु 'हलम्' इति पठित्वा 'हलप्रकरणमारब्धम्' इति व्याख्यत् ॥ (१) ॥*॥ ईशाया निर्गतम् । 'निरादयः' (वा० २।२।१८) इति समासः । स्वामी तु 'निष्कान्ता ईषास्मात्' इति विगृह्य **'निरीषम्'** इति मूर्धन्यान्तं पपाठ ॥ (२) ॥*॥ कुटति । 'कुट कौटिल्ये' (तु० प० से०) । क्वुन् (उ० २।३२) ॥*॥ मुकुटस्तु—कुटयति छिनत्ति । 'कुट छेदने' (चु० उ० से०) । इगुपधत्वात् (३।१।१३५) कः । कुटम् । ततः स्वार्थे कन् (ज्ञापि० ५।४।५)—इति वदन् (**कूटकम्**) दीर्घादि मन्यते । अत्र पचाद्यच् (३।१।१३४) उचितः । न तु कः । ण्यन्तस्येगुपधत्वाभावात् ॥ (३) ॥*॥ फालयति । 'ञिफला विशरणे' (भ्वा० प० से०) । ण्यन्तादच् (३।१।१३४) । 'फाल उत्प्लुतौ । क्लीबं सीरोपकरणे पुंसि शंकरसीरिणोः' ( ) ॥ (४) ॥*॥ कृषति । 'कृष विलेखने' (तु० उ० अ०) । 'कृषिवृश्च्योः किकन्' (उ० २।४०) । **'कृषिकाकृषिकौ** फालकृषकौ' इति रुद्रात् स्त्रियामपि ॥*॥ क्वुनि (उ० २।३२) तु कृषकः । स्वामी तु—'शिल्पिनि ष्वुन्' (३।१।१४५)–इत्याह । तन्न । फैलस्य शिल्पित्वाभावात् । परिगणनाच्च । 'कृषकः पुंसि फाले स्यात्कर्षके त्वभिधेयवत्' इति विश्वः (मेदिनी) ॥ (५) ॥*॥ पञ्चापि **'फालस्य'**—इति कलिङ्गः–द्वयं यत्र काष्ठे फालो निबध्यते तस्य । अन्त्यद्वयं तु फालस्य–इति स्वामी ॥

**लाङ्गलं हलम् ॥ १३ ॥**

**गोदारणं च सीरः**

**लेति** ॥ लङ्गति । 'लगि गतौ' (भ्वा० प० से०) । बाहुलकात्कलच् । दीर्घश्च ।—'कलम्बा (म्बला) दयश्च'–इति मुकुटस्त्वपाणिनीयः । **'लाङ्गली** तोयपिप्पल्यां क्लीबं तु कुसुमान्तरे । गोदारणे तृणराजगृहदारुविशेषयोः' (इति मेदिनी) ॥ (१) ॥*॥ हलति । 'हल विलेखने' (भ्वा० प० से०) । अच् (३।१।१३४) ॥*॥ 'ज्वलिति–' (३।१।१४०) इति णे 'हालः' अपि । **'हालः फालवहः सीता'** इति विक्रमादित्यः ॥ (२) ॥*॥ गां भूमिं दारयति । ल्युट् (३।३।११३) ।—गौर्भूमिर्दार्यतेऽनेन । करणे ल्युट (३।३।११७) । नन्द्यादि (३।१।

१—स्वामिग्रन्थे तु 'कुन् शिल्पिसंज्ञयोः'-(उ० २।३२)—इत्येव पाठो दृश्यते ॥

१३३) ल्युर्वा मुकुटः। तन्न। ल्योः कर्तरि विधानात्करणेऽसंभवात् ॥ (३) ॥*॥ सिनोति, सीयते, वा। 'षिञ् बन्धने' (स्वा० उ० अ०)। 'सूसिमिचीनां दीर्घश्च' (उ० २।२५) इति क्रन् दीर्घत्वं च। 'हलतिग्मकरौ **सीरौ**' इति दन्त्यादौ रभसः। '**सीरः** स्यादंशुमालिनि। लाङ्गले' इति हैमः ॥ (४) ॥*॥ चत्वारि '**हलस्य**' ॥

**अथ शम्या स्त्री युगकीलकः।**

**अथेति** ॥ शम्यतेऽनया। 'शम उपशमे' (दि० प० से०) अघ्न्यादिः (उ० ४।११२) ॥ (१) ॥*॥ युगस्य कीलः स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे '**युगस्य कीलके**' ॥

**ईशा लाङ्गलदण्डः स्यात्**

**ईशेति** ॥ ईष्टे 'ईश ऐश्वर्ये' (अ० आ० से०)। 'इगुपध–' (३।१।१३५) इति कः। 'प्रभुशंकरयो**रीशः** स्त्रियां लाङ्गलदण्डके' इति तालव्यान्ते रुद्ररभसौ। '**ईशः** स्वामिनि रुद्रे च स्या**दीशा** हलदण्डके' इति शान्ते विश्वः ॥*॥ ईषते। 'ईष गत्यादौ' (भ्वा० आ० से०)। 'इगुपध–' (३।१।१३५) उभयत्र करणे 'गुरोश्च' (३।३।१०३) इत्यो वा। '**ईषा** पेटी मञ्जूषा' इति मूर्धन्यान्ते चन्द्रगोमी ॥ (१) ॥*॥ लाङ्गलस्य दण्डः ॥ (२) ॥*॥ द्वे '**हलयुगयोर्मध्यकाष्ठस्य**' ॥

**सीता लाङ्गलपद्धतिः ॥ १४ ॥**

**सीति** ॥ सीयते। 'षिञ् बन्धने'। (स्वा० उ० अ०) क्तः (३।२।१०२) पृषोदरादिः (६।३।१०९)।—स्यति भुवम्। 'षोऽन्तकर्मणि' (दि० प० अ०) (बाहुलकात्) क्तः। 'घुमास्था–' (६।४।६६) इतीत्वम्–इति मुकुटः। तन्न। 'द्यतिस्यतिमास्था–' (७।४।४०) इति विशेषविहितेनेत्वेन बाधात्। '**सीता** लाङ्गलरेखा स्याद्व्योमगङ्गा च जानकी' इति दन्त्यादौ रभसः। '**सीता** जनकजागङ्गाभेदयोर्हलपद्धतौ' इति दन्त्यादौ हैमः ॥*॥ शेते स्म। 'शीङ् स्वप्ने' (अ० आ० से०)। 'गत्यर्था–' (३।४।७२) इति क्तः। '**शीता** नभःसरिति लाङ्गलपद्धतौ च **शीता** दशाननरिपोः सहधर्मिणी च। **शीतं** स्मृतं हिमगुणे च तदन्विते च **शीतो**ऽलसे च बहुवारतरौ च दृष्टः' इति तालव्यादौ धरणिः ॥ (१) ॥*॥ लाङ्गलस्य पद्धतिः ॥ (२) ॥*॥ द्वे '**लाङ्गलकृतरेखायाः**' ॥

**पुंसि मेधिः खले दारु न्यस्तं यत्पशुबन्धने।**

**पुंविति** ॥ मेध्यन्ते पशवोऽत्र। 'मेधृ संगमे' (भ्वा० उ० से०) इन् (उ० ४।११८)। स्वामी तु—'मेथिः' इति पठति। तत्र 'मेथृ संगमे' इति धातुर्बोध्यः ॥ (१) ॥*॥ एकम् '**धान्यखले पशुबन्धनस्तम्भस्य**' ॥

**आशुर्व्रीहिः पाटलः स्यात्**

**आश्विति** ॥ अश्नुते। 'अशू व्याप्तौ' (स्वा० आ० से०)। 'कृवापा–' (उ० १।१) इत्युण्। '**आशुस्तु** व्रीहिशीघ्रयोः' इति हैमचन्द्रः। 'तृणबीजं तु श्यामाको, व्रीहिराशु च पाटलः' इति (पर्याये) क्लीबमाशु। '**आशु** स्याद्व्रीहिशीघ्रयोः' इति रत्नमालायामपि क्लीबम् ॥ (१) ॥*॥ वर्हत्युपचयं गच्छति। 'वृह वृद्धौ' (भ्वा० प० से०)। 'इगुपधात् कित्' (उ० ४। १२०) इति इन्। पृषोदरादिः (६।३।१०९)। व्रीयते। 'व्रीङ् गत्याम्' (दि० आ० अ०)। बाहुलकाद् हिक्, वा ॥ (२) ॥*॥ पाटं लाति। कः (३।२।३)। पाटलो वर्णोऽस्यास्ति, इति वा ॥ (३) ॥*॥ पाटलः, व्रीहिः, आशु, च इति नामत्रयम्। आशुनामा व्रीहिः पाटल उच्यते इति नामद्वयम्–इति सुभूतिः। 'आशुव्रीहौ **पाटलो** ना श्वेतरक्तेऽन्यलिङ्गवान्' इति रुद्रः ॥*॥ त्रीणि '**षष्टिकादेः**' ॥

**सितशूकयवौ समौ ॥ १५ ॥**

**सीति** ॥ सितं शूकं यस्य, इति मध्यतालव्यः ॥*॥—(**शितशूकः**) द्वितालव्यः—इति स्वामी ॥ (१) ॥*॥ यौति। यूयते वा। अच् (३।१।१३४)। अप् (३।३।५७) वा० । '**यवो** धान्येऽपृथक्कृतौ' इति हैमः ॥ (२) ॥*॥ द्वे '**यवानाम्**' ॥

**तोक्मस्तु तत्र हरिते**

**तविति** ॥ तकति। तक्यते वा 'तक सहने हासे च' (भ्वा० प० से०)। बाहुलकान्मः, ओलम्, च। ('**तोक्मं** कर्णमले, पुंसि हरिते च हरिद्रवे' इति मेदिनी) ॥ (१) ॥*॥ एकम् '**अपक्वयवस्य**' ॥

**कलायस्तु सतीनकः।**

**हरेणुखण्डिकौ चास्मिन्**

**केति** ॥ कलमयते 'अय गतौ' (भ्वा० आ० से०) अण् (३।२।१)।—कं वातं लाति। 'आतः–' (३।२।३) इति कः। 'आतः–'(७।३।३३) इति युक्—इति मुकुटः। तन्न। ञिति णिति परे विहितस्य युकः के अप्रसङ्गात् ॥ (१) ॥*॥ सति जीवे इनः प्रभुः। 'संज्ञायाम्' (२।१।४४) इति समासः। 'हलदन्तात्' (६।३।९) इत्यलुक्। सतीनं वायुं करोति। 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः।—प्रज्ञाद्यणि (५। ४।३८) '**सातीनकः**' अपि—इति माधवी ॥ (२) ॥*॥ हरति। 'हृञ् हरणे' (भ्वा० उ० अ०)। 'कृहृभ्यामेणुः' (उ० २।१)। '**हरेणुः** स्त्री रेणुकायां स तु पुंसि सतीनके' इति रभसात्पुंसि ॥ (३) ॥*॥ खण्डोऽस्यास्ति। 'अत इनिठनौ' (५।२।११५) इति ठन् ॥ (४) ॥*॥ 'कलायस्त्रिकटः प्रोक्तः सतीनो वर्तुलो मतः। हरेणुरङ्कटो ज्ञेयः' इति व्याडिः ॥*॥ चत्वारि '**रेणुकस्य**' ॥

**कोरदूषस्तु कोद्रवः ॥ १६ ॥**

**कोरेति** ॥ कोरं रुधिरं दूषयति । 'दुष वैकृत्ये' ( दि० प० अ० )। ण्यन्तः । 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ कौति । 'कु शब्दे' (अ० प० अ०) । कवते । 'कुङ् शब्दे' ( भ्वा० आ० अ० ) । विच् (३।२।७२) । द्रवति । 'द्रु गतौ' ( भ्वा० प० अ० ) । अच् (३।१।१३४) । कौश्चासौ द्रवश्च । केन वायुना द्रवति वा । पृषोदरादिः (६।३।१०९) ॥ (२) ॥*॥ द्वे **'कोद्रवस्य'** ॥

**मङ्गल्यको मसूरः**

**मेति** ॥ मङ्गले साधुः । 'तत्र साधुः' (४।४।९८) इति यत् । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१) ॥*॥ मस्यति, मस्यते वा । 'मसी परिणामे' ( दि० प० से० ) । 'मसेरुरन्' (उ० ५।१३) इत्यूरनि दीर्घमध्यः ।—'खर्जिपिञ्जादिभ्य ऊरोलचौ' (ऊ० ४।९०) इत्यूरः—इति मुकुटस्त्वेतत्सूत्राज्ञानमूलकः 'मसेश्च' (उ० १।४३) इत्युरनि ह्रस्वमध्यश्च । 'वेश्यायां व्रीहिभेदे च **मसूरा मसुरा** स्त्रियाम् । **मसूरमसुरौ** पुंसि द्वावेतावपि चैतयोः' इति रभसः ॥ (२) ॥*॥ द्वे **'मसूरस्य'** ॥

**अथ मकुष्टकमयुष्टकौ ।**

**वनमुद्गे**

**अथेति** ॥ मङ्कति, मङ्क्यते वा । 'मकि मण्डने' ( भ्वा० आ० से० ) । बाहुलकादुः, नुमभावश्च । तिष्ठति । 'ष्ठा गतिनिवृत्तौ' ( भ्वा० प० अ० ) । कुन् ( उ० २।३२) । मकुश्चासौ स्थकश्च । 'पूर्वपदात्–' (८।३।१०६) इति षत्वम् । मुकुटस्तु—आद्यचमुकारमाह ॥*॥ विश्वमेदिन्योस्तु **'मुकुष्ठो**-व्रीहिभेदे स्यात् (**मकुष्ठो** मन्थरेऽन्यवत्') इति टवर्गद्वितीयान्तः ॥ (१) ॥*॥ मिनोति । 'डुमिञ् प्रक्षेपणे' ( स्वा० उ० अ०) । 'भृमृशीङ्–' (उ० १।७) इत्युः । मयश्चासौ स्थकश्च । मुकुटस्तु—मयति । 'मय गतौ' (भ्वा० आ० से०) । 'पुंसि–' (३।३।११८) इति घः । मयो गन्ता । तस्य स्तकः प्रतिबन्धकः । 'ष्टक प्रतिघाते' ( भ्वा० प० से० ) । पचाद्यच् (३। १।१३४) । मयस्य स्तको मयष्टकः । नैरुक्तो वर्णविकारः—इत्याह । तन्न 'मयते' इत्युदितत्वात् । घः (३।३।११८) अप्ययुक्तः । तस्य कर्तर्यविधानात् ॥ (२) ॥*॥ वनस्य मुद्गः ॥ (३) ॥*॥ त्रीणि **'वनमुद्गस्य'** **'मोट'** इति ख्यातस्य ॥

**सर्षपे तु द्वौ तन्तुभकदम्बकौ ॥ १७ ॥**

**सेति** ॥ सरति स्नेहोऽस्मात् । 'सृ गतौ' ( भ्वा० प० अ०) । 'सर्तेरपः षुक्च' (उ० ३।१४१) इत्यपः षुगागमश्च । 'सर्षपः स्यात् **सरिषपः कुटस्नेहश्च** तन्तुभः' इति त्रिकाण्डशेषः ॥ (१) ॥*॥ तन्तुना भाति । 'भा दीप्तौ' ( अ० प० से०) । 'सुपि–' (३।२।४) इति कः ॥*॥ स्वामी तु—तुदति । **तुन्तुभः**—इत्याह । बाहुलकादुभच् । पृषोदरादिः (६।३।१०९) ॥ (२) ॥*॥ कन्दति, कन्दयति, वा । 'कदि हिंसायाम्' 'कदि आह्वाने रोदने च' ( भ्वा० प० अ० ) । 'कृकदिकडिकटिभ्योऽम्बच्' । (उ० ४।८२) । अनित्त्वान्न नुम् । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (३) ॥*॥ त्रीणि **'सर्षपस्य'** ॥

**सिद्धार्थस्त्वेष धवलः**

**सीति** ॥ सिद्धोऽर्थोऽस्मात् । 'सरिषपः' सिते तस्मिन् **'रक्षोघ्नो भूतनाशनः'** इति रभसः । **'सिद्धार्थस्तु** पुमान् शाक्यसिंहे च सितसर्षपे' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ एकम् **'श्वेतसर्षपस्य'** ॥

**गोधूमः सुमनः समौ ।**

**गविति** ॥ गुध्यति, गुध्यते, वा । 'गुध परिवेष्टने' (दि० प० से० ) । 'गुधेरूमः' (उ० ५।१२) । **'गोधूमो** नागरङ्गे स्यादोषधिव्रीहिभेदयोः' (इति मेदिनी) ॥ (१) ॥*॥ सुष्ठु मन्यते । 'मन ज्ञाने' ( दि० आ० अ० ) । अच् (३। १।१३४) । 'गोधूमसुमनौ समौ' इति रभसः ॥ (२) ॥*॥ द्वे **'गोधूमस्य'** ॥

**स्याद्यावकस्तु कुल्माषः**

**स्येति** ॥ यौति 'यु मिश्रणे' ( अ० प० से० ) । 'कृत्रादिभ्यो वुन्' (उ० ५।३५) । ततः प्रज्ञाद्यण् (५।४।३८) ॥ (१) ॥*॥ कुलं मस्यति 'मसी परिणामे' ( दि० प० से० ) 'कर्मण्यण्' (३।२।१) पृषोदरादिः (६।३।१०९) । दन्त्यान्तः इति मुकुटः ॥*॥ कुत्सितो माषः । **'कुल्माषो** यावकः पुंसि' इति मूर्धन्यान्तेषु रभसः ॥ (२) ॥*॥—कुल्माषोऽर्धस्विन्नो यवादिः—इति स्वामी ।—शूकशून्यो यवादिः—इति रक्षितादयः ॥*॥ द्वे **'अर्धस्विन्नस्य यवादेः'** ॥

**चणको हरिमन्थकः ॥ १८ ॥**

**चेति** ॥ चण्यते । 'चण दाने' ( भ्वा० प० से० ) । कुन् (उ० २।३२) ॥ (१) ॥*॥—हरीणां मन्थं जनयति । 'अन्येष्वपि–' (३।२।१०१) इति डः—इति मुकुटः । तन्न । 'हरिमन्थजः' इति पाठप्रसङ्गात् । हरिभिर्मथ्यते । 'मथे विलोडने' (भ्वा० प० से०) कर्मणि घञ् (३।३।१९) । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे **'चणकस्य'** ॥

**द्वौ तिले तिलपेजश्च तिलपिञ्जश्च निष्फले ।**

**द्वाविति** ॥ निष्फलस्तिलः । 'तिलान्निष्फलात्पिञ्जपेजौ' (वा० ४।२।३६) ॥ (१) ॥*॥ (२) ॥*॥ 'जर्तिलः' अपि । **'जर्तिलः** कथ्यते सद्भिररण्यप्रभवस्तिलः' ॥*॥ द्वे **'तैलहीनतिलस्य'** ॥

**क्षवः क्षुधाभिजननो राजिका कृष्णिकासुरी ॥१९॥**

**क्षेति** ॥ क्षौति । 'टु क्षु शब्दे' (अ० प० से०) । ण्यर्थः । अच् (३।१।१३४) । ('क्षवः क्षुते राजिकायाम्' इति मेदि-

नी) ॥ (१) ॥*॥ क्षुधामभिजनयति । नन्द्यादिः (३।१। १३३) ॥*॥—क्षुतमभिजनयति । 'क्षुताभिजननः'—इति स्वामी ॥ (२) ॥*॥ राजति, राजयति वा । क्कुन् (उ० २।३२) ॥ (३) ॥*॥ कृष्णैव । 'संज्ञायां कन्' (५।३।७५) (४) ॥*॥ असुरस्येयम् । अण् (४।३।१२१) । असति वा । 'असेरुरन्' (उ० १।४२) । प्रज्ञाद्यण् (५।४।३८) ॥ (५) ॥*॥ पञ्च **'कृष्णसर्षपस्य' 'राई'** इति ख्यातस्य ॥

**स्त्रियौ कङ्गुप्रियङ्गू द्वे**

**स्त्रीति** ॥ कमङ्गति । 'अगि गतौ' ( भ्वा० प० से० ) । ण्यन्तो वा । मृगय्वादित्वात् (उ० १।३७) कुः । शकन्ध्वादिः (वा० ६।१।९४) । कं सुखं गच्छति । 'गम्लृ गतौ' ( भ्वा० प० अ० ) । मितद्र्वादित्वात् (वा० ३।२।१८०) डुः ॥ (१) ॥*॥ एवं प्रियं गच्छति ॥ (१) ॥*॥ द्वे **'प्रियङ्गोः'** ॥

**अतसी स्यादुमा क्षुमा ।**

**अतेति** ॥ अतति । 'अत सातत्यगमने' (भ्वा० प० से०) । 'अत्यविचमि–' (उ० ३।११७) । गौरादिः (४।१।४१) ॥ (१)॥*॥ उं शिम्बं माति, मिमीते, वा । 'मा' (अ० प० अ०) 'माङ् माने' ( जु० आ० अ० ) । 'आतोऽनुप–' (३।२।३) इति कः । अवते, ऊयते, वा 'ऊङ् शब्दे' ( भ्वा० आ० अ० ) । 'विभाषा तिलमाषोमा–' (५।२।४) इति निपातनान्मक् इति वा । **'उमा**तसी हैमवतीहरिद्राकीर्तिकान्तिषु' (इति मेदिनी) ॥ (२) ॥*॥ क्षौति, क्षूयते, वा । 'टु क्षु शब्दे' ( अ० प० अ० ) । बाहुलकान् मक् । 'अर्तिस्तुसुहुसृ–' (उ० १।१४०) इति मन् वा । संज्ञापूर्वकत्वान्न गुणः ।—क्षुवते—इति मुकुटस्य प्रमादः । क्षौतेरादादिकत्वात् । **'क्षुमा**तसीनीलिकयोः' इति विश्वः ॥ (३) ॥*॥ त्रीणि **'अतस्याः'** ॥

**मातुलानी तु भङ्गायाम्**

**मेति** ॥ मायास्तुला । मातुलामानयति । 'अन प्राणने' ( अ० प० से० ) गतौ वा । 'कर्मण्यण्' (३।२।१) । ङीष् (४।१।१४) । मातुलस्य धत्तूरस्य स्त्रीव वा । 'मातुलोपाध्याययोर्ङीषानुकौ' (वा० ४।१।४९) ॥ (१) ॥*॥ भज्यते । अनया वा । 'भञ्जो आमर्दने' ( रु० प० से० ) । 'अकर्तरि च' (३।३।१९) इति 'हलश्च' (३।३।१२१) इति वा घञ् । 'तरङ्गभेदयो**र्भङ्गो भङ्गा** शस्यशणाह्वये' इति रुद्रः ॥ (२) ॥*॥ द्वे **शणाख्यशस्यभेदस्य'** ॥

**व्रीहिभेदस्त्वणुः पुमान् ॥ २० ॥**

**व्रीति** ॥ व्रीहिविशेषः । अणति । 'अण शब्दे' ( भ्वा० ॰ से० ) । 'अणश्च' । 'धान्ये नित्' (१।८।९) इत्युः । **'अणु**र्व्रीह्यल्पयोः' इति हैमः ॥ (१) ॥*॥ एकम् **'चीना'** ॰ ख्यातस्य ॥

**किंशारुः शस्यशूकं स्यात्**

**किमिति** ॥ किंचित् कुत्सितं वा शृणाति । 'शॄ हिंसायाम्' ( क्र्या० प० से० ) । 'किंजरयोः श्रिणः' (उ० १।४) इत्युण् । 'अथ **किंशारु**र्धान्यशूके शरेऽपि च' इति हैमः ॥ (१) ॥*॥ शस्यस्य शूकम् ।—शस्यस्य शूकः–इति मुकुटः ॥ (२) ॥*॥ द्वे **'यवाद्यग्रस्य'** ॥

**कणिशं शस्यमञ्जरी ।**

**केति** ॥ कणयः कणाः सन्त्यस्य । लोमादित्वात् (५।२। १००) शः । कणिनं स्वावयवं श्यति वा । 'शो तनूकरणे' (दि० प० अ०) । 'आतोऽनुप–' (३।२।३) इति कः । **'कणिशो** धान्यशीर्षके' इति तालव्यान्ते रत्नकोषः ॥ (१) ॥*॥ शस्यस्य मञ्जरी ॥ (२) ॥*॥ द्वे **'धान्यमञ्जर्याः'** ॥

**धान्यं व्रीहिः स्तम्बकरिः**

**धेति** ॥ धाने पोषणे साधुः । 'तत्र साधुः' (४।४।९८) इति यत् । **'धान्यं** तु व्रीहौ धान्याके' इति हैमः ॥ (१) ॥*॥ व्रीणाति । 'व्री वरणे' ( क्र्या० प० अ० ) । 'व्रीहिशाल्योर्ढक्' (५।२।२) इति ज्ञापकाद् हिक् । **'व्रीहिः** सामान्यधान्ये स्यादाशुधान्ये च पुंस्ययम्' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ स्तम्बं करोति । 'स्तम्बशकृतोरिन्' (३।२।२४) । व्रीहिसाहचर्यात्पुंस्त्वम् ॥ (३) ॥*॥ त्रीणि **'धान्यसामान्यस्य'** ॥

**स्तम्बो गुच्छस्तृणादिनः ॥ २१ ॥**

**स्तेति** ॥ तिष्ठति । अत्र वा । 'ष्ठा गतिनिवृत्तौ' ( भ्वा० प० अ० ) 'स्थः स्तोऽम्बजबकौ' (उ० ४।९६) ॥ (१) ॥*॥ गवनम् । 'गुङ् शब्दे' ( भ्वा० आ० अ० ) । 'संपदादिक्विप्' (वा० ३।३।१०८) । तुक् (६।१।७१) । गुतं छ्यति । 'छो छेदने' (दि० प० अ०) । 'आतोऽनुप–' (३।२।३) इति कः ॥ (२) ॥*॥ आदिना व्रीहियवादिग्रहः ॥*॥ द्वे **'यवादीनां मूलस्य'** ॥

**नाडी नालं च काण्डोऽस्य**

**नेति** ॥ नलत्यनेन । 'णल गन्धे' ( भ्वा० प० से० ) । 'हलश्च' (३।३।१२१) इति घञ् । नालयति । अच् (३।१।१३४) वा । डलयोरेकत्वम् । गौरादिः (४।१।४१) । **'नाडी** कुहनचर्यायां घटिकागण्डदूर्वयोः । नाले गुणान्तरे स्नायौ' इति हैमः

---

१—धान्यपदेन सप्तदश धान्यान्युच्यन्ते । व्रीहि (१) यव (२) मसूर (३) गोधूम (४) मुद्ग (५) माष (६) तिल (७) चणक (८) अणु (९) प्रियंगु (१०) कोद्रव (११) मकुष्ठक (१२) कलाय (१३) कुलत्थ (१४) शठ (१५) सर्षप (१६) अतसी (१७) इति सप्तदश—इति मुकुटः ॥ महाभाष्ये (५।२।४) सूत्रे तु 'शणसप्तदशानि धान्यानि' इत्युक्तम् । २—गुणान्तरं चर्मरज्जुविशेषः । तत्र यथा 'नाडीभिर्नह्यते युगम्' —इत्यनेकार्थकैरवाकरकौमुदी । 'व्रणान्तरे' इति पाठ आसीत् ॥

॥ (१) ॥*॥ 'नालं काण्डे मृणाले च नाली शाककलम्बके' इति च (हैमः) ॥ (२) ॥*॥ कणति । 'कण शब्दे' (भ्वा० प० से०) । 'अमन्ताड्डः' (उ० १।११४) । बाहुलकाद्दीर्घः । काण्यन्ते वा । 'काण्डो नालेऽधमे वर्गे द्रुस्कन्धेऽवसरे शरे । सैह श्लाघाम्बुषु स्तम्बे' इति हैमः ॥ (३) ॥*॥ अस्य गुच्छस्य ॥*॥ त्रीणि 'तृणादिकाण्डस्य' ॥

**पलालोऽस्त्री स निष्फलः ।**

**पेति** ॥ पलति, पल्यते, वा । 'पल गतौ' (भ्वा० प० से०) । 'तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन्' (उ० १। ११८) ।—बाहुलकात्—इति मुकुटस्य प्रमादः । पलमलति वा 'अल भूषणादौ' (भ्वा० प० से०) । अण् (३।२।१) ॥ (१) ॥*॥ स काण्डः ॥*॥ एकम् 'धान्यरहितकाण्डस्य'

**कडङ्गरो बुसं क्लीबे**

**केति** ॥ गृणाति 'गॄ शब्दे' (क्र्या० प० से०) । गिरति । 'गॄ निगरणे' (तु० प० से०) वा अच् (३।१।१३४) । कडस्य गरः । 'कडंगर-' (५।१।६९) इति निर्देशान्मुक् । यद्वा कडति 'कड मदे' (भ्वा० प० से०) । क्विप् (३।२।१७८) । कड् च तदङ्गं च । कडङ्गं राति । 'रा दाने' (अ० प० अ०) । कः (३।२।३) ॥ 'कडङ्कर' इति हरदत्तपाठे कृञ् धातुः ॥ (१) ॥*॥ बुसति 'बुस उत्सर्गे' । (तु० प० से०) । 'इगुपध' (३।१।१३५) इति कः (बुसं दन्त्यमिति धातुप्रदीपः) ॥*॥ 'बुषवेषतुषारतोषाः' इति षभेदान्मूर्धन्यान्तमपि ॥ (२) ॥*॥ द्वे पलालादिक्षोदस्य' ॥

**धान्यत्वचि पुमांस्तुषः ॥ २२ ॥**

**धेति** ॥ धान्यस्य त्वक् ॥ (१) ॥*॥ तुष्यति । 'तुष तुष्टौ' (दि० प० अ०) । 'इगुपध-' (३।१।१३६) इति कः । 'तुषस्तु धान्यत्वचि विभीतके' इति हेमचन्द्रः ॥ (२) ॥*॥ द्वे 'तुषस्य' ॥

**शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे**

**श्विति** ॥ श्यति । 'शो तनूकरणे' (दि० प० अ०) । 'उलूकादयश्च' इति साधुः । (उ० ४।४१) । 'शूकोऽनुक्रोशशुङ्गयोः' इति विश्वः ॥ (१) ॥*॥ श्लक्ष्णं कृशं च तत्तीक्ष्णं च तदग्रं च ॥ (२) ॥*॥ किंशारोरन्यः शूको निर्दिष्टः । शूकधान्यशमीधान्यवेदार्थं वा पुनरुक्तः ॥*॥ द्वे 'तीक्ष्णाग्रधान्यस्य' ॥

**शमी सिम्बा**

**शेति** ॥ शाम्यति । 'शम उपशमे' (दि० प० से०) । अच् (३।३।१३४) । गौरादिः (४।१।४१) । 'शमी सक्तुफलायां च शिम्बिकायां च वल्गुलौ' (इति मेदिनी) ॥ (१) ॥*॥ समति 'षम वैक्लव्ये' (भ्वा० प० से०) । 'उल्बादयश्च' (उ० ४।९५) इति साधुः ॥*॥—शिनोति 'शिञ् निशाने' (स्वा० उ० अ०) । ('शिम्बा' । 'शिमिः' 'शिम्बिः' इत्यपि-)—इति स्वामी ॥ (२) ॥*॥ द्वे 'शिम्बायाः' 'छिमि' इति ख्यातायाः ॥

**त्रिषूत्तरे ।**

**त्रीति** ॥ उत्तरे बहुलीकृतान्ताः ॥

**ऋद्धमावसितं धान्यम्**

**रिति** ॥ ऋध्यते स्म । 'ऋधु वृद्धौ' (दि० प० से०) । क्तः (३।२।१०२) । 'ऋद्धं संपन्नधान्ये च सुसमृद्धे तु वाच्यवत्' इति विश्वः (मेदिनी) ॥*॥ 'रिद्धं' संसिद्धम् । राधेः (स्वा० प० उ०)—इति स्वामी । तत्र पृषोदरादिः (६।३। १०९) ॥ (१) ॥*॥ आवसीयते स्म । 'षोऽन्तकर्मणि' (दि० प० अ०) । क्तः (३।२।१०२) अवसानं प्राप्तम् । संपन्नं वा । रक्षार्थमाच्छादितं वा । तत्र आवस्यते स्म । 'वस आच्छादने' (अ० आ० से०) 'अवसितमृद्धे ज्ञातेऽपि (अवसानगते च वाच्यलिङ्गं स्यात्)' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ द्वे 'मर्दनानन्तरमपनीततृणस्य बहुलीकरणयोग्यस्य धान्यराशेः' ॥

**पूतं तु बहुलीकृतम् ॥ २३ ॥**

**प्विति** ॥ पूयते स्म । 'पूञ् पवने' (क्र्या० उ० से०) । क्तः (३।२।१०२) । 'पूतं त्रिषु पवित्रे च शठिते बहुलीकृते' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ बहु मानं लाति । कः (३।२।३) । अबहुलं बहुलमकारि ॥ (२) ॥*॥ 'राशीकृतस्य' । (हैमे तु 'धान्यमावसितं रिद्धं तत्पूतं निर्बुसीकृतम्' इत्युक्तम्) ॥

**माषादयः शमीधान्ये**

**मेति** ॥ 'माषो मुद्गो राजमाषः कुलत्थश्चणकस्तिलः । काकाण्डश्चीवर इति शमीधान्यगणः स्मृतः' इति रत्नकोषः ॥*॥ शमीप्रभवं धान्यम् ॥ (१) ॥*॥ एकम् 'माषादिशमीधान्यस्य' ॥

**शूकधान्ये यवादयः ।**

**श्विति** ॥ शूकयुक्तं धान्यम् ॥ (१) ॥*॥ आदिना गोधूमादिः । एकम् 'यवादिशूकधान्यस्य' ॥

**शालयः कलमाद्याश्च षष्टिकाद्याश्च**

**शेति** ॥ शाड्यते । 'शाडृ आश्लाघ्ये' (भ्वा० आ० से०) । डलयोरैक्यम् । इन् (उ० ४।११८) । शाल्यते वा । 'शल चलने' (भ्वा० प० से०) ण्यन्तः । 'अच इः' (उ० ४। १३९) । 'शालिस्तु गन्धोलौ कलमादिषु' इति हैमः ॥ (१) ॥*॥ 'षष्टिकाः षष्टिरात्रेण पच्यन्ते' (५।१।९०) ॥ एकम् 'शाल्यादीनाम्' ॥

१—सद्दो बलम् ॥

१—'राजार्थम्' इति पाठ आसीत्, परंतु स्वामीग्रन्थे हैमव्याख्यायां च दृष्ट्वा अनुकूलत्वाच्च धृतः ॥

पुंस्यमी ॥ २४ ॥

प्विति ॥ अमी माषाद्याः ॥

**तृणधान्यानि नीवाराः**

**त्रिति** ॥ तृणानीव धान्यानि । अकृष्टोत्पन्नत्वात् ॥ (१) ॥*॥ नि व्रियन्ते । 'वृञ् वरणे' (स्वा० उ० से०) 'नौ वृ धान्ये' (३।३।४८) इति घञ् । 'उपसर्गस्य-' (६।३।१२२) इति दीर्घः । 'स्यान्नीवारो वणिजके वास्तव्येऽपि च दृश्यते' इति विश्वः ॥ (२) ॥*॥ बहुवचनेन श्यामाकादिग्रहः ॥*॥ द्वे **'तृणधान्यानाम्'** ॥

**स्त्री गवेधुर्गवेधुका ।**

**स्त्रीति** ॥ गवा जलेन तत्र वा एधते । 'एध वृद्धौ' (भ्वा० आ० से०) । मृगय्वादित्वात् (उ० १।३७) कुः ॥ (१) ॥*॥ स्वार्थे कन् (ज्ञापि० ५।४।५) ।—गवे गवार्थं दीयते रक्ष्यतेऽसौ । 'देङ् रक्षणे' (भ्वा० आ० अ०) । मृगय्वादित्वात् (उ० १।३७) कुः । नैरुक्तो दकारस्य डः । 'तत्पुरुषे कृति-' (६।३।१३) इत्यलुक् । **'गवेडुः'**-इत्याह मुकुटः ॥*॥ द्वे **'मुन्यन्नविशेषस्य'** ॥

**अयोग्रो मुसलोऽस्त्री स्यात्**

**अयविति** ॥ अयोऽग्रेऽस्य ॥ (१) ॥*॥ मुस्यति अनेन वा । 'मुस खण्डने' (दि० प० से०) । 'वृषादिभ्यश्च' (उ० १।१०६) इति कलच् । **'मुसलं** स्यादयोग्रे च पुंनपुंसकयोः स्त्रियाम् । तालमूल्यामाखुपर्णीगृहगोधिकयोरपि' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ द्वे **'मुसलस्य'** ॥

**उदूखलमुलूखलम् ॥ २५ ॥**

**उद्विति** ॥ ऊर्ध्वं च तत् खं च । ऊर्ध्वखं लाति । 'आतोऽनुप-' (३।२।४) इति कः । पृषोदरादिः (६।३।१०९) । **'उदूखलं** गुग्गुलौ स्यादुलूखलेऽपि न द्वयोः' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'उलूखलस्य'** ॥

**प्रस्फोटनं शूर्पमस्त्री**

**प्रेति** ॥ प्रस्फोट्यतेऽनेन । 'स्फुट विकसने' (भ्वा० आ० से०) । करणे ल्युट् (३।३।११७) ॥ (१) ॥*॥ शूर्पयति, शूर्प्यतेऽनेन वा । 'शूर्प माने' (चु० प० से०) । अच् (३।१।१३४) । 'पुंसि-' (३।३।११८) इति घो वा । 'शुभशतकिंशारुशूर्पशुकम्' इति शभेदात्तालव्यादिः ॥*॥ **'सूर्पं** च' इति पाठाद्दन्त्यादिरपि ॥ (१) ॥*॥ द्वे **'शूर्पस्य'** ॥

**चालनी तितउः पुमान् ।**

**चेति** ॥ चाल्यते अनया वा । 'चल गतौ' (भ्वा० प० से०) । ण्यन्तः । ल्युट् (३।३।११३, ११७) । 'क्षुद्रच्छिद्रशतोपेतं **चालनं** तितउः स्मृतः' इति काल्यः ॥ (१) ॥*॥ द्वे तनोति । तन्यते वा । अनेन वा । 'तनु विस्तारे' (त० उ० से०) । 'तनोतेर्डउः सन्वच्च' (उ० ५।५२) । 'चालनं **तितउ** प्रोक्तम्' इति क्लीबकाण्डे रत्नकोषः । 'न स्त्री तितउ चालनी' इति त्रिकाण्डशेषः ॥ (२) ॥*॥ द्वे **'चालन्याः'** ॥

**स्यूतप्रसेवौ**

**स्यिवति** ॥ सीव्यते स्म । 'षिवु तन्तुसंताने' (दि० प० से०) । क्तः (३।३।१०२) । 'च्छ्वोः-' (६।४।१९) इत्यूठ् ॥*॥ **'स्योन**प्रसेवौ' इति मुकुटः । तत्रौणादिको नः । **'स्योन**स्यूतप्रसेवकाः' इति रभसः ॥ (१) ॥*॥ प्रसीव्यते 'अकर्तरि च' (३।३।१९) इति घञ् । **'प्रसेव**स्तु वीणाङ्गस्यूतयोर्दृतौ' इति हैमचन्द्रः ॥ (२) ॥*॥ द्वे **'वस्त्रशणादिनिर्मितस्य' 'थैला'** इति ख्यातस्य ॥

**कण्डोलपिटौ**

**केति** ॥ कण्ड्यते । 'कडि भेदने' (चु० प० से०) । 'पटिकडिकण्डिभ्य ओलच्' (उ० १।६६) ॥ (१) ॥*॥ पिटति । 'पिट शब्दसंख्यानयोः' (भ्वा० प० से०) । कर्मकर्तरि 'इगुपध-' (३।१।१३५) इति कः ॥*॥ क्वुनि (उ० २।३२) **'पिटकः'** अपि ॥*॥—**'पिण्डः'**—इति स्वामी । तत्र पिण्ड्यते । 'पिडि संघाते' (भ्वा० आ० से०) कर्मणि घञ् (३।३।१९) । **'पिण्डो** बोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिह्लकयोरपि । ओण्ड्पुष्पे च पुंसि स्यात्क्लीबमाजीवनायसोः । **पिण्डी** च पिण्डतगरेऽलाबूखर्जूरभेदयोः' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'वंशादिनिर्मितभाण्डस्य'** ॥

**कटकिलिञ्जकौ ॥ २६ ॥**

**केति** ॥ कटति । 'कटे वर्षादौ' (भ्वा० प० से०) । अच् (३।१।१३४) । **'कटः** श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशये शवे । समये गजगण्डेऽपि पिप्पल्यां तु **कटी** मता' (इति मेदिनी) ॥ (१) ॥*॥ किल्यतेऽनेन । 'किल श्वैत्यक्रीडनयोः' (तु० प० से०) । 'इगुपधात् कित्' (उ० ४।१२०) इतीन् । वेत्रवीरणादिः । किलेर्जातः । जनेः 'पञ्चम्यामजतौ' (३।२।९८) इति डः । पृषोदरादिः (६।३।१०९) ।—'तत्पुरुषे कृति-' (६।३।१४) इति (द्वितीयायाः) अलुक्—इति मुकुटः । तन्न । कृद्योगे षष्ठ्या विशेषविधानात् ॥ (२) ॥*॥ द्वे **'वंशादिविकारस्य'** ॥

**समानौ**

**सेति** ॥ 'समानौ' इति पूर्वेषु त्रिष्वप्यन्वेति ॥

**रसवत्यां तु पाकस्थानमहानसे ।**

**रेति** ॥ रसाः सन्त्यस्याम् । मतुप् (५।२।९५) ॥ (१) ॥*॥ पाकस्य स्थानम् ॥ (२) ॥*॥ महच्च तदनश्च-(अनसोपकरणं लक्ष्यते ।) 'अनोश्मायः-' (५।४।९४) इत्यादिना

१—उज्ज्वलदत्तादिग्रन्थे तु 'कपिगण्डिकटिपटिभ्य ओलच्' इत्यानुपूर्वी दृश्यते । तस्माद्गण्डुलकादोलच् ।

टच् ।—महदनोऽस्य—इति स्वामी । तन्न । 'अनोश्मायः–' इति तत्पुरुषसमासान्तोपन्यासविरोधात् ॥ (३) ॥*॥ त्रीणि **'पाकस्थानस्य'** ॥

**पौरोगवस्तदध्यक्षः**

**पाविति** ॥ पुरः पूजिता गौर्भूमिः । पुरोगवी । 'गोरतद्धित' (५।४।९२) इति टच् । तस्या अयम् 'तस्येदम्' (४।३।१२१) इत्यण् । यद्वा पुरः प्रथमं याच्यवस्तुषु गौर्नेत्रमस्य । पुरोगुः । 'गोस्त्रियोः–' (१।२।४८) । ततः 'प्रज्ञादयण्' (५।४।३८) ॥ (१) ॥*॥ तस्याध्यक्षः ॥ (२) ॥*॥ द्वे **'महानसाधिकृतस्य'** ॥

**सूपकारास्तु बल्लवाः ॥ २७ ॥**
**आरालिका आन्धसिकाः सूदा औदनिका गुणाः ।**

**स्विति** ॥ शोभना आपोऽस्मिन् । 'ऋक्पूर्–' (५।४।७४) इत्यः । 'कुसुयुभ्यश्च' इत्यपोऽत ऊत् । सवति रसान् । 'षु प्रसवादौ' ( भ्वा० प० से० ) । 'सुशूभ्यां मिच्च' (उ० ३।२६) इति पो दीर्घश्च ।—'युकुसूनां किच्च'—इत्यपाणिनीयम् । सूपं करोति । 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ वल्लनम् । 'वल्ल संवरणे' ( भ्वा० आ० से० ) । 'वल्लिः' सौत्रो वा प्रीतौ । भावे घञ् (३।३।१८) । वल्लोऽस्यास्ति । 'अन्येभ्योऽपि–' (वा० ५।२।१०९) इति वः । वल्लं वाति । 'आतोऽनुप–' (३।२।३) इति कः । **'बल्लवः** सूपकारे स्याद्भीमसेने च गोदुहि' इति विश्वः ॥ (२) ॥*॥ अरालं कुटिलं चरन्ति 'चरति' (४।४।८) इति ठक् ॥ (३) ॥*॥ अन्धो भक्तं शिल्पं येषाम् । 'शिल्पम्' (४।४।५५) इति ठक् ॥ (४) ॥*॥ सूदन्ति छागादीन् । 'षूद हिंसायाम्' ( चु० उ० से० ) । अच् (३।१।१३४) । कः (३।१।१३५) वा । **'सूद**स्तु कथितः सूपकारे च व्यञ्जनान्तरे' इति विश्वमेदिन्यौ ॥ (५) ॥*॥ ओदनं शिल्पं येषाम् । 'शिल्पम्' (४।४।५५) इति ठक् ॥ (६) ॥*॥ गुणयते । 'गुण निमन्त्रणे' ( चु० उ० से० ) अदन्तः । अच् (३।१।१३४) । **'गुणो** मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागे शौर्यादिसंध्यादिसत्त्वाद्यावृत्तिरज्जुषु । शुक्लादावपि बुध्यां च' (इति मेदिनी) ॥ (७) ॥*॥ सप्त **'पाककर्तुः'** ।—आद्यद्वयं व्यञ्जनकारस्य—इति स्वामी ॥

**आपूपिकः कान्दविको भक्ष्यकारः**

**आप्विति** ॥ अपूपाः पण्यमस्य । 'तदस्य पण्यम्' (४।४।५१) इति ठक् ॥ (१) ॥*॥ कन्दौ संस्कृतम् । 'संस्कृतं भक्षाः' (४।२।१६) इत्यण् । कान्दवं पण्यमस्य । ठक् (४।४।५१) ॥ (२) ॥*॥ भक्ष्यं करोति । 'कर्मण्यण्' (३।२।१) ॥ (३) ॥*॥ त्रीणि **'भक्ष्यकारस्य'** ॥

**इमे त्रिषु ॥ २८ ॥**

**इम इति** ॥ इमे पौरोगवादयः ॥

**अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका ।**

**अश्मेति** ॥ अश्मनोऽप्यन्तोऽत्र । शकन्ध्वादिः (वा० ६।१।९४) । **'अश्मन्त**मशुभे चुल्ल्यां मरणेऽनवधावपि । क्षेत्रेऽपि' इति विश्वः (मेदिनी) ॥*॥ **'अस्वन्तः'** इति पाठे असूनामन्तोऽत्र ॥ (१) ॥*॥ उद् धीयतेऽत्र 'धाञः' ( जु० उ० अ० ) ल्युट् (३।३।११७) । **'उद्धान**मुद्गते वाच्यलिङ्गं चुल्ल्यां नपुंसकम्' इति विश्वः (मेदिनी) ॥*॥ **'उद्ध्मानम्'** इति पाठे तु—उद्ध्मायतेऽत्र । 'ध्मा शब्दादौ' (भ्वा० प० अ०) । ल्युट् (३।३।११७) ॥ (२) ॥*॥ अधिश्रीयतेऽत्र 'श्रीञ् पाके' ( क्र्या० उ० अ० ) । अधिकरणे ल्युट् (३।३।११७) । ङीप् (४।१।१५) ॥ (३) ॥*॥ चुल्लयतेऽत्र । 'चुल्ल भावकरणे' ( भ्वा० प० से० ) । इन् (उ० ४।११८) । 'चुद्यतेऽत्राग्निरिति वा' । 'चुद प्रेरणे' (चु० प० से०) । बाहुलकाल्लिक् । 'कृदिकारात्' (ग० ४।१।४५) इति वा ङीष् ॥ (४) ॥*॥ अन्त्यतेऽत्र । 'अति बन्धने' ( भ्वा० आ० से० ) । ण्वुल् (३।३।१०९) । 'अन्तिकं निकटे वाच्यलिङ्गं स्त्री शातलौषधौ । चुल्ल्यां ज्येष्ठभगिन्यां च नाट्योक्तौ कीर्त्यतेऽन्तिका' (इति मेदिनी) ॥ (५) ॥*॥ पञ्च **'चुल्ल्याः'** ॥

**अङ्गारधानिकाङ्गारशकट्यपि हसन्त्यपि ॥ २९ ॥**
**हसन्यपि**

**अङ्गेति** ॥ अङ्गारा धीयन्तेऽस्याम् । धाञः (जु० उ० अ०) ल्युट् (३।३।११६) । 'टिड्ढा–' (४।१।१५) इति ङीप् । कन् (ज्ञापि० ५।४।५) ॥ (१) ॥*॥ अङ्गाराणां शकटी ॥ (२) ॥*॥ हसति । 'हसे हसने' (भ्वा० प० से०) । 'लटः शतृ–' (३।२।१२४) । 'शप्श्यनोः' (७।१।८१) इति नुम् । **'हसन्त्य**ङ्गारधान्यां च मल्लिकाशाकिनीभिदोः' इति विश्वः ॥ (३) ॥*॥ 'कृत्यल्युटः' (३।३।११३) इति ल्युट् । 'टिड्ढा–' (४।१।१५) इति ङीप् ॥ (४) ॥*॥ चत्वारि **'अङ्गारशकट्याः'** 'बोरसी' इति ख्यातायाः ॥

**अथ न स्त्री स्यादङ्गारः**

**अथेति** ॥ अङ्गति । 'अगि गतौ' (भ्वा० प० से०) । 'अङ्गिमदिमन्दिभ्य आरन्' (उ० ३।१३४) । अङ्गमियर्ति वा । 'ऋ गतौ' (जु० प० अ०) । 'कर्मण्यण्' (३।२।१) । 'अङ्गार-

---

१—इदं च 'अत उत्' इत्यन्तमसंगतम् । 'न पूजनात्' (५।४।६९) इत्यनेन समासान्तनिषेधस्य दुर्वारत्वात् । 'कुसुयुभ्यश्च' इति वार्तिकस्यापि भाष्यादावभावात् 'निर्मूलत्वात् । अत एवैतज्जनकेनापि सिद्धान्तकौमुद्यां हलन्तनपुंसकप्रकरणे 'स्वप्' शब्द उदाहृतः ॥ २—'चरति' इत्यत्र 'तेन' इत्यनुवृत्तेः सर्वसंमतत्वेन चिन्त्यमेतत् ॥

१—स च साग्निर्निरग्निश्च । तत्र साग्नौ यथा—'अङ्गारचुम्बितमिव व्यथमानमास्ते' इति । निरग्नौ यथा—'कलङ्कस्तत्रत्यो व्रजति मलिनाङ्गारतुलनाम्' इत्यादिप्रयोगः—इति मुकुटः ।

मुल्मुके न स्त्री पुंलिङ्गस्तु महीसुते' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ एकम् **'अङ्गारस्य'** ॥

**अलातमुल्मुकम् ।**

**अलेति** ॥ लानम् । 'ला दाने' ( अ० प० अ० ) । क्तः (३।३।११४) । न लातमस्य ॥ (१) ॥*॥ ओषति । 'उष दाहे' ( भ्वा० प० से० ) । 'उल्मुकदर्वि–' (उ० ३।८४) इति साधुः ॥ (२) ॥*॥ द्वे **'अर्धदग्धकाष्ठस्य'** ।—त्रयोऽपि पर्यायाः—इति मुकुटः ॥

**क्लीबेऽम्बरीषं भ्राष्ट्रः**

**क्लीति** ॥ अम्ब्यतेऽत्र वा । 'अबि शब्दे' ( भ्वा० आ० से० ) । 'अम्बरीषः' (उ० ४।२९) इति साधुः—'शिरीषादयश्च'—इति लपाणिनीयम् । 'अम्बरीषपुरुषोषरौषधम्' इति षभेदान्मूर्धन्यान्तोऽयम् । **'अम्बरीषं** रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे । नरकस्य प्रभेदे च किशोरे भास्करेऽपि च । आम्रातकेऽनुतापे च' **'अनिमिषो** मत्स्यदेवयोः' ( इति मेदिनी ) ॥ (१) ॥*॥ भृज्यतेऽत्र । 'भ्रस्ज पाके' ( तु० उ० अ० ) । 'भ्रस्जिगमिनमि–' (उ० ४।१६०) इति ष्ट्रन्वृद्धी ॥ (२) ॥*॥ द्वे **'भर्जनपात्रस्य'** ॥

**ना कन्दुर्वा स्वेदनी स्त्रियाम् ॥ ३० ॥**

**नेति** ॥ स्कन्दिति । 'स्कन्दिर् गतिशोषणयोः' (भ्वा० प० अ० ) । 'स्कन्देः सलोपश्च' (उ० १।१४) इति कुः । 'वा' इत्यस्यात्राप्यन्वयः । पक्षे स्त्रीसाहचर्यात् ॥ (१) ॥*॥ खिद्यतेऽस्मात् । अधिकरणे ल्युट् (३।३।११७) ।—'वा स्त्रियाम्' इत्यन्वयात् 'स्वेदनः' अपि—इति मुकुटः ॥ (२) ॥*॥ द्वे **'मद्यनिर्माणोपयोगिपात्रस्य' 'कराही'** इति ख्यातस्य ॥

**अलिंजरः स्यान्मणिकः**

**अलीति** ॥ अलनम् । 'अल भूषणादौ' ( भ्वा० प० से० ) । 'इकृष्यादिभ्यः' (वा० ३।३।१०८) इन् (उ० ४।११८) वा । अलिं सामर्थ्यं जरयति, जृणाति, वा । 'जॄष् वयोहानौ' ( भ्वा० प० से० ) । 'जॄ वयोहानौ' (क्र्या० प० से० ) वा । अण् (३।२।१) । अच् (३।१।१३५) वा ॥ (१) ॥*॥ मणति । 'मण शब्दे' ( भ्वा० प० से० ) । 'सर्वधातुभ्यः–' (उ० ४।११८) इतीन् । स्वार्थे कन् (ज्ञापि० ५।४।५) 'संज्ञायां कन्' (५।३।७५) वा ॥ (२) ॥*॥ द्वे **'महाकुम्भस्य' 'माट'** इति ख्यातस्य ॥

**कर्कर्यालुर्गलन्तिका ।**

**केति** ॥ कर्कणम् । 'कर्क हासे' ( ) । घञ् (३।३।१८) । कर्कं राति । 'रा दाने' ( अ० प० अ० ) । 'आतोऽनुप–' (३।२।३) इति कः । गौरादिः (४।१।६१) **'कर्करी** भाण्डभेदे ना दर्पणे कठिने त्रिषु' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ आ लुनाति । 'लूञ् छेदने' ( क्र्या० उ० से० ) । क्विप् (३।२।७६) ॥*॥ ह्रस्वपाठे आलाति 'ला दाने' ( अ० प० से० ) । मितद्र्वादित्वात् (वा० ३।२।१८०) डुः । **'आलु**र्गलन्तिकायां स्त्री क्लीबं मूले च भेलके' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ गलति । 'गल अदने' ( भ्वा० प० से० ) । शता (३।२।१२४) । 'उगितश्च' इति ङीप् (४।१।६) । 'शप्श्यनोः–' (७।१।८१) इति नुम् । स्वार्थे कन् । (ज्ञापि० ५।४।५) ॥ (३) ॥*॥ त्रीणि **'गलन्तिकायाः' 'करवती'** इति ख्यातायाः ।—कन्दोर्धृतपक्वनिष्काशनसाधनस्य—इत्येके ॥

**पिठरः स्थाल्युखा कुण्डम्**

**पीति** ॥ पेठति । 'पिठ बन्धे' ( भ्वा० प० से० ) 'इगुपध–' (३।१।१३५) इति कः । पिठं राति । 'रा दाने' (अ० प० अ० ) । 'आतोऽनुप–' (३।२।३) इति कः ॥ (१) ॥*॥ तिष्ठत्यत्रौदनादि । 'ष्ठा गतिनिवृत्तौ' ( भ्वा० प० अ० ) । 'स्थाचति–' (उ० १।११६) इत्यालच् । स्थलत्यत्र वा । 'ष्ठल स्थाने ( भ्वा० प० से० ) । ज्वलादीण् (३।१।४०) । 'जातेः' (४।१।६३) इति ङीष् । स्थालं च । **'स्थालं** भाजनभेदेऽपि **स्थाली** स्यात्पाटलोखयोः' (इति मेदिनी) ॥ (२) ॥*॥ ओखति । 'उख गतौ' (भ्वा० प० से०) । 'इगुपध–' (३।१।१३५) इति कः ॥*॥ (**'उषा'** इति) मूर्धन्यपाठे 'उष दाहे' (भ्वा० प० से०) ॥ (३) ॥*॥ कुण्डयति । 'कुडि रक्षायाम्' ( चु० प० से० ) । अच् (३।१।१३४) ।—कुणति । 'कुण शब्दोपतापयोः' ( तु० प० से० ) । 'कुणादिभ्यः कित्' इति डः—इति मुकुटः । तन्न । उक्तसूत्राभावात् । 'क्वादेः कित्' (उ० १।११५) इति सूत्रस्य सत्त्वात् । **'कुण्ड**मग्न्यालये मानभेदे देवजलाशये । **कुण्डी** कमण्डलौ जारात्पतिवत्नीसुते पुमान् । पिठरे तु न ना' इति विश्वः (मेदिनी) ॥ (४) ॥*॥ चत्वारि **'ओदनादिपचनपात्रस्य'** ॥

**कलसस्तु त्रिषु द्वयोः ॥ ३१ ॥**

**घटः कुटनिपौ**

**केति** ॥ केन जलेन लसति । 'लस श्लेषणक्रीडनयोः' ( भ्वा० प० से० ) । पचाद्यच् (३।१।१३५) ॥*॥ तालव्यान्तपाठे कलं शवति । 'शु गतौ' ( ) । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । 'तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः । **कलशः** शम्बलं चैव जिह्वायां रशना तथा' इति शभेदः । स्त्रियां जातित्वान्ङीष् (४।१।६३) ॥ (१) ॥*॥ घटति । 'घट चेष्टायाम्' ( भ्वा० आ० से० ) । अच् (३।१।१३४) । स्त्रियां घटी । **'घटाः** समाधिभेदे ना शिरः कूटकुटेषु च । **घटा** घटनगोष्ठीभघटनासु च योषिति' (इति मेदिनी) ॥ (२) ॥*॥ कुटति 'कुट कौटिल्ये' (तु० प० से०) ।

१—उचितमिदम् । उक्तमेदिन्याङ्गारस्योल्मुकार्थकतोक्तेः ।
२—'अनिमिषशब्दार्थपरमिदं प्रसङ्गेनोक्तम् । न त्वस्यात्रोपयोगः ॥

'इगुपध–' (३।१।१३५) इति कः ॥ (३) ॥*॥ नियतं पिबन्त्यनेन । 'घञर्थे कः' (वा० ३।३।५८) ॥ (४) ॥*॥ कुटनिपावप्यस्त्री (स्त्रियौ) ॥*॥ चत्वारि **'घटस्य'** ॥

**अस्त्री शरावो वर्धमानकः ।**

**अस्त्रीति** ॥ शरणम् । 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'ऋदोरप्' (३।३।५७) । शृणाति वा । अच् (३।१।१३४) शरं शराद्वावति अण् (३।२।१) । अच् (३।१।१३४) वा ॥*॥—(सरावः) दन्त्यादिरपि—इति मुकुटः ॥ (१) ॥*॥ वर्धते । 'वृधु वृद्धौ' (भ्वा० आ० से०) । शानच् (३।२।१२४) । शप् (३।१।६८) । मुक् (७।२।८२) । 'संज्ञायां कन्' (५।३।७५) ॥ (२) ॥*॥ द्वे **'पात्रभेदस्य'** ॥

**ऋजीषं पिष्टपचनम्**

**ऋजीति** ॥ अर्जति । 'अर्ज अर्जने' (भ्वा० प० से०) । 'अर्जेरृज च' (उ० ४।२८) इतीषन् ॥*॥ **'ऋचीषम्'** इति पाठः—इति कश्चित् । 'ऋच् शब्दे' (तु० प० से०) बाहुलकात्कीषन् ॥ (१) ॥*॥ पच्यतेऽत्र । 'करणा–' (३।३।११७) इति ल्युट् । पिष्टस्य पचनम् ॥ (२) ॥*॥ द्वे **'पिष्टपाकोपयोगिनः पात्रस्य' 'तवा'** इति ख्यातस्य ॥

**कंसोऽस्त्री पानभाजनम् ॥ ३२ ॥**

**कमिति** ॥ कम्यते । 'कमु कान्तौ' (भ्वा० आ० से०) 'आयादयः–' (३।१।३१) इति णिङ् न । वृतॄवदिहनिकमिकषिभ्यः सः' (उ० ३।६२) । **'कंसोऽस्त्री** तैजसद्रव्ये कांस्ये मानेऽसुरे तु ना' (इति मेदिनी) ॥ (१) ॥*॥ पीयते, इति पानम् । ल्युट् (३।३।११३) । क्षीरादिपानस्य भाजनम् ॥ (२) ॥*॥ द्वे **'पानपात्रस्य'** ॥

**कुतूः कृत्तेः स्नेहपात्रम्**

**कुति** ॥ कुत्सितं तन्यते । 'तनु विस्तारे' (त० उ० से०) । बाहुलकात् कूः, टिलोपश्च । कौति । 'कु शब्दे' (अ० प० अ०) । बाहुलकात् कूस्तुक्च वा । 'कुत्वा डुपच्' (५।३।८९) इति निर्देशाद्वा ॥ (१) ॥*॥ कृत्तेश्चर्मणः ॥*॥ स्नेहस्य तैलघृतादेः पात्रम् ॥ (२) ॥*॥ द्वे **'तैलघृतादिपात्रस्य'** ॥

**सैवाल्पा कुतुपः पुमान् ।**

**सैवेति** ॥ 'सा' इति निर्देशात् कुतूः स्त्रीलिङ्गः ॥*॥ अल्पा कुतूः । 'कुत्वा डुपच्' (५।३।८९) ॥ (१) ॥*॥ एकम् **'अल्पतैलघृतादिपात्रस्य'** ॥

**सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम् ॥ ३३ ॥**

**सेति** ॥ आ उप्यतेऽत्र । 'डुवप् बीजतन्तुसंताने' (भ्वा० उ० अ०) । ल्युट् (३।३।११७) ॥ (१) ॥*॥ 'भदि कल्याणे सुखे च' (भ्वा० आ० से०) । अच् (३।१।१३४) । पृषोदरादिः (६।३।१०९) ॥*॥ भणति । 'भण शब्दे' (भ्वा० प० से०) । 'अमन्ताड्डः' (उ० १।११४) । प्रज्ञाद्यण् (४।४।३८) । **'भाण्डं** मूलवणिग्वित्ते तुरंगाणां च मण्डने । नदीकूलद्वयोर्मध्ये भूषणे भाजनेऽपि च' इति (हैमः) ॥ (२) ॥*॥ पाति । 'पा रक्षणे' (अ० प० अ०) । पिबत्यनेन वा । 'पा पाने' (भ्वा० प० अ०) ष्ट्रन् (उ० ४।१५९) ॥ (३) ॥*॥ अमति 'अमगत्यादिषु' (भ्वा० प० से०) 'अमिनक्षियजिवधिपतिभ्योऽत्रन्' (उ० ३।१०५) ॥ (४) ॥*॥ भाजयति । 'भाज पृथक्कर्मणि' (चु० उ० से०) । ल्युट् (३।१।११३) ॥ (५) ॥*॥ स्यूतादि पिठरादि च सर्वमावपनादिशब्दवाच्यम् ॥*॥ पञ्च **'भाण्डस्य'** ॥

**दर्विः कम्बिः खजाका च**

**देति** ॥ दृणाति 'दॄ विदारणे' (क्र्या० प० से०) । 'वृदृभ्यां विन्' (उ० ४।५३) ॥*॥ 'कृदिकारात्–' (ग० ४।१।४५) इति ङीषि **दर्वी** च । ('**दर्वी** पणातद्र्वीः' इति हैमः) ॥ (१) ॥*॥ कम्यते । 'कमु कान्तौ' (भ्वा० आ० से०) । बाहुलकाद्विन् ॥ (२) ॥*॥ खजति । 'खज मन्थे' (भ्वा० प० से०) । 'खजेराकः' (उ० ३।१३) ॥ (३) ॥*॥ एतत्साहचर्यात्पूर्वयोः स्त्रीत्वम् ॥*॥ त्रीणि **'दर्व्याः' 'करछुली'** इति ख्यातायाः ॥

**स्यात्तर्दूर्दारुहस्तकः ।**

**स्यादिति** ॥ तरति । 'तॄ प्लवनतरणयोः' (भ्वा० प० से०) 'त्रो दुट् च' (उ० १।८९) इत्यूः, दुडागमश्च । तर्दति । 'तर्द हिंसायाम्' (भ्वा० प० से०)। तृणत्ति वा 'उतृदिर् हिंसानादरयोः' (रु० उ० अ०) इति वा । बाहुलकादूः ॥ (१) ॥*॥ हस्तप्रतिकृतिः । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । दारुणो हस्तकः ॥ (२) ॥*॥ एतत्साहचर्यात्पूर्वः पुंसि ॥*॥ द्वे **'दर्वीभेदस्य'** (पश्चापि पर्यायाः । उक्तहैमानुरोधात्) ॥

**अस्त्री शाकं हरितकं शिग्रुः**

**अस्त्रीति** ॥ श्यति । धातुक्षयकारित्वात् । 'शो तनूकरणे' (दि० प० अ०) । बाहुलकात्कन् । शक्नोत्यनेन भोक्तुम् । 'शक्लृ शक्तौ' (स्वा० प० अ०) । 'हलश्च' (३।३।१२१) इति घञ् । **'शाको** द्वीपान्तरेऽपि च । शक्तौ द्रुमविशेषे च पुमान्, हरितकेऽस्त्रियाम्' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ हरितो वर्णोऽस्यास्ति । अर्शआद्यच् (५।२।१२७) स्वार्थे कन् (ज्ञापि० ५।४।५) । हरति, ह्रियते वा । 'हृञ् हरणे' (भ्वा० उ० अ०) । 'हृश्याभ्यामितन्' (उ० ३।९३) । कन् (ज्ञा० ५।४।५) ॥ (२) ॥*॥ शीक्यते शीकते । 'शीकृ सेचने' (भ्वा० आ० से०) बाहुलकाद् रुगह्रस्वौ गश्च । शिनोति । 'शिञ् निशाने' (स्वा० उ० अ०) 'जत्र्वादयश्च' (उ० ४।१०२) इति साधुः, इति वा । **'शिग्रुर्ना** शाकमात्रे च शोभाञ्जनमहीरुहे' इति विश्वमेदिन्यौ ॥ (३) ॥*॥ त्रीणि **'वास्तुकादेः शाकस्य'** ॥

**अस्य तु नालिका ॥ ३४ ॥**

**कडम्बश्च कलम्बश्च**

**अस्येति** ॥ कडति 'कड मदे' (भ्वा० प० से०) । 'कृकदिकडिकटिभ्योऽम्बच्' (उ० ४।८२) ॥ (१) ॥*॥ डलयोरैक्यम् । केन लम्बते वा । 'लबि अवस्रंसने' (भ्वा० आ० से०)। अच् (३।१।१३४) । '**कलम्बी** शाकभेदे स्यात्कदम्बशरयोः पुमान्' (इति मेदिनी) । ('**कलम्बः** सायके नीपे नालीशाके **कलम्ब्यपि**' इति विश्वः) ॥ (२) ॥*॥ द्वे '**शाकनालस्य**' (—त्रीणि[२]—इति मुकुटः) ॥

**वेसवार उपस्करः ।**

**वेसेति** ॥ वेसनम् 'विस प्रेरणे' (दि० प० से०) । घञ् (३।३।१८) । वेसं प्रेरणं वारयति वृणोति वा । 'वृञ् वरणे' (स्वा० उ० से०) 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ उपस्करोति व्यञ्जनेन समवैति । कृञः (तु० उ० अ०) । अच् (३।१।१३४) 'समवाये च' (६।१।१३८) इति सुट्) ॥ (२) ॥*॥ द्वे '**संस्कारार्थे दीयमानस्य हिङ्ग्वादेः**' ।—हिङ्गुजीरकहरिद्राधान्याकशुण्ठीसर्षपादेः—इति मुकुटः । 'चित्रकं पिप्पलीमूलं पिप्पलीचव्यनागरम् । धान्याकं रजनीश्वेततण्डुलाश्च समांशकाः । वेसवार इति ख्यातः शाकादिषु नियोजयेत्' इत्यात्रेयसंहिता ।—विंशतिः पलानि हरिद्रायाः, दश पलानि धान्याकस्य, पञ्च पलानि शुद्धजीरकस्य, पलसार्धद्वयं मेथिकायाः । एतच्चतुष्टयं भर्जितमेव ग्राह्यम् । त्रीणि पलानि मरीचस्य, अर्धपलं रामठस्य, । एतत्सर्वमेकत्र संयोज्य संमर्दितं '**वेसवार**' इत्युच्यते—इत्यन्ये ॥

**तिन्तिडीकं च चुक्रं च वृक्षाम्लम्**

**तीति** ॥ तिम्यति । 'तिम आर्द्रीभावे' (दि० प० से०) । 'अनी(ली)कादयश्च' (उ० ४।२५) इति साधु ॥ (१) ॥*॥ चकति(ते) 'चक तृप्तौ प्रतीघाते च' (भ्वा० आ० से०) । 'चकिरम्योरुच्चोपधायाः' (उ० २।१४) इति रक् । '**चुक्रं** वृक्षाम्ले चाङ्गेर्यां स्त्री पुंस्यम्लेऽम्लवेतसे' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ वृक्षस्याम्लम् ॥ (३) ॥*॥ त्रीणि '**तिन्तिडीकस्याम्लभेदस्य**' '**चूका**' इति ख्यातस्य ।—वल्लीविशेषस्य—इत्यन्ये ॥

**अथ वेल्लजम् ॥ ३५ ॥**

**मरीचं कोलकं कृष्णमूषणं धर्मपत्तनम् ।**

**अथेति** ॥ वेल्लनम् । 'वेल्ल चलने' (भ्वा० प० से० ) । घञ् (३।३।१८) । वेल्लं जायते । 'जनी' (दि० आ० से०) । अन्तर्भावितण्यर्थः । 'अन्येष्वपि–' (३।२।१०१) इति डः (१) ॥*॥ म्रियते विषमनेन । 'मृङ् प्राणत्यागे' (तु० आ० अ०) । बाहुलकादीचः ॥*॥ (**मरिचम्**) ह्रस्वमध्यमपि ॥ (२) ॥*॥ कोलति । 'कुल संस्त्याने' (भ्वा० प० से०) । 'कृञादिभ्यो वुन्' (उ० ५।३५) । ण्वुल् (३।१।१३३ । वा०) ॥ (३) ॥*॥ कर्षति । 'कृष विलेखने' (भ्वा० प० से०) 'कृषेर्वर्णे' (उ० ३।४) इति नक् । '**कृष्णः** सत्यवतीपुत्रे वायसे केशवेऽर्जुने । **कृष्णा** स्याद्द्रौपदीनीलीकणाद्राक्षासु योषिति । मेचके वाच्यलिङ्गः स्यात् क्लीबे मरिचलोहयोः' इति विश्वः (मेदिनी) ॥ (४) ॥*॥ ऊषति । 'ऊष दाहे' 'रुजायाम्' (भ्वा० प० से०) । ल्युट् (३।१।११३) । '**ऊषणं** मरिचे क्लीबं कणायाम्**ऊषणा** स्मृता' (इति मेदिनी) ॥*॥ (**उषणम्**) इति ह्रस्वपाठे । 'उष दाहे' (भ्वा० प० से०) संज्ञापूर्वकत्वाद्गुणाभावः ॥ (५) ॥*॥ धर्मपत्तने जातम् । 'तत्र जातः' (४।३।२५) इत्यण् । संज्ञापूर्वकत्वान्न वृद्धिः ॥ (६) ॥*॥ षट् '**मरीचस्य**' ॥

**जीरको जरणोऽजाजी कणा**

**जीति** ॥ जवति । 'जुः' सौत्रः । 'जोरी च' (उ० २।२३) इति रक् । जिनाति वा । 'ज्या वयोहानौ' (क्र्या० प० अ०) 'ज्यश्च'[१] इति रक् । 'संज्ञायाम्–' (५।३।७५) । इति कन् ॥ (१) ॥*॥ जरयति 'जॄष् वयोहानौ' (दि० प० से०) । नन्द्यादिल्युः (३।१।१३४) । '**जरणं** हिङ्गुनि स्मृतम् । **जरणो** जीरकेऽपि स्यात्कृष्णे सौवर्चलेऽपि च' इति विश्वः ॥ (२) ॥*॥ अजमजति । 'अज गतिक्षेपणयोः' (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१) ङीप् (४।१।१५) '**बहुलं** तणि' (वा० २।४।५४) इति वी न ॥ (३) ॥*॥ कणति । 'कण शब्दे' (भ्वा० प० से०) । अच् (३।१।१३४) । '**कणा** जीरककुम्भीरमक्षिकापिप्पलीषु च । **कणो**ऽतिसूक्ष्मे धान्यांशे' इति विश्वः (मेदिनी) ॥ (४) ॥*॥ चत्वारि '**जीरकस्य**' ॥

**कृष्णे तु जीरके ॥ ३६ ॥**

**सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्चिका ।**

**क्विति** ॥ सुषवणम् । 'षू प्रेरणे' (तु० प० से०) । 'ऋदोरप्' (३।३।५७) । 'उपसर्गात्सुनोति–' (८।३।६५) इति षत्वम् । सोऽस्त्यस्याः । पिप्पल्यादिः (ग० ४।१।४१) ॥ (१) ॥*॥ कारं वाति । 'वा गतिगन्धनयोः' (अ० प० अ०) । 'आतोऽनुप–' । (३।२।३) इति कः । गौरादिः (४।१।४१) । यद्वा कारणम् । 'कॄञ् हिंसायाम्' (क्र्या० उ० से०) । ण्यन्तः । संपदादि क्विप् (वा० ३।३।१०८) । कारमवति । 'अव रक्षणादौ' (भ्वा० प० से०) । अण् (३।२।१) ङीप् (४।१।१५) संज्ञापूर्वकत्वान्न वृद्धिः । यत्तु—कारोरियम्—इति मुकुटः ।

१—अत एव 'नाला न ना पद्मदण्डे नाली शाककडम्बके' इति मेदिन्यां नालीशब्दस्य कडम्बवाचकता दृश्यते ॥ २—सिद्धान्तकौमुद्यां तु पूर्वसूत्रे 'उप' ग्रहणमकृत्वोत्तरसूत्रे 'चात्प्रागुक्तयोरर्थयोः' इत्युक्तम् । तस्मात् 'उपात्–' (६।१।१३९) इति सूत्रेण समवायेऽपि सुट् ॥

१—वाक्यम् 'रकि ज्यः संप्रसारणम्' इति (१।२।४ सूत्रस्थ)-भाष्यमूलकम् ॥

तत्र। वृद्धत्वाच्छस्य (४।३।११४) प्रसङ्गात्। यदपि—कस्य वायोरारवोऽस्याम्—इति। तदपि न। व्यधिकरणबहुव्रीहिप्रसङ्गात्। '**कारवी** मधुरादीप्यत्वक्पत्रीकृष्णजीरके' (इति मेदिनी)॥(२)॥*॥ प्रथते। 'प्रथ प्रख्याने' (चु० प० से०)। 'प्रथिम्रदिभ्रस्जां संप्रसारणम्–' (उ० ११२८) इति कुः। 'वोतो गुणवचनात्' (४।१।४४) इति ङीष्। '**पृथ्वी** भूमौ महत्यां च त्वक्पर्ण्यां कृष्णजीरके' इति विश्वः॥(३)॥*॥ '**पृथुः** स्यान्महति त्रिषु। त्वक्पर्ण्यां कृष्णजीरेऽस्त्री पुमानग्नौ नृपान्तरे' (इति मेदिनी)॥(४)॥*॥ कालो वर्णोऽस्त्यस्याः। अर्शआद्यच् (५।२।१२७)॥(५)॥*॥ उपकुञ्चति। 'कुञ्च कौटिल्ये' (भ्वा० प० से०) से ण्वुल् (३।१।१३३)॥(६)॥*॥ षट् '**कृष्णवर्णे जीरके**'॥

**आर्द्रकं शृङ्गवेरं स्यात्**

**आर्द्रेति**॥ आर्द्रायां जातम्। 'पूर्वाह्णापराह्णार्द्रा–' (४।३।२८) इति वुन्। आर्द्रयति जिह्वाम्। कुन् (उ० २।३२) वा। आर्द्रसंज्ञकं वा। 'संज्ञायां कन्' (५।३।७५)। अर्दति कफं वा। 'अर्द हिंसायाम्' (चु० उ० से०) 'अर्देर्दीर्घश्च' (उ० २।१८) इति रक्॥(१)॥*॥ शृङ्गमिव वेरं शरीरमस्य॥(२)॥*॥ द्वे '**आर्द्रकस्य**'॥

**अथ छत्रा वितुन्नकम्॥ ३७॥**

**कुस्तुम्बुरु च धान्यकम्**

**अथेति**॥ छत्रमस्त्यस्याः। अर्शआद्यच् (५।२।१२७)। टाप् (४।१।४)। '**छत्रं** स्यादातपत्राणे **छत्रा** मधुरिकौषधौ। धान्याके च शिलीन्ध्रे च' इति हेमचन्द्रः॥(१)॥*॥ विगतं तुन्नं दुःखमस्मात्। कप् (५।४।१५४)। यत्तु—वितुदति मन्दाग्निम्—इति स्वामी। तन्न। सकर्मकात् कर्तरि वर्तमाने क्तस्याभावात्। 'वितुद्यते भक्ष्यार्थम्' इति वा। तुदेः कर्मणि क्तः (३।२।१०२)। कन् (ज्ञापि० ५।४।५)। '**वितुन्नकं** तु धान्याके झाटामलमयूरके' इति विश्वः (मेदिनी)॥(२)॥*॥ कुत्सितं तुम्बति। 'तुबि अर्दने' (भ्वा० प० से०) बाहुलकात् 'कुस्तुम्बुरूणि जातिः' (६।१।१४३) इति निर्देशाद्वा उरुः, सुट्॥(३)॥*॥ धन्यते भक्ष्यार्थिभिः। 'धन शब्दे' (जु० प० से०)। 'पिनाकादयश्च' (उ० ४।१५) इति साधु। स्वामी तु—धान्यमकति। 'अक कुटिलायां गतौ' (भ्वा० प० से०) अण् (३।२।१)—(इत्याह)॥*॥ ह्रस्वादिः इति मुकुटः। '**धन्याकं धान्यकं धान्यं** कुस्तुम्बुरु **धनीयकम्**' इति रभसः॥(४)॥*॥ चत्वारि '**धान्याकस्य**'॥

**अथ शुण्ठी महौषधम्।**

**स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम्॥ ३८॥**

**अथेति**॥ शुण्ठति कफम्। 'शुठि प्रतिघाते' (भ्वा० प० से०)। अच् (३।१।१३४) गौरादिः (४।१।४१)॥*॥ इति (उ० ८४।११८) तु ह्रस्वान्तोऽपि। 'सधन्याशुण्ठिसैन्धवम्' इति वैद्यकम्। इत्थं च गौरादित्वं न कल्प्यम्। 'कृदिकारात्–' (ग० ४।१।४५) इति सिद्धेः॥(१)॥*॥ महच्च तदौषधं च। '**महौषधं** तु शुण्ठ्यां स्याद्विषायां लशुनेऽपि च' इति विश्वः (मेदिनी)॥(२)॥*॥ विशति। 'विश प्रवेशने' (तु० प० अ०) 'अशुप्रुषि–' (उ० १।१५१) इत्यादिना कुन्। '**विश्वं** कृत्स्ने च भुवने, **विश्वे** देवेषु, नागरे। **विश्वा**प्यतिविषायां स्यात्' इति विश्वः। '(**विश्वा**) त्वतिविषायां स्त्री, जगति स्यान्नपुंसकम्। न ना शुण्ठ्यां पुंसि देवप्रभेदे त्वखिले त्रिषु' (इति मेदिनी)॥(३)॥*॥ नगरे भवम्। 'तत्र भवः' (४।३।५३) इत्यण्। '**नागरं** मुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे' (इति मेदिनी)॥(४)॥*॥ विश्वस्य दोषस्य भेषजम्॥(५)॥*॥ पञ्च '**शुण्ठ्याः**'॥

**आरनालकसौवीरकुल्माषाभिषुतानि च।**

**अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके॥ ३९॥**

**आरेति**॥ आर्च्छति 'ऋ गतौ' (भ्वा० प० अ०)। अच् (३।१।१३४) नलति। 'णल गन्धे' (भ्वा० प० से) 'ज्वलिति–' (३।१।१४०) इति णः। आरो नालोऽस्य। 'शेषाद्विभाषा' (५।४।१५४) इति कप्॥(१)॥*॥ सुवीरेषु भवम्। 'तत्र भवः' (४।३।५३) इत्यण्। 'सौवीरं काञ्जिके स्रोतोञ्जने च बदरीफले। ना तु नीवृति' (इति मेदिनी)॥(२)॥*॥ कोलति। 'कुल संस्त्याने' (भ्वा० प० से०)। क्विप् (३।२।१७८) कुल् अर्धखिन्नो माषोऽस्मिन्। कुल् बन्धुर्माषोऽस्य वा। '**कुल्माषं** स्यात्तु काञ्जिके। **कुल्माषो**ऽर्धखिन्नधान्ये+यवके चणकेऽपि च।' इति हेमचन्द्रः॥(३)॥*॥ अभिषूयते स्म। 'षुञ् अभिषवे' (स्वा० उ० अ०)। क्तः (३।२।१०२)। 'उपसर्गात्' (८।३।६५) इति षत्वम्॥*॥ कुल्माषैर्यवादिभिरर्धखिन्नैरभिषूयते स्म। (**कुल्माषाभिषुतम्**) इत्येकं नाम—इति स्वामी॥(४)॥*॥ सूयते स्म, इति। 'षुञ्' (स्वा० उ० अ०)। मन् (उ० १।१४०)। अवन्तिषु अभिषुतं सोमम्। शाकपार्थिवादिः (वा० २।१।७८)॥(५)॥*॥ धान्याभिषुतमम्लम्। पूर्ववत्॥(६)॥*॥ कुत्सितं जलम्। पृषोदरादिः (६।१।१०९)॥(७)॥*॥ 'अञ्जू व्यक्त्यादौ' (रु० प० से०)। 'संज्ञायाम्' (३।३।१०९) इति भावे ण्वुल्। 'धात्वर्थनिर्देशे' (वा० ३।३।१०८) वा। के अञ्जिकास्य॥*॥ 'काञ्चिके' इति पाठे काञ्चयति। 'कचि काचि दीप्तिबन्धनयोः' (भ्वा० आ० से०)। ण्यन्तः। इन् (उ० ४।११८)। 'संज्ञायां कन्' (५।३।७५) '**काञ्चिकं** काञ्जिकं **वीरं कुल्माषाभिषुतं** तथा। अवन्तिसोमं धान्याम्लमारनालं **महारसम्**। सौवीरं च सु-

१—इदं तु हैमपुस्तके विश्वमेदिन्योश्च एतदर्थनिर्देशस्यानुपलम्भेन प्रमादलिखितम्॥

वीराम्लं तथा शुक्तं तुषोदकम्' इति धन्वन्तरिः ॥ (८) ॥*॥ अष्टौ 'काञ्जिकस्य' ॥

**सहस्रवेधि जतुकं बाल्हीकं हिङ्गु रामठम्।**

**सेति** ॥ सहस्रं वेधितुं शीलमस्य। 'विध विधाने' (तु० प० से०)। 'सुप्यजातौ' (३।२।७८) इति णिनिः ॥ (१) ॥*॥ जत्विव। 'इवे प्रतिकृतौ' (५।३।९६) इति कन्। 'जतु-काजिनपत्रायां जतुकं हिङ्गुलाक्षयोः' (इति मेदिनी) ॥ (२) ॥*॥ वल्हीकेषु भवम्। 'तत्र भवः' (४।३।५३) इत्यण्। ह्रस्वमध्यमपि। '(अथ) वाल्हिकः। देशभेदेऽश्वभेदे च वाल्हिकं हिङ्गु कुङ्कुमम्। (वाल्हीकवत्)' (इति हैमः) ॥ (३) ॥*॥ हिनोति। 'हि गतौ वृद्धौ च' (स्वा० प० अ०)। हिमं गच्छति वा। मृगय्वादिः (उ० १।३७) ॥ (४) ॥*॥ रामठदेशोद्भवत्वादुपचारः। रमन्तेऽनेन वा। 'रमु क्रीडायाम्' (भ्वा० आ० अ०)। 'रमेर्वृद्धिश्च' (उ० १।१०१) इत्यठः।—रमयति। बाहुलकादठः—इति मुकुटश्चिन्त्यः। 'रमेर्वृद्धिश्च' इति सूत्रस्य सत्वात् ॥ (५) ॥*॥ पञ्च 'हिङ्गुवृक्षस्य निर्यासे' ॥

**तत्पत्री कारवी पृथ्वी बाष्पिका कबरी पृथुः ॥ ४० ॥**

**तेति** ॥ तस्य हिङ्गुतरोः पत्री ॥*॥ 'त्वक्पत्री' इति च पाठः। 'तत्पत्री त्वचमाख्यातं त्वक्पत्री कारवीति च' (इति रुद्रः)। 'त्वक्पत्रं तु वराङ्गके। त्वक्पत्रीति च कारव्याम्' इति हैमः (विश्वः) ॥ (१) ॥*॥ कारं वाति। 'वा गतिगन्धनयोः' (अ० प० अ०)। 'आतोऽनुप-' (३।२।३) इति कः। गौरादिः (४।१।४१) ॥ (२) ॥*॥ प्रथते। 'प्रथ प्रख्याने' (चु० उ० से०)। 'प्रथिम्रदिभ्रस्जां संप्रसारणम्' (उ० १।२८) इति कुः। 'वोतो गुणवचनात्' (४।१।४४) इति वा ङीष्। 'पृथ्वी भूमौ महत्यां च त्वक्पत्र्यां कृष्णजीरके' इति विश्वः (मेदिनी च) ॥ (३) ॥*॥ 'पृथुः स्यान्महति त्रिषु। त्वक्पत्र्यां कृष्णजीरेऽस्त्री पुमानग्नौ नृपान्तरे' (इति मेदिनी) ॥ (६) ॥*॥ बाष्पमिव। 'इवे प्रतिकृतौ' (५।३।९६) इति कन्। टाप् (४।१।४) ॥*॥ 'बाष्पीका' इति पाठे पृषोदरादिः (६।३।१०९) ॥ (४) ॥*॥ 'जानपद-' (४।१।४२) इति ङीषि कबरी केशानां संनिवेशविशेषः। सैव ॥*॥ 'कर्वरी' इति च पाठभेदः—इति स्वामी ॥ (५) ॥*॥ पञ्च (षट्) 'हिङ्गुतरोः पत्र्याम्' ॥

**निशाह्वा काञ्चनी पीता हरिद्रा वरवर्णिनी।**

**नीति** ॥ निशा आह्वा यस्याः। निशापदेन तत्पर्याया लक्ष्यन्ते ॥ (१) ॥*॥ काञ्चतेऽनया। 'काचि दीप्त्यादौ' (भ्वा० आ० से०)। '-करणा-' (३।३।११७) इति ल्युट्। 'टिड्ढा-' (४।१।१५) इति ङीप्। 'काञ्चनः काञ्चनारे स्याच्चम्पके नागकेसरे। उदुम्बरे च धत्तूरे हरिद्रायां तु काञ्चनी। क्लीबेऽब्जकेसरे हेम्नि' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ पीयते स्म। 'पीङ् पाने' (दि० आ० अ०)। 'पा पाने' (भ्वा० प० अ०)। कर्मणि क्तः (३।२।१०२)। 'घुमास्था-' (६।४।६६) इतीत्वम्। 'पीतो वर्णेनिपीतयोः। पीता हरिद्रा' इति हैमः ॥ (३) ॥*॥ हरिं वर्णं द्राति। 'द्रा कुत्सायां गतौ' (अ० प० अ०)। 'आतोऽनुप-' (३।२।३) इति कः। हरिभिर्द्रूयते वा। हरितं द्रवति वा। 'द्रु गतौ' (भ्वा० प० अ०)। 'अन्येभ्योऽपि-' (वा० ३।२।१०१) इति डः ॥ (४) ॥*॥ वरश्चासौ वर्णश्च। सोऽस्त्यस्याः। 'अतः-' (५।२।११५) इतीनिः ॥ (५) ॥*॥ पञ्च 'हरिद्रायाः' ॥

**सामुद्रं यत्तु लवणमक्षीवं वसिरं च तत् ॥ ४१ ॥**

**सेति** ॥ समुद्रे भवम्। 'तत्र भवः' (४।३।५३) इत्यण्। 'सामुद्रं लवणान्तरे। लक्षणे च शरीरस्य' इति हैमः ॥*॥ लुनाति। 'लूञ् छेदने' (क्र्या० उ० से०)। नन्द्यादित्वात् (३।१।१३४) ल्युः। 'लवणाल्लुक्' (४।४।२४) इति निपातनाण्णत्वम्। 'लवणं सैन्धवादौ ना सिन्धुरक्षोभिदो रसे। तद्युक्ते वाच्यलिङ्गः स्यान्नदीभेदद्विषोः स्त्रियाम्' (इति मेदिनी) ॥*॥ अक्ष ई। अक्षीं वाति, वायति, वा। 'वा गत्यादौ' (अ० प० अ०)। 'ओ वै शोषणे' (भ्वा० प० अ०)। 'आतोऽनुप-' (३।२।३) इति कः। 'अक्षीवं वशिरे, शिग्रौ ना, मत्ते पुनरन्यवत्' इति विश्वः (मेदिनी च) ॥ (१) ॥*॥ वसनम्। 'वसु स्तम्भे' (दि० प० से०)। इन् (उ० ४।११८)। वसिं राति 'रा दाने' (अ० प० अ०)। 'आतोऽनुप-' (३।२।३) इति कः ॥*॥ 'वश कान्तौ' (अ० प० से०)। इन् (उ० ४।११८)। वशिं राति। 'वशिरः पुमान्। किणिहीहस्तिपिप्पल्योः क्लीबेऽब्धिलवणे स्मृतः' (इति मेदिनी) ॥ (२) ॥*॥ द्वे 'लवणस्य' ॥

**सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे।**

**सैन्धेति** ॥ सिन्धुषु भवः। 'कच्छादिभ्यश्च' (४।३।१३३) इत्यण्। 'सैन्धवस्तु सिन्धुदेशोद्भवे हये। माणिमन्थेऽपि' इति हेमचन्द्रः[१] ॥ (१) ॥*॥ शीतं च तच्छिवं च 'अथ शीतशिवं क्लीबं शैलेयमणिमन्थयोः। पुंसि सक्तुफलावृक्षे तथा मधुरिकौषधौ' (इति मेदिनी) ॥*॥ सितं शुभ्रम्। सितं च तच्छिवं च। (सितशिवम्)—इति मुकुटः ॥ (२) ॥*॥ मणिबन्धाख्यपर्वते भवम्। 'तत्र भवः' (४।३।५३) इत्यण् ॥*॥—मणिमन्थपर्वते भवम्। (माणिबन्धम्)—इति तु स्वामी ॥ (३) ॥*॥ सिन्धुषु जातम्। 'सप्तम्यां जनेर्डः' (३।२।९७) ॥ (४) ॥*॥ चत्वारि 'सिन्धुजे लवणे' ॥

---

१—हैमपुस्तके सटीकेऽपि 'सैन्धवः सिन्धुदेशजे। सिन्धूत्थे स्यात्' इत्येव पाठ उपलभ्यते ॥

**रौमकं वसुकम्**

**रौमेति** ॥ रुमायां भवम् । अण् ( ४।३।५३ ) । 'संज्ञायां कन्' ( ५।३।७५ ) ॥ (१) ॥*॥ वसु कायति । 'कै शब्दे' ( भ्वा० प० अ० ) । 'आतोऽनुप–' ( ३।२।३ ) इति कः । वस्त्वेव । यावादित्वात् (५।४।२९) कन् वा । वसस्त्यस्मिन् । व्रीह्यादित्वात् (५।२।११६) ठन् वा । 'इसुसु–' (७।३।५१) इति कः । '**वसुकं** रौमके, पुंसि शिवमल्लयर्कपर्णयोः' इति विश्वः (मेदिनी) ॥*॥ 'वस्तकम्' इति पाठे वस्त इव । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । अजगन्धित्वात् । 'रौमके **वस्तकं** वसु' इति नाममाला ॥ (२) ॥*॥ द्वे '**शाम्भरलवणस्य**' '**सांभरी**' इति ख्यातस्य ॥

**पाक्यं विडं च कृतके द्वयम्** ॥ ४२ ॥

**पेति** ॥ पच्यते । 'ऋहलोर्ण्यत्' (३।१।१२४) 'चजोः–' (७।३।५२) इति कुत्वम् । पाके साधुः, इति वा । 'तत्र साधुः' (४।४।९८) इति यत् ॥ (१) ॥*॥ विडति । 'विड भेदने' (तु०प० से०) । 'इगुपध–' (३।१।१३५) इति कः ॥ (२) ॥*॥ द्वे '**कृतके लवणे**' '**खारी**' इति ख्यातस्य ॥

**सौवर्चलेऽक्षरुचके**

**साविति** ॥ सुष्ठु वर्च्यते दीप्यते । 'वर्च दीप्तौ' (भ्वा० आ० से०) । वृषादित्वात् (उ० १।१०६) कलच् । प्रज्ञाद्यण् (५।४।३८) । 'अथ **सौवर्चलं** सर्जक्षारे च लवणान्तरे' (इति मेदिनी) ॥ (१) ॥*॥ अक्षति । 'अक्षू व्याप्तौ' (भ्वा० प० से०) । अच् (३।१।१३४) '**अक्षो** रथस्यावयवे व्यवहारे बिभीतके । पाशके शकटे कर्षे ज्ञाने चात्मनि रावणौ । **अक्षं** सौवर्चले तुत्थे हृषीके' इति हेमचन्द्रः ॥ (२) ॥*॥ रोचते । 'रुच दीप्तौ' ( भ्वा० आ० से० ) क्कुन् (उ० २।३२) । '**रुचको** बीजपूरे च निष्के दन्तकपोतयोः । न द्वयोः सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययोः । सौवर्चलेऽपि मङ्गल्यद्रव्येऽपि कटकेऽपि च' इति विश्वमेदिन्यौ ॥ (३) ॥*॥ त्रीणि '**मधुरलवणस्य**' '**सौंचर**' इति ख्यातस्य ॥

**तिलकं तत्र मेचके ।**

**तीति** ॥ तिलति । 'तिल स्नेहने' (तु० प० से०) । तेलति । 'तिल गतौ' (भ्वा० प० से०) वा । क्कुन् (उ० २।३२) '**तिलको** द्रुमरोगाश्वभेदेषु तिलकालके । क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके' (इति मेदिनी) ॥ (१) ॥*॥ एकं तस्मिन् '(**सौवर्चले**) **कृष्णवर्णे**' ॥

**मत्स्यण्डी फणितं खण्डविकारे**

**मेति** ॥ मदं मुदं वा स्यन्दते । 'स्यन्दू प्रस्रवणे' (भ्वा० आ० से०) 'कर्मण्यण्' (३।२।१) । 'टिड्ढा–' ( ४।१।१५ ) इति ङीप् । पृषोदरादिः (६।३।१०९) ॥ (१) ॥*॥ फाण्यते (स्म) । 'फण गतौ' (भ्वा० प० से०) ण्यन्तः । क्तः (३।२।१०२) ॥ (२) ॥*॥ खण्डो विकारोऽस्य ॥ (३) ॥*॥ त्रीणि '**फाणितस्य**' '**राव**' इति ख्यातस्य ।—'शुभ्रखण्डगुटिकायाः क्रमेणैकैकम्' इति मुकुटः ॥

**शर्करा सिता** ॥ ४३ ॥

**शेति** ॥ शृणाति पित्तम् । 'शॄ हिंसायाम्' ( क्र्या० प० से० ) । 'शॄः करन्' (उ० ४।३) '**शर्करा** । खण्डविकृतौ कर्परांशे रुगन्तरे । उपलायां शर्करायुक्तदेशे शकलेऽपि च' इति हैमः ॥ (१) ॥*॥ सिनोति । 'षिञ् बन्धने' (स्वा० उ० अ०) । 'अञ्जिघृसिभ्यः क्तः' (उ० ३।८९) । शुक्लवर्णत्वाद्वा सिता । '**सितम**वसिते च बद्धे धवले त्रिषु । शर्करायां स्त्री' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**शर्करायाः**' '**मिश्री**' इति ख्यातायाः ॥

**कूर्चिका क्षीरविकृतिः स्यात्**

**किति** ॥ कूर्चति । 'कूर्च विकारे' ( भ्वादेराकृतिगणत्वाद्बोध्यः । संज्ञायां ण्वुल् (३।३।१०९) । कूर्चो मस्त्वादिरस्त्यस्या वा । 'अतः–' (५।२।११५) इति ठन् । 'दध्ना सह पयः पक्वं यत्तत्स्याद्दधिकूर्चिका । तक्रेण पक्वं यत् क्षीरं सा भवेत्तक्रकूर्चिका' । '**कूर्चिका** सूचिकायां च तूलिकायां च कुड्मले । कपाटाकुटिके ( टोङ्क्दने ) क्षीरविकृतावपि योषिति' (इति मेदिनी) ॥ (१) ॥*॥ क्षीरस्य विकृतिः ॥ (२) ॥*॥ ('उभे क्षीरस्य विकृती **किलाटी** कूर्चिका तथा' इति हैमनाममाला) ॥*॥ द्वे '**किलाटिकायाः**' '**मावा**' इति ख्यातायाः ॥

**रसाला तु मार्जिता ।**

**रेति** ॥ रसानालाति । मूलविभुजादिः (वा० ३।२।५) ॥ (१) ॥*॥ मार्ज्यते स्म । 'मृजू शौचालंकारयोः' ( चु० उ० से० ) । चुरादिः । क्तः ( ३।२।१०२ ) ॥ (२) ॥*॥ 'अर्धाढकः सुचिरपर्युषितस्य दध्नः खण्डस्य षोडश पलानि शशिप्रभस्य । सर्पिः पलं मधु पलं मरिचं द्विकर्ष शुण्ठ्याः पलार्धमपि चार्धपलं चतुर्णाम् । सूक्ष्मे पटे ललनया मृदुपाणिघृष्टा कर्पूरधूलिसुरभीकृतपात्रसंस्था । एषा वृकोदरकृता सरसा रसाला यास्वादिता भगवता मधुसूदनेन' इति सूदशास्त्रम् । ('रसालायां तु मार्जितः । **शिखरिणी**' इति हैमनाममाला) ॥*॥ द्वे '**दधिमधुशर्करामरीचाद्रादिभिः कृतस्य लेह्यस्य**' '**शिखरिण**' इति ख्यातायाः ॥

**स्यात्तेमनं तु निष्ठानम्**

**स्येति** ॥ तिम्यतेऽनेन । 'तिम आर्द्रीभावे' (दि० प० से०) । 'करणे ल्युट्' (३।३।११७) । '**तेमनं** व्यञ्जने क्लेदे **तेमनी** चुल्लिभिद्यपि' इति हेमचन्द्रः ॥ (१) ॥*॥ निष्ठीयतेऽत्र । 'ष्ठा गतिनिवृत्तौ' (भ्वा० प० अ०) । ल्युट् (३।३।११७) ॥ (२) ॥*॥ द्वे '**व्यञ्जनस्य**' ॥

**त्रिलिङ्गा वासितावधेः** ॥ ४४ ॥

**त्रीति** ॥ वासितपर्यन्ताः ॥

**शूलाकृतं भटित्रं च शूल्यम्**

**श्विति** ॥ शूलेन कृतम् । 'शूलात्पाके' (५।४।६५) इति डाच् ॥ (१) ॥*॥ भटति । 'भट भृतौ' (भ्वा० प० से०) । 'अशित्रादिभ्य इत्रोत्रौ' (उ० ४।१७३) इतीत्रः ।—ग्रहादित्वादित्रच्—इति मुकुटस्तु चिन्त्यः । भव्यते स्म वा ॥ (२) ॥*॥ शूले संस्कृतम् । 'शूलोखाद्यत्' (४।२।३७) ॥ (३) ॥*॥ त्रीणि **'लोहशलाकया पक्वमांसस्य'** ॥

**उख्यं तु पैठरम् ।**

**उख्येति** ॥ उखायां संस्कृतम् । यत् (४।२।१७) ॥ (१) ॥*॥ पिठरे संस्कृतं 'संस्कृतं भक्षाः' यत् (४।२।१६) ॥ इत्यण् ॥ (२) ॥*॥ द्वे **'स्थालीसंस्कृतस्यान्नादेः'** ॥

**प्रणीतमुपसंपन्नम्**

**प्रेति** ॥ प्रणीयते स्म । कर्मणि क्तः (३।२।१०२) । **'प्रणीत**मुपसंपन्ने कृते क्षिप्ते प्रवेशिते । संस्कृताग्नौ च' इति हैमः ॥ (१) ॥*॥ उपसंपद्यते स्म । 'पद गतौ' (दि० आ० अ०) । 'गत्यर्था–' (३।४।७२) इति क्तः । **'उपसंपन्न**मुद्दिष्टं निहते च सुसंस्कृते' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ द्वे **'पाकेन संस्कृतस्य व्यञ्जनादेः'** ॥

**प्रयस्तं स्यात्सुसंस्कृतम् ॥ ४५ ॥**

**प्रेति** ॥ प्रयस्यते स्म । 'यसु प्रयत्ने' (दि० प० से०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ सुष्ठु संस्क्रियते स्म । क्तः (३।२।१०२) । 'संपरिभ्याम्–' (६।१।१३७) इति सुट् ॥ (२) ॥*॥ द्वे **'द्रव्यान्तरसंस्कृतस्य पक्वस्य'** ॥

**स्यात्पिच्छिलं तु विजिलम्**

**स्येति** ॥ पिच्छोऽस्यास्ति । पिच्छादित्वात् (५।२।१००) इलच् । 'पिच्छा तु शाल्मलीवेष्टे मण्डे चाश्वपदामये । (पङ्क्तौ पूगच्छटाकोशमोचानिजयुतेषु च । **पिच्छः** पुच्छे )' इति विश्वः ॥ (१) ॥*॥ विजनम् । 'ओविजी भयचलनयोः' (तु० आ० से०) । 'इगुपधात् कित्' (उ० ४।१२०) इतीन् । विजिं लाति । 'ला दाने' (अ० प० अ०) । 'आतोऽनुप–' (३।२।३) इति कः ॥ (२) ॥*॥ द्वे **'मण्डयुक्तभक्तजलयुक्तव्यञ्जनयोः'** ॥

**संमृष्टं शोधितं समे ।**

**सेति** ॥ संमृज्यते स्म । 'मृजू शुद्धौ' (अ० प० से०) । कर्मणि क्तः (३।५।१०२) ॥ (१) ॥*॥ शोध्यते स्म । 'शुध शुद्धौ' (दि० प० अ०) । ण्यन्तात् कर्मणि क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे **'केशकीटाद्यपनयेन शोधितस्यान्नादेः'** ॥

**चिक्कणं मसृणं स्निग्धम्**

**चीति** ॥ चिक्कनम् । 'चिक्क गतौ' ( ) । संपदादिक्विप् (वा० ३।३।१०८) । चिक्कं कणति । 'कण शब्दे' (भ्वा० प० से०) । मूलविभुजादिकः (वा० ३।२।५) । यद्वा चिक्कनम् । घञ् (३।३।१८) । चिक्कस्य अणम् 'अण शब्दे' (भ्वा० प० से०) । अच् (३।१।१३४) शकन्ध्वादिः (वा० ६।१।९४) ।—चित्यते । 'चिती संज्ञाने' (भ्वा० प० से०) । 'चित्तेः कणः कश्च' (उ० ४।१७६) इति मुकुटस्त्वपाणिनीयः ॥ (१) ॥*॥ मस्यति । 'मसी परिणामे' (दि० प० से०) । बाहुलकादृणः । यद्वा समृणोति । 'ऋणु गतौ' (त० उ० से०) । 'इगुपध–' (३।१।१३५) इति कः । पृषोदरादिः (६।३।१०९) । **'मसृणो**ऽकर्कशे स्निग्धे त्रिषु मायां तु योषिति' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ स्निह्यति स्म । 'स्निह प्रीतौ' (दि० प० से०) । 'गत्यर्था–' (३।४।७२) इति क्तः । 'वा द्रुह–' (८।२।३३) इति घः ॥ (३) ॥*॥ त्रीणि **'स्निग्धस्य'** ॥

**तुल्ये भावितवासिते ॥ ४६ ॥**

**त्विति** ॥ भाव्यते स्म 'भुवोऽवकल्कने' इति चुरादिण्यन्तात् क्तः (३।२।१०२) । **'भावितं** वासिते प्राप्ते' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ वास्यते स्म । 'वास उपसेवायाम्' ( चु० उ० से० ) । क्तः (३।२।१०२) । **वासिता** करिणी नार्योर्वासितं भाविते रुते' (इति मेदिनी) । 'अथ **वासितम् ।** वस्त्रच्छन्ने ज्ञानमात्रे भाविते ऽप्यथ **'वासिता ।** स्त्रीकरिण्योः' इति हैमः ॥ (२) ॥*॥ द्वे **'आहितहिङ्ग्वादिगन्धस्य व्यञ्जनादेः'** ॥

**आपक्वं पौलिरभ्यूषः**

**आपेति** ॥ ईषत्पक्वम् । 'आङीषदर्थे' (वा० २।२।१८) इति समासः ॥ (१) ॥*॥ पोलति । 'पुल महत्त्वे' (भ्वा० प० से०) । ज्वलादित्वात् (३।१।१४०) णः । भावे घञ् (३।३।१८) वा । पोलेन निर्वृत्तः । सुतंगमादित्वात् (४।२।८०) इञ् । अभ्यूषसाहचर्यात्पुंसि ॥ (२) ॥*॥ अभ्यूषति । अभ्यूषते वा । 'ऊष रुजायाम्–' (भ्वा० प० से०) । 'इगुपध–' (३।२।१३५) इति कः । घञ् (३।३।१८) वा ॥*॥ 'तोक्मं हरितो यवोऽ**भ्यूषः'** इति बोपालितात् ह्रस्वादिः (स्वमध्यः) अपि तत्र 'उष दाहे' (भ्वा० प० से०) इति धातुर्बोध्यः ॥*॥ अस्मादेवाचि (३।१।१३४) **'अभ्योषः'** अपि, इत्येके ॥ (३) ॥*॥ त्रीणि **'हरितयवादेर्भर्जितस्य'** ॥

**लाजाः पुंभूम्नि चाक्षताः ।**

**लेति** ॥ लज्यन्ते । 'लज भर्जने' (भ्वा० प० से०) । घञ् (३।३।१९) पुंसि बहुत्वे । **'लाजः** स्यादार्द्रतण्डुले । नपुंसकमुशीरेऽथ स्त्रियां पुंभूम्नि चाक्षते' (इति मेदिनी) ॥ (१) ॥*॥ क्षणनम् । 'क्षणु हिंसायाम्' (त० उ० से०) । 'नपुं-

१—इदं तु सिद्धान्तकौमुद्यामेतज्जनकेनापि 'चितेः कणः कश्च' (उ० ४।१७६) । बाहुलकादगुणः । 'चिक्कणं मसृणं स्निग्धम्' इत्यस्योपन्यस्तत्वेन तदसरणमूलकम् ॥

सके भावे क्तः' (३।३।११४) । न क्षतं येषां ते । चो भिन्नक्रमः । अक्षताश्च पुंभूम्नि, इत्यर्थः । मुकुटस्तु—'अक्षतम्' इति पठित्वा 'क्षणु हिंसायाम्' (तु० उ० से०) । कर्मणि क्तः (३।२।१०२) । क्षतं खण्डितम् । न क्षतमक्षतम् । इति विगृह्य । ते (लाजाः) नित्यपुंलिङ्गा नित्यबहुवचनान्ताश्च —इति व्याचख्यौ । '**अक्षतं** न द्वयोः पण्डे लाजेषु, त्रिष्वहिंसिते । यवेऽपि क्वचित्' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**भृष्टव्रीह्यादेः**' ॥ केचित्तु—अखण्डतण्डुला अक्षताः—इत्याहुः ॥

**पृथुकः स्याच्चिपिटकः**

**प्रिति** ॥ प्रथते । 'प्रथ प्रख्याने' (चु० उ० से०) । 'पृथुकपाकाः–' (उ० ५।५३) इति साधुः । '**पृथुक**श्चिपिटेऽर्भके' इति हेमचन्द्रः ॥ (१) ॥*॥ नासिकाया नतम् । 'इनच्पिटच्चिकचि च' (५।२।३३) इति पिटच्, नेश्चिरादेशः । चिपिटमिव । 'संज्ञायां कन्' (५।३।७५) । 'इवे–' (५।३।९६) इति वा कन् ॥ (२) ॥*॥ द्वे '**चिवडा**' इति ख्यातस्य ॥

**धाना भृष्टयवे स्त्रियः ॥ ४७ ॥**

**धेति** ॥ 'दधति । डुधाञ्' (जु० उ० से०) । 'धापॄवस्यज्यतिभ्यो नः' (उ० ३।६) । बहुवचननिर्देशाद्भूम्नि । '**धाना** भृष्टयवेऽङ्कुरे धान्याके चूर्णसक्तुषु' इति हैमः ॥ (१) ॥*॥ भृष्टश्चासौ यवश्च ॥ (२) ॥*॥ द्वे '**भर्जितयवानाम्**' ॥

**पूपोऽपूपः पिष्टकः स्यात्**

**प्विति** ॥ पवनम् । 'पूञ् पवने' (क्र्या० उ० से०) संपदादिक्विप् (वा० ३।३।१०८) पुवं पाति, पिबति, वा । 'आतोऽनुप–' (३।२।३) इति कः । मुकुटस्तु—पुनाति । पूपः । 'नीपादयश्च' इति पः कित्—इति । तन्न । तादृशसूत्रस्यापाणिनीयत्वात् ॥ (१) ॥*॥ न पूय्यते । 'पूयी विशरणे' (भ्वा० आ से० ) । बाहुलकात् पः । वलि लोपः (६।१।६६) यद्वा अपुवं पाति पिबति वा ॥ (२) ॥*॥ पिष्टस्य विकारः । 'संज्ञायाम्' (४।३।१४७) इति कन् । '**पिष्टको** घृतपूपादौ नेत्ररोगान्तरेऽपि च' इति विश्वः (मेदिनी) ॥ (३) ॥*॥ त्रीणि '**अपूपस्य**' ॥

**करम्भो दधिसक्तवः ।**

**केति** ॥ केन जलेन रम्यते मिश्रीक्रियते । केन वायुना वा नीयते । 'रभिः' (भ्वा० आ० अ० ) अनेकार्थः । 'अकर्तरि च–' (३।३।१९) इति घञ् । 'रभेरशब्लिटोः' (७।१।६३) इति नुम् ॥*॥ '**करम्बः**' इति पाठे केन जलेन रम्यते । 'रवि शब्दे' (भ्वा० आ० से० ) । अच् (३।१।१३४) यद्वा किरति, कीर्यते, वा । 'कॄ विक्षेपे' (तु० प० से०) 'कृकदिकडिकटिभ्योऽम्बच्' (उ० ४।८२) ॥ (१) ॥*॥ सचते । 'षच समवाये' (भ्वा० उ० से०) 'सितनिगमि–' (उ० १।६९) इत्यादिना तुन् ॥*॥ ('**धानाचूर्णं** तु **सक्तवः**' इति नाममाला) । दध्युपसिक्ताः सक्तवः । 'अन्नेन व्यञ्जनम्' (२।१।३४) इति समासः । शाकपार्थिवादिः (२।१।७८) वा ॥ (२) ॥*॥ द्वे '**दधिमिश्रसक्तुनः**' ॥

**भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिविः ॥ ४८ ॥**

**भीति** ॥ बभस्ति । 'भस दीप्तौ' (जु० प० से ) । बाहुलकात्सः । 'बहुलं छन्दसि' (७।४।७८) इतीत्वम् । 'ब्राह्मणभिस्सा' इति (६।३।१ सूत्रे) भाष्यप्रयोगाल्लोकेऽपि । यद्वा भेदनम् । संपदादिः (वा० ३।३।१०८) । भिदं स्यति । 'षो अन्तकर्मणि' (दि० प० अ० ) । 'आतोऽनुप–' (३।२।३) इति कः । 'पृषोदरादिः' (६।३।१०९) । मुकुटस्तु—भ्यस्यते भक्ष्यते । 'भ्यस भये' (भ्वा० प० से०) भक्षणार्थः । 'भ्यसेः संप्रसारणं सश्च'—इत्याह । तदपाणिनीयम् ॥ (१) ॥*॥ भज्यते स्म । 'भज सेवायाम्' (भ्वा० उ० अ०) कर्मणि क्तः । '**भक्त**मन्ने तत्परे च' इति हेमचन्द्रः ॥ (२) ॥*॥ अद्यते । 'अद भक्षणे' (अ० प० से० ) । 'अदेर्नुम्धौ च' (उ० ४।२०६) इत्यसुन् । अन्धयति वा । 'अन्ध दृष्ट्युपघाते' (चु० उ० से० ) । असुन् (उ० ४। १८९) ॥ (३) ॥*॥ अद्यते स्म । क्तः (३।२।१०२) । 'अन्नाण्णः' (४।४।८५) इति निपातनात् 'बहुलं तणि' (वा० २।४।५४) इति वा न जग्धिः । '**अन्नं** भक्ते च भुक्ते स्यात्' इति (मेदिनी) ॥ (४) ॥*॥ उनत्ति । 'उन्दी क्लेदने' (रु० प० से० ) । 'उन्देर्नलोपश्च' (उ० २।७६) इति युच् । ऊर्दतेऽनेन वा । 'ऊर्द क्रीडायाम्' (भ्वा० आ० से० ) । करणे ल्युट् (३।३।११७) । पृषोदरादिः (६।३।१०९) । '**ओदनं** न स्त्रियां भक्ते बलाया**मोदनी** स्त्रियाम्' (इति मेदिनी) । दीदिविसहितोऽस्त्री, इत्यन्वयः ॥ (५) ॥*॥ दीव्यत्यनेन । 'दिवु क्रीडायाम्' (दि० प० से०) । 'दिवो द्वे दीर्घश्चाभ्यासस्य' (उ० ४।५५) इति क्विन् ।—'ह्व्यादयश्च' इति क्विन्—इति मुकुटस्त्वपाणिनीयः ।—'सः' इति विशेषणात्पुंसि—इति स्वामी । '**दीदिवि**र्धिषणे पुंसि स्यादन्ने च तदस्त्रियाम्' इति विश्वः ॥ (६) ॥*॥ षट् '**सिद्धान्नस्य**' ॥

**भिस्सटा दग्धिका**

**भीति** ॥ भिस्सां टीकते । 'टीकृ गतौ' (भ्वा० आ० से० ) । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । 'ङ्यापोः–' (६।३।६३) इति ह्रस्वः ॥ (१) ॥*॥ दह्यते स्म । क्तः (३।२।१०२) । कुत्सिता दग्धा । 'कुत्सिते' (५।३।७४) इति कन् ॥ (२) ॥*॥ '**दग्धौदनस्य**' ॥

**सर्वैरसाग्रे मण्डमस्त्रियाम् ।**

**सेति** ॥ रसश्चासावग्रश्च । रसस्याग्रः, इति वा । अग्रो

रसः इति राजदन्तादिः (२।२।३१) वा । सर्वस्य रसाग्रः ॥ (१) ॥*॥ मण्डते, मण्ड्यते, वा । 'मडि भूषायाम्' (भ्वा० आ० से० )। अच् (३।१।१३४) । घञ् (३।३।१८) वा । मन्यते वा । 'मन ज्ञाने' ( दि० आ० अ० )। 'अमन्ताड्डः' (उ० १।११४) 'मण्डः पञ्चाङ्गुले शाकभेदे क्लीबं तु मस्तुनि । आमलक्यां स्त्रियां मण्डाथास्त्रियां सारपिच्छयोः' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ द्वे 'मण्डकस्य' ॥

**मासराचामनिस्रावा मण्डे भक्तसमुद्भवे ॥ ४९ ॥**

**मेति** ॥ मास्यते । 'मसी परिणामे' ( दि० प० से० )। ण्यन्तः बाहुलकादरन् । मा श्रीः सरत्यत्र, इति वा । 'सृ गतौ' (भ्वा० प० अ०) । 'पुंसि–' (३।३।११८) इति घः ॥ (१) ॥*॥ आचम्यते । 'चमु अदने' ( भ्वा० प० से० )। 'अकर्तरि च' (३।३।१९) इति घञ् । वृद्धिः (७।२।११६) ॥ (२) ॥*॥ निस्राव्यते । 'स्रु गतौ' ( भ्वा० प० अ० )। ण्यन्तः । 'एरच्' (३।३।५६) । घञ् (३।३।१९) वा ॥*॥— 'विस्रावः' इति मुकुटः ॥ (३) ॥*॥ भक्तात्समुद्भवति ॥*॥ त्रीणि 'भक्तोद्भवमण्डस्य' ॥

**यवागूरुष्णिका श्राणा विलेपी तरला च सा ।**

**येति** ॥ यौति, यूयते वा । 'यु मिश्रणे' (अ० प० से०) । 'सृयुवचिभ्योऽन्यूजागूजक्नुचः' (उ० ३।८१) इत्यागूच् ॥ (१) ॥*॥ उष्णैव । 'ब्राह्मणकोष्णिके संज्ञायाम्' (५।२।७१) इति कन् ॥ (२) ॥*॥ श्रायते स्म । 'श्रा पाके' (अ० प० अ०)। कर्मणि क्तः (३।२।१०२) । 'संयोगादेरातः' (८।२।४३) इति निष्ठानत्वम् ॥ (३) ॥*॥ विलिम्पति । 'लिप उपदेहे' (तु० उ० अ०) । पचाद्यच् (३।१।१३४) । गौरादिः (४।१।४१) ॥ (४) ॥*॥ तरणम् । तरः । 'तॄ प्लवनादौ' ( भ्वा० प० से०) । 'ॠदोरप्' (३।३।५७) । तरं लाति । 'आतोऽनुप–' (३।२।३) इति कः ॥ (५) ॥*॥ पञ्च 'यवाग्वाः' 'लपसी' इति ख्यातायाः ॥

**गव्यं त्रिषु गवां सर्वम्**

**गेति** ॥ गोरिदम् । 'गोपयसोर्यत्' (४।३।१६०)। 'वान्तो यि प्रत्यये' (६।१।७९) । 'गव्यं नपुंसकं ज्यायां रागद्रव्येऽप्यथ स्त्रियाम् । गोसमूहे त्रिलिङ्गं तु गोदुग्धादौ च गोहिते' ( इति मेदिनी) ॥ (१) ॥*॥ सर्वं भवविकारावयवादि ॥*॥ एकम् 'गोरसस्य' ॥

**गोविट् गोमयमस्त्रियाम् ॥ ५० ॥**

**गविति** ॥ गोर्विट् ॥ (१) ॥*॥ गोः पुरीषम् । 'गोश्च पुरीषे' (४।३।१४५) इति मयट् ॥ (२) ॥*॥ द्वे 'गोमयस्य' ॥

**तत्तु शुष्कं करीषोऽस्त्री**

**तेति** ॥ कीर्यते । 'कॄ विक्षेपे' ( तु० प० से० ) । 'कॄतॄभ्यामीषन्' (उ० ४।२६) ॥ (१) ॥*॥ एकम् 'शुष्कगोमयस्य' ॥

**दुग्धं क्षीरं पयः समम् ।**

**द्विति** ॥ दुह्यते स्म । क्तः (३।२।१०२) । 'दुग्धं क्षीरे पूरिते च' इति हेमचन्द्रः ॥ (१) ॥*॥ क्षयणम् । 'क्षीष् हिंसायाम्' (क्र्या० प० अ०) । संपदादिः (वा० ३।३।१०८) । क्षियमीरयति । 'ईर गतौ' (अ० आ० से०) ण्यन्तः । 'कर्मण्यण्' (३।२।१) । घस्यते वा । 'घस्लृ अदने' ( भ्वा० प० अ० ) । 'घसेः किच्च' (उ० ४।३४) इतीरन् । 'गमहनजन–' (६।४।९८) इत्युपधालोपः । 'खरि च' (८।४।५५, भा० ६१) इति चर्त्वम् । 'शासिवसि–' (८।३।६०) इति षत्वम् । 'क्षीरं पानीयदुग्धयोः' इति हैमः ॥ (२) ॥*॥ पीयते । 'पीङ् पाने' ( दि० आ० अ० ) । पयते वा । 'पय गतौ' ( भ्वा० आ० से० ) असुन् (उ० ४।१८९) । 'पयः क्षीरे च नीरे च' इति हैमः ॥ (३) ॥*॥ त्रीणि 'दुग्धस्य' ॥

**पयस्यमाज्यदध्यादि**

**पेति** ॥ पयसो विकारः 'गोपयसोर्यत्' (४।३।१६०) ॥ (१) ॥*॥ आज्यं च दधि चादिर्यस्य । आदिना तक्रं नवनीतं च ॥*॥ एकम् 'घृतदध्यादेः' ॥

**द्रप्सं दधि घनेतरत् ॥ ५१ ॥**

**द्रेति** ॥ तृप्यन्त्यनेन । 'तृप प्रीणने' ( दि० प० अ० ) । 'अङ्घ्यादयश्च' (उ० ४।११२) इति 'त्रप्स्यम्' इति निपातः–इति मुकुटः । 'द्रप्सम्' इति स्वामी पठति । दृप्यन्त्यनेन । 'दृप हर्षादौ' ( दि० प० अ० ) 'अनुदात्तस्य च' (६।१।५९) इत्यम् । बाहुलकात् सः ।—द्रप्सं द्राक् प्सानीयम्–इति सर्वानन्दः । 'द्रप्सं दध्यघनं तथा' इति नाममाला ॥ (१) ॥*॥ घनात् कठिनादन्यत् ॥*॥ एकं 'शिथिलदध्नः' 'दगडा' इति ख्यातस्य । केचित्तु 'द्रप्स' स्थाने सरं पठन्ति । सरति । 'सृ गतौ' (भ्वा० प० अ० )। अच् (३।१।१३४) । 'वाणद्रप्सौ सरौ' इति दुर्गात् ।—उपरि प्लवमानम्—इति व्याचक्षते ॥

**घृतमाज्यं हविः सर्पिः**

**घ्रिति** ॥ घ्रियते । 'घृ सेके' (भ्वा० प० अ०) । 'अञ्जिघृसिभ्यः क्तः' (उ० ३।८९) । 'घृतमाज्याम्बुदीप्तेषु' इति हेमचन्द्रः ॥ (१) ॥*॥ आज्यतेऽनेन । 'अञ्जू व्यक्त्यादौ' ( रु० प० से० ) 'अञ्जेः संज्ञायाम्' (वा० ३।१।१०९) इति क्यप् ॥ (२) ॥*॥ हूयते 'हु दानादौ' ( जु० प० अ० ) । 'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः' (वा० २।१०८) इतीसिः । 'हविः सर्पिषि होतव्ये' इति हैमः ॥ (३) ॥*॥ सर्पति 'सृप्लृ गतौ' ( भ्वा० प० से० ) इसिः (वा० २।१०८) ॥ (४) ॥*॥ चत्वारि 'घृतस्य' ॥

**नवनीतं नवोद्धृतम् ।**

**नेति** ॥ नवं च तन्नीतं च । 'विशेषणम्–' (२।१।५७) इति समासः ॥ (१) ॥*॥ नवं च तदुद्धृतं च ॥*॥ एकम् **'अकृताग्निसंयोगस्य नवोद्धृतस्य'** ॥

**तत्तु हैयङ्गवीनं यद् ह्योगोदोहोद्भवं घृतम् ॥ ५२ ॥**

**तेति** ॥ दुह्यते इति दोहः । कर्मणि घञ् (३।३।१९) गवां दोहः । ह्यो गोदोहः । ह्योगोदोहादुद्भवति । अच् (३।१।१३४) तस्य 'हैयङ्गवीनं संज्ञायाम्' (५।२।२३) इति निपातः ॥ (१) ॥*॥ एकम् **'एकरात्रपर्युषितादृध्न उत्पन्नस्य घृतस्य'** ॥

**दण्डाहतं कालशेयमरिष्टमपि गोरसः ।**

**देति** ॥ दण्डेन मथाहतं विलोडितम् । 'कर्तृकरणे–' (२।१।३२) इति समासः ॥ (१) ॥*॥ कलश्यां मन्थपात्रे भवम् । 'दृतिकुक्षि–' (४।३।५६) इति ढञ् ॥ (२) ॥*॥ अरिष्टमक्षेमं यस्मात् । 'अनेक–' (२।२।२४) इति समासः । **'अरिष्ट**मशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च' इति विश्वः ॥ (३) ॥*॥ गोरसस्य दुग्धस्य विकारत्वादुपचारात् ॥ (४) ॥*॥ चत्वारि **'घोलस्य'** ॥

**तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ॥५३॥**

**तेति** ॥ तञ्चति । तञ्च्यते वा । 'तञ्चु गतौ' ( भ्वा० प० से० ) । 'स्फायितञ्चि–' इति रक् (उ० २।१३) । न्यङ्क्वादिः (७।३।५३) ॥ (१) ॥*॥ उदकेन श्वयति वर्धते । 'टु ओ श्वि गतिवृद्ध्योः' ( भ्वा० प० से० ) । क्विप् (३।२।७६) । तुक् (६।१।७१) । 'उदकस्योदः संज्ञायाम्' (६।३।५७) । 'उदश्वितः–' (४।२।१९) इति निर्देशादसंप्रसारणम् ॥ (१) ॥*॥ मथ्यते स्म । 'मथे विलोडने' ( भ्वा० प० से० ) । क्तः (३।२।१०२) ॥ (१) ॥*॥ एकैकं क्रमेण **'चतुर्थांशजलघोलार्धजलघोलनिर्जलघोलानाम्'** ॥

**मण्डं दधिभवं मस्तु**

**मेति** ॥ दध्नो भवति ॥*॥ मस्यते 'मसी परिणामे' (दि० प० से०) 'सितनि–' (उ० १।६९) इति तुन् ॥ (१) ॥*॥ एकं **'वस्त्रनिःसृतदधिजलस्य'** ।—दध्न उपरिभागस्य—इत्यन्ये ॥

**पीयूषोऽभिनवं पयः ।**

**पीति** ॥ पीयति । पीय्यते अनेन वा । 'पीयू प्रीतौ' (सौत्रः) । 'पीयेरूषन्' (उ० ४।७६) **'पीयूषं** सप्तदिवसावधिक्षीरे तथामृते' इति विश्वमेदिन्यौ ॥*॥ मुकुटस्तु—**'पेयूषम्'** इति पठति । तत्र बाहुलकाद्गुणः । यत्तु—पीयते इदम् । 'पीङ् पाने' (दि० आ० अ०) । 'अन्येभ्योऽपि' (३।२।७५) इति विच् । पेः पानकर्ता । 'यूष हिंसायाम्' ( भ्वा० आ० से० ) इत्यतः इगुपधत्वात् कः (३।१।१३५) । यूषो नाशयिता । पेर्यूषः—इति व्याख्यातम् । तन्न । 'इदम्' इति कर्मनिर्देशात् । कर्तरि विचो विधानात् । 'इदम्' इति कर्तृनिर्देशश्चेत् । तर्हि 'पानकर्तृनाशयितृ' इति वक्तुं युक्तम् ॥ (१) ॥*॥ एकं **'नवप्रसूताया गोः क्षीरस्य'** ॥

**अशनाया बुभुक्षा क्षुत्**

**अशेति** ॥ अशनस्येच्छा । 'सुपः–' (३।१।८) इति क्यच् । 'अशनाया–' (७।४।२४) इतीत्वाभावः । 'अप्रत्ययात्' (३।३।१०३) इत्यः ॥ (१) ॥*॥ भोक्तुमिच्छा 'भुज पालनाभ्यवहारयोः' ( रु० प० अ० ) । 'धातोः कर्मणः' (३।१।७) इति सन् ॥ (२) ॥*॥ क्षोधनम् । 'क्षुध बुभुक्षायाम्' ( दि० प० अ० ) । क्विप् (३।२।१७८) ॥*॥ भागुरिमते टापि **'क्षुधा'** च ॥ (३) ॥*॥ त्रीणि **'क्षुधः'** ॥

**ग्रासस्तु कवलः पुमान् ॥ ५४ ॥**

**ग्रेति** ॥ ग्रस्यते । 'ग्रसु अदने' ( भ्वा० आ० से० ) । 'अकर्तरि च' (३।३।१९) इति घञ् ॥ (१) ॥*॥ केन वलते । 'वल तृप्तौ' (भ्वा० आ० से०) । अच् (३।१।१३४) ॥ (२) ॥*॥ द्वे **'ग्रासस्य'** ॥

**सपीतिः स्त्री तुल्यपानम्**

**सेति** ॥ पानम् । 'पा पाने' ( भ्वा० प० अ० ) 'स्त्रियां क्तिन्' (३।३।९४) । 'घुमास्था–' (६।४।६६) इतीत्वम् । समाना पीतिः । 'समानस्य छन्दसि–' (६।३।८४) इति सभावः । सह पीतिर्वा । 'सहस्य सः संज्ञायाम्' (६।३।७८) ॥ (१) ॥*॥ तुल्यं च यत्पानं च ॥ (२) ॥*॥ द्वे **'बहुभिः संमील्य पानस्य'** ॥

**सग्धिः स्त्री सहभोजनम् ।**

**सेति** ॥ अदनम् । 'अद भक्षणे' (अ० प० अ०) । क्तिन् (३।३।९४) 'बहुलं छन्दसि' (२।४।३९) इति घस् । 'घसिभसोर्हलि च' (६।४।१००) इत्युपधालोपः । 'झलो झलि' (८।२।२६) इति सलोपः । 'झषस्तथोर्धोऽधः' (४।२।४०) । 'झलां जश् झशि' (८।४।५३, भा० ५९) इति घस्य गः । समाना ग्धिः पूर्ववत् ॥ (१) ॥*॥ सहभोजनम् । 'सुप् सुपा' (२।१।४) इति समासः ॥ (२) ॥*॥ द्वे **'बहुभिः संमील्य भोजनस्य'** ॥

**उदन्या तु पिपासा तृट् तर्षः**

**उदेति** ॥ उदकस्येच्छा । अशनायावत् ॥ (१) ॥*॥ पातुमिच्छा । 'पा पाने' ( भ्वा० प० अ० ) । 'धातोः' (३।१।७) इति सन् । 'अ प्रत्ययात्' (३।३।१०३) ॥ (२) ॥*॥ तर्षणम् । 'ञितृषा पिपासायाम्' ( दि० प० से० ) संपदादिः (वा० ३।३।१०८) । (**'तृट् तृष्णावत्तर्ष**वच्च भवेल्लिप्सापिपासयोः' इति हैमः) ॥ (३) ॥*॥ घञ् (३।३।१८) वा ॥*॥ **'तृषा** लिप्सातृषोः स्त्रियाम्' इति विश्वः (मेदिनी) ॥ (४) ॥*॥ चत्वारि **'पिपासायाः'** ॥

**जग्धिस्तु भोजनम् ॥ ५५ ॥**

**जेमनं लेह आहारो निघसो न्याद इत्यपि।**

**जेति** ॥ अदनम्। 'अद भक्षणे' (अ० प० अ०)। क्तिन् (३।३।९४)। 'अदो जग्धिः' (२।४।३६) ॥ (१) ॥*॥ भुजेः (रु० आ० अ०) ल्युट् (३।३।११५) ॥ (२) ॥*॥ 'जिमु अदने' (भ्वा० प० से०)। ल्युट् (३।३।११५) ॥ (३) ॥*॥ 'लिह आस्वादने' (अ० उ० अ०)। घञ् (३।३।१८) ॥*॥ 'लेपः' इति पाठे 'लिप उपदेहे' (तु० प० अ०) घञ् (३।३।१८)। '**लेपस्तु** लेपने। अशने च सुरायां च' इति हेमचन्द्रः ॥ (४) ॥*॥ आहरणम्। 'हृञः' (भ्वा० उ० अ०) घञ् (३।३।१८) ॥ (५) ॥ * ॥ न्यदनम्। अदेः (अ० प० अ०) 'नौ ण च' (३।३।६०) इत्यप्, णश्च। 'घञपोश्च' (२।४।३८) घस्लादेशः ॥ (६) ॥*॥ (७) ॥*॥ सप्त '**भोजनस्य**' ॥

**सौहित्यं तर्पणं तृप्तिः**

**सावित** ॥ सुहितस्य भावः। ष्यञ् (५।१।१२४) ॥ (१) ॥*॥ 'तृप प्रीणने' (दि० प० अ०)। ल्युट् (३।३।११५) ॥ (२) ॥*॥ क्तिन् (वा० ३।३।९४) ॥ (३) ॥*॥ त्रीणि '**तृप्तेः**' ॥

**फेला भुक्तसमुज्झितम् ॥ ५६ ॥**

**फेयिति** ॥ फेल्यते। 'फेल्ट गतौ' (भ्वा० प० से०)। 'गुरोश्च' (३।३।१०४) इत्यः ॥ (१) ॥*॥ पूर्वं भुक्तं पश्चात्समुज्झितम्। 'पूर्वकालैक-' (२।१।४९) इति समासः ॥ (२) ॥*॥ द्वे '**भुक्तोत्सृष्टस्य**' ॥

**कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्।**

**केति** ॥ कमनम्। 'कमु कान्तौ' (भ्वा० आ० से०)। घञ् (३।३।१८)। 'विशेषैर्यद्यबाधितः' इति क्लीबत्वम्। '**कामं** बाढेऽनुमतिरेतसोः। **कामः** स्वरेच्छाकाम्येषु'। इति हैमः ॥ (१) ॥*॥ (२) ॥*॥ (३) ॥*॥ 'आप्लृ व्याप्तौ' (स्वा० प० अ०)। भावे क्तः (३।३।११४) ॥ (४) ॥*॥ एषणम्। 'इषु इच्छायाम्' (तु० प० से०)। क्तः (३।३।११४)। '**इष्टमाशंसितेऽपि** स्यात्पूजिते प्रेयसि त्रिषु। सप्ततन्तौ पुमान् क्लीबे संस्कारे क्रतुकर्मणि' इति विश्वः (मेदिनी) ॥ (५) ॥*॥ आप्तुमिष्टम्। 'आप्लृ व्याप्तौ' (स्वा० प० अ०)। सन् (३।१।७)। क्तः (३।३।११४)। 'आप्ज्ञप्यृधामीत्' (७।४।५५)। 'अव्ययं विभक्ति-' (२।१।६) इत्यव्ययीभावः ॥ (६) ॥*॥ षट् '**इच्छानतिक्रमस्य**' ॥

**गोपे गोपालगोसंख्यगोधुगाभीरबल्लवाः ॥ ५७ ॥**

**गविति** ॥ गां पाति। 'पा रक्षणे' (अ० प० अ०)। 'आतोऽनुप-' (३।२।३) इति कः। '**गोपो** गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि। ग्रामौघाधिकृते पुंसि सारिवाख्यौषधौ स्त्रियाम्' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ गां पालयति। 'पाल रक्षणे' (चु० प० से०)। 'कर्मण्यण्' (३।२।१)। '**गोपालो** नृपगोपेशे+**गोकिलो** मुसले हले +' (इति मेदिनी) ॥ (२) ॥*॥ गां संचष्टे। 'चक्षिङ् व्यक्तायां वाचि' (अ० आ० से०)। 'चक्षिङः ख्याञ्' (२।४।५४) 'समि ख्यः' (३।२।२७) इति कः ॥ (३) ॥ * ॥ गां दोग्धि। 'सत्सूद्विष-' (३।२।६१) इति क्विप् ॥*॥ मूलविभुजादित्वात् (वा० ३।२।५)। के 'गोदुहः' अपि। 'गोपगोदुहबल्लवाः' इति त्रिकाण्डशेषः ॥ (४) ॥*॥ आ समन्ताद्भियं राति। 'आतः-' (३।२।३) इति कः। आ अभि ईरयति वा। 'ईर गत्यादौ' (अ० आ० से०)। पचाद्यच् (३।१।१३४) ॥ (५) ॥*॥ वल्लनम्। 'वल्ल संवरणे' (भ्वा० आ० से०) घञ् (३।३।१८)। वल्लं वाति, वायति, वा। 'वा गत्यादौ' (अ० प० अ०)। 'ओ वै शोषणे' (भ्वा० प० अ०) वा। 'आतः-' (३।२।३) इति कः ॥ (६) ॥*॥ षट् '**गोपालानाम्**' ॥

**गोमहिष्यादिकं पादबन्धनम्**

**गोमेति** ॥ गौश्च महिषी च, गोमहिष्यौ आदी यस्य। तत् ॥*॥ पादे बन्धनमस्य ॥*॥ 'यादवं धनम्' इति पाठे तु गोमहिष्यादिकं धनम्। यदूनामिदम्। 'तस्येदम्' (४।३।१२०) इत्यण्। 'गवादि **यादवं** वित्तम्' इति बोपालितः ॥ (१) ॥*॥ आदिना खराजाविकादिग्रहः ॥*॥ एकम् ॥

**द्वौ गवीश्वरे।**

**गोमान् गोमी**

**द्वाविति** ॥ गवामीश्वरः ॥ (१) ॥*॥ बहवो गावोऽस्य। भूम्नि मतुप् (५।२।९४) ॥ (२) ॥*॥ 'ज्योत्स्ना-' (५।२।११४) इति मिनिश्च ॥ (३) ॥*॥ त्रीणि '**गवां स्वामिनः**' ॥

**गोकुलं तु गोधनं स्याद्गवां व्रजे ॥ ५८ ॥**

**गविति** ॥ गवां कुलम् ॥ (१) ॥*॥ गवां धनं समूहः। 'गोकुले धनगोधने' इति व्याडिः ॥ (२) ॥*॥ द्वे '**गोसंघातस्य**' ॥

**त्रिष्वाशितंगवीनं तद्गावो यत्राशिताः पुरा।**

**त्रीति** ॥ आशिता भोजिता गावो यत्र। 'अषड-' (५।४।७) इति खः। मुम् तु निपातितः ॥ (१) ॥*॥ एकं '**पूर्वं गवां चरणस्थानस्य**' ॥

**उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ॥ ५९ ॥**

**अनड्वान् सौरभेयो गौः**

**विति** ॥ उक्षति। 'उक्ष सेचने' (भ्वा० प० से०)। 'श्वन्नुक्षन्-' (उ० १।१५९) इति कनि।—बाहुलकात्कनिन्—इति मुकुटस्त्वेतत्सूत्रादर्शनमूलकः ॥ (१) ॥*॥ भन्दति (ते)। 'भदि कल्याणे' (भ्वा० आ० से०)। 'ऋज्रेन्द्र-' (उ० २।२८) इति साधुः।—'स्फायितञ्चि-' (उ० ३।१३)

१—इदं तु न प्रकृतोपयोगि 'गोकिलशब्दार्थबोधकत्वात्' ॥

इति रक्—इति तु मुकुटस्य प्रमादः । 'भद्रः शिवे खञ्जरीटे वृषभे तु कदम्बके । करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः । काञ्चने च स्त्रियां रास्ना कृष्णा व्योमनदीषु च । तिथिभेदे प्रसारिण्यां कट्फलानन्तयोरपि । त्रिषु श्रेष्ठे च साधौ च न पुंसि करणान्तरे' (इति मेदिनी) ॥ (२) ॥*॥ वरणम् । 'वर ईप्सायाम्' (चु० उ० से०) । संपदादिः (वा० ३।३।१०८) । ईश्च वर् च ईवरौ । तौ ददाति । कः (३।२।३) । अतिशयितं बलमस्य । 'अतः–' (५।२।११५) इतीनिः । बली चासौ ईवर्दश्च ॥ (३) ॥*॥ ऋषति 'ऋषी गतौ' (तु० प० से०) । 'ऋषिवृषिभ्यां कित्' (उ० ३।१२३) इत्यभच् ॥ (४) ॥*॥ वर्षति । 'वृषु सेचने' (भ्वा० प० से०) । अभच् (उ० ३।१२३) 'वृषभः श्रेष्ठवृषयोः' इति विश्वः ॥ (५) ॥*॥ 'इगुपध–' (३।१।१३५) इति कः । 'वृषो धर्मे बलीवर्दे शृङ्ग्यां पुंराशिभेदयोः । श्रेष्ठे स्यादुत्तरस्थश्च वासमूषकशुक्रले । वृषा मूषिकपर्ण्यां च' (इति मेदिनी) ॥ (६) ॥*॥ अनः शकटं वहति । 'अनसि वहेः क्विबनसो डश्च' ( ) ॥ (७) ॥*॥ सुरभ्या अपत्यम् । 'स्त्रीभ्यो ढक्' (४।१।१२०) ।—'इतश्चानिञः' (४।१।१२२)—इति मुकुटस्य प्रमादः । तत्र 'द्व्यचः' इत्यनुवृत्तेः ॥ (८) ॥*॥ गच्छति । 'गमेर्डोः' (उ० २।६७) । 'गौ स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च' इति विश्वमेदिन्यौ ॥ (९) ॥*॥ नव 'वृषभस्य' ॥

**उक्ष्णां संहतिरौक्षकम् ।**

**वितिं** ॥ उक्ष्णां समूहः । 'गोत्रोक्षोष्ट्र–' (४।२।३९) इति वुञ् ॥ (१) ॥*॥ एकम् 'वृषसङ्घस्य' ॥

**गव्या गोत्रा गवाम्**

**गोति** ॥ गावां संहतिः । 'खलगोरथात्' (४।२।५०) इति यः ॥ (१) ॥*॥ 'इनित्रकट्यचश्च' (४।१।५१) इति त्रः ॥ (२) ॥*॥ द्वे 'गोसमूहस्य' ॥

**वत्सधेन्वोर्वात्सकधैनुके ॥६०॥**

**वेति** ॥ वत्सानां समूहः । 'गोत्रोक्षोष्ट्र–' (४।२।३९) इति वुञ् ॥ (१) ॥*॥ धेनूनां समूहः । 'अचित्तहस्ति–' (४।२।४७) इति ठक् ॥ (१) ॥*॥ 'वत्सधेनुसमूहयोः' प्रत्येकमेकैकम् ॥

**उक्षा महान्महोक्षः स्यात्**

**विति** ॥ महांश्चासावुक्षा च । 'अचतुर–' (५।४।७७) इति साधुः ॥ (१) ॥*॥ एकम् 'महोक्षस्य' ॥

**वृद्धोक्षस्तु जरद्गवः ।**

**विति** ॥ वृद्धश्चासावुक्षा च । पूर्ववत् ॥ (१) ॥*॥ जरंश्चासौ गौश्च । 'पूर्वकालैक–' (२।१।४९) इति समासः 'गोरतद्धितलुकि' (५।४।९२) इति टच् ॥ (२) ॥*॥ द्वे 'वृद्धवृषभस्य' ॥

**उत्पन्न उक्षा जातोक्षः**

**विति** ॥ जातश्चासावुक्षा च । 'अचतुर–' (५।४।७७) इति साधुः ॥ (१) ॥*॥ एकं 'भ्रष्टदम्यभावस्य' ॥

**सद्यो जातस्तु तर्णकः ॥ ६१ ॥**

**सेति** ॥ तृणोति । 'तृणु भक्षणे' (त० उ० से०) । ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ एकम् 'सद्योजातवत्सस्य' ॥

**शकृत्करिस्तु वत्सः स्यात्**

**शेति** ॥ शकृत् करोति । 'स्तम्बशकृतोरिन्' (३।२।२४) ॥ (१) ॥*॥ वदति । 'वद व्यक्तायां वाचि' (भ्वा० प० से०) 'वृतॄवदिहनिकमिकषिभ्यः सः' (उ० ३।६२) । 'वत्सः पुत्रादिवर्षयोः । तर्णके नोरसि क्लीबम्' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ द्वे 'वत्सस्य' ॥

**दम्यवत्सतरौ समौ ।**

**देति** ॥ दमनार्हः । 'दमु शमने' (दि० प० से०) । 'अर्हे कृत्यतृचश्च' (३।३।१०९) इत्यर्थे 'पोरदुपधात्' (३।१।९८) इति यत् ॥ (१) ॥*॥ तनुर्वत्सः । 'वत्सोक्षाश्व–' (५।३।९१) इत्यादिना ष्टरच् ॥ (२) ॥*॥ द्वे 'वत्सभावमतीत्य द्वितीयं वयः स्पृष्टस्य' ॥

**आर्षभ्यः षण्डतायोग्यः**

**आर्षेति** ॥ ऋषभस्य प्रकृतिः । 'ऋषभोपानहोर्ञ्यः' (५।१।१४) ॥ (१) ॥*॥ षण्डताया योग्यः ॥*॥ एकम् 'स्पष्टतारुण्यस्य' ॥

**षण्डो गोपतिरिट्चरः ॥ ६२ ॥**

**षेति** ॥ सनोति । सन्यते वा 'षणु दाने' (तु० उ० से०) । 'अमन्ताड्डः' (उ० १।११४) । बाहुलकान्न सत्वम् । 'षण्डं पद्मादिसंघाते न स्त्री स्याद्गोपतौ पुमान्' इति मूर्धन्यादौ डान्ते (मेदिनी) ॥*॥ 'शण्ढः' इति पाठे 'शमेर्ढः' (उ० १।९९) 'शण्ढः स्यात्पुंसि गोपतौ । आ(अ)कृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि' (इति मेदिनी) ॥ (१) ॥*॥ गवां पतिः ॥ (२) ॥*॥ एषणम् इट् । 'इषु इच्छायाम्' (तु० प० से०) । क्विप् (३।२।१७८) । इषा चरति । अच् (३।१।१३४) ॥*॥ केचित् 'इत्वरः' इति पठन्ति । एति तच्छीलः । 'इण्नशजि–' (३।२।१६३) इति क्वरप् । तुक् (६।१।७१) ॥ (३) ॥*॥ त्रीणि 'सांड' इति ख्यातस्य ॥

**स्कन्धप्रदेशस्तु वहः**[1]

**स्केति** ॥ वहति युगमनेन । 'गोचरसंचर–' (३।३।११९) इति साधुः । 'वहः स्याद्वृषभस्कन्धे वाहे गन्धवहेऽपि च' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ एकम् ॥

**सास्ना तु गलकम्बलः ।**

**सेति** ॥ सस्ति । 'षस स्वप्ने' (अ० प० से०) । 'रास्ना–

१—'स्कन्धदेशस्त्वस्य वहः' इति पाठान्तरम् ॥

साम्रा–' (उ० ३।१५) इति साधुः ॥ (१) ॥*॥ गलस्य कम्बलः। '**कम्बलो** नागराजे स्यात्सास्नाप्रावारयोः कृमौ। '(कम्बलश्चोत्तरासङ्गे **कम्बलं** सलिले मतम्)' इति विश्वः ॥ (२) ॥*॥ द्वे '**गलकम्बलस्य**' ॥

**स्यान्नस्तितस्तु नस्योतः**

**स्येति** ॥ नसनम्। 'णस कौटिल्ये' (भ्वा० आ० से०)। क्तः (३।३।११४) नस्तं कृतमस्य। 'प्रातिपदिकाद्धात्वर्थे–' (चु० अ० सू०) इति णिच्। ततः कर्मणि क्तः (३।२।१०२) ॥ (१) ॥*॥ नासिकायां भवा। 'शरीरावयवाच्च' (४।३।५५) इति यत्। 'नस्नासिकाया यत्तस्क्षुद्रेषु' (वा० ६।१।६३) इति नसादेशः। नस्यया नासारज्ज्वा उतः ॥*॥ '**नस्तोतः**' इति पाठः—इति कश्चित्। नस्यते। कर्मणि क्तः (३।२।१०२)। नस्तयोतः ॥ (२) ॥*॥ द्वे '**नासारज्जुयुक्तस्य**' ॥

**प्रष्ठवाड् युगपार्श्वगः** ॥ ६३ ॥

**प्रेति** ॥ प्रष्ठमग्रगामिनं वहति। 'वहश्च' (३।२।६४) इति ण्विः ॥*॥ स्वामी तु—पञ्चमं षष्ठं वा वर्षं वहन्ति, इति विगृह्य ('**प्रष्ठवाट्**' इति) रेफरहितं पठति। तत्र पृषोदरादित्वं (६।३।१०९) बोध्यम् ॥ (१) ॥*॥ युगस्य स्कन्धकाष्ठस्य पार्श्वं गच्छति। 'अन्येष्वपि–' (वा० ३।२।४८) इति डः ॥ (२) ॥*॥ द्वे '**दमनकाले कण्ठारोपितकाष्ठवाहस्य**' ॥

**युगादीनां तु वोढारो युग्यप्रासङ्ग्यशाकटाः।**

**य्विति** ॥ युगम् (१) प्रासङ्गम् (१) शकटम् (१) वहति। 'तद्वहति रथयुगप्रासङ्गम्' (४।४।७६) इति यत् ॥*॥ 'शकटादण्' (४।४।८०) ॥*॥ क्रमेणैकैकम् '**रथादिवाह्याश्ववृषभाणाम्**' ॥

**खनति तेन तद्वोढास्येदं हालिकसैरिकौ** ॥ ६४ ॥

**खेति** ॥ हलेन (१) सीरेण (२) खनति। 'तेन दीव्यति खनति–' (४।४।२) इति ठक् ॥*॥ हलम् (१) सीरम् (२) वहति। 'हलसीराट्ठक्' (४।४।८१) ॥*॥ हलस्य (१) सीरस्य (२) इदम्। 'हलसीराट्ठक्' (४।३।१२४) ॥*॥ द्वे '**उक्तार्थेषु नाम्नी**' ॥

**धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः।**

**ध्विति** ॥ वहतीति वहः। अच् (३।१।१३४)। धुरो वहः ॥ (१) ॥*॥ 'धुरो यड्ढकौ' (४।४।७७) ॥ (२) ॥*॥ (३) ॥*॥ 'खः सर्वधुरात्' (४।४।७८) इति योगविभागात् खः ॥ (४) ॥*॥ धुरं धारयति। 'संज्ञायां भृतॄवृजि–' (३।२।४६) इति खच्। 'खचि ह्रस्वः' (६।४।९४) 'वाचंयमपुरंदरौ च' (६।३।६९) इति चकारस्यानुक्तसमुच्चयार्थत्वादक्।

'अरुर्द्विष–' (६।३।६७) इति मुम् ॥ (५) ॥*॥ पञ्च '**धुरंधरवृषभस्य**' ॥

**उभावेकधुरीणैकधुरावेकधुरावहे** ॥ ६५ ॥

**विति** ॥ एका चासौ धूश्च। 'ऋक्पूरब्धूः–' (५।४।७४) इत्यः। एकधुरां वहति। 'एकधुराल्लुक् च' (४।४।७९) इति खः ॥ (१) ॥*॥ (लुक्पक्षे 'लुक् तद्धितलुकि' (१।२।४९) इति टापो निवृत्तौ एकधुरः) ॥ (२) ॥*॥ एकधुराया वहः ॥ (३) ॥*॥ त्रीणि '**धुरंधरस्य**' ॥

**स तु सर्वधुरीणो यो भवेत्सर्वधुरावहः।**

**स इति** ॥ सर्वा चासौ धूश्च। सर्वधुरां वहति। 'खः सर्वधुरात्' (४।४।७८) इति खः ॥ (१) ॥*॥ सर्वधुराया वहः ॥ (२) ॥*॥ द्वे '**धुरीणश्रेष्ठस्य**' ॥

**माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी** ॥६६॥

**अर्जुन्यघ्न्या रोहिणी स्यात्**

**मेति** ॥ 'गौरुस्रा **प्रिया इला मही**' इति निरुक्तम्। मह्या अपत्यं स्त्री। 'स्त्रीभ्यो ढक्' (४।१।१२०)।—मह्यते। 'मह पूजायाम्' (भ्वा० प० से०)। 'पुंसि–' (३।३।११८) इति घः। 'खनो घ च' (३।३।१२५) इति वा। महाया अपत्यम्—इति तु स्वामी ॥ (१) ॥*॥ सुरभ्या अपत्यम् ॥ (२) ॥*॥ गच्छति। 'गमेर्डोः' (उ० २।६७) ॥ (३) ॥*॥ वसति क्षीरमस्याम्। 'वस निवासे' (भ्वा० प० अ०)। 'स्फायि–' (उ० २।१३) इति रक्। 'वञ्चिस्वपि–' (६।१।१५) इति वस्य उः। 'न रपर–' (८।३।११०) इति षत्वाभावः। '**उस्रो** वृषे च किरणे ऽप्युस्रार्जुन्युपचित्रयोः' (इति मेदिनी)। '**उस्रस्तु** वृषभे प्रोक्तः किरणे च तथा पुमान्' ॥ (४) ॥*॥ मान्यते। 'मान पूजायाम्' (भ्वा० आ० से०)। 'नप्तृनेष्टृ–' (२०।२।९५) इति साधुः। '**मातरौ** गोजनन्यौ द्वे' इति रुद्रः। '**माता** गौर्यादिजननी गो ब्रह्माण्यादिभूमिषु' इति विश्वः (मेदिनी) ॥ (५) ॥*॥ शृङ्गमस्त्यस्याः। 'अतः' (५।२।११५) इतीनिः ॥ (६) ॥*॥ अर्जुनवर्णयोगात्। 'अन्यतो ङीष्' (४।१।४०)। '**अर्जुनः** ककुभे पार्थे कार्तवीर्यमयूरयोः। मातुरेकसुतेऽपि, स्याद्धवले पुनरन्यवत्। नपुंसकं तृणे नेत्ररोगे स्यादर्**जुनी** गवि। उषायां बाहुदानद्यां कुट्टिन्यामपि च क्वचित्' इति विश्वः (मेदिनी) ॥ (७) ॥*॥ न हन्यते, हन्ति दातारम्, वा। 'अघ्न्यादयश्च' (उ० ४।११२) इति साधुः ॥ (८) ॥*॥ रोहितवर्णयोगात्। 'वर्णादनुदात्तात्–' (४।१।३९) इति ङीन्नौ। '**रोहिणी** सोमवल्के भे कण्ठरोगोमयोर्गवि। (लोहिताकट्वरोहिण्योः)' इति हेमचन्द्रः ॥ (९) ॥*॥ नव '**गवि**' ॥

**स्यादुत्तमा गोषु नैचिकी।**

**स्येति** ॥ नीचैश्चरति। 'चरति' (४।४।८) इति ठक्। 'अव्ययानाम्–' (६।४।१४४) इति टिलोपः। यद्वा '**निचि**'

---

१—'वाचंयम—' इत्यत्र 'इच एकाचोऽम्' इत्यतः 'अम्' इत्यस्यानुवृत्तेः 'अत्रापि अम्' एव विधेयः। तथा च मुमोऽत्रोपन्यासो व्यर्थः॥ अक्विधानलेखस्तु सिद्धान्तकौमुद्या अप्यज्ञानमूलकः॥

'कर्णशिरोदेशे' इति रभसः। ततः स्वार्थे कन् (ज्ञापि० ५। ४।५)। प्रशस्तं निचिकमस्याः। 'ज्योत्स्नादिभ्यः' (वा० ५। २।१०३) इत्यण्। 'नैचिकी गौरुत्तमा तु **नीचिकी** सा प्रकीर्तिता' इति नाममाला ॥ (१) ॥*॥ एकम् **'श्रेष्ठाया गोः'** ॥

**वर्णादिभेदात्संज्ञाः स्युः शवलीधवलादयः ॥ ६७ ॥**

**वेति** ॥ आदिना प्रमाणावयवादिग्रहः। शवलयोगात्। 'अन्यतो ङीष्' (४।१।४०) ॥ (१) ॥*॥ धवलयोगात्। अनुदात्तत्वाभावान्न ङीष्। मुकुटस्तु—'धवली'—इत्याह। तत्र गौरादिङीष् (४।१।४१) ॥ (१) ॥*॥ आदिना 'कृष्णा-कपिला-पाटला' इत्यादयः। प्रमाणभेदात् दीर्घा ह्रस्वा खर्वा वामनी, इत्यादयः। अङ्गभेदात् पिङ्गाक्षी लम्बकर्णी वक्रशृङ्गी, इत्यादयः **'धवलादिसंज्ञानाम्'** ॥

**द्विहायनी द्विवर्षा गौः**

**द्वीति** ॥ द्वौ हायनौ यस्याः। 'दामहायना-' (४।१।२७) इति ङीप् ॥ (१) ॥*॥ द्वे वर्षे वयःप्रमाणमस्याः। आर्हीयष्ठक् ( ) तस्य 'अध्यर्ध-' (५।१।२८) इति लुक् ॥ (२) ॥*॥ द्वे **'द्विवर्षाया गोः'** ॥

**एकाब्दा त्वेकहायनी।**

**एकेति** ॥ एकोऽब्दो यस्याः ॥ (१) ॥*॥ एको हायनो यस्याः। 'ङीप्' (४।१।२७) ॥ (२) ॥*॥ द्वे **'एकवर्षाया गोः'** ॥

**चतुरब्दा चतुर्हायणी**

**चेति** ॥ चत्वारोऽब्दा यस्याः ॥ (१) ॥*॥ चत्वारो हायना यस्याः ङीप् (४।१।२७)। 'त्रिचतुर्भ्यां हायनस्य' (वा० ८।४) इति णत्वम् ॥ (२) ॥*॥ द्वे **'चतुर्वर्षाया गोः'** ॥

**एवं त्र्यब्दा त्रिहायणी ॥ ६८ ॥**

**एवमिति** ॥ त्रयोऽब्दा यस्याः ॥ (१) ॥*॥ त्रयो हायना यस्याः ॥ (२) ॥*॥ द्वे **'त्रिवर्षाया गोः'** ॥

**वशा वन्ध्या**

**वेति** ॥ वष्टि। 'वश कान्तौ' (अ० प० से०)। अच् (३।१।१३४) **'वशो** जनस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः। **वशा** नार्यां वन्ध्यगव्यां हस्तिन्यां दुहितर्यपि' इति हैमः ॥ (१) ॥*॥ बध्नाति। 'बन्ध बन्धने' (क्र्या० प० अ०)। ण्यत् (३।१।१२४)।—अघ्न्यादिः (उ० ४।११२)—इति मुकुटः ॥ (२) ॥*॥ द्वे **'वन्ध्यायाः'** ॥

**अवतोका स्रवद्गर्भा**

**अवेति** ॥ अवगलितं तोकमपत्यं यस्याः ॥ (१) ॥*॥ स्रवन् गर्भो यस्याः ॥ (२) ॥*॥ द्वे **'अकस्मात् पतितगर्भायाः'** ॥

**अथ संधिनी।**

**आक्रान्ता वृषभेण**

**अथेति** ॥ संधानम्। 'डुधाञ्' (जु० उ० अ०)। 'आतश्च-' (३।३।१०६) इत्यङ्। संधास्त्यस्याः। व्रीह्यादित्वात् (५।२।११६) इनिः ॥ + अवश्यं संधत्ते वा। 'आवश्यका-' (३।३।१७०) इति णिनिः+। **'संधिनी** वृषभाक्रान्ताकालदुग्धोत्स्वयोः स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ एकं **'कृतमैथुनायाः'** ॥

**अथ वेहद्गर्भोपघातिनी ॥ ६९ ॥**

**अथेति** ॥ विहन्ति गर्भम्। 'संश्चत्तृपद्वेहत्-' (उ० २। ८४) इति साधुः ॥ (१) ॥*॥ गर्भमुपहन्ति। 'सुप्यजातौ-' (३।२।७८) इति णिनिः ॥ (२) ॥*॥ द्वे **'वृषयोगेन गर्भपातिन्याः'** ॥

**काल्योपसर्या प्रजने**

**केति** ॥ प्रजने गर्भग्रहणे प्राप्तकाला ॥*॥ उपस्रियते वृषेण। 'सृ गतौ' (भ्वा० प० अ०) 'उपसर्या काल्या प्रजने' (३।१।१०४) इति साधुः ॥ (१) ॥*॥ एकं **'गर्भग्रहणयोग्यायाः'** ॥

**प्रष्ठौही बालगर्भिणी।**

**प्रेति** ॥ प्रष्ठं वहति। 'वहश्च' (३।२।६४) इति ण्विः। 'वहः' (४।१।७१) इति ङीप् ॥*॥ **'पष्ठौही'** इति पाठे पृषोदरादित्वात् (६।३।१०९) रलोपः ॥ (१) ॥*॥ बाला चासौ गर्भिणी च ॥ (२) ॥*॥ द्वे **'प्रथमं गर्भं धृतवत्याः'** ॥

**स्यादचण्डी तु सुकरा**

**स्येति** ॥ न चण्डी ॥ (१) ॥*॥ सु सुखं करोति। अच् (३।१।१३४) सु क्रियते वा। 'ईषद्दुःसुषु-' (३।३।१२६) इति खल् ॥ (२) ॥*॥ द्वे **'सुशीलायाः'** ॥

**बहुसूतिः परेष्टुका ॥ ७० ॥**

**बेति** ॥ बह्वी सूतिर्यस्याः ॥ (१) ॥*॥ परमिच्छति। परैरिष्यते, वा। बाहुलकात्तुः। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे **'बहुप्रसूतायाः'** ॥

**चिरसूता वष्कयिणी**

**चीति** ॥ चिरं सूता। 'सुप्सुपा' (२।१।४) इति समासः ॥ (१) ॥*॥ वष्कते। 'वष्क गतौ' (चु० उ० से०)। बाहुलकादयन्। वष्कयस्तरुणवत्सः। सोऽस्त्यस्याः 'अतः-' (५।२।११५) इतीनिः। 'अट्कुप्वाङ्-' (८।४।२) इति णत्वम्।-'पूर्वपदात्-' (८।४।३)—इति मुकुटस्य प्रमादः। समासाभावात् ॥*॥ यद्वा **'वष्कयस्त्वेकहायनो वत्सः'** इति

१—इदमसंगतम्। णिनेः कित्त्वाभावात् आतो लोपाप्राप्तेः णित्वात् 'आतो युक्' (७।३।३३) इति युगापत्तेश्च। अत एवैतज्जनकेन सिद्धान्तकौमुद्यां 'स्थायी' 'गोसंदायः' इत्यत्र युगेव कृतः ॥

शाकटायनः। तेन नीयते। संपदादिः (वा० ३।३।१०८)। 'सर्वतोऽक्तिन्नर्थात्' (ग० ४।१।४५) इति ङीष्। गौरादित्वात् (४।१।४५) वा। 'पूर्वपदात्' (८।४।३) इति णत्वम्। अत्र पक्षे (वष्कयणी) इकाररहित उपान्त्यः॥ (२)॥*॥ द्वे 'दीर्घकालेन प्रसूतायाः'॥

**धेनुः स्यान्नवसूतिका।**

**धयिति**॥ धीयते। 'धेट् पाने' (भ्वा० प० से०)। 'धेट इच्च' (उ० ३।३४) इति नुः।—'धेन्वादयश्च—' इति मुकुटस्त्वपाणिनीयः 'धेनुर्गोमात्रके दोग्ध्र्याम्' इति हैमः॥ (१)॥*॥ नवं सूतं प्रसवोऽस्याः। 'शेषात्—' (५।४।१५४) इति कप्। 'प्रत्ययस्थात्—' (७।३।४४) इतीत्वम्॥ (२)॥*॥ द्वे 'नूतनप्रसूतायाः'॥

**सुव्रता सुखसंदोह्या**

**स्विति**॥ शोभनं व्रतमस्याः॥ (१)॥*॥ सुखेन संदुह्यते। ण्यत् (३।१।१२४)॥ (२)॥*॥ द्वे 'सुशीलायाः'॥

**पीनोध्नी पीवरस्तनी॥७१॥**

**पीति**॥ पीनमूधोऽस्याः। 'ऊधसोऽनङ्' (५।४।१३१)। 'बहुव्रीहेरूधसो ङीष्' (४।१।२५)॥ (१)॥*॥ पीवरः स्तनोऽस्याः। 'स्वाङ्गाच्चोपसर्जनात्' (४।१।५४) इति ङीष्॥ (२)॥*॥ 'स्थूलस्तन्याः'॥

**द्रोणक्षीरा द्रोणदुग्धा**

**द्रविति**॥ द्रोणपरिमितं क्षीरमस्याः॥ (१)॥*॥ द्रोणं दोग्धि। 'दुहः कप् घश्च' (३।२।७०) इति कप् घश्चान्तादेशः॥ (२)॥*॥ द्वे 'द्रोणपरिमितदुग्धदात्र्याम्'॥

**धेनुष्या बन्धके स्थिता।**

**धयिति**॥ 'संज्ञायां धेनुष्या' (४।४।८९) इति साधुः॥॥*॥ एकम् 'बन्धनस्थितायाः गोः'॥

**[स]मांसमीना सा यैव प्रतिवर्षं प्रसूयते॥७२॥**

[सम]ेति॥ समायां समायां विजायते। 'समां समां विजा[यते]' (५।२।१२) इति खः, उत्तरपदे टाब्विभक्त्योर्लोपः पूर्व[पदे] यलोप एव॥ (१)॥*॥ एकम् 'प्रतिवर्षं प्रसविन्‍याः'॥

**[ऊधस्]तु क्लीबमापीनम्**

[ऊ]ति॥ वहति। 'वह प्रापणे' (भ्वा० उ० से०)। ['उन्दी] क्लेदने' (रु० प० से०) असुन् (उ० [४।१८]९)। 'ऊधसोऽनङ्' (५।४।१३१) इत्यादिनिर्देशादू[ध]ः।—'श्वेः संप्रसारणं च' (उ० ४।१९३) इत्यनुवृत्तौ ['ऊधो] दीर्घश्च' इत्यसुन्—इति मुकुटस्त्वपाणिनीयः॥ (१)॥*॥ [आपीनम्] आ प्यायते स्म। 'ओ प्यायी वृद्धौ' (भ्वा०आ०से०)। ['गत्यर्थाकर्मक]—' (३।४।७२) इति क्तः। 'प्यायः पी' (६।१।२८)। 'आङ्पूर्वस्यान्धूधसोः' (वा० ६।१।२८) इति वा, पीभावः। 'ओदितश्च' (८।२।४५) इति निष्ठानत्वम्॥ (२)॥*॥ द्वे 'क्षीराशयस्य'॥

**समौ शिवककीलकौ।**

**सेति**॥ श्यति गात्रकण्डूम्, शेतेऽत्र वा। 'सर्वनिघृष्व—' (उ० १।१५३) इति साधुः। स्वार्थे कन् (ज्ञापि० ५।४।५)॥ (१)॥*॥ कील्यते (अत्र)। 'कील बन्धे' (भ्वा० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। स्वार्थे कन् (ज्ञापि० ४।४।५)॥ (२)॥*॥ द्वे 'पशुबन्धनकाष्ठस्य'॥

**न पुंसि दाम संदानम्**

**नेति**॥ द्यति। 'दो अवखण्डने'। दीयते वा, अनेन वा। 'देङ् रक्षणे' (भ्वा० आ० अ०)। मनिन् (उ० ४।१४५)॥ (१)॥*॥ संदीयते। संपूर्वो दाण् बन्धने। ल्युट् (३।३।११३)॥ (२)॥२॥ द्वे 'दोहनकाले पादबन्धनरज्ज्वोः'॥

**पशुरज्जुस्तु दामनी॥७३॥**

**पेति**॥ पशुबन्धनी रज्जुः। शाकपार्थिवादिः (वा० २।१।७८)॥ (१)॥*॥ दामैव। प्रज्ञाद्यण् (५।४।३८) 'अन्' (६।४।१६७) इति प्रकृतिभावः। 'टिड्ढा—' (४।१।१५) इति ङीप्। 'नित्यं संज्ञाच्छन्दसोः' (४।१।२९) इति ङीप् वा॥*॥—'बन्धनी'—इति पाठः—इति कश्चित्॥ (२)॥*॥ द्वे 'पशुबन्धनरज्ज्वोः'॥

**वैशाखमन्थमन्थानमन्थानो मन्थदण्डके।**

**वायिति**॥ विशाखा प्रयोजनमस्य। 'विशाखाषाढात्—' (५।१।११०)। 'वैशाखो मासभेदेऽपि मन्थाने च प्रकीर्तितः' (इति मेदिनी)॥ (१)॥*॥ मथ्यतेऽनेन 'हलश्च' (३।३।१२१) इति घञ्। 'मन्थो रवौ मथि। सक्तुके नेत्ररोगे च' इति हैमः॥ (२)॥*॥ मन्थति। बाहुलकादानच्। ताच्छील्ये चानश् (३।२।१२९) वा। मुकुटेन तु 'परमे कित्' इत्यनुवृत्तौ 'मन्तः' (उ० ४।११) इत्यनेनानः—इत्युक्तम्। तन्न। अनेनेनेर्विधानात्। आनस्याविधानात्। यदपि—मन्थेः शानचि मन्थानः, इति स्वामी—इत्युक्तम्। तदपि न। मन्थेः परस्मैपदित्वात्। आत्मनेपदिभ्यः शानचो विधानात्। मुक्प्रसङ्गाच्चानशपि न। आगमशास्त्रस्यानित्यत्वं वा बोध्यम्॥ (३)॥*॥ मथ्यतेऽनेन। 'मन्थः' (उ० ४।११) इतीनिः कित्। यत्तु—'पथिमथिभ्यामिन्'—इति मुकुटेनोक्तम्। तदपाणिनीयम्॥ (४)॥*॥ मन्थस्य दण्डः॥ (२)॥*॥ पञ्च 'मन्थनदण्डस्य'॥

**कुठरो दण्डविष्कम्भे**

**किति**॥ कुठति। 'कुठ गतिप्रतिघाते' (   )। बाहुलकात्करन्।—'कुठश्च' इत्यरः—इति मुकुटस्त्वपाणिनीयः॥*॥ 'कुटरः' इति पाठे तु 'कुट कौटिल्ये' (तु० प० से०)।

बाहुलकादरः ॥ (१) ॥*॥ दण्डं विष्कभ्नाति। 'स्कम्भु रोधने' सौत्रः। 'कर्मण्यण्' (३।२।१)। 'वेः स्कभ्नातेर्नित्यम्' (८।३।७७) इति षत्वम् ॥ (१) ॥*॥ द्वे 'मन्थबन्धनकाष्ठस्य'। गर्गरीमुखस्य वा। 'मन्थदण्डधारककाष्ठस्य' वा ॥

**मन्थनी नर्गरी समे ॥ ७४ ॥**

**मेति** ॥ मथ्यतेऽस्याम्। 'करणा–' (३।३।११७) इति ल्युट् ॥ (१) ॥*॥ 'गर्ग' इति शब्दं राति। 'आतः–' (३।२।३) इति कः। गौरादिः (४।१।४१) गिरति वा। 'गॄ निगरणे' (तु० प० से०)। बाहुलकाद्गरट् ॥ (२) ॥*॥ द्वे 'मन्थनपात्रस्य' ॥

**उष्ट्रे क्रमेलकमयमहाङ्गाः**

**विति** ॥ ओषति। उष्यते वा। 'उष दाहे' (भ्वा० प० से०)। ष्ट्रन् (उ० ४।१५९) संज्ञापूर्वकत्वाद्गुणाभावः।—'उषिखनिभ्यां कित्' इति ष्ट्रन्—इति मुकुटस्त्वपाणिनीयः ॥ (१) ॥*॥ क्रामति 'क्रमु पादविक्षेपे' (भ्वा० प० से०)। विच् (३।२।७५)। इलति। 'इल क्षेपे' (तु० प० से०)। एलयति। 'इल गतौ' (चु० प० से०)। ण्वुल् (३।१।१३३) क्रम् चासावेलकश्च ॥ (२) ॥*॥ मीनाति। 'मीञ् हिंसायाम्' (क्र्या० उ० अ०)। मयते 'मय गतौ' (भ्वा० आ० से०) मे वा। अच् (३।१।१३४)। ('मयः शिल्पिनि दैत्यानां करभेऽश्वतरेऽपि च' इति मेदिनी) ॥ (३) ॥*॥ महान्त्यङ्गान्यस्य। 'अनेकम्–' (२।२।२४) इति बहुव्रीहिः ॥ (४) ॥*॥ चत्वारि 'उष्ट्रस्य' ॥

**करभः शिशुः।**

**केति** ॥ किरति, कीर्यते वा। 'कृशृशलि(कलि)गर्दिभ्योऽभच्' (उ० ४।१२२)। 'करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते' इति मेदिनी) ॥ (१) ॥*॥ एकम् 'उष्ट्रशिशोः' ॥

**करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः ॥ ७५ ॥**

**केति** ॥ 'शृङ्खलमस्य बन्धनं करभे' (५।२।७९) इति कन् ॥ (१) ॥*॥ एकं 'दारुविकारशृङ्खलाप्रायबन्धनयुक्तस्य करभस्य' ॥

**अजा छागी**

**अजेति** ॥ अजति। 'अज गतौ' (भ्वा० प० से०) पचाद्यच् (३।१।१३४)। 'अजाविभ्याम्–' (५।१।८) इति निर्देशान्न वी। 'अजाद्यतष्टाप्' (४।१।४)। 'अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे' इति हैमः ॥ (१) ॥*॥ छ्यति, छायते, वा। 'छो छेदने' (दि० प० से०)। 'छापूखडिभ्यः कित्' (उ० ११२४) इति गन्। 'जातेः–' (४।१।६३) इति ङीष् ॥ (२) ॥*॥ द्वे 'अजायाः' ॥

**स्तभच्छागवस्तच्छगलका अजे।**

**स्तेति** ॥ स्तभ्नोति। 'स्तम्भु रोधने' (सौत्रः) मूलविभुजादित्वात् (वा० ३।२।५) कः। पचाद्यचि (३।१।१३४) तु नलोपो न स्यात् ॥*॥ **तुभ** इति पाठे, तोभते। 'तुभ हिंसायाम्' (भ्वा० आ० से०) ॥*॥ **'शुभ'** इति पाठे 'शुभ हिंसायाम्' (भ्वा० प० से०)। 'इगुपध–' (३।१।१३५) इति कः ॥ (१) ॥*॥ वस्तयति। 'वस्त अर्दने' (चु० आ० से०) चुरादिः। अच् (३।१।१३४) ॥ (३) ॥*॥ छायते। 'छो छेदने' (दि० प० अ०) 'छो गुक् ह्रस्वश्च' (उ० १।११३) इत्यलच्। स्वार्थे कन् ॥ (४) ॥*॥ पञ्च **'अजस्य'** ॥

**मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके ॥ ७६ ॥**

**मयिति** ॥ मेहति। 'मिह सेचने' (भ्वा० प० अ०)। ष्ट्रन् (उ० ४।१४९) ॥ (१) ॥*॥ उरु भ्रमति। 'भ्रमु चलने' (भ्वा० प० से०)। 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः। पृषोदरादिः (६।३।१०९)। यद्वा उरा शंभुना रभ्यते। 'रभ राभस्ये' (भ्वा० आ० अ०)। बाहुलकाद्रक् ॥ (२) ॥*॥ ऋच्छति, अर्यते, वा। 'ऋ गतौ' (भ्वा० प० अ)। 'अर्तेः क्युरुच्च' (उ० ५।१७) इति क्युन् ॥ (३) ॥*॥ ऊर्णा अस्य। 'ऊर्णाया युस्' (५।२।१२३) ॥ (४) ॥*॥ मिषति। 'मिष स्पर्धायाम्' (तु० प० से०)। अच् (३।१।१३४) ॥ (५) ॥*॥ वर्षति। 'वृषु सेचने' (भ्वा० प० से०)। 'सृवृषिभ्यां कित्' (उ० ४।४९) इति निः।—'सृणिवेणिवृष्णिपार्ष्णिचूर्णयः' इति निः—इति मुकुटस्त्वपाणिनीयः ॥ (६) ॥*॥ इलति। एलयति वा। 'इल गतिक्षेपणयोः' (तु० प० से०)। ण्वुल् (३।१।१३३)। डलयोरेकत्वम् (७) ॥*॥ सप्त **'मेषस्य'** ॥

**उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम्।**

**विति** ॥ उष्ट्राणाम् (१), उरभ्राणाम् (१), अजानाम् (१), समूहः। 'गोत्रोक्षो–' (४।२।३९) इति वुञ् ॥*॥ प्रत्येकमेकैकम् ॥

**चक्रीवन्तस्तु वालेया रासभा गर्दभाः खराः**

**चेति** ॥ चक्रवच्क्रमणं चक्रम्। तदस्यास्ति। म[illegible] २।९४)। 'आसन्दीवत्–' (८।२।१२) इति साधुः ॥ ( . ॥*॥ वलय उपसंहाराय संहितः 'छदिरुपधि–' (५।१।१३) इति ढञ्। वलेरपत्यम्। 'इतश्चानिञः' (४।१।१२२) इति ढग् वा। **'वालेयो** गर्दभे पुंसि मृदौ वलिहिते त्रिषु' इति (मेदिनी) ॥ (२) ॥*॥ रासते। 'रासृ शब्दे' (भ्वा० आ० से०)। 'रासिवल्लिभ्यां च' (उ० ३।१२५) इत्यभच् ॥ (३) ॥*॥ गर्दति। 'गर्द शब्दे' (भ्वा० प० से०)। 'कृशृशलिकलिगर्दिभ्योऽभच्' (उ० ३।१२२)। **'गर्दभं** श्वेतकुमुदे **गर्दभो** गन्धभिद्यपि। रासभे, **गर्दभी** क्षुद्रजन्तुरोगप्रभेदयोः' इति विश्वः (मेदिनी) ॥ (४) ॥*॥ खं मुखबिलमतिशयित-

१—इदं च 'उषिखनिभ्यां कित्' (उ० ४।१६२) इति सूत्रासरणमूलकम् ॥

मस्य । 'खमुख' (बा० ५।२।१०७) इति रः । 'खरो रक्षोन्तरे तीक्ष्णे दुःस्पर्शे रासभेऽपि च' इति हेमचन्द्रः ॥ (५) ॥*॥ पञ्च 'गर्दभस्य' ॥

**वैदेहकः सार्थवाही नैगमो वाणिजो वणिक् ।**
**पण्याजीवो ह्यापणिकः क्रयविक्रयकश्च सः ॥ ७८ ॥**

**वायिति** ॥ विदेहेषु भवः धूमादित्वात् (४।२।१२७) वुञ् । विदेग्धि वा । 'दिह उपचये' (अ० उ० अ०) । ण्वुल् (३।१।१३३) । प्रज्ञाद्यण् (५।४।३८) । 'वै निश्चितो देह उपचयो यस्य' इति वा । '**वैदेहको** वाणिजके शूद्राद्वैश्यासुतेऽ च' इति विश्वः (मेदिनी)हेमचन्द्रौ ॥ (१) सार्थं वहन्ति । 'कर्मण्यण्' (३।२।१) ॥ (२) ॥*॥ निगमे भवः । 'तत्र भवः' (४।३।५३) इत्यण् । '**नैगमः** स्यादुपनिषद्वणिजोः (नागरेऽपि च)' इति विश्वः (मेदिनी) ॥*॥ संज्ञापूर्वकत्वाद्वृद्ध्यभावे 'निगमः' अपि । '**निगमो** वाणिजे पुर्याम् (कटे वेदे वाणिक्पथे)' इति विश्वः (मेदिनी) ॥ (३) ॥*॥ पणते । 'पण व्यवहारे स्तुतौ च' (भ्वा० आ० से० ) । 'पणतेरिज्यादेश्च बः' (उ० २।७०) प्रज्ञाद्यण् (५।४।३८) ॥ (४) ॥*॥ '**वणिक्** स्त्रियाम् । वणिज्यायां, पुमान् वाणिजके च करणान्तरे' इति विश्वः (मेदिनी) ॥ (५) ॥*॥ पण्यते । 'पण व्यवहारे' ( भ्वा० आ० से० ) । 'अवद्यपण्य–' (३।१।१०१) इति साधुः । पण्यमाजीवो यस्य ॥ (६) ॥*॥ आपणो व्यवहारोऽस्यास्ति । 'अतः–' (५।२।११५) इति ठन् ॥ (७) ॥*॥ क्रयविक्रयाभ्यां जीवति । 'वस्नक्रयविक्रयाट्ठन्' (४।४।१३) (८) ॥*॥ अष्टौ '**क्रियविक्रयाभ्यां वर्तमानस्य**' ॥

**विक्रेता स्याद्विक्रयिकः**

**वीति** ॥ विक्रीणाति । 'डुक्रीञ् द्रव्यविनिमये' ( क्र्या० उ० अ० ) । तृच् (३।१।१३३) ॥ (१) ॥*॥ विक्रयेण जीवति । 'वस्नक्रयविक्रयाट्ठन्' (४।४।१३) ॥ (२) ॥*॥ द्वे '**वस्त्रपात्रादि दत्वा तन्मूल्यं गृह्णतः**' ॥

**क्रायकः क्रयिकः समौ ।**

**क्रेति** ॥ क्रीणाति । ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ क्रयेण जीवति । ठन् (४।४।१३) ॥ (२) ॥*॥ द्वे '**मूल्येन वस्त्रादि गृह्णतः**' ॥

**वाणिज्यं तु वणिज्या स्यात्**

**वेति** ॥ वणिजां कर्म । ब्राह्मणादित्वात् (५।१।१२४) ष्यञ् ॥ (१) ॥*॥ 'दूतवणिग्भ्यां च' इति यः ॥ (१) ॥*॥ द्वे '**वणिक्कर्मणः**' ॥

१—इति काशिका ॥ माधवस्तु 'वणिज्याशब्दः स्वभावात्स्त्रीलिङ्गः । भाव एव प्रत्ययः । न तु कर्मणि' इत्याह ॥ भाष्ये तु 'दूतवणिग्भ्यां च' इति नास्त्येव—इति वैयाकरणसिद्धान्तकौमुदी ॥ 'तस्मात् वणिजि साधुः' 'तत्र साधुः' (४।४।९८) इति यत् इति बोध्यम् ॥

**मूल्यं वस्नोऽप्यवक्रयः ॥ ७९ ॥**

**म्विति** ॥ मूलेनानाम्यम् । 'नौवयो–' (४।४।९१) इति यत् ॥ (१) ॥*॥ वसत्यत्र । 'धापॄवस्यज्यतिभ्यो नः' (उ० ३।६) '**वस्नं** वस्त्रे धने मूल्ये भृतौ' इति हेमचन्द्रः ॥ (२) ॥*॥ अवक्रीयतेऽनेन । 'पुंसि–' (३।३।११८) इति घः—'एरच्' (३।३।५६)—इति मुकुटः । तन्न । ल्युटा बाधात् ॥ (३) ॥*॥ त्रीणि '**विक्रेयवस्तूनां मूल्यस्य**' ॥

**नीवी परिपणो मूलधनम्**

**नीति** ॥ नितरामिन्वति । 'इवि प्रीणने' (भ्वा०प०से०) । 'अनित्यमागमशासनम्' इति न नुम् । 'इगुपधात्कित्' (उ० ४।१२०) इतीन् । 'कृदिकारात्–' (ग० ४।१।४५) इति ङीष् ।–'निपूर्वाद्व्येञो निरी च' इति ङिः । 'कृदिकारात्' (ग० ४।१।४५) इति ङीष् । 'व्यो यलोपः' नेर्दीर्घः । नीवी—इत्याह मुकुटः । '**नीवी** स्त्रीकटीवस्त्रबन्धने । मूलद्रव्ये परिपणे' इति हैमः ॥ (१) ॥*॥ परिपण्यते वृद्ध्यर्थं प्रयुज्यते । 'पुंसि–' (३।३।११८) इति घः ॥ (२) ॥*॥ मूलं च तद्धनं च ॥ (३) ॥*॥ त्रीणि '**क्रयविक्रयादिव्यवहारे यन्मूलधनं तस्य**' ॥

**लाभोऽधिकं फलम् ।**

**लेति** ॥ लभ्यते । 'डुलभष् प्राप्तौ' (भ्वा० आ० अ०) । 'अकर्तरि–' (३।३।१९) इति घञ् ॥ (१) ॥*॥ अध्यारूढम् । 'अधिकम्' (५।२।७३) इति साधु ॥ (२) ॥*॥ फलति । 'फल निष्पत्तौ' ( भ्वा० प० से० ) । अच् (३।१।१३४) । '**फलं** जतीफले सस्ये हेत्वर्थे व्युष्टिलाभयोः' । (त्रिफलायां च कक्कोले, प्रियङ्गौ तु **फली** स्मृता)' इति विश्वः (मेदिनी) । '**फलं** हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः । **फली** फलिन्याम्' इति हैमः ॥ (३) ॥*॥ त्रीणि '**अधिकफलस्य**' ॥

**परिदानं परीवर्तो नैमेयनिमयावपि ॥ ८० ॥**

**पेति** ॥ परिवृत्य दानम् ॥*॥ क्वचित् '**प्रतिदानम्**' इति पाठः ॥ (१) ॥*॥ परिवर्तनम् । भावे घञ् (३।३।१८) । 'उपसर्गस्य–' (६।३।१२२) इति दीर्घः ॥ (२) ॥*॥ निमानम् । 'मेङ् प्रणिदाने' ( भ्वा० आ० अ० ) । 'अचो यत्' (३।१।९७) । आत्वम् (६।१।४५) 'ईद्यति' (६।४।६५) । गुणः (७।३।८४) । प्रज्ञाद्यण् (५।४।३८) च ॥ (३) ॥*॥ निमीयते[३] । 'मीङ् हिंसायाम्' दि०

१—उज्ज्वलदत्तादिषु तु 'नौ व्यो यलोपः पूर्वस्य च दीर्घः' (४।१३६) इति सूत्रं लभ्यते ॥ २—परिपण आडम्बरः—इत्यनेकार्थकैरवाकरकौमुदी ॥ —३ इतः प्रभृति परजित्यन्तः पाठः कश्मीरपुस्तकस्थः अन्यत्र तु न ॥

आ० अ०) । 'एरच्' (३।३।५६) ॥ (४) ॥*॥ चत्वारि **'परिवर्तनस्य' 'अदलाबदला'** इति ख्यातस्य ॥

**पुमानुपनिधिर्न्यासः**

**पुंविति** ॥ उपनिधीयते । 'डुधाञ्' (जु० उ० अ० )। 'उपसर्गे घोः किः' (३।३।९२) ॥ (१) ॥*॥ न्यस्यते । 'असु क्षेपणे' (दि० प० से०) । कर्मणि घञ् (३।३।१९) ॥ (२) ॥*॥ द्वे **'निक्षेपस्य'** ॥

**प्रतिदानं तदर्पणम् ।**

**प्रेति** ॥ प्रतीपं दानम् ॥ (१) ॥*॥ तस्यार्पणम् ॥ (२) ॥*॥ द्वे **'स्वामिने निक्षेपार्पणस्य'** ॥

**क्रये प्रसारितं क्रय्यम्**

**क्रेति** ॥ क्रीयते । 'अचो यत्' (३।१।९७) । गुणः (७।३।८४) 'क्रय्यस्तदर्थे' (६।१।८२) इति साधु ॥ (१) ॥*॥ एकं **'ग्राहका गृह्णीयुरिति बुद्ध्यापणे प्रसारितस्य'** ॥

**क्रेयं क्रेतव्यमात्रके ॥ ८१ ॥**

**क्रयिति** ॥ (१) ॥*॥ एकं **'हट्टे प्रसारणयोग्यस्य'** ॥

**विक्रेयं पणितव्यं च पण्यं**

**वीति** ॥ विक्रीयते । 'अचो यत्' (३।१।९७) ॥ (१) ॥*॥ पण्यते । 'पण व्यवहारे' (भ्वा० आ० से०) । 'तव्यत्तव्यानीयरः' (३।१।९६) ॥ (२) ॥*॥ 'अवद्यपण्य-' (३।१।१०१) इति साधु ॥ (३) ॥*॥ त्रीणि **'विक्रयक्रियाकर्मणः'** ॥

**क्रय्यादयस्त्रिषु ।**

**क्रेति** ॥ (पण्यान्ताः) ॥

**क्लीबे सत्यापनं सत्यंकारः सत्याकृतिः स्त्रियाम् ॥८२॥**

**क्लीति** ॥ सत्यस्य करणम् । 'सत्यापपाश-' (३।१।२५) इति णिजापुकौ । भावे ल्युट् (३।३।११४) । **'सत्यापना** सत्याकृतिः' इति स्त्रीकाण्डे बोपालितात् 'ण्यासश्रन्थः-' (३।३।१०७) इति युजपि ॥ (१) ॥*॥ घञ् (३।३।१८) । 'कारे सत्यागदस्य' (६।३।८७) इति मुम् ॥ (२) ॥*॥ क्तिन् (३।३।९४) । 'सत्यादशपथे' (५।४।६६) इति डाच् ॥ (३) ॥*॥ त्रीणि **'साई'** इति ख्यातायाः ॥

**विपणो विक्रयः**

**वीति** ॥ विपणनम् । घञ् (३।३।१८) । संज्ञापूर्वकत्वान्न वृद्धिः । 'खनो घ च' (३।३।१२५) इति घो वा ॥ (१) ॥*॥ विक्रयणम् । 'एरच्' (३।३।५६) ॥ (२) ॥*॥ द्वे **'विक्रयक्रियायाः'** ॥



**संख्याः संख्येये ह्यादश त्रिषु ।**

**समिति** ॥ दशन्ति, दशन्ते, वा । 'दंश दशने' (भ्वा० प० अ०) । बाहुलकात्कनिन् । दशशब्दमभिव्याप्य । 'आङ् मर्यादाभिविध्योः' (२।१।१३) 'नपुंसकात्-' (५।४।१०९) इति पक्षे टच् न । एकादिका नवदशपर्यन्ताः संख्याः संख्येये, त्रिलिङ्गाश्च । तेन 'एको विप्रः' इत्यादि भवति, न तु 'विप्रस्यैकः' इत्यादि ॥

**विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः ॥८३॥**

**वीति** ॥ 'विंशतिः' इत्याद्या यासां ताः संख्याः संख्येयसंख्ययोर्वर्तन्ते । एकवचनान्ताश्च । यथा 'विंशतिर्गावः' 'गवां विंशतिः' इति ॥

**संख्यार्थे द्विबहुत्वे स्तः**

**समिति** ॥ विंशत्यादीनां यदा संख्यार्थः, तदा द्विवचनबहुवचने अपि स्तः । यथा 'द्वे विंशती, तिस्रो विंशतयः' इति ॥

---

१—एकाद्या दशान्ताः संख्याः संख्येयेषु वर्तमानास्त्रिलिङ्गाः । एका शाटी, एकः पटः, एकं कुण्डम् । दश स्त्रियः, दश पटाः, दश कुण्डानि । आदशेति । अष्टादशान्ताः—इति क्षीरस्वामी ॥ आदशेति । दशशब्दश्रुतिपर्यन्तमष्टादशं यावत् संख्या एकादिकाः संख्येये द्रव्ये वर्तन्ते । हिरवधारणे । तेन सामानाधिकरण्येनैव तासां वृत्तिरित्यर्थः । यथा 'एको विप्रः' 'दश विप्राः' इति, न तु वैयधिकरण्येन वृत्तिरिति, न तु 'एको विप्रस्य, दश विप्राणाम्' इत्यादिः ।—इति मुकुटः ॥ अत्र नैकाद्या अष्टादशान्ता संख्या संख्येये वर्तते । यदाह वाचस्पतिः । 'अष्टादशभ्य एकाद्याः संख्याः संख्येयगोचराः' इति—इति स्वोपज्ञनाममालाव्याख्यायां हेमाचार्यः ॥ इदं च प्रायिकम् । 'बहुषु बहुवचनम्' (१।४।२१) इति सूत्रभाष्ये 'किंसंबन्ध्येकत्वे, किंसंबन्धिद्वित्वे, किंसंबन्धिबहुत्वे' इत्यर्थे 'कस्यैकस्मिन्, कयोर्द्वयोः, केषां बहुषु' इति प्रयोगेण संख्यापरत्वस्यापि प्रतीतेः ॥ इदं त्वत्रावगन्तव्यम् । संख्यापरत्वेऽप्येषां स्वाश्रयद्रव्यगतसंख्याविशिष्टधर्ममात्रप्रतिपादकता । अत एवोक्तभाष्यप्रयोगे द्विवचनादिः—इति ॥ २—विंशत्याद्याः सर्वा एव संख्याः संख्येये संख्यायां च नित्यमेकवचनान्ता एव वर्तन्ते ॥ यद्भाष्यम्—'आदशभ्यः संख्या संख्येये वर्तते । ऊर्ध्वं संख्याने संख्येये च' इति ॥ विंशतिः पटाः । विंशतिः पटानाम् । शतं गावः । शतं गवाम्—इति क्षीरस्वामी ॥ विंशत्याद्यास्तु संख्याशब्दा एकत्वे वर्तमानाः संख्येये संख्याने च वर्तन्ते । यथा 'विंशतिर्घटाः, विंशतिर्घटानाम् । शतं गावः, शतं गवाम्' इति ॥ यदाह वाचस्पतिः—'ऊनविंशत्यादिकास्तु सर्वाः संख्येयसंख्ययोः' इति—इति हेमचन्द्रः ॥ ३—संख्यामात्रार्थे वर्तमानाया विंशत्यादेः संख्याया द्विवचनबहुवचने अपि स्त एकशेषेण । 'द्वे विंशती, तिस्रो विंशतयः । गवां विंशती, गवां विंशतयः' इति क्षीरस्वामी ॥ यदा तु भेदविवक्षायां संख्यान्तरस्यार्थेऽभिधेये विंशत्यादयो वर्तन्ते, तदा तत्सामाना-

**तासु चानवतेः स्त्रियः ।**

**नेति** ॥ तासु विंशत्यादिषु नवतिमभिव्याप्य स्त्रीलिङ्गाः । यथा 'विंशत्या पुरुषैः कृतम्, विंशतिः कुण्डानि' इति ॥

**पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम् ॥ ८४ ॥**

**पेति** ॥ डौ पचतौ । 'पङ्क्तिविंशति–' (५।१।५९) इति साधुः । 'पङ्क्तिर्दशाक्षरच्छन्दोदशासंख्यावलीषु च' इति विश्वः ॥*॥ पङ्क्तेर्दशगुणोत्तरं क्रमात् शतसहस्रादि ज्ञेयम् । यथा 'दश पङ्क्तयः शतम्, दश शतानि सहस्राण्ययुतम्' इत्यादि ॥

**यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् ।**

**याविति** ॥ यौतेर्बाहुलकाद्भावे कर्तरि वा तुन् योतुः शोधनम्, शोधकः वा । 'तस्येदम्' (४।३।१२०) ॥*॥ 'द्रौ विकारः' । 'माने वयः' (४।३।१६२) ॥ (२) ॥*॥ मीयतेऽनेन । 'माङ् माने' (दि० आ० अ०) । 'पाय्यसांनाय्य–' (३।१।१२९) इति साधु ॥ (३) ॥*॥ मानमर्थो यस्य ॥ (४) ॥*॥ चत्वारि **'मानार्थस्य'** ॥

**मानं तुलाङ्गुलिप्रस्थैः**

मानभेदानाह—**मानमिति** ॥ तोल्यतेऽनया । 'तुल उन्माने' (चु० प० से०) । भिदाद्यङ् (३।३।१०३) ।— 'अनुलोपमाभ्याम्–' (२।३।७२) इति निर्देशाद्गुणाभावः ॥

**गुञ्जाः पञ्चाद्यमाषकः ॥८५॥**

**ग्विति** ॥ मष्यतेऽनेन । 'मष हिंसायाम्' (भ्वा० प० से०) 'हलश्च' (३।३।१२१) इति घञ् । **'(माषो** व्रीह्यन्तरे मूर्खे मानत्वग्दोषभेदयोः' इति मेदिनी) । कन् (ज्ञापि० ५।४।५) । आद्यश्चासौ माषश्च । शास्त्रीयत्वात् ॥ (१) ॥*॥ एकम् **'माषकस्य'** ॥

**ते षोडशाक्षः कर्षोऽस्त्री**

**तयिति** ॥ अक्षति । 'अक्षू व्याप्तौ' (भ्वा० प० से०) । अच् (३।१।१३४) **'अक्षो** रथस्यावयवे व्यवहारे बिभीतके । सायके शकटे कर्षे ज्ञाने चात्मनि रावणौ । **अक्षं** सौवर्चले तुत्थे हृषीके स्यात्' इति हेमचन्द्रः ॥ (१) ॥*॥ कर्षति । 'कृष विलेखने' (भ्वा० प० अ०) । अच् (३।१।१३४) । 'कर्षो ना कर्षणे मानप्रभेदे पुंनपुंसकम्' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'कर्षस्य'** ॥

**पलं कर्षचतुष्टयम् ।**

**पेति** ॥ पलति 'पल गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) । **'पलमुन्मानमांसयोः'** इति हैमः ॥ (१) ॥*॥ कर्षाणां चतुष्टयम् ॥ (२) ॥*॥ द्वे **'पलस्य'** ॥

**सुवर्णविस्तौ हेम्नोऽक्षे**

**स्विति** ॥ शोभनो वर्णः स्तुतिः, वा यस्य । रुद्रस्तु **'सुवर्णं** स्वर्णविस्तयोः' इति क्लीबमाह । **'सुवर्णो** ना स्वर्णकर्षे **सुवर्णा** च मखान्तरे । स्त्री कृष्णागुरुणि क्लीबे काञ्चने हरिचन्दने' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ विस्यते स्म । 'विस उत्सर्गे' (दि० प० से०) । क्तः (३।२।१०२) । आगमस्यानित्यत्वान्नेट् ॥ (२) ॥*॥ द्वे **'अक्षमानस्य'** ॥

**कुरुविस्तस्तु तत्पले ॥ ८६ ॥**

**किति** ॥ कुरुषु विस्तः ॥ (१) ॥*॥ तस्य हेम्नः पले ॥*॥ एकम् **'अक्षपलस्य'** ॥

**तुला स्त्रियां पलशतम्**

**त्विति** ॥ तोलयन्ति । 'तुल उन्माने' चुरादिः । अच् (३।१।१३४) । '–अतुलोपमाभ्याम्–' (२।३।७२) इति निपातनाद्गुणाभावः । णिजभावे तु 'इगुपध–' (३।१।१३५) इति कः । **'तुला** सादृश्यमानयोः । गृहाणां दारुबन्धाय पीठिकायामपीष्यते । राशौ पलशते भाण्डे (**तुलं** स्याद्ब्रह्मदारुणि । आकाशे च पिचौ न स्त्री)' इति विश्वहैमचन्द्रौ (मेदिनी) ॥ (१) ॥*॥ पलानां शतम् ॥*॥ एकम् **'तुलायाः'** ॥

**भारः स्याद्विंशतिस्तुलाः ।**

**भेति** ॥ भ्रियते । 'भृञ् भरणे' (भ्वा० उ० अ०) । 'अकर्तरि च' (३।३।१९) इति घञ् । **'भारः** सहस्रद्वितये पलानामपि वीवधे' इत्यजयः । **'भारः** स्याद्वीवधे विष्णौ पलानां द्विसहस्रके' (इति मेदिनी) ॥*॥ (क्र्यादेर्दीर्घान्तात्) अपि (३।३।५७) भरः ॥ (१) ॥*॥ एकम् **'भारस्य'** ॥

---

विकरण्यादुपचारेण तेभ्यो द्विवचनबहुवचने अपि स्तो भवतः । यथा 'द्वे विंशती, तिस्रो विंशतयः' इति ॥ सामानाधिकरण्याभावेऽपि 'गवां विंशती, गवां विंशतयः' इति मुकुटः ॥ द्विवबहुत्वयोर्वैमानात्तु विंशत्याद्याः संख्यायामेव वर्तन्ते—इति हेमचन्द्रः । 'पङ्क्तिविंशति–' (५।१।५९) इति सूत्रे भाष्यप्रदीपोद्योते नागेशभट्टेन तु—विंशत्यादयो द्व्यादयश्च धर्मशक्ता एव । धर्मधर्मिणोरभेदाच्च व्यक्तौ कार्याणि । तयोश्च भेदाभेदौ । विंशत्यादयः कदाचिद्भेदेन संख्यां वदन्ति 'गवां विंशतिः' इति । कदाचिदभेदेन 'विंशतिर्गावः' इति ॥ यद्याप्यभेदेन, तदापि धर्मगतसंख्यावैशिष्ट्येनैव तत्रो द्रव्यप्रतीतिः शब्दशक्तिस्वभावात् । यथा 'गावो धनम्' इत्यादौ प्रीतिहेतुत्वगुणगतसंख्यावैशिष्ट्येनैव द्रव्यप्रतीतिर्धनशब्दात् ॥ द्व्यादिस्तु विशेषः । तत्र कदाचित्स्वगतसंख्यावैशिष्ट्येनापि प्रतीतिः ॥ अन्यगतसंख्यावैशिष्ट्यमन्यस्य कथम्, इति चेत् । आरोपेण, इति गृहाण ॥ द्व्यादयस्तु स्वगतवाच्यसंख्याविशिष्टद्रव्याभेदेन तद्गतसंख्याविशिष्टमेव धर्मं प्रतिपादयन्ति शब्दशक्तिस्वभावात्, इति न कदाचिदपि तत्रैकवचनम् ॥ नापि विंशत्यादिभ्यो बहुवचनम् ॥ विंशतिप्रचये तु बहुवचनमिष्टमेव ॥ 'द्व्येकयोः–' (१।४।२२) इत्यादौ तु विंशतिवदेव धर्मगतसंख्याविशिष्टद्रव्यस्यैव प्रतीतिः, इति द्विवचनम् । एवं प्रतीतिरीदृशव्युत्पत्तिविषयैव, इति नातिप्रसङ्गः–इति निष्कर्ष उक्तः ॥

**आचितो दश भाराः स्युः**

**आचीति** ॥ आचीयते स्म । 'चिञ् चयने' (स्वा० उ० अ०) । क्तः (३।२।१०२) । 'भारैर्दशभिराचितिः' इति रत्नकोषः । '**आचितः** शकटोन्मेये पलानामयुतद्वये' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ एकम् '**आचितस्य**' ॥

**शाकटो भार आचितः ॥८७॥**

**शेति** ॥ शकटेन उह्यते । 'शेषे' (४।२।९२) इत्यण् ॥ (१) ॥*॥ एकम् '**आचितभारस्य**' ॥

**कार्षापणः कार्षिकः स्यात्**

**केति** ॥ कर्षस्यायम् 'तस्येदम्' (४।३।१२०) इत्यण् । आपणनम् । 'पण व्यवहारादौ' (भ्वा० आ० से०) । 'नित्यं पणः–' (३।३।६६) इत्यप् 'खनो घ च' (३।३।१२५) इति घो वा । कार्षस्य कार्षेण वा आपणः । '**कार्षापणोऽस्त्री** कार्षिके पणषोडशकेऽपि च' (इति मेदिनी) ॥ (१) ॥*॥ कर्षस्यायम् । अध्यात्मादित्वात् (वा० ४।३।६०) ठञ् ॥ (२) ॥*॥ द्वे '**रजतरूप्यस्य**' ॥

**कार्षिके ताम्रिके पणः ।**

**केति** ॥ ताम्रस्यायम् । 'अध्यात्मादित्वात् (वा० ४।३।६०) ठञ् ॥*॥ पण्यतेऽनेन । 'पण व्यवहारादौ' (भ्वा० आ० से०) । 'नित्यं पणः–' (३।३।६६) इत्यप् । 'पुंसि–' (३।३।११८) इति घो वा । 'हलश्च' (३।३।१२१) घञ् वा । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । '**पणो** वराटमाने स्यान्मूल्ये कार्षापणे ग्रहे । क्रय्यशाकादिके द्यूते व्यवहारे भृतौ धने' (इति विश्वमेदिन्यौ) ॥ (१) ॥*॥ एकं '**ताम्रकृतकार्षापणस्य**' तुलामानमुक्तम् ॥

॥ अङ्गुलिमानं च हस्तादि नृवर्गे उक्तम् ॥

प्रस्थमानं त्वाह—

**अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चकः ॥८८॥**
**कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ।**

**अस्त्रीति** ॥ आढौकते । 'ढौकृ गतौ' (भ्वा० आ० से०) । अच् (३।१।१३४) । पृषोदरादिः (६।३।१०९) । '**आढकी** च तुवर्यां स्त्री परिमाणान्तरे त्रिषु' (इति मेदिनी) ॥ (१) ॥*॥ एकं (सर्वतो दशाङ्गुलिमानस्य) । द्रवति । 'द्रु गतौ' (भ्वा० प० से०) । 'कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्' (उ० ३।१०) इति नः । 'द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाकेऽस्त्री नीवृदन्तरे । स्त्रियां काष्ठाम्बुवाहिन्यां गवादिन्यामपीष्यते' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ खमाराति । मूलविभुजादिः (वा० ३।२।५) । गौरादिः (४।१।४१) ॥ (१) ॥*॥ उह्यतेऽनेन । 'वह प्रापणे' (भ्वा० उ० अ०) 'हलश्च' (३।३।१२१) इति घञ् । '**वाहोऽ**श्वमानयोः । वृषे, **वाहा** तु वाहौ स्यात्' इति हेमचन्द्रः ॥ (१) ॥*॥ निकुञ्चति । 'कुञ्च कौटिल्ये' (भ्वा० प० से०) । अच् (३।१।१३४) । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१) ॥*॥ कुण्ड्यते, कुण्डते, वा । 'कुडि दाहे' (भ्वा० आ० से०) । बाहुलकात् कवच्प्रत्ययः । अनित्यत्वान्न नुम् ॥*॥ '**कुटपः**' इत्यपि पाठः—इति मुकुटः । तत्र 'कुट कौटिल्ये' (तु० प० से०) । कुटेः कपन् (उ० ३।१४२) ॥ (१) ॥*॥ प्रस्थीयतेऽनेन । 'घञर्थे कः' (वा० ३।३।५८) । '**प्रस्थोऽ**स्त्रियां मानभेदे सानावत्युच्चवस्तुनि' (इति मेदिनी) ॥ (१) ॥*॥ आद्यर्थेन मानीभविकाप्रवर्तिकादिग्रहः । '**वाहो** विंशतिखारीभि**र्भविका** स्यादनेन तु । **प्रवर्तः** पञ्चखारीभिः सप्तमाने प्रकीर्तितः' । 'पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम् । चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम् । अष्टाढको भवेद्द्रोणो द्विद्रोणः सूर्प उच्यते । सार्धसूर्पो भवेत्खारी द्विद्रोणा गोण्युदाहृता । तामेव भारं जानीयाद्वाहो भारचतुष्टयम्' ॥*॥ '**परिमाणानाम्**' पृथगेकैकम् ॥

**पादस्तुरीयो भागः स्यात्**

**पेति** ॥ पद्यते । 'पद गतौ' (दि० आ० अ०) । 'पदरुज–' (३।३।१६) इति घञ् । '(**पदं** शब्दे च वाक्ये च व्यवसायप्रदेशयोः) । पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः । श्लोकपादेऽपि च क्लीबं पुंल्लिङ्गः किरणे पुनः । **पादो** बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे च' (इति मेदिनी) ॥ (१) ॥*॥ एकं '**चतुर्थभागस्य**' ॥

**अंशभागौ तु वण्टके ॥ ८९ ॥**

**अंशेति** ॥ अंश्यते 'अंश विभाजने' (   ) अदन्तः । कर्मणि घञ् (३।३।१९) ।—'अमेः शन्' इति त्वपाणिनीयः । '**अंशो** विभाजने प्रोक्त एकदेशेऽपि वस्तुनः' इति हेमचन्द्रः ॥ (१) ॥*॥ भज्यते । 'भज सेवायाम्' (भ्वा० उ० अ०) । कर्मणि घञ् (३।३।१९) । '**भागो** रूपार्धके भाग्यैकदेशयोः' इति हैमः ॥ (२) ॥*॥ वण्ट्यते । 'वटि विभाजने' (चु० प० से०) कर्मणि घञ् (३।३।१९) । स्वार्थे कन् ( ज्ञापि० ५।४।५) ॥ (३) ॥*॥ त्रीणि '**विभागस्य**' ॥

**द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ।**
**हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ॥ ९० ॥**

**द्रेति** ॥ द्रुरिव । 'द्रव्यं च भव्ये' (५।३।१०४) इति साधुः । '**द्रव्यं** भव्ये धने क्ष्मादौ जतुद्रुमविकारयोः । विनये भेषजे रीत्याम्' इति हैमः ॥ (१) ॥*॥ विद्यते स्म । 'विद्लृ लाभे' (तु० उ० अ०) । 'वित्तो भोगप्रत्यययोः' (८।२।५८) इति साधुः । '**वित्तं** क्लीबं धने वाच्यलिङ्गं ख्याते विचारिते' (इति मेदिनी) ॥ (२) ॥*॥ स्वपतौ साधु । 'पथ्यतिथि–'

१—पुनरित्यन्तस्यात्र लेखोऽनुचितः । पदशब्दार्थबोधकस्य पदशब्दव्याख्यायां स्वयं लिखितस्यात्र पादशब्दव्याख्यायामप्रकृतत्वात् ॥

(४।४।१०४) इति ढञ्॥ (३) ॥*॥ रिच्यते। 'रिचिर् विरेचने' (रु० उ० अ०)। 'पातृतुदिवचिरिरिचि–' (उ० ३।७) इति थक्।—'वमिकाशि–' इत्यादिना थन्—इति मुकुटस्त्वपाणिनीयः॥ (४) ॥*॥ ऋच्यते। 'ऋच् शब्दे' (तु० प० से०)। बाहुलकात् क्थन्॥ (५) ॥*॥ धनति। 'धन धान्ये' (जु० प० से०)। अच् (३।१।१३४)। '**धनं** तु गोधने वित्ते' इति विश्वः (मेदिनी) ॥ (६) ॥*॥ वसति, उष्यते, वाऽस्मिन् गुणैः। 'वस निवासे' (भ्वा० प० अ०)। 'शृस्वृस्निहि–' (उ० १।१०) इत्युः।—'पद्यसिवसि–' इत्यादिना उः—इति मुकुटस्त्वपाणिनीयः। वस्ते, वस्यते वा। 'वस आच्छादने' (अ० आ० से०) उः। '**वसुर्मयूखाग्निजनाधिपेषु** योक्त्रे सुरे स्याद्वसु हाटके च। वृद्ध्यौषधस्थानधनेषु रत्ने वसु स्मृतं स्यान्मधुरेऽन्यवच्च' इति विश्वप्रकाशः॥ (७) ॥*॥ हर्यति। 'हर्य गतिकान्त्योः' (भ्वा० प० से०)। 'हर्यतेः' 'कन्यन् हिर् च' (उ० ५।४४)।—जिहीते भाग्यवन्तम्। 'ओहाङ् गतौ' (जु० आ० अ०)। 'हो हिर् च' इत्यन्यप्रत्ययो हिरादेशश्च—इति मुकुटस्त्वपाणिनीयः। '**हिरण्यं** चे(रे)तसि द्रव्ये शातकुम्भवराटयोः। अक्षये मानभेदे च स्यादकुप्ये नपुंसकम्' (इति मेदिनी)॥ (८) ॥*॥ द्रवति, द्रूयते वा। 'द्रु गतौ' (भ्वा० प० अ०)। 'द्रुदक्षिभ्यामिनन्' (उ० २।५०) '**द्रविणं** न द्वयोर्वित्ते काञ्चने च पराक्रमे' इति विश्वः (मेदिनी)॥ (९) ॥*॥ दिवं मनति। 'म्ना अभ्यासे' (भ्वा० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः। '**द्युम्नं** वित्ते बलेऽपि च' इति हेमचन्द्रः (मेदिनी) ॥ (१०) ॥*॥ अर्थ्यते। 'अर्थ उपयाच्ञायाम्' (चु० आ० से०)। 'अकर्तरि–' (३।३।१९) इति घञ्। ऋच्छति, अर्यते वा। 'ऋ गतौ' (भ्वा० प० अ०)। 'उषिकुषिगार्तिभ्यस्थन्' (उ० २।४)। '**अर्थो** विषयार्थनयोर्धनकारणवस्तुषु। अभिधेये च शब्दानां निवृत्तौ च प्रयोजने' (इति मेदिनी)॥ (११) ॥*॥ राति सुखम्, रायते वा। 'रा आदाने' (अ० प० अ०)। 'रातेर्डैः' (उ० २।६६)। '**रा** द्वयोर्विभवे स्वर्णे' इति रुद्रः॥ (१२) ॥*॥ विभवति। अच् (३।१।१३४)। '**विभवो** धननिर्वृत्योः' इति हैमः॥ (१३) ॥*॥ त्रयोदश '**द्रव्यस्य**'॥

**स्यात्कोषश्च हिरण्यं च हेमरूप्ये कृताकृते।**

**स्येति**॥ कुष्यते। 'कुष निष्कर्षे' (क्र्या० प० से०)। 'अकर्तरि–' (३।३।१९) इति घञ्॥*॥ कुश्यते। 'कुश संश्लेषणे' (   ) 'तालव्या मूर्धन्याश्चैते' इत्यधिकारे '**कोशविशदौ** च' इति शभेदः॥ (१) ॥*॥ (२) ॥*॥ हेम च रूप्यं च। कृतं चाकृतं च। घटिताघटिते॥*॥ द्वे '**घटिताघटितहेमरूप्ययोः**'॥

**ताभ्यां यदन्यत्तत्कुप्यम्**

**तेति**॥ गुप्यते। 'गुपू रक्षणे' (भ्वा० प० से०) 'राजसूय०' (३।१।११४) इति साधु॥ (१) ॥*॥ एकम् (**हेमरूप्याभ्यामन्यस्य**) '**ताम्रादेर्धातोः**'॥

**रूप्यं तद्द्वयमाहतम्॥ ९१॥**

**रूप्यमिति**॥ '**आहतं** तु मृषार्थके। गुणिते ताडिते चापि' इति हैमः। आहतं रूपमस्य। 'रूपादाहतप्रशंसयोर्यप्' (५।२।१२०)॥ (१) ॥*॥ एकम् '**आहतरूपस्य हेमरौप्यादेः**'॥

**गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः।**

**गेति**॥ गरुत्मतो जातत्वात् 'तस्येदम्' (४।३।१२०) इत्यण्॥ (१) ॥*॥ मरकं तरन्त्यनेन। 'तॄ' (भ्वा० प० से०)। 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः॥ (२) ॥*॥ अश्मनो गर्भः॥ (३) ॥*॥ हरिद्वर्णो मणिः। शाकपार्थिवादिः (वा० २।१।७८) ॥ (४) ॥*॥ चत्वारि '**गारुत्मतस्य**'॥

**शोणरत्नं लोहितकः पद्मरागः**

**शोणेति**॥ शोणं च तद्रत्नं च॥ (१) ॥*॥ लोहितमेव। 'लोहितान्मणौ' (५।४।३०) इति कन्॥ (२) ॥*॥ पद्ममिव रागोऽस्य। 'अनेकमन्य–' (२।२।२४) इति समासः॥ (३) ॥*॥ त्रीणि '**पद्मरागस्य**'॥

**अथ मौक्तिकम्॥ ९२॥**

**मुक्ता**

**अथेति**॥ मुक्तैव। 'विनयादिभ्यष्ठक्' (५।४।३४)॥ (१) ॥*॥ मुच्यते स्म। 'मुच्लृ मोक्षणे' (तु० उ० अ०)। क्तः (३।२।१०२)। '**मुक्ता** मौक्तिकपुंश्चल्योः' इति हैमः॥ (२) ॥*॥ द्वे '**मौक्तिकस्य**'॥

**अथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम्।**

**अथेति**॥ विशिष्टो द्रुमः। यद्वा विशिष्टे द्रौ भवः। 'द्युद्रुभ्यां मः' (५।२।१०८)। ('**विद्रुमो** रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम्' इति मेदिनी)॥ (१) ॥*॥ प्रबलति। 'बल प्राणने' (भ्वा० प० से०)। 'ज्वलिति–'(३।१।१४०) इति णः। '**प्रवालोऽस्त्री** किसलये वीणादण्डे च विद्रुमे' इति विश्वः (मेदिनी)॥ (२) ॥*॥ द्वे '**प्रवालस्य**'॥

**रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च॥ ९३॥**

**रेति**॥ रमन्तेऽस्मिन्। 'रमु क्रीडायाम्' (भ्वा० आ० अ०)। बाहुलकात् क्नप्। तुक् (६।१।७१)। '**रत्नं** स्वजातिश्रेष्ठे स्यान्मणौ' इति हैमः॥ (१) ॥*॥ मण्यते 'मण शब्दे' (भ्वा० प० से०)। इन् (उ० ४।११८)। '**मणिः**

१—तद्वयं कुप्याकुप्यम्—इति क्षीरस्वामी।—तयोर्हेमरूप्ययोर्द्वयम्—इति मुकुटः॥

स्त्रीपुंसयोरश्मजातौ मुक्तादिकेऽपि च)। (कण्ठदेशस्तनेऽजाया लिङ्गाग्रेऽलिञ्जरेऽपि च)' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ अश्मजातौ मरकतादौ ॥*॥ द्वे **'रत्नस्य'** ॥

**स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् ।**
**तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ॥ ९४ ॥**
**चामीकरं जातरूपं महारजतकाञ्चने ।**
**रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ॥ ९५ ॥**

**स्वेति** ॥ सुष्ठु ऋणोति । 'ऋणु गतौ' ( त० उ० से० ) । पचाद्यच् (३।१।१३४) यद्वा अर्णनम् । घञ् (३।३।१८) । शोभनोऽर्णो गतिरनेन ॥ (१) ॥*॥ शोभनो वर्णोऽस्य । सुष्ठु वर्ण्यते वा । 'वर्ण वर्णने' ( चु० प० से० ) ण्यन्तः । 'एरच्' (३।३।५६) ॥ (२) ॥*॥ कनति । 'कनी दीप्तौ' ( भ्वा० प० से० )। 'कृञादिभ्यो वुन्' (उ० ५।३५) । **'कनकं** हेम्नि पुंसि स्यात्किंशुके नागकेसरे । धत्तूरे काञ्चनारे च कालीये चम्पकेऽपि च' (इति मेदिनी) ॥ (३) ॥*॥ हिनोति, हीयते वा । 'हि गत्यादौ' ( स्वा० प० अ० ) । मनिन् (उ० ४। १४५) ॥ (५) ॥*॥ हटति । 'हट दीप्तौ' (भ्वा० प० से०) । ण्वुल् (३।१।१३३) । हाटयति वा । क्वुन् (उ० २।३२) ॥ (६) ॥ तप्यतेऽनेन । 'तप संतापे' ( भ्वा० प० अ० ) । 'कृत्यल्युटः' (३।३।११३) इत्यनीयर् ॥ (७) ॥*॥ शतकुम्भे पर्वते भवम् । 'तत्र भवः' (४।३।५३) इत्यण् ॥*॥ अनुशतिकादिः (७।३।२०) । (**'शातकौम्भम्'**) इति तु स्वामी ॥ (८) ॥*॥ गङ्गाया अपत्यम् । शुभ्रादित्वात् । (४।१।१२३) ढक् । 'यं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम् । तदुल्बं पर्वते न्यस्तं हिरण्यं समपद्यत' इति वायुपुराणम् । **'गाङ्गेयः** स्यात्पुमान्भीष्मे क्लीबं स्वर्णकसेरुणोः' (इति मेदिनी) ॥ (९) ॥*॥ बिभर्ति, भरति वा । मनिन् (उ० ४।१४५) (**'भर्म** स्यात्काञ्चने भृतौ' इति मेदिनी) ॥ (१०) ॥*॥ कर्वत्यनेन । 'कर्व दर्पे' ( भ्वा० प० से० ) । मद्गुरादिः (उ० १।४१) । **'कर्बुरं** सलिले हेम्नि **कर्बुरः** पापरक्षसोः । **कर्बुरा** कृष्णवृन्तायां शबले पुनरन्यवत्' इति विश्वः (मेदिनी) ॥ (११) ॥*॥ चमीकरे आकरे भवम् । 'तत्र भवः' (४। ३।५३) इत्यण् । यद्वा चमनम् । 'चमु अदने' ( भ्वा० प० से० ) । 'इगुपधज्ञा..' — 'इज्जादिभ्यः' (वा० ३।३।१०८) । 'अनाचमेः' (७।३।३४) इति आञोऽविवक्षितत्वाद्वृद्धिः । 'कृदिकारात्—' (ग० ४।१।४५) इति ङीष् । चामीं करोति । 'कृञो हेतु—' (३।२।२०) इति टः ॥ (१२) ॥*॥ जातं रूपं यस्य । यद्वा प्रशस्तं जातम् । 'प्रसंसायां रूपप्' (५।३।६६) ॥ (१३) ॥ ॥*॥ महच्च तद्रजतं च । 'सन्महत्—' (२।१।६१) इति समासः । 'आन्महतः' (६।३।४६) इत्यात्वम् ॥ (१४) ॥*॥ काञ्चति(ते) । 'काचि दीप्तौ' ( भ्वा आ० से० ) । नन्द्यादिल्युः (३।१।१३४)—पृषोदरादिः (६।३।१०९)—इति मुकुटस्तु चिन्त्यः । 'काचि' धातोरेव सत्त्वात् ॥ (१५) ॥*॥ रोचते । 'रुच दीप्तौ' ( भ्वा० आ० से० ) । 'युजिरुजितिजां कुश्च' (उ० १।१४६) इति मक् । **'रुक्मं** लोहे सुवर्णे च' इति हेमचन्द्रः ॥ (१६) ॥*॥ कृतस्वरे आकरविशेषे भवम् । अण् (४।३।५३) । कृताः पठिताः स्वरा येन । तस्मै देयम् । 'शेषे' (४।२।९२) इत्यण् ॥ (१७) ॥*॥ जम्बूरसस्य नद्यां भवम् । 'तत्र भवः' (४।३।५३) इत्यण् ॥ (१८) ॥*॥ अष्टौ धातवः पदानि स्थानान्यस्य । 'अष्टनः संज्ञायाम्—' (६।३। १२५) इति दीर्घः । यद्वा अष्टानामपदम् ॥ (१९) ॥*॥ एकोनविंशतिः **'सुवर्णस्य'** ॥

**अलंकारसुवर्णं यच्छृङ्गीकनकमित्यदः ।**

**अलमिति** ॥ अलंकारसंबन्धि सुवर्णम् ॥*॥ शृङ्गिणामी । शृङ्गी । कनति । 'कनी दीप्तौ' ( भ्वा० प० से० ) क्वुन् (उ० २।३२) । 'शृङ्गी' इति पृथग् नाम वा । 'स्त्री **शृङ्गी मण्डनसुवर्णम्'** इति रत्नकोषः । 'भूषणं कनकं शृङ्गी' इति नाममाला च । अल्पं शृङ्गं प्राधान्यं वा यस्याः । गौरादिः (४। १।४१) । 'स्त्री स्यात्काचिन्मृणाल्यादि' इति वचनात् ॥ (१) ॥*॥ एकम् **'अलंकारस्वर्णस्य'** ॥

**दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ॥ ९६ ॥**

**द्विति** ॥ सुवर्णापेक्षया दुष्टो वर्णोऽस्य, अनेन वा । **'दुर्वर्णं** त्रिष्वसद्वर्णे क्लीबमैलेयरूप्ययोः' (इति मेदिनी) ॥ (१) ॥*॥ रजति, रज्यते वा । 'रञ्ज रागे' ( भ्वा० उ० अ० ) 'पृषिरञ्जिभ्यां कित्' (उ० ३।१११) इत्यतच् । **'रजतं** त्रिषु शुक्ले स्यात् क्लीबं हारे च दुर्वर्णे' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ 'रूप रूपक्रियायाम्' ( चु० उ० से० ) । ण्यन्तः । 'अचो यत्' (३।१।९७) । **'रूप्यः** स्यात्सुन्दरे त्रिषु । आहतस्वर्णरजते रजते च नपुंसकम्' इति विश्व(मेदिनी)हेमचन्द्रौ ॥ (३) ॥*॥ खर्जति । 'खर्ज व्यथने' ( भ्वा० प० से० ) । 'खर्जिपिञ्जादिभ्य ऊरोलचौ' (उ० ४।१४०) इत्यूरः । **'खर्जूरं** रूप्यफलयोः **खर्जूरः** कीटवृक्षयोः' (इति हैमः) ॥ (४) ॥*॥ श्वेतते । 'श्विता वर्णे' (भ्वा० आ० से०) । अच् (३।१।१३४) । **'श्वेतो** द्वीपाद्रिभेदयोः । **श्वेता** वराटिकाकाष्ठपाटलाशङ्खिनीषु च । क्लीबं रूप्येऽन्यवच्छुक्ले' (इति मेदिनी) ॥ (२) ॥*॥ पञ्च **'रूप्यस्य'** ॥

**रीतिः स्त्रियामारकूटो न स्त्रियाम्**

**रीति** ॥ रीयते । 'रीङ् क्षरणे' ( दि० आ० अ० ) । रिणाति वा । 'री गतिरेषणयोः' ( क्र्या० प० अ० ) । 'स्त्रियां क्तिन्' (३।३।९४) । **'रीतिः** स्त्रियां स्यन्दप्रचारयोः । पित्तले लोहकिट्टे च' (इति मेदिनी) ॥ (१) ॥*॥ 'ऋ गतौ'

१—शृङ्गिर्हलान्ता च । तथा च बाणः—'वर्षपर्वतसमूहनिवान्तःस्थितापरिमाणशृङ्गिहेमकूटं राजकुलम्' इति—मुकुटः ॥

( भ्वा० प० अ० ) । भावे घञ् (३।३।१८) आरं कूटयते ॥ 'कूट दाहे' ( चु० उ० से० ) । अच् (३।१।१३४) । '**आरकूटो**ऽस्त्रियां द्रव्यं रीतिस्तु रीतिकोमलम्' इति रभसः ॥ (२) ॥*॥ द्वे '**पित्तलस्य**' ॥

अथ ताम्रकम् ।

**शुल्बं म्लेच्छमुखं द्व्यष्टवरिष्ठोदुम्बराणि च ॥ ९७ ॥**

**अथेति** ॥ ताम्यति, तम्यते, वा । 'तमु काङ्क्षायाम्' ( दि० प० से० ) । 'अमितम्योर्दीर्घश्च' (उ० २।१६) इति रक् । स्वार्थे कन् (ज्ञापि० ५।४।५) ।–'तम्यमिचमां दीर्घश्च' इति रक्—इति मुकुटस्त्वपाणिनीयः ॥ (१) ॥*॥ शलति । 'शल गतौ' ( भ्वा० प० से० ) । 'उल्वादयश्च' (उ० ४।९५) इति, साधु । यद्वा शुल्वयति, शुल्व्यते, वा । 'शुल्व माने' ( चु० प० से० ) । अच् (३।१।१३४) घञ् (३।३।१९) 'एरच् (३।३।५६) वा । '**शुल्बं** ताम्रे यज्ञकर्मण्याचारे जलसंनिधौ' इति हेमचन्द्रः ॥ (२) ॥*॥ म्लेच्छदेशे मुखमुत्पत्तिरस्य । म्लेच्छस्य मुखमिव, इति वा ॥ (३) ॥*॥ द्वे हेमरूप्ये अश्नुते स्म । 'अशू व्याप्तौ' ( स्वा० आ० से० ) । 'गत्यर्था–' (३।४।७२) इति क्तः ॥ (४) ॥*॥ अतिशयेन वरम्, उरु, वा अतिशायने इष्ठन् । (५।३।५५) । 'प्रियस्थिर–' (६।४।१५७) इत्युरोर्वर् । '**वरिष्ठं** ताम्रके क्लीबम्' इति टवर्गद्वितीयान्ते रुद्रः । '**वरिष्ठं** मरिचेऽपि च । ताम्रे क्लीबं तित्तिरौ ना वरोरुतमयोस्त्रिषु' इति विश्वः (मेदिनी) ॥ (५) ॥*॥ उं शंभुं वृणोति । 'वृञ् वरणे' ( स्वा० उ० से० ) । 'संज्ञायां भृतॄवृजि–' (३।२।४६) इति खच् । 'अरुर्द्विषत्–' (६।३।६७) इति मुम् । उत्कृष्टंमुंवरम् । प्रादिसमासः (वा० २।२।१८) । '**उदुम्बर**स्तु देहल्यां वृक्षभेदे च पण्डके । कुष्ठभेदेऽपि च पुमांस्ताम्रे तु स्यान्नपुंसकम्' (इति मेदिनी) ॥*॥ प्रज्ञाद्यणि (५।४।३८) तु । '**औदुम्बरं** भवेत्ताम्रे फलादौ यज्ञशाखिनः' इत्यजयः ॥ (६) ॥*॥ षट् '**ताम्रस्य**' ॥

**लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी । अश्मसारः**

**लोह इति** ॥ लोहति, लुह्यते, वा । 'लुह गार्ध्ये' (   ) । अच् (३।१।१३४) । घञ् (३।३।१९) वा । लूयतेऽनेन वा । 'लूञ् छेदने' ( क्र्या० उ० से० ) । बाहुलकाद् हः । रुह्यते, रोहति वा 'रुह प्रादुर्भावे' ( भ्वा० प० अ० ) । घञ् (३।३।१९) । अच् (३।१।१३४) वा । कपिलिकादित्वात् (वा० ८।२।१८) लत्वम् । '**लोहो**ऽस्त्री शस्त्रके **लोहं** जोङ्गके सर्वतैजसे' (इति मेदिनी) ॥*॥ प्रज्ञाद्यणि '**लौहम्**' ॥ (१) ॥*॥ शस्यतेऽनेन । 'शसु हिंसायाम्' ( भ्वा० प० से० ) । 'दाम्नीशस्–' (३।२।१८२) इति ष्ट्रन् । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ तेजयति, तेज्यते वा, अनेन वा । 'तिज निशाने' (चु० प० से०) । 'तिजेर्दीर्घश्च' (उ० ३।१८) इति क्स्नः । '**तीक्ष्णं** सामुद्रलवणे विषलोहाजिमुष्कके । क्लीबं, यवाग्रके पुंसि तिग्मात्मत्यागिनोस्त्रिषु' (इति मेदिनी) ॥ (३) ॥*॥ पिण्डते, पिण्ड्यते वा । 'पिडि संघाते' ( भ्वा० आ० से० ) । अच् (३।१।१३४) । घञ् (३।३।१९) वा । '**पिण्डो** बोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिह्लकयोरपि । ओण्ड्रपुष्पे च पुंसि स्यात् क्लीबमाजीवनायसोः । पिण्डी तु पिण्डतगरेऽलाबूखर्जूरभेदयोः' (इति मेदिनी) ॥ (४) ॥*॥ कालं च तदयश्च । 'अनोश्मायःसरसाम्–' (५।४।९४) इति टच् ॥ (५) ॥*॥ एति, अयते वा । असुन् (उ० ४।१८९) ॥ (६) ॥*॥ अश्मनः सारः । 'अश्मसारं च शस्त्रकम्' इत्यमरमाला ॥ (७) ॥*॥ सप्त '**लोहस्य**' ॥

**अथ मण्डूरं शिङ्घाणमपि तन्मले ॥ ९८ ॥**

**अथेति** ॥ मण्डते(ति) । 'मडि भूषायाम्' ( भ्वा० प० से० ) । खर्जादित्वात् (उ० ४।९०) ऊरच् ॥ (१) ॥*॥ शिङ्घ्यते । 'शिघि आघ्राणे' ( भ्वा० प० से० ) । 'आणको लूधूशिङ्घिधाञ्भ्यः' (उ० ३।८३) । पृषोदरादिः (६।३।१०९) । सिंहमाणयति वा । कर्मण्यण् ('**शिङ्घाणं** काचपात्रे च लोहनासिकयोर्मले' इति मेदिनी) ॥*॥ '**सिंहानम्**' इति पाठे सिंहवदनिति । 'अन प्राणने' ( अ० प० से० ) । अच् (३।१।१३४) । सिंहमानयति वा । 'कर्मण्यण्' (३।२।१) ॥ (२) ॥*॥ तस्य लोहस्य मले ॥*॥ द्वे '**लोहकिट्टस्य**' ॥

**सर्वं स्यात्तैजसं लोहम्**

**सेति** ॥ तेजसो विकारः । 'तस्य विकारः' (४।३।१३४) इत्यण् । यद्वा तेजोऽस्त्यस्य । ज्योत्स्नाद्यण् (वा० ५।२।१०३) ॥*॥ एकं '**सर्वधातूनाम्**' ॥

**विकारस्त्वयसः कुशी ।**

**वीति** ॥ कुं भूमिं श्यति । 'शो तनूकरणे' ( दि० प० अ० ) । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । 'जानपद—' (४।१।४२) इति ङीष् । '**कुशी** फालेऽपि वल्गायां (**कुशा**, पापिष्ठमत्तयोः । **कुशो** वाच्यवदाख्यातः)' इति विश्वः । '**कुशो** रामसुते दर्भे पापिष्ठे योक्रमत्तयोः । **कुशी** लोहविकारे स्यात्**कुशा** वल्गा **कुशं** जले' (इति हैमः) ॥ (१) ॥*॥ एकम् '**अयोविकारस्य**' ॥

**क्षारः काचः**

**क्षेति** ॥ क्षरति । 'क्षर संचलने' ( भ्वा० प० से० ) । 'ज्वलिति–' (३।१।१४०) इति णः । '**क्षारः** काचे रसे गुडे । भस्मनि धूर्ते लवणे' इति हेमचन्द्रः ॥ (१) ॥*॥ कचते । 'कच बन्धने दीप्तौ च' ( भ्वा० आ० से० ) । अच् (३।१।१३४) । प्रज्ञाद्यण् (५।४।३८) काचयति वा । अच् (३।१।१३४) । '**काचः** शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ द्वे '**काचस्य**' ॥

**अथ चपलो रसः सूतश्च पारदे ॥ ९९ ॥**

**अथेति** ॥ चोपति । 'चुप मन्दायां गतौ' (भ्वा० प० से०)। 'चुपेरच्चोपधायाः' (उ० १।१११) इति कलः । यद्वा चपनम् । 'चप शक्तौ' (      )। ण्यन्तः । 'एरच्' (३।३।५६) । चपं लाति । 'ला आदाने' (अ० प० अ०) । कः (३।२।३) । '**चपल**श्चोरके चले । क्षणिके चिकुरे शीघ्रे पारदे प्रस्तरान्तरे । मीने च **चपला** तु स्यात् पिप्पल्यां विद्युति श्रियाम् । पुंश्चल्यामपि' इति हेमचन्द्रः ॥ (१) ॥*॥ रस्यते । 'रस आस्वादने' चुराद्यदन्तः । 'एरच्' (३।३।५६) । रसयति धातून् वा । अच् (३।१।१३४) । '**रसः** स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे । बोले रागे गृहे धातौ तिक्तादौ पारदेऽपि च । **रसा** तु रसनापाठासल्लकीक्षितिकङ्गुषु' (इति हैमः) ॥ (२) ॥*॥ शिवेन सूयते स्म । 'षू प्रसवे' (दि० आ० से०) । क्तः (३।२।१०२) । '**सूत**स्तु सारथौ तक्षिण क्षत्रियाद्ब्राह्मणीसुते । वन्दिपारदयोः पुंसि प्रसूते प्रेरिते त्रिषु' इति विश्वः (मेदिनी) ॥ (३) ॥*॥ पारं ददाति । 'डुदाञ् दाने' (जु० उ० अ०) । 'आतोऽनुप—' (३।२।३) इति कः ॥*॥ 'पारते' इति पाठे पारं तनोति । 'तनु विस्तारे' (त० उ० से०) । 'अन्येभ्योऽपि—' (वा० ३।२।१०१) इति डः । '**रसेन्द्रः** पारदः प्रोक्तः **पारतो**ऽपि निगद्यते' इति तारपालः । 'पारतस्तु मनाक्पाण्डुः सूतस्तु रहितो मलात् । पारदस्तु मनाक् शीतः सर्वे तुल्यगुणाः स्मृताः' इति शब्दार्णवः ॥ (४) ॥*॥ चत्वारि '**पारदस्य**' ॥

**गवलं माहिषं शृङ्गम्**

**गेति** ॥ अलति । 'अल भूषणादौ' (भ्वा० प० से०) । अच् (३।१।१३४) । गवामलम् । यद्वा गवनम् । 'गुङ् शब्दे' (भ्वा० आ० अ०) । 'ऋदोरप्' (३।३।५७) गवं लाति । कः (३।२।३) ॥ (१) ॥*॥ एकं '**महिषशृङ्गस्य**' ॥

**अभ्रकं गिरिजामले ।**

**अभ्रेति** ॥ अभ्रति, अभ्र्यते वा । 'अभ्र गतौ' (भ्वा० प० से०) । क्वुन् (उ० २।३२) । अभ्रस्य प्रतिकृतिर्वा । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् ॥ (१) ॥*॥ गिरौ जातम् । 'जनी प्रादुर्भावे' (दि० आ० से०) । 'सप्तम्यां जनेर्डः' (३।२।९७) । ('**गिरिजं** त्वभ्रकेऽपि स्याच्छिलाजतुनि शैलजे । लोहेऽपि **गिरिजा** गौरीमातुलुङ्ग्योश्च योषिति' इति मेदिनी) ॥ (२) ॥*॥ अमति । 'अम गतौ' (भ्वा० प० से०) । वृषादित्वात् (उ० १।१०६) कलच् । न मलमस्य, इति वा । ('**अमलं** त्वभ्रके क्लीबं लक्ष्म्यां स्त्री निर्मले त्रिषु' इति मेदिनी) । '**गिरिजं निरिजाबीजममलं** गवलध्वजम्' इति वाचस्पतिः ॥ (३) ॥*॥ त्रीणि '**अभ्रकस्य**' ॥

**स्रोतोञ्जनं तु सौवीरं कापोताञ्जनयामुने ॥ १०० ॥**

**स्रवीति** ॥ अज्यते नयनमनेन । 'अञ्जू व्यक्त्यादौ' (रु० प० से०) । करणे ल्युट् (३।३।११७) । स्रोतोजमञ्जनम् । शाकपार्थिवादिः (वा० २।१।७८) ॥ (१) ॥*॥ सुवीरे देशे भवम् । तत्र 'भवः' (४।३।५३) इत्यण् । '**सौवीरं** काञ्जिके स्रोतोञ्जने च बदरीफले । ना तु नीवृति' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ कपोतस्येदम् । कपोतवर्णत्वात् । 'तस्येदम्' (४।३।१२०) इत्यण् । कापोतं च तदञ्जनं च ॥ (३) ॥*॥ यमुनायां भवम् । अण् (४।३।५३) । यद्वा यमुनाया इदम् । तद्वच्छ्यामलत्वात् ॥ (४) ॥*॥ चत्वारि '**सौवीराञ्जनस्य**' '**सुर्मा**' इति ख्यातस्य ॥

**तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके ।**

**त्विति** ॥ तुत्थयति, तुत्थ्यते, वा । 'तुत्थ आवरणे' (      ) । पचाद्यच् (३।१।१३४) । 'एरच्' (३।३।५६) वा । तुत्थं च तदञ्जनं च ॥ (१) ॥*॥ शिखिनो ग्रीवा । शिखिग्रीवास्यास्ति । अर्शआद्यच् (५।२।१२७) तद्वद्वर्णत्वात् ॥ (२) ॥*॥ वितुद्यते स्म । 'तुद व्यथने' (तु० उ० अ०) । क्तः (३।२।१०२) । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (३) ॥*॥ मयूरस्य प्रतिकृतिः । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । मयूरं कायति वा । सादृश्यात् । 'कै शब्दे' (भ्वा० प० अ०) । कः (३।२।३) ॥ (४) ॥*॥ चत्वारि '**तुत्थाञ्जनस्य**', '**तूतिया**' इति ख्यातस्य ॥

**कर्परी दार्विका क्वाथोद्भवं तुत्थम्**

**केति** ॥ कल्पते । 'कृपू सामर्थ्ये' (भ्वा० आ० से०) । बाहुलकादरट् लत्वाभावश्च ॥ (१) ॥*॥ दार्वी दारुहरिद्रा । तद्विकारोऽपि दार्वी अभेदोपचारात् । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ तत्तुत्थं क्वाथोद्भवमावर्तितं सदुक्तपर्यायम् ॥*॥ तुत्थं चास्य नाम । '**तुत्थं स्यादमृतासङ्गं** कर्परी **तुन्न**मित्यपि' इति रभसः ॥ (३) ॥*॥ त्रीणि '**आवर्तननिष्पन्नस्य रसाञ्जनभेदस्य**' ॥

**रसाञ्जनम् ॥ १०१ ॥**

**रसगर्भं तार्क्ष्यशैलम्**

**रेति** ॥ रसजमञ्जनम् । शाकपार्थिवादिः (वा० २।१।७८) ॥ (२) ॥*॥ रसो गर्भेऽस्य ॥ (२) ॥*॥ तार्क्ष्यशैले भवम् । अभेदोपचारात्, इति मुकुटः ॥ (३) ॥*॥ त्रीणि '**रसाञ्जनस्य**' । स्वामी तु—तुत्थाञ्जनादि पञ्च पर्यायानुक्त्वा दार्विकाक्वाथोद्भवादिपञ्चकं रसवतीपर्यायानाह ॥

---

१—रसः प्रायेण महिषशृङ्गे स्थाप्यतेऽतो रसानन्तरमस्य कथनम्—इति मुकुटः ॥ २—'गिरिजामलम्—' इत्येकं नाम—इति स्वामिमुकुटौ ॥

१—स्वामी तु तुत्थाञ्जनादिपञ्चकं कर्परीपर्यन्तं तुत्थाञ्जनपर्यायमुक्त्वा दार्विकाक्वाथोद्भवे तुत्थरसाञ्जनादित्रयमाह—इति मुकुटः ॥

**गन्धाश्मनि तु गन्धकः।**
**सौगन्धिकश्च**

**गेति** ॥ गन्धयुक्तोऽश्मा। शाकपार्थिवादिः (वा० २।१।७८) ॥ (१) ॥*॥ गन्धोऽस्यास्ति। अर्शआद्यच् (५।२।१२७)। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥*॥ **'गन्धिकः'** इति पाठे 'अत इनिठनौ' (५।२।११५) इति ठन् ॥ (२) ॥*॥ शोभनो गन्धोऽस्य। विनयादित्वात् (५।४।३४) स्वार्थे ठक् ॥*॥ 'आमोदलेशयोर्गन्धः स **सुगन्धः सुगन्धकः'** इति रभसः॥ (३) ॥*॥ त्रीणि **'रसाञ्जनस्य'** ॥

**चक्षुष्याकुलाल्यौ तु कुलत्थिका ॥ १०२ ॥**

**चेति** ॥ चक्षुषे हिता। 'शरीरावयवाद्यत्' (५।१।६)। **'चक्षुष्यः** केतके पुण्डरीकसंज्ञकपादपे। कुलत्थिकासुभगयोः स्त्रियामक्षिहितेऽन्यवत्' (इति मेदिनी) ॥ (१) ॥*॥ कुलमलति। 'अल भूषणादौ' (भ्वा० प० से०)।—'कर्मण्यण्' (३।२।१)। ङीप् (४।१।१५)। 'चक्षुष्या **कुम्भकारी** च कुलाली च कुलत्थिका' इति रत्नकोषः॥ (२) ॥*॥ कुलत्थप्रतिकृतिः। 'इवे-' (५।३।९६) इति कन्। यद्वा कुले तिष्ठति। 'सुपि-' (३।२।४) इति कः। स्वार्थे कन् (ज्ञापि० ५।४।५) पृषोदरादिः (६।३।१०९) ॥ (३) ॥*॥ त्रीणि **'तुत्थविशेषस्य'** ॥

**रीतिपुष्पं पुष्पकेतु पौष्पकं कुसुमाञ्जनम्।**

**रीति** ॥ रीतेः पित्तलस्य पुष्पमिव। तन्मलत्वात् ॥ (१) ॥*॥ पुष्पस्य केतुरिव। नाशकत्वात्। 'उदन्तनपुंसकेषु पुष्पकेतु कुसुमाञ्जनम्' इति रुद्रः॥ (२) ॥*॥ पुष्पस्य प्रतिकृतिः 'इवे-' (५।३।९६) इति कन्। ततः स्वार्थेऽण् (५।४।३८) ॥ (३) ॥*॥ कुसुममिव, कुसुमनाशकं वा अञ्जनम् ॥ (४) ॥*॥ चत्वारि **'रीतिकायां ध्यायमानायां जातस्य मलस्य'** ॥

**पिञ्जरं पीतनं तालमालं च हरितालके ॥ १०३ ॥**

**पीति** ॥ पिञ्जनम्। 'पिजि वर्णे' (अ० आ० से०)। घञ् (३।३।१८)। 'निष्ठायामनिटः' (वा० ७।३।५३) इति वचनान्न कुत्वम्। पिञ्जं वर्णविशेषं राति। कः (३।२।३)। **'पिञ्जरो**ऽश्वान्तरे पीते क्लीबं स्वर्णे च पीतने' ॥ (१) ॥*॥ पीतं वर्णं नयते। 'णय गतौ' (भ्वा० आ० से०)। 'णीञ्' (भ्वा० उ० अ०) वा। 'अन्येभ्योऽपि-' (वा० ३।२।१०१) इति डः। **'पीतनं** पीतदारुणि। कुङ्कुमे हरिताले च (पुमानाम्रातके मतः)' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ तालयति, तल्यते वा। 'तल प्रतिष्ठायाम्' (चु० प० से०)। ण्यन्तः। अच् (३।१।१३४, ३।३।५६)। **'तालः** कालक्रियामाने हस्तमानद्रुमभेदयोः। करास्फोटे करतले हरिताले त्सरावपि' (इति हैमः)। **'तालः** करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते। गीतकालक्रियामाने करस्फाले द्रुमान्तरे। वाद्यभाण्डे च कांस्यस्य त्सरौ **ताली** जटौषधौ। क्लीबं तु हरिताले स्यात्' इति विश्वः (मेदिनी) ॥ (३) ॥*॥ आलयति। 'अल भूषणादौ' (भ्वा० प० से०)। अच् (३।१।१३४)। आलाति वा। 'ला आदाने' (अ० प० अ०)। 'आतश्चोपसर्गे' (३।१।१३६) इति कः। **'आलं** स्यादनल्पहरितालयोः' इति हेमचन्द्रः॥ (४) ॥*॥ हरितं वर्णमालाति। 'आतोऽनुप-' (३।२।३) इति कः। स्वार्थे कन् (ज्ञापि० ५।४।५)। **'हरितालमलं तालवर्णकं नटभूषणम्'** इति माधवः। 'हरिताले तु **कर्वूरं गोदन्तो नट**संज्ञकः' इति त्रिकाण्डशेषः॥ (५) ॥*॥ पञ्च **'हरितालस्य'** ॥

**गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु।**

**गैरयिति** ॥ गिरौ भवम्। 'नद्यादिभ्यः' (४।२।९७) इति ढक् ॥ (१) ॥*॥ अर्थ्यते। 'अर्थ उपयाच्ञायाम्' (चु० आ० से०) ण्यन्तः। 'अचो यत्' (३।१।९७)। अर्थादनपेतम्, वा। 'धर्मपथ्य-' (४।४।९२) इति यत्। **'अर्थ्यो** विपश्चिति न्याय्ये त्रिष्वर्थ्यं तु शिलाजतु' इति यान्ते रुद्रः॥ (२) ॥*॥ गिरेर्जातम्। 'जनी प्रादुर्भावे' (दि० आ० से०)। 'पञ्चम्यामजातौ' (३।२।९८) इति डः। **'गिरिजं** लभ्रकेऽपि स्याच्छिलाजतुनि शैलजे। लोहेऽपि **गिरिजा** गौरीमातुलुङ्ग्योश्च योषिति' (इति मेदिनी) ॥ (३) ॥*॥ अश्मनो जातम् ॥ (४) ॥*॥ शिलाया जत्विव। षष्ठीतत्पुरुषः॥ (५) ॥*॥ पञ्च **'शिलाजतुनः'** ॥

**बोलगन्धरसप्राणपिण्डगोपरसाः समाः ॥ १०४ ॥**

**बोलेति** ॥ बोलयति। 'बुल मज्जने' (चु० प० से०) अच् (३।१।१३४)। वाति, वा। 'वा गतिगन्धनयोः' (अ० प० अ०)। पिञ्जादित्वात् (उ० ४।९०) ऊलच्[1] ॥ (१) ॥*॥ गन्धवान् रसोऽस्य ॥*॥ राजदन्तादित्वात् (२।२।३१) **'रसगन्धः'** अपि—इति स्वामी ॥ (२) ॥*॥ प्राणिति, अनेन वा। 'अन प्राणने' (अ० प० से०)। अच् (३।१।१३४)। 'हलश्च' (३।३।१२१) इति घञ् वा। **'प्राणो** हृन्मारुते बोले काव्यजीवेऽनिले बले। पुंलिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चासुषु' (इति मेदिनी) ॥ (३) ॥*॥ पिण्डते। 'पिडि संघाते' (भ्वा० आ० से०)। अच् (३।१।१३४)। **'पिण्डो** वृन्दे जपापुष्पे गोले बोलेऽङ्गसिह्वयोः। कवले **पिण्डं** तु वेश्मैकदेशे जीवनायसोः। बले सान्द्रे **पिण्ड्य**लाबूखर्जूर्योस्तगरेऽपि च' इति हेमचन्द्रः॥ (४) ॥*॥ गां जलं स्यति। 'षोऽन्त-

---

१—अत्राङ् उपसर्गस्य सत्वेनानुपसर्गपदघटितसूत्रस्याप्राप्त्या तदुपन्यासो भ्रान्तिमूलकः। अत एवैतज्जनकेनापि सिद्धान्तकौमुद्यां 'अनुपसर्गे किम्। गोसंदायः' इत्युक्तम्। तस्मात् 'मूलविभुजादित्वात्कः' इति व्याख्येयम्। यद्वा हरितमलति। 'कर्मण्यण्' (३।२।१) इत्यण् इति बोध्यम्॥

कर्मणि' ( दि० प० अ० ) । 'आतोऽनुप-' (३।२।३) इति कः । गोसः—इति मुकुटः ॥*॥ **'गोपः'** इति स्वामी । गो-र्जलात् पाति । 'पा रक्षणे' (अ० प० अ०) । 'सुपि' (३।२।४) इति कः ॥ (५) ॥*॥ रसयति, रस्यते, अनेन वा । 'रस आस्वादने' (चु० उ० से०) । अच् (३।१।१३४) ॥*॥ गोपे उत्पत्तौ रसोऽस्य । **'गोपरसः'** इति समस्तमपि—इति स्वामी ॥ (६) ॥*॥ षट् **'गन्धरसस्य' 'बोर'** इति ख्यातस्य ॥

**हिण्डीरोऽब्धिकफः फेनः**

**हीति** ॥ 'हिण्डी' इति 'हिण्डी' इति वा शब्दमीरयति 'ईर गतौ कम्पने च' (अ० आ० से०) । अच् (३।३।१३४) । अण् (३।२।१) वा । हादिः ॥*॥ **(डिण्डीरः)** । डादिर्वा पाठः ॥ (१) ॥*॥ अब्धेः कफ इव ॥ (२) ॥*॥ स्फायते । 'स्फायी वृद्धौ' (भ्वा० आ० से०) । 'फेनमीनौ' (उ० ३।३) इति साधुः ॥ (३) ॥*॥ त्रीणि **'समुद्रफेनस्य'** ॥

**सिन्दूरं नागसंभवम् ।**

**सीति** ॥ स्यन्दते । 'स्यन्दू प्रस्रवणे' (भ्वा० आ० से०) । 'स्यन्देः संप्रसारणं च' (उ० १।६८) इत्यूरन् ।—'खर्जादिला-दूरः' बाहुलकात्संप्रसारणं च—इति मुकुटोऽपाणिनीयः । **'सिन्दूरस्तरुभेदे स्यात्सिन्दूरं** रक्तचूर्णके । **सिन्दूरी** रो-चनारक्तचेलिकाधातकीषु च' (इति मेदिनी) ॥ (१) ॥*॥ नागं सीसं संभवः (उत्पत्तिस्थानम्) अस्य ॥ (२) ॥*॥ द्वे **'सिन्दूरस्य'** ॥

**नागसीसकयोगेष्टवप्राणि**

**नेति** ॥ नगे भवः । 'तत्र भवः' (४।३।५३) इत्यण् । **'नागं** नपुंसकं रङ्गे सीसके करणान्तरे । **नागः** पन्नगमातङ्गक्रू-राचारिषु तोयदे । नागकेसरपुंनाग (नागदन्तप्रभेदके । 'दे-हानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थितः' इति मेदिनी) ॥ (१) ॥*॥ सिनोति । 'षिञ् बन्धने' (स्वा० उ० अ०) । क्विप् (३।२।१७८) । अनित्यत्वान्न तुक् । ईस्यति । 'षोऽन्तकर्मणि' (दि० प० अ०) । 'आतोऽनुप-' (३।२।३) इति कः । सि-च तदीसं च । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ योगे धातुसंबन्धे इष्टम् । 'सप्तमी-' ( २।१।४० ) इति समासः ॥ (३) ॥*॥ उप्यते । 'डुवप् बीजसंताने' (भ्वा० उ० अ०) । 'वृधिवपिभ्यां रन्' (उ० २।२७) ॥*॥ 'वर्ध्रं' इति मुकुटः । वर्धते । 'वृधु वर्धने' (भ्वा० आ० से०) । रन् (उ० २।२७) । **('वर्ध्रः** सीसवरत्रयोः' इति हैमः) ॥ (४) ॥*॥ चत्वारि **'सीसस्य' 'सीसो'** इति ख्यातस्य ॥

**त्रपु पिच्चटम् ॥ १०५ ॥**

**रङ्गवङ्गे**

**त्रेति** ॥ त्रपते । 'त्रपूष् लज्जायाम्' (भ्वा० आ० से०) । 'शॄस्वृस्निहि-' (उ० १।१०) इत्युः । 'रङ्गसीसकयो**स्त्रपुः'** इति रुद्रः ॥ (१) ॥*॥ पिच्चयति, पिच्चते वा । 'पिच्च छेदने' (भ्वा० ) । अच् (३।१।१३४) पिच्चं टौकते । 'टौकृ गतौ' (भ्वा० आ० से०) । 'अन्येभ्योऽपि-' (वा० ३।२।१०१) इति डः । पिच्चयति । 'शकादिभ्योऽटन्' (उ० ४-८१) वा । **'पिच्चटो** नेत्ररोगे स्यात्क्लीबं सीसकरङ्गयोः' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ रङ्गति । 'रगि गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) । **('रङ्गो** ना रागे नृत्यरण-क्षितौ । अस्त्री त्रपुणि' इति मेदिनी) ॥ (३) ॥*॥ वङ्गति । 'वगि गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) । **'वङ्गं** सीसकरङ्गयोः । वार्ताकेऽपि च कार्पासे पुंभूम्नि नीवृदन्तरे' इति मेदिनी) । **'वङ्गः** कार्पासे वृन्ताके **वङ्गा** जनपदान्तरे । वङ्गं त्रपुणि सीसे च' इति हैमः ॥ (४) ॥*॥ चत्वारि **'वङ्गस्य' 'राँग'** इति ख्यातस्य ॥

**अथ पिचुस्तूलः**

**अथेति** ॥ पिचति । 'पिचु मर्दने' ( ) पचति वा । मृगय्वादिः (उ० १।३७) । **'पिचुर्ना** कुष्ठभेदे च कर्षे तूले-ऽसुरान्तरे' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ तूलयति । तूल्यते, वा । 'तूल निष्कर्षे' (भ्वा० प० से०) 'इगुपध-' (३।१।१३५) इति कः । घञ् (३।३।१९) वा । **'तूलं** स्याद्ब्रह्मदा-रुणि । आकाशेऽथ पिचौ न स्त्री' इति विश्वः (मेदिनी) ॥*॥ **'पिचुतूलः'** इति रभसात्संघातोऽपि ॥ (२) ॥*॥ द्वे **'कार्पासस्य' 'रूई'** इति ख्यातस्य ॥

**अथ कमलोत्तरम् ।**

**स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि ॥ १०६ ॥**

**अथेति** ॥ कमलादुत्तरम् ॥ (१) ॥*॥ कुस्यति । 'कुस संश्लेषणे' (दि० प० से) । 'कुसेरुम्भोमेदेताः' (उ० ४।१०६) इत्युम्भः । बाहुलकान्न गुणः । **'कुसुम्भं** हेमनि महारजने ना कमण्डलौ' (इति मेदिनी) ॥ (२) ॥*॥ वह्निवत् शिखास्य ॥ (३) ॥*॥ रज्यतेऽनेन । ल्युट् (३।३।११५) । 'रजकरजनर-जःसूपसंख्यानम्' (वा० ६।४।२४) इति नलोपः । 'रञ्जेः क्युन्' (उ० २।७९) वा । महच्च तद्रजनं च । 'सन्महत्-' (२।१।६१) इति समासः । **'महारजन**मुद्दिष्टं शातकुम्भकु-सुम्भयोः' (इति मेदिनी) ॥ (४) ॥*॥ चत्वारि **'कुसुम्भस्य' 'कुसुम्भ'** इति ख्यातस्य ॥

**मेषकम्बल ऊर्णायुः**

**मेषेति** ॥ मेषलोमकृतः कम्बलः । शाकपार्थिवादिः (वा० २।१।७८) ॥ (१) ॥*॥ ऊर्णास्यास्ति । 'ऊर्णाया युस्' (५।२।१२३) । **'ऊर्णायुर्ना** क्षणाभङ्गे मेषकम्बलमेषयोः' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ द्वे **'कम्बलस्य'** ॥

---

१—अत्र 'रङ्गः' इति पाठः प्रामादिकः । रङ्गार्थकथने उद्देश्यताव-च्छेदकविधेययोरैक्येन शाब्दबोधाजनकत्वात् । वार्ताकादिवाचकत्वा-भावाच्च । मूलपुस्तके तथा पाठस्यानुपलम्भाच्च ॥

**शशोर्णं शशलोमनि।**

**शेति** ॥ शशस्य ऊर्णा। 'शशोर्णं कारणं करम्' इति चन्द्रगोमिलिङ्गानुशासनात् क्लीबत्वम् ॥ (१) ॥*॥ शशस्य लोम ॥ (२) ॥*॥ द्वे **'शशलोम्नः'** ॥

**मधु क्षौद्रं माक्षिकादि**

**मेति** ॥ मन्यते। 'मन ज्ञाने' (दि० आ० अ०)। 'फलिपाटि–' (उ० १।१८) इति साधु। **'मधु** पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे। वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ क्षुद्राभिर्मक्षिकाभिः कृतम्। 'क्षुद्राभ्रमर–' (४।३।११९) इत्यञ्। **'क्षौद्रं** तु मधुनीरयोः' इति हेमचन्द्रः ॥ (२) ॥*॥ मक्षिकाभिः कृतम्। 'संज्ञायाम्' (४।३।११७) इत्यण् ॥ (३) ॥*॥ आदिना **भ्रामर-वाटक-पौतिका**दिग्रहः ॥*॥ त्रीणि **'मधुनः'** ॥

**मधूच्छिष्टं तु सिक्थकम् ॥ १०७ ॥**

**मेति** ॥ मधुन उच्छिष्टम् ॥ (१) ॥*॥ सिञ्चति, सिच्यते, वा। 'षिच क्षरणे' (तु० उ० अ०) 'पातृतुदिवचिरिचिसिचिभ्यस्थक्' (उ० ।२।७)। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे **'मधूच्छिष्टस्य' 'मोम'** इति ख्यातस्य ॥

**मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका।**
**नैपाली कुनटी गोला**

**मेति** ॥ मनःशब्दवाच्या शिला। शाकपार्थिवादिः (वा० २।१।७८) ॥ (१) ॥*॥ मनसा गुप्ता। 'कर्तृकरणे' (२।१।३२) इति समासः ॥ (२) ॥*॥ मनःशब्देन हूयते कथ्यते। ह्वेञ् (भ्वा० उ० से०)। 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् ॥ (३) ॥*॥ नागानां जिह्वेव। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (४) ॥*॥ नेपाले भवा। 'तत्र भवः' (४।३।५३) इत्यण्। **'नैपाली** नवमालीमनःशिलासुवहासु च' इति विश्वः ॥ (५) ॥*॥ कौ नटति। 'नट अवस्यन्दने' (चु० प० से०)। अच् (३।१।१३४)। गौरादिः (४।१।४१)। यद्वा कुत्सिता नटीव ॥ (६) ॥*॥ गां दीप्तिं लाति। कः (३।२।३)। गुड्यते वा। 'गुड वेष्टने' (तु० प० से०)। घञ् (३।३।१९)। डलयोरैक्यम्। **'गोला** गोदावरीसख्योः कुनटीदुर्गयोः स्त्रियाम्। पात्राञ्जने मण्डने चालिञ्जरे वालखेलने' +**'चेला** लक्ष्म्यां पुमान् कम्पे कम्पयुक्तेऽभिधेयवत्–' (इति मेदिनी) ॥ (७) ॥*॥ सप्त **'मनःशिलायाः'** ॥

**यवक्षारो यवाग्रजः ॥ १०८ ॥**
**पाक्यः**

**येति** ॥ यवानां क्षारः ॥ (१) ॥*॥ यवाग्राज्जायते स्म। 'पञ्चम्याम्–' (३।२।९८) इति डः ॥ (२) ॥*॥ पाके साधुः 'तत्र साधुः' (४।४।९८) इति यत् ॥ (३) ॥*॥ त्रीणि **'यवक्षारस्य'** ॥

**अथ स्वर्जिकाक्षारः कापोतः सुखवर्चकः।**
**सौवर्चलं स्याद्रुचकम्**

**अथेति** ॥ स्वर्जिकारसजः क्षारः। शाकपार्थिवादिः (वा० २।१।७८) ॥ (१) ॥*॥ कपोतवर्णोऽस्यास्ति। ज्योत्स्नादित्वात् (वा० ५।२।१०३) अण् ॥ (२) ॥*॥ सुखं वर्चयति। 'वर्च दीप्तौ' (भ्वा० आ० से०)। क्वुन् (उ० २।३२) ॥ (३) ॥*॥ सुवर्चलाया इदम्। 'तस्येदम्' (४।३।१२०) इत्यण्। 'अथ **सौवर्चलं** सर्जक्षारे च लवणान्तरे' (इति मेदिनी) ॥ (४) ॥*॥ रोचतेऽनेन। 'रुच दीप्तावभिप्रीतौ च' (भ्वा० आ० से०)। क्वुन् (उ० ।२।३२)। **'रुचको** बीजपूरे च निष्के दन्तकपोतयोः। न द्वयोः सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययोः। सौवर्चलेऽपि मङ्गल्यद्रव्येऽपि कटकेऽपि च' (इति मेदिनी) ॥ (५) ॥*॥ पञ्च **'क्षारभेदस्य' 'साजीक्षार'** इति ख्यातस्य ॥

**त्वक्क्षीरी वंशरोचना ॥१०९॥**

**त्वेति** ॥ त्वचो वंशात् क्षीरमस्याः। गौरादिः (४।१।४१) ॥ (१) ॥*॥ रोचते। नन्द्यादिः (३।१।१३४) वंशस्य रोचना। 'स्याद्वंशरोचना **वांशी तुकाक्षीरी तुकाशुभा)।** त्वक्क्षीरी **वंशजा शुभ्रा वंशक्षीरी** तु **वैणवी'** इति शाश्वतः ॥ (२) ॥*॥ द्वे **'वेणुजन्यस्यौषधिविशेषस्य'** ॥

**शिग्रुजं श्वेतमरिचम्**

**शीति** ॥ शिग्रोर्जायते स्म। 'पञ्चम्याम्' (३।३।९८) इति डः ॥ (१) ॥*॥ श्वेतं मरिचमिव ॥ (२) ॥*॥ द्वे **'शोभाञ्जनबीजस्य'** ॥

**मोरटं मूलमैक्षवम्।**

**मोरेति** ॥ मुरति। 'मुर वेष्टने' (तु० प० से०) 'शकादिभ्योऽटन्' (उ० ४।८१) ॥ (१) ॥*॥ इक्षोरिदम् ॥*॥ एकम् **'इक्षुविकारस्य'** ॥

**ग्रन्थिकं पिप्पलीमूलं चटकाशिर इत्यपि ॥ ११० ॥**

**ग्रेति** ॥ ग्रन्थेः प्रतिकृतिः। 'इवे–' (५।३।९६) इति कन्। **'ग्रन्थिकं** पिप्पलीमूले गुग्गुलुग्रन्थिपर्णयोः। करीरे पुंसि दैवज्ञे सहदेवाख्यपाण्डवे' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ पिप्पल्या मूलम् ॥ (२) ॥*॥ चटकायाः शिर इव ॥*॥ 'शिरः' अपि। **'शिरो** ना पिप्पलीमूले' इति रभसः। ('**शिरो** ना पिप्पलीमूले स्याद्धसन्यां च योषिति' इति रान्ते मेदिनी) ॥ (३) ॥*॥ त्रीणि **'पिप्पलीमूलस्य'** ॥

---

१—इदमसंगतम्। अत्रोपसर्गाभावेनैतत्सूत्राप्राप्तेः। तस्मात् 'कृतो बहुलम्' (वा० ३।३।११३) इति न्यासे 'सुपि' (३।२।४) इति योगविभागेन के प्राप्ते 'कविधौ संप्रसारणिभ्यो डः' (वा० ३।२।३) इति डप्रत्ययो बोध्यः ॥ २—अत्र 'चलम्' इत्यस्य स्थाने रयोः' इति पाठं कल्पयित्वा अत्र पाठः प्रामादिकः मूले हैमविश्वाश्च लक्ष्म्यादीनां गोलाशब्दार्थेऽनुपलम्भात्। किंतु मूलानुसारेण लशब्दार्थकथनम् ॥

**गोलोमी भूतकेशो ना**

**गविति** ॥ गोलोम्नामियम् । अण् (४।३।१२०) । संज्ञापूर्वकत्वाद्वृद्ध्यभावोऽपि । '**गोलोमी** श्वेतदूर्वायां स्याद्वचाभूतकेशयोः' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ भूतानां केश इव । भूतः केशोऽस्य वा ॥ (२) ॥*॥ द्वे '**भूतकेशस्य**' ॥

**पत्राङ्गं रक्तचन्दनम् ।**

**पेति** ॥ पत्राण्यङ्गेऽस्य । '**पत्राङ्गं** न द्वयोर्भूर्जे पद्मके रक्तचन्दने' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ रक्तं चन्दनमिव । रक्तसारत्वात् ॥ (२) ॥*॥ द्वे '**रक्तसारद्रव्यस्य**' '**पतङ्ग**' इति ख्यातस्य ॥

**त्रिकटु त्र्यूषणं व्योषम्**

**त्रीति** ॥ त्रयाणां कटूनां समाहारः ॥ (१) ॥*॥ ऊषति । 'उष दाहे' (भ्वा० प० से०) । ल्युट् (३।१।१३४) । त्रयाणां भूषणानां समाहारः । पात्रादिः (वा० २।४।३१) ॥ (२) ॥*॥ विशेषेण ओषति । 'उष दाहे' । (भ्वा० प० से०) । अच् (३।१।१३४) ॥ (३) ॥*॥ त्रीणि '**शुण्ठीपिप्पलीमरीचानां समाहारस्य**' ॥

**त्रिफला तु फलत्रिकम् ॥११॥**

**त्रीति** ॥ त्रयाणां फलानां समाहारः अजादिः (४।१।४) ॥*॥ तृफति । 'तृफ तृप्तौ' (तु० प० से०) ।–'तृफश्च' (उ० १।१०४) इति कलः । 'त्रिफला **तृफला**पि च' इति त्रिकाण्डशेषः ॥ (१) ॥*॥ फलानां त्रिकम् ॥ (२) ॥*॥ द्वे '**हरीतक्यामलकविभीतकफलानां समाहारस्य**' ॥

**॥ इति वैश्यवर्गविवरणम् ॥**

---

**शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः ।**

**श्विति** ॥ शोचति । 'शुच शोके' (भ्वा० प० से०) । 'शुचेर्दश्च' (उ० २।१९) इति रक् दीर्घश्च ।—'शदे रक् चात ऊत्वं च'—इति सुभूतिरपाणिनीयः ॥ (१) ॥*॥ अवरोऽधमो वर्णोऽस्य । अवरश्चासौ वर्णश्च, इति वा ॥ (२) ॥*॥ वृष्यते, वर्षति वा । 'वृषु सेचने' (भ्वा० प० से०) । 'वृषादिभ्यश्च' (उ० १।१०६) इति कलच् । वृषं धर्मं लुनाति वा 'लूञ् छेदने' (क्र्या० उ० से०) । 'अन्येभ्योऽपि–' (वा० ३।२।१०) इति डः । वृषं लाति वा । कः (३।२।३) ॥ (३) ॥*॥ जघन्यात् पादाज्जाताः । 'जनी प्रादुर्भावे' (दि० आ० से०) । 'पञ्चम्याम्–' (३।२।९८) इति डः । '**जघन्यं** मेहने क्लीबे चरमे गर्हितेऽन्यवत्' (इति मेदिनी) ॥ (४) ॥*॥ चत्वारि '**शूद्रस्य**' ॥

**आचाण्डालात्तु संकीर्णा अम्बष्ठकरणादयः ॥ १ ॥**

**आचेति** ॥ संकीर्यन्ते स्म । 'कॄ विक्षेपे' (तु० प० से०) । क्तः (३।२।१०२) । 'ॠत इद्धातोः' (७।१।१००) 'रदाभ्याम्–' (८।२।४२) इति नत्वम् ॥ (१) ॥*॥ अम्बष्ठश्च करणश्च । अम्बष्ठकरणावादी येषां ते । आदिना उग्रादिग्रहः ॥*॥ एकम् '**संकराणाम्**' ॥

**शूद्राविशोस्तु करणः**

**श्विति** ॥ शूद्रा च विट् च । तयोः सुतः ॥*॥ किरति, कीर्यते, वा । 'कॄ' (तु० प० से०) । 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् । 'कृत्यल्युटः–' (३।३।११३) इति वा । '**करणं** हेतुकर्मणोः । वालवादौ हसे लेपे नृत्यगीतप्रभेदयोः । क्रियाभेदेन्द्रियक्षेत्रकायसंवेशनेषु च । कायस्थे साधने क्लीबं पुंसि शूद्राविशोः सुते' इति विश्वः ॥ (१) ॥*॥ एकं '**वैश्याच्छूद्रायां जातस्य**' ॥

**अम्बष्ठो वैश्याद्विजन्मनोः ।**

**अम्बेति** ॥ वैश्या च द्विजन्मा च । तयोः सुतः ॥*॥ अम्बे तिष्ठति । 'ष्ठा' (भ्वा० प० अ०) । 'सुपि–' (३।२।४) इति कः । 'अम्बाम्ब–' (८।३।९७) इति षत्वम् । '**अम्बष्ठो** देशभेदेऽपि विप्राद्वैश्यासुतेऽपि च । **अम्बष्ठा**प्यम्ललोण्यां स्यात्पाठायूथिकयोरपि' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ एकम् '**वैश्याब्राह्मणाभ्यामुत्पन्नस्य**' ॥

**शूद्राक्षत्रिययोरुग्रः**

**श्विति** ॥ शूद्रा च क्षत्रियश्च । तयोः सुतः ॥*॥ उच्यति । 'उच समवाये' (दि० प० से०) । ऋज्रेन्द्र– (उ० २।२८) इति निपातनात्साधुः । '**उग्रः** शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिपूत्कटे । स्त्री वचाक्षुतयोः' (इति मेदिनी) ॥ (१) ॥*॥ एकम् '**शूद्राक्षत्रियाभ्यामुत्पन्नस्य**' ॥

**मागधः क्षत्रियाविशोः ॥ २ ॥**

**मेति** ॥ क्षत्रिया च विट् च । तयोः सुतः ॥*॥ मगध्यति । 'मगध वेष्टने' कण्ड्वादिः । अच् (३।१।१३४) । 'यस्य हलः' (६।४।४९) इति यलोपः । प्रज्ञाद्यण् (५।४।३८) । '**मागधो** मगधोद्भूते शुक्लजीरकवन्दिनोः । वैश्यतः क्षत्रियापुत्रे **मागधी** स्यात्तु पिप्पली । यूथी भाषाविशेषश्च' इति हेमचन्द्रः ॥ (१) ॥*॥ एकम् '**क्षत्रियावैश्याभ्यामुत्पन्नस्य**' ॥

**माहिष्योऽर्याक्षत्रिययोः**

**मेति** ॥ अर्या च क्षत्रियश्च तयोः सुतः ॥*॥ **महिष्यां** साधुः । 'तत्र साधुः' । (४।४।९८) इति यत् । स्वार्थेऽण् (२।४।३८) । यद्वा मह्यते, महति वा । 'मह पूजायाम्' (भ्वा० प० से०) 'अविमह्योष्टिषच्' (उ० १।४५) । चतुर्वर्णादित्वात् (वा० ५।१।१२४) स्वार्थे ष्यञ् ॥ (१) ॥*॥ एकम् '**वैश्याक्षत्रियाभ्यां जनितस्य**' ॥

**क्षत्तार्याशूद्रयोः सुतः ।**

**क्षेति** ॥ अर्या च शूद्रश्च । तयोः सुतः ॥*॥ क्षदति, क्षद्यते, वा । 'क्षद संभृतौ' (  ) । '–शंसिक्षदादिभ्यः–'

(उ० २।९४) इति तृच्। '**क्षत्ता** शूद्रात्क्षत्रियाजे प्रतीहारे च सारथौ। भुजिष्यातनयेऽपि स्यान्नियुक्तवेधसोः पुमान्' (इति मेदिनी) ॥ (१) ॥*॥ अर्या स्वामिनी। सा च क्षत्रिया योग्यत्वात्। तेन 'क्षत्रियायां च शूद्रजे' इत्यनेनाविरोधः ॥*॥ एकम् '**अर्याशूद्राभ्यामुत्पन्नस्य**' ॥

**ब्राह्मण्यां क्षत्रियात्सूतः**

**ब्रेति** ॥ सूयते स्म। 'षूङ् प्रसवे' (दि० आ० से०)। क्तः (३।४।७२)। '**सूतः** पारदसारथ्योः प्रसूतेरितबन्दिषु। ब्राह्मण्यां क्षत्रियाज्जाते तक्ष्णि' इति हैमः ॥ (१) ॥*॥ एकम् '**ब्राह्मण्यां क्षत्रियाज्जातस्य**' ॥

**तस्यां वैदेहको विशः ॥ ३ ॥**

**तेति** ॥ विदेहेषु भवः। 'तत्र भवः' (४।३।५३) इत्यण्। विदेहस्यापत्यम्। 'जनपद–' (४।१।१६८) इत्यञ्। स्वार्थे कन् (ज्ञापि० ५।४।५)। '**वैदेहको** वाणिजके शूद्राद्वैश्यासुतेऽपि च' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ एकम् '**ब्राह्मण्यां वैश्याज्जातस्य**' ॥

**रथकारस्तु माहिष्यात्करण्यां यस्य संभवः।**

**रेति** ॥ माहिष्याद्वैश्याक्षत्रियसुतात् करण्यां शूद्रायां वैश्यादुत्पन्नायाम् ॥*॥ रथं करोति। 'कृञ्' (त० उ० अ०)। 'कर्मण्यण्' (३।२।१)। '**रथकारस्तु** माहिष्यात् करणी च तक्षणि' (इति मेदिनी) ॥ (१) ॥*॥ एकम् '**करण्यां माहिष्यादुत्पन्नस्य**' ॥

**स्याच्चण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः ॥ ४ ॥**

**स्येति** ॥ चण्डति। 'चडि कोपे' (भ्वा० प० से०) 'पतिचण्डिभ्यामालञ्' (उ० १।११७) ॥ (१) ॥*॥ प्रत्येकमेकैकं '(**संकरविशेषाणाम्**)' ॥

**कारुः शिल्पी**

**केति** ॥ करोति। 'कृवापा–' (उ० १।१) इत्युण्। '**कारुस्तु** कारके शिल्पे विश्वकर्मणि शिल्पिनि' इति हेमचन्द्रः ॥ (१) ॥*॥ शिल्पमस्यास्ति। 'अत–' (५।२।११५) इतीनिः। '**शिल्पी** तु वाच्यवत्कारौ स्त्रियां कोलदलौषधौ' (इति मेदिनी) ॥ (१) ॥*॥ 'तक्षा च तन्तुवायश्च नापितो रजकस्तथा। पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः' ॥*॥ द्वे '**चित्रकारादेः**' ॥

**संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः।**

**समिति** ॥ श्रयति, श्रीयते, वा 'श्रिञ् सेवायाम्' (भ्वा० उ० से०)। 'वहिश्रिश्रुयु–' (उ० ४।५१) इति निः। '**श्रेणिः** स्त्रीपुंसयोः पङ्क्तौ समानशिल्पिसंहतौ' (इति मेदिनी) ॥ (१) ॥*॥ एकं '**सजातीयशिल्पिसंघस्य**' ॥

**कुलकः स्यात्कुलश्रेष्ठी**

**किति** ॥ कोलति 'कुल संस्त्याने बन्धुषु च' (भ्वा० प० से०)। क्वुन् (उ० २।३२)। '**कुलकं** तु पटोले स्यात्सं-बद्धश्लोकसंहतौ। पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते (इति मेदिनी) ॥*॥ 'कुलिकः' इति पाठे कुलमधीनत्वेनास्यास्ति। ठन् (५।२।११५)। '**कुलिको** नागभेदे स्याद्द्रुमभेदे कुलसत्तमे' (इति मेदिनी) ॥ (१) ॥*॥ कुलश्रेष्ठत्वमस्यास्ति। इनिः (५।२।११५) ॥ (२) ॥*॥ द्वे '**कारुसङ्घे मुख्यस्य**' ॥

**मालाकारस्तु मालिकः ॥ ५ ॥**

**मेति** ॥ मालां करोति। अण् (३।२।१) ॥ (१) ॥*॥ मालास्यास्ति। 'व्रीह्यादिभ्यश्च' (५।२।११६) इति ठन्। यद्वा माला शिल्पमस्याः 'शिल्पम्' (४।४।५५) इति ठन्। '**मालिका** सप्तलापुत्री ग्रीवालंकरणेऽपि च। पुष्पमाल्ये नदीभेदे पक्षिभेदे च मालिकः' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**मालाकारस्य**' '**माली**' इति ख्यातस्य ॥

**कुम्भकारः कुलालः स्यात्**

**किति** ॥ कुम्भं करोति। अण् (३।२।१)। '**कुम्भकारी** कुलत्थ्यां च पुंसि स्याद्घटकारके' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ कुं भूमिं लालयति। 'लड विलासे' (भ्वा० प० से०)। अण् (३।२।१)। डलयोरैक्यम्। कुलमालाति वा। कः (वा० ३।२।५)। कुलमलति वा। अण् (३।२।१)। कुलमाल्लुनाति वा। डः (वा० ३।२।१०१)। 'धूके **कुलालः** कुक्कुभे कुम्भकारेऽञ्जनान्तरे' ॥ (२) ॥*॥ द्वे '**कुलालस्य**' ॥

**पलगण्डस्तु लेपकः।**

**पेति** ॥ पलं मांसम्। तत्तुल्येन मृदादिना गण्डति वदनैकदेशमिव करोति। 'गडि वदनैकदेशे' (भ्वा० प० से०)। अच् (३।१।१३४) ॥ (१) ॥*॥ लिम्पति। 'लिप उपदेहे' (तु० उ० से०)। ण्वुल् (३।१।१३३) ॥ (२) ॥*॥ द्वे '**गृहादौ लेपकारस्य**' ॥

**तन्तुवायः कुविन्दः स्यात्**

**तेति** ॥ तन्तून् वयति। 'वेञ् तन्तुसंताने' (भ्वा० उ० अ०)। 'ह्वावामश्च' (३।२।२) इत्यण् ॥*॥ '**तन्त्रवायः**' इति पाठे तन्तवो वितन्यन्ते यस्मिंस्तत्तन्त्रम्। तद्वयति ॥*॥ '**तन्त्रवापः**' इति पाठान्तरम्। तत्र 'डुवप्' (भ्वा० उ० अ०)। अण् (३।२।१) ॥ (१) ॥*॥ कुं भुवम्, कुत्सितं वा विन्दति। 'विदॢ लाभे' (तु० उ० अ०)। 'गवादिषु विन्देः संज्ञायाम्' (वा० ३।१।१३८) इति शः। कुप्यति। 'कुप क्रोधे' (दि० प० से०)। 'कुपेर्वा बश्च' (उ० ४।८६) इति किन्दच् ॥ (२) ॥*॥ द्वे '**पटानां निर्मातरि**' ॥

**तुन्नवायस्तु सौचिकः ॥ ६ ॥**

**त्विति** ॥ तुन्नं छिन्नं वयति। 'वेञ्' (भ्वा० उ० अ०)। अण् (३।२।१) ॥ (१) ॥*॥ सूची शिल्पमस्य। 'शिल्पम्'

१ 'वैश्यान्मागधवैदेहौ राजविप्राङ्गनासु च' (१०।११) इति मनुवाक्यानुकूलमूलविरुद्धोऽनेकार्थकोषो नादरणीयः ॥

(४।४।५५) इति ठक् ॥ (२) ॥*॥ द्वे **'कञ्चुक्यादेर्निर्मातरि'** ॥

**रङ्गाजीवश्चित्रकारः**

**रेति** ॥ रङ्गेणाजीवति । 'जीव प्राणधारणे' (भ्वा० प० से०) । 'इगुपध-' (३।१।१३५) इति कः । रङ्ग आजीवोऽस्य, इति वा ॥ (१) ॥*॥ चित्रं करोति । 'दिवाविभानिशा-' (३।२।२१) इति टः ॥ (२) ॥*॥ द्वे **'चित्रकारस्य'** ॥

**शस्त्रमार्जोऽसिधावकः ।**

**शेति** ॥ शस्त्रं मार्ष्टि । 'मृजू शुद्धौ' (अ० प० से०) । अण् (३।२।१) ॥ (१) ॥*॥ असिं धावति । 'धावु गतिशुद्ध्योः' (भ्वा० उ० से०) । अण् (३।२।१) । 'स्वार्थे कन्' (ज्ञापि० ५।४।५) । कुन् (उ० २।३२) वा ॥ (२) ॥*॥ द्वे **'शस्त्रघर्षणोपजीविनः'** ॥

**पादूकृच्चर्मकारः स्यात्**

**पेति** ॥ पद्यतेऽनया । 'पद गतौ' (दि० आ० अ०) । 'णित्कशिपद्यर्तेः' (उ० १।८५) इति ऊः । पादूं करोति । क्विप् (३।२।७६) ॥ (१) ॥*॥ चर्म करोति । अण् (३।२।१) ॥ (२) ॥*॥ द्वे **'चर्मकारस्य'** ॥

**व्योकारो लोहकारकः ॥ ७ ॥**

**व्योकेति** ॥ **'व्यो'** इत्यव्ययं लोहबीजवाची—इति श्रीभोजः । व्यो करोति । अण् (३।२।१) ॥ (१) ॥*॥ लोहं करोति । अण् (३।२।१) । स्वार्थे कन् (ज्ञापि० ५।४।५) । 'व्योकारोऽयस्करोऽयस्कारो **लोहकारः** स्यात्' इति रत्नकोषः ॥ (२) ॥*॥ द्वे **'लोहकारस्य'** ॥

**नाडिंधमः स्वर्णकारः कलादो रुक्मकारके ।**

**नेति** ॥ नाडीं वंशनलीं धमति । 'ध्मा शब्दाग्निसंयोगयोः' (भ्वा० प० से०) । 'नाडीमुष्ट्योश्च' (३।२।३०) । इति खश् । 'खित्यनव्ययस्य' (६।३।६६) इति ह्रस्वः ॥ (१) ॥*॥ स्वर्णं करोति । अण् (३।२।१) ॥ (२) ॥*॥ कलामादत्ते । 'डुदाञ्' (जु० उ० अ०) । मूलविभुजादित्वात् (वा० ३।२।४) कः ॥ (३) ॥*॥ रुक्मं करोति । अण् (३।२।१) । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (४) ॥*॥ चत्वारि **'स्वर्णकारस्य'** ॥

**स्याच्छाङ्खिकः काम्बविकः**

**स्येति** ॥ शङ्खः शिल्पमस्य । 'शिल्पम्' (४।४।५५) इति ठक् ॥ (१) ॥*॥ कम्बुः शिल्पमस्य । ठक् (४।४।५५) । '—शाश्वतिकः' (२।४।९) इति निर्देशात्कादेशोऽनित्यः । कम्बोर्विकारोऽस्यास्ति, इति वा । ठन् (५।२।११५) ॥ (२) ॥*॥ द्वे **'शङ्खवादकस्य'** ॥

**शौल्विकस्ताम्रकुट्टकः ॥ ८ ॥**

**शाविति** ॥ शुल्वघट्टनं शिल्पमस्य । 'शिल्पम्' (४।४।५५) इति ठक् ॥ (१) ॥*॥ ताम्रं कुट्टयति । 'कुट्ट छेदने' (चु० प० से०) । अण् (३।२।१) । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे **'ताम्रकारस्य'** ॥

**तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट् ।**

**तेति** ॥ तक्ष्णोति 'तक्षू तनूकरणे' (भ्वा० प० से०) । '-युवृषि-' (उ० १।१५६) इत्यादिना कनिन् ॥ (१) ॥*॥ वर्धते । 'वर्ध छेदने' (चु० प० से०) । अच् (३।१।१३४) । वर्धं कषति । 'कष हिंसायाम्' (भ्वा० प० से०) । बाहुलकाड्डिः ॥ (२) ॥*॥ त्वक्षति । 'त्वक्षू तनूकरणे' (भ्वा० प० से०) । तृच् (३।१।१३३) । **'त्वष्टा** पुमान्देवशिल्पितक्ष्णोरादित्यभिद्यपि' (इति मेदिनी) ॥ (३) ॥*॥ रथं करोति । अण् (३।२।१) ॥ (४) ॥*॥ काष्ठं तक्षति । क्विप् (३।२।७६) ॥ (५) ॥*॥ पञ्च **'सुतार इति ख्यातस्य'** ॥

**ग्रामाधीनो ग्रामतक्षः**

**ग्रेति** ॥ ग्रामेऽधि । 'सप्तमी' (२।१।४०) इति समासः । 'अषडक्ष-' (५।४।७) इति खः ॥ (१) ॥*॥ ग्रामस्य तक्षा । 'ग्रामकौटाभ्यां च तक्ष्णः' (५।४।९५) इति टच् ॥ (२) ॥*॥ द्वे **'ग्रामत्वष्टुः'** ॥

**कौटतक्षोऽनधीनकः ॥ ९ ॥**

**कौटेति** ॥ कुट्यां भवः । 'तत्र भवः' (४।३।५३) इत्यण् । कौटश्चासौ तक्षा च । टच् (५।४।९५) ॥ (१) ॥*॥ नाधीनः । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥*॥ एकम् **'कौटत्वष्टुः'** ॥

**क्षुरिमुण्डिदिवाकीर्तिनापितान्तावसायिनः ।**

**क्षिवति** ॥ क्षुरोऽस्यास्ति । 'अतः-' (५।२।११५) इतीनिः ॥ (१) ॥*॥ मुण्डं करोति 'मुण्डमिश्र-' (३।१।२१) इति णिच् । ग्रह्यादित्वात् (३।१।१३४) णिनिः ॥ (२) ॥*॥ दिवा कीर्तिरस्य । **'दिवाकीर्तिस्तु** पुंसि स्यान्नापितान्तावसायिनोः' इति विश्वः (मेदिनी) ॥ (३) ॥*॥ न पिबति स्म । 'पि गतौ' (तु० प० अ०) । 'गत्यर्था-' (३।४।७२) इति क्तः । न—अपितः । निषेधार्थकेन नशब्देन 'सुप्सुपा' (२।१।४) इति समासः । यद्वा नापनम् । 'आपॢ व्याप्तौ' (स्वा० प० अ०) । घञ् (३।३।१८) । नापो जातोऽस्य । 'तदस्य संजातम्' (५।२।३६) इतीतच् ॥ (४) ॥*॥ नखानामन्तमवसातुं शीलमस्य । 'षोऽन्तकर्मणि' (दि० प० अ०) । 'षै क्षये' (भ्वा० प० अ०) वा । 'सुपि-' (३।२।७८) इति णिनिः । 'आतो युक्-' (७।३।३३) । ('**अन्तावसायी** श्वपचे मुनिभेदे च नापिते' इति मेदिनी) ॥ (५) ॥*॥ पञ्च **'नापितस्य'** ॥

**निर्णेजकः स्याद्रजकः**

**नीति** ॥ निर्णेनेक्ति । 'णिजिर् शुद्धौ' (जु० उ० से०) ण्वुल् (३।१।१३३) । 'उपसर्गादसमासे–' (८।४।१४) इति णत्वम् ॥ (१) ॥*॥ रजति । 'रञ्ज रागे' (भ्वा० उ० अ०) । नू ( उ० २।३२) ॥ (२) ॥*॥ द्वे **'रजकस्य'** ॥

**शौण्डिको मण्डहारकः ॥ १० ॥**

**शाविति** ॥ (**'शुण्डा** पानगृहे मता । अम्बुहस्तिनीवेश्याहस्तिहस्तसुरासु च' इति मेदिनी) । शुण्डा सुरा पण्यमस्य । 'तदस्य पण्यम्' (४।४।५१) इति ठक् ॥ (१) ॥*॥ मण्डं सुराग्ररसं हरति । 'कर्मण्यण्' (३।२।१) । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे **'शौण्डिकस्य'** ॥

**जावालः स्यादजाजीवः**

**जेति** ॥ जवमलति, आलाति वा । 'अल भूषणादौ' (भ्वा० प० से०) । अण् (३।२।१) । कः (वा० ३।२।५) वा । जवालोऽजः । तस्यायम् ॥ (१) ॥*॥ अजा आजीवो जीविकास्य ॥ (२) ॥*॥ द्वे **'अजाजीवनस्य'** ॥

**देवाजीवी तु देवलः।**

**देवेति** ॥ देवैराजीवितुं शीलमस्य । 'सुप्यजातौ–' (३।२।७८) इति णिनिः ॥*॥ (**देवाजीवः**, इति) अदन्तपाठे देव आजीवोऽस्य ॥ (१) ॥*॥ देवान् जीविकार्थे लाति । कः (३।२।३) । देवं लक्षणया तत्स्वं लाति वा ॥ (२) ॥*॥ द्वे **'देवपूजोपजीविनः'** ॥

**स्यान्माया शाम्बरी**

**स्येति** ॥ विश्वं माति यस्याम्, मिमीते, वा । 'मा माने' (अ० प० अ०) । 'माङ् माने' (जु० आ० अ०) वा । 'माच्छाससिभ्यो यः' (उ० ४।१०९) । मां याति वा । 'आतोऽनुप–' (३।२।३) इति कः । **'माया** स्याच्छाम्बरीबुद्ध्योर्मायः पीताम्बरेऽसुरे' (इति मेदिनी) ॥ (१) ॥*॥ शम्बराख्यदैत्यस्येदम् । 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (२) ॥*॥ द्वे **'इन्द्रजालादिमायायाः'** ॥

**मायाकारस्तु प्रातिहारिकः ॥ ११ ॥**

**मेति** ॥ मायां करोति । अण् (३।२।१) ॥ (१) ॥*॥ प्रतिहरणम् । 'हृञ्' (भ्वा० उ० अ०) भावे घञ् (३।३।१८) । प्रतिहारो व्याजः प्रयोजनमस्य 'प्रयोजनम्' (५।१।१०९) इति ठक् ॥ (२) ॥*॥ द्वे **'इन्द्रजालिकस्य'** ॥

**शलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः।**
**भरता इत्यपि नटाः**

**शाथिति** ॥ शिलालिना प्रोक्तं नटसूत्रमधीयते । 'पाराशर्यशिलालिभ्याम्–' (४।३।११) इति णिनिः ॥ (१) ॥*॥ शिलूषस्य ऋषेरपत्यम् । अण् (४।१।११४) । 'नटे बिल्वे च शैलूषः' इति तालव्यादिमूर्धन्यान्तेषु रभसः ॥ (२) ॥*॥ जायया जीवन्ति । 'जीव प्राणधारणे' (भ्वा० प० से०) । 'इगुपध–' (३।१।१३५) इति कः ॥ (३) ॥*॥ कृशाश्वेन प्रोक्तं नटसूत्रमधीयते । 'कर्मन्दकृशाश्वादिनिः' (४।४।१११) ॥ (४) ॥*॥ भरतस्य मुनेः शिष्याः । अण् (४।३।१२०) । संज्ञापूर्वकत्वान्न वृद्धिः । यद्वा बिभर्ति स्वाङ्गम् । 'डु भृञ्' (जु० उ० अ०) । 'भृमृदृशि–' (उ० ३।१११) इत्यतच् ।—बिदाद्यञो (४।१।१०४) वा । 'यञञोश्च' (२।४।६४) इति लुकि भरतः—इति मुकुटः । तन्न । अबहुवचने वृद्धिप्रसङ्गात् । पूर्वव्याख्याविरोधाच्च ॥ (५) ॥*॥ नटति । 'नट नृत्तौ' (भ्वा० प० से०) । अच् (३।१।१३४) ॥ (६) ॥*॥ **'रङ्गावतारी** शैलूषो नटो भरत**भारतौ'** इति वाचस्पतिः ॥ ॥*॥ षट् **'नटानाम्'** ॥

**चारणास्तु कुशीलवाः ॥ १२ ॥**

**चेति** ॥ चारयन्ति कीर्तिम् । 'चर गतौ' (भ्वा० प० से०) । णिजन्तः । नन्द्यादिल्युः (३।१।१३४) (१) ॥*॥ कुत्सितं शीलमस्त्येषाम् । 'कुगति–' (२।२।१८) इति समासः । 'अन्यत्रापि दृश्यते' (वा० ५।२।१०९) इति वा । कुशीलं वान्ति वा । 'वा गत्यादौ' (अ० प० अ०) । कः (३।२।३) ॥ (२) ॥*॥ द्वे **'बन्दिविशेषस्य'** ॥

**मार्दङ्गिका मौरजिकाः**

**मेति** ॥ मृदङ्गो लक्षणया तद्वादनं शिल्पमेषाम् । 'शिल्पम्' (४।४।५५) इति ठक् ॥ (१) ॥*॥ मुरजः शिल्पमेषाम् । ठक् (४।४।५५) ॥ (२) ॥*॥ द्वे **'मृदङ्गवादनशीलस्य'** ॥

**पाणिवादास्तु पाणिघाः।**

**पेति** ॥ पाणिं वादयन्ति । 'वदेः' (भ्वा० प० से०) । ण्यन्तादण् (३।२।१) ॥ (१) ॥*॥ पाणिं घ्नन्ति । 'पाणिघताडघौ शिल्पिनि' (३।२।५५) इति साधुः ॥ (२) ॥*॥ द्वे **'करतालिकावादनशीलस्य'** ॥

**वेणुध्माः स्युर्वैणविकाः**

**वयिति** ॥ वेणुं धमन्ति । 'ध्मा शब्दादौ' (भ्वा० प० से०) । 'आतोऽनुप–' (३।२।३) इति कः ॥ (१) ॥*॥ वेणोर्विकारः । 'ओरञ्' (४।३।१३९) । वैणवं शिल्पमस्य । ठक् (४।४।५५) ॥ (२) ॥*॥ द्वे **'वेणुवादनशीलस्य'** ॥

**वीणावादास्तु वैणिकाः ॥ १३ ॥**

**वीति** ॥ वीणां वादयन्ति ॥ (१) ॥*॥ वीणा शिल्पमेषाम् ॥ (२) ॥*॥ द्वे **'वीणावादनशीलस्य'** ॥

**जीवान्तकः शाकुनिकः**

**जीति** ॥ जीवानामन्तकः ॥ (१) ॥*॥ शकुनान् हन्ति । 'पक्षिमत्स्य–' (४।४।३५) इति ठक् ॥ (२) ॥*॥ द्वे **'पक्षिणां हन्तरि'** ॥

द्वौ वागुरिकजालिकौ ।

**द्वाविति** ॥ वागुरया (१) जालेन (२) च चरति । 'चरति' (४।४।८) इति ठक् ॥ (२) ॥*॥ द्वे **'जालेन मृगान्बध्नतः'** ॥

**वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ॥ १४ ॥**

**वायिति** ॥ वीतंसेन मृगपक्ष्यादिबन्धनोपायेन चरति ॥ (१) ॥*॥ कूटेन मृगादिबन्धनयन्त्रेण चरति ॥ (२) ॥*॥ मांसं पण्यमस्य । 'तदस्य पण्यम्' (४।४।५१) इति ठक् ॥ (३) ॥*॥ त्रीणि **'मांसविक्रयजीविनः'** ॥

**भृतको भृतिभुक्कर्मकरो वैतनिकोऽपि सः ।**

**भ्रिति** ॥ भ्रियते स्म । 'भृञ् भरणे' (भ्वा० उ० अ०) । क्तः (३।२।१०२) । स्वार्थे कन् (ज्ञापि० ५।४।५) । यद्वा भृतिं करोति । 'तत्करोति–' (३।१।२६) इति णिजन्तात्कुन् (उ० २।३२) ॥ (१) ॥*॥ भृतिं वेतनं भुङ्क्ते । क्विप् (३।२।७६) ॥ (२) ॥*॥ कर्म करोति । 'कर्मणि भृतौ' (३।२।२२) इति टः ॥ (३) ॥*॥ वेतनेन जीवति । 'वेतनादिभ्यो जीवति' (४।४।१२) इति ठक् ॥ (४) ॥*॥ चत्वारि **'वेतनोपजीविनः'** ॥

**वार्तावहो वैवधिकः**

**वेति** ॥ वार्ताया वहः ॥ (१) ॥*॥ विवधं वीवधं वा वहति । 'विभाषा विवधात्' (वा० ४।४।१७) इति ठन् । पक्षे ठक् ॥ (२) ॥*॥ द्वे **'वार्ताया वाहकस्य'** **'कवडिया'** इति ख्यातस्य ॥

**भारवाहस्तु भारिकः ॥ १५ ॥**

**भेति** ॥ भारं वहति । अन् (३।२।१) ॥ (१) ॥*॥ भारोऽस्ति वाह्यत्वेनास्य । 'अतः–' (५।२।११५) इति ठन् ॥ (२) ॥*॥ द्वे **'भारवाहकस्य'** ॥

**विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः ।**
**निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः ॥ १६ ॥**

**वीति** ॥ विगतो वर्णो यस्य यस्माद्वा । **'वर्णो** द्विजादौ शुक्लादौ स्तुतौ रूपयशोऽक्षरे' इति विश्वः ॥ (१) ॥*॥ पामानं राति । कः (३।२।३) । यद्वा पा धर्मः म्रियते येन । 'मृङ्' (तु० प० अ०) । 'पुंसि–' (३।३।११८) इति घः ॥ (२) ॥*॥ निकृष्टामीं लक्ष्मीं चिनोति । 'चिञ्' (स्वा० उ० अ०) । 'अन्येभ्योऽपि दृश्यते' (वा० ३।२।१०१) इति डः ॥ (३) ॥*॥ प्रकृतौ भवः । अण् (४।३।५३) । यद्वा प्रकृष्टमकृतमकार्यमस्य ॥ (४) ॥*॥ सज्जनेभ्यः पृथग्भूतो जनः । शाकपार्थिवादिः (वा० २।१।७८) ॥ (५) ॥*॥ निश्चयेन हीनः । 'कुमति–' (२।२।१८) इति समासः ॥ (६) ॥*॥ अपकृष्टमपकृष्टे वा सीदति । 'षद्लृ विशरणादौ' (भ्वा० प० अ०) । अच् (३।१।१३४) ॥ (७) ॥*॥ जालयति । 'जल आच्छादने' (चु० प० से०) । जालं करोति । बाहुलकान्मः । 'नेड् वशि कृति' (७।२।८) । **'जाल्मस्तु** पामरे । असमीक्ष्यकारिणि च' इति हैमः ॥ (८) ॥*॥ क्षुधं लाति । कः (३।२।३) स्वार्थे कन् (उ० २।३२) वा । यद्वा क्षुणत्ति, क्षुद्यते वा 'क्षुद क्षोदे' (रु० उ० अ०) । 'स्फायितञ्चि–' (उ० २।१३) इति रक् । कपिलिकादिः (८।२।१८) । यद्वा क्षुद्रा लक्यते । 'लक आस्वादने' ( ) । 'पुंसि–' (३।३।११८) इति घः ॥*॥ कवर्गद्वितीयादिरपि । **'खुल्लकस्त्रिषु** नीचेऽल्पे' इति रभसात् । खदनम् । 'खद हिंसायाम्' (भ्वा० प० से०) । संपदादिः (वा० ३।३।१०८) । पृषोदरादिः (६।३।१०९) । खुदं लाति । कुन् (उ० २।३२) ॥ (९) ॥*॥ इना कामेन तीर्यते । 'तॄ' (भ्वा० प० से०) । 'ॠदोरप्' (३।३।५७) । इतं गमनं करोति वा । 'तत्करोति–' (वा० ३।१।२६) इति णिच् । यद्वा इतेन ज्ञानेन क्षीते । 'प्रातिपदिकाद्धात्वर्थे' (चु० सू०) इति णिच् । बाहुलकादरः । यद्वा 'इ' इत्यव्ययमपकर्षे । 'द्विवचन–' (५।३।५७) इति तरप् । द्रव्यप्रकर्षत्वाचामुः ॥ (१०) ॥*॥ दश **'नीचस्य'** ॥

**भृत्ये दासेयदासेरदासगोप्यकचेटकाः ।**
**नियोज्यकिंकरप्रैष्यभुजिष्यपरिचारकाः ॥ १७ ॥**

**भ्रिति** ॥ भ्रियते । 'भृञ् भरणे' (भ्वा० उ० अ०) । 'भृञोऽसंज्ञायाम्' (३।१।११२) इति क्यप् । **'भृत्यः** दासे भृतौ **भृत्या'** इति विश्वः ॥ (१) ॥*॥ दास्या अपत्यम् । 'द्व्यचः' (४।१।१२१) इति ढक् ॥ (२) ॥*॥ 'क्षुद्राभ्यो' वा' (४।१।१३१) इति ढ्रक् च ॥ (३) ॥*॥ दंसयति दंस्यते वा । 'दसि दीप्तौ' (चु० प० से०) । 'दंसेष्टटनौ न आ च' (उ० ५।१०) । यद्वा दास्यते । 'दासृ दाने' (भ्वा० उ० से०) । घञ् (३।३।१८) ॥*॥ **(दाश,** इति) तालव्यान्तपक्षे 'दंशेश्च' (उ० ५।११) ॥ (४) ॥*॥ गुप्यते । 'गुपू रक्षणे' (भ्वा० प० से०) । ण्यत् (३।१।१२४) । स्वार्थे कन् (ज्ञापि० ५।४।५) गोप्यं कायति वा । 'कै शब्दे' (भ्वा० प० अ०) । 'आतोऽनुप–' (३।२।३) इति कः ॥ (५) ॥*॥ चेट्यते । 'चिट परप्रेष्ये' (भ्वा० प० से०) । कृञादिभ्यो वुन् (उ० ५।३५) ॥ (६) ॥*॥ नियुज्यते । 'युजिर् योगे' (रु० उ० अ०) । ण्यत् (३।१।१२४) । 'प्रयोज्यनियोज्यौ शक्यार्थे' (७।३।६८) इति साधुः ॥ (७) ॥*॥ **'किंचित्'** कुत्सितं वा करोति । 'दिवाविभा–' (३।२।२१) इत्यत्र 'किंयत्तद्बहुषु' इति (वार्तिकेन) अच् ॥ (८) ॥*॥ प्रेष्यते । 'इष गतौ' (दि० प० से०) आभीक्ष्ण्ये (क्र्या० प० से०) वा । ण्यत् (३।१।१२४) । 'प्रादूहो–' (वा० ६।१।८९) इति वृद्धिः ॥ (९) ॥*॥ भुङ्क्ते स्वाम्युच्छिष्टम् । भुज्यते वा । 'रुचिभुजिभ्यां किष्यन्' (उ० ४।१७९) ॥ (१०) ॥*॥ परिचरति । 'चर गत्यादौ' (भ्वा० प० से०) । ण्वुल् (३।१।१३३) ॥ (११) ॥*॥ एकादश **'दासस्य'** ॥

**पराचितपरिस्कन्दपरजातपरैधिताः ।**

**पेति** ॥ परेणाचितः । 'चिञ् चयने' (स्वा० उ० अ०) ।

क्तः (३।२।१०२) ॥ (१) ॥*॥ परिस्कन्दति। 'स्कन्दिर् गत्यादौ' (भ्वा० प० अ०)। पचाद्यच् (३।१।१३४)। 'परेश्च' (८।३।७४) इति वा षत्वम् ॥ (२) ॥*॥ परस्माज्जातः। परपोषितत्वात् ॥*॥ **'पराजितः'** इति पाठे परैराजीयते स्म। 'जि अभिभवे' (भ्वा० प० अ०)। क्तः (३।२।१०२)। यद्वा परेषामाजः क्षेपणं जातोऽस्य। तारकादिः (५।२।३६) ॥ (३) ॥*॥ परैरेधितः संवर्धितः ॥ (४) ॥*॥ चत्वारि **'औदासीन्येन परपोषितस्य'** ॥

**मन्दस्तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः॥**

**मेति** ॥ मन्दते स्वपिति। 'मदि स्तुत्यादौ' (भ्वा० आ० से०)। अच् (३।१।१३४)। **'मन्दो**ऽतीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः। अल्पे च त्रिषु पुंसि स्याद्धस्तिजात्यन्तरे शनौ' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ तुन्दमुदरं परिमार्ष्टि। 'मृजू शुद्धौ' (अ० प० से०)। 'तुन्दशोकयोः—' (३।२।५) इति कः ॥ (२) ॥*॥ न लसति। 'लस श्लेषणे' (भ्वा० प० से०)। अच् (३।१।१३४) ॥ (५) ॥*॥ स्वार्थे ष्यञ् (वा० ५।१।१२४) ॥ (३) ॥*॥ शीतं करोति। 'शीतोष्णाभ्यां कारिणि' (५।२।७२) इति कन् ॥ (४) ॥*॥ **'उष्णो** ग्रीष्मे पुमान्दक्षाशीतयोरन्यलिङ्गकः' (इति मेदिनी)। उष्णो दक्षः। उष्णादन्यः ॥ (६) ॥*॥ षट् **'अलसस्य'** ॥

**दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च।**

**देति** ॥ दक्षते। 'दक्ष वृद्धौ शीघ्रार्थे च' (भ्वा० आ० से०) अच् (३।१।१३४)। **'दक्षः** प्रजापतौ रुद्रवृषभे कुक्कुटे पटौ। द्रुमे **दक्षा** तु मेदिन्याम्' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ चतति, चत्यते वा। 'चते याचने' (भ्वा० उ० से०) 'मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्।' (उ० १।३८) ॥ (२) ॥*॥ पेशनम्। 'पिश समाधौ' (तु० प० से०)। घञ् (३।३।१८)। पेशं लाति। कः (३।२।३)। पेशोऽस्यास्ति। सिध्मादित्वात् (५।२।९७) लज् वा ॥ (३) ॥*॥ पाटयति। णिजन्तः। 'फलिपाटि—' (उ० १।१८) इति साधुः। **'पटुर्**दक्षे च नीरोगे चतुरेऽप्यभिधेयवत्। पटोले तु पुमान्क्लीबे छत्रालवणयोरपि' (इति मेदिनी) ॥ (४) ॥*॥ सुष्ठु उत्थानमुद्योगोऽस्य ॥ (५) ॥*॥ उष्णत्वं शीघ्रकारित्वमस्यास्ति। अर्शआद्यच् (५।२।१२७)। **'उष्णो** ग्रीष्मे पुमान्दक्षशीतयोरन्यलिङ्गकः' (इति मेदिनी) ॥ (६) ॥*॥ षट् **'दक्षस्य'** ॥

**चण्डालप्लवमातङ्गदिवाकीर्तिजनंगमाः ॥ १९ ॥**
**निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः।**

**चेति** ॥ चण्डते। 'चडि कोपे' (भ्वा० आ० से०)। 'पतिचण्डिभ्यामालञ्' (उ० १।११७) ॥ (१) ॥*॥ प्लवते। 'प्लुङ् गतौ' (भ्वा० आ० अ०)। अच् (३।१।१३४) **'प्लवः** प्लक्षे प्लुतौ कपौ। शब्दे कारण्डवे म्लेच्छजातौ भेककमेलयोः। क्रमनिम्नमहीभागे कुलके जलवायसे। जलान्तरे **प्लवं** गन्धतृणे मुस्तकमित्यपि' इति हैमः। **'प्लवः** स्यात्प्लवने भेले भेकेऽवौ श्वपचे कपौ। जलकाके च कुलके प्रवणे पर्कटीद्रुमे। कारण्डवाख्यविहगे शब्दे प्रतिगतौ पुमान्)। कैवर्तीमुस्तके गन्धतृणेऽपि स्यान्नपुंसकम्' (इति मेदिनी) ॥ (२) ॥*॥ मतङ्गस्यापत्यम्। शिवादित्वात् (४।१।११३) अण्। मतङ्गस्यायम्, वा। 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (३) ॥*॥ दिवा कीर्तिरस्य।—दिवा अकीर्तिरस्य—इति मुकुटः ॥ (४) ॥*॥ अधार्मिकाञ्जनान् गच्छति, जनेभ्यो गच्छति, वा। 'गमश्च' (३।२।४७) इति खच् ॥ (५) ॥*॥ निषीदति पापमस्मिन्। 'षद्लृ विशरणादौ' (भ्वा० प० से०)। 'हलश्च' (३।३।१२१) इति घञ्। **'निषादः** स्वरभेदेऽपि चण्डाले धीवरान्तरे' (इति मेदिनी) ॥ (६) ॥*॥ श्वानं पचति। अच्[१] (३।१।१३४) ॥*॥ न्यङ्क्वादित्वात् (ग० ७।३।५३) कुत्वे **'श्वपाकः'** अपि ॥ (७) ॥*॥ ग्रामादेरन्ते वसति। 'सुप्यजातौ—' (३।२।७८) इति णिनिः। 'शयवास—' (६।३।१८) इत्यलुक् ॥ (८) ॥*॥ स्वार्थे अञ्[२] (५।३।११७)। **'चाण्डालः'** अपि।—प्रज्ञाद्यणि चाण्डालः—इत्येके। तन्न। 'कुलालवरुडकर्मारनिषादचण्डालमित्रामित्रेभ्यश्छन्दसि' (५।४।३६ सूत्रे) इति वार्तिकेन छन्दस्यण्विधानाल्लोके तदभावात् ॥ (९) ॥*॥ पुत् कुत्सितं पुष्यं वा (३।१।१३४)। मूलविभुजादिकः (वा० ३।२।५) वा। पृषोदरादिः (६।३।१०९) ॥*॥ **'पुष्कसी** कालिकानील्योः' **'पुष्कसः** श्वपचेऽधमे' इति (विश्वे) दर्शनात्पुष्कसोऽपि ॥*॥ (हैमे तु **'बुक्सी—बुक्कस'**—शब्दावुपलभ्येते) ॥ (१०) ॥*॥ दश **'चाण्डालस्य'** ॥

**भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः ॥ २० ॥**

**भयिति** ॥ किरातादयस्त्रयो म्लेच्छजातयश्चण्डालभेदाः। यत्तु—म्लेच्छशब्दवाच्याः—इति मुकुटः। तन्न। जातिपदवैयर्थ्यप्रसङ्गात्। 'म्लेच्छाः' इत्येव वक्तुं युक्तत्वात् ॥*॥ किरति। 'कॄ विक्षेपे' (तु० प० से०)। 'इगुपध—' (३।१।१३५) इति कः। अतति। 'अत सातत्यगमने' (भ्वा० प० से०)। अच् (३।१।१३४)। किरश्चासावदश्च। **'किरातो** म्लेच्छभेदे स्याद्भूनिम्बेऽल्पतनावपि। स्त्रियां चामरवाहिन्यां

१—यद्यपि 'कर्मण्यण्' (३।२।१) सूत्रभाष्ये 'अनुपपदस्यावकाशः। पचतीति पचः। कर्मोपपदस्यावकाशः। कुम्भकारः। इहोभयं प्राप्नोति। ओदनपाचः कर्मोपपदो भवति विप्रतिषेधेन' इत्युक्तम्। तथापि पचादिगणे 'श्वपच' इति प्रतिपदोक्तोपादानादणं बाधित्वाजेव भवति ॥ २—अस्य तु बहुत्वे 'चण्डालाः' इत्येव रूपम्। 'चाण्डालाः' इति रूपे तु 'तस्येदम्' (४।३।१२०) इत्याद्यण् बोध्यः। छान्दसा अपि क्वचिल्लोके 'सग्धिः' इत्यादय इव प्रयुज्यन्ते इति वा बोध्यम् ॥

कुट्टनीदुर्गयोरपि' ( इति मेदिनी ) ॥ (१) ॥*॥ शवति । 'शव गतौ' ( भ्वा० प० से० ) । बाहुलकादरः । शवं राति वा । कः (३।२।३)। '**शवरो** म्लेच्छभेदे च पानीये शंकरेऽपि च' इति विश्वः ( मेदिनी ) ॥ (१) ॥*॥ पोलति 'पुल महत्त्वे' ( भ्वा० प० से० ) । 'कुणिपुलिभ्यां किन्दच्' ( उ० ४।८५ ) इति मुकुटः । '**पुलिन्दः** कथ्यते म्लेच्छे पुलिन्देऽपि निगद्यते' इति तारपालः । 'पुलिन्दः **पञ्चशवरः**' इति रत्नकोषः ॥ (१) ॥*॥ म्लेच्छति । 'म्लेच्छ अव्यक्ते शब्दे' ( भ्वा० प० से० ) अच् ( ३।१।१३४ ) म्लेच्छानां जातयोऽवान्तरभेदाः । 'गोमांसभक्षको यस्तु लोकबाह्यं च भाषते । सर्वाचारविहीनोऽसौ म्लेच्छ इत्यभिधीयते' । सूतसंहितायामपि । 'ब्राह्मण्यां वैश्यतो जातः क्षत्ता भवति नामतः । अस्यामनेन चौर्येण म्लेच्छो विप्रात्प्रजायते ॥' इति ॥

**व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः ।**

**व्येति** ॥ विध्यति । 'व्यध ताडने' ( दि० प० अ० ) । 'श्याद्व्यधा-' ( ३।१।१४१ ) इति णः ॥ (१) ॥*॥ मृगवधेनाजीवति । 'इगुपध-' ( ३।१।१३५ ) इति कः ॥ (२) ॥*॥ मृगान् वधार्थं याति । 'या प्रापणे' ( अ० प० अ० ) । 'मृगय्वादयश्च' ( उ० १।३७ ) इति कुः । '**मृगयुः** पुंसि गोमायौ व्याधे च परमेष्ठिनि' ( इति मेदिनी ) ॥ (३) ॥*॥ लुभ्यते स्म । 'लुभ गार्ध्ये' ( दि० प० से० ) । क्तः ( ३।२।१०२ ) । स्वार्थे ( ज्ञापि० ५।४।५ ) । संज्ञायाम् ( ५।३।७५ ) वा कन् ॥ (४) ॥*॥ चत्वारि '**व्याधस्य**' ॥

**कौलेयकः सारमेयः कुक्कुरो मृगदंशकः ॥ २१ ॥**
**शुनको भषकः श्वा स्यात्**

**काविति** ॥ कुले भवः । 'कुलकुक्षि-' ( ४।२।९६ ) इति ढकञ् । '**कौलेयकः** सारमेये कुलीने' इति हैमः ( मेदिनी ) ॥ (१) ॥*॥ सरमाया अपत्यम् । 'स्त्रीभ्यो ढक्' ( ४।१।१२० ) ॥ (२) ॥*॥ कोकते । 'कुक आदाने' ( भ्वा० आ० से० ) । क्विप् ( ३।२।१७८ ) । कुरति । 'कुर शब्दे' ( तु० प० से० ) । कः ( ३।१।१३५ ) । कुक् चासौ कुरश्च । '**कुक्कुरः** सारमेये ना ग्रन्थिपर्णे नपुंसकम्' इति विश्वः ( मेदिनी ) ॥ (३) ॥*॥ मृगान् दशति । 'दंश दशने' ( भ्वा० प० अ० ) । अण् ( ३।२।१ ) । कन् ( ज्ञापि० ५।४।५ ) ॥ (४) ॥*॥ शुनति । 'शुन गतौ' ( तु० प० से० ) क्वुन् ( उ० २।३२ ) ॥ (५) ॥*॥ भषति । 'भष पैशुन्ये' ( भ्वा० प० से० ) क्वुन् ( उ० २।३२ ) ॥ (६) ॥*॥ श्वयति । 'टु ओ श्वि गतिवृद्ध्योः' ( भ्वा० प० से० ) । 'श्वन्नुक्षन्-' ( उ० १५९ ) इति साधुः ॥ (७) ॥*॥ 'कुक्कुरस्तु **शुनि श्वानः कपिलो मण्डलः शुनः**' इति वाचस्पतिः ॥*॥ सप्त '**शुनकस्य**' ॥

**अलर्कस्तु स योगितः ।**

**अलेति** ॥ अलम् अर्क्यते । 'अर्क स्तवने' ( चु० प० से० ) । अर्च्यते वा । 'अर्च पूजायाम्' ( भ्वा० प० से० ) । घञ् ( ३।३।१९ ) । शकन्ध्वादिः ( वा० ६।१।९४ ) । '**अलर्को** धवलार्के स्याद्योगोन्मादितकुक्कुरे' इति विश्वः ( मेदिनी ) ॥ (१) ॥*॥ योगो मत्ततोपायो जातोऽस्य । तारकादित्वात् ( ५।२।३६ ) इतच् । यद्वा योग्यन्ते स्म । 'युगि वर्जने' ( भ्वा० प० से० ) । ण्यन्तः । अनित्यत्वान्न नुम् । क्तः ( ३।२।१०२ ) ॥*॥ एकं '**मत्तशुनः**' ॥

**श्वा विश्वकद्रुर्मृगयाकुशलः**

**श्वेति** ॥ विश्वकं सर्वं द्रवति । 'द्रु गतौ' ( भ्वा० प० अ० ) । मितद्र्वादित्वात् ( वा० ३।२।१८० ) डुः । यद्वा विश्वं कन्दति । 'कदि आह्वाने' ( भ्वा० प० से० ) । जत्वादिः ( उ० ४।१०२ ) । '**विश्वकद्रुस्त्रिषु** खले ध्वानाखेटशुनोः पुमान्' ( इति मेदिनी ) ॥ (१) ॥*॥ मृगयायां कुशलः ॥*॥ एकम् '**मृगयाकुशलशुनः**' ॥

**सरमा शुनी ॥ २२ ॥**

**सेति** ॥ सरति । 'सृ गतौ' ( भ्वा० प० अ० ) । बाहुलकादमः । ( '**सरमा** कुक्कुरीदेवशुन्योः स्याद्राक्षसीभिदि' इति मेदिनी ) ॥ (१) ॥*॥ शुनी गौरादिः ( ४।१।४१ ) ॥ (२) ॥*॥ द्वे '**शुन्याः**' ॥

**विट्चरः सूकरो ग्राम्यः**

**वीति** ॥ विषं विष्ठां चरति । 'चर गत्यादौ' ( भ्वा० प० से० ) । अच् ( ३।१।१३४ ) । मूलविभुजादिकः ( वा० ३।२।५ ) वा । विषश्चरो वा ॥ (१) ॥*॥ एकम् '**ग्राम्यसूकरस्य**' ॥

**वर्करस्तरुणः पशुः ।**

**वेति** ॥ वर्कते । 'वृक आदाने' ( भ्वा० आ० से० ) । बाहुलकादरन् । '**वर्करः** परिहासे स्याच्छागे युवपशावपि' इति विश्वः ( मेदिनी ) । '**वर्करो** मेषशावकः' इति रक्षितः ॥ (१) ॥*॥ एकम् '**तरुणपशुमात्रस्य**' ॥

**आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् २३**

**आच्छविति** ॥ आच्छिद्यन्तेऽत्र । ल्युट् ( ३।३।११७ ) । पृषोदरादिः ( ६।३।१०९ ) ॥ (१) ॥*॥ मृगा व्ययन्तेऽत्र । 'व्यय गतौ' ( भ्वा० उ० से० ) । 'अन्येभ्योऽपि-' ( वा० ३।२।१०१ ) इति डः ॥ (२) ॥*॥ आखिट्यतेऽत्र । 'खिट त्रासे' ( भ्वा० प० से० ) । 'हलश्च' ( ३।३।१२१ ) इति घञ् ॥ (३) ॥*॥ मृग्यन्तेऽत्र 'मृग अन्वेषणे' ( चु० आ० से० ) । '-परिचर्यापरिसर्यामृगया-' ( वा० ३।३।१०१ ) इति साधुः ॥ (४) ॥*॥ चत्वारि '**शिकार**' इति ख्यातस्य ॥

**दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा कुरङ्गकः ।**

**देति** ॥ दक्षिणेऽरुरस्य ॥*॥ दक्षिणे ईर्मस्य । 'दक्षिणेर्मा लुब्धयोगे' ( ५।४।१२६ ) इति साधुः ॥ (१) ॥*॥ एकम् '**दक्षिणव्रणस्य**' ॥

**चौरैकागारिकस्तेनदस्युतस्करमोषकाः ॥ २४ ॥**
**प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः ।**

**चाविति** ॥ चोरणम् । 'चुर स्तेये' ( चु० प० से० ) ।

'अ प्रत्ययात्' ( ३।३।१०२ )। संज्ञापूर्वकत्वान्न गुणः। चुरा शीलमस्य। 'छत्रादिभ्यो णः' ( ४।४।६२ )। **'चोरः** पाटच्चरेऽपि स्याच्चौरपुष्पौषधावपि' इति विश्वः ( मेदिनी ) ॥ पचाद्यचि **'चौरः'** अपि ॥ (१) ॥*॥ एकमसहायमगारं प्रयोजनमस्य। 'ऐकागारिकट् चौरे' ( ५।१।११३ ) इति साधुः ॥ (२) ॥*॥ स्तेनयति। 'स्तेन चौर्ये' ( चु० उ० से० )। पचाद्यच् ( ३।१।१३४ ) ॥ (३) ॥*॥ दस्यति। 'दसु उपक्षये' ( दि० प० से० )। '–जनिमनिदसिभ्यो युः' ( उ० ३।२० )। 'अनुनासिकयोः' इत्युक्तत्वान्नानः ( ७।१।१ )। **'दस्युश्चौरे** रिपौ पुंसि' इति हैमः ( मेदिनी ) ॥ (४) ॥*॥ तत् करोति 'किंयत्तद्बहुषु' ( वा० ३।२।२१ ) इत्यच्। 'तद्बृहतोः करपत्योः' ( ग० ६।१।१५७ ) इति सुट्तलोपौ ॥ (५) ॥*॥ मुष्णाति। 'मुष स्तेये' ( क्र्या० प० से० )। ण्वुल् ( ३।१।१३३ ) ॥ (६) ॥*॥ प्रतिरोद्धुं शीलमस्य। 'रुधिर् आवरणे' ( रु० उ० अ० )। 'सुपि–' ( ३।२।७८ ) इति णिनिः ॥ (७) ॥*॥ परान् आस्कन्तुं शीलमस्य। 'स्कन्दिर् गत्यादौ' ( भ्वा० प० अ० )। 'सुपि–' ( ३।२।७८ ) इति णिनिः ॥ (८) ॥*॥ पाटयंश्चरति। अच् ( ३।१।१३४ )। पृषोदरादिः ( ६।३।१०९ ) ॥*॥ 'चौरजीर्णपटयोः **पटच्चरः'** इति नामानुशासनम् ॥ (९) ॥*॥ मल्यते। ('मल धारणे') भ्वा० आ० से० )। इन् ( उ० ४।११८ )। मलिं धृतं म्लोचति। 'म्लुच स्तेये' ( भ्वा० प० से० )। मूलविभुजादिकः ( वा० ३।२।५ )। **'मलिम्लुचो** मांसभेदे चौरज्वलनयोः पुमान्' इति विश्वः ( मेदिनी ) ॥ (१०) ॥*॥ दश **'चोरस्य'** ॥

**चौरिका स्तैन्यचौर्ये च स्तेयम्**

**चाविति** ॥ चौरस्य भावः कर्म वा। मनोज्ञादित्वात् ( ५।१।१३३ ) वुञ् ॥ (१) ॥*॥ स्तेनस्य भावः कर्म वा। 'स्तेनाद्यन्नलोपश्च' ( ५।१।१२५ ) इत्यत्र 'स्तेनात्' इति योगविभागात् ष्यञ् ॥ (२) ॥*॥ ( यन्नलोपौ ) ॥ (४) ॥*॥ चौरस्य कर्म ष्यञ् ( ५।१।१२४ ) ॥ (३) ॥*॥ 'स्तेयं स्तैन्यं च चौर्यं स्याच्चौरिकाचोरिके स्त्रियाम्' इति वाचस्पतिः ॥*॥ चत्वारि **'चोरकर्मणः'** ॥

**लोप्त्रं तु तद्धनम् ॥ २५ ॥**

**लविति** ॥ लुप्यते। 'लुप्लृ छेदने' ( तु० उ० से० )। ष्ट्रन् ( उ० ४।११५९ ) ॥*॥ लूञः ष्ट्रनि 'लोत्रम्' अपि। **'लोत्रमश्रुणि** चोरिते' इति विश्वः ॥ (१) ॥*॥ तस्य चोरस्य धनम् ॥*॥ एकम् **'स्तेयद्रव्यस्य'** ॥

**वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम्।**

**वीति** ॥ वितंसते। 'तसि अलंकारे' ( चु० प० से० )। घञ् ( ३।३।१९ )। 'उपसर्गस्य–' ( ६।३।१२२ ) इति दीर्घः। **'वीतंसो** बन्धनोपाये मृगाणामपि पक्षिणाम्। तेषामेव च विश्वासहेतोः प्रावरणेऽपि च' इति विश्वः ( मेदिनी ) ॥ (१) ॥*॥ एकं **'मृगादिबन्धनसाधनस्य'** ॥

**उन्माथः कूटयन्त्रं स्यात्**

**विति** ॥ उन्मथ्यतेऽनेन। 'मथे विलोडने' ( भ्वा० प० से० )। 'हलश्च' ( ३।३।१२१ ) इति घञ्। 'उन्माथः कूटयन्त्रे स्यान्मारणे घातके पुमान्' ( इति मेदिनी ) ॥ (१) ॥*॥ कूटस्वरूपं यन्त्रम् ॥ (२) ॥*॥ द्वे **'मृगादिबन्धनयन्त्रस्य'** ॥

**वागुरा मृगबन्धनी ॥ २६ ॥**

**वेति** ॥ अवा गुरते। 'गुरी हिंसायाम्' ( तु० प० से० )। 'इगुपध–' ( ३।१।१३५ ) इति कः। 'वष्टि भागुरि–' इत्यकारलोपः ॥ (१) ॥*॥ मृगो बध्यतेऽनया। 'बन्ध बन्धने' ( क्र्या० प० अ० )। 'करणा–' ( ३।३।११७ ) इति ल्युट् ॥ (२) ॥*॥—वातेर्भद्रादित्वाद्रण् गुक् चागमः—इति मुकुटस्त्वपाणिनीयः ॥*॥ द्वे **'जालविशेषस्य'** ॥

**शुल्वं वराटकः स्त्री तु रज्जुस्त्रिषु वटी गुणः।**

**श्विति** ॥ शुल्व्यते, शुल्वयति वा। 'शुल्व विसर्गे' ( चु० प० से० ) ण्यन्तः। 'एरच्' ( ३।३।५६ )। अच् ( ३।१।१३४ ) वा 'रज्जुः शुल्वा वराटो ना' इति रत्नकोशात्स्त्र्यपि। **'शुल्वं** ताम्रे यज्ञकर्मण्याचारे जलसंनिधौ' इति विश्वः ( मेदिनी ) ॥*॥ स्वामी तु—**'सुम्यं वटाकरः'**—इति पठति। सु पूजितं मीयते। 'मीङ् गत्याम्' ( दि० आ० अ० )। 'एरच्' ( ३।३।४६ )। बाहुलकाद्यण्। सुमे पुष्पे साधु। 'तत्र साधुः' ( ४।४।९८ ) इति यत् ॥ (१) ॥*॥ वटं वेष्टनमाकरोति। पचाद्यच् ( ३।१।१३४ ) ॥ (२) ॥*॥ सृज्यते। 'सृज विसर्गे' ( तु० उ० अ० )। 'सृजेरसुम् च' ( उ० १।१५ ) चात्सलोपः ॥—सृजेः क्रुसुगागमश्च—इत्यादिमुकुटस्त्वपाणिनीयः। 'रज्जुर्वेण्यां गुणे योषित्' इति विश्वमेदिन्यौ ॥ (३) ॥*॥ वटति। 'वट वेष्टने' ( भ्वा० प० से० )। अच् ( ३।१।१३४ )। गौरादिः ( ४।१।४१ )। वट्यते वा। 'खनो घ च' ( ३।३।१२५ ) इति घः। **'वटी** त्रिषु गुणे पुंसि स्यान्न्यग्रोधकपर्दयोः' ( इति मेदिनी ) ॥ (४) ॥*॥ गुण्यते। 'गुण आमन्त्रणे' ( चु० उ० से० ) अदन्तः। 'एरच्' ( ३।३।५६ ) **'गुणो** मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये। त्यागे शौर्यादिसंध्यादिसत्त्वाद्यावृत्तिरज्जुषु। शुक्लादावपि वर्त्यां च' ( इति मेदिनी ) ॥ (५) ॥*॥ पञ्च **'रज्जोः'** ॥

**उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः ॥ २७ ॥**

**उद्धेति** ॥ उद्घाट्यते, अनेन वा। 'घट संघाते' ( भ्वा० उ० से० ) ण्यन्तः। ल्युट् ( ३।३।११३,११७ ) ॥ (१) ॥*॥ घटीनां यन्त्रम् ॥ (२) ॥*॥ प्रहेः कूपात्। सलिलमुद्वाह्यतेऽनेन ॥*॥ द्वे **'अरट'** इति ख्यातस्य ॥

**पुंसि वेमा वापदण्डः**

**पुंसीति** ॥ वयत्यनेन। 'वेञ् तन्तुसंताने' ( भ्वा० उ० अ० ) 'वेञः सर्वत्र' ( उ० ४।१५० ) इति मनिन् ॥ (१) ॥*॥ वपनम्। 'डुवप्' ( भ्वा०उ०अ० )। घञ् ( ३।३।१८ )। वापस्य दण्डः ॥*॥ **'वायदण्डः'** इति क्वचित् पाठः। तत्र

वेञो भावे घञ् । 'आतो युक्' (७।३।३३) । वायस्य दण्डः ॥ (२) ॥*॥ द्वे **'वस्त्रव्यूतिदण्डस्य'** ॥

**सूत्राणि नरि तन्तवः ।**

**स्विति** ॥ सूत्र्यते । 'सूत्र वेष्टने' (चु० उ० से०) अदन्तः । 'एरच्' (३।३।५६) । सीव्यते, अनेन वा । 'षिवु तन्तुसंताने' । (दि० प० से०) । 'सिविसूच्योष्टेरू च' (उ० ४। १६३) ष्वात् कित् ष्ट्रन् प्रत्ययः । **'सूत्रं** तु सूचनाकारिग्रन्थे तन्तुव्यवस्थयोः' इति हैमः ॥ (१) ॥*॥ नरि पुंसि ॥*॥ तन्यते । 'तनु विस्तारे' (त० उ० से०) । 'सितनि–' (उ० १।६९) इति तुन् ॥*॥ **'सूत्रतन्तुः'** इति हारावल्याः संहतोऽपि ॥ (२) ॥*॥ द्वे **'सूत्राणाम्'** ॥

**वाणिर्व्यूतिः स्त्रियौ तुल्ये**

**वेति** ॥ वाणनम् । 'वण शब्दे' चुरादिः । 'अच इः' (उ० ४।१३९) ॥ (१) ॥*॥ विशिष्टा ऊतिः । वेञः 'ऊतियूति–' (३।३।९७) इत्यादिना क्तिनि निपातितः ॥ (२) ॥*॥ द्वे **'वस्त्रादिवानस्य'** ॥

**पुस्तं लेप्यादिकर्मणि ॥ २८ ॥**

**पुविति** ॥ पुस्त्यते । 'पुस्त आदरादौ' (चु० प० से०) णिच् । 'एरच्' (३।३।५६) ॥ (१) ॥*॥ 'मृदा वा दारुणा वाथ वस्त्रेणाप्यथ चर्मणा । लोहरत्नैः कृतं वापि पुस्तमित्यभिधीयते' । लेप्यमादिर्यस्य । तच्च तत्कर्म च । आदिना काष्ठपुत्तलिकादि ॥*॥ एकम् **'वस्त्रादिलेप्यस्य'** ॥

**पञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता ।**

**पेति** ॥ पञ्चभिर्वर्णैरल्यते । 'अल भूषणादौ' (भ्वा० प० से०) । घञ् (३।३।१९) । स्वार्थे कन् (ज्ञापि० ५।४।५) । टाप् (४।१।४) । 'प्रत्ययस्थात्–' (७।३।४४) 'इतीत्वम्' । 'संज्ञायाम्' (३।३।१०९) इति ण्वुल् वा । संज्ञापूर्वकत्वान्न वृद्धिः ॥*॥ **'पाञ्चालिका'** इति पाठे पञ्चालदेशे भवा । 'जनपदतदवध्योश्च' (४।२।१२४) इति वुञ् । आदिवृद्धिः (७।२।११७) । **'पाञ्चालिका** स्त्रियां वस्त्रपुत्रिकागीतिभेदयोः' (इति मेदिनी) ॥ (१) ॥*॥ पुत्रीव । 'इवे–' (५।३। ९५) इति कन् । यावादित्वात् (५।४।२९) वा । **'स्यात्पुत्रिका** पुत्तलिकादुहित्रोर्यावतूलिके । ना पुत्रे शरभे धूर्ते शैलवृक्षप्रभेदयोः' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ आदिना काष्ठमृच्छिलादिकृता ॥*॥ द्वे **'लेप्यादेः'** ॥

**पिटकः पेटकः पेटा मञ्जूषा**

**पीति** ॥ पेटति । 'पिट संघाते' (भ्वा० प० से०) । क्वुन् (उ० २।३२) । **'पिटकस्त्रिषु** विस्फोटे मञ्जूषायां पुनः पुमान्' (इति मेदिनी) ॥ (१) ॥*॥ ण्वुल् (३।१।१३३) । **'पेटकः** पुस्तकादीनां मञ्जूषायां कदम्बके' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ अच् (३।१।१३४) ॥*॥ **'पेडा'** इति मुकुटः । तत्र पिण्डते । 'पिडि संघाते' (भ्वा० आ० से०) । अच् (३।१।१३४) । अनित्यत्वान्न नुम् ॥*॥ **'पीडा'** इति स्वामी । तत्र पीडयति । 'पीड अवगाहने' (चु० प० से०) । अच् (३।१।१३४) ॥ (३) ॥*॥ मज्जति, अत्र वा । 'टुमस्जो शुद्धौ' (तु० प० अ०) । 'मस्जेर्नुम् च' (उ० ४।७७) इत्यूषन् । यत्तु—द्विजकारः इति मुकुटः । तन्न । 'मस्जेरन्त्यात्पूर्वो वा नुम्' (१।१।४७ सूत्रे) इति वार्तिकविरोधात् ॥ (४) ॥*॥ चत्वारि **'वस्त्रालङ्कारादिस्थापनमञ्जूषायाः'** **'पेटी'** इति ख्यातायाः । मुकुटस्तु—आद्यद्वयम् **'झांपी'** इति ख्यातायाः । अन्त्यद्वयं **'मञ्जूषा'** इति ख्यातायाः—इत्याह ॥

**अथ विहंगिका ॥ २९ ॥**

**भारयष्टिः**

**अथेति** ॥ विहंगस्य प्रतिकृतिः । 'इवे प्रतिकृतौ' (५।३। ९६) इति कन् । विहायसा गच्छति वा । 'गमश्च' (३।२। ४७) इति खच् । 'विहायसो विह च' 'खच डिद्वाच्यः' (वा० ३।२।३८) । यावादित्वात् (५।४।२९) कन् ॥*॥ मुकुटस्तु—**'विहंगमा'**—इति पठति ॥ (१) ॥*॥ भारस्य यष्टिः ॥ (२) ॥*॥ द्वे **'शिक्याधारलगुडस्य'** । **'कावडि'** इति ख्यातायाः ॥

**तदालम्बि शिक्यं काचः**

**तेति** ॥ तामालम्बितुं शीलमस्य । 'लबि अवस्रंसने' (भ्वा० आ० से०) । 'सुपि–' (३।२।७८) इति णिनिः ॥ (१) ॥*॥ स्रंसतेऽस्मात् । 'स्रंसु अधःपतने' (भ्वा० आ० से०) । 'स्रंसेः शिः कुट् किच्च' (उ० ५।१६) इति यत्, धातोः शिरादेशो यतः कुट् ।—शक्नोति वोढुम् । अघ्न्यादिः (उ० ४।११२) इति मुकुटस्त्वेतत्सूत्रादर्शनमूलकः । कच्यतेऽत्र । 'कच बन्धे' (भ्वा० आ० से०) । 'हलश्च' (३। ३।१२१) इति घञ् । **'काचः** शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ द्वे **'शिक्यस्य'** ॥

**अथ पादुका ।**

**पादूरुपानत्स्त्री**

**अथेति** ॥ पद्यतेऽनया । 'पद गतौ' (दि० आ० अ०) । 'णित्कशिपद्यर्तेः' (उ० १।८५) इत्यूः । स्वार्थे कन् (ज्ञापि० ५।४।५) वा ॥ (१) ॥*॥ (२) ॥*॥ पादं उपनह्यते, पादमुपनह्यति वा । 'णह बन्धने' (दि० उ० अ०) । संपदादित्वात् (वा० ३।३।१०८) 'क्विप् च' (३।२।७६) इति वा क्विप् । 'नहिवृति–' (६।३।११६) इति दीर्घः ॥ (३) ॥*॥ त्रीणि **'पादत्राणस्य'** ॥

**सैवानुपदीना पदायता ॥ ३० ॥**

**सैवेति** ॥ पदस्यानु । 'यस्य चायामः' (२।१।१६) इत्यव्ययीभावः । अनुपदं पादायामप्रमाणा बद्धा । 'अनुपद-

१—ण्वुलि वृद्धावपि धात्वकारस्य सवर्णदीर्घेण क्षत्यभावादत्रास्य लेखोपयोगो दुर्ज्ञानः ।

१—भाष्ये तु 'अन्त्यात्पूर्वो मस्जेर्मिनू–' इति पाठः । अयं तु सिद्धान्तकौमुदीस्थः ॥

सर्वा–' (५।२।९) इति खः॥ (१)॥*॥ एकम् **'विस्तृतपादत्राणस्य'**॥

**नध्री वर्ध्री वरत्रा स्यात्**

**नेति**॥ नह्यतेऽनया। 'णह बन्धने' (दि० उ० अ०)। 'दाम्नी–' (३।२।१८२) इति ष्ट्रन्॥ (१)॥*॥ वर्धते। 'वृधु वर्धने' (भ्वा० आ० से०)। 'वृधिवपिभ्यां रन्' (उ० २।२७)। गौरादित्वात् (४।१।४१) ङीष्॥ (२)॥*॥ व्रियतेऽनया। 'वृञ् वरणे' (स्वा० उ० से०)। 'वृञश्चित्' (उ० ३।१०७) इत्यत्रन्॥ (३)॥*॥ त्रीणि **'चर्ममयरज्जोः'**॥

**अश्वादेस्ताडनी कशा।**

**अश्वेति**॥ ताड्यतेऽनया। 'तड आघाते' (चु० प० से०) ण्यन्तः। ल्युट् (३।३।११७)॥*॥ कशति। 'कश शब्दे' ( )। 'कश गतिशासनयोः' (अ० आ० से०) वा। अनित्यो नुम्। अच् (३।१।१३४)॥ (१)॥*॥ आदिना उष्ट्रगर्दभचौरादिग्रहः॥*॥ एकम् **'प्रतोदस्य'**॥

**चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी॥३१॥**

**चेति**॥ चण्डालस्येयम्। 'तस्येदम्' (४।३।१२०) इत्यण्। 'टिड्ढा–' (४।१।१५) इति ङीप्। स्वार्थे कन् (ज्ञापि० ५।४।५) चण्डालेन कृता वा। 'कुलालादिभ्यो वुञ्' (४।३।११८) **'चाण्डालिका** किंनरायामुमायामोषधीभिदि' (इति मेदिनी)॥ (१)॥*॥ कण्डते। 'कडि मदे' (भ्वा० प० से०)। बाहुलकादोलच्।—'कडिकपि–'—इति मुकुटस्वपाणिनीयः। कण्डोलस्य चण्डालस्य वीणा॥*॥ **'कटोलवीणा'** इति पाठे तु कटति। 'कटे वर्षादौ' (भ्वा० प० से०)। 'कपिगडि–' (उ० १।६६) इत्योलच्॥ (२)॥*॥ चण्डालस्य वल्लकी॥ (३)॥*॥ त्रीणि **'चाण्डालिकायाः'** **'किंगरि'** इति ख्यातायाः॥

**नाराची स्यादेषणिका**

**नेति**॥ स्वल्पो नाराचो बाणभेदः। गौरादिः (४।१।४१)॥ (१)॥*॥ इष्यतेऽनया 'इष गतौ' (दि० प० से०)। ल्युट् (३।३।११७)। कन् (ज्ञापि० ५।४।५)॥ (२)॥*॥ द्वे **'सुवर्णतुलायाः'**॥

**शाणस्तु निकषः कषः।**

**शेति**॥ शण्यते। 'शण दाने' (भ्वा० प० से०)। 'अकर्तरि–' (३।३।१९) इति घञ्। श्यति वा। 'शो तनूकरणे' (दि० प० अ०)। बाहुलकाण्णः। 'पुंसि[2] स्यात्, **शाणो** मासचतुष्टये। लोहादीनां च निकषे **शाणी** प्रावरणान्तरे' (इति मेदिनी)॥ (१)॥*॥ निकषति। 'कष हिंसायाम्' (भ्वा० प० से०)। अच् (३।१।१३४)।—निकष्यतेऽत्र। 'गोचर–' (३।३।११९) इत्यादिना घः—इति मुकुटश्चिन्त्यः। तत्र कषेरपाठात्। नेर्ग्रहणमुपसर्गान्तरनिवृत्त्यर्थम्। **'निकषः** शाणफलके (**निकषा** यातुमातरि)' इति विश्वमेदिन्यौ॥ (२)॥*॥ (३)॥*॥ त्रीणि **'सुवर्णपरीक्षणपाषाणस्य'**। खड्गादितीक्ष्णीकरणयन्त्रस्य इत्यन्ये॥

**व्रश्चनः पत्रपरशुः**

**व्रेति**॥ वृश्च्यतेऽनेन। 'ओ व्रश्चू छेदने' (तु० प० से०) 'करणाधि–' (३।३।११७) इति ल्युट्॥ (१)॥*॥ पत्रमिव परशुः॥ (२)॥*॥ द्वे **'सुवर्णादिच्छेदनद्रव्यस्य'**॥—लघुकरवतस्य—इत्यन्ये॥

**एषिका तूलिका समे॥ ३२॥**

**एषीति**॥ इष्यते। 'इष गत्यादौ' (दि० प० से०)। 'क्वुनादिभ्यो वुन्' (उ० ५।३५)॥*॥ **'ईषिका'** इति पाठे ईष्यते। ईषति वा। 'ईष उञ्छे' (भ्वा० प० से०)। कुन् (उ० २।३२)॥ (१)॥*॥ तूलति। 'तूल निष्कर्षे' (भ्वा० प० से०)। कुन् (उ० २।३२)॥ (१)॥*॥ द्वे **'वीरणादिशलाकायाः'**॥

**तैजसावर्तनी मूषा**

**तेजेति**॥ तेजसो विकारः सुवर्णादिरावर्त्यतेऽस्याम् 'वृतु वर्तने' (भ्वा० आ० से०)। ण्यन्तः। अधिकरणे ल्युट् (३।३।११७)॥ (१)॥*॥ मूषति। 'मूष स्तेये' (भ्वा० प० से०)। 'इगुपध–' (३।१।१३५) इति कः॥*॥ 'मुष स्तेये' (क्र्या० प० से०) इत्यस्मात् भिदाद्यङि (३।३।१०४) ह्रस्वादिरपि ह्रस्वा मूषा मूषी गौरादिः (४।१।४१)। मूषा। **'मूषा त्वावर्तनी मूषी'** इति शब्दार्णवः। यत्तु–'मुष स्तेये' (क्र्या० प० से०) 'गुरोश्च हलः' (३।३।१०३) इत्यकारप्रत्ययः। टापि 'अन्येषामपि–' (६।१।१३७) इति दीर्घत्वे मूषा मुषा च–इति मुकुटः। तन्न। गुरुत्वाभावात्। दीर्घस्य धातोः सत्वेन 'अन्येषामपि–' इत्यस्यानुपयोगाच्च॥ (२)॥*॥ द्वे **'मूषायाः'**॥

**भस्त्रा चर्मप्रसेविका।**

**भेति**॥ भस्यतेऽनया। 'भस दीप्तौ' (जु० प० से०) 'हुयामाश्रुभसिभ्यस्त्रन्' (उ० ४।१६८)। 'तितुत्र–' (७।२।९) इति नेट्। अजादिः (४।१।४)॥ (१)॥*॥ चर्मणा प्रसीव्यते। 'षिवु तन्तुसंताने' (दि० प० से०)। 'क्वुनादिभ्यो वुन्' (उ० ५।३५)। 'संज्ञायाम्' (३।३।१०९) इति ण्वुल् वा॥ (२)॥*॥ द्वे **'अग्निज्वलनार्थस्य'**॥

**आस्फोटनी वेधनिका**

**आस्फवेति**॥ आस्फोट्यतेऽनया। 'स्फुट भेदने' चुरादिः। करणे ल्युट् (३।३।११७)॥*॥ ललन्ती स्फोटयतीति **'लास्फोटनी'**। पृषोदरादिः (६।३।१०९) इति मुकुटः॥ (१)॥*॥ विध्यतेऽनया। 'विध विधाने' (तु० प० से०)। ल्युट् (३।३।११७)। स्वार्थे कन् (ज्ञापि० ५।४।५)

---

१—सिद्धान्तकौमुद्यादिषु कशेरनिदित्त्वाङ्गीकाराद्व्यर्थमिदम्। २—'पुंसि स्यात्' इत्यस्य स्वयमपि वेणुशब्दव्याख्यायां तच्छेषत्वेनैव व्याख्यातत्वेनात्र लेखोऽनुचित इव भाति॥

'**वेधनी** तु लास्फोटन्यां **स्फोटनी वृषदंशिका**' इति वाचस्पतिः ॥ (२) ॥*॥ द्वे '**मुक्तादिवेधिन्याः**' ॥

**कृपाणी कर्तरी समे ॥ ३३ ॥**

**कृिति** ॥ कृपामणति । 'अण शब्दे' (भ्वा० प० से०) । अण् (३।२।१) । ङीप् (४।१।१५) ॥ (१) ॥*॥ कृन्तति । 'कृती छेदने' (तु० प० से०) । बाहुलकादरः । यद्वा कर्तनम् । घञ् (३।३।१८) । कर्तं राति । 'रा दाने' (अ० प० अ०) । 'आतोऽनुप-' (३।२।३) इति कः । गौरादिः (४।१।४१) ॥ (२) ॥*॥ द्वे '**कर्तर्याः**' ॥

**वृक्षादनी वृक्षभेदी**

**वृेति** ॥ वृक्षमत्ति । 'अद भक्षणे' (अ० प० अ०) । 'कृत्यल्युटः-' (३।३।११३) इति ल्युट् ॥ (१) ॥*॥ वृक्षं भेत्तुं शीलमस्य । 'भिदिर् विदारणे' (रु० उ० अ०) 'सुपि-' (३।२।७८) इति णिनिः ॥ (२) ॥*॥ द्वे '**काष्ठतनूकरणसाधनस्य**' ॥

**टङ्कः पाषाणदारणः ।**

**टेति** ॥ टङ्कयति । 'टकि बन्धने' चुरादिः । अच् (३।१।१३४) । 'टम्' इति शब्दं कायति वा । 'कै शब्दे' (भ्वा० प० अ०) । 'आतोऽनुप-' (३।२।३) इति कः । 'सुपि-' (३।२।४) इति वा ॥ (१) ॥*॥ पाषाणो दार्यतेऽनेन । 'दॄ विदारणे' (क्र्या० प० से०) । ण्यन्तः ल्युट् (३।३।११७) ॥ (२) ॥*॥ द्वे '**पाषाणदारणार्थस्य घनभेदस्य**' ॥

**क्रकचोऽस्त्री करपत्रम्**

**क्रेति** ॥ 'क्र' इति कचति 'कच शब्दे' (भ्वा० आ० से०) अच् (३।१।१३४) । '(**क्रकचः** करपत्रेऽस्त्री ग्रन्थिलाख्यतरौ पुमान्' इति मेदिनी) ॥ (१) ॥*॥ करेण करात्वा पतति । 'पत्लृ पतने' (भ्वा० प० से०) । ष्ट्रन् (उ० ४।१५९) ॥ (२) ॥*॥ द्वे '**काष्ठादिविदारणार्थस्य शस्त्रस्य**' '**करोत**' इति ख्यातस्य ॥

**आरा चर्मप्रभेदिका ॥ ३४ ॥**

**आरेति** ॥ आ इयर्ति, ऋच्छति वा । 'ऋ गतौ' (जु०, भ्वा० प० अ०) । अच् (३।१।१३४) । आर्यते वा । भिदादौ (३।३।१०४) 'आरा शस्त्र्याम्' इति पाठात् साधुः । ('**आरा** चर्मप्रभेदिन्यां पुंसि भौमशनैश्चरे' इति मेदिनी) ॥ (१) ॥*॥ चर्मणः प्रभेदिका ॥ (२) ॥*॥ द्वे '**चर्मखण्डनार्थस्य शस्त्रभेदस्य**' ॥

**सूर्मी स्थूणायःप्रतिमा**

**स्विति** ॥ शोभना ऊर्मिः बहुव्रीहिर्वा । 'सर्वतोऽक्तिन्नर्थात्-' (ग० ४।१।४५) इति गौरादित्वात् (४।१।४१) वा ङीष् ।—'ग्रीष्मजाल्मशूर्मि-' इति मप्रत्यये शूरादेशे च—इति मुकुटस्त्वपाणिनीयः ।—'**शूर्मी** तालव्यादिः'—इत्यप्ययुक्तम् 'सूर्म्यं शुषिरामिव' इति श्रुतिविरोधात् ॥ (१) ॥*॥ तिष्ठति । 'ष्ठा गतिनिवृत्तौ' (भ्वा० प० अ०) । 'रास्नासास्नास्थूणा-' (उ० ३।१५) इति साधुः । '**स्थूणा** सूर्म्यां स्तम्भे रुगन्तरे' इति हैमः ॥ (२) ॥*॥ अयसः प्रतिमा ॥ (३) ॥*॥ त्रीणि '**लोहप्रतिमायाः**' ॥

**शिल्पं कर्म कलादिकम् ।**

**शीति** ॥ शील्यते । 'शील समाधौ' (भ्वा० प० से०) । शल्यते वा । 'शल गतौ' (भ्वा० प० से०) । 'खष्पशिल्प-' (उ० ३।२८) इति साधुः । '**शिल्पं** स्रुवे क्रियादिके' इति विश्वः (हैमः) ॥ (१) ॥*॥ कला नृत्यगीतादिरूपा चतुःषष्टिभेदभिन्ना । आदिना सुवर्णकारादिकर्मग्रहः ॥*॥ एकम् '**कलाकौशल्यादिकर्मणः**' ॥

**प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ॥ ३५ ॥**

**प्रतिकृतिरर्चा पुंसि प्रतिनिधिः**

**प्रेति** ॥ प्रतिकृत्य मीयतेऽनेन । 'माङ् माने' (अ० आ० अ०) । ल्युट् (३।३।११७) ॥ (१) ॥*॥ प्रतिकृतिर्बिम्बं यस्य । 'कुगति-' (२।२।१८) इति समासः ॥ (२) ॥*॥ प्रतिमीयतेऽनया । 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् । ('**प्रतिमा** गजदन्तस्य बन्धे चानुकृतावपि' इति मेदिनी) ॥ (३) ॥*॥ प्रतियात्यतेऽनया । 'यत निकारोपस्कारयोः' (चुरादिः) 'ण्यासश्रन्थः-' (३।३।१०७) इति युच् ॥ (४) ॥*॥ प्रकृष्टा छाया ॥ (५) ॥*॥ प्रकृष्टा कृतिः । प्रतिनिधेः कृतिर्वा ॥ (६) ॥*॥ अर्च्यते । 'अर्च पूजायाम्' (भ्वा० प० से०) । 'गुरोश्च हलः' (३।३।१०३) इत्यः ॥ (७) ॥*॥ प्रतिनिधीयते सदृशीक्रियते । 'डुधाञ्' (जु० उ० अ०) । 'उपसर्गे घोः किः' (३।३।९२) ॥ (८) ॥*॥ अष्टौ '**प्रतिमायाः**' ॥

**उपमोपमानं स्यात् ।**

**उपेति** ॥ उपमातेर्भावेऽङ् (३।३।१०६) ॥ (१) ॥*॥ ल्युट् (३।३।११५) । करणे (३।३।११७) वा ॥ (२) ॥*॥ द्वे करणे भावे च । येनोपमीयते, या चोपमितिः, तयोरेते नाम्नी । केचित्तु—पूर्वान्विते—इत्याहुः ॥

**वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक् ३६**

**साधारणः समानश्च**

**वेति** ॥ समति । 'सम वैक्लव्ये' (भ्वा० प० से०) अच् (३।१।१३४) ॥ (१) ॥*॥ तुलया संमितः । 'नौवयो-' (४।४।९१) इति यत् ॥ (२) ॥*॥ समान इव पश्यति । 'त्यदादिषु-' (३।२।६०) इति कञ्क्विनौ क्सश्च । 'दृग्दृशवतुषु' (६।३।८९) 'दृक्षे च' (वा० ६।३।८९) इति सभावः

१—समानशब्दस्य त्यदादित्वाभावादत्रास्योपन्यासोऽसंगतः । तस्मात् 'समानान्ययोश्च' (वा० ३।२।६०) इत्यनेन बोध्यौ ॥
२—'दृग्दृशवतुषु' (६।३।८९) इत्यत्र 'दृक्षे च' इति वार्तिकबलादनुक्तोऽपि क्सः कल्प्यते—इति 'त्यदादिषु-' (३।२।६०) इत्यत्र भाष्यप्रदीपोद्द्योतकृत् ॥

॥ (३) ॥*॥ (४) ॥*॥ (५) ॥*॥ सह आधारणेन वर्तते । 'वोपसर्जनस्य' (६।३।८२) इति सभावः । साधायाः संसिद्धे रणो वाचक इव ॥ (६) ॥*॥ सह मानेन वर्तते । समानं मानमस्य, इति वा । 'समानस्य च्छन्दसि' (६।३।८४) इति सः ॥ (७) ॥*॥ सप्त वाच्यलिङ्गाः ॥ सप्त **'तुल्यस्य'** ॥

**स्युरुत्तरपदे त्वमी ।**
**नभसंकाशनीकाशप्रतीकाशोपमादयः ॥ ३७ ॥**

**स्युरिति** ॥ अमी निभादय उत्तरपदस्था एव सदृशवचना वाच्यलिङ्गाः स्युः । यथा 'पितृनिभः पुत्रः' 'मातृनिभा कन्या' 'देवनिभमपत्यम्' इति । नियतं भाति । 'आतश्चोपसर्गे' (३।१।१३६) इति कः । **'निभस्तु** कथितो व्याजे पुंलिङ्गः सदृशे त्रिषु' (इति मेदिनी) ॥ (१) ॥*॥ संकाशते । 'काशृ दीप्तौ' (भ्वा० आ० से०) । अच् (३।१।१३४) । **'संकाशः** सदृशेऽन्तिके' इति हैमः ॥ (२) ॥*॥ नितरां काशते । 'इकः काशे' (६।३।१२३) इति दीर्घः । **'नीकाशो** निश्चये तुल्ये' इति विश्वः (मेदिनी) ॥ (३) ॥*॥ प्रतिकाशते ॥ (४) ॥*॥ आदिना भूतरूपकल्पादयः यथा पितृभूतः, पितृरूपः, पितृकल्पः, इति ॥

**कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् ।**
**भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ॥ ३८ ॥**

**केति** ॥ कर्मणा संपद्यते । 'कर्मवेषाद्यत्' (५।१।१००) । कर्मणि साधुर्वा । 'तत्र साधुः' (४।४।९८) इति यत् ॥ (१) ॥*॥ कर्माणि विधीयन्तेऽनया । 'डुधाञ्' (जु० उ० अ०) । 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् ॥ (२) ॥*॥ भ्रियन्ते कर्मकरा अनया । 'भृञ् भरणे' (भ्वा० उ० अ०) । 'संज्ञायां समज–' (३।३।९९) इति क्यप् ॥ (३) ॥*॥ 'कर्मणि भृतौ' (३।२।२२) इति निर्देशात् क्तिन्नपि ॥ (४) ॥*॥ भ्रियतेऽनेन । 'डुभृञ्' (जु० उ० अ०) 'भृञ्' (भ्वा० उ० अ०) वा । मनिन् (उ० ४।१४५) ॥ (५) ॥*॥ वीयतेऽनेन । 'वी गत्यादौ' (अ० प० अ०) । 'वीपतिभ्यां तनन्' (उ० ३। १५०) ॥ (६) ॥*॥ भरणे साधु । 'तत्र साधुः' (४।४।९८) इति यत् ॥ (७) ॥*॥ भ्रियतेऽनेन । ल्युट् (३।३।११७) । **'(भरणी** घोषके ऋक्षे) **भरणं** वेतने भृतौ' इति विश्वः (मेदिनी) ॥ (८) ॥*॥ मूलेनानाम्यम् । 'नौवयोधर्म–' (४।४।९१) इति यत् । **'मूल्यं** स्याद्वेतने वस्ने' इति विश्वः (मेदिनी) ॥ (९) ॥*॥ निर्विश्यते अनेन वा । 'विश प्रवेशने' (तु० प० से०) । 'अकर्तरि च' (३।३।१९) इति 'हलश्च' (३।३।१२१) इति वा घञ् । **'निर्वेशस्तु** पुमान्भोगे वेतने मूर्च्छनेऽपि च' (इति मेदिनी) ॥ (१०) ॥*॥ पण्यते । 'नित्यं पणः परिमाणे' (३।३।६६) इत्यप् । 'पुंसि–' (३।३। ११८) इति घो वा । **'पणो** वराटमाने स्यान्मूल्ये कार्षापणे ग्लहे । क्रय्यशाकादिके द्यूतव्यवहारे भृतौ धने' (इति मेदिनी) ॥ (११) ॥*॥ एकादश **'वेतनस्य'** ॥

१—भृतिरत्र पोषणमात्रम्—इत्यनेकार्थकैरवाकरकौमुदी ॥

**सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा ।**
**गन्धोत्तमा प्रसन्नेराकादम्बर्यः परिस्रुता ॥ ३९ ॥**
**मदिरा कश्यमद्येऽपि**

**स्विति** ॥ सुष्ठु राति याम् । 'रा दाने' (अ० प० अ०) । सु अतीव रायन्त्यनया वा । 'रै शब्दे' (भ्वा० प० से०) । 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् । **'सुरा** चषकमद्ययोः' । पुंलिङ्गस्त्रिदिवेशे स्यात्' (इति मेदिनी) ॥ (१) ॥*॥ हलिनो बलस्य प्रिया ॥ (२) ॥*॥ हलत्यङ्गम् । 'हल विलेखने' (भ्वा० प० से०) । ज्वलादित्वात् (३।१।१४०) णः । हल्यतेऽनया वा । 'हलश्च' (३।३।१२१) इति घञ् । **'हालः** सातवाहनपार्थिवे । **हाला** सुरायाम्' इति विश्वः (हैमः) ॥ (३) ॥*॥ परितः स्रवति । 'स्रु स्रवणे' (भ्वा० प० से०) । क्विप् (३।२।७६) । तुक् (६।१।७१) ॥ (४) ॥*॥ वरुणालयोऽपि वरुणः । तस्यात्मजा ॥ (५) ॥*॥ गन्धेनोत्तमा । गन्ध उत्तमो यस्या वा । राजदन्तादिः (२।२।३१) ॥ (६) ॥*॥ प्रसीदति स्म । 'षद विशरणादौ' (भ्वा० प० अ०) । 'गत्यर्था–' (३।४।७२) इति क्तः । 'रदाभ्याम्–' (८।२।४२) इति निष्ठानत्वम् । **'प्रसन्ना** स्त्री सुरायां स्यादच्छसंतुष्टयोस्त्रिषु' (इति मेदिनी) ॥ (७) ॥*॥ ईं कामं राति 'रा दाने' (अ० प० अ०) । 'आतोऽनुप–' (३।२।३) इति कः ॥ (८) ॥*॥ कुत्सितमम्बरम् । 'कुगति–' (२।२।१८) इति समासः । 'कोः कत्तत्पुरुषेऽचि' (६।३।१०१) । कदम्बरं नीलाम्बरमस्यास्ति । अर्शआद्यच् (५।२।१२७) । तस्येयम् । 'तस्येदम्' (४।३।१२०) इत्यण् । कदम्बे जातो रसः । 'तत्र जातः' (४।३।५३) इत्यण् । कादम्बं राति वा । कः (३।२। ३) । 'गौरादिः' (४।१।४१) । **'कादम्बरस्तु** दध्यग्रे मद्यभेदे नपुंसकम् । स्त्री वारुणीपरभृताभारतीसारिकासु च' (इति मेदिनी) ॥ (९) ॥*॥ भागुरिमते टापि 'परिस्रुता' । यद्वा परितः सूयते स्म लोकैः । 'स्रु गतौ' (भ्वा० प० अ०) । क्तः (३।२।१०२) । **'परिस्रुता** स्त्री वारुण्यां स्रुते स्यादभिधेयवत्' (इति मेदिनी) ॥ (१०) ॥*॥ माद्यन्त्यनया । 'मदी हर्षे' (दि० प० से०) । 'इषिमदिमुदि–' (उ० १।५१) इत्यादिना किरच् ॥ (११) ॥*॥ कश्यते अनेन वा । 'कश शब्दे' ( ) बाहुलकाद्यः । 'मद्याश्वमध्ययोः **कश्यम्'** इति रन्तिदेवः । **'कश्यस्त्रिषु** कशार्हे स्यात्क्लीबं मद्याश्वमद्ययोः' इति विश्वः (मेदिनी) ॥ (१२) ॥*॥ माद्यन्त्यनेन । 'गदमदचर–' (३।१।१००) इति यत् ॥ (१३) ॥*॥ त्रयोदश **'मद्यसामान्यस्य'** ॥

**अवदंशस्तु भक्षणम् ।**

**अवेति** ॥ अवदश्यते । 'दंश दशने' (भ्वा० प० अ०) । कर्मणि घञ् (३।३।१९) । भावे (३।३।१८) वा ॥ (१) ॥*॥ एकं **'पानरुचिजनकभक्षणस्य'** ॥

**शुण्डा पानं मदस्थानम्**

**श्विति** ॥ शुन्यते। 'शुन गतौ' (तु० प० से०)। 'अमन्ताड्ड:' (उ० १।११२)। '**शुण्डा** पानगृहे मता। (अप्म्बुहस्तिनी वेश्याहस्तिहस्तसुरासु च' इति मेदिनी)। '**शुण्डापि** जलहस्तिन्यां मदिराकरिहस्तयोः। नालिन्यां वारयोषायां **शुण्डस्तु** मदनिर्झरे)' इति विश्वः॥ (१) ॥*॥ पिबन्त्यत्र। 'पा पाने' (भ्वा० प० अ०)। 'अधिकरणे ल्युट्' (३।३।११७)। '**पानं** पीतिभाजनरक्षणे' (इति मेदिनी)॥ (२) ॥*॥ मदस्य स्थानम्॥ (३) ॥*॥ त्रीणि '**मद्यगृहस्य**'॥

**मधुवारा मधुक्रमाः॥ ४०॥**

**मेति** ॥ मधुनो वारः॥ (१) ॥*॥ मधुनः क्रमः॥ (२) ॥*॥ द्वे '**मधुपानावसरस्य**'॥

**मध्वासवो माधवको मधु मार्द्वीकमद्वयोः।**

**मेति** ॥ मधुकपुष्पं मधु। तस्यासवः॥ (१) ॥*॥ मधुना कृतः संधितः। 'कुलालादिभ्यो वुञ्' (४।३।११८)॥ (२) ॥*॥ मन्यते। 'मन ज्ञाने' (दि० आ० अ०)। 'फलिपाटि-' (उ० १।१८) इति साधु। '**मधु** पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे। वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति' इति विश्वमेदिन्यौ॥ (३) ॥*॥ मृद्वीका द्राक्षा। तस्या विकारः। 'तस्य विकारः' (४।३।१३४) इत्यण् 'अनुदात्तादेः' (४।३।१४०) इत्यञ् वा ॥*॥ केचित्तु—'**माध्वीकम्**' इति पठन्ति। तत्र पृषोदरादित्वम्॥ (४) ॥*॥ अद्वयोः क्लीबमित्यर्थः ॥*॥ चत्वारि '**मधुकपुष्पकृतमद्यस्य**'॥ स्वामी तु—द्वौ द्वौ पर्यायौ—इत्याह॥

**मैरेयमासवः शीधुः**

**मायिति** ॥ मिरायां देशविशेषे ओषधिविशेषे वा भवम्। 'नद्यादिभ्यो ढक्' (४।२।९७)॥ (१) ॥*॥ आसूयते। 'षुञ् अभिषवे' (स्वा० उ० अ०)। 'ऋदोरप्' (३।३।५७)॥ (२)॥*॥ शेरतेऽनेन। 'शीङो धुक्-' (उ० ३।३८) अर्धर्चादिः (२।४।३१)। 'पुंनपुंसकयोर्दारुजीवातुस्थाणुशीधवः' इति त्रिकाण्डशेषः॥ (३) ॥*॥ यद्यपि 'शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत्। मैरेयं धातकीपुष्पगुडधानाम्बुसंहितम्' इति माधवः। तथापि भेदमनादृत्योक्तम् ॥*॥ त्रीणि '**इक्षुशाकादिजन्यस्य मद्यस्य**'॥

**मेदको जगलः समौ॥ ४१॥**

**मेदेति** ॥ मेद्यति। 'ञिमिदा स्नेहने' (दि० प० से०)। 'वुन् कृञादिभ्यः-' (उ० ५।३५)॥ (१) ॥*॥ भृशं गलति, गल्यते वा। 'गल अदने' (भ्वा० प० से०) यङ्लुगन्तादच् (३।१।१३४)। संज्ञापूर्वकत्वात् 'दीर्घोऽकितः' (७।४।८३) इति दीर्घो न। '**जगलो** मदनद्रुमे। मेदके पिष्टमद्ये च' (इति मेदिनी)॥ (२) ॥*॥ द्वे '**सुराकल्कस्य**'॥

**संधानं स्यादभिषवः**

**समिति** ॥ संधीयते। 'डुधाञ्' (जु० उ० अ०)। ल्युट् (३।३।११३)। भावे (३।३।११५) वा। '**संधानं** स्यादभिषवे तथा संघट्टनेऽपि च' इति विश्वः (मेदिनी)॥ (१) ॥*॥ अभिषूयते। 'षुञ् अभिषवे' (स्वा० उ० अ०)। 'ऋदोरप्' (३।३।५७)। भावे वा। 'भवेद**भिषवः** स्नाने मद्यसंधानयज्ञयोः' इति विश्वः (मेदिनी)॥ (२) ॥*॥ द्वे '**आम्रादिसंधानस्य**'॥

**किण्वं पुंसि तु नग्नहूः।**

**कीति** ॥ कणनम्। 'कण' शब्दे (भ्वा० प० से०)। 'उल्बादयश्च' (उ० ४।९५) इति साधुः। कर्मणि वा। '**किण्वं** पापे सुराबीजे' इति विश्वः॥ (१) ॥*॥ ह्वानम्, हूयते वा। 'ह्वेञ्' (भ्वा० उ० अ०) संपदादि क्विप् (वा० ३।३।१०८)। नग्नस्य हूः॥ (२) ॥*॥ द्वे '**नानाद्रव्यकृतसुराबीजस्य**'॥ —मत्तनग्नकृताह्वानस्य—इत्यन्ये॥

**कारोत्तरः सुरामण्डः**

**केति** ॥ कारेण क्रियया उत्तरः।—'**कारोत्तमः**—' इति स्वामी॥ (१) ॥*॥ सुराया मण्डः॥ (२) ॥*॥ द्वे '**सुरामण्डस्य**'॥

**आपानं पानगोष्ठिका॥ ४२॥**

**आपेति** ॥ आ संभूय पिबन्त्यत्र। ल्युट् (३।३।११७)॥ (१) ॥*॥ पानस्य गोष्ठी। स्वार्थे कन् (ज्ञापि० ५।४।५)॥ (२) ॥*॥ द्वे '**पानार्थायाः सभायाः**'॥

**चषकोऽस्त्री पानपात्रम्**

**चेति** ॥ चष्यतेऽनेन। 'चष भक्षणे' (भ्वा० उ० से०)। क्वुन् (उ० २।३२)। '**चषको**ऽस्त्री सुरापात्रे मद्यमद्यप्रभेदयोः' (इति मेदिनी)॥ (१) ॥*॥ पानस्य पात्रम्॥ (२) ॥*॥ द्वे '**मद्यपात्रस्य**'॥

**सरकोऽप्यनुतर्षणम्।**

**सेति** ॥ स्रियते 'सृ गतौ' (भ्वा० प० अ०)। 'वुन् कृञादिभ्यः' (उ० ५।३५)। '**सरकः** शीधुपानेक्षुशीधुनोर्मद्यभाजने' इत्यजयः। अपिशब्दात् सरकोऽप्यस्त्री। 'सरकं वा **नानुतर्षो** ना' इति रत्नकोषः॥ (१) ॥*॥ अनुतर्षणम्। अनेन वा। 'ञितृषा पिपासायाम्' (दि० प० से०)। भावे (३।३।११४) करणे (३।३।११७) वा ल्युट् ॥*॥ घञि (३।३।१८) 'अनुतर्षः' अपि। 'चषकश्चा**नुतर्ष**श्च सरकश्च' इति भागुरिः॥ (२) ॥*॥ द्वे '**मद्यपानस्य**'।—चत्वारि '**मद्यपानपात्रस्य**'—इति मुकुटः॥

**धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः॥ ४३॥**

**ध्विति** ॥ धूर्वति। 'धुर्वी हिंसायाम्' (भ्वा० प० से०)। 'हसिमृग्रिण्-' (उ० ३।८६) इति तन्। 'राल्लोपः' (६।४।२१)। '**धूर्तं** तु खण्डलवणे धत्तूरे ना विटे त्रिषु' (इति मेदिनी)। '**धार्तः**' इति पाठे धावनम्। 'धावु गतौ' (भ्वा०

१ कर्मण्यचोऽप्राप्त्या त्रिन्त्यमिदम्॥

उ० से० )। संपदादिः (वा० ३।३।१०८)। बाहुलकाद्वलोपः। धा धावनेनार्तिः धार्तिरस्यास्ति । ज्योत्स्नाद्यण् (वा० ५।२।१०३)। यद्वा धा धावनेनार्तः ॥ (१) ॥*॥ अक्षैर्दीव्यति । 'सुपि–' (३।२।७८) इति णिनिः ॥ (२) ॥*॥ 'कि ज्ञाने' ( जु० प० अ० )। भावे क्तः (३।३।११४)। कितं वायति । 'ओ वै शोषणे' ( भ्वा० प० अ० ) कितने वाति वा। 'वा गन्धने' ( अ० प० अ० )। 'आतोऽनुप–' (३।२।३) इति कः 'कितवो धूर्तवन्मत्ते वञ्चके कनकाह्वये' इति विश्वः ॥ (३) ॥*॥ अक्षेषु धूर्तः । 'सप्तमी शौण्डैः' (२।१।४०) इति समासः ॥ (४) ॥*॥ द्यूतं करोति । क्विप् । (३।२।७६) ॥ (५) ॥*॥ पञ्च 'द्यूतकृतः' ॥

**स्युर्लग्नकाः प्रतिभुवः**

**स्युरिति** ॥ लज्यते स्म। 'ओलस्जी व्रीडे' ( तु० आ० से० ) । 'गत्यर्था–' (३।४।७२) इति क्तः । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१) ॥*॥ प्रति प्रतिनिधिर्भवति । क्विप् (३।२।७६) ॥ (२) ॥*॥ द्वे **'ऋणादौ प्रतिनिधिभूतस्य' 'जामिन'** इति ख्यातस्य ॥

**सभिका द्यूतकारकाः।**

**सेति** ॥ सभाद्यूतमाश्रयत्वेनास्यास्ति । व्रीह्यादित्वात् (५।२।११६) ठन् । **'सभाद्यूतं सभागृहम्'** इति रुद्रः ॥ (१) ॥*॥ द्यूतं कारयन्ति । अण् (३।२।१)। स्वार्थे कन्। (ज्ञा० ५।४।५)। ण्वुलि (३।१।१३३) तु द्यूतस्य कारकः ॥ (२) ॥*॥ द्वे **'ये द्यूतं कारयन्ति तेषाम्'** ॥

**द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि ॥ ४४ ॥**

**द्यिति** ॥ देवनम्। 'दिवु क्रीडादौ' ( दि० प० से० )। भावे क्तः (३।३।११४) ॥ (१) ॥*॥ अक्षाः पाशकाः सन्त्यस्याम् । मतुप् (५।२।९४) । लोकात्स्त्रीत्वम् ॥ (२) ॥*॥ कितवस्य कर्म । युवादित्वात् (५।१।१३०) अण्। **'कैतवं** तु छले द्यूते **कैतवः** कितवे रिपौ' (इति मेदिनी) ॥ (३) ॥*॥ पणो ग्लहोऽस्त्यस्मिन्। अर्श आद्यच् (५।२।१२७) ॥ (४) ॥*॥ चत्वारि **'द्यूतक्रीडनस्य'** ॥

**पणोऽक्षेषु ग्लहः**

**पेति** ॥ पण्यते उत्सृज्यते। 'पण व्यवहारे' (भ्वा० आ० से० )। 'नित्यं पणः–' (३।३।६६) इति योगविभागादप् ॥ (१) ॥*॥ ग्लह्यते अनेन। 'ग्लहू आदाने' ( भ्वा० आ० से० )। 'पुंसि–' (३।३।११८) इति घः 'हलश्च' (३।३।१२१) इति घञ् वा। संज्ञापूर्वकत्वान्न वृद्धिः। गृह्यते वा। 'अक्षेषु ग्लहः' (३।३।७०) इति साधुः ॥ (२) ॥*॥ द्वे **'द्यूते लाप्यमानस्य'** ॥

**अक्षास्तु देवनाः पाशकाश्च ते।**

**अक्षा इति** ॥ अक्षति । 'अक्षू व्याप्तौ' ( भ्वा० प० से० )। अच् (३।१।१३४)। **'अक्षो** ज्ञानात्मशकटव्यवहारेषु पाशके । रुद्राक्षेन्द्राक्षयोः सर्पे विभीतकतरावपि । चक्रे कर्षे पुमान् क्लीबं तुत्थे सौवर्चलेन्द्रिये' (इति मेदिनी)। (१) ॥*॥ दीव्यन्ति येन । 'करणा–' (३।३।११७) इति ल्युट् । **'देवनं** व्यवहारे स्याज्जिगीषाक्रीडयोरपि । अक्षेषु **देवनः** प्रोक्तः' (इति विश्वः) ॥ (२) ॥*॥ पाशयति । 'पश बन्धे' चुरादिः । ण्वुल् (३।१।१३३) । क्वुन् (उ० २।३२) वा ॥ (३) ॥*॥ त्रीणि **'पाशकस्य'** ॥

**परिणायस्तु शारीणां समन्तान्नयनेऽस्त्रियाम् ॥४५॥**

**पेति** ॥ परितो वामदक्षिणतो नयनम्। 'णीञ्' (भ्वा० उ० अ०) 'परिन्योः–' (३।३।३७) इति घञ् ॥ (१) ॥*॥ एकम् **'शारीणां समन्तान्नयनस्य'** ॥

**अष्टापदं शारिफलम्**

**अष्टेति** ॥ पङ्क्तौ पङ्क्तौ अष्टौ पदान्यस्य । 'अष्टनः संज्ञायाम्' (६।३।१२५) इति दीर्घः । अष्टापदमस्त्रियाम् । **'अष्टापदो**ऽस्त्री कनके शारीणां फलकेऽपि च । (**अष्टापदी** चन्द्रमल्ल्यां शरभे मर्कटे पुमान् )' इति मेदिनी ॥ (१) ॥*॥ शारीणां फलं पट्टः । **'फलं** हेतुसमुत्थे स्यात्फलके व्युष्टिलाभयोः' इति विश्वः ॥ (२) ॥*॥ **'शारीणां खेलनाधारपट्टस्य'** द्वे ॥

**प्राणिद्यूतं समाह्वयः।**

**प्रेति** ॥ प्राणिभिः कृतं द्यूतम् ॥ (१) ॥*॥ सम्यगाहूयन्तेऽत्र । 'ह्वेञ्' ( भ्वा० उ० अ० )। 'पुंसि–' (३।३।११८) इति घः। बाहुलान्नात्वम् ॥ (२) ॥*॥ द्वे **'द्यूतस्य'** ॥

सर्वलिङ्गासंग्रहादसंपूर्णतां परिहरति—

**उक्ता भूरिप्रयोगत्वादेकस्मिन्येऽत्र यौगिकाः ॥ ४६ ॥**
**ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गान्तरेऽपि ते।**

**उक्ता इति** ॥ अत्र वर्गे ये यौगिकाः शब्दा मालाकार–मार्दङ्गिक–वैणविकादयः पुंसि प्रचुरप्रयोगदर्शनादेकस्मिँल्लिङ्गे पुंसि ये यौगिका उक्ताः, ते ताद्धर्म्यात्तद्योगवशात्तेषामन्यतोऽन्यत्र जातौ वृत्तौ सत्यामन्यत्र स्त्रियां क्लीबे चोहनीयाः। यथा 'मालाकारी स्त्री, मालाकारं कुलम्', इत्यादि। येऽप्ययौगिकाः करण–मालिक–कुम्भकारादयः, ते जातिवचनत्वाच्छूद्रादिवत् 'जातेः' (४।१।६३) इत्यादिना ङीषि लिङ्गान्तरे स्त्रीलिङ्गे क्लीबत्वेऽपि बोद्धव्याः ॥

**॥ इति शूद्रवर्गविवरणम् ॥**

---

**इत्यमरसिंहकृतौ नामलिङ्गानुशासने।**
**भूम्यादिकाण्डो द्वितीयः साङ्ग एव समर्थितः ॥४७॥**

इति श्रीवघेलवंशोद्भवश्रीमहीधरविषयाधिपश्रीमहाराजकुमारश्री**कीर्तिसिंहाज्ञया** श्री**भट्टोजि**दीक्षितात्मजश्री**भानुजी**दीक्षितविरचितायाममरटीकायां व्याख्यासुधाख्यायां द्वितीयः काण्डः संपूर्णतामगात् ॥

॥ श्रीः ॥

# श्रीमदमरसिंहविरचितः

# अमरकोषः ।

## व्याख्यासुधाख्यया व्याख्यया समेतः ।

## तृतीयं काण्डम् ।

**विशेष्यनिघ्नैः संकीर्णैर्नानार्थैरव्ययैरपि ।**
**लिङ्गादिसंग्रहैर्वर्गाः सामान्ये वर्गसंश्रयाः ॥ १ ॥**

**विशेष्येति** ॥ इह सामान्यकाण्डे एतैः कृत्वोपलक्षिता वर्गा उच्यन्ते । कीदृशास्ते वर्गाः । स्वर्गादयः संश्रय आश्रयो येषां ते । सुकृत्यादयो देवासुरमनुष्येष्वेव विशेषणत्वेन, कर्मपरायणादयो व्यापारतया, संबध्यन्ते लिङ्गान्यादौ येषां तानि । तेषां संग्रहाः । आदिना नामानि लङ्का–शेफालिका–इत्यादीनि ॥

अस्मिन्वर्गे लिङ्गज्ञानोपायमाह—

**स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः ।**
**गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः ॥ २ ॥**

**स्त्रीति** ॥ स्त्रीदारकलत्रादिभिः पदैर्यल्लिङ्गसंख्याविशिष्टैः स्त्रीदारकलत्रादिरूपं यद्विशेष्यं प्रक्रान्तम्, गुणादिशब्दास्तल्लिङ्गसंख्याविशिष्टास्तस्य विशेषणानि स्युः । तथा हि 'सुकृतिनी स्त्री, सुकृतिनो दाराः, सुकृति कलत्रम्' । 'दण्डिनी स्त्री, दण्डिनो दाराः, दण्डि कलत्रम्' । 'पाचिका स्त्री, पाचका दाराः, पाचकं कलत्रम्' ॥

**सुकृती पुण्यवान्धन्यः**

**स्विति** ॥ सुकृतमस्यास्ति । इनिः (५।२।११५) ॥ (१) ॥*॥ पुण्यमस्यास्ति । मतुप् (५।२।९४) ॥ (२) ॥*॥ धनं लब्धा । 'धनगणं लब्धा' (४।४।८४) इति यत् । **'धन्या** धात्र्यामलक्योः स्याद्धन्यं पुण्यवति त्रिषु' इति विश्वमेदिन्यौ ॥ (३) ॥*॥ त्रीणि **'सभाग्यस्य'** ॥

**महेच्छस्तु महाशयः ।**

**मेति** ॥ महतीच्छा यस्य ॥ (१) ॥*॥ **'आशयः** स्यादभिप्राये मानसाधारयोरपि' (इति मेदिनी) । महानाशयोऽस्य ॥ (२) ॥*॥ द्वे **'महाभिलाषस्य'** ॥



**हृदयालुः सुहृदयः**

**हृेति** ॥ प्रशस्तं हृदयमस्य । 'हृदयाच्चालुरन्यतरस्याम्' (वा० ५।२।१२२) ॥ (१) ॥*॥ शोभनं हृदयमस्य । मित्रत्वाविवक्षणाच्च हृद्भावः ॥*॥ **'सहृदयः'** इति वा पाठः ॥ सह हृदयेन । 'तेन सह–' (२।२।२८) इति बहुव्रीहिः ॥ (२) ॥*॥ प्राणिमात्रस्य तथात्वादत्र प्रशस्तहृदयपरत्वं हृदयशब्दस्य ॥*॥ द्वे **'शुद्धमनसः'** ॥

**महोत्साहो महोद्यमः ॥ ३ ॥**

**मेति** ॥ महानुत्साहोऽस्य ॥ (१) ॥*॥ महानुद्यमोऽस्य ॥ (२) ॥ * ॥ द्वे **'दुःसाध्यकृत्येऽपि साधनपरस्य'** ॥

**प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः ।**
**वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ॥ ४ ॥**

**प्रेति** ॥ प्रकृष्टा वीणास्य । यद्वा वीणया प्रगायति, प्रगीयते वा । 'सत्याप–' (३।१।२५) इति णिजन्ताद् पचाद्यच् (३।१।१३३) । कर्मणि घञ् (३।३।१९) वा 'एरजण्यन्तानाम्' इति नाच् (३।३।५६) ॥ (१) ॥*॥ निपुणति । 'पुण कर्मणि शुभे' (तु० प० से०) । 'इगुपध–' (३।१।१३५) इति कः ॥ (२) ॥*॥ अभि जानाति । 'आतश्चोपसर्गे' (३।१।१३६) इति कः ॥ (३) ॥*॥ (४) ॥*॥ न्यष्णासीत् । 'गत्यर्थां–' (३।४।७२) इति क्तः । 'निनदीभ्याम्–' (८।३।८९) इति षत्वम् ॥ (५) ॥*॥ शिक्षा जातास्य । तारकादिः (५।२।३६) । यद्वा अशिक्षिष्ट । 'शिक्ष विद्योपादाने' (भ्वा० आ० से०) । अकर्मकत्वात्कर्तरि क्तः (३।४।७२) ॥ (६) ॥*॥ विज्ञानं बुद्धिः । 'विज्ञानं यज्ञं तनुते' इति श्रुतेः । विज्ञाने नियुक्तः । 'तत्र नियुक्तः' (४।४।६९) इति ठक् । यद्वा विज्ञानेन जयति । 'तेन दीव्यति–' (४।४।२) इति ठक् । यत्तु

१—'एरजण्यन्तानाम्' इति तु वचनमनार्षम्—इति 'एरच्' (३।३।५६) सूत्रे कैयटः ॥

विज्ञानं नैपुण्यम् । तेन व्यवहरति । 'तेन दीव्यति–' (४।४।२) इत्यादिना ठक्—इत्यभाणि मुकुटेन । तन्न । उक्तसूत्रे 'व्यवहरति' इत्यस्यानुपादानात् । 'कठिनान्त–' (४।४।७२) इति सूत्रेऽर्थोपादानेऽपि विज्ञानस्यानुपादानात् ॥*॥ व्रीह्यादि (५।२।११६) ठनि '**विज्ञानिकः**' इत्यपि ॥ (७) ॥*॥ कृतं मुखमस्य । सर्वस्य कृतमुखत्वादत्र कृतशब्दस्य संस्कृतपरत्वम् ॥ (८) ॥*॥ कृतं कर्म प्रशस्तमस्य । इनिः (५।२।११५) ॥ (९) ॥*॥ कुशान् लाति । कः (३।२।३) । कौ पृथिव्यां शलति वा । 'शल चलने' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । णिजर्थे लक्षणा वा । कौ शलति चालयति राजकार्याणि । यद्वा '**कुः** पापेषदर्थयोः' । कोः पापात् शलति बुद्धिवैभवात् । '**कुशलः** शिक्षिते त्रिषु । क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसकम्' इति विश्वमेदिन्यौ ॥ (१०) ॥*॥ दश '**कुशलस्य**' ॥

**पूज्यः प्रतीक्ष्यः**

**प्विति** ॥ पूज्यते । 'पूज पूजायाम्' (चु० प० से०) । 'अचो यत्' (३।१।९७) । '**पूज्यः** श्वशुरवन्द्ययोः' इति हैमः ॥ (१) ॥*॥ प्रतीक्ष्यते । 'ईक्ष दर्शने' (भ्वा० आ० से०) । 'ऋहलोर्ण्यत्' (३।१।१२४) । '**प्रतीक्ष्यः** प्रतिपाल्ये स्यात्पूज्ये च' (इति हैमः) ॥ (२) ॥*॥ द्वे '**पूज्यस्य**' ॥

**सांशयिकः संशयापन्नमानसः ।**

**सांशेति** ॥ संशयमापन्नः । 'संशयमापन्नः' (५।१।७३) इति ठक् ॥ (१) ॥*॥ संशयमापन्नं यस्य, यस्मिन्, वा ॥ (२) ॥*॥ द्वे '**संदेहविषयस्य**', '**संदेहाश्रयस्य**' वा ॥

**दक्षिणेयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि ॥ ५ ॥**

**देति** ॥ दक्षिणामर्हति । 'कडंगरदक्षिणाच्छ च' (५।१।६९) इति छयतौ ॥ (१) ॥*॥ (२) ॥*॥ दक्षिणामर्हति । 'अर्ह पूजायाम्' (भ्वा० प० से०) । 'अर्हः' (३।२।१२) इत्यच् ॥ (३) ॥*॥ त्रीणि '**दक्षिणायोग्यस्य**' ॥

**स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे ।**

**स्युरिति** ॥ 'मां याचस्व' इति वदति । 'वदेरान्यः' (उ० ३।१०४) । '**वदान्यो** दानशौण्डे स्याच्चारुवादिनि वाच्यवत्' (इति मेदिनी) ॥ (१) ॥*॥ स्थूलं कूटं लक्ष्यमस्य । स्थूलैर्महद्भिर्लक्ष्यते वा । कर्मणि ण्यत् (३।१।१२४) ॥*॥ ('**स्थूललक्ष**' इति) अयकारपाठे तु घञ् (३।३।१९) ॥ (२) ॥*॥ दाने शौण्डः । 'सप्तमी शौण्डैः' (२।१।४१) इति समासः । '**शौण्डो** मत्तेऽपि विख्याते' इति विश्वः ॥ (३) ॥*॥ बहु प्रददाति । 'प्रे दाज्ञः' (३।२।६) इति कः ॥ (४) ॥*॥ चत्वारि '**अतिदातुः**' ॥

**जैवातृकः स्यादायुष्मान्**

**जैवेति** ॥ जीवति । जीवेः आतृकन् वृद्धिश्च (उ० १।७९) । '**जैवातृकः** पुमान्सोमे कृषकायुष्मतोस्त्रिषु' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ अतिशयितमायुरस्य । मतुप् (५।२।९४) 'तसौ मत्वर्थे' (१।४।१९) इति भत्वान्न रुत्वम् (८।२।६६) ॥ (२) ॥*॥ द्वे '**सायुषः**' ॥

**अन्तर्वाणिस्तु शास्त्रवित् ॥ ६ ॥**

**अन्तेति** ॥ अन्तर्वाण्यस्य । समासान्तविधेरनित्यत्वान्न कप् । (५।४।१५३) । 'गोस्त्रियोः–' (१।२।४८) इति ह्रस्वः । यद्वा अन्तर्वाणयति । 'वण शब्दे' (भ्वा० आ० से०) । स्वार्थे णिजन्तात् 'अच इः' (उ० ४।१३९) ॥ (१) ॥*॥ शास्त्रं वेत्ति । 'सत्सू–' (३।२।६१) इति क्विप् ॥ (२) ॥*॥ द्वे '**शास्त्रविदः**' ॥

**परीक्षकः कारणिकः**

**पेति** ॥ परीक्ष्यते । 'ईक्ष दर्शने' (भ्वा० आ० से०) । ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ '**करणं** हेतुकर्मणोः' (इति मेदिनी) । करणैश्चरति । 'चरति' (४।४।८) इति ठक् ॥ (२) ॥*॥ द्वे '**परीक्षाकारकस्य**' ॥

**वरदस्तु समर्धकः ।**

**वेति** ॥ वरं ददाति । कः (३।२।३) । '**वरदः** पुनः । प्रसन्ने शान्तचित्ते च वरदा तु कुमारिका' इति हैमः ॥ (१) ॥*॥ समृध्नोति । 'ऋधु वृद्धौ' (स्वा० प० से०) ण्वुल् (३।१।१३३) ॥ (२) ॥*॥ द्वे '**वरदस्य**' ॥

**हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः ॥ ७ ॥**

**हेति** ॥ हर्षति । 'हृषु अलीके' (भ्वा० प० से०) । 'ताच्छील्य–' (३।२।१२९) इति चानश् । यत्तु—हृष्यति—इति विगृहीतं मुकुटेन । तन्न । दैवादिकत्वाच्छ्यनि सति 'हृष्यमाणः' इत्यापत्तेः ॥ (१) ॥*॥ विकुरुते । चानश् (३।२।१२९) । शानच् (३।२।१२४) वा ॥ (२) ॥*॥ प्रकृष्टं मनो यस्य ॥ (३) ॥*॥ हृष्टं मानसमस्य ॥ (४) ॥*॥ चत्वारि '**हर्षितमनसः**' ॥

**दुर्मना विमना अन्तर्मनाः स्यात्**

**द्विति** ॥ दुःस्थितं मनोऽस्य ॥ (१) ॥*॥ विगतं विविधं वा मनोऽस्य ॥ (२) ॥*॥ अन्तर्मनोऽस्य ॥ (३) ॥*॥ त्रीणि '**दुःखितमनसः**' ॥

**उत्क उन्मनाः ।**

**उत्क इति** ॥ उद्गतं मनोऽस्य । 'उत्क उन्मनाः' (५।२।८०) इत्युद्गतमनस्कवृत्तेरुच्छब्दात्स्वार्थे कन् ॥ (१) ॥*॥ (२) ॥*॥ द्वे '**उत्कण्ठितमनसः**' ॥

१—वाणिरम्बु । 'व्यूतौ मूल्ये सरस्वत्याम्' इति हैमादिकोषेषु 'यद्वाणिसद्वाणिनी' इत्यादि महाकविप्रयोगेषु इस्वान्तस्यापि वाणिशब्दस्य दर्शनेन तेन समासे तु क्लेशोऽयं नाङ्गीकरणीयः ॥

**दक्षिणे सरलोदारौ**

**देति** ॥ दक्षते । 'दक्ष वृद्धौ शीघ्रार्थे च' (भ्वा० आ० से०) । 'द्रुदक्षिभ्यामिनन्' (उ० २।५०) । 'दक्षति' इति परस्मैपदप्रयोगस्तु मुकुटस्य चिन्त्यः । '**दक्षिणो** दक्षिणोद्भूतसरलच्छन्दवर्तिषु । अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ सरति । 'सृ गतौ' (भ्वा० प० अ०) अलच् (उ० १।१०६) । '**सरलः** पूतिकाष्ठे नाथोदारावक्रयोस्त्रिषु' (इति मेदिनी) ॥ (२) ॥*॥ उत्कृष्टमा समन्ताद् राति । 'आतश्च–' (३।१।१३६) इति कः । उदर्यते । 'ऋ गतिप्रापणयोः' (भ्वा० आ० से०) । कर्मणि घञ् (३।३।१९) वा । '**उदारो** दातृमहतोर्दक्षिणेऽप्यभिधेयवत्' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि '**ऋज्वाशयस्य**' ॥

**सुकलो दातृभोक्तरि ॥ ८ ॥**

**स्विति** ॥ सुकल्यते । 'कल शब्दसंख्यानयोः' (भ्वा० आ० से०) । 'ईषद्दुः–' (३।३।१२६) इति खल् । शोभना कला यस्य, इति वा ॥ (१) ॥*॥ एकम् '**दातृभोक्त्रोः**' ॥

**तत्परे प्रसितासक्तौ**

**तेति** ॥ परमुत्तमं यस्य । तेन पूर्यते । 'पृ पालनपूरणयोः' (जु० प० से०) 'ऋदोरप्' (३।३।५७) वा ॥ (१) ॥*॥ प्रासायि । 'षिञ् बन्धने' (स्वा० उ० अ०) । कर्मणि क्तः (३।२।१०२) ॥ (२) ॥*॥ असञ्जि । 'षञ्ज सङ्गे' (भ्वा० प० अ०) ॥ (३) ॥*॥ त्रीणि '**तात्पर्ययुक्तस्य**' ॥

**इष्टार्थोद्युक्त उत्सुकः ।**

**इष्टेति** ॥ इष्टश्चासावर्थश्च । तत्र उद्युक्तः ॥ (१) ॥*॥ उद् उद्योगं, सवति । 'षु प्रसवैश्वर्ययोः' (भ्वा० प० अ०) सुनोति वा 'षुञ् अभिषवे' (स्वा० उ० अ०) । विचि (३।२।७५) संज्ञापूर्वकत्वाद्गुणाभावः । क्विपि (३।२।७६) । आगमशास्त्रस्यानित्यत्वात्तुगभावो वा । ततः 'संज्ञायां कन्' (५।३।७५) । यद्वा उत्सुवति । 'षू प्रेरणे' (तु० प० से०) । मितद्र्वादित्वात् (वा० ३।२।१८०) डुः । 'सत्सू–' (३।२।६१) इति क्विप् वा । कनि (ज्ञापि० ५।४।५) 'केऽणः' (७।४।१३) इति ह्रस्वः ॥ (२) ॥*॥ द्वे '**इष्टार्थोद्यमवतः**' ।—पञ्चापि तत्परपर्यायाः इत्येके ॥

**प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः ॥ ९ ॥**

**प्रेति** ॥ प्रत्येकमगात् । प्रतीयते स्म, इति वा 'इण् गतौ' (अ० प० अ०) । गत्यर्थत्वात् कर्तरि (३।४।७२), कर्मणि (३।२।१०२) वा क्तः ॥ (१) ॥*॥ प्रथते स्म । 'प्रथ प्रख्याने' (भ्वा० आ० से०) । अकर्मकत्वात् कर्तरि (३।४।७२) क्तः ॥ (२) ॥*॥ अख्यायि । 'ख्यै प्रकथने' (अ० प० अ०) । 'चक्षिङः ख्याञ्' (२।४।५४) वा । क्तः (३।२।१०२) ॥ (३) ॥*॥ अवेदि । 'विद्लृ लाभे' (तु० उ० अ०) । क्तः (३।२।१०२) । 'वित्तो भोगप्रत्यययोः' (८।२।५८) इति साधुः ॥ (४) ॥*॥ व्यज्ञायि । 'ज्ञा अवबोधने' (क्र्या० प० अ०) । क्तः (३।२।१०२) यद्वा विजानाति । 'मतिबुद्धि–' (३।२।१८८) इति क्तः ॥ (५) ॥*॥ व्यश्रावि । 'श्रु श्रवणे' (भ्वा० प० अ०) । क्तः (३।२।१०२) ॥ (६) ॥*॥ षट् '**प्रसिद्धस्य**' ॥

**गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ ।**

**ग्विति** ॥ कृतमुच्चारितं लक्षणं नामास्य । '**लक्षणं** नाम्नि चिह्ने च' इति विश्वः ॥ (१) ॥*॥ '**आहतं** गुणितेऽपि स्यात्' इति विश्वः । आहतमभ्यस्तं लक्षणं यस्य ॥ (२) ॥*॥ द्वे '**गुणैः प्रसिद्धस्य**' ॥

**इभ्य आढ्यो धनी**

**इभ्य इति** ॥ इभमर्हति । दण्डादित्वात् (५।१।६६) यः । यद्वा एः कामाद् भ्यसते । 'भ्यस भये' (भ्वा० आ० से०) । 'अन्येभ्योऽपि–' वा० (३।२।१०१) इति डः । '**इभ्यो** धनवतीभ्यां तु वरेण्यां सल्लकीतरौ' इति हेमचन्द्रः ॥ (१) ॥*॥ आध्यायति । 'आतः–' (३।१।१३६) इति कः । पृषोदरादिः (६।३।१०९) ॥ (२) ॥*॥ बहुधनमस्य । इनिः (५।२।११५) ॥ (३) ॥* त्रीणि '**बहुधनस्य**' ॥

**स्वामी त्वीश्वरः पतिरीशिता ॥ १० ॥**

**अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः ।**

**स्वेति** ॥ स्वमस्यास्ति । 'स्वामिन्नैश्वर्ये' (५।२।१२६) इति साधुः । '**स्वामी** प्रभुविशाखयोः' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ ईष्टे । 'ईश ऐश्वर्ये' (अ० आ० से०) । 'स्थेश–' (३।२।१७५) इति वरच् । 'ईश्वरो मन्मथे शंभौ नाढ्ये स्वामिनि वाच्यवत् । **ईश्वरी** चेश्वरोमायाम्' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ पाति 'पा रक्षणे' (अ० प० अ०) । 'पातेर्डतिः' (उ० ४।५७) । '**पति**र्धवे ना त्रिष्वीशे' इति विश्वः (मेदिनी) ॥ (३) ॥*॥ ईष्टे । 'तृन्' (३।२।१३५) । तृच् (३।१।१३३) वा ॥ (४) ॥*॥ अधिभवति । 'भुवः संज्ञान्तरयोः' (३।२।१७९) इति क्विप् ॥ (५) ॥*॥ नयति । 'णीञ् प्रापणे' (भ्वा० उ० से०) । ण्वुल् (३।१।१३३) । 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि' इति विश्वहेमचन्द्रौ ॥ (६) ॥*॥ तृच् (३।१।१३३) ॥ (७) ॥*॥ प्रभवति । 'विप्रसंभ्यः–' (३।२।१८०) इति डुः ॥ (८) ॥*॥ परिवर्हति । परिवृंहति वा । 'बृह बृहि वृद्धौ' (भ्वा० प० से०) । 'प्रभौ परिवृढः' (७।२।२१) इति साधुः ॥ (९) ॥*॥ अधि पाति । 'आतश्चोपसर्गे' (३।१।१३६) इति कः ।—मूलविभुजादिः (वा० ३।२।५)—इति मुकुटोक्तिश्चिन्त्या ॥ (१०) ॥*॥ दश '**अधिपतेः**' ॥

---

१—अस्य सार्वधातुकमात्रविषयत्वादत्र लेखो निर्मूलः ॥

**अधिकर्द्धिः समृद्धः स्यात्**

**अधीति** ॥ अधिका ऋद्धिरस्य।—'ऋधु वृधौ' (स्वा० प० से०) इति धातूपन्यासो मुकुटस्य व्यर्थः ॥ (१) ॥*॥ समृध्नोति स्म। 'ऋधु वृद्धौ' (स्वा० प० से०)। अकर्मकत्वात् क्तः (३।४।७२) ॥ (२) ॥*॥ द्वे '**अतिसंपन्नस्य**' ॥

**कुटुम्बव्यापृतस्तु यः ॥ ११ ॥**

**स्यादभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयम्।**

**कुेति** ॥ कुटुम्बपोषणे संसक्तः। व्याप्रियते स्म। 'पृङ् व्यायामे' (तु० आ० अ०)। अकर्मकत्वात् क्तः, (३।४।७२)। '**व्यापृत**स्तरुणो युवा' इति बोपालितः ॥ (१) ॥*॥ अभ्यागारे नियुक्तः। 'अगारान्ताट्ठन्' (४।४।७०)। अभि अधिक आगारिको वा ॥ (२) ॥*॥ आधानमाधिः। 'उपसर्गे' (३।३।९२) इति किः। उपगत आधिम्। 'अत्यादयः-' (वा० २।२।१८) इति समासः। यत्तु—उपादधाति कुटुम्बम्—इति विगृह्य—'उपसर्गे' (३।३।९२) इति किः—इत्युपन्यस्तं मुकुटेन। तन्न। कर्तरि किप्रत्ययास्मरणात्। '**उपाधि**र्धर्मचिन्तायां कुटुम्बव्यापृते छले' इति विश्वमेदिन्यौ ॥ (३) ॥*॥ त्रीणि '**कुटुम्बव्यापृतस्य**' ॥

**वराङ्गरूपोपेतो यः सिंहसंहननो हि सः ॥ १२ ॥**

**वरेति** ॥ अङ्गानि च रूपं च, अङ्गरूपाणि। वराणि च तान्यङ्गरूपाणि च। तैरुपेतः ॥*॥ सिंहं श्रेष्ठं संहननमस्य। संहनने सिंहः इति वा। राजदन्तादिः (२।२।३१) ॥ (१) ॥*॥ एकम् '**सौन्दर्योपेतस्य**' ॥

**निर्वार्यः कार्यकर्ता यः संपतन् सत्त्वसंपदा।**

**नीति** ॥ निश्चयेन व्रियते। 'वृञ् वरणे' (स्वा० उ० से०)। 'ऋहलोर्ण्यत्' (३।१।१२४) ॥*॥ '**निर्धार्यः**' इति पाठे 'धृञ् धारणे' (भ्वा० उ० अ०) इति साधुः ॥ (१) ॥*॥ 'व्यसनेऽभ्युदये वापि ह्यविकारं सदा मनः। तत्तु सत्त्वमिति प्रोक्तम्'। तत्संपदा संपतन् उद्यमं। कुर्वन्। 'संयुक्तः' इति वा पाठः ॥*॥ एकं '**निःशङ्ककार्यकर्तुः**' ॥

**अवाचि मूकः**

**अवेति** ॥ न वागस्य ॥ (१) ॥*॥ 'मू' इति कायति। 'आतोऽनुप-' (३।२।३) इति कः। यत्तु—मूयते वध्यते वागस्य। 'मूङ् बन्धने' (भ्वा० आ० से०)। बाहुलकात् अवतिमवतिभ्याम् कक्—इति मुकुटेनोक्तम्। तन्न। धातुप्रत्ययानां कारकेषु विहितत्वात्संबन्धे विधानाभावात्। अवतेः प्रयोजनाभावात्। 'धातोः' इत्येकत्वविवक्षणेन धातुसमुदायात् प्रत्ययाभावाच्च। उक्तसूत्राभावाच्च। '**मूको** दैत्यावाग्दीनेषु,' इति हैमः ॥ (२) ॥*॥ द्वे '**मूकस्य**' ॥

**अथ मनोजवः स पितसंनिभः ॥ १३ ॥**

मनो जवं वेगवद्यस्मिन्। यत्तु—मनो जवति प्रविशतीति। अच् (३।१।१३४)—इति मुकुटेनोक्तम्। तन्न। उक्तविग्रहात्पितृसंनिभस्यालाभात्। अधिकरणविवक्षायां ल्यचोऽसंभवात्। अपः (३।३।५७) औचित्यात्। 'मनोजवपितृसधर्माणः' इति नाममाला ॥*॥ स्वामी तु-'**मनोजवसः**' चमसादिवत्—इत्याह ॥ (१) ॥*॥ पितेव सम्यग्विभाति। 'भा दीप्तौ' (अ० प० अ०)। 'आतश्चोपसर्गे' (३।१।१३६) इति कः ॥ (२) ॥*॥ द्वे '**पितृसमस्य**' ॥

**सत्कृत्यालंकृतां कन्यां यो ददाति स कूकुदः।**

**सेति** ॥ कोकते। 'कुक आदाने' (भ्वा० आ० से०)। 'इगुपध-' (३।१।१३५) इति कः। पृषोदरादिः (६।३।१०९)। यद्वा कवनम्। कूः। 'कूङ् शब्दे' (तु० आ० से०)। संपदादिः (वा० ३।३।१०८)। कुवः शब्दस्य कुर्भूः कीर्तिभूमिः' इति यावत्। कूकुं ददाति, कूका दायति वा। 'दैप् शोधने' (भ्वा० प० अ०)। 'आतोऽनुप-' (३।२।३) इति 'सुपि-' (३।२।४) इति योगविभागाद्वा कः ॥ (१) ॥*॥ एकम् '**सत्कारपूर्वं कन्यादातुः**' ॥

**लक्ष्मीवांल्लक्ष्मणः श्रीलः श्रीमान्**

**लेति** ॥ लक्ष्मीरस्यास्ति। मतुप्। (५।२।९४) ॥ (१) ॥*॥ 'लक्ष्म्या अ च' (ग० ५।२।१००) इति 'पामादित्वान्नः' अत्वं च। '**लक्ष्मणा** त्वोषधीभेदे सारस्यामपि योषिति। रामभ्रातरि पुंसि स्यात्सश्रीके चाभिधेयवत्' (इति मेदिनी) ॥ (२) ॥*॥ श्रीरस्यास्ति। सिध्मादित्वात् (५।२।९७) लच्। श्रियं लाति वा ॥*॥ कपिलिकादित्वात् (वा० ८।२।१८) लत्वे '**श्लीलः**' इत्यपि ॥ (३) ॥*॥ मतुब् (५।२।९४) अपि ॥ (४) ॥*॥ चत्वारि '**श्रीमतः**' ॥

**स्निग्धस्तु वत्सलः ॥ १४ ॥**

**स्नीति** ॥ स्निह्यति स्म। 'ष्णिह प्रीतौ' (दि० प० अ०)। अकर्मकत्वात् (३।४।७२) क्तः। 'वा द्रुह-' (८।२।३३) इति वा घः ॥ (१) ॥*॥ '**वत्सः** पुत्रादिवर्षयोः' (इति मेदिनी)। वत्से पुत्रादिस्नेहपात्रेऽभिलाषोऽस्यास्ति। 'वत्सांसाभ्याम्-' (५।२।९८) इति लच् ॥ (२) ॥*॥ द्वे '**वत्सलस्य**' ॥

**स्याद्दयालुः कारुणिकः कृपालुः सूरतः समाः।**

**स्येति** ॥ 'स्पृहिगृहि-' (३।२।१५८) इत्यालुच् ॥ (१) ॥*॥ करुणा शीलमस्य। 'शीलम्' (४।४।६१) इति ठक् ॥ (२) ॥*॥ कृपां लाति। मितद्र्वादित्वात् (वा० ३।२।१८०) डुः ॥ (३) ॥*॥ शोभन उः शंभुः। सूः। स्वि रतः, रतं वा यस्य। यद्वा सुरमते। 'सौ रमेः क्तो दमेः पूर्वपदस्य च दीर्घः' (उ० ५।१४)। यत्तु—'तातपलितसूरताः' इति रमेः

क्तः दीर्घश्च—इति वचनमुपन्यस्तं मुकुटेन । तत् पञ्चपाद्यादौ न लभ्यते ॥ (४) ॥*॥ चत्वारि '**दयालोः**' ॥

**स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः॥ १५॥**

**स्वेति** ॥ स्व आत्मा तन्त्रं प्रधानमस्य ॥ (१) ॥*॥ अपगतमावृतमावरणमस्य । '**अपावृत**स्तु पिहिते स्वतन्त्रेऽपि च वाच्यवत्' (इति विश्वमेदिन्यौ) ॥ (२) ॥*॥ स्वेनेरितुं शीलमस्य । 'ईर गतौ' ( अ० आ० से० ) । 'सुप्यजातौ–' (३।२।७८) इति णिनिः । 'स्वादीरेरिणोः' (भ्वा० ६।१।८९) इति वृद्धिः ॥ (३) ॥*॥ स्वः छन्दोऽभिलाषो यस्य ॥ (४) ॥*॥ निष्क्रान्तोऽवग्रहान्नियमात् । 'निरादयः–' (वा० २।२।१८) इति समासः ॥ (५) ॥*॥ पञ्च '**स्वतन्त्रस्य**' ॥

**परतन्त्रः पराधीनः परवान्नाथवानपि ।**

**पेति** ॥ परस्तन्त्रं प्रधानं यस्य ॥ (१) ॥*॥ परस्मिन्नधि । 'सप्तमी शौण्डैः' (२।१।४०) इति समासः । 'अषडक्ष–' (५।४।७) इति खः । यत्तु—परोऽध्युपर्यस्य—इति विगृहीतम् । तन्न । शौण्डादिष्वधिपाठवैयर्थ्यापातात् ॥ (२) ॥*॥ परः स्वाम्यस्यास्ति । मतुप् (५।२।९४) ॥ (३) ॥*॥ नाथोऽस्यास्ति ॥ (४) ॥*॥ चत्वारि '**परतन्त्रस्य**' ॥

**अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ १६**

**अधीति** ॥ इनमधिगतः । 'अत्यादयः–' (वा० २।२।१८) इति समासः । अधि उपरि, इनोऽस्य इति वा ॥ (१) ॥*॥ निहन्यते निगृह्यते । हन्तेः 'घञर्थे कः' (वा० ३।३।५८) ॥ (२) ॥*॥ आयतते स्म । 'यती प्रयत्ने' ( भ्वा० आ० से० ) । अकर्मकत्वात् (३।४।७२) क्तः ॥ (३) ॥*॥ न स्वः छन्दोऽस्य ॥ (४) ॥*॥ गृह्यते । 'ग्रह उपादाने' ( क्र्या० उ० से० ) । 'पदास्वैरि–' (३।१।११९) इति क्यप् । स्वार्थे कन् (ज्ञापि० ५।४।५) । '**गृह्यको** निघ्नके छेके' इति विश्वमेदिन्यौ ॥ (५) ॥*॥ पञ्च '**अधीनसामान्यस्य**' ॥ एके तु नवभिः पर्यायमाहुः ॥

**खलपूः स्याद्बहुकरः**

**खेति** ॥ 'खलं भूस्थानकल्केषु' इति विश्वः । खलं पुनाति । 'पूञ् पवने' ( क्र्या० उ० से० ) । क्विप् (३।२।७६) ॥ (१) ॥*॥ बहु करोति, भुवं संमार्ष्टि । 'किंयत्तद्बहुष्वज्विधानम्' (वा० ३।२।२१) इत्यच् । स्त्रियां बहुकरा । यत्तु—ताच्छील्यविवक्षायां तु टः (३।२।२०) एव । स्त्रियां 'बहुकरी'—इत्युक्तं मुकुटेन । तन्न । टापवादत्वेनाज्विधानात् ॥ (२) ॥*॥ द्वे '**भुवं मार्जयतः**' ॥

**दीर्घसूत्रश्चिरक्रियः ।**

**दीति** ॥ '**सूत्रं** तन्तुव्यवस्थयोः' इति विश्वः । दीर्घं सूत्रं व्यवस्था यस्य ॥ (१) ॥*॥ चिरा क्रिया यस्य ॥ (२) ॥*॥ द्वे '**अतिविलम्बेन क्रियासंपादकस्य**' ॥

**जाल्मोऽसमीक्ष्यकारी स्यात्**

**जेति** ॥ जालयति, जाल्यते वा । 'जल अपवारणे' ( चु० प० से० ) । बाहुलकान्मः ।—धूमवन् मः—इति मुकुटस्तु चिन्त्यः । 'इषियुधि–' (उ० १।४५) इति सूत्रे जलेग्रहणात् । धूमेऽपि गुणप्रसङ्गात् 'मक्' इति वक्तुं युक्तत्वाच्च । '**जाल्म**स्तु पामरे । असमीक्ष्यकारिणि च' इति हैमः ॥ (१) ॥*॥ असमीक्ष्याविचार्य कर्तुं शीलमस्य । 'सुपि–' (३।२।७८) इति णिनिः ॥ (२) ॥*॥ द्वे '**अविचारिणः**' ॥

**कुण्ठो मन्दः क्रियासु यः ॥ १७॥**

**क्विति** ॥ कुण्ठति । 'कुठि प्रतिघाते आलस्ये च' ( भ्वा० प० से० ) । पचाद्यच् (३।१।१३४) । ('**कुण्ठो**ऽकर्मण्यमूर्खयोः' इति मेदिनी) ॥ (१) ॥*॥ एकं '**मन्दक्रियस्य**' ॥

**कर्मक्षमोऽलंकर्मीणः**

**केति** ॥ कर्मसु क्षमः ॥ (१) ॥*॥ 'सप्तमी' (२।१।४०) इति योगविभागात्समासः ॥ (१) ॥*॥ कर्मणे क्रियायै अलं समर्थः । 'प्राप्तापन्नालंपूर्व–' (वा० २।४।२६) इति परवल्लिङ्गनिषेधात्समासः । 'पर्यादयः–' (वा० २।२।१८) इति वा । 'अषडक्ष–' (५।४।७) इति खः ॥ (२) ॥*॥ द्वे '**क्रियाकरणे समर्थस्य**' ॥

**क्रियावान् कर्मसूद्यतः ।**

**क्रीति** ॥ क्रियास्यास्ति । मतुप् (५।२।९५) ॥ (१) ॥*॥ एकम् '**उद्योगोद्यतस्य**' ॥

**स कार्मः कर्मशीलो यः**

**स इति** ॥ कर्म शीलमस्य । 'छत्रादिभ्यो णः' (४।४।६२) वा । स्त्रियां कार्मी ॥ (१) ॥*॥ (२) ॥*॥ द्वे '**कर्मसु फलमनपेक्ष्य प्रवृत्तस्य**' ॥

**कर्मशूरस्तु कर्मठः ॥ १८ ॥**

**केति** ॥ कर्मणि शूरः । सप्तमीसमासः (२।१।४०) ॥ (१) ॥*॥ 'कर्मणि घटोऽठच्' (५।२।३५) ॥ (२) ॥*॥ द्वे '**प्रयत्नेन प्रारब्धकर्मपरिसमापकस्य**' ॥

**भरण्यभुक्कर्मकरः**

**भेति** ॥ भरण्यं वेतनं भुङ्क्ते । क्विप् (३।२।७६) ॥*॥ क्वचित् '**कर्मण्यभुक्**' इति पाठः । तत्र कर्मणि साधु । 'तत्र साधुः' (४।४।९८) इति यत् । कर्मण्यं वेतनम् ॥ (१) ॥*॥ कर्म करोति । 'कर्मणि भृतौ' (३।२।२२) इति टः ॥ (२) ॥*॥ द्वे '**मूल्येन कर्म कुर्वतः**' अयं शूद्रवर्गे उक्तोऽपि 'भरण्यभुग्' इति पर्यायान्तरकथनार्थमनूदितः ॥

**कर्मकारस्तु तत्क्रियः ।**

**केति** ॥ कर्म करोति । 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ 'तत्क्रियः कर्मकारक्रियः' 'अभृतक्रियः' इत्यर्थः ॥*॥ '**यो वेतनं विना कर्म करोति तस्य**' एकम् ॥

**अपस्नातो मृतस्नातः**

**अपेति** ॥ अपकृष्टं स्नातः। 'प्रादयो गताद्यर्थे' (वा० २।२।१८) इति समासः ॥ (१) ॥*॥ मृते स्नातः। सप्तमीसमासः (२।१।४०) ॥ (२) ॥*॥ द्वे **'मृतमुद्दिश्य स्नातस्य'** ॥

**आमिषाशी तु शौष्कलः ॥ १९ ॥**

**आमीति** ॥ आमिषमश्नाति। 'अश भोजने' ( क्र्या० प० से० )। 'सुपि–' (३।२।७८) इति णिनिः ॥ (१) ॥*॥ **'शुष्कली** शुष्कमांसेऽपि मांसपात्रेऽपि सा मता'। तामत्ति। 'शेषे' (४।२।९२) इत्यण्। स्वामी तु **'शाष्कलः'** इति पाठति। तत्र पृषोदरादिः (६।३।१०९) ॥*॥ संज्ञापूर्वकत्वाद्वृद्ध्यभावोऽपि। **'शुष्कलः** शुष्कमांसस्य फणिके पिशिताशिनि' इति हैमः ॥ (२) ॥*॥ द्वे **'मांसाशिनः'** ॥

**बुभुक्षितः स्यात्क्षुधितो जिघत्सुरशनायितः।**

**ब्विति** ॥ बुभुक्षा जातास्य। तारकादित्वात् (५।२।३६) इतच् ॥ (१) ॥*॥ क्षुध्यति स्म। अकर्मकत्वात् (३।४।७२) क्तः। 'वसतिक्षुधोः–' (७।२।५२) इतीट् ॥ (२) ॥*॥ अत्तुमिच्छुः। अदेः सनि 'लुङ्सनोर्घस्लृ' (२।४।३७)। 'सनाशंस–' (३।२।१६८) इत्युः ॥ (३) ॥*॥ अशनस्येच्छा। 'अशनाया–' ( ७।४।३४ ) इति साधुः। अशनाया जातास्य। तारकादिः (५।२।३६) ॥ (४) ॥*॥ चत्वारि **'क्षुधितस्य'** ॥

**परान्नः परपिण्डादः**

**पेति** ॥ परस्यान्नम्। परान्नं नित्यमस्य। 'अर्शआदिभ्योऽच्' (५।२।१२७) ॥ (१) ॥*॥ **'पिण्डमाजीवने'** इति धरणिः। परस्य पिण्डम्। तदत्ति। 'कर्मण्यण्' (३।२।१) ॥ ॥*॥ द्वे **'परान्नजीवनस्य'** ॥

**भक्षको घस्मरोऽद्मरः ॥ २० ॥**

**भेति** ॥ भक्षयति। 'भक्ष अदने' ( चु० प० से० )। ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ घसति 'घस्लृ अदने' ( भ्वा० प० अ० )। 'सृघस्यदः क्मरच्' (३।२।१६०) ॥ (२) ॥*॥ अत्ति ॥ (३) ॥*॥ त्रीणि **'भक्षणपरस्य'** ॥

**आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते।**

**आद्यिति** ॥ आदेवीत्। अकर्मकत्वात् क्तः (३।४।७२)। 'दिवोऽविजिगीषायाम्' (८।२।४९) इति निष्ठानत्वम्। 'यस्य विभाषा' (७।२।१५) इति नेट् ॥ (१) ॥*॥ उदरे प्रसितः। 'उदराट्ठगाद्यूने' (५।२।६७) इति ठक् ॥ (२) ॥*॥ द्वे **'औदरिकस्य'** ॥

**उभौ त्वात्मंभरिः कुक्षिंभरिः स्वोदरपूरके ॥ २१ ॥**

**विति** ॥ आत्मानं कुक्षिं च बिभर्ति। 'फलेग्रहिरात्मंभरिश्च' (३।२।२६) इति साधुः ॥ (१) ॥*॥ चात् ('भृञः कुक्ष्यात्मनोर्मुम् च' इति वार्तिकेन च) कुक्षिंभरिः ॥ (२) ॥*॥ द्वे **'स्वोदरपूरकस्य'** ॥

**सर्वान्नीनस्तु सर्वान्नभोजी**

**सेति** ॥ सर्वेषामन्नानि। सर्वान्नानि भक्षयति। 'अनुपदसर्वान्न–' (५।२।९) इति खः ॥ (१) ॥*॥ सर्वान्नानि भोक्तुं शीलमस्य। 'सुपि–' (३।२।७८) इति णिनिः ॥ (२) ॥*॥ द्वे **'सर्ववर्णान्नभक्षकस्य'** ॥

**गृध्नुस्तु गर्धनः।**

**लुब्धोऽभिलाषुकस्तृष्णक्[1]**

**ग्रिति** ॥ गर्धनशीलः। 'गृधु अभिकाङ्क्षायाम्' ( दि० प० से० )। 'त्रसिगृधि–' (३।२।१४०) इति क्नुः ॥ (१) ॥*॥ 'जुचङ्क्रम्य–' (३।२।१५०) इति युच् ॥ (२) ॥*॥ लुभ्यति। 'लुभ गार्ध्ये' (दि० प० से०)। 'गत्यर्था–' (३।४।७२) इति क्तः। **'लुब्ध** आकाङ्क्षिणि व्याधे' इति हेमचन्द्रः ॥ (३) ॥*॥ अभिलष्यति। 'लष कान्तौ' ( भ्वा० उ० से० )। 'लषपतपद–' (३।२।१५४) इत्युकञ् ॥ (४) ॥*॥ तृष्यति। 'ञितृषा पिपासायाम्' ( दि० प० से० )। 'स्वपितृषोर्नजिङ्' (३।२।१७२) ॥ (५) ॥*॥ पञ्च **'लुब्धस्य'** ॥

**समौ लोलुपलोलुभौ ॥ २२ ॥**

**सेति** ॥ गर्हितं लुम्पति। 'लुपॢ छेदे' ( तु० उ० अ० ) 'लुपसद–' (३।१।२४) इति यङन्तादच् (३।१।१३४) ॥ (१) ॥*॥ भृशं लुभ्यति। 'लुभ गार्ध्ये' ( दि० प० से० )। 'धातोरेकाचः' (३।१।२२) इति यङन्तादच् (३।१।१३४) ॥ (२) ॥*॥ द्वे **'अतिलुब्धस्य'** ॥

**उन्मदस्तून्मदिष्णुः स्यात्**

**उन्मेति** ॥ उद्गतो मदो हर्षोऽस्य ॥*॥ क्वचित् **'सोन्मादः'** इति पाठः। तत्र सह उन्मादेन वर्तते। सोपसर्गत्वान्मनेर्घञ् ॥*॥ सु अतिशयित उन्मादोऽस्य। **'सून्मादः'** इत्यपि ॥ (१) ॥*॥ उन्मदनशीलः। 'मदी हर्षे' ( दि० प० से० )। 'अलंकृञ्–' (३।२।१३६) इतीष्णुच् ॥ (२) ॥*॥ द्वे **'उन्मादशीलस्य'** ॥

**अविनीतः समुद्धतः।**

**अवीति** ॥ न व्यनायि। 'णीञ् प्रापणे' ( भ्वा० उ० अ० )। क्तः (३।२।१०२) ॥ (१) ॥*॥ समुद्धन्ति स्म। समुद्धन्यते स्म, इति वा। हन्तेर्गत्यर्थत्वात् कर्तरि (३।४।७२) कर्मणि (३।२।१०२) वा क्तः। **'समुद्धतं** समुद्गीर्णेऽप्यविनीते च वाच्यवत्' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'उद्धतस्य'** ॥

---

[1] —तृष्णाशब्दात् 'तत्करोति–' (वा० ३।१।२६) इति ण्यन्तात् ण्वुलि (३।१।१३३) 'तृष्णकः अदन्तोऽपि' इति सर्वधरः—इति मुकुटः ॥

**मत्ते शौण्डोत्कटक्षीबाः**

**मेति** ॥ माद्यति । 'गत्यर्था—' (३।४।७२) इति मदेः क्तः 'न ध्याख्या—' (८।२।५७) इति न निष्ठानत्वम् ॥ (१) ॥*॥ शुण्डायां पानागारे भवः । 'तत्र भवः' (४।३।५३) इत्यण् । '**शौण्डो** मत्ते च विख्याते पिप्पल्यां च भवेत् स्त्रियाम्' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ उद्गतः कट आवरणमावारको वास्य । यद्वा उद्गतमदवृत्तेरुच्छब्दात् स्वार्थे 'संप्रोदश्च' (५।२।२९) इति कटच् । '**उत्कट**स्तीव्रमत्तयोः' इति हैमः ॥ (३) ॥*॥ क्षीबते स्म । 'क्षीबृ मदे' (भ्वा० आ० से०) । अकर्मकत्वात् कर्तरि क्तः (३।४।७२) । 'अनुपसर्गात्—' (८।२।५५) इति साधुः । कः (३।१।१३५) वा ॥*॥ नान्तोऽप्ययम् । 'क्षीबाणौ समबुध्यत' इति व्यासप्रयोगात् । तत्र बाहुलकात् कनिन् ॥ (४) ॥*॥ चत्वारि '**उन्मत्तस्य**' ॥

**कामुके कमितानुकः ॥ २३ ॥**
**कम्रः कामयिताभीकः कमनः कामनोऽभिकः ।**

**केति** ॥ कामयते । 'कमु कान्तौ' (भ्वा० आ० से०) । 'लषपतपद—' (३।२।१५४) इत्युकञ् । '**कामुकः** कमनेऽशोकपादपे चातिमुक्तके' इति (मेदिनी) ॥*॥ णिङभावे च तृच् (३।१।१३३) ॥ (५) ॥*॥ (२) ॥*॥ अनुकामयते । 'अनुकाभिका—' (५।२।७४) इति साधुः ॥ (३) ॥*॥ 'नमिकम्पि—' (३।२।१६७) इति रः ॥ (४) ॥*॥ अभि कामयते । 'अनुकाभिका—' (५।२।७४) इति साधुः । '**अभिकः** कामुके क्रूरे निर्भये त्रिषु ना कवौ' (इति मेदिनी) ॥ (६) ॥*॥ (९) ॥*॥ 'अनुदात्तेतश्च—' (३।२।१४९) इति युच् । '**कमनः** कामुके कामेऽभिरूपेऽशोकपादपे' (इति मेदिनी) ॥ (७) ॥*॥ णिङन्ताद्युच् (उ० २।७८) ॥ (८) ॥*॥ नव '**कामुकस्य**' ॥

**विधेयो विनयग्राही वचनेस्थित आश्रवः ॥ २४ ॥**

**वीति** ॥ विधातुं शक्यः । 'अचो यत्' (३।१।९७) । 'ईद्यति' (६।४।६५) । गुणः (७।३।८४) ॥ (१) ॥*॥ प्रवृत्तौ निवृत्तौ वा विनयं ग्रहीतुं शीलमस्य । 'सुपि—' (३।२।७८) इति णिनिः ॥ (२) ॥*॥ वचने तिष्ठति स्म । 'गत्यर्था—' (३।४।७२) इति क्तः । 'तत्पुरुषे कृति—' (६।३।१४) इत्यलुक् ॥ (३) ॥*॥ आशृणोति । 'श्रु श्रवणे' (भ्वा० प० अ०) पचाद्यच् (३।१।१३४) । '**आश्रवो** वचनस्थिते । प्रतिज्ञायां च क्लेशे च' इति हैमः ॥ (४) ॥*॥ चत्वारि '**प्रवृत्तिनिवृत्त्योर्विधातुं शक्यस्य**' ॥

**वश्यः प्रणेयः**

**वेति** ॥ वशमधीनत्वं गतः । 'वशं गतः' (४।४।८६) इति यत् । '**वश**मायततायां स्यात्' इति विश्वः ॥ (१) ॥*॥ प्रकर्षेण नेतुं शक्यः । 'अचो यत्' (३।१।९७) ॥ (२) ॥*॥ द्वे '**स्वाधीनस्य**' ॥

**निभृतविनीतप्रश्रिताः समाः ।**

**नीति** ॥ नितरामभारि । 'भृञ् भरणे' (भ्वा० उ० अ०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ व्यनायि । 'णीञ्' (भ्वा० उ० से०) । क्तः (३।२।१०२) । '**विनीत**स्तु निभृते निर्जितेन्द्रिये । वाणिजे साधुवाह्यश्वे विनयग्राहिते हिते' इति हैमः ॥ (२) ॥*॥ प्रथममश्रायि गुणैः । 'श्रिञ् सेवायाम्' (भ्वा० उ० से०) क्तः (३।२।१०२) ॥ (३) ॥*॥ त्रीणि '**विनययुक्तस्य**' ॥

**धृष्टे धृष्णग्वियातश्च**

**धेति** ॥ धृष्णोति स्म । 'ञिधृषा प्रागल्भ्ये' (स्वा० प० से०) । 'गत्यर्था—' (३।४।७२) इति क्तः । 'धृषिशसी—' (७।२।१९) 'इतीडभावः' ॥ (१) ॥*॥ 'धृषेश्च'[1] इति नजिङ् ॥*॥ '**धृष्णुः**' इति पाठे 'त्रसिगृधि—' (३।२।१४०) इति क्नुः ॥ (२) ॥*॥ विरुद्धं यातं चेष्टितं यस्य । विरुद्धमयासीद्वा । 'गत्यर्था—' (३।४।७२) इति क्तः ॥ (३) ॥*॥ त्रीणि '**निर्लज्जस्य**' ॥

**प्रगल्भः प्रतिभान्विते ॥ २५ ॥**

**प्रेति** ॥ प्रगल्भते । 'गल्भ धार्ष्ट्ये' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ प्रतिभानम् । 'आतश्च—' (३।३।१०६) इत्यङ् । 'प्रज्ञा नवनवोन्मेषशालिनी **प्रतिभा** मता' इति रुद्रः । प्रतिभयान्वितः ॥ (२) ॥*॥ द्वे '**प्रत्युत्पन्नमतेः**' ॥

**स्यादधृष्टे तु शालीनः**

**स्येति** ॥ शालाप्रवेशमर्हति । 'शालीनकौपीने—' (५।२।२०) इति साधुः ॥ (२) ॥*॥ द्वे '**सलज्जस्य**' ॥

**विलक्षो विस्मयान्विते ।**

**वीति** ॥ विशेषेण लक्षयति 'लक्ष आलोचने' (भ्वा० आ० से०) । अच् (३।१।१३४) ॥ (१) ॥*॥ विस्मयेनाश्चर्येणान्वितः ॥ (२) ॥*॥ द्वे '**परकीयधर्मशीलादौ प्राप्ताश्चर्यस्य**' ॥

**अधीरे कातरः**

**अधीति** ॥ न धीरो धैर्यं यस्य ॥ (१) ॥*॥ ईषत्तरति । अच् (३।१।१३४) । 'ईषदर्थे' (६।३।१०५) इति कोः कादेशः ॥ (२) ॥*॥ द्वे '**रोगादिलक्षणेनाकुलमनसः**' ॥

**त्रस्नौ भीरुभीरुकभीलुकाः ॥ २६ ॥**

**त्रेति** ॥ त्रस्यति । 'त्रसी उद्वेगे' (दि० प० से०) । 'त्रसिगृधि—' (३।२।१४०) इति क्नुः ॥ (१) ॥*॥ बिभेति । 'ञिभी भये' (जु० प० अ०) । 'भियः क्रुक्लुकनौ' (३।२।१७४) । 'क्रुकन्नपि' (वा० ३।२।१७४) । '**भीरु**रार्ते

---

[1] १—'धृषेश्चेति वाच्यम्' इति काशिकादौ—इति सिद्धान्तकौमुदी ॥

त्रिलिङ्गः स्याद्भयरोषिति योषिति' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ (३) ॥*॥ चत्वारि '**भयशीलस्य**' ॥

**आशंसुराशंसितरि**

**आशेति** ॥ आशंसते । 'आङः शसि इच्छायाम्' (भ्वा० आ० से०) । 'सनाशंसभिक्षः–' (३।२।१६८) इत्युः ॥ (१) ॥*॥ 'तृन्' (३।२।१३५) ॥ (२) ॥*॥ द्वे '**इष्टार्थप्राप्तीच्छोः**' ॥

**गृहयालुर्ग्रहीतरि ।**

**ग्रिति** ॥ गृहयति । 'गृह ग्रहणे' चुरादावदन्तः 'स्पृहिगृहि–' (३।२।१५८) इत्यालुच् 'अयामन्ता–' (६।४।५५) इति णेरयादेशः ॥ (१) ॥*॥ (गृह्णाति) । 'ग्रह उपादाने' (क्र्या० उ० से०) । 'तृन्' (३।२।१३५) । 'ग्रहोऽलिटि–' (७।२।३७) इतीटो दीर्घः ॥ (२) ॥*॥ द्वे '**ग्रहणशीलस्य**'॥

**श्रद्धालुः श्रद्धया युक्ते**

**श्रेति** ॥ श्रद्धाति । 'स्पृहि–' (३।२।१५८) इत्यालुच् ॥ (१) ॥*॥ एकम् '**श्रद्धालोः**' ॥

**पतयालुश्च पातुके ॥ २७ ॥**

**पेति** ॥ पतयति । 'पत गतौ' (चु० उ० से०) । 'आलुच्' (३।२।१५८) ॥ (१) ॥*॥ (भौवादिकात्) 'लषपत–' (३।२।१५४) इत्युकञ् ॥ (२) ॥*॥ द्वे '**पतनशीलस्य**' ॥

**लज्जाशीलोऽपत्रपिष्णुः**

**लेति** ॥ लज्जा शीलमस्य ॥ (१) ॥*॥ अपत्रपते । 'अलंकृञ्–' (३।२।१३६) इतीष्णुच् ॥ (२) ॥*॥ द्वे '**लज्जाशीलस्य**' ॥

**वन्दारुरभिवादके ।**

**वेति** ॥ वन्दते । 'वदि अभिवादनस्तुत्योः' (भ्वा० आ० से०) । 'शॄवन्द्योरारुः' (३।२।१७३) ॥ (१) ॥*॥ अभिवादयति । ण्वुल् (३।१।१३३) ॥ (२) ॥*॥ द्वे '**वन्दनशीलस्य**' ॥

**शरारुर्घातुको हिंस्रः**

**शेति** ॥ शृणाति । 'शॄ हिंसायाम्' (क्र्या० प० से०) । आरुः (३।२।१७३) ॥ (१) ॥*॥ हन्ति । 'लषपत–' (३।२।१५४) इत्युकञ् ॥ (२) ॥*॥ हिनस्ति । 'हिसि हिंसायाम्' (रु० प० से०) । 'नमिकम्पि–' (३।२।१६७) इति रः । '**हिंस्रा** काकादनीमांस्योः स्त्रियां स्याद्घातुकेऽन्यवत्' इति विश्वमेदिन्यौ ॥ (३) ॥*॥ त्रीणि '**हिंसाशीलस्य**' ॥

**स्याद्वर्धिष्णुश्च वर्धनः ॥ २८ ॥**

**स्येति** ॥ वर्धते । 'वृधु वृद्धौ' (भ्वा० आ० से०) । 'अलंकृञ्' (३।२।१३६) इतीष्णुच् ॥ (१) ॥*॥ 'अनुदात्तेतश्च–' (३।२।१४९) इति युच् । '**वर्धनं** छेदने वृद्धौ **वर्धनी** तु गलन्तिका' इति हैमः ॥ (२) ॥*॥ द्वे '**वर्धनशीलस्य**' ॥

**उत्पतिष्णुस्तूत्पतिता**

**उत्पेति** ॥ उत्पतति । 'पत गतौ' (भ्वा० प० से०) इष्णुच् (३।२।१३६) ॥ (१) ॥*॥ 'तृन्' (३।२।१३५) ॥ (२) ॥*॥ द्वे '**ऊर्ध्वपतनशीलस्य**' ॥

**अलंकरिष्णुस्तु मण्डनः ।**

**अलमिति** ॥ अलंकरणशीलः । 'अलंकृञ्–' (३।२।१३६) इतीष्णुच् ॥ (१) ॥*॥ मण्डनशीलः । 'मडि भूषायाम्' (भ्वा० प० से०) । 'क्रुधमण्डार्थेभ्यश्च' (३।२।१५१) । इति युच् ॥ (२) ॥*॥ द्वे '**अलंकरणशीलस्य**' ॥

**भूष्णुर्भविष्णुर्भविता**

**भ्विति** ॥ भवनशीलः । 'ग्लाजिस्थश्च ग्स्नुः' (३।२।१३९) चाद्भुवः ॥ (१) ॥*॥ 'भुवश्च' (३।२।१३८) इतीष्णुच् ॥ (२) ॥*॥ 'तृन्' (३।२।१३५) ॥ (३) ॥*॥ त्रीणि '**भवनशीलस्य**' ॥

**वर्तिष्णुर्वर्तनः समौ ॥ २९ ॥**

**वेति** ॥ वर्तनशीलः । 'वृतु वर्तने' (भ्वा० आ० से०) 'अलंकृञ्–' (३।२।१३६) इतीष्णुच् ॥ (१) ॥*॥ 'अनुदात्तेतश्च' (३।२।१४९) इति युच् ॥ (२) ॥*॥ द्वे '**वर्तनशीलस्य**' ॥

**निराकरिष्णुः क्षिप्नुः स्यात्**

**नीति** ॥ निराकरणशीलः । इष्णुच् (३।२।१३६) ॥ (१) ॥*॥ क्षेपणशीलः । 'क्षिप प्रेरणे' (तु० उ० अ०) । 'त्रसिगृधि–' (३।२।१४०) इति क्नुः ॥ (२) ॥*॥ द्वे '**निराकरणशीलस्य**' ॥

**सान्द्रस्निग्धस्तु मेदुरः ।**

**सेति** ॥ सान्द्रो घनः स्निग्धश्चिक्कणः ॥ (१) ॥*॥ मेदनशीलः । 'ञिमिदा स्नेहने' (भ्वा० आ० से०) । 'भञ्जभास–' (३।२।१६१) इति घुरच् ॥ (२) ॥*॥ द्वे '**निबिडस्निग्धस्य**' ॥

**ज्ञाता तु विदुरो विन्दुः**

**ज्ञेति** ॥ जानाति 'तृन्' (३।२।१३५) ॥ (१) ॥*॥ वेदनशीलः । 'विदिभिदि–' (३।२।१६२) ॥*॥ इति कुरच् ॥ (२) ॥*॥ 'विन्दुरिच्छुः' (३।२।१६९) इति साधुः ॥ (३) ॥*॥ त्रीणि '**ज्ञानशीलस्य**' ॥

**विकासी तु विकस्वरः ॥ ३० ॥**

**वीति** ॥ विकसति । 'कस गतौ' (भ्वा० प० से०) । 'वौ कषलस–' (३।२।१४३) इति घिनुण् । '**विकासः** स्फुटने व्यक्तौ' इति दन्त्यान्ते धरणिः । तस्मादिनिः (५।२।११५) वा ॥ (१) ॥*॥ 'स्थेशभास–' (३।२।१७५) इति वरच् ॥ (२) ॥*॥ द्वे '**विकसनशीलस्य**' ॥

---

१—इदं च सिद्धान्तकौमुद्यनुरोधेन । भाष्ये तु 'भुव इट्प्रतिषेधश्च' इत्युपलभ्यते ॥

**विसृत्वरो विसृमरः प्रसारी च विसारिणि ।**

**वीति** ॥ विसरणशीलः । 'सृ गतौ' ( भ्वा० प० अ० ) । 'इण्नशजि–' (३।२।१६३) इति क्वरप् 'ह्रस्वस्य–' (६।१।७१) इति तुक् ॥ (१) ॥*॥ 'सृघस्य–' (३।२।१६०) इति क्मरच् ॥ (२) ॥*॥ प्रसरणशीलः । 'प्रे लप–' (३।२।१४६) इति घिनुण् ॥ (३) ॥*॥ विसरणम् । घञ् (३।३।१८) । विसारोऽस्यास्ति । इनिः (५।२।११५) ॥ (४) ॥*॥ चत्वारि **'प्रसारिणः'** ॥

**सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी ३१**

**सेति** ॥ सहनशीलः । 'षह मर्षणे' (भ्वा० आ० से० ) । 'अलंकृञ्–' (३।२।१३६) इतीष्णुच् ॥ (१) ॥*॥ 'अनुदात्तेतश्च (३।२।१४९) इति युच् ॥ (२) ॥*॥ क्षमणशीलः । 'क्षमू सहने' ( दि० प० से० ) । 'तृन्' (३।२।१३५) ॥ (३) ॥*॥ तिजेः क्षमायाम् । 'गुप्तिज्किद्भ्यः–' (३।१।५) इति सन् । तितिक्षणशीलः 'सनाशंस–' (३।२।१६८) इत्युः ॥ (४) ॥*॥ तृनः 'स्वरति–' (७।२।४४) इति पक्षे इट् ॥ (५) ॥*॥ 'शमित्यष्टाभ्यो–' (३।२।१४१) इति घिनुण् ॥ (६) ॥*॥ षट् **'सहनशीलस्य** ॥

**क्रोधनोऽमर्षणः कोपी**

**क्रविति** ॥ क्रोधनशीलः 'क्रुध कोपे' ( दि० प० अ० ) । 'क्रुधमण्डा–' (३।२।१५१) इति युच् ॥ (१) ॥*॥ न मर्षणशीलः । युच् (३।२।१५१) ॥ (२) ॥*॥ अवश्यं कुप्यति । 'आवश्यका–' (३।३।१७०) इति णिनिः ॥ (३) ॥*॥ त्रीणि **'क्रोधनस्य'** ॥

**चण्डस्त्वत्यन्तकोपनः ।**

**चेति** ॥ चण्डते । 'चडि कोपे' ( भ्वा० आ० से० ) । पचाद्यच् (३।१।१३४) । **'चण्डस्तु** यमदासेऽतिकोपने । तीव्रे दैत्यविशेषे च **चण्डी** तु शिवयोषिति । **चण्डा** धनहरीशङ्खपुष्प्योः' इति हेमचन्द्रः ॥ (१) ॥*॥ अत्यन्तं कुप्यति । 'क्रुधमण्डार्थेभ्यश्च' (३।२।१५१) इति युच् ॥ (२) ॥*॥ द्वे **'अतिक्रोधनस्य'** ॥

**जागरूको जागरिता**

**जेति** ॥ जागरणशीलः । 'जागृ निद्राक्षये' ( अ० प० से० ) । 'जागरूकः' (३।२।१६५) ॥ (१) ॥*॥ 'तृन्' (३।२।१३५) ॥ (२) ॥*॥ द्वे **'जागरूकस्य'** ॥

**घूर्णितः प्रचलायितः ॥ ३२ ॥**

**घिवति** ॥ घूर्णते स्म । 'घूर्ण भ्रमणे' (भ्वा० आ० से०) । 'गत्यर्था–' (३।४।७२) इति क्तः । घूर्णा जातास्य, इति वा । तारकादिः (५।२।३६) ॥ (१) ॥*॥ प्रचल इवाचरति । 'कर्तुः क्यङ् सलोपश्च' (३।१।११) । प्रचलायते स्म । 'गत्यर्था–' (३।४।७२) इति क्तः । प्रचलाया जातास्य, इति वा ॥ (२) ॥*॥ द्वे **'संजातघूर्णस्य'** ॥



**स्वप्नक् शयालुर्निद्रालुः**

**स्वेति** ॥ स्वपनशीलः । 'ञिष्वप् शये' (अ० प० अ०) । 'स्वपितृषोर्नजिङ्' (३।२।१७२) ॥ (१) ॥*॥ शयनशीलः 'शीङ् स्वप्ने' (अ० आ० से०) । 'शीङश्च' (वा० ३।२।१५८) इत्यालुच् । **'शयालुः** स्यादजगरे निद्राशीले च कुक्कुरे' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ निद्राशीलः । 'द्रा कुत्सायां गतौ' ( अ० प० अ० ) । 'स्पृहिगृहि–' (३।२।१५८) इत्यालुच् ॥ (३) ॥*॥ त्रीणि **'निद्राशीलस्य'** ॥

**निद्राणशयितौ समौ ।**

**नीति** ॥ निद्राति स्म । अकर्मकत्वात् (३।४।७२) क्तः 'संयोगादेः–' (८।२।४३) इति नः ॥ (१) ॥*॥ शेते स्म । 'शीङ्' ( अ० आ० से० ) । पूर्ववत् (३।४।७२) क्तः 'निष्ठ शीङ्–' (१।२।१९) इति न कित्त्वम् ॥ (२) ॥*॥ द्वे **'निद्रां प्राप्तस्य'** ॥

**पराङ्मुखः पराचीनः**

**पेति** ॥ पराञ्चत्यनभिमुखो भवति । 'अञ्चु गतिपूजनयोः' ( भ्वा० प० से० ) । 'ऋत्विग्–' (३।२।५९) इति क्विन् । पराक् मुखमस्य ॥ (१) ॥*॥ 'विभाषाञ्चेः–' (५।४।८) इति स्वार्थे कः ॥ (२) ॥*॥ द्वे **'विमुखस्य'** ॥

**स्यादवाङप्यधोमुखः ॥ ३३ ॥**

**स्येति** ॥ अवाञ्चत्यधोमुखो भवति । क्विन् (३।२।५९) ॥ (१) ॥*॥ अधो मुखं यस्य ॥ (२) ॥*॥ द्वे **'अधोमुखस्य'** ॥

**देवानञ्चति देवद्र्यङ्**

**दयिति** ॥ 'विष्वग्देवयोः–' (६।३।९२) इत्यद्रिः ॥ (१) ॥*॥ एकम् **'देवानुवर्तिनः'** ॥

**विष्वद्र्यङ् विष्वगञ्चति ।**

**वीति** ॥ मूर्धन्यमध्यः ॥*॥ ( विश्वद्र्यङ् ) तालव्यमध्यश्च ॥ (१) ॥*॥ एकं **'सर्वतो गच्छतः'** ॥

**यः सहाञ्चति सध्र्यङ् सः**

**य इति** ॥ सहस्य सध्रिः' (६।३।९५) । स्त्रियां सध्रीची ॥ (१) ॥*॥ एकं **'सहचरितस्य'** ॥

**स तिर्यङ् यस्तिरोऽञ्चति ॥ ३४ ॥**

**स इति** ॥ 'तिरसस्तिर्यलोपे' । (६।३।९४) ॥ (१) ॥*॥ एकं **'वक्रं गच्छतः'** ॥

**वदो वदावदो वक्ता**

**वेति** ॥ वदति । 'वद व्यक्तायां वाचि' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ 'चरिचलि–' (वा० ६।१।१२) इति द्वित्वादि ॥ (२) ॥*॥ वक्ति । 'वच भाषणे' ( अ० प० अ० ) । 'तृन्' (३।२।१३५) । **'वक्ता** तु पण्डितेऽपि स्याद्वाग्मिन्यप्यभिधेयवत्' इति विश्वः (मेदिनी) ॥ (३) ॥*॥ त्रीणि **'वक्तुः'** ॥

**वागीशो वाक्पतिः समौ।**

**वेति** ॥ वाचामीशः ॥ (१) ॥*॥ वाचां पतिः ॥ (२) ॥*॥ द्वे **'पटुवचनस्य'** ॥

**वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि ॥ ३५ ॥**

**वेति** ॥ वाचो युक्तिः सयुक्तिकत्वम् । 'वाग्दिक्पश्य-द्भ्यः–' (वा० ६।३।२१) इत्यलुक्। तत्र पटुः॥ (१) ॥*॥ प्रशस्ता वागस्य। 'वाचो ग्मिनिः' (५।२।१२४)। **'वाग्मी** पटौ सुराचार्ये' इति विश्वमेदिन्यौ ॥ (२) ॥*॥ कुर्वादिषु (ग० ४।१।१५१) 'वावदूक'शब्दपाठाद् 'वदेः' ऊकः ॥ (३) ॥*॥ अति वक्ति। साधुकारिणि 'तृन्' (३।२।१३५)। तृच् (३।१।१३३) वा ॥ (४) ॥*॥ चत्वारि **'वावदूकस्य'** ॥

**स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्।**

**स्येति** ॥ जल्पति। 'जल्प व्यक्तायां वाचि' ( भ्वा० प० से० )। 'जल्पभिक्ष–' (३।२।१५५) इति षाकन्। षित्वात् स्त्रियां ङीष् ॥ (१) ॥*॥ बहुगर्ह्या वागस्य। 'आलजाटचौ बहुभाषिणि' (५।२।१२५)। 'कुत्सायामिति वाच्यम्' (वा० ५।२।१२५) ॥ (२) ॥*॥ (३) ॥*॥ (४) ॥*॥ चत्वारि **'बहुगर्ह्यभाषिणः'** ॥

**दुर्मुखे मुखराबद्धमुखौ**

**द्विति** ॥ दुर्निन्दितं मुखमस्य। **'दुर्मुखः** कपिभिन्नाग-भिदोर्ना मुखरे त्रिषु' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ निन्दितं मुखमस्य। 'खमुख–' (५।२।१०७) इति रः। मुख-शब्दो लक्षणयात्र वचनपरः ॥ (२) ॥*॥ न बद्धं नियमि-तं मुखमस्य ॥ (३) ॥*॥ त्रीणि **'अप्रियवादिनः'** ॥

**शक्लः प्रियंवदे ॥ ३६ ॥**

**शेति** ॥ शक्नोति । 'शक्लृ शक्तौ' (स्वा० प० अ०)। 'मृङ्शक्यविभ्यः क्लः' (उ० ४।१०८) ॥ (१) ॥*॥ प्रियं वदति । 'प्रियवशे वदः खच्' (३।२।३८) ॥ (२) ॥*॥ द्वे **'प्रियवादिनः'** ॥

**लोहलः स्यादस्फुटवाग्**

**लविति** ॥ लोहनम्। 'लुह गार्ध्ये' इति बोपदेवः। भावे घञ् (३।३।१८)। लोहं लाति। 'आतोऽनुप–' (३।२।३) इति कः। यद्वा रोहयतेर्बाहुलकादलच्। कपिलिकादित्वात् (वा० ८।२।१८) लत्वम्। **'लोहलः** शृङ्खलाधार्येऽव्यक्तवा-चिनि च त्रिषु' इति विश्वः (मेदिनी) हेमचन्द्रौ ॥ (१) ॥*॥ न स्फुटा वागस्य ॥ (२) ॥*॥ द्वे **'अस्पष्टभाषितुः'** ॥

**गर्ह्यवादी तु कद्वदः।**

**गेति** ॥ गर्ह्यं वदति। 'सुप्यजातौ' (३।२।७८) इति णिनिः ॥ (१) ॥*॥ कुत्सितं वदति। 'रथवदयोश्च' (६।३।१०२) इति कोः कत् ॥ (२) ॥*॥ द्वे **'दुर्भाषिणः'** ॥

**समौ कुवादकुचरौ**

**सेति** ॥ कुत्सितो वादोऽस्य ॥ (१) ॥*॥ कुत्सितं चर-ति। अच् (३।१।१३४) ॥ (२) ॥*॥ द्वे **'कुकथनशी-लस्य'** ॥

**स्यादसौम्यस्वरोऽस्वरः ॥३७॥**

**स्येति** ॥ असौम्यो रूक्षः स्वरो यस्य ॥ (१) ॥*॥ अप्र-शस्तः स्वरो यस्य ॥ (२) ॥*॥ द्वे **'काकादिवद्रूक्षस्वरस्य'** ॥

**रवणः शब्दनः**

**रेति** ॥ रवणशीलः। 'रु शब्दे' (अ० प० अ०)। 'चल-नशब्दार्थात्–' (३।२।१४८) इति युच् ॥ (१) ॥*॥ शब्द-नशीलः। 'शब्द शब्दक्रियायाम्' ( चु० उ० से० ) युच् (३।३।१४८) ॥ (१) ॥*॥ द्वे **'शब्दकरणशीलस्य'** ॥

**नान्दीवादी नान्दीकरः समौ।**

**नेति** ॥ नान्दीवदनशीलः। 'सुपि–' (३।२।७८) इति वदेर्णिनिः ॥ (१) ॥*॥ नान्दीं करोति वदति 'दिवाविभा–' (३।२।२१) इति टः ॥ (२) ॥*॥ 'आशीर्वचनसंयुक्ता स्तुति-र्यस्मात्प्रवर्तते। देवद्विजनृपादीनां तस्मान्नान्दीति कीर्त्यते' इति भरतः ॥*॥ **'नाटकादौ मङ्गलार्थं भेर्यादिवादकस्य'** द्वे ॥

**जडोऽज्ञे**

**जेति** ॥ जलति। 'जल घातने' (भ्वा० प० से०)। पचा-द्यच् (३।१।१३४)। डलयोरभेदः। 'इष्टं वानिष्टं वा सुखदुःखं वा न वेत्ति यो मोहात्। परवशगः स भवेदिह नित्यं जडसं-ज्ञकः पुरुषः', **'जडा** स्त्रियाम्। शूकशिम्ब्यां हिमग्रस्तमूका-प्रज्ञेषु' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ न जानाति। 'इगुप-ध–' (३।१।१३५) इति कः ॥ (२) ॥*॥ **'जडमतेः'** ॥

**एडमूकस्तु वक्तुं श्रोतुमशिक्षिते ॥ ३८ ॥**

**एडेति** ॥ एडो बधिरश्चासौ मूकश्च। (**'एडमूकोऽन्य-लिङ्गः** स्याच्छठे वाक्श्रुतिवर्जिते' इति मेदिनी) ॥*॥ ('अने-डमूकः' इति पाठान्तरे 'नास्त्येडमूकोऽस्मात्' इत्यर्थः। 'त्रिलि-ङ्गोऽ**नेडमूकः** स्याच्छठे वाक्श्रुतिवर्जिते' इति रभसः ॥ (१) ॥*॥ एकम् **'भाषणश्रवणयोरनर्हस्य'** ॥

**तूष्णींशीलस्तु तूष्णीकः**

**त्विति** ॥ तूष्णीं शीलमस्य ॥ (१) ॥*॥ 'शीले को म-लोपश्च' (वा० ५।३।७१)। 'केऽणः' (७।४।१३) इति नाणो ह्रस्वः मलोपसामर्थ्यात्। अन्यथा ठमेव विदध्यात्।—'शी-लम्' (४।४।६१) इति ठकि 'अव्ययानाम्–' (वा० ६।४।१४४) इति टिलोपेन सिद्धत्वात्—इति मुकुटः। तन्न[१]। क-

१—ङीपृङीषोः फलाभेदं वदता स्वरकृतभेदस्यानङ्गीकृतत्वेन पूर्वापरविरुद्धमेतत्। बहुत्र 'संज्ञापूर्वकत्वेन वृद्ध्यभावस्य स्वयमप्यङ्गी-कृतत्वादकिंचित्करं च ॥

विधानस्य स्वरार्थत्वात् । ठकि उदात्तनिवृत्तिस्वरेण मध्योदात्तताप्रसङ्गाच्च । वृद्धि(७।२।११८)प्रसङ्गाच्च ॥ (२) ॥*॥ द्वे 'मौनशीलस्य' ॥

**नग्नोऽवासा दिगम्बरः ।**

**नेति** ॥ नजते स्म । 'ओ नजी व्रीडे' (तु० आ० से०) । अकर्मकत्वात् क्तः (३।४।७२) । 'ओदितश्च' (८।२।४५) इति नत्वम् । '**नग्नो** वन्दिक्षपणयोः पुंसि त्रिषु विवाससि' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ न वासोऽस्य ॥ (२) ॥*॥ दिगेवाम्बरं यस्य । '**दिगम्बरः** स्यात्क्षपणेऽधने तमसि शंकरे' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि '**नग्नस्य**' ॥

**निष्कासितोऽवकृष्टः स्यात्**

**नीति** ॥ निष्कास्यते स्म । 'कस गतौ' (भ्वा० प० से०) । ण्यन्तः । क्तः (३।२।१०२) ॥ (१) ॥*॥ अवकृष्यते स्म । 'कृष विलेखने' (भ्वा० प० अ०) । क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे '**निष्कासितस्य**' ॥

**अपध्वस्तस्तु धिक्कृतः ॥ ३९ ॥**

**अपेति** ॥ अपध्वस्यते स्म । 'ध्वंसु अधःस्रंसने, गतौ च' (भ्वा० आ० से०) । क्तः (३।२।१०२) । '**अपध्वस्तः** परित्यक्ते निन्दितेऽप्यवचूर्णिते' (इति मेदिनी) ॥ (१) ॥*॥ 'धिक्' इति कृतः ॥ (२) ॥*॥ द्वे '**धिक्कृतस्य**' ॥

**आत्तगर्वोऽभिभूतः स्यात्**

**आत्तेति** ॥ आत्तो गर्वो यस्य ॥*॥ '**आत्तगन्धः**' इति पाठान्तरम् । '**गन्धो** गन्धक आमोदे संबन्धे लेशगर्वयोः' इति विश्वः । '**गन्धो** गर्वो लवोऽपि च' इति त्रिकाण्डशेषः ॥ (१) ॥*॥ अभिभूयते स्म । क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे '**गर्वारूढस्य**' ॥—चत्वारः पर्यायाः—इत्येके ॥

**दापितः साधितः समौ ।**

**देति** ॥ दाप्यते स्म । 'दाप्' (जु० उ० अ०) ण्यन्तः ॥*॥ '**दायितः**' इति पाठान्तरम् । तत्र 'दय दाने' (भ्वा० आ० से०) इति धातुः ॥ (१) ॥*॥ साध्यते स्म । 'साध संसिद्धौ' (स्वा० प० अ०) ॥ (२) ॥*॥—द्वे '**धनादिकं प्रदापितस्य**'—इति मुकुटः । प्रदापितस्य धनादेर्वा ॥

**प्रत्यादिष्टो निरस्तः स्यात्प्रत्याख्यातो निराकृतः ॥४०॥**

**प्रेति** ॥ प्रत्यादिश्यते स्म । 'दिश अतिसर्जने' (तु० उ० अ०) । क्तः (वा० ३।२।१०२) ॥ (१) ॥*॥ निरस्यते स्म । 'असु क्षेपणे' (दि० प० से०) । क्तः (३।१।१०२) '**निरस्तः** प्रेषितशरे संत्यक्ते त्वरितोदिते । निष्ठ्यूते प्रतिहते च' इति हैमः ॥ (२) ॥*॥ प्रत्याख्यायते स्म । 'ख्या प्रकथने' (अ० प० अ०) । चक्षिङादेशो वा क्तः (३।२।१०२) ॥ (३) ॥*॥ निरकारि । कृञ् (त० उ० अ०) । क्तः (३।२।१०२) ॥ (४) ॥*॥ चत्वारि '**प्रत्याख्यातस्य**' ॥

**निकृतः स्याद्विप्रकृतः**

**नीति** ॥ न्यकारि । क्तः (३।२।१२) । '**निकृतं** विप्रलब्धे स्याच्छठे विप्रकृते त्रिषु' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ विप्राकारि ॥ (२) ॥*॥ द्वे '**तिरस्कृतस्य**' ॥

**विप्रलब्धस्तु वञ्चितः ।**

**वीति** ॥ विप्रलभ्यते स्म । 'डुलभष् प्राप्तौ' (भ्वा० आ० अ०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ 'वञ्चु गतौ' (भ्वा० प० से०) । ण्यन्तः । वञ्च्यते स्म । क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे '**वञ्चितस्य**' ॥

**मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः ॥ ४१ ॥**

**मेति** ॥ मनो हतं यस्य ॥ (१) ॥*॥ प्रति हन्यते स्म । क्तः (३।२।१०२) । 'भवेत्**प्रतिहतं** द्विष्टे प्रतिस्खलितरुद्धयोः' (इति मेदिनी) ॥ (२) ॥*॥ प्रतिबध्यते स्म । 'बन्ध बन्धने' (क्र्या० प० अ०) । क्तः (३।२।१०२) ॥ (३) ॥*॥ हन्यते स्म । क्तः ॥ (४) ॥*॥ चत्वारि '**कृतमनोभङ्गस्य**' ॥

**अधिक्षिप्तः प्रतिक्षिप्तः**

**अधीति** ॥ अधिक्षिप्यते स्म । 'क्षिप प्रेरणे' (तु० उ० अ०) । क्तः (३।२।१०२) । '**अतिक्षिप्तः** प्रणिहिते कुत्सिते भर्त्सिते त्रिषु' इति विश्वहेमचन्द्रौ (मेदिनी) ॥ (१) ॥*॥ प्रत्यक्षेऽपि । '**प्रतिक्षिप्तं** वारिते स्यात्प्रेषिते पर्श्वकं त्रिषु' (इति मेदिनी) । ('**प्रतिक्षिप्तं** प्रतिहते प्रेषिते च निराकृते' इति विश्वः) ॥ (२) ॥*॥ द्वे '**कृताक्षेपस्य**' ॥

**बद्धे कीलितसंयतौ ।**

**बेति** ॥ बध्यते स्म । 'बन्ध बन्धने' (क्र्या० प० अ०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ कील्यते स्म । 'कील बन्धे' (भ्वा० प० से०) । क्तः (३।२।१०२) ॥ (२) ॥*॥ संयम्यते स्म । 'यम उपरमे' (भ्वा० प० अ०) । क्तः (३।२।१०२) ॥ (३) ॥*॥ त्रीणि '**बद्धस्य**' ॥

**आपन्न आपत्प्राप्तः स्यात्**

**आपेति** ॥ आपद्यते स्म । 'पद गतौ' (दि० आ० अ०) । क्तः (३।२।१०२) । '**आपन्नः** सविपत्तौ च प्राप्तेऽपि वाच्यलिङ्गकः' (इति विश्वमेदिन्यौ) ॥ (१) ॥*॥ आपदं प्राप्तः ॥ (२) ॥*॥ द्वे '**आपद्ग्रस्तस्य**' ॥

**कांदिशीको भयद्रुतः ॥४२॥**

**केति** ॥ 'कां दिशं यामि' इत्याह । 'तदाहेति माशब्दादिभ्यः' (वा० ४।४।१) इति ठक् । पृषोदरादिः (६।३।१०९) । मुकुटस्तु—'कदि वैक्लव्ये' (भ्वा० आ० से०) । भावघञन्तात् मत्वर्थे इनिः (५।२।११५) । कन्दी । 'शीकृ

१—परिगत-प्रणिहित-पल्लवित-प्रतिहत-प्रतिक्षिप्तशब्दरूपम्—इति भाति ॥

सेचने' (भ्वा० आ० से०) । भावे घञ् (३।३।१८) । शीकः क्षरणार्थत्वादश्रुपाते वर्तते । वैक्लव्ययुक्तोऽश्रुपातः । कान्दिशीकः । तद्योगाज् ज्योत्स्नाद्यण् (५।२।१०३)—इत्याह ॥ (१) ॥*॥ अद्रुद्रुवत् । 'द्रु गतौ' (भ्वा० प० से०) । कर्तरि क्तः (३।४।७२) । भयाद्रुतः । 'पञ्चमी' (२।१।३७) इति योगविभागात् समासः ॥ (२) ॥*॥ द्वे **'भयेन पलायितस्य'** ॥

**आक्षारितः क्षरितोऽभिशस्ते**

**आक्षेति** ॥ आक्षार्यते स्म । 'क्षर संचलने' (भ्वा० प० से०) । ण्यन्तः । क्तः (३।२।१०२) आक्षारो मैथुनं प्रत्याक्रोशो जातोऽस्य इति वा । इतच् (५।२।३६) ॥ (१) ॥*॥ **'क्षारितः** स्नाविते क्षारे चाभिशस्तेऽपि च त्रिषु' (इति मेदिनी) ॥ (२) ॥*॥ अभिशस्यते स्म । 'शसु हिंसायाम्' (भ्वा० प० से०) । क्तः (३।२।१०२) । 'यस्य विभाषा' (७।२।१५) इति नेट् । 'धृषिशसी–' (७।२।१९) इति वा ॥ (३) ॥*॥ त्रीणि **'मैथुननिमित्तं मिथ्यादूषितस्य'** ॥

**संकसुकोऽस्थिरे ।**

**समिति** ॥ संकसति । 'कस गतौ' (भ्वा० प० से०) । 'समि कस उकन्' (उ० २।२९) ।—'यूकादयः' इति कन्, उक् चागमः—इति मुकुटस्त्वपाणिनीयः ॥ (१) ॥*॥ न स्थिरः ॥ (२) ॥*॥ द्वे **'चलस्वभावस्य'** ॥

**व्यसनार्तोपरक्तौ द्वौ**

**व्येति** ॥ व्यसनेनार्तः ॥ (१) ॥*॥ उपरज्यते स्म । 'रञ्ज रागे' (भ्वा० प० अ०) । क्तः (३।२।१०२) 'उपरक्तो, व्यसनार्ते राहुग्रस्तेन्दुसूर्ययोः' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ द्वे **'दैवमानुषपीडायुक्तस्य'** ॥

**विहस्तव्याकुलौ समौ ॥४३॥**

**वीति** ॥ विक्षिप्तो हतोऽस्य । **'विहस्तस्तु** विह्वले पण्डकेऽकरे' इति हैमः ॥ (१) ॥*॥ व्याकोलति । 'कुल संस्त्याने बन्धुषु च' (भ्वा० प० से०) । 'इगुपध–' (३।१।१३५) इति कः ॥ (२) ॥*॥ द्वे **'शोकादिभिरितिकर्तव्यताशून्यस्य'** ॥

**विक्लवो विह्वलः**

**वीति** ॥ विक्लवते । 'क्लुङ् गतौ' (भ्वा० आ० से०) । अच् (३।१।१३४) ॥ (१) ॥*॥ विह्वलति । 'ह्वल चलने' (भ्वा० प० से०) । अच् (३।२।१३४) ॥ (२) ॥*॥ द्वे **'स्वाङ्गान्येव धारयितुमशक्तस्य'** ॥

**स्यात्तु विवशोऽरिष्टदुष्टधीः ।**

**स्यादिति** ॥ विरुद्धं वष्टि । 'वश कान्तौ' (अ०प०से०) । अच् (३।१।१३४) । **'विवशस्त्रि**ष्ववश्यात्मारिष्टदुष्टधियोरपि' (इति मेदिनी) ॥ (१) ॥*॥ अरिष्टेन दुष्टा । अरिष्टदुष्टा धीर्यस्य ॥ (२) ॥*॥ द्वे **'आसन्नमरणलक्षणेन दूषितमतेः'** ॥

**कश्यः कशार्हे**

**केति** ॥ कशामर्हति 'दण्डादिभ्यो यः' (५।१।६६) । **'कश्यं** कशार्हमद्ययोः । अश्वमध्येऽपि' इति हैमः ॥ (१) ॥*॥ कशामर्हति । 'अर्हः' (३।२।१२) इत्यच् ॥ (२) ॥*॥ द्वे **'ताडनार्हस्य'** ॥

**संनद्धे त्वाततायी वधोद्यते[१] ॥ ४४ ॥**

**समिति** ॥ संनह्यति स्म । 'णह बन्धने' (दि०उ०अ०) । अकर्मकत्वात् कर्तरि क्तः (३।४।७२) । भावक्तान्तादर्शआद्यच् (५।२।१२७) वा ॥*॥ आततं यथा तथायितुं शीलमस्य । 'अय गतौ' (भ्वा० आ० से०) । 'सुपि–' (३।२।७८) इति णिनिः ॥ (१) ॥*॥ एकम् **'वधोद्यतस्य'** ॥

**द्वेष्ये त्वक्षिगतः**

**द्वयिति** ॥ द्वेष्टुमर्हः । 'द्विष अप्रीतौ' (अ० उ० अ०) । ण्यत् (३।१।१२४) ॥ (१) ॥*॥ अक्षिविषयं गतः । शाकपार्थिवादिः (वा० २।१।७८) ॥ (२) ॥*॥ द्वे **'द्वेषार्हस्य'** ॥

**वध्यः शीर्षच्छेद्य इमौ समौ ।**

**वेति** ॥ वधमर्हति स्म । 'दण्डादिभ्यो यः' (५।१।६६) । यद्वा हन्तुमर्हः । 'हनो वध च' (वा० ३।१।९७) इति यत् ॥ (१) ॥*॥ शीर्षस्य शिरसश्छेदः । तमर्हति । 'शीर्षच्छेदाद्यच्च' (५।१।६५) ॥ (२) ॥*॥ द्वे **'शिरश्छेदार्हस्य'** ॥

**विष्यो विषेण यो वध्यः**

**वीति** ॥ विषेण वध्यः । 'नौवयोधर्म–' (४।४।९१) इति यत् ॥ (१) ॥*॥ एकम् **'विषेण वध्यस्य'** ॥

**मुसल्यो मुसलेन यः ॥ ४५ ॥**

**म्विति** ॥ मुसलेन वध्यः 'दण्डादिभ्यो यः' (५।१।६६) (१) ॥*॥ एकम् **'मुसलेन वध्यस्य'** ॥

**शिश्विदानोऽकृष्णकर्मा**

**शीति** ॥ अकृष्णं शुक्लं कर्मास्य ॥ (२) ॥*॥ शिश्विन्दे । 'श्विदि श्वैत्ये' (भ्वा० आ० से०) । लिटः कानच् (३।२।१०६) अनित्यत्वान्न नुम् ॥ (१) ॥*॥ द्वे अपापकर्मणः । **'कृष्णकर्मा'** इति पाठान्तरम् ॥ (२) ॥*॥ तत्र 'श्विता वर्णे' (भ्वा० आ० से०) धातुः । श्वेतितुमिच्छति । 'श्वितेर्दश्च' (उ० २।९२) इत्यानच्, दत्वम्, सनो लुक् ॥ (१) ॥*॥ द्वे **'पापकर्मणः'** ॥

**चपलश्चिकुरः समौ ।**

**चेति** ॥ चपति । 'चप सान्त्वने' (भ्वा० प० से०) । पृ-

१—वध उपलक्षणम् । यत्स्मृतिः—'अग्निदो गरदश्चैव शस्त्रपाती धनापहः । क्षेत्रदारहरश्चैव षडेते त्वाततायिनः' इति क्षीरस्वामी ॥

षादित्वात् (उ० १।१०६) कलच् । '**चपल**श्चोरणे चले । क्षणिके चिकुरे शीघ्रे पारदे प्रस्तरान्तरे । मीनेऽपि **चपला** तु स्यात्पिप्पल्यां विद्युति श्रियाम् । पुंश्चल्याम्' इति हैमः ॥ (१) ॥*॥ 'चि' इति अव्यक्तं कुरति । 'कुर शब्दे' (तु० प० से०) । 'इगुपध-' (३।१।१३४) इति कः । '**चिकुरो**ऽद्दौ गृहबभ्रौ केशे चञ्चलशैलयोः । पक्षिवृक्षभिदोश्चापि' इति हैमः ॥ (२) ॥*॥ द्वे '**दोषमनिश्चित्य वधादिकमाचरतः**' ॥

**दोषैकदृक् पुरोभागी**

**दविति** ॥ दोषे एकस्मिन् दृक् ज्ञानं यस्य ॥ (१) ॥*॥ पुरः पूर्वं भजते । 'भज सेवायाम्' । 'संपृचा-' (३।२।१४२) इति घिनुण् ॥ (२) ॥*॥ द्वे '**दोषैकग्राहकस्य**' ॥

**निकृतस्त्वनृजुः शठः ॥ ४६ ॥**

**नीति** ॥ निकृन्तति । 'कृती छेदने' (तु० प० से०) । 'इगुपध-' (३।१।१३५) इति कः । '**निकृत** विप्रलब्धे स्याच्छठे विप्रकृते त्रिषु' (इति मेदिनी) ॥ (१) ॥*॥ ऋजुविरुद्धः । 'नञ्' (२।२।६) इति तत्पुरुषः । 'नलोपो नञः' (६।३।७३) ॥ (२) ॥*॥ शठति 'शठ कैतवे च' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । '**शठो** मध्यस्थपुरुषे धूर्ते धत्तूरकेऽपि च' इति हेमचन्द्रः ॥ (३) ॥*॥ त्रीणि '**वक्राशयस्य**' ॥

**कर्णेजपः सूचकः स्यात्**

**केति** ॥ कर्णे जपति । 'जप व्यक्तायां वाचि' (भ्वा० प० से०) । 'स्तम्बकर्णयोः-' (३।२।१३) इत्यच् । 'हलदन्तात्-' (६।३।९) इत्यलुक् ॥ (१) ॥*॥ सूचयति । 'सूच पैशुन्ये' (चु०) दन्त्यादिरदन्तः । ण्वुल् (३।१।१३३) । '**सूचकः** शुनि दुर्जने । कथके सीवनद्रव्ये मार्जारे वायसेऽपि च' इति हैमः ॥ (२) ॥*॥ द्वे '**कर्णेजपस्य**' ॥

**पिशुनो दुर्जनः खलः ।**

**पीति** ॥ पिंशति । 'पिश अवयवे' (तु० प० से०) । 'क्षुधिपिशिमिथिभ्यः कित्' (उ० ३।५५) इत्युनन् ।—बाहुलकादुनन्—इति मुकुटोक्तिस्त्वेतत्सूत्रास्मरणमूलिका । **पिशुनं** कुङ्कुमेऽपि च । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु । पृक्कायां **पिशुना** स्त्री स्यात्' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ दुष्टो जनः । 'कुगति-' (२।२।१८) इति समासः ॥ (२) ॥*॥ खलति । 'खल संचये' (भ्वा० प० से०) । अच् (३।१।१३४) । खं छिद्रं लाति वा । '**खलः** कल्के भुवि स्थाने क्रूरे कर्णेजपेऽधमे' इति हैममेदिन्यौ ॥ (३) ॥*॥ त्रीणि '**परस्परभेदकस्य**' ॥ स्वामी तु सूचकपर्याय एवैतानाह ॥

**नृशंसो घातुकः क्रूरः पापः**

**नृीति** ॥ नॄन् शंसति 'शंसु हिंसायाम्' (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१) ।—अजन्तः—इति मुकुटोक्तं न सम्यक् । अजपवादस्याणो जागरूकत्वात् ॥ (१) ॥*॥ हननशीलः । 'लषपत-' (३।२।१५४) इत्युकञ् ॥ (२) ॥*॥ कृन्तति । 'कृती छेदने' (तु० प० से०) । 'कृतेश्छः क्रू च' (उ० २।२१) इति रक् प्रत्ययो धातोः क्रू आदेशश्च । यत्तु मुकुटेन—कृणाति—इति विगृह्य—कृतेः 'दूरादयश्च' इति रक् क्रू आदेशश्च, कुडो वा दूरादित्वाद्रक् दीर्घः—इत्युक्तं तदुपयुक्तसूत्रास्मरणमूलकम् परस्परविरुद्धं च । 'दूरादयश्च' इति सूत्रं च नास्ति । 'क्रूरस्तु कठिने घोरे नृशंसेऽप्यभिधेयवत्' इति विश्वः (मेदिनी) ॥ (३) ॥*॥ पापमस्यास्ति । अर्शआद्यच् (५।२।१२७) ॥ (४) ॥*॥ चत्वारि '**परद्रोहकारिणः**' ॥

**धूर्तस्तु वञ्चकः ॥ ४७ ॥**

**ध्विति** ॥ 'धुर्वति । 'धुर्वी हिंसायाम्' (भ्वा० प० से०) । 'हसिमृग्रिण्-' (उ० ३।८६) इति तन् । राल्लोपः (६।४।२१) । '**धूर्तं** तु खण्डलवणे **धूर्तौ** धत्तूरमायिनोः' इति हेमचन्द्रः ॥ (१) ॥*॥ वञ्चयति । 'वञ्च गतौ' (भ्वा० प० से०) । ण्यन्तः । ण्वुल् (३।१।१३३) । '**वञ्चक**स्तु खले धूर्ते गृहबभ्रौ च जम्बुके' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ द्वे '**परप्रतारकस्वभावस्य**' ॥

**अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः ।**

**अज्ञ इति** ॥ न जानाति । 'इगुपध-' (३।१।१३५) इति कः । '**अज्ञ**स्तु जडमूर्खयोः' इति विश्वः ॥ (१) ॥*॥ मुह्यति स्म । 'मुह वैचित्ये' (दि० प० अ०) । गत्यर्था-' (३।४।७२) इति क्तः । '**मूढ**स्त्रितबालयोः' इति विश्वः ॥ (२) ॥*॥ जातं जन्मकालविशेषमनतिक्रम्य वर्तते । पदार्थानतिवृत्तावव्ययीभावः (२।१।६) तदस्यास्ति । अर्शआद्यच् (५।२।१२७) ॥ (३) ॥*॥ मुह्यति । 'मुहेः खो मूर्च' (उ० ५।२२) ॥ (४) ॥*॥ विधेयं विधानम् । तस्यायमधिकारी । अविद्यावद्विषयत्वाच्छास्त्राणाम् । 'तस्येदम्' (४।३।१२०) इत्यण् ॥ (५) ॥*॥ बलिशस्य मत्स्यवेधनस्यायम् । मूर्खत्वादपूज्यत्वात् । '**बालिश**स्तु शिशौ मूर्खे' (इति मेदिनी) ॥ (६) ॥*॥ षट् '**मूर्खस्य**' ॥

**कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः ॥ ४८ ॥**

**केति** ॥ कुत्सितोऽर्यः स्वामी । 'कुगति-' (२।२।१८) इति समासः । 'कोः कत्तत्पुरुषेऽचि' (६।३।१०१) ॥ (१) ॥*॥ कृपां करोति । 'तत्करोति-' (वा० ३।१।२६) इति णिच् । कृप्यते 'कृत्यल्युटो-' (३।३।११३) इति कर्मणि ल्युट् । अजादेशस्य स्थानिवत्त्वान्न गुणः (७।३।८६) । यद्वा कृप्यते कृपाविषयीक्रियते । 'कृपू सामर्थ्ये' (भ्वा० आ० से०) । बाहुलकात्क्युन् । ल्युटि (३।३।११३) वा संज्ञापूर्वकत्वाद्गुणाभावः । बाहुलकाल्लत्वाभावः । यद्वा 'क्रप कृपायां गतौ च' (भ्वा० आ० से०) इत्यस्य बाहुलकात्संप्रसारणम् । यद्वा

'कृप' इत्यत्र मतान्तरे 'कृप' इति पाठः। अत एव 'कृपेः ष्यङ् कृपायाम्' इति बोपदेवः। ततो बाहुलकात्क्युन्॥ (२) ॥*॥ क्षुणत्ति। 'क्षुदिर् संपेषणे' (रु० उ० अ०)। 'स्फायितञ्चि–' (उ० २।१३) इति रक्। 'क्षुद्रो दरिद्रे कृपणे निकृष्टेऽल्पनृशंसयोः। क्षुद्रा व्याघ्रीनटीव्यङ्गावृहतीसरघासु च। चाङ्गेरिकायां हिंस्रायां मक्षिकामात्रवेश्ययोः' इति हेमचन्द्रः॥ (३) ॥*॥ किं पचति। 'ताच्छील्य–' (३।२।१२९) इति च्चानश् शानच् (३।२।१२४) वा। 'अनित्यमागमशासनम्' इति न नुम्। 'किं क्षेपे' (२।१।६४) इति समासः॥ (४) ॥*॥ मितं पचति। 'मितनखे च' (३।२।३४) इति खच्॥ (५) ॥*॥ यद्वा 'किंपचः' 'अनमितंपचः' इति छेदः। पचाद्यच् (३।१।१३४)॥ (४) ॥*॥ न मितंपचोऽमितंपचः। तद्भिन्नोऽनमितंपचः॥ (५) ॥*॥ पञ्च 'कृपणस्य'॥

**निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः।**

**नीति**॥ निर्गतं स्वमस्य। स्वान्निष्क्रान्तो वा॥ (१) ॥*॥ दुःस्था विधा प्रकारः समृद्धिर्वास्य। 'दुर्विधो वाच्यलिङ्गः स्याद्दुर्गतेऽपि खलेऽपि च' (इति मेदिनी)॥ (२) ॥*॥ दीयते स्म। 'दीङ् क्षये' (दि० आ० अ०)। 'गत्यर्था–' (३।४।७२) इति क्तः। 'स्वादय ओदितः' (दि० ग० सू०)। 'ओदितश्च' (८।२।४५) इति नत्वम्। ('दीना स्त्री मूषिकस्त्रियाम्। वाच्यवद्दुर्गते भीते' इति मेदिनी)॥ (३) ॥*॥ दरिद्राति। 'दरिद्रा दुर्गतौ' (अ० प० से०)। पचाद्यच् (३।१।१३४)॥ (४) ॥*॥ दुर्गच्छति स्म। 'गत्यर्था–' (३।४।७२) इति क्तः॥ (५) ॥*॥ पञ्च 'निर्द्रव्यस्य'॥

**वनीयको याचनको मार्गणो याचकार्थिनौ॥ ४९॥**

**वेति**॥ वननम् 'वनु याचने' (त० आ० से०)। 'सर्वधातुभ्य इन्' (उ० ४।११८)। वनिर्याच्ञा। वनिमिच्छति। 'सुप आत्मनः क्यच्' (३।१।८)। ण्वुल् (३।१।१३३) ॥*॥ 'वनीपकः' इति पाठे वनीं पाति। कः (३।२।३) ततः संज्ञायां कन् (५।३।७५)। 'कुन्' (उ० २।३२) वा। यत्तु मुकुटेन—'वनति–' इति विगृह्य—'वनिर्याच्ञा'—इत्युक्तम्। तच्चिन्त्यम्। 'याचकः' इत्यापत्तेः॥ (१) ॥*॥ याचति। 'टु याचृ याच्ञायाम्' (भ्वा० उ० से०)। ल्युः (३।१।१३४)। स्वार्थे कन् (ज्ञापि० ५।४।५)॥ (२) ॥*॥ मार्गति। 'मार्ग अन्वेषणे' (चु० उ० से०)। 'बहुलमन्यत्रापि' (उ० २।७८) इति युच्॥ (३) ॥*॥ याचति। ण्वुल् (३।१।१३३)॥ (४) ॥*॥ अर्थोऽस्यास्ति। 'अर्थाच्चासंनिहिते' (वा० ५।२।१३५) इतीनिः। अर्थयते। 'अर्थ याचने' (चु० आ० से०)। गृह्यादिणिनिः (३।१३३) वा॥ (५) ॥*॥ पञ्च 'याचकस्य'॥

**अहंकारवानहंयुः**

**अहेति**॥ अहंकारोऽस्यास्ति। मतुप् (५।२।९४)॥ (१) ॥*॥ अहमस्यास्ति। 'अहम् शुभम्' इति मान्तम् (विभक्तिप्रतिरूपकम्) अव्ययम्। 'अहंशुभमोर्युस्' (५।२।१४०)॥ (२) ॥*॥ द्वे 'साहंकारस्य'॥

**शुभंयुस्तु शुभान्वितः।**

**श्विति**॥ शुभमस्ति। युस् (५।२।१४०)॥ (१) ॥*॥ शुभेनान्वितः। 'कर्तृकरणे–' (२।१।३१) इति समासः॥ (२) ॥*॥ द्वे 'शोभनयुक्तस्य'॥

**दिव्योपपादुका देवाः**

**दीति**॥ दिवि भवाः। 'द्युप्रागपा–' (४।२।१०१) इति यत्। उपपद्यन्ते। 'पद गतौ' (दि० आ० अ०)। 'लषपतपद–' (३।२।१५५) इत्युकञ्। ते च ते च॥ (१) ॥*॥ नारकव्यावृत्तये दिव्यपदम्। मातापित्रादिदृष्टकारणनिरपेक्षा अदृष्टसहकृतेभ्योऽणुभ्यो जाता ये देवाः, ते दिव्योपपादुका उच्यन्ते ॥*॥ एकम् 'देवानाम्'॥

**नृगवाद्या जरायुजाः॥ ५०॥**

**त्रिति**॥ ना च गौश्चाद्यौ येषाम्। आद्यशब्देन खराश्वादीनां ग्रहणम् ॥*॥ जरायोर्गर्भाशयाज्जाताः। 'पञ्चम्याम्' (३।२।९८) इति जनेर्डः॥ (१) ॥*॥ एकम् 'नृगवादीनाम्'॥

**स्वेदजाः कृमिदंशाद्याः**

**स्वेदेति**॥ स्वेदजनकत्वादूष्मा स्वेदः। स्वेदाज्जाताः। डः (३।२।९८)॥ (१) ॥*॥ कृमिश्च दंशश्चाद्यौ येषाम्। आद्यशब्देन मशकमत्कुणादिग्रहणम् ॥*॥ एकम् 'कृमिदंशादीनाम्'॥

**पक्षिसर्पाद्योऽण्डजाः।**

**पेति**॥ पक्षी च सर्पश्चादी येषाम्। आदिशब्देन नक्रमत्स्यपिपीलिकादिग्रहः ॥*॥ अण्डे जाताः। 'सप्तम्यां जनेः–' (३।२।९७) इति डः॥ (१) ॥*॥ एकम् 'पक्षिसर्पादीनाम्'॥

॥ इति प्राणिवर्गः॥

**उद्भिदस्तरुगुल्माद्याः**

**उद्भीति**॥ तरुश्च गुल्मश्चाद्यौ येषाम्। आद्यशब्देन तृणौषधिलतादिग्रहः ॥*॥ भुवमुद्भिन्दन्ति। 'भिदिर् विदारणे' (रु० उ० प०)। 'सत्सू–' (३।१।६१) इति क्विप्। उद्भिदः॥ (१) ॥*॥ उच्यन्ते (इति शेषः) ॥*॥ एकम् 'तरुगुल्मादीनाम्'॥

उद्भित्पर्यायानाह—

**उद्भिदुद्भिजमुद्भिदम्॥ ५१॥**

**उद्भीति**॥ उद्भिदुक्तः॥ (१) ॥*॥ उद्भेदनमुद्भित्। 'संपदादिभ्यः क्विप्' (वा० ३।३।१०८)। उद्भिदो जातम्। 'पञ्चम्याम्' (३।२।९८) इति डः॥ (२) ॥*॥ उद्भिनत्ति।

'इगुपध—' (३।१।१३५) इति कः ॥ (३) ॥*॥ त्रीणि **'उद्भिदाम्'** ॥

**सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् ।**
**कान्तं मनोरमं रुच्यं मनोज्ञं मंजु मंजुलम् ॥ ५२ ॥**

**स्विति** ॥ सु द्रियते । 'दृङ् आदरे' (तु० आ० अ०) । 'ग्रहवृदृ—' (३।३।५८) इत्यप् । पृषोदरादिः (६।३।१०९) । यद्वा सु उनत्ति चित्तं द्रवीकरोति । 'उन्दी क्लेदने' (रु० प० से०) । बाहुलकाद्रः । शकन्ध्वादिः (वा० ६।१।९४) । स्त्रियां गौरादित्वात् (४।१।४१) ङीष् ॥ (१) ॥*॥ रोचते । 'रुच दीप्तावभिप्रीतौ च' (भ्वा० आ० से०) । 'इषिमदिमुदि—' (उ० १।५१) इति किरच् ॥ (२) ॥*॥ चरति चित्ते । 'चर गतौ' (भ्वा० प० से०) । 'दृसनिजनि—' (उ० १।३) इति ञुण् । **'चारुर्बृहस्पतौ** पुंसि शोभने त्वभिधेयवत्' इति विश्वः (मेदिनी) ॥ (३) ॥*॥ सु शोभनं समं सर्वमस्य । 'सुविनिर्दुर्भ्यः—' (८।३।८८) इति षत्वम् ॥ (४) ॥*॥ साध्नोत्यर्थम् । 'साध संसिद्धौ' (स्वा० प० अ०) । 'कृवापा—' (उ० १।१) इत्युण् । **'साधुर्जैने** मुनौ वार्धुषिके सज्जनरम्ययोः' इति हेमचन्द्रः ॥ (५) ॥*॥ शोभते । 'शुभ दीप्तौ' (भ्वा० आ० से०) । 'अनुदात्तेतश्च—' (३।२।१४९) इति युच् । **'शोभनो** योगभेदे ना सुन्दरे वाच्यलिङ्गकः' (इति मेदिनी) । ॥ (६) ॥*॥ कम्यते स्म । 'कमु कान्तौ' (भ्वा० आ० से०) । क्तः (३।२।१०२) । 'यस्य विभाषा' (७।२।१५) इति नेट् । 'अनुनासिकस्य—' (६।४।१५) इति दीर्घः । यद्वा कनति स्म । 'कनी दीप्त्यादौ' (भ्वा० प० से०) । 'गत्यर्था—' (३।४।७२) इति क्तः । **'कान्ता** नार्यां प्रियङ्गौ स्त्री शोभने त्रिषु ना धवे । लोहे च चन्द्रसूर्यायःपर्यायात्तु शिलासु च' इति विश्वमेदिन्यौ ॥ (७) ॥*॥ मनो रमयति । 'रमु क्रीडायाम्' (भ्वा० आ० से०) ण्यन्तः । 'कर्मण्यण्' (३।२।१) ॥*॥ **'मनोहरम्'** इति पाठे मनो हरति । 'हरतेरनुद्यमने—' (३।२।९) इत्यच् ॥ (८) ॥*॥ रोचते, रुच्यते, वा । 'राजसूय—' (३।१।११४) इति साधुः ॥ (९) ॥*॥ मनसा जानाति । 'इगुपध—' (३।१।१३५) इति कः । निवृत्तप्रेषणोऽत्र जानातिः ।—मूलविभुजादित्वात् (वा० ३।२।५) कः—इति मुकुटः । तन्न । तस्यापि कर्तरि विहितत्वेन 'ज्ञायते' इति विग्रहप्रदर्शनस्य विरुद्धत्वात् । यदपि—'सुप्सुपा—' (२।१।४) इति समासः—इति । तदपि न । 'कर्तृकरणे—' (२।१।३२) इति तत्पुरुषविधायकस्य सत्त्वात् ॥ (१०) ॥*॥ मञ्ज्यते । 'मजि ध्वनौ' इति सौत्रो धातुः । बाहुलकादुः ॥ (११) ॥*॥ मञ्जु मंजुत्वं लाति । 'आतोऽनुप—' (३।२।३) इति कः । मंजुलं च चलाञ्चले । रम्ये कुञ्जे मंजुलस्तु दात्यूहे' इति हैमः ॥ (१२) ॥*॥ द्वादश **'मनोरमस्य'** ॥

**तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् ।**

**तेति** ॥ न सिच्यते मनोऽत्र । 'षिच क्षरणे' (तु० उ० अ०) । 'करणा—' (३।३।११७) इति ल्युट् । 'संज्ञायां कन्' (५।३।७५) ॥*॥ (**'आसेचनम्'**) इति दीर्घादिपाठे आङ् बोध्यः ॥ (१) ॥*॥ एकम् **'यद्दर्शनात्तृप्तिर्न भवति तस्य'** ॥

**अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ॥ ५३ ॥**

**अभीति** ॥ अभित इष्यते स्म । 'इषु इच्छायाम्' (तु० प० से०) । क्तः (३।२।१०२) । **'अभीत्यर्थंभूतकथने' 'अभि** वीप्साभिमुख्ययोः' इति विश्वः ॥ (१) ॥*॥ अभ्याप्तुमिष्यते स्म । 'आप्लृ व्याप्तौ' (स्वा० प० अ०) । सन् (३।१।७) । 'आप्ज्ञप्यृधामीत्' (७।४।५५) । क्तः (३।२।१०२) ॥ (२) ॥*॥ हृदयस्य प्रियम् । 'हृदयस्य प्रियः' (४।४।९५) इति यत् । 'हृदयस्य हृल्लेख—' (६।३।५०) इति हृदादेशः । **'हृद्यं** धवलजीरे च हृत्प्रिये हृद्भवेऽपि च । वशकृद्वेदमन्त्रे च **हृद्या** वृद्ध्याख्यभेषजे' इति विश्वः ॥ (३) ॥*॥ दय्यते स्म । 'दय दानादौ' (भ्वा० आ० से०) क्तः (३।२।१०२) ॥ (४) ॥*॥ वल्लयते, वल्लते च । 'वल्ल संवरणे' (भ्वा० आ० से०) । 'रासिवल्लिभ्यां च' (उ० ३।१२५) इत्यभच् । **'वल्लभो** दयितेऽध्यक्षे सल्लक्षणतुरंगमे' इति विश्वः (मेदिनी) ॥ (५) ॥*॥ प्रीणाति । 'प्रीञ् तर्पणे' (क्र्या० उ० अ०) । 'इगुपध—' (३।१।१३५) इति कः । **'प्रियो** वृद्धौषधे हृद्ये धवे' इति हैमः ॥ (६) ॥*॥ षट् **'प्रियस्य'** ॥

**निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः ।**
**कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः ॥ ५४ ॥**

**नीति** ॥ निकृष्यते स्म । 'कृष विलेखने' (भ्वा० प० अ०, तु० उ०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ प्रतिकृष्यते स्म ॥ (२) ॥*॥ ऋच्छति । 'ऋ गतौ' (भ्वा० प० से०) । 'अन्येभ्योऽपि—' (३।२।७५) इति वनिप् । यद्वा ऋच्छतेः 'अवद्यावमाधमार्वरेफाः कुत्सिते' (उ० ५।५४) इति वन्नन्तो निपातः । **'अर्वा** तुरंगमे पुंसि कुत्सिते वाच्यलिङ्गकः' (इति मेदिनी) ॥ (३) ॥*॥ रिफ्यते । 'रिफ कत्थनयुद्धनिन्दाहिंसादानेषु' (तु० प० से०) । 'अकर्तरि च—' (३।३।१९) इति घञ् । यद्वा रिफतेः 'अवद्यावमाधम—' (उ० ५।५४) इति अप्रत्ययान्तो निपातः । **'रेफो** रवर्णे पुंसि स्यात्कुत्सिते वाच्यवत् पुनः' इति विश्वः ॥*॥ 'रेपं' इति पाठे 'री गतिरेषणयोः' (क्र्या० प० अ०) । बाहुलकात् पः । **'रेपः** स्यान्निन्दिते क्रूरे' इति विश्वः ॥ (४) ॥*॥ याप्यते । 'या प्रापणे' (अ० प० अ०) ण्यन्तः । अचो यत्' (३।१।९७) । **'याप्यं** तु यापनीये स्यान्निन्दितेऽप्यभिधेयवत्' (इति मेदिनी) ॥ (५) ॥*॥ अवत्यस्मादात्मानम् । 'अव रक्षणादौ' (भ्वा० प० से०) । 'अवद्या—' (उ० ५।५४) इति सूत्रेणामप्रत्यया-

१—रेपाः सान्तोऽपि । 'प्रापे रूपी पुरा रेपाः' इति माघस्य द्व्यक्षरयमकम्—इति मुकुटः ॥

न्तो निपातः ॥ (६) ॥*॥ तत्रैव वकारस्य पक्षे धकारः। '**अधमः** स्यादूर्ध्व ऊने' इति विश्वः ॥ (७) ॥*॥ कुत्सितं पूयते। 'पूयी विशरणे' (भ्वा० आ० से०)। अच् (३।१।१३४) ॥*॥ पृषोदरादित्वात् (३।३।१०९) अत्वे '**कपूयः**' इत्यपि ॥ (८) ॥*॥ कुत्सा संजातास्य। तारकादिः (५।२।३६) ॥ (९) ॥*॥ न उच्यते। 'अवद्यावमा–' (उ० ५।५४) इति निपातः ॥ (१०) ॥*॥ खेटति। 'खिट त्रासे' (भ्वा० प० से०)। अच् (३।१।१३४)। '**खेटः** कफे ग्रामभेदे चर्मण्यस्त्र्यधमेति त्रिषु' (इति मेदिनी) ॥ (११) ॥*॥ गर्ह्यते। 'गर्ह कुत्सायाम्' (भ्वा० आ० से०)। 'ऋहलोर्ण्यत्' (३।१।१२४) ॥ (१२) ॥*॥ अणति। 'अण शब्दे' (भ्वा० प० से०) ॥ अच् (३।१।१३४)। कुत्सायां कन् (५।३।७४) ॥ (१३) ॥*॥ त्रयोदश '**गर्ह्यस्य**' ॥

**मलीमसं तु मलिनं कच्चरं मलदूषितम्।**

**मेति** ॥ मलोऽस्यास्ति। 'ज्योत्स्नातमिस्रा–' (५।२।११४) इति साधुः। '**मलीमसं** तु मलिने पुष्पकासीसलोहयोः' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ ('**मदनः** सिक्थके सरे)। राढे वसन्ते धत्तूरे **मलिनं** कृष्णदोषयोः। **मलिनी** रजस्वलायाम्' इति हैमः ॥ (२) ॥*॥ कुत्सितं चरति। अच् (३।१।१३४)। 'रथवदयोश्च' (६।३।१०२) इति चकारात् 'कोः कत्तत्पुरुषे–' (६।३।१०१) इति योगविभागाद्वा कोः कत् ॥ (३) ॥*॥ मलेन दूषितम्। 'कर्तृकरणे–' (२।१।३२) इति समासः ॥ (४) ॥*॥ चत्वारि '**मलिनस्य**' ॥

**पूतं पवित्रं मेध्यं च**

**प्विति** ॥ पूयते स्म। 'पूङ् पवने' (भ्वा० आ० से०) 'पूञ् पवने' (क्र्या० उ० से०) वा। क्तः (३।२।१०२)। '**पूतं** त्रिषु पवित्रे च शठिते बहुलीकृते' (इति मेदिनी) ॥ (१) ॥*॥ पुनाति। कर्तरि चर्षिदेवतयोः' (३।२।१८६) इतीत्रः। '**पवित्रं** तु मेध्ये ताम्रे कुशे जले। अर्घोपकरणे चापि **पवित्रा** तु नदीभिदि' इति हैमः ॥ (२) ॥*॥ मेधनार्हम्। 'मेधृ संगमे च' (भ्वा० उ० से०)। ण्यत् (३।१।१२४) ('**मेध्यं** त्रिषु शुचौ रक्तवचारोचनयोः स्त्रियाम्' इति मेदिनी) ॥ (३) ॥*॥ 'पवित्रः पूतः' इति, प्राणिविषय उक्तम्। इह त्वप्राणिनि ॥*॥ त्रीणि '**पवित्रस्य**' ॥

**वीध्रं तु विमलात्मकम्** ॥ ५५ ॥

**वीति** ॥ वीन्धे। 'ञि इन्धी दीप्तौ' (रु० आ० से०) 'वाविन्धेः' (उ० २।२६) इति क्रन्।—'इन्धे रक्'—इति मुकुटस्तु चिन्त्यः ॥ (१) ॥*॥ विमल आत्मा स्वभावो यस्य ॥ (२) ॥*॥ द्वे '**स्वभावनिर्मलस्य**' ॥

**निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम्।**

**नीति** ॥ निर्णिज्यते स्म। 'णिजिर् शौचपोषणयोः' (जु० उ० अ०), क्तः (३।२।१०२) ॥ (१) ॥*॥ शोध्यते स्म ॥ 'शुध शौचे' (दि० प० अ०) ण्यन्तः। क्तः (३।२।१०२) ॥ (२) ॥*॥ मृज्यते स्म। 'मृजू शुद्धौ' (अ० प० से०) क्तः (३।२।१०२) ॥ (३) ॥*॥ निष्क्रान्तं शोध्यमस्मात्। शोध्यान्निष्क्रान्तम्, इति वा ॥ (४) ॥*॥ नावस्करोऽत्र ॥ (५) ॥*॥ पञ्च '**अपनीतमलस्य**' ॥

**असारं फल्गु**

**असेति** ॥ न सारोऽत्र ॥ (१) ॥*॥ फलति। 'ञिफला विशरणे' (भ्वा० प० से०) ॥ 'फलिपाटि–' (उ० १।१८) इति साधुः। '**फल्गुः** काकोदुम्बरिके वृक्षे निरर्थकेऽपि च' इति हैमः। '**फल्ग्व**सारेऽभिधेयवत्। नदीभेदे मलय्वां स्त्री' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ द्वे '**निःसारस्य**' ॥

**शून्यं तु वशिकं तुच्छरिक्तके** ॥ ५६ ॥

**श्विति** ॥ शुने हितम्। 'शुनः संप्रसारणं वा च दीर्घः' (ग० ५।१।२) इति यत्। '**शून्यं** बिन्दौ च निर्जने। **शून्या** तु नलिका' इति हैमः ॥ (१) ॥*॥ उश्यते। 'वश कान्तौ' (अ० प० से०) 'सर्वधातुभ्य इन्' (उ० ४।११८)। 'संज्ञायां कन्' (५।३।७५) ॥ (२) ॥*॥ तोदनम्। संपदादित्वात् (वा० ३।३।१०८) भावे क्विप्। तुदा व्यथया छ्यति। 'छो छेदने' (दि० प० अ०)। मूलविभुजादित्वात् (वा० ३।२।५) कः। तुदं छ्यति वा। 'आतोऽनुप–' (३।२।३) इति कः ॥ (३) ॥*॥ रिच्यते स्म। '**रिच** वियोजनसंपर्चनयोः' (चु० उ० से०) क्तः (३।२।१०२)। स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (४) ॥*॥ चत्वारि '**तुच्छस्य**' ॥

**क्लीबे प्रधानं प्रमुखं प्रवेकानुत्तमोत्तमाः।**
**मुख्यवर्यवरेण्याश्च प्रवर्होनवरार्ध्यवत्** ॥ ५७ ॥
**परार्ध्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम्।**

**क्लीति** ॥ प्रदधाति। ल्युट् (३।३।११३) युच् (उ० २।७८) वा। '**प्रधानं** स्यान्महामात्रे प्रकृतौ परमात्मनि। प्रज्ञायामपि च क्लीबमेकत्वे तूत्तमे सदा' (इति मेदिनी) ॥ (१) ॥*॥ प्रकृष्टं मुखमस्य। '**प्रमुखं** प्रथमे मुख्ये' इति हैमः ॥ (२) ॥*॥ प्रविच्यते। 'विचिर् पृथग्भावे' (रु० उ० अ०)। घञ् (३।३।१९) ॥ (३) ॥*॥ नोत्तमोऽस्मात् ॥ (४) ॥*॥ अतिशयेनोत्कृष्टः। उत्कृष्टार्थवृत्तेरुच्छब्दात्तमप्। द्रव्यप्रकर्षार्थत्वान्नामुः। यद्वा। उत्ताम्यति। 'तमु काङ्क्षायाम्' (दि० प० से०) अच् (३।१।१३४)। उत्ताम्यते वा। घञ् (३।३।१९)। 'नोदात्त—' (७।३।३४) इति न वृद्धिः ॥ (५) ॥*॥ मुखमिव। मुखे भवो वा। शाखादित्वात् (५।३।१०३) यः ॥ (६) ॥*॥ वर्यते। 'वर ईप्सायाम्' चुरादावदन्तः। 'अचो यत्' (३।१।९७) ॥ (७) ॥*॥ व्रियते। 'वृञ् वरणे' (स्वा० उ० से०)। 'वृञ एण्यः' (उ० ३।९८) ॥ (८) ॥*॥ प्रवर्हति। 'वृह वृद्धौ' (भ्वा०प०से०)। अच् (३।१।१३४) ॥ (९) ॥*॥

१—इदं तु मदनशब्दार्थबोधकमिति न प्रकृतोपयोगि ॥

अवरस्मिन्नर्धे भवः । 'अर्धाद्यत्' (४।३।४) । 'परावराधमोत्तमपूर्वाच्च' (४।३।५) । न अवरार्ध्यः । 'नञ्' (२।२।६) इति समासः ॥ (१०) ॥*॥ परस्मिन्नर्धे भवः । यत् (४।३।५) ॥ (११) ॥*॥ अगति । 'अग कुटिलायां गतौ' ( भ्वा० प० से० ) । 'ऋज्रेन्द्र–' (उ० २।१८) इति साधुः । '**अग्रं** पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत्' (इति मेदिनी) ॥ (१२) ॥*॥ प्रकृष्टमग्रम् । प्राग्रे हरति । 'हरतेरनुद्यमनेऽच्' (३।२।९) ॥ (१३) ॥*॥ प्राग्रे भवः 'अग्राद्यत्' (४।४।११६) ॥ (१४) ॥*॥ (१५) ॥*॥ 'घच्छौ च' (४।४।११७) ॥ (१६) ॥*॥ (१७) ॥*॥ सप्तदश '**श्रेष्ठस्य**' ॥

**श्रेयाञ्श्रेष्ठः पुष्कलः स्यात्सत्तमश्चातिशोभने ॥५८॥**

**श्रयति** ॥ अतिशयेन प्रशस्यः । 'अतिशायने तमबिष्ठनौ' (५।३।५५) । 'द्विवचनविभज्योपपदे तरबीयसुनौ' (५।३।५७) । 'अजादी गुणवचनादेव' (५।३।५८) । 'प्रशस्यस्य श्रः' (५।३।६०) '**श्रेयो** मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत् । **श्रेयसी** करिपिप्पल्यामभयापाठयोरपि' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ '**श्रेष्ठो** वरे कुबेरे च' इति हैमः ॥ (२) ॥*॥ पुष्यति । 'पुष पुष्टौ' ( दि० प० अ० ) । 'पुषः कित्' 'कलश्च' (उ० ४।४।५) ।–'पुषः करन्' । कपिलिकादिः (वा० ८।२।१८)—इति मुकुटः । तच्चिन्त्यम् । तादृशपाठाभावात् । अस्मदुक्तसूत्रसत्त्वाच्च । '**पुष्कलस्तु** पूर्णे श्रेष्ठे' इति हैमः ॥ (३) ॥*॥ अतिशयेन सन् । तमप् (५।३।५५) । '**सत्तमः** स्यात्पूज्यतमे साधीयस्युत्तमे त्रिषु' (इति मेदिनी) ॥ (४) ॥*॥ अतिशयेन शोभनः ॥ (५) ॥*॥ पञ्च '**अतिशोभनस्य**' ॥ 'वर्यं प्रधानं युक्तमनुत्तमं सत्तमं प्रवर्हणं च' इति नाममालायाम् (सत्तमस्य) । अग्रं प्राग्रहरं श्रेष्ठं मुख्यवर्यप्रवर्हणम्' इति त्रिकाण्डशेषे च श्रेष्ठस्य पाठादेकविंशतिरेव शोभनस्य—इत्यन्ये ॥

**स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः ।**
**सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥ ५९ ॥**

**स्युरिति** ॥ पुमांश्चासौ गौश्च 'गोरतद्धितलुकि' (५।४।९२) इति टच् ॥ (१) ॥*॥ श्रेष्ठस्यार्थः । श्रेष्ठार्थो गोचरो येषां ते । क्वचित् 'वाचकाः' इति पाठः ॥*॥ एते '**श्रेष्ठवाचकाः**' ॥

**अप्राग्र्यं द्वयहीने द्वे अप्रधानोपसर्जने ।**

**अप्रेति** ॥ प्राग्र्याद्भिन्नम् ॥ (१) ॥*॥ प्रधानादन्यत् ॥ (२) ॥*॥ उपसृज्यते । 'सृज विसर्गे' ( तु० प० अ० ) । कर्मणि ल्युट् (३।३।११३) ॥ (३) ॥*॥ त्रीणि '**अप्रधानस्य**' ॥



**विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् ॥ ६० ॥**
**वड्रोरुविपुलम्**

**वीति** ॥ विस्तृतार्थवृत्तेर्विशब्दात् 'वेः शालच्छङ्कटचौ' (५।२।२८) ॥ (१) ॥*॥ '**विशाला** त्विन्द्रवारुण्यामुज्जयिन्यां च योषिति । नृपवृक्षभिदोः पुंसि पृथुले त्वभिधेयवत्' इति विश्वमेदिन्यौ ॥ (४) ॥*॥ प्रथते । 'प्रथ प्रख्याने' (भ्वा० आ० से० ) 'प्रथिम्रदि–' (उ० १।२८) इति कुः संप्रसारणं च । '**पृथुर्**विशाले भूपाले बाष्पिकाकृष्णजीरयोः' इति हेमचन्द्रः ॥ (२) ॥*॥ बर्हति । 'बृह वृद्धौ' (भ्वा० प० से०) । 'वर्तमाने पृषद्बृहन्महत्–' (उ० २।८४) इति निपातः ॥ (३) ॥*॥ पृथुलमस्यास्ति । सिध्मादित्वात् (५।२।९७) लच् । पृथुत्वं लाति वा ॥ (५) ॥*॥ महति । 'मह पूजायाम्' (भ्वा० प० से० ) ॥ (६) ॥*॥ वलते । 'वल संवरणे संचरणे च' (भ्वा० आ० से०) । 'बहुलमन्यत्रापि' ( ) इति रक् ।—'शुद्रादयः' इति रक्—इति मुकुटः । तन्न । उज्ज्वलदत्तादावदर्शनात् । डलयोरेकत्वस्मरणम् ॥ (७) ॥*॥ ऊर्णोति । 'ऊर्णुञ् आच्छादने' ( अ० उ० से० ) 'महति ह्रस्वश्च' (उ० १।३१) इति कुप्रत्ययः नुलोपः ह्रस्वश्च ॥ (८) ॥*॥ विपोलति । 'पुल महत्त्वे' ( भ्वा० प० से० ) । 'इगुपध–' (३।१।१३५) इति कः । '**विपुलः** पृथुलेऽगाधे मेरुपश्चिमभूधरे' इति विश्वमेदिन्यौ ॥ (९) ॥*॥ नव '**विस्तीर्णस्य**' ॥

**पीनपीवी न स्थूलपीवरे ।**

**पीति** ॥ प्यायते स्म । 'ओप्यायी वृद्धौ' ( भ्वा० आ० से० ) । 'गत्यर्था–' (३।४।७२) इति क्तः । 'ओदितश्च' (८।२।४५) इति नत्वम् । 'प्यायः पी' (६।१।२८) ॥ (१) ॥*॥ प्यायते । 'प्यैङ् वृद्धौ' ( भ्वा० आ० अ० ) । 'ध्याप्योः संप्रसारणं च' (उ० ४।११५) इति क्वनिप् । स्त्रियां तु 'वनो र च' (४।१।७) इति ङीब्रौ ॥ (२) ॥*॥ स्थूलयति । 'स्थूल बृंहणे' ( चु० आ० से० ) । अच् (३।१।१३४) । '**स्थूलः** पीने जडे' इति हैमः ॥ (३) ॥*॥ प्यायते । 'छित्वर–' (उ० ३।१) इति निपातः । '**पीवरः** स्थूलकूर्मयोः' इति हेमचन्द्रः ॥ (४) ॥*॥ चत्वारि '**स्थूलस्य**' ॥

**स्तोकाल्पक्षुल्लकाः श्लक्ष्णं सूक्ष्मं दभ्रं कृशं तनु ॥६१॥**
**स्त्रियां मात्रा त्रुटी पुंसि लवलेशकणाणवः ।**

**स्तविति** ॥ स्तुच्यते । 'ष्टुच प्रसादे' (भ्वा० आ० से०) । घञ् (३।३।१९) । न्यङ्क्वादिः (७।३।५३) । स्तूयते । बाहुलकात् स्तुवः कः । '**स्तोक**स्त्रिष्वल्पे चातके पुमान्' (इति मेदिनी) ॥ (१) ॥*॥ अल्यते वार्यते । 'अल भूषणादौ' ( भ्वा० प० से० ) । बाहुलकात्पः ॥ (२) ॥*॥ क्षोदनम् । 'क्षुदिर् संपेषणे' ( रु० उ० अ० ) । संपदादिः (वा० ३।३।१०८) क्षुदं लाति । 'आतोऽनुप–' (३।२।३) इति कः । 'तोर्लि' (८।४।६०) (भ्वा० ५५) स्वार्थे कन् (ज्ञापि० ५।४।५) । यद्वा

क्षुद्यते। 'स्फायितञ्चि–' (उ० २।१३) इति रक्। रलयोरेकत्वस्मरणात् कपिलिकादित्वात् (वा० ८।२।१८) वा लत्वम्। 'क्षुल्लकस्त्रिषु नीचेऽल्पे' इति विश्वः ॥ (३) ॥*॥ 'श्लिष्यते, श्लिष्यति, वा। 'श्लिष आलिङ्गने' ( दि० प० अ० )। श्लिषेरच्चोपधायाः' (उ० ३।१९) इति क्स्नः ॥ (४) ॥*॥ सूच्यते। 'सूच पैशुन्ये' (चु० प० से०)। 'सूचेः स्मन्' (उ० ४।११७)। 'सूक्ष्मं स्यात्कतकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके' इति विश्वः (मेदिनी) ॥ (५) ॥*॥ दभ्यते। 'दम्भु दम्भने' ( स्वा० प० से०)। 'स्फायितञ्चि–' (उ० २।१३) इति रक्॥ (६) ॥*॥ कृश्यते स्म। 'कृश तनूकरणे' (दि० प० से०)। 'स्फुल्लक्षीब–' (८।२।५५) इति साधुः ॥ (७) ॥*॥ तन्यते। 'तनु विस्तारे' (त० उ० से०)। '—तनिचरि–' (उ० १।७) इत्युः। 'तनुः काये त्वचि स्त्री स्यात्रिष्वल्पे विरले कृशे' इति विश्वमेदिन्यौ ॥ (८) ॥*॥ मीयते। 'माङ् माने' (दि० आ० अ०) ष्ट्रन् (उ०४।१५९)। अनित्यः षितां ङीष्। टाप् (४।१।४)। 'मात्रं त्ववधृतौ स्वार्थे कार्त्स्न्ये मात्रापरिच्छदे। अक्षरावयवे द्रव्ये मानेऽल्पे कर्णभूषणे। काले वृत्ते च' इति हैमः ॥ (९) ॥*॥ त्रुट्यते। 'त्रुट छेदने' ( चु० आ० से० )। 'इगुपधात्कित्' (उ० ४।१२०) इतीन्॥ (१०) ॥*॥ लूयते। 'लूञ् छेदने' ( क्र्या० उ० से० )। 'ऋदोरप्' (३।३।५७)। 'लवः कालभिदि छिदि। विलासे रामजे लेशे तथा किंजल्कपक्ष्मणोः। गोपुच्छलोमस्वपि च' इति हैमः ॥ (११) ॥*॥ लिशति। 'लिश गतौ' ( तु० प० से० )। अच् (३।१।१३४)। लिश्यते वा। घञ् (३।३।१९) ॥ (१२) ॥*॥ कणति। 'कण निमीलने' (चु० उ० से०)। अच् (३।१।१३४)। 'कणो धान्यांशलेशयोः। कणा जीरकपिप्पल्योः' इति हेमचन्द्रः ॥ (१३) ॥*॥ अणति, अण्यते, वा। 'अण शब्दे' (भ्वा० प० से०)। 'अणश्च' (उ० १।८) इत्युः। 'अणुर्व्रीह्यल्पयोः' इति हैमः ॥ (१४) ॥*॥ चतुर्दश 'सूक्ष्मस्य' ॥

**अत्यल्पेऽल्पिष्ठमल्पीयः कनीयोऽणीय इत्यपि ॥६२॥**

**अत्येति** ॥ अतिशयेनाल्पः ॥ (१) ॥*॥ 'अजादी गुणवचनादेव' (५।३।५८) इतीष्ठन्नीयसुनौ ॥ (२) ॥*॥ (३) ॥*॥ 'युवाल्पयोः कनन्यतरस्याम्' (५।३।६४) इति कन् वा ॥ (४) ॥*॥ अतिशयेनाणुः। ईयसुन् (५।३।५५) ॥ (५) ॥*॥ चत्वारि (पञ्च) 'अत्यल्पस्य' ॥

**प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु।**
**पुरुहं पुरु भूयिष्ठं स्फिरं भूयश्च भूरि च ॥ ६३ ॥**

**प्रेति** ॥ प्रभवति स्म। 'गत्यर्था–' (३।४।७२) इति क्तः। 'प्रभूतमुद्गते प्राज्ये' इति हैमः ॥ (१) ॥*॥ प्रचोरति। 'चुर स्तेये' ( चु० प० से० )। चुरादीनां णिज्वैकल्पिकः। 'इगुपध–' (३।१।१३५) इति कः। 'प्रगतं चुरायाः' इति वा ॥ (२) ॥*॥ प्रवीयते। 'अज गतौ' ( भ्वा० प० से० ) इति वी न। यद्वा प्रकर्षेणाज्यते काम्यते। 'अञ्जू व्यक्त्यादौ' ( रु० प० से० )। आङ्पूर्वात् 'अञ्जेः संज्ञायाम्' (वा० ३।१।१०९) इति क्यप्॥ (३) ॥*॥ दभ्रादण्यत्। नञ्समासः (२।२।६) ॥ (४) ॥*॥ बहून् लाति। 'आतोऽनुप–' (३।२।३) इति कः। 'बहुला नीलिकायां स्यादेलायां गवि योषिति। कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम्। पुंस्यग्नौ कृष्णपक्षे च वाच्यवत्प्राज्यकृष्णयोः' इति विश्वमेदिन्यौ ॥ (५) ॥*॥ बंहते 'बहि वृद्धौ' ( भ्वा० आ० से० ) 'लङ्घिबंह्योर्नलोपश्च' (उ० १।२९) इत्युः। यत्तु—बृंहते वर्धते बहु पूर्यते। मितद्र्वादित्वात् (वा० ३।२।१८०) डुः—इति मुकुटेनोक्तम्। तन्न। टिलोपेनोक्तरूपासिद्धिप्रसङ्गात्। 'बहु स्यात्र्यादिसंख्यासु विपुलेऽप्यभिधेयवत्' इति विश्वः (मेदिनी) ॥ (६) ॥*॥ पुरून् हन्ति गच्छति। 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः। यद्वा पुरून् जहाति जिहीते वा। 'अतोऽनुप–' (३।२।३) इति कः ॥ (७) ॥*॥ पिपर्ति, पूर्यते, वा। 'पॄ पालनपूरणयोः' (जु० प० से०)। 'पॄभिदि०' (उ० १।२३) इति कुः। यत्तु—'पॄकॄतृगृधृषिभ्यः कुः' इति सूत्रं पठितं मुकुटेन। तन्न 'कृग्रोरुच्च' इति पृथक्सूत्रात्। अन्यथोत्वाभावप्रसङ्गात्। 'पुरुः प्राज्येऽभिधेयवत्। पुंसि स्याद्देवलोके च नृपभेदपरागयोः' इति हैमः (मेदिनी) ॥ (८) ॥*॥ अतिशयेन बहु। 'बहोर्लोपो भू च बहोः' (६।४।१५८) 'इष्ठस्य यिट् च' (६।४।१५९)। स्वार्थे चेष्विष्ठादयः ॥ (९) ॥*॥ स्फायते। 'स्फायी वृद्धौ' ( भ्वा० आ० से० )। 'अजिरशिशिर–' (उ० १।५३) इति साधुः ॥*॥ 'स्फारम्' इत्यपि पाठः। रक् (उ० २।१३)। 'स्फारस्तु स्फरकादिनां बुद्बुदे विपुलेऽपि च' इति हेमचन्द्रः ॥ (१०) ॥*॥ अतिशयेन बहु। 'बहोर्लोपो भू च बहोः' (६।४।१५८) ॥ (११) ॥*॥ भवति। 'अदिशदिभूशुभिभ्यः क्रिन्' (उ० ४।६५) 'भूरि स्यात्प्रचुरे स्वर्णे' इति हैमः। ('भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि। नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकः' (इति मेदिनी)) ॥ (१२) ॥*॥ द्वादश 'बहुलस्य' ॥

**परश्शताद्यास्ते येषां परा संख्या शतादिकात्।**

**पेति** ॥ शतात्परे। 'पञ्चमी' (२।१।३७) इति योगविभागात्समासः। राजदन्तादिः (२।२।३१)। पारस्करादित्वात् (६।१।१५७) सुट्॥ (१) ॥*॥ आद्येन परस्सहस्राः ॥*॥ एकं 'शतात्परस्य' ॥

**गणनीये तु गणेयम्**

**गेति** ॥ आर्या छन्दः ॥*॥ गण्यते 'गण संख्याने' ( चु० उ० से० )। अनीयर् (३।१।९६) ॥ (१) ॥*॥ 'अचो यत्'

१—इत्यादिपाठस्तु हैमानेकार्थकैरवाकरकौमुदीपुस्तके नास्ति। मेदिन्यादिष्वपि लवशब्दस्यैतदर्थकता नोपलभ्यते॥

(३।१।९७) । संज्ञापूर्वकत्वाण्णिलोपाभावः । 'चिन्तिपूजि–' (३।३।१०५) इत्यङ्विधानाद्गुणाभावार्थोद्वा । अन्यथा 'अ-प्रत्ययात्' (३।३।१०२) इत्यनन्तरं पठित्वाकारमेव विदध्यात् । यत्तु—'अ प्रत्ययात्' (३।३।१०२) इत्यकारे प्राप्ते गुणाभावार्थादङ्विधानात्—इति मुकुटेनोक्तम् । तच्चिन्त्यम् । 'ण्यासश्रन्थो युच्' (३।३।१०७) इति युचा प्रत्ययस्य बाधनात् ॥ (२) ॥*॥ द्वे **'गणयितुं शक्यस्य'** ॥

**संख्यातं गणितम्**

**समिति** ॥ संख्यायते स्म । 'ख्या प्रकथने' (अ० प० अ०) । चक्षिङादेशो वा । क्तः (३।२।१०२) ॥ (१) ॥*॥ गण्यते स्म । क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे **'संख्यातस्य'** ॥

**अथ समं सर्वम् ॥ ६४ ॥**

**विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम् ।**
**समग्रं सकलं पूर्णमखण्डं स्यादनूनके ॥ ६५ ॥**

**अथेति** ॥ समति । 'षम वैक्लव्ये' (भ्वा० प० से०) । अच् (३।१।१३४) । सर्वार्थे सर्वनाम । **'समा** संवत्सरे स्त्रियाम् । सर्वसाधुसमानेषु **समं** स्यादभिधेयवत्' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ सरति । 'सृ गतौ' (भ्वा० प० अ०) । 'सर्वनिघृष्व–' (उ० १।१५३) इति साधुः । –'सर्तेर्वः'–इति मुकुटस्त्वपाणिनीयः । यद्वा सर्वति । 'षर्व गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) ॥ (२) ॥*॥ विशति । 'विश प्रवेशने' (तु० प० अ०) । 'अशूप्रुषि–' (उ० १।१५२) इति क्वन् । **'विश्वं** कृत्स्ने च भुवने विश्वे देवेषु नागरे । **विश्वा**-प्यतिविषायां स्यात्' (इति विश्वः) ॥ (३) ॥*॥ न शेषोऽस्य ॥ (४) ॥*॥ कृत्यते । 'कृती वेष्टने' (रु० प० से०) । 'कृत्यशूभ्यां क्स्नः' (उ० ३।१७) । **'कृत्स्नं** सर्वाम्बुकुक्षिषु' (इति मेदिनी) ॥ (५) ॥*॥ समस्यते स्म । 'असु क्षेपणे' (दि० प० से०) । क्तः (३।२।१०२) ॥ (६) ॥*॥ निवृत्तं खिलमस्य ॥ (७) ॥*॥ न खिलमस्य ॥ (८) ॥*॥ निष्क्रान्तं शेषात् । 'निरादयः–' (वा० २।२।१८) इति समासः ॥ (९) ॥*॥ संगतमग्रमस्य । समं ग्रसते वा । 'ग्रसु अदने' (भ्वा० आ० से०) । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः ॥ (१०) ॥*॥ सह कलाभिः ॥ (११) ॥*॥ पूर्यते स्म । 'पूरी आप्यायने' (दि० आ० से०) । कर्तरि (३।३।१७४) कर्मणि (३।२।१०२) वा क्तः । 'पूर्णः शब्दे (शक्ते) समग्रे ना पूरिते त्वभिधेयवत्' (इति मेदिनी) ॥*॥ **'पूर्वम्'** इति पाठः—इति स्वामी । पूर्वति । 'पूर्व पूरणे' (भ्वा० प० से०) । अच् (३।१।१३४) ॥ (१२) ॥*॥ न खण्ड्यते । 'खडि भेदने' (चु० प० से०) । घञ् ॥ (१३) ॥*॥ ऊनयति । 'ऊन परिहाणे' (चु० उ० से०) । अच् (३।१।१३४) । न ऊनम् । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१४) ॥*॥ चतुर्दश **'समग्रस्य'** ॥

**घनं निरन्तरं सान्द्रम्**

**घेति** ॥ हन्यते 'हन हिंसागत्योः' (अ० प० अ०) 'मूर्तौ घनः' (३।३।७७) इत्यप् घनादेशश्च । **'घनः** सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे । संघे मुस्ते **घनं** मध्ये नृत्यवाद्यप्रभेदयोः' इति हेमचन्द्रः ॥ (१) ॥*॥ निर्गतमन्तरात् । निर्गतमन्तरमस्मिन् वा ॥ (२) ॥*॥ सह अन्द्यते । 'अदि बन्धने' (भ्वा० प० से०) । बाहुलकाद्रक् ॥ (३) ॥*॥ त्रीणि **'निबिडस्य'** ॥

**पेलवं विरलं तनु ।**

**पेलेति** ॥ पेलनम् । 'पिल भेदने' (तु० प० से०) घञ् (३।३।१८) । पेलोऽस्यास्ति । 'अन्येभ्योऽपि–' (वा० ५।२।१०९) इति वः ॥ (१) ॥*॥ वि राति । बाहुलकात्कलन् ॥ (२) ॥*॥ तन्यते । 'भृमृ–' (उ० १।७) इत्युः । **'तनुर्वं**पुस्त्वचोः । विरलेऽल्पे कृशे' इति हैमः ॥ (३) ॥*॥ त्रीणि **'विरलस्य'** ॥

**समीपे निकटासन्नसंनिकृष्टसनीडवत् ॥ ६६ ॥**
**सदेशाभ्याशसविधसमर्यादसवेशवत् ।**
**उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् ६७**

**सेति** ॥ संगता आपो यस्मिन् । 'ऋक्पूर्–' (५।४।७४) इत्यः । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (६।३।९७) ॥ (१) ॥*॥ निबन्धम् 'संप्रोदश्च–' (५।२।२९) इति चापमे कटच् । निकटति वा । 'कटे वर्षावरणयोः' । (भ्वा० प० से०) । अच् (३।१।१३४) ॥ (२) ॥*॥ आसीदति स्म । 'गत्यर्था–' (३।४।७२) इति क्तः । आसद्यते स्म, इति वा । क्तः (३।२।१०२) ॥ (३) ॥*॥ संनिकृष्यते स्म । 'कष' (भ्वा० प० अ०) । क्तः (३।२।१०२) ॥ (४) ॥*॥ समानं नीडं वासस्थानमस्य । सह नीडेन, इति ॥ (५) ॥*॥ समानो देशोऽस्य ॥ (६) ॥*॥ अभ्यश्यते । 'अशू व्याप्तौ' (स्वा० आ० से०) । घञ् (३।१९) ॥*॥ मुकुटस्तु—अभ्यासीदति । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः—इति दन्त्यसमाह । **'अभ्यासोऽ**भ्यसनेऽन्तिके' इति दन्त्यान्तेषु (विश्वमेदिन्यौ) ॥ (७) ॥*॥ समाना विधास्य । यद्वा सह विधया ॥ (८) ॥*॥ समाना मर्यादास्य ॥ (९) ॥*॥ समानो वेशोऽस्य ॥ (१०) ॥*॥ उपगतः कण्ठम् । 'अत्यादयः–' (वा० २।२।१८) इति समासः । उपगतः कण्ठः सामीप्यमस्य, इति वा ॥ (११) ॥*॥ अन्तोऽस्यास्ति । ठन् (५।२।११५) । **'अन्तिकं** निकटे वाच्यलिङ्गं स्त्री शोभनौषधौ । चुल्ल्यां ज्येष्ठभगिन्यां च नाट्योक्त्यां कीर्त्यतेऽन्तिका' इति विश्वमेदिन्यौ ॥ (१२) ॥*॥

१—'भ्यग्राभिपतिता ग्रामी'—इति क्वचित्पाठः—इति पीयूषव्याख्या ॥

अभ्यर्द्यते स्म । अभ्यर्दति स्म, इति वा । 'अर्द गतौ' (भ्वा० प० से०) । कर्मणि (३।२।१०२) कर्तरि (३।४।७२) वा क्तः । 'अभेश्चाविदूर्ये' । (७।२।२५) इतीडभावः ॥ (१३) ॥*॥ अभिमुखमग्रमस्य ॥ (१४) ॥*॥ 'पर्यभिभ्यां च' (५।३।९) इति तसिल् ।–तसिः–इति स्वामिमुकुटोक्तिस्तु स्वरानादराभिप्रायेण ॥ (१५) ॥*॥ पञ्चदश **'समीपस्य'** ॥

**संसक्ते त्वव्यवहितमपदान्तरमित्यपि ।**

**समिति** ॥ संसज्यते स्म । 'षञ्ज सङ्गे' (भ्वा० प० अ०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ न व्यवधीयते स्म । क्तः (३।२।१०२) । 'दधातेर्हिः' (७।४।४२) ॥ (२) ॥*॥ पदेनान्तरम् । न पदान्तरमत्र । मुकुटस्तु—'अपदान्तरम्'—इत्याह ॥ (३) ॥*॥ त्रीणि **'संलग्नस्य'** ॥

**नेदिष्ठमन्तिकतमम्**

**नेदीति** ॥ अतिशयेनान्तिकम् । इष्ठन् । (५।३।५५) । 'अन्तिकबाढयोर्नेदसाधौ' (५।३।६३) ॥ (१) ॥*॥ तमप् (५।३।५५) ॥ (२) ॥*॥ द्वे **'अतिनिकटस्य'** ॥

**स्याद्दूरं विप्रकृष्टकम् ॥ ६८ ॥**

**स्यादिति** ॥ दुःखेनेयते । 'दुरीणो लोपश्च' (उ० २।२०) इति साधुः ॥ (१) ॥*॥ विप्रकृष्यते स्म । कृषेः क्तः (३।२।१०२) । स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (२) ॥*॥ द्वे **'दूरस्य'** ॥

**दवीयश्च दविष्ठं च सुदूरे**

**देति** ॥ अत्यन्तं दूरम् । ईयसुन् (५।३।५७) । स्थूलदूरयुव–' (६।४।१५६) इति साधुः ॥ (१) ॥*॥ इष्ठन् (५।३।५५) ॥ (२) ॥*॥ सु अत्यन्तं दूरम् ॥ (३) ॥*॥ त्रीणि **'अत्यन्तदूरस्य'** ॥

**दीर्घमायतम् ।**

**दीति** ॥ दृणाति । 'दॄ विदारणे' (क्र्या० प० से०) । बाहुलकाद्घक् ॥ (१) ॥*॥ आयम्यते स्म । क्तः (३।२।१०२) । आयतते वा । 'यती प्रयत्ने' (भ्वा० आ० से०) । अच् (३।१।१३४) ॥ (२) ॥*॥ द्वे **'विस्तृतस्य'** ॥

**वर्तुलं निस्तलं वृत्तम्**

**वेति** ॥ वर्तते । बाहुलकादुलच् ॥ (१) ॥*॥ निर्गतं तलमस्य । **'निस्तलं** वर्तुले चले' इति विश्वः ॥ (२) ॥*॥ वर्तते स्म । 'गत्यर्था–' (३।४।७२) इति क्तः । **'वृत्तं** (वृत्तौ) दृढे मृते । चरित्रे वर्तुले छन्दः स्वतीताधीतयोर्वृते[२]' इति हैमः ॥ (३) ॥ त्रीणि **'वर्तुलस्य'** ॥

**बन्धुरं तून्नतानतम् ॥ ६९ ॥**

**बेति** ॥ बध्नाति । 'बन्ध बन्धने' (क्र्या० प० अ०) । 'मद्गुरादयश्च' (उ० १।४१) इति साधुः । (**'बन्धुरं** मुकुटे पुंसि स्त्री चक्रतैलकल्कयोः । **बन्धूके** बधिरे हंसे त्रिषु स्यान्नम्यनम्रयोः । **बन्धुरा** पण्ययोषायां स्त्रियां भून्नि च सकुषु' इति मेदिनी) ॥*॥ (**'बन्धूरबन्धुरौ** रम्ये नम्रे, हंसे तु **बन्धुरः** । बन्धूके च विडङ्गे च **बन्धुरा** पण्ययोषिति' इति विश्वाद्दीर्घोपधोऽपि) ॥ (१) ॥*॥ उन्नतं च तदानतं च ॥ (२) ॥*॥ द्वे **'उन्नतानतस्य'** ॥

**उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे**

**उच्चेति** ॥ उच्चिनोति । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । उच्चैस्त्वमस्त्यत्र वा । 'अर्शआदिभ्योऽच्' (५।२।१२७) । 'अव्ययानाम्—' (वा० ६।४।१४४) इति टिलोपः ॥ (१) ॥*॥ प्रकृष्टा अंशवोऽस्य ॥ (२) ॥ उन्नमति स्म । 'णम प्रह्वत्वे' (भ्वा० प० अ०) । 'गत्यर्था–' (३।४।७२) इति क्तः ॥ (३) ॥*॥ उद्गतमग्रमस्य ॥ (४) ॥*॥ उच्छ्रयति स्म । 'श्रिञ् सेवायाम्' (भ्वा० प० से०) । 'गत्यर्था–' (३।४।७२) इति क्तः । **'उच्छ्रितं** त्रिषु संजाते समुन्नद्ध(त)प्रवृद्धयोः' (इति मेदिनी) ॥ (५) ॥*॥ तुङ्ग्यते । 'तुगि हिंसायाम्' (भ्वा० प० से०) । घञ् (३।३।१९) । **'तुङ्गः** पुनागनगयोर्बुधे स्यादुन्नतेऽन्यवत् । **तुङ्गी** प्रोक्ता हरिद्रायां वर्वरायामपीष्यते' इति **हैमः** ॥ (६) ॥*॥ षट् **'उन्नतस्य'** ॥

**अथ वामने ।**

**न्यग्नीचखर्वह्रस्वाः स्युः**

**अथेति** ॥ वामयति मदम् । 'टुवम उद्गिरणे' (भ्वा० प० से०) नन्द्यादित्वात् ल्युः (३।१।१३४) ॥ (१) ॥*॥ न्यञ्चति । 'अञ्चु गतौ' (भ्वा० प० से०) । 'ऋत्विग्–' (३।२।५९) । इति क्विन् ॥ (२) ॥*॥ **नीचैस्त्वमस्त्यत्र** । अर्शआद्यच् (५।२।१२७) । 'अव्ययानाम्–' (६।४।१४४) इति टिलोपः । **'नीचः** पामरखर्वयोः' इति **हैमचन्द्रः** ॥ (३) ॥*॥ खर्वति । 'खर्व गतौ' (भ्वा० प० से०) । अच् (३।१।१३४) । (**'खर्वं** संख्यान्तरे क्लीबं नीचे वामनके त्रिषु' इति मेदिनी) ॥ (४) ॥*॥ ह्रसति । 'ह्रस शब्दे' (भ्वा० प० से०) बाहुलकाद्वः । **'खर्वह्रस्वौ** न्यग्वामनौ' इति **हैममेदिन्यौ** ॥ (५) ॥*॥ पञ्च **'ह्रस्वस्य'** ॥

**अवाग्रेऽवनतानते ॥ ७० ॥**

**अवेति** ॥ अवनतमग्रमस्य ॥ (१) ॥*॥ अवनमति स्म । 'गत्यर्था–' (३।४।७२) इति क्तः ॥ (२) ॥*॥ आनमति स्म ॥ (३) ॥*॥ त्रीणि **'अधोमुखमस्य'** ॥

**अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् ।**
**आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ॥ ७१ ॥**

**अरेति** ॥ ऋच्छति । 'ऋ गतौ' (भ्वा० प० अ०) ।

---

१—वृत्तौ वर्तने यथा—'ऋतेन वृत्तं प्रवदन्ति मुख्यम्' इति ॥ २—वृते यथा—'कण्टकैर्विटपी वृत्तः' इति चानेकार्थकैरवाकरकौमुदी ॥

विच् (३।२।७५)। अरमालाति । मूलविभुजादिकः (वा० ३।२।५) अरा लाति वा । '**अरालः** कुटिले सर्जरसे च समदन्तिनि' इति विश्वः ॥ (१) ॥*॥ वृज्यते । 'वृजी वर्जने' (अ० आ० से०)। 'वृजेः किच्च' (उ० २।४७) इतीनन् । '**वृजिनं** कल्मषे क्लीबं केशे ना कुटिले त्रिषु' (इति मेदिनी) ॥ (२) ॥*॥ जहाति, हीयते वा । 'ओहाक् त्यागे' (जु० प० अ०)। 'जहातेः सन्वदालोपश्च' (उ० १।१४१) इति मन् । '**जिह्मस्तु** कुटिले मन्दे **जिह्मं** तगरपादपे' इति हैमः ॥ (३) ॥*॥ '**ऊर्मिः** (स्त्रीपुंसयोर्वीच्यां) प्रकाशे वेगभङ्गयोः । वस्त्रसंकोचरेखायां वेदनापीडयोरपि' (इति मेदिनी)। ऊर्मिरस्यास्ति । मतुप् (५।२।९४)। यवादिः (ग० ८।२।९) ॥ (४) ॥*॥ कुञ्चति स्म । 'कुञ्च कौटिल्ये' (भ्वा० प० से०)। क्तः ३।४।७२) । बाहुलकात् संज्ञापूर्वकत्वाद्वा नलोपाभावः ॥ (५) ॥*॥ नमति स्म । क्तः (३।४।७१)। '**नतं** तगरपाठ्यां स्यात् क्लीबं, कुटिलनम्रयोः । (त्रिषु)' (इति मेदिनी) ॥ (६) ॥*॥ आविध्यते स्म । 'व्यध ताडने' (दि० प० अ०) क्तः (३।२।१०२)। 'ग्रहिज्या–' (६।१।१६) इति संप्रसारणम् । '**आविद्धो** वाच्यलिङ्गः स्यात्कुटिले च पराहते' (इति मेदिनी) ॥ (७) ॥*॥ कुटिं कौटिल्यं लाति । 'आतोऽनुप–' (३।२।३) इति कः । कुटति वा । 'कुट कौटिल्ये' (तु० प० से०) 'मिथिलादयश्च' (उ० १।५७) इतीलच् । '**कुटिला** त्वापगायां स्त्री भुग्ने तु वाच्यलिङ्गकः' (इति मेदिनी) ॥ (८) ॥*॥ भुजति स्म 'भुजो कौटिल्ये' (तु० प० से०) 'गत्यर्था–' (३।४।७२) इति क्तः । 'ओदितश्च' (८।२।४५) इति नत्वम् ॥ (९) ॥*॥ वेल्लति स्म । 'वेल्ल चलने' (भ्वा० प० से०) 'गत्यर्था–' (३।४।७२) इति क्तः । '**वेल्लितं** गमने क्लीबं कुटिले विधुते त्रिषु' (इति मेदिनी) ॥ (१०) ॥*॥ वञ्चति । 'वञ्चु गतौ' भ्वा० प० से०) । 'स्फायितञ्चि–' (उ० २।१३) इति रक् । '**वक्रं** पुटभेदे **वक्रः** कुटिले क्रूरभौमयोः' इति हैमः ॥ (११) ॥*॥ एकादश '**वक्रस्य**' ॥

## ऋजावजिह्मप्रगुणौ

**ऋजेति** ॥ अर्जति । 'अर्ज अर्जने' (भ्वा० प० से०) 'अर्जिदृशि–' (उ० १।२७) इति साधुः । यत्तु—अपद्वादित्वात्कुः—इति मुकुटेनोक्तम् । तच्चिन्त्यम् । 'अपदुःसुषु स्थः'(उ० १।२५) इत्यस्य प्राप्त्यभावात् । गुणाभावाच्च ॥ (१) ॥*॥ भिन्नो जिह्मात् ॥ (२) ॥*॥ प्रकृष्टा गुणा यस्य ॥ (३) ॥*॥ त्रीणि '**अवक्रस्य**' ॥

## व्यस्ते त्वप्रगुणाकुलौ ।

**व्यस्ते इति** ॥ व्यसते स्म । 'असु क्षेपणे' (दि० प० से०)। क्तः (३।२।१०२)। '**व्यस्तं** तु व्याकुले व्यासे' इति विश्वः ॥ (१) ॥*॥ भिन्नः प्रगुणात् ॥ (२) ॥*॥ आकोलति । 'कुल संस्त्याने' (भ्वा० प० से०)। 'इगुपध–' (३।१।१३५) इति कः ॥ (३) ॥*॥ त्रीणि '**आकुलस्य**' ॥

## शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः ॥ ७२ ॥

**शेति** ॥ शश्वद्भवः । 'तत्र भवः' (४।३।५३) इत्यण् । अनित्योऽव्ययानां टिलोपः, बहिषष्टिलोपवचनात् (वा० ४।१।८५) ज्ञापकात् ॥*॥ अध्यात्मादित्वात् (वा० ४।३।६०) ठञपि । 'शाश्वतिकः' (२।४।९) इति निर्देशान्न कादेशः (७।३।५१) ॥ (१) ॥*॥ ध्रुवति । 'ध्रुव स्थैर्ये' (तु० प० से०) । 'इगुपध–' (३।१।१३५) इति कः । '**ध्रुवो** वटे । वसुयोगभिदोः शंभौ शङ्कावुत्तानपादजे । स्थिरे (नित्ये) निश्चिते च (**ध्रुवं** खेऽजस्रतर्कयोः । **ध्रुवा** मूर्वाशालपर्ण्योः स्रग्भेदे गीतभिद्यपि' इति हैमः ॥ (२) ॥*॥ नियतं भवः । 'त्यब् नेर्ध्रुवे' (वा० ४।२।१०४) । '**नित्यं** स्यात्संततेऽपि च । शाश्वते त्रिषु' (इति मेदिनी) ॥ (३) ॥*॥ सदा भवः । 'सायंचिरम्–' (४।३।२३) इति ट्युट्युलौ (ट्युतुटौ) ॥ (४) ॥*॥ सना भवः । '**सनातनोऽ**च्युते । पितृणामतिथौ रुद्रवेधसोः शाश्वते स्थिरे' इति हेमचन्द्रः ॥ (५) ॥*॥ पञ्च '**नित्यस्य**' ॥

## स्थास्नुः स्थिरतरः स्थेयान्

**स्थेति** ॥ स्थानशीलः । 'ग्लाजिस्थश्च ग्स्नुः (३।२।१३९) ॥ (१) ॥*॥ अतिशयेन स्थिरः । तरप् (५।३।५७) ॥ (२) ॥*॥ ईयसुनि (५।३।५७) 'प्रियस्थिर–' (६।४।१५७) इति साधुः ॥ (३) ॥*॥ त्रीणि '**अतिस्थिरस्य**' ॥

## एकरूपतया तु यः ।
## कालव्यापी स कूटस्थः

**एकेति** ॥ कूटवत् तिष्ठति 'सुपि स्थः' (३।२।४) इति कः । '**कूटो**ऽस्त्री निश्चले राशौ' (इति मेदिनी) ॥ (१) ॥*॥ एकम् '**कूटस्थस्य**' ॥

## स्थावरो जङ्गमेतरः ॥ ७३ ॥

**स्थेति** ॥ स्थानशीलः । 'स्थेशभास–' (३।२।१७५) इति वरच् ॥ (१) ॥*॥ जङ्गमादितरः ॥ (२) ॥*॥ द्वे '**अचरस्य**' ॥

## चरिष्णुजङ्गमचरं त्रसमिङ्गं चराचरम् ।

**चेति** ॥ चरणशीलम् । 'चर गतौ' (भ्वा० प० से०) । 'अलंकृञ्–' (३।२।१३६) इतीष्णुच् ॥ (१) ॥*॥ वक्रं गच्छति । गत्यर्थानाम् 'नित्यं कौटिल्ये–' (३।१।२३) इति यङ् । स्वाम्यादिस्तु भृशार्थ एव यङमिच्छति । अच् (३।१।१३४) ॥ (२) ॥*॥ चरति । अच् (३।१।१३४) '**चरो**ऽक्षद्यूतभेदे च भौमे चारे त्रसे चले' (इति मेदिनी) ॥ (३) ॥*॥ त्रसति । 'त्रसी उद्वेगे' (दि० प० से०) । अच् (३।१।१३५) ॥ (४) ॥*॥ इङ्गति । 'इगि गतौ' (भ्वा० प० से०) । अच्

(३।१।१३४) 'इङ्गः स्यादिङ्गितेऽद्भुते । ज्ञानजङ्गमयोश्चापि' इति हेमचन्द्रः ॥ (२) ॥*॥ 'चरिचलि–' (वा० ६।१।१२) इति द्वित्वादि । **'चराचरं** जङ्गमे स्यादिङ्गविष्टपयोरपि' (इति हैमः) ॥ (६) ॥*॥ षट् **'चरस्य'** ॥

**चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम् ॥ ७४ ॥**
**चञ्चलं तरलं चैव पारिप्लवपरिप्लवे ।**

**चेति** ॥ चलनशीलम् । 'चल गतौ' (भ्वा० प० से०) । 'चलनशब्दा–' (३।२।१४८) इति युच् । **'चलनं** भ्रमणे कम्पे कम्प्रे तु वाच्यलिङ्गकम् । चलनी वस्त्रघर्घर्यां वारीभेदेऽपि च क्वचित्)' इति विश्वमेदिन्यौ ॥ (१) ॥*॥ कम्पनशीलम् । 'कपि चलने' (भ्वा० आ० से०) । **'कम्पनं** न द्वयोः कम्पे कम्प्रे स्यादभिधेयवत्' (इति मेदिनी) ॥ (२) ॥*॥ 'नमिकम्पि–' (३।२।१६७) इति रः ॥ (३) ॥*॥ चलति । अच् (३।१।१३४) ॥ (४) ॥*॥ लोडति । 'लुड विलोडने' (भ्वा० प० से०) । क्वचिदपवादविषयेऽप्युत्सर्गप्रवृत्तेरच् (३।१।१३४) । डलयोरेकत्वम् ॥ (५) ॥*॥ 'चरिचलि–' (वा० ६।१।१२) इति द्वित्वादि ॥ (६) ॥*॥ चञ्चति । 'चञ्चु गतौ' (भ्वा० प० से०) । बाहुलकादलच् । **'चञ्चला** तु तडिल्लक्ष्म्योश्चञ्चलश्चपले (कामुके)ऽनिले' (इति मेदिनी) ॥ (७) ॥*॥ तरति । आलच् (बाहुलकात्) । **'तरलं** चञ्चले पिङ्गे भास्करेऽपि त्रिलिङ्गकम् । हारमध्यमणौ पुंसि यवागूसुरयोः स्त्रियाम्' इति विश्वमेदिन्यौ ॥ (८) ॥*॥ परिप्लवते । 'प्लुङ् गतौ' (भ्वा० आ० से०) । अच् (३।१।१३४) ॥ (९) ॥*॥ प्रज्ञाद्यण् (५।४।३८) । **'पारिप्लवश्चाकुले** स्याच्चञ्चले च' इति हैमः (मेदिनी) ॥ (१०) ॥*॥ दश **'चलस्य'** ॥

**अतिरिक्तः समधिकः**

**अतीति** ॥ अतिरिच्यते स्म । 'रिचिर् विरेचने' (रु० उ० अ०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ सम्यगधिकः ॥ (२) ॥*॥ द्वे **'अधिकभूतस्य'** ॥

**दृढसंधिस्तु संहतः ॥ ७५ ॥**

**द्रिति** ॥ दृढः संधिः संधानमस्य ॥ (१) ॥*॥ संहन्यते स्म क्तिः (३।२।१०२) । **'संहतं** संगते दृढे' इति हैमः ॥ (२) **'दृढसंधानस्य'** ॥

**कक्खटं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ।**
**जरठं मूर्तिमन्मूर्तम्**

**केति** ॥ कक्खति । 'कख हसने' (भ्वा० प० से०) । 'शकादिभ्योऽटन्' (उ० ४।११२) ॥*॥ **(खक्खटम्** इति) कवर्गद्वितीयादिः—इत्यन्ये ॥ (१) ॥*॥ कठति । 'कठ कृच्छ्रजीवने' (भ्वा० प० से०) 'बहुलमन्यत्रापि' (उ० ३।४९) इतीनच् । **'कठिनमपि** निष्ठुरे स्यात् स्तब्धेऽपि त्रिषु नपुंसकं स्थाल्याम् । **कठिनी** खटिकायामपि **कठिना** गुडशर्करायां च' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ कृन्तति । 'कृती छेदने' (तु० प० से०) । **क्रुतेश्छः क्रू च'** (उ० २।२१) इति रक् ।—कृणाति—इति स्वामिमुकुटोक्तविग्रहस्तु चिन्त्यः । **'क्रूरा** नृशंसघोरोष्णकठिनाः' इति हैमः ॥ (३) ॥*॥ 'कठिचकिभ्यामोरन्' (उ० १।६४) । **'कठोरौ** पूर्णकठिनौ' इति हैमः ॥ (४) ॥*॥ नितिष्ठति । मद्गुरादिः (उ० १।४१) ॥ (५) ॥*॥ दर्हति, दृंहति, स्म वा । 'दृह दृहि वृद्धौ' (भ्वा० प० से०) । 'दृढः स्थूलबलयोः' (७।२।२०) इति साधुः । **'दृढं** स्थूले नितान्ते च प्रगाढे बलवत्यपि' (इति मेदिनी) ॥ (६) ॥*॥ जीर्यति । 'जॄष् वयोहानौ' (दि० प० से०) । बाहुलकादठच् । **'जरठः** कर्कशे पाण्डौ कठिनेऽप्यभिधेयवत्' इति विश्वः ॥ (७) ॥*॥ मूर्तिः काठिन्यमस्यास्ति । मतुप् (५।२।९४) ॥ (८) ॥*॥ मूर्च्छति स्म । 'मूर्च्छा मोहसमुच्छ्राययोः' (भ्वा० प० से०) । अकर्मकत्वात् क्तः (३।४।७२) । ('आदितश्च' (७।२।१६) इति नेट्) । 'न ध्याख्या–' (८।२।५७) इति नत्वं न । **'मूर्तं** स्यात्रिषु मूर्छाले कठिने मूर्तिमत्यपि' इति विश्वः (मेदिनी) ॥ (९) ॥*॥ नव **'कठिनस्य'** ॥

**प्रवृद्धं प्रौढमेधितम् ॥ ७६ ॥**

**प्रेति** ॥ प्रवर्धते स्म 'वृधु वृद्धौ' (भ्वा० आ० से०) । 'गत्यर्था–' (३।४।७२) इति क्तः ॥ (१) ॥*॥ प्रोह्यते स्म । 'वह प्रापणे' (भ्वा० उ० अ०) । क्तः (३।२।१०२) । 'प्रादूहो–' (वा० ६।१।८९) इति वृद्धिः ॥ (२) ॥*॥ एधते स्म । 'एध वृद्धौ' (भ्वा० आ० से०) । 'गत्यर्था–' (३।४।७२) इति क्तः ॥ (३) ॥*॥ त्रीणि **'प्रवृद्धस्य'** ॥

**पुराणे प्रतनप्रत्नपुरातनचिरंतनाः ।**

**[१]पेति** ॥ पुरा भवम् । 'सायंचिरम्–' (४।३।२३) इति ट्युट्युलौ । 'पुराणप्रोक्तेषु–' (४।३।१०५) इति निर्देशात्तुण्न । 'अबाधकान्यपि निपातनानि' इति पक्षे भवति । **'पुराणं** प्रत्नशास्त्रयोः । **पुराणः** षोडशपणे' (इति हैमः) ॥ (१) ॥*॥ 'नश्च पुराणे प्रात्' (वा० ५।४।३०) इति [२]ट्युः ॥ (२) ॥*॥ त्नः (वा० ५।४।३०) च ॥ (३) ॥*॥ पुरा भवम् । ट्युः (४।३।२३) ॥ (४) ॥*॥ चिरे भवम् । 'सायंचिरम्–' (४।३।२३) इति ट्युः, निपातनान्मान्तत्वम् ॥ (५) ॥*॥ पञ्च **'पुरातनस्य'** ॥

---

१—पुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तोऽपि पृषोदरादित्वात् (६।३।१०९) नेति बोध्यम् । 'अबाधकान्यपि निपातनानि' इति तु भाष्यविरुद्धम्—इति परिभाषेन्दुशेखरे नागेशः ।
२—'नश्च पुराणे प्राद्वक्तव्यः । त्नप्–तनप्–खाश्च प्रत्यया वक्तव्याः' इति भाष्ये तनप्प्रत्ययस्यैव विधानेनात्र तद्विरोधात् ट्युविधानमसंगतम् । अत एव स्वामिमुकुटाभ्यामपि तनप्रत्यय एवाङ्गीकृतः ॥

**प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ॥ ७७ ॥ नूत्नश्च**

**प्रेति** ॥ प्रतिनवमग्रमस्य ॥ (१) ॥*॥ अभिनवते । 'णु स्तुतौ' ( अ० प० अ० ) । 'ऋदोरप्' (३।३।५७) ॥ (२) ॥*॥ 'अचो यत्' (३।१।९७) ॥ (३) ॥*॥ नव एव । 'नवस्य नूरादेशस्त्नप्तनप्खाश्च प्रत्ययाः' (वा० ५।४।३०) ॥ (४) ॥*॥ (५) ॥*॥ (६) ॥*॥ नूयते । अप् (३।३।५७) ॥ (७) ॥*॥ सप्त **'नूतनस्य'** ॥

**सुकुमारं तु कोमलं मृदुलं मृदु ।**

**स्विति** ॥ सुष्ठु कुमार्यते । 'कुमार क्रीडायाम्' चुरादन्तः । 'पुंसि-' (३।३।११८) इति घः । 'एरच्' (३।३।५६) वा । यद्वा सुकाम्यते । 'कमेः किदुच्चोपधायाः' (उ० ३।१३८) इत्यारन्, अत उत्वं च ॥ (१) ॥*॥ बाहुलकादलच्, अत उत्वं च । **'कोमलं** मृदुले जले' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ मृदुर्गुणोऽस्यास्ति । 'सिध्मादिभ्यश्च' (५।२।९७) इति लच् ॥ (३) ॥*॥ मृद्यते । 'मृद क्षोदे' ( क्र्या० प० से० ) । 'प्रथिमृदिभ्रस्जाम्-' (उ० १।२८) इति कुः संप्रसारणं च । मृगय्वादित्वात् (उ० १।३७) कुः—इति मुकुटो व्यर्थः । **'मृदु**स्तीक्ष्णे च कोमले' इति हैमः ॥ (४) ॥*॥ चत्वारि **'कोमलस्य'** ॥

**अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम् ॥ ७८ ॥**

**अन्वेति** ॥ अन्वञ्चति । 'अञ्चु गतौ' (भ्वा० प० से०) । क्विन् (३।२।५९) ॥ (१) ॥*॥ अनुगतमक्षमिन्द्रियम् ॥ (२) ॥*॥ अनु गच्छति । 'गम्लृ गतौ' (भ्वा० प० अ०) । 'अन्येभ्योपि-' (वा० ३।२।४८) इति डः ॥ (३) ॥*॥ पदस्य पश्चात् पश्चादर्थेऽव्ययीभावः (२।१।६) ॥ (४) ॥*॥ चत्वारि **'पश्चादित्यर्थे'** ॥

**प्रत्यक्षं स्यादैन्द्रियकम्**

**प्रेति** ॥ अक्षमिन्द्रियं प्रतिगतम् । 'अत्यादयः-' (वा० २।२।१८) इति समासः ॥ (१) ॥*॥ इन्द्रियेणानुभूयते । कुलालादित्वात् (४।३।११८) वुञ् ॥ (२) ॥*॥ द्वे **'इन्द्रियज्ञानस्य'** ॥

**अप्रत्यक्षमतीन्द्रियम् ।**

**अप्रेति** ॥ भिन्नं प्रत्यक्षात् ॥*॥ **'मनध्यक्षम्'** इति पाठः—इत्यन्ये । अक्षेष्वधि । अध्यक्षम् । विभक्त्यर्थेऽव्ययीभावः (२।१।६) । अतिक्रान्तमध्यक्षम् ॥ (१) ॥*॥ इन्द्रियमतिक्रान्तम् ॥ (२) ॥*॥ द्वे **'इन्द्रियेणाज्ञातस्य'** ॥

**एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि ॥ ७९ ॥**
**अप्येकसर्ग एकाग्र्योऽप्येकायनगतोऽपि च ।**

**एकेति** ॥ एकं तानयति । 'तनु श्रद्धोपकरणयोः' ( चु० उ० से० ) । 'कर्मण्यण्' (३।२।१) । एकस्तानो विस्तारोऽस्य, इति वा ॥ (१) ॥*॥ न अन्या वृत्तिरस्य ॥ (२) ॥*॥ एकम् एकस्मिन् वा अग्रमस्य ॥ (३) ॥*॥ एकमयनमस्य ॥ (४) ॥*॥ एक एकस्मिन् वा सर्गो निश्चयोऽस्य ॥ (५) ॥*॥ एकमग्र्यं ज्ञेयमस्य ॥*॥ प्रज्ञादणि (५।४।३८) **'ऐकाग्र्यः'** इति ॥ (६) ॥*॥ एकं च तदयनं च एकायनं गतः । एकस्मिन्नयने गतं ज्ञानमस्य, इति वा ॥ (७) ॥*॥ सप्त **'एकाग्रस्य'** ॥

**पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्याः**

**पुमिति** ॥ आ प्रथमं दीयते गृह्यते । 'उपसर्गे घोः किः' (३।३।९२) ॥ (१) ॥*॥ पूर्वति । 'पूर्व पूरणे' ( भ्वा० प० से०) । अच् (३।१।१३४) । **'पूर्वं** तु पूर्वजे । प्रागग्रं श्रुतमेदेषु' (इति हैमः) ॥ (२) ॥*॥ पुरो भवः । 'दक्षिणापश्चात्पुरसस्त्यक्' (उ० ४।२।९८) ॥ (३) ॥*॥ प्रथते । 'प्रथ प्रख्याने' ( भ्वा आ० से० ) । 'प्रथेरमच्' (उ० ५।६८) । **'प्रथमस्तु** भवेदादौ प्रधानेऽपि च वाच्यवत्' (इति मेदिनी) ॥ (४) ॥*॥ आदौ भवः । दिगादित्वात् (४।३।५३) यत् ॥ (५) ॥*॥ पञ्च **'आद्यस्य'** ॥

---

१—सिद्धान्तकौमुद्यां तु—'कुटिकशिकौतिभ्यः प्रत्ययस्य मुट्' । बाहुलकाद्गुणः कोमलम्—इत्युक्तम् । २—ऋकारवतो धातोरुपादाने 'संप्रसारणं च' इत्युक्तिर्भवदीया व्यर्था । तस्मात् रेफवतो भौवादिकस्योपन्यासो युक्तः । अत एव भवज्जनकेनापि प्रकृतसूत्रव्याख्यायां, 'त्रयाणां कुः संप्रसारणम्' इत्येवोक्तम् । ३—पीयूषाख्यव्याख्यायामपि अनुपदशब्दस्यैवाव्ययीभावत्वमुक्तम् । स्वामिना तु—'अन्वक्-अन्वक्ष-अनुपद-' इत्येतत्त्रयमव्ययं वर्तते । क्लीबत्वं तु (अन्वक्ष-अनुपद-इति) द्वयोः—इत्युक्तम् । युज्यते चान्वक्शब्दस्याव्ययत्वम् । 'अन्वग्ययौ मध्यमलोकपालः' इत्यत्र 'अन्वङ्' इति रूपापत्तेः । 'ताम्' इत्यत्र 'कर्तृकर्मणोः-' (२।३।६५) इति षष्ठ्यापत्तेश्च । अव्ययत्वे तु 'न लोकाव्यय-' (२।३।६९) इति षष्ठीनिषेधेन 'अव्ययात्-' (२।४।८२) इति सुपो लुका लुप्तत्वेन न काप्यनुपपत्तिः । ग्रामं यातीत्यादावानुभविकस्य याधात्वर्थव्यापारजन्यविलक्षणसंयोगाश्रयत्वस्य गव्यभावेन तामित्यस्य 'ययौ' इत्येतत्कर्मत्वाभावात् । 'ययौ' इत्येतत्कर्म तु 'निलयाय' इति प्रागुक्तमेव । नहि सभ्रीचोरेकतरक्रियाकर्मत्वमेकतरस्य भवति । 'पुत्रेण सहागतः पिता' इत्यर्थे 'पुत्रमागच्छति स पिता' इति प्रयोगाभावात् । गोराङ्गोश्च 'छायेव तां भूपतिरन्वगच्छत्' इत्यनेन सभ्र्यक्त्वप्रतिपादनात् । तत्र च 'तृतीयार्थे' इत्यनेनानोः कर्मप्रवचनीयसंज्ञेति दिक् ।

१—प्रथमम् आदीयते गृह्यते—इति मुकुटपाठ एव साधीयान् । भवल्लिखितपाठे 'आ' इत्यस्य 'प्रथमम्' इत्यर्थकत्वसंभवेऽपि 'दीयते' इत्यस्य 'गृह्यते' इत्यर्थकताया विना लक्षणं सर्वसुबोध्यत्वाभावात् ॥

अथास्त्रियाम् ॥ ८० ॥

**अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमम्।**

**अथेति** ॥ अमति। 'अम गतौ' ( भ्वा० प० से० )। बाहुलकात्तन्। अन्तिति वा। 'अति बन्धने' ( भ्वा० प० से० )। अच् (३।१।१३४)। '**अन्तः** स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। (अवयवेऽपि)' इति हेमचन्द्रः ॥ (१) ॥*॥ जघने भवम्। दिगादित्वात् (४।३।५४) यत्। शरीरावयवत्वात् (४।३।५५ वा०) '**जघन्यं** मोहने क्लीबं चरमे गर्हितेऽन्यवत्' (इति मेदिनी) ॥ (२) ॥*॥ चरति। 'चर गतौ' ( भ्वा० प० से० )। 'चरेश्च' (उ० ५६९) इत्यमच् ॥ (३) ॥*॥ अन्ते भवम्। दिगादित्वात् (४।३५४)। '**अन्त्यः** स्त्वन्तभवेऽधमे' इति हैमः ॥ (४) ॥*॥ पश्चाद्भवम्। 'दक्षिणा—' (४।२।९८) इति त्यक् ॥ (५) ॥*॥ 'अग्रादिपश्चाड्डिमच्' (वा० ४।३।२३) ॥ (६) ॥*॥ षट् '**अन्त्यस्य**' ॥

**मोघं निरर्थकम्**

**मविति** ॥ मुह्यन्त्यस्मिन्। 'मुह वैचित्त्ये' ( दि० प० अ० )। 'हलश्च' (३।३।१२१) इति घञ्। न्यङ्क्वादिः (७।३।५३)[1]। —मुहेरचि—इति मुकुटोक्तिश्चिन्त्या। '**मोघो** दिने निष्फले च **मोघा** स्यात्पटालातरौ' इति हैमः ॥ (१) ॥*॥ निर्गतोऽर्थोऽस्मात् ॥ (२) ॥*॥ द्वे '**निष्प्रयोजनस्य**' ॥

**स्पष्टं स्फुटं प्रव्यक्तमुल्बणम्** ॥ ८१ ॥

**स्पेति** ॥ स्पश्यते स्म। 'स्पश बाधनस्पर्शनयोः' ( भ्वा० उ० से० ) ण्यन्तः। क्तः (३।२।१०२)। 'वादान्त—' (७।२।२७) इति साधुः। मुकुटस्तु—स्पश्यते स्म—इति विगृहीतवान्। तत्रेट्प्रसङ्गो दुर्वारः ॥ (१) ॥*॥ स्फुटति। 'स्फुट विकसने' ( तु० प० से० )। 'इगुपध—' (३।१।१३५) इति कः। '**स्फुटो** व्यक्तप्रफुल्लयोः। सिते[2] व्याप्ते' इति हैमः ॥ (२) ॥*॥ प्रव्यज्यते स्म। 'अञ्जू व्यक्त्यादौ' (रु० प० से०)। क्तः (३।२।१०२)। प्रव्यच्यते स्म, इति वा। 'अञ्चु विशेषणे' ( चु० उ० से० ) क्तः (३।२।१०२) ॥ (३) ॥*॥ उद्वणति। 'वण शब्दे' ( भ्वा० प० से० )। अच् (३।१।१३४)। पृषोदरादिः (६।३।१०९) ॥ (४) ॥*॥ चत्वारि '**स्पष्टस्य**' ॥

**साधारणं तु सामान्यम्**

**सेति** ॥ सह आधारणेन। 'आग्नीध्रसाधारणादञ्—' (वा० ५।४।३६) इति स्वार्थेऽञ्। स्त्रियां ङीप् (४।१।१५) ॥ (१) ॥*॥ सह मानेन। समानस्य भावः। ष्यञ् (५।१।१२४)। चातुर्वर्ण्यादित्वाद् (वा० ५।१।१२४) वा स्वार्थे ष्यञ् ॥ (२) ॥*॥ द्वे '**अनेकसंबन्धिन एकस्य**' ॥

**एकाकी त्वेक एककः।**

**एकेति** ॥ एक एव 'एकादाकिनिच्चासहाये' (५।३।५२) ॥ (१) ॥*॥ चकारात्कन्लुकौ च। '**एकं** संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु' (इति मेदिनी) ॥ (२) ॥*॥ (३) ॥*॥ त्रीणि '**असजातीयासहायस्य**' ॥

**भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि** ॥ ८२ ॥

**भीति** ॥ भिन्नोऽर्थो येषां ते ॥ (१) ॥*॥ अन्य एव ॥ 'अल्पाच्चतरम्' (२।२।३४) इतिवत् स्वार्थे तरप्।—द्वयोर्निर्धारणे डतरच् (५।३।९२)—इति मुकुटस्त्वपाणिनीयः ॥*॥ ॥*॥ क्वचित् '**एकतरः**' इति पाठः। तत्र 'एकाच्च प्राचाम्' (५।३।९४) इति डतरच् ॥ (२) ॥*॥ इति। 'इण्भी—' (उ० ३।३३) इति कन् ॥ (३) ॥*॥ तनोति। 'तनोतेरनश्च वः' (उ० २।६३) चात् क्विप्—इत्येके। आगमानित्यत्वात्तुग् वैकल्पिकः। केचित्तु चिक्रमेवानुवर्तयन्ति। एवं मतभेदसिद्धौ त्वत्त्वशब्दौ सर्वादिषु पठितौ ॥ (४) ॥*॥ अनिति। 'अन प्रणने' ( अ० प० से० )। अघ्न्यादित्वात् (उ० ४।११२) यः। '**अन्योऽसदृशेतरयोः**' इति हैमः ॥ (५) ॥*॥ तरणम्। 'ऋदोरप्' (३।३।५७) नरः। एः कामस्य तरः। इना कामेन तरति इति वा। अच् (३।१।१३४)। '**इतरः** पामरेऽन्यस्मिन्' इति हेमचन्द्रः ॥ (६) ॥*॥ षट '**भिन्नार्थकाः**' ॥

**उच्चावचं नैकभेदम्**

**उच्चेति** ॥ उदक् चावाक् च। 'मयूरव्यंसकादयश्च' (२।१।७२) इति साधुः ॥ (१) ॥*॥ एको भेदोऽस्य। न एकभेदम्। 'सुप्सुपा' (२।१।४) इति समासः। न एको भेदोऽत्र, इति वा। उत्तरपदशब्दस्य समासचरमावयवे रूढत्वान्मध्यमपदे नलोपाभावः ॥ (२) ॥*॥ द्वे '**अनेकप्रकारस्य**' ॥

**उच्चण्डमविलम्बितम्।**

**विति** ॥ उच्चण्डनम् 'चडि कोपे' ( भ्वा० आ० से० )। घञ् (३।३।१८) ॥ (१) ॥*॥ विलम्ब्यते स्म। 'लबि अवस्रंसने' ( भ्वा० आ० से० )। क्तः (३।२।१०२)। न विलम्बितम् ॥*॥ स्वामी—**अवलम्बनम्**—इति पठति ॥ (२) ॥*॥ द्वे '**उत्तालस्य**' ॥

---

१—'कृतो बहुलम्' इति भाष्यसंमतन्यासेऽधिकरणेऽप्यचः सिद्धत्वेन 'न्यङ्क्वादीनां च' इत्यत्र विण्यतोरनुवृत्त्यभावस्य 'न्यङ्क्वादित्वात्कुत्वम्। भृगुः' इति वदतो भवज्जनकस्यापि संमतत्वेन कुत्वस्यापि सिद्धत्वेन च 'चिन्त्या' इत्युक्तिरेव चिन्त्या। २—सितव्याप्तयोर्यथा—'सुधांशुरोचिःस्फुटकुट्टिमेषु'—इत्यनेकार्थकैरवाकरकौमुदी।

१—'एकलः' इत्यपि पाठः—'शांभवी शक्तिरेकला'—इति पीयूषव्याख्या।

**अरुंतुदं तु मर्मस्पृक्**

**अर्विति** ॥ अरूंषि तुदति । 'तुद व्यथने' (तु० उ० अ०) । 'विध्वरुषोस्तुदः' (३।२।३५) इति खच् । 'अरुर्द्विषत्–' (६।३।६७) इति मुम् ॥ (१) ॥*॥ मर्म स्पृशति । 'स्पृश उपतापे' (तु० प० अ०) । 'स्पृशोऽनुदके–' (३।२।५८) इति क्विन् ॥ (२) ॥*॥ द्वे **'मर्मपीडकस्य'** ॥

**अबाधं तु निरर्गलम् ॥ ८३ ॥**

**अबेति** ॥ न बाधास्य ॥ (१) ॥*॥ निष्क्रान्तमर्गलायाः । 'निरादयः–' (वा० २।२।१८) इति समासः ॥ (२) ॥*॥ द्वे **'अबाधितस्य'** ॥

**प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च ।**

**प्रेति** ॥ प्रगतं सव्यात् । **'प्रसव्यं** वाच्यलिङ्गं प्रतिकूलानुकूलयोः' (इति मेदिनी) ॥ (१) ॥*॥ प्रतीपं कूलात् ॥ (२) ॥*॥ अपगतं सव्यात् । **'अपसव्यं** त्रिलिङ्गं तु दक्षिणप्रतिकूलयोः' इति विश्वः (मेदिनी) ॥ (३) ॥*॥ अपतिष्ठति । 'अपदुःसुषु स्थः' (उ० १।२५) इति कुः । सुषामादिः (८।३।९८) **'अपष्ठुः** पुंसि काले च वामे स्यादन्यलिङ्गकः' (इति मेदिनी) ॥ (४) ॥*॥ चत्वारि **'विरुद्धार्थस्य'** ॥

**वामं शरीरं सव्यं स्यात्**

**वेति** ॥ सूयते । 'षू प्रेरणे' (तु० प० से०) । 'अचो यत्' (३।१।९७) । **'सव्यं** वामे च दक्षिणे' इत्यजयः । **'सव्यं** तु दक्षिणे । वामे च प्रतिकूले च' इति विश्वः (हैमः) ॥ (१) ॥*॥ एकम् **'सव्यशरीरस्य'** ॥

**अपसव्यं तु दक्षिणे ॥ ८४ ॥**

**अपेति** ॥ अपक्रान्तं सव्यात् ॥ (१) ॥*॥ एकम् **'दक्षिणशरीरभागस्य'** ॥

**संकटं ना तु संबाधः**

**समिति** ॥ संकटति । 'कटे वर्षावरणयोः' (भ्वा० प० से०) । अच् (३।१।१३४) यद्वा संबाधार्थात् 'सम्' शब्दात् स्वार्थे 'संप्रोदश्च–' (५।२।९२) इति कटच् ॥ (१) ॥*॥ सम्यग् बाधन्तेऽत्र । 'बाधृ लोडने' (भ्वा० आ० से०) 'हलश्च' (३।३।१२१) इति घञ् । **'संबाधः** संकटे भगे' इति विश्वः ॥ (२) ॥*॥ द्वे **'संकीर्णस्य'** ॥

**कलिलं गहनं समे ।**

**केति** ॥ कलते, कल्यते, वा । 'कल शब्दसंख्यानयोः' (भ्वा० आ० से०) 'सलिकलि–' (उ० १।५४) इतीलच् ॥ (१) ॥*॥ गाह्यते । 'गाहू विलोडने' (भ्वा० आ० से०) । 'बहुलमन्यत्रापि' (उ० २।७८) इति युच् । पृषोदरादित्वात् (६।३।१०९) ह्रस्वः । गस्य गानस्य गतेर्वा हननम् । **'गहनं** वनदुःखयोः । गह्वरे कलिले चापि' इति विश्वहैमौ ॥ (२) ॥*॥ द्वे **'दुष्प्रवेशस्य'** ॥

**संकीर्णं संकुलाकीर्णे**

**समिति** ॥ संकीर्यते स्म । 'कॄ विक्षेपे' (तु० प० से०) क्तः (३।२।१०२) **'संकीर्णं** निचितेऽपि स्यादशुद्धे ऽभिधेयवत्' (इति मेदिनी) ॥ (१) ॥*॥ संकोलति । 'कुल संस्त्याने' (भ्वा० प० से०) । 'इगुपध–' (३।१।१३५) इति कः । यत्तु–शकिधातोरुलचि 'शङ्कुलम्' तालव्यादि इति तु स्वामी— इति मुकुटेनोक्तम् । तच्चिन्त्यम् । 'संकोलति' इति स्वामिना विगृहीतत्वात् ॥ (२) ॥*॥ आकीर्यते स्म । 'कॄ विक्षेपे' (तु० प० से०) । क्तः (३।२।१०२) ॥ (३) ॥*॥ त्रीणि **'नानाजातीयसंमिलितस्य'** । यथा संकीर्णवर्गः । केचित्तु एतान्पूर्वपर्यायानाहुः । 'संकीर्णमृषिपत्नीनाम्' इति प्रयोगात् ॥

**मुण्डितं परिवापितम् ॥ ८५ ॥**

**म्विति** ॥ मुण्ड्यते स्म । 'मुडि खण्डने' (भ्वा० आ० से०) । क्तः (३।२।१०) ॥ (१) ॥*॥ परिवाप्यते स्म । मुण्डनार्थोऽत्र वपिः । ण्यन्तः । क्तः (३।२।१०२) ॥*॥ द्वे **'कृतमुण्डनस्य'** ॥

**ग्रन्थिते[3] संदितं दृब्धम्**

**ग्रेति** ॥ ग्रथ्यते स्म । 'ग्रन्थ संदर्भे' (क्र्या० प० से०)। क्तः (३।२।१०२) ॥*॥ **'ग्रन्थितम्'** इति पाठान्तरम् । तत्र 'ग्रथि कौटिल्ये' (भ्वा० आ० से०) इति धातुः । **'ग्रन्थितं** गुम्फिते क्रान्ते हिंसिते च त्रिलिङ्गकम्' (इति मेदिनी) ॥ (१) ॥*॥ संदीयते स्म । 'दो अवखण्डने' (दि० प० अ०) । क्तः (३।२।१०२) । 'द्यतिस्यति–' (७।४।४०) इतीत्वम् ॥*॥ **'गुम्फितम्'** इति पाठे 'गुम्फ ग्रन्थे' (तु० प० से०) ण्यन्तः ॥ (२) ॥*॥ दृभ्यते स्म । 'दृभी ग्रन्थे' (तु० प० से०) । क्तः (३।२।१०२) ॥ (३) ॥*॥ त्रीणि **'गुम्फितस्य'** ॥

**विसृतं विस्तृतं ततम् ।**

**वीति** ॥ विसरति स्म । 'सृ गतौ' (भ्वा० प० अ०) । 'गत्यर्था–' (३।४।७२) इति क्तः ॥ (१) ॥*॥ विस्तीर्यते स्म । 'स्तृञ् आच्छादने' (क्र्या० उ० से०) । क्तः (३।२।

---

१—दक्षिणे यथा—'वामो बाहुर्मृडान्याः करकलितरणत्कंकणालीकरालो यस्मिन्सव्यो भुजगवलयवान्' इत्यनेकार्थकैरवाकरकौमुदी। २—भगे योनौ यथा—'करिहस्तेन संबाधे प्रविश्यान्तर्विलोडिते । उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते' इत्यनेकार्थकैरवाकरकौमुदी।



१—'सप्तैकार्थानि' इत्येके—इति पीयूषाख्यव्याख्या। २—'वपिः प्रकिरणे दृष्टश्छेदने चापि वर्तते । केशान्वपति' इति (इति (६।१।४५ सूत्रे) भाष्यात् । ३—'गुन्थितम्' इति क्वचित्—इति पीयूषव्याख्या ।—'मवितं मर्दितम्' इति पाठे 'मृद क्षोदे' (क्र्या०) —ऽनेकार्थत्वात् ग्रन्थने इति स्वामी—इति मुकुटः ॥

१०२) ॥ (२) ॥*॥ तन्यते स्म । 'तनु विस्तारे' (त० उ० से०)। क्तः (३।२।१०२)। '**ततं** व्याप्ते विस्तृते च त्रिलिङ्गकम् । क्लीबं वीणादिवाद्ये स्यात्पुंलिङ्गस्तु सदागतौ' (इति मेदिनी) ॥ (३) ॥*॥ त्रीणि '**लब्धप्रसरस्य**' ॥

**अन्तर्गतं विस्मृतं स्यात्**

**अन्तेति** ॥ अन्तर्गम्यते स्म, गच्छति स्म वा । 'गम्लृ गतौ' (भ्वा० प० अ०) । क्तः (३।२।१०२,४।७२)। '**अन्तर्गतं** विस्मृते स्यान्मध्यप्राप्ते च वाच्यवत्' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ विस्मर्यते स्म । 'स्मृ आध्याने' (भ्वा० प० अ०)। क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे '**विस्मृतस्य**' ॥

**प्राप्तप्रणिहिते समे ॥ ८६ ॥**

**प्रेति** ॥ प्राप्यते स्म । 'आप्लृ व्याप्तौ' (स्वा० प० अ०)। क्तः (३।२।१०२)। '**प्राप्तं** लब्धे समञ्जसे' (इति मेदिनी) ॥ (१) ॥*॥ प्रणिधीयते स्म । क्तः (३।२।१०२)। 'दधातेर्हिः' (७।४।४२) ॥ (२) ॥*॥ द्वे '**स्थापितस्य**' ॥

**वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते ।**

**वेल्लीति** ॥ वेल्ल्यते स्म । 'वेल्ल चलने' (भ्वा० प० से०)। क्तः (३।२।१०२) । '**वेल्लितं** गमने क्लीबं कुटिले विधुते त्रिषु' (इति मेदिनी) ॥ (१) ॥*॥ प्रेङ्ख्यते स्म । 'इखि गतौ' (भ्वा० प० से०)। क्तः (३।२।१०२) ॥ (२) ॥*॥ आधूयते स्म । 'धू विधूनने' (तु० प० से०) । 'धूञ् कम्पने' (क्र्या० प० से०) वा । क्तः (३।२।१०२) ॥ (३) ॥*॥ चल्यते स्म । 'चल कम्पने' (भ्वा० प० से०)। क्तः (३।२।१०२) ॥ (४) ॥*॥ आकम्प्यते स्म । 'कपि चलने' (भ्वा० आ० से०)। क्तः (३।२।१०२) ॥ (५) ॥*॥ धूयते स्म । 'धूञ् कम्पने' (स्वा० उ० अ०) । क्तः (३।२।१०२) । '**धुतम्** । त्यक्ते विधूते' इति हैमः (मेदिनी) ॥ (६) ॥*॥ षट् '**ईषत्कम्पितस्य**' ॥

**नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः ॥ ८७ ॥**

**न्विति** ॥ नुद्यते स्म । 'णुद प्रेरणे' (तु० उ० अ०)। क्तः (३।२।१०२)। 'नुदविद–' (८।२।५५) इति वा नत्वम् ॥ (१) ॥*॥ (२) ॥*॥ अस्यते स्म । 'असु क्षेपणे' (दि० प० से०)। क्तः (३।२।१०२)। '**अस्तः** क्षिप्ते पश्चिमाद्रौ' इति हैमः ॥ (३) ॥*॥ निष्ठीव्यते स्म । 'ष्ठिवु निरसने' (भ्वा० प० से०) क्तः (३।२।१०२) । 'यस–' (७।२।१५) इति नेट् । 'च्छ्वोः–' (६।४।१९) इत्यूट् ॥ (४) ॥*॥ आविध्यते स्म । 'व्यध ताडने' (दि० प० अ०) । क्तः (३।२।१०२) । '**आविद्धो** वाच्यलिङ्गः स्यात्कुटिले च पराहते' (इति मेदिनी) ॥ (५) ॥*॥ क्षिप्यते स्म । 'क्षिप प्रेरणे' (तु० उ० अ०) । क्तः (३।२।१०२) ॥ (६) ॥*॥ ईर्यते स्म । 'ईर गतौ कम्पने च' (अ० आ० से०)। क्तः (३।२।१०२) ॥ (७) ॥*॥ सप्त '**प्रेरितस्य**' ॥

**परिक्षिप्तं तु निवृतम्**

**पेति** ॥ परितः क्षिप्यते स्म । क्तः (३।२।१०२) ॥ (१) ॥*॥ निव्रियते स्म । 'वृञ् वरणे' (क्र्या० उ० से०) क्तिः (३।२।१०२) ॥ (२) ॥*॥ द्वे '**परिखादिना वेष्टितस्य**' ॥

**मूषितं मुषितार्थकम् ।**

**म्विति** ॥ मूष्यते स्म । 'मुष स्तेये' (भ्वा० प० से०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ मुष्यते स्म । 'मुष स्तेये' (क्र्या० प० से०)। क्तः (३।२।१३४) । '**मूषितं** हृतखण्डिते' इति विश्वः (मेदिनी) ॥ (२) ॥*॥ द्वे '**चोरितस्य**' ॥

**प्रवृद्धप्रसृते**

**प्रेति** ॥ प्रवर्धते स्म । 'वृधु वृद्धौ' (भ्वा० आ० से०) । 'गत्यर्थ–' (३।४।७२) इति क्तः ॥ (१) ॥*॥ प्रसरति स्म । 'सृ गतौ' (स्व० प० अ०)। क्तः (३।४।७२) ॥ (२) ॥*॥ द्वे '**प्रसृतस्य**' ॥

**न्यस्तनिसृष्टे**

**न्येति** ॥ न्यस्यते स्म । 'असु क्षेपणे' (दि० प० से०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ निसृज्यते स्म । 'सृज विसर्गे' (दि० आ० अ०)। क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे '**त्यक्तस्य**' ॥

**गुणिताहते ॥ ८८ ॥**

**ग्विति** ॥ गुण्यते स्म । 'गुण आमन्त्रणे' (चु० उ० से०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ आहन्यते स्म । 'हन्' (अ० प० अ०)। क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे '**गुणितस्य**' ॥

**निदिग्धोपचिते**

**नीति** ॥ निदिह्यते स्म । 'दिह उपचये' (अ० उ० अ०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ उपचीयते स्म । 'चिञ् चयने' (स्वा० उ० अ०) । क्तः (३।३।१०२)। 'भवेदुपचितं दिग्धे समृद्धे वाच्यलिङ्गकम्' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**पुष्टिं प्रापितस्य**' ॥

**गूढगुप्ते**

**ग्विति** ॥ गुह्यते स्म । 'गुहू संवरणे' (भ्वा० उ० से०)। क्तः (३।२।१०२)। '**गूढं** रहसि गुह्ये च न द्वयोः संवृते त्रिषु' (इति मेदिनी) ॥ (१) ॥*॥ गुप्यते स्म । 'गुप गोप-

१—वपेः क्तः । '**प्रोक्तम्**' इत्यत्र पाठ इति तु गोवर्धनः—इति मुकुटः ॥

१—'गुपू रक्षणे' (भ्वा० प० से०) इति तूचितम् । अन्यथा नेटो दुर्वारत्वात् ॥

नादौ' (भ्वा० आ० से०) । क्तः (३।२।१०२) ॥ 'गुप्तं गूढे त्राते' इति हैमः ॥ (२) ॥*॥ द्वे **'कृतगोपनस्य'** ॥

**गुण्डितरूषिते ।**

**ग्विति** ॥ गुण्ड्यते स्म । 'गुडि वेष्टने' (चु० प० से०) । क्तः (३।२।१०२) ॥*॥ **'गुण्ठितम्'** इति पाठे 'गुठि वेष्टने' (चु० प० से०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ रूष्यते स्म । रूषिर्वेष्टनार्थोऽपठितोऽपि भ्वादौ द्रष्टव्यो भ्वादेराकृतिगणत्वात् । क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे **'धूलिलिप्तस्य' 'गुण्डालित'** इति ख्यातस्य ॥

**द्रुतावदीर्णे**

**द्रुतेति** ॥ द्रूयते स्म । 'द्रु गतौ' (भ्वा० प० अ०) । क्तः (३।२।१०२) । **'द्रुतं** शीघ्रविलीनयोः' इति हैमः ॥ (१) ॥*॥ अवदीर्यते स्म । 'दॄ विदारणे' (क्र्या० प० से०) । क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे **'प्रापितद्रवीभावस्य'** ॥

**उद्गूर्णोद्यते**

**विति** ॥ उद्गूर्यते स्म । 'गुरी उद्यमने' (दि० आ० से०) । क्तः ( ३।२।१०२ ) ॥ (१) ॥*॥ उद्यम्यते स्म । 'यम उपरमे' (भ्वा० प० अ०) । क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे **'उत्तोलितस्य'** ॥

**काचितशिक्यिते** ॥ ८९ ॥

**केति** ॥ काचे धृतम् । 'प्रातिपदिकाद्धात्वर्थे' ( चु० ग० ) इति णिच् । क्तः ॥ (१) ॥*॥ एवं शिक्ये धृतम् ॥ (२) ॥*॥ द्वे **'शिक्ये स्थापितस्य'** ॥

**घ्राणघ्राते**

**घ्रेति** ॥ घ्रायते स्म । 'घ्रा गन्धोपादाने' ( भ्वा० प० अ०) । क्तः (३।२।१०२) । 'नुदविद–' (८।२।५५) इति वा नत्वम् । **'घ्राणं** तु घ्रातघोणयोः' इति हैमः ॥ (१) ॥*॥ (२) ॥*॥ द्वे **'आघ्रातस्य'** ॥

**दिग्धलिप्ते**

**दीति** ॥ दिह्यते स्म । 'दिह उपचये'—(अ० उ० अ०) । क्तः (३।२।१०२) । **'दिग्धो** विषाक्तबाणे स्यात्पुंसि लिप्तेऽन्यलिङ्गकः' (इति मेदिनी) ॥ (१) ॥*॥ लिप्यते स्म । 'लिप उपदेहे' (तु० उ० अ०) । क्तः (३।२।१०२) । **'लिप्तं** भुक्तविलिप्तयोः । विषाक्ते' इति हैमः ॥ (२) ॥*॥ द्वे **'लिप्त'** इति ख्यातस्य ॥

**समुदक्तोद्धृते**

**सेति** ॥ समुदच्यते स्म 'अञ्चु गतौ' (भ्वा० प० से०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ उद्ध्रियते स्म । 'हृञ् हरणे' (भ्वा० उ० से०) । 'धृञ् धारणे' (भ्वा० उ० अ०) वा । क्तः (३।२।१०२) 'उद्धृतं स्यात्रिषूत्क्षिप्ते परिभुक्तोज्झितेऽपि च' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'कूपादेर्निष्कासितजलादेः'** ॥

**समे ।**

**सेति** ॥ समे इति प्रवृद्धप्रसृते इत्यादिषु अन्वेति ॥

**वेष्टितं स्याद्वलयितं संवीतं रुद्धमावृतम्** ॥ ९० ॥

**वेष्टीति** ॥ वेष्ट्यते स्म । 'वेष्ट वेष्टने' (भ्वा० आ० से०) । क्तः (२।२।१०२) । **'वेष्टितं** रुद्धे लासके करणान्तरे' (इति मेदिनी) ॥ (१) ॥*॥ वलयं जातमस्य । तारकादिः (५।२।३६) । यद्वा वलयवत्कृतम् । 'तत्करोति' (वा० ३।१।२६) इति णिच् । क्तः (३।२।१०२) ॥ (२) ॥*॥ संवीयते स्म । 'व्येञ् संवरणे' (भ्वा० उ० अ०) । क्तः (३।२।१०२) ॥ (३) ॥*॥ रुध्यते स्म । 'रुधिर् आवरणे' ( रु० उ० अ०) । क्तः (३।२।१०२) ॥ (४) ॥*॥ आव्रियते स्म । 'वृञ् आवरणे' (क्र्या० उ० से०) । क्तः (३।२।१०२) ॥ (५) ॥*॥ पञ्च **'नद्यादिवेष्टितस्य'** ॥

**रुग्णं भुग्ने**

**र्विति** ॥ रुज्यते स्म । 'रुजो भङ्गे' (तु० प० अ०) । क्तः (३।२।१०२) । 'ओदितश्च' (८।२।४५) इति नत्वम् ॥ (१) ॥*॥ भुज्यते स्म । 'भुजो कौटिल्ये' (तु० प० अ०) । क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे **'वक्रस्य'** ॥

**अथ निशितक्ष्णुतशातानि तेजिते ।**

**अथेति** ॥ निशायते स्म । 'शो तनूकरणे' (दि० प० अ०) । क्तः (३।२।१०२) । 'शाच्छोः–' (७।४।४१) इति वेत्वम् ॥ (१) ॥*॥ (२) ॥*॥ क्ष्णूयते स्म । 'क्ष्णु तेजने' (अ० प० अ०) । क्तः (३।२।१०२) ॥ (३) ॥*॥ तेज्यते स्म । 'तिज निशाने' चुरादिः । क्तः (३।२।१०२) ॥ (४) ॥*॥ चत्वारि **'शाणादिना तीक्ष्णीकृतस्य'** ॥

**स्याद्विनाशोन्मुखं पक्वम्**

**स्यादिति** ॥ विनशनं विनाशः । भावे घञ् (३।३।१८) । उद्गतं मुखमारम्भोऽस्य विनाशे उन्मुखम् ॥ (१) ॥*॥ पच्यते स्म । 'डुपचष् पाके' (भ्वा० उ० अ०) । क्तः (३।२।१०२) । 'पचो वः' (८।२।५२) **'पक्वं** परिणते नाशाभिमुखे' इति हैमः ॥ (२) ॥*॥ द्वे **'विनाशोन्मुखस्य'** ॥

**ह्रीणह्रीतौ तु लज्जिते** ॥ ९१ ॥

**ह्रीति** ॥ अह्रैषीत् । 'ह्री लज्जायाम्' (जु० प० अ०) । क्तः (३।२।१०२) । 'नुदविद–' (८।१।५५) इति वा नत्वम् ॥ (१) ॥*॥ (२) ॥*॥ लज्जा जातास्य । तारकादिः (५।२।३६) ॥ (३) ॥*॥ त्रीणि **'संजातलज्जस्य'** ॥

**वृत्ते तु वृत्तवावृत्तौ**

**विति** ॥ व्रियते स्म । 'वृञ् वरणे' (क्र्या० उ० से०) क्तः (३।२।१०२) ॥ (२) ॥*॥ वृत्यते स्म । 'वृतु वर्तने' (भ्वा० आ० से०) । क्तः (३।२।१०२) । **'वृत्तं** वृत्तौ दृढे मृते । चरित्रे वर्तुले छन्दः स्वतीताधीतयोर्वृते' इति हैमचन्द्रः ॥

(२) ॥*॥ केचित्तु 'वावृतु वर्तने' (दि० आ० से०) इति पठन्ति तन्मते वावृत्यते स्म। क्तः (६।२।१०१) ॥ (३) ॥*॥ त्रीणि '**स्वयंवरादौ स्वीकृतस्य वरादेः**' ॥

**संयोजित उपाहितः।**

**समिति** ॥ संयोज्यते स्म। 'युजिर् योगे' (रु० उ० अ०)। ण्यन्तः। क्तः (३।२।१०२) ॥ (१) ॥*॥ उपाधीयते। क्तः (३।२।१०२)। 'दधातेर्हिः' (७।४।४२)। '**उपाहितो**ऽनलोत्पाते पुमानारोपिते त्रिषु' (इति मेदिनी) ॥ (२) ॥*॥ द्वे '**मेलितस्य**' ॥

**प्राप्यं गम्यं समासाद्यम्**

**प्रेति** ॥ प्राप्यते। 'आप्लृ व्याप्तौ' (स्वा० प० अ०)। ण्यत् (३।१।१२४) ॥ (१) ॥*॥ गम्यते। 'गम्लृ गतौ' (स्वा० प० अ०)। 'पोरदुपधात्' (३।१।९८) इति यत् ॥ (२) ॥*॥ समासद्यते। 'षद्लृ विशरणादौ' (तु० प० अ०)। ण्यत् (३।१।१२४) ॥ (३) ॥*॥ त्रीणि '**आप्तुं शक्यस्य**' ॥

**स्यन्नं रीणं स्नुतं स्नुते ॥ ९२ ॥**

**स्येति** ॥ स्यद्यते स्म। 'स्यन्दू प्रस्रवणे' (भ्वा० आ० से०)। क्तः (३।२।१०२)। 'रदाभ्याम्–' (८।२।४२) इति नत्वम् ॥ (१) ॥*॥ रीयते स्म। 'रीङ् प्रस्रवणे' (दि० आ० अ०)। क्तः (३।२।१०२)। 'स्वादय ओदितः' (दि० ग० सू०) इति नत्वम् (८।२।४५) ॥ (२) ॥*॥ स्रूयते स्म। 'स्रु गतौ' (भ्वा० प० अ०)। क्तः (३।२।१०२) ॥ (३) ॥*॥ स्नूयते स्म। 'ष्णु प्रस्रवणे' (अ० प० से०)। क्तः (३।२।१०२) ॥ (४) ॥*॥ चत्वारि '**प्रस्नुतस्य**' ॥

**संगूढः स्यात्संकलितः**

**समिति** ॥ संगुह्यते स्म। 'गुहू संवरणे' (भ्वा० उ० से०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ संकल्यते स्म। 'कल संख्याने' (भ्वा० आ० से०)। क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे '**अङ्कान्तरेणैकीकृतस्याङ्कादेः**' ॥

**अवगीतः ख्यातगर्हणः।**

**अवेति** ॥ अवगीयते स्म। 'गै शब्दे' (भ्वा० प० से०)। क्तः (३।२।१०२)। 'घुमास्था–' (६।४।६६) इतीत्वम्। '**अवगीतं** तु निर्वादे दृष्टगर्हितयोरपि' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ ख्याता गर्हणा यस्य ॥ (२) ॥*॥ द्वे '**प्रसिद्धनिन्द्यस्य**' ॥

**विविधः स्याद्बहुविधो नानारूपः पृथग्विधः ॥ ९३ ॥**

**वीति** ॥ विचित्रा विधा यस्य ॥ (१) ॥*॥ बह्वो विधा यस्य ॥ (२) ॥*॥ नाना रूपमस्य ॥ (३) ॥*॥ पृथग् विधा यस्य ॥ (४) ॥*॥ चत्वारि '**नानारूपस्य**' ॥

**अवरीणो धिक्कृतश्चापि**

**अवेति** ॥ अव रीयते स्म। 'रीङ् स्रवणे' (दि० आ० अ०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ धिगकारि। क्तः (३।२।१०२) ॥ (२) ॥*॥ पर्यायान्तरं दर्शयितुमुक्तस्यैव धिक्कृतस्यानुवादः। यद्वा निर्भर्त्सित उक्तः, अत्र तु निन्दितमात्रे ॥*॥ द्वे '**निन्दितमात्रस्य**' ॥

**अवध्वस्तोऽवचूर्णितः।**

**अवेति** ॥ अवध्वस्यते स्म। 'ध्वंसु गतौ च' (भ्वा० आ० से०)। क्तः (३।२।१०२)। '**अवध्वस्तं** परित्यक्ते निन्दितेऽप्यवचूर्णिते' इति विश्वः ॥*॥—'**अपध्वस्तः**' इत्यपि पाठः ॥ (१) ॥*॥ अवचूर्ण्यते स्म। 'सत्याप–' (३।१।२५) इति ण्यन्तात् क्तः (३।२।१०२)। यद्वा 'चूर्ण पेषे' चुरादिः ॥ (२) ॥*॥ द्वे '**क्षिप्तसुधादिचूर्णस्य**' ॥

**अनायासकृतं फाण्टम्**

**अनेति** ॥ (१) ॥*॥ फण्यते स्म। 'फण गतौ' (भ्वा० प० से०)। क्तः (३।२।१०२)। 'क्षुब्धस्वान्त–' (७।२।१८) इति साधुः ॥ (२) ॥*॥ द्वे '**अनायासेन कृतस्य क्वाथविशेषस्य**' ॥

**स्वनितं ध्वनितं समे ॥ ९४ ॥**

**स्वेति** ॥ स्वन्यते स्म 'स्वन शब्दे' (भ्वा० प० से०) क्तः (३।२।१०२) ॥ (१) ॥*॥ ध्वन्यते स्म। 'ध्वन शब्दे' (भ्वा० प० से०) क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे '**कृतशब्दस्य**' ॥

**बद्धे संदानितं मूतमुद्दितं संदितं सितम्।**

**वेति** ॥ बध्यते स्म। 'बन्ध बन्धने' (क्र्या० प० से०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ संदान्यते स्म 'दान खण्डने' (भ्वा० उ० से०)। क्तः (३।२।१०२) ॥ (२) ॥*॥ मूयते स्म। 'मूङ् बन्धने' (भ्वा० आ० से०)। क्तः (३।२।१०२)। ॥ (३) ॥*॥ उद्द्यते स्म। संद्यते स्म। 'दो अवखण्डने' (दि० प० अ०)। क्तः (३।२।१०२)। 'द्यतिस्यति–' (३।४।४०) इतीत्वम् ॥ (४) ॥*॥ (५) ॥*॥ सीयते स्म। 'षिञ् बन्धने' (स्वा० उ० अ०)। क्तः (३।२।१०२) ॥ (६) ॥*॥ षट् '**बद्धस्य**' ॥

---

१—'ततो वावृत्यमानासौ रामशालां न्यविक्षत' इति भट्टिः—इति स्वामिमुकुटौ।—इत्थमयुक्ता 'वृत्तत्यावृत्तौ' इति पेठुः—इति क्षीरस्वामी। २—'उपाहितां वक्षसि पीवरस्तनी' इति भारविः—इति मुकुटः।

१—'**मूर्णम्**' इति पाठे 'मुर्वे बन्धने' (भ्वा० प० से०)। क्तः (३।२।१०२)। 'राल्लोपः' (६।४।२१) इति वलोपः। 'हलि च' (८।२।७७) इति दीर्घः। निष्ठानत्वम् (८।२।४२)...इति मुकुटः। २—उद्दीयते। संदीयते इति युक्तम्। यकि परे 'ओतः श्यनि' (७।३।७१) इति लोपस्याप्राप्तेः।

**निष्पक्वं क्वथितम्**

**नीति** ॥ निश्चयेन पक्वम् ॥ (१) ॥*॥ क्वथ्यते स्म । 'क्वथे निष्पाके' (भ्वा० प० से०)। क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे **'साकल्येन पक्वस्य'** ॥

**पाके क्षीराज्यपयसां शृतम्** ॥ ९५ ॥

**पेति** ॥ श्रायते स्म । 'श्रा पाके' (अ० प० अ०)। क्तः (३।२।१०२)। 'शृतं पाके' (६।१।२७) इति साधुः ॥ (१) ॥*॥ एकम् **'क्षीरादिषु कृतपाकस्य'** ॥

**निर्वाणो मुनिवह्न्यादौ**

**नीति** ॥ निर्वाति स्म । 'वा गतिगन्धनयोः' (अ० प० अ०)। 'गत्यर्था-' (३।४।७२) इति क्तः । 'निर्वाणोऽवाते' (८।२।५०) इति साधुः । आदिना 'निर्वाणो हस्ती'। 'निमग्नः' इत्यर्थः । **'निर्वाणम**स्तंगमने निर्वृत्तौ गजमज्जने । संगमेऽप्यपवर्गे च' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ एकम् **'मुनिवह्न्यादौ प्रयुक्तस्य'** ॥

**निर्वातस्तु गतानिले ।**

**निर्वेति** ॥ गतश्चासावनिलश्च । तस्मिन् निवहने (?)। पृथक् पदं वा ॥ (१) ॥*॥ एकम् **'अनिले गते सति निर्वातस्य** ॥

**पक्वं परिणते**

**पेति** ॥ परिणमति स्म । 'णम प्रह्वत्वे' (भ्वा० प० अ०) अकर्मकत्वात् । क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे **'परिणामं प्राप्तस्य'** ॥

**गूनं हन्ने**

**ग्विति** ॥ गूयते स्म । 'गु पुरीषोत्सर्गे' (तु० प० अ०)। क्तः (३।२।१०२)। 'दुग्वोर्दीर्घश्च' (वा० ८।२।४४) इति नत्वम् ।-'ल्वादिभ्यश्च' (८।२।४४)—इति मुकुटोक्तिश्चिन्त्या । तौदादिकत्वेनास्य ल्वादित्वाभावात् ॥ (१) ॥*॥ हद्यते स्म । 'हद पुरीषोत्सर्गे' (भ्वा० आ० अ०)। क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे **'गुदनिष्काशितपुरीषस्य'** ॥

**मीढं तु मूत्रिते** ॥ ९६ ॥

**मीति** ॥ मिह्यते स्म । 'मिह सेचने' (भ्वा० प० अ०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ मूत्र्यते स्म । 'मूत्र प्रस्रावे' (चु० उ० से०)। क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे **'उपस्थनिष्काशितमूत्रस्य'** ॥

**पुष्टे तु पुषितम्**

**प्विति** ॥ पुष्यते स्म । 'पुष पुष्टौ' (दि० प० अ०) क्तः। (३।२।१०२) ॥ (१) ॥*॥ मौवादिकस्य त्विट् ॥ (२) ॥*॥ द्वे **'यस्य पोषणं कृतं तस्य'** ॥

**सोढे क्षान्तम्**

**सविति** ॥ सह्यते स्म । 'षह मर्षणे' (भ्वा० आ० से०)। क्तः (३।२।१०२)। 'सहिवहोरोदवर्णस्य' (६।३।११२) ॥ (१) ॥*॥ क्षम्यते स्म । 'क्षमूष् सहने' (दि० प० से०)। क्तः (३।२।१०२)। 'अनुनासिकस्य-' (६।४।१५) इति दीर्घः ॥ (२) ॥*॥ द्वे **'क्षमां प्रापितस्य'** ॥[१]

**उद्वान्तमुद्गते ।**

**उद्वेति** ॥ उद्वम्यते स्म । 'टुवम उद्गिरणे' (भ्वा० प० से०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ उद्गम्यते स्म । 'गम्लृ गतौ' (भ्वा० प० अ०)। क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे **'वमित्वा त्यक्तस्यान्नादेः'** ॥

**दान्तस्तु दमिते**

**देति** ॥ दम्यते स्म । 'दमु उपशमे' (दि० प० से०) णिजन्तः । क्तः (३।२।१०२)। 'वा दान्तशान्त-' (७।२।२७) इति साधुः । **'दान्तस्तु** दमितेऽपि स्यात्तपःक्लेशसहे त्रिषु' (इति मेदिनी)। यत्तु मुकुटेन-अणिजन्तस्य निपातनमुक्तम्-। तच्चिन्त्यम् । 'वा दान्त-' इत्यत्र 'णेः' इत्यनुवर्तनात् । अणिजन्तस्य 'यस्य विभाषा' (७।२।१५) इति नित्यनिषेधात् निपातं विनापि सिद्धत्वात् ॥ (१) ॥*॥ (२) ॥*॥ द्वे **'कृतं दमनं यस्य वृषभादेस्तस्य'** ॥

**शान्तः शमिते**

**शेति** ॥ शम्यते स्म । 'शमु उपशमे' (दि० प० से०) ण्यन्तः । क्तः (३।२।१०२) ।—शान्तो रोगः । विवृत्त इत्यर्थः—इति यत् केवलस्य निपातनं मुकुटेन स्वीकृतम् । तच्चिन्त्यम् । 'वा दान्त-' इत्यत्र 'णेः' इत्यनुवर्तनात् । **'शान्तो**ऽतिमुक्तरसयोः पुंसि त्रिषु शमान्विते । अव्ययं धारणे **शान्तम्'** (इति मेदिनी) ॥ (१) ॥*॥ (२) ॥*॥ द्वे **'शमनं प्रापितस्य'** ॥

**प्रार्थितेऽर्दितः** ॥ ९७ ॥

**प्रेति** ॥ प्रार्थ्यते स्म । 'अर्थ याच्ञायाम्' (चु०आ०से०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ अर्द्यते स्म । 'अर्द गतौ याचने च' (भ्वा० प० से०)। क्तः (३।२।१०२)। **'अर्दितं** याचितेऽपि स्याद्वातव्याधौ च हिंसिते' (इति मेदिनी) ॥ (२) ॥*॥ द्वे **'याचितस्य'** ॥

**ज्ञप्तस्तु ज्ञपिते**

**ज्ञेति** ॥ ज्ञप्यते स्म । मारणादौ ज्ञा मित् । ण्यन्तः । क्तः (३।२।१०२)। 'वा दान्त-' (७।२।२७) इति साधुः ॥ (१) ॥*॥ (२) ॥*॥ द्वे **'बोधं प्रापितस्य'** ॥

**छन्नश्छादिते**

**छेति** ॥ छाद्यते स्म । 'छद अपवारणे' (चु० उ० से०)।

---

१—'ओहाङः' क्ते 'उद्धानम्' इति 'ओ वै शोषणे' इत्यस्मात् क्ते 'उद्वानम्' इति वा क्वचित्पाठः—इति मुकुटरहस्यम् । २—पूर्वं वर्णितं च् । पक्षे इडभावः णिलोपः—इति पाठस्य मुकुटपुस्तकेषु स्पष्टमुपलभ्यमानत्वेनेदं मुकुटखण्डनं प्रतारणापरमेव ॥

क्तः (३।२।१०२) । 'वा दान्त–' (७।२।२७) इति साधुः । 'छन्नं रहश्छादितयोः' इति हैमः ॥ (१) ॥*॥ (२) ॥*॥ द्वे 'आच्छादितस्य' ॥

पूजितेऽञ्चितः ।

प्विति ॥ पूज्यते स्म 'पूज पूजायाम्' (चु० प० से०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ अञ्च्यते स्म । 'अञ्चु पूजायाम्' (भ्वा० प० से०) क्तः (३।२।१०२) । 'अञ्चेः पूजायाम्' (७।२।५३) इतीट् । 'नाञ्चेः पूजायाम्' (६।४।३०) इति नलोपाभवः ॥*॥ 'अर्चितः' इति पाठे 'अर्च पूजायाम्' (भ्वा० प० से०) । क्तः (३।२।१०२) ॥ (२) ॥*॥ द्वे 'पूजितस्य' ॥

पूर्णस्तु पूरिते

प्विति ॥ पूर्यते स्म । 'पूरी आप्यायने' (दि०आ०से०) । ण्यन्तः । क्तः (३।२।१०२) । 'वा दान्त–' (७।२।२७) इति साधुः । 'पूर्णः कृत्स्ने पूरिते च' इति हैमः ॥ (१) ॥*॥ (२) ॥*॥ द्वे 'पूर्णस्य' ॥

क्लिष्टः क्लिशिते

क्लीति ॥ क्लिश्यते स्म । 'क्लिश विबाधने' (क्र्या० प० से०) । क्तः (२।२।१२२) । 'क्लिशः क्त्वानिष्ठयोः' (७।२।५२) इति वेट् ॥ (२) ॥*॥ द्वे 'प्राप्तक्लेशस्य' ॥

अवसिते सितः ॥ ९८ ॥

अवेति ॥ अवस्यति स्म । अवसीयते स्म वा । 'षोऽन्तकर्मणि' (दि० प० से०) । क्तः (३।२।१२२) । 'द्यतिस्यति–' (७।४।४०) इतीत्वम् ॥ (१) ॥*॥ 'सितस्त्ववसिते बद्धे वर्णे सिता तु शर्करा' इति हैमः ॥ (२) ॥*॥ द्वे 'समाप्तस्य' ॥

प्रुष्टप्लुष्टोषिता दग्धे

प्विति ॥ प्रुष्यते स्म । प्लुष्यते स्म । 'प्रुषु प्लुषु दाहे' (भ्वा० प० से०) । क्तः (३।२।१०२) । 'यस्य–' (७।२।१५) इति नेट् ॥ (१) ॥*॥ (२) ॥*॥ उष्यते स्म । 'उष दाहे' (भ्वा० प० से०) । क्तः (३।२।१०२) 'उषितं व्युषिते प्लुष्टे' इति हैमः ॥ (३) ॥*॥ दह्यते स्म । 'दह भस्मीकरणे' (भ्वा० प० अ०) । क्तः (३।२।१०२) ॥ (४) ॥*॥ चत्वारि 'दग्धस्य' ॥

तष्टत्वष्टौ तनूकृते ।

तेति ॥ तक्ष्यते स्म । त्वक्ष्यते स्म । 'तक्षू त्वक्षू तनूकरणे' (भ्वा० प० से०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ (२) ॥*॥ अतनुस्तनुरकारि । 'कृञ्' (त० उ० से०) क्तः (३।२।१०२) ॥ (३) ॥*॥ त्रीणि 'तनूकृतस्य' ॥

वेधितच्छिद्रितौ विद्धे

वेधीति ॥ वेध्यते स्म । 'विध विधाने' (तु० प० से०) ण्यन्तः । क्तः (३।२।१०२) ॥ (१) ॥*॥ छिद्यते स्म । 'छिद्र वेधे' (चु० उ० से०) । अदन्तः । क्तः (३।२।१०२) ॥ (२) ॥*॥ विध्यते स्म । 'व्यध ताडने' (दि० प० अ०) ॥ क्तः (३।२।१०२) । 'विद्धं स्याद्वेधिते क्षिप्ते सदृशे बाधिते त्रिषु' इति विश्वः (मेदिनी) ॥ (३) ॥*॥ त्रीणि 'विद्धस्य' ॥

विन्नवित्तौ विचारिते ॥ ९९ ॥

वीति ॥ विद्यते स्म । 'विद विचारणे' (रु० आ० अ०) । क्तः (३।२।१०२) । 'नुदविद–' (८।२।५६) इति वा नत्वम् यत्तु—'विभाषा गमहन–' (७।२।६८) इतीडविकल्पात् 'यस्य विभाषा' (७।२।१५) इतीडभावः—इत्युक्तं मुकुटेन । तन्न । अस्यानिट्त्वात् । 'विन्नं विचारिते लब्धे' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ 'वित्तं क्लीबं धने, वाच्यलिङ्गं ख्याते विचारिते' इति (मेदिनी ॥ (२) ॥*॥ विचार्यते स्म । 'चर गतौ' (भ्वा० प० से०) ण्यन्तः । क्तः (३।२।१०२) ॥ (३) ॥*॥ त्रीणि 'प्राप्तविचारस्य' ॥

निष्प्रभे विगतारोकौ

नीति ॥ निष्क्रान्ता प्रभाऽस्मात् ॥ (१) ॥*॥ विगच्छति स्म । 'गम्लृ गतौ' (भ्वा० प० अ०) । 'गत्यर्था–' (३।४।७२) इति क्तः । 'विगतौ वीतनिष्प्रभौ' इति रुद्रः ॥ (२) ॥*॥ रोचनम् । रोकः 'रुच दीप्तौ' (भ्वा० आ० से०) घञ् (३।३।१८) । न रोकोऽस्य ॥ (३) ॥*॥ त्रीणि 'दीप्तिहीनस्य' ॥

विलीने विद्रुतद्रुतौ ।

वीति ॥ विलीयते स्म । 'लीङ् श्लेषणे' (दि०आ०अ०) । 'गत्यर्थ–' (३।४।७२) इति क्तः । 'स्वादय ओदितः' (दि० ग० सू०) इति नत्वम् (८।२।४५) ॥ (१) ॥*॥ विद्रवति स्म । 'द्रु गतौ (भ्वा० प० अ०) । 'गत्यर्था–' (३।४।७२) इति क्तः ॥ (२) ॥*॥ 'द्रुतं शीघ्रविलीनयोः' इति हैमः ॥ (३) ॥*॥ त्रीणि 'स्वतःप्राप्तद्रवीभावस्य' ॥

सिद्धे निर्वृत्तनिष्पन्नौ

सीति ॥ सिध्यति स्म । 'षिधु संराद्धौ' (दि० प० अ०) । 'गत्यर्था—' (३।४।७२) इति क्तः । 'सिद्धो व्यासादिके देवयोनौ निष्पन्नमुक्तयोः । नित्ये प्रसिद्धे' इति हैमः ॥ (१) ॥*॥ निर्वर्तते स्म । 'वृतु वर्तने' (भ्वा० आ० से०) । क्तः (३।४।७२) ॥ (२) ॥*॥ निष्पद्यते स्म । 'पद गतौ' (दि० आ० अ०) । क्तः (३।४।७२) ॥ (३) ॥*॥ त्रीणि 'सिद्धस्य' ॥

दारिते भिन्नभेदितौ ॥ १०० ॥

देति ॥ दार्यते स्म । 'दॄ विदारणे' (क्र्या० प० से०) ण्यन्तः । क्तः (३।२।१०२) ॥ (१) ॥*॥ भिद्यते स्म । 'भिदिर् विदारणे' (रु० उ० अ०) । क्तः (३।२।१०२) ॥ (२) ॥*॥ चुरादिण्यन्तः । क्तः (३।२।१०२) ॥ (३) ॥*॥ त्रीणि 'भेदं प्रापितस्य' ॥

**ऊतं स्यूतमुतं चेति त्रितयं तन्तुसंतते ।**

**वितीति** ॥ ऊयते स्म । 'ऊयी तन्तुसंताने' (भ्वा० आ० से०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ सीव्यते स्म । 'षिवु तन्तुसंताने' (दि० प० से०) । क्तः (३।२।१०२) 'च्छ्वोः–' (६।४।१९) इति । यत्तु–'षिवु तन्तुसंताने' दीर्घादिः । 'च्छ्वोः–' इत्यूठ् । वलि लोपः । स्यूतम्—इति मुकुटेनोक्तम् । तदसंबद्धम् । दीर्घादित्वस्य बाधात् । वस्योठि कृते वलिलोपासंभवाच्च । '**स्यूतिः** सीवनसंतत्योः स्त्रियां **स्यूतः** प्रसेवके । (ना त्रिषूते)' (इति मेदिनी) ॥ (२) ॥*॥ ऊयते स्म । 'वेञ् तन्तुसंताने' (भ्वा० प० अ०) । क्तः (३।२।१०२) ॥ (३) ॥*॥ संतन्यते स्म । क्तः (३।२।१०२) । तन्तुभिः संततम् 'कर्तृकरणे–' (२।१।३३) इति समासः ॥ (४) ॥*॥ चत्वारि '**तन्तुसंततेः**' ॥

**स्यादर्हिते नमस्यित-**
**नमसितमपचायितार्चितापचितम् ॥ १०१ ॥**

**स्येति** ॥ अर्ह्यते स्म । 'अर्ह पूजायाम्' (भ्वा० प० से०) क्तः (३।२।१०२) ॥ (१) ॥*॥ नमः कृतम् । 'नमोवरि–' (३।१।१९) इति क्यच् । क्तः (३।२।१०२) ॥ (२) ॥*॥ 'क्यस्य विभाषा' (६।४।५०) इति यलोपः ॥ (३) ॥*॥ अपचायते स्म । 'चायृ पूजानिशामनयोः' (भ्वा० उ० से०) । क्तः (३।२।१०२) ॥ (४) ॥*॥ अर्च्यते स्म । 'अर्च पूजायाम्' (भ्वा० प० से०) । क्तः (३।२।१०२) ॥ (५) ॥*॥ 'चायतेश्चिः' इति चिभावः ॥ (६) ॥*॥ षट् '**नमस्कृतस्य**' ॥

**वरिवसिते वरिवस्यितमुपासितं चोपचरितं च ।**

**वेति** ॥ वरिवः कृते । 'नमोवरिवः–' (३।१।१९) इति क्यच् । क्तः । (३।२।१०२) । 'क्यस्य विभाषा' (६।४।५०) ॥ (१) ॥*॥ (२) ॥*॥ उपास्यते स्म । 'आस उपवेशने' (अ० आ० से०) । क्तः (३।२।१०२) ॥ (३) ॥*॥ उपचर्यते स्म । चरेः क्तः (३।२।१०२) ॥ (४) ॥*॥ चत्वारि '**पूजितस्य**' ॥

**संतापितसंतप्तौ धूपितधूपायितौ च दूनश्च ॥ १०२ ॥**

**समिति** ॥ संताप्यते स्म । 'तप दाहे' चुरादिः । क्तः (३।२।१०२) ॥ (१) ॥*॥ तप्यते स्म । 'तप संतापे' (भ्वा० प० अ०) । क्तः (३।२।१०२) ॥ (२) ॥*॥ धूप्यते स्म । 'धूप संतापे' (भ्वा० प० से०) । 'आयादयः–' (३।१।३१) इति वा आयः । क्तः (३।२।१०२) ॥ (३) ॥*॥ (४) ॥*॥ दूयते स्म । 'टु दु उपतापे' (स्वा० प० अ०) । क्तः (३।२।१०२) । 'दुग्वोर्दीर्घश्च' (वा० ८।४।४४) इति नत्वम् ॥ (५) ॥*॥ एभ्योऽकर्मकेभ्यः कर्तरि क्तेऽप्येतान्येव रूपाणि ॥*॥ पञ्च '**संतापितस्य**' ॥

**हृष्टे मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः ।**

**हृिति** ॥ हृषति स्म । 'हृषु अलीके' (भ्वा० प० से०) । हृष्यति वा । 'हृष तुष्टौ' (दि० प० से०) । क्तः (३।४।७२) । 'हृषेर्लोमसु' (७।२।२९) इति विकल्पेट्कत्वात् 'यस्य विभाषा' (७।२।१५) इति नेट् । '**हृष्टो** रोमाञ्चितेऽपि च । जातहर्षे प्रतिहते[1] विस्मितेऽप्यभिधेयवत्' (इति मेदिनी) (१) ॥*॥ माद्यति स्म । 'मदी हर्षे' (दि० प० से०) । क्तः (३।४।७२) । 'न ध्याख्या–' (८।२।५७) इति नत्वं न ॥ (२) ॥*॥ तृप्यति स्म । 'तृप प्रीणने' (दि० प० अ०) । क्तः (३।४।७२) ॥ (३) ॥*॥ प्रह्लाद्यते[2] स्म । 'ह्लादी सुखे च' (भ्वा० आ० से०) । क्तः (३।४।७२) 'रदाभ्याम्–' (८।२।४२) इति नत्वम् । 'ह्लादो निष्ठायाम्' (६।४।९५) इति ह्रस्वः ॥ (४) ॥*॥ प्रमोदते स्म । 'मुद हर्षे' (भ्वा० आ० से०) । क्तः (३।४।७२) ॥ (५) ॥*॥ प्रीयते स्म । 'प्रीङ् प्रीणने' (दि० आ० अ०) । क्तः (३।४।७२) ॥ (६) ॥*॥ षट् '**प्रमुदितस्य**' ॥

**छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम् १०३**

**छीति** ॥ छिद्यते स्म । 'छिदिर् द्वैधीकरणे' (रु० उ० अ०)। क्तः (३।२।१०२) । '**छिन्नं** कृत्ते त्रिलिङ्गं स्याद्दुद्रुच्यामपि योषिति' (इति मेदिनी) ॥ (१) ॥*॥ छायते स्म । 'छो छेदने' (दि० प० अ०) । क्तः (३।२।१०२) । 'शाच्छोरन्यतरस्याम्' (७।४।४१) इतीत्वं वा ॥ (२) ॥*॥ (७) ॥*॥ लूयते स्म । 'लूञ् छेदने' (क्र्या० उ० से०) । क्तः (३।२।१०२) । 'ल्वादिभ्यः' (८।२।४४) इति नत्वम् ॥ (३) ॥*॥ कृत्यते स्म । 'कृती छेदने' (तु० प० से०) । क्तः (३।२।१०२) ॥ (४) ॥*॥ दायते स्म । 'दाप् लवने' (अ० प० अ०) । क्तः (३।२।१०२) ॥ (५) ॥*॥ दीयते स्म । 'दो अवखण्डने' (दि० प० अ०) । क्तः (३।२।१०२) । 'द्यतिस्यति–' (७।४।४०) इतीत्वम् ॥ (६) ॥*॥ वृश्च्यते स्म । 'ओव्रश्चू छेदने' (तु० प० से०) । क्तः (३।२।१०२) ॥ (८) ॥*॥ अष्टौ '**खण्डितस्य**' ॥

**स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम् ।**

**स्रेति** ॥ स्रस्यते स्म । ध्वस्यते स्म । भ्रश्यते स्म । 'स्रंसु ध्वंसु भ्रंशु अवस्रंसने' (भ्वा० आ० से०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ (२) ॥*॥ (३) ॥*॥ स्कद्यते स्म । 'स्कन्दिर् गत्यादौ' (भ्वा० प० से०) । क्तः (३।२।१०२) ॥ (४) ॥*॥ पद्यते

---

१—इदं तु न वर्तिकम् । नापि सूत्रम् । किंतु 'अपचितश्च' (७।२।३०) इति निपातनलभ्यमिदम् ॥

१—प्रतिहते यथा—'शीतहृष्टरदनैः सवेपथुः' इत्यनेकार्थकैरवाकरकौमुदी ॥ २—ह्लाद्यते इति विग्रहस्तु न कर्तरि भवति । भौवादिकत्वात् ॥ किंतु ह्लादते इत्युचितम् ॥

स। 'पद गतौ' (दि० आ० अ०)। क्तः (३।२।१०२) ॥ (५) ॥*॥ च्यूयते स्म। 'च्युङ् गतौ' (भ्वा० आ० अ०)। क्तः (३।२।१०२) ॥ (६) ॥*॥ गल्यते स्म। 'गल अदने' (चु० उ० से०)। क्तः (३।२।१०२) ॥ (७) ॥*॥ एभ्यो 'गत्यर्थाकर्मक–' (३।४।७२) इति कर्तरि क्ते एतान्येव रूपाणि ॥*॥ सप्त **'च्युतस्य'** ॥

**लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च १०४**

**लेति** ॥ लभ्यते स्म। 'डुलभष् प्राप्तौ' (भ्वा० आ० अ०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ प्राप्यते स्म। 'आपॢ व्याप्तौ' (स्वा० प० अ०)। क्तः (३।२।१०२) ॥ (२) ॥*॥ विद्यते स्म। 'विदॢ लाभे' (तु० उ० अ०)। क्तः (३।२। १०२) ॥ (३) ॥*॥ भाव्यते स्म। 'भू प्राप्तौ' (चु० आ० से०)। 'आधृषाद्वा' (चु० ग० सू०) इति णिजन्तः। क्तः (३।२।१०२) ॥ (४) ॥*॥ (६) ॥*॥ आसाद्यते स्म। 'षद्लृ विशरणादौ' (तु० प० अ०) ण्यन्तः। क्तः (३।२। १०२) ॥ (५) ॥*॥ षट् **'प्राप्तस्य'** ॥

**अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम्।**

**अन्वयिति** ॥ अन्वेष्यते स्म। 'एषृ गतौ' (भ्वा० आ० से०)। 'इषिः' (दि० प० से०) ण्यन्तो वा। क्तः (३।२। १०२) ॥ (१) ॥*॥ गवेष्यते स्म। 'गवेष मार्गणे' (चु० उ० से०)। क्तः (३।२।१०२) ॥ (२) ॥*॥ अन्विष्यते स्म। 'इषु इच्छायाम्' (तु० प० से०)। क्तः (३।२।१०२) ॥ (३) ॥*॥ मार्ग्यते स्म। 'मार्ग अन्वेषणे' (चु० उ० से०)। क्तः (३।२।१०२) ॥ (४) ॥*॥ मृग्यते स्म। 'मृग अन्वेषणे' (चु० आ० से०)। क्तः (३।२।१०२) ॥ (५) ॥*॥ पञ्च **'गवेषितस्य'** ॥

**आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च ॥ १०५ ॥**

**आर्द्रमिति** ॥ अर्द्यते स्म। 'अर्द गतौ' (भ्वा० प० से०)। 'अर्देर्दीर्घश्च' (उ० २।१८) इति रक्। **'आर्द्रा** नक्षत्रभेदे स्यात्त्रियां क्लिन्नेऽभिधेयवत्' (इति मेदिनी)।—उपसर्गाद्वालेर्डः। पूर्वपदस्य नैरुक्तो रेफः। आङ्पूर्वादर्देः (आ अर्द्यते इति विग्रहे) 'स्फायितञ्चि–' इति रकि वा आर्द्रम्—इति मुकुटस्तूक्तसूत्रादर्शनमूलकः ॥ (१) ॥*॥ सहार्द्रत्वेन ॥ (२) ॥*॥ क्लियति स्म। 'क्लिदू आर्द्रीभावे' (दि० प० से०)। अकर्मकत्वात्कर्तरि क्तः (३।४।७२) ॥ (३) ॥*॥ तिम्यति स्म। स्तिम्यति स्म। 'तिम ष्टीम आर्द्रीभावे' (दि० प० से०)। अकर्मकत्वात्कर्तरि क्तः (३।४।७२)। **'स्तिमितस्त**रले क्लिन्ने' इति रुद्रः ॥ (४) ॥*॥ (५) ॥*॥ समुनत्ति स्म। 'उन्दी

१—अस्यात्रोल्लेखोऽसंगतः। गत्यर्थकत्वासंभवात्। तस्मात् 'गल स्रवणे' (चु० आ० से०) इति लेखनीयम् ॥

क्लेदने' (रु० प० से०)। अकर्मकत्वात् क्तः (३।४।७२)। 'नुदविद–' (८।२।५५) इति वा नत्वम् ॥ (६) ॥*॥ (७) ॥*॥ सप्त **'क्लिन्नस्य'** ॥

**त्राणं त्रातं रक्षितमवितं गोपायितं च गुप्तं च।**

**त्रेति** ॥ त्रायते स्म। 'त्रैङ् पालने' (भ्वा० आ० अ०)। क्तः (३।२।१०२)। 'नुदविद–' (८।२।५५) इति वा नत्वम्। **'त्राणं** त्राते रक्षणे च त्रायमणौषधावपि' इति हैमः ॥ (१) ॥*॥ (२) ॥*॥ रक्ष्यते स्म। 'रक्ष पालने' (भ्वा० प० से०)। क्तः (३।२।१०२) ॥ (३) ॥*॥ अव्यते स्म। 'अव रक्षणादौ' (भ्वा० प० से०)। क्तः (३।२।१०२) ॥ (४) ॥*॥ गोपाय्यते स्म। 'गुपू रक्षणे' (भ्वा० प० से०)। 'आयादय आर्धधातुके वा' (३।१।३१)। क्तः (३।२।१०२) (५) ॥*॥ गुप्यते स्म। क्तः (३।२।१०२)। **'गुप्तं** गूढे त्राते' इति हैमः ॥ (६) ॥*॥ षट् **'रक्षितस्य'** ॥

**अवगणितमवमतावज्ञाते अवमानितं च परिभूते ॥ १०६ ॥**

**अवेति** ॥ अवगण्यते स्म। 'गण संख्याने' (चु० उ० से०)। क्तः (३।२।१०२) ॥ (१) ॥*॥ अवमन्यते स्म। 'मन ज्ञाने' (दि० आ० अ०)। क्तः (३।२।१०२) ॥ (२) ॥*॥ अवज्ञायते स्म। क्तः (३।२।१०२) ॥ (३) ॥*॥ अवमान्यते स्म। 'मान पूजायाम्' (भ्वा० आ० से०)। क्तः (३।२।१०३) ॥ (४) ॥*॥ परिभूयते स्म। क्तः (३।२।१०२) ॥ (५) ॥*॥ पञ्च **'अवमानितस्य'** ॥

**त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टम्।**

**त्येति** ॥ त्यज्यते स्म। 'त्यज हानौ' (भ्वा० प० अ०)। क्तः (३।०।१०२) ॥ (१) ॥*॥ हीयते स्म। 'ओहाक् त्यागे' (जु० प० अ०)। क्तः (३।२।१०२)। 'घुमास्था–' (६।४।६६) इतीत्वम् ॥ (२) ॥*॥ विधूयते स्म। 'धूञ् कम्पने' (स्वा० उ० अ०)। क्तः (३।२।१०२) ॥ (२) ॥*॥ समुज्झ्यते स्म। 'उज्झ उत्सर्गे' (तु० प० से०)। क्तः (३।२।१०२) ॥ (४) ॥*॥ धूयते स्म। 'धू विधूनने' (तु० प० से०)। क्तः (३। २।१०२)। **'धूतौ** कम्पितभर्त्सितौ' इति हेमचन्द्रः ॥ (५) ॥*॥ उत्सृज्यते स्म। 'सृज विसर्गे' (तु० प० अ०)। क्तः (३।२।१०२) ॥ (६) ॥*॥ षट् **'उत्सृष्टस्य'** ॥

**उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितम् ॥ १०७ ॥**

**उक्तमिति** ॥ उच्यते स्म। 'वच परिभाषणे' (अ० प० अ०)। ब्रुवो वचिः, वा। क्तः (३।२।१०२) ॥ (१) ॥*॥ भाष्यते स्म। 'भाष व्यक्तायां वाचि' (भ्वा० आ० से०)। क्तः (३।२।१०२) ॥ (२) ॥*॥ उद्यते स्म। 'वद व्यक्तायां वाचि' (भ्वा० प० से०)। क्तः (३।२।१०२) ॥ (३) ॥*॥

जल्प्यते स्म । 'जल्प व्यक्तायां वाचि' ( भ्वा० प० से० ) क्तः (३।२।१०२) ॥ (४) ॥*॥ आख्यायते स्म । 'ख्या प्रकथने' (अ० प० अ०) । चक्षिङ आदेशो वा । क्तः (३।२।१०२) ॥ (५) ॥*॥ अभिधीयते स्म । क्तः (३।२।१०) । 'दधातेर्हिः' (७।४।४२) ॥ (६) ॥*॥ लप्यते स्म, 'लप व्यक्तायां वाचि' ( भ्वा० प० से० ) क्तः (३।२।१०२) ॥ (७) ॥*॥ सप्त 'उक्तस्य' ॥

**बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगते ।**

**ब्विति** ॥ बुध्यते स्म । 'बुध अवगमने' ( दि० आ० अ० ) । क्तः (३।२।१०२) । '**बुद्धः** पण्डिते बोधिते जिने' इति हैमः ॥ (१) ॥*॥ भ्वादिः सेट्कः ॥ (२) ॥*॥ मन्यते स्म । 'मनु अवबोधने' ( त० आ० से ) । क्तः (३।२। १०२) । 'यस्य विभाषा' (७।२।१५) इति निषेधस्यानित्यत्वादिट् । तदनित्यत्वे च 'कृती छेदने' ( तु० प० से० ) इतीदित्करणं लिङ्गम् । अन्यथा 'सेऽसिचि-' (७।२।५७) इति वेट्कत्वात्सिद्धे किं तेन । यद्वा 'मन च' इति भ्वादिः 'मनिन्' —बोपदेवः पठति । स सेट् ॥ (३) ॥*॥ विद्यते स्म 'विद ज्ञाने' ( अ० प० से० ) । क्तः (३।२।१०२) ॥ (४) ॥*॥ प्रतिपद्यते स्म । 'पद गतौ' ( दि० आ० अ० ) । क्तः (३।२। १०२) ॥ (५) ॥*॥ अवसीयते स्म । 'षो अन्तकर्मणि' (दि० प० अ० ) । क्तः (३।२।१०२) । 'द्यतिस्यति-' (७।४।४०) इतीत्वम् ॥ (६) ॥*॥ अवगम्यते स्म । 'गम्लृ गतौ' ( भ्वा० प० अ० ) । क्तः (३।२।१०२) ॥ (७) ॥*॥ सप्त 'अवगतस्य' ॥

**ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् ॥१०८॥**
**संगीर्णविदितसंश्रुतसमाहितोपश्रुतोपगतम् ।**

**विति** ॥ ऊरी क्रियते स्म । क्तः (३।२।१०२) ॥ (१) ॥*॥ उररी क्रियते स्म । क्तः (३।२।१०२) ॥ (२) ॥*॥ अनङ्गमङ्गमकारि । क्तः (३।२।१०२) ॥ (३) ॥*॥ आश्रूयते स्म । 'श्रु श्रवणे' (भ्वा० प० अ०) । क्तः (३।२।१०२) ॥ (४) ॥*॥ प्रतिज्ञायते स्म । क्तः (३।२।१०२) ॥ (५) ॥*॥ संगीर्यते स्म । 'गॄ निगरणे' ( तु० प० से० ) क्तः (३।२। १०२) ॥ (६) ॥*॥ विद्यते स्म । 'विद ज्ञाने' ( अ० प० से० ) क्तः (३।२।१०२) । ( '**विदितं** बुधिताश्रुतयोः' इति मेदिनी) ॥ (७) ॥*॥ संश्रूयते स्म । क्तः (३।२।१०२) ॥ (८) ॥*॥ समाधीयते स्म । क्तः (३।२।१०२) 'दधातेर्हिः' (७।४।४२) ॥ (९) ॥*॥ उपश्रूयते स्म (३।२।१०२) ॥ (१०) ॥*॥ उपगम्यते स्म । क्तः (३।२।१०२) ॥ (११) ॥*॥ एकादश '**अङ्गीकृतस्य**' ॥

**ईलितशस्तपणायितपनायितप्रणुतपणितपनितानि ॥ १०९ ॥**

**अपि गीर्णवर्णिताभिष्टुतेडितानि स्तुतार्थानि ।**

**ईलीति** ॥ ईड्यते स्म । 'ईड स्तुतौ' (अ० आ० से०) । क्तः (३।२।१०२) । डलयोरैक्याद्वा लः ॥ (१) ॥*॥ (११) ॥*॥ शस्यते स्म 'शंसु स्तुतौ' ( भ्वा० प० से० ) । क्तः (३।२।१०२) '**शस्तं** क्षेमे प्रशस्ते च' इति हैमः ॥ (२) ॥*॥ पणाय्यते स्म । 'पण व्यवहारे स्तुतौ च' ( भ्वा० आ० से० ) । आयो वा (३।१।३१) । क्तः (२।३।१०२) ॥ (३) ॥*॥ (६) ॥*॥ पनाय्यते स्म । 'पन च' ( भ्वा० आ० से० ) आयो वा (३।१।३१) । क्तः (३।२।१०२) ॥ (४) ॥*॥ (७) ॥*॥ प्रणूयत स्म । 'णु स्तुतौ' (अ० प० से०) । क्तः (३।२।१०२) ॥ (५) ॥*॥ गीर्यते स्म । 'गॄ शब्दे' ( क्र्या० प० से० ) क्तः (३।२।१०२) ॥ (८) ॥*॥ वर्ण्यते स्म । 'वर्ण वर्णक्रियाविस्तारगुणवचनेषु' ( चु० उ० से० ) क्तः (३।२।१०२) ॥ (९) ॥*॥ अभिष्टूयते स्म । 'ष्टुञ् स्तुतौ' ( अ० उ० अ० ) । क्तः (३।२।१०२) ॥ (१०) ॥*॥ स्तुतमर्थो येषां तानि ॥ (१२) ॥*॥ द्वादश '**स्तुतार्थानि** ॥

**भक्षितचर्वितलिप्तप्रत्यवसितगिलितखादितप्सातम् ॥११०॥**

**अभ्यवहृतान्नजग्धग्रस्तग्लस्ताशितं भुक्ते ।**

**भेति** ॥ भक्ष्यते स्म । 'भक्ष अदने' (चु० प० से०) । क्तः (३।२।१०२) ॥ (१) ॥*॥ चर्व्यते स्म । 'चर्व अदने' (भ्वा० प० से०) । क्तः (३।२।१०२) ॥ (२) ॥*॥ लिप्यते स्म । 'लिप उपदेहे' (तु० उ० से०) क्तः (३।२।१०२) ॥*॥ क्वचित्तु '**लीढम्**' इति पाठः । तत्र 'लिह आस्वादने' ( अ० उ० अ०) धातुः ॥ (३) ॥*॥ प्रत्यवसीयते स्म । 'षो अन्तकर्मणि' ( दि० प० अ० ) । क्तः (३।२।१०२) ॥ (४) ॥*॥ —गीर्यते स्म । 'गॄ निगरणे' ( तु० प० से० ) क्तः (३।२। १०२) । 'अचि विभाषा' (८।२।२१) इति वा लत्वम्—इति स्वामी । तन्न 'श्र्युकः किति' (७।२।११) इतीण्निषेधप्रसङ्गात् । गरणम् । गिलिः । 'इकृष्यादिभ्यः' (वा० ३।३।१०८) । 'अचि-' (८।२।२१) इति वा लत्वम् । गिलिर्जातास्य । तारकादिः (५।२।३६) ॥ (५) ॥*॥ खाद्यते स्म । 'खादृ भक्षणे' (भ्वा० प० से०) । क्तः (३।२।१०२) ॥ (६) ॥*॥ प्सायते स्म 'प्सा भक्षणे' ( अ० प० अ० ) ॥ (७) ॥*॥ अभ्यवह्रियते स्म । क्तः (३।२।१०२) ॥ (८) ॥*॥ अद्यते स्म । क्तः (३।२।१०२) 'अदोऽनन्ने' (३।२।६८) इति ज्ञापकाज्जग्धिर्वा ॥ (९) ॥*॥ (१०) ॥*॥ ग्रस्यते स्म । ग्लस्यते स्म । 'ग्रसु ग्लसु अदने' ( भ्वा० आ० से० ) । क्तः (३।२।१०२) ॥ (११) ॥*॥ (१२) ॥*॥ अश्यते स्म । 'अश भोजने' (क्र्या० प० से०) । क्तः (३।२।१०२) ॥ (१३) ॥*॥ भुज्यते स्म । 'भुज पालनाभ्यवहारयोः' (रु० प० अ०) क्तः (३।२। १०२) ॥ (१४) ॥*॥ चतुर्दश '**खादितस्य**' ॥

**क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः ॥ १११ ॥**
**क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुप्रकर्षार्थाः ।**

**क्षेपीति** ॥ अतिशयेन क्षिप्रः । इष्ठन् (५।३।५५) ।

'स्थूलदूर-' (६।४।१५६) इति साधुः ॥ (१) ॥*॥ अतिशयेन क्षुद्रः। पूर्ववत् (५।३।५५) (६।४।१५६) ॥ (१) ॥*॥ अतिशयेन प्रियः। 'प्रियस्थिर-' (६।४।१५७) इति साधुः ॥ (१) ॥*॥ अतिशयेन उरुः। पूर्ववत् (६।४।१५७) ॥ (१) ॥*॥ अतिशयेन स्थूलः। 'स्थूलदूर-' (६।४।१५६) इति साधुः ॥ (१) ॥*॥ अतिशयेन बहुलः। 'प्रियस्थिर-' (६।४।१५७) इति साधुः ॥ (१) ॥*॥ 'पीवर' इति पाठस्त्वयुक्तः। छन्दोभङ्गात्। 'पीव' इति पाठे नान्तो युक्तः ॥*॥ क्षेपिष्ठादीनां क्षिप्रादिभिर्यथासंख्यं ज्ञेयम् ॥*॥ एकैकम् **'क्षिप्रादीनाम्'** ॥

**साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः ॥११२॥**
**बाढव्यायतबहुगुरुवामनवृन्दारकातिशये।**

**सेति** ॥ अतिशयेन बाढः इष्ठन् (५।३।५५)। 'अन्तिकबाढयोर्नेदसाधौ' (५।३।६३) ॥ (१) ॥*॥ अतिशयेन दीर्घः। 'प्रियस्थिर-' (६।४।१५७) इति साधुः ॥ (१) ॥*॥ अतिशयेन स्थिरः। पूर्ववत् (६।४।१५७) ॥ (१) ॥*॥ अतिशयेन गुरुः। पूर्ववत् (६।४।१५७) ॥ (१) ॥*॥ अतिशयेन ह्रस्वः। 'स्थूल-' (६।४।१५६) इति साधुः ॥ (१) ॥*॥ अतिशयेन वृन्दारकः। 'प्रियस्थिर-' (६।४।१५७) इति साधुः ॥ (१) ॥*॥ साधिष्ठादीनां बाढादिभिर्यथासंख्यं बोध्यम् ॥*॥ एकैकम् **'बाढादीनाम्'** ॥

**॥ इति विशेष्यनिघ्नवर्गविवरणम् ॥**

---

**प्रकृतिप्रत्ययाद्यर्थाद्यैः संकीर्णे लिङ्गमुन्नयेत्।**

**प्रेति** ॥ संकीर्णार्थैः संकीर्णलिङ्गैश्चारब्धत्वात्संकीर्णे वर्गे प्रकृत्यर्थादिभिर्लिङ्गमूहेत। यथा 'अपरस्परः'। अयं हि लिङ्गविशेषाभिधायिप्रत्ययस्याविधानात्प्रकृतिः। अस्य च 'परवल्लिङ्गम्-' (२।४।२६) इत्यतिदेशात्परशब्दस्यैव लिङ्गं भवति। परशब्दस्य च सर्वनामत्वात्त्रिलिङ्गत्वम्। न च 'द्वन्द्वे च' (१।१।३१) इति निषेधः। तस्य समुदायविषयत्वेनावयवविषयत्वाभावात्। यत्तु—अयं हि विभक्तिप्रकृतित्वात्प्रकृतिः—इति मुकुटेनोक्तम्। तन्न। एवं सति सर्वत्र प्रकृत्यर्थेनैव लिङ्गनिर्णये प्रत्ययार्थेन लिङ्गनिर्णयाभिधानस्य वैयर्थ्यप्रसङ्गात्। प्रत्ययार्थेन यथा—शान्तिः। स्त्रियां क्तिनो विधानात्। विधूननम्। नपुंसके ल्युटो विहितत्वात्। आद्यशब्देन रूपभेदादिग्रहः। रूपभेदेन कर्मादेः। क्लीबत्वादि। साहचर्येण डिम्बादेः पुंस्त्वादि। यद्वा भिन्नजातीयेन लिङ्गेन संसर्गे सति अत्र वर्गे वर्गान्तरे च प्रकृत्यर्थाद्यैर्लिङ्गं ज्ञेयम्। लिङ्गसंग्रहे वक्ष्यमाणमपि लिङ्गमुन्नेयत्वेनेहोक्तम् ॥

**कर्म क्रिया**

**केति** ॥ क्रियते। कृञो भावे कर्मणि च मनिन् (उ० ४।१४५)। **'कर्म** व्याप्ये क्रियायां च पुंनपुंसकयोर्मतम्' इति रुद्रः ॥ (१) ॥*॥ 'श च' (३।३।१००)। 'रिङ् शयग्लिङ्क्षु' (७।४।२८)। 'अचि श्नु-' (६।४।७७) इतीयङ् ॥ (२) ॥*॥ द्वे **'क्रियायाः'** ॥

**तत्सातत्ये गम्ये स्युरपरस्पराः ॥१॥**

**तेति** ॥ तत्सातत्ये क्रियायाः क्रियावतां च नैरन्तर्ये ॥*॥ 'अपरे च परे च' इति द्वन्द्वः। 'अपरस्पराः क्रियासातत्ये' (६।१।१४४) इति सुण्निपात्यते। क्रियासातत्ये 'अपरस्परं गच्छन्ति'। 'निर्दिष्टं कर्मसातत्ये सुधीभिर**परस्परम्'** इति भागुरिः। क्रियावतां सातत्ये तु लिङ्गत्रयम्। 'अपरस्पराः सार्थाः स्त्रियश्चागच्छन्ति'। 'अपरस्पराणि कुलानि' ॥ (१) ॥*॥ एकं **'नैरन्तर्येण क्रियायाः क्रियावतश्च'** ॥

**साकल्यासङ्गवचने पारायणतुरायणे।**

**सेति** ॥ साकल्यं च आसङ्गश्च। तौ वक्तः वचेः कर्तरि ल्युट् (३।३।११३) ॥*॥ पारस्य अयनम्। 'पूर्वपदात्-' (८।४।३) इति णत्वम्।—क्लीबलिङ्गमेव—इत्येके ॥*॥ 'परायणम्' इति वा पाठः। परमयनम्। 'आश्रये तत्पराभीष्टे **परायणपदं** विदुः' इति शाश्वतः ॥ (१) ॥*॥ तोतोर्ति। 'तुर त्वरणे' (जु० प० से०)। 'इगुपध-' (३।१।१३५) इति कः। तुरस्यायनम्। यत्तु—त्वरणम्। तुरणं वा। तूः तुरा आसमन्तादयनम्—इति स्वामिमुकुटौवाहतुः। तन्न। अन्तर्वर्तिविभक्त्या पदान्तत्वेन 'र्वोरुपधायाः-' (८।२।७६) इति दीर्घप्रसङ्गात् ॥ (१) ॥*॥ एकैकम् **'साकल्यासङ्गवचनयोः'** ॥

**यदृच्छा स्वैरिता**

**येति** ॥ ऋच्छनम्। ऋच्छा। 'ऋच्छ गत्यादौ' (तु० प० से०)। 'गुरोश्च हलः' (३।३।१०४) इत्यप्रत्ययः। या ऋच्छा। 'विशेषणम्-' (२।१।५७) इति समासः ॥ (१) ॥*॥ स्वेनेरितुं शीलमस्य। 'सुप्यजातौ-' (३।२।७८) इति णिनिः। स्वैरिणो भावः। 'तस्य भावः-' (५।१।११९) इति तल् ॥ (२) ॥*॥ द्वे **'स्वातन्त्र्यस्य'** ॥

**हेतुशून्या त्वास्था विलक्षणम् ॥ २ ॥**

**हयिति** ॥ हेतुना कारणेन शून्या आस्था स्थितिः ॥*॥ विगतं लक्षणमालोचनं यत्र। **'विलक्षणं** मतं स्थानं यद्भवेन्निष्प्रयोजनम्' इति भागुरिः ॥ (१) ॥*॥ एकम् **'हेतुशून्यास्थायाः'** ॥

---

१—'रत्नपारायणं नाम लङ्केयं मम मैथिलि' इति भट्टिः—इति मुकुटः। २—यथाक्रमं साकल्यवचनं पारायणम्। 'आसङ्गवचनं परायणम्' इति मुकुटग्रन्थतः 'तुरायण' शब्दस्य तत्रोल्लेखाभावध्वननेन तन्नामलेखनमसंगतमेव। अत एव पीयूषव्याख्यायामपि—क्वचित्परायणस्थाने तुरायणम् इतीच्छन्ति। अजहल्लिङ्गे। 'अथ मोहपरायणा सती' इति दर्शनात्त्रिषु, इति कश्चित्—इत्युक्तम् ॥

**शमथस्तु शमः शान्तिः**

**शेति** ॥ शमनम् । 'शमु उपशमे' (दि० प० से०) । 'शमादिभ्योऽथच्' ॥ (१) ॥*॥ 'भावे' (३।३।१८) इति घञ् । 'नोदात्तोपदेश–' (७।४।३३) इति वृद्ध्यभावः ॥ (२) ॥*॥ 'स्त्रियां क्तिन्' (३।३।९४) । 'अनुनासिकस्य' (६।४।११५) इति दीर्घः ॥ (३) ॥*॥ त्रीणि **'कामक्रोधाद्यभावस्य'** ॥

**दान्तिस्तु दमथो दमः ।**

**देति** ॥ दमनम् । 'दमु उपशमे' (दि० प० से०) । (पूर्ववत्प्रक्रिया) ॥ त्रीणि **'तपःक्लेशसहनस्य'** ॥

**'अवदानं कर्मवृत्तम्'**

**अवेति** ॥ 'दैप् शोधने' (भ्वा० प० अ०) । भावे ल्युट् (३।३।११४) ॥*॥ क्वचित् **'अपदानाम्'** इति पाठः ॥ (१) ॥*॥ वर्तनम् । 'वृतु वर्तने' (भ्वा० आ० से०) । भावे क्तः (३।३।११४) । कर्मणः कर्मणि वा वृत्तम् ॥ (२) ॥*॥ द्वे **'प्रशस्तकर्मणः'** ॥

**काम्यदानं प्रवारणम् ॥ ३ ॥**

**केति** ॥ कामोऽस्ति यत्र । 'अन्यत्रापि–' (वा० ५।२।१२०) इति यप् ।—हिमादित्वाद्यप्—इति मुकुटस्त्वपाणिनीयः । यद्वा काम्यते । 'कमु कान्तौ' (भ्वा० आ० से०) । 'अचो यत्' (३।१।९७) काम्येनेच्छया, काम्यस्य वरस्त्रीहस्त्यश्वादेर्वा, दानम् ॥ (१) ॥*॥ प्रव्रियते । 'वृञ् वरणे' चुरादिः । ल्युट् (३।३।११५) । 'प्रवारणं[२] **महादानम्**' इति त्रिकाण्डशेषः । (**'प्रवारणं** निषेधे स्यात्काम्यदाने च न द्वयोः' इति मेदिनी) ॥ (२) ॥*॥ द्वे **'काम्यदानस्य'** ॥

**वशक्रिया संवननम्[३]**

**वेति** ॥ वशस्य करणम् । 'कृञः श च' (३।३।१००) ॥ (१) ॥*॥ संपूर्वः 'वनु याचने' (त० आ० से०) इति वशीकरणार्थः ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे **'वशीकरणस्य'** ॥

**मूलकर्म तु कार्मणम् ।**

**म्विति** ॥ ओषध्यादिमूलेन कर्म ॥ (१) ॥*॥ कर्मैव । 'तद्युक्तात्कर्मणोऽण्' (५।४।३६) । (**'कार्मणं** मन्त्रतन्त्रादियोजने कर्मठेऽपि च' इति मेदिनी) ॥ (२) ॥*॥ द्वे **'ओषधीनां मूलैरुच्चाटनादिकर्मणः'** **'कामेण'** इति ख्यातस्य ॥

**विधूननं विधुवनम्**

**वीति** ॥ 'धूञ् कम्पने' चुरादिः । 'धूञ्प्रीञोः–' (वा० ७।३।३७) इति नुक् । ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'धू विधूनने' (तु० प० से०) । ल्युट् (३।३।११५) । 'गाङ्कुटादिभ्यः–' (१।२।१) इति ङित्त्वाद्गुणाभावः ॥ (२) ॥*॥ द्वे **'कम्पनस्य'** ॥

**तर्पणं प्रीणनावनम् ॥ ४ ॥**

**तेति** ॥ 'तृप प्रीणने' (दि० प० अ०) । ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'प्रीञ् तर्पणे' (क्र्या० उ० अ०) । स्वार्थेण्यन्तान्नुक् (वा० ७।३।३७) । ल्युट् (३।३।११५) ॥ (२)[१] ॥*॥ 'अव रक्षणे' (भ्वा० प० से०) ल्युट् (३।३।११५) ॥ (३) ॥*॥ त्रीणि **'प्रीणनस्य'** ॥

**पर्याप्तिः स्यात्परित्राणं हस्तवारणमित्यपि ।**

**पेति** ॥ पर्यापनं पर्याप्तोतित्राणार्थः । क्तिन् (३।३।९४) ॥ (१) ॥*॥ 'त्रैङ् पालने' (भ्वा० आ० अ०) । ल्युट् (३।३।११५) ॥ (२) ॥*॥ हस्तेन हस्तस्य वा वारणम् ॥*॥ क्वचित् '(हस्त) धारणम्' इति पाठः । प्रहारोद्यतस्य हस्तस्य धारणं रोधः ॥ (३) ॥*॥ त्रीणि **'मारणोद्यतनिवारणस्य'** ॥

**सेवनं सीवनं स्यूतिः**

**सयिति** ॥ 'षिवु तन्तुसंताने' (दि० प० से०) । ल्युट् (३।३।११५) ॥ (१) ॥*॥ पृषोदरादित्वात् (६।३।१०९) वा दीर्घः ।–छिविसिव्योर्वा दीर्घः—इति स्वामी ।—'अन्येषामपि–' (६।३।१३७) इति दीर्घः—इति मुकुटः । तन्न । वचनाभावात् । पूर्वपदत्वाभावाच्च ॥ (२) ॥*॥ क्तिन् (३।३।९४) । 'च्छ्वोः–' इति पाठस्तु न्याय्यः ॥*॥ त्रीणि **'सूचीक्रियायाः'** ॥

**विदरः स्फुटनं भिदा ॥ ५ ॥**

**वीति** ॥ विदरणम् । 'दॄ विदारणे' (क्र्या० प० से०) । 'ऋदोरप्' (३।३।५७) । यत्तु—'ग्रहवृदृ–' (३।३।५८) इत्यप्–इति मुकुटेनोक्तम् । तन्न । 'दृङ् आदरे' (तु० आ० अ०) इति ह्रस्वस्यैव ग्रहणात् । 'दॄ विदारणे' इत्यस्य स्वयमुपन्यस्तत्वात् ॥ (१) ॥*॥ 'स्फुट विकसने' (तु० प० से०) कुटादिः । ल्युट् (३।३।११५) ॥ (२) ॥*॥ 'भिदिर् विदारणे' (रु० उ० अ०) भिदाद्यङ् (३।३।१०६) ॥ (३) ॥*॥ त्रीणि **'द्विधाभावस्य'** ॥

**आक्रोशनमभीषङ्गः**

**आक्रविति** ॥ 'क्रुश आह्वाने' (भ्वा० प० से०) । ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'षञ्ज सङ्गे' (भ्वा० प० अ०) । घञ् (३।३।१८) 'उपसर्गस्य घञि–' (६।३।१२२) इति दीर्घः ॥ (२) ॥*॥ द्वे **'शापस्य'** ॥

---

१—इदं तु सूत्रं नोपलभ्यते । सिद्धान्तकौमुद्यामपि 'शीङ्शपि–' (उ० ३।११३) इति सूत्रव्याख्यायाम्—बाहुलकाच्छमिदमिम्याम्—इत्युक्तम् ॥ २—'प्रवारणम्' दन्तोष्ठ्यमध्यम् । **'प्रचारणम्'** चवर्गाद्यमध्यं वा—इति पीयूषाख्यव्याख्या । ३—'संवननम्' तृतीयस्तवर्गपञ्चमः **'संवपनम्'** पवर्गाद्यः, इत्येके । 'संवदनम्' तवर्गतृतीयः, इत्यपरे । 'जयश्रियः संवदनं यतस्तत्' इति मणौ रघुवंशः—इति मुकुटपीयूषौ ।

१—इदमसंगतम् । णौ परे नुग्विधानेन ण्यन्तान्नुको विधानाभावात् ॥

**संवेदो वेदना न ना।**

**समिति** ॥ 'विद ज्ञाने' (अ० प० से०)। घञ् (३।३।१८) ॥ (१) ॥*॥ 'विद चेतनाख्याननिवासेषु' चुरादिः। 'ण्यास–' (३।३।१०७) इति युच्। यद्वा 'विद ज्ञाने' (अ० प० से०)। 'घट्टिवन्दिविदिभ्यश्च' (वा० ३।३।१०७) इति 'युच्'। 'ल्युट् च' (३।३।११५) इति ल्युटि क्लीबत्वम् ॥ (२) ॥*॥ द्वे '**अनुभवस्य**' ॥

**संमूर्च्छनमभिव्याप्तिः**

**समिति** ॥ 'मूर्च्छा मोहसमुच्छ्राययोः' (भ्वा० प० से०)। ल्युट् (३।३।११५) ॥ (१) ॥*॥ अभिव्यापनम्। 'आप्लृ व्याप्तौ' (स्वा० प० अ०)। 'क्तिन्नाबादिभ्यः' (वा० ३।३।९४) इति क्तिन् ॥ (२) ॥*॥ द्वे '**सर्वतोव्याप्तेः**' ॥

**याच्ञा भिक्षार्थनार्दना ॥ ६ ॥**

**येति** ॥ याचनम्। 'डुयाचृ याच्ञायाम्' (भ्वा० उ० से०)। 'यजयाच–' (३।३।९०) इति नङ् ॥ (१) ॥*॥ भिक्षणम्। 'भिक्ष याचने' (भ्वा० उ० से०)। 'गुरोश्च–' (३।३।१०३) इत्यः ॥ (२) ॥*॥ 'अर्थ याच्ञायाम्' (चुरादिः से०) 'ण्यास–' (३।३।१०७) इति युच् ॥ (३) ॥*॥ 'अर्द गतौ याचने च' (भ्वा० प० से०) स्वार्थण्यन्तः। युच् (३।३।१०७) ॥ (४) ॥*॥ चत्वारि '**याच्ञायाः**' ॥

**वर्धनं छेदने**

**वेति** ॥ 'वर्ध छेदनपूरणयोः' (चु० प० से०)। ल्युट् (३।३।११५)। '**वर्धनं** छेदने वृद्धौ' इति दन्तोष्ठ्यादावजयः ॥ (१) ॥*॥ 'छिदिर् द्वैधीकरणे' (रु० उ० अ०) ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे '**कर्तनस्य**' ॥

**अथ द्वे आनन्दनसभाजने।**

**आप्रच्छन्नम्**

**अथेति** ॥ 'टुनदि समृद्धौ' (भ्वा० प० से०) ल्युट् (३।३।११५) ॥*॥ '**आमन्त्रणम्**' इति क्वचित्पाठः। तत्र 'मन्त्रि गुप्तभाषणे' (चु० आ० से०) ॥ (१) ॥*॥ 'सभाज प्रीतिदर्शनयोः' (चु० उ० से०)। ल्युट् (३।३।११५) ॥ (२) ॥*॥ 'प्रच्छ ज्ञीप्सायाम्' (तु० प० अ०)। आङ्पूर्वः प्रच्छिरानन्दनार्थः। ल्युट् (३।३।११५) ॥ (३) ॥*॥ त्रीणि '**आलिङ्गनकुशलप्रश्नादिनानन्दनस्य**' ॥

**अथाम्नायः संप्रदायः**

**अथेति** ॥ आम्नानम्। 'म्ना अभ्यासे' (भ्वा० प० अ०)। घञ् (३।३।१८) 'आतः–' (७।३।३३) इति युक् ॥ (१) ॥*॥ संप्रदानम्। 'दाञ्' (जु० उ० अ०)। घञ् (३।३।१८)। युक् (७।३।३३) ॥ (२) ॥*॥ द्वे '**गुरुपरम्परागतसदुपदेशस्य**' ॥

**क्षये क्षिया ॥ ७ ॥**

**क्षेति** ॥ क्षयणम्। 'क्षि क्षये' (भ्वा० प० अ०)। 'एरच्' (३।३।५६) ॥ (१) ॥*॥ 'क्षीष् हिंसायाम्' (क्र्या० प० अ०)। 'षिद्भिदादिभ्योऽङ्' (३।३।१०४) ॥ (२) ॥*॥ द्वे '**अपचयस्य**' ॥

**ग्रहे ग्राहः**

**ग्रेति** ॥ ग्रहणम्। 'ग्रह उपादाने' (क्र्या० उ० से०)। 'ग्रहवृदृ–' (३।३।५८) इत्यप् ॥ (१) ॥*॥ स्वार्थण्यन्तादच् (३।३।५६)। घञ् (३।३।१८) वा ॥ (२) ॥*॥ द्वे '**ग्रहणस्य**' ॥

**वशः कान्तौ**

**वेति** ॥ 'वश कान्तौ' (अ० प० से०) 'वशिरण्योः–' (वा० ३।३।५८) इत्यप् ॥ (१) ॥*॥ 'कमु कान्तौ' (भ्वा० आ० से०)। 'आयादयः–' (३।१।३१) इति णिङभावे क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे '**इच्छायाः**' ॥

**रक्षणस्त्राणे**

**रेति** ॥ 'रक्ष पालने' (भ्वा० प० से०)। 'यजयाच–' (३।३।९०) इति नङ् ॥ (१) ॥*॥ 'त्रैङ् पालने' (भ्वा० आ० अ०) ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे '**रक्षणस्य**' ॥

**रणः क्वणे।**

**रेति** ॥ रणनम्। 'रण शब्दे' (भ्वा० प० से०)। 'वशिरण्योः' (वा० ३।३।५८) इत्यप् ॥ (१) ॥*॥ क्वणनम्। 'क्वण शब्दे' (भ्वा० प० से०)। 'क्वणो वीणायाम्' (३।३।६५) इति साधुः ॥ (२) ॥*॥ द्वे '**शब्दकरणस्य**' ॥

**व्यधो वेधे**

**व्येति** ॥ व्यधनम्। 'व्यध ताडने' (दि० प० अ०)। 'व्यधजपोः–' (३।३।६१) इत्यप् ॥ (१) ॥*॥ वेधनम्। 'विध विधाने' (तु० प० से०)। घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे '**वेधनस्य**' ॥

**पचा पाके**

**पेति** ॥ पचनम्। 'डु पचष् पाके' (भ्वा० उ० अ०)। षित्त्वादङ् (३।३।१०४) ॥ (१) ॥*॥ घञ् (३।३।१८) द्वे ॥ (२) ॥*॥ द्वे '**पचनस्य**' ॥

**हवो हूतौ**

**हेति** ॥ ह्वानम्। 'ह्वेञ् स्पर्धायां शब्दे च' (भ्वा० उ० अ०)। 'भावेऽनुपसर्गस्य' (३।३।७५) इत्यप्, संप्रसारणं च ॥ (१) ॥*॥ क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे '**आह्वानस्य**' ॥

---

१—मुकुटेन तु '–प्रीतिसेवनयोः' इति पाठो धृतः। स्वामिना तु—'प्रीतिदर्शने' इति पाठोऽङ्गीकृतः ॥

**वरो वृतौ ॥ ८ ॥**

**वेति** ॥ वरणम् । 'वृञ् वरणे' (स्वा० उ० से०) । 'ग्रहवृदृ–' (३।३।५८) इत्यप् । 'तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः' ॥ (१) ॥*॥ क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे **'वेष्टनसंभक्त्योः'** ॥

**ओषः प्लोषे**

**ओष इति** ॥ ओषणम् 'उष दाहे' ( भ्वा० प० से० ) घञ् (३।३।१८) ॥ (१) ॥*॥ प्लोषणम् । 'प्लुष दाहे' । ( भ्वा० प० से० ) । घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे **'दाहस्य'** ॥

**नयो नाये**

**नेति** ॥ नयनम् । 'णय गतौ' ( भ्वा० प० से० ) । घञ् (३।३।१८) । संज्ञापूर्वकत्वान्न वृद्धिः । यद्वा 'णीञ्' ( भ्वा० उ० अ० ) । 'एरच्' (३।३।५६) । 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' ॥ (१) ॥*॥ 'णीञ् प्रापणे' ( भ्वा० उ० अ० ) 'श्रिणीभुवो–' (३।३।२४) इति घञ् ॥ (२) ॥*॥ द्वे **'नीतेः'** ॥

**ज्यानिर्जीर्णौ**

**ज्येति** ॥ ज्यानम् । 'ज्या वयोहानौ' (क्र्या० प० अ०) । 'ग्लाम्लाज्याहाभ्यो निः' (वा० ३।३।९५) ॥ (१) ॥*॥ जरणम् । 'जॄष् वयोहानौ' ( दि० प० से० ) । क्तिन् (३।३।९४) । 'ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः' (वा० ८।२।४४) । 'रदाभ्याम्–' (८।२।४२) इति नत्वम् ॥ (२) ॥*॥ द्वे **'जीर्णत्वस्य'** ॥

**भ्रमो भ्रमौ ।**

**भ्रेति** ॥ भ्रमणम् । 'भ्रमु अनवस्थाने' (दि० प० अ०) । घञ् (३।३।१८) । 'नोदात्तोपदेशस्य–' (७।३।३४) इति वृद्ध्यभावः ।—मित्त्वाद्ध्रस्वः—इति मुकुटस्तु चिन्त्यः । णिच्यस्य प्रवृत्तेः ॥ (१) ॥*॥ 'इकृष्यादिभ्यः' (वा० ३।३।१०८) ॥ (२) ॥*॥ द्वे **'भ्रमणस्य'** ॥

**स्फातिर्वृद्धौ**

**स्फेति** ॥ 'स्फायी वृद्धौ' ( भ्वा० आ० से० ) । क्तिन् (३।३।९४) 'स्फातिर्वृद्धिः **प्रसारो** ना' इति बोपालितः ॥ (१) ॥*॥ वर्धनम् । 'वृधु वृद्धौ' ( भ्वा० आ० से० ) । क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे **'वृद्धेः'** ॥

**प्रथा ख्यातौ**

**प्रेति** ॥ प्रथनम् । 'प्रथ प्रख्याने' ( भ्वा० आ० से० ) । भिदाद्यङ् (३।३।१०४) ॥ (१) ॥*॥ ख्यानम् । 'ख्या प्रकथने' (अ० प० अ०) । चक्षिङादेशो वा । क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे **'ख्यातेः'** ॥

**स्पृष्टिः पृक्तौ**

**स्प्रिति** ॥ स्पर्शनम् । 'स्पृश संस्पर्शे' ( तु० प० अ० ) । क्तिन् (३।३।९४) ॥ (१) ॥*॥ पर्चनम् । 'पृची संपर्के' । ( रु० प० से० ) । क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे **'स्पर्शनस्य'** ॥

**स्नवः स्रवे ॥ ९ ॥**

**स्नेति** ॥ स्नवनम् । 'ष्णु प्रस्रवणे' (अ० प० से०) । 'ऋदोरप्' (३।३।५७) ॥ (१) ॥*॥ 'स्रु गतौ' (भ्वा० प० अ०) ॥ (२) ॥*॥ द्वे **'प्रस्रवणस्य'** ॥

**विधा समृद्धौ**

**वधिति** ॥ विधानम् । 'धाञ्' ( जु० उ० अ० ) । 'आतश्च–' (३।३।१०६) इत्यङ् । **'विधा** गजान्ने ऋद्धौ च' (इति मेदिनी) ॥*॥ क्वचित् **'एधा'** इति पाठः । 'एध वृद्धौ' (भ्वा० आ० से०) । 'गुरोश्च–' (३।३।१०३) इत्यः ॥ (१) ॥*॥ समर्धनम् । 'ऋधु वृद्धौ' ( भ्वा० आ० से० ) । क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे **'धनसंपत्तेः'** ॥

**स्फुरणे स्फुरणा**

**स्फिवति** ॥ 'स्फुर स्फुरणे संचलने च' कुटादिः । ल्युट् (३।३।११५) । (धातुपाठे) अदुपधपाठे **'स्फुरणम्'** अपि ॥ (१) ॥*॥ स्वार्थण्यन्ताद्युच् (३।३।१०७) संज्ञापूर्वकत्वान्न गुणः ॥ (२) ॥*॥ द्वे **'स्फुरणस्य'** ॥

**प्रमितौ प्रमा ।**

**प्रेति** ॥ प्रमाणम् । 'डुमिञ् प्रक्षेपणे' ( स्वा० उ० अ० ) क्तिन् (३।३।९४) ॥ (१) ॥*॥ 'माङ् माने' ( दि० आ० अ० ) । 'आतश्चो–' (३।३।१०६) इत्यङ् ॥ (२) ॥*॥ द्वे **'प्रमाज्ञानस्य'** ॥

**प्रसूतिः प्रसवे**

**प्रेति** ॥ प्रसवनम् । 'षूङ् प्राणिप्रसवे' (दि० आ० से०) । क्तिन् (३।३।९४) ॥ (१) ॥*॥ 'ऋदोरप्' (३।३।५७) ॥ (२) ॥*॥ 'षू प्रेरणे' ( तु० प० से० ) वा ॥ (२) ॥*॥ द्वे **'प्रसवनस्य प्रेरणस्य वा'** ॥

**श्च्योते प्राघारः**

**श्च्यविति** ॥ श्च्योतनम् । 'श्च्युतिर् क्षरणे' ( भ्वा० प० से० ) । घञ् (३।३।१८) ॥ (१) ॥*॥ प्रघरणम् । 'घृ क्षरणदीप्त्योः' ( जु० प० अ० ) । घञ् (३।२।१८) । 'उपसर्गस्य–' (६।३।१२२) इति दीर्घः ॥ (२) ॥*॥ द्वे **'क्षरणस्य'** ॥

**क्लमथः क्लमे ॥ १० ॥**

**क्लेति** ॥ क्लमनम् । 'क्लमु ग्लानौ' ( दि० प० से० ) ।

---

१—इदमसंगतम् । भिदादिष्वेतत्पाठस्याभावात् । 'घटादयः षितः' ( भ्वा० ग० सू० ) इति षित्त्वादेव सिद्धे तत्पाठकल्पनस्याप्युचितत्वात् ॥

'शमादिभ्योऽथच्' ॥ (१) ॥*॥ घञि (३।३।१८) 'नोदात्तोपदेश–' (७।३।३४) इति वृद्धिर्न।—मित्त्वाद्ध्रस्वत्वम्—इति मुकुटस्तु चिन्त्यः। मितां णौ ह्रस्वविधानात् ॥ (२) ॥*॥ द्वे **'ग्लानेः'** ॥

**उत्कर्षोऽतिशये**

उत्कर्षणम्। 'कृष विलेखने' (भ्वा० प० अ०)। घञ् (३।३।१८) ॥ (१) ॥*॥ अतिशयनम् शीङः 'एरच्' (३।३।५६) ॥ (२) ॥*॥ द्वे **'उत्कर्षस्य'** ॥

**संधिः श्लेषे**

संधानम्। धाञः 'उपसर्गे घोः किः' (३।३।९२) ॥ (१) ॥*॥ श्लेषणम्। 'श्लिष आलिङ्गने' (दि० प० अ०)। घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे **'संधानस्य'** ॥

**विषय आशये।**

विसयनम्। 'षिञ् बन्धने' (स्वा० उ० अ०)। 'एरच्' (३।३।५६) 'परिनिविभ्यः सेव–' (८।३।७०) इति षः। यत्तु—बध्यन्तेऽत्र, इति 'पुंसि–' (३।३।११८) इति घः। विसीयते विसिनोति वात्र—इति मुकुटेनोक्तम्। तन्न। भावप्रत्ययानामेव पूर्वापरयोर्दर्शनेनाधिकरणार्थस्यानौचित्यात्। ल्युट्प्रसङ्गाच्च। बध्यन्तेऽत्र। 'पुंसि–' इति 'घः' इत्यस्यानुपयोगाच्च ॥ (१) ॥*॥ शीङः 'एरच्' (३।३।५६) ॥*॥ **'आश्रयः'** इति पाठे 'एरच्' (३।३।५६) ॥ (२) ॥*॥ द्वे **'आश्रयस्य'** ॥

**क्षिपायां क्षेपणम्**

क्षेपणम्। 'क्षिप प्रेरणे' (तु० उ० अ०)। भिदाद्यङ् (३।३।१०४) ॥ (१) ॥*॥ ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे **'प्रेरणस्य'** ॥

**गीर्णिर्गिरौ**

गिलनम्। 'गॄ निगरणे' (तु० प० से०)। क्तिन् (३।३।९४)। 'ॠल्वादिभ्यः क्तिन्निष्ठावत्' (वा० ८।२।४४) ॥ (१) ॥*॥ 'इकृष्यादिभ्यः' (वा० ३।३।१०८)।—साहचर्यात्स्त्रीत्वम्—इति मुकुटश्चिन्त्यः। 'स्त्रियाम्' इत्यधिकारात् ॥ (२) ॥*॥ द्वे **'गिलनस्य'** ॥

**गुरणमुद्यमे ॥ ११ ॥**

'गुरी उद्यमे' (तु० प० से०) कुटादिः। ल्युट् (३।३।११५) ॥ (१) ॥*॥ उद्यमनम्। 'यम उपरमे' (भ्वा० प० से०) घञ् (३।३।१८)। संज्ञापूर्वकत्वाद्वृद्ध्यभावः ॥ (२) ॥*॥ द्वे **'भाराद्युद्यमनस्य'** ॥

१ दैवादिकस्य दीर्घादि 'गूरी' धातोः 'गूरणम्' इति स्वामी–इति मुकुटः।—चुरादेः **'गोरणम्'** अपि—इति स्वामी। पीयूषव्याख्यायामपि—गुरणं ह्रस्वादि। गूरणं दीर्घादीत्येके। गोरणमित्यपरे—इति प्रकटितम् ॥

**उन्नाय उन्नये**

उन्नयनम्। 'अवोदोर्नियः' (३।३।२६) इति घञ् ॥ (१) ॥*॥ 'क्वचिदपवादविषये उत्सर्गोऽभिनिविशते' इत्यच् ॥ (२) ॥*॥ द्वे **'उन्नयनस्य'** ॥

**श्रायः श्रयणे**

श्रयणम्। 'श्रिञ् सेवायाम्' (भ्वा० उ० से०)। 'श्रिणीभुवो–' (३।३।२४) इति घञ् ॥ (१) ॥*॥ ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे **'सेवायाः'** ॥

**जयने जयः।**

'जि जये' (भ्वा० प० अ०)। ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'एरच्' (३।३।५६) ॥ (२) ॥*॥ द्वे **'जयस्य'** ॥

**निगादो निगदे**

निगदनम्। 'गद व्यक्तायां वाचि' (भ्वा० प० से०)। 'नौ गद–' (३।३।६४) इत्यप् वा ॥ (१) ॥*॥ घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे **'गदनस्य'** ॥

**मादो मदे**

मदनम्। 'मदी हर्षे' (दि० प० से०)। 'मदोऽनुप–' (३।३।६७) इत्यप् ॥ (१) ॥*॥ 'सध मादस्थयोः–' (६।३।९६) इति निर्देशात् 'क्वचिदपवादः–' इति न्यायाद्वा घञ् (३।३।१८) ॥*॥ (२) ॥*॥ द्वे **'हर्षस्य'** ॥

**उद्वेग उद्भ्रमे ॥ १२ ॥**

उद्वेजनम्। 'ओविजी भयचलनयोः' (तु० आ० से०)। घञ् (३।३।१८) ॥ (१) ॥*॥ उद्भ्रमणम्। 'भ्रमु अनवस्थाने' (दि० प० अ०)। घञ् (३।३।१८)। 'नोदात्तोप–' (७।३।३४) इति न वृद्धिः ॥ (२) ॥*॥ द्वे **'उद्वेजनस्य'** ॥

**विमर्दनं परिमले**

'मृद क्षोदे' (क्र्या० प० से०)। ल्युट् (३।३।११५) ॥ (१) ॥*॥ परिमलनम्। 'मल धारणे' (भ्वा० आ० से०)। घञ् (३।३।१८)। संज्ञापूर्वकत्वान्न वृद्धिः ॥ (२) ॥*॥ द्वे **'कुङ्कुमादिमर्दनस्य'** ॥

**अभ्युपपत्तिरनुग्रहः।**

अभ्युपपदनम्। 'पद गतौ' (दि० आ० अ०)। क्तिन् (३।३।९४) ॥ (१) ॥*॥ अनुग्रहणम्। 'ग्रह उपादाने' (क्र्या० उ० से०)। 'ग्रहवृद–' (३।३।५८) इत्यप् ॥ (२) ॥*॥ द्वे **'हितसंपादनाहितनिवारणप्रवृत्तेः'** ॥

**निग्रहस्तु निरोधः स्यात्**

निग्रहणम्। अप् (३।३।५८) ॥ (१) ॥*॥ निरोधनम्। 'रुधिर् आवरणे' (रु० उ० अ०)। घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे **'निरोधस्य'** ॥

१—विग्रहस्तु विरोधः–' इति पाठः—इति स्वामी।

**अभियोगस्त्वभिग्रहः ॥१३॥**

अभियोजनम् । 'युजिर् योगे' (रु० उ० अ०) । घञ् (३।३।१८) ॥ (१) ॥*॥ अभिग्रहणम् । अप् (३।३।५८) '**अनुग्रहो**ऽभिग्रहणेऽप्यभियोगे च गौरवे' इति रुद्रः ॥ (२) ॥*॥ द्वे '**कलहाह्वानस्य**' ॥

**मुष्टिबन्धस्तु संग्राहः**

मुष्टेर्बन्धः ॥ (१) ॥*॥ संग्रहणम् । 'समि मुष्टौ' (३।३।३६) इति ग्रहेर्घञ् ॥ (२) ॥*॥ द्वे '**मुष्टिबन्धनस्य**' ॥

**डिम्बे डमरविप्लवौ ।**

डिम्बनम् । 'डि विनोदे' (    ) । घञ् (३।३।१८) । 'डीङ् विहायसा गतौ' (दि० आ० अ०) । डयनं विद्रवः डिम्बम् । उणादिनिपातः—इति मुकुटस्तु निर्मूलः । 'भयध्वनौ पुष्कसेऽपि **डिम्बः** प्लीहनि विप्लवे' इति रभसः ॥ (१) ॥*॥ 'डम' इति शब्दस्य राणम् । 'रा दाने' (अ० प० अ०) । बाहुलकाद्भ्यर्थे कः ॥ (२) ॥*॥ विप्लवनम् 'प्लुङ् गतौ' (भ्वा० आ० अ०) । 'ऋदोरप्' (३।३।५७) ॥ (३) ॥*॥ त्रीणि '**धाडकलुण्ठनादेः**' । अशस्त्रकलहस्य—इति स्वामी ॥

**बन्धनं प्रसितिश्चारः**

'बन्ध बन्धने' । (क्र्या० प० अ०) ल्युट् (३।३।११५) ॥ (१) ॥*॥ प्रसयनम् । 'षिञ् बन्धने' (स्वा० उ० अ०) । 'क्तिन्' (३।३।९४) ॥ (२) ॥*॥ चरणम् । 'चर गतौ' (भ्वा० प० से०) अनेकार्थत्वाद्बन्धने । घञ् (३।३।१८) । 'बन्धापसर्पयो**श्चारः**' इति रुद्रः ॥ (३) ॥*॥ त्रीणि '**बन्धनस्य**' । मुकुटस्तु—बन्धनसाधनरज्जुनिगडादेः—इत्याह । तन्न । भावप्रकरणात् । स्वामी तु 'चार' स्थाने '**स्वारम्**' पठित्वा स्वारादीनां चतुर्णां पर्यायतामाह । स्वरति । 'स्वृ शब्दोपतापयोः' (भ्वा० प० से०) । अच् (३।१।१३४) प्रज्ञाद्यण् (५।४।३८) ॥

**स्पर्शः स्प्रष्टोपतप्तरि ॥ १४ ॥**

स्पृशति । 'स्पृश बाधनस्पर्शनयोः' (चु० आ० से०) । 'पदरुज—' (३।३।१६) इत्यत्र 'स्पृश उपतापे' (वार्ति०) इति कर्तरि घञ् ॥*॥ ('**स्पश**') इति रेफहीनपाठे तु 'स्पश स्पर्शबाधनयोः' (भ्वा० उ० से०) इति धातोरच् (३।१।१३४) ॥ (१) ॥*॥ स्पृशति । तृच् (३।१।१३३) । 'अनुदात्तस्य च—' (६।१।५९) इत्यमागमः ॥ (२) ॥*॥ उपतपति । 'तप संतापे' (भ्वा० प० अ०) । तृच् (३।१।१३३) ॥ (३) ॥*॥ यद्वा स्वरस्पर्शयोर्भावे घञ् । स्प्रष्टोपतप्त्रोर्भावे 'कृत्यल्युटो बहुलम्' (३।३।११३) इति तृच् । भावप्रकरणानुरोधात् ॥*॥ त्रीणि '**संतप्तस्य**' '**संतापस्य वा**' ॥

**निकारो विप्रकारः स्यात्**

निकृष्टीकरणम् । कृञो घञ् (३।३।१८) । '**निकारः** स्यात्परिभवे धान्यस्योत्क्षेपणेऽपि च' इति धरणिः ॥ (१) ॥*॥ विप्रकरणम् । घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे '**अपकारस्य**' ॥

**आकारस्त्वङ्ग इङ्गितम् ।**

आकरणम् । घञ् (३।३।१८) ॥ (१) ॥*॥ इङ्गनम् । 'इगि गतौ' (भ्वा० प० से०) । घञ् (३।३।१८) ॥ (२) ॥*॥ क्तः (३।३।११४) ॥ (३) ॥*॥ त्रीणि '**अभिप्रायानुरूपचेष्टायाः**' ॥

**परिणामो विकारो द्वे समे विकृतिविक्रिये ॥ १५ ॥**

परिणमनम् । 'णम प्रह्वत्वे' (भ्वा० प० अ०) । घञ् (३।३।१८) ॥ (१) ॥*॥ विकरणम् । घञ् (३।३।१८) ॥ (२) ॥*॥ विकरणम् । क्तिन् (३।३।९४) ॥ (३) ॥*॥ 'कृञः श च' (३।३।१००) ॥ (४) ॥*॥ चत्वारि '**प्रकृतेरन्यथाभावस्य**' । द्वयोः साम्यं स्त्रीत्वात् ॥

**अपहारस्त्वपचयः**

अपहरणम् । 'हृञ् हरणे' (भ्वा० उ० अ०) । घञ् (३।३।१८) ॥ (१) ॥*॥ अपचयनम् । 'एरच्' (३।३।५६) ॥ (२) ॥*॥ द्वे '**अपहरणस्य**' ॥

**समाहारः समुच्चयः ।**

समाहरणम् । घञ् (३।३।१८) ॥ (१) ॥*॥ समुच्चयनम् । 'चिञ् चयने' (स्वा० उ० अ०) । 'एरच्' (३।३।५६) ॥ (२) ॥*॥ द्वे '**राशीकरणस्य**' ॥

**प्रत्याहार उपादानम्**

प्रत्याहरणम् । घञ् (३।३।१८) ॥ (१) ॥*॥ उपादानो ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे '**स्वविषयेभ्य इन्द्रियपरावर्तनस्य**' ॥

**विहारस्तु परिक्रमः ॥ १६ ॥**

विहरणम् । घञ् (३।३।१८) ॥ (१) ॥*॥ परिक्रमणम् 'क्रमु पादविक्षेपे' (भ्वा० प० से०) । घञ् । 'नोदात्तोपदेश—' (७।३।३४) इति वृद्धिर्न ॥ (२) ॥*॥ द्वे '**क्रीडार्थसंचरणस्य**' ॥

**अभिहारोऽभिग्रहणम्**

अभिहरणम् । घञ् (३।३।१८) ॥ (१) ॥*॥ अभिग्रहेर्ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे '**आभिमुख्येन ग्रहणस्य**' ॥

**निर्हारोऽभ्यवकर्षणम् ।**

निर्हरणम् । घञ् (३।३।१८) ॥ (१) ॥*॥ अभ्यवकृषेर्ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे '**शस्त्रादेर्युक्त्या निःसारणस्य**' ॥

**अनुहारोऽनुकारः स्यात्**

अनुहरणम् । घञ् (३।३।१८) ॥ (१) ॥*॥ अनुकरणम् । घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे '**सदृशकरणस्य**' ॥

**अर्थस्यापगमे व्ययः ॥ १७ ॥**

व्ययनम् । 'व्यय वित्तसमुत्सर्गे' (चु० उ० से०) अदन्तः । घञ् (३।३।१८) । 'एरच्' (३।३।५६) वा ॥ (१) ॥*॥ एकम् **'द्रव्यापगमस्य'** ॥

**प्रवाहस्तु प्रवृत्तिः स्यात्**

प्रवहणम् । 'वह प्रापणे' (भ्वा० उ० से०) । घञ् (३।३।१८) ॥ (१) ॥*॥ प्रवर्तनम् । 'वृतु वर्तने' (भ्वा० आ० से०) । क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे **'अविच्छेदेन जलादिप्रवृत्तेः'** ॥

**प्रवहो गमनं बहिः ।**

प्रकृष्टो वहः । 'गोचरसंचर–' (३।३।११९) इति साधुः । 'प्रवहस्तु बहिर्यात्रामातरिश्वप्रभेदयोः' इति विश्वः (मेदिनी) ॥ (१) ॥*॥ एकम् **'बहिर्यात्रायाः'** ॥

**वियामो वियमो यामो यमः संयामसंयमौ ॥ १८ ॥**

वियमनम् । 'यमः समुपनिविषु च' (३।३।६३) इत्यब् वा । चादनुपसर्गेऽप्यप् वा । पक्षे घञ् । षट् संयमनस्य । स्वामी तु—द्वे विविधयमनस्य द्वे **'उपरतिमात्रस्य'** । द्वे संयमनस्य—इत्याह ॥

**हिंसाकर्माभिचारः स्यात्**

हिंसाफलं कर्म । शाकपार्थिवादिः (वा० २।१।७८) ॥ (१) ॥*॥ अभिचरणम् । घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे **'मारणादिक्रियायाः'** ॥

**जागर्या जागरा द्वयोः ।**

जागरणम् । 'जागर्तेरकारो वा' (वा० ३।३।१०१) । पक्षे (शे) यक् (३।१।६६) । 'जाग्रोऽवि–' (७।३।८५) इति गुणः ॥ (१) ॥*॥ (२) ॥*॥ भावे घञि पुंसि ॥*॥ द्वे **'जागरणस्य'** ॥

**विघ्नोऽन्तरायः प्रत्यूहः**

विहननम् 'घञर्थे कः' (वा० ३।३।५८) ॥ (१) ॥*॥ अन्तर्मध्ये, अन्तरस्य व्यवधानस्य वायनम् । 'अय गतौ' (भ्वा० आ० से०) । 'इण् गतौ' (अ० प० अ०) वा । घञ् (३।३।१८) । अच् (३।२।५६) वा ॥ (२) ॥*॥ प्रत्यूहनम् । घञ् (३।३।१८) ॥ (३) ॥*॥ त्रीणि **'विघ्नस्य'** ॥

**स्यादुपघ्नोऽन्तिकाश्रये ॥ १९ ॥**

उपहन्यते । उपहननम् वा । 'उपघ्न आश्रये' (३।३।८५) इति साधुः ॥ (१) ॥*॥ अन्तिके आश्रीयते, आश्रयणं वा । 'एरच्' (३।३।५६) ॥ (२) ॥*॥ द्वे **'संनिहिताश्रयस्य' 'आश्रयनस्य वा'** ॥

१—गुणात्परत्वाद्विङादेशे 'जाग्रिया' इति धातुपारायणम् ॥ क्तिनि (३।३।९४) 'जागर्ति' अपीति सुभूतिः—इति मुकुटः ॥

**निर्वेश उपभोगः स्यात्**

निर्वेशनम् । विशतेर्घञ् (३।३।१८) ॥ (१) ॥*॥ उपभोजनम् । 'भुज पालनाभ्यवहारयोः' (रु० प० से०) । घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे **'उपभोगस्य'** ॥

**परिसर्पः परिक्रिया ।**

समन्तात्सर्पणम् । 'सृप्लृ गतौ' (भ्वा० प० से०) । घञ् ॥ (१) ॥*॥ परिकरणम् । 'कृञः श च' (३।३।१००) । 'रिङ् शयग्लिङ्क्षु' (७।४।२८) ॥ (२) ॥*॥ द्वे **'परिजनादिना वेष्टनस्य'** ॥

**विधुरं तु प्रविश्लेषः**

विगता धूः कार्यभारः । 'ऋक्पूर्–' (५।४।७४) इत्यः ॥ (१) ॥*॥ प्रविश्लेषणम् । 'श्लिष आलिङ्गने' (दि० आ० अ०) । घञ् (३।३।१८) 'वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिषु' इति त्रिकाण्डशेषः ॥ (२) ॥*॥ द्वे **'विश्लेषस्य'** ॥

**अभिप्रायश्छन्द आशयः ॥ २० ॥**

अभिप्रयणम् । 'प्रीञ् तर्पणे' (क्र्या० उ० अ०) । घञ् (३।३।१८) ॥ (१) ॥*॥ छन्दनम् । 'छदि संवरणे' (चु० प० से०) । घञ् (३।३।१८) ॥ (२) ॥*॥ आशयनम् । 'शीङ्' (अ० आ० से०) । 'एरच्' (३।३।५६) ॥ (३) ॥*॥ त्रीणि **'अभिप्रायस्य'** ॥

**संक्षेपणं समसनम्**

संक्षिपेर्ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'असु क्षेपणे' (दि० प० से०) । ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे **'संक्षेपस्य'** ॥

**पर्यवस्था विरोधनम् ।**

पर्यवस्थानम् । 'आतश्चो–' (३।३।१०६) इत्यः ॥ (१) ॥*॥ 'रुधिर् आवरणे' (रु० उ० अ०) । ल्युट् ॥ (२) ॥*॥ द्वे **'विरोधस्य'** ॥

**परिसर्या परीसारः**

परिसरणम् । 'सृ गतौ' (भ्वा० प० अ०) । 'परिचर्यापरिसर्या–'(वा० ३।३।१०१) इति साधुः ॥ (१) ॥*॥ घञ् (३।३।१८) । 'उपसर्गस्य घञि–' (६।३।१२२) इति दीर्घः ॥ (२) ॥*॥ द्वे **'सर्वतो गमनस्य'** ॥

**स्यादास्या त्वासना स्थितिः ॥ २१ ॥**

आसनम् । 'आस उपवेशने' (अ० आ० से०) । ण्यत् (३।१।१२३) ॥ (१) ॥*॥ 'ण्यास–' (३।३।१०७) इति युच् ॥ (२) ॥*॥ स्थानम् । 'ष्ठा गतिनिवृत्तौ' (भ्वा० प० अ०) । 'स्थागा–' (३।३।९५) इति क्तिन् ॥ (३) ॥*॥ त्रीणि **'आसनस्य'** ॥

**विस्तारो विग्रहो व्यासः**

विस्तरणम् । 'स्तृञ् आच्छादने' (क्र्या० उ० से०) ।

'प्रथने वावशब्दे' (३।३।३३) इति घञ् ॥ (१) ॥*॥ विग्रहणम् । 'ग्रहवृदृ–' (३।३।५८) इत्यप ॥ (२) ॥*॥ व्यसनम् । 'असु क्षेपणे' ( दि० प० से० ) । घञ् (३।३।१८) ॥ (३) ॥*॥ त्रीणि **'विस्तारस्य'** ॥

**स च शब्दस्य विस्तरः ।**

सः व्यासः । 'ॠदोरप्' (३।३।५६) ॥ (१) ॥*॥ एकम् **'शब्दविस्तरस्य'** ॥

**स्यान्मर्दनं संवहनम्**

'मृद क्षोदे' ( क्र्या० प० से० ) । ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'वह प्रापणे' ( भ्वा० उ० अ० ) । स्वार्थण्यन्ता॰ ल्युट् (३।३।११५) ।—'वाहनमाहितात्' (८।४।८) इति निपातनाद्दीर्घः—इत्येके ॥ (२) ॥*॥ द्वे **'पादमर्दनादेः'** ॥

**विनाशः स्याददर्शनम् ॥ २२ ॥**

विनशनम् । 'णश अदर्शने' ( दि० प० से० ) । घञ् (३।३।१८) ॥ (१) ॥*॥ दर्शनस्य भावः ॥ (२) ॥*॥ द्वे **'तिरोधानस्य'** ॥

**संस्तवः स्यात्परिचयः**

संस्तवनम् । 'ष्टुञ् स्तुतौ' ( अ० उ० अ० ) । 'ॠदोरप्' (३।३।५७) ॥ (१) ॥*॥ सन्मताम्चयनम् । 'चिञ् चयने' ( स्वा० उ० अ० ) । 'एरच्' (३।३।५६) ॥ (२) ॥*॥ द्वे **'परिचयस्य'** ॥

**प्रसरस्तु विसर्पणम् ।**

प्रसरणम् । 'सृ गतौ' ( भ्वा० प० से० ) । बाहुलकादप् ॥ (१) ॥*॥ 'सृप्लृ गतौ' ( भ्वा० प० से० ) । ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे **'व्रणादिविसरणस्य'** ॥

**नीवाकस्तु प्रयामः स्यात्**

निवचनम् । घञ् (३।३।१८) 'उपसर्गस्य–' (६।२।१२२) इति दीर्घः ॥ (१) ॥*॥ प्रयमणम् । यमेर्घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे **'धान्यसंचयस्य, क्रयादरस्य वा'** ॥

**संनिधिः संनिकर्षणम् ॥ २३ ॥**

संनिधानम् । धात्रः 'उपसर्गे घोः किः' (३।३।९२) ॥ (१) ॥*॥ कृषेर्ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे **'संनिधानस्य'** ॥

**लवोऽभिलावो लवने**

लवनम् । 'लूञ् छेदने' ( क्र्या० उ० से० ) । 'ॠदोरप्' (३।३।५७) ॥ (१) ॥*॥ 'निरभ्योः पूल्वोः' (३।३।५८) इति घञ् ॥ (२) ॥*॥ ल्युट् (३।२।११५) ॥ (३) ॥*॥ त्रीणि **'छेदनस्य'** ॥

**निष्पावः पवने पवः ।**

निष्पवनम् । घञ् (३।३।२८) ॥ (१) ॥*॥ ल्युट् (३।३।११५) ॥ (२) ॥*॥ अप् (३।३।५७) ॥ (३) ॥*॥ त्रीणि **'धान्यादीनां बहुलीकरणस्य'** ॥

**प्रस्तावः स्यादवसरः**

प्रस्तवनम् । 'ष्टुञ् स्तुतौ' (अ० प० अ०) । 'प्रे द्रुस्तुस्रुवः' (३।३।२७) इति घञ् ॥ (१) ॥*॥ अवसरणम् । 'सृ गतौ' ( भ्वा० प० अ० ) बाहुलकादप् ॥ (२) ॥*॥ द्वे **'प्रसङ्गस्य'** ॥

**त्रसरः सूत्रवेष्टनम् ॥ २४ ॥**

त्रसनम् । 'त्रसी उद्वेगे' ( दि० प० से० ) । अरन् बाहुलकादौणादिकः) । त्रसेर्भद्रादित्वाररन्—इति मुकुटस्तत्पाणिनीयः ॥*॥ **'तसरः'** इति पाठे 'तन्यृषिभ्यां क्सरन्' (उ० ३।७५) ॥ (१) ॥*॥ द्वे **'सूत्रस्य वेष्टनक्रियायाः'** ॥

**प्रजनः स्यादुपसरः**

प्रजननम् । 'जनी' ( दि० आ० से० ) । घञ् (३।३।१८) 'जनिवध्योः–' (७।३।३५) इति न वृद्धिः ॥ (१) ॥*॥ उपसरणम् । 'सृ गतौ' ( भ्वा० प० अ० ) । 'प्रजने सर्तेः' (३।३।७१) इत्यप् ॥ (२) ॥*॥ द्वे **'प्रथमगर्भग्रहणस्य'** ॥

**प्रश्रयप्रणयौ समौ ।**

प्रश्रयणम् । 'श्रिञ्' ( भ्वा० उ० से० ) । 'एरच्' (३।३।५६) ॥*॥ **'प्रसर'** इति पाठे सरतेर्बाहुलकादप् । **'प्रसरः** प्रणये वेगे' ( इति मेदिनी ) ॥ (१) ॥*॥ प्रणयनम् । 'णीञ्' ( भ्वा० उ० अ० ) । 'एरच्' (३।३।५६) ॥ (२) ॥*॥ द्वे **'प्रीत्या प्रार्थनस्य'** ॥

**धीशक्तिर्निष्क्रमः**

धियः शक्तिः । साष्टधा—'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहौ च विज्ञानं तत्त्वज्ञानं च धीगुणाः' ॥ (१) ॥*॥ निष्क्रमणम् । 'क्रमु पादविक्षेपे' ( भ्वा० प० से० ) । घञ् (३।३।१८) । 'नोदात्तोप–' (७।३।३४) इति वृद्धिर्न । **'निष्क्रमो** निर्गमे ख्यातो बुद्धिसंपदि **निष्क्रमः'** इति रुद्रः ॥ (२) ॥*॥ द्वे **'बुद्धिसामर्थ्यस्य'** ॥

**अत्री तु संक्रमो दुर्गसंचरः ॥ २५ ॥**

संक्रमणम् । घञ् (३।३।१८) । 'नोदात्तोप–' (७।३।३४) इति न वृद्धिः ॥ (१) ॥*॥ संचरणम् । 'चर गतौ' ( भ्वा० प० से० ) । 'पुंसि–' (३।३।११८) इति घः । दुर्गस्य संचरः ॥*॥ घञि तु 'संचारः' । **'संचारो** निर्गमो भ्रमाम्बुपथः' इति रत्नकोषः ॥ (२) ॥*॥ द्वे **'दुर्गप्रवेशनक्रियायाः'** ॥

---

१—'संवहनम्'–इत्यपपाठः । 'संभोगान्ते समनुपचितौ हस्तसंवाहनानाम्' इति मेघदूतः—इति मुकुटपीयूषौ । २—संनिधं च 'संनिधं समीपमुपकण्ठम्' इति बोपालितः—इति मुकुटः ॥

**प्रत्युत्क्रमः प्रयोगार्थः**

प्रत्युत्क्रमणम् । घञ् (३।३।१८) ॥ (१) ॥*॥ प्रयोजनम् । 'युजियोंगे' ( रु० उ० अ० ) । घञ् (३।३।१८) । प्रयोगोऽर्थो यस्य ॥*॥ 'प्रयुद्धार्थः' इति पाठे प्रकृष्टं युद्धमर्थोऽस्य । 'प्रत्युत्क्रमः **प्रयुद्धार्थः**' इति भागुरिः ॥ (२) ॥*॥ द्वे '**कर्मारम्भे प्रथमप्रयोगस्य**' ॥

**प्रक्रमः स्यादुपक्रमः ।**
**स्यादभ्यादानमुद्घात आरम्भः**

प्रक्रमणम् । घञ् (३।३।१८) ॥ (१) ॥*॥ उपक्रमणम् ॥ (२) ॥*॥ आभिमुख्येनादानम् ॥ (३) ॥*॥ उद्धननम् । 'हन्' ( अ० प० अ० ) घञ् (३।३।१८) । 'हनस्तोऽचिण्णलोः' (७।३।३२) ॥ (४) ॥*॥ आरम्भणम् । 'रभ राभस्ये' ( भ्वा० आ० अ० ) । घञ् (३।३।१८) 'रधिजभोरचि' (७।२।६१) इति नुम् ॥ (५) ॥*॥ पञ्च '**आरम्भस्य**' । ( आद्यौ प्रथमारम्भस्य । त्रीणि आरम्भमात्रस्य—इत्यन्ये) ॥

**संभ्रमस्त्वरा ॥ २६ ॥**

संभ्रमणम् । 'भ्रमु अनवस्थाने' ( दि० प० से० ) । घञ् (३।३।१८) । 'नोदात्तोप-' (७।३।३४) इति न वृद्धिः ॥ (१) ॥*॥ त्वरणम् । 'ञित्वरा संभ्रमे' (भ्वा० आ० से०) । 'घटादयः षितः' ( भ्वा० ग० ) इति षित्त्वातिदेशादङ् (३।३।१०४) । '**आवेगस्तु त्वरा त्वरिः**' इति वाचस्पतिः ॥ (२) ॥*॥ द्वे '**त्वरायाः**' ॥

**प्रतिबन्धः प्रतिष्टम्भः**

प्रतिबन्धनम् । 'बन्ध बन्धने' ( क्र्या० प० अ० ) । घञ् (३।३।१८) ॥ (१) ॥*॥ प्रतिष्टम्भनम् । 'ष्टम्भु रोधे' (सौत्रः) । घञ् (३।३।१८) ॥ (२) ॥*॥ '**विष्कम्भः** प्रतिबन्धो **वियोगः**' इति बोपालितः ॥*॥ द्वे '**रोधस्य**' ॥

**अवनायस्तु निपातनम् ।**

अवनयनम् । 'णीञ् प्रापणे' ( भ्वा० उ० अ० ) । 'अवोदोर्नियः' (३।३।२६) इति घञ् ॥ (१) ॥*॥ पतेः स्वार्थण्यन्ताल्ल्युट् (३।३।११५) ॥*॥ '**नियातनम्**' इति पाठे 'यत निकारोपस्कारयोः' ( चु० उ० से० ) धातुः ॥ (२) ॥*॥ द्वे '**अधोनयनस्य**' ॥

**उपलम्भस्त्वनुभवः**

उपलम्भनम् । 'डुलभष् प्राप्तौ' (भ्वा० आ० अ०) । घञ् (३।३।१८) । 'उपसर्गात्खल्घञोः' (७।१।६७) इति नुम् ॥ (१) ॥*॥ अनुभवनम् । 'ऋदोरप्' (३।३।५७) ॥ (२) ॥*॥ द्वे '**अनुभवस्य**' ॥

**समालम्भो विलेपनम् ॥ २७ ॥**

समालम्भनम् । घञ् (३।३।१८) ॥ (१) ॥*॥ 'लिप उपदेहे' ( तु० उ० अ० ) । ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे '**कुङ्कुमादिनोपलेपस्य**' ॥

**विप्रलम्भो विप्रयोगः**

विप्रलब्धिः । लभेर्घञ् (३।३।१८) ॥ (१) ॥*॥ विप्रयोजनम् 'युजिर् योगे' ( रुधा० उ० अ० ) । घञ् (३।३।१८) ॥ (२) ॥*॥ द्वे '**रागिणोर्वियोजनस्य**' ॥

**विलम्भस्त्वतिसर्जनम् ।**

विलब्धिः । लभेर्घञ् (३।३।१८) ॥ (१) ॥*॥ 'सृज विसर्गे' (दि० आ० अ०) । ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे '**दानस्य**' ॥

**विश्रावस्तु प्रविख्यातिः**

विश्रवणम् । 'श्रु श्रवणे' ( भ्वा० प० अ० ) । 'वौ क्षुश्रुवः' इति घञ् ॥ (१) ॥*॥ प्रविख्यानम् । क्तिन् (३।३।९४) ॥ (२) ॥*॥ द्वे '**अतिप्रसिद्धेः**' ॥

**अवेक्षा प्रतिजागरः ॥ २८ ॥**

अवेक्षणम् । 'ईक्ष दर्शने' ( भ्वा० आ० से० ) । 'गुरोश्च हलः' (३।३।१०३) इत्यः ॥ (१) ॥*॥ प्रतिजागरणम् । 'जागृ' ( अ० प० से० ) । घञ् (३।३।१८) । 'जाग्रोऽविचिण्-' (७।३।८५) इति गुणः ॥ (२) ॥*॥ द्वे '**अवेक्षणस्य**' ॥

**निपाठनिपठौ पाठे**

निपठनम् । 'पाठ व्यक्तायां वाचि' ( भ्वा० प० से० ) । 'नौ गदनद-' (३।३।६४) इत्यप् वा पक्षे घञ् (३।३।१८) ॥ (१-३) ॥*॥ त्रीणि '**पठनस्य**' ॥

**तेमस्तेमौ समुन्दने ।**

तेमनम् । स्तेमनम् । 'तिम ष्टिम आर्द्रीभावे' ( दि० प० से० ) । भावे घञ् (३।३।१८) ॥ (१) ॥*॥ (२) ॥*॥ 'उन्दी क्लेदने' ( रु० प० से० ) । ल्युट् (३।३।११५) ॥ (३) ॥*॥ त्रीणि '**आर्द्रीभावस्य**' ॥

**आदीनवास्रवौ क्लेशे**

आदानम् । 'दीङ् क्षये' ( दि० आ० अ० ) । भावे क्तः (३।३।११४) । 'स्वादय ओदितः' (दि० ग०) । 'ओदितश्च' (८।२।४४) इति नत्वम् । आदीनस्य वानम् । 'घञर्थे कः' (वा० ३।३।५८) इति बाहुलकाद्वातेः कः ॥ (१) ॥*॥ आस्रवणम् । 'स्रु गतौ' ( भ्वा० प० अ० ) । 'ऋदोरप्' (३।३।५७) ॥ (२) ॥*॥ क्लेशनम् । 'क्लिशू विबाधने' ( क्र्या० प० से० ) । घञ् (३।३।१८) ॥ (३) ॥*॥ त्रीणि '**क्लेशस्य**' ॥

**मेलके सङ्गसंगमौ ॥ २९ ॥**

मेलनम् । 'मिल संश्लेषे' ( तु० प० से० ) । घञ् (३।३।

---

१ इदमसंगतम् । उक्तसूत्रे रमेरग्रहणात् ॥ अस्मात् 'रमेरशब्लिटोः' (७।१।६४) इत्यनेन नुम् वक्तव्यः ॥

१८) स्वार्थे कन् (ज्ञापि० ५।४।५) ॥ (१) ॥*॥ सञ्जनम् । 'षञ्ज सङ्गे' (भ्वा० प० अ०) । घञ् (३।३।१८) ॥ (२) ॥*॥ संगमनम् । 'ग्रहवृदृ–' (३।३।५८) इत्यप् । 'ना मेलः संगमो ना वा' इत्यमरमाला ॥ (३) ॥*॥ त्रीणि **'संगमस्य'**॥

**संवीक्षणं विचयनं मार्गणं मृगणा मृगः ।**

सम्यक् विविधमीक्षणम् । 'ईक्ष दर्शने' (भ्वा आ० से०) । ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'चिञ् चयने' (स्वा० उ० अ०) । ल्युट् (३।३।११५) ॥ (२) ॥*॥ 'मार्ग अन्वेषणे' (चु० उ० से०) ल्युट् (३।३।११५) ॥ (३) ॥*॥ 'मृग अन्वेषणे' (चु० आ० से०) अदन्तः । 'ण्यास–' (३।३।१०७) इति युच् ॥ (४) ॥*॥ घञ् (३।३।१८) ॥ (५) ॥*॥ पञ्च **'अन्वेषणस्य'** ॥

**परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम् ॥ ३० ॥**

परिरम्भणम् । 'रभ राभस्ये' (भ्वा० आ० अ०) । घञ् (३।३।१८) । 'रभेरशब्लिटोः' (७।१।६३) इति नुम् ॥ (१) ॥*॥ परिष्वञ्जनम् । 'ष्वञ्ज परिष्वङ्गे' (भ्वा० आ० अ०) । घञ् (३।३।१८) । 'परिनिविभ्यः–' (८।३।७०) इति षत्वम् ॥ (२) ॥*॥ संश्लेषणम् । 'श्लिष आलिङ्गने' (दि० प० अ०)। घञ् (३।३।१८) ॥ (३) ॥*॥ 'गुहू संवरणे' (भ्वा० उ० से०) । ल्युट् (३।३।११५) ॥ (४) ॥*॥ चत्वारि **'आलिङ्गनस्य'** ॥

**निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् ।**

वर्णशब्दात् 'सत्याप–' (३।१।२५) इति णिच् । ल्युट् (३।३।११५) ॥ (१) ॥*॥ 'ध्यै चिन्तायाम्' (भ्वा० प० अ०)। ल्युट् (३।३।११५) ॥ (२) ॥*॥ 'दृशिर् प्रेक्षणे' (भ्वा० प० अ०) ॥ (३) ॥*॥ 'लोकृ दर्शने' (भ्वा० आ० से०) ॥ (४) ॥*॥ 'ईक्ष दर्शने' (भ्वा० आ० से०) ॥ (५) ॥*॥ पञ्च **'वीक्षणस्य'** ॥

**प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ॥ ३१ ॥**

'ख्या प्रकथने' (अ० प० अ०) । चक्षिङादेशो वा ॥ (१) ॥*॥ 'असु क्षेपणे' (दि० प० से०) । ल्युट् (३।३।११५) ॥ (२) ॥*॥ प्रत्यादेशनम् । 'दिश अतिसर्जने' (तु० प० अ०) । घञ् (३।३।१८) ॥ (३) ॥*॥ निराकरणम् । कृञः क्तिन् (३।३।९४) ॥ (४) ॥*॥ चत्वारि **'निराकरणस्य'** ॥

**उपशायो विशायश्च पर्यायशयनार्थकौ ।**

उपशयनम् । विशयनम् । 'व्युपयोः शेतेः पर्याये' (३।३।३९) इति घञ् ॥ (१) ॥*॥ (२) ॥*॥ पर्यायेण शयनम् । पर्यायशयनमर्थो ययोस्तौ ॥*॥ द्वे **'पर्यायेण प्रहरकादावुपशयनस्य'** ॥

**अर्तनं च ऋतीया च हृणीया च घृणार्थके ॥ ३२ ॥**

'ऋतिः' सौत्रः । ईयङः (३।१।३१) अभावे ल्युट् (३।३।११५) ॥ (१) ॥*॥ ईयङ्पक्षे 'अप्रत्ययात्' (३।३।१०२) ॥ (२) ॥*॥ 'हृणीङ्' कण्ड्वादिः । यक् (३।१।२७) । 'अप्रत्ययात्' (३।३।१०२) ॥ (३) ॥*॥ 'मोहो वीज्या जुगुप्सा च हृणीया हृणिया घृणा' इति वाचस्पतिः ॥*॥ चत्वारि **'जुगुप्सनस्य'** ॥

**स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये ।**

व्यत्यसनम् । 'असु क्षेपणे' (दि० प० से०) घञ् (३।३।१८) ॥ (१) ॥*॥ विपर्यसनम् । घञ् (३।३।१८) ॥ (२) ॥*॥ व्यत्ययनम् । 'इण्' (अ० प० अ०) । 'एरच्' (३।३।५६) ॥ (३) ॥*॥ विपर्ययनम् । 'इण्' (अ० प० अ०) 'एरच्' (३।३।५६) ॥ (४) ॥*॥ चत्वारि **'व्यतिक्रमस्य'** ॥

**पर्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्ययः ॥ ३३ ॥**

पर्ययणम् । 'इण्' । 'एरच्' (३।३।५६) ॥ (१) ॥*॥ अतिक्रमणम् । घञ् (३।३।१८) ॥ (२) ॥*॥ अतिपतनम् । 'पत्लृ गतौ' (भ्वा० प० से०) । घञ् (३।३।१८) ॥ (३) ॥*॥ उपात्ययनम् । 'इण्' । 'एरच्' (३।३।५६) ॥ (४) ॥*॥ चत्वारि **'अतिक्रमस्य'** ॥

**प्रेषणं यत्समाहूय तत्र स्यात्प्रतिशासनम् ।**

'शासु अनुशिष्टौ' (अ० प० से०) । ल्युट् (३।३।११५) ॥ (१) ॥*॥ एकं **'भृत्यादिप्रेषणस्य'** ॥

**स संस्तावः क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम् ॥३४॥**

समेत्य स्तुवन्त्यत्र । 'ष्टुञ् स्तुतौ' (अ० उ० अ०) । 'यज्ञे समि स्तुवः' (३।३।३१) इति घञ् ॥ (१) ॥*॥ एकं **'यज्ञे स्तावकद्विजावस्थानभूमेः'** ॥

**निघाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः ।**

ऊर्ध्वं हन्यतेऽस्मिन् । 'उद्घनोऽत्याधानम्' (३।३।८०) इति साधुः ॥ (१) ॥*॥ एकम् ॥

**स्तम्बघ्नस्तु स्तम्बघनः स्तम्बो येन निहन्यते ॥ ३५ ॥**

स्तम्बो हन्यते येन । 'स्तम्बे क च' (३।३।८३) इति कापौ घनादेशश्च ॥*॥ (१) ॥*॥ (२) ॥*॥ द्वे **'तृणादिगुच्छोन्मूलनसाधनस्य'** ।—नीवारादिग्रहणार्थं कृतवंशपात्रस्य—इत्यन्ये ॥

**आविधो विध्यते येन**

आविध्यते येन । 'व्यध ताडने' (दि० प० अ०) । 'घञर्थे कः' (वा० ३।३।१८) ॥ (१) ॥*॥ एकं **'भ्रमरसूच्यादेः'** **'वर्मा'** इति ख्यातस्य ॥

---

१—**'अन्वीक्षणम्'** **'अन्वेषणम्'** इत्येके पेठुः इति स्वामी ॥ २—'परिचर्यापरिसर्यामृगया' (वा० ३।३।१०१) इत्यादिना निपातनात् **'मृगया'** इति मुकुटः ॥

**तत्र विष्वक्समे निघः ।**

नियतं हन्यते । 'निघो निमितम्' (३।३।८७) इति साधुः ॥ (१) ॥*॥ एकं '**तुल्यारोहपरिणाहवृक्षादेः**' ॥

**उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ ॥ ३६ ॥**

उत्करणम् । निकरणम् । 'कॄ विक्षेपे' । (तु० प० से०) 'कॄ धान्ये' (३।३।३०) इति घञ् ॥ (१) ॥*॥ (२) ॥*॥ द्वे '**धान्यानामूर्ध्वक्षेपणस्य**' ॥

**निगारोद्गारविक्षावोद्ग्राहा निगरणादिषु ।**

निगरणम् । 'गॄ निगरणे' (तु० प० से०) 'उन्योर्ग्रः' (३।३।२९) इति घञ् ॥ (१) ॥*॥ उद्गरणम् । 'गॄ शब्दे' (क्र्या० प० से०) । 'उन्योः–' (३।३।२९) इति घञ् ॥ (१) ॥*॥ विक्षवणम् । 'टु क्षु शब्दे' (अ० प० से०) । 'वौ क्षुश्रुवः' (३।३।२५) इति घञ् ॥ (१) ॥*॥ उद्ग्रहणम् । 'ग्रह उपादाने' (क्र्या० उ० से०) । 'उदि ग्रहः' (३।३।३५) इति घञ् ॥ (१) ॥*॥ आदिना उद्गरणम्, विक्षवणम्, उद्ग्रहणम् ॥*॥ क्रमेणैकैकम् ॥

**आरत्यवरतिविरतय उपरामे**

आर्येयम् ॥ आरमणम् । 'रमु क्रीडायाम्' (भ्वा० आ० से०) । क्तिन् (३।३।९४) ॥ (१) ॥*॥ एवमवविभ्याम् ॥ (२) ॥*॥ (३) ॥*॥ उपरमणम् । घञ् (३।३।१८) ॥ (४) ॥*॥ चत्वारि '**उपरमणस्य**' ॥

**अथास्त्रियां तु निष्ठेवः ॥ ३७ ॥**
**निष्ठ्यूतिर्निष्ठेवनं निष्ठीवनमित्यभिन्नानि ।**

'ष्ठिवु निरसने' (दि० प० से०) घञ् (३।३।१८) । यत्तु—'निष्ठीव्यति'–इति—विगृह्य–'पचाद्यच्'—इत्युक्तं मुकुटेन । तन्न । निष्ठ्यूत्यादिभिरेकत्वासंभवात् ॥ (१) ॥*॥ क्तिन् (३।३।९४) ॥ (२) ॥*॥ ल्युट् (३।३।११५) । 'ष्ठिविषिव्योर्ल्युटि दीर्घो वा' इति स्वामी । पृषोदरादित्वाद्वा दीर्घः–इति मुकुटः ॥ (३) ॥*॥ (४) ॥*॥ चत्वारि '**मुखेन श्लेष्मनिरसनस्य**' ॥

**जवने जूतिः**

'जुः' सौत्रो वेगे । ल्युट् (३।३।११५) ॥ (१) ॥*॥ क्तिन् (३।३।९४) । 'ऊतियूति–' (३।३।९७) इति साधुः । (२) ॥*॥ द्वे '**वेगस्य**' ॥

**सातिस्त्ववसाने स्यात्**

'षोऽन्तकर्मणि' (दि० प० अ०) । क्तिन् (३।३।९४) । 'ऊतियूति–' (३।३।९७) इति साधुः ॥ (१) ॥*॥ ल्युट् (३।३।११५) ॥ (२) ॥*॥ द्वे '**समापनस्य**' ॥

**अथ ज्वरे जूर्तिः ॥ ३८ ॥**

ज्वरणम् । 'ज्वर रोगे' (भ्वा० प० से०) । घञ् (३।३।१८) । संज्ञापूर्वकत्वाद्वृद्ध्यभावः ॥ (१) ॥*॥ क्तिन् (३।३।९४) । 'ज्वरत्वर–' (६।४।२०) इत्यूठ् ॥ (२) ॥*॥ द्वे '**ज्वरणस्य**' ॥

**उदजस्तु पशुप्रेरणम्**

उदजनम् । 'अज गतौ' (भ्वा० प० से०) । 'समुदोरजः पशुषु' (३।३।६९) इत्यप् । 'अघञपोः' इति पर्युदासाद्वीभावो न ॥ (१) ॥*॥ पशूनां प्रेरणम् ॥ (२) ॥*॥ द्वे '**पशुप्रेरणस्य**' ॥

**अकरणिरित्यादयः शापे ।**

अकरणम् । 'आक्रोशे नञ्यनिः' (३।३।११२) ॥ (१) ॥*॥ आदिना **अजननिः, अवग्राहः, निग्राहः** । 'आक्रोशेऽवन्योर्ग्रहः' (३।३।४५) इति घञ् ॥*॥ एकम् '**आक्रोशनस्य**' ॥

**गोत्रान्तेभ्यस्तस्य वृन्दमित्यौपगवकादिकम् ॥ ३९ ॥**

अपप्रत्ययान्तेभ्यः 'तस्य समूहः' (४।२।३७) इत्यर्थे 'गोत्रोक्षोष्ट्र–' (४।२।३९) इति वुञ् ॥ (१) ॥*॥ आदिना 'गार्गकम्' 'दाक्षकम्' ॥

**आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम् ।**

अचेतसां वृन्दम् ॥*॥ अपूपानां समूहः । शष्कुलीनां समूहः । 'अचित्तहस्तिधेनोष्ठक्' (४।२।४७) । आदिना साक्तुकम् ॥

**माणवानां तु माणव्यम्**

माणवानां समूहः । 'ब्राह्मणमाणव–' (४।२।४२) इति यत् ॥

**सहायानां सहायता ॥ ४० ॥**

सहायानां समूहः । 'गजसहायाभ्याम्–' (वा० ४।२।४३) इति तल् ॥

**हल्या हलानाम्**

हलानां समूहः । 'पाशादिभ्यो यः' (४।२।४९) ॥

**ब्राह्मण्यवाडव्ये तु द्विजन्मनाम् ।**

ब्राह्मणानां वाडवानां समूहः । 'ब्राह्मण–' (४।२।४२) इति यत् ॥

**द्वे पर्शुकानां पृष्ठानां पार्श्वं पृष्ठ्यमिति क्रमात् ॥४१॥**

पर्शूनां समूहः । 'पर्श्वा णस्' (वा० ४।२।४३) । 'सिति च' (१।४।१६) इति पदत्वाद्गुत्वाभावः ॥ (१) ॥*॥ पृष्ठानां समूहः । 'पृष्ठाद्यन्' (वा० ४।२।४२) । यज्ञविषय इदं स्मरन्ति ॥

**खलानां खलिनी खल्यापि**

खलानां समूहः । 'इनित्रकट्यचश्च' (४।२।५१) इ-

तीनिः ॥ (१) ॥*॥ 'खलगोरथात्' (४।२।५०) इति यः ॥ (२) ॥*॥

**अथ मानुष्यकं नृणाम् ।**

मनुष्याणां समूहः । 'गोत्रोक्षोष्ट्र–' (४।२।३९) इति वुञ् । 'प्रकृत्याके राजन्य–' (वा० ६।४।१६२) इति य-लोपो न ॥

**ग्रामता जनता धूम्या पाश्या गल्या पृथक्पृथक् ४२**

ग्रामाणां समूहः जनानां समूहः । 'ग्रामजन–' (४।२।४२) इति तल् ॥ (१) ॥*॥ (१) ॥*॥ धूमानां पाशानां गलानां च समूहः । 'पाशादिभ्यो यः' (४।२।४९) ॥ (१) ॥*॥ (१) ॥ गलो बृहत्काशः ॥ (१) ॥*॥

**अपि साहस्रकारीषचार्मणाथर्वणादिकम् ।**

सहस्राणाम्, करीषाणाम्, चर्मणाम्, अथर्वणाम्, च समूहः । 'भिक्षादिभ्योऽण्' (४।२।३८) । आदिना 'वार्मणम्' 'आङ्गारम्' ॥

**इति संकीर्णार्थवर्गः ॥**

संकीर्णार्थत्वं च घञादीनां कर्तृभिन्ने कारके भावे च विधानात्, उणादीनां भावकारकेषु विधानात्, भावे प्रायेण विग्रहो दर्शितः, कारकेषु तु यथासंभवमूह्यः ॥

**इति संकीर्णवर्गविवरणम् ॥**

---

**नानार्थाः केऽपि कान्तादिवर्गेष्वेवात्र कीर्तिताः ।**
**भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते ॥ १ ॥**

अनेकार्थाः केचिदत्रैव वर्गे कान्ता आदयो येषां खान्त-गान्तादीनां तेषु वर्गेषु कथिताः । यथा 'क' शब्दः । ये कान्तादयो येषु पर्यायेषु प्रचुरप्रयोगाः, ते तेषु कथिताः । अपिशब्दादिहापि । यथा 'नाक'–शब्दः । अतः पुनरुक्तिर्नोद्भाव्या, इति भावः ॥

**आकाशे त्रिदिवे नाकः**

न अकं दुःखमत्र ॥

**लोकस्तु भुवने जने ।**

लोक्यते । 'लोकृ दर्शने' ( भ्वा० आ० से० ) । घञ् (३।३।१८) ॥

**पद्ये यशसि च श्लोकः**

श्लोक्यते । 'श्लोकृ संघाते' ( भ्वा० आ० से० ) घञ् (३।३।१८) ॥

**शरे खड्गे च सायकः ॥ २ ॥**

स्यति । 'षोऽन्तकर्मणि' ( दि० प० अ० ) । ण्वुल् (३।१।१३३) । युक् (७।३।३३) ॥

**जम्बुकौ क्रोष्टुवरुणौ**

जमिति । 'जमु अदने' (भ्वा० प० से०) । 'मितद्र्वादयश्च' (वा० ३।२।१८०) इति साधुः । 'जम्बुकः फेरवे नीचे पश्चिमाशापतावपि' (इति मेदिनी) ॥

**पृथुकौ चिपिटार्भकौ ।**

पृथुरेव । 'संज्ञायां कन्' (५।३।७५) । प्रथते । 'प्रथ प्रख्याने' ( भ्वा० आ० अ० ) । 'अर्भकपृथुकपाका वयसि' (५।५३ उणा०) इति साधुर्वा । 'पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत्' (इति मेदिनी) ॥

**आलोकौ दर्शनोद्योतौ**

आलोकनम् । 'लोकृ दर्शने' ( भ्वा० आ० अ० ) । घञ् (३।३।१८) 'आलोकस्तु पुमान्द्योते दर्शने वन्दि भाषणे' (इति मेदिनी) ॥

**भेरीपटहमानकौ ॥ ३ ॥**

अनिति । 'अन प्राणने' ( अ० प० से० ) । ण्वुल् (३।१।१३३) । 'आनकः पटहे भेर्यां मृदङ्गे ध्वनदम्बुदे' ( इति मेदिनी) ॥

**उत्सङ्गचिह्नयोरङ्कः**

अङ्क्यतेऽनेन । 'अकि लक्षणे' (भ्वा० आ० से०) । 'हलश्च' (३।३।१२१) इति घञ् । 'अङ्को रूपकभेदागश्चिह्ने रेखाजिभूषणे । रूपकाशान्तिकोत्सङ्गस्थानेऽङ्कं पापदुःखयोः' (इति मेदिनी) ॥

**कलङ्कोऽङ्कापवादयोः ।**

कलति । 'कल शब्दसंख्यानयोः' ( भ्वा० आ० से० ) । क्विप् (३।२।१७८) । कल् चासावङ्कश्च । 'कलङ्कोऽङ्केऽपवादे च कालायसमलेऽपि च' (इति मेदिनी) ॥

**तक्षको नागवर्धक्योः**

तक्षति । 'तक्षू तनूकरणे' ( भ्वा० प० से० ) । ण्वुल् (३।१।१३३) ॥

**अर्कः स्फटिकसूर्ययोः ॥ ४ ॥**

अर्च्यते । 'अर्क स्तवने' ( चु० प० से० ) 'अर्च पूजायाम्' ( भ्वा० प० से० ) वा । घञ् (३।३।१८) । 'अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ' (इति मेदिनी) ॥

**मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः ।**

कायति । 'कै शब्दे' ( भ्वा० प० अ० ) । कचति (ते) । 'कच दीप्तौ (बन्धने)' ( भ्वा० आ० से ) । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । 'को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे । मयूरेऽग्नौ च पुंसि स्यात् सुखशीर्षजरेषु कम्' (इति मेदिनी) ॥

---

१—इदं तु न प्रकृतोपयोगि । 'अङ्क' शब्दार्थबोधकत्वात् ॥
२—इदमसंगतम् । अर्च्यते, इति विग्रहविरोधात् । निष्ठायां सेट्त्वेन कुत्वाप्राप्तेश्च ।

**स्यात्पुलाकस्तुच्छधान्ये सङ्क्षेपे भक्तसिक्थके ॥ ५ ॥**

पोलनम्। 'पुल महत्त्वे' (भ्वा० प० से०)। संपदादिः (वा० ३।३।१०८)। पुलमकति। 'अक कुटिलायां गतौ' (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१) पोलति वा। 'बलाकादयश्च' (उ० ४।१४) इति साधुः॥

**उलूके करिणः पुच्छमूलोपान्ते च पेचकः।**

पचति। पच्यते वा दुःखेन। 'पचिमच्योरिच्चोपधायाः' (उ० ५।३७) इति वुन्॥

**कमण्डलौ च करकः**

करोति। 'कृञादिभ्यो वुन्' (उ० ५।३४) **'करकस्तु** पुमान्पक्षिविशेषे दाडिमेऽपि च। द्वयोर्मेघोपले न स्त्री करके च कमण्डलौ' (इति मेदिनी)॥

**सुगते च विनायकः ॥ ६ ॥**

विनयति। 'णीञ्' (भ्वा० उ० अ०)। ण्वुल् (३।१।१३३)। **'विनायकस्तु** हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ' (इति मेदिनी)॥

**किष्कुर्हस्ते वितस्तौ च**

कायतेऽनेन। 'कै शब्दे' (भ्वा० प० अ०)। 'मृगय्वादिः' (उ० १।३७)। **'किष्कु**र्द्वयोर्वितस्तौ च सप्रकोष्ठकरेऽपि च' (इति मेदिनी)॥

**शूककीटे च वृश्चिकः।**

वृश्चति। 'ओव्रश्चू छेदने' (तु० प० से०) 'व्रश्चिकृषोः किश्चन्' (उ० २।४०)। **'वृश्चिकस्तु** द्रुणौ राशौ शूककीटौषधीभिदोः' (इति मेदिनी)॥

**प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम् ॥ ७ ॥**

प्रतिगता ई लक्ष्मीर्येन यं वा। 'नद्यृतश्च' (५।४।१५३) इति कप्। **'प्रतीको**ऽवयवेऽपि स्यात्प्रतिकूलविलोमयोः' (इति मेदिनी)॥

**स्याद्भूतिकं तु भूनिम्बे कट्फले भूस्तृणेऽपि च।**

भवति। 'क्तिच्क्तौ च संज्ञायाम्' (३।२।१७४) इति क्तिच्। संज्ञायां कन् (५।३।७५)। 'स्याद्**भूतिकं** तु भूनिम्बे दीप्य-भूस्तृणकत्तृणे' (इति मेदिनी)॥

**ज्योत्स्निकायां च घोषे च कोशातकी**

कोशमतति। 'अत सातत्यगमने' (भ्वा० प० से०) क्वुन् (उ० २।३२)। गौरादिः (४।१।४१)। **'कोशातकः** कचे पुंसि पटोल्यां घोषके स्त्रियाम्' (इति मेदिनी)। **'ज्योत्स्ना** चन्द्रमसो भासि स्फुरज्ज्योतिर्निशि स्मृता' इत्यजयः।(**'ज्यौत्स्नी** पटोलीज्योत्स्नावनिशोः' इति हैमः)।—ज्यौत्स्निका—पटोलिका, घोषो=ऽपामार्गः—इति स्वामी॥

**अथ कट्फले ॥ ८ ॥**

**सिते च खदिरे सोमवल्कः स्यात्**

सोम इव वल्को बलमस्य॥

**अथ सिह्लके।**

**तिलकल्के च पिण्याकः**

पण्यते। 'पण व्यवहारे' (भ्वा० प० से०)। 'पिनाकादयश्च' (उ० ४।१५) इति साधुः। **'पिण्याको**ऽस्त्री तिलकल्के हिङ्गुबाह्लीकसिह्लके' (इति मेदिनी)॥

**बाह्लीकं रामठेऽपि च ॥ ९ ॥**

उह्यते। वहति वा। 'वह प्रापणे' (भ्वा० उ० अ०)। 'अलीकादयश्च' (उ० ४।२५) इति साधुः। **'वाह्लीकं** बाह्लिकं धीरहिङ्गुनोर्नाश्वदेशयोः' इति रभसः॥

**महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः।**

कुशिकस्यापत्यम्। ऋष्यण् (४।१।११४)। **'कौशिको** नकुले व्यालग्राहिगुग्गुलुशक्रयोः। विश्वामित्रे च कोशज्ञोलूकयोरपि **कौशिकः। कौशिकी** चण्डिकायां च नदीभेदे च कौशिकी' (इति विश्वः)॥

**रुक्तापशङ्कास्वातङ्कः**

आतङ्कनम्। 'तकि कृच्छ्रजीवने' (भ्वा० प० से०)। घञ् (३।३।१८) 'हलश्च'। (३।३।१२१) इति करणे वा। **'आतङ्को** रोगसंतापशङ्कासु मुरजध्वनौ' (इति मेदिनी)॥

**स्वल्पेऽपि क्षुल्लकस्त्रिषु ॥ १० ॥**

क्षोदनम्। 'ञिक्ष्विदा (क्षुदिर्) संचूर्णने' (रु० उ० अ०)। संपदादिः (वा० ३।३।१०८)। क्षुदं क्षुधं वा लाति। कुन् (उ० २।३२)। **'क्षुल्लकस्त्रिषु** नीचेऽल्पे' (इति मेदिनी)॥

**जैवातृकः शशाङ्केऽपि**

जीवति। 'जीव प्राणधारणे' (भ्वा० प० से०)। 'आतृकन् वृद्धिश्च' (उ० १।७९)। **'जैवातृकः** पुमान्सोमे दीर्घायुष्कृशयोस्त्रिषु' (इति मेदिनी)॥

**खुरेऽप्यश्वस्य वर्तकः।**

वर्तते। 'वृतु वर्तने' (भ्वा० आ० से०)। ण्वुल् (३।१।१३३)। **'वर्तकस्तु** खुरेऽश्वस्य विहगे **वर्तिका** द्वयोः' इति मेदिनी)॥

**व्याघ्रेऽपि पुण्डरीको ना**

पुण्डयति। 'पुडि भूषायाम्' (भ्वा० प० से०)। 'फर्फरीकादयश्च' (उ० ४।२०) इति साधुः। **'पुण्डरीकः** सिताम्भोजे सितच्छत्रे च भेषजे। पुंसि व्याघ्रोऽग्निदिग्नागे कोशकारान्तरेऽपि च' (इति मेदिनी)॥

**यवान्यामपि दीपकः ॥ ११ ॥**

दीपयति। 'दीपी दीप्तौ' (दि० आ० से०)। ण्यन्तः।

ण्वुल् (३।२।१३३) 'दीपकं वागलंकारे वाच्यवद्दीप्तिकारके । दीपकश्चाजमोदायां यवानीबर्हिचूडयोः' (इति मेदिनी) ॥

**शालावृकाः कपिक्रोष्टुश्वानः**

शालां वृणोति । 'वृञ् वरणे' (स्वा० उ० से०) 'सृवृभूशुषिमुषिभ्यः कक्' (उ० ३।४१) ।—पृषोदरादिः—इति मुकुटश्चिन्त्यः ॥

**स्वर्णेऽपि गैरिकम् ।**

गिरौ भवम् अध्यात्मादित्वाट्ठक् (वा० ४।३।६०) । 'गैरिकं धातुरुक्मयोः' (इति मेदिनी) ॥

**पीडार्थेऽपि व्यलीकं स्यात्**

अलति । 'अल भूषणादौ' (भ्वा० प० से०) । 'अलीकादयश्च' (उ० ४।२५) इति साधुः । विगतमलीकम् । 'व्यलीको नागरे स्मृतः । व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने' इति विश्वः ॥

**अलीकं त्वप्रियेऽनृते ॥ १२ ॥**

'अलीकमप्रियेऽपि स्याद्दिव्य (स्याद्दोष्य) सत्ये नपुंसकम्' (इति मेदिनी) ॥

**शीलान्वयावनूके**

अनूच्यन्ति । 'उच समवाये' (दि० प० से०) । 'इगुपध–' (३।१।१३५) इति कः । न्यङ्क्वादिः (७।३।५३) 'अनूकं तु कुले शीले पुंसि स्याद्गतजन्मनि' (इति मेदिनी) । यद्वा अनु कायति । 'कै शब्दे' (भ्वा० प० अ०) । 'आतश्चो–' (३।१।१३६) इति कः । 'अन्येषामपि–' (६।३।१३७) इति दीर्घः ॥

**द्वे शल्के शकलवल्कले ।**

शलति । 'शल चलने' (भ्वा० प० से०) । 'इण्भीका–' (उ० ३।४३) इति कन् ॥

**साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले ॥ १३ ॥**
**दीनारेऽपि च निष्कोऽस्त्री**

निश्चयेन कायति । 'आतश्चोप–' (३।१।१३६) इति कः । 'इदुदुपध–' (८।३।४१) इति षः । यद्वा निषीदन्ति । 'षद' । 'नौ सदेर्डिच्च' (उ० ३।४५) इति कन् । 'सदिरप्रतेः' (८।३।६६) । इति षः । 'निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः । वक्षोलंकरणे हेममात्रे हेमपदेऽपि च' (इति मेदिनी) । दीनारः सांव्यवहारिकं रूपकम् ॥

**कल्कोऽस्त्री समलैनसोः ।**

**दम्भेऽपि**

कल्यते । 'कल शब्दसंख्यानयोः' (भ्वा० आ० से०) 'कृदाधारा–' (उ० ३।४०) इति कः । 'त्रिषु पापाशये कल्कोऽस्त्री विट्किट्टेभदन्तयोः' '(कल्कः पापाशये तापे दम्भे विट्किट्टयोरिति)' इति विश्वः । 'कल्कोऽस्त्री घृततैलादिशेषे दम्भे विभीतके ।' ('विट्किट्टयोश्च पापे च त्रिषु पापाशये पुनः)' (इति मेदिनी) ॥

**अथ पिनाकोऽस्त्री शूलशंकरधन्वनोः ॥ १४ ॥**

पनाय्यते । 'पन स्तुतौ' (भ्वा० प० से०) । 'पिनाकादयश्च' (उ० ४।१५) इति साधुः । 'पिनाकेऽस्त्री रुद्रचापे पांशुवर्षे त्रिशूलयोः' (इति मेदिनी) ॥

**धेनुका तु करेण्वां च**

धेनुरेव । स्वार्थे कन् (ज्ञापि० ५।४।५) । 'स्याद्धेनुका करिण्यां च धेनावपि ना तु दानवविशेषे' (इति मेदिनी) ॥

**मेघजाले च कालिका ।**

कालो वर्णोऽस्त्यस्याः । ठन् (५।१।११५) । यद्वा काल्येव । स्वार्थे कन् (ज्ञापि० ५।४।५) । 'धूसरीयोगिनीभेदोमानवाब्देषु कालिका । क्रमदेयवस्तुमूल्ये कार्ष्ण्ये काक्यां घनेषु च' इति रभसः । 'कालिका चण्डिकाभेदे कार्ष्ण्ये वृश्चिकपत्त्रयोः । क्रमदेयवस्तुमूल्ये धूसरीनवमेघयोः । पटोलशाखारोमालीमांसीकाकीशिवासु च । मेघावलौ च' (इति मेदिनी) ॥

**कारिका यातनावृत्त्योः**

करणम् 'धात्वर्थनिर्देशे ण्वुल्' (वा० ३।२।१०८) । 'कारिका नटयोषिति । कृतौ विवरणश्लोके शिल्पयातनयोरपि । नपुंसकं तु कर्मादौ कारकं कर्तरि त्रिषु' (इति मेदिनी) । 'वृत्त्योः' इति पाठे विवरणश्लोके ॥

**कर्णिका कर्णभूषणे ॥ १५ ॥**
**करिहस्ताङ्गुलौ पद्मबीजकोश्याम्**

कर्णस्यालंकारः 'कर्णललाटात्–' (४।३।६५) इति कन् । 'कर्णिका करिहस्ताग्रे करमध्याङ्गुलावपि । क्रमुकादिच्छटांशेऽब्जवराटे कर्णभूषणे । कर्णिका कथ्यतेऽत्यन्तसूक्ष्मवस्त्वग्निमन्थयोः' (इति मेदिनी) ॥

**त्रिषूत्तरे ।**

खान्तेभ्यः प्राक्[1] ॥

**वृन्दारकौ रूपिमुख्यौ**

प्रशस्तं वृन्दमस्य । 'शृङ्गवृन्दाभ्यामारकन्' (वा० ५।२।१२२) । 'वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु' (इति मेदिनी) ॥

**एके मुख्यान्यकेवलाः ॥ १६ ॥**

एति ॥ 'इण् गतौ' (अ० प० अ०) । 'उ० इण्भीका–' (३।४३) इति कन् । 'एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु' (इति मेदिनी) ॥

**स्याद्दाम्भिकः कौक्कुटिको यश्चादूरेरितेक्षणः ।**

कुक्कुटीं पश्यति । 'संज्ञायां ललाटकुक्कुट्यौ पश्यति' (४।४।४६) इति ठक् ॥

---

१—इति प्रारभ्य कर्णिकाशब्दार्थबोधकत्वान्न प्रकृतोपयोगि ।

**लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः ॥ १७ ॥**

ललाटं पश्यति । '**लालाटिकः** प्रभोर्भालदर्शिन्याश्लेषणान्तरे । कार्याक्षमे' (इति मेदिनी) । 'भावदर्शी' इति वा पाठः । '**लालाटिकः** सदालस्यप्रभुभावनिदर्शिनि' इत्यजयः ॥

**इति कान्तवर्गः ॥**

**मयूखस्त्विट्करज्वालासु**

मिमीते । 'माङ् माने' (जु० आ० अ०) । 'माङ ऊखो मय च' (उ० ५।२५) । '**मयूखः** किरणेऽपि च । ज्वालायामपि शोभायाम्' (इति मेदिनी) ॥

**अलिबाणौ शिलीमुखौ ।**

शिली शल्यं मुखे यस्य ॥

**शङ्खो निधौ ललाटास्थ्नि कम्बौ न स्त्री**

शाम्यत्यनेन । 'शमु उपशमे' (दि० प० से०) । 'शमेः खः' (उ० १।१०२) । '**शङ्खः** कम्बौ न योषिन्ना भालास्थिन निधिभिन्नखे' (इति मेदिनी) ॥

**इन्द्रियेऽपि खम् ॥ १८ ॥**

खनति । 'खनु अवदारणे' (भ्वा० उ० से०) । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) । 'खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि । संवेदने देवलोके शर्मण्यपि नपुंसकम्' (इति मेदिनी) ॥

**घृणिज्वाले अपि शिखे**

शेते । 'शीङो ह्रस्वश्च' (५।२४) । '**शिखा** शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च' (इति मेदिनी) ॥

**इति खान्ताः ॥**

**शैलवृक्षौ नगावगौ ।**

न गच्छति । 'गम्लृ गतौ' (भ्वा० प० अ०) । 'अन्येष्वपि–' (वा० ३।२।४८) इति 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति वा डः । 'नगोऽप्राणिष्व–' (६।३।७७) इति नञ् वा प्रकृत्या । '**नगो** महीरुहे शैले भास्करे पवनाशने' । ('**अगः** स्यान्नगवत्तरौ शैले सरीसृपे भानौ' इति हैमः) ॥

**आशुगौ वायुविशिखौ**

आशु गच्छति । पूर्ववत् (वा० ३।२।४८) ॥

**शरार्कविहगाः खगाः ॥ १९ ॥**

खे गच्छति । पूर्ववत् (वा० ३।२।४८) । '**खगः** सूर्ये ग्रहे देवे मार्गणे च विहंगमे' (इति मेदिनी) ॥

**पतङ्गौ पक्षिसूर्यौ च**

पतति । 'पतॢ गतौ' (भ्वा० प० से०) । 'पतेरङ्गच् पक्षिणि' (उ० १।११९) । '**पतङ्गः** शलभे शालिप्रभेदे पक्षिसूर्ययोः । क्लीबं सूते' (इति मेदिनी) ॥

**पूगः क्रमुकवृन्दयोः ।**

पुनाति । 'पूञ् पवने' (क्र्या० उ० से०) । 'छापूखडिभ्यः कित्' (उ० १।१२४) इति गन् ॥

**पशवोऽपि मृगाः**

मृग्यते । 'मृग अन्वेषणे' (चु० आ० से०) घञ् (३।३।१९) । '**मृगः** पशौ कुरङ्गे च करिनक्षत्रभेदयोः । अन्वेषणायां याच्ञायां **मृगी** तु वनितान्तरे' (इति मेदिनी) ॥

**वेगः प्रवाहजवयोरपि ॥ २० ॥**

वेजनम् । 'ओविजी भयचलनयोः' (तु० आ० से०) । घञ् (३।३।१८) । ('**वेगो** रयप्रवाहयोः । रेतःकिंपाकयोश्चापि' इति हैमः) ॥

**परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि ।**

परागच्छति । डः (वा० ३।२।४८) । '**परागः** कौसुमे रेणौ धूलिस्नानीययोरपि । गिरिप्रभेदे विख्यातावुपरागे च चन्दने' (इति मेदिनी) ॥

**गजेऽपि नागमातङ्गौ**

न अगः । '**नागं** नपुंसकं रङ्गे सीसके करणान्तरे । **नागः** पन्नगमातङ्गक्रूराचारिषु तोयदे । नागकेसरपुंनागनागदन्तकमस्तके । देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थितः' (इति मेदिनी) ॥ (१) ॥*॥ मतङ्गस्यायम् । 'तस्येदम्' (४।३।१२०) इत्यण् । ('**मातङ्गः** श्वपचे गजे' इति मेदिनी) ॥ (२) ॥*॥

**अपाङ्गस्तिलकेऽपि च ॥ २१ ॥**

अपगतोऽङ्गात् । 'निरादयः–' (वा० २।२।१८) इति समासः । '**अपाङ्गो** नयनस्यान्ते स्याच्चित्रकप्रधानयोः' इत्यजयः । '**अपाङ्ग**स्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च' (इति मेदिनी) ॥

**सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ।**

सृज्यते । 'सृज विसर्गे' (दि० आ० अ०) । घञ् (३।३।१९) । '**सर्गस्तु** निश्चयाध्यायमोहोत्साहात्मसृष्टिषु' (इति मेदिनी) । निर्मोक्षस्त्यागः, मोक्षाभावो वा ॥

**योगः संनहनोपायध्यानसंगतियुक्तिषु ॥ २२ ॥**

योजनम् । 'युज समाधौ' (दि० आ० अ०) । 'युजिर् योगे' (रु० उ० अ०) । घञ् (३।३।१८) । '**योगो**ऽपूर्वार्थसंप्राप्तौ संगतिध्यानयुक्तिषु । वपुःस्थैर्यप्रयोगे च विष्कम्भादिषु भेषजे । विश्रब्धघातके द्रव्योपायसंनहनेष्वपि । कार्मणेऽपि च' (इति मेदिनी) । संनहनं कवचम् । उपायः सामादिः ॥

**भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ।**

भोजनम् । 'भुज पालनाभ्यवहारयोः' (रु० प० अ०) । 'भुजो कौटिल्ये' (तु० प० से०) घञ् (३।२।१८) । '**भोगः**

सुखे धने पुंसि (चाहेः) शरीरफणयोर्मतः । पालनेऽभ्यवहारे च योषिदादिभृतावपि' (इति मेदिनी) । भृतिर्भाडिः । आदिना हस्त्यश्वादिकर्मकाराणां च भृतिः । 'पालनेऽभ्यवहारे च निर्वेशे पण्ययोषिताम्' इति विश्वः ॥

**चातके हरिणे पुंसि सारङ्गः शबले त्रिषु ॥ २३ ॥**

सारमङ्गं यस्य । शकन्ध्वादिः (वा० ६।१।९४) । सारं गच्छति, इति वा । खच् (वा० ३।२।३८) । सहारङ्गेण, इति वा । '**सारङ्गः** पुंसि हरिणे चातके च मतङ्गजे । शबले त्रिषु' (इति मेदिनी) ॥

**कपौ च प्लवगः**

प्लवेन गच्छति । डः (वा० ३।२।४८) । '**प्लवगो** वानरे भेके सारथौ चोष्णदीधितेः' (इति मेदिनी) ॥

**शापे त्वभिषङ्गः पराभवे ।**

अभिषञ्जनम् । 'षञ्ज संगे' (भ्वा० प० अ०) । 'उपसर्गात्–' (८।३।६५) इति षः । '**अभिषङ्गः** पुंलिङ्गः पराभवाक्रोशशपथेषु' (इति मेदिनी) ॥

**यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु ॥ २४ ॥**

योजनम् । युज्यते वा । 'युजिर् योगे' (रु० उ० अ०) । घञ् (३।३।१८,१९) । संज्ञापूर्वकत्वान्न गुणः । 'रथयुग–' (४।४।७६) इति निपातनाद्वा । '**युगो** रथे हलाद्यङ्गे न द्वयोस्तु कृतादिषु । युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च' (इति मेदिनी) ॥

**स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले ।**
**लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः**

गच्छति । गम्यते वा, अनेन वा । 'गमेर्डोः' (उ० २। ६७) । 'गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्यादिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु' इति केशवः । 'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च' (इति मेदिनी) ॥

**लिङ्गं चिह्नशेफसोः ॥ २५ ॥**

लिङ्ग्यतेऽनेन । 'लिगि गतौ' (भ्वा० प० से०) । 'हलश्च' (३।३।१२१) इति घञ् । '**लिङ्गं** चिह्नेऽनुमाने च सांख्योक्तप्रकृतावपि । शिवमूर्तिविशेषे च मेहनेऽपि नपुंसकम्' (इति मेदिनी) ॥

**शृङ्गं प्राधान्यसान्वोश्च**

शृणाति । 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'शृणातेर्ह्रस्वश्च' (उ० १।१२६) इति गन् नुट् च । '**शृङ्गं** प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ **शृङ्गः** स्यात्कूर्चशीर्षके । स्त्री विषायां स्वर्णमीनभेदयोर्ऋषभौषधौ' (इति मेदिनी) ॥



**वराङ्गं मूर्धगुह्ययोः ।**

वरं च तदङ्गं च । '**वराङ्गं** योनिमातङ्गमस्तकेषु गुडत्वचि' (इति मेदिनी) ॥

**भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ॥ २६ ॥**

भज्यते । 'भज सेवायाम्' (भ्वा० उ० से०) 'पुंसि–' (३।३।११८) इति घः । 'खनो घ च' (३।३।१२५) इति घो वा । '**भगं** श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु । माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवौ' (इति मेदिनी) ॥

**इति गान्ताः ॥**

**परिघः परिघातेऽस्त्रेऽपि**

परिहननम् । 'परिहन्यतेऽनेन वा' । 'हन हिंसागत्योः' (अ० प० अ०) । 'परौ घः' (३।३।८४) इत्यप् घादेशश्च । 'परिघो योगभेदेऽस्त्रविशेषेऽर्गलघातयोः' (इति मेदिनी) ॥

'परेश्च घाङ्कयोः' (८।२।२२) इति लत्वमपि । ('**पलिघः** काचकलशे घटे प्राकारगोपुरे' इति हैममेदिन्यौ) ॥

**ओघो वृन्देऽम्भसां रये ।**

वहति 'वह प्रापणे' (भ्वा० उ० अ०) । पचाद्यच् (३।१।१३४) । न्यङ्क्वादित्वात् (७।३।५३) साधुः । '**ओघो** वेगे जलस्य च । वृन्दे परम्परायां च द्रुतनृत्योपदेशयोः' (इति मेदिनी) ॥

**मूल्ये पूजाविधावर्घः**

अर्घ्यतेऽनेन । 'अर्ह पूजायाम्' (भ्वा० प० से०) । 'हलश्च' (३।३।१२१) इति घञ् । न्यङ्क्वादिः (७।३।५३) । 'अर्धिर्धात्वन्तरं वा' ॥

**अंहोदुःखव्यसनेष्वघम् ॥ २७ ॥**

अघ्यतेऽनेन । 'अघि गत्याक्षेपे' (भ्वा० आ० से०) । घञ् (३।३।१९,१२१) 'अनित्यमागमशासनम्' इति नुम्न ॥

**त्रिष्विष्टेऽल्पे लघुः**

लङ्घ्यते । 'लघि गतौ' (भ्वा० आ० से०) । 'लङ्घिबंह्योर्नलोपश्च' (उ० १२९) इत्युः । 'कृष्णागुरुणि शीघ्रे च **लघु** क्लीबेऽगुरौ त्रिषु । निःसारे च मनोज्ञे च पृक्कायां च लघुः स्त्रियाम्' इति रभसः । '**लघुनि** गुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबम् । शीघ्रे कृष्णागुरुणि च पृक्कानामौषधौ तु स्त्री' (इति मेदिनी) ॥

**इति घान्ताः ॥**

**काचाः शिक्यमृद्भेददृग्रुजः ।**

कच्यते अनेन वा 'कच बन्धे' (भ्वा० आ० से०) । घञ् (३।३।१९,१२१) 'न क्वादेः' (७।३।५९) इति कुत्वं **न**। णिजन्तात् पचाद्यच् (३।१।१३४) वा । '**काचः** शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे' (इति मेदिनी) ॥

**विपर्यासे विस्तरे च प्रपञ्चः**

प्रपञ्चयते । 'पचि व्यक्तीकरणे' (भ्वा० आ० से०) । पचाद्यच् (३।२।१३४) । **'प्रपञ्चः** संचयेऽपि स्याद्विस्तरे च प्रतारणे' (इति मेदिनी) ॥

**पावके शुचिः ॥ २८ ॥**

**मास्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु ।**

शोचत्यनेन । 'शुच शोके' (भ्वा० प० से०) । 'इगुपधात् कित्' (उ० ४।१२०) इतीन् । **'शुचिर्ग्रीष्माग्निश्रृङ्गारेष्वाषाढे** शुद्धमन्त्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु' (इति मेदिनी) । उपधामुत्कोचमतिक्रान्तेऽमात्ये ॥

**अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम्२९**

रोचते । 'रुच दीप्तावभिप्रीतौ च' (भ्वा० आ० से०) । 'इगुपधात्कित्' (उ० ४।१२०) इतीन् । **'रुचिः** स्त्री दीप्तिशोभायामभिष्वङ्गाभिलाषयोः' (इति मेदिनी) ॥

**इति चान्ताः ॥**

**केकिताक्ष्यावहिभुजौ**

अहिं भुङ्क्ते । 'भुज पालनाभ्यवहारयोः' (रु० उ० अ०) । क्विप् (३।२।७८) ॥

**दन्तविप्राण्डजा द्विजाः ।**

द्विर्जायते । 'अन्येष्वपि–' (३।२।१०१) इति डः । **'द्विजः** स्याद्ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु ना । **द्विजा** भार्गी हरेणौ च' (इति मेदिनी) ॥

**अजा विष्णुहरच्छागाः**

न जायते । पूर्ववत् (३।२।१०२) डः । अजति वा । 'बहुलं तणि' (वा० २।४।५४) इति जी न । पचाद्यच् । (३।१।१३४) । **'अजो** हरौ हरे कामे विधौ छागे रघोः सुते' इति विश्वः ॥

**गोष्ठाध्वनिवहा व्रजाः ॥ ३० ॥**

व्रजति । अस्मिन् वा । 'व्रज गतौ (भ्वा० प० से०) । पचाद्यच् । 'गोचरसंचर–' (३।३।११९) इति वा साधुः ॥

**धर्मराजौ जिनयमौ**

धर्मेण राजति । अच् (३।१।१३४) । धर्मस्य राजा । धर्मश्चासौ राजा च इति वा । 'राजाहःसखिभ्यष्टच्' (५।४।९१) । **'धर्मराजो** यमे बुद्धे युधिष्ठिरनृपे पुमान्' (इति मेदिनी) ॥

**कुञ्जो दन्तेऽपि न स्त्रियाम् ।**

कौ जायते । 'सप्तम्यां जनेर्डः' (३।२।९७) । पृषोदरादिः (६।३।१०९) । यत्तु—कुञ्जन्त्यत्र । 'कुजि अव्यक्ते शब्दे' । 'हलश्च' (३।३।१२१) । इति घञ्—इत्याह । तन्न । 'कुजि' धातोरप्रसिद्धत्वात् । 'गुजि' धातोर्दर्शनात् । **'कुञ्जोऽस्त्रियां** निकुञ्जेऽपि हनौ दन्तेऽपि दन्तिनाम्' (इति मेदिनी) ॥

**बलजे क्षेत्रपूर्द्वारे बलजा वल्गुदर्शना ॥ ३१ ॥**

बले जातम् । 'सप्तम्यां जनेर्डः' (३।२।९७) । **'बलजं** गोपुरे क्षेत्रे सस्यसंगरयोरपि । बलजा वरयोषायां यूथ्याम्' (इति मेदिनी) ॥

**समक्ष्मांशे रणेऽप्याजिः**

अजन्त्यस्याम् । 'अज गतौ' (भ्वा० प० से०) । 'अज्यतिभ्यां च' (उ० ४।१३१) इतीण् । 'अथाजिः स्त्री समभूमौ च सङ्ग्रामे' (इति मेदिनी) ॥

**प्रजा स्यात्संततौ जने ।**

प्रजायते । 'उपसर्गे च संज्ञायाम्' (३।२।९९) इति जनेर्डः ॥

**अब्जौ शङ्खशशाङ्कौ च**

अप्सु जायते । 'सप्तम्याम्–' (३।२।९७) इति डः । **'अब्जोऽस्त्री** शङ्खे, ना निचुले धन्वन्तरौ च हिमकिरणे । क्लीबं पद्मे' (इति मेदिनी) ॥

**स्वके नित्ये निजं त्रिषु ॥ ३२ ॥**

नि जायते । 'उपसर्गे च–' (३।२।९९) इति डः ॥

**इति जान्ताः ।**

**पुंस्यात्मनि प्रवीणे च क्षेत्रज्ञो वाच्यलिङ्गकः ।**

क्षेत्रं जानाति । 'ज्ञा अवबोधने' (क्र्या० प० अ०) । 'आतोऽनुप–' (३।२।३) इति कः ॥

**संज्ञा स्याच्चेतना नामहस्ताद्यैश्चार्थसूचना ॥ ३३ ॥**

संज्ञानम् । 'आतश्चोप–' (३।३।१०६) इत्यङ् । **'संज्ञा** नामनि गायत्र्यां चेतनारवियोषितोः । अर्थस्य सूचनायां च हस्ताद्यैरपि योषिति' (इति मेदिनी) ॥

**इति ञान्ताः ॥**

**काकेभगण्डौ करटौ**

'क' इति रटति । 'रट शब्दे' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । **'करटो** गजगण्डे स्यात्कुसुम्भे निन्द्यजीवने । एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे । **करटो** वाद्यभेदे' (इति मेदिनी) ॥

**गजगण्डकटी कटौ ।**

कटति । 'कटे वर्षावरणयोः' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । **'कटः** श्रोणौ क्रियाकारे कलिञ्जेऽतिशये शवे । समये गजगण्डेऽपि पिप्पल्यां च **कटी** मता' इति विश्वः । **'कटः** श्रोणौ द्वयोः पुंसि कलिञ्जेऽतिशये शवे' (इति मेदिनी) ॥

**शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे ॥ ३४ ॥**

शिपिषु रश्मिषु पशुषु वा विष्टः । **'शिपिविष्टः** शिवः शौरिर्दुश्चर्मा खलतिस्तथा' ॥

**देवशिल्पिन्यपि त्वष्टा**

त्वक्षति । त्वक्ष्यते च । 'त्वक्षू तनूकरणे' (भ्वा० प० से०)। 'नप्तृनेष्टृ-' (उ० २।९५) इति साधुः। '**त्वष्टा** पुमान्देवशिल्पितक्ष्णोरादित्यभिद्यपि' (इति मेदिनी) ॥

**दिष्टं दैवेऽपि न द्वयोः ।**

दिश्यते स्म । 'दिश अतिसर्जने' (तु० उ० अ०) । क्तः (३।२।१०२) '**दिष्टं** दैवे पुमान्काले' (इति मेदिनी) ॥

**रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः ॥ ३५ ॥**

कटति । 'कटे' (भ्वा० प० से०)। मृगय्वादित्वात् (उ० १।३५) उः । '**कटुः** स्त्री कटुरोहिण्यां लताराजिकयोरपि । नपुंसकमकार्ये स्यात्पुंलिङ्गो रसमात्रके । त्रिषु तद्वद्रसुगन्ध्योश्च मत्सरेऽपि खरेऽपि च' (इति मेदिनी) ॥

**रिष्टं क्षेमाशुभाभावेषु**

रेषणम् । रिष्यते स्म, ऋषति इति वा । 'रिष हिंसायाम्' ( दि० प० से० ) । क्तः (३।३।११४,३।२।१०२)। '**रिष्टं** स्यादशुभेनसोः' इत्यजयः । 'रिष्टं क्षेमाशुभाभावे पुंसि खड्गे च फेनिले' (इति मेदिनी) ॥

**अरिष्टे तु शुभाशुभे ।**

न रिष्टम् । '**अरिष्टो** लशुने निम्बे फेनिले काककङ्कयोः । **अरिष्टमशुभे** तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च' (इति मेदिनी) ॥

**मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ॥ ३६ ॥**
**अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ।**

माया विपरीतदर्शनम् । यन्त्रं मृगबन्धनविशेषः । सीराङ्गे फालाधारे । कूट्यते । 'कूट आप्रदाने' (चु० आ० से०)। पचाद्यच् (३।१।१३४) ॥

**सूक्ष्मैलायां त्रुटिः स्त्री स्यात्कालेऽल्पे संशयेपि सा ॥ ३७ ॥**

त्रुट्यते । अनेन वा । 'त्रुट छेदने' (चु० आ० से०)। 'इगुपधात्-' (उ० ४।१२०) इतीन् । 'त्रुटिः स्त्री संशये स्वल्पे सूक्ष्मैलाकालमानयोः' (इति मेदिनी) ॥

**अत्युत्कर्षाश्रयः कोट्यः**

कोटयते । 'कूट प्रतापने' (चु० आ० से०) । 'अच इः' (उ० ४।१३९)। '**कोटिः** स्त्री धनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः' (इति मेदिनी) ॥

**मूले लग्नकचे जटा ।**

जटति । 'जट संघाते' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४)। '**जटा** लग्नकचे मूले मांस्यां लक्षे पुनर्जटी' (इति मेदिनी) ॥

**व्युष्टिः फले समृद्धौ च**

व्युच्छनम् । व्युच्छयते वा । 'उच्छी विवासे' (भ्वा० प० से०)। क्तिन् (३।३।९४) ॥

**दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ॥ ३८ ॥**

दर्शनम् । 'दृशिर् प्रेक्षणे' (भ्वा० प० अ०) । क्तिन् (३।३।९४) । करणे वा ॥

**इष्टिर्यागेच्छयोः**

एषणम् । 'इषु इच्छायाम्' (तु० प० से०)। क्तिन् (३।३।९३) इज्यतेऽनया वा, इति वा । यजेः क्तिन् (३।३।९३) ॥ 'इष्टिर्मताभिलाषेऽपि संग्रहश्लोकयागयोः' (इति मेदिनी) ॥

**सृष्टिर्निश्चिते बहुनि[1] त्रिषु ।**

सर्जनम् । 'सृज विसर्गे' (दि० आ० अ०) । क्तिन् (३।३।९४)। 'अकारान्तपाठे भावे क्तः' (३।३।११४)। 'मुक्तनिर्मितयोः प्राज्ये त्रिषु **सृष्टं** तु निश्चिते' इति रुद्रः ॥

**कष्टे तु कृच्छ्रगहने**

कष्यते स्म । 'कष हिंसायाम्' (भ्वा० प० से०)। क्तः । (३।२।१०२)। 'कृच्छ्रगहनयोः कषः' (७।२।२२) इति नेट्

**दक्षामन्दागदेषु तु ॥ ३९ ॥**
**पटुः**

पाटयति । 'पट गतौ' (भ्वा० प० से०) ण्यन्तः । 'फलिपाटि-' (उ० १।१८) इत्युः पटादेशश्च । '**पटुस्तीक्ष्णे** स्फुटे दक्षे निष्ठुरे निर्दयेऽपि च' इति रुद्रः । '**पटुर्दक्षे** च नीरोगे चतुरेऽप्यभिधेयवत् । पटोले तु पुमान् क्लीबे छत्रालवणयोरपि' (इति मेदिनी) ॥

**द्वौ[2] वाच्यलिङ्गौ च**

**इति टान्ताः ॥**

**नीलकण्ठः शिवेऽपि च ।**

नीलः कण्ठो यस्य । '**कालकण्ठस्तु** दात्यूहे कलविङ्के च खञ्जने । सितापाङ्गे हरे पीतसारके **नीलकण्ठवत्**' इति विश्वः॥

**पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा ॥ ४० ॥**

कुष्यते । 'कुष निष्कर्षे' (क्र्या० प० से०)। 'उषिकुषि-' (उ० २।४) इति थन् । '**कोष्ठः** कुसूले चात्मीये मध्ये कुक्षेर्गृहस्य च' (इति मेदिनी) ॥

**निष्ठा निष्पत्तिनाशान्ताः**

निष्ठानम् । 'ष्ठा गतिनिवृत्तौ' (भ्वा० प० अ०)। 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् । '**निष्ठा** निष्पत्तिनाशान्तयाच्ञानिर्वहणेषु च' (इति मेदिनी) ॥

---

१—बहुनि प्रचुरे—इति मुकुटः । २—द्वौ कष्टपटू—इति स्वामिपीयूषौ ॥

**काष्ठोत्कर्षे स्थितौ दिशि ।**

काशते । 'काशृ दीप्तौ' (भ्वा० आ० से०) । 'हनिकुषि–' (उ० २।२) इति क्थन् । '**काष्ठा** दारुहरिद्रायां कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम्' (इति मेदिनी) ॥

**त्रिषु ज्येष्ठोऽतिशस्तेऽपि**

अतिशयेन प्रशस्तः । 'अतिशायने तमबिष्ठनौ' (५।३।५५) । 'ज्य च' (५।३।६१) इति प्रशस्यस्य ज्यादेशः । '**ज्येष्ठः** श्रेष्ठे च वृद्धे च त्रिषु, मासान्तरे पुमान् । **ज्येष्ठा** तु गृहगोधाख्यजन्तुनक्षत्रभेदयोः' (इति मेदिनी) ॥

**कनिष्ठोऽतियुवाल्पयोः ॥ ४१ ॥**

अतिशयेन युवा, अल्पो वा । इष्ठन् (५।३।५५) । 'युवाल्पयोः कनन्यतरस्याम्' (५।३।६४) । '**कनिष्ठो**ऽतियुवाल्पानुजे स्त्री दुर्बलाङ्गुलौ' (इति मेदिनी) ॥

**इति ठान्ताः ॥**

**दण्डोऽस्त्री लगुडेऽपि स्यात्**

दण्ड्यति । अनेन वा । 'दण्ड निपातने' (चु० उ० से०) । पचाद्यच् (३।१।१३४) 'पुंसि–' (३।४।११८) इति घो वा । दमेः (दि० प० से०) डः (उ० १।११४) वा । '**दण्डो** यमे मानभेदे लगुडे दमसैन्ययोः । व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि । अभिमाने ग्रहे **दण्ड**श्चण्डांशोः पारिपार्श्विके' इति विश्वः ॥

**गुडो गोलेक्षुपाकयोः ।**

गुडति । 'गुड वेष्टने' (तु० प० से०) । 'इगुपध–' (३।१।१३५) इति कः । '**गुडः** स्याद्गोलके हस्तिसंनाहेक्षुविकारयोः । **गुडा** स्नुह्यां च कथिता गुडिकायां च योषिति' (इति मेदिनी) ॥

**सर्पमांसात्पशू व्याडौ**

व्याडति । 'अड उद्यमे' (भ्वा० प० से०) । पचाद्यच् (३।१।१३५) । '**व्याडो** व्याघ्रे खले सर्पे' इति रभसः ॥

**गोभूवाचस्त्विडा इला ॥ ४२ ॥**

इलति । इल 'उत्पेक्षे' (तु० प० से०) 'इगुपध–' (३।१।१३५) इति कः । ('**इला** कलत्रे सौम्यस्य धरित्र्यां गवि वाचि च' इति मेदिनी) ॥ (२) ॥*॥ डलयोरेकत्वस्मरणादिडा । '**इडा** तु बुधयोषिति । सौरभेय्यां च वचने वसुमत्यामपि स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥

**क्ष्वेडा वंशशलाकापि**

क्ष्वेलति । 'क्ष्वेलृ चलने' (भ्वा० प० से०) । पचाद्यच् (३।१।१३५) । डलयोरेकत्वम् । '**क्ष्वेडो** ध्वनौ कर्णामये विषे । **क्ष्वेडा** वंशशलाकायां सिंहनादे च योषिति । लोहितार्कपर्णफले घोषपुष्पे नपुंसकम् । दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्तितः' (इति मेदिनी) ॥

**नाडी कालेऽपि षट्क्षणे ।**

नालयति । 'णल गन्धे' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) डलयोरेकत्वम् । गौरादिः (४।१।४१) । '**नाडी** नाले व्रणान्तरे । शिरायां गण्डदूर्वायां चर्यायां कुहनस्य च । तथा षट्क्षणकालेऽपि' (इति मेदिनी) ॥

**काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ॥ ४३ ॥**

कलति । 'कनी दीप्तौ' (भ्वा० प० से०) । अमन्ताड्डः (उ० १।११४) । 'क्तादिभ्यः कित्' (उ० १।११५) । 'अनुनासिकस्य–' (६।४।१५) इति दीर्घः । '**काण्डं** चावसरे बाणे नाले स्कन्धे च शाखिनाम् । स्तम्बे रहसि वर्गे च' इति धरणिः । ('**काण्डः** स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः । कुत्सिते वृक्षभिन्नाडीवृन्दे रहसि न स्त्रियाम्' (इति मेदिनी) ॥

**स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने ।**

भण्यते । 'भण शब्दे' (भ्वा० प० से०) । पूर्ववत् पृषोदरादिः (६।३।१०९) । '**भाण्डं** भूषणमात्रे स्यात्' इति धरणिः । '**भाण्डं** पात्रे वणिग्मूलधने भूषाश्वभूषयोः' (इति मेदिनी) ॥

**इति डान्ताः ॥**

**भृशप्रतिज्ञयोर्वाढम्**

उह्यते स्म । 'वह प्रापणे' (भ्वा० उ० अ०) । 'क्तः' (३।१।१०२) । 'क्षुब्धस्वान्त–' (७।२।१८) इति साधुः ॥

**प्रगाढं भृशकृच्छ्रयोः ॥ ४४ ॥**

प्रगाह्यते स्म । 'गाहू विलोडने' (भ्वा० आ० से०) । क्तः (३।१।१०२) । 'यस्य विभाषा' (७।२।१५) इति नेट् । '**प्रगाढं** स्याद्दृढे कृच्छ्रे' इति धरणिः ॥

**शक्तस्थूलौ त्रिषु दृढौ**

दर्हति, दृंहति वा स्म । 'दृह दृहि वृद्धौ' (भ्वा० प० से०) । 'गत्यर्था–' (३।४।७२) इति क्तः । 'दृढः स्थूलबलयोः' (७।२।२०) इति साधुः । '**दृढः** स्थूले नितान्ते च प्रगाढे बलवत्यपि' (इति मेदिनी) ॥

**व्यूढौ विन्यस्तसंहतौ ।**

विशेषेणोह्यते स्म । 'वह प्रापणे' (भ्वा० उ० अ०) । क्तः (३।२।१०२) । '**व्यूढः** संहतविन्यस्ते पृथुलेऽप्यभिधेयवत्' (इति मेदिनी) ॥

**इति ढान्ताः ॥**

**भ्रूणोऽर्भके स्त्रैणगर्भे**

भ्रूण्यते । 'भ्रूण आशायाम्' (चु० आ० से०) । घञ् (३।३।१८) । '**भ्रूणः** स्त्रीगर्भडिम्भयोः' (इति मेदिनी) । स्त्रिया अयम् । 'स्त्रीपुंसाभ्याम्–' (४।१।८७) इति नञ् । स्त्रैणश्चासौ गर्भश्च । शाल्यादिगर्भव्यावृत्त्यर्थं विशेषणम् ॥

---

१—अर्वा कुत्सितः— इति मुकुटः ॥

**वाणो बलिसुते शरे ॥ ४५ ॥**

वाणयति । 'वण शब्दे' ( भ्वा० आ० से० ) स्वार्थण्यन्तः । अचाद्यच् (३।१।१३४) '**वाणः** स्याद्गोस्तने दैत्यभेदे केवलकाण्डयोः । **वाणा** तु वाणमूले स्त्री नीलझिण्ट्यां पुनर्द्वयोः' (इति मेदिनी) ॥

**कणोऽतिसूक्ष्मे धान्यांशे**

कणति । 'कण निमीलने' ( भ्वा० प० से० ) । पचाद्यच् (३।१।१३४) । '**कणा** जीरककुम्भीरमक्षिकापिप्पलीषु च । **कणो**ऽतिसूक्ष्मे धान्यांशे' (इति मेदिनी) ॥

**संघाते प्रमथे गणः ।**

गण्यते । 'गण संख्याने' ( चु० उ० से० ) । घञ् (३।३।१९) । अच् (३।३।५६) वा । '**गणः** स्यात्प्रमथे सङ्घे संख्यासैन्यप्रभेदयोः' (इति मेदिनी) ॥

**पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च ॥ ४६ ॥**

पणनम् । अनेन वा । 'नित्यं पणः परिमाणे' (३।३।६६) इत्यप् । '**पणो** माने वराटानां मूल्ये कार्षापणे धने । द्यूते विक्रय्यशाकादेर्बद्धमुष्टौ ग्लहे भृतौ' इति धरणिः ॥

**मौर्व्यां द्रव्याश्रिते सत्त्वशुक्लसंध्यादिके गुणः ।**

गुण्यते । 'गुण आमन्त्रणे' ( चु० उ० से० ) । घञ् (३।३।१९) '**गुणो** मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागशौर्यादिसत्त्वादिसंध्याद्यावृत्तिरज्जुषु । शुक्लादावपि बुध्यां च' (इति मेदिनी) ॥

**निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ॥४७॥**

क्षणोति । 'क्षणु हिंसायाम्' ( त० उ० से० ) । पचाद्यच् (३।१।१३४) । '**क्षणो** व्यापारशून्यत्वमुहूर्तोत्सवपर्वसु' इति रुद्रः ॥

**वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु चाक्षरे ।**

वर्ण्यते । 'वर्ण प्रेरणे' ( चु० उ० से० ) । घञ् (३।३।१८) । '**वर्णो** द्विजादिशुक्लादियशोगुणकथासु च । स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेखने' (इति मेदिनी) ॥

**अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु ॥४८॥**

ऋच्छति । 'ऋ गतौ' ( भ्वा० प० से० ) । 'अर्तेश्च' (उ० ३।६०) इत्युनन् । '**अरुणो**ऽव्यक्तरागेऽर्के संध्यारागेऽर्कसारथौ । निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु । **अरुणा**तिविषाश्यामामञ्जिष्ठात्रिवृतासु च' (इति मेदिनी) ॥

**स्थाणुः शर्वेऽपि च**

तिष्ठति । 'स्थो णुः' (उ० ३।३७) । '**स्थाणुः** कीले हरे पुमान् । अस्त्री ध्रुवे' (इति मेदिनी) ॥

**द्रोणः काकेऽपि च**

द्रवति । 'द्रु गतौ' ( भ्वा० प० अ० ) । 'कृवृजृसि–' (उ० ३।१०) इति नः । '**द्रोणो**ऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे । स्त्रियां काष्ठाम्बुवाहिन्यां गवादन्यामपीष्यते' (इति मेदिनी) ॥

**रवे रणः ।**

रणति । 'रण शब्दे' ( भ्वा० प० से० ) । पचाद्यच् (३।१।१३४) । '**रणः** कोणे क्वणे पुंसि समरे पुंनपुंसकम्' (इति मेदिनी) ॥

**ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ॥ ४९ ॥**

ग्रामं नयति । 'णीञ्' ( भ्वा० उ० अ० ) । 'सत्सू–' (३।२।६१) इति क्विप् । 'अग्रग्रामाभ्याम्–' इति णत्वम् । '**ग्रामणी**र्भौगिके पत्यौ प्रधाने नापितेऽपि च । **ग्रामणी**र्नीलिकायां च ग्रामेयीपण्ययोषितोः' इति विश्वः । '**ग्रामीणा** नीलिकायां स्त्री ग्रामोद्भूतेऽभिधेयवत्' (इति मेदिनी) ॥

**ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवौ ।**

ऊर्णोति । 'ऊर्णुञ् आच्छादने' ( अ० उ० से० ) । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । आदिना शशोष्ट्रमृगादिग्रहः ॥

**हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ॥५०॥**

हरिणस्य स्त्री । 'पुंयोगाद्–' (४।१।४८) इति ङीष् । (हरितवर्णविशिष्टा वा) । 'वर्णादनुदात्तात्–' (४।१।३९) इति ङीन्नौ । '**हरिणी** हरितायां च नारीभिद्वृत्तभेदयोः । सुवर्णप्रतिमायां च' (इति मेदिनी) ॥

**त्रिषु पाण्डौ च हरिणः**

हरिति । 'हृश्याह्या–' (उ० २।४६) इतीनच् । '**हरिणः** पुंसि सारङ्गे शबले त्वभिधेयवत्' (इति मेदिनी) ॥

**स्थूणा स्तम्भेऽपि वेश्मनः ।**

तिष्ठति । 'रास्नासास्ना–' (उ० ३।१५) इति साधुः । '**स्थूणा** स्यात् सूर्म्यां स्तम्भेऽपि वेश्मनः' (इति मेदिनी) ॥

**तृष्णे स्पृहापिपासे द्वे**

तर्षणम् । 'ञितृष पिपासायाम्' ( दि० प० से० ) । 'तृषिशुषिरसिभ्यः कित्' (उ० ३।१२) इति नः ॥

**जुगुप्साकरुणे घृणे ॥ ५१ ॥**

घर्णनम् । 'घृणु दीप्तौ' ( त० उ० से० ) । भिदाद्यङ् (३।३।१०४) ॥

---

१ विश्वे मकारात्प्राक् रेफादर्शनेन ग्रामोऽस्त्यस्याः–इत्यनेकार्थकैरवाकरकौमुदीदर्शनेन 'ग्रामिणी' इत्येव पाठोऽनुमीयते ॥ २—'भ्रुवौ' इत्यत्र 'अन्तरान्तरेण युक्ते' (२।३।४) इति द्वितीया इति स्वामी ॥

**वणिक्पथे च विपणिः**

विपण्यते । अस्यां वा । 'पण व्यवहारे' ( भ्वा० प० से० ) । 'सर्वधातुभ्य इन्' (उ० ४।११८)। 'आपणे पण्यवीथ्यां च पण्ये च **विपणिः** स्त्रियाम्' इति रुद्रः ॥

**सुरा प्रत्यक् च वारुणी ।**

वरुणस्येयम् । 'तस्येदम्' (४।३।१२०) इत्यण् । '**वारुणी** गण्डदूर्वायां प्रतीचीसुरयोः स्त्रियाम्' (इति मेदिनी) ॥

**करेणुरिभ्यां स्त्री नेभे**

करोति । 'कृहृभ्यामेणुः' (उ० २।१) '**करेणु**र्गजयोषायां स्त्रियां पुंसि मतङ्गजे' ( इति मेदिनी )। के रेणुरस्येति वा । '**करेणुश्च गरेणुश्च** करिणीकर्णिकारयोः' इति रन्तिदेवः ॥

**द्रविणं तु बलं धनम् ॥ ५२ ॥**

द्रूयते, द्रवति वा । 'द्रु गतौ' ( भ्वा० प० अ० )। 'द्रुदक्षिभ्यामिनन्' (उ० २।५०) । '**द्रविणं** न द्वयोर्वित्ते काञ्चने च पराक्रमे' (इति मेदिनी) ॥

**शरणं गृहरक्षित्रोः**

शृणाति । 'शॄ हिंसायाम्' ( क्र्या० प० से० ) ल्युट् (३।३।११३)। भावे (३।३।१११) वा। '**शरणं** गृहरक्षित्रोर्वधरक्षणयोरपि' (इति मेदिनी) ॥

**श्रीपर्णं कमलेऽपि च ।**

श्रीः पर्णेऽस्य । '**श्रीपर्णी** कुम्भीगम्भार्योः क्लीबे पद्माग्निमन्थयोः' इति रभसः ॥

**विषाभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु ॥ ५३ ॥**

तेजयति । 'तिज निशाने' ( भ्वा० आ० से० )। 'तिजेर्दीर्घश्च' (उ० ३।१८) इति क्स्नः । '**तीक्ष्णं** सामुद्रलवणे विषलोहाजिमुष्कके । क्लीबं य (ज) वाग्रजे पुंसि तिग्मात्मत्यागिनोस्त्रिषु' (इति मेदिनी)। 'भवेद**भिमरो** युद्धे बले स्वबलसाध्वसे' (इति मेदिनी) ॥

**प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ।**

प्रमीयते । प्रमिमीतेऽनेन वा । करणे (३।३।११७) कर्तरि (३।३।१३३) भावे (३।३।११५) च ल्युट् । 'प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि । इयत्तायां च हेतौ च क्लीबैकत्वे प्रमातरि' (इति मेदिनी) ॥

**करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ॥ ५४ ॥**

'**करणं** कारणे कार्ये साधनेन्द्रियकर्मसु । कायस्थे व्रतबन्धे च नाट्यगीतप्रभेदयोः । पुमान् शूद्राविशोः पुत्रे वानरादौ च कीर्त्यते' इत्यजयः । कर्तृकर्मकरणभावेषु ल्युट् (३।३।११३,११५,११७) ॥

**प्राण्युत्पादे संसरणमसंबाधचमूगतौ ।**
**घण्टापथे**

सम्यक्सरन्त्यनेन । 'सृ गतौ' ( भ्वा० प० अ० ) । करणे ल्युट् (३।३।११७) ॥

**अथ वान्तान्ने समुद्गिरणमुन्नये ॥ ५५ ॥**

सम्यग् उद्गिर्यते । उद्गिरतेर्ल्युट् (३।३।११३) । भावे (३।३।११५) वा । 'भुक्तोज्झितोन्मूलितयोः स्यादुद्गिरणमुन्नये' इति रभसः ॥

**अंतस्त्रिषु**

आणान्तम् ॥

**विषाणं स्यात्पशुशृङ्गेभदन्तयोः ।**

व्यस्ति । 'अस भुवि' ( अ० प० से० ) चानश् (३।२।१२९) । 'श्नसोरल्लोपः' (६।४।१११) । '**उपसर्ग**प्रादुर्-' (८।३।८७) इति षत्वम् । यत्तु–वेवेष्टि । विषाणम् । विषेः शानच्—इति मुकुटः । तन्न । शपः श्लौ सति 'श्लौ' (६।१।१०) इति प्रसङ्गात् । '**विषाणी** क्षीरकाकोल्यामजशृङ्ग्यां च योषिति । कुष्ठनामौषधौ क्लीबं त्रिषु शृङ्गेभदन्तयोः' (इति मेदिनी) ॥

**प्रवणः क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ॥ ५६ ॥**

प्रवन्तेऽनेन । अत्र वा । 'प्रुङ् गतौ' (भ्वा० आ० अ०) । ल्युट् (३।३।११७) । '**प्रवणः** क्रमनिम्नोर्व्यां प्रह्वे च स्याच्चतुष्पथे । आयत्ते च तथा क्षी(क्ष)णे प्रगुणे समुदाहृतः' इति धरणिः । '**प्रवणो** ना चतुष्पथे । क्रमनिम्नमवीभागोदारप्रह्वेषु च त्रिषु' (इति मेदिनी) ॥

**संकीर्णौ निचिताशुद्धौ**

संकीर्यते स्म । 'कॄ विक्षेपे' (तु० प० से०)। क्तः (३।२।१०२) । '**संकीर्णं** संकटे व्याप्ते कुत्रचिद्वर्णसंकरे' इत्यजयः । '**संकीर्णं** निचितेऽपि स्यादशुद्धे चाभिधेयवत्' (इति मेदिनी)॥

**ईरिणं शून्यामूषरम् ।**

ऋच्छन्ति यस्मिन् । 'ऋ गतौ' (भ्वा० प० अ०) । 'अर्तेः किदीच्च' (उ० २।५१) इतीनन् । '**ईरिणं** तूषरे शून्ये' (इति मेदिनी) ॥*॥ इदादिरपि । '**ईरिणं** निराश्रये भूभागे कथितमूषरे' इति ह्रस्वादावजयः ॥

इति णान्ताः ॥

**देवसूर्यौ विवस्वान्तौ**

विवस्तेजोऽस्यास्ति । मतुप् (५।२।९४) । '**विवस्वांस्तु** सुरे सूर्ये तन्नगर्यां **विवस्वती**' (इति मेदिनी) ॥

१—स्वतो नतु वाच्यलिङ्गतया–इति स्वामिग्रन्थावलोकनेन '**स्वतः**' इति पाठोऽनुमीयते । तथाच 'त्रिषु' इति विषाणशब्दस्यैव विशेषणम् । अत एव 'प्रवण' शब्दव्याख्यायां–त्रिष्वित्येके संकीर्णं यावत्— इत्युक्तं स्वामिना संगच्छते ॥

**सरस्वन्तौ नदार्णवौ ॥ ५७ ॥**

सरो गमनमस्यास्ति । मतुप् (५।२।९४)। '**सरस्वांस्तु** नदे चाब्धौ ना, न्यवद्रसिके, स्त्रियाम् । वाणीस्त्रीरत्नवाग्देवी-गोनदीषु नदीभिदि' (इति मेदिनी) ॥

**पक्षिताक्ष्यौ गरुत्मन्तौ**

गरुतः सन्त्यस्य । मतुप् (५।२।९४) ॥

**शकुन्तौ भासपक्षिणौ ।**

शक्नोति । 'शकेरुनोन्तोन्त्युनयः' (उ० ३।४९) इत्युन्तः । '**भासो** भासि समाख्यातो गोष्ठकुक्कुटगृध्रयोः' इति विश्वः ।

**अग्न्युत्पातौ धूमकेतू**

धूमः केतुश्चिह्नमस्य । '**धूमकेतुः** स्मृतो वह्नावुत्पातग्रहभेदयोः' इति विश्वः ॥

**जीमूतौ मेघपर्वतौ ॥ ५८ ॥**

जीवनं मुञ्चति । पृषोदरादिः (६।३।१०९)। '**जीमूतो**ऽद्रौ धृतिकरे देवताडे पयोधरे' (इति मेदिनी) ॥

**हस्तौ तु पाणिनक्षत्रे**

हसति । 'हसे हसने' (भ्वा० प० से०)। 'हसिमृग्रिण्–' (उ० ३।८६) इति तन् । '**हस्तः** करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परो व्राते' (इति मेदिनी) ॥

**मरुतौ पवनामरौ ।**

म्रियतेऽनेन । 'मृङ् प्राणत्यागे' (तु० आ० अ०)। 'मृग्रोरुतिः' (उ० १।९४) । 'मरुद्देवे समीरे ना ग्रन्थिपर्णे नपुंसकम्' इति (मेदिनी) ॥

**यन्ता हस्तिपके सूते**

यच्छति । 'यमु उपरमे' (भ्वा० प० अ०)। तृच् (३।१।१३३) ॥

**भर्ता धातरि पोष्टरि ॥ ५९ ॥**

बिभर्ति । 'डुभृञ् धारणपोषणयोः' (जु० उ० अ०)। भरति । 'भृञ् भरणे' (भ्वा० उ० अ०)। तृच् (३।१।१३३) '**भर्ता** स्वामिनि पुंसि स्यात्त्रिषु धातरि पोष्टरि' (इति मेदिनी) ॥

**यानपात्रे शिशौ पोतः**

पुनाति । पूयते वा । 'पूञ् पवने' (क्र्या० उ० से०)। 'हसिमृग्रिण्–' (उ० ३।८६) इति तन् । '**पोतः** शिशौ वहित्रे च गृहस्थाने च वाससि' इति मेदिनी) ॥

**प्रेतः प्राण्यन्तरे मृते ।**

प्रकर्षेणेतः । '**प्रेतो** भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः' (इति मेदिनी) ॥

**ग्रहभेदे ध्वजे केतुः**

चाय्यते । अनेन वा । 'चायृ पूजानिशामनयोः' (भ्वा० उ० से०) 'चायः किः' (उ० १।७४) इति तुः 'केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि' (इति मेदिनी) ॥

**पार्थिवे तनये सुतः ॥ ६० ॥**

सूयते स्म । 'षुञ् अभिषवे' (वा० उ० अ०)। सौति स्म वा । 'षु प्रसवैश्वर्ययोः' (अ० प० से०)। क्तः (३।२।१०२, ४।७२)। '**सुतः** स्यात्पार्थिवे पुत्रे स्त्र्यपत्ये तु **सुता** स्मृता' (इति मेदिनी) ॥

**स्थपतिः कारुभेदेऽपि**

तिष्ठन्त्यस्मिन् । 'घञर्थे कः' (वा० ३।३।५८) स्थश्चासौ पतिश्च । '**स्थपतिः** कञ्चुकिन्यपि । जीवेष्टियाजके शिल्पिभेदे ना सत्तमे त्रिषु' (इति मेदिनी) ॥

**भूभृद्भूमिधरे नृपे ।**

भुवं बिभर्ति । 'डुभृञ्' (जु० उ० अ०) क्विप् (३।२।७६) तुक् (६।१।७१) ॥

**मूर्धाभिषिक्तो भूपेऽपि**

मूर्धनि अभिषिच्यते स्म । 'षिच क्षरणे' (तु० उ० अ०)। क्तः (३।२।१०२)। '**मूर्धाभिषिक्तो** भूपाले मन्त्रिणि क्षत्रियेऽपि च' (इति मेदिनी) ॥

**ऋतुः स्त्रीकुसुमेऽपि च ॥ ६१ ॥**

ऋच्छति । 'अर्तेश्च तुः' । (उ० १।७२) किच्च । 'ऋतुर्मासि वसन्तादौ धीरे स्त्रीकुसुमेऽपि च' इति धरणिः ॥

**विष्णावप्यजिताव्यक्तौ**

न जीयते स्म । 'जि अभिभवे' (भ्वा० प० अ०)। क्तः (३।२।१०२) । '**अजितो** ना हरौ त्रिषु । अनिर्जिते च' इति विश्वः (मेदिनी) । न व्यज्यते स्म । '**अञ्जू** व्यक्त्यादौ' (रु० प० से०) । क्तः (३।२।१०२) । '**अव्यक्तः** शंकरे विष्णावव्यक्तं महदादिके । आत्मन्यपि स्यादव्यक्तमस्फुटे त्वभिधेयवत्' इति विश्वः ॥

**सूतस्त्वष्टरि सारथौ ।**

सुवति स्म, सूयते स्म वा 'षू प्रेरणे' (तु० प० से०)। क्तः (३।२।१०२)। '**सूतस्तु** सारथौ तक्ष्णि क्षत्रियाद्ब्राह्मणीसुते । बन्दिपारदयोः पुंसि प्रसूते प्रेरिते त्रिषु' ( इति मेदिनी) ॥

**व्यक्तः प्राज्ञेऽपि**

व्यज्यते स्म । 'अञ्जू' (रु० प० से०)। क्तः (३।२।१०२)। '**व्यक्तः** स्फुटमनीषिणोः' (इति मेदिनी) ॥

**दृष्टान्तावुभे शास्त्रनिदर्शने ॥ ६२ ॥**

दृष्टोऽन्तोऽत्र । '**अन्तः** प्रान्तेऽन्तिके नाशे' इति विश्वः । '**दृष्टान्त** उदाहृतौ । शास्त्रे च मरणे' (इति मेदिनी) ॥

**क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे ।**

क्षदति । 'क्षद' सौत्रः । 'तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां

चानिटौ' (उ० २।९४) । 'क्षत्ता शूद्रात्क्षत्रियाजे प्रतीहारे च सारथौ । भुजिष्यातनये क्षत्ता नियुक्ते च प्रजासृजि' इति विश्वः ॥

**वृत्तान्तः स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः ॥६३॥**

वृत्तोऽन्तोऽस्य । वृत्तस्यान्तः, इति वा । 'वृत्तान्तोऽवसरे भावे कार्त्स्न्यवार्ताविशेषयोः । वृत्तान्तः प्रक्रियायां च' इति विश्वः ॥

**आनर्तः समरे नृत्यस्थाननीवृद्विशेषयोः ।**

आनृत्यन्त्यत्र । 'नृती गात्रविक्षेपे' (दि० प० से०) । 'हलश्च' (३।३।१२१) इति घञ् । 'आनर्तो नृत्यशालायां जने जनपदान्तरे' इत्यजयः । 'आनर्तो देशभेदेऽपि नृत्यस्थाने जने रणे' (इति मेदिनी) ॥

**कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु ॥ ६४ ॥**

कृतोऽन्तो येन, यस्य वा ॥

**श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः ।**
**इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः ॥६५॥**

आदिना पित्तादिग्रहः । रसः प्रथम आहारस्य विकारः । आदिना वसामज्जशुक्रादिग्रहः । तद्गुणा गन्धादयः । गैरिकादिः । दधाति, धीयते वा 'धाञ्' (जु० उ० अ०) । 'सितनिगमि-' (उ० १।६९) इति तुन् ॥

**कक्षान्तरेऽपि शुद्धान्तो नृपस्यासर्वगोचरे ।**

शुद्धोऽन्तोऽस्य । 'असर्व-' इति पूर्वविशेषणम् । 'शुद्धान्तोऽन्तःपुरे गुह्यकक्षाभेदे च भूपतेः' इत्यजयः ॥

**कासूसामर्थ्ययोः शक्तिः**

शक्यतेऽनया । 'शक्लृ शक्तौ' (स्वा० प० अ०) । क्तिन् (३।३।९४) । 'शक्तिरस्त्रान्तरे गौर्यामुत्साहादौ बले स्त्रियाम्' (इति मेदिनी) ॥*॥ 'कासूर्विकलवाचि स्यात्कासूः शक्त्यायुधेऽपि च' (इति विश्वः) ॥

**मूर्तिः काठिन्यकाययोः ॥ ६६ ॥**

मूर्च्छ्यते । 'मूर्च्छा मोहादौ' (भ्वा० प० से०) । क्तिन् (३।३।९४) ॥

**विस्तारवल्ल्योर्व्रततिः**

व्रजन्ती ततिरस्याः । पृषोदरादिः (६।३।१०९) । श्रीभोजस्तु 'व्रज' धातुं स्वीकृतवान् । ततो बाहुलकादतिः ॥

**वसती रात्रिवेश्मनोः ।**

वसन्त्यस्याम् । 'वस निवासे' (भ्वा० प० अ०) । 'वहिवसि-' (उ० ४।६०) इत्यतिः । 'वसतिः स्यास्त्रियां वासे यामिन्यां च निकेतने' (इति मेदिनी) ॥

**क्षयार्चयोरपचितिः**

अपचीयते । क्तिन (३।३।९४) । अपचाय्यते स्म वा । 'चायृ पूजादौ' (भ्वा० उ० से०) । 'चायः चिः क्तिनि' (वा० ७।२।३०) इति चिः । 'भवेदपचितिः पूजाव्ययनिष्कृतिहानिषु' (इति मेदिनी) ॥

**सातिर्दानावसानयोः ॥ ६७ ॥**

सननम् । 'षणु दाने' (त० उ० से०) । सानं वा । 'षोऽन्तकर्मणि' (दि० प० अ०) । क्तिन् (३।३।९४) । 'ऊतियूतिजूति-' (३।३।९७) इति साधुः । यत्तु—'सनः क्तिचि' (६।४।४५) इति नलोपादनयोः सातिः सन्तिश्च— इति मुकुटो व्याख्यत् । तन्न । क्तिचः कर्तरि विधानाद्भावकर्मणोरसंभवात् ॥

**अर्तिः पीडाधनुष्कोट्योः**

अर्दनम् । 'अर्द हिंसायाम्' (चु० उ० से०) । 'क्तिन्नाबादिभ्यः' (वा० ३।३।९४) ॥*॥ आङ ऋच्छतेः क्तिनि 'उपसर्गादृति—' (६।१।९१) इति वृद्धौ 'आर्तिः' इति कश्चित् ॥

**जातिः सामान्यजन्मनोः ।**

जननम् । अनया, इति वा । 'जनी' (दि० आ० से०) । क्तिन् (३।३।९४) । 'जनसन-' (६।४।४२) इत्यात्वम् । 'जातिश्छन्दसि सामान्ये मालत्यां गोत्रजन्मनोः । जातिर्जातीफले धात्र्यां चुल्लीकम्पिल्लयोरपि' इति विश्वः । 'जातिः स्त्री गोत्रजन्मनोः । अश्मन्तिकामलक्योश्च सामान्यच्छन्दसोरपि । जातीफले च मालत्याम्' (इति मेदिनी) ॥

**प्रचारस्यन्दयो रीतिः**

रीयते । 'रीङ् स्रवणे' (दि० आ० अ०) । रिणाति । 'री गतिरेषणयोः' (क्र्या० प० से०) । क्तिच् (३।३।१७४) । रयणम् । क्तिन् (३।३।९४) वा । 'रीतिः प्रचारे स्यन्दे च लोहकिट्टारकूटयोः' इति विश्वः ॥

**ईतिर्डिम्बप्रवासयोः ॥ ६८ ॥**

ईयतेऽनया । 'ईङ् गतौ' (दि० आ० अ०) । क्तिन् (३।३।९४) । डिम्बो विप्लवः । 'ईतिर्डिम्बे प्रवासेऽतिवृष्ट्यादिषट्सु च स्त्रियाम्' (इति मेदिनी) ॥

**उदयेऽधिगमे प्राप्तिः**

प्रापणम् । 'आप्लृ व्याप्तौ' (स्वा० प० अ०) । 'क्तिन्नाबादिभ्यः' (वा० ३।३।९४) । 'प्राप्तिर्महोदये । लाभेऽपि च स्त्रियाम्' (इति मेदिनी) ॥

**त्रेता त्वग्नित्रये युगे ।**

त्रीन्भेदानिता । पृषोदरादिः (६।३।१०९) ॥

---

१—अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः' इति स्वामिमुकुटौ ॥

**वीणाभेदेऽपि महती**

मह्यते । 'मह पूजायाम्' (भ्वा० प० से०) । 'वर्तमाने पृषत्–' (उ० २।८४) इति साधुः । '**महती** वल्लकीभेदे रा-(प्रा)ज्ये तु स्यान्नपुंसकम् । तत्त्वभेदे पुमान् श्रेष्ठे (वृद्धे) वाच्यवत्' (इति मेदिनी) ॥

**भूतिर्भस्मनि संपदि ॥ ६९ ॥**

भवति । अनया वा । भवनं वा । क्तिच् (३।३।१७४) । '**भूति**र्भस्मनि संपत्तिहस्तिश्रृङ्गारयोः स्त्रियाम्' (इति मेदिनी) ॥

**नदीनगर्योर्नागानां भोगवती**

भोगोऽस्त्यस्याम् । मतुप् (५।२।९४) । 'अथ **भोगवती** नागपुरीनद्योरहौ पुमान्' (इति मेदिनी) ॥

**अथ संगरे ।**

**सङ्गे सभायां समितिः**

समयनम् । समीयते वास्याम् । 'इण् गतौ' (अ० प० अ०) । क्तिन् (३।३।९४) ॥

**क्षयवासावपि क्षितिः ॥ ७० ॥**

क्षयणम् । क्षीयतेऽस्यां वा । 'क्षि क्षये' (भ्वा० प० अ०) । 'क्षि निवासगत्योः' (तु० प० अ०) । क्तिन् (३।३।९४) । '**क्षिति**र्निवासे मेदिन्यां कालभेदे क्षये स्त्रियाम्' (इति मेदिनी) ॥

**रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः ।**

हन्ति हिनोति वा । हन्यतेऽनया वा । क्तिन् (३।३।९४) । 'ऊतियूति–' (३।३।९७) इति साधुः ॥

**जगती जगति छन्दोविशेषेऽपि क्षितावपि ॥ ७१ ॥**

गच्छति । 'वर्तमाने पृषत्–' (उ० २।८४) इति साधुः । यद्वा 'द्युतिगमिजुहोतीनां द्वे च' (वा० ३।२।१७८) इति क्विप् । 'गमः क्वौ' (६।४।४०) इति मलोपः । तुक् (६।१।७१) '**जग**त्स्याद्विष्टपे क्लीबं ना वायौ जंगमे त्रिषु । **जगती** भुवने क्ष्मायां छन्दोभेदे जनेऽपि च' (इति मेदिनी) । द्वादशाक्षरपादे ॥

**पङ्क्तिश्छन्दोऽपि दशमम्**

पञ्चनम् । 'पचि व्यक्तीकरणे' (भ्वा० आ० से०) । क्तिन् (३।३।९४) । यद्वा पञ्चकद्वयम् 'पङ्क्तिविंशति–' (४।१।५९) इति साधुः । (दशमं छन्दः) दशाक्षरपादम् । '**पङ्क्ति**र्दशाक्षरच्छन्दोदशसंख्यादिषु स्त्रियाम्' इति (मेदिनी) ॥

**स्यात्प्रभावेऽपि चायतिः ।**

आयम्यतेऽनया । आयमनं वा । 'यमु उपरमे' (भ्वा० प० अ०) । क्तिन् (३।३।९४) । '**आयतिः** संयमे दैर्घ्ये प्रभावागामिकालयोः' (इति विश्वः) ॥

**पत्तिर्गतौ च**

पतति । 'पत्लृ गतौ' (भ्वा० प० से०) । क्तिच् (७।३।१७४) । '**पत्ति**र्ना पदगे स्त्रियाम् । गतावेकरथैकेभत्र्यश्वपञ्चपदातिके' (इति मेदिनी) ॥

**मूले तु पक्षतिः पक्षभेदयोः ॥ ७२ ॥**

पक्षस्य मूलम् । 'पक्षात्तिः' (५।२।२५) । प्रतिपदि, गरुन्मूले च ॥

**प्रकृतिर्योनिलिङ्गे च**

प्रकुरुते । क्तिच् (३।३।१७४) । क्तिन् (३।३।९४) । '**प्रकृति**र्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ लिङ्गे पौरवर्गे' (इति मेदिनी) ॥

**कैशिक्याद्याश्च वृत्तयः ।**

'भारती सात्वती चैव कैशिक्यारभटी तथा । चतस्रो वृत्तयश्चैता यासु नाट्यं प्रतिष्ठितम्' इति भरतः । '**वृत्ति**र्विवरणे जीव्ये कैशिक्यादिषु चेष्यते' इति विश्वः ॥

**सिकताः स्युर्वालुकापि**

सिच्यते । 'षिच क्षरणे' (तु० उ० अ०) । बाहुलकादतच् । पृषोदरादिः (६।३।१०९) । '**सिकता** स्त्री सिकतिले वालुकायां तु भूमनि' (इति मेदिनी) ॥

**वेदे श्रवसि च श्रुतिः ॥ ७३ ॥**

श्रूयते । अनया वा । 'श्रु श्रवणे' (भ्वा० प० अ०) । क्तिन् । '**श्रुतिः** श्रोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणि' इति विश्वः ॥

**वनिता जनितात्यर्थानुरागायां च योषिति ।**

वन्यते स्म । 'वनु याचने' (त० आ० से०) क्तः (३।२।१०२) । 'यस्य विभाषा' (७।२।१५) इत्यस्यानित्यत्वादिट् । 'वन संभक्तौ' (भ्वा० प० से०) वा । '**वनिता** जातरागस्त्री स्त्रियोः स्त्री त्रिषु याचिते' (इति मेदिनी) ॥

**गुप्तिः क्षितिव्युदासेऽपि**

गुप्यते । गोपनं वा । 'गुपू रक्षणे' (भ्वा० प० से०) । क्तिन् (३।३।९४) । '**गुप्तिः** कारा च रक्षा च दीर्णं च विवरं भुवः' इति शाश्वतः । '**गुप्ति**श्च्यवकरस्थाने कारागारे च रक्षणे' (इति मेदिनी) ॥

**धृतिर्धारणधैर्ययोः ॥ ७४ ॥**

धरणम् । 'धृञ् धारणे' (भ्वा० उ० अ०) । क्तिन् (३।३।९४) । '**धृति**र्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु' इति विश्वः ॥

---

१—'उक्तात्युक्ता तथा मध्या प्रतिष्ठान्या सुपूर्विका । गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च' इत्यनुक्रमोक्तेषु दशमं छन्दः पङ्क्तिः । 'पङ्क्तिश्छन्दो दशापि स्यात्' इति क्वचित्पाठः— इति पीयूषव्याख्या ॥

१—पक्षभेदौ द्वौ । एको मासार्धः । अपरः पक्ष्यवयवः । तयोर्मूले पक्षतिः इति पीयूषव्याख्या ॥

**बृहती क्षुद्रवार्ताकीछन्दोभेदे महत्यपि ।**

वर्हते । 'बृह बृद्धौ' (भ्वा० प० से०) । 'वर्तमाने पृषत्–' (उ० २।८४) इति साधुः । '**बृहती** क्षुद्रवार्ताक्यां कण्टकार्यां च वाचि च । वारिधान्यां महत्यां च छन्दोवसनभेदयोः' इति विश्वः ॥

**वासिता स्त्रीकरिण्योश्च**

वासयति । 'वस निवासे' (भ्वा० प० अ०) ण्यन्तः 'वास उपसेवायाम्' (चु० उ० से०) वा । क्तः (३।३।१७४) । '**वासिता** करिणीनार्योर्**वासितं** सुरभीकृते । ध्वानमात्रे खगारावे **वासितं** वस्त्रवेष्टिते' इति विश्वः ॥*॥ स्वामी तु (**वाशिता** इति) तालव्यमध्यपाठमाह । तत्र 'वाश्ट शब्दे' (दि० आ० से०) ॥

**वार्ता वृत्तौ जनश्रुतौ ॥ ७५ ॥**

**वार्तं फल्गुन्यरोगे च त्रिषु**

वृत्तिरस्त्यस्याम् । 'वृत्तेश्च' (वा० ५।२।१०१) इति णः । '**वार्ता** वार्तिङ्गणे वृत्तौ **वार्ता** कृष्याद्युदन्तयोः । (वृत्तिमन्नीरुजोर्**वार्ता वार्त**मारोग्यफल्गुनोः)' इति विश्वः । '**वार्तं** फल्गुन्यरोगे स्यादारोग्ये वृत्तिमत्यपि' इति धरणिः ॥

**अप्सु च घृतामृते ।**

घ्रियते । जिघर्ति वा । 'घृ क्षरणदीप्त्योः' (जु० प० अ०) । 'अञ्जिघृसिभ्यः क्तः' (उ० ३।८९) । 'घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत्' (इति मेदिनी) ॥ न मृतं मरणमत्र । '**अमृतं** यज्ञशेषे स्यात्पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः' (इति मेदिनी) ॥

**कलधौतं रूप्यहेम्नोः**

कलो मलो धौतोऽस्य । '**कलधौतं** सुवर्णे स्याद्रजते च नपुंसकम्' (इति मेदिनी) ॥

**निमित्तं हेतुलक्ष्मणोः ॥ ७६ ॥**

निमेद्यति । 'ञि मिदा स्नेहने' (दि० प० से०) । 'ञीतः क्तः' (३।२।१९७) । संज्ञापूर्वकत्वान्न नत्वम् ।—'अनात्मनेपदनिमित्ते' (७।२।३६) इति निर्देशाद्वा ॥

**श्रुतं शास्त्रावधृतयोः**

श्रूयते स्म । श्रवणं वा । 'श्रु श्रवणे' (भ्वा० प० अ०) । क्तः (३।२।१०२) ॥

**युगपर्याप्तयोः कृतम् ।**

अकारि । 'डुकृञ्' (त० उ० अ०) । क्तः (३।२।१०२) । 'शक्तौ निवारणे तृप्तौ **पर्याप्तं** स्याद्यथेप्सिते' इति रुद्रः । '**कृतं** युगेऽलमर्थे स्याद्विहिते हिंसिते त्रिषु' (इति मेदिनी) ॥

**अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ॥ ७७ ॥**

अतीवाधीयते स्म मनसि । 'डुधाञ्' (जु० उ० अ०) । 'दधातेर्हिः' (७।४।४२) ॥

**युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु ।**

'प्राण्यतीते' इति समाहारद्वन्द्वः । अभवत् । 'भू' । 'गत्यर्था–' (३।४।७२) । '**भूतं** क्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिषूचिते । प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तु ना । कुमारेऽपि' (इति मेदिनी) ॥

**वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ॥ ७८ ॥**

वर्तते स्म । वर्तनं वा । 'वृतु वर्तने' (भ्वा० आ० से०) 'वरणे' (दि० आ० से०) वा । 'गत्यर्था–' (३।४।७२) इति क्तः । भावे (३।३।११४) वा । '**वृत्तो**ऽधीतेप्यतीतेऽपि वर्तुलेऽपि मृते वृते । वृत्तेऽन्यलिङ्गं वा क्लीबे छन्दश्चारित्रवृत्तिषु' (इति मेदिनी) ॥

**महद्राज्यं च**

मह्यते । 'मह पूजायाम्' (भ्वा० प० से०) । 'वर्तमाने पृषत्–' (उ० २।८४) इति साधुः । '**महती** वल्लकीभेदे राज्ये तु स्यान्नपुंसकम् । तत्त्वभेदे पुमाञ्श्रेष्ठे वाच्यवत्' (इति मेदिनी) ॥

**अवगीतं जन्ये स्याद्गर्हिते त्रिषु ।**

अवगीयते स्म । 'गै शब्दे' (भ्वा० प० से०) । क्तः (३।२।१०२) । '**अवगीतस्तु** निर्वादे दु(द्द)ष्टगर्हितयोरपि' (इति मेदिनी) । जन्ये जनापवादे ॥

**श्वेतं रूप्येऽपि**

श्वेतते । 'श्विता वर्णे' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३४) । '**श्वेतो** द्वीपाद्रिभेदयोः । **श्वेता** वराटिकाकाष्ठपाटलाशङ्खिनीषु च । क्लीबं रूप्येऽन्यवच्छुक्ले' (इति मेदिनी) ॥

**रजतं हेम्नि रूप्ये सिते त्रिषु ॥ ७९ ॥**

रजति । रज्यतेऽनेन वा । 'रञ्ज रागे' (भ्वा० प० अ०) । 'पृषिरञ्जिभ्यां कित्' (उ० ३।१११) इत्यतच् । '**रजतं** रञ्जने रूप्ये शोणिते हृदहारयोः' इत्यजयः ॥

**त्रिष्वितः**

आतान्तम् ॥

**जगदिङ्गेऽपि**

गच्छति । 'द्युतिगमिजुहोतीनां द्वे च' (वा० ३।२।१७८) इति क्विप् । 'गमः क्वौ' (६।४।४०) इति मलोपः । तुक् (६।१।७१) '**जगत्**स्याद्विष्टपे क्लीबं वायौ ना जंगमे त्रिषु' (इति मेदिनी) ॥

**रक्तं नील्यादि रागि च ।**

रजति । रज्यते वा । 'रञ्ज रागे' (भ्वा० प० अ०) ।

'गत्यर्था-' (३।४।७२) इति क्तः । कर्मणि (३।२।१०२) वा क्तः । '**रक्तो**ऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु । क्लीबं तु कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि' (इति मेदिनी) ॥

**अवदातः सिते पीते शुद्धे**

अवदायते स्म । 'दैप् शोधने' (भ्वा० प० अ०) । क्तः (३।२।१०२) ॥

**बद्धार्जुनौ सितौ ॥ ८० ॥**

सीयते स्म । 'षिञ् बन्धने' (स्वा० उ० अ०) । क्तः (३।२।१०२) । '**सित**मवसिते च बद्धे धवले त्रिषु शर्करायां स्त्री' (इति मेदिनी) ॥

**युक्तेऽतिसंस्कृते मर्षिण्यभिनीतः**

अभिनीयते स्म । 'णीञ्' (भ्वा० उ० अ०) क्तः (३।२।१०२) । मर्षिणि क्षन्तरि ॥

**अथ संस्कृतम् ।**

**कृत्रिमे लक्षणोपेतेऽपि**

संस्क्रियते स्म । '**संस्कृतः** कृत्रिमे शस्ते भूषितेऽप्यन्यलिङ्गकः । क्लीबं तु लक्षणोपेते' (इति मेदिनी) । लक्षणेन उपेते पाणिन्यादिसूत्रव्युत्पादिते ॥

**अनन्तोऽनवधावपि ॥ ८१ ॥**

न अन्तोऽस्य । '**अनन्तः** केशवे शेषे पुमान्निरवधौ त्रिषु । **अनन्ता** च विशल्यायां शारिवादूर्वयोरपि । कणादुरालभापथ्यापार्वत्यामलकीषु च । विश्वंभरागुडूच्योः स्याद**नन्तं** सुरवर्त्मनि' (इति मेदिनी) ॥

**ख्याते हृष्टे प्रतीतः**

प्रतीयते स्म । 'इण् गतौ' (अ० प० अ०) । क्तः (३।२।१०२) । 'प्रज्ञातज्ञातहृष्टेषु **प्रतीतः** सादरे त्रिषु' इति रभसः ॥

**अभिजातस्तु कुलजे बुधे ।**

अभिजायते स्म । 'गत्यर्था-' (३।४।७२) इति क्तः । '**अभिजातः** कुलीने स्यान्न्याय्यपण्डितयोस्त्रिषु' इति मेदिनी) । बुधे पण्डिते ॥

**विविक्तौ पूतविजनौ**

विविज्यते स्म । 'विजिर् पृथग्भावे' (जु० उ० अ०) । क्तः (३।२।१०२) 'विचिर् विरेचने (पृथग्भावे') (रु० उ० अ०) वा । '**विविक्तं** त्रिष्वसंपृक्ते रहःपूतविवेकिषु' (इति मेदिनी) ॥

**मूर्च्छितौ मूढसोच्छ्रयौ ॥ ८२ ॥**

मूर्च्छति स्म 'मूर्च्छा मोहसमुच्छ्राययोः' (भ्वा० प० से०) । 'गत्यर्था-' (३।४।७१) इति क्तः । '**मूर्तं** स्यात्त्रिषु मूर्च्छाले कठिने मूर्तिमत्यपि' (इति मेदिनी) । ('**मूर्च्छित**मपि सोच्छ्रये च मूढे च' (इति मेदिनी) ॥

**द्वौ चाम्लपरुषौ शुक्तौ**

शुच्यते स्म । 'ईशुचिर् पूतीभावे' (दि० उ० से०) । (क्तः) (३।२।१०२) । 'श्वीदितः-' (७।२।१४) (इतीण्निषेधः) । '**शुक्तं** पूताम्लनिष्ठुरे' (इति मेदिनी) । 'मृन्मयादिशुचौ भाण्डे सगुडं क्षौद्रकाञ्जिकम् । धान्यराशौ त्रिरात्रस्थं शुक्तं चुकं तदुच्यते' इति वैद्यकम् ॥

**शिती धवलमेचकौ ।**

शीयते । शिनोति स्म वा । 'शिञ् निशाने' (स्वा० उ० अ०) । क्तिन् (३।३।९४) । क्तिच् (३।३।१७४) वा । '[2]निशितेऽपि, **शिति**र्भूर्जे ना सितासितयोस्त्रिषु' (इति मेदिनी) ॥

**सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् ८३**

अस्ति । 'अस भुवि' (अ० प० से०) । 'लटः शतृ-' (३।२।१२४) । 'श्नसोरल्लोपः' (६।४।१११) । 'सन् साधौ धीरशस्तयोः । मान्ये सत्ये विद्यमाने त्रिषु साध्व्युभयोः स्त्रियाम्' (इति मेदिनी) ॥

**पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते ।**

पुरोऽकारि । 'डुकृञ्' (त० उ० अ०) । क्तः (३।२।१०२) । 'पुरोऽव्ययम्' (१।४।६७) इति गतित्वम् । 'नमस्पुरसोः-' (८।३।४०) इति सत्वम् । '**पुरस्कृतो**ऽभिशस्तारिग्रस्ताग्रेकृतपूजिते' (इति मेदिनी) ॥

**निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् ॥ ८४ ॥**

निरुद्धो निवृत्तो वा वातोऽस्मात् । '**निवातो** दृढसंनाहे निवासे वातवर्जिते' इत्यजयः ॥

**जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिताः**

उच्छ्रयति, उच्छ्रीयते स्म वा । 'श्रिञ् सेवायाम्' (भ्वा० उ० से०) । 'गत्यर्था-' (३।४।७२) इति क्तः । कर्मणि (३।२।१०२) वा । '**उच्छ्रितं** त्रिषु संजाते समुन्नद्धप्रवृद्धयोः' (इति मेदिनी) ॥

**उत्थितास्त्वमी ।**

**वृद्धिमत्प्रोद्यतोत्पन्नाः**

उत्तिष्ठति स्म । 'गत्यर्था-' (३।४।७२) इति क्तः । '**उत्थितं** स्यात्त्रिषूत्पन्ने प्रोद्यते वृद्धिमत्यपि' (इति मेदिनी) ॥

**आदृतौ सादरार्चितौ ॥ ८५ ॥**

आद्रियते स्म । 'दृङ् आदरे' (तु० आ० अ०) । क्तः (३।२।१०२) ॥

इति तान्ताः ॥

---

१—इदमसंगतम् । 'आदितश्च' (७।२।१६) इतीण्निषेधस्य दुर्वारत्वात् । तस्मात्—मूर्च्छा संजातास्य । 'तदस्य संजातम्—' (५।२।३६) इतीतच्—इत्यनेकार्थकैरवाकरकौमुदीलिखितमेव सम्यक् ॥

१—अस्यात्रोल्लेखः प्रामादिकः । अत्र मूर्तशब्दोपादानाभावात् ॥
२—'निशितेऽपि' इत्युक्तिः शितशब्दार्थत्वात्प्रकृतानुपयुक्ता ॥

**अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु।**

अर्यते। ऋच्छति वा। 'ऋ गतौ' (भ्वा० प० अ०) 'उषिकुषिगार्तिभ्यस्थन्' (उ० २।४)। यद्वा अर्थ्यते। 'अर्थ उपयाच्ञायाम्' (चु० आ० से०)। घञ् (३।३।१९) ('अर्थो विषयार्थनयोर्धनकारणवस्तुषु। अभिधेये च शब्दानां, निवृत्तौ च प्रयोजने)' (इति मेदिनी)॥

**निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ॥ ८६॥**

तीर्यते। अनेन वा। 'तॄ प्लवनतरणयोः' (भ्वा० प० से०)। 'पातॄतुदि-' (उ० २।७) इति थक्। 'तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च। अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु' (इति मेदिनी)। निपानं जलावतारः। निदानमुपायः—इति मुकुटः॥

**समर्थस्त्रिषु शक्तिस्थे संबद्धार्थे हितेऽपि च।**

समर्थयते। समर्थ्यते वा। 'अर्थ उपयाच्ञायाम्' (चु० आ० से०)। पचाद्यच् (३।१।१३४)। घञ् (३।३।१९) वा॥

**दशमीस्थौ क्षीणरागवृद्धौ**

दशम्यां तिष्ठति। 'सुपि स्थः' (३।२।४) इति कः। 'दशमीस्थो नष्टबीजे स्थविरेऽप्यन्यलिङ्गकः' (इति मेदिनी)॥

**वीथी पदव्यपि॥ ८७॥**

विथ्यतेऽनया। 'विथृ याचने' (भ्वा० आ० से०)। घञ् (३।३।१९)। पृषोदरादिः (६।३।१०९)। गौरादिः (४।१।४१)। 'वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरवर्त्मनोः' (इति मेदिनी)॥

**आस्थानीयत्नयोरास्था**

आतिष्ठन्त्यस्याम्। आस्थानं वा। 'ष्ठा गतिनिवृत्तौ' (भ्वा० प० अ०)। 'आस्था त्वालम्बनास्थानयत्नापेक्षासु योषिति' (इति मेदिनी)॥

**प्रस्थोऽस्त्री सानुमानयोः।**

प्रतिष्ठन्तेऽस्मिन्। अनेन वा। 'घञर्थे कः' (वा० ३।३।५८)। 'प्रस्थोऽस्त्रियां मानभेदे सानावुन्मितवस्तुनि' (इति मेदिनी)॥

इति थान्ताः॥

**अभिप्रायवशौ छन्दौ**

छन्द्यते। 'छदि संवरणे' (चु० प० से०)। घञ् (३।३।१९)॥

**अब्दौ जीमूतवत्सरौ॥ ८८॥**

अपो ददाति। 'आतोऽनुप-' (३।२।३) इति कः। 'अब्दः संवत्सरे मेघे गिरिभेदे च मुस्तके' इति विश्वः॥

**अपवादौ तु निन्दाज्ञे**

अपोद्यते। अपवदनं वा। 'वद व्यक्तायां वाचि' (भ्वा० प० से०)। घञ् (३।३।१९)। 'अपवादस्तु निन्दायामाज्ञाविश्रम्भयोरपि' (इति मेदिनी)॥*॥ मुकुटस्तु 'अववादः' इति पठित्वा 'अववादस्तु निन्दायामाज्ञाविश्रम्भयोरपि' इति विश्वमुदाजहार॥

**दायादौ सुतबान्धवौ।**

दायमत्ति। 'अद भक्षणे' (अ० प० अ०)। 'कर्मण्यण्' (३।२।१)। यद्वा आदत्ते। 'डुदाञ्'। 'आतश्चोप-' (३।१।१३६) इति कः। दायस्य—आदः। 'दायादस्तु भवेत्पुंसि सपिण्डे तनयेऽपि च' (इति मेदिनी)॥

**पादा रश्म्यङ्घ्रितुर्यांशाः**

पद्यते। 'पद गतौ' (दि० आ० अ०)। 'पदरुज-' (३।३।१७) इति घञ्। 'पादो बुध्ने तुरीयांशे शैले प्रत्यन्तपर्वते। चरणे च मयूखे च' (इति मेदिनी)॥

**चन्द्राग्न्यर्कास्तमोनुदः॥ ८९॥**

तमो नुदति। 'णुद प्रेरणे' (तु० उ० अ०)। क्विप् (वा० ३।३।७६)॥

**निर्वादो जनवादेऽपि**

निर्वदनम्। 'वद व्यक्तायां वाचि' (भ्वा० प० से०)। घञ् (३।३।१८) 'निर्वादः स्याल्लोकवादपरिनिश्चितवादयोः' (इति मेदिनी)॥

**शादो जम्बालशष्पयोः।**

शद्यते। अनेन वा। 'शद्लृ शातने' (भ्वा० प० अ०)। 'हलश्च' (३।३।१२१) इति, भावे (३।३।१८) वा घञ्। जम्बालः पङ्कः शष्पं बालतृणम्॥

**सारावे रुदिते त्रातर्याक्रन्दो दारुणे रणे॥ ९०॥**

आक्रन्दनम्। आक्रन्दति। आक्रन्द्यतेऽस्मिन्। आक्रन्दयति वा। 'क्रदि आह्वाने रोदने च' (भ्वा० प० से०)। 'आङः क्रन्द शब्दसातत्ये' (चु० उ० से०)। घञ् (३।३।१८,१९)। पचाद्यच् (३।१।१३४) वा। 'आक्रन्दः क्रन्दने ह्वाने मित्रदारुणयुद्धयोः' (इति मेदिनी)॥

**स्यात्प्रसादोऽनुरोधेऽपि**

प्रसदनम्। अनेन वा। 'षद्लृ विशरणादौ' (भ्वा० प० अ०)। घञ् (३।३।१८,१९)। 'प्रसादोऽनुग्रहे काव्यप्राणस्वास्थ्यप्रसत्तिषु' (इति मेदिनी)॥

**सूदः स्याद्व्यञ्जने त्रिषु।**

सूद्यते। सूदयति वा। 'षूद क्षरणे' (चु० उ० से०)। 'एरच्' (३।३।५६)। पचाद्यच्। (३।१।१३४) वा। 'सूदस्तु सूपवत्सूपकारे च व्यञ्जनेऽपि च' इति विश्वः॥

**गोष्ठाध्यक्षेऽपि गोविन्दः**

गां विन्दति। 'विद्लृ लाभे' (तु० उ० अ०)। 'गवादिषु

१—'सारावे' इति रुदितविशेषणम्। त्रातरि पार्ष्णिग्राहाक्रान्तस्य विजिगीषो रक्षितरि—इति पीयूषव्याख्या॥

विन्देः संज्ञायाम्' (३।१।१३८) इति शः। 'गोविन्दो वासुदेवे स्याद्गवाध्यक्षे बृहस्पतौ' (इति मेदिनी) ॥

**हर्षेऽप्यामोदवन्मदः ॥९१॥**

आमोदनम्। आमोदयति वा। 'मुद हर्षे' (भ्वा० आ० से०) स्वार्थण्यन्तः। घञ् (३।३।१८)। पचाद्यच् (३।१।१३४) वा। 'आमोदो गन्धहर्षयोः' (इति मेदिनी)। मदनम्। अनेन वा। 'मदी हर्षे' (दि० प० से०)। 'मदोऽनुपसर्गे' (३।३।६७) इत्यप्। 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः' (इति विश्वः) ॥

**प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्।**

कं सुखं कौति। 'कु शब्दे' (अ० प० अ०)। क्विप् (३।२।७६)। तुक् (६।१।७१)। पृषोदरादिः (६।३।१०९) 'ककुद्वत् ककुदं श्रेष्ठे वृषाङ्गे राजलक्ष्मणि' इति विश्वः। प्राधान्ये स्वार्थे ष्यञ् (वा० ५।१।१२४) ॥

**स्त्री संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु ॥९२॥**

संवेदनम्। संविद्यतेऽनया वा। 'विद ज्ञाने' (अ० प० से०)। 'विद चेतनादौ च' (चु० आ० से०)। संपदादिक्विप् (वा० ३।३।१०८)। 'संवित् स्त्रियां प्रतिज्ञायामाचारे ज्ञानसंगरे। संभाषणे क्रियाकारे संकेते नाम्नि तोषणे' (इति मेदिनी)। क्रियायाः कारो नियमः पणबन्धो वा, आजिर्युद्धम् ॥

**धर्मे रहस्युपनिषत्**

उपनिषदनम्। उपनिषीदति श्रेयोऽस्यां वा। 'षद्लृ विशरणादौ' (भ्वा० प० अ०)। संपदादिः (वा० (३।३।१०८)। 'भवेदुपनिषद्धर्मे वेदान्ते विजने स्त्रियाम्' (इति मेदिनी) ॥

**स्याहतौ वत्सरे शरत्।**

शृणाति। 'शॄ हिंसायाम्' (क्र्या० प० से०)। 'शॄदृभसोऽदिः' (उ० १।१३०) 'शरत् स्त्री वत्सरेऽप्यृतौ' (इति मेदिनी) ॥

**पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ॥९३॥**

पदति। पद स्थैर्ये (        )। पद्यति वा। 'पद गतौ' (दि० आ० अ०)। पचाद्यच् (३।१।१३४)। भावकर्मकरणेषु वा घञ्। संज्ञापूर्वकत्वाद्वृद्ध्यभावः। 'पदं शब्दे च वाक्ये च व्यवसायापदेशयोः। पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः' इति विश्वः। 'श्लोकपादेऽपि च क्लीबं पुंलिङ्गः किरणे पुनः' (इति मेदिन्यां विशेषः) ॥

**गोष्पदं सेविते माने**

गोः पदम्। 'गोष्पदं सेवितासेवित–' (६।१।१४५) इति साधुः। 'गोष्पदं गोपदे श्वभ्रे गवां च गतिगोचरे' इति विश्वः (मेदिनी) ॥

१—'स्त्री' इति संविदुपनिषच्छरद्भिः संबध्यते—इति मुकुटः ॥

**प्रतिष्ठाकृत्यमास्पदम्।**

आपद्यतेऽस्मिन्। 'आस्पदं प्रतिष्ठायाम्' (६।१।१४६) इति साधुः। 'आस्पदं पदकृत्ययोः' (इति मेदिनी) ॥

**त्रिषु**

आदान्तात् ॥

**इष्टमधुरौ स्वादू**

स्वदते। 'ष्वद आस्वादने' (भ्वा० आ० से०)। 'कृवापा–' (उ० १।१) इत्युण्। 'स्वादु मिष्टमनोज्ञयोः' (इति मेदिनी) ॥

**मृदू चातीक्ष्णकोमलौ ॥९४॥**

म्रद्यते। 'म्रद मर्दने' (भ्वा० आ० से०)। 'प्रथिम्रदि–' (उ० १।२८) इति कुः संप्रसारणं च ॥

**मूढाल्पापटुनिर्भाग्या मन्दाः स्युः**

मन्दते। 'मदि स्तुत्यादौ' (भ्वा० आ० से०)। पचाद्यच् (३।१।१३४)। 'मन्दोऽतीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः। अल्पे च त्रिषु पुंसि स्याद्धस्तिजात्यन्तरे शनौ' (इति मेदिनी) ॥

**द्वौ तु शारदौ।**

**प्रत्यग्राप्रतिभौ**

शरदि भवः। 'संधिवेला–' (४।३।१६) इत्यण्। 'शारदोऽब्दे स्त्रियां तोयपिप्पलीसप्तपर्णयोः। शस्ये क्लीबं शरज्जातनूतनाप्रतिभे त्रिषु' (इति मेदिनी) ॥

**विद्वत्सुप्रगल्भौ विशारदौ ॥९५॥**

विशिष्टो विपरीतो वा शारदः। 'प्रादयो गता–' (वा० २।२।१८) इति समासः। 'विशारदः पण्डिते च धृष्टे' (इति मेदिनी) ॥

इति दान्ताः ॥

**व्यामो वटश्च न्यग्रोधौ**

न्यक् रुणद्धि। 'रुधिर् आवरणे' (रु० उ० अ०) 'कर्मण्यण्' (३।२।१)। 'न्यग्रोधो व्यामवटयोर्न्यग्रोधश्च शमीतरौ' (इति विश्वः) ॥

**उत्सेधः काय उन्नतिः।**

उत्सेधनम्। अनेन वा। 'षिधु गत्याम्' (भ्वा० प० से०)। घञ् (३।३।१८,१९) ॥

**पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ ॥९६॥**

विविधो वधो हननं गमनं वा। अनेन वा। 'प्रादिभ्यो धातुजस्य–' (वा० २।२।२४) इति समासोत्तरपदलोपौ। 'अन्येषामपि–' (६।३।१३७) इति वा दीर्घः। 'विवधो वीवधश्चापि पर्याहारेऽध्वभारयोः' इति विश्वः। परित आह्रियतेऽनेन। पर्याहार उभयतोबद्धशिक्यं स्कन्धवाह्यं काष्ठं 'कावडी' इति ख्यातम्। यत्तु—'उपसर्गस्य–' (६।३।

१२२) इति दीर्घः—इति मुकुट आह । तन्न । वधशब्दस्या-बन्तत्वेनाघञन्तत्वात् ॥

**परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ।**

परिधीयते । 'डुधाञ्' ( जु० उ० अ० ) । 'उपसर्गे घोः किः' (३।३।९२) ॥

**बन्धकं व्यसनं चेतःपीडाधिष्ठानमाधयः ॥ ९७ ॥**

आधानम् । अनेन, अस्मिन् वा । पूर्ववत् । '**आधिः** पुमांश्चित्तपीडाप्रत्याशाबन्धकेषु च । व्यसने चाप्यधिष्ठाने' (इति मेदिनी) ॥

**स्युः समर्थननीवाकनियमाश्च समाधयः ।**

नीवाको वचनाभावः, मूलोत्कर्षार्थं धान्यादिसंग्रहो वा । समाधानम् अनेन वा पूर्ववत् । '**समाधि**र्ध्याननीवाकनि-यमेषु समर्थने' इति विश्वः (रभसः) । '**समाधि**र्ना समर्थने । ध्याने वैरस्य (ध्याननीवाक)नियमे काव्यस्य च गुणान्तरे' । (इति मेदिनी) ॥

**दोषोत्पादेऽनुबन्धः स्यात्प्रकृत्यादिविनश्वरे ॥ ९८ ॥**
**मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ।**

अनुबध्यते । 'बन्ध बन्धने' ( क्र्या० प० अ० ) । घञ् (३।३।१९) । '**अनुबन्धस्तु** बन्धे स्याद्दोषोत्पादे विनश्वरे । मुख्यानुयायिबाले च प्रकृतस्यानिवर्तने । **अनुबन्धी** तु हिक्कायां तृष्णायामपि (इति मेदिनी) । मुख्यं पित्रादिकमनु-याति यः शिशुः । प्रकृतस्य प्रारब्धस्यानुवर्तनेऽनिवर्तने ॥

**विधुर्विष्णौ चन्द्रमसि**

विध्यति विरहिणम् । 'व्यध ताडने' ( दि० प० अ० ) । 'पृभिदि–' (उ० १।२३) इति कुः । 'ग्रहिज्या–' (६।१।१६) इति संप्रसारणम् । '**विधुः** शशाङ्के कर्पूरे हृषीकेशे च राक्ष-से' इति विश्वः ॥

**परिच्छेदे विलेऽवधिः ॥ ९९ ॥**

अवधानम् । 'उपसर्गे–' (३।३।९२) इति किः । '**अव-धि**स्त्ववधाने स्यात्सीम्नि काले बिले पुमान्' (इति मेदिनी) ॥

**विधिर्विधाने दैवेऽपि**

विधानम् । अनेन वा पूर्ववत् किः (३।३।९२) । '**विधि**-र्ना नियतौ काले विधाने परमेष्ठिनि' (इति मेदिनी) ॥

**प्रणिधिः प्रार्थने चरे ।**

प्रणिधानम् । प्रणिधीयते वा । किः (३।३।९२) '**प्रणि-धि**र्याचने चरे' (इति हैमः) । प्रणिधिरवधानेऽपि' ॥

**बुधवृद्धौ पण्डितेऽपि**

बुध्यते । 'बुध अवगमने' (दि० आ० अ०) । 'इगुपध–' (३।१।१३५) इति कः । '**बुधः** कवौ रौहिणेये' इति विश्वः ॥ वर्धते स्म । 'वृधु वृद्धौ' ( भ्वा० आ० अ०) । 'गत्यर्था–' (३।४।७२) इति क्तः । '**वृद्धो** जीर्णे प्रवृद्धे ज्ञे त्रिषु क्लीबं तु शैलजे' (इति मेदिनी) ॥

**स्कन्धः समुदयेऽपि च ॥ १०० ॥**

कं शिरो दधाति । 'आतोऽनुप–' (३।२।३) इति कः । पारस्करादित्वात् (६।१।१५७) सुट् । '**स्कन्धः** स्यान्नृपता-वंसे संपरायसमूहयोः । काये तरुप्रकाण्डे च भद्रादौ छन्दसो भिदि' (इति मेदिनी) ॥

**देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम् ।**

स्यन्दते । 'स्यन्दू प्रस्रवणे' ( भ्वा० आ० से० ) । 'स्यन्देः संप्रसारणं धश्च' (उ० १।११) इत्युः । '**सिन्धुः** समुद्रे नद्यां च नदे देशेभदानयोः' इति विश्वः । '**सिन्धु**र्वमथुदेशाब्धि-नदे ना सरिति स्त्रियाम्' (इति मेदिनी) ॥

**विधा विधौ प्रकारे च**

विधानम् । 'डुधाञ्' ( जु० उ० अ० ) । 'आतश्चोप–' (३।३।१०६) इत्यङ् । '**विधा** गजान्ने ऋद्धौ च प्रकारे वेतने विधौ' इति विश्वः । विधौ विधाने ॥

**साधू रम्येऽपि च त्रिषु ॥ १०१ ॥**

साध्नोति । 'साध संसिद्धौ' ( स्वा० प० से० ) 'कृवापा–' (उ० १।१) इत्युण् । '**साधु**र्वार्धुषिके चारौ सज्जने चाभिधेय-वत्' इति विश्वः ॥

**वधूर्जाया स्नुषा स्त्री च**

वहति । 'वह प्रापणे' ( भ्वा० उ० अ० ) । 'वहो धश्च' (उ० १।८३) इत्यूः । 'वधूः स्नुषा नवोढा स्त्री भार्यापृक्काङ्ग-नासु च । शट्यां च शारिवायां च' इति विश्वः ॥

**सुधा लेपोऽमृतं स्नुही ।**

सुष्ठु धीयते । 'डुधाञ्' (जु० उ० अ०) । 'धेट्' ( भ्वा० प० अ० ) । 'आतश्चोप–' (३।३।१०६) इत्यङ् । '**सुधा** गङ्गेष्टकाचूर्णं स्नुही चामृतमूर्वयोः' इत्यजयः ॥

**संधा प्रतिज्ञा मर्यादा**

संधानम् । अत्र वा । 'डुधाञ्' ( जु० उ० अ० ) । 'आ-तश्चोप–' (३।३।१०६) इत्यङ् ॥

**श्रद्धा संप्रत्ययः स्पृहा ॥१०२॥**

श्रद्धानम् पूर्ववत् । '**श्रद्धा**दरे च काङ्क्षायाम्' (इति मे-दिनी ) । संप्रत्यय आदरः ॥

**मधु मद्ये पुष्परसे क्षौद्रेऽपि**

मन्यते । 'मन ज्ञाने' ( दि० आ० अ० ) । 'फलिपाटि–' (उ० १।१८) इत्युः, धश्च । '**मधु** क्षौद्रे जले क्षीरे मद्ये पु-ष्परसे **मधुः** । दैत्ये चैत्रे वसन्ते च जीवकोशे मधुद्रुमे' इति विश्वः ॥

**अन्धं तमस्यपि।**

अन्धयति। 'अन्ध दृष्ट्युपघाते' (चु० उ० से०)। पचाद्यच् (३।१।१३४)। **'अन्धं** तु तिमिरे क्लीबं चक्षुर्हीनेऽभिधेयवत्' (इति मेदिनी)॥

**अतस्त्रिषु**

आधान्तात्॥

**समुन्नद्धौ पण्डितंमन्यगर्वितौ ॥१०३॥**

समुन्नह्यते स्म। 'णह बन्धने' (दि० उ० अ०)। क्तः (३।२।१०२)। **'समुन्नद्धः** समुद्भूते पण्डितंमन्यदृप्तयोः' इति विश्वः॥

**ब्रह्मबन्धुरधिक्षेपे निर्देशे**

ब्रह्मैव ब्राह्मणजातिः बन्धुरस्य। **'ब्रह्मबन्धुरधिक्षेपे** निर्देशे च द्विजन्मनाम्' इति विश्वः॥

**अथावलम्बितः।**

**अविदूरोऽप्यवष्टब्धः**

अवलम्बित आश्रितः, वस्त्रादिरुद्धो वा। अवष्टभ्यते स्म। 'ष्टभि स्तम्भे' (भ्वा० आ० से०)। 'स्तम्भु रोधने' (सौत्रः) वा। 'स्तम्भेः' (८।३।६७) 'अवाच्चा–' (८।३।६८) इति षः। **'अवष्टब्धोऽविदूरे** स्यादाक्रान्ते चावलम्बिते' (इति मेदिनी)॥

**प्रसिद्धौ ख्यातभूषितौ ॥ १०४ ॥**

प्रसिध्यति, प्रसिध्यते स्म वा। 'षिधु संराद्धौ' (दि० प० से०) 'गत्याम्' (भ्वा० प० से०)। कर्तरि (३।४।७२) कर्मणि (३।२।१०२) वा क्तः॥

॥ इति धान्ताः॥

**सूर्यवह्नी चित्रभानू**

चित्रा भानवो रश्मयोऽस्य॥

**भानू रश्मिदिवाकरौ।**

भाति। 'भा दीप्तौ' (अ० प० अ०)। 'दाभाभ्यां नुः' (उ० ३।३२)॥

**भूतात्मानौ धातृदेहौ**

भूतानामात्मा। भूतानि आत्मा स्वभावो यस्य, इति च॥

**मूर्खनीचौ पृथग्जनौ ॥ १०५ ॥**

पृथक्कार्यो जनः शाकपार्थिवादिः (वा० २।१।७८)॥

**ग्रावाणौ शैलपाषाणौ**

ग्रसते। 'ग्रसु अदने' (भ्वा० आ० से०)। 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः। आवनति। 'वन संभक्तौ' (भ्वा० प० से०) 'शब्दे' (भ्वा० प० से०) वा। विच् (३।२।७६)। ग्रश्चासावावा च॥

**पत्रिणौ शरपक्षिणौ।**

पत्राणि सन्त्यस्य। 'अतः–' (५।२।११५) इतीनिः॥ 'पत्री श्येने रथे काण्डे खगद्रुरथिकाद्रिषु' इति विश्वः॥

**तरुशैलौ शिखरिणौ**

शिखरमस्ति ययोः। 'अतः–' (५।२।११५) इतीनिः॥

**शिखिनौ वह्निबर्हिणौ ॥ १०६ ॥**

शिखाः सन्त्यस्य। 'द्वन्द्वोपताप–' (५।२।१२८) इतीनिः॥ व्रीह्यादिः (५।२।११६) वा। **'शिखी** वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे। मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गकः' (इति मेदिनी)॥

**प्रतियत्नावुभौ लिप्सोपग्रहौ**

प्रतियतनम्। प्रतियत्यते वा। 'यती प्रयत्ने' (भ्वा० आ० से०)। 'यत निकारादौ' (चु० उ० से०) वा। 'यजयाच—' (३।३।९०) इति नङ्। **'प्रतियत्नश्च** संस्कारलिप्सोपग्रहणेषु च' (इति मेदिनी)। उपग्रहो वन्दीग्रहणादिः॥

**अथ सादिनौ।**

**द्वौ सारथिहयारोहौ**

अवश्यं सीदति। सादयति वा। 'षद्लृ विशरणादौ' (भ्वा० प० अ०)। 'आवश्यका—' (३।३।१७०) इति णिनिः। ग्रह्यादिः (३।१।१३४) वा। **'सादी** सुरंगमातङ्गरथारोहेषु दृश्यते' (इति मेदिनी)॥

**वाजिनोऽश्वेषुपक्षिणः ॥ १०७ ॥**

वाजाः पक्षाः सन्त्यस्य। 'अतः—' (५।२।११५) इतीनिः॥

**कुलेऽप्यभिजनो जन्मभूम्यामपि**

अभि जायतेऽस्मिन्। 'जनी' (दि० आ० से०)। 'हलश्च' (३।३।१२१) इति घञ्। 'जनिवध्योश्च' (७।३।३३) इति वृद्धिर्न। **'अभिजनः** कुले ख्यातौ जन्मभूम्यां कुलध्वजे' इति विश्वः॥

**अथ हायनाः।**

**वर्षार्चिर्व्रीहिभेदाश्च**

जहाति, जिहीते, वा। 'ओहाक् त्यागे' (जु० प० अ०)। 'ओहाङ् गतौ' (जु० आ० अ०) वा। 'हश्च व्रीहिकालयोः' (३।१।१४८) इति ण्युट्। **'हायनो** न स्त्रियां वर्षे पुंस्यर्चिर्व्रीहिभेदयोः' (इति मेदिनी)। वर्षोऽब्दम्। अर्ची रश्मिः। 'व्रीहिभेदो नीवारादिः' इति मुकुटः। षष्टिकः, इति स्वामी॥

**चन्द्राग्न्यर्का विरोचनाः ॥ १०८ ॥**

विरोचते। 'रुच दीप्तौ' (भ्वा० आ० से०)। 'अनुदात्तेतश्च हलादेः' (३।२।१४९) इति युच्। **'विरोचनः** प्रह्लादस्य तनयेऽर्केऽग्निचन्द्रयोः' (इति मेदिनी)॥

**केशेऽपि वृजिनः**

वृज्यते। 'वृजी वर्जने' (अ० आ० से०)। 'वृजेः किच्च'

(उ० २।४७) इतीनन् । '**वृजिनं** कल्मषे क्लीबं केशे ना कुटिले त्रिषु' इति रभसः ॥

**विश्वकर्मार्कसुरशिल्पिनोः ।**

विश्वं कर्मास्यात्, अस्य, वा । '**विश्वकर्मा** सहस्रांशौ मुनिभिद्देवशिल्पिनोः' (इति मेदिनी) ॥

**आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च १०९**

अतति 'अत सातत्यगमने' (भ्वा० प० से०) 'सातिभ्यां मनिन्मनिणौ' (उ० ४।१५३) । '**आत्मा** कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च' इति धरणिः ॥

**शक्रो घातुकमत्तेभो वर्षुकाब्दो घनाघनः ।**

हन्ति । 'हन हिंसागत्योः' (अ० प० अ०) 'हन्तेर्घश्च' (वा० ६।१।१२) इति पचाद्यचि द्विलम्, आक् चाभ्यासस्य । 'अन्योन्यघट्टने चैव घातुके च **घनाघनः**' इति धरणिः ॥

**अभिमानोऽर्थादिदर्पेऽज्ञाने प्रणयहिंसयोः ॥ ११० ॥**

अभिमननम् । 'मन ज्ञाने' (दि० आ० अ०) । घञ् (३।३।१८) । 'मीञ् हिंसायाम्' (क्र्या० उ० अ०) । भावे ल्युट् (३।३।११५) । 'मीनाति–' (६।१।५०) इत्यात्वम् । आदिना कुलपशुगुणादिग्रहः ॥

**घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे ।**

हननम् । हन्यते वा । 'मूर्तौ घनः' (३।३।७७) इत्यप् । '**घनं** सान्द्रं **घनं** वाद्यं **घनो** मुस्तो **घनो**ऽम्बुदः । **घनः** काठिन्यसंघातो विस्तारो लोहमुद्गरौ' इति धरणिः । मूर्तिगुणे काठिन्ये ॥

**इनः सूर्ये प्रभौ**

एति । ईयते वा । 'इण्सिजि–' (उ० ३।२) इति नक् ॥

**राजा मृगाङ्के क्षत्रिये नृपे ॥ १११ ॥**

राजति । 'राजृ दीप्तौ' (भ्वा० उ० से०) 'कनिन् युवृषि–' (उ० १।१५६) इति कनिन् । '**राजा** प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात्' (इति मेदिनी)॥

**वाणिन्यौ नर्तकीदूत्यौ**

अवश्यं वणति । 'वण शब्दे' (भ्वा० प० से०) । 'आवश्यका–' (३।३।२७०) इति, ग्रह्यादित्वात् (३।१।१३४) वा णिनिः । वबयोरैक्यम् । '**वाणिनि**र्नर्तकीमत्ताविदग्धवनितासु च' (इति मेदिनी) ॥

**स्रवन्त्यामपि वाहिनी ।**

वहति । ग्रह्यादि (३।१।१३४) णिनिः । '**वाहिनी** स्यात्तरङ्गिण्यां सेनासैन्यप्रभेदयोः' इति विश्वः ॥

**ह्रादिन्यौ वज्रतडितौ**

ह्रादतेऽवश्यम् । 'ह्राद अव्यक्ते शब्दे' (भ्वा० आ० से०) 'आवश्यका–' (३।३।१७०) इति णिनिः ॥

**वन्ध्यायामपि कामिनी ॥ ११२ ॥**

अवश्यं काम्यते । 'कमु कान्तौ' (भ्वा० आ० से०) । पूर्ववत् (३।३।१७०) णिनिः । '**कामिनी** भीरुवन्द्योः । **कामी** तु कामुके चक्रवाके पारावतेऽपि च' (इति मेदिनी) वन्दा वृक्षे विजातीयप्ररोहः ॥

**त्वग्देहयोरपि तनुः**

तनोति, तन्यते वा । 'तनु विस्तारे' (त० उ० से०) । 'भृमृशी–' (उ० १।७) इत्युः । '**तनुः** काये त्वचि स्त्री स्यात्रिष्वल्पे विरले कृशे' (इति मेदिनी) ॥

**सूनाधोजिह्विकापि च ।**

सवनम् । सूयते वा । 'षूङ् प्राणिगर्भविमोचने' (अ० आ० से०) । भावे (३।३।११४) कर्मणि (३।३।१०२। वा०) क्तः । 'स्वादय ओदितः' (दि० ग०) इति (ओदित्त्वात् 'ओदितश्च' (८।२।४५) इति निष्ठानत्वम्) । '**सूना**ख्या पुष्पिते पुष्पे जिह्वातले वधालये' इत्यजयः । '(**सूनं** प्रसवपुष्पयोः) । **सूना** पुत्र्यां वधस्थानगलशुण्डिकयोरपि' (इति विश्वः) ॥

**क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके ॥ ११३ ॥ मन्दे**

विततननम् । वितन्यते वा । घञ् (३।३।१८,१९) । 'वितानो यज्ञविस्तारोल्लोचेषु क्रतुकर्मणि । वृत्तभेदावसरयोर्वितानं तुच्छमन्दयोः' इति विश्वः । '**वितानो** यज्ञ उल्लोचे विस्तारे पुंनपुंसकम् । क्लीबं वृत्तविशेषे स्यात्त्रिलिङ्गो मन्दतुच्छयोः' (इति मेदिनी) मन्दे मूढे ॥

**अथ केतनं कृत्ये केतावुपनिमन्त्रणे ।**

'कित निवासादौ' (भ्वा० प० से०) । भावकर्मकरणाधिकरणेषु ल्युट् । '**केतनं** तु ध्वजे कार्ये निमन्त्रणनिवासयोः' इत्यजयः ॥

**वेदास्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः ॥ ११४ ॥**

बृहति । 'बृहि वृद्धौ '(भ्वा० प० से०) । 'बृंहेर्नोऽच्च' (उ० ४।१४६) इति मनिन् । '**ब्रह्म** तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे' (इति मेदिनी) ॥

**उत्साहने च हिंसायां सूचने चापि गन्धनम् ।**

'गन्ध मर्दने' (चु० आ० से०) । भावादौ ल्युट् । '**गन्धनं** सूचनोत्साहहिंसनेषु प्रकाशने' इति विश्वः ॥

**आतञ्चनं प्रतीवापजवनाप्यायनाजकम् ॥ ११५ ॥**

'तञ्चु गतौ' (भ्वा० प० से०) । ल्युट् (३।३।११४) । प्रतीवापो दुग्धादौ दध्यादिभावार्थे तक्रादिप्रक्षेपः, निक्षेपो वा । जवनं वेगः । आप्यायनं तर्पणम् ॥

१—वाणिनीशब्दो मेदिन्यां पवर्गीयादौ पठितः । हैमे तु अन्तस्थादौ पठितः ॥ एवं वाहिनीशब्दोऽपि ॥

**व्यञ्जनं लाञ्छनश्मश्रुनिष्ठानावयवेष्वपि ।**

व्यज्यते । अनेन वा । ल्युट् (३।३।११३,११७) । '**व्यञ्जनं** तेमने चिह्ने श्मश्रुण्यवयवेऽपि च' (इति मेदिनी) । निष्ठानं तेमनम् ॥

**स्यात्कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम् ११६**

कुलीनस्य कर्म भावो वा । युवाद्यण् (५।१।१३०) । '**कौलीनं** पशुभिर्युद्धे कुलीनत्वापवादयोः' इति धरणिः ॥

**स्यादुद्यानं निःसरणे वनभेदे प्रयोजने ।**

उद्यात्यनेन । अस्मिन् वा । 'या प्रापणे' (अ० प० अ०) । 'करणा–' (३।३।११७) इति ल्युट् । '**उद्यानं** वनभेदे स्यान्निःसृतौ च प्रयोजने' इति धरणिः ॥

**अवकाशे स्थितौ स्थानम्**

स्थीयतेऽत्र । अधिकरणे (३।३।११७) भावे (३।३।११५) च ल्युट् । '**स्थानं** सादृश्येऽवकाशे स्थितौ वृद्धिक्षयेतरे' (इति मेदिनी) ॥

**क्रीडादावपि देवनम् ॥ ११७ ॥**

दीव्यतेऽनेन । 'दिवु क्रीडादौ' (दि० प० से०) । भावकरणादौ ल्युट् । '**देवनं** व्यवहारे स्याज्जिगीषाक्रीडयोरपि । अक्षेषु **देवनः** प्रोक्तः' इति विश्वः ॥

**उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेऽपि च ।**

'**उत्थान**मुद्यते तन्त्रे पौरुषे पुस्तके रणे ।' ('प्राङ्गणोद्गमहर्षेषु मलवेगेऽपि न द्वयोः') (इति मेदिनी) । '**तन्त्रं** कुटुम्बकृत्ये स्यात्सिद्धान्ते चौषधोत्तमे । प्रधाने तन्तुवाने च शास्त्रभेदे परिच्छदे । श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके' (इति मेदिनी) ॥

**व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि च ॥ ११८ ॥**

विरुद्धमुत्थानम् । 'प्रादयो गता–' (वा० २।२।१८) इति समासः । 'स्वतन्त्रता च व्युत्थानम्' इति त्रिकाण्डशेषः ॥

**मारणे मृतसंस्कारे गतौ द्रव्योपपादने ।**
**निर्वर्तनोपकरणानुव्रज्यासु च साधनम् ॥ ११९ ॥**

'षाध संसिद्धौ' (स्वा० प० से०) । भावकर्मकरणादौ ल्युट् । '**साधनं** मृतसंस्कारे सैन्ये सिद्धौषधे गतौ । निर्वर्तनोपायमेढ्दापनेऽनुगमे धने' (इति मेदिनी) । उपकरणं साधनसामग्री ॥

**निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च ।**

'यत निकारादौ' (चु० उ० से०) स्वार्थण्यन्तः । भावादौ ल्युट् ॥

**व्यसनं विपदि भ्रंशे दोषे कामजकोपजे ॥ १२० ॥**

[१]व्यस्तिः । 'असु क्षेपणे' (दि० प० से०) । भावादौ ल्युट् । '**व्यसनं** त्वशुभे सक्तौ पानस्त्रीमृगयादिषु । दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे' इति विश्वः (मेदिनी) । कामजे दोषे मृगयाक्षपानादौ । कोपजे वाक्पारुष्यदण्डपारुष्यार्थदूषणादौ ॥

**पक्ष्माक्षिलोम्नि किंजल्के तन्त्वाद्यंशेऽप्यणीयसि ।**

पक्ष्यते । अनेन वा । 'पक्ष परिग्रहे' (भ्वा० प० से०) कर्मकरणादौ मनिन् (उ० ४।१४५) । '**पक्ष्म** सूत्रादिसूक्ष्मांशे किंजल्के नेत्रलोमनि' इति विश्वः ॥

**तिथिभेदे क्षणे पर्व**

पर्वति पर्व्यते वा । 'पर्व पूरणे' (भ्वा० प० से०) । बाहुलकात्कनिन् । '**पर्व** स्यादुत्सवे ग्रन्थौ प्रस्तावे विषुवादिषु । दर्शप्रतिपदोः संधौ स्यात्तिथेः पञ्चकान्तरे' इति धरणिः ॥

**वर्त्म नेत्रच्छदेऽध्वनि ॥ १२१ ॥**

वर्तते । अनेन । अस्मिन् वा । 'वृतु वर्तने' (भ्वा० आ० से०) । मनिन् (उ० ४।१४५) ॥

**अकार्यगुह्ये कौपीनम्**

कूपपतनमर्हति । 'शालीनकौपीने अधृष्टाकार्ययोः' (५।२।२०) इति साधुः । '**कौपीनं** स्यादकार्येऽपि चीरगुह्यप्रदेशयोः' इति विश्वः ॥

**मैथुनं संगतौ रते ।**

मिथुनमेव । प्रज्ञाद्यण् (५।४।३८) । मिथुनस्येदं वा । 'संबन्धे सुरते युग्मे राशौ **मिथुन**मिष्यते' इति व्याडिः ॥

**प्रधानं परमात्मा धीः**

प्रधत्ते, धीयतेऽनेन । अस्मिन् वा । 'डुधाञ्' कर्तृकरणादौ ल्युट् (३।३।११३,११७) । '**प्रधानं** स्यान्महामात्रे प्रकृतौ परमात्मनि । प्रज्ञायामपि च क्लीबमेकत्वे तूत्तमे सदा' (इति मेदिनी) ॥

**प्रज्ञानं बुद्धिचिह्नयोः ॥ १२२ ॥**

प्रज्ञायते । अनेन वादौ ल्युट् (३।३।११३,११५,११७) ॥

**प्रसूनं पुष्पफलयोः**

प्रसूयते । 'षुञ् अभिषवे' (स्वा० उ० अ०) । 'सुञो दीर्घश्च' (उ० ३।१३) इति नः ॥

**निधनं कुलनाशयोः ।**

निधानम् । निधीयतेऽत्र वा । 'कृपृवृजि–' (उ० २।८१) इति क्युः ॥

**क्रन्दने रोदनाह्वाने**

'क्रदि आह्वाने रोदने च' (भ्वा० प० से०) । भावे (३।(३।११५) ल्युट् ॥

**वर्ष्म देहप्रमाणयोः ॥ १२३ ॥**

वर्षति । वृष्यते वा । 'वृषु सेचने' (भ्वा० प० से०) । मनिन् (उ० ४।१४५) । '**वर्ष्म** देहप्रमाणातिसुन्दराकृतिषु स्मृतम्' (इति मेदिनी) ॥

१—भावविग्रहप्रदर्शनमेतत् ॥

**गृहदेहत्विट्प्रभावा धामानि**

दधाति । धीयते वा । 'डुधाञ्' (जु० उ० अ०) । मनिन् (उ० ४।१४५) । '**धाम** शक्तौ प्रभावे च तेजोमन्दिरजन्मसु' इति विश्वः ॥

**अथ चतुष्पथे ।**

**संनिवेशे च संस्थानम्**

संस्थीयतेऽत्र । अनेन वा । संस्थितिर्वा । भावाधिकरणादौ ल्युट् (३।३।११५,११७) । '**संस्थान**माकृतौ मृत्यौ संनिवेशे चतुष्पथे' (इति मेदिनी) ॥

**लक्ष्म चिह्नप्रधानयोः ॥ १२४ ॥**

लक्ष्यते । अनेन वा । 'लक्ष दर्शने' (चु० आ० से०) । मनिन् (उ० ४।१४५) ॥

**आच्छादनं संपिधानमपवारणमित्युभे ।**

आच्छाद्यतेऽनेन । 'छद अपवारणे' चुरादिः । करणे (३।३।११७) भावे (३।३।११५) वा ल्युट् । '**आच्छादनं** संपिधाने वस्त्रेऽपवृतिमात्रके' इति धरणिः ॥

**आराधनं साधने स्यादवाप्तौ तोषणेऽपि च ॥१२५॥**

आराध्यतेऽनेन । 'राध संसिद्धौ' (स्वा० प० अ०) । भावादौ ल्युट् (३।३।११५,११७)

**अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि ।**

अधिष्ठीयते । अनेन वा । भावादौ ल्युट् (३।३।११५ ११७) । 'अधिष्ठानं रथस्याङ्गे प्रभावेऽध्यासने पुरे' इत्यजयः ॥

**रत्नं स्वजातिश्रेष्ठेऽपि**

रमयति । 'रमु क्रीडायाम्' (भ्वा० आ० अ०) ण्यन्तः । अन्तर्भावितण्यर्थो वा, रमन्तेऽस्मिन् वा । 'रमेस्त च' (उ० ३।१४) इति नः । 'नेड् वशि–' (७।२।८) इति नेट् । 'णेरनिटि–' (६।४।५१) । '**रत्नं** स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्' (इति मेदिनी) ॥

**वने सलिलकानने ॥ १२६ ॥**

वन्यते । 'वन संभक्तौ' (भ्वा० प० से०) । 'वनु याचने' (त० उ० से०) वा । 'हलश्च' (३।३।१२१) इति घञ् । संज्ञापूर्वकत्वान्न वृद्धिः । कर्तरि पचाद्यच् (३।१।१३४) वा । 'क्लीबं स्यात् कानने नीरे निवासे निलये **वनम्**' इति रभसः ॥

**तलिनं विरले स्तोके**

तलति । तल्यते वा । 'तल प्रतिष्ठायाम्' (भ्वा० प० से०) । 'तलिपुलिभ्यामिनन्' (उ० २।५३) । '**तलिनं** विरले स्तोके स्वच्छेऽपि वाच्यलिङ्गकम्' (इति मेदिनी) ॥

१—अस्य सूत्रस्य 'करणाधिकरणयोः' इत्यधिकारस्थत्वेनात्रोपन्यासो निष्फलः कर्मणि विगृहीतत्वात् ॥ तस्मात् 'अकर्तरि–' (३।३।१९) इत्येव न्याय्यम् ॥ २—आधुनिकपुस्तकेषु तु 'तलिपुलिभ्यां च' इत्येव पाठ उपलभ्यते ॥

**वाच्यलिङ्गास्तथोत्तरे ।**

तथा तलिनवत् । उत्तरे आनान्तात् ॥

**समानाः सत्समैके स्युः**

समति । 'षम वैक्लव्ये' (भ्वा० प० से०) । 'ताच्छील्यवयोवचनशक्तिषु चानश्' (३।२।१२९) । 'आगमशासनमनित्यम्' इति मुग् न । सह मानेन वर्तते, इति वा । '**समानं** सत्समैकेषु त्रिषु, ना नाभिमारुते' (इति मेदिनी) ॥

**पिशुनौ खलसूचकौ ॥ १२७ ॥**

पिंशति । 'पिश अवयवे' (तु० प० से०) । 'क्षुधिपिशिमिथिभ्यः कित्' (उ० ३।५५) इत्युनन् । '**पिशुनं** कुङ्कुमेऽपि च । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु । पृक्कायां पिशुना स्त्री स्यात्' (इति मेदिनी) ॥

**हीनन्यूनावूनगर्ह्यौ**

जहाति । हीयते स्म वा । 'ओहाक् त्यागे' (जु०प०अ०) । 'आदिकर्मणि क्तः' (३।४।७१) । कर्मणि (३।२।१०२) वा । 'ओदितश्च' (८।२।४५) इति नत्वम् । '**हीनं** गर्ह्योनयोस्त्रिषु' (इति मेदिनी) ॥

न्यूनयति । न्यूनयते स्म वा । 'ऊन परिहाणे' (चु० उ० से०) । पचाद्यच् (३।१।१३४) । घञ् (३।३।१९) वा । यत्तु–'इगुपध–' (३।१।१३५) इति कः–इति मुकुटेनोक्तम् । तन्न । चुरादिण्यन्तत्वेन अदन्तत्वेन चेगुपधत्वाभावात् । '**न्यूनं** गर्ह्योनयोः' (इति मेदिनी) ॥

**वेगिशूरौ तरस्विनौ ।**

तरो बलं जवो वास्यास्ति । 'अस्माया–' (५।२।१२१) इति विनिः ॥

**अभिपन्नोऽपराद्धोऽभिग्रस्तव्यापद्गता अपि ॥ १२८॥**

अभिपद्यते स्म । 'गत्यर्था–' (३।४।७२) इति क्तः । कर्मणि (३।२।१०२) वा । '**अभिपन्नो**ऽपराद्धेऽभिद्रुते ग्रस्ते विपद्गते' इति विश्वः ॥

इति नान्ताः ॥

**कलापो भूषणे बर्हे तूणीरे संहतेऽपि च ।**

कलमाप्नोति । 'आपॢ व्याप्तौ' (स्वा० प० अ०) 'कर्मण्यण्' (३।२।१) कला आप्यतेऽनेन वा । 'हलश्च' (३।३।१२१) इति घञ् । '**कलापः** संहतौ बर्हे काञ्च्यां भूषणतूणयोः' इत्यजयः । ('चन्द्रे विदग्धे व्याकरणभेदेऽपि कथ्यते बुधैः' इति मेदिन्यां विशेषः) ॥

**परिच्छदे परीवापः पर्युप्तौ सलिलस्थितौ ॥ १२९ ॥**

परिवपनम् । अनेन । अत्र वा 'डुवप् बीजतन्तुसंताने' (भ्वा० उ० अ०) । 'भावे घञ्' (३।३।१८) । 'हलश्च'

१—अत्र 'स्म' इत्युपन्यासोऽसंगतः । घञो भूताधिकारे विधानाभावात् ॥

(३।३।१२१) इति वा। 'उपसर्गस्य–' (६।३।१२२) इति दीर्घः। परिच्छदः परिवारः॥

**गोधुग् गोष्ठपतिर्गोपौ**

गां पाति। 'पा रक्षणे' (अ० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः। '**गोपो** ग्रामौघगोष्ठाधिकृतयोर्बल्लवे' इति विश्वः॥

**हरो विष्णुर्वृषाकपिः।**

वृषं धर्मं न कम्पयति। 'कपि किंचिच्चलने' (भ्वा० आ० से०)। '[1]अंहिकम्प्योर्नलोपश्च' (उ० ४।१४४) इतीः। वृषाद्धर्मादाकम्पयति दुष्टान् इति वा। यद्वा वर्षति कामान्। 'वृषु सेचने' (भ्वा० प० से०)। 'इगुपध–' (३।१।१३५) इति कः। आकम्पयति पापानि। पूर्ववदिः (उ० ४।१४४)। वृषश्चासावाकपिश्च। यद्वा वृषा इन्द्रोऽनेन। कम्पते आकम्पते वा अस्मात्। यद्वा वृषो धर्मो वृषा इन्द्रो वा कपिरिव वशो यस्य। यद्वा वृषरक्षकः कपिर्वराहः। शाकपार्थिवादिः (वा० २।१।७८)। 'अन्येषामपि–' (६।३।१३९) इति दीर्घः। यद्वा वृष्ण इन्द्रस्याकं वृषाकं पियति। 'पि गतौ' (तु० प० अ०)। अन्तर्भावितण्यर्थो वा। इन्द्रदुःखं प्राप्नोति प्रापयति वा दैत्यान्। रक्षकत्वात्। विचि (३।२।७५) संज्ञापूर्वकत्वान्न गुणः। क्विपि (३।२।७६) तु आगमशास्त्रस्यानित्यत्वान्न तुक्। परशब्दस्येष्टवाचित्वादियङं बाधित्वा पूर्वसवर्णदीर्घः (६।१।१०२) पूर्वरूपे (६।१।१०७) सतः। '**वृषाकपिः** पुमान्कृष्णे शंकरे जातवेदसि' (इति मेदिनी)॥

**[2]बाष्पमूष्माश्रु**

वायति। 'ओवै शोषणे' (भ्वा० प० से०)। वाति। 'वा गत्यादौ' (अ० प० अ०)। 'खष्पशिल्पशष्प' (उ० ३।२८) इति साधुः॥

**कशिपु त्वन्नमाच्छादनं द्वयम्॥ १३०॥**

कशति दुःखम्। कश्यते वा। 'कश गतिशासनयोः' (अ० आ० अ०) मृगय्वादित्वात् (उ० १।३७) साधुः। 'एकोक्त्या **कशिपुर्**भक्ताच्छादने च द्वयोः पृथक्' इति विश्वः॥

**तल्पं शय्याट्टदारेषु**

तल्यतेऽस्मिन्। 'तल प्रतिष्ठायाम्' (भ्वा० प० से०)। 'खष्पशिल्प—' (उ० ३।२८) इति साधुः। वक्ष्य[3]माणम्, 'अस्त्रियाम्' इति कशिपुतल्पाभ्यामपि संबध्यते। अट्टोऽट्टालिका॥

**स्तम्बेऽपि विटपोऽस्त्रियाम्।**

वेटति। विट्यते वा। 'विट आक्रोशे शब्दे' (भ्वा० प० से०)। 'विटपपिष्टपविशिपोलपाः' (उ० ३।१४५)। '**विटपः** पल्लवे षिड्गे विस्तारे स्तम्बशाखयोः' इति विश्वः॥

**प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः॥ १३१॥ मेद्यलिङ्गा अमी**

प्राप्तो रूपम्। 'प्राप्तापन्ने च–' (२।२।४) इति समासः। प्राप्तं रूपं येन। '**प्राप्तरूपो** ज्ञरम्ययोः' (इति मेदिनी)॥

स्वमेव रूपं यस्य॥

अभिलक्ष्यं रूपमस्य। '**अभिरूपो** बुधे रम्ये' (इति मेदिनी)॥

**कूर्मी वीणाभेदश्च कच्छपी।**

कच्छे कच्छं वा पिबति। कच्छेन पाति वा। 'सुपि–' (३।२।४) इति कः। 'गापोष्टक्' (३।२।८) तु न। 'पिबतेः सुरासीध्वोः' (वार्तिक) इति वचनात्। 'गतिकारकोपपदा–' इति सुबुत्पत्तेः प्राक् समासः। 'जातेः–' (४।१।६३) इति ङीष्। '**कच्छपी** वल्लकीभेदे कुलौ क्षुद्रगदान्तरे' इति विश्वः॥

**इति पान्ताः॥**

**रवर्णे पुंसि रेफः स्यात्कुत्सिते वाच्यलिङ्गकः॥१३२॥**

'रादिफः' (वा० ३।३।१०८)। रिफ्यते। रिफति वा। 'रिफ हिंसायाम्' (तु० प० से०)। घञ् (३।३।१९)। पचाद्यच् (३।१।१३४) वा॥

**इति फान्तः॥**

**अन्तराभवसत्त्वेऽश्वे गन्धर्वो दिव्यगायने।**

अन्तरा मरणजन्मनोर्मध्ये भवं सत्त्वं यातनाशरीरम्। यदाहुः—'अन्तराभवदेहो हि नेष्यते विन्ध्यवासिनां'। तन्न। लक्ष्यविरोधात्। तस्मादन्तरिक्षवासिनो गन्धर्वाख्या भूताः। यच्चासः 'अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम्'— इति स्वामी। तच्चिन्त्यम्। '**गन्धर्वः** पशुभेदे स्यात्पुंस्कोकिलतुरंगयोः। अन्तराभवसत्त्वे च गायने खेचरेऽपि च' (मेदिनी) इत्यादौ द्वयोः पृथक् पाठात्। दृष्टान्तोऽपि विषमः। दिव्यगायनानां विश्वावस्वादीनामेव तत्र ग्रहणात्। गन्धमर्वति। 'अर्व गतौ' (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१) शकन्ध्वादिः (वा० ६।१।९४)॥

**कम्बुर्ना वलये शङ्खे**

कम्बति। 'कम्ब गतौ' (    ) मृगय्वादिः (उ० १।३७) '**कम्बुः** शङ्खे स्त्रियां पुंसि शम्बूके वलये गजे' (इति मेदिनी)॥

**द्विजिह्वौ सर्पसूचकौ॥ १३३॥**

द्वे जिह्वे यस्य॥

---

१—आधुनिकपुस्तकेषु तु 'कुण्ठिकम्प्योः' इति पाठ उपलभ्यते॥ २—बाष्पं मेदिन्यामन्तस्थादौ पठ्यते। अत एव गोवर्धनाचार्यैरपि 'बाष्पाकुलम्' (५२८) इत्यार्याऽन्तस्थादिव्रज्यायां लिखिता। हैमे तु स्पर्शादि पठ्यते॥ ३—इदं त्वसंगतम् 'कशिपुर्भक्ताच्छादनयोरेकोक्त्या पृथक्तयोः पुंसि' इति मेदिनीतः कशिपोः पुंस्त्वस्य, 'तल्पमट्टे कलत्रे च शयनीये च न द्वयोः' इति मेदिनीतस्तल्पस्य क्लीबतायाः प्रतीतेः॥

**पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वेऽपि पूर्वजान् ।**

पूर्वयति । 'पूर्व निकेतने' (चु० प० से०) । पचाद्यच् (३।१।१३४) । '**पूर्वो** तु पूर्वजेषु स्युः **पूर्वः**प्रागाद्ययोस्त्रिषु' (इति मेदिनी) । 'प्राक् पूर्वमग्रतः' इति धरणिः ॥

**इति वान्ताः ॥**

**कुम्भौ घटेभमूर्धांशौ**

कुं भूमिं कुत्सितं वा उम्भति । 'उम्भ पूरणे' (तु० प० से०) । 'कर्मण्यण्' (३।२।१) । पचाद्यच् (३।१।१३४) वा । शकन्ध्वादिः (वा० ६।१।९४) । '**कुम्भः** स्यात्कुम्भकर्णस्य सुते वेश्यापतौ घटे । राशिभेदे द्विपाङ्गे च **कुम्भं** त्रिवृति गुग्गुले' इति विश्वः ।

**डिम्भौ तु शिशुबालिशौ ॥ १३४ ॥**

डिम्भयति । 'डिभि संघाते' चुरादिः । पचाद्यच् (३।१।१३४) ॥

**स्तम्भौ स्थूणाजडीभावौ**

स्तभ्नाति । 'स्तम्भु रोधने' (सौत्रः) पचाद्यच् (३।१।१३४) । भावे घञ् (३।३।१८) वा ॥

**शंभू ब्रह्मत्रिलोचनौ ।**

शं भवति । 'भू सत्तायाम्' (भ्वा० प० से०) 'प्राप्तौ' (चु०आ० से०) वा । अन्तर्भावितण्यर्थः । मितद्र्वादित्वात् (वा० ३।२।१७८) । डुः । '**शंभुः** पुंसि महादेवे परमेष्ठिनि चार्हति' (इति मेदिनी) विष्णौ च ॥

**कुक्षिभ्रूणार्भका गर्भाः**

गिरति । 'गॄ निगरणे' (तु० प० से०) । गृणाति । गीर्यते वा । 'गॄ शब्दे' (क्र्या० प० से०) । 'अतिगृभ्यां भन्' (उ० ३।१५२) । '**गर्भो** भ्रूणेऽर्भके कुक्षौ संधौ पनसकण्टके' (इति मेदिनी) ॥

**विस्रम्भः प्रणयेऽपि च ॥ १३५ ॥**

विस्रम्भणम् । विस्रभ्यतेऽनेन वा । 'स्रम्भु विश्वासे' (भ्वा० आ० से०) । घञ् (३।३।१८) । '**विस्रम्भः** केलिकलहे विश्वासे प्रणये वधे' इति विश्वः । 'परिचयप्रार्थनयोः **प्रणयः** परिकीर्तितः' इत्यमरमाला ॥

**स्याद्भेर्यां दुन्दुभिः पुंसि स्यादक्षे दुन्दुभिः स्त्रियाम् ।**

'दुन्द' इति शब्देन उभति । 'उभ पूरणे' (तु० प० से०) । 'इगुपधात् कित्' (उ० ४।१२०) इतीन् । शकन्ध्वादिः (वा० ६।१।९४) । यद्वा 'दुन्द्' इति हलन्तस्यैवानुकरणम् । '**दुन्दुभिः** पुमान् । वरुणे दैत्यभेर्योश्च स्त्र्यक्षे बिन्दुत्रिकद्वये' (इति मेदिनी) ॥

**स्यान्महारजने क्लीबं कुसुम्भं करके पुमान् ॥१३६॥**

कुसुम्भ्यति । अनेन । वा । 'कुसुम्भ क्षेपे' (कण्ड्वादिः) । पचाद्यच् (३।१।१३४) । 'हलश्च' (३।३।१२१) इति घञ् वा । पृषोदरादिः (६।३।१०९) । '**कुसुम्भं** हेमनि महारजने ना कमण्डलौ' (इति मेदिनी) ॥

**क्षत्रियेऽपि च नाभिर्ना**

नभ्यते । 'णभ हिंसायाम्' (भ्वा० आ० से०) । 'इसजादिभ्यः' (वा० ३।३।१०८) । यद्वा नाभयति । स्वार्थण्यन्तात् 'अच इः' (उ० ४।१३९) । '**नाभिर्**मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे' (इति मेदिनी) ॥

**सुरभिर्गवि च स्त्रियाम् ।**

सुष्ठु रभते, रभ्यते वा । 'रभ राभस्ये' (भ्वा० आ० अ०) । 'सर्वधातुभ्य इन्' (उ० ४।११८) । '**सुरभिः** शल्लकीमातृभित्सुरगोषु योषिति । चम्पके च वसन्ते च तथा जातीफले पुमान् । स्वर्णे गन्धोत्पले क्लीबं सुगन्धिकान्तयोस्त्रिषु । (विख्याते सचिवे धीरे चैत्रेऽपि च पुमानयम्)' (इति मेदिनी) ॥

**सभा संसदि सभ्ये च**

सह भान्ति ये । यस्यां वा । 'भा दीप्तौ' (अ० प० अ०) । 'सुपि' (३।२।४) इति कः । 'अन्येभ्योऽपि—' (वा० ३।२।१०२) इति डो वा । 'स्त्रियां सामाजिके गोष्ठ्यां द्यूतमन्दिरयोः **सभा**' इति रभसः ॥

**त्रिष्वध्यक्षेऽपि वल्लभः ॥ १३७ ॥**

वल्लते । वल्ल्यते वा । 'वल्ल संवरणे संचरणे च' (भ्वा० आ० से०) । 'रासिवल्लिभ्यां च' (उ० ३।१२५) इत्यभच् । '**वल्लभो** दयितेऽध्यक्षे सल्लक्षणतुरंगमे' (इति मेदिनी) ॥

**इति भान्ताः ॥**

**किरणप्रग्रहौ रश्मी**

अश्नुते । अनेन वा । 'अशू व्याप्तौ' (स्वा० आ० से०) । 'अश्नोते रश् च' (उ० ४।४।६) इति मिः । '**रश्मिः** पुमान् दीधितौ स्यात्पक्ष्मप्रग्रहयोरपि' (इति मेदिनी) ॥

**कपिभेकौ प्लवंगमौ ।**

प्लवेन प्लुत्या गच्छति । 'गमश्च' (३।२।४७) इति खच् ॥

**इच्छामनोभवौ कामौ**

कमनम् । कम्यते वा । 'कमु कान्तौ' (भ्वा० आ० से०) । घञ् (३।३।१८,१९) '**कामः** स्मरेच्छयोः पुमान् । रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम्' (इति मेदिनी) ॥

**शौर्योद्योगौ पराक्रमौ ॥ १३८ ॥**

पराक्रमणम् । अनेन वा । 'क्रमु पादविक्षेपे' (भ्वा० प० से०) । घञ् (३।३।१८,१२१) । 'नोदात्तोपदेशस्य—' (७।३।३४) इति न वृद्धिः । '**पराक्रमः** स्यात्सामर्थ्ये विक्रमोद्यमयोरपि' (इति मेदिनी) ॥

---

१—पूर्वगन्धर्वशब्दौ विश्वमेदिन्योरपि स्पर्शान्तेष्वेवोपलभ्येते । हैमे तु दन्तोष्ठ्यान्तेष्वेव ॥ २—अक्षे बिन्दुत्रिकद्वये यथा 'दुन्दुभ्या किल तत्कृतं पतितया यद्द्रौपदी हारिता' इति स्वामिमुकुटानेकार्थकैरवाकरकौमुद्यः ॥

**धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः।**

धरति। ध्रियते वा। 'धृञ् धारणे' (भ्वा० उ० अ०) 'अर्तिस्तुसु–' (उ० १।१४०) इति मन्। '**धर्मो**ऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ। अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे' (इति मेदिनी)॥

**उपायपूर्व आरम्भ उपधा चाप्युपक्रमः॥ १३९॥**

उपधा उत्कोचः। उपक्रमणम्। अनेन वा। पूर्ववत् (३।३।१८,१२१,७।३।३४) '**उपक्रमः** स्यादुपधाचिकित्सारम्भविक्रमे' इति विश्वः॥

**वणिक्पथः पुरं वेदो निगमाः**

निगम्यते। अनेन वा। 'गोचरसंचर–' (३।३।११९) इति साधुः। '**निगमो** वाणिजे पुर्यां कटे वेदे पणिक्पथे' इति विश्वः॥

**नागरो वणिक्।**

**नैगमौ द्वौ**

निगमे भवः। 'तत्र भवः' (४।३।५३) इत्यण्। '**नैगमः** स्यादुपनिषद्वणिजोर्नागरेऽपि च' इति विश्वः॥

**बले रामो नीलचारुसिते त्रिषु॥ १४०॥**

रमते। अनेन वा। 'रमु क्रीडायाम्' (भ्वा० आ० अ०) 'ज्वलितिकसन्तेभ्यो णः' (३।१।१४०) 'हलश्च' (३।३।१२१) इति घञ् वा। '**रामः** पशुविशेषे स्याज्जामदग्न्ये हलायुधे। राघवे च सितश्वेतमनोज्ञेषु च वाच्यवत्' इति विश्वः॥

**शब्दादिपूर्वो वृन्देऽपि ग्रामः**

ग्रसते। ग्रस्यते वा। 'ग्रसु अदने' (भ्वा० अ० से०) 'ग्रसेरा च' (उ० १।१४३) इति मः। '**ग्रामः** स्वरे संवसथे वृन्दे शब्दादिपूर्वकः' इति विश्वः॥

**क्रान्तौ च विक्रमः।**

विक्रमणम्। अनेन वा। घञ् (३।३।१८,१२१)। '**विक्रमः** शक्तिसंपत्तिः क्रान्तिमात्रं च **विक्रमः**' इति धरणिः॥

**स्तोमः स्तोत्रेऽध्वरे वृन्दे**

स्तूयते। अनेन वा। 'ष्टुञ् स्तुतौ' (अ० उ० अ०)। 'अर्तिस्तुसु–' (उ० १।१४०) इति मन्॥

**जिह्मस्तु कुटिलेऽलसे॥ १४१॥**

जहाति। हीयते वा। 'ओहाक् त्यागे' (जु० अ० अ०)। 'जहातेः सन्वदालोपश्च' (उ० १।१४१) इति मन्॥

**गुल्मा रुक्स्तम्बसेनाश्च**

गुड्यते। 'गुड वेष्टने' रक्षणे (तु० प० से०) बाहुलकान्मक्। डलयोरेकत्वम्। '**गुल्मः** स्तम्बे प्लीह्नि घट्टसैन्ययोः सैन्यरक्षणे' इति विश्वः। रुग् उदररोगः। स्तम्बोऽप्रकाण्डः॥

**जामिः स्वसृकुलस्त्रियोः।**

जायति। जायते वा। 'जै क्षये' (भ्वा० प० अ०)। बाहुलकान्मिः। यद्वा 'जमु अदने' (भ्वा० प० से०)। बाहुलकादिण् दीर्घश्च। कर्मणि 'इञजादिभ्यः' (वा० ३।३।१०८) इतीञ् वा–इति स्वामी। '**जिह्मस्तु** कुटिले मन्दे **जामिः** स्वसृकुलस्त्रियोः' इति चवर्गादावजयः॥

मुकुटस्तु—'प्रहरे समये **यामो यामिः** स्वसृकुलस्त्रियोः' इति रभसादन्तस्थादितामाह। '**यामिः** कुलस्त्रीस्वस्रोः स्त्री' (इति मेदिनी)। तत्र 'या प्रापणे' (अ० प० अ०) धातुर्बोध्यः॥

**क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु १४२**

क्षमणम्। 'क्षमूष् सहने' (भ्वा० आ० से०)। षित्त्वाद् (३।३।१०४) अङ्। क्षमते। क्षम्यते वा। पचाद्यच् (३।१।१३४)। घञ् (३।३।१९) वा। 'नोदात्तोपदेशस्य–' (७।३।३४) इति न वृद्धिः। '**क्षमा** तितिक्षा पृथ्वी च योग्ये शक्ते हिते **क्षमम्**' इति धरणिः॥

**त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवानिशा।**

श्यायते। 'श्यैङ् गतौ' (भ्वा० आ० अ०)। 'इषुयुधीन्धि–' (उ० १।१४५) इति मक्। '**श्यामो** वटे प्रयागस्य वारिदे वृद्धदारके। पिके च कृष्णहरिते पुंसि स्यात्तद्वति त्रिषु। मरिचे सिन्धुलवणे क्लीबं स्त्री शारिवौषधौ। अप्रसूताङ्गनायां च प्रियङ्गावपि चोच्यते। यमुनायां त्रियामायां कृष्णत्रिवृतिकौषधौ।' नीलिकायाम्—'अथ **श्यामो** मासे मण्डपकालयोः' (इति मेदिनी)॥

**ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु॥ १४३॥**

लडनम्। 'लड बाल्ये (विलासे)' (भ्वा० प० से०)। संपदादिक्विप् (वा० ३।३।१०८)। डलयोरेकत्वम्। ललमति। 'अमगत्यादौ' (भ्वा० प० से०)। 'कर्मण्यण्' (३।२।१) ॥*॥ बाहुलकात्कनिनि नान्तोऽपि। 'प्रधानध्वजशृङ्गेषु पुण्ड्रवालधिलक्ष्मसु। भूषावाजिप्रभावेषु **ललामं** स्याल्ललाम च' इति रुद्रः। पुण्ड्रमश्वादीनां ललाटचित्रम्। अश्वो वाजी। भूषा सामीप्यादश्वस्यैव॥

**सूक्ष्ममध्यात्ममपि**

सूच्यते। 'सूच पैशून्ये' (चु० उ० से०)। 'सूचेः स्मन्' (उ० ४।१७७)। '**सूक्ष्मं** स्यात्कैतवेऽध्यात्मे पुंस्यणौ त्रिषु

१—द्वाविति ब्राह्मणस्य नैगमत्वे निषेधः—इति स्वामी॥—'द्वौ' इत्युक्तेरुपनिषद्ब्राह्मणयोर्नायम्, इत्येके—इति पीयूषव्याख्या॥

१—युक्ते मान्तमव्ययम् इत्येके शक्तहितयोस्त्रिषु। क्षमः, क्षमा। इति पीयूषव्याख्या॥ २—इत उत्तरं श्यामशब्दार्थकथनेन प्रकृतानुपयुक्तम्॥ ३—यथा 'कन्याललाम कमनीयमजस्य लिप्सोः' इति रघुः—इति स्वामिमुकुटौ॥

चाल्पके' (इति मेदिनी)। यत्तु-सुष्ठु उक्ष्यते इति स्वामी॥ सुष्ठु उष्मयते-इति मुकुटश्च व्याचष्टे। तदुक्तसूत्रादर्शनमूलकम्॥

**आदौ प्रधाने प्रथमः**

प्रथते। 'प्रथ विस्तारे' (भ्वा० आ० से०)। 'पथेरमच्' (उ० ५।६८)। '**प्रथमस्तु** भवेदादौ प्रधानेऽपि च वाच्यवत्' (इति मेदिनी)॥

**त्रिषु।**

आमान्तम्॥

**वामौ वल्गुप्रतीपौ द्वौ**

वमति वम्यते वा। 'टुवम उद्गिरणे' (भ्वा० प० से०)। 'ज्वलिति-' (३।१।१४०) इति णः। घञ् (३।३।१९) वा। '**वामं** सव्ये प्रतीपे च द्रविणे चातिसुन्दरे। पयोधरे हरे कामे विद्याद्वामामपि स्त्रियाम्। **वामी** शृगालीवडवारासभीकरभीषु च' इति विश्वः॥

**अधमौ न्यूनकुत्सितौ॥ १४४॥**

अमति। 'अव रक्षणादौ' (भ्वा० प० से०)। 'अवद्यावमाधमा-' (उ० ५।५४) इति साधुः। यद्वा न धम्यते, धमति वा। 'धम ध्माने' सौत्रः। घञ् (३।३।१८) पचाद्यच् (३।१।१३४) वा।—अधोभवः। 'अवोधसोः सलोपश्च' ( )-इति स्वामी॥

**जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्।**

यातो गतो याम उपभोगकालो यस्य। '**यातयामो**ऽन्यवज्जीर्णे परिभुक्तोज्झितेऽपि च' (इति मेदिनी)॥

इति मान्ताः

**तुरंगगरुडौ तार्क्ष्यौ**

तार्क्ष्यस्य कश्यपस्यापत्यम्। 'ऋष्यन्धक-' (४।१।११४) इत्यण्। '**तार्क्ष्यो**ऽश्वसर्पयोः। गरुडाग्रजे सुपर्णे च पुंसि क्लीबं रसाञ्जने' (इति मेदिनी)॥

**निलयापचयौ क्षयौ॥ १४५॥**

क्षयणम्, क्षीयतेऽत्र वा। 'क्षि क्षये' (भ्वा० प० अ०)। 'क्षि निवासगत्योः' (तु० प० अ०)। 'एरच्' (३।३।५६)। 'पुंसि-' (३।३।११८) इति घो वा। '**क्षयो** रोगान्तरे वेश्मकल्पान्तापचयेषु च' (इति मेदिनी)॥

**श्वशुर्यौ देवरश्यालौ**

श्वशुरस्यापत्यम्। 'राजश्वसुराद्यत्' (४।१।१३७)॥

**भ्रातृव्यौ भ्रातृजद्विषौ।**

भ्रातुरपत्यम्। 'भ्रातुर्व्यच्च' (४।१।१४४)। 'व्यन्सपत्ने'(४।१।१४५)॥

**पर्जन्यौ रसदब्देन्द्रौ**

पिपर्ति। 'पॄ पालनपूरणयोः' (जु० प० से०)। पर्षति। 'पृषु सेचने' (भ्वा० प० से०)। 'पर्जन्यः' (उ० ३।१०३) इति साधुः। '**पर्जन्यो** मेघशब्देऽपि ध्वनदम्बुदशक्रयोः' इति विश्वः॥

**स्यादर्यः स्वामिवैश्ययोः॥ १४६॥**

अर्यते 'ऋ गतौ' (भ्वा० प० से०)। 'अर्यः स्वामिवैश्ययोः' (३।१।१०३) इति साधुः॥

**तिष्यः पुष्ये कलियुगे**

त्वेषति। 'त्विष दीप्तौ' (भ्वा० उ० अ०)। अघ्न्यादिः (उ० ४।११२)। '**तिष्यः** कलियुगे ऋक्षे **तिष्या** धात्री च कीर्त्यते' इति धरणिः॥

**पर्यायोऽवसरे क्रमे।**

पर्ययणम्। 'इण् गतौ' (अ० प० अ०)। 'परावनुपात्यये—' (३।३।३८) इति घञ्। '**पर्याय**स्तु प्रकारे स्यान्निर्माणेऽवसरे क्रमे' इति विश्वः॥

**प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु॥ १४७॥**
**रन्ध्रे शब्दे**

प्रत्ययनम्। प्रतीयतेऽनेन वा। प्रत्येति, इति वा। 'एरच्' (३।३।५६)। 'पुंसि—'(३।३।११८) इति घो वा। पचाद्यच् (३।१।१३४) वा। '**प्रत्ययः** शपथे रन्ध्रे विश्वासाचारहेतुषु। प्रथितत्वे च सत्रादावधीनज्ञानयोरपि' इति विश्वः॥

**अथानुशयो दीर्घद्वेषानुतापयोः।**

अनुशयनम्। अनेन वा। 'शीङ् स्वप्ने' (अ० आ० से०)। 'एरच्' (३।३।५६)। 'पुंसि—' (३।३।११८) इति घो वा। '**भवेदनुशयो** द्वेषे पश्चात्तापानुबन्धयोः' इति विश्वः॥

**स्थूलोच्चयस्त्वसाकल्ये गजानां मध्यमे गते॥१४८॥**

उच्चयनम्। 'चिञ् चयने' (स्वा० उ० अ०)। 'एरच्' (३।३।५६)। स्थूलस्योच्चयः। '**स्थूलोच्च**यस्त्वसाकल्ये गण्डोपलकरण्डयोः' इति विश्वः॥

**समयाः शपथाचारकालसिद्धान्तसंविदः।**

समयनम्। समीयतेऽत्र, अनेन वा। समेति वा 'इण् गतौ' (अ० प० अ०)। 'इ गतौ' (भ्वा० प० से०) वा। 'एरच्' (३।३।५६)। 'पुंसि-' (३।३।११८) इति घो वा। पचाद्यच् (३।१।१३४) वा। '**समयः** शपथाचारसिद्धान्तेषु तथा धिषि। क्रियाकारे च निर्देशे संकेते कालभाषयोः' (इति मेदिनी)॥

**व्यसनान्यशुभं दैवं विपदित्यनयास्त्रयः॥ १४९॥**

व्यसनं स्त्रीद्यूतपानादि। अशुभं दैवविशेषणम्। न नयनम्। अनेन वा। अत्र वा। 'णीञ् प्रापणे' (भ्वा० उ० अ०)। 'एरच्' (३।३।५६)। विरोधे नञ्। अयाच्छुभावहविधेरन्यः। '**अनयस्तु** विपद्दैवाशुभयोर्व्यसनेषु च' (इति मेदिनी)॥

**अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽपि**

अत्ययनम् । अनेन वा । 'इण् गतौ' (अ० प० अ०) । 'एरच्' (३।३।५६) । '**अत्ययो**ऽतिक्रमे कृच्छ्रेऽत्युत्पाते नाशदण्डयोः' इति धरणिः ॥

**अथापदि ।**

**युद्धायत्योः संपरायः**

संपरायणम् । 'इण् गतौ' (अ० प० अ०) । पूर्ववत् (३।३।५६) । '**संपरायः** समीके स्यादापदुत्तरकालयोः' (इति मेदिनी) ॥

**पूज्यस्तु श्वशुरेऽपि च ॥ १५० ॥**

पूजयितुमर्हः । 'पूज पूजायाम्' (चु० प० से०) । 'अर्हे कृत्यतृचश्च' (३।३।१६९) इति यत् । 'पूज्यौ श्वशुरपूजार्हौ' इति धरणिः ॥

**पश्चादवस्थायिबलं समवायश्च संनयौ ।**

संनयनम् । संनीयते वा । संनयति वा । 'णीञ् प्रापणे' (भ्वा० उ० अ०) । 'एरच्' (३।३।५६) पचाद्यच् (३।१।१३४) वा ॥

**संघाते संनिवेशे च संस्त्यायः**

संस्त्यानम् । 'ष्टै स्त्यै शब्दसंघातयोः' (भ्वा० प० अ०) । घञ् (३।३।१८) । 'आतो युक्–' (७।३।३३) । '**संस्त्यायः** संनिवेशे च संघाते विस्तृतावपि' (इति मेदिनी) ॥

**प्रणयास्त्वमी ॥ १५१ ॥**

**विश्रम्भयाच्ञाप्रेमाणः**

प्रणयनम् । 'णीञ्' (भ्वा० उ० अ०) । 'एरच्' (३।३।५६) । '**प्रणयः** प्रसरे प्रेम्णि (याच्ञाविश्रम्भयोरपि । निर्वाणेऽपि' (इति मेदिनी) । '**विश्रम्भः** स्यात्परिचये विश्वासविप्रलम्भयोः' इत्यजयः ॥

**विरोधेऽपि समुच्छ्रयः ।**

सुष्ठु ऊर्ध्वं श्रयणम् । 'श्रिञ् सेवायाम्' (भ्वा० उ० से०) । 'एरच्' (३।३।५६) । 'वैरोन्नत्योः **समुच्छ्रयः**' इति रभसः ॥

**विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि ॥१५२॥**

विसयनम् । अत्र वा । विसिनोति वा । 'षिञ् बन्धने' (स्वा० उ० अ०) । 'एरच्' (३।३।५६) 'पुंसि–' (३।३।११८) इति घो वा । पचाद्यच् (३।१।१३४) वा । 'परिनिविभ्यः सेवसितसय–' (८।३।७०) इति षः । '**विषयो** गोचरे देशे तथा जनपदेऽपि च । प्रबन्धाद्यस्य यो ज्ञातस्तत्र रूपादिके पुमान्' (इति मेदिनी) ॥

**निर्यासेऽपि कषायोऽस्त्री**

निर्यासः क्वाथः । कषति कण्ठम् । 'कष हिंसायाम्' (भ्वा० प० से०) । बाहुलकादयः । '**कषायो** रसभेदे स्यादङ्गरागे विलेपने । निर्यासे च **कषायो**ऽथ सुरभौ लोहितेऽन्यवत्' इति विश्वः ॥

**सभायां च प्रतिश्रयः ।**

प्रतिश्रयणम् । अत्र वा । 'श्रिञ्' (भ्वा० उ० से०) 'एरच्' (३।३।५६) । घः (३।३।११८) वा । '**प्रतिश्रयः** सभायां चाश्रयेऽभ्युपगमेऽपि च' (इति मेदिनी) ॥

**प्रायो भूम्न्यन्तगमने**

प्रायणम् । 'अय गतौ' (भ्वा० आ० से०) । घञ् (३।३।१८) । 'इण् गतौ' (अ० प० से०) । 'एरच्' (३।३।५६) वा । '**प्राय**श्चानशने मृत्यौ **प्रायो** बाहुल्यतुल्ययोः' इति विश्वः ॥

**मन्युर्दैन्ये क्रतौ क्रुधि ॥ १५३ ॥**

मन्यते । 'मन ज्ञाने' (दि० आ० अ०) । मृगय्वादिः (उ० ११३७) । '**मन्युः** पुमान् क्रुधि । दैन्ये शोके च यज्ञे च' (इति मेदिनी) ॥

**रहस्योपस्थयोर्गुह्यम्**

गूहनम् । गुह्यते वा । 'गुहू संवरणे' (भ्वा० आ० से०) । 'शंसिदुहि–'[1] इति क्यप् । '**गुह्यं** रहस्युपस्थे च **गुह्यः** कमठदम्भयोः' इति विश्वः ॥

**सत्यं शपथतथ्ययोः ।**

सति साधुः । 'तत्र साधुः' (४।४।९८) इति यत् । '**सत्यं** कृते च शपथे तथ्ये च त्रिषु तद्वति' (इति मेदिनी) ॥

**वीर्यं बले प्रभावे च**

वीर्यतेऽनेन । 'वीर विक्रान्तौ' (चु० उ० से०) । 'अचो यत्' (३।१।९७) वीरे साधुर्वा । 'तत्र साधुः' (४।४।९८) इति यत् । '**वीर्यं** प्रभावे शुक्रे च तेजःसामर्थ्ययोरपि' (इति मेदिनी) ॥

**द्रव्यं भव्ये गुणाश्रये ॥ १५४ ॥**

द्रोरिदम् । 'द्रव्यं च भव्ये' (५।३।१०४) इति साधुः । '**द्रव्यं** स्याद्द्रविणे भव्ये पृथिव्यादौ च पित्तले । भेषजे च विलेपे च जतुद्रुमविशेषयोः' इति विश्वः ॥

**धिष्ण्यं स्थाने गृहे भेऽग्नौ**

धिष्यते । 'धिष शब्दे' (जु० प० से०) धृष्णोति वा । 'ञि धृषा प्रागल्भ्ये' (स्वा० प० से०) । 'सानसिवर्णसि–' (उ० ४।१०७) इति साधुः । यत्तु–'संध्यादयश्च' इति यः–इत्युक्तं मुकुटेन । तदेतत्सूत्रास्मरणमूलकम्, निर्मूलं च । '**धिष्ण्यं** स्थानाग्निसद्मसु । शक्तावृक्षेऽपि' (इति मेदिनी) ॥

**भाग्यं कर्म शुभाशुभम् ।**

भज्यतेऽनेन । 'भज सेवायाम्' (भ्वा० उ० अ०) । 'ऋ-

---

[1]—'शंसिदुहिगुहिभ्यो वा' इति काशिका । तत्र 'प्रशस्यस्य श्रः' (५।३।६०) 'ईडवन्दवृशंसदुहां ण्यतः' (६।१।२१४) इति सूत्रद्वयबलाच्छंसेः सिद्धम् । इतरयोस्तु मूलं मृग्यम्—इति कौमुदी ॥ तस्माण्ण्यति संज्ञापूर्वकत्वाद्गुणाभावः ॥

हलोर्ण्यत्' (३।१।१२४)। 'चजोः–' (७।३।५३) इति कुत्वम्। '**भाग्यं** शुभात्मकविधौ स्याच्छुभाशुभकर्मणि' इति विश्वः ॥

**कशेरुहेम्नोर्गाङ्गेयम्**

गङ्गाया अपत्यम्। 'शुभ्रादिभ्यश्च' (४।१।१२३) इति ढक्। '**गाङ्गेयः** स्यात्पुमान्भीष्मे क्लीबं स्वर्णकशेरुणोः' (इति मेदिनी) ॥

**विशल्या दन्तिकापि च ॥ १५५ ॥**

विगता शल्यात्। विगतं शल्यं यस्या वा। '**विशल्या**ऽग्निशिखादन्तीगुडूचीत्रिपुटासु च' (इति मेदिनी) ॥

**वृषाकपायी श्रीगौर्योः**

वृषाकपेः स्त्री। 'वृषाकप्यग्नि—' (४।१।३७) इति ङीष्, ऐ च। '**वृषाकपायी** श्रीगौरीवरीजीवन्तिकासु च' (इति मेदिनी) ॥

**अभिख्या नामशोभयोः ।**

अभिख्यानम्। 'ख्या प्रकथने' (अ० प० अ०)। चक्षिङादेशो वा। 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ्। '**अभिख्या** त्वभिधाने स्याच्छोभायां च यशस्यपि' (इति मेदिनी) ॥

**आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् १५६**
**उपायः कर्मचेष्टा च चिकित्सा च नव क्रियाः ।**

निष्कृतिः प्रायश्चित्तम्। संप्रधारणं विचारः। उपायः सामादिः। चेष्टा परिस्पन्दः करणम्। भावादौ 'कृञः श च' (३।३।१००)। '**क्रिया** कर्मणि चेष्टायां करणे संप्रधारणे। (आरम्भोपायशिक्षार्थचिकित्सानिष्कृतिष्वपि)' इति विश्वः ॥

**छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः ॥१५७॥**

छयति। 'छो छेदने' (दि० प० अ०)। 'श्याद्व्यधा–' (३।१।१४१) इति णः। 'आतो युक्–' (७।३।३३)। यद्वा 'माछाशसिभ्यो यः' (उ० ४।१०९)। '**छाया** स्यादातपाभावे प्रतिबिम्बार्कयोषितोः' (इति मेदिनी) ॥

**कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने ।**

कक्षे भवा। 'शरीरावयवात्–' (४।३।५५) इति यत्। '**कक्ष्या** बृहतिकायां स्यात् (काञ्च्यां मध्येभबन्धने। हर्म्यादीनां प्रकोष्ठे च)' (इति यान्तेषु मेदिनी) ॥

**कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः ॥१५८॥**

करणम्। 'कृञः श च' (३।३।११०) इति चात् क्यप्। कृत्यते। 'कृती छेदने' (रु० प० से०)। 'ऋदुपधात्–' (३।१।११०) इति क्यप् '**कृत्यो** विद्विषि कार्ये च कृत्या क्रियादिवौकसोः' इति रभसः ॥

**जन्यः स्याज्जनवादेऽपि**

जनानां वादः। 'मतजनहलात्–' (४।४।९७) इति यत्। यद्वा जायते। जनयति वा। 'ऋहलोर्ण्यत्' (३।१।१२४)। 'जनिवध्योश्च' (७।३।३४) इति न वृद्धिः। 'अचो यत्' (३।१।९७) वा। जनीं वहति। 'संज्ञायां जन्या' (४।४।८२) इति वा साधुः। '**जन्या** मातृवयस्या स्याज्जन्या जनीवरप्रिया। जननीजनयित्रोश्च **जन्यं** निर्वादयुद्धयोः' इति धरणिः॥

**जघन्योऽन्त्येऽधमेऽपि च ।**

जघने भवः। 'शरीरावयवात्–' (४।३।५५) इति यत्। यद्वा कुटिलं हन्यते। हन्तेर्यङन्तात् 'अचो यत्' (३।१।९७)। 'अनित्यमागमशासनम्' इति 'नुगतः–' (७।४।८५) इति न नुक्। '**जघन्यं** चरमे शिश्ने जघन्यं गर्हितेऽन्यवत्' इति विश्वः ॥

**गर्ह्याधीनौ च वक्तव्यौ**

वचनार्हः। 'वच परिभाषणे' (अ० प० अ०)। ब्रूञ् आदेशो वा। तव्यः (३।१।९६)। '**वक्तव्यं** कुत्सिते हीने वचनार्हे च वाच्यवत्' (इति मेदिनी) ॥

**कल्यौ सज्जनिरामयौ ॥ १५९ ॥**

कलासु साधुः। 'तत्र साधुः' (४।४।९८) इति यत्। यद्वा कल्यते। 'कल गतौ संख्याने च' चुरादिरदन्तः। 'अचो यत्' (३।१।९७)। '**कल्यं** प्रभाते क्लीबं स्यात्**कल्यो** वाक्श्रुतिवर्जिते। सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च। उपायवचनेऽपि स्यात् (त्रिषु, मद्ये तु योषिति)' (इति मेदिनी) ॥ सज्जो बद्धसंनाहादिः ॥

**आत्मवाननपेतोऽर्थादर्थ्यौ**

आत्मवान् ज्ञानी। अर्थे साधुः 'तत्र साधुः'। (४।४।९८) इति यत्। आर्थादनपेतः। 'धर्मपथ्य–' (४।४।९२)। इति यत्। '**अर्थ्यो** विज्ञार्थशालिनोः' इत्यजयः। '**अर्थ्यं** शिलाजतुन्य**र्थ्यो** बुधे न्याय्ये च वाच्यवत्' (इति मेदिनी) ॥

**पुण्यं तु चार्वपि ।**

पुनाति। 'पूञ् पवने' (क्र्या० उ० से०)। 'पूञो यण्णुग् ह्रस्वश्च' (उ० ५।१५)। यद्वा पुणति। 'पुण कर्मणि शुभे' (तु० प० से०)। 'इगुपध–' (३।१।१३५) इति कः। पुणे साधुः। 'तत्र साधुः' (४।४।९८) इति यत्। '**पुण्य**स्त्रिषु मनोज्ञे स्यात्क्लीबं सुकृतधर्मयोः' इति विश्वः ॥

**रूप्यं प्रशस्ते रूपेऽपि**

आहतं प्रशस्तं वा रूपमस्यास्ति। 'रूपादाहतप्रशंसयोः–' (५।२।१२०) इति यप्। '**रूप्यः** स्यात्सुन्दरे त्रिषु। आयतस्वर्णरजते रजते च नपुंसकम्' (इति मेदिनी) ॥

---

१—कर्तरि ण्यदादयस्तु 'कृत्यल्युटो बहुलम्' (३।३।११३) इत्युक्तेरुन्नेयाः ॥

**वदान्यो वल्गुवागपि ॥ १६० ॥**

वदेति । 'वदेरान्यः' (उ० ३।१०४) । 'वदान्यो दातृवाग्मिनोः' इत्यजयः ॥

**न्याय्येऽपि मध्यम्**

मां ध्यायति । 'ध्यै चिन्तायाम्' (भ्वा० प० से०) । 'आतोऽनुप–' (३।२।३) इति कः । यद्वा मह्यते । 'मह पूजायाम्' (भ्वा० प० से०) । 'अघ्न्यादिः (उ० ४।११२) । 'न्याय्यावलग्नयोर्मध्यमन्तरे चाधमे त्रिषु' इति रभसः ॥

**सौम्यं तु सुन्दरे सोमदैवते ।**

सोमो देवतास्य । 'सोमाट् ट्यण्' (४।२।३०) । यद्वा सोम इव सोमः । ततश्चतुर्वर्णादित्वात् (वा० ५।१।१२४) ष्यञ् । यत्तु—शाखादित्वात् (५।३।१०३) यः—इति मुकुटः । तन्न । वृद्ध्यप्रसङ्गात् । 'सौम्यो बुधे मनोज्ञे स्यादनुग्रे सोमदैवते' '(इल्वलासु च सौम्याः स्युः–)' इति विश्वः ॥

इति यान्ताः ॥

**निवहावसरौ वारौ**

वारयति । व्रियते वा । 'वृञ् वरणे' (स्वा० उ० से०) । पचाद्यच् (३।१।१३४) । घञ् (३।३।१८) वा । 'वारः सूर्यादिदिवसे वारोऽवसरवृन्दयोः । कुब्जवृक्षे हरे द्वारे, वारं मद्यस्य भाजने' इति विश्वः ॥

**संस्तरौ प्रस्तराध्वरौ ॥ १६१ ॥**

संस्तीर्यते । 'स्तॄञ् आच्छादने' (क्र्या० उ० से०) । 'ऋदोरप्' (३।३।५७) । संस्तर–प्रस्तरावेतौ प्रस्तराध्वरयोरपि । मणिपाषाणयोश्चापि (यथाक्रममुदीरितौ)' इति विश्वः । प्रस्तरः शय्या ॥

**गुरू गीर्पतिपित्राद्यौ**

गृणाति । 'गॄ शब्दे' (क्र्या० प० से०) । 'कृग्रोरुच्च' (उ० १।२४) इत्युः । 'गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि । पुमान्निषेकादिकरे पित्रादौ सुरमन्त्रिणि' (इति मेदिनी) ॥

**द्वापरौ युगसंशयौ ।**

द्वाभ्यां परः । द्वौ पराधत्र वा । पृषोदरादिः (६।३।१०९) ॥

**प्रकारौ भेदसादृश्ये**

प्रकरणम् । कृञो घञ् (३।३।१८) 'प्रकारस्तुल्यभेदयोः' (इति मेदिनी) ॥

**आकाराविङ्गिताकृती ॥ १६२ ॥**

आकरणम् । घञ् (३।३।१८) । इङ्गितं चेष्टा । आकृतिरवयवसंस्थानम् ॥

**किंशारू धान्यशूकेषू**

किंचित् कुत्सितं वा शृणाति । 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'किंजरयोः श्रिणः' (उ० १।४) इति ञुण् । 'किंशारुर्ना शस्यशूके विशिखे कङ्कपत्रिणि' (इति मेदिनी) ॥

**मरू धन्वधराधरौ ।**

म्रियन्तेऽत्र जन्तवः । 'मृङ् प्राणत्यागे' (तु० आ० अ०) । 'भृमृशी–' (उ० १।७) इत्युः । 'मरुर्ना गिरिधन्वनोः' (इति मेदिनी) ॥

**अद्रयो द्रुमशैलार्काः**

अत्ति । अद्यते वा । 'अद भक्षणे' (अ० प० अ०) । 'अदिशदि–' (उ० ४।६५) इति क्रिन् ॥

**स्त्रीस्तनाब्दौ पयोधरौ ॥१६३॥**

धरति । 'धृञ् धारणे' (भ्वा० उ० अ०) । पचाद्यच् (३।१।१३४) । पयसो धरः । 'पयोधरः कोषकारे नारिकेले स्तनेऽपि च । कशेरुमेघयोः पुंसि' (इति मेदिनी) ॥

**ध्वान्तारिदानवा वृत्राः**

वृणोति । 'वृञ् वरणे' (स्वा० उ० से०) । बहुलकात् क्रः । 'वृत्रो रिपौ घने ध्वान्ते शैलभेदे च दानवे' (इति मेदिनी) ॥

**बलिहस्तांशवः कराः ।**

बली राजग्राह्यो भागः । अंशुर्मयूखः कीर्यते । 'कॄ विक्षेपे' (तु० प० से०) । 'ऋदोरप्' (३।३।५७) । करोति वा अच् (३।१।१३४) । 'करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः' (इति मेदिनी) ॥

**प्रदरा भङ्गनारीरुग्बाणाः**

प्रदीर्यते । प्रदरणम् । अनेन वा । 'दॄ विदारणे' (क्र्या० प० से०) । 'ऋदोरप्' (३।३।५७) । 'प्रदरो रोगभेदे स्याद्विकारे शरभङ्गयोः' (इति मेदिनी) ॥

**अस्राः कचा अपि ॥ १६४ ॥**

अस्यन्ते । 'असु क्षेपणे' (दि० प० से०) । बाहुलकात् रः । 'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' (इति मेदिनी) ॥

**अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्ना च तूवरौ ।**

'काले' इत्युभाभ्यां संबध्यते । तौति । 'तु' सौत्रो गत्यादौ । बाहुलकाद्वरः दीर्घश्च । यद्वा तनोति बाहुलकाद्वः तूश्चासौ वरश्चाच्छादकः । 'तूवरोऽश्मश्रुपुरुषे प्रौढाशृङ्गगवेऽपि च । पुरुषे व्यञ्जनत्यक्ते स्यात्कषायरसेऽपि च' (इति मेदिनी) ॥

**स्वर्णेऽपि राः**

राति सुखम् । रायते वा 'रातेर्डैः' (उ० २।६६) । 'राः पुंसि स्वर्णवित्तयोः' (इति मेदिनी) ॥

**परिकरः पर्यङ्कपरिवारयोः ॥ १६५ ॥**

परिकीर्यते । 'कॄ विक्षेपे' (तु० प० से०) । 'ऋदोरप्' (३।३।५७) । यद्वा परिकीर्यतेऽनेन । 'पुंसि–' (३।३।११८) इति

१—तूवरो दन्तोष्ठ्यमध्यो ग्रन्थकृता पठितः । वस्तुतस्तु पवर्गीयमध्यः । वेदे तथा दर्शनात् 'अश्वस्तूपरो गोमृगः' इति—पीयूषव्याख्या ।

घः । 'भवेत्परिकरो व्राते पर्यङ्कपरिवारयोः । प्रगाढगात्रिकाबन्धे विवेकारम्भयोरपि' इति विश्वः । 'यत्नारम्भौ **परिकरौ**' इति त्रिकाण्डशेषः ॥

**मुक्ताशुद्धौ च तारः स्यात्**

तारयति । अच् । यद्वा तार्यते । अनेन वा । घञ् (३।३।१९) । घः (३।३।११८) वा । '**तारो** मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके । **तारं** च रजतेऽत्युच्चस्वरेऽप्यन्यवदीरितम् । ऋक्षाक्षिमध्ययोस्**तारा** सुग्रीवगुरुयोषितोः । बुद्धदेव्यां मता **तारा**' इति विश्वः ॥

**शारो वायौ स तु त्रिषु ।**

**कर्बुरे**

शृणाति । 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'शृणातेर्वायुवर्णनिवृत्तेषु' (वा० ३।३।२१) इति घञ् । '**शारः** स्याच्छबले वाच्यलिङ्गः पुंसि समीरणे' (इति तालव्यादौ मेदिनी) ॥

**अथ प्रतिज्ञाजिसंविदापत्सु संगरः ॥ १६६ ॥**

संगरणम् । संगीर्यते वा । अनेन वा । 'गॄ शब्दे' (क्र्या० प० से०) । 'ऋदोरप्' । 'पुंसि–' (३।३।११८) इति घो वा । '**संगरो** युधि चापदि । क्रियाकारे विषे चाङ्गीकारे क्लीबं शमीफले' (इति मेदिनी) ॥

**वेदभेदे गुह्यवादे मन्त्रः**

मन्त्र्यते । मन्त्रणं वा । 'मन्त्रि गुप्तभाषणे' (चु० प० से०) । घञ् (३।३।१९,१८) । '**मन्त्रो** वेदविशेषे स्यादेवादीनां च साधने । गुह्यवादेऽपि च पुमान्' (इति मेदिनी) ॥

**मित्रो रवावपि ।**

मेद्यति । 'ञिमिदा स्नेहने' (दि० प० से०) । 'अमिचिमिदिशसिभ्यः क्त्रः' (उ० ४।१६४) । '**मित्रं** सुहृदि न द्वयोः । (सूर्ये पुंसि)' (इति मेदिनी) ॥

**मखेषुयूपखण्डेऽपि स्वरुः**

इषुर्बाणः । स्वरति । स्वर्यते वा । 'स्वृ शब्दोपतापयोः' (भ्वा० प० अ०) । 'शॄस्वृस्निहि–' (उ० १।१०) इत्युः । '**स्वरुः** पुमान्यूपखण्डे भिदुरेऽप्यध्वरे शरे' (इति मेदिनी) । यूपखण्डे यूपे तक्ष्यमाणे प्रथमपतिते शकले ॥

**गुह्येऽप्यवस्करः ॥ १६७ ॥**

अवोऽधः कीर्यते । 'कॄ विक्षेपे' (तु० प० से०) 'ऋदोरप्' (३।३।५७) । कस्कादिः (८।३।४८) । 'वर्चस्केऽवस्करः' (६।१।४८) इति वा साधुः । '**अवस्कारो**ऽपि वर्चस्के गुह्ये' (इति मेदिनी) । गुह्य उपस्थे ॥

**आडम्बरस्तूर्यरवे गजेन्द्राणां च गर्जिते ।**

आडम्ब्यते । 'डबि क्षेपे' चुरादिः । घञ् (३।३।१९) । भावे (३।३।१८) वा । आडम्बं राति । 'आतोनुप–' (३।२।३) इति कः । आडम्बयति वा । 'बाहुलकादरन्' । '**आडम्बरः** समारम्भे गजगर्जिततूर्ययोः' इति विश्वः ॥

**अभिहारोऽभियोगे च चौर्ये संनहनेऽपि च ॥१६८॥**

अभिहरणम् । घञ् (३।३।१८) । अभिगम्याक्रमणमभियोगः संनहनं कवचादिधारणम् ॥

**स्याज्जंगमे परीवारः खड्गकोशे परिच्छदे ।**

जंगमे परिजने । परिवार्यतेऽनेन । 'परिवारणं वा' । घञ् (३।३।१८,१९) । 'उपसर्गस्य–' (६।३।१२३) इति दीर्घः । '**परीवारः** परिजने खड्गकोशे परिच्छदे' (इति मेदिनी) । परिच्छद उपकरणम् ॥

**विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम् ॥ १६९ ॥**

विस्तीर्यते । 'स्तॄञ् आच्छादने' (क्र्या० उ० से०) । 'वृक्षासनयोर्विष्टरः' इति साधुः ॥

**द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे ।**

प्रतिह्रियतेऽनेन । अत्र । 'हृञ्' (भ्वा० उ० अ०) । घञ् (३।३।१९) 'उपसर्गस्य–' (६।३।१२२) इति दीर्घः । गौरादिङीष् (४।१।४१) । '**प्रतीहारो** द्वारि द्वाःस्थे द्वाःस्थितायां तु योषिति' (इति मेदिनी) । अनन्तरे द्वाःस्थे ॥

**विपुले नकुले विष्णौ बभ्रुः स्यात्पिङ्गले त्रिषु ॥१७०॥**

बिभर्ति । भरति वा । 'डुभृञ्' (जु० उ० अ०) । 'भृञ्' (भ्वा० उ० अ०) वा । 'कुर्भ्रश्च' (उ० १।२२) इति कुद्वित्वं च । यत्तु—भृञः शङ्कादित्वात् कुर्द्विर्वचनं च—इति मुकुटः । तदुक्तसूत्रादर्शनमूलकम् । निर्मूलं च । 'बभ्रुर्ना नकुले विष्णौ विपुले पिङ्गले त्रिषु' इति बलशर्मा । 'बभ्रुर्विशाले नकुले कृशानावजे मुनौ शूलिनि पिङ्गले च' इति विश्वः ॥

**सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु ।**

सरति । 'सृ स्थिरे' (३।३।१७) इति घञ् । '**सारो** बले स्थिरांशे च मज्ज्ञि पुंसि जले धने । न्याय्ये क्लीबं त्रिषु **वरे**' (इति मेदिनी) ॥

**दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम् ॥ १७१ ॥**

दुष्टमासमन्तादुदरमस्य । '**दुरोदरो** द्यूतकारे द्यूताक्षपणः योर्पुमान्' । पणो ग्लहः ॥

**महारण्ये दुर्गपथे कान्तारः पुंनपुंसकम् ।**

कान्ता अरा अस्य । यद्वा कान्तं मनोज्ञमृच्छति, इयर्ति वा । 'कर्मण्यण्' (३।२।१) । '**कान्तारो**ऽस्त्री महारण्ये बिले दुर्गमवर्त्मनि । पुंसि स्यादिक्षुभेदे' (इति मेदिनी) ॥

१—भाष्ये तु 'शृ' इत्यविभक्तिक एव निर्देशः सिद्धान्तकौमुद्यामपि तथैव व्याख्यातम् ।

१—'आश्रिल दुर्गं गिरिकंदरोदरं क्रीडन्त्यमुष्मिन् सततं दरोदरम्' इति यमकान्निरुकारोऽपि, इति गोवर्धनः—इति मुकुटपीयूषौ ।
२—आधुनिकमेदिनीपुस्तके तु '**दुरोदरं** द्यूतभेदे द्यूतकृत्पणयोः पुमान्' इति पाठो लभ्यते ।

**मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ॥ १७२ ॥**

माद्यति परक्षच्छेे । 'मदी हर्षे' (दि० प० से०) । 'कृभूमदिभ्यः कित्' (उ० ३।७३) इति सरः । '**मत्सरा** मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान् । असह्यपरसंपत्तौ कृपणे चाभिधेयवत्' (इति मेदिनी) । तद्वानन्यशुभद्वेषवान् ॥

**देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये ।**

व्रियते । वरणं वा । 'वृञ् वरणे' (स्वा० उ० से०) । 'ग्रहवृदृ–' (३।३।५८) इत्यप् । यद्वा वृणोति, वरति वा । पचाद्यच् (३।१।१३४) । '**वरो** जामातरि वृतौ देवतादेरभीप्सिते । षिङ्गे पुंसि त्रिषु श्रेष्ठे कुङ्कुमे तु नपुंसकम् । **वरी** प्रोक्ता शतावर्यां **वरा** च स्यात्फलत्रिके । मनागिष्टे **वरं** क्लीबं केचिदाहुस्तदव्ययम्' (इति मेदिनी) ॥

**वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना ॥ १७३ ॥**

कृणाति । 'कृ हिंसायाम्' (क्र्या० प० से०) किरति । कीर्यते वा । 'कॄ विक्षेपे' (तु० प० से०) वा । 'कॄशॄपॄकटि–' (उ० ४।३०) इतीरन् । करिणमीरयति । 'ईर गतौ' (अ० आ० से०) । 'कर्मण्यण्' (३।२।१) । 'वंशाङ्कुरे **करीरो**ऽस्त्री वृक्षभिद्घटयोः पुमान् । **करीरा** चीरिकायां च दन्तमूले च दन्तिनाम्' (इति मेदिनी) ॥

**ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम् ।**

प्रतिसरति । पचाद्यच् (३।१।१३४) । प्रतिस्रियते । अनेन वा । 'पुंसि–' (३।३।११८) इति घः । 'भवेत्प्र**तिसरो** मन्त्रभेदे माल्ये च कङ्कणे । व्रणशुद्धौ चमूपृष्ठे पुंसि न स्त्री तु मण्डले । आरक्षे करसूत्रे च नियोज्ये त्वन्यलिङ्गकः' (इति मेदिनी) ॥

**यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ॥ १७४ ॥**
**शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ।**

हरति । 'हृञ्' (भ्वा० उ० अ०) । 'अच इः' (उ० ४।१३९) । '**हरि**र्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु । सिंहाश्वकपिभेकाहिशुकलोकान्तरेषु च । **हरि**र्वाच्यवदाख्यातो हरित्कपिलवर्णयोः' इति विश्वः ॥

**शर्करा कर्परांशेऽपि**

शृणाति । शीर्यते वा । 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'श्रः करन्' (उ० ४।३) । '**शर्करा** खण्डविकृतावुपलाकर्परांशयोः । शर्करान्वितदेशेऽपि रुग्भेदे शकलेऽपि च' (इति मेदिनी) ॥

**यात्रा स्याद्यापने गतौ ॥ १७५ ॥**

यानम् । अनेन वा । 'या प्रापणे' (अ० प० अ०) । 'हुयामा–' (उ० ४।१६८) इति त्रन् । '**यात्रा** तु यापनोपाये गतौ देवार्चनोत्सवे' इति विश्वः ॥

**इरा भूवाक्सुराप्सु स्यात्**

एति । ईयते वा । 'इण् गतौ' (अ० प० अ०) । 'ऋज्रेन्द्राग्र–' (उ० २।१८) इति साधुः ॥

**तन्द्रा निद्राप्रमीलयोः ।**

तत् राति । 'आतोऽनुप–' (३।२।३) इति कः । स्त्रियां टाप् (४।१।४) । केचिद् गौरादित्वात् (४।१।४१) ङीषमाहुः तद् द्राति वा । 'द्रा कुत्सायां गतौ' (अ० प० अ०) । '–निद्रातन्द्रा–' (३।२।१५८) इति तदो नान्तत्वं निपात्यते । प्रमीला अत्यन्तश्रमादिना मोहप्राया ॥

**धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि ॥ १७६ ॥**

धीयते । 'धेट् पाने' (भ्वा० प० अ०) । 'धः कर्मणि ष्ट्रन्' (३।२।१८१) । षित्वात् (४।१।४१) ङीष् । '**धात्री** जनन्यामलकीवसुमत्युपमातृषु' (इति मेदिनी) ॥

**क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका ।**
**त्रिषु क्रूरेऽधनेऽल्पेऽपि क्षुद्रः**

श्रृणत्ति । क्षुद्यते वा । 'क्षुदिर् संचूर्णने' (रु० उ० अ०) । 'स्फायितञ्चि–' (उ० २।१३) इति रक् । '**क्षुद्रः** स्यादधमक्रूरकृपणाल्पेषु वाच्यवत् । **क्षुद्रा** व्यङ्गानटीकण्टकारिकासरघासु च । चाङ्गेरीवेश्ययोर्हिंस्रामक्षिकामात्रयोरपि' इति विश्वः ॥ व्यङ्गाङ्गहीना । सरघा मधुमक्षिका ॥

**मात्रा परिच्छदे ॥ १७७ ॥**
**अल्पे च परिमाणे स्यान्मात्रं कार्त्स्न्येऽवधारणे ।**

मीयते । अनया वा । माति मिमीते वा । 'मा माने' (अ० प० अ०) । 'माङ् माने' (जु० आ० अ०) वा । 'हुयामा–' (उ० ४।१६८) इति त्रन् । '**मात्रा** कर्णविभूषायां वित्ते माने परिच्छदे । अक्षरावयवे स्वल्पे क्लीबं कार्त्स्न्येऽवधारणे' (इति मेदिनी) ॥

**आलेख्याश्चर्ययोश्चित्रम्**

चिनोति । चीयते वा । 'अमिचि–' (उ० ४।१६४) इति क्त्रः । '**चित्रा**खुपर्णीगोडुम्बासुभद्रादन्तिकासु च । मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम् । तिलकालेख्ययोः क्लीबं कर्बुराद्भुतयोरपि । तद्युक्तयोर्वाच्यलिङ्गं **चित्री** झिल्ल्यां नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालिखनभेदयोः' (इति मेदिनी) ॥

**कलत्रं श्रोणिभार्ययोः ॥ १७८ ॥**

गडति । गड्यते वा । 'गड सेचने' (भ्वा० प० से०) । 'गडेरादेश्च कः' (उ० ३।१०६) इत्यत्रन् । डलयोरेकत्वम् । कलं त्रायते वा । 'त्रैङ् पालने' (भ्वा० आ० अ०) । कः (३।२।३) । कडति कड्यते वा । 'कड शासने (मदे)' (भ्वा० प० से०) । बाहुलकादत्रन् । 'दुर्गस्थाने नृपादीनां **कलत्रं** श्रोणिभार्ययोः' इति रभसः ॥

**योग्यभाजनयोः पात्रम्**

पाति । पायते वा । पीयतेऽनेन वा 'पा रक्षणे' (अ० प० अ०) । 'पा पाने' (भ्वा० प० अ०) वा । ष्ट्रन् (उ० ४। १५९) । 'पात्रं तु भाजने योग्ये पात्रं तीरद्वयान्तरे । पात्रं स्रुवादौ पर्णे च राजमन्त्रिणि चेष्यते' इति विश्वः ॥

**पत्रं वाहनपक्षयोः ।**

पतन्त्यनेन । 'दाम्नी—' (३।२।१८२) इति ष्ट्रन् । 'पत्रं तु वाहने पर्णे पक्षे च शरपक्षिणोः' इति विश्वः ॥

**निदेशग्रन्थयोः शास्त्रम्**

निदेश आज्ञा । शासनम् । शिष्यते अनेन, इति वा । 'सर्वधातुभ्यः ष्ट्रन्' (उ० ४।१५९) ॥

**शस्त्रमायुधलोहयोः ॥१७९॥**

शस्यतेऽनेन । 'शसु हिंसायाम्' (भ्वा० प० से०) । 'दाम्नी–' (३।२।१८२) इति ष्ट्रन् । 'शस्त्रं लोहास्त्रयोः क्लीबं छुरिकायां तु योषिति' (इति मेदिनी) ॥

**स्याज्जटांशुकयोर्नेत्रम्**

नयति नीयते । अनेन वा । 'णीञ् प्रापणे' (भ्वा० उ० अ०) । 'दाम्नी–' (३।२।१८२) इति ष्ट्रन् । 'नेत्रं (मथिगुणे वस्त्रे तरुमूले विलोचने । नेत्रं रथे च नाड्यां च नेत्रो) नेतरि मेघवत्' इति विश्वः । 'नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च । रथे चक्षुषि नद्यां च नेत्री नाड्यां च योषिति' (इति मेदिनी) ॥

**क्षेत्रं पत्नीशरीरयोः ।**

क्षयति । क्षीयते । अनेन वा । 'क्षि क्षये' (भ्वा० प० अ०) । 'क्षि निवासगत्योः' (तु० प० अ०) वा । ष्ट्रन् (उ० ४।१५९) । 'क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः' (इति मेदिनी) ॥

**मुखाग्रे क्रोडहलयोः पोत्रम्**

पूयतेऽनेन । 'पूञ् पवने' (क्र्या० उ० से०) । 'हलसूकरयोः पुवः' (३।२।१८३) इति ष्ट्रन् । 'पोत्रं वस्त्रे मुखाग्रे च सूकरस्य हलस्य च' इति विश्वः ॥

**गोत्रं च नाम्नि च ॥ १८० ॥**

गूयतेऽनेन । 'गुङ् शब्दे' (भ्वा० आ० अ०) । ष्ट्रन् (उ० ४।१५९) । गां त्रायते वा । 'त्रैङ्' (भ्वा० आ० अ०) । 'आतोऽनुप–' (३।२।३) इति कः । 'गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः । संभावनीयबोधे च काननक्षेत्रवर्त्मसु' (इति मेदिनी) ॥

**सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च ।**

सीदन्त्यत्र । अनेन वा 'षद्‌लृ विशरणादौ' (भ्वा० प० अ०) । ष्ट्रन् (उ० ४।१५९) । 'सत्रं यज्ञे सदादानच्छादनारण्यकैतवे' (इति मेदिनी) ॥

**अजिरं विषये कायेऽपि**

अजन्त्यत्र । अनेन वा । 'अज गतौ' (भ्वा० प० से०) । 'अजिरशिशिर–' (उ० १।५३) इति साधुः । 'अजिरं प्राङ्गणे वाते विषये दुर्दुरे तनौ । (स्त्री चण्ड्याम्)' (इति मेदिनी)

**अम्बरं व्योम्नि वाससि ॥ १८१ ॥**

अम्बते । अम्ब्यते वा । 'अबि शब्दे' (भ्वा० आ० से०) । बाहुलकादरः । 'अम्बरं वाससि व्योम्नि कार्पासे च सुगन्धके' इति विश्वः ॥

**चक्रं राष्ट्रेऽपि**

क्रीयतेऽनेन । 'घञर्थे कः' (वा० ३।३।५८) 'केकृञादीनाम्' (वा० ६।१।१२) इति द्वित्वम् । 'चक्रः कोके पुमान् क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः । जलावर्तेऽपि' (इति मेदिनी) ॥

**अक्षरं तु मोक्षेऽपि**

न क्षरति । 'क्षर संचलने' (भ्वा० प० से०) । 'पचाद्यच्' (३।१।१३४) । यद्वा अश्नुते । 'अशू व्याप्तौ' (स्वा० आ० से०) । 'अशेः सरः' (उ० ३।७०) । 'मोक्षेऽपवर्गे ओंब्रह्मण्यच्युतेऽक्षरम्' इत्यनेकार्थकोषः ॥

**क्षीरमप्सु च ।**

घस्यते । 'घस्लृ अदने' (भ्वा० प० अ०) । 'घसेः किच्च' (उ० ४।३४) इतीरन् । 'गमहन–' (६।४।९८) इत्युपधालोपः । ('शासिवसि–)' (८।३।६०) इति (षत्वम्) । 'क्षीरं दुग्धे जले' (इति मेदिनी) ॥

**स्वर्णेऽपि भूरिचन्द्रौ द्वौ**

भवति । भूयते वा । 'भू सत्तायाम्' (भ्वा० प० से०) । 'भू प्राप्तौ' (चु० आ० से०) । 'अदिशदि–' (ऊ० ४।६५) इति क्रिन् । 'भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकः' (इति मेदिनी) ॥

चन्दति । 'चदि आह्लादने' (भ्वा० प० से०) । 'स्फायितञ्चि–' (उ० २।१३) इति रक् । 'चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णचारुषु' (इति मेदिनी) ॥

**द्वारमात्रे तु गोपुरम् ॥ १८२ ॥**

पुरति । 'पुर अग्रगमने' (तु० प० से०) । 'इगुपध–' (३।१।१३५) इति कः । गवां पुरम् । 'गोपुरं द्वारि पूर्द्वारि कैवर्तीमुस्तकेऽपि च' (इति मेदिनी) ॥

**गुहादम्भौ गह्वरे द्वे**

गाह्यते । 'गाहू विलोडने' (भ्वा० आ० से०) । 'छित्वरच्छत्वर–' (उ० ३।१) इति साधुः । 'गह्वरस्तु गुहादम्भनिकुञ्जगहनेष्वपि' इति विश्वः ॥

**रहोऽन्तिकमुपह्वरे ।**

उपह्वरन्त्यत्र । 'ह्वृ कौटिल्ये' (भ्वा० प० अ०) । 'पुंसि–'

(३।३।११८) इति घः । यत्तु—गह्वरवदुपह्वरम्—इति मुकुटेनाभाणि । तन्न । छिद्वरादावस्य पाठाभावात् । **'उपह्वरं** समीपे स्यादेकान्ते च नपुंसकम्' (इति मेदिनी) ॥

**पुरोऽधिकमुपर्यग्राणि**

अग्यते अगति वा । 'अग कुटिलायां गतौ' (भ्वा० प० से०) । 'ऋज्रेन्द्राग्र–' (उ० २।१८) इति साधुः । **'अग्रं** पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत्' (इति मेदिनी) ॥

**अगारे नगरे पुरम् ॥ १८३ ॥**

**मन्दिरं च**

पिपर्ति । 'पॄ पालनपूरणयोः' (जु० प० से०) । मूलविभुजादित्वात् (वा० ३।२।५) कः । यद्वा पुरति 'पुर अग्रगमने' (तु० प० से०) । 'इगुपध–' (३।१।३५) इति कः । **'पुरं** शरीरमित्याहुर्गृहोपरिगृहे **पुरम्** । **पुरो** गुग्गुलुराख्यातो नगरेऽपि **पुरं पुरी'** इति धरणिः ॥

मन्दतेऽत्र । 'मदि स्तुत्यादौ' (भ्वा० आ० से०) । 'इषिमदिमुदि–' (उ० १।५१) इति किरच् । **'मन्दिरं** नगरेऽगारे क्लीबं ना मकरालये' (इति मेदिनी) ॥

**अथ राष्ट्रोऽस्त्री विषये स्यादुपद्रवे ।**

राजति । 'राजृ दीप्तौ' (भ्वा० उ० से०) । ष्ट्रन् (उ० ४।१५९) । **'राष्ट्रं** स्यादुपवर्तने । उपद्रवे क्लीबपुंसोः' (इति मेदिनी) ॥

**दरोऽस्त्रियां भये श्वभ्रे**

दरणम् । दीर्यते वा । 'दॄ भये' (भ्वा० प० से०) 'दॄ विदारणे' (क्र्या० प० से०) वा । 'ऋदोरप्' (३।३।५७) **'दरो**ऽस्त्री साध्वसे गर्ते कन्दरे तु **दरी** स्मृता । **दरा**व्ययं मनागर्थे' (इति मेदिनी) ॥

**वज्रोऽस्त्री हीरके पवौ ॥ १८४ ॥**

वजति । 'वज गतौ' (भ्वा० प० से०) । 'ऋज्रेन्द्र–' (उ० १।१८) इति साधुः । **'वज्रं** स्याद्बाधके धात्र्यां क्लीबं योगान्तरे पुमान् । **वज्रा** स्नुह्यां गुडूच्यां च **वज्री** स्नुह्यन्तरे स्मृता । दम्भोलौ हीरकेऽप्यस्त्री **वज्रं** त्रपुवरत्रयोः' (इति दन्तोष्ठ्यादौ मेदिनी) ॥

**तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे ।**

तननम् । तन्यते । अनेन वा । 'तनु विस्तारे' (त० उ० से०) । ष्ट्रन् (उ० ४।१५९) । यद्वा तन्त्रणम् । तन्त्र्यते वा । 'तत्रि धारणे' (चु० प० से०) । घञ् (३।३।१८) । यत्तु—'स्फायितञ्चि–' (उ० २।१३) इति रक् इति मुकुट आह । तन्न । उक्तधातोस्तत्र पाठाभावात् । तनोते रकि नलोपप्रसङ्गात् । तन्त्रयतेर्घञाचा वा सिद्धत्वाच्च । **'तन्त्रं** कुटुम्बकृत्ये स्यात्सिद्धान्ते चौषधोत्तमे । प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे । श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके । इतिकर्तव्यतायां च (**तन्त्री** वीणागुणे मता । अमृतादेहशिरयोः)' (इति मेदिनी) ॥

**औशीरं चामरे दण्डेऽप्यौशीरं शयनासने ॥ १८५ ॥**

उश्यते 'वश कान्तौ' (अ० प० से०) । 'नशेः कित्' (उ० ४।३१) इतीरन् । प्रज्ञाद्यण् (५।४।३८) । यद्वा उशीरस्येदम् । 'तस्येदम्' (४।३।१२०) इत्यण् । **'औशीरं** चामरे दण्डे **औशीरं** स्वापपीठयोः' इत्यजयः ॥

**पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले ।**
**व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ॥१८६॥**

पुष्णाति पुष्यते । अनेन वा । 'पुष पुष्टौ' (क्र्या० प० से०) । 'पुषः कित्' (उ० ४।४) इति करन् । **'पुष्करं** पङ्कजे व्योम्नि पयःकरिकराग्रयोः । औषधिद्वीपविहगतीर्थरागोरगान्तरे । **पुष्करं** तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च' (इति विश्वः) ॥

**अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।**
**छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च १८७**

अन्तं राति । 'रा दाने' (अ० प० अ०) । 'आतोऽनुप–' (३।२।३) इति कः ॥

**मुस्तेऽपि पिठरम्**

पेठति । पिठ्यते वा । 'पीठ हिंसासंक्लेशनयोः' (भ्वा० प० से०) बाहुलकादरो गुणाभावश्च । **'पिठरः** स्थाल्यां ना क्लीबं मुस्तामन्थानदण्डयोः' (इति मेदिनी) ॥

**राजकशेरुण्यपि नागरम् ।**

नगरे भवम् । 'तत्र भवः' (४।३।५३) इत्यण् । यद्वा न अगं राति । नकारेण 'सुप्सुपा' इति समासः । **'नागरं** मुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे' (इति मेदिनी) । राजकशेरुः कन्दविशेषः ॥

**शार्वरं त्वन्धतमसे घातुके भेद्यलिङ्गकम् ॥ १८८ ॥**

शर्वर्यां भवम् । 'तत्र भवः' (४।३।५३) इत्यण् । स्वामी तु 'घातुकेभे नृलिङ्गकम्' इति पठित्वा 'घातुकश्चासाविभश्च । नृलिङ्गं पुंलिङ्गम्' इति व्याख्यत् ॥

**गौरोऽरुणे सिते पीते**

गौरति । 'गुरी उद्यमने' (तु० आ० से०) । गवते वा मनोऽत्र । 'गुङ् गतौ' (भ्वा० आ० अ०) वा । 'ऋज्रेन्द्र–' (उ० २।१८) इति साधुः । यद्वा गुर्यतेऽनेन । 'गुरी' (तु० आ० से०) । 'हलश्च' (३।३।१२१) इति घञ् । गोर एव ।

---

१—शयनासनयोः समुदितयोः संज्ञेयम्—इति स्वामी ॥—शयनं चासनं च शयनासनम् । तत्र युगपद्वर्तते । तत्र यथा राजाभिधानाक्षरमुद्रितं तदौशीरमालोक्य न कस्य भीतिः—इत्यनेकार्थकैरवाकरकौमुदी ।—सुभूतिस्तु पृथगेवाह—इति मुकुटः ॥

प्रज्ञाद्यण् (५।४।३८)। 'गौरः पीतेऽरुणे श्वेते विशुद्धे चाभिधेयवत्। ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेसरे। (गौरी त्वसंजातरजःकन्याशंकरभार्ययोः। रोचनीरजनीपिङ्गाप्रियङ्गुवसुधासु च। आपगाया विशेषे च यादसांपतियोषिति)' (इति मेदिनी) ॥

**व्रणकार्यप्यरुष्करः।**

अरुः करोति। 'दिवाविभा–' (३।२।२१) इति टः। '**अरुष्करो** व्रणकृति त्रिषु भल्लातके पुमान्' (इति मेदिनी) ॥

**जठरः कठिनेऽपि स्यात्**

जायते। अस्मिन् वा। 'जनी' ( दि० आ० से० )। 'जनेररष्ठ च' (उ० ५।३८) इत्यरः। '**जठरो** न स्त्रियां कुक्षौ बद्धकक्खटयोस्त्रिषु' (इति मेदिनी) ॥

**अधस्तादपि चाधरः ॥ १८९ ॥**

न धरति। 'धृञ् धारणे' ( भ्वा० उ० अ० )। पचाद्यच् (३।१।१३४)। यद्वा धरादुच्चात्कठिनाद्वान्यः। '**अधरस्तु** पुमानोष्ठे हीनेऽनूर्ध्वेऽपि वाच्यवत्' (इति मेदिनी) ॥

**अनाकुलेऽपि चैकाग्रः**

एकमेकत्र वाग्रमस्य। '**एकाग्र**मन्यालिङ्गं स्यादेकतानेऽप्यनाकुले' (इति मेदिनी) ॥

**व्यग्रो व्यासक्त आकुले।**

विविधं विविधे वाग्रमस्य। विरुद्धमगति वा। 'अग कुटिलायां गतौ' ( भ्वा० प० से० )। 'ऋज्रेन्द्र–' (उ० २।१८) इति साधुः ॥

**उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः स्यात्**

उत्तरति। 'तॄ प्लवनतरणयोः' ( भ्वा० प० से० )। पचाद्यच् (३।१।१३४)। यद्वा अतिशयेनोद्गतः। तरप् (५।३।५७)। द्रव्यप्रकर्षत्वान्नामु (५।४।११)। '**उत्तरं** प्रतिवाक्ये स्यादूर्ध्वोदीच्योत्तमेऽन्यवत्। **उत्तरस्तु** विराटस्य तनये दिशि **चोत्तरा**' इति विश्वः ॥

**अनुत्तरः ॥ १९० ॥**

**एषां विपर्यये श्रेष्ठे**

उत्तरस्याभावः। उत्तरस्य विरुद्धो वा। श्रेष्ठे न उत्तरो यस्मात् ॥

**दूरानात्मोत्तमाः पराः।**

पिपर्ति। पूर्यते। अनेन वा। पचाद्यच् (३।१।१३४)। 'ऋदोरप्' (३।३।५७)। 'पुंसि–' (३।३।११८) इति घो वा। '**परः** श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले' (इति मेदिनी) ॥

**स्वादुप्रियौ च मधुरौ**

मधु माधुर्यं राति। अस्त्यत्र वा। 'आतोऽनुप–' (३।२।३) इति कः। 'ऊषशुषि–' (५।२।१०७) इति रो वा। '**मधुरौ** स्वादुशोभनौ' इति व्याडिः। '**मधुरस्तु** रसे विषे। **मधुरं** रसवत्स्वादुप्रियेषु **मधुरो**ऽन्यवत्' इति विश्वः ॥

**क्रूरौ कठिनर्दयौ ॥ १९१ ॥**

कृन्तति। 'कृती छेदने' ( तु० प० से० )। 'कृतेश्छः क्रू च' (२।२१) इति रक्। '**क्रूरस्तु** कठिने घोरे नृशंसेऽप्यभिधेयवत्' इति विश्वः ॥

**उदारो दातृमहतोः**

उच्चैरासमन्तादृच्छति। पचाद्यच् (३।१।१३४)। '**उदारो** दातृमहतोर्दक्षिणे चाभिधेयवत्' (इति मेदिनी) ॥

**इतरस्त्वन्यनीचयोः।**

इना कामेन तरति। 'तॄ' ( भ्वा० प० से० ) पचाद्यच् (३।१।१३४) ॥

**मन्दस्वच्छन्दयोः स्वैरः**

स्वेन स्वातन्त्र्येण ईर्ते। ईरति वा। 'ईर गतौ कम्पने च' ( अ० आ० से० )। 'ईर प्रेरणे' ( चु० उ० से० ) वा। पचाद्यच् (३।१।१३४)। 'स्वादीरेरिणोः' (वा० ६।१।८९) इति वृद्धिः। यत्तु मुकुटः—स्वेन स्वयमेव न तत्संगत्यान्य इयर्ति। अच् (३।१।१३४)—इति व्याख्यत्। तन्न। अचि गुणे च 'स्वारः' इति प्रसङ्गात् ॥

**शुभ्रमुद्दीप्तशुक्लयोः ॥ १९२ ॥**

शोभते। 'शुभ दीप्तौ' ( भ्वा० आ० से० ) 'स्फायितञ्चि–' (उ० २।१३) इति रक्। '**शुभ्रं** स्यादभ्रके क्लीबमुद्दीप्तशुक्लयोस्त्रिषु' (इति मेदिनी) ॥

इति रान्ताः ॥

**चूडा किरीटं केशाश्च संयता मौलयस्त्रयः।**

मूलस्यादूरे भवः। 'सुतंगमादित्वात्' (४।२।८०) इञ्। यद्वा मूलस्यापत्यम्। 'अत इञ्' (४।१।९५)। 'किरीटे **मौलि**रक्लीबे चूडासंयतकेशयोः' इति रभसः। '**मौलिः** किरीटे धम्मिल्ले चूडायामनपुंसकम्। अशोकपादपे पुंसि' (इति मेदिनी) ॥

**द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलवः ॥ १९३ ॥**

मातङ्गो हस्ती। काण्डो बाणः। पीलति। 'पील प्रतिष्टम्भे' (भ्वा० प० से०)। मृगय्वादित्वात् (उ० १।३७) उः। '**पीलुः** पुमान् प्रसूने स्यात्परमाणौ मतङ्गजे। अस्थिखण्डे च तालस्य काण्डपादपभेदयोः' (इति मेदिनी) ॥

**कृतान्तानेहसोः कालः**

कृतान्तो यमः। कालयति। 'कल शब्दसंख्यानयोः' (भ्वा० प० से०)। 'कल प्रेरणे' ( चु० प० से० ) वा। ण्यन्तः। पचाद्यच् (३।१।१३४)। यद्वा कल्यते संख्यायते। कर्मणि घञ् (३।३।१९)। यत्तु—कलयति भूतान्यायुर्वा—इति स्वामी व्याख्यत्। तन्न। अदन्तत्वेन वृद्ध्यप्रसङ्गात्। यद्वा

१—आधुनिकमेदिनीपुस्तके तु 'नाऽशोकद्रौ स्त्रियां भूमौ' इति पाठ उपलभ्यते ॥

कल्यते। 'कल उपदेशे' ( )। घञ् (३।३।१९)। '**कालो** मृत्यौ महाकाले समये यमकृष्णयोः' (इति मेदिनी)॥

**चतुर्थेऽपि युगे कलिः।**

कलयति। कल्यते वा 'कल गतौ संख्याने च' (चु० उ० से०) अदन्तः। 'अच इः' (उ० ४।१३९)। '**कलिः** स्त्री कलिकायां ना शूराजिकलहे युगे' (इति मेदिनी)॥

**स्यात्कुरङ्गेऽपि कमलः**

कामयते। काम्यते वा। 'कमु कान्तौ' (भ्वा० आ० से०)। णिङभावे वृषादित्वात् (उ० १।१०६) कलः। '**कमलं** सलिले ताम्रे जलजे व्योम्नि भेषजे। मृगभेदे तु **कमलः**' (इति मेदिनी)॥

**प्रावारेऽपि च कम्बलः॥ १९४॥**

काम्यते। 'कमेर्वुकुच' (उ० १।१०७) इति कलः। कं कुत्सितं शिरोऽम्बु वा वलते वा। 'वल संवरणे संचरणे च' (भ्वा० आ० से०) '**कम्बलो** नागराजे स्यात्सास्नाप्रावारयोरपि। कृमावप्युत्तरासङ्गे सलिले तु नपुंसकम्' (इति मेदिनी)॥

**करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्।**

करो राजग्राह्यः। उपहारः पूजासामग्री। प्राण्यङ्गजस्त्वक्संकोचः। बलते। बल्यते वा। 'बल प्राणने' (भ्वा० प० से०)। 'वल संवरणे' (भ्वा० आ० से०)। 'सर्वधातुभ्य इन्' (उ० ४।११८)। '**बलि**र्दैत्यप्रभेदे च करचामरदण्डयोः। उपहारे पुमान् स्त्री तु जरया श्लथचर्मणि। गृहदारुप्रभेदे च जठरावयवेऽपि च' (इति मेदिनी)॥

**स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः १९५**

वलते। बलति। बल्यते वा। अनेन वा 'बल संचरणे' (भ्वा० आ० से०)। 'बल प्राणने' (भ्वा० प० से०) वा। पचाद्यच् (३।१।१३४)। कर्मणि घञ् (३।३।१९) वा। संज्ञापूर्वकत्वाद्वृद्ध्यभावः। 'पुंसि-' (३।३।११८) इति घो वा। '**बलं** गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः। **बलो** हलायुधे दैत्यभेदे बलिनि वायसे' इति विश्वः॥

**वातूलः[1] पुंसि वात्यायामपि वातासहे त्रिषु।**

वातानां समूहः। वातं न सहते। 'वातात्समूहे च' (वा० ५।२।१२२) इत्यूलः। चात्तदसहने। 'वातूलो **वातुलो**ऽपि स्यात्' इति द्विरूपकोषाद्ह्रस्वमध्योऽपि। 'वात सुखसेवनयोः' (चु० उ० से०) अदन्तः। बाहुलकादुलच्॥

**मेयलिङ्गः शठे व्यालः पुंसि श्वापदसर्पयोः॥१९६॥**

विरुद्धमा समन्तादलति। अडति वा। 'अल भूषणादौ' (भ्वा० प० से०)। 'अड उद्यमे' (भ्वा० प० से०)। डलयोरेकत्वम्। पचाद्यच् (३।१।१३४)। '**व्यालो** दुष्टगजे सर्पे शठे श्वापदसिंहयोः' (इति हैमः)॥

**मलोऽस्त्री पापविट्किट्टानि**

मलयति। 'मल तत्कृतौ' अदन्तः। मलते वा। 'मल धारणे' (भ्वा० आ० से०)। पचाद्यच् (३।१।१३४)। '**मलो**ऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्' (इति मेदिनी)। विट् विष्ठा। किट्टं तैलाद्यधोभागस्थं शिङ्घाणादि च। 'वसा शुक्रमसृग् मज्जा मूत्रं विट्कर्णविण्नखाः। श्लेष्माश्रु दूषिका स्वेदो द्वादशैते मला नृणाम्'॥

**अस्त्री शूलं रुगायुधम्।**

शलति। 'शूल रुजायाम्' (भ्वा० प० से०)। 'इगुपध-' (३।१।१३५) इति कः। '**शूलो**ऽस्त्री रोग आयुधे। मृत्युकेतनयोगेषु (**शूला** स्यात्पण्ययोषिति)' (इति मेदिनी)॥

**शङ्कावपि द्वयोः कीलः**

कीलति। कील्यते। अत्र। अनेन वा। 'कील बन्धे' (भ्वा० प० से०)। 'इगुपध-' (३।१।१३५) इति कः। कर्मणि घञ् (३।३।१९)। '**पुंसि**-' (३।३।११८) इति घो वा। '**कीलः** कफोणिकाघाते स्थाणौ च ज्वलनार्चिषि' इति धरणिः। '**कीलो** लेशे द्वयोः स्तम्भज्वालाकफोणिशङ्कुषु' इति विश्वः (मेदिनी)। '**कीलो**ऽग्नितेजसि। कफोणिस्तम्भयोः शङ्कौ **कीला** रतहृतावपि' (इति हैमः)॥

**पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु॥ १९७॥**

पालयति। पाल्यते वा। अत्र। अनया वा। 'पाल रक्षणे' (चु० प० से०) ण्यन्तः। 'अच इः' (उ० ४।१३९) '**पालिः** कर्णलतायां स्यात्प्रदेशे पङ्क्तिचिह्नयोः' इत्यजयः। 'सश्मश्रुयुवती **पालिः** प्रस्थः (पङ्क्तिः) कर्णलतापि च' इति त्रिकाण्डशेषः। '**पालिः** कर्णलताग्रेऽस्त्रौ पङ्क्तावङ्कप्रभेदयोः। छात्रादिदेये स्त्री **पाली** यूकासश्मश्रुयोषितोः' (इति मेदिनी)॥

**कला शिल्पे कालभेदेऽपि**

कलयति। कल्यते वा 'कल शब्दसंख्यानयोः' (चु० आ० से०)। पचाद्यच् (३।१।१३४)। यद्वा कं लाति। '**कला** स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके। षोडशांशे च चन्द्रस्य कलनाकालमानयोः' (इति मेदिनी)। तालेषु च गुरुः कला'॥

**आली सख्यावली अपि।**

आ अलति। अल्यते वा। अनया वा 'अल भूषणादौ' (भ्वा० प० से०)। 'सर्वधातुभ्य इन्' (उ० ४।११८)। 'कृदिकारात्' (वा० ४।१।४५) इति वा ङीष्। '**आलि**र्विशदाशये। त्रिषु स्त्रियां वयस्यायां सेतौ पङ्क्तौ च कीर्तिता' (इति मेदिनी)॥

**अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि॥ १९८॥**

वेलति। 'वेल्ल गतौ' (भ्वा० प० से०)। पचाद्यच् (३।१

---

१—'आद्य औष्ठ्यादिः, अन्त्यो दन्तोष्ठ्यादिः, इति विशेषो न गणितः'—इति क्षीरस्वामी॥ २—वातलवातुलौ च दृश्येते—इति क्षीरस्वामी॥

१३४)। वेल्यते। अनया वा। 'वेल कालोपदेशे' (चु० उ० से०)। 'गुरोश्च हलः' (३।३।१०४) इत्यङ्। **'वेला** काले च सीमायामब्धेः कूलविकारयोः। अक्लिष्टमरणे रोगे ईश्वरस्य च भोजने' (इति मेदिनी)॥

**बहुलाः कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिषु।**

बहति। 'वह प्रापणे' (भ्वा० उ० अ०)। बाहुलकादुलच्। वहु लाति वा। **'बहुला** नीलिकायां स्यादेलायां गवि योषिति। कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम्। पुंस्यग्नौ कृष्णपक्षे च वाच्यवत्प्राज्यकृष्णयोः' (इति मेदिनी) शितौ कृष्णे॥

**लीला विलासक्रिययोः**

लेलायनम्। 'लेला दीप्तौ' कण्ड्वादिः। भिदाद्यङ् (३।३।१०४)। 'अ प्रत्ययात्' (३।३।१०२) इति वा। पृषोदरादिः (६।३।१०९)। यद्वा लयनम्। 'लीङ् श्लेषणे' (दि० आ० अ०)। बाहुलकाल्लो गुणाभावश्च। **'लीलां** विदुः केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु' इति विश्वः॥

**उपला शर्करापि च॥१९९॥**

उप लाति। 'ला दाने' (अ० प० अ०)। 'आतश्चोपसर्गे' (३।१।१३६) इति कः। उं शंभुं पलति। औ शंभौ वा पलति। 'पल गतौ' (भ्वा० प० से०)। पचाद्यच् (३।१।१३६) 'शर्कराशकले ज्ञेया सितोपला रजःस्वपि' इत्यजयः। (**'उपलः** प्रस्तरे रत्ने शर्करायां तु योषिति') (इति मेदिनी)॥

**शोणितेऽम्भसि कीलालम्**

कीलेन प्रतिबन्धेनाल्यते वार्यते। 'अल भूषणादौ' (भ्वा० प० से०)। घञ् (३।३।१९)। कीलं प्रतिबन्धमलति वा। 'कर्मण्यण्' (३।२।१)॥

**मूलमाद्ये शिफाभयोः।**

मूलति। 'मूल प्रतिष्ठायाम्' (भ्वा० प० से०)। 'मूल रोहणे' (चु प० से०) वा। 'इगुपध–' (३।१।१३५) इति कः। आद्ये प्रथमे। शिफा जटा। भं नक्षत्रम्। **'मूलं** शिफाद्ययोः। मूलवित्तेऽन्तिके ना भे' (इति मेदिनी)॥

**जालं समूह आनायो गवाक्षक्षारकावपि॥२००॥**

जलति। 'जल घातने' (भ्वा० प० से०)। ज्वलादिणः (३।१।१४०)। जालयति वा। 'जल संवरणे' चुरादिः। पचाद्यच् (३।१।१३४)। **'जालं** गवाक्ष आनाये क्षारके जम्भवृन्दयोः। **जालो** नीपद्रुमे' (इति मेदिनी)॥

**शीलं स्वभावे सद्वृत्ते**

शीलनम्। शील्यतेऽनेन वा। 'शील समाधौ' (भ्वा० प० से०)। घञ् (३।३।१८)। घो (३।३।११८) वा॥

**सस्ये हेतुकृते फलम्।**

फलनम्। 'फल निष्पत्तौ' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। **'फलं** हेतुसमुत्थे स्यात्फलके व्युष्टिलाभयोः। जातीफलेऽपि कक्कोले सस्यबाणाग्रयोरपि' इति विश्वः॥

**छदिर्नेत्ररुजोः क्लीबं समूहे पटलं न ना॥२०१॥**

पटं विस्तारं लाति। 'ला दाने' (अ० प० अ०)। 'आतोऽनुप–' (३।२।३) इति कः। 'अथ **पटलं** पिटके च परिच्छदे। छदिर्दृग्रोगतिलके क्लीबं, वृन्दे पुनर्न ना' (इति मेदिनी)। स्त्रियां गौरादिः (४।१।४१)। छदिर्गृहाच्छादनम्। 'छानी' इति ख्यातम्॥

**अधःस्वरूपयोरस्त्री तलम्**

तलति। 'तल प्रतिष्ठायाम्' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। **'तलं** स्वरूपेऽनूर्ध्वेऽस्त्री क्लीबं ज्याघातवारणे। कानने कार्यबीजे च पुंसि तालमहीरुहे। चपेटे च त्सरौ तन्त्रीघाते सव्येन पाणिना' (इति मेदिनी)॥

**स्याच्चामिषे पलम्।**

पलति। 'पल गतौ' (भ्वा० प० से०)। पचाद्यच् (३।१।१३४)। **'पलमुन्मानमांसयोः'** इति रुद्रः॥

**और्वानलेऽपि पातालम्**

पतति, अत्र वा। 'पत्लृ गतौ' (भ्वा० प० से०)। 'चण्डिपतिभ्यामालच्' (उ० १।११७)। पातमलति वा। पातमालाति वा। **'पातालं** नागलोके स्याद्विवरे बडवानले' (इति मेदिनी)॥

**चेलं वस्त्रेऽधमे त्रिषु॥२०२॥**

चिलति। चिल्यते वा। 'चिल वसने' (तु० प० से०)। पचाद्यच् (३।१।१३४)। घञ् (३।३।१९) वा चेलति, चेल्यते वा। 'चेलृ गतौ' (भ्वा० प० से०)। पूर्ववत्। प्रज्ञाद्यण् (५।४।३८)। गौरादिङीष् (४।१।४१) वा॥

**कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले।**

कोर्भूमेः कुलम्। कुत्सितं वा कुलम्॥

**निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः॥२०३॥**

केवते। 'केवृ सेचने' (भ्वा० आ० से०)। वृषादित्वात् (उ० १।१०६) कलः। के शिरसि वलयति वा। 'बल प्राणने' (भ्वा० प० से०) पचाद्यच् (३।१।१३४) स्त्रियां टाप्। संज्ञाछन्दसोस्तु 'केवलमामक–' (४।१।३०) इति ङीप्॥

**पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु।**

पर्याप्तिः सामर्थ्यम्। पुण्यं सुकृतम्। कौ भूमौ शलति। 'शल चलने' (भ्वा० प० से०) पचाद्यच् (३।१।१३४)। यद्वा कुश्यति। 'कुश संश्लेषणे' ( )। कलः (उ० १।१०६)। कुशाल्लाति वा॥

**प्रवालमङ्कुरेऽप्यस्त्री**

अङ्कुरे किसलये। प्रबलति। 'बल प्राणने' (भ्वा० प० से०)। 'ज्वलिति–' (३।१।२४०) इति णः। यद्वा ण्यन्ता-

त्पचाद्यच् (३।१।१३४)। 'प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे' (इति मेदिनी) ॥

**त्रिषु स्थूलं जडेऽपि च ॥ २०४ ॥**

स्थूलयति । 'स्थूल परिबृंहणे' चुराद्यदन्तः । पचाद्यच् (३।१।१३४) । 'स्थूलं कूटे च निष्प्रज्ञे पीवरेऽप्यन्यलिङ्गकम्' (इति मेदिनी) ॥

**करालो दन्तुरे तुङ्गे**

करेणालाति । 'आतश्चोपसर्गे' (३।१।१३६) इति 'सुपि' (३।२।४) इति योगविभागाद्वा कः । यद्वा करमलति । 'अल भूषणादौ' (भ्वा० प० से०) । 'कर्मण्यण्' (३।२।१) । 'करालं दन्तुरे तुङ्गे भीषणे चाभिधेयवत् । (स सर्जरसतैले ना क्लीबं कृष्णकुठेरके)' (इति मेदिनी) । 'दन्तुरस्तून्नतरदे तथोन्नतनते त्रिषु' (इति रान्तेषु मेदिनी) ॥

**चारौ दक्षे च पेशलः ।**

'पिश अवयवे' (तु० प० से०) । भावे घञ् (३।३।१८) पेशं लाति । बाहुलकात् पिशेरलज्वा ॥

**मूर्खेऽर्भकेऽपि बालः स्यात्**

बलति । 'बल प्राणने' (भ्वा० प० से०) । 'ज्वलिति–' (३।१।१४०) इति णः । यद्वा वाडते । 'वाडृ आप्लाव्ये' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३४) । यद्वा वल्यते । 'वल संवरणे' (भ्वा० आ० से०) । कर्मणि घञ् (३।३।१९) । 'बालः कचे शिशौ मूर्खे ह्रीवेरेऽश्वेभपुच्छयोः' इति विश्वः । 'वालो ना कुन्तलेऽश्वस्य गजस्यापि च बालधौ । वाच्यलिङ्गोऽर्भके मूर्खे ह्रीवेरे पुंनपुंसकम् । अलंकारान्तरे मेधौ वाली वाला त्रुटिस्त्रियोः' (इति मेदिनी) ॥

**लोलश्चलसतृष्णयोः ॥ २०५ ॥**

लोडति । 'लोडृ उन्मादे' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । 'लोलश्चले सतृष्णे च लोला तु रसनाश्रियोः' (इति हैमः) ॥

इति लान्ताः ॥

**दवदावौ वनारण्यवह्नी**

दुनोति, दवति वा । 'टुदु उपतापे' (स्वा० प० अ०) । 'दु गतौ' (भ्वा० प० अ०) । 'दुन्योरनुपसर्गे' (३।१।१४२) इति वा णः । पक्षे अच् । यत्तु—दूयन्तेऽनेनेति । 'दुवो विभाषा' इति घञ्—इत्युक्तं स्वामिना । तन्न । उक्तवचनाभावात् ॥

**जन्महरौ भवौ ।**

भवति । पचाद्यच् (३।१।१३४) । अन्तर्भावितण्यर्थो वा । जन्मनि तु भावे 'ऋदोरप्' (३।३।५७) । 'भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः' (इति मेदिनी) ॥

**मन्त्री सहायः सचिवौ**

सह अयते, अयति वा । 'अय गतौ' (भ्वा० आ० से०) । 'ई गतौ' (भ्वा० प० से०) वा । पचाद्यच् (३।१।१३४) । सचनम् । 'षच समवाये' (भ्वा० उ० से०) । 'सर्वधातुभ्य इन्' (उ० ४।११८) । सचिं वाति । 'वा गत्यादौ' (अ० प० अ०) । 'आतोऽनुप–' (३।२।३) इति कः ॥

**पतिशाखिनरा धवाः ॥ २०६ ॥**

धवति, धुवति, धूनोति, धुनाति वा । 'धूञ् कम्पने' (चु० उ० से०, स्वा० उ० से०, क्र्या० उ० से०) । 'धू विधूनने' (तु० प० से०) । पचाद्यच् (३।१।१३४) । यद्वा धूयते । 'ऋदोरप्' (३।३।५७) । 'धवः पुमान्नरे धूर्ते पत्यौ वृक्षान्तरेऽपि च' (इति मेदिनी) ।

**अवयः शैलमेषार्काः**

अवति, अव्यते वा । 'अव रक्षणादौ' (भ्वा० प० से०) । इन् (उ० ४।११८) । 'अविर्नाथे रवौ मेषे शैले मूषिककम्बले' (इति मेदिनी) । ('अविर्भूपुष्पवत्योः स्त्री वायुप्राकारभःसु ना' (इति वैजयन्ती) ॥

**आज्ञाह्वानाध्वरा हवाः ।**

'ह्वेञ् स्पर्धायां शब्दे च' (भ्वा० उ० अ०) । 'भावेऽनुपसर्गस्य' (३।३।७५) इति ह्वः संप्रसारणमप् च । हूयतेऽत्रेति वा ॥

**भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ॥ २०७ ॥**

भावयति । पचाद्यच् (३।१।१३४) । भवनं वा । 'श्रिणीभुवोऽनुपसर्गे' (३।३।२४) इति घञ् । 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु । क्रियालीलापदार्थेषु विभूतिबन्धुजन्तुषु । रत्यादौ च' (इति मेदिनी) ॥

**स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने ।**

प्रसवनम्, प्रसूयते वा । 'षूङ् प्राणिप्रसवे' (दि० आ० से०) । 'ऋदोरप्' (३।३।५७) । पचाद्यच् (३।१।१३४) वा । 'प्रसवो गर्भमोचने' । उत्पादे स्यादपत्येऽपि फलेऽपि कुसुमेऽपि च' (इति मेदिनी) ॥

**अविश्वासेऽपह्नवेऽपि निकृतावपि निह्नवः ॥ २०८ ॥**

निह्नवनम् । 'ह्नुङ् अपनयने' (अ० आ० अ०) । 'ऋरदोप्' (३।३।५७) । 'निह्नवः [1]पुंसि निकृतावविश्वासापलापयोः' (इति मेदिनी) ॥

**उत्सेकामर्षयोरिच्छाप्रसवे मह उत्सवः ।**

उत्सेक उद्रेकः । इच्छायाः प्रसव उत्पत्तिः । मह उद्धवः । उत्सवनम् । 'षु प्रसवैश्वर्ययोः' (भ्वा० प० अ०) । 'ऋदोरप्' (३।३।५७) । 'उत्सवो मह उत्सेक इच्छाप्रसवकोपयोः' (इति मेदिनी) ॥

१—'पुंसि' इति न प्रकृतोपयोगि । अग्रे 'पुमान्' इत्युक्तेः ॥

**अनुभावः प्रभावे च सतां च मतिनिश्चये ॥ २०९ ॥**

भवनम् । 'श्रिणीभुवो-' (३।३।२४) इति घञ् । अनुगतो भावः । 'प्रादयो गताद्यर्थे-' (वा० २।२।१८) इति समासः । यद्वा अनुभावयति । पचाद्यच् (३।१।१३४) । '**अनुभावः** प्रभावे स्यान्निश्चये भावसूचके' इति विश्वः ॥

**स्याज्जन्महेतुः प्रभवः स्थानं चाद्योपलब्धये ।**

जन्मनो हेतुः । प्रभवत्यस्मात् । 'ऋदोरप्' (३।३।५७) । '**प्रभवो** जलमूले स्याज्जन्महेतौ पराक्रमे । ज्ञानस्य चादिमस्थाने' (इति मेदिनी) । आद्योपलब्धये प्रथमज्ञानार्थम् ॥

**शूद्रायां विप्रतनये शस्त्रे पारशवो मतः ॥ २१० ॥**

पराञ्छृणाति । 'शॄ हिंसायाम्' (क्र्या० प० से०) । 'आङ्परयोः खनिशॄभ्यां डिच्च' (उ० १।३३) इत्युः । परशुरेव । प्रज्ञाद्यण् (५।४।३८) । परस्त्रिया अपत्यं वा । 'परस्त्री परशुं च' (ग० ४।१।१०४) इत्यञ् । 'पुंसि **पारशवः** पुमान् । परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेऽपि च' (इति मेदिनी) ॥

**ध्रुवो भभेदे क्लीबे तु निश्चिते शाश्वते त्रिषु ।**

ध्रुवति । 'ध्रुव गतौ' (तु० प० से०) । पचाद्यच् (३।१।१३४) । '**ध्रुवः** कीले शिवे शङ्कौ वसौ योगे वटे मुनौ । **ध्रुवा** मूर्वाशालिपर्ण्यां गीतिस्रुग्भेदयोरपि । **ध्रुवं** तु निश्चिते तर्के निश्चले शाश्वतेऽन्यवत्' इति विश्वः । भभेदे नक्षत्रविशेषे ॥

**स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने ॥ २११ ॥**

स्वनति । स्वन्यते वा । 'स्वन शब्दे' (भ्वा० प० से०) । 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः । '**स्वो** ज्ञात्यात्मनोः **स्वं** निजे धने' इति हेमचन्द्रः । 'स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने' (इति मेदिनी) ॥

**स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च ।**

स्त्रियाः कट्यां वस्त्रस्य बन्धने । परिपणे राजपुत्रादेर्बन्धके ।—वणिजां मूलधने—इति मुकुटः । तन्न । मेदिन्यां (हैमे) तयोः पृथक्पाठात् । निव्ययति, निवीयते वा । 'व्येञ् संवरणे' (भ्वा० उ० अ०) । 'नौ व्यो यलोपः पूर्वस्य च दीर्घः' (उ० ४।१३६) इतीण् । 'कृदिकारात्-' (ग० ४।१।४५) इति ङीप् । '**नीवी** स्त्रीकटीवस्त्रबन्धने । मूलद्रव्ये परिपणे' (इति हैमः) ॥

**शिवा गौरीफेरवयोः**

शिवमस्त्यस्याः । अर्शआद्यच् (५।२।१२७) । 'पुण्डरीकद्रुमे[1] चापि **शिवा** झाटामलौषधौ । अभयामलकीगौरीक्रोष्ट्रीसंकुफलासु च' इति विश्वः ॥

**द्वंद्वं कलहयुग्मयोः ॥२१२॥**

द्वौ द्वौ । 'द्वंद्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु' (८।१।१५) इति साधुः । 'चार्थे द्वन्द्वः' (२।२।२९) इति निर्देशात्पुंस्यपि । '**द्वंद्वं** रहस्ये कलहे तथा मिथुनयुग्मयोः' (इति मेदिनी) ॥

**द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु ।**

द्रव्यं वित्तम् । असुः प्राणः । व्यवसायो निश्चयः । सीदन्त्यस्मिन् गुणाद्याः । 'षद्लृ विशरणादौ' (भ्वा० प० अ०) । 'अन्येभ्योऽपि दृश्यन्ते' (उ० ४।१०५) इति त्वन् । '**सत्त्वं** गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मत्वव्यवसायासुवित्तेष्वस्त्री तु जन्तुषु' (इति मेदिनी) ॥

**क्लीबं नपुंसके षण्ढे वाच्यलिङ्गमविक्रमे ॥ २१३ ॥**

षण्ढे तृतीयाप्रकृतौ । क्लीबते । 'क्लीबृ अधार्ष्ट्ये' (भ्वा० आ० से०) । 'इगुपध-' (३।१।१३५) इति कः । 'अस्त्री नपुंसके **क्लीबं** वाच्यलिङ्गमविक्रमे' इति रुद्रः । अयमोष्ठ्योऽत्र भ्रमात्पठितः । पूर्वगन्धर्वजिह्वस्त्वोष्ठ्येषु ॥

इति वान्ताः ॥

**द्वौ विशौ वैश्यमनुजौ**

विशति । 'विश प्रवेशने' (तु० प० से०) । क्विप् (३।२।१७८) । '**विट्** स्मृतो वैश्यमनुजप्रवेशेषु मनीषिभिः' इति विश्वः ॥

**द्वौ चराभिमरौ स्पशौ ।**

अभिमरो युद्धम् । स्पशति । 'स्पश बाधनस्पर्शनयोः' (भ्वा० उ० से०) पचाद्यच् (३।१।१३४) । '**स्पशः** स्यात्संपराये च प्रणिधावपि पुंस्ययम्' (इति मेदिनी) ॥

**द्वौ राशी पुञ्जमेषाद्यौ**

रश्यते[2], रशति वा । 'रश' इति सौत्रो धातुः स्वनार्थः । बाहुलकादिण् । णिजन्तात् । 'अच इः' (उ० ४।१३९) वा ॥

**द्वौ वंशौ कुलमस्करौ ॥२१४॥**

वमति, वम्यते वा । 'टुवम उद्गिरणे' (भ्वा० प० से०) । 'वृमृवमिभ्यः शक्[3]' । मस्करो वेणुः । '**वंशो** वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च' (इति विश्वः) ॥

**रहःप्रकाशौ वीकाशौ**

विकाशनम् । अस्मिन् वा । 'काशृ दीप्तौ' (भ्वा० आ०

---

१—इदं तु पूर्वान्वयि 'पुण्डरीकद्रुमे पुमान्' इति मेदिन्युक्तेः ॥ २—क्रोष्ट्री शृगाली । 'पुंश्रृगालेऽपि शिवा' इति मुकुटः ॥

---

१—विश्वहैममेदिनीष्वपि यणन्तेष्वपि पठितः इति सर्वेषां भ्रमकल्पनं तु न सम्यक् ॥ २—'रश' धातुः कस्मिन् 'अशे रश' सूत्रे पठितोऽस्ति यतः सौत्रत्वं संभाव्यते । किं च 'अशिपणाय्यो रुडायलुकौ च' (उ० ४।१३३) इति 'सूत्रे रुड्विधानम् च' (उ० २।७५) इति सूत्रे आदेशविधानं च व्यर्थमेव स्यात् ॥ ३—अस्य सूत्रस्योज्ज्वलदत्तादिग्रन्थेऽनुपलम्भात् 'अनुनासिकस्य क्विझलोः-' (६।४।१५) इति दीर्घापत्तेश्च चिन्त्यमेतत् । तस्मात्प्रागुक्तमेव सम्यक् ॥

से० ) । 'भावे' (३।३।१८) 'हलश्च' (३।३।१२०) इत्यधिकरणे वा घञ् । 'इकः काशे' (६।३।१२३) इति दीर्घः । यद्वा विकशनम् । अत्र वा । 'कश शब्दे' ( अ० आ० से० ) । पूर्ववत् । 'वीकाशो विजने व्यक्ते' इति विश्वः । 'विकाशः[1] पुंसि विजने प्रकाशे संदर्शं समे । उन्विते च' (इति मेदिनी) ॥

**निर्वेशो भृतिभोगयोः ।**

निर्विश्यते । निर्वेशनं च घञ् (३।३।१८,१९) । भृतिर्वेतनम् । 'निर्वेशस्तु पुमान्भोगे वेतने मूर्च्छनेऽपि च' (इति मेदिनी) ॥

**कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु ॥ २१५ ॥**

'की' इत्यव्ययं कुत्सायाम् । की कुत्सितं नाशयति । पचाद्यच् (३।३।१३४) । यद्वा क्लिश्नाति । क्लिश्यते वा । 'क्लिशू विबाधने' ( क्र्या० प० से० ) । 'क्लिश बन्धे (उपतापे)' (दि० आ० से०) वा । 'क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च' (उ० ५।५६) । 'कीनाशः कर्षकक्षुद्रोपांशुघातिषु वाच्यवत् । (यमे ना)' (इति मेदिनी) ॥

**पदे लक्ष्ये निमित्तेऽपदेशः स्यात्**

अपदेशनम् । अपदिश्यते वा । 'दिश अतिसर्जने' ( तु० उ० अ० ) । घञ् (३।३।१८,१९) । पदे स्थाने । 'अपदेशः पुमाँल्लक्ष्ये निमित्तव्याजयोरपि' इति विश्वः ॥

**कुशमप्सु च ।**

कौ शेते तिष्ठति । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । कुश्यति । 'कुश श्लेषणे' ( दि० प० से० ) । 'इगुपध–' (३।१।१३५) इति कः । कु पापं श्यति । 'शो तनूकरणे' (दि० प० अ०) । 'सुपि' (३।३।४) इति योगविभागात्कः । 'कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले' इति विश्वः ॥

**दशावस्थानेकविधापि**

दशति । 'दंश दशने' ( भ्वा० प० अ० ) । मूलविभुजादिकः (वा० ३।२।५) । यद्वा पचाद्यच् (३।१।१३४) । 'जपजभदहदश–' (७।४।८६) इति निर्देशादङ्क्लिपि नलोपः । यद्वा दश्यते । 'गुरोश्च–' (३।३।१०४) इत्यङ् । अनेकविधा बाल्यादिरूपा । 'दशावस्थादीपवर्त्योर्वस्त्रान्ते भूम्नि योषिति' (इति मेदिनी) ॥

**आशा तृष्णापि चायता ॥ २१६ ॥**

आ समन्तादश्नुते । 'अशू व्याप्तौ' ( स्वा० आ० से० ) । पचाद्यच् (३।१।३४) । 'आशा ककुभि तृष्णायाम्' (इति हैमः ॥

**वशा स्त्री करिणी च स्यात्**

वष्टि । 'वश कान्तौ' ( अ० प० से० ) । पचाद्यच् (३।१।१३४) । स्त्रीयोषिति । 'वशा वन्ध्यासुता योषास्त्रीगवीकरिणीषु च' इति विश्वः ॥

**दृग् ज्ञाने ज्ञातरि त्रिषु ।**

पश्यति । 'दृशिर् प्रेक्षणे' ( भ्वा० प० अ० ) । क्विप् (३।२।१७८) । यद्वा दर्शनम् । अनया वा । संपदादिः (वा० ३।३।१०८) । 'दृक् स्त्रियां दर्शने नेत्रे बुद्धौ च त्रिषु वीक्षके' (इति मेदिनी) ॥

**स्यात्कर्कशः साहसिकः कठोरामसृणावपि ॥ २१७ ॥**

कृणाति । 'कॄञ् हिंसायाम्' ( क्र्या० उ० से० ) । 'अन्येभ्योऽपि–' (३।२।७५) इति विच् । कश्यते । 'कश शब्दे' ( अ० आ० से० ) । पचाद्यच् (३।१।१३४) । कर् चासौ कशश्च । 'कर्कशः परुषे क्रूरे कृपणे निर्दये दृढे । इक्षौ साहसिके कासमर्दकाम्पिल्लयोरपि' इति विश्वः । अमसृणो दुस्पर्शः ॥

**प्रकाशोऽतिप्रसिद्धेऽपि**

प्रकाशते । प्रकाशनं वा । 'काशृ दीप्तौ' ( भ्वा० आ० से० ) । पचाद्यच् (३।१।१३४) । घञ् (३।३।१८) वा । 'प्रकाशोऽतिप्रसिद्धे स्यात्प्रहासातपयोः स्फुटे' इति विश्वः ।

**शिशावज्ञे च बालिशः ।**

वाडनम् । 'वाडृ आप्लाव्ये' ( भ्वा० आ० से० ) । इन् (उ० ४।११८) । वालिं श्यति । 'शो तनूकरणे' ( दि० प० अ० ) 'आतोऽनुप–' (३।२।३) इति कः ॥

इति शान्ताः ॥

**सुरमत्स्यावनिमिषौ**

न निमिषति । 'मिष स्पर्धायाम्' (तु० प० से०) । 'इगुपध–' (३।१।१३५) इति कः । नञ्समासः (२।२।६) ॥

**पुरुषावात्ममानवौ ॥ २१८ ॥**

पुरति । 'पुर अग्रगमने' ( तु० प० से० ) । 'पुरः कुषन्' (उ० ४।७४) । 'पुरुषः पूरुषे सांख्यज्ञे च पुंनागपादपे' (इति मेदिनी) ॥

**काकमत्स्यात्खगौ ध्वाङ्क्षौ**

मत्स्यानत्ति । मत्स्याच्चासौ खगश्च । ध्वाङ्क्षति । 'ध्वाक्षि घोरवाशिते च' ( भ्वा० प० से० ) । चात्काङ्क्षायाम् । पचाद्यच् (३।१।१३४) 'ध्वाङ्क्षौ मत्स्यात्खगे काके भिक्षुके तक्षकेऽपि च' (इति मेदिनी) ॥

**कक्षौ तु तृणवीरुधौ ।**

कषपि । कष्यते । वा । 'कष हिंसायाम्' ( भ्वा० प० से० ) । 'वृतॄवदिहनिकषिभ्यः सः' (उ० ३।६३) । 'कक्षः

---

१—'विकाशो रहसि व्यक्ते' इति हेममूलस्य 'विकाशते विकाशः । एकदेशस्याविकृतत्वाद्वीकाशोऽपि । व्यक्ते वाच्यलिङ्गः द्वयोर्यथा–'उपविश्यविकाशेषु रहस्यानि प्रकाशयेत्' इत्यनेकार्थकैरवाकरकौमुदीव्याख्यायाश्च संवादाद्रस्वेकारवान् ॥ २—इत्यादि मेदिनीवाक्यं तु प्रकृतोपयोगि । अत्रोल्लेखस्तु 'सदृशागमे' इति क्वाचित्कलेखकप्रमादजपाठानुसारेण ॥

स्मृतो भुजामूले **कक्षो**ऽरण्ये च वीरुधि । **कक्षः** शुष्कतृणे प्रोक्तः **कक्षः** कच्छ उदाहृतः । **कक्षा** स्पर्धापदे काञ्च्यां रथगेहप्रकोष्ठयोः । गजरज्जौ परीधानपश्चादञ्चलपल्लवे' इति धरणिः । वीरुल्लता ॥

**अभीषुः प्रग्रहे रश्मौ**

ईषते । ईष्यते वा । 'ईष गतिहिंसादर्शनेषु' ( भ्वा० आ० से०) । 'ईषेः किच्च' (उ० १।१३) इत्युः । आदेरिच्च । अभिगत इषुः । 'प्रादयो गता–' (वा० २।२।१८) इति समासः । प्रग्रहेऽश्वादिरज्जौ । रश्मौ किरणे ॥

**प्रैषः प्रेषणमर्दने ॥ २१९ ॥**

प्रेषणम् । इषेर्भावे घञ् (३।३।१८) 'प्रादूहो—' (वा० ६।१।८९) इति वृद्धिः । '**प्रैषः** प्रेषणपीडयोः' इत्यजयः । '**प्रैषः** स्यात्प्रेषणे क्लेशे मर्दनोन्मादयोरपि' इति विश्वः ॥

**पक्षः सहायेऽपि**

पक्षति । पक्ष्यते वा । 'पक्ष परिग्रहे' ( भ्वा० प० से० ) । पचाद्यच् (३।१।१३४) । घञ् । (३।३।१९) वा । '**पक्षो** मासार्धके पार्श्वे ग्रहे साध्याविरोधयोः । केशादेः परतो वृन्दे बले सखिसहाययोः । चुल्लीरन्ध्रे पतत्रे च वाजिकुञ्जरपार्श्वयोः' (इति मेदिनी) ॥

**उष्णीषं शिरोवेष्टकिरीटयोः ।**

उष्णमीषते हिनस्ति । 'ईष गत्यादौ' (भ्वा० आ० से०) । 'इगुपध–' (३।१।१३५) इति कः । शकन्ध्वादिः (वा० ६।१।९४) । '**उष्णीषं** तु शिरोवेष्टे किरीटे लक्षणान्तरे' इति विश्वः । शिरसो वेष्टने वस्त्रादिरूपे । किरीटे मुकुटे ॥

**शुक्रले मूषिके श्रेष्ठे सुकृते वृषभे वृषः ॥ २२० ॥**

वर्षति । 'वृषु (श्रेष्ठे) सेचने' ( भ्वा० प० से० ) । 'इगुपध–' (३।१।१३४) इति कः । '**वृषो** धर्मे बलीवर्दे शृङ्ग्यां पुंराशिभेदयोः । श्रेष्ठे स्यादुत्तरस्थश्च वासमूषिकशुक्रले' (इति मेदिनी) । शुक्रले बाहुवीर्यवति वृष्यप्रयोगे वा ॥

**कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः ।**

कुष्यते । 'कुष निष्कर्षे' ( क्र्या० प० से० ) । घञ् (३।३।१९) । '**कोषोऽ**स्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके । जातिकोशेऽर्थसंघाते पेश्यां शब्दादिसंग्रहे' (इति मेदिनी) । दिव्ये शपथे । शब्दादिसंग्रहेऽमरादौ । तालव्यान्तोऽपि । 'विश्वक्सेनोऽश्रेषः कोषविषादौ च' इत्यूष्मविवेकात् । '**कोशो**ऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके–' इति श्लोकस्य (मेदिन्याम्) तालव्यादौ (न्ते) अपि पाठः ॥

**द्यूतेऽक्षे शारिफलकेऽप्याकर्षः**

अक्षे पाशके । शारिफलकमक्षपीठिका । आकर्षणम् । आकृष्यते वा आकृषन्त्यस्मिन्वा । 'कृष विलेखने' ( तु० उ० अ० ) । घञ् (३।३।१८।१९) । '**नाकर्षो** द्यूत इन्द्रिये । पाशके शारिफलके कोदण्डाभ्यासवस्तुनि । आकर्षणेऽपि पुंसि स्यात्' (इति मेदिनी) ॥

**अथाक्षमिन्द्रिये ॥ २२१ ॥**

**ना द्यूताङ्गे कर्षे चक्रे व्यवहारे कलिद्रुमे ।**

अक्ष्णोति, अक्ष्यते वा, अनेन, अत्र वा । 'अक्षू व्याप्तौ' ( भ्वा० प० से० ) । 'पचाद्यच्' (३।१।१३४) । घञ् (३।३।१९) । 'हलश्च' (३।३।१२०) इत्यन्त्ययोर्घञ् । '**अक्षः** कर्षे तुषे चक्रे शकटव्यवहारयोः । आत्मज्ञे पाशके **चाक्षं** तुत्थे सौवर्चलेन्द्रिये' इति विश्वः । व्यवहारे आयव्ययचिन्तायाम् । कर्षे मानभेदे । चक्रे रथावयवे ॥

**कर्षूर्वार्ता करीषाग्निः कर्षूः कुल्याभिधायिनी ॥२२२॥**

कर्षणम् । कृष्यते । कर्षति वा । 'कृष विलेखने' ( भ्वा० प० अ० ) । 'कृषिचमितनि–' (उ० १।८०) इत्यूः । 'करीषाग्निः पुमान्**कर्षूः** कुल्यायामपि च स्त्रियाम्' इति रभसः । वार्ता जीविका ॥

**पुंभावे तत्क्रियायां च पौरुषम्**

पुरुषस्य कर्म भावो वा । 'प्राणभृज्जाति–' (५।१।१२९) इत्यञ् । '**पौरुषं** पुरुषस्य स्याद्भावे कर्मणि तेजसि । ऊर्ध्वविस्तृतदोःपाणिनृमाने त्वभिधेयवत्' इति विश्वः ॥

**विषमप्सु च ।**

वेवेष्टि । 'विष्लृ व्याप्तौ' ( जु० उ० अ० ) । 'इगुपध–' (३।१।१३२) इति कः । '**विषं** तु गरले तोये' इति विश्वः ॥

**उपादानेऽप्यामिषं स्यात्**

आमिष्यते भुज्यते । 'मिष स्पर्धायाम्' (तु० प० से०) । घञ् । (३।३।१९) संज्ञापूर्वकत्वान्न गुणः ।—'घञर्थे कः' (वा० ३।३।५८)—इति तु परिगणनादयुक्तम् । '**आमिषं** पुंनपुंसकम् । भोग्यवस्तुनि संभोगेऽप्युत्कोचे पललेऽपि च' (इति मेदिनी) । उपादानमुत्कोचः ॥

**अपराधेऽपि किल्बिषम् ॥ २२३ ॥**

केलनम् । किल्यते वा । 'किल क्षेपे' ( तु० प० से० ) 'किलेर्वुक्च' (उ० १।५०) इति टिषच् । '**किल्बिषं** पापरोगयोः' ( इति मेदिनी) ॥

**स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम् ।**

लोकधातुर्जम्बुद्वीपादिः । तदंशे भारतादौ । वर्षणम् । 'वृषु सेचने' ( भ्वा० प० से० ) । 'अज्विधौ भयादीनामुपसंख्यानम्' (३।३।५६) इत्यच् । वर्षयति । वर्षति वा पचा-

१—'अभीशुस्तालव्यान्तोऽपि' इति मुकुटपीयूषे ॥ २—'प्रेष एङादिरपि' इति पीयूषव्याख्या ॥

१—कुल्या नदीमात्रं च । 'कुल्या धुनी द्वीपवती तटिनी ह्रदिनी सरित् । रोधोवक्रापगा कर्षूः स्रवन्ती निम्नगा नदी' इति रत्नकोषः —इति मुकुटः ॥

यच् (३।१।१३४) । 'वर्षोऽस्त्री भारतादौ च जम्बुद्वीपाब्द-वृष्टिषु । प्रावृट्काले स्त्रियां भूम्नि' (इति मेदिनी) ॥

**प्रेक्षा नृत्येक्षणं प्रज्ञा**

प्रेक्षणम् । अनया वा । 'ईक्ष दर्शने' (भ्वा० आ० से०) । 'गुरोश्च–' (३।३।१०३) इत्यः । '**प्रेक्षा** धीनृत्यदर्शयोः' इत्यजयः । '**प्रेक्षा** नृत्येक्षणे बुद्धौ' (इति मेदिनी) ॥

**भिक्षासेवार्थना भृतिः ॥ २२४ ॥**

भिक्षणम् । भिक्ष्यते वा । 'भिक्ष याच्ञादौ (भ्वा० आ० से०) । 'गुरोश्च–' (३।३।१०३) इत्यः । '**भिक्षा** भृतौ च याच्ञायां सेवाभिक्षितवस्तुनोः' इति विश्वः । भृतिर्वेतनम् ॥

**त्विट् शोभापि**

त्वेषणम् । अनया वा । 'त्विष दीप्तौ' (भ्वा० उ० अ०) । संपदादिः (वा० ३।३।१०८) । 'कान्तौ वाचि रुचौ **त्विट्** स्त्री' इति रभसः ॥

**त्रिषु परे**

वक्ष्यमाणास्त्रयो वाच्यलिङ्गाः ॥

**न्यक्षं कार्त्स्न्यनिकृष्टयोः ।**

नियतानि निकृतानि वा अक्षाणि यस्मिन् यस्य वा । '**न्यक्षः** परशुरामे स्यान्न्यक्षः कार्त्स्न्यनिकृष्टयोः' इति विश्वः ॥

**प्रत्यक्षेऽधिकृतेऽध्यक्षः**

अधिगतोऽक्षम् । अधिगतोऽक्षेण वा अक्षेषु व्यवहारेषु अधिकृतः । अधिकृतान्यक्षाण्यस्य । अध्यक्ष्णोति वा । 'पचाद्यच्' (३।१।१३४) ॥

**रूक्षस्त्वप्रेम्ण्यचिक्कणे ॥ २२५ ॥**

रूक्षयति । 'रूक्ष पारुष्ये' (चु० उ० से०) । 'पचाद्यच्' (३।१।१३४) । अप्रेम्णि निःस्नेहे । अचिक्कणे मसृणे ॥

इति षान्ताः ॥

**रविश्वेतच्छदौ हंसौ**

हन्ति गच्छति । 'हन हिंसागत्योः' (अ० प० अ०) । पचाद्यच् (३।१।१३४) । 'भवेद्वर्णागमाद्धंसः' इति सक् । यद्वा 'वृतॄवदिवचिवसिहनिकमिकषिभ्यः' (उ० ३।६२) इति सप्रत्ययः । '**हंसो** विहंगभेदे स्यादर्के विष्णौ हयान्तरे । योगिमन्त्रादिभेदेषु परमात्मन्यमत्सरे । निर्लोभनृपतौ **हंसः** शारीरमरुदन्तरे' इति विश्वः ॥

**सूर्यवह्नी विभावसू ।**

विभा प्रभा वसु धनमस्य । '**विभावसुः** पुमान्सूर्ये हारभेदे च पावके' (इति मेदिनी) ॥

**वत्सौ तर्णकवर्षौ द्वौ**

वसति । अस्मिन्वा । 'वस निवासे' (भ्वा० प० अ०) । 'वृतॄवदि–' (उ० ३।६२) इति सः । '**वत्सः** पुत्रादिवर्षयोः । तर्णके नोरसि क्लीबम्' (इति मेदिनी) । तर्णको गोः पुत्रः । वर्षो वत्सरः ॥

**सारङ्गाश्च दिवौकसः ॥ २२६ ॥**

सारङ्गमस्य । शकन्ध्वादिः (वा० ६।१।९४) । सारंगायति वा । 'गै शब्दे' (भ्वा० प० अ०) । 'गापोष्टक्' (३।२।८) मृगचातकहरिणाः । द्यौरोको यस्य । '**दिवोकाश्च दिवौकाश्च** पुंसि देवे च चातके' (इति मेदिनी) ॥

**शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः ।**

रस्यते । 'रस आस्वादने' अदन्तः । घञ् (३।३।१९) । '**रसो** गन्धरसे स्वादे तिक्तादौ विषरागयोः । शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे । **रसा** तु शल्लकीपाठाजिह्वाधरणिकङ्गुषु' इति विश्वः ॥

**पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे ॥ २२७ ॥**

उत्तंसयति । उत्तंस्यते । अनेन वा । तसिः सौत्रो भूषार्थः । 'पचाद्यच्' (३।१।१३४) । 'हलश्च' (३।३।१२०) इति घञ्वा । '**उत्तंसः** कर्णपूरेऽपि शेखरे चावतंसवत्' इति विश्वः । कर्णपूरः कर्णाभरणम्, शेखरः भूषणम् ॥

**देवभेदेऽनले रश्मौ वसू रत्ने धने वसु ।**

वसति सर्वत्र । उष्यतेऽनेन वा । 'वस निवासे' (भ्वा० प० अ०) । 'शृस्वृस्निहि–' (उ० १।१०) इत्युः । '**वसुर्ना** देवभेदाग्निभायोक्त्रवकराजसु । क्लीबं वृद्ध्यौषधे श्याले रै रत्ने मधुरे त्रिषु' (इति मेदिनी) ॥

**विष्णौ च वेधाः**

विधति । 'विध विधाने' (तु० प० से०) । असुन् (उ० ४।१८९) । विदधाति वा । 'विधाञो वेध च' (उ० ४। २२५) । इत्यसुन् । '**वेधाः** पुंसि हृषीकेशे बुधे च परमेष्ठिनि' (इति मेदिनी) ॥

**स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः ॥ २२८ ॥**

आशास्ते । 'आङः शासु इच्छायाम्' (अ० आ० से०) । क्विप् (३।२।७६) । यद्वा आशासनम् । अनया वा । संपदादिः (वा० ३।३।१०८) । 'आशासः क्वौ–'(वा० ६।४।३४) इतीत्वम् । 'आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति' । हितस्याशंसा अहेर्दंष्ट्रा ॥

**लालसे प्रार्थनौत्सुक्ये**

लालसनम् । 'लस दीप्तौ' (भ्वा० प० से०) यङन्तः । 'अ प्रत्ययात्' (३।३।१०२) । '**लालसौ**त्सुक्यतृष्णातिरेकयाच्ञासु च द्वयोः' (इति मेदिनी) ॥

---

१—एवं 'सारगः' इति रूपापत्त्या चिन्त्यमेतत् । तस्मात् 'सारं गच्छति' इति विग्रहे 'गमेः सुपि–' (वा० ३।२।३८) इति 'खच्च डिद्वा' (३।२।३८) इति वार्तिकाभ्यां खच्चि डिति बोध्यः ॥

**हिंसा चौर्यादिकर्म च।**

हिंसनम्। 'हिसि हिंसायाम्' (रु० प० से०)। 'गुरोश्च—' (३।३।१०३) इत्यः। '**हिंसा**चौर्यादिघातयोः' (इति मेदिनी)। चोरस्य कर्म। ब्राह्मणादित्वात्ष्यञ् (५।१।१२४) आदिना बन्धनत्रासनताडनादि। चाद्वधोऽपि॥

**प्रसूरश्वापि**

प्रसूते। 'षूङ् प्रसवे' (अ० आ० से०)। 'सत्सू—'(३।२।६०) इति क्विप्। '**प्रसूर**श्वाजनन्योश्च कदलीवीरुधोरपि' इति विश्वः॥

**भूद्यावौ रोदस्यौ रोदसी च ते॥ २२९॥**

रोदिति सर्वमस्मिन्। 'रुदिर् अश्रुविमोचने' (अ० प० से०)। असुन् (उ० ४।१८९)। पक्षे गौरादित्वात् (४।१।४१) ङीष्। 'रोदसी' इत्यव्ययमप्यस्ति। 'द्यावापृथिव्यौ **रोदस्यौ रोदसौ रोदसी**ति च'। विगृहीतयोरप्येते नामनी। '**रोदश्च रोदसी** चापि दिवि भूमौ पृथक् पृथक्। सहप्रयोगेऽप्यनयो **रोदः** स्यादपि **रोदसी**' इति विश्वः॥

**ज्वालाभासोर्नपुंस्यर्चिः**

अर्च्यते। 'अर्च पूजायाम्' (भ्वा० प० से०)। 'अर्चिशुचि—' (उ० २।१०८) इतीसिः। 'अथार्चिर्मयूखशिखयोर्ना' (इति मेदिनी)॥

**ज्योतिर्भद्योतदृष्टिषु।**

द्योतते। द्योतनं वा। अनेन वा 'द्युत दीप्तौ' (भ्वा० आ० से०)। 'द्युतेरिसिन्नादेश्च जः' (वा० २।११०)। '**ज्योति**रग्नौ दिवाकरे। पुमान्, नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः' (इति मेदिनी)॥

**पापापराधयोरागः**

एति। 'इण् गतौ' (अ० प० अ०)। 'इण् आग् अपराधे च' (उ० ४।२१२) इत्यसुन्।—आगच्छतीत्यागः—इति स्वाम्युक्तिस्तु चिन्त्या॥

**खगबाल्यादिनोर्वयः॥ २३०॥**

वयते। 'वय गतौ' (भ्वा० आ० से०)। वेति। 'वी गत्यादौ' (अ० प० अ०)। अजति वा। 'अज गत्यादौ' (भ्वा० प० से०) वा असुन् (उ० ४।१८९)॥—वाति—इति स्वामिमुकुटोक्तिस्तु चिन्त्या। असुन्युक्तरूपासिद्धेः '**वयः** पक्षिणि बाल्यादौ यौवने च नपुंसकम्' (इति मेदिनी)॥

**तेजःपुरीषयोर्वर्चः**

वर्चते। 'वर्च दीप्तौ' (भ्वा० आ० से०)। असुन् (उ० ४।१८९)। '**वर्चो** नपुंसकं रूपे विष्ठायामपि तेजसि। पुंसि चन्द्रस्य तनये' (इति मेदिनी)॥

**[१]महस्तूत्सवतेजसोः।**

महनम्। मह्यते वा। 'मह पूजायाम्' (भ्वा० प० से०)। असुन् (उ० ४।१८९)॥

**रजो गुणे च स्त्रीपुष्पे**

रजनम्। रज्यतेनेन वा। 'रञ्ज रागे' (भ्वा० प० अ०)। असुन् (उ० ४।१८९)। 'असि अके—' (वा० ६।४।२४) इति नलोपः। '**रजः** क्लीबं गुणान्तरे। आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते' (इति मेदिनी)॥*॥ अदन्तोऽपि। '**रजो**ऽयं रजसा सार्धं स्त्रीपुष्पगुणधूलिषु' इत्यजयः॥

**राहौ ध्वान्ते गुणे तमः॥ २३१॥**

तम्यतेऽनेन। 'तमु ग्लानौ' (दि० प० से०)। असुन् (उ० ४।१८९)। '**तमो** ध्वान्ते गुणे शोके क्लीबं वा ना विधुंतुदे' (इति मेदिनी)॥

**छन्दः पद्येऽभिलाषे च**

चन्दनम्। चन्द्यतेऽनेन वा। 'चदि आह्लादने दीप्तौ च' (भ्वा० प० से०)। 'चन्देरादेश्च छः' (उ० ४।२१९) इत्यसुन्॥—छन्दति—इति स्वामिमुकुटोक्तो विग्रहश्चिन्त्यः। '**छन्दः** पद्ये च वेदे च स्वैराचाराभिलाषयोः' (इति मेदिनी)। पद्येऽनुष्टुबादौ॥

**तपः[२] कृच्छ्रादिकर्म च।**

तपनम्। तप्यते। अनेन वा। 'तप संतापे' (भ्वा० प० से०)। असुन् (उ० ४।१८९)। '**तपो** लोकान्तरेऽपि च। चान्द्रायणादौ घने च पुमाञ्शिशिरमाघयोः' (इति मेदिनी)॥

**सहो बलं सहा मार्गः**

सहते। सह्यते, अनेन, अत्र वा। 'षह मर्षणे' (भ्वा० आ० अ०)। असुन् (उ० ४।१८९)। '**सहो** बले ज्योतिषि च पुंसि हेमन्तमार्गयोः' (इति मेदिनी)। लिङ्गभेदार्थो द्विः पाठः। एवमग्रेऽपि॥

**नभः खं श्रावणो नभाः॥ २३२॥**

नभनम्। नभ्यते, अनेन, अत्र वा। 'णभ हिंसायाम्' (भ्वा० आ० से०)। असुन् (उ० ४।१८९)। '**नभो** व्योम्नि **नभा** मेघे श्रावणे च पतद्ग्रहे। घ्राणे मृणालसूत्रे च वर्षासु च **नभाः** स्मृतः' इति विश्वः॥

---

१—'महः अदन्तोऽपि'—इति मुकुटः। '**मही** नद्यन्तरे भूमौ **मह** उत्सवतेजसोः' इति मेदिनी। २—इत्थं पाठस्तु जनकानुरोधेन। भाष्ये तु 'रजकरजनरजःसु—' इति पाठ उपलभ्यते। ३—अदन्तोऽपि ग्रीष्मार्थः। यथा 'तपेन वर्षाः शरदा हिमागमः'—इति स्वामी। ४—एवं सति 'पयः क्षीरं पयोऽम्बु च' इत्यग्रे समानलिङ्गस्य द्विःपाठो व्यर्थ एव स्यात्। छन्दोऽनुरोधादेवान्यकोशेष्विव बोध्यः।

**ओकः सद्माश्रयश्चौकाः**

उच्यति समवैत्यत्र । 'उच समवाये' (दि० प० से०) । असुन् (उ० ४।१८९) । न्यङ्क्वादिः (७।३।५३) । 'ओक उचः के' (७।३।६४) इति निपातनाददन्तोऽपि । '**ओका** आश्रयमात्रे च मन्दिरे च नपुंसकम्' (इति मेदिनी) ॥

**पयः क्षीरं पयोऽम्बु च ।**

पीयते । 'पीङ् पाने' (दि० आ० अ०) । पयते वा । 'पय गतौ' (भ्वा० आ० से०) । वा असुन् (उ० ४।१८९) ॥

**ओजो दीप्तौ बले**

उब्जति । अनेन वा । 'उब्ज आर्जवे' (तु० प० से०) । 'उब्जेर्बले बलोपश्च' (उ० ४।१९२) इत्यसुन् । 'ओजोनोजः समः पादो–' '**ओजो** दीप्ताववष्टम्भे प्रकाशबलयोरपि' (इति मेदिनी) । पृषोदरादित्वं मुकुटोक्तं चिन्त्यम् ॥

**स्रोत इन्द्रिये निम्नगारये ॥२३३॥**

स्रवति । 'स्रु गतौ' (भ्वा० प० अ०) । 'स्रुरीभ्यां तुट् च' (उ० ४।२०२) इत्यसुन् । '**स्रोतो**ऽम्बुवेग इन्द्रिये' (इति मेदिनी) ॥

**तेजः प्रभावे दीप्तौ च बले शुक्रेऽपि**

तेजयति । तेज्यतेऽनेन वा । 'तिज निशाने' (भ्वा० आ० से०) । असुन् (उ० ४।१८९) । '**तेजो** धाम्नि पराक्रमे । ('प्रभावरेतसोश्च') इति विश्वः । '**तेजो** दीप्तौ प्रभावे च स्यात्पराक्रमरेतसोः' (इति मेदिनी) । चादसहने । 'अधिक्षेपावमानादेः प्रत्युक्तस्य परेण यत् । प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम्' इति भरतः ॥

**अतस्त्रिषु ।**

वक्ष्यमाणाः सान्तास्त्रिलिङ्गाः ॥

**विद्वान् विदंश्च**

वेत्ति । 'विद ज्ञाने' (अ० प० से०) । 'विदेः शतुर्वसुः' (७।१।३६) वा । '**विद्वा**नात्मविदि प्राज्ञे पण्डिते चाभिधेयवत्' इति विश्वः । विदन् पण्डितः ॥

**बीभत्सो हिंस्रोऽपि**

बीभत्सते । 'बीभत्स्यते', अनेन वा । 'बध बन्धने' (भ्वा० आ० से०) । 'मान्बध–' (३।१।६) इति सन्नभ्यासदीर्घश्च । पचाद्यच् (३।१।१३४) । घञ् (३।३।१९) । घः (३।३।११८) वा । '**बीभत्सो** विकृते पार्थे क्रूरे पापघृणात्मनोः' इत्यजयः ॥

**अतिशये त्वमी ॥ २३४ ॥**

वक्ष्यमाणाश्चत्वारः ॥

**वृद्धप्रशस्ययोर्ज्यायान्**

अतिशयेन वृद्धः प्रशस्यो वा । 'द्विवचन–' (५।३।५७) इतीयसुनि 'ज्य च' (५।३।६१) इति 'वृद्धस्य च' (५।३।६२) इति वृद्धप्रशस्ययोर्ज्यादेशः । 'ज्यादादीयसः' (६।४।१६०) इत्यात्त्वम् । '**ज्यायान्**वृद्धे प्रशस्ये च' (इति हैमः) ॥

**कनीयांस्तु युवाल्पयोः ।**

अतिशयितो युवाल्पो वा । 'युवाल्पयोः कनन्यतरस्याम्' (५।३।६४) इतीयसुनि कन्नादेशः । '**कनीया**नतियूनि स्यादत्यल्पानुजयोस्त्रिषु' (इति मेदिनी) ॥

**वरीयांस्तूरुवरयोः**

अतिशयित ऊरुर्वरो वा । 'द्विवचन–' (५।३।५७) इतीयसुनि 'प्रियस्थिर–' (६।४।१५७) इत्यूरोर्वरादेशः '**वरीया**न् योगभिच्छेष्ठवरिष्ठेष्वतियूनि च' (इति मेदिनी) ॥

**साधीयान्साधुबाढयोः ॥ २३५ ॥**

अतिशयितः साधुर्बाढो वा । ईयसुनि 'अन्तिकबाढयोः–' इति बाढशब्दस्य साधादेशः ॥

इति सान्ताः ॥

**दलेऽपि बर्हम्**

दले पत्रे । बर्हति । 'बृह वृद्धौ' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । बर्ह्यते वा । 'बर्ह हिंसायाम्' (भ्वा० आ० से०) । घञ् (३।३।१९) । '**बर्हं** पिच्छे दलेऽस्त्रियाम्' (इति मेदिनी) ॥

**निर्बन्धोपरागार्कादयो ग्रहाः ।**

ग्रहणम् । गृह्णाति वा । 'ग्रह उपादाने' (क्र्या० प० से०) । 'ग्रहवृद–' (३।३।५८) इत्यप् । 'विभाषा ग्रहः' (३।१।१४३) इति पक्षे अच् । '**ग्रहो**ऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे । सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः–' इति विश्वः ॥

**द्वार्यापीडे क्वाथरसे निर्यूहो नागदन्तके ॥ २३६ ॥**

आपीडे शिरोभूषणे । क्वाथरसे क्वथितद्रव्यरसे । नागदन्तके भित्तिस्थकीलके । निर्यूहति 'यूहि' लौकिको धातुः । 'इगुपध–' (३।१।१३५) इति कः । निरूहति वा । पृषोदरादित्वात् (६।३।१०९) धातोर्यडागमः । '**निर्यूहः** शेखरे द्वारे निर्यासे नागदन्तके' इति विश्वः ॥

**तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च ।**

प्रगृह्यते । 'प्रेवणिजाम्' (३।३।५२) 'रश्मौ च' (३।३।५३) इति वा घञ् । ('**प्रग्राहः** स्यात्तुलासूत्रे वृषादीनां च बन्धने' इति हैमः) । पक्षे 'ग्रहवृद–' (३।३।५८) इत्यप् । '**प्रग्रहस्तु** तुलासूत्रे वन्द्यां नियमने भुजे । हयादिरश्मौ रश्मौ च सुवर्णहलिपादपे' इति विश्वः ॥

**पत्नीपरिजनादानमूलशापाः परिग्रहाः ॥ २३७ ॥**

परिगृह्यते । परिग्रहणम्, परिगृह्णाति वा । 'ग्रह–' (३।३।५८) इत्यप् । 'विभाषा ग्रहः' (३।१।१४३) इत्यप्

१—विषमसंख्यावाची त्वोजोऽदन्तोऽपि—इति स्वामीमुकुटपीयूषेषु व्यक्तम् । तत्रोदाहरणमिदम् ।

वा । 'परिग्रहः कलत्रे च मूलस्वीकारयोरपि । शपथे परिवारे च राहुबक्त्रस्थभास्करे' इत्यजयः ॥

**दारेषु च गृहाः**

गृह्णाति धान्यादिकमिति । 'गेहे कः' (३।१।१४४) । यद्वा 'गृहू ग्रहणे' (भ्वा० आ० से०) । गर्हते । 'इगुपध–' (३।१।१३५) इति कः । तात्स्थ्याद्दारेषु । 'गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि' (इति मेदिनी) ॥

**श्रोण्यामप्यारोहो वरस्त्रियाः ।**

आरुह्यते । आरोहणम् । आरोहति वा । 'रुह प्रादुर्भावे' (भ्वा० प० से० अ०) । घञ् (३।३।१९,१८) पचाद्यच् (३।१।१३४) । 'आरोहस्त्ववरोहे च वरारोहकटावपि । आरोहणे गजारोहे दीर्घत्वे च समुच्छ्रये' (इति मेदिनी) ॥

**व्यूहो वृन्देऽपि**

व्यूहते । 'ऊह वितर्के' (भ्वा० आ० से०) । 'इगुपध–' (३।१।१३५) इति कः । व्यूह्यते वा । घञ् (३।३।१९) । 'व्यूहः स्याद्बलविन्यासे निर्माणे वृन्दतर्कयोः' इति विश्वः । यत्तु—निर्माणे कायव्यूहे—इति मुकुटेन व्याख्यातम् । तन्न । 'अकृतव्यूहाः' इत्यादावभावात् । 'रचनामात्रे' इति प्रयुक्तत्वात् ॥

**अहिर्वृत्रेऽपि**

आहन्ति । 'हन हिंसागत्योः' (अ० प० अ०) । 'आङि श्रिहनिभ्यां ह्रस्वश्च' (उ० ४।१३८) इतीण् डित् आङो ह्रस्वः । यत्तु 'अंहति' इति स्वामिना 'अन्वाति' इति मुकुटेनोक्तम् । तन्न । नलोपासंभवात् । 'अहिर्वृत्रासुरे सर्पे' इति विश्वः ॥

**अग्नीन्द्वर्कास्तमोपहाः ॥ २३८ ॥**

तमोऽपहन्ति । 'अपे क्लेशतमसोः' (३।२।५०) इति डः । 'तमोपहः सहस्रांशुमृगाङ्कजिनवह्निषु' इति विश्वः ॥

**परिच्छदे नृपार्हेऽर्थे परिवर्हः**

परिवर्हते । परिवर्ह्यते वा । 'वर्ह प्राधान्ये' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३४) । घञ् (३।३।१९) वा । 'परिवर्हस्तु राजार्हवस्तुन्यपि परिच्छदे' इति विश्वः ॥

इति हान्ताः ॥

**अव्ययाः परे ।**

इतः परेऽनेकार्था अव्यया उच्यन्ते ॥

**आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे ॥२३९॥**

अतति । बाहुलकाड् डाङ् प्रत्ययः । तेन सहेत्यभिविधिः । तेन विना सीमा=मर्यादा । धातुना योगे सति योऽर्थो जायते तस्मिन् ॥

**आ प्रगृह्य स्मृतौ वाक्येऽपि**

आप्नोति । क्विप् (३।२।१७८) । पृषोदरादित्वात् (६।३।१०९) पलोपः । प्रगृह्यसंज्ञकत्वात् । 'प्लुतप्रगृह्या अचि' (६।१।१२५) इति संधिं न याति । स्मरणे । वाक्यारम्भे च । 'आ प्रगृह्यः स्मृतौ वाक्येऽनुकम्पायां समुच्चये' (इति मेदिनी) ॥

**आस्तु स्यात्कोपपीडयोः ।**

आस्ते । 'आस उपवेशने' (अ० आ० से०) । क्विप् (३।२।१७८) । आङ्पूर्वादसतेर्वा । 'आः स्मरणेऽप्यकारणे कोपसंतापयोरपि' (इति मेदिनी) ॥

**पापकुत्सेषदर्थे कु**

कवते । कूयते वा । 'कुङ् शब्दे' (भ्वा० आ० अ०) । मितद्र्वादित्वात् (वा० ३।२।१८०) डुः । 'कु (पापे चेषदर्थे च) कुत्सायां च निवारणे' इति विश्वः ॥

**धिङ्निर्भर्त्सननिन्दयोः ॥ २४० ॥**

धक्कयति । 'धक्क नाशने' (चु० प० से०) । बाहुलकाड्डिक् प्रत्ययः । दधातेर्वा । अपकारशब्दैर्भयोत्पादनं भर्त्सनम् । निन्दा दोषकीर्तनम् ॥

**चान्वाचयसमाहारेतरेतरसमुच्चये ।**

चन्दति । 'चदि आह्लादे' ( भ्वा० प० से० ) । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । 'चः पादपूरणे पक्षान्तरे हेतौ विनिश्चये' इति त्रिकाण्डशेषः ॥

**स्वस्त्याशीःक्षेमपुण्यादौ**

स्वसति । स्वस्यति वा । 'अस दीप्तौ' ( भ्वा० प० से० ) । 'असु क्षेपणे' (दि० प० से०) वा । क्तिच् (३।३।१७४) । बाहुलकात्तिर्वा । 'स्वस्ति मङ्गलाशीर्वादपापनिर्णेजनादिषु' इति भागुरिः ॥

**प्रकर्षे लङ्घनेऽप्यति ॥ २४१ ॥**

अतति । इन् (उ० ४।११८) प्रत्ययः । 'अतिशब्दः प्रशंसायां प्रकर्षे लङ्घनेऽपि च' इति विश्वः (मेदिनी) ॥

**स्वित्प्रश्ने च वितर्के च**

सुष्ठु एति अयति वा । 'इण् गतौ' (अ० प० अ०) । 'इ गतौ' (भ्वा० प० अ०) वा क्विप् (३।२।७६) । 'स्वित् प्रश्ने च वितर्के च तथैव पादपूरणे' (इति मेदिनी) ॥

**तु स्याद्भेदेऽवधारणे ।**

तुदति । 'तुद व्यथने' (तु० उ० अ०) । मितद्र्वादित्वात् (वा० ३।२।१८०) डुः । 'तु पादपूरणे भेदे समुच्चयेऽवधारणे । पक्षान्तरे वियोगे च प्रशंसायां विनिग्रहे' (इति मेदिनी) ॥

**सकृत् सहैकवारे चापि**

एकवारम् । 'एकस्य सकृच्च' (५।४।१९) इति सुच् । 'सकृत् सहैकवारयोः' इत्यजयः ॥

**आराद्दूरसमीपयोः ॥ २४२ ॥**

आ राति । 'रा दाने' (अ० प० अ०) । बाहुलकादाति-प्रत्ययः ॥

**प्रतीच्यां चरमे पश्चात्**

अवरस्मिन् । 'पश्चात्' (५।३।३२) इत्यनेनावरस्य सप्तमी-पञ्चमीप्रथमान्तस्य निपातितः ॥

**उताप्यर्थविकल्पयोः ।**

ऊयते स्म । 'उङ् शब्दे' (भ्वा० आ० अ०) । क्तः (३।३।१७४) । अप्यर्थः समुच्चयः प्रश्नश्च । '**उतापी** द्वौ च बाढार्थौ' इत्यजयः ॥

**पुनःसहार्थयोः शश्वत्**

शशति । 'शश प्लुतगतौ' (भ्वा० प० से०) । बाहुलका-द्वत् । '**शश्वत्** सहसहार्थयोः' इत्यजयः ॥

**साक्षात् प्रत्यक्षतुल्ययोः ॥ २४३ ॥**

सहाक्षेण साक्षः । तमतति । क्विप् (३।२।१७८) । '**साक्षा**त्तुल्यसमक्षयोः' इत्यजयः ॥

**खेदानुकम्पासंतोषविस्मयामन्त्रणे बत ।**

वयते स्म । 'वय गतौ' (भ्वा० आ० से०) 'गत्यर्था—' (३।४।७२) इति क्तः । नेट् ( ) । वन्यते स्म 'वनु याचने' (त० उ० से०) । क्तः (३।२।१०२) । '**बत** खेदे-ऽनुकम्पायां हर्षे संबोधनेऽद्भुते' इति दन्तोष्ठ्यादावजयः ॥

**हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ॥२४४॥**

हन्ति । बाहुलकात्तः । '**हन्त** वाक्यारम्भखेदविषादहर्षसं-भ्रमे' (इति मेदिनी ) ॥

**प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ।**

प्राति । 'प्रा पूरणे' (अ० प० अ०) । प्रथते वा । 'प्रथ प्रख्याने' (भ्वा० आ० से०) । बाहुलकाड्डतिः । इत्थंभूता-ख्यानः मुख्यसदृशः प्रतिनिधिः । व्याप्तुमिच्छा वीप्सा । आदिना इत्थंभूताख्यानभागप्रतिदानस्तोकेषु ॥

**इति हेतुप्रकरणप्रकाशादिसमाप्तिषु ॥ २४५ ॥**

एति । अयति वा । क्तिच् (३।३।१७४) । '**इति** प्रकरणे हेतौ प्रकाशादिसमाप्तिषु । निदर्शने प्रकारे स्यादनुकर्षे च संमतम्' इति विश्वः ॥

**प्राच्यां पुरस्तात्प्रथमे पुरार्थेऽग्रत इत्यपि ।**

पूर्वस्मिन् । '–सप्तमी–' (५।३।२७) इत्यस्तातिः । 'अस्ताति च' (५।३।४०) इति पुरादेशः । 'प्राच्यां **पुरः पुरस्ता-**दग्रप्रथमव्यतीतेषु' इति बोपालितः । 'अग्रे' इति अग्रतः । आद्यादित्तसिः (वा० ५।४।४४) ॥

**यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ॥ २४६ ॥**

यत्, तत्, परिमाणमस्य । 'तद्धिताः' (४।१।७६) इति बहु-वचनेनान्येऽनुक्ता अपि तद्धिता ज्ञापिताः । तेन डावतुः । '**यावत्** कार्त्स्न्येऽवधारणे । प्रशंसायां परिच्छेदे मानाधिकार-संभ्रमे । पक्षान्तरे च' (इति मेदिनी) ॥

**मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ।**

अर्थयते । 'अर्थ याच्ञायाम्' (चु० आ० से०) । बाहुलकात् डोः । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । पृषोदरा-दित्वाद्रलोपः । '**अथाथो** संशये स्यातामधिकारे च मङ्गले । विकल्पानन्तरप्रश्नकार्त्स्न्यारम्भसमुच्चये' (इति मेदिनी) ॥

**वृथा निरर्थकाविध्योः**

वृणोति, वृणीते वा । 'वृञ् वरणे' ( स्वा० उ० से० ) । 'वृञ् संभक्तौ' ( क्र्या० आ० से० ) वा बाहुलकात्थाक् । '**वृथा** निष्कारणे वन्ध्ये **वृथा** स्याद्विधिवर्जिते' इति विश्वः ॥

**नानानेकोभयार्थयोः ॥ २४७ ॥**

नेति नाना । 'विनञ्भ्यां नानाञौ न सह' (५।१।२७) इति नञो नाञ् । '**नाना**शब्दो विनार्थेऽपि तथानेकोभयार्थयोः' (इति मेदिनी) ॥

**नु पृच्छायां विकल्पे च**

नुदति । नौति वा । 'णुद प्रेरणे' (तु० उ० अ०) । 'णु स्तुतौ' (अ० प० से०) वा । मितद्र्वादित्वात् (वा० ३।२।१८०) डुः । '**नु** स्यात्प्रश्ने विकल्पार्थेऽप्यतीतानुनयार्थयोः' इति विश्वः ॥

**पश्चात्सादृश्ययोरनु ।**

अनिति । 'अन प्राणने' (अ० प० से०) । बाहुलकादुः । '**अनु** हीने सहार्थे च पश्चात्सादृश्ययोरपि । आयामे च समीपे च लक्षणादावनुक्रमे' इति विश्वः ॥

**प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ॥ २४८ ॥**

न नुदति । 'णुद प्रेरणे' (तु० उ० अ०) डुः (वा० ३।२।१८०) । '**ननु** प्रश्नेऽप्यनुनयेऽनुज्ञानेऽप्यवधारणे । आमन्त्रणे (चापि) **ननु**' इति विश्वः ॥

**गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ।**

न पियति । 'पि गतौ' (तु० प० अ०) । क्विप् (३।२।१७८) । आगमशास्त्रस्यानित्यत्वान्न तुक् । 'अपि संभावनाप्रश्न-शङ्कागर्हासमुच्चये । तथा युक्तपदार्थे च कामचारक्रियासु च' इति विश्वः ॥

१—व्यर्थोऽयं प्रयासोऽपाणिनीयः । तथा चोक्तं (५।२।३९) सूत्रे कैयटेन '**इह तु** वतुपं (५।२।३९) विधाय 'आ सर्वनाम्नः' (६।३।९१) इत्यात्वं विहितम् । पूर्वाचार्यास्तु 'डावतुं विदधिरे' इति । अव्ययत्वं तु विभक्तिप्रतिरूपकत्वेनैवोभयत्रापि तुल्यम् ।

**उपमायां विकल्पे वा**

वाति 'वा गत्यादौ' (अ० प० अ०)। क्विप् (३।२।१७८)। **'वा** स्याद्विकल्पोपमयोर्वितर्के पादपूरणे। समुच्चये च' (इति मेदिनी)। **'वा** स्याद्विकल्पोपमयोरेवार्थे च समुच्चये' इति विश्वः॥

**सामि त्वर्धे जुगुप्सिते॥ २४९॥**

सामयति। 'षाम सान्त्वप्रयोगे' (चु० उ० से०)। 'अच इः' (उ० ४।१३८)॥

**अमा सह समीपे च**

न माति। 'मा माने' (अ० प० अ०)। क्विप् (३।२।७६) सहार्थे॥

**कं वारिणि च मूर्धनि।**

कम्यते। 'कमु कान्तौ' (भ्वा० आ० से०)। णिङभावे विच् (३।३।७५)। **'कम्** शिरःसुखवारिषु' इति विश्वः। **'कम्** पादपूरणे तोये–' (इति मेदिनी)॥

**इवेत्थमर्थयोरेवम्**

'ए' एत्थं भवति। 'टु वम उद्गिरणे' (भ्वा० प० से०)। विच् (३।२।७५)। **'एवं** प्रकारोपमयोरङ्गीकारेऽवधारणे' इति धरणिः॥

**नूनं तर्केऽर्थनिश्चये॥ २५०॥**

नुवा स्तुत्या नमति। विच् (३।२।७५)॥

**तूष्णीमर्थे सुखे जोषम्**

जुष्यते। 'जुष तृप्तौ' (चु० उ० से०)। बाहुलकादम्। **'जोषं** सुखे प्रशंसायां तूष्णींलङ्घनयोरपि' (इति मेदिनी)॥

**किं पृच्छायां जुगुप्सने।**

कूयते कवनम्, वा। 'कु शब्दे' (अ० प० अ०)। बाहुलकाड्डिम्। कायतेः (भ्वा० प० अ०) डिमिः (उ० ४।१५८) वा। **'किम्** कुत्सायां वितर्के च निषेधप्रश्नयोरपि' (इति मेदिनी)॥

**नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने॥ २५१॥**

नामयति। नाम्यते वा। 'णमु प्रह्वत्वे' (भ्वा० प० अ०)। 'अन्येभ्योऽपि' (वा० ३।२।१०१) इति डः। **'नाम** कामे (कोपे)ऽभ्युपगमे विस्मये स्मरणेऽपि च। संभाव्यकुत्साप्राकाश्यविकल्पेष्वपि दृश्यते' (इति मेदिनी)। संभाव्यं संभावना॥

**अलं भूषणपर्याप्तिशक्तिवारणवाचकम्।**

अलति। 'अल भूषणादौ' (भ्वा० प० से०)। बाहुलकादम्। **'अलं** भूषणपर्याप्तिवारणेषु निरर्थके। **अलं** शक्तौ च निर्दिष्टम्' इति विश्वः॥

**हुं वितर्के परिप्रश्ने**

हूयते। 'हु दानादौ' (जु० प० अ०)। 'बाहुलकान्मः'॥

**समयान्तिकमध्ययोः॥ २५२॥**

समेति। 'इण् गतौ' (अ० प० अ०)। 'आः समिण्निकषिभ्याम्' (उ० ४।१७५)॥

**पुनरप्रथमे भेदे**

पनते। 'पन स्तुतौ' (भ्वा० आ० से०)। बाहुलकादरः, अ(कार)स्योकारः। **'पुनर**प्रथमे मतम्। अधिकारे च भेदे च तथा पक्षान्तरेऽपि च' (इति मेदिनी)॥

**निर्निश्चयनिषेधयोः।**

नृणाति 'नॄ नये' (क्र्या० प० से०)। क्विप् (३।२।१७८)। 'ऋत इत्–' (७।१।१००)। **'निर्**निश्चये क्रान्ताद्यर्थे **निर्**निःशेषनिषेधयोः' इति विश्वः॥

**स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा॥२५३॥**

प्रबन्धे अविच्छेदने क्रियाकरणे। पुरति। 'पुर अग्रगमने' (तु० प० से०)। बाहुलकात् का। **'पुरा** पुराणे निकटे प्रबन्धातीतभाविषु' (इति मेदिनी)॥

**ऊर्य्यूरी चोररी च विस्तारेऽङ्गीकृतौ त्रयम्।**

ऊयते। 'ऊयी तन्तुसंताने' (भ्वा० आ० से०)। बाहुलकाद्ररीक्; रीक् च। वयतेः (भ्वा० उ० अ०) ररीक्। संप्रसारणम् (६।४।१५)। **'ऊररी चोररी चोरी** विस्तारेऽङ्गीकृते त्रयम्' इत्यजयः॥

**स्वर्गे परे च लोके स्वर्**

'परे' इति लोकविशेषणम्। स्वरति। 'स्वृ शब्दोपतापयोः' (भ्वा० प० अ०)। विच् (३।२।७५)॥

**वार्तासंभाव्ययोः किल॥ २५४॥**

किलति। 'कील श्वैत्ये' (तु० प० से०)। 'इगुपध–' (३।२।१३५) इति कः। **'किल**शब्दस्तु वार्तायां संभाव्यानुनयार्थयोः' इति विश्वः। 'वार्तायामरुचौ **किल'** इति त्रिकाण्डशेषः॥

**निषेधवाक्यालंकारे जिज्ञासानुनये खलु।**

खलति। 'खल संचये' (भ्वा० प० से०)। बाहुलकादुः। **'खलु** स्याद्वाक्यभूषायां जिज्ञासायां च सान्त्वने। वीप्सामाननिषेधेषु पूरणे पादवाक्ययोः' (इति मेदिनी)॥

**समीपोभयतःशीघ्रसाकल्याभिमुखेऽभितः॥२५५॥**

'पर्यभिभ्यां च' (५।३।९) इत्यभिशब्दात्तसिल्॥

**नामप्राकाश्ययोः प्रादुः**

प्रान्दति। 'अदि बन्धने' (भ्वा० प० से०)। बाहुलकादुस्। आगमशास्त्रस्यानित्यत्वान्न नुम् प्राप्ति वा। 'अद भक्षणे' (अ० प० अ०)। नामशब्दार्थे॥

---

१ अत्र ह्रस्वादौ पाठात् 'उरी ह्रस्वादिरपि'—इति मुकुटपीयूषव्याख्ये॥

**मिथोऽन्योन्यं रहस्यपि ।**

मेथति । 'मेथृ संगमे' ( भ्वा० प० से० ) । असुन् (उ० ४।१८९) । पृषोदरादित्वात् (६।३।१०९) ह्रस्वः । बाहुलकादोः । तन्त्रेणोभयमिह निर्दिष्टम् । अन्योन्यार्थे ॥

**तिरोऽन्तर्धौ तिर्यगर्थे**

तरति । 'तॄ' ( भ्वा० प० से० ) । असुन् (उ० ४।१८९) । 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' इति गुणविषये इट् ॥

**हा विषादशुगर्तिषु ॥ २५६ ॥**

जहाति । 'ओहाक् त्यागे' ( जु० प० अ० ) । क्विप् (३।२।१७८) । 'हा विषादे च शोके च कुत्सादुःखार्थयोरपि' (इति मेदिनी) ॥

**अहहेत्यद्भुते खेदे**

अहं जहाति, जिहीते वा । 'हाक्' ( जु० प० अ० ) । 'हाङ्' ( जु० आ० अ० ) । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । पृषोदरादित्वात् (६।४।१०९) मलोपः । '—अहहा दीर्घान्तमपि'—इति मुकुटः । तत्र क्विप् (३।२।७६) बोध्यः । 'अहहेत्यद्भुते खेदे परिक्लेशप्रहर्षयोः । संबोधनेऽपि' (इति मेदिनी) ॥

**हि हेतावधारणे ॥ २५७ ॥**

हिनोति । 'हि गतौ' ( स्वा० प० अ० ) । विच् (३।२।७५) संज्ञापूर्वकत्वाद्गुणाभावः । क्विपि (३।२।७८) तुगभावो वा । 'हि पादपूरणे हेतौ विशेषेऽप्यवधारणे । प्रश्ने हेत्वपदेशे च संभ्रमासूययोरपि । ही दुःखहेतावाख्यातो विषादे विस्मयेऽपि च' (इति मेदिनी) । तत्र पृषोदरादित्वात् (६।३।१०९) दीर्घः । एषु सर्वत्र भावे वा प्रत्यया बोध्याः ॥

**इत्यनेकार्थवर्गविवरणम् ॥**

---

**चिरायचिररात्रायचिरस्याद्याश्चिरार्थकाः ।**

चिरमयते । 'अय गतौ' ( भ्वा० आ० से० ) । 'कर्मण्यण्' (३।२।१) ॥ (१) ॥*॥ चिरा रात्रयः । 'अच्प्रत्यन्वव–' (५।४।७५) इत्यत्र 'अच्' इति योगविभागादच् । चिररात्रानयते । 'कर्मण्यण्' (३।२।१) ॥ (२) ॥*॥ चिरमस्यति । 'असु क्षेपणे' ( दि० प० से० ) । ण्यत् (३।१।१२४) । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । शकन्ध्वादिः (वा० ६।१।९४) ॥ (३) ॥*॥ आद्यपदेन 'चिरम्' 'चिरेण' 'चिरात्' 'चिरे' इति गृह्यन्ते । चिरोऽर्थो येषाम् ॥*॥ त्रीणि 'दीर्घकालस्य' ॥

**मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत्समाः ॥ १ ॥**

मोहनम् । 'मुह वैचित्ये' ( दि० प० अ० ) । बाहुलकादुस् ॥ (१) ॥*॥ 'नित्यवीप्सयोः' (८।१।४) इति पुनःशब्दस्य द्वित्वम् ॥ (२) ॥*॥ शशति । 'शश प्लुतगतौ' ( भ्वा० प० से० ) बाहुलकाद्वतिः ॥ (३) ॥*॥ अभि क्ष्णौति । 'क्ष्णु तेजने' (अ० प० से०) । बाहुलकाड्डमुः । 'अन्येषामपि–' (६।३।१३७) इति दीर्घः ॥ (४) ॥*॥ न सकृत् ॥ (५) ॥*॥ समास्तुल्यार्थाः । अजयस्तु अभीक्ष्णशब्दमनव्ययमप्याह— 'अभीक्ष्णं तु पौनःपुन्ये सर्वदार्थे च दृश्यते' इत्यनव्ययप्रकरणे पाठात् । 'वारंवारं शश्वदर्थे वारंवारेण चेष्यते' इति त्रिकाण्डशेषः । पञ्च 'पौनःपुन्यस्यार्थस्य' ॥

**स्राग्झटित्यञ्जसाह्नायद्राङ्मङ्क्षुसपदि द्रुते ।**

'[1]स्रै पाके' ( भ्वा० प० अ० ) । संपदादिः (वा० ३।३।१०८) । स्रामकति । 'अक कुटिलायां गतौ' ( भ्वा० प० से० ) क्विप् (३।२।७५) ॥*॥ 'झट संघाते' ( भ्वा० प० से० ) । संपदादिः (वा० ३।३।१०८) झटमेति । 'इण्' ( अ० प० अ० ) । क्विच् (३।२।७५) ॥ (२) ॥*॥ अञ्जनम् 'अञ्जू व्यक्त्यादौ' ( रु० प० से० ) । 'कृत्यल्युटो (कृतो) बहुलकम्' (वा० ३।३।११३) इति पचाद्यच् (३।१।१३४) अञ्जं स्यति, सायति वा । 'षोऽन्तकर्मणि' ( दि० प० अ० ) । 'षै क्षये' ( भ्वा० प० अ० ) वा । पचाद्यच् (३।१।१३४) । क्विप् (३।२।७६) वा ॥ (३) ॥*॥ ह्वनम् । 'ह्वृङ् अपनयने' ( अ० आ० अ० ) । बाहुलकाद्भावे घञ् (३।३।१८) । 'पृषोदरादित्वाद्ह्रस्व' यः । ततो नञ्समासः । ॥ (४) ॥*॥ संपद्यते । 'पद गतौ' ( दि० आ० अ० ) । इन् (उ० ४।११८) पृषोदरादित्वात् (६।३।१०९) समोऽन्त्यलोपः ॥ (५) ॥*॥ द्राति । 'द्रा कुत्सायां गतौ' ( अ० प० अ० ) । 'बाहुलकात् कः' ॥ (६) ॥*॥ मज्जति । 'टु मस्जो शुद्धौ' ( तु० प० अ० ) । बाहुलकात्सुः । 'मस्जिनशोः–' (७।१।६०) इति नुम् । 'स्कोः–' (८।२।२९) इति सलोपः ॥ (७) ॥*॥ सप्त 'तत्क्षणार्थस्य' ॥

**बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे ॥ २ ॥**

बलमस्यास्ति । मतुप् (५।२।९४) ॥ (१) ॥*॥ सुतिष्ठति । 'अपदुःसुषु स्थः' (उ० १।२५) इति कुः ॥ (२) *॥ किं च तद् उत च ॥ (३) ॥*॥ सूयते । 'षु गतौ' '(प्रसवैश्वर्ययोः)' ( भ्वा० प० अ० ) । क्विपि (३।२।१७८) तुगभावः । डुः (वा० ३।२।१८०) वा ॥ (४) ॥*॥ अतति । इन् (उ० ४।११८) ॥ (५) ॥*॥ अति च इव च ॥ (६) ॥*॥ षट् 'अतिशयस्य' ॥

---

[1]—'श्रै पाके' इत्यस्य दन्त्यादेरभावात्तालव्यादित्वापत्तिभिया चिन्त्यमेतत् । तस्मात् 'स्रु गतौ' इत्यस्माद्बाहुलकाड्डाक् । यद्वा 'संपदादिक्विबन्तं स्रुतमा समन्तादकति' इति शकन्ध्वादित्वमङ्गीकार्यम् ॥

**पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने ॥ ।**

पर्थयति । 'पृथ प्रक्षेपे' ( चु० प० से० ) । बाहुलकात् कक् ॥ (१) ॥*॥ 'विनञ्भ्यां नानाञौ न सह' (५।२।२७) इति निषेधार्थाद्विशब्दान्ना ॥ (२) ॥*॥ अन्तरेति । इणो णः ॥ (३) ॥*॥ ऋतीयते । 'ऋतिः' सौत्रः । ततः केप्रत्ययः ॥ (४) ॥*॥ हिनोति । 'हि गतौ' ( स्वा० प० अ० ) । रुकक् प्रत्ययः ॥ (५) ॥*॥ नञो 'विनञ्भ्याम्' (५।२।२७) इति नाञ् प्रत्ययः ॥ (६) ॥*॥ षट् **'वर्जने'** ॥

**यत्तद्यतस्ततो[१] हेतौ**

यच्छति । 'यम उपरमे' ( भ्वा० प० अ० ) । क्विप् (३।२।१७८) । 'गमादीनां क्वौ' (वा० ६।४।४०) इत्यनुनासिकलोपः । तुक् (६।१।७५) ॥ (१) ॥*॥ तनोति । 'तनु विस्तारे' (त० उ० से०) । क्विप् (३।२।१७८) । अनुनासिकलोपः (वा० ६।४।४०) । तुक् (६।१।७५) ॥ (२) ॥*॥ यस्मात् तस्मात् यत्तद्भ्याम् 'पञ्चम्यास्तसिल्' (५।३।७) । त्यदाद्यत्वम् (७।२।१०२) ॥ (३) ॥ (४) ॥*॥ चत्वारि **'हेतौ'** ॥

**असाकल्ये तु चिच्चन ॥ ३ ॥**

चेतति । 'चिती संज्ञाने' ( भ्वा० प० से० ) । क्विप् (३।२।१७८) ॥ (१) ॥*॥ चनति 'चन शब्दे' (                ) । पचाद्यच् (३।१।१३४) ॥ (२) ॥*॥ **'असकलार्थस्य'** ॥

**कदाचिज्जातु**

कदा च चिच्च, अनयोः समाहारः ॥ (१) ॥*॥ जायति । 'जै क्षये' (भ्वा० प० अ०) । बाहुलकात्तुन् ॥ (२) ॥*॥ द्वे **'कस्मिंश्चित्काले'** ॥

**सार्धं तु साकं सत्रा समं सह ।**

ऋध्यति । 'ऋधु वृद्धौ' (दि० प० से०) । बाहुलकात्कैम्[२] । सह ऋधं वर्धनम् । 'सहस्य सः (६।३।७८) इति सः ॥ (१) ॥*॥ सह अकनम् । अम् प्रत्ययः । 'सहस्य-' (६।३।७८) इति सादेशः । 'आभीक्ष्ण्ये णमुल्' (३।४।२२) वा ॥ (२) ॥*॥ सह त्रायते । क्विप् (३।२।७६) ॥ (३) ॥*॥ समति 'षम वैक्लव्ये' ( भ्वा० प० से० ) अम् ॥ (४) ॥*॥ सहते । पचाद्यच् (३।१।१३४) ॥ (५) ॥*॥ 'सजुष्[४]' शब्दोऽप्यत्र ॥*॥ पञ्च **'सहेत्यर्थे'** ॥

१—इदं च 'प्रथेः कित्संप्रसारणं च' (उ० १।११७) इति सूत्राज्ञानमूलकम् । तत्राप्ययं विशेषः 'उक्तसूत्रमते जान्तत्वम् । भवन्मते कान्तत्वम् इति ॥ २—'येनतेनादि च । यथा 'वितर गिरमुदारां येन मूकाः पिकाः स्युः'—इति' स्वामी ॥ ३—कम्प्रत्ययस्य कित्वेन 'ऋधम्' इति प्रयोगस्यैवापाद्यमानत्वेन 'सार्धम्' इति प्रयोगानिष्पत्त्या चिन्त्यमेतत् । तस्मात् 'आभीक्ष्ण्ये णमुल्' इति वक्ष्यमाणस्योभयशेषत्वमेव बोध्यम् ॥ ४—तथा च 'सजूः सहार्थे' इति त्रिकाण्डशेषः ।

**आनुकूल्यार्थकं प्राध्वम्**

प्राध्वनति । 'ध्वन शब्दे' (भ्वा० प० से०) डमप्रत्ययः । **'प्राध्वं** तु प्रणते चातिदूरे वर्त्मनि बन्धने' ॥ (१) ॥*॥

**व्यर्थके तु वृथा मुधा ॥ ४ ॥**

व्रियते । 'वृङ्' ( क्र्या० आ० से० ) । 'वृञ्' ( स्वा० उ० से० ) । थाक् **'वृथा** वन्ध्ये निष्कारणे' (इति मेदिनी) ॥ (१) ॥*॥ मुह्यति । का प्रत्ययः । 'पृषोदरादित्वात्' (६।३।१०९) ह्रस्य घः ॥ (२) ॥*॥ द्वे **'व्यर्थके'** ॥

**आहो[१] उताहो किमुत विकल्पे किं किमूत च ।**

आहन्ति । डोप्रत्ययः ॥ (१) ॥*॥ उत च आहो च, अनयोः समाहारः ॥ (२) ॥*॥ किम् च उ तच, अनयोः समाहारः । (**'किमुता**तिशये प्रश्ने विकल्पे च प्रयुज्यते' इति विश्वः) ॥ (३) ॥*॥ कानम् । 'कै शब्दे' ( भ्वा० प० अ० ) । कायतेर्डिमिः' (उ० ४।२५८) ॥ (४) ॥*॥ किम् च उ च । **'किमु** संभावनायां स्याद्विमर्शे चापि दृश्यते' (इति मेदिनी) ॥ (५) ॥*॥ (**'उत** प्रश्ने वितर्के च **उता**प्यर्थविकल्पयोः' इति विश्वः) ॥ (६) ॥*॥ षट् **'वितर्कनस्य'** ॥

**तु हि च स्म ह वै पादपूरणे**

तुदति । डुः (वा० ३।२।१८०) ॥ (१) ॥*॥ हिनोति । क्विपि तुगभावः ॥ (२) ॥*॥ चनति । चिनोति वा । 'अन्येभ्योऽपि-' (वा० ३।२।१०२) इति डः ॥ (३) ॥*॥ स्मयते । 'स्मिङ् ईषद्धसने' ( भ्वा० आ० से० ) । डः (वा० ३।२।१०१) ॥ (४) ॥*॥ हन्ति । डः (वा० ३।२।१०१) । (**'ह** स्यात्संबोधने पादपूरणे च विनिग्रहे । नियोगे च क्षिपायां स्यात्कुत्सायामपि दृश्यते' इति मेदिनी) ॥ (५) ॥*॥ वाति । डैः ॥ (६) ॥*॥ षट् **'श्लोकचरणपूर्णतायाम्'** ॥

**पूजने स्वती ॥ ५ ॥**

सवति । 'षु गतौ (प्रसवैश्वर्ययोः)' ( भ्वा० प० अ० ) । डुः (वा० ३।२।१८०) । (**'सु** पूजायां भृशार्थेऽनुमतिकृच्छ्रसमृद्धिषु' इति मेदिनी) ॥ (१) ॥*॥ अतति । इन् (उ० ४।११८) ॥ (२) ॥*॥ द्वे **'पूजने'** ॥

**दिवाह्नीति**

दीव्यन्त्यत्र । काप्रत्ययः ॥ (१) ॥*॥ अह्नि दिवसे । इति ना अधिकरणार्थप्रधानतां दर्शयति ॥

**अथ दोषा च नक्तं च[२] रजनाविति ।**

दुष्यन्त्यत्र । 'दुष वैकृत्ये' (दि० प० अ०) । आ प्रत्ययः ।

१—अहो ह्रस्वादिरपि । 'विकल्पे विस्मयेऽप्यहो' इति रुद्रवचनात् —इति मुकुटः ॥ २—चकारादुषापि—इति स्वामिमुकुटौ । 'उषा रात्रौ तदन्ते च' इति मेदिनी ॥

(**दोषा** रात्रिमुखे रात्रावत्रानव्ययमप्यसौ' इति विश्वः ॥ ) (१) ॥*॥ नज्जति । 'ओ नस्जी व्रीडे' (तु० प० से०) । तमु प्रत्ययः ॥ (२) ॥*॥ रजनौ रात्रौ इत्यर्थे ॥

**तिर्यगर्थे साचि तिरोऽपि**

सचनम् । 'षच समवाये' (भ्वा० प० से०) । 'इन्जादिभ्यः' (वा० ३।३।१०८) ॥ (१) ॥*॥ तरणम् । 'तॄ' (भ्वा० प० से०) । असुन् (उ० ४।१८९) । 'क्वचिदपवादविषयेऽपि–' इतीट् ॥ (२) ॥*॥ द्वे '**तिर्यगर्थे**' ॥

**अथ संबोधनार्थकाः ॥ ६ ॥**

**स्युः पाट् प्याडङ्ग हे है भोः**

पाटयति । 'पट गतौ' (भ्वा० प० से०) णिजन्तः । क्विप् (३।२।१७८) ॥ (१) ॥*॥ प्यायते । 'प्यैङ् वृद्धौ' (भ्वा० प० अ०) । ट् प्रत्ययः ॥ (२) ॥*॥ अङ्गति । 'अगि गतौ' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) ॥ (३) ॥*॥ 'हि गतौ' (भ्वा० प० अ०) । विच् (३।३।७५) ॥ (४) ॥*॥ हन्ति । डै प्रत्ययः ॥ (५) ॥*॥ भाति । 'भा दीप्तौ' (अ० प० अ०) । बाहुलकाड्डोस् ॥ (६) ॥*॥ षट् '**संबोधनार्थकाः**' ॥

**समया निकषा हिरुक् ।**

समयनम् । 'आ समिण् निकषिभ्याम्' (उ० ४।१७५) । '**समया**न्तिकमध्ययोः' (इति मेदिनी) ॥ (१) ॥*॥ निकषणम् । पूर्ववत् । '**निकषा**न्तिकमध्ययोः' (इति मेदिनी) ॥ (२) ॥*॥ हिनोति । रुकक् प्रत्ययः । '**हिरुक्** मध्ये विनार्थे च' इति रुद्रः । '**हिरुगुक्तं** च सामीप्ये' इत्यमरमाला ॥ (३) ॥*॥ त्रीणि '**सामीप्ये**' ॥

**अतर्किते तु सहसा**

सहते । 'सह मर्षणे' (भ्वा० आ० अ०) । असा प्रत्ययः ॥ (१) ॥*॥ अतर्कितेऽविचारिते ॥

**स्यात्पुरः पुरतोऽग्रतः ॥ ७ ॥**

पूर्वस्मिन् । 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' (५।३।३९) ॥ (१) ॥*॥ पुरति 'पुर अग्रगमने' (तु० प० से०) । बाहुलकादतसुक् ॥ (२) ॥*॥ अग्रे । आद्यादित्वात् (वा० ५।४।४४) तसिः ॥ (३) ॥*॥ त्रयः '**अग्रार्थाः**' ॥

**स्वाहा देवहविर्दाने श्रौषड्वौषड्वषट् स्वधा ।**

स्वादतेऽनेन । 'स्वाद आस्वादने' (भ्वा० आ० से०) । आ प्रत्ययः । पृषोदरादित्वात् (६।३।१०९) दस्य हः । सुष्ठु आ हूयतेऽनेन वा । डा प्रत्ययः ॥ (१) ॥*॥ श्रूयते । अनेन वा 'श्रु श्रवणे' (भ्वा० प० से०) । बाहुलकाड्डौषट् ॥ (२) ॥*॥ उह्यतेऽनेन । 'वह प्रापणे' (भ्वा० उ० अ०) । डौषट् ॥ (३) ॥*॥ डषट् च ॥ (४) ॥*॥ स्वद्यतेऽनेन । 'ष्वद आस्वादने' (भ्वा० प० से०) । आ प्रत्ययः । पृषोदरादित्वात् (६।३।१०९) दस्य धः ॥ (५) ॥*॥ पञ्च '**देवहविर्दाने**' ॥

**किंचिदीषन्मनागल्पे**

किम् च चित् च अनयोः समाहारः ॥ (१) ॥*॥ ईषणम् । 'ईष गत्यादौ' (भ्वा० प० से०) । अत् प्रत्ययः ॥ (१) ॥*॥ मननम् । 'मन ज्ञाने' (दि० आ० अ०) । आक् प्रत्ययः ॥ (३) ॥*॥ त्रीणि '**अल्पे**' ॥

**प्रेत्यामुत्र भवान्तरे ॥ ८ ॥**

प्रकर्षेण इत्वा । इण् (अ० प० अ०) । क्त्वा प्रत्ययः (३।४।२२) । 'समासे–' (७।१।३७) इति ल्यबादेशः । तुक् (६।१।७५) ॥ (१) ॥*॥ अमुष्मिन् । अदसः 'सप्तम्यास्त्रल्' (५।३।१०) ॥ (२) ॥*॥ भवान्तरे जन्मान्तरे ॥

**व वा यथा तथैवैवं साम्ये**

वाति । वानं वा । डः (वा० ३।२।१०१) । क्वचित् 'वत्' इति पाठः । स तु न युक्तः । वति (५।१।११५) प्रत्ययेन गतार्थत्वात् । न च वतिरेवात्र पठितः । सादृश्यपर्याये प्रत्ययपाठस्यायुक्तत्वात् । अपत्यसमूहादिपर्यायेष्वण्वुञादीनामपाठात् । '**वं** प्रचेतसि जानीयादिवार्थे तु तदव्ययम्' इति मेदिन्यादिसंमतेश्च ॥ (१) ॥*॥ क्विपि (३।२।१७८) तु वा ॥ (२) ॥*॥ येन तेन प्रकारेण । 'प्रकारवचने थाल्' (५।३।२३) विभक्तित्वात् (५।३।१) त्यदाद्यलम् (७।२।१०२) ॥ (३) ॥*॥ (४) ॥*॥ अयनम् । 'इण्शीभ्यां वन्' (उ० १।१५२) । ('**एवौ**पम्ये परिभवे ईषदर्थेऽवधारणे' इति हैमः) ॥ (५) ॥*॥ 'इण्' (अ० प० अ०) । बाहुलकाद्वम् ॥ (६) ॥*॥ षट् '**साम्ये**' ॥

**अहो ही[2] च विस्मये ।**

अह्वानम् । 'ओ हाङ् गतौ' (जु० आ० अ०) । डो प्रत्ययः ॥ (१) ॥*॥ ह्ननम् । बाहुलकाड्डी ॥ (२) ॥*॥ अद्भुते । द्वे '**विस्मये**' ॥

**मौने तु तूष्णीं तूष्णीकाम्**

तोषणम् । 'तुष तुष्टौ' (दि० प० अ०) । बाहुलकान्नीम् । उपधाया ऊत् ॥ (१) ॥*॥ 'अकच्प्रकरणे' 'तूष्णीमः काम् वक्तव्यः' (वा० ५।३।७१) । 'मिदचोऽन्त्यात्परः' (१।१।४६) ॥ (२) ॥*॥ द्वे '**मौने**' ॥

---

१—साचिः स्त्रीलिङ्गापि प्रकृत्यन्तरमस्ति । 'भित्तौ साची परिणतमुखी' इति सप्तकुमारिका ॥ 'तिर्यक् साचिरपि स्त्रियाम्,' इति रत्नकोषः—इति मुकुटः ॥

१—स्वामिमुकुटाभ्यां तु इवशब्दो गृहीतः ॥ २—'ही' शब्दो दीर्घान्तः । 'ही विचित्रो विपाकः' इति माघः—इति स्वामिमुकुटौ ॥

**सद्यः सपदि तत्क्षणे ॥ ९ ॥**

समानेऽहनि। 'सद्यःपरुत्–' (५।३।२२) इति साधुः ॥ (१) ॥*॥ संपद्यतेऽस्मिन्। इन् (उ० ४।११८) पृषोदरादित्वात् (६।३।१०९) मलोपः ॥ (२) ॥*॥ स चासौ क्षणश्च ॥ **'तत्काले'** द्वे ॥

**दिष्ट्या समुपजोषं चेत्यानन्दे**

देशनम्। संपदादिः (वा० ३।३।१०८)। दिशं स्त्यायति। 'स्त्यै शब्दादौ' (भ्वा० प० अ०) क्विप् (३।२।१७८)। षत्वम् (८।२।३६)। ष्टुत्वम् (८।४।४१)। संज्ञापूर्वकत्वाज्जश्त्वं न। यद्वा दिशति। अष्ट्यादिः (उ० ४।११२) ॥ (१) ॥*॥ समुपजोषणम्। 'जुषी प्रीतिसेवनयोः' (तु० आ० से०)। अमुप्रत्ययः ॥*॥ मुकुटस्तु—**'शम्' 'उपजोषं'** च—इति पठति। तत्र 'शम् उपशमे' (दि० प० अ०) धातुर्णिजन्तः। विच् (३।२।७५)। कल्याणार्थे त्रीणि ॥

**अथान्तरेऽन्तरा।**

**अन्तरेण च मध्ये स्युः**

अन्तरेति। 'इण्' (अ० प० अ०)। विच् (३।२।७५) ॥ (१) ॥*॥ डाच् ॥ (२) ॥*॥ णश्च ॥ (३) ॥*॥ त्रीणि **'मध्यस्य'** ॥

**प्रसह्य तु हठार्थकम् ॥ १० ॥**

प्रकर्षेण सोढ्वा। 'षह मर्षणे' (भ्वा० आ० अ०)। क्त्वा (३।४।२२)। ल्यप् (७।१।३७) ॥ (१) ॥*॥ हठोऽर्थो यस्य ॥

**युक्ते द्वे सांप्रतं स्थाने**

संप्रतनम्। 'तनु विस्तारे' (त० उ० से०)। डम्। पृषोदरादित्वात् (६।३।१०९) समो दीर्घः ॥ (१) ॥*॥ स्थानस्य करणम्। स्थानशब्दात् 'तत्करोति–' (वा० ३।१।२६) इति णिजन्तादेप्रत्ययः ॥ (२) ॥*॥ युक्ते उचितार्थे। **'स्थाने** तु कारणार्थे स्याद्युक्तसादृश्ययोरपि' (इति मेदिनी) द्वे **'युक्ते'** ॥

**अभीक्ष्णं शश्वदनारते।**

अभिक्ष्णवनम्। 'क्ष्णु तेजने' (अ० प० से०) डम्। पृषोदरादित्वात् (६।३।१०९) अभेर्दीर्घः ॥ (१) ॥*॥ शशनम्। 'शश प्लुतगतौ' (भ्वा० प० से०)। वत् प्रत्ययः ॥ (२) ॥*॥ द्वे **'अनारते निरंतरे'** ॥

**अभावे नह्यनो नापि**

नह्यति। 'णह बन्धने' (दि० उ० अ०)। इन् (उ० ४।११८) ॥ (१) ॥*॥ नैवोऽयमकारः ॥ (२) ॥*॥ नह्यति। डो ॥ (३) ॥*॥ डश्च ॥ (४) ॥*॥ चत्वारि **'अभावे'** ॥

**मास्म मालं च वारणे ॥ ११ ॥**

'मा च स्म च' अनयोः समाहारः ॥ (१) ॥*॥ मानम्। संपदादिः (वा० ३।३।१०८) ॥ (२) ॥*॥ अलनम्। 'अल भूषणादौ') (भ्वा० प० से०)। अम् ॥ (३) ॥*॥ त्रीणि **'वारणे'** ॥

**पक्षान्तरे चेद्यदि च**

चेतति। 'चिती' (भ्वा० प० से०)। विच् (३।२।७५) ॥ (१) ॥*॥ यतनम्। 'यती प्रयत्ने' (भ्वा० आ० से०)। इन् (उ० ४।११८)। पृषोदरादित्वात् (६।३।१०९) तस्य दः। यद्वा 'यद्' शब्दाण्णिजन्तात् 'अच इः' (उ० ४।१३९)। 'प्रकृत्यैकाच्' (६।४।१६३) इति टिलोपो न ॥ (२) ॥*॥ द्वे **'पक्षान्तरे'** ॥

**तत्त्वे त्वद्धाञ्जसा द्वयम्।**

'अत सातत्यगमने' (भ्वा० प० से०)। संपदादिः (वा० ३।३।१०८)। अतं सततगमनं धयति, दधाति वा। विच् (३।२।१५) ॥ (१) ॥*॥ अञ्जनम्। 'अञ्जू व्यक्त्यादौ' (रु० प० से०)। 'कृत्यल्युटो बहुलम्' (३।३।११३) इति भावे पचाद्यच् (३।१।१३४) अञ्जं स्यति, सायति वा। 'षोऽन्तकर्मणि' (दि० प० अ०)। 'षै क्षये' (भ्वा० प० अ०)। पचाद्यच् (३।१।१३४)। क्विप् (३।२।७६) वा ॥ (२) ॥*॥ द्वे **'तत्त्वार्थे'** ॥

**प्राकाश्ये प्रादुराविः स्यात्**

प्राप्ति। 'अद भक्षणे' (अ० प० अ०)। उस् ॥ (१) ॥*॥ अवते। 'उङ् शब्दे' (भ्वा० आ० अ०)। इर् (इस्)। (२) ॥*॥ द्वे **'स्फुटार्थे'** ॥

**ओमेवं परमं मते ॥ १२ ॥**

अवति। 'अव रक्षणादौ' (भ्वा० प० से०)। 'अवतेष्टि-

---

१—कुत्वस्याप्युपलक्षणम्। पृषोदरादित्वात्सलोपः॥ २—'उपजोषम् चवर्गतृतीयतृतीयम्'। अन्तस्थाद्यतृतीयम् इत्येके—इति पीयूषव्याख्या॥

१—एवं सति स्वानिनैव सिद्धेऽस्योपादानं व्यर्थं स्यात्। तस्मादकार एवाभावबोधकः। एव अत 'अ स्वल्पार्थेऽप्यभावेऽपि' इति हैमे 'अ शब्दः स्यादभावेऽपि स्वल्पार्थप्रतिषेधयोः। अनुकम्पायां च तथा वासुदेवे त्वनव्ययः' इति मेदिन्यां च पृथगुपादानं संगच्छते। अत एव स्वामिनापि अ विप्र इव भाषसे इति वाक्यस्य 'विप्रवन्न ब्रूषे' इत्यर्थं उक्तः। भवन्मते तु समस्तस्य क्रियायामन्वयायोगात्। समासानुपपत्तेश्च॥—'अन' शब्दोऽपि निषिद्धे। अनोपमा ते बुद्धिः' इति–मुकुटपीयूषव्याख्ये॥ २—'रवावद्धाः' इति कप्फिणाभ्युदये भाषासमावेशः। तत्र प्रकृतपक्षे 'रवाः शब्दाः बद्धाः संयताः। 'बन्ध बन्धने' क्तः। संस्कृते तु रवौ सूर्ये अद्धा तत्त्वम्' इत्यर्थः—इति मुकुटः॥

लोपश्च' (उ० १।१४२) इति मन् मन एव टिलोपः । 'ज्वरत्वर–' (६।४।२०) इत्यूठौ । गुणः (७।३।८४) ॥ (१) ॥*॥ इणो बाहुलकाद्दम् ॥ (२) ॥*॥ परं मिमीते, मिनोति, मीनाति वा । डम् । 'ओमेवं परमं भवेत्' इत्यव्ययकाण्डे व्याडिः ॥ (३) ॥ त्रीणि **'अनुमतौ'** ॥

**समन्ततस्तु परितः सर्वतो विष्वगित्यपि ।**

समन्तात् । आद्यादित्वात् (वा० ५।४।४४) तसिः ॥ (१) ॥*॥ 'पर्यभिभ्यां च' (५।३।९) इति परिशब्दात्तसिल् ॥ (२) ॥*॥ सर्वस्मात् 'पञ्चम्यास्तसिल्' (५।३।८) ॥ (३) ॥*॥ विषु अञ्चति । क्विन् (३।२।५९) ॥ (४) ॥*॥ **'अभितः' 'विश्वतः' 'समन्तात्'** इत्याद्यपि ॥*॥ चत्वारि **'सर्वत इत्यर्थे'** ॥

**अकामानुमतौ कामम्**

काम्यते । कमेर्णिङन्तादम् । 'अकामानुमतौ **काम**मसूयोपगमेऽपि च' इति रुद्रः । 'आकामानुमतौ **कामम्'** इति क्वचित्पाठः । तत्राङ् बोध्यः । 'निकामानुमतौ कामम्' इत्यर्थः । **'कामं** कामाभ्यनुज्ञयोः' इति त्रिकाण्डशेषः ॥

**असूयोपगमेऽस्तु च ॥ १३ ॥**

असति । अस्यति वा । तुन् । **'अस्तु** स्यादभ्यनुज्ञानेऽप्यसूयापीडयोरपि' (इति मेदिनी) ॥ (१) ॥*॥ चा**न्नाम**शब्देऽप्यत्र ॥*॥ एकम् ॥

**ननु च स्याद्विरोधोक्तौ**

'ननु' 'च' निपातद्वयस्य समाहारद्वंद्वः ॥

**कच्चित्कामप्रवेदने ।**

'कत्' इति कुशब्दादेशः । 'कत्' 'चित्' अनयोरप्येवम् ॥ (१) ॥*॥ इष्टप्रश्ने एकम् ॥

**निःषमं दुःषमं गर्ह्ये**

निर्गतं सममत्र । 'तिष्ठद्गुप्रभृतीनि च' (२।१।१७) इत्यव्ययीभावत्वम् । 'सुविनिर्दुर्भ्यः–' (८।३।८८) इति षत्वम् ॥ (१) ॥*॥ दुष्टं सममत्र ॥ (२) ॥*॥ द्वे **'निन्दितेऽर्थे'** ॥

**यथास्वं तु यथायथम् ॥ १४ ॥**

'यथास्वम्' इति वीप्सायामव्ययीभावः (२।१।६) । यो य आत्मा, यच्चात्मीयम्, तद्यथास्वम् । तस्मिन् यथाशब्दस्य द्वे क्लीबत्वं च निपात्यते 'यथास्वे यथायथम्' (८।१।१४) इति सूत्रेण ॥ (१) ॥*॥ द्वे **'यथायोग्ये'** ॥

**मृषा मिथ्या च वितथे**

मृष्यते । 'मृषु सहने' (भ्वा० प० से०) । का प्रत्ययः ॥ (१) ॥*॥ मथते । 'मथे विलोडने' (भ्वा० प० से०) । अङ्याादित्वात् (उ० ४।११२) साधुः ॥ (२) ॥*॥ विगतं तथा=सत्यमस्मात्तत्र ॥*॥ द्वे **'असत्ये'** ॥

**यथार्थं तु यथातथम् ।**

अर्थमनतिक्रम्य । पदार्थानतिवृत्तावव्ययीभावः (२।१।६) ॥*॥ (सत्यमनतिक्रम्य) । 'तथा' शब्दः 'तथ' शब्दो वा सत्यार्थः ॥ (१) ॥*॥ एकम् **'सत्ये'** ॥

**स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः ॥ १५ ॥**

सुभूतिस्तु 'स्युरेवं तु पुनर्वा च' इति पठति । 'चान्वाचये समाहारे अन्योन्यार्थे समुच्चये । पक्षान्तरे तथा पादपूरणेऽप्यवधारणे' इति रुद्रः ॥ पञ्च **'निश्चयार्थकाः'** ॥

**प्रागतीतार्थकं**

प्राचि देशे । प्राचो देशात् । प्राङ् देशो वा । '–सप्तमीपञ्चमी–' (५।३।२७) इत्यस्तातिः 'अञ्चेर्लुक्' (५।३।३०) । एवं दिशि काले च ॥ (१) ॥*॥ एकम् ॥

**नूनमवश्यं निश्चये द्वयम् ।**

नु ऊनयति । 'ऊन परिहाणे' (चु० प० से०) । अम् ॥ (१) ॥*॥ अव श्यायते । 'श्यैङ् गतौ' (भ्वा० आ० अ०) ॥ डम् प्रत्ययः ॥ (२) ॥*॥ द्वे **'निश्चिते'** ॥

**संवद्वर्षे**

संवयते । 'वय गतौ' (भ्वा० आ० से०) । क्विप् (३।२।७६) । यलोपः (६।१।६६) । तुक् (६।१।७५) । यद्वा संवदति विच् (३।२।७५) ॥

**अवरे त्ववाग्**

अवरे अञ्चति । अस्तातिः (५।३।२७) । 'अञ्चेर्लुक्' (५।३।३०) । पृषोदरादिः (६।३।१०९) । अवरे पूर्वकालतः पश्चात् । अर्वन्तमञ्चति वा ॥

**आमेवं**

आमयति । 'अम गत्यादिषु' (भ्वा० प० से०) ण्यन्तः । क्विप् (३।२।१७८) । **'आम्** ज्ञानविनिश्चये' इति बोपालितः ॥ (१) ॥*॥ (२) ॥*॥ द्वे **'निश्चये'** ॥

**स्वयमात्मना ॥ १६ ॥**

सुष्ठु अयते । 'अय गतौ' (भ्वा० आ० से०) । अम् ॥ (१) ॥*॥ 'आत्मना' इत्यत्रार्थे ॥

**अल्पे नीचैः**

नि[1] चीयते । **'चिञ्** चयने' (स्वा० उ० अ०) । 'नौ दीर्घश्च' (उ० ५।१३) इति डैसिः ॥ (१) ॥*॥

**महत्युच्चैः**

उच्चीयते । 'उदि चेर्डैसिः' (उ० ५।१२) ॥ (१) ॥*॥

१—कुत्रचित् 'उच्चीयते' इत्यादिकः पूर्वः पाठः ॥—२ त्रिकाण्डशेषपुस्तके तु 'शब्दौ' इति नास्ति, अत एव न छन्दोभङ्गः कश्मीरलिखितसुधापुस्तके केनचित् 'काल' इति न लिखितम् ॥

**प्रायो भूम्नि**

प्रायणम्। 'अय गतौ' (भ्वा० आ० से०)। असुन् (उ० ४।१८९) ॥ (१) ॥*॥

**अद्रुते शनैः।**

शणति। 'शण दाने' (भ्वा० प० से०)। शानयति वा। 'शान तेजने' (भ्वा० उ० से०)। ऐस् प्रत्ययः। पृषोदरादित्वात् (६।३।१०९) णस्य नः, ह्रस्वो वा ॥ (१) ॥*॥ अद्रुतेऽशीघ्रार्थे ॥

**सना नित्ये**

सनति। 'षण संभक्तौ' (भ्वा० प० से०)। आ प्रत्ययः ॥ (१) ॥*॥ **'सनात्' 'सनत्'** ॥

**बहिर्बाह्ये**

वहति 'वह प्रापणे' (भ्वा० उ० अ०)। इस्। बवयोरभेदः ॥

**स्मातीते**

स्यति। 'षोऽन्तकर्मणि' (दि० प० अ०) डम् प्रत्ययः। 'स्मिञो डः' (वा० ३।२।१०१) वा ॥ (१) ॥*॥

**अस्तमदर्शने ॥ १७ ॥**

असनम्। 'अस क्षेपणे' (दि० प० से०) तम् प्रत्ययः ॥ (१) ॥*॥

**अस्ति सत्त्वे**

असनम्। 'अस दीप्तौ' (भ्वा० प० से०)। क्तिच् (३।३।१७४)। तिर्वा। **'अस्त्याह** (शब्दौ) कालसामान्ये तिङन्तप्रतिरूपकौ' इति त्रिकाण्डशेषः ॥

**रुषोक्तावु**

रुषा कोपेनोक्तौ वचने ॥*॥ अवनम्। 'उङ् शब्दे' (भ्वा० आ० अ०) क्विप् (३।२।१७८)। तुग् (६।१।७५) न। डुः (वा० ३।२।१८०) वा ॥

**ऊं प्रश्ने**

ऊय्यते। 'ऊयी तन्तुसंताने' (भ्वा० आ० से०)। मुक्प्रत्ययः ॥*॥ (**'उम्'** इति) ह्रस्वपाठे डुम् प्रत्ययः ॥ (१) ॥*॥ 'रुषा प्रश्ने' इति स्वामी ॥

**अनये त्वयि।**

ईयते। अय्यते वा। इः (उ० ४।१३९)। इन् (उ० ४।११८) वा ॥ (१) ॥*॥ अनुनये सान्त्वने ॥

**हुं तर्के स्यात्**

हवनम्। 'हु दानादौ' (जु० प० अ०)। डुम् प्रत्ययः ॥ (१) ॥*॥

**उषा रात्रेरवसाने**

ओषिति। 'उष दाहे' (भ्वा० प० से०)। का प्रत्ययः। 'उषा स्याद्रजनीशेषे **'उषः'** इत्यपि दृश्यते' इति रभसः ॥ (१) ॥*॥

**नमो नतौ ॥ १८ ॥**

नमनम्। 'णम प्रह्वत्वे' (भ्वा० प० अ०)। असुन् (उ० ४।१८९) ॥ (१) ॥*॥

**पुनरर्थेऽङ्ग**

अङ्गनम्। 'अगि गतौ' (भ्वा० प० से०)। घञ् (३।३।१८) ॥ (१) ॥*॥

**निन्दायां दुष्ठु**

दुःस्थानम्। 'अपदुःसुषु स्थः' (उ० १।२५)। इति कुः। सुषामादित्वात् (८।३।९८) षः ॥ (१) ॥*॥

**सुष्ठु प्रशंसने।**

सुस्थानम्। पूर्ववत् ॥ (१) ॥*॥

**सायं साये**

सानम्। 'षोऽन्तकर्मणि' (दि० प० अ०)। णम्। युगागमः (७।३।३३) ॥ (१) ॥*॥ साये दिनान्ते ॥

**प्रगे प्रातः प्रभाते**

प्रगीयते, अत्र वा। 'गै शब्दे' (भ्वा० प० अ०)। के प्रत्ययः ॥ (१) ॥*॥ प्रातति। 'अत सातत्यगमने' (भ्वा० प० से०)। अरन्प्रत्ययः (उ० ५।५९) ॥ (२) ॥*॥ द्वे प्रभाते। 'सायंचिरम्–' (४।३।२३) इति सूत्रेऽनव्ययस्य प्रगशब्दस्यैत्वं निपात्यते। अव्ययेभ्यः पृथक्करणात् ॥ द्वे **'प्रभाते'** ॥

**निकषान्तिके ॥ १९ ॥**

(निकषणम्)। 'आसमिणूनिकषिभ्याम्' (उ० ४।१७५) ॥ (१) ॥*॥)

**परुत्परार्यैषमोऽब्दे पूर्वे पूर्वतरे यति।**

पूर्वे वर्षे परुत्। 'सद्यःपरुत्–' (५।३।२२) इति साधुः ॥ (१) ॥*॥ (एवं) पूर्वतरे वर्षे, यति गच्छति (वर्तमाने) वर्षे 'परारि' (१) 'ऐषमस्' (१) शब्दौ (क्रमेण) ॥*॥

**अद्यात्राह्नि**

अत्रास्मिन् अहनि। 'सद्यःपरुत्–' (५।३।२२) इति 'अद्य' 'अद्य' शब्दः साधुः ॥ (१) ॥*॥

**अथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् ॥ २० ॥**
**तथाधरान्यान्यतरेतरात्पूर्वेद्युरादयः।**

पूर्वोत्तरापरेभ्योऽधरान्यान्यतरेभ्यश्च 'पूर्वेऽह्नि' इत्यादावर्थे पूर्वेद्युरादयः शब्दा भवन्तीत्यन्वयः। आदिना 'उत्तरेऽह्नि अपरेह्नि, अन्यस्मिन्नह्नि, अन्यतरस्मिन्नह्नि, इतरस्मिन्नह्नि। द्वितीयेनादिशब्देन **'उत्तरेद्युः' 'अपरेद्युः' 'अधरेद्युः' 'अन्येद्युः' 'अन्यतरेद्युः' 'इतरेद्युः'**। 'सद्यःपरुत्–' (५।३।

२२) इत्यादिना निपातितः । 'पूर्वेद्युरिष्यते प्रातः पूर्वेद्युः पूर्ववासरे' इति रुद्रः । ( क्रमेणैकैकम् ) ॥

**उभयद्युश्चोभयेद्युः**

उभयस्मिन्नहनि । 'द्युश्चोभयाद्वक्तव्यः' ( वा० ५।३।२२ ) इति साधुः ॥ (१) ॥*॥ ('सद्यःपरुत्–') (५।३।२२) इति निपातितः ॥ (२) ॥*॥

**परे त्वह्नि परेद्यवि ॥ २१ ॥**

परस्मिन्नहनि । ('सद्यः परुत्–' (५।३।२२) इति साधुः) ॥ (१) ॥*॥

**ह्योऽतीते**

यातमहः । पृषोदरादिः (६।३।१०९) । 'एषमो ह्यःश्वसोऽन्यतरस्याम्' (४।२।१०५) इति निर्देशश्चात्रानुकूलः ॥ (१) ॥*॥

**अनागतेऽह्नि श्वः**

आगामि अहः । पृषोदरादिः (६।३।१०९) ॥ (१) ॥*॥

**परश्वश्च परेऽहनि ।**

परं च तच् श्वश्च ॥ श्वः परं वा । राजदन्तादिः (२।२।३१) ॥ (१) ॥*॥

**तदा तदानीम्**

तस्मिन् काले । 'तदो दा च' (५।३।१९) ॥ (१) ॥*॥ (चात्) दानीं च ॥ (२) ॥*॥ द्वे 'तस्मिन्काल इत्यर्थे' ॥

**युगपदेकदा**

युवन्त्यस्मिन्काले । 'यु मिश्रणादौ' (अ० प० से०) । गैपतक् प्रत्ययः । युगं पद्यतेऽस्मिन् । 'पद गतौ' ( भ्वा० अ० से० ) । डत् प्रत्ययः ॥ (१) ॥*॥ एकस्मिन् काले । 'सर्वैकान्य–' (५।३।१५) इति दा ॥ (२) ॥*॥ द्वे ॥

**सर्वदा सदा ॥ २२ ॥**

सर्वस्मिन्काले । 'सर्वैका–' (५।३।१५) इति दा ॥ (१) ॥*॥ 'सर्वस्य सोऽन्यतरस्यां दि' (५।३।६) ॥ (२) ॥*॥ द्वे 'सर्वस्मिन्काले' ॥

**एतर्हि संप्रतीदानीमधुना सांप्रतं तथा ।**

अस्मिन्काले । 'इदमोर्हिल्' (५।३।१६) । 'एतेतौ रथोः' (५।३।४) ॥ (१) ॥*॥ 'सम्' 'प्रति' एतयोः समाहारद्वन्द्वः ॥ (२) ॥*॥ तस्मात् प्रज्ञाद्यण् (५।४।३८) । गणे पाठान्मान्तत्वम् ॥ (२) ॥*॥ अस्मिन्काले । 'दानीं च' (५।३।१८) ॥ (३) ॥*॥ 'अधुना' (५।३।१७) इति निपातितः ॥ (४) ॥*॥ पञ्च 'अस्मिन्काले' ॥

**दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ॥ २३ ॥**

प्राच्यां दिशि, प्राच्या दिशः, प्राची दिग्, वा । प्राचि देशे काले च, प्राचो देशात् कालाच्च, प्राङ् देशः कालो वा । '–सप्तमीपञ्चमीप्रथमाभ्यः–' (५।३।२७) इत्यस्तातिः । 'अञ्चेर्लुक्' (५।३।३०) एवम् अवाच्यां दिशि, अवाचो देशात्, अवाङ् देशः । **अवाक्** । यत्तु मुकुटः—'तस्यास्तातेः' '–लुक्' (५।३।३०) इति लुक् इत्याह । तन्न । उक्तसूत्रादर्शनात् । 'अञ्चेर्लुक्' (५।३।३०) इति दर्शनाच्च । 'पूर्वादौ' इत्यादिपदेनोत्तरदक्षिणाधरादीनां ग्रहः । 'प्रत्यगादयः' इत्यादिशब्देन **'उत्तरात्' 'अधरात्' 'दक्षिणात्'** (इत्यत्र) 'उत्तराधर–' (५।३।३४) इत्यातिः । **'उत्तरेण' 'अधरेण' 'दक्षिणेन'** (इत्यत्र) 'एनबन्यतरस्यां–' (५।३।३५) इत्येनप्, **'दक्षिणा'** (इत्यत्र) 'दक्षिणादाच्' (५।३।३६), **'दक्षिणाहि'** (इत्यत्र) 'आहिच दूरे' (५।३।३७), **'दक्षिणतः' 'उत्तरतः'** (इत्यत्र) 'दक्षिणोत्तराभ्यामतसुच्' (५।३।२८), इत्यादयो बोध्याः ॥

**॥ इत्यव्ययवर्गः ॥**

---

**सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासजैः ।**
**अनुक्तैः संग्रहे लिङ्गं संकीर्णवदिहोन्नयेत् ॥ १ ॥**

लिङ्गविधानसहितानि यानि सूत्राणि ( शास्त्राणि ) 'स्त्रियां क्तिन्' (३।३।९४) 'पुंसि संज्ञायां घः प्रायेण' (३।३।११८) 'नपुंसके भावे क्तः'(३।३।११४) 'स नपुंसकम्' (२।४।१७) 'अदन्तोत्तरपदो द्विगुः स्त्रियाम्' (वा० २।४।३०) इत्यादीनि, सन्नादिर्येषां क्यजादीनां ते सन्नादयश्च कृतश्च तद्धिताश्च समासाश्च जायन्ते येभ्यो यैर्वा, तानि शास्त्राणि तैरिहास्मिन्वर्गे 'संगृह्यन्ते लिङ्गान्यस्मिन् ।' बाहुलकात् 'ग्रहवृदृस्यां–' (३।३।५८) इत्यधिकरणेऽप् । 'तस्मिन्' लिङ्गसंग्रहवर्गे संकीर्णवर्ग इव लिङ्गमुन्नयेदूहेत् । कीदृशैः शास्त्रैः, प्रागनुक्तैः । क्वचित् 'अनुक्तौ' इति पाठः । तत्रेहानुक्तमपि सलिङ्गशास्त्रैरूह्यम् । यद्वा सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासेभ्यो जातैः शब्दैश्चेति प्रत्येकमूहे करणत्वं बोध्यम् । पक्षद्वये 'सन्नादि' इति चिन्त्यम् । कृदादिजभिन्नसन्नादिजानामलाभात् । 'सन्नादिभ्यो विहितकृज्जैः' इति व्या-

---

१—'द्युस्' इति केवलमप्यव्ययम् । अत एव क्षीरस्वामिना —'द्युदिनम्' इति श्रीभोजः यथा 'द्युश्चन्द्रो द्योतते कथम्'—इति लिखितम् ॥ अस्याव्ययत्वं च 'द्युरम्रौ दिवसेऽपि स्यात्' इति विश्वाद्युक्तस्य द्युगणद्युपिण्डादिशब्देषु भास्कराङ्गीकृतस्य प्रथमान्तस्य प्रतिरूपकत्वेन ॥ २—इदं तु 'यौगपद्य–' ( २।१।६ ) निर्देशे दकारश्रवणानुपपत्त्या चिन्त्यम् । तस्मात् प्रत्यये तवर्गतृतीयोपान्त्यत्वमङ्गीकरणीयम् ।

१—सूत्रैकदेशलेखनेऽपि सकलसूत्रालेखनेनैव यदि प्रत्याख्येयत्वं तर्हि भवतोऽपि 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' ( ५।३।२७ ) इति सूत्रस्थाने केवलं 'सप्तमीपञ्चमीप्रथमाभ्यः' इत्येतावल्लेखेन प्रत्याख्येयत्वं कुतो न स्यात् । सूत्रप्रारम्भांशत्यागोऽप्युभयोः समान एव ॥

ख्यानेऽपि व्यर्थविशेषणत्वात् । संकीर्णवर्गे यथा प्रकृतिप्रत्यार्थाद्यैर्लिङ्गोहनमनुक्तलिङ्गशब्दविषयम्, तथात्रापि सलिङ्गशास्त्रादिभिर्लिङ्गोहनमनुक्तलिङ्गशब्दविषयं बोध्यम् ॥

**लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः ।**

लिङ्गस्य शेषोऽवशेषः । तस्य विधिः, व्याप्नोति पूर्वोक्तकाण्डत्रयस्य व्यापकः । उत्सर्गत्वात् । विशेषैरत्रोक्तैः प्रागुक्तैश्च यदि न बाध्यते । 'अपवादविषयं विहाय सर्वत्र प्रवर्तते' इत्यर्थः ॥

**स्त्रियामीदूद्विरामैकाच् सयोनिप्राणिनाम च ॥ २ ॥**

'स्त्रियाम्' इत्यधिकारः । ईच ऊच्च तौ विरामे विरामावन्तौ वा यस्य तच्च तदेकाच्च । श्रीः, धीः, ह्रीः, **'भूः' 'स्रूः'**, **'द्रूः'**, **'जूः'**, लवनं लूः, भवनं भूः, नयति नीः, । 'लुनाति लूः' इत्यादौ तु परत्वात् 'कृतः कर्तरि' (   ) इति त्रिलिङ्गत्वम् । योनिर्भगम् तत्सहितानां प्राणिनां नाम स्त्रियां स्यात् । माता, दुहिता, याता, स्त्री । 'दाराः पुंभूम्नि' इति विशेषः ॥

**नाम विद्युन्निशावल्लीवीणादिग्भूनदीह्रियाम् ।**

विद्युदादीनामष्टानां स्त्रियाम् । विद्युत् । तडित् । रात्रिः, रजनिः । वल्लिः, वीरुत् । वीणा, विपञ्ची' इत्यादौ 'ङ्याबूङन्तम्' इति सिद्धे वीणाग्रहणं चिन्त्यम् । केचित्तु वीणास्थाने **वाणीं** पठन्ति । वाक्, गौः, गीः । दिक्, हरित् । भूः, भूमिः, कुः । सरित्, त्रिस्रोताः, विपाट् । ह्रीग्रहणं चिन्त्यम् । 'ईदूद्विरामैकाच्' इति, त्रपादौ 'ङ्याबूङन्तम्' इति च, सिद्धत्वात् । केचित्तु **'धियाम्'** इति पठन्ति । संवित्, चित्, प्रतिपत् ॥

**अदन्तैर्द्विगुरेकार्थः**

अदन्तेनोत्तरपदेन सह यो द्विगुः स स्त्रियाम् । कीदृशः सः । एकोऽर्थो यस्य सः । 'द्विगुरेकवचनम्' (२।४।१) इत्यनेन समाहारे एकत्वविधानात् । दशमूली, त्रिलोकी, पञ्चाक्षरी । अदन्तैः किम् । पञ्चकुमारि, दशधेनु । एकार्थः किम् । पञ्चकपालः, पञ्चकपालौ, पञ्चकपालाः ॥

**न स पात्रयुगादिभिः ॥ ३ ॥**

पात्रयुगादिभिरदन्तैर्यो द्विगुः स स्त्रियां न स्यात् । पञ्चपात्रम्, चतुर्युगम्, त्रिभुवनम्, त्रिपुरम् । भाष्ये (५।४।६८ सूत्रे) तु 'त्रिपुरि' इति दृश्यते ॥

१—'स्रूः स्त्रियां निर्झरे स्रुवे' इति मेदिनी । स्रुवो यज्ञपात्रम् ॥ २—'क्विब्वचि-' (उ० २।५७) इत्यादिना क्विब्दीर्घौ । 'द्रूर्हिरण्यरक्षसोर्द्रूः कामचारः, जूः पिशाची पिशाचाश्च पुंसि' इति-रूपमञ्जरी—इति मुकुटः ॥ ३—'जूस्त्वरागमने प्रोक्ता सामान्यगमने स्त्रियाम् । जूराकाशसरस्वत्यां पिशाच्यां, जवने त्रिषु' इति मेदिनी ॥

**तल्वृन्दे येनिकट्यत्रा वैरमैथुनिकादिवुन् ।**
**स्त्री भावादावनिक्तिण्ण्वुल्ण्णच्ण्वुच्क्यब्युजिञङ्-**
**निशाः ॥ ४ ॥**

**उणादिषु निरूरीश्च ङ्याबूङन्तं चलं स्थिरम् ।**

तलन्तं स्त्रियाम् । ग्रामता, गोता, ब्राह्मणता । वृन्दे समूहे यश्च इनिकट्यत्राश्च, तदन्तं स्त्रियाम् । पाश्या, खलिनी, शाकिनी, गोत्रा, रथकट्या । वृन्दे किम् । मुखे भवो 'मुख्यः', दण्डोऽस्यास्तीति 'दण्डी' 'द्वन्द्वाद्वुन्वैरमैथुनिकयोः' (४।३।१२५) अश्वमहिषिका, काकोलूकिका, अत्रिभरद्वाजिका, कुत्सकुशिकिका । आदिना 'पादशतस्य' (५।४।१) 'दण्डव्यवसर्गयोश्च' (५।४।२) इति वुनो ग्रहणम् । द्विपदिकां ददाति, द्वौ द्वौ दण्डितो द्विपदिकाम् । वैरेत्यादि किम् । 'वासुदेवार्जुनाभ्यां वुन्' (४।३।९८) । वासुदेवे भक्तिरस्य वासुदेवकः । वुनो ग्रहां वुणं उपलक्षणम् । क्वचित् 'वुः' इति पाठः । 'गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु' (५।१।१३४) वुञ् । गार्गिकया श्लाघते, काठिकया । 'द्वन्द्वमनोज्ञादिभ्यश्च' (५।१।१३३) वुञ् । शैष्योपाध्यायिका । 'स्त्रियाम्' (३।३।९४) इत्यधिकारे भावे, आदिना अकर्तरि कारके च ये अन्यादयः प्रत्ययास्तदन्तं स्त्रियां स्यात् । 'आक्रोशे नञ्यनिः' (३।३।११२) । अकरणिः, अजननिः । 'स्त्रियां क्तिन्' (३।३।९४) । कृतिः, । भूतिः, । 'ण्वु' इति ण्वुल्ण्वुचोः सामान्यग्रहणम् । 'रोगाख्यायां ण्वुल्बहुलम्' (३।३।१०८) । प्रच्छर्दिका, प्रवाहिका । 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' (वा० ३।३।१०८) । आसिका, शायिका । 'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' (३।३।१११) । भवतःशायिका, इक्षुभक्षिका । 'कर्मव्यतिहारे णच् स्त्रियाम्' (३।३।४३) । 'णचः स्त्रियामञ्' (५।४।१४) स्वार्थिकः । व्यावक्रोशी, व्यात्युक्षी । 'व्रजयजोर्भावे क्यप्' (३।३।९८) । व्रज्या, इज्या । 'समजनिषद०' (३।३।९९) इति क्यप् । समज्या, निषद्या । स्त्रीभावादौ किम् । 'वदः सुपि क्यप्च' (३।१।१०६) । मृषोद्यम् । 'भुवो भावे' (३।१।१०७) ब्रह्मभूयम् । 'ण्यासश्रन्थो युच्' (३।३।१०७) । कारणा, कामना । 'प्रश्नाख्यानयोरिञ्च' (३।३।११०) । कां त्वं कारिं गार्णि वा-कार्षीः । 'षिद्भिदादिभ्योऽङ्' (३।३।१०४) । पचा, त्रपा, भिदा, छिदा, । 'अ प्रत्ययात्' (३।३।१०२) । चिकीर्षा, पुत्रीया । 'गुरोश्च हलः' (३।३।१०३) । ईहा, ऊहा । 'ग्लाम्लाज्याहाभ्यो निः' (वा० ३।३।९५) । ग्लानिः । 'कृञः श च' (३।३।१००) । क्रिया । 'इच्छा' (३।३।१०१) । उणादौ न्यन्तम्, ऊदन्तम्, ईदन्तं च । 'वीज्याज्वरिभ्यो निः' (उ० ४।४८) । 'सृवृषिभ्यां कित्' (उ० ४।४९) । श्रेणिः, श्रोणिः, द्रोणिः । 'अनिः' इति पाठान्तरम् । 'अर्तिसृधृधम्यश्यवितॄ-

१—'विभाषाख्यानपरिप्रश्नयोरिञ्च' इत्यानुपूर्वीकस्य सूत्रस्यानुपूर्वीव्यत्यासेन लेखः प्रामादिकः' ॥

भ्योऽनिः' (उ० २।१०२) धरणिः, धमनिः, सरणिः । कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः–' (उ० १।८०) । कर्षूः, चमूः । 'अवितृस्तृतन्त्रिभ्य ईः' (उ० ३।१५८) । अवीः, तरीः । ङी च आप् च ऊङ् च अन्ते यस्य तत् । कदली, कन्दली, रमा, गङ्गा, वामोरूः, करभोरूः, चलं जंगमम् । स्थिरं स्थावरम्–नाडी, खट्वा, अलाबूः । चरस्थिरग्रहणं चिन्त्यप्रयोजनम् । अन्यस्य व्यवच्छेद्यस्याभावात् ॥

**तत्क्रीडायां प्रहरणं चेन्मौष्टा पाल्लवाणदिक् ॥ ५ ॥**

'तदस्यां प्रहरणमिति क्रीडायां णः' (          ) । मुष्टिः प्रहरणमस्याम् । 'पल्लवाः प्रहरणमस्याम् । णस्य दिगुदाहरणम् । न तु परिगणनम् । तेन 'मौसला, दाण्डा' इत्यादि बोध्यम् ॥

**घञो ञः सा क्रियास्यां चेद्दाण्डपाता हि फाल्गुनी । श्यैनंपाता च मृगया तैलंपाता स्वधेति दिक् ॥ ६ ॥**

'घञः सास्यां क्रियेति ञः' (          ) । घञन्तात् क्रियावाचिनः प्रथमान्तादस्यामित्यर्थे ञः स्यात्, तदन्तं स्त्रियाम् । दण्डपातोऽस्यां तिथौ वर्तते । श्येनपातोऽस्याम् तिलपातोऽस्याम् । 'श्येनतिलस्य पाते ञे' (६।३।७१) इति मुम् । 'पितृदाने स्वधा मतम्' इत्यमरमाला । वररुचिना तु 'स्वधा क्रिया प्रवेणी' इति स्त्रीलिङ्गोक्ता इति दिक् । उदाहरणम्, तेन मौसलपाता भूमिरित्यादि ज्ञेयम् ॥

**स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि ।**

अल्पं मृणालम् । गौरादित्वात् (४।१।४१) ङीष् । आदिना कुम्भी, प्रणाली, मुसली, छत्री, पटी, तटी, मठी । काचिदिति किम् । अल्पो वृक्षो वृक्षकः ॥

**लङ्का शेफालिका टीका धातकी पञ्जिकाढकी ॥७॥**

'ङ्याब्बूङन्तम्' इति सिद्धे नामानुशासनार्थो लङ्कादीनां पाठः । भङ्ग्यादीनामुभयानुशासनार्थः । शेफालिकादीनां तु व्यर्थः, स्वपर्यायपठितत्वात् । लक्यते सुखमस्याम् । 'लक आस्वादने' चुरादिः । 'एरच्' (३।३।५६) । घञ् (३।३।१९) वा । पृषोदरादित्वात् (६।३।१०९) नुम् । नुम्यनुपधात्वान्न वृद्धिः । यद्वा रमन्तेऽस्याम् । बाहुलकात्कः, लत्वं च ॥ (१) ॥*॥ शेफालिका पुष्पविशेषः । 'शेते' इति शे । शीङः (अ० प० अ० ) विच् (३।२।७५) । शयं फालयति । 'ञिफला विशरणे' ( भ्वा० प० से० ) । अण् (३।२।१) । स्वार्थे कन् (५।४।५) । क्कुन् (उ० २।३२) वा ॥ (१) ॥*॥ टीक्यतेऽर्थो यया । 'टीकृ गतौ' (भ्वा० आ० से०) । 'गुरोश्च हलः' (३।३।१०३) इत्यः । विषमपदव्याख्या ॥ (१) ॥*॥ धातकी 'धव' इति प्रसिद्धो वृक्षभेदः । धातुं करोति । 'तत्करोति–' (वा० ३।१।२६) इति णिच् । टिलोपः (६।४।१५५) क्कुन् (उ० २।३२) । पिप्पल्यादित्वात् (४।१।४१) ङीष् ॥ (१) ॥*॥ पिञ्जयतेऽर्थोऽस्याम् । 'पिजि भाषार्थः' (चु० उ० से०) । 'गुरोश्च' (३।३।१०३) इत्यः । पृषोदरादित्वादिकारस्याकारः । स्वार्थे कन् (५।४।५) पिञ्जयति वा । क्कुन् (उ० २।३२) । सकलपदव्याख्या ॥ (१) ॥*॥ आढकी तुवरिका । आ समन्ताड्ढौकते, ढौक्यते, वा । 'ढौकृ गतौ' ( भ्वा० आ० से० ) । अच् (३।१।१३४) । घञ् (३।३।१९) वा, पृषोदरादिः (६।३।१०९) गौरादिः (४।१।४१) ॥ (१) ॥*॥

**सिध्रका सारिका हिक्का प्राचिकोल्का पिपीलिका । तिन्दुकी कणिका भङ्गिः सुरङ्गासूचिमाढयः ॥ ८ ॥**

सेधति । सिध्यते वा । 'षिधु गत्याम्' (भ्वा० प० से०) । 'बहुलमन्यत्रापि' इति रक् । ततः स्वार्थे कन् (५।४।५) । क्षिपकादित्वात् (वा० ७।३।५०) इत्वाभावः । 'शूद्रादयः' इति रग् इति मुकुटश्चिन्त्यः । उज्ज्वलदत्तादिवृत्तिषूक्तसूत्रादर्शनात् । 'सीध' इति प्रसिद्धो वृक्षभेदः ॥ (१) ॥*॥ सरति । 'सृ गतौ' ( भ्वा० प० अ० ) । ण्वुल् (३।१।१३३) ॥*॥ (**'शारिका'** इति) तालव्यादिपाठे 'शॄ हिंसायाम्' ( क्र्या० प० से० ) धातुः शृणाति दुःखं विरहिणीनाम् । पक्षिभेदः ॥ (१) ॥*॥ हिक्कनम् । 'हिक्क अव्यक्ते शब्दे' ( भ्वा० प० से० ) । 'गुरोश्च हलः' (३।३।१०३) इत्यः । यद्वा हिक्कयते । 'हिक हिंसायाम्' ( चु० आ० से० ) पचाद्यच् (३।१।१३४) । ऊर्ध्वे वातप्रवृत्तौ शब्दविशेषः ॥ (१) ॥*॥ प्राचति । 'अचु गतौ' (भ्वा० उ० से०) ण्वुल् (३।१।१३३) । 'वनमक्षिका' इति मुकुटः । 'पक्षिभेदः' इति स्वामी ॥ (१) ॥*॥ ऋच्छति । अर्यते वा 'ऋ गतौ' ( भ्वा० प० अ० ) । 'शुकवल्कोल्काः' (उ० ३।४२) इति साधुः । तेजःपुञ्जः । यत्तु—'मूकादयः'—इति सूत्रमुपन्यस्तं मुकुटेन तच्चिन्त्यम् । उज्ज्वलदत्तादिषु तस्यादर्शनात् ॥ (१) ॥*॥ अपि पील्यते 'पील प्रतिष्टम्भे' ( भ्वा० प० से० ) । घञ् (३।३।१९) । 'वष्टि भागुरिरल्लोपम्–' इत्यपेरल्लोपः । स्वार्थे कन् (५।४।५) । 'शनैर्याति पिपीलकः' इति पुंस्त्वमपि–इति स्वामी ॥ (१) ॥*॥ तिम्यति । 'तिम आर्द्रीभावे' ( दि० प० से० ) । बाहुलकादुकष् गुणाभावश्च ॥ (१) ॥*॥ कणति । 'कण गतौ' ( भ्वा० प० से० ) पचाद्यच् (३।१।१३४) । स्वार्थे

---

१—'लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च' इति मेदिनी ॥ २—हेमस्तु 'टीका निरन्तरव्याख्या' इति मूलं 'सुगमानां विषमाणां च निरन्तरं व्याख्या यस्यां सा' इत्येवंरीत्या व्याख्यातवान् ॥

१—हेमचन्द्रस्तु 'पञ्जिका पदभञ्जिका' इति मूलं 'पच्यन्ते व्यक्तीक्रियन्ते पदार्था अनया 'पञ्चिका' । पृषोदरादित्वाज्जत्वे 'पञ्जिका' ॥ 'अर्थाद्विषमाण्येव पदानि भनक्ति पदभञ्जिका' इत्येवंरीत्या व्याख्यातवान् । प्रयुज्यते स च 'पञ्जिका' शब्दोऽपि वक्रोक्तिपञ्चाशिकाव्याख्यायां वल्लभदेवेन 'वञ्जिका क्रियते लघुः' इति ॥ 'आयव्ययलिखनार्था च' इति मुकुटः ॥ २—इदं च 'स्फायि–' (उ०२।१३) इति सूत्रस्यलिपिपाठाज्ञानमूलकमिति चिन्त्यम् ॥

कन् (५।४।५)। अतिसूक्ष्मम् ॥ (१) ॥*॥ भङ्गस्य करणम्। 'तत्करोति-' (वा० ३।१।२६) इति ण्यन्तात्। 'अच इः' (उ० ४।१३९)। विच्छित्तिः, कौटिल्यभेदो वा 'व्याजच्छलनिभे भङ्गिर्वैदर्भीतनमीलिका' इति रभसः ॥ (१) ॥*॥ सु बहु रज्यतेऽस्यां रजसा। 'रञ्ज रागे' (भ्वा० प० अ०)। 'हलश्च' (३।३।१२०) इति घञ् 'चजोः-' (७।३।५२) इति कुत्वम्। तिर्यग्भूखातः ॥ (१) ॥*॥ सूच्यतेऽनया। 'सूच पैशुन्ये' चुरादिः। अच इः (उ० ४।१३९) 'स्त्री सूचिर्नृत्यभेदे च व्यधनीशिखयोरपि' इति रत्नकोषः ॥ (१) ॥*॥ महनम्। अनया वा। 'मह पूजायाम्' (भ्वा० प० से०)। क्तिन् (३।३।९१)। ढत्व (८।१।३१) धत्व (८।२।४०) ष्टुत्व (८।४।४२) ढलोप (८।३।१३) दीर्घाः (६।३।१११)। 'माढिः पत्रशिरा' इति रत्नकोषः। 'माढिः स्त्री पत्रभङ्गौ च दैन्यस्यापि प्रकाशने' (इति मेदिनी) ॥

**पिच्छावितण्डाकाकिण्यश्चूर्णिः शाणी द्रुणी दरत्।**
**सातिः कन्था तथासन्दी नाभी राजसभापि च ॥९॥**

पिच्छयते। 'पिच्छ बाधे' (चु० प० से०)। 'गुरोश्च-' (३।३।१०३) इत्यः। शाल्मलिनिर्यासः, भक्तादिमण्डश्च ॥ (१) ॥*॥ वितण्ड्यते परपक्षोऽनया। 'तडि आघाते' (भ्वा० आ० से०) 'गुरोश्च-' (३।३।१०३) इत्यः ॥ (१) ॥*॥ ककनम् 'कक लौल्ये-' (भ्वा० आ० से०)। घञ् (३।३।१९)। काकमणति। 'अण शब्दे' (भ्वा० प० से०)। अण् (३।२।१)। पृषोदरादिः (६।३।१०९)। 'पणगण्डकयोस्तुर्ये उदमानस्य काकिणी' इति रुद्रः ॥*॥ रभसस्तु नान्तेष्वप्याह-'पणोदमानगण्डानां तुर्यांशेऽपि च काकिनी' इति। तत्र 'अन प्राणने' (अ० प० से०) धातुर्बोध्यः। आढकस्य पञ्चाशत्तमो भाग उदमानः। उक्तं च गणितावल्याम्— 'कुल्या स्यादष्टभिर्द्रोणैर्द्रोणपादेन चाढकः। अतोऽर्धशतिको भाग उदमानमुदाहृतम्' इति ॥ (१) ॥*॥ 'चूर्णौ धूलौ क्षारभेदे चूर्णानि वासयुक्तिषु' (इति मेदिनी)। चूर्णस्य करणम्। 'तत्करोति-' (वा० ३।१।२६) इति ण्यन्तात् 'अच इः' (उ० ४।१३९)। यद्वा चरणं चोरणं वा। घृणिपृश्निपार्ष्णिचूर्णिभूर्णयः' (उ० ४।५२) इति साधुः ॥ (१) ॥*॥ शाणस्य विकारः 'तस्य विकारः' (४।३।१२०) इत्यण्। 'टिड्ढाण-' (४।१।१५) इति स्वामी। 'शाणः' इत्यन्ये ॥ (१) ॥*॥ द्रुणति। 'द्रुण जैह्म्ये वधे गतौ' (तु० प० से०)। 'इगुपध-' (३।१।१३५) इति कः। 'जातेः-' (४।१।६३) इति ङीष्। 'द्रुण्यम्बुद्रोणीकच्छप्योः' (इति मेदिनी) ॥ (१) ॥*॥ दरणम्। दीर्यते वा 'दॄ विदारणे' (क्र्या० प० से०) 'भये' (भ्वा० प० से०)। वा 'शॄदॄभसोऽदिः' (उ० १।१३०)। 'दरत् स्त्रियां प्रपातेऽपि भयपर्वतयोरपि' (इति मेदिनी) ॥ (१) ॥*॥ सननम्। सानं वा। 'षणु दाने' (त० उ० से०)। 'षोऽन्तकर्मणि' (दि० प० अ०) इति वा। 'ऊतियूति-' (३।३।९७) इति साधुः। 'सातिर्दानावसानयोः' (इति हैमः) ॥ (१) ॥*॥ कम्यते। 'कमु कान्तौ' (भ्वा० आ० से०।) बाहुलकात्थन्। 'कन्था मृन्मयभित्तौ स्यात्तथा प्रावरणान्तरे' (इति मेदिनी) ॥ (१) ॥*॥ आस्यतेऽस्याम् 'आस उपवेशने' (अ० प० से०)। 'श(अ)ब्दादयश्च' (उ० ४।९८) इति साधुः। 'कुन्दादयश्च' इति मुकुटश्चिन्त्यः एतत्पाठादर्शनात्। 'वेत्रासनमासन्दी स्त्री वृषी च व्रतिकासनम्' ॥ (१) ॥*॥ नभ्यतेऽनया। अस्यां वा। 'णभ हिंसायाम्' (भ्वा० आ० से०)। 'इञजादिभ्यः' (वा० ३।३।१०८)। 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्। द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे' (इति मेदिनी) ॥ (१) ॥*॥ राज्ञः सभा ॥ (१) ॥*॥

**झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला।**
**लाक्षा लिक्षा च गण्डूषा गृध्रसी चमसी मसी ॥१०॥**

झर्झते। 'झर्झ भर्त्सोक्त्योः' (तु० प० से०)। बाहुलकादरन् पृषोदरादिः (६।३।१०९) गौरादिः (४।१।४१)। 'झल्लरी झिल्लरी च द्वे हुडुके वालचक्रके' (इति मेदिनी) ॥ (१) ॥*॥ चर्च्यते। 'चर्च उक्तौ' (भ्वा० प० से०)। बाहुलकादरन्। गौरादिः (४।१।४१)। 'चर्चरी गीतभेदे च केशभित्करशब्दयोः' ॥ (१) ॥*॥ पारयति। पार्यते वा। 'पॄ पूर्तौ' चुरादिः। पचाद्यच् (३।१।१३४)। घञ् (३।३।१९) वा। गौरादिः (४।१।४१)। 'कर्क(गर्ग)रीपूरयोः पारी पादरज्वां च हस्तिनः' (इति विश्वः) ॥ (१) ॥*॥ होलति। हुल्यते वा। 'हुल हिंसासंवरणयोः' (भ्वा०प०से०)। पचाद्यच् (३।१।१३४) घञ् वा। रलयोरेकत्वम्। 'होरा तु लग्ने राश्यर्धे रेखाशास्त्रभिदोरपि' (इति मेदिनी) ॥ (१) ॥*॥ लटति। 'लट बाल्ये' (भ्वा० प० से०)। 'अशूप्रुषिलटि-' (उ० १।१५१) इति क्वन्। 'लट्वा करञ्जभेदे फलेऽवये खगान्तरे' (इति मेदिनी) ॥ (१) ॥*॥ सिध्ममस्त्यस्याः। 'सिध्मादिभ्यश्च' (५।२।९७) इति लच्। 'सिध्मला मत्स्यविकृतौ वाच्यवत्तु किलासिनि' (इति मेदिनी) ॥ (१) ॥*॥ लाष्यते। 'लष शिल्पयोगे' चुरादिः। बाहुलकात्सः। यद्वा लक्ष्यते। 'लक्ष आलोचने' (चु० उ० से०) घञ् (३।३।१९)। पृषोदरादित्वात् (६।३।१०९) 'लाक्षारोचना-' (४।२।२) इति निर्देशाद्वा दीर्घः ॥ (१) ॥*॥ लक्ष्यते। 'लक्ष आलोचने' (चु० उ० से०) घञ् (३।३।१९) पृषोदरादित्वात् (६।३।१०९) अस्य इः। यूकाण्डम् ॥ (१) ॥*॥ गण्ड्यते। 'गडि वदनैकदेशे' (भ्वा० प० से०)। 'गण्डेश्च' (उ० ४।७८) इत्यूषन्। पुंस्यपि। 'गण्डूषो मुखपूर्तीभपुष्करप्रसृताञ्जलिः' (इति रुद्रः)। 'उन्नतनाभिस्तु गण्डूषा नापि मुखपूर्तिः' इति बोपालितः ॥ (१) ॥*॥ गृध्रमपि स्यति। 'षोऽन्तकर्मणि' (दि०

१—प्रायेण बहुवचनान्तः—इत्यनेकार्थकैरवाकरकौमुदी ॥

प० अ० ) । 'आतोऽनुप–' (३।२।३) इति कः । गौरादिः (४।१।४१) ङीष् । ऊरुसंधौ वातरोगः ॥ (१) ॥*॥ चम्यते । 'चमु अदने' (भ्वा० प० से०) 'अत्यविचमितमि–' (उ० ३।११७) इत्यसच् । गौरादित्वात् (४।१।४१) ङीष् । '**चमसो** यज्ञपात्रस्य भेदेऽस्त्री पिष्टके स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ मस्यति । 'मसी परिणामे' (दि० प० से०) । पचाद्यच् (३।१।१३४) । '**मेला मसीजलं पत्राञ्जनं च स्यान्मसिर्द्वयोः**' इति त्रिकाण्डशेषः ॥

इति स्त्रीलिङ्गशेषः ॥

---

**पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः ।**
**स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः ॥ ११ ॥**

'पुंस्त्वे' इत्यधिकारः । सह भेदैरनुचरैश्च वर्तमानाः, सह पर्यायैर्वर्तमानाः, सुरासुराश्च देवदैत्याः । अमरा निर्जरा देवाः । सुरभेदाः–तुषिताः, साध्याः, आभास्वराः, इन्द्रः, शक्रः, सूर्य आदित्यः । देवानुचराः—हाहाः, हूहूः, तुम्बुरुः, नारदः, मातलिः । असुरपर्यायाः दैत्याः, दैतेयाः, दानवाः । दैत्यभेदाः—बलिः, नमुचिः, जम्भः । दैत्यानुचराः—कूष्माण्डमुण्डकुम्भाण्डादयः । 'दैवतानि' देवताः इत्यादौ बाधोऽस्य । स्वर्गादय एकोनविंशतिः सभेदाः सपर्यायाश्च पुंसि स्युः । स्वर्गः, नाकः, त्रिदिवः । 'द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम्' इति । विशेषैर्बाधितः । यज्ञः, मखः, क्रतुः । तद्भेदाः–उक्थातिरात्राग्निष्टोमाश्वमेधाः । अद्रिः, गिरिः, पर्वतः । भेदाः–मेरुः, हिमवान्, सह्यः । 'गन्धमादनम्' इति बाधः । मेघः, घनः, जलदः । भेदाः—पुष्करावर्तकादयः । 'अभ्रम्' इति तु बाधः । अब्धिः, समुद्रः सागरः । भेदाः—क्षीरोदः, लवणोदः । द्रुः, वृक्षः, शाखी । भेदाः—प्लक्षः, वटः, आम्रः । पाटलाशिंशपादेर्बाधः । कालः, दिष्टः, समयः, भेदाः—मासः । पक्षः, ऋतुः । दिनतिथ्यादौ बाधः । असिः, खड्गः, मण्डलाग्रः । भेदाः—नन्दकः, चन्द्रहासः । 'कटित्रम्' इत्यादौ बाधः । शरः, बाणः, विशिखः । भेदाः—नाराचः, काण्डः, भल्लः । 'इषुर्द्वयोः' इति बाधः । अरिः, शत्रुः, अरातिः । भेदाः–आततायी ॥

**करगण्डौष्ठदोर्दन्तकण्ठकेशनखस्तनाः ।**
**अह्नाह्नान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः १२**

करो राजग्राह्यो भागः रश्मिः, पाणिश्च । मरीच्यादीनां तु बाधः । गण्डः, कपोलः । ओष्ठः, दन्तच्छदः, अधरः, । दोः, प्रवेष्टः । भुजादेः 'द्वयोः' इति बाधः । दन्तः, दशनः, रदः, । भेदः—जम्भः । कण्ठः, गलः । 'समीपगलशब्देषु कण्ठं त्रिषु विदुर्बुधाः' इति शाश्वतः । केशः, कचः । नखः, पुनर्भवः । 'नखरोऽस्त्रियाम्' इति बाधः । स्तनः, कुचः, पयोधरः । अह्नश्च अह्नश्च अन्ते येषां ते पुंसि स्युः । परवल्लिङ्गापवादोऽयम् । अह्नः पूर्वम्—पूर्वाह्णः, अपराह्णः । द्वयोरह्नोः समाहारो द्व्यहः, त्र्यहः । अत्र 'स नपुंसकम्' (२।४।१) इत्यस्यापवादः । क्ष्वेडो विषम् । तद्भेदाः पुंसि स्युः । सौराष्ट्रिकः, शौक्लिकेयः, ब्रह्मपुत्रः । रात्रोऽन्तो येषां ते । प्राक् पूर्वपदं न संख्या येषां ते पुंसि स्युः । परवल्लिङ्गतापवादोऽयम् । परत्वात्समाहारनपुंसकतामपि बाधते । तेन अहोरात्रः, । सर्वरात्रः, पूर्वरात्रः । 'प्रागसंख्यकाः' इति किम् । पञ्चरात्रम् ॥

**श्रीवेष्टाद्याश्च निर्यासा असन्नन्ता अबाधिताः ।**
**कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः ॥ १३ ॥**

श्रीवेष्ट आद्यो येषां ते निर्यासा वृक्षद्रवाः पुंसि स्युः । श्रीवेष्टः, सरलः, द्रवः । '**श्रीपिष्टः**' इति क्वचित्पाठः । आद्येन श्रीवासः, वृकधूपः, गुग्गुलुः, सिल्हकः इत्यादयः पुंसि बोध्याः । असन्ता अन्नन्ताश्च पुंसि स्युः । अङ्गिराः, वेधाः । चन्द्रमाः । कृष्णवर्त्मा, प्रतिदिवा, मघवा, । अबाधिताः किम् । अप्सरसः, जलौकसः, सुमनसः, लोम, साम, वर्म । तुश्च रुश्च तुरू । तौ विरामौ विरामे वा येषां ते पुंसि स्युः । कशेर्वादीनि विहाय । हेतुः, सेतुः, धातुः । कुरुः, मेरुः, त्सरुः । 'कशेरुजतुवस्तूनि हित्वा' इति व्यर्थम् । 'अबाधिताः' इत्यस्यान्वयसंभवात् । वस्तुतस्तु 'अबाधिताः' इत्यपि व्यर्थम् । 'विशेषैर्यद्बाधितः' इत्यनेन निर्वाहात् । अत एव दार्वेश्वादिषु निर्वाहः ॥

**कषणभमरोपान्ता यद्यदन्ता अमी अथ ।**
**पथनयसटोपान्ता गोत्राख्याश्चरणाह्वयाः ॥ १४ ॥**

ककारादिद्वादशवर्णोपधा अदन्ताः पुंसि स्युः । अङ्कः, लोकः, अर्कः । माषः, तुषः, रोषः । पाषाणः, गुणः, घुणः । दर्भसरभगर्दभाः । होमः, ग्रामः, धूमः । झर्झरः, शीकरः, समीरः, यूपः, कूपः, सूपः । कलापः । सार्थः, नाथः, शपथः । इनः, अपघनः, जनः । अपनयविनयप्रणयाः रसहासपनसाः पटस(र)ट-करटाः । मुकुटस्तु—पोपान्तादिषु 'अदन्ताः' इति न संबध्यते, अथादित्वात्—इत्याह । गोमायुपाय्वादीनुदाहरति च । गोत्रं वंशं आख्यायते व्यपदिश्यते यैस्ते । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । गोत्रस्यादिपुरुषाः प्रवराश्च पुंसि स्युः । स्वामी तु 'अपत्यप्रत्ययान्ताः' इति व्याख्यत् । तदसत् । 'अपत्यप्रत्ययान्तः' इत्यनेन पुनरुक्तिप्रसङ्गात् । गौतमः, भरद्वाजः, वसिष्ठः । चरणानां वेदशाखानामाह्वया नामानि । कठः, कलापः, बह्वृचः ॥

---

१—एवमिकारान्तत्वानुपपत्त्या चिन्त्यमेतत् । तस्मात् 'सर्वधातुभ्य इन्' (उ० ४।११८) इति बोध्यम् । ततः 'कृदिकारात्' (ग० ४।१।४५) इति वा ङीष् । अत एव 'अथ स्त्रीपुंसयोः केलिर्मणिर्योनिर्मसिर्मुनिः' इति त्रिकाण्डशेषः संगच्छते । २—मूर्धन्योपधोऽपि—। '**मलिनाम्बु मषीमसी**' इति हैमात् । तत्र म्षति हिनस्ति औज्ज्वल्यम् । 'मष हिंसायाम्' (भ्वा० प० से०) इति धातुर्बोध्यः ।

**नाम्न्यकर्तरि भावे च घञजन्नणघाथुचः।**
**ल्युः कर्तरीमनिज्भावे को घोः किः प्रादितोऽन्यतः ॥ १५ ॥**

घञादयः सप्त प्रत्ययाः संज्ञायां विषये, कर्तृभिन्ने कारके, भावे च ये विहिताः तदन्ताः पुंसि स्युः। प्रसीदन्त्यस्मिन्मनांसि प्रासादः। 'हलश्च' (३।३।१२१) इति घञ्। प्रास्यते प्रासः विदन्त्यनेन वेदः, प्रपतन्त्यस्मात्प्रपातः। भावे पाकः, त्यागः, रोगः। चकारात् 'पदरुज–' (३।३।१६) इति घञ्, दायो धायः, इत्यादयोऽसंज्ञायां विहिता अपि गृह्यन्ते। चयः, जयः। 'एरच्' (३।३।५६)। करः, गरः, लवः, स्तवः 'ऋदोरप्' (३।३।५७)। 'यजयाचयत—' (३।३।९०) इति नङ्। यज्ञः, यत्नः। 'नङ्' इत्युपलक्षणम्। 'स्वपो नन्' (३।३।९१) अपि गृह्यते। 'स्वप्नः संवेश इत्यपि' इति वा पुंस्त्वसिद्धिर्बोध्या। न्यादनम्—न्यादः। 'नौ ण च' (३।३।६०) इति णः। 'पुंसि संज्ञायाम्–' (३।३।११८) इति घः। उरश्छदः, प्रच्छदः। 'ट्वितोऽथुच्' (३।३।८९)। श्वयथुः, वेपथुः। 'पंचिनन्दि–' (३।१।१३४) इति नन्द्यादिभ्यो विहितो ल्युः पुंसि स्यात्। नन्दनः, रमणः, मधुसूदनः। संज्ञायामिदम्। असंज्ञायां तु 'कृतः कर्तर्यसंज्ञायाम्' इति सिद्धम्। इमनिजन्ताः पुंसि। 'पृथ्वादिभ्य इमनिज्वा' (५।१।१२२)। प्रथिमा, महिमा। इह 'भावे' इति न संबध्यते। कर्मार्थस्येमनिचोऽसंग्रहापत्तेः। चण्डस्य कर्म भावो वा चण्डिमा, महतः कर्म भावो वा महिमा। स्वामिमुकुटौ तु 'वरिमा' 'तरिमा' इत्यायौणादिकेमनिज्वारणाय 'भावे' इति संबबन्धतुः। तन्न। 'कृतः कर्तर्यसंज्ञायाम्' इत्यनेन तत्र सिद्धत्वात्, प्रीधातोरौणादिकमनिनन्तः प्रेमशब्दः। 'सुपि स्थः' (३।२।४) इति योगविभागाद्भावे कः, 'घञर्थे कः' (वा० ३।३।५८) इति च। आखूत्थः, प्रस्थः। उपसर्गादन्यस्माच्च सुबन्तात् परो यो घुस्तस्माद्विहितो यः किंप्रत्ययस्तदन्तः पुंसि स्यात्। 'उपसर्गे घोः किः' (३।३।९२)। 'कर्मण्यधिकरणे च' (३।३।९४)। निधिः, आधिः, विधिः, उदधिः, जलधिः। अत्र 'प्रादितोऽन्यतः' इति व्यर्थम्। 'घोः किः' इत्यनेनैवेष्टसिद्धेः ॥

**द्वन्द्वेऽश्ववडवावश्ववडवानसमाहृते।**
**कान्तः सूर्येन्दुपर्यायपूर्वोऽयः पूर्वकोऽपि च ॥ १६ ॥**

अश्वश्च वडवा च। 'पूर्ववदश्ववडवौ' (२।४।२७) इति परवल्लिङ्गतापवादः। द्वित्वमविवक्षितम्। तेन 'अश्ववडवान्'। असमाहृते किम्। अश्ववडवम्। 'विभाषा वृक्षमृग–' (२।४।१२) इति चैकवद्भावः। सूर्येन्दुनामपूर्वः कान्तशब्दः पुंसि। सूर्यकान्तः। चन्द्रकान्तः। अयस्कान्तः ॥

१—'नन्दिग्रहिपचादिभ्यः–' (३।१।१३४) इत्येवं सूत्रस्वरूपेऽमौक्तोपन्यासो मनःकल्पित एव ॥

**वटकश्चानुवाकश्च ल्लकश्च कुडङ्गकः।**
**पुङ्खो न्युङ्खः समुद्गश्च विटपट्टघटाः खटः ॥ १७ ॥**

वटति। 'वट वेष्टने' (भ्वा० प० से०)। क्वुन् (उ० २।३२)। माषपिष्टविकारः ॥ (१) ॥*॥ अनु उच्यते। 'वच भाषणे' (अ० प० अ०)। घञ् (३।३।१९)। 'चजोः–' (७।३।५२) इति कुत्वम्। ऋग्यजुःसमूहः ॥ (१) ॥*॥ लल्यते। 'लल ईप्सायाम्' (भ्वा० प० से०)। संपदादिः (वा० ३।३।१०८)। रलयोरेकत्वम्। लक्यते। 'लक आस्वादने' ( ) 'पुंसि संज्ञायाम्–' (३।३।११८) इति घः। रल् चासौ लकश्च। 'पक्ष्मकम्बलम्–' ॥ कुटति। 'कुट कौटिल्ये' (तु० प० से०)। क्विप् (३।२।१७८)। कुट् अङ्गमस्य। 'शेषाद्विभाषा' (५।४।१५४) इति कप्। कुडङ्गको ना छदिः पिटम्' इति बोपालितः। 'वृक्षलतागृहम्' इति स्वामी। 'कुटङ्गकः' इति क्वचित् पाठः। तत्र कुटेः 'इगुपध–' (३।१।१३५) इति के शकन्ध्वादित्वं (वा० ६।१।९४) बोध्यम् ॥ (१) ॥*॥ पुमांसं खनति। पुंसा खन्यते वा। 'खनु अवदारणे' (भ्वा० प० से०)। 'अन्येभ्योऽपि–' (वा० ३।२।१०१)। पुङ्खः काण्डमूलम् ॥ (१) ॥*॥ न्युङ्ख्यते। 'उखि गतौ' (भ्वा०प०से०)। 'पुंसि संज्ञायाम्–'(३।३।११८) इति घः। 'न्युङ्खः सम्यग्ध्वनौ ज्ञे च साम्नः षट्प्रणवेषु च' (इति मेदिनी) ॥*॥ ('न्यूङ्ख' इति) दीर्घपाठे तु पृषोदरादित्वात् (६।३।१०९) 'यज्ञकर्मण्यजपन्यूङ्खसामसु' (१।२।३४) इति निर्देशाद्वा, दीर्घः ॥ (१) ॥*॥ समुद्गम्यते। 'गम्लृ गतौ' (भ्वा० प० अ०)। 'अन्येष्वपि–' (वा० ३।२।४८) इति डः। संपुटकः ॥ (१) ॥*॥ वेटति। 'विट आक्रोशे' (भ्वा० प० से०। 'इगुपध–' (३।१।१३५) इति कः। 'विटोऽद्रौ धवले षिङ्गे मूषिके खदिरेऽपि च' (इति मेदिनी) ॥ (१) ॥*॥ पटति। पट्यते वा। 'पट गतौ' (भ्वा० प० से०)। बाहुलकात्तः। 'पट्टः पेषणपाषाणे व्रणादीनां च बन्धने। चतुष्पथे च राजादिशासनान्तरपीठयोः' (इति मेदिनी) ॥ (१) ॥*॥ तट्यते। 'तट उच्छ्राये' (भ्वा० प० से०)। धन्यते वा। 'धन शब्दे' (भ्वा० प० से०)। 'पुंसि–' (३।३।११८) इति घः। तस्य धः। नस्य टो वा। 'परीक्षार्थतुलायां च घटः सूरिभिरिष्यते' इति विश्वः। 'घटो दिव्यतुलायां स्याद् घटी चीरे च वाससः' (इति मेदिनी) ॥ (१) ॥*॥ खट्यते। 'खट काङ्क्षायाम्' (भ्वा० प० से०)। 'पुंसि–' (३।३।११८) इति घः। 'खटोऽन्धकूपखपयोः प्रहारान्तरटङ्कयोः' (इति मेदिनी) ॥

**कोट्टारघट्टहट्टाश्च पिण्डगोण्डपिचण्डवत्।**
**गडुः करण्डो लगुडो वरण्डश्च किणो घुणः ॥ १८ ॥**

कुट्टयते। 'कुट्ट छेदने' (चु० प० से०) 'प्रतापने' (चु०

आ० से० ) वा । 'बाहुलकादारन् गुणश्च ।' '**कोट्टारो** नागरे कूपे पुष्करिण्याश्च पाटके' इति रभसः ॥ (१) ॥*॥ घट्टयतेऽस्मिन् । 'घट्ट चलने' ( भ्वा० आ० से० ) । 'हलश्च' (३।३।१२१) इति 'घञ्' । 'घाट' इति प्रसिद्धः ॥ (१) ॥*॥ केचित्तु '**कोट**' '**अरघट्ट**' इति छित्त्वा 'कोट्टो दुर्गपुरम् । अरघट्टः कूपभेदः' इति व्याचख्युः । तत्र कुट्टधातोर्घं बाहुलकाद्गुणः । अरैश्चक्रावयवसदृशैः काष्ठविशेषैर्घट्टयते रच्यते—अरघट्टः कूपाज्जलनिःसारणार्थं घटीयन्त्रमित्यन्ये ॥ (१) ॥*॥ हटन्त्यत्र । 'हट दीप्तौ' ( भ्वा० प० से० ) । बाहुलकात्तः । हट्ट आपणः ॥ (१) ॥*॥ पिण्ड्यते, पिण्डते वा । 'पिडि संघाते' ( भ्वा० आ० से० ) । पचाद्यच् (३।१।१३४) । घञ् (३।३।१९) वा । '**पिण्डो** बोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिह्लकयोरपि । ओण्ड्रपुष्पे च पुंसि स्यात्क्लीबमाजीवनायसोः । **पिण्डी** तु पिण्डतगरेऽलाबूखर्जूरभेदयोः' ( इति मेदिनी ) ॥ (१) ॥*॥ गोरण्ड इव । '**गोण्डः** पामरजातौ च वृद्धनाभौ च तद्वति' (इति मेदिनी) ॥ (१) ॥*॥ अपि चण्डते, अनेन, अत्र वा । 'चडि कोपे' ( भ्वा० प० से० ) । 'हलश्च' (३।३।१२१) इति घञ् । 'वष्टि भागुरि–' इत्यपेरल्लोपः । 'शस्ते, **पिचण्ड** उदरे पशोरवयवे पुमान्' (इति मेदिनी) शस्ते देहे ॥ (१) ॥*॥ '–पिचण्डवत् कोट्टारादयः पुंसि' इत्यन्वयः ॥*॥ गडति । गड्यते वा । 'गड सेचने' ( भ्वा० प० से० ) । बाहुलकादुः । '**गडुः** पृष्ठगुडे कुब्जे' इति विश्वः ॥ (१) ॥*॥ क्रियते । 'डुकृञ्' ( त० उ० अ० ) 'अण्डन् कृसृभृवृञः' (उ० १।१२९) '**करण्डो** मधुकोषासिकारण्डवदलाढके' ( इति मेदिनी ) ॥ (१) ॥*॥ लगति । 'लगे सङ्गे' (भ्वा० प० से०) । बाहुलकादुडच् । लगुडो यष्टिः ॥ (१) ॥*॥ वृणोति, व्रियते वा । 'वृञ् वरणे' (स्वा० उ० से०) । अण्डन् (उ– १।१२९) । '**वरण्डो**ऽप्यन्तरावेदौ समूहमुखरोगयोः' (इति मेदिनी) ॥ (१) ॥*॥ कणति । 'कण गतौ' ( भ्वा० प० से० ) । पचाद्यच् (३।१।१३४) । पृषोदरादित्वात् (६।३।१०९) अत इः । किणो मांसग्रन्थिः व्रणजं चिह्नं च ॥ (१) ॥*॥ घोणते । 'घुण भ्रमणे' । ( भ्वा० आ० से० ) । 'इगुपध–' (३।१।२।१३५) इति कः । '**घुणः** स्यात्काष्ठवेधके' इति रत्नकोषः ॥

१—'कोट्टः पुंक्लीबलिङ्गः–' इत्यभिधानचिन्तामणौ हैमः । २—'**प्रकाण्डो** विटपे शस्ते मूलस्कधान्तरे तरोः' '**पिचण्ड**मुदरे विघातपशोरवयवेऽपि च' इति विश्वस्य, '**प्रकाण्डः** स्तम्बशस्तयोः । स्कन्धमूलान्तरे तरोः' '**पिचण्डो**ऽवयवे पशोः । उदरे च' इति हैमस्य च संवादात् 'नानार्थः प्रथमान्तोऽत्र, सर्वत्रादौ प्रकीर्तितः' इति मेदिनीकारप्रतिज्ञाभङ्गभयाच्च 'शस्ते' इत्यस्य प्रकाण्डशब्दार्थत्वेनात्र तस्य व्याख्यानमज्ञानमूलम् ॥

**दृतिसीमन्तहरितो रोमन्थोद्गीथबुद्बुदाः ।**
**कासमर्दोऽर्बुदः कुन्दः फेनस्तूपौ सपूपकौ ॥ १९ ॥**

द्रियते । 'दृङ् आदरे' ( तु० आ० अ० ) । क्तिच् (३।३।१७४) '**दृति**श्चर्मपुटे मत्स्ये ना' (इति मेदिनी) ॥ (१) ॥*॥ सीम्नोऽन्तः । शकन्ध्वादिः (वा० ६।१।९४) केशविन्यासः ॥ (१) ॥*॥ हरति, ह्रियते वा । 'हृञ् हरणे' ( भ्वा० उ० अ० ) 'हृसृरुहि–' (उ० १।९७) इतीतिः '**हरि**द्दिशि स्त्रियां पुंसि हयवर्णविशेषयोः । अस्त्रियां स्यात्तृणे च' (इति मेदिनी) ॥ (१) ॥*॥ रोमस्य मन्थो रोमन्थः । पृषोदरादिः । (६।३।१०९) । पशूनां चर्वितस्य चर्वणम् ॥ (१) ॥*॥ उद्गीयते । 'गै शब्दे' ( भ्वा० प० अ० ) । 'गश्चोदि' (उ० २।१०) इति थक् । यत्तु–'न्युदोः शीङ्गाभ्याम्' इति सूत्रं मुकुटेनोपन्यस्तम् । तदुज्ज्वलदत्ताद्युणादिवृत्तिषु न पश्यामः । '**उद्गीथः** प्रणवः सामवेदध्वनिः' इत्यरुणः ॥ (१) ॥*॥ 'बुद्' इत्यव्यक्तध्वनिं बुन्दति करोति 'उ बुन्दिर् निशामने' ( भ्वा० उ० से० ) । मूलविभुजादित्वात् (वा० ३।२।५) कः । बुद्बुदो जलविकारः ॥ (१) ॥*॥ कासं मृद्नाति । 'मृद क्षोदे' ( क्र्या० प० से० ) । 'कर्मण्यण्' (३।२।१) वेसवारभेदः ॥ (१) ॥*॥ अरं बुन्दति । 'उबुन्दिर्' (भ्वा० प० से०) मूलविभुजादिः (वा० ३।२।५) । पृषोदरादिः (६।३।१०९) । '**अर्बुदो** मांसकीलेऽस्त्री पुरुषे दशकोटिषु । महीधरविशेषे ना' (इति मेदिनी) ॥*॥ '**अर्दनिः**' इति पठित्वा 'अग्निः' इति व्याख्यत् मुकुटः । तत्र 'अर्द गतौ' ( भ्वा० प० से० ) । अनिप्रत्ययः ॥ (१) ॥*॥ स्कुन्दते । 'स्कुदि आप्रवणे' ( भ्वा० आ० से० ) । पचाद्यच् (३।१।१३४) । पृषोदरादिः (६।३।१०९) । '**कुन्दो** माघ्येऽस्त्री, मुकुन्दभ्रमिनिध्यन्तरेषु ना' (इति मेदिनी) ॥ (१) ॥*॥ स्फायते । 'स्फायी वृद्धौ' ( भ्वा० आ० से० ) । 'फेनमीनौ' (उ० ३।३) इति साधुः ॥ (१) ॥*॥ स्तूयते । 'ष्टुञ् स्तुतौ' (अ० उ० अ०) । 'स्तुवो दीर्घश्च' (उ० ३।२५) इति पः । स्तूप्यते वा । 'ष्टूप समुच्छ्राये' ( चु० प० से० ) । घञ् ॥—घृतादिकृतकूटः—इति मुकुटः ॥ (१) ॥*॥ पुनाति, पूयते वा । बाहुलकात्पक् ॥*॥ स्वामी तु '**यूप**' शब्दं पठति । यौति, यूयते वा । 'यु मिश्रणे च' ( अ० प० से० ) 'कुयुभ्यां च' (उ० ३।२७) इति दीर्घः किच्च । स्वार्थे कन् ( ज्ञा० ५।४।५ ) ॥

**आतपः क्षत्रिये नाभिः कणपक्षुरकेदराः ।**
**पूरक्षुरप्रचुक्राश्च गोलहिङ्गुलपुद्गलाः ॥ २० ॥**

आतपति । 'तप संतापे' ( भ्वा० प० अ० ) । पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ कणं पाति पिबति वा । 'आतोऽनुप–' (३।२।३) इति कः । ( प्रासविशेषः ) ॥*॥ क्वचित्

१—'अर्बुदो मांसपरुषि दशकोटिषु न स्त्रियाम्' । इति बहुत्र पाठ आसीत् ॥ २—धातुपाठादिषु तु ह्रस्वोपध एवोपलभ्यते ॥

'कुणपः' इति पाठः । '**कुणपः** पूतिगन्धौ शवेऽपि च' (इति मेदिनी) ॥ (१) ॥*॥ क्षुरति । 'क्षुर विलेखने' ( तु० प० से० ) । 'इगुपध–' (३।१।१३५) इति कः । '**क्षुरः** स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे' (इति मेदिनी) ॥ (१) ॥*॥ के दृणाति । 'दॄ विदारणे' ( क्र्या० प० से० ) । पचाद्यच् (३।१।१३४)। यद्वा के दीर्यते । 'ऋदोरप्' (३।३।५७)। केकरः। संव्यवहारपदार्थश्च । 'तरुभेदः' इत्यन्ये ॥ (१) ॥*॥ पूरयति । 'पूर पूरणे' ( चु० उ० से० ) । पचाद्यच् (३।१।१३४) 'पूरो जलप्रवाहे स्याद्व्रणसंशुद्धिखाद्ययोः' (इति मेदिनी) ॥ (१) ॥*॥ क्षुरं प्राति । क्षुर इव प्राति वा । 'प्रा पूर्तौ' ( अ० प० अ० ) 'आतोऽनुप–' (३।२।३) इति 'सुपि' (३।२।४) इति योगविभागाद्वा कः । मुकुटस्तु '**खुरप्रः**' इति कवर्गद्वितीयादि पठति । बाणभेदः ॥ (१) ॥*॥ चक्यतेऽनेन । 'चक तृप्तौ प्रतिघाते च' ( भ्वा० प० से० ) । 'चकिचम्योरुच्चोपधायाः' ( उ० २।१४ ) इति रक् । '**चुक्रं** वृक्षाम्ले, चाङ्गेर्यां स्त्री, पुंस्यम्लेऽम्लवेतसे' (इति मेदिनी) ॥ (१) ॥*॥ गुड्यते । 'गुड रक्षायाम्' ( तु० प० से० ) । घञ् (३।३।१९)। रलयोरेकत्वम्। '**गोला** गोदावरीसख्योः कुनटीदुर्गयोः स्त्रियाम्। पत्राञ्जने मण्डले चालिञ्जरे बालखेलने । द्वयोर्लक्ष्म्यां, पुमान् कम्पे कम्पयुक्तेऽभिधेयवत्' ( इति मेदिनी ) ॥ (१)॥*॥ हिङ्गु लाति 'आतोऽनुप–'(३।२।३)इति कः।'**हिङ्गुलो** वर्णकद्रव्ये ना भण्टाक्यां तु **हिङ्गुली**' ( इति मेदिनी ) ॥*॥ (हिङ्गुलु इति) उदन्तपाठे तु मितद्र्वादित्वात् (वा० ३।२।१८०) डुः । 'मुकुटस्तु **हिङ्गुलु** स्यात्तु हिङ्गुलम्' इति पठति ॥ (१) ॥*॥ 'पुत्' इति कुत्सायामव्ययम् । पुद्गिलति गीर्यते वा। 'गॄ निगरणे' ( तु० प० से० ) पचाद्यच् (३।१।१३४) । 'ऋदोरप्' (३।३।५७) वा । 'अचि विभाषा' (८।२।२१) इति वा लः । पुत् गलति वा । 'गल अदने' ( भ्वा० प० से० ) 'स्रावे' ( चु० आ० से० ) वा । अच् (३।१।१३४) । '**पुद्गलः** सुन्दराकारे त्रिषु पुंस्यात्मदेहयोः' (इति मेदिनी) ॥

१—यथा 'दशाननक्षिप्तखुरप्रखण्डितः क्वचिद्गतार्धो हिमदीधितिर्यथा' इति हरविलासः—इति च लिखति ॥ २—'चलः कम्पे **चला** श्रियि' इति विश्वसंवादात्, मेदिनीपुस्तकेऽपि '**चला** लक्ष्म्यां पुमान् कम्पे' इति पाठस्यैवोपलभ्यमानत्वाच्च हैमविश्वयोरपि गोलशब्दस्य कम्पाद्यर्थकताया अनुपलम्भेनात्र 'द्वयोः' इति पाठकल्पनं स्वोत्प्रेक्षितत्वेन हेयमेव । तस्मात् '**गोलः** स्यात्सर्ववर्तुले'—इति हैम एव प्रकृतोपयोगी ॥ ३—'वैश्यवर्गे क्लीबलिङ्गमुदन्तमदन्तं च पठ्यते' इत्यादिकम् । हेमचन्द्रोऽपि स्वोपज्ञनाममालाव्याख्यायाम्—वाचस्पतिस्तु 'हिङ्गुलस्त्वस्त्रियाम्' इति क्लीबेऽप्याह—इत्यभिहितवान् ॥

**वेतालमल्लभल्लाश्च पुरोडाशोऽपि पट्टिशः ।**
**कुल्माषो रभसश्चैव सकटाहः पतद्ग्रहः ॥ २१ ॥**

वी वायुरितो गतो यस्मात् स वेतः । वेतमलति । 'अल भूषणादौ' ( भ्वा० प० से० ) । 'कर्मण्यण्' (३।२।१) यद्वा वे वायौ तालः प्रतिष्ठा यस्य । भूताविष्टः शवः ॥ (१) ॥*॥ मल्लते । 'मल्ल धारणे' ( भ्वा० आ० से० ) । पचाद्यच् (३।१।१३४) । मल्यते । घञ् (३।३।१९) '**मल्लः** । पात्रे कपोले च मत्स्यभेदे बलीयसि' ( इति मेदिनी ) ॥ (१) ॥*॥ भल्लते, भल्यते, वा । 'भल्ल परिभाषणहिंसादानेषु' ( भ्वा० आ० से० ) । पचाद्यच् (३।१।१३३) । घञ् (३।३।१९) वा । '**भल्लः** स्यात्पुंसि भल्लके शस्त्रभेदे पुनर्द्वयोः । भल्लातक्यां स्त्रियां **भल्ली**' (इति मेदिनी) ॥ (१) ॥*॥ पुरः प्रथमं दाशन्त्येनम्। 'दाशृ दाने' ( भ्वा० उ० से० ) । कर्मणि घञ् (३।३।१९) । पृषोदरादित्वात् (६।३।१०९) । 'व्रीहेश्च पुरोडाशे' (४।३।१४८ ) इति निर्देशाद्वा दस्य डः । '**पुरोडाशो** हविर्भेदे चमस्यां पिष्टकस्य च । रसे सोमलतायाश्च हुतशेषे च कीर्तितः' इति विश्वः ॥ (१) ॥*॥ '**पट्टी**ः स्त्री पट्टभेदे स्याल्ललाटे कुम्भिकाद्रुमे' (इति मेदिनी) । पट्टिं श्यति । 'शो तनूकरणे' ( दि० प० अ० ) । 'आतोऽनुप–' (३।२।३) इति कः ॥*॥ ('**पट्टिसः**' इति) दन्त्यसान्त इति मुकुटः । अत्र 'षोऽन्तकर्मणि' ( दि० प० अ० ) धातुर्बोध्यः । शस्त्रभेदः ॥ (१) ॥*॥ कोलनम् । 'कुल संस्त्याने बन्धुषु च' ( भ्वा० प० से० ) । संपदादिक्विप् (वा० ३।३।१०८) । कुलं मषति । 'मष हिंसायाम्' ( भ्वा० प० से० ) । 'कर्मण्यण्' (३।२।१) । '**कुल्माषो** यावके प्रोक्तः कुल्माषं काञ्जिकेऽपि च' इति (मूर्धन्यान्ते) विश्वः । '**कुल्माषं** काञ्जिके यावके पुमान्' (इति मूर्धन्यान्ते मेदिनी) ॥*॥—धातुपारायणे ('**कुल्मासः**' इति) दन्त्यान्तः । तत्र मसेः ( दैवादिकात् ) घञ् (३।३।१९) । कुल्मासो माषादिमिश्रमर्धस्विन्नमोदनं 'खिचुडम्' इति ख्यातम्—इति मुकुटः ॥ (१) ॥*॥ रभणम् । रभते अनेन वा । 'रभ राभस्ये' (भ्वा० आ० अ०) । 'अत्यविचमितमि–' (उ० ३।११७) इत्यसच् । '**रभसो** वेगहर्षयोः' इति विश्वः ॥ (१) ॥*॥ कटेनातिशयेनाहन्ते गम्यते । 'हन हिंसागत्योः' (अ०प०अ०) 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । '**कटाहो** घृततैलादिपाकपात्रेऽपि कर्परे । स्तूपे **कटाहः** कूर्मपृष्ठे च महिषीशिशौ' इति विश्वः । '**कटाहः** कूर्मकर्परे । द्वीपस्य च प्रभेदे च तथा स्यान्महिषीशिशौ । तैलादिपाकपात्रे च' ॥ (१) ॥*॥ गृह्णाति । 'ग्रह उपादाने' ( क्र्या० प० से० ) । पचाद्यच् (३।१।१३४) । पततस्ताम्बूलादेर्ग्रहः । '**पीकदान**' इति ख्यातः ॥ (१) ॥*॥

**इति पुंलिङ्गसंग्रहः ॥**

१—'असितोमरकुन्तमहापट्टिस–' इति भट्टिभाषासमावेशात्—इति च ॥

**द्विहीनेऽन्यच्च खारण्यपर्णश्वभ्रहिमोदकम् ।**
**शीतोष्णमांसरुधिरमुखाक्षिद्रविणं बलम् ॥ २२ ॥**

द्वाभ्यां हीने क्लीबे । अधिकारोऽयम् । अन्यदवशिष्टम् । उक्तात्संग्रहाच्छेषः क्लीबे स्यात्, बाधकविषयादन्यः । तत्र कांश्चिद्दर्शयति—खमिति । खनति, खन्यते वा । 'खनु अवदारणे' (भ्वा० प० से०) । 'अन्येभ्योऽपि–' (वा० ३।२।१०१) इति डः । 'खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि । संवेदने देवलोके शर्मण्यपि नपुंसकम्' (इति मेदिनी) ॥ (१) ॥*॥ अर्यते । 'ऋ गतौ' (भ्वा० प० अ०) । 'अर्तेर्निच्च' (उ० ३।१०२) इत्यन्यः ॥ (१) ॥*॥ पर्णयति । 'पर्ण हरितभावे' (चु० ) । पचाद्यच् (३।१।१३४) । 'पर्णं पत्रे पलाशे ना' ॥ (१) ॥*॥ श्वभ्रयति । 'श्वभ्र विलेपे गतौ तङ्के' (?) । पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ हन्ति । 'हन्तेर्हि च' (उ० १।१४७) इति मन् । '**हिमं** तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गः' (इति मेदिनी) ॥ (१) ॥*॥ उनत्ति । 'उन्दी क्लेदने' (रु० प० से०) । क्वुन् (उ० २।३२) । नलोपः (६।४।२४) ॥ (१) ॥*॥ श्यायते स्म । 'श्यैङ् गतौ' (भ्वा० आ० अ०) । 'गत्यर्था–' (३।४।८७) । 'द्रवमूर्तिस्पर्शयोः श्यः' (६।१।३३) इति संप्रसारणम् । '**शीतं** हिमगुणे क्लीबं शीतलालसयोस्त्रिषु । वानीरे बहुवारे ना' (इति मेदिनी) ॥ (१) ॥*॥ ओषति । 'उष दाहे' (भ्वा० प० से०) । 'इण्सिञ् जिदीङुष्यविभ्यो नक्' (उ० ३।२) । '**उष्णो** ग्रीष्मे पुमान्दक्षाशीतयोरन्यलिङ्गकः' (इति मेदिनी) ॥ (१) ॥*॥ मन्यते । 'मन ज्ञाने' (दि० आ० अ०) । 'मनेर्दीर्घश्च' (उ० ३।६४) इति सः । '**मांसं** स्यादामिषे क्लीबं कक्कोलीजटयोः स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ रुणद्धि, रुध्यते वा । 'रुधिर् आवरणे' (रु० उ० अ०) । 'इषिमदिमुदि–' (उ० १।५१) इति किरच् । '**रुधिरो**ऽङ्गारके पुंसि क्लीबं तु कुङ्कुमासृजोः' (इति मेदिनी) ॥ (१) ॥*॥ खन्यते, खनति, वा । 'डित्खनेर्मुट् चोदात्तः' (उ० ५।२०) इत्यजलौ । '**मुखं** निःकरणे वक्त्रे प्रारम्भोपाययोरपि । संध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्' (इति मेदिनी) ॥ (२) ॥*॥ अश्नुते । 'अशूङ् व्याप्तौ, संघाते च' (स्वा० आ० से०) । 'अशेर्नित्' (उ० ३।१५६) इति क्सिः ॥ (१) ॥*॥ 'द्रुदक्षिभ्यामिनन्' (उ० २।५०) '**द्रविणं** न द्वयोर्वृत्ते (वित्ते) काञ्चने च पराक्रमे' इति (मेदिनी) ॥ (१) ॥*॥ वलते । 'वॅल संवरणे' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३४) '**बलं** गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः । पुमान् हलायुधे दैत्यप्रभेदे वायसेऽपि च । बलयुक्तेऽन्यलिङ्गः स्याद्वाट्यालके तु योषिति' (इति मेदिनी) ॥ (१) ॥*॥

**फलहेमशुल्बलोहं सुखदुःखशुभाशुभम् ।**
**जलपुष्पाणि लवणं व्यञ्जनान्यनुलेपनम् ॥ २३ ॥**

फलति । 'फल निष्पत्तौ' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । '**फलं** हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः' (इति हैमः) ॥*॥ क्वचित्तु '**हलम्**' इति पाठः । हलति । 'हल विलेखने' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) ॥ (१) ॥ हिनोति । 'हि गतौ' (भ्वा० प० अ०) । 'सर्वधातुभ्यो मनिन्' (उ० ४।१४५) ॥ (१) ॥*॥ शलति, शल्यते वा । 'शल गतौ' (भ्वा० प० से०) । 'उल्वादयश्च' (उ० ४।९५) इति साधुः । '**शुल्वं** ताम्रे यज्ञकर्मण्याधारे जलसंनिधौ' (इति मेदिनी) ॥ (१) ॥*॥ लोहयति, लुह्यते वा । 'लुह गार्ध्ये' ( ) पचाद्यच् (३।१।१३४) । घञ् (३।३।१९) वा । '**लोहो**ऽस्त्री शस्त्रके लौहे जोङ्गके सर्वतैजसे' (इति मेदिनी) ॥ (१) ॥*॥ सुखयति । दुःखयति 'सुखदुःखतत्क्रियायाम्' (चु० उ० से०) । पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ शोभते । 'शुभ दीप्तौ' (भ्वा० आ० से०) । 'इगुपध–' (३।१।१३५) इति कः ॥ (१) ॥*॥ न शुभम् ॥ १ ॥*॥ जलभवानि पुष्पाणि कुमुदकमलकल्हारोत्पलानि ॥ (१) ॥*॥ लुनाति । 'लूञ् छेदने' (क्र्या० प० से०) । नन्द्यादिल्युः (३।१।१३४) । 'लवणाल्लुक्' (४।४।२४) इति निर्देशाण्णत्वम् । '**लवणं** सैन्धवादौ ना सिन्धुरक्षोभिदो रसे । तद्युक्ते वाच्यलिङ्गः स्यान्नदीभेदद्विषोः स्त्रियाम्' (इति मेदिनी) ॥ (१) ॥*॥ व्यज्यतेऽनेन 'अञ्जू व्यक्त्यादौ' (रु० प० से०) । 'करणाधि–' (३।३।११७) इति ल्युट् । '**व्यञ्जनं** तेमने चिह्ने श्मश्रुण्यवयवेऽह्नि' (मेदिनी) ॥ (१) ॥*॥ अनुलिप्यते अनेन वा । 'लिप उपदेहे' (तु० प० अ०) कर्मणि (३।३।११३) करणे (३।३।११७) वा ल्युट् ॥ (१) ॥*॥ (दुः)खादि सपर्यायं सविशेषं च क्लीबे भवति, इति मुकुटः ॥

**कोट्याः शतादिः संख्यान्या वा लक्षा नियुतं च तत् ।**
**द्व्यच्कमसिसुसन्नन्तं यदनान्तमकर्तरि ॥ २४ ॥**

कोटेर्भिन्ना शतादिका संख्या क्लीबे । शतम् । सहस्रम् । अयुतम् । अर्बुदम् । लक्ष्यते । 'लक्ष दर्शने' (चु० आ० से०) । 'गुरोश्च–' (३।३।१०३) इत्यः । '**लक्षा** न पुंसि संख्यायां क्लीबे व्याजशरव्ययोः' (इति मेदिनी) ॥ (१) ॥*॥ नियूयते स्म । क्तः (३।२।१०२) ॥ (२) ॥*॥ '**शतं सहस्रमयुतं नियुतं** प्रयुतं मतम् । स्त्री **कोटिरर्बुद**मिति क्रमाद्दशगुणोत्तरम्' इति रत्नकोषः ॥*॥ असन्तमिसन्तमुसन्तमन्नन्तं यद्व्यच्कं तत्क्लीबे । यशः, पयः, तेजः । '**तमो** ध्वान्ते गुणे शोके क्लीबं वा ना विधुंतुदे' (इति मेदिनी) । सर्पिः, हविः,

१—मुकुटस्तु पर्यायपरत्वेन व्याचष्टे । क्षीरस्वाम्यपि—खादिसपर्यायविशेषं तृतीये—इत्येव व्याचष्टे ॥ २—अस्यान्तस्थादित्वात् 'बल प्राणने' इत्यस्योपन्यासो योग्यः ॥

१—'तत् लक्षं नियुतशब्दवाच्यमपि' इति मुकुटः ।

शोचिः । वपुः, यजुः, धनुः । चर्म, वर्म । कर्तृवर्जितेऽर्थे यदनान्तं नाम तत् क्लीबे स्यात् । गमनम्, रमणं दानम् । अकर्तरीति किम् । नन्दनः, रमणः ॥

**त्रान्तं सलोपधं शिष्टं, रात्रं प्राक्संख्ययान्वितम् ।**
**पात्राद्यदन्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः ॥ २५ ॥**

त्रशब्दान्तं सकारलकारोपधं च क्लीबं स्यात् । दात्रम्, पात्रम्, वस्त्रम्, विसम्, बुसम्, अन्धतमसम् । कूलम्, मूलम्, शूलम्, तूलम् । शिष्टमवशिष्टम् । 'अबाधितम्' इति यावत् । शिष्टं किम् । पुत्रः, वृत्रः, मन्त्रः । हंसः, कंसः । शालः, कालः, ॥*॥ संख्यापूर्वपदं रात्रान्तं क्लीबम् । त्रिरात्रम्, पञ्चरात्रम् । संख्ययेति किम् । अर्धरात्रः, पूर्वरात्रः ॥*॥ पात्रादिभिरदन्तैरेकार्थो द्विगुः क्लीबे स्यात्, शिष्टप्रयोगात् पञ्चपात्रम्, त्रिभुवनम् । एकार्थः किम् । पञ्चकपालः पुरोडाशः । तद्धितार्थे द्विगुरयम् । लक्ष्यानुसारत इति किम् । त्रिपुरी, पञ्चपूली, त्रिवली ॥

**द्वन्द्वैकत्वाव्ययीभावौ पथः संख्याव्ययात्परः ।**
**षष्ठ्याच्छाया बहूनां चेद्विच्छायं संहतौ सभा ॥२६॥**

एकत्वे द्वन्द्वो द्वन्द्वैकत्वम् । राजदन्तादिः (२।२।३१) । षष्ठीतत्पुरुषे तु, एकत्वस्य प्राधान्यात्तस्यैव लिङ्गान्वयः स्यात्, न तु द्वन्द्वस्य । एकार्थको द्वन्द्वः समाहारद्वन्द्वः, अव्ययीभावश्च क्लीबे स्यात् । पाणिपादम् । अधिहरि ॥*॥ कृतसमासान्तः 'पथिन्'शब्दः क्लीबे ॥ द्विपथम्, त्रिपथम्, विपथम्, कापथम् । संख्याव्ययात्परः किम् । धर्मपथः कृतसमासान्तः किम् । अतिपन्थाः, सुपन्थाः ॥*॥ षष्ठ्यन्तात्परा तत्पुरुषे छाया । क्लीबे, सा चेद्बहूनां संबन्धिनी स्यात् । वीनां छाया । 'छाया बाहुल्ये' (२।४।२२) इति क्लीबत्वम् । बहूनां किम् । कुड्यच्छाया, कुड्यच्छायम् । 'विभाषा सेना-' (२।४।२५) इति क्लीबत्वम् ॥*॥ समूहे वर्तमानो यः सभाशब्दस्तदन्तस्तत्पुरुषः क्लीबे षष्ठ्यन्तात्परा चेत् ॥ स्त्रीसभम् । स्त्रीसंघातः 'अशाला च' (२।४।२४) इति क्लीबत्वम् । संहतौ किम् । धर्मसभा धर्मशाला ॥

१—'कृत्यल्युटो बहुलम्' (३।३।११३) इत्यनान्तानां त्रिलिङ्गत्वं स्मरन्ति । राजभोजनी क्षैरेयी, राजभोजनः शालिः, राजभोजनं भक्तम्, इत्यादि—क्षीरस्वामी । २—अव्ययीभावशब्दस्य पुंलिङ्गत्वेन द्वन्द्वैकत्वस्य नपुंसकत्वेऽपि द्वन्द्वे परवल्लिङ्गत्वस्यैव जायमानत्वेन प्रयोगानुपपत्त्यभावस्य, लक्ष्येषु 'स नपुंसकम्' (२।४।१७) इति नपुंसकत्वस्यैवेष्टत्वेन लक्ष्यासिद्ध्यभावस्य च सत्वेन को दोषः ॥ ३—अत्र नपुंसकत्वफलस्य स्वरभिन्नस्य वक्तुमशक्यत्वेन स्वरभेदस्य त्वयानङ्गीकृतत्वेन चिन्त्यमेतत् । तस्मात् 'अधिस्त्रि' इत्यादिष्वपि 'गोस्त्रियोः' (१।२।४८) इत्यनेन ह्रस्वस्य सिद्धौ 'अधिगोपम्' इत्यादेव फलं वक्तव्यम् ॥

**शालार्थापि परा राजामनुष्यार्थादराजकात् ।**
**दासीसभं नृपसभं रक्षःसभमिमा दिशः ॥ २७ ॥**

शाला गृहमर्थो यस्याः सा सभा राजशब्दवर्जितराजपर्यायात्, अमनुष्यात्—रक्षःपिशाचादिवाचकाच्च षष्ठ्यन्तात्परा तत्पुरुषे क्लीबे स्यात् । अपिना संहत्यर्थो सभा गृह्यते । इनसभम्, प्रभुसभम्, पिशाचसभम् । इमा दिश उदाहरणानि । अराजकात् किम् । राजसभा । राजपर्यायग्रहणान्नेह । चन्द्रगुप्तसभा । राजविशेषोऽयं । षष्ठ्यन्तात् किम् । ईश्वरा सभा=ईश्वरसभा । न सभा—असभा । तत्पुरुषे, इति किम् । ईश्वरस्य सभेव सभा यस्य स ईश्वरसभा । 'सप्तम्युपमानपूर्वस्योत्तरपदलोपश्च' (वा० २।२।२४) इति बहुव्रीहिः ॥

**उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने ।**
**कोपज्ञकोपक्रमादि कन्थोशीनरनामसु ॥ २८ ॥**

उपज्ञा, उपक्रमश्चान्ते यस्य स तत्पुरुषः क्लीबे स्यात्, उपज्ञोपक्रमयोः प्राथम्ये द्योत्ये । उपज्ञायते । 'आतश्चोपसर्गे' (३।३।१०६) इति कर्मण्यङ् । उपक्रम्यते, इति । कर्मणि घञ् (३।३।१९) । कस्य प्रजापतेः, उपज्ञा, उपक्रमश्च । सृष्टिस्तेनादौ ज्ञाता प्रक्रान्ता च ॥*॥ षष्ठ्यन्तात्परा या कन्था तदन्तस्तत्पुरुषः क्लीबे स्यात्, उशीनरदेशस्थसंज्ञासु चेद्वर्तते । सौशमीनां कन्था सौशमिकन्थम्, बाह्लिककन्थम् । 'उशीनर-' इति किम् । दाक्षिकन्था । बाह्लिकेष्वियं संज्ञा । नामसु किम् । वीरणकन्था । कुत्रापि नेयं संज्ञा ॥

**भावे नणकचिद्भ्योऽन्ये समूहे भावकर्मणोः ।**
**अदन्तप्रत्ययाः पुण्यसुदिनाभ्यां त्वहः परः ॥ २९ ॥**

नश्च णश्च कश्च चितः (च इत्येषां ते) च । एभ्योऽन्येऽदन्तप्रत्ययाः कृतो ये भावे विहिताः, तथा समूहेऽर्थे भावकर्मणोर्विहिता येऽकारान्तप्रत्ययास्तद्धिताः, तदन्तं नाम क्लीबे स्यात् । भूतम्, 'नपुंसके भावे क्तः' (३।३।११४) । भवितव्यम्, भवनीयम्, (भव्यम्) । 'तयोरेव-' (३।४।७०) इति भावे तव्यादयः । 'भुवो भावे' (३।१।१०७) क्यप्, ब्रह्मभूयम् । 'अभिविधौ भाव इनुण्' (३।३।४४) । 'अणिनुणः' (५।४।१५) । सांराविणम्, सांकूटिनं वर्तते । नणकेति किम् । 'यजयाच-' (३।३।९०) इति नङ् । यज्ञः, यत्नः, । 'स्वपो नन्' (३।३।९१) । स्वप्नः । 'नौ ण च' (३।३।६०) न्यादः । 'घुपि' (३।२।४) इति 'घञर्थे-' (वा० ३।३।५८) इति च कः । आखूत्थः, विघ्नः । चित् 'एरच्' (३।३।५६) । चयः जयः । 'ण्यासश्रन्थो युच्' (३।३।१०७) । कारणा । यत्तु—'द्वितोऽथुच्' (३।३।८९) । श्वयथुः—इति मुकुट उदाहरत् । तन्न । अदन्तत्वाभावात् ॥*॥ समूहे तद्धिताः । 'भिक्षादिभ्योऽण्' (४।२।३८) । भैक्षम् । 'गोत्रोक्षोष्ट्र-' (४।२।३९) इति वुञ् । औपगवकम् । 'तस्य समूहः' (४।२।३७) ।

काकम् । 'केदाराद्यञ्च' (४।२।४०) । कैदार्यम्, कैदारकम् ॥*॥ भावे—गोलम् । 'इगन्ताच्च–' (५।१।१३१) । मौनम्, मार्दवम् । मनोज्ञादिवुञ् (५।१।१३३) । मानोज्ञकम् । 'स्तेनाद्यन्नलोपश्च' (५।१।१२५) स्तेयम् । 'गुणवचन–' (५।१।१२४) इति ष्यञ् । शौक्ल्यम् ॥*॥ कृतसमासान्तोऽहशब्दः क्लीबे स्यात् । पुण्यं च तदहश्च । 'राजाहःसखिभ्यष्टच्' (५।४।९१) । सुदिनशब्दः प्रशस्तवाची । सुदिनं च तदहश्च । पुण्याहम्, सुदिनाहम् । कृतसमासान्त इति किम् । पुण्यानि अहानि यस्मिन् स पुण्याहा मासः ॥

**क्रियाव्ययानां भेदकान्येकत्वेऽप्युक्थतोटके ।**
**चोचं पिच्छं गृहस्थूलं तिरीटं मर्मयोजने ॥ ३० ॥**

अपिशब्दात् क्लीबे । मृदु पचति । प्रातः कमनीयम् ॥*॥ उच्यते । 'वच भाषणे' (अ० प० अ०) । 'पातॄतुदि–' (उ० २।७) इति थक् ।–'वसिकाशि–' इत्यादिना थक्—इति मुकुटश्चिन्त्यः । तादृशसूत्राभावात् । उक्थं सामविशेषः ॥*॥ तुटति । 'तुट कलहकर्मणि' (तु० प० से०) । ण्वुल् (३।१।१३३) । यत्तु 'कृञादिभ्यो वुन्' (उ० ५।३५) इति मुकुटेनोक्तम् । तन्न । तुटः कुटादित्वेन 'गाङ्कुटादिभ्यः' (१।२।१) इति ङित्त्वाद्गुणाभावप्रसङ्गात् ॥*॥ चोप्यते 'चुप मन्दायां गतौ' (भ्वा० प० से०) ण्यन्तः । घञ् (३।३।१९) यद्वा चञ्चति, चञ्च्यते वा । 'चञ्चु गतौ' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । घञ् (३।३।१९) वा । पृषोदरादिः (६।३।१०९) 'फलावशिष्टं तालफलं च **चोचं** कदल्याः फलं भवेत्' इत्यार्षकोषः ॥*॥ पिच्छयते । 'पिच्छ खण्डने' (चु० प० से०) । घञ् (३।३।१९) । '**पिच्छा** पूगच्छटाकोषमोचाशाल्मलिवेष्टके । भक्तसंभूतमण्डे च पङ्क्तावश्वपदामये । स्त्रियां, पुंसि तु लाङ्गूले न द्वयोर्बर्हचूडयोः' (इति मेदिनी) ॥*॥ '**मुक्तम्**' इति पाठे 'मुच्लृ मोक्षणे' (तु० उ० अ०) । मुच्यते स्म । क्तः (३।२।१०२) ॥ (१) ॥*॥ गृहस्य स्थूणां ॥ (१) ॥*॥ तरति, तीर्यते वा । 'कॄतॄकृषिभ्यः कीटन्' (उ० ४।१८५) । तिरीटं वेष्टनम् । 'शिरोभूषणम्' इत्यन्ये ॥ (१) ॥*॥ म्रियतेऽनेन 'मृङ् प्राणत्यागे' (तु० आ० अ०) । 'सर्वधातुभ्यो मनिन्' (उ० ४।१४५) 'अन्नन्तत्वादेव सिद्धे पुनर्मर्मग्रहणमन्नन्तस्य क्लीबत्वानित्यत्वज्ञापनार्थम्' इति मुकुटः ॥ (१) ॥*॥ युज्यते । 'युजिर् योगे' (रु० उ० अ०) । कर्मणि 'कृत्यल्युटो–' (३।३।११३) इति ल्युट् । '**योजनं** परमात्मनि । चतुष्क्रोश्यां च योगे च' (इति मेदिनी) ॥ (१) ॥*॥

**राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः ।**
**माणिक्यभाष्यसिन्दूरचीरचीवरपञ्जरम् ॥ ३१ ॥**

राज्ञा सोतव्योऽभिषेकद्वारा निष्पादयितव्यः । यद्वा राजा लतात्मकः सोमः सूयतेऽत्र । 'षुञ् अभिषवे' (स्वा० उ० अ०) 'राजसूयसूर्य–' (३।१।११४) इति साधुः ॥ (१) ॥*॥ वाजमन्नं पैष्टी सुरा । पेयमत्र ॥*॥ एतावर्धर्चादी (२।४।३१) ॥ (१) ॥*॥ गद्यते । 'गद व्यक्तायां वाचि' (भ्वा० प० से०) । 'गदमद–' (३।१।१००) इति साधु ॥ (१) ॥*॥ पादाः सन्त्यस्य । 'अन्येभ्योऽपि–' (वा० ५।२।१२०) इति यप् । 'पद्दन्नो–' (६।१।६३) इति पद् । पदः सन्त्यस्येति वा । '**पद्यं** श्लोके पुमाञ्शूद्रे **पद्या** वर्त्मनि कीर्तिता' (इति मेदिनी) । कवेः कृतौ किम् । गद्या वार्ता । पद्यः पङ्कः, पद्यं रजः ॥ (१) ॥*॥ मणिशब्देन कायति जनो यम् । 'कै शब्दे' (भ्वा० प० से०) । 'अन्येभ्योऽपि'–(वा० ३।२।१०१) इति डः । 'मूलविभुजा–' (वा० ३।२।५) इति को वा । मणिके मणिपूराख्ये नगरे भवम् । 'शण्डिकादिभ्यो ञ्यः' (४।३।९२) । चतुर्वर्णादिष्यञ् (वा० ५।१।१२४) वा ॥ (१) ॥*॥ भाष्यते सूत्रार्थो येन । 'भाष व्यक्तायां वाचि' (भ्वा० आ० से०) 'कृत्यल्युटो–' (३।३।११३) इति करणे ण्यत् । 'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः' ॥ (१) ॥*॥ स्यन्दते । 'स्यन्दू प्रस्रवणे' (भ्वा० आ० से०) । 'स्यन्देः संप्रसारणं च' (उ० १।६८) इत्यूरन् । '**सिंदूरस्तरुभेदे** स्यात्सिन्दूरं रक्तवर्णके । **सिन्दूरी** रोचनीरक्तचेलिकाधातकीषु च' (इति मेदिनी) ॥ (१) ॥*॥ चीयते । 'चिञ् चयने' (स्वा० उ० अ०) 'शुसिचिमीनां दीर्घश्च' (उ० २।२५) इति रक् । '**चीरी** झिल्ल्यां नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालिखनभेदयोः' (इति मेदिनी) ॥ (१) ॥*॥ चीयते । 'छित्वरच्छत्वर–' (उ० ३।१) इति साधु । चीवरं मुनिवासः । 'शाक्यभिक्षुप्रावरणम्' इति सुभूतिः ॥ (१) ॥*॥ पिञ्ज्यते । 'पिजि संपर्के' (अ० आ० से०) । बाहुलकादरः । पृषोदरादिः (६।३।१०९) ॥*॥ क्वचित्तु 'पिञ्जरम्' इति पाठः । '**पिञ्जरो**ऽश्वान्तरे क्लीबं स्वर्णे, पीते च वाच्यवत्' (इति मेदिनी) । कायास्थिवृन्दे पक्ष्यादिबन्धनगृहे च ॥ (१) ॥*॥

**लोकायतं हरितालं विदलं स्थालबाह्लवम् ।**

लोके आयतन्ते । 'यती प्रयत्ने' (भ्वा० आ० से०) । पचाद्यच् (३।१।१३४) । चार्वाकाः । तेषामिदं शास्त्रम् । 'तस्येदम्' (४।३।१२०) इत्यण् । संज्ञापूर्वकत्वान्न वृद्धिः ॥ (१) ॥*॥ हरितेनालति । 'अल भूषणादौ' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) । '**हरितालं** धातुभेदे स्त्री दूर्वाकाशरेखयोः' (इति मेदिनी) ॥ (१) ॥*॥ विदलं वंशकृतपात्रभेदः । विदलति 'दल विदारणे' (भ्वा० प० से०) । पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ स्थलत्यत्र । 'ष्ठल स्थितौ' (भ्वा० प० से०) । 'हलश्च' (३।३।१२१) इति घ-

१ 'यावन्मध्यं बहुधापाञ्जरम्नावगाहते' इति दमयन्तीश्लेषादकारवान् ॥

न्। णिजन्तादच् (३।१।१३४) वा। '**स्थालं** भाजनभेदेऽपि **स्थाली** स्यात्पाटलोखयोः' (इति मेदिनी) ॥ (१) ॥*॥ बह्वदेशे भवम्। 'तत्र भवः' (४।३।५३) इत्यण् ॥ (१) ॥*॥

॥ इति क्लीबसंग्रहः ॥

**पुंनपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः ॥ ३२ ॥**

'पुंनपुंकसयोः' इत्यधिकारः। शेष उक्तादन्यः, ऋचोऽर्धम्। 'अर्धं नपुंसकम्' (२।२।२) इति समासः। 'ऋक्पूर्–' (५।४।७४) इत्यः समासान्तः ॥ (१) ॥*॥ पण्यते। 'पण व्यवहारे' (भ्वा० आ० से०)। 'पिनाकादयश्च' (उ० ४।१५) इति साधुः। '**पिण्याकोऽ**स्त्री तिलकल्के हिङ्गुबाह्लीकसिह्लके' (इति मेदिनी) ॥ (१) ॥*॥ कण्टति। 'कटि गतौ' (भ्वा० प० से०)। ण्वुल् (३।१।१३३)। '**कण्टकः** क्षुद्रशत्रौ च कर्मस्थानकदोषयोः। रोमाञ्चे च द्रुमाङ्गे च **कण्टको** मस्करेऽपि च' इति विश्वः। '**कण्टको** न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे। नैयोगिकादिदोषोक्तौ स्याद्रोमाञ्चद्रुमाङ्गयोः' (इति मेदिनी) ॥ (१) ॥*॥

**मोदकस्तण्डकष्टङ्कः शाटकः खर्वटोऽर्बुदः।**
**पातकोद्योगचरकतमालामलका नडः ॥ ३३ ॥**

मोदयते। 'मुद हर्षे' (भ्वा० आ० से०)। ण्वुल् (३।१।१३३)। '**मोदकः** खाद्यभेदेऽस्त्री हर्षके पुनरन्यवत्' (इति मेदिनी) ॥ (१) ॥*॥ तण्डते। 'तडि आघाते' (भ्वा० आ० से०)। ण्वुल् (३।१।१३३)। '**तण्डकः** खञ्जने फेने समासप्रायवाचि च। गृहदारुतरुस्कन्धमायाबहुलकेष्वपि' (इति मेदिनी) ॥*॥ '**दण्डकः**' इत्यपि। दण्ड एव। स्वार्थे कन् (५।४।५) ॥ (१) ॥*॥ टङ्कयति। 'टकि बन्धे' चुरादिः। अच् (३।१।३४)। '**टङ्को** नीलकपित्थे च खनित्रे टङ्कनेऽस्त्रियाम्। जङ्घायां स्त्री पुमान् कोपे कोषासिग्रावदारणे' (इति मेदिनी) ॥ (१) ॥*॥ शटति 'शट गतौ' (भ्वा० प० से०)। ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ खर्वति। 'खर्व दर्पे' (भ्वा० प० से०)। 'शकादिभ्योऽटन्' (उ० ४।८१)। 'यत्रैकतो भवेद्ग्रामो नगरं चैकतः स्मृतम्। मिश्रं तु खर्वटं नाम नदीगिरिसमाश्रयम्' ॥ (१) ॥*॥ अर्वति। 'अर्व हिंसायाम्' (भ्वा० प० से०)। बाहुलकादुदच्। '**अर्बुदो** मांसकीलेऽस्त्री परुषे दशकोटिषु। महीधरविशेषे ना' (इति मेदिनी) ॥ (१) ॥*॥ पातयति 'पल्ल गतौ' (भ्वा० प० से०) ण्यन्तः। ण्वुल् (३।१।१३३) ॥ (१) ॥*॥ उद्योजनम् 'युजिर् योगे' (रु० उ० अ०)। घञ् (३।३।१९) ॥ (१) ॥*॥ चरति। 'चर गतौ' (भ्वा० प० से०)। क्वुन्। (उ० २।३२)। चरकं वैद्यकशास्त्रभेदः ॥*॥ '**वरकम्**' इति पाठे स्यूतवस्त्रम् ॥ (१) ॥*॥ ताम्यति। 'तमु ग्लानौ' (दि० प० से०)। 'तमिविशि–' (उ० १।११८) इति कालन्। '**तमाल**स्तिलके खड्गे तापिच्छे वरणद्रुमे' (इति मेदिनी) ॥ (१) ॥*॥ आमलक्याः फलम्। 'नित्यं वृद्ध'– (४।३।१४४) इति मयट्। तस्य 'फले लुक्' (४।३।१६३) ॥ (१) ॥*॥ नडति। 'नड भ्रंशे' 'चुरादीनां वा णिच्' इति पक्षाश्रये पचाद्यच् (३।१।१३४)। नडोऽन्तरविवरं तृणभेदश्च ॥

**कुष्ठं मुण्डं शीधु बुस्तं क्ष्वेडितं क्षेमकुट्टिमम्।**
**संगमं शतमानार्मशम्बलाव्ययताण्डवम् ॥ ३४ ॥**

कुष्णाति। 'कुष निष्कर्षे' (क्र्या० प० से०)। 'हनिकुषि–' (उ० २।२) इति क्थन्। '**कुष्ठं** रोगे पुष्करेऽस्त्री' (इति मेदिनी) ॥ (१) ॥*॥ मुण्ड्यते 'मुडि खण्डने' (भ्वा० आ० से०)। घञ् (३।३।१९)। मुण्डं शिरः ॥ (१) ॥*॥ शेतेऽनेन। 'शिङो धुग्लक्–' (४।३८) इति धुक् ॥ (१) ॥*॥ 'बुस उत्सर्गे' (दि० प० से०)। बुस्यते स्म। क्तः (३।२।१०२)। बुस्तं[1] मांसशष्कुली, भृष्टमांसम् पनसादिफलासारभागश्च ॥*॥ क्वचित् '**पुस्तम्**' इति पाठः ॥*॥ क्वचित् '**चुस्तम्**' इति पाठः ॥ (१) ॥*॥ क्ष्वेडनम्। क्ष्वेड्यते वा। 'ञिक्ष्वेडा स्नेहनमोक्षणयोः' (दि० प० से०)। 'ञीतः क्तः' (३।२।१८७) ॥ (१) ॥*॥ क्षियति, क्षयति वा। 'क्षि निवासगत्योः' (तु० प० अ०)। 'क्षि क्षये' (भ्वा० प० अ०)। 'अर्तिस्तुसु–' (उ० १।१४१) इति मन्। 'जानीयान्मङ्गलं **क्षेमं क्षेमं** लब्धार्थरक्षणम्' ॥ (१) ॥*॥ कुट्टनम्। 'कुट्ट छेदने' (चु० प० से०)। घञ् (३।३।१८) कुट्टेन निर्वृत्तम्। 'भावप्रत्ययान्तादिमप्' (वा० ४।४।२०)। '**कुट्टिमोऽ**स्त्री निबद्धा भूः' ॥ (१) ॥*॥ संगमनम्। 'ग्रहवृद–' (३।३।५८) इत्यप् ॥ (१) ॥*॥ शतं मानमस्य। रूप्यपलम् ॥ (१) ॥*॥ ऋच्छति। 'ऋ गतौ' (भ्वा० प० से०)। 'अर्तिस्तुसु–' (उ० १।१४१) इति मन्। अर्मम क्षिरोगः ॥ (१) ॥*॥ शम्बत्यनेन। 'शम्ब गतौ' (चु० प० से०)। बाहुलकादलच्। शम्बलं पाथेयम् ॥*॥ ('**सम्बल**' इति) दन्त्यादिपाठे 'षम्ब सर्पणे' (चु० प० से०)। इति बोध्यः ॥ (१) ॥*॥ न व्येति। 'इण् गतौ' (अ० प० अ०) 'एरच्' (३।३।५६)। '**अव्ययोऽ**स्त्री शब्दभेदे ना विष्णौ निर्व्यये त्रिषु' (इति मेदिनी) ॥ (१) ॥*॥ तण्डुना प्रोक्तम्। 'तेन प्रोक्तम्' (४।३।१०१) इत्यण् ॥ (१) ॥*॥

---

१—'तङ्कः' इत्येके। तङ्को भयम्–इति पीयूषव्याख्या ॥

१—दुर्गोक्तलिङ्गानुशासने त्रयं पठ्यते—'पुस्तं बुस्तं वास्तु चुस्तं त्रतं रजतम्' इति—मुकुटः। पुस्तः पवर्गतृतीयादिः। 'बुस्तं दन्त्यौष्ठ्यादि' इत्येके। 'चुस्तं चवर्गादि' इत्यपरे 'पुस्तं पवर्गादि' इति केचित्—इति पीयूषव्याख्या ॥

**कविर्यं कन्दकर्पासं पारावारं युगंधरम् ।**
**यूपं प्रग्रीवपात्रीवे यूषं चमसचिक्कसौ ॥ ३५ ॥**

कवते । 'कुङ् शब्दे' ( भ्वा० प० अ० ) । बाहुलकादियः । 'नार्यां **कवी** खलीनं **कवियं** वा ना तुरंगमुखभाण्डम्' इति बोपालितः ॥ (१) ॥*॥ कन्दिति । 'कदि आह्वाने' (भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । '**कन्दोऽस्त्री** सूरणे सस्यमूले जलधरे पुमान्' ( इति मेदिनी ) ॥*॥ क्वचित् '**कर्म**' इति पाठः ॥ (१) ॥*॥ करोति । क्रियते वा । 'कृञः पासः' ( उ० ५।४५ ) ॥ (१) ॥*॥ पारयति । 'पार कर्मसमाप्तौ' ( चु० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । यद्वा पार्यते समाप्यते कर्मानेन । 'पुंसि–' ( ३।३।११८ ) इति घः ॥ (१) ॥*॥ न वारयति । 'वृञ् वरणे' ( स्वा० उ० से० ) । पचाद्यच् ( ३।१।१३४ ) ॥ (१) ॥*॥ युगं धारयति । 'धृञ् धारणे' चुरादिः । 'संज्ञायां भृतॄ–' ( ३।२।४६ ) इति खच् । 'खचि ह्रस्वः' ( ६।४।९४ ) 'अरुर्द्विषत्–' ( ६।३।६७ ) इति मुम् । कूबरः ॥ (१) ॥*॥ युवन्त्यस्मिन् । 'यु मिश्रणे' ( अ० प० अ० ) । 'कुयुभ्यां च' ( उ० ३।२७ ) इति पो दीर्घश्च ॥ (१) ॥*॥ प्रगता ग्रीवा यस्मिन् । वातायनम्, मुखशाला वा, द्रुमशीर्षं वा ॥ (१) ॥*॥ पात्रीं वाति । कः ( ३।२।३ ) । यज्ञोपकरणपात्रभेदः ॥ (१) ॥*॥ यूषति । 'यूष बन्धे' ( भ्वा० प० से० ) । 'इगुपध–' ( ३।१।१३५ ) इति कः । 'मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः' ॥ (१) ॥*॥ चमन्त्यनेन । 'चमु अदने' ( भ्वा० प० से० ) । 'अत्यविचमि–' ( उ० ३।११७ ) इत्यसच् । चमसं सोमपानपात्रम् । यस्तु– 'अतिचमिरभियुभ्योऽसः–' इति पाठो मुकुटोपन्यस्तः । स तूज्ज्वलदत्तादिवृत्तिषु नास्ति ॥ (१) ॥*॥ चेतत्यनेन । 'चिती संज्ञाने' ( भ्वा० प० से० ) । चितेः कादेशो बाहुलकात्कसप्रत्ययः । चिक्कनम् । चिक्कयति वा । 'चिक्क गतौ' ( चुरादि अच् ) ( ३।१।१३४ ) । चिक्कं स्यति । 'षोऽन्तकर्मणि' ( दि० प० अ० ) । 'आतोऽनुप–' ( ३।२।३ ) इति कः ॥ (१) ॥*॥

**अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् ।**
**तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत् ॥ ३६ ॥**

अर्धर्चादाविति सुगमम् ॥

इति पुंनपुंसकसंग्रहः ॥

**स्त्रीपुंसयोरपत्यान्ता, द्विचतुःषट्पदोरगाः ।**
**जातिभेदाः, पुमाख्याश्च स्त्रीयोगैः सह मल्लकः ॥३७॥**

'स्त्रीपुंसयोः' इत्यधिकारः । अपत्यार्थे विहिता येऽणादयस्तदन्ताः सर्वे स्त्रीपुंसयोः स्युः । औपगवः, औपगवी । गार्ग्यः, गार्गी ॥*॥ द्विपदचतुष्पदषट्पदवाचिनः उरगवाचिनश्च जातिविशेषाः स्त्रीपुंसयोः । मानुषः, मानुषी । विप्रः, विप्रा । शूद्रः, शूद्रा । अजादित्वाट्टाप् ( ४।१।४ )[१] । बकः, बकी । हंसः, हंसी । सिंहः, सिंही । भ्रमरः, भ्रमरी । उरगः, उरगी । 'जातेरस्त्रीविषयात्–' ( ४।१।६३ ) इति ङीष् । अबाधिता इत्येव । मक्षिका, शिवा, लूता ॥*॥ जातिवाचिनः स्त्रीपुंसयोः स्युः । द्रुणः, द्रुणी । मत्स्यः, मत्सी । केचित्तु 'षट्पदादिभिरस्यैकवाक्यतां वदन्ति ॥*॥ पुरुषाख्याः स्त्रीयोगैः सह वर्तमानाः स्त्रीपुंसयोः स्युः । ब्राह्मणः, ब्राह्मणी । शूद्री ॥*॥ मल्लते । 'मल्ल धारणे' ( भ्वा० आ० से० ) । ण्वुल् ( ३।१।१३३ ) । '**मल्लिका** तृणशून्येऽपि मीनमृत्पात्रभेदयोः' ( इति मेदिनी ) ॥ (१) ॥*॥

**मुनिर्वराटकः स्वातिर्वर्णको झाटलिर्मनुः ।**
**मूषा सृपाटी कर्कन्धूर्यष्टिः शाटि कटी कुटी ॥ ३८ ॥**

मन्यते । 'मन ज्ञाने' ( दि० आ० अ० ) । 'मनेरुच्च' ( उ० ४।१२३ ) इतीन् । '**मुनिः** पुंसि वसिष्ठादौ वज्रसेनतरौ जिने' ( इति मेदिनी ) ॥ (१) ॥*॥ वरमटति, 'अट गतौ' ( भ्वा० प० से० ) । कुन् ( उ० २।३२ ) ॥ (१) ॥*॥ शोभनमतति । 'अत सातत्यगमने' ( भ्वा० प० से० ) । 'अज्यतिभ्यां च' ( उ० ४।१३१ ) इतीण् । नक्षत्रभेदः ॥ (१) ॥*॥ वर्णयति । 'वर्ण वर्णक्रियादौ' ( चु० उ० से० ) । 'विलेपने चन्दने च **वर्णकं** पुंनपुंसकम्' इति रभसः । '**वर्णक**श्चारणेऽस्त्री तु चन्दने च विलेपने । द्वयोर्नील्यादिषु स्त्री स्यादुत्कर्षे काञ्चनस्य च' ( इति मेदिनी ) ॥ (१) ॥*॥ झटनम् । 'झट संघाते' ( भ्वा० प० से० ) । घञ् ( ३।३।१९ ) घञ् ( ३।३।१८ ) । झाटं लाति । 'ला दाने' ( अ० प० अ० ) । बाहुलकात् डिः । वृक्षभेदः ॥ (१) ॥*॥ मन्यते । 'मन ज्ञाने' ( दि० आ० अ० ) । 'शृस्वृस्निहि–' ( उ० १।१० ) इत्युः ॥ (१) ॥*॥ मूषति । 'मूष लुण्ठने' ( भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) स्वर्णादिविलेपनभाण्डम् ॥ (१) ॥*॥ सर्पति । 'सृप्लृ गतौ' ( भ्वा० प० से० ) । बाहुलकात् पाटः । परिमाणभेदः । जातित्वात् ( ४।१।६३ ) गौरादित्वात् ( ४।१।४१ ) वा ङीष् ॥ (१) ॥*॥ कर्कं दधाति । 'अन्दूदृम्भू–' (उ० १।९३) इति साधुः ॥ (१) ॥*॥ यक्षते । 'यक्ष पूजायाम्' ( चु० आ० से० ) । क्तिच् ( ३।३।१७४ ) । 'स्कोः संयोगाद्योः' ( ८।२।२९ ) इति कलोपः । ष्टुत्वम् ( ८।४।४१ ) । यद्वा यजतेर्बाहुलकात्तिः । 'व्रश्चभ्रस्ज–' ( ८।२।३६ ) इति षः ॥ (१) ॥*॥ शाठ्यते । 'शट श्लाघायाम्' चुरादिः । घञ् ( ३।३।१९ ) ॥ (१) ॥*॥ कटति । 'कटे वर्षादौ' ( भ्वा० प० से० ) । पचाद्यच् ( ३।१।१३४ ) । जातिलक्षणो ( ४।१।६३ ) ङीष् ॥*॥ यद्वा 'सर्वधातुभ्यः–' ( उ० ४।११८ ) इतीन् । 'कृदिकारात्–' ( वा० ४।१।४५ ) ङीष् ॥ (१) ॥*॥ कुटति 'कुट कौटिल्ये' ( तु० प० से० ) । इन् ( उ० ४।११८ ) । 'कृदिकारात्–' ( ग० ४।१।४५ ) इति

१—'शूद्रा चामहत्पूर्वा जातिः' (वा० ४।१।४) इत्यनेन टाब् बोध्यः ॥

ङीष् ॥*॥ यद्वा 'इगुपध–' ( ३।१।१३५ ) इति कः । 'जातेः–' ( ४।१।६३ ) इति गौरादित्वात् ( ४।१।४१ ) वा ङीष् ॥ (१) ॥*॥

इति स्त्रीपुंससंग्रहः ॥

**स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञ् क्वचिच्च वुञ् ।**
**औचित्यमौचिती मैत्री मैत्र्यं वुञ् प्रागुदाहृतः ॥३९॥**

'स्त्रीनपुंसकयोः' इत्यधिकारः । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' ( ५।१।१२४ ) इति चकाराद्भावे च विहितः ष्यञ् स्त्रीनपुंसकयोः स्यात् । वुञ् च । 'क्वचित्' इति ष्यञ्वुञ्भ्यां संबध्यते । उचितस्य कर्म भावो, वा । 'षिद्गौरा–' ( ४।१।४१ ) इति ङीष् । 'हलस्तद्धितस्य–' ( ६।४।१५० ) इति यलोपः ॥ (१) ॥*॥ एवम्—सामग्र्यम्, सामग्री । आर्हन्त्यम्, आर्हन्ती । 'अर्हतो नुम् च' ( ग० ५।१।१२४ ) इति नुम् ॥*॥ प्राग् द्वितीयकाण्डे । आहोपुरुषिका, शैष्योपाध्यायिका, गार्गिका ॥*॥ क्वचिच्च । मानोज्ञकम्, रामणीयकम् । 'भाव–' इति किम् । चातुर्वर्ण्यम् । स्वार्थे ष्यञ् ( वा० ५।१।१२४ ) न स्त्री ॥

**षष्ठ्यन्तप्राक्पदाः सेनाच्छायाशालासुरानिशाः ।**
**स्याद्वा नृसेनं श्वनिशं गोशालमितरे च दिक् ॥४०॥**

षष्ठ्यन्तात्पराः सेनादयस्तत्पुरुषे स्त्रीनपुंसकयोः स्युः । नृणां सेना=नृसेना । शुनां निशा=श्वनिशम् । गवां शाला=गोशालम् । वृक्षस्य छाया–वृक्षच्छाया । यवानां सुरा–यवसुरा । पक्षे—'विभाषा सेनासुराच्छायाशालानिशानाम्' ( २।४।२५ ) इति क्लीबता । एवमितरेऽपि बोध्याः । दिक् उदाहरणमिदम् ॥

**आबन्नन्तोत्तरपदो द्विगुश्चापुंसि नश्च लुप् ।**
**त्रिखट्वं च त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि ॥ ४१ ॥**

आबन्तोत्तरपदोऽन्नन्तोत्तरपदश्च द्विगुरपुंसि स्त्रीनपुंसकयोः स्यात् । अनो नकारस्य च लुप् लोपः । संपदादित्वात् ( वा० ३।३।१०८ ) भावे क्विप् । यत्तु मुकुटः—'लुक्' इति छन्दोनुरोधात् लोपस्यार्थेऽदर्शने वर्तते—इत्याह । तच्चिन्त्यम् 'लुप्' इति पाठात् । यदपि प्रत्ययादर्शनस्यैव लुक्संज्ञाविधानात्—इति । तदपि न । अत्र यौगिकस्य प्रयोगात्, संज्ञायां ग्रहणे प्रमाणाभावात् । 'लुग्' इति पाठेऽपि नात्र संज्ञाग्रहणम् । 'लुञ्च अपनयने' ( भ्वा० प० से० ) इत्यस्य संपदादि ( वा० ३।३।१०८ ) क्विबन्तस्य ग्रहणात् । तिसृणां खट्वानां समाहारः । 'गोस्त्रियोः' ( २।२।४८ ) इति ह्रस्वे कृते 'द्विगोः' ( ४।१।२१ ) इति ङीप् ॥ (१) ॥*॥ त्रयाणां तक्ष्णां समाहारः । 'अनो नलोपश्च' ( वा० २।४।३० ) इति नलोपः ॥ (१) ॥*॥

इति स्त्रीनपुंसकसंग्रहः ॥

**त्रिषु पात्री पुटी वाटी पेटी कुवलदाडिमौ ।**

'त्रिषु' इत्यधिकारः । पाति । 'पा रक्षणे' ( अ० प० अ० ) । ष्ट्रन् ( उ० ४।१८९ ) । '**पात्र**मत्रे त्रिषु क्लीबं स्रुवादौ राजमन्त्रिणि । नीरद्वयान्तरे योग्ये' ॥ (१) ॥*॥ पुटति । 'पुट संश्लेषणे' ( तु० प० से० ) । 'इगुपध–' ( ३।१।१३५ ) इति कः । गौरादिः ( ४।१।४१ ) ॥ (१) ॥*॥ वाट्यते । 'वट वेष्टने' ( भ्वा० प० से० ) ण्यन्तः । कर्मणि ( ३।३।१९ ) घञ् । '**वाटः** पथि वृतौ **वाटं** वरण्डेऽङ्गान्नभेदयोः । **वाटी** वास्तौ गृहोद्यानेऽकट्योः' इति हैमः । '**वाटो** मार्गवृतिस्थानेष्विरुकटीवास्तुनोः स्त्रियाम्' ( इति मेदिनी ) ॥ (१) ॥*॥ पिट्यते । 'पिट शब्दसंघातयोः' ( भ्वा० प० से० ) । घञ् ( ३।३।१९ ) जातित्वात् ( ४।१।६३ ) गौरादित्वात् ( ४।१।४१ ) वा ङीष् । स्त्रीलिङ्गप्रदर्शनं तु ङ्यन्ततासूचनार्थम् । वेत्रादिरचिता ॥ (१) ॥*॥ कौ वलति । 'वल विस्तृतौ' (     ) । पचाद्यच् ( ३।१।१३४ ) । '**कुवलं** चोत्पले मुक्ताफलेऽपि बदरीफले' ( इति मेदिनी ) । '**कुड्मलो** मुकुले पुंसि न द्वयोर्नरकान्तरे' ( इति मेदिनी ) ॥ (१) ॥*॥ दलनम् । 'दल विदारणे' ( भ्वा० प० से० ) । घञ् ( ३।३।१८ ) । दालेन निर्वृत्तः । 'भावप्रत्ययान्तादिमप्' ( वा० ४।३।२० ) । डलयोरेकत्वम् ॥

इति त्रिलिङ्गसंग्रहः ॥

**परलिङ्गं स्वप्रधाने द्वन्द्वे, तत्पुरुषेऽपि तत् ॥ ४२ ॥**

स्वे समस्यमानाः पदार्थाः प्रधानं यत्र तस्मिन्नितरेतरयोगद्वन्द्वे परपदस्य लिङ्गम् । कुक्कुटमयूर्यौ, मयूरीकुक्कुटौ ॥*॥ तत् परलिङ्गम् । कुलब्राह्मणः, ब्राह्मणकुलम् । अर्धपिप्पली । 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' ( २।४।२६ ) ॥

अस्यापवादमाह—

**अर्थान्ताः प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः ।**
**तद्धितार्थे द्विगुः संख्यासर्वनामतदन्तकाः ॥ ४३ ॥**

अर्थोऽन्ते येषां ते । प्रादि पूर्वं येषां ते परं विशेष्यमुपगच्छन्ति विशेष्यलिङ्गाः । द्विजार्था माला, द्विजार्थः सूपः । द्विजार्थं पयः । 'अर्थेन नित्यसमासः सर्वलिङ्गता च' ( वा० २।१।३६ ) ॥*॥ आचार्यं प्रगतः=प्राचार्यः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' ( वा० २।२।१८ ) इति समासः । खट्वामतिक्रान्ता । पूर्ववत् । यत्तु मुकुटेन 'प्रगत आचार्योऽस्याः' इति विग्रहप्रदर्शनं कृतम् । यच्च 'अतिखट्वः' इत्यत्र 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः' ( वा० २।२।२४ ) इति वार्तिकमुपन्यस्तम् । तच्चिन्त्यम्, उभयोरपि बहुव्रीहिविषयत्वात् । अत्र च तत्पुरुषत्वात् । बहुव्रीहौ तु 'बहुव्रीहिरदिग्नाम्नाम्' इत्यनेन गतार्थत्वाच्च ॥*॥ एवम् प्राप्तजीविकः, आपन्नजीविकः । अलं जीविकायै–अलंजीविकः, अस्मादेव ज्ञापकात्समासः ॥*॥ तद्धितार्थे यो द्विगुः स वाच्यलिङ्गः ।

१—एवं च 'उतो वृद्धिर्लुकि–' ( ७।३।८७ ) इति सूत्रे ककारश्रवणानुपपत्त्या चिन्त्यमेतत् ॥

१—इदं च प्रसङ्गत उपात्तं न तु प्रकृतोपयोगि ॥

पञ्चसु कपालेषु संस्कृतः पञ्चकपालः, पञ्चकपाला । 'संख्यापूर्वो द्विगुः' (२।१।५२) । 'संस्कृतं भक्षाः' (४।२।१६) इत्यण् । 'द्विगोर्लुगनपत्ये' (४।१।८८) इत्यणो लुक् ॥*॥ संख्या सर्वनामानि च संख्यासर्वनामान्ताश्च शब्दा वाच्यलिङ्गाः । एकः, एका, एकम् । द्वौ, द्वे २। त्रयः, तिस्रः, त्रीणि । चत्वारः, चतस्रः, चत्वारि । बहवः, बह्वयः, बहूनि । सर्वः, सर्वा, सर्वम् इत्यादि । ऊनत्रयः, ऊनतिस्रः, ऊनत्रीणि । परमसर्वः, परमसर्वा, परमसर्वम् ॥*॥

**बहुव्रीहिरदिङ्नाम्नामुन्नेयं तदुदाहृतम् ।**
**गुणद्रव्यक्रियायोगोपाधयः परगामिनः ॥ ४४ ॥**

बहुव्रीहिसमासो वाच्यलिङ्गः स्यात् । बहुधनः, बहुधना, बहुधनम् । 'अदिङ्नाम्नाम्' इति किम् । उत्तरपूर्वा । 'दिङ्नामान्यन्तराले' (२।२।२६) इति बहुव्रीहिः ॥*॥ गुणद्रव्यक्रियाणां योग उपाधिर्निमित्तं येषां ते । शुक्ला शाटी, शुक्लः पटः, शुक्लं वस्त्रम् । दण्डी, दण्डिनी, दण्डि । पाचिका, पाचकः, पाचकम् ॥

**कृतः कर्तर्यसंज्ञायां कृत्याः कर्तरि कर्मणि ।**
**अणाद्यन्तास्तेन रक्ताद्यर्थे नानार्थभेदकाः ॥ ४५ ॥**

'कर्तरि कृत्' (३।४।३७) इत्यादिना विहिताः । असंज्ञायां किम् । 'संज्ञायां भृतॄ–' (३।२।४६) इति विहिता वाच्यलिङ्गा न । कर्ता, कर्त्री, कर्तृ । कुम्भकारः, कुम्भकारी, कुम्भकारम् । संज्ञायां धनंजयः ॥*॥ कृत्याः कर्तरि भव्यः, भव्या, भव्यम् । 'भव्यगेय–' (३।४।६८) इति कर्तरि यत् । कर्मणि ण्यत् । कार्यः, कार्या, कार्यम् । कर्तरीत्यादि किम् । भवितव्यम् । असंज्ञायामित्येव । भिद्यो नदः, उध्यः ॥*॥ 'तेन रक्तं रागात्' (४।२।१) इत्याद्यर्थे विहिता ये अणादयस्तदन्ताः शब्दा नानार्थानां भेदका विशेषणानि । नानार्था वा भेदका विशेष्या येषां ते वाच्यलिङ्गाः स्युः । कौङ्कुमं वस्त्रम्, कौङ्कुमी शाटी, कौङ्कुमः पटः । लाक्षिकी शाटी, लाक्षिकं वस्त्रम् । कृत्तिकाभिर्युक्ता कार्तिकी । वसिष्ठेन दृष्टं वासिष्ठं साम, वसिष्ठेन दृष्टो मन्त्रः वासिष्ठः, वासिष्ठी ऋक् । प्रजापतिना प्रोक्तः प्राजापत्यः ॥

**षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम् ।**
**परं विरोधे, शेषं तु ज्ञेयं शिष्टप्रयोगतः ॥ ४६ ॥**

'ष्णान्ता षट्' (१।१।२४) 'डति च' (१।१।२५) इति सूत्राभ्यां कृतषट्संज्ञाः, युष्मदस्मदी, तिङन्तम्, अव्ययानि च त्रिषु लिङ्गेषु समा लिङ्गकृतविशेषाभावात् । 'त्रिषु' इत्यधिकारे 'त्रिषु समाः' इति वचनं लिङ्गसंबन्धाभावेन समानत्वप्रतिपादनार्थम् । पूर्वं हि लिङ्गवत्त्वं प्रतिपादितम् । पञ्च नराः, पञ्च नार्यः, पञ्च फलानि । षट् स्त्रियः, षट् नराः, षट् कुलानि । कति घटाः, कति स्त्रियः, कति गृहाणि । त्वं स्त्री, त्वं पुरुषः, त्वं फलम् । एवम् अहं स्त्री, अहं पुरुषः, अहं फलम् । पुरुषः पचति, स्त्री पचति, कुलं पचति । उच्चैः प्रासादः, उच्चैः शाला, उच्चैर्गृहम् । यत्तु मुकुटः—षट्संज्ञकस्यापि संख्यान्तर्गतत्वादेव त्रिलिङ्गत्वे लब्धे 'संख्यासर्वनामतदन्तकाः' इत्यस्यैवायं प्रपञ्चः–इत्याह । तन्न । डत्यन्तानां संख्यान्तर्गतत्वाभावात् । तेषां संख्याकार्यनिर्वाहाय पाणिनिना स्वशास्त्रे संख्यासंज्ञा विहिता, न तु सकलसाधारण्येन । किं च संख्यासर्वनाम्नां लिङ्गत्रययोगः प्रतिपाद्यते, षट्संज्ञानां तु लिङ्गत्रयराहित्यमतः कथं तेनास्य गतार्थता । 'लिङ्गकृतविशेषरहिताः' इत्यर्थः—इति स्वयमेव व्याख्यातम् । नहीदं संख्यादिषु संभवति, इति कथं गतार्थता ॥*॥ लिङ्गविधायकवचनविरोधे सति परं वचनं ग्राह्यम् । यद्वा 'स्त्रियामीदूद्विरामैकाच्' इत्यस्यावकाशः—धीः, भूः । 'कृतः कर्तर्यसंज्ञायाम्' इत्यस्यावकाशः—कर्ता, पाचकः, । नीः, लूः, इत्यादावुभयप्रसङ्गे परत्वात्त्रिलिङ्गता भवति । मुकुटस्तु—'असुरपर्यायाः पुंस्त्वे' इत्यस्य विषयः—नैरृतः, राक्षसः । 'द्व्यचकमसिसुसन्नन्तं क्लीबे' इत्यस्य विषयः—ओजः, यशः । इहोभयं प्राप्नोति—रक्षः । परत्वात्तु क्लीबम्—इत्युदाजहार । तन्न । 'विशेषैर्यद्यबाधितः' इत्यनेन गतार्थत्वात् । 'असुरपर्यायाः पुंस्त्वे' इत्यस्य 'यातुरक्षसी' इति निर्देशस्यैवापवादत्वात् । उत्सर्गापवादभिन्ने विरोधप्रदर्शनस्यौचित्यात् ॥*॥ शेषमिहानुक्तं शिष्टानां प्रयोगाज्ज्ञातव्यम् यथा—'चालनी तितउः पुमान्' इत्युक्तम् । इह 'तितउ परिपवनं भवति' इति (पस्पशा) भाष्यप्रयोगान्नपुंसकमपि बोध्यम् । तथा 'ताटङ्कस्ते' इत्याचार्यप्रयोगात्ताटङ्कशब्दस्य पुंस्त्वम् । यथा वा 'कलिका कोरकः पुमान्' इतीहोक्तम् । 'कोरकाणि' इति माघप्रयोगान्नपुंसकत्वमपि । यत्तु 'गोधापोटा' इत्युदाहृतवान्मुकुटः, तन्न । 'ड्याबूङन्तम्' इत्युक्तत्वेन शेषत्वाभावात् ॥

इति लिङ्गादिसंग्रहवर्गविवरणम् ॥

**इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।**
**सामान्यकाण्डस्तृतीयः साङ्ग एव समर्थितः ॥**

इति श्री**वघेलवंशोद्भवश्रीमहीधरविषयाधिपश्रीकीर्तिसिंहदेवाज्ञया** श्री**भट्टोजिदीक्षितात्मजश्रीभानुजीदीक्षित**विरचितायाममरटीकायां व्याख्यासुधाख्यायां तृतीयः काण्डः समाप्तिमगात् ॥

**॥ समाप्तश्चायममरकोषः ॥**

॥ श्रीः ॥

## अमरमूलस्थशब्दानामकारादिक्रमेण

# शब्दानुक्रमणिका ।


| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| **अ.** | | |
| अ | ४४६ | ११ |
| अंश | ३३१ | ८९ |
| अंशु | ४२ | ३३ |
| अंशुक | २४२ | ११५ |
| अंशुमती | १६७ | ११५ |
| अंशुमत्फला | १६६ | ११३ |
| अंस | २२९ | ७८ |
| अंसल | २१६ | ४४ |
| अंहति | २५९ | ३० |
| अंहस् | ५१ | २३ |
| | ४०१ | २७ |
| अंह्रि | २२६ | ७१ |
| अकरणि | ३९६ | ३९ |
| अकूपार | ९२ | १ |
| अकृष्णकर्मन् | ३६४ | ४६ |
| अक्ष | १४७ | ५८ |
| | ३१७ | ४३ |
| | ३३० | ८६ |
| | ४३६ | २२२ |
| | ३५२ | ४५ |
| अक्षत | ३१८ | ४७ |
| अक्षदर्शक | २६८ | ५ |
| अक्षदेविन् | ३५१ | ४३ |
| अक्षधूर्त | ३५१ | ४३ |
| अक्षर | ४२८ | १८२ |
| अक्षरचुञ्चु | २७० | १५ |
| अक्षरचण | २७० | १५ |
| अक्षरविन्यास | २७० | १६ |
| अक्षवती | ३५२ | ४४ |
| अक्षाग्रकीलक | २८४ | ५६ |
| अक्षान्ति | ८० | २४ |
| अक्षि | २३५ | ९३ |
| | ४५७ | २२ |
| अक्षिकूटक | २७७ | ३८ |
| अक्षिगत | ३६४ | ४५ |
| अक्षीव | १३८ | ३१ |
| | ३१६ | ४१ |
| अक्षोट | १३७ | २९ |
| अक्षौहिणी | २९० | ८१ |
| अखण्ड | ३७१ | ६५ |
| अखात | १०३ | २७ |
| अखिल | ३७१ | ६५ |
| अग | ४०० | १९ |
| अगद | २१८ | ५० |
| अगदंकार | २२१ | ५७ |
| अगम | १२८ | ५ |
| अगरु | २४८ | १३३ |
| अगस्त्य | ३७ | २० |
| अगाध | ९८ | १५ |
| अगार | ११७ | ५ |
| अगुरु | २४६ | १२६ |
| अगुरुशिंशपा | १४९ | ६२ |
| अग्नायी | २५६ | २१ |
| अग्नि | २२ | ५३ |
| अग्निकण | २४ | ५७ |
| अग्निचित् | २५४ | १२ |
| अग्निज्वाला | १७० | १२४ |
| अग्नित्रय | २५६ | २० |
| अग्निभू | १७ | ३९ |
| अग्निमन्थ | १५० | ६६ |
| अग्निमुखी | १४३ | ४२ |
| अग्निशिख | २४५ | १२४ |
| अग्निशिखा | १६९ | ११८ |
| | १७४ | १३६ |
| अग्न्युत्पात | ४६ | १० |
| | ४०८ | ५८ |
| अग्र | १३ | १२ |
| | ३६८ | ५८ |
| | ४२९ | १८३ |
| अग्रज | ३१६ | ४३ |
| अग्रजन्मन् | २५१ | ४ |
| अग्रतःसर | २८८ | १७२ |
| अग्रतस् | ४४१ | २४६ |
| | ४४५ | ७ |
| अग्रमांस | २२३ | ६४ |
| अग्रिय | ३१६ | ४३ |
| | ३६८ | ५८ |
| अग्रीय | ३६८ | ५८ |
| अग्रेदिधिषू | २१० | २३ |
| अग्रेसर | २८८ | ७२ |
| अग्र्य | ३६८ | ५८ |
| अघ | ५१ | २३ |
| | ४०१ | २७ |
| अघमर्षण | २६४ | ४७ |
| अघ्न्या | ३२४ | ६७ |
| अङ्क | ३५ | १७ |
| | ३९७ | ४ |
| अङ्कुर | १२८ | ४ |
| अङ्कुश | २७९ | ४१ |
| अङ्कोट | १३८ | २९ |
| अङ्क्य | ७३ | ५ |
| अङ्ग | २२६ | ७० |
| | ४४५ | ७ |
| | ४४८ | १९ |
| अङ्गद | २३९ | १०७ |
| अङ्गन | १२० | १३ |
| अङ्गना | ३१ | ५ |
| | २०४ | ३ |
| अङ्गविक्षेप | ७७ | १६ |
| अङ्गसंस्कार | २४४ | १२१ |
| अङ्गहार | ७७ | १६ |
| अङ्गार | ३११ | ३० |
| अङ्गारक | ३९ | २५ |
| अङ्गारधानिका | ३११ | २९ |
| अङ्गारवल्लरी | १४५ | ४८ |
| अङ्गारवल्ली | १५९ | ९० |
| अङ्गारशकटी | ३११ | २९ |
| अङ्गीकार | ५७ | ५ |
| अङ्गीकृत | ३८५ | १०८ |
| अङ्गुलिमुद्रा | २४० | १०८ |
| अङ्गुली | २३१ | ८२ |
| अङ्गुलीयक | २३९ | १०७ |
| अङ्गुष्ठ | २३१ | ८२ |
| अङ्घ्रिपर्णिका | १६० | ९२ |
| अचण्डी | ३२५ | ७० |
| अचल | १२३ | १ |
| अचला | ११० | २ |
| अचिक्कण | ४३७ | २२५ |
| अच्युत | ९ | १९ |
| अच्युताग्रज | ११ | २३ |
| अच्छ | ९८ | १५ |
| अच्छभल्ल | १८७ | ४ |
| अज | ३२७ | ७६ |
| | ४०२ | ३० |
| अजगन्धिका | १७५ | १३९ |
| अजगर | ८८ | ५ |
| अजगव | १५ | ३५ |
| अजडा | १५८ | ८६ |
| अजन्य | २९९ | १०९ |
| अजमोदा | १७७ | १४५ |
| अजशृङ्गी | १६९ | ११९ |
| अजस्र | २७ | ६६ |
| अजा | ३२७ | ७६ |
| अजाजी | ३१४ | ३६ |
| अजाजीव | ३४२ | ११ |
| अजित | ४०७ | ६२ |
| अजिन | २६४ | ४७ |
| अजिनपत्रा | १९६ | २६ |
| अजिनयोनि | १८९ | ८ |
| अजिर | १२० | १३ |
| | ४२८ | १८१ |
| अजिह्म | ३७३ | ७२ |
| अजिह्मग | २९२ | ८६ |
| अज्जुका | ७५ | ११ |
| अज्झटा | १७१ | १२७ |
| अज्ञ | ३६२ | ३८ |
| | ३६५ | ४८ |
| अज्ञान | ५७ | ७ |
| अञ्चित | ३८२ | ९८ |
| अञ्जन | ३१ | ३ |

| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| अञ्जनकेशी | १७२ | १३० |
| अञ्जनावती | ३१ | ५ |
| अञ्जलि | २३२ | ८५ |
| अञ्जसा | ४४६ | १२ |
| | ४४३ | २ |
| अटनी | २९१ | ८४ |
| अटरूष | १६३ | १०३ |
| अटवी | १२७ | १ |
| अटा | २६० | ३५ |
| अट्ट | १२० | १२ |
| | ४१९ | १३१ |
| अट्या | २६० | ३५ |
| अणक | ३६७ | ५४ |
| अणव्य | ३०४ | ८ |
| अणि | २८४ | ५६ |
| अणिमन् | १६ | ३६ |
| अणीयस् | ३७० | ६२ |
| अणु | ३०८ | २० |
| | ३६९ | ६२ |
| अण्ड | २०० | ३७ |
| अण्डकोश | २२८ | ७६ |
| अण्डज | ९९ | १७ |
| | ९८ | ३३ |
| | ३६६ | ५१ |
| अतट | १२५ | ४ |
| अतर्कित | ४४५ | ७ |
| अतलस्पर्श | ९८ | १५ |
| अतसी | ३०८ | २० |
| अति | ४४४ | ५ |
| | ४४० | २४१ |
| अतिक्रम | ३९५ | ३३ |
| | ४२३ | १५० |
| अतिचरा | १७७ | १४६ |
| अतिच्छत्र | १८५ | १६७ |
| अतिच्छत्रा | १७९ | १५२ |
| अतिजव | २८८ | ७३ |
| अतिथि | २६० | ३४ |
| अतिनिर्हारिन् | ५८ | १० |
| अतिनु | ९८ | १४ |
| अतिपथिन् | ११५ | १६ |
| अतिपात | २६१ | ३७ |
| | ३९५ | ३३ |
| अतिप्रसिद्ध | ४३५ | २१८ |

| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| अतिमात्र | २७ | ६६ |
| अतिमुक्त | १४५ | ७२ |
| अतिमुक्तक | १३७ | २६ |
| अतिरिक्त | ३७४ | ७५ |
| अतिवक्तृ | ३६२ | ३५ |
| अतिवाद | ६८ | १४ |
| अति विषा | १६२ | ९९ |
| अतिवेल | २७ | ६६ |
| अतिशक्तिता | २९८ | १०२ |
| अतिशय | २७ | ६६ |
| | ३९० | ११ |
| अतिशस्त | ४०४ | ४१ |
| अतिशोभन | ३६९ | ५८ |
| अतिसंस्कृत | ४११ | ८१ |
| अतिसर्जन | ३९४ | २८ |
| अतिसारकिन् | २२१ | ५९ |
| अतिसौरभ | १३९ | ३३ |
| अतीक्ष्ण | ४१३ | ९४ |
| अतीत | ४४८ | १७ |
| अतीतनौक | ९८ | १४ |
| अतीन्द्रिय | ३७५ | ७९ |
| अतीव | ४४२ | २ |
| अत्तिका | ७६ | १५ |
| अत्यन्तकोपन | ३६१ | ३२ |
| अत्यन्तीन | २८९ | ७६ |
| अत्यय | ३०० | ११६ |
| | ४२३ | १५० |
| अत्यर्थ | २७ | ६६ |
| अत्यल्प | ३७० | ६२ |
| अत्याहित | ४१० | ७७ |
| अत्रि | ४० | २७ |
| अथ | ४४१ | २४७ |
| अथो | ४४१ | २४७ |
| अदभ्र | ३७० | ६३ |
| अदर्शन | ३९३ | २२ |
| अदितिनन्दन | ५ | ८ |
| अदृश् | २२२ | ६१ |
| अदृष्ट | २७५ | ३० |
| अदृष्टि | ८६ | ३७ |
| अद्धा | ४४६ | १२ |
| अद्भुत | ७८ | १७ |
| | ७७ | १९ |

| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| अद्मर | ३५८ | २० |
| अद्य | ४४८ | २० |
| अद्रि | १२३ | १ |
| | ४२५ | १६३ |
| अद्वयवादिन् | ७ | १४ |
| अधम | ४२२ | १४४ |
| | ३६७ | ५४ |
| अधमर्ण | ३०३ | ५ |
| अधर | २३३ | ९० |
| | ४३० | १८९ |
| अधस् | ८६ | १ |
| अधिकर्धि | ३५६ | ११ |
| अधिकाङ्ग | २८६ | ६३ |
| अधिकार | २७५ | ३१ |
| अधिकृत | २६८ | ६ |
| अधिक्षिप्त | ३६३ | ४२ |
| अधित्यका | १२७ | ७ |
| अधिप | ३५५ | ११ |
| अधिभू | ३५५ | ११ |
| अधिरोहिणी | १२३ | १८ |
| अधिवासन | २४८ | १३४ |
| अधिविन्ना | २०५ | ७ |
| अधिश्रयणी | ३११ | २९ |
| अधिष्ठान | ४१८ | १२६ |
| अधीन | ३५७ | १६ |
| अधीर | ३५९ | २६ |
| अधीश्वर | २६७ | २ |
| अधुना | ४४९ | २३ |
| अधृष्ट | ३५९ | २६ |
| अधोंशुक | २४३ | ११७ |
| अधोक्षज | ९ | २१ |
| अधोभुवन | ८६ | १ |
| अधोमुख | ३६१ | ३३ |
| अध्यक्ष | २६८ | ६ |
| | ४३७ | २२५ |
| अध्यवसाय | ८२ | २९ |
| अध्यात्म | ४२१ | १४४ |
| आध्यपक | २५२ | ७ |
| अध्याहार | ५६ | ३ |
| अध्यूढा | २०५ | ७ |
| अध्येषणा | २६० | ३२ |
| अध्वग | २७१ | १७ |

| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| अध्वनीन | २७१ | १७ |
| अध्वन् | ११४ | १६ |
| अध्वन्य | २७१ | १७ |
| अध्वर | २५४ | १३ |
| अध्वर्यु | २५५ | १७ |
| अनक्षर | ७० | २१ |
| अनङ्ग | १२ | २५ |
| अनच्छ | ९८ | १४ |
| अनडुह् | ३२२ | ६० |
| अनन्त | २९ | १ |
| | ८८ | ४ |
| | ४११ | ८१ |
| अनन्ता | ११० | २ |
| | १५९ | ९२ |
| | १६६ | ११२ |
| | १७४ | १३६ |
| | १८२ | १५८ |
| अनन्यज | १२ | २६ |
| अनन्यवृत्ति | ३७५ | ६९ |
| अनय | ४२२ | १४९ |
| अनर्थक | ६९ | २० |
| अनल | २२ | ५४ |
| अनवधानता | ८२ | ३० |
| अनवरत | २७ | ६६ |
| अनवस्कर | ३६८ | ५६ |
| अनवराध्यं | ३६८ | ५७ |
| अनस् | २८३ | ५२ |
| अनागतार्तवा | २०६ | ८ |
| अनातप | ४२४ | १५७ |
| अनादर | ७९ | २२ |
| अनामय | २१८ | ५० |
| अनामिका | २३१ | ८२ |
| अनायासकृत | ३८० | ९४ |
| अनारत | २७ | ६५ |
| अनार्यतिक्त | १७६ | १४३ |
| अनाहत | २४१ | ११२ |
| अनिमिष | ४३५ | २१८ |
| अनिरुद्ध | १२ | २७ |
| अनिल | ६ | १० |
| | २५ | ६२ |
| अनिश | २७ | ६५ |
| अनीक | २८९ | ७८ |
| | २९८ | १०४ |

| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| अनीकस्थ | २६८ | ६ |
| अनीकिनी | २८९ | ७८ |
| | २९० | ८१ |
| अनु | ४४१ | २४८ |
| अनुक | ३५९ | २३ |
| अनुकम्पा | ७८ | १८ |
| अनुकर्ष | २८४ | ५७ |
| अनुकल्प | २६२ | ४० |
| अनुकामीन | २८९ | ७६ |
| अनुकार | ३९१ | १७ |
| अनुक्रम | २६१ | ३६ |
| अनुक्रोश | ७८ | १८ |
| अनुग | ३७५ | ७८ |
| अनुग्रह | ३९० | १३ |
| अनुचर | २८८ | ७१ |
| अनुज | २१६ | ४३ |
| अनुजीविन् | २६९ | ९ |
| अनुतर्षण | ३५१ | ४३ |
| अनुताप | ८० | २५ |
| अनुत्तम | ३६८ | ५७ |
| अनुत्तर | ४३० | १९० |
| अनुनय | ४४८ | १८ |
| अनुपद | ३७५ | ७८ |
| अनुपदीना | ३४७ | ३० |
| अनुपमा | ३१ | ४ |
| अनुप्लव | २८८ | ७१ |
| अनुबन्ध | ४१४ | ९८ |
| अनुबोध | २४४ | १२२ |
| अनुभव | ३९४ | २७ |
| अनुभाव | ७९ | २१ |
| | ४३४ | २०९ |
| अनुमति | ४६ | ८ |
| अनुयोग | ६७ | १० |
| अनुरोध | २७० | १२ |
| अनुलाप | ६८ | १६ |
| अनुलेपन | ४५७ | २३ |
| अनुवर्तन | २७० | १२ |
| अनुवाक | ४५४ | १७ |
| अनुशय | ४२२ | १४८ |
| अनुष्ण | ३४४ | १८ |
| अनुहार | ३९१ | १७ |

| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| अनूक | ३९९ | १३ |
| अनूचान | २५३ | १० |
| अनूनक | ३७१ | ६५ |
| अनूप | ११३ | १० |
| अनूरु | ४२ | ३२ |
| अनृजु | ३६५ | ४६ |
| अनृत | ७० | २१ |
| | ३०३ | २ |
| अनेकप | २७६ | ३४ |
| अनेहस् | ४३ | १ |
| अनोकह | १२८ | ५ |
| अन्त | ३०१ | ११६ |
| | ३७६ | ८१ |
| अन्तःपुर | १२० | ११ |
| अन्तक | २४ | ५९ |
| अन्तर | ४२९ | १८७ |
| अन्तरा | ४४६ | १० |
| अन्तराभवसत्व | ४१९ | १३३ |
| अन्तराय | ३९२ | १९ |
| अन्तराल | ३१ | ६ |
| अन्तरिक्ष | २९ | १ |
| अन्तरीप | ९६ | ८ |
| अन्तरीय | २४३ | ११७ |
| अन्तरे | ४४६ | १० |
| अन्तरेण | ४४६ | १० |
| | ४४४ | ३ |
| अन्तर्गत | ३७८ | ८६ |
| अन्तर्धा | ३४ | १२ |
| अन्तर्धि | ३४ | १२ |
| अन्तर्द्वार | १२१ | १४ |
| अन्तर्मनस् | ३५४ | ८ |
| अन्तर्वत्नी | २१० | २२ |
| अन्तर्वाणि | ३५४ | ६ |
| अन्तर्वंशिक | २६८ | ८ |
| अन्तावसायिन् | ३४० | १० |
| अन्तिक | ३७१ | ६७ |
| अन्तिकतम | ३७२ | ६८ |
| अन्तिका | ३११ | २९ |
| अन्तेवासिन् | २५३ | ११ |
| | ३४४ | २० |
| अन्त्य | ३७६ | ८१ |
| अन्त्र | २२४ | ६६ |

| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| अन्दुक | २७८ | ४१ |
| अन्ध | २२२ | ६१ |
| | ४१५ | १०३ |
| अन्धकरिपु | १३ | ३४ |
| अन्धकार | ८७ | ३ |
| अन्धतमस | ८७ | ३ |
| अन्धस् | ३१९ | ४८ |
| अन्धु | १०३ | २६ |
| अन्न | ३१९ | ४८ |
| | ३८५ | १११ |
| अन्य | ३७६ | ८२ |
| अन्यतर | ३७६ | ८२ |
| अन्वक्ष | ३७५ | ७८ |
| अन्वक् | ३७५ | ७८ |
| अन्वय | २५० | १ |
| अन्ववाय | २५० | १ |
| अन्वाहार्य | २५९ | ३१ |
| अन्विष्ट | ३८४ | १०५ |
| अन्वेषणा | २६० | ३२ |
| अन्वेषित | ३८४ | १०५ |
| अप् (आप) | ९३ | ३ |
| अपकारगी | ६८ | १४ |
| अपक्रम | ३०० | १११ |
| अपघन | २२६ | ७० |
| अपचय | ३९१ | १६ |
| अपचायित | ३८३ | १०१ |
| अपचित | ३८३ | १०१ |
| अपचिति | २६० | ३५ |
| | ४०८ | ६७ |
| अपटान्तर | ३७२ | ६८ |
| अपटु | २२१ | ५८ |
| अपत्य | २११ | २८ |
| अपत्रपा | ७९ | २३ |
| अपत्रपिष्णु | ३६० | २८ |
| अपथ | ११५ | १७ |
| अपथिन् | ११५ | १७ |
| अपदान्तर | ३७२ | ६८ |
| अपदिश | ३१ | ५ |
| अपदेश | ८४ | ३३ |
| | ४३५ | २१६ |
| अपध्वस्त | ३६३ | ३९ |
| अपभ्रंश | ६३ | २ |
| अपयान | ३०० | १११ |

| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| अपरक्त | ३६४ | ४३ |
| अपरस्पर | ३८६ | १ |
| अपराजिता | १६३ | १०४ |
| | १७८ | १४९ |
| अपराद्धपृषत्क | २८७ | ६८ |
| अपराध | २४० | २६ |
| अपराह्ण | ४४ | ३ |
| अपर्णा | १६ | ३७ |
| अपलाप | ६८ | १७ |
| अपवर्ग | ५७ | ७ |
| अपवर्जन | २५९ | ३० |
| अपवाद | ६७ | १३ |
| | ४१२ | ८९ |
| अपवारण | ३४ | १२ |
| | ४१८ | १२५ |
| अपशब्द | ६३ | २ |
| अपष्ठु | ३७७ | ८४ |
| अपसद | ३४३ | १६ |
| अपसर्प | २७० | १३ |
| अपसव्य | ३७७ | ८४ |
| अपस्कर | २८३ | ५५ |
| अपस्नात | ३५८ | १९ |
| अपहार | ३९१ | १६ |
| अपांपति | ९२ | २ |
| अपाङ्ग | २३५ | ९४ |
| | ४०० | २१ |
| अपाची | ३० | १ |
| अपान | २६ | ६३ |
| | २२७ | ७३ |
| अपामार्ग | १५८ | ८८ |
| अपावृत | ३५७ | १५ |
| अपासन | ३०० | ११३ |
| अपि | ४४१ | २४९ |
| अपिधान | ३४ | १३ |
| अपिनद्ध | २८६ | ६५ |
| अपूप | ३१९ | ४८ |
| अप्पति | २५ | ६१ |
| अप्पित्त | २२ | ५६ |
| अप्रकाण्ड | १३० | ९ |
| अप्रगुण | ३७३ | ७२ |
| अप्रत्यक्ष | ३७५ | ७९ |
| अप्रधान | ३६९ | ६० |
| अप्रहत | ११२ | ५ |

| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| अप्राप्य | ३६९ | ६० |
| अप्सरस् | ६ | ११ |
| | २२ | ५२ |
| अफल | १२९ | ७ |
| अबद्ध | ६९ | २० |
| अबद्धमुख | ३६२ | ३६ |
| अवन्ध्य | १२९ | ६ |
| अवला | २०३ | २ |
| अवाध | ३७७ | ८३ |
| अब्ज | ३४ | १४ |
| | ४०२ | ३२ |
| अब्जयोनि | ८ | १७ |
| अब्द | ५० | २० |
| | ४१२ | ८८ |
| | ४२२ | १४६ |
| अब्धि | ९२ | १ |
| | ४१४ | १०१ |
| अब्धिकफ | ३३७ | १०५ |
| अभ्रमु | ३१ | ४ |
| अब्रह्मण्य | ७६ | १४ |
| अभय | १८४ | १६४ |
| अभया | १४८ | ५९ |
| अभाषण | २६१ | ३६ |
| अभिक | ३५९ | २४ |
| अभिक्रम | २९६ | ९६ |
| अभिख्या | ४२४ | १५६ |
| अभिग्रह | ३९१ | १३ |
| अभिग्रहण | ३९१ | १७ |
| अभिघातिन् | २६९ | ११ |
| अभिचार | ३९२ | १९ |
| अभिजन | २५० | १ |
| | ४१५ | १०८ |
| अभिजात | ४११ | ८२ |
| अभिज्ञ | ३५३ | ४ |
| अभितस् | ३७१ | ६७ |
| | ४४२ | २५५ |
| अभिधान | ६६ | ८ |
| अभिध्या | ८० | २४ |
| अभिनय | ७७ | १६ |
| अभिनव | ३७५ | ७७ |
| अभिनवोद्भिद | १२८ | ४ |
| अभिनिर्मुक्त | २६६ | ५५ |

| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| अभिनिर्याण | २९६ | ९५ |
| अभिनीत | २७३ | २४ |
| | ४११ | ८१ |
| अभिपन्न | ४१८ | १२८ |
| अभिप्राय | ३९२ | २० |
| अभिभूत | ३६३ | ४० |
| अभिमर | ४३४ | २१४ |
| अभिमान | ७९ | २२ |
| | ४१६ | ११० |
| अभियोग | ३९१ | १३ |
| अभिरूप | ४१९ | १३१ |
| अभिलाव | ३९३ | २४ |
| अभिलाष | ८१ | २८ |
| अभिलाषुक | ३५८ | २२ |
| अभिवादक | ३६० | २८ |
| अभिवादन | २६२ | ४१ |
| अभिव्याप्ति | ३८८ | ६ |
| अभिशस्त | ३६४ | ४३ |
| अभिशस्ति | २६० | ३२ |
| अभिशाप | ६७ | ११ |
| अभिषङ्ग | ४०१ | २४ |
| अभिषव | २६४ | ४७ |
| | ३५१ | ४२ |
| अभिषेणन | २९५ | ९५ |
| अभिष्टुत | ३८५ | ११० |
| अभिसंपात | २९८ | १०५ |
| अभिसर | २८८ | ७१ |
| अभिसारिका | २०५ | १० |
| अभिहार | ३९१ | १७ |
| | ४२६ | १६८ |
| अभिहित | ३८४ | १०७ |
| अभीक | ३५९ | २४ |
| अभीक्ष्णम् | ४४३ | १ |
| | ४४६ | ११ |
| अभीप्सित | ३६७ | ५३ |
| | ३८५ | ११२ |
| अभीरु | १६२ | १०० |
| अभीरुपत्री | १६२ | १०१ |
| अभीषङ्ग | ३८७ | ६ |
| अभीषु | ४३६ | २१९ |
| अभीष्ट | ३६७ | ७३ |
| अभ्यग्र | ३७१ | ६७ |

| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| अभ्यन्तर | ३१ | ६ |
| अभ्यमित | २२१ | ५८ |
| अभ्यमित्रीण | २८९ | ७५ |
| अभ्यमित्रीय | २८९ | ७५ |
| अभ्यमित्र्य | २८९ | ७५ |
| अभ्यर्ण | ३७१ | ५७ |
| अभ्यर्हित | ४११ | ८३ |
| अभ्यवकर्षण | ३९१ | १७ |
| अभ्यवस्कन्दन | ३०० | ११० |
| अभ्यवहृत | ३८५ | १११ |
| अभ्याख्यान | ६७ | १० |
| अभ्यागम | २९८ | १०५ |
| अभ्यागारिक | ३५६ | १२ |
| अभ्यादान | ३९४ | २६ |
| अभ्यान्त | २२१ | ५८ |
| अभ्यामर्द | २९८ | १०५ |
| अभ्याश | ३७१ | ६७ |
| अभ्यासादन | ३०० | ११० |
| अभ्युदित | २६६ | ५५ |
| अभ्युपगम | ५७ | ५ |
| अभ्युपपत्ति | ३९० | १३ |
| अभ्यूष | ३१८ | ४७ |
| अभ्र | २९ | १ |
| | ३२ | ६ |
| अभ्रक | ३३५ | १०० |
| अभ्रपुष्प | १३८ | ३० |
| अभ्रमातङ्ग | २० | ४६ |
| अभ्रमु | ३१ | ४ |
| अभ्रमुवल्लभ | २० | ४६ |
| अभ्रि | ९७ | १३ |
| अभ्रिय | ३२ | ८ |
| अभ्रेष | २७३ | २४ |
| अमत्र | ३१३ | ३३ |
| अमर | ५ | ७ |
| अमरावती | १९ | ४५ |
| अमर्त्य | ५ | ८ |
| अमर्ष | ८० | २६ |
| अमर्षण | ३६१ | ३२ |
| अमल | ३३५ | १०० |
| अमा | ४४२ | २५० |
| अमांस | २१६ | ४४ |
| अमात्य | २६७ | ४ |

| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| अमावस्या | ४६ | ८ |
| अमावास्या | ४६ | ८ |
| अमित्र | २६९ | ११ |
| अमुत्र | ४४५ | ८ |
| अमृणाल | १८४ | १६४ |
| अमृत | २१ | ४८ |
| | ५७ | ६ |
| | ९३ | ३ |
| | २५९ | २८ |
| | ७० | २२ |
| | ३०३ | ३ |
| | ४१० | ७६ |
| अमृता | १४७ | ५८ |
| | १४८ | ५९ |
| | १५६ | ८२ |
| अमृतान्धस् | ५ | ८ |
| अमोघा | १४६ | ५४ |
| | १६४ | १०६ |
| अम्बर | २९ | १ |
| | ४८१ | १८१ |
| अम्बरीष | ३१२ | ३० |
| अम्बष्ठ | ३३९ | २ |
| अम्बष्ठा | १५२ | ७१ |
| | १५७ | ८४ |
| | १७५ | १४० |
| अम्बा | ७६ | १४ |
| अम्बिका | १६ | ३७ |
| अम्बु | ९३ | ४ |
| अम्बुकण | ३३ | ११ |
| अम्बुज | १४९ | ६१ |
| अम्बुभृत् | ३२ | ७ |
| अम्बुवेतस | १३८ | ३० |
| अम्बुसरण | ९७ | ११ |
| अम्बूकृत | ६९ | २० |
| अम्भस् | ९३ | ४ |
| अम्भोरुह | १०७ | ४१ |
| अम्मय | ९४ | ५ |
| अम्ल | ५८ | ९ |
| अम्ललोणिका | १७५ | १४० |
| अम्लवेतस | १७६ | १४१ |
| अम्लान | १५३ | ७३ |
| अम्लिका | १४३ | ४३ |
| अय | ५३ | २७ |
| अयन | ४८ | १३ |
| | ११५ | १५ |

| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| अयस् | ३३४ | ९८ |
| अयःप्रतिमा | ३४९ | ३५ |
| अयि | ४४८ | १८ |
| अयोग्र | ३१० | २५ |
| अयोघन | ४०३ | ३७ |
| अर | २७ | ६४ |
| अरघट्ट | ४५४ | १८ |
| अरणि | २५६ | १९ |
| अरण्य | १२७ | १ |
| | ४५७ | २२ |
| अरण्यानी | १२७ | १ |
| अरत्नि | २३२ | ८६ |
| अरर | १२२ | १७ |
| अरलु | १४७ | ५७ |
| अरविन्द | १०७ | ३९ |
| अराति | २६९ | ११ |
| अराल | ३७२ | ७१ |
| अरि | २६९ | १० |
| अरित्र | ९७ | १३ |
| अरिमेद | १४५ | ५० |
| अरिष्ट | ११९ | ८ |
| | १३८ | ३१ |
| | १४९ | ६२ |
| | १७८ | १४८ |
| | १९४ | २० |
| | ४०३ | ३६ |
| | ३२१ | ५३ |
| | ४०३ | ३६ |
| अरिष्टदुष्टधी | ३६४ | ४४ |
| अरुण | ४० | २९ |
| | ४२ | ३२ |
| | ६१ | १५ |
| | ४०५ | ४८ |
| अरुणा | १६२ | ९९ |
| अरुंतुद | ३७७ | ८३ |
| अरुष्कर | १४३ | ४२ |
| | ४३० | १८९ |
| अरुस् | २२० | ५४ |
| अरोक | ३८२ | १०० |
| अर्क | ४० | २९ |
| | ३९७ | ४ |
| अर्कपर्ण | १५६ | ८१ |
| अर्कबन्धु | ८ | १५ |
| अर्काह्व | १५६ | ८० |

| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| अर्गल | १२२ | १७ |
| अर्घ | ४०१ | २७ |
| अर्घ्य | २६० | ३३ |
| अर्चा | २६० | ३४ |
| | ३४९ | ३६ |
| अर्चित | ३८३ | १०१ |
| | ४११ | ८५ |
| अर्चिस् | २४ | ५७ |
| | ४३८ | २३० |
| अर्जक | १५६ | ८० |
| अर्जुन | ५९ | १३ |
| | १४४ | ४५ |
| | १८५ | १६७ |
| अर्जुनी | ३२४ | ६७ |
| अर्णव | ९२ | १ |
| | ४०७ | ५७ |
| अर्णस् | ९३ | ४ |
| अर्तन | ३९५ | ३२ |
| अर्ति | ४०८ | ६८ |
| अर्थ | ३३१ | ९० |
| | ४१२ | ८६ |
| अर्थना | २६० | ३२ |
| | ३८८ | ६ |
| अर्थप्रयोग | ३०३ | ४ |
| अर्थशास्त्र | ६५ | ५ |
| अर्थिन् | २६९ | ९ |
| | ३६६ | ४९ |
| अर्ध्य | ३३६ | १०४ |
| | ४२४ | १६१ |
| अर्दना | ३८८ | ६ |
| अर्दित | ३८१ | ९७ |
| अर्ध | ३५ | १६ |
| | ३५ | १६ |
| अर्धचन्द्रा | १६५ | १०९ |
| अर्धनाव | ९८ | १४ |
| अर्धरात्र | ४५ | ६ |
| अर्धर्च | ४६० | ३२ |
| अर्धहार | २३९ | १०६ |
| अर्धोरुक | २४३ | ११९ |
| अर्बुद | ४५५ | १९ |
| अर्भक | २०० | ३८ |
| अर्म | ४६० | ३४ |

| शब्दः | पृष्ठम् | श्लोकः |
|---|---|---|
| अर्य | ३०२ | १ |
| | ४२२ | १४६ |
| अर्यमन् | ४० | २८ |
| अर्या | २०८ | १४ |
| अर्याणी | २०८ | १४ |
| अर्यी | २०८ | १५ |
| अर्व | ३६७ | ५४ |
| अर्वन् | २८० | ४१ |
| अर्वाक् | ९५ | ८ |
| | ४४७ | १६ |
| अर्शस | २२१ | ५९ |
| अर्शस् | २२० | ५४ |
| अर्शोघ्न | १८४ | १५७ |
| अर्शोरोगयुत | २२१ | ५९ |
| अर्हणा | २६० | ३४ |
| अर्हित | ३८३ | १०१ |
| अलम् | ४४२ | २५२ |
| | ४४६ | ११ |
| अलक | २३६ | ९६ |
| अलका | २९ | ७० |
| अलक्त | २४५ | १२५ |
| अलक्ष्मी | ९१ | २ |
| अलगर्द | ८८ | ५ |
| अलंकरिष्णु | ३८ | १०० |
| | ३६० | २९ |
| अलंकर्तृ | २३८ | १०० |
| अलंकर्मीण | ३५७ | १८ |
| अलंकार | २३८ | १०१ |
| अलंकृत | २३८ | १०० |
| अलंक्रिया | २३८ | १०१ |
| अलर्क | १५६ | ८१ |
| | ३४५ | २२ |
| अलस | ३४४ | १८ |
| अलात | ३१२ | ३ |
| अलाबू | १८० | १५६ |
| अलि | १९२ | १४ |
| | १९८ | १९ |
| अलिक | २३४ | ९२ |
| अलिन् | १९८ | २९ |
| अलिंजर | ३१२ | ३१ |
| अलिन्द | १२० | १२ |
| अलीक | ३९९ | १२ |

| शब्दः | पृष्ठम् | श्लोक |
|---|---|---|
| अलु | ३१२ | ३ |
| अल्प | ३६९ | ६ |
| अल्पतनु | २१७ | ४ |
| अल्पमारिष | १७४ | ११ |
| अल्पसरग् | १०३ | २ |
| अल्पिष्ठ | ३७० | ६ |
| अल्पीयस् | ३७० | ६ |
| अवकर | १२३ | १ |
| अवकीर्णिन् | २६६ | ५ |
| अवकृष्ट | ३६३ | ३ |
| अवकेशिन् | १२९ | |
| अवक्रय | ३२८ | ७ |
| अवगणित | ३८४ | १० |
| अवगत | ३८५ | १० |
| अवगीत | ३८० | ९ |
| | ४१० | ७ |
| अवग्रह | ३३ | ११ |
| | २७७ | ३ |
| अवग्राह | ३३ | ११ |
| अवचूर्णित | ३८० | ९ |
| अवज्ञा | ७९ | २ |
| अवज्ञात | ३८४ | १० |
| अवट | ८७ | २ |
| अवटीट | २१६ | ४५ |
| अवटु | २११ | ८८ |
| अवतंस | ४१० | २२ |
| अवतमस | ८० | ३ |
| अवतोका | ३२५ | ६९ |
| अवदंश | ३५० | ४० |
| अवदात | ५९ | १३ |
| | ४११ | ८० |
| अवदान | ३८७ | ३ |
| अवदाह | १८४ | १६५ |
| अवदारण | ३०५ | १२ |
| अवदीर्ण | ३०९ | ८९ |
| अवद्य | ३६७ | ५४ |
| अवधारण | ४२० | १३८ |
| अवधि | ४१४ | ९९ |
| अवध्वस्त | ३८० | ९४ |
| अवन | ३८७ | ४ |
| अवनत | ३०२ | ७० |
| अवनाट | २१६ | ४५ |

| | | |
|---|---|---|
| 1 Small fry. 1 Various sorts of fish. | १९ क्षुद्राऽण्ड-मत्स्य-संघातः पोताधान, मथो झषाः— । रोहितो मद्गुरः शालो राजीवः शकुलस् तिमिः ॥ | |
| 2 Aquatic animals. Various sorts. | २० तिमिङ्गिलाऽऽदयश् चाथ यादांसि जलजन्तवः । तद्-भेदाः—शिशुमारोद्र-शङ्कवो मकराऽऽदयः ॥ | |
| 2 A crab. 2 A shark. 2 A crocodile. | २१ स्यात् कुलीरः कर्कटकः, कूर्मे कमठ-कच्छपौ । ग्राहोऽवहारो, नक्रस् तु कुम्भीरो, ऽथ महीलता ॥ | 3 A turtle or tortoise. |
| 3 A worm. 2 A gangetic alligator. 3 A leech. | २२ गण्डूपदः किञ्चुलको, निहाका गोधिका समे । रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ॥ | |
| 2 A pearl oyster. 2 A conch. 2 small shell. 2 A bivalve shell. | २३ मुक्तास्फोटः स्त्रियां शुक्तिः, शङ्खः स्यात् कम्बुर-स्त्रियौ । क्षुद्रशङ्खाः शङ्खनखाः, शम्बूका जलशुक्तयः ॥ | |
| 6 A frog. 2 A small worm. 2 A female frog. 2 A female turtle. | २४ भेके मण्डूक-वर्षाभू-शालूर-प्लव-दर्दुराः । शिली गण्डूपदी, भेकी वर्षाभ्वी, कमठी डुलिः ॥ | |
| 1 Sort of sheat-fish. 2 A cockle. 2 A lake or pond. 1 A deep lake. | २५ मद्गुरस्य प्रिया शृङ्गी, दुर्नामा दीर्घकोशिका । जलाशया जलाधारास्, तत्राऽगाध-जलो ह्रदः ॥ | |
| 4 A well. 1 The wooden frame for the rope. | २६ आहावस् तु निपानं स्यादुपकूप-जलाशये । पुंस्येवाऽन्धुः प्रहिः कूप उदपानं तु पुंसि वा ॥ | 2 A trough near a well. |
| 1 The cover or facing of a well. 2 A square or a large pond. | २७ नेमिस् त्रिकाऽस्य, वीनाहो मुख-बन्धनमस्य यत् । पुष्करिण्यां तु खातं स्यादखातं देवखातकम् ॥ | 2 A natural pond. |
| 5 One deep enough for the lotus. 2 A basin. 2 Well. | २८ पद्माकरस् तडागो ऽस्त्री कासारः सरसी सरः । वेशन्तः पल्वलं चाऽल्पसरो, वापी तु दीर्घिका ॥ | |
| 2 A moat or ditch. 1 A dike. 3 A basin round the foot of a tree. | २९ खेयं तु परिखा, ऽऽधारस् त्वम्भसां यत्र धारणम् । स्यादालवालमावालमावापो, ऽथ नदी सरित् ॥ | |
| 16 A river. | ३० तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी । स्रोतस्विनी द्वीपवती स्रवन्ती निम्नगाऽऽपगा ॥ | |

३१ 'कुलङ्कषा निर्झरिणी रोधोवक्रा सरस्वती' । १ ।

8 The *Ganges*. गङ्गा विष्णुपदी जन्हुतनया सुरनिम्नगा ॥

३२ भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ।

4 The *Yamunā*. कालिन्दी सूर्यतनया यमुना शमनस्वसा ॥

4 The *Narmadā*. ३३ रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ।

2 The *Karatôyā*. 2 The *Bāhudā*. करतोया सदानीरा, बाहुदा सैतवाहिनी ॥

2 The *Satadru* 2 The *Vipāsā*. ३४ शतद्रुम् तु शुतुद्रिः स्याद्, विपाशा तु विपाद् स्त्रियाम् ।

2 The *Sôna*. 1 A canal. शोणो हिरण्यवाहः स्यात् कुल्याऽल्पा कृत्रिमा सरित् ॥

Various rivers. ३५ शरावती वेत्रवती चन्द्रभागा सरस्वती ।

1 The mouth of a river. कावेरी सरितो ऽन्याश् च, संभेदः सिन्धुसंगमः ॥

1 An issue from a pond. ३६ द्वयोः प्रणाली पयसः पदव्यां, त्रिषु तूत्तरौ ।

belonging to certain Rivers. देविकायां सरय्वां च भवे दाविक-सारवौ ॥

2 White water lily. ३७ सौगन्धिकं तु कल्हारं, हल्लकं रक्तसंध्यकम् ।

1 A red one. 2 A water lily. स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च ॥

2 A blue one. ३८ इन्दीवरं च नीलेऽस्मिन्, सिते कुमुद-कैरवे । 2 The esculent white sort.

1 The root of a water lily. 2 Pistia stratiotes. शालूकमेषां कन्दः स्याद्, वारिपर्णी तु कुम्भिका ॥

3 Vallisneria. 2 A place abounding in water-lilies. ३९ जलनीली तु शैवालं शैवलो, ऽथ कुमुद्वती ।

3 An assemblage of lotus flowers. कुमुदिन्यां, नलिन्यां तु बिसिनी-पद्मिनी-मुखाः ॥

16 A lotus. ४० वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ।

सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ॥

४१ पङ्केरुहं तामरसं सारसं सरसीरुहम् ।

बिसप्रसून-राजीव-पुष्कराऽम्भोरुहाणि च ॥

2 A white lotus. ४२ पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहे ।

3 A red lotus. 2 The stalk of a water-lily. रक्तोत्पलं कोकनदं, नालो नालमथाऽस्त्रियाम् ॥

2 The film or fibres attendent on it.
2 The root of a water-lily.
2 A filament.
2 A new leaf of a water-lily.

४३ मृणालं बिसमब्जादि-कदम्बे खण्डमस्त्रियाम् ।[1] Assemblage of water lilies

करहाटः शिफाकन्दः, किञ्जल्कः केसरोऽस्त्रियाम् ॥

४४ संवर्तिका नवदलं, बीजकोशो वराटकः ॥ 2 The seed of the lotus.

इति वारि-वर्गः ९, अत्र मूलश्लोकाः ४३, क्षे० ॥.

४५ उक्तं स्वर्-व्योम-दिक्-काल-धी-शब्दादि स-नाट्यकम् ।

पातालभोगि-नरकं वारि चैषां च संगतम् ॥

४६ इत्यमरसिंह-कृतौ नाम-लिङ्गाऽनुशासने ।

स्वरादि-काण्डः प्रथमः साऽङ्ग एव समर्थितः ॥

इति प्रथमः स्वरादि-काण्डः समाप्तः ।

अत्र मूलश्लोकाः २८१ ॥, क्षे० श्लो० १८, सर्वे च मिलित्वा । २९९ ॥.

# अथ द्वितीयं भूम्यादि काण्डम् ।

१ वर्गाः—पृथ्वी-पुर-क्ष्माभृद्-वनौषधि-मृगादि-भिः ।
नृ-ब्रह्म-क्षत्र-विट-शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥

38 Earth.

२ भूर् भूमिरचला ऽनन्ता रसा विश्वम्भरा स्थिता ।
धरा धरित्री धरणिः क्षोणिर् ज्या काश्यपी क्षितिः ॥

३ सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा ।
गोत्रा कुः पृथिवी पृथ्वी क्ष्मा ऽवनिर् मेदिनी मही ॥

४ ‘ विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा । १ ।
भूतधात्री रत्नगर्भा जगती सागराम्बरा ’ ॥

2 Soil.
2 An excellent soil.
1 Fertile with every crop.
2 Salt ground.

५ मृन् मृत्तिका, प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका ।
उर्वरा सर्व-सस्याऽऽढ्या, स्यादूषः क्षारमृत्तिका ॥

1 A spot with salt soil.
1 A place, or firm spot.
2 A region devoid of water.
2 Untilled or waste.

६ ऊषवानूषरो द्वावप्यन्य-लिङ्गौ, स्थलं स्थली ।
समानौ मरु-धन्वानौ, द्वे खिलाऽप्रहते समे ॥

5 A world.
1 India.

७ त्रिष्वथो जगती लोको विष्टपं भुवनं जगत् ।
लोको ऽयं भारतं वर्षं, शरावत्यास् तु यो ऽवधेः ॥

1 The eastern region.
1 The northern region.
2 A country of barbarians.
2 The middle region.

८ देशः प्राग्-दक्षिणः प्राच्य, उदीच्यः पश्चिमोत्तरः ।
प्रत्यन्तो म्लेच्छदेशः स्यान्, मध्यदेशस् तु मध्यमः ॥

2 The region of sanctity.
2 An inhabited country.
3 Any country.

९ आर्यावर्तः पुण्यभूमिर् मध्यं विन्ध्य-हिमालयोः ।
नीवृज् जनपदो, देश-विषयौ तूऽपवर्तनम् ॥

3 One abounding in reeds;
2 –in water lilies.
2 –in ratans ;

१० त्रिष्वागोष्ठान्, नडप्राये नड्वान् नड्वल इत्यपि ।
कुमुद्वान् कुमुदप्राये, वेतस्वान् बहुवेतसे ॥

2 –in green grass. ११ शाद्वलः शादहरिते, सजम्बाले तु पङ्किलः । 2 Clayey and muddy.

3 Watery, or wet. 1 Contiguous to water. जलप्रायमनूपं स्यात् पुंसि कच्छस् तथाविधः ॥

2 Full of stony or similar nodules. १२ स्त्री शर्करा शर्करिलः, शार्करः शर्करावति । 2 Sandy.

देश एवाऽऽदिमावेवमुन्नेयाः सिकतावति ॥

1 Watered (viz. its rice) from a river. 1 Or by rain. १३ देशो नद्यम्बु-वृष्ट्यम्बु-संपन्न-व्रीहि-पालितः ।

स्यान् नदीमातृको देवमातृकश् च यथा-क्रमम् ॥

1 Ruled by a just king. 1 Governed by a monarch. 2 A fold for kine. १४ सु-राज्ञि देशे राजन्वान्, स्यात् ततो ऽन्यत्र राजवान् ।

गोष्ठं गोस्थानकं, तत् तु गौष्ठीनं भूत-पूर्वकम् ॥ 1 The site of a former one.

2 Contiguous ground. १५ पर्यन्तभूः परिसरः, सेतुरालौ स्त्रियां पुमान् । 2 Bridge.

3 An anthill. वामलूरश् च नाकुश् च वल्मीकं पुन्-नपुंसकम् ॥

12 A road, path or way. १६ अयनं वर्त्म मार्गोऽध्व-पन्थानः पदवी सृतिः ।

सरणिः पद्धतिः पद्या वर्तन्येकपदीऽति च ॥

3 A good road. १७ अतिपन्थाः सुपन्थाश् च सत्पथश् चाऽर्चिते ऽध्वनि ।

5 A bad road. ऽव्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः ॥

2 The want of a road. 1 A long and lonesome way. १८ अपन्थास् त्वपथं तुल्ये, शृङ्गाटक-चतुष्पथे । 2 Meeting of four roads.

प्रान्तरं दूर-शून्यो ऽध्वा, कान्तारं वर्त्म दुर्गमम् ॥ 1 A difficult road.

2 A league. 2 A furlong. 2 A highway. 1 A street. १९ गव्यूतिः स्त्री क्रोशयुगं, नल्वः किष्कुचतुःशतम् ।

घण्टापथः संसरणं, तत् पुरस्योपनिष्करम् ॥

5 Heaven and earth २० ' द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी । २ ।

3 Salt-sea. दिवस्पृथिव्यौ, गञ्जा तु रुमा स्याल् लवणाकरः' ॥

इति भूमि-वर्गः १, अत्र मूलश्लोकाः १८, क्षे० २.

## अथ पुर-वर्गः २

| | |
|---|---|
| 7 A town or city. | १ पूः स्त्री पुरी-नगर्यौ वा पत्तनं पुटभेदनम् । |
| 1 A suburb. | स्थानीयं निगमो, ऽन्यत् तु यन् मूल-नगरात् पुरम् ॥ |
| 2 The abode of harlots. | २ तच्छाखानगरं, वेशो वेश्याजनसमाश्रयः । |
| 2 A market. 2 A shop. | आपणस् तु निषद्यायां, विपणिः पण्यवीथिका ॥ |
| 3 A high street. 2 Heap of earth. | ३ रथ्या प्रतोली विशिखा, स्याच् चयो वप्रमस्त्रियाम् । |
| 3 A rampart. 1 A bound hedge. | प्राकारो वरणः सालः, प्राचीनं प्रातन्तो वृतिः ॥ |
| 2 A wall. 1 One built with rubbish. | ४ भित्तिः स्त्री कुड्यमेडूकं यदन्तर-न्यस्त-कीकसम् । |
| 16 A house. | गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ॥ |
| | ५ निशान्त-पस्त्य-सदनं भवनाऽगार-मन्दिरम् । |
| | गृहाः पुंसि च भूम्न्येव निकाय्य-निलयाऽऽलयाः ॥ |
| 4 Audiance hall. 2 A cluster of four houses. | ६ वासः कुटी द्वयोः शाला सभा, संजवनं त्विदम् । |
| 2 A hut made of leaves. | चतुःशालं, मुनीनां तु पर्णशालोटजो ऽस्त्रियाम् ॥ |
| 2 Buddhisti. | ७ चैत्यमायतनं तुल्ये, वाजिशाला तु मन्दुरा । 2 A stable. |
| 2 A working house. 2 A place of refreshment. | आवेशनं शिल्पिशाला, प्रपा पानीयशालिका ॥ |
| 1 A college 2 A tavern. | ८ मठश् छात्राऽऽदि-निलयो, गञ्जा तु मदिरागृहम् । |
| 2 Middle of a house. | गर्भागारं वासगृहमरिष्टं सूतिकागृहम् ॥ 2 Labor room. |
| 1 Pavement. 2 Terrace. | ९ 'कुट्टिमो ऽस्त्री निबद्धा भूश्, चन्द्रशाला शिरोगृहम्' ।१। |
| 2 A window or airhole. 2 A temporary hall. | वातायनं गवाक्षो, ऽथ मण्डपो ऽस्त्री जनाश्रयः ॥ |
| 1 The abode of the wealthy. | १० हर्म्यादि धनिनां वासः, प्रासादो देव-भूभुजाम् । |
| 1 A royal residence. | सौधो ऽस्त्री राजसदनमुपकार्योपकारिका ॥ 4 A king's house. |
| 4 Its varities. | ११ स्वस्तिकः सर्वतोभद्रो नन्द्यावर्ताऽऽदयो ऽपि च । |
| | विच्छन्दकः प्रभेदा हि भवन्तीऽऽश्वर-सद्मनाम् ॥ |

4 The queen's apartment.
2 An airy room, a top of the house.

१२ स्त्र्यऽगारं भूभुजामन्तःपुरं स्यादवरोधनम् ।
शुद्धान्तश् चाऽवरोधश् च, स्यादट्टः क्षौमम-स्त्रियाम् ॥

3 A terrace before the house-door.
2 The threshold.
3 A court or yard.

१३ प्रघाण-प्रघणाऽलिन्दा बहिर्-द्वार-प्रकोष्ठके ।
गृहावग्रहणी देहल्यङ्गणं चत्वराऽजिरे ॥

1 The lower threshold of door.
2 A private door.
2 A back door.
1 Upper threshold.

१४ अधस्ताद् दारुणि शिला, नासा दारूऽपरि स्थितम् ।
प्रच्छन्नमन्तर्द्वारं स्यात्, पक्षद्वारं तु पक्षकम् ॥

2 The edge of the thatch.
2 The wood of a thatch.
2 Roof.

१५ वलीक-नीध्रे पटल-प्रान्ते, ऽथ पटलं छदिः ।
गोपानसी तु वलभी छादने वक्र-दारुणि ॥

2 A dovecot.
3 A door, or gate.
2 A covered terrace in the yard.

१६ कपोतपालिकायां तु विटङ्कं पुन्-नपुंसकम् ।
स्त्री द्वार् द्वारं प्रतीहारः, स्याद् वितर्दिस् तु वेदिकः ॥

2 Decoration of the gatepost.
1 A raised place over the gate.
1 A city gate.

१७ तोरणो ऽस्त्री बहिर्द्वारं, पुरद्वारं तु गोपुरम् ।
कूटं पूर्-द्वारि यद्धस्तिनखस् तस्मिन्नथ त्रिषु ॥

2 A door.
1 Its bolt or bar.
2 Stairs.
2 A ladder.

१८ कपाटमररं तुल्ये, तद्-विष्कम्भो ऽर्गलं न ना ।
आरोहणं स्यात् सोपानं, निश्रेणिस् त्वधिरोहिणी ॥

2 A broom.
2 Dust, or sweepings.
2 The entrance of a house.
2 An open space in a town.

१९ संमार्जनी शोधनी स्यात्, संकरो ऽवकरस् तथा ।
क्षिप्ते, मुखं निःसरणं, संनिवेशो निकर्षणम् ॥

2 A village.
2 The site of a habitation.
2 Space near a village, etc.
2 A boundary or limit.

२० समौ संवसथ-ग्रामौ, वेश्मभूर् वास्तुर-स्त्रियाम् ।
ग्रामान्त उपशल्यं स्यात्, सीम-सीमे स्त्रियामुभे ॥

2 A station of herdsmen.
2 An abode of the lowest men.

२१ घोष आभीरपल्ली स्यात्, पक्कणः शबरालयः ।

इति पुर-वर्गः २, अत्र मूलश्लोकाः २०, क्षेपकश्लो० ॥

## अथ शैल-वर्गः ३

13 A mountain. — १ महीध्रे शिखरि-क्ष्माभृदहार्य-धर-पर्वताः ॥
अद्रि-गोत्र-गिरि-ग्रावाऽचल-शैल-शिलोच्चयाः ।

2 A range, surrounding the earth. — २ लोकालोकश् चक्रवालम्, त्रिकूटस् त्रिककुत् समौ ॥ — 2 A hill with three peaks.

2 The western mountain. — अस्तस् तु चरमक्ष्माभृदुदयः पूर्वपर्वतः । — 2 The eastern mountain.

1 Divers mountains. — ३ हिमवान् निषधो विन्ध्यो माल्यवान् पारियात्रिकः ॥
गन्धमादनमन्ये च हेमकूटाऽऽदयो नगाः ।

7 A stone or rock. — ४ पाषाण-प्रस्तर-ग्रावोपलाऽश्मानः शिला दृषत् ॥

3 A peak or summit. 3 A precipice. — कूटो ऽस्त्री शिखरं शृङ्गं, प्रपातस् त्वतटो भृगुः ।

1 The side of a mountain. 3 Table land. — ५कटको ऽस्त्री नितम्बो ऽद्रेः, स्नुः प्रस्थः सानुर-स्त्रियाम् ॥

2 A fountain. 3 A cascade. — उत्सः प्रस्रवणं, वारिप्रवाहो निर्झरो झरः ।

2 An artificial cave. 2 A natural cave. — ६ दरी तु कन्दरो वा स्त्री, देव-खात-बिले गुहा ॥

2 Rocks fallen from a mountain. — गह्वरं, गण्डशैलास् तु च्युताः स्थूलोपला गिरेः ।

1 Rocks fallen slanting. — 'दन्तकास् तु बहिस् तिर्यक्-प्रदेशान् निर्गता गिरेः' ॥१

2 A mine. 2 Hills near a mountain. — ७ खनिः स्त्रियामाकरः स्यात्, पादाः प्रत्यन्तपर्वताः ।

1 Land near a mountain. — उपत्यका ऽद्रेरासन्ना भूमिरूर्ध्वमधित्यका ॥ — 1 Land on it.

1 A fossil, or mineral. — ८ धातुर् मनःशिलाद्यद्रेर् गैरिकं तु विशेषतः । — 1 Red chalk.

2 A place overgrown with creepers, &c. — निकुञ्ज-कुञ्जौ वा क्लीबे लताऽऽदि-पिहितोदरे ॥

इति शैल-वर्गः ३, अत्र मूलश्लोकाः ८, क्षे० ॥.

## अथ वनौषधि-वर्गः ४

6 A forest or grove. — १ अटव्यरण्यं विपिनं गहनं काननं वनम् ।

2 A large forest. — महारण्यमरण्यानी, गृहारामास् तु निष्कुटाः ॥

| | |
|---|---|
| 2 Garden.<br>1 One planted by a state minister, &c. | २ आरामः स्यादुपवनं कृत्रिमं वनमेव यत् ।<br>अमात्य-गणिका-गेहोपवने वृक्षवाटिका ॥ |
| 2 A royal public one.<br>1 Queen's pleasure ground. | ३ पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम् ।<br>स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ॥ |
| 5 A row or range.<br>2 A continuous line.<br>2 A multitude of groves.<br>2 A germin. | ४ वीथ्यालिरावलिः पङ्क्तिः श्रेणी, लेखास् तु राजयः ।<br>वन्या वनसमूहे स्यादङ्कुरोऽभिनवोद्भिदि ॥ |
| 13 A tree. | ५ वृक्षो महीरुहः शाखी विटपी पादपस् तरुः ।<br>अनोकहः कुटः शालः पलाशी द्रु-द्रुमाऽऽगमाः । |
| 1 One fructifying from blossoms.<br>1 One without apparent blossoms<br>1 An annual plant. | ६ वानस्पत्यः फलैः पुष्पात्, तैर-पुष्पाद् वनस्पतिः ।<br>ओषध्यः फल-पाकाऽन्ताः स्युर–वन्ध्यः फलेग्रहिः ॥<br>2 Fruitful. |
| 3 Barren.<br>3 Bearing fruit.<br>8 Blown, as a flower. | ७ वन्ध्योऽफलोऽवकेशी च, फलवान् फलिनः फली ।<br>प्रफुल्लोत्फुल्ल-संफुल्ल-व्याकोश-विकच-स्फुटाः ॥ |
| 3 The trunk of a lopped tree.<br>1 A small tree. | ८ फुल्लश् चैते विकसिते, स्युरवन्ध्याऽऽदयस् त्रिषु ।<br>स्थाणुर् वा ना ध्रुवः शङ्कुर्, ह्रस्व-शाखा-शिफः क्षुपः ॥ |
| 3 A shrub.<br>3 Creeper.<br>3 A spreading one. | ९ अप्रकाण्डे स्तम्ब-गुल्मौ, वल्ली तु व्रततिर् लता ।<br>लता प्रतानिनी वीरुद् गुल्मिन्युलप इत्यपि ॥ |
| 3 Height of a tree, hill, &c.<br>2 The trunk. | १० नगाऽऽद्याऽऽरोह उच्छ्राय उत्सेधश् चोच्छ्रयश् च सः ।<br>अ-स्त्री प्रकाण्डः स्कन्धः स्यान् मूलाच्छाखाऽवधिस् तरोः ॥ |
| 2 A branch.<br>2 A large branch.<br>2 A fibrous root.<br>1 From a radicant branch. | ११ समे शाखा-लते, स्कन्धशाखा–शाले, शिफा–जटे ।<br>शाखा-शिफा ऽवरोहः स्यान्, मूलाच् चाऽग्रं गता लता ॥<br>1 Scandent fibres. |
| 2 The top of a tree<br>3 Its root.<br>2 The pith.<br>3 The bark. | १२ शिरोऽग्रं शिखरं वा ना, मूलं बुध्नोऽङ्घ्रि–नामकः ।<br>सारो मज्जा नरि, त्वक् स्त्री वल्कं वल्कलम–स्त्रियाम् ॥ |

2 Wood.
3 Fuel.
१३ काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्‌ स्त्रियाम्‌ । 2 Samidhs.

2 The hollow of a tree.
2 A compound pedicel.
निष्कुहः कोटरं वा ना, वल्लरिर्‌ मञ्जरिः स्त्रियौ ॥

6 A leaf.
2 A sprout or shoot.
१४ पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्‌ ।

1 The branch and its shoot.
पल्लवो ऽस्त्री किसलयं, विस्तारो विटपो ऽस्त्रियाम्‌ ॥

1 Fruit.
2 The foot stalk.
१५ वृक्षाऽऽदीनां फलं सस्यं, वृन्तं प्रसवबन्धनम्‌ ।

1 Raw fruit.
1 Dry.
आमे फले शलाटुः स्याच्‌, छुष्के वानमुभे त्रिषु ॥

2 A bud or a germ.
2 An unblown flower.
१६ क्षारको जालकं क्लीबे, कलिकः कोरकः पुमान्‌ ।

2 A cluster of blossoms.
2 An opening bud.
स्याद्‌ गुच्छकस्‌ तु स्तबकः, कुड्मलो मुकुलोऽस्त्रियाम्‌ ॥

5 A flower.
१७ स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्‌ ।

2 Its nectar or honey.
मकरन्दः पुष्परसः, परागः सुमनोरजः ॥ 2 Its dust or farina.

१८ द्वि-हीनं प्रसवे सर्वं, हरीतक्याऽऽदयः स्त्रियाम्‌, ।

1 Fruits of certain plants.
आश्वत्थ-वैणव-प्लाक्ष-नैयग्रोधैङ्गुदं फले ॥

3 Fruit of the Eugenia.
१९ बार्हतं च, फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम्‌, ।

पुष्पे जाती-प्रभृतयः स्व-लिङ्गा, व्रीहयः फले, ॥

1 Hedysarum Gangeticum.
1 Blossom of the Bignonia.
२० विदार्याऽऽद्यास्‌ तु मूले ऽपि, पुष्पे क्लीबे ऽपि पाटला, ।

5 Holy figtree.
बोधिद्रुमश्‌ चलदलः पिप्पलः कुञ्जराशनः ॥

7 Elephant, or wood apple.
२१ अश्वत्थे, ऽथ कपित्थे स्युर्‌ दधित्थ-ग्राहि-मन्मथाः ।

तस्मिन्‌ दधिफलः पुष्पफल-दन्तशठावपि ॥

4 Glomerous fig-tree.
२२ उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ।

4 Mountain ebony.
कोविदारे चमरिकः कुद्दालो युगपत्रकः ॥

4 Echites.
२३ सप्तपर्णो विशालत्वक्‌ शारदो विषमच्छदः ।

8 Cassia fistula.
आरग्वधे राजवृक्ष-शम्याक-चतुरङ्गुलाः ॥

२४ आरेवत-व्याधिघात-कृतमाल-सुवर्णकाः ।

5 A lemon or citron.
स्युर्‌ जम्बीरे दन्तशठ-जम्भ-जम्भीर-जम्भलाः ॥

| | |
|---|---|
| 5 Tapia. | २५ वरुणो वरणः सेतुस् तिक्तशाकः कुमारकः । |
| 5 *Punnag*. | पुन्नागे पुरुषस् तुङ्गः केसरो देववल्लभः ॥ |
| 4 Coral tree. | २६ पारिभद्रे निम्बतरुर् मन्दारः पारिजातकः । |
| 7 *Tinis*. | तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ॥ |
| 3 Spondias. | २७ वञ्जुलश् चित्रकृच् चाऽ,थ द्वौ पीतनक-पीतनौ । |
| 5 Bassia. | आम्रातके, मधूके तु गुडपुष्प-मधुद्रुमौ ॥ |
| 1 Water Bassia. | २८ वानप्रस्थ मधुष्ठीलौ, जलजेऽत्र मधूलकः । |
| 3 *Pilu*. | पीलौ गुडफलः स्रंसी, तस्मिंस्तु गिरि-संभवे ॥ |
| 2 Walnut. 2 Alangium. | २९ अक्षोट-कन्दरालौ द्वा,वङ्कोटे तु निकोचकः । |
| 4 Butea frondosa. 7 *Bayas*, or *Bènt*. | पलाशे किंशुकः पर्णो वातपोथो, ऽथ वेतसे ॥ |
| | ३० रथाऽभ्रपुष्प-विदुर-शीत-वानीर-वञ्जुलाः । |
| 4 The same growing in water. | द्वौ परिव्याध-विदुलौ नादेयी चाऽम्बुवेतसे ॥ |
| 5 Morunga. | ३१ सौभाञ्जने शिग्रु तीक्ष्णगन्ध-काक्षीव-मोचकाः । |
| 1 A red variety of the same. | रक्तोऽसौ मधुशिग्रुः स्या,दरिष्टः फेनिलः समौ ॥ 2 Soap berry. |
| 5 Marmelos. | ३२ बिल्वे शाण्डिल्यशैलूषौ मालूर-श्रीफलावपि । |
| 3 Waved leaved figtree. 3 Indian figtree. | प्लक्षो जटी पर्कटी स्यान्, न्यग्रोधो बहुपाद् वटः ॥ |
| 6 *Lodhra*. The pale sort. | ३३ गालवः शाबरो लोध्रस् तिरीटस् तिल्व-मार्जनौ । |
| 3 Mango. 5 A very fragrant mango. | आम्रश् चूतो रसालो, ऽसौ सहकारो ऽति-सौरभः ॥ |
| | ३४ कामाङ्गो मधुदूतश्च माकंदः पिकवल्लभः । |
| 5 Bdellium. | कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः ॥ |
| 5 Sebesten. | ३५ शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः । |
| 4 *Piya*. | राजादनं प्रियालः स्यात् सन्नकद्रुर् धनुःपटः ॥ |
| 7 *Gambhārī*. | ३६ गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका । |
| 3 Jujube. | श्रीपर्णी भद्रपर्णी च काश्मर्यश् चा,प्यथ द्वयोः ॥ |

| | |
|---|---|
| 6 The fruit.<br>3 Plumb tree. | ३७ कर्कन्धूर् बदरी कोलिः, कोलं कुवल-फेनिले । |
| 5 *Buinchi.* | सौवीरं बदरं घोण्टाऽ,प्यथ स्यात् स्वादुकण्टकः ॥ |
| | ३८ विकङ्कतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि । |
| 4 Orange. | ऐरावतो नागरङ्गो नादेयी भूमिजम्बुका ॥ |
| 4 Sort of ebony. | ३९ तिन्दुकः स्फूर्जकः कालस्कन्धश् च शितिसारके । |
| 4 Another sort. | काकेन्दुः कुलकः काकतिन्दुकः काकपीलुके ॥ |
| 5 *Ghantāpātali.* | ४० गोलीढो झाटलो घण्टापाटलिर् मोक्ष-मुष्ककौ । |
| 3 *Tilā.*<br>2 Tamarix. | तिलकः क्षुरकः श्रीमान्, समौ पिचुल-झावुकौ ॥ |
| 5 *Kayap'hal.* | ४१ श्रीपर्णिका कुमुदिका कुम्भी कैटर्य-कटफलौ । |
| 4 Red *Lōdhra.* | क्रमुकः पट्टिकाख्यः स्यात् पट्टी लाक्षाप्रसादनः ॥ |
| 6 Mulberry. | ४२ तूदस् तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च । |
| 4 Nauclea orientalis. | तूलं च, नीप-प्रियक-कदम्बास् तु हरिप्रियः ॥ |
| 4 Marking nut. | ४३ वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु । |
| 5 *Pārṣpīpal.* | गर्दभाण्डे कन्दराल कपीतन सुपार्श्वकाः ॥ |
| 3 Tamarind.<br>6 *A san.* | ४४ प्लक्षश् च, तिन्तिडी चिञ्चाऽम्लिका, ऽथो पीतसारके । |
| | सर्जकाऽसन-बन्धूकपुष्प-प्रियक-जीवकाः ॥ |
| 5 *Sak'hwa* or *Sal.* | ४५ साले तु सर्ज-कार्श्याऽश्वकर्णकाः सस्यसम्बरः । |
| 5 *Kahuā.* | नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः ॥ |
| 3 *Khiranī.* | ४६ राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः । |
| 1 *Ingud.*<br>3 *Bhōjpatr.* | इङ्गुदी तापसतरुर्, भूर्जे चर्मि-मृदुत्वचौ ॥ |
| 5 Silk-cotton. | ४७ पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर् द्वयोः । |
| 2 Its gum. | पिच्छा तु शाल्मलीवेष्टे, रोचनः कूटशाल्मलिः ॥ |
| 2 Another black silk-cotton. | ४८ चिरबिल्वो नक्तमालः करजश् च करञ्जके । 4 *Caranj.* |
| 4 Gray bonduc. | प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः ॥ |

2 Other sorts. ४९ करञ्ज–भेदाः षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ।

4 *Rōhin.* रोही रोहितकः प्लीहशत्रुर् दाडिमपुष्पकः ॥

4 *Khayar.* ५० गायत्री बालतनयः खदिरो दन्तधावनः ।

2 A fetid Mimosa. 2 A white sort. अरिमेदो विट्खदिरे, कदरः खदिरे सिते ॥

५१ सोमवल्कोऽप्य,थ व्याघ्रपुच्छ गन्धर्वहस्तकौ ।

11 Palma christi. एरण्ड उरुबूकश् च रुचकश् चित्रकश् च सः ॥

५२ चञ्चुः पञ्चाङ्गुलो मण्ड-वर्धमान-व्यडम्बकाः ।

1 A variety of the *Śamī.* अल्पा शमी शमीरः स्याच्छमी सक्तुफला शिवा ॥ 3 *Śamī* or *saen.*

6 *Mayan.* ५३ पिण्डीतको मरुबकः श्वसनः करहाटकः ।

शल्यश् च मदने, शक्रपादपः पारिभद्रकः ॥ 7 *Déodār.*

५४ भद्रदारु द्रुकिलिमं पीतदारु च दारु च ।

पूतिकाष्ठं च सप्त स्युर् देवदारुण्यथ द्वयोः ॥

7 Trumpet flower. ५५ पाटलिः पाटलाऽमोघा काचस्थाली फलेरुहा ।

12 *Priyangu.* कृष्णवृन्ता कुबेराक्षी, श्यामा तु महिलाऽऽह्वया ॥

५६ लता गोवन्दिनी गुन्द्रा प्रियङ्गुः फलिनी फली ।

विष्वक्सेना गन्धफली कारम्भा प्रियकश् च सा ॥

12 *Sōñapat.* ५७ मण्डूकपर्ण-पत्रोर्ण-नट-कट्वङ्ग-टुण्टुकाः ।

स्योनाक-शुकनास-र्क्ष-दीर्घवृन्त-कुटन्नटाः ॥

५८ शोणकश् चा ऽरलौ, तिष्यफला त्वा ऽऽमलकी त्रिषु ।

4 Emblic myrobalan. अमृता च वयःस्था च, त्रि-लिङ्गस् तु बिभीतकः ॥

6 Beleric myrobalan. ५९ नाक्षस् तुषः कर्षफलो भूतावासः कलिद्रुमः ।

11 Yellow myrobalan. अभया त्वव्यथा पथ्या कायस्था पूतनाऽमृता ॥

६० हरीतकी हैमवती चेतकी श्रेयसी शिवा ।

3 *Sural.* 3 *Caniyār.* पीतद्रुः सरलः पूतिकाष्ठं चाथ द्रुमोत्पलः ॥

| | |
|---|---|
| 3 *Barahal.* | ६१ कर्णिकारः परिव्याधो, लकुचो लिकुचो डहुः । |
| 2 Bread fruit or Jack tree. 3 *Hijjal.* | पनसः कण्टकिफलो, निचुलो हिज्जलोऽम्बुजः ॥ |
| 3 Opposite leaved figtree. | ६२ काकोदुम्बरिका फल्गुर्-मलयूर् जघनेफला । |
| 6 *Nimb.* | अरिष्टः सर्वतोभद्र-हिङ्गुनिर्यास-मालकाः ॥ |
| 3 *Sisō.* | ६३ पिचुमन्दश् च निम्बे, ऽथ पिच्छिला ऽगुरु-शिंशपा । |
| 1 Another sort. 3 *Siris.* | कपिला भस्मगर्भा सा, शिरीषस् तु कपीतनः ॥ |
| 3 *Champā.* | ६४ भण्डिलो ऽप्यथ चाम्पेयश् चम्पको हेमपुष्पकः । |
| 1 Its flower. 2 *Mul-sari.* | एतस्य कलिका गन्धफली स्यादथ केसरे ॥ |
| 2 *Asōc.* 2 Pomegranate. | ६५ बकुलो, वञ्जुलो ऽशोके, समौ करक-दाडिमौ । |
| 4 *Nāgkesar.* | चाम्पेयः केसरो नागकेसरः काञ्चना ऽऽह्वयः ॥ |
| 5 *Jainti.* | ६६ जया जयन्ती तर्कारी नादेयी वैजयन्तिका । |
| 5 *Ganiykārī.* | श्रीपर्णमग्निमन्थः स्यात् कणिका गणिकारिका ॥ |
| 4 *Coratya.* | ६७ जयो,ऽथ कुटजः शक्रो वत्सको गिरिमल्लिका । |
| 3 Its seed. | एतस्यैव कलिङ्गेन्द्रयवभद्रयवं फले ॥ |
| 4 *Carōnda.* | ६८ कृष्णपाकफलाऽऽविग्न-सुषेणाः करमर्दके । |
| 3 *Tamāl.* | कालस्कन्धस् तमालःस्यात् तापिच्छोऽप्यथ सिन्दुके ॥ |
| 5 *Séduārī.* | ६९ सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि । |
| 5 *Déōtār.* | वेणी गरा गरी देवताडो जीमूत इत्यपि ॥ |
| 2 *Siriārī.* 4 Arabian Jasmin. | ७० श्रीहस्तिनी तु भूरुण्डी, तृणशून्यं तु मल्लिका । |
| 1 A wild variety. | भूपदी शीतभीरुश् च, सैवाऽऽस्फोटा वनोद्भवा ॥ |
| 4 *Nébārī.* | ७१ शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा । |
| 2 The white Sort. 4 Jasmin. | सिताऽसौ श्वेतसुरसा भूतवेश्यथ मागधी ॥ |
| 1 Yellow Jasmin. | ७२ गणिका यूथिकाऽम्बष्ठा, सा पीता हेमपुष्पिका । |
| 5 *Mālati latā.* | अतिमुक्तः पुण्ड्रकः स्याद् वासन्ती माधवी लता ॥ |

| | | |
|---|---|---|
| 3 Great flowered Jasmin. | ७३ सुमना मालती जातिः, सप्तला नवमालिका । | 2 Double Jasmin. |
| 2 Many flowered Jasmin. | माध्यं कुन्दं, रक्तकस् तु बन्धूको बन्धुजीवकः ॥ | 3 *Dopha-riya.* |
| 3 Aloe. 2 Globe amaranth. | ७४ सहा कुमारी तरणिर्-म्लानस्तु महासहा । | |
| 1 The crimson sort. | तत्र शोणे कुरबकस्, तत्र पीते कुरण्टकः ॥ | 1 The yellow variety. |
| 3 Blue barleria. | ७५ नीली झिण्टी द्वयोर् बाणा दासी चाऽर्तगलश् च सा । | |
| 2 *J'hinti.* 2 A purple sort. | सैरेयकस् तु झिण्टी स्यात्, तस्मिन् कुरबकोऽरुणे ॥ | 1 A Red sort. |
| 1 A yellow sort. | ७६ पीता कुरण्टको झिण्टी तस्मिन् सहचरी द्वयोः । | |
| 2 China rose. | ओण्ड्रपुष्पं जपा, पुष्पं वज्रपुष्पं तिलस्य यत् ॥ | 1 The blossom of sesamum. |
| 5 Oleander. | ७७ प्रतिहास-शतप्रास-चण्डात-हयमारकाः । | |
| 3 *Caril.* | करवीरे, करीरे तु क्रकर-ग्रन्थिलावुभौ ॥ | |
| 7 Thorn apple. | ७८ उन्मत्तः कितवो धूर्तो धत्तूरः कनकाऽऽह्वयः ॥ | |
| | मातुलो मदनश् चा,ऽस्य फले मातुलपुत्रकः ॥ | 1 Kuit |
| 4 Citron. | ७९ फलपूरो बीजपूरो रुचको मातुलुङ्गके । | |
| 5 *Maruā.* | समीरणो मरुबकः प्रस्थपुष्पः फणिज्जकः ॥ | |
| 3 *Parnās.* 1 The white sort. | ८० जम्बीरो, ऽप्यथ पर्णासे कठिञ्जर-कुठेरकौ । | |
| 3 Lead wort. | सिते ऽर्जको ऽत्र, पाठी तु चित्रको वह्नि-संज्ञकः ॥ | |
| 7 Swallow wort. | ८१ अर्काऽऽह्व-वसुकाऽऽस्फोट-गणरूप-विकीरणाः । | |
| 1 The white sort. | मन्दारश् चाऽर्कपर्णो, ऽत्र शुक्ले ऽलर्क-प्रतापसौ ॥ | |
| 5 *Bakapushpa.* | ८२ शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः । | |
| 4 A parasite plant. | वन्दा वृक्षादनी वृक्षारुहा जीवन्तिकेत्यपि ॥ | |
| 9 *Guricha.* | ८३ वत्सादनी छिन्नरुहा गुडूची तन्त्रिका ऽमृता । | |
| | जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि ॥ | |
| 10 Aletris. | ८४ मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा । | |
| | मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ॥ | |

10 *Ākanādi*.　८५ पाठा ऽम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा ।
एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ॥

8 *Katukī*.　८६ कटुः कटम्भरा ऽशोकरोहिणी कटुरोहिणी ।
मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी ॥

9 *Kawach* or Cowitch.　८७ आत्मगुप्ता ऽजहा ऽव्यण्डा कण्डूरा प्रावृषायणी ।
ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छुश् च मर्कटी ॥

10 *Musalt*.　८८ चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा ।
प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि ॥

8 *Apāmarga*.　८९ अपामार्गः शैखरिको धामार्गव-मयूरकौ ।
प्रत्यक्पर्णी केशपर्णी किणिही खरमञ्जरी ॥

9 *Bamanaiṭhi*.　९० हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ।
अङ्गारवल्ली बालेयशाक-बर्बर-वर्धकाः ॥

9 Madder.　९१ माञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ।
मण्डूकपर्णी मण्डीरी भण्डी योजनवल्ल्यपि ॥

10 *Jawāsā*.　९२ यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ।
रोदनी कच्छुरा ऽनन्ता समुद्रान्ता दुरालभा ॥

9 *Chākulīya*.　९३ पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिवल्लिका ।
क्रोष्टुविन्ना सिंहपुच्छी कलशी धावनी गुहा ॥

10 prickly nightshade.　९४ निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ।
प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि ॥

11 Indigo.　९५ नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ।
रञ्जनी श्रीफली तुत्था द्रोणी दोला च नीलिनी ॥

8 *Sōmrāj*.　९६ अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ।
कालमेषी कृष्णफली बाकुची पूतिफल्यपि ॥

10 Long pepper. ९७ कृष्णोपकुल्या वैदेही मागधी चपला कणा ।
5 Another Sort. उषणा पिप्पली शौण्डी कोला, ऽथ करिपिप्पली ॥

९८ कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान् ।
2 The same. 3 *Retti*. चव्यं तु चविका, काकचिञ्ची-गुञ्जे तु कृष्णला ॥

7 *Gōc'haru*. ९९ पलङ्कषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ।
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ॥

8 *Atis*. १०० विश्वा विषा प्रतिविषा ऽतिविषोपविषाऽरुणा ।
2 *Dugḍhi*. शृङ्गी महौषधं, चाथ क्षीरावी दुग्धिका समे ॥

10 *Śatāvari*. १०१ शतमूली बहुसुता ऽभीरुरिन्दीवरी वरी ।
ऋष्यप्रोक्ता ऽभीरुपत्री-नारायण्यः शतावरी ॥

7 *Dāru haldi*. १०२ अहेरुरथ पीतद्रु-कालीयक-हरिद्रवः ।
दार्वी पचम्पचा दारुहरिद्रा पर्जनीत्यपि ॥

5 Orris root. १०३ वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ।
1 A white sort. 8 Justicia. शुक्ला हैमवती, वैद्यमातृ-सिंह्यौ तु वाशिका ॥

१०४ वृषो ऽटरूषः सिंहास्यो वासको वाजिदन्तकः ।
4 Clitoria. आस्फोटा गिरिकर्णी स्याद् विष्णुक्रान्ताऽपराजिता ॥

5 Barleria. १०५ इक्षुगन्धा तु काण्डेक्षु-कोकिलाक्षेक्षुर-क्षुराः ।
6 Anethum. शालेयः स्याच्छीतशिवश् छत्रा मधुरिका मिसिः ॥

6 Euphorbia. १०६ मिश्रेया, ऽप्यथ सीहुण्डो वज्रःस्नुक् स्त्री स्नुही गुडा ।
6 *Bābreng*. समन्तदुग्धा, ऽथो वेल्लममोघा चित्रतण्डुला ॥

१०७ तण्डुलश् च कृमिघ्नश् च विडङ्गं पुन्-नपुंसकम् ।
2 Sida. 2 Crotalaria. बला वाट्यालका, घण्टारवा तु शणपुष्पिका ॥

5 A grape. १०८ मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ।
7 *Téōri*: the white sort. सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ॥

7 The black sort. १०९ त्रिभण्डी रोचनी, श्यामा-पालिन्द्यौ तु सुषेणिका।
काला मसूरविदला ऽर्धचन्द्रा कालमेषिका ॥

4 Liquorice. ११० मधुकं क्लीतकं यष्टिमधुकं मधुयष्टिका।
3 *Bhuīnkaonrā* the white sort. विदारी क्षीरशुक्लेक्षुगन्धा, क्रोष्ट्री तु या ऽसिता ॥

4 Another sort dark. १११ अन्या क्षीरविदारी स्यान् महाश्वेतर्क्षगन्धिका।
4 *Kancharā*. लाङ्गली शारदी तोयपिप्पली शकुलादनी ॥

5 Celosia. ११२ खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः।
5 *Syām-latā*. गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा ॥

4 *Riddhi*. 4 *Vriddhi*. ११३ योग्यमृद्धिः सिद्धि-लक्ष्म्यौ, वृद्धेरप्याह्वया इमे।
6 A banana. कदली वारणबुसा रम्भा मोचांऽशुमत्फला ॥

3 *Mugānī*. ११४ काष्ठीला, मुद्गपर्णी तु काकमुद्गा सहेत्यपि।
5 Egg plant. वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणी।

9 *Rasna*. ११५ नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली।
नकुलेष्टा भुजङ्गाक्षी छत्राकी सुवहा च सा ॥

5 *Sālparnī*. ११६ विदारिगन्धांऽशुमती सालपर्णी स्थिरा ध्रुवा।
4 Cotton. तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च ॥

1 Wild cotton. 3 *Rīshabha*. ११७ भारद्वाजी तु सा वन्या, शृङ्गी तु ऋषभो वृषः।
4 *Gōrakha*. 2 *Ghōshā* with white flowers. गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका ॥

1 With yellow flowers. ११८ धामार्गवो घोषकः स्यान्, महाजाली स पीतकः।
3 A small cucumber. 2 *Bhumijāmb*. ज्योत्स्नी पटोलिका जाली, नादेयी भूमिजम्बुका ॥

2 *Lāngalika*. 2 *Cāc-janghi*. ११९ स्याल्-लाङ्गलिक्यग्निशिखा, काकाङ्गी काकनासिका।
2 Cissus. 2 *Musal*. गोधापदी तु सुवहा, मुसली तालमूलिका ॥

2 *Mérāsringī*. 2 *Gōgī*. १२० अजशृङ्गी विषाणी स्याद्, गोजिह्वा-दार्विके समे।
3 Betel. 6 *Rénucā*. ताम्बूलवल्ली ताम्बूली नागवल्लयप्यथ द्विजा ॥

| | |
|---|---|
| | १२१ हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी । |
| 5 *Elābāluca.* | एलावालुकमैलेयं सुगन्धि हरिवालुकम् ॥ |
| 4 *Cunduru.* | १२२ वालुकं, चाथ पालङ्क्यां मुकुन्दः कुन्द-कुन्दुरू । |
| 5 *Bālā.* | बालं ह्रीबेर-बर्हिष्ठोदीच्यं केशाऽम्बु नाम च ॥ |
| 5 Benzoin or Shilajit. | १२३ कालानुसार्य-वृद्धाऽश्मपुष्प-शीतशिवानि तु । |
| 5 *Murā.* | शैलेयं, तालपर्णी तु दैत्या गन्धकुटी मुरा ॥ |
| 8 *Salāé.* | १२४ गन्धिनी, गजभक्ष्या तु सुवहा सुरभी रसा । |
| | महेरुणा कुन्दुरुकी सल्लकी ह्लादिनीऽति च ॥ |
| 4 Lythrum. | १२५ अग्निज्वाला-सुभिक्षे तु धातकी धातुपुष्पिका । |
| 5 Large Cardamoms. | पृथ्वीका चन्द्रवालैला निष्कुटिर् बहुला, ऽथ सा ॥ |
| 5 Small Cardamoms. | १२६ सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः । |
| 6 *Cūṛ*, or *Cūṭ'h.* | व्याधिः कुष्ठं पारिभाव्यं वाप्यं पाकलमुत्पलम् ॥ |
| 3 *Chór-cāntā.* | १२७ शङ्खिनी चोरपुष्पी स्यात् केशिन्यथ वितुन्नकः । |
| 6 *Bhūmiāmalāci.* | झटामला ऽज्झटा ताली शिवा तामलकीऽति च ॥ |
| 2 *Pundariya.* | १२८ प्रपौण्डरीकं पौण्डर्यमथ तुन्नः कुबेरकः । |
| 6 *Tunna.* | तुणिः कच्छः कान्तलको नन्दिवृक्षो, ऽथ राक्षसी ॥ |
| 6 *Chór*: sort of perfume. | १२९ चण्डा धनहरी क्षेम-दुष्पत्र-गणहासकाः । |
| 4 *Nac'hi.* | व्याडायुधं व्याघ्रनखं करजं चक्रकारकम् ॥ |
| 7 *Nalī.* | १३० सुषिरा विद्रुमलता कपोताङ्घ्रि नटी नली । |
| 7 Another perfume. | धमन्यञ्जनकेशी च, हनुर् हट्टविलासिनी ॥ |
| 7 *Nac'hi.* | १३१ शुक्तिः शङ्खः खुरः कोलदलं नखमथाऽऽढकी । |
| 6 *Tūbarī.* | काक्षी मृत्स्ना तुवरिका मृत्तालक सुराष्ट्रजे ॥ |
| 8 Cyperus rotundus. | १३२ कुटन्नटं दाशपुरं वानेयं परिपेलवम् । |
| | प्लव-गोपुर-गोनर्द-कैवर्तीमुस्तकानि च |

| | |
|---|---|
| 5 *Gānt'hiala.* 10 *Piring* or *Asparac.* | १३३ ग्रन्थिपर्णं शुकं बर्हपुष्पं स्थौणेय-कुक्कुरे । मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः ॥ |
| 5 Spikenard. | १३४ समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि । तपस्विनी जटामांसी जटिला लोमशामिषी ॥ |
| 6 Woody Cassia. 4 Zerumbet or zedoary. | १३५ त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम् । कर्चूरको द्राविडकः काल्पको वेधमुख्यकः, ॥ |
| 1 A herb, or deciduous plant. 1 A drug, or simple. Any esculent plant. 2 Amaranth. | १३६ ओषध्यो जाति-मात्रे स्युर-जातौ सर्वमौषधम्,। शाकाऽऽख्यं पत्र-पुष्पा ऽऽदि, तण्डुलीयो ऽल्पमारिषः॥ |
| 5 A sort of potherb. 5 Another sort. | १३७ विशल्याऽग्निशिखाऽनन्ता फलिनी शक्रपुष्पिका । स्याहक्षगन्धा छगलान्त्र्यावेगी वृद्धदारकः ॥ |
| 4 The moonplant. 4 A medicinal sort. | १३८ जुङ्गो, ब्राह्मी तु मत्स्याक्षी वयःस्था सोमवल्लरी । पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती ॥ |
| 4 *Māshānī.* 5 *Télācuchā.* | १३९ हयपुच्छी तु काम्बोजी माषपर्णी महासहा । तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि ॥ |
| 9 *Barbarā.* 4 *Elānī.* | १४० बर्बरा कबरी तुङ्गी खरपुष्पा ऽजगन्धिका । एलापर्णी तु सुवहा रास्ना युक्तरसा च सा ॥ |
| 5 Wood Sorrel. 4 Sorrel. | १४१ चाङ्गेरी चुक्रिका दन्तशठाऽम्बष्ठाऽम्ललोणिका । सहस्रवेधी चुक्रो ऽम्लवेतसः शतवेध्यपि ॥ |
| 4 A sensitive plant. 5 *Jiyatī.* | १४२ नमस्कारी गण्डकारी समङ्गा खदिरेत्यपि । जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ॥ |
| 5 *Jivaca.* 3 Sort of Gentian. | १४३ कूर्चशीर्षो मधुरकः शृङ्ग-ह्रस्वाङ्ग-जीवकाः । किराततिक्तो भूनिम्बो ऽनार्यतिक्तो, ऽथ सप्तला ॥ |
| 5 *Charmaghas.* 3 *Cācólī.* | १४४ विमला शातला भूरिफेना चर्मकषेत्यपि । वायसोली स्वादुरसा वयःस्था, ऽथ मकूलकः ॥ |

| | |
|---|---|
| 5 *Danti.* | १४५ निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि । |
| 4 Carui. 3 *Ajwaen.* | अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका ॥ |
| 3 Costus. | १४६ मूले पुष्कर-काश्मीर-पद्मपत्राणि पौष्करे । |
| 5 *St'halpadma* | अव्यथाऽतिचरा पद्मा चारटी पद्मचारिणी ॥ |
| 5 *Śundā-róchanī.* | १४७ काम्पिल्यः कर्कशश् चन्द्रो रक्ताङ्गो रोचनीऽत्यपि । |
| 6 Cassia. | प्रपुन्नाडस् त्वेडगजो दद्रुघ्नश् चक्रमर्दकः ॥ |
| 1 Onion. | १४८ पद्माट उरणाख्यश् च, पलाण्डुस् तु सुकन्दकः । |
| 2 A green onion. | लतार्क-दुद्रुमौ तत्र हरिते, ऽथ महौषधम् ॥ |
| 6 Garlick. | १४९ लशुनं गृञ्जनाऽरिष्ट-महाकन्द-रसोनकाः । |
| 2 Hogweed. 2 A sort of potherb. | पुनर्नवा तु शोथघ्नी, वितुन्नं सुनिषण्णकम् ॥ |
| 4 *Asan-parni.* | १५० स्याद् वातकः शीतलो ऽपराजिता शणपर्ण्यपि । |
| 5 Heart-pea. | पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ॥ |
| 4 *Trāyamāṅa.* | १५१ वार्षिकं त्रायमाणा स्यात् त्रायन्ती बलभद्रिका । |
| 5 *Vārāhi* or *chāmārālu.* | विश्वक्सेनप्रिया-गृष्टिर् वाराही बदरेत्यपि ॥ |
| 4 *Bhrin-gariva.* 2 A potherb. | १५२ मार्कवो भृङ्गराजः स्यात्, काकमाची तु वायसी । |
| 7 *Sónph.* | शतपुष्पा सितच्छत्राऽतिच्छत्रा मधुरा मिसिः ॥ |
| | १५३ अवाक्पुष्पी कारवी च, सरणा तु प्रसारिणी । |
| 5 *Gand'habhādā-liyā.* | तस्यां कटम्भरा राजबला भद्रबलेत्यपि ॥ |
| 6 *Chacawat.* | १५४ जनी जतूका रजनी जतुकृच् चक्रवर्तिनी । |
| 5 *Ambahaldī.* | संस्पर्शा,ऽथ शटी गन्धमूली षड्ग्रन्थिकेत्यपि ॥ |
| 3 Momardica charantia. | १५५ कर्चूरोऽपि पलाशो, ऽथ कारवेल्लः कठिल्लकः । |
| 4 Trichosanthes. | सुषवी चा,ऽथ कुलकं पटोलस् तिक्तकः पटुः ॥ |
| 2 A pumpkin gourd. | १५६ कूष्माण्डकस् तु कर्कारुरुर्वारुः कर्कटी स्त्रियौ । 2 A sort of cucumber. |
| 2 A bitter gourd. 2 A long gourd sweet. | इक्ष्वाकुः कटुतुम्बी स्यात्, तुम्ब्यलाबूरुभे समे ॥ |

3 Another sort of cucumber.
1 Coloquintida.
3 An esculent root.
2 A potherb.

१५७ चित्रा गवाक्षी गोडुम्बा, विशाला त्विन्द्रवारुणी ।
अर्शोघ्नः सूरणः कन्दो, गण्डीरस् तु समष्ठिला ॥

5 Various sorts of pot-herbs.
6 Bent grass.

१५८ कलम्ब्युपोदिका स्त्री तु मूलकं हिलमोचिका ।
वास्तुकं शाक-भेदाः स्युर्, दूर्वा तु शतपर्विका ॥

4 A similar grass with white blossoms.

१५९ सहस्रवीर्या-भार्गव्यौ रुहाऽनन्ताऽथ सा सिता ।
गोलोमी शतवीर्या च गण्डाली शकुलाक्षका ॥

4 A fragrant grass.
2 Another sort.
3 A different kind.

१६० कुरुविन्दो मेघ-नामा मुस्ता मुस्तकम-स्त्रियाम् ।
स्याद् भद्रमुस्तको गुन्द्रा, चूडाला शक्रलोच्चटा ॥

10 A bamboo.

१६१ वंशे त्वक्सार-कर्मार-त्वचिसार-तृणध्वजाः ।
शतपर्वा यवफलो वेणु-मस्कर-तेजनाः ॥

1 The same rattling or whistling.
3 A knot or joint.
3 *Saraharī.*

१६२ वेणवः कीचकास् ते स्युर् ये स्वनन्त्यनिलोद्धताः ।
ग्रन्थिर् ना पर्व-परुषी, गुन्द्रस् तेजनकः शरः ॥

3 A reed.
3 *Cās.*
1 *Bugai.*

१६३ नडस् तु धमनः पोटगलो, ऽथो काशम-स्त्रियाम् ।
इक्षुगन्धा पोटगलः, पुंसि भूम्नि तु बल्वजाः ॥

2 Sugarcane.
Varieties of the same.
2 A fragrant grass.

१६४ रसाल इक्षुस्, तद्-भेदाः पुण्ड्र-कान्तारकाऽऽदयः ।
स्याद् वीरणं वीरतरं, मूले ऽस्योशीरम-स्त्रियाम् ॥

10 Its root.
A gramineous plant.

१६५ अभयं नलदं सेव्यममृणालं जलाशयम् ।
लामज्जकं लघुलयमवदाहेष्टकापथे ॥

१६६ नलाऽऽदयस् तृणं गर्मुच्छ्यामाक-प्रमुखा अपि ।

4 Sacrificial grass.

अ-स्त्री कुशं कुथो दर्भः पवित्रमथ कत्तृणम् ॥

6 A fragrant grass.
3 A mushroom.
2 Andropogon.

१६७ पौर-सौगन्धिक-ध्याम-देवजग्धक-रौहिषम् ।
छत्राऽतिच्छत्र-पालघ्नौ मालातृणक-भूस्तृणे ॥

2 Young grass.
2 Meadow grass.
1 Abundance of grass.
2 Grass in general.

१६८ शष्पं बालतृणं, घासो यवसं, तृणमर्जुनम् ।
तृणानां संहतिस् तृण्या, नड्या तु नडसंहतिः ॥

1 Plamyra. 2 Coconut.

१६९ तृणराजाह्वयस् तालो, नालिकेरस् तु लाङ्गली ।

5 Faufel.

घोण्टा तु पूगः क्रमुको गुवाकः खपुरो, ऽस्य तु ॥

1 Its nut, called Betel-nut. 3 Marshy date tree.

१७० फलमुद्वेगमेते च हिन्ताल-सहितास् त्रयः ।

1 Pandanus. 1 Carypha. 1 Wild date tree. 1 A Palm.

खर्जूरः, केसरी, ताली, खर्जूरी, च तृणद्रुमाः ॥

इति वनौषधि-वर्गः ४, अत्र मूलश्लोकाः १७० ॥, क्षे०.

## अथ सिंहादि-वर्गः ५

14 A lion.

१ सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ।

' कण्ठीरवो मृगरिपुर् मृगदृष्टिर् मृगाशनः ।

पुण्डरीकः पञ्चनख-चित्रकाय-मृगद्विषः ॥१॥ '

3 A tiger. 2 A hyena.

शार्दूल-द्वीपिनौ व्याघ्रे, तरक्षुस् तु मृगादनः ॥

12 A hog.

२ वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः ।

दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ॥

9 A monkey or ape.

३ कपि-प्लवङ्ग-प्लवग-शाखामृग-वलीमुखाः ।

मर्कटो वानरः कीशो वनौका, अथ भल्लुके ॥

4 A bear. 3 A rhinoceros.

४ ऋक्षाऽच्छभल्ल-भल्लूका, गण्डके खड्ग-खड्गिनौ ।

5 A buffalo.

लुलायो महिषो वाहद्विषत्-कासर-सैरिभाः ॥

10 A shakal.

५ स्त्रियां शिवा भूरिमाय-गोमायु-मृगधूर्तकाः ।

शृगाल-वञ्चुक-क्रोष्टु-फेरु-फेरव-जम्बुकाः ॥

5 A cat.

६ ओतुर् बिडालो मार्जारो वृषदंशक आखुभुक् ।

3 An iguana.

त्रयो गौधेर-गौधार-गौधेया गोधिकाऽऽत्मजे ॥

2 A porcupine. 3 His quills.

७ श्वावित् तु शल्यस्, तल्-लोम्नि शलली शललं शलम् ।

2 A swift antelope. 3 A wolf.

वातप्रमीर् वातमृगः, कोकस् त्वीहामृगो वृकः ॥

5 A deer or antelope.

८ मृगे कुरङ्ग-वातायु-हरिणाऽजिनयोनयः ।

1 Belonging to a doe. 1 Belonging to a buck.

ऐणेयमेण्याश् चर्माऽऽद्यमेणस्यैणमुभे त्रिषु ॥

1 Sorts of deer, of which the hides are used. ९ कदली कन्दली चीनश् चमूरु-प्रियकावपि ।
समूरुश् चेति हरिणा अमी अजिनयोनयः ॥

1 Various sorts of deer. १० कृष्णसार-रुरु-न्यङ्कु-रङ्कु-शम्बर-रौहिषाः ।
गोकर्ण-पृषतैण-र्श्य-रोहिताश् चमरो मृगाः ॥

1 Various animals. A beast in general. ११ गन्धर्वः शरभो रामः सृमरो गवयः शशः ।
इत्याऽऽदयो मृगेन्द्राऽऽद्या गवाऽऽद्याः पशुजातयः ॥

8 A rat. 'अधोगन्ता तु खनको वृकः पुन्ध्वज उन्दुरः ॥'

2 A mouse, or small rat. १२ उन्दुरुर् मूषकोऽप्याखुर्, गिरिका बालमूषिका ।
छुछुन्दरी गन्धमुखी दीर्घतुण्डी दिवान्धिका ॥

2 A lizard, chameleon, &c. १३ सरटः कृकलासः स्यान्, मुसली गृहगोधिका । 2 A small house-lizard.
4 A spider. लूता स्त्री तन्तुवायोर्णनाभ-मर्कटकाः समाः ॥

2 An insect. 1 A centipede. १४ नीलङ्गुस् तु कृमिः, कर्णजलौकाः शतपद्युभे ।
2 A caterpillar. 3 A scorpion. वृश्चिकः शुककीटः स्यादलि-द्रुणौ तु वृश्चिके ॥

3 A dove or pigeon. १५ पारावतः कलरवः कपोतो, ऽथ शशादनः ।
3 A hawk or falcon. पत्री श्येन, उलूकस् तु वायसाराति-पेचकौ ॥
8 An owl. 'दिवान्धः कौशिको घूको दिवाभीतो निशाटनः ॥२॥'

2 A sky-lark. 2 A wagtail. १६ व्याघ्राटः स्याद् भरद्वाजः, खञ्जरीटस् तु खञ्जनः ।
2 A heron. 2 A blue jay. लोहपृष्ठस् तु कङ्कः स्याद,थ चाषः किकीदिविः ॥

3 The forktailed shrike. १७ कलिङ्ग-भृङ्ग-धूम्याटा, अथ स्याच्छतपत्रकः । 2 A wood-pecker.
3 *Pipihā*. दार्वाघाटो, ऽथ सारङ्गः स्तोककश् चातकः समाः ॥

4 A gallinaceous fowl. १८ कृकवाकुस् ताम्रचूडः कुक्कुटश् चरणायुधः ।

2 A sparrow. १९ चटकः कलविङ्कः स्यात्, तस्य स्त्री चटका, तयोः ।
1 Its female. Their offspring पुमपत्ये चाटकैरः, स्त्र्यपत्ये चटकैव सा ॥ 1 male and 1 female.

2 Numidian crane.
4 The black cuckoo.

२० कर्करेटुः करेटुः स्यात्, कृकण-क्रकरौ समौ । 2 *Cáer.*
वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥

13 A crow.

२१ काके तु करटाऽरिष्ट-बलिपुष्ट-सकृत्प्रजाः ।
ध्वाङ्क्षाऽऽत्मघोष-परभृद्-बलिभुग्-वायसा अपि ॥
'स एव च चिरञ्जीवी चैकदृष्टिश् च मौकुलिः ॥'

2 A raven.
2 A gallinule.
2A kite. 2 A vulture.
2 A parrot.

२२ द्रोणकाकस् तु काकोलो, दात्यूहः कालकण्ठकः ।
आतापि-चिल्लौ, दाक्षाय्य-गृध्रौ, कीर-शुकौ समौ ॥

2 A curlew.
2 A crane. 2 The Indian crane.
4 The ruddy goose.

२३ क्रुङ्क्रौञ्चो,ऽथ बकःकह्वः, पुष्कराऽऽह्वस् तु सारसः ।
कोकश् चक्रश् चक्रवाको रथाङ्गाऽऽह्वय-नामकः ॥

2 A drake.
2 An osprey.
4 Geese.

२४ कादम्बः कलहंसः स्यादुत्क्रोश-कुररौ समौ ।
हंसास् तु श्वेतगरुतश् चक्राङ्गा मानसौकसः ॥

1 Varieties of geese.
3 *Sarali.*

२५ राजहंसास् तु ते चञ्चु-चरणैर् लोहितैः सिताः ।
मलिनैर् मल्लिकाक्षास् ते, धार्तराष्ट्राः सितेतरैः ॥

2 A small crane.
Female duck or goose.
1 A female Indian crane.

२६ शरारिराटिराडिश् च, बलाका बिसकण्ठिका ।
हंसस्य योषिद् वरटा, सारसस्य तु लक्ष्मणा ॥

2 A bat.
2 A cock-roach.
2 A blue fly.
2 Bee.

२७ जतुका ऽजिनपत्रा स्यात्, परोष्णी तैलपायिका ।
वर्वणा मक्षिका नीला, सरघा मधुमक्षिका ॥

2 A small bee.
2 A gadfly.
2 A smaller sort of gadfly. 2 A wasp.

२८ पतङ्गिका पुत्तिका स्याद्, दंशस् तु वनमक्षिका ।
दंशी तज्-जातिरल्पा स्याद्, गन्धोली वरटा द्वयोः ॥

4 A cricket.
2 A grass-hopper.
2 A firefly.

२९ भृङ्गारी झीरुका चीरी झिल्लिका च समा इमाः ।
समौ पतङ्गशलभौ, खद्योतो ज्योतिरिङ्गणः ॥

11 A large black bee.

३० मधुव्रतो मधुकरो मधुलिण्-मधुपाऽलिनः ।
द्विरेफ-पुष्पलिड्-भृङ्ग-षट्पद-भ्रमराऽलयः ॥

9 A peacock.

३१ मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् ।
शिखावलः शिखी केकी मेघनादानुलास्यपि ॥

| | | |
|---|---|---|
| 1 His cry. | ३२ केका वाणी मयूरस्य, समौ चन्द्रक-मेचकौ । | 1 The eye of his tail. |
| 2 His crest.<br>3 His tail. | शिखा चूडा, शिखण्डस् तु पिच्छ-बर्हे न-पुंसके ॥ | |
| 27 A bird in general. | ३३ खगे विहङ्ग-विहग-विहङ्गम-विहायसः । | |
| | शकुन्ति-पक्षि-शकुनि-शकुन्त-शकुन-द्विजाः ॥ | |
| | ३४ पतत्रि-पत्रि-पतग-पतत्-पत्ररथाऽण्डजाः । | |
| | नगौको-वाजि-विकिर-वि-विष्किर-पतत्रयः ॥ | |
| | ३५ नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमाः । | |
| 13 Various birds. | तेषां विशेषा—हारीतो मद्गुः कारण्डवः प्लवः ॥ | |
| | ३६ तित्तिरिः कुक्कुभो लावो जीवञ्जीवश् च कोरकः । | |
| | कोयष्टिकष् टिट्टिभको वर्तको वर्तिकाऽऽदयः ॥ | |
| 6 A wing. | ३७ गरुत्-पक्षच्छदाः पत्त्रं पतत्रं च तनूरुहम् । | |
| 2 Its root.<br>2 The beak. | स्त्री पक्षतिः पक्षमूलं, चञ्चुस् त्रोटिरुभे स्त्रियौ ॥ | |
| 3 Acts of flying. | ३८ प्रडीनोड्डीन-संडीनान्येताः खग-गति-क्रियाः । | |
| 3 An egg.<br>2 A nest. | पेशी कोशो द्वि-हीनेऽण्डं, कुलायो नीडम-स्त्रियाम् ॥ | |
| 7 Young of any animal. | ३९ पोतःपाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः । | |
| 3 A couple, male and female. | स्त्रीपुंसौ मिथुनं द्वन्द्वं, युग्मं तु युगलं युगम् ॥ | 2 A pair or brace. |
| 22 A flock or multitude. | ४० समूहे निवह-व्यूह-संदोह-विसर-व्रजाः । | |
| | स्तोमौघ-निकर-व्रात-वार-संघात-संचयाः ॥ | |
| | ४१ समुदायः समुदयः समवायश् चयो गणः । | |
| | स्त्रियां तु संहतिर् वृन्दं निकुरम्बं कदम्बकम् ॥ | |
| 1 A multitude of similar things. | ४२ वृन्द-भेदाः—समैर् वर्गः, संघ-सार्थौ तु जन्तुभिः । | 1 Of animals. |
| 1 Of homogeneous animals. | सजातीयैःकुलं, यूथं तिरश्चां पुन्-नपुंसकम् ॥ | 1 Of birds and beasts. |
| 1 Of other beings (men, etc.) | ४३ पशूनां समजो, ऽन्येषां समाजो, ऽथ सधर्मिणाम् । | |
| 1 Of persons practising like duties. | स्यान् निकायः, पुञ्ज-राशी तूत्करः कूटमस्त्रियाम् ॥ | |
| | | 4 A heap of grain, etc. |

Flocks of various animals. ४४ कापोत-शौक-मायूर-तैत्तिराऽऽदीनि तद्-गणे ।
2 Domesticated (a bird or beast). गृहाऽऽसक्ताः पक्षि-मृगाश् छेकास् ते गृह्यकाश् च ते ॥

इति सिंहादि-वर्गः ५, अत्र मूलश्लोकाः ४४, क्षे० २॥

## अथ नृवर्गः ६

6 Man : mankind. १ मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।
5 Man ; or male. स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥
11 A woman ; or female. २ स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥
12 Various descriptions of women. ३ विशेषास् त्वङ्गना भीरुः कामिनी वामलोचना ।
2 A passionate woman. प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥
4 An excellent woman. ४ सुन्दरी रमणी रामा, कोपना सैव भामिनी ।
वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥
1 A queen.
1 Other wives of a king. ५ कृताऽभिषेका महिषी, भोगिन्यो ऽन्या नृप-स्त्रियः ।
6 A wife or wedded woman. पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥
2 A matron. ६ भार्या जायाऽथ पुम्-भूम्नि दाराः, स्यात् तु कुटुम्बिनी ।
4 A virtuous faithful wife. पुरन्ध्री, सुचरित्रा तु सती साध्वी पतिव्रता ॥
3 A superseded wife. ७ कृतसापत्निका ऽध्यूढा ऽधिविन्ना, ऽथ स्वयंवरा
3 A bride choosing her husband. पतिंवरा च वर्या, ऽथ कुलस्त्री कुलपालिका ॥ 2 A chaste woman.
2 A maiden.
3 A girl. ८ कन्या कुमारी, गौरी तु नग्निका ऽनागतार्तवा ।
2 One arrived at puberty. स्यान् मध्यमा दृष्टरजास्, तरुणी युवतिः समे ॥ 2 A young woman.
3 A daughter-in-law. ९ समाः स्नुषा-जनी-वध्वश्, चिरिण्टी तु सुवासिनी ।
2 A woman staying in her father's house. इच्छावती कामुका स्याद्, वृषस्यन्ती तु कामुकी ॥
2 A woman desirous of any thing. 2 One amorous or lustful

1 One who goes to an assignation. १० कान्ताऽर्थिनी तु या याति संकेतं सा ऽभिसारिका ।
8 A disloyal or unchaste woman. पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी ॥
1 A childless woman. ११ स्वैरिणी पांशुला च, स्यादशिश्वी शिशुना विना ।
1 One who has neither husband nor son. अवीरा निष्पतिसुता, विश्वस्ता-विधवे समे ॥ 2 A widow.
3 A woman's female friend. १२ आलिः सखी वयस्या, ऽथ पतिवत्नी सभर्तृका ।
2 A woman whose husband is living.
2 Old or greyhaired. 2 Intelligent. 2 Wise. वृद्धा पलिक्नी, प्राज्ञी तु प्रज्ञा, प्राज्ञा तु धीमती ॥
1 The wife of the Sudra. १३ शूद्री शूद्रस्य भार्या स्याच्छूद्रा तज्-जातिरेव च । 1 A woman of the *Sūdrā* tribe.
2 A milk-woman. आभीरी तु महाशूद्री जाति-पुं-योगयोः समा ॥
2 A woman of the *Vaisya* tribe. १४ अर्याणी स्वयमर्या स्यात्, क्षत्रिया क्षत्रियाण्यपि ।
2 One of the *Kshatriya* tribe.
1 A female teacher. 2 A spiritual instructress. उपाध्यायाऽप्युपाध्यायी, स्यादाचार्याऽपि च स्वतः ॥
1 The wife of a spiritual preceptor. १५ आचार्यानी तु पुं-योगे, स्यादर्यी, क्षत्रियी तथा ।
1 Wife of a *Vaisya*. 1 Wife of a *Kshatriya*.
2 Wife of a tutor. 1 A masculine woman. उपाध्यायान्युपाध्यायी, पोटा स्त्री-पुंस-लक्षणा ॥
2 Hero's wife. 2 A hero's mother. १६ वीरपत्नी वीरभार्या, वीरमाता तु वीरसूः ।
4 A woman who has borne a child. जातापत्या प्रजाता च प्रसूता च प्रसूतिका ॥
1 A naked woman. १७ स्त्री नग्निका कोटवी स्याद्, दूती-संचारिके समे ।
2 A female messenger or go-between.
1 A middle-aged widow. कात्यायन्यर्ध-वृद्धा या काषाय-वसना ऽधवा ॥
1 A female artisan in another's house. १८ सैरन्ध्री पर-वेश्म-स्था स्व-वशा शिल्प-कारिका ।
1 A female servant. असिक्नी स्यादवृद्धा या प्रेष्या ऽन्तःपुर-चारिणी ॥
4 A courtesan or harlot. १९ वारस्त्री गणिका वेश्या रूपाजीवा, ऽथ सा जनैः ।
1 The head of a set of harlots. सत्कृता वारमुख्या स्यात्, कुट्टनी शम्भली समे ॥
2 A bawd or procuress.
3 A fortune-teller. 8 A woman in her courses. २० विप्राश्निका त्वीक्षणिका दैवज्ञा, ऽथ रजस्वला ।
स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि ॥

3 The courses. २१ ऋतुमत्यप्युदक्याऽपि, स्याद् रजः पुष्पमार्तवम् ।

2 Longing, as in pregnancy. श्रद्धालुर् दोहदवती, निष्कला विगतार्तवा ॥ 2 Past child-bearing.

4 Pregnant. २२ आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी ।

1 An assemblage of harlots. गणिकाऽऽदेस् तु गाणिक्यं, गार्भिणं, यौवतं गणे ॥

1—of pregnant women. 1—of young women.

2 A twice married woman. २३ पुनर्भूर् दिधिषूरूढा द्विस् तस्या दिधिषुः पतिः ।

1 Her second husband.

1 One in whose family she presides. स तु द्विजो ऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी ॥

2 Son of an unmarried woman. २४ कानीनः कन्यकाजातः सुतो, ऽथ सुभगासुतः ।

2 Son of an auspicious mother. सौभागिनेयः स्यात्, पारस्त्रैणेयस् तु पर-स्त्रियाः ॥

1 Son by another's wife.

1 Paternal aunt's son.
1 Maternal aunt's son. २५ पैतृष्वसेयः स्यात् पैतृष्वस्रीयश् च पितृ-ष्वसुः ।

1 Step-mother's son. सुतो, मातृ-ष्वसुश् चैव, वैमात्रेयो विमातृजः ॥

5 A bastard. २६ अथ बान्धकिनेयः स्याद् बन्धुलश् चाऽसतीसुतः ।

1 A son of a female beggar. कौलटेरः कौलटेयो, भिक्षुकी तु सती यदि ॥

२७ तदा कौलटिनेयो ऽस्याः कौलटेयोऽपि चाऽऽत्मजः ।

5 A son. आत्मजस् तनयः सूनुः सुतः पुत्रः, स्त्रियां त्वमी ॥

5 A daughter. २८ आहुर् दुहितरं सर्वे, ऽपत्यं तोकं तयोः समे ।

2 Offspring, male or female.

2 A legitimate son.
3 Father. स्व-जाते त्वौरसोरस्यौ, तातस् तु जनकः पिता ॥

4 Mother.
2 Sister. २९ जनयित्री प्रसूर् माता जननी, भगिनी स्वसा ।

1 Husband's sister.
3 Grand-daughter. ननान्दा तु स्वसा पत्युर्, नप्त्री पौत्री सुतात्मजा ॥

1 Husband's brother's wife. ३० भार्यास् तु भ्रातृ-वर्गस्य यातरः स्युः परस्परम् ।

1 Brother's wife.
2 Maternal uncle's wife. प्रजावती भ्रातृजाया, मातुलानी तु मातुली ॥

1 Mother-in-law.
1 Father-in-law. ३१ पति-पत्न्योः प्रसूः श्वश्रूः, श्वशुरस् तु पिता तयोः ।

1 Paternal uncle.
1 Maternal uncle. पितुर् भ्राता पितृव्यः स्यान्, मातुर् भ्राता तु मातुलः ॥

1 Wife's brothers.
2 Husband's brother.
३२ श्यालाः स्युर् भ्रातरः पत्न्याः, स्वामिनो देवृ-देवरौ ।

2 Sister's son.
1 Daughter's husband.
स्वस्रीयो भागिनेयः स्याज्, जामाता दुहितुः पतिः ॥

2 Father's father.
1 His father.
३३ पितामहः पितृपिता, तत्-पिता प्रपितामहः ।

1 Maternal grand-father.
मातुर् मातामहाऽऽद्येवं, सपिण्डास् तु सनाभयः ॥ 2 Kins-men.

4 A brother of the whole blood.
३४ समानोदर्य-सोदर्य-सगर्भ्य-सहजाः समाः ।

6 A distant kins-man.
सगोत्र-बान्धव-ज्ञाति-बन्धु-स्व-स्वजनाः समाः ।

1 Relationship.
३५ ज्ञातेयं, बन्धुता, तेषां क्रमाद् भाव-समूहयोः । 1 An aggregate of kinsmen.

4 A husband.
1 A paramour.
धवः प्रियः पतिर् भर्ता, जारस् तूपपतिः समौ ॥

1 An adulterine.
1 A widow's bastard.
३६ अ-मृते जारजः कुण्डो, मृते भर्तरि गोलकः ।

2 A brother's son.
2 Brother and sister.
भ्रात्रीयो भ्रातृजो, भ्रातृभगिन्यौ भ्रातरावुभौ ॥

4 Father and mother.
३७ मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।

2 Husband's or wife's father and mother.
श्वश्रूश्वशुरौ श्वशुरौ, पुत्रौ पुत्रश्च च दुहिता च ॥
1 Son and daughter.

4 Husband and wife.
३८ दम्पती जम्पती जायापती भार्यापती च तौ ।

2 The womb.
2 Amnion.
गर्भाशयो जरायुः स्यादुल्वं च कललोऽस्त्रियाम् ॥

2 The last month of gestation.
2 A fetus.
३९ सूतिमासो वैजननो, गर्भो भ्रूण इमौ समौ ।

5 A eunuch.
तृतीयाप्रकृतिः षण्ढः क्लीबः पण्डो नपुंसके ॥

3 Childhood.
४० शिशुत्वं शैशवं बाल्यं, तारुण्यं यौवनं समे । 2 Youth or man-hood.

3 Old age.
2 An assemblage of old men.
स्यात् स्थाविरं तु वृद्धत्वं, वृद्धसंघेऽपि वार्धकम् ॥

1 Greyness of hair.
2 Decrepitude.
४१ पलितं जरसा शौक्ल्यं केशादौ, विस्रसा जरा ।

4 An infant.
स्यादुत्तानशया डिम्भास्तनपा च स्तनन्धयी ॥

2 A child.
3 A young man.
४२ बालस्तु स्यान् माणवको, वयःस्थस् तरुणो युवा ।

6 An old man.
प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥

| English | No. | Sanskrit | Note |
|---|---|---|---|
| 3 One very aged.<br>3 Elder brother; first born.<br>5 Younger brother. | ४३ | वर्षीयान् दशमी ज्यायान्, पूर्वजस् त्वग्रियोऽग्रजः ।<br>जघन्यजे स्युः कनिष्ठ-यवीयोऽवरजानुजाः ॥ | |
| 3 Feeble; thin.<br>3 Strong; lusty.<br>5 Corpulent; pot-bellied. | ४४ | अमांसो दुर्बलश् छातो, बलवान् मांसलों ऽसलः ।<br>तुन्दिलम् तुन्दिभस् तुन्दी बृहत्कुक्षिः पिचिण्डिलः ॥ | |
| 4 Flat-nosed.<br>3 Having much, or fine, hair. | ४५ | अवटीटो ऽवनाटश् चा ऽवभ्रटो नतनासिके ।<br>केशवः केशिकः केशी, वलिनो वलिभः समौ ॥ | 2 Flaccid. |
| 2 Deformed.<br>3 A dwarf.<br>2 Sharp-nosed.<br>2 Noseless. | ४६ | विकलाङ्गस् त्वपोगण्डः, खर्वो ह्रस्वश् च वामनः ।<br>खरणाः स्यात् खरणसो, विग्रस् तु गतनासिकः ॥ | |
| 2 Having a nose like a hoof.<br>2 Long shanked.<br>2 Knock-kneed. | ४७ | खुरणाः स्यात् खुरणसः, प्रज्ञुः प्रगतजानुकः ।<br>ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्, संज्ञुः संहतजानुकः | 2 Bandy-legged. |
| 2 Deaf.<br>2 Hump-backed.<br>2 Small, short, or thin. | ४८ | स्याद्एडे बधिरः, कुब्जे गडुलः, कुकरे कुणिः ।<br>पृश्निरल्पतनौ, श्रोणः पङ्गौ, मुण्डस् तु मुण्डिते ॥ | 2 Having a crooked arm.<br>2 Bald; closeshaved. 2 A cripple. |
| 2 Squint-eyed.<br>2 Lame<br>3 A freckle or mark.<br>2 A mole or spot. | ४९ | वलिरः केकरे, खोडे खञ्जस्, त्रिषु जराऽवराः ।<br>जडुलः कालकः पिप्लुस्, तिलकस् तिलकालकः ॥ | |
| 2 Health.<br>2 Physicking.<br>5 Medicament. | ५० | अनामयं स्यादारोग्यं, चिकित्सा, रुक्प्रतिक्रिया ।<br>भेषजौषध-भैषज्यान्यगदो जायुरित्यपि ॥ | |
| 7 A disease.<br>3 Pulmonary consumption. 2 Catarrh. | ५१ | स्त्री रुग् रुजा चोपताप-रोग-व्याधि-गदाऽऽमयाः ।<br>क्षयः शोषश् च यक्ष्मा च, प्रतिश्यायस् तु पीनसः ॥ | |
| 3 Sneezing.<br>2 Cough.<br>3 Intumescence.<br>2 Kibe. | ५२ | स्त्री क्षुत् क्षुतं क्षवः पुंसि, कासस् तु क्षवथुः पुमान् ।<br>शोफस् तु श्वयथुः शोथः, पादस्फोटो विपादिका ॥ | |
| 2 Blotch.<br>4 Scab.<br>3 Itch.<br>2 Boil. | ५३ | किलास-सिध्मे, कच्छ्वां तु पाम-पामे विचर्चिका ।<br>कण्डूः खर्जूश् च कण्डूया, विस्फोटः पिटकः स्त्रियाम् ॥ | |
| 3 Sore or wound.<br>1 Ulcer.<br>2 Ringworm.<br>2 White Leprosy. | ५४ | व्रणो ऽस्त्रियामीर्ममरुः क्लीबे, नाडीव्रणः पुमान् ।<br>कोठो मण्डलकं, कुष्ठ-श्वित्रे, दुर्नामकाऽर्शसी ॥ | 2 Hemorrhoids. |

| | |
|---|---|
| 2 Constipation. 2 Diarrhœa. | ५५ आनाहस् तु निबन्धः स्याद्, ग्रहणीरुक् प्रवाहिका । |
| 3 Vomiting. | प्रच्छर्दिका वमिश् च स्त्री पुमांस्तु वमथुः समाः ॥ |
| Various diseases. 1 Abscess. | ५६ व्याधि-भेदा–विद्रधिः स्त्री ज्वर-मेह-भगन्दराः । |
| | 1 Fever. Diabetes. Fistula. |
| 2 Elephantisis. 2 Baldness. | ' श्लीपदं पादवल्मीकं, केशघ्नस् त्विन्द्रलुप्तकः ॥ ' |
| 2 Stone. 1 Stricture. | अश्मरी मूत्रकृच्छ्रं स्यात्, पूर्वे शुक्राऽवधेस् त्रिषु ॥ |
| 5 A Physician. | ५७ रोगहार्यगदङ्कारो भिषग्-वैद्यौ चिकित्सके । |
| 4 Recovered from sickness. | वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ॥ |
| 2 Emaciated or weak. 7 Diseased. | ५८ ग्लान-ग्लास्नू, आमयावी विकृतो व्याधितोऽपटुः । |
| 2 Scabby. | आतुरोऽभ्यमितोऽभ्यान्तः, समौ पामन-कच्छुरौ ॥ |
| 2 Afflicted with herpes. | ५९ दद्रुणो दद्रुरोगी स्यादर्शोरोगयुतोऽर्शसः । 2—with hemorrhoids. |
| 2 Afflicted with gout or rheumatism. | वातकी वातरोगी स्यात्, सातिसारोऽतिसारकी ॥ 2—with dysentery. |
| 4 Blear-eyed. | ६० स्युः क्लिन्नाक्षे चुल्ल-चिल्ल-पिल्लाः, क्लिन्नेऽक्ष्णि चाप्यमी । |
| 2 Insane. 3 Phlegmatic. | उन्मत्त उन्मादवति, श्लेष्मलः श्लेष्मणः कफी ॥ |
| 1 Gibbous from disease. | ६१ न्युब्जो भुग्ने रुजा, वृद्धनाभौ तुन्दिल-तुन्दिभौ । 2 Having an elevated navel. |
| 2 Having blotches. 2 Blind. 3 Fainting. | किलासी सिध्मलोऽन्धोऽदृक्, मूर्च्छाले मूर्तमूर्च्छितौ ॥ |
| 6 Seed. | ६२ शुक्रं तेजो-रेतसी च बीज-वीर्येन्द्रियाणि च । |
| 2 Bile. 2 Phlegm. 2 The skin. | मायुः पित्तं, कफः श्लेष्मा, स्त्रियां तु त्वगसृग्धरा ॥ |
| 6 Flesh. | ६३ पिशितं तरसं मांसं पललं क्रव्यमामिषम् । |
| 3 Dry flesh. | उत्तप्तं शुष्कमांसं स्यात् तत् वल्लूरं त्रि-लिङ्गकम् ॥ |
| 7 Blood. | ६४ रुधिरेऽसृग्-लोहितास्र-रक्त-क्षतज-शोणितम् । |
| 2 The heart 3 Fat. | बुक्काऽग्रमांसं, हृदयं हृत्, मेदस् तु वपा वसा ॥ |
| 1 Muscles at the nape of the neck. | ६५ पश्चाद्-ग्रीवा-शिरा मन्या, नाडी तु धमनिः शिरा । 3 A nerve tendon or gut. |
| 2 Lungs. 2 The brain. 2 An excretion. | तिलकं क्लोम, मस्तिष्कं गोर्दं, किट्टं मलोऽस्त्रियाम् ॥ |

2 Entrails. 2 The spleen.
६६ अन्त्रं पुरीतत्, गुल्मस् तु प्लीहा पुंस्यथ वस्नसा ।

2 A tendon or muscle. 2 The liver.
स्नायुः स्त्रियां, कालखण्ड-यकृती तु समे इमे ॥

3 Saliva. 1 Rheum of the eyes.
६७ सृणिका स्यन्दिनी लाला, दूषिका नेत्रयोर् मलम् ।

2 Dirt of nose. 1 Cerumen.
'नासामलं तु सिङ्घाणं, पिञ्जूषं कर्णयोर्मलम् ।' (१)

2 Urine. 9 Fæces.
मूत्रं प्रस्राव, उच्चाराऽवस्करौ शमलं शकृत् ॥

६८ पुरीषं गूथ-वर्चस्कम-स्त्री विष्ठा-विशौ स्त्रियौ ।

2 The skull; cranium. 3 Any bone.
स्यात् कर्परः कपालोऽस्त्री, कीकसं कुल्यमस्थि च ॥

2 The skeleton. 2 The back-bone.
६९ स्याच्छरीरास्थि कङ्कालः, पृष्ठास्थ्नि तु कशेरुका ।

2 The skull; or bones of the head. 2 A rib.
शिरोस्थनि करोटिः स्त्री, पार्श्वास्थनि तु पर्शुका ॥

4 A limb or member.
७० अङ्गं प्रतीकोऽवयवो ऽपघनो, ऽथ कलेवरम् ।

12 The body.
गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥

७१ कायो देहः क्लीब-पुंसोः स्त्रियां मूर्तिस् तनुस् तनूः ।

2 Point of the foot. 4 A foot.
पादाग्रं प्रपदं, पादः पदङ्घ्रिश्च चरणोऽस्त्रियाम् ॥

2 The ancles. 1 A heel.
७२ तद्-ग्रन्थी घुटिके गुल्फौ, पुमान् पार्ष्णिस् तयोरधः ।

2 A leg. 3 A knee.
जङ्घा तु प्रसृता, जानूरुपर्वाऽष्ठीवद्-स्त्रियाम् ॥

2 A thigh. 1 The plubis. 1 The groin.
७३ सक्थि क्लीबे पुमानूरुस्, तत्-संधिः पुंसि वङ्क्षणः ।

3 The anus. 1 The abdomen.
गुदं त्वपानं पायुर् ना, बस्तिर् नाभेरधो द्वयोः ॥

5 The hip and loins.
७४ कटो ना श्रोणिफलकं, कटिः श्रोणिः ककुद्मती ।

1 A woman's buttocks. 1 Mons veneris.
पश्चान् नितम्बः स्त्री-कट्याः, क्लीबे तु जघनं पुरः ॥

1 Cavities of the loins.
७५ कूपकौ तु नितम्ब-स्थौ द्वय-हीने कुकुन्दरे ।

2 The buttocks. 1 Parts of generation.
स्त्रियां स्फिचौ कटिप्रोथावुपस्थो वक्ष्यमाणयोः ॥

2 Vulva. 4 Penis.
७६ भगं योनिर् द्वयोः, शिश्नो मेढ्रो मेहन-शेफसी ।

3 The scrotum. 1 Osmnominaturm
मुष्कोऽण्डकोशो वृषणः, पृष्ठ-वंशाऽधरे त्रिकम् ॥

5 The belly. 2 The paps.
७७ पिचण्ड-कुक्षी जठरोदरं तुन्दं, स्तनौ कुचौ ।

2 A nipple. 5 The bosom.
चूचुकं तु कुचाग्रं स्यान्, न ना क्रोडं भुजान्तरम् ॥

| English | Sanskrit |
|---|---|
| 1 The back. | ७८ उरो वत्सं च वक्षश् च, पृष्ठं तु चरमं तनोः । |
| 3 A shoulder; scapula. 1 The collar bones. | स्कन्धो भुजशिरोंऽसोऽस्त्री, संधी तस्यैव जत्रुणी ॥ |
| 2 The arm-pits. 1 A side. | ७९ बाहुमूले उभे कक्षौ, पार्श्वम-स्त्री तयोरधः । |
| 3 The waist. | मध्यमं चा ऽवलग्नं च मध्यो ऽस्त्री, द्वौ परौ द्वयोः ॥ |
| 4 An arm. 3 An elbow. | ८० भुज-बाहू प्रवेष्टो दोः, स्यात् कफोणिस् तु कूर्परः । |
| 1 Humerus. 1 A fore-arm. | अस्योपरि प्रगण्डः स्यात्, प्रकोष्ठस् तस्य चाप्यधः ॥ |
| 1 Metacarpus. 3 A hand. | ८१ मणि-बन्धादा-कनिष्ठं करस्य करभो बहिः । |
| 2 A fore finger. 2 Fingers. | पञ्चशाखः शयः पाणिस्, तर्जनी स्यात् प्रदेशिनी ॥ |
| 1 The several fingers. | ८२ अङ्गुल्यः करशाखाः स्युः, पुंस्यङ्गुष्ठः प्रदेशिनी । |
| Thumb and others. | मध्यमाऽनामिका चापि कनिष्ठा चेति ताः क्रमात् ॥ |
| 4 A nail. | ८३ पुनर्भवः कररुहो नखो ऽस्त्री नखरो ऽस्त्रियाम् । |
| 1 A short span of three kinds. | प्रादेश-ताल-गोकर्णास् तर्जन्याऽऽदि-युते तते ॥ |
| 2 A long span. | ८४ अङ्गुष्ठ स-कनिष्ठे स्याद् वितस्तिर् द्वादशाङ्गुलः । |
| 3 The palm with extended fingers. | पाणौ चपेट-प्रतल-प्रहस्ता विस्तृताऽङ्गुलौ ॥ |
| 1 Both such palms joined. | ८५ द्वौ संहतौ संहतलः प्रतलौ वाम-दक्षिणौ । |
| 1 The palm bent. | पाणिर् निकुब्जः प्रसृतिस्, तौ युतावञ्जलिः पुमान् ॥ |
| 1 A cubit. | ८६ प्रकोष्ठे विस्तृत-करे हस्तो, मुष्ट्या तु बद्धया । 1 Both such palms joined. |
| 1 A short cubit. 1 An intermediate one. | स रत्निः स्यादरत्निस् तु निष्कनिष्ठेन मुष्टिना ॥ |
| 1 A fathom. | ८७ व्यामो बाह्वोः स-करयोस् ततयोस् तिर्यगन्तरम् । |
| 1 The measure of a man's reach. | ऊर्ध्व-विस्तृत-दोष्-पाणि-नृ-माने पौरुषं त्रिषु ॥ |
| 2 The throat. 3 The neck. | ८८ कण्ठो गलो, ऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि । |
| 1 One streaked with three lines. | कम्बुग्रीवा त्रि-रेखा सा, ऽवटुर् घाटा कृकाटिका ॥ 3 Back of the neck. |
| 7 Face. | ८९ वक्त्राऽऽस्ये वदनं तुण्डमाननं लपनं मुखम् । |
| 5 The nose. | क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ॥ |

| | | |
|---|---|---|
| 4 The lips. | ९० ओष्ठाऽधरौ तु रदनच्छदौ दशनवाससी । | |
| 1 The chin.<br>2 The cheeks. | अधस्ताच् चिबुकं, गण्डौ कपोलौ, तत्-परा हनुः ॥ | 1 The jaw. |
| 4 Teeth.<br>2 The palate. | ९१ रदना दशना दन्ता रदास्, तालु तु काकुदम् । | |
| 3 The tongue.<br>1 The corners of the mouth. | रसज्ञा रसना जिह्वा, प्रान्तावोष्ठस्य सृक्किणी ॥ | |
| 3 The forehead.<br>1 The eyebrows. | ९२ ललाटमलिकं गोधिरूर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ । | |
| 1 Space between the eye-brows. | कूर्चमस्त्री भ्रुवोर् मध्यं, तारकाऽक्ष्णः कनीनिका ॥ | 1 Pupil of the eye. |
| 8 An eye. | ९३ लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी । | |
| 5 A tear. | दृग्-दृष्टी चाऽस्रु नेत्राम्बु रोदनं चाऽस्रमश्रु च ॥ | |
| 1 The outer corners of the eyes. | ९४ अपाङ्गौ नेत्रयोरन्तौ, कटाक्षो ऽपाङ्ग-दर्शने । | 1 A glance or sidelook. |
| 6 An ear. | कर्ण-शब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ॥ | |
| 5 The head. | ९५ उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् । | |
| 6 Hair. | चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ॥ | |
| 2 Hair-collection of hair. | ९६ तद्-वृन्दे कैशिकं कैश्यमलकाश् चूर्णकुन्तलाः । | 2 Curls. |
| 1 The same on the forehead. | ते ललाटे भ्रमरकाः, काकपक्षः शिखण्डकः ॥ | 2 Locks, left at the tonsure. |
| 2 A braid or tress.<br>1 Braided hair. | ९७ कबरी केशवेशो, ऽथ धम्मिल्लः संयताः कचाः । | |
| 3 A lock left on the crown of the head. | शिखा चूडा केशपाशी, व्रतिनस् तु सटा जटा ॥ | 2 An ascetic's clotted hair. |
| 2 Unornamented hair. | ९८ वेणिः प्रवेणी, शीर्षण्य-शिरस्यौ विशदे कचे । | |
| 2 Clean and unentangled hair. | पाशः पक्षश् च हस्तश् च कलापार्थाः कचात् परे ॥ | 3 Much or ornamented hair. |
| 3 Hair of the body.<br>1 The beard. | ९९ तनूरुहं रोम लोम, तद्-वृद्धौ श्मश्रु पुम्-मुखे । | |
| 5 Dress or embellishment. | आकल्प-वेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥ | |
| 5 Adorned. | १०० दशैते त्रिष्वलङ्कर्ताऽलङ्करिष्णुश् च, मण्डितः । | |
| 2 Act of adorning. | प्रसाधितोऽलङ्कृतश् च भूषितश् च परिष्कृतः ॥ | |
| 3 Elegant. | १०१ विभ्राड् भ्राजिष्णु-रोचिष्णू, भूषणं स्यादलङ्क्रिया । | |
| 5 Ornaments; jewels or trinkets. | अलङ्कारस् त्वाभरणं परिष्कारो विभूषणम् ॥ | |

| English | Sanskrit |
|---|---|
| 2 A crest. 3 A gem on the crest. | १०२ मण्डनं चाथ मुकुटं किरीटं पुन्-नपुंसकम् । चूडामणिः शिरोरत्नं, तरलो हार-मध्य-गः ॥ 1 The middle gem of a string. |
| 1 A trinklet for the hair. 2—for the ear. 2 An ear-ring. | १०३ वालपाश्या पारितथ्या, पत्रपाश्या ललाटिका । —for the fore-head. कर्णिका तालपत्रं स्यात्, कुण्डलं कर्णवेष्टनम् ॥ |
| 2 A collar. 2 A necklace. 1 A golden one. 1 One of Pearls. | १०४ ग्रैवेयकं कण्ठभूषा, लम्बनं स्याल् ललन्तिका । स्वर्णैः प्रालम्बिका, ऽथोरःसूत्रिका मौक्तिकैः कृता ॥ |
| 2 A garland of pearls etc. | १०५ हारो मुक्तावली, देवच्छन्दो ऽसौ शत-यष्टिका । 1 One composed of 100 strings. |
| Garlands of various sorts. | हार-भेदा—यष्टि-भेदाद् गुच्छ-गुच्छार्ध-गोस्तनाः ॥ |
| 1 A single string. 1 One containing 27 pearls. | १०६ अर्धहारो माणवक, एकावल्येक-यष्टिका । सैव नक्षत्रमाला स्यात् सप्तविंशति—मौक्तिकैः ॥ |
| 4 A bracelet. 2 Ornament of the arm. | १०७ आवापकः पारिहार्यः कटको वलयो ऽस्त्रियाम् । केयूरमङ्गदं तुल्ये, अङ्गुलीयकमूर्मिका ॥ |
| 2 A finger-ring. 1 A seal ring. 2 Ornament of the wrist. 5 A woman's girdle. | १०८ साऽक्षरा ऽङ्गुलिमुद्रा स्यात्, कङ्कणं करभूषणम् । स्त्री-कट्यां मेखला काञ्ची सप्तकी रशना तथा ॥ |
| 1 A man's belt. | १०९ क्लीबे सारसनं चा ऽथ पुंस्-कट्यां शृङ्खलं त्रिषु । |
| 6 Ornament of the feet. | पादाङ्गदं तुलाकोटिर् मञ्जीरो नूपुरो ऽस्त्रियाम् ॥ |
| 2 Bells or tinkling ornaments. 1 Materials of cloth. | ११० हंसकः पादकटकः, किङ्किणी क्षुद्रघण्टिका । त्वक्-फल-कृमि- रोमाणि वस्त्रयोनिर्, दश त्रिषु ॥ |
| 1 Made of bark. 3 Made of cotton. 1 Silken. 1 Woolen. | १११ वाल्कं क्षौमाऽऽदि, फालं तु कार्पासं बादरं च तत् । कौशेयं कृमिकोशोत्थं, राङ्कवं मृग-रोम-जम् ॥ |
| 4 New and unbleached cloth. 1 A pair of bleached cloth. | ११२ अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे । तत् स्यादुद्गमनीयं यद् धौतयोर् वस्त्रयोर् युगम् ॥ |
| 1 Bleached silk. 1 Any thing precious. 2 Wove silk. 2 A veil or mantle. | ११३ पत्रोर्णं धौत-कौशेयं बहु-मूल्यं महाधनम् । क्षौमं दुकूलं स्याद्, द्वे तु निवीतं प्रावृतं त्रिषु ॥ |

2 Ends of a cloth. ११४ स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर् वस्तयो द्वयोः ।
3 Length. 2 Width. दैर्घ्यमायाम आरोहः, परिणाहो विशालता ॥

2 Old cloth. ११५ पटच्चरं जीर्णवस्त्रं, समौ नक्तक-कर्पटौ । 2 Dirty or tattered cloth.
6 Cloth. वस्त्रमाच्छादनं वासश् चैलं वसनमंशुकम् ॥

2 Fine cloth. 2 Coarse cloth. ११६ सुचेलकः पटो ऽस्त्री स्याद्, वराशिः स्थूलशाटकः ।
2 A cover or wrapper. निचोलः प्रच्छदपटः, समौ रल्लक-कम्बलौ ॥ 2 A blanket.

4 Lower garment. ११७ अन्तरीयोपसंव्यान-परिधानान्यधोंऽशुके ।
5 Upper garment. द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥

2 A bodice. ११८ संव्यानमुत्तरीयं च, चोलः कूर्पासको ऽस्त्रियाम् ।
1 A warm cloak. नीशारः स्यात् प्रावरणे हिमाऽनिल-निवारणे ॥

1 A petti-coat. ११९ अर्धोरुकं वर-स्त्रीणां स्याच् चण्डातकम-स्त्रियाम् ।
1 A dress reaching to the feet. स्यात् त्रिष्वाप्रपदीनं तत् प्राप्नोत्याप्रपदं हि यत् ॥

2 An awning. 1 A tent. १२० अ-स्त्री वितानमुल्लोचो, दूष्याऽऽद्यं वस्त्र-वेश्मनि ।
3 A screen or wall of cloth. प्रतिसीरा जवनिका स्यात् तिरस्करिणी च सा ॥

2 Embellishment of person. 3 Cleaning of it. १२१ परिकर्माऽङ्गसंस्कारः, स्यान् मार्ष्टिर् मार्जना मृजा ।
2 Cleaning with perfumes. उद्वर्तनोत्सादने द्वे समे, आप्लाव आप्लवः ॥ 3 Bathing.

3 Perfuming. 2 Reviving a fragrancy. १२२ स्नानं, चर्चा तु चार्चिक्यं स्थासको, ऽथ प्रबोधनम् ।
2 Painting the person. अनुबोधः, पत्रलेखा पत्राङ्गुलिरिमे समे ॥

4 A circle on the fore-head. १२३ तमालपत्र-तिलक-चित्रकाणि विशेषकम् ।
द्वितीयं च तुरीयं च न स्त्रियामथ कुङ्कुमम् ॥

11 Saffron. १२४ काश्मीरजन्माऽग्निशिखं वरं बाह्लीक-पीतने ।
रक्त-संकोच-पिशुनं धीरं लोहितचन्दनम् ॥

6 Lac. 2 Cloves. १२५ लाक्षा राक्षा जतु क्लीबे यावो ऽलक्तो द्रुमामयः ।
3 A yellow fragrant wood. लवङ्गं देवकुसुमं श्री-संज्ञमथ जायकम् ॥

| | | | |
|---|---|---|---|
| 7 A gallochum. | १२६ | कालीयकं च कालानुसार्यं चाथ समाऽर्थकम् । | |
| | | वंशिकाऽगुरु–राजार्ह-लोहं कृमिज-जोङ्गकम् ॥ | |
| 2 A black kind. | १२७ | कालागुर्वगुरु स्यात् तु मङ्गल्या मल्लि-गन्धि यत् । | 1 A very fragrant sort. |
| 5 Resin. | | यक्षधूपः सर्जरसो राल-सर्वरसावपि ॥ | |
| 2 Compounded perfume. | १२८ | बहुरूपो ऽप्यथ वृकधूप-कृत्रिमधूपकौ । | |
| 4 Incense. | | तुरुष्कः पिण्डकः सिह्लो यावनो ऽप्यथ पायसः ॥ | |
| 5 Terpentine. | १२९ | श्रीवासो वृकधूपो ऽपि श्रीवेष्ट-सरलद्रवौ । | |
| 3 Musk. | | मृगनाभिर् मृगमदः कस्तूरी चाथ कोलकम् ॥ | |
| 3 Bdellium. | १३० | कङ्कोलकं कोशफलमथ कर्पूरम-स्त्रियाम् । | |
| 5 Camphor. | | घनसारश् चन्द्र-संज्ञः सिताभ्रो हिमवालुका ॥ | |
| 4 Sandal wood | १३१ | गन्धसारो मलयजो भद्रश्रीश् चन्दनो ऽस्त्रियाम् । | |
| Varieties of sandal wood. | | तैलपर्णिक-गोशीर्षे हरिचन्दनम-स्त्रियाम् ॥ | |
| 5 Red sanders. | १३२ | तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् । | |
| 2 Mace. | | कुचन्दनं चाथ जातीकोश-जातीफले समे ॥ | |
| 1 Perfumed paste. | १३३ | कर्पूराऽगुरु-कस्तूरी-कङ्कोलैर् यक्षकर्दमः । | |
| 4 Perfume for the person. | | गात्रानुलेपनी वर्तिर् वर्णकं स्याद् विलेपनम् ॥ | |
| 2 Powder.<br>2 Perfumed. | १३४ | चूर्णानि वासयोगाः स्युर्, भावितं वासितं त्रिषु । | |
| 1 Adjusting with perfumes. | | संस्कारो गन्ध-माल्याऽऽद्यैर् यः स्यात् तदधिवासनम् ॥ | |
| 3 A chaplet. | १३५ | माल्यं माला-स्रजौ मूर्ध्नि, केश-मध्ये तु गर्भकः । | 1 One worn in |
| 1 One suspended from the middle lock. | | प्रभ्रष्टकं शिखा-लम्बि, पुरो-न्यस्तं ललामकम् ॥ | the hair. |
| | | 1 Or falling over the forehead. | |
| 1 Or hung round the neck. | १३६ | प्रालम्बमृजु-लम्बि स्यात् कण्ठाद्, वैकक्षिकं तु तत् । | |
| | | 1 Or worn as a scarf. | |
| | | यत् तिर्यक् क्षिप्तमुरसि, शिखास्वापीड-शेखरौ | |
| 2 completion or fullness. | १३७ | रचना स्यात् परिस्यन्द, आभोगः परिपूर्णता । | 2 Or tied on the crown. |
| 2 A pillow.<br>3 A bed. | | उपधानं तूपबर्हः, शय्यायां शयनीय-वत् ॥ | |

| | |
|---|---|
| 4 A bedstead. | १३८ शयनं, मञ्च-पर्यङ्क-पल्यङ्काः खट्वया समाः । 2 Decoration of |
| 2 A ball to play with. 2 A lamp. | गेन्दुकः कन्दुको, दीपः प्रदीपः, पीठमासनम् ॥ hair. |
| 2 A chair or stool. 2 A casket. | १३९ समुद्गकः संपुटकः, प्रतिग्राहः पतद्ग्रहः । |
| 2 A spitting pot. 2 A comb. | प्रसाधनी कङ्कतिका, पिष्टातः पटवासकः ॥ 2 Perfumed powder. |
| 3 A mirror. 2 A fan. | १४० दर्पणे मुकुराऽऽदर्शौ, व्यजनं तालवृन्तकम् । |

इति नृवर्गः ६, अत्र मूलश्लोकाः १३९ ॥, क्षे. श्लो. १.

## अथ ब्रह्म-वर्गः ७

| | |
|---|---|
| 9 Race or lineage. | १ संततिर् गोत्र-जनन-कुलान्यभिजनाऽन्वयौ ॥ |
| | वंशोऽन्ववायः संतानो, वर्णाः स्युर् ब्राह्मणाऽऽदयः ॥ |
| 1 Tribes or classes. | २ विप्र-क्षत्रिय-विट्-शूद्राश् चातुर्वर्ण्यमिति स्मृतम् ॥ |
| 2 Sprung from any family. | राजबीजी राजवंश्यो, बीज्यस् तु कुलसंभवः ॥ 2 Sprung from a royal house. |
| 6 Of honourable parentage. | ३ महाकुल-कुलीनाऽऽर्य-सभ्य-सज्जन-साधवः ॥ |
| 1 The four orders. | ब्रह्मचारी गृही वानप्रस्थो भिक्षुश् चतुष्टये ॥ |
| 1 An order, or religious state. | ४ आश्रमो ऽस्त्री, द्विजात्यग्रजन्म-भूदेव-वाडवाः ॥ 6 A man of the sacerdotal tribe. |
| 1 One, practising the six-allowed acts. | विप्रश् च ब्राह्मणो, ऽसौ षट्कर्मा यागाऽऽदिभिर् वृतः ॥ |
| 22 Wise or learned. | ५ विद्वान् विपश्चिद् दोषज्ञः सन् सुधीः कोविदो बुधः ॥ |
| | धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः । |
| | ६ धीमान् सूरिः कृती कृष्टिर् लब्धवर्णो विचक्षणः ॥ |
| 2 A priest conversant with scripture. | दूरदर्शी दीर्घदर्शी, श्रोत्रियच्छान्दसौ समौ । |
| 2 Mimansaka. 2 Brahmavadin. | 'मीमांसको जैमिनीये, वेदान्ती ब्रह्मवादिनि ॥१॥ |
| 2 Vaisheshika. 2 Buddha. | वैशेषिके स्यादौलूक्यः, सौगतः शून्यवादिनिः ।' |
| 2 Logicians. 2 Jain. | 'नैयायिकस् त्वक्षपादः स्यात्, स्याद्वादिक आर्हकः । |
| 2 Nihilist. 3 Sankhyas. | चार्वाक-लौकायतिकौ, सत्कार्ये सांख्य-कापिलौ' ॥२॥ |

2 Teacher.
1 A spiritual parent
1 An instructor in holy writ.

७ उपाध्यायोऽध्यापको,ऽथ स्यान् निषेकाऽऽदि-कृद् गुरुः ।
मन्त्र-व्याख्या-कृदाचार्य, आदेष्टा त्वध्वरे व्रती ॥ 3 Sacrificer.

1 Sacrificer in soma.
2 One who sacrifices in due form.

८ यष्टा च यजमानश् च, स सोमवति दीक्षितः ।
इज्याशीलो यायजूको, यज्वा तु विधिनेष्टवान् ॥

1 One who frequently sacrifices.

1 Who does so in a certain form.

९ स गीष्पतीष्टया स्थपतिः, सोमपीथी तु सोमपाः ।

2 Who has drunk the juice of acid Asclepias.

1 Who has bestowed all his wealth.

सर्ववेदाः स येनेष्टो यागः सर्व-स्व-दक्षिणः ॥

1 Who is completely learned.
1 Who has taken leave of his preceptor.

१० अनूचानः प्रवचने साऽङ्गे ऽधीती, गुरोस् तु यः ।
लब्धाऽनुज्ञः समावृत्तः, सुत्वा त्वभिषवे कृते ॥

1 Who has made ablutions.

3 A pupil.
2 Novices.
1 Fellow students.

११ छात्राऽन्तेवासिनौ शिष्ये, शैक्षाः प्राथमकल्पिकाः ।
एक-ब्रह्म-व्रताऽऽचारा मिथः सब्रह्मचारिणः ॥

1 Spiritual brethren.
2 Traditional instruction.

१२ सतीर्थ्यास् त्वेक-गुरवश्, चितवानग्निमग्निचित् । 1 Chayana Sacrificer.
पारम्पर्योपदेशे स्यादैतिह्यमितिहाऽव्ययम् ॥

1 Untaught knowledge.
7 A sacrifice.

१३ उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वा ऽऽरम्भ उपक्रमः । 1 Deliberate commencement.
यज्ञः सवो ऽध्वरो यागः सप्ततन्तुर् मखः क्रतुः ॥

1 The great sacraments.

१४ पाठो, होमश्, चाऽतिथीनां सपर्या, तर्पणं, बलिः ।
एते पञ्च महायज्ञा ब्रह्मयज्ञाऽऽदि-नामकाः ॥

9 An assembly or meeting.
1 A room in front of the offerings.

१५ समज्या परिषद् गोष्ठी सभा-समिति-संसदः ।
आस्थानी क्लीबमास्थानं स्त्री-नपुंसकयोः सदः ॥

1 By-standers.
4 Members of the assembly.

१६ प्राग्वंशः प्राग्घविर्-गेहात्, सदस्या विधि-दर्शिनः ।
सभासदः सभास्ताराः सभ्याः सामाजिकाश् च ते ॥

1 Reciters of the prayers.
2 Officiating priest.

१७ अध्वर्यूद्गातृ-होतारो यजुः-साम-र्ग्-विदः क्रमात् ।
आग्नीध्राऽऽद्या धनैर् वार्या ऋत्विजो याजकाश् च ते ॥

1 The altar. 2 Sacrificial ground.
१८ वेदिः परिष्कृता भूमिः, समे स्थण्डिल-चत्वरे ।

2 A ring on the post. 1 An enclosure.
चषालो यूपकटकः, कुम्बा सुगहना वृतिः ॥

2 Top of the post. — 1 Wood for lighting a fire.
१९ यूपाग्रं तर्म, निर्मन्थ्य- दारुणि त्वरणिर् द्वयोः ।

3 Three sorts of sacred fire.
दक्षिणाग्निर् गार्हपत्याऽऽहवनीयौ त्रयोऽग्नयः ॥

1 The three sacred fires. — 1 Fire consecrated by prayers.
२० अग्नि-त्रयमिदं त्रेता, प्रणीतः संस्कृतोऽनलः ।

Sacrificial fire. 3 Sort of sacred fire.
समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः ॥

२१ यो गार्हपत्यादानीय दक्षिणाऽग्निः प्रणीयते ।

3 The wife of fire.
तस्मिन्नानाय्यो, ऽथाऽग्नायी स्वाहा च हुतभुक्प्रिया ॥

2 Prayer uttered to excite fire.
२२ ऋक् सामिधेनी धाय्या च या स्यादग्नि-समिन्धने ।

1 Metre.
गायत्री-प्रमुखं छन्दो, हव्य-पाके चरुः पुमान् ॥

1 A prepared oblation for the gods.

1 Curd of two milk whey.
२३ आमिक्षा सा शृतोष्णे या क्षीरे स्याद् दधि-योगतः ।

1 A leather fan.
धवित्रं व्यजनं तद् यद् रचितं मृग-चर्मणा ॥

1 Oblation of butter and curds. — 1—of rice. Milk and sugar.
२४ पृषदाज्यं स-दध्याऽज्ये, परमान्नं तु पायसम् ।

1 Food of the gods and manes.
हव्य-कव्ये दैव-पित्र्ये अन्ने, पात्रं स्रुवाऽऽदिकम् ॥

1 A vase or vessel.

1 Various sorts.
२५ ध्रुवोपभृज्जुहूर्, ना तु स्रुवो, भेदाः स्रुचः स्त्रियः ।

1 A victim.
उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः ॥

3 Slain or immolated.
२६ परंपराकं शमनं प्रोक्षणं च वधाऽर्थकम् ।

1 An intended oblation.
वाच्य-लिङ्गाः प्रमीतोपसंपन्न-प्रोक्षिता हते ॥

1 Burnt as a sacrifice.
२७ सान्नाय्यं हविरग्नौ तु हुतं त्रिषु वषट्कृतम् ।

1 An act of sacrifice.
दीक्षाऽन्तोऽवभृथो यज्ञे, तत्-कर्माऽर्हं तु यज्ञियम् ॥

1 Supplemental sacrifice. — 1 Suitable to a sacrifice.

1 Act of Sacrifice. — 1 of pious liberality.
२८ त्रिष्वथ क्रतु-कर्मेष्टं, पूर्तं खाताऽऽदि कर्म यत् ।

1 Remains of a sacrifice or oblation.
अमृतं विघसो यज्ञशेष-भोजनशेषयोः ॥

13 Gift or donation. २९ त्यागो विहापितं दानमुत्सर्जन-विसर्जने ।
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥

३० प्रादेशनं निर्वपणमपवर्जनमंहतिः ।
1 Obsequies of a deceased person. मृताऽर्थे तदहे दानं त्रिषु स्यादौर्ध्वदेहिकम् ॥

2 Gifts in honour of the deceased. ३१ पितृदानं निवापः स्याच्छ्राद्धं तत्-कर्म शास्त्रतः । 1 Funeral repast.
1 Monthly obsequies. अन्वाहार्यं मासिकें,ऽशो ऽष्टमो ऽह्नः कुतपो ऽस्त्रियाम् ॥
1 Eighth hour of the day.

2 Research or inquiry. ३२ पर्येषणा परीष्टिश् चा ऽन्वेषणा च गवेषणा । 2 Request or solicitation.
4 Asking or begging. सनिस् त्वध्येषणा, याञ्चाऽभिशस्तिर् याचनाऽर्थना ॥

1 A respectful oblation. ३३ षट् तु त्रिष्वर्घ्यमर्घाऽर्थे, पाद्यं पादाय वारिणि । 1 Water for ablution of the feet.
1 Proper for a guest. क्रमादातिथ्याऽऽतिथेये अतिथ्यर्थे ऽत्र साधुनि ॥

6 A guest. ३४ स्युरावेशिक आगन्तुरतिथिर् ना गृहागते ।
2 Getting up. ‘प्राघूर्णिकः प्राघुणकश् चाऽभ्युत्थानं तु गौरवम्’ ।
6 Worship. पूजा नमस्याऽपचितिः सपर्याऽर्चाऽर्हणाः समाः ॥

4 Service. ३५ वरिवस्या तु शुश्रूषा परिचर्या ऽप्युपासना ।
4 Roaming. व्रज्या ऽटा ऽट्या पर्यटनं, चर्या त्वीर्या-पथे स्थितिः ॥
1 Perseverance in austerities.

2 Sipping. ३६ उपस्पर्शस् त्वाचमनमथ मौनमभाषणम् । 2 Silence.
4 Valmiki. ‘प्राचेतसश्चाऽऽदिकविःस्यान् मैत्रावरुणिश् च सः॥३॥
3 Viswamitra. वाल्मीकश् चाऽथ गाधेयो विश्वामित्रश् च कौशिकः
4 Vyāsa. व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः’ ॥ ४ ॥
5 Order, method. आनुपूर्वी स्त्रियां वा ऽऽवृत्-परिपाटी अनुक्रमः ।

3 Neglect. ३७ पर्यायश् चा ऽतिपातस् तु स्यात् पर्यय उपात्ययः ।
2 Meritorious act. नियमो व्रतम-स्त्री, तच् चोपवासाऽऽदि पुण्यकम् ॥

2 A fast.
1 Discrimination. ३८ औपवस्तं तूपवासो, विवेकः पृथगाऽऽत्मता ।
1 Joining both hands while reading the *Vedas*. स्याद् ब्रह्मवर्चसं वृत्ताऽध्ययन-र्द्धिरथा ऽञ्जलिः ॥

1 Sanctified saliva. 1 Holiness. | ३९ पाठे ब्रह्माञ्जलिः, पाठे विप्रुषो ब्रह्मबिन्दवः ।

1 A holy posture. 3 A sacred precept. | ध्यान-योगाऽऽसने ब्रह्मासनं, कल्पे विधि-क्रमौ ॥

1 A chief injunction. 1 A secondary one. | ४० मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस् तु ततोऽधमः ।

1 Holy study. | संस्कार-पूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः ॥

2 Obeisance. | ४१ समे तु पादग्रहणमभिवादनमित्युभे ।

5 A mendicant. | भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ॥

3 An ascetic. 2 A holy sage. | ४२ तपस्वी तापसः पारिकाङ्क्षी, वाचंयमो मुनिः ।

1 Patient of austerity. 2 Religious students. | तपः-क्लेश-सहो दान्तो, वर्णिनो ब्रह्मचारिणः ॥

2 Saints. | ४३ ऋषयः सत्यवचसः, स्नातकस् त्वाप्लुतो व्रती । | 1 Aninitiated householder.

2 Sages with subdued senses. | ये निर्जितेन्द्रिय-ग्रामा यतिनो यतयश् च ते ॥

2 One who sleeps on the bare ground. | ४४ यः स्थण्डिले व्रत-वशाच्छेते स्थण्डिलशाय्यसौ ।

2 Men perfectly virtuous. | स्थाण्डिलश् चाथ विरजस्तमसः स्युर् द्वयातिगाः ।

3 A purified person. | ४५ पवित्रः प्रयतः पूतः, पाखण्डाः सर्वलिङ्गिनः । | 2 Heretics and impostors.

1 A student's staff. | पालाशो दण्ड आषाढो व्रते, राम्भस् तु वैणवः ॥

1 One cut from a Bambu.

2 His waterpot. 1 His cushion. | ४६ अ-स्त्री कमण्डलुः कुण्डी, व्रतिनां साऽऽसनं बृषी ।

3 A hide used by him. | अजिनं चर्म कृत्तिः स्त्री, भैक्षं भिक्षा-कदम्बकम् ॥

1 Aggregate of alms.

2 Reading or muttering of prayers. | ४७ स्वाध्यायः स्याज् जपः, सुत्या ऽभिषवः सवनं च सा ।

2 Religious bathing. | सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ॥

1 An expiatory prayer. | ४८ दर्शश् च पौर्णमासश् च यागौ पक्षाऽन्तयोः पृथक् ॥

1 Half-monthly sacrifice.

1 A perpetual duty. | ४९ शरीर-साधनाऽपेक्षं नित्यं यत् कर्म तद् यमः ।

1 A voluntary one. | नियमस् तु स यत् कर्म नित्यमागन्तु-साधनम् ॥

4 Shaving. | 'क्षौरं तु भद्राकारणं मुण्डनं वपनं त्रिषु ।

2 Robe. 1 Petticoat. | कक्षापटी च कौपीनं शाटी च स्त्रीति लक्ष्यतः' ॥ ५ ॥

५० उपवीतं ब्रह्म-सूत्रं प्रोद्धृते दक्षिणे करे। 1 The cord passed over the left shoulder.
1 Over the right shoulder.
प्राचीनावीतमन्यस्मिन्, निवीतं कण्ठ-लम्बितम् ॥
1 Suspended over the neck.

1 Part of the hand sacred to the gods.
५१ अङ्गुल्यग्रे तीर्थं दैवं, स्वल्पाऽङ्गुल्योर् मूले कायम्।
1 Part of the hand sacred to the creator.
1—to the manes.
मध्ये ऽङ्गुष्ठाङ्गुल्योः पित्र्यं, मूले त्वङ्गुष्ठस्य ब्राह्मम् ॥

3 Deified state.
1—to the *Vedas*.
५२ स्याद् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि।
1 Inferior deification.
1 Penance
देवभूयाऽऽदिकं तद्-वत्, कृच्छ्रं सांतपनाऽऽदिकम् ॥

1 Fasting to die.
५३ संन्यासवत्यनशने पुमान् प्रायो, ऽथ वीरहा।
1 One who has left his sacred fire.
नष्टाग्निः, कुहना लोभान् मिथ्येर्या-पथ-कल्पना ॥ 1 Hypocrisy.

1 An uninitiated person.
५४ व्रात्यः संस्कार-हीनः स्यादस्वाध्यायो निराकृतिः।
2 One who has not made his studies.
2 A hypocrite or impostor.
धर्मध्वजी लिङ्गवृत्तिरवकीर्णी क्षतव्रतः ॥ 2 A violator of his vow.

1 One who is asleep at sunset, or at sunrise.
५५ सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च।
अंशुमानभिनिर्मुक्ताऽभ्युदितौ च यथा-क्रमम् ॥

1 One married before his elder brother.
५६ परिवेत्ता ऽनुजो ऽनूढे ज्येष्ठे दार-परिग्रहात्।
1 The unmarried elder brother.
परिवित्तिस् तु तज्-ज्यायान्, विवाहोपयमौ समौ ॥

6 Marriage.
५७ तथा परिणयोद्वाहोपयामाः पाणिपीडनम्।
5 Copulation.
व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ॥

3 Three human pursuits.
५८ त्रिवर्गो धर्म-कामाऽर्थैश्, चतुर्वर्गः स-मोक्षकैः। 1 Four objects.
1 The same equally potent.
स-बलैस् तैश् चतुर्भद्रं, जन्याः स्निग्धा वरस्य ये ॥
1 The bridegroom's friends.

इति ब्रह्म-वर्गः ७, अत्र मूलश्लोकाः ५८, क्षे० श्लो० ५.

## अथ क्षत्रिय-वर्गः ८

5 A man of the military tribe. 7 A king.

१ मूर्धाभिषक्तो राजन्यो बाहुजः क्षत्रियो विराट् ।
राजा राट् पार्थिव-क्ष्माभृन्-नृप-भूप-महीक्षितः ॥

1 An emperor. 2 A universal monarch.

२ राजा तु प्रणताऽशेष सामन्तः स्यादधीश्वरः ।
चक्रवर्ती सार्वभौमो, नृपो ऽन्यो मण्डलेश्वरः ॥

1 Any other prince.

1 A paramount. 1 An assemblage of princes.

३ येनेष्टं राजसूयेन मण्डलस्येश्वरश् च यः ।
शास्ति यश् चाऽऽज्ञया राज्ञः स सम्राडथ राजकम् ॥

1—of soldiers. 3 A minister or counsellor.

४ राजन्यकं च नृपति-क्षत्रियाणां गणे क्रमात् ॥
मन्त्री धीसचिवोऽमात्यो, ऽन्ये कर्मसचिवास् ततः ॥

1 Other ministers.

2 The king's companions. 2 The judge.

५ महामात्राः प्रधानानि, पुरोधास् तु पुरोहितः ।
द्रष्टरि व्यवहाराणां प्राड्विवाकाऽक्षदर्शकौ ॥

2 The priest or chaplain.

5 The warder or porter. 2 An armed guard. 2 A superintendent.

६ प्रतीहारो द्वारपाल-द्वाःस्थ-द्वाःस्थित-दर्शकाः ।
रक्षिवर्गस् त्वनीकस्थो, ऽथाऽध्यक्षाऽधिकृतौ समौ ॥

1 An overseer of a village.

७ स्थायुकोऽधिकृतो ग्रामे, गोपो ग्रामेषु भूरिषु ।

1 An inspector of a district.

2 The treasurer. 2 The master of the mint.

भौरिकः कनकाध्यक्षो, रूप्याध्यक्षस् तु नैष्किकः ॥

1 The chamberlain. 4 Attendants of the women.

८ अन्तःपुरे त्वधिकृतः स्यादन्तर्वेशिको जनः ।
सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश् च ते ॥

2 A eunuch. 3 A servant. 1 A foe. 1 A stranger or neutral.

९ षण्ढो वर्षवरस् तुल्यौ, सेवकाऽर्थ्यनुजीविनः ।
विषयाऽनन्तरो राजा शत्रुर्, मित्रमतः परम् ॥

1 A stranger. 19 Any enemy.

१० उदासीनः परतरः, पार्ष्णिग्राहस् तु पृष्ठतः ।
रिपौ वैरि-सपत्नाऽरि-द्विषद्-द्वेषण-दुर्हृदः ॥

1 An enemy in the rear.

११ द्विड्-विपक्षाऽहिताऽमित्र-दस्यु-शात्रव-शत्रवः ।
अभिघाति-पराऽराति-प्रत्यर्थि-परिपन्थिनः ॥

3 A friend and contemporary. — १२ वयस्यः स्निग्धः सवया, अथ मित्रं सखा सुहृत् । — 3 A friend.

2 Friendship. 2 Complaisance. — सख्यं साप्तपदीनं स्यादनुरोधोऽनुवर्तनम् ॥

7 A spy. — १३ यथार्हवर्णः प्रणिधिरपसर्पश् चरः स्पशः ।

2 Trusted; confidential. — चारश् च गूढपुरुषश् चाऽऽप्त-प्रत्ययितौ समौ ॥

8 An astrologer. — १४ सांवत्सरो ज्यौतिषिको दैवज्ञ-गणकावपि ।

स्युर् मौहूर्तिक-मौहूर्त-ज्ञानि-कार्तान्तिका अपि ॥

2 A man versed in any science. — १५ तान्त्रिको ज्ञातसिद्धान्तः, सत्री गृहपतिः समौ ॥ — 2 A generous householder.

4 A scribe. — लिपिङ्करोऽक्षरचणोऽक्षरचञ्चुश् च लेखके ।

4 Scripture or writing. — १६ लिखिताऽक्षरसंस्थाने लिपिर् लिबिरुभे स्त्रियौ ।

2 A messenger or ambassador. — स्यात् संदेशहरो दूतो, दूत्यं तद्-भाव-कर्मणी ॥

1 An embassy or message.

5 A traveller. — १७ अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ॥

1 The requisites of regal administration. — १८ स्वाम्यमात्य-सुहृत्-कोश-राष्ट्र-दुर्ग-बलानि च ।

1 Including citizens. — राज्याङ्गानि, प्रकृतयः, पौराणां श्रेणयोऽपि च ॥

1 Six expedients of defence. — १९ संधिर् ना विग्रहो यानमासनं द्वैधमाश्रयः ।

1 Power. — षड् गुणाः, शक्तयस् तिस्रः प्रभावोत्साह-मन्त्र-जाः ॥

1 Threefold object. — २० क्षयः स्थानं च वृद्धिश् च त्रिवर्गो नीति-वेदिनाम् ।

2 Majesty. — स प्रतापः प्रभावश् च यत् तेजः कोश-दण्ड-जम् ॥

1 Four means of success. — २१ साम-दाने भेद-दण्डावित्युपाय-चतुष्टयम् ।

3 Punishment. 2 Conciliation. — साहसं तु दमो दण्डः, साम सान्त्वमथो समौ ॥

2 Disunion. — २२ भेदोपजापावुपधा धर्माऽऽद्यैर् यत् परीक्षणम् ॥

1 Trial or test of honesty.

1 Secret. — २३ पञ्च त्रिष्वषडक्षीणो यस् तृतीयाऽऽद्य-गोचरः ।

7 Solitary, or private. — विविक्त-विजनच्छन्न-निःशलाकास् तथा रहः ॥

२४ रहश् चोपांशु चाऽलिङ्गे, रहस्यं तद् भवे त्रिषु । — 1 Occurring in private.

2 Trust or confidence. 1 Deviation from right. — समौ विस्रम्भ-विश्वासौ, भ्रेषो भ्रंशो यथोचितात् ॥

5 Propriety or fitness. २५ अभ्रेष-न्याय-कल्पास् तु देशरूपं समञ्जसम् ।
6 Right, fit or proper. युक्तमौपयिकं लभ्यं भजमानाऽभिनीत-वत् ॥
2 Deliberation. २६ न्याय्यं च त्रिषु षट्, संप्रधारणा तु समर्थनम् ।
6 An order or command. अववादस् तु निर्देशो निदेशः शासनं च सः ॥
4 Continuance in the right way. २७ शिष्टिश् चाऽऽज्ञा च, संस्था तु मर्यादा धारणा स्थितिः ।
4 Reform. 'सुधारणा सुधारा स्त्री सुस्थितिः सुदशोन्नतिः' ॥
3 Offence or transgression. आगो ऽपराधो मन्तुश् च, समे तूद्दान-बन्धने ॥ 2 Binding.
1 Double penalty. 3 Royal revenue. 1 Toll. २८ द्विपाद्यो द्वि-गुणो दण्डो, भागधेयः करो बलिः । घट्टाऽऽदि-देयं शुल्को ऽस्त्री, प्राभृतं तु प्रदेशनम् ॥
6 A present. २९ उपायनमुपग्राह्यमुपहारस् तथोपदा ।
2 A special gift. यौतकाऽऽदि तु यद् देयं सुदायो हरणं च तत् ॥
2 Present time. 1 Future time. ३० तत्कालस् तु तदात्वं स्यादुत्तरः काल आयतिः ।
1 Immediate consequence. सांदृष्टिकं फलं सद्यः, उदर्कः फलमुत्तरम् ॥ 1 Future consequence.
1 Causal and unseen danger. ३१ अदृष्टं वह्नि-तोयाऽऽदि, दृष्टं स्व-पर-चक्र-जम् । 1 Obvious danger.
1 Latent danger. महीभुजामहिभयं स्व-पक्ष-प्रभवं भयम् ॥
2 Bearing of royal insignia. ३२ प्रक्रिया त्वधिकारः स्याच्, चामरं तु प्रकीर्णकम् । 2 A cow tail.
2 A throne. 1 One made of gold. नृपासनं यत् तद् भद्रासनं, सिंहासनं तु तत् ॥
2 A parasol. 1 A royal one. ३३ हैमं, छत्रं त्वातपत्रं, राज्ञस् तु नृपलक्ष्म तत् ।
2 An auspious jar. 2 A golden vase. भद्रकुम्भः पूर्णकुम्भो, भृङ्गारः कनकालुका ॥
2 A camp. 2A sentry or guard. ३४ निवेशः शिबिरं षण्ढे, सज्जनं तूपरक्षणम् ।
1 Component part of an army. हस्त्यश्व-रथ-पादातं सेनाङ्गं स्याच् चतुष्टयम् ॥
15 An elephant. ३५ दन्ती दन्तावलो हस्ती द्विरदो ऽनेकपो द्विपः ।
मतङ्गजो गजो नागः कुञ्जरो वारणः करी ॥
2 The leader of a wild herd. ३६ इभः स्तम्बेरमः पद्मी, यूथनाथस् तु यूथपः ।
2 A rutting elephant. मदोत्कटो मदकलः, कलभः करिशावकः ॥ 1 A young elephant.

3 A furious elephant. ३७ प्रभिन्नो गर्जितो मत्तः, समौ उद्वान्त-निर्मदौ ।
2 An elephant out of rut.

2 A herd of elephants. हास्तिकं गजता वृन्दे, करिणी धेनुका वशा ॥ 3 A female elephant.

2 The temples. ३८ गण्डः कटो, मदो दानं, वमथुः करशीकरः ।
2 The temporal juice. 2 Water emitted from the elephant's trunk.

1 His frontal globes. कुम्भौ तु पिण्डौ शिरसस्, तयोर् मध्ये विदुः पुमान् ॥

1 His forehead. 1 His eyeball. ३९ अवग्रहो ललाटं स्यादीषिका त्वक्षि-कूटकम् ।

1 The hollow between them. अपाङ्ग-देशो निर्याणं, कर्ण-मूलं तु चूलिका ॥ 1 Root of his ear.

1 Corner of his eye. 1 Part below the frontal globes. ४० अधः कुम्भस्य वाहित्थं, प्रतिमानमधो ऽस्य यत् ।
1 Under that; between the tusks.

1 His withers. आसनं स्कन्ध-देशः स्यात्, पद्मकं बिन्दु-जालकम् ॥
1 Marks on his face and trunk.

1 His side or flank. 1 His front. ४१ पार्श्व-भागः पक्षभागो, दन्तभागस् तु यो ऽग्रतः ।

1 His shoulder and thigh. द्वौ पूर्व-पश्चाज्जङ्घाऽऽदि-देशौ गात्राऽवरे क्रमात् ॥

1 Pike to drive him. ४२ तोत्रं वेणुकमालानं बन्ध-स्तम्भे, ऽथ शृङ्खले ।
1 Post to which he is secured. 2 Chain for his feet.

2 Hook to guide him. अन्दुको, निगडोऽस्त्री-स्यादङ्कुशोऽस्त्री सृणिः स्त्रियाम् ।

2 Leather girt. ४३ चूषाकक्ष्या वरत्रा स्यात्, कल्पना सज्जना समे । 2 Dressing an elephant.

4 His trappings. प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ॥

1 Unfit for riding. ४४ वीतं त्वसारं हस्त्यऽश्वं, वारी तु गजबन्धनी । 2 An elephant-stable.

13 A horse. घोटके पीति-तुरग-तुरङ्गाऽश्व-तुरङ्गमाः ॥

४५ वाजि-वाहाऽर्व-गन्धर्व-हय-सैन्धव-सप्तयः ।

1 Horses of a good breed. आजानेयाः कुलीनाः स्युर्, विनीताः साधु-वाहिनः ॥
1—trained for the manege.

1 Horses of certain local breeds. ४६ वनायुजाः पारसीकाः काम्बोजा वाल्हिका हयाः ।

1 A horse fit for sacrifice. ययुरश्वोऽश्वमेधीयो, जवनस् तु जवाऽधिकः ॥
1 A fleet horse; a courser.

2 A pack horse.
1 A white horse.
४७ पृष्ठ्यः स्थौरी, सितः कर्को, रथ्यो वोढा रथस्य यः ।
1 A chariot-horse.

1 A colt.
3 A mare.
बालः किशोरो, वाम्यश्वा वडवा, वाडवं गणे ॥ 1 A stud.

1 A day's journey for a horse.
४८ त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते ।

1 A horse's flank.
2 Neighing.
कश्यं तु मध्यमश्वानां, हेषा ह्रेषा च निस्वनः ॥

1 The throat.
४९ निगालस्तु गलोद्देशे, वृन्दे त्वश्वीयमाश्ववत् । 1 A multitude of horses.

5 A horse's paces.
आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ॥

1 His paces generally.
५० गतयोऽमूः पञ्च धारा, घोणा तु प्रोथमस्त्रियाम् । 1 His nose.

2 The bit of the bridle.
2 A horse's hoof.
कविका तु खलीनोऽस्त्री, शफं क्लीबे खुरः पुमान् ॥

5 His tail.
५१ पुच्छोऽस्त्री लूम-लाङ्गूले बालहस्तश्च बालधिः ।

2 A horse rolling himself.
त्रिषूपावृत्त-लुठितौ परावृत्ते मुहुर् भुवि ॥

3 A war chariot.
५२ याने चक्रिणि युद्धाऽर्थे शताङ्गः स्यन्दनो रथः ।

1 Any other car.
असौ पुष्परथश्चक्र-यानं न समराय यत् ॥

3 A covered car.
2 A cart.
५३ कर्णीरथः प्रवहणं डयनं च समं त्रयम् ।

1 A carriage drawn by oxen.
क्लीबे ऽनः शकटोऽस्त्री स्याद्, गन्त्री कम्बलि-वाह्यकम् ॥

2 A litter.
2 A hammock or swing.
५४ शिबिका याप्ययानं स्याद्, दोला प्रेङ्खाऽऽदिकाः स्त्रियाम् ।

2 A car covered with tigerskin.
उभौ तु द्वैप-वैयाघ्रौ द्वीपि-चर्माऽऽवृते रथे ॥

1—with white woolen cloth.
५५ पाण्डु-कम्बल-संवीतः स्यन्दनः पाण्डुकम्बली ।

1—with blanket or cloth, etc.
रथे काम्बलवास्त्राऽऽद्याः कम्बलादिभिरावृते ॥

2 A multitude of cars.
५६ त्रिषु द्वैपाऽऽदयो, रथ्या रथकड्या रथ-व्रजे ।

2 Fore-part of a carriage.
धूः स्त्री क्लीबे यानमुखं, स्याद् रथाङ्गमपस्करः ॥
2 Any part of a carriage.

2 A wheel.
2 Its periphery.
५७ चक्रं रथाङ्गं, तस्याऽन्ते नेमिः स्त्री स्यात् प्रधिः पुमान् ।

2 Its nave.
1 The pin of the axle.
पिण्डिका नाभिरक्षाग्र-कीलके तु द्वयोराणिः ॥

2 The fender of a carriage.
५८ रथगुप्तिर् वरूथो ना, कूबरस्तु युगंधरः । 2 The pole.

1 Bottom of a carriage.
1 A separate yoke.
अनुकर्षो दार्वधःस्थं, प्रासंगो ना युगाद्युगः ॥

5 Any vehicle. ५९ सर्वं स्याद् वाहनं यानं युग्यं पत्रं च धोरणम् ।

1 A mediate one. परम्परा-वाहनं यत् तद् वैनीतकम-स्त्रियाम् ॥

4 Elephant drivers. ६० आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ।

8 A charioteer. नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः ॥

६१ सव्येष्ठृ-दक्षिणस्थौ च संज्ञा रथ-कुटुम्बिनः ।

2 Warriors in eha riots.
2 Horsemen. रथिनः स्यन्दनारोहा, अश्वारोहास् तु सादिनः ॥

3 Warriors generally. ६२ भटा योधाश् च योद्धारः, सेनारक्षास् तु सैनिकाः । 2 Guards or sentinels.

2 Arrayed troops. सेनायां समवेता ये सैन्यास् ते सैनिकाश् च ते ॥

2 A thousand strong. ६३ बलिनो ये सहस्रेण साहस्रास् ते सहस्रिणः ।

2 A guard or attendant.
2 A general. परिधिस्थः परिचरः, सेनानीर् वाहिनीपतिः ॥

2 Armour; hawberk. ६४ कञ्चुको वारबाणो ऽस्त्री यत् तु मध्ये स-कञ्चुकाः ।

2 The girdle over the coat of mail. बध्नन्ति तत् सारसनाधिकाङ्गे, ऽथ शीर्षकम् ॥ 3 A helmet.

६५ शीर्षण्यं च शिरस्त्रे, ऽथ तनुत्रं वर्म दंशनम् ।

7 Mail. उरश्छदः कङ्कटको जागरः कवचो ऽस्त्रियाम् ॥

4 Clothed, or accoutred. ६६ आमुक्तः प्रतिमुक्तश् च पिनद्धश् चाऽपिनद्ध-वत् ।

5 Armed or mailed सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ॥

1 Multitude of soldiers mailed. ६७ त्रिष्वामुक्ताऽदयो, वर्मभृतां कावचिकं गणे ।

7 A foot-soldier. पदाति-पत्ति-पदग-पादातिक-पदातयः ॥

1 Infantry. ६८ पद्गश् च पदिकश् चाऽथ पादातं पत्ति-संहतिः ।

4 A soldier by profession. शस्त्राजीवे काण्डस्पृष्टाऽऽयुधीयाऽऽयुधिकाः समाः ॥

3 Skilled in archery ६९ कृतहस्तः सुप्रयोगविशिखः कृतपुङ्ख-वत् ।

3 Unskilled; missing the butt. अपराद्धपृषत्को ऽसौ लक्ष्याद् यश् च्युत-सायकः ॥

6 An archer or bowman. ७० धन्वी धनुष्मान् धनुष्को निषङ्ग्यस्त्री धनुर्धरः ।

2 One fighting only with arrows. स्यात् काण्डवांस्तु काण्डीरः, शाक्तीकः शक्तिहेतिकः ॥

2 A warrior armed with an iron lance.

७१ यष्टीक-पारश्वधिकौ यष्टि-परशु-हेतिकौ ।

2—with a club, or a battle-axe.

नैस्त्रिंशिको ऽसिहेतिः स्यात्, समौ प्रासिक-कौन्तिकौ ॥

2—with a sword. 2—with a spear.

2—bearing a shield. 2 A standardbearer. ७२ चर्मी फलकपाणिः स्यात्, पताकी वैजयन्तिकः ।

4 A companion or follower. अनुप्लवः सहायश् चा ऽनुचरो ऽनुचरोऽभिचरः समाः ॥

7 A leader. ७३ पुरोगाऽग्रेसर-प्रष्ठाऽग्रतःसर-पुरःसराः ।

2 Marching slow. पुरोगमः पुरोगामी, मन्दगामी तु मन्थरः ॥

2 Marching fast. 2 A runner express. ७४ जङ्घालोऽतिजवस् तुल्यौ, जङ्घाकरिक-जाङ्घिकौ ।

6 Runner. तरस्वी त्वरितो वेगी प्रजस्वी जवनो जवः ॥

2 Able to conquer. Fit for conquest. ७५ जय्यो यः शक्यते जेतुं, जेयो जेतव्य-मात्रके ।

1 A conqueror. जैत्रस् तु जेता, यो गच्छत्यलं विद्विषतः प्रति ॥

3 One who ably faces the foe. ७६ सो ऽभ्यमित्र्यो ऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि ।

2 Strong; powerful. ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जोऽतिशयाऽन्वितः ॥

2 Broad-chested. ७७ स्यादुरस्वानुरसिलो, रथिको रथिरो रथी । 2 The owner of a car.

2 One who goes as he lists. कामगाम्यनुकामीनो, ह्यत्यन्तीनस् तथा भृशम् ॥

2 One who moves much.

3 A hero. ७८ शूरो वीरश् च विक्रान्तो, जेता जिष्णुश् च जित्वरः ।

3 Victorious; used to conquer.

1 Skilled in war. सांयुगीनो रणे साधुः, शस्त्रजीवाऽऽदयस् त्रिषु ॥

11 An army; or forces. ७९ ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः ।

वरूथिनी बलं सैन्यं चक्रं चाऽनीकम-स्त्रियाम् ॥

1 Array of troops. ८० व्यूहस् तु बल-विन्यासो भेदा—दण्डाऽऽदयो युधि ।

1 Different forms of array.

1 The rear. 2 Reserve. प्रत्यासारो व्यूहपार्ष्णिः, सैन्यपृष्ठे प्रतिग्रहः ॥

1 A platoon. ८१ एकेभैक-रथा त्र्यऽश्वा पत्तिः पञ्च-पदातिका ।

1 Greater bodies. पत्त्यङ्गैस् त्रि-गुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥

८२ सेनामुखं, गुल्म-गणौ, वाहिनी, पृतना, चमूः, ।

1 A complete army. अनीकिनी, दशाऽनीकिन्यक्षौहिण्यथ संपदि ॥

3 Success or prosperity. ८३ संपत्तिः श्रीश् च लक्ष्मीश् च, विपत्त्यां विपदापदौ ।

3 Adversity

4 A weapon. आयुधं तु प्रहरणं शस्त्रमस्त्रमथाऽस्त्रियौ ॥

7 A bow. ८४ धनुश्-चापौ धन्व-शरासन-कोदन्ड-कार्मुकम् ।

1 The bow of Karna. इष्वासो ऽप्यथ कर्णस्य कालपृष्ठं शरासनम् ॥

2 That of Arjuna. ८५ कपि-ध्वजस्य गाण्डीव-गाण्डिवौ पुन्-नपुंसकौ ।

1 Notched extremity of a bow. कोटिरस्याऽटनी, गोधा-तले ज्या-घात-वारणे ॥

1 Leathern fence for the arm.

2 Middle of the bow. 4 The bow-string. ८६ लस्तकस् तु धनुर्मध्यं, मौर्वी ज्या शिञ्जिनी गुणः ।

1 Two attitudes in shooting. स्यात् प्रत्यालीढमालीढमित्याऽऽदि स्थान-पञ्चकम् ॥

3 A butt or mark. 2 Archery. ८७ लक्ष्यं लक्षं शरव्यं च, शराभ्यास उपासनम् ।

12 An arrow. पृषत्क-बाण-विशिखा अजिह्मग-खगाऽऽशुगाः ॥

८८ कलम्ब-मार्गण-शराः पत्री रोप इषुर् द्वयोः ।

2 Iron arrows. 2 Feather of an arrow. प्रक्ष्वेडनास् तु नाराचाः, पक्षो वाजस्, त्रिषूत्तरे ॥

1 Shot as an arrow. 2 Poisoned arrow. ८९ निरस्तः प्रहिते बाणे, विषाऽक्ते दिग्ध-लिप्तकौ ।

6 Quiver. तूणोपासंग-तूणीर-निषङ्गा इषुधिर् द्वयोः ॥

9 A scimitar. ९० तूण्यां, खड्गे तु निस्त्रिंश-चन्द्रहासाऽसि-रिष्टयः ।

कौक्षेयको मण्डलाग्रः करवालः कृपाण-वत् ॥

1 A hilt or handle. 1 A sword knot. ९१ त्सरुः खड्गाऽऽदि-मुष्टौ स्यान्, मेखला तन्-निबन्धनम् ।

3 A shield. 1 A gripe of a shield. फलको ऽस्त्री फलं चर्म, संग्राहो मुष्टिरस्य यः ॥

3 A mallet. 2 A cudgel. ९२ द्रुघणो मुद्गर-घनौ, स्यादीली करवालिका ।

2 A short arrow. 2 A bludgeon. भिन्दिपालः सृगस् तुल्यौ, परिघः परिघातिनः ॥

4 An axe. ९३ द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ।

4 A knife. स्याच्छस्त्री चाऽसिपुत्री च छुरिका चाऽसिधेनुका ।

2 A javelin. 2 An iron crow. ९४ वा पुंसि शल्यं शङ्कुर् ना, सर्वला तोमरोऽस्त्रियाम् ।

2 A bearded dart. प्रासस् तु कुन्तः, कोणस् तु स्त्रियः पाल्यश्रि-कोटयः ॥ 4 Sharp edge of a sword.

3 Assembling of a complete army. ९५ सर्वाभिसारः सर्वौघः सर्वसन्नहनाऽर्थकः ।

1 Lustration of arms. लोहाभिसारो ऽस्त्रभृतां राज्ञां नीराजना-विधिः ॥

1 March to repel an enemy. ९६ यत् सेनया ऽभिगमनमरौ तदभिषेणनम् ।

6 March of an assailant. यात्रा व्रज्या ऽभिनिर्याणं प्रस्थानं गमनं गमः ॥

2 Surrounding a foe. ९७ स्यादासारः प्रसरणं, प्रचक्रं चलिताऽर्थकम् । 1 An army in motion.

1 A gallant attack. अ-हितान् प्रत्य-भीतस्य रणे यानमभिक्रमः ॥

2 Awakeners. 2 Bards in throngs. ९८ वैतालिका बोधकराश्, चाक्रिका घाण्टिकाऽर्थकाः ।

2 Bards by birth. 2 Panegyrists. स्युर् मागधास् तु मगधा, बन्दिनः स्तुतिपाठकाः ॥

2 Chosen soldiers. ९९ संशप्तकास् तु समयात् संग्रामाद-निवर्तिनः ॥

4 Dust. १०० रेणुर् द्वयोः स्त्रियां धूलिः पांसुर् ना न द्वयो रजः ।

2 Powder. चूर्णे क्षोदः, समुत्पिञ्ज-पिञ्जलौ भृशमाकुले ॥ 2 An army in great disorder.

4 A flag or banner. १०१ पताका वैजयन्ती स्यात् केतनं ध्वजम-स्त्रियाम् ।

1 The post of danger. सा वीराशंसनं युद्ध-भूमिर् या ऽति-भय-प्रदा ॥

1 Emulative onset. १०२ अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम् ।

1 Boasting. आहोपुरुषिका दर्पाद् या स्यात् संभावना ऽऽत्मनि ॥

1 Conceit of superiority. १०३ अहमहमिका तु सा स्यात् परस्परं यो भवत्यहङ्कारः ।

10 Strength or power. द्राविणं तरः सहो-बल-शौर्याणि स्थाम शुष्मं च ॥

2 Great power. १०४ शक्तिः पराक्रमः प्राणो, विक्रमस् त्वतिशक्तिता ।

1 Drink of warriors. वीरपाणं तु यत् पानं वृत्ते भाविनि वा रणे ॥

31 War, battle, combat. १०५ युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ।

मृधमास्कन्दनं संख्यं समीकं सांपरायिकम् ॥

१०६ अ-स्त्रियां समराऽनीक-रणाः कलह-विग्रहौ ।
संप्रहाराऽभिसंपात-कलि-संस्फोट-संयुगाः ॥

१०७ अभ्यामर्द-समाघात-संग्रामाऽभ्यागमाऽऽहवाः ।
समुदायः स्त्रियः संयत्-समित्याऽऽजि-समिद्-युधः॥

2 Close fight; struggle. — १०८ नियुद्धं बाहुयुद्धे, ऽथ तुमुलं रणसंकुले । — 2 Mingled combat.

2 War-Whoop. 2 Troops of elephants. — क्ष्वेडा तु सिंहनादः स्यात्, करिणां घटना घटा ॥

2 Mutual defiance of combatants. — १०९ क्रन्दनं योधसंरावो, बृंहितं करिगर्जितम् । — 2 Roaring of elephants.

1 Twang of a bow. 2 Drum used in battle. — विस्फारो धनुषः स्वानः, पटाहाऽऽडम्बरौ समौ ॥

3 Violence. — ११० प्रसभं तु बलात्कारो हठो, ऽथ स्खलितं छलम् । — 2 Fraud; stratagem; circumvention.

3 A portent. — अजन्यं क्लीबमुत्पात उपसर्गः समं त्रयम् ॥

3 Fainting. 2 Devastation. — १११ मूर्छा तु कश्मलं मोहो ऽप्यवमर्दस् तु पीडनम् ।

2 Striking to disable the foe. — अभ्यवस्कन्दनं त्वभ्यासादनं, विजयो जयः ॥ — 2 Victory.

3 Revenge. — ११२ वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ।

8 Flight; retreat. — प्रद्रावोद्द्राव-संद्राव-संदावा विद्रवो द्रवः ॥

1 Defeat. — ११३ अपक्रमो ऽपयानं च, रणे भङ्गः पराजयः ।

2 Defeated; vanquished. — पराजित-पराभूतौ, त्रिषु नष्ट-तिरोहितौ ॥ — 2 Missing, lost having vanquished.

30 Slaughter. — ११४ प्रमापणं निबर्हणं निकारणं विशारणम् ।
प्रवासनं परासनं निषूदनं निहिंसनम् ॥

११५ निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ।
निस्तर्हणं निहननं क्षणनं परिवर्जनम् ॥

११६ निर्वापणं विशसनं मारणं प्रतिघातनम् ।
उद्वासन-प्रमथन-क्रथनोज्जासनानि च ॥

११७ आलम्भ-पिञ्ज-विशर-घातोन्माथ-वधा अपि ।

10 Death. — स्यात् पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ॥

११८ अन्तो नाशो द्वयोर् मृत्युर् मरणं निधनोऽस्त्रियाम् ।
7 Dead; having expired. परासु-प्राप्तपञ्चत्व-परेत-प्रेत-संस्थिताः ॥
3 A funeral pile. ११९ मृत-प्रमीतौ त्रिष्वेते, चिता चित्या चितिः स्त्रियाम् ।
1 A headless trunk. कबन्धो ऽस्त्री क्रिया-युक्तमपमूर्ध-कलेवरम् ॥
2 A cemetery. 2 A dead body. १२० श्मशानं स्यात् पितृवनं, कुणपः शवमस्त्रियाम् ।
2 A prisoner. 2 A prison or jail. प्रग्रहोपग्रहौ बन्द्यां, कारा स्यात् बन्धनालये ॥
2 Breath. 2 Life. १२१ पुंसि भूम्न्यसवः प्राणाश् चैवं, जीवोऽसुधारणम् ।
2 Age; duration of life. आयुर् जीवितकालो, ना जीवातुर् जीवनौषधम् ॥
2 Drug to revive the dead.

इति क्षत्रिय-वर्गः ८, अत्र मूलश्लोकाः १२१, क्षे० श्लो० १

## अथ वैश्य-वर्गः ९

6 Men of the third tride. १ ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः ।
6 Livelihood; profession. आजीवो जीविका वार्ता वृत्तिर् वर्तन-जीवने ॥
1 Various professions. २ स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः ।
2 Service. 2 Agriculture. सेवा श्ववृत्तिरनृतं कृषिरुञ्छ-शिलं त्वृतम् ॥ 2 Gleaning.
1 Alms solicited; or unsolicited. ३ द्वे याचिताऽयाचितयोर् यथा-संख्यं मृताऽमृते ।
2 Traffic; commerce. सत्यानृतं वणिग्भावः, स्यादृणं पर्युदञ्चनम् ॥ 3 Debt.
3 Profession of usury. ४ उद्धारो, ऽर्थप्रयोगस् तु कुसीदं वृद्धिजीविका ।
1 A thing borrowed for use. याञ्चया ऽऽप्तं याचितकं, निमयादापमित्यकम् ॥
1 Obtained by barter.
1 Creditor and Debtor. ५ उत्तमर्णाऽधमर्णौ द्वौ प्रयोक्तृ-ग्राहकौ क्रमात् ।
4 A usurer. कुसीदिको वार्धुषिको वृद्ध्याजीवश् च वार्धुषिः ॥
4 A husbandman. ६ क्षेत्राजीवः कर्षकश्च कृषिकश् च कृषीवलः ।
1 (Field) fit for corn and rice. क्षेत्रं व्रैहेय-शालेयं व्रीहि-शाल्युद्भवोचितम् ।

1 —producing barley, &c.
2 —producing seamum, &c.

७ यव्यं यवक्यं याष्टिक्यं यवाऽऽदि-भवनं हि यत् ।
तिल्य-तैलीन-वन् माषोमाऽणु-भङ्गा-द्विरूपता ॥

1 —fit for other grain as pulse, &c
2Fit for vegetation.

८ मौद्गीन-कौद्रवीणाऽऽदि शेष-धान्योद्भव-क्षमम्।
'शाक-क्षेत्राऽऽदिके शाकशाकटं शाकशाकिनम्' ॥१॥

2 (Land) ploughed after sowing.

बीजाकृतं तूप्तकृष्टे, सीत्यं कृष्टं च हल्य-वत् ॥

3 Land any how ploughed or tilled.

4 Thrice ploughed.
5 Twice ploughed.

९ त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपि तस्मिन् ।
द्विगुणाकृते तु सर्वं पूर्वं शम्बाकृतमपीह ॥

1 Sown with certain measures of seed.

१० द्रोणाऽऽढकाऽऽदि-वापाऽऽदौ द्रौणिकाऽऽढकिकाऽऽदयः
खारी-वापस् तु खारीक, उत्तमर्णाऽऽदयस् त्रिषु ॥

3 A field.
4 A multitude of fields.

११ पुन्-नपुंसकयोर् वप्रः केदारः क्षेत्रमस्य तु ।
कैदारकं स्यात् कैदार्यं क्षेत्रं कैदारिकं गणे ॥

2 Clods of earth.
2 A harrow.
3 A goad.
2 A spade or hoe.

१२ लोष्टानि लेष्टवः पुंसि, कोटिशो लोष्टभेदनः ।
प्राजनं तोदनं तोत्रं, खनित्रमवदारणे ॥

2 A sickle.
3The tie of the yoke.
5 The ploughshare.
4 A plough.

१३ दात्रं लवित्रमाबन्धो योत्रं योक्त्रमथो फलम् ।
निरीषं कुटकं फालः कृषको, लाङ्गलं हलम् ॥

1 The body of the plough.

2 The pin of yoke.
2 The pole or shaft of the plough.

१४ गोदारणं च सीरो, ऽथ शम्या स्त्री युगकीलकः ।
ईषा लाङ्गलदण्डः स्यात्, सीता लाङ्गलपद्धतिः ॥

2 A furrow.

1 Post of the threshing floor.
3 Rice ripening in the rains.

१५ पुंसि मेधिः खले दारु न्यस्तं यत् पशु-बन्धने ।
आशुर् व्रीहिः पाटलः स्याच्छितशूक-यवौ समौ ॥

2 Barley.

1 Green or unripe barley.
4 Peas.
2 Sort of grain.

१६ तोक्मस् तु तत्र हरिते, कलायस् तु सतीनकः ।
हरेणु-रेणुकौ चाऽस्मिन्, कोरदूषस् तु कोद्रवः ॥

2 Lentil.
3 Mustard seed.

१७ मङ्गल्यको मसूरो, ऽथ मकुष्ठक-मयुष्ठकौ ।
वनमुद्गे, सर्षपे तु द्वौ तन्तुभ-कदम्बकौ ॥

3 Sort of kidney bean.

| | | |
|---|---|---|
| 1 The white sort. 2 Wheat. | १८ सिद्धार्थस् त्वेष धवलो, गोधूमः सुमनः समौ । | |
| 2 Half ripe barley. 2 Chich pea. | स्याद् यावकस् तु कुल्माषश्, चणको हरिमन्थकः ॥ | |
| 2 Barren sesamum. | १९ द्वौ तिले तिलपेजश् च तिलपिञ्जश् च निष्फले । | |
| 5 Black mustard. | क्षवः क्षुताभिजननो राजिका कृष्णिकाऽऽसुरी ॥ | |
| 2 Panic seed. 3 Lin; and linseed. | २० स्त्रियौ कङ्गु-प्रियङ्गू द्वे, अतसी स्यादुमा क्षुमा । | |
| 2 Hemp. 1 *Chīná.* | मातुलानी तु भङ्गायां, व्रीहि-भेदस् त्वणुः पुमान् ॥ | |
| 2 Beard of corn. 2 Ear or spike. | २१ किंशारुः सस्यशूकं स्यात्, कणिशं सस्यमञ्जरी । | |
| 3 Corn or rice. 1 Clump of grass. &c. | धान्यं व्रीहिः स्तम्बकरिः, स्तम्बो गुच्छस् तृणादिनः ॥ | |
| 2 Stalk or culm. 1 Straw. | २२ नाडी नालं च काण्डोऽस्य, पलालोऽस्त्री स निष्फलः । | |
| 2 Chaff. 2 Husk of rice or corn. | कडङ्गरो बुसं क्लीबे, धान्यत्वचि तुषः पुमान् ॥ | |
| 1 An awn. 2 A legume or pod. | २३ शूकोऽस्त्री श्लक्ष्ण-तीक्ष्णाऽग्रे, शमी शिम्बा, त्रिषूत्तरे । | |
| 2 Stored, as grain. | ऋद्धमावसितं धान्यं, पूतं तु बहुलीकृतम् ॥ | 2 Threshed out and winnowed. |
| 1 Grain in pods. 1 Bearded corn. | २४ माषाऽऽदयः शमीधान्ये, शूकधान्ये यवाऽऽदयः । | |
| 1 Rice. | शालयः कलमाऽऽद्याश् च षष्टिकाऽऽद्याश् च, पुंस्यमी ॥ | |
| 2 Wild grains. 2 Coix. | २५ तृणधान्यानि नीवाराः, स्त्री गवेधुर् गवेधुका । | |
| 2 A pestle for cleaning rice. | अयोग्रं मुसलोऽस्त्री स्यादुदूखलमुलूखलम् ॥ | 2 A mortar. |
| 2 A winnowing basket. | २६ प्रस्फोटनं शूर्पमस्त्री, चालनी तितउः पुमान् । | 2 A sieve or cribble. |
| 2 A sack. 2 A granary. | स्यूत-प्रसेवौ, कण्डोल-पिटौ, कट-किलिञ्जकौ ॥ | 2 A mat. |
| 3 A kitchen. | २७ समानौ, रसवत्यां तु पाकस्थान-महानसे । | |
| 1 Overseer of the kitchen. | पौरोगवस् तदध्यक्षः, सूपकारास् तु बल्लवाः ॥ | 7 Cooks. |
| | २८ आरालिका आन्धसिकाः सूदा औदनिका गुणाः । | |
| 3 A baker. | आपूपिकः कान्दविको भक्ष्यकार, इमे त्रिषु ॥ | |
| 5 A furnance or fire-place. | २९ अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका । | |
| 4 A portable furance. | अङ्गारधानिकाऽङ्गारशकट्यपि हसन्त्यपि ॥ | |

| | | |
|---|---|---|
| 1 A fire.<br>2 Fire brand | ३० हसन्यप्यथ न स्त्री स्यादङ्गारो, ऽलातमुल्मुकम् । | |
| 2 A frying pan.<br>2 An iron plate or pan. | क्लीबेऽम्बरीषं भ्राष्ट्रो, ना कन्दुर् वा स्वेदनी स्त्रियाम् ॥ | |
| 2 A jar.<br>3 A pitcher. | ३१ अलिञ्जरः स्यान् मणिकं, कर्कर्यालुर् गलन्तिका । | |
| 4 A pot.<br>4 A waterpot. | पिठरः स्थाल्युखा कुण्डं, कलशस् तु त्रिषु द्वयोः ॥ | |
| | ३२ घटः कुट-निपाव-स्त्री शरावो वर्धमानकः । | 2 A lid. |
| 2 A seether or boiler.<br>2 A goblet. | ऋजीषं पिष्टपचनं, कंसो ऽस्त्री पानभाजनम् ॥ | |
| 1 A leather bottle for oil. | ३३ कुतूः कृत्तेः स्नेह-पात्रं, सैवाऽल्पा कुतुपः पुमान् । | 1 A small one. |
| 5 Any vessel. | सर्वमावपनं भाण्डं पात्राऽमत्रे च भाजनम् ॥ | |
| 3 A ladle or spoon.<br>2 A wooden ladle. | ३४ दर्विः कम्बिः खजाका च, स्यात् तर्दूर् दारुहस्तकः । | |
| 3 A potherb. | अ-स्त्री शाकं हरितकं शिग्रुरस्य तु नाडिका ॥ | |
| 2 Its stalk. | ३५ कलम्बश् च कडम्बश् च, वेषवार उपस्करः । | 2 A condiment. |
| 3 Acid seasoning.<br>6 Pepper. | तिन्तिडीकं च चुक्रं च वृक्षाम्लमथ वेल्लजम् ॥ | |
| | ३६ मरीचं कोलकं कृष्णभूषणं धर्मपत्तनम् । | |
| 4 Cumin.<br>6 *Calónji*. | जीरको जरणो ऽजाजी कणाः कृष्णे तु जीरके ॥ | |
| | ३७ सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्चिका । | |
| 2 Ginger.<br>4 Coriander. | आर्द्रकं शृङ्गबेरं स्यादथ छत्रा वितुन्नकम् ॥ | |
| 5 Dry ginger. | ३८ कुस्तुम्बुरु च धान्याकमथ शुण्ठी महौषधम् । | |
| | स्त्री-नपुंसकयोर् विश्वं नागरं विश्वभेषजम् ॥ | |
| 8 Sour gruel. | ३९ आरनालक-सौवीर-कुल्माषाऽभिषुतानि च । | |
| | अवन्तिसोम-धान्याम्ल-कुञ्जलानि च काञ्जिके ॥ | |
| 5 Assa fœtida. | ४० सहस्रवेधि जतुकं बाल्हीकं हिङ्गु रामठम् । | |
| 5 *Hingupatri*. | तत्-पत्री कारवी पृथ्वी बाष्पिका कबरी पृथुः ॥ | |
| 5 Turmerick. | ४१ निशाऽऽख्या काञ्चनी पीता हरिद्रा वरवर्णिनी । | |
| 2 Sea salt. | सामुद्रं यत् तु लवणमक्षीवं वशिरं च तत् ॥ | |

| | |
|---|---|
| 4 Rock salt. | ४२ सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे । |
| 2 Another sort. 2 Factitious salt. | रौमकं वसुकं, पाक्यं विडं च कृतके द्वयम् ॥ |
| 3 *Sóchal* salt: white. 1 The same : black. | ४३ सौवर्चलेऽक्ष-रुचके, तिलकं तत्र मेचके । |
| 1 Raw sugar. 1 Refined sugar. | मत्स्यण्डी, फाणितं, खण्डविकारे, शर्करा सिता ॥ |
| 2 Inspissated milk. | ४४ कूर्चिका क्षीरविकृतिः स्याद्रसाला तु मार्जिता । 2 Curds with sugar and spices. |
| 2 Sauce or condiment. | स्यात् तेमनं तु निष्ठानं, त्रि-लिङ्गा वासिताऽवधेः ॥ |
| 3 Roasted on a spit. | ४५ शूलाकृतं भटित्रं च शूल्यमुख्यं तु पैठरम् । 2 Boiled in a caldron. |
| 2 Dressed. | प्रणीतमुपसंपन्नं, प्रयस्तं स्यात् सुसंस्कृतम् ॥ 2 Seasoned. |
| 2 Sauce mixed with rice-gruel. | ४६ स्यात् पिच्छिलं तु विजिलं, संमृष्टं शोधितं समे । 2 Strained. |
| 3 Bland, soft. | चिक्कणं मसृणं स्निग्धं, तुल्ये भावित-वासिते ॥ 2 Scented. |
| 3 Food half dressed. | ४७ आपक्वं पौलिरभ्यूषो, लाजाः पुम्-भूम्नि चाऽक्षताः । 2 Fried grain. |
| 2 Rice, &c. flattened. 2 Fried barley or rice. | पृथुकः स्याच् चिपिटको, धाना भ्रष्टयवे स्त्रियः ॥ |
| 3 Cake. 2 —mixed with curds. | ४८ पूपोऽपूपः पिष्टकः स्यात्, करम्भो दधिसक्तवः । |
| 6 Boiled rice. | भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः ॥ |
| 2 The same scorched. | ४९ भिस्सटा दग्धिका, सर्व-रसाऽग्रे मण्डम-स्त्रियाम् । 1 Scum. |
| 3 Scum of boiled rice. | मासराऽऽचाम-निस्रावा मण्डे भक्त-समुद्भवे ॥ |
| 5 Rice gruel. | ५० यवागूरुष्णिका श्राणा विलेपी तरला च सा । |
| | 'म्रक्षणाऽभ्यञ्जने तैलं, कृसरस् तु तिलौदनः' ॥(१) |
| 1 Belonging to a cow. | गव्यं त्रिषु गवां सर्वं, गोविड् गोमयम-स्त्रियाम् ॥ 2 Cow-dung. |
| 1 Dry cowdung. 3 Milk. | ५१ तत् तु शुष्कं करीषोऽस्त्री, दुग्धं क्षीरं पयः समम् । |
| 1 Prepared from milk. 1 Thin or diluted curds. | पयस्यमाज्य-दध्याऽऽदि, द्रप्स्यं दधि घनेतरत् ॥ |
| 4 Clarified butter. 2 Fresh butter. | ५२ घृतमाज्यं हविः सर्पिर्, नवनीतं नवोद्धृतम् । |
| 1 Butter of yesterday's milk. | तत् तु हैयङ्गवीनं यत् ह्यो-गो-दोहोद्भवं घृतम् ॥ |

4 Butter-milk. ५३ दण्डाहतं कालशेयमरिष्टमपि गोरसः ।
1 —with proportions of water. तक्रं ह्युदश्विन् मथितं पादाम्ब्वर्धाम्बु निर्जलम् ॥

1 Whey of curds. ५४ मण्डं दधि-भवं मस्तु, पीयूषोऽभिनवं पयः ।
1 Milk of a cow which lately calved.
3 Hunger. 2 A mouthful. अशनाया बुभुक्षा क्षुद्, ग्रासस् तु कवलः पुमान् ॥

2 Drinking together. 2 Eating together. ५५ सपीतिः स्त्री तुल्यपानं, सग्धिः स्त्री सहभोजनम् ।
4 Thirst. 7 Food. उदन्या तु पिपासा तृट् तर्षो, जग्धिस् तु भोजनम् ॥

५६ जेमनं लेह आहारो निघासो न्याद इत्यपि ।
3 Satiety. 2 Outs, leavings. सौहित्यं तर्पणं तृप्तिः, फेला भुक्तसमुज्झितम् ॥

6 Voluntarily. ५७ कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ।
6 Herdsman. गोपे गोपाल-गोसंख्य-गोधुगाभीर-बल्लवाः ॥

1 Stock of cattle. 3 Owner of kine. ५८ गो-महिष्याऽऽदिकं पादबन्धनं, द्वौ गवीश्वरे ।
2 A herd. गोमान् गोमी, गोकुलं तु गोधनं स्याद् गवां व्रजे ॥

1 Formerly grazed by cattle. ५९ त्रिष्वाशितंगवीनं तद् गावो यत्राऽशिताः पुरा ।
9 A bull or ox. उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ॥

६० अनड्वान् सौरभेयो गौरुक्ष्णां संहतिरौक्षकम् । 1 A herd of oxen.
2 A herd of kine. गव्या गोत्रा गवां, वत्स-धेन्वोर् वात्सक-धैनुके ॥
1 —of calves, and milch cows.

1 A large bull or ox. 2 An old bull. ६१ उक्षा महान् महोक्षः स्याद्, वृद्धोक्षस् तु जरद्गवः ।
1 A bullock. 1 A newborn calf. उत्पन्न उक्षा जातोक्षः, सद्यो जातस् तु तर्णकः ॥

2 A calf. 2 A steer. ६२ शकृत्करिस् तु वत्सः स्याद्, दम्य-वत्सतरौ समौ ।
2 One fit to be set free. 2 A bull at liberty. आर्षभ्यः षण्डतायोग्यः, षण्डो गोपतिरिट्चरः ॥

1 A bull's shoulder. 2 His dewlap. ६३ स्कन्ध-देशे त्वस्य वहः, सास्ना तु गलकम्बलः ।
2 An ox, with a rein through his nose. स्यान् नस्तितस् तु नस्योतः, प्रष्ठवाड् युगपार्श्वगः ॥
2 Young cattle in training.

3 Cattle yoked &c. ६४ युगाऽऽदीनां तु वोढारो युग्य-प्रासंग्य-शाकटाः ।
2 Ploughman; plough-cattle,&c. खनति तेन तद् वोढा ऽस्येदं हालिक-सैरिकौ ॥
5 Cattle for burden. ६५ धूर्वहे धुर्य-धौरेय-धुरीणाः स-धुरन्धराः ।
3 Cattle for special burden. उभावेकधुरीणैकधुरावेकधुरावहे ॥
1 —for any carriage. ६६ स तु सर्वधुरीणः स्याद् यो वै सर्व-धुराऽऽवहः ।
9 A cow. माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी ॥

1 An excellent one. ६७ अर्जुन्यघ्न्या रोहिणी, स्यादुत्तमा गोषु नैचिकी ।
1 Cows brindle, white, &c. वर्णाऽऽदि-भेदात् संज्ञाः स्युः शबली-धवलाऽऽदयः ॥
1 A heifer two years old. ६८ द्विहायनी द्वि-वर्षा गौरेकाऽब्दा त्वेकहायनी । 1 —one year old.
1 —four years old. चतुरब्दा चतुर्हाण्येवं त्र्यब्दा त्रिहायणी ॥ 1 —three years old.
2 A barren cow. ६९ वशा वन्ध्या, ऽवतोका तु स्रवद्गर्भा, ऽथ संधिनी ।
2 A cow miscarrying by accident. 1 One which has gone to the bull.
2 Miscarrying from going unseasonably. आक्रान्ता वृषभेणाथ वेहद् गर्भोपघातिनी ॥
1 Fit for the bull. ७० काल्योपसर्या प्रजने, प्रष्ठौही बालगर्भिणी । 1 A pregnant heifer.
2 A tractable cow. स्यादचण्डी तु सुकरा, बहुसूतिः परेष्टुका ॥ 2 A cow bearing many claves.

2 One which has lately calved. ७१ चिरप्रसूता बष्कयणी, धेनुः स्यान् नवसूतिका ।
2 Easily milked.
2 With a large udder. सुव्रता सुखसंदोह्या, पीनोघ्नी पीवरस्तनी ॥
1 Yielding a *dróna* of milk. ७२ द्रोणक्षीरा द्रोणदुग्धा, धेनुष्या बन्धके स्थिता । 1 Standing at the dairy.
1 Calving every year. समांसमीना सा यैव प्रति-वर्षं प्रसूयते ॥
2 An udder.
2 A pillar. ७३ ऊधस् तु क्लीबमापीनं, समौ शिवक-कीलकौ ।
2 A rope or cord.
2 A string or tie. न पुंसि दाम संदानं, पशुरज्जुस् तु दामनी ॥
5 A churningstick. ७४ वैशाख-मन्थ-मन्थान-मन्थानो मन्थदण्डके ।
2 A post round which its string winds. कुठरो दण्डविष्कम्भो, मन्थनी गर्गरी समे ॥ 1 A churn.

4 A camel.
1 A young one. ७५ उष्ट्रे क्रमेलक-मय-महाङ्गाः, करभः शिशुः ।
1 Young camels clogged. करभाः स्युः शृङ्खलका दारवैः पाद-बन्धनैः ॥

2 A she-goat.
5 A he-goat.

७६ अजा छागी, शुभच्छाग-बस्तच्छगलका अजे ।

7 A ram.

मेढ्रोरभ्रोरणोर्णायु-मेष-वृष्णय एडके ॥

1 Herd of camels; flock of sheep and goats.

७७ उष्ट्रोरभ्राऽज-वृन्दे स्यादौष्ट्रकौरभ्रकाऽऽजकम् ।

5 An ass.

चक्रीवन्तस् तु बालेया रासभा गर्दभाः खराः ॥

8 A trader.

७८ वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् ।

पण्याजीवो ह्यापणिकः क्रयविक्रयिकश् च सः ॥

2 A vender.
2 A buyer.

७९ विक्रेता स्याद् विक्रयिकः, क्रायिक-क्रयिकौ समौ ।

2 Traffic.
3 Price.

वाणिज्यं तु वणिज्या स्यान्, मूल्यं वस्नोऽप्यवक्रयः ॥

3 Capital; principal.

८० नीवी परिपणो मूलधनं, लाभोऽधिकं फलम् । 1 Gain; profit.

4 Barter.

परिदानं परीवर्तो नैमेय-निमयावपि ॥

2 A deposit.
1 The return of it.

८१ पुमानुपनिधिर् न्यासः, प्रतिदानं तदर्पणम् ।

1 Exposed for sale.
2 Purchasable.

क्रये प्रसारितं क्रय्यं, क्रेयं क्रेतव्य-मात्रके ॥

3 Vendible.

८२ विक्रेयं पणितव्यं च पण्यं, क्रय्याऽऽदयस् त्रिषु ।

3 Ratification of a bargain.

क्लीबे सत्यापनं सत्यङ्कारः सत्याकृतिः स्त्रियाम् ॥

2 Contract of sale.
1 Numerals.

८३ विपणो विक्रयः, संख्याः संख्येये ह्यादश त्रिषु, ।

विंशत्याऽऽद्याः सदैकत्वे सर्वाः संख्येय-संख्ययोः, ॥

८४ संख्याऽर्थे द्विबहुत्वे स्तस्, तासु चाऽऽनवतेः स्त्रियः ।

पङ्क्तेः शत-सहस्राऽऽदि क्रमाद् दश-गुणोत्तरम् ॥

3 Measure.

८५ यौतवं द्रुवयं पाय्यमिति मानाऽर्थकं त्रयम् ।

1 Of three sorts.
1 A *Másha*.

मानं तुलाऽङ्गुलि-प्रस्थैर्, गुञ्जाः पञ्चाऽऽद्यमाषकः, ॥

1 Sixteen times as much.

८६ ते षोडशाऽक्षः कर्षो ऽस्त्री, पलं कर्ष-चतुष्टयम्, । 1 Four times the last.

2 A *karsha* of gold.
1 A *pala* of gold.

सुवर्ण-बिस्तौ हेम्नो ऽक्षे, कुरुबिस्तस् तु तत्-पले, ॥

1 100 *Palas*.
1 Twenty times as much.

८७ तुला स्त्रियां पल-शतं, भारः स्याद् विंशतिस् तुलाः, ।

1 Ten times the last.

आचितो दश भाराः स्युः, शाकटो भार आचितः. ॥

| | |
|---|---|
| 2 A *karsha* of silver.<br>2 A *pana* of copper. | ८८ कार्षापणः कार्षिकः स्यात्, कार्षिके ताम्रिके पणः |
| 1 Various measures of capacity. | अ-स्त्रियामाढक-द्रोणौ खारी वाहो निकुञ्चकः ॥ |
| | ८९ कुडवः प्रस्थ इत्याऽऽद्याः परिमाणाऽर्थकाः पृथक् । |
| 1 A quarter. | पादस् तुरीयो भागः स्यादंश-भागौ तु वण्टके ॥ 3 A part, share, or portion. |
| 13 Substance, thing or wealth. | ९० द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु । |
| | हिरण्यं द्रविणं द्युम्नमर्थ-रै-विभवा अपि ॥ |
| 2 Wrought and unwrought gold, &c. | ९१ स्यात् कोशश् च हिरण्यं च हेम-रूप्ये कृताऽकृते । |
| 1 Base metals<br>1 Bullion. | ताभ्यां यदन्यत् तत् कुप्यं, रूप्यं तद् द्वयमाहतम् ॥ |
| 4 An emerald | ९२ गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः । |
| 3 A ruby.<br>2 A pearl. | शोणरत्नं लोहितकः पद्मरागो, ऽथ मौक्तिकम् ॥ |
| | ९३ मुक्ता, ऽथ विद्रुमः पुंसि प्रवालं पुन्-नपुंसकम् । 2 Coral |
| 2 Any gem. | रत्नं मणिर् द्वयोरश्म-जातौ मुक्ताऽऽदिकेऽपि च ॥ |
| 19 Gold. | ९४ स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । |
| | तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ॥ |
| | ९५ चामीकरं जातरूपं महारजत-काञ्चने । |
| | रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ॥ |
| 1 Gold for ornament. | ९६ अलङ्कार-सुवर्णं यच्छृङ्गीकनकमित्यदः । |
| 5 Silver. | दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ॥ |
| 2 Brass. | ९७ रीतिः स्त्रियामारकूटो न स्त्रियामथ ताम्रकम् । 6 Copper. |
| | शुल्बं म्लेच्छमुखं द्व्यष्ट-वरिष्ठोदुम्बराणि च ॥ |
| 7 Iron. | ९८ लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसाऽयसी । |
| 2 Rust of iron. | अश्मसारो, ऽथ मण्डूरं सिंहाणमपि तन्-मले ॥ |
| 1 Any thing metallic. | ९९ सर्वं च तैजसं लौहं, विकारस् त्वयसः कुशी । 1 Wrought iron; bar iron. |
| 2 Glass.<br>4 Quicksilver. | क्षारः काचो, ऽथ चपलो रसः सूतश् च पारदे |

1 Buffalo's horn.　१०० गवलं माहिषं शृङ्गमभ्रकं गिरिजाऽमले । 3 Talc.
4 Antimony.　स्रोतोञ्जनं तु सौवीरं कापोताञ्जन-यामुने ॥
5 Blue vitriol.　१०१ तुत्थाञ्जनं शिखिग्रीवं वितुन्नक-मयूरके ।
3 Collyrium.
3 Another sort.　कर्परी, दार्विका-क्काथोद्भवं तुत्थं रसाञ्जनम् ॥
3 Sulphur.　१०२ रसगर्भं तार्क्ष्यशैलं, गन्धाश्मनि तु गन्धिकः ।
3 A blue stone used as a collyrium.　सौगन्धिकश् च, चक्षुष्या-कुलाल्यौ तु कुलत्थिका ॥
4 Calx of brass.　१०३ रीतिपुष्पं पुष्पके तु पुष्पकं कुसुमाञ्जनम् ।
5 Yellow orpiment.　पिञ्जरं पीतनं तालमालं च हरितालके ॥
5 Red chalk.　१०४ गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु ।
5 Myrrh.　बोल-गन्धरस-प्राण-पिण्ड- गोपरसाः समाः ॥
3 Cuttle fish bone.
2 Minium, or red lead.　१०५ डिण्डीरोऽब्धिकफः फेनः, सिन्दूरं नागसंभवम् ।
4 Lead.　नाग-सीसक-योगेष्ट-वप्राणि, त्रिपु पिच्चटम् ॥ 4 Tin.
2 Cotton.　१०६ रङ्ग-वङ्गे, अथ पिचुस् तूलो, ऽथ कमलोत्तरम् ।
4 Safflower; carthamus.　स्यात् कुसुम्भं वह्निशिखं महारजनमित्यपि ॥
2 A woollen blanket　१०७ मेषकम्बल ऊर्णायुः, शशोर्णं शशलोमनि ।
2 Hare's or rabbit's hair.
2 Honey.
2 Wax.　मधु क्षौद्रं माक्षिकाऽऽदि, मधूच्छिष्टं तु सिक्थकम् ॥
4 Red arsenic.　१०८ मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका ।
3 Nitre; saltpetre.　नैपाली कुनटी गोला, यवक्षारो यवाग्रजः ॥
3 Natron; alkali.　१०९ पाक्यो, ऽथ सर्जिकाक्षारः कापोतः सुखवर्चकः ।
2 Manna of bamboos.　सौवर्चलं स्याद् रुचकं, त्वक्क्षीरी वंशरोचना ॥
2 Seed of morunga.　११० शिग्रुजं श्वेतमारिचं, मोरटं मूलमैक्षवम् । 1 Root of sugarcane.
3 Root of long pepper.　ग्रन्थिकं पिप्पलीमूलं चटिकाशिर इत्यपि ॥
2 Root of sweet flag.
2 Red-wood　१११ गोलोमी भूतकेशो ना, पत्राङ्गं रक्तचन्दनम् ।
3 Three spices.
2 Three myro-balans　त्रिकटु त्र्यूषणं व्योषं, त्रिफला तु फलत्रिकम् ॥

इति वैश्य-वर्गः ९, अत्र मूलश्लोकाः १११, क्षे० १.

## अथ शूद्र-वर्गः १०

4 Men of the fourth tribe.
1 Men of mixed origin.

१ शूद्राश् चाऽवरवर्णाश् च वृषलाश् च जघन्यजाः ।
आ-चण्डालात् तु संकीर्णा अम्बष्ठ-करणाऽऽदयः ॥

1 A scribe.
1 Ambasta.
1 An *Ugra*.
1 A bard.

२ शूद्रा-विशोस् तु करणो, ऽम्बष्ठो वैश्या-द्विजन्मनोः, ।
शूद्रा-क्षत्रिययोरुग्रो, मागधः क्षत्रिया-विशोः, ॥

1 A *Máhishya*.
1 A *Kshattri*.
1 A charioteer.
1 A trader.

३ माहिषो ऽर्या-क्षत्रिययोः, क्षत्ता ऽर्या-शूद्रयोः सुतः, ।
ब्राह्मण्यां क्षत्रियात् सूतस्, तस्यां वैदेहको विशः, ॥

1 A charmaker.
1 A *Chandála*.

४ रथकारस् तु माहिष्यात् करण्यां यस्य संभवः, ।
स्याच् चण्डालस् तु जनितो ब्राह्मण्यां वृषलेन यः ॥

2 An artisan.
1 A company of artists.
2 One eminent by birth.
2 A florist.

५ कारुः शिल्पी, संहतैस् तैर् द्वयोः श्रेणिः स-जातिभिः ।
कुलकः स्यात् कुलश्रेष्ठी, मालाकारस् तु मालिकः ॥

2 A potter.
2 A bricklayer or plaisterer.
2 A weaver.
2 A tailor.

६ कुम्भकारः कुलालः स्यात्, पलगण्डस् तु लेपकः ।
तन्तुवायः कुविन्दः स्यात्, तुन्नवायस् तु सौचिकः ॥

2 A painter.
2 An armourer.
2 A shoemaker.
2 An ironsmith.

७ रङ्गाजीवश् चित्रकरः, शस्त्रमार्जो ऽसिधावकः ।
पादूकृच् चर्मकारः स्याद्, व्योकारो लोहकारकः ॥

4 A goldsmith.
2 A shellcutter.
2 A coppersmith.

८ नाडिन्धमः स्वर्णकारः कलादो रुक्मकारकः ।
स्याच्छाङ्खिकः काम्बविकः, शौल्बिकस् ताम्रकुट्टकः

5 A carpenter.
1 One working for the village.
1 One independent.

९ तक्षा तु वर्द्धकिस् त्वष्टा रथकारश् च काष्ठतट् ।
ग्रामाऽधीनो ग्रामतक्षः, कौटतक्षो ऽनधीनकः ॥

5 A barber.
2 A washerman.
2 A distiller.

१० क्षुरी मुण्डी दिवाकीर्ति-नापिताऽन्तावसायिनः ।
निर्णेजकः स्याद् रजकः, शौण्डिको मण्डहारकः ॥

| | | |
|---|---|---|
| 2 A goatherd. | ११ | जाबालः स्यादजाजीवो, देवाजीवस् तु देवलः । |
| | | 2 An attendant on an idol. |
| 2 A female juggler. 2 A juggler. | | स्यान् माया शाम्बरी, मायाकारस् तु प्रतिहारकः ॥ |
| 6 Dancers and tumblers. | १२ | शैलालिनस् तु शैलूषा जायाजीवाः कृशाश्विनः । |
| 2 Dancers and mimics. 2 Players on drums. | | भरता इत्यपि नटाश्, चारणास् तु कुशीलवाः ॥ |
| 2 Players on the flute. | १३ | मार्दङ्गिका मौरजिकाः, पाणिवादास् तु पाणिघाः । |
| 2 —on the lute. | | वेणुध्माः स्युर् वैणविका, वीणावादास् तु वैणिकाः ॥ |
| | | 2 Striking with their hands only. |
| 2 A fowler or bird-catcher. | १४ | जीवान्तकः शाकुनिको, द्वौ वागुरिक-जालिकौ । |
| | | 2 A hunter using nets. |
| 3 A vender of flesh-meat. | | वैतंसिकः कौटिकश् च मांसिकश् च समं त्रयम् ॥ |
| 4 A hireling ; a servant or labourer. | १५ | भृतको भृतिभुक् कर्मकरो वैतनिको ऽपि सः । |
| 2 A chandler. 3 A porter. | | वार्तावहो वैवधिको, भारवाहस् तु भारिकः ॥ |
| 10 A low man. | १६ | विवर्णः पामरो नीचः प्राकृतश् च पृथग्जनः । |
| | | निहीनो ऽपसदो जाल्मः क्षुल्लकश् चेतरश् च सः ॥ |
| 11 servant or slave. | १७ | भृत्ये दासेर-दासेय-दास-गोप्यक-चेटकाः । |
| | | नियोज्य-किङ्कर-प्रैष्य-भुजिष्य-परिचारकाः ॥ |
| 4 One nourished by a stranger. | १८ | पराचित-परिस्कन्द-परजात-परैधिताः ॥ |
| 6 A lazy man. | १९ | मन्दस् तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः । |
| 6 A dexterous person. | | दक्षे तु चतुर-पेशल-पटवः सूत्थान उष्णश् च ॥ |
| 10 A *Chandala*. | २० | चण्डाल-प्लव-मातङ्ग-दिवाकीर्ति-जनङ्गमाः । |
| | | निषाद-श्वपचावन्तेवासि-चाण्डाल-पुक्कसाः ॥ |
| 1 Barbarians. | २१ | भेदाः–किरात-शबर-पुलिन्दा म्लेच्छजातयः । |
| 4 A hunter, or deer-killer. | | व्याधो मृगवधाजीवो मृगयुर् लुब्धको ऽपि सः ॥ |

| | |
|---|---|
| 7 A dog. | २२ कौलेयकः सारमेयः कुक्कुरो मृगदंशकः । |
| 1 A mad dog. | शुनको भषकः श्वा स्यादलर्कस् तु स योगितः ॥ |
| 9 A dog trained for for chase. | २३ श्वा विश्वकद्रुर् मृगया-कुशलः, सरमा शुनी । 2 A bitch. |
| 9 A village hog.<br>1 Any young animal. | विट्चरः सूकरो ग्राम्यो, वर्करस् तरुणः पशुः ॥ |
| 4 Chase; hunting. | २४ आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् । |
| 1 A deer wounded on its right side. | दक्षिणाऽरुर् लुब्ध-योगाद् दक्षिणेर्मा कुरङ्गकः ॥ |
| 10 A thief or robber. | २५ चौरैकागारिक-स्तेन-दस्यु-तस्कर-मोषकाः । |
| | प्रतिरोधि-परास्कन्दि-पाटच्चर-मलिम्लुचाः । |
| 4 Theft, robbery.<br>1 Booty. | २६ चौरिका स्तैन्य-चौर्ये च स्तेयं, लोप्त्रं तु तद्-धने । |
| 1 A net, chain, or cage. | वीतंसस् तूपकरणं बन्धने मृग-पक्षिणाम् ॥ |
| 2 A snare or trap.<br>2 A net. | २७ उन्माथः कूटयन्त्रं स्याद्, वागुरा मृगबन्धनी । |
| 5 A cord, rope or string. | शुल्बं वराटकं स्त्री तु रज्जुस् त्रिषु वटी गुणः ॥ |
| 2 Rope and bucket of a well. | २८ उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः । |
| 2 A loom.<br>2 Threads. | पुंसि वेमा वायदण्डः, सूत्राणि नरि तन्तवः ॥ |
| 2 Weaving.<br>1 Plaistering. | २९ वाणिर् व्यूतिः स्त्रियौ तुल्ये, पुस्तं लेप्याऽऽदि-कर्मणि । |
| 1 A doll or puppet. | पाञ्चालिका पुत्रिका स्याद् वस्त्र-दन्ताऽऽदिभिः कृता । |
| | ‘ जतु-त्रपु-विकारे तु जातुषं त्रापुषं त्रिषु ’ ॥ १ ॥ |
| 4 A basket. | ३० पिटकः पेटकः पेटा-मञ्जूषा, ऽथ विहङ्गिका । |
| 2 A peg.<br>1 Its string. | भारयष्टिस्, तदाऽऽलम्बि शिक्यं काचो, ऽथ पादुका ॥ |
| 3 A shoe.<br>1 A boot. | ३१ पादूरुपानत् स्त्री, सैवाऽनुपदीना पदाऽऽयता । |
| 3 A thong.<br>1 A whip. | नद्ध्री वर्ध्री वरत्रा स्यादश्वाऽऽदेस् ताडनी कशा ॥ |
| 3 A vulgar lute. | ३२ चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी । |
| 2 Goldsmith's scales.<br>3 A touchstone. | नाराची स्यादेषणिका, शाणस् तु निकषः कषः ॥ |

| | | |
|---|---|---|
| 2 An iron chisel.<br>2 A crucible.<br>2 Bellows. | ३३ व्रश्चनःपत्रपरशुरीषिका तूलिका समे ।<br>तैजसावर्तनी मूषा, भस्त्रा चर्मप्रसेविका ॥ | 2 A pencil or brush. |
| 2 A gimlet or auger.<br>2 A carpenter's chisel. | ३४ आस्फोटनी वेधनिका, कृपाणी कर्तरी समे ।<br>वृक्षादनी वृक्षभेदी, टङ्कः पाषाणदारणः ॥ | 2 Scissors or shears.<br>2 A hatchet. |
| 2 A saw.<br>3 An image of iron.<br>1 An art. | ३५ क्रकचोऽस्त्री करपत्रमारा चर्मप्रभेदिका ।<br>सूर्मी स्थूणाऽयःप्रतिमा, शिल्पं कर्म कलाऽऽदिकम् ॥ | 2 Shoemaker's knife. |
| 8 An image; statue or picture.<br>2 Resemblance. | ३६ प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया<br>प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात् । | |
| 12 Like, similar.<br>(In composition) Like. | ३७ वाच्य-लिङ्गाः समस् तुल्यः सदृक्षः सदृशः सदृक् ।<br>साधारणः समानश् च स्युरुत्तर-पदे त्वमी ॥ | |
| <br>11 Wages or hire. | ३८ निभ-संकाश-नीकाश-प्रतीकाशोपमाऽऽदयः ।<br>कर्मण्या तु विधा-भृत्या-भृतयो भर्म वेतनम् ॥ | |
| 13 Spirituous liquor. | ३९ भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ।<br>सुरा हलिप्रिया हाला परिस्रुद् वरुणात्मजा ॥ | |
| <br>2 Eating what excites thirst. | ४० गन्धोत्तमा-प्रसन्नेरा-कादम्बर्यः परिस्रुता ।<br>मदिरा कश्य-मद्ये चाप्यवदंशस् तु भक्षणम् ॥ | |
| 2 A tavern.<br>2 Tippling.<br>4 Spirit, distilled from Bassia. | ४१ शुण्डापानं मदस्थानं, मधुवारा मधुक्रमाः ।<br>मध्वासवो माधवको मधु माध्वीकम-द्वयोः ॥ | |
| 3 Rum.<br>2 Distillation.<br>2 Ferment. | ४२ मैरेयमासवः सीधुर्, मंदको जगलः समौ ।<br>संधानं स्यादभिषवः, किण्वं पुंसि तु नग्नहूः ॥ | 2 Vinous liquor for distilling. |
| 2 Yest, barm, froth.<br>2 A drinking vessel. | ४३ कारोत्तरः सुरामण्ड, आपानं पानगोष्ठिका ।<br>चषकोऽस्त्री पानपात्रं, सरकोऽप्यनुतर्षणम् ॥ | 2 Place where people drink together. |

| | |
|---|---|
| 5 A gamester. | ४४ धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत् समाः । |
| 2 Sureties. | स्युर् लग्नकाः प्रतिभुवः, सभिका द्यूतकारकाः ॥ |
| | 2 Keepers of gaming houses. |
| 4 Gaming. | ४५ द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि । |
| 3 Dice. | पणोऽक्षेषु ग्लहो, ऽक्षास् तु देवनाः पाशकाश् च ते ॥ |
| 9 Moving a piece at play. | ४६ परिणायस् तु शारीणां समन्तात् नयनेऽस्त्रियाम् । |
| 2 A checkered board or cloth. | अष्टापदं शारिफलं, प्राणिद्यूतं समाह्वयः ॥ |
| 2 A matsh of cocks, &c. | ४७ उक्ता भूरि-प्रयोगत्वादेकस्मिन् येऽत्र यौगिकाः, । |
| | ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गाऽन्तरेऽपि ते ॥ |

इति शूद्र-वर्गः १०, अत्र मूलश्लोकाः ४६॥, क्षे० ॥.

इत्यमरसिंह-कृतौ नाम-लिङ्गाऽनुशासने ।
द्वितीयः काण्डो भूम्याऽऽदिःसाऽङ्ग एव समर्थितः

अत्र मूलश्लोकाः ७३५॥, क्षे. श्लो. १४॥; सर्वे च मिलित्वा ७५०.
प्र. काण्डे मू. श्लो. २८१॥; क्षे. श्लो. १८ सर्वे मि. २९९॥.
एवं मू. श्लो. १०१७; क्षे श्लो. ३२॥; सर्वे मिलित्वा १०४९॥.

# तृतीयं सामान्य–काण्डम् ।

१ विशेष्य-निघ्नैः संकीर्णैर् नानाऽर्थैरव्ययैरपि ।
लिङ्गाऽऽदि-संग्रहैर् वर्गाः सामान्ये वर्ग-संश्रयाः ॥

२ स्त्री-दाराऽऽद्यैर् यद् विशेष्यं यादृशैः प्रस्तुतं पदैः ।
गुण-द्रव्य-क्रिया-शब्दास् तथा स्युस् तस्य भेदकाः ॥

3 Fortunate, well-fated.

३ सुकृती पुण्यवान् धन्यो, महेच्छस् तु महाशयः ।

2 Magnanimous.

2 Good-hearted.
2 Perseverant, diligent.

हृदयालुः सुहृदयो, महोत्साहो महोद्यमः ॥

10 Skilful, conversant.

४ प्रवीणे निपुणाऽभिज्ञ-विज्ञ-निष्णात-शिक्षिताः ।
वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ॥

2 Venerable.
2 Dubious.
3 Meriting a fee or reward.

५ पूज्यः प्रतीक्ष्यः, सांशयिकः संशयापन्नमानसः ।
दक्षिणीयो दाक्षिणार्हस् तत्र दाक्षिण्य इत्यपि ॥

4 Munificent.
2 Long-lived.

६ स्युर् वदान्य-स्थूललक्ष्य-दानशौण्डा बहुप्रदे ।
जैवातृकः स्यादायुष्मानन्तर्वाणिस् तु शास्त्रवित् ॥

2 Skilled in sacred sciences.

2 Acutely investigating.
4 Joyful, cheerful.

७ परीक्षकः कारणिको, वरदस् तु समर्द्धकः ।
हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः ॥

2 Granting a prayer.

3 Ssd, perplexed.
2 Regretting.
3 Sincere, candid.

८ दुर्मना विमना अन्तर्मनाः, स्यादुत्क उन्मनाः ।
दक्षिणे सरलोदारौ, सुकलो दातृभोक्तरि ॥

2 Liberal in giving and using.

3 Diligent, attentive.
2 Zealously active.
6 Known, celebrated, famous.

९ तत्परे प्रसिताऽऽसक्ताविष्टार्थोद्युक्त उत्सुकः ।
प्रतीते प्रथित-ख्यात-वित्त-विज्ञात-विश्रुताः ॥

2 Noted for good qualities.
3 Opulent, wealthy.

१० गुणैः प्रतीते तु कृतलक्षणाऽऽहतलक्षणौ ।
इभ्य आढ्यो धनी, स्वामी त्वीश्वरः पतिरीशिता ॥

10 An owner or master.

११ अधिभूर् नायको नेता प्रभुः परिवृढोऽधिपः ।

2 Every way happy. अधिकर्धिः समृद्धः स्यात्, कुटुम्बव्यापृतस् तु यः ॥

3 Attentive to support his family. १२ स्यादभ्यागारिकस् तस्मिन्नुपाधिश् च पुमानयम् ।

1 Handsome and well-shaped. वराऽङ्ग-रूपोपेतो यः सिंहसंहननो हि सः ॥

1 Acting fearlessly. १३ निर्वार्यः कार्य-कर्ता यः संपन्नः सत्त्व-संपदा ।

2 Dumb. 2 Fatherly. अवाचि मूको, ऽथ मनोजवसः पितृसंनिभः ॥

2 Giving a girl in marriage. १४ सत्कृत्याऽलङ्कृतां कन्यां यो ददाति स कूकुदः ।

4 Prosperous, happy. लक्ष्मीवाँल् लक्ष्मणः श्रीलः श्रीमान्, स्निग्धस् तु वत्सलः ॥ 2 Affectionate.

4 Compassionate. १५ स्याद् दयालुः कारुणिकः कृपालुः सूरतः समाः ।

5 Unrestrained. स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः ॥

4 Dependent. १६ परतन्त्रः पराधीनः परवान् नाथवानपि ।

5 Docile. अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ ॥

2 A sweeper. 2 Dilatory, slow. १७ खलपूः स्याद् बहुकरो, दीर्घसूत्रश् चिरक्रियः ।

2 Acting inconsiderately. जाल्मोऽसमीक्ष्यकारी स्यात्, कुण्ठो मन्दः क्रियासु यः ॥ 1 Indolent.

2 Competent to an act. १८ कर्मक्षमोऽलङ्कर्मीणः, क्रियावान् कर्मसूद्यतः । 1 Engaged in a business.

2 Laborious. 2 Finishing carefully. स कार्मः कर्मशीलो यः, कर्मशूरस् तु कर्मठः ॥

2 Working for hire. १९ भरण्यभुक् कर्मकरः, कर्मकारस् तु तत्-क्रियः । 1 Working without wages.

2 Bathing after mourning. अपस्नातो मृतस्नात, आमिषाशी तु शौष्कुलः ॥ 2 Eating fish and flesh.

4 Hungry. २० बुभुक्षितः स्यात् क्षुधितो जिघत्सुरशनायितः ।

2 Feeding at another's cost. परान्नः परपिण्डादो, भक्षको घस्मरोऽद्मरः ॥ 3 Gluttonous.

3 Shamelessly voracious. २१ आद्यूनः स्यादौदरिको विजिगीषा-विवर्जिते ।

2 Selfishly voracious. उभौ त्वात्मम्भरिः कुक्षिम्भरिः स्वोदर-पूरके ॥

| | |
|---|---|
| 2 Eating every body's.<br>5 Covetous, greedy.<br>3 Very covetous. | २२ सर्वान्नीनस् तु सर्वान्नभोजी, गृध्नुस् तु गर्धनः ।<br>लुब्धोऽभिलाषुकस् तृष्णक्, समौ लोलुप-लोलुभौ ॥ |
| 2 Mad ; insane.<br>2 Misbehaving.<br>4 Drunk.<br>9 Lustful. | २३ सोन्मादस् तून्मदिष्णुः स्यादविनीतः समुद्धतः ।<br>मत्ते शौण्डोत्कट-क्षीबाः, कामुके कमिता ऽनुकः ॥ |
| 4 Compliant. | २४ कम्रः कामयिता ऽभीकः कमनः कामनोऽभिकः ।<br>विधेयो विनयग्राही वचनेस्थित आश्रवः ॥ |
| 2 Governable.<br>3 Modest.<br>3 Impudent, shameless. | २५ वश्यः प्रणेयो, निभृत-विनीत-प्रश्रिताः समाः ।<br>धृष्टे धृष्णग् वियातश् च, प्रगल्भः प्रतिभान्विते ॥<br>2 Bold, present. |
| 2 Ashamed.<br>2 Astonished.<br>2 Confused.<br>4 Timid. | २६ स्यादधृष्टे तु शालीनो, विलक्षो विस्मयान्विते ।<br>अधीरे कातरस्, त्रस्ते भीरु-भीरुक-भीलुकाः ॥ |
| 2 Wishing blessings.<br>1 Faithful ; believing.<br>2 Habitually falling. | २७ आशंसुराशंसितरि, गृहयालुर् ग्रहीतरि । 2 Disposed to take.<br>श्रद्धालुः श्रद्धया युक्ते, पतयालुस् तु पातुके ॥ |
| 2 Bashful.<br>2 Civil ; polite.<br>3 Mischievous.<br>2 Thriving ; growing. | २८ लज्जाशीले ऽपत्रपिष्णुर्, वन्दारुरभिवादके ।<br>शरारुर् घातुको हिंस्रः, स्याद् वर्द्धिष्णुस् तु वर्द्धनः ॥ |
| 2 Jumping up.<br>3 Faring well.<br>2 Stationary. | २९ उत्पतिष्णुस् तूत्पतिता, ऽलङ्करिष्णुस् तु मण्डनः ।<br>2 Inclined to ornament.<br>भूष्णुर् भ्रविष्णुर् भविता, वर्तिष्णुर् वर्तनः समौ ॥ |
| 3 Obstructive.<br>2 Very smooth, wet.<br>3 Knowing ; intelligent.<br>2 Expanding. | ३० निराकरिष्णुः क्षिप्नुः स्यात्, सान्द्रस्निग्धस् तु मेदुरः ।<br>ज्ञाता तु विदुरो विन्दुर्, विकासी तु विकस्वरः ॥ |
| 4 Flowing or creeping.<br>6 Patient, content. | ३१ विसृत्वरो विसृमरः प्रसारी च विसारिणि ।<br>सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी ॥ |
| 3 Passionate ; wrathful.<br>2 Wakeful.<br>2 Snoring, as in sleep. | ३२ क्रोधनो ऽमर्षणः कोपी, चण्डस् त्वत्यन्तकोपनः ।<br>2 Very passionate.<br>जागरूको जागरिता, घूर्णितः प्रचलायितः ॥ |

| | |
|---|---|
| 3 Sleepy, Sluggish. 2 Asleep. | ३३ स्वप्नक् शयालुर् निद्रालुर्, निद्राण-शयितौ समौ । |
| 2 Averting the face. 2 Down-looked. | पराङ्मुखः पराचीनः, स्यादवाङ्प्यधोमुखः ॥ |
| 1 Adoring deities. | ३४ देवानञ्चति देवद्र्यङ्, विष्वद्र्यङ् विष्वगञ्चति । 1 Going every-where. |
| 1 Accompanying. 1 Moving tortuously. | यः सहाऽञ्चति सध्र्यङ् स, स तिर्यङ् यस् तिरोऽञ्चति ॥ |
| 3 Speaking sensibly. 2 Eloquent. | ३५ वदो वदावदो वक्ता, वागीशो वाक्पतिः समौ । |
| 4 Speaking much. | वाचोयुक्तिपटुर् वाग्मी, वावदूको ऽतिवक्तरि ॥ |
| 4 Talking non-sense. | ३६ स्याज् जल्पाकस् तु वाचालो वाचाटो बहुगर्ह्यवाक् । |
| 3 Foul-mouthed, scurrilous. | दुर्मुखे मुखराऽबद्धमुखौ, शक्लः प्रियंवदे ॥ 2 Speaking civilly. |
| 2 Lisping. 2 Speaking ill. | ३७ लोहलः स्यादस्फुटवाग्, गर्ह्यवादी तु कद्वदः । |
| 2 Censorious, detracting. | समौ कुवाद-कुचरौ, स्यादसौम्यस्वरो ऽस्वरः ॥ 2 Having a bad voice. |
| 2 Sonorous. | ३८ रवणः शब्दनो, नान्दीवादी नान्दीकरः समौ । 2 Speaker of a prologue. |
| 2 Idiot, stupid. 1 Deaf and dumb. | जडो ऽज्ञ, एडमूकस् तु वक्तुं श्रोतुम-शिक्षिते ॥ |
| 2 Silent. 3 Naked. | ३९ तूष्णींशीलस् तु तूष्णीको, नग्नोऽवासा दिगम्बरे । |
| 2 Expelled. 2 Cursed. | निष्कासितो ऽवकृष्टः स्यादपध्वस्तस् तु धिक्कृतः ॥ |
| 2 Humbled : subdued. | ४० आत्तगर्वो ऽभिभूतः स्याद्, दापितः साधितः समौ । 2 Condemned ; or adjudged. |
| 4 Removed ; set aside. | प्रत्यादिष्टो निरस्तः स्यात् प्रत्याख्यातो निराकृतः ॥ |
| 2 Pale. 2 Deceived, tricked. | ४१ निकृतः स्याद् विप्रकृतो, विप्रलब्धस् तु वञ्चितः । |
| 4 Disappointed. | मनोहतः प्रतिहतः प्रतिबद्धो हतश् च सः ॥ |
| 2 Turned away. 3 Confined. | ४२ अधिक्षिप्तः प्रतिक्षिप्तो, बद्धे कीलित-संयतौ । |
| 2 Distressed. 2 Put to flight. | आपन्नः आपत्प्राप्तः स्यात्, कान्दिशीको भयद्रुतः ॥ |
| 3 Calumniated. 2 Unsteady. | ४३ आक्षारितः क्षारितोऽभिशस्ते, संकसुकोऽस्थिरे । |
| 2 Afflicted by vice. | व्यसनार्तोपरक्तौ द्वौ, विहस्त-व्याकुलौ समौ ॥ 2 Confounded, perplexed. |

2 Overcome by fear, &c. — ४४ विक्लवो विह्वलः, स्यात् तु विवशोऽरिष्टदुष्टधीः ।
2 Apprehensive of death.

2 Deserving a whipping. — कश्यः कश्यार्हे, सन्नद्धे त्वाततायी वधोद्यते ॥
1 Murderous; a felon.

2 Hateful, detestable. — ४५ द्वेष्ये त्वक्षिगतो, वध्यः शीर्षच्छेद्य इमौ समौ । 2 Meriting beheading.
1 Meriting death by poison. — विष्यो विषेण यो वध्यो, मुसल्यो मुसलेन यः ॥
—by knocks of a pestle.

2 Innocent. — ४६ शिश्विदानोऽकृष्णकर्मा, चपलश् चिकुरः समौ ।
2 Inconsiderately guilty. — दोषैकदृक् पुरोभागी, निकृतस् त्वनृजुः शठः ॥
2 Malevolent and censorious. 3 Wicked; perverse.

2 Informer. 3 Mischiefmaker. — ४७ कर्णेजपः सूचकः स्यात्, पिशुनो दुर्जनः खलः ।
4 Destructive, mischievous. — नृशंसो घातुकः क्रूरः पापो, धूर्तस् तु वञ्चकः ॥
2 Fraudulent; crafty.

6 Idiot. — ४८ अज्ञे मूढ-यथाजात-मूर्ख-वैधेय-बालिशाः ।
5 Miser; avaricious. — कदर्ये कृपण-क्षुद्र-किम्पचान-मितम्पचाः ॥

5 Poor; indigent. — ४९ निःस्वस् तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः ।
5 Beggar; mendicant. — वनीयको याचनको मार्गणो याचकार्थिनौ ॥

2 Proud. 2 Happy. — ५० अहङ्कारवानहंयुः, शुभंयुस् तु शुभान्वितः ।
1 Of divine origin. 1 Viviparous. — दिव्योपपादुका देवा, नृ-गवाऽऽद्या जरायुजाः ॥

1 Engendered by damp. — ५१ स्वेदजाः कृमि-दंशाऽऽद्याः, पक्षि-सर्पाऽऽदयोऽण्डजाः ।
1 Oviparous.

इति प्राणि-वर्गः, अत्र मूलश्लोकाः ५०॥; क्षे. श्लो. ०

---

1 Vegetables. — उद्भिदस् तरु-गुल्माऽऽ द्या, उद्भिदुद्भिज्जमुद्भिदम् ।
3 Sprouting; germinating.

17 Beautiful or pleasing. — ५२ सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् ।
कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ॥
'रम्यं मनोहरं सौम्यं भद्रकं रामणीयकम् ।' ।१।

1 Charming. ५३ तदासेचनकं तृप्तेर् नास्त्यन्तो यस्य दर्शनात् ।

6 Beloved, desired. अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ॥

13 Inferior; low. ५४ निकृष्ट-प्रतिकृष्टाऽर्व-रेफ-याप्याऽवमाऽधमाः ।

कुपूय-कुत्सिताऽवद्य-खेट-गर्ह्याऽणकाः समाः ॥

4 Foul, dirty. ५५ मलीमसं तु मलिनं कच्चरं मलदूषितम् ।

3 Purified.
2 Clean. पूतं पवित्रं मेध्यं च, वीध्रं तु विमलाऽर्थकम् ॥

5 Cleansed. ५६ निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम् ।

2 Pithless.
4 Void, empty. असारं फल्गु, शून्यं तु वशिकं तुच्छ-रिक्तके ॥

17 Chief; principal. ५७ क्लीबे प्रधानं प्रमुख-प्रवेकाऽनुत्तमोत्तमाः ।

मुख्य-वर्य-वरेण्याश् च प्रवर्हो ऽनवराध्र्य-वत् ॥

५८ पराध्र्याऽग्र-प्राग्रहर-प्राग्र्याऽग्र्याऽग्रीयमग्रियम् ।

5 Excellent. श्रेयान् श्रेष्ठः पुष्कलः स्यात् सत्तमश् चाऽतिशोभने ॥

7 Pre-eminent (in comp). ५९ स्युरुत्तर-पदे व्याघ्र-पुङ्गव-र्षभ-कुञ्जराः ।

सिंह-शार्दूल-नागाऽऽद्याः पुंसि श्रेष्ठाऽ र्थ-गोचराः ।

3 Secondary, subordinate. ६० अप्राग्र्यं द्वय-हीने द्वे अप्रधानोपसर्जने ।

9 Great. विशंकटं पृथु बृहद् विशालं पृथुलं महत् ॥

4 Fat; large. ६१ वड्रोरु-विपुलं, पीन-पीव्नी तु स्थूल-पीवरे ।

11 Little, small. स्तोकाऽल्प-क्षुल्लकाः, सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु ॥

६२ स्त्रियां मात्रा त्रुटिः पुंसि लव-लेश-कणाऽणवः ।

5 Very small. अत्यल्पे ऽल्पिष्ठमल्पीयः कनीयोऽणीय इत्यपि ॥

12 Much, many. ६३ प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ।

पुरुहूः पुरु भूयिष्ठं स्फारं भूयश च भूरि च ॥

1 Countless. ६४ परःशताऽऽद्यास् ते येषां परा संख्या शताऽऽदिकात् ॥

2 Numerable.
2 Numbered, counted.
14 All ; entire.

६५ गणनीये तु गणेयं, संख्याते गणितमथ समं सर्वम् ।
विश्वमशेषं कृत्स्नं समस्त-निखिलाऽखिलानि निःशेषम् ।

६६ समग्रं सकलं पूर्णमखण्डं स्यादनूनके ।

3 Coarse.
3 Delicate, fine.

घनं निरन्तरं सान्द्रं, पेलवं विरलं तनु ॥

15 Near, proximate.

६७ समीपे निकटाऽऽसन्न-संनिकृष्ट-सनीड-वत् ।
सदेशाऽभ्याश-सविध-समर्याद-सवेश-वत् ॥

६८ उपकण्ठाऽन्तिकाऽभ्यर्णाऽभ्यग्रा अप्यभितोऽ व्ययम् ।

3 Adjoining, contiguous.

संसक्ते त्वव्यवहितमपदान्तरमित्यपि ॥

2 Very near.
3 Distant.
3 Very remote.
2 Long.

६९ नेदिष्ठमन्तिकतमं, स्याद् दूरं विप्रकृष्टकम् ।
दवीयश् च दविष्ठं च सुदूरं, दीर्घमायतम् ॥

3 Round.
2 Uneven; wavy.
6 High, tall.

७० वर्तुलं निस्तलं वृत्तं, बन्धुरं तून्नतानतम् ।
उच्च-प्रांशून्नतोदग्रोच्छ्रितास् तुङ्गे, ऽथ वामने ॥

5 Short.

3 Bending, stooping.
11 Crooked.

७१ न्यङ्-नीच-खर्व-ह्रस्वाः स्युरवाग्रेऽवनताऽऽनतम् ।
अरालं वृजिनं जिह्ममूर्मिमत् कुञ्चितं नतम् ॥

७२ आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ।

3 Straight.
3 Confounded.

ऋजावजिह्म-प्रगुणौ, व्यस्ते त्वप्रगुणाऽऽकुलौ ॥

5 Eternal.
3 Permanent, firm.

७३ शाश्वतस् तु ध्रुवो नित्य-सदातन-सनातनाः ।
स्थास्नुः स्थिरतरः स्थेयानेक-रूप-तया तु यः ॥

1 Uniform; perpetually the same.
2 Immoveable.
6 Moveable.

७४ काल-व्यापी स कूटस्थः, स्थावरो जङ्गमेतरः ।
चरिष्णु जङ्गम-चरं त्रसमिङ्गं चराचरम् ॥

3 Shaking; moving.
7 Fickle.

७५ चलनं कम्पनं कम्प्रं, चलं लोलं चलाचलम् ।
चञ्चलं तरलं चैव पारिप्लव-परिप्लवे ॥

2 Exceeding.
2 Strong knit.
9 Hard; solid.

७६ अतिरिक्तः समधिको, दृढसंधिस् तु संहतः ।
खक्खटं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ॥

| | | |
|---|---|---|
| 2 Material, corporeal. | ७७ जरठं मूर्तिमन् मूर्तं, प्रवृद्धं प्रौढमेधितम् । | 3 Full-grown. |
| 5 Old, ancient. | पुराणे प्रतन-प्रत्न-पुरातन-चिरन्तनाः ॥ | |
| 7 New. | ७८ प्रत्यग्रो ऽभिनवो नव्यो नवीनो नूतनो नवः । | |
| 4 Soft. | नूत्नश् च, सुकुमारं तु कोमलं मृदुलं मृदु ॥ | |
| 4 Following. | ७९ अन्वगन्वक्षमनुगे ऽनुपदं क्लीबमव्ययम् । | |
| 2 Perceptible. 2 Imperceptible. | प्रत्यक्षं स्यादैन्द्रियकमप्रत्यक्षमतीन्द्रियम् ॥ | |
| 7 Closely attentive. | ८० एकतानो ऽनन्यवृत्तिरैकाग्रैकायनावपि । | |
| | अप्येकसर्ग एकाग्र्यो ऽप्येकायनगतोऽपि सः ॥ | |
| 5 Prior; first; initial. | ८१ पुंस्यादिः पूर्व-पौरस्त्य-प्रथमाऽऽद्या, अथाऽस्त्रियाम् । | |
| 6 Last, ultimate. | अन्तो जघन्यं चरममन्त्य-पाश्चात्य-पश्चिमाः ॥ | |
| 2 Vain, useless. | ८२ मोघं निरर्थकं, स्पष्टं स्फुटं प्रव्यक्तमुल्बणम् । | 4 Apparent, evident. |
| 2 Common. 3 Alone, solitary. | साधारणं तु सामान्यमेकाकी त्वेक एककः ॥ | |
| 6 Other, different. | ८३ भिन्नाऽर्थका अन्यतर एकस् त्वो ऽन्येतरावपि । | |
| 2 Various. 2 Quick, expeditious. | उच्चावचं नैकभेदमुच्चण्डमविलम्बितम् ॥ | |
| 2 Sharp, corrosive. 2 Unobstucted. | ८४ अरुन्तुदस् तु मर्मस्पृगबाधं तु निरर्गलम् । | |
| 4 Contrary. | प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च ॥ | |
| 1 Left. 1 Right, | ८५ वामं शरीरे सव्यं स्यादपसव्यं तु दक्षिणम् । | |
| 2 Narrow. 2 Impervious. | संकटं ना तु संबाधः, कलिलं गहनं समे ॥ | |
| 3 Crowded, confused. | ८६ संकीर्णे संकुलाऽऽकीर्णे, मुण्डितं परिवापितम् । | 2 Shaved. |
| 3 Strung; tied. 3 Spread; diffuse. | ग्रन्थितं संदितं दृब्धं, विसृतं विस्तृतं ततम् ॥ | |
| 2 Forgotten. 2 Placed. | ८७ अन्तर्गतं विस्मृतं स्यात्, प्राप्त-प्रणिहिते समे । | |
| 6 Shaken. | वेल्लित-प्रेङ्खिताऽऽधूत-चलिताऽऽकम्पिता धुते ॥ | |
| 7 Thrown, cast, sent. | ८८ नुत्त-नुन्नाऽस्त-निष्ठ्यूताऽऽविद्ध-क्षिप्तेरिताः समाः ॥ | |
| 2 Intrenched. 2 Stolen. | परिक्षिप्तं तु निवृत्तं, मूषितं मुषिताऽर्थकम् ॥ | |

2 Expanded; dispersed. ८९ प्रवृद्ध-प्रसृते, न्यस्त-निसृष्टे, गुणिताऽऽहते ।
2 Deposited. 2 Multiplied.

2 Plaistered. 2 Hidden. निदिग्धोपचिते, गूढ-गुप्ते, गुण्ठित-रूषिते ॥ 2 Pounded.

2 Melted. 2 Raised, held up. ९० द्रुताऽवदीर्णे, उद्गूर्णोद्यते, काचित-शिक्यिते । 2 Suspended in a swing.

2 Smelled. 2 Smeared; anointed. घ्राण-घ्राते, दिग्ध-लिप्ते, समुदक्तोद्धृते समे ॥
2 Drawn; raised from a deep place.

5 Surrounded ९१ वेष्टितं स्याद् वलयितं संवीतं रुद्धमावृतम् ।

2 Bent; crooked. 4 Sharpened, whetted. रुग्णं भुग्ने, ऽथ निशित-क्ष्णुत-शातानि-तेजिते ॥

2 Mature. 3 Ashamed. ९२ स्याद् विनाशोन्मुखं पक्वं, ह्रीण-ह्रीतौ तु॰ लज्जिते ।

3 Chosen; appointed. 2 Joined; annexed. वृत्ते तु वृत-व्यावृत्तौ, संयोजित उपाहितः ॥

3 Attainable. 4 Flowing; dropping. ९३ प्राप्यं गम्यं समासाद्यं, स्यन्नं रीणं स्नुतं स्रुतम् ।

2 Arranged, or heaped. 2 Detested. संगूढः स्यात् संकलितो, ऽवगीतः ख्यातगर्हणः ॥

4 Various, multiform. ९४ विविधः स्याद् बहुविधो नानारूपः पृथग्विधः । 2 Censured, blamed.

2 Coarsely pounded. अवरीणो धिक्कृतश् चाप्यवध्वस्तो ऽवचूर्णितः ॥

1 Diluted decoction. ९५ अनायास-कृतं फाण्टं, स्वनितं ध्वनितं समे । 2 Sounded; making a noise.

6 Bound. बद्धे संदानितं मूतमुद्दितं संदितं सितम् ॥

2 Decocted. 1 Boiled. ९६ निष्पक्वे क्वथितं, पाके क्षीराऽऽज्य-हविषां शृतम् ।

1 Departed. 1 Become calm. निर्वाणो मुनि-वन्ह्याऽऽदौ, निर्वातस् तु गतेऽनिले ॥

2 Mature, ripe. 2 Passed (as ordure). ९७ पक्वं परिणते, गूनं हन्ने, मीढं तु मूत्रिते । 2 Passed (as urine).

2 Nourished. 2 Borne. पुष्टे तु पुषितं, सोढे क्षान्तमुद्वान्तमुद्गते ॥ 2 Vomited.

2 Tamed; subdued or trained. ९८ दान्तस् तु दमिते, शान्तः शमिते, प्रार्थितेऽर्दितः ।
2 Pacified, appeased. 2 Asked, requested.

2 Made known. 2 Covered. ज्ञप्तस् तु ज्ञपिते, छन्नश् छादिते, पूजितेऽञ्चितः ॥
2 Worshipped; revered.

2 Filled; full. ९९ पूर्णस् तु पूरिते, क्लिष्टः क्लिशिते, ऽवसिते सितः ।
1 Tired; fatigued. 2 Finished.

4 Burnt. प्रुष्ट-प्लुष्टोषिता दग्धे, तष्ट-त्वष्टौ तनूकृते ॥ 3 Pared; made thin.

| | | |
|---|---|---|
| 3 Pierced. | १०० | वेधितच्छिद्रितौ विद्धे, विन्न-वित्तौ विचारिते ।<br>3 Judged; discussed. |
| 3 Gloomy. obscured. | | निष्प्रभे विगताऽरोकौ, विलीने विद्रुत-द्रुतौ ॥<br>3 Liquid. |
| 3 Accomplished.<br>3 Split. | १०१ | सिद्धे निर्वृत्त-निष्पन्नौ, दारिते भिन्न-भेदितौ । |
| 3 Woven. | | ऊतं स्यूतमुतं चेति त्रितयं तन्तु-सन्तते ॥ |
| 6 Saluted; honoured. | १०२ | स्यादर्हिते नमस्यित-नमासितमपचायिताऽर्चिताऽ-पचितम् । |
| 4 Served; adored. | | वरिवसिते वरिवस्यितमुपासितं चोपचरितं च ॥ |
| 5 Sufferring pain. | १०३ | संतापित-संतप्तौ धूपित-धूपायितौ च दूनश् च । |
| 6 Pleased, glad, content. | | हृष्टो मत्तस् तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः ॥ |
| 8 Cut. | १०४ | छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम् । |
| 7 Fallen. | | स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम् ॥ |
| 6 Obtained. | १०५ | लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च । |
| 5 Sought. | | अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम् ॥ |
| 7 Wet; moistened. | १०६ | आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च । |
| 6 Preserved, saved, guarded. | | त्रातं त्राणं रक्षितमवितं गोपायितं च गुप्तं च ॥ |
| 5 Disregarded, despised. | १०७ | अवगणितमवमताऽवज्ञाते अवमानितं च परिभूते । |
| 6 Abandoned, left. | | त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टे ॥ |
| 7 Spoken, said. | १०८ | उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितम् |
| 7 Known, understood. | | बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसिताऽवगते ॥ |
| 11 Promised. | १०९ | ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् । |
| | | संगीर्ण-विदित-संश्रुत-समाहितोपश्रुतोपगतम् ॥ |
| 12 Praised. | ११० | ईलित-शस्त-पणायित-पनायित-प्रणुत-पणित-प-नितानि । |
| | | अपि गीर्ण-वर्णिताऽभिष्टुतेडितानि स्तुताऽर्थानि ॥ |

14 Eaten. १११ भक्षित–चर्वित-लिप्त-प्रत्यवसित-गिलित-खादित-प्सातम् ।
अभ्यवहृताऽन्न-जग्ध-ग्रस्त-ग्लस्ताऽशितं भुक्ते ॥

Certain irregular Superlatives. ११२ क्षेपिष्ठ-क्षोदिष्ठ-प्रेष्ठ-वरिष्ठ-स्थविष्ठ-बंहिष्ठाः ।
1 Most quick; 1 Smallest; 1 Dearest, largest, 1 Most corpulent; 1 Most numerous.
क्षिप्र-क्षुद्राऽभीप्सित-पृथु-पीवर-बहुल-प्रकर्षाऽर्थाः ॥

1 Hardest; 1 Longest; ११३ साधिष्ठ-द्राघिष्ठ-स्फेष्ठ-गरिष्ठ-ह्रसिष्ठ-वृन्दिष्ठाः ।
1 Most firm. 1 Heaviest; 1 Shortest; 1 Most abundant.
बाढ-व्यायत-बहु-गुरु-वामन-वृन्दारकाऽतिशये ॥

इति विशेष्यनिघ्न-वर्गः १, अत्र मूलश्लोकाः ११२॥, क्षे० श्लो० ॥

## अथ संकीर्ण-वर्गः २

१ प्रकृति-प्रत्ययाऽर्थाऽऽद्यैः संकीर्णे लिङ्गमुन्नयेत् ।
2 Action. 1 Continual. कर्म क्रिया, तत्-सातत्ये गम्ये स्युरपरस्पराः ॥

1 Tolality. २ साकल्याऽऽसंग-वचने पारायण-परायणे । 1 Adherence. attachment;
2 Wilfulness; independence. यदृच्छा स्वैरिता, हेतु-शून्या त्वास्था विलक्षणम् ॥
1 Vain and causeless state.

3 Quiet. 3 Self-command. ३ शमथस् तु शमः शान्तिर्, दान्तिस् तु दमथो दमः ।
1 Approved occupation. अवदानं कर्म वृत्तं, काम्यदानं प्रवारणम् ॥ 2 A desirable gift.

2 Subduing by charms. ४ वशक्रिया संवननं, मूलकर्म तु कार्मणम् । 2 Magic.
2 Tremour. 3 Satisfaction. विधूननं विधुवनं, तर्पणं प्रीणनाऽवनम् ॥

3 Warding of a blow. ५ पर्याप्तिः स्यात् परित्राणं हस्तधारणमित्यपि ।
3 Sewing. 3 Tearing, rending. सेवनं सीवनं स्यूतिर्, विदरः स्फुटनं भिदा ॥

2 Curse, imprecation. ६ आक्रोशनमभीषङ्गः, संवेदो वेदना न ना । 2 Sensation, perception.
2 Co-extending; pervading. संमूर्च्छनमभिव्याप्तिर्, याच्ञा भिक्षाऽर्थनाऽर्दना ॥
4 Begging.

2 Cutting. ७ वर्धनं छेदने, ऽथ द्वे आनन्दन-सभाजने ।
3 Courtesy; welcome or adieu.
2 Received doctrine. 3 Loss. आप्रच्छन्नमथाऽऽम्नायः संप्रदायः, क्षये क्षिया ॥
2 Taking. 2 Wish, desire. ८ ग्रहे ग्राहो, वशः कान्तौ, रक्षणस् त्राणे, रणः क्वणे ।
2 Protection; defence. 2 Sound, noise.
2 Perforation, piercing. व्यधो वेधे, पचा पाके, हवो हूतौ, वरो वृत्तौ ॥
2 Maturity. 2 Calling; challenging. 2 Engaging; appointing.
2 Combustion; burning. ९ ओषः प्लोषे, नयो नाये, ज्यानिर् जीर्णौ, भ्रमो भ्रमौ ।
2 Guiding; directing. 2 Wearing, growing old. 2 Whirling; going round.
2 Increase, growth. 2 Fame, notoriety. स्फातिर् वृद्धौ, प्रथा ख्यातौ, स्पृष्टिः पृक्तौ, स्नवः स्रवे ॥
2 Touch, contact. 2 Oozing, dripping.
2 Thriving. 2 Throbbing. १० एधा समृद्धौ, स्फुरणे स्फुरणा, प्रमितौ प्रमा । 2 True knowledge.
2 Bringing forth (as young). प्रसूतिः प्रसवे, श्च्योते प्राघारः, क्लमथः क्लमे ॥
2 Pouring forth; aspersion. 2 Fatigue.
2 Excellence. 2 Union; junction. ११ उत्कर्षोऽतिशये, संधिः श्लेषे, विषय आश्रये । 2 Refuge; asylum.
2 Sending; directing. क्षिपायां क्षेपणं, गीर्णिर् गिरौ, गुरणमुद्यमे ॥
2 Swallowing. 2 Effort, exertion.
2 Raising. १२ उन्नाय उन्नये, श्रायः श्रयणे, जयने जयः ।
2 Reliance; taking refuge. 2 Conquest, victory.
2 Discourse, speech. 2 Pride. निगादो निगदे, मादो मद, उद्वेग उद्भ्रमे ॥ 2 Regret.
2 Trituration of perfumes. १३ विमर्दनं परिमलो, ऽभ्युपपत्तिरनुग्रहः । 2 Conferring of a benefit.
1 Disfavour. 2 Attack, onset. निग्रहस् तद्-विरुद्धः स्यादभियोगस् त्वभिग्रहः ॥
2 Clinching of the fist. १४ मुष्टिबन्धस् तु संग्राहो, डिम्बे डमर-विप्लवौ । 3 Affray, assault.
3 Ligament. fetters. 3 Morbid heat. बन्धनं प्रसितिश् चारः, स्पर्शः स्प्रष्टोपतप्तरि ॥
3 Injury. 3 Hint, sign, token. १५ निकारो विप्रकारः स्यादाकारस् त्विङ्ग इङ्गितम् ।
4 Change of form. परिणामो विकारे, द्वे समे विकृति-विक्रिये ॥

2 Loss. 2 Assemblage. १६ अपहारस् त्वपचयः, समाहारः समुच्चयः ।
2 Abstraction. प्रत्याहार उपादानं, विहारस् तु परिक्रमः ॥
2 Walking for pleasure.

| | |
|---|---|
| 2 Robbery. 2 Extraction. 2 Imitation. 1 Expenditure. | १७ अभिहारो ऽभिग्रहणं, निहारो ऽभ्यवकर्षणम् । अनुहारो ऽनुकारः स्यादर्थस्याऽपगमे व्ययः ॥ |
| 2 Stream. 6 Forbearance. | १८ प्रवाहस् तु प्रवृत्तिः स्यात्, प्रवहो गमनं बहिः । [1] Going forth; issuing. वियामो वियमो यामो यमः संयाम-संयमौ ॥ |
| 2 Incantation to destroy. | १९ हिंसाकर्माऽभिचारः स्याज्, जागर्या जागरा द्वयोः । 2 Waking, watching. |
| 2 Obstacle; impediment. | विघ्नोऽन्तरायः प्रत्यूहः, स्यादुपघ्नोऽन्तिकाश्रये ॥ 2 Contiguous support. |
| 2 Enjoyment. 2 Encompassing; surrounding. 2 Separation | २० निर्वेश उपभोगः स्यात्, परिसर्पः परिक्रिया । विधुरं तु प्रविश्लेषे, ऽभिप्रायश् छन्द आशयः ॥ 3 Meaning; intention. |
| 2 Abridgment. 2 Contradiction. 2 Perambulation. 3 Stay. | २१ संक्षेपणं समसनं, पर्यवस्था विरोधनम् । परिसर्या परीसारः स्यादास्या त्वासना स्थितिः ॥ |
| 2 Diffusion. 1 Prolixity. 2 Rubbing of the person. | २२ विस्तारो विग्रहो व्यासः, स च शब्दस्य विस्तरः । संवाहनं मर्दनं स्याद्, विनाशः स्याददर्शनम् ॥ 2 Disappearance. |
| 2 Acquaintance. 2 Spreading. 2 Scarcity. 2 Proximity. | २३ संस्तवः स्यात् परिचयः, प्रसरस् तु विसर्पणम् । नीवाकस् तु प्रयामः स्यात्, संनिधिः संनिकर्षणम् ॥ |
| 3 Reaping. 2 Occasion; opportunity. | २४ लवो ऽभिलावो लवने, निष्पावः पवने पवः । 3 Winnowing; cleaning. प्रस्तावः स्यादपसरस्, त्रसरः सूत्रवेष्टनम् ॥ 2 A Shuttle. |
| 2 First pregnancy of cows. 2 Intellectual faculty. 2 Difficult progress. | २५ प्रजनः स्यादुपसरः, प्रश्रय-प्रणयौ समौ । 2 Affectionate solicitation. धीशक्तिर् निष्क्रमो, ऽस्त्री तु संक्रमो दुर्गसंचरः ॥ |
| 2 Act tending to a main object. 2 Haste. hurry. | २६ प्रत्युत्क्रमः प्रयोगाऽर्थः, प्रक्रमः स्यादुपक्रमः । 2 Beginning. स्यादभ्यादानमुद्घात आरम्भः, संभ्रमस् त्वरा ॥ |
| 2 Impediment. | २७ प्रतिबन्धः प्रतिष्टम्भो, ऽवनायस् तु निपातनम् । 2 Causing to descend. |
| 2 Apprehension. 2 Smearing. | उपलम्भस् त्वनुभवः, समालम्भो विलेपनम् ॥ |

| | |
|---|---|
| 2 Separation of lovers. | २८ विप्रलम्भो विप्रयोगो, विलम्भस् त्वतिसर्जनम् । 2 Liberality. |
| 2 Celebrity. | विश्रावस् तु प्रतिख्यातिरवेक्षा प्रतिजागरः ॥ 2 Attention. |
| 3 Reading lecture. | २९ निपाठ-निपठौ पाठे, तेम-स्तेमौ समुन्दने । 3 Wetness. |
| 3 Ditress from disease. | आदीनवाऽऽस्रवौ क्लेशे, मेलके संग-संगमौ ॥ 3 Meeting; union. |
| 5 Research. | ३० संवीक्षणं विचयनं मार्गणं मृगणा मृगः । |
| 4 Embrace. | परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम् ॥ |
| 5 Sight; seeing; looking. | ३१ निर्वर्णनं तु निध्यानं दर्शनाऽऽलोकनेक्षणम् । |
| 4 Rejection; disallowance. | प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ॥ |
| 2 Watching alternately. | ३२ उपशायो विशायश् च पर्याय-शयनाऽर्थकौ । |
| 4 Censure; reproach. | अर्तनं च ऋतीया च हृणीया च घृणाऽर्थकाः ॥ |
| 4 Contrariety; opposition. | ३३ स्याद् व्यत्यासो विपर्यासो व्यत्ययश् च विपर्यये । |
| 4 Transgression. | पर्ययोऽतिक्रमस् तस्मिन्नतिपात उपात्ययः ॥ |
| 1 Mission after calling. | ३४ प्रेषणं यत् समाहूय तत्र स्यात् प्रतिशासनम् । |
| 1 Place where the priests stand. | स संस्तावः क्रतुषु या स्तुति-भूमिर् द्विजन्मनाम् ॥ |
| 1 A carpenter's work-bench. | ३५ निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्धनः । |
| 2 Tool for cutting corn and grass. | स्तम्बघ्नस् तु स्तम्बघनः स्तम्बो येन निहन्यते ॥ |
| 1 An auger. 1 Round; circular | ३६ आविधो विध्यते येन तत्र, विष्वक्-समे निघः । |
| 2 Winnowing of corn. | उत्कारश् च निकारश् च द्वौ धान्योत्क्षेपणाऽर्थकौ ॥ |
| 1 Swallowing, etc. | ३७ निगारोद्गार-विक्षावोद्ग्राहास् तु गरणाऽऽदिषु । |
| 4 Stopping, ceasing. 4 Spitting. | आरत्यवरति-विरतय उपरामे, ऽथा ऽस्त्रियां तु निष्ठेवः ॥ |
| | ३८ निष्ठ्यूतिर् निष्ठेवन-निष्ठीवनमित्यभिन्नानि । |
| 2 Speed. 2 Conclusion. | जवने जूतिः, सातिस् त्ववसाने स्यादथ ज्वरे जूर्तिः ॥ 2 Fever. |

1 Driving of cattle. 1 Curse. ३९ उद्जस् तु पशु-प्रेरणमकरणिरित्याऽऽदयः शापे ।
1 Aggregate patronymic. गोत्राऽन्तेभ्यस् तस्य वृन्दमित्यौपगवकाऽऽदिकम् ॥
2 Multitude of loaves and pies. ४० आपूपिकं, शाष्कुलिकमेवमाद्यम-चेतसाम् ।
1 Multitude of boys. 1—of coadjutors. माणवानां तु माणव्यं, सहायानां सहायता ॥
1—of ploughs. 2—of priests. ४१ हल्या हलानां, ब्राह्मण्य-वाडव्ये तु द्विजन्मनाम् ।
1—of ribs and back-bones. द्वे पर्शुकानां पृष्ठानां पार्श्वं, पृष्ठ्यमनुक्रमात् ॥
2—of threshing floors. ४२ खलानां खलिनी खल्याऽप्यथ मानुष्यकं नृणाम् । 1—of men.
1—of villages, etc. ग्रामता, जनता, धूम्या, पाश्या, गल्या, पृथक्-पृथक् ॥
1—of people. 1 Accumulation of smoke. 1 Abundance of fetters. 1 Abundance of reeds, ropes and throats.

1—of thousands, etc. ४३ अपि साहस्र-कारीष-वार्मणाऽऽथर्वणाऽऽदिकम् ।
1 Abundance of dry cow dung. 1 Abundance of hides or shields. 1 Collection of prayers.

इति संकीर्ण-वर्गः २, अत्र मूलश्लोकाः ४२॥, क्षे० श्लो००.

## अथ नानार्थ-वर्गः ३

१ नानाऽर्थाः के ऽपि कान्ताऽऽदि-वर्गेष्वेवाऽत्र कीर्तिताः ।
भूरि-प्रयोगा ये येषु पर्यायेष्वपि तेषु ते ॥

1 Sky. ether. 1 Heaven. २ आकाशे त्रिदिवे नाको, लोकस् तु भुवने जने, । 1 World. 1 People.
1 Verse. 1 Glory. पद्ये यशसि च श्लोकः, शरे खड्गे च सायकः, ॥ 1 Arrow. 1 Sword.
1 Shakal. 1 God of water. ३ जम्बुकौ क्रोष्टु-वरुणौ, पृथुकौ चिपिटाऽर्भकौ, ।
1 Fried rice flattened. 1 Infant.

1 Sight. look. 1 Light. आलोकौ दर्शन-द्योतौ, भेरी-पटहमानकौ, ॥
1 A double drum. 1 A large drum.

1 Mark. 1 Flank. ४ उत्सङ्ग-चिह्नयोरङ्कः, कलङ्को ऽङ्काऽपवादयोः, ।
1 Spot. 1 Defamation.

1 The chief of snakes. तक्षको नाग-वर्द्धक्योरर्कः स्फटिक-सूर्ययोः, ॥
1 A carpenter. 1 Crystal; 1 The sun.

1 Wind. 1 *Brahma*.
५ मारुते वेधसि ब्रध्ने पुंसि कः, कं शिरोऽम्बुनोः, ।
1 Sun. 1 Soul. 1 Head. 1 Water.

1 Shrivelled grain. 1 Brevity.
स्यात् पुलाकस् तुच्छ-धान्ये संक्षेपे भक्त-सिक्थके, ॥
1 Lump of boiled rice.

1 An owl.
६ उलूके करिणः पुच्छ-मूलोपान्ते च पेचकः, ।
1 Root of a tail of an elephant.

1 Water-pot. 1 A *Buddha* or saint.
कमण्डलौ च करकः, सुगते च विनायकः, ॥

1 Cubit. 2 A span. 1 A Scorpion.
७ किष्कुर् हस्ते वितस्तौ च, शूक–कीटे च वृश्चिकः, ।

1 An integrant part. 2 Contrary.
प्रतिकूले प्रतीकस् त्रिष्वेक-देशे तु पुंस्ययम्, ॥

1 Gentiana. 1 A fragrant grass.
८ स्याद् भूतिकं तु भूनिम्बे कत्तृणे भूस्तृणे ऽपि च, ।
1 Another sort. 1 Andropogon schoenanthus.

1 Moon light night.
ज्योत्स्निकायां च घोषे च कोशातक्यथ कट्फले ॥
1 Sorts of Cucurbitaceous plants. 1 Kayaphal.

A white sort of Mimosa.
९ सिते च खदिरे सोमवल्कः स्यादथ सिह्लके ।

1 Incense. 1 Meal of seame.
तिल-कल्के च पिण्याको, बाह्लीकं रामठे ऽपि च, ॥ Asafœtida.

1 INDRA. 1 Bdellium.
१० महेन्द्र-गुग्गुलूलूक-व्यालग्राहिषु कौशिकः, । 1 Owl.
1 Snake-catcher.

1 Disease. 1 Pain. 1 Fear. 1 Small.
रुक्-ताप-शङ्कास्वातङ्कः, स्वल्पे ऽपि क्षुल्लकस् त्रिषु, ॥

1 The moon. 1 Long lived.
११ जैवातृकः शशाङ्के ऽपि खुरे ऽप्यश्वस्य वर्तकः, । A horse's hoof.
1 A quail.

1 A leopard. 1 An aromatic seed.
व्याघ्रे ऽपि पुण्डरीको ना, यवान्यामपि दीपकः, ॥
1 An elephant to uphold the world.

1 Ape. 1 Shakal. 1 Dog.
१२ शालावृकाः कपि-क्रोष्टु-श्वानः, स्वर्णे ऽपि गैरिकम्, ।
1 Gold. 1 Red chalk.

1 Pain. 1 Falsehood.
पीडाऽर्थेऽपि व्यलीकं स्यादलीकं त्वप्रिये ऽनृते, ॥
1 Any thing displeasing.

1 Disposition. 1 Race; family.
१३ शीलाऽन्वयावनूके द्वे, शल्के शकल-वल्कले, ।
1 Part. 1 Scale of a fish. 1 Bark.

1 A weight. 1 Gold.
साऽष्टे शते सुवर्णानां हेम्न्युरो-भूषणे पले ॥ 1 Ornament on the breast.

1 Dirt 1 Sin.
1 Calamity.
१४ दीनारे ऽपि च निष्को ऽस्त्री, कल्को ऽस्त्री शमलैनसोः ।

1 Fraud.
दम्भे ऽप्यथ पिनाको ऽस्त्री शूल-शङ्करधन्वनोः, ॥
1 Trident. 1 SIVA's bow.

1 A female elephant.
1 A milch cow.
१५ धेनुका तु करेण्वां च, मेघ-जाले च कालिका ।
1 Cloudiness. 1 Multitude of clouds.

1 Agony.
1 Explanatory verse
कारिका यातना-वृत्त्योः, कर्णिका कर्ण-भूषणे ॥ 1 An ear-ring

१६ करि-हस्ते ऽङ्गुलौ पद्म-वीज-कोश्यां, त्रिषूत्तरे, ।
1 Tip of elephant's trunk. 1 The middle finger. 1 The Pericat of a lotus.

1 Handsome.
1 Chief; Principal.
वृन्दारकौ रूपि-मुख्यावेके मुख्याऽन्य-केवलाः, ॥
1 One. 1 Chief. 1 Other. 1 Alone.

Hypocritical.
१७ स्याद् दाम्भिकः कौक्कुटिको यश् चाऽदूरेरितेक्षणः, ।
1 Never looking before but stepping with caution

1 Attentive.
2 Indolent.
ललाटिकः प्रभोर् भाल-दर्शी कार्याऽक्षमश् च यः, ॥

1 Side of a hill.
1 Bracelet. 1 Circle.
' भूभृन्नितम्ब-वलय-चक्रेषु कटको ऽस्त्रियाम्, ॥ १ ॥

1 A thorn. 1 Dip of a needle. 1 Paltry foe.
सूच्यग्रे क्षुद्र-शत्रौ च रोमहर्षे च कण्टकः, ॥ 1 Hair on end.

पाकौ पक्ति-शिशू, मध्य-रत्ने नेतरि नायकः, ॥ २ ॥
1 Act of cooking ; 1 A child ; 1 A Chief gem of a necklace. 1 Leader.

1 Waist band.
1 Tiger. 1 Hunter.
पर्यङ्कः स्यात् परिकरे, स्याद् व्याघ्रे ऽपि च लुब्धकः, ।

1 Multitude ;
1 Guru ; a guide.
पेटकस् त्रिषु वृन्दे ऽपि, गुरौ देश्ये च देशिकः, ॥३॥

1 A small village.
1 Plank.
खेटकौ ग्राम-फलकौ, धीवरे ऽपिच जालिकः, । A fisher man.

1 Pollens.
पुष्प-रेणौ च किञ्जल्कः, शुल्को ऽस्त्री स्त्री-धनेऽपि च॥४
1 Price. 1 A Dowery.

1 Wave
2 Longing.
स्यात् कल्लोले ऽप्युत्कलिका, वार्द्धकं भाव-वृन्दयोः, ।
1 Old age. Group of old men.

1 Female elephant.
2 Harlot.
करिण्यां चापि गणिका, दारकौ बाल-भेदकौ, ॥५॥
1 Child. 2 Tearing.

1 Blind.
2 Wreked.
अन्धे ऽप्यनेडमूकः स्यात्, टङ्कौ दर्पाऽश्मदारणौ, ॥
1 Pride. 2 Chisel.

1 An earthen pot.
1 She camel.
मृद्भाण्डेऽप्युष्ट्रिका, मन्थे खजको रसदर्वके । ६ ।
1 A churning rod. 1 A spoon.

इति कान्ताः ।

1 Brightness. 2 Ray of light. 3 Flame. १८ मयूखस् त्विट्-कर- ज्वालास्वलि-बाणौ शिलीमुखौ, ।
1 A bee. 2 An arrow.

1 An auriferous gem. शङ्खो निधौ ललाटाऽस्थ्नि कम्बौ न स्त्री,ऽन्द्रियेऽपि खम्,।।
2 The bone on the forehead. 3 A conch. 4 Organ of sense. 5 Shell.

1 Ray of light. 2 Flame. १९ घृणि-ज्वाले अपि शिखे,

इति खान्ताः ।

1 A mountain. 2 A tree. शैल-वृक्षौ नगावगौ ।

1 Wind. 2 An arrow. आशुगौ वायु-विशिखौ, शराऽर्क-विहगाः खगाः, ।।
1 An arrow. 1 The sun. 1 A bird.

1 A bird. 2 The sun. 3 A uorth. 4 Corn. २० पतङ्गौ पाक्षि-सूर्यौ च, पूगः क्रमुक-वृन्दयोः, ।
1 Areca. 2 Multitude.

1 Cattle. 2 Deer. 1 Stream. 2 Speed. पशवो ऽपि मृगा, वेगः प्रवाह-जवयोरपि, ।।

1 Pollen of flowers. 2 Dust. २१ परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि, ।

1 An elephant. 2 A chandala. गजे ऽपि नाग-मातङ्गावपाङ्गस् तिलके ऽपि च, ।।
An outer corner of the eye. 2 A circlet on the forehead.

1 Nature. 2 Relinquishment. २२ सर्गः स्वभाव-निर्मोक्ष-निश्चयाऽध्याय-सृष्टिषु, ।
3 Certainty. 4 Chapter. 5 Creation.

1 Armour. 2 Means. योगः संनहनोपाय-ध्यान-संगति-युक्तिषु, ।।
3 Meditation. 4 Union. 5 Junction.

1 Enjoyment. 2 Hire. २३ भोगः सुखे स्त्र्यादि-भृतावहेश्च च फण-काययोः, ।
1 Hood of a serpent. 2 Body of a serpent.

1 Sort of bird. 2 A deer. चातके हरिणे पुंसि, सारङ्गः शवले त्रिषु, ।। 3 Antelope. 4 Variegated.

An ape. 1 A frog. 1 Curse. 2 Defeat. २४ कपौ च प्लवगः, शापे त्वभिषङ्गः पराभवे, ।

1 A yoke. 2 A pair. 3 An age. यानाऽऽद्यङ्गे युगः पुंसि, युगं युग्मे कृताऽऽदिषु, ।।
Meassure of fare enbits.

1 Heaven. 2 An arrow. २५ स्वर्गेषु-पशु-वाग्-वज्र-दिङ्-नेत्र-घृणि-भू-जले ।
3 A bull. 4 Speech. 5 Thunderbolt. 6 Quarter. 7 An eye. 8 Ray of light.
9 The earth. 10 Water. 11 The sun.

1 A mark. 2 Privy part. लक्ष्य-दृष्ट्या स्त्रियां पुंसि गौर्, लिङ्गं चिह्न-शेफसोः, ।।

1 Preferableness. 2 Summit. २६ शृङ्गं प्राधान्य-सान्वोश् च, वराङ्गं मूर्ध-गुह्ययोः, ।
3 Horn. 4 Drinking pot. 1 The head. 2 Privy part.

1 Prosperity. भगं श्री-काम-माहात्म्य-वीर्य-यत्नाऽर्क-कीर्तिषु, ॥
2 Love or beauty; desire. 3 Excellence. 4 Strength. 5 Care. 6 The sun. 7 The Moon. 8 Glory.

इति गान्ताः ।

1 Destruction. 2 An iron club. २७ परिघः परिघाते ऽस्त्रे, ऽप्योघो वृन्दे ऽम्भसां रये, ।
3 A bolt. 1 Multitude. 2 A current of water.

1 Price. 2 Mode of adoration. मूल्ये पूजा-विधावर्घो, ऽहो-दुःख-व्यसनेष्वघम्, ॥
1 Sin. 2 Pain. 3 Passion.

1 Pleasing. 2 Small. २८ त्रिष्विष्टे ऽल्पे लघुः,
3 Quick. 4 Insignificant.

इति घान्ताः ।

1 Swing. 2 Glass. 3 Disease of the eye. काचाः शिक्य-मृद्भेद-दृग्रुजः, ।

1 Reverse Illusion. 2 Copiousness. विपर्यासे विस्तरे च प्रपञ्चः, पावके शुचिः ॥ 1 Fire.

1 A tried minister. 2 A month Ashadha. २९ मास्यमात्ये चाप्युपधे पुंसि मेध्ये सिते त्रिषु, ।
3 Sentiment of Love. 4 Pure. 5 White. 6 Hot season.

1 Passion. 2 Desire. 3 Ray of light. 4 Lustre. अभिष्वङ्गे स्पृहायां च गभस्तौ च, रुचिः स्त्रियाम् ॥

इति चान्ताः ।

1 A bear. 2 Clear. 'प्रसन्ने भल्लुके ऽप्यच्छो, गुच्छः स्तबक-हारयोः, ।
1 A cluster. 2 Sort of necklace.

1 Hem of a garment. 2 Bank or shore. परिधानाऽञ्चले कच्छो जल-प्रान्ते त्रि-लिङ्गकः ।' । ७ ।

इति क्षेपकच्छान्ताः

1 A peacock. 2 VISHNU's bird. ३० केकि तार्क्ष्यावहिभुजौ, दन्त-विप्राऽण्डजा द्विजाः, ।
1 A tooth. 2 A regenerate man. 3 A bird.

1 VISHNU. 2 SIVA. 3 A goat. अजा विष्णु-हर-च्छागा, गोष्ठाऽध्व-निवहा व्रजाः, ॥
1 A cowpen. 2 A road. 3 A multitude.

1 A deified saint. 2 YAMA.

३१ धर्मराजौ जिन-यमौ, कुञ्जो दन्तेऽपि न स्त्रियाम्, ।

1 An elephant's tooth. 2 An Arbour.

1 A field. 2 A city-gate.

वलजे क्षेत्र-पूर्द्वारे, वलजा वल्गुदर्शना, ॥

3 Pretty woman.

1 Even ground. 2 War. 3 Critical moment.

३२ समे क्ष्मांऽशे रणे ऽप्याजिः, प्रजा स्यात् संततौ जने, ।

1 Progeny. 2 People.

1 A conch. 2 The moon. 3 Lotus.

अब्जौ शङ्ख-शशाङ्कौ च, स्वके नित्ये निजं त्रिषु ॥

1 Own. 2 Perpetual.

इति जान्ताः ।

1 Soul. 2 Skilful.

३३ पुंस्यात्मनि प्रवीणे च क्षेत्रज्ञो वाच्य-लिङ्गकः, ।

1 Thought. 2 Name. 3 Hint.

संज्ञा स्याच् चेतना नाम हस्ताऽऽद्यैश् चार्थ-सूचना ॥

1 A Physician. 2 A wise man.

'दोषज्ञौ वैद्यविद्वांसौ ज्ञो विद्वान् सोमजोऽपि च' ।८।

1 Wise man. 2 Budha.

इति ञान्ताः ।

1 A crow. 2 An elephant's cheek.

३४ काकेभगण्डौ करटौ, गजगण्ड-कटी कटौ, ।

An elephant's cheek. 2 The hip.

1 Bald. 2 Without prepuce or A Leper.

शिपिविष्टस् तु खलतौ दुश्चर्मणि महेश्वरे, ॥

3 Śiva. 4 Vishnu.

1 Divine artist. 2 The sun. 3 Carpenter.

३५ देवशिल्पिन्यपि त्वष्टा, दिष्टं दैवे ऽपि न द्वयोः, ।

1 Destiny. 2 Time.

1 Pungency. 2 Improper act.

रसे कटुः, कट्वकार्ये त्रिषु मत्सर-तीक्ष्णयोः, ॥

3 Envy. 4 Fierce.

1 Happiness. 2 Ill luck. 3 Destruction.

३६ रिष्टं क्षेमाऽशुभाऽभावेष्वरिष्टे तु शुभाऽशुभे, ।

1 Happiness. 2 Misery. 3 Butter milk. 4 Sign of Death. 5 Soapy fruit. 6 Liquor. 7 Crow. 8 Nimba tree.

1 Illusion. 2 Stationary. 3 Trap. 4 Fraud. 5 Lie. 6 Assemblage.

माया-निश्चल-यन्त्रेषु कैतवाऽनृत-राशिषु ॥

7 A hammer. 8 Summit.

३७ अयो-घने शैल-शृङ्गे सीराऽङ्गे कूटम-स्त्रियाम्, ।

9 Body of a plough. 10 Sky.

1 Small cardamum. 2 An instant. 3 Doubt.

सूक्ष्मैलायां त्रुटिः स्त्री स्यात् कालेऽल्पे, संशयेऽपि सा, ॥

1 End of a bow.
2 Eminence.
3 Edge of Weapon. 4 Angle. 5 Crore.

३८ अर्त्युत्कर्षाऽश्रयः कोट्यो, मूले लग्न-कचे जटा, ।

1 A root. 2 Clotted hair.

1 Consequence.
2 Opulence.
3 Praise.

व्युष्टिः फले समृद्धौ च, दृष्टिर् ज्ञाने ऽक्ष्णि दर्शने, ॥

1 Knowledge. 2 An eye. 3 Sight. 4 Memorable verse.

1 Sacrifice.
2 Desire.

३९ इष्टिर् यागेच्छयोः, सृष्टं निश्चिते बहुनि त्रिषु, ।

1 Certain. 2 Much. 3 Created. 4 Lost.

1 Painful.
2 Difficult. 3 Ficree.

कष्टे तु कृच्छ्र-गहने, दक्षाऽमन्दाऽगदेषु तु ।

1 Dilligent.
2 Skilful. 3 Hale.

४० पटुर्, द्वौ वाच्य-लिङ्गौ च, 　4 Salt.

1 Masculine woman.
2 Large Alligator.

' पोटा दासी द्विलिंगा च घृष्टी घर्षण-सूकरौ ॥ ८ ॥

1 Rubbing. 2 Hog.

1 Collection.
2 Troop of elephants.

घटा गोष्ठ्यां हस्तिपङ्क्तौ कूपीटमुदरे जले ' । ९ ।

1 Belly. 2 Water.

इति टान्ताः ।

1 SIVA. 2 A Peacock.

नीलकण्ठः शिवे ऽपि च, ।

1 Stomach.
2 A granary.

पुंसि कोष्ठो ऽन्तर्जठरं कुसूलो ऽन्तर्गृहं तथा, ॥ 3 An Apartment.

1 Confirmation.
2 Destruction.
3 Stop. 4 Steady Practice. 5 Asking. 6 End. 7 Moksha.

४१ निष्ठा निष्पत्ति-नाशाऽन्ताः, काष्ठोत्कर्षे स्थितौ दिशि, ।

1 Excellence. 2 Limit. 3 Region. 4 Time. 5 Wood.

1 The Eldest.
2 Pre-eminent. 3 Old.

त्रिषु ज्येष्ठोऽतिशस्ते ऽपि कनिष्ठो ऽति-युवाऽल्पयोः. ॥

1 Very young. 2 Small.

इति ठान्ताः ।

1 A staff. 2 Army.
3 Punishment.
4 Yama. 5 Churning rod.

४२ दण्डो ऽस्त्री लगुडे ऽपि स्याद्, गुडो गोलेक्षुपाकयोः, ।

1 A globe or ball. 2 Raw sugar. 3 Armour.

1 A serpent.
2 A carnivorous beast. 3 Wicked man.

सर्प-मांसात्पशू व्याडौ, गो-भू-वाचस् त्विडा इलाः, ॥

1 A cow. 2 The earth. 3 Speech. 4 Wife of Budha.

1 A bambu rod.
2 A Venom.
3 War whoop. 4 A Roar.

४३ क्ष्वेडा वंश-शलाका ऽपि, नाडी नाले ऽपि षट्-क्षणे, ।

1 A stalk. 2 An Indian hour. 3 Pipe.
4 Vim, Artery. 5 Guts.

1 A stem.
2 An arrow.
3 A horse. 4 A multitude. 5 Opportunity. 6 Water. 7 Cluster. 8 Excellence.

काण्डो ऽस्त्री दण्ड-बाणाऽर्व-वर्गाऽवसर-वारिषु, ॥

1 Trappings of a horse. ४४ स्याद् भाण्डमश्वाऽऽभरणेऽमत्रे मूल-वणिग्-धने. ।
2 A pot; 3 Stock or Capital; 4 Ornament.

इति डान्ताः ।

1 Much. 2 Promise भृश-प्रतिज्ञयोर् बाढं, प्रगाढं भृश-कृच्छ्रयोः, ॥
1 Much. 2 Difficult. 3 Firm.

1 Multitude. 2 Ball of rice. 3 Body. ' संघातग्रासयोः पिण्डी द्वयोः पुंसि कलेवरे ॥ ९ ॥

1 Temple. 2 Boil. गण्डौ कपोलविस्फोटौ मुण्डकस् त्रिषु मुण्डिते ।
1 Barber. 2 Shaved.

1 Section. 2 Variety of sugar-cane. इक्षुभेदेऽपि खण्डोऽस्त्री, शिखण्डो बर्हचूडयोः' ।१०।
1 Peacock's tail. 2 Crest, Lock of hair.

1 Able. 2 Bulky. 3 Firmly. ४५ शक्त-स्थूलौ त्रिषु दृढौ, व्यूढौ विन्यस्त-संहतौ. ।
1 Arranged. 2 Compact.

इति ढान्ताः ।

1 Child. 2 Human fœtus. भ्रूणोऽर्भके स्त्रैण-गर्भे, बाणो बलि-सुते शरे, ॥
1 Son of Bali. 2 An arrow. 3 Maid servant. 4 Yellow Amarnath.

1 A particle. 2 Eye of corn. ४६ कणोऽति-सूक्ष्मे धान्यांऽशे, संघाते प्रमथे गणः, ।
1 Multitude. 2 Siva's attendants.

1 A stake at play. 2 Cock fight. पणो द्यूताऽऽदिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च, ॥
3 Wages. 4 Price. 5 Wealth. 6 Commodity. 7 Business. 8 Weight of two tolas.

1 A bow string. 2 Quality. ४७ मौर्व्यां द्रव्याऽऽश्रिते सत्त्व-शौर्य-संध्याऽऽदिके गुणः, ।
3 Truth. 4 Valour. 5 Rope. 7 Cook. 8 Limb. 9 Enjoyment.

1 State of being unemployed. निर्व्यापार-स्थितौ कालविशेषोत्सवयोः क्षणः, ॥
2 Moment. 3 festival. 4 Dance. 5 Wound.

1 Tribe. 2 Colour. ४८ वर्णो द्विजाऽऽदौ शुक्लाऽऽदौ स्तुतौ वर्णं तु वाऽक्षरे, ।
3 Praise. 4 Alphabet. 5 Covering. 6 Musical sound. 7 Religious mendicant.

1 The sun. 2 Dark red. अरुणो भास्करेऽपि स्याद् वर्ण-भेदेऽपि च त्रिषु, ॥
3 Charioteer of the sun.

1 Siva. 2 A Post. 2 Crow. A raven. ४९ स्थाणुः शर्वोऽप्यथ द्रोणः काकेऽप्याजौ रवे रणः, ।
1 A fight. 2 Sound.

1 A barber. 2 Excellent; ग्रामणीर् नापिते पुंसि श्रेष्ठे ग्रामाऽधिपे त्रिषु, ॥ 3 A leader.

1 Wool, felt, &c. ५० ऊर्णा मेषाऽऽदि-लोम्नि स्यादावर्ते चान्तरा भ्रुवोः, ।
2 A circle of hair between the eyebrows.

1 A doe.
2 A golden image.
हरिणी स्यान् मृगी हेम-प्रतिमा हरिता च या, ॥
3 Green colour. 4 Metre. 5 Jasmine. 6 Yellow flower.

1 Yellowish white.
2 A deer.
५१ त्रिषु पाण्डौ च हरिणः स्थूणा स्तम्भे ऽपि वेश्मनः, ।
1 A house post. 2 An iron image. 3 Disease.

1 Desire.
2 Thirst.
तृष्णे स्पृहा-पिपासे द्वे, जुगुप्सा-करुणे घृणे, ॥
1 Blame.
2 Pity.

1 A market.
2 A Shop.
५२ वणिक्-पथे च विपणिः, सुरा प्रत्यक् च वारुणी, ।
1 Spirituous liquor. 2 The west.

1 A female elephant.
2 A male elephant.
करेणुरिभ्यां स्त्री नेभे, द्रविणं तु बलं धनम्, ॥
1 Strength.
2 Wealth.

1 A house.
2 Preserver.
५३ शरणं गृह-रक्षित्रोः, श्रीपर्णं कमलेऽपि च, ।
1 A lotus. 2 Nelumbium speciosum.

1 Poison. 2 War.
3 Iron. Weapon.
विषाऽभिमर-लोहेषु तीक्ष्णं क्लीबे खरे त्रिषु, ॥
4 Harsh, sharp.

1 Proof. 2 Limit.
3 Scripture ;
५४ प्रमाणं हेतु-मर्यादा-शास्त्रेयत्ता-प्रमातृषु, ।
4 Standard ;
5 Authority.

1 Instrument.
2 A Field. 3 A body.
करणं साधकतमं क्षेत्र-गात्रेन्द्रियेष्वपि, ॥
4 Organ of sense. 5 Cause. 6 Tribe. 7 Action. 8 Dramatic performances.

1 Birth. 2 Unresisted march of troops.
५५ प्राण्युत्पादे संसरणमसंबाध-चमू-गतौ ।

1 Highway.
घण्टापथे, ऽथ वान्ताऽन्ने समुद्गिरणमुन्नये, ॥
2 Food vomited. 3 Raising.

1 A horn.
2 Elephant's tooth.
५६ अतस् त्रिषु, विषाणं स्यात् पशुशृङ्गेभदन्तयोः, ।

1 Declivity.
2 Humble.
प्रवणे क्रम-निम्नोर्व्यां प्रह्वे ना तु चतुष्पथे, ॥
3 A place where four roads meet. 4 Generous. 5 Principal.

1 Miscellaneous.
2 Impure.
५७ संकीर्णौ निचिताऽशुद्धा, विरिणं शून्यमूषरम्, ।
1 Desert. 2 Salt and barren soil.

1 A bridge.
2 Rampart.
3 A falling star.
'सेतौ च वरणो, वेणी नदी-भेदे कचोच्चये.' ॥१०॥
1 A river. 2 A braid of hair.

इति णान्ताः ।

1 God. 2 The sun.
1 A river. 2 The sea.
देव-सूर्यौ विवस्वन्तौ, सरस्वन्तौ नदाऽर्णवौ, ॥

1 A bird.
2 VISHNU's bird.

५८ पक्षि-तार्क्ष्यौ गरुत्मन्तौ, शकुन्तौ भास-पक्षिणौ, ।

1 The Indian culture. 2 A bird. 3 An insect.

1 Fire.
2 A comet.

अग्न्युत्पातौ धूमकेतू, जीमूतौ मेघ-पर्वतौ, ॥

1 A cloud. 2 A mountain.

1 A hand.
2 The asterism.
3 Multitude.

५९ हस्तौ तु पाणि-नक्षत्रे, मरुतौ पवनाऽमरौ, ।

1 Wind. 2 A deity.

1 An elephant driver.
2 A charioteer.

यन्ता हस्तिपके सूते, भर्ता धातरि पोष्टरि, ॥

1 A holder. 2 A nourisher. 3 Husband.

1 A boat.
2 A young animal.

६० यान-पात्रे शिशौ पोतः, प्रेतः प्राण्यन्तरे मृते, ।

1 Hell. 2 A departed soul.

1 A moon's descending node.
2 A banner. 3 Ninth planet.

ग्रह-भेदे ध्वजे केतुः, पार्थिवे तनये सुतः, ॥

1 A king.
2 A son.

1 An architect.
2 Head carpenter.
3 Sacrificer 4 Chamberlain.

६१ स्थपतिः कारु-भेदे ऽपि, भूभृद् भूमिधरे नृपे, ।

1 A mountain. 2 A king.

1 A king.
2 A minister.
3 A Kshatriya. 4 Our born of a brahman and kshatriya woman. 5 Chief.

मूर्धाभिषिक्तो भूपे ऽपि, ऋतुः स्त्री-कुसुमेऽपि च, ॥

1 A woman's courses. 2 A season.

1 VISHNU. 2 SIVA.
3 Buddha.
4 Indistinct. 5 A fool. 6 Nature.

६२ विष्णावप्यजिताऽव्यक्तौ, सूतस्त्वष्टरि सारथौ, ।

1 A cartwright. 2 A charioteer.
3 Quick silver. 4 Born.

1 Wise; learned.
2 Clear.

व्यक्तः प्राज्ञे ऽपि, दृष्टान्तावुभौ शास्त्र-निदर्शने, ।

1 A science. 2 An example.

1 Charioteer.
2 A porter.

६३ क्षत्ता स्यात् सारथौ द्वाःस्थे क्षत्त्रियायां च शूद्रजे, ।

3 One born of Kshatriya Woman and a Sudra.

1 Topic.
2 Mode.

वृत्तान्तः स्यात् प्रकरणे प्रकारे कार्त्स्न्य-वार्तयोः, ॥

3 Whole; 4 Right conclusion.

1 A war. 2 A stage.
3 A chief place.

६४ आनर्तः समरे नृत्यस्थान-नीवृद्विशेषयोः, ।

4 Water.

1 YAMA. 2 Proof;
3 Destiny, 4 Sin.

कृतान्तो यम-सिद्धान्त-दैवाऽकुशलकर्मसु, ॥

1 Phelgm ; Wind ; Bile. ६५ श्लेष्माऽऽदि रस-रक्ताऽऽदि महा-भूतानि तद्-गुणाः ।

2 Blood, flesh, marrow. 3 The elements. 4 Their qualities. 5 The sense-organs. 6 Fosil. 7 Metal. 8 Root of words i.e. verbs.

9 Principle of the body. इन्द्रियाण्यश्म-विकृतिः शब्द-योनिश् च धातवः, ॥

1 The seraglio. 2 A harem. ६६ कक्षाऽन्तरे ऽपि शुद्धान्तो भूपस्याऽसर्व-गोचरे, ।

1 An iron spear. 2 Power. 3 Energy of a divinity. कासू-सामर्थ्ययोः शक्तिर्, मूर्तिः काठिन्य-काययोः, ॥

1 Idol. 2 Matter. 3 Body. 4 Swoon.

1 Expansion. 2 A creeping plant. ६७ विस्तार-वल्ल्योर् व्रततिर्, वसती रात्रि-वेश्मनोः, ।

1 Night. 2 A house.

1 Loss. 2 Worship. क्षयाऽर्चयोरपचितिः, सातिर् दानाऽवसानयोः, ॥

1 Gift. 2 Destruction.

1 Pain. 2 End of a bow. ६८ अर्तिः पीडा-धनुष्कोट्योर्, जातिः सामान्य-जन्मनोः, ।

1 Kind or sort. 2 Birth. 3 Sort of metre. 4 A Flower. 5 Family.

1 Usage. 2 Oozing. प्रचार-स्यन्दयो रीतिरीतिर् डिम्ब-प्रवासयोः, ॥

1 Calamity of season. 2 Journey.

1 Gain 2 Obtaining. ६९ उदये ऽधिगमे प्राप्तिस्, त्रेता त्वग्नि-त्रये युगे, ।

1 Three sacrificial fires. 2 The Treta Yuga.

1 A harp. 2 A harp of Narada with 100 strings. 3 Greatness. वीणा-भेदे ऽपि महती, भूतिर् भस्मनि संपदि, ॥

1 Ashes. 2 Success. 3 Birth. 4 A house.

1 River of snakes. 2 City of serpents. ७० नदी-नगर्योर् नागानां भोगवत्यथ संगरे । 1 Combat.

2 Company. 3 Assembly. संगे सभायां समितिः, क्षय-वासावपि क्षिती, ॥

1 Wane, loss. 2 Abode. 3 The Earth.

1 Sun-beam, 2 Weapon. ७१ रवेरर्चिश् च शस्त्रं च वह्नि-ज्वाला च हेतयः, । 3 Flame.

1 The world. 2 Sort of metre. जगती जगति छन्दो-विशेषो ऽपि क्षितावपि, ॥ 3 The Earth.

3 A metre. 2 Ten. 3 Row, Line. ७२ पङ्क्तिश् छन्दोऽपि दशमं, स्यात् प्रभावेऽपि चाऽऽयतिः, ।

1 Majesty or dignity. 2 Breadth. 3 Future time. 4 Restraint.

1 Motion. 2 A foot soldier. पत्तिर् गतौ च, मूले तु पक्षतिः पक्ष-भेदयोः, ॥

1 Root of a wing. 2 First lunar day.

1 Origin 2 Sex. 3 Natural disposition. 4 Minister. 5 Subjects.
७३ प्रकृतिर् योनि-लिङ्गे च, कैशिक्याऽऽद्याश् च वृत्तयः, ।
1 Style of composition. 2 Livelihood. 3 Behavious.

1 Sand. 2 Sugar. 3 Sandy place.
सिकताः स्युर् वालुका ऽपि, वेदे श्रवसि च श्रुतिः, ॥
1 Holy scripture. 2 An ear. 3 Hearing. 4 Rumour. 5 Musical note.

1 Beloved woman. 2 Begging.
७४ वनिता जनिताऽत्यर्थाऽनुरागायां च योषिति, ।

1 A cavern. 2 A prison. 3 Protection.
गुप्तिः क्षिति-व्युदासे ऽपि, धृतिर् धारण-धैर्ययोः ॥
1 Holding. 2 Steadiness. 3 Pleasure.

1 An egg-plant. 2 A metre.
७५ बृहती क्षुद्र-वार्ताकी छन्दो-भेदे महत्यपि, । 3 Greatness.

1 A woman. 2 A female elephant. 3 Cry of birds.
वासिता स्त्री-करिण्योश् च, वार्ता वृत्तौ जन-श्रुतौ, ॥
1 Livelihood. 2 Rumour. 3 Action.

1 Chaff. 2 Health. 3 Insignificant.
७६ वार्तं फल्गुन्यरोगे च त्रिष्वप्सु च घृताऽमृते, ।
1 Water. 2 Nectar. 3 Liquid butter.

1 Silver. 2 Gold.
कलधौतं रूप्य-हेम्नोर्, निमित्तं हेतु-लक्ष्मणोः, ॥
1 Cause. 2 Token.

1 Science. 2 Heard story. 3 Hearing.
७७ श्रुतं शास्त्राऽवधृतयोर्, युग-पर्याप्तयोः कृतम्, ।
1 The golden age. 2 Enough. 3 Action.

1 Great dread. 2 Valiant act.
अत्याहितं महा-भीतिः कर्म जीवाऽनपेक्षि च, ॥

1 Proper. 2 An element. 3 True.
७८ युक्ते क्ष्माऽऽदावृते, भूतं प्राण्यतीते समे त्रिषु, ।
1 Living being. 2 Past. 3 Like. 4 Ghost. 5 Birth.

1 Verse. 2 Conduct.
वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढ-निस्तले, ॥
3 Past. 4 Firm. 5 Round.

1 Realm. 2 Great. 3 Known. 4 Intellect.
७९ महद् राज्यं चाऽवगीतं जन्ये स्याद् गर्हिते त्रिषु, ।
1 Calumny. 2 Rumour. 3 Censured. 4 Wicked.

1 Silver. 2 White.
श्वेतं रूप्येऽपि, रजतं हेम्नि रूप्ये सिते त्रिषु, ॥
1 Gold. 2 Silver. 3 White.

1 Movable. locomotive. 2 World.
८० त्रिष्वितो, जगदिङ्गेऽपि, रक्तं नील्याऽऽदि-रागि च, ।
1 Red. 2 Dyed, tinged. 3 Blood. 4 Pleasing.

1 White. 2 Yellow. 3 Clean.
अवदातः सिते पीते शुद्धे, बद्धाऽर्जुनौ सितौ, ॥ 1 Bound. 2 White.

1 Fit. 2 Excellent.
3 Patient.

८१ युक्तेऽति-संस्कृते मर्षिण्यभिनीतो, ऽथ संस्कृतम् ।

1 Wrought, finished. 2 Excellent.

3 Prepared.
4 Language grammatically correct.

कृत्रिमे लक्षणोपेते ऽप्यनन्तो ऽनवधावपि, 1 Infinite. 2 Sesha.

3 Vishnu. 4 Siva. 5 Sky. 6 The earth.

1 Famous.
2 Glad.
3 Known.

८२ ख्याते हृष्टे प्रतीतो, ऽभिजातस् तु कुलजे बुधे, ।

1 Noble. 2 Learned. 3 Bit.

1 Pure.
2 Desert.

विविक्तौ पूत-विजनौ, मूर्छितौ मूढ-सोच्छ्रयौ, ॥

1 Foolish. 2 High, tall. 3 Insensible. 4 Swoon.

1 Sour ; Vinegar.
2 Harsh.

८३ द्वौ चाम्ल-परुषौ शुक्तौ, शिती धवल-मेचकौ, । 1 White. 2 Black.

1 True.
2 Right.

सत्ये साधौ विद्यमाने प्रशस्ते ऽभ्यर्हिते च सत्, ॥

3 Existing. 4 Excellent. 5 Venerable.

1 Revered.
2 Distressed by foes.

८४ पुरस्कृतः पूजिते ऽरात्याभियुक्ते ऽग्रतः कृते, । 3 Placed in front.

1 Secure. 2 Abode.
3 Calm. 4 Soft.

निवातावाश्रयाऽवातौ शस्त्राऽभेद्यं च वर्म यत्, ॥

5 Armour.

1 Produced.
2 High.

८५ जातोन्नद्ध-प्रवृद्धाःस्युरुच्छ्रिता, उत्थितास् त्वमी ।

3 Increased. 4 Grown large.

1 Increased.
2 Endeavouring.
3 Produced.

वृद्धिमत्-प्रोद्यतोत्पन्ना, आदृतौ सादराऽर्चितौ. ॥

1 Respectful. 2 Respected.

1 Group. 2 Born.

' समूहोत्पन्नयोर् जातमहिजिच् छ्रीपतीन्द्रयोः ।

1 Snake charmer. 2 Krishna. 3 Indra.

1 Waterfall.
2 Noctral combat.

सौप्तिके ऽपि प्रपातो ऽथावपातावतटावटौ ॥११॥

1 Descent. 2 Precpice. 3 Pit.

1 Union. 2 Pattle
3 Holy sticks.

समित् सङ्गे रणे ऽपि स्त्री व्यवस्थायामपि स्थितिः' ।१२।

1 Stay. 2 Order. 3 Precipice.

इति तान्ताः ।

1 Meaning.
2 Wealth.

८६ अर्थो ऽभिधेय-रै-वस्तु-प्रयोजन-निवृत्तिषु, ।

3 Thing. 4 Purpose. 5 Prohibition. 6 Object. 7 Cause. 8 Request.

1 Place of water.
2 Sacred science.

निपानाऽऽगमयोस् तीर्थमृषि-जुष्टे जले गुरौ, ॥

3 Holy place. 4 Water. 5 Holy instructor. 6 Sacrifice. 7 Saint.

1 Powerful. ८७ समर्थस् त्रिषु शक्ति-स्थे संबद्धाऽर्थे हिते ऽपि च, ।

2 Connected in sense. 3 Benevolent.

1 Impotent. 2 Very old. दशमीस्थौ क्षीणराग-वृद्धौ, वीथी पदव्यपि, ॥

1 A road. 2 A shop. 3 Terrace in front of a house. 4 Line.

1 Assembly. 2 Care. 3 Consideration. 4 State. ८८ आस्थानी-यत्नयोरास्था, प्रस्थो ऽस्त्री सानु-मानयोः, ।

1 Side of a hill. 2 A measure.

1 Science. 2 Wealth. 'शास्त्र-द्रविणयोर् ग्रन्थः,संस्था ऽऽधारे स्थितौ मृतौ'॥ १२॥

1 Support. 2 Stability. 3 Death.

इति थान्ताः ।

1 Meaning; opinion. 2 Subjection. आभिप्राय-वशौ छन्दावब्दौ जीमूत-वत्सरौ, ॥ 1 A cloud. 2 A year.

1 Defamation. 2 Command. ८९ अपवादौ तु निन्दाऽऽज्ञे, दायादौ सुत-बान्धवौ, ।

1 Son. 2 Kinsman.

1 A ray of light. 2 A foot. 3 A fourth part. 4 A root. 5 A measure of a verse. पादा रश्म्यङ्घ्रि-तुर्यांशाश्, चन्द्राऽग्न्यर्कास् तमोनुदः, ॥

1 The moon. 2 Fire. 3 The Sun.

1 Ill report. 2 Disregard. 3 Controversy decided. ९० निर्वादो जनवादे ऽपि, शादो जम्बाल-शष्पयोः, ।

1 Mud. 2 Young grass.

1 Cry. 2 Weeping. आरावे रुदिते त्रातर्याक्रन्दो दारुणे रणे, ॥

3 Protector. 4 Dreadful fight.

1 Favour. 2 Tranquility. 3 Clearness. 4 Brightness. 5 Pleasure. ९१ स्यात् प्रसादोऽनुरागेऽपि, सूदः स्याद् व्यञ्जनेऽपि च, ।

1 Sauce or condiment. 2 Cook.

1 A cowherd. 2 Krishna. गोष्ठाऽध्यक्षेऽपि गोविन्दो, हर्षेऽप्यामोद्-वन् मदः, ॥

1 Joy. 2 Fragrance. 3 Intoxication. 4 Pride. 5 Liquor. 6 Rut of elephants.

1 Chief. 2 Royal insignia. ९२ प्राधान्ये राज-लिङ्गे च वृषाऽङ्गे ककुदो ऽस्त्रियाम्, ।

3 Hump of a bull. 4 Summit of a hill.

1 Knowledge. 2 Conversation. 3 Agreement. 4 War. 5 Name. 6 Pleasing. 7 Conduct. 8 Promise. स्त्री संविज्ज्ञान-संभाषा-क्रियाकाराऽऽजि-नामसु, ॥

1 Religious and moral merit. 2 Privacy. 3 Vedanta. 4 Principle. ९३ धर्मे रहस्युपनिषत्, स्यादृतौ वत्सरे शरत्, ।

1 The sultry season. 2 A year.

1 Industry. 2 Defence Resort. 3 Place. 4 Mark. 5 Foot. 6 Thing. 7 Footsteps. 8 Word. 9 Sound. पदं व्यवसिति-त्राण-स्थान-लक्ष्माऽङ्घ्रि-वस्तुषु, ॥

1 Spot frequented by kine.
2 A measure.

९४ गोष्पदं सेविते माने, प्रतिष्ठा कृत्यमास्पदम्, ।

1 Dignity. 2 Business. 3 Place.

1 Desired.
2 Sweet.

त्रिष्विष्ट-मधुरौ स्वादू, मृदू चातीक्ष्ण-कोमलौ, ॥

1 Blunt.
2 Soft.

1 Foolish, dull.
2 Little. 3 Slow sick. 4 Unluckly. 5 Gentle. 6 Deer. 7 Elephant. 8 Saturn.

९५ मूढाऽल्पाऽपटु-निर्भाग्या मन्दाः स्युर्, द्वौ तु शारदौ ।

1 New. 2 Diffident.
3 Produced in autumn. 4 Purity. 5 A year. 6 Durga.

प्रत्यग्राऽप्रतिभौ, विद्वत्-सुप्रगल्भौ विशारदौ. ॥

1 Learned. 2 Confident.

इति दान्ताः ।

1 A fathom.
2 The Indian fig tree. 3 Measured by arms.

९६ व्यामो वटश्च च न्यग्रोधावुत्सेधः काय उन्नतिः, ।

1 Body. 2 Height.

1 A yoke for burdens.
2 A highway. 3 Load. 4 Storing of Corn.

पर्याहारश्च च मार्गश्च च विवधौ वीवधौ च तौ, ॥

1 A branch of a tree at a sacrifice.
2 Halo round The Sun. 3 Navel of a wheel.

९७ परिधिर् यज्ञिय-तरोः शाखायामुपसूर्यके, ।

1 A pledge.
2 A calamity.
3 Mental agony. 4 Place.

बन्धकं व्यसनं चेतःपीडा ऽधिष्ठानमाधयः, ॥

1 A reconciling of differences.
2 Silence. 3 Promise. 4 Meditation. 5 Perseverance.

९८ स्युः समर्थन-नीवाक-नियमाश्च च समाधयः, ।

1 Offence or guilt.
2 Indicatory letters unsounded. 3 Elements of language.

दोषोत्पादे ऽनुबन्धः स्यात् प्रकृतस्याऽदि-विनश्वरे ॥

3 A person following an example.

९९ मुख्याऽनुयायिनि शिशौ प्रकृत्याऽनुवर्तने, ।

4 Child.
5 Continuation.

1 Vishnu.
2 The moon.

विधुर् विष्णौ चन्द्रमासि, परिच्छेदे बिले ऽवधिः, ॥

1 Limit. 2 A hole. 3 Attention. 4 Period. 5 Place.

1 Rule, form.
2 Fate. 3 Time.
4 Brahma. 5 Ritual. 6 Kind. 7 Command.

१०० विधिर् विधाने दैवे ऽपि, प्रणिधिः प्रार्थने चरे, ।

1 Request. 2 A spy. 3 Place.

1 Learned. 2 Budha.
3 Defied saint.
4 Old. 5 Increased.

बुध-वृद्धौ पण्डिते ऽपि, स्कन्धः समुदये ऽपि च, ॥

1 Multitude. 2 A trunk of a tree. 3 A shoulder.
4 Part of the army. 5 King. 6 Chapter. 7 Five objects of sense.

1 Name of a country. १०१ देशे नद-विशेषेऽब्धौ सिन्धुर् ना सरिति स्त्रियाम्, ।
2—of a river. 3 A sea. 4 A river.

1 Form or rule. 2 Manner, sort. 3 Fodder. 4 Prosperity. विधा विधौ प्रकारे च, साधू रम्ये ऽपि च त्रिषु, ॥
1 Handsome, pleasing. 2 A saint. 3 Right. 4 Good.

1 A wife. 2 Daughter-in-law. 3 A woman. 4 A bridge. १०२ वधूर् जाया स्नुषा स्त्री च, सुधा लेपोऽमृतं स्नुही, ।
1 Plaister. 2 Nectar. 3 Euphorbia Ternealli. 4 Head.

1 Promise. 2 State, boundary. 3 Joint. संधा प्रतिज्ञा मर्यादा, श्रद्धा संप्रत्ययः स्पृहा, ॥
1 Belief, confidence. 2 Fondness.

1 Ardent spirit. 2 Nectar of flowers. 3 Honey. 4 A demon. 5 Chaitra. 6 Bassia Latifolia. 7 Spring. १०३ मधु मद्ये पुष्प-रसे क्षौद्रे ऽप्यन्धं तमस्यपि, ।
1 Darkness. 2 Blind. 3 Water.

1 Conceited of learning. 2 Proud. 3 Elevated. अतस् त्रिषु, समुन्नद्धौ पण्डितंमन्य-गर्वितौ, ॥

1 A reproachful appellative. 2 Indefinite appelation. १०४ ब्रह्मबन्धुरधिक्षेपे निर्देशे, ऽथाऽवलम्बितः ।
1 Relied on.

2 Near. 3 Wrapt up. 4 Bound. अ-विदूरो ऽप्यवष्टब्धः, प्रसिद्धौ ख्यात-भूषितौ. ॥
1 Notorious. 2 Adorned.

1 Odour. 2 Sulphur. 3 Little. 4 Arrogance. 'लेशेऽपि गन्धः, संबाधो गुह्यसंकुलयोरपि ।
1 Female organ. 2 Throng. 3 Distress.

1 Prohibition. 2 Pain. 3 Injury. बाधा निषेधे दुःखे च, ज्ञातृचान्द्रिसुरा बुधाः' ॥१३॥
1 A wise man. 2 Moon light. 3 Liquor.

इति धान्ताः ।

1 The Sun. 2 Fire. १०५ सूर्य-वह्नी चित्रभानू, भानू रश्मि-दिवाकरौ, ।
1 Ray of light. 2 The Sun.

1 BRAHMA. 2 Body. भूतात्मानौ धातृ-देहौ, मूर्ख-नीचौ पृथग्जनौ, ॥
1 An ignorant man. 2 One of a low tribe.

1 A mountain. 2 A rock or stone. १०६ ग्रावाणौ शैल-पाषाणौ, पत्रिणौ शर-पक्षिणौ, ।
1 An arrow. 2 A bird. 3 A Falcon.

1 A tree. 2 A mountain. तरु-शैलौ शिखरिणौ, शिखिनौ वह्नि-बर्हिणौ, ॥
1 Fire. 2 A peacock. 3 A tree. 4 Arrow. 5 Cock. 6 Gallineous fowl. 7 Crested.

1 Desire.
2 Making prisoner.
१०७ प्रतियत्नावुभौ लिप्सोपग्रहावथ सादिनौ । 3 Comprehension.

1 Charioteer.
2 Horseman.
3 Elephant-rider.
द्वौ सारथि-हयारोहौ, वाजिनो ऽश्वेषु-पक्षिणः, ॥
1 A horse. 2 An arrow. 3 A bird.

1 Family.
2 Native spot.
3 Noble born.
१०८ कुले ऽप्यभिजनो जन्म-भूम्यामप्यथ हायनाः ।
1 A year. 2 Ray of light.

3 A kind of rice.
वर्षाऽर्चिर्-व्रीहिभेदाश् च, चन्द्राग्न्यर्का विरोचनाः, ॥
1 The moon. 2 Fire. 3 The Sun. 4 Name of a Person.

1 Hair. 2 Skin.
3 Sin.
१०९ केशे ऽपि वृजिनो, विश्वकर्मा ऽर्क-सुरशिल्पिनोः, ।
1 The Sun. 2 The artist of the gods.

1 Care.
2 Firmness.
आत्मा यत्नो धृतिर् बुद्धिः स्वभावो ब्रह्म वर्ष्म च, ॥
3 Intellect. 4 Disposition. 5 Brahman. 6 Body. 7 Soul. 8 Mind.

1 INDRA. 2 A vicious elephant.
११० शक्रो घातुक-मत्तेभो वर्षुकाऽब्दो घनाघनः, ।
3 Monsoon. 4 Mischievous. 5 Collision.

1 Pride of wealth, etc.
अभिमानो ऽर्थाऽऽदि-दर्पे ज्ञाने प्रणय-हिंसयोः, ॥
2 Knowledge. 3 Request 4 Killing.

1 A cloud.
2 Solidity. 3 Hard.
१११ घनो मेघे मूर्ति-गुणे त्रिषु मूर्ते निरन्तरे, ।
4 Thick. 5 Cyperus rotundus. 6 Iron club. 7 Assemblage. 8 Cymbal.

1 The Sun.
2 A master.
इनः सूर्ये प्रभौ, राजा मृगाङ्के क्षत्रिये नृपे, ॥
1 The moon. 2 A soldier by tribe. 3 A king.

1 A dancing girl.
2 A female messenger. 3 A clever woman
११२ वाणिन्यौ नर्तकी-दूत्यौ, स्रवन्त्यामपि वाहिनी, ।
1 A river. 2 An army. 3 Kind of Metre.

1 The thunderbolt.
2 Lightning.
ह्लादिन्यौ वज्र-तडितौ, वन्दायामपि कामिनी, ॥
1 A climbing plant. 2 A lady.

1 The skin.
2 Body.
११३ त्वग्-देहयोरपि तनुः, सूना ऽधो-जिह्विका ऽपि च, ।
3 Thin. 4 Small. 5 Separate.
1 The uvulva. 2 A murder place.
3 Place of Slaughter such as Kitchen etc. 4 Delivery. 5 Flower.

1 A sacrifice.
2 Expansion. 3 Mean.
क्रतु-विस्तारयोरस्त्री वितानं त्रिषु तुच्छके ॥

4 Slow. 5 Empty.
6 Canopy.
११४ मन्दे, ऽथ केतनं कृत्ये केतावुपनिमन्त्रणे, ।
1 Indispensable act. 2 A Banner. 3 Invitation.

1 Holy writ.
2 True knowledge.
3 A Penance.
वेदस् तत्त्वं तपो ब्रह्म, ब्रह्मा विप्रः प्रजापतिः, ॥
1 A priest by birth. 2 The creator.

1 Perseverance. 2 Destruction. ११५ उत्साहने च हिंसायां सूचने चाऽपि गन्धनम्, ।
3 Indication. 4 Manifestation.

1 Calcining. 2 Speed. आतञ्चनं प्रतीवाप-जवनाऽऽप्यायनाऽर्थकम्, ॥
3 Satisfaction. 4 Calamity.

1 A mark or token. 2 A beard. ११६ व्यञ्जनं लाञ्छनं श्मश्रु-निष्ठानाऽवयवेष्वपि, ।
3 Condiment. 4 Private part of a male or female. 5 A consonant.

1 Detraction. 2 A combat of animals, birds and serpents. स्यात् कौलीनं लोक-वादे युद्धे पश्वहि-पक्षिणाम्, ॥
3 Rumour.

1 Going forth, exit. ११७ स्यादुद्यानं निःसरणे वन-भेदे प्रयोजने, । 2 A garden. 3 Purpose.

1 Leisure. 2 Place. 3 Stay. अवकाशे स्थितौ स्थानं, क्रीडाऽऽदावपि देवनम्, ॥
1 Sport, play. 2 Grief. 3 Desire to surpass. 4 Lamentation. 5 Gambling.

1 Turning away. 2 Opposition. ११८ व्युत्थानं प्रतिरोधे च विरोधाऽऽचरणे ऽपि च, ।
3 Independence.

1 Manly exertion. 2 Domestic affairs. उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमे ऽपि च, ॥
3 Getting up. 4 Motion.

1 Killing. 2 Obsequies. 3 Motion. ११९ मारणे मृत-संस्कारे गतौ द्रव्ये ऽर्थ-दापने । 4 Substance. 5 Repayment.

6 Accomplishing. 7 Materials. निर्वर्तनोपकरणाऽनुव्रज्यासु च साधनम्, ॥
8 Accompanyment. 9 Means. 10 following. 11 Army. 12 Cause. 13 Sacrifice. 14 Solitary place of debt.

1 Revenge. 2 Gift. १२० निर्यातनं वैर-शुद्धौ दाने न्यासाऽर्पणे ऽपि च, ।
3 Delivery of a deposit. 4 Repayment.

1 Calamity. 2 Fall. व्यसनं विपदि भ्रंशे दोषे कामज-कोपजे, ॥
3 Fault arising from desire or anger. 4 Sin. 5 Ardent desire. 6 Vain effort.

1 Eyelash. 2 Filaments of a flower. १२१ पक्ष्माऽक्षि-लोम्नि किञ्जल्के तन्त्वाऽऽद्यंशेऽप्यणीयसि, ।
3 A short thread. 4 Very small. 5 Wing.

1 Certain days of the lunar month. तिथि-भेदे क्षणे पर्व, वर्त्म नेत्रच्छदे ऽध्वनि, ॥
2 Introduction. 3 A festival. 4 Knot. 5 Book. 1 Eyelid. 2 A road.

1 Wrong or unfit act. 2 Private part. १२२ अ-कार्य-गुह्ये कौपीनं, मैथुनं संगतौ रते, ।
4 Covering of the privy part. 1 Union. 2 Copulation. 3 A marriage.

1 The supreme soul. 2 Intellect. प्रधानं परमाऽऽत्मा धीः, प्रज्ञानं बुद्धि-चिह्नयोः, ॥
3 Nature. 4 Elephant Driver. 5 Chief. 1 Knowledge. 2 A mark, token.

1 A blossom.
2 A fruit.

१२३ प्रसूनं पुष्प-फलयोर्, निधनं कुल-नाशयोः, ।

1 A family. 2 Disappearance. 3 Death.

1 Weeping.
2 Lamenting.

क्रन्दने रोदनाऽऽह्वाने, वर्ष्म देह-प्रमाणयोः, ॥

1 Body. 2 Elevation, weight.

1 A house. 2 Body.
3 Light lustre.

१२४ गृह-देह-त्विट्-प्रभावा धामान्यथ चतुष्पथे । 4 Dignity.

1 Meeting of four roads.

संनिवेशे च संस्थानं, लक्ष्म चिह्न-प्रधानयोः, ॥

2 Construction. 3 Form. 4 Death. 1 A mark, token. 2 Chief. 3 A target.

1 Covering,
2 Clothing.

१२५ आच्छादने संविधानमपवारणमित्युभे, । 3 Conceatment.

1 Accomplishment.
2 Attainment.

आराधनं साधने स्यादवाप्तौ तोषणे ऽपि च, ॥ 3 Gratifying.

1 A wheel.
2 A town.
3 Prowess. 4 Fixing. 5 Adjustment.

१२६ अधिष्ठानं चक्र-पुर-प्रभावाऽध्यासनेष्वपि, ॥

1 Excellent of its kind. 2 A jewel.

रत्नं स्व-जाति-श्रेष्ठे ऽपि, वने सलिल-कानने, ॥

1 Water. 2 A forest.

1 Separate.
2 Small. 3 Inferior.

१२७ तलिनं विरले स्तोके वाच्य-लिङ्गं, तथोत्तरे, ।

1 Virtuous.
2 Similar. 3 Same.

समानाः सत्-समैके स्युः, पिशुनौ खल-सूचकौ, ॥

1 Wicked. 2 A whisper.

1 Deficient.
2 Blamable.

१२८ हीन-न्यूनावून-गर्ह्यौ, वेगि-शूरौ तरस्विनौ, ।

1 Swift. 2 Valiant.

1 Guilty. 2 Subdued.
3 Distressed.

अभिपन्नो ऽपराद्धो ऽभिग्रस्त-व्यापद्गतावपि. ॥

इति नान्ताः ।

1 An ornament.
2 A string of bells.

१२९ कलापो भूषणे बर्हे तूणीरे संहतावपि, ।

3 An eye on Peacock's tail. 4 A quiver. 5 Multitude.

1 Furniture,
2 Sowing around.

परिच्छदे परीवापः पर्युप्तौ सलिल-स्थितौ, ॥

3 Still water. 4 A tank.

1 A herdsman.
2 The head of a cowpen. 3 Superintendent of a village. 4 King.

१३० गोधुग्-गोष्ठपती गोपौ, हर-विष्णू वृषाकपी, ।

1 SIVA. 2 VISHNU. 3 Fir[e]

1 Vapour.
2 A tear.

बाष्पमूष्माश्रु, कशिपु त्वन्नमाच्छादनं द्वयम्, ॥

1 Food. 2 Clothing.

1 A bed. 2 An upper story. 3 A wife. — १३१ तल्पं शय्याऽट्ट-दारेषु, स्तम्बे ऽपि विटपो ऽस्त्रियाम्, ।
1 A clump or cluster. 2 A branch of a tree. 3 Expansion.

1 Learned. 2 Pleasing. — प्राप्तरूप-स्वरूपाऽभिरूपा बुध-मनोज्ञयोः ॥

1 A female turtle. 2 A sort of lute. — १३२ भेद्य-लिङ्गा अमी, कूर्मी वीणा-भेदश् च कच्छपी, ।

1 A blanket of hair. 2 Eight of a day. — ' कुतपो मृग-रोमोत्थ-पटे चाह्नो ऽष्टमें ऽशके. ।

इति पान्ताः ।

1 Tuft of hair. 2 A river. 3 Water Lily. 4 A mother. — 'शिफा शिखायां सरिति मांसिकायां च मातरि ॥१४॥

1 A root of a tree. 2 A hoof. — शफं मूले तरूणां स्याद् गवादीनां खुरेऽपि च ।

1 A Garland. 2 An ornament. — गुल्फः स्याद् गुम्फने बाहोरलंकारे च कीर्तितः ॥१५॥

1 The letter र्. 2 Bad. — र-वर्णे पुंसि रेफः स्यात् कुत्सिते वाच्य-लिङ्गकः' ।१६।

इति फान्ताः ।

1 Spirit after death. 2 A horse. 3 A singer. 4 Celestial beings. 5 Sort of deer. — अन्तरा-भव-सत्त्वे ऽश्वे गन्धर्वो दिव्य-गायने, ॥

1 A ring. 2 A conch or shell. — १३३ कम्बुर् ना वलये शङ्खे, द्विजिह्वौ सर्प-सूचकौ, ।
1 A serpent. 2 A whisperer or informer.

1 Eastern. 2 Prior. 3 Forefathers. 4 First. — पूर्वो ऽन्य-लिङ्गः प्रागाह पुम्-बहुत्वे ऽपि पूर्वजान्. ॥

1 Arrow. 2 A plant. — 'चित्रपुङ्खेऽपि कादम्बो नितम्बोऽ द्रितटे कटौ' ॥१६॥
1 Slope of a hill. 2 A hip.

1 A ladle. 2 Serpent-hood. — दर्वी फणाऽपि, बिम्बोऽस्त्री मण्डलेऽपि च" । १७ ।
1 Dise. 2 Circle.

इति बान्ताः ।

1 A jar. 2 A temple. 3 The sign Aquarius. — १३४ कुम्भौ घटेभमूर्धांशौ, डिम्भौ तु शिशु-बालिशौ, ।
1 A child. 2 An ignorant man.

1 Post or pillar. 2 Insensibility. — स्तम्भौ स्थूणा-जडीभावौ, शम्भू ब्रह्म-त्रिलोचनौ, ॥
1 BRAHMA. 2 SIVA. 3 Superior deity of jinas.

1 The belly. 2 A fetus. 3 A child. 4 Interior. — १३५ कुक्षि-भ्रूणाऽर्भका गर्भा, विस्रम्भः प्रणये ऽपि च, ।
1 Acquaintance. 2 Confidence. 3 Amorous solicitation.

1 A large drum. 2 A die. 3 A stake at play. — स्याद् भेर्यां दुन्दुभिः पुंसि,स्यादक्षे दुन्दुभिः स्त्रियाम्, ॥

1 Safflower. 2 Gold. 3 Water-pot. १३६ स्यान् महा-रजते क्लीबं कुसुम्भं करके पुमान्, ।
1 A *Kshatriya*. 2 An emperor. 3 The nave of a wheel. क्षत्रिये ऽपि च नाभिर् ना, सुरभिर् गवि च स्त्रियाम्, ॥ 1 A cow. 2 Musk. 3 Spring. 4 Fragrant. 5 Pleasing.

1 An assembly. 2 One of a company. 3 Group. 4 House. 5 Gaming. १३७ सभा संसदि सभ्ये च, त्रिष्वध्यक्षे ऽपि वल्लभः. । 1 A superintendent. 2 The chief headman. 3 A lover.

इति भान्ताः ।

1 A ray of light. 2 A rein. किरण-प्रग्रहौ रश्मी, कपि-भेकौ प्लवङ्गमौ, ॥ 1 An ape. 2 A frog.

1 Desire. 2 Love, Cupid. 4 Desirable. 5 Good. १३८ इच्छा-मनोभवौ कामौ, शक्त्युद्योगौ पराक्रमौ, । 1 Power. 2 Exertion. 3 Valour.

1 Moral and religious merit. 2 Yama. 3 Fitness. 4 Nature. 5 Usage. 6 Drinker of Soma. 7 Father of Yudhishtira. 8 Religion. 9 Vedas. 10 A sacrifice. धर्माः पुण्य-यम-न्याय-स्वभावाऽऽचार-सोमपाः, ।

1 Deliberate undertaking. 2 A stratagem. 3 Valour. १३९ उपाय-पूर्व आरम्भ उपधा चाप्युपक्रमः, ।

1 A market. 2 A town. 3 Holy writ, the Vedas. 4 Trade. वणिक्-पथः पुरं वेदो निगमा, नागरो वणिक् ॥ 1 A citizen, a townsman.

1 A trader. 2 The Vedas. १४० नैगमौ द्वौ, बले रामो नील-चारु-सिते त्रिषु, । 1 BALARAMA. 2 Parshuram. 3 Rama. 4 Black. 5 Pleasing. 6 White.

1 In comp. A multitude. 2 A Village. 3 Octave in music. शब्दाऽऽदि-पूर्वो वृन्दे ऽपि ग्रामः, क्रान्तौ च विक्रमः, ॥ 1 Walking. 2 Power. 3 Valour.

1 Praise. 2 A Sacrifice. 3 Multitude. १४१ स्तोमः स्तोत्रे ऽध्वरे वृन्दे, जिह्मस् तु कुटिले ऽलसे, । 1 Crooked. 2 Idle.

1 Heat. 2 Sweat. उष्णे ऽपि घर्मश् चेष्टाऽलङ्कारे भ्रान्तौ च विभ्रमः, ॥ 1 Illusion. 2 Confussion. 3 Eye gestures.

1 A disease of the spleen. 2 Clump of grass. 3 Army. 4 Fort. 5 Platoons. 6 Groop of Branches. १४२ गुल्मा रुक्-स्तम्ब-सेनाश् च, जामिः स्वसृ-कुलस्त्रियोः । 1 A sister. 2 A chaste woman.

1 The earth. 2 Patience. 3 Proper. 4 Able. 5 Benevolent. 6 Forgiveness. क्षिति-क्षान्त्योः क्षमा, युक्ते क्षमं शक्ते हिते त्रिषु, ॥

1 Green. 2 Black. १४३ त्रिषु श्यामौ हरित्-कृष्णौ, श्यामा स्याच्छारिवा निशा,।
3 A potherb. 4 Fragrant plant. 5 Night. 6 A young woman.

1 A tail. 2 A mark on the forehead. 3 A horse. 4 Ornament. 5 Chief. 6 A flag, symbol. 7 Prowess. 8 Horn.
ललामं पुच्छ-पुण्ड्राऽश्व-भूषा-प्राधान्य-केतुषु, ॥

1 The supreme soul. 2 An Atom. 3 Little. १४४ सूक्ष्ममध्यात्ममप्याद्ये प्रधाने प्रथमस् त्रिषु। 1 First. 2 Chief.

1 Pleasing. 2 Reverse, contrary. वामौ वल्गु-प्रतीपौ द्वावधमौ न्यून-कुत्सितौ,॥ 1 Low. 2 Vile.
3 Left. 4 Udder. 5 Cupid. 6 Siva. 7 Wealthy. 8 Woman. 9 A mare.

1 Old. 2 Used. १४५ जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्.।

इति मान्ताः।

1 A horse. 2 VISHNU's bird. तुरङ्ग-गरुडौ तार्क्ष्यौ, निलयाऽपचयौ क्षयौ, ॥
1 A house. 2 Loss. 3 Destruction. 4 Consumption. 5 King's disease.

1 Husband's brother. 2 Wife's brother. १४६ श्वशुर्यौ देवर-श्यालौ, भ्रातृव्यौ भ्रातृज-द्विषौ,।
1 A brother's son 2 An enemy.

1 A thundercloud. 2 INDRA. 3 Rain. 4 Cloud. पर्जन्यौ रसदब्देन्द्रौ, स्यादर्यः स्वामि-वैश्ययोः, ॥
1 A master. 2 A man of the 3rd tribe. 3 Excellent.

1 The 8th asterism. 2 The 4th age. १४७ तिष्यः पुष्ये कलियुगे, पर्यायो ऽवसरे क्रमे,।
1 Opportunity. 2 Succession.

1 Subjected. 2 Oath, ordeal. प्रत्ययो ऽधीन-शपथ-ज्ञान-विश्वास-हेतुषु ॥
3 Knowledge. 4 Trust. 5 Cause.

6 A hole. 7 An Affix. 8 Celebrity. 9 Usage. १४८ रन्ध्रे शब्दे, ऽथाऽनुशयो दीर्घद्वेषाऽनुतापयोः,।
1 An old enmity. 2 Repentance.

1 Incompleteness. स्थूलोच्चयस् त्व-साकल्ये नागानां मध्यमे गते, ॥
1 An elephant's Path. 2 A Tableland.

1 An oath. 2 Usage. 3 Time. १४९ समयाः शपथाऽऽचार-काल-सिद्धान्त-संविदः,।
4 Demonstrated conclusion. 5 Bargain. 6 Hint.

1 Vice. 2 Ill fortune. 3 Calamity. व्यसनान्यशुभं दैवं विपदित्यनयास् त्रयः, ॥

1 Transgression. 2 Distress. 3 Fault. 4 Punishment. १५० अत्ययो ऽतिक्रमे कृच्छ्रे दोषे दण्डे ऽप्यथाऽऽपदि।
1 Calamity.

2 War. 3 Futurity. युद्धाऽऽयत्योः संपरायः, पूज्यस् तु श्वशुरेऽपि च, ॥
1 A father-in-law. 2 A teacher. 3 Respected.

1 Rear guard.
2 Multitude.
१५१ पश्चादवस्थायि बलं समवायश् च सन्नयौ, ।
1 Assemblage.
2 Vicinity.
3 A house.
संघाते संनिवेशे च संस्त्यायः, प्रणयास् त्वमी ॥
1 Acquaintance.

2 Solicitation.
3 Love.
१५२ विस्रम्भ-याच्ञा-प्रेमाणो, विरोधे ऽपि समुच्छ्रयः, ।
1 Enmity. 2 Elevation.

1 Frequented and known region.
2 Object of Sense. 3 Country.
विषयो यस्य यो ज्ञातस् तत्र शब्दाऽऽदिकेष्वपि, ॥

1 Infusion, extract.
2 Exudation of a tree. 3 Astringent. 4 Perfume rubbed on body.
१५३ निर्यासे ऽपि कषायो ऽस्त्री, सभायां च प्रतिश्रयः, ।
1 Assembly. 2 Refuge. 3 House.

1 Abundance, frequency.
2 Starving to death. 3 Similarity.
प्रायो भूम्न्यन्त-गमने, मन्युर् दैन्ये क्रतौ क्रुधि, ॥
1 Distress. 2 A sacrifice. 3 Anger.

1 A secret.
2 Privy part.
१५४ रहस्योपस्थयोर् गुह्यं, सत्यं शपथ-तथ्ययोः, ।
1 An oath. 2 Truth. 3 The krita age. 4 True.

1 Animal strength.
2 Dignity.
3 Valour. 4 Semen Viriles. 5 Splendour.
वीर्यं बले प्रभावे च, द्रव्यं भव्ये गुणाऽऽश्रये, ॥
1 Right, fit. 2 Substance. 3 Wealth. 4 Drug. 5 Brass.

1 A place.
2 A house.
3 An Asterism. 4 Strength. 5 Fire.
१५५ धिष्ण्यं स्थाने गृहे भे ऽग्नौ, भाग्यं कर्म शुभाऽशुभम्, ।
1 Destiny. 2 Goodluck. 3 Ill fate.

1 A pignut.
2 Gold. 3 Bhisma.
कशेरु-हेम्नोर् गाङ्गेयं, विशल्या दन्तिका ऽपि च, ॥
1 A plant. 2 Menisper glabrum.

1 The goddess LAKSHMI. 2 GAURI.
3 SWAHA. 4 INDRANI.
१५६ वृषाकपायी श्री-गौर्योरभिख्या नाम-शोभयोः, ।
1 A name. 2 Beauty. 3 Glory.

1 Beginning, undertaking.
2 Atonement. 3 Study. 4 Worship. 5 Disquisition.
आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् ॥

6 Means. 7 Act.
8 Bodily action.
9 Remedy. 10 Root. 11 Case relation. 12 Religions ceremony. 13 Obsequies.
१५७ उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः, ।

1 Wife of the sun.
2 Beauty.
छाया सूर्य-प्रिया कान्तिः प्रतिबिम्बमनातपः, ॥
3 A reflected image. 4 A shade.

1 Enclosure of an edifice. १५८ कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभ-बन्धने, ।
2 A string of bells. 3 A rope round an elephant's body. 4 Effort. 5 Armpit.

1 An act. 2 A fierce deity. 3 Pestilence. कृत्या क्रिया-देवतयोस् त्रिषु भेद्ये धनाऽऽदिभिः, ॥
4 Peace. 5 Bribery. 6 Anything to be done.

1 A rumour. 2 Thing to be done. १५९ जन्यः स्याज् जनवादेऽपि, जघन्योऽन्त्येऽधमेऽपि च, ।
3 fight. 4 Maid servant. 5 Parents. 1 Last, ultimate. 2 Low, vile. 3 Born of low origin.

1 Reprehensible. 2 Subject, dependent. गर्ह्याऽधीनौ च वक्तव्यौ, कल्यौ सज्ज-निरामयौ, ॥
3 Fit to be said. 1 Ready, prepared. 2 Healthy. 3 Skilful. 4 Morning. 5 Auspicious speech. 6 Clouds. 7 Yesterday. 8 Tomorrow.

1 Intelligent. 2 Wealthy. १६० आत्मवाननपेतो ऽर्थादर्थ्यौ, पुण्यं तु चार्वपि, ।
1 Pleasing. 2 Merits. 3 Good act.

1 Beautiful. 2 Silver. रूप्यं प्रशस्त-रूपे ऽपि, वदान्यो वल्गु-वागपि, ॥
3 Wrought silver and gold. 1 Eloquent. 2 Generous.

1 Just, reasonable. 2 Middle. 3 Low. १६१ न्याय्ये ऽपि मध्यं, सौम्यं तु सुन्दरे सोम-दैवते. ।
1 Handsome, 2 Sacred to the moon. 3 Mild. 4 Mercury.

इति यान्ताः !

1 Multitude. 2 Occasion. निवहाऽवसरौ वारौ, संस्तरौ प्रस्तराऽध्वरौ, ॥
3 Service. 4 A day. 1 A bed of grass or bark. 2 A sacrifice.

1 BRIHASPATI. 2 A parent. १६२ गुरू गीष्पति-पित्राद्यौ, द्वापरौ युग-संशयौ, ।
3 A Venerable person. 4 Instructor. 5 Heavy. 6 Great. 1 The 3rd age. 2 Doubt.

1 difference. 2 Similitude. प्रकारौ भेद-सादृश्ये, आकाराविङ्गिताऽऽकृती, ॥
1 Hint. 2 Form.

1 Beard of corn. 2 An arrow. १६३ किंशारू धान्यशूकेषू, मरू धन्व-धराधरौ, ।
1 A country void of water 2 A mountain.

1 A tree. 2 A mountain. 3 The Sun. अद्रयो द्रुम-शैलाऽर्काः, स्त्रीस्तनाऽब्दौ पयोधरौ, ॥
1 Woman's breasts. 2 A cloud.

1 A Darkness. 2 A foe. १६४ ध्वान्ताऽरि-दानवा वृत्रा, बलि-हस्तांऽशवः कराः, ।
3 A demon. 4 Vritra. 1 Tax. 2 Hand. 3 Ray of light. 4 Hailstones. 5 Elephant trunk. 6 Hair.

1 Splitting fracture. 2 A feminine disease. प्रदरा भङ्ग-नारीरुक्-बाणा, अस्राः कचा अपि, ॥
3 An arrow. 1 Hair. 2 A corner. 3 A tear. 4 Blood.

1 A hornless bull.
2 A beardless man.
१६५ अ-जात-शृङ्गो गौः काले ऽप्य-श्मश्रुर् ना च तूबरौ, ।

1 Gold. 2 Wealth.
3 A cloud.
स्वर्णे ऽपि राः, परिकरः पर्यङ्क-परिवारयोः, ।।

1 A bed. 2 A dependent. 3 Commencement.
4 Group. 5 Girding as for battle.

1 Elegance of a pearl. 2 The pupil of the eye. 3 A high note in music. 4 A loud noise. 5 Silver. 6 A star.
१६६ मुक्ता-शुद्धौ च तारः स्याच्छारो वायौ स तु त्रिषु ।

1 Air. 2 Variegated. 3 A die table.

1 Promise.
2 War. 3 Bargain.
4 Calamity. 5 Praise. 6 Charm. 7 Sami fruit.
कर्बुरे, ऽथ प्रतिज्ञाऽऽजि-संविदापत्सु संगरः, ।।

1 The prayers of the *Vedas*.
2 Consultation. 3 Incantation.
१६७ वेद-भेदे गुप्त-वादे मन्त्रो, मित्रो रवावपि, ।

1 The sun. 2 A friend.

1 A sacrifice. 2 An arrow. 3 Shaving of sacrificial post. 4 Thunderbolt.
मखेषु यूपखण्डेऽपि स्वरुर्, गुह्ये ऽप्यवस्करः, ।।

1 Part to be concealed.
2 Excrement. 3 Sweeping.

1 Charge sounded by trumpets.
2 Roaring of elephants. 3 Beginning. 4 Making show.
१६८ आडम्बरस् तूर्य-रवे गजेन्द्राणां च गर्जिते, ।

1 A brisk assault.
2 Robbery. 3 Arming.
अभिहारो ऽभियोगे च चौर्ये संनहने ऽपि च, ।।

1 An attendant.
2 A scabbard.
3 Insignia of dignity.
१६९ स्याज् जङ्गमे परीवारः खड्ग-कोशे परिच्छदे, ।

1 A tree. 2 A handful of sacred grass.
3 Stool or cusion.
विष्टरो विटपी दर्भ-मुष्टिः पीठाऽऽद्यमासनम्, ।।

1 A door.
2 A porter.
१७० द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे, ।

1 A female porter.

1 A large ichneumon.
2 VISHNU. 3 Siva.
4 Fire. 5 A sage. 6 Tawny. 7 Large.
विपुले नकुले विष्णौ बभ्रुर् ना पिङ्गले त्रिषु, ।।

1 Strength.
2 Essence. 3 Just.
4 Prosperity. 5 Water. 6 Wealth.
१७१ सारो बले स्थिरांऽशे च न्याय्ये क्लीबं बरे त्रिषु, ।

1 A gamester.
2 A stake.
दुरोदरो द्यूतकारे पणे, द्यूते दुरोदरम् ।। 3 Gambling.

1 A forest.
2 A difficult road.
3 A sort of sugar cane.
१७२ महाऽरण्ये दुर्ग-पथे कान्तारं पुन्-नपुंसकम्, ।

1 Envy. 2 Envious.
3 Niggardly. 4 Gnat.
मत्सरो ऽन्य-शुभ-द्वेषे तद्वत्-कृपणयोस् त्रिषु, ।।

1 A boon.
2 Excellent.
१७३ देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्-प्रिये, ।
3 Indeed. 4 A little approved. 5 A husband.

1 Shoot of a bambu.
वंशाऽङ्कुरे करीरो ऽस्त्री तरु-भेदे घटे च ना, ॥
2 A kind of tree. 3 A jar. 4 A sort of a plant.

1 Rearguard.
2 A string worn on the wrist at nuptials.
१७४ ना चमू-जघने हस्त-सूत्रे प्रतिसरो ऽस्त्रियाम्, ।
3 Counsel. 4 A servant. 5 Sacrifice.

1 YAMA.
2 Wind. 3 INDRA.
यमाऽनिलेन्द्र-चन्द्राऽर्क-विष्णु-सिंहांऽशु-वाजिषु ॥
4 The moon. 5 The sun. 6 Vishnu. 7 A lion. 8 A ray of light. 9 A horse.

10 A parrot.
11 A serpent.
१७५ शुकाऽहि-कपि-भेकेषु हरिर् ना कपिले त्रिषु, ।
12 An Ape. 13 A frog. 14 Tawny. 15 Green. 16 Yellow.

1 A potsherd.
2 A stony nodule.
शर्करा कर्परांऽशे ऽपि, यात्रा स्याद् यापने गतौ, ॥
3 A country abounding in Stones. 4 A disease. 5 Clayed sugar.
1 Passing away time. 2 Livelihood. 3 Travelling. 4 Festival.

1 The earth.
2 Speech.
१७६ इरा भू-वाक्-सुराऽप्सु स्यात्, तन्द्री निद्रा-प्रमीलयोः ।
3 Ardent spirit. 4 Water. 1 Drowsiness. 2 Lassitude.

1 A nurse.
2 The earth.
धात्री स्यादुपमाता ऽपि क्षितिरप्यामलक्यपि, ॥
3 A Mother. 4 A myrobalan.

1 Wanting a limb.
2 A dancing girl.
१७७ क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका, ।
3 A courtesan. 4 A bee. 5 An egg plant.

6 Cruel. 7 Low.
8 Small. 9 Miserly.
10 Poor.
त्रिषु क्रूरे ऽधमे ऽल्पे ऽपि क्षुद्रं, मात्रा परिच्छदे ॥
1 Requisites, materials. 2 A little.

3 Quantity.
4 Measure. 5 The whole. 6 Only. 7 An earring. 8 An instant. 9 Half a short syllable. 10 Wealth.
१७८ अल्पे च परिमाणे सा, मात्रं कार्त्स्न्ये ऽवधारणे, ।

1 Painting, delineation. 2 Wonder.
आलेख्याऽऽश्चर्ययोश् चित्रं, कलत्रं श्रोणि-भार्ययोः, ॥
3 Variegated. 4 A circle. 5 Wonderful. 6 A star. 7 Subhadra.
1 The hip and loins. 2 A wife. 3 A strong hold.

1 Fit, capable.
2 A vessel.
१७९ योग्य-भाजनयोः पात्रं पत्रं, वाहन-पक्षयोः, ।
3 King's minister. 4 A river bed. 5 A vessel in sacrifice. 6 An Actor.
1 A vehicle. 2 A wing. 3 A leaf. 4 Arrow feather.

1 Command.
2 Institutes of science.
निदेश-ग्रन्थयोः शास्त्रं, शस्त्रमायुध-लोहयोः, ॥
1 A weapon. 2 Iron. 3 A knife.

1 Root of a tree.
2 Wove silk　　१८० स्याज् जटांऽशुकयोर् नेत्रं, क्षेत्रं पत्नी-शरीरयोः, ।
bleached. 3 An eye. 4 The rope of a churn. 5 A car. 6 A guide.
1 A wife. 2 Body. 3 A field. 4 A holy spot. 5 A Geometrical figure.

1 Snout of a hog.
2 Forepart of a　　मुखाग्रे क्रोड-हलयोः पोत्रं, गोत्रं तु नाम्नि च, ॥
plough. 3 Sort of cloth.　　1 Name. 2 A family. 3 Wealth.
4 A mountain. 5 The earth. 6 A herd of kine.

1 Vesture.
2 A sacrifice.　　१८१ सत्रमाच्छादने यज्ञे सदा-दाने वने ऽपि च, ।
3 Constant alms. 4 A forest. 5 Fraud. 6 Means.

1 Object of perception. 2 A body.　　अजिरं विषये काये ऽप्यम्बरं व्योम्नि वाससि, ॥
3 A courtyard. 4 Wind.　　1 Ether ; the sky. 2 Apparel. 3 Ambergris.

1 A realm.
2 A wheel.　　१८२ चक्रं राष्ट्रे ऽप्यक्षरं तु मोक्षे ऽपि, क्षीरमप्सु च, ।
3 A sharp discus. 4 An army. 5 Multitude. 6 A mill. 7 A potter's wheel.
8 A whirlpool. 9 Ruddy goose.　　1 Exemption from transmigration.
2 A letter. 3 Brahman. 4 Siva. 5 Unalterable.　　1 Water. 2 Milk.

1 Gold.
2 Frequent numerous.　　स्वर्णे ऽपि भूरि-चन्द्रौ द्वौ, द्वार-मात्रे ऽपि गोपुरम्, ॥
3 Brahma. 4 Vishnu. 5 Siva. 6 Moon. 7 Camphor. 8 water.
1 A door. 2 A town gate. 3 Sort of grass.

1 A cavern.
2 Pride.　　१८३ गुहा-दम्भौ गह्वरे द्वे, रहो ऽन्तिकमुपह्वरे, ।
3 A forest. 4 An Arbour.　　1 Near. 2 Solitude.

1 Front, fore-part.
2 More.　　पुरो ऽधिकमुपर्यग्राण्यगारे नगरे पुरम् ॥
3 Top, summit. 4 Point. 5 Assemblage. 6 Four mouthfuls. 7 Chief.
1 A house. 2 A town. 3 A body. 4 City of Patna.

1 A house.
2 A town.　　१८४ मन्दिरं चाथ राष्ट्रो ऽस्त्री विषये स्यादुपद्रवे, ।
3 The sea.　　1 A country, or realm. 2 Calamity.

1 Fear, dread.
2 A hole in the　　दरो ऽस्त्रियां भये श्वभ्रे, वज्रो ऽस्त्री हीरके पवौ, ॥
ground. 3 Little. 4 A cavern.　　1 A diamond. 2 The thunderbolt.

1 Chief.
2 Right conclusion.　　१८५ तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे, ।
3 A weaver's batten. 4 Raiment. 5 Responsibility of a Realm.
6 Dependance. 7 A sacred book. 8 An excellent medicament.

1 Handle of a fan of cow's hair.　　औशीरश् चामरे दण्डे ऽप्यौशीरं शयनाऽऽसने, ॥
2 A bed. 3 Chair or stool. 4 Fragrant root.

1 Tip of an elephant's trunk. १८६ पुष्करं करि-हस्ताऽग्रे वाद्य-भाण्ड-मुखे जले ।
2 Head of drum. 3 Water.
4 Sky. 5 Edge of a scimitar. व्योम्नि खड्ग-फले पद्मे तीर्थौषधि-विशेषयोः ॥
6 Lotus. 7 Holy place. 8 A Drug.

1 Interval. 2 Period. १८७ अन्तरमवकाशाऽवधि-परिधानान्तर्धि-भेद-तादर्थ्ये ।
3 Clothing. 4 Covering. 5 Difference. 6 Same. 7 A weak point.
8 A hole. 9 Own. 10 Without. 11 Outside. छिद्राऽऽत्मीय-विना-बहिरवसर-मध्ये ऽन्तरात्मनि च, ॥
12 Opportunity. 13 Midst. 14 Supreme being. 15 Similar. 16 Other.

1 Fragrant root of grass. १८८ मुस्ते ऽपि पिठरं, राज-कशेरुण्यपि नागरम्, ।
2 Cyprus rohmdas. 3 A boiler.
1 Cyprus pertenuis. 2 Ginger. 3 Belonging to a city.

1 Very dark. 2 Mischievous, destructive. शार्वरं त्वन्धतमसे घातुके भेद्य-लिङ्गकम्, ॥
3 Vicious elephant.

1 Pale red. 2 White. 3 Yellow. १८९ गौरो ऽरुणे सिते पीते, व्रणकार्यप्यरुष्करः, ।
4 Clean. 5 White mustard. 1 Sharp, corrosive. 2 Semecarpus macardium.

1 Hard. 2 Old. 3 The belly. जठरः कठिने ऽपि स्यादधस्तादपि चाऽधरः ॥
1 Inferior, low. 2 The lip. 3 Less. 4 Difficult.

1 Unperplexed. 2 Attentive. १९० अनाकुले ऽपि चैकाग्रो, व्यग्रो व्यासक्त आकुले, ।
1 Distracted. 2 Perplexed. 3 Frightened.

1 Superior, high. 2 Northern. उपर्युदीच्य-श्रेष्ठेष्वप्युत्तरःस्यादनुत्तरः ॥
3 Excellent. 4 Answer. 5 Son of Virata.
1 Inferior. 2 Southern. 3 Worse. 4 Excellent. 5 Silent.

1 Distant, remote. 2 Other. १९१ एषां विपर्यये श्रेष्ठे, दूराऽनात्मोत्तमाः पराः, ।
3 Preeminent. 4 Subsequent. 5 An enemy.

1 Sweet. 2 Pleasing. 3 Poison. स्वादु-प्रियौ च मधुरौ, क्रूरौ कठिन-निर्दयौ, ॥
1 Hard. 2 Pitiless; cruel. 3 Destructive. 4 Terrible.

1 Generous. 2 Great. १९२ उदारौ दातृ-महतोरितरस्त्वन्य-नीचयोः, ।
3 Gentle. 4 Unperplexed. 1 Other. 2 Low, vile.

1 Indolent. 2 Independent, uncontrolled. मन्द-स्वच्छन्दयोः स्वैरः, शुभ्रमुद्दीप्त-शुक्लयोः ॥
1 Splendid. 2 White. 3 Tale.

1 A Great shower. 'आसारो वेगवद्वर्षे सैन्यप्रसरणं तथा ॥ १७ ॥

2 Incursion of an army. 3 Hail stones. 4 Excellence. धाराम्बुपाते चोत्कर्षे ऽस्त्रौ कटाहे तु कर्परः ।
1 A fine pot. 2 Skull. 3 A pot sherd.

1 Beautiful. 2 Humble. बन्धुरं सुन्दरे नम्रे गिरिर् गेन्दुकशैलयोः ॥ १८ ॥
1 Yellow substance. 2 Mountain.

1 A pot. 2 An oblation. चरुः स्थाल्यां हविःपक्का ऽवधीरः कातरे चले' ।१९।
1 A fool. 2 Movable.

इति रान्ताः ।

1 Lock on the crown of the head. १९३ चूडा किरीटं केशाश् च संयता मौलयस् त्रयः, ।
2 A diadem. 3 Hair tied on the head. 4 Head.

1 The tree *Pilu*. 2 An elephant. द्रुमप्रभेद-मातङ्ग-काण्ड-पुष्पाणि पीलवः, ॥
3 An arrow. 4 A Flower. 5 An Atom.

1 YAMA. 2 Measured time. १९४ कृतान्ताऽनेहसोः कालश्, चतुर्थे ऽपि युगे कलिः, ।
3 Death. 4 Infinite time. 5 Black.
1 The fourth age. 2 A quarrel. 3 War, battle. 4 Unblown flower.

1 A deer. 2 A lotus. 3 Water. स्यात् कुरङ्गे ऽपि कमलः, प्रावारे ऽपि च कम्बलः, ॥
4 Laxmi. 5 An excellent woman. 1 A blanket. 2 A dewlop.
3 Chief of serpents. 4 Water.

2 Tax, revenue. 3 An oblation. १९५ करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्, ।
1 Wrinkle. 4 Bali.

1 Bulkiness. 3 Strength. स्थौल्य-सामर्थ्य-सैन्येषु बलं ना काक-सीरिणोः, ॥
2 Army, forces. 4 A crow. 5 Balarama.

1 A whirlwind. 2 Rheumatic. १९६ वातूलः पुंसि वात्यायामपि वाताऽसहे त्रिषु,। 3 Insane.

1 Wicked. 2 A tiger. भेद्य-लिङ्गः शठे व्यालः पुंसि श्वापद-सर्पयोः, ॥
3 A serpent. 4 Vicious elephant.

1 Sin. 2 Filth. 3 Excretion. १९७ मलो ऽस्त्री पाप-विट्-किट्टान्यस्त्री शूलं रुगायुधम्, ।
4 Dregs. 5 Rust. 1 Colic. 2 A weapon.

1 A lance. 2 A gnomon. शङ्कावपि द्वयोः कीलः, पालिः स्त्र्यश्र्यङ्क-पङ्क्तिषु, ॥
3 A stake. 4 A post. 5 Flame. 6 A blow on the breast. 1 A corner. 2 The hollow above the hip. 3 Sharp edge. 4 Mark. 5 Arrow. 6 End. 7 Handful.

1 A mechanical art. 2 A measure of time. 3 A part.
१९८ कला शिल्पे काल-भेदे चाऽऽली सख्यावली अपि, ।
1 A companion. 2 A row. 3 Calamity. 4 Digit of the moon. 5 Long note.

1 Tide. 2 Time. 3 Limit. 4 Sea shore.
अब्ध्यम्बु-विकृतौ वेला काल-मर्यादयोरपि, ॥

1 The Pleiades. 2 A cow.
१९९ बहुलाः कृत्तिका गावो, बहुलो ऽग्नौ शितौ त्रिषु, ।
3 Many. 4 Fire. 5 Black. 6 Cardamum. 7 The dark half of a month.

1 Sport. 2 Gesture.
लीला विलास-क्रिययोरुपला शर्करा ऽपि च, ॥
1 A stony nodule. 2 Manufactured sugar. 3 Stone. 4 A gem. 5 Sugarcane.

1 Blood. 2 Water.
२०० शोणिते ऽम्भसि कीलालं, मूलमाद्ये शिफा-भयोः, ।
1 Origin. 2 Root. 3 An Asterism. 4 Wealth. 5 Water. 6 Corn.

1 A multitude. 2 A net.
जालं समूह आनाय-गवाक्ष-क्षारकेष्वपि, ॥
3 A window. 4 An unblown flower. 5 Pride. 6 Magic.

1 Disposition. 2 Good conduct.
२०१ शीलं स्वभावे सद्-वृत्ते, सस्ये हेतु-कृते फलम्, ।
1 Fruit. 2 Result. 3 Edge of a weapon. 4 Profit. 5 Nutmeg. 6 Pearl. 7 Shield.

1 A roof. 2 A film over the eye.
छदिर्-नेत्ररुजोः क्लीबं समूहे पटलं न ना, ॥
3 Multitude. 4 Retinue.

1 Bottom. 2 Essential character.
२०२ अधः-स्वरूपयोरस्त्री तलं, स्याच् चामिषे पलम्, ।
3 Surface. 4 Palm with expended finger. 5 Span.
6 A guard for an archer's arm.
1 Flesh. 2 A measure of four Karshas.

1 Submarine fire. 2 The infernal regions. 3 Hole.
और्वाऽनले ऽपि पातालं, चैलं वस्त्रे ऽधमे त्रिषु, ॥
1 Clothes, vesture. 2 Low, inferior.

1 A hole filled with stakes.
२०३ कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषाऽनले, ।
2 Conflagration of chaff.

1 Absolute, certain. 2 Alone, sole. 3 Entire.
निर्णीते केवलमिति त्रि-लिङ्गं त्वेक-कृत्स्नयोः, ॥

1 Adequacy. 2 Safety. 3 Virtue.
२०४ पर्याप्ति-क्षेम-पुण्येषु कुशलं शिक्षिते त्रिषु, । 4 Expert.

1 A shoot or sprout.
प्रवालमङ्कुरे ऽप्यस्त्री, त्रिषु स्थूलं जडे ऽपि च, ॥
2 Coral. 3 The neck of a lute.
1 Stupid. 2 Bulky.

1 Having projecting teeth. 2 High. २०५ करालो दन्तुरे तुङ्गे, चारौ दक्षे च पेशलः, ।
3 Terrible. 4 Soft. 1 Beautiful. 2 Expert. 3 Soft.

1 Ignorant. 2 Young, a child. मूर्खेऽर्भकेऽपि बालः स्याल्, लोलश् चल-सतृष्णयोः ॥
3 Hair. 4 Tail of a horse. 5 Perfume. 1 Tremulous. 2 Thirsty.

1 A house. 2 Family. 'कुलं गृहे ऽपि तालाङ्के कुवेरे चैककुण्डलः ।
3 High personage. 4 Kubera. 5 Group.

1 Woman-hood. 2 Disrespect. स्त्रीभावावज्ञयोर् हेला, हेलिः सूर्ये, रणे हिलिः ॥१९॥
1 The sun. 1 A battle.

1 Plough. 2 King. 3 Wine. हालः स्यान् नृपतौ मद्ये, शकलच्छदयोर् दलम् ।
1 A piece. 2 Cover. 3 Leaf.

1 Brush. 2 Cotton bed. तूलिश् चित्रोपकरणशलाका-तूलशय्ययोः ॥ २० ॥

1 Fierce. 2 Battle. तुमुलं व्याकुले शब्दे शष्कुली कर्णपाल्यपि' । २१ ।
1 Ear of corn. 2 An ear disease.

इति लान्ताः ।

1 A forest. 2 Fire in a forest. २०६ दव-दावौ वनाऽरण्यवह्नी, जन्म-हरौ भवौ, ।
1 Birth. 2 SIVA. 3 Acquision. 4 World. 5 Existence. 6 Safety.

1 A counsellor. 2 A companion. मन्त्री सहायः सचिवौ, पति-शाखि-नरा धवाः, ॥
1 A husband. 2 Lythrum fruticosum. 3 A man.

1 A mountain. 2 A sheep. 3 The sun. २०७ अवयः शैल-मेषाऽर्का, आज्ञाऽऽह्वानाध्वरा हवाः, ।
1 Command. 2 Call. 3 Sacrifice.

1 A living being. 2 Existence. भावः सत्ता-स्वभावाऽभिप्राय-चेष्टाऽऽत्म-जन्मसु, ॥
3 Nature. 4 Intension. 5 Substance. 6 Gesture. 7 Soul. 8 Birth.
9 Thing. 10 Pleasure. 11 Venerable. 12 Learned.

1 Production. 2 Fruit. 3 Blossom. २०८ स्यादुत्पादे फले पुष्पे प्रसवो गर्भ-मोचने, ।
4 Bringing forth. 5 Offspring.

1 Distrust. 2 Denial. अ-विश्वासे ऽपह्नवे ऽपि निकृतावपि निह्नवः,॥ 3 Conceal-ment.

1 Elevation. 2 Impatience. २०९ उत्सेकाऽमर्षयोरिच्छा-प्रसरे मह उत्सवः, ।
3 Formation of wish. 4 Festival.

1 Dignity, authority. अनुभावः प्रभावे च सतां च मति-निश्चये, ॥
2 Firm opinion. 3 Certainty. 4 Hint.

१ त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति।
२ निषिद्धलिङ्गं शेषार्थं,—
३ त्वन्ताथादि न पूर्वभाक् ॥ ५ ॥

एकशेष नहीं करनेपर भी कोई दोष ( प्रतिज्ञाहानि ) नहीं है। इसी तरह अन्यान्य उदाहरण भी समझने चाहिये )॥

१ तीनों लिङ्ग ( पुंल्लिङ्ग, स्त्रीलिङ्ग और नपुंसकलिङ्ग ) हैं, यह बतलानेके लिये इस ग्रंथमें 'त्रिषु', पुँल्लिङ्ग और स्त्रीलिङ्ग दोनों लिङ्ग हैं, यह बतलानेके लिये 'द्वयोः' ये शब्द कहे गये हैं। (**पहला तीनों लिङ्ग बतलानेके लिये जैसे—** '······मण्डलं त्रिषु ( १।२।१५ )' यहाँ 'त्रिषु' शब्द कहनेसे 'मण्डल' शब्दके तीनों लिङ्ग ( पुंल्लिङ्ग, स्त्रीलिङ्ग और नपुंसकलिङ्ग ) होते हैं। **दूसरा स्त्रीलिङ्ग बतलानेके लिये जैसे—** '······अशनिर्द्वयोः (१।१।४७)' यहाँ 'द्वयोः' शब्दके कहनेसे 'अशनि' शब्द पुंल्लिङ्ग और स्त्रीलिङ्ग होता है )॥

**विशेषः—** पुंल्लिङ्ग को बतलाने के लिये '**ना, पुमान्, पुंसि**······' स्त्रीलिङ्ग को बतलानेके लिये '**स्त्री, स्त्रियाम्**······' और नपुंसकलिङ्ग को बतलानेके लिये '**क्लीबम्**······' शब्द कहे गये हैं। इनके उदाहरण स्वयं समझ लेना चाहिये॥

२ जहाँ जिस लिङ्गका निषेध किया गया है, उस निषिद्ध (मना किये हुए) लिङ्गके अतिरिक्त शेष ( बाकी ) लिङ्ग उस शब्दके होते हैं। ( **जैसे—**'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री······( १।४।२० )' यहाँ 'अस्त्री' इस शब्दसे 'संवत्सर' आदि चार शब्दोंके स्त्रीलिङ्गका निषेध करनेसे उक्त चार शब्द पुंल्लिङ्ग और नपुंसकलिङ्ग दोनों में हैं )॥

३ जिस शब्दके अन्तमें '**तु**' या आदि में '**अथ**' शब्द हों, ऐसे, '**१ नामपद, २ लिङ्गपद, ३ सर्वनामपद और ४ अव्ययपद**' इन चारोंका पहलेवाले ( पूर्वमें रहनेवाले ) शब्दोंके साथमें सम्बन्ध नहीं होता है। ( क्रमशः उदाहरण—**पहला (नामपद) त्वन्त** ( 'तु' अन्तवाला ) जैसे—'···**और्वस्तु** वाडवो वडवानलः ( १।१।५६ )' यहाँ 'और्व' शब्दके आगे ( अन्तमें ) 'तु' शब्द है; अतः 'और्व' शब्दका सम्बन्ध आगेवाले 'वाडव' ही शब्दके साथ है, पूर्व ( पहले ) वाले शब्दके साथ नहीं। **दूसरा ( लिङ्गपद ) त्वन्त जैसे—** 'अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् (१।३।१२)' यहाँ 'पुंसि' इस शब्दके

## १. अथ स्वर्गवर्गः

**१ स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः । **

---

अन्तमें 'तु' शब्द है; अत एव 'पुंसि' इस पदका आगेवाले 'अन्तर्धि' शब्दके साथ होनेसे वही ( अन्तर्धि शब्द ही ) पुंल्लिङ्ग है, पूर्व ( पहलेवाला ) नहीं। **तीसरा (सर्वनामपद) त्वन्त जैसे**—'गोष्ठं गोष्ठानकं तत्तु गौष्ठीनं भूतपूर्वकम् (२।१।१३)' यहाँ 'तत्' इस सर्वनाम पद के आगे 'तु' शब्द होनेसे उसका सम्बन्ध आगेवाले 'गौष्ठीन' शब्दके साथ है, पूर्ववाले 'गोष्ठानक' शब्दके साथ नहीं। **चौथा (अव्ययपद) त्वन्त जैसे**—'वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ( १।२।२ )' यहाँ 'वा' इस अव्यय पदके अन्तमें 'तु' शब्द है, अतः 'वा' पदका सम्बन्ध 'पुंसि' के साथ होनेसे 'आकाश और विहायस्' ये ही दो शब्द विकल्पसे पुंल्लिङ्ग होते हैं, पूर्ववाला 'विष्णुपद' शब्द नहीं। इसी तरहसे **पहला ( नामपद ) अथादि ( 'अथ' शब्द आदिमें हो ऐसा ) जैसे**—'मोक्षोऽपवर्गोऽथाज्ञानमविद्या······( १।५।७ )' यहाँ 'अज्ञान' शब्दके पूर्वमें (पहले) 'अथ' शब्द रहनेसे वह 'अज्ञान' शब्द आगेवाले 'अविद्या' शब्दका ही पर्याय है, पूर्ववाले 'अपवर्ग' शब्दका नहीं। **दूसरा (लिङ्गपद) अथादि जैसे**—'शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं···( १।४।२६ )' यहाँ 'त्रिषु' इस लिंगपदके आदिमें 'अथ' शब्द रहनेसे पुंल्लिङ्ग, स्त्रीलिङ्ग और नपुंसकलिङ्गके अर्थमें प्रयुक्त 'त्रिषु' इस शब्दका आगेवाले 'द्रव्ये' इसके साथ सम्बन्ध होनेसे 'शस्त' शब्द द्रव्य ही अर्थमें त्रिलिंग है, पूर्ववाले शब्दोंका पर्यायवाचक ( कल्याणमात्र का वाचक ) होनेपर त्रिलिंग नहीं है। इसी तरह तीसरे और चौथे अर्थात् सर्वनामपद और अव्ययपदके भी अथादिका उदाहरण समझना चाहिये)॥

**विशेषः**—यहाँ 'अथ' शब्द 'अथो' शब्दका उपलक्षण है, अतः 'अथ'के तुल्य 'अथो' शब्द भी जिसके आदिमें रहे, उसका सम्बन्ध भी पूर्ववाले शब्दके साथ नहीं होता है। ( **जैसे**—'·········साम सान्त्वमथो समौ—' 'भेदोपजापावु·········(२।८।२१)' यहाँ 'समौ'के आदि में 'अथो' शब्दके रहने से 'समौ' इस शब्दका सम्बन्ध आगेवाले 'भेद और उपजाप' इन्हीं शब्दों के साथ होगा, पूर्ववाले 'सान्त्व' शब्द के साथ नहीं )। इसी तरह अन्यत्र भी अन्यान्य उदाहरणोंको स्वयं समझ लेना चाहिये॥

१ स्वः ( =स्वर् अ० ), स्वर्गः, नाकः, त्रिदिवः, त्रिदशालयः, सुरलोकः

सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ॥ ६ ।

१ अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः ।
सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ॥ ७ ॥
आदितेया दिविषदो लेखा अदितिनन्दनाः ।
आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः ॥ ८ ॥
बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः ।
वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम् ॥ ९ ॥

२ आदित्यविश्ववसवस्तुषिताऽऽभास्वरानिलाः ।
महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ॥ १० ॥

---

( ५ पु ), द्यौः ( = द्यो), द्यौः ( = दिव् । २ स्त्री), त्रिविष्टपम् ( न । + त्रिपिष्टपम् ), 'स्वर्ग' के ९ नाम हैं ॥

१ अमरः, निर्जरः, देवः, त्रिदशः, विबुधः, सुरः, सुपर्वा (=सुपर्वन्),सुमनाः ( = सुमनस् ), त्रिदिवेशः, दिवौकाः ( = दिवौकस् । + दिवोकाः ), आदितेयः, दिविषत् (=दिविषद्), लेखः, अदितिनन्दनः,आदित्यः, ऋभुः, अस्वप्नः, अमर्त्यः, अमृतान्धाः ( = अमृतान्धस् ), बर्हिर्मुखः, क्रतुभुक् ( = क्रतुभुज् ), गीर्वाणः ( + गीर्बाणः), दानवारिः, वृन्दारकः (२४ पु), दैवतम् ( पु न ), देवता (स्त्री), **'देवता'** के २६ नाम हैं ॥

२ आदित्याः १२, विश्वे १०, वसवः ८, तुषिताः २६ या ३६, आभास्वराः ६४, अनिलाः ४९, महाराजिकाः २२० या २३६ या ४०००, साध्याः १२, रुद्राः ११, ( ९ पु ) **'गणदेवता'** देवताओंके एक-एक गण ( समूह ) के ९ नाम हैं। इन गणदेवताओंके जितने-जितने भेद होते हैं, वे प्रत्येकके आगे लिख दिये गये हैं[1] ॥

---

१. 'आदित्या द्वादश प्रोक्ता विश्वेदेवा दश स्मृताः ॥
वसवश्चाष्ट संख्याताः षट्त्रिंशत्तुषिता मताः ॥ १ ॥
आभास्वराश्चतुःषष्टिर्वाताः पञ्चाशदूनकाः ॥
महाराजिकनामानो द्वे शते विंशतिस्तथा ॥ २ ॥
साध्या द्वादश विख्याता रुद्रा एकादश स्मृताः ॥' इति ॥
एषां नामानि परिशिष्टे द्रष्टव्यानि ।

१ विद्याधराऽप्सरोयक्षरक्षोगन्धर्वकिन्नराः ।
[1]पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥ ११ ॥
२ असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः ।
शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः ॥ १२ ॥
३ सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः ।
समन्तभद्रो भगवान्मारजिल्लोकजिज्जिनः ॥ १३ ॥
षडभिज्ञो दशबलोऽद्वयवादी विनायकः ।

---

१ विद्याधराः ( 'जीमूतवाहन,…' ), अप्सरसः ( स्त्री, नि० ब०, देवताओंकी स्त्रियाँ घृताची, मेनका, रम्भा,…… ), यक्षाः (कुबेर,……'), रक्षांसि (= रक्षस्, न । लङ्कावासी, माया करनेवाले ), गन्धर्वाः ( देवताओंके यहाँ गानेवाले-'तुम्बुरु,……' ), किन्नराः ( घोड़ेका मुँह तथा आदमीके शरीरवाले और आदमीका मुँह तथा घोड़ेके शरीरवाले ), पिशाचाः ( मांसभोजी भूतविशेष), [2]गुह्यकाः ('मणिभद्र,……'), सिद्धाः ( 'विश्वावसु……' ), भूताः ( शिव के गणविशेष—प्रमथ… । शे० ८ पु ), 'देवयोनि' के १० नाम हैं । (इनका प्रयोग तीनों वचनोंमें होता है )॥

२ असुरः ( + आसुरः ), दैत्यः, दैतेयः, दनुजः, इन्द्रारिः, दानवः, शुक्रशिष्यः, दितिसुतः, पूर्वदेवः, सुरद्विट् ( = सुरद्विष् । १० पु ) 'दैत्य' के १० नाम हैं ॥

३ सर्वज्ञः, सुगतः, बुद्धः, धर्मराजः, तथागतः, समन्तभद्रः, [3]भगवान् (= भगवत्), [4]मारजित्, लोकजित्, जिनः, [5]षडभिज्ञः, [6]दशबलः, अद्वयवादी

---

१. 'सिद्धगुह्यकभूता हि पिशाचा देवयोनयः' इति भागुरिः पपाठेति क्षी० स्वा० ॥

२. 'निधिं रक्षन्ति ये रक्षास्ते स्युर्गुह्यकसंज्ञकाः' ॥ इति ॥

३. 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा ॥' इति पूर्वोक्ताः षड् भगा यस्य स 'भगवान्' इति ॥

४. मारान् कामक्रोधादीन् बौद्धसम्मतान् स्कन्धमार–क्लेशमार–मृत्युमार–देवपुत्रमारांश्च जयतीति मारजित् ।

५. 'दिव्यं चक्षुःश्रोत्रम् १, परचित्तज्ञानम् २, पूर्वनिवासानुस्मृतिः ३, आत्मज्ञानम् ४, वियद्गमनम् ५, कायव्यूहसिद्धिः ६' इति षट्सु—'दानम् १, शीलम् २, क्षान्तिः ३, वीर्यम् ४, ध्यानम् ५, प्रज्ञा ६' इति षट्सु वा अभिज्ञा ज्ञानं यस्य स 'षडभिज्ञः' इति ॥

६. 'दानं १ शीलं २ क्षमा ३ वीर्यं ४ ध्यानं ५ प्रज्ञा ६ बलानि ७ च ॥ उपायः ८ प्रणिधि ९ र्ज्ञानं १० दश बुद्धिबलानि वै ॥ १ ॥' इति ॥

मुनीन्द्रः श्रीघनः शास्ता मुनिः १शाक्यमुनिस्तु यः ॥ १४ ॥
स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः ।
गौतमश्चार्कबन्धुश्च, मायादेवीसुतश्च सः ॥ १५ ॥
२ ब्रह्माऽऽत्मभूः सुरज्येष्ठः, परमेष्ठी पितामहः ।
हिरण्यगर्भो लोकेशः, स्वयंभूश्चतुराननः ॥ १६ ॥
धाताऽब्जयोनिर्द्रुहिणो, विरञ्चिः कमलासनः ।
स्रष्टा प्रजापतिर्वेधा, विधाता विश्वसृड् विधिः ॥ १७ ॥
३ 'नाभिजन्माण्डजः पूर्वो, निधनः कमलोद्भवः (१)
सदानन्दो रजोमूर्तिः, सत्यको हंसवाहनः' (२)
४ विष्णुर्नारायणः कृष्णो, वैकुण्ठो विष्टरश्रवाः ।
दामोदरो हृषीकेशः, केशवो माधवः स्वभूः ॥ १८ ॥
दैत्यारिः पुण्डरीकाक्षो, गोविन्दो गरुडध्वजः ।
पीताम्बरोऽच्युतः शार्ङ्गी, विष्वक्सेनो जनार्दनः ॥ १९ ॥

---

( =अद्वयवादिन् ), विनायकः, मुनीन्द्रः, श्रीघनः, शास्ता ( =शास्तृ), मुनिः ( १८ पु ) 'बुद्ध' के १८ नाम हैं ॥

१ शाक्यमुनिः, शाक्यसिंहः, सर्वार्थसिद्धः, शौद्धोदनिः, गौतमः, अर्कबन्धुः, मायादेवीसुतः (७ पु), 'बुद्धके अवान्तरभेद, 'सप्तम बुद्ध' के ७ नाम हैं ॥

२ ब्रह्मा (ब्रह्मन्), आत्मभूः, सुरज्येष्ठः, परमेष्ठी (=परमेष्ठिन्), पितामहः, हिरण्यगर्भः, लोकेशः, स्वयम्भूः, चतुराननः, धाता(=धातृ), अब्जयोनिः, द्रुहिणः (= द्रुघणः), विरञ्चिः( + विरिञ्चिः), कमलासनः, स्रष्टा ( = स्रष्टृ), प्रजापतिः, वेधाः ( वेधस् ), विधाता ( = विधातृ ), विश्वसृट् ( = विश्वसृज् ), विधिः ( २० पु ), 'ब्रह्मा' के २० नाम हैं ॥

३ [ नाभिजन्मा ( =नाभिजन्मन् ), अण्डजः, पूर्वः, निधनः, कमलोद्भवः, सदानन्दः, रजोमूर्तिः, सत्यकः, हंसवाहनः ( ९ पु ), 'ब्रह्मा' के ९ नाम हैं ॥ ]

४ विष्णुः, नारायणः ( + नरायणः ), कृष्णः, वैकुण्ठः, विष्टरश्रवाः ( = विष्टरश्रवस् ), दामोदरः, हृषीकेशः, केशवः, माधवः, स्वभूः, दैत्यारिः, पुण्डरीकाक्षः, गोविन्दः, गरुडध्वजः, पीताम्बरः, अच्युतः, शार्ङ्गी ( =शार्ङ्गिन् ), विष्व-

---

१. विपश्यी शिखी विश्वभूःककुच्छन्दश्च काञ्चनः ।काश्यपश्च, सप्तमस्तु शाक्यसिंहोऽर्कबान्धवः॥
तथा राहुलसूः सर्वार्थसिद्धो गौतमान्वयः । मायाशुद्धोदनसुतो देवदत्तग्रजश्च सः ॥
( अभि० चिन्ता० २।१४९-१५१ )

उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः ।
पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः ॥ २० ॥
देवकीनन्दनः शौरिः, श्रीपतिः पुरुषोत्तमः ।
वनमाली बलिध्वंसी, कंसारातिरधोक्षजः ॥ २१ ॥
विश्वम्भरः कैटभजिद्विधुः श्रीवत्सलाञ्छनः ।
१ 'पुराणपुरुषो यज्ञपुरुषो, नरकान्तकः (३)
जलशायी विश्वरूपो,मुकुन्दो मुरमर्दनः' (४)
२ वसुदेवोऽस्य जनकः, स एवानकदुन्दुभिः ॥ २२ ॥
३ बलभद्रः प्रलम्बघ्नो, बलदेवोऽच्युताग्रजः ।
रेवतीरमणो रामः, कामपालो हलायुधः ॥ २३ ॥
नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली ।
सङ्कर्षणः सीरपाणिः, कालिन्दीभेदनो बलः ॥ २४ ॥
४ मदनो मन्मथो मारः, प्रद्युम्नो मीनकेतनः ।
कन्दर्पो दर्पकोऽनङ्गः, कामः पञ्चशरः स्मरः ॥ २५ ॥

---

क्सेनः (+ विश्वक्सेनः), जनार्दनः, उपेन्द्रः, इन्द्रावरजः, चक्रपाणिः, चतुर्भुजः, पद्मनाभः, मधुरिपुः, वासुदेवः, त्रिविक्रमः, देवकीनन्दनः, शौरिः (+ सौरिः), श्रीपतिः, पुरुषोत्तमः, वनमाली (=वनमालिन् ), बलिध्वंसी (=बलिध्वंसिन् ), कंसारातिः, अधोक्षजः, विश्वम्भरः, कैटभजित् , विधुः, श्रीवत्सलाञ्छनः ( ३९ पु ), **कृष्ण भगवान्** के ३९ नाम हैं ॥

[ १ पुराणपुरुषः, यज्ञपुरुषः, नरकान्तकः, जलशायी ( =जलशायिन् ), विश्वरूपः, मुकुन्दः, मुरमर्दनः ( ७ पु ), **कृष्णभगवान्** के ७ नाम हैं ॥ ]

२ वसुदेवः, आनकदुन्दुभिः ( २ पु ), '**कृष्णके पिता**' के २ नाम हैं ॥

३ बलभद्रः, प्रलम्बघ्नः, बलदेवः, अच्युताग्रजः, रेवतीरमणः, रामः, कामपालः, हलायुधः, नीलाम्बरः, रौहिणेयः, तालाङ्कः, मुसली (= मुसलिन् । + मुषली=मुषलिन् ), हली (=हलिन् ), सङ्कर्षणः, सीरपाणिः, कालिन्दीभेदनः, बलः ( १७ पु ), '**बलदेव**' के १७ नाम हैं ॥

४ मदनः, मन्मथः, मारः, प्रद्युम्नः, मीनकेतनः, कन्दर्पः, दर्पकः, अनङ्गः, कामः, पञ्चशरः, स्मरः, शम्बरारिः ( + सम्बरारिः ), मनसिजः, कुसुमेषुः,

शम्बरारिर्मनसिजः, कुसुमेषुरनन्यजः ।
पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः ॥ २६ ॥
१ 'अरविन्दमशोकं च, चूतं च नवमल्लिका (५)
नीलोत्पलं च पञ्चैते, पञ्चबाणस्य सायकाः (६)
२ उन्मादनस्तापनश्च, शोषणः स्तम्भनस्तथा (७)
सम्मोहनश्च कामस्य, पञ्चबाणाः प्रकीर्तिताः' (८)
३ ब्रह्मसूर्विश्वकेतुः स्यादनिरुद्ध उषापतिः ।
४ लक्ष्मीः पद्मालया पद्मा, कमला श्रीर्हरिप्रिया ॥ २७ ॥
५ 'इन्दिरा लोकमाता मा, क्षीरोदतनया रमा (९)
भार्गवी लोकजननी, क्षीरसागरकन्यका' (१०)

---

अनन्यजः, पुष्पधन्वा (=पुष्पधन्वन्), रतिपतिः, मकरध्वजः, आत्मभूः (१९ पु), 'कामदेव' 'प्रद्युम्न' श्रीकृष्णपुत्रके १९ नाम हैं ॥

१ [ अरविन्दम्, अशोकम्, चूतम्, नवमल्लिका ( स्त्री ), नीलोत्पलम् ( शे० ४ न ), ये ५ 'कामदेवके बाण' हैं ॥ ]

२ [ उन्मादन, तापन, शोषण, स्तम्भन, सम्मोहन, ये क्रमसे पूर्वोक्त ५ 'कामदेवके बाणोंके धर्म' हैं ॥]

३ ब्रह्मसूः, विश्वकेतुः ( + ऋश्यकेतुः, ऋष्यकेतुः, झषकेतुः), अनिरुद्धः, उषापतिः (४पु), 'कामदेवके पुत्र' के ४ नाम हैं । ( पहलेवाले दो नाम कामदेवके तथा अन्तवाले दो नाम अनिरुद्धके हैं, ऐसा भी किसी का मत है ) ॥

४ लक्ष्मीः, पद्मालया, पद्मा, कमला, श्रीः, हरिप्रिया (६ स्त्री), 'लक्ष्मी' के ६ नाम हैं ॥

५ [ इन्दिरा, लोकमाता ( =लोकमातृ), मा, क्षीरोदतनया ( + क्षीराब्धि-

---

१. 'उन्मादनं शोचनं च तथा संमोहनं विदुः ।
शोषणं मारणं चैव पञ्च बाणा मनोभुवः ॥ १ ॥
मदनोन्मादनौ चैव मोहनः शोषणस्तथा ।
सन्दीपनः समाख्याताः पञ्च बाणा इमे स्मृताः ॥ २ ॥'
ईदृशः क्षी० स्वा० पाठः ॥

१ शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनः ।
कौमोदकी गदा खड्गो नन्दकः कौस्तुभो मणिः ॥ २८ ॥
२ 'चापः शार्ङ्गं मुरारेस्तु श्रीवत्सो लाञ्छनं स्मृतम् (११)
अश्वाश्च शैब्यसुग्रीवमेघपुष्पबलाहकाः (१२)
सारथिर्दारुको मन्त्री ह्युद्धवश्चानुजो गदः' (१३)
३ गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः ।
नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः ॥ २९ ॥
४ शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः ।
ईश्वरः शर्व ईशानः, शङ्करश्चन्द्रशेखरः ॥ ३० ॥
भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः ।
मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः ॥ ३१ ॥
उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ।

---

तनया···), रमा, भार्गवी, लोकजननी, क्षीरसागरकन्यका (८ स्त्री), 'लक्ष्मी' के ८ नाम हैं ॥ ]

१ पाञ्चजन्यः ( पु )—'विष्णुका शङ्ख', सुदर्शनः (पु न)—'विष्णुका चक्र', कौमोदकी ( स्त्री )—'विष्णुकी गदा', नन्दकः ( पु )—'विष्णुकी तलवार' और कौस्तुभः ( पु )—'विष्णुका मणि' है ॥

२ शार्ङ्गम् ( न )–'विष्णुका धनुष', श्रीवत्सः (पु)–'विष्णुका चिह्न', शैब्यः, सुग्रीवः, मेघपुष्पः, बलाहकः (४ पु), ४ 'विष्णुके घोड़े', दारुकः (पु)– 'विष्णुका सारथी'। उद्धवः ( पु )—'विष्णुका मन्त्री' और गदः ( पु ) 'विष्णुका छोटा भाई' है ॥ ]

३ गरुत्मान् (=गरुत्मत् ), गरुडः, तार्क्ष्यः, वैनतेयः, खगेश्वरः, नागान्तकः, विष्णुरथः, सुपर्णः, पन्नगाशनः ( ९ पु ) 'गरुड़' के ९ नाम हैं ॥

४ शम्भुः, ईशः, पशुपतिः, शिवः, शूली (= शूलिन् ), महेश्वरः, ईश्वरः, शर्वः ( + सर्वः ), ईशानः, शङ्करः, चन्द्रशेखरः, भूतेशः, खण्डपरशुः, गिरीशः, गिरिशः, मृडः, मृत्युञ्जयः, कृत्तिवासाः (=कृत्तिवासस् ), पिनाकी (=पिनाकिन् ), प्रमथाधिपः, उग्रः, कपर्दी ( =कपर्दिन् ), श्रीकण्ठः, शितिकण्ठः, कपालभृत् ,

वामदेवो महादेवो, विरूपाक्षस्त्रिलोचनः ॥ ३२ ॥
कृशानुरेताः सर्वज्ञो, धूर्जटिर्नीललोहितः ।
हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः ॥ ३३ ॥
गङ्गाधरोऽन्धकरिपुः, क्रतुध्वंसी वृषध्वजः ।
व्योमकेशो भवो भीमः, स्थाणू रुद्र उमापतिः ॥ ३४ ॥
१ 'अहिर्बुध्न्योऽष्टमूर्तिश्च, गजारिश्च महानटः' (१४)
२ कपर्दोऽस्य जटाजूटः, पिनाकोऽजगवं धनुः ।
प्रमथाः स्युः पारिषदा, ३ब्राह्मीत्याद्यास्तु मातरः ॥ ३५ ॥
४ [1]"ब्राह्मी माहेश्वरी चैव, कौमारी वैष्णवी तथा (१५)
वाराही च तथेन्द्राणी, चामुण्डा सप्त मातरः' (१६)

---

वामदेवः, महादेवः, विरूपाक्षः, त्रिलोचनः, कृशानुरेताः (=कृशानुरेतस् ), सर्वज्ञः, धूर्जटिः, नीललोहितः, हरः (+हारः), स्मरहरः, भर्गः ( + भर्ग्यः ), त्र्यम्बकः, त्रिपुरान्तकः, गङ्गाधरः, अन्धकरिपुः, क्रतुध्वंसी (=क्रतुध्वंसिन् ), वृषध्वजः, व्योमकेशः, भवः, भीमः, स्थाणुः, रुद्रः, उमापतिः ( ४८ पु ) 'शिव' के ४८ नाम हैं ॥

१ [ अहिर्बुध्न्यः, [2]अष्टमूर्तिः, गजारिः, महानटः ( ४ पु), 'शिव' के ४ नाम हैं ॥ ]

२ कपर्दः (पु) 'शिवका जटासमूह', अजगवम् ( न । +अजकवम् ), पिनाकः (पु), २ 'शिवका धनुष' और 'प्रमथाः' (पु) 'शिवके सभासद' हैं ॥

३ ब्राह्मी,······(स्त्री । आदि पदसे 'माहेश्वरी, कौमारी' इत्यादि आगे कहे हुए का संग्रह है ) 'लोकमाताएँ' हैं ॥

४ [ ब्राह्मी ( स्त्री । +ब्रह्माणी ), माहेश्वरी, कौमारी, वैष्णवी, वाराही, इन्द्राणी, चामुण्डा (७ स्त्री), ये ७ 'लोकमातायें' हैं ॥ ]

---

१. 'ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी तथा ॥
कौमारी चर्ममुण्डा च काली सङ्कर्षणीति च ॥ १ ॥' इति ॥
'ब्राह्मयाद्या मातरः स्मृताः' इति क्षी० स्वा० ॥

२. 'पृथिवी १ सलिलं २ तेजो ३ वायु ४ राकाश ५ मेव च ॥
सूर्या ६ चन्द्रमसौ ७ सोमयाजी ८ चेत्यष्ट मूर्तयः ॥१॥' इति यादवः ॥

१ विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा ।
२ 'अणिमा महिमा चैव, गरिमा लघिमा तथा (१७)
प्राप्तिः प्राकाम्यमीशित्व, वशित्वं चाष्ट सिद्धयः' (१८)
३ उमा कात्यायनी गौरी, काली हैमवतीश्वरी ॥ ३६ ॥
शिवा भवानी रुद्राणी, शर्वाणी सर्वमङ्गला ।
अपर्णा पार्वती दुर्गा, मृडानी चण्डिकाऽम्बिका ॥ ३७ ॥
४ 'आर्या दाक्षायणी चैव, गिरिजा मेनकात्मजा (१९)
५ कर्ममोटी तु चामुण्डा, ६ चर्ममुण्डा तु चर्चिका' (२०)
७ विनायको विघ्नराजद्वैमातुरगणाधिपाः ।
अप्येकदन्तहेरम्बलम्बोदरगजाननाः ॥ ३८ ॥
८ कार्तिकेयो महासेनः, शरजन्मा षडाननः ।
पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ॥ ३९ ॥
बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः ।

---

१ विभूतिः, भूतिः ( २ स्त्री ), ऐश्वर्यम् ( न ), 'ऐश्वर्य या सिद्धि' के ३ नाम हैं । ( वे आगे कहे हुए 'अणिमा' आदि भेद से ८ प्रकार के हैं ) ॥

२ [ अणिमा, महिमा, गरिमा, लघिमा, प्राप्तिः ( ५ स्त्री ), प्राकाम्यम्, ईशित्वम् , वशित्वम् ( ३ न ), ये ८ 'सिद्धियाँ' हैं ॥ ]

३ उमा, कात्यायनी, गौरी, काली ( + काला ), हैमवती, ईश्वरी ( + ईश्वरा), शिवा ( + शिवी), भवानी, रुद्राणी, शर्वाणी, सर्वमङ्गला, अपर्णा, पार्वती, दुर्गा, मृडानी, चण्डिका, अम्बिका (१७ स्त्री), 'पार्वती' के १७ नाम हैं ॥

४ [आर्या, दाक्षायणी, गिरिजा, मेनकात्मजा (४ स्त्री) 'पार्वती' के ४ नाम हैं ॥]

५ [ कर्ममोटी, चामुण्डा ( २ स्त्री ) 'चामुण्डा' के २ नाम हैं ॥ ]

६ [ चर्ममुण्डा, चर्चिका ( + चण्डिका २ स्त्री ), 'चण्डिका'[1] के २ नाम हैं ॥ ]

७ विनायकः, विघ्नराजः, द्वैमातुरः, गणाधिपः, एकदन्तः, हेरम्बः, लम्बोदरः, गजाननः ( ८ पु ), 'गणेश' के ८ नाम हैं ॥

८ कार्तिकेयः, महासेनः, शरजन्मा (=शरजन्मन् ), षडाननः, पार्वतीनन्दनः, स्कन्दः, सेनानीः, अग्निभूः, गुहः, बाहुलेयः, तारकजित् , विशाखः, शिखिवाहनः,

---

१. 'चर्ममुण्डेति चण्डिका' इति क्षीरस्वामिपाठात् ।

षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ॥ ४० ॥
१ [1]"शृङ्गी भृङ्गी रिटिस्तुण्डी, नन्दिको नन्दिकेश्वरः" (२१)
२ इन्द्रो मरुत्वान्मघवा, बिडौजाः पाकशासनः।
वृद्धश्रवाः सुनासीरः, पुरुहूतः पुरन्दरः ॥ ४१ ॥
जिष्णुर्लेखर्षभः शक्रः, शतमन्युर्दिवस्पतिः।
सुत्रामा गोत्रभिद्वज्री, वासवो वृत्रहा वृषा ॥ ४२ ॥
वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः।
जम्भभेदी हरिहयः, स्वाराण्नमुचिसूदनः ॥ ४३ ॥
सङ्क्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः।
आखण्डलः सहस्राक्ष, ऋभुक्षा३स्तस्य तु प्रिया ॥ ४४ ॥
पुलोमजा शचीन्द्राणी, ४ नगरी त्वमरावती।

षाण्मातुरः, शक्तिधरः, कुमारः, क्रौञ्चदारणः ( + क्रौञ्चदारणः। १७ पु ), 'कार्तिकेय' के १७ नाम हैं ॥

१ [ शृङ्गी ( = शृङ्गिन् ), भृङ्गी ( = भृङ्गिन् ), रिटिः, तुण्डी (=तुण्डिन्), नन्दिकः, नन्दिकेश्वरः ( ६पु ), 'नन्दी' के ६ नाम हैं ॥ ]

२ इन्द्रः, मरुत्वान् (=मरुत्वत्), मघवा (=मघवन्। वै० मघवान्), बिडौजाः (= बिडौजस्), पाकशासनः, वृद्धश्रवाः (= वृद्धश्रवस्), सुनासीरः (+शुनासीरः, शुनाशीरः), पुरुहूतः, पुरन्दरः, जिष्णुः, लेखर्षभः, शक्रः, शतमन्युः, दिवस्पतिः, सुत्रामा ( = सुत्रामन्। +सूत्रामा ), गोत्रभिद्, वज्री (=वज्रिन्), वासवः, वृत्रहा (=वृत्रहन्), वृषा (=वृषन्), वास्तोष्पतिः, सुरपतिः, बलारातिः, शचीपतिः, जम्भभेदी (=जम्भभेदिन्), हरिहयः, स्वाराट् (= स्वाराज्), नमुचिसूदनः, सङ्क्रन्दनः, दुश्च्यवनः, तुराषाट् (= तुरासाह्), मेघवाहनः, आखण्डलः, सहस्राक्षः, ऋभुक्षाः ( ऋभुक्षिन्। ३५ पु ), 'इन्द्र' के ३५ नाम हैं ॥

३ पुलोमजा, शची ( +सची ), इन्द्राणी ( ३ स्त्री ), 'इन्द्राणी' के ३ नाम हैं ॥

४ अमरावती ( स्त्री ), 'इन्द्रकी नगरी' उच्चैःश्रवाः ( = उच्चैःश्रवस्। पु ),

[1]. 'भृङ्गी भृङ्गरिटिस्तुण्डिनन्दिनौ नन्दिकेश्वरे ॥' इति क्षी० स्वा० ॥

हय उच्चैःश्रवाः सूतो मातलिर्नन्दनं वनम् ॥ ४५ ॥
स्यात् प्रासादो वैजयन्तो जयन्तः पाकशासनिः ।
१ ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः, ॥ ४६ ॥
२ ह्लादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः ।
शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ॥ ४७ ॥
३ व्योमयानं विमानोऽस्त्री४ नारदाद्याः सुरर्षयः ।
५ स्यात्सुधर्मा देवसभा, ६ पीयूषममृतं सुधा ॥ ४८ ॥
७ मन्दाकिनी वियद्गङ्गा, स्वर्णदी सुरदीर्घिका ।
८ मेरुः सुमेरुर्हेमाद्री, रत्नसानुः सुरालयः ॥ ४९ ॥

---

'इन्द्र का घोड़ा'; मातलिः (पु) 'इन्द्र का सारथि'; नन्दनम् (न) 'इन्द्र का उद्यान'; वैजयन्तः (पु). 'इन्द्रकी अटारी'; जयन्तः, पाकशासनिः (२ पु) 'इन्द्र के पुत्र' के २ नाम हैं ॥

१ ऐरावतः, अभ्रमातङ्गः, ऐरावणः, अभ्रमुवल्लभः ( ४ पु ), 'ऐरावत' अर्थात् इन्द्रके हाथीके ४ नाम हैं ॥

२ ह्लादिनी (स्त्री), वज्रम् ( पु न ), कुलिशम् , भिदुरम् (+ भिदिरम् । २ न), पविः, शतकोटिः, स्वरुः ( = स्वरु । + स्वरुः=स्वरुस्), शम्बः (+ सम्बः, शंवः ), दम्भोलिः (५ पु), अशनिः ( पु स्त्री ), 'वज्र' के १० नाम हैं ॥

३ व्योमयानम् ( न ), विमानः ( पु न ), 'पुष्पक विमान' या 'देवोंके 'विमानमात्र' के २ नाम हैं ॥

४ नारदः (पु)आदि शब्दसे 'तुम्बुरु, भरत, पर्वत, देवल······ ) 'देवर्षि' हैं ॥

५ सुधर्मा ( = सुधर्मा, सुधर्मन् ), देवसभा ( २ स्त्री), 'देवसभा' के २ नाम हैं ॥

६ पीयूषम् ( + पेयूषम् ), अमृतम् ( २ न ) सुधा ( स्त्री ), 'अमृत' के ३ नाम हैं ॥

७ मन्दाकिनी, वियद्गङ्गा, स्वर्णदी, सुरदीर्घिका ( ४ स्त्री ), 'आकाशगङ्गा' के ४ नाम हैं ॥

८ मेरुः, सुमेरुः, हेमाद्रिः, रत्नसानुः, सुरालयः ( ५ पु ), 'सुमेरु पर्वत' के ५ नाम हैं ॥

१ पञ्चैते देवतरवो, मन्दारः पारिजातकः ।
सन्तानः कल्पवृक्षश्च, पुंसि वा हरिचन्दनम् ॥ ५० ॥
२ सनत्कुमारो वैधात्रः, ३ स्वर्वैद्यावश्विनीसुतौ ।
*नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ ॥ ५१ ॥
४ स्त्रियां बहुष्वप्सरसः, स्वर्वेश्या उर्वशीमुखाः ।
५ 'घृताची मेनका रम्भा, उर्वशी च तिलोत्तमा (२२)
सुकेशी मञ्जुघोषाद्याः, कथ्यन्तेऽप्सरसो बुधैः' (२३)
६ हाहा हूहूश्चैवमाद्या, गन्धर्वास्त्रिदिवौकसाम् ॥ ५२ ॥
७ अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः ।
कृपीटयोनिर्ज्वलनो, जातवेदास्तनूनपात् ॥ ५३ ॥

---

१ मन्दारः, पारिजातकः, सन्तानः, कल्पवृक्षः (४ पु), हरिचन्दनम् (पु न), ये ५ 'देवताओं के वृक्ष' हैं ॥

२ सनत्कुमारः ( = सनात्कुमारः ), वैधात्रः ( २ पु ), 'सनकादि' के २ नाम हैं । ( 'आदि' शब्दसे 'सनक, सनन्दन, सनातन' का संग्रह है ) ॥

३ स्वर्वैद्यौ, अश्विनीसुतौ, नासत्यौ, अश्विनौ, दस्रौ, आश्विनेयौ ( ६ पु- नि० द्वि० व० ), 'अश्विनीकुमार' के ६ नाम हैं ॥

४ अप्सरसः (स्त्री, नि० ब० व० ), 'उर्वशी आदि स्वर्ग की वेश्याओं' का १ नाम है ॥

५ ( घृताची, मेनका, रम्भा, उर्वशी, तिलोत्तमा, सुकेशी, मञ्जुघोषा (७ स्त्री ), इत्यादि उन 'अप्सराओं' के विशेष नाम हैं ) ॥

६ हाहाः ( + हहाः), हूहूः ( २ पु ), इत्यादि 'देवताओं के यहां गानेवाले गन्धर्व' ( पु ) हैं । 'आदि शब्दसे 'चित्ररथ, विश्वावसु......' का संग्रह है ॥

७ अग्निः, वैश्वानरः, वह्निः, वीतिहोत्रः, धनञ्जयः, कृपीटयोनिः, ज्वलनः, जातवेदाः (जातवेदस्), तनूनपात् 'बर्हिः (=बर्हिस्, बर्हिष् । + बर्हिः — बर्हि)

---

* 'भागुरिस्त्वाह—'नासत्यदस्रौ यमजावर्कजावश्विनौ यमौ ॥'
नासत्यसहितौ दस्राविति व्याख्येयं न त्वेको नासत्योऽन्यो दस्र इति इति क्षी० स्वा० ॥

बर्हिःशुष्मा कृष्णवर्त्मा, शोचिष्केश उषर्बुधः।
आश्रयाशो बृहद्भानुः, कृशानुः पावकोऽनलः॥ ५४॥
रोहिताश्वो वायुसखः, शिखावानाशुशुक्षणिः।
हिरण्यरेता हुतभुग्दहनो हव्यवाहनः॥ ५५॥
सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः।
शुचिरप्पित्त १ मौर्वस्तु, वाडवो वडवानलः॥ ५६॥
२ वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्।
३ त्रिषु स्फुलिङ्गोऽग्निकणः, ४ सन्तापः संज्वरः समौ॥ ५७॥
५ 'उल्का स्यान्निर्गतज्वाला, ६ भूतिर्भसितभस्मनी (२४)

---

शुष्मा (=शुष्मन्। म० बर्हिःशुष्मा=बर्हिःशुष्मन्), कृष्णवर्त्मा (=कृष्णवर्त्मन्), शोचिष्केशः, उषर्बुधः, आश्रयाशः (+ आशयाशः), बृहद्भानुः, कृशानुः, पावकः, अनलः, रोहिताश्वः (+ लोहिताश्वः), वायुसखः, शिखावान् (= शिखावत्), आशुशुक्षणिः, हिरण्यरेताः (=हिरण्यरेतस्), हुतभुक् (=हुतभुज्), दहनः, हव्यवाहनः, *सप्तार्चिः (=सप्तार्चिष्। + सप्तार्चिः + सप्तार्चि), दमुनाः, (=दमुनस्। + दमूनाः=दमूनस्), शुक्रः, चित्रभानुः, विभावसुः, शुचिः (३३ पु), अप्पित्तम् (न), 'अग्नि' के ३४ नाम हैं॥

१ और्वः (+ ऊर्वः), वाडवः, वडवानलः (३ पु), 'वडवानल' के ३ नाम हैं॥

२ ज्वालः, कीलः (२ पु स्त्री), अर्चिः (= अर्चिष्, अर्चिस्। + अर्चिः = अर्चि। स्त्री न), हेतिः, शिखा (२ स्त्री), 'आगकी लहर' के ५ नाम हैं॥

३ स्फुलिङ्गः, अग्निकणः (२ त्रि), 'चिनगारी' के २ नाम हैं॥

४ सन्तापः, संज्वरः (२ पु), 'अग्नि के ताप' के २ नाम हैं॥

५ [ उल्का (स्त्री), 'निकली हुई ज्वाला' अर्थात् तारा टूटने या लुक्क का १ नाम है ]॥

६ [ भूतिः (पु स्त्री), भसितम्, भस्म (=भस्मन्। २ न), क्षारः

---

*'काली १, कराली २, मनोजवा ३, सुलोहिता ४, सुधूम्रवर्णा ५, स्फुलिङ्गिनी ६, विश्वदासा ७' इति—
'कराली सुधूमिनी श्वेता लोहिता नीललोहिता। सुवर्णा पद्मरागा च सप्त जिह्वा विभावसोः॥
वाचस्पत्युक्ता इति वा सप्तार्चिष इत्यवधेयम्॥

क्षारो रक्षा च १ दावस्तु,दवो वनहुताशनः' (२५)
२ धर्मराजः पितृपतिः, समवर्ती परेतराट्।
कृतान्तो यमुनाभ्राता, शमनो यमराड् यमः ॥ ५८ ॥
कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः,।
३ राक्षसः कौणपः क्रव्यात्क्रव्यादोऽस्रप आशरः ॥ ५९ ॥
रात्रिञ्चरो रात्रिचरः, कर्बुरो निकषात्मजः।
यातुधानः पुण्यजनो, नैर्ऋतो यातुरक्षसी ॥ ६० ॥
४ प्रचेता वरुणः पाशी, यादसांपतिरप्पतिः।
५ श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ॥ ६१ ॥
पृषदश्वो गन्धवहो, गन्धवाहानिलाशुगाः।
समीर-मारुत-मरुज्जगत्प्राण-समीरणाः, ॥ ६२ ॥
नभस्वद्वात-पवन-पवमान प्रभञ्जनाः, ।

---

(पु), रक्षा ( स्त्री ), 'राख' के ५ नाम हैं ] ॥

१ [ दावः, दवः, वनहुताशनः ( ३ पु ), 'दावाग्नि' के ३ नाम हैं ] ॥

२ धर्मराजः, पितृपतिः, समवर्ती (=समवर्तिन्), परेतराट् (—परेतराज्), कृतान्तः, यमुनाभ्राता (=यमुनाभ्रातृ), शमनः, यमराट् (=यमराज्), यमः, कालः, दण्डधरः, श्राद्धदेवः, वैवस्वतः, अन्तकः (१४ पु), 'यमराज' के १४ नाम हैं।

३ राक्षसः, कौणपः, क्रव्यात् (=क्रव्याद्), क्रव्यादः, अस्रपः ( + अश्रपः ), आशरः ( + आशिरः ), रात्रिञ्चरः, रात्रिचरः,कर्बुरः ( + कर्बरः ), निकषात्मजः, यातुधानः (+ जातुधानः), पुण्यजनः, नैर्ऋतः (१३ पु ), यातु, रक्षः ( =रक्षस् । २ न ) 'राक्षस' के १५ नाम हैं ॥

४ प्रचेताः ( = प्रचेतस्), वरुणः ( + वरणः ), पाशी ( =पाशिन् ), यादसांपतिः, अप्पतिः ( ५ पु ), 'वरुण' के ५ नाम हैं ॥

५ श्वसनः, स्पर्शनः, वायुः, मातरिश्वा ( = मातरिश्वन् ), सदागतिः, पृषदश्वः, गन्धवहः, गन्धवाहः, अनिलः, आशुगः, समीरः, मारुतः, मरुत् , जगत्प्राणः (=म० जगत् , प्राणः),समीरणः, नभस्वान् (=नभस्वत्), वातः (+ वातिः), पवनः, पवमानः, प्रभञ्जनः,( २० पु ) 'हवा' के २० नाम हैं ॥

१ 'प्रकम्पनो महावातो, २ झंझावातः सवृष्टिकः' (२६)
३ प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ॥ ६३ ॥
४ 'हृदि प्राणो गुदेऽपानः, समानो नाभिमण्डले (२७)
उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः' (२८)
शरीरस्था इमे ५ रंहस्तरसी तु रयः स्यदः ।
जवो ६ऽथ शीघ्रं त्वरितं, लघु क्षिप्रमरं द्रुतम् ॥ ६४ ॥
सत्वरं चपलं तूर्णमविलम्बितमाशु च ।
७ सततानारताश्रान्तसन्तताविरतानिशम् ॥ ६५ ॥
नित्यानवरताजस्रमप्य ८ थातिशयो भरः ।
अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ॥ ६६ ॥
तीव्रैकान्तनितान्तानि गाढबाढदृढानि च ।

---

१ [प्रकम्पनः (पु), 'आँधी' का १ नाम है] ॥

२ [झंझावातः ( पु ) 'वर्षाके सहित हवा' अर्थात् झपसी का १ नाम है ] ॥

३ प्राणः, अपानः, समानः, उदानः, व्यानः ( ५ पु ), ये ५ 'शरीरमें रहने वाले वायु' हैं ॥

४ [हृदयमें 'प्राण', गुदामें 'अपान', नाभिमण्डलमें' 'समान', कण्ठदेशमें 'उदान' और सम्पूर्ण शरीरमें 'व्यान' (५ पु) नामक वायु रहता है] ॥

५ रंहः ( = रंहस् ), तरः (=तरस् । २ न), रयः, स्यदः, जवः (३ पु), 'वेग'के ५ नाम हैं ॥

६ शीघ्रम्, त्वरितम् , लघु, क्षिप्रम्, अरम्, द्रुतम्, सत्वरम्, चपलम् , तूर्णम् , अविलम्बितम् , आशु ( ११ न ), 'शीघ्र' के ११ नाम हैं ॥

७ सततम्, अनारतम्, अश्रान्तम् , सन्ततम्, अविरतम्, अनिशम्, नित्यम्, अनवरतम् , अजस्रम् ( ९ न ) 'नित्य' के ९ नाम हैं। ( इनमेंसे 'सतत' शब्दका प्रयोग जहाँ बीच में दूसरा काम नहीं किया जाय, वहीं होता है; जैसे—यह काम सतत करता है अर्थात् निरन्तर करता है ) ॥

८ अतिशयः, भरः ( २ पु ), अतिवेलम्, भृशम्, अत्यर्थम्, अतिमात्रम्, उद्गाढम्, निर्भरम्, तीव्रम्, एकान्तम्, नितान्तम्, गाढम्, बाढम्, दृढम्

१ क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां सत्त्वगामि यत् ॥ ६७ ॥
२ कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः ।
मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥ ६८ ॥
किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।
यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः, ॥ ६९ ॥
३ अस्योद्यानं चैत्ररथं पुत्रस्तु नलकूबरः ।
कैलासः स्थानमलका पूर्विमानं तु पुष्पकम् ॥ ७० ॥
४ स्यात्किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुः ।

---

(१२ न), 'अतिशय' अर्थात् अधिकके १४ नाम हैं । ( इनमेंसे 'अतिशय' शब्दका प्रयोग जहाँ किसी काम को अनेक बार किया जाय, वहीं होता है । जैसे—अतिशय करता है अर्थात् बारम्बार करता है ) ॥

१ 'शीघ्रम्.........दृढम्' तक शब्दोंका प्रयोग द्रव्यवाचक न रहने पर नपुंसकलिङ्गमें ही होता है और द्रव्यवाचक होनेपर तीनों लिङ्गों में उनका प्रयोग होता है । जैसे पहले उदा०—'भृशं धनम्, भृशं पण्डितः, भृशं पठति, भृशं दुष्टा......' इनमें 'भृशम्' शब्द केवल न० है । दूसरा उदा०—'शीघ्रोऽश्वः, शीघ्रा लक्ष्मीः, शीघ्रं गमनम्.........' इनमें 'शीघ्रम्' शब्द त्रि० है । 'भरः, अतिशयः' इन दोनों शब्दोंका प्रयोग केवल पु० में ही होता है, अर्थात् ये विशेष्याधीन नहीं होते) ॥

२ कुबेरः, त्र्यम्बकसखः, यक्षराट् ( = यक्षराज् ), गुह्यकेश्वरः, मनुष्यधर्मा ( = मनुष्यधर्मन् ), धनदः, राजराजः, धनाधिपः, किन्नरेशः, वैश्रवणः, पौलस्त्यः, नरवाहनः, यक्षः, एकपिङ्गः, ऐलविलः ( + ऐडविलः, ऐडविडः ) श्रीदः, पुण्यजनेश्वरः ( १७ पु ) 'कुबेर' के १७ नाम हैं ॥

३ चैत्ररथम् ( न ) 'कुबेरका उद्यान', नलकूबरः ( पु ) 'कुबेरका पुत्र', कैलासः (पु) 'कुबेरका निवासस्थान', अलका (स्त्री) 'कुबेरकी नगरी', पुष्पकम् (न) 'कुबेर का विमान' है ॥

४ किन्नरः, किम्पुरुषः, तुरङ्गवदनः, मयुः ( ४ पु ), 'किन्नर' अर्थात् 'कुबेरके दूत' के ४ नाम हैं ॥

१ निधिर्ना शेवधिर्भेदाः, २ पद्मशङ्खादयो निधेः ॥ ७१ ॥
३ *'महापद्मश्च पद्मश्च, शङ्खो मकरकच्छपौ ( २९ )
मुकुन्दकुन्दनीलाश्च, खर्वश्च निधयो नव' ( ३० )
इति स्वर्गवर्गः ॥ १ ॥

## २. अथ व्योमवर्गः ॥

४ द्योदिवौ द्वे स्त्रियामभ्रं, व्योम पुष्करमम्बरम् ।
नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् ॥ १ ॥
वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ।
५ 'विहायसोऽपि नाकोऽपि, द्युरपि स्यात्तदव्ययम् ( ३१ )

---

१ निधिः, शेवधिः ( २ पु ), 'निधिसामान्य' अर्थात् खजानामात्र के २ नाम हैं ॥

२ पद्मः, शङ्खः ( २ पु )······'खजानेके भेद' हैं ॥

३ [ महापद्मः, पद्मः, शङ्खः, मकरः, कच्छपः, मुकुन्दः, कुन्दः, नीलः, खर्वः ( ९ पु ), ये ९ 'निधिविशेष' हैं ] ॥

इति स्वर्गवर्गः ॥ १ ॥

## २. अथ व्योमवर्गः ॥

४ द्यौः ( = द्यो), द्यौः (=दिव् । २ स्त्री ); अभ्रम्, व्योम ( = व्योमन् ), पुष्करम्, अम्बरम्, नभः (=नभस्), अन्तरिक्षम्, गगनम्, अनन्तम्, सुरवर्त्म ( =सुरवर्त्मन् ), खम्, वियत्, विष्णुपदम् ( १४ न ), आकाशम्, विहायः (=विहायस् । २ पु न); 'आकाश' के १६ नाम हैं ॥

५ [विहायसः, नाकः, द्युः ( अ० ), तारापथः, अन्तरिक्षम् (न), मेघाध्वा

---

* अयं श्लोकः श्रीहेमचन्द्राचार्य्यविरचिताभिधानचिन्तामणौ ( २।१०७ ) नाममालायां समुपलभ्यते ॥

'पद्मोऽस्त्रियां महापद्मः शंखो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव' ॥ १ ॥ इत्ययं व्याख्यासुधायाः पाठः ॥

तारापथोऽन्तरिक्षं च मेघाध्वा च महाबिलम् (३२)
विहायाः शकुने पुंसि, गगने पुंनपुंसकम् (३३)
इति व्योमवर्गः ॥ २ ॥

## ३. अथ दिग्वर्गः ॥

१ दिशस्तु ककुभः काष्ठा, आशाश्च हरितश्च ताः ।
२ प्राच्यवाचीप्रतीच्यस्ताः, पूर्वदक्षिणपश्चिमाः ॥ १ ॥
उत्तरा दिगुदीची स्याद्, ३ दिश्यं तु त्रिषु दिग्भवे ।
४ 'अवाग्भवमवाचीनमुदीचीनमुदग्भवम् (३४)
प्रत्यग्भवं प्रतीचीनं, प्राचीनं प्राग्भवं त्रिषु' (३५)
५ इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ॥ २ ॥

---

(=मेघाध्वन् । शे० ४ पु ), महाबिलम् ( न ), विहायः (=विहायस्, पु न । किन्तु पक्षिवाचक होनेपर यह 'विहायस्' शब्द केवल पुंल्लिङ्ग ही है ) 'आकाश' के ८ नाम हैं ॥ इति व्योमवर्गः ॥ २ ॥

## ३. अथ दिग्वर्गः ॥

१ दिक् ( =दिश् ), ककुप् ( =ककुभ् ), काष्ठा, आशा, हरित् (५ स्त्री), **'दिशाओं'** के ५ नाम हैं ॥

२ प्राची, अवाची ( + अपाची ), प्रतीची, उदीची ( ४ स्त्री ), **'पूर्व, दक्षिण, पश्चिम और उत्तर दिशा'** के क्रमशः १—१ नाम हैं ॥

३ दिश्यम् (त्रि), **'दिशामें होने वाले पदार्थ'** का १ नाम है । (जैसे = दिश्यो गजः, दिश्या करिणी, दिश्यं वस्त्रम्·················) ॥

४ [ अवाचीनम्, उदीचीनम्, प्रतीचीनम् प्राचीनम् ( ४ त्रि ), **'दक्षिण, उत्तर, पश्चिम और पूर्व दिशामें होनेवाले पदार्थ'** के क्रमशः १-१ नाम हैं]॥

५ इन्द्रः, वह्निः, पितृपतिः, नैर्ऋतः, वरुणः, मरुत्, कुबेरः, ईशः ( ८ पु ), **'पूर्व दिशा, अग्नि कोण, दक्षिण दिशा, नैर्ऋत कोण, पश्चिम दिशा, वायव्य कोण, उत्तर दिशा और ईशान कोण'** के क्रमशः १—१ स्वामी

कुबेर ईशः पतयः, पूर्वादीनां दिशां क्रमात् ।
१　'रविः शुक्रो महीसूनुः, स्वर्भानुर्भानुजो विधुः (३६)
बुधो बृहस्पतिश्चेति, दिशां चैव तथा ग्रहाः' (३७)
२　[1]ऐरावतः पुण्डरीको, वामनः कुमुदोऽञ्जनः ॥ ३ ॥
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ।
३　[2]करिण्योऽभ्रमुकपिलापिङ्गलानुपमाः क्रमात् ॥ ४ ॥
ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती ।

---

हैं । ( अर्थात् पूर्व दिशाके स्वामी इन्द्र, अग्निकोण के स्वामी अग्नि, दक्षिण दिशा के स्वामी यमराज,··············· ) ॥

१ रविः, शुक्रः, महीसूनुः ( मंगलः ), स्वर्भानुः (राहुः), भानुजः (शनिः) विधुः ( चन्द्रः ), बुधः, बृहस्पतिः ( ८ पु ) **'पूर्व दिशा, अग्नि कोण, आदि आठ दिशाओं'** के क्रमशः १—१ ग्रह हैं । ( जैसे—पूर्व दिशाका ग्रह 'सूर्य', अग्निकोणका 'शुक्र', दक्षिण दिशाका 'मङ्गल'········· ] ॥

२ ऐरावतः, पुण्डरीकः, वामनः, कुमुदः, अञ्जनः पुष्पदन्तः, सार्वभौमः, सुप्रतीकः ( ८ पु ), **'पूर्वदिशा, अग्नि कोण, दक्षिण दिशा, नैर्ऋतकोण, पश्चिम दिशा वायव्यकोण, उत्तर दिशा और ईशान कोण'** के क्रमशः १–१ दिग्गज हैं । (अर्थात् पूर्व दिशाका दिग्गज 'ऐरावत', अग्नि कोणका दिग्गज 'पुण्डरीक', नैर्ऋत्यकोणका दिग्गज 'वामन···' ) ॥

३ अभ्रमुः, कपिला, पिङ्गला, अनुपमा, ताम्रकर्णी, शुभ्रदन्ती ( + शुभदन्ती), अङ्गना ( + अञ्जना ), अञ्जनावती ( ८ स्त्री ), **'पूर्व दिशा, अग्नि कोण, दक्षिण कोण आदि आठ दिशाओंकी हथिनी' और 'ऐरावत, पुण्डरीक, वामन आदि आठ दिग्गजोंकी स्त्रियों'** के क्रमशः १–१ नाम हैं । ( अर्थात् 'पूर्व दिशाकी हथिनी 'अभ्रमु' अग्नि कोणकी हथिनी 'कपिला', दक्षिण दिशाकी

---

१. 'ऐरावतः पुण्डरीकः कुमुदोऽञ्जनवामनाः' इति भागुरिः क्रमं व्यत्यस्तवान् । माकापि- 'ऐरावतः सुप्रतीकः इति' इति क्षी० स्वा० ॥

२. 'करिण्यो···नावती' अयमंशः क्षी० स्वा० मूलपुस्तके नास्ति, किन्तु टीकायामुपलभ्यते । व्या० सु०, अम० वि० पुस्तके मूल एवास्ति । 'वामना चाजनावती' इति क्षी० स्वा० पाठः ॥

१ क्लीबाव्ययं त्वपदिशं,दिशोर्मध्ये विदिक्स्त्रियाम् ॥ ५ ॥
२ अभ्यन्तरं त्वन्तरालं, ३ चक्रवालं तु मण्डलम् ।
४ अभ्रं मेघो वारिवाहः, स्तनयित्नुर्बलाहकः ॥ ६ ॥
धाराधरो जलधरस्तडित्वान् वारिदोऽम्बुभृत् ।
घनजीमूतमुदिरजलमुग्धूमयोनयः ॥ ७ ॥
५ कादम्बिनी मेघमाला, ६ त्रिषु मेघभवेऽभ्रियम् ।
७ स्तनितं गर्जितं मेघनिर्घोषे रसितादि च ॥ ८ ॥
८ शम्पाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा,।
तडित्सौदामनी विद्युच्चञ्चला चपला अपि ॥ ९ ॥

---

हथिनी 'पिङ्गला'········। इसी तरह ऐरावतकी स्त्री 'अभ्रमु', पुण्डरीककी स्त्री 'कपिला', वामनकी स्त्री 'पिंगला'············' ॥

१ अपदिशम् ( न, अ ), विदिक् ( = विदिश् स्त्री । + प्रदिक् = प्रदिश् ), 'दिशाओंके मध्यभाग' अर्थात् 'कोण' के २ नाम हैं ॥

२ अभ्यन्तरालम्, अन्तरालम् (२ न) 'बीच' अर्थात् मध्यमभागके २ नाम हैं ॥

३ चक्रवालम् , मण्डलम् (२ न), 'घेरा,गोलाई' के २ नाम हैं ॥

४ अभ्रम् (न), मेघः, वारिवाहः, स्तनयित्नुः, बलाहकः, धाराधरः, जलधरः ( + पयोधरः ), तडित्वान् ( = तडित्वत् ), वारिदः, अम्बुभृत् , घनः, जीमूतः, मुदिरः, जलमुक् ( = जलमुच् । + पयोमुक् = पयोमुच् ), धूमयोनिः (१४ पु ) 'बादल' के १५ नाम हैं ॥

५ कादम्बिनी, मेघमाला ( २ स्त्री ), 'मेघ-समूह' के २ नाम हैं ॥

६ अभ्रियम् ( त्रि ), 'मेघमें होनेवाले पदार्थ' का १ नाम है ॥ ( जैसे· अभ्रियो धारापातः, अभ्रियं जलम् , अभ्रिया आपः,········ ) ।

७ स्तनितम्, गर्जितम्, रसितम्,············( ३ न । 'आदि शब्दसे ध्वनितम्,············ ) 'मेघके गर्जन या तड़पने' के ३ नाम हैं ॥

८ शम्पा ( + शम्बा ), शतह्रदा, ह्रादिनी, ऐरावती, क्षणप्रभा, तडित् , सौदामनी ( + सौदामिनी ), विद्युत् , चञ्चला, चपला ( १० स्त्री ) 'बिजली' के १० नाम हैं ॥

१ स्फूर्जथुर्वज्रनिर्घोषो, २ मेघज्योतिरिरम्मदः ।
३ इन्द्रायुधं शक्रधनुस्तदेव ऋजुरोहितम् ॥ १० ॥
४ वृष्टिर्वर्षं ५ तद्विघातेऽवग्राहावग्रहौ समौ ।
६ धारासम्पात आसारः ७ सीकरोऽम्बुकणाः स्मृताः ॥ ११ ॥
८ वर्षोपलस्तु करका, ९ मेघच्छन्नेऽह्नि दुर्दिनम् ।
१० अन्तर्धा व्यवधा पुंसि, त्वन्तर्धिरपवारणम् ॥ १२ ॥

---

१ स्फूर्जथुः, वज्रनिर्घोषः ( + वज्रनिष्पेषः । २ पु ), 'बिजली गिरने के समयकी आवाज' के २ नाम हैं ॥

२ मेघज्योतिः ( = मेघज्योति,—मेघज्योतिः = मेघज्योतिष् ), इरंमदः (२ पु०), 'बादलके प्रकाश' के २ नाम हैं । (यह प्रकाशप्रायः प्रातःकाल या सायंकाल बादलके लाल-पीला होनेसे होता है )

३ इन्द्रायुधम्, शक्रधनुः ( = शक्रधनुष् ), ऋजुरोहितम् ( ३ न ) 'इन्द्र धनुष' के ३ नाम हैं । ( म० पहलेवाले दो शब्द पहले अर्थ और 'रोहितम्' यह एक शब्द 'सीधा इन्द्रधनुष' इस अर्थ में है ) ॥

४ वृष्टिः ( स्त्री ), वर्षम् ( न ) 'वर्षा' के २ नाम हैं ॥

५ अवग्रहः, अवग्राहः ( २ पु ), 'वर्षाके न होने' अर्थात् 'सूखा पड़ने' के २ नाम हैं ॥

६ धारासम्पातः, आसारः ( २ पु ), 'लगातार जोरसे वर्षा होने' के २ नाम हैं ।

७ सीकरः ( पु । + शीकरः ) 'पानीके कण' अर्थात 'पानी की छोटी-छोटी बूँदों' का १ नाम है ॥

८ वर्षोपलः ( पु ), करका ( पु स्त्री ), 'बनौरी, ओला' के २ नाम हैं । ( जो पानी बादलसे भी ऊँचे स्थानमें जाकर बर्फके समान कड़ा और सफेद होकर पानीके साथ गिरता है, जिसे पत्थर पड़ना कहते हैं ॥ )

९ दुर्दिनम् ( न ), 'जब आकाशमें लगातार बादल घिरे रहें, ऐसे समय' का एक नाम है ॥

१० अन्तर्धा, व्यवधा ( २ स्त्री ), अन्तर्धिः ( पु ), अपवारणम्, अपिधा-

अपिधानतिरोधानपिधानाच्छादनानि च ।

१ हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ॥ १३ ॥
विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः ।
अब्जो जैवातृकः सोमो, ग्लौर्मृगाङ्कः कलानिधिः ॥ १४ ॥
द्विजराजः शशधरो, नक्षत्रेशः क्षपाकरः ।

२ कला तु षोडशो भागो, ३ बिम्बोऽस्त्री मण्डलं त्रिषु ॥ १५ ॥

४ भित्तं शकलखण्डे वा, पुंस्यर्धोऽर्धं समेंऽशके ।

५ चन्द्रिका कौमुदी ज्योत्स्ना, ६ प्रसादस्तु प्रसन्नता ॥ १६ ॥

७ कलङ्काङ्कौ लाञ्छनं च, चिह्नं लक्ष्म च लक्षणम् ।

---

नम्, तिरोधानम्, पिधानम्, आच्छादनम् ( ५ न ), 'ढाँकने' अर्थात् 'कपड़े आदिसे छिपाने' के ८ नाम हैं ॥

१ हिमांशुः, चन्द्रमाः ( = चन्द्रमस् ), चन्द्रः, इन्दुः कुमुदबान्धवः, विधुः, सुधांशुः, शुभ्रांशुः,ओषधीशः, निशापतिः, अब्जः, जैवातृकः, सोमः ( —सोमा, =सोमन् ), ग्लौः,मृगाङ्कः ( + शशाङ्कः ), कलानिधिः, द्विजराजः, शशधरः, नक्षत्रेशः, क्षपाकरः ( + निशाकरः । २० पु० ), 'चन्द्रमा' के २० नाम हैं ॥

२ कला (स्त्री) 'पूर्ण चन्द्रमाके सोलहवें हिस्से' का १ नाम है । ( चन्द्रमाकी *सोलह कलायें हैं, अतः सोलहवें भागको एक कला कहते हैं) ॥

३ बिम्बः ( पु न ), मण्डलम् ( त्रि ), 'सूर्य या चन्द्रमाके बिम्ब' के २ नाम हैं ॥

४ भित्तम् ( न ), शकलम्, खण्डम् (२ पु न), अर्धः ( पु ) 'खण्ड, टुकड़ा' के ४ नाम हैं; किन्तु 'बराबर का हिस्सा' इस अर्थ में 'अर्ध' शब्द नित्य नपुंसक है ॥

५ चन्द्रिका, कौमुदी, ज्योत्स्ना ( ३ स्त्री ), 'चाँदनी' के ३ नाम हैं ॥

६ प्रसादः ( पु ), प्रसन्नता ( स्त्री ), 'प्रसन्नता' के २ नाम हैं ॥

७ कलङ्कः, अङ्कः ( २ पु ), लाञ्छनम्, चिह्नम्, लक्ष्म ( =लक्ष्मन् ),

---

* 'अमृता मानदा पूषा पुष्टिस्तुष्टी रतिर्धृतिः ।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ॥ १ ॥
पूषणा चाथ पूर्णा स्युः कलाश्चन्द्रस्य षोडश ।' इति ॥

१ सुषमा परमा शोभा, २ शोभा कान्तिर्द्युतिश्छविः ॥ १७ ॥
३ अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ।
प्रालेयं मिहिका चाथ ४ हिमानी हिमसंहतिः ॥ १८ ॥
५ शीतं गुणे ६ तद्वदर्थाः सुषीमः शिशिरो जडः ।
तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः ॥ १९ ॥
७ ध्रुव औत्तानपादिः स्यात् ८ अगस्त्यः कुम्भसम्भवः ।
मैत्रावरुणिर ९ स्यैव, लोपामुद्रा सधर्मिणी ॥ २० ॥

---

लक्षणम् ( + लक्ष्मणम् ४ न ) 'चिह्न' अर्थात् निशान के ६ नाम हैं ॥

१ सुषमा ( स्त्री ), 'अधिक शोभा' का १ नाम है ॥

२ शोभा ( म० अभिख्या ), कान्तिः, द्युतिः, छविः ( ४ स्त्री ) 'शोभा' के ४ नाम हैं ॥

३ अवश्यायः, नीहारः, तुषारः (३ पु ), तुहिनम्, हिमम्, प्रालेयम्, ( ३ न ), मिहिका ( स्त्री । + महिका ), 'पाला पड़ने' अर्थात् 'ओस, हिम' के ७ नाम हैं ॥

४ हिमानी, हिमसंहतिः ( २ स्त्री ) 'बहुत पाला पड़ने' के २ नाम हैं ॥

५ शीतम् ( न ) 'यह शब्द 'गुणवाचक' है, अर्थात् शीतलता के अर्थमें नपुंसकलिंग में ही प्रयुक्त होता है' ॥

६ सुषीमः ( + सुषिमः, सुशीमः ), शिशिरः, जडः, तुषारः, शीतलः, शीतः, हिमः ( ७ त्रि), 'ठण्ढा गुणवाले द्रव्य' अर्थात् 'ठण्ढी हवा पानी' इत्यादिके ७ नाम हैं । 'तुषार, हिम, शीत इन तीन शब्दोंके निरूढ लक्षणासे द्रव्यादि अर्थात् हवा, पानी इत्यादि भी अर्थ हैं, अतः इन शब्दोंको दोनों जगह ( गुण और गुणीके पर्याय में) कहा गया है' ॥

७ ध्रुवः, औत्तानपादिः (२ पु) 'उत्तानपाद' के पुत्र अर्थात् 'मनुके पौत्र ध्रुव' के २ नाम हैं ॥

८ अगस्त्यः ( + अगस्तिः ), कुम्भसम्भवः ( + कुम्भजः ), मैत्रावरुणिः ( + मैत्रावरुणः । ३ पु ), 'अगस्त्य मुनि' के ३ नाम हैं ॥

९ लोपामुद्रा ( स्त्री ), 'अगस्त्य मुनिकी स्त्री' का १ नाम है ॥

१ नक्षत्रमृक्षं भं तारा, तारकाऽप्युडु वा स्त्रियाम् ।
२ दाक्षायण्योऽश्विनीत्यादितारा ३ अश्वयुगश्विनी ॥ २१ ॥
४ राधा विशाखा ५ पुष्ये तु, सिध्यतिष्यौ ६ श्रविष्ठया ।
समा धनिष्ठा ७ स्युः प्रोष्ठपदा भाद्रपदाः स्त्रियः ॥ २२ ॥
८ मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी ।

---

१ नक्षत्रम्, ऋक्षम्, भम् ( ३ न ), तारा, तारका ( २ स्त्री ), उडुः ( स्त्री न ), 'नक्षत्र' के ६ नाम हैं ॥

२ दाक्षायण्यः ( स्त्री नि० ब० व० ) 'अश्विनी, भरणी……[1] सत्ताइस नक्षत्रों' का १ नाम है ॥

३ अश्वयुक् ( = अश्वयुज् ), अश्विनी (२ स्त्री), 'अश्विनी' के २ नाम हैं ॥

४ राधा, विशाखा ( २ स्त्री ) 'विशाखा नक्षत्र' के २ नाम हैं ॥

५ पुष्यः, सिध्यः, तिष्य; ( ३ पु ), "पुष्य नक्षत्र' के ३ नाम हैं ॥

६ श्रविष्ठा, धनिष्ठा ( २ स्त्री ), 'धनिष्ठा नक्षत्र' के २ नाम हैं ॥

७ प्रोष्ठपदाः ( + प्रौष्ठपदाः ), भाद्रपदाः ( २ पु स्त्री, नि० ब० व० ), पूर्वाभाद्रपदा नक्षत्र' के दो नाम हैं ॥

८ मृगशीर्षम्, मृगशिरः ( = मृगशिरस् । २ न ), आग्रहायणी ( स्त्री ),

---

१. अश्विनी भरणी चैव कृत्तिका रोहिणी मृगः ।
आर्द्रा-पुनर्वसू पुष्य आश्लेषा च ततो मघा ॥ १ ॥
पूर्वाफल्गुनिका ज्ञेया तत उत्तरफल्गुनी ।
हस्तश्चित्रा ततः स्वाती विशाखा मैत्रभं ततः ॥ २ ॥
ज्येष्ठा मूलं ततः पूर्वोत्तराषाढेऽभिजित्ततः ।
श्रवणश्च धनिष्ठा च ततश्च शततारकाः ॥ ३ ॥
पूर्वोत्तराभाद्रपदे रेवती तदनन्तरम् ।
अष्टाविंशतिराख्याताास्तारका मुनिसत्तमैः' ॥ ४ ॥ इति ।

तत्राभिजिन्मानमाह—
'अभिजिद्भोगमिदं वै वैश्वदेवान्त्यपादमखिलं च तत् ।
आद्याश्चतस्रो नाड्योऽथ हरिभस्यैतस्य रोहिणीविद्धम् ॥ १ ॥' इति ।

अश्विन्यादिवत्राभिजितः स्वतन्त्रमानमतः सप्तविंशतिरेव नक्षत्राणि मुख्यानीत्यतस्तदेवोक्तमित्यवधेयम् ।

१ इल्वलास्तच्छिरोदेशे,तारका निवसन्ति याः ॥ २३ ॥
२ बृहस्पतिः सुराचार्यो,गीष्पतिर्धिषणो गुरुः ।
जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः,॥ २४ ॥
३ शुक्रो दैत्यगुरुः काव्य, उशना भार्गवः कविः ।
४ अङ्गारकः कुजो भौमो,लोहिताङ्गो महीसुतः ॥ २५ ॥
५ रौहिणेयो बुधः सौम्यः,६ समौ सौरिशनैश्चरौ ।
७ तमस्तु राहुः स्वर्भानुः,सैंहिकेयो विधुन्तुदः ॥ २६ ॥
८ सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः ।

---

'मृगशिरा नक्षत्र' के ३ नाम हैं ॥

१ इल्वलाः ( स्त्री, नि० ब० व० । 'इल्वकाः' क्षी० स्वा० ), 'मृगशिरा नक्षत्रके शिरोभागमें उदय होनेवाली पाँच ताराओं' का १ नाम है ॥

२ बृहस्पतिः ( + बृहतां पतिः ), सुराचार्यः गीष्पतिः ( वै० गीर्पतिः ), धिषणः गुरुः, जीवः, आङ्गिरसः,वाचस्पतिः ( + वाक्पतिः, वाचां पतिः),चित्रशिखण्डिजः (९ पु), 'बृहस्पति' के ९ नाम हैं ) ॥ ( ये देवताओंके गुरु हैं ) ॥

३ शुक्रः, दैत्यगुरुः, काव्यः, उशनाः (=उशनस् ), भार्गवः, कविः ( ६ पु), 'शुक्राचार्य्य' के ६ नाम हैं ( ये दैत्योंके गुरु हैं ) ॥

४ अङ्गारकः, कुजः, भौमः, लोहिताङ्गः, महीसुतः ( ५ पु । इसी तरह 'धरणीसुतः, भूमिसुतः……' ), 'मङ्गलग्रह' के ५ नाम हैं ॥

५ रौहिणेयः, बुधः, सौम्यः (३ पु), 'बुध' के ३ नाम हैं ॥

६ सौरिः ( + शौरिः, सूरः ), शनैश्चरः ( + शनिः, पङ्गुः, मन्दः…। २ पु), 'शनि' के दो नाम हैं ॥

७ तमः ( + तमस् , न + तमः = तम, पु ), राहुः, स्वर्भानुः, सैंहिकेयः, विधुन्तुदः ( ४ पु ) , 'राहु' के ५ नाम हैं ॥

८ चित्रशिखण्डिनः ( = चित्रशिखण्डिन्, पु, नि० ब० व० ), 'सप्तर्षियों' का एक नाम है । ( उनके मरीचि १, अङ्गिरा २, अत्रि ३, पुलस्त्य ४, पुलह ५, क्रतु ६ और वसिष्ठ ७ ये नाम हैं, इन्हींको [1]'चित्रशिखण्डी' कहते हैं ) ॥

---

१. मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ॥
वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः ॥ १ ॥' इति ॥

१ राशीनामुदयो लग्नं,ते तु मेषवृषादयः ॥ २७ ॥
२ सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः,।
भास्कराहस्करब्रध्नप्रभाकरविभाकराः ॥ २८ ॥
भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः ।,
विकर्तनार्कमार्तण्डमिहिरारुणपूषणः,॥ २९ ॥
द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ।
विभावसुर्ग्रहपतिस्त्विषाम्पतिरहर्पतिः ॥ ३० ॥
भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ।
३ 'पद्माक्षस्तेजसांराशिश्छायानाथस्तमिस्रहा (३८)
कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः (३९)
प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः (४०)

---

१ लग्नम् ( न ), 'राशि' का १ नाम है। 'मेष १, वृष २, मिथुन ३, कर्क ४, सिंह ५, कन्या ६, तुला ७, वृश्चिक ८, धनुः ९, मकर १०, कुम्भ ११, और १२ मीन' ये [1]बारह राशियाँ होती हैं ॥

२ सूरः, सूर्यः, अर्यमा ( = अर्यमन् ), आदित्यः, द्वादशात्मा ( = द्वादशात्मन् ), दिवाकरः, भास्करः, अहस्करः, ब्रध्नः, प्रभाकरः, विभाकरः, भास्वान् ( = भास्वत् ), विवस्वान् ( = विवस्वत् ), सप्ताश्वः हरिदश्वः, उष्णरश्मिः, विकर्तनः, अर्कः, मार्तण्डः ( = मार्ताण्डः), मिहिरः ( = मिहरः,महिरः) अरुणः, पूषा ( = पूषन् ), द्युमणिः ( = अम्बरमणिः, गगनमणिः,······ ), तरणिः, मित्रः, चित्रभानुः, विरोचनः, विभावसुः, ग्रहपतिः, त्विषाम्पतिः, अहर्पतिः (वै०-अहःपतिः, अह⌣पतिः ), भानुः, हंसः, सहस्रांशुः ( = चण्डांशुः), तपनः ( = तापनः), सविता ( = सवितृ, ), रविः ( ३७ पु ) 'सूर्य' के ३७ नाम हैं ॥

[ पद्माक्षः, तेजसांराशिः, छायानाथः, तमिस्रहा (=तमिस्रहन् ), कर्मसाक्षी ( = कर्मसाक्षिन् ), जगच्चक्षुः (=जगच्चक्षुष् ), लोकबन्धुः, त्रयीतनुः, प्रद्योतनः, दिनमणिः, खद्योतः, लोकबान्धवः, इनः, भगः, धामनिधिः, अंशुमाली

---

१. 'मेषो वृषोऽथ मिथुनं कर्कटः सिंहकन्यके ॥
तुला च वृश्चिको धन्वी मकरः कुम्भमीनकौ ॥ १ ॥' इति ॥

इनो भगो धामनिधिश्चांशुमाल्यब्जिनीपतिः' ( ४१ )
१ माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्विकाः ॥ ३१ ॥
२ सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः ।
३ परिवेषस्तु परिधिरुपसूर्यकमण्डले ॥ ३२ ॥
४ किरणोऽस्रमयूखांशुगभस्तिघृणिधृष्णयः* ।
भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ॥ ३३ ॥
५ स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ।

---

( = अंशुमालिन् ), अब्जिनीपतिः ( + पद्मिनीपतिः १७ पु ), 'सूर्य' के १७ नाम हैं ] ॥

१ माठरः, पिङ्गलः, दण्डः ( ३ पु ), † 'सूर्यके पार्श्ववर्तियों अर्थात् 'सूर्यके पासमें रहनेवालों' के ३ नाम हैं ।

२ सूरसूतः, अरुणः, अनूरुः, काश्यपिः, गरुडाग्रजः ( ५ पु ), 'सूर्यके सारथि' के ५ नाम हैं ॥

३ परिवेषः ( + परिवेशः ), परिधिः ( २ पु ), उपसूर्यकम्, मण्डलम् (२ न), 'मण्डल' के ४ नाम हैं ( 'सूर्य और चन्द्रमाके चारों तरफ दिखलाई पड़नेवाले तेजोविशेषको 'मण्डल' कहते हैं' ) ॥

४ किरणः, उस्रः, मयूखः, अंशुः, गभस्तिः, घृणिः ( + घृष्णिः ), घृष्णिः ( + वृष्णिः, पृश्निः, रश्मिः ), भानुः, करः ( ९ पु ), मरीचिः ( पु स्त्री ), दीधितिः ( स्त्री ), 'किरण' के ११ नाम हैं ॥

५ प्रभा, रुक् ( = रुच् ), रुचिः, त्विट् ( = त्विष् ), भा, भाः ( = भास् ),

---

* '......घृणिवृष्णयः' '......घृणिपृश्नयः, '......घृणिरश्मयः' इति पाठान्तराणि ।

† 'इन्द्रादयो ह्यष्टादश नामान्तरेणार्कपरिचारकाः, यत्सौर(तन्त्र)म्—

'तत्र शक्रो वामपार्श्वे दण्डाख्यो दण्डनायकः ॥
वह्निस्तु दक्षिणे पार्श्वे पिङ्गलो वामनश्च सः ॥ १ ॥
यमोऽपि दक्षिणे पार्श्वे भवेन्माठरसंज्ञया' ॥ इति ।

एवमन्ये याज्ञाद्याः गुहहरराजखरादयः । तेषु प्राधान्यात्त्रय एवो[illegible] ई० / क्षी० स्वा० ॥ क्वचित् 'वामनश्च सः' इत्यस्य स्थाने 'व्यामलश्च सः' इति, 'याज्ञाद्याः' इत्यत्र 'अन्ये पाठाद्याः' इति च पाठान्तरम् ॥

रोचिः शोचिरुभे क्लीबे, १ प्रकाशो द्योत आतपः ॥ ३४ ॥
२ कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति ।
३ तिग्मं तीक्ष्णं खरं तद्वत् ४मृगतृष्णा मरीचिका ॥ ३५ ॥
इति दिग्वर्गः ॥ ३ ॥

## ४. अथ कालवर्गः ॥

५ कालो दिष्टोऽप्यनेहाऽपि समयोऽप्यथ पक्षतिः ।

---

छविः, द्युतिः, दीप्तिः ( ९ स्त्री ), रोचिः ( = रोचिष् ), शोचिः ( = शोचिष् । २ न ), 'प्रभा' के ११ नाम हैं ॥

१ प्रकाशः, द्योतः, आतपः ( ३ पु ), 'धूप' अर्थात् 'घाम' के ३ नाम हैं । ('दीप्ति, आतप आदि यद्यपि असाधारण धर्म हैं' तथापि कविलोग इनका प्रयोग सामान्यरूपसे करते हैं, जैसे—'मुखदीप्ति, चन्द्रातपः·········' ) ॥

२ कोष्णम् , कवोष्णम् , मन्दोष्णम्, कदुष्णम् ( ४ न ), 'थोड़ा गर्म' के ४ नाम हैं । ( ये शब्द धर्मिवाचक होनेपर त्रि० हैं, जैसे—'कोष्णं जलम् , कोष्णः प्रस्तरः, कोष्णा शिला,·········' इन उदाहरणोंमें 'जल, प्रस्तर और शिला' शब्द के क्रमशः नपुंसक, पुँल्लिङ्ग और स्त्रीलिङ्ग होनेसे 'कोष्ण' शब्द भी क्रमशः नपुंसक, पुंल्लिंग और स्त्रीलिङ्गमें प्रयुक्त हुआ है ) ॥

३ तिग्मम् , तीक्ष्णम् , खरम् ( ३ न ), 'अधिक गर्म' के ३ नाम हैं ॥

४ मृगतृष्णा, मरीचिका ( २ स्त्री ), 'मृगतृष्णा' के २ नाम हैं । (गर्मीके दिनोंमें रेतीली जमीनपर सूर्यका ताप लगनेसे जलका जो आभास होता है उसे 'मृगतृष्णा' कहते हैं ) ॥

इति दिग्वर्गः ॥ ३ ॥

## ४. अथ कालवर्गः ॥

५ कालः, दिष्टः, अनेहा ( + अनेहस् ), समयः ( ४ पु ) 'समय' के ४ नाम हैं ॥

१ पक्षतिः (+ पक्षती), प्रतिपत् ( = प्रतिपद् । २ स्त्री) 'परिवा तिथि' के २ नाम हैं ॥

प्रतिपद् द्वे इमे स्त्रीत्वे १ तदाद्यास्तिथयो द्वयोः ॥ १ ॥
२ घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ ।
३ प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि ॥ २ ॥
प्रभातं च ४ दिनान्ते तु सायं सन्ध्या पितृप्रसूः ।
५ प्राह्णापराह्णमध्याह्नास्त्रिसन्ध्यमथ शर्वरी ॥ ३ ॥
निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ।

---

तिथिः ( पु स्त्री ), 'प्रतिपत् , द्वितीया आदि तिथियों' का १ नाम है । ('वे प्रतिपत् १, द्वितीया२, तृतीया३, चतुर्थी४, पञ्चमी५, षष्ठी६, सप्तमी७, अष्टमी ८, नवमी९, दशमी१०, एकादशी११, द्वादशी१२, त्रयोदशी १३, चतुर्दशी१४, और शुक्लपक्ष में पूर्णिमा तथा कृष्णपक्ष में अमावास्या१५, पन्द्रह† तिथियाँ होती हैं' ) ॥

२ घस्रः (पु), दिनम् , अहः (=अहन् । २ न), दिवसः, वासरः ( + वारः । २ पु न) 'दिन' के ५ नाम हैं ॥

३ प्रत्यूषः (+ प्रत्यूषस् , पु न), अहर्मुखम्, कल्यम् (+ काल्यम् ), उषः (= उषस् । + उषा, अ० ), प्रत्युषः ( = प्रत्युषस् ), प्रभातम् ( ५ न ), 'प्रातःकाल' के ६ नाम हैं ॥

४ दिनान्तः ( पु ), सायम् ( अ०, न । + सायः[] पु ), सन्ध्या (+ सन्धा), पितृप्रसूः ( २ स्त्री ), 'सायङ्काल' के ४ नाम हैं ॥

५ त्रिसन्ध्यम् ( न । वै० त्रिसन्ध्यी, स्त्री ), 'प्रातःकाल, मध्याह्नकाल और सायङ्काल; इन तीनों समयके समूह' का १ नाम है ॥

६ शर्वरी (+ शार्वरी), निशा (+ निट् = निश्), निशीथिनी, रात्रिः

---

* 'व्युष्टं विभातं द्वे क्लीबे पुंसि गोसर्गं इष्यते' इत्यधिकः क्षेपकांशः क्वचित्समुपलभ्यते ।

† 'प्रतिपच्च द्वितीया च तृतीया च ततः परम् ।
चतुर्थी पञ्चमी षष्ठी सप्तमी चाष्टमी ततः ॥ १ ॥
नवमी दशमी चैवैकादशी द्वादशी तथा ।
त्रयोदशी ततो ज्ञेया पुनर्ज्ञेया चतुर्दशी ॥ २ ॥
शुक्ले पञ्चदशी सद्भिः पूर्णिमा समुदीर्यते ।
कृष्णपक्षे तु विबुधैरमावास्या प्रकीर्तिता ॥ ३ ॥ इति ॥

[] तथा च श्रीहर्षः—'मावरादीपं......साव धूर्तः' इति नैषध प० २२।५२ ।

विभावरीतमस्विन्यौ रजनी यामिनी तमी ॥ ४ ॥
१ तमिस्रा तामसी रात्रि२र्ज्यौत्स्नी चन्द्रिकयाऽन्विता ।
३ आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी ॥ ५ ॥
४ गणरात्रं निशा बह्वयः ५ प्रदोषो रजनीमुखम् ।
६ अर्धरात्रनिशीथौ द्वौ ७ द्वौ यामप्रहरौ समौ ॥ ६ ॥
८ स पर्वसन्धिः प्रतिपत्पञ्चदश्योर्यदन्तरम् ।

---

( + रात्री ), त्रियामा, क्षणदा, क्षपा, विभावरी, तमस्विनी, रजनी( + रजनिः), यामिनी, तमी ( + तमिः, तमा । १२ स्त्री ), 'रात' के १२ नाम हैं ॥

१ तमिस्रा ( स्त्री ) 'अंधेरी रात' का १ नाम है ॥

२ ज्यौत्स्नी ( स्त्री । + ज्योत्स्ना, ज्योत्स्नी ), 'उजेली रात' का १ नाम है ॥

३ *पक्षिणी (स्त्री), 'वर्त्तमान और आगेके दिनसे युक्त रात' का १ नाम है । तुल्यन्यायसे वर्त्तमान रात्रि और दूसरी रात्रिके सहित दूसरे दिन का भी यह नाम है ॥

४ गणरात्रम् ( न ), 'रात्रियोंके समूह' का १ नाम है ॥

५ प्रदोषः ( पु ), रजनीमुखम् ( न ), 'रातके पहले हिस्से' के २ नाम हैं ॥

६ अर्धरात्रः, निशीथः ( पु २ ), 'आधीरात' के २ नाम हैं ॥

७ यामः, प्रहरः ( २ पु० ), 'प्रहर' के २ नाम हैं । ( दिन और रातके आठवें हिस्से अर्थात् तीन घण्टेका १ 'प्रहर' होता है' ) ॥

८ पर्व ( =पर्वन् , न । म०, 'पर्व = पर्वन् , सन्धिः, ये दो नाम या 'पर्व-सन्धिः' यह एक नाम) 'प्रतिपद् और पूर्णिमा या अमावास्याके मध्यभाग' का १ नाम है ॥

---

* 'पक्षिणी' पक्षतुल्याभ्यामहोभ्यां वेष्टिता निशा ॥' इति ॥
'पक्षिणी' 'पूर्णिमायां स्याद्विहङ्ग्यां शाकभेदिनि ।
आगामिवर्तमानाहर्युक्ताभ्यामपि स्त्रियाम् ॥ १ ॥
इति मेदिनीकोशाच्च ॥

१ पक्षान्तौ पञ्चदश्यौ द्वे २ पौर्णमासी तु पूर्णिमा ॥ ७ ॥
३ कलाहीने सानुमतिः ४ पूर्णे राका निशाकरे ।
५ अमावास्या त्वमावस्या दर्शः सूर्येन्दुसङ्गमः ॥ ८ ॥
६ सा दृष्टेन्दुः सिनीवाली ७ सा नष्टेन्दुकला कुहूः ।
८ उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च ॥ ९ ॥

---

१ पक्षान्तः ( पु ), पञ्चदशी ( स्त्री ), **'पूर्णिमा या अमावास्या तिथि'** के २ नाम हैं ॥

२ पौर्णमासी, पूर्णिमा ( २ स्त्री ), 'पूर्णिमा' अर्थात् 'शुक्लपक्षकी अन्तिम तिथि' के २ नाम हैं ॥

३ अनुमतिः ( स्त्री ) **'जिसमें चन्द्रमा की कला कुछ क्षीण हो उस पूर्णिमा'** का अर्थात् 'प्रतिपद्युक्त पूर्णिमा' का १ नाम है ॥

४ राका ( स्त्री ), **'जिसमें चन्द्रमाकी कला परिपूर्ण हो, उस पूर्णिमा'** का अर्थात् 'शुद्ध पूर्णिमा' का १ नाम है ॥

५ अमावास्या, अमावस्या ( २ स्त्री । + अमावसी, अमावासी, अमामासी, अमामसी, अमा ), * दर्शः, सूर्येन्दुसङ्गमः ( २ पु ), **'अमावास्या'** अर्थात् 'कृष्णपक्षकी अन्तिम तिथि' के ४ नाम हैं ॥

६ † सिनीवाली (स्त्री), **'जिसमें चन्द्रमाकी कला पूर्णतया क्षीण नहीं हुई हो, उस अमावास्या'** का अर्थात् 'चतुर्दशीयुक्त अमावास्या' का १ नाम है ॥

७ [] कुहूः ( स्त्री । + कुहुः ), **'जिसमें चन्द्रमाकी कलापूर्णतया क्षीण हो गई हो, उस अमावास्या'** अर्थात् 'शुद्ध अमावस्या' का १ नाम है ॥

८ उपरागः, ग्रहः ( २ पु ), **'सूर्यग्रहण या चन्द्रग्रहण'** के २ नाम हैं ॥

---

* † [] 'या पूर्वामावास्या सिनीवाली योत्तरा सा कुहूः' इति श्रुतिः । अयमभिप्रायः— चतुर्दश्याश्चरमप्रहरोऽमावस्याया अष्टौ प्रहराश्चेति नवप्रहरात्मकश्चन्द्रस्य क्षयसमयः शास्त्रसम्मतः । तत्र प्रथमप्रहरद्वये चन्द्रस्य सूक्ष्मत्वम्, अन्तिमप्रहरद्वये कृत्स्नक्षयः । अतोऽमावास्यायाः प्रथमप्रहरः **'सिनीवाली'** संज्ञकः, अन्तिमप्रहरद्वयं **'कुहू'** नामकम्, मध्यमप्रहरपञ्चकं **'दर्श'** नामकमित्यवधेयम् ॥

१ सोपप्लवोपरक्तौ द्वा२वग्न्युत्पात उपाहितः।
३ एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ॥ १० ॥
४ अष्टादश निमेषास्तु काष्ठा५स्त्रिंशत्तु ताः कला।
६ तास्तु त्रिंशत्क्षण७स्ते तु मुहूर्तो द्वादशास्त्रियाम् ॥ ११ ॥
८ ते तु त्रिंशदहोरात्रः ९ पक्षस्ते दश पञ्च च।

---

१ सोपप्लवः, उपरक्तः (२ पु), 'ग्रहण लगनेपर राहुसे ग्रस्त' ( कुछ कटे हुए ) सूर्य या चन्द्रमा के २ नाम हैं ॥

१ अग्न्युत्पातः, उपाहितः ( २ पु ), 'आकाशमें अग्नि-विकार, तारा टूटना, धूमकेतु नामकी ताराका उदय होना और उसके उपद्रव, सूर्य-ग्रहणादिमें आग्नेयमण्डलसे उत्पन्न तेजोविशेष' इनके २ नाम हैं ॥

३ पुष्पवन्तौ ( = पुष्पवत् , नि० द्वि० । + पुष्पदन्तौ। म० पुष्पवन्तौ = पुष्पवन्तः ) 'सूर्य और चन्द्रमा इन दोनों का १ नाम है ॥

४ निमेषः (पु), 'निमेष' का १ नाम है। आँखके पलक गिरनेमें जितना समय लगे उसे 'निमेष' कहते हैं )। काष्ठा ( स्त्री ), 'अट्ठारह निमेषके बराबर समय' का 'काष्ठा' यह १ नाम है ॥

५ कला ( स्त्री ), 'तीस काष्ठाके बराबर समय' का १ नाम है ॥

६ *क्षणः ( पु ) 'तीस कलाके बराबर समय' का १ नाम है ॥

७ मुहूर्त्तः ( पु न ) 'बारह क्षण' अर्थात् 'दो घड़ी' के बराबर समय का १ नाम है ॥

८ अहोरात्रः ( पु ), 'दिन-रात' अर्थात् 'तीस मुहूर्त्त' या साठ घड़ी का १ नाम है ॥

९ पक्षः ( पु ), 'पन्द्रह दिन-रात या पक्ष' का १ नाम है ॥

---

* 'यावता समयेन चलितः परमाणुः पूर्वदेशं जह्यादुत्तरदेशमुपसंपद्येत स कालः 'क्षणः' इति पातञ्जलभाष्यम्। तस्य च क्षणस्यातीन्द्रियत्वम्। निमेषस्य चतुर्थो भागः 'क्षणः' इति टीकाकृतः' इति वै० सि० मञ्जूषायां शब्दबुद्ध्यादीनां क्षणिकत्वनिरूपणावसरे कुञ्जिकायामुक्तः क्षणस्त्वतीन्द्रियोऽन्य एवेत्यवधेयम ॥

१ पक्षौ पूर्वापरौ शुक्लकृष्णौ २ मासस्तु तावुभौ ॥ १२ ॥
३ द्वौ द्वौ माघादिमासौ स्यादृतु४स्तैरयनं त्रिभिः ।
५ अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ॥ १३ ॥
६ समरात्रिन्दिवे काले विषुवद्विषुवं च तत् ।

---

१ शुक्लः, कृष्णः ( २ पु ), ये 'पक्षके दो भेद' हैं । ( उसमें उजियाले पक्षको 'शुक्ल' और अँधियारे पक्षको 'कृष्ण' कहते हैं ) ॥

२ मासः ( पु ), दो पक्ष, महीना' का १ नाम है । ( 'मार्गशीर्ष १, पौष २, माघ ३, फाल्गुन ४, चैत्र ५, वैशाख ६, ज्येष्ठ ७, आषाढ ८, श्रावण ९, भाद्र १०, आश्विन ११ और कार्त्तिक १२ ये बारह महीने होते हैं' ) ॥

३ ऋतुः ( पु ), 'ऋतु' का १ नाम हैं । मार्गशीर्ष अर्थात् अगहनसे दो-दो महीनोंके 'हेमन्त' आदि एक-एक *ऋतु होते हैं, इस प्रकार एक वर्षमें ६ ऋतु होते हैं । ( 'हेमन्त १, शिशिर २, वसन्त ३, ग्रीष्म ४, वर्षा ५ और शरत् ६ ये ६ ऋतु हैं, मार्गशीर्ष (अगहन) और पौषमें 'हेमन्त' १, माघ और फाल्गुनमें 'शिशिर' २, चैत और वैशाखमें 'वसन्त' ३, ज्येष्ठ और आषाढमें 'ग्रीष्म' ४, श्रावण और भाद्रमें 'वर्षा' ५ तथा आश्विन और कार्तिक में 'शरत्' ६ ऋतु होते हैं' ) ॥

४ अयनम् ( न ), 'अयन' का १ नाम है । यह ३ ऋतु या ६ मासका होता है ।

५ सूर्यके गतिभेदसे यह 'अयन' दो प्रकारका होता है, उसमें जब सूर्यकी गति कुछ उत्तरकी तरफ होती है उसे 'उत्तरायणम्' ( न ), अर्थात् 'उत्तरायण' और जब सूर्यकी गति कुछ दक्षिणकी तरफ होती है उसे 'दक्षिणायनम्' (न), अर्थात् 'दक्षिणायन' कहते हैं । 'उत्तरायण' में मकरसे मिथुन राशितक और 'दक्षिणायन' में कर्कसे धनु राशितक सूर्यकी संक्रान्ति रहती है' ) ॥

६ विषुवत् , विषुवम् ( + विषुणम् । २ न ), 'जब रात दिन दोनों बराबर हो जाते हैं, उस समय'के २ नाम हैं । ( 'जब तुला और मेषकी सूर्यसंक्रान्ति होती है, तब दिन रात बराबर होते हैं' ) ॥

---

* तदुक्तम्—'आदाय मार्गशीर्षाच्च द्वौ द्वौ मासावृतुः स्मृतः' इति ।

१ 'पुष्ययुक्ता पौर्णमासी पौषी २ मासे तु यत्र सा (४२)
नाम्ना स पौषो ३ माघाद्याश्चैवमेकादशापरे' (४३)
४ मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ॥ १४ ॥
५ पौषे तैषसहस्यौ द्वौ ६ तपा माघेऽथ फाल्गुने।
स्यात्तपस्यः फाल्गुनिकः ८ स्याच्चैत्रे चैत्रिको मधुः ॥ १५ ॥

---

१ [ पौषी ( स्त्री ), 'पुष्य नक्षत्रसे युक्त पूर्णिमा' अर्थात् 'पौष मासकी पूर्णिमा' का १ नाम है ]।

२ [ पौषः (पु), 'पूस महीना' अर्थात् जिसमें 'पौषी' पूर्णिमा हो, उसका १ नाम है ] ॥

३ [ इसी तरह माघ आदि ग्यारह महीनोंको भी समझना चाहिये, अर्थात् मघा नक्षत्रसे युक्त पूर्णिमा 'माघी' महीना 'माघः' १, पूर्वोत्तरफाल्गुनी नक्षत्रसे युक्त पूर्णिमा 'फाल्गुनी' मास 'फाल्गुनः' २, चित्रा नक्षत्रसे युक्त पूर्णिमा 'चैत्री' मास 'चैत्रः' ३, विशाखा नक्षत्रसे युक्त पूर्णिमा 'वैशाखी' मास 'वैशाखः' ४, ज्येष्ठा नक्षत्रसे युक्त पूर्णिमा 'ज्यैष्ठी' मास 'ज्येष्ठः' ५, पूर्वोत्तराषाढा नक्षत्रसे युक्त पूर्णिमा 'आषाढी' मास 'आषाढः' ६, श्रवण नक्षत्रसे युक्त पूर्णिमा 'श्रावणी' मास 'श्रावणः' ७, पूर्वोत्तराभाद्रपद नक्षत्रसे युक्त पूर्णिमा 'भाद्रपदी' मास 'भाद्रपदः' ८, अश्विनी नक्षत्रसे युक्त पूर्णिमा 'आश्विनी' मास 'आश्विनः' ९, कृत्तिका नक्षत्रसे युक्त पूर्णिमा 'कार्त्तिकी' मास 'कार्त्तिकः' १० और मृग नक्षत्रसे युक्त पूर्णिमा 'मार्गी' मास 'मार्गः' ११ होते हैं, इनमें पूर्णिमाके वाचक 'माघी' आदि ११ शब्द स्त्री० और मासके वाचक 'माघ' आदि ११ शब्द पुं० हैं' ] ॥

४ मार्गशीर्षः, सहाः ( = सहस् ), मार्गः, आग्रहायणिकः ( + आग्रहायणः। ४ पु ), 'अगहन महीने' के ४ नाम हैं ॥

५ पौषः, तैषः, सहस्यः ( ३ पु ), 'पौष मास' के ३ नाम हैं ॥

६ तपाः ( = तपस् ), माघः ( २ पु ), 'माघ मास' के २ नाम हैं ॥

७ फाल्गुनः, तपस्यः, फाल्गुनिकः (३ पु) 'फाल्गुन मास' के ३ नाम हैं ॥

८ चैत्रः, चैत्रिकः, मधुः ( ३ पु ), 'चैत्र मास' के ३ नाम हैं ॥

१ वैशाखे माधवो राधो २ ज्येष्ठे शुक्रः ३ शुचिस्त्वयम् ।
आषाढे ४ श्रावणे तु स्यान्नभाः श्रावणिकश्च सः ॥ १६ ॥
५ स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः ।
६ स्यादाश्विन इषोऽप्याश्वयुजोऽपि ७ स्यात्तु कार्तिके ॥ १७ ॥
बाहुलोर्जौ कार्तिकिको ८ हेमन्तः ९ शिशिरोऽस्त्रियाम् ।
१० वसन्ते पुष्पसमयः सुरभि११र्ग्रीष्म ऊष्मकः ॥ १८ ॥
निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः ।

---

१ वैशाखः, माधवः, राधः ( ३ पु ), 'वैशाख मास' के ३ नाम हैं ॥

२ ज्येष्ठः ( +ज्यैष्ठः ), शुक्रः, ( २ पु ), 'ज्येष्ठ मास' के २ नाम हैं ॥

३ शुचिः, आषाढः ( +आषाढकः । २ पु ), 'आषाढ मास' के २ नाम हैं ॥

४ श्रावणः, नभाः ( =नभस् ) श्रावणिकः (३ पु), 'श्रावण मास' के ३ नाम हैं ॥

५ नभस्यः, प्रौष्ठपदः, भाद्रः, भाद्रपदः (४ पु), 'भादों मास' के ४ नाम हैं ॥

६ आश्विनः, इषः, आश्वयुजः (३ पु), 'आश्विन मास' अर्थात् 'क्वार' के ३ नाम हैं ॥

७ कार्तिकः, बाहुलः, ऊर्जः, कार्तिकिकः ( ४ पु ), 'कार्तिक मास' के ४ नाम हैं ॥

८ हेमन्तः ( पु । +हेमा,=हेमन् , पु ), 'हेमन्त ऋतु' का १ नाम है । ( 'यह अगहन और पौष मासमें होता है' ) ॥

९ शिशिरः ( पु न ), 'शिशिर ऋतु' का १ नाम है । ( 'यह माघ और फाल्गुन मासमें होता है' ) ॥

१० वसन्तः, पुष्पसमयः, सुरभिः ( +ऋतुराजः । ३ पु ), 'वसन्त ऋतु' के ३ नाम हैं । ( 'यह चैत वैशाख मास में होता है' ) ॥

११ ग्रीष्मः, ऊष्मकः, ( +उष्मकः, उष्णकः, ऊष्णकः, उष्मणः, ऊष्मणः ), निदाघः, उष्णोपगमः ( +ऊष्णोपगमः ), उष्णः ( +ऊष्णः ), ऊष्मागमः ( +उष्मागमः ), तपः ( ७ पु ), 'ग्रीष्म ऋतु' के ७ नाम हैं । ( 'यह ज्येष्ठ और आषाढ मास में होता है' ) ॥

१ स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा २ अथ शरत्स्त्रियाम् ॥ १९ ॥
३ षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् ।
४ संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः ॥ २० ॥
५ मासेन स्यादहोरात्रः पैत्रो ६ वर्षेण ^दैवतः ।

१ प्रावृट् ( = प्रावृष्, स्त्री ), वर्षाः ( स्त्री, नि० ब० व० ) 'वर्षा ऋतु' के २ नाम हैं। ( 'यह श्रावण और भादों मासमें होता है' ) ॥

२ शरत् ( = शरद्, स्त्री ), 'शरद् ऋतु' का १ नाम है। ('यह आश्विन और कार्तिक मासमें होता है' ) ॥

३ मार्गशीर्ष अर्थात् अगहन महीनेसे हर दो-दो महीनोंमें हेमन्त आदि एक एक ऋतु होते हैं। 'ऋतु' शब्द ( पु ) है। ( 'इनका क्रम पृष्ठ ३९ श्लोक १३ में कहा जा चुका है, अतः वहीं से देखिये' )॥

४ संवत्सरः ( + परिवत्सरः ), वत्सरः, अब्दः ( ३ पु ), हायनः (पु न । म० ४ पु न ), शरत् ( = शरद्, स्त्री), समाः ( स्त्री०, नि० ब० व० ), 'वर्ष, साल' के ६ नाम हैं ( 'यह १२ महीनेका होता है' ) ॥

५ मनुष्योंके एक महीनेका 'पैत्रः अहोरात्रः' (पु) अर्थात् 'पितरोंकी दिन-रात' होती है। ( 'उसमें मनुष्योंके कृष्णपक्षमें पितरोंका दिन' और मनुष्योंके शुक्लपक्षमें 'पितरोंकी रात' होती है। जिस मतमें आधीरातके बाद दिनका आरम्भ माना जाता है—जैसा कि अंग्रेजीमें तारीखोंका क्रम है; उसके अनुसार यह कथन ठीक है, वस्तुतः तो मनुष्योंके कृष्णपक्षकी अष्टमीके उत्तरार्द्धसे शुक्ल-पक्षकी अष्टमीके पूर्वार्द्धतक 'पितरोंका दिन' और मनुष्योंकी शुक्लपक्षकी अष्टमीके उत्तरार्द्धसे कृष्णपक्षकी अष्टमीके पूर्वार्द्धतक 'पितरोंकी रात' होती है; इस तरह मनुष्योंकी अमावास्याके अन्तमें 'पितरोंका मध्याह्न' और मनुष्योंकी पूर्णिमाके अन्तमें 'पितरोंकी आधी रात' होती है' ) ॥

६ मनुष्योंके एक वर्ष या उत्तरायण और दक्षिणायन का 'दैवः अहोरात्र' ( पु ) अर्थात् 'देवताओंकी एक दिन-रात' होती है। ( 'इसमें उत्तरायण

'पित्र्ये रात्र्यहनी मासः प्रविभागस्तु पक्षयोः ।
कर्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्वरी ॥ १ ॥' इति मनुः १।६६ ॥

१ दैवे युगसहस्रे द्वे ब्राह्मः—

अर्थात् सूर्यकी मकरसंक्रान्तिसे मिथुनसंक्रान्तितक 'देवताओंका दिन' और दक्षिणायन अर्थात् सूर्यकी कर्कसंक्रान्तिसे धनुसंक्रान्तितक [1]'देवताओंकी रात' होती है। यह भी आधीरातके दिनारम्भसे गणनानुसार ही है, वस्तुतः तो उत्तरायणके उत्तरार्द्ध अर्थात् सूर्यकी मेषसंक्रान्तिके प्रथम दिनसे दक्षिणायनके पूर्वार्द्ध अर्थात् सूर्यकी कन्यासंक्रान्तिके अन्तिम दिनतक 'देवताओंका दिन' और दक्षिणायनके उत्तरार्द्ध अर्थात् सूर्यकी तुलासंक्रान्तिके प्रथम दिनसे उत्तरायणके पूर्वार्द्ध अर्थात् मीनसंक्रान्तिके अन्तिम दिनतक 'देवताओंकी रात' होती है। इस प्रकार उत्तरायणके अर्थात् सूर्यकी मिथुनसंक्रान्तिके अन्तिम दिनको 'देवताओंका मध्याह्न' और दक्षिणायनके अर्थात् सूर्यकी धनुसंक्रान्तिके अन्तिम दिनको 'देवताओंकी आधीरात' होती है' ) ॥

१ देवताओंके दो हजार युगका 'ब्राह्मः अहोरात्रः' ( पु ) अर्थात् 'ब्रह्माकी दिन-रात' होती है। ( 'देवताओंके ३६० दिन या मनुष्योंके ३६० वर्षका 'दिव्यवर्षम्'(न)अर्थात् 'देवताओंका एक वर्ष' होता है। और बारह हजार दिव्य वर्ष ( देवताओंके वर्ष ) का [2]'मनुष्योंका चतुर्युग' ( 'सत्ययुग, द्वापर, त्रेता और कलियुग' ) होता है, यही [3]'देवताओंका एक युग' है।

१. 'दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः ।
अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ॥ १ ॥ इति मनुः १।६७ ॥

२. 'कृतं त्रेता द्वापरञ्च कलिश्चेति चतुर्युगम् ।
प्रोच्यते तत्सहस्रं तु ब्रह्मणो दिनमुच्यते ॥ १ ॥ इति वि० पु० ।
कृतं सत्ययुगम्, अन्ये प्रसिद्धाः ॥

३. 'चत्वार्याहुः सहस्राणि वर्षाणान्तु कृतं युगम् ।
तस्य तावच्छती संध्या सन्ध्यांशश्च तथाविधः ॥ १ ॥
इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु ।
एकापायेन वर्त्तन्ते सहस्राणि शतानि च ॥ २ ॥
यदेतत्परिसङ्ख्यातमादावेव चतुर्युगम् ।
एतद्द्वादशसाहस्रं 'देवानां युगमुच्यते' ॥ ३ ॥ इति मनुः १ । ६९-७१॥

—१ कल्पौ तु तौ नृणाम् ॥ २१ ॥

२ मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः ।

---

देवताओं के इसी दो हजार युगका 'ब्रह्माको एक दिन-रात' होती है; अर्थात् देवताओंके एक हजार युगका 'ब्रह्माका दिन' और उतने ही ( देवताओंके एक हजार युग ) की "'ब्रह्माकी रात' होती है' ) ॥

१ वही ब्रह्माकी दिन-रात मनुष्योंका 'कल्पौ' ( पु० व० भी होता है ), 'कल्प' अर्थात् स्थिति और प्रलयका काल है । ('इसमें ब्रह्माके दिनमें 'मनुष्यों का स्थितिकाल और ब्रह्माकी रातमें 'मनुष्योंका प्रलयकाल' है') ॥

२ देवताओंके एकहत्तर युगका "'मन्वन्तरम्' ( न ), १ 'मन्वन्तर' अर्थात् [3]चौदह मनुओंमेंसे प्रत्येक मनुका स्थितिकाल होता है । ( स्वायम्भुव १ स्वारोचिष २, औत्तमि ३, तामसि ४, रैवत ५, आयुष ६, वैवस्वत ७, सावर्णि ८, दक्षसावर्ण ९, ब्रह्मसावर्ण १०, धर्मसावर्ण ११, रौद्रसावर्ण १२, रौच्यसावर्णि १३ और भौत्यसावर्णि १४ ये चौदह मनु हैं' इनमेंसे प्रत्येकके स्थितिकालको 'मन्वन्तर' कहतेहैं । उनमें ६ मनु बीत चुके हैं, सातवाँ 'वैवस्वत' मन्वन्तर बीत रहा है और अन्य सात बाकी हैं । 'पृष्ठ२८ श्लोक११ से यहाँ तक कहे

---

१ 'दैविकानां युगानान्तु सहस्रं परिसङ्ख्यया ।
ब्राह्ममेकमहर्ज्ञेयं तावतीं रात्रिमेव च ॥ १ ॥ इति मनुः १।७२ ॥

२ 'यत्प्राग्द्वादशसाहस्रमुदितं दैविकं युगम् ।
तदेकसप्ततिगुणं मन्वन्तरमिहोच्यते ॥ १ ॥ इति मनुः १।७९ ॥

३ 'मनुः स्वायम्भुवो नाम मनुःस्वारोचिषस्तथा ।
औत्तमिस्तामसिश्चैव रैवतश्चायुषस्तथा ॥ १ ॥
एते तु मनवोऽतीताः सप्तमस्तु रवेः सुतः ।
वैवस्वतोऽयं यस्यैतत्सप्तमं वर्त्तते युगम् ॥ २ ॥
सावर्णिर्दक्षसावर्णो ब्रह्मसावर्ण इत्यपि ।
धर्मसावर्ण रुद्रस्तु सावर्णो रौच्यभौत्यवत् ॥ ३ ॥ इति वि० पु० ।

हुए कालका मान चक्रमें स्पष्ट है' ॥

* 'अष्टादश निमेषास्तु ( १।४।११ ) इत्यत आरभ्य 'युगानामेकसप्ततिः ( १।४।२२ ) इत्यन्तग्रन्थस्य कालज्ञानात्मको निष्कर्षोऽत्र चक्रे द्रष्टव्यः ॥

### ❀ अथ कालमानबोधकचक्रम् ❀

| | | |
|---|---|---|
| नेत्रस्पन्दकाल, | १ निमेषः ( १/२७ विपला ) | ( २/१३५ सेकेण्ड ) |
| १८ निमेषाः | १ काष्ठा ( २/३ विपला ) | ( ४/१५ सेकेण्ड ) |
| ३० काष्ठाः | १ कला ( २० विपला ) | ( ८ सेकेण्ड ) |
| ३० कलाः | १ क्षणः ( १० पला ) | ( ४ मिण्ट ) |
| १२ क्षणाः | १ मुहूर्तः ( २ घट्यौ ) | ( ४८ मिण्ट ) |
| ३० मुहूर्त्ताः | १ अहोरात्रः ( मानुषः ) | ( २४ घण्टा ) |
| १५ अहोरात्राः | १ पक्षः ( मानुषः ) | १ पैत्रं दिनं निशा वा |
| २ पक्षौ | १ मासः ( मानुषः ) | १ अहोरात्रः (पैत्रः) |
| १२ मासाः | १ वर्षम् ( मानुषम् ) | १ अहोरात्रः (दैवः) |
| ३६० दैवाहोरात्राः | ३६० मानुषवर्षाणि | १ वर्षम् ( दिव्यम् ) |
| १२०० दिव्यवर्षाणि | ४३२००० मानुषवर्षाणि | १ कलिमानम् |
| २४०० ,, | ८६४००० ,, | १ द्वापरमानम् |
| ३६०० ,, | १२९६००० ,, | १ त्रेतामानम् |
| ४८०० ,, | १७२८००० ,, | १ सत्ययुगमानम् |
| एवं १२००० ,, | ४३२०००० ,, | मानुषं चतुर्युगमानम् वा दैवं युगम् |
| १२०००दिव्यवर्षाणि × १००० = १२००००००दिव्यवर्षाणि | ४३२०००० मानुषवर्षाणि × १०००= ४३२००००००० मानुषवर्षाणि | १ दिनम् ( ब्राह्मम् ) |
| ,, | ,, | १ रात्रिः ( ब्राह्मी ) |
| १२०००००० + १२००००००= २४०००००० दिव्यवर्षाणि | ४३२००००००० + ४३२००००००० = ८६४००००००० मानुषवर्षाणि | १ अहोरात्रः (ब्राह्मः) |
| १२०००दिव्यव.=चतुर्युगमानम् × ७१=८५२०००दिव्यवर्षाणि | ४३२०००० मानुषवर्षाणि × ७१ = ३०६७२०००० मानुषवर्षाणि | १ मन्वन्तरम् |

'मनुस्त्वेको [illegible] ५१पक्षाः=१ मन्वन्तरम्' इत्याह॥

१ संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ॥ २२ ॥
२ अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम् ।
कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम् ॥ २३ ॥
३ स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः ।
४ मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः ॥ २४ ॥
स्यादानन्दथुरानन्दः शर्मशातसुखानि च ।
५ श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ॥ २५ ॥
भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् ।
शस्तं ६ चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च ॥ २६ ॥
७ मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ ।

---

१ संवर्तः, प्रलयः, कल्पः, क्षयः, कल्पान्तः, ( ५ पु ), 'प्रलय काल' के ५ नाम हैं ॥

२ पङ्कम् ( न पु ), पाप्मा ( = पाप्मन्, पु ) पापम् किल्बिषम्, कल्मषम्, कलुषम्, वृजिनम्, एनः ( = एनस् ), अघम्, अंहः ( = अंहस् । + अंघः, अंघस् ), दुरितम्, दुष्कृतम् ( १० न ), 'पाप' के १२ नाम हैं ॥

३ धर्मः ( पु न । + धर्मा = धर्मन्, पु ), पुण्यम्, श्रेयः ( = श्रेयस् ), सुकृतम् ( ३ न ) वृषः ( पु ) 'धर्म' के ५ नाम हैं ॥

४ मुत् ( = मुद् ), प्रीतिः ( २ स्त्री ), प्रमदः, हर्षः, प्रमोदः, आमोदः, संमदः, आनन्दथुः, आनन्दः, ( ७ पु ), शर्म ( = शर्मन् ), शातम् (+ सातम्) सुखम् ( ३ न ), 'हर्ष' के १२ नाम हैं ॥

५ श्वःश्रेयसम् ( स्वःश्रेयसम् ), शिवम्, भद्रम् ( भन्द्रम् ), कल्याणम्, मङ्गलम्, शुभम्, भावुकम्, भविकम्, भव्यम्, कुशलम् ( + कुषलम् । १० न ), क्षेमम्' शस्तम् ( २ न पु ) 'कल्याण' के १२ नाम हैं ॥

६ 'पाप, पुण्य' शब्द और 'सुख' शब्दसे 'शस्त' शब्दतक १३ शब्द द्रव्यविशेष में प्रयुक्त होने पर त्रिलिङ्ग होते हैं। ( जैसे—'पापो मनुष्यः, पापा निधनता, पापं दैन्यम् । पुण्यः प्रतापः, पुण्या सम्पत्, पुण्यं यशः । कल्याणो बन्धुः, कल्याणी भार्या, कल्याणं चित्तम्……' ) ॥

७ मतल्लिका, मचर्चिका ( २ नि० स्त्री ) प्रकाण्डम् ( नि० न । + पु )

प्रशस्तवाचकान्यमून्ययः शुभावहो विधिः ॥ २७ ॥
२ दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ।
३ हेतुर्ना कारणं बीजं ४ निदानं त्वादिकारणम् ॥ २८ ॥
५ क्षेत्रज्ञ आत्मा पुरुषः ६ प्रधानं प्रकृतिः स्त्रियाम् ।
७ विशेषः कालिकोऽवस्था ८ गुणाः सत्त्वं रजस्तमः ॥ २९ ॥
९ जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ।
१० प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः ॥ ३० ॥

---

उद्धः, तल्लजः (२ पु), ये ५ किसी द्रव्यवाचक शब्दके साथ समस्त होकर अन्तमें रहनेसे उसकी श्रेष्ठताको प्रकट करते हैं । इनका स्वतन्त्र प्रयोग नहीं होता है । जैसे—'गोमतल्लिका, गोमचर्चिका, गोप्रकाण्डम् , गवोद्धः, गोतल्लजः,······' ) ॥

१ अयः ( पु ) 'शुभकारक भाग्य' का १ नाम है ॥

२ दैवम् , दिष्टम् , भागधेयम् , भाग्यम् ( ४ न ), नियतिः ( स्त्री ), विधिः ( पु ), 'भाग्य' के ६ नाम हैं ॥

३ हेतुः ( पु ), कारणम् , बीजम् ( २ न ), 'कारण' के ३ नाम हैं ॥

४ निदानम् ( न ), 'मूल कारण' का १ नाम है ॥

५ क्षेत्रज्ञः, आत्मा ( =आत्मन् ), पुरुषः (३ पु), 'शरीरकी अधिष्ठात्री देवता' के ३ नाम हैं ॥

६ प्रधानम् ( न ), प्रकृतिः ( स्त्री ), 'सत्त्वगुण, रजोगुण और तमोगुणकी साम्यावस्था' के २ नाम हैं ॥

७ अवस्था ( स्त्री ), 'समयकृत विशेष' अर्थात् 'उम्र'का १ नाम है । ( जैसे—लड़कपन, जवानी, बुढ़ापा,······ ) ॥

८ सत्त्वम् , रजः ( =रजस् । +रजः=रज, पु ), तमः ( =तमस् ) +तमः,=तम, पु । ३ न), ये ३ 'प्रकृतिके धर्म' हैं । उनका क्रमशः 'सत्त्वगुण, रजोगुण और तमोगुण' यह १-१ नाम है ॥

९ जनुः (=जनुस्), जननम्, जन्म ( =जन्मन् । +जन्मः=जन्म, पु । ३ न ), जनिः (+पु), उत्पत्तिः ( २ स्त्री ), उद्भवः (पु), 'उत्पत्ति' अर्थात् 'पैदा होने या जन्म लेने' के ६ नाम हैं ॥

१० प्राणी (=प्राणिन्), चेतनः, जन्मी ( =जन्मिन् ) जन्तुः, जन्युः, शरीरी

१ जातिर्जातं च सामान्यं २ व्यक्तिस्तु पृथगात्मता ।
३ चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ॥ ३१ ॥

इति कालवर्गः ॥ ४ ॥

## ५. अथ धीवर्गः ।

४ बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ।
प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः ॥ १ ॥
५ धीर्धारणावती मेधा ६ सङ्कल्पः कर्म मानसम् ।
७ 'अवधानं समाधानं प्रणिधानं तथैव च' (४४)

( = शरीरिन् । ६ पु ), 'प्राणी'के ६ नाम हैं ॥

१ जातिः ( स्त्री ), जातम्, सामान्यम् ( २ न ), 'जाति'के ३ नाम हैं । ( 'जैसे—गोत्व, ब्राह्मणत्व, घटत्व,······' ) ॥

२ व्यक्तिः, पृथगात्मता ( २ स्त्री ), 'व्यक्ति'के २ नाम हैं । ( 'जैसे—गौ, मनुष्य, राम, श्याम,······' ) ॥

३ चित्तम्, चेतः ( = चेतस् ), हृदयम्, स्वान्तम्, हृत् ( = हृद् ), मानसम्, मनः ( = मनस् । ७ न ), 'मन या चित्त' के ७ नाम हैं ॥

इति कालवर्गः ॥ ४ ॥

## ५. अथ धीवर्गः ॥

४ बुद्धिः, मनीषा, धिषणा, धीः, प्रज्ञा, शेमुषी, मतिः, प्रेक्षा, उपलब्धिः, चित् ( = चिद् ), संवित् ( = संविद् ), प्रतिपत् ( = प्रतिपद् ), ज्ञप्तिः, चेतना ( १४ स्त्री ), 'बुद्धि' के १४ नाम हैं ॥

५ मेधा ( स्त्री ), 'धारणा शक्तिवाली बुद्धि' का १ नाम है ॥

६ संकल्पः ( पु ), 'संकल्प, मानसिक कर्म' का १ नाम है ॥

७ [ अवधानम्, समाधानम्, प्रणिधानम् ( ३ न ), 'समाधान' के ३ नाम हैं ] ॥

* 'साङ्ख्ये बुद्धिमनसोरेते पर्यायाः, वैशेषिकादौ तु चतुर्दशापि बुद्ध्यर्थाः' इति क्षी० स्वा० ॥

१ चित्ताभोगो मनस्कार२श्चर्चा सङ्ख्या विचारणा ॥ २ ॥
३ 'विमर्शो भावना चैव वासना च निगद्यते' (४५)
४ अध्याहारस्तर्क ऊहो ५ विचिकित्सा तु संशयः ।
सन्देहद्वापरौ ६ चाथ समौ निर्णयनिश्चयौ ॥ ३ ॥
७ मिथ्यादृष्टिर्नास्तिकता ८ व्यापादो द्रोहचिन्तनम् ।
९ समौ सिद्धान्तराद्धान्तौ १० भ्रान्तिर्मिथ्यामतिर्भ्रमः ॥ ४ ॥
११ संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः ।

---

१ चित्ताभोगः, मनस्कारः ( २ पु ), 'सुखादिमें मनके लगे रहने' के २ नाम हैं ॥

२ चर्चा, सङ्ख्या, विचारणा (३ स्त्री), 'प्रमाणोंके द्वारा किसी विषयके विचार करने' के ३ नाम हैं ॥

३ [ विमर्शः ( पु ), भावना, वासना ( २ स्त्री ), 'बीती हुई बात आदिके संस्कार' के ३ नाम हैं ] ॥

४ अध्याहारः, तर्कः, ऊहः ( ३ पु ), 'तर्क' के ३ नाम हैं ॥

५ विचिकित्सा ( स्त्री ), संशयः, सन्देहः, द्वापरः ( ३ पु ), 'सन्देह' के ४ नाम हैं ॥

६ निर्णयः, निश्चयः ( २ पु ), 'निश्चय' के २ नाम हैं ॥

७ मिथ्यादृष्टिः, नास्तिकता ( २ स्त्री ), 'नास्तिकपना' के २ नाम हैं । ( 'ईश्वर या परलोक नहीं हैं, ऐसे ज्ञानको 'नास्तिकपना' कहते हैं' ) ॥

८ व्यापादः ( पु ), द्रोहचिन्तनम् ( न ), 'किसीसे द्रोह करनेका विचार करने' के २ नाम हैं ॥

९ सिद्धान्तः, राद्धान्तः ( २ पु ), 'सिद्धान्त' के २ नाम हैं । ( 'वाद-विवादके द्वारा किसी विषयको निश्चय करने या अपने अटल मतको 'सिद्धान्त' कहते हैं' ) ॥

१० भ्रान्तिः, मिथ्यामतिः ( २ स्त्री ), भ्रमः ( पु ), 'भ्रम' के ३ नाम हैं । ( 'जैसे—शुक्तिमें रजतका, रस्सीमें सर्पका ज्ञान होना 'भ्रम' है' ) ॥

११ संवित् ( = संविद् ), आगूः ( = आगुर्, 'आगूः, आगुरौ, आगुरः' ऐसे रूप होते हैं । अथवा—आगूः, = आगू, 'आगूः, आग्वौ, आग्वः' इत्यादि

१ अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः ॥ ५ ॥
२ मोक्षे धीर्ज्ञान३मन्यत्र विज्ञानं शिल्पशास्त्रयोः ।
४ मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ॥ ६ ॥
मोक्षोऽपवर्गो५ऽथाज्ञानमविद्याऽहम्मतिः स्त्रियाम् ।
६ रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी ॥ ७ ॥
गोचरा इन्द्रियार्थाश्च ७ हृषीकं विषयीन्द्रियम् ।
८ कर्मेन्द्रियं तु पाय्वादि—

---

'खलपू' शब्दके समान रूप होते हैं। ( २ स्त्री ), प्रतिज्ञानम् ( न ), नियमः, आश्रवः, संश्रवः ( ३ पु ), 'प्रतिज्ञा' के ६ नाम हैं ॥

१ अङ्गीकारः (+स्वीकारः ), अभ्युपगमः, प्रतिश्रवः, समाधिः ( ४ पु ), 'स्वीकार करने' के ४ नाम हैं ॥

२ ज्ञानम् ( न ), 'मोक्ष—विषयक बुद्धि' का १ नाम है ॥

३ विज्ञानम् ( न ), 'शिल्प (कारीगरी), अथवा शास्त्रविषयक बुद्धि' का १ नाम है। ( मुकुटने 'मोक्षे' इसको निमित्त सप्तमी मानकर मोक्षनिमित्तक शिल्प-शास्त्र-विषयक बुद्धिको 'ज्ञान' तथा अन्यनिमित्तक शिल्प-शास्त्रविषयक बुद्धिको 'विज्ञान' अर्थ किया है ) ॥

४ मुक्तिः ( स्त्री ), कैवल्यम्, निर्वाणम्, श्रेयः (= श्रेयस्), निःश्रेयसम्, अमृतम् ( ५ न ), मोक्षः, अपवर्गः ( २ पु ), 'मोक्ष' के ८ नाम हैं ॥

५ अज्ञानम् ( न ), अविद्या, अहम्मतिः (२ स्त्री), 'अज्ञान' के ३ नाम हैं ॥

६ रूपम् ( न ), शब्दः, गन्धः, रसः, स्पर्शः ( ४ पु ), ये ५ नेत्रादि एक-एक इन्द्रिय के एक-एक विषय' के नाम हैं। ( 'नेत्रका विषय 'रूप' जिह्वा का विषय 'रस' नासिकाका विषय 'गन्ध' कानका विषय 'शब्द' और त्वचा अर्थात् चमड़ेका विषय 'स्पर्श' है। इन्हींके गोचरः, विषयः, इन्द्रियार्थः ( ३ पु ), ये ३ सामान्य नाम हैं ॥

७ हृषीकम्, विषयि (= विषयिन्), इन्द्रियम् ( ३ न ), 'इन्द्रियों' के ३ नाम हैं। ( 'कर्मेन्द्रिय और ज्ञानेन्द्रिय भेदसे इन्द्रिय दो प्रकारके हैं; जिनका विवरण आगे किया जा रहा है' ) ॥

८ कर्मेन्द्रियम् ( न ), 'काम करनेवाली इन्द्रियों' का १ नाम है। ( 'पायु अर्थात् गुदा १, उपस्थ अर्थात् भग या लिङ्ग २, हाथ ३, पैर ४ और वाक् ५ ये कर्मेन्द्रिय अर्थात् काम करनेवाली इन्द्रियां हैं। 'मलत्याग करना,

—१ मनोनेत्रादि धीन्द्रियम् ॥ ८ ॥
२ तुवरस्तु कषायोऽस्त्री ३ मधुरो लवणः कटुः ।
तिक्तोऽम्लश्च रसाः पुंसि ४ तद्वत्सु षडमी त्रिषु ॥ ९ ॥
५ विमर्दोत्थे परिमलो गन्धे जनमनोहरे ।

---

भोग करना, ग्रहण करना, चलना और बोलना' इनमेंसे १-१ नाम क्रमशः एक-एक इन्द्रियका[1] है' ) ॥

१ धीन्द्रियम् ( न । + ज्ञानेन्द्रियम् ), 'ज्ञानेन्द्रिय' का १ नाम है। ( 'मन १, कान २, नेत्र ३, जीभ ४, त्वचा ५ और नाक ६, ये ६ ज्ञानेन्द्रिय अर्थात् ज्ञान करनेवाली इन्द्रियाँ[2] हैं। 'जानना, सुनना, देखना, स्वाद लेना, स्पर्शज्ञान करना और सूँघना' इनमें से १-१ काम क्रमशः १-१ इन्द्रियका है' ) ॥

२ तुवरः ( + तूवरः, कुवरः । पु ) कषायः, ( पु न ) 'कषाय' कसाव' के २ नाम हैं। ( हर्रेमें 'कषाय' रस होता है ) ॥

३ मधुरः, लवणः, कटुः, तिक्तः, अम्लः ( + अंम्लः, अम्लः । ५ पु ), 'मीठा, खारा, कडुआ, तीता और खट्टा' ये पांच और पहिला 'कषाय' ऐसे ६ रस हैं। ('इनमें पानी आदि 'मीठा', नमक, सोरा आदि 'खारा' मिर्च आदि 'कडुआ' नीम, चिरैता आदि 'तीता' और आम, नींबू, इमली आदि 'खट्टे' होते हैं। रसः ( पु ) हैं' ) ॥

४ ये 'तुवर, मधुर' आदि ७ नाम स्वतः रसवाचक रहनेपर पुंल्लिङ्ग हैं; किन्तु द्रव्यवाचक अर्थात् रसवाले पदार्थके अर्थमें प्रयुक्त होनेपर त्रिलिङ्ग हैं। जैसे—मधुरं जलम्, मधुरा आपः, मधुरो गुडः,·········' ) ॥

५ परिमलः ( पु ), 'किसी पदार्थके संघर्ष अर्थात् रगड़से

---

१. तथा च कामन्दकः—'पायूपस्थे पाणिपादौ वाक्चेतीन्द्रियसंग्रहः ।
उत्सर्ग आनन्दादानगत्याक्षापाश्च तत्क्रियाः ॥ १ ॥' इति ॥

२. तदुक्तम्—'मनः कर्णस्तथा नेत्रं रसना च त्वचा सह ।
नासिका चेति षट् तानि धीन्द्रियाणि प्रचक्षते ॥ १ ॥' इति ॥

१ आमोदः सोऽतिनिर्हारी २ वाच्यलिङ्गत्वमागुणात् ॥ १० ॥
३ समाकर्षी तु निर्हारी ४ सुरभिर्घ्राण तर्पणः ।
इष्टगन्धः सुगन्धिः स्या५दामोदी मुखवासनः ॥ ११ ॥
६ पूतिगन्धिस्तु दुर्गन्धो ७ विस्रं स्यादामगन्धि यत् ।
८ शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः ॥ १२ ॥
अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः ।
हरिणः पाण्डुरः पाण्डुः —

---

उत्पन्न जनमनोहर गन्धविशेष या बकुलके गन्ध' का १ नाम है ।

१ [1]आमोदः ( पु ), 'अत्यन्त बढ़ियां गन्ध या कस्तूरीके गन्ध' का १ नाम है ॥

२ यहां से 'गुणे शुक्लादयः पुंसि (१।५।१७)' के पूर्वतक सब शब्द त्रिलिङ्ग हैं॥

३ समाकर्षी ( = समाकर्षिन् ), निर्हारी ( = निर्हारिन् । २ त्रि ), 'दूरस्थ सुगन्धित पदार्थ' के २ नाम हैं ॥

४ [2]सुरभिः, घ्राणतर्पणः, इष्टगन्धः, सुगन्धिः ( ४ त्रि ), 'सुगन्धि' के ४ नाम हैं ( इनमें 'सुरभि' नाम 'चम्पकके गन्ध' का भी है ) ॥

५ आमोदी ( = आमोदिन् ), [3] मुखवासनः ( भागुरि म० अगुरुवासनः । २ त्रि ), 'मुखको सुगन्धित करनेवाले पान आदि' के २ नाम हैं। ( 'मुखवासनः' नाम 'कपूरके गन्ध' का भी है' ) ॥

६ पूतिगन्धिः, दुर्गन्धः ( २ त्रि ), 'दुर्गन्धि, बदबू' के २ नाम हैं ॥

७ विस्रम् ( त्रि ), 'विना पके हुए मांस आदिके गन्ध' का १ नाम है ॥

८ शुक्लः, शुभ्रः, शुचिः, श्वेतः, विशदः, श्येतः, पाण्डरः, अवदातः, सितः, गौरः, वलक्षः ( + अवलक्षः ), धवलः, अर्जुनः, हरिणः, पाण्डुरः, पाण्डुः ( १६ त्रि ), 'सफेद, उजले' के १६ नाम हैं । ( 'मतान्तरसे 'शुक्ल' आदि १३ नाम 'सफेद' के हैं और अन्तवाले 'हरिणः' आदि ३ नाम 'पाण्डुर' अर्थात् 'कुछ पीलापन लिये हुए सफेद' के हैं' ) ॥

---

१-२-३. 'कस्तूरिकायामामोदः कर्पूरे मुखवासनः ।
बकुले स्यात्परिमलश्चम्पके सुरभिस्तथा ॥ १ ॥' इति ॥

—१ ईषत्पाण्डुस्तु धूसरः ॥ १३ ॥
२ कृष्णे नीलासितश्यामकालश्यामलमेचकाः ।
३ पीतो गौरो हरिद्राभः ४ पालाशो हरितो हरित् ॥ १४ ॥
५ लोहितो रोहितो रक्तः ६ शोणः कोकनदच्छविः ।
७ अव्यक्तरागस्त्वरुणः ८ श्वेतरक्तस्तु पाटलः ॥ १५ ॥
९ श्यावः श्यात्कपिशो १० धूम्रधूमलौ कृष्णलोहिते ।
११ कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ ॥ १६ ॥
१२ चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ।

---

१ ईषत्पाण्डुः, धूसरः ( २ त्रि ), 'धूसर' के २ नाम हैं ॥

२ कृष्णः, नीलः, असितः, श्यामः, कालः, श्यामलः, मेचकः ( ७ त्रि ), 'काले' के ७ नाम हैं ॥

३ पीतः, गौरः, हरिद्राभः ( ३ ), 'पीले' के ३ नाम हैं ॥

४ पालाशः ( +पलाशः ), हरितः, हरित् ( ३ त्रि ), 'हरे' के ३ नाम हैं ॥

५ लोहितः रोहितः, रक्तः ( ३ त्रि ), 'लाल' के ३ नाम हैं ॥

६ शोणः ( त्रि ), 'लाल कमलके समान सुर्ख लाल' का १ नाम है ॥

७ अरुणः ( त्रि ), 'गुलाबी' का १ नाम हैं ॥

८ पाटलः ( त्रि ), 'सफेदी लिये हुए लाल रंग' का १ नाम है ॥

९ श्यावः, कपिशः ( २ त्रि ), 'फीके रंग' के २ नाम हैं ॥

१० धूम्रः, धूमलः, कृष्णलोहित, ( ३ त्रि ), 'कालापनसे युक्त लाल' के ३ नाम हैं ॥

११ कडारः, कपिलः, पिङ्गः, पिशङ्गः, कद्रुः, पिङ्गलः ( ६ त्रि ), 'भूरे' के ६ नाम हैं ॥

१२ चित्रम् ( भा० दी० म० नपुं० ), किर्मीरः ( +कर्मीरः ), कल्माषः, शबलः, एतः, कर्बुरः ( ६ त्रि ), 'चितकबरे' के ६ नाम हैं । ( 'कौन २ रंग कैसे होते हैं, यह बात टिप्पणीमें स्पष्ट है' * ) ॥

---

*श्वेतादिरागाणां व्यक्तं विवरणं शब्दार्णवे प्रोक्तम् । तद्यथा—
'श्वेतस्तु समपीतोऽसौ रक्तेतरजपारुचिः । वलक्षस्तु सितः श्यामः कन्दलीकुसुमोपमः ॥१॥

१ गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति ॥ १७ ॥

इति धीवर्गः ॥ ५ ॥

## ६. अथ शब्दादिवर्गः ।

२ *ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती ।
व्याहार उक्तिर्लपितं भाषितं वचनं वचः ॥ १ ॥

---

१ इनमें से 'शुक्ल' आदि सब शब्द गुणवाचक रहनेपर पुंल्लिङ्ग ही होते हैं और गुणिवाचक होनेपर त्रिलिङ्ग होते हैं ( 'जैसे—शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रम्,·········' ) ॥

इति धीवर्गः ॥ ५ ॥

## ६. अथ शब्दादिवर्गः ।

२ ब्राह्मी ( + गौः, = गो ), भारती, भाषा, गीः ( गिर् । + गिरा ), वाक् ( = वाच् ), वाणी ( + वाणिः ), सरस्वती, व्याहारः ( पु ), उक्तिः ( शेष ८ स्त्री ), लपितम्, भाषितम्, वचनम् , वचः ( = वचस् । ४ न ), 'वचन' अर्थात् 'बोलने' के १२ नाम हैं । ('इनमेंसे 'ब्राह्मी' से 'सरस्वती' तक ६ शब्द 'वचनके अधिष्ठात्री देवी' के भी नाम हैं' ) ॥

---

अर्जुनस्तु सितः कृष्णलेशवान् कुमुदच्छविः । पाण्डुस्तु पीतभागार्द्धः केतकीधूलिसन्निभः ॥२॥
धूसरस्तु सितः पीतकेशवान् बकुलच्छविः । मेचकः कृष्णनीलः स्यादतसीपुष्पसन्निभः ॥३॥
सितपीतहरिद्रक्तः कडारस्तृणवह्निवत् । अयं तद्रक्तपीताङ्गः कपिलो गोविभूषणः ॥४॥
हरितांशेऽधिकेऽसौ तु पिशङ्गः पद्मधूलिवत् । पिशङ्गस्त्वासितावेशात्पिशो दीपशिखादिषु ॥५॥

पिङ्गलस्तु परिच्छायः पिङ्गे शुक्लाङ्कखण्डवत् ॥' इति ॥

१ 'ब्राह्मी गौर्भारती·········' इति पाठान्तरम् ॥

१ अपभ्रंशोऽपशब्दः स्याच्छास्त्रे शब्दस्तु वाचकः।
३ तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता ॥ २ ॥
४ श्रुतिः स्त्री वेद आम्नायस्त्रयी ५ धर्मस्तु तद्विधिः।

१ अपभ्रंशः, अपशब्दः (२ पु) 'अपभ्रंश' अर्थात् 'व्याकरण शास्त्रसे नहीं सिद्ध होनेवाले गगरी, घड़ा, इत्यादि भ्रष्ट (असंस्कृत) शब्द' के २ नाम हैं ॥

२ शब्दः ( पु ), 'व्याकरण आदि शास्त्रोंमें जो वाचक हैं उन'का १ नाम है। ('जैसे—'ओत-प्रोत तन्तुओंका वाचक 'पट' शब्द है, कम्बुग्रीवादि-संस्थान विशिष्टका वाचक 'घट' शब्द है,.........' ) ॥

३ वाक्यम् (न), 'वाक्य' का १ नाम है। ('तिङन्त समुदाय १, 'सुबन्त-समुदाय २, पद-समुदाय ३, या कारकान्वित क्रिया ४, को 'वाक्य' कहते हैं। क्रमशः उदाहरण—१ तिङन्त-समुदाय जैसे—'पचति, भवति,.........'। २ सुबन्त-समुदाय जैसे—'प्रकृतिसिद्धमिदं हि महात्मनाम्,......'। ३ पद-समुदाय जैसे—'देवदत्तो गच्छति, ओदनं पचति,......'। ४ कारकान्वित क्रिया जैसे—'रावणं जहि निशितेन शरेण,......' ) ॥

४ श्रुतिः, वेदः, आम्नायः ( २ पु ), त्रयी ( शेष २ स्त्री ), 'वेद' के ४ नाम हैं ॥

५ धर्मः (पु। मुकुट म० [1]'त्रयीधर्मः', पु,) 'धर्म' अर्थात् 'वेदोक्त यज्ञादि

१. 'ऋक्, साम, यजुः' इति प्रत्येकं वेदस्य पर्याय इत्युक्त्वा 'त्रयीधर्मः' इत्येकं 'वेद-विहितयागादिकर्मणः' पर्याय इत्युक्तम्, तत्र च त्रय्या धर्मस्त्रयीधर्मः, तया त्रय्या विधिर्विधीयमानो यागादिरिति विग्रहः प्रदर्शितस्तच्चिन्त्यम्। 'विधा धर्मेण शोभते, धर्मक्षेत्रे कुरुक्षेत्रे (गी. १।१), धर्मान्नो वक्तुमर्हसि (मनु. १।२)। ब्रूहि धर्मानशेषतः (याज्ञ. स्मृ. १।१), धर्मादनिच् केवलात् (पा. सू. ५।४।१२४), इत्याद्यभियुक्तोक्तवचनेषु 'धर्म'शब्दस्यैव दर्शनात्। 'भीमः भीमसेनः, सत्या, भामा, सत्यभामा', इतिवत्पदैकदेशस्यात्रापि प्रयोग इति तु नाशङ्क्यम्। लोके भीमादीनां पृथक् पृथक् प्रयोगदर्शनेनास्य 'त्रयीधर्म'शब्दस्य क्वापि तथाऽदर्शनेन वैषम्यात्। 'त्रयीधर्म'शब्दस्य प्रयोग उपलब्धे तु प्रतिपाद्यप्रतिपादकभावरूपं सम्बन्धं मत्वा षष्ठीतत्पुरुषसमासो बोध्यः। ब्राह्मणक्षत्रियवैश्यानां द्विजत्वेऽपि ब्राह्मणस्यापि द्विजत्ववदिहापि सामान्य-विशेषरूपेणोभयसम्भवात् '......वेदास्त्रयस्त्रयी ( १।३।६ )' इत्यनेन पौनरुक्त्यं नाशङ्क्यम्। '......धर्ममस्त्रियाम् ( १।४।२४ )' इत्यनेनापि न पौनरुक्त्यम्। तत्र धर्मपर्यायाणामत्र च धर्मस्वरूपस्य धर्मप्रमाणस्य चाभिधानेनादोषात्। अधिकन्तु परत्र द्रष्टव्यम् ॥

१ स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी ॥ ३ ॥
२ शिक्षेत्यादि श्रुतेरङ्ग३मोङ्कारप्रणवौ समौ।
४ इतिहासः पुरावृत्त५मुदात्ताद्यास्त्रयः स्वराः ॥ ४ ॥
६ आन्वीक्षिकी—

---

कर्म'का १ नाम है। ('स्मृतियोंके भी वेदमूलक होनेसे स्मृत्युक्त कर्म भी 'धर्म' ही हैं') ॥

१ ऋक् ( =ऋच्, स्त्री ), साम ( = सामन्), यजुः ( = यजुस्। २ न), अर्थात् 'ऋग्वेद, सामवेद और यजुर्वेद' ये ३ 'वेद' हैं, इन तीनोंका 'त्रयी' ( स्त्री ), यह १ नाम है ॥

२ शिक्षा (स्त्री), आदि ( 'आदि शब्दसे 'कल्प १, व्याकरण २, निरुक्त ३, ज्यौतिष ४ और छन्दः ५, इनका संग्रह है' ) को 'वेदाङ्गम्'[1] (न) 'वेदाङ्ग' अर्थात् 'वेदोंका अङ्ग' कहते हैं ॥

३ ओङ्कारः ( +ॐकारः ), प्रणवः, ( २ पु ), 'वेदारम्भ' अर्थात् 'ओंकार' के २ नाम हैं ॥

४ इतिहासः (पु), 'पुरावृत्तम् (न), 'इतिहास' के २ नाम हैं। ( 'पूर्व-कालमें बीती हुई कथाको 'इतिहास' कहते हैं, जैसे—'महाभारत,·······' ) ॥

५ उदात्तः (पु), आदि ('आदि पदसे 'अनुदात्त और स्वरित' का संग्रह है' ), ३ को 'स्वरः'[2] ( पु ), अर्थात् 'स्वर' कहते हैं ॥

६ आन्वीक्षिकी[3] ( स्त्री ), 'गौतम आदिकी रचित तर्कविद्या' का १ नाम है ॥

---

१. तदुक्तम्—'शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः।
छन्दोविचितिरित्येष षडङ्गो वेद उच्यते ॥ १ ॥' इति ॥

२. तदुक्तम्—'उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः।
चतुर्थः प्रचितो नोक्तो यतोऽसौ छान्दसः स्मृतः ॥ १ ॥' इति ॥

३. आन्वीक्षिक्यादयश्चतस्रो विद्याः कामन्दके—
'अन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती।
विद्या ह्येताश्चतस्रस्तु लोकसंस्थितिहेतवः ॥ १ ॥' इति ॥

१ दण्डनीतिस्तर्कविद्याऽर्थशास्त्रयोः ।
२ आख्यायिकोपलब्धार्था ३ पुराणं पञ्चलक्षणम् ॥ ५ ॥

---

१ दण्डनीतिः ( स्त्री ), 'बृहस्पति आदिके रचित अर्थशास्त्र' का १ नाम है ॥

२ आख्यायिका, उपलब्धार्था ( २ स्त्री ), 'आख्यायिका' के २ नाम हैं। ('अनुभूत विषयको प्रतिपादन करनेवाले ग्रन्थको 'आख्यायिका'[1] कहते हैं, हैं, जैसे—'कादम्बरी, वासवदत्ता······') ॥

३ पुराणम् ( न ), 'पुराण' अर्थात् पांच लक्षणोंसे युक्त ग्रंथ' का १ नाम है। ('सर्ग १, प्रतिसर्ग अर्थात् संहार २, वंश ३, मन्वन्तर ४ और वंशवर्णन ५, इन पांच लक्षणोंसे युक्त ग्रन्थको 'पुराण'[2] कहते हैं। 'पद्मपुराण १, ब्रह्मपुराण २, शिवपुराण ४, देवीभागवत पुराण ५, नारदपुराण ६, मार्कण्डेयपुराण ७, अग्निपुराण ८, भविष्यपुराण ९, ब्रह्मवैवर्तपुराण १०, लिङ्गपुराण ११, वाराहपुराण १२, स्कन्दपुराण १३, वामनपुराण १४, कूर्मपुराण १५, मत्स्यपुराण १६ गरुडपुराण १७, और ब्रह्माण्डपुराण १८, ये १८ 'पुराण'[3] हैं' ) ॥

---

तासां प्रतिपाद्यविषयाश्च विज्ञानादयस्तदाह—

'आन्वीक्षिक्यां तु विज्ञानं धर्माधर्मौ त्रयीस्थितौ ।
अर्थानर्थौ तु वार्त्तायां दण्डनीत्यां नयानयौ ॥ १ ॥' इति ॥

१. 'आख्यायिका कथावत्स्यात्कवेर्वंशादिकीर्त्तनम् ।
अस्यामन्यकवीनाञ्च वृत्तं पद्यं क्वचित्क्वचित् ॥ १ ॥
कथांशानां व्यवच्छेद आश्वास इति बध्यते ।
आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् ॥ २ ॥
अन्यापदेशेनाश्वासमुखे भावार्थसूचनम् ॥' इति ॥ सा द० ६।३३४॥

२. 'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥१॥
इति अभि० चिन्ता० 'हैम' २।१६६ ॥

प्रतिसर्गः संहारोऽन्यत्स्पष्टम् । क्वचित् 'वंशानुचरितं चैवे'ति तृतीयपादस्थाने 'भूम्यादेश्चैव संस्थानम् इति पाठभेदः ।

३. तदुक्तं विष्णुपुराणे—

१ प्रबन्धकल्पना कथा २ प्रवह्लिका प्रहेलिका।

१ कथा ( स्त्री ), 'कथा' अर्थात् '[1]वाक्यविस्तारकी कल्पनावाले ग्रन्थ'का १ नाम है। ( 'जैसे—'रामायण, कथासरित्सागर, बृहत्कथामञ्जरी,······') ॥

२ प्रवह्लिका ( + प्रवल्हिका, प्रवल्ही, प्रश्नदूती, विपादिका ),[2] प्रहेलिका (२ स्त्री), 'पहेली, बुझौवल' के २ नाम हैं। ( संस्कृतकी पहेली जैसे—'पानीयं पातुमिच्छामि त्वत्तः कमललोचने। यदि दास्यसि नेच्छामि न दास्यसि पिबाम्यहम्'। इस श्लोकमें दोनों 'दास्यसि' पदको दानार्थक मानकर 'दोगी' यह अर्थ करनेपर सन्देह होता है और एक 'दास्यसि' पदको उक्तार्थक तथा दूसरे 'दास्यसि' पदका 'दासी हो' यह अर्थ माननेपर संदेह दूर हो जाता है। हिन्दीकी पहेली जैसे—'सारी लुगड़ी जल गई, जला न एको तागा। घरके लड़के फँस गये, घर खिड़कीसे भागा' ॥ इस पद्यमें 'समूची लुगड़ी अर्थात् कन्थाके जलने पर एक तागाका भी नहीं जलना, चैतन्य गृहवासियोंका फंस जाना और अचैतन्य घरका भाग जाना, ये सब सन्देह उत्पन्न होते हैं; किन्तु 'जल गया' इस शब्दका 'जलमें गया' ऐसा अर्थ करनेपर एक तागाका भी नहीं जलना असन्देहार्थक है, तथा जालमें चैतन्य मछलियोंका फँस जाना और जालके छिद्ररूपी खिड़कीसे पानीरूपी मछलियोंके घरका भाग जाना ऐसा अर्थ करनेसे कोई सन्देह नहीं होता है, इसी तरह प्रत्येक भाषामें 'पहेली' होती है' ) ॥

---

अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते। पाद्मं ब्राह्मं वैष्णवञ्च शैवं भागवतं तथा ॥१॥
तथाऽन्यन्नारदीयञ्च मार्कण्डेयञ्च सप्तमम्। आग्नेयमष्टमं चैव भविष्यं नवमं स्मृतम् ॥२॥
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं तथा। वाराहं द्वादशञ्चैव स्कान्दञ्चात्र त्रयोदशम् ॥३॥
चतुर्दशं वामनकं कौर्मं पञ्चदशं स्मृतम्। मात्स्यञ्च गारुडञ्चैव ब्रह्माण्डञ्च ततः परम् ॥४॥' इति॥

प्रत्येकपुराणस्य श्लोकसङ्ख्याविषयादिज्ञानार्थं विष्णुपुराणस्य त्रिपञ्चाशत्तमोऽध्यायो द्रष्टव्य इति।

१. तदुक्तम्—'व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनम्।
यत्र बाह्यार्थसम्बद्धं कथ्यते सा प्रहेलिका ॥ १ ॥' इति ॥

१ स्मृतिस्तु धर्मसंहिता २ समाहृतिस्तु संग्रहः ॥ ६ ॥
३ [1]समस्या तु समासार्था ४ किंवदन्ती जनश्रुतिः ।
५ वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्याद्६थाह्वयः ॥ ७ ॥

---

१ स्मृतिः ( स्त्री ), 'स्मृति शास्त्र' अर्थात् 'मनु आदिके बनाये हुए धर्म-ग्रन्थ' का १ नाम है। ( मनुस्मृति आदि २० या इससे भी अधिक[2] स्मृतियां हैं' ) ॥

२ समाहृतिः ( स्त्री ) [3]संग्रह ( पु ), 'संग्रह ग्रन्थ' के २ नाम हैं। ( 'जैसे—'हितोपदेश, पञ्चतन्त्र,······' ) ॥

३ समस्या, समासार्था ( +असमासार्था'। २ स्त्री ), 'समस्या' के २ नाम हैं। ( 'पद्यपूर्तिके लिये पद्यका थोड़ा अंश जो कहा जाय, उसे 'समस्या' कहते हैं, जैसे—'टटंटटंटंटटटंटटंटः' यह थोड़ा पद्यांश कहा गया है, इसे पूरा करनेपर 'राज्याभिषेके मदविह्वलाया हस्तच्युतो हेमघटो युवत्याः। सोपानमार्गेषु करोति शब्दं टटंटटंटंटटटंटटंटः' यह पद्य होता है। यह भी प्रत्येक भाषामें होती है' ) ॥

४ किंवदन्ती, जनश्रुतिः ( २ स्त्री ), लोगों में बातचीतके चलने, हौरा हो जाने, लोकनिन्दा या लोकोक्ति' के २ नाम हैं ॥

५ वार्त्ता, प्रवृत्तिः ( २ स्त्री ), वृत्तान्तः, उदन्तः ( २ पु ), 'बात' के ४ नाम हैं ॥

६ आह्वयः ( पु ), आख्या, आह्वा ( २ स्त्री ), अभिधानम् , नामधेयम् ,

---

१. 'समस्या त्वसमासार्था·········' इति पाठान्तरम् ॥

२. मनुर्यमो वसिष्ठोऽत्रिर्दक्षो विष्णुस्तथाऽङ्गिराः ।
उशना वाक्पतिर्व्यास आपस्तम्बोऽथ गौतमः ॥ १ ॥
कात्यायनो नारदश्च याज्ञवल्क्यः पराशरः ।
संवर्त्तश्चैव शङ्खश्च हारीतो लिखितस्तथा ॥ २ ॥' इति ॥
एता विंशतिराख्याता धर्मशास्त्रप्रवर्त्तकाः ।

क्वचित् 'नारदश्च' इत्यस्य स्थाने 'शातातपश्च'इति पाठः । 'मन्वादिस्मृतयो यास्तु षट्त्रिंशत्परिकीर्त्तिताः' इति भविष्यपुराणे गुरुं प्रति विष्णूक्तेस्तासां षट्त्रिंशत्सङ्ख्या वा बोध्या ॥

३. 'विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः ।
निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः ॥ १ ॥' इति ॥

आख्याह्वे अभिधानं च नामधेयं च नाम च ।
१ हूतिराकारणाह्वानं २ संहूतिर्बहुभिः कृता ॥ ८ ॥
३ विवादो व्यवहारः स्या४दुपन्यासस्तु वाङ्मुखम् ।
५ उपोद्धात उदाहारः ६ शपनं शपथः पुमान् ॥ ९ ॥
७ प्रश्नोऽनुयोगः पृच्छा च ८ प्रतिवाक्योत्तरे समे ।
९ मिथ्याभियोगोऽभ्याख्यान१०मथ मिथ्याभिशंसनम् ॥ १० ॥

---

नाम ( = नामन् । ३ न । + संज्ञा, स्त्री ), 'नाम' के ६ नाम हैं ॥

१ हूतिः, आकारणा ( २ स्त्री ), आह्वानम् ( न ), 'बुलाने या पुकारने' के ३ नाम हैं ।

२ संहूतिः ( स्त्री ), 'इकट्ठा होकर बहुत लोगोंके पुकारने' का १ नाम है ॥

३ विवादः, व्यवहारः ( २ पु ), 'विवाद या झगड़ा' अर्थात् 'लेन, देन इत्यादि किसी विरुद्ध विषयोंको लेकर परस्पर विरुद्ध भाषण करने या मुकदमे· बाजी' के २ नाम हैं ॥

४ उपन्यासः (पु), वाङ्मुखम् (न), बातको प्रारम्भ करने' के २ नाम हैं ॥

५ उपोद्धातः, उदाहारः ( २ पु ), 'कही जानेवाली बातकी सिद्धिके लिये भूमिका बाँधने, या दृष्टान्त आदि देने' के २ नाम हैं ॥

६ शपनम् ( न ), शपथः ( पु ) 'शपथ कसम' के २ नाम हैं ॥

७ प्रश्नः, अनुयोगः, ( २ पु ), पृच्छा ( स्त्री ), 'प्रश्न' के २ नाम हैं ॥

८ प्रतिवाक्यम् , उत्तरम् ( २ न ), 'उत्तर, जबाब' के २ नाम हैं ॥

९ मिथ्याभियोगः ( पु ), अभ्याख्यानम् (न), 'किसीपर झूठा आक्षेप करने' के २ नाम हैं ॥ ( जैसे—'कुछ नहीं लिये हुए किसी आदमीपर तुमने अमुक चीज ली है, इत्यादि आक्षेप करना,·········' ) ॥

१० मिथ्याभिशंसनम् ( न ), अभिशापः ( पु । + शापः ), 'किसीके ऊपर पापविषयक झूठा सन्देह करने' के २ नाम हैं । ( 'जैसे—किसीने परदारागमन या मद्यपान इत्यादि नहीं किया है ; किन्तु उसपर परदारागमन या मद्यपान आदि करनेका सन्देह करना,·············' ) ॥

अभिशापः १ प्रणादस्तु शब्दः स्यादनुरागजः ।
२ [1]यशः कीर्तिः समज्ञा च ३ स्तवः स्तोत्रं नुतिः स्तुतिः ॥ ११ ॥
४ आम्रेडितं द्विस्त्रिरुक्त५मुच्चैर्घुष्टं तु घोषणा ।
६ काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः ॥ १२ ॥
७ अवर्णाक्षेपनिर्वादपरीवादापवादवत् ।
उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ॥ १३ ॥
८ पारुष्यमतिवादः स्याद्—

१ प्रणादः ( पु ), 'गुणके प्रेमसे कहे हुए शब्द' अर्थात् 'वाहवाही या शाबासी देने' का २ नाम है ॥

२ यशः ( =यशस् , न ), कीर्त्तिः, समज्ञा ( +समाज्ञा, समज्या । ३ स्त्री ), 'कीर्ति यश' के ३ नाम हैं । ( जीवित व्यक्तिकी ख्यातिको 'यश' तथा मृत व्यक्तिकी ख्यातिको 'कीर्त्ति' कहते हैं, ऐसा मनुस्मृतिके टीकाकार कुल्लूक भट्टने कहा है[2] ॥

३ स्तवः ( पु ), स्तोत्रम् ( न ), नुतिः, स्तुतिः ( +प्रशंसा । २ स्त्री ), 'स्तुति' के ४ नाम हैं ॥

४ [3]आम्रेडितम् ( न ), 'एक ही शब्दको दो या तीन बार कहने' का १ नाम है । ( जैसे—साँप साँप दौड़ो दौड़ो,'……' ) ॥

५ उच्चैर्घुष्टम् ( न ), घोषणा ( स्त्री ), ऊंचे स्वरसे घोषणा कहने' के २ नाम हैं ।

६ काकुः ( स्त्री ), 'शोक डर या काम इत्यादिके कारण विकृत ध्वनिसे बोलने' का १ नाम हैं । 'जैसे—उपकृतं बहु तत्र किमुच्यते'……' अर्थात् किसी बुराई करनेवालेसे—'आपने हमारा बड़ा उपकार किया' इत्यादि वचन कहना'……' ) ॥

७ अवर्णः, आक्षेपः, निर्वादः, परीवादः (+परिवादः), अपवादः (+अववादः ), उपक्रोशः ( ६ पु ), जुगुप्सा, कुत्सा, निन्दा ( ३ स्त्री ), गर्हणम् ( न ), 'निन्दा, शिकायत' के १० नाम हैं ॥

८ पारुष्यम् ( न ), अतिवादः (पु), 'कटु वचन या कड़ाईसे बोलने' के २ नाम हैं ॥

---

१. 'यशः कीर्तिः समज्या च……' इति पाठान्तरम् ।
२. एतदर्थं मनुस्मृतेर्मन्वर्थमुक्तावली ( ८।१२७ ) टीका द्रष्टव्या ।
३. तस्य परमाम्रेडितम् ( पा० सू० ८।१।२ ) इत्यनेनेत्यवधेयम् ॥

—१ भर्त्सनं त्वपकारगीः ।
२ यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् ॥ १४ ॥
३ तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति ।
४ स्यादाभाषणमालापः ५ प्रलापोऽनर्थकं वचः ॥ १५ ॥
६ अनुलापो मुहुर्भाषा ७ विलापः परिदेवनम् ।
८ विप्रलापो विरोधोक्तिः ९ संलापो भाषणं मिथः ॥ १६ ॥
१० सुप्रलापः सुवचन ११ मपलापस्तु निह्नवः ।

---

१ भर्त्सनम् ( न ), अपकारगीः ( =अपकारगिर्, स्त्री ), 'फटकारने' के २ नाम हैं ॥

२ परिभाषणम् ( न ), 'शिकायत करते हुए दोषको कहने' का १ नाम है ॥

३ आक्षारणा ( स्त्री । +न ), 'परपुरुषगमन या परस्त्री-गमन-विषयक दोष लगाने' का १ नाम है ॥

४ आभाषणम् ( न ), आलापः ( पु ), 'प्रेमसे बात करने' के २ नाम हैं ॥

५ प्रलापः ( पु ), 'प्रलाप करने, बड़बडाने' का १ नाम है ॥

६ अनुलापः ( पु ), मुहुर्भाषा ( स्त्री ), 'एक ही विषयको बार-बार कहने' के २ नाम हैं ॥

७ विलापः ( पु । +विलपनम्, न ), परिदेवनम् ( न । +स्त्री ), रोते हुए बोलने' के २ नाम हैं ॥

८ विप्रलापः ( पु ), विरोधोक्तिः ( स्त्री ), 'परस्पर विरुद्ध बात कहने' के २ नाम हैं ॥

९ संलापः ( पु ), 'परस्परमें बात करने' का १ नाम है । ( 'आलाप' एक आदमी भी कर सकता है; किन्तु 'संलाप' एक आदमी नहीं कर सकता, यही आलाप और संलापमें भेद है' ) ॥

१० सुप्रलापः ( पु ), सुवचनम् ( न ), 'मीठे वचन' के २ नाम हैं ॥

११ अपलापः, निह्नवः ( २ पु ), 'असल विषयको छिपानेके लिये मुकर जाने' के २ नाम हैं ॥

१ [1]'चोद्यमाक्षेपाभियोगौ २ शापाक्रोशौ दुरेषणा (४६)
३ अस्त्री चाटु चटु ४ श्लाघा प्रेम्णा मिथ्याविकत्थनम्' (४७)
५ सन्देशवाग्वाचिकं स्याद्वाग्भेदास्तु त्रिषूत्तरे ॥ १७ ॥
७ [2]रुषती वागकल्याणी ८ स्यात्कल्या तु शुभात्मिका ।
९ अत्यर्थमधुरं सान्त्वं—

१ [ चोद्यम् ( न ), आक्षेपः, अभियोगः ( २ पु ), 'आक्षेप' के २ नाम हैं ] ॥

२ [ शापः, आक्रोशः ( २ पु ), दुरेषणा ( स्त्री ), 'शाप देने' के ३ नाम हैं ] ॥

३ [ चाटु, चटु (२ पु न), 'मुंहदेखी बात कहने, चापलूसी करने' के २ नाम हैं ] ॥

४ [ श्लाघा ( स्त्री ) 'प्रेमसे झूठी स्तुति करने' का १ नाम है ] ॥

५ सन्देशवाक् ( = सन्देशवाच् , स्त्री), वाचिकम् ( न ) 'संदेश कहने' के २ नाम हैं ॥

६ यहां से '……त्रिषु तद्वति (१।६।२२) तक सब शब्द त्रिलिङ्ग हैं ॥

७ रुषती ( त्रि । + रुशती, उषती मु० म० । यह 'रुषती' स्त्रीलिङ्गका रूप है, पुंल्लिङ्गमें 'रुषन्' और नपुंसकलिङ्गमें 'रुषत्' रूप होता है । इसी तरह आगे कहे जानेवाले शब्दोंके भी तीनों लिङ्गमें भिन्न २ रूप होंगे, उन्हें स्वयं समझ लेना चाहिये' ), 'अशुभ वचन' का १ नाम है ॥

८ कल्या ( त्रि । + काल्या ), 'शुभ वचन' का १ नाम है ॥

९ सान्त्वम् ( त्रि ), 'अत्यन्त मधुर वचन' का १ नाम है ॥

---

१. 'चोद्यमाक्षेप………विकत्थनम्' अयमंशः क्षी० स्वा० टीकायामुपलभ्यते ॥

२. 'उषती वागकल्याणी……' इति मुकुटसम्मतं पाठान्तरम् । अत्र '(रुषती) हिंसे- त्यर्थः, न तां वदेद्रुषतीं (गां) पापकोक्याम् , अत एव 'उषती'ति असभ्यः पाठः' इति क्षी० स्वा० । 'मुकुटस्तु 'उषती'ति पाठे 'उष दाहे' इत्यस्य शत्रन्तस्य 'उषती' इति रूपमाह, तन्न । तस्माच्छपि 'कर्तरि शप्' ( पा० सू० ३।१।६८ ) 'पुगन्तलघु—( पा० सू० ७।३।८६ ) इति गुणस्य 'शप्श्यनोर्नित्यम्' ( पा० सू० ७।१।८१ ) इति नुमश्च प्रसङ्गात्' इति भा० दी० । तन्नेति भा० दी० प्रतीकमादाय 'गुणस्य संज्ञापूर्वकत्वेन नुम आगमशासनत्वेन तेनैव वारितत्वेनाकिञ्चित्करमेतत् । पीयूषव्याख्यायामपि 'उषती' इति पाठं प्रदर्श्य 'रुशती' इत्येके— इत्युक्तम्' इति शि० द० इत्युक्तम् ॥

—१ सङ्गतं हृदयङ्गमम् ॥ १८ ॥
२ निष्ठुरं परुषं ३ ग्राम्यमश्लीलं ४ सूनृतं प्रिये ।
सत्येऽ५थ सङ्कुलक्लिष्टे परस्परपराहते ॥ १९ ॥
६ लुप्तवर्णपदं ग्रस्तं ७ निरस्तं त्वरितोदितम् ।
८ 'अम्बूकृतं सनिष्ठीव९मबद्धं स्यादनर्थकम् ॥ २० ॥
१० अनक्षरमवाच्यं स्या११दाहतं तु मृषार्थकम् ।

१ सङ्गतम्, हृदयङ्गमम् (२ त्रि), 'संगतियुक्त वचन, मौकेकी बात' के २ नाम हैं ॥

२ निष्ठुरम्, परुषम् ( २ त्रि ), 'निष्ठुर वचन' के २ नाम हैं ॥

३ ग्राम्यम्, अश्लीलम् ( २ त्रि ), 'भाँड़ आदिके कहे हुए सभ्यता-विरुद्ध वचन' के २ नाम हैं ॥

४ सूनृतम् ( त्रि ), 'सत्य और प्रिय वचन' का १ नाम है ॥

५ सङ्कुलम्, क्लिष्टम्, परस्परपराहतम् (भा० दी० म० । ३ त्रि), 'विरुद्धार्थक या बेमौकेकी बात' के ३ नाम हैं ॥

६ लुप्तवर्णपदम्, ग्रस्तम् (भा० दी० म० । २ त्रि), 'रोगी, बालक या असमर्थके कहे हुए अधूरे वचन' के २ नाम हैं ।

७ निरस्तम्, त्वरितोदितम् ( भा० दी० म० । २ त्रि ), शीघ्रतासे कहे हुए वचन' के २ नाम हैं ॥

८ अम्बूकृतम्, सनिष्ठीवम् ( भा० दी० म० सनिष्ठेवम् । २ त्रि ), 'थूकका छींटा निकलते हुए कहे गये वचन' के २ नाम हैं ॥

९ अबद्धम् ( + अवध्यम् ), अनर्थकम् ( भा० दी० म० । २ त्रि ), 'अनर्थक वचन' अर्थात् 'बिना मतलबकी बात' के २ नाम हैं ॥

१० अनक्षरम्, अवाच्यम् ( २ त्रि ), 'नहीं कहने योग्य वचन' के २ नाम हैं ॥

११ आहतम्, मृषार्थकम् (भा० दी० म० । २ त्रि), 'अत्यन्त झूठे वचन' के २ नाम हैं । ( जैसे—बन्ध्याका वह लड़का, आकाशपुष्पका मुकुट पहने हुए, मृगतृष्णाके जलमें स्नानकर, कच्छपीदुग्धको पीनेके उपरान्त, शशशृङ्गके बाजाको

१. 'अम्बूकृतं सनिष्ठेवमवध्यं स्यादनर्थकम्' इति पाठान्तरम् ॥

१ "सोल्लुण्ठनं तु सोत्प्रासं २ भणितं रतिकूजितम् (४८)
३ श्राव्यं हृद्यं मनोहारि विस्पष्टं प्रकटोदितम्"(४९)
४ अथ म्लिष्टमविस्पष्टं ५ वितथं त्वनृतं वचः ॥ २१ ॥
६ सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति ।
७ शब्दे निनादनिनदध्वनिध्वानरवस्वनाः ॥ २२ ॥
स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः ।
आरवारावसंरावविरावा ८ अथ मर्मरः ॥ २३ ॥
स्वनिते वस्त्रपर्णानां ९ भूषणानां तु शिञ्जितम् ।

बजाकर अष्टम स्वरसे गान किया तो, उसे परार्द्धसे अधिक रुपया पारितोषिक मिला'·········' ) ॥

१ [ सोल्लुण्ठनम्, सोत्प्रासम् ( २ त्रि ), 'हँसीकी बात'के २ नाम हैं] ॥

२ [ भणितम् ( +कणितम् ), रतिकूजितम् ( २ त्रि ), 'रति-कालमें किये हुए शब्द'के २ नाम हैं ] ॥

३ [ श्राव्यम्, हृद्यम्, (मनोहारि = मनोहारिन्), विस्पष्टम्, प्रकटोदितम् ( ५ त्रि ), 'स्पष्ट वचन' के ५ नाम हैं। ( म० से 'श्राव्यम्' आदि ३ नाम 'मनोहर वचन' के हैं और शेष 'विस्पष्टम्' आदि २ नाम उक्तार्थक हैं' ) ] ॥

४ म्लिष्टम्, अविस्पष्टम् ( २ त्रि ) 'अस्पष्ट वचन' के २ नाम हैं ॥

५ वितथम्, अनृतम् ( २ त्रि ), झूठे वचन' के २ नाम हैं ॥

६ सत्यम्, तथ्यम्, ऋतम्, सम्यक् ( = सम्यञ्च्। ४ त्रि ), 'सत्य वचन' के ४ नाम हैं। ये चार शब्द द्रव्यवाचक होनेपर त्रिलिङ्ग होते हैं। ( 'जैसे-सत्यः पुरुषः, सत्या नारी, सत्यं कुलम्, ·········' ) ॥

७ शब्दः, निनादः, निनदः, ध्वनिः, ध्वानः, रवः, स्वनः, स्वानः, निर्घोषः, निर्ह्रादः, नादः, निस्वानः, निस्वनः, आरवः, आरावः, संरावः, विरावः ( १७ पु ), 'शब्द' के १७ नाम हैं ॥

८ मर्मरः ( पु ), 'कपड़े या सूखे पत्तोंके शब्द' का १ नाम है ॥

९ शिञ्जितम् (न। + स्वामी म० 'शिञ्जा'), 'आभूषणके शब्द'का १ नाम है ॥

१. 'सोल्लुण्ठनं·········प्रकटोदितम्' अयमंशः क्षी० स्वा० टीकायामुपलभ्यते। 'सोल्लुण्ठनं·········कूजितम्' इत्येतावन्मात्रोंऽशो भा० दी० व्याख्यातम् ॥

१ निक्काणो निक्कणः क्काणः क्कणः क्कणनमित्यपि ॥ २४ ॥
वीणायाः क्कणिते २ प्रादेः प्रक्काणप्रक्कणादयः।
३ कोलाहलः कलकल४स्तिरश्चां वाशितं रुतम् ॥ २५ ॥
५ स्त्री प्रतिश्रुत्प्रतिध्वाने ६ गीतं गानमिमे समे।

इति शब्दादिवर्गः ॥ ६ ॥

## ७. अथ नाट्यवर्गः।

७ निषादर्षभगान्धारषड्जमध्यमधैवताः ।

---

१ निक्काणः, निक्कणः, क्काणः, क्कणः ( ४ पु ), क्कणनम् ( न ), 'वीणा आदिके शब्द' के ५ नाम हैं ॥

२ इन 'निक्काण' आदि शब्दोंके 'प्र' आदि ( आदिसे 'उप, सु' इत्यादिका संग्रह है ) उपसर्ग जोड़नेसे बने हुए 'प्रक्काणः' प्रक्कणः' आदि ( आदि शब्दसे 'प्रक्कणनम् , उपक्कणः, उपक्काणः, उपक्कणनम्......' का संग्रह है ) शब्द भी उसी अर्थमें होते हैं। ('भा० दी० मतमें 'शिञ्जितम्......' आदि ६ नाम 'भूषणादिके शब्द' के हैं, 'प्रक्काण' आदि 'वीणादिके शब्द' के हैं'[१] ) ॥

३ कोलाहलः, कलकलः ( २ पु० ), 'कोलाहल, शोरगुल' के २ नाम हैं ॥

४ वाशितम् ( +वासितम् । न ), 'पक्षियोंके चहचहाने' अर्थात् शब्द करने'का १ नाम है ॥

५ प्रतिश्रुत् (स्त्री), प्रतिध्वानः (+प्रतिध्वनिः । पु), प्रतिध्वनित शब्द' के २ नाम हैं। ( 'ऐसा शब्द पहाड़ आदिकी गुफामें या मन्दिरोंमें होता है' ) ॥

६ गीतम् , गानम् ( २ न ), 'गाना' के २ नाम हैं ॥

इति शब्दादिवर्गः ॥ ६ ॥

## ७. अथ नाट्यवर्गः ॥

७ निषादः, ऋषभः, गान्धारः, [२]षड्जः, [३]मध्यमः, धैवतः,

---

१. चिन्त्यमेतत् , 'क्कणो वीणायाञ्च' (पा० सू० ३।३।६५) इति 'च'कारस्य, 'नौ अनुपसर्गे' इत्यनुकर्षणार्थकत्वात् क्षी० स्वा० महे० रा० कु० दी० कृतपूर्वव्याख्यानस्यैवौचित्यात् ॥

२ 'नासां कण्ठमुरस्तालुं जिह्वां दन्तांश्च संस्पृशन् ।
षड्भ्यः संजायते यस्मात्तस्मात्षड्ज इति स्मृतः' ॥ १ ॥ इति ॥

३ 'तद्वदेवोत्थितो वायुरुरःकण्ठसमाहतः ।
नाभिं प्राप्तो महानादो मध्यस्थस्तेन मध्यमः' ॥ २ ॥ इति ॥

पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥ १ ॥
१ काकली तु कले सूक्ष्मे २ ध्वनौ तु मधुरास्फुटे ।
कलो ३ मन्द्रस्तु गम्भीरे ४ तारोऽत्युच्चैस्त्रयस्त्रिषु ॥ २ ॥
[५] [1]"नृणामुरसि मध्यस्थो द्वाविंशतिविधो ध्वनिः (५०)
स मन्द्रः कण्ठमध्यस्थस्तारः शिरसि गीयते' (५१)
६ समन्वितलयस्त्वेकतालो ७ वीणा तु वल्लकी ।

[1]पञ्चमः ( ७ पु ), ये ७ 'वीणा आदिके तार तथा प्राणियोंके कण्ठसे निकले हुए स्वरोंके भेद' हैं ।

१ काकली ( + काकलिः । स्त्री ), 'मधुर ध्वनि' का १ नाम है ॥

२ कलः ( त्रि ), 'अस्पष्ट मधुर ध्वनि' का १ नाम है ॥

३ मन्द्रः ( + मद्रः । त्रि ), 'गम्भीर ध्वनि' का १ नाम है ॥

४ तारः ( त्रि ), 'अत्यन्त ऊँचे शब्द' का १ नाम है ॥

५ [ मनुष्योंके हृदयमें बाइस प्रकारकी ध्वनियां रहती हैं, उनमें कण्ठके बीच वालोंको 'मन्द्र', (त्रि) 'मन्द्र' और शिरके बीचमें रहनेवालोंको 'तारः' (त्रि), 'तार' कहते हैं ] ॥

६ एकतालः ( पु ), 'गति और बाजाओंके लयका एक स्वरमें मिलाने' का १ नाम है ॥

७ वीणा, वल्लकी, विपञ्ची ( ३ स्त्री ), [3]'वीणा' के ३ नाम हैं ॥

---

१. 'नृणामुरसि..........गीयते' इत्यंशः केवलं महेश्वरव्याख्याते पुस्तके समुपलभ्यते, किन्तु सर्वैरप्यव्याख्यातोऽयमित्यवधेयम् ॥

२. 'वायुः समुद्गतो नाभेरुरोहृत्कण्ठमूर्द्धसु ।
विचरन् पञ्चमस्थानप्राप्त्या पञ्चम उच्यते' ॥ १ ॥ इति ॥

अथ प्रसङ्गात्कुतः २ स्थानात्कस्य २ स्वरस्याविर्भाव इत्यत्र नारदोक्तिः प्रदर्श्यते—

'षड्जं रौति मयूरस्तु गावो नर्दन्ति चर्षभम् ।
अजाविकौ च गान्धारं क्रौञ्चो वदति मध्यमम् ॥ १ ॥
पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् ।
अश्वस्तु धैवतं रौति निषादं रौति कुञ्जरः' ॥ २ ॥ इति ॥

पुष्पसाधारणे काले वसन्तर्तौ इत्यर्थः ॥

३. कस्य २ वीणायाः कानि २ नामानीत्यत्र हैमोक्तं प्रदर्श्यते—

विपञ्ची १ सा तु तन्त्रीभिः सप्तभिः परिवादिनी ॥ ३ ॥
२ ततं वीणादिकं वाद्य३मानद्धं मुरजादिकम् ।
४ [1]वंशादिकं तु सुषिरं ५ कांस्यतालादिकं घनम् ॥ ४ ॥
६ चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ।

---

१ परिवादिनी ( स्त्री ), 'सितार' अर्थात् 'सात तारवाली वीणा' का १ नाम है ॥

२ ततम् ( न ), 'वीणा आदि बाजाओं' का १ नाम है । ( 'आदि पदसे 'सैरन्ध्री, रावणहस्त, एकतारा, सारंगी, इसराज, वेला, तानपूरा,······' का संग्रह है' ) ॥

३ आनद्धम् ( + अवनद्धम् । न ), 'जो चमड़ेसे मढ़े गये हों, उन मुरज आदि बाजाओं' का १ नाम है । ( 'जैसे—मुरज, पटह, ढोल, तबला,······' ) ॥

४ सुषिरम् ( + शुषिरम् । न ), 'वंशी आदि बाजाओं' का १ नाम है । ( 'आदि पदसे 'शङ्ख, मुरली; तुतुही, सींगा, वेन······' का संग्रह है') ॥

५ घनम् ( न ), 'घड़ी, घण्टा आदि बाजाओं' का १ नाम है । ( 'आदि पदसे 'घण्टी, झाल, जोड़ी, मंजीरा,···' का संग्रह है' ) ॥

६ वादित्रम्, आतोद्यम् ( २ न ), पूर्वोक्त 'तत १, आनद्ध २, सुषिर ३ और घन ४' इन 'चार प्रकारके बाजाओं' के २ नाम हैं ॥

---

'शिवस्य वीणा नालम्बी सरस्वत्यास्तु कच्छपी ॥
नारदस्याथ महती गणानान्तु प्रभावती ।
विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती ।
चाण्डालानां तु कण्डोलवीणा चाण्डालिकाऽपि सा' ॥ इति ॥

अ० चि० म० 'हैम' २ । २०२–२०४ ॥

१. वंशादिकं तु शुषिरं·········' इति मा० दी० प्राच्यसम्मतं पाठान्तरम् , क्षी० स्वा० महे० सम्मतं तु मूलोक्तमित्यवधेयम् ॥

२. तथा च भरतः—
'ततश्चैवावनद्धं च घनं शुषिरमेव च । चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम्' ॥१॥ इति ॥

१ मृदङ्गा मुरजा २ भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयः ॥ ५ ॥
३ स्याद्यशःपटहो ढक्का ४ [1]भेरी स्त्री दुन्दुभिः पुमान् ।
५ आनकः पटहोऽस्त्री स्यात् ६ कोणो वीणादिवादनम् ॥ ६ ॥
७ वीणादण्डः प्रवालः स्यात् ८ ककुभस्तु प्रसेवकः ।
९ कोलम्बकस्तु कायोऽस्या १० उपनाहो निबन्धनम् ॥ ७ ॥

---

१ मृदङ्गः, मुरजः ( २ पु ) 'मृदङ्ग' के नाम हैं ।

२ अङ्क्यः, आलिङ्ग्यः, ऊर्ध्वकः ( ३ पु ) ये तीन 'मृदङ्गके भेद हैं । ( हरीतकीके समान आकारवाला [2]'अङ्क्य', यवके मध्यभागके समान आकार वाला [3]'ऊर्ध्वक' और गोपुच्छके समान आकारवाला[4] आलिङ्ग्य होता है' ) ॥

३ यशःपटहः ( पु ), ढक्का ( स्त्री ) 'नगाड़ा' के दो नाम हैं ॥

४ भेरी ( + भेरिः, भम्भा । स्त्री ), दुन्दुभिः ( पु । आनकः, दुन्दुभिः । २ पु ) 'दुन्दुभिः' के २ नाम हैं ॥

५ आनकः, पटहः, ( २ पु ), 'पटह' के २ नाम हैं ॥

६ कोणः ( पु ), 'वीणा, बेला, सारङ्गी या इसराज आदि बजानेके लिये काठकी बनाई हुई धनुही' का १ नाम है ॥

७ वीणादण्डः ( भा० दी० म० ), प्रवालः ( २ पु ) 'वीणादण्ड' के २ नाम हैं ॥

८ ककुभः, प्रसेवकः ( २ पु ) 'वीणाके नीचेवाले, चमड़ा आदिसे ढके हुए भाण्ड' के २ नाम है ॥

९ कोलम्बकः ( पु ), 'वीणाका ढाँचा' अर्थात् 'ताररहित वीणाके दण्डादि समुदाय' का १ नाम हैं ॥

१० उपनाहः ( पु ), निबन्धनम्, ( न । भा० दी० म० ), जहाँ वीणा-का तार बांधा जाता है, उस जगह' के २ नाम हैं ॥

---

१. '·········भेर्य्यामानकदुन्दुभी' इति भा० दी० सम्मतः पाठः । तत्र भेर्यानकदुन्दुभि-शब्दान् पृथक् २ व्याख्याय 'द्वे भेर्याः' इति तदुक्तिश्चिन्त्या' 'त्रीणि भेर्य्याः' इत्युक्तेरौचित्यात्॥

२. ३. ४. तदुक्तम्—'हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वकः ।
　　आलिङ्ग्यश्चैव गोपुच्छसमानः परिकीर्तितः' ॥ १ ॥ इति ॥

१ वाद्यप्रभेदा डमरु-मड्डु-डिण्डिम-झर्झराः ।
मर्द्दलः पणवोऽन्ये च २ नर्तकीलासिके समे ॥ ८ ॥
३ विलम्बितं द्रुतं मध्यं तत्त्व ४ मोघो ५ घनं क्रमात् ।
६ तालः कालक्रियामानं ७ लयः साम्य ८ मथास्त्रियाम् ॥ ९ ॥
ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने ।
९ तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् ॥ १० ॥

---

१ डमरुः मड्डुः, डिण्डिमः, झर्झरः, मर्द्दलः, पणवः ( ६ पु ), आदि ('आदि पदसे 'गोमुखः, हुडुकः·······' का संग्रह है' ) 'डमरु, मड्डु अर्थात् जलतरङ्ग, डुगडुगी, झांझ, मर्द्दल, ढोल आदि बाजाओं' का क्रमशः १-१ नाम है ॥

२ नर्तकी, लासिका ( २ स्त्री । वस्तुतः ये दोनों शब्द त्रिलिङ्ग हैं, किन्तु स्त्रीलिङ्गमें रूपप्रदर्शन के लिये स्त्रीलिङ्ग कहा गया है, पु० में 'नर्तकः'लासकः' न० में 'नर्तकम् , लासकम्' ऐसे रूप होते हैं' ), 'नाचने वाले' के २ नाम हैं ॥ ( 'जैसे—'कत्थक, छोकड़ा, वेश्या······' ) ॥

३ तत्त्वम् (न), 'विलम्बसे नाचने, गाने और बजाने' का १ नाम है ॥

४ ओघः ( पु ) 'जल्दी २ नाचने, गाने और बजाने' का १ नाम है ॥

५ घनम् ( न ), 'सामान्य समय ( मध्यम गति ) से नाचने, गाने और बजाने' का १ नाम है ॥

६ तालः ( पु ), 'ताल' अर्थात् 'जिसमें समय और क्रियाकी कमी-बेशीका प्रमाण रहता है, उसका १ नाम है ॥

७ लयः ( पु ), 'लय' अर्थात् 'जिसमें गाने बजाने और हाथ, भ्रू आदि चलाकर भाव दिखलानेके लिये समय और क्रियाकी कमी-बेशीका प्रमाण रहता है उसका १ नाम है ॥

८ ताण्डवम् ( पु न ), नटनम् , नाट्यम्, लास्यम्, नृत्यम् ( + नृत्तम् ), नर्तनम् ( ५ न ), 'नाचने' के ६ नाम हैं ॥

९ तौर्यत्रिकम्, नाट्यम् ( २ न ), 'नाचना, गाना और बजाना; इन तीनोंके समुदाय' के २ नाम हैं ॥

१ अकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः ।
स्त्रीवेषधारी पुरुषो २ नाट्योक्तौ ३ गणिकाऽज्जुका ॥ ११ ॥
४ भगिनीपतिरावुत्तो ५ भावो विद्वान ६ थावुकः ।
जनको ७ युवराजस्तु कुमारो भर्तृदारकः ॥ १२ ॥
८ राजा भट्टारको देव ९ स्तत्सुता भर्तृदारिका ।
१० देवी कृताभिषेकाया ११ मितरासु तु भट्टिनी ॥ १३ ॥

---

१ भ्रकुंसः, भ्रुकुंसः, भ्रूकुंसः ( + भ्रुकुंसः । ३ पु ), स्त्रीका रूप बनाकर नाचनेवाले पुरुष' के ३ नाम हैं ॥

२ 'नाट्योक्तौ' इस पदका 'अङ्कहारः' ( १।७।१६ ) के पहलेतक अधिकार होनेसे आगे कहे जानेवाले नामोंका प्रयोग नाटकमें ही होगा, अन्यत्र नहीं ॥

३ गणिका, अज्जुका ( २ स्त्री ) 'वेश्या' के २ नाम हैं ॥

४ आवुत्तः ( + आवूत्तः । पु ), 'बहनोई' अर्थात् 'बहनके पति' का १ नाम है ॥

५ भावः ( पु ), 'विद्वान्' का १ नाम है ॥

६ आवुकः ( पु ), 'पिता' का १ नाम है ॥

७ युवराजः, कुमारः ( २ पु । म० कुमारः, भर्तृदारकः ) 'युवराज' के २ नाम हैं ॥

८ भट्टारकः, देवः ( २ पु ), 'राजा' के २ नाम हैं ॥

९ भर्तृदारिका ( स्त्री ), 'राजकुमारी' का १ नाम है ॥

१० देवी ( स्त्री ), 'पटरानी' का १ नाम है ॥

११ [१]भट्टिनी (स्त्री), 'राजाकी दूसरी सामान्य स्त्रियों' का १ नाम है ॥

---

[१] अयमत्र प्रयोगक्रमः—

'गणिकानुचरैरज्जुकेति नाम्ना नृपेण सा । युवराजस्तु सर्वेण कुमारो भर्तृदारकः ॥ १ ॥
भट्टारको वा देवो वा वाच्यो भृत्यजनेन सः । ब्राह्मणेन तु नाम्नैव राजन्नित्यृषिभिः स च ॥ २ ॥
वयस्य राजन्निति वा विदूषक इमं वदेत् । अभिषिक्ता तु राज्ञाऽसौ देवीत्यन्या तु भोगिनी ॥ ३ ॥
भट्टिनीत्यपरैरन्या नीचैर्गोस्वामिनीति सा' ॥ इति ॥

१ अब्रह्मण्यमवध्योक्तौ २ [1]राजश्यालस्तु राष्ट्रियः।
३ अम्बा माताऽथ बाला स्याद्वासू५रार्यस्तु मारिषः ॥ २४ ॥
६ अत्तिका भगिनी ज्येष्ठा ७ निष्ठानिर्वहणे समे।

---

१ अब्रह्मण्यम् ( न ), 'सर्वथा अवध्य ब्राह्मण इत्यादिको मारनेके दोषको कहना' का १ नाम है ॥

२ राष्ट्रियः ( पु ), 'राजाके शाले' का १ नाम है। ( 'इसे प्रायः नगरके कोतवालीका अधिकार मिलता है' ) ॥

३ अम्बा, माता ( =मातृ । २ स्त्री ), 'माता' के २ नाम हैं। ( 'नाट्योक्तौ' इस शब्दका अधिकार प्रायिक या विधि और नियम[2] है; अत एव नाटकस्थलसे भिन्न स्थलमें भी 'अम्बा, माता' इन शब्दोंका प्रयोग होता है' ॥ )

४ बाला, वासूः ( २ स्त्री ) 'कुमारी' के २ नाम हैं ॥

५ आर्यः, मारिषः ( +मार्षकः । २ ), 'अपनेसे श्रेष्ठ या सूत्रधारके पार्श्ववर्त्ती' के २ नाम हैं ॥

६ अत्तिका ( +अन्तिका । स्त्री ), 'बड़ी बहन' का १ नाम हैं ॥

७ निष्ठा ( स्त्री ) [3]निर्वहणम् ( न ), 'नाटकके 'निर्वहण' नामक पांचवे सन्धि विशेष या आरम्भ किये हुये विषयको पूरा करने' के २ नाम हैं ॥

---

[1] 'राजशालस्तु' इति महे० सम्मतः पाठः।

[2] नाट्यातिरिक्तस्थलेऽपि 'अम्बा' शब्दस्य, नाट्यस्थलेऽपि 'मातृ' शब्दस्य प्रयोगोपलब्धेर्नाट्यस्थलेऽम्बाशब्दस्य प्रचुरप्रयोगात्प्रायिकत्वम्, 'भट्टिन्यज्जुकात्तिके'त्यादीनान्तु नियमः। अत एव—

'अथैषां रूपकादीनामुक्तीर्वक्ष्याम्यशेषतः। कासुचिन्नियमस्तत्र विधिरेव तु कासुचित्' ॥ १ ॥

इति शब्दार्णवोक्तयोर्विधिनियमयोः सङ्गतिरित्यवधेयम् ॥

[3] तदुक्तं साहित्यदर्पणे—

'मुखं १ प्रतिमुखं २ गर्भो ३ विमर्शः ४ उपसंहृतिः ५।
इति पञ्चास्य भेदाः स्युः क्रमात्'। सा० द० ६। ७५-७६ ॥

उपसंहृतिर्निर्वहणमित्यर्थः। एतल्लक्षणञ्चोक्तं सुधाकरेण—

'मुखसन्ध्यादयो यत्र विकीर्णा बीजसंयुताः। महाप्रयोजनं यान्ति तन्निर्वहणमुच्यते' ॥१॥ इति

१ हण्डे २ हञ्जे ३ हलाऽऽह्वानं नीचां चेटीं सखीं प्रति ॥ १५ ॥
४ अङ्गहारोऽङ्गविक्षेपो ५ व्यञ्जकाभिनयौ समौ ।
६ निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिक७सात्त्विके ॥ १६ ॥
८ शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ।

---

१ हण्डे ( अ ), 'नीचको बुलाने' का १ नाम है ॥

२ हञ्जे ( अ ), 'चेटी ( दासी ) को बुलाने' का १ नाम है ॥

३ हला ( अ ), 'सखीको बुलाने' का १ नाम है ॥

४ अङ्गहारः, अङ्गविक्षेपः ( २ पु ) 'नृत्य विशेष' के २ नाम हैं। ( 'नाट्योक्तौ' इस पदका अधिकार यहाँतक है, अतः आगे कहे जानेवाले शब्दों का प्रयोग नाटकसे भिन्न स्थलमें भी होगा' ) ॥

५ व्यञ्जकः, अभिनयः ( २ पु ) 'इशारा आदिसे मनके अभिप्रायको प्रकट करने' के २ नाम हैं ॥

६ आङ्गिकम् ( त्रि ), 'अङ्गके द्वारा किये गये कटाक्ष आदि' का १ नाम है ॥

७ सात्त्विकम् ( त्रि ), 'सत्त्वगुणसे उत्पन्न स्तम्भ आदि गुणों' का १ नाम है। ( 'स्तम्भ १, स्वेद ( पसीना ) २, रोमाञ्च ३, स्वरभङ्ग ४, वेपथु ( कम्पन ) ५, वैवर्ण्य ६, अश्रु ७ और प्रलय ( मूर्च्छा ) ८, ये ८ [1]'सात्त्विक गुण' हैं ॥

८ शृङ्गारः, वीरः, करुणः, अद्भुतः, हास्यः, भयानकः, बीभत्सः, रौद्रः

---

यथा वा साहित्यदर्पणे—

'बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् । एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत्' ॥ १ ॥

इति सा० द० ६ । ८१—८२ ॥

१. तदुक्तम्—'स्तम्भः १ स्वेदो२ऽथ रोमाञ्चः ३ स्वरभङ्गो४ऽथ वेपथुः ५ ।
वैवर्ण्य६मश्रु७प्रलय८ इत्यष्टौ सात्त्विका गुणाः ॥ १ ॥

इति सा० द० ३ । १३५-१३६ ॥

बीभत्सरौद्रौ च रसाः १ शृङ्गारः शुचिरुज्ज्वलः ॥ १७ ॥
२ उत्साहवर्धनो वीरः ३ कारुण्यं करुणा घृणा ।
कृपा दयाऽनुकम्पा स्यादनुक्रोशोऽप्यथो हसः ॥ १८ ॥
हासो हास्यं च ५ बीभत्सं विकृतं त्रिष्विदं द्वयम् ।
६ विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम् ॥ १९ ॥
दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् ।

( ८ पु ) ये ८ 'शृङ्गार, वीर आदि' 'रसाः' ( पु ) अर्थात् 'रस' हैं। ( च शब्दसे नवम 'शान्तः' ( पु ) अर्थात् [1]'शान्त' रसका और मुनीन्द्रके मतसे दशम 'वात्सल्यम्' ( न ) अर्थात् [2]'वात्सल्य' रसका भी संग्रह है' ) ॥

१ शृङ्गारः, शुचिः, उज्ज्वलः, ( ३ पु ), 'शृङ्गार रस' के ३ नाम हैं ॥

२ उत्साहवर्द्धनः, वीरः, ( २ पु ), 'वीर रस' के २ नाम हैं ॥

३ कारुण्यम् ( न ), करुणा, घृणा, कृपा, दया, अनुकम्पा ( ५ स्त्री ), अनुक्रोशः ( पु ), 'करुण रस या दया' के ७ नाम हैं ॥

४ हसः, हासः ( +हासिका, स्त्री । २ पु ), हास्यम् (न), 'हास्य रस' के ३ नाम हैं ॥

५ बीभत्सम्, विकृतम् ( +वैकृतः । २ त्रि ), 'बीभत्स रस' के २ नाम हैं ॥

६ विस्मयः (पु), अद्भुतम्, आश्चर्यम्, चित्रम् ( ३ त्रि ), 'आश्चर्य या अद्भुत रस' के ४ नाम हैं ॥

७ भैरवम्, दारुणम्, भीषणम्, भीष्मम्, घोरम्, भीमम्, भयानकम्,

---

१. साहित्यदर्पणे 'शान्त'स्यापि नवमरसत्वमङ्गीकृतम् । तद्यथा —
'शृङ्गार १ हास्य २ करुण ३ रौद्र ४ वीर ५ भयानकाः ६ ।
बीभत्सो७ऽद्भुत ८ इत्यष्टौ रसाः शान्त९स्तथा मतः' ॥ १ ॥
इति सा० द० ३ । १८२ ॥

२. मुनीन्द्रेण 'वात्सल्य'स्यापि दशमरसत्वमङ्गीकृतम् । तद्यथा—
'स्फुटं चमत्कारितया वत्सलं च रसं विदुः' । इति सा० द० ३ ॥ २७ ।

भयङ्करं प्रतिभयं १ रौद्रं तूग्रमरमी त्रिषु ॥ २० ॥
चतुर्दश ३ दरस्त्रासो भीतिर्भीः साध्वसं भयम् ।
४ विकारो मानसो भावो५ऽनुभावो भावबोधकः ॥ २१ ॥
६ गर्वोऽभिमानोऽहङ्कारो७मानश्चित्तसमुन्नतिः ।
८ 'दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः' (५२)
९ अनादरः परिभवः परीभावस्तिरस्क्रिया ॥ २२ ॥
रीढाऽवमाननाऽवज्ञाऽवहेलनमसूर्क्षणम् ।

---

भयङ्करम्, प्रतिभयम्, ( ९ त्रि ), 'भयानक रस' के ९ नाम हैं ॥

१ रौद्रम्, उग्रम्, ( २ त्रि ), 'उग्र रस' के २ नाम हैं ॥

२ 'अद्भुतम्' यहाँसे लेकर 'उग्रम्' यहाँतक १४ शब्द 'रस'के अर्थमें प्रयुक्त होनेपर पुंल्लिङ्ग हैं और 'रसवाले'के अर्थमें प्रयुक्त होनेपर त्रिलिङ्ग हैं ॥

३ दरः, त्रासः ( २ पु ), भीतिः, भीः ( + भिया । २ स्त्री ), साध्वसम्, भयम् ( २ न ), 'डर' के ६ नाम हैं ॥

४ भावः ( पु ), 'रत्यादिरूप मनके विकार-विशेष' का १ नाम है ॥

५ अनुभावः ( पु ), 'मनके विकारके प्रकाशक रत्यादिसूचक रोमाञ्च आदि' का १ नाम है ॥

६ गर्वः, अभिमानः, अहङ्कारः ( ३ पु ), 'अभिमान, घमण्ड' के ३ नाम हैं ॥

७ मानः ( पु ), चित्तसमुन्नतिः (भा० दी० म० । स्त्री), 'मान, चित्तोन्नति' के २ नाम हैं । ( 'महे० आदिके मतसे १ ही नाम है । 'गर्व' आदि ५ शब्द एकार्थक हैं, यह भी किसी किसी का मत है' ) ॥

८ [ दर्पः, अवलेपः, अवष्टम्भः, चित्तोद्रेकः, स्मयः, मदः (६ पु), 'घमण्ड' के ६ नाम हैं ] ॥

९ अनादरः, परिभवः, परीभावः ( ३ पु ), तिरस्क्रिया, रीढा, अवमानना, अवज्ञा (४ स्त्री), अवहेलनम् ( + अवहेला, स्त्री ), असूर्क्षणम् ( + मु०, बु० मनो०, महे० 'असूक्षणम्, असुक्षणम्, संसूर्क्षणम्, संसुर्क्षणम्' । २ न), 'अनादर' के ९ नाम हैं ॥

१ मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा २ साऽपत्रपाऽन्यतः ॥ २३ ॥
३ क्षान्तिस्तितिक्षा४ऽभिध्या तु [1]परस्य विषये स्पृहा ।
५ अक्षान्तिरीर्ष्या६ऽसूया तु दोषारोपो गुणेष्वपि ॥ २४ ॥
७ वैरं विरोधो विद्वेषो ८ मन्युशोकौ तु शुक्स्त्रियाम् ।
९ पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि ॥ २५ ॥

---

१ मन्दाक्षम् ( + मन्दास्यम् । न), ह्रीः, त्रपा, व्रीडा ( + व्रीडः, पु ), लज्जा ( ४ स्त्री ), 'लज्जा' के ५ नाम हैं ॥

२ अपत्रपा (स्त्री), 'पिता आदि दूसरेसे लज्जा करने' का १ नाम है ॥

३ क्षान्तिः, तितिक्षा ( २ स्त्री ), 'दूसरेकी उन्नतिको सहन करने' के २ नाम हैं ॥

४ अभिध्या ( स्त्री ), 'दूसरेकी सम्पत्ति आदिको चाहने' का १ नाम है ॥

५ अक्षान्तिः, ईर्ष्या (२ स्त्री), 'ईर्ष्या' अर्थात् 'दूसरे की सम्पत्तिको नहीं सहने' के २ नाम हैं ॥

६ असूया ( स्त्री ), 'औद्धत्यसे किसीके गुण-विषयक काममें भी दोष निकालने' का १ नाम है। ('जैसे—किसीके दयार्द्र होकर पुण्य करनेपर 'यह नामके लिये पुण्य करता है' इत्यादि दोष निकालनेको [2]"असूया" कहते हैं' ) ॥

७ वैरम् (न), विरोधः, विद्वेषः (२ पु), 'वैर करने' के ३ नाम हैं ॥

८ मन्युः, शोकः ( २ पु ), शुक् (= शुच्, स्त्री), 'शोक' के ३ नाम हैं ॥

९ पश्चात्तापः, अनुतापः, विप्रतीसारः ( + विप्रतिसारः । ३ पु ), 'पछताने' के ३ नाम हैं ॥

---

१. '········परस्य विषये स्पृहा' इति पाठान्तरम् ॥

२. तदुक्तम्—'असूयाऽन्यगुणर्द्धीनामौद्धत्यादसहिष्णुता ।
दोषोद्घोषभ्रूविभेदाऽवज्ञाक्रोधेङ्गितादिकृत्' ॥ १ ॥ इति सा० द० ३।१६६॥

१ कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ ।
२ शुचौ तु चरिते शील३मुन्मादश्चित्तविभ्रमः ॥ २६ ॥
४ प्रेमा ना प्रियता हार्दं प्रेम स्नेहो५ऽथ दोहदम् ।
इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः ॥ २७ ॥
कामोऽभिलाषस्तर्षश्च ६ सोऽत्यर्थं लालसा द्वयोः ।
७ उपाधिर्ना धर्मचिन्ता ८ पुंस्याधिर्मानसी व्यथा ॥ २८ ॥
९ स्याच्चिन्ता स्मृतिराध्यान१०मुत्कण्ठोत्कलिके समे ।
११ उत्साहोऽध्यवसायः स्यात् १२ स वीर्यमतिशक्तिभाक् ॥ २९ ॥
१३ कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे ।

---

१ कोपः, क्रोधः, अमर्षः, रोषः, प्रतिघः ( ५ पु ), रुट् ( = रुष् । + रुषा ), क्रुध् ( + क्रुधा । स्त्री ), 'क्रोध' के ७ नाम हैं ॥

२ शीलम् ( न ), 'शील' अर्थात् 'आचरण शुद्ध रखने'का १ नाम है ॥

३ उन्मादः, चित्तविभ्रमः ( २ पु ), 'पागलपन' के २ नाम हैं

४ प्रेमा ( = प्रेमन्, पु ), प्रियता ( स्त्री ), हार्दम्, प्रेम ( = प्रेमन् २ न ), स्नेहः ( पु ) 'प्रेम' के ५ नाम हैं ॥

५ दोहदम् ( न ), इच्छा, काङ्क्षा, स्पृहा, ईहा, तृट् ( = तृष् ), वाञ्छा, लिप्सा ( ७ स्त्री ), मनोरथः, कामः, अभिलाषः, तर्षः (४ पु), 'इच्छा, चाहना' के १२ नाम हैं । ( 'म० से 'दोहदम्' यह १ नाम 'गर्भिणीकी इच्छा' का है और शेष १२ नाम उक्तार्थक हैं' ) ॥

६ लालसा (पु स्त्री), 'लालसा' अर्थात् 'अधिक चाहना' का १ नाम है ॥

७ उपाधिः ( पु ), धर्मचिन्ता ( स्त्री ) 'धर्मविषयक चिन्ता' के २ नाम हैं ॥

८ आधिः ( पु ), 'मानसिक दुःख' का १ नाम है ॥

९ चिन्ता, स्मृतिः (२ स्त्री), आध्यानम् (न), 'याद करने' के ३ नाम हैं ॥

१० उत्कण्ठा, उत्कलिका ( २ स्त्री ), 'उत्कण्ठा' के २ नाम हैं ॥

११ उत्साहः, अध्यवसायः (२ पु ) 'उत्साह' के २ नाम हैं ॥

१२ वीर्यम् ( न ), 'सामर्थ्ययुक्त उत्साह' का १ नाम है ॥

१३ कपटः ( पु न ), व्याजः, दम्भः उपधिः ( ३ पु ), छद्म ( = छद्मन्),

कुसृतिर्निकृतिः शाठ्यं १ प्रमादोऽनवधानता ॥ ३० ॥
२ कौतूहलं कौतुकं च कुतुकं च कुतूहलम् ।
३ स्त्रीणां विलासबिब्बोकविभ्रमा ललितं तथा ॥ ३१ ॥
हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः ।

---

कैतवम्, कुसृतिः, निकृतिः, ( २ स्त्री ), शाठ्यम् ( + शठनम् । शेष ३ न ), 'धूर्तता, कपट, दगाबाज़ी' के ९ नाम हैं ॥

१ प्रमादः ( पु ), अनवधानता ( स्त्री ), 'असावधानी' के २ नाम हैं ॥

२ कौतूहलम्, कौतुकम्, कुतुकम्, कुतूहलम् ( ४ न ), 'कौतूहल' अर्थात् 'खेल, तमाशा, जादू, ......' के ४ नाम हैं ॥

३ विलासः, विब्बोकः, विभ्रमः ( ३ पु ), ललितम् ( न ), हेला, लीला (२ स्त्री), ये ६ 'स्त्रियोंके शृङ्गार, भाव अर्थात् रत्यादि और मनोविकारसे उत्पन्न क्रियाविशेष' हैं, इनका 'हावः' (पु) 'हाव' यह १ नाम है। ('नाटक-रत्नकोष' में—'लीला १, विलास २, विच्छित्ति ३, विभ्रम ४, किलकिञ्चित ५, मोट्टायित ६, कुट्टमित ७, विब्बोक ८, ललित ९ और विहृत १० ये १० स्त्रियोंकी स्वभावज क्रियाएँ हैं, यह कहा है[1]। साहित्यदर्पण' में–'भाव १, हाव २, हेला ३, शोभा ४, कान्ति ५, दीप्ति ६, माधुर्य ७, प्रगल्भता ८, औदार्य ९, धैर्य १०, लीला ११, विलास १२, विच्छित्ति १३, विब्बोक १४, किलकिञ्चित १५, मोट्टायित १६, कुट्टमित १७, विभ्रम १८, ललित १९, मद २०, विहृत २१, तपन २२, मौग्ध्य २३, विक्षेप २४, कुतूहल २५, हसित २६, चकित २७, और केलि २८, ये २८ जवानीमें स्त्रियोंके सात्त्विक भावसे उत्पन्न अलङ्कार होते हैं, ऐसा कहा है; उनमें 'भाव' आदि ३ 'आङ्गिक अलङ्कार' हैं, 'शोभा' आदि ७ विना यत्नके उत्पन्न अलङ्कार, हैं और 'लीला' आदि १८ 'स्वभावज अलङ्कार' हैं। पूर्वोक्त २८ अलङ्कारों में 'भाव' आदि १० अलङ्कार पुरुषोंके भी हो सकते हैं, किन्तु स्त्रियोंमें ही इनको

---

१. तदुक्तं नाटकरत्नकोषे—

'लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं बिब्बोको ललितं तथा ॥ १ ॥
विहृतं चेति मन्तव्या दश स्त्रीणां स्वभावजाः' ॥ इति ॥

१ द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च ॥ ३२ ॥
२ व्याजोऽपदेशो लक्ष्यं च ३ क्रीडा खेला च कूर्दनम् ।
४ घर्मो निदाघः स्वेदः स्यात्५प्रलयो नष्टचेष्टता ॥ ३३ ॥

---

अधिक शोभा होती है, ऐसा भी कहा है'[1] ) ॥

१ द्रवः, केलिः (+केली, स्त्री, ), परीहासः (+परिहासः । ३ पु ), क्रीडा, लीला ( +खेला । स्त्री ), नर्म ( =नर्मन् न ), 'क्रीडामात्र' के ६ नाम हैं ॥

२ व्याजः, अपदेशः ( २ पु ), लक्ष्यम् (+लक्षम् । न ), 'बहाना करने' के ३ नाम हैं ॥

३ क्रीडा, खेला ( २ स्त्री ), कूर्दनम् ( न ), 'लड़कपनके खेल' के ३ नाम हैं । ( म० प्रथम दो नाम उक्तार्थक और तीसरा नाम 'कूदने' का है ।

४ घर्मः, निदाघः, स्वेदः ( ३ पु ), भा० दी० म० 'घाम' के और मु० म० 'पसीने' के ३ नाम हैं ॥

५ प्रलयः (पु) नष्टचेष्टता (+मूर्च्छा । स्त्री ), 'बेहोशी' के २ नाम हैं ॥

---

१. तदुक्तम्—

'यौवने सत्त्वजास्तासामष्टाविंशतिसङ्ख्यकाः ।
अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः ॥ १ ॥
शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता ।
औदार्यं धैर्यमित्येते सप्तैव स्युरयत्नजाः ॥ २ ॥
लीला विलासो विच्छित्तिर्विब्बोकः किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः ॥ ३ ॥
विहृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम् ।
हसितं चकितं केलिरित्यष्टादशसंख्यकाः ॥ ४ ॥
स्वभावजाश्च, भावाद्या दश पुंसां भवन्त्यपि ॥'

( इति सा० द० ३।८९-९३॥ )

एतेषां लक्षणोदाहरणान्यत्र ग्रन्थविस्तरभिया नोक्तानीत्यतस्तानि सा० द० ३।९६-११० तमे श्लोके द्रष्टव्यानि ॥

१ अवहित्थाऽऽकारगुप्तिः २ समौ संवेगसंभ्रमौ ।
३ स्यादाच्छुरितकं हासः सोत्प्रासः ४ स मनाक्स्मितम् ॥३४॥
मध्यमः स्याद्विहसितं ६ रोमाञ्चो [1]रोमहर्षणम् ।
७ क्रन्दितं रुदितं क्रुष्टं ८ जृम्भस्तु त्रिषु जृम्भणम् ॥ ३५ ॥
९ विप्रलम्भो विसंवादो १० रिङ्खणं स्खलनं समे ।
११ स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ॥ ३६ ॥

१ अवहित्था (+न), आकारगुप्तिः ( २ स्त्री ), 'अपने आकारको छिपाने' के २ नाम हैं ॥

२ संवेगः, सम्भ्रमः ( २ पु ) 'हर्ष आदिके कारण शीघ्रता करने' के २ नाम हैं ॥

३ आच्छुरितकम् ( न । काश्य म० 'अवच्छुरितम् ) 'साभिप्राय हँसने' का १ नाम है ॥

४ [1]स्मितम् ( न ), 'साभिप्राय मुस्कुराने' का १ नाम है ॥

५ [2]विहसितम् ( न ) 'साधारण हँसने' का १ नाम है ॥

६ रोमाञ्चः ( पु ), रोमहर्षणम् (+लोमहर्षणम् , रोमोद्गमः, उद्धर्षणम् उल्लासनकम् । 'रोमाञ्च होने' के २ नाम हैं ॥

७ क्रन्दितम् रुदितम्, क्रुष्टम् ( ३ न ) 'रोने' के ३ नाम हैं ॥

८ जृम्भः ( त्रि ), जृम्भणम् ( न ) 'जम्हाई' के २ नाम हैं ॥

९ विप्रलम्भः, विसंवादः (२ पु) 'ठगपनेसे बात करने' के २ नाम है ॥

१० रिङ्खणम् (+रिङ्गणम् ), स्खलनम् ( २न ) 'धर्ममार्गसे प्रतिकूल चलने, रेंगने, की जगहके चिकनी होनेसे या अन्य किसी कारणसे पैर फिसल जाने' के ५ नाम हैं ॥

११ निद्रा ( स्त्री ) शयनम् ( न ) स्वापः, स्वप्नः, संवेशः ( ३ पु ), 'नींद' के ५ नाम हैं ॥

---

१. '······लोमहर्षणम्' इति पाठान्तरम् ॥

२. तदुक्तम्—'ईषद्विकसितैर्दन्तैः कटाक्षैः सौष्ठवान्वितम् ।
अलक्षितद्विजद्वारमुत्तमानां स्मितं भवेत्' ॥ १ ॥ इति ॥

३. तदुक्तम्—'आकुञ्चितकपोलाक्षं सस्वनं निःस्वनं तथा ।
प्रस्तावोत्थं सानुरागमाहुर्विहसितं बुधाः' ॥ १ ॥ इति ॥

१ तन्द्री प्रमीला २ भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम् ।
३ अदृष्टिः स्यादसौम्येऽक्ष्णि ४ संसिद्धिप्रकृती त्विमे ॥ ३७ ॥
स्वरूपं च स्वभावश्च निसर्गश्चा५थ वेपथुः ।
कम्पोऽ६थ क्षण उद्धर्षो मह उद्धव उत्सवः ॥ ३८ ॥
इति नाट्यवर्गः ॥ ७ ॥

## ८. अथ पातालभोगिवर्गः ।

७ अधोभुवनपातालं बलिसद्म रसातलम् ।
नागलोको८ऽथ कुहरं [1]शुषिरं विवरं बिलम् ॥ १ ॥

---

१ तन्द्री ( + तन्द्रिः, तन्द्रा ), प्रमीला ( २ स्त्री ), 'तन्द्रा होने' अर्थात् 'अधिक थकावट आदिके कारण शरीरेन्द्रियोंके शिथिल होने या नींद के आदि और अन्तमें आलस्य होने' के २ नाम हैं ॥

२ भ्रकुटिः, भ्रुकुटिः, भ्रूकुटिः ( + भृकुटिः । ३ स्त्री ), 'क्रोध आदिसे भौंहको टेढ़ा करने' के ३ नाम हैं ॥

३ अदृष्टिः ( स्त्री ), 'क्रूरतापूर्वक देखने' का १ नाम है ॥

४ संसिद्धिः, प्रकृतिः ( २ स्त्री ), स्वरूपम् ( न ), स्वभावः, निसर्गः ( २ पु ), 'स्वभाव' के ५ नाम हैं ॥

५ वेपथुः, कम्पः ( २ पु ), 'काँपने' के २ नाम हैं ॥

६ क्षणः, उद्धर्षः, महः, उद्धवः, उत्सवः (५ पु), 'उत्सव' के ५ नाम हैं ॥

इति नाट्यवर्गः ॥ ७ ॥

## ८. अथ पातालभोगिवर्गः ।

७ अधोभुवनम् ( + अधः, अ० ), पातालम्, बलिसद्म ( = बलिसद्मन् ), रसातलम् (४ न), नागलोकः (पु । + अधोलोकः), 'पाताल' के ५ नाम हैं ॥

८ कुहरम्, शुषिरम् ( सुषिरम् ), विवरम्, बिलम् ( + विलम् ),

---

१. ......'सुषिरं विवरं विलम्' इति पाठान्तरम् ।

छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं [1]वपा शुषिः।
१ गर्तावटौ भुवि श्वभ्रे २ सरन्ध्रे शुषिरं त्रिषु ॥ २ ॥
३ अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः।
४ ध्वान्ते गाढेऽन्धतमसं ५ क्षीणेऽवतमसं तमः ॥ ३ ॥
६ विष्वक्संतमसं ७ नागाः काद्रवेया८स्तदीश्वराः।
शेषोऽनन्तो९वासुकिस्तु सर्पराजो१०ऽथ गोनसे ॥ ४ ॥
तिलित्सः स्या११दजगरे शयुर्वाहस इत्युभौ।

---

छिद्रम्, निर्व्यथनम्, रोकम्, रन्ध्रम्, श्वभ्रम् (+स्वभ्रम्। ९ न), वपा, शुषिः (+सुषिः। २ स्त्री), 'बिल' के ११ नाम हैं ॥

१ गर्तः (+गर्ता, स्त्री), अवटः (+अवटिः, स्त्री। २ पु), 'गढे' के २ नाम हैं ॥

२ शुषिरम् (त्रि। +सुषिरम्), 'छेदवाली चीज़' का १ नाम है ॥

३ अन्धकारः (पु न), ध्वान्तम्, तमिस्रम्, तिमिरम्, तमः (=तमस्। +तमसम्। ४ न), 'अन्धकार' के ५ नाम हैं ॥

४ अन्धतमसम् (न), 'बहुत अधिक अन्धकार' का १ नाम है ॥

५ अवतमसम् (न), 'थोड़े अन्धकार' का १ नाम है ॥

६ संतमसम् (न), 'सर्वत्र फैले हुए अन्धकार' का १ नाम है ॥

७ नागः, काद्रवेयः (२ पु), महे० मतसे 'नाग' के और भा० दी० मतसे 'फणा और पूँछके सहित मनुष्याकार देवयोनि-विशेष' के २ नाम हैं ॥

८ शेषः, अनन्तः (२ पु), 'शेष' अर्थात् 'नागोंके राजा' के २ नाम हैं ॥

९ वासुकिः, सर्पराजः (२ पु), 'वासुकि' अर्थात् 'साँपोंके राजा' के २ नाम हैं ॥

१० गोनसः (+गोनासः), तिलित्सः (२ पु), 'पनस जातिके साँप या छोटे जातिके सर्प-सामान्य' के २ नाम हैं ॥

११ अजगरः, शयुः, वाहसः (३ पु), 'अजगर साँप' के ३ नाम हैं ॥

---

१. ……'वपा सुषिः' इति पाठान्तरम्।

१ ¹अलगर्दो जलव्यालः २ समौ राजिलडुण्डुभौ ॥ ५ ॥
३ मालुधानो मातुलाहि४र्निर्मुक्तो मुक्तकञ्चुकः ।
५ सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः ॥ ६ ॥
आशीविषो विषधरश्चक्री व्यालः सरीसृपः ।
कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥ ७ ॥
दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः ।
उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥ ८ ॥
६ 'लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा (५३)
कुम्भीनसः फणधरो हरिर्भोगधरस्तथा (५४)

१ अलगर्दः (+अलगर्द्धः), जलव्यालः ( २ पु ), 'डोंड़ साँप, या पानीमें रहनेवाले सब साँप' के २ नाम हैं ॥

२ राजिलः ( +राजीलः ), डुण्डुभः ( मु० म० दुण्डुभः, स्वा० म० दण्डुभः । २ पु ), 'दोनों तरफ मुखवाले साँप' के २ नाम हैं । ( इसे विष नहीं होता है ) ॥

३ मालुधानः, मातुलाहिः ( २ पु ), 'खट्वाकार चितकबरे साँप' के २ नाम हैं ॥

४ निर्मुक्तः, मुक्तकञ्चुकः ( २ पु ) 'जिसने केंचुल छोड़ दिया हो उस साँप' के २ नाम हैं ॥

५ सर्पः, पृदाकुः, भुजगः, भुजङ्गः, अहिः, भुजङ्गमः, आशीविषः (+आशीर्विषः ), विषधरः, चक्री (=चक्रिन् ), व्यालः (+व्याडः ), सरीसृपः, कुण्डली (=कुण्डलिन् ), गूढपात् ( गूढपाद् ), चक्षुःश्रवाः (=चक्षुःश्रवस् ), काकोदरः, फणी (=फणिन् ), दर्वीकरः दीर्घपृष्ठः, दन्दशूकः, बिलेशयः (+बिलेशयः ) उरगः, पन्नगः, भोगी (=भोगिन् ), जिह्मगः, पवनाशनः, (२५ पु । ये २५ पुल्लिङ्ग हैं, किन्तु स्त्रीलिङ्ग होनेपर इनमें अकारान्तके 'सर्पिणी' भुजगी, इत्यादि रूप बदल जायेंगे ), 'साँप' के २५ नाम हैं ॥

६ [ लेलिहानः, द्विरसनः (+द्विजिह्वः), गोकर्णः, कञ्चुकी (+कञ्चुकिन्), कुम्भीनसः, फणधरः, हरिः, भोगधरः ( ८ पु ), 'साँप' के ८ नाम ये भी हैं ] ॥

१. 'अलगर्दो जलव्यालः समौ राजिलडुण्डुभौ' इति पाठान्तरम् ।

१ अहेः शरीरं भोगः स्यात्२दाशीरप्यहिदंष्ट्रिका' (५५)
३ त्रिष्वाहेयं विषास्थ्यादि ४ स्फटायां तु फणा द्वयोः।
५ समौ कञ्चुकनिर्मोकौ ६ क्ष्वेडस्तु गरलं विषम् ॥ ९ ॥
७ पुंसि क्लीबे च काकोलकालकूटहलाहलाः।
[1]सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः ॥ १० ॥
दारदो वत्सनाभश्च विषभेदा अमी नव।

---

१ [ भोगः ( पु ), 'साँपके शरीर' का १ नाम है ] ॥

२ [ आशीः ( = आशी। + आशीः, + आशिस्, स्त्री ), अहिदंष्ट्रिका ( २ स्त्री ) 'साँपके दाँत' के २ नाम हैं ] ॥

३ आहेयम् ( त्रि ), 'साँपके विष, हड्डी, शरीर, केंचुल, दाँत, आदि, साँपसे उत्पन्न पदार्थमात्र' का १ नाम है ॥

४ स्फटा ( स्त्री। + फटा ), फणा ( स्त्री पु। + २ स्त्री पु ), 'साँपके फणा' के १ नाम हैं ॥

५ कञ्चुकः, निर्मोकः ( २ पु ) 'साँपके केंचुल' के २ नाम हैं ॥

६ क्ष्वेडः ( पु ), गरलम्, विषम् ( २ न। + २ पु न ), 'विष, ज़हर' के ३ नाम हैं ॥

७ काकोलः, कालकूटः, हलाहलः ( + हालाहलम्, हालहलम्। ३ पु न ) सौराष्ट्रिकः, ( + सारोष्ट्रिकः ), शौक्लिकेयः, ब्रह्मपुत्रः, प्रदीपनः, दारदः, वत्सनाभः ( ६ पु ) 'काकोल, कालकूट आदि स्थावर विष' का १-१ नाम है। ( 'विषके दो भेद होते हैं—'स्थावर १ और जङ्गम २'[2]। पहले स्थावर-

---

१. 'सारोष्ट्रिकः.........' इति मु० पाठः ॥

२. तदुक्तं श्रीमद्भगवद्धन्वन्तर्युपदिष्टसुश्रुतेन सुश्रुतसंहितायाः कल्पस्थानस्य द्वितीयाध्याये—
'स्थावरं जङ्गमं चैव द्विविधं विषमुच्यते। दशाधिष्ठानमाद्यन्तु द्वितीयं षोडशाश्रयम्' ॥ १ ॥
सुश्रु० क० स्था० २

अन्यच्च माधवनिदानस्य विषरोगनिदानप्रकरणे—
'स्थावरं जङ्गमं चैव द्विविधं विषमुच्यते। मूलाद्यात्मकमाद्यं स्यात्परं सर्पादिसम्भवम्' ॥ १ ॥
मा० नि० विषरोगनिदानप्रकरण

विषके १० भेद होते हैं—मूल १, पत्र २, फल ३, पुष्प ४, त्वक् ( छाल ) ५, क्षीर ( दूध ) ६, सार ७, निर्यास ( लासा ) ८, धातु ९ और कन्द १०[1]। इनमें मूलविषके ८, पत्रविषके ५, फलविषके १२, पुष्पविषके ५, त्वग्विष–निर्यासविष–सारविषके ७, क्षीरविषके ३, धातुविषके २ और कन्दविषके १३ भेद होते हैं। इन ५५ भेदोंके नाम टिप्पणीमें स्पष्ट हैं[2]। ये विष पहाड़, पेड़, पौधा आदि स्थावर पदार्थोंमें होते हैं। जङ्गमविष १६ तरहका होता है—इन भेदोंके नाम टिप्पणीमें स्पष्ट हैं[3]। जङ्गमविष बाघ, सिंह, भेड़िया, स्यार, साँप, बिच्छू, बर्रे, भौंरा, मधुमक्खी, मेंढक, छिपकिली, चूहा आदि जङ्गम जन्तुओंमें पाये

---

१. सुश्रुते 'दशाधिष्ठानमाद्यन्तु' इत्यनेनाद्यस्य स्थावरविषस्य दशाधिष्ठानान्युक्त्वा तानि नामतो निर्दिशति—

'मूलं १ पत्रं २ फलं ३ पुष्पं ४ त्वक् ५ क्षीरं ६ सार ७ एव च।
निर्यासो ८ धातव ९ श्चैव कन्दश्च १० दशमः स्मृतः' ॥ १ ॥

इति सुश्रु० क० स्था० २।२॥

२. तदुक्तं सुश्रुतस्य कल्पस्थानीयतृतीयाध्याये —

'तत्र क्लीतकाश्वमारगुञ्जासुगन्धगर्गरककरघाटविद्युच्छिखाविजयानीत्यष्टौ **मूलविषाणि**। विषपत्रिकालम्बावरदारुककरम्भमहाकरम्भाणि पञ्च **पत्रविषाणि**। कुमुद्वतीवेणुकारकरम्भमहाकरम्भकर्कोटकरेणुकखद्योतकचर्मरीभगन्धासर्पघातिनन्दनसारपाकानीति द्वादश **फलविषाणि**। वेत्रकादम्बवल्लिजकरम्भमहाकरम्भाणि पञ्च **पुष्पविषाणि**। अन्त्रपाचककर्त्तरीसौरीयककरघाटकरम्भनन्दनवराटकानि सप्त **त्वक्सारनिर्यासविषाणि**। कुमुदघ्नीस्नुहीजालक्षीर्याणि त्रीणि **क्षीरविषाणि**। फेणाश्मभस्म हरितालञ्च द्वे **धातुविषे**। कालकूटवत्सनाभसर्षपपालककर्दमकवैराटकमुस्तकशृङ्गीविषप्रपुण्डरीकमूलकहालाहलमहाविषकर्कटकानीति त्रयोदश **कन्दविषाणि**। इत्येवं **पञ्चपञ्चाशत्स्थावरविषाणि** भवन्ति' ॥

इति सुश्रु० क० स्था० २। ३—१० ॥

३. तदुक्तं सुश्रुते कल्पस्थानीयतृतीयाध्याये—

'जङ्गमस्य विषस्योक्तान्यधिष्ठानानि षोडश। समासेन मया यानि विस्तरस्तेषु वक्ष्यते' ॥ १ ॥

तत्र दृष्टिनिःश्वासदंष्ट्रानखमूत्रपुरीषशुक्रलालार्तवमुखसन्दंशविशर्द्धितगुदास्थिपित्तशूकशवानीति' ॥ २ ॥ इति सुश्रु० क० स्था० ३। १–२।

१ विषवैद्यो जाङ्गुलिको २ [1]व्यालग्राह्यहितुण्डिकः ॥ ११ ॥
इति पातालभोगिवर्गः ॥ ८ ॥

## ९. अथ नरकवर्गः ।

३ स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् ।
४ तद्भेदास्तपनावीचिमहारौरवरौरवाः ॥ १ ॥

---

जाते हैं। किन २ जन्तुओंमें कौन २ विष रहते हैं यह भी टिप्पणीमें स्पष्ट है'[2] ) ॥

१ विषवैद्यः, जाङ्गुलिकः ( २ पु ), 'विषका दूर करनेवाले वैद्य' के २ नाम हैं ॥

२ व्यालग्राही ( = व्यालग्राहिन् । + व्यालग्राहः ), अहितुण्डिकः, ( + आहितुण्डिकः । २ पु), 'साँप पकड़नेवाले या सँपेरा' के २ नाम हैं ॥

इति पातालभोगिवर्गः ॥ ८ ॥

## ९. अथ नरकवर्गः ॥

३ नारकः, नरकः, निरयः ( ३ पुं ), दुर्गतिः (स्त्री), 'नरक'के ४नाम हैं ॥

४ तपनः, अवीचिः ( + स्त्री ), महारौरवः, रौरवः, संघातः

---

१. '............व्यालग्राह्याहितुण्डकः' इति पाठान्तरम् ॥

२. 'तत्र दृष्टिनिःश्वासविषास्तु दिव्याः सर्पाः, भौमास्तु दंष्ट्राविषाः । मार्जारश्ववानरमकरमण्डूकपाकमत्स्यगोधाशम्बूकप्रचलाकगृहगोधिकाचतुष्पादकीटास्तथान्ये दंष्ट्रानखविषाः ॥ चिपिटपिच्चटककषायवासिकसर्षपवासिकतोटकवर्चःकीटकौण्डिल्यकाः शकृन्मूत्रविषाः ॥ मूषिकाः शुक्रविषाः । लूताश्च लालामूत्रपुरीषमुखसन्दंशनखशुक्रार्त्तवविषाः ॥ वृश्चिकविश्वम्भरराजीवमत्स्योच्चिटिङ्गाः समुद्रवृश्चिकाश्चालविषाः ॥ चित्रशिरस्सरावकुर्दिशतदारुकारिमेदकशारिकामुखा मुखसन्दंशविशर्द्धितमूत्रपुरीषविषाः । मक्षिकाकणभजलायुका मुखसन्दंशविषाः ॥ विषहतास्थिसर्पकण्टकवरटीमत्स्यास्थि चेत्यस्थिविषाणि । शकुलीमत्स्यरक्तराजीवरकीमत्स्याश्च पित्तविषाः ॥ सूक्ष्मतुण्डोच्चिटिङ्गवरटीशतपदीशूकवलभिकाशृङ्गीभ्रमराः शूकतुण्डविषाः ॥ कीटसर्पदेहाः गतासवः शवविषाः । शेषास्त्वनुक्ता मुखसन्दंशविषेष्वेव गणयितव्याः'॥ इति सुश्रु० क० स्था० ३ । ९—१० ॥

[1]संघातः कालसूत्रं चेत्याद्याः १ सत्त्वास्तु नारकाः ।
प्रेता २ वैतरणी सिन्धुः ३ स्यादलक्ष्मीस्तु निर्ऋतिः ॥ २ ॥
४ विष्टिराजूः ५ कारणा तु यातना तीव्रवेदना ।
६ पीडा बाधा व्यथा [2]दुःखमामनस्यं प्रसूतिजम् ॥ ३ ॥

( + संहारः । ५ पु ), कालसूत्रम् ( न ), आदि ( 'आदि शब्दसे 'तामिस्रम् , अन्धतामिस्रम्, संजीवनम्, महावीचिः (स्त्री), सम्प्रतापनम् (शेष ४ न), इत्यादिका संग्रह है' ), 'भिन्न भिन्न नरक-विशेष' का १—१ नाम है। ( 'नरक २१ होते हैं, उनके नाम टिप्पणीमें स्पष्ट हैं'[3] ) ॥

१ नारकः ( भा० दी० म० ), प्रेतः ( + परेतः । २ पु ), 'नरकके प्राणियों' के २ नाम हैं ॥

२ वैतरणी ( स्त्री ), 'यमलोकके समीप बहनेवाली वैतरणी नामकी नदी' का १ नाम है ॥

३ अलक्ष्मीः (भा० दी० म०), निर्ऋतिः (२ स्त्री), 'नरककी अशोभा' के २ नाम हैं ॥

४ विष्टिः, आजूः ( २ स्त्री ), 'बलात्कारसे नरकमें ढकेलने' के २ नाम हैं ॥

५ कारणा, यातना, तीव्रवेदना (३ स्त्री), स्वा० म० 'नरकके दुःख' के और भा० दी० म० 'कठोर दुःख' के ३ नाम हैं ॥

६ पीडा, बाधा ( + आबाधा ), व्यथा ( ३ स्त्री ), दुःखम् , आमनस्यम्

---

१. 'संहारः काल………' इति पाठान्तरम् ।

२. '………दुःखममानस्यं……' इति पाठान्तरम् ॥

३. उच्छास्त्रवर्त्तिनो लुब्धस्य राज्ञः प्रतिग्रहस्वीकारे पर्यायेणैकविंशतिं नरकान् यातीत्युपक्रम्य तेषामेकविंशतिनरकाणां नामान्युक्तानि मनुना । तद्यथा—

'तामिस्रमन्धतामिस्रं महारौरवरौरवौ । नरकं कालसूत्रं च महानरकमेव च ॥ १ ॥
सञ्जीवनं महावीचिं तपनं संप्रतापनम् । संघातं च सकाकोलं कुड्मलं प्रतिमूर्तकम् ॥ २ ॥
लोहशंकुमृजीषं च पन्थानं शाल्मलीं नदीम् । असिपत्रवनं चैव लोहदारकमेव च' ॥ ३ ॥
इति मनुः ४ । ८८—९० ॥

स्यात्कष्टं कृच्छ्रमाभीलं १ त्रिष्वेषां भेद्यगामि यत् ।

इति नरकवर्गः ॥ ९ ॥

## १०. अथ वारिवर्गः ।

२ समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः ।
उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः ॥ १ ॥
रत्नाकरो जलनिधिर्यादःपतिरपाम्पतिः ।
१ तस्य प्रभेदाः क्षीरोदो लवणोदस्तथापरे ॥ २ ॥

---

(+अमानस्यम्), प्रसूतिजम् , कष्टम ; कृच्छ्रम् , आभीलम् ( ६ न ), 'दुःख' के ९ नाम हैं । ( 'वस्तुतस्तु 'पीडा……' ४ 'मानसिक दुःख' के, 'आमनस्यम्,……' २ 'मनोविकार' अर्थात 'उदासी' के और 'कष्टम्,………' ३ 'शारीरिक दुःख' के नाम हैं' ) ॥

१ इनमें 'दुःख' इत्यादि शब्द किसीके विशेषण होनेपर त्रिलिङ्ग होते हैं । ( 'जैसे—'दुःखा दुर्नृपसेवा, दुःखः पुत्रो ह्यपण्डितः, दारिद्र्यमखिलं दुःखम्,……' ) ॥

इति नरकवर्गः ॥ ९ ॥

## १०. अथ वारिवर्गः ।

२ समुद्रः, अब्धिः, अकूपारः, पारावारः ( + पारापारः ), सरित्पतिः, उदन्वान् ( = उदन्वत् ), उदधिः, सिन्धुः, सरस्वान् ( = सरस्वत् ), सागरः, अर्णवः, रत्नाकरः जलनिधिः, यादःपतिः ( + पाथःपतिः ), अपांपतिः (१५ पु), 'समुद्र' के १५ नाम हैं ॥

१ क्षीरोदः, लवणोदः (२ पु), आदि ('आदि शब्दसे 'दध्युदः १, घृतोदः २, सुरोदः ३, इक्षूदः ४, स्वादूदः ५ (५ पु)' इन पांचोंका संग्रह है' ) 'क्षीर-समुद्र १, खारा समुद्र २, आदि ( 'आदि' शब्द से 'दधि-समुद्र १, घृत-समुद्र २, मद्य-समुद्र ३, रस-समुद्र ४, मीठे जलका समुद्र ५, इन पांचोंका

१ आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ।
पयः कीलालममृतं जीवनं भुवनं वनम् ॥ ३ ॥
[1]कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।
अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् ॥ ४ ॥
मेघपुष्पं घनरसस्त्रिषु द्वे आप्यमम्मयम् ।
३ भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचि ५ रथोर्मिषु ॥ ५ ॥
महत्सूल्लोलकल्लोलौ ६ स्यादावर्तोऽम्भसां भ्रमः ।

संग्रह है, इस तरह सब [2] सात 'समुद्र' हैं' ) का १—१ नाम हैं ॥

१ आपः ( = अप्, नित्य स्त्री० ब० व० । + आपः = आपस्, न ), वाः ( = वार् ), वारि ( + वारम् ), सलिलम् ( + सरिलम्, सलिरम् ), कमलम् , जलम् , पयः ( + पयस् ), कीलालम्, अमृतम्, जीवनम्, भुवनम्, वनम् , कबन्धम् ( + कमन्धम् , कम्, अन्धम् ), उदकम् ( + दकम् ), पाथः ( = पाथस् ), पुष्करम् , सर्वतोमुखम्, अम्भः ( =अम्भस् ), अर्णः ( =अर्णस् ), तोयम्, पानीयम्, नीरम् ( + नारम्, न पु), क्षीरम्, अम्बु, शम्बरम् (संवरम्), मेघपुष्पम् ( २५ न ), घनरसः ( पु + न ), 'पानी' के २७ नाम हैं ॥

२ 'आप्यम् , अम्मयम् (२ न)' 'पानी के विकार' अर्थात् 'पानीसे बने पदार्थ बर्फ, शर्बत आदि' के २ नाम हैं ॥

३ भङ्गः, तरङ्गः ( २ पु ), ऊर्मिः, वीचिः ( स्वा० म० नि० स्त्री । २ पु स्त्री ), 'पानी के तरङ्ग लहर' के ४ नाम हैं ॥

४ उल्लोलः, कल्लोलः ( २ पु ), 'बड़ी तरङ्ग' के २ नाम हैं ॥

५ आवर्तः( पु ), 'चक्कोह' भँवर अर्थात् 'पानीके गोलाकार घूमने' का १ नाम है ॥

---

१. केचित्तु 'कमन्धमुदकं……' इति पठित्वा 'कमन्धम्' प्रत्येकं नाम 'कम्, अन्धम' इति नामद्वयं वेत्याहुः । अत्र 'कबन्धञ्च दकम्……' इति च पाठान्तरम् ॥

२. तदुक्तमभिधानचिन्तामणौ हेमचन्द्राचार्येण—

'लवणक्षीरदध्याज्यसुरेक्षुस्वादुवारयः' ।

इति अभि० चि० म० 'हैम' ४ । १४१ ॥

यथा वा—'लवणेक्षुसुरासर्पिर्दधिक्षीरजलाः समाः' ॥ इत्यन्यत्र ॥

१ पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम् ॥ ६ ॥
२ [1]चक्राणि पुटभेदाः स्युर्भ्रमाश्च जलनिर्गमाः ।
३ कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ॥ ७ ॥
४ पारा५वारे परार्वाची तीरे ६ पात्रं तदन्तरम् ।
७ द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ॥ ८ ॥
८ तोयोत्थितं तत्पुलिनं ९ सैकतं सिकतामयम् ।
१० निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ ॥ ९ ॥

---

१ पृषत् ( न । + पृषन्तिः, पु ), बिन्दुः, पृषतः ( २ पु ), विप्रुट् , (= विप्रुष् , स्त्री । + विप्लुट् = विप्लुष् ), 'बूँद' ठोप' के ४ नाम हैं ॥

२ चक्रम् (न । + वक्रम्), पुटभेदः, भ्रमः, जलनिर्गमः ( ३ पु ), महे०, स्वा० म० 'गोलाकार होकर जलके नीचे जाने' के ४ नाम हैं। ( भा० दी० म० पहलेवाले दो नाम उक्तार्थक और अन्त वाले दो नाम 'जल निकलनेके समुदाय' के और अन्यके म० पहले वाले दो नाम उक्तार्थक तथा अन्तवाले दो नाम 'नीचेसे ऊपरकी तरफ जलके निकलने' अर्थात् 'जमीन फटकर भव फूटने या फौव्वारा छूटने' के हैं ) ॥

३ कूलम्, रोधः ( = रोधस् । + रोधः, = रोध, पु ), तीरम्, प्रतीरम् ( ४ न ), तटम् ( त्रि ), 'नदी के किनारे' के ५ नाम हैं ॥

४ पारम् ( न ) 'नदीके उधरवाले किनारे' का नाम १ है ॥

५ अवारम् ( न ), 'नदीके इधरवाले किनारे' का १ नाम है ॥

६ पात्रम् ( न ) 'दोनों किनारोंके मध्य भाग' का १ नाम है ॥

७ द्वीपम् , अन्तरीपम् ( २ पु न ), 'टापू' के २ नाम हैं ॥

८ पुलिनम् (न), 'पानीसे शीघ्र निकले हुए किनारे' का १ नाम है॥

९ सैकतम् , सिकतामयम् ( २ न ), 'रेतीले स्थान या किनारे' के २ नाम हैं ॥

१० निषद्वरः, जम्बालः, पङ्कः ( पु न ), शादः, कर्दमः ( शेष ४ पु ), 'कीचड़, पङ्क' के ५ नाम हैं ॥

---

१. 'वक्राणि पुटभेदा·········' इति मा० दी० पाठान्तरम् ।

१ जलोच्छ्वासाः परीवाहाः २ कूपकास्तु विदारकाः ।
३ नाव्यं त्रिलिङ्गं नौतार्ये ४ स्त्रियां नौस्तरणिस्तरिः ॥ १० ॥
५ उडुपं तु प्लवः कोलः ६ स्रोतोऽम्बुसरणं स्वतः ।
७ आतरस्तरपण्यं स्यादु ८ द्रोणी काष्ठाम्बुवाहिनी ॥ ११ ॥
९ सांयात्रिकः पोतवणिक् १० कर्णधारस्तु नाविकः ।

---

१—जलोच्छ्वासः, परीवाहः (+परिवाहः । २ पु), 'बढ़े हुए पानीके निकलनेके मार्ग' अर्थात् 'कनवाह' के २ नाम हैं ॥

२—कूपकः; विदारकः, 'सूखीसी नदियोंमें थोड़ी देर में कुछ पानी इकट्ठा होनेके लिये किये गये गढे' के २ नाम हैं। ('शोणभद्र, फल्गु आदि पहाड़ी या बालूदार नदियोंमें गढा करनेसे १०-५ मिनटमें थोड़ा पानी जमा हो जाता है') ॥

३ नाव्यम् (त्रि), 'नावसे पार होने योग्य नदी आदि' का १ नाम है ॥

४ नौः, तरणिः (+तरणी), तरिः (+तरीः, तरी । ३ स्त्री), 'नाव' के ३ नाम हैं ॥

५ उडुपम् (पु न), प्लवः, कोलः (२ पु), महे० म० 'छोटी नाव' के और भा० दी० म० 'तैरनेके लिए घड़ा, कनस्तर, तुम्बी आदिसे बनाये गये साधन-विशेष' के २ नाम हैं ॥

६ स्रोतः (=स्रोतस्, न । +स्रोतः, =स्रोत, पु; श्रोतः, +श्रोतस्, न), 'सोता' अर्थात् 'पानीके प्राकृतिक बहाव' का १ नाम है ॥

७ आतरः (पु । +आवापः), तरपण्यम् (न), 'खेवाई' अर्थात् 'नावके भाड़े या उतराई' के २ नाम हैं ॥

८ द्रोणी (+द्रोणिः, द्रुणिः), काष्ठाम्बुवाहिनी (भा० दी० म० । २ स्त्री), 'काठकी बनाई गई छोटी नाव' अर्थात् 'डोंगी' के २ नाम हैं ॥

९ सांयात्रिकः, पोतवणिक् (=पोतवणिज् । २ पु), 'नाव या जहाज़के व्यापारी' के २ नाम हैं ॥

१० कर्णधारः, नाविकः (२ पु), 'पतवार पकड़नेवाले' के २ नाम हैं ॥

१ नियामकाः पोतवाहाः २ कूपको गुणवृक्षकः ॥ १२ ॥
३ नौकादण्डः क्षेपणी स्या४दरित्रं केनिपातकः।
५ अभ्रिः स्त्री काष्ठकुद्दालः ६ सेकपात्रं तु सेचनम् ॥ १३ ॥
७ [1]"यानपात्रं तु पोतो८ऽब्धिभवे त्रिषु समुद्रियम् ( ५६ )
९ सामुद्रिको मनुष्यो१०ऽब्धिजाता सामुद्रिका च नौः' (५७)

१ नियामकः, पोतवाहः ( २ पु ), 'मगर, मछली आदि दुष्ट जल-जन्तुओंसे जहाजकी रक्षाके लिये जहाजके ऊँचे हिस्सेपर बैठनेवाले' के २ नाम हैं। ( 'समुद्रगामी बड़े-बड़े जहाजोंमें ऐसे लोग रहते हैं, जिन्हें 'जहाजका कप्तान' कहते हैं' ) ॥

२ कूपकः, गुणवृक्षकः ( २ पु ), 'मस्तूल' के २ नाम हैं। ('पाल या गोंद बांधनेके लिए जहाज या नावके बीचमें खड़े किये हुए खम्भेको 'मस्तूल' कहते हैं। किसी २ के मतसे 'नावको बाँधनेवाले खूँटे' के ये २ नाम हैं' ) ॥

३ नौकादण्डः ( पु ), क्षेपणी ( स्त्री। +क्षेपणिः, क्षिपणिः, क्षिपा ), 'डांड़े' के २ नाम हैं ॥

४ अरित्रम्, केनिपातकः (२ पु), 'पतवार' के २ नाम हैं ॥

५ अभ्रिः ( स्त्री। +अभ्री ), काष्ठकुद्दालः ( पु। +काष्ठकूद्दालः ), 'जहाज आदिके कतवार आदिको हटानेके लिये काष्ठके बनाये कुदाल' के २ नाम हैं ॥

६ सेकपात्रम्, सेचनम् ( २ न ), 'नाव, जहाज इत्यादिमें एकत्रित हुए पानीको फेंकनेके लिये चमड़ा आदिके थैले या मशक' के २ नाम हैं। उपलक्षणतया 'पानी भरनेवाले मशकमात्र' के भी ये २ नाम हैं ॥

७ [ पोतः (पु), 'जहाज' का १ नाम है ] ॥

८ [ समुद्रियम् ( त्रि ), 'समुद्रमें होनेवाले पदार्थ' का १ नाम है ] ॥

९ [ सामुद्रिकः ( पु ), 'समुद्रके मनुष्य' का १ नाम है ] ॥

१० [ सामुद्रिका ( स्त्री। +समुद्रिका ), 'समुद्रमें जानेवाली नाव' का १ नाम है ] ॥

---

१. यानपात्रं……च नौः' इत्ययेषोंऽशः क्षी० स्वा० व्याख्यानुरोधेनात्र मूले एवोपन्यस्तः। तत्र '……मनुष्योऽब्धिजातादौ नौः समुद्रिका' इति पाठान्तरम् ॥

१ क्लीबेऽर्धनावं नावोऽर्धे २ऽतीतनौकेऽतिनु त्रिषु ।
३ त्रिष्वागाधा४त्प्रसन्नोऽच्छः ५ कलुषोऽनच्छ आविलः ॥ १४ ॥
६ निम्नं गभीरं गम्भीर७मुत्तानं तद्विपर्यये ।
८ अगाधमतलस्पर्शं ९ कैवर्तं दाशधीवरौ ॥ १५ ॥
१० आनायः पुंसि जालं स्या११च्छणसूत्रं पवित्रकम् ।
१२ मत्स्याधानी कुवेणी स्या१३द्बडिशं मत्स्यवेधनम् ॥ १६ ॥

---

१ अर्द्धनावम् ( न ), 'नावके आधे हिस्से' का १ नाम है ॥

२ अतिनु ( त्रि ) 'नावकी अपेक्षा अधिक वेगसे चलनेवाले मनुष्य या पानीके बहाव आदि' का १ नाम है ॥

३ यहाँसे लेकर 'अगाधमतलस्पर्शं······( १।१०।१५ )' के पहलेतक 'त्रिषु' शब्दका अधिकार होनेसे सब शब्द त्रिलिङ्ग हैं ॥

४ प्रसन्नः, अच्छः ( + स्वच्छः । २ त्रि ), 'साफ, निर्मल पानी आदि' के २ नाम हैं ॥

५ कलुषः, अनच्छः, आविलः ( ३ त्रि ), 'गन्दे पानी आदि' के ३ नाम हैं ॥

६ निम्नम्, गभीरम्, गम्भीरम् (३ त्रि), 'गम्भीर गहरे'के ३ नाम हैं ॥

७ उत्तानम् ( त्रि ) 'थाह, या उथला छिछला' का १ नाम है ॥

८ अगाधम् , अतलस्पर्शम् (२ त्रि), 'अथाह, बहुत गहरे'के २ नाम हैं ॥

९ कैवर्तः, दाशः (+ दासः), धीवरः (३ पु), 'मल्लाह' के ३ नाम हैं ॥

१० आनायः ( पु ), जालम् ( न ), 'जाल' के २ नाम हैं ॥

११ शणसूत्रम् , पवित्रकम् ( २ न ), 'सुतलीके बने हुए जाल' के २ नाम हैं ॥

१२ मत्स्याधानी, कुवेणी ( २ स्त्री ), 'मछलियोंको पकड़कर रखनेवाले बर्तन' के २ नाम हैं ॥

१३ बडिशम् ( + बलिशम् ), मत्स्यवेधनम् ( २ न ), 'बंशी' अर्थात् 'लोहेके बने हुए मछली फँसानेके साधन-विशेष'के २ नाम हैं । '('जिसमें आटा

१ पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः ।
[1]विसारः शकली चाथ २ गडकः शकुलार्भकः ॥ १७ ॥
३ सहस्रदंष्ट्रः पाठीन ४ उलूपी शिशुकः समौ ।
५ नलमीनश्चिलिचिमः ६ प्रोष्ठी तु शफरी द्वयोः ॥ १८ ॥
७ क्षुद्राण्डमत्स्यसंघातः पोताधान८मथो झषाः ।
९ रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ॥ १९ ॥

---

या कीड़ा आदि लपेटकर पानीमें फेंककर मछलियां फँसाई जाती हैं, उसे 'बंसी' कहते हैं ) ॥

१ पृथुरोमा ( = पृथुरोमन् ), झषः, मत्स्यः, मीनः, वैसारिणः, अण्डजः, विसारः, शकली ( = शकलिन् । + शकुली, = शकुलिन् , सकली, = सकलिन् । ८ पु ), '**मछली**' के ८ नाम हैं ॥

२ गडकः, शकुलार्भकः ( २ पु ), '**गडक मछली**' के २ नाम हैं ॥

३ सहस्रदंष्ट्रः, पाठीनः ( २ पु ), '**पहिना मछली**' अर्थात् 'बहुत दांत वाली पहिनानामक एक प्रकारकी मछली या पोठिया मछलीके २ नाम हैं ॥

४ उलूपी ( = उलूपिन् ), शिशुकः ( २ पु ), '**सूँस**' के २ नाम हैं ॥

५ नलमीन ( + नडमीनः, तलमीनः ), चिलिचिमः ( चिलचिमिः । २ पु), '**नरकटमें रहनेवाली एक प्रकारकी मछली-विशेष**' के २ नाम हैं ॥

६ प्रोष्ठी ( स्त्री ), शफरी ( स्त्री । + पु स्त्री ), '**सहरी या पोठिया मछली**' के २ नाम हैं ॥

७ पोताधानम् ( न ), '**अण्डेसे निकले हुए मछलियोंके छोटे छोटे बच्चोंके समुदाय**' का १ नाम है ।

८ अब मछलियों के '**भेद**'को कहते हैं अर्थात् वक्ष्यमाण शब्द पर्याय नहीं हैं ॥

९ रोहितः, मद्गुरः शालः ( + सालः ), राजीवः, शकुलः, तिमिः, तिमिङ्गिलः ( ७ पु ), आदि ( 'आदि पदसे 'तिमिङ्गिलगिलः, नन्दीवर्त्तः ( २ पु ), आदिका संग्रह है' ), '**रोहू, मोंगरा, शाल, बरारी, शकुल, तिमि,**

---

१. 'विसारः शकुली चाथ' इति मा० दी० सम्मतः पाठः, मूलोक्तश्च महे० क्षी० स्वा० सम्मतः पाठ इत्यवधेयम् ॥

तिमिङ्गिलादयश्चा१थ यादांसि जलजन्तवः।
२ तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः॥ २०॥
३ स्यात्कुलीरः कर्कटकः ४ कूर्मे कमठकच्छपौ।
५ ग्राहोऽवहारो ६ नक्रस्तु कुम्भीरो७ऽथ महीलता॥ २१॥
गण्डूपदः [1]किञ्चुलको ८ निहाका गोधिका समे।
९ रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः॥ २२॥

तिमिङ्गिल आदि ('आदि पदसे 'तिमिङ्गिलगिल और नन्दीवर्त' आदिका संग्रह है'), 'मछलियोंके भेद' हैं॥

१ यादः ( =यादस्, न ) जलजन्तुः ( पु ), 'जलमें रहनेवाले जीव' के २ नाम हैं॥

२ शिशुमारः, उद्रः, शङ्कुः, मकरः, ( ४ पु ), आदि ( 'आदि पदसे 'जलहस्ती' ( =जलहस्तिन् ), जलकुक्कुटः, कर्कः, कच्छपः, (४ पु), का संग्रह है') सूँस, ऊद, शङ्कु, मगर, आदि ('आदि शब्दसे 'जलहाथी, जलमुर्गा, केकड़ा, कछुआ' आदिका संग्रह है ) जलमें रहनेवाले जीव' हैं॥

३ कुलीरः ( +कुलिरः ), कर्कटकः ( ककटः, कर्कः, करटकः, करडकः। ( २ पु ), 'केकड़े' के २ नाम हैं॥

४ कूर्मः, कमठः, कच्छपः, ( ३ पु ), 'कछुए' के ३ नाम हैं॥

५ ग्राहः, अवहारः ( +अवराहः। २ पु ), 'ग्राह' अर्थात् 'घड़ियाल' के २ नाम हैं॥

६ नक्रः, कुम्भीरः ( २ पु ), 'नाक' अर्थात् 'ग्राहके भेद, एक तरहके जलचर विशेष' के २ नाम हैं॥

७ महीलता ( स्त्री ), गण्डूपदः, किञ्चुलकः ( +किञ्चुलुकः, किञ्चिलिकः। २ पु ), 'केंचुआ' के ३ नाम हैं॥

८ निहाका, गोधिका ( २ स्त्री ), 'गोह' के २ नाम हैं॥

९ रक्तपा, जलौका, जलौकसः ( =जलौकस्, [2]प्रायः ब० व०। +जलोका, जलूका, जलजन्तुका, जलोरगी। ३ स्त्री ), 'जोंक' के ३ नाम हैं॥

१. '......किञ्चुलुकः......' इति मा० दी०, क्षी० स्वा० पाठः॥

२. 'जलोरगी जलोका तु जलौका च जलौकसि'
इति संसारार्णवोक्तेरत्र बहुवचनस्य प्रायिकत्वम्।

१ मुक्तास्फोटः स्त्रियां शुक्तिः २ शङ्खः स्यात्कम्बुरस्त्रियौ।
३ क्षुद्रशङ्खाः [1]शङ्खनखाः ४ शम्बूका जलशुक्तयः॥ २३॥
५ भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः।
६ शिली गण्डूपदी ७ भेकी वर्षाभ्वी ८ कमठी [2]डुलिः॥ २४॥
९ मद्गुरस्य प्रिया शृङ्गी—

---

१ मुक्तास्फोटः (पु), शुक्तिः (स्त्री), 'सितुही, सीप' के २ नाम हैं। ('गजराज, मेघ, सूकर, शङ्ख, मछली, साँप, सीप और बाँस' इनसे मोती निकलती है, किन्तु अधिकतर सीप से ही निकलती है' [3]) ॥

२ शंखः, कम्बुः (२ पु न), 'शङ्ख' के २ नाम हैं॥

३ क्षुद्रशङ्खः, शङ्खनखः (+शङ्खनकः। २ पु) 'छोटे शङ्ख' के २ नाम हैं॥

४ शम्बूकः (पु। +शम्बुकः, शाम्बुकः), जलशुक्तिः (स्त्री। भा० दी० म०), 'घोंघा, दोहना या पानीमें होनेवाली हर तरहकी सीप' के २ नाम हैं॥

५ भेकः, मण्डूकः, वर्षाभूः, शालूरः (+सालूरः), प्लवः, दर्दुरः (६ पु), 'मेंढक' के ६ नाम हैं॥

६ शिली, गण्डूपदी (२ स्त्री), 'केंचुएकी स्त्री या केंचुएके भेदकी छोटी जाति-विशेष' के २ नाम हैं॥

७ भेकी, वर्षाभ्वी (२ स्त्री), 'वेंगुची, मेंढककी स्त्री या मेंढकके भेदकी छोटी जाति-विशेष' के २ नाम हैं॥

८ कमठी, डुलिः (+दुलिः। स्त्री) 'कछुई' के २ नाम हैं॥

९ शृङ्गी (स्त्री। +मद्गुरी), 'मगरकी स्त्री' का १ नाम है॥

---

१. '......शङ्खनकाः......' इति पाठान्तरम्॥

२. '.........दुलिः' इति पाठान्तरम्॥

३. तदुक्तम्—'करीन्द्रजीमूतवराहशंखमत्स्याहिशुक्त्युद्भववेणुजानि।
मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि'॥ १॥ इति॥

—१ दुर्नामा दीर्घकोशिका ।
२ जलाशयो जलाधार३स्तत्रागाधजलो ह्रदः ॥ २५ ॥
४ आहावस्तु निपानं स्यादुपकूपजलाशये ।
५ पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा ॥ २६ ॥
६ नेमिस्त्रिकाऽस्य ७ वीनाहो मुखबन्धनमस्य यत् ।
८ पुष्करिण्यां तु खातं स्या९दखातं देवखातकम् ॥ २७ ॥
१० पद्माकरस्तडागोऽस्त्री ११ कासारः सरसी सरः ।

---

१ दुर्नामा (=दुर्नामन्, पु। +दुर्नाम्नी, स्त्री), दीर्घकोशिका (स्त्री। +दीर्घकोषिका), 'जोंकके समान एक प्रकारके जलचर-विशेष' के २ नाम हैं ॥

२ जलाशयः, जलाधारः (२ पु), 'तालाब, पोखरा, बावली आदि' के २ नाम हैं ॥

३ ह्रदः (पु), 'अथाह जलवाले तालाब आदि' का १ नाम है ॥

४ आहावः (पु), निपानम् (न), 'सुखपूर्वक गौ आदिके जल पीनेके लिये कूँएके पास बनाये हुए हौज' के २ नाम हैं ॥

५ अन्धुः, प्रहिः, कूपः (३ पु), उदपानम् (न पु), 'कूआँ, इनारा' के ४ नाम हैं ॥

६ नेमिः (भा० दी० म०) त्रिका (२ स्त्री) 'घुरई, गड़ारी' के २ नाम हैं ॥

७ वीनाहः (पु। +विनाहः), 'कुंएके जगत्' का १ नाम है ॥

८ पुष्करिणी (स्त्री), खातम् (न) 'पोखरी, छोटी तलैया' के २ नाम हैं ॥

९ अखातम्, देवखातकम् (२ न), 'अकृत्रिम या देवमन्दिरके आगेवाले पोखरा, तालाब आदि' के २ नाम हैं ॥

१० पद्माकरः, तडागः (+तडाकः, तटाकः, तटागः। २ पु), 'कमल उत्पन्न होनेवाले अथाह तालाब आदि' के २ नाम हैं ॥

११ कासारः (पु), सरसी (स्त्री), सरः (=सरस् न), 'कृत्रिम (किसी-

१ वेशन्तः पल्वलं चाल्पसरो २ वापी तु दीर्घिका ॥ २८ ॥
३ खेयं तु परिखा४ऽऽधारस्त्वम्भसां यत्र धारणम् ।
५ स्यादालवालमावालमावापो६ऽथ नदी सरित् ॥ २९ ॥
तरङ्गिणी शैवलिनी तटिनी [1]ह्रादिनी धुनी ।
[2]स्रोतस्वती द्वीपवती स्रवन्ती निम्नगाऽऽपगा ॥ ३० ॥
७ 'कूलङ्कषा निर्झरिणी रोधोवक्रा सरस्वती' ( ५८ )
८ गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा ।
भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ॥ ३१ ॥

---

के खुदवाये हुए कमल उत्पन्न होनेवाले तालाब आदि' के भा० दी० मतसे) ३ नाम हैं। ('पद्माकरः……सरः' 'कमल उत्पन्न होनेवाले जलाशय मात्र' के ५ नाम हैं, यह महे० का मत है' ) ॥

वेशन्तः (पु), पल्वलम् , अल्पसरः ( = अल्पसरस् । २ न ), 'पानीके छोटे-छोटे गढे' के ३ नाम हैं ॥

२ वापी (+ वापिः ), दीर्घिका ( २ स्त्री ), 'बावली' के २ नाम हैं ॥

३ खेयम् ( न ), परिखा ( स्त्री ), 'किले आदिके चारो ओरकी खाई' के २ नाम हैं ॥

४ आधारः ( पु ), 'पानीके बाँध' का १ नाम है ॥

५ आलवालम् ( + अलवालम् ), आवालम् ( २ न ), आवापः ( पु ), 'थाला' अर्थात् 'गांछी या पौधेको सींचनेके लिये उसके जड़में मिट्टी आदिसे बनाये हुए घेरे'के ३ नाम हैं ॥

६ नदी, सरित्, तरङ्गिणी, शैवलिनी, तटिनी, ह्रादिनी ( + ह्रदिनी ), धुनी, स्रोतस्वती ( + स्रोतस्विनी ), द्वीपवती, स्रवन्ती, निम्नगा, आपगा ( + अपगा । १२ स्त्री ), 'नदी' के १२ नाम हैं ॥

७ [ कूलङ्कषा, निर्झरिणी, रोधोवक्रा, सरस्वती ४ स्त्री ), 'नदी' के ४ नाम हैं ] ॥

८ गङ्गा, विष्णुपदी, जह्नुतनया ( + जाह्नवी ), सुरनिम्नगा, भागीरथी,

---

१. ……'ह्रदिनी'……'इति पाठान्तरम् ॥ २. 'स्रोतस्विनी'……' इति पाठान्तरम् ॥

१ कालिन्दी सूर्यतनया यमुना शमनस्वसा ।
२ रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ॥ ३२ ॥
३ करतोया सदानीरा ४ बाहुदा सैतवाहिनी ।
५ [1]शतद्रुस्तु शुतुद्रिः स्याद्विपाशा तु विपाट् स्त्रियाम् ॥३३॥
७ शोणो [2]हिरण्यवाहः स्यात्—

त्रिपथगा, त्रिस्रोताः ( =त्रिस्रोतस् ), भीष्मसूः ( ८ स्त्री ), 'गङ्गा नदी' के ८ नाम हैं ॥

१ कालिन्दी, सूर्यतनया, यमुना, शमनस्वसा ( =शमनस्वसृ । + यमस्वसा,=यमस्वसृ । ४ स्त्री ), 'यमुना नदी' के ४ नाम हैं ॥

२ रेवा, नर्मदा, सोमोद्भवा, मेकलकन्यका ( ४ स्त्री ), 'नर्मदा नदी' के ४ नाम हैं ॥

३ [3]करतोया, सदानीरा ( २ स्त्री ), 'पार्वतीके विवाह-कालमें कन्यादानके जलसे निकली हुई नदी-विशेष' के २ नाम हैं ॥

४ बाहुदा, सैतवाहिनी ( २ स्त्री ), 'कार्तवीर्यद्वारा निकाली हुई एक नदी-विशेष' के २ नाम हैं ॥

५ [4]शतद्रुः (+ शितद्रुः), शुतुद्रिः (२ स्त्री) 'सतलज नदी' के २ नाम हैं॥

६ विपाशा, विपाट् ( = विपाश् । २ स्त्री), 'विपाशा नदी' के २ नाम हैं ॥

७ शोणः ( + शोणभद्रः ), हिरण्यवाहः ( + हिरण्यबाहुः । २ पु ), 'सोन नामक नद' के २ नाम हैं ॥

---

१. 'शुतुद्रिस्तु शतद्रुः स्यात्•••' इति क्षी० स्वा० सम्मते पाठभेदेऽपि मूलोक्त मा० दी०, महे० संमतपाठान्न नाम्नि भेदः' उभयथापि 'शतद्रुः, शुतुद्रिः' इत्यनयोरेवाभिधानयोर्लाभादित्यवधेयम् ॥

२. '•••••• हिरण्यबाहुः' इति पाठान्तरम् ॥

३. इयं 'करतोया' नदी पूर्वदेशस्था ब्रह्मपुत्रेण सङ्गता पुलस्त्यतीर्थयात्रायां तथैवोक्तेः । प्रथमं कर्कटे देवी त्र्यहं गङ्गा रजस्वला । सर्वा रक्तवहा नद्यः करतोयाऽम्बुवाहिनी' ॥ १ ॥ इति याज्ञवल्क्यस्मृतीयबालम्भट्टीयटीकायां करतोयाऽम्बुवाहिनीत्युक्त्या 'सदानीरा' इत्यन्वर्थं नामेत्यवधेयम् ॥

४. वसिष्ठशापादियं शतधा द्रुतेति पौराणिकीकथाऽनुसन्धानादस्याः 'शतद्रुः' इति नाम जातमिति ज्ञेयम् ॥

—१ कुल्याऽल्पा कृत्रिमा सरित्।
२ शरावती वेत्रवती चन्द्रभागा[1] सरस्वती ॥ ३४ ॥
कावेरी सरितोऽन्याश्च ३ सम्भेदः सिन्धुसङ्गमः।
४ द्वयोः प्रणाली पयसः पदव्यां ५ त्रिषु तूत्तरौ ॥ ३५ ॥
देविकायां सरय्वां च भवे दाविकसारवौ।
६ सौगन्धिकं तु कह्लारं ७ हल्लकं रक्तसन्ध्यकम् ॥ ३६ ॥
८ स्यादुत्पलं कुवलय९मथ नीलाम्बुजन्म च।
इन्दीवरं च नीलेऽस्मिन् १० सिते कुमुदकैरवे ॥ ३७ ॥

---

१ कुल्या ( स्त्री ), 'नहर' का १ नाम है ॥

२ शरावती, वेत्रवती, चन्द्रभागा ( +चान्द्रभागी, चन्द्रभागी, चान्द्रभागा, चन्द्रिका ), सरस्वती, कावेरी ( ५ स्त्री ), 'शरावती आदि प्रत्येक नदियों' का १-१ नाम है। अन्य भी 'कौशिकी, गण्डकी, गोदा, वेणी, चर्मण्वती, सिन्धु' आदि नदियाँ हैं ॥

३ सम्भेदः, सिन्धुसङ्गमः ( पु ), 'नदियोंके संगम' के २ नाम हैं ॥

४ प्रणाली ( पु स्त्री। अन्यमतमें स्त्री न ), 'पनारे या नाले' का १ नाम है ॥

५ दाविकः, सारवः ( २ त्रि ), 'देविका और सरयू नदीमें होनेवाले पदार्थ' का क्रमशः १-१ नाम है ॥

६ सौगन्धिकम्, कह्लारम् (न), 'सायंकालमें फूलनेवाले श्वेतकमल' के २ नाम हैं ॥

७ हल्लकम्, रक्तसन्ध्यकम् ( २ न ) 'लाल कह्लार या त्रिकालमें फूलनेवाले रक्तपुष्प-विशेष' के २ नाम हैं ॥

८ उत्पलम्, कुवलयम् (+कुवम्, कुवलम्। २ न), 'श्वेत कमल या सामान्यतः कमल और कुमुदमात्र' के २ नाम हैं ॥

९ नीलाम्बुजन्म ( =नीलाम्बुजन्मन्। +नीलाम्बुजम् ), इन्दीवरम् ( +इन्दीवारम्। २ न ), 'नील कमल' के २ नाम हैं ॥

१० कुमुदम्, कैरवम् ( २ न ) 'श्वेत कमल, कुमुद या कोईं' के २ नाम हैं ॥

---

१. '...चान्द्रभागी...' इति, '...चन्द्रभागी...' इति च पाठान्तरम्॥

१ शालूकमेषां कन्दः स्यार्द्वारिपर्णी तु कुम्भिका ।
३ जलनीली तु [1]शेवालं शैवालो४ऽथ कुमुद्वती ॥ ३८ ॥
कुमुदिन्यां ५ नलिन्यां तु बिसिनीपद्मिनीमुखाः ।
६ वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ॥ ३९ ॥
सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ।
पङ्केरुहं तामरसं सारसं सरसीरुहम् ॥ ४० ॥
बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च ।
७ पुण्डरीकं सिताम्भोज८मथ रक्तसरोरुहे ॥ ४१ ॥
रक्तोत्पलं कोकनदं ९ नालो नालम्—

---

१ शालूकम् ( न ), '**कमलमात्रके कन्द ( जड़ )**' का १ नाम है ॥

२ वारिपर्णी, कुम्भिका ( २ स्त्री । +[3]वारिपर्णः, कुम्भिकः, २ पु ), '**पुरइन' या जलकुम्भी**' के २ नाम हैं ॥

३ जलनीली ( स्त्री ), शेवालम् ( न । + शेवालः, पु ) शैवालः ( पु । शेवलः, शैवलः ), '**सेवाल**' के ३ नाम हैं ॥

४ कुमुद्वती, कुमुदिनी ( २ स्त्री ), '**कोईं**' के २ नाम हैं ॥

५ नलिनी ( + नडिनी ), बिसिनी, पद्मिनी ( ३ स्त्री ), आदि ('आदिसे 'सरोजिनी, कमलिनी, उत्पलिनी (३ स्त्री),......' का संग्रह है'), '**कमलिनी या कमल-समूह**' के ३ नाम हैं ॥

६ पद्मम् , नलिनम् , अरविन्दम् , महोत्पलम् , सहस्रपत्रम् , कमलम् , शतपत्रम्, कुशेशयम्, पङ्केरुहम्, तामरसम्, सारसम्, सरसीरुहम्, बिसप्रसूनम्, राजीवम्, पुष्करम्, अम्भोरुहम् ( १६ पु न ), '**कमल**' के १६ नाम हैं ॥

७ पुण्डरीकम् , सिताम्भोजम् ( २ न ), '**श्वेत कमल**' के २ नाम हैं ॥

८ रक्तोत्पलम्, कोकनदम् ( २ न ), '**लाल कमल**' के २ नाम हैं ॥

९ नालः ( पु ), नालम् ( न । + नाली, नाला, २ स्त्री ), '**कमलके डण्ठल**' के २ नाम हैं ॥

---

१. '......शेवलं शेवालोऽथ...' इति पाठान्तरम् ॥

२. '......नाला नालमथास्त्रियाम्' इति पाठान्तरम् ॥

३. 'कुम्भको वारिपर्णः स्यादित्येके' इति क्षी० स्वा० वचनात् ॥

—१ अथास्त्रियाम् ।
मृणालं बिसमब्जादिकदम्बे २ षण्डमस्त्रियाम् ॥ ४२ ॥
३ करहाटः [1]शिफाकन्दः ४ किञ्जल्कः केसरोऽस्त्रियाम् ।
५ संवर्तिका नवदलं बीजकोशो वराटकः ॥ ४३ ॥

इति वारिवर्गः ॥ १० ॥

---

१ मृणालम्, बिसम्, (+ विसम्, बिशम् । २ पु न), 'कमल आदिके डंठल' के २ नाम हैं ॥

२ षण्डम् ( न पु ) 'कमलके फूल, पत्ती, डण्ठल, जड़ आदि सब अवयवमात्र' का १ नाम है ॥

३ करहाटः, शिफाकन्दः (+ शिफा, स्त्री; कन्दः, पु न । २ पु), 'कमलकी जड़' के दो नाम हैं ॥

४ किञ्जल्कः, केसरः (+ केशरः । २ पु न ), 'कमलके 'केसर' (पराग) के २ नाम हैं ॥

५ संवर्तिका (स्त्री), नवदलम् (न), 'कमलके नये पत्ते' के २ नाम हैं ॥

६ बीजकोशः ( + बीजकोषः, वीजकोशः, वीजकोषः ), वराटकः (२ पु), 'कमलगट्टे' के २ नाम हैं ॥

इति वारिवर्गः ॥ १० ॥

---

१. '……शिफा कन्दं……' इति पाठान्तरम् ॥

## अथ वर्गोपसंहारः काण्डसमाप्तिश्च ।

१ उक्तं स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकम् ।
पातालभोगि नरकं वारि चैषां च सङ्गतम् ॥ १ ॥
[1]इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।

---

## अथ वर्गोपसंहारः काण्डसमाप्तिश्च ।

१ मैंने ( अमरसिंह ने ) 'स्वर् १, व्योम २, दिक् ३, काल ४, धी ५, शब्दादि ६, नाट्य ७, पातालभोगि ८, नरक ९ और वारि १०' इन [2]दस वर्गों तथा इनके प्रसङ्गसे प्राप्त 'देवता, राक्षस, मेघ, विद्युत्' आदिको कहा है। ( 'शब्दादि' के 'आदि' शब्दसे रस, गन्ध,....' का संग्रह है' ) ॥

२ श्रीअमरसिंह के बनाये हुए, नाम (स्वर्, स्वर्ग, नाक,...) और लिङ्ग ( 'पुंलिङ्ग, स्त्रीलिङ्ग, नपुंसकलिङ्ग और अव्ययादि' ) को बतलानेवाले 'नामलिङ्गानुशासन' अर्थात् 'अमरकोष' नामक इस ग्रन्थमें 'स्वर्' आदि ( 'आदि शब्दसे 'व्योम, दिक्, काल,......' १० वर्गोंका और मु० मतसे

---

१. 'इत्यमरसिंहकृतौ......समर्थितः' इत्ययं चरमः श्लोकः काण्डत्रयेऽपि क्षी० स्वा० मूलपुस्तके नोपलभ्यते, किन्तु तत्कृते 'अमरकोषोद्घाटन' नामके व्याख्याने प्रथमचरमाध्याययोर्व्याख्यातो मूलमात्रमेवोपलभ्यते, भा० दी० अव्याख्यातोऽप्ययं प्रथमकाण्डमात्रे महे० व्याख्यात इत्यतो ग्रन्थकृता रचितो न वेति स्वयमनुसंधेयम् ॥

२. 'अत्र गणनया दशानामेव वर्गाणामुपलब्धेः 'उक्तमि'ति प्रतीकमादाय 'अत्रैकादश वर्गाः' इति भा० दी० व्याख्यानं चिन्त्यम्। यद्वा मङ्गलाचरण-प्रतिज्ञा-परिभाषीयाणां श्लोकानामेकं पृथग्वर्गमुररीकृत्य 'अत्रैकादश वर्गा' इति तदुक्तेः सामञ्जस्यमित्यवधेयम्। 'पुण्यपत्तन'— मुद्रिते क्षीरस्वामिकृतामरकोषोद्घाटनाख्यव्याख्याने तु व्योमदिग्वर्गावेकीकृत्यास्मिन् काण्डे नवैव वर्गाः प्रदर्शिताः ॥

३. प्राधान्यादस्मिन् काण्डे स्वर्गीयसाधारणवस्तुनिरूपणात् स्वरादि नाट्यवर्गान्तं 'स्वर्गवर्गः' ततश्च पातालसम्बन्धिपदार्थनिरूपणात्पातालादि वारिवर्गान्तं 'पातालवर्गः' इत्येतौ द्वावेव वर्गौ मुकुटेनोररीकृताविस्यवधेयम् ॥

स्वरादिकाण्डः प्रथमः साङ्ग एव समर्थितः ॥ २ ॥

इत्यमरसिंहविरचिते 'नामलिङ्गानुशासना' परपर्यायके 'अमरकोषे'
प्रथमः स्वरादिकाण्डः समाप्तः।

'पातालवर्ग' का संग्रह है' ) का यह प्रथम काण्ड ( भाग ) अङ्ग ( भेद और अपभेद ) के सहित समर्थित होकर सम्पूर्ण हुआ ॥

इति पण्डितप्रवरश्रीरामस्वार्थमिश्रतनुजश्रीहरगोविन्दमिश्र-
विरचितायां मणिप्रभाख्यामरकोषव्याख्यायां प्रथमः
स्वरादिकाण्डः समाप्तः ॥

# अथ द्वितीयकाण्डम्

वर्गभेदान् कथयति—

१ वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः ।
नृब्रह्मक्षत्त्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥ १ ॥

## १. अथ भूमिवर्गः ।

२ भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा ।
धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः ॥ २ ॥

---

१ इस द्वितीय काण्डमें अङ्गों और उपाङ्गोंके सहित 'पृथ्वी, पुर, पर्वत, वनौषधि, मृगादि ( 'आदि' शब्दसे 'पक्षी, कीट' आदिका संग्रह है अथवा 'मृगादि' शब्द [१]सिंहवाचक है ), मनुष्य, ब्रह्म, क्षत्रिय, वैश्य और शूद्र; ये १० वर्ग अर्थात् 'भूमिवर्ग १, पुरवर्ग २, शैलवर्ग ३, वनौषधिवर्ग ४,……'कहे गये हैं। ( 'भूमिके अङ्ग—'मृत्, शाखा और नगर' आदि तथा उपाङ्ग 'मृत्स्ना आदि; पुरके अङ्ग—'आपण' आदि तथा उपाङ्ग 'विपणी' आदि; पर्वतके अङ्ग—'शिला' आदि तथा उपाङ्ग 'मैनसिल, गेरु' आदि धातु; वनौषधिके अङ्ग—'वृक्ष' आदि तथा उपाङ्ग 'फूल, फल' आदि; मृगके अङ्ग—'रुरु' आदि; तथा उपाङ्ग 'लोम' आदि एवं 'मृगादि'के आदि पदसे संगृहीत पक्षीके अङ्ग—'कीट, पतङ्ग' आदि तथा उपाङ्ग 'चञ्चु, पङ्ख' आदि हैं; इसी तरह अन्यान्य वर्गोंका भी अङ्गोपाङ्ग समझना चाहिये ) ॥

## १. अथ भूमिवर्गः ।

२ भूः ( = भू । + भूः, = भूर् , अ० ), भूमिः ( + भूमी ), अचला, अनन्ता, रसा, विश्वम्भरा, स्थिरा, धरा, धरित्री, धरणिः ( + धरणी ), क्षोणिः ( + क्षोणी,

---

१. 'मृगादि' शब्दस्यायमेवार्थः समुचितः, मृगान् पशूनत्तीति मृगादिरिति व्युत्पत्त्या 'मृगादि' शब्दस्य सिंहपर्यायत्वाभावात्मसामञ्जस्यात् । अत एवाग्रे 'सिंहादिवर्ग'कथनं संगच्छतेऽन्यथा मृगादिवर्गकथनस्यौचित्यात् ॥

—१ पुंसि भूम्नि तु बल्वजाः।
२ रसाल इक्षु ३ स्तद्भेदाः पुण्ड्रकान्तारकादयः ॥ १६३ ॥
४ स्याद्वीरणं वीरतरं ५ मूलेऽस्योशीरमस्त्रियाम्।
अभयं नलदं सेव्यममृणालं जलाशयम् ॥ १६४ ॥
लामज्जकं [1]लघुलयमवदाहेष्टकापथे।
६ नडादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ॥ १६५ ॥

---

१ बल्वजाः ( पु नित्य ब० व० । + ए० व[2] ) 'बगई' का १ नाम है। ( 'काशः,...' ४ नाम एकार्थक हैं, यह भी किसीका मत है' ) ॥

२ रसालः, इक्षुः ( २ पु ), 'ईख, गन्ना, ऊख' के २ नाम हैं ॥

३ पुण्ड्रः ( + पौण्ड्रः ), कान्तारकः ( २ पु ), आदि ( 'आदि शब्दसे 'रसालः, कर्कटकः ( २ पु )...का संग्रह है' ) ये 'ऊखके [3]भेद-विशेष' हैं ॥

४ वीरणम्, वीरतरम् ( २ न ), 'गाँडर घास' के २ नाम हैं। ( 'इसीके जड़को 'खश' कहते हैं' ) ॥

५ उशीरम् ( न पु ), अभयम्, नलदम्, सेव्यम्, अमृणालम् ( + मृणालम् ), जलाशयम्, लामज्जकम्, लघुलयम् ( + लघु, लयम् ) अवदाहम्, इष्टकापथम् ( + अवदाहेष्टम्, । ९ न ) 'खश' के १० नाम हैं ॥

६ 'नड' आदि और 'गर्मुत्, श्यामाकः ( + श्यामकः । २ पु ), अर्थात् क्रमशः 'एक तृण-विशेष और साँवा' और 'प्रमुख' शब्दसे नीवारः, कोद्रवः ( २ पु ), अर्थात् क्रमशः 'तेनी या तीनी और कोदो' ये 'तृणधान्य' हैं ॥

१. 'लघु लयमवदाहेष्टकापथे' इति। इष्टकापथेत्यत्र 'ग्रन्थकृत्तु सेव्यामृणामृणालयोर्नलदोशीरैकार्थत्वाद् भ्रान्तः' इति क्षी. स्वा. ॥ २. 'एको बल्वज' इति पातञ्जलमहाभाष्योक्तेरित्यवधेयम् ॥
३. इक्षुभेदा यथा— इक्षुः कर्कटको वंशः कान्तारो वेणुनिःसृतः।
इक्षुरन्यः पौण्ड्रकश्च रसालः सुकुमारकः ॥ १ ॥
अन्यः करङ्कशालिः स्यादिक्षुयोनीक्षुबालिका।
तथान्य इक्षुगन्धा स्यादिक्षुलः कोकिलाक्षकः' ॥ २ ॥ इति ॥
निघण्टौ त्वन्य एवेक्षुभेदा उक्तास्ते यथा—
पौण्ड्रको भीरुकश्चापि वंशकः शतपोरकः। कान्तारस्तापसेक्षुश्च काण्डेक्षुः सूचिपत्रकः ॥ १ ॥
नैपालो दीर्घपत्रश्च नीलपोरोऽथ कोशकः। इत्येता जातयस्तेषां कथयामि गुणानपि ॥२॥ इति ॥

१ अस्त्री कुशं कुथो दर्भः पवित्र २ मथ कत्तृणम्।
पौरसौगन्धिकध्यामदेवजग्धकरौहिषम् ॥ १६६ ॥
३ छत्राऽतिच्छत्रपालघ्नौ ४ मालातृणकभूस्तृणे ।
५ शष्पं बालतृणं ६ घासो यवसं ७ तृणमर्जुनम् ॥ १६७ ॥
८ तृणानां संहतिस्तृण्या ९ नड्या तु नडसंहतिः ।
१० तृणराजाह्वयस्तालो ११ नालिकेरस्तु लाङ्गली ॥ १६८ ॥
१२ घोण्टा तु पूगः क्रमुको गुवाकः खपुरो १३ ऽस्य तु।
फलमुद्वेगम्—

---

१ कुशम्(पु न), कुथः, दर्भः ( २ पु ), पवित्रम् (न), 'कुशा' के ४ नाम हैं॥

२ कत्तृणम् , पौरम् , सौगन्धिकम् , ध्यामम् , देवजग्धकम् , रौहिषम् ( ६ न ), 'रोहिषनामक सुगन्धित घास' के ६ नाम हैं ॥

३ छत्रा ( स्त्री ), अतिच्छत्रः, पालघ्नः ( २ पु ), 'पानीमें होनेवाले तृण-विशेष' के ३ नाम हैं।

४ मालातृणकम् , भूस्तृणकम् ( २ न ), 'वचके समान रूप तथा पानीमें होनेवाले तृण-विशेष' के २ नाम हैं। ( 'यह भा० दी० का मत है। महे० और क्षी० स्वा० के मतसे 'छत्रा,'''भूस्तृण' ५ शब्द एकार्थक हैं' ) ॥

५ शष्पम् ( +शस्यम् ), बालतृणम् ( २ न ), 'नई और कोमल घास' के २ नाम हैं ॥

६ घासः ( पु ), यवसम् ( न ), 'सावत' अर्थात् 'बैल, घोड़ा, आदि पशुओंके खाने योग्य भूसा-घास' के २ नाम हैं ॥

७ तृणम् , अर्जुनम् ( २ न ), 'तृणमात्र' के २ नाम हैं ॥

८ तृण्या ( स्त्री ), 'घासकी ढेरी' का १ नाम है ॥

९ नड्या ( स्त्री ), 'नड-समूह' का १ नाम है ॥

१० तृणराजः, तालः ( +तलः । २ पु ), 'ताड़' के २ नाम हैं ॥

११ नालिकरः ( +नारिकेरः, नारिकेलः, नाडिकेरः, नारीकेलः, ४ पु०; नारिकेलिः, नारीकेली; २ स्त्री ), लाङ्गली ( = लाङ्गलिन्। +लाङ्गली = लाङ्गली, स्त्री। २ पु ), 'नारियल' के २ नाम हैं ॥

१२ घोण्टा ( स्त्री ), पूगः, क्रमुकः, गुवाकः ( +गूवाकः ), खपुरः (४ पु), 'सुपारी, कसैलीके पेड़' के ५ नाम हैं ॥

१३ उद्वेगम् ( न ), 'सुपारीके फल' का १ नाम है ।

—१ एते च हिन्तालसहितास्त्रयः ॥ १६९ ॥
खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः ।
इति वनौषधिवर्गः ॥ ४ ॥

## ५. अथ सिंहादिवर्गः ।

२ सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ।
३ 'कण्ठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशनः' ( ८ )
पुण्डरीकः पञ्चनखचित्रकायमृगद्विषः' ( ९ )
४ शार्दूलद्वीपिनौ व्याघ्रे ५ तरक्षुस्तु मृगादनः ॥ १ ॥
६ वराहः सूकरो घृष्टिः कोलः पोत्री [1]किरिः किटिः ।

---

१ हिन्तालः ( पु ) के सहित पूर्वोक्त तीन शब्द ( नारिकेल, ताल, घोण्टा ) और खर्जूरः ( पु ), केतकी, ताली, खर्जूरी ( ३ स्त्री ) को तृणद्रुमः ( पु ) अर्थात् 'तृणद्रुम' कहते हैं ॥

इति वनौषधिवर्गः ॥ ४ ॥

## ५. अथ सिंहादिवर्गः ।

२ सिंहः, मृगेन्द्रः, पञ्चास्यः, हर्यक्षः, केसरी ( = केसरिन् । + केशरी = केशरिन् ), हरिः ( ६ पु ), 'सिंह' के ६ नाम हैं ॥

३ [ कण्ठीरवः मृगरिपुः, मृगदृष्टिः, मृगाशनः, पुण्डरीकः, पञ्चनखः, चित्रकायः, मृगद्विष् । ८ पु ), 'सिंह' के ८ नाम हैं ] ॥

४ शार्दूलः, द्वीपी ( = द्वीपिन् ), व्याघ्रः ( ३ पु ), 'बाघ' के ३ नाम हैं ॥

५ तरक्षुः ( + तरक्षः ) मृगादनः ( २ पु ) 'चिता या तेंदुआ बाघ' के २ नाम हैं ( 'मुकु० मतसे 'वृक' अर्थात् 'हुँड़ार भेंड़िया' के ये २ नाम हैं') ॥

६ वराहः, सूकरः ( + शूकरः ), घृष्टिः ( + गृष्टिः ), कोलः, पोत्री ( = पोत्रिन् ), किरिः, ( + किरः ) किटिः, दंष्ट्री ( = दंष्ट्रिन् ), घोणी ( घोणिन् )

---

१. 'किरः, किटिः' इति पाठान्तरम् ॥

दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ॥ २ ॥
१ कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः ।
मर्कटो वानरः कीशो वनौका २ अथ भल्लुके ॥ ३ ॥
[1]ऋक्षाच्छभल्लभल्लूका ३ गण्डके खड्गखड्गिनौ ।
४ [2]लुलायो महिषो वाहद्विषत्कासरसैरिभाः ॥ ४ ॥
५ स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः ।
[3]शृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः ॥ ५ ॥
६ ओतुर्विडालो मार्जारो वृषदंशक आखुभुक् ।
७ त्रयो गौधारगौधेरगौधेया गोधिकात्मजे ॥ ६ ॥

---

स्तब्धरोमा (=स्तब्धरोमन् ), क्रोडः, भूदारः (१२ पु), 'सूअर' के १२ नाम हैं ॥

१ कपिः, प्लवङ्गः (+प्लवङ्गमः), प्लवगः, शाखामृगः, वलीमुखः ( बलीमुखः, बलिमुखः ) मर्कटः, वानरः, कीशः, वनौकाः ( =वनौकस् । ९ पु ), 'बन्दर' के ९ नाम हैं ॥

२ भल्लुकः, ऋक्षः, अच्छभल्लः (+अच्छः, भल्लः ), भल्लूकः ( +भालूकः, भालुकः, भाल्लूकः । ४ पु), 'भालू' के ४ नाम हैं ।

३ गण्डकः, खड्गः, खड्गी ( =खड्गिन् । ३ पु ) 'गैंड़ा' के ३ नाम हैं ॥

४ लुलायः (+लुलापः), महिषः, वाहद्विषन् ( =वाहद्विषत् । +वाहद्विट्=वाहद्विष् ), कासरः, सैरिभः ( ५ पु ), 'भैंसा' के १२ नाम हैं ॥

५ शिवा ( नि० स्त्री ), भूरिमायः, गोमायुः, मृगधूर्तकः, शृगालः ( +सृगालः ), वञ्चकः ( +वञ्चुकः ), क्रोष्टा ( =क्रोष्टु ), फेरुः, फेरवः ( +फेरण्डः ), जम्बुकः ( +जम्बूकः । ९ पु ) 'स्यार, शृगाल' के १० नाम हैं ॥

६ ओतुः, विडालः (+बिडालः, विलालः ), मार्जारः, वृषदंशकः, आखुभुक् ( =आखुभुज् । ५ पु ), 'बिलाव' के ५ नाम हैं ॥

७ गौधारः, गौधेरः, गौधेयः ( ३ पु ), 'गोहरा, चन्दनगोह' अर्थात् 'काले साँप से गोह में पैदा होनेवाला जीवविशेष' 'विसखपरा' के ३ नाम हैं ॥

---

१. 'ऋक्षाच्छभल्लभालूका' इति पाठान्तरम् ॥ २. 'लुलापो महिषः' इति पाठान्तरम् ॥
३. 'सृगालो वञ्चकः क्रोष्टु' इति पाठान्तरम् ॥

१ श्वावित्तु शल्य २ स्तल्लोम्नि शलली शललं शलम् ।
३ वातप्रमीर्वातमृगः ४[1]कोकस्त्वीहामृगो वृकः ॥ ७ ॥
५ मृगे कुरङ्गवातायुहरिणाजिनयोनयः ।
६ ऐणेयमेण्याश्चर्माद्य ७ मेणस्यैणमुभे त्रिषु ॥ ८ ॥
८ कदली कन्दली चीनश्चमूरुप्रियकावपि ।
समूरुश्चेति ९ हरिणा अमी अजिनयोनयः ॥ ९ ॥

---

१ श्वावित् ( = श्वाविध् ), शल्यः ( २ पु ), 'साही' के २ नाम हैं ॥

२ शलली ( स्त्री ), शललम् , शलम् ( २ न ), 'साही के काँटे' के ३ नाम हैं ॥

३ वातप्रमीः ( + स्त्री ), वातमृगः ( २ पु ), 'बहुत तेज दौड़नेवाले मृग-विशेष' के २ नाम हैं ॥

४ कोकः, ईहामृगः, वृकः ( ३ पु ), 'भेंड़िया, हुंडार' के ३ नाम हैं ॥

५ मृगः, कुरङ्गः, वातायुः ( वानायुः; क्षी० स्वा०; वनायुः ), हरिणः, अजिनयोनिः ( ५ पु ), 'मृग, हरिण' के ५ नाम हैं ॥

६ ऐणेयम् ( त्रि ), 'मृगी के चमड़े, सींग आदि' का १ नाम है ॥

७ ऐणम् ( त्रि ), 'मृगके चमड़े सींग आदि' का १ नाम है ॥

८ कदली, कन्दली ( २ स्त्री । क्षी० स्वा० मतसे कदली = कदलिन् , कन्दली = कन्दलिन् ; २ पु[2] ), चीनः, चमूरुः, प्रियकः, समूरुः ( ४ पु ), 'मृगविशेष' के ६ नाम हैं ॥

९ 'कदली, आदि ६ शब्द और आगे कहे जानेवाले 'कृष्णसार' आदिको अजिनयोनिः (पु) 'अजिनयोनि' कहते हैं । (इनके चमड़े का उपयोग होता है ) ॥

---

१. 'कोक ईहामृगो वृकः' इति पाठान्तरम् ॥

२. कदली हरिणान्तरे । रम्भायां वैजयन्त्यां च—' ( अने० सं० ३।६७० इति, 'शिरोऽस्थनि कन्दलन्तु नवाङ्कुरे करध्वनौ ।
उपरागे मृगभेदे कलाये कन्दलीद्रुमे' ॥ १ ॥ ( अने० सं० ३।६६८ )
इति च त्रिस्वरलान्तवर्गे हेमचन्द्रोक्तेः,
कन्दलं त्रिषु कपालेऽप्युपरागे नवाङ्कुरे । कलध्वनौ कन्दली तु मृगगुल्मप्रभेदयोः ॥ १ ॥
कदला कदलौ पृश्न्यां कदली कदलौ पुनः । रम्भावृक्षेऽथ कदली पताकामृगभेदयोः' ॥ २ ॥
( मे० श्लो० ६९—७१ ) इति लान्तवर्गे मेदिन्युक्तेश्च विरुद्धमेतत् ॥

१ [1]'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः ।
गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ॥ १० ॥
२ गन्धर्वः शरभो रामः सृमरो गवयः शशः ।
३ इत्यादयो मृगेन्द्राद्याः गवाद्याः पशुजातयः ॥ ११ ॥
४ 'अधोगन्ता तु खनको वृकः पुंध्वज उन्दुरः' ( १० )
५ उन्दुरुर्मूषकोऽप्याखु ६ गिरिका बालमूषिका ।
७ [2]'छुछुन्दरी गन्धमुखी दीर्घतुण्डी दिवान्धिका' ( ११ )

---

१ कृष्णसारः ( + कृष्णशारः ), रुरुः, न्यङ्कुः, रङ्कुः, शम्बरः ( + संवरः, शंवरः ), रौहिषः ( + रोहिषः ), गोकर्णः, पृषतः, एणः, ऋश्यः ( + ऋष्यः ), रोहितः ( + लोहितः ), चमरः ( १२ पु ), ये १२ 'मृगके भेद' हैं ॥

२ गन्धर्वः ( + गन्धर्वः ), शरभः, रामः, सृमरः, गवयः, शशः ( ६ पु ), क्रमशः 'गन्धयुक्त मृगविशेष, लड़ीसरा या एक प्रकारका बन्दर-विशेष, सुन्दरजातीय मृग-विशेष, बहुत भागनेवाला मृग विशेष, नीलगाय या खरहा' का १–१ नाम है ॥

३ ये छ ( पूर्वोक्त 'मृगेन्द्र' आदि ) और वक्ष्यमाण (आगे कहे जानेवाले) 'गो, महिष' आदि पशुजातिः ( स्त्री ), 'पशुजाति' हैं अर्थात् इनकी पशुजाति में गणना होती है ॥

४ [ अधोगन्ता ( = अधोगन्तृ ), खनकः, वृकः, पुंध्वजः, उन्दुरः (५ पु), 'चूहा, मूस' के ५ नाम हैं ] ॥

५ उन्दुरुः, मूषकः ( + मुषकः ), आखुः ( ३ पु ), 'चूहा मूस' के ३ नाम हैं ॥

६ गिरिका, बालमूषिका (२ स्त्री) 'मुसरी छोटी चूहिया' के २ नाम हैं ॥

७ [ छुछुन्दरी, गन्धमुखी, दीर्घतुण्डी, दिवान्धिका ( ४ स्त्री ), 'छुछुन्दर' के ४ नाम हैं ] ॥

---

१. कृष्णशाररुरुन्यङ्कुरङ्कुसंवररौहिषाः' इति पाठान्तरम् ॥
२. छुछुन्दरी'''दिवान्धिका' इत्यंशः क्षी० स्व० व्याख्यायां समुपलभ्यते ॥

१ सरटः कृकलासः स्यात् २ मुसली [1]गृहगोधिका ॥ १२ ॥
३ लूता स्त्री [2]तन्तुवायोर्णनाभमर्कटकाः समाः ।
४ [3]नीलङ्गुस्तु कृमिः ५ कर्णजलौकाः शतपद्युभे ॥ १३ ॥
६ वृश्चिकः शूककीटः स्याऽद्दालिद्रुणौ तु वृश्चिके ।
८ [4]पारावतः कलरवः कपोतो९ऽथ शशादनः ॥ १४ ॥
पत्त्री श्येनः—

---

१ सरटः, कृकलासः ( + कृकलाशः, कृकुलासः । २ पु ) 'गिरगिट' के २ नाम हैं ॥

२ मुसली ( + मुशली ), गृहगोधिका ( + गृहगोलिका । २ स्त्री ), 'बिछुतिआ, छिपकिली' के २ नाम हैं ॥

३ लूता ( स्त्री ), तन्तुवायः ( + तन्त्रवायः ), ऊर्णनाभः, मर्कटकः ( ३ पु ), 'मकड़ी' के ४ नाम हैं ॥

४ नीलङ्गुः ( + नीलाङ्गुः ), कृमिः ( + क्रिमिः । २ पु ), 'छोटे २ कीड़ों' के २ नाम हैं ॥

५ कर्णजलौकाः ( = कर्णजलौकस् । + कर्णजलौका = कर्णजलौका ), शतपदी ( २ स्त्री ), 'गोजर, कनखजुरा' के २ नाम हैं । ( 'यह वृश्चिकका भेद है' ) ॥

६ वृश्चिकः, शूककीटः ( २ पु ), 'ऊनी वस्त्रको काटनेवाले कीड़े' के २ नाम हैं ॥

७ अलिः ( + आलिः, आली ), द्रुणः ( + द्रोणः ), वृश्चिकः ( ३ पु ), 'बिच्छू' के ३ नाम हैं ॥

८ पारावतः ( + पारापतः ), कलरवः, कपोतः ( ३ पु ), 'कबूतर' के ३ नाम हैं । ( 'क्षी० स्वा० मतसे 'प्रथम नाम' 'घरेलू कबूतर' के और अन्य २ नाम 'जङ्गली कबूतर' के हैं' ) ॥

९ शशादनः, पत्त्री ( = पत्त्रिन् ), श्येनः ( ३ पु ), 'बाज पक्षी' के ३ नाम हैं ।

---

१. 'गृहगोलिका इति सभ्यः पाठ' इति क्षी० स्वा० ॥
२. 'तन्त्रवायोर्णनाभमर्कटकाः' इति पाठान्तरम् ॥
३. 'नीलाङ्गुस्तु क्रिमिः कर्णजलौका शतपद्युभे' इति पाठान्तरम् ॥
४. 'पारापतः' इति पाठान्तरम् ॥

—१ उलूकस्तु वायसारातिपेचकौ।
२ 'दिवान्धः कौशिको घूको दिवाभीतो निशाटनः' (१२)
३ व्याघ्राटः स्याद्भरद्वाजः ४ खञ्जरीटस्तु खञ्जनः ॥ १५ ॥
५ लोहपृष्ठस्तु कङ्कः स्याद् ६ अथ चाषः किकीदिविः।
७ कलिङ्गभृङ्गधूम्याटा ८ अथ स्याच्छतपत्रकः ॥ १६ ॥
दार्वाघाटो ९ ऽथ [1]सारङ्गः स्तोककश्चातकः समाः।
१० कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ १७ ॥
११ चटकः कलविङ्कः स्यात् १२ तस्य स्त्री चटका १३ तयोः।
पुमपत्ये चाटकैरः—

१ उलूकः, वायसारातिः, पेचकः (३ पु), 'उल्लू' के ३ नाम हैं ॥

२ [ दिवान्धः, कौशिकः, घूकः, दिवाभीतः, निशाटनः (५ पु), 'उल्लू' के ५ नाम हैं ] ॥

३ व्याघ्राटः, भरद्वाजः (२ पु), 'भर्दूल, भारद्वाज पक्षी' के २ नाम हैं ॥

४ खञ्जरीटः, खञ्जनः (२ पु), 'खँड़रिच पक्षी' के २ नाम हैं ॥

५ लोहपृष्ठः, कङ्कः (२ पु), 'सफेद चील' अर्थात् 'कंकहड़ा पक्षी, जिसके पंख को बाण में लगाते हैं, उसके' २ नाम हैं ॥

६ चाषः (+ चासः), किकीदिविः (+ किकीदीविः, किकिदिविः, किकिदिवः, किकीदिवीः, किकीदिवः, किकिः, दिवः। २ पु), 'चास (नीलकण्ठ) पक्षी' के २ नाम हैं ॥

७ कलिङ्गः, भृङ्गः, धूम्याटः (३ पु), 'भुचेङ्गा पक्षी' के ३ नाम हैं ॥

८ शतपत्रकः, दार्वाघाटः (२ पु), 'कठखोलवा, कठफोरवा पक्षी' के २ नाम हैं ॥

९ सारङ्गः (+ शारङ्गः), स्तोककः (+ तोककः), चातकः (३ पु) 'चातक पक्षी' के ३ नाम हैं ॥

१० कृकवाकुः, ताम्रचूडः, कुक्कुटः, चरणायुधः (४ पु), 'मुर्गा' के ४ नाम हैं ॥

११ चटकः, कलविङ्कः (२ पु), 'गवरा, चटक पक्षी' के २ नाम हैं। ('यह नर होता है') ॥

१२ चटका (स्त्री), 'गवरैया, चटका पक्षी' का १ नाम है। ('यह मादा होती है') ॥

१३ चाटकैरः (पु) 'गवरा और गवरैयाके पुत्र' का १ नाम है ॥

---

१. 'शारङ्गस्तोककश्चातकः' इति पाठान्तरम् ॥

—१ स्त्र्यपत्ये चटकैव सा ॥ १८ ॥
२ कर्करेटुः करेटुः स्यात् ३ कृकणक्रकरौ समौ ।
४ वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥ १९ ॥
५ काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः ।
ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥ २० ॥
६ [1]'स एव च चिरञ्जीवी चैकदृष्टिश्च मौकुलिः' (१३)
७ द्रोणकाकस्तु काकोलो ८दात्यूहः कालकण्ठकः ।
९ [2]आतायिचिल्लौ१०दाक्षाय्यगृध्रौ ११कीरशुकौ समौ ॥२१॥

---

१ चटका ( स्त्री ), 'गवरा और गवरैया की पुत्री' का १ नाम है ॥

२ कर्करेटुः ( + कर्कराटुः ), करेटुः ( + करटुः । २ पु ), 'अशुभ बोलनेवाले पक्षि-विशेष, या टिटिहिरी' के २ नाम हैं ॥

३ कृकणः, क्रकरः, ( २ पु ), ये २ 'अशुभ बोलनेवाली पक्षीके भेद-विशेष' हैं ॥

४ वनप्रियः, परभृतः, कोकिलः, पिकः, ( ४ पु ), 'कोयल' के ४ नाम हैं ॥

५ काकः, करटः, अरिष्टः, बलिपुष्टः, सकृत्प्रजः, ध्वाङ्क्षः आत्मघोषः, परभृत्, बलिभुक् ( = बलिभुज् ), वायसः ( १० पु ), 'कौआ' के १० नाम हैं ॥

६ [ चिरञ्जीवी ( = चिरञ्जीविन् ), एकदृष्टिः, मौकुलिः ( ३ पु ), 'कौआ' के ३ नाम हैं ] ॥

७ द्रोणकाकः ( + दग्धकाकः, वृद्धकाकः ), काकोलः ( २ पु ), 'डोम-कौआ' के २ नाम हैं ॥

८ दात्यूहः ( + दात्यौहः ), कालकण्ठकः ( २ पु ), 'जलकौआ, धूँए-सा रंगवाला कौआ' के २ नाम हैं ॥

९ आतायी ( = आतायिन् । + आतापी = आतापिन् ), चिल्लः (२ पु), 'चील' के २ नाम हैं ॥

१० दाक्षाय्यः, गृध्रः ( + गृद्धः । २ पु ), 'गीध' के २ नाम हैं ॥

११ कीरः, शुकः ( २ पु ), 'तोता, सुग्गा' के २ नाम हैं ॥

---

१. 'स एव…मौकुलिः' इत्यंशः क्षी० स्वा० व्याख्यायां वर्तते ॥

२. 'आतापिचिल्लौ' इति पाठान्तरम् ॥

१ क्रुङ् [1]क्रौञ्चोऽथ बकः कह्वः ३ पुष्कराह्वस्तु सारसः।
४ कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥ २२ ॥
५ कादम्बः कलहंसः स्यादुत्क्रोशकुररौ समौ।
७ हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥ २३ ॥
८ राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः।
९ [2]मलिनैर्मल्लिकाक्षास्ते १० धार्तराष्ट्राः सितेतरैः ॥ २४ ॥
११ [3]शरारिराटिराडिश्च—

१ क्रुङ् ( = क्रुञ्च् ), क्रौञ्चः ( + क्रुञ्चः । २ पु ), 'क्रौञ्च, कराकुल पक्षी' के २ नाम हैं ॥

२ बकः, कह्वः ( + कङ्कः २ पु ), 'बगुला' के २ नाम हैं ॥

३ पुष्कराह्वः ( 'कमलके पर्यायवाचक सब शब्द' ), सारसः ( २ पु ), 'सारस' के २ नाम हैं ॥

४ कोकः ( + कुकः ), चक्रः, चक्रवाकः, रथाङ्गः ( 'रथाङ्ग अर्थात् पहियेके वाचक सब शब्द' । ४ पु ), 'चकवा' के ४ नाम हैं ।

५ कादम्बः, कलहंसः ( २ पु ), 'बत्तख पक्षी' के २ नाम हैं ॥

६ उत्क्रोशः, कुररः ( २ पु ), 'कुरर पक्षी' के २ नाम हैं ॥

७ हंसः, श्वेतगरुत्, चक्राङ्गः, मानसौकाः ( = मानसौकस् । ४ पु ), 'हंस' के ४ नाम हैं ॥

८ राजहंसः ( पु ), 'सफेद शरीर और लाल रंगके चोंच-पैरवाले हंस' का १ नाम है ॥

९ मल्लिकाक्षः ( + मल्लिकाख्यः । पु ), 'सफेद शरीर और धूएँके समान धूमिल रंगके चोंच-पैरवाले हंस' का १ नाम है ॥

१० धार्तराष्ट्रः (पु), 'सफेद शरीर और काले रंगके चोंच-पैरवाले हंस' का १ नाम है ॥

११ शरारिः ( + शरातिः, शरालिः, शराली, शराटिः, शराडिः ), आटिः ( + आतिः, आटी ) आडिः ( + आडी । ३ स्त्री ), 'आड़ी पक्षी' के ३ नाम हैं ॥

१. 'क्रुञ्चोऽथ बकः' इति पाठान्तरम् ॥ २. 'मलिनैर्मल्लिकाख्यास्ते' इति पाठान्तरम् ॥
३. 'शरारिरातिराटिश्च' इति पाठान्तरम् ॥

—१ बलाका बिसकण्ठिका ।
२ हंसस्य योषिद्वरटा ३ सारसस्य तु लक्ष्मणा ॥ २५ ॥
४ जतुकाऽजिनपत्रा स्यात् ५ परोष्णी तैलपायिका ।
६ वर्वणा मक्षिका नीला ७ सरघा मधुमक्षिका ॥ २६ ॥
८ पतङ्गिका पुत्तिका स्या९द्दंशस्तु वनमक्षिका ।
१० दंशीतज्जातिरल्पा स्याद् ११ गन्धोली वरटा द्वयोः ॥ २७ ॥

१ बलाका, बिसकण्ठिका ( + बिसकण्टिका, वी० स्वा० । २ स्त्री ), 'बगुला-विशेष' के २ नाम हैं ॥

२ वरटा ( + वरला । स्त्री), 'हंसकी स्त्री' अर्थात् 'हंसिनी'का १ नाम है ॥

३ लक्ष्मणा ( + लक्षणा । स्त्री ), 'सारसी' अर्थात् 'सारसकी स्त्री' का १ नाम है ॥

४ जतुका ( + जतूका ), अजिनपत्रा ( २ स्त्री ), 'चमगादड़, बादुर' के २ नाम हैं ॥

५ परोष्णी ( + परोष्ठी ), तैलपायिका ( २ स्त्री ), 'चपड़ानामक कीटविशेष तेलचटा' के २ नाम हैं ॥

६ वर्वणा ( + बर्बणा ), मक्षिका ( + मक्षीका ), नीला ( ३ स्त्री ), 'नीले रंग की मक्खी' के ३ नाम हैं। ( भा० दी० के मतसे प्रथम शब्द उक्तार्थक है और अन्तवाले दो शब्द विशेषण हैं' ) ॥

७ सरघा, मधुमक्षिका ( २ स्त्री ), 'मधुमक्खी' के २ नाम हैं।

८ पतङ्गिका, पुत्तिका ( २ स्त्री ), 'एक तरहकी 'मधुमक्खी' के २ नाम हैं ॥

९ दंशः ( पु ), वनमक्षिका ( स्त्री ), 'दंश, डँस, बड़े मच्छड़' के २ नाम हैं ॥

१० दंशी ( स्त्री ), 'मस, छोटे मच्छड़' का १ नाम है ॥

११ गन्धोली ( स्त्री ), वरटा ( + वरटी । पु स्त्री ) 'बर्रे, भिर्र, बिढ़िनी, गन्धयुक्त मक्खी-विशेष' के २ नाम हैं ॥

---

१. यथैतेषां नामभेदपूर्वकं मदुवर्णमाह निमिः—
'माक्षिकं तैलवर्णं स्याद्घृतवर्णं तु पैत्तिकम् ।
भ्रामरन्तु भवेच्छुक्लं क्षौद्रं तु कपिलं भवेत्' ॥ १ ॥ इति ॥

१ भृङ्गारी[1]भीरुका चीरी झिल्लिका च समा इमाः।
२ समौ पतङ्गशलभौ ३ खद्योतो ज्योतिरिङ्गणः ॥ २८ ॥
४ मधुव्रतो मधुकरो मधुलिण्मधुपालिनः।
द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥ २९ ॥
५ मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्।
शिखावलः शिखी केकी मेघनादानुलास्यपि ॥ ३० ॥
६ केका वाणी मयूरस्य ७ समौ चन्द्रकमेचकौ।
८ शिखा चूडा ९ शिखण्डस्तु पिच्छबर्हे नपुंसके ॥ ३१ ॥

१ भृङ्गारी, झीरुका ( + झीरिका, झिरुका, झिरिका, झिरीका, चीरुका ), चीरी, झिल्लिका ( + झिल्लीका, झिल्लका, चिलिका, चिल्लका । ४ स्त्री) 'झींगुर' के ४ नाम हैं ॥

२ पतङ्गः, शलभः ( २ पु ), 'फतिंगा, पतंग' के २ नाम हैं ॥

३ खद्योतः, ज्योतिरिङ्गणः ( २ पु ), 'जुगनू' के २ नाम हैं ॥

४ मधुव्रतः, मधुकरः, मधुलिट् ( = मधुलिह् ), मधुपः, अली ( =अलिन् ), द्विरेफः, पुष्पलिट् ( = पुष्पलिह् ), भृङ्गः, षट्पदः, भ्रमरः, अलिः ( ११ पु ), 'भौंरा, भ्रमर' के ११ नाम हैं ॥

५ मयूरः ( + मयुरः[2] ), बर्हिणः, बर्ही ( = बर्हिन् ), नीलकण्ठः, भुजङ्गभुक् ( = भुजङ्गभुज् ), शिखावलः, शिखी ( = शिखिन् ), केकी ( = केकिन् ), मेघनादानुलासी ( = मेघनादानुलासिन् । ९ पु ), 'मोर' के ९ नाम हैं ॥

६ केका ( स्त्री ), 'मोरकी बोली' का १ नाम है ॥

७ चन्द्रकः, मेचकः[3] ( २ पु )), 'मोरकी पूँछमें स्थित नेत्राकार चमकदार चिह्न' के २ नाम हैं ॥

८ शिखा, चूडा ( २ स्त्री ), 'मोरके शिरकी कलँगी या मुकुट' के २ नाम हैं ॥

९ शिखण्डः (पु), पिच्छम्, बर्हम् (२ न), 'मोरके पंख' के ३ नाम हैं ॥

१. 'चीरुका' इति पाठान्तरम् ॥

२. '—मयूरो मयुरो मतः' इति ( श्लो० ५ ) शब्दभेदप्रकाशोक्तेः ॥

३. 'बर्हिकण्ठसमं वर्णं मेचकं ब्रुवते बुधाः' इति कात्यः ॥

१ खगे	विहङ्गविहगविहङ्गमविहायसः।
शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः	॥ ३२ ॥
[1]पतत्रिपत्रिपतगपतत्पत्त्ररथाण्डजाः	।
नगौकोवाजिविकिरविविष्किरपतत्रयः	॥ ३३ ॥
नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसङ्गमाः।
२ तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः॥ ३४ ॥
तित्तिरिः कुकुभो लावो जीवञ्जीवश्चकोरकः।

---

१ खगः, विहङ्गः, विहगः, विहङ्गमः, विहायाः (= विहायस्), शकुन्तिः, पक्षी (= पक्षिन्), शकुनिः, शकुन्तः, शकुनः, द्विजः, पतत्री (= पतत्रिन्), पत्त्री (= पत्त्रिन्), पतगः, पतन् (= पतत्), पत्त्ररथः, अण्डजः, नगौकाः (= नगौकस्), वाजी (=वाजिन्), विकिरः, विः, विष्किरः, पतत्रिः, नीडोद्भवः, गरुत्मान् (= गरुत्मत्), पित्सन् (= पित्सत्), [2]नभसङ्गमः (२७ पु), 'पक्षी, चिड़िया' के २७ नाम हैं॥

२ हारीतः (+ हरितः), मद्गुः, कारण्डवः, प्लवः, तित्तिरिः (+ तित्तिरः), कुकुभः, लावः, जीवञ्जीवः (+ जीवजीवः, जीवाजीवः), चकोरकः, कोयष्टिकः (+ कोयष्टिः, क्षी० स्वा० पाठ), टिट्टिभकः (+ टिटिभकः, टिटिभः। + टिट्टिभः, कोकः; क्षी० स्वा० पाठ), वर्तकः (+ क्रकरः; क्षी० स्वा० पाठ) वर्तिकः (+ वर्तकः; क्षी० स्वा० पाठ। १३ पु), आदि ('आदि शब्दसे 'शारिका' कपिञ्जलः,······), ये 'पक्षि-विशेष' हैं। (उनमें क्रमशः 'हारिल, जलमुर्गा, करडुआ (कौवेके समान काले रङ्गके बड़े २ पैरवाला वत्तखविशेष), जलकौवा,

---

१. पतत्रिपत्त्रिपतगपतत्पत्त्ररथाण्डजाः' इति पाठान्तरम्। अत्र 'पतेरत्रिः' (उ० सू०) इति भ्रान्त्या ग्रन्थकृदिदन्तमिमं मन्यत इति क्षी० स्वा०॥

२. नभसमाकाशं गच्छतीति विग्रहे 'गमश्च' (पा० सू० ३।४।४७) इति खच्प्रत्यये 'नभसङ्गमः' शब्दस्य सिद्धिः। 'नभसं खं मेघवर्त्म विहायसम्' इति निगमात् 'अत्यविचमितमिरमिलभिनभितपिपतिपनिपणिमहिभ्योऽसच्' (उ० सू० ३९७), इत्यनेन सिद्धोऽदन्तोऽपि 'नभस' शब्दोऽस्तीत्यवधेयम्। सान्तः 'नभः' शब्दपक्षे तु नभसा गच्छतीति विग्रहे 'गमेः सुपि वाच्यः' (वार्तिकः २०११) इति खचि 'वाचंयमपुरन्दरौ च' (पा० सू० ६।३।६९) इति चकारादमागमे 'नभसङ्गम' शब्दसिद्धिर्बोध्या॥

[1]कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः ॥ ३५ ॥
१ गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम्।
२ स्त्री पक्षतिः पक्षमूलं ३ चञ्चुस्त्रोटिरुभे स्त्रियौ ॥ ३६ ॥
४ प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः।
५ [2]पेशी कोशो द्विहीनेऽण्डं ६ कुलायो नीडमस्त्रियाम्॥ ३७ ॥
७ पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः।

---

तीतर, वनमुर्गा, लावा या लवा, मोरके तुल्य पंख वाला पक्षि-विशेष, चकोर, पक्षी-विशेष, टिटिहरी और बत्तख' का १-१ नाम तथा 'बटेर' के २ नाम हैं। 'प्राचीनों के मतसे 'वर्तकः (पु), वर्तिका (स्त्री), मानकर 'बटेर और बटेरकी स्त्री' का क्रमशः १-१ नाम हैं') ॥

१ गरुत्, पक्षः, छदः (+न। ३ पु), पत्रम्, पतत्रम्, तनूरुहम् (३ न), 'पंख' के ६ नाम हैं ॥

२ पक्षतिः (+पक्षती। स्त्री), पक्षमूलम् (न), 'पंखकी जड़' के २ नाम हैं ॥

३ चञ्चुः (+चञ्चूः), त्रोटिः (+तुण्डम्। २ स्त्री), 'चोंच' टोंट' के २ नाम हैं ॥

४ प्रडीनम्, उड्डीनम्, संडीनम् (३ न), ये ३ 'पक्षियोंकी चालें हैं' इनमें 'तिरछा या अत्यन्त उड़नेका, ऊपर उड़नेका, मिलकर उड़ने' का क्रमशः १-१ नाम है ॥

५ पेशी (पेशिन्, पु + पेशी = पेशी, स्त्री), कोशः (+कोषः पु न। +पेशीकोशः, पेशीकोषः; क्षी० स्वा०), अण्डम् (न), 'अण्डा' के ३ नाम हैं ॥

६ कुलायः (पु), नीडम् (न पु), 'खोंता, घोसला' के २ नाम हैं ॥

७ पोतः, पाकः, अर्भकः, डिम्भः, पृथुकः, शावकः, शिशुः (७ पु), 'बच्चा' के ७ नाम हैं ॥

---

१. 'कोयष्टिष्टिट्टिभः कोकः ककरो वतकादयः' इति क्षी० स्वा० सम्मतः पाठः। अत्र मूलोक्तपाठं मत्वा 'उदीचां तु स्त्रियामित्त्वम्, प्राचां न (वा० ७।३।४५) इति स्त्रियां रूपद्वयप्रदर्शनाय 'वर्तिका' ग्रहणम्' इति प्राञ्चः। वस्तुतस्तु 'वृतेस्तिकन्' (उ० सू० ३।१४६) इति तिकन्नन्तस्य मूषिकवत्पुंस्यपि 'वर्तिकः' इति रूपकथनमिदम्' इति मा० दी०। पूर्वोक्त क्षी० स्वा० सम्मते पाठे तु नैव रूपद्वयप्रदर्शनमित्यवधेयम् ॥

२. 'पेशीकोशो' इति 'कोषो' इति च पाठान्तरम् ॥

१ स्त्रीपुंसौ मिथुनं द्वन्द्वं २ युग्मं तु युगलं युगम् ॥ ३८ ॥
३ समूहो निवहव्यूहसंदोहविसरव्रजाः ।
स्तोमौघनिकरव्रातवारसंघातसञ्चयाः ॥ ३९ ॥
समुदायः समुदयः समवायश्चयो गणः ।
स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥ ४० ॥
४ वृन्दभेदाः ५ समैर्वर्गः ६ संघसार्थौ तु जन्तुभिः ।
७ सजातीयैः कुलं ८ यूथं तिरश्चां पुन्नपुंसकम् ॥ ४१ ॥

---

१ स्त्रीपुंसौ (भा० दी० मतसे । नित्य द्विव० पु), मिथुनम्, द्वन्द्वम् (२ न), 'स्त्री और पुरुषकी जोड़ी' के ३ नाम हैं ॥

२ युग्मम्, युगलम् , युगम् ( ३ न ), 'जोड़ा, सम' के ३ नाम हैं ॥ ( 'मुकुटने 'द्वन्द्व' शब्दको भी इसीका पर्याय मानकर ४ नाम[1] कहा है' ) ॥

३ समूहः, निवहः, व्यूहः, संदोहः, विसरः, व्रजः, स्तोमः, ओघः, निकरः, व्रातः, वारः, संघातः, सञ्चयः, समुदायः, समुदयः, समवायः, चयः, गणः, ( १८ पु ), संहतिः ( स्त्री ), वृन्दम्, निकुरम्बम्, कदम्बकम् ( ३ न ), 'समूह' के २२ नाम हैं ॥

४ अब समूहोंके भेद-विशेष कहते हैं ॥

५ वर्गः ( पु ), 'एकजातीय प्राणियों या अप्राणियोंके समूह' का १ नाम है । ( जैसे—मनुष्यवर्गः, ब्राह्मणवर्गः, शैलवर्गः,'......' ) ॥

६ [2]संघ [3]सार्थः ( २ पु ), एकजातीय या भिन्नजातीय प्राणिमात्रके समूह' के २ नाम हैं । (जैसे—पशुसङ्घः, पक्षिसङ्घः, वाणिक्सङ्घ'...') ॥

७ कुलम् ( न ), एकजातीय केवल प्राणियोंके समूह' का १ नाम है । ( जैसे—'ब्राह्मणकुलम् , ऋषिकुलम् , गोकुलम्,'......' ) ॥

८. [4]यूथम् (न पु), 'एक जातिके तिर्यग्जातीय' (पशुपक्षी आदिके) समूह'

---

१. 'द्वन्द्व' शब्दस्य 'युग्म' पर्यायत्वमनुचितम् । तथा सति '—द्वन्द्वमाहवे । रहस्ये मिथुने युग्मे—' (अने० सं० ३।५२३—५२४) इति हैमात् 'द्वन्द्वं रहस्ये कलहे तथा मिथुनयुग्मयोः' ( मेदिनी पृ० १७२ श्लो० १० ) इति मेदिन्याश्चाविरोधेऽपि 'स्वन्तायादि न...' ( १।१।४ ) इत्यादिग्रन्थकारप्रतिज्ञाविरोधात् । 'द्वन्द्वयुग्मे तु' इति पाठे तु ग्रन्थकारप्रतिज्ञाऽविरोधान्मुकुटमतस्य सामञ्जस्यमपीश्यवधेयम् ॥

२-३-४. सङ्घसङ्घातपुञ्जौघसार्थयूथकदम्बकाः' इति ।

१ पशूनां समजोऽ२ऽन्येषां समाजोऽ३थ सधर्मिणाम् ।
स्यान्निकायः ४ पुञ्जराशी तूत्करः कूटमस्त्रियाम् ॥ ४२ ॥
५ कापोतशौकमायूरतैत्तिरादीनि तद्गणे ।
६ गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ॥ ४३ ॥

इति सिंहादिवर्गः ॥ ५ ॥

---

का १ नाम है । जैसे—मृगयूथम् , गजयूथम् , बर्हियूथम् ,……' ॥

१ समजः ( पु ), 'केवल पशुओं के समूह' का १ नाम है । ( जैसे—गोसमजः,……' ) ॥

२ समाजः ( पु ) पशुसे भिन्न जातिवालोंके समूह' का १ नाम है । ( 'जैसे—'श्रोत्रियसमाजः, ब्राह्मणसमाजः,……' ) ॥

३ निकायः ( पु ), 'एक जातिवालों के समूह' का १ नाम है । ( जैसे—ब्राह्मणनिकायः, गोनिकायः, श्रमणनिकायः,……' ) ॥

४ पुञ्जः ( + पिञ्जः ), राशिः उत्कर ( ३ पु ) कूटम् ( न पु ), 'अन्न इत्यादिकी ढेरी' के ४ नाम हैं । ('जैसे—धान्यराशिः, तृणराशिः,……') ॥

५ कापोतम् , शौकम् , मायूरम् , तैत्तिरम् ( ४ न ), आदि ( 'आदिसे—कौक्कुटम् , काकम् ,……' ), 'कबूतर, सुग्गा, मोर और तीतर' आदि ( आदिसे—मुर्गा और कौआ,……' ) के समूह' का क्रमशः १-१ नाम है ॥

६ छेकः, गृह्यकः ( २ पु ), 'पालतू पशु-पक्षी' अर्थात् 'जलमें पाले हुए तोता, मोर, मैना आदि पक्षी और मृग आदि पशुओं' के २ नाम हैं ॥

इति सिंहादिवर्गः ॥ ५ ॥

---

'निकरनिकायविसरव्रजपुञ्जसमूहसञ्चयाः समुदयसार्थयूथनिकुरम्बकदम्बकपूगराशयः । चयसमवायवृन्दसन्दोहसमाजवितानसंहतिप्रकरघनौघसंघसंघातव्रातकुलोत्कराः स्मृताः' ॥ (अभि० रत्न० ४११) इति चोक्त्वा भागुरिहलायुधौ सङ्घसार्थयूथपुञ्जानां पर्यायतामाहतुः' इत्यवधेयम् ॥

## ६. अथ मनुष्यवर्गः ।

१ मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।
२ स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ १ ॥
३ [1]स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥ २ ॥
४ विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ।
प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥ ३ ॥
सुन्दरी रमणी रामा ५ कोपना सैव भामिनी ।
६ वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ ४ ॥

## ६. अथ मनुष्यवर्गः ।

१ मनुष्यः, मानुषः, मर्त्यः, मनुजः मानवः, नरः ( ६ पु ) भा० दी० मतसे 'मनुष्यमात्र' के ६ नाम हैं ॥

२ पुमान् ( = पुंस् ), पञ्चजनः, पुरुषः, पूरुषः, ना ( = नृ । ५ पु ), भा० दी० मतसे 'पुरुष' अर्थात् 'मर्द' के ५ नाम है । ( 'महे० मतसे मनुष्यः,… …ना' ये ११ नाम 'मनुष्य' के हैं ) ॥

३ स्त्री, योषित् ( + जोषित् , योषिता, जोषिता ), अबला ( + अवला ), योषा ( + जोषा ), नारी, सीमन्तिनी, वधूः प्रतिपदर्शिनी, वामा, वनिता, महिला ( महेला, महला । ११ स्त्री ), 'औरत, जनाना' के ११ नाम हैं ॥

४ अङ्गना, भीरुः ( + भीरूः भीलुः भीलूः ) कामिनी, वामलोचना, प्रमदा, मानिनी, कान्ता, ललना, नितम्बिनी, सुन्दरी ( + सुन्दरा), रमणी ( + रमणा), रामा ( १२ स्त्री ) ये १२ 'स्त्रियोंके भेद-विशेष' हैं ॥

५ कोपना, भामिनी ( २ स्त्री ), 'क्रोध करनेवाली स्त्री' के २ नाम हैं ॥

६ वरारोहा, मत्तकाशिनी ( + मत्तकासिनी ), उत्तमा, [2]वरवर्णिनी ( ४ स्त्री ), 'गुणवती स्त्री के ४ नाम हैं ॥

---

१. 'स्त्री योषिदवला जोषा' इति पाठान्तरम् ॥

२. वरवर्णिनीलक्षणं यथा—

'शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला ।
भर्तृभक्ता च या नारी विज्ञेया वरवर्णिनी ॥ १ ॥ इति ॥

१ कृताभिषेका महिषी २ भोगिन्योऽन्या नृपस्त्रियः ।
३ पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५ ॥
भार्या जायाऽथ पुंभूम्नि दाराः ४ स्यात्तु कुटुम्बिनी ।
पुरन्ध्री ५ सुचरित्रा तु सती साध्वी पतिव्रता ॥ ६ ॥
६ [1]कृतसापत्निकाऽध्यूढाऽधिविन्नाऽ७थ स्वयंवरा ।
पतिंवरा च वर्याऽ८ऽथ कुलस्त्री कुलपालिका ॥ ७ ॥
९ कन्या कुमारी—

१ महिषी (स्त्री), 'पटरानी' का १ नाम है। ('जैसे-वासवदत्ता,...') ॥

२ भोगिनी ( स्त्री ), 'पटरानियोंसे भिन्न रानियों' का १ नाम है। ( 'जैसे-पद्मावती, ......' ) ॥

३ पत्नी, पाणिगृहीती, द्वितीया, सहधर्मिणी ( + सधर्मिणी, सहचरी ), भार्या, [2]जाया ( ६ स्त्री ), दाराः ( = दार, पु नि० ब० व० । + [3]दारा = स्त्री ), 'ब्याही हुई स्त्री' के ७ नाम हैं ॥

४ कुटुम्बिनी, पुरन्ध्री ( + पुरन्ध्रिः, मु० ), 'पति-पुत्रवाली स्त्री' के २ नाम हैं ॥

५ सुचरित्रा, सती, साध्वी, पतिव्रता ( ४ स्त्री ) 'पतिव्रता स्त्री' के ४ नाम हैं ॥

६ कृतसापत्निका ( + कृतसापत्नका ), अध्यूढा, अधिविन्ना ( ३ स्त्री ) 'अनेक विवाह किये हुए पुरुषकी पहली स्त्री' के ३ नाम हैं ॥

७ स्वयंवरा, पतिंवरा, वर्या ( ३ स्त्री ) 'जिसके लिये स्वयंवर किया गया हो उस कन्या' के ३ नाम हैं ॥

८ कुलस्त्री, कुलपालिका ( २ स्त्री ) 'कुलीन स्त्री' के २ नाम हैं ॥

९ कन्या, कुमारी ( २ स्त्री ) 'प्रथम अवस्थावाली या क्वाँरी लड़की' के २ नाम हैं ॥

---

१. 'कृतसापत्नकाऽध्यूढा—' इति पाठान्तरम् ॥

२. 'जायायास्तद्धि जायात्वं यदस्यां जायते पुनः' इति मनुः ॥

३. 'क्रोडा हारा तथा दारा त्रय एते यथाक्रमम् ।
क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिः' ॥ १ ॥ इत्युक्तेः ॥

१ गौरी तु नग्निकाऽनागतार्तवा ।
२ स्यान्मध्यमा दृष्टरजा३स्तरुणी युवतिः समे ॥ ८ ॥
४ [1]समाः स्नुषाजनीवध्व५श्चिरिण्टी तु स्ववासिनी ।

१ [2]गौरी, [3]नग्निका ( + लग्निका ) अनागतार्तवा ( ३ स्त्री ), 'जिसे रजोधर्म नहीं हुआ हो उस स्त्री' के ३ नाम हैं ॥

२ मध्यमा, दृष्टरजाः ( = दृष्टरजस् । २ स्त्री ), 'जिसे पहली बार रजोधर्म हुआ हो उस स्त्री' २ नाम हैं ॥

३ तरुणी ( + तलुनी ), युवतिः ( + युवती । २ स्त्री ) 'जवान स्त्री' के २ नाम हैं । (स्त्री १६ वर्षकी अवस्थातक 'बाला' १७ से ३० वर्षकी अवस्था तक 'तरुणी', ३१ से ५५ वर्ष की अवस्थातक 'प्रौढा' और उसके बाद 'वृद्धा' कहलाती है; यहि वृद्धा रतिमें त्याज्य है[4] । यह अवस्थाकथन जब मनुष्य स्वस्थ एवं पूर्णायु होते थे, उस समयके अनुसार उचित प्रतीत होता है ) ॥

४ स्नुषा, जनी ( + जनिः ) वधूः ( ३ स्त्री ), 'पतोहू' अर्थात् 'पुत्र, भतीजा या शिष्य आदिकी स्त्री' के ३ नाम हैं ॥

५ चिरिण्टी (+ चिरण्टी, चरण्टी, चरिण्टी), स्ववासिनी (+ सुवासिनी । २ स्त्री ), 'जिसे जवानीके चिह्न कुछ-कुछ मालूम पड़ रहे हों ऐसी विवाहिता स्त्री' के २ नाम हैं ॥

---

१. 'समाः स्नुषाजनीवध्वश्चिरण्टी तु सुवासिनी' इति पाठान्तरम् ॥

२-३. अथ प्रसङ्गात्स्त्रीणां संज्ञाविशेषा उच्यन्ते—

'बालेति गीयते नारी यावद्वर्षाणि षोडश ।
गौरी त्वसंजातरजाः श्यामा षोडशवार्षिकी' ॥ १ ॥ इति ॥
'अष्टवर्षा भवेद् गौरी नववर्षा च रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला' ॥ १ ॥

इति संवर्तस्मृति १।६६ ॥

अत्र 'अष्टवर्षा भवेद् गौरी नवमे नग्निका भवेत्' इति स्मार्तो विशेषो नादृत इति क्षी० स्वा० ॥

४. अवस्थाभेदेन स्त्रीणां संज्ञा आह—

'यावत्षोडशसंख्यमब्दमुदिता बाला ततस्त्रिंशतं
तावत्स्यात्तरुणीति बाणविशिखैः संख्या तु तावद्भवेत् ।
सा प्रौढेत्यभिधीयते कविवरैर्वृद्धा तदूर्ध्वं स्मृता
निन्द्या कामकलाकलापविषये त्याज्या सदा कामिभिः' ॥ १ ॥ इति ॥

१ इच्छावती कामुका स्याद् २ वृषस्यन्ती तु कामुकी ॥ ९ ॥
३ कान्तार्थिनी तु या याति संकेतं साऽभिसारिका ।
४ पुंश्चली [1]धर्षिणी बन्धक्यसती कुलटेत्वरी ॥ १० ॥
स्वैरिणी पांशुला च स्या५दशिश्वी शिशुना विना ।
६ अवीरा निष्पतिसुता ७ विश्वस्ताविधवे समे ॥ ११ ॥
८ आलिः सखी वयस्याऽथ ९ पतिवत्नी सभर्तृका ।

---

१ इच्छावती, कामुका ( २ स्त्री ), 'किसी पदार्थको चाहनेवाली स्त्री' के २ नाम हैं ॥

२ वृषस्यन्ती, कामुकी (२ स्त्री) 'बैल-घोड़े की तरह अधिक मैथुनकी इच्छा करनेवाली स्त्री' के २ नाम हैं ॥

३ [2]अभिसारिका (स्त्री), 'रतिके लिये अपने पति या जारके संकेत किये हुए स्थानपर जानेवाली या जार वा पतिको संकेत-स्थानपर बुलानेवाली स्त्री' का १ नाम है ॥

४ पुंश्चली, धर्षिणी ( + चर्षणी, धर्षणीः, कर्षणिः ) बन्धकी, असती, कुलटा, इत्वरी, स्वैरिणी, पांशुला ( + व्यभिचारिणी । ८ स्त्री ), 'व्यभिचारिणी स्त्री' के ८ नाम हैं ॥

५ अशिश्वी ( स्त्री ) 'वंशहीन स्त्री' का १ नाम है ॥

६ अवीरा ( स्त्री ) 'पति और पुत्रसे हीन स्त्री' का १ नाम है ॥

७ विश्वस्ता, विधवा ( २ स्त्री ) 'विधवा स्त्री' के २ नाम हैं ॥

८ आलिः, सखी, वयस्या ( ३ स्त्री ) 'सहेली' के ३ नाम हैं ॥

९ पतिवत्नी, सभर्तृका ( ३ स्त्री ) 'सधवा स्त्री' के २ नाम हैं ॥

---

१. 'चर्षणी' इति धर्षणी' इति च पाठान्तरम् ॥

२. अभिसारिकाया लक्षणान्याहुः । तथा—

'हित्वा लज्जामये श्लिष्टा मदनेन मदेन च ।
अभिसारयते कान्तं सा भवेदभिसारिका ॥ १ ॥ इति भरतः ॥
'कामार्ताऽभिसरेत्कान्तं सारयेद्वाऽभिसारिका' ॥ दशरूपक २।३७ इति ॥
अभिसारयते कान्तं या मन्मथवशंवदा ।
स्वयं वाऽभिसरत्येषा धीरैरुक्ताऽभिसारिका' ॥ १ ॥ सा० द० ३।११८ इति ॥

१ वृद्धा पलिक्नी २ प्राज्ञी तु प्राज्ञा ३ प्राज्ञा तु धीमती ॥ १२ ॥
४ शूद्री शूद्रस्य भार्या स्या५च्छूद्रा तज्जातिरेव च ।
६ आभीरी तु महाशूद्री जातिपुंयोगयोः समा ॥ १३ ॥
७ अर्याणी स्वयमर्या स्यात् ८ क्षत्रिया क्षत्रियाण्यपि ।
९ उपाध्यायाऽप्युपाध्यायी १० स्यादाचार्यापि च स्वतः ॥ १४ ॥
११ आचार्यानी तु पुंयोगे १२ स्यादर्यी—

---

१ वृद्धा, पलिक्नी ( २ स्त्री ), 'वृद्ध या पके हुए बालवाली स्त्री' के २ नाम हैं ॥

२ प्राज्ञी, प्रज्ञा ( २ स्त्री ), 'किसी विषयको अच्छी तरह स्वयं जाननेवाली स्त्री' के २ नाम हैं ॥

३ प्राज्ञा, धीमती ( + बुद्धिमती । स्त्री ), चतुर स्त्री' के २ नाम हैं ॥

४ शूद्री ( स्त्री ), किसी भी वर्णमें उत्पन्न हुई शूद्रकी स्त्री' का १ नाम है ॥

५ शूद्रा ( स्त्री ), 'शूद्र वर्णमें उत्पन्न हुई शूद्रकी या अन्य किसी जातिकी स्त्री' का १ नाम है ॥

६ आभीरी, महाशूद्री ( २ स्त्री ), 'ग्वालिन या गोपकी स्त्री, महाशूद्र-कुलमें उत्पन्न किसी भी जातिकी स्त्री, अन्य वर्णमें उत्पन्न महाशूद्रकी स्त्री, के २ नाम हैं ॥

७ अर्याणी, अर्या ( २ स्त्री ), वैश्य कुलमें उत्पन्न स्त्री' के २ नाम हैं ॥

८ क्षत्रिया, क्षत्रियाणी ( २ स्त्री ), 'क्षत्रिय कुलमें उत्पन्न स्त्री' के २ नाम हैं ॥

९ उपाध्याया, उपाध्यायी ( २ स्त्री ), 'स्वयं पढ़ानेवाली स्त्री' का २ नाम हैं ॥

१० आचार्या ( स्त्री ), 'मन्त्रोंकी स्वयं व्याख्या करनेवाली स्त्री' का १ नाम है ॥

११ आचार्यानी ( + आचार्याणी । स्त्री ), 'आचार्यकी स्त्री' का १ नाम है ॥

१२ अर्यी ( स्त्री ), 'किसी भी जातिमें पैदा हुई वैश्यकी स्त्री' का १ नाम है ॥

—१ क्षत्रियी तथा ।

२ उपाध्यायान्युपाध्यायी ३ पोटा स्त्रीपुंसलक्षणा ॥ १५ ॥

४ वीरपत्नी वीरभार्या ५ वीरमाता तु वीरसूः ।

६ जातापत्या प्रजाता च प्रसूता च प्रसूतिका ॥ १६ ॥

७ स्त्री नग्निका [1]कोटवी स्यात् ८ दूतीसंचारिके समे ।

९ कात्यायन्यर्द्धवृद्धा या [2]काषायवसनाऽधवा ॥ १७ ॥

१० [3]सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।

---

१ क्षत्रियी ( स्त्री ), किसी भी जातिमें उत्पन्न हुई क्षत्रियकी स्त्री' का १ नाम है ॥

२ उपाध्यायानी, उपाध्यायी (२ स्त्री ), 'पढ़ानेवालेकी स्त्री' के २ नाम हैं ॥

३ पोटा ( स्त्री ), 'स्तन और दाढ़ी ( स्त्री-पुरुषके इन दो लक्षणों ) से युक्त स्त्री या नपुंसक स्त्री' का १ नाम है।

४ वीरपत्नी, वीरभार्या ( २ स्त्री ), शूरवीरकी पत्नी' के २ नाम हैं ॥

५ वीरमाता ( = वीरमातृ ), वीरसूः ( २ स्त्री ), 'शूरवीरकी माता' के २ नाम हैं ॥

६ जातापत्या, प्रजाता, प्रसूता, प्रसूतिका ( ४ स्त्री ) 'प्रसूति' अर्थात् 'जिसे सन्तान पैदा किये थोड़े दिन बीते हों' उस 'जच्चा' स्त्री के ३ नाम हैं ॥

७ नग्निका ( भा० दी० ), कोटवी ( + कोट्टवी, कौटवी । २ स्त्री ) 'नंगी स्त्री' के २ नाम हैं ॥

८ दूती, संचारिका ( २ स्त्री ), 'दूती' के २ नाम हैं ॥

९ कात्यायनी ( स्त्री ), 'अधबूढ़, गेरुआ कपड़ा पहनी हुई विधवा स्त्री' का १ नाम है ॥

१० ४ सैरन्ध्री ( + सैरिन्ध्री । स्त्री ) 'जो दूसरेके घर रहे, स्वतन्त्र

---

१. 'कोट्टवी' इति पाठान्तरम् ॥ २. 'कषायवसनाऽधवा' इति पाठान्तरम् ॥

३ 'सैरिन्ध्री' इति पाठान्तरम् ॥

४ सैरन्ध्रीलक्षणं यथा—

चतुःषष्टिकलाऽभिज्ञा शीलरूपादिसेविनी ।

प्रसाधनोपचारज्ञा सैरन्ध्रि परिकीर्तिता ॥ १ ॥ इति कात्यः ।

क्षी० स्वा० तु 'परिकीर्तिता' इत्यत्र 'स्ववशेति च' इति पाठमाह ॥

१ असिक्नी स्यादवृद्धा या प्रेष्याऽन्तःपुरचारिणी ॥ १८ ॥
२ वारस्त्री गणिका [1]वेश्या रूपाजीवा३ऽथ सा जनैः ।
सत्कृता वारमुख्या स्यात् ४ कुट्टनी शम्भली समे ॥ १९ ॥
५ विप्रश्निका त्वीक्षणिका दैवज्ञाऽथ रजस्वला ।
[2]स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि ॥ २० ॥
ऋतुमत्यप्युदक्यापि ७ स्याद्रजः पुष्पमार्तवम् ।

---

हो और केश झाड़ना-गूथना आदि शिल्पकार्य करती हो उस स्त्री' का १ नाम है। ( जैसे—राजा विराटके यहाँ अज्ञातवास करती हुई द्रौपदी सरन्ध्री का कार्य करती थी ) ॥

१ [3]असिक्नी ( स्त्री ) 'जो वृद्धा नहीं हो, आज्ञा पाकर कहीं आया जाया करे और रनिवासमें रहे उस स्त्री' का १ नाम है ॥

२ वारस्त्री, गणिका, वेश्या ( + वेष्या ), रूपाजीवा ( + पण्यस्त्री, पणस्त्री । ४ स्त्री ), 'वेश्या' के ४ नाम हैं ॥

३ वारमुख्या ( स्त्री ), 'सौन्दर्य और गान आदि से बड़े लोगोंके द्वारा प्रतिष्ठा पानेवाली वेश्या' का १ नाम है ॥

४ कुट्टनी, शम्भली ( + सम्भली । २ स्त्री ), 'कुटिनी' के २ नाम हैं ।

५ विप्रश्निका, ईक्षणिका, दैवज्ञा (३ स्त्री), 'हाथ-पैर आदिकी रेखाओं को देखकर शुभाशुभ लक्षणों को जानने या कहनेवाली स्त्री' के ३ नाम हैं॥

६ रजस्वला, स्त्रीधर्मिणी, अविः ( + अवी ), आत्रेयी, मलिनी, पुष्पवती ( + पुष्पिता ), ऋतुमती, उदक्या (८ स्त्री) 'रजस्वला स्त्री' के ८ नाम हैं ॥

७ रजः ( = रजस्), पुष्पम् , आर्तवम् (३ न), 'स्त्रियोंके रज' के ३ नाम हैं ॥

---

१. 'वेष्या' इति पाठान्तरम् ॥

२. 'स्त्रीधर्मिण्यपि चात्रेयी मलिनी पुष्पवत्यपि' इति स्वा० पाठः । 'अवितॄस्तृतन्त्रिभ्य ईः' ( उ० सू० ३।१५८ ) इति ईप्रत्ययेन सिद्धयुक्तेस्तदग्रे च 'अविं स्त्रीधर्मिणीं विद्यात्' इति कात्यात् 'सर्वधातुभ्य इन्' ( उ० सू० ४।११८ ) इति इन्प्रत्यये ह्रस्वान्ताऽपि अविः इति भानुजिदीक्षितेन स्वयमुक्तत्वान्मूले 'स्त्रीधर्मिण्यविरात्रेयी' इति ह्रस्वान्त 'अवि' शब्दपाठः संशोधकप्रमादज एव । व्याख्यातुर्दीर्घान्तस्यैव 'अवि' शब्दस्य प्रथमं साधितत्वेन तत्रैव स्वास्थाप्रदर्शनात् ॥

३. 'असिक्नी स्यादवृद्धा या प्रेष्याऽन्तःपुरयोषिता' इति मुनिः ॥

१ श्रद्धालुर्दोहदवती २ निष्कला विगतार्तवा ॥ २१ ॥
३ आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी।
४ गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे ॥ २२ ॥
५ पुनर्भूर्दिधिषूरूढा द्विस्तस्या[1] दिधिषुः पतिः।
७ स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी ॥ २३ ॥

---

१ श्रद्धालुः, दोहदवती ( २ स्त्री ), **'गर्भ रहनेपर किसी वस्तु या कार्य को चाहनेवाली स्त्री'** के २ नाम हैं ॥

२ निष्कला ( + निष्कली ), विगतार्तवा ( २ स्त्री ), **'रजोधर्मसे हीन** ( जिसे रजोधर्म कभी न होता हो या वृद्धावस्था के कारण समाप्त हो गया हो ) **स्त्री'** के २ नाम हैं।

३ आपन्नसत्त्वा, गुर्विणी ( + गुर्वी ) अन्तर्वत्नी, गर्भिणी ( गर्भवती। ४ स्त्री ), **'गर्भवती स्त्री'** के ४ नाम हैं ॥

४ गाणिक्यम्, गार्भिणम्, यौवतम् ( ३ न ), **'वेश्याओं युवतियों और गर्भिणियोंके समूह'** का क्रमशः १-१ नाम है।

५ [2]पुनर्भूः, दीधिषूः ( + दिधीषूः, दिधिषुः, अग्रेदिधिषुः। २ स्त्री ), **'दो बार व्याही हुई स्त्री'** के २ नाम हैं ॥

६ दिधिषुः ( + दिधिषूः, स्वा० म०। पु० ), **'दो बार व्याही स्त्रीके पति'** का १ नाम है ॥

७ अग्रेदिधिषूः। ( + अग्रेदिधिषुः। पु ), **'दो बार व्याही हुई स्त्रीके द्विजाति** ( ब्राह्मण, क्षत्रिय और वैश्य ) **वर्णवाले पति'** का १ नाम है ॥

---

१. 'दिधिषूः पतिः' इति पाठान्तरम् ॥

२. तदुक्तं याज्ञवल्क्ये—

'अक्षता च क्षता चैव पुनर्भूर्दिधिषूः पुनः' इति याज्ञ० १। ६७ ॥

'ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा।
सा चाग्रेदिधिषुर्ज्ञेया पूर्वा तु दिधिषुर्मता' ॥ १ ॥ इति ॥

'दिधिषूस्तत्पुनर्भूर्द्विरूढा स्याद्दिधिषुः पतिः।
स तु द्विजोऽग्रेदिधिषूर्यस्य स्यात्सैव गेहिनी' ॥ १ ॥

अभि० चिन्ता० ३।१८९ इति ॥

१ कानीनः कन्यकाजातः सुतोऽथ सुभगासुतः ।
सौभागिनेयः स्यात् ३ पारस्त्रैणेयस्तु परस्त्रियाः ॥ २४ ॥
४ पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः ।
सुतो ५ मातृष्वसुश्चैवं ६ वैमात्रेयो विमातृजः ॥ २५ ॥
७ अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः ।
कौलटेरः कौलटेयो ८ भिक्षुकी तु सती यदि ॥ २६ ॥
तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः ।
९ आत्मजस्तनयः सूनुः सुतः पुत्रः १० स्त्रियां त्वमी ॥ २७ ॥
आहुर्दुहितरं सर्वे—

---

१ कानीनः ( पु ), 'क्वांरी स्त्रीके पुत्र' का १ नाम है ( 'जैसे—व्यास, कर्ण,...... ) ॥

२ सुभगासुतः, सौभागिनेयः ( २ पु ), 'सौभाग्यवती स्त्रीके पुत्र' के २ नाम हैं ॥

३ पारस्त्रैणेयः ( पु ), 'परस्त्रीके पुत्र' का १ नाम है ॥

४ पैतृष्वसेयः, पैतृष्वस्रीयः ( २ पु ), 'फूआका पुत्र अर्थात् फुफेरे भाई' के २ नाम हैं ॥

५ इसी प्रकार 'मौसीका लड़का अर्थात् मौसेरे भाई' के मातृष्वसेयः, मातृष्वस्रीयः ( २ पु ), २ नाम हैं ॥

६ वैमात्रेयः ( + वैमात्रः ), विमातृजः (२ पु), सौतेली माँका लड़का' अर्थात् 'मैभावत भाई' के २ नाम हैं ।

७ बान्धकिनेयः, बन्धुलः, असतीसुतः, कौलटेरः, कौलटेयः ( ५ पु ), 'व्यभिचारिणी स्त्रीके पुत्र' के ४ नाम हैं ॥

८ कौलटिनेयः, कौलटेयः, ( २ पु ), 'भीख मांगनेके लिये घर २ घूमने-वाली सदाचारिणी स्त्रीके पुत्र' के २ नाम हैं ॥

९ आत्मजः, तनयः, सूनुः, सुतः, पुत्रः ( ५ पु ), 'पुत्र' के ५ नाम हैं ॥

१० दुहिता ( = दुहितृ । स्त्री)' और 'आत्मज' आदि ५ शब्द स्त्रीलिङ्ग होने पर (आत्मजा, तनया, सूनुः, सुता, पुत्री । ५ स्त्री), 'लड़की, पुत्री' के ६ नाम हैं ॥

—१ऽपत्यं तोकं तयोः समे ।
२ स्वजाते त्वौरसोरस्यौ ३ तातस्तु जनकः पिता ॥ २८ ॥
४ जनयित्री प्रसूर्माता जननी ५ भगिनी स्वसा ।
६ ननान्दा तु स्वसा पत्युर्७नप्त्री पौत्री सुतात्मजा ॥ २९ ॥
८ भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।
९ प्रजावती भ्रातृजाया १० मातुलानी तु मातुली ॥ ३० ॥

१ अपत्यम् , तोकम् ( २ न ), 'सन्तान' अर्थात् 'लड़के या लड़की' के २ नाम हैं ॥

२ औरसः, १ उरस्यः ( + औरस्यः । २ पु ), 'अपने खास लड़के' के २ नाम हैं ॥

३ तातः, जनकः, पिता ( = पितृ । ३ पु ), 'पिता' के ३ नाम हैं ॥

४ जनयित्री ( + जनित्री), प्रसूः, माता (= मातृ), जननी ( + जननिः । ४ स्त्री ), 'माता' के ४ नाम हैं ॥

५ भगिनी, स्वसा ( = स्वसृ । २ स्त्री ), 'बहन' के २ नाम हैं ॥

६ ननान्दा ( = ननान्द ।+ ननन्दा = ननन्द, नन्दिनी । स्त्री ), 'ननद' अर्थात् 'पतिकी बहन' का १ नाम है ॥

७ नप्त्री, पौत्री, सुतात्मजा ( भा० दी० । ३ स्त्री ), 'नातिन' अर्थात् 'पुत्रकी या पुत्रीकी लड़की' के ३ नाम हैं ॥

८ याता ( = यातृ, स्त्री ), 'गोतिनी' अर्थात् 'पतिके भाइयोंकी स्त्री' का १ नाम है ॥

९ प्रजावती, भ्रातृजाया (२स्त्री), 'भाईकी स्त्री भौजाई' के २ नाम हैं ॥

१० मातुलानी, मातुली ( + मातुला । २ स्त्री ), 'मामी' अर्थात् 'मामा ( पिताका साला ) की स्त्री' के २ नाम हैं ॥

---

१. 'स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् । तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम्' ॥
मनुः ९।१६६ ॥

इति वचनात्परभार्यायामपि स्वस्माज्जाते पुत्रे नातिव्याप्तिः शङ्क्या । 'औरस १ क्षेत्रज २ दत्तक ३ कृत्रिम ४ गूढोत्पन्न ५ अपविद्ध ६ कानीन ७ सहोढ ८ क्रीत ९ पौनर्भव १० स्वयंदत्त ११ शौद्र ( पाराशव ) १२' इति दायादादायादबान्धवरूपद्वादशविधपुत्रलक्षणं मनुस्मृतौ ( ९।१६६-१७८ ) द्रष्टव्यम् ॥

१ पतिपत्न्योः प्रसूः श्वश्रूः २ श्वशुरस्तु पिता तयोः ।
३ पितुर्भ्राता पितृव्यः स्यात् ४ मातुर्भ्राता तु मातुलः ॥ ३१ ॥
५ श्यालाः स्युर्भ्रातरः पत्न्याः ६ स्वामिनो देवृदेवरौ ।
७ स्वस्रीयो भागिनेयः स्यात् ८ जामाता दुहितुः पतिः ॥ ३२ ॥
९ पितामहः पितृपिता १० तत्पिता प्रपितामहः ।
११ मातुर्मातामहाद्येवं १२ सपिण्डास्तु सनाभयः ॥ ३३ ॥

---

१ श्वश्रूः ( स्त्री ), 'सास' अर्थात् 'पति या स्त्रीकी माता' का १ नाम है ।

२ श्वशुरः ( पु ), 'ससुर' अर्थात् 'पति या स्त्रीके पिता का १ नाम है ॥

३ पितृव्यः ( पु ), 'चाचा' अर्थात् 'पिताके भाई' का १ नाम है ॥

४ मातुलः ( पु ), 'मामा' अर्थात् 'माताके भाई' का १ नाम है ॥

५ श्यालः ( + स्यालः । पु), 'साला' अर्थात् 'स्त्रीके भाई' का १ नाम है ॥

६ देवा ( = देवृ), देवरः ( २ पु ), 'देवर' अर्थात् 'पतिके [1]छोटे भाई के २ नाम हैं ॥

७ स्वस्रीयः ( + स्वस्रियः, स्वस्रेयः ), भागिनेयः ( २ पु ), 'भांजा' अर्थात् 'बहनके लड़के' के २ नाम हैं ॥

८ जामाता ( = जामातृ, पु ), 'दामाद, जमाई' का १ नाम है ॥

९ पितामहः, पितृपिता ( = पितृपितृ । २ पु ), 'पिताके पिता, दादा, बाबा' के २ नाम हैं ॥

१० प्रपितामहः ( पु ), 'परदादा' अर्थात् पितामहके पिता' का १ नाम है ॥

११ मातामहः ( पु ), 'नाना' अर्थात् 'माताके पिता' का १ नाम है । ( "इसी तरह 'प्रमातामहः ( पु ), 'परनाना' अर्थात् 'नानाके पिता' का १ नाम है" ) ॥

१२ सपिण्डः, सनाभिः ( २ पु ) '[2]सात पुस्त ( पीढ़ी ) के भीतरवाले परिवार' के २ नाम हैं ॥

---

१. युक्तमिद क्षी० स्वा० महे० मतम् । ग्रंथकारमते तु 'पत्युर्भ्रातृमात्रस्ये'मे नामनी । 'पत्युर्ज्येष्ठो भ्राता श्वशुर एवेति सुभूत्यादयः' इति भा० दी० आह ॥

२. तदुक्तं मनुना—"सपिण्डता पुरुषे सप्तमे विनिवर्तते" इति, मनुः ५ । ६० ॥

१ समानोदर्यसोदर्यसगर्भ्यसहजाः समाः।
२ सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥ ३४ ॥
३ ज्ञातेयं ४ बन्धुता तेषां क्रमाद्भावसमूहयोः।
५ धवः प्रियः पतिर्भर्ता ६ जारस्तूपपतिः समौ ॥ ३५ ॥
७ अमृते जारजः कुण्डो ८ मृते भर्तरि गोलकः।
९ भ्रात्रीयो भ्रातृजो १० भ्रातृभगिन्यौ भ्रातरावुभौ ॥ ३६ ॥

---

१ समानोदर्यः, सोदर्यः ( + सोदरः, सहोदरः ), सगर्भ्यः, सहजः ( ४ पु ), 'सहोदर भाई' अर्थात् 'एक मातासे उत्पन्न भाई' के ४ नाम हैं ॥

२ सगोत्रः, बान्धवः, ज्ञातिः, बन्धुः, स्वः ( यह सर्वनाम-संज्ञक है ), स्वजनः ( ६ पु ), 'सगोत्र, अपने खास खान्दान' के ६ नाम हैं ॥

३ ज्ञातेयम् ( न ), 'ज्ञातियोंके धर्म या भाव' का १ नाम है ॥

४ बन्धुता ( स्त्री ), 'बन्धुओंके समूह' का १ नाम है ॥

५ धवः, प्रियः, पतिः, भर्ता ( = भर्तृ । ४ पु ), 'पति' के ४ नाम हैं ॥

६ जारः, उपपतिः ( २ पु ), 'जार' अर्थात् 'अप्रधान पति' के २ नाम हैं ॥

७ [1]कुण्डः ( पु ), 'पतिके जीते रहनेपर जारसे पैदा हुए लड़के' का १ नाम है ॥

८ [2]गोलकः ( पु ), 'पतिके मरनेपर जारसे पैदा हुए लड़के' का १ नाम है ॥

९ भ्रात्रीयः ( + भ्रातृव्यः ), भ्रातृजः ( २ पु ), 'भतीजा' अर्थात् भाईके लड़के का १ नाम है ॥

१० भ्रातृभगिन्यौ ( भा० दी० मत से ), भ्रातरौ ( = भ्रातृ । २ पु नि० द्विव० ), 'भाई-बहन' के २ नाम हैं। ( "जब भाई और बहनको एक साथ कहना हो तब इसका प्रयोग होता है। इसी तरह "भार्यापती च तौ" ( २। ६। ३८ ) तक जानना चाहिये" ) ॥

---

१-२. तदुक्तम्—"परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ।
पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः" ॥ १ ॥ इति मनुः ३।१७४

१ मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।
२ श्वश्रूश्वशुरौ श्वशुरौ ३ पुत्रौ पुत्रश्च दुहिता च ॥ ३७ ॥
४ दम्पती जम्पती जायापती भार्यापती च तौ ।
५ गर्भाशयो जरायुः स्यादुल्बं च ६ कललोऽस्त्रियाम् ॥ ३८ ॥
७ सूतिमासो वैजननो ८ गर्भो भ्रूण इमौ समौ ।
९ तृतीयाप्रकृतिः शण्ढः क्लीबः पण्डो [1]नपुंसके ॥ ३९ ॥

---

१ मातापितरौ ( = मातापितृ ), पितरौ ( = पितृ ), मातरपितरौ ( = मातरपितृ ), प्रसूजनयितारौ ( = प्रसूजनयितृ । ४ पु, नि० द्विव० ), **'माता और पिताके समुदाय'** के ४ नाम हैं ॥

२ श्वश्रूश्वशुरौ, श्वशुरौ ( २ पु, नि० द्विव० ), **'सास और ससुरके समुदाय'** के २ नाम हैं ॥

३ पुत्रौ ( पु० नि० द्विव० ) **'लड़का और लड़कीके समुदाय'** का १ नाम है ।

४ दम्पती, जम्पती ( + २ स्त्री[2] ), जायापती, भार्यापती ( ४ पु, नि० द्विव० ), **'पति और पत्नीके समुदाय'** के ४ नाम हैं ॥

५ गर्भाशयः, जरायुः, ( २ पु ), उल्बम् ( + उल्वम् । न ), **'गर्भाशय'** अर्थात् 'जिसमें गर्भ लिपटा रहता है, उस चर्म' के २ नाम हैं ॥

६ कललः ( पु न ), **'वीर्य और शोणितके समुदाय'** का १ नाम है । ( 'किसीके मतसे 'गर्भाशय' आदि २-२ नाम उन अर्थोंमें हैं, और किसीके मतसे ४ नाम एकार्थक हैं' ) ॥

७ सूतिमासः, वैजननः ( २ पु ), **'सन्तान पैदा होनेवाले ( [3]नवें या दशवें ) महीने'** के २ नाम हैं ॥

८ गर्भः भ्रूणः ( २ पु ), **'गर्भ या गर्भस्थ जीव'** के २ नाम हैं ॥

९ तृतीयाप्रकृतिः ( + तृतीयप्रकृतिः । स्त्री ), शण्ढः ( + षण्ढः, शण्डः,

---

१. 'नपुंसकम्' इति पाठान्तरम् ॥

२. 'शाल्मली मथिली मैत्री दम्पती जम्पती च सा' इत्युक्तेरिति बोध्यम् ॥

३. तदुक्तं महर्षिणा याज्ञवल्क्येन—

'नवमे दशमे वापि प्रबलैः सूतिमारुतैः ।
निःसार्यते बाण इव यन्त्रच्छिद्रेण सज्वरः' ॥ १ ॥ याज्ञ० स्मृ० ३।८३ इति ।

मा० दी० तु अस्य तुरीयपादं 'जन्तुश्छिद्रेण सत्वरः' इत्येवमाह ॥

१ शिशुत्वं शैशवं बाल्यं २ तारुण्यं यौवनं समे।
३ स्यात्स्थाविरं तु वृद्धत्वं ४ वृद्धसंघेऽपि वार्धकम् ॥ ४० ॥
५ पलितं जरसा शौक्ल्यं केशादौ ६ विस्रसा जरा।
७ स्यादुत्तानशया [1]डिम्भा स्तनपा च स्तनन्धयी ॥ ४१ ॥
८ बालस्तु स्यान्माणवको—

---

षण्ढः[2] ) क्लीबः, पण्डः ( ३ पु ), नपुंसकम् ( न। +पु ), 'नपुंसक, हिजड़ा' के ५ नाम हैं ॥

१ शिशुत्वम्, शैशवम्, बाल्यम् ( ३ न ), 'लड़कपन, बाल्यावस्था' के ३ नाम हैं ॥

२ तारुण्यम्, यौवनम् ( २ न ), 'जवानी, युवावस्था' के २ नाम हैं ॥

३ स्थाविरम्, वृद्धत्वम् ( + वार्द्धकम्, वार्द्धक्यम्। २ न ), 'बुढ़ापा' के २ नाम हैं ॥

४ वृद्धसंघः ( भा० दी० मतसे। पु ) वार्द्धकम् ( + वार्द्धक्यम्। न ), 'वृद्धसमूह' के २ नाम हैं ॥

५ पलितम् ( न ), 'बाल पकने' अर्थात् 'बुढ़ापा आदिसे दाढ़ी-मूंछ आदिके बालके सफेद होने' का १ नाम हैं ॥

६ विस्रसा, जरा ( २ स्त्री ), 'बुढ़ौती' के २ नाम हैं ॥

७ उत्तानशया, डिम्भा, स्तनपा, स्तनन्धयी ( ४ त्रि ), 'दूध पीनेवाली लड़की' के ४ नाम हैं। ( 'स्त्रीलिङ्गमें रूपप्रदर्शन के लिये स्त्रीत्वको कहा गया है, स्त्रीत्व विवक्षित नहीं है। अतः पुंल्लिङ्ग में-उत्तानशयः, डिम्भः, स्तनपः, स्तनन्धयः, ( ४ पु ), 'दूध पीनेवाले लड़के' के ४ नाम हैं; नपुंसकलिङ्गमें 'उत्तानशयम्,······' होता है। इसी तरह आगे जानना चाहिये' ) ॥

८ बालः, [3]माणवकः ( + माणवः। २ त्रि ), 'छोटे बच्चे' के २ नाम हैं ॥

---

१. 'डिम्भ' शब्दः प्राक् ( २।५।३८ ) पक्षिक्रमेणोक्तोऽप्यत्र मानुषक्रमेण पुनरुक्तः ॥

२. 'पण्डः शण्डे—' (अने० सं० २।१२२) इति, 'षण्डः कानन इड्वरे' (अने० सं० २।१२९) इति '—षण्ढौ तु सौविदौ। बन्ध्यपुंसीड्वरे क्लीबे—' ( अने० सं० २।१३०-१३१ ) इति च हेमचन्द्राचार्योक्तेरित्यवधेयम् ॥

३. 'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः।
नकारस्य च मूर्द्धन्यस्तेन सिद्धयति माणवः' ॥ १ ॥
एवमुक्तरीत्या निष्पन्नान्माणवशब्दात्स्वार्थे कनि 'माणवक' शब्दसिद्धिर्ज्ञेया ॥

—१ वयस्थस्तरुणो युवा ।

२ प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥ ४२ ॥

३ वर्षीयान् दशमी ज्यायान् ४ [1]पूर्वजस्त्वग्रियोऽग्रजः ।

५ जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः ॥ ४३ ॥

६ अमांसो [2]दुर्बलश्छातो ७ बलवान्मांसलोंऽसलः ।

८ [3]तुन्दिलस्तुन्दिभस्तुन्दी बृहत्कुक्षिः पिचण्डिलः ॥ ४४ ॥

---

१ वयस्थः, तरुणः, युवा ( = युवन् । + युवकः । ३ त्रि ), **'नौजवान युवा'** के ३ नाम हैं ।

२ प्रवयाः ( = प्रवयस् ), स्थविरः, वृद्धः, जीनः, जीर्णः' जरन् (=जरत् । ६ त्रि ), **'बूढ़े'** के ६ नाम हैं ॥

३ वर्षीयान् (= वर्षीयस्), दशमी ( = दशमिन्), ज्यायान् ( = ज्यायस् । ३ त्रि ), **'बहुत बूढे'** के ३ नाम हैं ॥

४ पूर्वजः, अग्रियः (अग्रीयः, अग्रयः, अग्र्यामः, अग्रिमः), अग्रजः (३ त्रि), **'बड़े भाई या अपनेसे पहले जन्म हुए'** के ३ नाम हैं ॥

५ जघन्यजः, कनिष्ठः ( + कनीयान् = कनीयस् ), यवीयान् ( = यवीयस् । + यविष्ठः ), अवरजः, अनुजः ( ५ त्रि ), **'छोटे भाई या अपनेसे पीछे जन्म हुए'** के ५ नाम हैं ॥

६ अमांसः, दुर्बलः, छातः ( = शातः । ३ त्रि ), **'दुर्बल, कमजोर'** के ३ नाम हैं ॥

७ बलवान् ( = बलवत् ), मांसलः, अंसलः ( ३ त्रि ), **'बलवान्, मजबूत या मोटे'** के ३ नाम हैं ॥

८ तुन्दिलः (= तुण्डिलः, तुन्दितः, तुण्डितः, तुन्दिकः, उदरिलः), तुन्दिभः ( = तुण्डिभः ), तुन्दी (= तुन्दिन् । = तुण्डी = तुण्डिन् ), बृहत्कुक्षिः, पिचण्डिलः (= पिचिण्डिलः । ५ त्रि), **'तोंदवाले, बड़े पेटवाले'** के ५ नाम हैं ॥

---

१. 'पूर्वजस्त्वग्रीयोऽग्रजः' इति पाठभेदः । किन्त्वत्रच्छन्दोभङ्गोऽपि वर्त्तते ॥

२. 'दुर्बलश्शातः' इति पाठान्तरम् ॥

३. 'तुन्दिकस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचिण्डिलः' इति पाठान्तरम् ॥

१ अवटीटोऽवनाटश्चावभ्रटो नतनासिके।
२ केशवः केशिकः केशी ३ वलिनो वलिभः समौ॥ ४५॥
४ [1]विकलाङ्गस्त्वपोगण्डः ५ खर्वो ह्रस्वश्च वामनः।
६ खरणाः स्यात्खरणसो ७ विग्रस्तु गतनासिकः॥ ४६॥
८ खुरणाः स्यात्खुरणसः ९ प्रज्ञुः प्रगतजानुकः।

१ अवटीटः, अवनाटः, अवभ्रटः, नतनासिकः ( ४ त्रि ), महे० मतसे **'नकचिपटा'** अर्थात् 'चिपटी नाकवाले' के ३ नाम हैं। 'भा० दी० मतसे 'नतनासिकः' शब्दका पर्याय नहीं होने से ३ ही नाम हैं' )॥

२ केशवः ( = केशवान् = केशवत् ), केशिकः, केशी ( = केशिन्। ३ त्रि), **'सुन्दर केशवाले'** के ३ नाम हैं॥

३ वलिनः, वलिभः (२ त्रि), **'जिसका चमड़ा सिकुड़ गया हो उस'** के २ नाम हैं॥

४ विकलाङ्गः, अपोगण्डः ( = पोगण्डः! २ त्रि ), **'कम या अधिक अङ्गवाले'** के २ नाम हैं॥

५ खर्वः ( = खर्बः, निखर्वः ), ह्रस्वः, वामनः (३ त्रि), **'बौना, वामन'** के ३ नाम हैं॥

६ खरणाः ( खरणस् ), खरणसः ( २ त्रि ) **'नुकीली नाकवाले'** के २ नाम हैं॥

७ विग्रः ( + विखुः, विखः, विख्यः, त्रिखः, त्रिखुः ), गतनासिकः ( = विनासिकः। २ त्रि ), **'नकटा'** के २ नाम हैं॥

८ खुरणाः (=खुरणस् ), खुरणसः ( २ त्रि ), **'पशुके खुरके समान नाकवाले'** के २ नाम हैं॥

९ प्रज्ञुः ( + प्रज्ञः[2] ), प्रगतजानुकः ( २ त्रि ) **'रोगसे या स्वभावतः विरल जङ्घावाले'** के २ नाम हैं॥

१. 'विकलाङ्गस्तु पोगण्डः खर्वो' इति पाठान्तरम्॥

२. तदुक्तं भानुजिदीक्षितेन—

'प्रज्ञुः संहतजानुः स्यात्प्रज्ञोऽन्यत्रैव दृश्यते॥' इति साहसाङ्कः, इति॥

१ ऊर्ध्वज्ञरूर्ध्वजानुः स्यात् २ संज्ञुः संहतजानुकः ॥ ४७ ॥
३ स्यादेडे बधिरः ४ कुब्जे गडुलः ५ कुकरे कुणिः ।
६ पृश्निरल्पतनौ ७ श्रोणः पङ्गौ ८ मुण्डस्तु मुण्डिते ॥ ४८ ॥
९ वलिरः केकरे १० खोडे खञ्ज११स्त्रिषु जराऽवराः ।
१२ जडुलः कालकः पिप्लुः—

१ ऊर्ध्वज्ञुः ( + ऊर्ध्वज्ञः[1] ), ऊर्ध्वजानुः ( २ त्रि ), 'बैठनेपर जिसकी जङ्घा ऊपरको उठी रहती हो उस' के २ नाम हैं ॥

२ संज्ञुः ( + संज्ञः[2] ), संहतजानुकः ( २ त्रि ), 'सटे हुए जङ्घा वाले' के २ नाम हैं ॥

३ एडः, बधिरः ( २ त्रि ), 'बहरा' के २ नाम हैं ॥

४ कुब्जः ( + न्युब्जः ), गडुलः ( + गडुः । २ त्रि ), 'कुबड़ा' के २ नाम हैं ॥

५ कुकरः, कुणिः ( + कूणिः । २ त्रि ), 'टेढ़े हाथवाले' के २ नाम हैं,

६ पृश्निः ( + पृष्णिः ), अल्पतनुः ( २ त्रि ) छोटे शरीरवाले, नाटा' के २ नाम हैं ॥

७ श्रोणः, पङ्गुः ( २ त्रि ), 'पङ्गु' के २ नाम हैं ॥

८ मुण्डः, मुण्डितः ( २ त्रि ), 'मुण्डन कराये हुये' के २ नाम हैं ॥

९ वलिरः ( + बलिरः ), केकरः ( + काचरः, कावरः । २ त्रि ), 'ऐंचकर देखनेवाले' अर्थात् 'एक भौंको ऊंचा और एक भौं को नीचाकर देखनेवाले' के २ नाम हैं ॥

१० खोडः (+ खोलः, खोरः ), खञ्जः (२ त्रि), 'लँगड़ा' के २ नाम हैं ॥

११ 'जरा' ( २।६।४१ ) शब्दके बादसे यहाँतक सब शब्द त्रिलिङ्ग हैं। ( 'इनमें ग्रन्थकारके कथनानुसार सब शब्दोंको प्रायः पुंल्लिङ्गमें देकर लिङ्गनिर्देश में त्रिलिङ्ग लिखा गया है, अतः स्त्रीलिङ्ग और नपुंसकलिङ्गके रूपको स्वयं समझ लेना चाहिये' ) ॥

१२ जडुलः ( + जटुलः ), कालकः, पिप्लुः ( ३ पु ), 'लहसन' अर्थात् 'जन्म-कालसे ही उत्पन्न शरीरके चिह्न-विशेष' के ३ नाम हैं ॥

---

१-२. अत्र मा० दी०—
'संज्ञुः संहतजानौ च भवेत्संज्ञोऽपि तत्र हि ।
ऊर्ध्वज्ञुरूर्ध्वजानुः स्यादूर्ध्वज्ञोऽप्यूर्ध्वजानुके' ॥ १ ॥ इति साहसाङ्कः, इति ॥

—१ तिलकस्तिलकालकः ॥ ४९ ॥

२ अनामयं स्यादारोग्यं ३ चिकित्सा रुक्प्रतिक्रिया।

४ भेषजौषधभैषज्यान्यगदो जायुरित्यपि ॥ ५० ॥

५ स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः।

६ क्षयः शोषश्च यक्ष्मा च ७ प्रतिश्यायस्तु पीनसः ॥ ५१ ॥

८ स्त्री क्षुत्क्षुतं क्षवः पुंसि ९ [1]कासस्तु क्षवथुः पुमान्।

१० शोफस्तु श्वयथुः शोथः ११ पादस्फोटो विपादिका ॥ ५२ ॥

१२ किलाससिध्मे—

---

१ तिलकः, तिलकालकः ( २ पु ), 'तिल' अर्थात् 'काली तिलके समान देहके चिह्न-विशेष' के २ नाम हैं ॥

२ अनामयम्, आरोग्यम् ( २ न ), 'नीरोग' के २ नाम हैं ॥

३ चिकित्सा, रुक्प्रतिक्रिया ( २ स्त्री ), 'चिकित्सा' अर्थात् 'रोगको दूर करनेके लिये दवा आदिके सेवन करने' के २ नाम हैं ॥

४ भेषजम्, औषधम्, भैषज्यम् ( ३ न ), अगदः, जायुः (२ पु), 'दवा' के ५ नाम हैं ॥

५ रुक् ( = रुज् ), रुजा (२ स्त्री ), उपतापः, रोगः, व्याधिः, गदः, आमयः (+आमः। ५ पु ), 'रोग' के ७ नाम हैं ॥

६ क्षयः, शोषः, यक्ष्मा ( = यक्ष्मन्। + राजयक्ष्मा = राजयक्ष्मन्। ३ पु), 'राजयक्ष्मा ( T. B. ) रोग' के ३ नाम हैं ॥

७ प्रतिश्यायः (+प्रतिश्या ), पीनसः (+आपीनसः। २ पु ), 'पीनस रोग' के २ नाम हैं ॥

८ क्षुत् ( स्त्री ), क्षुतम् ( न ), क्षवः ( पु ), 'छींक' के ३ नाम हैं ॥

९. कासः ( काशः ), क्षवथुः ( २ पु ), 'खाँसी' के २ नाम हैं ॥

१० शोफः, श्वयथुः, शोथः ( ३ ), 'शोथ, सूजन' के ३ नाम हैं ॥

११ पादस्फोटः (पु), विपादिका ( स्त्री ), 'बिवाय' अर्थात् 'पैरके तलवेमें फटनेवाले रोग-विशेष' के २ नाम हैं ॥

१२ किलासम्, सिध्मम् ( + सिध्मली। २ न ), 'सेहुँआ, सिहुला' के २ नाम हैं ॥

---

१. 'काशस्तु क्षवथुः पुमान्' इति पाठान्तरम् ॥

—१ कच्छ्वां तु पामा पामा विचर्चिका ।
२ कण्डूः खर्जूश्च कण्डूया ३ विस्फोटः [1]पिटकः स्त्रियाम् ॥ ५३ ॥
४ व्रणोऽस्त्रियामीर्ममरुः क्लीबे ५ नाडीव्रणः पुमान् ।
६ कोठो मण्डलकं ७ कुष्ठश्वित्रे ८ दुर्नामकार्शसी ॥ ५४ ॥
९ आनाहस्तु विबन्धः स्याद् १० ग्रहणी रुक्प्रवाहिका ।
११ प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः ॥ ५५ ॥

---

१ कच्छूः, पामा (=पामन्, + न), पामा, विचर्चिका (४ स्त्री), 'गीली खुजली या खसरा' के ४ नाम हैं ॥

२ कण्डूः (+ कण्डुः), खर्जूः, कण्डूया (३ स्त्री), 'खाज़ या खुज़लाहट' के ३ नाम हैं ॥

३ विस्फोटः, पिटकः (२ पु स्त्री । स्त्री० में 'विस्फोटा, पिटिका । + विटिका । + २ त्रि), 'फोड़ा' के २ नाम हैं ॥

४ व्रणः (पु न), ईर्मम्, अरुः (=अरुस् । २ न), 'घाव या व्रण' के ३ नाम हैं ॥

५ नाडीव्रणः (पु), 'सहन' अर्थात् 'सर्वदा पीब बहानेवाले व्रण-विशेष' का १ नाम है ॥

६ कोठः (पु), मण्डलकम् (न) भा० दी० मतसे 'गजकर्ण रोग' अर्थात् 'जिससे शरीरमें गोले २ चकत्ते पड़ जायँ उस रोग' के २ नाम हैं ॥

७ कुष्ठम्, श्वित्रम् (२ न), भा० दी० मतसे 'सफेद कोढ़' अर्थात् 'चरक फूटने' के २ नाम हैं । ("महे० मतसे 'कोठः,...' ४ नाम 'सफेद कोढ़' ही के हैं") ॥

८ दुर्नामकम्, अर्शः (=अर्शस् । + अर्श । २ न), 'बवासीर' के २ नाम हैं ॥

९ आनाहः, विबन्धः (+ विबन्धः । २ पु), 'जिसमें मल और मूत्र रुक जायं उस रोग' के २ नाम हैं ॥

१० ग्रहणी (+ ग्रहणिः, ग्रहणीरुक्, = ग्रहणीरुज्) प्रवाहिका (२ स्त्री), 'संग्रहणी' के २ नाम हैं ॥

११ प्रच्छर्दिका, वमिः (+ वमी, स्त्री; वमः, पु । २ स्त्री), वमथुः (पु), 'वमन या उल्टी' के ३ नाम हैं ॥

---

१. "पिटकस्त्रिषु" इति मा० दी० क्षी० स्वा० सम्मतं पाठान्तरम् ॥

१ व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगन्दराः।
२ [1]"श्लीपदं पादवल्मीकं ३ केशघ्नस्त्विन्द्रलुप्तकः" ( १४ )
४ अश्मरी मूत्रकृच्छ्रं स्यात् ५ पूर्वं शुक्रावधेस्त्रिषु ॥ ५६ ॥
६ रोगहार्यगदङ्कारो भिषग्वैद्यौ चिकित्सके।
७ [2]वार्तो निरामयः कल्य ८ उल्लाघो निर्गतो गदात् ॥ ५७ ॥

---

१ विद्रधिः ( स्त्री ), ज्वरः, मेहः ( + प्रमेहः ), भगन्दरः ( ३ पु ), 'पेट आदि कोमल स्थानमें होनेवाला फोड़ा, ज्वर, प्रमेह और भगन्दर' ( गुदाके बगलमें होनेवाला व्रण विशेष ) का क्रमशः १—१ नाम है। ये सब 'व्याधि भेद' हैं।

२ [ श्लीपदम्, पादवल्मीकम् ( २ न ), 'पीलपांव' अर्थात् 'जिसमें पैरके घुटनेके नीचेका हिस्सा फूलकर बहुत मोटा हो जाय, उस रोग' के २ नाम हैं ] ॥

३ [ केशघ्नः, इन्द्रलुप्तकः ( २ न ), 'टुनकी लगना' अर्थात् 'जिसमें शिर आदिके बाल झड़कर गिर जांय, उस रोग' के २ नाम हैं ] ॥

४ अश्मरी ( स्त्री ), मूत्रकृच्छ्रम् ( न ), 'मूत्रकृच्छ्र' अर्थात् 'जिससे पेशाब करनेमें अत्यन्त कष्ट हो, उस रोग' के २ नाम हैं ॥

५ यहांसे आगे 'शुक्रम्' ( २।६।६१ ) के पहलेवाले सब शब्द त्रिलिङ्ग हैं ॥

६ रोगहारी ( = रोगहारिन् ), अगदङ्कारः, भिषक् ( = भिषज् ), वैद्यः, चिकित्सकः ( ५ पु ), 'वैद्य डाक्टर, कविराज, हकीम आदि दवा करने वाले' के ५ नाम हैं। ( "क्षी० स्वा० मतसे 'रोगहारी, अगदङ्कारः' ये २ नाम 'औषध' के भी हैं" ) ॥

७ वार्तः ( + वान्तः ), निरामयः, कल्यः ( + नीरोगः। ३ त्रि ), महे० मतसे 'नीरोग' के ३ नाम हैं ॥

८ उल्लाघः ( त्रि ), महे० मतसे 'रोगसे शीघ्र ही छुटे हुए' का १ नाम हैं। ("भा० दी० मतसे 'वार्तः,……' ४ नाम 'नीरोग' के ही हैं") ॥

---

१. अयं क्षेपकांशः क्षी० स्वा० व्याख्यायामुपलभ्यत इत्यवधेयम् ॥

२. 'वान्तो निरामयः' इति पाठान्तरम्। अत्र मूलपाठ एव युक्तः, अग्रे ( नानार्थवर्गे ) 'वार्त्तं फल्गुन्यरोगे च त्रिषु' ( ३।३।७६ ) इति स्वयं वक्ष्यमाणत्वात्, '—वार्तं त्वारोग्यारोगफल्गुषु' ( अने० संग्र० २।१९४ ) इति हैमोक्तेश्चेत्यवधेयम् ॥

१ ग्लानग्लास्नू २ आमयावी विकृतो व्याधितोऽपटुः ।
आतुरोऽभ्यमितोऽभ्यान्तः ३ समौ पामनकच्छुरौ ॥ ५८ ॥
४ दद्रुणो　दद्रुरोगी　स्या५दर्शोरोगयुतोऽर्शसः ।
६ वातकी वातरोगी स्यात् ७ सातिसारोऽतिसारकी ॥ ५९ ॥
८ स्युः क्लिन्नाक्षे[1]चुल्लचिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी ।
९ उन्मत्त उन्मादवति १० श्लेष्मलः श्लेष्मणः कफी ॥ ६० ॥

---

१ ग्लानः, ग्लास्नुः ( २ त्रि ), 'रोगसे खिन्न' के २ नाम हैं ॥

२ आमयावी ( = आमयाविन् ), विकृतः, व्याधितः, अपटुः, आतुरः, अभ्यमितः, अभ्यान्तः ( + रोगी = रोगिन् । ७ त्रि), 'रोगी' के ७ नाम हैं ॥

३ पामनः ( + पामरः ), कच्छुरः ( २ त्रि ), 'गीली खुजलीवाले या खसरा रोगवाले' के २ नाम हैं ॥

४ दद्रुणः ( + दद्रूणः, दर्दुणः, दर्दूणः ), दद्रुरोगी ( = दद्रुरोगिन् । + दर्दुरोगी = दर्दुरोगिन् । २ त्रि ), 'दाद रोगवाले' के २ नाम हैं ॥

५ अर्शोरोगयुतः (भा० दी०), अर्शसः ( २ त्रि ), 'बवासीर रोगवाले' के २ नाम हैं ॥

६ वातकी (+ वातकिन्), वातरोगी ( = वातरोगिन् । २ त्रि ), 'वात रोगवाले' के २ नाम हैं ॥

७ सातिसारः, अतिसारकी ( = अतिसारकिन् । + अतीसारकी=अतीसाकिन् । २ त्रि ), 'अतिसार रोगवाले' के २ नाम हैं ॥

८ क्लिन्नाक्षः ( महे० ), चुल्लः, चिल्लः, पिल्लः, ( ४ त्रि ), 'कीचरसे युक्त आँखवाले, के ४ नाम हैं । प्रथम 'क्लिन्नाक्ष' शब्दको छोड़कर शेष ३ नाम ( चुल्लम् , चिल्लम् , पिल्लम् ; ३ न ), 'कीचरसे युक्त आँख' के हैं । ( 'चुल्लः, चिल्लः, पिल्लः, ३ त्रि ), 'आँखसे कीचर निकलनेवाले रोग–विशेष' के भी ३ नाम हैं' ) ॥

९ उन्मत्तः, उन्मादवान् ( = उन्मादवत् । + उन्मादी = उन्मादिन् । २ त्रि ), 'पागल, उन्मादके रोगी' के २ नाम हैं ॥

१० श्लेष्मलः, श्लेष्मणः, कफी ( = कफिन् । ३ त्रि ), 'कफवाले रोगी' के ३ नाम हैं ॥

---

१. 'चुल्लः चक्षूरोगविशेषः, तद्योगाच्चुल्लं चक्षुः । चुल्लचक्षुष्ट्वाच्चुल्लः पुरुषोऽपीत्यवधेयम् ॥

१ न्युब्जो भुग्ने रुजा २ वृद्धनाभौ [1]तुण्डिलतुण्डिभौ ।
३ किलासी सिध्मलो४ऽन्धोऽदृक्५मूर्च्छाले मूर्त्तमूर्च्छितौ ॥ ६१ ॥
६ शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च ।
७ मायुः पित्तं ८ कफः श्लेष्मा ९ स्त्रियां तु त्वगसृग्धरा ॥ ६२ ॥
१० पिशितं तरसं मांसं पललं क्रव्यमामिषम् ।
११ उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम् ॥ ६३ ॥

---

१ न्युब्जः ( त्रि ), 'रोगसे कुबड़ा' का १ नाम है ॥

२ वृद्धनाभिः, तुण्डिलः ( + तुन्दिलः ), तुण्डिभः ( + तुन्दिभः । ३ त्रि), ढोंढर' अर्थात् 'कब्ज आदिके कारण बढ़े हुए नाभिवाले' के ३ नाम हैं ॥

३ किलासी ( = किलासिन् ), सिध्मलः ( २ त्रि ), 'सिहुला, सेंहुआ या पपड़ीवाले रोगी' के २ नाम हैं ॥

४ अन्धः, अदृक् ( = अदृश् । २ त्रि ), 'अन्धा, सूर' के २ नाम हैं ॥

५ मूर्च्छालः, मूर्त्तः, मूर्च्छितः ( ३ त्रि ), 'मूर्च्छा या मृगी रोगवाले' के ३ नाम हैं ॥

६ शुक्रम्, तेजः ( = तेजस् ), रेतः ( = रेतस् ), बीजम् ( + वीजम् ), वीर्यम् , इन्द्रियम् ( ६ न ), 'वीर्य' अर्थात् 'मनुष्यके शरीरस्थ स्निग्ध तथा श्वेतवर्ण धातु' के ६ नाम हैं ॥

७ मायुः ( पु ), पित्तम् (न), 'पित्त' के २ नाम हैं ॥

८ कफः, श्लेष्मा ( = श्लेष्मन् । २ पु), 'कफ' के २ नाम हैं ॥

९ त्वक् ( = त्वच् । + त्वचः, पुः + त्वचा, स्त्री ), असृग्धरा ( + असृग्धारा । २ स्त्री ), 'चमड़ा' के २ नाम हैं ॥

१० पिशितम् तरसम्,[2] मांसम् , पललम्, क्रव्यम्, आमिषम् ( ६ न ), 'मांस' के ६ नाम हैं ॥

११ उत्तप्तम्, शुष्कमांसम् ( २ न ), वल्लूरम् (+ वल्लुरम् । त्रि), 'सूखे मांस' के ३ नाम हैं ॥

---

१. 'तुन्दिलतुन्दिभौ' इति पाठान्तरम् । अत्र मूलपाठ एव समीचीनः, यतः 'तुण्डिरुन्नतनाभिस्तुन्दिस्तु जठरः' इति क्षी० स्वा० उक्त्या वृद्धनाभियुक्तस्यैव पर्यायतौचित्यप्रतीतेः ॥

२. अत्र नैरुक्ताः—'मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् ।
एतन्मांसस्य मांसत्वे निरुक्तं मुनिरब्रवीत्' ॥ १ ॥ इति क्षी० स्वा ॥

१ रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम् ।
२ बुक्काऽग्रमांसं ३ हृदयं हृद् ४ मेदस्तु वपा वसा ॥ ६४ ॥
५ पश्चाद् ग्रीवाशिरा मन्या ६ नाडी तु धमनिः [1]शिरा ।
७ तिलकं क्लोम ८ मस्तिष्कं गोर्दं ९ किट्टं मलोऽस्त्रियाम् ॥ ६५ ॥

---

१ रुधिरम् , असृक् ( = असृज् ), लोहितम् , अस्त्रम् , रक्तम् , क्षतजम् , शोणितम् ( ७ न ), 'रक्त, खून' के ७ नाम हैं ॥

२ बुक्का (स्त्री । + बुक्का = बुक्कन् , पु । + बुक्का, वृक्का; २ स्त्री ), अग्रमांसम् ( न । + बुक्काग्रमांसम्, न ) 'कलेजा' अर्थात् 'हृदयके भीतरवाले कमलके समानाकार मांस-पिण्ड—विशेष' के २ नाम हैं ॥

३ [2]हृदयम् , हृत् ( = हृद् । २ न ), 'हृदय' के २ नाम हैं । ( "बुक्का······"[3] ४ नाम 'हृदय' के हैं, किसीका यह भी मत है" ) ॥

४ मेदः ( = मेदस् । + मेदः । न ) वपा, वसा ( २ स्त्री ), 'चर्बी' के ३ नाम हैं ॥

५ मन्या ( स्त्री ), 'गर्दनके पीछेवाली नस' का १ नाम है ॥

६ नाडी, धमनिः ( = धमनी ), शिरा ( + सिरा । ३ स्त्री ), 'नस के ३ नाम हैं ॥

७ तिलकम्, क्लोम ( = क्लोमन् । २ न ), 'पेटमें जल रहनेके स्थान' के २ नाम हैं ॥

८ मस्तिष्कम् ( + मस्तिकम् ), गोर्दम् (+ गोदः, पु । २ न), 'दिमाग, मस्तिष्क, माइण्ड' के २ नाम हैं ॥

९ किट्टम् ( न ), मलम् ( पु न ), 'नाक, कान आदिके [4]बारह मल' के २ नाम हैं ॥

---

१. "सिरा" इति पाठान्तरम् ॥

२. तदुक्तम्—"पद्मकोशप्रतीकाशं रुचिरं चाप्यधोमुखम् ।
हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्" ॥ १ ॥ इति ॥

३. 'पद्मकोशप्रतीकाशम्·····' इत्यनुरोधादिदमेव समीचीनं प्रतिभाति ॥

४. तदुक्तं मनुना—'वसाशुक्रमसृङ्मज्जा मूत्रविड् घ्राणकर्णविट् ।
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः' ॥ १ ॥ इति मनुः ५।१३५

१ अन्त्रं पुरीतत् २ गुल्मस्तु प्लीहा पुंस्य ३ थ वस्नसा ।
स्नायुः स्त्रियां ४ कालखण्डयकृती तु समे इमे ॥ ६६ ॥
५ सृणिका स्यन्दिनी लाला ६ दूषिका नेत्रयोर्मलम् ।
७ 'नासामलं तु सिङ्घाणं ८ पिञ्जूषः कर्णयोर्मलम्' ( १५ )
९ मूत्रं प्रस्राव १० उच्चारावस्करौ शमलं शकृत् ॥ ६७ ॥
[1]पुरीषं गूथवर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ ।

१ अन्त्रम् ( + आन्त्रम् ), पुरीतत् ( २ न ), 'आँत' के २ नाम हैं ॥

२ गुल्मः, प्लीहा ( = प्लीहन् । + प्लीहा = प्लीहा, स्त्री । २ पु ), 'गुल्म रोग' अर्थात् 'हृदय को बायीं कोखमें होनेवाले मांस-पिण्ड विशेष' के २ नाम हैं ॥

३ वस्नसा, स्नायुः ( २ स्त्री ), 'प्रत्येक अङ्ग-उपाङ्गके जोड़की नस' के २ नाम हैं ॥

४ कालखण्डम् ( + कालखञ्जम् ), यकृत् ( २ न ), 'यकृत्' अर्थात् 'हृदयकी दाहिनी कोखमें होनेवाले मांस-पिण्ड-विशेष' के २ नाम हैं ॥

५ सृणिका ( + सृणीका ), स्यन्दिनी, लाला ( ३ स्त्री ), 'लार' के ३ नाम हैं ॥

६ दूषिका ( + दूषीका । स्त्री ), 'कीचर' का १ नाम है ॥

७ [ नासामलम्, सिङ्घाणम् ( २ न ), 'नकटी, नेटा' अर्थात् 'नाककी मैल' के २ नाम हैं ] ॥

८ [ पिञ्जूषम् ( न ), 'खोंट' अर्थात् 'कानकी मैल' का १ नाम है ॥ ]

९ मूत्रम् ( न ), प्रस्रावः ( पु ), 'पेशाब' के २ नाम हैं ॥

१० उच्चारः, अवस्करः ( २पु ), शमलम् , शकृत् , पुरीषम् ( ३ न ),

अत्र मा० दी० तु 'कर्णविण्मूत्रविण्नखाः' इत्येवं तद्भिन्नमेव द्वितीयचरणमाहेत्यवधेयम् ॥ प्रसङ्गादेतेषां निर्गमस्थानानि गरुडपुराणोक्तानि लिख्यन्ते—

"द्वारैर्द्वादशभिर्भिन्नं किट्टं देहाद्बहिः स्रवेत् ।
कर्णाक्षिनासिका जिह्वा दन्ता नाभिर्नखा गुदम् ॥
गुह्यं शिरा वपुर्लोम मलस्थानानि चक्षते ॥ इति ग० पु० १५ । ९०-९१॥

१. "पुरीषं गूथं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ" इति "गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ" इति च क्रमशः क्षी० स्वा० मा० दी० सम्मते पाठान्तरे ॥

१ स्यात्कर्परः कपालोऽस्त्री २ कीकसं कुल्यमस्थि च ॥ ६८ ॥
३ स्याच्छरीरास्थ्नि कङ्कालः ४ पृष्ठास्थ्नि तु कशेरुका ।
५ शिरोऽस्थनि करोटिः स्त्री ६ पार्श्वास्थनि तु पर्शुका ॥ ६९ ॥
७ अङ्गं प्रतीकोऽवयवोऽपघनो ८ ऽथ कलेवरम् ।
गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ७० ॥
कायो देहः क्लीवपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।
९ पादाग्रं प्रपदं १० पादः [1]पदङ्घ्रिश्चरणोऽस्त्रियाम् ॥ ७१ ॥

---

गूथम्, वर्चस्कम् ( २ पु न ), विष्ठा, विट् (=विश् । + विट् = विष् । २ स्त्री ), 'विष्ठा, पाखाना' के ९ नाम हैं ॥

१ कर्परः ( पु ), कपालः ( पु न ) 'कपाल' के २ नाम हैं ॥

२ कीकसम् , कुल्यम् , अस्थि ( ३ न ), 'हड्डी' के ३ नाम हैं ॥

३ ( + शरीरास्थि न ), कङ्कालः ( + कङ्कः । पु ), 'कङ्काल' ठठरी' का १ नाम है ॥

४ ( + पृष्ठास्थि न ), कशेरुका ( + कशारुका । स्त्री ), 'रीढ़' अर्थात् 'पीठके बीचकी हड्डी' का १ नाम है ॥

५ ( + शिरोऽस्थि न ), करोटिः ( + करोटी । स्त्री ), 'खोपड़ी' का १ नाम है ॥

६ (+ पार्श्वास्थि, न), पर्शुका (+ पर्शूः । स्त्री), 'पँजड़ी' का १ नाम है ॥

७ अङ्गम् ( न ), प्रतीकः, अवयवः, अपघनः ( ३ पु ), 'शरीरके अङ्ग' के ४ नाम हैं । ( 'जैसे—हाथ, पैर, शिर, मुख,······' ) ॥

८ कलेवरम् , गात्रम् , वपुः ( = वपुष् ), संहननम् , शरीरम् , वर्ष्म ( = वर्ष्मन् । ६ न ), विग्रहः, कायः ( २ पु ), देहः ( पु न ), मूर्त्तिः, तनुः ( + तनुः = तनुस् ), तनूः ( ३ स्त्री ), 'शरीर, देह' के १२ नाम हैं ॥

९ पादाग्रम् , प्रपदम् ( २ न ), 'पैरका चौवा' अर्थात् 'पैरके आगेवाले हिस्से' के २ नाम हैं ॥

१० पादः, पत् ( = पद् + पदः ), अङ्घ्रिः ( ३ पु ), चरणः ( पु न ), 'पैर' के ४ नाम हैं ॥

---

१. 'पदोऽङ्घ्रिश्चरणोऽस्त्रियाम्' इति क्षी० स्वा० व्याख्यानुसारि पाठान्तरम् ॥

१ तद्ग्रन्थी घुटिके गुल्फौ २ पुमान्पार्ष्णिस्तयोरधः।
३ जङ्घा तु प्रसृता ४ जानूरुपर्वाऽष्ठीवदस्त्रियाम् ॥ ७२ ॥
५ सक्थि क्लीबे पुमानूरु ६ स्तत्सन्धिः पुंसि वङ्क्षणः।
७ गुदं त्वपानं पायुर्ना ८ वस्तिर्नाभेरधो द्वयोः ॥ ७३ ॥
९ कटो ना श्रोणिफलकं १० कटिः श्रोणिः ककुद्मती।
११ पश्चान्नितम्बः स्त्रीकट्याः १२ क्लीबे तु जघनं पुरः ॥ ७४ ॥
१३ कूपकौ तु नितम्बस्थौ द्वयहीने कुकुन्दरे।

---

१ घुटिका ( स्त्री ), गुल्फः ( पु ), 'पैरकी घुट्ठी' के २ नाम हैं ॥
२ पार्ष्णिः ( पु ), 'पैरकी घुट्ठीके नीचेवाले हिस्से' का १ नाम है ॥
३ जङ्घा, प्रसृता ( २ स्त्री ), 'जंघा' के २ नाम हैं ॥

४ जानु, ऊरुपर्वा (=ऊरुपर्वन्। २ न ), अष्ठीवत् ( पु न । भा० दी० मतसे ३ पु न ), 'घुटना, ठेहुन' के ३ नाम हैं ॥

५ सक्थि ( =सक्थिन् न ), ऊरुः ( पु ), 'घुटनेके ऊपरवाले हिस्से' के २ नाम हैं ॥

६ वङ्क्षणः ( पु ), 'घुटना तथा उसके ऊपरके जोड़' का १ नाम है ॥
७ गुदम्, अपानम् ( २ न ), पायुः ( पु ), 'पाखानाके रास्ता' के २ नाम हैं ॥

८ वस्तिः ( पु स्त्री ) 'मूत्राशय' का १ नाम है ॥
९ कटः ( पु ), श्रोणिफलकम् ( न, भा० दी० ), कमरके दोनों बगल' के २ नाम हैं ॥

१० कटिः ( + कटी ), श्रोणिः ( + श्रोणी ), ककुद्मती ( ३ स्त्री ), 'कमर' के ३ नाम हैं। ( 'अन्याचार्योंके मतसे 'कटः,.......' ५ नाम 'कमर' के हैं' ) ॥

११ नितम्बः ( पु ) 'स्त्रियों के चूतड़' का १ नाम है ॥
१२ जघनम् ( न ), 'स्त्रियोंकी जंघा' का १ नाम है ॥
१३ + कूपकः ( पु ), कुकुन्दरम् ( + ककुन्दरम् । न ) 'चूतड़पर पृष्ठ-वंशके नीचेवाले गड्ढे' के २ नाम हैं ॥

१ स्त्रियां स्फिचौ [1]कटिप्रोथाऽवुपस्थो वक्ष्यमाणयोः ॥ ७५ ॥
३ भगं योनिर्द्वयोः ४ शिश्नो मेढ्रो [2]मेहनशेफसी।
५ मुष्कोऽण्डकोशो वृषणः ६ पृष्ठवंशाधरे त्रिकम् ॥ ७६ ॥
७ [3]पिचण्डकुक्षी जठरोदरं तुन्दं ८ स्तनौ कुचौ।
९ [4]चूचुकं तु कुचाग्रं स्याद् १० न ना क्रोडं भुजान्तरम् ॥ ७७ ॥

---

१ स्फिक् ( = स्फिच्, स्त्री ) कटिप्रोथः ( + कटीप्रोथः, कटिः ) प्रोथः, प्रोहः। पु ), 'कुल्हा' अर्थात् 'कमरमें होने वाले मांस-पिण्ड के २ नाम हैं ॥

२ उपस्थः ( पु न )' 'भग और लिंग' अर्थात् 'स्त्री या पुरुषके पेशाब करनेके रास्ता' का १ नाम है ॥

३ भगम् ( न ), योनिः ( पु स्त्री ) 'स्त्रीके पेशाब करनेके रास्ता' के २ नाम हैं ॥

४ शिश्नः, मेढ्रः ( २ पु ), मेहनम्, शेफः ( = शेफस्। शेपः = शेपस्, शेफः = शेफ, शेपः = शेप[5]। २ न ), 'शिश्न, पुरुषके पेशाब करनेके रास्ता' के ४ नाम हैं ॥

५ मुष्कः, अण्डकोशः ( + अण्डकोषः ), वृषणः ( ३ पु ), 'अण्डकोश, फोता' के ३ नाम हैं ॥

६ त्रिकम् ( न ), 'पीठकी रीढ़के आधारपर तीन हड्डियोंके जोड़वाले स्थान-विशेष' का १ नाम है ॥

७ पिचण्डः ( + पिचिण्डः ), कुक्षिः ( २ पु ), जठरम् ( + पु ), उदरम्, तुन्दम् ( ३ न ), 'पेट' के ५ नाम हैं ॥

८ स्तनः, कुचः ( + पयोधरः वक्षोजः। २ पु ), 'स्तन' के २ नाम हैं ॥

९ चूचुकम् ( + चुचुकम्। + पु ), कुचाग्रम् ( २ न ) 'स्तनके ऊपर वाले काले भाग' के २ नाम हैं ॥

१० क्रोडम् (न स्त्री), भुजान्तरम् ( + अङ्कम्। न), 'गोदी' के २ नाम हैं ॥

---

१. 'कटीप्रोथावुपस्थो' इति पाठान्तरम्। पृथङ् नामद्वयमिति मते तु 'कटी प्रोथावुपस्थो' इति पाठान्तरम् ॥
२. मेहनशेपसी' इति पाठान्तरम् ॥
३. 'पिचिण्डिकुक्षी' इति पाठान्तरम् ॥
४. चुचुकं तु' इति पाठान्तरम् ॥
५. 'शेफशेप' शब्दयोरदन्तत्वादेव 'शेपपुच्छलाङ्गूलेषु शुनः' (वा० ३९०१) इति वार्तिककृतिरन्यथा सान्तत्वे मध्ये विसर्गस्यापि वक्तुमौचित्यम् ॥

१ उरो वत्सं च वक्षश्च २ पृष्ठं तु चरमं तनोः।
३ स्कन्धो भुजशिरोंऽसोऽस्त्री ४ सन्धी तस्यैव जत्रुणी ॥ ७८ ॥
५ बाहुमूले उभे कक्षौ ६ पार्श्वमस्त्री तयोरधः।
७ मध्यमं चावलग्नं च मध्योऽस्त्री ८ द्वौ परौ द्वयोः ॥ ७९ ॥
भुजबाहू प्रवेष्टो दोः [1]स्यात् ९ कफोणिस्तु कूर्परः।

---

१ उरः ( = उरस् ), वत्सम् , वक्षः ( = वक्षस् । ३ न ), 'छाती' के ३ नाम हैं। ( 'क्रोडम् ,·······' ५ नाम 'छाती' के हैं, यह अन्य आचार्योंका मत है' ) ॥

२ पृष्ठम् ( न ), 'पीठ' का १ नाम है ॥

३ स्कन्धः ( पु ), भुजशिरः ( = भुजशिरस् , न ), अंसः ( पु न ), 'कन्धे' के ३ नाम हैं ॥

४ जत्रु ( न ) 'कन्धे के जोड़' का १ नाम है ॥

५ बाहुमूलम् ( न ), कक्षः ( + कक्षयः । पु ), 'काँख' के २ नाम हैं ॥

६ पार्श्वम् ( न पु ), 'कोख' अर्थात् 'काँखके नीचेवाले भाग' का १ नाम है ॥

७ मध्यमम् , अवलग्नम् ( + विलग्नम् । २ न ), मध्यः ( पु न । + ३ पु न[2] ) 'शरीरके मध्य भाग' के ३ नाम हैं ॥

८ भुजः, बाहुः ( + बाहः । २ पु स्त्री ), प्रवेष्टः, दोः ( = दोस् । + दोषा, स्त्री भागु० । २ पु ), 'बाँह' के ४ नाम हैं ॥

९ कफोणिः ( + [3]कफणिः, कपोणिः । पु स्त्री ) कूर्परः ( + कर्परः । पु ) 'केहुनी' के २ नाम हैं ॥

---

१. 'स्यात्कपोणिस्तु' इति पाठान्तरम् ॥

२. '—मध्यमो मध्यजेऽन्यवत् । पुमान् स्वरे मध्यदेशेऽप्यवलग्ने तु न स्त्रियाम्' (मेदि० पृ० ११८ श्लो० ४९–५०) इति 'अवलग्नोऽस्त्रियां मध्ये त्रिषु स्याल्लग्नमात्रके' (मेदि० पृ० १०० श्लो० ५९ ) इति मेदिन्युक्तेः 'अस्त्री' इत्यस्य त्रिभिः सम्बन्धः समीचीनः प्रतिभातीत्यवधेयम् ॥

३. 'कफोणिः कफणिर्द्वयोः' इति शब्दार्णवात् 'कफणिः कूर्परः स्मृतः'(अभि० रत्न० २ ३७८) इति हलायुधाच्चेत्यवधेयम् ॥

१ अस्योपरि प्रगण्डः स्यात् २ प्रकोष्ठस्तस्य चाप्यधः ॥ ८० ॥
३ मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।
४ पञ्चशाखः [1]शयः पाणि ५ स्तर्जनी स्यात्प्रदेशिनी ॥ ८१ ॥
६ अङ्गुल्यः करशाखाः स्युः ७ पुंस्यङ्गुष्ठः प्रदेशिनी ।
मध्यमाऽनामिका चापि कनिष्ठा चेति ताः क्रमात् ॥ ८२ ॥
८ [2]पुनर्भवः करुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।
९ प्रादेश—

१ प्रगण्डः ( पु ) केहुनीके ऊपरवाले भाग' का १ नाम है ॥

२ प्रकोष्ठः ( पु । + न ), 'केहुनीके नीचेवाले भाग' का १ नाम है ॥

३ करभः ( पु ), 'हाथकी कलाईसे कनिष्ठातकवाले बाहरी मांसल भाग' का १ नाम है ॥

४ पञ्चशाखः, शयः ( + शमः, शवः), पाणिः (३ पु), 'हाथ' के ३ नाम हैं ॥

५ तर्जनी, प्रदेशिनी ( + प्रदेशनी । २ स्त्री ), 'तर्जनी' अर्थात् 'अँगूठेके पासवाली अंगुली' के २ नाम हैं ॥

६ अङ्गुली ( + अङ्गुलिः, अङ्गुरिः, २ स्त्री; अङ्गुलः, पु ), करशाखा ( २ स्त्री ), 'अङ्गुली' के २ नाम हैं ॥

७ अङ्गुष्ठः ( पु ), प्रदेशिनी ( + प्रदेशनी ), मध्यमा, [3]अनामिका, कनिष्ठा ( ४ स्त्री ), अंगूठेसे लेकर कनिष्ठा तकवाली प्रत्येक अङ्गुली' का क्रमशः १-१ नाम है ॥

८ पुनर्भवः ( + पुनर्नवः ), करुहः ( २ पु ), नखः, नखरः ( + त्रि । २ पु न ), 'नाखून' नँह' के ४ नाम हैं ॥

९ प्रादेशः ( पु ), 'फैलाये हुए तर्जनी और अँगूठे बीचके प्रमाण-विशेष' का १ नाम है ॥

---

१. 'शमः पाणिस्तर्जनी स्यात्प्रदेशनी' इति पाठान्तरम् । नाममाला तु 'पाणिः शयः शमी हस्तः' इत्युभयं पपाठ' इति क्षी० स्वा० ॥

२. 'पुनर्नवः' इति पाठान्तरम् ॥

३. अनया ब्रह्मणशिरश्छेदनादपवित्रत्वेन नामग्रहणायोग्यतया 'अनामिका' इति नाम्नः प्रसिद्धिः । अत एव यज्ञावसरेऽस्यां दर्भमयं पवित्रं धार्यत इत्यवधेयम् ॥

—१ ताल२गोकर्णास्तर्जन्यादियुते तते ॥ ८३ ॥
३ अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः।
४ पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ॥ ८४ ॥
५ [1]द्वौ संहतौ सिंहतलप्रतलौ वामदक्षिणौ।
६ [2]पाणिर्निकुब्जः प्रसृतिः ७ स्तौ युतावञ्जलिः पुमान् ॥ ८५ ॥
८ प्रकोष्ठे विस्तृतकरे हस्तो ९ मुष्ट्या तु बद्धया।
सरत्निः स्या १० दरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥ ८६ ॥

---

१ तालः ( पु ), 'फैलाये हुए मध्यमा और अँगूठेके बीचके प्रमाण-विशेष' का १ नाम है ॥

२ गोकर्णः ( पु ), 'फैलाये हुए अनामिका और अँगूठेके बीचके प्रमाण-विशेष' का १ नाम है ॥

३ वितस्तिः ( पु स्त्री ), द्वादशाङ्गुलः ( भा० दी०, पु ), 'बित्ता' अर्थात् फैलाये हुए कनिष्ठा और अँगूठेके बीचके प्रमाण-विशेष' के २ नाम हैं ॥

४ चपेटः ( + चर्पटः, पु, + चपेटा, चपेटिका; २ स्त्री ), प्रतलः ( + तलः, तालः ), प्रहस्तः ( ३ पु ), 'थप्पड़, चटकन, के ३ नाम हैं ॥

५ सिंहतलः ( + संहतलः, सिंहतालः ), प्रतलः ( २ पु ) 'अङ्गुली फैलाये हुए दोनों हाथोंको सटाने' के २ नाम हैं ॥

६ प्रसृतिः ( स्त्री। + प्रसृतः, पु ), 'टेढ़े किये ( समेटे ) हुए हाथ' का १ नाम है ॥

७ अञ्जलिः ( पु ), 'अञ्जलि' का १ नाम है ॥

८ हस्तः ( पु ) 'एक हाथ' अर्थात् 'दो बित्ता या चौबीस अङ्गुलके प्रमाण-विशेष' का १ नाम है ॥

९ रत्निः ( + सरत्निः। पु स्त्री ), 'निमूठ ( मुट्ठी बाँधकर ) हाथसे नापे हुए प्रमाण-विशेष' का १ नाम है ॥

१० अरत्निः ( स्त्री पु ), 'कनिष्ठा अङ्गुलीको फैलाये हुए मुट्ठी बांधकर हाथसे नापे हुए प्रमाण-विशेष' का १ नाम है ॥

---

१. द्वौ संहतौ सिंहतलः प्रतलौ' इति मुकु० सम्मतं पाठान्तरम्। 'द्वौ संहतौ संहतलप्रतलौ' इति च पाठान्तरम् ॥ २. 'पाणिर्निकुब्जः' इत्यपपाठः' इति क्षी० स्वा० ॥

१ व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् ।
२ ऊर्ध्वविस्तृतदोष्पाणिनृमाने पौरुषं त्रिषु ॥ ८७ ॥
३ कण्ठो गलो ४ ऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि ।
५ कम्बुग्रीवा त्रिरेखा सा ६ ऽवटुर्घाटा कृकाटिका ॥ ८८ ॥
७ वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।
८ क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ॥ ८९ ॥
९ ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ।

---

१ व्यामः ( पु ), 'दोनों तरफ दोनों हाथोंको फैलाकर नापे हुए प्रमाण–विशेष' का १ नाम है ॥

२ पौरुषम् ( त्रि ), 'पोरसासे नापे हुए प्रमाण–विशेष' का १ नाम है । ( 'खड़े होकर हाथको ऊपर उठानेपर जो प्रमाण होता है, उसे 'पोरसा' कहते हैं, यह ४½ हाथका होता है' ) ॥

३ कण्ठः, गलः, ( २ पु ), 'कण्ठ' के २ नाम हैं ॥

४ ग्रीवा, शिरोधिः, कन्धरा ( ३ स्त्री ), 'गर्दन' के ३ नाम हैं ॥

५ कम्बुग्रीवा ( स्त्री ), 'शङ्खके समान तीन रेखावाली गर्दन' का १ नाम है ॥

६ अवटुः, घाटा, कृकाटिका ( ३ स्त्री ), 'घाँटी' के ३ नाम हैं । ( 'भा० दी० मतसे 'गर्दनके ऊपरवाले भाग' के और स्वा० मु० मतसे 'गर्दनके पीछेवाले भाग' के ये ३ नाम हैं' ) ॥

७ वक्त्रम्, आस्यम्, वदनम्, तुण्डम्, आननम्, लपनम्,[1] मुखम् (७ न), 'मुखके बिल' के और उपचारसे 'मुखमात्र' के ७ नाम हैं ॥

८ घ्राणम् ( न ), गन्धवहा, घोणा, नासा ( + नसा, नस्या ), नासिका ( + कुलथा, सिङ्घाणी । ४ स्त्री ), 'नाक' के ५ नाम हैं ॥

९ ओष्ठः, अधरः, रदनच्छदः ( ३ पु ), दशनवासः ( = दशनवासस् , न), 'ओठ' के ४ नाम हैं ॥

---

१. मुखशब्दस्य साधुत्वप्रकारो निरुक्ते प्रोक्तस्तथा हि—

'प्राक्खनो मुडुदात्तश्च ततोऽच्च प्रत्ययो भवेत् ।
प्रजासृजा यतः खातं तस्मादाहुर्मुखं बुधाः' ॥ १ ॥ इति ॥

१ अधस्ताच्चिबुकं २ गण्डौ कपोलौ ३ तत्परा हनुः ॥ ९० ॥
४ रदना दशना दन्ता रदा ५ स्तालु तु काकुदम् ।
६ रसज्ञा रसना जिह्वा ७ प्रान्तावोष्ठस्य[1] सृक्किणी ॥ ९१ ॥
८ ललाटमलिकं गोधि ९ रूर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ ।
१० कूर्चमस्त्री भ्रुवोर्मध्यं ११ तारकाऽक्ष्णः कनीनिका ॥ ९२ ॥
१२ लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।
दृग्दृष्टी—

१ चिबुकम् (न), 'ओठ और ठुड्ढीके नीचेवाले भाग' का १ नाम है ॥

२ गण्डः, कपोलः ( + कटः । २ पु ), 'गाल' के २ नाम हैं ॥

३ हनुः ( स्त्री ), 'दाढ़ी, ठुड्ढी' का १ नाम है ॥

४ रदनः, दशनः, दन्तः ( + दंष्ट्रा, स्त्री ), रदः ( ४ पु ), 'दाँत' के ४ नाम हैं ॥

५ तालु, काकुदम्, ( २ न ), 'तालु' के २ नाम हैं ॥

६ रसज्ञा, रसना ( + रशना । + न[2] ), जिह्वा ( + लोला । ३ स्त्री ) 'जीभ' के ३ नाम हैं ॥

७ सृक्किणी ( = सृक्किणी स्त्री । + सृक्किणी = सृक्किणो स्त्री; सृक्कि = सृक्किन्, = सृकि; सृक = सृकन्; सृकम्=सृक, सृक्कि=सृक्किन्, = सृक्कि; सृक्क = सृक्कन्; सृक्कम् = सृक्क; ८ न ), 'ओठके दोनों किनारों' का १ नाम है ॥

८ ललाटम्, अलिकम् ( = अलीकम्, भालम् । २ न ), गोधिः ( पु ), 'ललाट' के ३ नाम हैं ॥

९ भ्रूः ( स्त्री ), 'भौंह' का १ नाम है ॥

१० कूर्चम् ( न पु ), 'दोनों भौंहके बीचवाले भाग' का १ नाम है ॥

११ तारका, कनीनिका ( भा० दी०, क्षी० स्वा० । २ स्त्री ) 'आँखकी पुतली' के २ नाम हैं ॥

१२ लोचनम् ( + विलोचनम् ), नयनम्, नेत्रम्, ईक्षणम्, चक्षुः (=चक्षुस्), अक्षि ( ६ न ), दृक् ( = दृश् ), दृष्टिः ( २ स्त्री ), 'आँख' के ८ नाम हैं ॥

१. सृक्किणी" इति पाठान्तरम् ॥

२. यथाऽऽह श्रीहर्षः—"पित्तेन दूने रसने···" इति नैषधः ॥ ३।९४ ॥

—१ चास्रु नेत्राम्बु रोदनं चास्रमश्रु च ॥ ९३ ॥
२ अपाङ्गौ नेत्रयोरन्तौ ३ कटाक्षोऽपाङ्गदर्शने ।
४ कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ॥ ९४ ॥
५ उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ।
६ चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ॥ ९५ ॥
७ तद्वृन्दे कैशिकं कैश्य ८ मलकाश्चूर्णकुन्तलाः ।
९ ते ललाटे भ्रमरकाः १० काकपक्षः शिखण्डकः ॥ ९६ ॥

---

१ अस्रु, नेत्राम्बु, रोदनम् , अस्रम् , अश्रु ( + बाष्पम् । ५ न ), 'आँसू' के ५ नाम हैं ॥

२ अपाङ्गः ( पु ), 'आँखोंके किनारेवाले भाग' का १ नाम है ॥

३ कटाक्षः ( पु ), (+ अपाङ्गदर्शनम्, न ), 'कटाक्ष' का १ नाम है ॥

४ कर्णः, शब्दग्रहः ( २ पु ), श्रोत्रम् , श्रुतिः ( स्त्री ) श्रवणम् , श्रवः ( = श्रवस् । शेष ३ न ), 'कान' के ६ नाम हैं ॥

५ उत्तमाङ्गम् ( + वराङ्गम् ), शिरः ( = शिरस् । + शिरः = शिर,[1] पु ), शीर्षम् ( ३ न ), मूर्धा ( = मूर्धन् , पु ); मस्तकः ( पु न ), 'सिर' मस्तक' के ५ नाम हैं ॥

६ चिकुरः ( + चिकूरः, चिहुरः[2] ), कुन्तलः, वालः ( + बालः ), कचः, केशः, शिरोरुहः ( + शिरसिजः, मूर्धजः । ६ पु ), 'केश, बाल' के ६ नाम हैं ॥

७ कैशिकम् , कैश्यम् ( २ न ), 'केशके समूह' का १ नाम है ॥

८ अलकः, चूर्णकुन्तलः ( २ पु ), 'अँगूठिया बाल' के २ नाम हैं ॥

९ भ्रमरकः ( पु ), 'काकुल' अर्थात् 'बुलबुली यानी ललाटपर लटके हुए बाल' का १ नाम है ।

१० [3]काकपक्षः, शिखण्डकः ( + शिखाण्डकः । २ पु ), 'काकपक्ष' अर्थात् 'लड़कोंका जूड़ा, जुलुफी, शिखा-सामान्य के २ नाम हैं ॥

---

१. "शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथा" इत्युक्तेरिति बोध्यम् ॥

२. 'कुन्तला मूर्धजाः शस्ताश्चिकुराश्चिहुरास्तथा' इति दुर्गोक्तेः । किन्तु 'चिहुर'शब्दस्य प्राकृत एव बाहुल्येन प्रयोग उपलभ्यते न तु संस्कृत इत्यवधेयम् ॥

३. "क्षत्रियाणां चूडा 'काकपक्ष' इति गौडः इति क्षी० स्वा० ॥

१ [1]कबरी केशवेशोऽ २ थ धम्मिल्लः संयताः कचाः ।
३ शिखा चूडा केशपाशी ४ [2]व्रतिनस्तु जटा सटा ॥ ९७ ॥
५ वेणिः प्रवेणी ६ शीर्षण्यशिरस्यौ विशदे कचे ।
७ पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥ ९८ ॥
८ तनूरुहं रोम लोम ९ तद्वृद्धौ [3]श्मश्रु पुंमुखे ।
१० आकल्पवेषौ नेपथ्यं—

१ कबरी ( + कवरी । स्त्री ), केशवेशः ( + केशवेषः । पु ), 'बालके रचना–विशेष' के २ नाम हैं ॥

२ धम्मिल्लः ( पु ), 'पटिया, जूड़ा' अर्थात् 'बाँधे हुए स्त्रियोंके बालके रचना–विशेष' का १ नाम है ॥

३ शिखा, चूडा, केशपाशी (३ स्त्री), 'शिखा, चुटिया, चुन्नी'के ३ नाम हैं ॥

४ जटा, सटा ( २ स्त्री ), 'जटा' अर्थात् 'आपसमें सटे हुए बाल या ऋषियोंकी जटा या जटामात्र' के २ नाम हैं ॥

५ वेणिः ( + वेणी ), प्रवेणी ( + प्रवेणिः । २ स्त्री ), 'बालकी गुथी हुई चोटी' के २ नाम हैं ॥

६ शीर्षण्यः, शिरस्यः ( २ पु ), 'निर्मल बाल' के २ नाम हैं ॥

७ पाशः, पक्षः, हस्तः ( ३ पु ), ये तीन शब्द 'कच' शब्दसे परे रहने पर अर्थात् 'कचपाशः, कचपक्षः, कचहस्तः, (३ पु ), या कच ( केश ) के पर्याय-वाचक शब्दसे परे रहने पर अर्थात् केशपाशः, केशपक्षः, केशहस्तः, बालपाशः, बालपक्षः, बालहस्तः ( ६ पु ), इत्यादि नाम 'केश–समूह' के हैं ॥

८ तनूरुहम् , रोम ( = रोमन् ), लोम ( = लोमन् । ३ न ), 'रोंए' के ३ नाम हैं ॥

९ श्मश्रु ( + स्मश्रु । न ), 'दाढ़ीके बढ़े हुए बाल' का १ नाम है ॥

१० आकल्पः, वेषः ( + वेशः । २ पु ), नेपथ्यम् ( न । + पु ), 'आभूषण आदिसे उत्पन्न शोभा' के ३ नाम हैं ॥

---

१. "कवरी केशवेषोऽथ" इति पाठान्तरम् ॥

२. "व्रतिनः सा जटा सटा' इति पाठान्तरम् । अत्र 'सा' शब्दः केशार्थकः ।

३. "स्मश्रु पुंमुखे" इति पाठान्तरम् ॥

—१ प्रतिकर्म प्रसाधनम् ॥ ९९ ॥

२ दशैते त्रिष्व ३ लङ्कर्ताऽलङ्करिष्णुश्च ४ मण्डितः ।
प्रसाधितोऽलङ्कृतश्च भूषितश्च परिष्कृतः ॥१००॥
५ विभ्राड् भ्राजिष्णुरोचिष्णू ६ भूषणं स्यादलङ्क्रिया ।
७ अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् ॥१०१॥
मण्डनं च। ८ थ [1]मुकुटं किरीटं पुन्नपुंसकम् ।
९ चूडामणिः शिरोरत्नं—

१ प्रतिकर्म (+प्रतिकर्मन्), प्रसाधनम् (२ न), 'तिलक, फूल आदिसे सँवारने' के २ नाम हैं। 'आकल्पः……' ५ नाम एकार्थक हैं, यह भी कई एक आचार्यों का मत [2]है') ॥

२ यहाँ से लेकर आगेवाले दश शब्द त्रिलिङ्ग हैं ॥

३ अलङ्कर्ता (+अलङ्कर्तृ), अलङ्करिष्णुः (+मण्डनः। २ त्रि), 'अलङ्कृत (सुशोभित) करनेवाले' के २ नाम हैं ॥

४ मण्डितः, प्रसाधितः, अलङ्कृतः, भूषितः, परिष्कृतः (+परिस्कृतः। ५ त्रि), 'आभूषण इत्यादिसे सुशोभित' के ५ नाम हैं ॥

५ विभ्राट् (+विभ्राज्), भ्राजिष्णुः, रोचिष्णुः (३ त्रि), 'आभूषण इत्यादिसे अधिक शोभनेवाले' के ३ नाम हैं ॥

६ भूषणम् (न। + भूषा, स्त्री), अलङ्क्रिया (स्त्री), 'आभूषण इत्यादिसे सुशोभित करने' के २ नाम हैं ॥

७ अलङ्कारः, आभरणम्, परिष्कारः (+परिस्कारः। १ला और ३ रा पु), विभूषणम् (+भूषणम्), मण्डनम् (शेष ३ न), 'आभूषण, गहना, के ५ नाम हैं ॥

८ मुकुटम् (+मकुटम्। न), किरीटम् (पु न), 'मुकुट' के २ नाम हैं ॥

९ चूडामणिः (+शिरोमणिः। पु), शिरोरत्नम् (न), 'शिरोमणि' के २ नाम हैं ॥

१. मकुटं किरीटं' इति पाठान्तरम् ॥

२. इदमसत्—वेषो हि वस्त्रालङ्करणप्रसाधनैरङ्गशोभा। प्रसाधनं तु समालम्भनं तिलकपत्रभङ्गादिना (अङ्गशोभा) इति क्षी० स्वा० ॥

—१ तरलो हारमध्यगः ॥ १०२ ॥
२ बालपाश्या पारितथ्या ३ पत्त्रपाश्या ललाटिका।
४ कर्णिका तालपत्त्रं स्यात् ५ कुण्डलं कर्णवेष्टनम् ॥ १०३ ॥
६ ग्रैवेयकं कण्ठभूषा ७ लम्बनं स्याल्ललन्तिका।
८ स्वर्णैः प्रालम्बिका ९ ऽथोरःसूत्रिका मौक्तिकैः कृता ॥ १०४ ॥
१० हारो मुक्तावली ११ देवच्छन्दोऽसौ शतयष्टिका।

---

१ तरलः ( + नायकः । पु ) 'हारका सुमेरु' अर्थात् 'हार या माला के बीचवाले बड़े दाने' का १ नाम है ॥

२ बालपाश्या ( + बालपाश्या ), पारितथ्या ( २ स्त्री ), 'स्त्रियोंकी चोटी या जूड़ामें लगानेके लिये सोने आदिकी पट्टी' ( भूषण-विशेष ) के २ नाम हैं ॥

३ पत्त्रपाश्या, ललाटिका ( २ स्त्री ), 'बन्दी, बेना आदि ललाटके भूषण' के २ नाम हैं ॥

४ कर्णिका ( स्त्री ), तालपत्त्रम् ( + ताडपत्त्रम् । न ), 'कनफूल, ऐरन, तरकी, झूमक आदि कानके भूषण' के २ नाम हैं ॥

५ कुण्डलम्, कर्णवेष्टनम् ( २ न ), 'कुण्डल' के २ नाम हैं। ( 'कुण्डल' और 'कर्णिका'में यह भेद है कि 'कुण्डल'को स्त्री-पुरुष दोनों पहनते हैं और 'कर्णिका' को केवल स्त्रियाँ ही पहनती हैं' ) ॥

६ ग्रैवेयकम् ( + ग्रैवेयम्, ग्रैवम्, । न ), कण्ठभूषा ( स्त्री ), 'हँसुली, कण्ठा, टीक आदि गलेके आभूषण' के २ नाम हैं ॥

७ लम्बनम् ( न ), ललन्तिका ( स्त्री ), 'गलेसे थोड़ा नीचे लटकनेवाले भूषण' के २ नाम हैं ॥

८ प्रालम्बिका ( स्त्री ), 'गलेसे थोड़ा नीचे लटकनेवाले सुवर्णके भूषण ( सोनेकी हलकी सिकड़ी आदि )' का १ नाम है ॥

९ उरःसूत्रिका ( स्त्री ), 'मोतीके हार' का १ नाम है ॥

१० हारः ( पु ), मुक्तावली ( स्त्री ), 'हार' के २ नाम हैं ॥

११ देवच्छन्दः ( पु ), शतयष्टिका ( स्त्री । भा० दी० ) 'सौ लड़ीवाले हार' के २ नाम हैं ॥

१ हारभेदा[1] यष्टिभेदाद् गुच्छगुच्छार्द्धगोस्तनाः ॥ १०५ ॥
अर्द्धहारो माणवक एकावल्येकयष्टिका ।
२ सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ॥ १०६ ॥
३ आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् ।

१ गुच्छः ( +गुत्सः, गुत्स्यः ), गुच्छार्द्धः ( +गुत्सार्द्धः गुत्स्यार्द्धः ), गोस्तनः, अर्द्धहारः, माणवकः ( ५ पु ), एकावली, एकयष्टिका, (२ स्त्री), ये ७ 'हारोंके भेदविशेष' हैं । ('इनमें बत्तीस लड़ीके हारका गुच्छ, चौबीस लड़ीके हारका गुच्छार्द्ध, चार लड़ीके हारका गोस्तन, बारह लड़ीके हारका अर्द्धहार, बीस लड़ीके हारका माणवक और एक लड़ीके हारका एकावली, एकयष्टिका [2]नाम हैं' ) ॥

२ नक्षत्रमाला ( स्त्री ), 'सत्ताइस मोतियोंके हार' का १ नाम है ॥

३ आवापकः, पारिहार्यः ( २ पु ), कटकः, वलयः ( २ पु न ), 'पहुँची, कड़ा आदि हाथके भूषण' के ४ नाम हैं ॥

---

१. 'यष्टिभेदाद् गुत्सगुत्सार्द्धगोस्तनाः' इति पाठान्तरम् ॥

२. अत्र क्षी० स्वा०—'अन्ये त्वाख्यन्—'द्वात्रिंशल्लतो गुच्छो गुह्याच्छादकत्वात् । चत्वारिंशल्लतो गोस्तनो लम्बमानत्वात्, गोपुच्छोऽपि । चतुःपञ्चाशल्लतोऽर्द्धहारो देवच्छन्दार्द्धत्वाद् । विंशल्लतो माणवकोऽल्पत्वात्' इति' इत्याह ॥ अभिधानचिन्तामणौ हेमचन्द्राचार्यपादैरुक्ता हारभेदाः प्रसङ्गादुच्यन्ते—

'देवच्छन्दः शतं साष्टमिन्द्रच्छन्दः सहस्रकम् ।
तदर्द्धं विजयच्छन्दो हारस्त्वष्टोत्तरं शतम् ॥ १ ॥
अर्द्धं रश्मिः कलापोऽस्य द्वादश त्वर्द्धमाणवः ।
द्विर्द्वादशार्द्धगुच्छः स्यात्पञ्च हारफलं लताः ॥ २ ॥
अर्द्धहारश्चतुःषष्टिर्गुच्छमाणवमन्थराः ।
अपि गोस्तनगोपुच्छावर्द्धमर्द्धं यथोत्तरम् ॥ ३ ॥
इति हारयष्टिभेदादेकावल्येकयष्टिका ।
कण्ठिकाऽप्यथ नक्षत्रमाला तत्संख्यमौक्तिकैः' ॥ ४ ॥
इति अभि० चिन्ता० ३।३२२—३२६

अन्ये त्वेवमाहुः—'चतुःषष्टिलतो हारोऽथाष्टहीना यथोत्तरम् ।
रश्मिः कलापो माणवकोऽर्द्धहारोऽर्द्धगुच्छकः ॥ १ ॥
कलापच्छन्दो मन्दरः स्याद् गुच्छः सप्ततियष्टिकः' । इति ।

अत्र केचित् 'रश्मिकलापो' इति वा पठित्वैकं नामेत्याहुः । मुकमतबाऽवगमाय चर्क द्रष्टव्यम् ॥

## विविधमतेन हाराणां संज्ञाया यष्टिसंख्यायाश्च बोधकचक्रम्

| क्रमागतसंख्या | हारसंज्ञाः | कोषोक्तयष्टि-संख्याः | भा० दी० उक्ताः यष्टिसंख्याः | मही० उक्ताः यष्टिसंख्याः | क्षी० स्वा० प्रभृति अन्योक्ता यष्टि-संख्याः | अन्योक्ताः यष्टिसंख्याः |
|---|---|---|---|---|---|---|
| १ | देवच्छन्दः | १०० | ❀ | ❀ | १०८ | ❀ |
| २ | इन्द्रच्छन्दः | १००८ | ❀ | ❀ | ❀ | ❀ |
| ३ | विजयच्छन्दः | ५०४ | ❀ | ❀ | ❀ | ❀ |
| ४ | हारः | १०८ | ३४ | ❀ | ❀ | ६४ |
| ५ | रश्मिकपाकः | ५४ | ❀ | ❀ | ❀ | ❀ |
| ६ | अर्द्धमाणवः | १२ | ❀ | ❀ | ❀ | ❀ |
| ७ | अर्द्धगुच्छः | २४ | २४ | २४ | ❀ | २४ |
| ८ | हारफलम् | ५ | ❀ | ❀ | ❀ | ❀ |
| ९ | अर्द्धहारः | ६४ | ❀ | १२ | ५४ | ३२ |
| १० | गुच्छः | ३२ | ३२ | ३२ | ३२ | ७० |
| ११ | माणवः | १६ | २० | २० | २० | ४० |
| १२ | मन्दरः | ८ | ❀ | ❀ | ❀ | ८ |
| १३ | गोस्तनः | ४ | ४ | ४ | ४० | ❀ |
| १४ | गोपुच्छः | २ | ❀ | ❀ | ४० | ❀ |
| १५ | एकावली | १ | १ | १ | १ | ❀ |
| १६ | नक्षत्रमाला | २७ मौ० | २७ मौ० | २७ मौ० | २७ मौ० | ❀ |
| १७ | रश्मिः | ❀ | ❀ | ❀ | ❀ | ५६ |
| १८ | कलापः | ❀ | ❀ | ❀ | ❀ | ४८ |
| १९ | कलापच्छन्दः | ❀ | ❀ | ❀ | ❀ | १६ |

१ केयूरमङ्गदं तुल्ये २ अङ्गुलीयकमूर्मिका ॥ १०७ ॥
३ साक्षराऽङ्गुलिमुद्रा स्यात् ४ कङ्कणं करभूषणम् ।
५ स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा ॥ १०८ ॥
क्लीबे सारसनं चा६ऽथ पुंस्कट्यां शृङ्खलं त्रिषु ।
७ पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ॥ १०९ ॥
हंसकः पादकटकः ८ [1]किङ्किणी क्षुद्रघण्टिका ।
९ त्वक्फलक्रिमिरोमाणि वस्त्रयोनि :—

१ केयूरम्, अङ्गदम् ( २ न ), 'बिजायठ, बाजूबन्द, बहरबूटा' के २ नाम हैं ॥

२ अङ्गुलीयकम् ( + अङ्गुरीयकम् । न । + पु[2] ), ऊर्मिका ( स्त्री ), 'अँगूठी' के २ नाम हैं ॥

३ अङ्गुलिमुद्रा ( स्त्री, ), 'नाम खुदी हुई अँगूठी' का १ नाम है ॥

४ कङ्कणम्, करभूषणम् ( २ न ), 'कङ्कण, ककना' के २ नाम हैं ॥

५ मेखला, काञ्ची, सप्तकी, रशना ( + रसना, सिञ्जनी । ४ स्त्री ), सारसनम् ( न ), [3]'स्त्रियोंकी करधनी' के ५ नाम हैं । (यद्यपि १ लड़ीवाली करधनीकी 'काञ्ची', ८ लड़ीवालीकी 'मेखला', १६ लड़ीवालीकी 'रशना' और २५ लड़ीवालीकी 'कलाप' संज्ञा अन्य ग्रन्थोंमें कही गयी है, तथापि यहां उक्त भेदविशेषका आश्रय नहीं किया गया है ) ॥

६ शृङ्खलम् ( त्रि ), 'पुरुषोंकी करधनी' का १ नाम है ॥

७ पादाङ्गदम् ( न ) तुलाकोटिः ( + तुलाकोटी । स्त्री ), मञ्जीरः ( + मञ्जीलः ), नूपुरः ( २ पु न ), हंसकः, पादकटकः ( २ पु ), 'पायजेब' के ६ नाम हैं ॥

८ किङ्किणी ( + किङ्किणिः, कङ्किणी ), क्षुद्रघण्टिका ( २ स्त्री ), 'घूघुर' के २ नाम हैं ॥

९ वस्त्रयोनिः ( स्त्री ), 'जिनके कपड़े बनते हों उन छाल, फल, कृमि और रोंएं' का १ नाम है । ( 'तीसी, केला आदि के छालसे, कपास

१. 'कङ्किणी' इति पाठान्तरम् ॥
२. 'अयं मैथिल्यभिज्ञानं राघवस्याङ्गुरीयकः' ( भट्टि ८।११८ ) इत्युक्तेरिति मुकुटः ॥
३. 'एकयष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिका ।
रशना षोडश ज्ञेया कलापः पञ्चविंशकः' ॥ १ ॥
इत्युक्ता भेदास्त्विह नाश्रिता इत्यवधेयम् ॥

१ दश त्रिषु ॥ ११० ॥
२ वाल्कं क्षौमादि ३ फालं तु कार्पासं बादरं च तत् ।
४ कौशेयं कृमिकोशोत्थं ५ राङ्कवं मृगरोमजम् ॥ १११ ॥

---

आदिके फलसे, रेशमवाले कृमि ( कीड़े ) के कोएसे और भेंड़, दुम्मा भेंड़ा, मृग आदिके रोएंसे कपड़े बनते हैं; अतः 'ऊन छाल, फल, कृमि और रोएं' का 'वस्त्रयोनिः ( स्त्री ), यह १ नाम है" ) ॥

१ यहांसे दश शब्द त्रिलिङ्ग हैं । ("वाल्कम्, क्षौमम्, फालम्, कार्पासम्, बादरम्, कौशेयम्, राङ्कवम्, अनाहतम्, निष्प्रवाणि, तन्त्रकम्' क्षी० स्वा० भा० दी० मतसे ये १० शब्द त्रिलिङ्ग हैं। वाल्कम् क्षौमम् ( न' ) फालम्, कार्पासम्, बादरम्, कौशेयम्, कृमिकोशोत्थम्, राङ्कवम्, मृगरोमजम्, अनाहतम्, निष्प्रवाणि, तन्त्रकम् ( 'च' शब्दसे इसका संग्रह हुआ है ), सुभूति और महेश्वरके मतसे शेष ११ शब्द त्रिलिङ्ग हैं" ) ॥

२ वाल्कम्, क्षौमम् ( + न । २ त्रि ), 'तिसीवट या केले आदिके छालसे बने हुए कपड़े' के २ नाम हैं ॥

३ फालम्, कार्पासम्, बादरम् (+ बादरम् । ३ त्रि), 'कपास इत्यादि-के फलसे बने हुए कपड़े' अर्थात् 'सूती कपड़े' के ३ नाम हैं ॥

४ कौशेयम्, कृमिकोशोत्थम् (भा० दी०, क्षी० स्वा० । + कृमिकोषोत्थम् । २ त्रि ), 'पीताम्बर आदि रेशमी कपड़ा' अर्थात् 'रेशमवाले कीड़ोंके कोएके बने सूतसे बुने हुए कपड़े' के २ नाम हैं ॥

५ राङ्कवम्, मृगरोमजम् ( भा० दी०, क्षी० स्वा० । २ त्रि ), 'दुशाला, शाल, अलवान, कम्बल आदि ऊनी कपड़ा' अर्थात् 'मृग ( भेंड़ा आदि पशु ) के रोएंके बने सूतसे बुने हुए कपड़े' के या 'रङ्कुनामक मृग-विशेषके रोएंके बने सूतसे बुने हुए कपड़े' के २ नाम हैं ॥

---

१. 'क्षौमं दुकूलं स्याद् द्वे तु' ( २।६।११३ ) इत्यत्र 'दुकूल'शब्दसाहचर्यात् 'क्षौमं' क्लीबमेवेत्याशयः। अत एव 'कृमिकोशोत्थ-मृगरोमज'शब्दयोरपि पर्यायता, 'तत्रोक्त'शब्द-स्यैकादशसङ्ख्यकता च सिध्यति । स्वा० भा० दी० मते तु 'कृमिकोशोत्थ-मृगरोमज'शब्द-योर्न पर्यायता, 'क्षौम' शब्दश्च त्रिलिङ्ग एव, अत एव 'दश त्रिषु' इति ग्रन्थकारोक्तिः संगच्छते इति बोध्यम् ॥

१ अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरम् ।
२ तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ॥ ११२॥
३ पत्त्रोर्णं धौतकौशेयं ४ बहुमूल्यं महाधनम् ।
५ क्षौमं दुकूलं स्याद् ६ द्वे तु निवीतं प्रावृतं त्रिषु ॥११३॥
७ स्त्रियां बहुत्वे वस्त्रस्य [1]दशाः स्युर्वस्तयो द्वयोः ।
८ दैर्घ्यमायाम [2]आरोहः—

१ अनाहतम् ( + अहतम् ), निष्प्रवाणि, तन्त्रकम् ( भा० दी, क्षी० स्वा० । ३ त्रि ), नवाम्बरम् ( न ), भा० दी० क्षी० स्वा० के मतसे 'जो पहना, धुलाया या फटा हुआ नहीं हो उस कपड़े' के और महेश्वरके मतसे 'कोरे कपड़े' के ४ नाम हैं ॥

२ उद्गमनीयम् ( न ), 'धुलाये हुए कपड़े' का नाम है । ( 'धौतयोर्वस्त्रयोर्युगम्' यहाँ पर 'युग' [3]शब्द अविवक्षित है' ) ॥

३ पत्त्रोर्णम् ( न ), धौतकौशेयम् ( भा० दी० । २ न ), 'धुलाये हुए रेशमी कपड़े' के २ नाम हैं ॥

४ बहुमूल्यम्, महाधनम् ( भा० दी० । २ न ), 'बेशकीमती वस्तु' के २ नाम हैं ॥

५ क्षौमम् ( त्रि । + न ), दुकूलम् ( न ), 'पीताम्बर' के २ नाम हैं ॥

६ निवीतम् ( + निवृत्तम् ), प्रावृतम् ( २ न ), 'ढके हुए वस्त्र' के २ नाम हैं ॥

७ दशाः ( स्त्री नि० ब० व० ), वस्तयः ( भा० दी० । स्त्री पु नि० ब० व० । + वर्तयः ; २ एक व० [2]भी हैं ), 'कपड़ेकी किनारी, धारी, दसी' के २ नाम हैं ॥

८ दैर्घ्यम् (न,) आयामः, आरोहः ( + आनाहः । ३ पु), 'कपड़े आदिकी

१. 'दशाः स्युर्वस्तयोर्द्वयोः' इति पाठान्तरम् ॥ २. 'आनाहः' इति पाठान्तरम् ॥

३. युगशब्दस्याविवक्षायां लक्ष्यं यथा—

'गृहीतपत्युद्गमनीयवस्त्रा' । कुमारसम्भव ७।११ इति ॥

'धौतुमुद्गमनीयं च —' इति हलायुधश्च ( अभि० रत्न० २।३९६ ) ॥

'वर्तिवस्ति'शब्दयोरेकवचनत्वञ्चापि । तथा हि हलायुधः —'वर्तिर्वस्तिर्दशाः सिचः' ( अभि० रत्न० २।३९६ ) इति ॥

—१ परिणाहो विशालता ॥ ११४ ॥
२ पटच्चरं जीर्णवस्त्रं ३ समौ [1]नक्तककर्पटौ।
४ वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम् ॥ ११५ ॥
५ सुचेलकः [2]पटोऽस्त्री स्याद्६वराशिः स्थूलशाटकः।

---

लम्बाई' के ३ नाम हैं ॥

१ परिणाहः ( पु ), विशालता ( स्त्री ), 'कपड़े आदिकी चौड़ाई' के २ नाम हैं ॥

२ पटच्चरम्, जीर्णवस्त्रम् ( २ न ), 'पुराने कपड़े' के २ नाम हैं ॥

३ नक्तकः ( + लक्तकः ), कर्पटः ( २ पु ), मुकु० महे० मतसे 'पुराने कपड़ेके टुकड़े' के, भा० दी० मतसे 'रुमाल' अर्थात् 'पसीना आदिको पोंछनेवाले छोटे वस्त्र' के और क्षी० स्वा० मतसे 'दूध, पानी आदिको छाननेवाले कपड़े' के २ नाम हैं ॥

४ वस्त्रम्, आच्छादनम्, वासः ( = वासस्), चैलम् ( + चेलम्), वसनम्, अंशुकम् ( + चीरम्, प्रोतः। ६ न ), 'कपड़ामात्र' के ६ नाम हैं ॥

५ सुचेलकः ( पु ), पटः ( पु न । + पु स्त्री क्षी० स्वा० [1] ), 'अच्छे कपड़े' के २ नाम हैं ॥

६ वराशिः ( + वरासिः। + पु ), स्थूलशाटकः ( २ त्रि ), 'मोटे कपड़े' के २ नाम हैं। ( 'सुचेलकः,……' ४ शब्द एकार्थक हैं, यह भी आचार्यों का मत है' ) ॥

---

१. 'कक्तककर्पटौ' इति पाठान्तरम् ॥

२. 'पटोऽस्त्री ना वराशिः' इति। ३. 'पटोऽस्त्री ना वरासिः'इति च काचित्कं पाठान्तरम् ॥

४. पटोऽस्त्री कर्पटः शाटः सिचयप्रोतलक्तकाः' इति रभसोक्तेः, 'पटश्चित्रपटे वस्त्रेऽस्त्री, प्रियालद्रुमे पुमान्' ( मेदि० पृ० ३६ श्लो० १९ ) इति मेदिन्युक्तेश्च 'अस्त्रीति चिन्त्यम्, द्वयोरदर्शनात्' इति क्षी० स्वा० वचसश्चिन्त्यत्वमुक्तम् भा० दी०। क्षी० स्वा० तु 'अस्त्रीति चिन्त्यम्, द्वयोर्दर्शनात्' इत्येवोक्तत्वात् 'अपटीक्षेपेण' इति लक्ष्याच्च भा० दी० उक्तेरेव चिन्त्यत्वम्। 'अम्बरमंशुकमुक्तं वस्त्रं सिचयः पटः पोटः' ( अभि० रत्न० २।३९३ ) इति हलायुधोक्तया तु 'पट' शब्दस्य पुंस्त्वमात्रमेवायातीत्यवधेयम् ॥

१ निचोलः प्रच्छदपटः २ समौ रल्लककम्बलौ ॥ ११६ ॥
३ अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके ।
४ द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥ ११७ ॥
संव्यानमुत्तरीयं च ५ चोलः कूर्पासकोऽस्त्रियाम् ।
६ नीशारः स्यात्प्रावरणे हिमानिलनिवारणे ॥ ११८ ॥
७ अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमस्त्रियाम् ।
८ स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ॥ ११९ ॥
९ अस्त्री वितानमुल्लोचो—

---

१ निचोलः ( + निचुलः । त्रि ), प्रच्छदपटः ( २ पु ), महे० भा० दी० मतसे 'पालकी आदिके ओहार या सारङ्गी, सितार आदिके गिलाफ' ( खोली ) के, क्षी० स्वा० मतसे 'रजाई, तोसक, तकिया आदिकी खोली' के और अन्याचार्योंके मतसे 'बुर्का' अर्थात् 'यवन आदिकी स्त्रियाँ पर्देके वास्ते जिसको ओढ़कर पूरे शरीरको छिपाकर बाहर निकलती हैं उस वस्त्र-विशेष'-के २ नाम हैं ।

२ रल्लकः, कम्बलः ( २ पु ), 'कम्बल' के २ नाम हैं ॥

३ अन्तरीयम्, उपसंव्यानम्, परिधानम्, अधोंऽशुकम् ( ४ न ), 'कमरसे नीचे पहने जानेवाले धोती, पायजामा, साड़ी आदि कपड़ों' के ४ नाम हैं ॥

४ प्रावारः ( + प्रावरः ), उत्तरासङ्गः ( २ पु ), बृहतिका ( स्त्री ), संव्यानम् , उत्तरीयम् ( २ न ), 'कमरसे ऊपर धारण करने योग्य दुपट्टा, चादर, पगड़ी आदि कपड़ों' के ५ नाम हैं ॥

५ चोलः ( + चोली, स्त्री ), कूर्पासकः ( पु न ), 'स्त्रियोंकी चोली, कुर्ती आदि' के २ नाम हैं ॥

६ नीशारः ( पु ), 'रजाई, दुलाई या शीतसे बचनेके लिये ओढ़े जानेवाले वस्त्रमात्र' का १ नाम है ॥

७ अर्धोरुकम् ( न ), चण्डातकम् ( न पु ), 'लहँगा' के २ नाम हैं ॥

८ आप्रपदीनम् ( त्रि ), 'पैरतक लटकनेवाले कपड़े' का १ नाम है ॥

९ वितानम् ( न पु ), उल्लोचः ( पु ), 'चँदवा' के २ नाम हैं ॥

१ दूष्याद्यं वस्त्रवेश्मनि ।
२ प्रतिसीरा [1]जवनिका स्यात्तिरस्करिणी च सा ॥ १२० ॥
३ [2]परिकर्माङ्गसंस्कारः स्यात् ४ मार्ष्टिर्मार्जना मृजा ।
५ उद्वर्तनोत्सादने द्वे समे ६ आप्लाव आप्लवः ॥ १२१ ॥
स्नानं ७ चर्चा तु चार्चिक्यं स्थासको ८ऽथ प्रबोधनम् ।
अनुबोधः ९ पत्त्रलेखा [3]पत्त्राङ्गुलिरिमे समे ॥ १२२ ॥

---

१ दूष्यम् ( + दूश्यम् । न ), आदि ( 'आदि' शब्दसे 'पटकुटी' ( स्त्री ), पटवासः ( = पटवासस् ), पटगृहम्, पटकुड्यम् ( ३ न ), इत्यादिका संग्रह है'), 'कपड़ेके घर, डेरा, रावटी, तम्बु आदि' का नाम है ॥

२ प्रतिसीरा, जवनिका ( + यमनिका ), तिरस्करिणी ( + तिरस्कारिणी, तिरस्करणी । ३ स्त्री ), 'कनात, पर्दा' के ३ नाम हैं ॥

३ परिकर्म ( = परिकर्मन् । + प्रतिकर्म = प्रतिकर्मन् । न ), अङ्गसंस्कारः ( पु ), 'कुङ्कुम आदिसे शरीरके संस्कार करने' के २ नाम हैं ॥

४ मार्ष्टिः, मार्जना, मृजा ( ३ स्त्री ) 'झाड़ पोंछकर शरीरको साफ करने' के ३ नाम हैं ॥

५ उद्वर्तनम्, उत्सादनम् ( + उच्छादनम् । २ न ), उबटन, वेशन, साबुन आदिसे शरीरको मलने' के २ नाम हैं ॥

६ आप्लावः, आप्लवः (२ पु), स्नानम् (न), 'स्नान करने' के ३ नाम हैं ॥

७ चर्चा ( स्त्री ), चार्चिक्यम् ( न ), स्थासकः ( पु ), शरीरमें चन्दन आदि लगाने' के ३ नाम हैं ॥

८ प्रबोधनम् ( न ), अनुबोधः ( पु ), 'निकले हुए गन्धको फिरसे लाने' के २ नाम हैं । ( 'जैसे—'कस्तूरीके गन्धके निकल जानेपर मदिरा छोड़नेसे उसका गन्ध फिर आ जाता है' ) ॥

९ पत्त्रलेखा, पत्त्राङ्गुलिः ( २ स्त्री ), 'कस्तूरी, केसर, मेंहदी या चन्दन आदिसे गाल या स्तनादिपर पत्ते, फूल आदिकी चित्रकारी करने' के २ नाम हैं ॥

---

१. 'यमनिका' इति पाठान्तरम् । २. प्रतिकर्माङ्गसंस्कारः' इति पाठान्तरम् ॥
३. 'पत्राङ्गुलिरिमे स्त्रियौ' इति पाठान्तरम् ॥

१ तमालपत्रतिलकचित्रकाणि विशेषकम् ।
द्वितीयं च तुरीयं च न स्त्रियाम् २अथ कुङ्कुमम् ॥ १२३ ॥
काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतने ।
रक्तसंकोचपिशुनं [1]धीरं लोहितचन्दनम् ॥ १२४ ॥
३ लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः ।
४ लवङ्गं देवकुसुमं श्रीसंज्ञ५मथ जायकम् ॥ १२५ ॥
[2]कालीयकं च कालानुसार्यं चा६थ समार्थकम् ।
[3]वंशिकागुरुराजार्हलोहकि (कृ) मिजजोङ्गकम् ॥ १२६ ॥

---

१ तमालपत्रम्, तिलकम्, चित्रकम्, विशेषकम् ( २ रा ४ था पु न । शेष न), 'कस्तूरी, चन्दन, भस्म आदिसे टीका (तिलक) लगाने' के ४नाम हैं ॥

२ कुङ्कुमम्, काश्मीरजन्म ( = काश्मीरजन्मन् ), अग्निशिखम् , वरम् , बाह्लीकम् ( + बाह्लिकम्, बह्लीकम्, बह्लिकम् ), पीतनम् , रक्तम् ( + असृक्संज्ञम् ; खूनके पर्यायवाचक नाम ), संकोचम्, पिशुनम्, धीरम् ( + वीरम् ) लोहितचन्दनम् ( ११ न ) 'केसर, कुङ्कुम' के ११ नाम हैं ॥

३ लाक्षा, राक्षा ( + रक्ता । २ स्त्री ), जतु (न), यावः, अलक्तः, द्रुमामयः [4]( ३ पु ), लाही, लाक्षा, लाख, महावर' के ६ नाम हैं ॥

४ लवङ्गम् , देवकुसुमम् , श्रीसंज्ञम् ( श्री अर्थात् लक्ष्मीके पर्यायवाले सब नाम । ३ न ), 'लौंग' के ३ नाम हैं ॥

५ जायकम् , कालीयकम् ( + कालेयकम् ), कालानुसार्यम् ( ३ न ), 'पीला चन्दन, जायकनामक गन्धद्रव्य' के ३ नाम हैं ॥

६ वंशिकम् ( + वंशिकम् ), अगुरु ( + पु । + अगरु ), राजार्हम् , लोहम् (+ पु ), कि(कृ) मिजम् , जोङ्गकम् (६ न), भा० दी० मतसे 'अगर' के ६ नाम हैं ॥

---

१. 'वी(धी)रलोहितचन्दनम्' इति पाठान्तरम् ॥ २. 'कालेयकं च' इति पाठान्तरम् ॥
३. 'वंशकागरुराजार्हलोहकि(कृ)मिजजोऽङ्गकम्' इति पाठान्तरम् ॥
४. धन्वन्तरिस्त्वेवमाह—

'लाक्षा पलङ्कषा राक्षा दीप्तिश्च कृमिजं जतु ।
क्रतुघ्नानलमाता च द्रुमव्याधिरलक्तकः' ॥ १ ॥ इति ॥

१ [1]कालागुर्वगुरु २ स्यात्तु मङ्गल्या मल्लिगन्धि यत्।
३ यक्षधूपः सर्जरसो रालसर्वरसावपि १२७॥
बहुरूपोऽप्य४थ वृकधूपकृत्रिमधूपकौ।
५ तुरुष्कः पिण्डकः [2]सिह्लो यावनोऽप्य६थ पायसः॥ १२८॥
श्रीवासो वृकधूपोऽपि [3]श्रीवेष्टसरलद्रवौ।
७ मृगनाभिर्मृगमदः कस्तूरी च—

१ कालागुरु, अगुरु ( + अगरु। २ न ), भा० दी० मतसे 'काला अगर' के २ नाम हैं। ('महे० मतसे 'वंशिकम्,········, ७ नाम 'अगर' के हैं')॥

२ मङ्गल्या ( स्त्री ), 'बेलाके फूलके समान सुगन्ध देनेवाले अगर' का १ नाम है॥

३ यक्षधूपः ( + धूपः ), सर्जरसः, रालः ( + राला, स्त्री, अरालः ), सर्वरसः, बहुरूपः ( ५ पु ), 'राल, धूप' के ५ नाम हैं॥

४ वृकधूपः, कृत्रिमधूपः ( २ पु ), 'अनेक सुगन्धित पदार्थोंको मिलाकर बनाये हुए धूप' के २ नाम हैं॥

५ तुरुष्कः, पिण्डकः, सिह्लः (सिल्हः), यावनः (४पु), 'लोहबान' के ४नाम हैं॥

६ पायसः, श्रीवासः ( + श्रीः ), वृकधूपः ( + वृकः ), श्रीवेष्टः ( + श्रीपिष्टः ) सरलद्रवः ( ५ पु ), 'सरल देवदारुके गोंदसे बने हुए सुगन्धित द्रव्य विशेष' के ५ नाम हैं॥

७ मृगनाभिः ( + नाभिः [4]), मृगमदः ( + मृगः [5], मदः [6], २ पु ), कस्तूरी ( स्त्री ), 'कस्तूरी' के ३ नाम हैं॥

---

१. 'कालागुर्वगुरु स्यात्तन्मङ्गल्या' इति पाठान्तरम्। अत्र पक्षे यन्मल्लिगन्धि अगुरु तत्तु 'मङ्गल्या' स्यादित्येव सम्बन्धो ज्ञेयः, तत्र मूलपाठ एव समीचीन इत्यवधेयम्॥

२. 'सिल्हो यावनोऽप्यथ' इति पाठान्तरम्॥ ३. 'श्रीपिष्टसरलद्रवौ' इति पाठान्तरम्॥

४. 'मुख्यराट्क्षत्रियये नाभिः पुंसि प्राण्यङ्गके द्वयोः।
चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे'॥ १॥
इति रभसोक्तेः नाभिशब्दस्यापि पर्यायत्वमित्यवधेयम्॥

५. 'मृगनाभिर्मृगमदः मृगः कस्तूरिकापि च' इत्युक्तेर्मृग शब्दस्यापि पर्यायत्वमित्यवधेयम्॥

६. 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः' ( मेदिनी पृ० ७९ श्लो० १२ ) इत्युक्तेः मदशब्दस्यापि पर्यायतैत्यवधेयम्॥

१—अथ कोलकम् ॥ १२९ ॥
कक्कोलकं कोशफलम्२अथ कर्पूरमस्त्रियाम् ।
घनसारश्चन्द्रसंज्ञः [१]सिताभ्रो हिमवालुका ॥ १३० ॥
३ गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।
४ तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ॥ १३१ ॥
५ तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ।
कुचन्दनं चा६थ जातीकोषजातीफले समे ॥ १३२ ॥

---

१ कोलकम् ( + कोरकम् ), कक्कोलकम्, कोशफलम् ( + कोषफलम् । ३ न ) 'कङ्कोल' के ३ नाम हैं ॥

२ कर्पूरम् ( पु न ), घनसारः, चन्द्रसंज्ञः ( चन्द्रमाके पर्यायवाचक सब शब्द ), सिताभ्रः ( + सिताभः । ३ पु ), हिमवालुका ( स्त्री ), **'कपूर' के** ५ नाम हैं ॥

३ गन्धसारः, मलयजः ( २ पु ), भद्रश्रीः ( स्त्री ), चन्दनः ( पु न ), **'मलयागिरि चन्दन'** के ४ नाम हैं ॥

४ तैलपर्णिकम्, गोशीर्षम्, ( २ न ); हरिचन्दनम् (पु न), **'सफेद ठण्डा चन्दन, कमलके समान गन्धवाले चन्दन और कपिल या पीले वर्णवाले चन्दन'** का क्रमशः १—१ नाम है ॥

५ तिलपर्णी ( स्त्री ), पत्राङ्गम्, रञ्जनम्, रक्तचन्दनम्, कुचन्दनम् (४ न), **'लाल चन्दन'** के ५ नाम हैं ॥

६ जातीकोषम् ( + जातिकोशम्, जातीकोषः, कोषः[२] ), जातीफलम् ( + फलम्[३] । २ न )' **'जायफल'** के २ नाम हैं ॥

---

१. 'सिताभो हिमवालुका' इति पाठान्तरम् ॥

२. '—कोशः कोष इवाण्डजे कुड्मले चषके दिव्येऽर्थचये योनिशिम्बयोः । **जातीकोशेऽसिपिधाने**—' ( अने० संग्र० २।५४६—५४७ ), इति, '—अथ जनिषु **जातिः सामान्यगोत्रयोः** ॥ मालत्यामामलक्यां च चुल्ल्यां कम्पिल्लजन्मनोः । जातीफले छन्दसि च' ( अने० संग्र० २।१६८—१६९ ) इति हेमचन्द्राचार्योक्तेः **जाति-कोष-कोशशब्दानां पर्यायतेत्यवधेयम्** ॥

**३. 'फलं हेतुफले जातीफले फलकसस्ययोः'** (अभि० चिन्ता० २।४९९) **इति हेमचन्द्राचार्योक्त्या 'फल' शब्दस्यापि पर्यायत्वमित्यवधेयम्** ॥

१ कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः ।
२ गात्रानुलेपनी वर्त्तिर्वर्णकं स्याद्विलेपनम् ॥ १३३ ॥
३ चूर्णानि वासयोगाः स्युर्४भावितं वासितं त्रिषु ।
५ संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् ॥ १३४ ॥
६ माल्यं मालास्रजौ मूर्ध्नि—

१ [1]यक्षकर्दमः ( पु ), 'कपूर, अगर, कस्तूरी और कङ्कोल; इन चारोंको बराबर-बराबर देकर बनाये हुए लेप-विशेष' का १ नाम है ॥

२ गात्रानुलेपनी, वर्त्तिः ( २ स्त्री ), वर्णकम् , विलेपनम् ( २ न ), 'लेप करनेके लिये पीसे या घिसे हुए गन्धद्रव्य विशेष' के ४ नाम हैं। ( 'क्षी० स्वा० मत से दो-दो शब्द एकार्थक हैं'[2] ) ॥

३ चूर्णम् ( न ), वासयोगः (पु), 'कपड़े आदिको सुवासित करनेके योग्य चूर्ण किये हुए गन्धद्रव्य-विशेष' के २ नाम हैं ॥

४ भावितम्, वासितम् ( २ त्रि ), 'सुवासित कपड़ा आदि' के २ नाम हैं। ( 'क्षी० स्वा० मतसे गन्धद्रव्य अर्थात् इतर आदिसे सुगन्धित किये हुए कपड़े आदिको 'भावित' और केतकी, केवड़ा या गुलाब आदि से सुगन्धित किये हुए कपड़े आदिको 'वासित' कहते हैं' ) ॥

५ अधिवासनम् ( न ), 'गुलाबजल या सुगन्धित फूल आदिसे पान, तिल आदिका सुवासित करने' का १ नाम है ॥

६ माल्यम् ( न ), माला, स्रक् ( = स्रज् । २ स्त्री ), 'शिरसे धारण की हुई माला' के ३ नाम हैं। ( 'यहाँ 'मूर्ध्नि' शब्दके अविवक्षित होनेसे

१. तदुक्तं व्याडिना—

'कर्पूरागुरुकस्तूरीकङ्कोलघुसृणानि च ।
एकीकृतमिदं सर्वं यक्षकर्दम इष्यते' ॥ १ ॥ इति ॥

धन्वन्तरिस्तु भिन्नमेवाह । तथथा—

'कुङ्कुमागुरुकस्तूरीकर्पूरं चन्दनं तथा ।
महासुगन्धमित्युक्तं नामतो यक्षकर्दमः ॥ १ ॥ इति ॥

२. गात्रानुलेपनी वर्तिर्विगन्ध्यथ विलेपनम् ।
वर्णकञ्चाथ विच्छित्तिः स्त्री कषायोऽङ्गरागके' ॥ १ ॥

इति रभसोक्तिमनुसृत्येदमित्यवधेयम् ॥

—१ केशमध्ये तु गर्भकः।
२ प्रभ्रष्टकं शिखालम्बि ३ पुरोन्यस्तं ललामकम् ॥ १३५ ॥
४ प्रालम्बमृजुलम्बि स्यात् ५ कण्ठाद्वैकक्षिकं तु तत्।
यत्तिर्यक्क्षिप्तमुरसि ६ शिखास्वापीडशेखरौ ॥ १३६ ॥
७ रचना [1]स्यात्परिस्यन्द ८ आभोगः परिपूर्णता।
९ उपधानं तूपबर्हः १० शय्यायां शयनीयवत् ॥ १३७ ॥
शयनं ११ मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः।

---

'मालामात्र' के भी ये ३ नाम हैं' ) ॥

१ गर्भकः ( पु ), 'केशके बीचमें लगायी हुई माला' का १ नाम है ॥

२ प्रभ्रष्टकम् ( न ), 'शिखा या चोटीसे लटकती हुई माला' का १ नाम है ॥

३ ललामकम् ( न ), 'ललाटपर धारण की हुई माला, मुण्डमाला' का १ नाम है ॥

४ प्रालम्बम् (न), 'गलेमें सीधे लटकती हुई माला' का १ नाम है ॥

५ वैकक्षिकम् ( न ), 'जनेऊकी तरह तिर्छी पहनी हुई माला' का १ नाम है ॥

६ आपीडः, शेखरः (२ पु), 'शिखामें रक्खी हुई माला' के २ नाम हैं ॥

७ रचना ( स्त्री ), परिस्यन्दः ( + परिस्पन्दः । पु ), 'माला आदि को बनाने ( गूथने )' के २ नाम हैं ॥

८ आभोगः ( पु ), परिपूर्णता ( स्त्री ), 'सेवा-शुश्रूषा आदि सब प्रकारके उपचारोंसे परिपूर्ण होने' के २ नाम हैं ॥

९ उपधानम् ( न ), उपबर्हः ( पु ), 'तकिया' के २ नाम हैं ॥

१० शय्या ( स्त्री ), शयनीयम् , शयनम् ( २ न ), 'शय्या, बिछौना' के ३ नाम हैं। ( 'भा० दी० मतसे 'तोसक आदि' के ये ३ नाम हैं' ) ॥

११ मञ्चः, पर्यङ्कः, पल्यङ्कः ( ३ पु ), खट्वा ( स्त्री ), 'पलँग, खटिआ आदि' के ४ नाम हैं। ( किसी २ के मतसे 'मञ्च' यह १ नाम 'मचान या

---

१. 'स्यात्परिस्पन्दः' इति पाठान्तरम् ॥

१ गेन्दुकः कन्दुको २ दीपः प्रदीपः ३ पीठमासनम् ॥ १३८ ॥
४ समुद्गकः संपुटकः ५ प्रतिग्राहः पतद्ग्रहः।
६ प्रसाधनी कङ्कतिका ७ पिष्टातः पटवासकः ॥ १३९ ॥
८ दर्पणे [1]मुकुरादर्शौ ९ व्यजनं तालवृन्तकम्।

इति मनुष्यवर्गः ॥ ६ ॥

---

ऊंचे सिंहासन आदि' का और 'पर्यङ्कः, पल्यङ्कः' ये २ नाम 'पलंग, मसहरी आदि' के तथा 'खट्वा' यह एक नाम 'खटिया' का है ) ॥

१ गेन्दुकः ( + गिन्दुकः, गेण्डुकः, गण्डूकः ), कन्दुकः ( २ पु ), 'गेंद' के २ नाम हैं ॥

२ दीपः, प्रदीपः ( + स्नेहाशः, कज्जलध्वजः, दशेन्धनः, गृहमणिः, दोषातिलकः शिखातरुः, दीपवृक्षः, ज्योत्स्नावृक्षः ;[2] ८ पु । २ पु ) 'चिराग' के २ नाम हैं ॥

३ पीठम्, आसनम् ( २ न ), 'आसन' के २ नाम हैं ॥

४ समुद्गकः, संपुटकः ( २ पु ), 'डब्बा सम्पुट' के २ नाम हैं ॥

५ प्रतिग्राहकः ( वै० प्रतिग्रहः ), पतद्ग्रहः ( २ पु ), 'उगलदान, पिकदान' के २ नाम है ॥

६ प्रसाधनी, कङ्कतिका ( २ स्त्री ), 'कङ्घी' के २ नाम हैं ॥

७ पिष्टातः, पटवासकः ( २ पु ), 'बुक्का' के २ नाम हैं ॥

८ दर्पणः, मुकुरः ( + मकुरः, मङ्कुरः ), आदर्शः ( + आत्मदर्शः । ३ पु ), 'शीशा-आइना' के ३ नाम हैं।

९ व्यजनम्, तालवृन्तकम् । ( + तालवृन्तम् । २ न), 'पंखा' के २ नाम हैं ॥

इति मनुष्यवर्गः ॥ ६ ॥

---

१. 'मकुरादर्शौ' इति पाठान्तरम् ॥

२. तदुक्तं त्रिकाण्डशेषे—'—दीपस्तु स्नेहाशः कज्जलध्वजः।
दशेन्धनो गृहमणिः दोषातिलक इत्यपि ॥ १ ॥
शिखातरुर्दीपवृक्षो ज्योत्स्नावृक्षोऽपि—' इति ॥

## ७ अथ ब्रह्मवर्गः ।

१ सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ ।
वंशोऽन्ववायः सन्तानो २ वर्णाः स्युर्ब्राह्मणादयः ॥ १ ॥
३ विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् ।
४ [1]राजबीजी राजवंश्यो ५ बीज्यस्तु कुलसंभवः ॥ २ ॥
६ [2]महाकुलकुलीनार्यसभ्यसज्जनसाधवः ।
७ ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥ ३ ॥
आश्रमोऽस्त्री—

---

## ७. अथ ब्रह्मवर्गः ।

१ सन्ततिः ( स्त्री ), गोत्रम् , जननम् , कुलम् ( ३ न ), अभिजनः, अन्वयः, वंशः, अन्ववायः, सन्तानः ( ५ पु ), 'वंश, कुल, खान्दान' के ९ नाम हैं ॥

२ वर्णः ( पु ), 'ब्राह्मण, क्षत्रिय, वैश्य और शूद्र ये ४ [3]'वर्ण' हैं ॥

३ चातुर्वर्ण्यम् ( न ), 'ब्राह्मण आदि पूर्वोक्त चार वर्णोंके समुदाय' का १ नाम है ॥

४ राजबीजी ( = राजबीजिन् ), राजवंश्यः ( २ पु ), 'राजकुलमें उत्पन्न व्यक्ति' के २ नाम हैं ॥

५ बीज्यः, कुलसंभवः ( २ पु ), 'कुलमें उत्पन्न व्यक्ति' के २ नाम हैं ॥

६ महाकुलः ( + माहाकुलः ), कुलीनः ( + कुल्यः, कौलेयकः ), आर्यः, सभ्यः, सज्जनः, साधुः ( ६ पु ), 'सज्जन, उत्तम कुलमें उत्पन्न व्यक्ति' के ६ नाम हैं ॥

७ ब्रह्मचारी ( = ब्रह्मचारिन् ), गृही ( = गृहिन् ), वानप्रस्थः, भिक्षुः ( ४ पु ), ये चार 'आश्रम' शब्दवाच्य हैं अर्थात् आश्रमः ( पु न ), 'ब्रह्मचर्याश्रमः, गृहस्थाश्रमः, वानप्रस्थाश्रमः, संन्यासाश्रमः (४ पु न), ये ४ 'आश्रम' हैं।

---

१. राजबीजी राजवंश्यो बीज्यस्तु' इति पाठान्तरम् ॥

२. 'माहाकुलकुलीनार्य—' इति पाठान्तरम् ॥

३. तदुक्तं याज्ञवल्क्येन—
'ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः' । इति याज्ञ० १।१० ॥

—१ द्विजात्यग्रजन्मभूदेववाडवाः।
विप्रश्च ब्राह्मणोऽसौ षट्कर्मा यागादिभिर्वृतः ॥ ४ ॥
३ विद्वान् विपश्चिद्दोषज्ञः सन् सुधीः कोविदो बुधः।
धीरो मनीषी ¹ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः ॥ ५ ॥
धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः।
दूरदर्शी दीर्घदर्शी—

---

१ द्विजातिः ( + द्विजः ), ²अग्रजन्मा ( = अग्रजन्मन् ), भूदेव ( + महीसुरः, भूसुरः,...), वाडवः, विप्रः, ब्राह्मणः ( ६ पु ), 'ब्राह्मण' के ६ नाम हैं ॥

२ ³षट्कर्मा ( = षट्कर्मन्, पु ), 'यज्ञ करना, पढ़ना, दान देना, यज्ञ कराना, पढ़ाना और दान लेना; इन⁴ ६ कर्मोंसे युक्त ब्राह्मण' का १ नाम है ॥

३ विद्वान् ( = विद्वस् ), विपश्चित्, दोषज्ञः, सन् ( = सत् ); सुधीः, कोविदः, बुधः, धीरः, मनीषी ( = मनीषिन् ), ज्ञः, प्राज्ञः ( + प्रज्ञः ), संख्यावान् ( = संख्यावत् ), पण्डितः, कविः, धीमान् ( = धीमत् ), सूरिः ( + सूरी = सूरिन् ), कृती ( = कृतिन् ), कृष्टिः, लब्धवर्णः, विचक्षणः, दूरदर्शी ( = दूरदर्शिन् । + दूरदृक् = दूरदृश् ), दीर्घदर्शी ( + दीर्घदर्शिन् । २२ पु ), 'विद्वान्' के २२ नाम हैं ॥

---

१. 'ज्ञः प्रज्ञः' इति पाठान्तरम् ॥
२. ब्राह्मणोऽस्य मुखमासीत्' इति श्रुतेरित्यवधेयम् ॥
३. तदुक्तम्—'इज्याऽध्ययनदानानि याजनाध्यापनं तथा।
प्रतिग्रहश्च तैर्युक्तः षट्कर्मा विप्र उच्यते' ॥ १ ॥ इति ॥
४ ब्राह्मणानां षट् कर्माण्याह मनुः—
'अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहश्चैव ब्राह्मणानामकल्पयत्' ॥ २ ॥ इति मनुः १।८८

—१ श्रोत्रियच्छान्दसौ समौ ॥ ६ ॥

२ [1]मीमांसको जैमिनीये ३ वेदान्ती ब्रह्मवादिनि ( १६ )

४ वैशेषिके स्यादौलूक्यः ५ सौगतः शून्यवादिनि (१७)

६ [2]नैयायिकस्त्वक्षपादः—

१ [3]श्रोत्रियः, छान्दसः ( २ पु ), 'वेद पढ़नेवाले ब्राह्मण' के २ नाम हैं ॥

२ [ मीमांसकः, जैमिनीयः (२ पु), 'मीमांसक' अर्थात् 'मीमांसा शास्त्रको जाननेवाले' के २ नाम हैं ] ॥

३ [ वेदान्ती ( =वेदान्तिन् ), ब्रह्मवादी ( =ब्रह्मवादिन् । २ पु ), 'वेदान्ती' अर्थात् 'वेदान्त शास्त्र जाननेवाले' के २ नाम हैं ] ॥

४ [ वैशेषिकः, औलूक्यः ( २ पु ), 'कणादिसम्मत द्रव्य आदि ('द्रव्य, गुण, कर्म, सामान्य, विशेष, समवाय, अभाव' ) [4]'सात पदार्थोंका माननेवाले' के २ नाम हैं ] ॥

५ [ सौगतः शून्यवादी ( =शून्यवादिन् । २ पु ), 'संसारका कारण शून्य ( कोई नहीं ) है, इस सिद्धान्तको माननेवाले नास्तिक' के २ नाम हैं ] ॥

६ [ नैयायिकः, अक्षपादः ( +आक्षपादः । २ पु ), 'गौतमसम्मत प्रमाण आदि ('प्रमेय, संशय, प्रयोजन, दृष्टान्त, सिद्धान्त, अवयव, तर्क, निर्णय,

---

१. 'मीमांसको.........साङ्ख्यकापिलौ' इत्येष क्षेपकांशः क्षी० स्वा० व्याख्याने समुपलभ्यत इत्यवधेयम् ॥

२. 'नैयायिकस्त्वाक्षपादः' इति पाठ' क्षी० स्वा० व्याख्योक्तः ॥

३. तदुक्तं हेमाद्रिणा चतुर्वर्गचिन्तामणौ दानखण्डस्य तृतीयप्रकरणे —

'एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा ।
षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्' ॥ १ ॥

इति च० चिन्ता० पृ० २७ ॥

४. तथा चाह विश्वनाथः—

'द्रव्यं गुणस्तथा कर्म सामान्यं च विशेषकम् ।
समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः ॥ १ ॥

इति सिद्धा० मुक्ता० १।१ ॥

—१ स्यात्स्याद्वादिक आर्हकः (१८)
२ चार्वाकलौकायतिकौ ३ [1]सत्कार्ये साङ्ख्यकापिलौ (१९)
४ उपाध्यायोऽध्यापकोऽथ स्यान्निषेकादिकृद् गुरुः।

---

वाद, जल्प, वितण्डा, हेत्वाभास, छल, जाति, निग्रहस्थान') [2]सोलह पदार्थोंको माननेवाले नैयायिक' के २ नाम हैं॥

१ [ स्याद्वादिकः, आर्हकः ( + आर्हतः। २ पु ), 'मोक्ष है तो हो और नहीं है तो न हो इस सिद्धान्तको माननेवाले' के २ नाम हैं ]॥

२ [ चार्वाकः, लौकायतिकः (२ पु), 'बौद्ध' अर्थात् 'बुद्धदेवके मतानुयायी' के २ नाम हैं ]॥

३ [ साङ्ख्यः, कापिलः ( २ पु ), 'कपिलमुनिसम्मत सांख्यशास्त्रके सिद्धान्तको माननेवाले' के २ नाम हैं ]॥

४ [3] उपाध्यायः, अध्यापकः (२ पु), 'उपाध्याय' अर्थात् 'वेदके एकदेशको या वेदाङ्गोंको वृत्तिके लिये पढ़ानेवाले' के २ नाम हैं॥

५ [4] गुरुः (पु), 'गुरु' अर्थात् 'निषेकादि संस्कारको सविधि करके अन्नादिसे पालन करते हुए पढ़ानेवाले' का १ नाम है॥

---

१. 'सत्कार्यौ' इति पाठः क्षी० स्वा० व्याख्योक्तः॥

२. तदुक्तम्—'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति न्या० द० १।१॥

३. उपाध्यायलक्षणमुक्तं मनुना—

'एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते'॥ १॥ इति मनुः २।१४१॥

गुरुलक्षणमुक्तं मनुना—

'निषेकादीनि कर्माणि यः करोति यथाविधि।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते'॥ १॥ इति मनुः २।१४२॥

१ मन्त्रव्याख्याकृदाचार्य २ [1]आदेष्टा त्वध्वरे व्रती ॥ ७ ॥
यष्टा च यजमानश्च ३ स सोमवति दीक्षितः।
४ इज्याशीलो यायजूको ५ यज्वा तु विधिनेष्टवान् ॥ ८ ॥
६ [2]स गीर्पतीष्ट्या स्थपतिः ७ सोमपीथी तु सोमपाः।
८ सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥ ९ ॥

---

१ [3]आचार्यः (पु), 'आचार्य' अर्थात् 'मन्त्रोंकी व्याख्या करनेवाले या शिष्यका यज्ञोपवीत संस्कारकर कल्प और रहस्यके सहित वेदको पढ़ानेवाले ब्राह्मण' का १ नाम है ॥

२ व्रती (=व्रतिन्), यष्टा (यष्टृ), यजमानः (पु), 'यजमान' अर्थात् 'यज्ञ करनेवाले' के ३ नाम हैं ॥

३ दीक्षितः (पु), 'सोमवत्' (अग्निष्टोमादि) यज्ञमें ऋत्विजोंको आदेश देनेवाले यजमान' का १ नाम है ॥

४ इज्याशीलः, यायजूकः (२ पु), 'बारबार यज्ञ करनेवाले' के २ नाम हैं ॥

५ यज्वा (=यज्वन् पु), 'विधिपूर्वक यज्ञ किये हुए' का १ नाम है ॥
६ स्थपतिः (पु), 'बृहस्पतिके मन्त्रसे यज्ञ करनेवाले' का १ नाम है ॥
७ सोमपीथी (=सोमपीथिन्। + सोमपीती = सोमपीतिन्), सोमपाः (+ सोमपः। २ पु), 'सोमयज्ञ करनेवाले' के २ नाम हैं ॥
८ सर्ववेदाः (=सर्ववेदस् पु), 'यज्ञमें सर्वस्व दक्षिणा देनेवाले' का १ नाम है। ('विश्वजित् आदि यज्ञोंमें सर्वस्व दक्षिणा दी जाती है, जैसे—

---

१. 'आदिष्टी इति पाठान्तरम् ॥
२. 'स तु गीष्पतीष्ट्या स्थपतिः सोमपीती तु सोमपाः' इति पाठान्तरम् ॥
३. आचार्यलक्षणमुक्तं मनुना—
'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते' ॥ १ ॥ इति मनुः २।१४० ॥

१ अनूचानः प्रवचने साङ्गेऽधीती २ गुरोस्तु यः।
लब्धानुज्ञः समावृत्तः ३ सुत्वा त्वभिषवे कृते ॥ १० ॥
४ छात्रान्तेवासिनौ शिष्ये ५ शैक्षाः प्राथमकल्पिकाः।
६ एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ॥ ११ ॥
७ सतीर्थ्यास्त्वेकगुरव८श्चितवानग्निमग्निचित् ।

[1]रघुने विश्वजित् यज्ञकर सर्वस्व दक्षिणा दी थी। विश्वजित् आदि यज्ञका यह नाम है, यह भा० दी० का मत चिन्त्य है' ) ॥

१ [2]अनूचानः ( पु ), 'व्याकरण आदि ६ अङ्गोंके सहित वेदको पढ़नेवाले' का १ नाम है ॥

२ समावृत्तः ( पु ), 'गुरुकी आज्ञा पाकर गृहस्थाश्रममें रहनेके लिये गुरुकुलसे लौटे हुए ब्रह्मचारी' का १ नाम है ॥

३ सुत्वा ( सुत्वन् पु ), 'यज्ञके अन्तमें अवभृथनामक स्नान किये हुए' का १ नाम है ॥

४ छात्रः, अन्तेवासी ( =अन्तेवासिन् ), शिष्यः ( ३ पु ), 'शिष्य, छात्र' के ३ नाम हैं ॥

५ शैक्षाः, प्राथमकल्पिकाः ( २ पु । बहुवचन अविवक्षित होनेसे एकवचन भी होता है। ) 'अध्ययनको प्रथम आरम्भ किये हुए ब्रह्मचारी आदि' के २ नाम हैं ॥

६ सब्रह्मचारिणः ( =सब्रह्मचारिन्, पु ) 'आपसमें समान वेद, समान व्रत और समान आचारवाले ब्रह्मचारियों का १ नाम है ॥

७ सतीर्थ्यः, एकगुरुः ( भा० दी० । २ ), 'सहपाठी, एक गुरुसे पढ़नेवाले' के २ नाम हैं ॥

८ अग्निचित् ( पु ), 'अग्निहोत्री' का १ नाम है ॥

---

१. यथाऽऽह रघुवंशे कविकुलकमलदिवाकरः कालिदासः—

'स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम्' इति रघुवंशः ४ । ८६ ॥

२. तदुक्तं हेमाद्रिणा चतुर्वर्गचिन्तामणौ दानखण्डस्य परिभाषाख्ये तृतीयप्रकरणे—

'वेदवेदाङ्गतत्त्वज्ञः शुद्धात्मा पापवर्जितः ।
शेषं श्रोत्रियवत्प्राप्तः सोऽनूचान इति स्मृतः' ॥ १ ॥

इति चतु० चिन्ता० दा० खं० पृ० २८ ॥

१ पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ॥ १२ ॥
२ उपज्ञा ज्ञानमाद्यं स्यात् ३ ज्ञात्वारम्भ उपक्रमः।
४ यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ॥ १३ ॥
५ पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः।
६ एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः ॥ १४ ॥

---

१ ऐतिह्यम् ( न ), इतिह ( अव्य० ), 'परम्परागत उपदेश' के २ नाम हैं ॥

२ उपज्ञा ( स्त्री ), 'गुरूपदेशके विना उत्पन्न सर्वप्रथम ज्ञान' का १ नाम है। ( 'जैसे—वाल्मीकिकी उपज्ञा 'रामायण' है और पणिनि की उपज्ञा 'अष्टाध्यायी सूत्रपाठ' है' ) ॥

३ उपक्रमः ( पु ), 'गुरु आदिसे ज्ञान प्राप्तकर आरम्भ करने'-का १ नाम है ॥

४ यज्ञः, सवः, अध्वरः, यागः, सप्ततन्तुः, मखः, क्रतुः ( ७ पु ), 'यज्ञ' के ७ नाम हैं ॥

५ पाठः ( पु ), 'वेदादिपाठ करने'को 'ब्रह्मयज्ञः' ( पु ); होमः ( पु ), 'हवन करने'को 'देवयज्ञः' ( पु ); अतिथीनां सपर्या, ( स्त्री ), 'अन्न, जलपान, शय्यादि देकर अतिथियोंके सत्कार करने'को 'नृयज्ञः' ( पु ); तर्पणम् ( न ), 'अन्न, जल, पिण्डदान, श्राद्ध, आदिसे पितरोंको सन्तुष्ट करने'को 'पितृयज्ञः' ( पु ); बलिः ( पु ), 'बलिवैश्वदेव अर्थात् काकादिको बलि देने या बलिदान करने'को 'भूतयज्ञः' ( पु ), कहते हैं ॥

६ ये (ब्रह्मयज्ञ, देवयज्ञ, अतिथियज्ञ, पितृयज्ञ और भूतयज्ञ) ५ महायज्ञः ( पु ), अर्थात् ''पञ्चमहायज्ञ' हैं ॥

---

१. तदुक्तं मनुना—अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ १ ॥
पञ्चैतान्यो महायज्ञान्—' इति मनुः ३।७०—७१ ॥

१ समज्या परिषद्गोष्ठी सभासमितिसंसदः।
आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥ १५ ॥
२ प्राग्वंशः प्राग्घविर्गेहात् ३ सदस्या विधिदर्शिनः।
४ सभासदः सभास्तारः सभ्याः सामाजिकाश्च ते ॥ १६ ॥
५ अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात्।

---

१ समज्या, परिषत् ( = परिषद् । + पर्षत् = पर्षद् ), गोष्ठी, सभा, समितिः, संसत् ( = संसद् ), आस्थानी ( ७ स्त्री ), आस्थानम् ( न ), सदः ( = सदस् न स्त्री ), [1]'सभा' के ९ नाम हैं। ( 'सम्प्रति सभा शब्दका सामान्यतः व्यवहार किया जाता है' ) ॥

२ प्राग्वंशः ( पु ), 'हवनशालाके पूर्व तरफ यजमानको बैठनेके लिये बनाये हुए स्थान या गृह-विशेष'का १ नाम है ॥

३ सदस्यः ( पु ), 'यज्ञमें न्यूनाधिक विधिको देखनेवाले ऋत्विग्विशेष' का १ नाम है ॥

४ सभासत् ( = सभासद् ), सभास्तारः, सभ्यः, सामाजिकः ( ४ पु ), 'सभासद' के ४ नाम हैं ॥

५ अध्वर्युः, उद्गाता ( = उद्गातृ ), होता ( = होतृ । ३ पु ), 'यजुर्वेद, सामवेद और ऋग्वेद जाननेवाले' का क्रमशः १—१ नाम है ॥

---

महर्षियाज्ञवल्क्येनाप्युक्तम्—
'बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः। भूतपित्रमरब्रह्ममनुष्याणां महामखाः' ॥ १ ॥
इति याज्ञ० स्मृतिः १।१०२ ॥
यथा वा—'पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः।
एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः' ॥ १ ॥ इति ॥
१. यथाऽऽह सभालक्षणं मनुः—
'यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः।
राज्ञश्चाधिकृतो विद्वान् ब्राह्मणस्तां सभां विदुः' ॥ १ ॥ इति मनुः ८।११॥

१ आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते ॥ १७ ॥
२ वेदिः परिष्कृता भूमिः ३ समे स्थण्डिलचत्वरे ।
४ चषालो यूपकटकः ५ कुम्बा सुगहना वृतिः ॥ १८ ॥
६ यूपाग्रं तर्म ७ निर्मन्थ्यदारुणि त्वरणिर्द्वयोः ।
८ [1]दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥ १९ ॥

१ [2] आग्नीध्र, ऋत्विक् ( = ऋत्विज् ), याजकः (३ पु), यज्ञ करनेवाला यजमान धन आदिसे जिसका वरण करे उन आग्नीध्र आदि ( ब्रह्मा, उद्गाता, होता, अध्वर्यु,……१७[3] ) यज्ञ करानेवाले ब्राह्मणों' के ३ नाम हैं ॥

२ वेदिः ( + वेदी । स्त्री ), 'यज्ञके लिये डमरु-तुल्याकार बनाई हुई या साफ की हुई भूमि' का १ नाम है ॥

३ स्थण्डिलम्, चत्वरम् ( २ न ), 'यज्ञके लिये साफ किये गये स्थान-विशेष' के २ नाम हैं । ( 'सम्प्रति चत्वर शब्दको चबूतरा के अर्थमें भी प्रयुक्त किया जाता है'

४ चषालः, यूपकटकः ( भा० दी० । २ ), 'यज्ञ-स्तम्भके ऊपर बलयाकार ( गोल ) बनाये हुए काष्ठ-विशेष' के २ नाम हैं ॥

५ कुम्बा (स्त्री), 'चण्डाल, अन्त्यज आदि यज्ञको न देख सकें, इस निमित्तसे यज्ञभूमिके चारों तरफ बनाये हुए घेरे का १ नाम है ॥

६ यूपाग्रम् , तर्म ( = तर्मन् । २ न ) 'यज्ञ-स्तम्भके ऊपरी भाग' के २ नाम हैं ॥

७ अरणिः ( पु स्त्री ) 'जिसको परस्परमें रगड़कर यज्ञार्थ अग्नि निकाली जाय, उस काष्ठ-विशेष' का १ नाम है ॥

८ दक्षिणाग्निः, गार्हपत्यः, आहवनीयः ( ३ पु ), ये ३ [4]"अग्निके भेद' हैं॥

---

१. 'कचित्तु त्रयाणां द्वन्द्वः पठ्यत' इति भा० दी० ॥

२. तथा हि कात्यः-'वृताः कुर्वन्ति ये यज्ञमृत्विजस्ते—' इति ॥

३. 'आद्यशब्दात् 'पोतृतप्रशास्तृब्राह्मणाच्छंस्यच्छावाग्ग्रावस्तुदुन्नेतृमैत्रावरुणप्रतिप्रस्थातृप्रतिहर्त्तृनेष्टृनेतृसुब्रह्मण्याः' इत्थं सप्तदशर्त्विजः' इति क्षी० स्वा० ॥

४. ब्राह्मणसर्वस्वे हलायुधेन पञ्चाग्नय उक्तास्तथा हि—

'आवसथ्याहवनीयौ दक्षिणाग्निस्तथैव च ।
अन्वाहार्यो गार्हपत्य इत्येते पञ्च वह्नयः ॥ १ ॥ इति ॥

१ अग्नित्रयमिदं त्रेता २ प्रणीतः संस्कृतोऽनलः।
३ समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः ॥ २० ॥
४ यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते।
तस्मिन्नानाय्यो ५ ऽथाग्नायी स्वाहा च हुतभुक्प्रिया ॥ २१ ॥
६ ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने।
७ गायत्रीप्रमुखं छन्दो—

१ त्रेता ( स्त्री ), 'दक्षिणाग्नि, गार्हपत्याग्नि और आहवनीयाग्नि इन तीन अग्नियोंके समुदाय' का १ नाम है ॥

२ प्रणीतः ( पु ), 'मन्त्रसे संस्कृत अग्नि' का १ नाम है ॥

३ समूह्यः, परिचाय्यः उपचाय्यः ( ३ पु ), 'यज्ञ-सम्बन्धी अग्निका स्थान-विशेष, या स्थान विशेषकी अग्नि' के ३ नाम हैं ॥

४ आनाय्यः ( पु ), 'गार्हपत्यनामक अग्निसे लाकर मन्त्रसे संस्कृत दक्षिणाग्नि' का १ नाम है ॥

५ अग्नायी, स्वाहा, हुतभुक्प्रिया ( + अग्निप्रिया । ३ स्त्री ), 'अग्निकी स्त्री, स्वाहा' के ३ नाम हैं ॥

६ सामिधेनी, धाय्या ( २ स्त्री ), 'अग्निमें समिधा (लकड़ी) छोड़कर अग्निको जलानेमें प्रयोग किये जानेवाले मन्त्र' के २ नाम हैं ॥

७ छन्दः ( = छन्दस् , न ), 'गायत्री आदि छन्द' का १ नाम है। उक्ता १, अत्युक्ता २, मध्या ३, प्रतिष्ठा ४, सुप्रतिष्ठा ५, गायत्री ६, उष्णिक् ७, अनुष्टुप् ८, बृहती ९, पङ्क्ति १०, त्रिष्टुप् ११, जगती १२, अतिजगती १३, शक्करी १४, अतिशक्करी १५, अष्टि १६, अत्यष्टि १७, धृति १८ अतिधृति १९, कृति २०, प्रकृति २१, आकृति २२, विकृति २३, संस्कृति २४, अतिकृति २५, उत्कृति २६, ये छब्बीस [1]छन्द होते हैं। किसी २ ने 'गायत्री……उत्कृति' तक २१ ही छन्द माने हैं' ) ॥

१. वृत्तरत्नाकरे केदारेण छन्दोलक्षणमुक्तम् । तथा हि—
'आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्धितैः ।
पृथक् छन्दो भवेत्पादैर्यावत्षड्विंशतिं गतम्' ॥ १ ॥ इति वृ० र० १।१७

१ हव्यपाके चरुः पुमान् ॥ २२ ॥
२ आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः ।
३ [1]धुवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा ॥ २३ ॥
४ पृषदाज्यं सदध्याज्ये ५ परमान्नं तु पायसम् ।
६ हव्य ७ कव्ये [2]दैवपित्र्ये अन्ने—

१ चरुः ( पु ), 'अग्निमें हवन किये जानेवाले अन्न' का १ नाम है ॥

२ आमिक्षा ( + आमीक्षा मु० । स्त्री ), 'औटे हुए गर्म दूधमें दही छोड़नेपर उत्पन्न विकार-विशेष या छाँछ' का १ नाम है ॥

३ धुवित्रम् ( + धवित्रम् । न ), 'यज्ञ में आग सुलगाने के वास्ते मृगचर्मके बने हुए पंखे' का १ नाम है ॥

४ पृषदाज्यम् ( + पृषातकम् । न) 'दही मिले हुए घी' का १ नाम है ॥

५ परमान्नम् , पायसम् ( २ न ), 'खीर, हविष्य' के २ नाम हैं ॥

६ हव्यम् ( न ), 'देवान्न' अर्थात् 'हवनके द्वारा देवताओंके उद्देश्यसे दिये जानेवाले अन्न-विशेष' का १ नाम है ॥

७ कव्यम् ( न ), 'पित्र्यान्न' अर्थात् 'ब्राह्मण-भोजनादिके द्वारा पितरोंके उद्देश्यसे दिये जानेवाले अन्न-विशेष' का १ नाम है ॥

---

तेषां नामानि च तेनैवोक्तानि । तथा हि—

'उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठाऽन्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव ॥ १ ॥
त्रिष्टुप् च जगती चैव तथाऽतिजगती मता ।
शक्वरी सातिपूर्वा स्यादष्ट्यत्यष्टी ततः स्मृते ॥ २ ॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः संस्कृतिश्चापि तथाऽतिकृतिरुत्कृतिः' ॥ ३ ॥

इति वृत्तरत्नाकरः १।१९–२१ ॥

गङ्गादासरछन्दोमञ्जर्यान्तु 'उक्ता-अत्युक्ता-शक्वरी'णां स्थाने 'उक्था' अत्युक्था, शक्वरी' इत्येवं नामान्याह ॥

१. 'धवित्रं—' इति पाठान्तरम् ॥ २. 'दैवपित्र' इति पाठान्तरम् ॥

—१ पात्रं स्रुवाधिकम् ॥ २४ ॥
२ ध्रुवोपभृज्जुहू ३ र्ना तु स्रुवो भेदाः [1]स्रुचः स्त्रियः ।
४ उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः ॥ २५ ॥
५ परम्पराकं [2]शमनं प्रोक्षणं च वधार्थकम् ।
६ वाच्यलिङ्गाः प्रमीतोपसंपन्नप्रोक्षिता हते ॥ २६ ॥
७ सान्नाय्यं हवि ८ रग्नौ तु हुतं त्रिषु वषट्कृतम् ।
९ दीक्षान्तोऽवभृथो यज्ञे १० तत्कर्मार्हं तु यज्ञियम् ॥ २७ ॥

---

१ पात्रम् ( न ), 'स्रुवा आदि ( चमस, प्रोक्षणी, प्रणीता, सूर्प, व्यजन, उलूखल, मुसल, ग्रह, ······) बर्तन' का १ नाम है ॥

२ ध्रुवा, उपभृत् , जुहूः ( ३ स्त्री ), ये ३ 'स्रुवाके भेद' हैं ॥

३ +स्रुवः ( पु ), स्रुक् ( = स्रुच् । +स्रुः । स्त्री ), 'स्रुवा' अर्थात् 'अग्निमें घी डालनेवाले काष्ठनिर्मित यज्ञ-पात्र-विशेष' के २ नाम हैं ॥

४ उपाकृतः ( पु ), 'वेदमन्त्रसे अभिमन्त्रित कर यज्ञमें मारे हुए पशु' का १ नाम है ॥

५ परम्पराकम् , शमनम् ( +शसनम्, ससनम् ), प्रोक्षणम् ( ३ न ), 'यज्ञमें पशुको मारने' के ३ नाम हैं ॥

६ प्रमीतः, उपसंपन्नः, प्रोक्षितः ( ३ त्रि ), 'यज्ञमें मारे हुए पशु' के ३ नाम हैं ॥

७ सान्नाय्यम् , हविः ( = हविष् , भा० दी० । २ न ), 'हवन करने योग्य हविष्य आदि पदार्थ' के २ नाम हैं ॥

८ हुतम् ( भा० दी० ), वषट्कृतम् ( २ त्रि ), 'अग्निमें हवन किये हुए हविष्य आदि पदार्थ' के २ नाम हैं ॥

९ अवभृथः ( पु ), 'यज्ञके अन्तमें किये जानेवाले यज्ञ-समाप्ति-सूचक स्नान-विशेष' का १ नाम हैं ॥

१० यज्ञियम् ( त्रि ), 'यज्ञके योग्य पदार्थ' का १ नाम है । ('जैसे— 'ब्राह्मण, हविष्यादि अन्न, स्थान······') ॥

---

१. 'स्रुवः' इति पाठान्तरम् ॥

२. 'शसनम्' इति शुद्धः पाठः इति क्षी० स्वा० । 'ससनम्' इत्यन्य इति भा० दी० ॥

१इष्टं२ऽथ क्रतुकर्मेष्टं २ पूर्तं खातादि कर्म यत् ।
३ अमृतं ४ विघसो यज्ञशेषभोजनशेषयोः ॥ २८ ॥
५ त्यागो विहापितं दानमुत्सर्जनविसर्जने ।
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥ २९ ॥
प्रादेशनं निर्वपण-मपवर्जनमंहतिः ।

---

१ [1]इष्टम् ( न ), 'यज्ञ कार्य, दान देने' का १ नाम है ॥

२ [2]पूर्तम् ( न ), 'बावली, कुआँ, तालाब आदि खुदवाने तथा औषधालय, देवालय आदि बनवाने' का १ नाम है ॥

३ [3]अमृतम् ( न ), 'यज्ञसे बचे हुए हविष्य' का १ नाम है ॥

४ [4]विघसः ( पु ), 'ब्राह्मण, अतिथि आदिके भोजनके बाद बचे हुए अन्न' का १ नाम है ॥

५ त्यागः ( पु ), विहापितम्, दानम्, उत्सर्जनम् ( + उत्सर्गः, पु ), विसर्जनम्, विश्राणनम्, वितरणम्, स्पर्शनम्, प्रतिपादनम्, प्रादेशनम्, निर्वपणम्, अपवर्जनम् ( ११ न ) अंहतिः ( स्त्री ), 'दान देने' के १२ नाम हैं ॥

---

१. हेमाद्रौ दानखण्डे शङ्खोक्तमिष्टलक्षणं यथा—

'अग्निहोत्रं तपः सत्यं वेदानां चैव पालनम् । आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ॥ १ ॥
एकाग्निकादौ यत्कर्म त्रेतायां यच्च हूयते । अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते' ॥ २ ॥
इति हेमा० दा० खं० पृ० २१ ॥

२. हेमाद्रौ दानखण्डे शङ्खोक्तं पूर्त्तलक्षणम्—
'रोगिणां परिचर्या च पूर्त्तमित्यभिधीयते' । इति
व्यासोक्तम्—'पुष्करिण्यस्तथा वाप्यो देवतायतनानि च ।
अन्नदानमथारामाः पूर्त्तमित्यभिधीयते ॥ १ ॥ इति ।
नारदोक्तम्—
'ग्रहोपरागे यद्दानं सूर्यसंक्रमणेषु च ।
द्वादश्यादौ तु यद्दानं तदेतत्पूर्त्तमुच्यते' ॥१॥ इति हेमा० दा० खं० पृ० २१ ॥

३-४. अमृतविघसयोर्लक्षणं मनुराह । तद्यथा—
'विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः ।
विघसो भुक्तशेषं तु यज्ञशेषं तथाऽमृतम्' ॥ १ ॥ इति मनुः ३ । २८५ ॥

१ मृतार्थे [1]तदहे दानं त्रिषु स्यादौर्ध्वदेहिकम् ॥ ३० ॥
२ पितृदानं निवापः स्यात् ३ श्राद्धं तत्कर्म शास्त्रतः ।
४ [2]अन्वाहार्यं मासिके ५ ऽशोऽष्टमोऽह्नः [3]कुतपोऽस्त्रियाम् ॥ ३१ ॥
६ पर्येषणा परीष्टिश्चा ७ न्वेषणा च गवेषणा ।

१ और्ध्वदेहिकम् ( + और्ध्वदैहिकम् । न ) 'मरे हुएके उद्देश्यसे मरने के दिनसे एकादशाह तक दिये हुए पिण्ड-दान आदि' का १ नाम है ॥

२ पितृदानम् ( न ), निवापः ( पु ), 'सपिण्डीकरणके बाद पितरोंके उद्देश्यसे दिये हुए पिण्ड-दान' का १ नाम है ॥

३ श्राद्धम् ( न ), 'श्राद्ध' अर्थात् 'पितरोंके उद्देश्यसे शास्त्रानुसार किये जानेवाले पिण्डदान आदि कार्य' का १ नाम है ॥

४ [1]अन्वाहार्यम् ( न ), मासिकः ( पु, भा० दी० ); 'अमावस्याको किये जानेवाले मासिक श्राद्ध' के २ नाम हैं ॥

५ [2]कुतपः ( + कुतुपः । पु न ), 'दिनका आठवाँ हिस्सा, सप्तम मुहूर्त ( १४ घटी ) के उपरान्त तथा नवम मुहूर्त ( १७–१८ घटी ) के मध्यका श्राद्ध योग्य समय विशेष' का १ नाम है ॥

६ पर्येषणा, परीष्टिः ( २ स्त्री ), महे० मतसे 'श्राद्धमें ब्राह्मणोंकी सेवा करने' के २ नाम हैं ॥

७ अन्वेषणा, गवेषणा ( २ स्त्री ), महे० मतसे 'धर्मान्वेषण करने' के २ नाम हैं । ( 'भा० दी० मतसे 'पर्येषणा·········' ४ नाम 'धर्मादिके खोज करने' के हैं' ) ॥

---

१. 'तदहर्दानं त्रिषु स्यादौर्ध्वदैहिकम्' इति पाठान्तरम् ॥

२. तदाह मनुः—'पितृयज्ञं तु निर्वर्त्य विप्रश्चेन्दुक्षयेऽग्निमान् ।
पिण्डान्वाहार्य्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥ १ ॥
पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः ।
तच्चामिषेण कर्तव्यं प्रशस्तेन प्रयत्नतः' ॥२॥ इति मनुः ३।१२२–१२३॥

३. कुतपलक्षणं यथा—
'मुहूर्त्तात्सप्तमादूर्ध्वं मुहूर्त्तान्नवमादधः । स कालः कुतपो ज्ञेयः······' इति ॥
'दिवसस्याष्टमे भागे मन्दीभवति भास्करे ।
स कालः कुतपो यत्र पितृभ्यो दत्तमक्षयम्' ॥ १ ॥ इति स्मृतिरिति । क्षी० स्वा० ॥

१ सनिस्त्वध्येषणा २ [1]याञ्चाऽभिशस्तिर्याचनाऽर्थना ॥ ३२ ॥
३ षट् तु त्रिष्व ४ र्घ्यमर्घार्थे ५ पाद्यं पादाय वारिणि ।
६ क्रमादातिथ्यातिथेये　अतिथ्यर्थेऽत्र　साधुनि ॥ ३३ ॥
८ स्युरावेशिक　आगन्तुरतिथिर्ना　गृहागते ।
९ [2]"प्राघूर्णिकः प्राघुणकश्च—

१ सनिः, अध्येषणा ( २ स्त्री ), 'गुरु' पिता, माता आदि श्रेष्ठ जनोंकी सेवा करने और प्रार्थनापूर्वक गुरु आदि श्रेष्ठ जनोंको किसी काममें प्रवृत्त करने' के २ नाम हैं ॥

२ याच्ञा, अभिशस्तिः ( +अभिषस्तिः ), याचना, अर्थना ( ४ स्त्री ), 'याचना करने, माँगने' के ४ नाम हैं ॥

३ यहां से ६ शब्द त्रिलिङ्ग हैं ॥

४ अर्घ्यम् ( त्रि ), 'अर्घ ( अर्घ्य देने ) के लिये जल' का १ नाम है ॥

५ पाद्यम् ( त्रि ), 'पाद्य ( पैर धोने ) के लिये जल' का १ नाम है ॥

६ आतिथ्यम् ( त्रि ), 'अतिथियों के निमित्त वस्तु' का १ नाम है ॥

७ आतिथेयम् ( त्रि), 'अतिथियोंके विषयमें सज्जन ( अच्छा व्यवहार करनेवाले ), का १ नाम है ॥

८ आवेशिकः, आगन्तुः ( २ त्रि ), [3]अतिथिः ( +अतिथिः पु; अतिथी स्त्री ), 'अतिथि' के ३ नाम हैं ॥

२ [ प्राघूर्णिकः, प्राघुणकः ( +आवेशिकः । २ पु ), 'अभ्यागत' के २ नाम हैं ] ॥

१. 'याञ्चाऽभिषस्ति—' इति पाठान्तरम् ॥

२. प्राघूर्णिकः.........गौरवम्' इत्यंशः क्षी० स्वा० व्याख्यायामुपलभ्यत इत्यवधेयम् ॥

३. अतिथिलक्षणान्युच्यन्ते—

तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना ।
सोऽतिथिः सर्वभूतानां शेषानभ्यागतान्विदुः' ॥ १ ॥ इति यमः ॥

क्वचित्तु—'शेषः प्राघुणिकः स्मृतः' इति तुरीयपादः ॥

'दूराच्चोपगतं श्रान्तं वैश्वदेव उपस्थितम् ।
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः' ॥ १ ॥ इति व्यासश्च ॥
'अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः' इति याज्ञ० १।१११ ॥

—१ अभ्युत्थानं तु गौरवम्' ( २० )
२ पूजा नमस्याऽपचितिः सपर्याऽर्चार्हणाः समाः ॥ ३४ ॥
३ वरिवस्या तु शुश्रूषा [1]परिचर्याप्युपासना ।
४ व्रज्याऽटाट्या पर्यटनं ५ चर्या त्वीर्यापथे स्थितिः ॥ ३५ ॥
६ उपस्पर्शस्त्वाचमन ७ मथ मौनमभाषणम् ।
८ [2]'प्राचेतसश्चादिकविः स्यान्मैत्रावरुणिश्च सः ( २१ )
[3]वाल्मीकश्चा ९ थ गाधेयो विश्वामित्रश्च कौशिकः ( २२ )

१ [ अभ्युत्थानम् , गौरवम् ( २ न ), 'अभ्युत्थान' अर्थात् 'बड़े लोगोंके आनेपर उठकर अगवानी करने' के २ नाम हैं ] ॥

२ पूजा, नमस्या, अपचितिः, सपर्या, अर्चा, अर्हणा ( ६ स्त्री ), 'पूजा' के ६ नाम हैं ॥

३ वरिवस्या, शुश्रूषा, परिचर्या (+ उपचर्या, परेष्टिः), उपासना ( + न । ४ स्त्री ), 'शुश्रूषा करने' के ४ नाम हैं ॥

४ व्रज्या, अटाट्या ( + अटा, अट्या, महे० । २ स्त्री ), पर्यटनम् (+ भ्रमणम् । न ), 'घूमने' के ३ नाम हैं ॥

५ चर्या ( + ईर्या मुनि० । स्त्री ), 'ध्यान' मौन इत्यादि योगमार्गोंमें स्थित होने' का १ नाम है ॥

६ उपस्पर्शः ( पु ), आचमनम् ( न), 'आचमन करने' के २ नाम हैं ॥

७ मौनम् , अभाषणम् ( २ न ), मौन या चुप रहने' के २ नाम हैं ॥

८ [ प्राचेतसः, आदिकविः, मैत्रावरुणिः ( मैत्रावरुणः ), वाल्मीकः (+ वाल्मीकिः, वल्मीकः, वल्मिकः । ४ पु ), 'वाल्मीकि मुनि' के ४ नाम हैं ] ॥

९ [ गाधेयः, विश्वामित्रः, कौशिकः ( + कौषिकः । ३ पु ), 'विश्वामित्र मुनि' के ३ नाम हैं ] ॥

---

१. 'परिचर्याप्युपासनम्' इति पाठान्तरम् ।
२. 'प्राचेतसः…………सुतः' अयं क्षेपकांशः क्षी० स्वा० व्याख्याने समुपलभ्यते ॥
३. 'वाल्मीकिश्चाथ' इति पाठान्तरम् ॥

१ व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः' (२३)
२ आनुपूर्वी स्त्रियां [1]वावृत्परिपाटी अनुक्रमः॥ ३६॥
पर्यायश्चा ३ तिपातस्तु स्यात्पर्यय उपात्ययः।
४ नियमो व्रतमस्त्री ५ तच्चोपवासादि पुण्यकम्॥ ३७॥
६ [2]औपवस्तं तूपवासो ७ विवेकः पृथगात्मता।
८ स्याद् ब्रह्मवर्चसं वृत्ताध्ययनर्धि ९ रथाञ्जलिः॥ ३८॥
पाठे ब्रह्माञ्जलिः—

---

१ [ व्यासः, द्वैपायनः, पाराशर्यः, सत्यवतीसुतः (४ पु), 'व्यास मुनि' के ४ नाम हैं॥

२ आनुपूर्वी (स्त्री। + आनुपूर्व्यम्), आवृत्, परिपाटी (+ परिपाटिः। २ स्त्री), अनुक्रमः, पर्यायः (२ पु) 'क्रम' अर्थात् 'सिलसिला' के ५ नाम हैं॥

३ अतिपातः, पर्ययः, उपात्ययः, (३ पु), 'विना क्रम' अर्थात् 'बेसिल-सिला' के ३ नाम हैं॥

४ नियमः (पु), व्रतम् (न पु), 'नियम या व्रत' के २ नाम हैं॥

५ पुण्यकम् (न), 'उपवासादि (सान्तपन, कृच्छ्र, अतिकृच्छ्र, प्राजा-पत्य, चान्द्रायण आदि) शास्त्र-विहित व्रत' का १ नाम है॥

६ औपवस्तम् (+ औपवस्त्रम्, उपवस्तम्। न), उपवासः (+ उपो-षितम्, उपोषणम्। पु), 'उपवास, उपास' के २ नाम हैं॥

७ विवेकः (पु), पृथगात्मता (भा० दी०, स्त्री), 'प्रकृति और पुरुषके भेद-ज्ञान या भावोंके पृथक् स्वरूप-ज्ञान' के २ नाम हैं॥

८ ब्रह्मवर्चसम् (न), वृत्ताध्ययनर्द्धिः (भा० दी०, स्त्री) 'ब्रह्मवर्चस' अर्थात् 'सदाचार और वेदाभ्यासकी वृद्धि या सम्पत्ति' के २ नाम हैं॥

९ [4]ब्रह्माञ्जलिः (पु), 'वेदादि पढ़नेके पहले और अन्तमें

---

१. 'वावृत्परिपाटिरनुक्रमः' इति पाठान्तरम्॥ २. 'औपवस्त्रम्' इति पाठान्तरम्॥

३. यथाऽऽह मनुः—'ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः॥ १॥
व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः'॥ २॥ इति मनुः २।७१-७२

—१ पाठे [1]विप्रुषो ब्रह्मबिन्दवः।

२ ध्यानयोगासने ब्रह्मासनं ३ कल्पे विधिक्रमौ॥ ३९॥

४ मुख्यः स्यात्प्रथमः कल्पो ५ ऽनुकल्पस्तु ततोऽधमः।

२ संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः॥ ४०॥

७ समे तु पादग्रहणमभिवादनमित्युभे।

---

व्यस्त हाथसे (दहने हाथसे दहिना और बायें हाथसे बायाँ) गुरुके पैरको छूकर प्रमाण करने' का १ नाम है॥

१ ब्रह्मबिन्दुः (पु), 'वेदादि पढ़नेके समय मुखसे निकले हुए जल-कण (थूकमिश्रित जल की छोटी २ बूँद)' का १ नाम है॥

२ ब्रह्मासनम् (न) 'ध्यान और योगके आसन' का १ नाम है॥

३ कल्पः, विधिः, क्रमः (३ पु) 'शास्त्रोक्त विधि' के ३ नाम हैं॥

४ [2]मुख्यः (पु), 'शास्त्रोक्त प्रधान विधि' का १ नाम है॥

५ [3]अनुकल्पः (पु), 'शास्त्रोक्त गौण (अप्रधान, अभाव पक्षीय) विधि' का १ नाम है॥

५ उपाकरणम् (न), 'संस्कारके साथ २ वेदको ग्रहण करने' का १ नाम है॥

७ पादग्रहणम्, अभिवादनम् (२ न), [4]'अपने नामको कहते हुए प्रणाम करने' के २ नाम हैं॥

---

१. 'विप्लुषो ब्रह्मबिन्दव' इति पाठान्तरम्॥

२. यथा 'व्रीहिभिर्यजेत' इति श्रुतौ व्रीहिश्रवणात् 'व्रीहिभिरेव यजेत नान्येन द्रव्येण' इति श्रुत्यर्थात् व्रीहिकरणमुपादानं प्रधानमतो व्रीहिभिर्यागकरणं मुख्यः कल्पः॥

३. व्रीहिलाभाभावे नित्यनैमित्तिकादिविधिक्षयो मा भूदित्यतो '

इति श्रुत्या नीवारेणापि यागो विधीयत इति नीवारकरणकमुपादानमप्रधानमतो नीवारेण यागकरणमनुकल्पः॥

४. तदाह मनुः—

'अभिवादात्परं विप्रो ज्यायांसमभिवादयेत्।

असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत्'॥ १॥ इति मनु २।१२२॥

१ भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ॥ ४१ ॥
२ तपस्वी तापसः पारिकाङ्क्षी ३ वाचंयमो मुनिः ।
४ तपःक्लेशसहो दान्तो ५ वर्णिनो ब्रह्मचारिणः ॥ ४२ ॥
६ ऋषयः सत्यवचसः—

१ भिक्षुः, परिव्राट् ( = परिव्राज् । + परिव्राजकः ), कर्मन्दी ( = कर्मन्दिन् ), पाराशरी ( = पाराशरिन् ), मस्करी ( = मस्करिन् । ५ पु ), **'संन्यासी'** के ५ नाम हैं ॥

२ तपस्वी ( = तपस्विन् ), तापसः, पारिकाङ्क्षी ( = पारिकाङ्क्षिन् । ३ पु ), **'तपस्वी'** के ३ नाम हैं ॥

३ वाचंयमः, मुनिः ( २ पु ), **'मुनि'** के २ नाम हैं । ( 'किसी किसी के मतसे ये २ नाम भी 'संन्यासी' के ही पर्याय हैं ) ॥

४ तपःक्लेशसहः ( भा० दी० ), दान्तः ( २ पु ), **'तपस्या के क्लेश को सहनेवाले'** के २ नाम हैं ॥

५ वर्णी ( = वर्णिन् ), [1]ब्रह्मचारी ( = ब्रह्मचारिन् ), **'ब्रह्मचारी'** के २ नाम हैं ॥

६ ऋषिः, सत्यवचाः ( = सत्यवचस् । २ पु ), **'ऋषि-सामान्य'** के २ नाम हैं । ( श्रुतर्षि १, काण्डर्षि २, परमर्षि ३, महर्षि ४, राजर्षि ५, ब्रह्मर्षि ६ और देवर्षि ७; ये [2]सात **'ऋषियोंके भेद'** हैं ) ॥

---

'आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः' ॥१॥

इति वचनेन यद्यपि श्रेयस्कामुकस्यात्मनामग्रहणं निषिद्धन्तथापि जन्मद्वादशे दिने तत्पित्रादिकृतनाक्षत्रनामपरम् । विस्तरतस्तु वैयाकरणलघुमञ्जूषायां स्मृत्यन्तरे वा प्रपञ्चितमत्र विस्तरभयान्न लिखितमिति तत एवावधार्यम् ॥

१. तदुक्तम्—'कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ।
सर्वथा मैथुनत्यागः ब्रह्मचर्यं तदुच्यते' ॥ १ ॥

एतत्कर्मसम्पन्नो **'ब्रह्मचारी'** भवति ।

२. ऋषयः सप्तविधाः । ते यथा—श्रुतर्षिः पवित्रकथादिश्रवणकर्ता १, **काण्डर्षिः** वेदानां प्रधानकाण्डस्योपदेष्टा २, **परमर्षिः** मुनिभेलप्रभृतयः ३, **महर्षिः** व्यासादयः ४, **राजर्षिः** विश्वामित्रादयः ५, **ब्रह्मर्षिः** वसिष्ठादयः ६, **देवर्षिः** नारदादयः ७ इति ॥

—१ [1]स्नातकस्त्वाप्लुतो व्रती ।
२ ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ॥ ४३ ॥
३ यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ ।
स्थाण्डिलश्चा ४ थ विरजस्तमसः स्युर्द्वयातिगाः ॥ ४४ ॥
५ पवित्रः प्रयतः पूतः ६ [2]पाखण्डाः सर्वलिङ्गिनः ।

---

१ स्नातकः, आप्लुतः, ( + आप्लवव्रती = आप्लवव्रतिन्, आप्लुतव्रती = आप्लुतव्रतिन् । पु), 'स्नातक' अर्थात् 'वेदव्रतको समाप्त होनेपर गुरुकी आज्ञासे समाप्ति-सूचक स्नान-विशेष ( समावर्तन ) किये हुए ब्रह्मचारी' के २ नाम हैं । ( 'स्नातकके ३ भेद हैं—वेदको समाप्तकर और व्रतको विना समाप्त किये समावर्तन संस्कारवाला **विद्यास्नातक** १, व्रतको समाप्तकर और वेदको विना समाप्त किये समावर्तन संस्कारवाला **व्रतस्नातक** २, तथा वेद और विद्या दोनों को समाप्तकर समावर्तन संस्कारवाला **विद्याव्रतस्नातक** ३ [3] ) ॥

२ निर्जितेन्द्रियग्रामः ( भा० दी० ), यती ( = यतिन् ), यतिः ( ३ पु ), 'जितेन्द्रिय' के ३ नाम हैं ॥

३ स्थण्डिलशायी ( = स्थण्डिलशायिन् ), स्थाण्डिलः ( २ पु ), 'स्थण्डिल ( विना साफ सुथरा की हुई अकृत्रिम भूमि ) पर सोनेवाले व्रती' के २ नाम हैं ॥

४ विरजस्तमाः ( = विरजस्तमस् ), द्वयातिगः ( २ पु ), 'सत्त्वगुणी' के २ नाम हैं ॥

५ पवित्रः, प्रयतः, पूतः ( ३ पु ), 'पवित्र' के ३ नाम हैं ॥

६ [4]पाखण्डः ( + पाषण्डः ), सर्वलिङ्गी ( = सर्वलिङ्गिन् । २ पु ), 'पाखण्डी' अर्थात् 'दुष्ट शास्त्रमें स्थित बौद्ध आदि क्षपणक ( संन्यासी )' के २ नाम हैं ॥

---

१. 'स्नातकस्त्वाप्लवव्रती' इति 'स्नातकस्त्वाप्लुतव्रती' इति च पाठान्तरे ॥

२. 'पाषण्डाः इति पाठान्तरम् ॥

३. एतत्सर्वं याज्ञवल्क्यस्मृतावाचाराध्याये ( १।११० ) मिताक्षरायां सुस्पष्टम् ॥

४. तदुक्तम्—'पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते ।
तं खण्डयन्ति ते यस्मात्पाखण्डास्तेन हेतुना' ॥ १ ॥ इति ॥

१ पालाशो दण्ड आषाढो व्रते २ राम्भस्तु वैणवः ॥ ४५ ॥
३ अस्त्री कमण्डलुः कुण्डी ४ व्रतिनामासनं [1]वृषी ।
५ अजिनं चर्म कृत्तिः स्त्री ६ भैक्षं भिक्षाकदम्बकम् ॥ ४६ ॥
७ स्वाध्यायः स्याज्जपः—

---

१ [2]आषाढः ( आषाढकः, आषाडः । पु ), 'ब्रह्मचर्यावस्थामें ब्राह्मणसे धारण किये हुए पलाशके दण्ड' का १ नाम है ॥

२ राम्भः ( पु ), 'ब्रह्मचर्यावस्थामें धारण किये हुए बाँसके दण्ड' का १ नाम है ॥

३ कमण्डलुः ( पु न ), कुण्डी ( स्त्री ), 'कमण्डलु' के २ नाम हैं ॥

४ वृषी ( + वृसी । स्त्री ), 'ब्रह्मचारी आदि व्रतियोंके आसन' का १ नाम है ॥

५ अजिनम्, चर्म ( = चर्मन् । २ न ), कृत्तिः ( स्त्री ), 'मृगादिके चमड़े' के ३ नाम हैं ॥

६ भैक्षम् ( त्रि ), 'भिक्षामें मिले हुए पदार्थ' का १ नाम है ॥

७ स्वाध्यायः, जपः ( २ पु ), 'नियमसे वेदादिके अभ्यास करने' के २ नाम हैं । 'जप ३ प्रकारका होता है—वाचिक १, उपांशु २ और मानस ३ । इनको उत्तरोत्तर श्रेष्ठ[3] कहा गया है' ) ॥

---

१. 'वृसी' इति पाठान्तरम् ॥

२. 'ब्राह्मणो बैल्वपालाशौ क्षत्रियो वटखादिरौ ।
पैलवौदुम्बरौ वैश्या दण्डानर्हन्ति धर्मतः' ॥ १ ॥
इति मनुः २।४५॥

३. हारीतोक्ता जपभेदास्तेषां लक्षणानि चात्र प्रदर्श्यन्ते—
'.......त्रिविधो जपयज्ञः स्यात्तस्य तत्त्वं निबोधत ॥
वाचिकश्चाप्युपांशुश्च मानसश्च त्रिधाऽऽकृतिः । त्रयाणामपि यज्ञानां श्रेष्ठः स्यादुत्तरोत्तरः ॥
यदुच्चनीचोच्चरितैः शब्दैः स्पष्टपदाक्षरैः । मन्त्रमुच्चारयेद्वाचा जपयज्ञस्तु वाचिकः ॥

—१ सुत्याऽभिषवः सवनं च सा।
२ सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ॥ ४७॥
३ दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक्।
४ शरीरसाधनापेक्षं नित्यं यत् कर्म तद्यमः ॥ ४८॥
५ नियमस्तु स तत् कर्म नित्यमागन्तुसाधनम्।

---

१ सुत्या ( स्त्री ), अभिषवः ( पु ), सवनम् ( न ), 'सोमलता ( यज्ञौषधि ) को कूटने' के ३ नाम हैं ॥

२ अघमर्षणम् ( त्रि ), 'सब पापोंको नाश करनेवाले जप' ( ऋचा आदि )' का १ नाम है ॥

३ दर्शः, पौर्णमासः ( २ पु ), 'अमावास्या और पूर्णिमाको होनेवाले यज्ञ' का क्रमशः १—१ नाम हैं ॥

४ यमः ( पु ), जीवनभर शरीरसे करने योग्य संयम' का १ नाम है। ( 'अहिंसा १, सत्य २, अस्तेय ( किसीकी कोई वस्तु बिना दिये या पूछे न लेना ) ३, ब्रह्मचर्य ( [1]आठ प्रकारके मैथुनका त्याग ) ४ और अपरिग्रह ( हिंसादि अनेक दोषोंको देखकर दान नहीं लेना ५ ) ये पाँच यम[2] हैं' ) ॥

५ नियमः ( पु ), 'नियम' अर्थात् 'जो कार्य जीवन पर्यन्त नहीं हो सके किन्तु विशेष २ समयपर किया जाय उस कार्य' का १ नाम है। ( 'शौच अर्थात्

---

शनैरुच्चारयेन्मन्त्रं किञ्चिदोष्ठौ प्रचालयेत्। किञ्चिच्छ्रवणयोग्यः स्यात्स उपांशुर्जपः स्मृतः ॥ धिया पदाक्षरश्रेण्या अवर्णमपदाक्षरम्। शब्दार्थचिन्तनाभ्यां तु तदुक्तं मानसं स्मृतम्' ॥
इति हारीतस्मृतिः ४।४०·४४

१. अष्टाङ्गमैथुनलक्षणं यथा—
'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ १ ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः'। इति ॥

२. 'तदुक्तं भगवत्पतञ्जलिना—'तत्राहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' इति यो० सू० २।३० ॥

१ 'क्षौरं तु भद्राकरणं मुण्डनं वपनं त्रिषु' ( २४ )
२ उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे ॥ ४९ ॥
३ प्राचीनावीतमन्यस्मिन् ४ निवीतं कण्ठलम्बितम् ।

---

मिट्टी जल आदिसे बाहरी और पञ्चगव्य-पान आदिसे भीतरी पवित्रता १, सन्तोष २, तप ( चान्द्रायण, कृच्छ्र, सान्तपन आदि व्रत ) ३, स्वाध्याय ( वेदादिका अध्ययन ) ४, ईश्वरप्रणिधान ( परमेश्वरकी पूजा आदि ) ५, 'ये पाँच नियम'[1] हैं ) ॥

१ [ क्षौरम् , भद्राकरणम् , मुण्डनम् ( ३ न ), वपनम् (त्रि), 'मुण्डन कराने' के ४ नाम हैं ] ॥

२ उपवीतम् , ब्रह्मसूत्रम् (भा० दी० । × यज्ञसूत्रम् २ न) 'बायें कन्धेके ऊपरसे दाहिने तरफ नीचेकी ओर लटकते हुए जनेऊ' के २ नाम हैं । ( 'उपवीत जनेऊको धारण करनेवालेका [2]उपवीती ( = उपवीतिन् पु ), यह १ नाम है' ) ॥

३ प्राचीनावीतम् (न), 'दाहिने कन्धेके ऊपरसे बायीं तरफ नीचेको लटकते हुए जनेऊ' का १ नाम है । ( 'प्राचीनावीत जनेऊको धारण करनेवालेका [3]प्राचीनावीती ( = प्राचीनावीतिन् पु ) यह १ नाम है' ) ॥

४ निवीतम् ( न ) 'मालाकी तरह गर्दनसे सीधे नीचे की ओर लटकते हुए जनेऊ' का १ नाम है । ( 'निवीत जनेऊको धारण करनेवाले का [4]निवीती ( = निवीतिन् पु ) यह १ नाम है' ) ॥

---

१. तदुक्तं भगवत्पतञ्जलिना—'शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' इति यो० सू० २। ३२ ॥

२-३-४. उपवीति-प्राचीनावीति-निवीतिनां लक्षणमाह मनुस्तद्यथा—

'उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः ।
सव्ये प्राचीन आवीती निवीती कण्ठसज्जने' ॥ १ ॥ मनुः २।६३ ॥

छन्दोगपरिशिष्टे च—

'ब्रह्मसूत्रेऽत्र सव्येंऽसे स्थिते यज्ञोपवीतिता ।
प्राचीनावीतिताऽसव्ये कण्ठस्थे तु निवीतिता' ॥ १ ॥ इति ॥

१ अङ्गुल्यग्रे तीर्थं दैवं २ स्वल्पाङ्गुल्योर्मूले कायम् ॥ ५० ॥
३ मध्येऽङ्गुष्ठाङ्गुल्योः [१]पित्र्यं ४ मूले त्वङ्गुष्ठस्य ब्राह्मम् ।
५ स्याद् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ॥ ५१ ॥
६ देवभूयादिकं तद्वत् ७ कृच्छ्रं सान्तपनादिकम् ।
८ संन्यासवत्यनशने पुमान् प्रायोऽथ वीरहा ॥ ५२ ॥
नष्टाग्निः—

१ दैवम् ( न ), [२]'देवतीर्थ' अर्थात् 'हाथकी अङ्गुलियोंके आगेवाले भाग' का १ नाम है ॥

२ कायम् ( न ), [३]'कायतीर्थ' अर्थात् 'हाथकी कनिष्ठा अङ्गुलीके नीचे-वाले भाग' १ नाम है ॥

३ पित्र्यम् ( + पैत्र्यम् , पैत्रम् । न ), [४]'पितृतीर्थ' अर्थात् 'हाथके अँगूठे और तर्जनी अङ्गुलीके बीचवाले भाग' का १ नाम है ॥

४ ब्राह्मम् ( न ), [५]'ब्रह्मतीर्थ' अर्थात् 'हाथके अँगूठेके मूलभाग' का १ नाम है ॥

५ ब्रह्मभूयम् , ब्रह्मत्वम् , ब्रह्मसायुज्यम् ( न ), 'मोक्ष' अर्थात् ब्रह्ममें लीन हो जाने' के ३ नाम हैं ॥

६ देवभूयम् ( न ) आदि ( देवत्वम् , देवसायुज्यम् ; २ न ), 'देवतामें लीन हो जाने' के ३ नाम हैं ।

७ [६]कृच्छ्रम् ( न ) 'सान्तपन आदि ( चान्द्रायण, पराक और प्राजा-पत्य आदि ) व्रत' का १ नाम है ॥

८ प्रायः ( पु ), 'संन्यास-पूर्वक भोजनको छोड़ने' का १ नाम है ॥

९ वीरहा ( = वीरहन् । + विरहा=विरहन् ), नष्टाग्निः ( २ पु ), 'प्रमा-दसे जिस अग्निहोत्रीकी आग बुझ गयी हो उस अग्निहोत्री'के २ नाम हैं

१. 'पैत्र्यम्' इति पाठान्तरम् ॥

२-३-४-५. ब्राह्म-काय-दैव-पित्र्य-तीर्थानां लक्षणान्याह मनुः । तथा हि—

'अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ।
कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः' ॥ १ ॥ इति मनुः २।५९ ॥

६. भेदपुरःसरकृच्छ्रभेदास्तद्विधिश्च याज्ञवल्क्यस्मृतौ ( ३।३१५—३२५ ), मनुस्मृतौ ( ११।२११—२२५ ) च द्रष्टव्याः ।

—१ कुहना लोभान्मिथ्येर्यापथकल्पना ।
२ व्रात्यः संस्कारहीनः स्या३दस्वाध्यायो निराकृतिः ॥ ५३ ॥
४ धर्मध्वजी लिङ्गवृत्ति५रवकीर्णी क्षतव्रतः ।
६ सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ॥ ५४ ॥
अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् ।
७ परिवेत्ताऽनुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ॥ ५५ ॥

---

१ कुहना ( स्त्री ), 'दम्भसे ध्यान-मौनादि धारण करने, धनलाभसे मिथ्या धर्माचरण करने' का १ नाम है ॥

२ [1]व्रात्यः, संस्कारहीनः ( भा० दी० । २ पु ), 'यथोचित समयपर यज्ञोपवीत संस्कारसे हीन द्विजाति ( ब्राह्मण, क्षत्रिय और वैश्य )' के २ नाम हैं ॥ ब्राह्मण क्षत्रिय तथा वैश्यका गर्भाधानसे क्रमशः १६, २२ और २४ वर्षकी अवस्थातक यज्ञोपवीत नहीं होने पर उन्हें 'व्रात्य' कहते हैं ) ॥

३ अस्वाध्यायः ( भा० दी० ), निराकृतिः ( २ पु ), 'वेदको नहीं पढ़नेवाले' के २ नाम हैं । ( 'व्रात्यः,······' ४ नाम एकार्थक हैं, यह भी कई एक आचार्योंका मत है' ) ॥

४ धर्मध्वजी ( = धर्मध्वजिन् ), लिङ्गवृत्तिः ( २ पु ), 'भिक्षा आदि मिलनेके लिये जटा-भस्मादि धारणकर झूठा साधु बनने' के २ नाम हैं ॥

५ अवकीर्णी ( = अवकीर्णिन् ), क्षतव्रतः ( भा० दी० । २ पु ), 'नियमसे चलनेवाला ब्रह्मचर्यादि व्रत जिसका बीच ही में भग्न हो गया हो उस ब्रह्मचारी आदि व्रती' के २ नाम हैं ॥

६ अभिनिर्मुक्तः, अभ्युदितः (२ पु), 'जिसके सोते रहनेपर सूर्योदय हो और जिसके सोते रहने पर सूर्यास्त हो उस'का क्रमशः १-१ नाम है ॥

७ परिवेत्ता ( = परिवेत्तृ, पु), 'बड़े भाईके अविवाहित (बिना ब्याह किये हुए ) रहनेपर विवाहित ( ब्याह किये हुए ) छोटे भाई' का १ नाम है ॥

---

१. व्रात्यलक्षणमाह मनुस्तद्यथा—

'आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते ।
आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥ १ ॥
अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥ २ ॥ इति मनुः २।३८—३९

१ परिविक्तिस्तु तज्ज्यायान् २ विवाहोपयमौ समौ ।
तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ॥ ५६ ॥
३ [१]व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ।
४ त्रिवर्गो धर्मकामार्थै५श्चतुर्वर्गः समोक्षकैः ॥ ५७ ॥
६ सबलैस्तैश्चतुर्भद्रं ७ जन्याः स्निग्धा वरस्य ये ।

इति ब्रह्मवर्गः ॥ ७ ॥

---

१ [२]परिविक्तिः ( पुं ), 'जिसका छोटा भाई विवाहित हो उस अविवाहित बड़े भाई' का १ नाम है ॥

विवाहः, उपयमः, परिणयः, उद्वाहः, उपयामः ( ५ पु ), पणिपीडनम् ( + पाणिग्रहणम्, करपीडनम्,······ । न ) 'विवाह' के ६ नाम हैं ॥

३ व्यवायः, ग्राम्यधर्मः ( २ पु ), मैथुनम्, निधुवनम्, रतम् ( ३ न ), 'मैथुन' अर्थात् 'स्त्रीके साथ सम्भोग करने'के ५ नाम हैं ॥

४ त्रिवर्गः ( पु ), 'अर्थ, धर्म और काम के समुदाय' का १ नाम है ॥

५ चतुर्वर्गः ( पु ), 'अर्थ, धर्म और काम और मोक्षके समुदाय' का १ नाम है ॥

६ चतुर्भद्रम् ( न ), 'सुदृढ़ अर्थ, धर्म, काम और मोक्षके समुदाय' का १ नाम है ॥

७ जन्यः ( पु ), 'समान अवस्थावाले वर ( दुलहा ) के प्रेमी या वधूकी पालकी ढोनेवाले' का १ नाम है ॥

इति ब्रह्मवर्गः ॥ ७ ॥

---

१. 'व्यवायो ग्राम्यधर्मश्च रतं निधुवनं च सा' इति केचित्पठन्ति' इति महेश्वरः ॥

२. परिवेत्तृपरिविक्त्योर्लक्षणं यथा—
येऽग्रजेष्वकलत्रेषु कुर्वते दारसंग्रहम् । ज्ञेयास्ते परिवेत्तारः परिविक्तिस्तु पूर्वजः ॥१॥ इति ॥

## ८. अथ क्षत्रियवर्गः ।

१ मूर्द्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ।
२ राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः ॥ १ ॥
३ राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः ।
३ चक्रवर्ती सार्वभौमो नृपः—

---

## ८ अथ क्षत्रियवर्गः ।

१ मूर्द्धाभिषिक्तः ( + मूर्द्धावषिक्तः ), राजन्यः, [1]बाहुजः, क्षत्रियः, विराट ( = विराज् । ५ पु ), 'क्षत्रिय' के ५ नाम हैं ॥

२ राजा ( = राजन् ), राट् ( = राज् ), पार्थिवः क्ष्माभृत ( + क्ष्माभुक् = क्ष्माभुज, महीभुक् = महीभुज्, ·······), नृपः, भूपः ( + महीपः, भूपतिः, भूपालः, महीपतिः, महीपालः······ ), महीक्षित ( + अधिपः, नराधिपः, नरेशः······ । ७ पु ), 'राजा' के ७ नाम हैं ॥

३ अधीश्वरः ( = अप्रतिरथः । पु ), 'सब तरफके राजाओंको वशमें करनेवाले राजा'का १ नाम है ॥

४ चक्रवर्ती ( = चक्रवर्तिन् ), सार्वभौमः ( २ पु ), चक्रवर्ती राजा' अर्थात 'समुद्र-पर्यन्त पृथ्वीकी रक्षा करनेवाले राजा' के २ नाम हैं । ( '१ भरत २ सगर, ३ मघवा, ४ सनत्कुमार, ५ शान्ति, ६ कुन्थु, ७ अर ( ये तीनों जिन थे ), ८ कार्तवीर्य, ९ पद्म, १० हरिषेण, ११ जय और १२ ब्रह्मदत्त, ये [2]बारह राजा भारतवर्षमें चक्रवर्ती हुए हैं, ये सब इक्ष्वाकु वंशमें उत्पन्न थे' ) ॥

---

१. 'ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः—' इति श्रुतेः ॥

२. तदुक्तं हेमचन्द्राचार्यैः—

'चक्रवर्ती सार्वभौमस्ते तु द्वादश भारते ॥
आर्षभिर्भरतस्तत्र सगरस्तु सुमित्रभूः । मघवा वैजयिरथाश्वसेननृपनन्दनः ॥
सनत्कुमारोऽथ शान्तिः कुन्थुररो जिना अपि । सुभूमस्तु कार्तवीर्यः पद्मः पद्मोत्तरात्मजः ॥
हरिषेणो हरिसुतो जयो विजयनन्दनः । ब्रह्मसूनुर्ब्रह्मदत्तः सर्वेपीक्ष्वाकुवंशजाः' ॥
[ अभि० चिन्ता० ३।३५५–३५८ ॥

—१ अन्यो मण्डलेश्वरः ॥ २ ॥

२ येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः।
शास्ति यश्चाज्ञया राज्ञः स सम्राड३थ राजकम् ॥ ३ ॥
४ राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात्।
५ मन्त्री धीसचिवोऽमात्यो६ऽन्ये कर्मसचिवास्ततः ॥ ४ ॥

---

१ मण्डलेश्वरः ( पु ), 'मण्डल ( इसके [१]बारह प्रकृति अर्थात् भेद होते हैं ) या देशको शासन करनेवाले राजा' का १ नाम है ॥

१ सम्राट् ( = सम्राज्, पु ) भा० दी० मतसे 'जिसने राजसूय यज्ञ किया हो, मण्डल ( इसकी बारह प्रकृतियां होती हैं ) का स्वामी हो और सब राजाओंको जीतकर अपने वशमें कर लिया हो उस राजा' का और किसी २ के मतसे पूर्वोक्त १-१ गुणोंसे भी युक्त राजा' का १ नाम है ॥

३ राजकम् ( न ), 'राजसमूह' का १ नाम है ॥

४ राजन्यकम् ( न ), 'क्षत्रियोंके समुदाय' का १ नाम है ॥

५ मन्त्री ( = मन्त्रिन् ), धीसचिवः अमात्यः ( + सामवायिकः । ३ पु ) 'मन्त्री' अर्थात् 'बुद्धिविषयक सहायता देनेवाले मन्त्री' के ३ नाम हैं ॥

६ कर्मसचिवः ( पु ) 'प्रत्येक काममें सहायता देनेवाले मन्त्री' का १ नाम है ॥

---

१. मण्डलस्य द्वादश प्रकृतयो भवन्ति। ता यथा—१ जिजेतुमभ्युद्यतो विजिगीषुः २ सहज-कृत्रिम-स्वभूम्यनन्तरस्त्रिविधोऽरिः, ३ असंहतयोररिविजिगीष्वोर्निग्रहे समर्थो मध्यमः, ४ अरिविजिगीषुमध्यमानामसंहतानां निग्रहे समर्थ उदासीनः, ५ विजिगीषुमित्रम्, ६ अरिमित्रम्, ७ विजिगीषुमित्रमित्रम्, ८ अरिमित्रमित्रम्, ९ पार्ष्णिग्राहः, १० आक्रन्दः, ११ पार्ष्णिग्राहासारः, १२ आक्रन्दासारश्चेति। सविस्तरमेतद्विवरणं वीरमित्रोदयस्य राजनीतिप्रकाशे द्वादशराजमण्डलप्रकरणस्य ३२० तमे पृष्ठे द्रष्टव्यम् ॥

एत एव द्वादश राजमण्डलभेदाः क्षीरस्वामिभिरुक्तास्तथा हि—

'अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम्।
तथाऽरिमित्रमित्रञ्च विजिगीषोः पुरः स्मृताः ॥ १ ॥
पार्ष्णिग्राहस्तथाऽऽक्रन्द आसारश्च तयोः पृथक्।
मध्यमोऽप्युदासीन इति द्वादश राजकम्' ॥ २ ॥ इति ॥

१ महामात्राः प्रधानानि २ पुरोधास्तु पुरोहितः ।
३ द्रष्टरि व्यवहाराणां प्राड्विपाकाक्षदर्शकौ ॥ ५ ॥

१ महामात्रः ( पु ), प्रधानम् ( न । + पु ) 'प्रधान मन्त्री, राजाके खास सलाहकार' के २ नाम हैं । ( 'किसी २ के मतसे 'कर्मसचिवः' आदि ३ नाम 'काममें सहायता देनेवाले मन्त्रि' के ही हैं' ) ॥

२ पुरोधाः ( = पुरोधस्), पुरोहितः ( + सौवस्तिकः । २ पु ) 'पुरोहित' के २ नाम हैं ॥

३ [1]प्राड्विपाकः, अक्षदर्शकः ( + आक्षदर्शकः, अक्षपटलिकः । २ पु ), 'व्यवहार ( मुकदमे ) को देखनेवाले' अर्थात् 'न्यायाधीश' के २ नाम हैं । ( 'व्यवहारके [2]प्रधान अट्ठारह भेद होते हैं' )

---

१. नानामतेन प्राड्विपाकलक्षणान्युच्यन्ते—

'विवादानुगतं पृष्ट्वा पूर्ववाक्यं प्रयत्नतः ।
विचारयति येनासौ प्राड्विपाकस्ततः स्मृतः' ॥ १ ॥ इति ॥

कश्चित्—ससभ्यस्तत्प्रयत्नतः' इत्येवं द्वितीयः पादः ॥

अन्यच्च—'विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च ।
नयपूर्वं प्राग्वदति प्राड्विपाकस्ततः स्मृतः' ॥ १ ॥ इति ॥

२. मनुरष्टादश व्यवहारानाह—

'तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः ।
सम्भूय च समुत्थानं दत्तस्यानपकर्म च ॥ १ ॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥ २ ॥
सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके ।
स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च ॥ ३ ॥
स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च ।
पदान्यष्टादशैतानि व्यवहारस्थिताविह' ॥ ४ ॥

इति मनुः ८।४–७ ॥

'एषामेव प्रभेदोऽन्यः शतमष्टोत्तरं भवेत् ।
क्रियाभेदान्मनुष्याणां शतशाखं निगद्यते' ॥ १ ॥

इति नारदोक्त्याऽस्यानेकधा भेदास्ते इह विस्तरभयान्नोच्यन्ते ॥

१ [1]प्रतीहारो द्वारपालद्वास्थद्वास्थितदर्शकाः।
२ रक्षिवर्गस्त्वनीकस्थो ३ऽथाध्यक्षाधिकृतौ समौ ॥ ६ ॥
४ स्थायुकोऽधिकृतो ग्रामे ५ गोपो ग्रामेषु भूरिषु।
६ [2]भौरिकः कनकाध्यक्षो ७ रूप्याध्यक्षस्तु नैष्किकः ॥ ७ ॥
८ अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः।
९ सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥ ८ ॥
१० [3]शण्ढो वर्षवरस्तुल्यौ—

१ प्रतीहारः ( + प्रतिहारः ), द्वारपालः, द्वास्थः ( + द्वाःस्थः ), द्वास्थितः ( + द्वाःस्थितः ), दर्शकः ( + द्वास्थितदर्शकः द्वास्थोपस्थितदर्शकः, दौवारिकः ५ पु ), 'द्वारपाल, ड्योढ़ीदार' के ५ नाम हैं ॥

२ रक्षिवर्गः, अनीकस्थः ( २ पु ), 'राज आदिके अङ्गरक्षक' के २ नाम हैं ॥

३ अध्यक्षः, अधिकृतः ( २ पु ), 'अध्यक्ष' के २ नाम हैं ॥

४ स्थायुकः ( पु ), 'एक ग्रामके अध्यक्ष' का १ नाम है ॥

५ गोपः ( पु ), 'बहुत ग्रामोंके अध्यक्ष' का १ नाम है ॥

६ भौरिकः ( + हैरिकः ) कनकाध्यक्षः ( २ पु ), 'सुवर्णके अध्यक्ष' के २ नाम हैं ॥

७ रूप्याध्यक्षः नैष्किकः ( २ पु ), 'टकसाल' ( रुपया आदि सिक्का ढालनेके कारखाने ) के अध्यक्ष' के २ नाम हैं ॥

८ अन्तर्वंशिकः ( + अन्तर्वंशिकः । पु ), 'रनिवासमें नियुक्त पुरुष' का १ नाम है ॥

९ सौविदल्ल, कञ्चुकी ( + कञ्चुकिन् ), स्थापत्यः, सौविदः ( ४ पु ), 'कञ्चुकी' अर्थात् 'राजाओंके पासमें या रनिवासमें पहरी रक्षाके लिये बेंतकी पतली छड़ी लिये हुए आने-जानेवाले वृद्ध पुरुष' के ४ नाम हैं ॥

१० शण्ढः ( + षण्ढः ), [4]वर्षवरः ( २ पु ), 'नपुंसक, जनखा' के २ नाम हैं ॥

१. प्रतिहारो द्वारपालो द्वास्थोपस्थितदर्शकः' इति पाठान्तरम् ॥
२. 'हैरिकः' इति पाठान्तरम् ॥ ३. षण्ढो' इति पाठान्तरम् ॥
४. वर्षवरलक्षणं यथा—

—१ सेवकार्थ्यनुजीविनः ।
२ विषयानन्तरो राजा शत्रुर्मित्रमतः परम् ॥ ९ ॥
४ उदासीनः परतरः ५ पार्ष्णिग्राहस्तु पृष्ठतः ।
६ रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥ १० ॥
द्विड्विपक्षाहितामित्रदस्युशात्रवशात्रवः ।
अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ॥ ११ ॥
७ वयस्यः स्निग्धः सवया ८ अथ मित्रं सखा सुहृत् ।

---

१ सेवकः, अर्थी ( = अर्थिन् ), अनुजीवी ( = अनुजीविन् । + अनुचरः ३ पु ), 'सेवक, नौकर' के ३ नाम हैं ॥

२ शत्रुः ( पु ), 'अपने देश ( राज्य ) के समीपवाले देशके राजा का १ नाम है ॥

३ मित्रम् ( न ), 'पूर्वोक्तसे भिन्न राजा' का १ नाम है ॥

४ उदासीनः ( पु ), 'उदासीन' अर्थात् 'पूर्वोक्त शत्रु और मित्रके लक्षणसे भिन्न राजा' का १ नाम है ॥

५ पार्ष्णिग्राहः ( पु ), 'राजाके युद्धादि-यात्रामें पीछेसे किलेपर चढ़ाई करनेवाले या योद्धाके पीछेसे रक्षा करनेवाले राजा' का १ नाम है ॥

६ रिपुः, वैरी ( = वैरिन् ,) सपत्नः, अरिः, द्विषन् ( = द्विषत् ), द्वेषणः, दुर्हृद्, द्विट् ( = द्विष् ), विपक्षः, अहितः, अमित्रः, दस्युः, शात्रवः, शत्रुः, अभिघाती ( = अभिघातिन् । + अभियातिः ), परः, अरातिः, प्रत्यर्थी ( = प्रत्यर्थिन् ), ( परिपन्थी ( = परिपन्थिन् । १९ पु ), 'वैरी' के १९ नाम हैं ॥

७ वयस्यः, स्निग्धः, सवयाः ( = सवयस् । ३ पु ), 'समान अवस्था-वाले मित्र' के ३ नाम हैं ॥

८ [1]मित्रम् ( न ), [2]सखा ( = सखि), [3]सुहृत् ( = सुहृद् । + साप्तपदीनः । २ पु ), 'मित्र, दोस्त' के ३ नाम हैं ॥

---

'ये त्वल्पसत्त्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः ।
जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः' ॥ १ ॥ इति ॥

१-२-३. अत्यागसहनो बन्धुः सदैवानुगतः सुहृत् ।
एकक्रियं भवेन्मित्रं समप्राणः सखा स्मृतः' ॥ १ ॥ इति ॥

१ सख्यं साप्तपदीनं स्यादनुरोधोऽनुवर्तनम् ॥ १२ ॥
३ यथार्हवर्णः [1]प्रणिधिरपसर्पश्चरः स्पशः।
चारश्च गूढपुरुषश्चाप्तप्रत्ययितौ समौ ॥ १३ ॥
५ सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि।
स्युर्मौहूर्त्तिकमौहूर्त्तज्ञानिकार्तान्तिका अपि ॥ १४ ॥
६ तान्त्रिको ज्ञातसिद्धान्तः ७ सत्री गृहपतिः समौ।
८ [2]लिपिकारोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके ॥ १५ ॥
९ [3]लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ।

---

१ सख्यम्, साप्तपदीनम् ( +सौहृदम्, सौहार्दम्, सौहृद्यम्, आजर्यम्, मैत्री। २ न ), 'दोस्ती, मित्रता' के २ नाम हैं ॥

२ अनुरोधः ( पु ), अनुवर्तनम् ( न ), 'अनुकूल रहने' के २ नाम हैं ॥

३ यथार्हवर्णः, प्रणिधिः, अपसर्पः ( + अवसर्पः), चरः, स्पशः, चारः, गूढपुरुषः ( ७ पु ), 'गुप्तचर, खौफिया' के ७ नाम हैं ॥

४ आप्तः, प्रत्ययितः ( २ त्रि ), 'विश्वासपात्र पुरुषादि' के २ नाम हैं ॥

५ सांवत्सरः, ज्यौतिषिकः ( +ज्योतिषिकः ), दैवज्ञः, गणकः, मौहूर्त्तिकः, मौहूर्त्तः, ज्ञानी ( = ज्ञानिन् ), कार्तान्तिकः (८ पु), 'ज्यौतिषि' के ८ नाम हैं ॥

६ तान्त्रिकः, ज्ञातसिद्धान्तः ( २ पु ), 'सिद्धान्तको ठीक २ जाननेवाले' के २ नाम हैं ॥

७ सत्री ( = सत्त्रिन् ), गृहपतिः ( २ पु ), 'अन्नादिको सर्वदा दानकरनेवाले गृहस्थ' के २ नाम हैं ॥

८ लिपिकारः (+ लिपिकरः, लिबिकरः, लिपिङ्करः, लिबिङ्करः), अक्षरचणः, अक्षरचुञ्चुः, लेखकः, ( ४ पु ), 'लेखक, कातिब' के ४ नाम हैं ॥

९ लिपिः ( + लिपी ), लिबिः ( स्त्री ), 'लिखे हुए अक्षर चित्रादि' के २ नाम हैं। ( 'महे० के मतसे 'लिखितम्, अक्षरसंस्थानम् ( + लिखिताक्षरसंस्थानम्, अक्षरविन्यासः। २ न ), इन शब्दोंके भी पर्याय होने से ४ नाम तत्कार्थक हैं' ) ॥

---

१. 'प्रणिधिरवसर्पश्चरः' इति पाठान्तरम् ॥ २. 'लिपिकरः' इति 'लिपिङ्करः' इति पाठान्तरे ॥
३. 'लिखिताक्षरसंस्थाने' इति पाठान्तरम् ॥

१ स्यात्संदेशहरो दूतो २ दूत्यं तद्भावकर्मणी ॥ १६ ॥
३ अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।
४ [1]स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥ १७ ॥
राज्याङ्गानि प्रकृतयः ५ पौराणां श्रेणयोऽपि च ।
६ सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ॥ १८ ॥
षड् गुणाः—

---

१ संदेशहरः, दूतः ( २ पु ), 'दूत, संदेश पहुंचानेवाले' के २ नाम हैं ॥

२ दूत्यम् ( + दौत्यम् । न ), 'दूतके काम या भाव' का १ नाम है ॥

३ अध्वनीनः, अध्वगः, अध्वन्यः, पान्थः, पथिकः ( ५ पु ), 'पथिक राही, मुसाफिर' के ५ नाम हैं ॥

४ स्वामी (=स्वामिन् ), अमात्यः, सुहृत् (=सुहृद् ), कोशः ( + कोषः । ४ पु ), राष्ट्रम्, दुर्गम्, बलम् ( ३ न ), 'राजा, मन्त्री, मित्र, खजाना, राज्य, किला और सेना' का वाचक क्रमशः १-१ शब्द है, इन सातोंके 'राज्याङ्गम् ( न ), प्रकृतिः ( स्त्री )' ये २ नाम हैं अर्थात् राजा आदि,…७[2] 'राज्याङ्ग और प्रकृति' कहलाते हैं ॥

५ पौराणां श्रेणयः ( स्त्री ), अर्थात् 'नगरवासियोंको भी राज्याङ्ग और प्रकृति' कहते हैं; इस तरह 'राज्याङ्ग या प्रकृति' के[3] ८ भेद हैं ॥

६ सन्धिः, विग्रहः, यानम् , आसनम् , द्वैधम् ( ३ न ), आश्रयः ( शेष ३ पु ), ये ६[4] 'नीति जाननेवालोंके गुण' हैं। ( 'प्रसङ्गवश इनके

---

१. अयमेव श्लोको हेमचन्द्राचार्यरचितेऽभिधानचिन्तामणौ ( ३।३७८ ) समुपलभ्यते ॥

२. राज्याङ्गस्य सप्ताङ्गत्वं कामन्दक उक्तम् । तथा हि—

'स्वाम्यमात्यश्च राष्ट्रञ्च दुर्गं कोषो बलं सुहृत् ।
परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते' ॥ १ ॥ इति ॥

३. 'अमात्याद्याश्च पौराश्च सद्भिः प्रकृतयः स्मृताः' । इति कात्यात् राज्यस्याष्टाङ्गत्वमपि सिद्ध्यति ॥

४. षड्गुणा मनुना उक्तास्तथा हि—

'सन्धिं च विग्रहं चैव यानमासनमेव च ।
द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत्सदा' ॥ १ ॥ इति मनुः, ७।१६०॥

[1]लक्षण कहते हैं—सुवर्णादि, धन, हाथी, घोड़ा आदि देकर वैरीसे मेल करनेको **सन्धि** १, शत्रुके राज्यादिको लूटने या अग्नि आदि लगाकर वैर या युद्ध करनेको **विग्रह** २, जीतनेकी इच्छासे चढ़ाई या युद्धयात्रा करनेको **यान** ३, अपने पक्षके दुर्बल होनेसे किला आदिको पुष्ट तथा सुरक्षितकर चुप-चाप बैठ जानेको **आसन** ४, बलवान्‌के साथ मित्रता और दुर्बलके साथ वैर करनेको या आधी सेनाके साथ चढ़ाई करनेको **द्वैध** ५, तथा शत्रुसे पीड़ित होकर अपनी रक्षाके लिये उदासीन या मध्यम राजाके शरणमें जानेको **आश्रय** ६ कहते हैं; इनके भी[2] अनेक भेद होते हैं' ) ॥

---

१. एतेषां लक्षणानि वीरमित्रोदयस्य **राजनीतिप्रकाश** उक्तानि। तथा हि—

'पणबन्धः स्मृतः' **सन्धि**रपकारस्तु **विग्रहः**।
जिगीषोः शत्रुविषये **यानं** यात्राऽभिधीयते ॥ १ ॥
विग्रहेऽपि स्वके देशे स्थिति**रासन**मुच्यते।
बलार्द्धेन प्रयाणं तु **द्वैधीभावः** स उच्यते ॥ २ ॥
उदासीने मध्यमे वा संश्रयात्**संश्रयः** स्मृतः'।

**इति वीरमित्रोदयः** पृ० ३२४।

२. सन्ध्यादीनां भेदानाह मनुस्तथा हि—

'सन्धिं तु द्विविधं विद्याद्राजा विग्रहमेव च।
उभे यानासने चैव द्विविधः संश्रयः स्मृतः ॥ १ ॥
समानयानकर्मा च विपरीतस्तथैव च।
तदात्वायतिसंयुक्तः **सन्धि**र्ज्ञेयो द्विलक्षणः ॥ २ ॥
स्वयंकृतश्च कार्यार्थमकाले काल एव वा।
मित्रस्य चैवापकृते द्विविधो **विग्रहः** स्मृतः ॥ ३ ॥
एकाकिनश्चात्ययिके कार्ये प्राप्ते यदृच्छया।
संहतस्य च मित्रेण द्विविधं **यान**मुच्यते ॥ ४ ॥
क्षीणस्य चैव क्रमशो दैवात्पूर्वकृतेन वा।
मित्रस्य चानुरोधेन द्विविधं स्मृत**मासनम्** ॥ ५ ॥
बलस्य स्वामिनश्चैव स्थितिः कार्यार्थसिद्धये।
द्विविधं कीर्त्यते द्वैधं षाड्गुण्यगुणवेदिभिः ॥ ६ ॥
अर्थसम्पादनार्थं च पीड्यमानस्य शत्रुभिः।
साधुषु व्यपदेशार्थं द्विविधः **संश्रयः** स्मृतः ॥ ७ ॥

**इति मनुः ७ १६२–१६८** ॥

**विस्तरभियाऽन्यत्रोक्ता एतेषां भेदोपभेदा नोच्यन्त इति तेऽन्यतो द्रष्टव्याः** ॥

१—शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः ।
२ क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥ १९ ॥
३ स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम् ।
४ भेदो दण्डः साम दानमित्युपायचतुष्टयम् ॥ २० ॥

---

१ शक्तिः ( स्त्री ), 'शक्ति' अर्थात् 'सामर्थ्य' 'प्रभाव, उत्साह और मन्त्र ( गुप्त सलाह )' से होती है अर्थात् प्रभावज, उत्साहज और मन्त्रज' ये ३ शक्तियाँ हैं । ('कोष और दण्ड बल प्रभावज शक्ति १, विक्रम-बल उत्साहज शक्ति २, और सन्धि आदि षड्गुण तथा सामादि उपायका यथावत् प्रयोग मन्त्रज शक्ति ३, है' ) ॥

२ क्षयः ( पु ), स्थानम् ( न ), वृद्धिः ( स्त्री ), क्रमशः कृषि आदि [1]अष्टवर्गकी कमी होनेको क्षय, सामान्य रहने ( कमी-बेशी नहीं होने ) को स्थान और बढ़नेको वृद्धि कहते हैं । ये ही तीनों ( क्षयः, स्थानम् , वृद्धिः ), नीति जाननेवालोंका त्रिवर्ग है; त्रिवर्गः ( पु ), है ॥

३ प्रभावजः, प्रतापः ( २ पु ), 'प्रताप' अर्थात् 'खजाने तथा शासनसे उत्पन्न तेज' के २ नाम हैं ॥

४ भेदः, दण्डः ( पु ), साम ( = सामन् ), दानम् ( २ न ), क्रमशः वैरीके मन्त्री आदिको गुप्तचर आदिके द्वारा फोड़कर अपने पक्षमें लाकर शत्रुको वशमें करनेको भेद १, अपराधियोंके शासन करनेको दण्ड २, मीठे वचन या अन्यान्य उपायोंसे क्रोध दूर करनेको साम ३ और किसी वस्तुके देनेको दान ४ कहते हैं । ये ही चारो (भेदः, दण्डः, साम दानम्), नीति जाननेवालों के उपाय [2] हैं, उपायः ( पु ) है । ( '१ भेदके तीन, २ दण्डके दो चार,

---

१. अष्टवर्गो यथा—कृषिर्वणिक्पथो दुर्गः सेतुः कुञ्जरबन्धनम् ।
खन्याकरबलादानं शून्यानां च विवेचनम्' ॥ १ ॥ इति ॥

२. तदुक्तं याज्ञवल्क्येन—
'उपायाः साम दानं च भेदो दण्डस्तथैव च ॥ इति याज्ञ० स्मृ० १।३४६ ।
मनुं प्रति मत्स्येनोपायस्य सप्तविधत्वमुक्तं तथा हि—
'साम भेदस्तथा दानं दण्डश्च मनुजेश्वर । उपेक्षा च तथा माया इन्द्रजालं च पार्थिव ॥१॥
प्रयोगाः कथिताः सप्त तन्मे निगदतः शृणु' वीर० राज० प्रक० पृ० २८० ॥

१ साहसं तु दमो दण्डः २ साम सान्त्व३मथो समौ ।
भेदोपजापा४वुपधा धर्माद्यैर्यत्परीक्षणम् ॥ २१ ॥

---

३ साम के चार और ४ दानके पाँच भेद होते हैं १ )

१ साहसम् ( न ) दण्डः, दमः ( २ पु ) 'दण्ड' के ३ नाम हैं ॥

२ साम ( = सामन् ), सान्त्वम् ( २ न ), 'साम शान्त करने' के २ नाम हैं ॥

३ भेदः, उपजापः ( २ पु ), 'भेद' के २ नाम हैं ॥

४ उपधा ( स्त्री ), 'मन्त्री आदिके धर्म, धन काम और भयादिको जाननेके लिये उनकी राजाद्वारा परीक्षा करने' का १ नाम है ॥

---

१. भेदस्त्रिधा तथा हि—

स्नेहरागापनयनं संहर्षोत्पादनं तथा ।
संतर्जनं च भेदज्ञैर्भेदस्तु त्रिविधो मतः' ॥ १ ॥ इति ॥

नारदेन दण्डस्य द्वैविध्यं मनुना च चतुर्विधत्वमुक्तम् । तत् क्रमशः प्रदर्श्यते—

'शारीरश्चार्थदण्डश्च दण्डश्च द्विविधो मतः ।
शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्तितः ॥ १ ॥
काकिन्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च' । इति नारदोक्तम् ।
'वाग्दण्डं प्रथमं कुर्याद्धिग्दण्डं तदनन्तरम् ।
तृतीयं धनदण्डं तु वधदण्डमतः परम्' ॥ १ ॥ इति मनुः ८।१२९ ॥

अग्निपुराणे सामश्चतुर्विधत्वमुक्तन्तथा हि—

'चतुर्विधं स्मृतं साम उपकारानुकीर्तनम् ।
मिथः सम्बन्धकथनं मृदुपूर्वं च भाषणम् ॥ १ ॥
आयतेर्दर्शनं वाचा तत्रा (वा) हमिति चार्पणम् । इति ॥

दानस्य पञ्चविधमुक्तमग्निपुराणे, तथा हि—

'यः संप्राप्तधनोत्सर्ग उत्तमाधममध्यमः ।
प्रतिदानं तदा तस्य गृहीतस्यानुमोदनम् ॥ १ ॥
द्रव्यदानमपूर्वं च तथैवेष्टप्रवर्त्तनम् ।
देयं च प्रतिमोक्षश्च दानं पञ्चविधं स्मृतम्' ॥ २ ॥

एतेषामुपायानां प्रयोगकालादिकं विविधसम्मतभेदप्रकाराश्चात्र ग्रन्थविस्तरभिया नोल्लिखिताः । ते वीरमित्रोदयस्य राजनीतिप्रकाशे पृ० २७८ तमे द्रष्टव्याः ॥

१ पञ्च त्रिष्व २ षडक्षीणो यस्तृतीयाद्यगोचरः ।
३ विविक्तविजनच्छन्ननिःशलाकास्तथा रहः ॥ २२ ॥
रहश्चोपांशु चालिङ्गे ४ रहस्यं तद्भवे त्रिषु ।
५ [1]समौ विस्रम्भविश्वासौ ६ भ्रेषो भ्रंशो यथोचितात् ॥२३॥
७ अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् ।
८ युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ॥ २४ ॥
न्याय्यं च त्रिषु षट् ९ संप्रधारणा तु समर्थनम् ।
१० अववादस्तु निर्देशो निदेशः शासनं च सः ॥ २५ ॥
शिष्टिश्चाज्ञा च—

---

१ यहाँसे ५ शब्द त्रिलिङ्ग हैं ॥

२ अषडक्षीणः ( त्रि ), 'केवल दो आदमियोंकी की हुई गुप्त सलाह' का १ नाम है ॥

३ विविक्तः, विजनः, छन्नः, निःशलाकः ( ४ त्रि ), रहः ( = रहस् न ), रहः ( = रहः ), उपांशु ( २ अव्य० ), 'एकान्त' के ७ नाम हैं ॥

४ रहस्यम् ( त्रि ), 'रहस्य, छिपाने योग्य, सलाह आदि' का १ नाम है ॥

५ विस्रम्भः ( + विश्रम्भः ), विश्वासः ( २ पु ), 'विश्वास' के २ नाम हैं ॥

६ भ्रेषः ( पु ), 'अनुचित' का १ नाम है ॥

७ अभ्रेषः, न्यायः, कल्पः ( ३ पु ), देशरूपम्, समञ्जसम् ( २ न ), 'न्याय' के ५ नाम हैं ॥

८ युक्तम्, औपयिकम्, लभ्यम्, भजमानम्, अभिनीतम्, न्याय्यम् (६ त्रि) 'न्याययुक्त कार्य या द्रव्यादि' के ६ नाम हैं ॥

९ संप्रधारणा ( स्त्री ), समर्थनम् ( न ), 'उचित और अनुचितका विचारकर निश्चय करने' के २ नाम हैं ॥

१० अववादः, निदेशः निर्देशः, ( ३ पु ), शासनम् ( न ), शिष्टिः, आज्ञा ( २ स्त्री ), 'आज्ञा, हुक्म' के ६ नाम हैं ॥

---

१. 'समौ विश्रम्भविश्वासौ' इति पाठान्तरम् ॥

—१ संस्था तु मर्यादा धारणा स्थितिः ।
२ आगोऽपराधो मन्तुश्च ३ समे तूद्दानबन्धने ॥ २६ ॥
४ द्विपाद्यो द्विगुणो दण्डो ५ भागधेयः करो बलिः ।
६ घट्टादिदेयं शुल्कोऽस्त्री ७ प्राभृतं तु प्रदेशनम् ॥ २७ ॥
८ उपायनमुपग्राह्यमुपहारस्तथोपदा ।
९ [1]यौतकादि तु यद्देयं सुदायो हरणं च तत् ॥ २८ ॥
१० तत्कालस्तु तदात्वं स्या११दुत्तरः काल आयतिः ।

१ संस्था, मर्यादा, धारणा, स्थितिः ( ४ स्त्री ), 'उचित मार्गपर रहने' के ४ नाम हैं ॥

२ आगः ( = आगस् न ), अपराधः, मन्तुः ( २ पु ), 'अपराध, कसूर' के ३ नाम हैं ॥

३ उद्दानम् , बन्धनम् ( २ न ), 'बाँधने या कैद करने' के २ नाम हैं ॥

४ द्विपाद्यः ( पु ), 'दुगुने दण्ड' का १ नाम है ॥

५ भागधेयः, करः, बलिः ( ३ पु ) 'कर मालगुजारी' के ३ नाम हैं ॥

६ शुल्कः ( पु न ), 'घाट जङ्गल और नदी आदिकी आमदनीसे दिये जानेवाले राज-भाग ( टेक्स )' का १ नाम है ॥

७ प्राभृतम् , प्रदेशनम् ( २ न ), 'मित्रादिको खुश करनेके लिये दिये जानेवाले पदार्थ' के २ नाम हैं ॥

८ उपायनम् , उपग्राह्यम् ( २ न ), उपहारः ( पु ), उपदा ( स्त्री ), भा० दी० मतसे 'राजाको दिये जानेवाले भेंट, नजराना' के ४ नाम हैं। प्राभृतम् ,········· 'देवता, राजा, मित्रादिको खुश करनेके लिये दिये जानेवाले भेंट' के ६ नाम हैं ॥

९ यौतकम् ( + यौतुकम् । न ), सुदायः ( पु ) हरणम् ( न ), 'यज्ञोपवीत आदिमें दी हुई भिक्षा या दामादको दिये जानेवाले दहेज' के ३ नाम हैं ॥

१० तत्कालः ( पु ), तदात्वम् ( न ), 'वर्तमान काल, बीतते हुए समय' के २ नाम हैं ॥

११ आयतिः (स्त्री), 'आनेवाले समय, भविष्यत्काल' का १ नाम है ॥

१. 'यौतुकादि' इति पाठान्तरम् ॥

१ सांदृष्टिकं फलं सद्य २ उदर्कः फलमुत्तरम् ॥ २९ ॥
३ अदृष्टं वह्नितोयादि ४ दृष्टं स्वपरचक्रजम् ।
५ महीभुजामहिभयं स्वपक्षप्रभवं भयम् ॥ ३० ॥
६ प्रक्रिया त्वधिकारः स्या ७ च्चामरं तु प्रकीर्णकम् ।
८ नृपासनं यत्तद्भद्रासनं ९ सिंहासनं तु तत् ॥ ३१ ॥
हैमं १० छत्रं त्वातपत्रं—

१ सांदृष्टिकम् ( न ), 'व्यापार आदिके बाद शीघ्र मिलनेवाले फल' का १ नाम है ॥

२ उदर्कः ( पु ), 'भविष्यमें होनेवाले फल' का १ नाम है ॥

३ अदृष्टम् ( न ), 'आगसे जलने, पानीसे बह जाने आदि' ( आदि पदसे 'व्याधि, दुर्भिक्ष, मरण, बहुत वर्षा, सूखा, मूग, मूषक' का संग्रह है ) के भय' का १ नाम है ॥

४ दृष्टम् ( न ), 'अपने राज्यमें चोर, जङ्गल आदिका भय तथा दूसरे राज्यसे दाह और चढ़ाई आदिके भय' का १ नाम है ।

५ अहिभयम् ( न ), 'अपने पक्ष ( मन्त्री आदि ) से होनेवाले राजा आदिके भय' का १ नाम है । ([1] 'पक्षके ७ भेद हैं' ) ॥

६ प्रक्रिया ( स्त्री ), अधिकारः ( पु ), 'व्यवस्थाको ठीक करने' के १ नाम हैं ॥

७ चामरम् ( + चमरम् ; चमरः पु, चामरा स्त्री ), प्रकीर्णकम् ( २ न ), 'चँवर' के २ नाम हैं ॥

८ नृपासनम् , भद्रासनम् ( २ न ), 'मणि आदिके बने हुए राजाके आसन' के २ नाम हैं ॥

९ सिंहासनम् ( न ), 'सुवर्णके बने हुए राजाके सिंहासन' का १ नाम है ॥

१० छत्रम् , आतपत्रम् ( २ न ), 'छाता' के २ नाम हैं ॥

---

१. पक्षः सप्तधा, तथा हि—

'निजोऽथ मैत्रश्च समाश्रितश्च सम्बन्धतः कार्यसमुद्भवश्च ।
भृत्या गृहीतो विविधोपचारैः पक्षं बुधाः सप्तविधं वदन्ति' ॥ १ ॥ इति ॥

—१ राज्ञस्तु नृपलक्ष्म तत् ।
२ भद्रकुम्भः पूर्णकुम्भो ३ भृङ्गारः कनकालुका ॥ ३२ ॥
४ निवेशः शिविरं षण्ढे ५ सज्जनं तूपरक्षणम् ।
६ हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥ ३३ ॥
७ दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः ।
मतङ्गजो गजो नागः कुञ्जरो वारणः करी ॥ ३४ ॥
इभः स्तम्बेरमः पद्मी ८ यूथनाथस्तु यूथपः ।

---

१ नृपलक्ष्म ( = नृपलक्ष्मन् , न ), 'राजाके छाते' का १ नाम है ॥

२ भद्रकुम्भः, पूर्णकुम्भः ( २ पु ), 'मङ्गलके लिये जलसे भरे हुए घड़े' के २ नाम हैं ॥

३ भृङ्गार ( पु ), कनकालुका ( स्त्री ), 'भारी, हथहर ( स्वर्णके पात्र-विशेष ), के २ नाम हैं ॥

४ निवेशः ( पु ), शिविरम् ( = शिविरम् । न ), 'सेनाके ठहरनेकी जगह' के २ नाम हैं ॥

५ सज्जनम् , उपरक्षणम् ( २ न ), 'सेनाकी रक्षाके वास्ते नियम किये हुए पहरे' के २ नाम हैं ॥

६ सेनाङ्गम् (न), 'हाथी, रथ, घोड़ा और पैदल ये ४ सेनाके[1] अङ्ग' हैं। ( 'नाव, जहाज आदिका रथमें, किरात, मल्लाह आदिका पैदलमें और भैंसा आदिका हाथी में अन्तर्भाव होनेसे उनका पृथक् ग्रहण नहीं किया गया है' )

७ दन्ती ( = दन्तिन् ), दन्तावलः, हस्ती ( = हस्तिन् ), द्विरदः, अनेकपः, द्विपः, मतङ्गजः, गजः, नागः, कुञ्जरः, वारणः, करी ( = करिन् ), इभः, स्तम्बेरमः, पद्मी ( = पद्मिन् । + सामजः, सिन्धुरः, कुम्भी = कुम्भिन् । १५ पु ), 'हाथी' के १५ नाम हैं। ( 'यहांसे श्लो० ४३ तक गजप्रकरण है' ) ॥

८ यूथनाथः, यूथपः ( २ पु ), 'झुण्डके स्वामी' के २ नाम हैं ॥

---

१. तदुक्तं हेमचन्द्राचार्यैः—

'गजो वाजी रथः पत्तिः सेनाङ्गं स्याच्चतुर्विधम्' ॥

इति अभि० चिन्ता० ३।४१५ ॥

१ मदोत्कटो मदकलः २ कलभः करिशावकः ॥ ३५ ॥
३ प्रभिन्नो गर्जितो मत्तः ४ समावुद्वान्तनिर्मदौ ।
५ "राजवाह्यस्त्वौपवाह्यः ६ सन्नाह्यः समरोचितः' (२५)
७ हास्तिकं गजता वृन्दे ८ करिणी धेनुका वशा ॥ ३६ ॥
९ गण्डः कटो १० मदो दानं ११ वमथुः करशीकरः ।
१२ कुम्भौ तु पिण्डौ शिरसः—

१ मदोत्कटः, मदकलः ( २ पु ), 'मतवाले हाथी' के २ नाम हैं ॥

२ कलभः (+करभः), करिशावकः ( पु ), 'तीस वर्षसे कम उम्रवाले हाथीके बच्चे' के २ नाम हैं ॥

३ प्रभिन्नः, गर्जितः, मत्तः ( ३ पु ), 'जिसका मद गिर रहा हो उस हाथी' के ३ नाम हैं ॥

४ उद्वान्तः, निर्मदः ( २ पु ), 'जिसका मद गिरकर समाप्त हो गया हो उस हाथी' के २ नाम हैं ॥

५ [ राजवाह्यः, औपवाह्यः ( +उपवाह्यः । २ पु ), 'राजाके चढ़ने योग्य हाथी' के २ नाम हैं ] ॥

६ [ सन्नाह्यः, समरोचितः ( २ पु ), 'लड़ाईके योग्य हाथी' के २ नाम हैं ] ॥

७ हास्तिकम् ( न ), गजता ( स्त्री ), 'हाथियोंके झुण्ड' के २ नाम हैं ॥

करिणी, धेनुका, वशा ( ३ स्त्री ), 'हथिनी' के ३ नाम हैं ॥

९ गण्डः ( भा० दी० ), कटः ( २ पु ), 'हाथीके गाल' के २ नाम हैं ॥ ( 'उपलक्षण होनेसे प्राणिमात्रके गालके भी ये दो नाम हैं' ) ॥

१० मदः ( पु ), दानम् ( न ), 'हाथीके मद' के २ नाम हैं ॥

११ वमथुः, करशीकरः ( २ पु ), 'हाथीके सूंड़से निकले हुए पानीके छींटे' के २ नाम हैं ॥

१२ कुम्भः ( पु ),'हाथीके मस्तकके ऊपरवाले दोनों मांस-पिण्डों' का १ नाम है ॥

१. अयं क्षेपकांशः क्षीरस्वामिव्याख्याने दृश्यते ॥

—१ तयोर्मध्ये विदुः पुमान् ॥ ३७ ॥
२ अवग्रहो ललाटं[1] स्या३दीषिका त्वक्षिकूटकम् ।
४ अपाङ्गदेशो निर्याणं ५ कर्णमूलं तु चूलिका ॥ ३८ ॥
६ अधः कुम्भस्य वाहित्थं ७ प्रतिमानमधोऽस्य यत् ।
८ आसनं स्कन्धदेशः स्यात् ९ पद्मकं बिन्दुजालकम् ॥ ३९ ॥

---

१ [2]विदुः (पु), 'हाथीके मस्तकके ऊपरवाले दोनों मांसपिण्डोंके बीचवाले भाग' का १ नाम है ॥

२ अवग्रहः ( + अवग्राहः । पु ),'हाथीके ललाट' का १ नाम है ॥

३ ईषिका ( + ईषीका, इषिका, इषीका । स्त्री ), अक्षिकूटकम् ( न ) 'हाथीकी आँखके गोलाकार भाग' के २ नाम हैं ॥

४ निर्याणम् ( न ), 'हाथीकी आँखके किनारेवाले भाग' का १ नाम है ॥

५ चूलिका ( स्त्री ), 'हाथीकी कनपट्टी' ( कानकी जड़वाले भाग )' का १ नाम है ॥

६ वाहित्थम् ( न ), 'हाथीके शिरके ऊपरवाले दोनों मांस-पिण्ड-के नीचेवाले भाग' का १ नाम है ॥

७ प्रतिमानम् ( न ), हाथीके दोनों दाँतोंके बीचवाले भाग' का १ नाम है ॥

८ आसनम् ( न ), 'हाथीका कन्धा' अर्थात् 'हाथीवानके बैठनेकी जगह' का १ नाम है ॥

९ पद्मकम् , बिन्दुजालकम् ( भा० दी० । + विन्दुजालकम् । २ न ), 'हाथियोंके मुखमें कमलाकार छोटे २ लाल चिह्न-विशेष' के २ नाम हैं ॥

---

१. 'स्यादिषीकाः' इति पाठान्तरम् ॥

२. यदाह पालकाप्यः—

'तत्र रक्षाविताने द्वे विदू द्वौ श्रवणे गतौ ।
प्राक्च पश्चाच्च तिर्यक्च षड्भेदाङ्कुशवारणा' ॥ १ ॥

'तत्रारक्षविताने' इत्येवं पाठभेदः अभि० चिन्ता० ( ४।२९२ ) व्याख्याने समुपलभ्यते ॥

१ पक्षभागः पार्श्वभागो २ दन्तभागस्तु योऽग्रतः ।
३ द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात् ॥ ४० ॥
४ [1]तोत्रं वेणुकं ५ मालानं बन्धस्तम्भे ६ ऽथ शृङ्खले ।
अन्दुको निगडोऽस्त्री स्याऽदङ्कुशोऽस्त्री सृणिः स्त्रियाम् ॥ ४१ ॥
८ दूष्या कक्ष्या वरत्रा स्यात् ९ कल्पना सज्जना समे ।
१२ प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ॥ ४२ ॥

---

१ पक्षभागः, पार्श्वभागः ( भा० दी० । २ पु ), 'हाथीके पार्श्वभाग' ( बगल )' के २ नाम हैं ॥

२ दन्तभागः ( पु ), 'हाथीके आगेवाले भाग' का १ नाम है ॥

३ गात्रम् , अवरम् , (+ अवरम् , अपरम् । २ न), 'हाथीके आगेवाले जङ्घा आदि पूर्वार्द्ध शरीर और पीछेवाले जङ्घा आदि परार्द्ध शरीर' के १—१ नाम हैं ॥

४ तोत्रम् , वेणुकम् ( + वैणुकम् । २ न ), 'हाथीको मारनेवाले डण्डे या चाबुक आदि' के २ नाम हैं ॥

५ आलानम् ( न ), 'हाथीको बाँधनेवाले खूंटे' का १ नाम है ॥

६ शृङ्खलम् ( त्रि[2] ), अन्दुकः ( + अन्दूः स्त्री । पु ), निगडः ( पु न ), 'हाथीकी बेड़ी' ( बाँधनेवाली सिकड़ी )' के ३ नाम हैं ॥

७ अङ्कुशः ( पु न ), सृणिः ( + शृणिः । स्त्री ), 'अङ्कुश' के २ नाम हैं ॥

८ दूष्या ( + चूष्या, चूषा मुकु० ), कक्ष्या, वरत्रा ( ३ स्त्री ), 'हाथीके कसनेवाले रस्से' के ३ नाम हैं ॥

९ कल्पना, सज्जना ( स्त्री ), 'गेरू आदिसे हाथीकी सजावट करने' के २ नाम हैं ॥

१० प्रवेणी ( + प्रवेणः । स्त्री ), आस्तरणम् ( न ), वर्णः, परिस्तोमः ( + वर्णपरिस्तोमः । २ पु ), कुथः (पु स्त्री), 'हाथीके झूले' के ५ नाम हैं ॥

---

१. 'तोत्रं वैणुकमालानं बन्धस्तम्भेऽथ शृङ्खला' इति पाठान्तरम् ॥

२. तथा च मेदिनी—'शृङ्खला पुंस्कटीवस्त्रबन्धे च निगडे त्रिषु' इति मे० पृ० १९८ ॥

१ वीतं त्वसारं हस्त्यश्वं २ वारी तु गजबन्धनी ।
३ घोटके [1]वीतितुरगतुरङ्गाश्वतुरङ्गमाः ॥ ४३ ॥
वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।
४ आजानेयाः कुलीनाः स्यु ५ र्विनीताः साधुवाहिनः ॥ ४४ ॥
६ [2]वनायुजाः पारसीकाः काम्बोजा बाह्लिका हयाः ।
७ ययुरश्वोऽश्वमेधीयो ८ जवनस्तु जवाधिकः ॥ ४५ ॥

---

१ वीतम् ( न ) 'लड़नेमें असमर्थ हाथी-घोड़े' का १ नाम है ॥

२ वारी, गजबन्धनी (भा० दी० । २ स्त्री), 'हाथीखाना' अर्थात् 'हाथी बाँधनेकी जगह' के २ नाम हैं ॥

३ घोटकः ( + घोटः ), वीतिः ( + पीतिः ), तुरगः, तुरङ्गः, अश्वः, तुरङ्गमः, वाजी ( = वाजिन् ), वाह, अर्वा ( = अर्वन् ), गन्धर्वः, हयः, सैन्धवः, सप्तिः ( १३ पु ), 'घोड़े'के १३ नाम हैं । ( यहाँसे श्लो० ५० तक 'अश्वप्रकरण है' ) ॥

४ [3]आजानेयः ( पु ), 'अच्छे घोड़े' का १ नाम है ॥

५ विनीतः, साधुवाही ( + साधुवाहिन् भा० दी० । २ पु ); 'अच्छी २ चालसे शिक्षित घोड़े' के २ नाम हैं ॥

६ वनायुजः (+ वानायुजः), पारसीकः, काम्बोजः, बाह्लिकः (+ वाह्लिकः, वाह्लीकः, बाह्लीकः । ४ पु) 'वनायु, पारस, काम्बोज और वाह्लिक देशोंमें पैदा होनेवाले घोड़े' के क्रमशः १-१ नाम हैं । (किसी-किसी के मतसे प्रथम दो नाम 'पारसी घोड़े' के और अन्तवाले दो नाम उक्तार्थक हैं ) ॥

७ ययुः, अश्वमेधीयः ( भा० दी० । २ पु ), 'अश्वमेध यज्ञमें छोड़े जानेवाले घोड़े' के २ नाम हैं ॥

८ जवनः ( + प्रजवी = प्रजविन् ), जवाधिकः ( भा० दी० । २ पु ), 'बहुत तेज चलनेवाले घोड़े' के २ नाम हैं ॥

---

१. 'पीतितुरग—' इति पाठान्तरम् ॥ २. 'वानायुजः' इति पाठान्तरम् ॥

३. अश्वशास्त्रे आजानेयलक्षणमुक्तन्तथा हि—

'शक्तिभिर्भिन्नहृदयाः स्खलन्तश्च पदे-पदे ।
आजानन्ति यतः संज्ञामाजानेयास्ततः स्मृताः' ॥ १ ॥ इति ॥

१ पृष्ठ्यः स्थौरी २ सितः कर्को ३ रथ्यो वोढा रथस्य यः ।
४ बालः किशोरो ५ वाम्यश्वा वडवा ६ वाडवं गणे ॥ ४६ ॥
७ त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते ।
८ कश्यं तु मध्यमश्वानां ९ हेषा ह्रेषा च निस्वनः ॥ ४७ ॥
१० निगालस्तु गलोद्देशो ११ वृन्दे त्वश्वीयमाश्ववत् ।
१२ आस्कन्दितं [1]धौरितकं रेचितं वल्गितं प्लुतम् ॥ ४८ ॥

---

१ पृष्ठ्यः, स्थौरी ( = स्थौरिन् । २ पु ), 'अन्न आदि जिसपर लादा जाय उस घोड़े' के २ नाम हैं ॥

२ कर्कः ( पु ), 'सफेद घोड़े' का १ नाम है ॥

२ रथ्यः ( पु ), 'रथमें चलनेवाले घोड़े' का १ नाम है ॥

४ किशोरः ( पु ), 'बछेड़ा' अर्थात् 'बच्चे घोड़े' का १ नाम है । ( 'उपलक्षणतया 'किशोर' शब्द मनुष्यादिके बालकका भी वाचक है' ) ॥

५ वामी, अश्वा, वडवा ( ३ स्त्री ), 'घोड़ी' के ३ नाम हैं ॥

६ वाडवम् ( न ), 'घोड़ियोंके झुण्ड' का १ नाम है ॥

७ आश्वीनम् ( त्रि ), 'एक दिनमें घोड़ेसे चलने योग्य रास्ता या देशादि' का १ नाम है ॥

८ कश्यम् ( न ), घोड़ेके मध्य भाग' का १ नाम है ॥

९ हेषा, ह्रेषा ( २ स्त्री ), 'हिनहिनाहट, घोड़ेकी बोली' के २ नाम हैं ॥

१० [2]निगालः, गलोद्देशः ( भा० दी० । २ पु ), 'घोड़ेकी गर्दनके पीछेवाले भाग' के २ नाम हैं ॥

११ अश्वीयम् ( + आश्वीयम् ), आश्वम् ( २ न ), 'घोड़ोंके झुण्ड' के २ नाम हैं ॥

१२ आस्कन्दितम् ( + उत्तेरितम् , उपकण्ठम् ), धौरितकम् ( + धोरितकम् , धोरितम् , धौर्यम् , धारणम् ), रेचितम् ( + उत्तेजितम् ) वल्गितम् ,

---

१. 'धोरितकं' इति पाठान्तरम् ॥

२. अश्वशास्त्रे निगाललक्षणमुक्तन्तद्यथा—

घण्टाबन्धसमीपस्थो निगालः कथ्यते बुधैः' इति ॥

गतयोऽमूः पञ्च धारा १ घोणा तु प्रोथमस्त्रियाम् ।
२ कविका तु खलीनोऽस्त्री ३ शफं क्लीबे खुरः पुमान् ॥ ४९ ॥
४ पुच्छोऽस्त्री लूमलाङ्गूले ५ वालहस्तश्च वालधिः ।
६ त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि ॥ ५० ॥

प्लुतम् ( ५ न ), घोड़ोंके सरपट दौड़ने, दुलकी चलने, पोइया चलने, उछाल मारकर चलने और चौकड़ी मारकर चलने' का क्रमशः १–१ नाम है । 'धारा' ( स्त्री ) 'घोड़ोंके पूर्वोक्त पांच 'चालों' का १ नाम है ॥

१ घोणा (स्त्री), प्रोथम् (पु न), भा० दी० मतसे 'घोड़ेके चक्कर लगाने' के २ नाम हैं और मही० मतसे 'घोड़ेकी नाक' का 'प्रोथम्' यह १ नाम है ॥

२ कविका ( +कवी, कवियम् न । स्त्री ), खलीनः ( पु न ), 'घोड़ेकी लगाम' के २ नाम हैं ॥

३ शफम् (न), खुरः (+क्षुरः । पु), 'घोड़ेकी सुम' (खुर)' के २ नाम हैं ॥

४ पुच्छः ( पु न ), लूमम् , लाङ्गूलम् (+लाङ्गुलम् । २ न ), 'घोड़ेकी दुम ( पूंछ )' के ३ नाम हैं ॥

५ वालहस्तः, वालधिः ( २ पु ), 'घोड़ेकी पूंछके बालवाले अगले भाग' के २ नाम हैं ॥ ( यद्यपि 'शफ आदि शब्द अश्वप्रकरणमें कथित है, तथापि इन ( शफम्,······वालधिः ) शब्दों का प्रयोग गौ आदि पशुओंके भी खुर आदि अर्थत्रयमें होता है ) ॥

६ उपावृत्तः, लुठितः ( २ त्रि ), 'थकावट दूर करनेके लिए जमीनपर लोटे हुए घोड़े' के २ नाम हैं ॥

---

१. अत्र क्षी० स्वा० 'क्रमस्त्वन्यथा । यथाहुः—

'धोरितं वल्गितं धारा प्लुतमुत्तेजितं क्रमात् । उत्तेरितं चेति पञ्च शिक्षयेत्तुरगं गतम् ॥ १ ॥
धोरितं गतिमात्रे यद्योजितं वल्गितं पुरः । अग्रकायसमुल्लासात्कुञ्चितास्यं नतत्रिकम् ॥ २ ॥
पूर्वापरोन्नमनतः क्रमादारोपणं प्लुतम् । उत्तेजितं मध्यवेगं योजनं श्लथवल्गया ॥ ३ ॥
उत्तेरितेति वेगान्धो न शृणोति न पश्यति' इति' ॥

इत्याह 'हेमचन्द्राचार्यैरप्यन्यथैव क्रमो लिखितः' सोऽभिधानचिन्तामणौ ( ४।३११–३१५ ) द्रष्टव्यः ॥

'शिशुपालवध'स्य व्याख्यायां 'सर्वङ्कषा' यां मल्लिनाथेन–'अश्वशास्त्रे तु संज्ञान्तरेणोक्ताः– 'गतिः पुका चतुष्का च तद्वन्मध्वजवा परा । पूर्णवेगा तथा चान्या पञ्च धाराः प्रकीर्तिताः' एकैका त्रिविधा धारा हयशिक्षाविधौ मता । लघ्वी मध्या तथा दीर्घा ज्ञात्वैता योजयेत् क्रमात्' इति । 'अध्याकुलं'—(५।६०) श्लोकस्य व्याख्यानेऽश्वगतीनां भिन्नानि नामानि ।

१ याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः ।
२ असौ [1]पुष्यरथश्चक्रयानं न समराय यत् ॥ ५१ ॥
३ कर्णीरथः प्रवहणं डयनं च समं त्रयम् ।
४ क्लीबेऽनः शकटोऽस्त्री स्याद् ५ गन्त्री कम्बलिवाह्यकम् ॥ ५२ ॥
६ शिबिका याप्ययानं स्याद् ७ दोला प्रेङ्खादिका स्त्रियाम् ।
८ उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे ॥ ५३ ॥
९ पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बली ।
१० रथे काम्बलवास्त्राद्याः कम्बलादिभिरावृते ॥ ५४ ॥

---

१ शताङ्गः, स्यन्दनः, रथः ( ३ पु ), 'लड़ाईके रथ' के ३ नाम हैं । ( 'यहांसे आगे श्लोक ६१ तक 'रथ-प्रकरण' है' ) ॥

२ पुष्यरथः ( + पुष्परथः । ), 'यात्रा, उत्सव आदि में चढ़नेके लिये बनाये हुए रथ' का १ नाम है ॥

३ कर्णीरथः ( पु ), प्रवहणम्, डयनम् ( + हयनम् । २ न ), 'स्त्रियोंके चढ़नेके लिये पर्दा आदिसे आड़ किये हुए रथ' के ३ नाम हैं ॥

४ अनः ( = अनस्, न ), शकटः ( पु न ), 'गाड़ी' के २ नाम हैं ॥

५ गन्त्री ( स्त्री ), कम्बलिवाह्यकम् (भा० दी० । + गन्त्रीकम्, बलिवाह्यकम् । न ), 'छोटी गाड़ी' के २ नाम हैं ॥

६ शिबिका ( + शीविका । स्त्री ), याप्ययानम् (न), 'पालकी' के २ नाम हैं ॥

७ दोला ( + दोली ), प्रेङ्खा, आदि ( 'शयनखट्वा,......' । २ स्त्री ), 'झूला, हिंडोला' के २ नाम हैं ॥

८ द्वैपः, वैयाघ्रः (२ त्रि), 'बाघके चमड़ेसे मढ़े हुए रथ' के २ नाम हैं ॥

९ पाण्डुकम्बली ( + पाण्डुकम्बलिन्, त्रि ), 'पाण्डु ( धूसर ) कम्बलसे मढ़े या ढके हुए रथ' का १ नाम है ॥

१० काम्बलः, वास्त्रः ( २ त्रि ), आदि 'कम्बल और कपड़े आदिसे ढके हुए रथ' का क्रमशः १-१ नाम है ॥

---

१. 'पुष्परथश्चक्रयानं' इति पाठान्तरम् ॥

१ त्रिषु द्रुपादयो २ रथ्या रथकट्या रथव्रजे।
३ धूः स्त्री क्लीवे यानमुखं ४ स्याद्रथाङ्गमपस्करः॥ ५५॥
५ चक्रं रथाङ्गं ६ तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान्।
७ पिण्डिका नाभि ८ रक्षाग्रकीलके तु द्वयोरणिः॥ ५६॥
९ रथगुप्तिर्वरूथो ना १० कूबरस्तु युगन्धरः।
११ अनुकर्षो दार्वध रथं—

---

१ 'द्रुप' ( २।८।५३ ) आदि शब्द त्रिलिङ्ग हैं॥

२ रथ्या, रथकट्या ( २ स्त्री ), रथव्रजम् ( भा० दी०, पु न ), 'रथोंके समूह' के ३ नाम हैं॥

३ धूः ( = धुर्, स्त्री ), यानमुखम् ( न ), 'रथके धूरा' के २ नाम हैं॥

४ रथाङ्गम् ( न ), अपस्करः ( पु ), 'रथके 'अवयव' के २ नाम हैं॥

५ चक्रम्, रथाङ्गम्, (२ न), 'रथ, गाड़ी आदिके पहिये' के २ नाम हैं॥

६ नेमिः ( + नेमी। स्त्री ), प्रधिः ( पु ), 'हाल, रथके पहियेके ऊपर वाले परिधि' के २ नाम हैं॥

७ पिण्डिका ( + पिण्डी), नाभिः ( + नाभी। २ स्त्री), 'पहियेके बीचवाले भाग ( जिसमें चारों तरफ से काठ जुड़े रहते हैं )' के २ नाम हैं॥

८ अणिः ( पु स्त्री ), 'धूरामें लगानेवाली किल्ली' का १ नाम है॥

९ रथगुप्तिः ( स्त्री ), वरूथः ( पु ), 'लड़ाईमें शत्रुके प्रहारसे बचनेके लिये रथमें लगाये हुए लोहा आदिके पर्दे' के २ नाम हैं॥

१० कूबरः, युगन्धरः ( २ पु ), 'जुआ, फड़, रथमें घोड़ा आदि जोते जानेवाले काष्ठ या जुएके काठको बांधे जानेवाले स्थान' के २ नाम हैं॥

११ अनुकर्षः ( + अनुकर्षा = अनुकर्षन्। पु ), 'रथके नीचेवाले काष्ठ' के २ नाम हैं॥

---

१. इयं महेश्वरोक्तिमुकुटानुरोधेन। सामान्येन रथाङ्गस्याक्षयुगचक्रादिकमपस्करः, इति। अग्रे रथाङ्गत्वेन गतार्थस्यापि 'चक्रम्' इति विशेषतो नामान्तरप्रतिपादनाय 'तस्यान्ते नेमिः' इत्युक्तये च रथाङ्गस्यानुवादः' इति चोक्तवान्। भानुजिदीक्षितस्तु 'रथारम्भकं चक्रादन्यद्' इति क्षीरस्वामिग्रन्थानुरोधात् 'चक्रभिन्नस्य रथारम्भकवकस्य' इमे द्वे नामनी'त्युक्तवान्॥

—१ प्रासङ्गो ना [1]युगाद्युगः ॥ ५७ ॥

२ सर्वं स्याद्वाहनं यानं युग्यं पत्त्रं च धोरणम् ।

३ परम्परावाहनं यत्तद्वैनीतकमस्त्रियाम् ॥ ५८ ॥

४ आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ।

५ नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः ॥ ५९ ॥

[2]सव्येष्ठदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः ।

६ रथिनः स्यन्दनारोहा—

---

१ प्रासङ्गः ( प्रसङ्गयः पु ), महे० मतसे 'रथ आदिके जुआठ, फड़' का और [3]भा० दी० मतसे 'नये बछवाको पहले पहल शिक्षा देनेके लिये उसके कन्धेपर रक्खे जानेवाले काष्ठ' का १ नाम है ॥

२ वाहनम् , यानम् , युग्यम् , पत्त्रम् , धोरणम् ( ५ न )'वाहनमात्र' अर्थात् 'हाथी, घोड़ा, इत्यादि ( श्लो० ३३ ) से लेकर दोला ( श्लो ५३ ) तक सब' के ये ५ नाम हैं ॥

३ वैनीतकम् ( + प्राबन्धिकम् । न पु ), 'परम्परावाली सवारी, कहाँर आदिके द्वारा बारी २ से ढोई जानेवाली पालकी, डोली आदि' का १ नाम है ॥

४ आधोरणः, हस्तिपकः, हस्त्यारोहः, निषादी ( = निषादिन् । ४ पु ) 'हाथीवान' के ४ नाम हैं । ('किसी २ के मत से २-२ शब्द एकार्थक हैं') ॥

५ नियन्ता ( = नियन्तृ ), प्राजिता ( प्राजितृ ), यन्ता ( = यन्तृ ), सूतः, क्षत्ता ( = क्षत्तृ ), सारथिः, सव्येष्ठः ( सव्येष्ठा = सव्येष्ठृ ), दक्षिणस्थः ( ८ पु ), 'रथके परिवार' अर्थात् 'रथ हाँकनेवाला ड्राइवर, कोचवान, गाड़ीवान, बग्गीवान, एक्कावान और पीछे चढ़नेवाले-जो दौड़कर आगेकी भीड़को हटाकर फिर पीछे चढ़ जाते हैं, इत्यादि' के ८ नाम हैं ॥

६ रथी ( = रथिन् ), स्यन्दनारोहः ( २ पु ) 'रथपर चढ़कर लड़नेवाले' के २ नाम हैं ॥

---

१. 'युगान्तरम्' इति पाठान्तरम् ॥ २. 'सव्येष्ठृदक्षिणरथौ' इति पाठान्तरम् ॥

३. इदं भानुजिदीक्षितोक्तिः 'युगान्तरम्' इति पाठमङ्गीकृत्येत्यवधेयम् ॥

—१ अश्वारोहास्तु सादिनः ॥ ६० ॥
२ भटा योधाश्च योद्धारः ३ सेनारक्षास्तु सैनिकाः ।
४ सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ॥ ६१ ॥
५ बलिनो ये सहस्रेण साहस्रास्ते सहस्रिणः ।
६ परिधिस्थः परिचरः ७ सेनानीर्वाहिनीपतिः ॥ ६२ ॥
८ कञ्चुको वारबाणोऽस्त्री ९ यत्तु मध्ये सकञ्चुकाः ।
बध्नन्ति [1]तत्सारसनमधिकाङ्गो१०ऽथ शीर्षकम् ॥ ६३ ॥
शीर्षण्यं च शिरस्त्रे—

---

१ अश्वारोहः, सादी ( =सादिन् । २ पु ), 'घुड़सवार' के २ नाम हैं ॥

२ भटः, योधः, योद्धा ( = योद्धृ । ३ पु), 'लड़नेवाले वीर' के ३ नाम हैं ॥

३ सेनारक्षः, सैनिकः ( २ पु ), 'सेनाके पहरेदार' के २ नाम हैं ॥

४ सैन्यः, सैनिकः ( २ पु ), 'सैनिक' अर्थात् 'सेनामें रहनेवाले' के २ नाम हैं ॥

५ साहस्रः, सहस्री ( = सहस्रिन् । २ पु ), 'एक हजार योद्धाओंवाले सूबेदार आदि' के २ नाम हैं ॥

६ परिधिस्थः, परिचरः ( २ त्रि ), 'अपराधी सैनिकोंको दण्ड देनेके लिये राजा से नियुक्त पुरुष' के २ नाम हैं ॥

७ सेनानीः, वाहिनीपतिः ( २ पु ), 'सेनापति' के २ नाम हैं ॥

८ कञ्चुकः ( पु ), वारबाणः ( पु न ), 'शत्रुके प्रहारसे बचनेके लिये लोहे आदिके बनाये हुए सन्नाह, झूल' के दो नाम हैं ॥

९ सारसनम् ( न ), अधिकाङ्गः ( + अधिपाङ्गः, धिपाङ्गः । पु ), 'झूल ( कवच ) को स्थिर रहनेके लिये कमरमें कसनेकी पट्टी आदि' के २ नाम हैं ॥

१० शीर्षकम् , शीर्षण्यम् , शिरस्त्रम् ( ३ ), 'लड़ाई के समय पहने जानेवाले टोप, या टोपीमात्र' के ३ नाम हैं ॥

---

१. 'तत्सारसनमधिपाङ्गोऽथ' इति पाठान्तरम् ॥

—१ अथ तनुत्रं वर्म दंशनम्।
उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम्॥ ६४॥
२ आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्।
३ सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः॥ ६५॥
४ त्रिष्वामुक्तादयो ५ वर्मभृतां कावचिकं गणे।
६ [1]पदातिपत्तिपदगपादातिकपदाजयः ॥ ६६॥
पद्गश्च पदिकश्चा७थ पादातं पत्तिसंहतिः।
८ शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः॥ ६७॥

---

१ तनुत्रम्, वर्म (= वर्मन्), दंशनम् (३ न), उरश्छदः, कङ्कटकः, जगरः (+ जागरः। ३ पु), कवचः (पु न), 'कवच' के ७ नाम हैं॥

२ आमुक्तः, प्रतिमुक्तः, पिनद्धः, अपिनद्धः, (४ त्रि), भा० दी० महे० आदिके मतसे 'पहने हुए कवच' के और मु० मतसे 'पहनेहुए वस्त्रादि' के ४ नाम हैं॥

३ सन्नद्धः, वर्मितः, सज्जः, दंशितः, व्यूढकङ्कटः (५ त्रि), 'कवच आदिको पहनकर लड़ाईके लिये तैयार मनुष्य' के ५ नाम हैं॥

४ 'आमुक्त' आदि शब्द त्रिलिङ्ग हैं॥

५ कावचिकम् (न), 'कवच पहने हुए पुरुषादिके झुण्ड' का १ नाम है॥

६ पदातिः (+ पदातः, पादातिः, पादातः), पत्तिः, पदगः, पादातिकः (+ पादातिगः, पादाविकः), पदाजिः, पद्गः, पदिकः (७ पु), 'पैदल' के ७ नाम हैं॥

७ पादातम् (न), पत्तिसंहतिः (भा० दी०, स्त्री), 'पैदलके झुण्ड' के २ नाम हैं॥

८ शस्त्राजीवः, काण्डपृष्ठः (+ काण्डस्पृष्टः मु०), आयुधीयः, आयुधिकः (४ त्रि), 'हथियारकी नौकरीसे जीविका चलानेवाले' के ४ नाम हैं॥

---

१. पदातिपत्तिपदगपादाविकपदाजयः' इति पाठान्तरम्॥

१ कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् ।
२ अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः ॥ ६८ ॥
३ धन्वी धनुष्मान्धानुष्को निषङ्ग्यस्त्री धनुर्धरः ।
४ स्यात्काण्डवांस्तु काण्डीरः ५ शाक्तीकः शक्तिहेतिकः ॥ ६९ ॥
६ याष्टीकपारश्वधिकौ [1]यष्टिपर्श्वधहेतिकौ ।
७ नैस्त्रिंशिकोऽसिहेतिः स्यात् ८ समौ प्रासिककौन्तिकौ ॥ ७० ॥
९ चर्मी फलकपाणिः स्यात्—

१ कृतहस्तः, सुप्रयोगविशिखः, कृतपुङ्खः ( ३ त्रि ), 'बाण चलानेमें निपुण' के ३ नाम हैं ॥

२ अपराद्धपृषत्कः ( त्रि ), 'निशाना चुके हुए' का १ नाम है ॥

३ धन्वी ( = धन्विन् ), धनुष्मान् ( = धनुष्मत् ), धानुष्कः, निषङ्गी ( = निषङ्गिन् ), अस्त्री ( =अस्त्रिन् । + शस्त्री = शस्त्रिन् ), धनुर्धरः ( ६ त्रि ), 'धनुष धारण करनेवाले' के ६ नाम हैं ॥

४ काण्डवान् ( =काण्डवत् ), काण्डीरः ( २ त्रि ), 'बाण धारण करनेवाले' के २ नाम हैं ॥

५ शाक्तीकः, शक्तिहेतिकः ( २ त्रि ), 'शक्तिनामक शस्त्र धारण करनेवाले' के २ नाम हैं ॥

६ याष्टीकः, पारश्वधिकः ( २ त्रि ), 'लाठी और फरसा धारण करनेवाले' का क्रमशः १—१ नाम है ॥

७ नैस्त्रिंशिकः, असिहेतिः ( भा० दी० । २ त्रि ), 'तलवार धारण करनेवाले' के २ नाम हैं ॥

८ प्रासिकः, कौन्तिकः ( २ त्रि ) 'प्रास और कुन्त ( भाला ) धारण करनेवाले' का क्रमशः १—१ नाम है । ( 'किसीके मतसे दोनों शब्द एकार्थक हैं' ) ॥

९ चर्मी ( = चर्मिन् ), फलकपाणिः ( २ त्रि ), 'चर्मनामक हथियार ( ढाल ) धारण करनेवाले' के २ नाम हैं ॥

१. 'परश्वधः परशौ न दृष्टः, अतः 'यष्टिस्वधितिहेतिकौ' इति काश्मीराः पठन्ति' इति क्षी० स्वा० । किन्तु'—कुठारस्तु परशुः पशुंपरश्वधौ । परश्वधः स्वधितिश्च' ( अभि० चिन्ता० ३ ४५० ) इति हेमचन्द्राचार्योक्तेरुक्तहेतुदानमकिञ्चित्करम् ॥

—१ पताकी वैजयन्तिकः ।
२ अनुप्लव [1]सहायश्चानुचरोऽभिसरः समाः ॥ ७१ ॥
३ पुरोगाग्रेसर-प्रष्ठा-ग्रतःसर-पुरःसराः ।
पुरोगमः पुरोगामी ४ मन्दगामी तु मन्थरः ॥ ७२ ॥
५ जङ्घालोऽतिजवस्तुल्यौ ६ जङ्घाकरिकजाङ्घिकौ ।
७ तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥ ७३ ॥
८ जय्यो यः शक्यते जेतुं ९ जेयो जेतव्यमात्रके ।

---

१ पताकी ( = पताकिन् ), वैजयन्तिकः ( २ त्रि ), 'पताका धारण करनेवाले' के २ नाम हैं ॥

२ अनुप्लवः, सहायः, अनुचरः, अभिसरः ( + अभिचरः । ४ त्रि ), 'अनुचर' के ४ नाम हैं ॥

३ पुरोगः, अग्रेसरः ( + अग्रसरः ), प्रष्ठः, अग्रतःसरः, पुरःसरः, पुरोगमः, पुरोगामी ( = पुरोगामिन् । ७ त्रि ), 'आगे चलनेवाले' के ७ नाम हैं ॥

४ मन्दगामी ( = मन्दगामिन् ), मन्थरः ( २ त्रि ) 'धीरे २ चलनेवाले' के २ नाम हैं ॥

५ जङ्घालः ( + जङ्घिलः ), अतिजवः ( + अतिबलः । २ त्रि ), 'बहुत तेज चलनेवाले' के २ नाम हैं ॥

६ जङ्घाकरिकः, जाङ्घिकः ( २ त्रि ), 'दौड़ाहा, डाँक ढोनेवाले' के २ नाम हैं ॥

७ तरस्वी ( = तरस्विन् ), त्वरितः, वेगी ( = वेगिन् ), प्रजवी ( = प्रजविन् ), जवनः, जवः (६ त्रि), 'शीघ्रता करनेवाले' के ६ नाम हैं ॥

८ जय्यः ( त्रि ) 'जीते जा सकनेवाले' का १ नाम है। ( 'जैसे—रामेण रावणो जय्यः' अर्थात् 'राम रावणको जीत सकते हैं' इस वाक्यमें रामका रावण जय्य हुआ, ·······' ) ॥

९ जेयः ( त्रि ), 'जीतने योग्य' का १ नाम है। ( जैसे—'जेयं मनः इन्द्रियं वा' अर्थात् 'मन या इन्द्रिय जीतने योग्य है' इस वाक्यमें मन और इन्द्रिय जेय हैं ·······' ) ॥

---

१. 'सहायश्चानुचरोऽभिचरः' इति पाठान्तरम् ॥

१ जैत्रस्तु जेता २ यो गच्छत्यलं विद्विषतः प्रति ॥ ७४ ॥
सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि ।
३ ऊर्जस्वलः स्यादूर्जस्वी य [1]ऊर्जातिशयान्वितः ॥ ७५ ॥
४ स्यादुरस्वानुरसिलो ५ [2]रथिको रथिरो रथी ।
६ कामङ्गाम्यनुकामीनो ७ ह्यत्यन्तीनस्तथा भृशम् ॥ ७६ ॥
८ शूरो वीरश्च विक्रान्तो ९ जेता जिष्णुश्च जित्वरः ।

---

१ जैत्रः, जेता (=जेतृ । २ त्रि), 'विजयशील, जीतनेवाले' के २ नाम हैं ॥

२ अभ्यमित्र्यः, अभ्यमित्रीयः, अभ्यमित्रीणः (३ त्रि), 'अपने पराक्रमसे शत्रुका सामना करनेवाले' के ३ नाम हैं ॥

३ ऊर्जस्वलः, ऊर्जस्वी ( =ऊर्जस्विन् । २ त्रि ), 'बहुत बलवान्' के २ नाम हैं ॥

४ उरस्वान् ( =उरस्वत् ), उरसिलः ( २ त्रि ), 'चौड़ी छातीवाले' के २ नाम हैं ॥

५ रथिकः ( +रथिनः ), रथिरः, रथी ( =रथिन् । ३ त्रि ), 'रथके स्वामी' के ३ नाम हैं ॥

६ कामङ्गामी ( =कामङ्गामिन् । +कामगामी = कामगामिन् ), अनुकामीनः ( २ त्रि ), मतलब भर ( यथेष्ट ) चलने वाले' के २ नाम हैं । (महे० मतसे पहले शब्दका पर्यायवाचक नहीं होनेसे १ ही नाम है ) ॥

७ अत्यन्तीनः ( त्रि ), 'अत्यन्त चलनेवाले' का १ नाम है ॥

८ शूरः, वीरः, विक्रान्तः ( ३ त्रि ), 'पहलवान, बहादुर' के ३ नाम हैं ॥

९ जेता ( = जेतृ ), जिष्णुः, जित्वरः ( ३ त्रि ), 'सर्वदा विजय करनेवाले' के ३ नाम हैं । ( 'जैसे—रामचन्द्र, इन्द्र और अर्जुन आदि' ) ॥

---

१. 'ऊर्जोऽतिशयान्वितः' इति पाठान्तरम् ॥

२. 'रथिनो रथिको रथी' इति मा० दी० महे० सम्मतः पाठः । मूलस्थः क्षी० स्वा० मुकु० सम्मतः । 'रथिन इत्यपपाठ' इति च क्षी० स्वा० आहुः ॥

१ सांयुगीनो रणे साधुः २ शस्त्राजीवादयस्त्रिषु ॥ ७७ ॥
३ ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः ।
वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥ ७८ ॥
४ व्यूहस्तु बलविन्यासो ५ भेदा दण्डादयो युधि ।
६ प्रत्यासारो व्यूहपार्ष्णिः ७ सैन्यपृष्ठे प्रतिग्रहः ॥ ७९ ॥

---

१ सांयुगीनः ( त्रि ), 'लड़ाईमें चतुर' का १ नाम है ॥

२ 'शस्त्राजीव' शब्द ( श्लो० ६७ ) से यहाँतक सब शब्द त्रिलिङ्ग हैं ॥

३ ध्वजिनी, वाहिनी, सेना, पृतना, अनीकिनी, चमूः, वरूथिनी (७ स्त्री), बलम् , सैन्यम् , चक्रम् ( ३ न ), अनीकम् ( न पु ), 'सेना, पल्टन' के ११ नाम हैं ॥

४ व्यूहः (पु), 'व्यूह' अर्थात् आदि 'लड़ाईमें सेनाको रखनेके कायदे, मोर्चा बन्दी का १ नाम है ॥

५ दण्डः ( पु ) आदि ( 'भोग, मण्डल, असंहत, उत्सन्न, अचल, दृढ, चक्रव्यूह, मकर, पताका, सर्वतोभद्र,······[२]का संग्रह है' ), 'व्यूह' अर्थात् 'लड़ाईमें सेनाको रखने के कायदे मोर्चाबन्दी' के पृथक् १-१ नाम हैं ॥

६ प्रत्यासारः ( + प्रत्यासरः ), व्यूहपार्ष्णिः ( २ पु ), 'व्यूहके पीछे-वाले सेना-भाग' के २ नाम हैं ॥

७ सैन्यपृष्ठः ( महे० ), प्रतिग्रहः ( + परिग्रहः, पतद्ग्रहः । २ पु ), 'सेनाके पीछेवाले भाग' के २ नाम हैं ॥

---

१. व्यूहलक्षणं यथा—

'मुखे रथा हयाः पृष्ठे तत्पृष्ठे च पदातयः ।
पार्श्वयोश्च गजाः कार्या व्यूहोऽयं परिकीर्तितः ॥ १ ॥ इति ॥

२. व्यूहस्य कतिचिद्भेदान् सलक्षणमाह कामन्दकिस्तथा हि—

'तिर्यग्वृत्तिस्तु दण्डः स्याद्भोगोऽन्वावृत्तिरेव च ।
मण्डलः सर्वतो वृत्तिः पृथग्वृत्तिरसंहतः' ॥ १ ॥ इति ।

क्षी० स्वा० व्यूहनामान्याह । तथा हि—यदाहुः—

'दण्डो मण्डलभोगौ चाप्युत्सन्नश्चाचलो दृढः ।
व्यूहास्तेषां विशेषाः स्युश्चक्रव्यूहादयोऽपि च' ॥ १ ॥ इति' इति ॥

१ एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका।
२ पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ ८० ॥
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः।
अनीकिनी ३ दशानीकिन्यक्षौहिणी—

१ [1]पत्तिः ( स्त्री ), 'पत्ति' अर्थात् जिसमें एक हाथी, एक रथ, तीन घोड़े और पाँच पैदल हों उस सेना-विशेष' का १ नाम है ॥

२ सेनामुखम् ( न ), गुल्मः, गणः ( २ पु ), वाहिनी, पृतना, चमूः, अनीकिनी (४ स्त्री), 'पत्ति आदि ( सेनामुखं, गुल्मः,········ ) के तिगुना करनेपर सेनामुख आदि ( गुल्मः, गणः,········अनीकिनी ) संज्ञा सेना-विशेषकी होती है' अर्थात् ३ पत्ति (३ हाथी, ३ रथ, ९ घोड़े और १५ पैदल), को सेनामुख; ३ सेनामुख ( ९ हाथी, ९ रथ, २७ घोड़े और ४५ पैदल ) को गुल्म; ३ गुल्म ( २७ हाथी, २७ रथ, ८१ घोड़े और १३५ पैदल ) को 'गण' कहते हैं। इसी प्रकार 'वाहिनी, पृतना, चमू और अनीकिनी'में भी तिगुना समझना चाहिये ॥

३ [2]अक्षौहिणी ( स्त्री ), भा० दी० चौ० स्वा० आदिके मतसे 'दस अनी-

---

१. भारतोक्तं पत्तिलक्षणं यथा—
'एको गजो रथश्चैको नराः पञ्च पदातयः। त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते' ॥१॥ इति॥
यद्वा—'एको हस्ती एकश्च रथवरस्त्रय एव च तुरङ्गाः।
पञ्चैव च पदातय एषा पत्तिर्ज्ञातव्या' ॥ १ ॥ इति॥

२. अक्षौहिणीप्रमाणं यथा—
'अक्षौहिण्यामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः।
संयुक्तानि सहस्राणि गजानामेकविंशतिः ॥१॥ ( २१८७० गजाः )
एवमेव तु संख्यानं रथानां कीर्तितं बुधैः। ( २१८७० रथाः )
पञ्चषष्टिसहस्राणि षट् शतानि दशैव तु ॥ २ ॥
संख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरङ्गमैः। (६५६१० अश्वा रथाश्वान् बिना)
नृणां शतसहस्राणि सहस्राणि तथा नव ॥ ३ ॥
शतानि त्रीणि चान्यानि पञ्चाशच्च पदातयः' (१०९३५० पदातयः ) इति ॥

किनी ( २१८७० हाथी, २१८७० रथ, ६५६१० घोड़े और १०९३५० पैदल ) संख्यावाले सेना-विशेष' का १ नाम है। ( 'महे० ने तो-'दशानीकिनी' ( स्त्री ), तीन अनीकिनी ( ६५६१ हाथी, ६५६१ रथ, १९६८३ घोड़े और ३२८०५ पैदल) संख्यावाले सेना-विशेष'का १ नाम और 'अक्षौहिणी' (स्त्री) 'तीन दशानीकिनी ( १९६८३ हाथी, १९६८३ रथ, ५९०४९ घोड़े और ९८४१५ पैदल ) संख्यावाले सेना-विशेष' का १ नाम है, ऐसा कहा है। किन्तु टिप्पणीमें लिखे हुए भरतादि-वाक्यप्रमाण-विरुद्ध होनेसे महे० का मत[1] ठीक नहीं है।[2] 'महाक्षौहिणी' ( स्त्री ), 'हाथी, रथ, घोड़े और पैदलको मिलाकर १३२१२४९०० संख्यावाली सेना विशेष'का एक नाम है। पत्तिसे लेकर महाक्षौहिणीतक सबके अलग २ प्रमाण स्पष्टतया[3] चक्र में देखिये' ) ॥

भारतेऽक्षौहिणी मानं यथा —

'अक्षौहिण्याः प्रमाणन्तु खाङ्गाष्टैकद्विकैर्गजैः ॥
रथैरेतैर्हयैस्त्रिघ्नैः पञ्चघ्नैश्च पदातिभिः' ॥ १ ॥ इति ॥

'अङ्कानां वामतो गतिः' इत्यभियुक्तोक्तेः २१८७० गजाः, इयन्मिता एव रथाश्च, एतत्त्रिगुणिताः ( २१८७० × ३ = ६५६१० ) अश्वाः, गजसंख्यापञ्चगुणिताः ( २१८७० × ५ = १०९३५० ) पदातय' इति भारताशयः। हेमचन्द्राचार्यैरप्यक्षौहिणीमानं पूर्वोक्तसंख्याकमेवाङ्गीकृतम्, किन्तु पत्त्यादिक्रमो भिन्नस्तद्यथा —

'एकेभैकरथा त्र्यश्वा-पत्तिः पञ्चपदातिका। सेना सेनामुखं गुल्मो वाहिनी पृतना चमूः ॥ १ ॥ अनीकिनी च पत्तेः स्याद्भिाद्यैस्त्रिगुणैः क्रमात्। दशानीकिन्यक्षौहिणी—' ॥ २ ॥

इति अभि० चिन्ता ३। ४१२—४१३ ॥

१. भानुजिदीक्षितमतमेवात्र समीचीनम्, 'अक्षौहिण्या ...... पदातयः' इति स्वटीकायां प्रमाणत्वेनोपन्यस्तसार्द्धत्रयश्लोकविरोधेन व्याघातात्, भरतहेमचन्द्राचार्योक्तिविरोधाच्च ॥

२. महाक्षौहिणीप्रमाणं यथा—

'खद्वयं निधिवेदाक्षिचन्द्राक्ष्यग्निहिमांशुभिः।
महाक्षौहिणिका प्रोक्ता संख्यागणितकोविदैः' ॥ १ ॥ इति ॥

३. सकलनिष्कर्षोऽत्र चक्रे द्रष्टव्यः—

चम्पूरामायणे 'अलक्षत स ......' (युद्धकाण्डे श्लो० ७९) इत्यस्यानन्तरं 'तत्क्षण ...... यातुधानपतिः' इति गद्यस्य टीकायां लिखितमक्षौहिणीप्रमाणमन्यदेव, तद्यथा—

'प्रयुतं नवसाहस्रं पञ्चाशत्त्रिशतं भटाः। पादातं षष्टिसाहस्रं षट्छती दश वाजिनः ॥ एकविंशतिसाहस्र-शतानामेकसप्ततिः। द्विरदाः स्यन्दना यत्र साक्षौहिण्युच्यते बुधैः ॥ इति ॥

मङ्गलकोषे त्वेवमुक्तम्—

'नवनागसहस्राणि नागे नागे शतं रथाः। रथे-रथे शतं चाश्वा अश्वे-अश्वे शत नराः ॥' इति ॥

—१ अथ संपदि ॥ ८१ ॥

**संपत्तिः श्रीश्च लक्ष्मीश्च—**

---

१ संपत् ( = संपद् । + सम्पदा ), सम्पत्तिः, श्रीः, लक्ष्मीः ( ४ स्त्री ), 'सम्पत्ति' के ४ नाम हैं ॥

---

पत्त्यादिसेनाविशेषे गजरथादिसंख्याबोधकचक्रम् ।

| क्रमिकसंख्या | हैमोक्तसेना-विशेषसंज्ञाः | अमरोक्तसेना-विशेषसंज्ञाः | गजसंख्या | रथसंख्या | अश्वसंख्या (रथाश्वान् विहाय ) | पदातिसंख्या | सर्वसङ्कलनं |
|---|---|---|---|---|---|---|---|
| १ | पत्तिः | पत्तिः | १ | १ | ३ | ५ | १० |
| २ | सेना | सेनामुखम् | ३ | ३ | ९ | १५ | ३० |
| ३ | सेनामुखम् | गुल्मः | ९ | ९ | २७ | ४५ | ९० |
| ४ | गुल्मः | गणः | २७ | २७ | ८१ | १३५ | २७० |
| ५ | वाहिनी | वाहिनी | ८१ | ८१ | २४३ | ४०५ | ८१० |
| ६ | पृतना | पृतना | २४३ | २४३ | ७२९ | १२१५ | २४३० |
| ७ | चमूः | चमूः | ७२९ | ७२९ | २१८७ | ३६४५ | ७२९० |
| ८ | अनीकिनी | अनीकिनी | २१८७ | २१८७ | ६५६१ | १०९३५ | २१८७० |
| ९ | * | दशानीकि० (महेश्वरमतेनेदम् ) | ६५६१ | ६५६१ | १९६८३ | ३२८०५ | ६५६१० |
| १० | * | अक्षौहिणी (महेश्वरमतेनेदम् ) | १९६८३ | १९६८३ | ५९०४९ | ९८४१५ | १९६८३० |
| ११ | अक्षौहिणी | अक्षौहिणी (भानुजिदीक्षितमतेनेदं) | २१८७० | २१८७० | ६५६१० | १०९३५० | २१८७०० |
| १२ | * | महाक्षौहिणी ( महेश्वरव्याख्योक्ता) | ५३२५१२४९० | ५३२५१२४९० | ३९६३७४८५० | ६६०६२४५० | ५३२५१२४९०० |

—१ विपत्त्यां विपदापदौ ।
२ आयुधं तु प्रहरणं शस्त्रमस्त्र३मथास्त्रियौ ॥ ८२ ॥
धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ।
इष्वासो४ऽप्यथ कर्णस्य कालपृष्ठं शरासनम् ॥ ८३ ॥
५ कपिध्वजस्य गाण्डीवगाण्डिवौ पुन्नपुंसकौ ।
६ कोटिरस्याटनी ७ गोधे तले ज्याघातवारणे ॥ ८४ ॥
८ लस्तकस्तु धनुर्मध्यं ९ मौर्वी ज्या शिञ्जिनी गुणः ।
१० स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ॥ ८५ ॥

---

१ विपत्तिः, विपत् ( = विपद् । + विपदा ), आपत् ( = आपद् । + आपत्तिः, आपदा । ३ स्त्री ), 'आपत्ति' के ३ नाम हैं ॥

२ आयुधम् , प्रहरणम् , शस्त्रम् , अस्त्रम् ( ४ न ), 'हथियार' के ४ नाम हैं ॥

३ धनुः ( = धनुस् । + धनुः पु, धनूः स्त्री ), चापः ( २ पु न ), धन्व ( = धन्वन् । + धन्वम् ), शरासनम्, कोदण्डम् , कार्मुकम् ( ४ न ), इष्वासः ( + आसः । पु ), 'धनुष' के ७ नाम हैं ॥

४ कालपृष्ठम् ( न ), 'कर्णके धनुष' का १ नाम है ॥

५ गाण्डीवः, गाण्डिवः ( २ पु न ), 'अर्जुनके धनुष' के २ नाम हैं ॥

६ कोटिः ( + कोटी ), अटनी ( + अटनिः । २ स्त्री ), 'धनुषके दोनों छोर ( किनारे ), के २ नाम हैं ॥

७ गोधा ( स्त्री ), तलम् ( न ), 'दस्ताना' अर्थात् 'धनुषकी तांतके चोटसे बचनेके लिये हाथमें पहिननेके लिए जो चमड़े आदि का बनाया जाता है उसके' २ नाम हैं ॥

८ लस्तकः ( पु ), धनुर्मध्यम् ( भा० दी० न ), 'धनुषके बीचवाले भाग' के २ नाम हैं ॥

९ मौर्वी, ज्या, शिञ्जिनी ( ३ स्त्री ), गुणः ( पु ), 'धनुषकी डोरी, या तांत' के ४ नाम हैं ॥

१० प्रत्यालीढम् , आलीढम् ( २ न ), आदि ( 'आदिसे 'समपादम् ,

१ लक्षं लक्ष्यं शरव्यं च २ शराभ्यास उपासनम्।
३ पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ ८६ ॥
[1]कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः।
४ प्रक्ष्वेडनास्तु नाराचाः ५ पक्षो वाजस्त्रिषूत्तरे ॥ ८७ ॥
६ निरस्तः प्रहिते बाणे—

विशाखम्, मण्डलम् (३ न), का संग्रह है') 'धनुषधारियोंके बैठनेके [2]पांच आसन विशेष (तरीके), हैं। ('इनमें—बांये अङ्गको आगे बढ़ाकर उठाने और दाहिनी अङ्गको पीछे खींचकर समेटनेको प्रत्यालीढ १, दहने अङ्गको आगे बढ़ाकर उठाने और बांये अङ्गको पीछे खींचकर समेटनेका आलीढ २, दोनों पैरोंको बराबर रखनेको समपाद ३, दोनों पैरोंको फैलानेको वैशाख ४ और दोनों पैरोंको गोलाई के समान रखनेको मण्डल ५, कहते हैं') ॥

१ लक्षम्, लक्ष्यम्, शरव्यम् (३ न), 'निशाने' के ३ नाम हैं ॥

२ शराभ्यासः (पु), उपासनम् (न), 'बाण चलानेका अभ्यास करने' के २ नाम हैं ॥

३ [3]पृषत्कः, बाणः, विशिखः, अजिह्मगः, खगः, आशुगः, कलम्बः, मार्गणः, शरः (+ सरः), पत्त्री (= पत्त्रिन्), रोपः (११ पु), इषुः (पु स्त्री), 'बाण' के १२ नाम हैं ॥

४ प्रक्ष्वेडनः (+ प्रक्ष्वेदनः), नाराचः (२ पु), 'लोहेके बाण' के २ नाम हैं ॥

५ पक्षः, वाजः, (२ पु), 'बाणमें लगे हुए पङ्ख (कङ्कपत्र), के २ नाम हैं ॥

६ निरस्तः (त्रि), 'धनुषसे छोड़े हुए बाण' का १ नाम है ॥

---

१. 'कलम्बमार्गणसराः' इति पाठान्तरम् ॥

२. भरते (रभसे) न तु धनुर्धराणां षट् स्थितिप्रकारा उक्तास्तथा हि—

'वैष्णवं समपादं च वैशाखं मण्डलं तथा।
प्रत्यालीढमथालीढं स्थानान्येतानि षण्नृणाम्' ॥ १ ॥ इति ॥

३. पृथक् षट्कमस्येति विग्रहः। ते च षड् धनुर्वेद उक्तास्तथा हि—

'पुङ्खः शरस्तथा शल्यं पक्षस्नायुजतूनि च'। इति ॥

—१ विषाक्ते दिग्धलिप्तकौ ।

२ तूणोपासङ्गतूणीर-निषङ्गा इषुधिर्द्वयोः ॥ ८८ ॥

तूण्यां ३ खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः ।

कौक्षेयको मण्डलाग्रः [1]करवालः कृपाणवत् ॥ ८९ ॥

४ त्सरुः खड्गादिमुष्टौ स्याद् ५ मेखला तन्निबन्धनम् ।

६ फलकोऽस्त्री फलं चर्म ७ संग्राहो मुष्टिरस्य यः ॥ ९० ॥

८ द्रुघणो मुद्गरघनौ ९ [2]स्यादीली करवालिका ।

---

१ विषाक्तः दिग्धः, लिप्तकः ( ३ त्रि ), 'विषमें बुझाये हुए बाण' के ३ नाम हैं ॥

२ तूणः, उपासङ्गः, तूणीरः, निषङ्गः ( ४ पु ), इषुधिः ( पु स्त्री ), तूणी ( स्त्री ), 'तरकस' अर्थात् 'चमड़े आदिके बने हुए धनुषधारियोंके पीठपर बाँधे-जानेवाले, बाण रखनेके थैले' के ६ नाम हैं ॥

४ खड्गः, निस्त्रिंशः, चन्द्रहासः, असिः, रिष्टिः ( + ऋष्टिः ), कौक्षेयकः, मण्डलाग्रः, करवालः (+ करपालः), कृपाणः (९ पु), 'तलवार' के ९ नाम हैं ॥

४ त्सरुः ( पु ), 'तलवार आदिकी मूठ' का १ नाम है ॥

५ मेखला ( स्त्री ), 'तलवारको लटकानेके लिये चमड़े आदिकी बनी हुई कमरमें कसी जानेवाली पेटी, लड़ाईमें तलवार हाथसे छूट न जाय इस वास्ते कलाईपर बाँधे हुए चमड़े आदि या तलवार के म्यान' का १ नाम है ॥

६ फलकः (पु न), फलम्, चर्म ( = चर्मन् । २ न), 'ढाल' के २ नाम हैं ॥ संग्राहः ( पु ) 'ढालकी मूठ' का १ नाम है ॥

८ द्रुघणः ( + द्रुघनः ), मुद्गरः, घनः (३ पु), 'मुद्गर' के ३ नाम है ॥

९ ईली (+ इलिः, ईलिः, इली ), करवालिका (+ करपालिका । २ स्त्री), एक तरफ धारवाली छोटी तलवार या गुप्ती' के २ नाम हैं ॥

---

१. 'करपालः' इति पाठान्तरम् ॥

२. 'स्यादिलिः करवालिका' इति 'करपालिका' इति च पाठान्तरे ॥

१ भिन्दिपालः सृगस्तुल्यौ २ परिघः परिघातनः ॥ ९१ ॥
३ द्वयोः कुठारः स्वधितिः परशुश्च [1]परश्वधः ।
४ स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका ॥ ९२ ॥
५ वा पुंसि शल्यं ६ शङ्कुर्ना [2]सर्वला तोमरोऽस्त्रियाम् ।
७ प्रासस्तु कुन्तः ८ कोणस्तु स्त्रियः पाल्यश्रिकोटयः ॥ ९३ ॥
१ सर्वाभिसारः सर्वौघः सर्वसंनहनार्थकः ।

---

१ भिन्दिपालः ( + भिण्डिपालः ), सृगः ( २ पु ), 'नलिका नामक हथियार और गुलेल' अर्थात् 'छोटे २ पत्थर या कंकड़ फेंकनेके वास्ते रबड़ या चमड़ेके बने हुए साधन विशेष, या ढेलवांस' के २ नाम हैं ॥

२ परिघः, परिघातनः ( २ पु ), 'लोहा मढ़ी हुई लाठी' के २ नाम हैं ॥

३ कुठारः ( पु स्त्री ), स्वधितिः, परशुः, परश्वधः ( + परस्वधः, पर्शुधः । ३ पु ) 'फरसा, कुल्हाड़ी' के ४ नाम हैं ।

४ शस्त्री, असिपुत्री, छुरिका ( + चुरिका ), असिधेनुका ( ४ स्त्री ), 'छूरी' के ४ नाम हैं ॥

५ शल्यम् ( न पु ), शङ्कुः ( पु ), 'बाण के नोक ( अगले भाग )' के २ नाम हैं ॥

६ सर्वला ( + शर्वला । स्त्री ), तोमरः ( पु न ) 'तोमर, गुर्ज या गड़ाँसे' के २ नाम हैं ॥

७ प्रासः ( + प्राशः ), कुन्तः ( २ पु ), 'भाला' के २ नाम हैं ॥

८ कोणः ( पु ), पालिः ( + पाली ), अश्रिः ( + अश्री ), कोटिः ( + कोटी । ३ स्त्री ), 'तलवार आदि हथियारोंके किनारे या नोक' के ४ नाम हैं ॥

९ सर्वाभिसारः, सर्वौघः ( २ पु ), सर्वसंनहनम् ( न ), 'चतुरङ्गिणी सेना को तैयार करने' के ३ नाम हैं ॥

---

१. 'परस्वधः' इति पाठान्तरम् ॥ २. 'शर्वला' इति पाठान्तरम् ॥

१ [1]लोहाभिसारोऽस्त्रभृतां राज्ञां नीराजनाविधिः ॥ ९४ ॥
२ यत्सेनयाऽभिगमनमरौ तदभिषेणनम् ।
३ यात्रा व्रज्याऽभिनिर्याणं प्रस्थानं गमनं गमः ॥ ९५ ॥
४ स्यादासारः [2]प्रसरणं ५ प्रचक्रं चलितार्थकम् ।
६ अहिताम्प्रत्यभीतस्य रणे यानमभिक्रमः ॥ ९६ ॥

१ [3]लोहाभिसारः ( + लोहाभिहारः । पु ), 'लड़ाईके लिये तैयार शस्त्रधारियों या राजाओंकी आरती या आरतीके बादवाले कृत्य-विशेष या युद्धयात्राके पहले की जानेवाली हथियारोंकी पूजा' का १ नाम है ॥

२ अभिषेणनम् ( न ), 'वैरीके सामने सेना-सहित जाने' का १ नाम है ॥

३ यात्रा, व्रज्या ( २ स्त्री ), अभिनिर्याणम्, प्रस्थानम्, गमनम् ( ३ न ), गमः ( पु ), 'यात्रा, प्रस्थान, जाने' के ६ नाम हैं ॥

४ आसारः ( पु ), प्रसरणम् ( + प्रसरणी, प्रसरणिः । न ) 'सेनाके सब तरफ फैल जाने' के २ नाम हैं । ( किसी २ के मतसे 'पीछेसे आनेवाली सेना' को आसारः और 'घास, भूसा, जल, अन्न और इन्धन आदि इकट्ठा करनेके लिये सेनासे बाहर फैलनेको प्रसरणम् कहते हैं [4]' ॥

५ प्रचक्रम्, चलितम् ( २ न ), 'यात्रा की हुई सेना' के २ नाम हैं ॥

६ अभिक्रमः ( + अतिक्रमः । पु ), 'निडर होकर वैरीके सामने योद्धाके गमन करने' का १ नाम है ॥

---

१. 'लोहाभिहारो' इति 'नीराजनो विधिः' इति 'नीराजनाद्विधिः' इति च पाठान्तराणि ।

२. 'प्रसरणी' इति पाठान्तरम् ॥

३. विधिर्लोहाभिसारस्तु राज्ञां नीराजनोत्तरः' इत्युक्तेर्नीराजनादनन्तरं कर्मलोहाभिसारः, इति मुनिः । 'लोहाभिसारस्तु विधिः परो नीराजनान्नृपैः' इति दुर्गोऽपि तथैव । अत एव 'नीराजनाद्विधिः' इत्येके पठन्ति' इति क्षी० स्वा० ॥

४. अनयोर्भिन्नार्थत्वादेव—

'निरुद्धवीवधासारप्रासारा इव गा व्रजम्' इति माघः ( २।६४ )' इति क्षी० स्वा० ॥

१ वैतालिका [1]बोधकरा२श्चाक्रिका घाण्टिकार्थकाः ।
३ स्युर्मागधास्तु [2]मगधा ४ बन्दिनः स्तुतिपाठकाः ॥ ९७ ॥
५ संशप्तकास्तु समयात्संग्रामादनिवर्तिनः ।
६ रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः ॥ ९८ ॥
७ चूर्णं क्षोदः ८ समुत्पिञ्जपिञ्जलौ भृशमाकुले ।

१ [3]वैतालिकः, बोधकरः ( २ पु ), 'राजाको जगानेके लिये प्रातः काल या विशिष्ट अवसरों पर राजाके स्तुतिपाठ करनेवाले बन्दी, भाट' के २ नाम हैं ॥

२ चाक्रिकः ( + चक्रिकः ), [4]घाण्टिकः ( + घटिकः । २ पु ), 'घण्टा बजानेवाले या घड़ियारी नामक बाजाको बजानेवाले बन्दी-विशेष' के २ नाम हैं ॥

३ मागधः, मगधः ( + मधुकः मु० । २ पु ), 'राजाकी वंशावलीको वर्णन करनेवाले बन्दी' के २ नाम हैं ॥

४ बन्दी ( = बन्दिन् ), स्तुतिपाठकः ( २ पु ), 'राजाकी स्तुति करनेवाले बन्दी' के २ नाम हैं । ( क्षी० स्वा० के मतसे 'मागधः,……' ४ नाम एकार्थक अर्थात् 'बन्दीमात्र' के हैं ॥

५ संशप्तकः ( पु ), 'शपथ देने या स्वयं प्रतिज्ञा करनेके कारण लड़ाईसे नहीं लौटनेवाले योद्धा' का १ नाम है ॥

६ रेणुः ( पु स्त्री ), धूलिः ( + धूली । स्त्री ), पांशुः ( + पांसुः । पु ), रजः ( = रजस् न ), 'धूल' के ४ नाम हैं ॥

७ चूर्णम् ( न । + पु ), क्षोदः ( पु ), 'महीन धूल' के २ नाम हैं । ( 'किसी २ के मतसे 'रेणुः,……' ६ नाम 'धूलमात्र' के हैं' ) ॥

८ समुत्पिञ्जः, पिञ्जलः ( २ पु ), 'अधिक व्याकुल सेना' के २ नाम हैं ॥

१. 'बोधकराश्चक्रिका घटिकार्थकाः' इति पाठान्तरम् ॥

२. 'मधुका' इति मुकुटसम्मतं पाठान्तरम् ॥

३-४. तदुक्तम्—

'वैतालिकाश्च कथ्यन्ते कविभिः सौखशायिकाः ।
राज्ञः प्रबोधसमये घण्टाशिल्पास्तु घाण्टिकाः' ॥ १ ॥ इति ॥

१ पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् ॥ ९९ ॥
२ सा वीराशंसनं युद्धभूमिर्याऽतिभयप्रदा ।
३ अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम् ॥ १०० ॥
४ आहोपुरुषिका दर्पाद्या स्यात्सम्भावनाऽऽत्मनि ।
५ अहमहमिका तु सा स्यात्परस्परं यो भवत्यहङ्कारः ॥ १०१ ॥
६ द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च ।
शक्तिः पराक्रमः प्राणो ७ विक्रमस्त्वतिशक्तिता ॥ १०२ ॥
८ वीरपानं तु यत्पानं वृत्ते भाविनि वा रणे ।
९ युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ॥ १०३ ॥

---

१ पताका, वैजयन्ती ( २ स्त्री ), केतनम् (न), ध्वजम् (न पु), 'पताका, झण्डे' के ४ नाम हैं । ( किसीके मतसे प्रथम दो नाम उक्तार्थक और अन्तवाले दो नाम 'पताकाके दण्ड' के हैं ) ॥

२ वीराशंसनम् (न), 'लड़ाईके अत्यन्त भयङ्कर मैदान' का १ नाम है ॥

३ अहंपूर्विका (स्त्री), 'मैं पहले पहुंचा-मैं पहले पहुंचा ऐसे कहते हुए स्पर्द्धासे योद्धाओंके दौड़ने' का १ नाम है ॥

४ आहोपुरुषिका ( स्त्री ), 'अभिमानपूर्वक अपनेमें सामर्थ्यका प्रकट करने' का १ नाम है ॥

५ अहमहमिका ( स्त्री ), 'आपसमें अहङ्कार करने' का १ नाम है ॥

६ द्रविणम् , तरः ( = तरस् ), सहः ( = सहस् । + सहः = सह पु, सहा स्त्री), बलम् , शौर्यम् , स्थाम ( = स्थामन् ), शुष्मम् ( + शुष्मा = शुष्मन्, पु न । ७ न ), शक्तिः ( स्त्री ), पराक्रमः, प्राणः ( + ओजः = ओजस्, ऊर्जः = ऊर्जस् । २ पु ), 'पराक्रम, बल' के १० नाम हैं ॥

७ विक्रमः ( पु ), अतिशक्तिता ( स्त्री ), 'अधिक बल' के २ नाम हैं ॥

८ वीरपानम् ( + वीरपाणम् । न ), 'लड़ाईमें जानेके समय या लड़ाईसे लौटनेपर उत्साह को बढ़ानेके लिये मदिरादि-पान करने' का १ नाम है ॥

९ युद्धम् , आयोधनम् , जन्यम् , प्रधनम् , प्रविदारणम् , मृधम् ,

मृधमास्कन्दनं संख्यं समीकं [1]सांपरायिकम्।
अस्त्रियां समरानीकरणाः कलहविग्रहौ ॥ १०४ ॥
[2]संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ।
अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः ॥ १०५ ॥
समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः।
१ नियुद्धं बाहुयुद्धे२ऽथ तुमुलं रणसंकुले ॥ १०६ ॥
३ क्ष्वेडा तु सिंहनादः स्यात् ४ करिणां घटना घटा।
५ क्रन्दनं योधसंरावो ६ बृंहितं करिगर्जितम् ॥ १०७ ॥

---

आस्कन्दनम्, संख्यम्, समीकम्, सांपरायिकम् ( +संपरायकम् । १० न ), समरः, अनीकः, रणः ( ३ पु न ), कलहः, विग्रहः, संप्रहारः, अभिसंपातः, कलिः, संस्फोटः ( +संस्फेटः, संफेटः ), संयुगः, अभ्यामर्दः ( +अभिमर्दः ), समाघातः, संग्रामः, आहवः, समुदायः ( १२ पु ), संयत् ( +पु ), समितिः, आजिः, समित्, युत् ( =युध् । ५ स्त्री ), 'लड़ाई, युद्ध' के ३१ नाम हैं ॥

१ नियुद्धम्, बाहुयुद्धम् ( २ न ), 'कुश्ती, दङ्गल' के २ नाम हैं ॥

२ तुमुलम्, रणसंकुलम् ( भा० दी० । २ न ), 'खूब जमकर लड़ाई होने या व्याकुल होने' के २ नाम हैं ॥

३ क्ष्वेडा ( +क्ष्वेला । स्त्री), सिंहनादः ( पु ), 'लड़ाईमें सिंहके समान गर्जने' के २ नाम हैं ॥

४ घटना (भा० दी०), घटा (२ स्त्री), 'हाथियोंके झुण्ड' के २ नाम हैं ॥

५ क्रन्दनम् ( न ), योधसंरावः ( भा० दी०, पु ), 'स्पर्द्धासे प्रतिपक्ष-वाले योद्धाओंको ललकारने या बुलाने' के २ नाम हैं ॥

५ बृंहितम्, करिगर्जितम् ( २ न ), 'हाथियोंके गर्जने' के २ नाम हैं ॥

---

१. 'संपरायकम्' इति पाठान्तरम् ॥

२. 'संप्रहाराभिसंपातकलिसंस्फेटसंयुगाः' इति युक्तः पाठः' इति क्षी० स्वा० । 'संफेट' इति तु भरत' इति ॥

१ विस्फारो धनुषः स्वानः २ पटहाडम्बरौ समौ ।
३ प्रसभं तु बलात्कारो हठोऽथ ४ स्खलितं छलम् ॥ १०८ ॥
५ अजन्यं क्लीबमुत्पात उपसर्गः समं त्रयम् ।
६ मूर्च्छा तु कश्मलं मोहोऽप्यवमर्दस्तु पीडनम् ॥ १०९ ॥
८ अभ्यवस्कन्दनं त्वभ्यासादनं ९ विजयो जयः ।
१० वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ॥ ११० ॥
११ प्रद्रावोद्द्रावसंद्रावसंदावा विद्रवो द्रवः ।
अपक्रमोऽपयानं च—

---

१ विस्फारः (पु), 'धनुषके टङ्कार' का १ नाम है ॥

२ पटहः, आडम्बरः ( २ पु ), 'नगाड़ा या दमदमा' के २ नाम हैं ॥

३ प्रसभम् (न), बलात्कारः, हठः (२पु) 'जबर्दस्ती करने' के २ नाम हैं ॥

४ स्खलितम् , छलम् ( २ न ), 'कपट करने' अर्थात् युद्धके नियमको तोड़कर' छल करने के २ नाम हैं ॥

५ अजन्यम् (न), उत्पातः, उपसर्गः ( २ पु ), उत्पात' के ३ नाम हैं ॥

६ मूर्च्छा ( स्त्री ), कश्मलम् ( न ), मोहः ( पु ), 'बेहोशी, मूर्च्छा' के ३ नाम हैं ॥

७ अवमर्दः ( पु ), पीडनम् ( न ), 'अन्नादिसे परिपूर्ण देशको राजाके शत्रु द्वारा पीड़ित करने' के २ नाम हैं ॥

८ अभ्यवस्कन्दनम् ( + अवस्कन्दनम् ), अभ्यासादनम् ( + धाटिः, धाटी । २ न ) भा० दी० के मतसे 'मारकर शक्तिहीन' करने के और महे० के मतसे 'छापा मारने' अर्थात् कपटसे एकाएक आक्रमण करने' के २ नाम हैं । ( '+ सौप्तिकम् ( न ) 'रातमें छापा मारने' का १ नाम है' ) ॥

९ विजयः, जयः ( २ पु ), 'जीतने' के २ नाम हैं ॥

१० वैरशुद्धिः ( स्त्री ), प्रतीकारः ( पु ) वैरनिर्यातनम् (न), शत्रुताको दूर करने' के ३ नाम हैं ॥

११ प्रद्रावः, उद्द्रावः, संद्रावः, संदावः, विद्रवः, द्रवः, अपक्रमः ( ७ पु ), अपयानम् ( न ), लड़ाईमें पीठ दिखाने ( भागने )' के ८ नाम हैं ॥

—१ रणे भङ्गः पराजयः ॥ ११११ ॥

२ पराजितपराभूतौ त्रिषु ३ नष्टतिरोहितौ ।
४ प्रमापणं निबर्हणं निकारणं विशारणम् ॥ ११२ ॥
प्रवासनं परासनं निषूदनं निहिंसनम् ।
निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ॥ ११३ ॥
निस्तर्हणं निहननं क्षणनं परिवर्जनम् ।
निर्वापणं विशसनं मारणं प्रतिघातनम् ॥ ११४ ॥
उद्वासनप्रमथनक्रथनोज्जासनानि च ।
[1]आलम्भपिञ्जविशरघातोन्माथवधा अपि ॥ ११५ ॥
५ [2]'व्यापादनं विशमनं कदनं च निशुम्भनम्' ( २६ )

---

१ भङ्गः ( [3]आ० दी०, ) पराजयः ( २ पु ), 'हारने' के २ नाम हैं ॥

२ पराजितः (+ जितः ), पराभूतः ( + परिभूतः, अभिभूतः । २ त्रि ), 'लड़ाईमें हारे हुए' के २ नाम हैं ॥

३ नष्टः, तिरोहितः (२ त्रि), 'लड़ाईसे भागकर छिपे हुए' के २ नाम हैं ॥

४ प्रमापणम् , निबर्हणम् ( + निर्बर्हणम् ), निकारणम् , विशारणम् (+ विशरणम् , निशारणम् ), प्रवासनम् , परासनम्, निषूदनम् (+ निसूदनम्), निहिंसनम् , निर्वासनम्, संज्ञपनम्, निर्ग्रन्थनम् ( + निर्गन्थनम् ), अपासनम्, निस्तर्हणम्, निहननम्, क्षणनम्, परिवर्जनम्, निर्वापणम्, विशसनम् , मारणम्, प्रतिघातनम् ( + प्रविघातनम् ), उद्वासनम् , प्रमथनम् , क्रथनम्, उज्जासनम् ( २४ न ), आलम्भः, पिञ्जः, विशरः, घातः, उन्माथः ( + उन्मथः ), वधः ( ६ पु ), 'मारने' के ३० नाम हैं ॥

५ [ व्यापादनम्, विशसनम्, कदनम् , निशुम्भनम् ( ४ न ) 'मारने' के ४ नाम हैं ] ॥

---

१. 'आलम्भपिञ्जविशरघातोन्मथवधा' इति पाठान्तरम् ॥
२. अयमंशः क्षी० स्वा० व्याख्याने समुपलभ्यते इति क्षेपकरूपेणात्र निहितः ॥
३. 'भङ्गशब्दस्य रणेऽन्वयित्वादिदमसत् ॥

१ स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ।
अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ॥ ११६ ॥
२ [1]"प्रमयोऽस्त्री दीर्घनिद्रा हिंसा संस्था प्रमीलनम्' ( २७ )
३ परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः ।
मृतप्रमीतौ त्रिष्वेते ४ चिता चित्या चितिः स्त्रियाम् ॥ ११७ ॥
५ कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् ।
६ श्मशानं स्यात्पितृवनं ७ कुणपः शवमस्त्रियाम् ॥ ११८ ॥
८ प्रग्रहोपग्रहौ बन्द्यां—

---

१ पञ्चता ( + पञ्चत्वम् न । स्त्री ), कालधर्मः ( + कालः ), दिष्टान्तः, प्रलयः, अत्ययः, अन्तः, नाशः ( ६ पु ), मृत्युः ( पु स्त्री ), मरणम् ( न ), निधनः ( पु न ), 'मृत्यु' के १० नाम हैं ॥

२ [ प्रमयः ( पु न ), दीर्घनिद्रा, हिंसा, संस्था ( ३ स्त्री ), प्रमीलनम् ( न ), 'मरने' के ५ नाम हैं ] ॥

३ परासुः, प्राप्तपञ्चत्वः, परेतः, प्रेतः, संस्थितः, मृतः, प्रमीतः ( ७ त्रि ), 'मरे हुए' के ७ नाम हैं ॥

४ चिता, चित्या, चितिः ( ३ स्त्री ), 'चिता' के ३ नाम हैं ॥

५ [2]कबन्धः ( + रुण्डः । पु न ), 'धड़, बिना शिरके शरीर' का १ नाम है ॥

६ श्मशानम् , पितृवनम् ( + पितृकाननम् , प्रेतवनम् , करवीरम् । २ न ), 'श्मशान' के २ नाम हैं ॥

७ कुणपः ( पु ), शवः ( पु न ), 'मुर्दे' के २ नाम हैं ॥

८ प्रग्रहः, उपग्रहः ( २ पु ), बन्दी ( + वन्दी । स्त्री ), महे० मतसे 'कैदी, बँधुआ, गिरफ्तार' के और भा० दी० मतसे 'बन्दीगृह ( कोत, हवालात ), के ३ नाम हैं । ( यहाँ महे० का मत ठीक प्रतीत होता है' ॥

---

१. अयमंशः क्षी० स्वा० व्याख्याने समुपलभ्यते इति क्षेपकरूपेणात्र निहितः ॥

२. कबन्धलक्षणं यथा—

'युद्धे योद्धृषु शूरेषु सहस्रं कृत्तमूर्द्धसु ।
तदावेशात्कबन्धः स्यादेको मूर्द्धा क्रियान्वितः' ॥ १ ॥ इति ॥

उपचारात्सामान्यतः शिरोहीनकलेवरेऽपि कबन्धशब्दव्यवहार इत्यवधेयम् ॥

—१ पथः सङ्ख्याऽव्ययात्परः ।
२ षष्ठ्याश्छाया बहूनां चेच्छिच्छायं ३ संहतौ सभा ॥ २६ ॥
शालार्थापि परा राजामनुष्यार्थादराजकात् ।

१ 'संख्या १, अव्यय २, से परे कृतसमासान्त'[1] ( समासान्त 'अच्' प्रत्ययान्त ) 'पथिन्' शब्द नपुंसकलिङ्ग होता है । (क्रमशः उदा०—१ द्विपथम्, त्रिपथम्,…… । २ विपथम्, कापथम्,……' ) । 'संख्याऽव्यय' ग्रहण करनेसे 'धर्मपथः,……में 'पथः' (कृतसमासान्त) ग्रहण करनेसे 'अतिपन्थाः, सुपन्थाः,……' में नपुंसकलिङ्ग नहीं होता है ॥

२ षष्ठ्यन्त (षष्ठी विभक्ति जिसके अन्तमें रहे उस) से परे कृतसमासान्त 'छाया' शब्द नपुंसकलिङ्ग होता है, यदि वह छाया बहुतोंकी[2] रहे तब । ('जैसे—इक्षुच्छायम्, वीनां पक्षिणां छाया विच्छायम्, वृक्षाणां छाया वृक्षच्छायम्,……') । 'बहूनां चेत्' ( बहुतोंकी छाया रहे तब ) ग्रहण करनेसे 'वृक्षस्य च्छाया वृक्षच्छाया,……' में नपुंसकलिङ्ग नहीं होता है ॥

३ षष्ठ्यन्तसे परे (आगे) रहनेपर समूहार्थक ( समूह अर्थवाला ) 'सभा' शब्द १, षष्ठ्यन्तसे परे रहनेपर गृहार्थक ( गृह अर्थवाला ) और 'अपि' शब्दसे समूहार्थक 'सभा' शब्द अराजक ( 'राजन्' शब्दसे भिन्न ) राजार्थक (राज पर्यायवाले) २, अमनुष्यार्थक ( मनुष्य अर्थसे भिन्न ) ३, नपुंसकलिङ्ग होता है । ('क्रमशः उदा०—१ दासीसभम्, ब्राह्मणसभम्,…… । २ नृपसभम्, इनसभम्, प्रभुसभम्,…… । ३ रक्षःसभम्, पिशाचसभम्, ……') । 'संहतौ' ( समूहार्थक ) ग्रहण करनेसे 'दासीनां सभा गृहम्' इस विग्रहमें 'दासीसभा' यहांपर, 'षष्ठ्याः' (षष्ठ्यन्तसे परे रहनेपर) ग्रहण करनेसे 'नृपतिविषये सभा 'नृपतिसभा' यहाँपर, नृणां पतिर्यस्यां सा नृपतिः सा चासौ सभा च' यह विग्रहकर कर्मधारय समास करनेसे 'नृपतिसभा' यहाँपर, 'अराजक' ( 'राजन्' शब्दसे भिन्न ) ग्रहण करनेसे चन्द्रगुप्तके राज-

१. मूले 'पथ' शब्दोपादानं कृतसमासान्तस्यैव पथिन्' शब्दस्य ग्राहकशक्तिपरम् ।
२. अत एव 'इक्षुच्छायनिषादिन्यः……' (रघु० ४ । २०) इत्येव समीचीनः पाठः ।

दासीसभं नृपसभं रक्षःसभमिमा दिशाः ॥ २७ ॥
१ उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने ।
कोपज्ञकोपक्रमादि २ कन्थोशीनरनामसु ॥ २८ ॥
३ भावेनणकचिद्भ्योऽन्ये समूहे भावकर्मणोः ।

विशेष होनेके कारण 'चन्द्रगुप्तस्य सभा' इस षष्ठीतत्पुरुषमें भी 'चन्द्रगुप्तसभा' यहाँपर, नपुंसकलिङ्ग नहीं होता है ॥

१ 'उपज्ञा और उपक्रम' का प्राथम्य प्रकाशन करना हो तो षष्ठ्यन्तसे परे उपज्ञान्त (जिसके अन्तमें 'उपज्ञा' शब्द हो वह) शब्द १, 'उपक्रमान्त' ( जिस के अन्तमें 'उपक्रम' शब्द हो वह ) शब्द २, नपुंसकलिङ्ग होता है । ( 'क्रमशः उदा०—१ कस्योपज्ञा कोपज्ञं सर्गः, चन्द्रोपज्ञमसंज्ञकं व्याकरणम् , पाणिन्युपज्ञमकालकं व्याकरणम् ,……। २ कस्योपक्रमः कोपक्रमः सृष्टिः, नन्दोपक्रमाणि मानानि,……' ) । 'तदादित्वप्रकाशने' ग्रहण करनेसे 'देवदत्तोपज्ञा मृन्मयः प्रकारः, देवदत्तोपक्रमो रथः,……' में नपुंसकलिङ्ग नहीं होता है ॥

२ 'उशीनर देशकी जो कन्था' इस अर्थमें संज्ञा ( नाम ) गम्यमान रहे तब षष्ठ्यन्तसे परे 'कन्था' शब्द नपुंसकलिङ्ग होता है । ( 'जैसे—सौशमिकन्थम् , बह्लिककन्थम् ,……' ) । 'उशीनर' ग्रहण करनेसे 'दाक्षिकन्था' ( यह नाम बाह्लीक देशमें प्रसिद्ध है ) यहाँपर, और 'नाम' ग्रहण करनेसे 'चैत्रकन्था' ( यह संज्ञा नहीं है ) यहाँपर नपुंसकलिङ्ग नहीं होता है ॥

३ न, ण, क, चित् ( 'च' की जिसमें[1] इत्संज्ञा हुई हो ) प्रत्ययसे भिन्न जो भावमें विहित[2] कृत्संज्ञक अदन्त प्रत्यय १, और समूह अर्थमें भाव-कर्ममें विहित जो अकारान्त तद्धित प्रत्यय २, तदन्त शब्द नपुंसकलिङ्ग होते हैं । ( 'क्रमशः उदा०—१ भूतम् , भवनीयम् , भवितव्यम् , भव्यम् , ब्रह्मभूयम् , सांराविणं वर्तते, सांकुटिनं वर्तते,……' । २ ( समूहमें तद्धित ) जैसे—भैक्षम् , औपगवकम् , कैदार्यम् , कैदारकम् , राजकम् , यौवतम् , औष्ट्रकम् ,……। भावमें—

१. प्रत्ययादौ वर्तमानस्य चस्य 'चुटू' ( पा० सू० १ । ३ । ७ ) इत्यनेन प्रत्ययादेरन्ते वर्तमानस्य च 'हलन्त्यम्' ( पा० सू० १ । ३ । ३ ) इत्यनेनेत्संज्ञा विधीयते ।

२. 'कृदतिङ्' ( पा० सू० ३ । १ । ९३ ) इत्यनेन कृत्संज्ञा विधीयते ।

अदन्तप्रत्ययाः १ पुण्यसुदिनाभ्यां त्वह्नः परः ॥ २९ ॥
२ क्रियाऽव्ययानां भेदकान्येकत्वेऽप्युक्थतोटके ।
[1]चोचं पिच्छं गृहस्थूणं तिरीटं मर्म याजनम् ॥ ३० ॥
राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः ।

---

गोत्वम्, शौचम्,......कर्ममें—शौक्ल्यम्, राज्यम्, चौर्यम्, ......' )। नणकचिद्भ्योऽन्ये' ग्रहण करनेसे 'प्रश्नः, यत्नः, स्वप्नः, न्यादः, आखूत्थः, वेष्टनः, चयः, जयः, कारणा, हारणा, ......'[2] में नपुंसकलिङ्ग नहीं होता है ॥

१ पुण्य १, सुदिन २, शब्दसे परे [3]कृतसमासान्त 'अहन्' शब्द नपुंसकलिङ्ग होता है। ( 'क्रमशः उदा०—१ पुण्याहम्, २ सुदिनाहम्' )। 'अह्नः' ग्रहण करनेसे पुण्यानि अहानि यस्मिन्मासि स 'पुण्याहा' ( = पुण्याहन् ) यहाँपर नपुंसकलिङ्ग नहीं होता है ॥

२ क्रिया १ और अव्यय २ के विशेषण नपुंसकलिङ्ग और एकवचन होते हैं। ( 'क्रमशः उदा०—१ मृदु पचति, मन्दं करोति, सुखं तिष्ठन्ति योगिनः, ......। २ रम्यं श्वः, सुखदं प्रातः, ......' ) ॥

३ अब नपुंसकलिङ्गवाले कुछ शब्दोंको कण्ठरवसे स्वयं कह रहे हैं। 'उक्थम्' ( सामभेद ), तोटकम् (१० अक्षरवाले 'पङ्क्ति' जातीय वृत्तका छन्दो–विशेष). चोचम् ( जूठा छोड़ा हुआ, तालफल, कदली–फल), पिच्छम् (मोरका पंख। + 'उक्तम्' अर्थात् एक अक्षरवाला 'उक्ता' जातीय 'श्री' आदि छन्दो–विशेष क्षी० स्वा०। + 'मुक्तम्' अर्थात् छूटा हुआ मा० दी० ), गृहस्थूणम् (घरमें लगा हुआ खम्भा), तिरीटम् (शिरका बेठन, साफा, पगड़ी आदि, शिरका भूषण), मर्म (= मर्मन्, सन्धिस्थान, हृदय आदि मर्म स्थल), योजनम् (चार कोसका लम्बे रास्ते आदिका प्रमाण-विशेष), राजसूयम् ( राजसूय नामका यज्ञ–विशेष ), वाजपेयम् (वाजपेय नामका यज्ञ–विशेष), गद्यम् (कवि रचिता बिना छन्दकी शब्द-योजना, जैसे—दशकुमार, कादम्बरी आदि ग्रन्थों में है), पद्यम् ( कवि-रचित छन्दसे युक्त

---

१. 'चोचमुक्तम्' इति क्षी० स्वा० पाठान्तरम्। मा० दी० तु 'मुक्तम्' इति पाठे 'मुच्लृ मोचने' इत्यस्मात् 'क्त' प्रत्ययेन साधितवान्।

२. 'श्वि–श्वयनं श्वयथुः' इति क्षी० स्वा० उदाहरणं चिन्त्यम्। तस्यादन्तत्वाभावात्।

३. मूले 'अह्नः' इति कृतसमासान्तस्याहन्छब्दस्यानुकरणम्।

[1]माणिक्यभाष्यसिन्दूरचीरचीवरपिञ्जरम् ॥ ३१ ॥
लोकायतं हरितालं[2] विदलस्थालबाह्लिकम् ।

इति नपुंसकलिंगसंग्रहः ।

---

अथ पुन्नपुंसकलिंगसंग्रहः ।

१ पुन्नपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः ॥ ३२ ॥

---

श्लोक आदि, जैसे—रघुवंश, कुमारसंभव, नैषधचरित, आदि काव्यादि ग्रन्थोंमें है ), माणिक्यम् ( रत्न, जवाहिर ), भाष्यम् ( जिसमें सूत्रके अनुसार पदोंकी व्याख्या हो और अपने पदकी भी विवेचना की गई हो ऐसा ग्रंथ-विशेष[3], जैसे—पा० सू० पर पातञ्जलभाष्य, वेदान्तसूत्रपर शाङ्करभाष्य,……), सिन्दूरम् ( सिन्दूर ), चीरम् ( कपड़ा ), चीवरम् ( मुनियोंका वस्त्र ), पिञ्जरम् ( + पञ्जरम् । चिड़िया आदि पालनेका पिंजड़ा ), लोकायतम् (तर्क), हरितालम् ( हरताल नामका औषध विशेष ), विदलम् ( बाँसका बर्तन-विशेष ), स्थालम् ( भोजनपात्र विशेष ), बाह्लिकम् ( बह्लि देशमें होनेवाला, कुङ्कुम । + 'बाह्लवम्' अर्थात् बह्लि देशसे होनेवाला ), ये ११ शब्द नपुंसकलिङ्ग होते हैं ॥

इति नपुंसकलिंगसंग्रहः ।

---

अथ पुन्नपुंसकलिंगसंग्रहः ।

१ यहाँसे आगे 'स्त्रीपुंसयोः……' (३।५।३७) के पहले 'पुन्नपुंसकयोः' इसका अधिकार होनेसे इसके मध्यवर्ती ( बीचवाले ) शेष ( पूर्वोक्तसे भिन्न ) शब्द 'पुंल्लिंग और नपुंसकलिंग' होते हैं ॥

२ अर्धर्चः अर्धर्चम् ( ऋचाका आधा ), पिण्याकः पिण्याकम् ( तिलकी खली), कण्टकः कण्टकम् (काँटा), मोदकः मोदकम् (मिठाई, लड्डू…), तण्डकः

---

१. '……पञ्जरम्' इति पाठान्तरम् ।   २. 'विदल स्थालबाह्लवम्' इति पाठान्तरम् ।

३. 'भाष्य'लक्षणं पराशरपुराणे उक्तं तद्यथा—

सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः' ॥ १ ॥ इति ।

मोदकस्तण्डकष्टङ्कः शाटकः [1]कर्पटोऽर्बुदः ।
[2]पातकोद्योगचरकतमालामलका नडः ॥ ३३ ॥
कुष्ठं मुण्डं शीधु [3]बुस्तं क्ष्वेडितं क्षेम कुट्टिमम् ।

---

तण्डकम् ( परिष्कार क्षी० स्वा०, उपताप-विशेष महे० । + 'दण्डकः दण्डकम्' अर्थात् दण्ड या कपड़ा बुनने का काष्ठ-विशेष ), टङ्कः टङ्कम् ( पत्थर चीरनेकी टाँकी ), शाटकः शाटकम् ( साड़ी ), कर्पटः कर्पटम् ( स्थान-भेद या वस्त्र भेद । + 'खर्वटः खर्वटम्' अर्थात् नदी और पहाड़से मिश्रित स्थान [4]महे० भा० नी०, ४०० ग्रामोंका संग्रहस्थान क्षी० स्वा० ), अर्बुदः अर्बुदम् ( आँखका रोग-विशेष, दस करोड़की संख्या ), पातकः पातकम् (ब्रह्महत्या आदि पाप), उद्योगः उद्योगम् (उद्योग), चरक चरकम् (चरक नामका वैद्यक ग्रन्थ । + 'वरकः वरकम्' अर्थात बुना हुआ कपड़ा ), तमालः तमालम् ( तम्बाकू, सुर्ती ), आमलकः आमलकम् ( आँवलेका फल ), नडः नडम् (भीतरी बिल, नरसल नामका तृण-विशेष ), कुष्ठम् कुष्ठः (कोढ़ रोग ), मुण्डम् मुण्डः ( शिर ), शीधु शीधुः (मदिरा), बुस्तम् बुस्तः ( + वुस्तम् वुस्तः, पुस्तम् पुस्तः, भ्रस्तम् भ्रस्तः, चुस्तम् चुस्तः । मांसकी पुड़ी क्षी० स्वा०, भूना हुआ मांस, कटहल आदिका मारभाग), क्ष्वेडितम् क्ष्वेडितः ('वीरोंका सिंहके समान गर्जना, ) क्षेम क्षेमा ( = क्षेमन् । कुशल ), कुट्टिमम् कुट्टिमः ( मणि-पत्थर आदि जड़ा हुआ फर्श ), संगमम् संगमः ( दो नदी आदिका मिलाना ), शतमानम् शतमानः ( [5]चार रुपयाभरका प्रमाण-विशेष ), अर्मम् अर्मः ( आँखका रोग-विशेष ), शम्बलम् शम्बलः ( + सम्बलम् सम्बलः । रास्ते का कलेवा ), अव्ययम् अव्ययः (व्ययका न होना,

---

१. 'खर्वटोऽर्बुदः' इति पाठान्तरम् ।

२. 'पातकोद्योगवरकतमालामलका' इति पाठान्तरम् ।

३. 'वुस्तम् , चुस्तम , पुस्तम्, स्वस्तम्' इति पाठान्तराणि ।

४. 'खर्वट'लक्षणं यथा—

'यत्रैकतो भवेद्ग्रामो नगरं चैकतः स्मृतम् ।
मिश्रं तु खर्वटं नाम नदीगिरिसमाश्रयम्' ॥ १ ॥ इति ।

५. 'शतमान'लक्षणं स्मृतावुक्तं तद्यथा—

'द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते ।
शतमानं तु दशभिर्धरणैः पलमेव च' ॥ १ ॥ इति ।

संगमं शतमानार्मशम्बलाव्ययताण्डवम् ॥ ३४ ॥
कवियं [1]कन्दकर्पासं पारावारं युगन्धरम् ।
[2]यूपं प्रग्रीवपात्रीवे यूषं चमसचिक्कसौ ॥ ३५ ॥
१ अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् ।
तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत् ॥ ३६ ॥

इति पुन्नपुंसकलिङ्गसंग्रहः ।

लिङ्ग और संख्यासे रहित सब लिङ्गों और वचनोंमें तुल्यरूपवाला ( 'अव्यय' [3]संज्ञक शब्द–भेद ), ताण्डवम् ताण्डवः (नाचना), कवियम् कवियः (लगाम), कन्दम् कन्दः ( + कर्म । सूरन कन्दा बण्डा आदि कन्द ), कर्पासम् कर्पासः ( कपास, रूई ), पारम् पारः ( नदी आदिका पार अर्थात् दूसरा किनारा ), अवारम् अवारः ( नदी आदिके इधरका किनारा ), युगन्धरम् युगन्धरः ( जिसमें घोड़े बैल आदि जोते जाते हैं वह रथका लम्बा काष्ठ–विशेष ), यूपम् यूपः ( यज्ञमें पशु बाँधनेका खम्भा । + 'पूयम् पूयः' अर्थात् पीब ), प्रग्रीवम् प्रग्रीवः ( खिड़की ), पात्रीवम् पात्रीवः (यज्ञ–पात्र–विशेष), यूषम् यूषः (माँड़), चमसः चमसम् ( यज्ञ-पात्र–विशेष ), चिक्कसः चिक्कसम् ( यज्ञ–पात्र–विशेष रहे०, यवका आटा क्षी० स्वा०), ये ४० शब्द पुंल्लिङ्ग और नपुंसकलिङ्ग होते हैं ॥

१ अर्धर्चादिगण में 'घृत' आदि शब्दके जो पुंल्लिङ्ग आदि ( नपुंसकलिङ्ग ) कहे गये हैं, वे निश्चय वैदिक हैं अर्थात् उनका वेदमें ही प्रयोग होता है । अतएव यहाँ लोकमें वे नहीं कहे गये हैं । यदि प्रमाद आदिसे लोकमें भी दोनों लिङ्ग के प्रयोग मिल जायँ तो शेष (अवशिष्ट) शब्दोंके समान उनका भी पुंल्लिङ्ग और नपुंसकलिङ्गमें प्रयोग होता है ॥

इति पुन्नपुंसकलिङ्गसंग्रहः ।

१. 'कर्मकर्पासम्' इति पाठान्तरम् । २. 'पूयम्' इति पाठान्तरम् ।

३. 'अव्यय'लक्षणं 'तद्धितश्चास०' ( पा० सू० १ । १ । ३७ ) इति सूत्रीयपातञ्जलभाष्य उक्तं तद्यथा—

'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्' ॥ १ ॥ इति ॥

अथ स्त्रीपुंलिङ्गसंग्रहः।

१ स्त्रीपुंसयो २ रपत्यान्ता ३ द्विचतुःषट्पदोरगाः।
जातिभेदाः ४ पुमाख्याश्च स्त्रीयोगैः सह ५ मल्लकः॥ ३७॥
[1]ऊर्मिर्वराटकः स्वातिर्वर्णको झाटलिर्मनुः।

---

अथ स्त्रीपुंलिङ्गसंग्रहः।

१ यहाँसे आगे 'स्त्रीनपुंसकयोः······' ( ३।५।३९ ) के पहले तक 'स्त्रीपुंसयोः' का अधिकार होनेसे इसके मध्यवर्ती ( बीचवाले ) शब्द 'स्त्रीलिङ्ग और पुंल्लिङ्ग' होते हैं॥

२ 'अपत्य' अर्थमें विहित प्रत्यय जिनके अन्तमें हों वे शब्द स्त्रीलिङ्ग और पुंल्लिङ्ग होते हैं। ('जैसे—'उपगोरपत्यम् औपगवः औपगवी; इसी तरह गार्ग्यः गार्गी, वैदेहः वैदेही, वासिष्ठः वासिष्ठी,···' )। इनमें पहला 'औपगव' शब्द पुंल्लिङ्ग और दूसरा 'औपगवी' शब्द स्त्रीलिङ्ग है, इसी तरह अन्यत्र भी समझना चाहिये॥

३ जाति-भेद द्विपद (दो पैरवाले) १, चतुष्पद (चार पैरवाले) २, षट्पद (छः पैरवाले) ३, और उरग (सर्प) शब्द स्त्रीलिङ्ग और पुंल्लिङ्ग होते हैं। ('क्रमशः उदा०—१ मानुषः मानुषी, ब्राह्मणः ब्राह्मणी, शूद्रः शूद्रा, पुरुषः पुरुषी,······। २ सिंहः सिंही, अजः अजा, मृगः मृगी, व्याघ्रः व्याघ्री, मार्जारः मार्जारी,······। ३ भ्रमरः भ्रमरी, भृङ्गः भृङ्गी, षट्पदः षट्पदी,······। ४ उरगः उरगी, नागः नागी, सर्पः सर्पिणी,······' )॥

४ स्त्री-योग के साथ पुंस् ( पुरुष ) वाचक शब्द स्त्रीलिङ्ग और पुंल्लिङ्ग होते हैं। ('जैसे—मातुलः मातुलानी-मातुली, इन्द्रः इन्द्राणी,······')। ( कोई २ व्याख्याकार 'पुमाख्याश्च स्त्रीयोगैः' इसका सम्बन्ध पूर्वके ही साथ करते हैं )॥

५ अब कुछ स्त्रीलिङ्ग और पुंल्लिङ्ग शब्दोंको स्वयं कहते हैं—'मल्लकः, मल्लिका ( पुष्प-लता-विशेष, बेलाका फूल ), ऊर्मिः ( पानीका तरङ्ग। + मुनिः अर्थात् ऋषि तपस्विनी ), वराटकः वराटिका ( कौड़ी ), स्वातिः ( + स्वाती। स्वाती नामका पन्द्रहवाँ नक्षत्र ), वर्णकः वर्णिका ( चन्दन ), झाटलिः ( पलाश वृक्षके तुल्य वृक्ष-विशेष), मनुः मनायी-मनावी-मनुः ( मनुस्मृतिके निर्माता

---

१. 'मुनिर्वराटकः' इति पाठान्तरम्।

मूषा सृपाटी कर्कन्धूर्यष्टिः शाटी कटी कुटी ॥ ३८ ॥
इति स्त्रीपुंल्लिङ्गसंग्रहः ।

अथ स्त्रीनपुंसकलिङ्गसंग्रहः ।

१ स्त्रीनपुंसकयो २ र्भावक्रिययोः ष्यञ्क्वचिच्च वुञ् ।
औचित्यमौचिती मैत्री मैत्र्यं वुञ्प्रागुदाहृतः ॥ ३९ ॥
३ षष्ठ्यन्तप्राक्पदाः सेनाछायाशालासुरानिशाः ।

मनु या मनुष्य, मानुषी), मूषः मूषा (सोना-चाँदी आदि धातु गलाने की घरिया), सृपाटः सृपाटी (परिमाण-भेद), कर्कन्धूः (बैर–), यष्टिः (छड़ी, लाठी), शाटः शाटी (साड़ी), कटः कटी (कमर), कुटः कुटी (कुटिया), ये शब्द स्त्रीलिङ्ग और पुंल्लिङ्ग होते हैं। (इनमें एक रूपवाले शब्द दोनों लिङ्गमें तुल्यरूप होते हैं) ॥

इति स्त्रीपुंल्लिङ्गसंग्रहः ।

अथ स्त्रीनपुंसकलिङ्गसंग्रहः ।

१ यहाँसे आगे 'त्रिषु' (३।५।४१) के पहले 'स्त्रीनपुंसकयोः' इसका अधिकार होनेसे इसके मध्यवर्ती (बीचवाले) शब्द 'स्त्रीलिङ्ग और नपुंसकलिङ्ग' होते हैं ॥

२ भाव और कर्ममें विहित ष्यञ् १ और वुञ् २ प्रत्ययान्त शब्द कहीं-कहीं (सर्वत्र नहीं किन्तु लक्ष्यानुसार) स्त्रीलिङ्ग और नपुंसकलिङ्ग होते हैं। ('क्रमशः उदा०—१ (ष्यञ् प्रत्ययान्त) जैसे—औचित्यम् औचिती, मैत्र्यम् मैत्री, सामग्र्यम् सामग्री, आर्हन्त्यम् आर्हन्ती,······ । २ (वुञ् प्रत्ययान्त) का 'वैरमैथुनकादिवुञ्' (३।५।४) में उदाहरण दिया गया है')। 'क्वचित्' (कहीं २ सर्वत्र नहीं) ग्रहण करनेसे 'शौक्ल्यम्, ब्राह्मण्यम्, रामणीयकम्, साहाय्यकम्, शैष्योपाध्यायिका, गार्गिका, काठिका······' यहाँपर दोनों लिङ्ग (स्त्रीलिङ्ग और नपुंसकलिङ्ग) नहीं होते हैं ॥

३ षष्ठ्यन्त पूर्वपदमें रहनेपर सेना १, छाया २, शाला ३, सुरा ४, निशा ५, विकल्पसे स्त्रीलिङ्ग (स्त्रीलिङ्ग और पक्षमें नपुंसकलिङ्ग) होते हैं। ('क्रमशः उदा०—१ नृसेनम् नृसेना, राजसेनम् राजसेना,······ । २ वृक्षच्छायम् वृक्षच्छाया, कुड्यच्छायम् कुड्यच्छाया,······ । ३ गोशालम् गोशाला, पाठ-

स्याद्वा नृसेनं श्वनिशं गोशालमितरे च दिक् ॥ ४० ॥

१ आबन्नन्तोत्तरपदो द्विगुश्चापुंसि नश्च लुप्।

त्रिखट्वं च त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि ॥ ४१ ॥

इति स्त्रीनपुंसकलिङ्गसंग्रहः ।

अथ त्रिलिङ्गसंग्रहः ।

२ त्रिषु ३ पात्री पुटी वाटी पेटी कुवलदाडिमौ ।

इति त्रिलिङ्गसंग्रहः ।

४ परं लिङ्गं स्वप्रधाने द्वन्द्वे तत्पुरुषेऽपि तत् ॥ ४२ ॥

---

शालम् पाठशाला, पाकशालम् पाकशाला,······ । ४ श्वसुरम् श्वसुरा,······ । ५ श्वनिशम् श्वनिशा,······' ) ॥

१ 'आप् १, अन् २, प्रत्ययान्त शब्द उत्तरपदमें ( आगे ) रहें तो द्विगु समासमें वे शब्द 'नपुंसकलिङ्ग और स्त्रीलिङ्ग' होते हैं तथा 'अन्' प्रत्ययके 'न्' का लोप होता है । ( 'क्रमशः उदा०—१ त्रिखट्वम् त्रिखट्वी,······ । २ त्रितक्षम्, त्रितक्षी,······' ) ॥

इति स्त्रीनपुंसकलिङ्गसंग्रहः ।

अथ त्रिलिङ्गसंग्रहः ।

२ यहाँसे आगे 'परवल्लिङ्ग······' ( ३।५।४२ ) के पहले 'त्रिषु' का अधिकार होनेसे इसके मध्यवर्ती ( बीचवाले ) सब शब्द त्रिलिङ्ग होते हैं ॥

३ यहाँ स्वयं कुछ त्रिलिङ्ग शब्दोंको कहते हैं—पात्री पात्रम् पात्रः ( बर्तन ), पुटी पुटम् पुटः ( ढक्कन ), वाटी वाटम् वाटः ( आच्छादन, घेरा ), पेटी पेटम् पेटः ( बेंत आदिका बक्स ), कुवलः कुवली कुवलम् ( बेरका फल ), दाडिमः दाडिमी दाडिमम् ( अनार ), ये ६ शब्द त्रिलिङ्ग होते हैं ॥

इति त्रिलिङ्गसंग्रहः ।

४ स्वप्रधान ( उभयपदप्रधान ) इतरेतर द्वन्द्व समासमें १, और तत्पुरुष समासमें २, पर ( आगे ) वाले शब्दके समान लिङ्ग होता है । जैसे—इमे कुक्कुटमयूर्यौ, इमौ मयूरीकुक्कुटौ;······ । २ अयं कुलब्राह्मणः, इदं ब्राह्मणकुलम्; इयमर्धपिप्पली, अयं चन्द्रार्धः; इयं सर्पभीतिः, इदं सर्पभयम्;······ ' ) ॥

१ अर्थान्ताः प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः ।
तद्धितार्थो द्विगुः सङ्ख्यासर्वनामतदन्तकाः ॥ ४३ ॥
२ बहुव्रीहिरदिङ्नाम्नामुन्नेयं तदुदाहृतम् ।
३ [1]गुणद्रव्यक्रियायोगोपाधिभिः परगामिनः ॥ ४४ ॥

---

१ अर्थान्त ( 'अर्थ' शब्द जिसके अन्तमें हो वह ) १, प्र २, आदि (अति ३, सु ४, ······ ), अलम् ५, प्राप्त ६, आपन्न ७, पूर्वमें जिनके रहें वे शब्द, तद्धितार्थ द्विगु ८, संख्यावाचक ९, सर्वनाम १०, संख्यान्त ( संख्या–वाचक शब्द जिनके अन्तमें रहें वे ) ११, सर्वनामान्त (सर्वनाम जिनके अन्तमें रहे वे) १२, शब्द त्रिलिङ्ग होते हैं। ( 'क्रमशः उदा०—१ द्विजार्था माला, द्विजार्थः सूपः, द्विजार्थं पयः,······ । २ प्रगत आचार्यः प्राचार्यः, ······ । ('आदि' से संगृहीत । ३ अतिक्रान्तः मालामतिमालः, अतिखट्वः,···। ४ सुपूज्यः, सुकुलम्, सुनगरी, ······ )। ५ अलञ्जीविकाय अलञ्जीविकः, ······ । ६ प्राप्तजीविको भृत्यः, प्राप्तग्रामं कुलम् , ······ । ७ आपन्नजीविको मनुष्यः, आपन्नजीविका दासी,······। ८ पञ्चकपालः, पुरोडाशः, पञ्चकपालं पयः,······ । ९ एको विप्रः, एका वधूः, एकं वस्त्रम्; द्वौ बालकौ, द्वे बालिके, द्वे वाससी, बहवो विप्राः, बह्व्यः विप्रपत्न्यः, बहूनि वस्त्राणिः ······ । १० सर्वः, सर्वा, सर्वम्; पूर्वः, पुरुषः, पूर्वा दिक्, पूर्वं नगरम्; ······ । ११ ऊनत्रयो ब्राह्मणः, ऊनतिस्रो वध्वः, ऊनत्रीणि वस्त्राणि; ······ । १२ परमसर्वः, परमसर्वा, परमसर्वम् ; ······' ) ॥

२ 'दिङ्नाम' से भिन्न बहुव्रीहि त्रिलिङ्ग होता है। ( 'जैसे—बहुधनः, बहुधना, बहुधनम्; ······')। 'आदिङ्नाम्नाम्' के ग्रहण करनेसे 'उत्तरस्यां पूर्वस्यां च मध्ये या दिक् सा 'उत्तरपूर्वा' दिक्,······' में त्रिलिङ्ग नहीं होता है॥

३ गुण १, द्रव्य २, क्रिया ३, का योगनिमित्त है जिनका वे शब्द त्रिलिङ्ग होते हैं। ( 'क्रमशः उदा०—१ शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रम् । कृष्णो देहः, कृष्णा तनुः, कृष्णं शरीरम्; ······ । २ दण्डी पुरुषः, दण्डिनी स्त्री, दण्डि कुलम्; ······। ३ पाचको विप्रः, पाचिका ब्राह्मणी, पाचकं विप्रकुलम्;······')॥

---

१. 'गुणद्रव्यक्रियायोगोपाधयः' इति पाठान्तरम् ।

१ कृतः कर्तर्यसंज्ञायां २ कृत्याः कर्तरि कर्मणि।
३ अणाद्यन्तास्तेन रक्ताद्यर्थे नानार्थभेदकाः ॥ ४१ ॥
४ षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम्।

१ कर्ता अर्थमें विहित संज्ञाभिन्न ( नामको छोड़कर ) 'कृत्' प्रत्ययान्त शब्द त्रिलिंग होते हैं। ( जैसे—कर्ता पुरुषः, कर्त्री स्त्री, कर्तृ कलत्रम् ; कुम्भकारः पुरुषः, कुम्भकारी स्त्री, कुम्भकारं कलत्रम् ;……")। 'असंज्ञायाम्' ग्रहण करनेसे 'ग्रहः, व्याघ्रः, धनञ्जयः, हरिः, प्रजा, ……' में और 'कर्तरि' ग्रहण करनेसे 'कृतिः, ……' में त्रिलिङ्ग नहीं होता है॥

२ कर्ता १ और कर्म २ अर्थमें विहित संज्ञाभिन्न 'कृत्य' प्रत्ययान्त शब्द त्रिलिङ्ग होते हैं। ( 'क्रमशः उदा०—१ वास्तव्यः, वास्तव्या, वास्तव्यम्;…'। २ कर्तव्यो धर्मः, कर्तव्या गुरुजनसेवा, कर्तव्यं सन्ध्योपासनम् ; ……')। 'कर्तृकर्मणोः' के ग्रहण करनेसे स्थातव्यं त्वया, ब्रह्मभूयम्, एधितव्यं त्वया…' में त्रिलिङ्ग नहीं होता है॥

३ 'उससे रँगा गया है' आदि ( 'आदि' से 'आगत १, युक्त २, देवता ३, इष्ट ४, ……') अर्थमें विहित 'अण्' १, आदि प्रत्ययान्त शब्द त्रिलिङ्ग होते हैं। ( जैसे—हारिद्रः पटः, हारिद्री शाटी, हारिद्रं वस्त्रम् ; कौसुम्भम्, कौसुम्भी, कौसुम्भः, लाक्षिकः, लाक्षिकी, लाक्षिकम् ; ……। ( 'आदि' से संगृहीत १ 'आगत' अर्थमें जैसे—माथुरो विप्रः, माथुरी महिषी, माथुरं वस्त्रम् ;……। २ कार्तिकी पौर्णमासी, कार्तिको मासः, कार्तिकं दिनम् ;…। ३ ऐन्द्रो मन्त्रः, ऐन्द्री ऋक्, ऐन्द्रं हविः …'। ४ वासिष्ठी मन्त्रः, वासिष्ठी ऋक्, वासिष्ठं साम;…')। इसी तरह अन्यान्य अर्थ और उदाहरणोंका तर्क स्वयं कर लेना चाहिये' )॥

४ [१] षट्संज्ञक १, युष्मद् २, अस्मद् ३, अव्यय ४, और तिङन्त ५, शब्द तीनों लिङ्गोंमें समान रूपवाले होते हैं। ( क्रमशः उदा०—१ कति पुरुषाः, कति स्त्रियः, कति वस्त्राणि; पञ्च षट् सप्त अष्टौ वा ब्राह्मणाः, पञ्च षट् सप्त अष्टौ वा ब्राह्मण्यः, पञ्च षट् सप्त अष्टौ वा वस्त्राणि; ……। २–३ त्वम् अहं वा पुरुषः, त्वम् अहं वा स्त्री, त्वम् अहं वा कुलम् ;………। ४ उच्चैः

१. 'डति च' ( पा० सू० १।१।२५ ) इत्यनेन 'कति' शब्दस्य, ष्णान्ताः षट्' ( पा० सू० १।१।२४ ) इत्यनेन च 'पञ्चन्, षट्, सप्तन्, अष्टन्, नवन्' आदि नान्तशब्दानां 'षट्' संज्ञा विधीयते।

१ परं विरोधे २ शेषं तु ज्ञेयं शिष्टप्रयोगतः ॥ ४६ ॥

इति लिङ्गादिसंग्रहवर्गः ॥ ५ ॥

---

नीचैः पुरस्तात् पश्चाद् वा प्रासादः, उच्चैः नीचैः पुरस्तात् पश्चाद्वा पाठशाला, उच्चैः नीचैः पुरस्तात् पश्चात् वा गृहम् ,······ । ५ पुरुषः पचति, स्त्री पचति, कुलं पचति;······' ) ॥

१ लिङ्ग-विधायक वचनोंको यदि आपसमें विरोध ( दो या अधिक वचनों से दो या अधिक लिङ्ग प्राप्त ) हों तो पर ( अन्त ) वाला लिङ्ग होता है । ( 'जैसे—'धीः, भूः,········' में 'स्त्रियामीदूद्विरामैकाच्' (३।५।२) चरितार्थ है और 'कर्ता, पाचकः,······' में 'कृतः कर्तर्यसंज्ञायाम्' ( ३।५।४५ ) चरितार्थ है, फिर 'नीः, लूः' यहाँ दोनोंकी ( १ ले वचनसे स्त्रीलिङ्ग और २ रे वचनसे त्रिलिङ्गकी ) प्राप्ति है तब पर ( आगेवाले ) वचनसे उक्त लिङ्ग ( त्रिलिङ्ग ) ही होगा । इसी तरह अन्यान्य उदाहरणोंका तर्क कर लेना चाहिये' ) ॥

२ शेष ( बाकी ) लिङ्ग शिष्टोंके प्रयोगके अनुसार जानना चाहिये । ( 'जैसे—१ 'चालनी तितउः पुमान्' ( २।९।२६ ) इस वचनसे 'तितउ' शब्दको पुंल्लिंग कहा गया, किन्तु 'तितउ परिवपनं भवति' (पा० भा० पृ० ४१) इस भाष्यके प्रयोगसे 'तितउ' शब्द नपुंसकलिङ्ग भी होता है । २ 'कलिका कोरकः पुमान्' (१।४।१६) इस वचनसे 'कोरक' शब्दको पुंल्लिङ्ग कहा गया है तो भी 'कोरकाणि' इस माघ कविके प्रयोगसे वह 'कोरक' शब्द नपुंसकलिङ्ग भी होता है' ) । यहाँ जो नहीं कहा गया है उसे लक्ष्यसे समझना चाहिये । ('उदा०-१ अव्यक्त गुण—लिङ्गमें नपुंसकलिङ्ग होता है, जैसे—किं तस्या 'जातं' पुमान् स्त्री वा'···· । २ 'तयप्' प्रत्ययान्त धर्मवृत्ति शब्द स्त्रीलिङ्ग और नपुंसकलिङ्ग होते हैं, जैसे—वर्णानां चतुष्टयी, वर्णानां चतुष्टयम् , वेदानां त्रयी, वेदानां त्रयम् ,······ । छन्द (वेद) में स्वार्थविहित 'अण्' प्रत्ययान्त शब्द नपुंसकलिङ्ग होते हैं, जैसे—गायत्री एव गायत्रम् , अनुष्टुबेवानुष्टुभम् ,······ । ४ 'श्तिप्' अन्तमें हो जिसके ऐसा इक् (इ, उ, ऋ, लृ) अन्तवाला शब्द स्त्रीलिङ्ग होता है, जैसे—इयं वृद्धिः, इयं पचतिः,······ । ५ 'प्रमाण' आदि शब्द नित्य नपुंसकलिङ्ग होते हैं, जैसे—वेदाः प्रमाणम् , स्मृतयः प्रमाणम् ,······' ) ॥

इति लिङ्गादिसंग्रहवर्गः ॥ ५ ॥

काण्डसमाप्तिः—

१ [1]इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।
सामान्यकाण्डस्तृतीयः साङ्ग एव समर्थितः ॥ ४७ ॥
इत्यमरसिंहविरचिते 'नामलिङ्गानुशासना' परपर्यायके
'अमरकोषे' तृतीयः 'सामान्यकाण्डः' समाप्तः ।

---

काण्डसमाप्तिः—

१ श्री 'अमरसिंह' के बनाये हुए 'नामलिङ्गानुशासन' (अमरकोष) नामके ग्रन्थमें 'सामान्यकाण्ड' नामका तीसरा प्रकरण अङ्गसहित समर्थित होकर पूर्ण हुआ॥

बुधस्य सन्देहहरो बुधाग्रयः शास्त्राधिनाथो बुध 'लोकनाथः' ।
शास्त्रार्थकान्तारहरिप्रवीरो विपक्षपक्षस्य हि 'पूर्णचन्द्रः' ॥ १ ॥
वेदाङ्गषट्शास्त्रसमुद्रपारङ्गतैर्बुधैश्चापि प्रभातवन्द्यः ।
स्वान्तेवसत्पूरितभू 'स्त्रिवेदी श्रीदेवनारायण' नामधेयः ॥ २ ॥
शिरसैतद्गुरुश्रेष्ठपादाब्जद्वंद्वरेणुभिः।धृताभिर्लब्धसञ्ज्ञाना दित्यनष्टमनस्तमाः॥३॥
'विहार' प्रान्त 'आरा' ख्ये मण्डले पावने शुभे ।
'केसठ' ग्रामवास्तव्य 'रामस्वार्थ' सुधीसुतः ॥ ४ ॥
'हरगोविन्दमिश्रा'ख्यो 'नामलिङ्गानुशासनीम्' ।
व्याख्यां 'मणिप्रभा'नाम्नीं व्यधाद्छात्रोपयोगिनीम् ॥ ५ ॥
गुरुप्रसादसंलब्धज्ञानेन निर्मिता शुभा । पूज्यश्रीगुरुपादाब्जेष्वेव भूयःसमर्पिता ॥६॥
नेत्राङ्काङ्कशशाङ्कसंमिततमे श्रीवैक्रमे वत्सरे
भाद्रे मास्यसिते दले वसुतिथौ सौम्ये निशीथक्षणे ।
कोषस्या'मरसिंह'पण्डितकृतेर्व्याख्या सुपूर्णा शुभा
भूयाच्छात्रगणस्य बोधकृतये लोकस्य विष्णोर्जनिः ॥ ७ ॥

इति पण्डितप्रवरश्री'रामस्वार्थमिश्र'तनूज-श्री 'हरगोविन्दमिश्र'विरचितायां 'मणिप्रभा'ख्या'मरकोष' व्याख्यायां तृतीयः 'सामान्यकाण्डः' समाप्तः ।

---

१. 'इत्यमर······समर्थितः' इत्ययं श्लोकः केवलं महेश्वरेणैव व्याख्यातः । भा० दी० मूले, क्षी० स्वा० व्याख्यायां च [ ] ईदृक्कोष्ठे मूलमात्रमुपलभ्यत इत्यवधेयम् ।

२. 'व वा यथा तथेवैवम्' (३।४।९) इति ग्रंथकारोक्तेरत्र 'वा' शब्द इवार्थक इत्यवधेयम् ।

समाप्तोऽयं ग्रन्थः ।

# परिशिष्टम्

आदित्याः (१।१।१०)—हरिवंशोक्ता द्वादशादित्यकथाऽत्रोच्यते, तथा हि—
'मरीचात्कश्यपाज्जातास्तेऽदित्या दक्षकन्यया। तत्र शक्रश्च विष्णुश्च जज्ञाते पुनरेव हि॥
अर्यमा चैव धाता च त्वष्टा पूषा च भारत। विवस्वान् सविता चैव मित्रो वरुण एव च॥
अंशो भगश्चातितेजा आदित्या द्वादश स्मृताः'। इति शब्दकल्पद्रुमकोशः॥

काश्यपास्त्वन्य एव द्वादशादित्याः विद्यन्त इत्युक्तं काशीखण्डे। तथा हि—
इति काशीप्रभावज्ञो जगच्चक्षुस्तमोनुदः। कृत्वा द्वादशधाऽऽत्मानं काशीपुर्यां व्यवस्थितः॥
लोकार्क उत्तरार्कश्च शम्बादित्यस्तथैव च। चतुर्थो द्रुपदादित्यो वृद्धकेशवसञ्ज्ञको॥
दशमो? विमलादित्यो गङ्गादित्यस्तथैव च। द्वादशश्च यमादित्यः काशीपुर्यां घटोद्भव॥
तमोऽधिकेभ्यो दुष्टेभ्यः क्षेत्रं रक्षन्त्यमी सदा'।

इति काशीखण्डे अ० ४६; वाचस्पत्याभिधानस्य ३८०६ तमे पृष्ठे॥

यथा वा—विष्णुधर्मोत्तरे भारते चोक्ता द्वादशादित्याः—
'धाता मित्रोऽर्यमा रुद्रो वरुणः सूर्य एव च। भगो विवस्वान् पूषा च सविता दशमस्तथा॥
एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते'। इति॥

द्वादशमासभेदेनान्य एव द्वादशादित्या आदित्यहृदये उक्तास्तेऽत्र निर्दिश्यन्ते।
तथा हि—
'अरुणो माघमासे तु सूर्यो वै फाल्गुने तथा। चैत्रे मासि च वेदज्ञो वैशाखे तपनः स्मृतः॥
ज्येष्ठे मासि तपेदिन्द्र आषाढे तपते रविः। गभस्तिः श्रावणे मासे यमो भाद्रपदे तथा॥
इषे हिरण्यरेताश्च कार्तिके च दिवाकरः। मार्गशीर्षे तपेच्चैत्रः पौषे विष्णुः सनातनः॥
इत्येते द्वादशादित्याः काश्यपेयाः प्रकीर्तिताः'।
इति वाचस्पत्याभिधानस्य ६९६ तमे पृष्ठे॥

विश्वेदेवाः (१।१।१०)—विश्वेदेवा दश प्रोक्तास्तेषां नामान्युल्लिख्यन्ते।
तथा हि—
'ऋतुर्दक्षो वसुः सत्यः कामः कालस्तथा धुरिः। रोचनोमाद्रवाश्चैव तथा चान्यः पुरूरवाः।
विश्वेवा भवन्त्येते दश श्राद्धेषु पूजिताः'। इति वाचस्पत्याभिधाने ४९१६ तमे पृष्ठे॥
अन्यच्च वह्निपुराणे—
'ऋतुर्दक्षो वसुः सत्यः कामः कालस्तथा ध्वनिः। रोचकश्चाद्रवाश्चैव तथा चान्यः पुरूरवाः।

विश्वेदेवा भवन्त्येते दश सर्वत्र पूजिताः' ॥ इति वह्निपुराणे गणनामाध्यायः' ।
इति शब्दकल्पद्रुमकोशस्य ४४० पृष्ठे ।

**वसवः** ( १।१।१० )—वसवोऽष्टौ । ते यथा—

'धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च **वसवोऽष्टा**विति स्मृताः'।
इति 'भा० आ० ६६ अ०' इति वाचस्पत्याभिधानस्य ४८६३ तमे पृष्ठे ।

धरो ध्रुवश्च सोमश्च विष्णुश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च **वसवोऽष्टौ** क्रमात्स्मृताः'॥

इति भरतः । दक्षो द्वितीयजन्मनि षष्ठमन्वन्तरे असिक्न्यां पत्न्यां षष्टिः कन्या जनयामास । ताः प्रजापतिभ्यो दत्तवान् । धर्माय दश, तासां नामानि—'भानुर्लम्बा ककुद्यामिर्विश्वा साध्या मरुत्वती । वसुमुहूर्ता सङ्कल्पा । आसां मध्ये वसोरष्टौ वसवः पुत्रा जाताः । ते यथा—१ द्रोणः, २ प्राणः, ३ ध्रुवः, ४ अर्कः, ५ अग्निः ६ दोषः, ७ वास्तुः ८ विभावसुश्चेति[१] ।

मतान्तरोक्ता अष्टौ वसवो यथा—

'१ धरः, २ ध्रुवः, ३ सोमः, ४ सावित्रः, ५ अनिलः, ६ अनलः, ७ प्रत्यूषः, ८ प्रभासश्चेति' महाभारते दानधर्मः । अपि च—

'आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च **वसवोऽष्टौ** प्रकीर्तिताः'।
इति वह्निपुराणे काश्यपीयप्रजासर्गनामाध्यायः । कूर्मपुराणे १४ तमाध्यायश्चेति ॥

**तुषिताः** (१।१।१०) गणदेवताभेदे १२ मन्वन्तरभेदे भिन्ननामानो यथा—

'पूर्वमन्वन्तरे श्रेष्ठा द्वादशासन् सुरोत्तमाः । तुषिता नाम तेऽन्योन्यमूचुर्वैवस्वतोऽन्तरे ।
उपस्थितेऽतियशसश्चाक्षुषस्यान्तरे मनोः । समवायीकृताः सर्वे समागम्य परस्परम्॥
आगच्छत द्रुतं देवा अदितिं संप्रविश्य वै । मन्वन्तरे प्रसूयामस्तत्र श्रेयो भविष्यति॥
एवमुक्त्वा तु ते सर्वे चाक्षुषस्यान्तरे मनोः।मारीचात्कश्यपाज्जातास्तेऽदित्या दक्षकन्यया॥
तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव च । अर्यमा चैव धाता च त्वष्टा पूषा तथैव च॥
विवस्वान् सविता चैव मित्रो वरुण एव । अंशो भगश्चादितिजा आदित्या द्वादश स्मृताः॥
चाक्षुषस्यान्तरे पूर्वमासन् ये तुषिताः सुराः ।
वैवस्वतोऽन्तरे ते वै आदित्या द्वादश स्मृताः ॥'

इति हरिवंशे ३याध्यायः ॥ तथा चादित्यरूपा **द्वादश**—

'प्राणापानावुदानश्च समानो व्यान एव च । चक्षुः श्रोत्रं रसो घ्राणस्पर्शौ बुद्धिर्मनस्तथा॥

---

१. अत्रैवाग्रे प्रत्येकस्य सन्ततिवर्णनं नाम चाग्रे विस्तरेण वर्णितम् ।

द्वादशैते तु तुषिता देवाः स्वारोचिषेऽन्तरे'। इति सारसुन्दरीवचनाद् द्वादश।
तोषः प्रतोषः सन्तोषो भद्रश्शान्तिरिडस्पतिः। इध्मः कविर्विभुः स्वाहासुदेवो रोचनो द्विषट्।
तुषिता नाम ते देवा आसन् स्वायम्भुवोऽन्तरे' ॥
इति शब्दार्थचिन्तामणिधृतवाक्योक्त्या षट्त्रिंशत् ॥
इति वाचस्पत्याभिधानस्य ३३३७ तमे पृष्ठे, शब्दकल्पद्रुमस्य ६४० पृष्ठे च ॥

ये च द्वादश इति मन्यन्ते, त एकैकमन्वन्तरापेक्षया द्वादशेति वर्णयन्ति समष्ट्यभिप्रायेण षट्त्रिंशदिति विवेकः। तदभिप्रायेणैव 'षट्त्रिंशत्तुषिता मताः' इत्युक्तं टिप्पणे इत्यवधेयम् ॥

**आभास्वराः** ( १।१।१० )—आभास्वराः[1] द्वादश। तथाहि—
'आत्मा ज्ञाता दमो दान्तः शान्तिर्ज्ञानं शमस्तपः।
कामः क्रोधो मदो मोहो द्वादशाभास्वरा इमे' ॥
इति वाचस्पत्याभिधाने ७५४ तमे पृष्ठे, शब्दकल्पद्रुमस्य १७९ तमे पृष्ठे च ॥

**अनिलः** ( १।१।१० )—अग्निपुराणे वायोरूनपञ्चाशन्नामान्युक्तानि, तानीह प्रोच्यन्ते। तथा हि—
'एकज्योतिश्च द्विज्योतिस्त्रिज्योतिर्ज्योतिरेव च। एकशक्रो द्विशक्रश्च त्रिशक्रश्च महाबलः ॥
इन्द्रश्च मत्यदृश्यश्च ततः पतिसकृत्परः। मितश्च संमितश्चैव सुमतिश्च महाबलः ॥
ऋतजित्सत्यजिच्चैव सुषेणः सेनजित्तथा। अग्निमित्रोऽनमित्रश्च पुरुमित्रोऽपराजितः ॥
ऋतश्च ऋतवाहश्च धर्ता च धरणो ध्रुवः। विधारणो नाम तथा देवदेवो महाबलः ॥
इदृक्षश्चाप्यदृक्षश्च एते दश मिताशिनः। व्रतिनः प्रसदृक्षश्च सभरश्च महायशाः ॥
धाता दुर्गो धृतिर्भीमस्त्वभियुक्तस्त्वपात्सहः। द्युतिर्वपुरनाधृष्योऽथ वासः कामो जयो विराट्॥
इत्येकोनाश्च पञ्चाशन्मरुतः पूर्वसम्भवाः' ॥ इति वह्निपुराणे गणनामाध्यायः ॥

हेमाद्रौ दानखण्डे वायुपुराणोक्तान्येकोनपञ्चाशन्मरुन्नामानि, तेषां सप्त गणाश्चो- क्तास्तेऽत्र निर्दिश्यन्ते। तथा हि—मरुन्नामानि तु वायुपुराणे—
'ततस्तेषां तु नामानि मातापित्रोः ? प्रचक्रतुः। तद्विधैः कर्मभिश्चैव मरुतान्तो पृथक् पृथक्॥
शुक्रज्योतिस्तथाऽऽदित्यश्चित्रज्योतिस्तथाऽपरः।
सत्यज्योतिश्च ज्योतिष्मान् सत्यहा ऋतपास्तथा ॥

---

१. इदं 'आभास्वराश्चतुःषष्टिः' इति टिप्पणीवचनविरुद्धमपि ६४ भेदानां काप्यनुप- लब्धेर्द्वादशैवात्र निर्दिष्टाः। ६४ भेदान् सूचयतो विदुषः परं कृतज्ञो भवेयम्।

प्रथमोऽयं गणः प्रोक्तो द्वितीयं तु निबोधत । ऋतजित्सत्यजिच्चैव सुषेणः सेनजित्तथा ॥
अन्तिमित्रो ह्यमित्रश्च दूरेमित्रस्तथा परः । गण एष द्वितीयस्तु तृतीयोऽयं निबोधत ॥
ऋतः सत्यो ध्रुवो धर्ता विधर्ताऽथ विधारयः । धरुणश्च तृतीये तु चतुर्थं मे निबोधत ॥
ध्वान्तश्च धुनितश्चैव सभरश्च तथा गणः । ईदृक्षासः पुरुषश्चैव ! अन्यादृक्षास एव नः ॥
संमिताः समदृक्षासः प्रतिदृक्षास वै गणः । मरुतेन्द्रः सरभसस्तथा देवविशोऽपरः ॥
यक्षश्चैवानुवर्त्मानस्तथाऽन्यो मानुषीविशः । दैत्यदेवाः समाख्याताः सप्तैते सप्तका गणाः ॥
एते ह्येकोनपञ्चाशन्मरुतो नामतः स्मृताः' ॥ इति हेमाद्रौ दानखण्डे ७७६ तमे पृष्ठे ॥

वायवः पञ्चैवेति केचिदाहुस्तेऽत्र लिख्यन्ते । तथा हि—'वायुश्च पञ्चभूतान्तर्गतभूतविशेषः । तद्विशेषविवरणं यथा-वायवः प्राणापानसमानव्यानोदानाः । तत्र १ प्राणो नाम प्राग्गमनवान्नासाग्रवर्ती, २ अपानो नाम अवाग्गमनवान् पाय्वादिस्थानवर्ती, ३ व्यानो नाम विष्वग्गमनवान् अखिलशरीरवर्ती, ४ उदानो नाम कण्ठस्थानीय ऊर्ध्वगमनवानुत्क्रमणवायुः, ५ समानो नाम शरीरमध्यगताशितपीतान्नादिसमीकरणकरः ( समीकरणन्तु परिपाककरणं रसरुधिरशुक्रपुरीषादिकरणम् ) इति ।

अन्ये तु '१ नाग २ कूर्म ३ कृकर ४ देवदत्त ५ धनञ्जया'ख्याः पञ्चान्ये वायवः सन्तीत्याहुः । तत्र १ नाग उद्गिरणकरः, २ कूर्मो निमीलनादिकरः, ३ कृकरः क्षुधाकरः, ४ देवदत्तो जृम्भणकरः, ५ धनञ्जयः पोषणकरः । एतेषां प्राणादिष्वन्तर्भावात्पञ्चैवेति केचित्' । इति शब्दकल्पद्रुमकोषः ३४१ पृष्ठे । वाचस्पत्युक्तान्येकोनपञ्चाशद्वायुनामानि तत्रैव शब्दकल्पद्रुमकोषे १६४–१६८ तमे पृष्ठे 'अनिल' शब्दविवरणे सविस्तरं द्रष्टव्यानि ॥

**महाराजिकाः** ( १।१।१० )—एषां विंशत्यधिकशतद्वयं भेदाः सन्ति ॥

**साध्याः** ( १।१।१० )—साध्या द्वादशविधास्तेषां नामानि यथा—

'मनो मन्ता तथा प्राणो नरोऽपानश्च वीर्यवान् । निर्भयो नरकश्चैव दंशो नारायणो वृषः
प्रभुश्चेति समाख्याताः साध्या द्वादश देवताः' ।

इति वाचस्पत्याभिधानस्य ५२७९ तमे पृष्ठे ॥

**रुद्रः** ( १।१।१० )—रुद्रा एकादश सन्ति । ते यथा—१ अजः, २ एकपाद्, ३ अहिर्बुध्नः, ४ पिनाकी, ५ अपराजितः, ६ त्र्यम्बकः, ७ महेश्वरः,

८ वृषाकपिः, ९ शम्भुः, १० हरणः, ११ ईश्वरश्चेति, इति महाभारते दानधर्मः ॥ अपि च—

'अजैकपादहिर्बुध्नो विरूपाक्षः सुरेश्वरः । जयन्तो बहुरूपश्च त्र्यम्बकोऽप्यपराजितः ॥
वैवस्वतश्च सावित्रो हरो रुद्रा इमे स्मृताः' । इति जटाधरः ॥ अन्यच्च—
अजैकपादहिर्बुध्नस्त्वष्टा रुद्रश्च वीर्यवान् । त्वष्टुश्चैवात्मजः पुत्रो विश्वरूपो महातपाः ॥
हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः । वृषाकपिश्च शम्भुश्च कपर्दी रैवतस्तथा ॥
एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः' । इति गारुडे ६ तमेऽध्याये ॥

अग्निपुराणे 'त्वष्टृ'स्थाने 'कृत्तिवासाः' इत्युक्तम् ॥ अन्यच्च—

'अजैकपादहिर्बुध्नो विरूपाक्षोऽथ रैवतः । हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥
सावित्र्यश्च जयन्तश्च पिनाकी चापराजितः । एते रुद्राः समाख्याता एकादश गणेश्वराः
इति मात्स्ये ५ मेऽध्याये' इति शब्दकल्पद्रुमकोषस्य १६७ तमे पृष्ठे ॥

हेमाद्रौ ब्रह्माण्डपुराणे अष्टैव रुद्राः समाख्याताऽस्तेऽत्र यथाक्रमं स्त्रीपुत्रनामसहिता निर्दिश्यन्ते । तथा हि—

रुद्रो भवश्च शर्वश्च ईशः पशुपतिस्तथा । भीम उग्रो महादेव एते रुद्राः प्रकीर्तिताः॥
जटिलाश्चर्मवसनाः सर्वे खट्वाङ्गशूलिनः । तेषां भार्याश्च पुत्रांश्च नामतः कथयामि ते ॥
सौवर्चलाऽङ्गवादा च विकेशी च शिवा तथा ।
स्वाहा दिशा च दीक्षा च रोहिणी च तथा क्रमात् ॥
ताश्च स्त्रीवेषधारिण्यः सर्वाभरणभूषिताः । रुद्रपत्न्य इमाश्चाष्टौ पुत्रांश्च शृणु नारद॥
शनैश्चरश्च शुक्रश्च लोहिताङ्गो मनोजवः । वसन्तः स्वगः सन्तानो बुधश्चैव यथाक्रमम्'॥
इति हेमाद्रेर्दानखण्डे ७४५ तमे पृष्ठे ॥

**षडभिज्ञः** ( १।१।१४ )—अभिधर्मकोषोक्ताः षडभिज्ञा यथा—

१ ऋद्धि-श्रोत्र-मनः-पूर्वनिवास-च्युत्युपपत्तक्षयेत् ज्ञानसाक्षा क्रियाभिज्ञा षड्विधाः । २ दिव्यश्रोत्रज्ञानसाक्षात्क्रियाभिज्ञा । ३ चेतःपर्यायज्ञानसाक्षात्क्रियाभिज्ञा । ४ पूर्वनिवासानुस्मृतिज्ञानसाक्षात्क्रियाभिज्ञा । ५ च्युत्युपपादनज्ञानसाक्षात्क्रियाभिज्ञा । ६ आश्रवक्षयज्ञानसाक्षात्क्रियाभिज्ञा' । इति अभिधर्मकोषः ७।४२ ॥

**दशबलः** ( १।१।१४ )—अभिधर्मकोषे दशबलानि बुद्धस्यान्यान्येवोक्तानि । तानि यथा—

'ध्यानाध्यक्षाविमोक्षेषु ध्यान्तौ च प्रतिपत्सु वा । दश द्वे संवृतिज्ञाने षड्वा दश वा क्षये ॥

१ स्थानास्थानज्ञानबलम् । २ कर्मविपाकज्ञानबलम् । ३—३ ध्यान—विमोक्ष—

समाधि-समापत्तिज्ञानबलानि । ७ सर्वत्रगामिनीप्रतिपज्ज्ञानबलम् । ८—९ पूर्वनिवासबलम्, च्युत्युत्पादनबलञ्च । १० आश्रवक्षयज्ञानबलम्' । इति अभिधर्मकोषः ७।२९ ॥

**अष्टमूर्तिः** ( श्लो० १४—१।१।३४ )—अथाष्टमूर्तेः प्रत्येकमूर्तिनामान्युच्यन्ते । तथा हि—१ 'क्षितिमूर्त्तिः शर्वः, २ जलमूर्त्तिर्भवः, ३ अग्निमूर्त्ती रुद्रः, ४ वायुमूर्त्तिरुग्रः, ५ आकाशमूर्त्तिर्भीमः, ६ यजमानमूर्त्तिः पशुपतिः, ७ चन्द्रमूर्त्तिर्महादेवः, ८ सूर्यमूर्त्तिरीशानश्चेति तन्त्रशास्त्रम् । एताः शरभरूपिशिवस्याष्टपादा इति कालिकापुराणम् ॥ अन्यच्च—

'अथाग्नी रविरिन्दुश्च भूमिरापः प्रभञ्जनः । यजमानः खमष्टौ च महादेवस्य मूर्त्तयः' ॥

इति 'शब्दमाला' इति शब्दकल्पद्रुमस्य १४९ तमे पृष्ठे ॥

**सप्तमातरः** (श्लो० १६—१।१।३५)—भरतेन सप्त मातर उक्तास्तथा हि—

'ब्राह्मी माहेश्वरी चैन्द्री रौद्री वाराहिकी तथा ।
कौबेरी चैव कौमारी **मातरः सप्त** कीर्तिताः' ॥ इति ।

अन्याश्च सप्तमातरो यथा—

'आदौ माता गुरोः पत्नी ब्राह्मणी राजपत्निका ।
गावी धात्री तथा पृथ्वी सप्तैता मातरः स्मृताः' ॥ इति ॥

अन्यत्राष्टमातरोऽप्युक्तास्तथा हि—

'ब्राह्मी माहेश्वरी चैव वाराही वैष्णवी तथा ।
कौमारी चैव चामुण्डा चर्चिकेत्यष्ट मातरः' ॥ इति ॥

श्राद्धतत्त्वे बह्वृचपरिशिष्टे गौर्यादिषोडशमातरोऽप्युक्तास्ता यथा—

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह ।
आदौ विनायकः पूज्यः अन्ते च कुलदेवताः ॥ इति ॥

वैष्णवपूज्यास्त्वन्या एव षोडश मातरः उक्तास्तथा हि—

'यत्र मातृगणाः पूज्यास्तत्र ह्येताः प्रपूजयेत् । सदा भगवती पौर्णमासी पद्मान्तरङ्गिका ॥
गङ्गा कलिन्दतनया गोपी वृन्दावती तथा । गायत्री तुलसी वाणी पृथिवी गौश्च वैष्णवी ॥
श्रीयशोदा देवहूतिदेवकीरोहिणीमुखाः । श्रीसीता द्रौपदी कुन्ती ह्यपरा या महर्षयः ॥
रुक्मिण्याद्यास्तथा चाष्टमहिषी याश्च ता अपि' ।

इति पाद्मे उत्तरखण्डे ७८ तमेऽध्याये' इति शब्दकल्पद्रुमस्य ६९० तमे पृष्ठे ॥

**दुर्गाः** ( १।१।३७ )—दुर्गासप्तशत्यां नव दुर्गा उक्ताः । तथा हि—
प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी । तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥
पञ्चमं स्कन्दमातेति षष्ठं कात्यायनी तथा । सप्तमं कालरात्रीति महागौरीति चाष्टमम् ॥
नवमं सिद्धिदात्री च नव दुर्गाः प्रकीर्तिताः'। इति दुर्गासप्तशतीकवचम् ३—५ ॥

**निधिः** ( श्लो० ३०—१।१।७१ ) मूले नवनिधय उक्ताः । किन्तु हारावल्यां 'खर्वश्च निधयो नव' इत्यस्य स्थाने 'वर्चोऽपि निधयो नव' इति पाठ उपलभ्यते । मार्कण्डेयपुराणे तु 'वर्चं' इति हित्वाऽष्टावेवोक्ता' इति भरतः । तल्लक्षणं फलञ्च मार्कण्डेयपुराणस्य ६८ तमेऽध्याये द्रष्टव्यम् ॥

**सन्ध्या** ( १।४।३ )—मुहूर्तचिन्तामणौ, तद्व्याख्यायां पीयूषधारायां चोक्तं सन्ध्यालक्षणं निर्दिश्यते । तथा हि—

'सन्ध्या त्रिनाडीप्रमितार्कबिम्बादर्धोदितास्तादध ऊर्ध्वमत्र ।
चेद्याम्यसौम्ये अयने क्रमात्स्तः पुण्यौ तदानीं परपूर्वघस्रौ' ॥

इति मुहूर्तचिन्तामणिः ३।७॥ अत्र पीयूषधाराख्यटीकाकारः । 'तदाह वराहः—

अर्धास्तमितानुदितात्सूर्यादस्पष्टभं नभो यावत् ।
तावत्सन्ध्याकालश्चिह्नैरेतैः फलं ब्रूयात्' ॥ इति ॥

सन्ध्ययोर्लक्षणान्तरे । तत्प्रमाणमाह नारदः—
'अर्द्धास्तमनसन्ध्या हि घटिकात्रयसंमिता । तत्रैवार्द्धोदयात्प्रातर्घटिकात्रयसंमिता' ॥इति॥
स्कन्दपुराणेऽपि—

'उदयात्प्राक्तनी सन्ध्या घटिकात्रयमुच्यते ।
सोऽयं सन्ध्या त्रिघटिका ह्यस्तादुपरि भास्वतः' ॥ इति ॥

अत्र सन्ध्यालक्षणेऽर्द्धास्तमितानूदितवाक्यस्य स्कन्दपुराणीयवाक्यस्य च यव-व्रीहिवद्विकल्पः' इति ॥

**कल्पः** ( १।४।२१ )—त्रिंशत्कल्पस्य ब्रह्मणो मासो जायते । तेषाञ्च त्रिंश-त्कल्पानां नामान्यत्र निर्दिश्यन्ते । तथा हि—'अथ कल्पदानं मत्स्यपुराणे—
'कल्पानुकीर्तनं वक्ष्ये सर्वपापप्रणाशनम् । यस्यानुकीर्तनादेव वेदपुण्येन युज्यते ॥
प्रथमः श्वेतकल्पस्तु द्वितीयो नीललोहितः । वामदेवस्तृतीयस्तु ततो रथन्तरोऽपरः ॥
रौरवः पञ्चमः प्रोक्तः षष्ठः प्राण इति स्मृतः । सप्तमोऽथ बृहत्कल्पः कन्दर्पोऽष्टम उच्यते ॥
सद्योऽथ नवमः प्रोक्त ईशानो दशमः स्मृतः । व्यान एकादशः प्रोक्तस्तथा सारस्वतोऽपरः॥
त्रयोदश उदानस्तु गारुडोऽथ चतुर्दशः । कूर्मः पञ्चदशो ज्ञेयः पौर्णमासी प्रजायते ॥

षोडशो नारसिंहस्तु समानस्तु ततः परः। आग्नेयोऽष्टादशः प्रोक्तः सोमकल्पस्तथा परः॥
मानवो विंशतिः प्रोक्तस्तत्पुमानिति चापरः। वैकुण्ठश्चापरस्तद्वल्लक्ष्मीकल्पस्तथा परः॥
चतुर्विंशस्तथा प्रोक्तः सावित्रीकल्पसंज्ञकः। पञ्चविंशतिमो घोरो वाराहस्तु ततोऽपरः॥
सप्तविंशोऽथ वैराजो गौरीकल्पस्तथाऽपरः। माहेश्वरस्तथा प्रोक्तस्त्रिपुरो यत्र घातितः॥
पितृकल्पस्तथा ते तु या कुहूर्ब्रह्मणः स्मृता। इत्ययं ब्रह्मणो मासः सर्वपापप्रणाशनः'॥

इति हेमाद्रौ दानखण्डे ७८२ तमे पृष्ठे॥

**भैरवम्** ( १।७।१९ )—अयं भैरवशब्दः पुंलिङ्गत्वे देवविशेषस्य वाचकः। तस्य चाष्टौ भेदाः सन्ति। ते यथा— १ असिताङ्गः, २ रुरुः, ३ चण्डः, ४ क्रोधः, ५ उन्मत्तः, ६ कुपितः, ७ भीषणः, ८ संहारश्चेति॥

**द्वीपः** ( १।१०।८—अग्निपुराणे सप्त द्वीपा उक्ताः। ते च लवणादिभिः सप्तसमुद्रैरावृता इत्युक्तम्। तथा हि—

'जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो महान्।
कुशः क्रौञ्चस्तथा शाकः पुष्करश्चेति सप्तमः॥

एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः। लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम्'॥

इत्यग्निपुराणम् अध्यायः १०८ श्लो० १—२॥

**नल्वः—गव्यूतिः** ( २।१।१८ )—हेमाद्रौ दानखण्डे 'नल्व-गव्यूति' लक्षणान्युक्तानि। तथा हि—

'जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः। प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते॥
त्रसरेणुस्तु विज्ञेयो ह्यष्टौ ये परमाणवः। त्रसरेणवस्तु ते ह्यष्टौ रथरेणुस्तु स स्मृतः॥
रथरेणवस्तु ते ह्यष्टौ बालाग्रं तत्स्मृतं बुधैः। बालाग्राण्यष्ट लिक्षा तु यूका लिक्षाष्टकं बुधैः॥
अष्टौ यूका यवं प्राहुरङ्गुलं तु यवाष्टकम्। द्वादशाङ्गुलमात्रा वै वितस्तिस्तु प्रकीर्तिता॥
अङ्गुष्ठस्य प्रदेशिन्या न्यासः प्रादेश उच्यते। तालः स्मृतो मध्यमया गोकर्णश्चाप्यनामया॥
कनिष्ठया वितस्तिस्तु द्वादशाङ्गुलिका स्मृता। रत्निरङ्गुलपर्वाणि विज्ञेयस्त्वेकविंशतिः॥
चत्वारि विंशतिश्चैव हस्तः स्यादङ्गुलानि तु।
किष्कुः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदङ्गुलः॥
षण्णवत्यङ्गुलैश्चैव धनुर्दण्डः प्रकीर्तितः। धनुर्दण्डयुगं नालिर्ज्ञेयो ह्येते यवाङ्गुलैः॥
धनुषा त्रिशता नल्वमाहुः संख्याविदो जनाः। धनुः सहस्रे द्वे चापि गव्यूतिरुपदिश्यते॥
अष्टौ धनुःसहस्राणि योजनं तु प्रकीर्तितम्॥

मार्कण्डेयपुराणे—

'परमाणुः परं सूक्ष्मं त्रसरेणुर्महीरजः। बालाग्रं चैव लिक्षा च यूका चाथ यवोऽङ्गुलम्॥

क्रमादष्टगुणान्याहुर्यवा अष्टौ ततोऽङ्गुलम् ।
षडङ्गुलं पदं प्राहुर्वितस्तिर्द्विगुणं स्मृतम् ॥
द्वे वितस्ती ततो हस्तो ब्रह्मतीर्थं द्विचेष्टनैः ।
चतुर्हस्तो धनुर्दण्डो नालिका तद्युगेन तु ॥
क्रोशो धनुस्सहस्रे द्वे गव्यूतिश्च चतुर्गुणा ।
द्विगुणं योजनं तस्मात्प्रोक्तं संख्यानकोविदैः ॥

इति हेमाद्रौ दानखण्डे १३१–१३२ तमे पृष्ठे ॥

**पर्वतः** ( २।३।१ )—अथ प्रसङ्गाद्गरुडपुराणोक्तसप्तकुलपर्वतानां नामान्युल्लिख्यन्ते । तथा हि—

त्रिकोणे संस्थितो मेरुरधः कोणे च मंदरः ।
दक्षकोणे च कैलासो वामकोणे हिमाचलः ॥
निषधश्चोर्ध्वरेखायां दक्षायां गन्धमादनः ।
रमणो वामरेखायां सप्तैते कुलपर्वताः ॥

इति गरुडपुराणे १५ अ० ६०–६१ श्लो० ॥

**यमः** ( २।७।४८ )—अत्रिस्मृतौ तु यमा दश उक्ताः । तथा हि—
'आनृशंस्यं क्षमा सत्यमहिंसादानमार्जवम् ।
प्रीतिः प्रसादो माधुर्यं मार्दवं च **यमा दश**' ॥ इति अत्रिस्मृतिः १।४८ ॥

**नियमाः** ( २।७।४९ ) अत्रिस्मृतौ नियमा दशसंख्यका उक्ताः । तथा हि—
'शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहौ ।
व्रतमौनोपवासं च स्नानं च **नियमा दश**' ॥ इति अत्रिस्मृतिः १।४९ ॥

**दुर्गः** ( २।८।१७ )—दुर्गस्य नवधात्वं शुक्रनीतावुक्तमत्र प्रोच्यते, तथा हि—

'षष्ठं दुर्गप्रकरणं प्रवक्ष्यामि समासतः ।
खातकण्टकपाषाणैर्दुष्पथं दुर्गमैरिणम् ॥
परितस्तु महाखातं पारिखं दुर्गमेव तत् ।
इष्टकोपलमृद्भित्तिप्राकारं पारिघं स्मृतम् ॥
महाकण्टकवृक्षौघैर्व्याप्तं तद्वनदुर्गमम् ।
जलाभावस्तु परितो धन्वदुर्गं प्रकीर्तितम् ॥

जलदुर्गं स्मृतं तज्ज्ञैरासमन्तान्महाजलम् ।
सुवारिपृष्ठोच्चधरं विविक्ते गिरिदुर्गमम् ॥
अभेद्यं व्यूहविद्वीरव्याप्तं तत्सैन्यदुर्गमम् ।
सहायदुर्गं तज्ज्ञेयं शूरानुकूलबान्धवम्' ॥

एतेषु किमपेक्षया कस्य श्रेष्ठत्वमित्यपि तत्रैव—

'पारिखादैरिणं श्रेष्ठं पारिघं तु ततो वनम् ।
ततो धान्वं जलं तस्माद्गिरिदुर्गं ततः स्मृतम् ॥
सहायसैन्यदुर्गे तु सर्वदुर्गप्रसाधके ।
ताभ्यां विनाऽन्यदुर्गाणि निष्फलानि महीभुजाम् ॥

श्रेष्ठं तु सर्वदुर्गेभ्यः सेनादुर्गं स्मृतं बुधैः' ॥ इति शुक्रनीतिः ४।६।१-८ ॥

**राज्याङ्गानि** ( २।८।१८ )—शुक्रनीत्यां सप्त राज्याङ्गान्युक्तानि । तथा हि—

'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ।
सप्ताङ्गमुच्यते राज्यं तत्र मूर्द्धा नृपः स्मृतः ॥
दृगमात्यः सुहृच्छ्रोत्रं मुखं कोशो बलं मनः ।
हस्तौ पादौ दुर्गराष्ट्रौ राज्याङ्गानि स्मृतानि हि' ॥

इति शुक्रनीतिः १।६१-६२ ॥

**गतयोऽमूः पञ्च** ( २।८।४९ )—शुक्रनीत्यामश्वस्यैकादश गतय उक्तास्तथा हि—

'चक्रितं रेचितं वल्गितकं धोरितमाप्लुतम् ।
तुरं मन्दं च कुटिलं सर्पणं परिवर्तनम् ॥

एकेदशास्कन्दितञ्च' । इति शुक्रनीतिः २।१३४-१३५ ॥

**लोकः** ( ३।३।२ )—'भुवनार्थक लोक' शब्दस्य गरुडपुराणे सप्त भेदा उक्तास्तथा हि—

'……सप्त लोकाः प्रकीर्तिताः ॥
भूर्लोकं नाभिमध्ये तु भुवर्लोकं तदूर्ध्वके । स्वर्लोकं हृदये विद्यात्कण्ठदेशे महस्तथा ॥
जनलोकं वक्त्रदेशे तपोलोकं ललाटके । सत्यलोकं ब्रह्मरन्ध्रे—'

इति गरुडपुराणे ११५ । ५७—५९ ॥

'भूर्भुवः स्वर्भेदेन त्रय एव लोकाः' इत्यपि परे ।

**प्रमाणम्** ( ३।३।५४ )—मतभेदेन 'प्रमाण'स्य संख्यात्वेऽनेकमतम् । तथा हि—

'प्रत्यक्षमेके चार्वाकाः, [1]कणाद[2]सुगतौ पुनः ।
प्रत्यक्षमनुमानञ्च, साङ्ख्याः शब्दं च [3]ते अपि ॥
[4]न्यायैकदेशिनोऽप्येवमुपमानं च [5]केचन ।
अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः ॥
अभावषष्ठान्येतानि [6]भाट्टा वेदान्तिनस्तथा ।
सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः' ॥ इति ॥

**तलम्** ( ३।३।२०२ )—अधोऽर्थक 'तल' शब्दस्य गरुडपुराणे सप्त भेदा उक्तास्ते यथा—

'पादाधस्तात्तलं ज्ञेयं पादोर्ध्वं वितलं तथा ।
जानुनोः सुतलं विद्धि सक्थिदेशे महातलम् ॥
तलातलं सक्थिमूले गुह्यदेशे रसातलम् ।
पातालं कटिसंस्थं च—' इति गरुडपुराणे १५।५६—५७ ॥

अग्निपुराणे सप्त तलान्युक्तानि । तथा हि—

अतलं वितलं चैव नितलं च गभस्तिमत् । महाख्यं सुतलं चैव पातालं चापि सप्तमम् ॥

प्रसङ्गतस्तत्रत्यभूमिवर्णान्यप्युच्यन्ते—

कृष्णपीतारुणाः शुक्लशर्कराः शैलकाञ्चनाः । भूमयस्तेषु रम्येषु—

इति अग्निपुराणम् १२०।२–३ ॥

**कला (३।३।१९८)—चतुष्षष्टिः कलाः शैवतन्त्रोक्ता** यथा–'गीतम् १, वाद्यम् २, नृत्यम् ३, नाट्यम् ४, आलेख्यम् ५, विशेषकच्छेद्यम् ६, तण्डुलकुसुमबलिप्रकाराः ७, पुष्पास्तरणम् ८, दशनवसनाङ्गरागाः ९, मणिभूमिकाकर्म १०, शयनरचनम् ११, उदकवाद्यमुदकघातः १२, चित्रयोगाः १३, माल्यग्रन्थविकल्पाः १४, शेखरापीडयोजनम् १५, नेपथ्ययोगाः १६, कर्णपत्त्रभङ्गाः १७, सुगन्धियुक्तिः १८,

---

१. वैशेषिकः । २. बुद्धः । ३. प्रत्यक्षानुमाने ।
४. न्यायसारस्य भूषणाख्यटीकाकारः । ५. अन्ये नैयायिकाः ।
६. कुमारिलभट्टानुयायिनः ।

भूषणयोजनम् १९, ऐन्द्रजालम् २०, कौचुमारयोगाः २१, हस्तलाघवम् २२, चित्रशाकापूपभक्ष्यविकारक्रियाः २३, पानकरसरागासवयोजनम् २४, सूचीवायकर्म २५, सूत्रक्रीडा २६, वीणाडमरुकवाद्यानि २७, प्रहेलिका २८, प्रतिमाला २९, दुर्वचकयोगाः ३०, पुस्तकवाचनम् ३१, नाटकाख्यायिकादर्शनम् ३२, काव्यसमस्यापूरणम् ३३, पट्टिकावेत्रबाणविकल्पाः ३४, तर्ककर्माणि ३५, तक्षणम् ३६, वास्तुविद्या ३७, रूप्यरत्नपरीक्षा ३८, धातुवादः ३९, मणिरागज्ञानम् ४०, आकरज्ञानम् ४१, वृक्षायुर्वेदयोगाः ४२, मेषकुक्कुटलावकयोगविधिः ४३, शुकशारिकाप्रलापनम् ४४, उत्सादनम् ४५, केशमार्जनकौशलम् ४६, अक्षरमुष्टिकाकथनम् ४७, म्लेच्छितकविकल्पाः ४८, देशभाषाज्ञानम् ४९, पुष्पशकटिकानिमित्तिज्ञानम् ५०, यन्त्रमातृकाधारणमातृका ५१, संवाच्यम् ५२, मानसकाव्यक्रिया ५३, अभिधानकोशः ५४, छन्दोज्ञानम् ५५, क्रियाविकल्पाः ५६, छलितकयोगाः ५७, वस्त्रगोपनानि ५८, द्यूतविशेषः ५९, आकर्षक्रीडा ६०, बालक्रीडनकानि ६१, वैनायिकीनाम् ६२, वैजयिकीनाम् ६३, वैतालिकानाञ्च विद्यानां ज्ञानम् ६४, इति ( श्रीमद्भागवते दशमस्कन्धे पूर्वार्द्धे अध्यायः ४५ श्लो० ३६ तमस्य 'श्रीधरी' व्याख्या ॥

**शुक्रनीतौ** तु एतद्भिन्ना एव कला उक्ताः। तथाहि—**शुक्रनीत्युक्ताश्चतुःषष्टिः कला यथा—**

कलानां तु पृथङ्नाम लक्ष्म चास्तीह केवलम् ।
पृथक् पृथक् क्रियाभिर्हि कलाभेदस्तु जायते ।
यां यां कलां समाश्रित्य तन्नाम्ना जातिरुच्यते ॥
हावभावादिसंयुक्तं नर्तनं तु कला स्मृता ।
अनेकवाद्यकरणे ज्ञानं तद्वादने कला ॥
वस्त्रालङ्कारसन्धानं स्त्रीपुंसोश्च कला स्मृता ।
अनेकरूपाविर्भावकृतिज्ञानं कला स्मृता ॥
शय्यास्तरणसंयोगपुष्पादिग्रन्थनं कला ।
द्यूताद्यनेकक्रीडाभी रञ्जनन्तु कला स्मृता ॥
अनेकासनसन्धानै रतेर्ज्ञानं कला स्मृता ।
कलासप्तकमेतद्धि गान्धर्वे समुदाहृतम् ॥
मकरन्दासवादीनां मद्यादीनां कृतिः कला ।

शल्यगूढाहृतौ ज्ञानं शिराव्रणव्यधे कला ॥
हिङ्ग्वादिरससंयोगादन्नादिपचनं कला ।
वृक्षादिप्रसवारोपपालनादिकृतिः कला ॥
पाषाणधात्वादिदृतिस्तद्भस्मीकरणं कला ।
यावदिक्षुविकाराणां कृतिज्ञानं कला स्मृता ॥
धात्वोषधीनां संयोगक्रियाज्ञानं कला स्मृता ।
धातुसाङ्कर्यपार्थक्यकरणन्तु कला स्मृता ॥
संयोगपूर्वविज्ञानं धात्वादीनां कला स्मृता ।
क्षारनिष्कासनज्ञानं कलासंज्ञं तु तत्स्मृतम् ॥
कलादशकमेतद्धि ह्यायुर्वेदागमेषु च ।
शस्त्रसन्धानविक्षेपः पादादिन्यासतः कला ॥
सन्ध्याघाताकृष्टिभेदैर्मल्लयुद्धं कला स्मृता ।
बाहुयुद्धं तु मल्लानामशस्त्रं मुष्टिभिः स्मृतम् ॥
मृतस्य तस्य न स्वर्गो यशो नेहापि विद्यते ।
बलदर्पं विना शान्तं नियुद्धं यशसे रिपोः ॥
न कस्यासिद्धिं कुर्याद्धि प्राणान्तं बाहुयुद्धकम् ।
कृतप्रकृतकैश्चित्रैर्बाहुभिश्च सुसङ्कटैः ॥
सन्निपातावघातैश्च प्रमादोन्मथनैस्तथा ।
कृतं निपीडनं ज्ञेयं तन्मुक्तिस्तु प्रतिक्रिया ॥
कलाभिलक्षिते देशे यन्त्राद्यस्त्रनिपातनम् ।
वाद्यसंकेततो व्यूहरचनादि कला स्मृता ॥
गजाश्वरथगत्या तु युद्धसंयोजनं कला ।
कलापञ्चकमेतद्धि धनुर्वेदागमे स्थितम् ॥
विविधासनमुद्राभिर्देवतातोषणं कला ।
सारथ्यं च गजाश्वादेर्गतिशिक्षा कला स्मृता ॥
मृत्तिकाकाष्ठपाषाणधातुभाण्डादिसत्क्रिया ।
पृथक्कलाचतुष्कं तु चित्राद्यालेखनं कला ॥
तडागवापीप्रासादसमभूमिक्रिया कला ।

घव्याद्यनेकयन्त्राणां वाद्यानां तु कृतिः कला ॥
हीनमध्यादिसंयोगवर्णाद्यै रञ्जनं कला ।
जलवाय्वग्निसंयोगनिरोधैश्च क्रिया कला ॥
नौकारथादियानानां कृतिज्ञानं कला स्मृता ।
सूत्रादिरज्जुकरणविज्ञानन्तु कला स्मृता ॥
अनेकतन्तुसंयोगैः पटबन्धः कला स्मृता ।
वेधादिसदसज्ज्ञानं रत्नानां च कला स्मृता ॥

स्वर्णादीनां तु याथात्म्यविज्ञानञ्च कला स्मृता ।
कृत्रिमस्वर्णरत्नादिक्रियाज्ञानं कला स्मृता ॥
स्वर्णाद्यलङ्कारकृतिः कला लेपादिसत्कृतिः ।
मार्दवादिक्रियाज्ञानं चर्मणां तु कला स्मृता ॥
पशुचर्माङ्गनिर्हारक्रियाज्ञानं कला स्मृता ।
दुग्धदोहादिविज्ञानं घृतान्तं तु कला स्मृता ॥
सीवने कञ्चुकादीनां विज्ञानन्तु कलात्मकम् ।
बाह्वादिभिश्च तरणं कलासंज्ञं जले स्मृतम् ॥

मार्जने गृहभाण्डादेर्विज्ञानं तु कला स्मृता ।
वस्त्रसंमार्ज्जनं चैव क्षुरकर्मकले शुभे ॥
तिलमांसादिस्नेहानां कला निष्कासने कृतिः ।
सीराद्याकर्षणे ज्ञानं वृक्षाद्यारोहणे कला ॥
मनोनुकूलसेवायाः कृतिज्ञानं कला स्मृता ।
वेणुतृणादिपात्राणां कृतिज्ञानं कला स्मृता ॥
काचपात्रादिकरणविज्ञानं तु कला स्मृता ।
संसेचनं संहरणं जलानां तु कला स्मृता ॥
लोहाभिसारशस्त्रास्त्रकृतिज्ञानं कला स्मृता ।
गजाश्ववृषभोष्ट्राणां पल्याणादिक्रिया कला ॥
शिशोः संरक्षणे ज्ञानं धारणे क्रीडने कला ।
सुयुक्तताडनज्ञानमपराधिजने कला ॥
नानादेशीयवर्णानां सुसम्यग्लेखने कला ।

ताम्बूलरक्षादिकृतिर्विज्ञानं तु कला स्मृता ॥
आदानमाशुकारित्वं प्रतिदानं चिरक्रिया ।
कलासु द्वौ गुणौ ज्ञेयौ द्वे कले परिकीर्तिते ॥
चतुष्षष्टिः कला ह्येताः संक्षेपेण निदर्शिताः' ।

इति शुक्रनीतिः अध्यायः ४ प्रकरणम् ३ श्लोकाः ॥ ६५-९९ ॥

आचार्यास्तु कन्यकानां—( कामसूत्र १।१।१५ ) इति कामसूत्रीय 'जयमङ्गला' व्याख्योक्ताश्चतुष्षष्टिः कलास्तु भिन्ना एव । तत्रैवं जयमङ्गला—'शास्त्रान्तरे चतुष्षष्टिर्मूलकला उक्ताः, तत्र **कर्माश्रयाश्चतुर्विंशतिः** । तद्यथा—गीतम् १, नृत्यम् २, वाद्यम् ३, कौशललिपिज्ञानम् ४, वचनं चोदाहरणम् ५, चित्रविधिः ६, पुस्तकम् ७, पत्रच्छेद्यम् ८, माल्यविधिः ९, गन्धयुक्त्यास्वाद्यविधानम् १०, रत्नपरीक्षा ११, सीवनम् १२, रङ्गपरिज्ञानम् १३, उपकरणक्रिया १४, मानविधिः १५, आजीवज्ञानम् १६, तिर्यग्योनिचिकित्सितम् १७, मायाकृतपाषण्डसमयज्ञानम् १८, क्रीडाकौशलम् १९, लोकज्ञानम् २०, वैचक्षण्यम् २१, संवाहनम् २२, शरीरसंस्कारः २३, विशेषकौशलम् २४, चेति । **द्यूताश्रया विंशतिः**—तत्र **निर्जीवाः पञ्चदश**, तद्यथा—आयुःप्राप्तिः २५, अक्षविधानम् २६, रूपसंख्या २७, क्रियामार्गणम् २८, बीजग्रहणम् २९, नयज्ञानम् ३० करणज्ञानम् ३१ चित्राचित्रविधिः ३२ गूढराशिः ३३, तुल्याभिहारः ३४, क्षिप्रग्रहणम् ३५, अनुप्राप्तिलेख्यस्मृतिः ३६, अग्निक्रमः ३७, छलव्यामोहनम् ३८, ग्रहादानम् ३९, चेति । **सजीवाः पञ्च**, तद्यथा—उपस्थानविधिः ४०, युद्धम् ४१, रुतम् ४२, गतम् ४३, नृत्तम् ४४ चेति । **शयनोपचारिकाः षोडश**, तद्यथा—पुरुषस्यभावग्रहणम् ४५, स्वरागप्रकाशनम् ४६, प्रत्यङ्गदानम् ४७, नखदन्तयोर्विचारो ४८, नीवीस्रंसनम् ४९, गुह्यस्य संस्पर्शनानुलोम्यम् ५०, परमार्थकौशलम् ५१, हर्षणम् ५२, समानार्थताकृतार्थता ५३, अनुप्रोत्साहनम् ५४, मृदुक्रोधप्रवर्तनम् ५५, सम्यक्क्रोधनिवर्तनम् ५६ क्रुद्धप्रसादनम् ५७, सुप्तपरित्यागः ५८, चरमस्वापविधिः ५९, गुह्यगूहनम् ६०, इति । **चतस्र उत्तरकलाः**, तद्यथा—साश्रुपातं रमणाय शापदानम् ६१, शपथक्रिया ६२, प्रस्थितानुगमनम् ६३, पुनःपुनर्निरीक्षणम् ६४, चेति चतुःषष्टिर्मूलकलाः । आस्वेव निविष्टानामवान्तरकलानाम**ष्टादशाधिकानि पञ्चशतान्युक्तानि** । तत्र कर्मद्यूताश्रयाः प्रायश आबालं गच्छन्ति, ता एवान्यथा

विभज्य चतुष्टिरत्रोक्ताः, यास्तु शयनोपचारिका उत्तरकलाश्च, ताः प्रायशस्तन्त्रस्याङ्गतां प्रतिपद्यन्त इति पाञ्चालिक्यामेव चतुःषष्ट्यामवान्तरकला वेदितव्याः, ताश्च यथाप्रस्तावं वक्ष्यन्ते' इति ॥

तन्त्रावापौपयिकीं चतुष्षष्टिमाह—'गीतम् १, वाद्यम् २, नृत्यम् ३, आलेख्यम् ४, विशेषकच्छेद्यम् ५, तण्डुलकुसुमबलिविकाराः ६, पुष्पास्तरणम् ७ दशनवसनाङ्गरागः ८, मणिभूमिकाकर्म, ९, शयनरचनम् १०, उदकवाद्यम् ११, उदकाघातः १२, चित्राश्च योगाः १३, माल्यग्रन्थनविकल्पाः १४, शेखरकापीडयोजनम् १५, नेपथ्यप्रयोगाः १६, कर्णपत्रभङ्गाः १७, गन्धयुक्तिः १८, भूषणयोजनम् १९, ऐन्द्रजालाः २०, कौचुमाराश्च योगाः २१, हस्तलाघवम् २२, विचित्रशाकयूषभक्ष्यविकारक्रिया २३, पानकरसरागासवयोजनम् २४, सूचीवायकर्माणि २५, सूत्रक्रीडा २६, वीणाडमरुकवाद्यानि २७, प्रहेलिका २८, प्रतिमाला २९, दुर्वाचकयोगाः ३०, पुस्तकवाचनम् ३१, नाटकाख्यायिकादर्शनम् ३२, काव्यसमस्यापूरणम् ३३, पट्टिकावेत्रवानविकल्पाः ३४, तक्षकर्माणि ३५, तक्षणम् ३६, वास्तुविद्या ३७, रूप्यरत्नपरीक्षा ३८, धातुवादः ३९, मणिरागाकरज्ञानम् ४०, वृक्षायुर्वेदयोगाः ४१, मेषकुक्कुटलावकयुद्धविधिः ४२, शुकसारिकाप्रलापनम् ४३, उत्सादने संवाहने केशमर्दने च कौशलम् ४४, अक्षरमुष्टिकाकथनम् ४५, म्लेच्छितविकल्पाः ४६, देशभाषाज्ञानम् ४७, पुष्पशकटिका ४८, निमित्तज्ञानम् ४९, यन्त्रमातृका ५०, धारणमातृका ५१, संपाठ्यम् , ५२, मानसी काव्यक्रिया, ५३, अभिधानकोषः ५४, छन्दोज्ञानम् ५५, क्रियाकल्पः ५६, छलितकयोगाः ५७, वस्त्रगोपनानि ५८, द्यूतविशेषः ५९, आकर्षक्रीडा ६०, बालक्रीडनकानि ६१, वैनायिकीनां ६२, वैजयिकीनां ६३, व्यायामिकीनां च विद्यानां ज्ञानम् ६४, इति चतुःषष्टिरङ्गविद्याः कामसूत्रावयविन्यः इति कामसूत्रम् १।३।१६ ) ॥

इति परिशिष्टम् ।

# मूलस्थशब्दानामकारादिक्रमेण

# शब्दानुक्रमणिका


| शब्दाः | काण्डाङ्कः | वर्गाङ्कः | श्लोकाङ्कः |
|---|---|---|---|
| **अ** | | | |
| अ | ३ | ४ | ११ |
| अंश | २ | ९ | ८९ |
| अंशु | १ | ३ | ३३ |
| अंशुक | २ | ६ | ११५ |
| अंशुमती | २ | ४ | ११५ |
| अंशुमत्फला | २ | ४ | ११३ |
| अंस | २ | ६ | ७८ |
| अंसल | २ | ६ | ४४ |
| अंहति | २ | ७ | ३० |
| अंहस् | २ | ४ | २३ |
| अकरणि | ३ | २ | ३९ |
| अकूपार | १ | १० | १ |
| अकृष्णकर्मम् | ३ | १ | ४६ |
| अक्ष | २ | ४ | ५८ |
| ,, | २ | ९ | ४३ |
| ,, | २ | ९ | ८६ |
| ,, | २ | १० | ४५ |
| ,, | ३ | ३ | २२२ |
| अक्षत | २ | ९ | ४७ |
| अक्षदर्शक | २ | ८ | ५ |
| अक्षदेविन् | २ | १० | ४३ |
| अक्षधूर्त | २ | १० | ४३ |
| अक्षर | ३ | ३ | १८२ |
| अक्षरचुञ्चु | २ | ८ | १५ |
| अक्षरचण | २ | ८ | १५ |
| अक्षवती | २ | १० | ४४ |
| अक्षान्ति | १ | ७ | २४ |
| अक्षि | २ | ६ | ९३ |
| ,, | ३ | ५ | २२ |
| अक्षिकूटक | २ | ८ | ३८ |
| अक्षिगत | ३ | १ | ४५ |
| अक्षीव | २ | ४ | ३१ |
| ,, | २ | ९ | ४१ |
| अक्षोट | २ | ४ | २९ |
| अक्षौहिणी | २ | ८ | ८१ |
| अखण्ड | ३ | १ | ६५ |
| अखात | १ | १० | २७ |
| अखिल | ३ | १ | ६५ |
| अग | ३ | ३ | १९ |
| अगद | २ | ६ | ५० |
| अगदङ्कार | २ | ६ | ५७ |
| अगम | २ | ४ | ५ |
| अगस्त्य | १ | ३ | २० |
| अगाध | १ | १० | १५ |
| अगार | २ | २ | ५ |
| अगुरु | २ | ६ | १२६ |
| ,, | २ | ६ | १२७ |
| अग्नायी | २ | ७ | २१ |
| अग्नि | १ | १ | ५३ |
| अग्निकण | १ | १ | ५७ |
| अग्निचित् | २ | ७ | १२ |
| अग्निज्वाला | २ | ४ | १२४ |
| अग्निभू | १ | १ | ३९ |
| अग्निमन्थ | २ | ४ | ६६ |
| अग्निमुखी | २ | ४ | ४२ |
| अग्निशिखा | २ | ४ | ११८ |
| ,, | २ | ४ | १३६ |
| ,, | २ | ६ | १२४ |
| अग्न्युत्पात | १ | ४ | १० |
| अग्र | ३ | १ | ५८ |
| ,, | ३ | ३ | १८४ |
| अग्रज | २ | ६ | ४३ |

॥ श्रीः ॥

## नामलिङ्गानुशासनं नाम

# अमरकोशः ।

## प्रथमं काण्डम् ।

शिष्यशिक्षार्थमादौ मङ्गलाचरणमाह—

१ यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः ।
सेव्यतामक्षयो धीराः स श्रिये चामृताय च ॥ १ ॥

अभिधेयं कथयति—

२ समाहृत्यान्यतन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः ।

---

कर्पूरपूरोज्वलकायकान्तिं गौरीपतिं चिन्तयता मयेयम् ।
जोशीत्युपाह्वेन सदाशिवेन टीका प्रभाख्या रचिता श्रमेण ॥ १ ॥

( १ ) यस्येति । भो धीराः—पण्डिताः, अगाधस्य—अतिगम्भीरस्य, ज्ञानदयासिन्धोः—ज्ञानकरुणयोः, समुद्रस्य—सागरस्य, यस्य—प्रभोः, अनघाः—निर्मलाः, गुणाः—क्षान्त्यादयः, सन्ति । सोऽक्षयः परमात्मा श्रिये—सम्पत्तये; अमृताय—मोक्षार्थञ्च भवद्भिः, सेव्यताम्—आराध्यताम् ॥ १ ॥ ( २ ) समाहृत्येति । अन्यतन्त्राणि—अन्येषां तन्त्राणि शास्त्रान्तराणि 'नामलिङ्गानुशासनानि' समाहृत्य एकत्र कृत्वा

संपूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम् ॥ २ ॥

लिङ्गज्ञानयुक्तिं परिभाषते—

१ प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित् ।
स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित् ॥ ३ ॥
२ भेदाख्यानाय न द्वन्द्वो नैकशेषो न संकरः ।
कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते ॥ ४ ॥

---

संक्षिप्तैः—अल्पविस्तरबह्वर्थैः, प्रतिसंस्कृतैः प्रतिपदं प्रकृतिप्रत्ययविवेकेन कृतसंस्कारैः, वर्गैः—सजातीयसमूहैः सम्पूर्णं—साङ्गोपाङ्गम् , नामलिङ्गानुशासनम्—नाम्नां स्वरित्यादीनाम् , लिङ्गानाञ्च—स्त्रीपुंनपुंसकाख्यानाम्—अनुशासनम् , व्युत्पादकशास्त्रम्—उच्यते मयेति शेषः ॥ २ ॥ ( १ ) प्रायश इति । अत्र प्रायशः—बाहुल्येन, रूपभेदेन=आकारविशेषेण स्त्रीपुंनपुंसकं ज्ञेयम्—यथा—लक्ष्मीः पद्मालया पद्मा' । पिनाकोऽजगवं धनुः' इत्यादि । कुत्रचित् साहचर्याच्छब्दान्तरसान्निध्याल्लिङ्गं ज्ञेयम् । यथा—'ब्रह्मात्मभूः सुरज्येष्ठः' । 'अश्वयुगश्विनी' । 'वियद्विष्णुपदम्' अत्र संदिग्धं ब्रह्मपदम्—आत्मभूः साहचर्यात्पुंल्लिङ्गम् । एवम्—अश्वयुग्-अश्विनीसाहचर्यात्स्त्रीलिङ्गकम् । वियत्पदम् । विष्णुपदसाहचर्यात्क्लीबम् । क्वचित् तद्विशेषविधेः—लिङ्गविशेषोक्तेः । यथा—'भेरी'स्त्री दुन्दुभिः पुमान्' 'क्लीबे त्रिविष्टपम्' इत्यादि । ( २ ) भेदाख्यानेति । अत्र—अस्मिन्ग्रन्थे—अनुक्तानाम्—अव्युत्पादितानाम् , भिन्नलिङ्गानाम्—असमानलिङ्गानां नाम्नाम् , भेदाख्यानाय—लिङ्गभेदं समाख्यातुं द्वन्द्वः, एकशेषश्च न कृतः । एवम्—सङ्करः—भिन्नलिङ्गानां मिश्रीभावो न कृतः ।

त्रिलिङ्ग्यां १ त्रिष्विति पदं २ मिथुने तु द्वयोरिति ।
निषिद्ध ३ लिङ्गं शेषार्थं ४ त्वन्ताथादि न पूर्वभाक् ॥५॥

---

## अथ स्वर्गवर्गः ॥ १ ॥

५ स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः ।
सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ॥ ६ ॥
६ अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः ।
सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ॥ ७ ॥

---

(१) त्रिलिङ्ग्याम्-लिङ्गत्रयसमाहारे 'त्रिषु' इति पदमुक्तम् यथा–'त्रिषु स्फुलिङ्गोऽग्निकणः' इति । ( २ ) मिथुने-स्त्रीपुंसयोः द्वयोरिति च पदमुक्तम् । यथा–'वह्नेर्द्वयोर्ज्वालकीलौ' इति । ( ३ ) यत्र लिङ्गं निषिद्धं तत्र तदवशिष्टं लिङ्गम्बोध्यम् । यथा–'व्योमयानं विमानोऽस्त्री' इत्यत्र स्त्रीलिङ्गे निषिद्धे विमानस्य पुन्नपुंसकविधिः । ( ४ ) तुशब्दः अन्तो यस्य तत्त्वन्तम् । अथशब्दः आदिर्यस्य तदथादि । इदं द्वयं पूर्वभाक् न भवति, पूर्वेण न सम्बध्यते । यथा—'शचीन्द्राणी नगरी त्वमरावती' इत्यत्र नगरीति त्वन्तं पदमिन्द्राण्या न सम्बध्यते, किन्त्वमरावत्या सम्बध्यते । एवम्—'नित्यानवरताजस्रमप्यथातिशयो भरः' इत्यथादिपदं न पूर्वभाक्, किन्तु भरस्य पर्यायः । ( ५ ) स्वरादित्रिविष्टपान्तम् नव नामानि स्वर्गस्य । तत्र स्वरित्यव्ययम् । द्योदिवौ द्वे स्त्रीलिङ्गे । त्रिविष्टपम्-क्लीबे एव । ( ६ ) अमरादिदेवतान्तम् । षड्विंशतिर्नामानि देवानाम् ।

आदितेया दिविषदो लेखा अदितिनन्दनाः ।
आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः ॥ ८ ॥
बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः ।
वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम् ॥ ९ ॥
१ आदित्यविश्ववसवस्तुषिताऽऽभास्वरानिलाः ।
महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ॥ १० ॥
२ विद्याधराप्सरोयक्षरक्षोगन्धर्वकिन्नराः ।
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥ ११ ॥
३ असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः ।
शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः ॥ १२ ॥
४ सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः ।

---

(१) आदित्याः द्वादश। विश्वेदेवाः दश। वसवोऽष्टौ। तुषिताः षट्त्रिंशत्। आभास्वराः चतुःषष्टिः। अनिला एकोनपञ्चाशत्। महाराजिकाः विंशत्यधिकशतद्वयम्। साध्या द्वादश। रुद्रा एकादश। एता गणदेवताः। (२) विद्याधराः—जीमूतवाहनादयः। अप्सरसो—देवाङ्गनाः। यक्षाः=कुबेरादयः। रक्षांसि—मायाविनो लङ्कावासिनः। गन्धर्वाः—तुम्बुरुप्रभृतयो देवगायनाः। पिशाचाः—भूतविशेषाः। गुह्यकाः—मणिभद्रादयः। सिद्धाः—विश्वावसुप्रभृतयः। भूताः—बालग्रहादयः। एते देवयोनिसंज्ञकाः। (३) असुरा इति दश नामानि असुराणाम्। (४) सर्वज्ञ इत्यादयो मुनिरित्यन्तोऽष्टादश

समन्तभद्रो भगवान्मारजिल्लोकजिज्जिनः ॥ १३ ॥
षडभिज्ञो दशबलोऽद्वयवादी विनायकः ।
मुनीन्द्रः श्रीघनः शास्ता मुनिः १ शाक्यमुनिस्तु यः ॥ १४ ॥
स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः ।
गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः ॥ १५ ॥
२ ब्रह्माऽऽत्मभूः सुरज्येष्ठः परमेष्ठी पितामहः ।
हिरण्यगर्भो लोकेशः स्वयम्भूश्चतुराननः ॥ १६ ॥
धाताब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः ।
स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः ॥ १७ ॥
*३ नाभिजन्माण्डजः पूर्वो निधनः कमलोद्भवः ।
सदानन्दो रजोमूर्तिः सत्यको हंसवाहनः ॥*
४ विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः ।

---

बुद्धस्य। (बुद्ध भगवान् के १८)। (१) शाक्यमुनिरित्यतः मायादेवीसुत इति यावत् सप्तनामानि बुद्धावान्तरभेदस्य शाक्यमुनेः। (बुद्ध के अवान्तर भेद शाक्य मुनि के ७ नाम)। (२) ब्रह्मणो विंशतिर्नामानि विधिरिति यावत्। (ब्रह्मा के २०)। (३) नाभिजन्मन् इत्यादीनि ब्रह्मणो नव नामानि। प्रक्षिप्तोऽयं श्लोकः। (४) विष्णोरित्यादीनि ऊनचत्वारिंशत् विष्णोर्नामानि (पुंसि) अत्र विष्टरश्रवस् सान्तः। शार्ङ्गिन्, वनमालिन्, बलिध्वंसिन्, नान्ताः। विश्वजित्, तान्तः, (विष्णुभगवान् के ३९ नाम हैं)।

दामोदरो हृषीकेशः केशवो माधवः स्वभूः ॥ १८ ॥
दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः ।
पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः ॥१९॥
उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः ।
पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः ॥ २० ॥
देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः ।
वनमाली बलिध्वंसी कंसारातिरधोक्षजः ॥ २१ ॥
विश्वम्भरः कैटभजिद्विधुः श्रीवत्सलाञ्छनः ।
❀१ पुराणपुरुषो यज्ञपुरुषो नरकान्तकः ।
❀जलशायी विश्वरूपो मुकुन्दो मुरमर्दनः ॥
२ वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः ॥ २२ ॥
३ बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः ।
रेवतीरमणो रामः कामपालो हलायुधः ॥ २३ ॥
नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली ।

---

( १ ) पुराणपुरुष इत्यादीन्यपि सप्त नामानि विष्णोः । **(७ नाम विष्णु भगवान् के)** प्रक्षिप्तोऽयं श्लोकः । ( २ ) वसुदेवः, आनकदुन्दुभिः इति द्वे नामनी कृष्णपितुः (पुंसि) । **(२ नाम-श्रीकृष्णजी के पिता के हैं)** । ( ३ ) बलभद्र इत्यादीनि बल इति यावत् सप्तदश नामानि बलभद्रस्य सन्ति ( पुंसि ) तत्र हलिन् मुसलिन् द्वे नान्ते । **( १७ नाम श्रीकृष्णजी के बड़े भाई बलभद्र जी के हैं )** ।

सङ्कर्षणः सीरपाणिः कालिन्दीभेदनो बलः ॥ २४ ॥
१मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः ।
कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः ॥ २५ ॥
शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः ।
पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः ॥ २६ ॥
*२अरविन्दमशोकं च चूतं च नवमल्लिका ।
*नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥
*३उन्मादनस्तापनश्च शोषणः स्तम्भनस्तथा ।
*संमोहनश्च कामस्य पञ्च बाणाः प्रकीर्तिताः ॥
४ब्रह्मसूर्विश्वकेतुः स्यादनिरुद्ध उषापतिः ।
५लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया ॥२७॥

---

(१) कामदेवस्य एकोनविंशतिर्नामानि पुंसि । **(कामदेव-प्रद्युम्न श्रीकृष्ण पुत्र के १९ नाम हैं)**। (२) अरविन्दम्, अशोकम्, चूतम्, नवमल्लिका (स्त्री), नीलोत्पलम्, पञ्च कामदेवस्य बाणनामानि । **(५ कामदेव के बाण हैं)**। प्रक्षिप्तोऽयं श्लोकः। (३) उन्मादन, तापन, शोषण, स्तम्भन सम्मोहन, पञ्च कामदेवस्य बाणधर्माः सन्ति । प्रक्षिप्तोऽयं श्लोकः । **(५ कामदेव के बाणों के धर्म हैं)** । (४) ब्रह्मसूरित्यादीनि चत्वारि नामानि कामदेवपुत्रस्य (पुंसि) विश्वकेतुः अत्र पाठान्तरम्—(ऋश्यकेतुः, ऋष्यकेतुः, झषकेतुः) इति । **(कामदेव पुत्र के ४ नाम हैं)**। (५) लक्ष्मीत्यादीनि एकादशनामानि लक्ष्म्याः (स्त्रियाम्) **(लक्ष्मी**

इन्दिरा लोकमाता मा क्षीरोदतनया रमा ।
*१भार्गवी लोकजननी क्षीरसागरकन्यका ॥
२शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं३ सुदर्शनम् ।
४कौमोदकी गदा खड्गो नन्दकः कौस्तुभो मणिः ॥२८॥
*५चापः शार्ङ्गं मुरारेस्तु श्रीवत्सो लाञ्छनं स्मृतम् ।
*अश्वाश्च६ शैब्यसुग्रीवमेघपुष्पबलाहकाः ।
*सारथिर्दारुको मन्त्री ह्युद्धवश्चानुजो गदः ॥
७गरुत्मान्गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः ।

---

**के ११ नाम हैं )** ( १ ) भार्गवीत्यादीनि त्रीणि लक्ष्म्याः ( स्त्री० ) **( लक्ष्मी के ३ नाम हैं )** अयं श्लोकः क्षेपकोऽस्ति । ( २ ) लक्ष्मीपतेः—विष्णोः शंखः-पाञ्चजन्यः ( पुंसि ) । **( विष्णु के शंख का नाम पाञ्चजन्य है )** ( ३ ) विष्णोश्चक्रस्यैकं नाम—सुदर्शनम् ( पुं० न० ) **( विष्णु के चक्र का नाम सुदर्शन है )** । ( ४ ) विष्णोः गदायाः—कौमोदकी ( स्त्री० ) विष्णोः खड्गस्य नन्दकः नाम ( पुं० ) विष्णोः मणेर्नाम कौस्तुभः ( पुं० ) **( विष्णु के गदा का नाम—कौमोदकी, तलवारका नन्दक, और मणिका कौस्तुभ नाम है )** । ( ५ ) विष्णुधनुषः शार्ङ्गम् ( न० ) एकं नाम । विष्णुलाञ्छनस्य श्रीवत्सः ( पुं० ) **( विष्णु के धनुष्य का शार्ङ्ग, और चिह्न का श्रीवत्स नाम है )** ( ६ ) विष्णुवाहानाम् चत्वारि । विष्णोः सारथिः—दारुकः, मन्त्री-उद्धवः, अनुजः—गदः ( पुं० ) । ( ७ ) नव नामानि गरुडस्य सर्वेऽपि पुंल्लिङ्गाः । **( ९ नाम गरुड के हैं )** ।

नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः ॥ २९ ॥
१शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः ।
ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः ॥ ३० ॥
भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः ।
मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः ॥ ३१ ॥
उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ।
वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ॥ ३२ ॥
कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः ।
हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः ॥ ३३ ॥
गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः ।
व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः ॥ ३४ ॥
❀२अहिर्बुध्न्योऽष्टमूर्तिश्च गजारिश्च महानटः ।
३कपर्दोऽस्य जटाजूटः ४पिनाकोऽजगवं धनुः ।

---

(१) शम्भुरित्यादीनी—अष्टचत्वारिंशन्नामानि शिवस्य (पुं०) (४८ नाम शिवजी के हैं)। (२) क्षेपकोऽयं श्लोकः॥ चत्वारि नामानि शिवस्य (पुं०) (४ शिवजी के नाम है)। (३) शिवस्य जटायाः कपर्दो नाम (पुं०) (कपर्द यह शिवजी के जटाजूट का नाम है) (४) द्वे नामनी शिवधनुषः (पिनाकः) (पुं०) अजगवम् (न०) (दो शिव के धनुष्य के नाम है)।

प्रम१थाः स्युः पारिषदा २ब्राह्मीत्याद्यास्तु मातरः॥ ३५ ॥
*३ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।
*वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः॥
४विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा।
*५अणिमा महिमा चैव गरिमा लघिमा तथा।
*प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्ट सिद्धयः॥
६उमा कात्यायनी गौरी काली हैमवतीश्वरी ॥ ३६ ॥
शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला।
अपर्णा पार्वती दुर्गा मृडानी चण्डिकाऽम्बिका ॥३७॥
*७ आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा।
८विनायको विघ्नराजद्वैमातुरगणाधिपाः।

---

(१) शिवस्य पारिषदाः—प्रमथाः (**शिवजी के गणों का नाम है**) (२) ब्राह्मीत्यादयो मातरः। (**शक्तियों के नाम हैं**) (३) ब्राह्मीत्यादीनि सप्त लोकमातृनामानि (स्त्री०) (**७ लोकमाता के नाम हैं**) (४) ऐश्वर्यस्य त्रीणि नामानि। तत्र विभूतिः, भूतिः (स्त्री०) ऐश्वर्यम् (न०) (**ऐश्वर्य या सिद्धि के ३ तीन नाम हैं**)। (५) अणिमादयः अष्ट सिद्धयः। तत्र (५ स्त्री०) (३ न०) (**ये ८ सिद्धियां हैं**) (६) उमादीनि सप्तदश नामानि पार्वत्याः (स्त्री०) (**१७ पार्वती के नाम है**) (७) प्रक्षिप्तोऽयं श्लोकः। तत्र चत्वारि नामानि पार्वत्याः। (८) अष्टौ गणेशस्य नामानि

अप्येकदन्तहेरम्ब लम्बोदरगजाननाः ॥ ३८ ॥
१ कार्तिकेयो महासेनः शरजन्मा षडाननः ।
पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ॥ ३९ ॥
बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः ।
षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ॥ ४० ॥
*२ शृङ्गी भृङ्गी रिटिस्तुण्डी नन्दिको नन्दिकेश्वरः ।
३ कर्ममोटी तु चामुण्डा चर्ममुण्डा तु चर्चिका ॥
४ इन्द्रो मरुत्वान्मघवा बिडौजाः पाकशासनः ।
वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः ॥ ४१ ॥
जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ।
सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा ॥ ४२ ॥
वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ।

---

पुंसि । ( ८ गणेश जी के नाम है )　　( १ ) कार्तिकेयस्य सप्तदश नामानि पुंसि । ( १७ नाम कार्तिक स्वामी के है ) ( २ ) षण्नामानि नन्दिनः । पुंसि । ( ६ नाम नन्दी के है ) ( ३ ) चत्वारि चामुण्डायाः । ( ४ ) इन्द्रस्य पञ्चत्रिंशत् पुंसि । तत्र मरुत्वान् तकारान्तः । मघवा नकारान्तः । वृद्धश्रवोविडौजसौ सकारान्तौ । सुत्राम–वृष–वृत्रहणो नान्ताः । गोत्रभिद्–तकारान्तः । ऋभुक्षि–वज्रि–जम्भभेदिनो नान्ताः । तुराषाट्–हकारान्तः, स्वाराट्–जकारान्तः । ( ३५ इन्द्र के नाम है )

जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः ॥ ४३ ॥
संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ।
आखण्डलः सहस्राक्ष ऋभुक्षास्तस्य तु प्रिया ॥ ४४ ॥
१पुलोमजा शचीन्द्राणी नगरी २त्वमरावती ।
३हय उच्चैःश्रवाः सूतो ४मातलीर्नन्दनं ५वनम् ॥४५॥
स्यात्प्रासादो ६वैजयन्तो जयन्तः ७पाकशासनिः ।
८ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः ॥ ४६ ॥
९ह्लादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः ।

---

( १ ) त्रीणि इन्द्राण्याः स्त्रियाम् । **( इन्द्र के स्त्री के ३ नाम है )** ( २ ) इन्द्रनगर्या एकम्—'अमरावती' स्त्री । **( इन्द्र के नगरी का नाम है। )** ( ३ ) 'उच्चैःश्रवाः-सान्तः पुंसि, इन्द्राश्वस्य नाम । **( इन्द्र के घोड़े का नाम है )** ( ४ ) इन्द्रसारथेः—मातलिर्नाम ( पुं० ) एकम् । **( इन्द्र के सारथी का 'मातलि' नाम है )** ( ५ ) इन्द्रकाननस्य एकम् । ( न० ) **( इन्द्र के बगीचे का नन्दन नाम है )** ( ६ ) इन्द्रभवनस्य 'वैजयन्तः' एकम् ( पुं० ) **( इन्द्र के महल का नाम है )** ( ७ ) द्वे नामनी इन्द्रपुत्रस्य ( पुं० ) **( २ इन्द्र के पुत्र के नाम है )** ( ८ ) ऐरावतादीनि चत्वारि इन्द्रहस्तिनः ( पुं० ) **( ४ इन्द्र के हाथी के नाम है )** ( ९ ) ह्लादिनीत्यादीनि दश नामानि इन्द्रवज्रस्य । तत्र=ह्लादिनी ( स्त्री० ) वज्रकुलिशौ-(पुन्नपुंसकयोः ) भिदुरम् ( न० ) अशनिः—( स्त्रीपुंसयोः ) अन्ये पञ्च पुंल्लिङ्गाः । **( १० इन्द्र के वज्र के नाम है )**

शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ॥४७॥
१व्योमयानं विमानोऽस्त्री २नारदाद्याः सुरर्षयः ।
स्यात्सुधर्मा३ देवसभा पीयूषममृतं४ सुधा ॥ ४८ ॥
५मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका ।
६मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः ॥ ४९ ॥
७पञ्चैते देवतरवो मन्दरः पारिजातकः ।
सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥ ५० ॥
८सनत्कुमारो वैधात्रः ९स्वर्वैद्यावश्विनीसुतौ ।
नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ ॥ ५१ ॥

---

(१) द्वे नामनी देवविमानस्य। व्योमयानम् (न०) विमानः। (पुं०) (**२ विमान के नाम है**) (२) नारदाद्याः—आदिना 'तम्बुरु, भरत, पर्वत, देवल–' इत्यादयः देवर्षीणां नामानि। (**नारद आदि देवर्षियों के नाम है**) (३) देवसभायाः द्वे स्त्रियाम्। (**२ देवसभा के नाम है**) (४) त्रीणि अमृतस्य, तत्र सुधा स्त्री०, शेषे न०। (**३ अमृत के नाम है**) (५) चत्वारि सुरगङ्गायाः स्त्री०। (**४ आकाश गङ्गा के नाम है**) (६) पञ्च सुमेरोर्नामानि पुं०। (**५ सुमेरु पर्वत के नाम है**) (७) पञ्च देवतरूणां नामानि। तत्र हरिचन्दनं क्लीबपुंसोः। अन्ये पुंसि। (**५ देवताओंके वृक्ष है**) (८) द्वे सनत्कुमारस्य। (**२ ब्रह्मपुत्र सनत्कुमार के नाम है**) (९) षण्नामानि अश्विनीकुमारयोः। एते प्रायो द्विवचनान्तानि। (**६ अश्विनी कुमार के नाम है।**)

१स्त्रियां बहुष्वप्सरसः स्ववेंश्या उर्वशीमुखाः ।
❀२घृताची मेनका रम्भा उर्वशी च तिलोत्तमा ।
❀सुकेशी मञ्जुघोषाद्याः कथ्यन्तेऽप्सरसो बुधैः ॥
३हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम् ॥ ५२ ॥
४अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः ।
कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ॥ ५३ ॥
बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः ।
आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ॥ ५४ ॥

---

( १ ) उर्वशीमुखाः—उर्वशीमेनकारम्भेत्याद्याः अप्सरसः स्ववेंश्या इति चोच्यन्ते द्वे । अत्र अप्सरशब्दो नित्यं बहुवचनान्तः सान्तश्च स्त्रियाम् । ( उर्वशी आदि स्वर्ग की वेश्याओं के नाम हैं )
( २ ) सप्त अप्सरसान्नामानि स्त्रियाम् । ( अप्सराओं के ७ नाम हैं )
( ३ ) देवगन्धर्वाणां द्वे नामनी पुं० । आदिना—तुम्बुरुवृषणाश्व—विश्वावसु–चित्ररथादयः । एकैकं देवगायकानां नाम । ( हाहाः, हूहूः, ( २ पुं० ) इत्यादि देवताओं के यहां गाने वाले गन्धर्व हैं )
( ४ ) चतुस्त्रिंशत अग्नेर्नामानि । तत्र जातवेदस्, बर्हिस्, हिरण्यरेतस्, सप्तार्चिस्सुनस्, एते सकारान्ताः । शुष्मन्, कृष्णवर्त्मन्, एतौ नान्तौ । तनूनपात, शिखावत, तान्तौ । हुतभुक्—जकारान्तः । अप्पित्तम् न० । शेषाः पुंसि । ( अग्नि के ३४ नाम हैं ) सप्तार्चिः–सप्तजिह्वः, ताश्च–काली–कराली–मनोजवा–सुलोहिता-सुधूम्रवर्णा, स्फुलिङ्गिनी–विश्वदासाख्याः सप्त वह्नेर्जिह्वाः ।

रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः ।
हिरण्यरेता हुतभुग्दहनो हव्यवाहनः ॥ ५५ ॥
सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ।
शुचिरप्पित्तमौर्वस्तु१ वाडवो वडवानलः ॥ ५६ ॥
२वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम् ।
त्रिषु३स्फुलिङ्गोऽग्निकणः४सन्तापः सञ्ज्वरः समौ ॥५७॥
*उल्का५ स्यान्निर्गतज्वाला ६भूतिर्भसितभस्मनी ।
*क्षारो रक्षा च दावस्तु७ दवो वनहुताशनः ॥
८धर्मराजः पितृपतिः समवर्ती परेतराट् ।

---

( १ ) और्वः इत्यादीनि त्रीणि वडवानलस्य । **( ३ समुद्र की अग्नि के नाम है )** ( २ ) पञ्च नामानि वह्नेरर्चिषि । तत्र ज्वालकीलौ स्त्रीपुंसयोः । अर्चिः स्त्रीनपुंसकयोः, हेतिशिखे—स्त्रियाम् । अर्चिः-शब्दः इकारान्तः सकारान्तश्चेति । **( ५ नाम अग्नि की लहर के है )** ( ३ ) द्वे अग्निकणिकायाः । लिङ्गत्रये एते । **( २ चिनगारी के नाम है )** ( ४ ) अग्नेः सन्तापस्य द्वे । **( २ नाम अग्नि के ताप के है )** ( ५ ) उल्का स्त्री० निर्गतज्वालाया एकम् । **( १ उल्का लुक्क या तारा टूटने का नाम है )** ( ६ ) भस्मनः पञ्च नामानि । तत्र भूतिः स्त्रीपुंसयोः । भसितम् , भस्मन् क्लीबे । क्षारः पुं० । रक्षा—स्त्री० । **( ५ राख के नाम है )** ( ७ ) त्रीणि वनवह्नेः । **( ३ जङ्गल की अग्नि के नाम है )** ( ८ ) धर्मराजादीनि चतुर्दश नामानि यमस्य । तत्र समवर्तिन् नान्तः । परेतराट्—यमराट्

कृतान्तो यमुनाभ्राता शमनो यमराड् यमः ॥ ५८ ॥
कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः ।
१राक्षसः कौणपः क्रव्यात्क्रव्यादोऽस्रप आशरः ॥५९॥
रात्रिञ्चरो रात्रिचरः कर्बुरो निकषात्मजः ।
यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी ॥ ६० ॥
२प्रचेता वरुणः पाशी यादसांपतिरप्पतिः ।
३श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ॥ ६१ ॥
पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः ।
समीरमारुतमरुज्जगत्प्राणसमीरणाः ॥ ६२ ॥
नभस्वद्वातपवनपवमानप्रभञ्जनाः ।
*४प्रकम्पनो महावातो ५झञ्झावातः सवृष्टिकः ।
६प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ॥६३॥

---

जान्तौ । यमुनाभ्रातृ-ऋकारान्तः । सर्वे पुंल्लिङ्गाः । (**१४ नाम यमराज के हैं**) (१) राक्षसादीनि पञ्चदश राक्षसानाम् । तत्र यातुरक्षसी नपुंसके । (**१५ नाम राक्षसों के है**) (२) पञ्चकम् वरुणस्य । तत्र प्रचेतस्-सान्तः । पाशिन् नान्तः । (**५ नाम वरुण के हैं**) (३) श्वसनादीनि विंशतिर्नामानि वायोः । (**२० नाम हवा के हैं**) सर्वे पुंसि । तत्र मातरिश्वन् नान्तः । मरुत् तान्तः । (४) द्वे महावायोः । (**२ आंधी के नाम है**) (५) एकं सवृष्टिकस्य वायोः । (**१ वर्षा के सहित हवा का नाम है**) (६) पञ्च शरीरस्था वायुभेदाः पुंसि । (**५ शरीर में रहने वाले वायु**

*१हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले।
*उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः॥
*२अन्नप्रवेशनं मूत्राद्युत्सर्गोऽन्नविपाचनम्।
*भाषणादि निमेषादि तद्व्यापाराः क्रमादमी॥
शरीरस्था इमे ३रंहस्तरसी तु रयः स्यदः।
जवोऽथ ४शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम्॥ ६४॥
सत्वरं चपलं तूर्णमविलम्बितमाशु च।
५सततानारताश्रान्तसन्तताविरतानिशम्॥ ६५॥
नित्यानवरताजस्रमप्यथातिशयो६ भरः।

---

**के नाम है)** (१) **(हृदय मे—प्राण, गुदा मे अपान, नाभिमण्डलमे समान, कण्ठदेशमे उदान, सर्वशरीरमे व्यान नामक वायु रहता है)** (२) अस्मिन् श्लोके देहस्थपञ्चवायूनां प्राणादीनां क्रमेण कर्माणि निर्दिष्टानि। (३) रंहस् इत्यादीनि पञ्च वेगस्य। तत्र रंहस्तरसी सान्ते क्लीबे, शेषाः पुंसि। **(५ वेग के नाम है)** (४) शीघ्रादीनि एकादश नामानि त्वरितस्य। **(११-शीघ्र के नाम है)** (५) नव नामानि नित्यस्य। **(९ नाम नित्य के है)** 'सततं क्रियान्तरैरव्यवधानम्, अतिशयस्तु पौनःपुन्यम्' इति भेदोऽत्रावसेयः। (६) अतिशयादीनि चतुर्दशनामानि अतिशयस्य। अत्र अतिशयभरौ पुंसि। शीघ्रं त्वरितमित्यारभ्य दृढशब्दपर्यन्तं क्लीबे, तत्तु असत्वे द्रव्यवृत्तित्वाभावे एव ज्ञेयम् 'क्वचित् भेद्यगामीति पाठः, तस्य विशेष्यगामीत्यर्थः। **(१४ नाम अतिशय के है)**

अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ॥ ६६ ॥
तीव्रैकान्तनितान्तानि गाढबाढदृढानि च ।
क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां सत्त्वगामि यत् ॥६७॥
१कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः ।
मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥ ६८ ॥
किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।
यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः ॥ ६९ ॥
२ अस्योद्यानं चैत्ररथं पुत्रस्तु नलकूबरः ।
कैलासः स्थानमलका पूर्विमानं तु पुष्पकम् ॥ ७० ॥
३स्यात्किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः ।
४निधिर्ना शेवधिर्भेदाः ५पद्मशङ्खादयो निधेः ॥७१॥

---

(१) सप्तदश नामानि कुबेरस्य। ( **१७ नाम कुबेर के है** ) तत्र यक्षराट् जान्तः । मनुष्यधर्मा नान्तः। (२) अस्य कुबेरस्य उद्यानम्—चैत्ररथं नाम न० । ( **कुबेर के बगीचा का नाम** ) कुबेरपुत्रः—नलकूबरः पुं०। ( **१ कुबेर के पुत्र का नाम है** ) कुबेरस्य स्थानम्—कैलासः पुं० । कुबेरस्य नगर्याः—अलका स्त्रियाम्। कुबेरविमानस्य नाम—पुष्पकम् क्लीबे। ( **पुष्पक कुबेर के विमान का नाम है** ) (३) किन्नरस्य चत्वारि नामानि। ( **४ किन्नरों के नाम** ) (४) निधेर्द्वे नामनी। ( **२ खजाने के नाम है** ) (५) निधेर्भेदाः—पद्म, शंखादयः। ( **खजाने के**

*१महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ।
*मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव ॥

इति स्वर्गवर्गः ॥ १ ॥

## अथ व्योमवर्गः ॥ २ ॥

२द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् ।
नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् ॥ १ ॥
वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ।
*विहायसोऽपि नाकोऽपि द्युरपि स्यात्तदव्ययम् ।
*तारापथोऽन्तरिक्षं च मेघाध्वा च महाबिलम् ।
*विहायाः शकुने पुंसि गगने पुंनपुंसकम् ।

इति व्योमवर्गः ॥ २ ॥

## अथ दिग्वर्गः ॥ ३ ॥

३दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ।

---

भेद है ) ( १ ) महापद्मादीनि नव निधेर्भेदाः । ( नव निधि-विशेष के नाम है ) इति स्वर्गवर्गः ।

( २ ) आकाशस्य चतुर्विंशतिर्नामानि । ( २४ नाम आकाश के है ) द्यो–दिव् स्त्री, अभ्रादि–विष्णुपदान्तम् १२ न० । आकाशविहायसी पुंसि क्लीबे च । द्युः अ० । इति आकाशनामानि ।

( ३ ) दिशः पञ्च नामानि । इमे सर्वे शब्दाः स्त्रीलिङ्गाः ।

१प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः ॥ १ ॥
उत्तरा दिगुदीची २स्याद्दिश्यं तु त्रिषु दिग्भवे ।
✱३अवाग्भवमवाचीनमुदीचीनमुदग्भवम् ।
✱प्रत्यग्भवं प्रतीचीनं प्राचीनं प्राग्भवं त्रिषु ॥
४इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ॥ २ ॥
कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ।
✱५रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः ।
✱बुधो बृहस्पतिश्चेति दिशां चैव तथा ग्रहाः ॥
६ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ॥ ३ ॥
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ।

---

( दिशाओं के ५ नाम है ) ( १ ) प्राची, अवाची, प्रतीची, उदीची ४ स्त्री ( पूर्व, दक्षिण, पश्चिम और उत्तर दिशा के क्रमशः १-१ नाम है ) ( २ ) दिग्भववस्तुमात्रे-दिश्यम्-त्रिषु लिङ्गेषु । ( ३ ) दक्षिण, उत्तर पश्चिम और पूर्व दिशामें होने वाले पदार्थ के क्रमशः-अवाचीनम् , इत्यादि नाम है । ( ४ ) पूर्वस्याः-इन्द्रः, आग्नेय्याः-अग्निः, एवं क्रमेण दिशः अधिपतयो ज्ञेयाः । ( पूर्वादि दिशाओं के इन्द्रादि ८ क्रम से स्वामी है ) ( ५ ) सूर्यादयः पूर्वादीनां क्रमशो ग्रहाः । ( ६ ) पूर्वस्याः दिग्गजः-ऐरावतः, करिणी—अभ्रमु स्त्रियाम् । आग्नेय्याः—पुण्डरीकः, कपिला । द० वामनः, पिङ्गला । नै० कुमुदः, अनुपमा । एवं क्रमेण दिग्गजः, करिणी च ज्ञेया ।

करिण्योऽभ्रमुकपिलापिङ्गलानुपमाः क्रमात् ॥ ४ ॥
ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती ।
क्लीबाऽव्ययं त्वपदिशं १ दिशोर्मध्ये विदिक् स्त्रियाम् ॥५॥
२ अभ्यन्तरं त्वन्तरालं ३ चक्रवालं तु मण्डलम् ।
४ अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ॥ ६ ॥
धाराधरो जलधरस्तडित्वान्वारिदोऽम्बुभृत् ।
घनजीमूतमुदिरजलमुग्धूमयोनयः ॥ ७ ॥
५ कादम्बिनी मेघमाला त्रिषु ६ मेघभवेऽभ्रियम् ।
७ स्तनितं गर्जितं मेघनिर्घोषे रसितादि च ॥ ८ ॥
८ शम्पाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा ।
तडित्सौदामनी विद्युच्चञ्चला चपला अपि ॥ ९ ॥

---

(१) अपदिशं विदिक् इति द्वयम् अग्न्यादि कोणस्य। (२) मध्यस्य द्वे नामनी—क्लीबे। (३) द्वे मण्डलस्य **(घेरा, गोलाई के २ नाम है)** (४) पञ्चदश मेघस्य नामानि **(१५ मेघके नाम है)** अभ्रं क्लीबे, शेषाः पुंसि (५) द्वे मेघवृन्दस्य **(मेघ समूह के २ नाम है)** (६) मेघभवे वस्तुनि अभ्रियम् एकं त्रिषु **(मेघ मे होने वाले पदार्थ का १ नाम है)** (७) मेघनिर्घोषस्य चत्वारि नामानि। आदिना ध्वनितम्, **(मेघ के गर्जने के ४ नाम है)** (८) दशकं विद्युल्लतायाः। **(बिजली के १० नाम है)** तडिद्विद्युच्छब्दौ तान्तौ। सर्वे स्त्रीलिङ्गाः।

१ स्फूर्जथुर्वज्रनिर्घोषो २मेघज्योतिरिरंमदः ।
३इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितम् ॥ १० ॥
४वृष्टिर्वर्षे ५तद्विघातेऽवग्राहावग्रहौ समौ ।
६धारासम्पात आसारः ७शीकरोऽम्बुकणाः स्मृताः ११
८वर्षोपलस्तु करका ९मेघच्छन्नेऽह्नि दुर्दिनम् ।
१०अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् ॥ १२ ॥
अपिधानतिरोधानपिधानाच्छादनानि च ।
११हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ॥ १३ ॥
विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः ।

---

( १ ) द्वयं वज्रनिर्घोषस्य ( बिजली गिरने के समय के आवाज के २ नाम है ) ( २ ) मेघज्योतिषः द्वे नामनी ( बादल के प्रकाश के २ नाम है ) ( ३ ) इन्द्रधनुषः त्रीणि नामानि । ते च क्लीबे, तत्र शक्रधनुः सान्तः ( इन्द्र धनुष के ३ नाम है ) ( ४ ) द्वयम् मेघवर्षणस्य ( वर्षा के २ नाम है ) ( ५ ) वर्षानिरोधस्य द्वे नामनी ( वर्षा के रुक जाने के २ नाम है ) ( ६ ) द्वे धारावर्षस्य ( लगातार जोरसे वर्षा होने के २ नाम है ) ( ७ ) जलकणस्यैकं नाम ( पानी के छोटे छोटे बूँद का १ नाम है ) ( ८ ) द्वयं वर्षोपलस्य ( बनौरी के २ नाम है ) ( ९ ) दुर्दिनमित्येकं मेघच्छन्ने दिने ( लगातार बादल घिरे रहे समय का १ नाम है ) ( १० ) अष्टकम्—आच्छादनस्य ( ढांकने के ८ नाम है ) ( ११ ) चन्द्रमसो विंशतिर्नामानि ( चन्द्रमा के २० नाम है )

अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः ॥१४॥
द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ।
कला १तु षोडशो भागो २बिम्बोऽस्त्री मण्डलं त्रिषु॥१५॥
३भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं ४समेंऽशके ।
५चन्द्रिका कौमुदी ज्योत्स्ना ६प्रसादस्तु प्रसन्नता ॥१६॥
७कलङ्काङ्कौ लाञ्छनं च चिन्हं लक्ष्म च लक्षणम् ।
८सुषमा परमा शोभा, शोभा ९कान्तिर्द्युतिश्छविः ॥१७॥
अवश्यायस्तु१० नीहारस्तुषारस्तुहिनं हिमम् ।
प्रालेयं मिहिका चाथ हिमानी११ हिमसंहतिः ॥ १८ ॥

---

( १ ) चन्द्रमण्डलस्य षोडशो भागः कलासञ्ज्ञः एकम् । ( २ ) द्वे बिम्बस्य **( सूर्य या चन्द्रमा के बिम्ब के २ नाम है )** । ( ३ ) चत्वारि खण्डस्य **(४ टुकडे के नाम है)** तत्र भित्तं क्लीबम् , शकलखण्डौ पुंनपुंसकयोः । अर्धशब्दः त्रिषु । ( ४ ) समांशवाची अर्धशब्दो नित्यनपुंसकलिङ्गः । ( ५ ) ज्योत्स्नायाः त्रीणि नामानि **(चांदनी के ३ नाम है )** । ( ६ ) द्वयं नैर्मल्यस्य । तत्र प्रसादः पुंसि, प्रसन्नता स्त्रियाम् । ( ७ ) षट्कं चिन्हस्य । कलङ्काङ्कौ पुंसि, शेषाः क्लीबे । लक्ष्म नान्तम् । ( ८ ) 'सुषमा' इत्येकं परमायाः शोभायाः । ( ९ ) चत्वारि शोभामात्रस्य नामानि—स्त्रियाम् **( शोभा के ४ नाम है )** ( १० ) सप्तकं हिमस्य । तत्र तुहिनं हिमं प्रालेयं क्लीबे, मिहिका स्त्रियाम् । शेषाः पुंसि **( पाला पड़ने अर्थात् 'ओस, हिम' के ७ नाम है )** ( ११ ) द्वे महतो हिमस्य **( बर्फ के ढोके के २ नाम है )**

१शीतं गुणे तद्वदर्थाः २सुषीमः शिशिरो जडः ।
तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः ॥ १९ ॥
३ध्रुव औत्तानपादिः स्यादगस्त्यः कुम्भसम्भवः ।
मैत्रावरुणिरस्यैव ५लोपामुद्रा सधर्मिणी ॥ २० ॥
६नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम् ।
७दाक्षायण्योऽश्विनीत्यादितारा ८अश्वयुगश्विनी ॥२१॥
९राधा विशाखा पुष्ये १०तु सिध्यतिष्यौ ११श्रविष्ठया ।
समा धनिष्ठाः स्युः १२प्रोष्ठपदा भाद्रपदाः स्त्रियः ॥२२॥
१३मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी ।
१४इल्वलास्तच्छिरोदेशे तारका निवसन्ति याः ॥ २३ ॥

---

( १ ) शैत्यस्य एकं नाम क्लीबे (ठण्डा-जाडा का १ नाम है ) (२) शीतलस्य वस्तुनः सप्त नामानि त्रिषु लिङ्गेषु । ( ३ ) द्वे ध्रुवस्य नामनी—पुंसि । ( ४ ) अगस्त्यस्य ऋषेः त्रीणि नामानि पुंसि । ( ५ ) अस्य-अगस्त्यस्य-सधर्मिणी-पत्नी—'लोपामुद्रा' इति एकं नाम स्त्रियाम् ( अगस्त्य की पत्नी का १ नाम है ) । ( ६ ) षट्कं नक्षत्रमात्रस्य, उडु स्त्रीनपुंसकयोः ( नक्षत्र के ६ नाम है ) ( ७ ) अश्विनीत्यादितारा अश्विन्यादिसप्तविंशतिर्नक्षत्राणि दाक्षायणीसञ्ज्ञकानि । ( ८ ) द्वे अश्विन्याः । ( ९ ) द्वे विशाखायाः । ( १० ) त्रयं पुष्यनक्षत्रस्य । ( ११ ) द्वे धनिष्ठायाः । ( १२ ) द्वयं पूर्वभाद्रपदोत्तराभाद्रपदासु । ( १३ ) मृगशिरोनक्षत्रस्य त्रीणि नामानि । ( १४ ) मृगशिरोनक्षत्रशिरोभागस्थितानां पञ्चानां स्वल्पतारकाणामेकं

१बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः ।
जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः ॥ २४ ॥
२शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः ।
३अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः ॥ २५ ॥
४रौहिणेयो बुधः सौम्यः समौ ५सौरिशनैश्चरौ ।
६तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः ॥२६॥
७सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः ।
८राशीनामुदयो लग्नं ते तु ९मेषवृषादयः ॥ २७ ॥
१०सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः ।
भास्कराहस्करब्रध्नप्रभाकरविभाकराः ॥ २८ ॥

---

नाम—स्त्रियाम् । (१) नवकं बृहस्पतेर्नाम (**बृहस्पति के नाम है**) (२) शुक्राचार्यस्य षट् नामानि—पुंसि (**शुक्राचार्य के ६ नाम है**) (३) पञ्चकं मङ्गलस्य पुंसि (४) त्रयं बुधस्य। (५) द्वे शनैश्चरस्य। (६) राहोः पञ्च नामानि पुंसि। तत्र तमः सान्तं क्लीबे, शेषाः पुंसि। (७) मरीच्यत्रिमुखाः सप्तर्षयश्चित्र-शिखण्डिसञ्ज्ञाः एकम्। तथाहि—'मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः। वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः'। (८) राशीनामुदयो लग्नमित्युच्यते एकम्। (९) मेषवृषादयो राशयः स्युः। एकम्। 'मेषो वृषोऽथ मिथुनं कर्कटः सिंहकन्यके। तुला च वृश्चिको धन्वी मकरः कुम्भमीनकौ। (**बारह राशियों के नाम है**) (१०) सूर्यस्य सप्तत्रिंशत् (३७) नामानि प्रक्षिप्तैः सप्तदशभिः

भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः ।
विकर्तनार्कमार्तण्डमिहिरारुणपूषणः ॥ २९ ॥
द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ।
विभावसुर्ग्रहपतिस्त्विषाम्पतिरहर्पतिः ॥ ३० ॥
भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ।
पद्माक्षस्तेजसां राशिश्छायानाथस्तमिस्रहा ।
कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः ॥
प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः ।
इनो भगो धामनिधिश्चांशुमाल्यब्जिनीपतिः ॥
१माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्विकाः ३१
२सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः ।
३परिवेषस्तु परिधिरुपसूर्यकमण्डले ॥ ३२ ॥

---

सह तु ( ५४ ) नामानि। सर्वे पुंसि । तत्र अर्यमन् , नान्तः । द्वादशात्मा, द्वादशात्मानौ । भास्वान् , भास्वन्तौ । एवं विवस्वान् । नकारान्तः पूषन् शब्दः-पूषा, पूषणौ । सवितृशब्दस्य सविता, सवितारौ । ( ५४ सूर्य के नाम हैं ) ( १ ) माठरः, पिङ्गलः, दण्डः ( ३ पुं० ) ( सूर्य के पार्श्ववर्तियों के ३ नाम हैं ) ( २ ) सूर्यसारथेः पञ्च नामानि-पुंसि ( अरुण के ५ नाम हैं ) ( ३ ) चन्द्रसूर्ययोरुत्पातादिना जातस्य मण्डलस्य चत्वारि नामानि। तत्र परिधिपरिवेषौ पुंसि, इतरे क्लीबे । ( मण्डल के ४ नाम हैं )

१किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः ।
भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ॥३३॥
२स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ।
रोचिः शोचिरुभे क्लीबे ३प्रकाशो द्योत आतपः ॥३४॥
४कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति ।
५तिग्मं तीक्ष्णं खरं तद्वन्मृ६गतृष्णा मरीचिका ॥३५॥

इति दिग्वर्गः ॥ ३ ॥

---

## अथ कालवर्गः ॥ ४ ॥

७कालो दिष्टोऽप्यनेहापि समयोऽप्यथ ८पक्षतिः ।

---

(१) एकादश किरणानां नामानि । तत्र मरीचिः—स्त्रीपुंसयोः । दीधितिः स्त्रियाम् । शेषाः शब्दाः पुंसि । **( किरणों के ११ नाम हैं )** (२) एकादश प्रभायाः नामानि । तत्र प्रभादिदीप्त्यन्ताः स्त्रियाम्, रोचिःशोचिषी सकारान्ते क्लीबे । रुक् चान्तः, त्विट् षान्तः स्त्रियाम् । **( प्रभा के ११ नाम हैं )** (३) आतपस्य त्रीणि नामानि पुंसि **(धूप-घाम के ३ नाम हैं )** (४) ईषदुष्णस्य चत्वारि नामानि । **( थोड़ा गर्म के ४ नाम हैं )** (५) अत्युष्णस्य त्रीणि नामानि । (६) मृगतृष्णाया द्वे नामनी स्त्रियाम् । **(मृग तृष्णा के २ नाम हैं)**

**इति दिग्वर्गः ॥**

(७) समयस्य चत्वारि नामानि पुंसि । **(समय के चार नाम हैं)** (८) प्रतिपदायास्तिथेर्द्वे नामनी स्त्रियाम् । **( परिवा तिथि के २ नाम हैं )**

प्रतिपद् द्वे इमे स्त्रीत्वे १तदाद्यास्तिथयो द्वयोः ॥ १ ॥
२घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ ।
३प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि ॥ २ ॥
*व्युष्टं विभातं द्वे क्लीबे पुंसि गोसर्ग इष्यते ।
प्रभातं च ४दिनान्ते तु सायं सन्ध्या पितृप्रसूः ।
५प्राह्णापराह्णमध्याह्नास्त्रिसन्ध्यमथ ६शर्वरी ॥ ३ ॥
निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ।
विभावरीतमस्विन्यौ रजनी यामिनी तमी ॥ ४ ॥
७तमिस्रा तामसी रात्रिर्ज्यौत्स्नी ८चन्द्रिकयान्विता ।

---

( १ ) तदाद्याः प्रतिपदाद्यास्तिथय इत्युच्यन्ते एकम् । तिथिशब्दः स्त्रीपुंसयोः । **(प्रतिपद्, द्वितीया आदि तिथियों का नाम है)** ( २ ) पञ्चकं दिवसस्य । तत्र दिवसवासरौ क्लीबपुंसोः । **( दिन के ५ नाम है )** ( ३ ) नव प्रभातस्य नामानि । तत्र प्रत्यूषशब्दोऽदन्तः पुंसि क्लीबे च, शेषाः क्लीबे । व्युष्टादिनामत्रयं प्रक्षिप्तम् । **(प्रातःकाल के ९ नाम है )** ( ४ ) दिनान्तस्य-सायंकालस्य चत्वारि नामानि । तत्र सायमिति अव्ययं नपुंसकलिङ्गं वा । दिनान्तः पुंसि, शेषौ स्त्रियाम् **( सायंकाल के ४ नाम है )** ( ५ ) दिनस्य पूर्वो भागः-प्राह्णः, अन्त्यो भागः-अपराह्णः, मध्योभागः-मध्याह्नः । एते च मिलिताः त्रिसन्ध्यमित्युच्यते । ( ६ ) रात्रिनाम द्वादश स्त्रियाम् **(रात्रि के १२ नाम है )** ( ७ ) या तमोयुक्ता रात्रिः सा तमिस्रा एकम्-स्त्रियाम् **(अंधेरी रात का १ नाम है)** ( ८ ) च-

१आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी ॥ ५ ॥
२गणरात्रं निशा बह्वयः प्रदोषो ३रजनीमुखम्।
४अर्धरात्रनिशीथौ द्वौ द्वौ ५यामप्रहरौ समौ ॥ ६ ॥
६स पर्वसन्धिः प्रतिपत्पञ्चदश्योर्यदन्तरम्।
७पक्षान्तौ पञ्चदश्यौ द्वे ८पौर्णमासी तु पूर्णिमा ॥ ७ ॥
९कलाहीने सानुमतिः पूर्णे राका निशाकरे।
१०अमावास्या त्वमावस्या दर्शः सूर्येन्दुसङ्गमः ॥ ८ ॥

---

न्द्रिकया-चन्द्रप्रकाशेन अन्विता युक्ता रात्रिः सा ज्यौत्स्नी एकं स्त्रियाम्। **(उजेली रात का १ नाम है)** (१) दिनद्वयमध्यगतायां रात्रेरेकं नाम **(दो दिन के बीच की रात्रि को 'पक्षिणी' कहते हैं)** (२) रात्रिसमूहस्यैकं नाम क्लीबे। **(रात्रियों के समूह का १ नाम है)** (३) द्वे प्रदोषस्य। **(प्रदोष काल के २ नाम है)** (४) अर्धरात्रस्य द्वे नामनी पुंसि। **(आधीरात के २ नाम है)** (५) प्रहरस्य द्वयं पुंसि **(प्रहर के २ नाम है, तीन घण्टे का १ प्रहर होता है)** (६) पूर्णिमाप्रतिपदोः सन्धेर्नाम द्वयम्। तत्र पर्व नान्तं क्लीबे। सन्धिः पुंसि। (७) द्वयं पक्षान्ततिथ्योः। तत्र पक्षान्तः पुंसि, पञ्चदशी स्त्रियाम्। (८) पूर्णिमायाः द्वे नामनी। **('पुन्नमासी-पुँन्यू' के २ नाम है)** (९) एककलाहीनचन्द्रयुक्ता पूर्णिमा-अनुमतिः स्त्रियाम्। पूर्णचन्द्रसहिता पूर्णिमा राका। (१०) अमावास्यायाः चत्वारि नामानि। **(अमावस्या के ४ नाम है)**

१सा दृष्टेन्दुः सिनीवाली सा २नष्टेन्दुकला कुहूः ।
३उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च ॥ ९ ॥
४सोपप्लवोपरक्तौ ५द्वावग्न्युत्पात उपाहितः ।
एकयोक्त्या ६पुष्पवन्तौ दिवाकरनिशाकरौ ॥ १० ॥
७अष्टादश निमेषास्तु काष्ठा ८ त्रिंशत्तु ताः कला ।
९तास्तु त्रिंशत्क्षणस्ते तु १०मुहूर्तो द्वादशास्त्रियाम् ॥ ११ ॥
११ते तु त्रिंशदहोरात्रः १२पक्षस्ते दश पञ्च च ।

---

(१) चतुर्दशीयोगात् दृष्टचन्द्रा अमावस्या "सिनीवाली" इत्युच्यते। (२) अदृष्टचन्द्राऽमावस्या 'कुहूः' इत्युच्यते, सा च स्त्रियाम्। (३) द्वे नामनी चन्द्रसूर्यग्रहणस्य-पुंसि । **(सूर्य चन्द्रग्रहण के २ नाम है)** (४) सोपप्लवः उपरक्तः इति द्वे राहुग्रस्तस्येन्दोः सूर्यस्य वा । (५) अग्न्युत्पातस्य द्वे-पुंसि-नामनी। **('आग लगना' 'लाय लगना')** (६) युगपदुक्यमानौ चन्द्रसूर्यौ-पुष्पवन्तौ। पुष्पवन्तशब्दो मतुबन्तोऽकारान्तश्च। (७) निमेषोऽक्षिस्पन्दकालः, अष्टादशनिमेषाः-काष्ठा स्त्रियाम्। **(अट्ठारह निमेष के बराबर समय का 'काष्ठा' यह १ नाम है)** (८) त्रिंशत्काष्ठाः मिलित्वा एका कला, **(तीस काष्ठाके बराबर समय को १ कला कहते हैं)** (९) ताः कलास्त्रिंशन्मिलित्वा एकः क्षणः। (१०) द्वादशक्षणाः मुहूर्तः पुंसि क्लीबे च। (११) त्रिंशन्मुहूर्तैरेकोऽहोरात्रो भवति । (१२) पञ्चदशदिनानि-पक्षः पुंसि **( १५ दिन, पखवारा )**

१पक्षौ पूर्वापरौ शुक्लकृष्णौ २मासस्तु तावुभौ ॥१२॥
द्वौ ३द्वौ मार्गादिमासौ ४स्यादृतुस्तैरयनं त्रिभिः ।
५अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ॥ १३ ॥
६समरात्रिन्दिवे काले विषुवद्विषुवं च तत् ।
७पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा ।
नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे ॥
८मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ॥ १४ ॥
९पौषे तैषसहस्यौ द्वौ १०तपा माघेऽथ ११फाल्गुने ।

---

( १ ) तत्र शुक्लपक्षः 'पूर्वः' उच्यते । कृष्णपक्षः 'अपरः' इत्युच्यते । ( २ ) पक्षद्वयेन एको मासः । ( ३० दिन एक महीना ) (३)मार्गादी द्वौ द्वौ मासौ ऋतुरेकः, स च हेमन्तादिसंज्ञकः । ( ४ ) त्रिभिर्ऋतुभिः-षड्भिर्मासैरेकमयनं-क्लीबे । ( ५ ) तत्र सूर्यस्य उत्तरस्यां गमनम् उत्तरायणम्, दक्षिणस्यां गमनं दक्षिणायनम् । द्वाभ्यामयनाभ्याम्—द्वादशभिर्मासैः-वत्सरः । ( ६ ) तुलामेषावच्छिन्नस्य समरात्रिन्दिवकालस्य नामद्वयम्-क्लीबे, क्वचित्पुंस्यपि । ( ७ ) पुष्यनक्षत्रयुक्ता पौर्णमासी पौषी ज्ञेया, सा पौषी यस्मिन्मासे वर्तते स पौषमासः । एवं मघायुक्ता पौर्णमासी यस्मिन्मासे स माघमासः । एवं रीत्याऽन्येऽपि । ( ८ ) मार्गशीर्षस्य चत्वारि नामानि पुंसि । ( अगहन महीने के ४ नाम है ) तत्र सहाः सान्तः । ( ९ ) पौषमासस्य त्रीणि नामानि पुंसि । ( १० ) माघमासस्य द्वे नामनी पुंसि । ( ११ ) त्रीणि फाल्गुनमासस्य पुंसि ।

स्यात्तपस्यः फाल्गुनिकः स्याच्चैत्रे १चैत्रिको मधुः॥१५॥
२वैशाखे माधवो राधो ३ज्येष्ठे शुक्रः ४शुचिस्त्वयम् ।
आषाढे ५श्रावणे तु स्यान्नभाः श्रावणिकश्च सः ॥१६॥
६स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः ।
७स्यादाश्विन इषोऽप्याश्वयुजोऽपि स्यात्तु ८कार्तिके॥१७॥
बाहुलोर्जौ कार्तिकिको ९हेमन्तः शिशिरोऽस्त्रियाम् ।
१०वसन्ते पुष्पसमयः सुरभि ११ग्रीष्म उष्मकः ॥१८॥
निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः ।
स्त्रियां १२प्रावृट् स्त्रियां भूम्नि वर्षा अथ १३शरत्स्त्रियाम् ।
१४षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् ।

---

(१) त्रीणि चैत्रमासस्य (चैत के ३ नाम है) (२) वैशाखमासस्य त्रीणि नामानि पुंसि। (वैशाख के ३ नाम है) (३) द्वे ज्येष्ठस्य। (४) आषाढस्य द्वे नामनी। (आषाढ के २ नाम है) (५) श्रावणस्य त्रीणि नामानि पुंसि। (६) भाद्रपदमासस्य चत्वारि नामानि पुंसि (७) आश्विनमासस्य त्रीणि नामानि पुंसि। (८) चत्वारि कार्तिकस्य नामानि पुंसि। (९) हेमन्त इत्येक ऋतुः, शिशिर इत्यपरः, स च पुन्नपुंसकलिङ्गः एकैकम्। (१०) वसन्तर्तोः त्रीणि नामानि। (११) सप्तकं ग्रीष्मस्य। तत्र तपशब्दोऽकारान्तः। (१२) वर्षाया द्वे नामनी, प्रावृट् स्त्रियां, षान्तः। वर्षाशब्दः स्त्रियां बहुवचनान्तः। (१३) शरदित्येक ऋतुः स स्त्रीलिङ्गो दकारान्तः। (१४) मार्ग-

१संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः ॥२०॥
२मासेन स्यादहोरात्रः पैत्रो ३वर्षेण दैवतः ।
४दैवे युगसहस्रे द्वे ब्राह्मः ५कल्पौ तु तौ नृणाम् ॥२१॥
६मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः ।
७संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ॥२२॥
८अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषम् ।
कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम् ॥ २३ ॥
स्या९द्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः ।
१०मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः ॥२४॥

---

शीर्षादिमासयुगलैः क्रमाद्धमन्ताद्या अमी ऋतवो भवन्ति । तत्र ऋतुशब्दः पुंसि । ( ऋतुओं के नाम हैं )। (१) षट्कं वर्षस्य । तत्र हायन् अस्त्रियाम् । समाः स्त्रियां बहुत्वे च । (२) मनुष्याणाम् एकेन मासेन पितॄणामेकोऽहोरात्रः । (३) मनुष्याणामेकेन वर्षेण देवानामेकोऽहोरात्रो भवति । (४) देवानां द्वे युगसहस्रे ब्राह्मोऽहोरात्रो भवति । (५) ये द्वे दैवे युगसहस्रे तौ नृणां कल्पौ—स्थितिप्रलयकालावित्यर्थः। (६) दिव्यानां युगानां या एकसप्ततिरेकाधिका सप्ततिः तन्मन्वन्तरम् क्लीबे । (७) पञ्चकं प्रलयस्य सर्वं पुंसि ( प्रलय के ५ नाम हैं )। (८) पापस्य द्वादश नामानि, तत्र पङ्कं पुंनपुंसकम् , पाप्मा नान्तः पुंसि । शेषाः क्लीबे । ( पाप के १२ नाम है )। (९) पुण्यस्य पञ्च नामानि । धर्मोऽस्त्रियाम् , वृषः—पुंसि । शेषाः क्लीबे । (१०) हर्ष-

स्यादानन्दथुरानन्दः शर्मशातसुखानि च ।
१श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ॥२५॥
भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् ।
शस्तं चाथ २त्रिषु द्रव्ये पापं पुण्यं सुखादि च ॥२६॥
३मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ ।
प्रशस्तवाचकान्यमून्ययः ४शुभावहो विधिः ॥२७॥
५दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ।
६हेतुर्ना कारणं बीजं निदानं ७त्वादिकारणम् ॥२८॥
८क्षेत्रज्ञ आत्मा पुरुषः प्रधानं ९प्रकृतिः स्त्रियाम् ।

---

स्य द्वादश नामानि । मुत्प्रीतौ—स्त्रियाम् । मुच्छब्दो दान्तः । शर्म नान्तं क्लीबे, शातसुखे अपि क्लीबे, शेषाः पुंसि । (१) द्वादश कल्याणमात्रस्य । तत्र क्षेमशस्ते अस्त्रियाम् । (२) पापपुण्यशब्दौ तथा सुखादिशब्दाः श्वःश्रेयःशिवभद्रादयः शस्तान्ताः द्रव्ये-विशेष्ये वर्तमानास्त्रिषु विशेष्यलिङ्गा इत्यर्थः । यथा—पापा—स्त्री । पापः पुमान्, पापं कुलमित्यादि । (३) पञ्च प्रशस्तवाचकानि नियतलिङ्गानि । आद्ये द्वे स्त्रियाम् । प्रकाण्डम् अस्त्रियाम्, शेषौ पुंसि । (४) शुभप्रदो विधिः—अयः पुंसि, अकारान्तः । (५) षट्कं प्राक्तनकर्मणः । नियतिः स्त्री, विधिः पुंसि । (६) त्रयं हेतुमात्रस्य । हेतुः पुंसि शेषौ क्लीबे । (७) यत् आदिकारणम्—मुख्यं कारणम्, तत् निदानम् क्लीबे, उपादानकारणमिति यावत् । (८) त्रीणि आत्मनो नामानि । (९) द्वे प्रकृति-

१विशेषः कालिकोऽवस्था गुणाः २सत्वं रजस्तमः॥२९॥
३जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ।
४प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः ॥३०॥
५*जातिर्जातं च सामान्यं ६व्यक्तिस्तु पृथगात्मता ।
७चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ॥३१॥
इति कालवर्गः ॥ ४ ॥

## अथ धीवर्गः ॥ ५ ॥

८बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ।
प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः ॥ १ ॥
९धीर्धारणावती मेधा संकल्पः १०कर्म मानसम् ।

---

तत्वस्य—मायाख्यस्य । प्रधानम्—क्लीबे, प्रकृतिः—स्त्रियाम् । (१) यः कालकृतो विशेषः सा 'अवस्था' इत्युच्यते । (२) सत्वं रजः तमः एते गुणाः प्रकृतेर्धर्माः एकैकम् । रजस्तमसी सान्ते । (३) जन्मनः षट् नामानि । जनुः सान्तम् । जनिः स्त्री । (४) प्राणिनः षट् नामानि । प्राणिजन्मिशरीरिणो नान्ताः सर्वे च पुंसि । (५) घटत्वादिजातेस्त्रीणि नामानि । जातिः स्त्रियाम्, शेषौ क्लीबे, (६) घटत्वादिव्यक्तेर्द्वे नामनी स्त्रियाम् । (७) मनसः सप्त नामानि । तत्र—चेतोमनसी सान्ते क्लीबे । हृद् दान्तं क्लीबम् ।

इति कालवर्गः ॥

(८) बुद्धेः चतुर्दश नामानि स्त्रियाम्, तत्र चित् तान्तः । संवित् प्रतिपद् च दान्तः । (९) मेधायाः त्रीणि नामानि स्त्रियाम् । (१०)मनो-

१⁂अवधानं समाधानं प्रणिधानं तथैव च ।
२चित्ताभोगो मनस्कारश्च ३चर्चा संख्या विचारणा ॥
४⁂विमर्शो भावना चैव वासना च निगद्यते ।
५अध्याहारस्तर्क ऊहो ६विचिकित्सा तु संशयः ।
सन्देहद्वापरौ चाथ ७समौ निर्णयनिश्चयौ ॥ ३ ॥
८मिथ्यादृष्टिर्नास्तिकता व्यापादो ९द्रोहचिन्तनम् ।
१०समौ सिद्धान्तराद्धान्तौ ११भ्रान्तिर्मिथ्यामतिर्भ्रमः॥
१२संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः ।
अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः ॥ ५ ॥
१३मोक्षे धीर्ज्ञानमन्यत्र १४विज्ञानं शिल्पशास्त्रयोः ।

---

व्यापारस्य—सङ्कल्पाख्यस्य एकम् नाम पुंसि । (१) त्रीणि समाधानस्य, । ( सावधानता के ३ नाम हैं ) (२) द्वे नामनी मनसः सुखादौ तत्परतायाः । ( सुखादिमें मनके लगे रहने के २ नाम हैं ) (३) चर्चादित्रयम् प्रमाणैरर्थपरीक्षणस्य । (४) वासनायाः नामत्रयम् । (५) तर्कस्य त्रीणि नामानि । (६) संशयज्ञानस्य चत्वारि । तत्र विचिकित्सा स्त्रियाम् । (७) निश्चयज्ञानस्य नामद्वयं पुंसि । (८) नास्तिकताया नामद्वयम् । (९) द्वे नामनी परद्रोहचिन्तनस्य । (१०) द्वे सिद्धान्तस्य । (११) अयथार्थज्ञानस्य—भ्रान्तिज्ञानस्य त्रयम् । (१२) दशकम् अङ्गीकारस्य । तत्र संवित् आगूश्च स्त्रियाम्, शेषाः पुंसि । (१३) मोक्षोपयोगिबुद्धेरेकं नाम क्लीबे । (१४) शिल्पकलादिबुद्धेरेकं

१मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ॥ ६ ॥
मोक्षोऽपवर्गोऽथा२ज्ञानमविद्याहंमतिः स्त्रियाम् ।
३रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी ॥ ७ ॥
गोचरा इन्द्रियार्थाश्च ४हृषीकं विषयीन्द्रियम् ।
५कर्मेन्द्रियं तु पाय्वादि ६मनोनेत्रादि धीन्द्रियम् ॥ ८ ॥
७तुवरस्तु कषायोऽस्त्री ८मधुरो ९लवणः १०कटुः ।
११तिक्तोऽम्लश्च १२रसाः १३पुंसि तद्वत्सु षडमी त्रिषु ॥

---

नाम क्लीबे। (१) मोक्षस्य अष्टौ नामानि। तत्र मुक्तिः स्त्रियां, मोक्षापवर्गौ—पुंसि, शेषं क्लीबे। श्रेयः सान्तः। (२) अज्ञानस्य त्रीणि नामानि। अज्ञानं क्लीबे, शेषौ—स्त्रियाम्। (३) रूपादि-विषयाणां त्रीणि नामानि पुंसि। (४) त्रयं चक्षुरादेरिन्द्रियस्य। विषयि नान्तम्। (५) पायूपस्थादि कर्मेन्द्रियमुच्यते। आदिना वागादि। तदुक्तम्—पायूपस्थं पाणिपादौ वाक्चेतीन्द्रियसङ्ग्रहः। (६) एकं ज्ञानेन्द्रियाणाम्। तथाहि—मनः कर्णौ तथा नेत्रं रसना च त्वचा सह। नासिका चेति षट् तानि धीन्द्रियाणि प्रचक्षते। (७) द्वे कषायस्य। (दो कसाव के नाम हैं, जैसे हर्रे का) (८) एकं मधुररसस्य। (मीठा) (९) एकं लवणरसस्य (खारा) (१०) एकं कटुरसस्य। (कडुआ) (११) एकं तिक्तरसस्य। (तीता) (१२) एकम् अम्लरसस्य। (खट्टा) (१३) अमी तुवराद्याः यद्य-पि रसमात्रे वर्तमानाः पुंसि, तद्वत्सु—रसवत्सु वर्तमानास्त्रिषु वाच्य-

१विमर्दोत्थे परिमलो गन्धे जनमनोहरे।
२आमोदः सोऽतिनिर्हारी ३वाच्यलिङ्गत्वमागुणात् ॥
४समाकर्षी तु निर्हारी ५सुरभिर्घ्राणतर्पणः।
इष्टगन्धः सुगन्धिः स्यादामोदी ६मुखवासनः ॥ ११ ॥
७पूतिगन्धिस्तु दुर्गन्धो विस्रं ८स्यादामगन्धि यत्।
९शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः ॥ १२ ॥
अवदातः सितो गौरोऽवलक्षो धवलोऽर्जुनः।
१०हरिणः पाण्डुरः पाण्डुरीष१ ११त्पाण्डुस्तु धूसरः ॥१३॥
१२कृष्णे नीलासितश्यामकालश्याममेचकाः।

---

लिङ्गा इत्यर्थः। (१) परिमलः पुंसि एकम्—मनोहरस्य गन्धस्य। (द्व्य) (२) आमोदः—पुंसि एकम्—अत्यन्तमनोहरस्य परिमलस्य। (रूढ) (३) वक्ष्यमाणाद्गुणशब्दात्प्राक् वाच्यलिङ्गत्वम्—त्रिलिङ्गत्वम्। (४) द्वे दूरनिपातिनो गन्धद्रव्यस्य। (५) चत्वारि शोभनगन्धयुक्तस्य। (६) मुखवासनताम्बूलादेः द्वे नामनी त्रिषु। (पान के मसाले के २ नाम हैं) (७) दुर्गन्धस्य द्वे नामनी त्रिषु। (बदबू के २ नाम हैं) (८) अपक्वमांसादिगन्धस्य द्वे त्रिषु लिङ्गेषु। (कच्चे मांसकी गन्ध के २ नाम हैं) (९) त्रयोदश शुक्लवर्णस्य। (सफेद उजले के १६ नाम हैं) (१०) पीतमिश्रशुक्लस्य त्रीणि—त्रिषु। (११) द्वे ईषद्धवलस्य। (१२) कृष्णवर्णस्य सप्त नामानि त्रिषु लिङ्गेषु। (काले के ७ नाम

१पीतो गौरो हरिद्राभः २पालाशो हरितो हरित् ॥१४॥
३लोहितो रोहितो रक्तः ४शोणः कोकनदच्छविः ।
५अव्यक्तरागस्त्वरुणः ६श्वेतरक्तस्तु पाटलः ॥ १५ ॥
७श्यावः स्यात्कपिशो धूम्र८धूमलौ कृष्णलोहिते ।
९कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ ॥ १६ ॥
१०चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ।
११गुणे शुक्लादयःपुंसि १२गुणिलिङ्गास्तुतद्वति ॥१७॥
इति धीवर्गः ॥ ५ ॥

## अथ शब्दादिवर्गः ॥ ६ ॥

१३ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती ।

---

हैं ) ( १ ) पीतस्य हरिद्राभस्य त्रीणि त्रिषु लिङ्गेषु । ( **पीले के ३ नाम हैं** ) ( २ ) हरितवर्णस्य त्रीणि त्रिषु । ( **हरे के ३ नाम हैं** ) ( ३ ) त्रीणि रक्तवर्णस्य नामानि त्रिषु । (**लाल के ३ नाम हैं**) ( ४ ) अत्यन्तरक्तस्य द्वे नामनी त्रिषु । (**गहरालाल के २ नाम हैं**) ( ५ ) ईषद्रक्तस्य द्वे त्रिषु । ( **गुलाबी के २ नाम हैं** ) ( ६ ) श्वेतरक्तस्य नामद्वयम् । ( ७ ) धूसरारुणवर्णस्य द्वे । ( ८ ) कृष्णमिश्रलोहितवर्णस्य त्रयम् । ( ९ ) पिङ्गलवर्णस्य षट्कम् । ( १० ) षट्कं कर्बुरस्य विचित्रवर्णस्येत्यर्थः । ( **चितकबरेके ६ नाम हैं** ) ( ११ ) शुक्लादयः गुणे-गुणमात्रे वर्तमानाः पुंसि । ( १२ ) **तद्वति**-गुणवति वस्तुनि वर्तमाना गुणिलिङ्गाः-अभिधेयलिङ्गाः । **इति धीवर्गः**।

( १३ ) सरस्वत्याः सप्त नामानि स्त्रियाम् ।

१व्याहार उक्तिर्लपितं भाषितं वचनं वचः ॥ १ ॥
२अपभ्रंशोऽपशब्दः स्याच्छा ३स्त्रे शब्दस्तु वाचकः ।
४तिङ्सुबन्तचयो वाक्यं ५क्रिया वा कारकान्विता ॥
६श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु७ तद्विधिः ।
८स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी९ ॥ ३ ॥
१०शिक्षेत्यादि श्रुतेरङ्गमोङ्कार११प्रणवौ समौ ।

---

(१) षड् भाषणस्य। तत्र उक्तिः स्त्रियाम्। व्याहारः पुंसि। शेषाःक्लीबे। **(बोलने के ६ नाम हैं)** (२) अपभ्रंशस्य द्वे नामनी पुंसि। (३) शास्त्रे व्याकरणादौ यो वाचकः स शब्द उच्यते। (४) तिङ्सुबन्तचयः— तिङन्तसुबन्तपदसमूहो वाक्यम्। यथा—तिङन्तचयः—'पचति भवति'। सुबन्तचयः—'प्रकृतिसिद्धमिदं हि महात्मनाम्' इत्यादि। (५) कारकान्विता—कारकैः सम्बद्धा क्रिया वाक्यमुच्यते। यथा—देवदत्त गामभिरक्ष शुक्लदण्डेन। (६) चत्वारि वेदस्य नामानि। तत्र श्रुतित्रयीशब्दौ स्त्रियाम्। आम्नायः पुंसि। (७) तद्विधिः—वैदिको विधिर्यागादि धर्म इत्युच्यते। (८) वेदत्रयस्य प्रत्येकं नामैकैकम्। तत्र ऋक् चान्तः स्त्री, साम—नान्तः क्लीबे, यजुः षान्तः क्लीबे। (९) त्रयी इति वेदत्रयस्यैकं नाम स्त्रियाम्। (१०) शिक्षा कल्पो व्याकरणमित्यादि वेदस्याङ्गं ज्ञेयम्। शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः। छन्दोविचितिरित्येष षडङ्गो वेद उच्यते। (११) द्वे प्रणवस्य पुंसि।

१इतिहासः पुरावृत्तमुदात्ताद्यास्त्रयः २स्वराः ॥ ४ ॥
३आन्वीक्षिकी ४दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः ।
५आख्यायिकोपलब्धार्था पुराणं ६पञ्चलक्षणम् ॥ ५ ॥
७प्रबन्धकल्पना कथा प्रवह्लिका ८प्रहेलिका ।
९स्मृतिस्तु धर्मसंहिता १०समाहृतिस्तु संग्रहः ॥ ६ ॥
११समस्या तु समासार्था किंवदन्ती१२ जनश्रुतिः ।
१३वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वयः१४ ॥ ७ ॥

---

( १ ) इतिहासस्य द्वे नामनी। तत्र पुरावृत्तं क्लीबे। ( २ ) उदात्तः, अनुदात्तः, स्वरित इति त्रयः स्वराः। ( ३ ) आन्वीक्षिकीत्येकं तर्कविद्यायां गौतमादिप्रणीतायाम्। ( ४ ) दण्डनीतिरर्थशास्त्रे। ( ५ ) उपलब्धार्था—सत्यार्थविषयिणी कथा आख्यायिका। **( सच्ची कहानी )** ( ६ ) यत्पञ्चलक्षणं तत्पुराणमुच्यते, यथा—सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरितं चैव पुराणं पञ्चलक्षणम्। ( ७ ) प्रबन्धस्य-वाक्यविस्तरस्य या कल्पना सा कथा, एकं नाटकरामायणादेः। ( ८ ) द्वे प्रहेलिकायाः। **( पहेली बुझौवल के २ नाम हैं )** ( ९ ) मन्वादिधर्मशास्त्रस्य द्वे नामनी। **( मन्वादिधर्मशास्त्र के २ नाम हैं )** ( १० ) द्वे सङ्ग्रहस्य तत्र समाहृतिः स्त्रियाम्। **( सङ्ग्रहग्रन्थ के २ नाम हैं )** ( ११ ) समस्यायाः द्वे नामनी स्त्रियाम्। ( १२ ) द्वे नामनी लोकप्रवादस्य। ( १३ ) समाचारस्य चत्वारि नामानि। आद्यौ द्वौ स्त्रियाम्, अन्त्यौ पुंसि। **( हाल चाल के ४ नाम हैं )** ( १४ ) षट्कं नाम्नः।

आख्याह्वे अभिधानं च नामधेयं च नाम च ।
१हूतिराकारणाऽऽह्वानं २संहूतिर्बहुभिः कृता ॥ ८ ॥
३विवादो व्यवहारः स्यादुपन्यासस्तु४ वाङ्मुखम् ।
५उपोद्धात उदाहारः ६शपनं शपथः पुमान् ॥ ९ ॥
७प्रश्नोऽनुयोगः पृच्छा च ८प्रतिवाक्योत्तरे समे ।
९मिथ्याभियोगोऽभ्याख्यानमथ१०मिथ्याभिशंसनम् ॥
अभिशापः प्रणादस्तु११ शब्दः स्यादनुरागजः ।
१२यशःकीर्तिःसमज्ञा च स्तवः१३स्तोत्रं स्तुतिर्नुतिः ॥११॥
१४आम्रेडितं द्विस्त्रिरुक्तमुच्चैर्घुष्टं१५ तु घोषणा ।
१६काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः ।१२।

---

( १ ) त्रयम् आह्वानस्य । ( २ ) या बहुभिः कृता हूतिः सा संहूतिः एकम् । ( ३ ) द्वे ऋणादिविवादस्य पुंसि । ( **मुकदमा के २ नाम हैं** ) ( ४ ) द्वे वचनारम्भस्य । ( ५ ) द्वे वक्ष्यमाणार्थोपयोग्यर्थवर्णनस्य । ( ६ ) द्वे शपथस्य । ( **दो कसम के नाम हैं** ) ( ७ ) त्रयं प्रश्नस्य । तत्र पृच्छा स्त्रियाम् । ( **सवाल के ३ नाम है** ) ( ८ ) द्वे प्रतिवचनस्य क्लीबे । ( **जवाब के २ नाम हैं** ) ( ९ ) द्वे मिथ्याभियोगस्य । ( **झूठा मुकदमा के २ नाम हैं** ) ( १० ) द्वे सुरापानादिमिथ्यापापोद्भावनस्य । ( **झूठे कलङ्क के २ नाम है** ) ( ११ ) अनुरागजः—गुणानुरागोत्थः शब्दः प्रणादः इत्युच्यते एकम् । ( १२ ) त्रयं कीर्तेः । ( १३ ) चत्वारि स्तुतेः । ( १४ ) द्विवारं त्रिवारं चोक्तम् आम्रेडितमुच्यते । ( १५ ) द्वे उच्चैर्घोषस्य । तत्र घोषणा स्त्रियाम् । ( १६ ) भीतिशोकादिना विकृतस्य

१अवर्णाऽऽक्षेपनिर्वादपरीवादापवादवत् ।
उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ॥१३॥
२पारुष्यमतिवादः स्याद्भर्त्सनं३ त्वपकारगीः ।
४यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् ॥१४॥
तत्र ५त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति ।
६स्यादाभाषणमालापः ७प्रलापोऽनर्थकं वचः ॥१५॥
८अनुलापो मुहुर्भाषा विलापः९ परिदेवनम् ।
१०विप्रलापो विरोधोक्तिः संलापो११भाषणं मिथः ॥१६॥
१२सुप्रलापः सुवचनमपलापस्तु१३ निह्नवः ।
१४*चोद्यमाक्षेपाभियोगौ १५शापाक्रोशौ दुरेषणा ।

---

शब्दविशेषस्य पर्कं नाम स्त्रियाम्। ( १ ) निन्दाया दश नामानि । अद्याः षट् पुंसि । त्रयः स्त्रियाम् । गर्हणं क्लीबे । ( २ ) द्वे निष्ठुर-भाषणस्य । ( ३ ) 'घातयिष्यामि' इत्यादिभयदर्शकवाक्यस्य द्वे । ( ४ ) निन्दायुक्तभाषणस्यैकम् । यथा—बन्धकीसुतस्य तवोचितमेवेद-मिति । ( ५ ) परस्त्रीपुरुषसंयोगेन निमित्तेन य आक्रोशस्तत्र आक्षा-रणेत्येकम् क्लीबमपि । ( ६ ) द्वे अन्योन्यसम्बोधनपूर्वकभाषणस्य । ( ७ ) अनर्थकवचनस्य एकम् । ( ८ ) द्वे बहुशो भाषणस्य । ( ९ ) द्वे रोदनपूर्वकभाषणस्य । ( १० ) द्वे अन्योन्यविरुद्धभाषणस्य । ( ११ ) परस्परं भाषणस्यैकम् । ( १२ ) द्वे सुभाषितस्य । ( १३ ) द्वे गोपनकारिवचनस्य । (१४) चोद्यादित्रयमद्भुतप्रश्नस्य । (१५)शा-

*अस्त्री १चाटुचटुश्लाघा प्रेम्णा मिथ्या विकत्थनम् ।
२सन्देशवाग्वाचिकं स्याद्वाग्भेदास्तु त्रिषूत्तरे३ ॥ १७ ॥
४रुशती वागकल्याणी स्यात्कल्या५ तु शुभात्मिका ।
६अत्यर्थमधुरं सान्त्वं सङ्गतं७ हृदयङ्गमम् ॥ १८ ॥
८निष्ठुरं परुषं ९ग्राम्यमश्लीलं १०सूनृतं प्रिये ।
सत्येऽथ ११सङ्कुलक्लिष्टे परस्परपराहते ॥ १९ ॥
१२लुप्तवर्णपदं ग्रस्तं निरस्तं१३ त्वरितोदितम् ।
१४अम्बूकृतं सनिष्ठीवमबद्धं१५ स्यादनर्थकम् ॥ २० ॥
१६अनक्षरमवाच्यं स्यादाहतं१७ तु मृषार्थकम् ।

---

पादित्रयं शापवचनस्य । ( १ ) चाटु इत्यादि त्रयं प्रेम्णा मिथ्याभाषणस्य । ( २ ) द्वे दूतादिमुखेन सन्दिश्यमानवचनस्य । ( ३ ) अतः परं वक्ष्यमाणाः वाग्भेदाः रुशत्यादयः सम्यगन्तास्त्रिषु त्रिलिङ्गाः । ( ४ ) द्वे अकल्याणवचनस्य । ( तीखे बूरे वचन के २ नाम है ) ( ५ ) द्वे शुभवचनस्य । ( ६ ) सान्त्ववचनस्यैकम् त्रिषु । ढाढस देने का १ नाम है ) ( ७ ) द्वे युक्तिवचनस्य । ( ८ ) द्वे कठोरवचनस्य । ( ९ ) द्वे अश्लीलवचनस्य । ( गाली गलौज आदि के २ नाम है ) ( १० ) प्रियसत्यवचनस्यैकम् त्रिषु । ( ११ ) त्रयं परस्परविरुद्धार्थवचनस्य त्रिषु । ( १२ ) द्वे लुप्तवर्णपदस्य वचसः नामनी त्रिषु । ( १३ ) शीघ्रोच्चारितवचसो द्वे नामनी त्रिषु । ( १४ ) सनिष्ठीवं लालायुक्तं तदम्बूकृतमुच्यते । ( १५ ) यदनर्थकम्—अथ शून्यं तदबद्धं स्यात् एकम् । ( १६ ) द्वे वक्तुमनर्हस्य वचसः । ( १७ ) मिथ्यावचनस्यैकं त्रिषु ।

१*सोल्लुण्ठनं तु सोत्प्रासं २भणितं रतिकूजितम्।
३*श्राव्यं हृद्यं मनोहारि विस्पष्टं प्रकटोदितम्।
अथ ४म्लिष्टमविस्पष्टं ५वितथं त्वनृतं वचः॥ २१॥
६सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति।
७शब्दे निनादनिनदध्वनिध्वानरवस्वनाः॥ २२॥
स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः।
आरवारावसंरावविरावा अथ मर्मरः॥ २३॥
८स्वनिते वस्त्रपर्णानां भूष९णानां तु शिञ्जितम्।
१० निक्काणो निक्कणः क्काणः क्कणः क्कणनमित्यपि॥२४॥
११ वीणायाः क्कणिते १२प्रादेः प्रक्काणप्रक्कणादयः।

---

(१) द्वे सोपहासवचनस्य। (२) द्वे रतिसमयकूजितस्य नामनी त्रिषु। (३) श्राव्यादि पञ्च स्पष्टवचनस्य। (**स्पष्टवचन के ५ नाम है**) (४) द्वे द्वे अव्यक्तवचनस्य। (**अस्पष्टवचन के २ नाम है**) (५) द्वे असत्यवचनस्य। (६) चत्वारि सत्यस्य (**सत्यवचन के ४ नाम है**) (७) अमूनि सत्यादीनि चत्वारि, तद्वति—सत्यादिगुणवति पुरुषादौ वर्तमानान्येव त्रिषु। (८) सप्तदश शब्दमात्रस्य (**शब्द के १७ नाम है**) (९) वस्त्रपर्णानां शब्दे 'मर्मरः' इत्येकम्। (१०) एकं भूषणध्वनेः। (**गहने की झनकार का १ नाम है**) (११) वीणादिध्वनेः पञ्च। (१२) प्रादेरुपसर्गात् ये प्रक्काणः प्रक्कण इत्यादयस्ते वीणाया एव क्कणिते नान्यत्र।

१कोलाहलः कलकलस्तिरश्चां २वाशितं रुतम् ॥२५॥
स्त्री ३प्रतिश्रुत्प्रतिध्वाने ४गीतं गानमिमे समे ।

इति शब्दादिवर्गः ॥ ६ ॥

## अथ नाट्यवर्गः ॥ ७ ॥

१निषादर्षभगान्धारषड्जमध्यमधैवताः ।
पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥ १ ॥
२काकली तु कले सूक्ष्मे ३ध्वनौ तु मधुरास्फुटे ।
कलो मन्द्रस्तु ४गम्भीरे ५तारोऽत्युच्चैस्त्रयस्त्रिषु ॥२॥
*नृणामुरसि मध्यस्थो द्वाविंशतिविधो ध्वनिः ।
*स मन्द्रः कण्ठमध्यस्थस्तारः शिरसि गीयते ॥
६समन्वितलयस्त्वेकतालो ७वीणा तु वल्लकी ।
विपञ्ची सा तु तन्त्रीभिः सप्तभिः ८परिवादिनी ॥३॥

---

(१) कोलाहलस्य द्वे नामनी। ( हौरा के २ नाम है ) (२)पक्षिध्वनेः एकम् । ( ३ ) प्रतिध्वनेः द्वे नामनी । तत्र प्रतिश्रुत् स्त्रियाम् । ( ४ ) द्वे गायनस्य क्लीबे । इति शब्दादिवर्गः ॥

( १ ) सप्तस्वराणामेकैकम् । ( २ ) एकं सूक्ष्मध्वनेः स्त्रियाम् । ( मधुरध्वनिका १ नाम है ) ( ३ ) अव्यक्तमधुरध्वनेः एकम् त्रिषु । ( ४ ) गम्भीरध्वनेरेकम् । ( ५ )अत्युच्चैर्ध्वनेरेकम् कल—मन्द्र—तार इति त्रयः त्रिषु लिङ्गेषु । ( ६ ) गीतवाद्यलयसाम्यस्य एकम् पुंसि । ( ७ ) वीणायाः त्रीणि नामानि स्त्रियाम् ( वीणा के ३ नाम है ) ( ८ ) सप्ततन्त्रीयुतायाः

१ततं वीणादिकं वाद्यमा२नद्धं मुरजादिकम् ।
३वंशादिकं तु सुषिरं ४कांस्यतालादिकं घनम् ॥४॥
५चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ।
६मृदङ्गा मुरजा ७भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयः ॥५॥
स्याद्यशः८पटहो ढक्का ९भेरी स्त्री दुन्दुभिः पुमान् ।
१०आनकः पटहोऽस्त्री ११ स्यात्कोणो वीणादिवादनम्॥६॥
१२वीणादण्डः प्रवालः स्यास्क१३कुभस्तु प्रसेवकः ।

---

वीणाया एकम् (सितार का १ नाम है)। (१) यत् वीणादिकं वाद्यं तत्ततमुच्यते। (२) यन्मुरजादिकं मृदङ्गादिकं तत् 'आनद्धम्' इत्युच्यते। (३) वंशादि वाद्यस्यैकं–क्लीबे। (अलगोजा–वंशी का नाम है) (४) कांस्यतालादेरेकं नाम क्लीबे। (५) चतुर्विधवाद्यमात्रस्य त्रीणि क्लीबे। (६) द्वे मृदङ्गस्य। (७) वाद्यभेदस्यैकैकम्। तथाहि—"हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वकः। आलिङ्ग्यश्चैव गोपुच्छसमानः परिकीर्तितः" इति। (८) यशःपटहस्य द्वे नामनी। (नगारा के २ नाम है) (९) त्रयं भेर्याः। भेरी स्त्रियाम्। शेषौ पुंसि। (१०) द्वयं पटहस्य, तत्र पटहः क्लीबपुंसोः। (तासा के २ नाम है) (११) धनुराकृतेः वीणावादनसाधनस्य द्वे। (सारङ्गी बजाने का धनुषाकारडण्डा) (१२) वीणादण्डस्य द्वे नामनी। (१३) द्वे वीणादण्डादधो दारु-

१कोलम्बकस्तु कायोऽस्या२उपनाहो निबन्धनम् ॥ ७ ॥
३वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः ।
मर्दलः पणवोऽन्ये च ४नर्तकीलासिके समे ॥ ८ ॥
५विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ।
६तालः कालक्रियामानं लयः७साम्यमथास्त्रियाम् ॥ ९ ॥
८ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने ।
९तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् ॥ १० ॥
१०भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः ।
स्त्रीवेषधारीपुरुषो११नाट्योक्तौ१२गणिकाऽज्जुका११
१३भगिनीपतिरावुत्तो १४भावो विद्वानथावुकः ।

---

मयं भाण्डं चर्मणाच्छाद्यते तस्य । ( १ ) तन्त्रीहीनवीणाशरीरस्यैकं पुंसि । **( विना तार चढ़ा वीणा का १ नाम है )** ( २ ) यत्र वीणाप्रान्ते तन्त्र्यो निबध्यन्ते तस्यैकम । ( ३ ) वाद्यविशेषाणामेकैकम् । ( ४ ) नर्तक्याः द्वे नामनी । **( नाचने वाली के २ नाम हैं )** ( ५ ) विलम्बितनृत्यगीतवाद्यं तत्त्वम् । द्रुतं नृत्यगीतादिः—ओघः । मध्यं नृत्यगीतादि–घनमित्युच्यते । ( ६ ) तालस्यैकं नाम । ( ७ ) एकं गीततन्त्रीलयस्य । ( ८ ) षट्कं नृत्यस्य । तत्र ताण्डवम् अस्त्रियाम । **( नाचने के ६ नाम हैं )** ( ९ ) द्वयम् नृत्यगीतवाद्यस्य । **( नाचना गाना और बजाना इन तीनों के समुदाय के २ नाम हैं )** ( १० ) त्रयम्—स्त्रीवेषधारिनर्तकस्य । ( ११ ) नाट्योक्तौ–नाट्यप्रकरणे अधिकारोऽयम्, प्रागङ्कारात । (१२) नाट्योक्तौ—गणिका 'अज्जुका' ज्ञेया । ( १३ ) नाट्योक्तौ–भगिनीपतिः–'आवुत्तः–इत्युच्यते । ( १४ ) नाट्य–विद्वान्–'भावः' इति ।

१जनको युवराजस्तु २कुमारो भर्तृदारकः ॥ १२ ॥
३राजा भट्टारको देवस्तत्सुता ४भर्तृदारिका ।
५देवी कृताभिषेकायामितरासु तु ६भट्टिनी ॥ १३ ॥
७अब्रह्मण्यमवध्योक्तौ राजश्यालस्तु८ राष्ट्रियः ।
९अम्बा माताथ बाला१०स्याद्वासूरार्यस्तु११मारिषः १४
१२अत्तिका भगिनी ज्येष्ठा १३निष्ठानिर्वहणे समे ।
१४हण्डे हञ्जे हलाऽऽह्वाने नीचां चेटीं सखींप्रति ॥१५॥
१५अङ्गहारोऽङ्गविक्षेपो १६व्यञ्जकाभिनयौ समौ ।
१७निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके ॥१६॥

---

(१)नाट्ये पिता–'आवुकः' इति कथ्यते। (२)नाट्ये–युवराजः–कुमारः-'भर्तृदारकः' इति चोच्यते। (३) नाट्योक्तौ राज्ञः द्वे। (४) नाट्योक्तौ राजपुत्र्याः एकम्। (५) नाट्योक्तौ–राज्ञ्यः एकम्। (६) इतरासु राज्ञीषु भट्टिनीत्येकम्। (७) नाट्योक्तौ–नार्हं वध्यः इत्यादिप्रार्थनायाम्–'अब्रह्मण्यम्' इत्येकं नाम। (८) नाट्योक्तौ–राजश्यालस्य एकम्। (९) नाट्योक्तौ–एकं मातुः। (१०) बाला वासु इति द्वे कुमार्याः नाट्योक्तौ। (११) नाट्योक्तौ–मान्यस्य एकम्। (१२) ज्येष्ठभगिन्या एकम्। (१३) नाट्योक्तौ–निर्वहणाख्यस्य सन्धेः द्वे। तत्र निष्ठा स्त्रियाम्, निर्वहणं क्लीबे (१४) नीचां प्रत्याह्वाने हण्डे इत्येकम्। चेटीं प्रत्याह्वाने 'हञ्जे' इत्येकम्। सखीं प्रत्याह्वाने हला इति। अमूनि त्रीणि अव्ययानि। (१५) द्वे नृत्यविशेषस्य। (१६) द्वे हस्तादिभिर्मनोगतार्थप्रकाशनस्य। (१७) अङ्गेन निर्वृत्तं भ्रूविक्षेपादि आङ्गिकम्।

१शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ।
बीभत्सरौद्रौच रसाः शृङ्गारः२ शुचिरुज्ज्वलः ॥ १७ ॥
३उत्साहवर्धनो वीरः ४कारुण्यं करुणा घृणा ।
कृपा दयानुकम्पा स्यादनुक्रोशोऽप्यथो५हसः ॥ १८ ॥
हासो हास्यं च बीभत्सं ६विकृतं त्रिष्विदं द्वयम् ।
७विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम्८ ॥१९ ॥
दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् ।
भयङ्करं प्रतिभयं रौद्रं ९तूग्रममी१० त्रिषु ॥ २० ॥
चतुर्दश११दरस्त्रासो भीतिर्भीः साध्वसं भयम् ।
१२विकारो मानसो भावोऽनुभावो१३भावबोधकः॥२१॥
१४गर्वोऽभिमानोऽहङ्कारो १५मानश्चित्तसमुन्नतिः ।

---

सत्वेन—अन्तःकरणेन निष्पन्नं स्वेदरोमाञ्चादि सात्विकम् । इयं त्रिषु लिङ्गेषु । ( १ ) शृङ्गारादीनाम् अष्टानां रसानामेकैकम् । ( २ ) त्रयं शृङ्गारस्य । ( ३ ) बीररसस्य द्वे नामनी । ( ४ ) करुणरसस्य सप्त । ( ५ ) त्रीणि हास्यरसस्य । ( ६ ) द्वे बीभत्सरसस्य त्रिषु लिङ्गेषु । ( ७ ) अद्भुतरसस्य चत्वारि नामानि त्रिषु । ( ८ ) नवकं भयानकस्य । ( ९ ) द्वे रौद्रस्य । ( १० ) अमी अद्भुतादय उग्रान्ताश्चतुर्दश शब्दाः तद्वति त्रिषु वाच्यलिङ्गाः । ( ११ ) षट्कं भयस्य । ( १२ ) मनोविकारस्य एकम् । ( १३ ) चित्तविकारप्रकाशकस्य कटाक्षादेः एकम् । ( १४ ) त्रयं गर्वस्य पुंसि । (१५) मा-

१*दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः।
२अनादरः परिभवः परीभावस्तिरस्क्रिया ॥ २२ ॥
रीढावमाननावज्ञावहेलनमसूर्क्षणम्।
३मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सा४पत्रपान्यतः ॥२३॥
५क्षान्तिस्तितिक्षाभिध्या६तु परस्य विषये स्पृहा।
७अक्षान्तिरीर्ष्यासूया तु दोषारोपो गुणेष्वपि ॥२४॥
८वैरं विरोधो विद्वेषो मन्यु१०शोकौ तु शुक्स्त्रियाम।
११पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि ॥ २५ ॥
१२कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ।
१३शुचौ तु चरिते शीलमुन्माद१४श्चित्तविभ्रमः ॥२६॥

---

नस्य द्वे। गर्वादयः पञ्चापि पर्याया इति युक्तं भाति। (१) दर्पादि षट्कं मदस्य। (घमण्ड के ६ नाम है) (२) अनादरस्य नव नामानि। तत्र रीढादयः क्लीबे (३) पञ्च लज्जायाः। स्त्रियाम्। (४) सा लज्जा अन्यतः—परस्मात् चेद् 'अपत्रपा' इति एकम्। (५) क्षमायाः द्वे। (६) परकीयधनापहरणेच्छाया एकम् स्त्रियाम् (७) द्वे पराभ्युदयासहनस्य (८) गुणेष्वपि दोषारोपः असूया एकम्। (९) त्रयं वैरस्य। (१०) त्रयं शोकस्य, तत्र शुक् चान्तः स्त्रियाम्। (११) त्रयं पश्चात्तापस्य। (१२) सप्तकं क्रोधस्य। तत्र रुट् षान्तः स्त्रियाम्। क्रुध् धान्तः स्त्रियाम्। शेषाः शब्दाः पुंसि। (१३) शुद्धचरितस्यैकम् क्लीबे। (१४) द्वे चित्तभ्रमस्य (पागलपन के २ नाम हैं)

१प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदम्[२] ।
इच्छा काङ्क्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः॥२७॥
कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं ३लालसा द्वयोः ।
४उपाधिर्ना धर्मचिन्ता ५पुंस्याधिर्मानसी व्यथा ॥२८॥
स्याच्चिन्ता ६स्मृतिराध्यानमुत्कण्ठोत्कलिके समे[७] ।
८उत्साहोऽध्यवसायः स्यात्स ९वीर्यमतिशक्तिभाक् ॥२९॥
१०कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे ।
कुसृतिर्निकृतिः शाठ्यं ११प्रमादोऽनवधानता ॥ ३० ॥
१२कौतूहलं कौतुकं च कुतुकं च कुतूहलम् ।
स्त्रीणां १३विलासविब्वोकविभ्रमा ललितं तथा ॥३१॥
हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः ।

---

( १ ) पञ्च प्रेम्णः । तत्र प्रेमशब्दः पुंसि क्लीबे च नान्तः, प्रियता स्त्रियाम् । ( २ ) द्वादश स्पृहायाः । ( ३ ) एकम् अतिप्रीतेः स्त्रीपुंसयोः । ( ४ ) द्वे धर्मचिन्तनस्य, तत्र उपाधिः पुंसि । ( ५ ) द्वे मनःपीडायाः । तत्राधिः पुंसि । ( ६ ) त्रयं स्मरणस्य । तत्राध्यानं क्लीबे । ( ७ ) द्वे उत्कण्ठायाः स्त्रियाम् । ( ८ ) द्वे उत्साहस्य । ( ९ ) अत्यन्ताध्यवसायस्यैकम् क्लीबे । ( १० ) नव शाठ्यस्य, तत्र कपटोऽस्त्रियाम् । छद्म नान्तं क्लीबे । शेषं सुगमम् । ( ११ ) द्वे अनवधानतायाः, ( असावधानी के २ नाम हैं ) ( १२ ) चत्वारि कौतुकस्य क्लीबे । ( १३ ) शृङ्गाररससमुद्भूताः स्त्रीणां क्रियाः–चेष्टाः

१द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च ॥ ३२ ॥
२व्याजोऽपदेशो लक्ष्यं च ३क्रीडा खेला च कूर्दनम् ।
४घर्मो निदाघः स्वेदः स्यात्प्रलयो५ नष्टचेष्टता ॥३३॥
६अवहित्थाऽऽकारगुप्तिः समौ ७संवेगसंभ्रमौ ।
८स्यादाच्छुरितकं हासः सोत्प्रासः ९समनाक्स्मितम् ॥
मध्यमः १०स्याद्विहसितं ११रोमाञ्चो रोमहर्षणम् ।
१२क्रन्दितं रुदितं क्रुष्टं जृम्भस्तु १३त्रिषुजृम्भणम् ॥३५॥
१४विप्रलम्भो विसंवादो १५रिङ्गणं स्खलनं समे ।

---

विलासादिकाः षट् अमी हावा उच्यन्ते एकैकम् । (१) नामषट्कं क्रीडामात्रस्य । तत्र केलिः पुंसि । ( उपहास—खिलवाड के ६ नाम है ) (२) त्रयं स्वरूपाच्छादनस्य । ( बहाना करने के ३ नाम है ) (३) त्रयं बाललीलायाः । ( लड़कपन के खेल के ३ नाम हैं ) (४) त्रयं स्वेदस्य । ( पसीने के ३ नाम हैं ) (५) मूर्च्छायाः द्वे । (६) आकारगोपनस्य द्वे । (७) द्वे हर्षादिना कर्मसु त्वरणस्य । (८) अमर्षजनकहासस्य एकम् । ( उपहासका १ नाम है ) (९) ईषद्धासस्य एकम् क्लीबे । ( मुसकाने का १ नाम है ) (१०) एकम् मध्यमहासस्य । (११) द्वे रोमोद्गमस्य । (१२) त्रीणि रुदितस्य । ( रोने के ३ नाम है ) (१३) द्वे जृम्भिकायाः । ( जंभाई के २ नाम है ) तत्र जृम्भस्त्रिषु । (१४) द्वे वञ्चनायुक्तभाषणस्य । ( ठगपने से बात करने के २ नाम है ) (१५) द्वे स्वधर्मादिस्खलनस्य, पिच्छिलादौ

१स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ॥३६॥
२तन्द्री प्रमीला ३भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम् ।
४अदृष्टिः स्यादसौम्येऽक्ष्णि ५संसिद्धिप्रकृती त्विमे ॥३७॥
स्वरूपं च स्वभावश्च निसर्गश्चाथ ६वेपथुः ।
कम्पोऽथ ७क्षण उद्धर्षो मह उद्धव उत्सवः ॥ ३८ ॥

इति नाट्यवर्गः ॥ ७ ॥

## अथ पातालभोगिवर्गः ॥ ८ ॥

८अधोभुवनपातालं बलिसद्म रसातलम् ।
नागलोकोऽथ ९कुहरं शुषिरं विवरं बिलम् ॥ १ ॥
छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः ।

---

पतनस्य, बालानां हस्तपादगमनस्य वेति मतत्रयम् । (१) पञ्चकं निद्रायाः । ( **सोने के ५ नाम हैं** ) (२) द्वे तन्द्रायाः । ( **तन्द्रा हरारत के २ नाम हैं** ) (३) त्रयं क्रोधादिजनितभ्रूलतायाः । (४) क्रूरदृष्टेः एकम् स्त्रियाम् । ( **टेढी नजरका १ नाम है** ) (५) स्वभावस्य पञ्च नामानि । तत्र संसिद्धिप्रकृती—स्त्रियाम् । (६) कम्पस्य द्वे नामनी । (७) उत्सवस्य पञ्च नामानि । सर्वे पुंसि । ( **जलसा–उत्सव के ५ नाम हैं** ) **इति नाट्यवर्गः ।**

(८) पातालस्य पञ्च नामानि । तत्र नागलोकः पुंसि । शेषाः क्लीबे, बलिसद्म नान्तम् । (९) बिलस्य छिद्रमात्रस्य एकादश नामानि । तत्र वपा स्त्रियाम्, शुषिरस्त्रियामिकारान्तः, शेषाः

१गर्तावटौ भुवि श्वभ्रे२सरन्ध्रे शुषिरं त्रिषु ॥ २ ॥
३अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः ।
४ध्वान्ते गाढेऽन्धतमसं ५क्षीणेऽवतमसं तमः ॥३॥
६विष्वक्संतमसं नागाः ७काद्रवेयास्तदीश्वराः ।
८शेषोऽनन्तो ९वासुकिस्तु सर्पराजोऽथ १०गोनसे॥४॥
तिलित्सः ११स्यादजगरे शयुर्वाहस इत्युभौ ।
१२ अलगर्दो जलव्यालः समौ १३राजिलडुण्डुभौ ॥५॥
१४मालुधानो मातुलाहिर्निर्मुक्तो १५मुक्तकञ्चुकः ।
१६सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः ॥ ६ ॥

---

क्लीबे (१) भुवि यत् श्वभ्रं तत्र गर्तोऽवट इति द्वयम् । (२) एकं सरन्ध्रे वस्तुनि । (३) पञ्चकमन्धकारस्य । तत्र अन्धकारोऽस्त्रियाम्, शेषाः क्लीबे । तमस् सान्तः क्लीबे । (४) एकं गाढान्धकारस्य क्लीबे । (५) क्षीणान्धकारस्यैकं क्लीबे । (६) सर्वतो व्याप्तस्य तमस एकम् । (७) द्वे नागानाम् । (८) नागानामीशस्य द्वयम् । (९) नागराजस्य द्वे नामनी । (१०) द्वे तिलित्साख्यसर्पभेदस्य । (११) त्रयम् अजगरस्य । **(अजगर के ३ नाम हैं)** (१२) द्वे जलसर्पस्य । (१३) द्वे द्विमुखसर्पस्य । **(दुमुहां सांप के २ नाम हैं)** (१४) द्वे खट्वाकारचित्रसर्पस्य । (१५) त्यक्तकञ्चुकस्य द्वे नामनी । (१६) पञ्चविंशतिः सर्पस्य । प्रक्षिप्तैः सह त्रयस्त्रिंशत् । तत्र चक्रि-फणि-भोगि-कञ्चुकि-कुण्डलिनो नान्ताः पुंसि । गूढपात् दकारान्तः । चक्षुश्रवाः-सान्तः ।

आशीविषो विषधरश्चक्री व्यालः सरीसृपः ।
कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥ ७ ॥
दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः ।
उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥ ८ ॥
*लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा ।
*कुम्भीनसः फणधरो हरिर्भोगधरस्तथा ।
१*अहेः शरीरं भोगः स्यादाशीर२प्यहिदंष्ट्रिका ।
३त्रिष्वाहेयं विषास्थ्यादि ४ स्फटायां तु फणा द्वयोः ।
समौ ५कञ्चुकनिर्मोकौ ६क्ष्वेडस्तु गरलं विषम् ॥९॥
पुंसि क्लीबे च ७काकोलकालकूटहलाहलाः ।
सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः ॥ १० ॥
दारदो वत्सनाभश्च विषभेदा अमी नव ।
८विषवैद्यो जाङ्गुलिको ९व्यालग्राह्यहितुण्डिकः ॥११॥

इति पातालभोगिवर्गः ॥ ८ ॥

---

( १ ) सर्पशरीरस्य एकम् । ( २ ) विषपूर्णदंष्ट्रायाः द्वे । **( सांप की विषैली दाढ के २ नाम हैं )** ( ३ ) यद् विषास्थ्यादि अहिभवं तत्, 'आहेयम्' इत्युच्यते एकम् । ( ४ ) फणायाः द्वे । **( फन के २ नाम हैं )** ( ५ ) द्वे सर्पत्वचः । **( सांप के केचुली के २ नाम हैं )** ( ६ ) त्रयं विषमात्रस्य । **( विष जहर के ३ नाम हैं )** ( ७ ) काकोलाद्याः नव स्थावरविषभेदाः । तत्र काकोलादित्रयं क्लीनपुंसोः । ( ८ ) द्वे विषहारवैद्यस्य ( ९ ) द्वे सर्पग्राहिणः ।

## अथ नरकवर्गः ॥ ९ ॥

१स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् ।
२तद्भेदास्तपनावीचिमहारौरवरौरवाः ॥ १ ॥
संघातः कालसूत्रं चेत्याद्याः ३सत्त्वास्तु नारकाः ।
प्रेता४वैतरणी सिन्धुः स्यादलक्ष्मी५स्तु निर्ऋतिः ॥२॥
६विष्टिराजूः कारणा तु ७यातना तीव्रवेदना ।
८पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम् ॥ ३ ॥
स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत् ।

इति नरकवर्गः ॥ ९ ॥

---

गारुडी के २ नाम है ) इति पातालभोगिवर्गः ॥

(१) चत्वारि नरकस्य । तत्र दुर्गतिः स्त्रियाम् । (२) नरकभेदानां प्रत्येकं पृथक् पृथक् नाम । 'अवीचि' इति च्छेदः, स च पुंसि । (३) नरके भवाः सत्वाः नारकाः प्रेताश्चेतिद्वयम् नरकवासिनां जन्तूनाम् । (४) एकं वैतरणीनद्याः । (५) द्वयम् अलक्ष्याः । (दुर्गति के २ नाम है) (६) नरके हठात् प्रक्षेपस्य द्वे । (नरक मे ढकलने के २ नाम हैं) (७) त्रयं नरकपीडायाः । (८) नव दुःखस्य । अत्र केचित्—पीडादि चतुष्कं मनःपीडायाः । आमनस्यादि द्वयं वैमनस्यस्य । कष्टादित्रयं शरीरपीडायाः । इति भेदमाहुः । एषां मध्ये यद्दुःखादिकं भेद्यगामि विशेष्यवृत्ति तत् त्रिषु । इति नरकवर्गः ॥

## अथ वारिवर्गः ॥ १० ॥

१समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः ।
उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः ॥ १ ॥
रत्नाकरो जलनिधिर्यादःपतिरपांपतिः ।
तस्य प्रभेदाः २क्षीरोदो लवणोदस्तथापरे ॥ २ ॥
३आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ।
पयः कीलालममृतं जीवनं भुवनं वनम् ॥ ३ ॥
कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।
अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बु शंवरम् ॥ ४ ॥
मेघपुष्पं घनरसस्त्रिषु द्वे ४आप्यमम्मयम् ।
५भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु ॥ ५ ॥
६महत्सूल्लोलकल्लोलौ स्यादा७वर्तोऽम्भसां भ्रमः ।

---

(१) पञ्चदश समुद्रमात्रस्य। (समुद्र के १५ नाम है) (२) समुद्रभेदानामेकैकम् पुंसि। (३) सप्तविंशतिर्जलस्य। तत्र अपः स्त्रियां बहुत्वे च नित्यम्। वाः रेफान्तः। पयोऽम्भः पाथोऽर्णः-शब्दाः सान्ताः क्लीबे। घनरसः पुंसि। शेषाः क्लीबे। (४) द्वे जलविकारस्य त्रिषु। (बर्फ, शरबत आदि के २ नाम है) (५) चत्वारि तरङ्गस्य। तत्र भङ्गतरङ्गौ पुंसि। ऊर्मिवीचिशब्दौ स्त्रियां पुंसि च। (लहर, तरङ्ग के ४ नाम है) (६) द्वयम् महातरङ्गस्य। (७) एकं जलावर्तस्य ('चकोर'—पानी के घूमने

१पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम् ॥६॥
२चक्राणि पुटभेदाः स्युर्भ्रमाश्च जलनिर्गमाः ।
३कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ॥ ७ ॥
४पारावारे परार्वाची तीरे ५पात्रं तदन्तरम् ।
६द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ॥ ८ ॥
७तोयोत्थितं तत्पुलिनं सै८कतं सिकतामयम् ।
९निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ ॥ ९ ॥
१०जलोच्छ्वासाः परीवाहाः ११कूपकास्तु विदारकाः ।
१२नाव्यं त्रिलिङ्गं नौतार्ये स्त्रियां १३नौस्तरणिस्तरिः१०

---

**का १ नाम है )** ( १ ) चत्वारि जलबिन्दूनाम् । तत्र पृषत् क्लीबे, बिन्दुपृषतौ पुंसि । विप्रुट् स्त्री । ( २ ) चत्वारि यानि चक्राकारेण जलानि अधो यान्ति तेषाम् । चक्रादिद्वयं चक्राकारेण जलानामधोयानस्य । भ्रमादि द्वयं जलनिःसरणजालकस्य । ( ३ ) पञ्च तीरस्य । रोधः सान्तम् , अदन्तोऽपि । तटं त्रिषु । ( ४ ) परतीरावरतीरयोः । प्रत्येकमेकैकम् । ( ५ ) तटमध्यवर्तिप्रवाहस्यैकम् । **( नदी के पाट का नाम है )** ( ६ ) द्वे द्वीपस्य, तत्र द्वीपमन्तरीपञ्च पुन्नपुंसकम् । **( टापू के २ नाम है )** ( ७ ) यत् तोयक्रमेणोत्थं तत्पुलिनमुच्यते एकं क्लीबे । ( ८ ) द्वे वालुकाप्रचुरस्थानस्य क्लीबे । ( ९ ) पञ्च कर्दमस्य । तत्र पङ्कः पुन्नपुंसकयोः । **( कीचड के ५ नाम है )** । ( १० ) द्वे प्रवृद्धजलस्य निस्सरणमार्गस्य । ( ११ ) द्वे शुष्कनद्यादौ हि जलार्थं गर्ताः क्रियन्ते, तेषाम् । ( १२ ) नौतरणयोग्यजलस्य 'नाव्यम्' इत्येकं त्रिषु । ( १३ ) त्रयं नौकायाः ।

१उडुपं तु प्लवः कोलः २स्रोतोऽम्बुसरणं स्वतः ।
३आतरस्तरपण्यं स्याद्द्रो४णी काष्ठाम्बुवाहिनी ॥११॥
५सांयात्रिकः पोतवणिक्कर्ण६धारस्तु नाविकः ।
७नियामकाः पोतवाहाः ८कूपको गुणवृत्तकः ॥ १२ ॥
९नौकादण्डः क्षेपणी स्यादरित्रं १०केनिपातकः ।
११अभ्रिः स्त्री काष्ठकुद्दालः सेक१२पात्रं तु सेचनम् १३
१३क्लीबेऽर्धनावं नावोऽर्धेऽतीत१४नौकेऽतिनु त्रिषु ।
१५त्रिष्वागाधात्प्र१६सन्नोऽच्छः१७कलुषोऽनच्छआविलः॥

---

( १ ) त्रयमल्पनौकायाः । ( २ ) अकृत्रिमजलप्रवाहस्यैकम् । सान्तः क्लीबे स्रोतःशब्दः । ( ३ ) नद्यादितरणे देयमूल्यस्य द्वे **( खेवाई—उतराई के २ नाम है )** ( ४ ) या काष्ठमयी जलवाहिनी सा द्रोणी उच्यते । ( ५ ) द्वे नौकया वाणिज्यकारिणः । ( ६ ) द्वे कर्णधारस्य । **( पतवार पकड़नेवाले के २ नाम है )** ( ७ ) द्वे पोतवाहानाम् । ( ८ ) द्वे रज्ज्वाद्याधारमध्यस्तम्भस्य । **( मस्तूल के २ नाम है )** ( ९ ) द्वे नौकावाहकदण्डस्य । **( 'डाँड़े' के २ नाम है )** ( १० ) द्वे नौपृष्ठस्थचालनसाधनस्य । **( पतवार के २ नाम है )** ( ११ ) द्वे काष्ठकुद्दालस्य । **( काठ के खनती के दो नाम है )** ( १२ ) जलप्रक्षेपपात्रस्य द्वे । **( पानी फेंकने के तसला के 'डोलची' के दो नाम है )** ( १३ ) नौकायाः अर्धभागस्य एकं क्लीबे । **( १४ )** नौकामतीत्य वर्तमाने मनुष्यादौ 'अतिनु'इत्येकं त्रिषु । **( १५ )**गाधपर्यन्तं त्रिषु इत्यधिक्रियते । **(१६)** द्वे निर्मलस्य । **( २ साफ जल आदि का नाम है )** । ( १७ ) त्रीणि मलिनस्य

१निम्नं गभीरं गम्भीरमु२त्तानं तद्विपर्यये ।
३अगाधमतलस्पर्शे ४कैवर्ते दाशधीवरौ ॥ १५ ॥
५आनायः पुंसि जालं स्याच्छ६णसूत्रं पवित्रकम् ।
७मत्स्याधानी कुवेणी स्याद्ब८डिशं मत्स्यवेधनम् ॥ १६ ॥
९पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः ।
विसारः शकुली चाथ१० गडकः शकुलार्भकः ॥ १७ ॥
११सहस्रदंष्ट्रः पाठीन १२उलूपी शिशुकः समौ ।
१३नलमीनश्चिलिचिमः १४प्रोष्ठी तु शफरीद्वयोः ॥ १८ ॥
१५क्षुद्राण्डमत्स्यसंघातः पोताधानमथो १६झषाः ।
रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ॥ १९ ॥

---

त्रिषु । (१) त्रीणि गम्भीरस्य त्रिषु । (२) एकम् उत्तानस्य त्रिषु । **(छिछिल का १ नाम है)** (३) द्वे अगाधस्य त्रिषु । (४) त्रयम् धीवरस्य । **(मल्लाह के तीन नाम है)** (१५) जालस्य द्वे । तत्रानायः पुंसि । (६) द्वे शणसूत्रस्य । **(सुतरी-डोरी के बने हुये जाल के २ नाम है)** (७) द्वे मत्स्यबन्धन-करण्डिकायाः । (८) द्वे मत्स्यवेधनकण्टकस्य । **('अकुडा–काटा, वंशी')** (९) मत्स्यस्य अष्टौ नामानि । (१०) द्वे मत्स्यविशेषस्य । (११) द्वे बहुदंष्ट्रस्य मत्स्यविशेषस्य । (१२) द्वे शिशुमाराकारमत्स्यस्य । तत्रो-लूपी-नान्तः पुंसि । (१३) द्वे नलमीनस्य । (१४) द्वे शुभ्रमत्स्यविशे-षस्य । (१५) अण्डादचिरनिर्गतमत्स्यसमूहस्य द्वे । (१६) मत्स्यविशे-

तिमिङ्गिलादयश्चाथ १यादांसि जलजन्तवः ।
२ तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः ॥ २० ॥
स्या३त्कुलीरः कर्कटकः कूर्मे ४कमठकच्छपौ ।
५ग्राहोऽवहारो ६नक्रस्तु कुम्भीरोऽथ ७महीलता ॥२१॥
गण्डूपदः किंचुलको निहाका ८गोधिका समे ।
९रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ॥२२॥
१०मुक्तास्फोटः स्त्रियां शुक्तिः ११शङ्खः स्यात्कम्बुरस्त्रियौ ।
१२क्षुद्रशङ्खाः शङ्खनखाः १३शम्बूका जलशुक्तयः ॥२३॥
भेके १४मण्डूकवर्षाभूशालूरप्लवदर्दुराः ।

---

षाणामेकैकम् । ( १ ) द्वे जलचरमात्रस्य । ( २ ) जलजन्तुभेदानामेकैकम् ( ३ ) द्वे कुलीरस्य । **( केकड़ा के २ नाम हैं )** ( ४ ) त्रीणि कूर्मस्य पुंसि । **( कछुआ के ३ नाम हैं )** ( ५ ) द्वे ग्राहस्य । **( घड़ियाल के दो नाम हैं )** (६) द्वे नक्रस्य ग्राहविशेषस्य **(नाका के २ नाम है )** ( ७ ) त्रीणि गण्डूपदस्य । ( ८ ) द्वे गोधायाः स्त्रियाम् । **(गोह के २ नाम है)** ( ९ ) त्रीणि जलौकायाः, तत्र जलौकसशब्दः सान्तः नित्यं बहुवचनान्तः स्त्रीलिङ्गः । **(जोक के ३ नाम हैं)** (१०) द्वे शुक्तिकायाः, तत्र शुक्तिः स्त्रियाम् । **(सिपी के २ नाम हैं )** ( ११ ) द्वे शङ्खस्य-पुन्नपुंसकयोः । ( १२ ) क्षुद्रशङ्खानां द्वे पुंसि । ( १३ ) द्वे जलजशुक्तिमात्रस्य। शम्बूकः स्त्रीपुंसयोः, जलशुक्तिः स्त्रियाम् । ( १४ ) षट् भेकस्य । **( मेढक के ६ नाम है )**

१ शिली गण्डूपदी भेकी २ वर्षाभ्वी ३ कमठी डुलिः ॥२४॥
मद्गुरस्य प्रिया ४ शृङ्गी दुर्नामा दीर्घकोशिका५ ।
६ जलाशयो जलाधारस्तत्रागाधजलो ७ ह्रदः ॥ २५ ॥
८ आहावस्तु निपानं स्यादुपकूपजलाशये ।
पुंस्येवान्धुः ९ प्रहिः कूप उदपानं तु पुंसि वा ॥ २६ ॥
१० नेमिस्त्रिकास्य वीनाहो ११ मुखबन्धनमस्य यत् ।
१२ पुष्करिण्यां तु खातं स्यादखातं १३ देवखातकम् ॥२७॥
१४ पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः ।
वेशन्तः १५ पल्वलं चाल्पसरो १६ वापी तु दीर्घिका ॥२८॥

---

(१) द्वे स्वल्पगण्डूपदजातेः । ( २ ) द्वे क्षुद्रभेकजातेः । (३) द्वे कूर्म्याः । (४) मद्गुरमत्स्यपत्न्या एकम् । तदुक्तम्–'भार्या भेकस्य वर्षाभ्वी शृङ्गी स्यान्मद्गुरस्य तु । शिली गण्डूपदस्यापि, कच्छपस्य डुलिः स्मृता ॥ इति । ( ५ ) जलूकाकारस्य जलचरविशेषस्य द्वे । तत्र दुर्नामशब्दः नान्तोऽपि, आकारान्तोऽपि च स्त्रियाम् । ( ६ ) द्वे जलाशयानां तडागादीनां पुंसि । ( ७ ) एकं ह्रदस्य । ( ८ ) द्वे निपानस्य— कूपसमीपरचितजलाशयस्य । ( ९ ) चत्वारि कूपस्य । ( **'कूआं' इनारा के चार नाम है** ) ( १० ) अस्य—कूपस्य नेमिः—अन्ते रज्वादिधारणार्थं दारुयन्त्रं सा त्रिका उभे स्त्रियाम् । ( **धुरई, गडारी के २ नाम है** ) ( ११ ) कूपमुखे इष्टकादिबद्धस्य भागस्यैकम् । ( **इनारा के जगत का १ नाम** ) ( १२ ) द्वे पुष्करिण्याः चतुष्कोणखातस्य । ( १३ ) द्वे अकृत्रिमखातस्य । (१४) पञ्च तडागस्य । तत्र सरसी स्त्री, सरः सान्तम् । (१५) त्रीणि स्वल्पसरसः । ( १६ ) वाप्या

१खेयं तु परिखाधारस्त्वम्भसां२ यत्र धारणम् ।
३स्यादालवालमावालमावापोऽथ नदी४ सरित् ॥२९॥
तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी ।
स्रोतस्वती द्वीपवती स्रवन्ती निम्नगाऽऽपगा ॥३०॥
❀कूलंकषा निर्झरिणी रोधोवक्त्रा सरस्वती ।
५गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा ।
भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ॥ ३१ ॥
६कालिन्दी सूर्यतनया यमुना शमनस्वसा ।
७रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ॥ ३२ ॥
८करतोया सदानीरा बाहुदा९ सैतवाहिनी ।
१०शतद्रुस्तु शुतुद्रिः स्याद्विपाशा११ तु विपाट्स्त्रियाम् ॥
१२शोणो हिरण्यवाहः स्यात्कुल्याल्पा१३ कृत्रिमा सरित् ।

---

द्वे नामनी स्त्रियाम् । ( १ ) द्वे दुर्गाद्बहिर्यत्परितः खातं क्रियते तस्य । **( खाई के २ नाम है )** ( २ ) एकं जलाधारस्य । **( पानी के बांध का १ नाम है )** ( ३ ) त्रीणि वृक्षादिमूलेकृतजलाधारस्य । ( ४ ) नद्याः षोडश नामानि । ( ५ ) भागीरथ्या अष्ट नामानि । ( ६ ) यमुनायाः चत्वारि नामानि, तत्र शमनस्वसा ऋदन्तः । (७) चत्वारि नर्मदायाः । ( ८ ) द्वे करतोयायाः । ( ९ ) द्वे बाहुदानद्याः । (१०) द्वे शतरुद्रेति देशभाषया प्रसिद्धायाः । (११) द्वे पापमोचिनीख्यातायाः । (१२) द्वे नदविशेषस्य "शोणभद्र" इति प्रसिद्धस्य । (१३)या॰

१शरावती वेत्रवती चन्द्रभागा सरस्वती ॥ ३४ ॥
कावेरी सरितोऽन्याश्च२ संभेदः३ सिन्धुसंगमः ।
४द्वयोः प्रणाली पयसः पदव्यां त्रिषु तूत्तरौ५ ॥ ३५ ॥
देविकायां सरय्वां च भवे दाविकसारवौ ।
६सौगन्धिकं तु कह्लारं ७ हल्लकं रक्तसंध्यकम् ॥ ३६ ॥
स्यादुत्पलं ८ कुवलयमथ नीलाम्बुजन्म ९ च ।
इन्दीवरं च नीलेऽस्मिन्सिते१० कुमुदकैरवे ॥ ३७ ॥
११शालूकमेषां कन्दः स्याद्वारिपर्णी१२ तु कुम्भिका ।
१३जलनीली तु शेवालं शैवलोऽथ कुमुद्वती१४ ॥ ३८ ॥
कुमुदिन्यां नलिन्यां १५ तु बिसिनीपद्मिनीमुखाः ।
वा पुंसि १६ पद्मं नलिनमरविन्दं महोत्पलम् ॥३९॥

---

ऽल्पा कृत्रिमा सरित्सा कुल्या एकम् । ( १ ) नदीविशेषाणां पञ्च नामानि । ( २ ) अन्या अपि चर्मण्वतीगोदावर्याद्याः सन्तीति शेषः । ( ३ ) द्वे नदीमेलकस्य । ( ४ ) जलनिर्गमनमार्गस्यैकं, तत्र प्रणालीः स्त्रीपुंसयोः । ( ५ ) उत्तरौ–दाविकसारवशब्दौ त्रिषु इत्यर्थः । देविकायां भवं दाविकम् । सरय्वां भवं सारवम् । ( ६ ) द्वे सन्ध्याविकासिनः शुक्लसरोजस्य । ( ७ ) द्वे रक्तकल्हारस्य । ( ८ ) द्वे कुमुदस्य । (९) द्वे नीलोत्पलस्य क्लीबे ( **नीलोफर के २ नाम हैं** ) । (१०) द्वे कैरवस्य–श्वेतोत्पलस्य । (११) उत्पलकन्दस्यैकम् क्लीबे । (१२) द्वे जलकुम्भिकायाः स्त्रियाम् । (१३) शैवालस्य त्रीणि नामानि । (१४) द्वे कुमुदिन्याः । ( १५ ) त्रयं कमलिन्याः । ( १६ ) षोडश कमलस्य ।

सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ।
पङ्केरुह तामरसं सारसं सरसीरुहम् ॥ ४० ॥
बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च ।
१पुण्डरीकं सिताम्भोजमथ२ रक्तसरोरुहे ॥ ४१ ॥
रक्तोत्पलं कोकनदं नालो३ नालमथास्त्रियाम् ।
४मृणालं बिसमब्जादिकदम्बे ५खण्डमस्त्रियाम् ॥४२॥
६करहाटः शिफाकन्दः किंजल्कः७ केसरोऽस्त्रियाम् ।
८संवर्तिका नवदलं ९बीजकोशो वराटकः ॥ ४३ ॥

इति वारिवर्गः ॥ १० ॥

काण्डसमाप्तिः ।

१०उक्तं स्वर्व्योमदिक्कालधीशब्दादि सनाटयकम् ।
पातालभोगि नरकं वारि चैषां च संगतम्११ ॥ १ ॥

---

(१) द्वे सितकमलस्य। (२) त्रयं रक्तकमलस्य। (३) द्वे पद्मादिदण्डस्य। (४) द्वे मृणालस्य अस्त्रियाम्। (५) कमलादीनां समूहे षण्डमित्येकं क्लीबपुंसोः। (६) द्वे पद्ममूलस्य। (७) द्वे केसरस्य। (८) द्वे पद्मादीनां नवपत्रस्य। (९) द्वे बीजकोशस्य। (१०) मया स्वर्व्योमादिकमुक्तम्। (११) एषां स्वर्गादीनां सङ्गतं सम्बन्धवशात्प्राप्तं देवासुरमेघादिकं तच्चोक्तम्।

इति श्रीकौण्डिन्यकुलावतंस जोशीत्युपाह्वदामोदरात्मजसदाशिवशास्त्रिविरचितायां प्रभाख्यायां टिप्पण्यां प्रथमं काण्डम् ।

इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।
स्वरादिकाण्डः प्रथमः साङ्ग एव समर्थितः ॥ २ ॥
इत्यमरसिंहविरचितेऽमरकोशे प्रथमं काण्डम् ॥

## अथ द्वितीयं काण्डम् ।

वर्गभेदान् कथयति—

१वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः ।
नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥ १ ॥

### अथ भूमिवर्गः ॥ १ ॥

२भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा ।
धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः ॥२॥
सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा ।
गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही ॥ ३ ॥
३॥विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा ।
॥भूतधात्री रत्नगर्भा जगती सागराम्बरा ॥
४मृन्मृत्तिका प्रशस्ता तु मृत्सा ५मृत्स्ना च मृत्तिका ।
उर्वरा६ सर्वसस्याढ्या स्यादूषः७ क्षारमृत्तिका ॥ ४ ॥

---

(१) इह वक्ष्यमाणेऽस्मिन्काण्डे भूम्यादयो दश वर्गाः उदिताः वक्तुमारब्धाः । (२) सप्तविंशतिर्नामानि भूमेः । (पृथ्वी के २७ नाम हैं) (३) विपुलेत्येकादश भूमेश्च । (४) द्वे मृदः स्त्रियाम् । (५) द्वे प्रशस्तमृदः । (६) सर्वैः सस्यैराढ्या मृत्तिका उर्वरेत्युच्यते एकम् । (७) क्षारमृत्तिकाया द्वे नामनी । ऊषः पुंसि । (खा-

१ऊषवानूषरो द्वावप्यन्यलिङ्गौ २स्थलं स्थली ।
३समानौ मरुधन्वानौ द्वे ४खिलाप्रहते समे ॥ ५ ॥
त्रिष्वथो ५जगती लोको विष्टपं भुवनं जगत् ।
लोकोऽयं ६भारतं वर्षं शरावत्या७स्तु योऽवधेः ॥६॥
देशः प्राग्दक्षिणः प्राच्य उदीच्यः ८पश्चिमोत्तरः ।
प्रत्य९न्तोम्लेच्छदेशःस्यान्म१०ध्यदेशस्तु मध्यमः ॥७॥
११आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः ।
१२नीवृज्जनपदो देशवि१३षयौ तूपवर्तनम् ॥ ८ ॥
त्रिष्वा१४गोष्ठान्नडप्राये नड्१५वान्नड्वल इत्यपि ।

---

री मिट्टी के २ नाम है ) ( १ ) द्वयं क्षारमृद्विशिष्टस्य । द्वावप्यन्यलिङ्गौ । (२) द्वे स्थलस्य—अकृत्रिमस्थानस्य । (३) द्वे मरुदेशस्य । तत्र धन्वन् नान्तः पुंसि । (४) द्वे अकृष्टक्षेत्रादेः । त्रिषु लिङ्गेष्विस्यर्थः । (५) पञ्च भूतलस्य । जगती स्त्रियाम् । जगत् क्लीबे । ( संसार के ५ नाम हैं ) (६) भारतवर्षस्यैकं नाम क्लीबे । ( भारत वर्ष का १ नाम है ) (७) शरावत्या अवधेयः प्राग्दक्षिणो देशः स प्राच्यः । ( ८ ) शरावत्या अवधेयः पश्चिमोत्तरः स उदीच्यः इत्येकम् । ( ९ ) द्वे म्लेच्छदेशस्य—भारतीसीमाप्रदेशस्य । ( १० ) द्वे मध्यदेशस्य । एतत्परिमाणं तु हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः । ( ११ ) द्वे विन्ध्यहिमाचलयोरन्तरस्य । (१२) द्वे जनपदस्य । तत्र नीवृत् स्त्रियाम् । ( जिले के २ नाम है ) (१३) त्रीणि देशमात्रस्य । ( १४ )गोष्ठशब्दमभिव्याप्य त्रिषु । ( १५ ) द्वे नडप्राये नडबहुले देशे ।

१कुमुद्वान्कुमुदप्राये वेत२स्वान्बहुवेतसे ॥ ९ ॥
३शाद्वलः शादहरिते ४सजम्बाले तु पङ्किलः ।
५जलप्रायमनूपं स्यात्पुंसि ६कच्छस्तथाविधः ॥ १० ॥
स्त्री ७शर्करा शर्करिलः ८शार्करः शर्करावति ।
९देश एवादिमावेव१०मुन्नेयाः सिकतावति ॥ ११ ॥
११देशो नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः ।
स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥ १२ ॥
१२सुराज्ञि देशे राजन्वान्स्यात्ततोऽन्य१३त्र राजवान् ।
१४गोष्ठं गोस्थानकं तत्तु गौष्ठी१५नं भूतपूर्वकम्॥१३॥
१६ पर्यन्तभूः परिसरः१७सेतुरालौ स्त्रियां पुमान् ।
१८वामलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकम् ॥ १४ ॥

---

(१)कुमुद्वानित्येकं कुमुदप्राये। (२) वेतसबहुलदेशस्यैकम्। (३)बालतृणबहुलदेशस्यैकम्। (४) कर्दमयुक्तदेशस्यैकम्। (५) द्वे जलबहुलदेशस्य त्रिषु। (६) नद्यादेरुपान्तदेशस्यैकम् पुंसि। (७) द्वे बालुकायुक्तदेशस्य। तत्र शर्करा स्त्रियाम्। (८) द्वे वालुकायुक्तस्य देशादेः। (९) आदिमौ 'शर्कराशर्करिलौ' देशे एव। (१०) एवं सिकतावति उन्नेयाः-ऊहनीयाः। (११) नदीजलनिष्पन्नव्रीहिपालितो देशः 'नदीमातृकः' उच्यते। वृष्ट्यम्बुनिष्पन्नव्रीहिपालितो देशः 'देवमातृकः' इत्युच्यते। (१२) धार्मिकराजयुक्तदेशादेरेकम् त्रिषु। (१३) राजमात्रयुक्तदेशस्यैकम्। (१४) द्वे गवां स्थानस्य। ( गौ के ठाणे के दो नाम है ) (१५) भूतपूर्वगोष्ठस्यैकम्। ( १६ ) द्वे नदीपर्वतादीनामुपान्तभुवः। (१७) द्वे सेतोः। ( पुल के २ नाम है ) (१८) त्रीणि वल्मीकस्य।

१अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः ।
सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ॥ १५ ॥
२अतिपन्थाः सुपन्थाश्च सत्पथश्चार्चितेऽध्वनि ।
३व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः ॥१६॥
४अपन्थास्त्वपथं तुल्ये शृङ्गाटकचतुष्पथे ।
६प्रान्तरं दूरशून्योऽध्वा ७कान्तारं वर्त्म दुर्गमम् ॥१७॥
८गव्यूतिः स्त्री क्रोशयुगं ९नल्वः किष्कुचतुःशतम् ।
१०घण्टापथः संसरणं तत्पु११रस्योपनिष्करम् ॥१८॥
*१२द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी ।
*दिवस्पृथिव्यौ१३ गञ्जा तु रुमा स्याल्लवणाकरः ॥१९॥

इति भूमिवर्गः ॥ १ ॥

---

(१) द्वादश मार्गस्य । ( १२ रास्ते के नाम हैं ) (२) त्रयं शोभनमार्गस्य । (३) पञ्च दुर्मार्गस्य । (४) द्वे अमार्गस्य । (५) द्वे चतुष्पथस्य क्लीबे । (६) छायाजलादिवर्जितो दूरस्थोऽध्वा प्रान्तरमित्युच्यते । (७) चोरकण्टकाद्युपद्रवयुक्तमार्गं कान्तारमित्युच्यते । (८) द्वे क्रोशद्वयस्य । (९) किष्कूणां हस्तानां चतुःशतं नल्व इत्युच्यते । (४० हाथ जमीन का नाम है) (१०) राजपथमात्रस्य द्वे । (११) नगरराजमार्गस्यैकं नपुंसके । (१२) पञ्च भूम्याकाशयोर्नामानि । (१३) रुञ्जेत्यादित्रयं क्षारसमुद्रस्य ।

## अथ पुरवर्गः ॥ २ ॥

१पूः स्त्री पुरी नगर्यौ वा पत्तनं पुटभेदनम् ।
स्थानीयं निगमोऽन्यत्तु २यन्मूलनगरात्पुरम् ॥ १ ॥
तच्छाखानगरं वेशो३ वेश्याजनसमाश्रयः ।
४आपणस्तु निषद्यायां ५विपणिः पण्यवीथिका ॥ २ ॥
६रथ्या प्रतोली विशिखा स्याच्चयो७ वप्रमस्त्रियाम् ।
८प्राकारो वरणः सालः ९प्राचीनं प्रान्ततो वृतिः ॥३॥
१०भित्तिः स्त्री कुड्यमेडूकं११ यदन्तर्न्यस्तकीकसम् ।
१२गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ॥ ४ ॥
निशान्तवस्त्यसदनं भवनागारमन्दिरम् ।
गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः ॥ ५ ॥

---

(१) सप्तकं नगरस्य । (२) यन्मूलनगरादन्यत्पुरं तच्छाखानगरमित्यन्वयः । मूलनगरम्—राजधानी । (३) द्वे नगरवेश्यानिवासस्य । (४) द्वे क्रय्यवस्तुशालायाः । (दुकान के २ नाम है) (५) द्वे क्रयवस्तुशालापङ्क्तेः । (६) त्रीणि ग्रामाभ्यन्तरमार्गस्य । (७) द्वे परिखोद्धृतमृत्तिकाकूटस्य । (८) त्रीणि प्राकारस्य । (९) कण्टकादिवृतेः एकम् । (बाड का १ नाम है) (१०) द्वे भित्तेः । (११) अन्तर्न्यस्तानि कीकसानि अस्थीनि यत्र तत् 'एडूकम्' इत्येकम् । (१२) षोडश गृहस्य । तत्र गृहान्तानि नामानि नपुंसके । गृहशब्दः बहुत्वे नित्यं पुंसि च । निकायादयश्च पुंसि ।

१वासः कुटी द्वयोः शाला सभा २संजवनं त्विदम् ।
चतुःशालं ३मुनीनां तु पर्णशालोटजोऽस्त्रियाम् ॥ ६॥
चैत्य४मायतनं तुल्ये वाजि५शाला तु मन्दुरा ।
६आवेशनं शिल्पिशाला प्रपा७ पानीयशालिका ॥७॥
८मठश्छात्रादि निलयो गञ्जा९ तु मदिरागृहम् ।
ॐ१०गर्भागारं वासगृहमरिष्टं११ सूतिकागृहम् ॥ ८ ॥
१२कुट्टिमोऽस्त्री निबद्धा भूश्चन्द्र १३शाला शिरोगृहम् ।
१४वातायनं गवाक्षोऽथ मण्ड१५पोऽस्त्री जनाश्रयः ।
१६हर्म्यादिधनिनां वासः प्रासादो१७देवभूभुजाम् ॥६॥

---

(१) चत्वारि सभागृहस्य । ( हाल-कमरा के ४ नाम हैं )
(२) द्वे चतुःशालस्ते—अन्योन्याभिमुखशालाचतुष्कस्य । (३) द्वे मुनिगृहस्य । (४) द्वे चैत्यायतनभेदस्य—स्तूपस्य क्लीबे । (५) द्वे अश्वशालायाः । (६) द्वे स्वर्णकादीनां शालायाः । (७) द्वे जलशालायाः । (८) शिष्यादीनां गृहं मठ इत्युच्यते । (९) द्वे मदिरागृहस्य । (कलवरिया के २ नाम) (१०) द्वे गृहमध्यभागस्य । (११) द्वे प्रसवस्थानस्य । ( सौरी स्थान के २ नाम ) चत्वारोऽपि पर्याया इत्यन्ये । (१२) पाषाणादिनिबद्धा भूः स कुट्टिम इत्येकम् । (१३) द्वे चन्द्रशालायाः । (१३) द्वे गवाक्षस्य । (१५) द्वे मण्डपस्य । तत्र मण्डपः क्लीबपुंसोः । (१६) धनिगृहस्यैकं क्लीबे । आदिना स्वस्तिकाट्टालिकादिभेदः । (१७) देवानां राज्ञां च गृहं प्रासाद इत्येकम् ।

१सौधोऽस्त्री राजसदनमुपकार्योपकारिका ।
२स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ॥ १० ॥
विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम् ।
३स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् ॥ ११ ॥
शुद्धान्तश्चावरोधश्च स्यादट्टः४ क्षौममस्त्रियाम् ।
५प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ॥ १२ ॥
६गृहावग्रहणी देहल्य७ङ्गणं चत्वराजिरे ।
८अधस्ताद्दारुणि शिला नासा ९ दारूपरि स्थितम् ॥१३॥
१०प्रच्छन्नमन्तर्द्वारं स्यात्प११क्षद्वारं तु पक्षकम् ।
१२वलीकनीध्रे पटलप्रान्तेऽथ१३ पटलं छदिः ॥ १४ ॥
१४गोपानसी तु वलभीच्छादने वक्रदारुणि ।

---

(१) चत्वारि राजगृहस्य । (२) राजधनिगृहविशेषाणामेकैकम् । (३) चत्वारि अन्तःपुरस्य । **(जनानखाना के ४ नाम हैं)** (४) द्वे गृहस्थितस्योपरिगृहस्य (५) त्रीणि द्वाराद्बहिर्यः प्रकोष्ठकस्तस्य । (६) द्वे देहल्याः स्त्रियाम् । (७) त्रीणि प्राङ्गणस्य । (८) एकं द्वारस्तम्भाधः स्थितकाष्ठस्य स्त्रियाम् । (९) नासेत्येकं द्वारस्तम्भोपरि स्थितस्य दारुणः । (१०) द्वे गुप्तद्वारस्य । (११) द्वे पार्श्वद्वारस्य । (१२) त्रीणि गृहाच्छादनपटलप्रान्तभागस्य क्लीबे । **('छाह्, ओरी, या घोड़मुहा' के नाम हैं)** (१३) द्वे छादनस्य । तत्र छदिः सान्तं स्त्रियाम् । **(छाजन के दो नाम है)** (१४) द्वे छादनार्थं यद्वक्र-

१कपोतपालिकायां तु विटङ्कं पुन्नपुंसकम् ॥ १५ ॥
स्त्री २ द्वार्द्वारं प्रतीहारः स्याद्वित३र्दिस्तु वेदिका ।
४तोरणोऽस्त्री बहिर्द्वारं पुर५द्वारं तु गोपुरम् ॥ १६ ॥
६कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्नथ त्रिषु ।
७कपाटमररं तुल्ये तद्विष्क८म्भोऽर्गलं न ना ॥ १७ ॥
९आरोहणं स्यात्सोपानं निश्रे१०णिस्त्वधिरोहिणी ।
११संमार्जनी शोधनी स्यात्सं१२करोऽवकरस्तथा ॥१८॥
१३द्विप्ते मुखं निःसरणं १४संनिवेशो निकर्षणम् ।
समौ १५संवसथग्रामौ १६वेश्मभूर्वास्तुरस्त्रियाम् ॥१९॥
१७ग्रामान्तमुपशल्यं स्यात्सीम१८सीमे स्त्रियामुभे ।

---

दारु तस्य । पटलाधारभूतवक्रकाष्ठस्येत्यर्थः । (१) द्वे कपोतपालिकायाः।(२) त्रीणि द्वारस्य । द्वार्शब्दो रान्तः स्त्रियाम् । (३) वेदिकायाः द्वे । (४) द्वे तोरणस्य–द्वारबाह्यभागस्य । (५) द्वे नगरद्वारस्य । (६) नगरद्वारे सुखेनावतरणार्थं यन्मृत्कूटं क्रियते तत्र हस्तिनख इत्येकम् । (७) द्वे 'केवाडा' इत्याख्यातस्य । तत्र कपाटं त्रिषु । (८) तद्विष्कम्भः–तस्य कपाटस्य अवष्टम्भकं यन्मुसलं तदर्गलमित्युच्यते । (९) द्वे सोपानस्य पाषाणादिकृतारोहणमार्गस्य । (सीढी) । (१०) द्वे काष्ठादिकृतारोहणस्य स्त्रियाम् । (११) द्वे संमार्जन्याः । (**झाड़ू के २ नाम हैं**) (१२) द्वे अवकरस्य । (**कूडा कतवार के ३ नाम है**) (१३) द्वे गृहादेर्मुखभूतस्य द्वारप्रदेशस्य । (१४) द्वे समीचीनवासस्थानस्य । (१५) द्वे ग्रामस्य । (१६) द्वे गृहरचनावच्छिन्नभूमेः । (१७) ग्रामान्तस्य–ग्रामसमीपप्रदेशस्य उपशल्यमित्येकम् । (१८) द्वे सीमायाः । तत्र सीम-

१घोष आभीरपल्ली स्यात्पक्कर्णः शबरालयः ॥ २० ॥

इति पुरवर्गः ॥ २ ॥

---

## अथ शैलवर्गः ॥ ३ ॥

३महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः ।
अद्रिगोत्रगिरिग्रावा चलशैलशिलोच्चयाः ॥ १ ॥
४लोकालोकश्चक्रवालस्त्रि५कूटस्त्रिककुत्समौ ।
६अस्तस्तु चरमक्ष्माभृदुदयः ७पूर्वपर्वतः ॥ २ ॥
८हिमवान्निषधो विन्ध्यो माल्यवान्पारियात्रकः ।
गन्धमादनमन्ये च हेमकूटादयो नगाः ॥ ३ ॥
९पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ।
१०कूटोऽस्त्री शिखरं शृङ्गं ११प्रपातस्त्वतटो भृगुः ॥४॥
१२कटकोऽस्त्री नितम्बोऽद्रेः १३स्नुःप्रस्थः सानुरस्त्रियाम् ।

---

शब्दो नान्तः । सीमाशब्दश्चाकारान्तः स्त्रियाम् । (१) द्वे गोपग्रामस्य । (२) द्वे भिल्लग्रामस्य । इति पुरवर्गः ॥

(३) पर्वतानां त्रयोदश नामानि पुंसि, तत्र शिखरी नान्तः क्ष्माभृत्तान्तः । (४) द्वे सप्तद्वीपवत्या भूमेः । (५) द्वे त्रिकूटाचलस्य । (६) द्वे अस्ताचलस्य । (७) द्वे उदयाचलस्य । (८) हिमवान् इत्यादयः सप्त पर्वतविशेषाः, आदिना मलयचित्रकूटमन्दरादयः । (९) सप्तपाषाणस्य । शिलादृषदौ स्त्रियाम् । (१०)त्रयमपि पुन्नपुंसकलिङ्गं पर्वताग्रस्य । (११)त्रयं पर्वतात्पतनस्थानस्य । (१२)एकं पर्वतमध्यभागस्य(१३)त्रीणि

१उत्सः प्रस्रवणं २वारिप्रवाहो निर्झरो झरः ॥ ५ ॥
३दरी तु कन्दरो वा स्त्री ४देवखातबिले गुहा ।
गह्वरं गण्डशैलास्तु ५च्युताः स्थूलोपला गिरेः ॥ ६ ॥
*६दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः ।
७खनिः स्त्रियामाकरः स्यात्पादाः ८प्रत्यन्तपर्वताः ।
९उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ॥ ७ ॥
१०धातुर्मनःशिलाद्यद्रेर्गैरिकं ११तु विशेषतः ।
१२निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ॥ ८ ॥

इति शैलवर्गः ॥ ३ ॥

---

पुन्नपुंसकलिङ्गानि पर्वतसमभूभागस्य । (१) द्वे यत्र पानीयं निपत्य बहुलीभवति तस्य स्थानस्य । (२) त्रीणि निर्झरस्य। (झरने के ३ नाम हैं) (३) द्वे पर्वतस्य गृहाकारकृत्रिमविवरस्य। (४) द्वे पर्वतस्य गृहाकारकृत्रिमविवरस्य। (५) गिरेः सकाशाच्च्युताः पतिता ये स्थूलपाषाणास्ते गण्डशैला इत्युच्यन्ते। (६) पर्वतनिर्गतशिलाखण्डस्यैकम्। (७) द्वे खनेः। तत्र खनिः स्त्रियाम्। (खान के २ नाम हैं) (८) द्वे पर्वतसमीपस्थाल्पपर्वतानाम्। (९) अद्रेरधः सन्निहिता भूमिरुपत्यकेत्युच्यते एकम्। अद्रेरूर्ध्वा या भूमिः साऽधित्यका एकम्। (१०) अद्रेर्यन्मनःशिलादि स धातुरित्युच्यते। (११) एकं विशेषेण धातुरित्यस्य। (१२) द्वे लताच्छादितगर्भस्थानस्य। इति शैलवर्गः।

## अथ वनौषधिवर्गः ॥ ४ ॥

१अटव्यरण्यं विपिनं गहनं काननं वनम् ।
२महारण्यमरण्यानी ३गृहारामास्तु निष्कुटाः ॥ १ ॥
४आरामः स्यादुपवनं कृत्रिमं वनमेव यत् ।
५अमात्यगणिकागेहोपवने वृक्षवाटिका ॥ २ ॥
पुमानाक्रीड ६उद्यानं राज्ञः साधारणं वनम् ।
स्यादेतदेव७ प्रमदवनमन्तःपुरोचितम् ॥ ३ ॥
८वीथ्यालिरावलिः पङ्क्तिः श्रेणी ९लेखास्तु राजयः ।
१०वन्या वनसमूहे ११स्यादङ्कुरोऽभिनवोद्भिदि ॥४॥
१२वृक्षो महीरुहः शाखी विटपी पादपस्तरुः ।
अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः ॥ ५ ॥
१३वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः ।

---

(१) षट्कमरण्यस्य । तत्राटवी स्त्रियाम् । (२) द्वे महतो वनस्य । (३) द्वे गृहसमीपोपवनस्य । (४) द्वे उपवनस्य । (५) एकं गणिका—अमात्यादिगृहोपवनस्य । (६) सर्वसाधारणनगरोद्यानस्य द्वे (७) अन्तःपुरोद्यानस्यैकम् । (८) पञ्चकं पङ्क्तेः । (९) द्वे लेखानाम् । (१०) वनानां समूहे वन्येत्येकम् स्त्रियाम् । (११) एकमङ्कुरस्य । (१२) त्रयोदश वृक्षस्य । तत्रान्तिमं पुष्पागमाऽन्तरोत्पन्नफलशालिवृक्षस्य । (१३) पुष्पं विना फलवतः आम्रादेः

१ओषध्यः फलपाकान्ताः स्युरवन्ध्यः२ फलेग्रहिः ॥६॥
३वन्ध्योऽफलोऽवकेशी च फलवान् ४फलिनः फली ।
५प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ॥ ७ ॥
फुल्लश्चैते विकसिते ६स्युरवन्ध्यादयस्त्रिषु ।
७स्थाणुर्वा ना ध्रुवःशङ्कुर्ह्रस्वशाखाशिफः ८क्षुपः ॥८॥
९अप्रकाण्डे स्तम्बगुल्मौ १०वल्ली तु व्रततिर्लता ।
११लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि ॥ ९ ॥
१२नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ।
अस्त्री १३प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः॥
समे१४शाखालते स्कन्ध १५शाखाशाले १६शिफाजटे ।
१७शाखाशिफावरोहः स्यान्मूलाच्चाग्रं गता लता ॥११॥

---

एकं पुंसि । (१) फलपाक एवान्तो यासां ताः ओषध्यः स्युः । एकं व्रीहियवादेः । (२) द्वे यथाकालं फलधरस्य । (३) त्रयं ऋतावपि फलरहितस्य । (४) त्रीणि सफलस्य वृक्षादेः (५) अष्टौ विकसितवृक्षादेः । (६) अवन्ध्यादयः विकसितान्ताः त्रिषु लिङ्गेष्वित्यर्थः । (७) त्रीणि छिन्नविटपस्य । स्थाणुरिति विकल्पेन पुंसीत्यर्थः । (८) ह्रस्वशाखामूलयुतवृक्षस्यैकम् । (९) काण्डरहितद्रुमादेः द्वयम् । (१०) त्रयं लतायाः । (११) त्रयं शाखादिभिर्विस्तृतलतायाः । तत्र वीरुच्छब्दो धान्तः स्त्रियाम् । (१२) त्रयं वृक्षादिदैर्घ्यस्य । (१३) द्वे तरोर्मूलमारभ्य शाखापर्यन्तो यो भागस्तस्य । (१४) द्वे शाखायाः । (१५) द्वे प्रधानशाखायाः । (१६) द्वे तरुमूलस्य । (१७) शाखायाःशिफा–

१शिरोऽग्रं शिखरं वा ना मूलं २बुध्नोऽङ्घ्रिनामकः
३सारो मज्जा नरि ४त्वक्स्त्री वल्कं वल्कलमस्त्रियाम् १२
५काष्ठं दार्विन्ध६नं त्वेध इध्ममेधः समित्स्त्रियाम् ।
७निष्कुहः कोटरं वा ना ८वल्लरिर्मञ्जरिः स्त्रियौ ॥१३॥
९पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् ।
१०पल्लवोऽस्त्री किसलयं विस्तारो ११विटपोऽस्त्रियाम्
१२वृक्षादीनां फलं सस्यं १३वृन्तं प्रसवबन्धनम् ।
१४आमे फले शलाटुः स्याच्छुष्के वानमुभे त्रिषु ॥१५॥

---

मूलम् अवरोह इत्युच्यते एकम् । वृक्षमूलमारभ्य अग्रपर्यन्तं गता लताप्यवरोह इत्युच्यते एकम् । (१) वृक्षाग्रदेशस्य त्रीणि । तत्र शिरः सान्तं क्लीबे । शिखरोऽस्त्रियाम् । (२) त्रयं वृक्षादिमूलस्य । (३) द्वयं वृक्षकोमलत्वचः—सारभागस्य । (४) त्रयं त्वचः । तत्र वल्कादिद्वयं क्लीबपुंसोः । (५) द्वे काष्ठमात्रस्य । (६) पञ्चकं शुष्कस्य तृणकाष्ठादेः । आद्यत्रयम् अग्निसन्दीपनतृणकाष्ठादेः, अन्त्यस्त्वद्वयं यागादौ हूयमानसमिधादेरिति मतम् । एधः सान्तः क्लीबे । अन्त्यस्वदन्तः पुंसि । समिद्धान्तः । (७) द्वे वृक्षगतविवरस्य । तत्र कोटरं वा ना । (८) द्वे मञ्जर्याः स्त्रियाम् । (९) षट् पत्राणाम् । तत्र छदशब्दः पुंसि, शेषं क्लीबे । (१०) द्वयं पल्लवस्य । तत्र पल्लवोऽस्त्री, किसलयं क्लीबे । (११) एकं वृक्षविस्तारस्य । (१२) वृक्षादीनां फलं सस्यमित्युच्यते, एकम् । (१३) पुष्पादिबन्धनस्यैकम् । (१४) अपक्वफलस्यैकम् । उभे त्रिलिङ्गयाम् ।

१ चारको जालकं क्लीबे कलिका२ कोरकः पुमान्
स्याद्गु३च्छकस्तु स्तबकः४कुड्मलो मुकुलोऽस्त्रियाम
स्त्रियः ५सुमनसः पुष्पं प्रसूनं कुसुमं सुमम् ।
६मकरन्दः पुष्परसः ७परागः सुमनोरजः ॥ १७ ॥
८द्विहीनं प्रसवे सर्वं हरीत९क्यादयः स्त्रियाम् ।
१०आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले ॥ १८ ॥
बार्हतं च फले ११जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम्
पुष्पे १२जातीप्रभृतयः १३स्वलिङ्गा व्रीहयः फले ॥१९॥

---

( १ ) द्वे नूतनकलिकायाः । (२) द्वे अस्फुटितपुष्पस्य । द्वे कलिकादिभिराकीर्णस्य पल्लवग्रन्थेः । (४) द्वे ईषद्विकसितकलिकायाः । ( अधखिली कली के २ नाम हैं ) (५) चत्वारि पुष्पस्य । 'कुसुमं सुमम्' इत्यपि पाठः । तत्र पुष्पस्य पञ्च नामानि । (६) द्वे पुष्पमधुनः । (७) द्वे पुष्परेणोः । ( ८ ) सर्वं वक्ष्यमाणं वृक्षलतौषधिजातीयं स्त्रीपुंलिङ्गमपि । अश्वत्थकपित्थादीनामभिधानं प्रसवे पुष्पे फले मूले च वर्तमानं तद्द्विहीनं ज्ञेयम् । द्वाभ्यां स्त्रीपुंसाभ्यां हीनं नपुंसकलिङ्गमित्यर्थः । (९) हरीतक्याः फलं हरीतकी । आदिना कोशातकीत्यादि । अत्र न क्लीबत्वम् । पूर्वनियमापवादोऽयम् । ( १० ) अश्वत्थस्य फलम् आश्वत्थम् । एवं वेण्वादीनां फलानाम् एकैकम् नाम क्लीबे । (११) त्रीणि जम्ब्वाः फले । (जामुन के ३ नाम हैं) (१२) जात्याः पुष्पं जाती स्त्री । जातीयूथिकामल्लिकेत्यादयः पुष्पे वर्तमानाः स्वलिङ्गा एव स्युर्न तु क्लीबे । (१३) व्रीहीणां फलानि व्रीहयः ।

विदा[1]र्याद्यास्तु मूलेऽपि पुष्पे [2]क्लीबेऽपि पाटला ।
[3]बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः ॥ २० ॥
अश्वत्थेऽथ[4]कपित्थे स्युर्दधित्थग्राहिमन्मथाः ।
तस्मिन्दधिफलः पुष्पफलदन्तशठावपि ॥ २१ ॥
[5]उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ।
[6]कोविदारे चमरिकः कुद्दालो युगपत्त्रकः ॥ २२ ॥
सप्त[7]पर्णो विशालत्वक्शारदो विषमच्छदः ।
[8]आरग्वधे राजवृक्षशम्याकचतुरङ्गुलाः ॥ २३ ॥
आरेवतव्याधिघातकृतमालसुवर्णकाः ।
स्युर्ज[9]म्बीरे दन्तशठजम्भजम्भीरजम्भलाः ॥ २४ ॥
[10]वरुणो वरणः सेतुस्तिक्तशाकः कुमारकः ।
[11]पुन्नागे पुरुषस्तुङ्गः केसरो देववल्लभः ॥ २५ ॥

---

पुंसि, स्वलिङ्गा एव । एवं माषमुद्गयवादयोऽपि ज्ञेयाः । (१) विदारीशब्दः मूले पुष्पे फलेऽपि च स्त्रलिङ्ग एव । यथा—विदार्याः पुष्पादि विदारी । (२) पाटला पुष्पे वर्तमाना क्लीबे । यथा पाटलायाः पुष्पं पाटलम् । (३) पञ्च पिप्पलवृक्षस्य । (४) सप्तकं कपित्थस्य । (**कैथ के ७ नाम हैं**) (५) चत्वारि उदुम्बरस्य । (६) चत्वारि कोविदारस्य । (**कचनार**) इत्यस्य । (७) चत्वारि सप्तपर्णस्य (**सतौना**) इत्यस्य । (८) अष्टौ राजवृक्षस्य (**सोनालु**) इति ख्यातस्य । (९) पञ्चकं जम्बीरस्य । (**जम्बीरी नींबू**) इति ख्यातस्य । (१०) पञ्च वरणवृक्षस्य (**वरुना**) इतिख्यातस्य । (११) पञ्चकं पुन्नागवृक्षस्य

१पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ।
२तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ॥ २६ ॥
वञ्जुलश्चित्रकृच्चाथ३ द्वौ पीतनकपीतनौ ।
आम्रातके ४मधूके तु गुडपुष्पमधुद्रुमौ ॥ २७ ॥
वानप्रस्थमधुष्ठीलौ ५जलजेऽत्र मधूलकः ।
६पीलौ गुडफलः स्रंसी तस्मिं७स्तु गिरिसंभवे ॥२८॥
अक्षोटकन्दरालौ ८द्वावङ्कोटे तु निकोचकः ।
९पलाशे किंशुकः पर्णो वातपोतोऽथ१० वेतसे ॥२९॥
रथाभ्रपुष्पविदुरशीतवानीरवञ्जुलाः ।
द्वौ ११परिव्याधविदुलौ नादेयी चाम्बुवेतसे ॥ ३० ॥
शो१२भाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः ।

---

( नागकेसर ) इति ख्यातस्य । (१) चत्वारि निम्बतरोः । (२) सप्तकं तिनिशवृक्षस्य ( वंजुल-तिनिस ) इति ख्यातस्य । (३) द्वयं आम्रातकस्य ( आमडा ) इति ख्यातस्य । (४) पञ्चकं मधूकस्य । ( महुआ ) इति ख्यातस्य । (५) एकं जलजमधूकस्य । ( ६ ) त्रीणि पीलुवृक्षस्य । ( ७ )गिरिसम्भवे तस्मिन् पीलौ सति द्वे नामनी— अक्षोटः, कन्दरालः इति । ( २ पहाडी पीलु के नाम हैं ) (८) द्वे अङ्कोटस्य ( ढेरा ) इति ख्यातस्य । ( ९ ) चत्वारि पलाशस्य । (१०) सप्तकं वेतसस्य ( वेत ) इति ख्यातस्य (११) चत्वारि जलवेतसस्य । नादेयी स्त्री । (१२) पञ्च शिग्रुवृक्षस्य ( सहेजन )

रक्तोऽसौ १मधुशिग्रुः स्यादरिष्टः २फेनिलः समौ ॥३१॥
बिल्वे ३शाण्डिल्यशैलूषौ मालूरश्रीफलावपि ।
४प्लक्षो जटी पर्कटी स्यान्न्यग्रोधो बहुपाद्वटः ॥३२॥
६गालवः शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ ।
७आम्रश्चूतो रसालोऽसौ ८सहकारोऽतिसौरभः ॥३३॥
९कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः ।
१० शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ॥३४॥
११ राजादनं प्रियालः स्यात्सन्नकद्रुर्धनुःपटः ।
१२ गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका ॥३५॥

---

इति ख्यातस्य । (१) असौ शोभाञ्जनो रक्तपुष्पश्चेन्मधुशिग्रुरित्युच्यते एकम् । (२) द्वे अरिष्टस्य ( रीठा ) इति ख्यातस्य । (३) पञ्चकं बिल्वस्य ( बेल ) इति ख्यातस्य । (४) त्रयं प्लक्षस्य ( पाकड़ ) इति ख्यातस्य । तत्र पर्कटी स्त्रियाम् । (५) त्रयं वटवृक्षस्य ( बड ) इति ख्यातस्य । (६) षट्कं लोध्रस्य ( लोध ) इति ख्यातस्य । तत्र आद्यो श्वेतलोध्रे शेषा रक्तलोध्रे इति केचित् । (७) त्रयम् आम्रस्य (आम के ) । (८) असौ आम्रोऽतिसौरभश्चेत्सहकार इत्येकम् । (९) पञ्च गुग्गुलवृक्षस्य ( गुग्गुल ) इति ख्यातस्य । तत्र पुरोऽदन्तः । (१०) पञ्च शेलुवृक्षस्य ( लसोडा ) इति ख्यातस्य । (११) चत्वारि राजादनस्य ( चिरौंजी ) इति ख्यातस्य । (१२) सप्त गम्भारीवृक्षस्य ( गंभार ) इति ख्यातस्य ।

श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः ।
१कर्कन्धूर्बदरी कोलिः २कोलं कुवलफेनिले ॥ ३६ ॥
सौवीरं बदरं घोण्टाप्यथ स्यात्स्रु३दुकण्टकः ।
विकङ्कतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि ॥ ३७ ॥
४ऐरावतो नागरङ्गो नादेयी भूमिजम्बुका ।
५तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ॥३८॥
६ काकेन्दुः कुलकः काकतिन्दुकः काकपीलुके ।
७गोलीढो झाटलो घण्टापाटलिर्मोक्षमुष्ककौ ॥३९॥
८तिलकः क्षुरकः श्रीमान्समौ ९पिचुलझावुकौ ।
१०श्रीपर्णिका कुमुदिका कुम्भीकैडर्यकट्फलौ ॥४०॥
११क्रमुकः पट्टिकाख्यः स्यात्पट्टी लाक्षाप्रसादनः ।
१२ तूदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ॥४१॥

---

(१) त्रीणि बदरीवृक्षस्य ( बेर ) इति ख्यातस्य। (२) षट्कं बदरीफलस्य। (३) पञ्च विकङ्कतस्य (कटाय) इति ख्यातस्य। (४) चत्वारि नागरङ्गस्य ( नारङ्गी ) इति ख्यातस्य। (५) चत्वारि तिन्दुकस्य। ( तेन्दुआ ) इति ख्यातस्य। (६) चत्वारि काकेन्दोः ( कुचिला ) इति ख्यातस्य। (७) पञ्च घण्टापाटलेः ( मोखा ) इति ख्यातस्य। (८) त्रीणि तिलकस्य ( तालमखाना ) इति ख्यातस्य। (९) द्वे झावुकस्य। (१०) पञ्च कट्फलस्य ( कायफर ) इति ख्यातस्य। (११) चत्वारि रक्तलोध्रस्य। ( पठानी लोध ) इति ख्यातस्य। (१२) षट्कं तूदस्य—पिप्पलाकारवृक्षस्य ( सहतूत ) इति ख्यातस्य।

तूलं च १नीपप्रियककदम्बास्तु हलिप्रियः ।
२वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु ॥ ४२॥
३गर्दभाण्डे कन्दरालकपीतनसुपार्श्वकाः ।
प्लक्षश्च तिन्तिडी४ चिञ्चाम्लिकाथो ५पीतसारके॥४३॥
सर्जकासनबन्धूकपुष्पप्रियकजीवकाः ।
६साले तु सर्जकार्श्याश्वकर्णकाः सस्यसंवरः ॥४४॥
७नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः ।
८राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः ॥४५॥
९इङ्गुदी तापसतरुर्भूर्जे१०चर्मिमृदुत्वचौ ।
११पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिद्वयोः । ४६॥
१२पिच्छा तु शाल्मलीवेष्टे रोचनः१३कूटशाल्मलिः ।

---

(१) चत्वारि कदम्बस्य । (२) चत्वारि भल्लातकस्य ( **भिलावा** ) इति ख्यातस्य )। ( ३ ) पञ्च गर्दभाण्डस्य ( **लाही पीपल** ) इति ख्यातस्य । (४) त्रयं चिञ्चायाः ( **इमली के ३ नाम हैं** ) (५) षट्कं पीतसारकस्य ( **विजयसार** ) इति ख्यातस्य । (६) पञ्चकं सालवृक्षस्य ( **शाल या सखुआ** ) इति ख्यातस्य । (७) पञ्चकम् अर्जुनवृक्षस्य ( **काहू** ) इति ख्यातस्य । (८) त्रयं ( **खिरणी** ) इति ख्यातस्य । (९) द्वे इङ्गुद्याः ( **हिंगोट** ) इति ख्यातस्य । (१०) त्रीणि भूर्जवृक्षस्य । (११) पञ्च पिच्छिलावृक्षस्य ( **सेमर** ) इति ख्यातस्य । (१२)शाल्मल्या वेष्टे निर्यासे पिच्छेत्येकम् । (१३) द्वे कूटशाल्मलेः-का-

१ चिरबिल्वो नक्तमालः करजश्च करञ्जके ॥४७॥
२ प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः ।
३करञ्जभेदाः षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ॥ ४८ ॥
४रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ।
५गायत्री बालतनयः खदिरो दन्तधावनः ॥ ४९ ॥
६अरिमेदो विट्खदिरे कदरः७खदिरे सिते ।
सोमवल्कोऽप्यथ८व्याघ्रपुच्छगन्धर्वहस्तकौ ॥ ५० ॥
एरण्ड उरुबूकश्च रुचकश्चित्रकश्च सः ।
चञ्चुः पञ्चाङ्गुलो मण्डवर्धमानव्यडम्बकाः ॥ ५१ ॥
९अल्पा शमी शमीरः स्याच्छमी१०सक्तुफला शिवा ।
११पिण्डीतको मरुबकः श्वसनः करहाटकः ॥ ५२ ॥
शल्यश्च मदने १२शक्रपादपः पारिभद्रकः ।
भद्रदारु द्रुकिलिमं पीतदारु च दारु च ॥ ५३ ॥
पूतिकाष्ठं च सप्त स्युर्देवदारुण्यथ द्वयोः ।

---

ला सेमर ) इति ख्यातस्य । (१) चत्वारि करञ्जवृक्षस्य । (२) चत्वारि प्रकीर्यस्य ( काटेदार करञ्जक ) इति ख्यातस्य ।। (३) करञ्जभेदानामेकैकम् । (४) चत्वारि ( रोहिडा ) इति ख्यातस्य । (५) चत्वारि खदिरस्य । (६) द्वे दुर्गन्धिखदिरस्य (७) द्वे शुक्लखदिरस्य । (८) एकादश एरण्डस्य । (९) या स्वल्पाकारा शमी स शमीर इत्येकम् । (१०) त्रयं शम्याः । (११) षट्कं (मयनफल)इति ख्यातस्य ।(१२)स-

१पाटलिः पाटला मोघा काचस्थाली फलेरुहा ॥५४॥
कृष्णवृन्ता कुबेराक्षी श्यामा२ तु महिलाह्वया ।
लता गोवन्दिनी गुन्द्रा प्रियङ्गुः फलिनी फली ॥ ५५ ॥
विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सा ।
३मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः ॥ ५६ ॥
स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः ।
शोणकश्चारलौ तिष्य४फला त्वामलकी त्रिषु ॥ ५७ ॥
अमृता च वयस्था च त्रिलिङ्गस्तु ५बिभीतकः ।
नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ॥ ५८ ॥
६अभया त्वव्यथा पथ्या कायस्था पूतनाऽमृता ।
हरीतकी हैमवती चेतकी श्रेयसी शिवा ॥ ५९ ॥
७पीतद्रुः सरलः पूतिकाष्ठं चाथ ८द्रुमोत्पलः ।
कर्णिकारः परिव्याधो ९लकुचो लिकुचो डहुः ॥६०॥
१०पनसः कण्टकिफलो निचुलो ११हिज्जलोऽम्बुजः ।

---

८ देवदारुवृक्षस्य । (१) सप्त पाटलायाः । (२) द्वादश प्रियङ्गुवृक्षस्य (मालकाङ्गुनी) इति ख्यातस्य । (३) द्वादश स्योनाकस्य । (४) चत्वारि आमलक्याः । (५) षट्कं (बहेरा) इति ख्यातस्य । तत्र विभीतकः त्रिलिङ्गः । (६) एकादश हरीतक्याः (हर्रे) इत्याख्यस्य वृक्षस्य । (७) त्रयं सरलस्य । (८) त्रयं कर्णिकारस्य (कठचम्पा) इति ख्यातस्य । (९) त्रयं (बडहर) इति ख्यातस्य । (१०) द्वे पनसः (कटहल) इति ख्यातस्य । (११) त्रीणि

१काकोदुम्बरिका फल्गुर्मलयूर्जघनेफला ॥ ६१ ॥
२अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः ।
पिचुमन्दश्च निम्बेऽथ ३पिच्छलाऽगुरुशिंशपा ॥६२॥
कपिला भस्मगर्भा सा ४शिरीषस्तु कपीतनः ।
भण्डिलोऽप्यथ ५चाम्पेयश्चम्पको हेमपुष्पकः ॥६३॥
एतस्य कलिका ६गन्धफली स्यादथ केसरे७ ।
बकुलो ८वञ्जुलोऽशोके समौ९करकदाडिमौ ॥६४॥
१०चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः ।
११जया जयन्ती तर्कारी नादेयी वैजयन्तिका ॥६५॥
१२श्रीपर्णमग्निमन्थः स्यात्कर्णिका गणिकारिका ।

---

स्थलवेतसस्य। समुद्रफलस्य इति केचित्। जलवेतसभेदस्येत्यन्ये। (१) चत्वारि (**कठूमर–काकागूलर**) इति ख्यातस्य। (२) षट्कं निम्बस्य। (३) चत्वारि (**सीसम**) इत्याख्यवृक्षस्य। अ· गुरु इति पृथक्पदम्। शिंशपान्तं त्रयं (**सीसम**) इति ख्यातस्य, या कपिला कृष्णवर्णपुष्पा सा भस्मगर्भेत्येकमित्यन्ये। (४) त्रयं (**सीरस**) इति ख्यातस्य। (५) त्रयं चम्पकस्य। (**चम्पा**) इति ख्यातस्य। (६) एकं चम्पककलिकायाः। (७) द्वे बकुलस्य (**मौले· सरी**) इति ख्यातस्य। (८) द्वे अशोकस्य। (९) द्वे दाडिमस्य (**अनार**) इति ख्यातस्य। (१०) चत्वारि चाम्पेयस्य (**नागचम्पा**) इति ख्यातस्य। (११) पञ्च (**अरणी**) इति ख्यातस्य। (१२) पञ्च

जयोऽथ कुटजः १शक्रो वत्सको गिरिमल्लिका ॥६६॥
एतस्यैव २कलिङ्गेन्द्रयवभद्रयवं फले ।
३कृष्णपाकफलाविग्नसुषेणाः करमर्दके ॥ ६७ ॥
४कालस्कन्धस्तमालः स्यात्तापिच्छोऽप्यथ ५सिन्दुके ।
सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ॥ ६८ ॥
६वेणी खरा गरी देवताडो जीमूत इत्यपि ।
७श्रीहस्तिनी तु भूरुण्डी तृण८शून्यं तु मल्लिका ॥६९॥
भूपदी शीतभीरुश्च सैवा९स्फोटा वनोद्भवा ।
१०शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ॥७०॥
११सितासौ श्वेतसुरसा भूतवेश्यथ १२मागधी ।
गणिका यूथिकाऽम्बष्ठा सा १३पीता हेमपुष्पिका॥७१॥

---

श्रीपर्णस्य ( **जयपर्ण** ) इति ख्यातस्य । (१) चत्वारि कुटजस्य ( **कुरैया** ) इति ख्यातस्य । (२) त्रीणि कुटजबीजस्य ( **इन्द्रजौ** ) इति ख्यातस्य । (३) चत्वारि करमर्दकस्य । ( **करौन्दा** ) इति ख्यातस्य । (४) त्रयं तमालस्य ( **तमाखू** ) इति ख्यातस्य । (५) पञ्च सिन्धुवारस्य ( **निर्गुण्डी** ) इति ख्यातस्य । (६) पञ्च देवतालस्य । (७) द्वे हस्तिकर्णाभपत्रस्य । (८) चत्वारि मल्लिकायाः । ( **बेला** ) इति ख्यातस्य । (९) सैव वनोद्भवा–'**आस्फोटा**' इत्युच्यते एकम् । (१०) चत्वारि शेफालिकायाः (**नेवारी**) इति ख्यातस्य । (११) त्रीणि श्वेतनिर्गुण्ड्याः । (१२) चत्वारि यूथिकायाः ( **जूही** ) इति ख्यातस्य । (१३) सा यूथिका पीता पीतपुष्पा चेत् हेमपुष्पिका स्यात् एकम् ।

१अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता ।
२सुमना मालती जातिः सप्तला ३नवमालिका ॥ ७२ ॥
४माध्यं कुन्दं रक्त५कस्तु बन्धूको बन्धुजीवकः ।
६सहा कुमारी तरणिरम्लानस्तु ७महासहा ॥ ७३ ॥
तत्र शोणे ८कुरबकस्तत्र पीते ९कुरण्टकः ।
१०नीली झिण्टी द्वयोर्बाणा दासी चार्तगलश्च सा ॥७४॥
सैरे११यकस्तु झिण्टी १२स्यात्तस्मिन्कुरबकोऽरुणे ।
पीता कुर१३ण्टको झिण्टी तस्मिन्सहचरी द्वयोः ७५॥
१४ओण्ड्रपुष्पं जपापुष्पं वज्र१५पुष्पं तिलस्य यत् ।
१६प्रतिहासशतप्रासचण्डातहयमारकाः ॥ ७६ ॥
करवीरे १७करीरे तु क्रकरग्रन्थिलावुभौ ।

---

(१) पञ्च कुन्दभेदस्य । (२) त्रीणि जातेः, तत्र सुमनश्शब्दः सान्तः स्त्रियाम् **(चमेली)** इति ख्यातस्य । (३) द्वे नवमालिकायाः । (४) द्वे कुन्दस्य । (५) त्रीणि बन्धूकस्य । (६) त्रीणि कुमार्याः । (७) द्वे **(कटसरैया)** इति ख्यातस्य । (८) एकं **(लालकटसरैया)** इति ख्यातस्य । (९) एकं **(पीलीकटसरैया)** इति ख्यातस्य । (१०) त्रयं नीलझिण्टिकायाः (११) द्वयं झिण्टिसामान्यस्य । (१२) एकं रक्तकुरण्टकस्य । (१३) द्वयं पीतकुरण्टकस्य । (१४) द्वे जपापुष्पस्य **(आड़उल)** इति ख्यातस्य । (१५) एकं तिलपुष्पस्य । **(तिल के फूल का १ नाम है)** (१६) पञ्चकं करवीरस्य **(कनेर)** इति ख्यातस्य । (१७)त्रयं

१उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः ॥ ७७ ॥
मातुलो मदनश्चास्य फले २मातुलपुत्रकः ।
३फलपूरो बीजपूरो रुचको मातुलुङ्गके ॥ ७८ ॥
४समीरणो मरुबकः प्रस्थपुष्पः फणिज्जकः ।
जम्बीरोऽप्यथ ५पर्णासे कठिञ्जरकुठेरकौ ॥ ७९ ॥
सितेऽ६र्जकोऽत्र ७पाठी तु चित्रको वह्निसंज्ञकः ।
८अर्काह्ववसुकाऽऽस्फोटगणरूपविकीरणाः ॥ ८० ॥
मन्दारश्चार्कपर्णोऽत्र शुक्लेऽलर्कप्रतापसौ ।
१०शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः ॥ ८१ ॥
११वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि ।
१२वत्सादनी छिन्नरुहा गुडूची तन्त्रिकाऽमृता ॥ ८२ ॥

---

करीरस्य ( करील ) इति ख्यातस्य । (१) सप्तकं धत्तूरस्य । ( धत्तूरा ) इति ख्यातस्य । (२) एकं धत्तूरपुष्पस्य । (३) चत्वारि मातुलिङ्गस्य ( बीजौरा नींबू के ४ नाम हैं ) (४) पञ्चकं मरुबकस्य ( मरुवा ) इति ख्यातस्य । (५) त्रीणि पर्णासस्य (बवई) इति ख्यातस्य । (६) एकं श्वेतपर्णासस्य । (७) त्रयं चित्रकस्य ( चीत ) इति ख्यातस्य । (८) सप्तकम् अर्कवृक्षस्य ( आक-मदार ) इति ख्यातस्य । (९) द्वे शुक्लार्कस्य । (१०) पञ्च बुकस्य ( गुम्मा ) इति ख्यातस्य । (११) चत्वारि जीवन्तिकायाः ( बांदा ) इति ख्यातस्य । (१२) नव गुडूच्याः ( गुडूच ) इति ख्यातस्य ।

जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि ।
१मूर्वा देवी मधुरसा मोरटा तेजनी स्रुवा ॥ ८३ ॥
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ।
२पाठाम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा ॥ ८४ ॥
एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ।
३कटुः कटम्भराऽशोकरोहिणी कटुरोहिणी ॥ ८५ ॥
मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी ।
४आत्मगुप्ताऽजहाऽव्यण्डा कण्डुरा प्रावृषायणी ॥ ८६ ॥
ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छुश्च मर्कटी ।
५चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा ॥ ८७ ॥
प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि ।
६अपामार्गः शैखरिको धामार्गवमयूरकौ ॥ ८८ ॥
प्रत्यक्पर्णी केशपर्णी किणिही खरमञ्जरी ।
७हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ॥ ८९ ॥
अङ्गारवल्ली बालेयशाकबर्बरवर्धकाः ।

---

(१) दश मूर्वायाः (२) दश पाठायाः ( **पाठर** ) इति ख्यातायाः। (३) अष्ट कटुरोहिण्याः ( **कुटकी के ८ नाम हैं** ) (४) नव मर्कट्याः ( **कवाछ** ) इति ख्यातायाः। (५) दश मूषिकपर्ण्याः ( **मूसापर्णी** ) इति। (६) अष्टावपामार्गस्य ( **चिचिढ़ा** ) इत्यस्य। (७) नवकं भार्ग्याः ( **भारगी** ) इत्यस्य। अत्र 'हञ्जिका' इति पाठान्तरम्।

१ मञ्जिष्ठा विकसा जिङ्गी समङ्गाकालमेषिका ॥ ९० ॥
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ।
२ यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ॥ ९१ ॥
रोदनी कच्छुराऽनन्ता समुद्रान्ता दुरालभा ।
३ पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिवल्लिका ॥ ९२ ॥
क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनिर्गुहा ।
४ निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ॥ ९३ ॥
प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि ।
५ नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ॥ ९४ ॥
रञ्जनी श्रीफली तुत्था द्रोणी दोला च नीलिनी ।
६ अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ॥ ९५ ॥
कालमेषी कृष्णफला बाकुची पूतिफल्यपि ।
७ कृष्णोपकुल्या वैदेही मागधी चपला कणा ॥ ९६ ॥
उषणा पिप्पली शौण्डी कोलाऽथ ८ करिपिप्पली ।
कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान् ॥ ९७ ॥

---

(१) नवकं मञ्जिष्ठायाः । (२) दशकं धन्वयासस्य (**जवासा**) इत्यस्य । (३) नवकं सिंहपुच्छ्याः (**पिठिवन**) इत्यस्य । (४) दशकं कण्टकारिकायाः (**भटकटैया**) इति ख्यातस्य । (५) एकादश नील्याः (**नील**) इत्यस्य । (६) अष्टकं बाकुच्याः (**बाकुची**) इत्यस्य । (७) दशकं पिप्पल्याः (**पीपरि**) इत्यस्याः । (८) पञ्च गजपिप्पल्याः ।

१ चव्यं तु चविका २ काकचिञ्चीगुञ्जे तु कृष्णला ।
३ पलङ्कषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ॥ ९८ ॥
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ।
४ विश्वा विषा प्रतिविषाऽतिविषोपविषारुणा ॥ ९९ ॥
शृङ्गी महौषधं चाथ क्षीरावी ५ दुग्धिका समे ।
६ शतमूली बहुसुताऽभीरुरिन्दीवरी वरी ॥ १०० ॥
ऋष्यप्रोक्ताऽभीरुपत्रीनारायण्यः शतावरी ।
अहेरुरथ ७ पीतद्रुकालीयकहरिद्रवः ॥ १०१ ॥
दार्वी पचम्पचा दारुहरिद्रा पर्जनीत्यपि ।
८ वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ॥१०२॥
९ शुक्ला हैमवती १० वैद्यमातृसिंह्यौ तु वाशिका ।
वृषोऽटरूषः सिंहास्यो वासको वाजिदन्तकः ॥ १०३ ॥
११ आस्फोटा गिरिकर्णी स्याद्विष्णुक्रान्ताऽपराजिता ॥

---

(१) द्वे चव्यस्य (**चव्यः, चाभः२**) (२) त्रीणि गुञ्जायाः । (३) सप्तकं गोक्षुरस्य ( **गोखरू** ) इत्यस्य । (४) अष्टकम् अतिविषायाः (**अतीस**) इति ख्यातायाः । ( ५ ) द्वे दुग्धिकायाः ( **दुधिया घास २** ) (६) दशकं शतमूल्याः ( **शतावर** ) इति ख्यातायाः । (७) सप्तकं दारुहरिद्रायाः ( **दारुहल्दी ७** ) (८) पञ्च वचायाः ( **वच** ) इत्यस्य । (९) एकं श्वेतवचायाः ( **सफेद वच** ) इत्यस्य । (१०) अष्टकम् अटरूषस्य ( **अड्डूसा-वाकस ८** ) । ( ११ ) चत्वारि विष्णुक्रान्तायाः ।

१ इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः ॥ १०४ ॥
२ शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः ।
मिश्रेयाप्यथ ३ सीहुण्डो वज्रः स्नुक्स्त्री स्नुही गुडा १०५
समन्तदुग्धाथो ४ वेल्लममोघा चित्रतण्डुला ।
तण्डुलश्च कृमिघ्नश्च विडङ्गं पुंनपुंसकम् ॥ १०६ ॥
५ बला वाट्यालका ६ घण्टारवा तु शणपुष्पिका ।
७ मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ॥१०७॥
८ सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ।
त्रिभण्डी रोचनी ९ श्यामापालिन्द्यौ तु सुषेणिका १०८
काला मसूरविदलार्धचन्द्रा कालमेषिका ।
१० मधुकं क्लीतकं यष्टिमधुकं मधुयष्टिका ॥ १०९ ॥
११ विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री च या सिता ।

---

(१) पञ्च कोकिलाक्षस्य (**तालमखाना**) इत्यस्य । (२) षट्कं मधुरिकायाः (**सोआ या वनसौंफ**) इत्यस्य । (३) षट्कं वज्रद्रुमस्य (**थूहर**) इति ख्यातस्य । (४) षट्कं विडङ्गस्य (**बायविडङ्ग**) । (५) द्वे बलायाः (**बरिआर**) औषधविशेषस्य । (६) द्वे शणपुष्प्याः (**'सन सनई'**) । (७) पञ्च द्राक्षायाः (**दाख मुनक्का**) इत्यस्य । (८) सप्त त्रिवृतायाः (**सफेद निशोथ**) । (९) सप्तकं कृष्णवर्णायास्त्रिवृतायाः (**काला निशोथ**) इत्यस्य । (१०) चत्वारि यष्टिमधुकस्य (**मुलेठी**) । (११) चत्वारि विदार्याः (**शुक्ल भूमिकूष्माण्ड**) इ-

१ अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका ॥११०॥
२ लाङ्गली शारदी तोयपिप्पली शकुलादनी ।
३ खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः ॥१११॥
४ गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा ।
५ योग्यमृद्धिः सिद्धिलक्ष्म्यौ ६ वृद्धेरप्याह्वया इमे ॥११२॥
७ कदली वारणबुसा रम्भा मोचांशुमत्फला ।
काष्ठीला ८ मुद्गपर्णी तु काकमुद्गा सहेत्यपि ॥ ११३ ॥
९ वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणी ।
१० नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ॥११४॥
नकुलेष्टा भुजङ्गाक्षी छत्राकी सुवहा च सा ।
११ विदारिगन्धांशुमती सालपर्णी स्थिरा ध्रुवा ॥११५॥

---

त्यस्य । (१) त्रयं कृष्णविदार्याः ( **कृष्णभूमिकूष्माण्ड** ) इत्यस्य । (२) चत्वारि शाकभेदस्य ( **जलपीपरि** ) इत्यस्य । जलपिप्पल्याः इति केचित् । (३) पञ्चकं मयूरशिखायाः ( **अजमोदा** ) इति भाषायाम् । ( ४ ) पञ्च उत्पलशारिवायाः ( **शारिवा, ग्वार** ) इत्यस्य । ( ५ ) चत्वारि ऋद्धिनामकस्य औषधविशेषस्य । ( **केकणी-मुरुडशेंग** ) इति महाराष्ट्रभाषायाम् । ( ६ ) इमे योग्यादयश्चत्वारो वृद्धेः—वृद्धिनामकौषधेरपि नामानि । (७) षट् कदल्याः ( **केला** ) इति भाषायाम् । (८) त्रयं मुद्गपर्ण्याः ( **मुगौनी** ) इत्यस्य । ( ९ ) पञ्च वार्ताक्याः ( **बैगन वनभंटा २** ) । (१०) नव रास्नायाः ( **रासना ९** ) (११) पञ्च सा-

१तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च।
२भारद्वाजी तु सा वन्या३ शृङ्गी तु ऋषभो वृषः ॥११६॥
४गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका।
५धामार्गवो घोषकः स्यान्६महाजाली स पीतकः ॥११७॥
७ज्यौत्स्नी पटोलिका जाली ८नादेयी भूमिजम्बुका।
९स्याल्लाङ्गलिक्यग्निशिखा १०काकाङ्गीकाकनासिका॥
११गोधापदी तु सुवहा १२मुसली तालमूलिका।
अज १३ शृङ्गी विषाणी स्या१४द्गोजिह्वादार्विके समे११९
१५ ताम्बूलवल्ली ताम्बूली नागवल्ल्यप्यथ १६ द्विजा।

लपर्ण्याः ( **सरिवन** ) इत्यस्य। (१) चत्वारि कार्पास्याः ( **कपास के ४ नाम है** )। ( २ ) सा कार्पासी वने भवा चेद् भारद्वाजीत्युच्यते एकम्। (३) त्रयं ऋषभाख्यौषधिविशेषस्य। शृङ्गीशब्दः इन्नन्तः। ( ४ ) चत्वारि बलाविशेषस्य। ( ५ ) द्वे घोषवल्याः ( **सफेद फूलवाली तरोई के २** ) ( ६ ) सः–घोषकः, पीतकः–पतिपुष्पश्चेत् 'महाजाली' इत्युच्यते एकम्। ( ७ ) त्रयं पटोलिकायाः ( **चिचिढ़ा नामक तरकारी ३** ) ( ८ ) द्वे भूमिजम्बुकायाः ( **भुईं जामुन** ) इत्यस्य। ( ९ ) द्वे लाङ्गल्याः (**करिहारी**) इत्यस्य। ( १० ) द्वे काकजङ्घाख्यौषधिविशेषस्य। ( **कौवाठोंठी** ) इति ख्यातस्य। (११) द्वे हंसपादिकायाः (**लजालू**) इति ख्यातस्य। (१२) द्वे मुसल्याः (**मुसली कन्द** ) इत्यस्य। (१३) द्वे ( **मेढ़ासिङ्गी** ) इति ख्यातस्य। (१४) द्वे गोजिह्वायाः (**गोभी**) इत्युस्य। (१५) त्रीणि नागवल्याः (**नागवेल**) इति ख्यातस्य। (१६) षट्कं रेणुकाख्यगन्धद्रव्यस्य। (**संभालू के बीज**)

हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ॥ १२० ॥
एला १ वालुकमैलेयं सुगन्धि हरिवालुकम् ।
वालुकं चाथ पाल२ङ्क्यां मुकुन्दः कुन्दकुन्दरू ॥१२१॥
३ बालं ह्रीबेरबर्हिष्ठोदीच्यं केशाम्बुनाम च ।
४ कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु ॥ १२२ ॥
शैलेयं ताल५पर्णी तु दैत्या गन्धकुटी मुरा ।
गन्धिनी ग६जभक्ष्या तु सुवहा सुरभी रसा ॥१२३॥
महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ।
७ अग्निज्वालासुभिक्षे तु धातकी धातुपुष्पिका ॥१२४॥
८ पृथ्वीका चन्द्रवालैला निष्कुटिर्बहुलाथ सा ।
९ सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः ॥१२५॥
१० व्याधिः कुष्ठं पारिभाव्यं वाप्यं पाकलमुत्पलम् ।

---

इति भाषायाम् । (१) पञ्च वालुकाख्यगन्धबीजस्य ( **एलुआ** ) इत्यस्य । (२) चत्वारि कुन्दुरोः ( **पालक** ) इत्यस्य । (३) पञ्च ह्रीबेरस्य ( **नेत्रबाला** ) इत्यस्य । (४) पञ्च शैलेयस्य ( **सिलाजीत** ) इति ख्यातस्य । (५) पञ्चकं मुरायाः ( **तालिसपत्र** ) इत्यस्य । (६) अष्ट सल्लक्याः ( **सलई** ) इत्यस्य । (७) चत्वारि धातक्याः ( **धाय** ) इत्यस्य । (८) पञ्चकम् एलायाः । ( **इलायची** ) इत्यस्य (९) पञ्च सूक्ष्मैलायाः ( **छोटी इलायची** ) (१०) षट्कं कुष्ठस्य ( **कूठ** )

१शङ्खिनी चोरपुष्पी स्यात्केशिन्यथ २वितुन्नकः ॥१२६॥
झटामलाऽज्झटा ताली शिवा तामलकीति च ।
३प्रपौण्डरीकं पौण्डर्यमथ ४तुन्नः कुबेरकः ॥ १२७ ॥
कुणिः कच्छः कान्तलको नन्दिवृक्षोऽथ ५राक्षसी ।
चण्डा धनहरी क्षेमदुष्पत्त्रगणहासकाः ॥ १२८ ॥
६व्याडायुधं व्याघ्रनखं करजं चक्रकारकम् ।
७सुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली ॥ १२९ ॥
धमन्यञ्जनकेशी च ८हनुर्हट्टविलासिनी ।
शुक्तिः शङ्खः खुरः कोलदलं नखमथाढके ॥ १३० ॥
९काक्षी मृत्स्ना तुवरिका मृत्तालकसुराष्ट्रजे ।
१०कुटन्नटं दाशपुरं वानेयं परिपेलवम् ॥ १३१ ॥
प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च ।
११ग्रन्थिपर्णं शुकं बर्हं पुष्पं स्थौणेयकुक्कुरे ॥ १३२ ॥

---

इति ओषधिविशेषस्य । (१) त्रीणि शङ्खिन्याः ( **शङ्खाहुली** ) इति-लताविशेषस्य । (२) षट्कं भूम्यामलक्याः ( **भूईं आवरा** ) इत्यस्य । (३) द्वे पौण्डर्यस्य । (४) षट्कं नन्दीवृक्षस्य ( **तून** ) इति भाषायाम् । (५) षट्कं चोराख्यगन्धद्रव्यस्य । (६) चत्वारि व्याघ्रनखस्य । ( **बघनखा** ) इति ख्यातस्य । (७) सप्त नलीनामकगन्धद्रव्यस्य । ( **मालकांगनी** ) इति ख्यातस्य । (८) सप्त नवाख्यगन्धद्रव्यस्य । (९) षट् तुवरिकायाः (**रहर, अरहर**) इत्यस्य । (१०) अष्टकं कैवर्तीमुस्तकस्य (**नागरमोथा**) इत्यस्य । (११) पञ्च ग्रन्थिपर्ण-

१मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः ।
समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि ॥ १३३ ॥
२तपस्विनी जटामांसी जटिला लोमशा मिसी ।
३त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम् ॥१३४॥
४कर्चूरको द्राविडकः काल्पको वेधमुख्यकः ।
५ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् ॥१३५॥
६शाकाख्यं पत्रपुष्पादि तण्डु७लीयोऽल्पमारिषः ।
८विशल्याऽग्निशिखाऽनन्ता फलिनी शक्रपुष्पिका १३६
९स्यादृक्षगन्धा छगलान्त्र्यावेगी वृद्धदारकः ।
जुङ्गो ब्राह्मी१० तु मत्स्याक्षी वयस्था सोमवल्लरी ॥१३७॥
११पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती ।

---

स्य ( **कुकरौन्हा, गठिवन** ) इत्यस्य । (१) दशकं स्पृक्कायाः । (२) पञ्च जटामांस्याः । (३) षट् त्वक्पत्रस्य (**दालचीनी**) इति ख्यातस्य । (४) चत्वारि कर्चूरस्य ( **कचूर** ) इत्यस्य । (५) ओषधिशब्दस्य प्रयोगो जातिमात्रविवक्षायां भवति, द्रव्यमात्रविवक्षायां तु औषधशब्दप्रयोगः । (६) यत्पत्रपुष्पादि तत् शाकसंज्ञकम् । आदिना मूलादिसंग्रहः । उक्तञ्च–"मूलपत्रकरीराग्रफलकाण्डादिरूढकम् । त्वक् पुष्पं कवचं चैव शाकं दशविधं स्मृतम् । (७) द्वे तण्डुलीयस्य ( **चौराई शाक** ) इत्यस्य । (८) पञ्च विशल्यायाः ( **इन्द्रपुष्पी** ) इत्यस्य । (९) पञ्च वृद्धदारकस्य ( **विधारा** ) इति ख्यातस्य । (१०) चत्वारि सोमलतायाः (**ब्राह्मी**) इत्यस्य । (११) चत्वारि स्वर्णक्षीर्याः

१हयपुच्छी तु काम्बोजी माषपर्णी महासहा ॥१३८॥
२तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि ।
३बर्बरा कबरी तुङ्गी खरपुष्पाऽजगन्धिका ॥ १३९ ॥
४एलापर्णी तु सुवहा रास्ना युक्तरसा च सा ।
५चाङ्गेरी चुक्रिका दन्तशठाऽम्बष्ठाऽम्ललोणिका १४०
६सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि ।
७नमस्कारी गण्डकारी समङ्गा खदिरेत्यपि ॥ १४१ ॥
८जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ।
९कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः ॥ १४२ ॥
१० किराततिक्तो भूनिम्बोऽनार्यतिक्तोऽथ सप्तला११ ।
विमला सातला भूरिफेना चर्मकषेत्यपि ॥ १४३ ॥
१२ वायसोली स्वादुरसा वयस्थाथ १३मकूलकः ।
निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि ॥ १४४ ॥

---

(**मकोय**) इति ख्यातस्य। (१)चत्वारि माषपर्ण्याः। (**४ वनउरद के नाम हैं**) (२) चत्वारि तुण्डिकेर्याः (**कुनरुन**) इत्यस्य । (३) पञ्च बर्बर्याः (४) चत्वारि एलापर्ण्याः । (५) पञ्च अम्ललोण्याः (**नोनी चूक**) इत्यस्य । (६) चतुष्कम् अम्लवेतसस्य । (७) चत्वारि खदिरायाः (**'हाथा-जोड़ी'**) इत्यस्य । (८) पञ्च जीवन्त्याः । (९) पञ्च जीवकस्य । (१०) त्रयं (**चिरायता**) इति ख्यातस्य । (११)पञ्च सप्तलायाः (**सेहुण्ड**) इति ख्यातस्य । (१२) त्रयं वायसोल्याः (**काकोली**) इत्यस्य । (१३) द्वे पञ्चदन्त्याः ।

१अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका ।
२मूले पुष्करकाश्मीरपद्मपत्राणि पौष्करे ॥ १४५ ॥
३अव्यथाऽतिचरा पद्मा चारटी पद्मचारिणी ।
४काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि ॥१४६॥
५प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः ।
पद्माट उरणाख्यश्च पलाण्डुस्तु६ सुकन्दकः ॥ १४७ ॥
७लतार्कदुर्द्रुमौ तत्र हरितेऽथ महौष८धम् ।
लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ॥ १४८ ॥
९पुनर्नवा तु शोथघ्नी वितुन्नं सुनि१०षण्णकम् ।
स्याद्वा११तकः शीतलोऽपराजिता शणपर्ण्यपि ॥१४९॥
१२पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ।

---

(१) द्वे यवान्याः । ( अजवाईन ) इत्यस्य । यवानीद्वयस्य द्वे द्वे नामनी इत्यपि मतम् । चत्वारः शब्दाः पर्याया इत्येके । (२) त्रीणि पुष्करमूलस्य । (३) पञ्च उत्तरदेशे प्रसिद्धायाः पद्मचारिण्याः ( ५ स्थलकमलिनी के नाम हैं ) (४) पञ्च रोचन्याः ( कबीला ) इति ख्यातस्य । (५) षट् चक्रमर्दस्य चकवड़ ) इति ख्यातस्य । (६) द्वे पलाण्डोः ( प्याज ) इत्यस्य । (७) द्वे पलाण्डुभेदस्य । (८) षट् लशुनस्य । (९) द्वे पुनर्नवायाः । (गदहपुर्ना) इति ख्यातस्य (१०) द्वे वितुन्नस्य (खपरिया) इत्यस्य । (११) चत्वारि शणपर्ण्याः (पटशण) इत्यस्य । (१२) पञ्च ज्योतिष्मत्याः

१वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका ॥१५०॥
२विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेत्यपि ।
३मार्कवो भृङ्गराजः स्यात्का४कमाची तु वायसी ॥१५१॥
५शतपुष्पा सितच्छत्त्राऽतिच्छत्त्रा मधुरा मिसिः ।
अवाक्पुष्पी कारवी च ६सरणा तु प्रसारिणी ॥१५२॥
तस्यां कटम्भरा राजबला भद्रबलेत्यपि ।
७जनी जतूका रजनी जतुकृच्चक्रवर्तिनी ॥ १५३ ॥
संस्पर्शाथ ८शटी गन्धमूली षड्ग्रन्थिकेत्यपि ।
कर्चूरोऽपि पलाशोऽथ ९कारवेल्लः कठिल्लकः ॥१५४॥
सुषवी चाथ १०कुलकं पटोलस्तिक्तकः पटुः ।
कूष्मा११ण्डकस्तु कर्कारुरुर्वा१२रुः कर्कटी स्त्रियौ॥१५५॥
१३इक्ष्वाकुः कटुतुम्बी स्यात्तु१४म्ब्यलाबूरुभे समे ।

---

**(मालकांगनी)** इत्यस्य । (१)चतुष्कं त्रायमाणायाः । (२) चतुष्कं वाराह्याः ( **बिलाई कन्द** ) इत्यस्य । (३) द्वयं भृङ्गराजस्य ( **भांगरा** ) इति ख्यातस्य । (४) द्वे काकमाच्याः ( **मकोय** ) इत्यस्य । (५) सप्तकं शतपुष्पायाः ( **सौंफ** ) इत्यस्य । (६) पञ्च प्रसारण्याः । ( **आकाश बेल 'बंबर'** ) इत्यस्य (७) षट् चक्रवर्तिन्याः ( **चकवत्त** ) इत्यस्य । (८) पञ्चकं कर्चूरस्य । (९) त्रयं कारवेल्लस्य ( **करेला** ) इत्यस्य । (१०) चत्वारि पटोलस्य ( **परवल** ) इत्यस्य । (११) द्वयं कूष्माण्डस्य ( **कोहड़ा** ) इत्यस्य । (१२)द्वयं कर्कट्याः ( **ककड़ी** ) इत्यस्य । (१३) द्वे कटुतुम्ब्याः (१४) द्वे अलाम्ब्याः

१चित्रा गवाक्षी गोडुम्बा विशा२ला त्विन्द्रवारुणी१५६
३अर्शोघ्नः सूरणः कन्दो४गण्डीरस्तु समष्ठिला ।
५कलम्ब्युपोदिका स्त्री तु मूलकं हिलमोचिका ॥१५७॥
वास्तुकं शाकभेदाः स्युर्दूर्वा तु ६शतपर्विका ।
सहस्रवीर्याभार्गव्यौ रुहाऽनन्ताथ सा७सिता ॥१५८॥
गोलोमी शतवीर्या च गण्डाली शकुलाक्षका ।
८कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्॥१५९॥
स्याद्भद्र९मुस्तको गुन्द्रा१०चूडाला चक्रलोच्चटा ।
वंशे११त्वक्सारकर्मारत्वचिसारतृणध्वजाः ॥ १६० ॥
शतपर्वा यवफलो वेणुमस्करतेजनाः ।
वेणवः की१२चकास्तेस्युर्ये स्वनन्त्यनिलोद्धताः ॥१६१॥

---

स्त्रियाम् । (१) त्रीणि गोडुम्बायाः । (२) द्वे इन्द्रवारुण्याः । (३) त्रीणि सूरणस्य । (४) द्वे गण्डीराख्यशाकभेदस्य । (५) कलम्ब्यादयः पञ्च शाकभेदाः स्युः एकैकम् । तत्र कलम्बी वेण्वाकृति । मूलकम् (**मूली-मुरई**) इत्याख्यस्य । वास्तुकम्—'**बथुवा**' इति ख्यातस्य । (६) षट् दूर्वायाः । (७) चत्वारि शुक्लदूर्वायाः । (८) चत्वारि मुस्तायाः (**मोथा**) इत्यस्य । तत्र मुस्तकं पुंनपुंसकम् । (९) द्वे मुस्ताविशेषस्य (**नागरमोथा**) इत्यस्य । (१०) त्रीणि उच्चटामूलस्य । (११) दशकं वेणोः (**बांस**) इत्यस्य । (१२) एकं वात-

१ग्रन्थिर्ना पर्वपरुषी २गुन्द्रस्तेजनकः शरः ।
३नडस्तु धमनः पोटगलोऽथो ४काशमस्त्रियाम् ॥१६२॥
इक्षुगन्धा पोटगलः पुंसि भूम्नि तु ५बल्वजाः ।
६रसाल इक्षुस्तद्भेदाः ७पुण्ड्रकान्तारकादयः ॥ १६३ ॥
स्याद्वीरणं ८वीरतरं मूलेऽस्यो९शीरमस्त्रियाम ।
अभयं नलदं सेव्यममृणालं जलाशयम् ॥ १६४ ॥
लामज्जकं लघुलयमवदाहेष्टकापथे ।
१०नडादयस्तृण गर्मुच्छ्यामाकप्रमुखा अपि ॥१६५॥
अस्त्री ११कुशं कुथो दर्भः पवित्रमथ १२कत्तृणम् ।
पौरसौगन्धिकध्यामदेवजग्धकरौहिषम् ॥ १६६ ॥

---

पूर्णवेणूनाम् । (१) त्रीणि वंशादिग्रन्थेः । तत्र ग्रन्थिर्ना पुमान्, पर्व नान्तं क्लीबम्, परुषान्तं क्लीबम् । (२) त्रीणि शरस्य । (३) त्रीणि नडस्य । (४) त्रीणि काशस्य । (५) बल्वजा इत्येकं पुंलिङ्गं बहुवचनान्तम् । (६) द्वे इक्षोः ( ईख ) इति प्रसिद्धस्य । (७) पुण्ड्रः कान्तारकः इत्यादयस्तस्येक्षोर्भेदाः । आदिना कोशकारादिग्रहः । स च—'इक्षुः कर्कटको वंशः कान्तारो वेणुनिस्सृतिः । इक्षुरस्यः पौण्ड्रकश्च रसालः कुसुमाकरः । इति पर्कैकम् । (८) द्वे तृणभेदस्य । (९) दशकम् उशीरस्य—वीरणमूलस्य । (१०) नडादयः पूर्वोक्ता नीवारगर्मुच्छ्यामाकादयश्च—तृणजातयः । (११) चत्वारि कुशस्य । तत्र कुशं क्लीबपुंसोः । (१२) षट् रौहिषतृणस्य ( रोहिस )

१छत्रातिच्छत्रपालघ्नौ मालातृणकभूस्तृणे ।
२शष्पं बालतृणं ३घासो यवसं ४तृणमर्जुनम् ॥१६७॥
५तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः ।
६तृणराजाह्वयस्तालो ७नालिकेरस्तु लाङ्गली ॥ १६८ ॥
८घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु ।
९फलमुद्वेगमेते १०च हिन्तालसहितास्त्रयः ॥ १६९ ॥
खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः ।

इति वनौषधिवर्गः ॥ ४ ॥

---

## अथ सिंहादिवर्गः ॥ ५ ॥

११सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ।

---

इत्यस्य । (१) पञ्च वचाकृतेर्जलतृणभेदस्य । (२) द्वे कोमलतृणस्य । (३) द्वे गवादीनां भक्ष्यतृणस्य । (४) द्वे तृणमात्रस्य । (५) तृणानां संहतिः समूहस्तृण्येत्युच्यते एकम् । नडानां संहतिर्नड्येत्युच्यते एकम् । (६) द्वे तालस्य । (७) द्वे नारिकेलस्य ( **नारियल** ) इत्यस्य । (८) पञ्च पूगवृक्षस्य । (९) अस्य फलम्—उद्वेगमित्युच्यते एकम् । (१०) एते—तालनालिकेरपूगास्त्रयः, हिन्तालः–तालभेदः, स तु अल्पपरिमाणः तत्सहिताः, एवं चत्वारः खर्जूरादयश्चत्वारश्च एवमष्टौ एते तृणद्रुमा इत्युच्यन्ते । इति वनौषधिवर्गः ।

(११) षट् सिंहस्य । तत्र केसरी इन्नन्तः । अष्टौ कण्ठीरवाद्याः क्षेप-

*कण्ठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशनः ।
*पुण्डरीकः पञ्चनखचित्रकायमृगद्विषः ।
१शार्दूलद्वीपिनौ व्याघ्रे तर२क्षुस्तु मृगादनः ॥ १ ॥
३वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः ।
दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ॥ २ ॥
४कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः ।
मर्कटो वानरः कीशो वनौका अथ ५भल्लुके ॥ ३ ॥
ऋक्षाच्छभल्लभल्लूका ६गण्डके खड्गखड्गिनौ ।
७लुलायो महिषो वाहद्विषत्कासरसैरिभाः ॥ ४ ॥
स्त्रियां ८शिवा भूरिमायगोमायुमृगधूर्तकाः ।
शृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः ॥ ५ ॥
९ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक् ।

---

कोका अपि सिंहस्य । (१) त्रीणि व्याघ्रस्य (२) द्वे कुक्कुराकृतेः कृष्णरेखाचित्रितस्य मृगविशेषस्य ( **चीता या तेन्दुआ** ) इति ख्यातस्य । (३) द्वादश सूकरस्य ( **सूअर** ) इति ख्यातस्य । पोत्रि-दंष्ट्रि-घोणि-स्तब्धरोमाणो नान्ताः । (४) नवकं वानरस्य । वनौकस् सान्तः । (५) चतुष्कम् भल्लूकस्य ( **भालू रीछ** ) इति ख्यातस्य । (६) त्रयं गण्डकस्य ( **गेंडा** ) इति ख्यातस्य । तत्र खड्गी नान्तः । (७) पञ्च महिषस्य ( **भसा** ) इति ख्यातस्य । (८) दश जम्बुकस्य ( **स्यार** ) इति ख्यातस्य । शिवा शब्दो नित्यस्त्रीलिङ्गः । (९) पञ्च मार्जारस्य ।

१त्रयो गौधारगौधेरगौधेया गोधिकात्मजे ॥ ६ ॥
२श्वावित्तु शल्यस्तल्लोम्नि ३शलली शललं शलम् ।
४वातप्रमीर्वातमृगः ५कोकस्त्वीहामृगो वृकः ॥ ७ ॥
६मृगे कुरङ्गवातायुहरिणाजिनयोनयः ।
७ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु ॥ ८ ॥
८कदली कन्दली चीनश्चमूरुप्रियकावपि ।
समूरुश्चेति हरिणा ९अमी अजिनयोनयः ॥ ९ ॥
१०कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः ।
गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ॥ १० ॥
११गन्धर्वः शरभो रामः सृमरो गवयः शशः ।
१२इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः ॥ ११ ॥

---

(१) गौधेयस्य त्रीणि । (२) द्वे शल्यस्य (सेह) इति ख्यातस्य । (३) शल्यरोम्णस्त्रीणि । तत्र शलली स्त्रियाम् । इदं सीमन्तोन्नयनादावुपयुज्यते । (४) द्वे वातमृगस्य पुंसि । (५) त्रीणि वृकस्य (भेडिया) इति ख्यातस्य । (६) पञ्च हरिणस्य । (७) एण्या हरिण्याश्चर्माद्यम् आद्यशब्दात् मांसादि ऐणेयमित्युच्यते एकम् । एणस्य तु चर्माद्यम् ऐणमित्युच्यते एकम् । उभे ऐणेयम् एणं च त्रिषु स्पष्टम् । (८) षट् हरिणभेदा एकैकम् । (९) अमी षट् हरिणा वक्ष्यमाणाः कृष्णसारादयश्च अजिनयोनय उच्यन्ते । (१०) द्वादश मृगविशेषाणाम् एकैकम् । (११) गन्धर्वादयः षट् मृगभेदाः । (१२) उक्ताः सिंहादयो मृगादयो, वक्ष्यमाणाः–गवादयश्च पशुजातयः–

१*अधोगन्ता तु खनको वृकः पुंध्वज उन्दुरः ।
२उन्दुरुर्मूषकोऽप्याखुर्गिरिका३ बालमूषिका ।
४सरटः कृकलासः स्यान्मुस५ली गृहगोधिका ॥१२॥
६लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः ।
७नीलङ्गुस्तु कृमिः कर्णज८लौकाः शतपद्युभे ॥१३॥
९वृश्चिकः शूककीटः स्याद्‌लिद्रु१०णौ तु वृश्चिके ।
११पारावतः कलरवः कपोतोऽथ १२शशादनः ॥१४॥
पत्त्री श्येन उलू१३कस्तु वायसारातिपेचकौ ।
१४*दिवान्धः कौशिको घूको दिवाभीतो निशाटनः ।
१५व्याघ्राटः स्याद्भरद्वाजः १६ खञ्जरीटस्तु खञ्जनः॥१५॥

---

पशुवाच्या इत्यर्थः । (१) क्षेपकश्लोकगतनामानि पञ्च मूषकस्य । (२) त्रयं मूषकस्य । (३) द्वे स्वल्पमूषकजातेः । 'छुछुन्दरी गन्धमुखी दीर्घतुण्डी दिवान्धिका' इति श्लोकार्धं केचिदत्र पठन्ति । एतन्नामचतुष्टयं मूषकसदृशजातिविशिष्टस्य छुछुन्दरी ख्यातस्य । (४) द्वे सरटस्य ( किर्कांट ) इत्यस्य । (५) द्वे गृहगोधायाः ( छिपकली ) इत्यस्य । (६) चत्वारि लूतायाः ( मकड़ी ) इत्यस्य । (७) द्वे नीलङ्गोः । (८) द्वे कर्णजलौकायाः । (९) द्वे शूककीटस्य ऊर्णादिभक्षकस्य ( कसर ) इत्यस्य । (१०) त्रीणि वृश्चिकस्य । (११) त्रीणि पारावतस्य ( परेवा ) इत्यस्य । (१२) त्रीणि श्येनस्य ( बाज ) इत्यस्य । (१३) त्रयम् उलूकस्य ( उल्लू ) इत्यस्य । (१४) इदं पञ्चकमपि उलूकस्य । (१५) द्वे भरद्वाजस्य । (१६) द्वे चलत्पक्षस्य पक्षि-

१लोहपृष्ठस्तु कङ्कः स्यादथ २चाषः किकीदिविः ।
३कलिङ्गभृङ्गधूम्याटा अथ स्याच्छ४तपत्रकः ॥ १६ ॥
दार्वाघाटोऽथ ५सारङ्गस्तोककश्चातकः समाः ।
६कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ १७ ॥
७चटकः कलविङ्कः स्यात्तस्य स्त्री ८ चटका तयोः ।
पुमपत्ये ९चाटकैरस्त्र्यपत्ये चटकैव सा ॥ १८ ॥
कर्करेटुः १० करेटुः स्यात्कृकणक्रकरौ ११समौ ।
१२वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥ १९ ॥
१३काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः ।
ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥ २० ॥
*स एव च १४चिरञ्जीवी चैकदृष्टिश्च मौकुलिः ।
१५द्रोणकाकस्तु काकोलो १६दात्यूहः कालकण्ठकः ।

---

विशेषस्य । (१) द्वे बाणोपयोगिपत्रस्य पक्षिभेदस्य । (२) द्वे चाषस्य । (३) त्रयं धूम्याटस्य । (४) द्वे दार्वाघाटस्य ( **कठफोरा** ) इत्यस्य । (५) त्रयं चातकस्य ( **पपीहा** ) इति ख्यातस्य । (६) चत्वारि कुक्कुटस्य ( **मुर्गा** ) इत्यस्य । (७) द्वे चटकस्य ( **चिडा** ) इत्यस्य । (८) एकं चटकायाः । (९) तयोः पुमपत्यस्यैकम् । (१०) द्वयं करेटोः पक्षिणः । (११) द्वे क्रकरस्य । (१२) चत्वारि कोकिलस्य ( **कोयल** ) इत्यस्य । (१३) दशकं काकस्य । (१४) एतदपि त्रयं काकस्य । ( **कौवा के ३ नाम हैं** ) । (१५) द्वे काकभेदस्य । (१६) द्वे कालक-

१आतायिचिल्लौ२दाक्षाय्यगृध्रौ कीरशुकौ३ समौ ॥२१॥
४क्रुङ् क्रौञ्चोऽथ बकः५ कह्वः पुष्कराह्वस्तु६ सारसः ।
७कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥ २२ ॥
८कादम्बः कलहंसः स्यादुत्क्रोः९शकुररौ समौ ।
१०हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥ २३ ॥
११राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ।
मलिनैर्मल्लिकाक्षास्ते१२ धार्तराष्ट्राः१३सितेतरैः ॥ २४ ॥
१४शरारिराटिराडिश्च बलाका१५ बिसकण्ठिका ।
हंसस्य योषिद्वरटा१६ सारसस्य तु लक्ष्मणा१७ ॥२५॥
१८जतुकाऽजिनपत्रा स्यात्परोष्णी१९ तैलपायिका ।

---

ण्ठकस्य । ( काकातुआ ) इत्यस्य । (१) द्वे चिल्लस्य । ( चील्ह ) इत्यस्य । (२)द्वे गृध्रस्य ( गीध ) इति ख्यातस्य । (३) द्वे कीरस्य ( सुग्गा ) इत्यस्य । (४) द्वे क्रौञ्चपक्षिणः (५) द्वे बकस्य ( बकुला ) इत्यस्य । (६) द्वे सारसस्य । (७) चत्वारि चक्रवाकस्य ( चकवा ) इत्यस्य । (८) द्वे कादम्बस्य । (९) द्वे कुररस्य । (१०) चत्वारि हंसस्य । (११) एकं राजहंसस्य । (१२) हंसभेदस्यैकम् । (१३) कृष्णवर्णचञ्चुचरणस्य हंसविशेषस्यैकम् । (१४) त्रयम् ( आडी ) इति ख्यातस्य पक्षिणः । (१५) द्वे बलाकायाः (१६) एकं हंसस्त्रियः । (१७) एकं सारसस्त्रियः । (१८) द्वे चर्मचटकायाः । (१९) तैलपायिकायाः द्वयम् । चत्वार्यपि जतुकायाः इत्येके ।

१वर्वणा मक्षिका नीला, २सरघा मधुमक्षिका ॥ २६ ॥
३पतङ्गिका पुत्तिका स्याद्दंशस्तु४ वनमक्षिका ।
५दंशी तज्जातिरल्पा स्याद्गन्धोली६ वरटा द्वयोः ॥२७॥
७भृङ्गारी झीरुका चीरी झिल्लिका च समा इमाः ।
समौ ८पतङ्गशलभौ खद्योतो९ ज्योतिरिङ्गणः ॥ २८ ॥
१०मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ।
द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥ २९ ॥
११मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् ।
शिखावलः शिखी केकी मेघनादानुलास्यपि ॥ ३० ॥
१२केका वाणी मयूरस्य समौ चन्द्रकमेचकौ१३ ।
१४शिखा चूडा१५शिखण्डस्तु पिच्छबर्हे नपुंसके॥३१॥
१६खगे विहङ्गविहगविहङ्गमविहायसः ।
शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ॥ ३२ ॥

---

(१) त्रयं मक्षिकायाः। (२) द्वे मधुमक्षिकायाः। (३) द्वे मधुमक्षिकाभेदस्य। (४) द्वे वनमक्षिकायाः। (५) एकं मक्षिकाविशेषस्य। (६) द्वे गन्धोल्याः। तत्र वरटा स्त्रीपुंसयोः (७) चत्वारि भृङ्गार्याः। (८) द्वे शलभस्य ( पतिङ्गा ) इत्यस्य। ( ९ ) द्वे खद्योतस्य। ( १० ) एकादश भ्रमरस्य। (११) नव मयूरस्य। (१२) मयूरवाण्या एकम्॥(१३) द्वे पिच्छस्य–नेत्राकारचिह्नस्य। (१४, द्वे मयूरशिखायाः। ( १५ ) त्रीणि मयूरपिच्छस्य। (१६) सप्तविंशतिः पक्षिमात्रस्य। तत्र शकुन्तिरिदन्तः, शकुन्तोऽदन्तः। विरित्येकाक्षरं नाम। नभसङ्गम इति पञ्चाक्षर-

पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः ।
नगौकोवाजिविकिरविविष्किरपतत्रयः ॥ ३३ ॥
नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमाः ।
तेषां विशेषा १हारीतो मद्गुः कारण्डवः प्लवः ॥३४॥
तित्तिरिः कुक्कुभो लावो जीवंजीवश्चकोरकः ।
कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः ॥ ३५ ॥
२गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम् ।
स्त्री ३पक्षतिः पक्षमूलं चञ्चुस्त्रोटिरुभे४स्त्रियौ ॥ ३६ ॥
५प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः ।
६पेशी कोषो द्विहीनेऽण्डं कुलायो७नीडमस्त्रियाम् ॥३७॥
८पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।
९स्त्रीपुंसौ मिथुनं द्वन्द्वं १०युग्मं तु युगलं युगम् ॥३८॥
११समूहो निवहव्यूहसंदोहविसरव्रजाः ।

---

म् । (१) त्रयोदश पक्षिजातिविशेषाणाम् । (२) षट् पक्षाणाम् । (३)द्वे पक्षमूलस्य । (४) द्वे पक्षितुण्डस्य । (५) पक्षिगतिविशेषाणाम् एकैकं नामधेयम् । तत्र प्रडीनं तिर्यग्गमनम् । उड्डीनम्—ऊर्ध्वगमनम् । संडीनम्—सङ्गतगमनम् । (६) त्रयम् अण्डस्य । तत्र पेशी स्त्री । कोशोऽस्त्रियाम् । अण्डं द्विहीने क्लीबे इत्यर्थः । (७) द्वे पक्षिगृहस्य (घोंसला) इत्यस्य । (८) सप्तकं शिशुमात्रस्य । (९) त्रीणि स्त्रीपुरुषरूपयुग्मस्य । (१०) त्रयं युग्मस्य । (११) द्वाविंशतिः समूहस्य ।

स्तोमौघनिकरव्रातवारसङ्घातसञ्चयाः ॥ ३९ ॥
समुदायः समुदयः समवायश्चयो गणः ।
स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥ ४० ॥
१वृन्दभेदाः समैर्वर्गः २सङ्घसार्थौ तु जन्तुभिः ।
३सजातीयैः कुलं यूथं तिरश्चां४ पुन्नपुंसकम् ॥ ४१ ॥
५पशूनां समजोऽन्येषां६समाजोऽथ ७सधर्मिणाम् ।
स्यान्निकायः पुञ्जराशी८ तूत्करः कूटमस्त्रियाम् ॥४२॥
९कापोतशौकमायूरतैत्तिरादीनि तद्गणे ।
१०गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ॥ ४३ ॥

इति सिंहादिवर्गः ॥ ५ ॥

---

(१) इदानीं समुदायविशेषा उच्यन्ते । समैः—सजातीयैः प्राणिभिरप्राणिभिर्वा समूहो वर्ग इत्युच्यते एकम् । यथा—मनुष्यवर्गः शैलवर्गः इत्यादि । ( २ ) जन्तूनां समूहे—सङ्घसार्थौ बोध्यौ । ( ३ ) सजातीयानां समूहः—कुलम् । ( ४ ) तिरश्चाम्–पक्ष्यादीनामेव समूहो यूथः । ( ५ ) पशूनां—समूहः समजः एकम् । ( ६ ) अन्येषां पश्वतिरिक्तानां वृन्दं समाजः । ( ७ ) सधर्मिणाम् एकधर्मवतां समूहो निकायः । ( ८ ) चत्वारि धान्यादिराशेः । ( ९ ) कापोतादीनां समूहे एकैकम् पृथक् पृथक् । ( १० ) द्वे गृहाश्रितपक्षिमृगादीनाम् ।

इति सिंहादिवर्गः ।

## अथ मनुष्यवर्गः ॥ ६ ॥

१मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।
स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ १ ॥
२स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥ २ ॥
३विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ।
प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥ ३ ॥
सुन्दरी रमणी रामा कोपना४ सैव भामिनी ।
५वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ ४ ॥
६कृताभिषेका महिषी भोगिन्योऽन्या ७नृपस्त्रियः ।
८पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५ ॥
भार्या जायाथ पुंभूम्नि दाराः स्यात्तु ९कुटुम्बिनी ।
पुरन्ध्री १०सुचरित्रा तु सती साध्वी पतिव्रता ॥ ६ ॥
११कृतसापत्निकाऽध्यूढाऽधिविन्नाथ १२स्वयंवरा ।

---

( १ ) एकादश मनुष्याणाम् । ( २ ) एकादश स्त्रियाः । ( ३ ) विशेषाः स्त्रीणां भेदा वक्ष्यन्ते । उत्तमस्त्रीणां द्वादशभेदाः । (४) द्वे कोपशीलायाः । (५) चत्वारि गुणैरुत्कृष्टायाः स्त्रियाः । ( ६ ) या कृताभिषेका नृपस्त्री सा महिषीत्येकम् ( पटरानी ) इत्यस्य । [(७) एकम् अकृताभिषेकायाः । (८) सप्त परिणीतायाः स्त्रियाः । ( ९ ) द्वे पतिपुत्रादिमत्याः । (१०) चत्वारि पतिसेवातत्परायाः । (११) त्रीणि कृतानेकविवाहस्य पुंसो या प्रथमोढा स्त्री तस्याः । (१२) त्रीणि स्वेच्छया पतिवर-

पतिंवरा च वर्याथ कुलस्त्री[१] कुलपालिका ॥ ७ ॥
[२]कन्या कुमारी गौरी[३] तु नग्निकाऽनागतार्तवा ।
स्यान्मध्यमा[४] दृष्टरजास्तरुणी[५] युवतिः समे ॥ ८ ॥
समाः [६]स्नुषाजनीवध्वश्चिरिण्टी[७] तु सुवासिनी ।
[८]इच्छावती कामुका स्याद्वृष[९]स्यन्ती तु कामुकी॥९॥
[१०]कान्तार्थिनी तु या याति संकेतं साऽभिसारिका ।
[११]पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी ॥ १० ॥
स्वैरिणी पांसुला च स्यादशि[१२]श्वी शिशुना विना ।
[१३]अवीरा निष्पतिसुता विश्व[१४]स्ताविधवे समे ॥११॥
[१५]आलिः सखी वयस्याथ पति[१६]वत्नी सभर्तृका ।
[१७]वृद्धा पलिक्नी प्राज्ञी[१८]तु प्रज्ञा प्राज्ञा[१९]तु धीमती ॥

---

णोद्युक्तायाः । ( १ ) द्वे कुलवत्याः । ( २ ) द्वे प्रथमवयसि वर्तमानायाः । ( ३ ) त्रीणि अदृष्टरजस्कायाः । (४) द्वे प्रथमप्राप्तरजोयोगायाः । ( ५ ) द्वे युवत्याः । ( ६ ) त्रयं पुत्रादिभार्यायाः । ( ७ ) द्वे किञ्चिल्लब्धयौवनायाः परिणीतायाः । (८) द्वे यभनादीच्छावत्याः । (९) द्वे मैथुनेच्छावत्याः । ( १० ) या कान्तार्थिनी भर्तुः सङ्केतस्थानं गच्छति साऽभिसारिका एकम् । (११) अष्ट स्वैरिण्याः । (१२) शिशुरहिताया एकम् । (१३) पतिपुत्ररहिताया एकम् । (१४) द्वे रण्डायाः। (१५)त्रयं सख्याः । (१६) द्वे जीवद्भर्तृकायाः । (१७) द्वे पक्वकेश्याः । (१८) द्वे प्रज्ञायाः । (१९) द्वे बुद्धिमत्याः ।

१शूद्री शूद्रस्य भार्या स्याच्छूद्रा२ तज्जातिरेव च ।
३आभीरी तु महाशूद्री जातिपुंयोगयोः समा ॥ १३ ॥
४अर्याणी स्वयमर्या स्यात्क्षत्रिया५ क्षत्रियाण्यपि ।
६उपाध्यायाप्युपाध्यायी स्यादा७चार्यापि च स्वतः ॥ १४॥
आचा८र्यानी तु पुंयोगे९स्यादर्यी क्षत्रियी१०तथा ।
११उपाध्यायान्युपाध्यायी पोटा१२स्त्रीपुंसलक्षणा ॥१५॥
१३वीरपत्नी वीरभार्या वीर१४माता तु वीरसूः ।
१५जातापत्या प्रजाता च प्रसूता च प्रसूतिका ॥ १६ ॥
स्त्री नग्निका१६कोटवी स्याद्दूती१७संचारिके समे ।
१८कात्यायन्यर्धवृद्धा या काषायवसनाऽधवा ॥ १७ ॥

---

(१) विजातीयाया अपि शूद्राभार्याया एकम् । (२) अन्यभार्याया अपि शूद्रजातीयाया एकम् । (३) द्वे 'गोपालिकायाः' जातौ पुंयोगे वा । (४) द्वे वैश्यजात्युत्पन्नायाः स्त्रियाः । (५) द्वे क्षत्रियजात्युद्भूतायाः । (६) द्वे स्वयं या अध्यापिका तस्याः । (७) मन्त्रव्याख्याकृदाचार्याया एकम् । (८) एकम् आचार्यस्त्रियः । (९) अर्यस्त्रियं एकम् । (१०) क्षत्रियस्त्रिय एकम् । (११) द्वे उपाध्यायभार्यायाः । (१२) एकं स्तनश्मश्रुलोमवत्याः । (१३) द्वे वीरपत्न्याः । (१४) द्वे वीरजनन्याः । (१५) चत्वारि प्रसूतायाः । (१६) द्वे नग्निकायाः । (१७) द्वे दूतिकायाः । (१८) अर्धवृद्धा काषायवस्त्राऽधवेति विशेषणत्रयविशिष्टा या सा कात्याय-

१सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।
२असिक्नी स्यादवृद्धा या प्रेष्याऽन्तःपुरचारिणी॥१८॥
३वारस्त्री गणिका वेश्या रूपाजीवाथ सा जनैः ।
४सत्कृता वारमुख्या स्यात्कु५ट्टनी शम्भली समे॥१९॥
६विप्रश्निका त्वीक्षणिका दैवज्ञाथ ७रजस्वला ।
स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि ॥ २० ॥
ऋतुमत्यप्युदक्यापि स्याद्रजः ८पुष्पमार्तवम् ।
९श्रद्धालुर्दोहदवती १०निष्कला विगतार्तवा ॥२१॥
११आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी ।
१२गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे ॥२२॥
१३पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः १४पतिः ।

---

नीत्युच्यते एकम् । (१) या परवेश्मस्थास्वतन्त्रा केशप्रसाधनादिशिल्पकारिणी तस्या एकम् । (२) अवृद्धा प्रेष्याऽन्तःपुरचारिणीति च या सा 'असिक्नी' इत्येकम् । ( ३ ) चत्वारि वेश्यायाः । ( ४ ) जनसत्कृतवेश्याया एकम् । (५) द्वे कुट्टिन्याः । (६) त्रयं शुभाशुभनिरूपिण्याः । ( ७ ) सप्त रजस्वलायाः । ( ८ ) त्रीणि स्त्रीरजसः । ( ९ ) द्वे दोहदवत्याः । ( १० ) द्वे हीनरजस्कायाः । (११) चत्वारि गर्भिण्याः । (१२) गणिकादेः समूहे गाणिक्यादि । यथा–गणिकानां समूहो गाणिक्यम्, गर्भिणीनां समूहो गार्भिणम् । युवतीनां समूहो यौवतम् एकैकम् । (१३) द्विवारं संस्कृताया द्वे । पूर्वमेकस्य भूत्वा पुनरन्यस्य भवतीति पुनर्भूः । 'अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः' । इति । (१४) पुनर्भूपत्युरेकम् पुंसि ।

स तु द्विजोऽग्रे १दिधिषूः सैव यस्य कुटुम्बिनी ॥ २३ ॥
२कानीनः कन्यकाजातः सुतोऽथ सुभ३गासुतः ।
सौभागिनेयः स्यात्पार४स्त्रैणेयस्तु परस्त्रियाः ॥ २४ ॥
५पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः ।
सुता मातृष्व६सुश्चैवं वैमा७त्रेयो विमातृजः ॥ २५ ॥
अथ ८बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः ।
कौलटेरः कौलटेयो भिक्षु९की तु सती यदि ॥ २६ ॥
तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः ।
१०आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी११ ॥२७॥
आहुर्दुहितरं सर्वेऽपत्यं १२तोकं तयोः समे ।
स्वजाते १३त्वौरसोरस्यौ तातस्तु १४जनकः पिता॥२८॥
१५जनयित्री प्रसूर्माता जननी भगिनी १६स्वसा ।

---

(१) पुनर्भूप्रधानभार्यस्य पुंस एकम् । (२) द्वे कन्यकासु जातस्य । (३) द्वे सुभगापुत्रस्य । (४) यः परस्त्रियाः सुतः पारस्त्रैणेय एकम् । (५) द्वे पितृभगिन्याः सुतस्य । (६) मातृष्वसुः सुतोऽप्येवम् । यथा—मातृष्वसेयः, । मातृष्वस्रीयः द्वे । (७) मातुः सपत्नीसुतस्य द्वे । (८) पञ्च कुलटापुत्रस्य । (९) सत्या भिक्षुक्याः पुत्रस्य द्वे । (१०) पञ्चकं पुत्रस्य । (११) अमी पुत्रादयः सर्वे स्त्रियां वर्तमानाः पुत्री सुतामित्याहुः । (१२) द्वे तयोः समे पुत्रे दुहितरि च क्लीबलिङ्गे एवेत्यर्थः । (१३) द्वे स्वस्माज्जातस्य पुत्रस्य । (१४) त्रीणि पितुः । (१५) चत्वारि जनन्याः । (१६) द्वे स्वसुः ।

ननान्दा १तु स्वसा पत्युर्नप्त्री २ पौत्री सुतात्मजा॥२९॥
भार्यास्तु ३भ्रातृवर्गस्य यातरः स्युः परस्परम् ।
४प्रजावती भ्रातृजाया मातुलानी५ तु मातुली ॥३०॥
६पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः ।
पितुर्भ्राता ७पितृव्यः स्यान्मातुर्भ्राता तु मातुलः ॥३१॥
८श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ ।
१०स्वस्रीयो भागिनेयः स्याज्जामाता ११दुहितुः पतिः ३२
१२पितामहः पितृपिता तत्पिता १३प्रपितामहः ।
१४मातुर्मातामहाद्येवं सपिण्डास्तु १५सनाभयः ॥३३॥
१६समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ।

---

(१) एकं पत्युःस्वसुः ( **ननंद** ) इत्यस्य। (२) त्रयं पुत्रदुहित्रोरपत्यस्य । ( ३ ) भ्रातृवर्गस्य भार्याः परस्परं यातरः स्युरेकम् ( **देवरानी-जेठानी** ) इत्यस्य। (४) द्वे भ्रातृजायायाः ( **भौजाई** ) इत्यस्य । (५) द्वे मातुलभार्यायाः ( **मामी** ) इत्यस्य। ( ६ ) पत्युः पत्न्याश्च मातुरेकम्, श्वश्रूः। ( **सास** ) इत्यस्य। एवं पत्युः पत्न्याश्च पिता 'श्वशुरः' ( **ससुर** ) इति ऐकम्। (७) पितुः भ्राता पितृव्य इति एकम्। एवं मातुः भ्राता मातुल इति एकम्। ( ८ ) पत्नीभ्रातुरेकम् ( **साला** ) इत्यस्य। ( ९ ) पतिभ्रातुर्द्वे। ( १० ) द्वे भगिनीसुतस्य ( **भानजा** ) इत्यस्य। (११) दुहितुः पतिः—'जामाता' इत्येकम्। (१२) द्वे पितामहस्य ( **दादा** ) इत्यस्य। ( १३ ) एकं प्रपितामहस्य ( **परदादा** ) इत्यस्य। (१४) मातुःपिता मातामहः एकम्, तत्पिता प्रमातामहः, एकम्। (१५) द्वे सपिण्डानाम्। (१६) चत्वारि एकमा०

१सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥ ३४ ॥
२ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः ।
३धवः प्रियः पतिर्भर्ता ४जारस्तूपपतिः समौ ॥३५॥
अमृते जारजः ५कुण्डो मृते भर्तरि गोलकः ।
६भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ ७भ्रातरावुभौ ॥३६॥
८मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।
९श्वश्रूश्वशुरौ श्वशुरौ१०पुत्रौ पुत्रश्च दुहिता च ॥ ३७ ॥
११दम्पती जम्पती जायापती भार्यापती च तौ ।
१२गर्भाशयो जरायुः स्यादुल्वं १३ च कललोऽस्त्रियाम३८
१४सूतिमासो वैजननो १५गर्भो भ्रूण इमौ समौ ।
१६तृतीयाप्रकृतिः शण्ढः क्लीबः पण्डो नपुंसके ॥३९॥

---

तृजातानाम् । (१) षट् सगोत्रस्य । (२) ज्ञातिभावस्य बन्धुसमूहस्य चैकैकम् । (३) चत्वारि पत्युः । (४) द्वे मुख्यादन्यस्य भर्तुः । (५) अमृते भर्तरि सति जाराज्जातः कुण्ड इत्युच्यते एकम् । मृते भर्तरि जाराज्जातो गोलक इत्येकम् । (६) द्वे भ्रातृपुत्रस्य । (७) भ्रातृभगिन्यौ भ्रातराविति स्याताम् एकम् । (८)चत्वारि द्विवचनान्तानि मात्रा सहोक्तस्य पितुः । (९) द्वे सहोक्तयोः श्वश्रूश्वशुरयोः । (१०)सहोक्तयोः पुत्रकन्ययोर्द्वे । (११) चत्वारि दंपत्योः । (१२) द्वे गर्भाशयस्य । (१३) शुक्रशोणितसन्निपातस्य द्वे । उल्बपर्यायः कलल इत्येके । (१४) द्वे प्रसवमासस्य । (१५) द्वे कुक्षिस्थस्य प्राणिनः । (१६)पञ्च न-

१शिशुत्वं शैशवं बाल्यं २तारुण्यं यौवनं समे ।
३स्यात्स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्धकम् ॥४०॥
४पलितं जरसा शौक्ल्यं केशादौ विस्रसा५ जरा ।
स्यादुत्तानशया६ डिम्भा स्तनपा च स्तनन्धयी ॥४१॥
७बालस्तु स्यान्माणवको ८वयस्थस्तरुणो युवा ।
९प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥ ४२ ॥
१०वर्षीयान्दशमी ११ज्यायान्पूर्वजस्त्वग्रियोऽग्रजः ।
१२जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः ॥४३॥
१३अमांसो दुर्बलश्छातो बलवान्मांसलोंऽसलः१४ ।
१५तुन्दिलस्तुन्दिभस्तुन्दीबृहत्कुक्षिःपिचण्डिलः ॥ ४४ ॥
१६अवटीटोऽवनाटश्चा वभ्रटो नतनासिके ।
१७केशवः केशिकः केशी १८वलिनो वलिभः समौ॥४५॥

---

पुंसकस्य। तृतीयाप्रकृतिरिति षडक्षरं नाम। (१) त्रयं बालत्वे। (२) द्वे तारुण्यस्य। (३) त्रीणि वृद्धत्वस्य (बुढ़ापा) इत्यस्य। वृद्धसंघेऽपि 'वार्धकम्' इत्येकम् (४) केशादौ जरसा शौक्ल्यस्यैकम्। (५) द्वे जरायाः। (६) चत्वारि स्तनंधयस्य। (७) द्वे बालस्य। (८) त्रयं यूनः। (९) षट्कं वृद्धस्य। (१०) त्रीण्यतिवृद्धस्य। (११) त्रीणि ज्येष्ठभ्रातुः। (१२) पञ्चकं कनिष्ठभ्रातुः। (१३) त्रीणि अबलस्य (दुबला) इत्यस्य। छातश्चवर्गादिः। (१४) त्रीणि बलवतः। (१५) पञ्च बृहदुदरस्य। (१६) चत्वारि चिपिटनासिकस्य। (१७) त्रयं प्रशस्तकेशस्य। (१८) द्वे जरया श्लथचर्मणः।

विकला १ङ्गस्त्वपोगण्डः २खर्वो ह्रस्वश्च वामनः ।
३खरणाःस्यात्खरणसो विग्रस्तु४ गतनासिकः ॥ ४६ ॥
खुर५णाः स्यात्खुरणसः ६प्रज्ञुः प्रगतजानुकः ।
७ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्सं८ज्ञुः संहतजानुकः ॥४७॥
स्यादे९डे बधिरः १०कुब्जे गडुलः ११कुकरे कुणिः ।
१२ पृश्निरल्पतनौ श्रोणः १३ पङ्गौ मुण्डस्तु१४ मुण्डिते४८
१५ बलिरः केकरे खोडे१६ खञ्जस्त्रिषु जरावराः ।
१७जडुलः कालकः पिप्लुस्ति१८लकस्तिलकालकः ॥४९॥
अनामयं १९ स्यादारोग्यं चिकित्सा२० रुक्प्रतिक्रिया ।

---

(१)द्वे निसर्गतो न्यूनाधिकावयवस्य ।(२) त्रयं ह्रस्वस्य (बौना)इत्यस्य (३) द्वे तीक्ष्णनासिकस्य।(४) द्वे गतनासिकस्य । (५) द्वे विकटनासिकस्य । (६) द्वे यस्य जानुनोर्महदन्तरालं वर्तते, तस्य । (७) द्वे ऊर्ध्वजानुकस्य । (८) द्वे संलग्नजानुकस्य । (९) द्वे श्रवणेन्द्रियहीनस्य । (१०) द्वे कुब्जस्य (कुबड़ा) इत्यस्य । (११) द्वे रोगादिना दूषितकरस्य । (१२) द्वे अल्पतनोः—अमानुषप्रायस्य । (१३) द्वे जङ्घाविकलस्य । (१४) द्वे कृतवपनस्य । (१५) द्वे नेत्रवियुक्तस्य । (१६) द्वे गतिविकलस्य (लंगडा ) इत्यस्य । जराशब्दाद् अवराः अर्वाक्पठिताः उत्तानशयाद्याः खजान्तास्त्रिषु वाच्यलिङ्गा इत्यर्थः । (१७) त्रयं कृष्णवर्णस्य देहगतचिह्नविशेषस्य । (१८) द्वे आकृतितो वर्णतश्च कृष्णतिलतुल्यस्य देहगतचिह्नस्य । (१९) द्वे रोगाभावस्य । (२०) द्वे रोगप्रती-

१भेषजौषधभैषज्यान्यगदो जायुरित्यपि ॥ ५० ॥
स्त्री २रुग्रुजा चोपतापरोगव्याधिगदामयाः ।
क्षयः३शोषश्च यक्ष्मा च प्रतिश्या४यस्तु पीनसः ॥५१॥
स्त्री ५क्षुत्क्षुतं क्षवः पुंसि कासस्तु६ क्षवथुः पुमान् ।
७शोफस्तु श्वयथुः शोथः ८पादस्फोटो विपादिका ॥
९किलाससिध्मे १० कच्छ्वां तु पाम पामा विचर्चिका ।
११कण्डूः खर्जूश्च कण्डूया विस्फोटः१२ पिटकः स्त्रियाम् ॥
१३व्रणोऽस्त्रियामीर्ममरुः क्लीबे १४नाडीव्रणः पुमान् ।
१५कोठो मण्डलकं कुष्ठश्वित्रे १६दुर्नामकार्शसी ॥५४॥
१७ आनाहस्तु निबन्धः स्याद् ग्र१८हणी रुक्प्रवाहिका ।
१९प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः ॥५५॥

---

कारस्य । (१) पञ्चौषधस्य । (२) सप्त रोगमात्रस्य । तत्र रुक् जकारान्तः । (३) त्रीणि क्षयरोगस्य । (४) द्वे पीनसरोगस्य । **( जुकाम—सर्दी )** इत्यस्य । (५) त्रीणि क्षुतः **( छींक )** इत्यस्य । (६) द्वे कासरोगस्य **( खांसी )** इत्यस्य । (७) त्रीणि शोथस्य **( सूजन )** इत्यस्य । (८) द्वे पादस्फोटस्य **( विवाई )** इत्यस्य । (९) द्वे सिध्मस्य । (१०) चतुष्कं स्त्रीलिङ्गं विचर्चिकायाः । तत्र पामे नान्तम् । पामानः । अपरं टाबन्तम् । पामे । (११) त्रयं खर्ज्वाः । (१२) द्वे विस्फोटस्य (१३) त्रीणि व्रणस्य । व्रणोऽस्त्रियाम् । अरुः सान्तं क्लीबे । (१४) यो व्रणः सदा गलति तत्र नाडीव्रण इत्येकः । (१५) चत्वारि कुष्ठस्य । (१६) द्वे अर्शोरोगस्य । (१७) द्वे मलमूत्रानिरोधस्य । (१८) द्वे संग्रहणीरोगस्य । (१९) त्रीणि वमनरोगस्य ।

१व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगन्दराः ।
*२श्लीपदं पादवल्मीकं केश३घ्नस्त्विन्द्रलुप्तकः ।
४अश्मरी मूत्रकृच्छ्रं स्यात्पूर्वे ५शुक्रावधेस्त्रिषु ॥५६॥
६रोगहार्यगदङ्कारो भिषग्वैद्यौ चिकित्सके ।
७वार्तो निरामयः कल्य उल्ला८घो निर्गतो गदात् ॥५७॥
९ग्लानग्लास्नू आम१०यावी विकृतो व्याधितोऽपटुः ।
आतुरोऽभ्यमितोऽभ्यान्तः समौ ११पामनकच्छुरौ ॥५८॥
१२दद्रुणो दद्रूरोगी स्याद१३र्शोरोगयुतोऽर्शसः ।
१४वातकी वातरोगी स्यात्सा१५तिसारोऽतिसारकी॥५९॥
स्युः१६क्लिन्नाक्षे चुल्लचिल्लपिल्लाःक्लिन्नेऽक्ष्णि चाप्यमी
उन्म१७त्त उन्मादवति श्लेष्म१८लः श्लेष्मणः कफी ६०
१९न्युब्जो भुग्ने रुजा वृद्ध२०नाभौ तुन्दिलतुन्दिभौ ।

---

(१) विद्रध्यादिरोगविशेषाणामेकैकम् । तत्र विद्रधिः स्त्रियाम् । (२) श्लीपदरोगस्य । (३) द्वयं मस्तककेशरोगस्य । (४) द्वे अश्मर्याः । (५) इतः परं शुक्रावधेः वक्ष्यमाणात् शुक्रशब्दात्पूर्वं मूर्च्छितान्तास्त्रिषु त्रिलिङ्गा इत्यर्थः । (६) पञ्च वैद्यस्य । (७) त्रीणि रोगरहितस्य । (८) एकं रोगान्मुक्तस्य । (९) द्वे रोगादिवशात् हर्षरहितस्य । (१०) सप्तकं रोगिणः । (११) द्वे पामायुक्तस्य । (१२) द्वे दद्रुयुक्तस्य । (१३) द्वे अर्शोरोगिणः । ( **बवासीर रोगी** ) इत्यस्य । (१४) द्वे वातरोगिणः (१५) द्वे अतीसाररोगिणः । (१६) चत्वारि क्लेदयुक्ते अक्षिणी यस्य तस्य पुंसः । इमान्येव क्लिन्ने नेत्रेऽपि । (१७) द्वे उन्मादयुक्तस्य । (१८) त्रीणि कफयुक्तस्य । (१९) रोगेण भुग्नस्यैकम् । (२०)

किला१सी सिध्मलोऽन्धो२ऽदृङ्मू३च्छाले मूर्तमूर्च्छितौ
४शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च ।
५मायुः पित्तं कफः६ श्लेष्मा स्त्रियां तु ७त्वगसृग्धरा॥
८पिशितं तरसं मांसं पललं क्रव्यमामिषम् ।
उत्त९प्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम् ॥६३॥
१० रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम् ।
११बुक्काग्रमांसं १२हृदयं हृन्मेद१३स्तु वपा वसा॥६४॥
पश्चाद्ग्रीवा१४शिरा मन्या१५नाडी तु धमनिः शिरा ।
ति१६लकंक्लोममस्ति१७ष्कं गोर्दं किट्टं१८मलोऽस्त्रियाम्

---

त्रीणि वातादिनोन्नतनाभेः । (१) द्वे सिध्मयुक्तस्य । (२) द्वे दृष्टिहीनस्य । (३) त्रीणि मूर्च्छायुक्तस्य । (४) षट् रेतसः । (५) द्वे पित्तस्य । (६) द्वे कफस्य । तत्र श्लेष्मन् नान्तः-श्लेष्माणौ । (७) द्वे चर्मणः । (८) षट्कं मांसस्य । (९) त्रीणि शुष्कमांसस्य । तत्र वल्लूरं त्रिषु । (१० सप्त रक्तस्य । (११) द्वे हृदयान्तर्गतपद्माकारमांसभेदस्य । (१२) द्वे हृदयाख्यनिम्नदेशस्य । बुक्कादिचतुष्कं समानार्थमित्येके । (१३) त्रीणि मांसजन्यस्नेहस्य । (१४) ग्रीवापश्चाद्भागे स्थितायाः शिराया एकम् । (१५) त्रीणि नाड्याः स्त्रियाम् । (१६) द्वे मांसपिण्डविशेषस्य । क्लोममित्यदन्तमपि । (१७) द्वे मस्तकसम्भूतघृताकारस्नेहस्य । (१८) द्वे कर्णादिगतमलस्य । 'वसा शुक्रमसृक् मज्जाकर्णविण्मूत्रविण्नखाः । श्लेष्माश्रुदूषिकाः स्वेदो द्वादशैते नृणां मलाः ।'

१अन्त्रं पुरीतद् गुल्म२स्तु प्लीहा पुंस्यथ३वस्नसा ।
स्नायुः स्त्रियां काल४खण्डयकृती तु समे इमे ॥ ६६ ॥
५सृणिका स्यन्दिनी लाला दूषिका६ नेत्रयोर्मलम् ।
७नासा७मलं तु सिङ्घाणं पिञ्जूषः ८ कर्णयोर्मलम् ।
९मूत्रं प्रस्राव उच्चा१०रावस्करौ शमलं शकृत् ॥६७॥
पुरीषं गूथवर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ ।
स्यात्क११र्परः कपालोऽस्त्री की१२कसं कुल्यमस्थि च ॥
स्याच्छरीरास्थ्नि १३कङ्कालः पृष्ठास्थ्नि तु कशेरुका १४
शिरोऽस्थनि १५करोटिः स्त्री पार्श्वास्थनि तु१६ पर्शुका
१७अङ्गं प्रतीकोऽवयवोऽपघनोऽथ १८कलेवरम् ।

---

इति । (१) द्वे अन्त्रस्य ( आंतड़ी ), तत्र पुरीतत् अस्त्रियाम् । (२) द्वे वामकुक्षिस्थमांसपिण्डविशेषस्य । प्लीहानौ । प्लीहाशब्दश्चाबन्तोऽपि । ( तिल्ली ) इत्यस्य । (३) द्वे अङ्गप्रत्यङ्गसन्धिबन्धनरूपायाः । (४) द्वे दक्षिणकुक्षिगतमांसपिण्डस्य । (५) त्रीणि लालायाः । (६) एकं नेत्रयोर्मलस्य ( गीड ) इत्यस्य । (७) द्वे नासामलस्य । (८) एकं कर्णमलस्य । (९) द्वे मूत्रस्य । (१०) नव विष्ठायाः । (११) द्वे शिरोस्थिखण्डस्य । (१२) त्रीणि अस्थिमात्रस्य । (१३) शरीरगतास्थिपञ्जरस्यैकम् । (१४) पृष्ठमध्यगतास्थिदण्डस्य । (१५) शिरोगताऽस्थिसङ्घस्यैकम् । (१६) पार्श्वगतास्थ्नः एकम् । (१७) चतुष्कं देहावयवस्य । (१८) द्वादश देहस्य ।

गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ७० ॥
कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।
१पादाग्रं प्रपदं पादः २पदङ्घ्रिश्चरणोऽस्त्रियाम् ॥७१॥
तद्ग्र३न्थी घुटिके गुल्फौ पुमान्पा४र्ष्णिस्तयोरधः ।
५जङ्घा तु प्रसृता जानू६रुपर्वाष्ठीवदस्त्रियाम् ॥७२॥
७सक्थि क्लीबे पुमानूरुस्तत्सन्धिः पुंसि ८वङ्क्षणः ।
९गुदं त्वपानं पायुर्ना १०वस्तिर्नाभेरधो द्वयोः ॥७३॥
११कटो ना श्रोणिफलकं १२कटिः श्रोणिः ककुद्मती ।
पश्चान्नि१३तम्बः स्त्रीकट्याः क्लीबे तु १४जघनं पुरः॥७४
१५कूपकौ तु नितम्बस्थौ द्वयहीने कुकुन्दरे ।
स्त्रियां १६स्फिचौ कटिप्रोथावु१७पस्थो वक्ष्यमाणयोः ॥

---

(१) द्वे पादाग्रस्य । (२) चत्वारि चरणस्य । (३) पादग्रन्थ्योर्द्वे । घुटिके स्त्रियाम् । (४) गुल्फयोरधः प्रदेशस्यैकम् । (५) द्वे जङ्घायाः । (६) त्रयं जानूरुसन्धेः । तत्राष्ठीवदस्त्रियाम् । (७) द्वे जानूपरिभागस्य । (८) ऊरुसन्धेरेकम् । (९) त्रीणि विष्ठानिर्गमद्वारस्य । (१०) नाभेरधोमूत्राशयस्यैकम् । (११) श्रोणिः कटिस्तस्याः फलकं कट इत्युच्यते स पुमान् । एकम् । (१२) त्रयं स्त्रीलिङ्गं कट्याः । (१३) स्त्रीकटेः पश्चाद्भागस्यैकम् । (१४) स्त्रीकट्याः पुरोभागस्यैकम् । (१५) पृष्ठवंशादधो गर्तयोरेकं क्लीबे । (१६) द्वे कटिमांसपिण्डयोः । (१७) भगशिश्नयोः स्त्रीपुंसचिह्नविशेषयोरेकम् ।

१भगं योनिर्द्वयोः शिश्नो २मेढ्रो मेहनशेफसी ।
३मुष्कोऽण्डकोशो वृषणः पृष्ठवंशाधरे ४त्रिकम् ॥ ७६ ॥
५पिचण्डकुक्षी जठरोदरं तुन्दं ६स्तनौ कुचौ ।
७चूचुकं तु कुचाग्रं स्यान्न ना ८क्रोडं भुजान्तरम् ॥७७॥
उरो वत्सं च वक्षश्च ९पृष्ठं तु चरमं तनोः ।
१०स्कन्धो भुजशिरोंऽसोऽस्त्री ११सन्धी तस्यैव जत्रुणी
१२बाहुमूले उभे कक्षौ १३पार्श्वमस्त्री तयोरधः ।
१४मध्यमं चावलग्नं च मध्योऽस्त्री द्वौ १५ परौ द्वयोः॥
१६भुजबाहू प्रवेष्टो दोः स्यात्कफो १७ऽणिस्तु कूर्परः ।
अस्योपरि १८प्रगण्डः स्यात्प्रकोष्ठस्तस्य १९चाप्यधः ८०

---

(१) द्वे स्त्रीणामुपस्थस्य । तत्र योनिः स्त्रीपुंसयोः । (२) चत्वारि शिश्नस्य । (३) त्रीणि अण्डकोशस्य । (४) पृष्ठवंशाधोभागस्य त्रिभिरस्थिभिर्घटितस्यैकम् । (५) पञ्च जठरस्य । तत्र पिचण्डः कुक्षिः पुंसि । ( पेट ) इत्यस्य । (६) द्वे वक्षोजस्य । (७) द्वयं स्तनाग्रस्य । (८) पञ्च वक्षसः । तत्र क्रोडं न ना, किन्तु स्त्रीनपुंसकयोः । (९) पृष्ठस्यैकम् । (१०) त्रीणि भुजशिरसः । तत्र अंसोऽस्त्रियाम् । ( कन्धा ) इत्यस्य । (११) स्कन्धसन्धेरेकम् । (१२) द्वे कक्षस्य । (१३) तयोरधोभागः पार्श्वमित्येकम् । (१४) त्रीणि तनुमध्यस्य । (१५) परौ द्वौ भुजबाहुशब्दौ स्त्रीपुंसयोः । (१६) चत्वारि भुजस्य । (१७) द्वे कूर्परस्य । (१८) कूर्परस्योपरिभागस्यैकम् । (१९) कू-

मणिबन्धादाकनिष्ठं करस्य १करभो बहिः ।
२पञ्चशाखः शयः पाणिस्तर्जनी३ स्यात्प्रदेशिनी ॥८१॥
४अङ्गुल्यः करशाखाः स्युः पुंस्यङ्गुष्ठः ५प्रदेशिनी ।
मध्यमाऽनामिका चापि कनिष्ठा चेति ताः क्रमात् ॥८२॥
६पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।
७प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ॥ ८३ ॥
अङ्गुष्ठे सकनिष्ठे ८स्याद्वितस्तिर्द्वादशाङ्गुलः ।
पाणौ ९चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ॥ ८४ ॥
द्वौ संहतौ १०संहतलप्रतलौ वामदक्षिणौ ।
पाणिर्निकुब्जः ११प्रसृतिस्तौ युतावञ्जलिः१२पुमान् ॥८५॥

---

परस्याधोभागस्यैकम् । (१)पाणिप्रकोष्ठसन्धिर्मणिबन्धः, तमारभ्य कनिष्ठापर्यन्तं करस्य मांसलो बहिर्भागः करभ इत्युच्यते एकम् । **(कलाई से कानी अंगुली तक हाथ का किनारे का नाम है )** (२) त्रीणि करस्य । (३) द्वे अङ्गुष्ठसमीपाङ्गुल्याः । (४)द्वे अङ्गुलीमात्रस्य । ( ५ ) अङ्गुष्ठादारभ्य कनिष्ठिकापर्यन्तम् एकैकम् । (६) चत्वारि नखस्य । (७) तर्जनीसहिताङ्गुष्ठो विस्तृतो हस्तः-प्रादेशः । मध्यमासहिताङ्गुष्ठविस्तृतो हस्तः—तालः । अनामिकायुतोऽङ्गुष्ठो हस्तो गोकर्णः । (८) कनिष्ठासहितेऽङ्गुष्ठे विस्तृते द्वादशाङ्गुलो वितस्तिः । **( बित्ता )** ( ९ ) त्रीणि विस्तृताङ्गुलस्य पाणेः **( थप्पड़ )** इत्यस्य । (१०) द्वे मिलितस्य विस्तृताङ्गुलिहस्तयुगलस्य । (११) प्रसृतेरेकम् पुंसि । ( १२ ) अञ्जले-

१प्रकोष्ठे विस्तृतकरे हस्तो मुष्ट्या तु बद्धया ।
स रत्निः स्यादरत्निस्तु२ निष्कनिष्ठेन मुष्टिना ॥ ८६ ॥
३व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् ।
ऊर्ध्वविस्तृतदोःपाणिनृमाने ४पौरुषं त्रिषु ॥ ८७ ॥
५कण्ठो गलोऽथ ६ग्रीवायां शिरोधिः कन्धरेत्यपि ।
७कम्बुग्रीवा त्रिरेखा ८साऽवटुर्घाटाकृकाटिका ॥ ८८ ॥
९वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।
क्लीबे १०घ्राणं गन्धवहा घोणा नासा च नासिका ॥ ८९ ॥
११ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ।
१२अधस्ताच्चिबुकं १३गण्डौ कपोलौ तत्परा १४हनुः ॥ ९० ॥
१५रदना दशना दन्ता रदास्तालु १६ तु काकुदम् ।

---

रेकं पुंसि । ( १ ) विस्तृतः करो यत्र तादृशे प्रकोष्ठे कूर्पराधोभागे हस्त इत्येकम् । अयं चतुर्विंशत्यङ्गुलमितो ज्ञेयः । स बद्धया मुष्ट्योपलक्षितो रत्निरित्येकम् । (२) मुष्ट्योपलक्षितनिष्कनिष्ठहस्तस्यैकम् । ( ३ ) तिर्यक्ततयोर्विस्तृतयोः करसहितयोर्बाह्वोरन्तरं 'व्यामः' इत्येकं पुंसि । ( ४ ) एकं पुरुषप्रमाणस्य त्रिषु । (५) द्वे कण्ठस्य ( गला ) । (६) त्रीणि ग्रीवायाः । (७) एकं शङ्खाकारायाः ग्रीवायाः । (८) त्रीणि ग्रीवाशिरःसन्धेः पश्चाद्भागस्य । ( ९ ) सप्त मुखस्य । ( मुँह ) इत्यस्य । (१०) पञ्च नासिकायाः । ( ११ ) चत्वारि ओष्ठस्य । (१२) अधराधोभागस्यैकम् । ( १३ ) द्वे कपोलस्य । ( १४ ) चिबुकस्याधो हनुरित्येकम् । (१५) चत्वारि दन्तस्य । (१६) द्वे तालुनः ।

१रसज्ञा रसना जिह्वा प्रान्तावोष्ठस्य २सृक्किणी ॥९१॥
३ललाटमलिकं गोधिरूर्ध्वे दृग्भ्यां ४भ्रुवौ स्त्रियौ ।
५कूर्चमस्त्री भ्रुवोर्मध्यं तारकाक्ष्णः ६कनीनिका ॥९२॥
७लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।
दृग्दृष्टी चास्रु ८नेत्राम्बु रोदनं चास्रमश्रु च ॥ ९३ ॥
९अपाङ्गौ नेत्रयोरन्तौ १०कटाक्षोऽपाङ्गदर्शने ।
११कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ॥ ९४ ॥
१२उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ।
१३चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ॥९५॥
तद्वृन्दे १४कैशिकं १५कैश्यमलकाश्चूर्णकुन्तलाः ।
ते ललाटे भ्रमरकाः काकपक्षः १६शिखण्डकः ॥ ९६ ॥
१७कबरी केशवेशोऽथ धम्मिल्लः १८संयताः कचाः ।

---

(१) त्रीणि जिह्वायाः। (२) एकं सृक्किण्याः। (३) त्रीणि भालस्य। (४) एकं भ्रुवः। (५) भ्रुवोर्मध्यस्यैकम्। (६) एकम् अक्ष्णो मध्यगतकृष्णमण्डलस्य। (७) अष्टौ नेत्रस्य। (८) पञ्च नेत्रोदकस्य। (९)। नेत्रयोरन्तौ अपाङ्गौ एकम्। (१०) अपाङ्गदर्शनचेष्टाया एकम्। (११) षट् कर्णस्य। (१२) पञ्च शिरसः। (१३) षट् केशस्य। (१४) द्वे केशसमूहस्य। (१५) द्वे कुटिलकेशानाम्। ते—अलकाः ललाटे लम्बमानाः भ्रमरकाः स्युः। (१६) द्वे कुमारचूडायाः। (१७) द्वे केशबन्धनरचनायाः। (१८) मौक्तिकदामादिनिबद्धकेशसमूहस्यैकम्।

१शिखा चूडा केशपाशी व्रतिनस्तु सटा २जटा ॥९७॥
॥ ३वेणिः प्रवेणी ४शीर्षण्यशिरस्यौ विशदे कचे ।
५पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥ ९८ ॥
६तनूरुहं रोम लोम तद्वृ७द्धौ श्मश्रु पुम्मुखे ।
८आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥ ९९ ॥
॥ ९दशैते त्रिष्वलङ्क१०र्ताऽलङ्करिष्णुश्च ११ मण्डितः ।
प्रसाधितोऽलङ्कृतश्च भूषितश्च परिष्कृतः ॥ १०० ॥
वि१२भ्राड्भ्राजिष्णुरोचिष्णू १३भूषणं स्यादलङ्क्रिया ।
१४अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् ॥ १०१ ॥
मण्डनं चाथ १५मुकुटं किरीटं पुन्नपुंसकम् ।
चूडा१६मणिः शिरोरत्नं १७तरलो हारमध्यगः ॥१०२॥

---

(१) त्रीणि शिखायाः । (२) द्वे व्रतिनः शिखायाः । (३) द्वे सर्पाकार-रचितकेशवेशस्य । (४) द्वे निर्मलकेशे । (५) कचपर्यायात्परे पाशा-दयस्त्रयः कलापार्थाः-केशसमूहवाचिन इत्यर्थः । यथा—कचपाशः, केशपक्षः, कुन्तलहस्तः इति । (६) त्रयं रोम्णः । (७) पुंमुखस्थवृद्धरोम्णः । (८) पञ्च अलङ्कृतस्य शोभायाः । प्रतिकर्मादिद्वयमलङ्करणस्य वा । (९) एते अलङ्कर्त्रादयो वक्ष्यमाणा दश शब्दास्त्रिषु वाच्यलिङ्गाः । (१०) द्वे अलङ्कर्तुः । (११) पञ्च अलङ्कृतस्य । (१२) त्रयमतिशयेन शोभमानस्य । (१३) द्वे भूषणक्रियायाः । (१४) पञ्चालङ्कारस्य । (१५) द्वे किरीटस्य । (१६) द्वे शिरोमणेः । (१७) द्वे हारमध्यगतमणेः ।

वाल१पाश्या पारितथ्या पत्रपा२श्या ललाटिका ।
३कर्णिका तालपत्रं स्यात्कु४ण्डलं कर्णवेष्टनम् ॥ १०३ ॥
ग्रैवे५यकं कण्ठभूषा ६लम्बनं स्याल्ललन्तिका ।
७स्वर्णैःप्रालम्बिकाऽथोरःसू८त्रिका मौक्तिकैः कृता १०४
९हारो मुक्तावली देवच्छ१०न्दोऽसौ शतयष्टिका ।
हारभेदा यष्टिभेदाद्गु११च्छगुच्छार्धगोस्तनाः ॥१०५॥
अर्धहारो माणवक एकावल्येकयष्टिका ।
सैव नक्षत्रमाला स्यात्सप्तविंशत्तिमौक्तिकैः ॥ १०६ ॥
१२आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् ।
केयू१३रमङ्गदं तुल्ये अङ्गु१४लीयकमूर्मिका ॥ १०७ ॥

---

(१) द्वे सीमन्तभूषणस्य । ( २ ) द्वे ललाटभूषणस्य । ( ३ ) द्वे ताटङ्कस्य । ( ४ ) द्वे कुण्डलस्य । ( ५ ) द्वे ग्रीवाभरणस्य । ( ६ ) द्वे आनाभिलम्बितकण्ठिकायाः । (७) सैव ललन्तिका स्वर्णैः कृता प्रालम्बिका स्यात् एकम् । (८) सैव ललन्तिका मौक्तिकै रचिता चेदुरःसूत्रिकेत्येकम् । ( ९ ) द्वे मुक्ताहारस्य । (१०) शतलतिकाया मुक्तावल्या एकम् । (११) द्वात्रिंशद्यष्टिको गुच्छः । चतुर्विंशतियष्टिको गुच्छार्धः । चतुर्यष्टिको गोस्तनः । द्वादशयष्टिकोऽर्धहारः । विंशतियष्टिको माणवकः । एकयष्टिका एकावली सैवैकावली सप्तविंशतिमौक्तिकैः कृता नक्षत्रमाला स्यात् एकैकम् । (१२) चत्वारि प्रकोष्ठाभरणस्य । (१३) द्वे केयूरस्य = प्रगण्डभूषणस्य । (१४) द्वे अङ्गुल्याभरणस्य ।

साक्षराऽङ्गु१लिमुद्रा स्यात्क२ङ्कणं करभूषणम् ।
स्त्रीकट्यां मेख३ला काञ्ची सप्तकी रशना तथा ॥१०८॥
क्लीबे सारसनं चाथ पुंस्कट्यां शृ४ङ्खलं त्रिषु ।
पादा५ङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ॥ १०९ ॥
हंसकः पादकटकः किङ्कि६णी क्षुद्रघण्टिका ।
७त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दश त्रिषु ॥ ११० ॥
८वाल्कं क्षौमादि ९फालं तु कार्पासं बादरं च तत् ।
१०कौशेयं कृमिकोशोत्थं ११राङ्कवं मृगरोमजम्॥१११॥
१२अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरम् ।
तत्स्यादुद्ग१३मनीयं यद्धौतयोर्वस्त्रयोर्युगम् ॥ ११२ ॥
१४पत्त्रोर्णं धौतकौशेयं बहुमूल्यं १५महाधनम् ।
१६क्षौमं दुकूलं स्याद्द्वे तु नि१७वीतं प्रावृतं त्रिषु ११३

---

(१) रामनामाक्षरयुता चेदङ्गुलिमुद्रेत्येकम् (२) द्वे मणिबन्धभूषणस्य (३) पञ्च स्त्रीणां कटिभूषणस्य । (४) पुंसः कटिभूषणस्यैकम् । (५) षट्कं नूपुरस्य । (६) द्वे क्षुद्रघण्टिकायाः । (७) त्वगादिचतुष्कं वस्त्राणां योनिः कारणम् । वाल्कफलादयो निष्प्रवाण्यन्ता दश त्रिषु-लिङ्गेष्वित्यर्थः । (८) क्षौमादि वस्त्रं वाल्कं ज्ञेयम् । (९) त्रीणि फलविकारस्य-कार्पासवस्त्रस्य । (१०) कृमिकोशोत्थस्यैकम् । (११) मृगरोमजस्यैकम् । (१२) चत्वारि नूतनवस्त्रस्य । (१३) धौतवस्त्रयुगस्यैकम् । (१४) एकं धौतकौशेयस्य । (१५) बहुमूल्यवस्त्रादेरेकम् । (१६) द्वे पट्टवस्त्रस्य । (१७) द्वे प्रावृतवस्त्रस्य ।

स्त्रियां बहुत्वे वस्त्रस्य १दशाः स्युर्वस्तयो द्वयोः ।
२दैर्घ्यमायाम आरोहः परि३णाहो विशालता ॥११४॥
४पटच्चरं जीर्णवस्त्रं समौ ५नक्तककर्पटौ ।
६वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम् ॥ ११५ ॥
७सुचेलकः पटोऽस्त्री स्याद्व८राशिः स्थूलशाटकः ।
नि९चोलः प्रच्छदपटः समौ १०रल्लककम्बलौ ॥११६॥
अन्त११रीयोपसंव्यानपरिधानान्यधोंऽशुके ।
द्वौ प्रा१२वारोत्तरासङ्गौ समौ बृहतिका तथा ॥११७॥
संव्यानमुत्तरीयं च चोलः १३कूर्पासकोऽस्त्रियाम् ।
नीशा१४रः स्यात्प्रावरणे हिमानिलनिवारणे ॥११८॥
अर्धोरुकं वरस्त्रीणां स्याच्चण्डात१५कमस्त्रियाम् ।
स्यात्त्रिष्वाप्र१६पदीनं तत्प्राप्नोत्याप्रपदं हि यत् ॥११९॥

---

(१) वस्त्रस्य प्रान्तयोः दशाः स्युरेकं स्त्रीलिङ्गं बहुवचनान्तं च नित्यम् । (२) त्रयं वस्त्रादेर्दैर्घ्यस्य । (३) द्वे विस्तरस्य । (४) द्वे जीर्णवस्त्रस्य । (५) द्वे जीर्णवस्त्रखण्डस्य । (६) षट् वस्त्रस्य । (७)द्वे शोभनवस्त्रस्य । (८) द्वे स्थूलवाससः । (९) द्वे निचोलस्य । ( **खोली-पलंगपोस** ) इति भाषायाम् । (१०) द्वे कम्बलस्य । (११) चत्वारि अधोवस्त्रस्य ( **धोती, साड़ी** ) इत्यस्य । (१२) पञ्च वामस्कन्धे यद्धार्यते तस्य उत्तरीयस्य । (१३)द्वे स्त्रीणां स्तनादिपिधायकस्य कञ्चुकीति प्रसिद्धस्य । (१४) हिमानिलनिवारणप्रावरणस्यैकम् । (**रिजाई सोड** ) इति प्रसिद्धस्य । (१५) अर्धोरुपिधायिकस्य वस्त्रस्यैकम् । (१६) एकं पादाग्रपर्य-

अस्त्री विता१नमुल्लोचो दूष्या२द्यं वस्त्रवेश्मनि ।
३प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा ॥ १२० ॥
प४रिकर्माङ्गसंस्कारः स्यान्मा ५र्ष्टिर्मार्जना मृजा ।
६उद्वर्तनोत्सादने द्वे समे आप्ला७व आप्लवः ॥ १२१ ॥
स्नानं ८चर्चा तु चार्चिक्यं स्थासकोऽथ प्रबो९धनम् ।
अनुबोधः पत्त्रलेखा १०पत्त्राङ्गुलिरिमे समे ॥ १२२ ॥
११तमालपत्त्रतिलकचित्रकाणि विशेषकम् ।
द्वि१२तीयं च तुरीयं च न स्त्रियामथ कुङ्कुम१३म् ॥ १२३ ॥
काश्मीरजन्माग्निशिखं वरं वाह्लीकपीतने ।
रक्तसंकोचपिशुनं धीरं लोहितचन्दनम् ॥ १२४ ॥
१४लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः ।

---

न्तलम्बमानवस्त्रस्य, त्रिषु । (१) द्वे आतपाद्यपनयार्थमुपरिबद्धस्य चन्द्रकाख्यस्य वाससः । (२) एकं वस्त्ररचितगृहस्य । आदिना पटकुटी (डेरा, राहुटी, तम्बु) इत्यादेः । (३) त्रयं जवनिकायाः (४) द्वे कुङ्कुमादिना शरीरसंस्कारमात्रस्य । (५) त्रयं प्रोक्षणादिना देहनिर्मलीकरणस्य । (६) द्वे पिष्टादिना शरीरमलापकरणस्य । (७) त्रीणि स्नानस्य । (८) त्रीणि चन्दनादिना देहविलेपविशेषस्य । (९) द्वयं गतगन्धस्य पुनर्गन्धव्यक्तीकरणे । (१०) द्वे कस्तूरिकाकेशरादिना कपोलादौ रचितपत्रवल्ल्याः । (११) चत्वारि ललाटे कस्तूर्यादिना कृततिलकस्य । (१२) तिलकं विशेषकमिति च पुंनपुंसकयोर्ज्ञेयम् । (१३) एकादश कुङ्कुमस्य । (१४) षट्कं लाक्षायाः ॥

१लवङ्गं देवकुसुमं श्रीसंज्ञमथ जा२यकम् ॥ १२५ ॥
कालीयकं च कालानुसार्यं चाथ समा३र्थकम् ।
वंशिकागुरुराजार्हलोहकृमिजजोऽङ्गकम् ॥ १२६ ॥
कालागुर्वगुरु४ स्यात्तन्मङ्गल्या मल्लिगन्धि यत् ।
५यक्षधूपः सर्जरसो रालसर्वरसावपि ॥ १२७ ॥
बहुरूपोऽप्यथ वृक६धूपकृत्रिमधूपकौ ।
तुरु७ष्कः पिण्डकः सिह्लो यावनोऽप्यथ पा८यसः १२८
श्रीवासो वृकधूपोऽपि श्रीवेष्टसरलद्रवौ ।
९मृगनाभिर्मृगमदः कस्तूरी चाथ को१०लकम् ॥१२९॥
कक्कोलकं कोशफलमथ ११कर्पूरमस्त्रियाम् ।
घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका ॥ १३० ॥
१२गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।
१३तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ॥ १३१ ॥

---

(१) त्रीणि लवङ्गस्य । (२) त्रयं जायकाख्यगन्धद्रव्यस्य । (३) सप्तकं समार्थकम् । कृष्णागुरुणः पर्याया इत्यर्थः । (४) यदगुरु मल्लिगन्धि सा मङ्गल्या स्यादित्येकम् । (५) पञ्च धूपस्य । (६) द्वे अनेकपदार्थकृतधूपस्य। (७) चत्वारि सिह्लाख्यगन्धद्रव्यस्य। ( **लोहबान** ) इत्यस्य । (८) पञ्च सरलद्रवस्य । (९) त्रयं कस्तूर्याः । मृगनाभिः पुंसि । (१०) त्रीणि कक्कोलकस्य । (११) पञ्च कर्पूरस्य । (१२) चत्वारि चन्दनस्य । (१३) क्रमादेतानि त्रीणि धवलशीतलचन्दनाविशेषस्य, उत्पलगन्धिचन्दनस्य,

१तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ।
कुचन्दनं चाथ जाती२कोशजातीफले समे ॥ १३२ ॥
३कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः ।
४गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम् ॥१३३॥
५चूर्णानि वासयोगाः स्युर्भावितं६ वासितं त्रिषु ।
७संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् ॥१३४॥
८माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु९ गर्भकः ।
१०प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ११ललामकम् ॥१३५॥
प्रालम्ब१२मृजुलम्बि स्यात्कण्ठाद्वैकक्षिकं १३तु तत् ।
यत्तिर्यक्षिप्तमुरसि शिखास्वापीड१४शेखरौ ॥१३६॥

---

कपिलवर्णचन्दनस्य नामानि । (१) पञ्च रक्तचन्दनस्य । (२) द्वे जातीफलस्य ( **जायफल** ) इत्यस्य । (३) कर्पूरादिभिः समभागैः पिण्डीकृतो लेपविशेषो यक्षकर्दम इत्येकम् । **"कर्पूरागरुकस्तूरीकक्कोलघुसृणानि च । एकीकृतमिदं सर्वं यक्षकर्दम इष्यते"** । इति व्याडिः । (४) चत्वारि गात्रानुलेपयोग्यस्य पिष्टघृष्टसुगन्धिद्रव्यस्य । (५) द्वे पटवासादिचूर्णमात्रस्य । (६) द्वे गन्धद्रव्येण वासितस्य वस्तुनः । (७) गन्धमाल्यादिना वस्त्रताम्बूलादेः सौरभाधानस्यैकम् । (८) त्रयं मूर्ध्नि धृतायाः कुसुमावलेः । (९) केशमध्यधृतमालाया एकम् । (१०) शिखायां लम्बमानमालाया एकम् । (११) पुरोन्यस्तमालाया एकम् । (१२) कण्ठात्सरललम्बमानमालाया एकम् । (१३) यज्ञोपवीतवत्तिर्यक् स्थापितस्य मालादेरेकम् । (१४) द्वे शिखान्यस्तमाल्य-

र च१ना स्यात्परिस्यन्द आ२भोगः परिपूर्णता ।
३उपधानं तूपबर्हः शय्या४यां शयनीयवत् ॥ १३७॥
शयनं म५ञ्चपर्यङ्कपल्यङ्काः खट्वया समाः ।
गेन्दु६कः कन्दुको दीपः७प्रदीपः पीठ८मासनम् ॥ १३८॥
९समुद्गकः सम्पुटकः प्रति१०ग्राहः पतद्ग्रहः ।
११प्रसाधनी कङ्कतिका पिष्टा१२तः पटवासकः ॥ १३९॥
१३दर्पणे मुकुरादर्शौ १४व्यजनं तालवृन्तकम् ।

इति मनुष्यवर्गः ॥ ६ ॥

---

## अथ ब्रह्मवर्गः ॥ ७ ॥

१५सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ ।
वंशोऽन्ववायः सन्तानो वर्णाः स्युर्ब्राह्म१६णादयः ॥ १ ॥

---

मात्रस्य । (१) द्वे माल्यादिरचनायाः । (२) द्वे सर्वोपचारपरिपूर्णतायाः । (३) द्वे उच्छीर्षस्य । ( तकिया ) इत्यस्य । (४) त्रीणि शय्यायाः । (५) चत्वारि खट्वायाः । ( पलंग ) इत्यस्य । (६) कन्दुकस्य द्वे । ( गेंद ) इत्यस्य । कन्दुकवदुपधानस्येत्येके । (७) द्वे दीपस्य । (८) आसनस्य द्वे । (९) द्वे सम्पुटस्य । ( पिटारी ) इत्यस्य । (१०) द्वे पतद्ग्रहस्य ( पीकदान ) इत्यस्य । (११) द्वे केशमार्जन्याः ( कंघी ) इत्यस्य । (१२) द्वे पिष्टातस्य । ( गुलाल ) इत्यस्य । (१३) त्रीणि दर्पणस्य । (१४) द्वे तालपत्रादिनिर्मितव्यजनस्य । इति मनुष्यवर्गः ।

(१५) नव वंशस्य (खान्दान) इत्यस्य । तत्र सन्ततिः स्त्री । (१६)

विप्रक्षत्रियविट्शूद्राश्चातुर्व१र्ण्यमिति स्मृतम् ।
२राजबीजी राजवंश्यो बीज्य३स्तु कुलसम्भवः ॥२॥
४महाकुलकुलीनार्यसभ्यसज्जनसाधवः ।
ब्रह्म५चारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥३॥
आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाडवाः ।
विप्रश्च ब्राह्मणोऽसौ षट्७कर्मा यागादिभिर्वृतः ॥४॥
विद्वा८न्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः ।
धीरो मनीषी ज्ञः प्राज्ञः संख्यावान्पण्डितः कविः ॥५॥
धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ।
दूरदर्शी दीर्घदर्शी श्रोत्रि९यच्छान्दसौ समौ ॥६॥
१०*मीमांसको जैमिनीये वेदा११न्ती ब्रह्मवादिनि ।
*वैशे१२षिके स्यादौलूक्यः सौग१३तः शून्यवादिनि ।

---

ब्राह्मणादयो वर्णाः स्युरेकम् । (१) वर्णचतुष्टयस्यैकम् । (२) द्वे राजवंशोत्पन्नस्य । (राजबीजिनः) । (३) द्वे कुलमात्रोत्पन्नस्य । (४) षट् सज्जनस्य । (५) ब्रह्मचर्यादयश्चत्वार आश्रमशब्दवाच्याः । (६) षट् ब्राह्मणस्य । (७) एकं षट्कर्मशीलब्राह्मणस्य । तदुक्तम्—"इज्याध्ययनदानानि याजनाध्यापने तथा । प्रतिग्रहश्च तैर्युक्तः षट्कर्मा विप्र उच्यते । (८) द्वाविंशतिः पण्डितस्य । विद्वांसौ । विपश्चितौ । सन्तौ । ज्ञौ । संख्यावन्तौ । कृतिनौ । (९) द्वे वेदाध्यायिनः । (१०) द्वे मीमांसाशास्त्रवेत्तुः । (११) द्वे वेदान्तशास्त्रज्ञस्य । (१२) द्वे सप्तपदार्थवादिनः । ते च पदार्थाः—द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तेति कणादमतम् । (१३) द्वे जगत्कारणं शून्यमिति मताव-

*नैया१यिकस्त्वक्षपादः स्यात्स्या२द्वादिक आर्हकः ।
*चा३र्वाकलौकायतिकौ सत्कार्ये सा४ङ्ख्यकापिलौ ।
५उपाध्यायोऽध्यापकोऽथ स्यान्निषे६कादिकृद् गुरुः ।
मन्त्र७व्याख्याकृदाचार्य आदेष्टा त्वध्वरे ८व्रती ॥ ७ ॥
यष्टा च यजमानश्च स सोमवति दी९क्षितः ।
इज्या१०शीलो यायजूको यज्वा११तु विधिनेष्टवान्॥८॥
सगीर्पतीष्ट्या स्थ१२पतिः सोमपी१३थी तु सोमपाः ।
१४सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥ ९ ॥

---

लम्बिनो नास्तिकस्य। (१) द्वे न्यायशास्त्रज्ञस्य—प्रमाणप्रमेयसंशयविपर्ययतर्केत्यादिषोडशपदार्थवादिनो गौतमस्य। (२) द्वे मोक्षोऽस्ति स्यान्नास्ति स्यादिति वादिनः। (३) द्वे देहात्मवादिनो बौद्धस्य। (४) द्वे तदेवेदं कार्यं जगदिति मानिनः सांख्यशास्त्रज्ञस्य। (५) द्वे अध्यापकस्य। तदुक्तम्—"एकदेशस्तु वेदस्य वेदाङ्गान्यपि वा पुनः। योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते"। इति। (६) एकं गुरोः (गर्भाधानसंस्कारकर्तुः)। (७) द्वे आचार्यस्य। "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः। साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षते" इति। व्याख्यालक्षणं तु—'पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना। आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं मतम्" इत्युक्तम्। (८) त्रयं यजमानस्य। (९) एकं सोमयाजिनः। (१०) द्वे यजनशीलस्य। (११) विधिना यज्ञं कृतवत एकम्। (१२) एकं बृहस्पतिसवनविधिना इष्टवतः। (१३) द्वे सोमयाजिनः। (१४) एकं विश्वजिन्नामक-

अनू[1]चानः प्रवचने साङ्गेऽधीती गुरोस्तु यः ।
लब्धानुज्ञः स[2]मावृत्तः सु[3]त्वा त्वभिषवे कृते ॥ १० ॥
छा[4]त्रान्तेवासिनौ शिष्ये शैक्षाः[5] प्राथमकल्पिकाः ।
एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ॥ ११ ॥
स[6]तीर्थ्यास्त्वेकगुरवश्चित[7]वानग्निमग्निचित् ।
पारम्पर्योपदेशे स्यादै[8]तिह्यमितिहाऽव्ययम् ॥ १२ ॥
[10]उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वा[11]रम्भ उपक्रमः ।
[12]यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ॥ १३ ॥
[13]पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः ।
एते पञ्चमहायज्ञा ब्रह्मयज्ञादिनामकाः ॥ १४ ॥
[14]समज्या परिषद्गोष्ठी सभासमितिसंसदः ।
आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥ १५ ॥

---

यज्ञकर्तुः । (१) एकं साङ्गवेदाध्येतुः । (२) गृहस्थाद्याश्रमान्तरप्राप्तये गुरोर्लब्धानुज्ञस्यैकम् (३) कृताभिषवस्नानस्यैकम् । सुत्वा नान्तः पुंसि (४) त्रीणि छात्रस्य । (५) द्वे आरब्धाध्ययनानां बटूनाम् । (६) समानशाखाध्येतॄणामेकम् । (७) द्वे सहाध्यायिनाम् । (८) कृताग्निचयनस्य । (९) परम्पराऽनुगतोपदेशस्य द्वे । (१०) आद्यज्ञानस्यैकम् । (११) ज्ञात्वारम्भस्यैकम् । (१२) सप्त यज्ञस्य (१३) पाठादयः पञ्च ब्रह्मयज्ञादिनामका महायज्ञाः स्युः एकम् । तदुक्तम्—
अध्यापनं ब्रह्मयज्ञः, पितृयज्ञस्तु तर्पणम् । होमो दैवो, बलिर्भौतो नृयज्ञोऽतिथिपूजनम् । (१३) नव सभायाः ।

१प्राग्वंशः प्राग्घविर्गेहात्स२दस्या विधिदर्शिनः ।
३सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते ॥१६॥
४अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् ।
५आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते ॥ १७ ॥
६वेदिः परिष्कृता भूमिः समे स्थ७ण्डिलचत्वरे ।
८चषालो यूपकटकः कुम्बा९ सुगहना वृतिः ॥ १८ ॥
१०यूपाग्रं तर्म निर्मन्थ्यदारुणि ११त्वरणिर्द्वयोः ।
१२दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥ १९ ॥
अग्नित्रयमिदं त्रेता१३ प्रणीतः १४संस्कृतोऽनलः ।
समूह्यः १५परिचाय्योपचाय्यावग्नौ प्रयोगिणः ॥ २० ॥
यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ।
तस्मिन्नाना१६य्योऽथाग्ना१७यी स्वाहा च हुतभुक्प्रिया

(१) हविर्गेहात्प्राक् पूर्वदेशे सदस्यादीनां यद्गृहं स प्राग्वंश इत्येकम् । (२) द्वे सदस्यस्य । (३) चत्वारि सभ्यानाम् । (४) यजुर्विद् ऋत्विग्—अध्वर्युः । सामविद्—उद्गाता' ऋग्वेदविद् होता । (५) द्वे ऋत्विजां ब्रह्मोद्गात्रादीनाम् । (६) यज्ञवेद्याः एकम् । (७) द्वे यथार्थ संस्कृतस्य भूभागस्य । (८) द्वे यूपकटकस्य । (९) एकं सुगहनायाः वृतेः ( बाड़ ) इत्यस्य । (१०) द्वे यूपाग्रस्य । तर्म इति नान्तं क्लीबम् । (११) अग्निसिद्ध्यर्थं निर्मन्थनीयकाष्ठस्य एकम् । (१२)एकैकम् अग्निविशेषाणाम् । (१३) एकमग्नित्रयस्य । (१४) एकं संस्कृतस्याग्नेः । (१५) त्रीणि अग्निनामानि । (१६) गार्हपत्यादानीय संस्कृतस्य दक्षिणाग्नेरेकम् । (१७) त्रयम् अग्नेः प्रियायाः । अस्य स्वाहाशब्दस्य नाव्य-

ऋक्सामि१धेनी धाय्या च या स्यादग्निसमिन्धने ।
गायत्रीप्र२मुखं छन्दो हव्यापाके चरुः३पुमान् ॥२२॥
४आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः ।
५धुवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा ॥ २३ ॥
पृषदा६ज्यं सदध्याज्ये पर७मान्नं तु पायसम् ।
८हव्यकव्ये दैवपित्र्ये अन्ने पात्रं स्रु९वादिकम् ॥२४॥
ध्रुवो१०पभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः ।
११उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः ॥२५॥
१२परम्पराकं शमनं प्रोक्षणं च वधार्थकम् ।
वाच्यलिङ्गाः प्रमीतोप१३सम्पन्नप्रोक्षिता हते ॥२६

---

यत्वं द्रव्यवाचित्वात् । अत एव 'स्वाहा तु दक्षिणे पार्श्वे' इति प्रयोगः सङ्गच्छते । (१) अग्निसमिन्धने—समित्प्रक्षेपेण वह्निज्वलने प्रयुक्ताया ऋचो नामद्वयम् । (२) एकं छन्दसः । (३) एकं चरोः । (४) पक्वे उष्णे क्षीरे दधियोगतो या विकृतिः सा आमिक्षा स्यात् एकम् । (५) मृगचर्मरचितव्यजनस्यैकम् । (६) दधियुक्तघृतस्यैकम् । (७) द्वे क्षीरान्नस्य । (८) देवपितृसम्बन्धिनि अन्ने क्रमेण हव्यकव्ये स्याताम् । (९) स्रुवचमसादिकं पात्रं स्यात् एकम् । (१०) त्रयः स्रुचो भेदाः । स्रुव एकं पुंसि । (११) क्रतौ अभिमन्त्र्य हतस्य पशोरेकम् । (१२) त्रयं वधार्थकं यज्ञियपशुहननवाचीत्यर्थः । (१३) त्रीणि यागार्थं हतस्य पशुमात्रस्य ।

१सान्नाय्यं हविरग्नौ तु हुतं त्रिषु २वषट्कृतम् ।
दीक्षान्तोऽवभृथो यज्ञे तत्कर्मार्हं तु ४यज्ञियम् ॥२७॥
त्रिष्वथ ५क्रतुकर्मेष्टं पूर्तं६ खातादि कर्म यत् ।
७अमृतं विघसो यज्ञशेषभोजनशेषयोः ॥ २८ ॥
८त्यागो विहापितं दानमुत्सर्जनविसर्जने ।
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥ २९ ॥
प्रादेशनं निर्वपणमपवर्जनमंहतिः ।
मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वं९देहिकम् ॥३०॥
पितृदानं१०निवापः स्याच्छ्राद्धं११तत्कर्म शास्त्रतः ।
अन्वाहार्यं१२ मासिकेंऽशोऽष्टमोऽह्नः१३कुतपोऽस्त्रियाम्॥
पर्येषणा१४परीष्टिश्चान्वेषणा १५ च गवेषणा ।

---

(१) हविर्विशेषः सान्नाय्यं स्यात् एकम् । (२) अग्नौ हुतस्य त्रिषु । (३) एकमवभृथस्नानस्य । (४) यज्ञकर्मयोग्यवस्तुन एकं त्रिषु । (५) क्रतोः—यज्ञस्य कर्मणः—दानादेश्च—इष्टमिति नामेत्यर्थः । (६) वापीकूपदेवालयारामादिनिर्माणस्यैकम् । (७) यज्ञशेषे पुरोडाशादौ अमृतमित्येकम् । देवपित्रादिभुक्तशेषे विघस इत्येकम् । (८) त्रयोदश दानस्य । (९) मृताहे दानमूर्ध्वदेहिकं त्रिषु । (१०) द्वे पितॄनुद्दिश्य यद्दानं क्रियते तस्य । (११) शास्त्रतः पितृसम्बन्धिकर्मणि एकम् । (१२) अमावस्याश्राद्धेऽन्वाहार्यमित्येकम् । (१३) अह्नोऽष्टमोंऽशः कुतप इत्येकम् । (१४) द्वे श्राद्धे द्विजभक्तिशुश्रूषायाः (१५) द्वे धर्मादिमार्गणस्य ।

१सनिस्त्वध्येषणा २याच्ञाऽभिशस्तिर्याचनाऽर्थना
षट् तु त्रि३ष्वर्घ्यम४र्घार्थे पाद्यं पादाय वारिणि ।
क्रमादाति५थ्यातिथेये अतिथ्यर्थेऽत्र साधुनि ॥३३॥
स्युरावेशिक६आगन्तुरतिथिर्ना गृहागते ।
७※प्राघूर्णिकः प्राघुणकश्चाभ्यु८त्थानं तु गौरवम्॥३४॥
९पूजा नमस्याऽपचितिः सपर्याऽर्चाऽर्हणाः समाः ।
१०वरिवस्या तु शुश्रूषा परिचर्याऽप्युपासना ॥३५॥
११व्रज्याऽटाटचा पर्यटनं चर्या१२त्वीर्यापथे स्थितिः ।
१३उपस्पर्शस्त्वाचमनमथ मौनम१४भाषणम् ॥३६॥
※१५प्राचेतसश्चादि कविः स्यान्मैत्रावरुणिश्च सः ।
※वाल्मीकश्चाथ १६गाधेयो विश्वामित्रश्च कौशिकः ।
※१७व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः ।

---

(१) द्वे गुर्वादेराराधनस्य । यत् गुर्वादेः क्वचिदर्थे प्रार्थनया नियोजनं तत्र । (२) चत्वारि याचनायाः । (३) आगन्तुशब्दपर्यन्ताः षट्-शब्दा वाच्यलिङ्गा इत्यर्थः । (४) अर्घ्यपाद्ययोरेकैकम् । (५) अतिथ्यर्थे—आतिथ्यमित्येकम् । अतिथौ साधु-आतिथेयम् । (६) त्रीणि अतिथेः ('पाहुन' 'बटाऊ') इत्यस्य । (७) द्वे अभ्यागतस्य । (८) द्वे उत्थानपूर्वकसत्कारस्य । (९) षट् पूजायाः । (१०) चतुष्कमुपासनस्य । (११) चत्वारि पर्यटनस्य । (१२) योगमार्गे स्थितेरेकम् । (१३) द्वे स्नानाचमनयोः । (१४) द्वे मौनस्य । (१५) चतुष्कं वाल्मीकेः । (१६) त्रयं विश्वामित्रस्य । (१७) चतुष्कं व्यासस्य ।

१आनुपूर्वी स्त्रियां वावृत्परिपाटी अनुक्रमः ॥
पर्यायश्चातिपातस्तु२स्यात्पर्यय उपात्ययः ॥ ३७ ॥
नियमो ३व्रतमस्त्री तच्चोपवासादि ४पुण्यकम् ।
औपवस्तं ५तूपवासो ६विवेकः पृथगात्मता॥३८॥
स्याद्ब्रह्मवर्चसं७वृत्ताध्ययनर्द्धिरथाञ्जलिः ।
पाठे ८ब्रह्माञ्जलिः पाठे विप्रुषो९ब्रह्मबिन्दवः ॥ ३९ ॥
ध्यानयोगासने१०ब्रह्मासनं कल्पे११विधिक्रमौ ।
१२मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु१३ततोऽधमः॥४०
संस्कारपूर्वं१४ग्रहणं स्यादुपाकरणं श्रुतेः ।
समे तु १५पादग्रहणमभिवादनमित्युभे ॥ ४१ ॥
१६भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ।
१७तपस्वी तापसः पारिकाङ्क्षी१८वाचंयमो मुनिः॥४२

---

(१) पञ्चकमनुक्रमस्य । (२) त्रीणि अतिक्रमस्य । (३) द्वे व्रतमात्रस्य । (४) एकमुपवासादेः (५) द्वे उपवासस्य । (६) एकं विवेकस्य—चिज्जडयोर्विवेकस्येत्यर्थः । (७) ब्रह्मणः तपःस्वाध्यायादेर्वर्चस्तेजो ब्रह्मवर्चसम्—एकम् । (८) वेदाध्ययनावसरे कृतस्याञ्जलेरेकम् । (९) वेदपठनावसरे मुखान्निर्गतबिन्दूनामेकम् । (१०) एकं ध्यानयोगयोरासनस्य । (११) त्रयं नियोगशास्त्रस्य । (१२) मुख्यकल्पस्यैकम् । (१३) गौणविधेरेकम् । (१४) संस्कारपूर्वकं श्रुतेर्ग्रहणम् उपाकरणं स्यात् एकम् । (१५) द्वे नामगोत्रोक्तिपूर्वकस्य नमस्कारविशेषस्य । (१६) पञ्च सन्न्यासिनः । (१७) त्रीणि तपस्विनः । (१८) द्वे मौनव्रतधा-

१तपः क्लेशसहो दान्तो वर्णिनो२ ब्रह्मचारिणः ।
३ऋषयः सत्यवचसः ४स्नातकस्त्वाप्लुतो व्रती ॥४३॥
ये निर्जितेन्द्रियग्रामा ५यतिनो यतयश्च ते ।
यः स्थण्डिले व्रतवशाच्छेते स्थण्डिल६शाय्यसौ ॥४४॥
स्थण्डिलश्चाथ विरज७स्तमसः स्युर्द्वयातिगाः ।
८पवित्रः प्रयतः पूतः ९पाखण्डाः सर्वलिङ्गिनः ॥४५॥
पालाश१०शी दण्ड आषाढो व्रते राम्भ११स्तु वैणवः ।
अस्त्री १२कमण्डलुः कुण्डी व्रतिनामासनं १३वृषी ।
१४अजिनं चर्म कृत्तिः स्त्री भैक्षं भिक्षाक१५दम्बकम् ।
१६स्वाध्यायः स्याज्जपः१७सुत्याऽभिषवः सवनं च सा
सर्वैनसामपध्वंसि जप्यं त्रिष्वघ१८मर्षणम् ।

---

लिनः । (१) द्वे तपःक्लेशसहनशीलस्य । (२) द्वे ब्रह्मचारिणः । (३) द्वे ऋषिसामान्यस्य । (४) समाप्तवेदव्रतस्यापि आश्रमान्तरगतस्यैकम् । (५) त्रीणि निर्जितसर्वेन्द्रियाणाम् । (६) द्वे नियमवशात् यो भूमिविशेषे शेते तस्य । (७) द्वे सत्त्वैकनिष्ठानां व्यासादीनाम् । (८) त्रयं पवित्रस्य । (९) द्वे पाखण्डस्य—वेदबाह्यपथवर्तिनः । (१०) एकं पालाशदण्डस्य । (११) एकं वैणवदण्डस्य । (१२) द्वे व्रतिनां जलपात्रस्य । (१३) व्रतिनां यदासनं सा वृषी एकम् । बृसीति पाठान्तरम् । ब्रुवन्तोऽस्यां सीदन्तीति तदर्थः । (१४) त्रीणि मृगादेश्चर्मणः । (१५) एकं भिक्षासमूहस्य । (१६) द्वे वेदाभ्यासस्य । (१७) त्रीणि सोमाभिषवस्य । (१८) एकमघमर्षणस्य ।

१दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् ॥ ४८ ॥
२शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः।
३नियमस्तु स यत्कर्म नित्यमागन्तुसाधनम् ॥ ४९ ॥
※४क्षौरं तु भद्राकरणं मुण्डनं वपनं त्रिषु।
५उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे ॥ ५० ॥
६प्राचीनावीतमन्यस्मिन्निवीतं ७कण्ठलम्बितम्।
अङ्गुल्यग्रे तीर्थं ८दैवं स्वल्पाङ्गुल्योर्मूले ९कायम् ॥५१॥
मध्येऽङ्गुष्ठा१०ङ्गुल्योः पित्र्यं मूले त्वङ्गुष्ठस्य ११ब्राह्मम्।
स्याद्ब्रह्मभूयं १२ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ॥ ५२ ॥
देवभूयादिकं तद्वत्कृच्छ्रं १३सान्तपनादिकम्।
संन्यासवत्यनशने पुमान्प्रा१४योऽथ वीरहा१५ ॥५३॥
नष्टाग्निः कुहना १६लोभान्मिथ्येर्यापथकल्पना।

---

(१) दर्शपौर्णमासयागयोरेकैकम्। (२) शरीरसाधनापेक्षं शरीरमात्रेण साध्यं नित्यं यत्कर्म, तद्यमः एकम्। (३) नित्यं कृत्रिमं यत्कर्म स नियमः। (४) चत्वारि मुण्डनस्य। (५) द्वे यज्ञोपवीतस्य। (६) वामे करे प्रोद्धृते प्राचीनावीतं स्यात् एकम्। (७) एकं कण्ठलम्बितस्य। (८) एकं दैवतीर्थस्य। (९) एकं कायतीर्थस्य। (१०) एकं पितृतीर्थस्य। (११) एकं ब्रह्मतीर्थस्य। (१२) त्रयं ब्रह्मभावस्य। ( **मृत्यु** ) इत्यस्येति यावत्। एवं त्रयं देवभावस्य। (१३) सान्तपनादिकं कृच्छ्रं स्यात् एकम्। (१४) मरणेच्छया भोजनत्यागस्यैकम्। (१५) द्वे नष्टाग्नेः। (१६) दम्भेन ध्यानमौनादिसम्पादनस्यैकम्। (**ढोंग रचना**) इत्यस्य।

१व्रात्यः संस्कारहीनः स्यादस्वाध्यायो २निराकृतिः ॥
३धर्मध्वजी लिङ्गवृत्तिरवकीर्णी ४क्षतव्रतः ॥ ५४ ॥
सुप्ते ५यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।
अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् ॥ ५५ ॥
परि६वेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ।
७परिवित्तिस्तु तज्ज्यायान्विवाहोपयमौ समौ ॥ ५६ ॥
तथा ८परिणयोद्वाहोपयामाः पाणिपीडनम् ।
९व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ॥ ५७ ॥
त्रिवर्गो १०धर्मकामार्थैश्चतुर्वर्गः ११ समोक्षकैः ।
सबलैस्तैश्चतुर्भद्रं १२जन्याः १३स्निग्धा वरस्य ये ॥५८॥

इति ब्रह्मवर्गः ॥ ७ ॥

---

(१) द्वे व्रात्यस्य । (२) स्वशाखाध्ययनशून्यस्यैकम् । (३) द्वे जीविकार्थं जटादिधारणवतः । (४) द्वे नष्टब्रह्मचर्यस्य । (५) रविर्यस्मिन् सुप्तेऽस्तमेति सोऽभिनिर्मुक्तः एकम् । यस्मिन् सुप्तेंऽशुमानुदेति सोऽभ्युदितः । (६) ज्येष्ठं परित्यज्य भार्यां लभते तस्यैकम् । (७) तस्य परिवेत्तुर्ज्यायान् परिवित्तिः स्यात् एकम् । (८) षट् विवाहस्य । (९) पञ्च मैथुनस्य । (१०) एकं त्रिवर्गस्य । (११) एकं चतुर्वर्गस्य । (१२) तैर्धर्मादिभिः सबलैश्चतुर्भद्रमित्येकम् । (१३) एकं वरपक्षीयाणाम् । इति ब्रह्मवर्गः ॥ ७ ॥

## ॥ अथ क्षत्रियवर्गः ॥ ८ ॥

१मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ।
२राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः ॥ १ ॥
राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः३ ।
४चक्रवर्ती सार्वभौमो नृपोऽन्यो ५मण्डलेश्वरः ॥ २ ॥
येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।
शास्ति यश्चाज्ञया राज्ञः स सम्राडथ राज७कम् ॥ ३ ॥
राजन्य८कं च नृपतिक्षत्त्रियाणां गणे क्रमात् ।
९मन्त्री धीसचिवोऽमात्योऽन्ये कर्मस १०चिवास्ततः ॥४॥
महामात्राः प्रधानानि पुरोधास्तु ११पुरोहितः ।
द्रष्टरि व्यवहाराणां प्राड् १२विवाकाक्षदर्शकौ ॥ ५ ॥
प्रतीहारो १३द्वारपालद्वास्थद्वास्थितदर्शकाः ।

---

(१) पञ्च क्षत्रियस्य । (२) सप्त राज्ञः । (३) एकम् अधीश्वरस्य । (४) द्वे आसमुद्रक्षितीशस्य । (५) एकं मण्डलेश्वरस्य । (६) राजसूययज्ञकर्तुश्चक्रवर्तिन एकम् । राजसूययज्ञकर्ता—सम्राट्, द्वादशराजमण्डलाधिपोऽपि सम्राट् इति केचित् । (७) नृपतीनां गणे राजकमित्येकम् । (८) क्षत्रियाणां गणे राजन्यकमित्येकम् । (९) त्रयं बुद्धिसहायस्य । (१०) त्रीणि प्रधानानां कर्मसहायानाम् । (११) द्वे राजपुरोहितस्य-धर्माध्यक्षस्य । तत्र पुरोधाः सान्तः पुंसि । (१२) द्वे प्राड्विवाकस्य (न्यायाधीश-जज्ज) इत्यस्य । (१३) पञ्च द्वारपालस्य ।

र्दाः १वर्गस्त्वनीकस्थोऽथाध्यक्षा२धिकृतौ समौ ॥६॥
स्थायु३कोऽधिकृतो ग्रामे गोपो४ग्रामेषु भूरिषु ।
५भौरिकः कनकाध्यक्षो रूप्या६ध्यक्षस्तु नैष्किकः ॥७॥
अन्तःपुरे त्वधिकृतः स्यादन्त७र्वंशिको जनः ।
८सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥८॥
९शण्ढो वर्षवरस्तुल्यौ सेवका१०र्थ्यनुजीविनः ।
विषयान११न्तरो राजा १२शत्रुर्मित्रमतः परम् ॥९॥
१३उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः ।
१४रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥१०॥

(१) द्वे राजरक्षकगणस्य । (२) द्वे अधिकारी इति ख्यातस्य । (३) एकं ग्रामाध्यक्षस्य । ( **स्थायुक–ठाकुर** ) इत्यस्य । (४) बहुग्रामाधिकृतस्यैकम् । (५) द्वे स्वर्णाध्यक्षस्य । (६) द्वे रूप्याधिकृतस्य । ( **टकसाल का अधिकारी** ) (७) एकमन्तःपुराधिकृतस्य । (८) चत्वारि राजान्तःपुररक्षकविशेषस्य । तत्र कञ्चुकिन्निति नकारान्तः । (९) द्वे अन्तःपुरचारिणः क्लीबमात्रस्य ( **खोजा** ) इत्यस्य । यदुक्तम्—'ये त्वल्पसत्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः । जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः' ॥ १ ॥ इति । (१०) त्रीणि सेवकस्य । (११) स्वदेशसमीपदेशस्थराज्ञ एकम् । (१२) विषयात्स्वदेशादनन्तरोऽव्यवहितो राजा शत्रुः स्यात् एकम् । राजान्तरेण व्यवहितो राजा मित्रं स्यादित्यर्थः एकम् ॥ (१३) शत्रुमित्राभ्यां परो राजा उदासीनः स्यात् । पृष्ठतो वर्तमानस्यैकम् । (१४) एकोनविंशतिर्नामानि

द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः ।
अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ॥ ११ ॥
वय१स्यः स्निग्धः सवया अथ२मित्रं सखा सुहृत् ।
सख्यं साप्त३पदीनं स्यादनुरो४धोऽनुवर्तनम् ॥१२ ॥
यथा५र्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः ।
चारश्च गूढपुरुषश्चाप्तप्र६त्ययितौ समौ ॥ १३ ॥
७सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि ।
स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि ॥ १४ ॥
८तान्त्रिको ज्ञातसिद्धान्तः ९सत्री गृहपतिः समौ
१०लिपिकारोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके ॥ १५ ॥
११लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ ।
स्यात्सन्दे१२शहरो दूतो १३दूत्यं तद्भावकर्मणी ॥१६॥
१४अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।

---

शत्रोः । वैरि-प्रत्यर्थि-परिपन्थ्यभिघातिनो नकारान्ताः । (१) त्रीणि तुल्यवयसः प्रियस्य (२) त्रयं मित्रस्य । तदुक्तम्—'अत्यागसहनो बन्धुः सदैवानुगतः सुहृत् । एकक्रियं भवेन्मित्रं समप्राणः सखा मतः ॥ इति । (३) द्वे मैत्र्याः । (४) द्वे आनुकूल्यस्य । (५) सप्त चारपुरुषस्य ( **खुपिया-गुप्तपोलिस** ) इत्यस्य । (६) द्वे विसंवादरहितस्य । (७) अष्टौ ज्यौतिषिकस्य । (८) द्वे शास्त्रवेत्तुः । (९) द्वे गृहपतेः । (१०) चत्वारि लेखकस्य । (११) चत्वारि लिखिताक्षरस्य । (१२) द्वे दूतस्य । (१३) दूतस्य भावे कर्मणि च दूत्यमित्येकम् । (१४) पञ्च

१स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥१७॥
राज्याङ्गानि प्रकृत२यः पौराणां श्रेणयोऽपि च ।
३सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ॥१८॥
षड्गुणाः शक्तयस्तिस्रः प्रभा४वोत्साहमन्त्रजाः ।
५क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥१९॥
स ६प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम् ।
७भेदो दण्डः साम दानमित्युपायचतुष्टयम् ॥२०॥
८साहसं तु दमो दण्डः साम ९सान्त्वमथो समौ ।
१०भेदोपजापावुपधा११ धर्माद्यैर्यत्परीक्षणम् ॥२१॥
पञ्च १२त्रिष्वषडक्षीणो यस्तृतीयाद्य१३गोचरः ।
१४विविक्तविजनच्छन्ननिःशलाकास्तथा रहः ॥२२॥
रहश्चोपांशु चालिङ्गे १५रहस्यं तद्भवे त्रिषु ।
समौ१६ विस्रम्भविश्वासौ भ्रेषो१७भ्रंशो यथोचितात् २३

---

पान्थस्य । (१) सप्त राज्याङ्गानि । (२) पौरश्रेणीनामेकम् । (३) एते सन्ध्यादयः षट् गुणाः स्युरेकम् । (४) तिस्रः शक्तयः स्युरेकम् । (५) क्षयः'स्थानं' वृद्धिश्च त्रिवर्गपदेनोच्यते । (६) द्वे प्रभावस्य (७) उपायचतुष्टयस्यैकैकम् । (८) त्रीणि दण्डस्य । (९) द्वे साम्नः ( सलूख ) इत्यस्य । (१०) द्वे संहतयोर्द्वैधीकरणस्य (फितूर) इत्यस्य । (११)धर्माद्यैः परीक्षणस्यैकम् । (१२) वक्ष्यमाणा निश्शलाकान्ताः पञ्च त्रिषु (१३) यस्तृतीयाद्यगोचरो म न्त्रादिरषडक्षीणइत्येकम् । (१४) सप्त विजनस्य । तत्रैकं रहः सान्तं क्लीबम् । द्वितीयं रहे–उपांशु इति च द्वे अलिङ्गे अव्यये । (१५) रहोभवस्यैकम् । (१६) द्वे विश्वासस्य । (१७) य-

१अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् ।
२युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ॥२४॥
न्याय्यं च त्रिषु षट् सम्प्रधारणा३ तु समर्थनम् ।
४अववादस्तु निर्देशो निदेशः शासनं च सः ॥२५॥
शिष्टिश्चाज्ञा च संस्था५ तु मर्यादा धारणा स्थितिः ।
६आगोऽपराधो मन्तुश्च समे७तूद्दानबन्धने ॥२६॥
८द्विपाद्यो द्विगुणो दण्डो९भागधेयः करो बलिः ।
१०घट्टादिदेयं शुल्कोऽस्त्री११प्राभृतं तु प्रदेशनम् ॥२७॥
उपायनमुपग्राह्यमुपहारस्तथोपदा ।
यौतकादि तु यद्देयं १२सुदायो हरणं च तत् ॥२८॥
तत्कालस्तु १३तदात्वं स्यादुत्तरः १४ काल आयतिः ।
१५सान्दृष्टिकं फलं सद्य१६उदर्कः फलमुत्तरम् ॥२९॥

---

यौचितात्स्वरूपाद्भ्रंशस्यैकम् । (१) पञ्चकं नीतेः । (२) षट् न्यायादनपेतस्य द्रव्यादेः । एते षडपि त्रिषु । (३) द्वे युक्तायुक्तपरीक्षायाः। (४) षट् कर्माज्ञापनस्य । (५) चत्वारि न्यायमार्गस्थितेः । (६) त्रीणि अपराधस्य । आगः सान्तं क्लीबे । मन्तुः पुंसि । (७) द्वे बन्धनस्य । (८) एकं द्विगुणदण्डस्य । (९) त्रीणि राजग्राह्यभागस्य । (१०) एकं घट्टादिदेयस्य शुल्कस्य । ( चुङ्गी महसूल ) इत्यादिकस्य । (११) षट् नृपगुर्वादिदर्शनादौ समर्प्यमाणस्य वस्तुनः । (भेट, उपहार' ) इत्यस्य । (१२) कन्यादानकाले पूजादौ च दीयमानस्य द्रव्यस्य द्वे । (१३) द्वे वर्तमानकालस्य । (१४) एकमुत्तरकालस्य स्त्रियाम् । (१५) सद्योजायमानस्य फलस्यैकम् । (१६) एकं भाविनः

१अदृष्टं वह्नितोयादि २दृष्टं स्वपरचक्रजम् ।
महीभुजामहिभयं३ स्वपक्षप्रभवं भयम् ॥ ३० ॥
४प्रक्रिया त्वधिकारः स्याच्चमरं५ तु प्रकीर्णकम् ।
६नृपासनं यत्तद्भद्रासनं सिंहासनं७ तु तत् ॥ ३१ ॥
हैमं ८छत्रं त्वातपत्रं राज्ञस्तु ९नृपलक्ष्म तत् ।
१०भद्रकुम्भः पूर्णकुम्भो ११भृङ्गारः कनकालुका॥३२॥
१२निवेशः शिबिरं षण्ढे १३सज्जनं तूपरक्षणम् ।
१४हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥३३॥
१५दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः ।
मतङ्गजो गजो नागः कुञ्जरो वारणः करी ॥३४॥
इभः स्तम्बेरमः पद्मी १६यूथनाथस्तु यूथपः ।

---

फलस्य । (१) अग्न्युत्पातादिभयस्यैकम् । आदिना—'हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा । अतिवृष्टिरनावृष्टिर्मूषिकाः शलभादयः' गृह्यन्ते । (२) स्वसैन्यात् परसैन्यात् चौरादेश्च भयस्यैकम् । (३) स्वपक्षोत्थितस्य भयस्यैकम् । (४) द्वे व्यवस्थापनस्य । (५) द्वे चामरस्य । (६) द्वे मण्यादिकृतराजासनस्य । (७) एकं सिंहासनस्य । (८) द्वे छत्रस्य । (९) एकं राजछत्रस्य । (१०) द्वे पूर्णघटस्य । (११) द्वे स्वर्णरचितपात्रविशेषस्य । (१२) द्वे सैन्यवासस्थानस्य । (१३) द्वे सैन्यरक्षणाय नियुक्तप्रहारिकादिविन्यासस्य । (१४) हस्त्यादिचतुष्टयं सेनाङ्गं स्यात् एकम् । अत्र पादातं पदातिसमूहः । (१५) पञ्चदश हस्तिनः । (१६) द्वे यूथमुख्यस्य गजस्य ।

१मदोत्कटो मदकलः २कलभः करिशावकः ॥३५॥
३प्रभिन्नो गर्जितो मत्तः ४समावुद्वान्तनिर्मदौ ।
५हास्तिकं गजता वृन्दे करिणी६ धेनुका वशा ॥३६॥
७गण्डः कटो ८मदो दानं ९वमथुः करशीकरः ।
१०कुम्भौ तु पिण्डौ शिरसस्तयोर्मध्ये विदुः पुमान् ॥३७॥
११अवग्रहो ललाटं स्यादीषिका १२त्वक्षिकूटकम् ।
१३अपाङ्गदेशो निर्याणं कर्णमूलं तु १४चूलिका ॥३८॥
अधःकुम्भस्य१५ वाहित्थं१६ प्रतिमानमधोऽस्य यत् ।
१७आसनं स्कन्धदेशः स्यात्पद्मकं १८बिन्दुजालकम् ३९
१९पार्श्वभागः पक्षभागो २०दन्तभागस्तु योऽग्रतः ।
द्वौ २१पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात् ॥४०॥

---

(१) द्वे मदोन्मत्तस्य। (२) द्वे करिपोतस्य। (३) त्रीणि क्षरन्मदस्य। (४) द्वे गतमदस्य। (५) द्वे हस्तिवृन्दस्य। (६) त्रीणि हस्तिन्याः। (७) द्वे हस्तिकपोलस्य। (८) द्वे मदोदकस्य। (९) द्वे करिकरान्निर्गतजलकणस्य। (१०) एकं हस्तिनः शिरःपिण्डस्य। (११) एकं गजललाटस्य। (१२) द्वे नेत्रगोलकस्य। (१३) एकं हस्तिनो अपाङ्गदेशस्य। (१४) एकं कर्णमूलस्य। (१५) एकं कुम्भस्याधोभागस्य। (१६) एकं वाहित्थस्याधोभागस्य। (१७) एकं गजस्य स्कन्धदेशस्य। (१८) एकं बिन्दुसमूहस्य। (१९) एकं गजपार्श्वभागस्य। (२०) एकमग्रभागस्य। (२१) हस्तिनः पूर्वजङ्घादिदेशो गात्रम्, पश्चाज्जङ्घादिदेशोऽवरं स्याः

१तोत्रं वेणुकमाला२नं बन्धस्तम्भेऽथ शृङ्खले ।
३अन्दुको निगडोऽस्त्री स्यादङ्कुशो४ऽस्त्री सृणिः स्त्रियाम् ४१
५दूष्या कक्ष्या वरत्रा स्यात्कल्पना६ सज्जना समे ।
७प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ॥४२॥
८वीतं त्वसारं हस्त्यश्वं ९वारी तु गजबन्धनी ।
१०घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः ॥ ४३ ॥
वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।
११आजानेयाः कुलीनाः स्युर्विनीताः१२साधुवाहिनः ॥
१३वनायुजाः पारसीकाः काम्बोजा बाल्हिका हयाः ।
१४ययुरश्वोऽश्वमेधीयो १५जवनस्तु जवाधिकः ॥४५॥
१६पृष्ठ्यः स्थौरी सितः १७कर्को रथ्यो१८वोढा रथस्य यः ।

---

त । (१) द्वे तोदनदण्डस्य । (२)एकं बन्धनाधारस्तम्भस्य । (३) त्रीणि शृङ्खलस्य । (४) द्वे अङ्कुशस्य । सृणिः स्त्रियाम् । (५) त्रयं मध्यबन्धनीवयोगिन्याश्चर्मरज्वाः । (६) द्वे नायकारोहणार्थं गजसज्जीकरणस्य । (७) पञ्च गजपृष्ठवर्तिन आस्तरणस्य । प्रवेणी स्त्रियाम् । (८) एकं युद्धाद्यक्षमहस्त्यश्वस्य । (९) द्वे गजबन्धनस्थानस्य । (१०) त्रयोदश घोटकस्य ( १३ घोड़े के नाम हैं ) (११) प्रशस्तजातिभवाश्वस्य एकम् । (१२) एकं साधुवाह्यस्य । (१३) एकैकम् अश्वभेदानाम् । (१४) एकम् अश्वमेधीयाश्वस्य । (१५) द्वे वेगेनाधिकस्याश्वस्य । (१६) द्वे जलादिभारवाहिनोऽश्वस्य । (१७) एकं शुक्लाश्वस्य । (१८) एकं रथवाहकस्य ।

१बालः किशोरो२ वाम्यश्वा वडवा ३वाडवं गणे ॥४६॥
त्रिष्वाश्वीनं४ यदश्वेन दिनेनैकेन गम्यते ।
५कश्यं तु मध्यमश्वानां हेषा६ ह्रेषा च निस्वनः ॥४७॥
७निगालस्तु गलोद्देशो वृन्दे ८त्वश्वीयमश्ववत् ।
९आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ॥४८॥
गतयोऽमूः पञ्च धारा घोणा १० तु प्रोथमस्त्रियाम् ।
११कविका तु खलीनोऽस्त्री१२ शफं क्लीबे खुरः पुमान् ।
१३पुच्छोऽस्त्री लूमलाङ्गूले वालह१४स्तश्च वालधिः ।
त्रिषूपावृ१५त्तलुठितौ परावृत्ते मुहुर्भुवि ॥ ५० ॥
याने चक्रिणि युद्धार्थे १६शताङ्गः स्यन्दनो रथः ।
असौ पु१७ष्यरथश्चक्रयानं न समराय यत् ॥ ५१ ॥
१८कर्णीरथः प्रवहणं डयनं च समं त्रयम् ।

---

(१) द्वयं बालाश्वस्य। (२) त्रीणि अश्वायाः। (३ घोड़ी के नाम हैं) (३) एकं वडवासमूहस्य। (४) एकं दिनैकाक्रमणमार्गस्य। (५) एकम् अश्वमध्यस्य। (६) द्वे अश्वशब्दस्य। (२ घोड़े के शब्दों के नाम हैं) (७) एकं बलजत्रुसन्धेः। (८) द्वे अश्ववृन्दस्य। (९) अश्वानां पञ्च गतयः, एकैकम्। (१०) एकम् अश्वनासिकायाः। (११) द्वे खलीनस्य (लगाम) इति ख्यातस्य। (१२) द्वे शफस्य। (१३) त्रीणि पुच्छस्य। लूममदन्तम्। (१४) द्वे केशसमूहयुक्तस्य पुच्छाग्रभागस्य। (१५) द्वे श्रमशान्त्यर्थं पार्श्वाभ्यां परावृत्तस्य। (१६) त्रयं युद्धरथस्य। (१७)एकं क्रीडारथस्य। (१८) त्रयं स्त्रीणां वहनार्थं कृतस्योपरिवस्त्रादिना पिहि-

क्लीबेऽनः १शकटोऽस्त्रीस्याद्गन्त्री २कम्बलिवाह्यकम् ॥५२॥
शिबिका ३याप्ययानं स्याद्दोला४प्रेङ्खादिका स्त्रियाम् ।
उभौ तु५ द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे ॥ ५३ ॥
पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डु६कम्बली ।
रथे ७काम्बलवास्त्राद्याः कम्बलादिभिरावृते ॥५४॥
८त्रिषु द्वैपादयो रथ्या९ रथकट्या रथव्रजे ।
१०धूः स्त्री क्लीबे यानमुखं स्याद्रथा११ङ्गमपस्करः॥५५॥
१२चक्रं रथाङ्गं तस्यान्ते नेमिः १३स्त्रीस्यात्प्रधिः पुमान् ।
१४पिण्डिका नाभिरक्षाग्रकीलके तु १५द्वयोरणिः॥५६॥
१६रथगुप्तिर्वरूथो ना १७कूबरस्तु युगन्धरः ।

---

तस्य रथविशेषस्य । (१) द्वे शकटस्य (गाडा) इति ख्यातस्य । (२) द्वे गन्त्र्याः । (३) द्वे पुरुषवाह्यस्य यानविशेषस्य ( पालखी ) इत्यस्य । (४) द्वे दोलायाः ( डोली ) इति ख्यातायाः । (५) द्वयं व्याघ्रचर्मावृतरथस्य । (६) एकं पाण्डुकम्बलावृतरथस्य । (७) तत्त-द्वस्त्रदुकूलादिपरिवृतस्य 'काम्बलः, वास्त्रः, दौकूलः, चार्मः, क्षौमः' इत्यादयः एकैकम् । (८) द्वैपवैयाघ्रादयस्त्रिषु—वाच्यलिङ्गत्वात् द्वैपी रथ्या, द्वैपो रथ इत्यादि । (९) द्वयं रथसमूहे । (१०) द्वे रथादेर-ग्रभागस्य । धूः स्त्री । (११) द्वे रथावयवमात्रस्य । (१२) द्वे चक्रस्य । (१३) द्वे चक्रान्तस्य भूस्पर्शिभागस्य । (१४) द्वे चक्रकाष्ठाधारभूतस्य मण्डलाकारस्य चक्रमध्यस्य । (१५) एकं चक्रधारणकीलकस्य । (१६) द्वे शस्त्राघातपरिरक्षणार्थं कृतलोहादिमयावरणस्य । (१७) द्वे युग-

१अनुकर्षो दार्वधःस्थं २प्रासङ्गो ना युगाद्युगः ॥५७॥
३सर्वं स्याद्वाहनं ४यानं युग्यं पत्त्रं च धोरणम् ।
परम्परावाहनं यत्तद्वैनी५तकमस्त्रियाम् ॥ ५८ ॥
६आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ।
७नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः॥५९॥
सव्येष्ठदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः ।
८रथिनः स्यन्दनारोहा ९अश्वारोहास्तु सादिनः ॥६०॥
१०भटा योधाश्च योद्धारः सेना११रक्षास्तु सैनिकाः ॥
सेनायां समवेता ये सैन्या१२स्ते सैनिकाश्च ते ॥६१॥
बलिनो ये सहस्रेण १३साहस्रास्ते सहस्रिणः ।
१४परिधिस्थः परिचरः १५सेनानीर्वाहिनीपतिः ॥६२॥
१६कञ्चुको वारबाणोऽस्त्री यत्तु मध्ये सकञ्चुकाः ।

---

काष्ठबन्धनस्थानस्य । (१) एकं रथस्याधःस्थलभागदारुणः । (२) द्वे वृषादीनां स्कन्धे आसज्जमानस्य । (३) सर्वं हस्त्यश्वादिवाहनं यानादिशब्दवाच्यम् । (४) चत्वारि यानस्य । (५) एकं नरादिवोढृपरम्परया वाह्यस्य शिबिकादेः । (६) चत्वारि हस्तिपकस्य ( ४ महावत के नाम है ) (७) अष्टौ सारथेः । (८) द्वे स्थानारुह्य युद्धयताम् । (९) द्वे अश्ववारस्य ( स्वार ) इति ख्यातस्य । (१०) त्रयं योद्धुः । (११) द्वे सेनारक्षकाणाम् । (१२) द्वे सेनायां समवेतानाम् । (१३) द्वे सहस्रसेनावतः । (१४) द्वे सेनानियन्तुः । (१५) द्वे सेनापतेः । (१६) द्वे सन्नाहस्य

बध्नन्ति तत्सारस१नमधिकाङ्गोऽथ २शीर्षकम् ॥६३॥
शीर्षण्यं च शिरस्त्रेऽथ ३तनुत्रं वर्म दंशनम् ।
उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् ॥६४॥
४आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ।
५संनद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ॥६५॥
६त्रिष्वामुक्तादयो वर्मभृतां का७वचिकं गणे ।
८पदातिपत्तिपदगपादातिकपदाजयः ॥६६॥
पद्गश्च पदिकश्चाथ पा९दातं पत्तिसंहतिः ।
शस्त्राजीवे का१०ण्डपृष्ठायुधीयायुधिकाः समाः ॥६७॥
११कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् ।
१२अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः ॥६८॥
१३धन्वी धनुष्मान्धानुष्को निषङ्ग्यस्त्री धनुर्धरः ।

---

चोलकादेः (१) द्वे दार्ढ्यार्थं कञ्चुकोपरि यद्बध्नन्ति, तस्य । (२) त्रीणि शिरस्त्राणस्य ( टोप ) इत्यस्य । (३) सप्तकं कवचस्य ( चिलखत ) इति ख्यातस्य । (४) चत्वारि परिहितकञ्चुकादेः । (५) पञ्च कवचभृतः । (६) आमुक्तादयस्त्रिषु–यथा–आमुक्ता शाटी, आमुक्तः कञ्चुकः, आमुक्तं वस्त्रम् । एवं सन्नद्धा सज्जेत्यादि । (७) एकं वर्मभृद्गणस्य । (८) सप्त पदातेः । (९) द्वे पदातिसमूहस्य । (१०) चत्वारि आयुधजीविनः । (११) त्रीणि शरनिक्षेपनिष्णातस्य । (१२) एकं लक्ष्यच्युतसायकस्य । (१३) षट् धनुर्धरस्य ।

१स्यात्काण्डवांस्तु काण्डीरः२ शाक्तिकः शक्तिहेतिकः ॥
३याष्टीकपार४श्वधिकौ यष्टिपर्श्वधहेतिकौ ।
नैस्त्रिंशि५कोऽसिहेतिः स्यात्समौ६प्रासि७ककौन्तिकौ ॥
८चर्मी फलकपाणिः स्यात्पता९की वैजयन्तिकः ।
१०अनुप्लवः सहायश्चानुचरोऽभिसरः समाः ॥७१॥
११पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः ।
पुरोगमः पुरोगामी १२मन्दगामी तु मन्थरः ॥७२॥
१३जङ्घालोऽतिजवस्तुल्यौ १४जङ्घाकरिकजाङ्घिकौ ।
१५तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥ ७३ ॥
१६जय्यो यः शक्यते जेतुं जेयो जेत१७व्यमात्रके ।
१८जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति॥७४॥
सोऽभ्य१९मित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि ।

---

(१) द्वे शरधारिणः। (२) द्वे शक्त्यायुधधारकस्य। (३) एकं यष्टिहेतिकस्य (४)एकं परशुहेतिकस्य। (५) द्वे असिहेतिकस्य। (६) एकं प्रासायुधहेतिकस्य। (७) एकं कुन्तहेतिकस्य। (८) द्वे चर्मधारिणः। (९) द्वे पताकां बिभ्रतः (१०) चत्वारि अनुचरस्य। (११) सप्त पुरोगामिनः। (१२) द्वे शनैर्गामिनः। (१३) द्वयमतिवेगवतः। (१४) द्वयं यो जङ्घाबलेन जीवति तस्य। (१५) षट्कं त्वरितमात्रस्य। (१६) यः जेतुं शक्यते स जय्यः, एकम्। (१७) एकं जेतव्यमात्रस्य। (१८) द्वे जेतुः। (१९) त्रीणि यः शत्रून् प्रति सामर्थ्येन योद्धुं संमुखं

ऊर्जस्व१लः स्यादूर्जस्वी य ऊर्जातिशयान्वितः ॥७५॥
स्यादुरस्वा२नुरसिलो रथिनो३ रथिको रथी ।
कामङ्गाम्यनु४कामीनो ह्यत्यन्ती५नस्तथा भृशम् ॥७६॥
६शूरो वीरश्च विक्रान्तो जेता७ जिष्णुश्च जित्वरः ।
सांयु८गीनो रणे साधुः शस्त्रा९जीवादयस्त्रिषु ॥ ७७ ॥
१०ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः ।
वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥७८॥
११व्यूहस्तु बलविन्यासो भेदा १२दण्डादयो युधि ।
१३प्रत्यासारो व्यूहपार्ष्णिः सैन्य१४पृष्ठे प्रतिग्रहः ॥७९॥
एकेभैकरथा त्र्यश्वा १५पत्तिः पञ्चपदातिका ।

---

गच्छति, तस्य । (१) द्वे ऊर्जस्विनः । (२) द्वे विशालवक्षसः । (३) त्रीणि रथस्वामिनः (४) एकं यथेच्छं गच्छति, तस्य । (५) एकम् अत्यर्थं गमनशीलस्य । (६) त्रीणि शूरस्य । (७) त्रीणि जयनशीलस्य । (८) एकं युद्धकुशलस्य । (९) शस्त्राजीवादयः सांयुगीनान्ताः त्रिषु लिङ्गेषु ज्ञेयाः, वाच्यलिङ्गत्वात् । (१०) एकादश सेनायाः । (११) एकं सैन्यस्य युद्धार्थे रचनाविशेषेण स्थापनस्य । तथाहि–'मुखे रथा हयाः पृष्ठे तत्पृष्ठे च पदातयः । पार्श्वयोश्च गजाः कार्या व्यूहोऽयं परिकीर्तितः । (१२) युधिव्यूहस्य दण्डादयो भेदाः–विशेषा एकम् । तथाहि कामन्दकः–'तिर्यग्वृत्तिस्तु दण्डः स्याद्भोगोऽन्वावृत्तिरेव च । मण्डलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः ॥' इति । (१३) द्वे व्यूहपश्चाद्भागस्य । (१४) द्वे सेनायाः पश्चाद्भागस्य । (१५) एतद्विशेष-

१पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥८०॥
२सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।
अनीकिनी दशानीकिन्यक्षौहिण्यथ ३सम्पदि॥८१॥
सम्पत्तिः श्रीश्च लक्ष्मीश्च विप४त्त्यां विपदापदौ ।
५आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ ॥८२॥
६धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ।
इष्वासोऽप्यथ कर्णस्य ७कालपृष्ठं शरासनम् ॥८३॥
कपिध्वजस्य गा८ण्डीवगाण्डिवौ पुन्नपुंसकौ ।
कोटि९रस्याटनी गोधे१०तले ज्याघातवारणे ॥८४॥

---

णचतुष्टयविशिष्टा सेना पत्तिः, एकम् । तदुक्तम्—'एको रथो गजश्चैको नराः पञ्च पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते' ॥ इति । (१) पत्त्यङ्गैः—पत्तेरवयवैर्गजादिभिस्त्रिगुणैर्यथोत्तरं क्रमात्सेनामुखादय आख्याः स्युरित्यर्थः । (२) तिसृभिः पत्तिभिः सेनामुखम् । त्रिभिः सेनामुखैः गुल्मः । गुल्मत्रयेण गणः । त्रिभिर्गणैर्वाहिनी । तिसृभिर्वाहिनीभिः पृतना । पृतनात्रयेण चमूः । चमूत्रयेण-अनीकिनी । अनीकिनीत्रयेण दशानीकिनी । तिसृभिर्दशानीकिनीभिः अक्षौहिणी । (३) चत्वारि सम्पदः । (४) त्रीणि आपदः । (५) चत्वारि शस्त्रमात्रस्य । (६) सप्त धनुषः । तत्र धनुश्चापे क्लीबे, पुंसि च धन्वन् नान्तम् । (७) एकं कर्णस्य धनुषः । (८) द्वे अर्जुनस्य धनुषि । (९) द्वे धनुषः प्रान्तस्य । (१०) द्वे मौर्व्याघातवारणस्य—चर्मादिकृत-

लस्त१कस्तु धनुर्मध्यं मौर्वी२ ज्या शिञ्जिनी गुणः ।
स्यात्प्रत्या३लीढमालीढमित्यादि स्थानपञ्चकम् ॥ ८५॥
४लक्षं लक्ष्यं शरव्यं च शरा५भ्यास उपासनम् ।
६पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ ८६ ॥
कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः ।
प्रक्ष्वेड७नास्तु नाराचाः पक्षो८वाजस्त्रिपू९त्तरे ॥८७॥
निरस्तः १०प्रहिते बाणे विषा११क्ते दिग्धलिप्तकौ ।
१२तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ॥ ८८ ॥
तूण्यां १३खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः ।
कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् ॥ ८९ ॥
त्सरु१४ः खड्गादिमुष्टौ स्यान्मेख१५ला तन्निबन्धनम् ।
१६फलकोऽस्त्री फलं चर्म सं१७ग्राहो मुष्टिरस्य यः ॥९०॥

---

बाहुबन्धविशेषस्य । (१) एकं धनुर्मध्यस्य । (२) चत्वारि धनुर्गुणस्य । (३) आदिना समपदम्, वैशाखं मण्डलश्च एते प्रत्यालीढादयः पञ्च धनुर्धराणां स्थितिभेदा एकैकम् । (४) त्रीणि वेध्यस्य । (५) द्वे शरक्षेपाभ्यासस्य । (६) द्वादश बाणस्य । तत्रेषुः स्त्रीपुंसयोः । (७) द्वे लोहमयस्य बाणस्य । (८) द्वे कङ्कादिपक्षस्य । (९) निरस्तादिलिप्तकान्तास्त्रिषु लिङ्गेषु ज्ञेयाः । (१०) एकं क्षिप्तबाणस्य । (११) त्रीणि विषाक्तस्य बाणस्य । (१२) षट्कम् इषुधेः ( तर्कस ) इत्यस्य । (१३) नव खड्गस्य । (१४) एकं खड्गमुष्टेः । आदिना छुरिकादिग्रहः । (१५) एकं खड्गमुष्टिनिबन्धनस्य । (१६) त्रीणि फलकस्य ( ढाल ) इति ख्यातस्य चर्मणः । (१७) एकं फलकमुष्टिग्रहणस्थानस्य ।

१द्रुघणो मुद्गरघनौ स्यादीली२ करवालिका ।
भिन्दिपालः३ सृगस्तुल्यौ परिघः४ परिघातिनः ॥९१॥
द्वयोः कुठारः५ स्वधितिः परशुश्च परश्वधः ।
स्याच्छस्त्री६चासिपुत्री च च्छुरिका चासिधेनुका ॥९२॥
वा पुंसि ७शल्यं शङ्कुर्ना सर्वला८ तोमरोऽस्त्रियाम् ।
प्रासस्तु९ कुन्तः कोणस्तु१० स्त्रियः पाल्यश्रिकोटयः॥९३॥
११सर्वाभिसारः सर्वौघः सर्वसंनहनार्थकः ।
लोहा१२भिसारोऽस्त्रभृतां राज्ञां नीराजनाविधिः ॥९४॥
यत्सेनयाभिगमनमरौ तदभि१३षेणनम् ।
१४यात्रा व्रज्याभिनिर्याणं प्रस्थानं गमनं गमः ॥९५॥
स्यादा१५सारः प्रसरणं१६प्रचक्रं चलितार्थकम् ।

---

(१) त्रयं मुद्गरस्य । (२) द्वे ह्रस्वखड्गाकृतेरेकधारस्य शस्त्रस्य । (३) द्वे अश्मप्रक्षेपसाधनस्य । (४) द्वे लोहबद्धहस्तप्रमाणलगुडस्य । (५) चत्वारि कुठारस्य । ( कुल्हाडि ) इत्यस्य । तत्र कुठारः स्त्रीपुंसयोः । (६) चत्वारि छुरिकायाः ( छुरि ) इत्यस्य । (७) द्वे बाणाग्रस्य आयुधविशेषस्य । (८) द्वे तोमरस्य—मन्थचण्डाकारशस्त्रभेदस्य । (९) द्वे कुन्तस्य (भाला) इति ख्यातस्य । (१०) चत्वारि खड्गादिप्रान्तभागस्य । (११) त्रीणि चतुरङ्गसैन्यसन्नहनस्य । (१२) अस्त्रभृतां राज्ञां महानवम्यां दशम्यां वा नीराजनसमये शस्त्रादिसमर्पणलक्षणो यो विधिः सलोहाभिसार इत्युच्यते' एकम् । (१३) शत्रुसमीपे सेनया सहाभिगमनस्यैकम् । (१४) षट्कं प्रयाणस्य । (१५)द्वे सैन्यस्य सर्वतो व्याप्तेः । (१६)द्वे

अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः१ ॥ ९६ ॥
२वैतालिका बोधकराश्चाक्रिका३ घाण्टिकार्थकाः ।
स्युर्मागधास्तु४ मगधा बन्दिनः५ स्तुतिपाठकाः ॥९७॥
संश६प्तकास्तु समयात्संग्रामादनिवर्तिनः ।
७रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः ॥९८॥
८चूर्णे क्षोदः९ समुत्पिञ्जपिञ्जलौ भृशमाकुले ।
१०पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् ॥९९॥
सा वीरा११शंसनं युद्धभूमिर्याति भयप्रदा ।
अहंपूर्वमहंपूर्वमित्यहंपू१२र्विका स्त्रियाम् ॥१००॥
आहो१३पुरुषिका दर्पाद्या स्यात्सम्भावनाऽऽत्मनि ।

---

प्रस्थितसैन्यस्य । (१) रणे अहितान्प्रति भयरहितस्य शूरस्य तद्गमनं सोऽभिक्रम इत्येकम् । (२) द्वे ये नृपांस्तुतिपाठेन प्रतिबोधयन्ति तेषाम् । (३) द्वे घटिकावादकस्य । (४) द्वे राजाग्रतो वंशक्रमस्य स्तावकानाम् । (५) द्वे स्तुतिपाठकानाम् । एते चत्वारः एकार्थका इत्येके । (६) संग्रामात्–अपराङ्मुखस्यैकम् । (७) चत्वारि धूल्याः । रेणुः स्त्रीपुंसयोः, पांशुः पुंसि, रजः क्लीबे । (८) द्वे पिष्टस्य रजसः । षडपि रजस इत्येके । चूर्णः पुंलिङ्गेऽपि । (९) द्वे अत्यन्तमाकुलस्य । (१०) चत्वारि पताकायाः । केतनादिद्वयं पताकादण्डस्येत्येके । ध्वजः पुंसि । (११) एकं खण्डितगजादिभिरतिभयदायाः युद्धभूमेः । (१२) अहमग्रे भवामीत्याग्रहपुरःसरं पूर्वं युद्धम् अहंपूर्विका स्यात् एकम् । (१३) दर्पादात्मविषये या सम्भावना

अहम १हमिका तु सा स्यात्परस्परं यो भवत्यहङ्कारः ॥
२द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च ।
शक्तिः पराक्रमः प्राणो विक्रम३स्त्वतिशक्तिता ॥१०२॥
वीर४पानं तु यत्पानं वृत्ते भाविनि वारणे ।
यु५द्धमायोधनं जन्यं प्रधनं प्रविदारणम् ॥ १०३ ॥
मृधमास्कन्दनं सङ्ख्यं समीकं साम्परायिकम् ।
अस्त्रियां समरानीकरणाः कलहविग्रहौ ॥ १०४ ॥
सम्प्रहाराभिसम्पातकलिसंस्फोटसंयुगाः ।
अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः ॥ १०५ ॥
समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ।
६नियुद्धं बाहुयुद्धेऽथ ७तुमुलं रणसङ्कुले ॥ १०६ ॥
८क्ष्वेडा तु सिंहनादः स्यात्करिणां घटना घटा९ ।
१०क्रन्दनं योधसंरावो११बृंहितं करिगर्जितम् ॥१०७॥
विस्फा१२रो धनुषः स्वानः पटहा१३डम्बरौ समौ ।

---

तस्या एकम् । (१) परस्परं योऽहङ्कारी भवति तस्यैकम् । (२) दश पराक्रमस्य । (३) द्वे अतिपराक्रमस्य । (४) एकं रणे वृत्ते भाविनि वा उत्साहार्थं यत् मद्यपानं क्रियते तस्य । (५) एकत्रिंशद्युद्धस्य । समरादित्रयम् अस्त्रियाम् । (६) द्वे बाहुयुद्धस्य । (७) एकं रणे परस्परसंबाधस्य । (८) द्वे वीराणां सिंहनादतुल्यनादविशेषस्य । (९) एकं युद्धे करिणां संघट्टनस्य (१०) अन्योन्यस्पर्धया योधानामाह्वानस्य एकम् । (११) एकं करिगर्जितस्य । (१२) एकं धनुषः शब्दस्य । (१३) द्वे

प्रसभं १तु बलात्कारो हठोऽथ २स्खलितं छलम् ॥१०८॥
३अजन्यं क्लीबमुत्पात उपसर्गः समं त्रयम् ।
४मूर्च्छा तु कश्मलं मोहोऽप्यव५मर्दस्तु पीडनम् ॥१०९॥
अभ्यव६स्कन्दनं त्वभ्यासादनं विज७यो जयः ।
वैर८शुद्धिः प्रतीकारो वैरनिर्यातनं च सा ॥११०॥
९प्रद्रावोद्द्रावसंद्रावसंदावा विद्रवो द्रवः ।
अपक्रमोऽपयानं च रणे भङ्गः परा१०जयः ॥१११॥
पराजित११पराभूतौ त्रिषु नष्ट१२तिरोहितौ ।
१३प्रमापणं निबर्हणं निकारणं विशारणम् ॥११२॥
प्रवासनं परासनं निषूदनं निहिंसनम् ।
निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ॥ ११३ ॥
निस्तर्हणं निहननं क्षणनं परिवर्जनम् ।
निर्वापणं विशसनं मारणं प्रतिघातनम् ॥११४॥
उद्वासनप्रमथनक्रथनोज्जासनानि च ।

---

संग्रामध्वनेः । (१) त्रीणि बलात्कारस्य । (२) द्वे युद्धमर्यादाया चलनस्य । (३) त्रयमुत्पातस्य । ( शुभाशुभसूचकस्य ) । (४) त्रीणि मूर्छायाः । (५) द्वे परचक्रपीडनस्य । (६) द्वे छलादाक्रमणस्य । ( छापा ) इत्यस्य । (७) द्वे जयस्य । (८) त्रीणि वैरप्रतीकारस्य । (९) अष्टौ पलायनस्य । (१०) एकं पराजयस्य । (११)द्वे निर्जितस्य । (१२) द्वे निलीनस्य । (१३)प्रमापणादिवधान्तानि

आलम्भपिञ्जविशरघातोन्माथवधा अपि ॥ ११५ ॥
स्यात् १पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ।
अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ॥११६॥
२परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः ।
मृतप्रमीतौ त्रिष्वेते चिता ३चित्या चितिः स्त्रियाम् ११७
कबन्धो४ऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् ।
श्मशा५नं स्यात्पितृवनं ६कुणपः शवमस्त्रियाम् ॥११८॥
प्रग्रहो७पग्रहौ बन्द्यां कारा८स्याद्बन्धनालये ।
पुंसि भूम्न्यसवः९ प्राणाश्चैवं जीवो१०ऽसुधारणम् ॥
११आयुर्जीवितकालो ना जी१२वातुर्जीवनौषधम् ।
इति क्षत्रियवर्गः ॥ ८ ॥

---

त्रिंशन्नामानि वधस्य । (१) दश मरणस्य । तत्र मृत्युर्द्वयोः, निधनमस्त्रियाम् । (२) सप्त मृतस्य एते वाच्यलिङ्गाः । (३) त्रयं प्रेतदाहाधारचुल्लेः । (४) एकं मस्तकहीनक्रियायुक्तकलेवरस्य । (५) द्वे प्रेतभूमेः । (६) द्वे निर्जीवशरीरस्य । (७) त्रीणि चोरादेराकर्षणस्य । (८) एकं बन्धनालयस्य स्त्रियाम् । (९) द्वे प्राणानाम् । बहुत्वे पुंसि च । (१०) द्वे प्राणधारणस्य । (११) द्वे जीवितावच्छिन्नकालस्य । उसन्तं क्लीबे । (१२) द्वे जीवनौषधस्य पुंसि । इति क्षत्रियवर्गः ॥ ८ ॥

## अथ वैश्यवर्गः ॥ ९ ॥

ऊरव्या १ऊरुजा अर्या वैश्या भूमिस्पृशो विशः ।
२आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने ॥ १ ॥
स्त्रियां ३ कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः ।
४सेवा श्ववृत्तिर५नृतं कृषिरुञ्छशि६लं त्वृतम् ॥ २ ॥
द्वे याचितायाचितयोर्यथासङ्ख्यं ७मृतामृते ।
सत्या८नृतं वणिग्भावः स्याद्दणं ९पर्युदञ्चनम् ॥ ३ ॥
उद्धारोऽर्थप्रयो१०गस्तु कुसीदं वृद्धिजीविका ।
याञ्चयाऽप्तं ११याचितकं निमयादाप१२मित्यकम् ॥४॥
१३उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् ।
१४कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः ॥ ५ ॥

---

(१) षट् वैश्यस्य । (२) षट् जीविकामात्रस्य । (३) त्रयो वृत्तयो वैश्यानां जीविका भेदा इत्यर्थः । (४) द्वे सेवावृत्तेः ( **नौकरी** ) इत्यस्य । (५) द्वे कृषिकर्षणवृत्तेः । ( **हलचलाना** ) । (६) द्वयम् उञ्छवृत्तेः । ( ७ ) प्रत्यहं तण्डुलादियाञ्चायां मृतमित्येकम् । याचनां विनैव लब्धे अमृतमित्येकम् । ( ८ ) एकं क्रयविक्रयादिवृत्तेः । ( ९ ) त्रयमृणस्य । (१०) त्रीणि ऋणसम्बन्धिकालान्तरद्रव्येण लोके ( **सूतब्याज** ) इति ख्यातेन जीविकायाः । ( ११ ) एकं याञ्चया आप्तस्य वस्तुनः । (१२) एकं निनयादाप्तस्य वस्तुनः । ( १३ ) एकम् ऋणदातुः ( **साहुकार** ) इत्यस्य । (१४) चत्वारि ऋणं दत्वा तद्वृद्ध्या

१क्षेत्राजीवः कर्षकश्च कृषिकश्च कृषीवलः ।
क्षेत्रं व्रैहेय२शालेयं व्रीहिशाल्युद्भवो हि यत् ॥ ६ ॥
३यव्यं यवक्यं षष्टि४क्यं यवादिभवनं हि यत् ।
५तिल्यं तैलीनवन्मा६षोमाणुभङ्गा द्विरूपता ॥ ७ ॥
७मौद्गीनकौद्रवीणादि शेषधान्योद्भवक्षमम् ।
*शाकक्षेत्रादिके ८शाकशाकटं शाकशाकिनम् ।
बीजाकृतं९ तूप्तकृष्टे १०सीत्यं कृष्टं च हल्यवत् ॥ ८ ॥
११त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपितस्मिन् ।
१२द्विगुणाकृते तु सर्वं पूर्वं शम्बाकृतमपीह ॥ ९ ॥

---

जीविनः पुरुषस्य । (१) चत्वारि कृषीवलस्य । **( किसान )** इत्यस्य । (२) एकं व्रीहीणामुद्भवयोग्यक्षेत्रस्य । एकं शाल्युद्भवोचितक्षेत्रस्य । (३) द्वे यवोद्भवोचितक्षेत्रस्य । (४) एकं षष्टिकोद्भवोचितक्षेत्रस्य । ( ५ ) द्वे तिलोद्भवोचितक्षेत्रस्य । ( ६ ) एवं माष्यं माषीणम्, द्वे माषोद्भवोचितक्षेत्रस्य, द्वे उमा—अतस्यस्तासां क्षेत्रस्य, द्वे अणुर्धान्यभेदस्तत्क्षेत्रस्य, द्वे भङ्गा-मातुलानी तत्क्षेत्रस्य । **उड़द, तिसी (अलसी ) चीना और सनई के पैदा होने योग्य खेतके क्रमशः२-२ नाम हैं ।** ( ७ ) व्रीह्यादिभ्योऽन्येषां मुद्गादीनां धान्यानामुद्भवोचितं क्षेत्रं मौद्गीनादि स्यात् । एवं कौद्रवीणम् । आदिना चाणकीनम्, गौधूमीनम्, कालायीनम्, कौलत्थीनम्, प्रैयंगवीनमित्यादि बोध्यम् । ( ८ ) द्वयं शाकक्षेत्रादिकस्य क्लीबम् । ( ९ ) आदौ उप्तं पश्चात्कृष्टं क्षेत्रमुप्तकृष्टं तत्र बीजाकृतमित्येकम् । (१०) त्रीणि कृष्टमात्रस्य । (११) चत्वारि वारत्रयकृष्टस्य । (१२) द्विगुणाकृतादि पूर्वव-

१द्रोणाढकादिवापादौ द्रौणिकाढकिकादयः ।
खारीवापस्तु २खारीक उत्तमर्णादयस्त्रिषु ॥ १० ॥
पुन्नपुंसकयोर्वप्रः३ केदारः क्षेत्रमस्य तु ।
कैदारकं४ स्यात्कैदार्यं क्षेत्रं कैदारिकं गणे ॥ ११ ॥
५लोष्टानि लेष्टवः पुंसि ६कोटिशो लोष्टभेदनः ।
७प्राजनं तोदनं तोत्त्रं खनित्रमवदारणे ॥ १२ ॥
८दात्रं लवित्रमाबन्धो९ योत्रं योक्त्रमथो १०फलम् ।
निरीशं कुटकं फालः कृषको ११लाङ्गलं हलम् ॥ १३ ॥
गोदारणं च शीरोऽथ १२शम्या स्त्री युगकीलकः ।
१३ईषा लाङ्गलदण्डः स्यात्सीता १४लाङ्गलपद्धतिः ॥१४॥
पुंसि १५मेधिः खले दारु न्यस्तं यत्पशुबन्धने ।

---

चत्वारि नामानि वारद्वयकृष्टस्य । "शम्बाकृतम्" इत्यपि वारद्वयकृष्टस्यैकम् । ( १ ) द्रोणाढकादिवापादेः द्रौणिक–आढकिक आदयः स्युरेकैकम् । ( २ ) एकं खारीवापस्य । उत्तमर्णादयः खारीकान्ताः त्रिलिङ्गयाम् । ( ३ ) त्रयं क्षेत्रस्य । तत्र वप्रः अस्त्रियाम् । क्षेत्रं क्लीबे । ( ४ ) चत्वारि क्षेत्रसमूहस्य । ( ५ ) द्वे मृत्तिकाखण्डस्य । ( ६ ) द्वे लोष्टभञ्जनमुद्गरस्य । ( ७ ) त्रीणि वृषादिस्ताडनोपयोगिनस्तोत्रस्य । (८) द्वे कुद्दालादेः । ( ९ ) त्रीणि युगप्रबन्धनोपयोगिन्या रज्वाः । ( १० ) पञ्च लाङ्गलस्याधःस्थितस्य लोहमयकाष्ठस्य । ( ११ ) चत्वारि हलस्य । (१२) द्वे युगस्य कीलके । (१३) एकं लाङ्गलदण्डस्य । (१४) एकं लाङ्गलपद्धतेः । ( १५ ) द्वे पशुबन्धने न्यस्तकाष्ठस्य ।

१आशुर्व्रीहिः पाटलः स्याच्छितशूकयवौ२ समौ ॥१५॥
३तोक्मस्तु तत्र हरिते ४कलायस्तु सतीनकः ।
हरेणुरेणुकौ चास्मिन्कोर५दूषस्तु कोद्रवः ॥ १६ ॥
६मङ्गल्यको मसूरोऽथ ७मकुष्टकमयुष्टकौ ।
वनमुद्गे सर्षपे८ तु द्वौ तन्तुभकदम्बकौ ॥ १७ ॥
९सिद्धार्थस्त्वेष धवलो १०गोधूमः सुमनः समौ ।
स्याद्यावकस्तु११ कुल्माषश्चणको१२ हरिमन्थकः ॥१८॥
द्वौ तिले १३तिलपेजश्च तिलपिञ्जश्च निष्फले ।
१४क्षवः क्षुताभिजननो राजिका कृष्णिकाऽऽसुरी ॥१९॥
स्त्रियौ१५कङ्गुप्रियङ्गू द्वे१६अतसी स्यादुमा क्षुमा ।
१७मातुलानी तु भङ्गायां व्रीहिभेदस्त्वणुः१८पुमान् ॥२०॥
१९किंशारुः सस्यशूकं स्यात्कणिशं२०सस्यमञ्जरी ।

---

(१) त्रीणि व्रीहेः। (२) द्वे यवानाम् । (३) एकं हरितयवस्य । (४) चत्वारि रेणुकस्य । (५) द्वे कोद्रवस्य । (६) द्वे मसूरस्य । (७) त्रयं वनमुद्गस्य । (८) त्रीणि सर्षपस्य । (९) एष सर्षपो धवलः सिद्धार्थ इत्येकम् । (१०) द्वे गोधूमस्य । (११) अर्धस्विन्नस्य यवादेः । (१२) द्वे चणकस्य ( चना ) इत्यस्य । (१३) द्वे निष्फलस्य तिलस्य । (१४) पञ्चकं कृष्णसर्षपस्य ( काला राई ) इत्यस्य । (१५) द्वे प्रियङ्गोः । (१६) त्रीणि अतस्याः । (१७) द्वे भङ्गायाः (१८) एकं व्रीहिभेदस्य । (१९) एकं सस्यशूकस्य । (२०) एकं सस्यमञ्जर्याः ।

१धान्यं व्रीहिः स्तम्बकरिः २स्तम्बो गुच्छस्तृणादिनः २१
३नाडी नालञ्च काण्डोऽस्य ४पलालोऽस्त्री सनिष्फलः ।
५कडङ्गरो बुसं क्लीबे धान्यत्वचि ६तुषः पुमान् ॥२२॥
७शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे ८शमी शिम्बा त्रिषूत्तरे ।
९ऋद्धमावसितं धान्यं १०पूतं तु बहुलीकृतम् ॥ २३ ॥
११माषादयः शमीधान्ये शूकधान्ये १२ यवादयः ।
१३शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी ॥२४॥
तृणधान्यानि १४नीवाराः स्त्री १५गवेधुर्गवेधुका ।
१६अयोग्रं मुसलोऽस्त्री १७स्यादुदूखलमुलूखलम् ॥२५॥

---

(१) व्रीणि व्रीहियवादेः तत्र स्तम्बकरिः पुंसि। (२) एकं तृणादेर्गुच्छस्य। (३) अस्य गुच्छस्य यः काण्डः स 'नाडी नालम्' इति द्वयम्। (४) एकं सकाण्डनिष्फलस्य। (५) द्वे पलालादिक्षोदस्य। तत्र बुसं क्लीबेऽपि। (६) धान्यत्वचि 'तुषः' इति एकम्। (७) श्लक्ष्णं तीक्ष्णं यदग्रं तत्र 'शूक' इत्येकम् क्लीबपुंसोः। (८) द्वे शिम्बायाः। उत्तरे ऋद्धादयश्चत्वारस्त्रिषु। (९) द्वे अपनीततृणस्य राशीकृतस्य धान्यस्य। (१०) द्वे अपनीतबुसस्य धान्यस्य। (११) शमीप्रभवे धान्ये माषमुद्गादयो भेदाः। (१२) शूकसहितं धान्यं यवगोधूमादयो ज्ञेयाः। (१३) कलमाद्याः षष्टिकाद्याः शालयः स्युः। अमी पुंसि। (१४)नीवाराःबहुवचनात् श्यामाकादयः तृणधान्यानि स्युः। (१५)द्वे मुन्यन्नविशेषस्य। (१६)द्वे मुसलस्य। क्लीबे मुसलम्। (१७) द्वे उलूखलस्य (उखली)

१प्रस्फोटनं शूर्पमस्त्री२चालनी तितउः पुमान् ।
३स्यूतप्रसेवौ ४कण्डोलपिटौ ५कटकिलिञ्जकौ ॥२६॥
समानौ ६रसवत्यां तु पाकस्थानमहानसे ।
७पौरोगवस्तदध्यक्षः ८सूपकारास्तु बल्लवाः ॥ २७ ॥
आरालिका आन्धसिकाः सूदा औदनिका गुणाः ॥
९आपूपिकः कान्दविको भक्ष्यकार इमे त्रिषु ॥२८॥
१०अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका ।
११अङ्गारधानिकाऽङ्गारशकट्यपि हसन्त्यपि ॥२९॥
हसन्यप्यथ न स्त्री १२स्यादङ्गारोऽलातमुल्मुकम् ।
१३क्लीबेऽम्बरीषं भ्राष्ट्रो ना १४कन्दुर्वा स्वेदनी स्त्रियाम् ३०
१५अलिञ्जरः स्यान्मणिकः १६कर्कर्यालुर्गलन्तिका ।
१७पिठरः स्थाल्युखा कुण्डं १८कलशस्तु त्रिषु द्वयोः ३१

---

इत्यस्य । (१) द्वे शूर्पस्य । (२) द्वे चालन्याः । (३) द्वे धान्यादिभरणार्थं कृतस्य वस्त्रभाण्डस्य । (४) द्वे वेणुदलादिरचितभाण्डस्य । (५) द्वे वंशादिविकारस्य । समानाविति स्यूतादिभिर्युगलैः सम्बध्यते । (६) त्रयं पाकस्थानस्य । (७) तस्याध्यक्षः पौरोगव इत्येकम । (८) सप्तकं पाककर्तुः । (९) त्रीणि भक्ष्यकारस्य । इमे त्रिषु । (१०) पञ्च चुल्लेः (**चूल्हा**) इत्यस्य । (११) चत्वारि अङ्गारशकट्याः । (१२) त्रयं प्रज्वलत्काष्ठस्य । (१३) द्वे चणकादिभर्जनपात्रस्य । (१४) द्वे मद्यनिर्माणोपयोगिपात्रस्य । (१५) द्वे महाकुम्भस्य । (१६) त्रयं गलन्तिकायाः । (१७) चत्वारि स्थाल्याः । (१८) चत्वारि कलशस्य । तत्र

घटः कुटनिपावस्त्री १शरावो वर्धमानकः ।
२ऋजीषं पिष्टपचनं ३कंसोऽस्त्री पानभाजनम् ॥३२॥
४कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमान् ।
सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम् ॥३३॥
५दर्विः कम्बिः खजाका च६स्यात्तर्दूर्दारुहस्तकः ।
अस्त्री७शाकं हरितकं शिग्रुरस्य तु नाडिका ॥३४॥
८कलम्बश्च कडम्बश्च वेसवार ९उपस्करः ।
१०तिन्तिडीकं च चुक्रं च वृक्षाम्लमथ११वेल्लजम्॥३५
मरीचं कोलकं कृष्णमूषणं धर्मपत्तनम् ।
१२जीरको जरणोऽजाजी कणा कृष्णे तु जीरके ॥३६॥
१३सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्चिका ।
१४आर्द्रकं शृङ्गवेरं स्यादथ१५छत्रा वितुन्नकम् ॥३७॥

---

कलशस्त्रिषु । घटः स्त्रीपुंसयोः । (१) द्वे पात्रभेदस्य । शरावः पुंनपुंसकयोः । (२) द्वे पिष्टपाकोपयोगिनः पात्रस्य ( तावा ) इत्यस्य । (३) द्वे पानपात्रस्य । (४) कृत्तेः स्नेहपात्रे कुतूरित्येकम् । सैव कुतूरल्पा चेद् 'कुतुपः' इत्येकम् । सर्वं पात्रमात्रम्—आवपनादिसंज्ञम् । पञ्च भाण्डस्य । (५) त्रीणि दर्व्याः । (६) द्वे दर्विभेदस्य । (७) त्रीणि वास्तुकादेः शाकस्य । (८) त्रीणि शिग्रुनाडिकायाः । (९ द्वे हरिद्रासर्षपमरीचादिचूर्णस्य । (१०) त्रीणि तिन्तिडीकस्याम्लभेदस्य । (११) षट्कं मरीचस्य । (१२) चत्वारि जीरकस्य । (१३) षट्कं कृष्णवर्णस्य जीरकस्य । (१४) द्वे आर्द्रकस्य । (१५) चत्वारि धान्याकस्य ।

कस्तुम्बुरु च धान्याकमथ १शुण्ठी महौषधम् ।
स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम् ॥ ३८ ॥
२आरनालकसौवीरकुल्माषाभिषुतानि च ।
अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके ॥ ३९ ॥
३सहस्रवेधि जतुकं वाह्लीकं हिङ्गु रामठम् ।
तत्पत्री ४कारवी पृथ्वी बाष्पिका कबरी पृथुः ॥ ४० ॥
५निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी ।
सामुद्रं यत्तु ६लवणमक्षीवं वशिरं च तत् ॥ ४१ ॥
७सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे ।
८रौमकं वसुकं ९पाक्यं विडं च कृतके द्वयम् ॥४२॥
१०सौवर्चलेऽक्षरुचके तिलकं तत्र मेचके ।
११मत्स्यण्डी फाणितं खण्ड१२विकारः शर्करा सिता ४३
कूर्चिका १३ क्षीरविकृतिः स्याद्रसाला१४ तु मार्जिता ।

---

(१) पञ्चकं शुण्ठयाः स्त्रीनपुंसकयोः । (२) सप्त काञ्जिकस्य । (३) पञ्च हिङ्गुवृक्षनिर्यासस्य (४) पञ्च हिङ्गुतरुण्याः । (५) पञ्च हरिद्रायाः । (६) यत्सामुद्रं लवणं तत् अक्षीवम्, वशिरम्, इति द्वे । (७) चत्वारि सिन्धुजस्य लवणस्य । (८) द्वे साम्भरलवणस्य । (९) द्वे कृतकस्य लवणस्य । (१०) त्रीणि मधुरलवणस्य । तत्र—सौवर्चले मेचके तिलकमित्येकम् । (११) द्वे फाणितस्य । (१२) त्रीणि शर्करायाः । (१३) एकं क्षीरविकृतेः । (१४) द्वे दधिमधुशर्करामरीचा-

स्यात्तेम [1]नं तु निष्ठानं त्रिलिङ्गा वासितावधेः ॥४४॥
शूला[2]कृतं भटित्रं स्याच्छूल्यमु[3]ख्यं तु पैठरम् ।
प्र[4]णीतमुपसम्पन्नं [5]प्रयस्तं स्यात्सुसंस्कृतम् ॥ ४५ ॥
स्यात्पिच्छि[6]लं तु विजिलं संमृष्टं [7]शोधितं समे ।
[8]चिक्कणं मसृणं स्निग्धं [9]तुल्ये भावितवासिते ॥४६॥
आप[10]क्वं पौलिरभ्यूषो लाजाः [11]पुंभूम्नि चाक्षताः ।
पृथुकः [12]स्याच्चिपिटको धाना [13]भ्रष्टयवे स्त्रियः ॥४७॥
[14]पूपोऽपूपः पिष्टकः स्यात्कर[15]म्भो दधिसक्तवः ।
भिःसा[16]स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिविः ॥४८॥

---

द्रादिभिः कृतस्य लेह्यस्य । (१) द्वे व्यञ्जनस्य दध्यादेः । इतः परं वासितान्तास्त्रिलिङ्गाः । (२) त्रीणि शूलेन संस्कृतस्य मांसादेः । (३) द्वे स्थालीसंस्कृतस्यान्नादेः । (४) द्वे रसादिसम्पन्नस्य व्यञ्जनादेः । (५) द्वे प्रयत्ननिष्पन्नस्य घृतपक्वादेः । (६) द्वे मण्डयुक्तदध्यादेः । (७) द्वे केशकीटाद्यपनयनेन शोधितस्यान्नादेः । (८) त्रीणि स्निग्धस्य । (९) द्वे पुष्पादिद्रव्यान्तरेणाधिवासितस्य । (१०) त्रीणि पौल्याः । (११) लाजाः—भर्जितव्रीहयः पुंसि बहुत्वे । एवमक्षता अपि पुम्भूम्नि । (१२) द्वे आर्द्रभृष्टव्रीहितण्डुलस्य ( चिउडा ) इत्यस्य । (१३) धाना इति भ्राष्टयवे नित्यं स्त्रियां बहुत्वे च ( फरुही या बहुरी ) इत्यस्य । (१४) त्रीणि तण्डुलपिष्टरचितस्य भक्ष्यभेदस्य (पूआ, माल पूआ) इत्यस्य । (१५) दधियुक्ताः सक्तवः करम्भः स्यात् । (१६) षट् अन्नस्य ।

भिः१सटा दधिका सर्वरसाग्रे २मण्डमस्त्रियाम् ।
मासः३राचामतिस्रावा मण्डे भक्तसमुद्भवे ॥४९॥
४यवागूरुष्णिका श्राणा विलेपी तरला च सा ।
*म्रक्षणाभ्यञ्जने तैलं कृसरस्तु तिलौदनः ।
७गव्यं त्रिषु गवां सर्वं गोविट् गोमयमस्त्रियाम् ॥५०॥
तत्तु शुष्कं ९करीषोऽस्त्री १०दुग्धं क्षीरं पयः समम् ।
११पयस्यमाज्यदध्यादि १२द्रप्सं दधि घनेतरत् ॥५१॥
१३घृतमाज्यं हविः सर्पिर्न१४वनीतं नवोद्धृतम् ।
तत्तु हैय१५ङ्गवीनं यद्ध्योगोदोहोद्भवं घृतम् ॥५२॥
दण्डा१६हतं कालशेयमरिष्टमपि गोरसः ।
१७तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ॥५३॥

---

तत्र ओदनोऽस्त्री । दीदिविः पुंसि । (१) द्वे दग्धान्नस्य । (२) सर्वेषां रसानामग्रं मण्डः स्यात् । स पुंनपुंसकयोः । (३) त्रीणि भक्तसमुद्भवमण्डस्य । (४) पञ्च द्रवदोदनस्य । (५) त्रीणि तैलस्य ( तेल ) इत्यस्य । (६) द्वे तिलौदनस्य । ( खिचड़ी ) इत्यस्य । (७) गवां सर्वं गव्यं स्यात् त्रिषु । (८) द्वे गोः पुरीषस्य ( गोबर ) इत्यस्य । (९) तद्गोमयं शुष्कं करीषं स्यात् ( सूखे गोबर-गोहरि ) इत्यस्य । (१०) त्रयं दुग्धस्य । (११) यदाज्यदध्यादि-तत्पयस्यम् । (१२) यद्घनादितरत् दधि तत् द्रप्सं स्यात् । (१३) चत्वारि घृतस्य । (१४) द्वे नवनीतस्य । (१५) ह्योगोदोहोद्भवं हैयङ्गवीनं स्यात् । (१६) चत्वारि दण्डमथितस्य गोरसमात्रस्य । (१७) तद्विशेषमाह-पादाम्बु

मण्डं दधिभवं मस्तु पीयूषोऽभिनवं पयः ।
अशना१या बुभुक्षा क्षुद् ग्रास२स्तु कवलः पुमान् ॥५४॥
३सपीतिः स्त्री तुल्यपानं सग्धिः ४ स्त्री सहभोजनम् ।
उद५न्या तु पिपासा तृट् तर्षो६ जग्धिस्तु भोजनम् ॥५५॥
जेमनं लेह आहारो निघासो न्याद इत्यपि ।
७सौहित्यं तर्पणं तृप्तिः फेला८ भुक्तसमुज्झितम् ॥५६॥
९कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ।
१०गोपे गोपालगोसङ्ख्यगोधुगाभीरबल्लवाः ॥ ५७ ॥
गोमहि११ष्यादिकं पादबन्धनं द्वौ गवीश्वरे ।
गोमा१२न्गोमी १३गोकुलं तु गोधनं स्याद्गवां व्रजे ॥५८॥
त्रि१४ष्वाशितङ्गवीनं तद्भावो यत्राशिताः पुरा ।
१५उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ॥ ५९ ॥

---

यत्र तइण्डाहतं तक्रमिति । अर्धाम्बु यत्र गोरसे तदुदश्वित् । निर्जलं दधिमन्थनमात्रेण मथितमिति । दधिभवं मस्तु स्यात् । अभिनवं पयः पीयूषः स्यात् । ( फेनुस ) इत्यस्य । (१) त्रीणि क्षुधः । (२) द्वे कवलस्य । (३) द्वे सहपानस्य । (४) द्वे सहभोजनस्य । (५) चत्वारि तृषः । (६) सप्त भोजनस्य । (७) त्रयं तृप्तेः । (८) भुक्तमुज्झितं फेला स्यात् । (९) षट्कं यथेप्सितस्य । (१०) षट् गोपालस्य । (११) गोमहिष्यादिकं पादबन्धनमिति । (१२) द्वे गवां स्वामिनि । (१३) द्वे गवां व्रजे । (१४) यत्र पुरा गाव आशिताः—भोजिताः तत्स्थानं आशितङ्गवीनमिति लिङ्गत्रये । (१५) नव

अनड्वान्सौरभेयो गौरुक्ष्णां संहतिरौ[१]क्षकम् ।
[२]गव्या गोत्रा गवां वत्सधेन्वोर्वा[३]त्सकधैनुके ॥ ६० ॥
वृषो महान्म[४]होक्षः स्याद् वृद्धो[५]क्षस्तु जरद्गवः ।
उत्पन्न उक्षा [६]जातोक्षः सद्यो जातस्तु[७]तर्णकः ॥ ६१ ॥
[८]शकृत्करिस्तु वत्सः स्याद्दम्य[९]वत्सतरौ समौ ।
[१०]आर्षभ्यः षण्डतायोग्यः[११]षण्डो गोपतिरिट्चरः ६२
स्कन्धदेशे त्वस्य [१२]वहः सा[१३]स्ना तु गलकम्बलः ।
स्यान्न[१४]स्तितस्तु नस्योतः प्रष्ठ[१५]वाड् युगपार्श्वगः ६३
युगादीनां तुवोढारो[१६]युग्यप्रासङ्ग्यशाकटाः ।
खनति तेन तद्वोढास्येदं [१७]हालिकसैरिकौ ॥ ६४ ॥
[१८]धूर्वहे धुर्यधौरेयधुरीणाः सधुरन्धराः ।

---

वृषभस्य ( बैल ) इत्यस्य । (१) उक्ष्णां संहतिः—औक्षकं स्यात् । (२) द्वे गवां संहतेः । (३) एकं वत्सानां संहतेः । एकं धेनूनां संहतेः । (४) एकं महतो वृषभस्य । (५) द्वे वृद्धवृषभस्य (६) उत्पन्नः उक्षा जातोक्षः स्यात् । (७) सद्योजातः-तर्णकः स्यादेकम् । (८) द्वे वत्सस्य । (९) द्वे स्पष्टतारुण्यस्य । (१०)एकं तारुण्यं प्राप्तस्य वृषभस्य । (११) त्रीणि स्वेच्छाचारिणो वृषभस्य । (१२) अस्य स्कन्धदेशे वहः स्यात् । (१३) द्वे गोः कण्ठे लम्बमानस्य चर्मणः । (१४) द्वे स्यूतनासिकस्य । (१५) द्वे दमनार्थं युग्येन सह स्कन्धे बद्धकाष्ठस्य । (१६) युगादीनां वोढॄणां त्रयम् । (१७) द्वे तेन खनतीत्याद्यर्थस्य । (१८)पञ्च

उभावेक१धुरीणैकधुरावेकधुरावहे ॥ ६५ ॥
स तु २सर्वधुरीणः स्याद्यो वै सर्वधुरावहः ।
३माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी ॥ ६६ ॥
अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा गोषु नैचि४की ।
वर्णादिभेदात्संज्ञाः स्युः ५शबलीधवलादयः ॥ ६७ ॥
द्विहा६यनी द्विवर्षा गौरेकाब्दा त्वेकहायनी ।
चतुरब्दा चतुर्हायण्येवं त्र्यब्दा त्रिहायणी ॥ ६८ ॥
७वशा वन्ध्यावतो८का तु स्रवद्गर्भाथ सन्धिनी९ ।
आक्रान्ता वृषभेणाथ वेह१०द्गर्भोपघातिनी ॥ ६९ ॥
काल्योपस११र्या प्रजने प्रष्ठौ१२ही बालगर्भिणी ।
स्यादच१३ण्डी तु सुकरा बहु१४सूतिः परेष्टुका ॥ ७० ॥
चिरप्र१५सूता बष्कयणी धेनुः १६स्यान्नवसूतिका ।

---

धुरन्धरवृषभस्य । (१) त्रीणि य एकामेव धुरं वहति तस्य । (२) द्वे यः सर्वामपि धुरं वहति स सर्वधुरीण इति । (३) नव गवि । (४) या गोषु उत्तमा सा गौर्नैचिकीति । (५) वर्णावयव-प्रमाणादीनां भेदात् गवां संज्ञाः शबली धवला इत्यादयः । (६) द्विवर्षा गौर्द्विहायनी, एकाब्दा गौः एकहायनी, चतुरब्दा गौश्चतु-र्हायणी, त्रिवर्षा त्रिहायणी, स्यात् । (७) द्वे वन्ध्यायाः । (८) द्वे अकस्मात्पतितगर्भायाः । (९) एकं वृषभेण मैथुनार्थे आक्रान्ता-याः । (१०) द्वे वृषोपगमनाद्गर्भोपघातिन्याः । स्त्रियाम् । (११)प्रजने काल्या गौरुपसर्या इत्येकम् । (१२)द्वे बालगर्भिण्याः । (१३) द्वे अको-पनायाः (१४) द्वे बहुप्रसवायाः । (१५)द्वे दीर्घकालेन प्रसूतायाः । (१६)

सु१व्रता सुखसंदोह्या पीनो२ध्नी पीवरस्तनी ॥ ७१ ॥
द्रोण३क्षीरा द्रोणदुग्धा धेनु४ष्या बन्धके स्थिता ।
५समांसमीना सा यैव प्रतिवर्षं प्रसूयते ॥ ७२ ॥
६ऊधस्तु क्लीबमापीनं समौ ७शिवककीलकौ ।
न पुंसि दाम ८सन्दानं पशु९रज्जुस्तु दामनी ॥ ७३ ॥
१०वैशाखमन्थमन्थानमन्थानो मन्थदण्डके ।
११कुठरो दण्डविष्कम्भो म१२न्थनी गर्गरी समे ॥७३॥
१३उष्ट्रे क्रमेलकमयमहाङ्गाः करभः १४शिशुः ।
१५करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः ।
अजा १६छागी १७शुभच्छागवस्तच्छगलका अजे ।

---

द्वे नूतनप्रसूतायाः । ( १ ) द्वे सुशीलायाः । ( २ ) द्वे स्थूलस्तन्याः । (३) द्वे द्रोणपरिमितदुग्धदात्र्याः । (४) एकं बन्धके स्थितायाः ( बंधक रक्खी हुई गायका नाम है ) । ( ५ ) एकं या वर्षे वर्षे प्रसूयते तस्याः । ( ६ ) द्वे गोस्तनस्य । ऊधः सान्तं क्लीबम् । ( ७ ) द्वे गोबन्धकाष्ठस्य । ( ८ ) द्वे बन्धनरज्जोः । तत्र दाम स्त्रीपुंसयोः । ( ९ ) द्वे यस्यामेकस्यां बहवो वृषा बध्यन्ते तस्या रज्जोः । ( १० ) पञ्च मन्थदण्डस्य । (११)द्वे यत्र मन्थदण्डो बध्यते तस्य स्तम्भस्य । (१२) द्वे मथ्यमानदधिपात्रस्य । (१३) चत्वारि उष्ट्रस्य (१४) उष्ट्रस्य शिशुः करभ इत्येकम् । (१५)दारवैःपादबन्धनैरुपेताः करभाः शृङ्खलकाः स्युरित्येकम् । (१६) द्वे अजायाः । (बकरी-छेर)इत्यस्य । (१७) पञ्च

मे १ढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके ॥ ७६ ॥
२उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम् ।
३चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः ॥७७॥
वैदेहकः ४सार्थवाहो नैगमो वाणिजो वणिक् ।
पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः ॥ ७८ ॥
५विक्रेता स्याद्विक्रयिकः क्रायक६क्रयिकौ समौ ।
७वाणिज्यं तु वणिज्या स्यान्मू८ल्यं वस्नोऽप्यवक्रयः ॥
९नीवी परिपणो मूलधनं ला१०भोऽधिकं फलम् ।
११परिदानं परीवर्तो नैमेयनिमयावपि ॥ ८० ॥
पुमानुप१२निर्विन्यासः प्रति१३दानं तदर्पणम् ।
१४क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके ॥ ८१ ॥

---

अजस्य । (१) सप्त मेषस्य (२) उष्ट्राणां वृन्दे **औष्ट्रकम्**, उरभ्राणां वृन्दे **औरभ्रकम्**, अजानां वृन्दे **आजकम्**, (३) पञ्च गर्दभस्य । (४) अष्टौ क्रयविक्रयाभ्यां वर्तमानस्य ( **बनिया-व्यापारी** ) इत्यस्य । (५) द्वे वस्त्रपात्रादि दत्त्वा तन्मूल्यं गृह्णतः । ( **बेचने वाले के नाम हैं** ) (६) द्वे मूल्येन वस्त्रादि गृह्णतः । (७) द्वे वणिजां कर्मणि । (८) त्रीणि विक्रेयवस्तूनां मूल्यस्य । (९) त्रीणि क्रयविक्रयादिव्यवहारे यन्मूलधनं तस्य । (१०) मूलधनादधिकं फलं **लाभः** स्यात् । (११) चत्वारि परिवर्तनस्य । (१२) द्वे निक्षेपस्य । तत्र उपनिधिः पुंसि । (१३ ) तस्य अर्पणं प्रतिदानमित्युच्यते । (१४) क्रये प्रसारितं **क्रय्यमिति** । यत्क्रेतव्यमात्रं तत्क्रेयम् ।

१विक्रेयं पणितव्यं च पण्यं क्रय्यादयस्त्रिषु ।
क्लीबे सत्यापनं सत्यङ्कारः सत्याकृतिः स्त्रियाम् ॥८२॥
३विपणो विक्रयः सङ्ख्याः सङ्ख्येये ह्यादश त्रिषु ।
४विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः ॥८३॥
सङ्ख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः ।
पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम् ॥ ८४ ॥
५यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् ।
मानं तुलाङ्गुलिप्रस्थैर्गुञ्जाः पञ्चाद्य६माषकः ॥ ८५ ॥
ते ७षोडशाक्षः कर्षोऽस्त्री ८पलं कर्षचतुष्टयम् ।
९सुवर्णबिस्तौ हेम्नोऽक्षे १०कुरुबिस्तस्तु तत्पले ॥ ८६ ॥
११तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः ।

---

(१) त्रीणि विक्रेयस्य वस्तुनः त्रिषु । (२) त्रीणि सत्यङ्कारस्य । (३) द्वे विक्रयस्य । (४) एकाद्या अष्टादशान्ताः संख्याशब्दाः संख्येये वर्तमानास्त्रिषु । विंशत्याद्याः सर्वाः सदैकत्वे नित्यमेकवचनान्ताः संख्येये संख्यायां च वर्तन्ते । संख्यार्थे बहुवचने स्तः । तासु नवतिपर्यन्ताः स्त्रियाम् । पंक्तिर्दशसंख्या, तामारभ्य दशगुणम् उत्तरं यत्र । तादृशं संख्यानं क्रमात् शतम्, सहस्रम् इत्यादि स्यात् । (५) त्रीणि मानार्थकस्य । तन्मानं तुलाङ्गुलिप्रस्थैर्मियते । (६) पञ्च गुञ्जाः आद्यमाषकः । (७) ते षोडश माषा अक्षः, कर्षः, इति द्वयम् । (८) एकं कर्षचतुष्टयस्य । (९) द्वे हेम्नः-सुवर्णस्याक्षे । (१०) तस्य पले—कुरुबिस्त इति । (११) पलानां शतं तुला स्यात्, स्त्रि-

आचितो दश भाराः स्युः शाकटो भार आचितः ।८७।
१कार्षापणः कार्षिकः स्यात्कार्षिके ताम्रिके २ पणः ।
अस्त्रियामाढ३कद्रोणौ खारी वाहो निकुञ्चकः ॥ ८८ ॥
कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ।
पा४दस्तुरीयो भागः स्याद५शभागौ तु वण्टके ॥ ८९ ॥
६द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ।
हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ॥ ९० ॥
स्यात्कोश७श्च हिरण्यं च हेमरूप्ये कृताकृते ।
ताभ्यां यदन्यत्त८त्कुप्यं ९रूप्यं तद्द्वयमाहतम् ॥९१॥
१०गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः ।
शो११णरत्नं लोहितकः पद्मरागोऽथ मौक्ति१२कम् ॥९२॥

---

याम् । विंशतिस्तुलाः भारः स्यात् । दश भाराः आचित इति । यः शकटः सोऽप्याचित इति । (१) द्वे राजतकर्षपरिमितरूप्यकस्य । (२) ताम्रिके तस्मिन्कार्षिके पण इत्येकम् । (३) सप्त परिमाणार्थकाः प्रत्येकं भिन्नार्थकाः । (४) तुर्यो भागः पाद इति । (५) त्रयं भागमात्रस्य । (६) त्रयोदश धनस्य । (७) द्वे घटिताघटितयोर्हेमरूप्योः । (८) ताभ्यां यदन्यत्तत्कुप्यं स्यात् ( **सोना चांदी से भिन्न तांबा आदि धातु** ) इत्यस्य । (९) तद्द्वयमाहतं रूप्यकमित्येकम् ( **सिक्का बने हुए सोना चांदी तांबा गिल्टी आदि का नाम है** । (१०) चत्वारि मरकतस्य । (११) त्रीणि पद्मरागस्य । (१२) द्वे मुक्तायाः ।

मुक्ताथ विद्रुमः १पुंसि प्रवालं पुन्नपुंसकम् ।
२रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च ॥ ९३ ॥
३स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् ।
तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ॥ ९४ ॥
चामीकरं जातरूपं महारजतकाञ्चने ।
रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ॥ ९५ ॥
अलङ्कारसुवर्णं यच्छृ४ङ्गीकनकमित्यदः ।
५दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ॥ ९६ ॥
६रीतिः स्त्रियामारकूटो न स्त्रियामथ७ताम्रकम् ।
शुल्वं म्लेच्छमुखं द्व्यष्टवरिष्ठोदुम्बराणि च ॥ ९७ ॥
८लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी ।
अश्मसारोऽथ मण्डूरं९ सिंहाणमपि तन्मले ॥ ९८ ॥
सर्वं च तैजसं १०लोहं विकारस्त्वयसः ११कुशी ।

---

(१) द्वे प्रवालस्य। (२) द्वे अश्मजातौ मुक्तादिके अपि वर्तते। तत्र मणिः स्त्रीपुंसयोः। (३) एकोनविंशतिः सुवर्णस्य। तत्र अष्टापदं क्लीबपुंसोः। (४) यदलङ्काररूपं सुवर्णं तत् शृङ्गीकनकमिति। (५) पञ्च रजतस्य। (६) द्वे पित्तलस्य। (७) षट्कं ताम्रस्य। (८) सप्त लोहस्य। (९) द्वे लोहमलस्य। (१०) सर्वमपि तैजसं लोहमिति। (११) अयसो विकारः कुशी

१क्षारः काचोऽथ च२पलो रसः सूतश्च पारदे ॥९९॥
ग३वलं माहिषं शृङ्गमभ्र४कं गिरिजामले ।
५स्रोतोञ्जनं तु सौवीरं कापोताञ्जनयामुने ॥ १०० ॥
६तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके ।
कर्परी दार्विकाकाथोद्भवं ७तुत्थं रसाञ्जनम् ॥ १०१ ॥
रसगर्भं तार्क्ष्यशैलं गन्धा८श्मनि तु गन्धिकः ।
सौगन्धिकश्च चक्षु९ष्याकुलाल्यौ तु कुलत्थिका ॥१०२॥
१०रीतिपुष्पं पुष्पकेतु पुष्पकं कुसुमाञ्जनम् ।
११पिञ्जरं पीतनं तालमालं च हरितालके ॥ १०३ ॥
१२गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु ।
१३बोलगन्धरसप्राणपिण्डगोपरसाः समाः ॥ १०४ ॥
१४ डिण्डीरोऽब्धिकफः फेनः सिन्दू१५रं नागसम्भवम् ।
१६नागसीसकयोगेष्टवप्राणि १७त्रपु पिच्चटम् ॥ १०५ ॥

---

स्यादेकम् (१) द्वे काचस्य । (२) चत्वारि पारदस्य । (३) यन्माहिषं शृङ्गं तद्गवलमिति । (४) द्वे अभ्रकस्य । (५) चत्वारि सौवीराञ्जनस्य । (६) पञ्च तुत्थाञ्जनस्य । (७) चत्वारि रसाञ्जनस्य । तत्र तुत्थं दार्विकाकाथोद्भवम् । (८) त्रीणि गन्धकस्य । (९) त्रीणि तुत्थविशेषस्य । (१०) चत्वारि संतप्तपित्तलादुत्पन्नस्य । (११) पञ्च हरितालस्य । (१२) पञ्च शिलाजतुनः । (१३) पञ्च गन्धरसस्य । (१४) त्रीणि समुद्रफेनस्य (१५) द्वे सिन्दूरस्य । (१६) चत्वारि सीसस्य । (१७) चत्वारि वङ्गस्य ।

रङ्गवङ्गे अथ पिचु१स्तूलोऽथ कम२लोत्तरम् ।
स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि ॥ १०६ ॥
मेष३कम्बल ऊर्णायुः ४शशोर्णं शशलोमनि ।
५मधु क्षौद्रं माक्षिकादि मधू६च्छिष्टं तु सिक्थकम् ॥१०७॥
७मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका ।
नैपा८ली कुनटी गोला य९वक्षारो यवाग्रजः ॥१०८॥
पाक्योऽथ सर्जि१०काक्षारः कापोतः सुखवर्चकः ।
११सौवर्चलं स्याद्रुचकं त्वक्क्षी१२री वंशरोचना ॥१०९॥
१३शिग्रुजं श्वेतमरिचं १४मोरटं मूलमैक्षवम् ।
१५ग्रन्थिकं पिप्पलीमूलं चटकाशिर इत्यपि ॥११०॥
१६गोलोमी भूतकेशो ना १७पत्राङ्गं रक्तचन्दनम् ।
१८त्रिकटु त्र्यूषणं व्योषं त्रिफ१९ला तु फलत्रिकम् १११

इति वैश्यवर्गः ॥ ९ ॥

---

(१) द्वे कार्पासस्य। (२) चत्वारि कुसुम्भस्य। (३) द्वे कम्बलस्य। (४) द्वे शशलोम्नः। (५) त्रीणि मधुनः। (६) द्वे मधूच्छिष्टस्य। (७) चत्वारि मनःशिलायाः। (८) त्रीणि नेपालदेशोद्भवमनःशिलायाः। (९) त्रीणि यवक्षारस्य। (१०) त्रीणि क्षारभेदस्य। (११) द्वे क्षारभेदस्य। (१२) द्वे वेणुजन्यस्यौषधिविशेषस्य। (१३) द्वे सौभाञ्जनबीजस्य। (१४) इक्षुसम्बन्धिमूलकं मोरटं स्यात्। (१५) त्रीणि पिप्पलीमूलस्य। (१६) द्वे भूतकेशस्य। (१७) द्वे रक्तचन्दनसदृशस्य रक्तसारस्य। (१८) त्रीणि शुण्ठीपिप्पलीमरिचानां समाहारस्य। (१९) द्वे हरीतक्यामलकविभीतकफलानां समाहारस्य। इति वैश्यवर्गः ॥ ९ ॥

## अथ शूद्रवर्गः ॥ १० ॥

[1]शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः ।
आचण्डालात्तु [2]संकीर्णा अम्बष्ठकरणादयः ॥ १ ॥
शूद्राविशोस्तु कर[3]णोऽम्ब[4]ष्ठो वैश्याद्विजन्मनोः ।
शूद्राक्षत्रिययो[5]रुग्रो माग[6]धः क्षत्रियाविशोः ॥२॥
[7]माहिष्योऽर्याक्षत्रिययोः क्ष[8]त्ताऽर्याशूद्रयोः सुतः ।
ब्राह्मण्यां क्षत्रियात्सूत[9]स्तस्यां वैदे[10]हको विशः ॥३॥
रथका[11]रस्तु माहिष्यात्करण्यां यस्य सम्भवः ।
स्याच्चण्डा[12]लस्तु जनितो ब्राह्मण्यां वृषलेन यः ॥४॥
का[13]रुः शिल्पी संहतैस्तैर्द्वयोः श्रे[14]णिःसजातिभिः ।
कु[15]लकः स्यात्कुलश्रेष्ठी माला[16]कारस्तु मालिकः ॥५॥

---

(१) चत्वारि शूद्रस्य । (२) ब्राह्मण्यां शूद्राज्जातश्चण्डालस्तमभिव्याप्य वक्ष्यमाणा अम्बष्ठकरणादयः संकीर्णाः । (३) शूद्रावैश्ययोः सुतः करण इति । (४) एकं वैश्यायां ब्राह्मणाज्जातस्य । (५) एकं शूद्रायां क्षत्रियाज्जातस्य । (६) एकं क्षत्रियायां वैश्याज्जातस्य । (७) वैश्यायां क्षत्रियाज्जातस्य । (८) क्षत्रियायां शूद्राज्जातस्य । (९) एकं ब्राह्मण्यां क्षत्रियाज्जातस्य । (१०) ब्राह्मण्यां वैश्याज्जातस्य । (११) करण्यां माहिष्याज्जातस्य । (१२) ब्राह्मण्यां वृषलाज्जातस्य । (१३) द्वे चित्रकारादेः । (१४) तैः सजातिभिः संहतैः श्रेणिः स्त्रीपुंसयोः । (१५) द्वे शिल्पिकुलप्रधानस्य । (१६) द्वे मालाकारस्य (२ माली के) ।

कुम्भ१कारः कुलालः स्यात्पल२गण्डस्तु लेपकः ।
तन्तु३वायः कुविन्दः स्यात्तुन्न४वायस्तु सौचिकः ॥६॥
५रङ्गाजीवश्चित्रकरः शस्त्र६मार्जोऽसिधावकः ।
७पादूकृच्चर्मकारःस्याद्व्योऽकारो लोहकारकः ॥७॥
९नाडिन्धमः स्वर्णकारः कलादो रुक्मकारकः ।
स्याच्छा१०ङ्खिकः काम्बविकः शौल्बि११कस्ताम्रकुट्टकः॥८॥
१२तक्षा तु वर्धकिस्त्वष्टा रथकारस्तु काष्ठतट् ।
ग्रामा१३धीनो ग्रामतक्षः कौटत१४क्षोऽनधीनकः ॥९॥
१५क्षुरी मुण्डी दिवाकीर्तिनापितान्तावसायिनः ।
१६निर्णेजकः स्याद्रजकः१७शौण्डिको मण्डहारकः॥१०॥
१८जाबालः स्यादजाजीवो देवाजीवस्तु१९देवलः ।

---

(१) द्वे कुलालस्य । (२) द्वे गृहादौ लेपकारस्य । (३) द्वे पटानां निर्मातुः । (४) द्वे कन्चुक्यादेर्निर्मातुः । (५) द्वे चित्रकारस्य । (६) द्वे शस्त्रघर्षणोपजीविनः । (७) द्वे चर्मकारस्य **(चमार)** इत्यस्य । (८) द्वे लोहकारस्य । (९) चत्वारि स्वर्णकारस्य **(सुनार)**। (१०) द्वे शङ्खवलयादेः कर्तुः । (११) द्वे ताम्रकुट्टकस्य । (१२) पञ्च वर्धकेः। **(बढई)** इत्यस्य । (१३) द्वे ग्रामतक्षस्य **(गांव के बढई)**। (१४)द्वे कौटतक्षस्य। **(स्वतन्त्र बढ़ई)** (१५) पञ्च नापितस्य **(हजाम-नाऊ)**। (१६) द्वे वस्त्राणां धावकस्य । **(धोबी)** (१७) द्वे सुराजीविनः । **(कलवार)** (१८) द्वे अजापालस्य । (१९) द्वे देवसेवोपजीविनः । **(पण्डा**

१स्यान्माया शाम्बरी२मायाकारस्तु प्रतिहारकः ॥११॥
३शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः ।
भरता इत्यपि नटाश्चारणास्तु४ कुशीलवाः॥ १२ ॥
५मार्दङ्गिका मौरजिकाः ६पाणिवादास्तु पाणिघाः ।
७वेणुध्माः स्युर्वैणविका ८वीणावादास्तु वैणिकाः॥१३॥
९जीवान्तकः शाकुनिको द्वौ १०वागुरिकजालिकौ ।
११वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ॥१४॥
१२भृतको भृतिभुक्कर्मकरो वैतनिकोऽपि सः ।
१३वार्तावहो वैवधिको१४भारवाहस्तु भारिकः॥१५॥
१५विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः ।
निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः ॥१६॥
१६भृत्ये दासेरदासेयदासगोप्यकचेटकाः ।
नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः ॥ १७ ॥

---

पुजारि ) (१) द्वे इन्द्रजालस्य । (२) द्वे मायाविनः, **(जादुगर)** इत्यस्य । (३) षट् नटानाम् । (४) द्वे कथकानाम् । (५) द्वे मृदङ्गवादनकुशलानाम् । (६) द्वे पाणिवादानाम् । (७) द्वे वीणावादिनाम् । (८) द्वे वीणावादनं शिल्पमेषाम् । (९ द्वे पक्षिणां हन्तुः । (१०) द्वे जालेन मृगान्बध्नतः। (११) त्रीणि मांसविक्रयजीविनः । (१२) चत्वारि वेतनोपजीविनः । (१३) द्वे वार्ताया वाहकस्य । (१४) द्वे भारिकस्य **(बोझ ढोने वाले के)**। (१५) दश नीचस्य । (१६) एकादश

१पराचितपरिस्कन्दपरजातपरैधिताः ।
२मन्दस्तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः॥१८॥
३दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च ।
४चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः ॥ १९ ॥
निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः ।
भेदाः ५किरातशबरपुलिन्दा म्लेच्छजातयः ॥ २० ॥
६व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः ।
७कौलेयकःसारमेयः कुक्कुरो मृगदंशकः ॥ २१ ॥
शुनको भषकः श्वा ८स्यादलर्कस्तु स योगितः ।
श्वा ९विश्वकद्रुर्मृगयाकुशलः १०सरमा शुनी ॥ २२ ॥
११विट्चरः सूकरो ग्राम्यो १२वर्करस्तरुणः पशुः ।
१३आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् ॥२३॥
दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा१४ कुरङ्गकः ।

---

दासस्य। (१) चत्वारि परेण संवर्धितस्य। (२) षट्कम् अलसस्य (आलसी)। (३) षट् दक्षस्य (चालाक-चतुर)। (४) दश चाण्डालस्य। (चाण्डाल के) (५) त्रयं चाण्डालभेदस्य। एते म्लेच्छजातयः। (६) चत्वारि व्याधस्य। (व्याधा के) (७) सप्त शुनकस्य। (कुत्तेके)। (८) योगितः श्वा अलर्कः स्यात्। (९) एकं मृगयाकुशलस्य शुनः। (१०) द्वे शुन्याः। (११) एकं ग्राम्यसूकरस्य। (१२) एकं तरुणपशोः (१३) चत्वारि पापर्द्धेः। (१४) लुब्धयोगाद्दक्षिणारुः

१चौरैकागारिकस्तेनदस्युतस्करमोषकाः ॥ २४ ॥
प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः ।
२चौरिका स्तैन्यचौर्ये च स्तेयं ३लोप्त्रं तु तद्धने ॥२५॥
४वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम् ।
५उन्माथः कूटयन्त्रं स्याद्वागुरा ६मृगबन्धनी ॥ २६ ॥
७शुल्बं वराटकं स्त्री तु रज्जुस्त्रिषु वटी गुणः ।
८उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः ॥ २७ ॥
पुंसि वेमा९ वायदण्डः १०सूत्राणि नरि तन्तवः ।
११वाणिर्व्यूतिः स्त्रियौ तुल्ये १२पुस्तं लेप्यादिकर्मणि।२८।
१३पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता ।
जतुत्रपुविकारे तु १४जातुषं १५त्रापुषं त्रिषु ॥ २९ ॥

---

कुरङ्गको दक्षिणोर्मा स्यात् । (१) दश चोरस्य । (२) चत्वारि स्तेयस्य । (३) एकं चौर्यकृतधनस्य । (४) एकं मृगपक्षिबन्धनोपकरणस्य । (५) द्वे मृगपक्षिबन्धनयन्त्रस्य । (६) द्वे जालीकृतरज्जुविशेषस्य । (७) पञ्च रज्जोः । तत्र रज्जुः स्त्रियाम् । वटी त्रिषु । (८) द्वे प्रहेः सलिलोद्वाहनस्य । (पुरवट मोट) । (९) द्वे वस्त्रव्यूतिदण्डस्य । (१०) द्वे सूत्राणाम्, तत्र तन्तुः पुंसि । (सूत) (११) द्वे तन्तुवानस्य । (१२) लेप्यादिकर्मणि पुस्तमित्येकम् । (१३) एकं वस्त्रदन्तादिभिः कृतायाः पुत्रिकायाः । तन्तोः-गजदन्तः, आदिना चर्मकाष्ठमृच्छिलेत्यादिग्रहणम् । (१४) एकं जतुविकारस्य । (१५) एकं

१पिटकः पेटकः पेटा मञ्जूषाथ २विहङ्गिका ।
भारयष्टिस्तदालम्बि३शिक्यं काचोऽथ४पादुका ॥३०॥
पादूरुपानत्स्त्री सैवानुपदीना५पदायता ।
६नध्री वध्री वरत्रा स्यादश्वादेस्ताडनी७कशा ॥ ३१ ॥
८चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी ।
९नाराची स्यादेषणिका शाणस्तु१०निकषः कषः ॥३२॥
११व्रश्चनः पत्रपरशुरीषिका१२तूलिका समे ।
तैजसावर्तनी १३मूषा १४भस्त्रा चर्मप्रसेविका ॥३३॥
१५आस्फोटनी वेधनिका१६कृपाणी कर्तरी समे ।
१७वृक्षादनी वृक्षभेदी १८टङ्कः पाषाणदारणः ॥३४॥

---

त्रपुविकारस्य । (१) चत्वारि वस्त्रालङ्कारादिस्थापनमञ्जूषायाः । (२) शिक्याधारलगुडस्य । (३) द्वे भारयष्ट्यामालम्बमानस्य । (४) त्रीणि पादत्राणस्य । (५) सैवोपानत् पदायता 'अनुपदीना' इति स्यादेकम् । (६) त्रीणि चर्म्ममय्या रज्वाः । (७) एकमश्वादेस्ताडन्याः । (८) त्रीणि चाण्डालिकायाः । (९) द्वे स्वर्णकाराणां नाराचाकृतिलोहशलाकायाः । (१०) त्रीणि स्वर्णघर्षणशिलायाः । (११) द्वे स्वर्णादिच्छेदनार्थस्य परशोः । (१२) द्वे शलाकाभेदस्य । (१३) तैजसावर्तनी-'मूषा, इत्येकम् । (१४) अग्निज्वलनार्थस्य चर्मप्रसेवकस्य । (१५) द्वे मण्यादेर्वेधोपयुक्तस्य शस्त्रभेदस्य । (१६) द्वे कर्तर्याः । (१७) द्वे वृक्षभेदनार्थस्य शस्त्रभेदस्य । (१८) द्वे

१क्रकचोऽस्त्री करपत्रमारा२ चर्मप्रभेदिका ।
३सूर्मी स्थूणायःप्रतिमा४शिल्पं कर्म कलादिकम् ॥३५॥
५प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ।
प्रतिकृतिरर्चापुंसि प्रतिनिधिरुपमोपमानं ६स्यात् ॥३६॥
वाच्यलिङ्गाः७समस्तुल्यः सदृक्षः सदृशः सदृक् ।
साधारणः समानश्च स्युरुत्तरपदे त्वमी ॥ ३७ ॥
निभसङ्काशनीकाशप्रतीकाशोपमादयः ।
८कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् ॥३८॥
भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ।
९सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा ॥३९॥
गन्धोत्तमाप्रसन्नेराकादम्बर्यः परिस्रुता ।
मदिरा कश्यमद्ये चाप्यवदंशस्तु१० भक्षणम् ॥४०॥
११शुण्डापानं मदस्थानं १२मधुवारा मधुक्रमाः ।

---

पाषाणदारणार्थस्य घनभेदस्य। (१) द्वे काष्ठादिविदारणार्थस्य शस्त्रस्य। (२) द्वे चर्मखण्डनार्थस्य शस्त्रभेदस्य। (३) त्रीणि लोहप्रतिमायाः। (४) कलागीतनृत्यादिकं यत्कर्म तत् 'शिल्पम्' इत्येकम्। (५) अष्टौ प्रतिमायाः। तत्र प्रतिनिधिः पुंसि। (६) द्वे उपमितकरणस्य। (७) सप्त समानस्य। अमी उत्तरपदे स्थिताः निभसङ्काशादयः पञ्च सदृशपर्यायाः वाच्यलिङ्गाः स्युः। (८) एकादश वेतनस्य। (९) त्रयोदश मद्यस्य। (१०) तत्र यद्भक्षणं सोऽवदंश इति। (११) द्वे मद्यगृहस्य। (१२) द्वे मधुपानपरिपाट्याः।

१मध्वासवो माधवको मधु माध्वीकमद्वयोः ॥४१॥
२मैरेयमासवः सीधुर्मेदको३ जगलः समौ ।
४सन्धानं स्यादभिषवः५किण्वं पुंसि तु नग्नहूः ॥४२॥
६कारोत्तरः सुरामण्ड ७आपानं पानगोष्ठिका ।
८चषकोऽस्त्री पानपात्रं ९सरकोऽप्यनुतर्षणम् ॥४३॥
१०धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः ।
स्युर्लग्नकाः११प्रतिभुवःसभिका१२द्यूतकारकाः ॥४४॥
१३ द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि ।
१४पणोऽक्षेषु ग्लहोऽक्षास्तु १५देवनाः पाशकाश्च ते॥४५॥
१६ परिणायस्तु शारीणां समन्तान्नयनेऽस्त्रियाम् ।
१७अष्टापदं शारिफलं प्राणिद्यूतं १८समाह्वयः ॥ ४६ ॥

---

(१) चत्वारि मधुकपुष्पोद्भवस्य मद्यस्य। तत्र माध्वीकं मधु च क्लीबे एव। (२) त्रीणि इक्षुशाकादिजन्यस्य मद्यस्य। (३) द्वे सुराकल्कस्य। (४) द्वे मद्यसंधानस्य। (५) द्वे तण्डुलादिद्रव्यकृतसुराबीजस्य। (६) सुरायाः मण्डः कारोत्तर इति। (७) द्वे पानार्थायाः सभायाः। (८) द्वे मद्यपात्रस्य। तत्र चषकः पुंनपुंसकयोः। (९) द्वे मद्यपानस्य (१०) पञ्च द्यूतकृतः। (११) द्वे ऋणादौ प्रतिनिधिभूतस्य। (१२) द्वे ये द्यूतं कारयन्ति तेषाम्। (१३) चत्वारि द्यूतस्य। (१४) द्वे पणस्य। (१५) त्रीणि पाशकस्य। (१६) शारीणामितस्ततो नयने परिणाय इत्येकम्। (१७) द्वे शारीणामाधारस्य। (१८) प्राणिद्यूतम्—'स'

१उक्ता भूरिप्रयोगत्वादेकस्मिन्येऽत्र यौगिकाः ।
ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गान्तरेऽपि ते ॥ ४७ ॥
इति शूद्रवर्गः ॥ १० ॥

काण्डसमाप्तिः ।

इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।
द्वितीयकाण्डो भूम्यादिः साङ्ग एव समर्थितः ॥ ४८ ॥
इत्यमरसिंहविरचिते अमरकोषे द्वितीयं काण्डम् ।

## अथ तृतीयं काण्डम् ।

वर्गभेदान् कथयति ।

विशेष्यनिघ्नैः सङ्कीर्णैर्नानार्थैरव्ययैरपि ।
लिङ्गादिसंग्रहैर्वर्गाः२ सामान्ये वर्गसंश्रयाः ॥ १ ॥

परिभाषा—

३स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः ।

माह्वय' इति । (१) अत्र यौगिकाः भूरिप्रयोगत्वादेकस्मिन्नेव लिङ्गे उक्ता अन्यतस्ताद्धर्म्याल्लिङ्गान्तरेऽप्यूहनीयाः । अपिशब्दबलात् करणकुलालादयः पुंसि स्त्रियां च वर्तन्त इति बोध्यम् । इति शूद्रवर्गः ।

(२) अस्मिन्काण्डे विशेष्यनिघ्नैर्विशेष्यं स्त्रीदारादिपूर्वोक्तं तदधीनलिङ्गवचनैः, तथा सङ्कीर्णैः परस्परविजातीयार्थैः, एवं नानार्थैरनेकार्थेषु वर्तमानैः, तथा अव्ययैराङ्गादिभिर्लिङ्गसंग्रहैरुपलक्षितास्तत्तन्नामका वर्गा वक्ष्यन्ते इत्यर्थः । (३) स्त्रीदाराद्यैः पदैर्यद्विशेष्यं, यथा प्रस्तुतं

गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः ॥ २ ॥

## अथ विशेष्यनिघ्नवर्गः ॥ १ ॥

१सुकृती पुण्यवान्धन्यो २महेच्छस्तु महाशयः ।
३हृदयालुः सुहृदयो ४महोत्साहो महोद्यमः ॥ ३ ॥
५प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः ।
वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ॥ ४ ॥
६पूज्यः प्रतीक्ष्यः ७सांशयिकः संशयापन्नमानसः ।
८दक्षिणीयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि ॥ ५ ॥
९स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे ।
१०जैवातृकः ११स्यादायुष्मानन्तर्वाणिस्तु शास्त्रवित् ६
१२परीक्षकःकारणिको १३वरदस्तु समर्धकः ।
१४हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः ॥ ७ ॥
१५ दुर्मना विमना अन्तर्मनाः १६स्यादुत्क उन्मनाः ।

---

तस्य विशेषस्य भेदका-व्यावर्तका गुणद्रव्यक्रियाविशिष्टाः शब्दास्तथा स्युः । (१) त्रीणि भाग्यसम्पन्नस्य । (२) द्वे उदारचित्तस्य । (३) द्वे प्रशस्तचित्तस्य । (४) द्वे महोद्यमस्य । (५) दश प्रवीणस्य । (६) द्वे पूज्यस्य । (७) द्वे संशयापन्नमानसस्य । (८) त्रीणि दक्षिणार्हस्य । (९) चत्वारि दानशूरस्य । (१०) द्वे आयुष्मतः । (११) द्वे शास्त्रज्ञस्य । (१२) द्वे प्रमाणैरर्थनिश्चायकस्य । (१३) द्वे वराणां दातुः । (१४) चत्वारि हृष्टचेतसः । (१५) त्रीणि व्याकुलचेतसः । (१६) द्वे

१दक्षिणे सरलोदारौ सुकलो२दातृभोक्तरि ॥ ८ ॥
३तत्परे प्रसितासक्ताविष्टार्थोद्युक्त४ उत्सुकः।
५प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः ॥ ९ ॥
गुणैः प्रतीते तु ६कृतलक्षणाहतलक्षणौ।
७इभ्य आढ्यो धनी ८स्वामी त्वीश्वरःपतिरीशिता १०
अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः।
९अधिकर्द्धिः समृद्धः १०स्यात्कुटुम्बव्यापृतस्तु यः ॥११॥
स्यादभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयम्।
वराङ्गरूपोपेतो यः ११सिंहसंहननो हि सः ॥ १२ ॥
१२निर्वार्यः कार्यकर्ता यः सम्पन्नः सत्त्वसम्पदा।
१३अवाचि मूकोऽथ१४मनोजवसः पितृसन्निभः ॥१३॥
सत्कृत्यालंकृतां कन्यां यो ददाति स१५कूकुदः।
१६लक्ष्मीवाँल्लक्ष्मणःश्रीलःश्रीमान्१७स्निग्धस्तु वत्सलः॥

---

उत्कण्ठितस्य। (१) त्रीणि सरलस्य। (२) दातृभोक्तरि 'सुकल' इत्येकम्। (३) त्रीणि तत्परस्य। (४) द्वे अभिमतार्थे सोद्योगस्य। (५) षट्कं ख्यातस्य। (६) द्वे शौर्यादिभिः ख्यातस्य। (७) त्रीणि धनिनः। (८) दश प्रभोः। (९) द्वे सुसंपन्नस्य। (१०) त्रीणि कुटुम्बपोषणादि व्यापारयुक्तस्य। (११) वरैरङ्गरूपैरुपेतस्यैकम्। (१२) एकं यः सत्वसम्पदा सम्पन्नः सन् कार्यं करोति तस्य। (१३) द्वे मूकस्य। (१४) द्वे पितृतुल्यस्य। (१५) एकम् आदरपूर्वकं यो कन्यां ददाति तस्य। (१६) चत्वारि लक्ष्मीवतः। (१७) द्वे स्नेहयुक्तस्य।

१स्याद्दयालुः कारुणिकः कृपालुः सूरतः समाः ।
२स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः ॥ १५ ॥
३परतन्त्रः पराधीनः परवान्नाथवानपि ।
४अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ ॥१६॥
५खलपूः स्याद्बहुकरो ६दीर्घसूत्रश्चिरक्रियः ।
७जाल्मोऽसमीक्ष्यकारी ८स्यात्कुण्ठो मन्दः क्रियासु यः १७
९कर्मक्षमोऽलङ्कर्मीणः १०क्रियावान्कर्मसूद्यतः ।
स ११कार्मः कर्मशीलो यः १२कर्मशूरस्तु कर्मठः ॥१८॥
१३भरण्यभुक्कर्मकरः १४कर्मकारस्तु तत्क्रियः ।
१५अपस्नातो मृतस्नात १६आमिषाशी तु शौष्कलः ॥१९॥
१७बुभुक्षितः स्यात्क्षुधितो जिघत्सुरशनायितः ।
१८परान्नः परपिण्डादो १९भक्षको घस्मरोऽद्मरः ॥२०॥
२०आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते ।

---

( १ ) चत्वारि दयाशीलस्य । ( २ ) पञ्च स्वच्छन्दस्य । (३) चत्वारि पराधीनस्य । (४) पञ्च अधीनस्य । ( ५ ) द्वे सम्मार्जनादिकारिणः । ( ६ ) द्वे आलस्य युक्तस्य । ( ७ ) द्वे गुणदोषविमृश्यकारिणः । (८) एकं क्रियासु मन्दस्य । (९) द्वे कर्मणि शक्तस्य । ( १० ) एकं कर्मसु उद्युक्तस्य । ( ११ ) द्वे नित्यं कर्मण्येव प्रवृत्तस्य । ( १२ ) द्वे कर्मशूरस्य । (१३) द्वे वेतनं गृहीत्वा कर्म करोति तस्य । ( १४ ) एकं वेतनं विनापि क्रियावतः । ( १५ ) द्वे मृतमुद्दिश्य स्नातस्य । (१६) द्वे मत्स्यमांसभक्षकस्य । (१७) चत्वारि बुभुक्षितस्य । (१८) द्वे परान्नोपजीविनः । (१९) त्रीणि भक्षणशीलस्य । (२०) द्वे विजिगी-

उभौ १त्वात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके ॥ २१ ॥
२सर्वान्नीनस्तु सर्वान्नभोजी ३गृध्नुस्तु गर्धनः ।
४लुब्धोऽभिलाषुकस्तृष्णक्समौ ५लोलुपलोलुभौ ॥२२॥
६सोन्मादस्तून्मदिष्णुः ७स्यादविनीतः समुद्धतः ।
८ मत्ते शौण्डोत्कटक्षीबाः ९कामुके कमिताऽनुकः ॥२३॥
कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः ।
१०विधेयो विनयग्राही वचनेस्थित आश्रवः ॥ २४ ॥
११वश्यः प्रणेयो१२ निभृतविनीतप्रश्रिताः समाः ।
१३धृष्टे धृष्णग्वियातश्च १४प्रगल्भः प्रतिभान्विते॥२५॥
१५स्यादधृष्टे तु शालीनो१६विलक्षो विस्मयान्विते ।
१७अधीरे कातरस्त्रस्ते१८भीरुभीरुकभीलुकाः ॥ २६ ॥
१९आशंसुराशंसितरि २०गृहयालुर्ग्रहीतरि ।

---

षाविवर्जितस्य । (१) द्वे यः स्वोदरं बिभर्ति तस्य । (२) द्वे सर्वान्नभोजिनः । (३) द्वे आकाङ्क्षाशीलस्य । (४) त्रीणि अभिलाषशीलस्य । (५) द्वे अतितृष्णाशीलस्य । (६) द्वे उन्मादशीलस्य । (७) द्वे दुर्विनीतस्य । (८) चत्वारि मत्तस्य । (९) नव कामुकस्य । (१०) चत्वारि वचनग्राहिणः । (११) द्वे वशंगतस्य । (१२) त्रीणि विनीतस्य । (१३) त्रीणि अविनीतस्य । (१४) द्वे सप्रतिभस्य । (१५) द्वे सलज्जस्य । (१६) द्वे प्राप्ताश्चर्यस्य । (१७) द्वे भयक्षुत्पिपासादिव्याकुलस्य । (१८) चत्वारि भयशीलस्य । (१९) द्वे वाञ्छाशीलस्य । (२०) द्वे

१श्रद्धालुः श्रद्धया युक्ते २ पतयालुस्तु पातुके ॥ २७ ॥
३लज्जाशीलेऽपत्रपिष्णु४र्वन्दारुरभिवादके ।
५शरारुर्घातुको हिंस्रः ६स्याद्वर्धिष्णुस्तु वर्धनः ॥ २८ ॥
७उत्पतिष्णुस्तूत्पतिताऽलङ्करिष्णुस्तु ८मण्डनः ।
९भूष्णुर्भविष्णुर्भविता १०वर्तिष्णुर्वर्तनः समौ ॥ २९ ॥
११निराकरिष्णुः क्षिप्नुः स्यात्सान्द्रस्निग्धस्तु१२मेदुरः ।
१३ज्ञाता तु विदुरो विन्दुर्विकासी१४ तु विकस्वरः ॥ ३०
१५विसृत्वरो विसृमरः प्रसारी च विसारिणि ।
१६सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी॥ ३१॥
१७क्रोधनोऽमर्षणः कोपी १८चण्डस्त्वत्यन्तकोपनः ।
१९जागरूको जागरिता घूर्णितः२० प्रचलायितः ॥ ३२ ॥
२१स्वप्नक्शयालुर्निद्रालुर्निद्राणशयितौ२२ समौ ।

---

ग्रहणशीलस्य । (१) एकं श्रद्धया युक्तस्य । (२) द्वे पतनशीलस्य । (३) द्वे लोकलज्जायुक्तस्य । (४) द्वे वन्दनशीलस्य । (५) त्रीणि हिंसाशीलस्य । (६) द्वे वर्धनशीलस्य । (७) द्वे उत्पतनशीलस्य । (८) द्वे अलङ्करणशीलस्य । (९) त्रीणि भवनशीलस्य । (१०) द्वे वर्तनशीलस्य । (११) द्वे निराकर्तुः । (१२) एकं सान्द्रस्निग्धस्य । (१३) त्रीणि ज्ञातुः । (१४) द्वे विकासशीलस्य । (१५) चत्वारि प्रसरणशीलस्य । (१६) षट् क्षमाशीलस्य । (१७)त्रीणि कोपशीलस्य । (१८) द्वे अतिक्रोधशीलस्य । (१९) द्वे जागरणशीलस्य । (२०) द्वे निद्राघूर्णितस्य (२१) त्रीणिनिद्राशीलस्य । (२२) द्वे सुप्तस्य ।

१पराङ्मुखः पराचीनः २स्यादवाङप्यधोमुखः ॥३३॥
३देवानञ्चति देवद्र्यङ् विष्वद्र्यङ् विष्वगञ्चति ।
यः सहाञ्चति सध्र्यङ् स स तिर्यङ्यस्तिरोऽञ्चति ॥३४॥
४वदो वदावदो वक्ता ५वागीशो वाक्पतिः समौ ।
६वाचोयुक्तिपटुर्वाग्मी ७वावदूकोऽतिवक्तरि ॥ ३५ ॥
८स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् ।
९दुर्मुखे मुखराबद्धमुखौ १०शक्लः प्रियंवदे ॥ ३६ ॥
११लोहलः स्यादस्फुटवाग्गर्ह्यवादी१२ तु कद्वदः ।
समौ १३कुवादकुचरौ १४स्यादसौम्यस्वरोऽस्वरः ॥३७॥
१५रवणः शब्दनो १६नान्दीवादी नान्दीकरः समौ ।
१७जडोऽज्ञ १८एडमूकस्तु वक्तुं श्रोतुमशिक्षिते ॥३८॥

---

(१) द्वे विमुखस्य । (२) द्वे अवाङ् मुखस्य । (३) यो देवान॰ञ्चति स देवद्र्यङ्, यो विष्वगञ्चति स विष्वद्र्यङ्, यः सहाञ्चति स सध्र्यङ्, यस्तिरोऽञ्चति स तिर्यङ् । (४) त्रीणि वक्तुः । (५) द्वे अनवद्योद्दामवादिनः । (६) द्वे नैयायिकस्य । (७) द्वे बहुभाषिणः । (८) चत्वारि अवाच्यवाचालस्य । (९) त्रीणि अनर्गलमुखस्य । (१०) द्वे प्रियवादिनः । (११) द्वे अस्फुटवादिनः । (१२) द्वे कुत्सितभाषिणः । (१३) द्वे दोषकथनशीलस्य । (१४) द्वे काकादिस्वरवदपस्वरयुक्तस्य । (१५) द्वे शब्दशीलस्य । (१६) द्वे स्तुतिविशेषवादिनः । (१७) द्वे अत्यन्तमूढस्य । (१८) यो वक्तुं

१तूष्णींशीलस्तु तूष्णीको २नग्नोऽवासा दिगम्बरे ।
३निष्कासितोऽवकृष्टः स्यादपध्वस्तस्तु४ धिक्कृतः ॥३९॥
आत्तगर्वोऽभिभूतः ५स्याद्दापितः साधितः समौ ।
प्रत्यादिष्टो६ निरस्तःस्यात्प्रत्याख्यातो निराकृतः॥ ४० ॥
निकृतः७स्याद्विप्रकृतो विप्रलब्धस्तु ८वञ्चितः ।
मनोहतः ९प्रतिहतः प्रतिबद्धो हतश्च सः ॥ ४१ ॥
१०अधिक्षिप्तः प्रतिक्षिप्तो ११बद्धे कीलितसंयतौ ।
आपन्न१२ आपत्प्राप्तः स्यात्कान्दिशीको१३भयद्रुतः॥४२॥
१४आक्षारितः क्षारितोऽभिशस्ते १५सङ्कसुकोऽस्थिरे ।
१६व्यसनार्तोपरक्तौ द्वौ १७विहस्तव्याकुलौ समौ॥४३॥
विक्लवो१८विह्वलः स्यात्तु १९विवशोऽरिष्टदुष्टधीः ।
२०कश्यः कशार्हे सन्नद्धे त्वाततायी २१ वधोद्यते ॥४४॥

---

श्रोतुं च शिक्षितो न भवति स एडमूकः । ( १ ) द्वे तूष्णीम्भावयुक्तस्य । (२) त्रीणि नग्नस्य । (३) द्वे निर्गमितस्य । (४) द्वे निर्भर्त्सितस्य । ( ५ ) द्वे भग्नदर्पस्य । ( ६ ) द्वे दापितस्य । ( ७ ) चत्वारि निराकृतस्य । ( ८ ) द्वे विवर्णीकृतस्य । ( ९ ) द्वे वञ्चनं प्राप्तस्य । (१०)चत्वारि मनसि हतस्य। (११) द्वे कृताक्षेपस्य। (१२) त्रीणि रज्ज्वादिनानिबद्धस्य । (१२) द्वे आपदं गतस्य । (१३) द्वे भयात्पलायितस्य । (१४) त्रीणि लोकापवादेन दूषितस्य । (१५) द्वे चलप्रकृतेः । (१६) द्वे व्यसनपीडितस्य । (१७) द्वे शोकादिभिरितिकर्तव्यतामूढस्य । ( १८ ) द्वे शोकादिना गात्रभङ्गं प्राप्तस्य । ( १९ ) द्वे आसन्नमरणदूषितबुद्धेः । ( २० ) द्वे कशाघातमर्हतः । ( २१ ) एकं वधोद्यते

द्वेष्ये १त्वक्षिगतो २वध्यः शीर्षच्छेद्य इमौ समौ ।
३विष्यो विषेण यो वध्यो ४मुसल्यो मुसलेन यः ॥४५॥
५शिश्विदानोऽकृष्णकर्मा ६चपलश्चिकुरः समौ ।
७दोषैकदृक्पुरोभागी ८निकृतस्त्वनृजुः शठः ॥ ४६ ॥
९कर्णेजपः सूचकः स्यात्पिशुनो १० दुर्जनः खलः ।
११नृशंसो घातुकः क्रूरः पापो १२धूर्तस्तु वञ्चकः ॥४७॥
१३ अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः ।
१४कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः ॥ ४८ ॥
१५निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः ।
१६वनीयको याचनको मार्गणो याचकार्थिनौ ॥४९॥
१७अहंकारवानहंयुः १८शुभंयुस्तु शुभान्वितः ।
दिव्योपपादुका१९ देवा नृगवाद्या जरायुजाः ॥ ५० ॥

---

सन्नद्धस्य । ( १ ) द्वे द्वेषार्हस्य । ( २ ) द्वे वधार्हस्य । ( ३ ) यो विषेण वध्यः स विष्य इति । (४) यो मुसलेन वध्यः तस्यैकम् । (५) द्वे पुण्यकर्मणः । (६) द्वे चपलस्य । (७) द्वे दोषमात्रं पश्यतः । (८) त्रीणि यस्यान्तःकरणं वक्रं तस्य । ( ९ ) द्वे कर्णे परापवादं वदतः । (१०) त्रीणि परस्परभेदनशीलस्य । (११) चत्वारि परद्रोहशीलस्य । (१२) द्वे प्रतारणशीलस्य । (१३) षट्कं मूर्खस्य । (१४) पञ्च कृपणस्य ( **कञ्जूष के ५ नाम** )। (१५) पञ्च दरिद्रस्य । (१६) पञ्च याचकस्य । (१७) द्वे अहङ्कारिणः । (१८) द्वे शुभयुक्तस्य । (१९) देवाः—'**दिव्योपपादुका**' उच्यन्ते, नृगवाद्यो '**जरायुजाः स्युः**'।

स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः ।
उद्भिदस्तरुगुल्माद्या १उद्भिदुद्भिज्जमुद्भिदम् ॥ ५१ ॥
२सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् ।
कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ॥ ५२ ॥
तदासेचनकं ३तृप्तेर्नास्त्यन्तो यस्य दर्शनात् ।
४अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ॥ ५३ ॥
५निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः ।
कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः ॥ ५४ ॥
६मलीमसं तु मलिनं कच्चरं मलदूषितम् ।
७पूतं पवित्रं मेध्यं च ८वीध्रं तु विमलार्थकम् ॥ ५५ ॥
निर्णिक्तं ९ शोधितं मृष्टं निःशोध्यमनवस्करम् ।
१०असारं फल्गु शून्यं११ तु वशिकं तुच्छरिक्तके ॥५६॥
क्लीबे १२प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः ।
मुख्यवर्यवरेण्याश्च प्रवर्होऽनवरार्ध्यवत् ॥ ५७ ॥

---

कृमिदंशाद्याः स्वेदजाः स्युः, पक्ष्यादयोऽण्डजाः इति । तरुगुल्माद्या उद्भिदः। (१) त्रीणि उद्भिदः। (२) द्वादश सुन्दरस्य। (३) यस्य दर्शनात् दृङ्मनसोस्तृप्तेरन्तो नास्ति तद्-आसेचनकम् एकम्। (४) षट्कम् अभीष्टस्य। (५) त्रयोदश अधमस्य। (६) चत्वारि अनुज्ज्वलस्य। (७) त्रीणि पवित्रस्य। (८) वीध्रमिति विमलार्थकस्यैकम्। (९) पञ्च अपनीतमलस्य। (१०) द्वे निर्बलस्य। (११) चत्वारि रिक्तस्य। (१२) सप्तदश प्रधानस्य।

पराध्यार्ग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम्।
१श्रेयाञ्श्रेष्ठः पुष्कलः स्यात्सत्तमश्चातिशोभने ॥ ५८ ॥
स्युरुत्तरपदे२ व्याघ्रपुङ्गवर्षभकुञ्जराः।
सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥ ५९ ॥
३अप्राग्र्यं द्वयहीने द्वे अप्रधानोपसर्जने।
विशङ्कटं४ पृथु बृहद्विशालं पृथुलं महत् ॥ ६० ॥
वड्रोरुविपुलं ५पीनपीव्नी तु स्थूलपीवरे।
६स्तोकाल्पक्षुल्लकाः ७सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु ॥६१॥
स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः।
अत्यल्पेऽल्पि८ष्ठमल्पीयः कनीयोऽणीय इत्यपि ॥६२॥
९प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु।
पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च ॥ ६३ ॥
परः१० शताद्यास्ते येषां परा संख्या शतादिकात्।

---

(१) पञ्च अत्यन्तशोभनस्य। (२) व्याघ्रादय एते शब्दा उत्तरपदे पुंसि श्रेष्ठार्थगोचराः। आद्यशब्दात्सोमादयः। (३) त्रीणि अप्रधानस्य। तत्र अप्रधानोपसर्जने द्वे द्वयहीने–स्त्रीपुंसाभ्यां हीने। (४) नव विस्तीर्णस्य। (५) चत्वारि स्थूलस्य। (६) त्रीणि अल्पस्य। (७) एकादश सूक्ष्मस्य। तत्र मात्रात्रुटी स्त्रियौ। लवादिः पुंसि। (८) चत्वारि अत्यल्पस्य। (९) द्वादश बहुलस्य। (१०) येषां संख्या शतात्सहस्राच्च परा ते क्रमेण **परःशताः**, **परःसहस्राः** स्युः।

१गणनीये तु गणेयं२सङ्ख्याते गणितमथ समं३सर्वम् ६४
विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम् ।
समग्रं सकलं पूर्णमखण्डं स्यादनूनके ॥ ६५ ॥
४घने निरन्तरं सान्द्रं पेलवं ५विरलं तनु ।
६समीपे निकटासन्नसन्निकृष्टसनीडवत् ॥ ६६ ॥
सदेशाभ्याशसविधसमर्यादसदेशवत् ।
उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् ॥६७॥
७संसक्ते त्वव्यवहितमपदान्तरमित्यपि ।
८ नेदिष्ठमन्तिकतमं स्याद्दूरं९ विप्रकृष्टकम् ॥ ६८ ॥
१०दवीयश्च दविष्ठं च सुदूरं ११दीर्घमायतम् ।
१२वतुलं निस्तलं वृत्तं १३बन्धुरं तून्नतानतम् ॥६९॥
१४ उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ १५वामने ।
न्यङ्नीचखर्वह्रस्वाः स्युर१६वाग्रेऽवनतानते ॥ ७० ॥

---

(१) द्वे गणयितुं शक्यस्य । (२) द्वे संख्यातस्य । (३) चतुर्दश समग्रस्य । (४) त्रीणि निबिडस्य । (५) त्रीणि विरलस्य । (६) पञ्चदश समीपस्य । तत्र अभित इत्यव्ययम् । (७) त्रीणि संलग्नस्य । (८) द्वे अतिनिकटस्य । (९) द्वे दूरस्य । (१०) त्रीणि अत्यन्तदूरस्य । (११)द्वे दीर्घस्य । (१२)त्रीणि वर्तुलस्य । (१३)उन्नताननम्—बन्धुरमिति । (१४) षट् उन्नतस्य । (१५) पञ्च ह्रस्वस्य । (१६)

१अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् ।
आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ॥ ७१ ॥
२ऋजावजिह्मप्रगुणौ ३व्यस्ते त्वप्रगुणाकुलौ ।
शाश्वतस्तु ४ध्रुवो नित्यसदातनसनातनाः ॥ ७२ ॥
५स्थास्नुः ५स्थिरतरः स्थेयानेकरूपतया तु यः
६कालव्यापी स कूटस्थः ७स्थावरो जङ्गमेतरः ॥७३॥
८चरिष्णु जङ्गमचरं त्रसमिङ्गं चराचरम् ।
९चलनं कम्पनं कम्प्रं १०चलं लोलं चलाचलम् ॥७४॥
चञ्चलं तरलं चैव पारिप्लवपारिप्लवे ।
११अतिरिक्तः समधिको१२दृढसन्धिस्तु संहतः ॥७५॥
१३कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ।
जठरं मूर्तिमन्मूर्तं १४प्रवृद्धं प्रौढमेधितम् ॥ ७६ ॥
१५पुराणे प्रतनप्रत्नपुरातनचिरन्तनाः ।

---

त्रीणी अधोमुखस्य । ( १ ) एकादश वक्रस्य । ( २ ) त्रीणि अवक्रस्य । ( ३ ) त्रीणि आकुलस्य । ( ४ ) पञ्च नित्यस्य । ( ५ ) त्रीणि अतिस्थिरस्य । ( ६ ) यः कालव्यापी स कूटस्थ इति । ( ७ ) द्वे अचरस्थ । ( ८ ) षट् चरस्य (९) त्रीणि कम्पशीलस्य । ( १० ) सप्त चलस्य । ( ११ ) द्वे अधिकभूतस्य । ( १२ ) द्वे दृढसन्धानयुक्तस्य । (१३) नव कठिनस्य । (१४) त्रीणि प्रवृद्धस्य । (१५) पञ्च पुरातनस्य ।

१प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ॥ ७७ ॥
नूतनश्च २सुकुमारं तु कोमलं मृदुलं मृदु ।
३अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम् ॥ ७८ ॥
४प्रत्यक्षं स्यादैन्द्रियकमप्रत्यक्षमतीन्द्रियम् ।
६एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि ॥ ७९ ॥
अप्येकसर्ग एकाग्र्योऽप्येकायनगतोऽपि सः ।
पुंस्यादिः७ पूर्वपौरस्त्यप्रथमाद्या अथास्त्रियाम् ॥ ८० ॥
८अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः ।
९मोघं निरर्थकं १०स्पष्टं स्फुटं प्रव्यक्तमुल्बणम् ॥८१॥
११साधारणं तु सामान्यमेकाकी १२त्वेक एककः ।
१३भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि ॥८२॥
१४उच्चावचं नैकभेदमुच्चण्डमविलम्बितम् १५ ।
१६अरुन्तुदं तु मर्मस्पृगबाधं १७ तु निरर्गलम् ॥ ८३॥

---

(१) सप्त नूतनस्य । (२) चत्वारि कोमलस्य । (३) चत्वारि पश्चादित्यर्थे । तत्र अनुपदं क्लीबमव्ययं च । (४) द्वे इन्द्रियग्राह्यस्य । (५) द्वे इन्द्रियैरग्राह्यधर्मादेः । (६) सप्त एकाग्रस्य । (७) पञ्च आद्यस्य । तत्रादिः पुंस्येव । (८) षट् अन्त्यस्य । तत्रान्तः पुंनपुंसकयोरेव । (९) द्वे व्यर्थस्य । (१०) चत्वारि स्पष्टस्य (११) द्वे साधारणस्य । (१२) त्रीणि असहायस्य । (१३) षट् भिन्नार्थकाः । (१४) द्वे बहुविधस्य । (१५) द्वे तूर्णस्य । (१६) द्वे मर्मभेदिनः । (१७) द्वे

१प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठ च ।
२वामं शरीरं सव्यं स्यादपसव्यं तु दक्षिणम् ॥ ८४ ॥
३सङ्कटं ना तु सम्बाधः ४कलिलं गहनं समे ।
५सङ्कीर्णे सङ्कुलाकीर्णे ६मुण्डितं परिवापितम् ॥ ८५ ॥
७ग्रन्थितं सन्दितं दृब्धं ८विसृतं विस्तृतं ततम् ।
९अन्तर्गतं विस्मृतं स्यात्प्राप्त१०प्रणिहिते समे ॥ ८६ ॥
११वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते ।
१२नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः ॥ ८७ ॥
१३परिक्षिप्तं तु निवृतं मूषितं१४ मुषितार्थकम् ।
प्रवृद्धप्रसृते१५ १६न्यस्तनिसृष्टे गुणिताहते१७ ॥ ८८ ॥
१८निदिग्धोपचिते १९गूढगुप्ते २०गुण्ठितरूषिते ।

---

निर्बाधस्य । (१) चत्वारि विपरीतस्य । (२) यद्वामं शरीरं तत्सव्यमिति । यद्दक्षिणं शरीरं तदपसव्यमिति । (३) द्वे अल्पावकाशे वर्त्मादौ । ना—पुमानित्यर्थः । (४) द्वे दुरधिगम्यस्य । (५) त्रीणि जनादिभिरत्यन्तमिश्रस्य । (६) द्वे कृतमुण्डनस्य । (७) त्रीणि गुम्फितस्य । (८) त्रीणि लब्धप्रसरस्य । (९) द्वे विस्मृतस्य । (१०) द्वे लब्धस्य । (११) षट् ईषत्कम्पितस्य । (१२) सप्त प्रेरितस्य । (१३) द्वे प्राकारादिना सर्वतो वेष्टितस्य (१४) द्वे चोरितस्य । (१५) द्वे प्रसरणयुक्तस्य । (१६) द्वे निक्षिप्तस्य । (१७) द्वे अभ्यावर्तितस्य । (१८) द्वे समृद्धस्य । (१९) द्वे गोपनयुक्तस्य । (२०)

१द्रुतावदीर्णे २उद्गुर्णोद्यते ३काचितशिक्यिते ॥ ८९ ॥
४घ्राणघ्राते दिग्धलिप्ते५ समुदक्तोद्धृते६ समे ।
वेष्टितं७ स्याद्वलयितं संवीतं रुद्धमावृतम् ॥ ९० ॥
८रुग्णं भुग्नेऽथ ९निशितक्ष्णुतशातानि तेजिते ।
स्याद्विनाशोन्मुखं १०पक्वं ह्रीणह्रीतौ ११तु लज्जिते ॥ ९१ ॥
१२वृत्ते तु वृत्तव्यावृत्तौ १३संयोजित उपाहितः ।
१४ प्राप्य गम्यं समासाद्यं १५स्यन्नं रीणं स्नुतं स्रुतम् ९२
संगूढः१६ स्यात्सङ्कलितोऽवगीतः१७ ख्यातगर्हणः ।
विविधः१८स्याद्बहुविधो नानारूपः पृथग्विधः ॥९३॥
१९अवरीणो धिक्कृतश्चाप्यवध्व२०स्तोऽवचूर्णितः ।
अनायासकृतं२१फाण्टं२२स्वनितं ध्वनितं समे ॥ ९४ ॥
२३बद्धे सन्दानितं मूतमुद्दितं सन्दितं सितम् ।

द्वे धूलिलिप्तस्य । (१)द्वे द्रवीभूतस्य । (२) द्वे उत्तोलितस्य शस्त्रादेः । (३) द्वे शिक्ये स्थापितस्य । (४) द्वे नासिकया गृहीतगन्धस्य । (५) द्वे विलिप्तस्य । (६) द्वे उन्नीतस्य । (७) पञ्च वेष्टितस्य । (८) द्वे व्यथितस्य । (९) चत्वारि तीक्ष्णीकृतस्य शस्त्रादेः । (१०) विनाशोन्मुखं पक्वं स्यात् । (११) त्रीणि संजातलज्जस्य । (१२)त्रीणि कृतावरणस्य । (१३) द्वे संयोगं प्रापितस्य । (१४) त्रीणि प्राप्तुं शक्यस्य । (१५) चत्वारि प्रस्नुतस्य । (१६) द्वे योजितस्याङ्कादेः । (१७) द्वे निन्दितस्य । (१८) चत्वारि नानारूपस्य । (१९) द्वे निन्दितमात्रस्य । (२०) द्वे चूर्णीकृतस्य । (२१) अनायासकृतं फाण्टं स्यात् । (२२) द्वे शब्दितस्य । (२३) षट्कं बद्धस्य ।

१निष्पक्वे कथितं पाके क्षीराज्यहविषां२श्रृतम् ॥९५॥
३निर्वाणो मुनिवह्न्यादौ ४निर्वातस्तु गतेऽनिले ।
५पक्वं परिणते ६गूनं हन्ने मीढं ७तु मूत्रिते ॥९६॥
८पुष्टे तु पुषितं ९सोढे क्षान्तमुद्वान्तमुद्गते१० ।
११दान्तस्तु दमिते शान्तः१२शमिते १३प्रार्थितेऽर्दितः॥९७॥
ज्ञप्तस्तु१४ ज्ञपिते १५छन्नश्छादिते१६पूजितेऽञ्चितः ।
पूर्णस्तु१७पूरिते क्लिष्टः१८क्लिशितेऽवसिते१९सितः ९८
२०प्रुष्टप्लुष्टोषिता दग्धे २१तष्टत्वष्टौ तनूकृते ।
२२वेधितच्छिद्रितौ विद्धे २३विन्नवित्तौ विचारिते ॥९९॥
२४निष्प्रभे विगतारोकौ विलीने २५विद्रुतद्रुतौ ।
२६सिद्धे निर्वृत्तनिष्पन्नौ दारिते२७भिन्नभेदितौ ॥१००॥

---

(१) द्वे साकल्येन पक्वस्य । (२) क्षीरादीनां पाके 'श्रृतम्' इत्येकम् । (३) 'निर्वाण' इति मुनिवह्न्यादौ प्रयुज्यते ।। (४) गते अनिले 'निर्वात' इति । (५) द्वे पाकं प्राप्तस्य ।। (६) द्वे कृतपुरीषोत्सर्गस्य । ( ) द्वे मूत्रोत्सर्गस्य । (८) द्वे कृतपोषणस्य । (९) द्वे क्षमां प्रापितस्य । (१०) द्वे वमनेन त्यक्तस्यान्नादेः । (११) द्वे दमं प्रापितस्य । (१२) द्वे शमनं प्रापितस्य । (१३) द्वे याचितस्य । (१४) द्वे बोधं प्रापितस्य । (१५) द्वे आच्छादितस्य । (१६) द्वे पूजितस्य । (१७) द्वे पूर्णस्य । (१८) द्वे क्लेशं प्राप्तस्य । (१९) द्वे समाप्तस्य । (२०) चत्वारि दग्धस्य । (२१) त्रीणि तनूकृतस्य । (२२) त्रीणि विद्धस्य । (२३) त्रीणि प्राप्तविचारस्य । (२४) त्रीणि दीप्तिहीनस्य । (२५) त्रीणि द्रवीभूतस्य (२६) त्रीणि सिद्धस्य । (२७)

१ऊतं स्यूतमुतं चेति त्रितयं तन्तुसन्ततेः।
स्यादर्हिते२ नमस्यितनमसितमपचायितार्चितापचितम्
३वरिवसिते वरिवस्यितमुपासितं चोपचरितं च।
४सन्तापितसन्तप्तौ धूपितधूपायितौ च दूनश्च ॥१०२॥
५हृष्टे मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः।
६छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम् ॥१०३॥
७स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम्।
८लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च॥१०४॥
९अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम्।
१०आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च॥१०५
११त्रातं त्राणं रक्षितमवितं गोपायितं च गुप्तं च।
१२अवगणितमवमतावज्ञाते अवमानितञ्च परिभूते१०६
१३त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टे।
१४उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितम्।
१५बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगते।

---

त्रीणि भेदं प्रापितस्य। (१) त्रीणि तन्तुसन्ततेः। (२) षट् अर्चितस्य। (३) चत्वारि शुश्रूषितस्य। (४) पञ्च संतापितस्य। (५) षट् प्रमुदितस्य। (६) अष्ट खण्डितस्य। (७) सप्त च्युतस्य। (८) षट् प्राप्तस्य। (९) चत्वारि गवेषितस्य। (१०) सप्त क्लिन्नस्य। (११) षट् रक्षितस्य। (१२) पञ्च अवमानितस्य। (१३) षट् त्यक्तस्य। (१४) सप्त उदितस्य। (१५) सप्त अवगतस्य।

१ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् ॥१०८॥
सङ्गीर्णविदितसंश्रुतसमाहितोपश्रुतोपगतम् ।
२ईलितशस्तपणायितपनायितप्रणुतपणितपनितानि १०९
अपि गीर्णवर्णिताभिष्टुतेडितानि स्तुतार्थानि ।
भक्षितचर्वितलीढप्रत्यवसितगिलितखादितप्सातम् ११०
३अभ्यवहृतान्नजग्धग्रस्तग्लस्ताशितं भुक्ते ।
४क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः ॥ १११ ॥
क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुप्रकर्षार्थाः ।
५साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः ॥ ११२ ॥
बाढव्यायतबहुगुरुवामनवृन्दारकातिशये ।

इति विशेष्यनिघ्नवर्गः ॥ १ ॥

## अथ सङ्कीर्णवर्गः ॥ २ ॥

६प्रकृतिप्रत्ययार्थाद्यैः सङ्कीर्णे लिङ्गमुन्नयेत् ।

---

(१) एकादश अङ्गीकृतस्य । (२) द्वादश स्तुतार्थानि । (३) चतुर्दश खादितस्य । (४) अतिशयेन क्षिप्रः क्षेपिष्ठः । एवं क्षोदिष्ठादयः । (५) बाढादीनामतिशयेन साधिष्ठादयः स्युः । अतिशयेन बाढः साधिष्ठः । एवं द्राघिष्ठ-स्फेष्ठ-गरिष्ठ-ह्रसिष्ठ-वृन्दिष्ठाः ।

इति विशेष्यनिघ्नवर्गः ।

### अथ सङ्कीर्णवर्गः ।

(६) अस्मिन् वर्गे वक्ष्यमाणलिङ्गसंग्रहोक्तरीत्या प्रकृत्यर्थेन प्रत्य-

१कर्म क्रिया २तत्सातत्ये गम्ये स्युरपरस्पराः २ ॥१॥
साकल्यासङ्गवचने ३पारायणतुरायणे ।
यदृच्छा ४स्वैरिता हेतुशून्या ५त्वास्था ५विलक्षणम् ॥२॥
शमथस्तु६ शमः शान्तिर्दान्तिस्तु ७दमथो दमः ।
अवदानं ८कर्म वृत्तं काम्यदानं ९प्रवारणम् ॥ ३ ॥
१०वशक्रिया संवननं मूलकर्म तु ११कार्मणम् ।
१२विधूननं विधुवनं १३तर्पणं प्रीणनावनम् ॥ ४ ॥
१४पर्याप्तिः स्यात्परित्राणं हस्तवारणमित्यपि ।
१५सेवनं सीवनं स्यूतिर्विदरः १६स्फुटनं भिदा ॥५॥
१७आक्रोशनमभीषङ्गः संवेदो १८वेदना न ना ।

---

यार्थेन च आद्यशब्दात्कचिद्रूपभेदादिना लिङ्गमुन्नयेत् ऊहेत् इति यावत्।
(१) द्वे क्रियायाः । (२) क्रियासातत्ये गम्ये सति अपरस्पर इत्येक-नाम । (३) साकल्यवचनं **पारायणमिति** । आसङ्गवचनं **तुरायण**-मिति । (४) द्वे स्वच्छन्दतायाः । (५) एकं हेतुशून्यस्थितेः । (६) त्रीणि चित्तोपशमस्य । (७) त्रीणि इन्द्रियनिग्रहस्य । (८) वृत्तं कर्म तद् **'अवदानम्'** इति । (९) काम्यदानं 'तत्**प्रवारणम्**' इति । (१०) द्वे वशीकरणस्य । (११) ओषधीनां मूलैरुच्चाटनादि यत्कर्म तत् **'कार्मणम्'** इति । (१२) द्वे कम्पनस्य । (१३) त्रीणि तृप्तेः । (१४) त्रीणि वधोद्यतनिवारणस्य । (१५) त्रीणि सूचीक्रियायाः । (१६) त्रीणि द्विधाभावस्य । (१७) द्वे गालिप्रदानस्य । (१८) द्वे अनु-

१सम्मूर्च्छनमभिव्याप्तिर्याच्ञा२ भिक्षाऽर्थनाऽर्दना ॥६॥
३वर्धनं छेदनेऽथ द्वे ४आनन्दनसभाजने ।
५आप्रच्छन्नमथाम्नायः५ सम्प्रदायः क्षये६ क्षिया ॥७॥
७ग्रहे ग्राहो वशः८ कान्तौ ९रक्षणस्त्राणे रणः१० क्वणे ।
११व्यधो वेधे१२पचा पाके हवो १३हूतौ वरो१४वृतौ॥८॥
१५ओषःप्लोषे नयो१६नाये१७ज्यानिर्जीर्णा१८भ्रमोभ्रमौ
१९स्फातिर्वृद्धौ२०प्रथाख्यातौ स्पृष्टिः२१पृक्तौ२२स्नवःस्रवे
एधा२३समृद्धौ स्फुरणे२४ स्फुरणा प्रमितौ२५ प्रमा ।
२६प्रसूतिः प्रसवे श्च्योते २७प्राघारःक्लमथः २८क्लमे १०
२९उत्कर्षोऽतिशये सन्धिः ३०श्लेषे विषय३१आश्रये ।

---

भवस्य । तत्र वेदना न पुमान् । (१) द्वे सर्वतो व्याप्तेः । (२) चत्वारि याचनस्य । (३) द्वे कर्तनस्य । (४) त्रीणि स्वागतसम्प्रश्नादिना विहितस्यानन्दनस्य । (५) द्वे गुरुपरम्परागतस्य समुपदेशस्य । (६) द्वे अपचयस्य । (७) द्वे ग्रहणस्य । (८) द्वे इच्छायाः । (९) द्वे रक्षणस्य । (१०) द्वे शब्दकरणस्य । (११) द्वे वेधनस्य । (१२) द्वे पचनस्य । (१३) द्वे आह्वानस्य । (१४) द्वे वेष्टने सम्भक्तौ च । (१५) द्वे दाहस्य । (१६) द्वे नीतेः । (१७) द्वे जीर्णतायाः । (१८) द्वे भ्रान्तेः । (१९) द्वे वृद्धेः । (२०) द्वे प्रख्यातेः । (२१) द्वे स्पर्शस्य । (२२) द्वे प्रस्रवणस्य । (२३) द्वे उपचयस्य । (२४) द्वे स्फुरणस्य । (२५) द्वे यथार्थज्ञानस्य । (२६) द्वे गर्भविमोचनस्य । (२७) द्वे घृतादेः क्षरणे । (२८) द्वे ग्लानेः । (२९) द्वे प्रकर्षस्य । (३०) द्वे सन्धानस्य । (३१) द्वे आश्रयस्य ।

क्षिपायां १क्षेपणं २गीर्णिर्गिरौ ३गुरणमुद्यमे ॥ ११ ॥
४उन्नाय उन्नये ऽआयः ५श्रयणो जयने ६जयः ।
निगादो ७निगदे मादो८ मद उद्वेग ९उद्भ्रमे ॥१२॥
१०विमर्दनं परिम ११लोऽभ्युपपत्तिरनुग्रहः ।
१२निग्रहस्तद्विरुद्धः स्याद१३ भियोगस्त्वभिग्रहः ॥१३॥
मुष्टि१४ बन्धस्तु संग्राहो १५डिम्बे डमरविप्लवौ ।
बन्धनं १६प्रसितिश्चारः स्पर्शः १७स्प्रष्टोपतप्तरि ॥१४॥
निकारो १८विप्रकारः स्यादाकारस्त्विङ्ग १९इङ्गितम् ।
२०परिणामो विकारो द्वे समे २१विकृतिविक्रिये ॥१५॥
२२अपहारस्त्वपचयः २३समाहारः समुच्चयः ।
२४प्रत्याहार उपादानं २५विहारस्तु परिक्रमः ॥ १६ ॥

---

(१) द्वे प्रेरणस्य । (२) द्वे निगरणस्य । (३) द्वे भाराद्युद्यमस्य । (४) द्वे ऊर्ध्वं नयनस्य ऊहस्य च । (५) द्वे सेवायाः । (६) द्वे जयस्य । (७) द्वे कथनस्य । (८) द्वे हर्षस्य । (९) द्वे उद्वेजनस्य । (१०) द्वे कुङ्कुमादिमर्दनस्य । (११) द्वे अङ्गीकारस्य । (१२) ततोऽनुग्रहाद्विरुद्धो 'निग्रहः' स्यात् । (१३) द्वे कलहाह्वानस्य । (१४) द्वे मुष्टिना दृढग्रहणस्य । (१५) त्रीणि नरलुण्ठनादेरुपसर्गविशेषस्य । (१६) त्रीणि बन्धस्य । (१७) त्रीणि उपतापाख्यरोगविशेषस्य । (१८) द्वे अपकारस्य । (१९) त्रीणि अभिप्रायानुरूपचेष्टितस्य । (२०) द्वे प्रकृतेरन्यथाभावस्य । (२१) द्वे विरुद्धक्रियायाः । (२२) द्वे अपहरणस्य । (२३) द्वे राशीकरणस्य । (२४) द्वे इन्द्रियाकर्षणस्य । (२५) द्वे

१अभिहारोऽभिग्रहणं २निहारोऽभ्यवकर्षणम् ।
३अनुहारोऽनुकारः स्यादर्थस्यापगमे ४व्ययः ॥ १७ ॥
५प्रवाहस्तु प्रवृत्तिः ६स्यात्प्रवहो गमनं बहिः ।
७वियामो वियमो यामो यमः संयामसंयमौ ॥ १८ ॥
हिंसाकर्माऽभिचारः ८स्याज्जा९गर्या जागरा द्वयोः ।
१०विघ्नोऽन्तरायःप्रत्यूहः११स्यादुपघ्नोऽन्तिकाश्रये १९
१२निर्वेश उपभोगः१३स्यात्परिसर्पः परिक्रिया ।
१४विधुरं तु प्रविश्लेषेऽभिप्रायश्छन्द१५आशयः ॥२०॥
१६संक्षेपणं समसनं१७पर्यवस्था विरोधनम् ।
१८परिसर्या परीसारः१९स्यादास्यात्वासनास्थितिः ॥२१॥
२०विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः ।

---

पञ्चर्था गतेः । (१) द्वे चौर्यंकरणस्य । (२) द्वे शल्यादेर्निष्कासनस्य । (३) द्वे विडम्बनस्य । (४) एकं धनादेरपगमस्य । (५) द्वे जलादीनां निरन्तरगतेः । (६) यद्बहिर्गमनं स 'प्रवह' इति । (७) षट् संयमस्य योगाङ्गस्य । (८) एकं हिंसाकर्मणः—जारणमारणादेः । (९) द्वे जागरणस्य । तत्र जागरा स्त्रीपुंसयोः । (१०) त्रीणि विघ्नस्य । (११) समीपभूत आश्रये उपघ्न इति । (१२) द्वे उपभोगस्य । (१३) द्वे परिजनादिवेष्टनस्य । (१४) द्वे अत्यन्तवियोगस्य । (१५) त्रीणि अभिप्रायस्य । (१६) द्वे अविस्तारस्य । (१७) द्वे विरोधस्य । (१८) द्वे परितः सरणस्य । (१९) त्रीणि आसनस्य । (२०) त्रीणि विस्तृतेः । विस्तारः शब्दसम्बन्धी

१संवाहनं मर्दनं २स्याद्विनाशः स्याददर्शनम् ॥ २२ ॥
३संस्तवः स्यात्परिचयः ४प्रसरस्तु विसर्पणम् ।
५नीवाकस्तु प्रयामः ६स्यात्सन्निधिः सन्निकर्षणम् ॥२३॥
७लवोऽभिलावो लवने ८निष्पावः पवने पवः ।
९प्रस्तावः १०स्यादवसरस्त्रसरः सूत्रवेष्टनम ॥ २४ ॥
११प्रजनः स्यादुपसरः १२प्रश्रयप्रणयौ समौ ।
१३धीशक्तिर्निष्क्रमोऽस्त्री तु १४संक्रमो दुर्गसञ्चरः॥२५॥
१५प्रत्युत्क्रमः प्रयोगार्थः १६प्रक्रमः स्यादुपक्रमः ।
१७स्यादभ्यादानमुद्घात आरम्भः १८सम्भ्रमस्त्वरा ॥२६॥
१९प्रतिबन्धः २०प्रतिष्टम्भोऽवनायस्तु निपातनम् ।
२१उपलम्भस्त्वनुभवः २२समालम्भो विलेपनम् ॥२७॥

---

चेद्विस्तरः इति । (१) द्वे अङ्गमर्दनस्य । (२) द्वे तिरोधानस्य । (३) द्वे परिचितौ । (४) द्वे व्रणादिप्रसरणस्य । ।(५) द्वे धनधान्यादिषु जनानामादरातिशयस्य । (६) द्वे नैकट्यस्य । (७) त्रीणि धान्यादिच्छेदनस्य । (८) त्रीणि धान्यादीनां पूतीकरणस्य । (९) द्वे प्रसङ्गस्य । (१०) द्वे तन्तुवायकृतसूत्रवेष्टनभेदस्य । (११) द्वे गर्भग्रहणस्य । (१२) द्वे प्रेम्णः । (१३) द्वे बुद्धिसामर्थ्ये । (१४) द्वे दुर्गमार्गस्य । स न स्त्रियाम् । (१५) द्वे युद्धार्थमतिशयितोद्योगस्य । (१६) द्वे प्रथमारम्भस्य । (१७) त्रीणि आरम्भमात्रस्य । (१८) द्वे संवेगस्य । (१९) द्वे कार्यप्रतिघातस्य । (२०) द्वे अधोनयनस्य । (२१) द्वे साक्षात्कारस्य । (२२) द्वे कुङ्कुमादिना विलेपने

१विप्रलम्भो विप्रयोगो २विलम्भस्त्वतिसर्जनम् ।
३विश्रावस्तु ४प्रतिख्यातिरवेक्षा प्रतिजागरः ॥ २८ ॥
५निपाठनिपठौ पाठे ६तेमस्तेमौ समुन्दने
७आदीनवास्रवौ क्लेशे ८मेलके सङ्गसङ्गमौ ॥ २९ ॥
९संवीक्षणं विचयनं मार्गणं मृगणा मृगः ।
१०परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम् ॥ ३० ॥
११निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् ।
१२प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ॥ ३१ ॥
१३उपशायो विशायश्च पर्यायशयनार्थकौ ।
१४अर्तनं च ऋतीया च हृणीया च घृणार्थकाः ॥ ३२ ॥
१५स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये ।
१६पर्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्ययः ॥ ३३ ॥
प्रेषणं यत्समाहूय तत्र स्यात्प्रति १७शासनम् ।

---

(१) द्वे रागिणोर्विच्छेदस्य । (२) द्वे अतिदानस्य । (३) अतिप्रसिद्धेः । (४) द्वे वस्तूनाम् अवेक्षणस्य । (५) त्रीणि पठनस्य । (६) त्रीणि आर्द्रीभावस्य । (७) त्रीणि क्लेशस्य । (८) त्रीणि सङ्गमस्य । (९) पञ्च तात्पर्येण वस्तूनां गवेषणस्य । (१०) चत्वारि आलिङ्गनस्य । (११) पञ्च निरीक्षणस्य । (१२) चत्वारि निराकरणस्य । (१३) द्वे पर्यायेण प्रहरकादावुपशायस्य । (१४) चत्वारि जुगुप्सायाः । (१५) चत्वारि व्यतिक्रमस्य । (१६) चत्वारि अतिक्रमस्य । (१७) समाहूय यद्भृत्यादीनां प्रेषणं तत्र 'प्रतिशासनं'

स संस्तावः १क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम् ॥ ३४ ॥
निधाय तक्ष्यते यत्र काष्ठे काष्ठं स २उद्घनः ।
३स्तम्बघ्नस्तु स्तम्बघनः स्तम्बो येन निहन्यते ॥३५॥
४आविधो वध्यते येन तत्र विष्वक्समे ५निघः ।
६उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ ॥ ३६ ॥
❀७निगारोद्गारविक्षावोद्ग्राहास्तु गरणादिषु ।
८आरत्यवरतिविरतय उपरामेऽथ स्त्रियां तु९निष्ठेवः ।
निष्ठ्यूतिर्निष्ठेवनं निष्ठीवनमित्यभिन्नानि ॥ ३७ ॥
१०जवने जूतिः ११सातिस्त्ववसाने स्यादथ१२ज्वरे जूर्तिः ।
१३उदजस्तु पशुप्रेरण१४मकरणिरित्यादयः शापे ॥३८॥
गोत्रान्तेभ्यस्तस्य वृन्दमित्यौप१५गवकादिकम् ।

---

स्यात् । (१) क्रतुषु द्विजन्मनां स्तुतिभूमिः 'संस्तावः' इति । (२) यस्मिन् काष्ठे काष्ठं निधाय तक्ष्यते स 'उद्घनः' इति । (३) द्वे स्तम्बघ्नस्य । (४) येन विध्यते तत्र शस्त्रादौ 'आविध' इति । (५) सर्वतः समाने वृक्षे 'निघ' इति । (६) द्वे निकारस्य । (७) चत्वारि गरणादिषु । (८) चत्वारि उपरतेः । (९) चत्वारि मुखेन श्लेष्मोत्सर्गस्य । (१०) द्वे वेगस्य । (११) द्वे अन्तस्य । (१२) द्वे ज्वरस्य । (१३) पशूनां प्रेरणम् उदजः स्यात् । (१४) आक्रोशे योग्ये 'अकरणिः' इत्यादयः । आदिशब्दादजीवनिः । (१५) गोत्रान्तेभ्य औपगवादिशब्देभ्यस्तस्य वृन्दमित्यर्थे 'औपगवकादिकं' स्यात् । आदिशब्दाद्गार्गकं दाक्षकमित्यादि । इतः परमावर्गसमाप्तेर्वृ-

१आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम् ॥ ३९ ॥
माणवानां तु २माणव्यं सहायानां सहायता ।
३हल्या हलानां ४ब्राह्मण्यवाडव्ये तु द्विजन्मनाम् ॥४०॥
द्वे पर्शुकानां पृष्ठानां ५पार्श्वं ६पृष्ठ्यमनुक्रमात् ।
खलानां ७खलिनीखल्याप्यथ ८मानुष्यकं नृणाम् ॥४१॥
९ग्रामता जनता धूम्या पाश्या गल्या पृथक् पृथक् ।
अपि साहस्रकारीषवार्मणाथर्वणादिकम् ॥ ४२ ॥

इति सङ्कीर्णवर्गः ॥ २ ॥

---

न्दमित्यधिकारः। (१) अपूपानां समूहे 'आपूपिकम्' शष्कुलीनां समूहे 'शाष्कुलिकम्' सक्तूनां समूहे 'साक्तुकम्' इत्यादि। (२) माणवानां समूहो 'माणव्यम्' सहायानां समूहः 'सहायता'। (३) हलानां समूहो 'हल्या' इति। (४) द्वे ब्राह्मणानां समूहस्य। (५) एकं अस्थिविशेषाणां समूहस्य। (६) एकं पृष्ठानां समूहस्य। (७) द्वे खलानां समूहस्य। (८) एकं मनुष्याणां समूहस्य। (९) ग्रामाणां समूहो **ग्रामता**, जनानां समूहो **जनता**, धूमानां समूहो **धूम्या**, पाशानां समूहः **पाश्या**, गला कण्ठकाशास्तेषां समूहो **गल्या**। सहस्राणां समूहः साहस्रम्। करीषाणां समूहः **कारीषम्**। करीषं शुष्कगोमयम्। वर्म कवचम्, तेषां समूहो वार्मणम्। अथर्वणां समूह आथर्वणम्। आदिना चार्मिणमाङ्गारमित्यादि।

इति सङ्कीर्णवर्गः।

## अथ नानार्थवर्गः ॥ ३ ॥

१नानार्थाः केऽपि कान्तादिवर्गेष्वेवात्र कीर्तिताः ।
भूरि प्रयोगा ये येषु पर्यायेष्वपि तेषु ते ॥ १ ॥
आकाशे त्रिदिवे ना२को लोक३स्तु भुवने जने ।
पद्ये यशसि च श्लो४कः शरे खड्गे च५सायकः ॥ २ ॥
६जम्बुकौ क्रोष्टुवरुणौ ७पृथुकौ चिपिटार्भकौ ।
८आलोकौ दर्शनद्योतौ भेरीपटह९मानकौ ॥ ३ ॥
उत्सङ्गचिह्नयो१०रङ्कः ११कलङ्कोऽङ्कापवादयोः ।
१२तक्षको नागवर्धक्यो१३रर्कः स्फटिकसूर्ययोः ॥४॥

---

### अथ नानार्थवर्गः ।

(१) अत्र कान्तखान्तवर्गेष्वेव केऽपि नानार्था उक्ताः, न तु पूर्ववर्गेषु । यथा—'क' शब्दः । ये च शब्दा येषु पर्यायेषु प्रचुरप्रयोगाः—ते तेषु पूर्वत्र उक्ताः । अपिशब्दादत्र कान्तादिवर्गे च ते कथिताः । यथा नाकशब्दः स्वर्गे प्रचुरप्रयोग इति स्वर्गपर्यायेषु पूर्वमुक्तः अत्र कान्तवर्गेऽपि च उक्त इति । (२) नाक इति आकाशे स्वर्गे च वर्तते । (३) **लोकः** भुवने जने च । (४) पद्ये यशसि च **श्लोकः** । (५) शरे खड्गे च **सायकः** । (६) क्रोष्टा वरुणः उभौ जम्बुकशब्दवाच्यौ । (७) चिपिटे बाले च **पृथुकः** । ( चिपिट-चिउडा ) (८) **आलोकः** दर्शनप्रकाशयोः । (९) भेर्यां पटहे **आनकः** । (१०) उत्सङ्गे चिह्ने च **'अङ्कः'** । (११) चिह्ने दोषारोपे च **कलङ्कः** । (१२) नागविषे त्वष्टरि च **तक्षकः** । (१३) स्फटिकसूर्ययोरर्कः ।

मारुते वेधसि ब्रध्ने पुंसि १कः २कं शिरोऽम्बुनोः ।
स्यात् ३पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके ॥ ५ ॥
उलूके करिणः पुच्छमूलोपान्ते च ४पेचकः ।
कमण्डलौ च ५करकः सुगते च ६ विनायकः ॥ ६ ॥
७किष्कुर्हस्ते वितस्तौ च शूककीटे च ८वृश्चिकः ।
९प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम् ॥ ७ ॥
स्याद् १०भूतिकं तु भूनिम्बे कत्तृणे भूस्तृणेऽपि च ।
ज्योत्स्निकायां च घोषे च ११कोशातक्यथ कट्फले ॥ ८ ॥
सिते च खदिरे १२ सोमवल्कः स्यादथ सिह्लके ।
तिलकल्के च १३पिण्याको बाह्लीकं १४रामठेऽपि च ॥ ९ ॥

---

(१)मारुते वेधसि ब्रध्ने च क इति पुंसि । (२) शिरसि जले च 'कम्' इति क्लीबम् । (३) तुच्छधान्यादिषु 'पुलाकः' इति । ( **भक्तसिक्थक-भात की किनकी** ) (४) उलूके हस्तिपुच्छप्रान्तभागयोः- **पेचकः** । (५) कमण्डलौ चकाराद्वर्षोपले च **करकः** । (६) सुगते चकाराद्विघ्नराजे गरुडे च **विनायकः** । (७) हस्ते वितस्तौ च किष्कुः । (८) शूककीटे चकारादलौ कर्कटे वृक्षविशेषेऽष्टमराशौ च **वृश्चिकः** । (९) प्रतिकूले च प्रतीकः । तत्र प्रतिकूले त्रिषु एकदेशे पुंसि । (१०) **'भूतिकम्'** कत्तृणे भूस्तृणे च । (११) **कोशातकी** ज्योत्स्निकायां घोषे च । (१२) **सोमवल्कः**-कट्फले शुक्लखदिरे च । (१३) **पिण्याकः**-सिह्लके तिलकल्के निःस्नेहतिलचूर्णे च । (१४) रामठे

१महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः ।<br>
रुक्तापशङ्का२स्वातङ्कः स्वल्पेऽपि क्षु३ल्लकस्त्रिषु ॥ १० ॥<br>
४जैवातृकः शशाङ्केऽपि खुरेऽप्यश्वस्य ५वर्तकः ।<br>
व्याघ्रेऽपि६ पुण्डरीको ना यवान्यामपि ७दीपकः ॥११॥<br>
८शालावृकाः कपिक्रोष्टुश्वानः स्वर्णेऽपि गैरिकम् ।<br>
पीडार्थेऽपि ९व्यलीकं स्याद१०लीकं त्वप्रियेऽनृते॥१२॥<br>
शीलान्वयाव११नूके द्वे१२शल्के शकलवल्कले ।<br>
साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले ॥ १३ ॥<br>
दीनारेऽपि च१३निष्कोऽस्त्री१४कल्कोऽस्त्री शमलैनसोः ।<br>
दम्भेऽप्यथ १५पिनाकोऽस्त्री शूलशङ्करधन्वनोः ॥१४॥

---

चकाराद्बाह्लीके देशेऽश्वे घीरे च **बाह्लीक**मिति। (१) महेन्द्रे गुग्गुलौ उलूके व्यालग्राहिणि च **कौशिकः**। (२) रुक्तापशङ्कासु—आतङ्कः। (३) **क्षुल्लक**स्त्रिषु नीचेऽल्पे इति कोशान्तरम्। (४) शशाङ्कुशयोर्**जैवातृकः**। (५) अश्वखुरे पक्षिभेदे च **वर्तकः**। (६) व्याघ्रे अग्नौ दिग्गजादौ च **पुण्डरीकः**। (७) यवान्यां बर्हिचूडे प्रकाशे च **दीपकः**। (८) कपिक्रोष्टुश्वानः **शालावृकाः** स्युः। (९) स्वर्णे गैरिकधातौ च **गैरिकम्**। (१०) पीडार्थे वैलक्ष्ये च **व्यलीकम्**। (११) अप्रियेऽनृते च **अलीकम्**। (१२) स्वभावे वंशे च **अनूकम्**। (१३) शकले वल्कले च **शल्क** इति। (१४) सुवर्णानां साष्टे शते हेम्नि उरसो भूषणे हेमपले दीनारे च **निष्कः**। (१५) शमले

१धेनुका तु करेण्वां च मेघजाले च २कालिका ।
३कारिका यातनावृत्त्योः ४ कर्णिका कर्णभूषणे ॥१५॥
करिहस्तेऽङ्गुलौ पद्मबीजकोश्यां त्रिषूत्तरे ।
५वृन्दारकौ रूपिमुख्यावे६के मुख्यान्यकेवलाः ॥१६॥
स्याद्दाम्भिकः ७कौक्कुटिको यश्चादूरेरितेक्षणः ।
ला८लाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः ॥१७॥
*भूभृन्नितम्बवलयचक्रेषु ९कटकोऽस्त्रियाम् ।
*सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च १० कण्टकः ॥
*११पाकौ पक्तिशिशू मध्यरत्ने नेतरि १२नायकः ।
*१३पर्यङ्कः स्यात्परिकरे स्याद्व्याघ्रेऽपि च १४लुब्धकः॥

---

एनसि दम्भे च कल्कः । शूले शङ्करधन्वनि च 'पिनाकः' अस्त्रियाम् । (१) हस्तिन्यां नवप्रसूतायां गवि च धेनुका । (२) मेघजाले देवताविशेषे च कालिका । (३) यातनायां वृत्तौ च कारिका । (४) कर्णभूषणे करिहस्तेऽङ्गुलौ कमलान्तर्गतकोषे च 'कर्णिका'। उत्तरे खान्तेभ्यः प्राक् शब्दास्त्रिषु । (५) रूपिमुख्ययोः 'वृन्दारक' इति । (६) मुख्ये अन्ये केवलम्—एकः (७) दाम्भिके अदूरेरितेक्षणे च 'कौक्कुटिक' इति । (८) यो भृत्यः प्रभोर्भालं पश्यति, यश्च कार्याक्षमः तावुभौ लालाटिकौ । (९) पर्वतमध्यभागे वलये (कङ्गण) चक्रे च कटकः । (१०)सूच्यग्रे (सूई का नोक) क्षुद्रशत्रौ रोमहर्षे (रोंआ का खड़ा होना) कण्टकः (११) पाके बाले च पाकः । (१२) मध्यरत्ने नेतरि च नायकः । (१३) परिकर ( नोकर आदि आत्मीय जन ), पलङ्ग या मचान—पर्यङ्कः । (१४) व्याघ्रे लुब्धे च

*पेटकस्त्रिषु वृन्देऽपि गुरौ देश्ये च २देशिकः।
*३खेटकौ ग्रामफलकौ धीवरेऽपि च४ जालिकः॥
*पुष्परेणौ च५ किञ्जल्कः ६शुल्कोऽस्त्री स्त्रीधनेऽपि च
*स्यात्कल्लोलेऽप्युत्क७लिका ८बाधकं भाववृन्दयोः॥
*करिण्यां चापि ९गणिका १०दारकौ बालभेदकौ।
*अन्धेऽप्यनेडमू११कः स्याट्ट१२ङ्कौ दर्पाश्मदारणौ॥
मृद्भाण्डेऽप्युष्ट्रिका१३ मन्थे १४खजको रसदर्वके॥
१५मयूखस्त्विट्करज्वालास्वलिबाणौ१६ शिलीमुखौ।
१७शङ्खो निधौ ललाटास्थ्नि कम्बौ न स्त्रीन्द्रियेऽपि १८खम्॥

---

लुब्धकः। (१) समूहे मञ्जूषायाञ्च **पेटकः**। (२) गुरौ देश्ये च (देशमें होनेवाला पदार्थ) **देशिकः**। (३) ग्रामे फलके च **खेटकः**। (४)धीवरे ( मल्लाह ) ग्रामजे-भ्रलौ च **जालिकः**। (५) पुष्पपरागे कमलरेणौ च **किञ्जल्कः**। (६) स्त्रीधने करे च (मासुल कर फीस आदि ) **शुल्कः**। (७) ऊर्मिषु उत्कण्ठायाञ्च **उत्कलिका**। (८) भावे वृन्दे च ( बुढापा, बूढोंका समूह ) **वार्धकम्**। (९) हस्तिन्यां वेश्यायाञ्च **गणिका**। (१०) बाले भेदके च **दारकः**। (११) अन्धे मूर्खे च **एडमूकः**। (१२) दर्पे अश्मदारणे च **टङ्कः**। (१३) मृद्भाण्डे उष्ट्रिकायाञ्च **मन्थः**। (१४) मन्थदण्डे रसदर्वके च **खजकः**। एते श्लोका अमूलका इति केचित्। (१५) त्विट्करज्वालासु **मयूखः**। (१६) अली शरे च **शिलीमुखः**। (१७) निधौ ललाटास्थ्नि कम्बौ च **शङ्खः**। (१८) इन्द्रिये आकाशे शून्ये च **खम्**।

घृणिज्वाले अपि १शिखे शैलवृक्षौ २नगावगौ ।
३आशुगौ वायुविशिखौ शरार्कविहगाः ४खगाः ॥१९॥
५पतङ्गौ पक्षिसूर्यौ च पूगः क्रमुकवृन्दयोः ।
पशवोऽपि ७मृगा ८वेगः प्रवाहजवयोरपि ॥२०॥
९परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि ।
गजेऽपि १०नागमातङ्गावपाङ्गस्तिलकेऽपि च ॥२१॥
सर्गः १२स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ।
१३योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु ॥२२॥
१४भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ।
चातके हरिणे पुंसि १५सारङ्गः शबले त्रिषु ॥२३॥
कपौ च १६प्लवगः शापे त्वभिष१७ङ्गः पराभवे ।

---

(१) घृणौ ज्वालायां चूडायां प्रपदे बर्हिचूडायां च शिखा। (२) शैलवृक्षौ नगसंज्ञकावगसंज्ञकौ च। (३) वायौ बाणे च आशुगः। (४) बाणे सूर्ये पक्षिणि च खगः। (५) पक्षिसूर्ययोः पतङ्गः। (६) क्रमुके वृन्दे च पूगः। (७) पशुषु मार्गणायाञ्च मृगः। (८) प्रवाहे रंहे बहिर्निर्गमे च वेगः। (९) कुसुमसम्बन्धिनि रेणौ स्नानीये गन्धचूर्णविशेषे च (१०) गजे काद्रवेये नागकेशरे च। (११) नेत्रस्यान्तेऽङ्कहीने च। (१२) स्वभावे त्यागे निश्चये काव्यादिविरामस्थाने निर्माणे च। (१३) कवचसामादि–चित्तवृत्तिनिरोध–सङ्गम–इत्यादिषु योगः शब्दः। (१४) सुखे–स्त्र्यादिभृतौ पण्यस्त्रीणां भोगे–सर्पस्य फणकाययोरपि–भोगः। (१५) पुंसि हरिणे चातके त्रिषु शबले च सारङ्गः। (१६) वानरे भेके सारथ्यादौ च प्लवगः। (१७) शापे आक्रोशे पराभवे तिरस्कारे·

यानाद्यङ्गे १युगः पुंसि २युगं युग्मे कृतादिषु ॥ २४ ॥
३स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले ।
लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर्लिङ्गं ४ चिह्नशेफसोः ॥२५॥
५शृङ्गं प्राधान्यसान्वोश्च ६वराङ्गं मूर्धगुह्ययोः ।
७भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ॥ २६ ॥
८परिघः परिघातेऽस्त्रेऽप्योघो वृन्देऽम्भसां रये ।
मूल्ये पूजाविधाव१०र्घोंऽहो दुःखव्यसनेष्व११घम् ॥२७॥
त्रिष्विष्टेऽल्पे १२लघुः १३काचाः शिक्यमृद्भेददृग्रुजः ।
विपर्यासे विस्तरे च १४प्रपञ्चः पावके १५शुचिः ॥२८॥

---

ऽभिषङ्गः । (१) रथशकटादीनामवयवे युगः । (२) युग्मे कृतत्रेतादिषु हस्तचतुष्टये औषधभेदे च युगम् । (३) स्वर्गः, इषुः, पशु—सुरभिवृषौ वाक्, वज्रम्, दिक्, नेत्रम्, घृणिः, भूः, जलम्, एतेषां लक्ष्यदृष्ट्या प्रयोगानुसारेण गोशब्दः स्त्रियां पुंसि चोन्नेयः । (४) चिह्नशेफसोः लिङ्गम् । (५) प्राधान्यं प्रभुत्वं सानु, चकारात्पशोरवयवे च शृङ्गम् । (६) मूर्धा, मस्तकः, गुह्यं, योनिरेतयोर्वराङ्गम् । (७) श्रीः सम्यच्छोभा, काम इच्छा च, माहात्म्यम्-ऐश्वर्यम्, यत्नः—प्रयत्नः, अर्ककीर्तिः सूर्ययश एतेषु भगम् । (८) परिघातेऽस्त्रे लोहमयलगुडे च परिघः । (९) समूहे जलप्रवाहे च ओघः । (१०) मूल्ये पूजोपहारे चार्घः । (११) अंहः-पापं । दुःखं-जरामरणादिकम्, व्यसनं मृगयाद्यूतादि, विपद्रागद्वेषादि वा तत्र अघम् । (१२) इष्टे अल्पे च लघुः । त्रिषु । (१३) शिक्ये मृद्विशेषे नेत्ररोगे च काचाः । (१४) वैपरीत्ये विस्तरे चात्प्रतारणे च प्रपञ्चः । (१५) पावकेऽग्नौ

माल्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु।
अभिष्वङ्गे स्पृहायां च गभस्तौ च १रुचिः स्त्रियाम्॥२९॥
*प्रसन्ने भल्लुकेऽप्य२च्छो ३गुच्छः स्तबकहारयोः।
*परिधानाञ्चले ४कच्छो जलप्रान्ते त्रिलिङ्गकः॥३०॥
केकिताक्ष्यावहिभु५जौ दन्तविप्राण्डजा ६द्विजाः।
७अजा विष्णुहरच्छागा गोष्ठाध्ववनिवहा ८व्रजाः॥३१॥
९धर्मराजौ जिनयमौ १०कुञ्जो दन्तेऽपि न स्त्रियाम्।
११वलजे क्षेत्रपूर्द्वारे १२वलजा वल्गुदर्शना॥ ३२॥
समे क्ष्मांशे रणेऽप्या१३जिः १४प्रजा स्यात्सन्ततौ जने।
१५अब्जौ शङ्खशशाङ्कौ च स्वके नित्ये निजं१६ त्रिषु॥३३॥
पुंस्यात्मनि प्रवीणे च १७क्षेत्रज्ञो वाच्यलिङ्गकः।

---

शुचिः पुंसि। मास्याषाढे, सचिवे, अत्युपधे पवित्रे शुक्ले च शुचिः त्रिषु। (१) अभिष्वङ्गे स्पृहायां किरणे चकारात्दीप्तौ च रुचिः (२) प्रसन्ने भल्लुके च अच्छः। (३) स्तबके हारे च गुच्छः। (४) परिधानेऽञ्चले च कच्छः। जलप्रान्ते चायं त्रिलिङ्गकः। (५) मयूरगरुडौ अहिभुजौ। (६) दन्ते विप्रे अण्डजे च द्विजाः। (७) विष्णौ हरे छागे च अजाः। (८) गोस्थानके मार्गे सङ्घे च व्रजाः। (९) जिने यमे च धर्मराजः। (१०) दन्तिदन्ते अपिना निकुञ्जे च कुञ्जः। (११) क्षेत्रे नगरद्वारे च वलजम्। (१२) वल्गुदर्शना वलजाः। (१३) समे भूभागे सङ्ग्रामे च आजिः। (१४) अपत्ये लोके च प्रजा। (१५) शङ्खे शशाङ्के धन्वन्तरौ च अब्जः। (१६) स्वके आत्मीये नित्ये चिरस्थिते च निजः त्रिषु। (१७) आत्मनि पुरुषे च क्षेत्रज्ञः पुंसि।

१संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना ॥ ३४ ॥
काकेभगण्डौ २करटौ गजगण्डकटी ३कटौ ।
४शिपिविष्टस्तु 'खलतौ' दुश्चर्मणि महेश्वरे ॥ ३५ ॥
देवशिल्पिन्यपि ५त्वष्टा ६ दिष्टं दैवेऽपि न द्वयोः ।
रसे ७कटुः कटवकार्ये त्रिषु मत्सरतीक्ष्णयोः ॥ ३६ ॥
८रिष्टं क्षेमाशुभाभावेष्वरिष्टं तु शुभाशुभे ।
मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ॥ ३७ ॥
अयोघने शैलशृङ्गे सीराङ्गे कू९टमस्त्रियाम् ।
सूक्ष्मैलायां १०त्रुटिः स्त्री स्यात्कालेऽल्पे संशयेऽपि सा ।
आत्युत्कर्षाश्रयः ११कोट्यो मूले लग्नकचे १२जटा ।

---

प्रवीणे तु वाच्यलिङ्गकः (१) 'संज्ञा नामनि गायत्र्यां चेतनारवियोषितोः । अर्थस्य सूचनायां च हस्ताद्यैरपि योषिति । इति मेदिन्याम् । (२) काकेभगण्डौ **करटौ** । (३) गजगण्डः कटिश्च **कटौ** स्याताम् । (४) रुजा निष्केशशिराः खलतिः तस्मिन् दुश्चर्मणि निष्कुषितत्वचि महेश्वरे च **शिपिविष्टः** । ।(५) देवशिल्पिनि विश्वकर्मणि अपिना अविभेदे काष्ठतक्षे च **त्वष्टा** । (६) दैवे प्राक्तनकर्मणि **दिष्टम्** नपुंसकम् । (७) रसे '**कटुः**' अकार्ये कटु क्लीबम् , मत्सरतीक्ष्णयोस्त्रिषु । (८) क्षेमे, अशुभे, अशुभस्यैवाभावे **रिष्टम्** । शुभाशुभे **अरिष्टे** । सूतिकागृहं **चारिष्टम्** । (९) मायादिषु नवसु **कूटम्** । पुंनपुंसकयोः । (१०) चतुर्ष्वर्थेषु **त्रुटिः** स्त्रियाम् । (११) चापाग्रे प्रकर्षे कोणे संख्याभेदेऽपि **कोटिः** । (१२) संश्लिष्टकेशे जटामांस्यां वेदविकृतौ

१व्युष्टिः फले समृद्धौ च दृष्टिर्ज्ञानेऽक्ष्णि २दर्शने ॥३९॥
३इष्टिर्यागेच्छयोः ४सृष्टं निश्चिते बहुनि त्रिषु ।
५कष्टे तु कृच्छ्रगहने ६दक्षामन्दागदेषु च ॥ ४० ॥
६पटुर्द्वौ वाच्यलिङ्गौ च ७नीलकण्ठः शिवेऽपि च ।
पुंसि कोष्ठोऽन्तर्जठरं ८कुसूलोऽन्तर्गृहं तथा ॥ ४१ ॥
९निष्ठा निष्पत्तिनाशान्ताः १०काष्ठोत्कर्षे स्थितौ दिशि ।
त्रिषु ज्ये११ष्ठोऽतिशस्तेऽपि १२कनिष्ठोऽतियुवाल्पयोः ॥
१३दण्डोऽस्त्री लगुडेऽपि स्याद् १४गुडो गोलेक्षुपाकयोः ।
सर्पमांसात्पशू १५व्याडौ गोभूवाचस्त्विव१६डा इलाः ॥

---

च जटा। (१) फले समृद्धौ च **व्युष्टिः**। (२) ज्ञाने चक्षुषि दर्शने च **दृष्टिः**। (३) यज्ञे स्पृहायाञ्च **इष्टिः**। (४) बहुनि-प्रचुरे मुक्तनिर्मितयोश्च कष्टे **सृष्टम्**। (५) कृच्छ्रे गहने-दुरधिगमान्तः-प्रान्ते उभे कष्टे। (६) दक्षेऽनलसे रोगहीने च **पटुः**। द्वौ कष्टपटू वाच्यलिङ्गौ। (७) शिवे अपिना मयूरे च **नीलकण्ठः**। (८) जठरान्तरे धान्यागारे गृहाभ्यन्तरे च **कोष्ठः** पुंसि। (९) निष्पादने नाशे प्रध्वं च **निष्ठा**। (१०) उत्कर्षे मर्यादायां दिशि च **काष्ठा**। (११) सुप्रशस्ते अपिना अतिवृद्धे अग्रजे मासि च **ज्येष्ठः**। (१२) बाले अनुजेऽपि **कनिष्ठः**। (१३) लगुडे अपिना अश्वेऽपि **दण्डः**। (१४) गोले इक्षुविपाकेऽपि **गुडः**। (१५) सर्पे मांसात्पशौ-व्याघ्रे च **व्याडः**। (१६) गवि भुवि वाचि च **इडा-इला**। अत्र डल

१क्ष्वेडा वंशशलाकापि २नाडी नालेऽपि षट्क्षणे ।
३काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ॥ ४४ ॥
स्याद्भा४ण्डमश्वाभरणेऽमत्रे मूलवणिग्धने ।
भृशप्रतिज्ञयो५र्बाढं ६प्रगाढं भृशकृच्छ्रयोः ॥ ४५ ॥
शक्तस्थूलौ त्रिषु ७दृढौ ८व्यूढौ विन्यस्तसंहतौ ।
९भ्रूणोऽर्भके स्त्रैणगर्भे १०बाणो बलिसुते शरे ॥ ४६ ॥
११कणोऽतिसूक्ष्मे धान्यांशे संघाते प्रथमे१२गणः ।
१३पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च ॥ ४७ ॥
मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसन्ध्यादिके १४गुणः ।
निर्व्यापारस्थितौ कालविशेषोत्सवयोः १५क्षणः ॥४८॥

---

योरभेदः । इला बुधपत्नी च । (१) वंशशलाका—शूर्पाद्यर्थावेणुशलाका क्ष्वेडा । अपिशब्दाद्विषे पुंसि । (२) षट्क्षणमिते काले नाले अपिना शिरादिषु नाडी । (३) दण्डादिषु षट्सु काण्डः । स च पुंनपुंसकयोः । (४) अश्वाभरणे पात्रे वणिग्धने च भाण्डम् । (५) अत्यर्थे प्रतिज्ञायाञ्च बाढम् । (६) भृशकृच्छ्रयोर्दृढेऽपि प्रगाढम् । (७) समर्थे स्थूले च दृढः । (८) विन्यस्ते संहते च व्यूढः । (९) अर्भके स्त्रैणगर्भे च भ्रूणः । (१०) बलिपुत्रे शरे च बाणः । (११) अतिसूक्ष्मवस्तुनि धान्यांशे च कणः । (१२) समूहे रुद्रानुचरे च गणः । (१३) द्यूतादिषु न्यस्तार्थे वेतने विक्रेयवस्तुद्रव्ये धने च पणः । (१४) मौर्व्यां रसगन्धादौ सत्त्वरजआदौ शौर्यचातुर्यादौ सन्धिविग्रहादौ इन्द्रिये च गुणः । (१५) निर्व्यापारस्थितौ कालविशे

१वर्णौ द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे ।
२अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु ॥ ४९ ॥
३स्थाणुः शर्वेऽप्यथ ४द्रोणः काकेऽप्याजौरवे५रणः ।
६ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ॥ ५० ॥
७ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः ।
८हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ॥ ५१ ॥
त्रिषु पाण्डौ च हरिणः ९स्थूणा स्तम्भेऽपि वेश्मनः ।
१०तृष्णे स्पृहापिपासे द्वे जुगुप्साकरुणे११घृणे ॥५२॥
वणिक्पथे च १२विपणिः सुरा प्रत्यक्च १३वारुणी ।
१४करेणुरिभ्यां स्त्री नेभे१५द्रविणं तु बलं धनम् ॥५३॥

---

उत्सवे च क्षणः । (१) विप्रक्षत्रियादौ शुक्लपीतादौ स्तवे च वर्णः । अक्षरे वर्णं क्लीबे वा पुंसि । (२) सूर्ये अपिना सूर्यसारथौ च अरुणः । वर्णभेदे त्रिषु । (३) स्तम्भादौ स्थेयुषि शर्वे च स्थाणुः । (४) काके अपिना अश्वत्थाम्नः पितरि परिमाणविशेषे च द्रोणः । (५) युद्धे शब्दे च रणः । (६) श्रेष्ठे नापिते ग्रामाधिपे च ग्रामणीः । (७ मेषलोम्नि भ्रुवोरन्तरावर्ते च ऊर्णा । (८) "हरिणी हरितायां च नारीभिद्वृत्तभेदयोः । सुवर्णप्रतिमायाश्च" इति मेदिनी । पाण्डुवर्णे चकारान्मृगभेदे च हरिणः । (९) गृहस्य स्तम्भे स्थूणा । (१०) उभे तृष्णे । (११) उभौ घृणायाम् । (१२) पण्यवीथ्यां पण्ये च विपणिः । (१३) उभे वारुण्यौ । (१४) इभ्यां करेणुः । स्त्रीलिङ्गा, हस्तिनि पुंल्लिङ्गः । (१५) धने बले च द्रविणम् ।

१शरणं गृहरक्षित्रोः २श्रीपर्णं कमलेऽपि च ।
विषाभिमरलोहेषु ३तीक्ष्णं क्लीबे खरे त्रिषु ॥५४॥
४प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ।
५करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ॥ ५५ ॥
प्राण्युत्पादे ६संसरणमसंबाधचमूगतौ ।
घण्टापथेऽथ वान्तान्ने समुद्गि७रणमुन्नये ॥ ५६ ॥
अतस्त्रिषु ८विषाणं स्यात्पशुशृङ्गेभदन्तयोः ।
९प्रवणं क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ॥ ५७ ॥
१०सङ्कीर्णौ निचिताशुद्धाविरिणं ११शून्यमूषरम् ।
*सेतौ च १२वरणो १३वेणी नदीभेदे कचोच्चये ।
देवसूर्यौ १४विवस्वन्तौ सरस्वन्तौ १५नदार्णवौ ॥५८॥

---

(१) गृहे रक्षितरि च **शरणम्**। (२) कमले चेन अग्निमन्थे **श्रीपर्णम्**। (३) विषे अभिमरे युद्धे लोहे च **तीक्ष्णम्** क्लीबे। तिग्मे त्रिषु। (४) चतुर्ष्वर्थेषु **प्रमाणम्**। (५) साधकतमे क्षेत्रे गात्रे इन्द्रिये च **करणम्**। (६) प्राणिनामुत्पादे निर्बाधसैन्यागमने घण्टापथे च **संसरणम्**। (७) भुक्तोज्झितान्ने जलपत्रादेरूर्ध्वंनयने उन्मूलिते च **उद्गिरणम्**। (८) अतःपरं वक्ष्यमाणा णान्तशब्दास्ते त्रिषु। पशुशृङ्गे इभदन्ते च **विषाणम्**। (९) क्रमनिम्नोर्व्याम् नम्रे चतुष्पथे च **प्रवणः**। (१०) उभे सङ्कीर्णौ। (११) निराश्रये देशे ऊषरे स्थलभेदे च **इरिणम्**। (१२) सेतौ **वरणः**। (१३) नदीभेदे कचोच्चये च **वेणी**। (१४) देवसूर्यौ **विवस्वन्तौ**। (१५) नदार्णवौ

पक्षितादर्यौ १गरुत्मन्तौ २ शकुन्तौ भासपक्षिणौ ।
अग्न्युत्पातौ ३धूमकेतू ४जीमूतौ मेघपर्वतौ ॥५९॥
५हस्तौ तु पाणिनक्षत्रे ६मरुतौ पवनामरौ ।
७यन्ता हस्तिपके सूते ८भर्ता धातरि पोष्टरि ॥६०॥
यानपात्रे शिशौ ९पोतः १०प्रेतः प्राण्यन्तरे मृते ।
ग्रहभेदे ध्वजे ११केतुः पार्थिवे तनये १२सुतः ॥ ६१ ॥
१३स्थपतिः कारुभेदेऽपि १४भूभृद्भूमिधरे नृपे ।
१५मूर्धाभिषिक्तो भूपेऽपि १६ऋतुः स्त्रीकुसुमेऽपि च ६२
विष्णावप्यजिता१७ऽव्यक्तौ १८सूतस्त्वष्टरि सारथौ ।
१९व्यक्तः प्राज्ञेऽपि २०दृष्टान्तावुभौ शास्त्रनिदर्शने॥६३॥

---

सरस्वन्तौ । (१) पक्षितादर्यौ-गरुत्मन्तौ । (२) भास-पक्षिणौ-शकुन्तौ । (३) अग्न्युत्पातौ धूमकेतू । (४) मेघपर्वतौ जीमूतौ । (५) उभे हस्तौ । (६) उभे मरुतौ । (७) महामात्रसारथी यन्तारौ । (८) उभे भर्तारौ । (९) यानपात्रे शिशौ च पोतः । (१०) भूतान्तरे मृते च प्रेतः । (११) ग्रह-भेदे ध्वजे च केतुः । (१२) राज्ञि पुत्रे च सुतः । (१३) शिल्पि-नि शिल्पिभेदे अपिना कञ्चुकिनि जीवेष्टियाजके च स्थपतिः । (१४) शैले नृपे च भूभृत् । (१५) नृपे अपिना प्रधाने क्षत्रियमात्रे च मूर्धाभिषिक्तः । (१६) स्त्रीरजसि हेमन्तादौ च ऋतुः । (१७) वि-ष्णावपि अजितश्चाऽव्यक्तश्चेति वर्तेते । (१८) शिल्पिभेदे सारथौ च सूतः । (१९) प्राज्ञे स्फुटेऽपि व्यक्तः । (२०) शास्त्रं तर्कादि, निद-

१क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे।
२वृत्तान्तः स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः ॥६४॥
३आनर्तः समरे नृत्यस्थाननीवृद्विशेषयोः।
४कृतान्तो यमसिद्धान्तदैवाऽकुशलकर्मसु ॥ ६५ ॥
श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः।
इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च ५धातवः ॥ ६६ ॥
कक्षान्तरेऽपि ६शुद्धान्तो नृपस्यासर्वगोचरे।
कासूसामर्थ्ययोः ७शक्तिः८मूर्तिः काठिन्यकाययोः ॥६७॥
विस्तारवल्ल्योः९व्रततिः१०र्वसती रात्रिवेश्मनोः।
क्षयार्चयोर११पचितिः १२सातिर्दानावसानयोः ॥६८॥
१३अर्तिः पीडाधनुष्कोट्योः१४र्जातिः सामान्यजन्मनोः।

---

र्शनमुदाहरणम्। उभौ दृष्टान्तौ। (१) सारथौ द्वारपाले शूद्रात्क्षत्रियायां जाते च क्षत्ता। (२) चतुर्ष्वर्थेषु वृत्तान्तः। (३) युद्धे नृत्यमण्डपे जनपदविशेषे च आनर्तः। (४) यमे सिद्धान्ते दैवे अकुशलकर्मणि च कृतान्तः। (५) श्लेष्मादयो धातुशब्दवाच्याः। (६) असर्वगोचरे राजधानीस्थानविशेषे अन्तःपुरे आशौचान्ते च शुद्धान्तः। (७) आयुधभेदे सामर्थ्ये च शक्तिः। (८) काठिन्यकाययो मूर्तिः। (९) विस्तारे वल्ल्यां च व्रततिः। (१०) रात्रौ गृहे च वसतिः। (११) दानौ पूजायाञ्च अपचितिः। (१२) दाने अवसाने च सातिः। (१३) पीडायां धनुष्कोट्यां च अर्तिः। (१४) सामान्ये-

प्रचारस्यन्दयो १रीतिर्२ईतिर्डिम्बप्रवासयोः ॥६९॥
उदयेऽधिगमे ३प्राप्तिस्त्रेता४ त्वग्नित्रये युगे ।
वीणाभेदेऽपि ५महती ६भूतिर्भस्मनि सम्पदि ॥७०॥
नदीनगर्योर्नागानां ७भोगवत्यथ सङ्गरे ।
सङ्गे सभायां ८समितिः क्षयवासावपि ९क्षिती ॥७१॥
रवेरर्चिश्च शस्त्रं च वह्निज्वाला च १०हेतयः ।
११जगती जगति च्छन्दोविशेषेऽपि क्षितावपि ॥७२॥
१२पङ्क्तिश्छन्दोऽपि दशमं स्यात्प्रभावेऽपि १३चायतिः ।
१४पत्तिर्गतौ च मूले तु १५पक्षतिः पक्षभेदयोः ॥७३॥
१६प्रकृतिर्योनिलिङ्गे च कैशिक्याद्याश्च १७वृत्तयः ।

---

गोत्रादौ जन्मनि च जातिः । (१) लोकाचारे प्रस्रवणे च रीतिः । (२) डिम्बे प्रवासे च ईतिः । (३) उत्पत्तौ लाभे च प्राप्तिः । (४) द्वितीये युगे त्रेता । (५) वीणाभेदे नारदीवीणायाम् अपिना महत्त्वयुक्तायां भार्यादौ च महती । (६) भस्मनि सम्पदि च भूतिः । (७) त्रिषु भोगवती । (८)सङ्गरादित्रये समितिः । (९) नाशे निवासे अपिना मेदिन्यां कालभेदे च क्षितिः । (१०) सूर्यप्रभादिषु हेतिः । (११) लोके द्वादशाक्षरपादके वृत्ते पृथिव्याम् । अपिना जने च जगती । (१२) दशाक्षरपादके पङ्क्तिः । (१३) प्रभावे उत्तरकाले च आयतिः । (१४) गतौ सैन्यभेदे च पत्तिः । (१५) पक्षभेदयोः मासार्धे मूले पक्षिपक्षस्य मूलेऽधोदेशे च पक्षतिः । (१६) योनौ लिङ्गे च प्रकृतिः । (१७) भारती सात्वती चैव कैशिक्यार-

१सिकताः स्युर्वालुकापि वेदे श्रवसि च२श्रुतिः ॥७४॥
३वनिता जनितात्यर्थानुरागायां च योषिति ।
४गुप्तिः क्षितिव्युदासेऽपि ५धृतिर्धारणधैर्ययोः ॥७५॥
बृहती ६क्षुद्रवार्ताको छन्दोभेदे महत्यपि ।
७वासिता स्त्रीकरिण्योश्च ८वार्ता वृत्तौ जनश्रुतौ ॥७६॥
९वार्तं फल्गुन्यरोगे च त्रिष्वप्सु च १० घृतामृते ।
११कलधौतं रूप्यहेम्नोर्निमित्तं हेतुलक्ष्मणोः ॥७७॥
१२श्रुतं शास्त्रावधृतयोर्युगपर्याप्तयोः १३कृतम् ।
१४अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ॥७८॥
युक्ते क्ष्मादावृते १५भूतं प्राण्यतीते समे त्रिषु ।
१६वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ॥ ७९ ॥
१७ महद्राज्यं चाव१८गीतं जन्ये स्याद्गर्हिते त्रिषु ।

---

भटी तथा। चतस्रो वृत्तयश्चैता यासु नाट्यं प्रतिष्ठितम् इति। (१) बालुकायाम्। (२) अर्थद्वये श्रुतिः। (३) योषिन्मात्रे (४) भूविवरे अविना रक्षणे च गुप्तिः। (५) अर्थद्वये (६) ओषधिविशेषे छन्दोभेदे विपुलायामपि च बृहती। (७) उभयेऽर्थे। (८) उभये। (९) असारे—वार्तम्। रोगरहिते त्रिषु। (१०) घृतामृते-अप्सु वर्तते। (११) रजते हेम्नि चिन्हे हेतौ च कलधौतम्। (१२) उभयेऽर्थे। (१३) अर्थद्वये। (१४) जीवनापेक्षि कर्म महद्भयञ्च अत्याहितम्। (१५) न्याये क्षित्यादिपञ्चके सत्ये प्राणिनि अतीते समे च भूतम्। (१६) श्लोके चरित्रे भूते गाढे निस्तले च वृत्तम्। (१७) राज्यं चेन वृहच्च महत्। (१८) जनापवादे गर्हिते 'अवगीतं' त्रिषु।

१श्वेतं रूप्येऽपि २रजतं हेम्नि रूप्ये सिते त्रिषु ॥८०॥
त्रिष्वतो३जगदिङ्गेऽपि ४रक्तं नील्यादिरागि च ।
अवदातः५सिते पीते शुद्धबद्धार्जुनौ ६सितौ ॥ ८१ ॥
युक्तेऽतिसंस्कृते मर्षिण्य७भिनीतोऽथ८संस्कृतम् ।
कृत्रिमे लक्षणोपेतेऽप्य९नन्तोऽनवधावपि ॥ ८२ ॥
ख्याते हृष्टे१०प्रतीतोऽभि११जातस्तु कुलजे बुधे ।
१२विविक्तौ पूतविजनौ१३मूर्च्छितौ मूढसोच्छ्रयौ ॥८३॥
द्वौ चाम्लपरुषौ१४शुक्तौ शितौ१५धवलमेचकौ ।
सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च १६सत् ॥८४॥
१७पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते ।
१८निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् ॥८५॥

---

(१) रूप्ये अपिना **श्वेतम्** । (२) हेम्नि रूप्ये सिते च **रजतम्** त्रिषु । अतो रजतात्परे तान्ताः शब्दास्त्रिषु । (३) **इङ्गे**—जङ्गमे भुवने च **जगत्** । (४) नील्यादिरागयुक्तं **रक्तम्** । (५) सितादित्रये **अवदातः** । (६) द्वौ **सितौ** । (७) न्याये अतिप्रशस्ते भूषिते मर्षिणि च **अभिनीतः** । (८) कृत्रिमे शास्त्रोपलक्षणयुक्ते च **संस्कृतम्** । (९) निःसीमि अपिना शेषादौ **अनन्तः** । (१०) प्रसिद्धे हृष्टे च **प्रतीतः** । (११) उभयोः—**अभिजातः** । (१२) पूते विजने च **विविक्तः** । (१३) मोहं गते वृद्धियुक्ते च **मूर्च्छितः** । (१४) द्वौ **शुक्ता**ख्यौ । (१५) उभयोः **शितिः** । (१६) पञ्चसु **सत्** । (१७) पूजितादिचतुर्षु **पुरस्कृतः** । (१८) उभौ **निवातौ** । यत् शस्त्राभेद्यं कवचं तदपि

जातोन्नद्धप्रवृद्धाः स्युरु१च्छ्रिता २उत्थितास्त्वमी ।
वृद्धिमत्प्रोद्यतोत्पन्ना ३आदृतौ सादरार्चितौ ॥ ८६ ॥
४अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ।
निपानागमयो५स्तीर्थमृषिजुष्टे जले गुरौ ॥ ८७ ॥
६समर्थस्त्रिषु शक्तिस्थे सम्बद्धार्थे हितेऽपि च ।
७दशमीस्थौ क्षीणरागवृद्धौ ८वीथी पदव्यपि ॥ ८८ ॥
९आस्थानीयत्नयो९रास्था १०प्रस्थोऽस्त्री सानुमानयोः
*शास्त्रद्रविणयो११र्ग्रन्थः १२संस्थाधारे स्थितौ मृतौ ।
१३अभिप्रायवशौ १३छन्दा१४वब्दौ जीमूतवत्सरौ ॥८९॥
१५अपवादौ तु निन्दाज्ञे १६दायादौ सुतबान्धवौ ।
१७पादा रश्म्यङ्घ्रितुर्यांशाश्चन्द्राग्न्यर्का१८स्तमोनुदः ९०

---

निवातारव्यम् । (१) जाते दृप्ते प्रवृद्धे च उच्छ्रिताः । (२) वृद्धिमति प्रोद्यते उत्पन्ने च उत्थिताः । (३) उभौ आदृतौ । (४) 'अर्थो हेतौ प्रयोजने निवृत्तौ विषये वाच्ये प्रकारद्रव्यवस्तुषु' इति हैमः । (५) 'तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु' इति मेदिनी । (६) त्रिष्वर्थेषु समर्थः । (७) उभौ दशमीस्थौ । (८) मार्गे अपि ना पङ्क्तौ च वीथी । (९) उभौ आस्था । (१०) पर्वताग्रे परिमाणभेदे च प्रस्थः । (११) उभयोः ग्रन्थः । (१२) त्रिषु संस्था । (१३) अभिप्राये वशे च छन्दः । (१४) उभौ शब्दौ । (१५) गर्हायां शासने च अपवादौ । (१६) पुत्रो ज्ञातश्च दायादौ । (१७) किरणे चरणे चतुर्थभागे च पादाः । (१८) त्रिष्वर्थेषु तमोनुद् ।

१निर्वादो जनवादेऽपि२शादो जम्बालशष्पयोः ।
आरावे रुदिते त्रातर्या३क्रन्दो दारुणे रणे ॥ ९१ ॥
स्यात्प्र४सादोऽनुरागेऽपि ५सूदः स्याद्व्यञ्जनेऽपि च ।
गोष्ठाध्यक्षेऽपि ६गोविन्दो हर्षेऽप्यामो७दवन्मदः ॥९२॥
प्राधान्ये राजलिङ्गे च वृषाङ्गे ८ककुदोऽस्त्रियाम् ।
स्त्री ९संविज्ज्ञानसम्भाषाक्रियाकाराजिनामसु ॥९३ ॥
धर्मे रहस्यु१०पनिषत्स्यादृतौ वत्सरे ११शरत् ।
१२पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ॥ ९४ ॥
१३गोष्पदं सेविते माने प्रतिष्ठाकृत्यमा१४स्पदम् ।

---

(१) जनवादे अपिना निर्णीतवादे च **निर्वादः** । (२) उभयोः **शादः** । (३) आर्तध्वनौ रक्षके भीषणे युद्धे रुदिते च **आक्रन्दः** । (४) अनुरागे अपिना प्रसन्नतायां काव्यगुणे च **प्रसादः** । (५) तेमने सूपकारे च **सूदः** । (६) गोस्थानस्थाध्यक्षे गोपालादौ च **गोविन्दः** । (७) **आमोदः मदश्च** हर्षे वर्तते । (८) राजलिङ्गे वृषावयवे च **ककुदः** । (९) 'संविद् सम्भाषणे ज्ञाने संयमे नाम्नि तोषणे । क्रियाकारे प्रतिज्ञायां संकेताचारयोरपि' इति हैमः । (१०) उभयोः **उपनिषद** । (११) ऋतौ वत्सरे च **'शरद्** । (१२) 'पदं स्थाने विभक्त्यन्ते शब्दे वाक्यैकवस्तुनोः । त्राणे पादे पादचिह्ने व्यवसायापदेशयोः' इति हैमः । (१३) गोभिः सेविते देशे खुरप्रमाणे च **गोष्पदम्** । (१४) उभयोः

त्रिष्विष्टमधुरौ १स्वादू २मृदू चातीक्ष्णकोमलौ ॥९५॥
मूढाल्पापटुनिर्भाग्या ३मन्दाः स्युर्द्वौ तु ४ शारदौ ।
प्रत्यग्राप्रतिभौ विद्वत्सुप्रगल्भौ ५विशारदौ ॥ ९६ ॥
व्यामो वटश्च ६न्यग्रोधावु७त्सेधः काय उन्नतिः ।
पर्याहारश्च मार्गश्च ८विवधौ वीवधौ च तौ ॥ ९७ ॥
९परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ।
बन्धकं व्यसनं चेतःपीडाधिष्ठान१०माधयः ॥ ९८ ॥
स्युः समर्थननीवाकनियमाश्च ११समाधयः ।
दोषोत्पादेऽ१२नुबन्धः स्यात्प्रकृत्यादिविनश्वरे ॥ ९९ ॥
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ।
१३ विधिर्विष्णौ चन्द्रमसि परिच्छेदे बिलेऽवधिः१००
१४ विधिर्विधाने दैवेऽपि प्रणिधिः प्रार्थने चरे ।

---

आस्पदम् । अतः परम् आवर्गसमाप्तेर्दान्तास्त्रिषु । (१) उभौ स्वादू । (२) उभौ मृदू । (३) मूढादयश्चत्वारो मन्दाः । (४) इमौ द्वौ शारदौ । (५) उभौ विशारदौ । (६) द्वयं न्यग्रोधाख्यम् । (७) काये उन्नतौ च उत्सेधः । (८) उभौ विवधौ वीवधावपि । (९) यज्ञियतरौ शाखायां सूर्यसमीपमण्डले च परिधिः । (१०) बन्धके आपत्तौ मानसीव्यथायाम् अधिष्ठाने च आधयः । (११) त्रिषु समाधयः । (१२) चतुर्षु अर्थेषु अनुबन्धः । (१३) पञ्चसु विधुः 'विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे' इति विश्वः । (१४) विधाने प्राक्तनशुभाशुभकर्मणि ब्रह्मणि च विधिः ।

१बुधवृद्धौ पण्डितेऽपि २स्कन्धः समुदयेऽपि च ॥१०१॥
देशे नदविशेषेऽ३ब्धौ ४सिन्धुर्ना सरिति स्त्रियाम् ।
५विधा विधौ प्रकारे च६साधू रम्येऽपि च त्रिषु ॥१०२॥
७वधूर्जाया स्नुषा स्त्री च ८सुधा लेपोऽमृतं स्नुही ।
९सन्धा प्रतिज्ञा मर्यादा १०श्रद्धासम्प्रत्ययः स्पृहा॥१०३॥
११मधु मद्ये पुष्परसे क्षौद्रेऽप्य१२न्धं तमस्यपि ।
अतस्त्रिषु १३समुन्नद्धौ पण्डितंमन्यगर्वितौ ॥ १०४ ॥
१४ब्रह्मबन्धुरधिक्षेपे निर्देशेऽथावलम्बितः ।
अविदूरोऽप्य१५वष्टब्धः १६प्रसिद्धौ ख्यातभूषितौ॥१०५॥
सूर्यवह्नी १७चित्रभानू १८भानू रश्मिदिवाकरौ ।
भूतात्मानौ धातृदेहौ मूर्खनीचौ १९पृथग्जनौ ॥१०६॥

---

(१) बुधवृद्धौ पण्डिते अपिना बुधः सौम्ये, वृद्धः स्थविरे । (२) समूहे अपिना काण्डे नृपेंऽसे च स्कन्धः । (३) उभयस्मिन् अब्धिः पुंसि । (४) नदीसामान्ये स्त्रीलिङ्ग सिन्धुः । (५) उभयस्मिन् विधा । (६) रम्ये अपिना वाधुषिके सज्जने च साधुः । (७) भार्यायां पुत्रपत्न्यां स्त्रीमात्रे च वधूः । (८) त्रिषु सुधा । (९) उभयस्मिन् सन्धा । (१०) उभयस्मिन् श्रद्धा । (११) त्रिषु मधु । (१२) तमसि अपिना चक्षुर्हीने अन्धः । अतः परं धान्तवर्गपर्यन्तास्त्रिषु । (१३) उभौ समुन्नद्धौ । (१४) उभयस्मिन् ब्रह्मबन्धुः । (१५) उभौ अवष्टब्धौ । (१६) द्वौ ख्यातभूषितौ । (१७) सूर्ये वह्नौ च चित्रभानुः । (१८) द्वयोः भानुः । (१९) एतेषु पृथक्जन इति चतुर-

१ग्रावाणौ शैलपाषाणौ २पत्रिणौ शरपक्षिणौ।
तरुशैलौ ३शिखरिणौ ४शिखिनौ वह्निबर्हिणौ ॥१०७॥
५प्रतियत्नावुभौ लिप्सोपग्रहावथ ६सादिनौ।
द्वौ सारथिहयारोहौ ७वाजिनोऽश्वेषुपक्षिणः ॥ १०८ ॥
कुलेऽप्य८भिजनो जन्मभूम्यामप्यथ ९हायनाः।
वर्षार्चिर्व्रीहिभेदाश्च चन्द्राग्न्यर्का १०विरोचनाः॥१०९॥
११क्लेशेऽपि वृजिनो १२विश्वकर्मार्कसुरशिल्पिनाः।
आत्मा१३यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च॥११०॥
शक्रो घातुकमत्तेभो वर्षुकाब्दो १४घनाघनः।
१५घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे ॥ १११ ॥
१६अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः।
१७ इनः सूर्ये प्रभौ १८राजा मृगाङ्के क्षत्रिये नृपे ॥११२॥

---

चरम्। (१) उभौ **ग्रावाणौ**। (२) उभौ **पत्रिणौ**। (३) एतौ **शिखरिणौ**। (४) उभौ **शिखिनौ**। (५) उभौ **प्रतियत्नौ**। (६) सारथिहयारोहौ द्वौ **सादिनौ**। (७) त्रिषु **वाजिनः**। (८) कुले जननस्थाने च **अभिजनः**। (९) अब्दे रश्मौ व्रीहिभेदे च **हायनाः**। (१०) चन्द्रे अग्नौ अर्के प्रह्लादपुत्रे च **विरोचनाः**। (११) क्लेशे कल्मषे क्लीबे। (१२) अर्के सुरशिल्पिनि च **विश्वकर्मा**। (१३) षट्सु **यत्नः**। (१४) त्रिषु **घनाघनः**। (१५) त्रिषु **घनः**। (१६) चतुर्षु **अभिमानः**। (१७)उभयस्मिन् **इनः**। (१८) त्रिषु **राजा**

१वाणिन्यौ नर्तकीदूत्यौ स्रवन्त्यामपि २वाहिनी ।
३ह्रादिन्यौ वज्रतडितौ वन्दायामपि ४कामिनी ॥११३॥
त्वग्देहयोरपि ५तनुः ६सूनाधोजिह्विकापि च ।
क्रतुविस्तारयोरस्त्री ७वितानं त्रिषु तुच्छके ॥ ११४ ॥
मन्देऽथ ८केतनं कृत्ये केतावुपनिमन्त्रणे ।
वेदस्तत्त्वं तपो९ब्रह्म ब्रह्मा विप्रः प्रजापतिः ॥ ११५ ॥
उत्साहने च हिंसायां सूचने चापि १०गन्धनम् ।
११आतञ्चनं प्रतीवापजवनाप्यायनार्थकम् ॥ ११६ ॥
१२व्यञ्जनं लाञ्छनं श्मश्रुनिष्ठानावयवेष्वपि ।
स्यात् १३कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम् ॥ ११७॥
स्या१४दुद्यानं निःसरणे वनभेदे प्रयोजने ।

---

(१) द्वे वाणिन्यौ । (२) नद्याम् अपिना सेनायाम् वाहिनी । (३) उभयोः ह्रादिनी । (४) वन्दावृक्षे अपिना विलासिन्यां कामिनी । (५) काये त्वचि च तनुः । (६) सूना—अधोजिह्विका गलकण्ठिका इति यावत् । (७) यज्ञे विस्तारे च वितानम्, तुच्छके मन्दे च त्रिषु । (८) त्रिषु अर्थेषु केतनम् । (९) वेदादित्रये चैतन्ये तपसि च ब्रह्मन् । विप्रवेधसोः पुंसि । (१०) त्रिषु गन्धनम्, अपिना आशयप्रकाशने । (११) प्रतीवापे चौरादौ, तक्रादिनिक्षेपे वेगे प्रीणने च आतञ्चनम् । (१२) एतेषु व्यञ्जनम् । (१३) लोकापवादे पश्वादीनां युद्धे च कौलीनम् । (१४) त्रिष्वर्थेषु उद्या-

अवकाशे स्थितौ १स्थानं क्रीडादावपि २देवनम् ॥
३उत्थानं पौरुषे तन्त्रे सन्निविष्टोद्गमेऽपि च ।
४व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि च ॥ ११९ ॥
मारणे मृतसंस्कारे गतौ द्रव्येऽर्थदापने ।
निर्वर्तनोपकरणानुव्रज्यासु च ५साधनम् ॥ १२० ॥
६निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च ।
व्यस७नं विपदि भ्रंशे दोषे कामजकोपजे ॥ १२१ ॥
८पद्माद्लिोम्नि किञ्जल्के तन्त्वाद्यंशेऽप्यणीयसि ।
तिथिभेदे क्षणे ९पर्व १०वर्त्म नेत्रच्छदेऽध्वनि॥१२२॥
अकार्यगुह्ये ११कौपीनं १२मैथुनं सङ्गतौ रते ।
१३प्रधानं परमात्मा धीः १४प्रज्ञानं बुद्धिचिह्नयोः ॥
१५ प्रसूनं पुष्पफलयो १६निधनं कुलनाशयोः ।

---

नम् । (१) द्वयोः **स्थानम्** । (२) क्रीडायाम् अपिना व्यवहारे जि-गीषादौ च **देवनम्** । (३) त्रिषु **उत्थानम्** । (४) द्वयोः । **व्युत्था-नम्** । (५) मारणाद्यष्टके सैन्ये मेढ्रे च **साधनम्** । (६) त्रिषु **निर्यातनम्** । (७) त्रिषु **व्यसनम्** , तत्र दोष इत्यस्य प्रत्येकं सम्ब-न्धः । (८) चतुर्षु **पद्म** । (९) द्वयोः **पर्व** । (१०) उभय-स्मिन् **वर्त्म** । (११) उभे **कौपीने** । (१२) उभयत्र **मैथुनम्** । (१३) परमात्मनि बुद्धौ च **प्रधानम्** । (१४) उभयोः **प्रज्ञानम्** । (१५) फले पुष्पे च **प्रसूनम्** । (१६) कुल-

१क्रन्दने रोदनाह्वाने २वर्ष्म देहप्रमाणयोः ॥ १२४ ॥
गृहदेहत्विट्प्रभावा ३धामान्यथ चतुष्पथे ।
सन्निवेशे च ४संस्थानं ५लक्ष्म चिह्नप्रधानयोः ॥१२५॥
आच्छा६दने संपिधानमपवारणमित्युभे ।
७आराधनं साधने स्यादवाप्तौ तोषणेऽपि च ॥ १२६॥
८अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि ।
९रत्नं स्वजातिश्रेष्ठेऽपि१०वने सलिलकानने ॥ १२७ ॥
११तलिनं विरले स्तोके वाच्यलिङ्गं तथोत्तरे ।
समा१२नाः सत्समैके स्युः१३पिशुनौ खलसूचकौ॥१२८॥
१४हीनन्यूनावूनगर्ह्यौ वेगिशूरौ १५तरस्विनौ ।
१६अभिपन्नोऽपराद्धोऽभिग्रस्तव्यापद्गतावपि ॥ १२९ ॥

---

नाशयोर्निधनम् । (१) उभे **क्रन्दने** । (२) उभयोर्वर्ष्म । (३) गृहादीनि चत्वारि **धामानि** । (४) उभयत्र **संस्थानम्** । (५) चिह्ने प्रधाने च **लक्ष्म** । (६) उभे **आच्छादने** । (७) त्रिषु **आराधनम्** । (८) चतुर्षु **अधिष्ठानम्** । (९) स्वजातिश्रेष्ठे **रत्नम्** । (१०) उभे **वने** । (११) विरले स्तोके च **तलिनम्**, यथेदं वाच्यलिङ्गं तथा उत्तरेऽपि । (१२) सन् समः एकश्चैते **समानाः** । (१३) उभौ **पिशुनौ** । (१४) ऊनोऽल्पः, गर्ह्यो निन्द्यः द्वावेतौ हीनन्यूनशब्दवाच्यौ । (१५) उभौ **तरस्विनौ** । (१६) त्रिषु

१कलापो भूषणे बर्हे तूणीरे संहतावपि ।
परिच्छदे २परीवापः पर्युप्तौ सलिलस्थितौ ॥ १३० ॥
गोधुग्गोष्ठपती ३गोपौ ४हरविष्णू वृषाकपी ।
५बाष्पमूष्माश्रु ६कशिपु त्वन्नमाच्छादनं द्वयम् ॥१३१॥
७तल्पं शय्याट्टदारेषु ८स्तम्बेऽपि विटपोऽस्त्रियाम् ।
९प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः ॥ १३२ ॥
भेद्यलिङ्गा अमी कूर्मी वीणाभेदश्च १०कच्छपी ।
॥११कुतपो मृगरोमोत्थपटे चाह्नोऽष्टमेंऽशके ।
रवर्णे पुंसि १२रेफः स्यात्कुत्सिते वाच्यलिङ्गकः ॥
अन्तराभवसत्त्वेऽश्वे १३गन्धर्वो दिव्यगायने ।
१४कम्बुर्ना वलये शङ्खे १५द्विजिह्वौ सर्पसूचकौ ॥१३४॥
१६पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वेऽपि पूर्वजान् ।

---

एतेषु अभिपन्नः । (१) चतुर्षु अर्थेषु कलापः । (२) त्रिषु परीवापः । (३) उभौ गोपौ । (४) हरो विष्णुश्च वृषाकपिसंज्ञौ । (५) उष्माश्रु बाष्पम् । (६) अन्ने आच्छादने च कशिपु । (७) त्रिषु तल्पम् । (८) स्तम्बे—विटपः, अपिना ताराशाखयोः । (९) अमी प्राप्तरूपः, स्वरूपः, अभिरूपः, भेद्यलिङ्गाः बुधे मनोहरे च वर्तन्ते । (१०) द्वे कच्छपीसंज्ञे । (११) उभयत्र कुतपः । (१२) रवर्णे रेफः पुंसि, कुत्सिते वाच्यलिङ्गकः । (१३) त्रिष्वर्थेषु गन्धर्वः । पुंसीत्यर्थः । (१४) वलये शङ्खे च कम्बुः । (१५) एतौ द्वौ द्विजिह्वौ । (१६) पूर्वशब्दः प्राग्वाची वाच्यलिङ्गकः । यदा पूर्वजान् पितामहा-

१कुम्भौ घटेभमूर्धांशौ २डिम्भौ तु शिशुबालिशौ ॥
३स्तम्भौ स्थूणाजडीभावौ ४शम्भू ब्रह्मत्रिलोचनौ ।
कुक्षिभ्रूणार्भका ५गर्भा ६विस्रम्भः प्रणयेऽपि च ॥
स्याद्भेर्यां ७दुन्दुभिः पुंसि स्यादक्षे दुन्दुभिः स्त्रियाम् ।
स्यान्महारजने क्लीबं ८कुसुम्भं करके पुमान् ॥१३९॥
९क्षत्रियेऽपि च नाभिर्ना १०सुरभिर्गवि च स्त्रियाम् ।
११सभा संसदि सभ्ये च त्रिष्वध्यक्षेऽपि १२वल्लभः ॥
किरणप्रग्रहौ १३रश्मी कपिभेकौ १४प्लवङ्गमौ ।
इच्छामनोभवौ १५कामौ शौर्योद्योगौ १६ पराक्रमौ ॥
१७धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः ।
उपायपूर्व आरम्भ १८उपधा चाप्यु१९पक्रमः ॥१४०॥

---

दीन् आह तदा पुंसि बहुत्वे वर्तते। (१) घटे गजशिरोभागे च कुम्भौ। (२) शिशौ मूर्खे च डिम्भः। (३) उभौ स्तम्भौ। (४) ब्रह्मा त्रिलोचनश्च शम्भू। (५) एते त्रयो गर्भाः। (६) प्रणये अपिना विश्वासादौ विस्रम्भः। (७) दुन्दुभिर्भेर्यां पुंसि, बालक्रीडोपकरणे स्त्रियाम्।। (८) कुसुम्भं पुष्पभेदे क्लीबम्, कमण्डलौ पुंसि। (९) क्षत्रिये नाभिः पुंसि, अपिना मुख्यनृपे चक्रमध्ये च। (१०) गवि सुरभिः स्त्री। (११) सदसि सभ्ये च सभा। (१२) अध्यक्षे अपिना दयिते च वल्लभः। (१३) द्वयो रश्मिः। (१४) उभौ प्लवङ्गमौ। (१५) द्वयोः कामौ। (१६) उभौ पराक्रमौ। (१७) पुण्यादिषट्के धर्माः।(१८) अमात्यशीलपरीक्षोपायाः-उपधा। (१९)चि॰

वणिक्पथः पुरं वेदा १निगमो नागरो वणिक्।
२नैगमौ द्वौ बले ३रामौ नीलचारुसिते त्रिषु ॥ १४१ ॥
शब्दादिपूर्वो वृन्देऽपि ४ग्रामः क्रान्तौ च ५विक्रमः।
६स्तोमः स्तोत्रेऽध्वरे वृन्दे ७जिह्मस्तु कुटिलेऽलसे ॥
उष्णोऽपि ८घर्मचेष्टालङ्कारे भ्रान्तौ च ९विभ्रमः।
१०गुल्मा रुक्स्तम्बसेनाश्च ११जामिः स्वसृकुलस्त्रियोः।
क्षितिक्षान्त्योः १२ क्षमायुक्ते १३क्षमं शक्ते हिते त्रिषु।
त्रिषु १४श्यामौ हरित्कृष्णौ १५श्यामा स्याच्छारिवा निशा।
१६ ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु।
१७सूक्ष्ममध्यात्ममप्याद्ये प्रधाने १८प्रथमस्त्रिषु ॥१४५॥

---

कित्सायाम् उपक्रमः। (१) एते त्रयो निगमाः। (२) नागरः वणिक् चैतौ नैगमौ। (३) बले पुंसि नीलादिषु त्रिलिङ्गथां रामः शब्दः। (४) शब्दादिपूर्वो ग्रामशब्दो वृन्दे वर्तते। (५) क्रान्तौ पराक्रमे च विक्रमः। (६) त्रिषु स्तोमः। (७) उभयस्मिन् जिह्मः। (८) उष्णे घर्मः। (९) त्रिषु विभ्रमः। (१०) रुक्-प्लीहाख्यः, स्तम्बः कुशादिगुच्छः, सेना, एतेषु त्रिषु गुल्मः। (११) उभयोः जामिः। (१२) उभयोः क्षमा। (१३) योग्ये क्षमं क्लीबम्। शक्ते हिते च त्रिषु क्षमशब्दः। (१४) उभौ श्यामौ। (१५) शितावरी निशा च श्यामा। (१६) पुच्छादिषट्सु ललामम्। (१७) लिङ्गदेहे कैतवे च सूक्ष्मम्। (१८) उभयत्र प्रथमः।

१वाम्मौ वल्गुप्रतीपौ २द्वावधमौ न्यूनकुत्सितौ ।
जीर्णं च परिभुक्तं च ३ यातयाममिदं द्वयम् ॥ १४६ ॥
तुरङ्गगरुडौ ४तार्क्ष्यौ निलयापचयौ ५क्षयौ ।
६श्वशुर्यौ देवरश्यालौ ७भ्रातृव्यौ भ्रातृजद्विषौ ॥१४७॥
८पर्जन्यौ रसदब्देन्द्रौ ९स्यादर्यः स्वामिवैश्ययोः ।
१०तिष्यः पुष्ये कलियुगे ११पर्यायोऽवसरे क्रमे ॥१४८॥
१२प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु ।
रन्ध्रे शब्देऽथा१३नुशयो दीर्घद्वेषानुतापयोः ॥ १४९ ॥
१४स्थूलोच्चयस्त्वसाकल्ये नागानां मध्यमे गते ।
१५समयाः शपथाचारकालसिद्धान्तसंविदः ॥ १५० ॥
व्यसनान्यशुभं दैवं विपदित्य१६नयास्त्रयः ।
१७अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽप्यथापदि ॥१५१॥
युद्धायत्योः १८ संपरायः १९पूज्यस्तु श्वशुरेऽपि च ।

---

(१) उभौ वाम्मौ । (२) एतौ द्वौ अधमौ । (३) इदं द्वयं यातयामसञ्ज्ञम् । (४) उभौ तार्क्ष्यौ । (५) उभौ क्षयौ । (६) एतयोः श्वशुर्यः । (७) उभौ भ्रातृव्यौ । (८) इमौ पर्जन्यौ । (९) उभयोः अर्यः । (१०) उभयत्र तिष्यः । (११) उभयस्मिन् पर्यायः । (१२) अधीनादिषु सप्तसु प्रत्ययः । (१३) चिरद्वेषे पश्चात्तापे च अनुशयः । (१४) असाकल्ये नागानां मध्यमे गते स्थूलोच्चयः । (१५) शपथाचारादिषु समयाः । (१७) एतत् त्रयम् अनयम् । (१७) चतुर्षु अत्ययः अपिना नाशे च । (१८) आपदादित्रये सम्परायः । (१९) श्वशुरे

पश्चादवस्थायि बलं समवायश्च १सन्नयौ ॥ १५२ ॥
सङ्घाते सन्निवेशे च २संस्त्यायः ३प्रणयास्त्वमी ।
विश्रम्भयाच्ञाप्रेमाणो विरोधेऽपि ४समुच्छ्रयः ॥
५विषया यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि ।
निर्यासेऽपि६ कषायोऽस्त्री सभायां च७प्रतिश्रयः ॥१५४॥
८प्रायो भूम्न्यन्तगमने ९मन्युर्दैन्ये क्रतौ युधि ।
रहस्योपस्थयो१०र्गुह्यं ११सत्यं शपथतथ्ययोः ॥१५५॥
१२वीर्यं बले प्रभावे च १३द्रव्यं भव्ये गुणाश्रये ।
१४धिष्ण्यं स्थाने गृहे भेऽग्नौ १५भाग्यं कर्मशुभाशुभम् ॥
कशेरुहेम्नो१६र्गाङ्गेयं १७विशल्या दन्तिकापि च ।

---

अपिना पूजार्हे **पूज्यः** । ( १ ) उभौ **संनयौ** । ( २ ) उभयत्र **संस्त्यायः** । ( ३ ) अमी विस्रम्भादयस्त्रयः **प्रणयाः** । (४) विरोधे अपिना उन्नत्यां **समुच्छ्रयः** । ( ५ ) यस्य मत्स्यादेर्यो जलादिर्ज्ञातो नित्यसेवितस्तत्र **विषयः** । शब्दस्पर्शरूपरसगन्धाश्च विषयाः । (६) निर्यासे क्वाथरसे अपिना विलेपनादौ **कषायः** । (७) सभायाम् आश्रये च **प्रतिश्रयः** । (८) उभयत्र **प्रायः** । (९) त्रिषु **मन्युः** । (१०) गोप्ये उपस्थे च **गुह्यम्** । (११) उभयत्र **सत्यम्** । (१२) सामर्थ्ये तेजोविशेषे च **वीर्यम्** । (१३) भव्ये गुणाश्रये द्रविणे च **द्रव्यम्** । (१४) चतुर्षु **धिष्ण्यम्** । (१५) शुभाशुभं कर्म **भाग्यम्** । (१६) कशेरुहेम्नोर्**गाङ्गेयम्** । (१७) दन्तिका अपिना अग्निशिखा गुडूच्यपि **विशल्या** ॥

१वृषाकपायी श्रीगौर्योरभि२ख्या नामशोभयोः ॥
आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् ।
उपायः कर्म चेष्टा च चिकित्सा च नव३क्रियाः ॥
४छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः ।
५कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने ॥
६कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः ।
७जन्यं स्याज्जनवादेऽपि ८जघन्योऽन्त्येऽधमेऽपि च ।
गृह्याधीनौ च ९वक्तव्यौ १०कल्यौ सज्जनिरामयौ ।
आत्मवाननपेतोऽर्था११दर्थ्यौ १२पुण्यन्तु चार्वपि१६१
१३रूप्यं प्रशस्तरूपेऽपि १४वदान्यो वल्गुवागपि ।
न्याय्येऽपि १५मध्यं १६सौम्यं तु सुन्दरे सोमदैवते ॥

---

(१) श्रीगौर्योः वृषाकपायी। (२) नामशोभयोः अभिख्या। (३) आरम्भादयो नव शब्दाः क्रियाशब्दवाच्याः। (४) सूर्यप्रियादिचतुष्के छाया। (५) हर्म्यादेः प्रकोष्ठे काञ्च्यां मध्येभबन्धने च कक्ष्या। (६) क्रियायां देवतायां धनादिभिर्भेद्ये च कृत्या। (७) निन्दितवादे अपिना युद्धादौ जन्यम्। (८) अन्त्ये अधमे च जघन्यः। (९) उभौ वक्तव्यौ। (१०) उभौ कल्यौ। (११) उभौ अर्थ्यौ। (१२) चारु अपिना सुकृतधर्मयोश्च पुण्यम्। (१३) प्रशस्तरूपे अपिना रजते च रूप्यम्। वल्गुवाचि अपिना दातरि च वदान्यः। (१५) न्याय्ये अपिना अलग्ने च मध्यम्। (१६) उभयत्र सौम्यम्।

निवहावसरौ १वारौ २संस्तरौ प्रस्तराध्वरौ ।
३गुरू गीर्पतिपित्राद्यौ ४द्वापरौ युगसंशयौ ॥ १६३ ॥
५प्रकारौ भेदसादृश्ये ६आकाराविङ्गिताकृती ।
७किंशारू सस्यशूकेषु ८मरू धन्वधराधरौ ॥ १६४ ॥
९अद्रयो द्रुमशैलार्काः स्त्रीस्तनाब्दौ १०पयोधरौ ।
ध्वान्तारिदानवा ११वृत्रा बलिहस्तांशवः १२कराः ॥
१३प्रदरा भङ्गनारीरुग्बाणा १४अस्राः कचा अपि ।
अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्ना च १५तूबरौ ॥१६६॥
स्वर्णेऽपि १६राः १७परिकरः पर्यङ्कपरिवारयोः ।
मुक्ता शुद्धौ च १८तारः स्याच्छारो १९वायौ स तु त्रिषु॥
कर्बुरेऽथ प्रतिज्ञाजिसंविदापत्सु २० सङ्गरः ।
वेदभेदे गुप्तवादे २१ मन्त्रो २२मित्रो रवावपि ॥१६८॥

---

(१) उभौ वारौ । (२) उभौ संस्तरौ । (३) गीर्पतिः पिता आचार्यशब्दाद्वेदशास्त्राध्यापकश्च गुरुः (४) द्वौ द्वापरौ । (५) भेदे सादृश्ये च प्रकारः । (६) उभौ आकारौ । (७) सस्ये शूके च किंशारुः । (८) निर्जलदेशे पर्वते च मरुः । (९) त्रिषु अद्रिः । (१०) उभौ पयोधरौ । (११) त्रिषु वृत्राः । (१२) त्रिषु कराः । (१३) भङ्गे स्त्रीरोगे बाणे च प्रदरः । (१४) अस्राः, अपिना कोणे कचेषु च । (१५) उभौ तूबरौ । (१६) स्वर्णे अपिना वित्तमात्रे च राः । (१७) उभयोः परिकरः । (१८) उभयत्र तारः । (१९) वायौ शारः । स तु कर्बुरे त्रिषु । (२०) प्रतिज्ञादित्रिषु सङ्गरः । (२१) उभयोः मन्त्रः । (२२) रवौ मित्रः । अपिना सख्यौ मित्रम् क्लीबम् ।

मखेषु यूपखण्डेऽपि १स्वरुर्गुह्येऽप्य२वस्करः ।
३आडम्बरस्तूर्यरवे गजेन्द्राणां च गर्जिते ॥ १६९ ॥
४अभिहारोऽभियोगे च चौर्ये संनहनेऽपि च ।
स्याज्जङ्गमे ५परीवारः खड्गकोषे परिच्छदे ॥ १७० ॥
६विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम् ।
द्वारि द्वाःस्थे ७प्रतीहारः प्रतीहार्यप्यनन्तरे ॥ १७१ ॥
विपुले नकुले विष्णौ ८बभ्रुर्ना पिङ्गले त्रिषु ।
९सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु ॥१७२॥
१०दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम् ।
महारण्ये दुर्गपथे ११कान्तारं पुन्नपुंसकम् ॥ १७३ ॥
१२मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ।
देवाद्वृते १३वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये ॥१७४॥

---

(१) यूपखण्डे अपिना दम्भोली स्वरुः । (२) गुह्ये अपिना गूथे अवस्करः । (३) उभयत्र आडम्बरः । (४) त्रिषु अभिहारः । (५) त्रिष्वर्थेषु परीवारः । (६) त्रिष्वर्थेषु विष्टरः । (७) उभयत्र प्रतीहारः । अत्र प्रतीहारीत्यपि । (८) विपुलनकुले विष्णौ च बभ्रुः । पिङ्गले त्रिषु । (९) चतुर्षु अर्थेषु सारः । (१०) द्यूतकारे दुरोदरः । पणे द्यूते च क्लीबम् । (११) उभयत्र कान्तारम् पुन्नपुंसकम् । (१२) परसम्पत्त्यसहने मत्सरः । मात्सर्ययुक्ते कृपणे च त्रिषु । (१३) उभयत्र वरः पुंसि । श्रेष्ठे क्लीबम् मनाक्प्रिये च क्लीबम् ।

वंशाङ्कुरे १करीरोऽस्त्री तरुभेदे घटे च ना ।
ना चमूजघने हस्तसूत्रे २प्रतिसरोऽस्त्रियाम् ॥१७५॥
यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ।
शुकाहिकपिभेकेषु ३हरिर्ना कपिले त्रिषु ॥ १७६ ॥
४शर्करा कर्परांशेऽपि ५यात्रा स्याद्यापने गतौ ।
६इरा भूवाक्सुराप्सु स्या७त्तन्द्री निद्राप्रमीलयोः ॥
८धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि ।
९क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका ॥१७८॥
त्रिषु क्रूरेऽधमेऽल्पेऽपि १०क्षुद्रं ११मात्रा परिच्छदे ।
अल्पे च परिमाणे सा मात्रं कार्त्स्न्येऽवधारणे ॥१७९॥
आलेख्याश्चर्ययो१२श्चित्रं १३कलत्रं श्रोणिभार्ययोः ।
योग्यभाजनयोः १४पात्रं १५पत्रं वाहनपक्षयोः ॥१८०॥

---

(१) पूर्वत्रार्थे **करीरो**ऽस्त्री, अन्ययोः पुंसि । (२) चमूजघने **प्रतिसरः** । पुंसि, हस्तसूत्रे च पुंनपुंसकयोः ( ३ ) यमादिषु चतुर्दशसु **हरिः** । तत्र त्रयोदशसु ना कपिलवर्णे **त्रिलिङ्गः** । ( ४ ) कर्परांशे अपिना खण्डविकृत्यादौ **शर्करा** । ( ५ ) यापने गतौ च **यात्रा** ( ६ ) भ्वादिषु चतुर्षु **इरा** । ( ७ ) उभयत्र **तन्द्री** । ( ८ ) त्रिषु **धात्री** । (९) पञ्चसु **क्षुद्रा** । ( १० ) क्रूरादित्रये **क्षुद्रम्** त्रिषु । (११) परिच्छदादित्रये **मात्रा** स्त्रियाम्, कार्त्स्न्यावधारणयोः **मात्रम्** क्लीबम् । (१२) द्वयोः **चित्रम्** । (१३) उभयत्र **कलत्रम्** । ( १४ ) द्वयोः **पात्रम्** । ( १५ ) वाहने पक्षे च **पत्रम्** ।

निदेशग्रन्थयोः १शास्त्रं २शस्त्रमायुधलोहयोः ।
स्याज्जटांशुकयो३र्नेत्रं ४क्षेत्रं पत्नीशरीरयोः ॥
मुखाग्रे क्रोडहलयोः ५पोत्रं ६गोत्रं तु नाम्नि च ।
७सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च ॥
८अजिरं विषये कायेऽ९प्यम्बरं व्योम्नि वाससि ॥
१०चक्रं राष्ट्रेऽप्य११क्षरं तु मोक्षेऽपि १२क्षीरमप्सु च ।
स्वर्णेऽपि १३भूरिचन्द्रौ द्वौ द्वारमात्रेऽपि १४गोपुरम् ।
गुहादम्भौ १५गह्वरे द्वे रहोऽन्तिकमु१६पह्वरे ॥१८२॥
पुरोऽधिकमुपर्यग्राण्य१७गारे १८नगरे पुरम् ।
मन्दिरं चाथ १९राष्ट्रोऽस्त्री विषये स्यादुपद्रवे ॥१८३॥

---

(१) निदेशे ग्रन्थे च **शास्त्रम्** । (२) उभयत्र **शस्त्रम्** । (३) वृक्ष-मूले वस्त्रभेदे च **नेत्रम्** । (४) उभयत्र **क्षेत्रम्** । (५) क्रोड-हलयोः मुखाग्रे **पोत्रम्** । (६) नाम्नि चेन शैले कुलेऽपि **गोत्रम्** । (७) चतुर्ष्वर्थेषु अपिना कैतवे च **सत्रम्** । (८) विषये काये अपिना चत्वरे च **अजिरम्** । (९) उभयत्र **अम्बरम्** । (१०) राष्ट्रे अपिना सैन्यरथाङ्गयोश्चक्रम् । (११) मोक्षे अपिना ब्रह्मणि च **अक्षरम्** । (१२) अप्सु चेन दुग्धे च **क्षीरम्** । (१३) **भूरिचन्द्रौ** द्वौ स्वर्णेऽपि । (१४) द्वारमात्रे अपिना द्वारे च **गोपुरम्** । (१५) उभौ शब्दौ **गह्वरे**ऽर्थे । (१६) उभौ **उपगह्वरे** । (१७) पुर इत्यादीनि त्रीणि अग्रेऽर्थे । (१८) पुरं मन्दिर-ञ्चेति द्वयम् **अगारे नगरे** च (१९) उभयत्र **राष्ट्रो**ऽस्त्री ।

१दरोऽस्त्रियां भये श्वभ्रे २वज्रोऽस्त्री हीरके पवौ ।
३तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे ॥१८४॥
४औशीरश्चामरे दण्डेऽप्यौशीरं शयनासने ।
५पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले ॥१८५॥
व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ।
६अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ॥
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ।
मुस्तेऽपि ७पिठरं राजकशेरुण्यपि ८नागरम् ॥१८७॥
९शार्वरं त्वन्धतमसे धातुके भेद्यलिङ्गकम् ।
१०गौरोऽरुणे सिते पीते व्रणकार्येऽप्य११रुष्करः॥१८८॥
१२जठरः कठिनेऽपि स्यादधस्तादपि १३चाधरः ।
अनाकुलेऽपि१४चैकाग्रो १५व्यग्रो व्यासक्त आकुले १८९

---

(१) उभयस्मिन् दरोऽस्त्रियाम्। (२) हीरके पवौ च वज्रोऽस्त्री। (३) चतुर्षु तन्त्रम्। (४) उभयत्र औशीरः। शयनासने औशीरम्। (५) करिहस्ताग्रादिषु अष्टसु पुष्करम्। (६) अवकाशादिषु त्रयोदशसु अन्तरशब्दः। (७) मुस्ते अपिना मन्थाने पिठरः। (८) राजकशेरौ अपिना शुण्ठ्यां नागरम्। (९) अन्धतमसे धातुके च शार्वरम्। (१०) त्रिषु गौरः। (११) व्रणकारिणि अरुष्करः। (१२) कठिने उदरे च जठरः। (१३) अनूर्ध्वे ओष्ठे च अधरः। (१४) अनाकुले अपिना एकताने चैकाग्रः। (१५) उभयत्र व्यग्रः।

उपर्युदीच्यश्रेष्ठेष्वप्यु१त्तरः स्याद२नुत्तरः ।
एषां विपर्यये श्रेष्ठे दूरानात्मोत्तमाः ३पराः ॥१९०॥
स्वादुप्रियौ तु ४मधुरौ ५क्रूरौ कठिननिर्दयौ ।
६उदारो दातृमहतो७रितरस्त्वन्यनीचयोः ॥१९१॥
मन्दस्वच्छन्दयोः ८स्वैरः ९शुभ्रमुद्दीप्तशुक्लयोः ।
चूडा किरीटं केशाश्च संयता १०मौलयस्त्रयः ॥१९२॥
द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि ११पीलवः ।
कृतान्तानेहसोः १२कालश्चतुर्थेऽपि युगे १३कलिः॥१९३॥
स्यात्कुरङ्गेऽपि १४कमलः प्रावारेऽपि च १५कम्बलः ।
करोपहारयोः पुंसि १६बलिः प्राण्यङ्गजे स्त्रियाम् ॥१९४॥
स्थौल्यसामर्थ्यसैन्येषु १७बलं ना काकसीरिणोः ।
१८वातूलः पुंसि वात्यायामपि वातासहे त्रिषु ॥१९५॥

---

(१) उपर्यादित्रये **उत्तरः**। (२) एषां विपर्यये श्रेष्ठे च **अनुत्तरः**। (३) दूरादयस्त्रयः **पराः**। (४) उभौ **मधुरौ**। (५) एतौ द्वौ **क्रूरौ**। (६) दातरि महति च **उदारः**। (७) अन्यनीचयो**रितरः**। (८) उभयोः **स्वैरः**। (९) प्रदीप्ते शुक्ले च **शुभ्रम्**। (१०) चूडादयस्त्रयो **मौलयः**। (११) द्रुमप्रभेदादिषु चतुर्षु **पीलवः**। (१२) उभयत्र **कालः**। (१३) चतुर्थे युगे अपिना कलहे च **कलिः**। (१४) कुरङ्गे अपिना कमले च **कमलः**। (१५) प्रावारे अपिना नागराजे **कम्बलः**। (१६) उभयत्र बलिः पुंसि, प्राण्यङ्गजे तु स्त्रियाम्। (१७) स्थौल्यादित्रये **बलम्**। काले हलायुधे च पुंसि। (१८) वातसमूहे

भेद्यलिङ्गः शठे १॰व्यालः पुंसि श्वापदसर्पयोः ।
२मलोऽस्त्री पापविट्किट्टान्यस्त्री ३शूलं रुगायुधम् ॥
शङ्कावपि द्वयोः कीलः ४पालि५स्त्र्यश्रयङ्कपङ्क्तिषु ।
कला६ शिल्पे कालभेदेऽप्या७ली सख्यावली अपि ॥
अ८ब्ध्यम्बुविकृतौ वेला९कालमर्यादयोरपि ।
बहु१लाः कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिषु ॥१९८॥
लीला१०विलासक्रिययोरुप११ला शर्करापि च ।
शोणितेऽम्भसि१२कीलालं १३मूलमाद्ये शिफाभयोः ॥
१४जालं समूह आनायगवाक्षक्षारकेष्वपि ।
१५शीलं स्वभावे सद्वृत्ते सस्ये हेतुकृते १६फलम् ॥
छर्दिर्नेत्ररुजोः क्लीबं समूहे १७पटलं न ना ।

---

वातूलः पुंसि वातासहे तु त्रिषु । (१) शठे व्यालो वाच्यलिङ्गः, श्वापदे सर्पे च व्यालः । (२) पापं विट् किट्टञ्च मलम् । (३) रुगायुधयोः शूलम् । (४) शङ्कौ अपिना ज्वालायां कीलः पुंनपुंसकयोः । (५) अश्रिः, अङ्कः, पङ्क्तिः, एतेषु पालिः स्त्री । (६) उभयत्र कला । (७) सङ्ख्यायां पङ्क्तौ च आलिः । (८) एतेषु त्रिषु वेला । (९) कृत्तिकाः गावश्च बहुलाख्याः । अग्नौ बहुलः । पुंसि शितौ तु बहुलस्त्रिषु । (१०) उभयत्र लीला । (११) शर्करा सिकताः उपला । (१२)द्वयोः कीलालम् । (१३) आद्ये वृक्षजटायां नक्षत्रविशेषे च मूलम् । (१४) समूहादिचतुर्षु जालम् । (१५) स्वभावे सद्वृत्ते च शीलम् । (१६) उभयत्र फलम् । (१७) छर्दिर्नेत्ररुजोः पटलं क्लीबम्, समूहे

अधःस्वरूपयोरस्त्री १तलं स्याच्चामिषे २पलम् ॥
और्वानलेऽपि पा३तालं चैलं ४वस्त्रेऽधमे त्रिषु ।
कुकू५लं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले ॥ २०२ ॥
निर्णीते केव६लमिति त्रिलिङ्गं त्वेककृत्स्नयोः ।
पर्याप्तिक्षेमपुण्येषु ७कुशलं शिक्षिते त्रिषु ॥ २०३ ॥
प्रवा८लमङ्कुरेऽप्यस्त्री त्रिषु ९स्थूलं जडेऽपि च ।
करालो१०दन्तुरे तुङ्गे चारौ दक्षे च ११पेशलः ॥२०४॥
मूर्खेऽर्भकेऽपि १२बालः स्याल्लो१३लश्चलसतृष्णयोः ।
दव१४दावौ वनारण्यवह्नी जन्महरौ १५भवौ ॥२०५॥
मन्त्री सहायः १६सचिवौ पतिशाखिनरा धवाः१७ ।

---

स्त्रीनपुंसकयोः । (१) अधःस्वरूपयोः तलम् । (२) आमिषे पलम् । (३) वाडवाग्नौ अपिना विवरे च पातालम् । (४) वस्त्रे चैलं क्लीबम् , अधमे त्रिषु । (५) कीलैर्व्याप्ते श्वभ्रे च कुकूलम् । तुषानले तु कुकूलः । (६) निर्णीते केवलम् , एकस्मिन् कृत्स्ने च केवलं त्रिषु । (७) पर्याप्त्यादित्रये कुशलम् । शिक्षिते कुशलं त्रिषु । (८) अङ्कुरे अपिना प्रवाले प्रवालम् । (९) जडे अपिना पीवरे च स्थूलं त्रिषु । (१०) उभयोः करालः । (११) चारुदक्षयोः पेशलः । (१२) मूर्खे अर्भके च बालः । (१३) सतृष्णे चले च लोलः । (१४) दवदावौ उभावेतौ वनारण्यवह्नौ स्तः । (१५) जन्महरयोः भवः । (१६) एतयोरर्थे सचिवः । (१७) एते त्रयो

The above-named are all in Sanskrit. There are, besides, paraphrases Karnâta, Kâsmîra, Tibetan, Telungu, Marâtî, Burmese, Siamese, Sinhalese, &c. But we have neither, seen nor heard of a commentary in respect of the Trikândaçesha. Having observed the want of such a work felt by students of Sanskrit, I have consulted several koshas and prepared this commentary ( named Sârârtha-candrikâ ).

The Trikândacesha consists of three divisions, twenty-five chapters and one thousand and fifty-three stanzas. Some copies of the book contain more and others less than that number of stanzas. In the tikà on the first and second divisions I have given the compound words showing the simpler words of which they are formed arranging single words so as to be easily distinguishable from each other, cited from other koshas words having the same signification and in some places I have noted the gender and combination (Sandhi). In the Nânârthavarga of the third division, general meanings are given of all the words as well as particular meanings from other koshas. Of these words, genders, roots. and inflections have been clearly shown. The meanings of particles in the avyaya-varga have been explained and to better elucidate their application examples have been quoted from the poems Cicupâlabadha, Raghu-vamça, Kumârasambhava and other standard works. All the nouns in this work have also been given in an index alphabetically arranged.

In collating the text, I have made use of four books printed in Jayapura, Bombay and Benares. Variations in the text have been found in many places. I am glad to note that the edition printed in Bombay was found the most reliable. Noteworthy variations in the text have been shown in the tikà within inverted commas.

Much care has been taken to secure accuracy in the text and to the writing of the tikà, and if any errors due to oversight or short-comings on my part have crept in, I trust that they would be viewed

with indulgence by the learned reader. If, however, the student will derive any degree of help from this work in his pursuit of knowledge I shall feel amply repaid for my labour.

Gacchatám pathi martyánâm, pádáh kvâpi skhalantihi
Hasanti durjanástatra, samâdadhate sajjanâh.
Jagatyeke prasîdanti parakritye viceshatah,
Kecit tatrâpyasûyanti, svabhávo' yam durâkramah.

Sailabimbârâma, Dodanduwa, Ceylon, *May 14th 1915.*

C. A. SEELAKKHNDHA.
CHIEF HIGH PRIEST.

# अथ प्रस्तावना ।

अयं हि अमरकोषपरिशिष्टरूपस्त्रिकाण्डशेषः श्रीमता राज्ञा पुरुषोत्तमदेवेन विरचितः। "अयं प्रयत्नः पुरुषोत्तमस्य" इत्युक्तत्वात् । अयं नृपतिः पुरुषोत्तमदेवः कदा कतमं भूमण्डलं मण्डयांचकारेति ? । महाराष्ट्रभाषानिबद्धे कविचरित्राख्यग्रन्थे तु पुरुषोत्तमदेवः कलिङ्गदेशाधिपतिर्महीपतिः शालिवाहनशकाब्दचतुर्दशशतकस्य पूर्वमासीदिति । तस्य च राज्ञः कटकाभिधानं नगरं राजधानी बभूव । स च पुरुषोत्तमदेवस्त्वोरीषाख्यः क्षत्त्रिय आसीत्। तेनैव राज्ञा त्रिकाण्डशेषः—हारावली—एकाक्षरकोषश्चेति ग्रन्थत्रयं स्वदेशीयपाठशालोपयुक्तं विधाय प्रणीतमित्याद्युक्तमस्ति । श्रीमता आनन्दरामेण त्वस्य त्रिकाण्डशेषस्य कर्त्ता पुरुषोत्तमदेवो वङ्गदेशीयो हलायुधवंशसमुत्पन्नः कृष्टाब्दीयत्रयोदशशतकोत्तरार्द्धान्न प्राचीन इति नानार्थसङ्ग्रहोपोद्घाते चतुर्दशे पृष्ठे स्पष्टमुच्यते । एतस्य त्रिकाण्डशेषस्य कर्त्ता पुरुषोत्तमदेवो हि कलिङ्गदेशाधिपतिर्महीपतिरेवेति यद्युक्तिरुपदर्शिताप्यस्ति । तस्या आवश्यकतमत्वात् सम्यक् प्रतीयत एव अस्य कर्त्ता राजा पुरुषोत्तमदेव इति । कस्मादिति ? । तेनैव राज्ञा पुरुषोत्तमदेवेन हारावलीसमाप्तावेवञ्चोक्तम् । यथाः—

**सुधिया जनमेजयेन यत्नाद्धृतिसिंहेन समं निरूपितेऽयम् ।**
**विदितो बहुदृश्वभिः कवीन्द्रैर्भुवि कोषानुमतः श्रमो मदीयः ॥**

कोऽयं धृतिसिंहः ? कोऽयं जनमेजयश्चेति ? न तत्र स्फुटीकृतः । अयं धृतिसिंहस्तु कश्चित् सुधीवरो नृपतिरेवासीत् । जनमेजयोऽपि परीक्षिद्राजपुत्रः प्रशस्तधीशाली विद्वद्वर एव । पुरुषोत्तमदेवेनाप्ययं जनमेजयस्तु राजर्षिरिति स्वकोषे त्रिकाण्डशेषे क्षत्त्रियवर्गे चोक्तम् । यथा—"अथ राजर्षिर्जनमेजयसंज्ञकः । पारीक्षितः" इति । अत एवैताभ्यां विद्वन्नृपतिवराभ्यां समं स्वमतैकीकरणार्थं कृतनिरूपणादेव हारावल्याः कृतभारस्तेनैव तत्र विशदीकृतः । तत एवास्या हारावल्या राज्ञा पुरुषोत्तमदेवेन तत्तुल्यैरन्यैर्विद्वन्नृपतिवरैश्च समं निश्चयं कृत्वा निरूप्य सम्भाष्य च करणं भूयिष्ठं ग्रन्थगौरवोत्पादने तस्य राज्ञो नैसर्गिकगुण इति स्पष्टमवगम्यत एव । तस्मादयं त्रिकाण्डशेषस्य कर्त्ता पुरुषोत्तमदेवः कालिङ्गदेशीय ओरीषाख्यक्षत्त्रियवंशसमुत्पन्नो नृपतिरेवेति सम्यङ् निर्णेतुं शक्यते । न त्वन्य इति । राजेन्द्रलालमित्रस्तु "नोटिस् आवु संस्कृतम्यान्युस्क्रिप्टम्" नाम्नि सूचीपत्रे कृष्टाब्दस्य दशमे एकादशे शतके पुरुषोत्तमदेवसत्तां वदति । वयं हि पुरुषोत्तमदेवस्य देशकालनिर्णयम्प्रति किमपि वक्तुं न प्रभवामः । त्रिकाण्डशेषः—हारावली—वर्णदेशनाश्चेति ग्रन्थत्रितयं पुरुषोत्तमदेवप्रणीतमुपलभ्यते । एकाक्षरकोषद्विरूपकोषयोः पुरुषोत्तमदेवकृततायां केचित् सन्दिग्धतां वदन्ति । वयं न तथा वदामः । कस्मात् ? अमरसिंहाचार्यकृतम् अभिधानशास्त्रन्तु अमरकोषः—त्रिकाण्डशेषः—हारावली—एकाक्षरकोषश्चेति एभिश्चतुर्भिरङ्गैः सम्पूर्णं जातमिति पूर्वीयाणां केषाञ्चिद्विदुषां समतम् । तथापि शेषास्तु त्रयो ग्रन्थाः पुरुषोत्तमदेवेनैव विरचिताः सन्ति । अतस्त्वयमेकाक्षरकोषोऽपि पुरुषोत्तमदेवेनैव विरचितव्यो भवेन्नान्येन। श्रीहर्ष—भरतमल्लकृतावन्यौ द्विरूपकोषौ स्याताम्, तथा पुरुषोत्तमदेवकृतस्यापि द्विरूपकोषस्य भवनं शक्यते

एव। केचित्तु एकाक्षरकोषद्विरूपकोषयोः क्वचिदेव पुस्तकेषु पुरुषोत्तमदेवनाममात्रोपलाभोऽपि दृश्यते। न त्ववसानश्लोकादेर्दर्शनम् । अत एव तयोः पुस्तकयोः पुरुषोत्तमदेवकृतभावं सन्दिग्धमिति वदन्ति। तन्न। पुरुषोत्तमदेवप्रणीतौ भेद्यभेदकप्रकाश-विष्णुभक्तिकल्पलताभिधानावन्यावपि ग्रन्थौ समुपलभ्येते। स तु पुरुषोत्तमदेवस्त्रिकाण्डशेषकर्त्ता अयमेव वा इतर इति वाऽस्मान् सम्यङ् न प्रतिभाति॥

अयमपि पुरुषोत्तमदेव आचार्य्यामरसिंहवद्बौद्ध एवासीत् । यतोऽनेन त्रिकाण्डशेषसमारम्भे "जयन्ति सन्तः कुशलं प्रजानां नमो मुनीन्द्राय सुराः स्मृताश्च" इति नमस्कारो दर्शितः । अत्र मुनीन्द्रशब्देन भगवान्मारजिच्छाक्यमुनिरेवोच्यते । न त्वन्यः । "मुनीन्द्रः श्रीघनः शास्ता मुनिः" इत्युक्तेः । यदि वेदानुसारिणापि केनचित्कदाप्येवं नमस्कारो क्रियते ? न क्रियत एव । वैदिकमतविरुद्धत्वात् । किन्तु "स्वर्लोको देवलोकः स्यादवरोहः फलोदयः" इत्यादिना देवदैत्यानां नामान्युक्त्वाऽनन्तरं देवविशेषनामारम्भे शिवविष्ण्वादिनामान्युपेक्ष्य "बुद्धोऽकनिष्ठगमहामुनिधर्म्मचक्ररागाशनिस्त्रिशरणः खसमो दशार्हः" इत्यादिना बुद्धनामान्येव वक्तुमुपक्रान्तानि। यथाऽमरसिंहहेमचन्द्राभ्यां स्वकोषयोर्जिननामानि निर्दिष्टानि तथात्र पुरुषोत्तदेवेन । तेनास्य पुरुषोत्तमदेवस्यापि बौद्धत्वमवसीयते ॥

अयं पुरुषोत्तमदेवः कृष्टाब्दीयत्रयोदशशतकतोत्तरार्द्धान्न प्राचीन इति वचनस्य च राजेन्द्रलालमित्रस्य सूचीपत्रे कृष्टाब्दस्य दशमे एकादशे शतके पुरुषोत्तमदेवजन्मादेशस्य च बहुदूरमन्तरालम् । एवमप्याचार्य्यामरसिंहस्य कृष्टाब्दीयैकादशशतके सत्तान्तु केचिद्विद्वद्वराः संप्रतीच्छन्ति । यद्येतत्तथापि भवेत्तु पुरुषोत्तमदेवस्यापि कृष्टाब्दीये दशमे एकादशे शतके भवनमपि प्रायः सन्दिग्धत्वमापादीयते। एवं सति कृष्टाब्दीये त्रयोदशशतके पुरुषोत्तमदेवस्य सम्भवनं कथमत्र सम्प्रतीच्छनीयं तस्यासन्नतरत्वात् । एतेषां हि कालनिर्णयम्प्रति बहूनि शङ्कास्थानानि भूयो दृश्यन्ते ॥

अयं पुरुषोत्तमदेवोऽपि आचार्य्यामरसिंहवद्बौद्ध इति यदुक्तं पूर्व्वमस्माभिः तदप्यत्र शिष्यशिक्षणार्थं विशदीकृत्य लिख्यते । एतस्मिन् विषये अमरकोषशोधनकर्तृभिर्वामनाचार्य्य-दुर्गाप्रसाद-काशिनाथ-शिवदत्तादिभिः पण्डितैः प्रायः सद्युक्तिप्रदर्शनपूर्व्वकं सम्यङ् निर्णीतम् । तेषु वामनाचार्य्यस्य मतमेव भूयिष्ठमादरणीयम्भवति । तद्यथावतः आविष्क्रियतेऽत्रामरसिंहसत्तायाम् ॥

"अयममरसिंहो बौद्ध एव । तदुक्तं व्याख्यासुधाख्यया ( रामाश्रमीति प्रसिद्धया ) भानुदीक्षितकृतया व्याख्यया समेतस्यामरकोषस्याङ्कितपुस्तके पण्डितशिवदत्तशर्मणा । अयममरसिंहः कदा किंजातीयः कुत्रत्यं महीमण्डलं मण्डयांचकारेति न निश्चितम् । परन्तु "अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः" इत्यादिना देवसामान्यनामान्युक्त्वा देवविशेषनामारम्भेः—

"सर्व्वज्ञः सुगतो बुद्धो धर्म्मराजस्तथागतः ।
समन्तभद्रो भगवान्मारजिल्लोकजिज्जिनः" ।

इत्यादिना बुद्धनाम्नां लेखनेन बौद्धत्वमवसीयते । केचित्तु—

"धन्वन्तरिः क्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य"

इति वैक्रमनवरत्नख्यापकश्लोकतो विक्रमसमकालिकत्वममरसिंहस्य वदन्ति । परे तुः—

"इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा*जयन्त्यष्टौ च शाब्दिकाः" ॥

इति पद्यानुरोधेन पाणिनि समन्तभद्रयोरन्तरालभवत्वं ब्रुवते। अत्रेदं बोध्यम्। इदं न क्रमबोधकम्। पाणिनिमहाभाष्यप्रवृत्तिसमकालिकनिष्पत्तिकचान्द्रव्याकरणकर्त्तुश्चन्द्राचार्य्यस्य पाणिनेः प्रागुल्लेखनात्। अस्य वैयाकरणत्वन्तु "अमरसिंहो हि पापीयान् सर्व्वं भाष्यमचूचुरत्" इति पश्चात्सकलभाष्यतत्त्वज्ञत्वस्य ( सम्पूर्णमहाभाष्यतत्त्वज्ञत्वस्य ) प्रतीतेः प्रतीतमेव। इत्थम्भङ्ग्यन्तरेणोक्तिस्तु बौद्धत्वेन सकलवैदिकविरुद्धत्वात्" इति ॥

बौद्धत्वादेव नानार्थवर्गे "धर्म्मराजौ जिनयमौ" इति श्लोके जिनशब्दस्य पूर्व्वनिपातेन निर्देशोऽमरसिंहेन कृतः। तथा हि "जिनयमौ" इत्यत्र "तापसपर्व्वतौ" इत्यादाविव "अल्पाच्तरम् ( २, २, ३४ ) इत्यादिसूत्राणामप्राप्त्या "अभ्यर्हितञ्च" इति वार्तिकेनैव जिनशब्दस्य पूर्व्वनिपातः। अभ्यर्हितत्वञ्च पूज्यत्वम्। तच्च बौद्धानां मते बुद्धापरपर्य्यायस्य जिनस्य देवविशेषत्वात्स्पष्टमेव। यद्ययममरसिंहो बौद्धो न स्यात्, किन्तु वेदानुसार्य्येव स्यात्तदा वैदिकमते जिनापेक्षया यमस्यैवाभ्यर्हितत्वाच्छन्दोभङ्गाद्यभावाच्च 'यमजिनौ' इत्येव वदेत्। ( तथापि नोक्तम् ) ॥

किञ्चास्य बौद्धत्वे बहवः प्राचीना अमरकोषटीकाग्रन्था अप्यानुकूल्यं भजन्ते। तथा हि— "यस्य ज्ञानदयासिन्धोः" इति प्रथमश्लोकव्याख्यानावसरे "हे धीराः ज्ञानदयासिन्धोः ज्ञानदयाभ्यां सिन्धुरिव सिन्धुस्तस्य अगाधस्य यस्य अनघाः गुणाः सन्ति स भगवान् श्रिये अमृताय च सेव्यतामाराध्यताम्"। इत्यभिप्रायकं विस्तरेणान्वयं प्रदर्श्य विशेष्यानिर्देशप्रयुक्तदोषपरिहारायोक्तं रायमुकुटीकारेण। अत्रानुक्तोऽपि वाक्ये लक्ष्यार्थो ज्ञानदयादिभिः स्फुटं प्रतीयते। यथाः—"अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनाली बालमन्दारपुष्पम्" इत्यादावनुक्तोऽपि सूर्य्य उदयतिना पद्ममुद्राभञ्जनादिना च लक्ष्यते। अन्येतु क्वचिद्विशेषणमपि विशेष्यप्रतिपत्तिकरम्। यथा—"निधानगर्भामिव सागराम्बराम्" इति। एवमिहापि ज्ञानदयासिन्ध्वादिविशेषणं विशेष्यप्रतिपत्तिकरमित्यदोष इत्याहुः। इह तु बुद्धादिपदोल्लेखे कृते दक्षिणापथपथिकसार्थानामनुपादेयता स्यात्। कृष्णादिपदोद्देशे त्वनुपादेयत्वात् तत्कालबलितमदोद्धुराणां बौद्धानामित्युभयसाधारण्येनोपदेयतार्थं मुख्यानुद्देशः"—इति।

अमरदीपिकायामप्युक्तम्—"समुद्रपक्षे सर्व्वज्ञानलक्षणां धियं बुद्धिं रान्ति गृह्णन्तीति धीराः देवाः। बुद्धपक्षे भो धीराः पण्डिताः स बुद्धः सेव्यताम्" इति।

त्रिकाण्डरहस्ये रामनाथेनाप्युक्तम्—"यदाऽसौ कविरमरसिंहो ग्रन्थमेतं चकार तदानीमनादृतवेदपथानां मदोद्धुराणामतिप्राबल्यमासीत्। अत एव कृष्णादिपदोल्लेखे तेषामनुपादेयता स्यात्। बुद्धादिपदोल्लेखे तु दक्षिणापथप्रवृत्तानामनुपादेयता स्यादित्युभयेषां तत्रोपादेयतार्थमस्य मङ्गलश्लोकस्य तादृशी गूढार्थता" इति।

अमरकोषोद्घाटने क्षीरस्वामिनापि—"यस्य भगवतो ज्ञानदययोः बोधकरुणयोः सिन्धोः समु-

* "भवन्त्यष्टादिशाब्दिकाः" इति क्वचित्।

द्रस्येव गम्भीरस्य अनघाः निष्पापाः गुणाः क्षान्त्यादयो बोधिपक्ष्याः सप्तत्रिंशत्'' इति प्रथमश्लोकव्याख्यानावसरे उक्त्वा द्वितीयश्लोकस्यावतरणं दत्तम् । ''इति ग्रन्थारम्भेऽभीप्सितसिद्धिहेतुं जिनमनुस्मृत्य श्रोतृप्रोत्साहनार्थं स्वप्रवृत्तिप्रयोजनं साभिधेयमादिवाक्येनाह समाहृत्येति'' इति ।

एवञ्च यदुक्तं भानुदीक्षितेन-''स्वामी तु ( क्षीरस्वामी तु) ''जिनमनुस्मृत्य'' इति स्मरणलक्षणं मङ्गलमाह । तन्न । जिनवाचकपदस्यात्रादर्शनात् । सामान्यशब्दानां जिनलक्षणविशेषपरत्वेन व्याख्यानस्य वैदिकानामनुचितत्वात् । ''अमरकर्त्तुः ( नामलिङ्गानुशासनकर्त्तुः ) जैनत्वे प्रमाणाभावाच्च'' इति । तत्तु अनादेयमेव । जिनवाचकपदानुपन्यासे कारणस्य प्राचीनै रायमुकुटीकारादिभिरुक्तस्योपदर्शितत्वात् । सामान्यशब्दानां जिनलक्षणविशेषपरत्वेन व्याख्यानस्य बौद्धग्रन्थव्याख्याने प्रवृत्तानां वैदिकानामपि उचितत्वात् । प्रकृतग्रन्थकर्त्तुर्जैनत्वे प्रमाणस्य प्रागुपपादितत्वाच्चेति विचारिभिर्विचार्य्यम्'' ॥

''तदनन्तरमाचार्य्यामरसिंहम्प्रति दुर्गाप्रसाद-काशिनाथ-शिवदत्तादीनां विदुषां मतनिदर्शनम् । ''नामलिङ्गानुशासनप्रणेताऽमरसिंहः कदा कुत्र समुत्पन्न इत्यादि''इति अद्यापि न निश्चेतुं शक्यते । तत्र ''धन्वन्तरिक्षपणकामरसिंहशङ्कु'' इत्यादि नवरत्नश्लोकं ज्योतिर्विदाभरणान्तिमाध्यायस्थं पश्यन्तः कृष्टाब्दारम्भात् प्राक् प्रथमे शतकेऽमरसिंहसत्तां बहवः समर्थयन्ते । विल्सन् पण्डितः स्वकीयसंस्कृताभिधानस्य ( १८१९ मिते कृष्टाब्दे मुद्रितस्य ) भूमिकायां पञ्चशतमिते कृष्टाब्देऽमरसिंह आसीदिति स्थिरीकरोति । डाक्टर केर्ननाम्ना विदुषा बृहत्संहितोपोद्घाते वराहमिहिरामरसिंहौ समकालिकौ । कृष्टाब्दीयषष्ठशतपूर्व्वार्द्धसमुद्भूतौ चेति निर्णीतम् । वेबरपण्डितस्तु अमरकोषातिरिक्ताः सर्व्वेऽपि कोषाः कृष्टाब्दीयैकादशद्वादशशतकाधस्तना एव समुपलभ्यन्ते । अतोमरकोषोऽपि तेभ्यो नातिप्राचीनो भवितुमर्हतीति ''हिष्टरि आव् इण्डियन् संस्कृतलिटरेचर'' नाम्नि ग्रन्थे वदति । एवं संदिग्ध एवाद्याप्यमरकोषस्य समयः । साम्प्रतमुपलभ्यमाने कोषकलापे नैकोप्यमरकोषात्प्राचीन इति सर्व्वसम्मतम् । किन्त्वासन् केचन कोषा अमरकोषात्प्रागपि । ''समाहृत्यान्यतन्त्राणि'' इति तदुक्तेः । अयममरसिंहो बौद्ध आसीदित्यनुमीयते । यतोऽनेनामरकोषे देवदैत्यसामान्यनामान्युक्त्वाऽनन्तरं शिवविष्ण्वादिनामान्युपेक्ष्य ''सर्व्वज्ञः सुगतो बुद्धः'' इत्यादि बुद्धनामान्येव वक्तुमुपक्रान्तानि । यथा हेमचन्द्रेण स्वकोषे जिननामानि । वैदिकमतानुयायी ब्राह्मणस्तु कदापि नैवं कुर्य्यात्'' इति ॥

एवं नवीनैर्वामनाचार्य्य-दुर्गाप्रसाद-काशिनाथ-शिवदत्तादिभिर्भारतदेशीयैः प्रशस्तबुद्धिशालिभिर्ब्राह्मणपण्डितवरैस्तु आचार्य्यामरसिंहस्य बौद्धत्वं प्राचीनत्वञ्चाभिन्ननानाविधसदुपयुक्तिनिदर्शनेन निर्णीतं सम्प्रतीच्छितञ्च दृश्यते । सम्प्रति नानादेशप्रचलितसंस्कृतविशिष्टकोषग्रन्थकृतानाममरसिंह-पुरुषोत्तमदेव-हेमचन्द्र-महेश्वरादीनाञ्च गीर्व्वाणवाणीनिबद्धानामन्यनानाविधन्यायालङ्कारकाव्यादिविशिष्टग्रन्थनिर्मितानां मानतुङ्ग-भूपाल-जम्बुगुरु-प्रभव-शय्यम्भव-यशोभद्र-सम्भूत-भद्रबाहु-स्थूलभद्र-महागिरि-वाग्भट-चन्द्रगोमि-जिनदेवमुनीश्वर-सुहस्ति-सुस्थित-सुप्रतिबुद्ध-कोटिक-वज्रसूरि-प्रद्युम्नसूरि-गुणसेनसूरि-देवचन्द्र-धर्म्मदास-सोमप्रभ-जिनप्रभु-क्षोमनमुनि-क्षेमेन्द्रादीनां प्रशस्तनिपुणबुद्धिशालिनां कविपुङ्गवानाञ्च बौद्धत्वमपि सन्दर्शनं सुश्रवणं साम्प्रतं स्वदेशीयविदेशीयानां बौद्धानां केषाञ्चित् सहृदयानामभन्दानन्दमावहत्येव ॥

परन्त्वमरकोषापरनामधेयस्य नामलिङ्गानुशासनस्यातीव प्रचलितत्वात्तदर्थविशदीकरणेन तत्तद्देशीयैर्बहुभिः पण्डितैः कृतानेकविधाष्टीका अपि भूयिष्ठं विद्यन्ते । तद्यथा—वाक्यप्रदीपः—काशिका—अमरकोषोद्‌घाटनम्—कौमुदी—पदार्थकौमुदी—शब्दार्थसंदीपिका—अमरपञ्जिका—अमरदीपिका—सुबोधिनी—व्याख्यासुधा—शारदासुन्दरी—विद्वन्मनोहरा—अमरविवेकः—मधुमाधवी—पदचन्द्रिका—त्रिकाण्डचिन्तामणिः—त्रिकाण्डविवेकः—प्रदीपमञ्जरी-पीयूषम्—वैषम्यकौमुदी—पदवृत्तिः-पदमञ्जरी—व्याख्यामृतम्—संदेहभञ्जिका—टीकासर्व्वस्वम्; एतदतिरिक्ताः कर्णाट—काश्मीर—तिवेट-तैलङ्ग—महाराष्ट्र—ब्रह्म—स्याम—सिंहलभाषानिबद्धास्तत्तद्देशोपयोगिन्योऽन्या अपि अमरकोषटीका भूयस्यो वर्त्तन्ते ॥

किन्त्वमरकोषपरिशिष्टरूपस्याऽस्य त्रिकाण्डशेषस्य क्वचित्तु देशे केनचित् कृतायाः टीकायाः संविद्यमानता नास्माभिस्तावल्लक्षिता न श्रुता च । अत एव मया सम्प्रति जगदुपकृतये नानाकोषग्रन्थसमालोचनात् सारांशसंकलनेन यथार्थवत् कोषार्थजिज्ञासूनां तदायत्तार्थानाञ्च यथावत् सुगमता स्यात्तथैवेयं "सारार्थचन्द्रिका" नाम टीका कृता । तत्र प्रायः प्रथमद्वितीयकाण्डयोरेकसम्बन्धाभिधेयानां शब्दानां पृथक्पृथग्विधयाऽन्यकोषात् पर्य्यायनामानि च प्रयुज्य क्वचिल्लिङ्गभेदसमासवाक्यानि च प्रदर्शितानि । विशेषतो नानार्थवर्गे सर्व्वेषामभिधानशब्दानां सामान्यार्थान् प्रदर्श्य नानाकोषेभ्यो विशेषार्थानाञ्च संकलनेन लिङ्गधातुप्रत्ययाद्यवयवा अपि दर्शिताः । अव्ययवर्गेपि तत्रोपयुक्तानामव्ययानां सान्वयार्थसहितानि शिशुपालबध—रघुवंश—कुमारसम्भवादिमहाकाव्येभ्यो नानाविधान्युदाहरणानि समुद्धृत्य यथावद्विशदीकृतानि । तद्वदयं त्रिकाण्डशेषः अकारादिवर्णानुपूर्व्यानुसारिण्या शब्दानुक्रमणिकया सनाथीकृतश्च ॥

एतस्य त्रिकाण्डशेषस्य परिशोधने जयपुर—मुम्बयी—काशीषु मुद्रिताश्चत्वारस्त्रिकाण्डशेषपुस्तकाः प्रायोस्माभिरादर्शीकृताः । तेषु मुम्बयीमुद्रितपुस्तकः परिशुद्धः । शेषाः सदोषा एव । तेषु चतुर्षु पुस्तकेषु भूयशो विशेषपाठा अपि दृष्टाः । तेषां कतिपया विशेषतरपाठाः टीकायां तत्र तत्र " " अनेन चिह्नेन प्रयुक्ताः सन्ति । कतिपयास्तथानादरीकृताश्च ॥

एतस्य परिशोधने व्याख्यानकरणे च यथावत्करणार्थं मयापि भूयः समुद्योगः कृतः । तथापि यद्यत्र मम किञ्चित् स्खलितं सुधीभिर्लक्ष्येत तत् परिशोधनीयम् । एतद्दर्शने सुधियः सुकुमारमतयः कोषार्थजिज्ञासवश्च सततं प्रवर्त्तन्तामित्येव मम विनयतः प्रार्थना । तेनैव मम श्रमसाफल्यं भवेदित्यलं पल्लवितेन । अपि चेयं सारार्थचन्द्रिकाख्या व्याख्या तु मया अतः पञ्चदशवर्षादुपरि विरचितेति ज्ञातव्यम् । ॥ शिवमस्तु ॥

**गच्छतां पथि मर्त्यानां पादाः क्वापि स्खलन्ति हि ।**
**हसन्ति दुर्ज्जनास्तत्र समादधति सज्जनाः ॥**
**जगत्येके प्रसीदन्ति परकृत्ये विशेषतः ।**
**केचित्तत्राप्यसूयन्ति स्वभावोऽयं दुराक्रमः ॥**

**श्रीशीलस्कन्धयतिवरस्य ।**

१८३७ शकाब्दे वैशाखमासि प्रथमे दिवसे
लङ्कायां दोडन्दुवग्रामे शैलबिम्बारामविहारात् ॥

॥ श्रीः ॥

# त्रिकाण्डशेषस्य विषयानुक्रमः ।

## प्रथमं काण्डम् ।


| विषयाः | श्लोकाः | विषयाः | श्लोकाः |
|---|---|---|---|
| प्रस्ताविकश्लोकाः | १–३ | ६ शब्दादिवर्गः | १–७ |
| १ स्वर्गवर्गः | ४–७९ | ७ नाट्यवर्गः | १–९ |
| २ व्योमवर्गः | १–" | ८ पातालभोगिवर्गः | १–६ |
| ३ दिग्वर्गः | १–२० | ९ नरकवर्गः | ७– |
| ४ कालवर्गः | २१–३३ | १० वारिवर्गः | १–३० |
| ५ धीवर्गः | १–३ | | |


## द्वितीयं काण्डम् ।


| विषयाः | श्लोकाः | विषयाः | श्लोकाः |
|---|---|---|---|
| १ भूमिवर्गः | १–२० | ६ मनुष्यवर्गः | १–४४ |
| २ पुरवर्गः | १–१० | ७ ब्रह्मवर्गः | १–३१ |
| ३ शैलवर्गः | १–६ | ८ क्षत्रियवर्गः | १–६२ |
| ४ वनौषधीवर्गः | १–४२ | ९ वैश्यवर्गः | १–३६ |
| ५ सिंहादिवर्गः | १–३७ | १० शूद्रवर्गः | १–१८ |


## तृतीयं काण्डम् ।


| विषयाः | श्लोकाः | विषयाः | श्लोकाः |
|---|---|---|---|
| १ विशेष्यनिघ्नवर्गः | १–२७ | ४ अव्ययवर्गः | १–६ |
| २ सङ्कीर्णवर्गः | १–३० | ५ लिङ्गादिसङ्ग्रहवर्गः | १–२४ |
| ३ नानार्थवर्गः | १–४६७ | ६ काण्डसमाप्तिश्लोकः | २४–२५ |


इति त्रिकाण्डशेषस्य विषयानुक्रमः ।

॥ श्रीः ॥

# अथ
# सटीकत्रिकाण्डशेषकोषस्य-
## प्रथमः काण्डः ।

**नमः सम्यक्सम्बुद्धाय ।**

जयन्ति सन्तः कुशलं प्रजानां नमो मुनीन्द्राय सुराः स्मृताश्च ।
स्तुतोऽसि वाग्देवि दयस्व मातर्विधेहि विघ्नाधिप मङ्गलानि ॥ १ ॥

॥ नमः श्रीशाक्यमुनये ॥

प्रणम्य शिवदं बुद्धं सर्वज्ञं विश्वतोमुखम् । सारार्थचन्द्रिकाख्येयं व्याख्या प्रक्रियते मया ॥
पाणिन्यादीन्मुनीन्स्मृत्वा तद्ग्रन्थादीनुपास्य च । भूरिप्रयुक्तशब्दानां स्फुटनायायमुद्यमः ॥
कोषाः सन्त्यत्र भूयांसो विविधा विपुलाश्च ते । अल्पायासेन भाषायाः शिक्षणायायमाग्रहः ॥

इह खलु श्रीमान् पुरुषोत्तमदेवः सुधीवर आचार्यामरसिंहकृते नामलिङ्गानुशासने अभिधानशास्त्रे प्रायेणानुपदिष्टानां संज्ञाशब्दानां परिदीपनाय स्वचिकीर्षितस्याऽस्य त्रिकाण्डशेषकोषस्य निर्विघ्नपरिसमाप्त्यर्थं विहितं प्रणामादिकं मङ्गलसूचनं शिष्यशिक्षार्थं ग्रन्थादौ दर्शयति—जयन्तीत्यादिना ॥ तत्र सन्तः साधवः । प्रशस्तपण्डिता इति यावत् । जयन्ति सर्वोत्कर्षेण प्रवर्तन्ते । जयग्रहणं कुर्वन्त्विति स्पष्टार्थः। जययुक्ता भवन्त्विति वा अत्र "जेस्तुबन्त्वोस्तिबन्ती" इत्यनुशासनादन्तुस्थानेऽन्तिः।अयं तु सच्छब्दः सत्यसाधुधीरादिषु अनेकेष्वर्थेषु प्रवर्तनादिहावश्यं मङ्गलार्थद्योतको भवति । तथा चोक्तं गीतायाम् "ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति । ततस्तु ग्रन्थकार आत्मनः शिष्याणां चाभीष्टसिद्धिकामो जयन्ति सन्त इति प्रथमं सच्छब्दप्रयोगं कृतवानिति भावः । ततः अनन्तरम् । प्रजानां सत्त्वानां कुशलं कल्याणम् आरोग्यं वा । "अश्रुतपदस्यानुसन्धानमध्याहारः" "अनुक्तस्यावश्यं वक्तव्यस्याहरणमध्याहारः" इति वा वचनात् अस्त्विति क्रियापदमध्याहार्यम्। ग्रन्थारम्भे हि कल्याणादिको यः कश्चिदिष्टाभिशंसनसूचकः शब्दप्रयोगः सर्वजनहितकारित्वं समुद्वहति । तथा चोक्तं श्रीमयूरभट्टेन—"कल्याणं वः क्रियासु किशलयरुचयस्ते करा भास्करस्य" इति । मुनीनां प्रत्येकबुद्धादीनां वीतरागाणाम् अथवा श्रोतापन्नादीनां परिशुद्धचित्तानां सतानामार्यगणानाम् इन्द्रः श्रेष्ठः । तदुक्तम्—

**अलौकिकत्वादमरः स्वकोशे न यानि नामानि समुल्लिलेख।**
**विलोक्य तैरप्यधुना प्रचारमथं प्रयत्नः पुरुषोत्तमस्य ॥ २ ॥**

"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः। वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते" इति। अथ वा मन्वत्रिविष्णुहारीतादीनां स्थिरचित्तानां सतानामृषीणाम् इन्द्रः अधिपतिः। अत्र मुनीन्द्रशब्देन भगवान् शाक्यमुनिरेवोच्यते "मुनीन्द्रः श्रीघनः शास्ता" इत्यमरोक्तत्वात्। मुनीन्द्रायेत्यत्र नमःशब्दयोगे चतुर्थी दर्शिता। नमः इत्येतदव्ययं नतावपि वर्तते। तस्मादनेन नमःशब्देनाऽत्र नमस्कारकरणमवश्यमवगम्यते। अस्त्वित्यत्राप्यन्वयः। सुराः देवाः स्मृताः अनुस्मरणपथं नीताः। मयेति शेषः। क्वचित् 'स्थ' इति पाठः। एवं सति भवथेत्यर्थः। यूयमिति शेषः। यत्र ग्रन्थादौ देवतानुस्मरणं कस्यचित् ऐहलौकिकस्य फलस्य सिद्धयेऽप्यावश्यकम् ॥ तथाप्याहुः पूर्वीयाः—"देवता वर्ण्यते यत्र क्वापि काव्ये कवीश्वरैः। मित्रामित्रविचारो वा न तत्र फलकल्पना ॥ देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि च॥" इति। वाग्देवि हे सरस्वति त्वं भवती स्तुता असि स्तवं कृता भवसि ॥ मयेत्यन्वयः। वागधिकृते ग्रन्थारम्भे सरस्वत्याः अनुस्मरणं शिष्यशिक्षकयोर्ज्ञानसमृद्ध्यै हिताय च सर्वथैव प्रयोजनं भवति। तत आह जयदेवः—"वाग्देवताचरितचित्रितचित्तसद्मा" इति ॥ मातः हे अम्ब त्वं दयस्व अनुकम्पां कुरु। मयीति शेषः। अत्र ग्रन्थोत्पादनसमये मातृशब्देनैव मातुरनुस्मरणं शिवप्रसादलाभायाभाषितम्। इयं माता तु शिवसहचरी। तस्याः अनुस्मरणाच्छिवः प्रसीदत्येवेति केषाञ्चिन्मतम्। ताः मातरोऽष्टौ भवन्तीति पूर्वीयैरुक्तम्। यथा—"ब्राह्मी माहेश्वरी चण्डी वाराही वैष्णवी तथा। कौमारी चैव चामुण्डा चर्चिकेत्यष्टमातरः" इति। विघ्नाधिप हे गणेश त्वं भवान् मङ्गलानि शुभानि। अभीष्टार्थसिद्धिकराणीत्यर्थः ॥ विधेहि कुरु। विपूर्वो धा धातुः करणार्थे वर्तते। ममेति शेषः। केचित्तु शिष्याणामिति पदं शेषः इति पठन्ति ग्रन्थकरणावस्थायां विघ्नराजस्य स्मरणं सकलविघ्नोपशान्त्या ज्ञानोत्पादने सामर्थ्यं जनयते इति केषाञ्चिच्छाब्दिकानां मतम्। अयमस्य स्पष्टार्थः॥ १ ॥

अमरः आचार्यामरसिंहः स्वकोशे स्वयं कृते नामलिङ्गानुशासने अभिधानग्रन्थे यानि नामानि अभिधानानि। अलौकिकत्वात् लोकव्यवहारविषये प्रायेणाविदितत्वात्। लौकिकप्रत्यक्षागम्यत्वादिति भावः। न समुल्लिलेख न समुद्दीतानि कृतवान्। न लिखितवानित्यर्थः। अन्तर्गतानि सर्वाणि नामानि पञ्चविधानि भवन्ति। उणाद्यन्तं कृदन्तं तद्धितान्तं समासान्तमनुकरणमिति। यथा—"उणाद्यन्तं कृदन्तं च तद्धितान्तं समासजम्। शब्दानुकरणं चेति नाम पञ्चविधं स्मृतम् ॥" इति। तैः अमरसिंहेन अनुक्तैर्नामभिरपि। अपिशब्दः समुच्चये। अधुना अस्मिन् काले प्रचारं प्रसरणम्। महर्षीणां तेषुतेषु वाक्यरचनादिषु प्रायः प्रयोगमिति, भावः। विलोक्य विशेषेण समीक्ष्य। न श्रुतिवशात् स्वचक्षुषैव दृष्ट्वेत्यर्थः। पुरुषोत्तमस्य तन्नामकस्य विदुषः अयं प्रयत्नः परिशिष्टनामसङ्कलने कार्यों

वर्गक्रमस्तथा नामलिङ्गयोस्तूपदेशता ।
परिभाषादिकं सर्वमत्राप्यमरकोषवत् ॥ ३ ॥
स्वर्लोको देवलोकः स्यादवरोहः फलोदयः ।
मन्दरः सैरिभः शक्रभवनं खं दिवं नभः ॥ ४ ॥
स्वाहाभुजस्तु वसुलाः पूजिताश्च चिरायुषः ।
शौभा निलिम्पा द्युषदः स्वर्गिणश्च नभःसदः ॥ ५ ॥

नुकूलः प्रयासः । भवतीत्यन्वयः ॥ २ ॥ अत्रापि अस्मिन् त्रिकाण्डशेषकोषेऽपि वर्गक्रमः वर्गाणामनुक्रमः तथा तद्वत् नामलिङ्गयोः नाम्नां लिङ्गानां च उपदेशता उपदेशकथनं च। तुशब्द-श्चार्थे क्वचित् । 'सूपदेशता' इति पाठः । अनुशासनविधिरित्यर्थः । परिभाषादिकं कृत्रिमसंज्ञा-दिकं वा विशिष्टसंज्ञादिकं च सर्वं सकलमपि अमरकोषवत् । अमरकोषे उक्तानुक्रमस्येवेत्यर्थः । क्वचित् 'अमरसिंहवत्' इति पाठः । अस्मिंस्तु त्रिकाण्डशेषकोषे नाम्नां स्त्रीपुंनपुंसकलिङ्गभेददर्शनं परिभाषादिकानां संज्ञानां दर्शनं च अमरकोषे आचार्यामरसिंहेन उक्तविधिनैवावगन्तव्यमिति भावः । अत्रापि प्रायः रूपभेदेन आकारविशेषेण च स्त्रीपुंनपुंसकं ज्ञेयम् । यथा । स्वर्लोको देवलोकः स्यादवरोहः फलोदयः । विकटा वज्रवाराही गौरी पौत्रिरथा च सा । शक्रभवनं खं दिवं नभः । तथा, क्वचित् शब्दान्तरसान्निध्याल्लिङ्गं ज्ञेयम् । यथा—दैत्यमाता दितिर्दनुः । अथ हंसरथो ब्रह्मा विरिञ्चोऽष्टश्रवः सनत् । खं मरुन्मेघवर्त्म च । अत्र संयुक्ताः दनुसनन्मेघवर्त्म शब्दाः दैत्यमातृविरिञ्चखशब्दैः साहचर्यात् स्त्रीपुंनपुंसकलिङ्गा भवन्ति । तथा, क्वचिल्लिङ्गविशेष-कथनाच्च स्त्रीपुंनपुंसकत्वं दर्शयति । यथा—गाडवः कन्वरो वातरथो वारिमसिः स्त्रियाम् । क्लीबं च शैलशिबिरं धरणीप्लवश्च । पुमान् काचङ्गलो वाङ्क इति । तथा, स्त्रीपुंनपुंसकलिङ्गकथ-नेषु त्रिष्विति पदं स्त्रीपुंसयोर्द्वयोरिति पदं प्रयुक्तम् । निषिद्धलिङ्गे अस्त्री अपुमानिति पदे च प्रयुज्येते । यथा—छेको नागरिके त्रिषु । ग्रन्थिपर्णे च न द्वयोः । अनीकोऽस्त्री रणे सैन्ये । तारकं दर्शिभे न नेति । तथाऽत्र त्वन्तशब्दः अथादिशब्दश्च पूर्वेण न सम्बध्यते । यथा—लोक नाथस्तु लोकेश इति । लोकनाथ इति त्वन्तं पदं पौत्रिरथया न सम्बध्यते । किंतु लोकेशश-ब्देन सम्बद्धम् । तथा—स्वयम्भुवोऽथ मारीची त्रिमुखा वज्रकालिका । इत्यथादिपदं न पूर्व-भाक् । किंतु प्रत्येकबुद्धस्य पर्यायः । एवमत्र यानि वक्तव्यानि अपराणि स्युस्तान्यत्र अमरकोषो-क्तक्रमेणाप्यूहनीयानि ॥३॥ अथाभिधानकथनमारभते—**स्वर्लोक** इति॥स्वर्लोकः देवलोकः अव-रोहः । ततो हि सर्वे जनाः भोगावसाने यस्मादवतरन्तीति सः। फलोदयः । फलस्य कर्मफलस्य उदयः दृष्टियोग्यस्थानम् । मन्दरः सैरिभः "शैरिभः" सैरिकः" शक्रभवनं खं दिवं नभः इति दश नामानि **स्वर्गस्य** ॥ अत्र शक्रभवनं खं दिवं नभः इति इमे शब्दाः नपुंसकाः । शेषाः पुंल्लिङ्गाः ॥ ४ ॥ स्वाहाभुजः वसुलाः "सुवलाः इति केशवे । "सुवालाः" इति हैमे । पूजिताः चिरायुषः। चिरमायुर्येषां ते । शौभाः निलिम्पाः द्युषदः स्वर्गिणः नभःसद् "नभस्सद्"

ऋनामा त्वदितिर्देवमाता स्यादथ पूर्वजाः ।
पितरश्चन्द्रगोलस्था न्यस्तशस्त्राः स्वधाभुजः ॥ ६ ॥
कव्यवालादयस्ते च दैत्यास्तु प्रघसाः खराः ।
क्रतुद्विषश्चेष्टिमुषो दैत्यमाता दितिर्दनुः ॥ ७ ॥
बुद्धोऽकनिष्ठगमहामुनिधर्मचक्रा
रागाशनिस्त्रिशरणः खसमो दशार्हः ।
तापी गुणाकरमहासुखवज्रिणश्च
मैत्रीबलासमजितारिसमन्तभद्राः ॥ ८ ॥
महाबोधिर्धर्मधातुः श्वेतकेतुर्जिनः खजित् ।
त्रिमूर्तिर्दशभूमीशः पञ्चज्ञानो बहुक्षमः ॥ ९ ॥
सम्बुद्धः करुणाकूर्चः सर्वदर्शी महाबलः ।
विश्वबोधो धर्मकायः संगुप्तोऽर्हन्मुनिश्चितः ॥ १० ॥

इति नव **देवानाम्** ॥ अत्र सर्वे पुँल्लिङ्गाः । व्यक्तिबाहुल्याद्बहुवचनप्रयोगः ॥५॥ ऋनामा अदितिः देवमाता इति त्रीणि **अदित्याः** । सर्वाः स्त्रीलिङ्गकाः ॥ पूर्वजाः "पूर्वजाः" पितरः चन्द्रगोलस्थाः । न्यस्तशस्त्राः । न्यस्तानि क्षिप्तानि शस्त्राणि आयुधानि यैस्ते । स्वधाभुजः इति पञ्च **पितृदेवानाम्** ॥६॥ कव्यवालाः "काव्यबालाः" इत्येकं **पितृदेवभेदस्य** ॥ गणवाचकत्वादत्र बहुवचनप्रयोगः । दैत्याः प्रघसाः खराः "चेरतुः खरदूषणौ च" इति भट्टिः । कचित्तु क्षवाः क्षराः इति च पाठौ । क्रतुद्विषः इष्टिमुषः "इष्टिमृषः" । इष्टीः यागान् मुष्णन्तीति ते ॥ इति पञ्च **असुराणाम्** ॥ दैत्यमाता दितिः दनुः इति त्रीणि **असुरमातुः** ॥ ७ ॥ बुद्धः अकनिष्ठगः । अकं पापं तस्य निष्ठम् अवसानम् अगमदिति सः । महामुनिः धर्मचक्रः "धर्मवक्रः" रागाशनिः "रागारिः" त्रिशरणः । त्रिषु लोकेषु शरणं रक्षणं यस्य सः ॥ खसमः । खेन आकाशेन समाः तुल्याः गुणाः यस्य सः । दशार्हः तापी गुणाकरः महासुखः वज्री । वज्रं ज्ञानवज्रमस्यास्तीति सः । मैत्रीबलः असमः । नास्ति समोऽस्येति सः । जितारिः ॥ जिताः पराजिताः अरयः रागादिक्लेशाः येन सः । समन्तभद्रः ॥ ८ ॥ महाबोधिः धर्मधातुः श्वेतकेतुः । श्वेतः शुक्लः केतुः ध्वजो यस्य सः । जिनः खजित् त्रिमूर्तिः । तिस्रो मूर्तयो शारीरिकपारिभोगिकोद्देशिकाः प्रतिमाः यस्य सः । दशभूमीशः पञ्चज्ञानः । पञ्च ज्ञानानि यस्य सः । बहुक्षमः । बह्वी क्षमा यस्य सः ॥ ९ ॥ सम्बुद्धः करुणाकूर्चः । करुणा एव कूर्चो यस्य सः । समन्तभद्रः । "समन्तभद्रः संगुप्तो दयाकूर्चो विनायक" इति हेमः । अथवा करुणः।करुणा दया अस्यास्तीति सः। कूर्चः । कूर्चं भ्रुवोर्मध्ये स्थितं लोम। "कूर्चमस्त्री भ्रुवोर्मध्यम्" इत्यमरः । "कूर्चमस्त्री भ्रुवोर्मध्ये कत्थनश्मश्रुकैतवे" इति कोषान्तरम् । तदस्यास्तीति

व्यामाभो द्वादशाख्यश्च वीतरागः सुभाषितः ।
सर्वार्थसिद्धस्तु महाश्रमणः कलिशासनः ॥ ११ ॥
गोपेशश्चाथाऽस्य यशोधरेयो राहुलः सुतः ।
देवदत्तोऽनुजोऽथ स्युः श्रावकाः शिष्यसंज्ञिनः ॥ १२ ॥
प्रत्येकबुद्धाः खड्गाः स्युः सुदान्ताश्चैकचारिणः ।
स्वयम्भुवोऽथ मारीची त्रिमुखा वज्रकालिका ॥ १३ ॥
विकटा वज्रवाराही गौरी पौत्रिरथा च सा ।
लोकनाथस्तु लोकेशः सरोजो गुणसागरः ॥ १४ ॥
लोकेश्वरः कृपाद्वैतः सुधावर्षी हलाहलः ।
सुखावतीश्वरः कन्यारामोऽसिताभ्रशेखरः ॥ १५ ॥
चिन्तामणिः पद्मपाणिर्बहुरूपः खसर्पणः ।
अनीचदर्शी कारण्डव्यूहः पोतलकप्रियः ॥ १६ ॥

सः । सर्वदर्शी महाबलः विश्वबोधः धर्मकायः संगुप्तः अर्हन् सुनिश्चितः ॥ १० ॥ व्यामाभः ॥ तिर्य्यक् पार्श्वतो विस्तृतयोर्बाह्वोरन्तरालपरिमाणे स्थाने आभा प्रभा यस्य सः । कचित्तु "व्योमाभः" । व्योम्ना आकाशेन आभाः तुल्याः गुणाः यस्य सः । द्वादशाख्यः । द्वादश आख्या अस्य । द्वादशाख्यः सूर्य्य इति नाम यस्य स वा । वीतरागः । वीतः अपगतः रागः आलयो यस्मात् सः । सुभाषितः । शोभनानि भाषितानि यस्य सः । इति सप्तत्रिंशन्नामानि **बुद्धस्य** ॥ सर्वार्थसिद्धः महाश्रमणः कलिशासनः "कुलिशासनः" । कलौ युगे शासनम् अनुशासनं यस्य सः । अथ वा कलौ पापे विवादे वा शासनं हितसाधनं यस्य सः ॥ ११ ॥ गोपेशः । गोपानां ( गोकुलस्थगोपानां ) ईशः स्वामी । इति चत्वारि **शाक्यमुनेः** ॥ यशोधरेयः राहुलः इति द्वे **शाक्यमुनिसुतस्य** ॥ देवदत्तः इत्येकं **शाक्यमुनिभ्रातुः** ॥ अत्र तु महामायानाम देवी किल एकमेव सिद्धार्थकुमारं प्रसूता । तस्मादस्य शाक्यमुनेरेकमातृगर्भजातः अन्यः सहोदरो नाऽसीत् । राज्ञः शुद्धोदनस्य तु प्रजापतीगोतमीनामिकायाः अपरायाः देव्याः नन्द इति एकः पुत्रः नन्देति एका दुहिता चाऽभवताम् । तावेकमातृगर्भसंभवाविति दाक्षिणात्येषु बौद्धधर्मप्रकाशितेषु पुस्तकेषु दृष्टम् ॥ श्रावकाः । ये यस्य धर्मानुशासनं शृण्वंति ते । शिष्यसंज्ञिनः । इति द्वे **शिष्याणाम्** ॥ १२ ॥ प्रत्येकबुद्धाः खड्गाः सुदान्ताः एकचारिणः । एकाकिचरणशीलमेषां ते । स्वयम्भुवः इति पञ्च **प्रत्येकबुद्धानाम्** ॥ मारीची त्रिमुखा वज्रकालिका । वज्रमिव कालो वर्णोऽस्त्यस्याः सा ॥ १३ ॥ विकटा वज्रवाराही गौरी पौत्रिरथा इति सप्त **मायादेव्याः** ॥ लोकनाथः लोकेशः सरोजः गुणसागरः ॥ १४ ॥ लोकेश्वरः कृपाद्वैतः । कृपया अद्वैतं द्विधा भेदगतभावं नास्ति यस्य सः । अथवा कृतं सजातीयादिभेदशून्यं येन सः । सुधावर्षी हलाहलः सुखावतीश्वरः कन्यारामः असिताभ्रशेखरः । असितः कृष्णवर्णः अभ्रः मेघ इव शेखरः शिखा यस्य सः ॥ १५ ॥ चिन्तामणिः

जटाधरो महावीर्यो वज्रसूर्योऽवलोकितः ।
तारा महाश्रीरोङ्कारा स्वाहाश्रीश्च मनोरमा ॥ १७ ॥
तारिणी च जयाऽनन्ता शिवा लोकेश्वरात्मजा ।
खदूरवासिनी भद्रा वैश्याली च सरस्वती ॥ १८ ॥
शंखिनी च महातारा वसुधारा धनन्ददा ।
त्रिलोचना लोचना स्यान्मणिभद्रस्तु जम्भलः ॥ १९ ॥
पूर्वयक्षो जलेन्द्रोऽथ मञ्जुश्रीर्ज्ञानदर्पणः ।
मञ्जुभद्रो मञ्जुघोषः कुमारोऽष्टारचक्रवान् ॥ २० ॥
स्थिरचक्रो वज्रधरः प्रज्ञाकार्यश्च वादिराट् ।
नीलोत्पली महाराजो नीलः शार्दूलवाहनः ॥ २१ ॥
धियांपतिः पूर्वजिनः खड्गी दण्डी विभूषणः ।
बालव्रतः पञ्चवीरः सिंहकेलिः शिखाधरः ॥ २२ ॥
वागीश्वरोऽथ हेवज्रो हेरुकश्चक्रसंवरः ।
देवो वज्रकपाली च निशुम्भः शशिशेखरः ॥ २३ ॥
वज्रकीटोऽथ मैत्रेयो युवराजोऽजितश्च सः ।
चीवरी श्रमणो भिक्षुर्वैलयश्चैत्रोऽथ चेलुकः ॥ २४ ॥

पद्मपाणिः । पद्मं पाणौ यस्य सः । बहुरूपः खसर्पणः अनीचदर्शी कारण्डव्यूहः पोतलकप्रियः ॥ १६ ॥ जटाधरः महावीर्यः वज्रसूर्यः "वज्रसूर्यः" अवलोकितः इति द्वाविंशतिर्**बुद्धविशेषस्य** ॥ तारा महाश्रीः ओङ्कारा स्वाहाश्रीः मनोरमा ॥ १७ ॥ तारिणी जया अनन्ता शिवा लोकेश्वरा आत्मजा खदूरवासिनी भद्रा वेश्याली "वैश्या" सरस्वती "नीलसरस्वती" ॥ १८ ॥ शङ्खिनी महातारा वसुधारा।वसोः चेदिराजस्य प्रियार्थं धारा घृतादिस्रवसन्ततिर्यस्याः सा।धनन्ददा। त्रिलोचना । त्रीणि लोचनानि यस्याः सा । लोचना । इत्येकविंशति**रूपदेवताविशेषस्य** ॥ मणिभद्रः जम्भलः ॥ १९ ॥ पूर्वयक्षः जलेन्द्रः । जलस्य इन्द्रः प्रधानः । इति चत्वारि **पूर्वयक्षस्य** ॥ मञ्जुश्रीः ज्ञानदर्पणः । ज्ञानमेव दर्पणं यस्य सः । मञ्जुभद्रः "मञ्जुवक्त्र" मञ्जुघोषः कुमारः अष्टारचक्रवान् ॥ २० ॥ स्थिरचक्रः वज्रधरः प्रज्ञाकायः वादिराट् । वादिनां राजा । नीलोत्पली महाराजः नीलः क्वचित् "महोराजनीलः" इति । शार्दूलवाहनः । शार्दूलो व्याघ्रविशेषः वाहनं यानं यस्य सः ॥ २१ ॥ धियांपतिः पूर्वजिनः खड्गी । खड्गम् अस्यास्तीति सः । दण्डी । दण्डः अस्याऽस्तीति सः । विभूषणः बालव्रतः पञ्चवीरः सिंहकेलिः । सिंहस्येव केलिः क्रीडा यस्य सः । शिखाधरः । शिखां चूडां धरतीति सः ॥ २२ ॥ वागीश्वरः । वाचाम् ईश्वरः प्रधानः । इति चतुर्विंशतिः **पूर्वजिन इति ख्यातस्य उपास्यदेवभेदस्य** ॥ हेवज्रः " हेरम्बः " हेरुकः चक्रसंवरः देवः वज्रकपाली निशुम्भः "निशुम्भी" शशिशेखरः ॥ २३ ॥ वज्रकीटः इत्यष्टौ **वज्रकीटस्य** ॥ मैत्रेयः युवराजः

श्रामणेरः प्रव्रजितो महापासकगोमिनौ ।
अथ हंसरथो ब्रह्मा विरिञ्चोऽष्टश्रवः सनत् ॥ २५ ॥
कञ्जः प्राणश्च वेदीशवेदगर्भौ पुराणगीः ।
अब्जजो विश्वरेताश्च कमलः प्रपितामहः ॥ २६ ॥
नाभिजन्मा शतधृतिर्ब्राह्मी तु ब्रह्मकन्यका ।
वाग्देवी शारदा शुक्ला महाश्वेता सरस्वती ॥ २७ ॥
अथ हरिशतबिन्दुश्रीकरश्रीवराहा-
जितपरपुरुषश्रीगर्भषड्बिन्द्वनन्ताः ।
नरकजिदृतधामा केशवो जन्मकीलः
क्रतुपुरुषनृसिंहश्रन्थजह्नूच्चदेवाः ॥ २८ ॥
कोकः पुराणपुरुषो नलिनेशयश्च
वासुर्नरायणपुनर्वसुविश्वरूपाः ।
अः श्रीनिवासधरणीधरवामनैक-
शृङ्गाश्च वृष्णिवृषशत्रुदशावताराः ॥ २९ ॥

अजितः इति त्रीणि **भाविबुद्धस्य** ॥ चीवरी । चीवरमस्याऽस्तीति । श्रमणः भिक्षुः बल्यः क्वचित् "वन्यः" इति । चैत्रः इति पञ्च **बौद्धभिक्षोः** । चेलुकः ॥२४॥ श्रामणेरः प्रव्रजितः महापासकः गोमी । गौः प्रभुरस्याऽस्तीति । क्वचित् "गोल्मिकः गोमिकः" इति पाठौ । इति पञ्च **भिक्षुशिष्यस्य श्रमणोद्देशस्य** ॥ हंसरथः । हंसो रथो यस्य । सः ब्रह्मा विरिञ्चः अष्टश्रवः । अष्टौ श्रवाः कर्णाः यस्य सः । सनत् ॥ २५ ॥ कञ्जः । कमिति अव्ययं तस्मिन् के पद्मे जातः । प्राणः वेदीशः । वेदीनाम् ईशः स्वामी । वेदगर्भः पुराणगीः "पुराणगः" अब्जजः । अब्जे पद्मे जायत इति । विश्वरेताः । विश्वं रेतो जन्म यस्य सः । कमलः प्रपितामहः ॥ २६ ॥ नाभिजन्मा । नाभौ विष्णुनाभौ जायत इति ॥ शतधृतिः इति षोडश **ब्रह्मणः** । ब्राह्मी ब्रह्मकन्यका वाग्देवी शारदा शुक्ला महाश्वेता सरस्वती इति सप्त **सरस्वत्याः** ॥ २७ ॥ हरिः शतबिन्दुः । शतानि बिन्दवो यस्य सः । श्रीकरः श्रीवराहः अजितः परपुरुषः । पुरुषेषु परः उत्तमः । वा परः श्रेष्ठश्चाऽसौ पुरुषः । श्रीगर्भः । श्रीर्गर्भेऽस्य सः । षड्बिन्दुः । षट् बिन्दवो यस्य सः । अनन्तः नरकजित् । नरकं नरकासुरं जितवान् । ऋतधामा । ऋतं सत्यं धाम यस्य सः । केशवः जन्मकीलः क्रतुपुरुषः "क्रतुपुरुषः" नृसिंहः । ना चाऽसौ सिंहश्च वा ना सिंह इव शौर्यादिमत्त्वात् । श्रन्यजह्नुः । उच्चदेवः ॥ २८ ॥ कोकः पुराणपुरुषः पुराणैरुपस्तुत्यः पुरुषः । नलिनेशयः । नलिने पद्मे शेते सः । वासुः नरायणः "नारायणः" पुनर्वसुः विश्वरूपः अः । "अः स्यादभावे स्वल्पार्थे विष्णावेप त्वनव्ययम्" इति विश्वः । श्रीनिवासः धरणीधरः वामनः एकशृङ्गः वृष्णिः वृषशत्रुः । वृषस्य कामस्य शत्रुः । दशावतारः ॥ २९ ॥

सोमगर्भादिदेवादिवराहस्वर्णबिन्दवः ।
गदाग्रजो मुञ्जकेशी सदायोगी सनातनः ॥ ३० ॥
रन्तिदेवशिवकीर्तनौ त्रिपात्सोमसिन्धुरपि राहुमूर्धछित् ।
कालनेमियवनारिपाण्डवाभीलसिन्धुवृषकृष्णकेशिनः ॥ ३१ ॥
हेमशंखः शतावर्त्ती मनुसात्वतवारिशाः ।
वर्द्धमानः सतानन्दो जगन्नाथः सुयामुनः ॥ ३२ ॥
पूतनाधेनुकारिष्टकेशिचाणूरसूदनः ।
भूकश्यपस्त्वस्य पिता दुन्दुक्षित्यदितिः प्रसूः ॥ ३३ ॥
स्यन्दनस्तु शतानन्दः सारथिश्चास्य दारुकः ।
तुरङ्गाः शैब्यसुग्रीवमेघपुष्पबलाहकाः ॥ ३४ ॥
ध्वजो भुजङ्गहा मन्त्री पवनव्याधिरुद्धवः ।
शैनेयस्तु शिनेर्नप्ता युयुधानश्च सात्यकिः ॥ ३५ ॥
बलभद्रस्तु हालः स्यात्सौनन्दी हलतालभृत् ।
संवर्तकी गुप्तचरो रुक्मिदार्य्येककुण्डलः ॥ ३६ ॥

सोमगर्भः । सोमस्य तदात्मकामृतरूपमोक्षस्य गर्भः स्थानं यस्य सः । आदिदेवः । आदौ दीव्यति स्वयं राजते सः । आदिवराहः । आद्यो वराहः तस्यादिवराहरूपत्वात् । स्वर्णबिन्दुः । स्वर्णवर्णाः बिन्दवो यस्य सः । गदाग्रजः मुञ्जकेशी सदायोगी सनातनः ॥ ३० ॥ रन्तिदेवः शिवकीर्तनः त्रिपाद् । त्रयः पादाः यस्य सः । सोमसिन्धुः राहुमूर्धछित् । राहोः सिंहिकासुतस्य मूर्धानं छिनत्ति सः । क्वचित् "राहुमूर्धभिद्" इति पाठः । कालनेमिः यवनारिः पाण्डवः आभीलः सिन्धुवृषः कृष्णः केशी ॥ ३१ ॥ हेमशङ्खः शतावर्ती मनुः "शतावर्त्यासन्द" इति क्वचित् पाठः । सात्वतः वारिशः । वारिणि समुद्रे शेते । वर्धमानः सतानन्दः जगन्नाथः सुयामुनः ॥ ३२ ॥ पूतनासूदनः धेनुकसूदनः अरिष्टसूदनः केशिसूदनः चाणूरसूदनः "चानूरसूदनः" । "द्वन्द्वात्परं श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यते" इति न्यायात् परस्थितः सूदनशब्दः पूतनादिभिः शब्दैः पृथक्पृथक् सम्बन्धनीयः । न तु केवलैः पूतनादिशब्दैर्विष्णुनामावगम्यते । "केशिनिसूदनः" अप्यत्र । इति षट्षष्टि **विष्णोः** ॥ अस्येति प्रत्येकं सम्बध्यते । भूकश्यपः इत्येकं **विष्णोः पितुः** ॥ दुन्दुक्षितौ अदितिः इति द्वे **विष्णोर्मातुः** ॥ ३३ ॥ शतानन्दः । शतमानन्दयति सः । इत्येकं **विष्णो रथस्य** ॥ दारुकः इत्येकं **विष्णोः सारथेः** ॥ शैब्यः सुग्रीवः मेघपुष्पः बलाहकः इति चत्वारि **विष्णोस्तुरङ्गाणाम्** ॥ ३४ ॥ भुजङ्गहा इत्येकं **विष्णोर्ध्वजस्य** । पवनव्याधिः पवनेन जनितो व्याधिर्यस्य सः । उद्धवः इति द्वे **विष्णोर्मन्त्रिणः** ॥ शैनेयः शिनेर्नप्ता युयु:-धानः सात्यकिः । सत्यकस्य वृष्णिवंश्यनृपस्यापत्यम् । इति चत्वारि **सात्यकेः** ॥ ३५ ॥ बलभद्रः

मधुप्रियोऽथ प्रद्युम्नो जराभीरुः शमातकः ।
प्रसूनाशनिपञ्चेषू कञ्जनो मधुसारथिः ।
रागरज्जुः कलाकेलिमधुदीपरवीषवः ॥ ३७ ॥
इः केतुर्मकराङ्कः सङ्कल्पभवोऽङ्गजश्च रूपास्त्रः ।
रणरणको रतिरमणः संसारगुरुर्मनोजन्मा ॥ ३८ ॥
कार्ष्णिश्चाऽस्य प्रिया रागलता केलिकला [१]रतिः ।
सेः केलती चाऽस्य बाणा मोहनोन्मादनौ तथा ॥ ३९ ॥
सन्तापनः शोषणश्च निश्चेष्टीकरणोऽपि च ।
सुतोऽनिरुद्धः स्याद्विश्वकेतुः प्रीतितृषौ सुते ॥ ४० ॥
श्री च लक्ष्मी चला सा मा रमाजलधिजेऽन्दिरा ।
मणिः स्यमन्तको हस्ते विष्णोरुरसि कौस्तुभः ॥ ४१ ॥
तार्क्ष्यः शिलौकः कामायुररुणो वरजश्चिरात् ।
पक्षिसिंह उलूतीशो वज्रतुण्डः सुधाहरः ।
स्वर्णपक्षः सुमुखसूः शाल्मली भुजगाशनः ॥ ४२ ॥

हालः सौनन्दी हलभृत् तालभृत् संवर्तकी गुप्तचरः रुक्मिदारी एककुण्डलः ॥३६॥ मधुप्रियः इति दश **बलभद्रस्य** ॥ प्रद्युम्नः जराभीरुः शमातकः प्रसूनाशनिः "प्रसूनासमः" पञ्चेषुः कञ्जनः मधुसारथिः रागरज्जुः कलाकेलिः मधुदीपः रवीषुः ॥३७॥ इः केतुः "कन्तुः" मकरांकः सङ्कल्पभवः अङ्गजः रूपास्त्रः रणरणकः रतिरमणः । रत्याः रमणः पतिः । संसारगुरुः । संसारस्य गुरुर्महान् । मनोजन्मा । मनसि जायते सः । कार्ष्णिः इति द्वाविंशतिः **अनङ्गस्य** ॥ ३८ ॥ रागलता केलिकला रतिः "केलिकलावती" सेः केलती इति पञ्च **कामभार्यायाः** । मोहनः उन्मादनः ॥ ३९ ॥ सन्तापनः शोषणः निश्चेष्टीकरणः "निश्चेष्टाकरणः" इति पञ्च **कामबाणानाम्** ॥ तेषां पृथक्पृथक् एकैकस्य एकैकमेव नाम भवति । ते कतमा इति ? । "अरविन्दमशोकश्च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः" इति । अनिरुद्धः विश्वकेतुः द्वे **अनङ्गसुतस्य** ॥ प्रीतिः तृट् इति द्वे **अनंगसुतायाः** ॥ ४० ॥ श्रीः लक्ष्मीः ई चला सा मा रमा जलधिजा इन्दिरा इति नव **लक्ष्म्याः** ॥ स्यमन्तकः इत्येकं **विष्णोर्हस्तमणेः** ॥ कौस्तुभः इत्येकं **विष्णोः उरोमणेः** ॥ ४१ ॥ तार्क्ष्यः शिलौकः कामायुः अरुणः वरजः चिरात् । चिरमतति । अतः किप् । पक्षिसिंह उलूतीशः "उलूतीशः" वज्रतुण्डः । वज्रमिव तुण्डं मुखं यस्य सः । सुधाहरः स्वर्णपक्षः । स्वर्णमिव पीतौ पक्षौ यस्य सः । सुमुखसूः शाल्मली भुजगाशनः । भुजगान् सर्पान् अश्नाति । इति चतुर्दश **गरुडस्य** ॥४२॥

---

१ श्रीलक्ष्मीशब्दौ 'कृदिकारादक्तिनः' इति ङीपन्तौ ।

**शम्भुर्भगाली कपिशाञ्जनश्च हीरः कटप्रूर्भरुरेरिहाणौ ।**
**पुरारिपञ्चाननभैरवाट्टहासप्रहासाश्च खकुन्तलश्च ॥ ४३ ॥**
**कण्ठेकालजयन्तगुह्यगुरवो जोतिङ्गगोपालकौ**
**पिङ्गाक्षः कटमर्दरैवतजटाटङ्काव्ययाः कूटकृत् ।**
**चन्द्रापीडमहानटौ च शमिरो हः शैलधन्वा जटा-**
**चीरोऽथर्वणनन्दिवर्धनगुडाकेशाग्रकालञ्जराः ॥ ४४ ॥**
**मिहिराणो जगद्योनिष्टङ्कटीकोऽब्जवाहनः ।**
**कृतङ्करो वरो बुद्धः सुप्रतापोऽकुतश्चलः ॥ ४५ ॥**
**उः स्थाणुः शिपिविष्टश्च मः कीलो धर्मवाहनः ।**
**विरूपविषमत्र्यक्षाः सन्ध्यानटी वृषाञ्चनः ॥ ४६ ॥**
**एकपाद्भौतिको भद्रोर्ध्वरेताः पांशुचन्दनः ।**
**अस्थिमाली शिवश्चाऽस्य खट्वाङ्गस्तु सुखंघुणः ॥ ४७ ॥**
**अजगवोऽजगावश्च वृषो भृङ्गी रिटिस्त्वसौ ।**
**भृङ्गरिटः शलो भृङ्गी नाडीदेहोऽस्थिविग्रहः ॥ ४८ ॥**
**महाकालो महाभीमो महाकायो वृषाणकः ।**
**द्वाःस्थस्तु नन्दीशालङ्कायनस्ताण्डवतालिकाः ॥ ४९ ॥**

शम्भुः भगाली कपिशाञ्जनः हीरः कटप्रूः भरुः रेरिहाणः पुरारिः पञ्चाननः भैरवः अट्टहासः प्रहासः खकुन्तलः ॥ ४३ ॥ कण्ठेकालः जयन्तः गुह्यः गुरुः जोतिङ्गः "जोटिङ्गः", गोपालकः पिङ्गाक्षः कटमर्दः रैवतः जटाटङ्कः अव्ययः । नास्ति व्यये विनाशे यस्य सः । कूटकृत् चन्द्रापीडः महानटः शमिरः "शशिधरः" हः शैलधन्वा जटाचीरः "जटाटीनः" अथर्वणः । नन्दिवर्द्धनः गुडाकेशः अग्रः कालञ्जरः ॥ ४४ ॥ मिहिराणः जगद्योनिः टङ्कटीकः "कङ्कटीकः" अब्जवाहनः कृतङ्करः "कृष्करः" वरः बुद्धः क्वचित् "वरबुद्धः वरवृद्धः" इति च पाठौ । सुप्रतापः "सुप्रसादः" अकुतश्चलः "अद्भुतस्वनः" ॥ ४५ ॥ उः स्थाणुः शिपिविष्टः मः कीलः धर्मवाहनः विरूपः विषमः त्र्यक्षः सन्ध्यानटी "सन्ध्यानाटी", वृषाञ्चनः ॥ ४६ ॥ एकपाद् । एकं पदं पदगतियोग्यकालो यस्य सः । भौतिकः भद्रः ऊर्ध्वरेताः पांशुचन्दनः अस्थिमाली शिवः इति त्रिषष्टिः **महादेवस्य** ॥ खट्वांगः सुखंघुणः । क्वचित् "सुखंखणः" इति पाठः । इति द्वे **शिवखट्वाङ्गस्य** ॥ ४७ ॥ अजगवः । अजगावः । क्वचित् "अजकवः अजकावः" इति पाठः । इति द्वे **शिवधनुषः** ॥ वृषः भृङ्गी इति द्वे **शिववृषभस्य** ॥ असौ, रिटिः भृङ्गरिटः "भृङ्गरिटिः" शलः भृङ्गी "भृङ्गिः" नाडीदेहः अस्थि-विग्रहः इति षट् **शिवपार्श्वानुचरस्य भृङ्गिणः** ॥ ४८ ॥ महाकालः महाभीमः महा-कायः वृषाणकः इति चत्वारि **नन्दिनः** ॥ नन्दी शालङ्कायनः ताण्डवतालिकः नन्दिकेश्वरः

स्यान्नन्दिकेश्वरोऽथार्या ह्रिण्डी शिखरवासिनी ।
शक्तिः सिंहरथा गोला सिनीवाली दृषद्वती ॥ ५० ॥
सौः कृष्णपिङ्गला लम्बा शैलेयी गणनायिका ।
वारालिकैकानंशा च शिवदूती यमस्वसा ॥ ५१ ॥
कोटवी बाभ्रवी कैटभी कैटभा यादवी कर्बुरी चेश्वरी चेश्वरा ।
भ्रामरी दक्षकन्या च बर्हिध्वजी नन्दपुत्री च मारी च कालञ्जरी ॥
गौतमी तामसी षष्ठी जयन्ती शूलधृक् सती ।
सिंहस्तस्या मनस्तालः सख्यौ च विजयाजये ॥ ५३ ॥
वज्रशुण्डः करिमुखः पृष्णिशृङ्गो गणाग्रणीः ।
त्रिधातुरेकदन्तश्च द्विदेहो मूषिकाश्वनः ॥ ५४ ॥
विघ्नहारी कुमारस्तु स्वामी द्वादशलोचनः ।
बालचर्यः सिद्धसेनः कुक्कवाकुध्वजश्च सः ॥ ५५ ॥
देवराजस्तु लः कौशिकोऽसन्महा—
बाहुदन्तेयदल्मीवराणोऽद्रिभित् ।
वज्रपाणिर्महेन्द्रः सुरग्रामणी—
र्यामनेमिर्वृषा नाकनाथो हरिः ॥ ५६ ॥
प्राचीनबर्हिः खदिरः कपिलाश्वो वरक्रतुः ।
प्राचीपतिस्तपस्तङ्कः पुलोमारिश्च माहिरः ॥ ५७ ॥

इति चत्वारि **शिवद्वारस्थस्य** ॥ ४९॥ आर्या ह्रिण्डी शिखरवासिनी शक्तिः सिंहरथा गोला सिनीवाली । सिनीं श्वेतां चन्द्रकलां वलति धारयति । दृषद्वती ॥ ५० ॥ सौः "सोः" कृष्णपिंगला लम्बा शैलेयी गणनायिका वारालिका एकानंशा शिवदूती यमस्वसा ॥ ५१ ॥ कोटवी बाभ्रवी कैटभी कैटभा यादवी कर्बुरी ईश्वरी ईश्वरा भ्रामरी दक्षकन्या बर्हिध्वजी नन्द-पुत्री मारी कालञ्जरी ॥ ५२ ॥ गौतमी तामसी षष्ठी जयन्ती शूलभृक् सती इति सप्तत्रिंशत् **पार्वत्याः** ॥ मनस्तालः इत्येकं **पार्वत्याः सिंहस्य** ॥ विजया जया इति द्वे **पार्वत्याः सख्योः** ॥ ५३ ॥ वज्रशुण्डः करिमुखः पृष्णिशृङ्गः गणाग्रणीः त्रिधातुः एक-दन्तः । एको दन्तोऽस्य । द्विदेहः मूषिकाश्वनः ॥ ५४ ॥ विघ्नहारी इति नव **गणेशस्य** ॥ कुमारः स्वामी द्वादशलोचनः बालचर्यः । बालानां चर्या यस्य सः । सिद्धसेनः कुक्कवाकुध्वजः इति षट् **कार्तिकेयस्य** ॥ ५५ ॥ देवराजः लः कौशिकः असन् "असत्" इत्यपि पाठः । महाबाहुः दन्तेयः दल्मी "दाल्मी" वराणः अद्रिभित् । अद्रिं पर्वतं भिनत्ति वा अद्रेर्भित् यस्य सः । वज्रपाणिः महेन्द्रः सुरग्रामणीः यामनेमिः वृषा नाकनाथः हरिः ॥ ५६ ॥ प्राचीनबर्हिः खदिरः कपिलाश्वः वरक्रतुः प्राचीपतिः तपः तङ्कः पुलोमारिः "पुलोमशत्रुः पुलोमारिपुः

पृतनाषाड् भियात्वस्य चारुधारा शतावरी ।
शची सुता देवसेना मातलिस्तु हयङ्कषः ॥ ५८ ॥
उच्चैःश्रवाः श्वेतहयो वृषणाश्वोऽमरावती ।
वृषभासा सुरपुरी वनमैन्द्रं वृषण्वसु ॥ ५९ ॥
नन्दनं कन्दसारं स्यान्मिश्रकावनमित्यपि ।
हस्तिमल्लश्चतुर्दन्तो भद्ररेणुर्मदांवरः ॥ ६० ॥
श्वेतद्विपः सुदामाऽथ वज्रोऽस्त्री गिरिकण्टकः ।
वज्राशनिर्भिदुर्भिद्रो जम्भारिस्त्रिदशायुधम् ॥ ६१ ॥
शतधारं शतारं चाश्रोत्थं भिदिरमम्बुजम् ।
मार्जारकर्णी चामुण्डा कर्णमोटिश्च चर्चिका ॥ ६२ ॥
विद्याधरः कामरूपी खेचरः स्थिरयौवनः ।
स्पर्शानन्दा रतिमदाऽप्सरसः सुमदात्मजा ॥ ६३ ॥
देवोद्यानानि वैभ्राजं मिश्रकं सिध्रकावणम् ।
चैत्ररथं च नासिक्यौ युजौ दस्रौ गदागदौ ॥ ६४ ॥
शुष्मघासिघसवोऽश्वतिर्जुहूर्वाण ईषिरतुषग्रहाशिराः ।
छागवाहनपृदाकुबर्हिषः स्वर्णसप्तधृतमन्त्रदीधितिः ॥ ६५ ॥

पुलोमवैरी" प्रभृतयोऽप्यत्र । माहिरः ॥ ५७ ॥ पृतनाषाड् । "पृतनासाट्" अप्यत्र । पृतनां सेनां साहयते । इति षड्विंशतिः **इन्द्रस्य** ॥ चारुधारा शतावरी शची "शचिः" इति त्रीणि **इन्द्रपत्न्याः** ॥ देवसेना इत्येकम् **इन्द्रसुतायाः** ॥ मातलिः इत्येकं **हयङ्कषस्य इन्द्रसारथेः** ॥ ५८ ॥ उच्चैःश्रवाः । उच्चैरुन्नतं श्रवोऽस्य । श्वेतहयः वृषणाश्वः इति त्रीणि **इन्द्राश्वस्य** ॥ अमरावती वृषभासा सुरपुरी इति त्रीणि **इन्द्रपुरस्य** ॥ वृषण्वसु ॥ ५९ ॥ नन्दनं कन्दसारं मिश्रकावनम् इति चत्वारि **इन्द्रवनस्य** ॥ हस्तिमल्लः चतुर्दन्तः भद्ररेणुः मदांवरः ॥ ६० ॥ श्वेतद्विपः सुदामा इति षट् **ऐरावतस्य** ॥ वज्रः गिरिकण्टकः वज्राशनिः भिदुः भिद्रः जम्भारिः "जम्भावी" त्रिदशायुधम् ॥ ६१ ॥ शतधारम् शतारम् अश्रोत्थं भिदिरम् अम्बुजम् इति द्वादश **वज्रायुधस्य** ॥ मार्जारकर्णी चामुण्डा कर्णमोटिः क्वचित् "कर्ममोटिः" चर्चिका । इति चत्वारि **चामुण्डायाः** ॥ ६२ ॥ विद्याधरः कामरूपी खेचरः स्थिरयौवनः इति चत्वारि **विद्याधरस्य** ॥ स्पर्शानन्दा रतिमदा अप्सरसः सुमदात्मजा "सुदमात्मजा" इति चत्वारि **अप्सरसः** ॥ ६३ ॥ वैभ्राजं मिश्रकं सिध्रकावणम् । सिध्रकप्रधानं वनम् । णत्वं दीर्घश्च । **चैत्ररथम्** इति चत्वारि **दिव्योद्यानानाम्** ॥ एकैकमेकैकस्य । नासिक्यौ युजौ दस्रौ गदागदौ इति चत्वारि **अश्विनीकुमारयोः स्ववैद्ययोः** ॥ ६४ ॥ शुष्म "शुष्मा" अप्यत्र । **घासि-**घसवः "घासिसधयः" अश्वतिः । "अङ्कतिः" अप्यत्र । जुहूः बाणः ईषिः अतुषः ग्रहः **अशिरः**

पर्परीकहवनात्मनिपीथाः सप्तजिह्वसमिधावसितार्चिः ।
नाचिकेतभुजिभारतविश्वप्साः शुचिः पचिसमन्तभुजौ च ॥६६॥
वडवाग्निस्तु सलिलेन्धनः स्याद्वडवामुखम् ।
काकध्वजो वाणिजश्च स्कन्धाग्निः स्थूलकाष्ठधृक् ॥ ६७ ॥
छागणस्तु करीषाग्निस्तृणाग्निः स्यात्तरत्समः ।
तुषानलः कुकूलः स्यान्मुर्मुरोऽथाग्निकुक्कुटः ॥ ६८ ॥
सङ्किलो दहनोल्का स्यादङ्गारः कोकिलाज्झुलौ ।
धूमोऽम्भसूर्मरुद्वाहखतमालशिखिध्वजाः ॥ ६९ ॥
अग्निवाहस्तरीः स्वाहा त्वग्नायी दहनप्रिया ॥
जीवितेशो यमः शीर्णपादश्च महिषध्वजः ॥ ७० ॥
मन्दोऽस्य कान्ता धूमोर्णा चित्रगुप्तस्तु लेखकः ।
भृत्यौ चण्डमहाचण्डौ कालीमी तु विचारभूः ॥ ७१ ॥
पञ्जिका त्वग्रसन्धानी नृचक्षास्तु खसात्मजः ।
कीलालपः पलाशी च क्षपाटो नरविश्वणः ॥ ७२ ॥

छागवाहनः पृदाकुबर्हिषः, "सृदाकुबर्हिषः" स्वर्णभासो दीधितिशब्दः स्वर्णादिभिः शब्दैर्योज्यः । यथा—स्वर्णदीधितिः सप्तदीधितिः घृतदीधितिः मन्त्रदीधितिः ॥ ६५ ॥ पर्परीकः हवनम् आत्मा निपीथः सप्तजिह्वः समिधः असितार्चिः । "असितकार्चिः" अप्यत्र । नाचिकेतभुजिः । "नाचिकेताः" अप्यत्र । भारतः विश्वप्सः । विश्वं प्साति भक्षति सः । शुचिः पचिः समन्तभुक् । समन्तात् भुंक्ते सः । इति अष्टाविंशतिः अग्नेः ॥ ६६ ॥ वडवाग्निः । वडवायाः शिवसृष्टाश्वाया मुखस्थोऽग्निः । वडवानलादयोऽप्यत्र । सलिलेन्धनः वडवामुखम् काकध्वजः वाणिजः स्कन्धाग्निः स्थूलकाष्ठधक् "तृणकाष्ठधृक्" इति सप्त वडवानलस्य ॥ ६७ ॥ छागणः करीषाग्निः इति द्वे करीषाग्नेः ॥ तृणाग्निः तरत्समः "चपलः" इति द्वे तृणाग्नेः ॥ तुषानलः कुकूलः मुर्मुरः इति त्रीणि तुषानलस्य ॥ अग्निकुक्कुटः । अग्नेः कुक्कुट इव रक्तवर्णस्फुलिङ्गत्वात् ज्वलदग्निव्याप्ततृणपुञ्जः ॥ ६८ ॥ सङ्किलः दहनोल्का । दहनस्य उल्का पतत्तेजःपुञ्जः । इति त्रीणि अग्निकणायाः ॥ अङ्गारः कोकिलः अज्झुलः इति त्रीणि अङ्गारस्य ॥ धूमः अम्भसूः मरुद्वाहः खतमालः शिखिध्वजः ॥ ६९ ॥ अग्निवाहः तरीः "स्तरी" इति सप्त धूमस्य ॥ स्वाहा अग्नायी दहनप्रिया इति त्रयः अग्निपत्न्याः ॥७०॥ जीवितेशः यमः शीर्णपादः महिषध्वजः मन्दः इति पञ्च यमस्य ॥ धूमोर्णा इत्येकं यमपत्न्याः ॥ चित्रगुप्तः इत्येकं यमलेखकस्य ॥ चण्डः महाचण्डः इति द्वे यमभृत्ययोः ॥ कालीमी । "कालीची" इति क्वचित्पाठः । इत्येकं विचारभुवः ॥ ॥ ७१ ॥ पञ्जिका अग्रसन्धानी इति द्वे यमपञ्जिकायाः ॥ यया तु प्राणिवर्गस्य प्राग्भवीयकर्मानुसारेण शुभा-

सन्ध्याबलो रात्रिमठो हनूषः शमनीषदः ।
पलाशो विखुरः शंकुः कापीशेयस्तु पिण्डकः ॥ ७३ ॥
पिशाचो मेघनादस्तु वरुणो वः परञ्जयः ।
दैत्यदेवश्च वातिस्तु नभःप्राणो जगद्बलः ॥ ७४ ॥
भोगिकान्तः कम्पलक्ष्मायश्च धारावलिश्च वाः ।
खश्वासः क्षिपणुर्धूलिध्वजः सरयुरङ्कतिः ॥ ७५ ॥
वातुलो वातगुल्मः स्याच्चरवायुर्निदाघजः ।
झञ्झानिलः प्रावृषिजो वासन्तो मलयानिलः ॥ ७६ ॥
श्रीदधनकेलिमयुराट्श्वेतोदररत्नगर्भनिधिनाथाः ।
कुतनुकुहेच्छावसवः पिशाचकी सत्यसङ्करस्त्रिशिराः ॥ ७७ ॥
अस्त्री पद्मो महापद्मः शंखो मकरकच्छपौ ।
मुकुन्दकुन्दनीलाश्च खर्वाः स्युर्निधयो नव ॥ ७८ ॥
सुतोऽस्य मायुराजः स्यात्तथा वर्णकविर्निधौ ।
आसङ्गिनी च वाताली स्याद्वात्या वातमण्डली ॥ ७९ ॥

इति स्वर्गवर्गः ॥ १ ॥

---

शुभसूचनं सर्वं लिख्यते, सा यमपञ्जिका । केचित् यमपट्टिकेति वदन्ति । नृचक्षाः । नॄन् चष्टे पश्यति भक्ष्यत्वेन । खसात्मजः कीलालपः पलाशी क्षपाटः नरविश्वणः ॥ ७२ ॥ सन्ध्याबलः रात्रिमठः हनूषः शमनीषदः पलाशः विखुरः शंकुः इति त्रयोदश **यमदूतस्य राक्षसस्य॥** कापीशेयः पिण्डकः "पिङ्गकः" ॥ ७३ ॥ पिशाचः इति त्रीणि **पिशाचस्य** ॥ मेघनादः मेघस्येव नादो यस्य सः । वरुणः वः परञ्जयः दैत्यदेवः इति पञ्च **वरुणस्य** ॥ वातिः नभः-प्राणः जगद्बलः ॥ ७४ ॥ भोगिकान्तः कम्पलक्ष्मा यः धारावलिः "धारावनिः" वाः खश्वासः क्षिपणुः धूलिध्वजः सरयुः अङ्कतिः । अञ्चतिरप्यत्र । इति त्रयोदश **वायोः** ॥ ७५ ॥ वातुलः वातगुल्मः इति द्वे **वातगुल्मस्य** ॥ चरवायुः इत्येकं **निदाघवायोः** ॥ झञ्झानिलः इत्येकं **प्रावृड्वायोः** ॥ मलयानिलः इत्येकं **वसन्तकालभववायोः** ॥ ७६ ॥ श्रीदः धनकेलिः मयुराट् "मनुराट्" श्वेतोदरः रत्नगर्भः निधिनाथः कुतनुः कुहेच्छः आवसुः पिशाचकी सत्यसङ्करः त्रिशिराः इति द्वादश **कुबेरस्य** ॥ ७७ ॥ पद्मः महापद्मः शङ्खः मकरः कच्छपः मुकुन्दः कुन्दः नीलः खर्वाः । क्वचित्तु "चर्चा" इति पाठान्तरम् । इति प्रत्येकमेकैकं **नवानां महानिधीनाम्** ॥ ७८ ॥ मायुराजः वर्णकः विनिधः इति त्रीणि **कुबेरसूनोः** ॥ आसङ्गिनी वाताली वात्या वातमण्डली इति चत्वारि **वातभ्रमस्य** ॥७९॥ इति स्वर्गवर्गः ॥१॥

कुनाभिः स्याद्विहायस्तु खं मरुन्मेघवर्त्म च ।
अक्षरं चा [इति व्योमवर्गः२] थ पाथोदः खतमालो गदाम्बरः१
मदयित्नुर्वायुदारुर्व्योमधूमो नभोगजः ।
गडेरः कन्धरो वातरथो वारिमसिः स्त्रियाम् ॥ २ ॥
करका स्याद्घनकफो बीजोदकमिराचरम् ।
मेघास्थिवर्षणन्तु स्याद्गोमूत्रञ्च परामृतम् ॥
सौदाम्नी त्वशनिर्विद्युदणुभा वाऽचिरद्युतिः ॥ ३ ॥
तिथिप्रणीर्दर्शविपन्निशामणिस्त्रिनेत्रचूडामणिरत्रिनेत्रभूः ।
सुधाङ्गमौ द्वौ मृगपिप्लुपक्षजौ दशाश्वसिप्रग्रहनेमिचन्दिराः॥४॥
छायामृगधरो राजा माः परिज्ञो बलक्षगुः ।
द्विजो दाक्षायणी तुङ्गी रोहिणी यज्वनाम्पतिः ॥ ५ ॥
उडुपः पर्वधिः क्लेदो जयन्तस्तपसो हरिः ।
तारापीडः खचमसो विकसः सिन्धुनन्दनः ॥ ६ ॥

कुनाभिः विहायः "विहायसम्" खं मरुत् मेघवर्त्म । मेघस्य वर्त्म मार्गो यस्मिन् । अक्षरम् । नास्ति क्षरो नश्वरं यस्य । इति षट् **आकाशस्य** ॥ इति व्योमवर्गः ॥ २ ॥ पाथोदः खतमालः । ख तमाल इव सः । गदाम्बरः॥१॥मदयित्नुः वायुदारुः व्योमधूमः।व्योम्नः धूम इव नीलत्वात् । नभोगजः । नभसि गज इव । गडेरः "गाडुरः" कन्धरः । कं जलं धारयति । वातरथः । वातस्य रथः । वारिमसिः । वारि जलं मसिरिव नीलतापादकं यस्य । इत्येकादश **मेघस्य** ॥ २ ॥ करका "करकः" । स्त्रियां गौरादित्वात् ङीष् । "करकी" घनकफः । घनस्य मेघस्य कफ इव । "घनककः" बीजोदकम् इराचरम् । इरासु चरति "इराचरम्" मेघास्थि । मेघानामस्थीव संहतकठिनत्वात् । इति पञ्च **वर्षोपलस्य** ॥ वर्षणं गोमूत्रं परामृतम् इति त्रीणि **वृष्टेः** ॥ सौदाम्नी "सौदामनी" "सौदामिनी" । सुदामा पर्वतभेदस्तेनैका दिक् तत्प्रान्तभवत्वात् । अशनिः विद्युत् अणुभा । अण्वी सूक्ष्माभा दीप्तिर्यस्याः । सा अचिरद्युतिः । अचिरा बहुकालास्थायिनी द्युतिर्यस्याः । इति षट् **विद्युतः** ॥ ३ ॥ तिथिप्रणीः । तिथीन् प्रणयति स्वगत्या निष्पादयति । दर्शविपत् "दर्शविपद्" निशामणिः त्रिनेत्रचूडामणिः अत्रिनेत्रभूः सुधाङ्गः । सुधेवाप्यायनमङ्गमस्य । मः मृगपिप्लुः । मृगः शशः पिप्लुः कृष्णचिह्नं यस्य । 'मृगपिप्लुः' पक्षजः दशाश्वः दश अश्वा रथे यस्य । सिप्रः प्रग्रहः "प्रग्रहः" नेमिः चन्दिरः ॥ ४ ॥ छायाधरः छायाभृदादयोऽप्यत्र । मृगधरः । शशभृदादयोऽप्यत्र । राजा माः परिज्ञः बलक्षगुः । बलक्षाः शुक्लवर्णाः गावः रश्मयः यस्य सः । द्विजपतिः दाक्षायणीपतिः तुङ्गीपतिः रोहिणीपतिः यज्वनाम्पतिः ॥ ५ ॥ उडुपः "उडुपः" । उडूनि नक्षत्राणि पाति । पर्वधिः "पर्वणिः" क्लेदः "क्लेदुः" जयन्तः तपसः हरिः तारापीडः । तारापीडेव यस्य ।

चन्द्रिका चन्द्रशाला स्यान्नीहारः खनिशाजलम् ।
शीतं तु शीतलं पत्रहिमं तु हिमदुर्दिनम् ॥ ७ ॥
कुज्झटिर्धूममहिषी रत्तांध्री च कुहेलिका ।
धूमिका च नभोरेणुरथाऽगस्त्याग्निमारुती ॥ ८ ॥
सत्याग्निर्वारुणिर्विन्ध्यकूटो वातापिसूदनः ।
दीप्ताग्निरौर्वशेयश्च समुद्रचुलुकोऽस्य तु ॥ ९ ॥
प्रियी कौषीतकी लोपामुद्राख्या च विदर्भजा ।
प्राक्फाल्गुनेयस्तूतथ्यानुजः पारुष्यगोरथौ ॥ १० ॥
दीदिविर्द्वादशकरश्चक्षाः सुरगुरुर्गुरुः ।
शुक्रो भः शतपर्वेशो मघाभूर्भृगुरास्फुजित ॥ ११ ॥
षोडशार्चिर्नवार्चिस्तु मङ्गलः खोल्मुकः कुजः ।
बुधो हेमा राजपुत्र एकदेहः प्रहर्षणः ॥ १२ ॥
स्यात्पञ्चार्चिः श्रविष्ठाजः श्यामाङ्गैकाङ्गरोधनाः ।
शनैश्चरो नीलवासा मन्दश्छायात्मजः शनिः ॥ १३ ॥

खच्चमसः । खे आकाशे चमसः पात्रविशेष इव । विकसः "विकुसः" सिन्धुनन्दनः । सिन्धोः सागरस्य नन्दनः सुतः । इति चतुस्त्रिंशत **चन्द्रस्य** ॥ ६ ॥ चन्द्रिका । चन्द्रः स्वाश्रयत्वेनास्यास्तीति । चन्द्रशाला । चन्द्रः शालेवाधारो यस्याः । इति द्वे **चन्द्रकिरणस्य** ॥ नीहारः खनिशाजलम् इति द्वे **हिमस्य** ॥ शीतं शीतलम् इति द्वे **शीतलस्य** ॥ पत्रहिमं:हिमदुर्दिनम् इति द्वे **हिमदुर्दिनस्य** ॥ ७ ॥ कुज्झटिः "कुज्झटी" धूममहिषी रत्तांध्री "रतार्था" कुहेलिका "कुहोधिका" धूमिका नभोरेणुः इति षट् **कुहेलिकायाः** ॥ अगस्त्याग्निः मारुतिः ॥ ८ ॥ सत्याग्निः वारुणिः । वरुणस्याऽपत्यम् । विन्ध्यकूटः वातापिसूदनः । वातापिं सूदयति हिनस्ति । दीप्ताग्निः । दीप्तः अग्निर्जठरानलो यस्य । और्वशेयः समुद्रचुलुकः । समुद्रः चुलुकः गण्डूषमितजलमिव अनायासेन पीतत्वाद्यस्य । इति नव **अगस्तिमुनेः** ॥ ९ ॥ कौषीतकी "कौशीतकी" लोपामुद्रा विदर्भजा । विदर्भे कुण्डिननगरे जायते । इति त्रीणि **अगस्तिमुनिपत्न्याः** ॥ प्राक्फाल्गुनेयः उतथ्यानुजः । अतथ्यावरजादयोऽप्यत्र । पारुष्यः गोरथः "गोरथः" ॥ १० ॥ दीदिविः द्वादशकरः । द्वादश कराः हस्ताः यस्य । चक्षाः सुरगुरुः गुरुः इति नव **बृहस्पतेः** ॥ शुक्रः भः शतपर्वेशः मघाभूः भृगुः आस्फुजित् ॥ ११ ॥ षोडशार्चिः इति सप्त **शुक्रस्य** ॥ नवार्चिः मङ्गलः खोल्मुकः कुजः इति चत्वारि **कुजस्य** ॥ बुधः हेमा राजपुत्रः । राज्ञश्चन्द्रस्य पुत्रः । एकदेहः प्रहर्षणः । "प्रहर्षुलः" अप्यत्र ॥ १२ ॥ पञ्चार्चिः । श्रविष्ठाजः श्रविष्ठानक्षत्रे जायते । श्यामाङ्गः । श्यामं हरिद्वर्णमङ्गमस्य । एकाङ्गः "एकान्धः" रोधनः इति दश **बुधस्य** ॥ शनैश्चरः नीलवासाः

**राहुस्तु ग्रहकल्लोलोऽभ्रपिशाचोऽप्यथाऽहिकः ।**
**केतुर्ज्योतीरथस्तु स्याद्ग्रहाधारो ध्रुवश्च सः ॥ १४ ॥**
**तत्क्षणं सूर्य्यमुक्तादिग्बुधैरङ्गारिणी स्मृता ।**
**आसन्नास्तमया धीरैरुच्यते सोपधूपिता ॥ १५ ॥**
**सुनीतिर्ध्रुवमाता स्यान्माता दक्षस्य मारिषा ।**
**छायापथो देवपथः सोमधारा नभःसरित् ॥ १६ ॥**
**दिनप्रणीस्त्वव्यँधिपौ भानेमिरवरव्रतः ।**
**गभस्तिहस्तोंऽशुधरः खरांशुर्भा रविर्भगः ॥**
**वेदोदयः प्रतिदिवा मातुः पितुस्तमोपहः ॥ १७ ॥**
**दिनमणिहरिर्हेलिर्ब्रध्नभाकोषभाभृ-**
**दरथिँखगपतङ्गेनाद्रयः सप्तसप्तिः ।**
**मिहिरमहिरपीथाः कालकृत्पद्मपाणिः**
**खमणिररुणँशूरावंशुमानंशुमाली ॥ १८ ॥**
**छाया स्यात्तपती मन्दजननी भूमयी वरी ।**
**संज्ञा तु यमकालिन्दीरेवन्तमनुदस्रसूः ॥ १९ ॥**

मन्दः छायात्मजः । छायायाः सूर्य्यभार्यायाः आत्मजः पुत्रः । शनिः इति पञ्च **शनैश्चरस्य** ॥ १३ ॥ राहुः ग्रहकल्लोलः । ग्रहाणां ग्रहेषु वा कल्लोलः महातरङ्गः । अभ्रपिशाचः इति त्रीणि **राहोः** ॥ आहिकः केतुः इति द्वे **केतोः**॥ ज्योतिरथः "ज्योतीरथः" ज्योतीनां नक्षत्राणां रथः।ग्रहाधारः ध्रुवः इति त्रीणि **ध्रुवस्य**॥ १४॥अङ्गारिणी इत्येका **तत्क्षणसूर्यत्यक्तदिशायाः**॥बुधैः पण्डितैः स्मृतेत्यर्थः।उपधूपिता इत्येकं **निकटसूर्यास्तमयादिशायाः**॥ धीरैः उच्यते कथ्यत इत्यर्थः ॥ १५ ॥ सुनीतिः । सुष्ठु नीतिर्यस्याः । इत्येकं **ध्रुवमातुः** ॥ मारिषा इत्येकं **दक्षमातुः** ॥ छायापथः देवपथः । देवैरर्चिसदिभिरातित्राहिकैरुपलक्षितः पन्थाः । सोमधारा नभःसरित् इति चत्वारि **देवपथस्य** ॥ १६ ॥ दिनप्रणीः अविः अधिपः "अधिपः" क्वचित् "अन्यतिपः" भानेमिः अवरव्रतः गभस्तिहस्तः । गभस्तयो हस्ता इव जलाकर्षकत्वात् यस्य । अंशुधरः खरांशुः । खराः कठिनाः अंशवः किरणाः यस्य । भाः रविः-भगः वेदोदयः । वेदस्य ज्ञानस्य उदयः वृद्धिर्येन सः । क्वचित्तु "वेदोदयः" । प्रतिदिवा मातुः पितुः तमोपहः । तमोन्धकारमज्ञानं वा अपहन्ति ॥ १७ ॥ दिनमणिः हरिः हेलिः ब्रध्नः "बन्धः" भाकोषः भाभृत् "भानुः" अरथिः "उदरथिः" खगः पतङ्गः । पतन् सन् गच्छति । इनः अद्रिः सप्तसप्तिः । सप्त सप्तयो अश्वा यस्य । मिहिरः महिरः पीथः कालकृत् पद्मपाणिः । पद्मं पाणौ यस्य । खमणिः । खे आकाशे मणिरिव । अरुणः शूरः सूरोऽप्यत्र । अंशुमान् अंशुमाली इत्यष्टत्रिंशत् **सूर्यस्य** ॥१८॥ छाया तपती मन्दजननी भूमयी वरी इति पञ्च **छायाना-**

त्रसरेणुर्महावीर्या स्वातिः सूर्या सुवर्चला ।
सुरेणुर्द्युमयी त्वाष्ट्री प्रिये चेते विवस्वतः ॥ २० ॥
अश्मनो रमणोऽनूरुर्जटायुस्त्वरुणात्मजः ।

इति दिग्वर्गः ॥ ३ ॥

कालस्त्वऽपष्टुर्जहको भवन्तो भसदित्यपि ॥ २१ ॥
पीथः पीयुस्तिथश्चाऽथ वास्रो व्युष्टांशके दिनम् ।
उषा प्रभातं गोसर्गः सायोऽस्सूरौ विकालके ॥ २२ ॥
रात्री रक्षोजननी निषत्वरी चक्रभेदनी घोरा ।
श्यामा याम्या दोषा तुङ्गी भौती शताक्षी च ॥ २३ ॥
वासुरोषा निशाख्या च वासतेयी तमस्विनी ।
यस्यां मत्ता निशि श्वानः श्वनिशं श्वनिशा च सा ॥ २४ ॥
निःसम्पातोऽर्धरात्रः स्यात्सर्वावसर इत्यपि ।
उच्चन्द्रापररात्रौ द्वौ दर्शोऽमाऽमावसी च सा ॥ २५ ॥

**म्न्याः सूर्यपत्न्याः शनिमातुश्च** ॥ संज्ञा । अत्र सूः शब्दो यमादिभिः शब्दैर्योज्यः । यथा—यमसूः कालिन्दीसूः रेवन्तसूः मनुसूः दस्रसूः॥१९॥त्रसरेणुः महावीर्या स्वातिः सूर्या सुवर्चला सुरेणः "स्वरणुः" द्युमयी "द्युः मही" त्वाष्ट्री इति चतुर्दश **संज्ञानाम्न्याः सूर्यपत्न्याः यममातुश्च**॥ एते छाया संज्ञेति द्वे विवस्वतः सूर्यस्य प्रिये भार्ये अभूताम् इति वचनात् सूर्यस्य द्वे पत्न्यौ स्याताम् । एका मन्दमाता छायानाम्नी।एका यममाता संज्ञानाम्नी च भवति ॥२०॥ अश्मनः रमणः अनूरुः । न स्तः ऊरू यस्य।इति त्रीणि **सूर्यसारथेः अरुणस्य**॥जटायुः "जटायुस्"इति क्वचित् सान्तः । जटं संहतमायुरस्य । अरुणात्मजः इति द्वे **अरुणसूनोः**॥ इति दिग्वर्गः ॥३॥
कालः अपष्टुः जहकः भवन्तः "भसन्तः" भसत् ॥२१॥ पीथः पीयुः तिथः इत्यष्टौ **कालस्य** ॥ वास्रः व्युष्टम् अंशकं दिनम् इति चत्वारि **दिवसस्य**॥उषा "ऊषः" "उषः" प्रभातम् इति द्वे **प्रभातस्य** ॥ गोसर्गः सायः उत्सूरः "अस्तवः" इति त्रीणि **विकालस्य** ॥ २२ ॥ रात्री "रात्रिः" रक्षोजननी निषत्वरी "सत्वरी" चक्रभेदनी । चक्रौ भिनत्ति परस्परं वियोजयति । घोरा श्यामा याम्या दोषा तुंगी भौती शताक्षी । शतमक्षिणीव पुष्पाण्यस्याः ॥ २३ ॥ वासुरा उषा निशा क्वचित् "वास्तवोषा निशाख्या च" इति पाठः । वासतेयी । वसतेर्हिता । तमस्विनी । तमस् अस्ति । "तमा निशा" इति क्वचित् पाठः । इति षोडश **रात्रेः** ॥ श्वनिशं श्वनिशा इति द्वे **कुक्कुरमादकरात्रेः** ॥ यस्यां निशि रात्रौ श्वानः कुक्कुराः मत्ताः मदयुक्ताः भवन्तीत्यन्वयः । सा रात्री चेत्यत्र व्यतिरेकस्यार्थः ॥ २४ ॥ निःसम्पातः । निर्गतः सम्पातो गतागतं यस्मात् । अर्धरात्रः "धर्मरात्रः" सर्वावसरः इति त्रीणि **अर्धरात्रेः**॥ उच्चन्द्रः । उच्छिष्टः स्वल्पावशिष्टश्चन्द्रो यत्र । अपररात्रः । अपरं रात्रेः । इति द्वे **रात्रिशेषस्य**॥

भूता कृष्णचतुर्दश्यां पौर्णम्यां धर्मवासरः ।
शक्रोत्सवो ध्वजोत्थानं शारदी द्यूतपूर्णिमा ॥ २६ ॥
कोजागरः शरत्पर्व कौमुदीचारमस्त्रियाम् ।
यक्षरात्रिस्तु दीपाली चैत्रावल्यां मधूत्सवः ॥ २७ ॥
सुवसन्तः काममहो वासन्ती कर्दमी स्त्रियौ ।
श्रामस्तु मासो वर्षांशो वत्सरस्तु युगांशकः ॥ २८ ॥
ऋतुवृत्तिर्मासमालः स्यात्कालग्रन्थिरुर्वटः ।
कालप्रभातं शरदा प्रावृषा तु जलार्णवः ॥ २९ ॥
कौमुदः कार्तिको मासः फाल्गुनालस्तु फाल्गुनः ।
ज्येष्ठामूलीयमिच्छन्ति मासमाषाढपूर्वजम् ॥ ३० ॥
कृतं सत्ययुगं त्रेताऽग्नायी द्वापरयज्ञियौ ।
कलिर्झर्झरकः कर्मयुगं पापं तु पातकम् ॥ ३१ ॥
शल्यं तूस्तं च कल्कोऽथ भद्रं भल्लं शिवं तथा ।
शं शुभं चाव्यये प्राणी सत्त्वो रूपं चतुष्पदः ॥ ३२ ॥

दर्शः । दृश्यते शास्त्रे चन्द्रार्कसङ्गमो यत्र । अमा । न माति चन्द्रस्य सर्वकलाव्यापकतया स्थिता सूर्यकिरणसम्पर्कादप्रदीप्ता कला । अमावसी । अमा सह वसतश्चन्द्रार्कौ यत्र । "अमावासी" इति त्रीणि **अमावस्याः** ॥ २५ ॥ भूता "भूतः" इत्येकं **कृष्णचतुर्दश्याः** ॥ धर्मवासरः । धर्मार्थं वासरः । इत्येकं **पौर्णमास्याः** ॥ शक्रोत्सवः । शक्रस्य तद्ध्वजस्य उत्सवः ध्वजोत्थानं । ध्वजस्य शक्रध्वजस्य उत्थानम् इति द्वे **शक्रध्वजोत्थानमङ्गलस्य** ॥ शारदी द्यूतपूर्णिमा ॥ २६ ॥ कोजागरः । को जागर्तीति वदत्यस्मिन् । पृषोदरादित्वात् साधुः । शरत्पर्व कौमुदीचारम इति पञ्च **कोजागरपूर्णिमानिमित्तोत्सवस्य** ॥ वा **आश्विनपौर्णमास्याः** ॥ यक्षरात्रिः दीपाली इति द्वे **कार्तिकपूर्णिमारात्रेः** ॥ मधूत्सवः ॥ २७ ॥ सुवसन्तः काममहः वासन्ती कर्दमी "कृर्दमी" इमौ शब्दौ स्त्रीलिङ्गे स्याताम् इति पञ्च **चैत्रपौर्णमास्याः** ॥ श्रामः मासः वर्षांशः वर्षस्य अंशः भागः । इति त्रीणि **मासस्य** ॥ वत्सरः युगांशकः ॥ २८ ॥ ऋतुवृत्तिः । ऋतूनां वृत्तिः पर्यायेणावर्तना यत्र । मासमालः "मासमानः" कालग्रन्थिः उर्वटः "उर्बटः" इति षट् **वर्षस्य** ॥ कालप्रभातं शरदा इति द्वे **शरदृतोः** ॥ प्रावृषा "प्रावृट्" जलार्णवः इति द्वे **वर्षर्तोः** ॥ २९ ॥ कौमुदः कार्तिकः इति द्वे **कार्तिकस्य** ॥ फाल्गुनालः फाल्गुनः इति द्वे **फाल्गुनस्य** ॥ ज्येष्ठामूलीयम् आषाढपूर्वजम इति द्वे **ज्येष्ठमासस्य** ॥ इच्छन्ति सुधिय इति शेषः ॥ ३० ॥ कृतं सत्ययुगम् इति द्वे **कृतयुगस्य** ॥ त्रेता अग्नायी इति द्वे **त्रेतायुगस्य** ॥ द्वापरः यज्ञियः इति द्वे **द्वापरयुगस्य** ॥ कलिः झर्झरकः कर्मयुगम् इति त्रीणि **कलियुगस्य** ॥ पापं पातकं ॥ ३१ ॥ शल्यम् तूस्तं कल्कः इति पञ्च **पापस्य** ॥

अथात्मा कर्मभुग्देही जीवः पुरुषपुद्गलौ ।
अन्तर्यामीश्वरश्चान्तःकरणं तु मनो निगु ॥ ३३ ॥

इति कालवर्गः ॥ ४ ॥

बुद्धिः पण्डा विदा चार्वी विचारस्तर्कनिश्चयौ ।
गुञ्जा चर्चाऽथ सिद्धान्तोत्तरपक्षसमाधयः ।
कृतान्तः पूर्वपक्षस्तु चोद्यं गीर्भणितिर्गिरा ॥ १ ॥
वाचा छन्दस्तु निगमः साम्न्युक्थं स्वरपत्तनम् ।
ब्रह्माक्षरं स्यादोंकारः प्रश्नदूती प्रहेलिका ॥ २ ॥
संज्ञाऽधिवचनं सद्यःकृतं लक्षणनामनी ।
व्यपदेशः प्रसिद्धस्तु टङ्कारोऽथ नवः स्तवः ॥ ३ ॥

इति धीवर्गः ॥ ५ ॥

शब्दाभिलापौ त्वभिधाऽभिधानं वाचको ध्वनिः ।
ह्रासः कुहरितश्चाऽथ मन्मनो गद्गदध्वनौ ॥ १ ॥
तूरं तु तूर्यं स्यात्ताड्यमानास्तु पटहादयः ।
कर्वदिः करताली स्याद्धीननाला तु काहला ॥ २ ॥

भद्रं भल्लं "भन्दं"।शिवं शं शुभम् इति पञ्च शुभस्य॥शं शुभं इति द्वयंअव्यये च भवति प्राणी सत्त्वः रूपं चतुष्पदः इति चत्वारि **प्राणिमात्रस्य**॥३२॥कर्मभुक् देही जीवः पुरुषःपुद्गलः "पुंगलः" पुंगलतीति वा पुत् कुत्सितं गलो यस्मात्। अन्तर्यामी ईश्वरः इत्यष्टौ **आत्मनः**॥ अन्तःकरणं मनः निगु इति त्रीणि **मनसः** ॥३३॥ इति कालवर्गः ॥४॥ बुद्धिः पण्डा विदा चार्वी इति चत्वारि **बुद्धेः**॥ विचारः तर्कः निश्चयः "निर्णयः" गुञ्जा चर्चा इति पञ्च **विचारस्य** ॥ सिद्धान्तः। सिद्धं निश्चितोऽन्तो यस्मात् । उत्तरपक्षः उत्तरमुत्तीर्यमानं पक्षो यस्य । वादे पूर्वपक्षस्य मर्दनक्षमः । समाधिः कृतान्तः।कृतः अन्तो विपर्ययनाशो निश्चयो विषयपरिच्छेदो वा येन। इति चत्वारि **सिद्धान्तस्य** ॥ पूर्वपक्षः चोद्यम् इति द्वे **प्रश्नस्य**॥ गीः भणितिः गिरा ॥ १ ॥ वाचा 'वाञ्छा' इति चत्वारि **वचनस्य**॥ छन्दः निगमः इति द्वे **निगमस्य** ॥ साम्नी उक्थं स्वरपत्तनम्। स्वराणां निषादादीनां गानध्वनिविशेषाणां पत्तनमाश्रयः । इति त्रीणि **सामवेदस्य** ॥ ब्रह्माक्षरम् । ब्रह्मणः अक्षरम् । ओङ्कारः इति द्वे **प्रणवस्य** ॥ प्रश्नदूती । प्रश्नस्य दूती । प्रहेलिका इति द्वे **दुर्बोधार्थज्ञानाय प्रश्नस्य प्रहेलिकायाः** ॥ २ ॥ संज्ञा अधिवचनं सद्यःकृतम् । सद्यस्तत्क्षणात् कृतम् । लक्षणं नाम व्यपदेशः इति षट् **नाम्नः** ॥ प्रसिद्धः टङ्कारः इति द्वे **प्रसिद्धस्य** ॥ नवः स्तवः इति द्वे **स्तवकरणस्य** ॥ ३ ॥ इति धीवर्गः ॥ ५ ॥ शब्दः अभिलापः अभिधा अभिधानं वाचकः ध्वनिः ह्रासः कुहरितः इत्यष्टौ **ध्वनेः** ॥ मन्मनः गद्गदध्वनिः । मिन्मिनः गंगदः मूकः अवागादयोऽप्यत्र । इति द्वे **कफादिनाऽव्यक्तशब्दस्य गद्गदध्वनेः** ॥ १ ॥ तूरं तूर्यम्

मड्डुको मर्दलो मन्त्रो ढक्का विजयमर्दलः ।
द्रगडः प्रतिपत्तूर्यं डमरुः सूत्रकोणकः ॥ ३ ॥
नाली घटी यामनाली दण्डढक्का यमेरुका ।
यामघोषोऽथ ताम्री स्यान्मानरन्ध्रा विकालिका ॥ ४ ॥
भवरुत्प्रेतपटहो मृत्युदण्डकरश्च सः ।
रणतूर्यं तु संग्रामपटहो भयडिण्डिमः ॥ ५ ॥
भुक्ततूर्यं नृपाभीलं मल्लतूर्यं महास्वनः ।
मुखवाद्यं वक्रतालं वेणौ विवरनालिका ॥ ६ ॥
वारवाणिः प्रगातास्यात्कथकैकनटौ समौ ॥ ७ ॥

इति शब्दादिवर्गः ॥ ६ ॥

सर्ववेशी लयारम्भः स्यात्तालावचरो नटः ।
लयपुत्री नटी नर्त्तूः खड्गधारादिनर्त्तके ॥ १ ॥

इति द्वे **ताड्यमानपटहादेः** ॥ कर्वर्दिः "करर्धिः" करताली इति द्वे **करतालस्य** ॥ ध्वनिनाला । ध्वनेर्नाला । काहला । कुत्सितं हलति लिखति । कोः कादेशश्च । इति द्वे **काहलध्वनेः** ॥ २ ॥ मड्डुकः । मज्जन्ति अन्ये शब्दा अत्रेति । पृषोदरादित्वात् साधुः । मर्दलः "मर्दनः" मन्त्रः "मेन्द्रः" इति त्रीणि **मृदङ्गस्य** ॥ केचित्तु "विपुलडमरोः" इति वदन्ति । ढक्का विजयमर्दलः इति द्वे **विजयढक्कायाः** ॥ द्रगडः प्रतिपत्तूर्यम् इति द्वे **प्रतिपादिततूर्यविशेषस्य** ॥ डमरुः सूत्रकोणकः इति द्वे **कापालिकायाः** ॥ ३ ॥ नाली घटी यामनाली यामे नाल्यस्य । दण्डढक्का । दण्डाकारा ढक्का । यमेरुका यामघोषः "यामघोषी" यामे घोषोऽस्य । इति षट् **दण्डढक्कायाः । घटीयन्त्रभेदस्य वा** ॥ ताम्री । ताम्रेण निर्मिता । मानरन्ध्रा । मानाय कालप्रमाणज्ञानाय रन्ध्रं यस्याः । विकालिका इति त्रीणि **कालज्ञानार्थं ताम्रेण निर्मितस्य यन्त्रविशेषस्य** ॥ ४ ॥ भवरुत् प्रेतपटहः मृत्युदण्डकरः "मृत्युभंगुरकः" इति त्रीणि **प्रेतपटहस्य** ॥ रणतूर्यम् । रणे युद्धे नादितं तूर्यम् । संग्रामपटहः भयडिण्डिमः । भये परतः स्वानिष्टसम्भावनरूपके डिण्डिमः । इति त्रीणि **रणतूर्यस्य** ॥ ५ ॥ भुक्ततूर्यं नृपाभीलं "नृपाहारं नृपाभारम्" इति द्वे **अन्नकालविज्ञापनार्थं नादिततूर्यस्य** ॥ मल्लतूर्यं महास्वनः इति द्वे **मल्लवाद्यस्य** ॥ मुखवाद्यम् । मुखेन वाद्यम् । वक्रतालम् । वक्रे तालं यस्य । "वक्रनालम्" इति द्वे **मुखवाद्यस्य** । विवरनालिका । विवरयुक्तं नालमस्त्यस्याः ॥ ६ ॥ वारवाणिः । वारं समूहं वाणते । इति द्वे **वेणुवादकस्य** ॥ प्रगाता इत्येकं **वंशीवादकस्य** ॥ कथकः एकनटः इति द्वे **तत्त्वनिर्णयार्थं वादरूपकथाकर्तुः** ॥ ७ ॥ इति शब्दादिवर्गः ॥ ६ ॥ सर्ववेशी । सर्वेषां वेशो धार्यत्वेनास्त्यस्य । लयारम्भः "लयालम्भः" ताला-

प्लवकः केलकश्चाऽथ भण्डश्चाटुपटुः समौ ।
गायनो गाथकः स्त्रीणां हल्लीषं सहनर्तनम् ॥ २ ॥
वात्सल्यशान्तौ तु रसौ शृङ्गारः कौशिकः स्मृतः ।
सम्भोगो विप्रयोगश्च तद्भेदौ वर्णिका मसी ॥ ३ ॥
मसिर्ना ध्यामलं तु स्याद्ध्यामोऽवज्ञा तु पांसनम् ।
डमरुस्तु चमत्कारः प्रौढिस्तु कियदेतिका ॥ ४ ॥
स्वेदः प्रश्रवणं सिप्रो द्वयोर्व्रीडो नटार्थिका ।
भामः क्रोधे निःसमस्तु शोके वीर्यं शुटीरता ॥ ५ ॥
छलं मिषं च वैदग्धी भङ्गिश्चेभनिमीलिका ।
उत्कण्ठा रुहरुहिका हव्यासस्त्वतिचिन्तिया ॥ ६ ॥
स्याच्चिन्ता चिन्तयाऽथोऽद्वाहनं रणरणं च तत् ।
सोत्कण्ठा स्मृतिराध्यानं हेवाकोऽध्यवसायिता ॥ ७ ॥

बचरः नटः इति चत्वारि **नटस्य** ॥ लयपुत्री नटी नर्तूः इति त्रीणि **नटयोषितः** ॥ १ ॥ प्लवकः केलकः इति द्वे **खड्गधारिणः नर्तकस्य** ॥ भण्डः चाटुपटुः चाटौ मिथ्यापरितोषणे वाक्ये पटुः । "चाटुवटुः" इति द्वे **चाटूक्तिभाषकनटस्य विदूषकस्य**॥ गायनः गाथकः इति द्वे **गायकस्य**॥ हल्लीषं सहनर्तनम् इति द्वे **स्त्रीभिः सह नर्तकस्य । स्त्रीणां मण्डलिकाकारनृत्यस्य वा** ॥२॥ वात्सल्यः । वत्सलस्य भावः । शान्तः इति द्वे **पुत्रादिस्नेहानुगुणयोः रसभेदयोः** ॥ शृङ्गारः कौशिकः इति द्वे **नाट्योक्तरसभेदयोः** ॥ पृथगेकैकस्य । सम्भोगः विप्रयोगः "विप्रलम्भः" इति द्वे **शृङ्गाराद्यवस्थाभेदस्य** ॥ वर्णिका मसी ॥३॥ मसिः "मशिः" इति त्रीणि **पत्रलेखनद्रव्यभूतायाः मस्याः**॥ ध्यामलं "ध्यामनं" ध्यामः "व्यामः" इति द्वे **बाह्वोरन्तरालपरिमाणस्य** ॥ अवज्ञा पांसनम् इति द्वे **अनादरस्य** ॥ डमरुः । चमत्कारः इति द्वे **चमत्कारस्य** ॥ प्रौढिः कियदेतिका । कियत् एतत् आरभ्यमाणं करोति । "अभियोगोद्यमौ प्रौढिरुद्योगः कियदेतिका ।" इति हैमः । क्वचित्तु "कियदेहिका" इति द्वे **उत्साहस्य** ॥ ४ ॥ स्वेदः प्रश्रवणं "प्रस्रवणं" सिप्रः । क्वचित्तु "स्विप्रः" । इति त्रीणि **स्वेदजलस्य** व्रीडः नटार्थिका "नटान्धिका" इति द्वे **लज्जायाः** ॥ भामः क्रोधः इति द्वे **क्रोधस्य** ॥ निःसमः "निःशमः" शोकः इति द्वे **शोकस्य** ॥ वीर्यं शुटीरता इति द्वे **वीर्यस्य** ॥ ५ ॥ छलं मिषम् इति द्वे **शठस्य** ॥ वैदग्धी । विदग्धस्य भावः । भङ्गिः "भङ्गी" इभनिमीलिका । इभं हस्तिनमपि निमीलयति सेवनात् निद्रापयति । इति त्रीणि **भङ्ग्याः**॥ उत्कण्ठा रुहरुहिका इति द्वे **औत्सुक्यस्य** ॥ हव्यासः अतिचिन्तिया ॥ ६ ॥ चिन्ता चिन्तया इति चत्वारि **चिन्तायाः** ॥ उद्वाहनं रणरणम् इति द्वे **विवाहस्य**॥ सोत्कण्ठा स्मृतिःआध्यानं हेवाकः

परिहासः केलिमुखः केलिर्द्रेवननर्मणी ।
आटोपारोपटङ्कारा भवेदारभटी स्त्रियाम् ॥ ८ ॥
रोमोद्गमस्तु पुलकस्त्वक्पुष्पं च त्वगंकुरः ।
स्वदोषगूहनं म्रक्षो रागसंगौ तु गृध्रता ॥ ९ ॥
कामचारः स यच्चित्ते पापमाधाय शंसनम् ।
कौकृत्यं विप्रतीसारो विबाधा तु विहेठनम् ॥ १० ॥
दुःखलोको भवश्चैव संसारः कष्टचारकः ।
निर्वाणमन्तको मोक्षः शीतिभावः शमोऽमृतम् ॥ ११ ॥

इति नाट्यवर्गः ॥ ७ ॥

अधोऽव्ययं स्यात्पाताले सप्तधा तदुदीरितम् ।
अतलं सुतलं चैव वितलं च गभस्तिमत् ॥ १ ॥
तलं प्रतलपाताले विरोकं श्वभ्रमस्त्रियाम् ।
तमसं तु निशाचर्म नीलपंकं रजोबलम् ॥ २ ॥
दिक्कण्टको वियद्भूतिः खत्वग्वृत्रोऽथ नागभित् ।
दम्भूः स्त्री स्याद्द्रुताजगरावथ हलाहलः ॥ ३ ॥

अध्यवसायिता इति पञ्च **औत्सुक्यान्वितस्य** ॥ ७ ॥ परिहासः "परीहासः" केलि-मुखः इति द्वे **क्रीडायाः** ॥ केलिः द्रेवनं नर्म इति त्रीणि **परिहासस्य** ॥ आटोपः आरोपः टङ्कारः आरभटी इति चत्वारि **दर्पस्य** ॥८॥ रोमोद्गमः "रोमोद्भेदः" पुलकः त्वक्पुष्पं त्वगङ्कुरः इति चत्वारि **पुलकस्य** ॥ स्वदोषगूहनं म्रक्षः "मृक्षः" इति द्वे **स्वदोषगूहनस्य** ॥ रागः सङ्गः गृध्रता इति त्रीणि **गृध्रतायाः** ॥ ९ ॥ कामचारः "कामाचारः" "काम्यकारः" इत्येकं **सपापकथनस्य** ॥ चित्ते मनसि पापं हिंसादिकां क्रियाम् आधाय निधाय उत्पाद्ये त्यर्थः । यत् शंसनं यत् प्रशंसाकारणं सः कामचारः इति व्यङ्ग्यस्यार्थः कौकृत्यं विप्रतीसारः इति द्वे **कुकृत्यस्य** ॥ विबाधा विहेठनम् इति द्वे **पीडायाः** ॥ १० ॥ दुःखलोकः भवः संसारः कष्टचारकः "कष्टकारकः" इति चत्वारि **संसारस्य** ॥ निर्वाणम् अन्तकः "अस्तुकः" मोक्षः शीतिभावः शमः अमृतम् इति षट् **निर्वाणस्य** ॥११॥ इति नाट्यवर्गः ॥ ७ ॥ अधः इति अव्ययं निपातपदं **पातालस्य** ॥ अतलं सुतलं वितलं । गभस्तिमत् तेजवदित्यर्थः ॥१॥ तलं प्रतलं पातालमिति तच्च **सप्तपातालस्य** ॥ सप्तधा सप्तप्रकारेण उदीरितं कथितम् । विद्वद्भि-रिति शेषः । एतानि सप्त पातालानि ग्रन्थान्तरे एवं निर्दिष्टानि । यथा—"अतलं वितलं चैव नितलं च क्रमादधः । महातलं च सुतलं पातालं सप्त कीर्तितम्" इति । विरोकं श्वभ्रम् इति द्वे **श्वभ्रस्य** ॥ तमसं निशाचर्म । निशायाः चर्म । नीलपङ्कम् । नीलः पंक इव यत्तत् । रजोबलम् ॥ २ ॥ दिक्कण्टकः "दिनान्तकः" वियद्भूतिः खत्वक् "खद्रुक्" वृत्रः इत्यष्टौ **अन्धकारस्य** ॥ नाग-

**ब्रह्मसर्पोऽश्वलाला च द्विमुखाहिरहीरणिः ।**
**राजाहिरलगर्दस्तु कालसर्पो महाविषः ॥ ४ ॥**
**माण्डपुष्पस्तु भुजगो भवेत्कौक्कुटिकन्दलः ।**
**गोनासगोनसौ हालाहलं हालहलं विषम् ॥ ५ ॥**
**अथाब्भक्षो द्विरसनः समकोलश्च भेकभुक् ।**
**कुम्भीनसो मण्डली च गरलं जंगमं विषम् ॥ ६ ॥**
**अनन्तो वासुकिः पद्मो महापद्मोऽपि तक्षकः ।**
**कर्कोटिः कुलिकः शंख इत्यष्टौ नागनायकाः ॥ ७ ॥**

भित् "नागभृत्" दम्भूः "दम्फूः" "डुण्डुः" इति द्वे **सर्पभेदस्य** ॥ वल्रुतः अजगरः इति द्वे **अजगरस्य** ॥ हलाहलः ॥ ३ ॥ ब्रह्मसर्पः अश्वलाला इति त्रीणि **ब्रह्मसर्पस्य** ॥ द्विमुखाहिः । द्विमुखश्चासौ अहिश्च । "द्विमुखः" अप्यत्र । द्वे मुखे यस्य । अहीरणिः । अहीन् ईरयति दूरीकरोति । तद्दर्शनादितरे सर्पाः पलायन्त इति भावः । राजाहिः इति त्रीणि **राजसर्प इति ख्यातस्य द्विमुखसर्पस्य** ॥ अलगर्दः । "अलगर्धः" अप्यत्र । कालसर्पः महाविषः इति त्रीणि **कालसर्पस्य** ॥ ४ ॥ माण्डपुष्पः भुजगः इति द्वे **माण्डपुष्पाख्यसर्पविशेषस्य** ॥ कौक्कुटिकन्दलः गोनासः गोनसः इति त्रीणि **तिलित्स इति ख्यातस्य सर्पस्य** । घोणसोऽप्यत्र । "भवेत्तिलित्सो गोनासो गोनसो घोणसोऽपि च" इति हैमः । हालाहलं हालहलं विषम् इति त्रीणि **विषस्य** ॥ ५ ॥ अब्भक्षः । अपो भक्षयति । द्विरसनः समकोलः भेकभुक् कुम्भीनसः मण्डली इति षट् **सर्पस्य** ॥ गरलम् । गिलति जीवनम् । इत्येकं **गतिशक्तियुक्तस्य जङ्गमविषस्य** ॥ ६ ॥ अनन्तः वासुकिः पद्मः महापद्मः तक्षकः कर्कोटिः कुलिकः शङ्खः इत्यष्टौ **नागराजानाम्** ॥ तेषां पृथगेकैकमेकैकस्य । तेषामाकारविशेषोप्येवं ज्ञेयः । अनन्तः द्विसहस्राक्षः श्यामवर्णः । अथवा । शुक्लः श्वेतपङ्कजलाञ्छनः । वासुकिः श्वेतो नीलः पद्मलाञ्छनवान् । पद्मः बिन्दुसमुदायाङ्कितमस्तकः शुक्लवर्णः । महापद्मः अतिशुक्लः दशबिन्दुमस्तकः । तक्षकः लोहिताङ्गः स्वस्तिकाङ्कितमस्तकः । कर्कोटिः मिश्रवर्णः दृष्टिविषः । तथा चोक्तम् । "कर्कोटिर्नाम सर्पो यः स दृष्टिविष उच्यते" इति । कुलिकः अर्धचन्द्रमौलिः ज्वालाधूमसदृशवर्णः । शङ्खः श्वेतवर्णधरः चन्द्राभरेखान्वितगलः । तथा चोक्तं नाममालायाम्—"शेषो नागाधिपोऽनन्तो द्विसहस्राक्ष आलुकः । स च श्यामोऽथ वा शुक्लः सितपङ्कजलाञ्छनः ॥ वासुकिस्तु सर्पराजः श्वेतो नीलः सरोजवान् । तक्षकस्तु लोहिताङ्गः स्वस्तिकाङ्कितमस्तकः ॥ महापद्मस्त्वतिशुक्लो दशबिन्दुकमस्तकः । शङ्खस्तु श्वेतो बिभ्राणो रेखाबिन्दुसितो गले ॥ कुलिकोऽर्धचन्द्र-

**तद्वन्धवस्तु कुमुदकम्बलाश्वतरादयः।**
**पुरी भोगवती चैषां भोगिन्यो नागकन्यकाः॥ ८॥**

**इति पातालभोगिवर्गः॥ ८॥**

**अकं दुःखमघं चैन्द्री त्वलक्ष्मीः कालकर्णिका॥ १॥**

**इति नरकवर्गः॥ ९॥**

**पाथोधिसिन्धुमकरालयवारिराशि-**
**गंगाधरेन्दुजनकास्तिमिरूर्मिमाली।**
**वार्धिर्मितद्रुतिमिकोषमहाशयाश्च-**
**क्लीब च शैलशिबिरं धरणीप्लवश्च॥ १॥**

**पुमान् कचंगलो वांकः कूलंकषपरंगवौ।**
**तरन्तो दारदः पेरुर्महीप्राचीरमद्धयोः॥ २॥**
**नदीनश्चाथ कमलं नीरं नाराः स्त्रियामिरा।**
**कं दकं जलमस्थानमगाधेऽथाम्भसांभ्रमः॥ ३॥**
**तारूरो वायुगुल्मश्च कललाभः कलकुरः।**
**पुरोटिः पत्रझङ्कारे दर्दणिः कूलचुण्डकः॥ ४॥**

मौलिर्ज्वालाधूमसमप्रभः'' इति॥ ७॥ कुमुदः कम्बलः अश्वतरः। आदिना इहानुक्त्वा अन्ये च। इति त्रीणि **तन्नागराजबान्धवानाम्॥** भोगवती। भोगः सर्पशरीरः भूम्नाऽस्त्यस्याम्। इत्येकं **सर्पनगरस्य वा नागभवनस्य॥** भोगिन्यः नागकन्यकाः इति द्वे **नागकन्यकानाम्॥ ८॥** इति पातालभोगिवर्गः॥ ८॥ अकं दुःखम् अघम् इति त्रीणि **दुःखस्य॥** ऐन्द्री अलक्ष्मीः कालकर्णिका इति त्रीणि **अलक्ष्म्याः॥ १॥** इति नरकवर्गः॥ ९॥ पाथोधिः। पाथांसि जलानि धीयन्तेऽत्र। सिन्धुः मकरालयः। मकराणां तन्नामकजलजन्तूनाम् आलयः वासो यस्मिन्। वारिराशिः गङ्गाधरः। गङ्गां धरति। इन्दुजनकः। इन्दोः जनकः। तिमिः ऊर्मिमाली। ऊर्मिमालाऽस्त्यस्य। वार्धिः। वारि जलानि धीयन्तेऽत्र। मितद्रुः"सितद्रुः"। मितं द्राति द्रवति वा। तिमिकोषः। तिमीनां मत्स्यानां कोषः उत्पत्तिर्यस्मिन्। महाशयः। महान् उदरः आशयो यस्य। शैलशिबिरम्। शैलानां नगानां शिबिरमिव। न०। धरणीप्लवः॥ १॥ कचङ्गलः वाङ्कः कूलङ्कषः। कूलं कषति। परङ्गः "परङ्गवः" तरन्तः दारदः। दरदेशसन्निकृष्टः। पेरुः। पु०। महीप्राचीरम्। मह्याः प्राचीरमिवावरकम्। न०॥ २॥ नदीनः। नदीनाम् इनः प्रभुः। इति त्रयोविंशतिः **समुद्रस्य॥** कमलं नीरं नाराः। "आपो नारा इति प्रोक्ताः" इति। इरा। स्त्री०। कं दकं जलम् इति सप्त **जलस्य** अस्थानम्। नास्ति स्थानं तलस्पर्शो यस्य। कश्चित् "अस्थायम्" "अस्थागम्" अगाधः। नास्ति गाधः प्रतिष्ठा यस्य। इति द्वे **अतलस्पर्शजलस्य॥** अम्भसांभ्रमः॥ ३॥ तारूरः

चुलुको घनजम्बाले दलाढ्ये पंककर्वटः ।
तरणो भेलके वारिरथो नौस्तरिकः प्लवः ॥ ५ ॥
होडस्तरांधुर्वहनः तरण्डो वार्वटः पुमान् ।
पादारकः स्यात्पोलिन्दः पत्रबाले तुलाधटः ॥ ६ ॥
समुद्रकफडिण्डीरजलहासास्तु फेणके ।
कैवर्ते जालिकश्छोटी कुपिनी स्यादथ प्लवः ॥ ७ ॥
पलवः पञ्जराखेटः कण्टकी तु जलेशयः ।
आत्माशी शम्बरो मूकोऽनिमिषो वल्कवानपि ॥ ८ ॥
मीने वदालः पाठीनो मत्स्यराजस्तु रोहितः ।
भालांकश्चाथ कुलिशं कटं काष्टील इत्यपि ॥ ९ ॥
फलकी स्याच्चित्रफली वाजग्रीवो मदार्मदः ।
कवयी क्रकचपृष्ठी कंकत्रोटो जलव्यधः ॥ १० ॥

"तानूरः" वायुगुल्मः कललाभः "कलमामः" "कणलाभः" कलङ्कुरः "कुलङ्कुरः" इति पञ्च **जलभ्रमस्य**॥ पुरोटिः इत्येकं **पत्रझङ्कार इति ख्यातस्य पत्रचलननादस्य**॥ दरणिः "वदालः" कूलच्चुण्डकः कूलहण्डकः इति द्वे **तीरस्थमत्स्यभेदस्य** ॥ ४ ॥ चुलुकः इत्येकं **निबिडपङ्क इति प्रसिद्धस्य घनजम्बालस्य** ॥ पङ्ककर्वटः इत्येकं **पङ्कबहुलस्य दलाढ्यस्थानस्य** ॥ तरणः इत्येकं **डोङ्गा इति ख्यातस्य भेलकस्य**॥ वारिरथः नौः तरिकः प्लवः इति चत्वारि **नौकायाः** ॥ ५ ॥ होडः तरान्धुः वहनः इति त्रीणि **समुद्रगामिनौकाभेदस्य** ॥ तरण्डः "वहित्रं" वार्वटः । पु० ॥ इति द्वे **पोतजलयानस्य** ॥ पादारकः पोलिन्दः इति द्वे **पोलिन्दस्य** ॥ तुलाधटः इत्येकं **पत्रबालस्य** ॥ केचित्तु "तुलाधर" इति वदन्ति ॥ ६ ॥ समुद्रकफः डिण्डीरः "डिण्डरः" जलहासः इति त्रीणि **समुद्रफेणस्य** ॥ जालिकः छोटी "कोटिः" कुपिनी इति त्रीणि **कैवर्तस्य** ॥ प्लवः ॥ ७ ॥ पलवः पञ्जराखेटः इति त्रीणि **पञ्जराखेटस्य** ॥ कण्टकी "कण्डी" जलेशयः आत्माशी शम्बरः मूकः अनिमिषः । नास्ति निमिषः चक्षुःस्पन्दनं यस्य । "अनिमेषः" अप्यत्र । वल्कवान् इति सप्त **मत्स्यस्य** ॥ ८ ॥ वदालः पाठीनः इति द्वे **पाठीनमत्स्यस्य**॥ मत्स्यराजः रोहितः मालाङ्कः "लालाङ्कः" भालस्येवाङ्को यस्य । इति त्रीणि **रोहितमत्स्यस्य** ॥ कुलिशम् । कौ जले लिशति श्लिष्यति । कटः काष्टीलः इति त्रीणि **मत्स्यविशेषस्य** ॥ ९ ॥ फलकी चित्रफली इति द्वे **फलक्याः** ॥ वाजग्रीवः "राजग्रीवः" मदार्मदः इति द्वे **मत्स्यभेदस्य** । कवयी क्रकचपृष्ठी इति द्वे **कवयी इति ख्यातस्य मत्स्यविशेषस्य**॥ कङ्कत्रोटः "कङ्कत्रोटिः" । कङ्कस्य त्रोट इव चक्षुरस्य । जलव्यधः इति द्वे **मत्स्यविशेषस्य** ॥ १० ॥

शफरः श्वेतकोलः स्यात्खेटस्तु खलेशयः ।
इल्लिशो वारिकर्पूरगाङ्गेयशफराधिपाः ॥ ११ ॥
जलतालोऽप्यथ चलत्पूर्णिमाचन्द्रचञ्चलौ ।
जलवृश्चिक इश्वाके गङ्गाटेयो गलानिलः ॥ १२ ॥
शालः शकुलगण्डः स्यादन्धाहिः कूर्चिका द्वयोः ।
ब्राह्मी तु पङ्कगण्डको लघुगर्गस्त्रिकण्टकः ॥ १३ ॥
तिर्यग्यानः कुलीरः स्यान्मुखास्त्रो हरिलोचनः ।
बहिः कुटीचरः पोताधानं तु स्याज्जलाण्डकम् ॥ १४ ॥
जलरूपस्तु मकरो मरोलिरसिदंष्ट्रकः ।
मीनरस्तन्तुनागस्तु नक्रवाडवहारकौ ॥ १५ ॥
नक्रस्तु वार्भटः स्यादम्बुकिण्टोम्बुकण्टकः ।
जलशूकरमायादझषाशनह्रदग्रहाः ॥ १६ ॥
जलकूर्मस्त्वम्बुकीशो वसाढ्यः शिशुकश्च सः ।
उद्रस्तु जलमार्जारजलाखुनकुलप्लवाः ॥ १७ ॥

शफरः श्वेतकोलः इति द्वे **मत्स्यविशेषस्य** ॥ "खशोलः" खेटकः खलेशयः इति द्वे **खलेशयस्य** ॥ वारिकर्पूरः गाङ्गेयः शफराधिपः ॥ ११ ॥ जलतालः इति चत्वारि **इल्लिश इति ख्यातस्य मत्स्यविशेषस्य** । चलत्पूर्णिमा चन्द्रचञ्चलः इति द्वे **चन्द्रमत्स्य इति ख्यातस्य मत्स्यविशेषस्य** ॥ जलवृश्चिकः इत्येकं **इश्वाकस्य** ॥ गङ्गाटेयः गलानिलः इति द्वे **मत्स्यविशेषस्य** ॥ १२ ॥ शालः शकुलगण्डः इति द्वे **शाल इति ख्यातस्य क्षुद्रमत्स्यविशेषस्य**॥ अन्धाहिः । अन्धे जले अहिः नागः । कूर्चिका इति द्वे **जलनाग इति ख्यातस्य कूर्चिकस्य**॥अत्र जलसर्पः उदकनागः उदकाहिः अपि सङ्गृह्यते । ब्राह्मी पङ्कगण्डकः । पंके गण्डे यस्य । इति द्वे **पङ्कगण्डस्य॥** लघुगर्गः त्रिकण्टकः । त्रयः कण्टकाः यस्य । इति द्वे **त्रिकण्टकस्य** ॥ १३ ॥ तिर्यग्यानः कुलीरः मुखास्त्रः । मुखमेवास्त्रं यस्य । हरिलोचनः । हरेर्लोचनमिव लोचने यस्य । बहिःकुटीचरः इति पञ्च **कुलीरस्य** ॥ पोताधानम् । पोतानां शिशूनामण्डजातमत्स्यानामाधानम् । जलाण्डकम् इति द्वे **जलाण्डकस्य क्षुद्रमत्स्यसंघस्य** ॥ १४ ॥ जलरूपः मकरः मरोलिः असिदंष्ट्रकः मीनरः इति पञ्च **मकरस्य** ॥ तन्तुनागः नक्रहारकः वाडवहारकः इति त्रीणि **हाङ्गर इति ख्यातस्य जलजन्तुभेदस्य** ॥१५॥ नक्रः वार्भटः अम्बुकिण्टः "अम्बुकिरातः" अम्बुकण्टकः जलशूकरः मायादः झषाशनः ह्रदग्रहः इत्यष्टौ **कुम्भीरस्य** ॥ १६ ॥ जलकूर्मः अम्बुकीशः वसाढ्यः शिशुकः इति चत्वारि **शिशुमारस्य** ॥ उद्रः जलमार्जारः

मृत्किरा घुर्घुरी वारिकृमिस्तु जलमक्षिका ।
पटालुका जलौकाम्बुसर्पिणी वेणिवेधिनी ॥ १८ ॥
व्यङ्गस्तु नन्दको भेको गूढवर्चाः क्षतालयः ।
कोकोजिह्वोऽथ पञ्चाङ्गगुप्ते क्रोडांघ्रिकच्छपौ ॥ १९ ॥
गडुः किञ्चुलुकोऽथाऽम्बुर्विकिरश्चूडकश्च सः ।
चुण्टा चुण्टी च लूताऽथान्धकूपः कर्करान्धुकः ॥ २० ॥
पल्वलं दीर्घिका वापी यष्टिका मीनगोधिका ।
अवघट्टावटौ तुल्यौ तल्लं विल्लं तलं च तत् ॥ २१ ॥
द्विजप्रपालवाले स्यात्केदारः पांशुमर्दनः ।
नदी निर्झरिणी रोधोवक्रा सागरगामिनी ॥ २२ ॥
तलोदा चाम्पिला सिन्धुर्ऋषिकुल्या वहा च सा ।
अध्वगा गान्दिनी गङ्गा हैमवत्युग्रशेखरा ॥ २३ ॥
धर्मद्रवी सिद्धसिन्धुस्तापी तु यमुना यमी ।
रेवा तु पूर्वगंगा स्यान्मुरला तु मुरन्दला ॥ २४ ॥

जलाखुः नकुलः प्लवः इति पञ्च **जलबिडालस्य**॥१७॥मृत्किरा घुर्घुरी इति द्वे **घुर्घुर्य्याः** ॥ घुर्घुरी कीटविशेषः । वारिकृमिः जलमक्षिका पटालुका जलौका अम्बुसर्पिणी । अम्बुनि सर्पति । वेणिवेधिनी इति षट् **जलौकायाः**॥१८॥ व्यङ्गः । विगतं विकलं वा अंगं यस्य । नन्दकः भेकः गूढवर्चाः । गूढं केनाप्यदृश्यं वर्चो विष्ठा शुक्रं वा यस्य । "गूढवर्बाः" क्षतालयः "कृतालयः" कोकः "रेकः" अजिह्वः । नास्ति जिह्वा रसना यस्य । इति सप्त **भेकस्य** ॥ क्रोडांघ्रिः । **क्रोडे** अंघ्रिर्यस्य । कच्छपः इति द्वे **पञ्चाङ्गगुप्त इति ख्यातस्य कूर्मस्य** ॥ १९ ॥ गडुः किञ्चुलुकः । किञ्चित् चुलुम्पति । इति द्वे **महीलताख्यस्य कीटभेदस्य** ॥ अम्बुः विकिरः । विकीर्यते । चूडकः चुण्टा चुण्टी लूता "चूडा" इति षट् **कूपस्य** ॥ अन्धकूपः । अन्धयतीत्यन्धः स चासौ कूपः । कर्करान्धुकः । कर्करः कठोरः अतिशयितान्धकारवत्त्वात् । अन्धुः कूपो यत्र । इति द्वे **अत्यन्धकारवतः कूपस्य** ॥ २० ॥ पल्वलं दीर्घिका वापी यष्टिका मीनगोधिका इति पञ्च **वाप्याः** ॥ अवघट्टः अवटः । तलमप्यत्र । इति द्वे **गर्तस्य** ॥ तल्लं विल्लं तलम् ॥ २१॥ द्विजप्रपम् आलवालम् इति पञ्च **आलवालस्य** ॥ केदारः पांशुमर्दनः "पांसुमर्दनः" पांशून् शष्पार्थं चिरसञ्चितान् गोमयान् मर्दयते । इति द्वे **क्षेत्रस्य** ॥ नदी निर्झरिणी । पर्वतान्निःसृतजलप्रवाहः कारणत्वेनास्त्यस्याः । रोधोवक्रा । रोधसा वक्रा । सागरगामिनी ॥ २२ ॥ तलोदा चाम्पिला सिन्धुः ऋषिकुल्या वहा अध्वगा "त्र्यध्वगा" गान्दिनी "गान्धिनी" गङ्गा हैमवती उग्रशेखरा ॥ २३ ॥ धर्मद्रवी सिद्धसिन्धुः इति **षोडश गङ्गायाः** ॥ तापी यमुना यमी इति त्रीणि **यमुनायाः नद्याः** ॥ रेवा पूर्वगङ्गा मुरला

स्यादर्द्धगङ्गा कावेरी वाशिष्ठी गोमती समे ।
अथ गोदावरी भीमोपला गोला च गौतमी ॥ २५ ॥
सप्तगोदावरं तत्र कुवलं तूत्पलं कुवम् ।
कैरवं गन्धसोमं स्यात्कन्दोटश्च निशाहसः ॥ २६ ॥
श्रीकरं कृष्णकन्दं च रक्तोत्पलमलिप्रियम् ।
लक्ष्मीगृहं कुमुच्चाऽथ शालूकः पङ्कशूरणः ॥ २७ ॥
प्रश्नी तु कुम्भिका वारिमूली पर्णी खमूलिका ।
स्याद्वारिचत्वरोऽथाम्बुतालः सलिलकुन्तलः ॥ २८ ॥
शैवलो हठपर्णी स्त्री कावारं वारिचामरम् ।
पद्मे कवारं पङ्केजं बिसनाभिस्तु पद्मिनी ॥ २९ ॥
पुटकिन्येवमेवाऽन्याः कुन्दिनीतालिनीमुखाः ।
विषण्डं तन्तुलविषे शृङ्गाटो वारिकुब्जकः ॥ ३० ॥

इति वारिवर्गः ॥ १० ॥

## इति सटीकत्रिकाण्डशेषे प्रथमः काण्डः समाप्तः १.

मुरन्दला इति चत्वारि **नर्मदायाः नद्याः**॥ २४॥ अर्द्धगङ्गा कावेरी इति द्वे **कावेर्याः नद्याः**॥ वाशिष्ठी "वासिष्ठी" गोमती। इति द्वे **गोमत्याः नद्याः**॥ गोदावरी भीमोपला गोला गौतमी ॥ २५॥ सप्तगोदावरम् इति कश्चित् "गौतमी" पञ्च **गोदावर्याः नद्याः**॥ कुवलम् उत्पलं कुवम् इति त्रीणि **उत्पलस्य** ॥ कैरवं गन्धसोमम् । गन्धार्थं सोमो विधुर्यस्य । चन्द्रोदये हि तस्य गन्धः । कन्दोटः निशाहसः ॥ २६ ॥ श्रीकरं कृष्णकन्दम् इति षट् **कुमुदस्य** ॥ रक्तोत्पलम् अलिप्रियम् । अलीनां प्रियमधिकमोदकत्वात् ॥ लक्ष्मीगृहम् । लक्ष्म्याः श्रियाः गृहं सदनम । कुमुद् इति चत्वारि **रक्तोत्पलस्य** ॥ शालूकः पंकशूरणः इति द्वे **कुमुदमूलस्य** ॥ २७ ॥ प्रश्नी "पृश्नी" कुम्भिका वारिमूली पर्णी "वारिपर्णी" अप्यत्र । खमूलिका "खमूली" अप्यत्र । वारिचत्वरः इति षट् **कुम्भिकायाः** ॥ अम्बुतालः सलिलकुन्तलः । सलिलस्य कुन्तलाः केशा इव ॥ २८ ॥ शैवलः हठपर्णी । हठं प्लवमानं पर्णं यस्याः । कावारं वारिचामरम् । वारिणश्चामर इव । इति षट् **शैवालस्य**॥ कवारं पंकेजं "पंकजम्" इति त्रीणि **पद्मस्य**॥ बिसनाभिः। बिसं नाभौ यस्य । पद्मिनी ॥ २९॥ पुटकिनी इति त्रीणि **पुटकिनीति ख्यातायाः पद्मिन्याः** ॥ कुन्दिनी "कुण्टिनी" तालिनी "अम्लानिनी" मुखा इति त्रीणि **पद्मिनीभेदस्य** ॥ पृथगेकैकमेकैकस्य । विषण्डं "विसण्डं" तन्तुलं "तन्तुरं" विषम् इति त्रीणि **मृणालस्य**॥ शृङ्गाटः वारिकुब्जकः । वारिणि कुब्ज इव । इति द्वे **जलकण्टकस्य**॥ अन्याः शेषसंज्ञाः । एवमेव उक्तानुक्रमेणैव बोध्याः ॥ ३० ॥ इति वारिवर्गः ॥ १० ॥ इत्याचार्यश्रीशीलस्कन्धस्थविरविरचितायां सारार्थचन्द्रिकाख्यायां त्रिकाण्डशेषटीकायां प्रथमः काण्डः समाप्तः ॥

## इति सटीकत्रिकाण्डशेषकोषस्य प्रथमः काण्डः समाप्तः १.

मृत्किरा घुर्घुरी वारिकृमिस्तु जलमक्षिका ।
पटालुका जलौकाम्बुसर्पिणी वेणिवेधिनी ॥ १८ ॥
व्यङ्गस्तु नन्दको भेको गूढवर्चाः क्षतालयः ।
कोकोजिह्वोऽथ पञ्चाङ्गगुप्त क्रोडांघ्रिकच्छपौ ॥ १९ ॥
गड्डुः किञ्चुलुकोऽथाम्बुर्विकिरश्चूडकश्च सः ।
चुण्टा चुण्टी च लूताऽथान्धकूपः कर्करान्धुकः ॥ २० ॥
पल्वलं दीर्घिका वापी यष्टिका मीनगोधिका ।
अवघट्टावटौ तुल्यौ तल्लं विल्लं तलं च तत् ॥ २१ ॥
द्विजप्रपालवाले स्यात्केदारः पांशुमर्दनः ।
नदी निर्झरिणी रोधोवक्रा सागरगामिनी ॥ २२ ॥
तलोदा चाम्पिला सिन्धुर्ऋषिकुल्या वहा च सा ।
अध्वगा गान्दिनी गङ्गा हैमवत्युग्रशेखरा ॥ २३ ॥
धर्मद्रवी सिद्धसिन्धुस्तापी तु यमुना यमी ।
रेवा तु पूर्वगंगा स्यान्मुरला तु मुरन्दला ॥ २४ ॥

जलाखुः नकुलः प्लवः इति पञ्च **जलबिडालस्य**॥१७॥मृत्किरा घुर्घुरी इति द्वे **घुर्घुर्य्याः** ॥ घुर्घुरी कीटविशेषः । वारिकृमिः जलमक्षिका पटालुका जलौका अम्बुसर्पिणी । अम्बुनि सर्पति । वेणिवेधिनी इति षट् **जलौकायाः**॥१८॥व्यङ्गः । विगतं विकलं वा अंगं यस्य । नन्दकः भेकः गूढवर्चाः । गूढं केनाप्यदृश्यं वर्चो विष्ठा शुक्रं वा यस्य । "गूढवर्चाः" क्षतालयः "कृतालयः" कोकः "रेकः" अजिह्वः । नास्ति जिह्वा रसना यस्य । इति सप्त **भेकस्य** ॥ क्रोडांघ्रिः । **क्रोडे** अंघ्रिर्यस्य । कच्छपः इति द्वे **पञ्चाङ्गगुप्त इति ख्यातस्य कूर्मस्य** ॥ १९॥ गड्डुः किञ्चुलुकः । किञ्चित् चुलुम्पति । इति द्वे **महीलताख्यस्य कीटभेदस्य** ॥ अम्बुः विकिरः । विकीर्यते । चूडकः चुण्टा चुण्टी लूता "चूडा" इति षट् **कूपस्य** ॥ अन्धकूपः । अन्धयतीत्यन्धः स चासौ कूपः । कर्करान्धुकः । कर्करः कठोरः अतिशयितान्धकारवत्त्वात् । अन्धुः कूपो यत्र । इति द्वे **अत्यन्धकारवतः कूपस्य** ॥ २० ॥ पल्वलं दीर्घिका वापी यष्टिका मीनगोधिका इति पञ्च **वाप्याः** ॥ अवघट्टः अवटः । तलमप्यत्र । इति द्वे **गर्तस्य** ॥ **तल्लं** विल्लं तलम् ॥ २१॥ द्विजप्रपम् आलवालम् इति पञ्च **आलवालस्य** ॥ केदारः पांशुमर्दनः "पांसुमर्दनः" पांशून् शष्पार्थं चिरसञ्चितान् गोमयान् मर्दयते । इति द्वे **क्षेत्रस्य** ॥ **नदी** निर्झरिणी । पर्वतान्निःसृतजलप्रवाहः कारणत्वेनास्त्यस्याः । रोधोवक्रा । रोधसा वक्रा । सागरगामिनी ॥ २२ ॥ तलोदा चाम्पिला सिन्धुः ऋषिकुल्या वहा अध्वगा "त्र्यध्वगा" गान्दिनी "गान्धिनी" गङ्गा हैमवती उग्रशेखरा ॥ २३ ॥ धर्मद्रवी सिद्धसिन्धुः इति **षोडश गङ्गायाः** ॥ तापी यमुना. यमी इति त्रीणि **यमुनायाः नद्याः** ॥ रेवा पूर्वगङ्गा **मुरला**

स्यादर्द्धगङ्गा कावेरी वाशिष्ठी गोमती समे ।
अथ गोदावरी भीमोपला गोला च गौतमी ॥ २५ ॥
सप्तगोदावरं तत्र कुवलं तूत्पलं कुवम् ।
कैरवं गन्धसोमं स्यात्कन्दोटश्च निशाहसः ॥ २६ ॥
श्रीकरं कृष्णकन्दं च रक्तोत्पलमलिप्रियम् ।
लक्ष्मीगृहं कुमुच्चाऽथ शालूकः पङ्कशूरणः ॥ २७ ॥
प्रश्नी तु कुम्भिका वारिमूली पर्णी खमूलिका ।
स्याद्वारिचत्वरोऽथाम्बुतालः सलिलकुन्तलः ॥ २८ ॥
शैवलो हठपर्णी स्त्री कावारं वारिचामरम् ।
पद्मे कवारं पङ्केजं बिसनाभिस्तु पद्मिनी ॥ २९ ॥
पुटकिन्येवमेवाऽन्याः कुन्दिनीतालिनीमुखाः ।
विषण्डं तन्तुलविषे शृङ्गाटो वारिकुब्जकः ॥ ३० ॥

इति वारिवर्गः ॥ १० ॥

## इति सटीकत्रिकाण्डशेषे प्रथमः काण्डः समाप्तः १.

मुरन्दला इति चत्वारि **नर्मदायाः नद्याः**॥२४॥अर्द्धगङ्गा कावेरी इति द्वे **कावेर्याः नद्याः**॥ वाशिष्ठी "वासिष्ठी" गोमती।इति द्वे **गोमत्याः नद्याः**॥गोदावरी भीमोपला गोला गौतमी ॥२५॥सप्तगोदावरम् इति कचित् "गौतमी" पञ्च **गोदावर्याः नद्याः**॥कुवलम् उत्पलं कुवम् इति त्रीणि **उत्पलस्य** ॥ कैरवं गन्धसोमम् । गन्धार्थं सोमो विधुर्यस्य । चन्द्रोदये हि तस्य गन्धः । कन्दोटः निशाहसः ॥ २६ ॥ श्रीकरं कृष्णकन्दम् इति षट् **कुमुदस्य** ॥ रक्तोत्पलम् अलिप्रियम् । अलीनां प्रियमधिकमोदकत्वात् ॥ लक्ष्मीगृहम् । लक्ष्म्याः श्रियाः गृहं सदनम् । कुमुद् इति चत्वारि **रक्तोत्पलस्य** ॥ शालूकः पंकशूरणः इति द्वे **कुमुदमूलस्य** ॥ २७ ॥ प्रश्नी "पृश्नी" कुम्भिका वारिमूली पर्णी "वारिपर्णी" अप्यत्र । खमूलिका "खमूली" अप्यत्र । वारिचत्वरः इति षट् **कुम्भिकायाः** ॥ अम्बुतालः सलिलकुन्तलः । सलिलस्य कुन्तलाः केशा इव ॥ २८ ॥ शैवलः हठपर्णी । हठं प्लवमानं पर्णं यस्याः । कावारं वारिचामरम् । वारिणश्चामर इव । इति षट् **शैवालस्य**॥ कवारं पंकेजं "पंकजम्" इति त्रीणि **पद्मस्य**॥बिसनाभिः।बिसं नाभौ यस्य । पद्मिनी ॥ २९॥पुटकिनी इति त्रीणि **पुटकिनीतिख्यातायाः पद्मिन्याः** ॥ कुन्दिनी "कुण्टिनी" तालिनी "अम्लानिनी" मुखा इति त्रीणि **पद्मिनीभेदस्य** ॥ पृथगेकैकमेकैकस्य । विषडं "विसण्डं" तन्तुलं "तन्तुरं" विषम् इति त्रीणि **मृणालस्य**॥ शृङ्गाटः वारिकुब्जकः । वारिणि कुब्ज इव । इति द्वे **जलकण्टकस्य**॥अन्याः शेषसंज्ञाः । एवमेव उक्तानुक्रमेणैव बोध्याः ॥ ३० ॥ इति वारिवर्गः ॥ १० ॥ इत्याचार्यश्रीशीरकन्धरथविरविरचितायां सारार्थचन्द्रिकाख्यायां त्रिकाण्डशेषटीकायां प्रथमः काण्डः समाप्तः ॥

## इति सटीकत्रिकाण्डशेषकोषस्य प्रथमः काण्डः समाप्तः १.

# अथ

# सटीकत्रिकाण्डशेषकोषस्य-

## द्वितीयः काण्डः ।

भूर्भूतधात्री गिरिकर्णिकाब्धिद्वीपा समुद्राम्बरमेखला कुः ।
क्षमाऽद्रिकीला च जगद्वहा च पुंसि स्मृतौ मध्यमलोकमर्त्यौ ॥१॥
सहा कान्ता गन्धवती रत्नगर्भा च मेदिनी ।
स्वस्थली भारताख्यं तु वर्षं हैमवतं विदुः ॥ २ ॥
भारतं नरभूः किंपूरुषं हरिवर्षं ततः ।
भद्राश्वमुत्तरकुरुर्हिरण्मयमिलावृतम् ॥ ३ ॥
केतुमालममूनि स्युर्भुवो वर्षाणि वै नव ।
जम्बुप्लक्षकुशक्रौञ्चशाकशाल्मलिपुष्करैः ॥ ४ ॥
द्वीपाः सप्ताथ सप्तैव समुद्रा अपि कीर्त्तिताः ।
लवणेक्षुसुरासर्पिर्दधिदुग्धपयोमयाः ॥ ५ ॥

श्रीगणेशाय नमः । अथ द्वितीयकाण्डो व्याख्यायते । भूः भूतधात्री। भूतानि जन्तून् धारयति । गिरिकर्णिका अब्धिद्वीपा समुद्राम्बरा । समुद्रः अम्बरमिव वेष्टनाकारः यस्याः । समुद्रमेखला । समुद्ररसनादयोऽप्यत्र । कुः क्षमा अद्रिकीला । अद्रयः कुलाचलाः कीलाः शंकव इव यस्याः । जगद्वहा मध्यमलोकः । मध्यलोकोऽप्यत्र । मध्यमश्चासौ लोकः । तस्याः पातालस्वर्लोकयोर्मध्यवर्तित्वात् । मर्त्यः "मर्तः" । इमौ मध्यमलोकमर्त्याविति द्वौ शब्दौ पुँल्लिङ्गकौ स्मृतौ ॥ १ ॥ सहा "महा" कान्ता गन्धवती रत्नगर्भा मेदिनी स्वस्थली "खस्थली" "खस्तनी" इति अष्टादश **पृथिव्याः** ॥ भारतं वर्षम् । भारतवर्षमप्यत्र । "हिमाह्वं दक्षिणं वर्षं भरताय ददौ पिता । तस्माच्च भारतं वर्षम्" इति । हैमवतम् इति त्रीणि **हिमवत्खण्डस्य** ॥ २ ॥ भारतं नरभूः किंपूरुषं "किंपुरुषं" हरिवर्षं भद्राश्वम् उत्तरकुरुः हिरण्मयम् इलावृतम् ॥ ३ ॥ केतुमालम् इति नव **भुवो नववर्षात्मकस्य जम्बुद्वीपस्य नवानां वर्षाणां पृथगेकैकमेकैकस्य** ॥ जम्बुः "जम्बू" प्लक्षः कुशः क्रौञ्चः शाकः शाल्मलिः पुष्करः इति सप्त **जम्ब्वादिभिर्वृक्षैश्चिह्नितानां सप्तानां द्वीपानां** ॥ **पृथगेकैकमेकैकस्य** ॥ ४ ॥ लवणः इक्षुः सुरा सर्पिः दधिः दुग्धः पयोमयः "जलान्तकः" इति सप्त **सप्तसमुद्राणां पृथगेकैकमेकैकस्य** ॥५॥

ऊषरं तूषवानूषो ब्रह्मावर्तस्तपोवटः।
कुरुक्षेत्रं प्रयागश्च हिमाद्रिं विन्ध्यमन्तरा ॥ ६ ॥
मध्यदेशोऽथ पुण्ड्राः स्युर्वरेन्द्री गौडनीवृतिः।
प्रभासः सोमतीर्थं स्यादन्तर्वेदी कुशस्थली ॥ ७ ॥
प्राग्ज्योतिषं कामरूपे तीरभुक्तिस्तु निच्छविः।
विदेहाश्चाऽथ काश्मीरे कीराः स्युः शास्त्रशिल्पिनः ॥ ८ ॥
तुरुष्काः खशयष्टक्का बाह्लिकाश्च त्रिगर्तकाः।
दशेरका मरुभुवो मालवाः स्युरवन्तयः ॥ ९ ॥
डाहलाश्चेदयश्चैद्याः कारुषास्तु बृहद्गृहाः।
यदवस्तु दशार्हाः स्युः सात्वताः कुकुराश्च ते ॥ १० ॥
ओड्रा उत्कलनामानो मगधाः कीकटा मताः।
वेलाकूलं तामलिप्तं तामलिप्ती तमालिका ॥ ११ ॥
एकचक्रं हरिगृहं शम्भुपुर्यथ वर्तनिः।
पूर्वदेशोऽथ साकेतमयोध्योत्तरकोशलाः ॥ १२ ॥

ऊषरम् "उषरः" ऊषवान् ऊषः। उपोऽप्यत्र। इति त्रीणि **क्षारमृत्तिकायुक्तायाः ऊषरभूम्याः** ॥ ब्रह्मावर्तः तपोवटः इति द्वे **ब्रह्मावर्त इति ख्यातस्य**॥सरस्वतीदृषद्वत्योर्देवनद्योरन्तर्भूतस्य देशभेदस्य। मध्यदेशः इत्येकं **कुरुक्षेत्रप्रयागयोर्हिमाद्रिविन्ध्ययोश्च मध्यवर्तिनो मध्यदेशस्य** ॥६॥ पुण्ड्राः "पुड्राः" वरेन्द्री गौडनीवृतिः इति त्रीणि **गौडदेशस्य** ॥ प्रभासः सोमतीर्थम् इति द्वे **प्रभासतीर्थस्य** ॥ केचित्तु प्रभासस्येति पठन्ति। अन्तर्वेदी कुशस्थली इति द्वे **अन्तर्वेद्याः** ॥७॥ प्राग्ज्योतिषम्। क्वचित्तु प्राग्ज्योतिषः। इत्येकं **कामरूपदेशस्य** ॥ तीरभुक्तिः निच्छविः विदेहाः इति त्रीणि **विदेहस्य** ॥ कीराः शास्त्रशिल्पिनः इति द्वे **काश्मीरस्य** ॥ ८ ॥ तुरुष्काः खशाः टक्काः "थक्काः" बाह्लिकाः त्रिगर्तकाः "त्रिगर्तकाः" दशेरकाः मरुभुवः मालवाः अवन्तयः इति नव **देशभेदानां पृथगेकैकमेकैकदेशस्य** ॥९॥ डाहलाः चेदयः चैद्याः इति त्रीणि **चैद्यस्य**॥ जनपदनामत्वादत्र बहुवचनम्। कारुषाः बृहद्गृहाः इति द्वे **कारुषस्य** ॥ यदवः दशार्हाः सात्वताः कुकुराः इति चत्वारि **दशार्हस्य** ॥१०॥ ओड्राः "ओण्ड्राः" उत्कलाः इति द्वे **जगन्नाथप्रान्तदेशवर्तिनः ओड्रदेशस्य** ॥ मगधाः कीकटाः। किञ्चित् कुत्सितं कटन्ति। इति द्वे **मगधदेशस्य** ॥ वेलाकूलं तामलिप्तं तामलिप्ती तमालिका इति चत्वारि **तामलिप्तदेशस्य**॥११॥एकचक्रम्। एकं चक्रं यत्र हरिगृहं शम्भुपुरी। क्वचित् "शुम्भपुरी"। इति त्रीणि **शम्भुपुर्याः**॥ वर्तनिः पूर्वदेशः "पूर्वदेशः" इति द्वे **प्राच्यामवस्थितस्य जनपदस्य**॥ साकेतम् अयोध्या उत्तरकोशला इति त्रीणि **सरयूतीरवर्तिनः अयोध्येति प्रसिद्धस्य-**

कुशस्थलं कान्यकुब्जं नागाह्वं हस्तिनापुरम् ।
गजाह्वं हास्तिनं चाऽथ श्रावस्ती धर्मपत्तनम् ॥ १३ ॥
कुरुक्षेत्रं विनशनं कौशाम्बी वत्सपत्तनम् ।
प्राजापत्यः प्रयागः स्याद्द्वारका वनमालिनी ॥ १४ ॥
द्वारवत्यब्धिनगरी विदेहामिथिले समे ।
मथुरा तु मधूपघ्नं जित्वरी तु तपस्स्थली ॥ १५ ॥
वाराणसी तीर्थराजी विशालोज्जयिनी समे ।
चम्पा तु मालिनी पुष्पपुरं पाटलिपुत्रकम् ॥ १६ ॥
देवीकोटो बाणपुरं कोटीवर्षमुषावनम् ।
स्याच्छोणितपुरं चाथ योजनं मार्गधेनुकम् ॥ १७ ॥
क्रिमिशैलस्तु वल्मीकः शक्रमूर्धाऽथ सञ्चरः ।
धरणः पिण्डलः सेतुः पन्थास्तु क्षुल्लमो वहः ॥ १८ ॥

**नगरस्य** ॥ १२ ॥ कुशस्थलम् । कुशानां स्थलम् । कान्यकुब्जम् । कन्याः कुब्जाः यत्र तत्र हि वायुना कन्याशतस्य कुब्जत्वं कृतमिति । इति द्वे **कान्यकुब्जदेशस्य** ॥ नागाह्वं "नागाङ्कं" हस्तिनापुरम् । हस्तिना तदाख्यनृपेण चिह्नितं तत्कृतं पुरम् । गजाह्वं हास्तिनम् इति चत्वारि **हस्तिनापुरस्य** ॥ श्रावस्ती "श्रावन्ती" धर्मपत्तनम् धर्माणां पत्तनं पुरम् । इति द्वे **धर्मपत्तनाख्यपुरस्य** ॥ १३ ॥ कुरुक्षेत्रम् । कुत्सितं रौति :कुरु पापं कर्म । तस्य क्षेपणादपाकरणात् क्षेत्रम् । विनशनम् इति द्वे **कुरुपाण्डवानां युद्धभूमिसंख्यातस्य कुरुक्षेत्रस्य**॥ कौशाम्बी । कुशाम्बेन निर्वृत्ता । वत्सपत्तनम् । वत्सस्य वत्सराजस्य पत्तनं नगरम् इति द्वे **उत्तरदेशस्थस्य कौशाम्बीनगरस्य** ॥ प्राजापत्यः प्रयागः। प्रकृष्टो यागो यस्मात् इति द्वे **गङ्गा यमुनयोः सङ्गमजातस्य प्रयाग इति प्रसिद्धस्य तीर्थभेदस्य**॥ द्वारका वनमालिनी ॥ १४ ॥ द्वारवती अब्धिनगरी इति चत्वारि **समुद्रसन्निकृष्टस्य द्वारकेतिख्यातस्य तीर्थभेदस्य** ॥ विदेहा मिथिला इति द्वे **मिथिलाराजधान्याः**॥ मथुरा मधूपघ्नम् इति द्वे **मथुरायाः** ॥ जित्वरी तपस्स्थली ॥ १५॥ वाराणसी "बाराणसी" वरणा च असी च सीमात्वेनास्त्यस्याः॥ तीर्थराजी "तीर्थराज्ञी" इति चत्वारि **काश्याः** ॥ विशाला उज्जयिनी "उज्जयनी" अप्यत्र । इति द्वे **विक्रमादित्यराजधान्याः अवन्तिपुर्याः** ॥ चम्पा मालिनी इति द्वे **चम्पानगर्याः** ॥ पुष्पपुरं पाटलिपुत्रकम् इति द्वे **पाटलिपुत्रनगरस्य** ॥ १६ ॥ देवीकोटः "देवीकोठः" बाणपुरं "वाणपुरं" कोटीवर्षम् उषावनं शोणितपुरम् इति पञ्च **शोणितपुरस्य** ॥ योजनं मार्गधेनुकम् इति द्वे **योजनस्य** ॥ १७ ॥ क्रिमिशैलः वल्मीकः शक्रमूर्धा । शक्रस्येव शिखावान् मूर्धा यस्य । इति त्रीणि **वल्मीकस्य** ॥ सञ्चरः "सञ्चारः" धरणः पिण्डलः "पिण्डिलः" सेतुः इति

वाटः पथश्च मार्थश्च खपुरन्तूर्ध्वगं पुरम् ।
हरिश्चन्द्रपुरं शौभमुद्रङ्गः प्रतिमार्गकः ॥ १९ ॥
त्रङ्गा त्रङ्गो निर्मुटस्तु पण्याजीवकचङ्गलौ ।
पुंसि हट्टक्रयारोहौ जन्यं ग्राममुखं च तत् ॥ २० ॥
स्यादभिस्यन्दनँगरं शाखानगरमित्यपि ।
शासनं धर्मकीलः स्यान्मकुँतिः शूद्रशासनम् ॥ २१ ॥
पट्टोलिका क्लृप्तकीला पांशुँकीलं न कस्यचित् ।
षड्भिर्यवैः स्यादंगुष्ठ एतैर्द्वादशभिर्भवेत् ॥ २२ ॥
वितस्तिः स्यादतो द्वाभ्यां हस्तः स्यात्तच्चतुष्टयम् ।
दण्डो धन्वन्तरं तस्य सहस्रद्वितयेन तु ॥ २३ ॥
क्रोशस्ताभ्यान्तु गव्यूँतिस्तद्द्वयं योजनं मतम् ॥
चतुरष्टशतग्रामान्तर्द्रोणमुखकर्वटौ ॥ २४ ॥

इति भूमिवर्गः ॥ १ ॥

चत्वारि **सेतोः** ॥ पन्थाः क्षुल्लमः "खुलमः" वहः ॥ १८ ॥ वाटः पथः माथः "मार्गः" इति षण्**मार्गस्य** ॥ खपुरम् । खमिन्द्रियमाकाशं वा पिपर्त्ति । इत्येकम् **ऊर्ध्वगपुरस्य** ॥ हारिश्चन्द्रपुरं शौभम् इति द्वे **शौभपुरस्य** ॥ उद्रङ्गः प्रतिमार्गकः ॥ १९ ॥ त्रङ्गा त्रङ्गः इति चत्वारि **प्रतिमार्गस्य** ॥ निर्मुटः पण्याजीवकः चङ्गलः इति त्रीणि **वणिग्जनस्य** ॥ हट्टक्रयः आरोहः । एतौ द्वौ पुँल्लिङ्गकौ । जन्यं ग्राममुखम् । ग्रामस्य मुखं यत्र । इति चत्वारि **क्रयविक्रयस्थानस्य** ॥ २० ॥ अभिस्यन्दनगरम् । अभिस्यन्देन प्रधाननगरातिवृद्ध्या तदतिवाहेन कृतं नगरम् । क्वचित् "अभिस्यन्दरमणम्" । शाखानगरम् इति द्वे **शाखानगरस्य** ॥ शासनं धर्मकीलः इति द्वे **राजशासनस्य** ॥ मकुतिः "मङ्कुतिः" शूद्रशासनम् इति द्वे **शूद्रशासनस्य** ॥ ॥ २१ ॥ पट्टोलिका क्लृप्तकीला इति द्वे **व्यवस्थापत्रस्य** । पांशुकीलम् "पांसुकीलम्" इत्येकम् **अनामपट्टोलिकायाः** अङ्गुष्ठः इत्येकं **वृद्धाङ्गुल्याः** ॥ स च षड्भिर्यवैः प्रयामः स्यात् । अन्ये तु अष्टयवोदरपरिमाण इति च पठन्ति । तथोक्तं भास्कराचार्येण—"यवोदरैरङ्गुलमष्टसङ्ख्यैः इति । वितस्तिः इत्येकं **वितस्त्याः** ॥ सा तु एतैर्द्वादशभिरङ्गुलैः परिमिता भवेत् ॥ २२ ॥ हस्तः इत्येकं **हस्तस्य** ॥ अतो वितस्त्या द्वाभ्यां हस्तः स्यात् । दण्डः धन्वन्तरम् इति द्वे **हस्तचतुष्टयात्मकस्य दण्डस्य** ॥ २३ ॥ क्रोशः इत्येकं **हस्तद्विसहस्रपरिमितस्य क्रोशस्य** ॥ गव्यूतिः "गोर्यूतिः" इत्येकं **क्रोशद्वयपरिमाणायाः गव्यूत्याः** ॥ योजनम् इत्येकं **चतुष्क्रोशपरिमाणस्य योजनस्य** ॥ केचित्तु "चतुर्गव्यूतिर्योजनम्" इति पठन्ति । द्रोणमुखः कर्वटः इत्येकैकं **चतुरष्टशतग्राममध्ये**

गर्भागारापवरके वास्तु स्याद्गृहपोतकः ।
स्यात्प्रासादो देवकुलं पुत्रिका शालभञ्जिका ॥ १ ॥
ओको गृहं पिटं चालो वडभी चन्द्रशालिका ।
कूटागारं चाथ कपिशीर्षं घोटकशीर्षकम् ॥ २ ॥
क्रमशीर्षं चाथ खरकुटी नापितशालिका ।
कुलायिका पक्षिशाला कारावेश्म वधाङ्कम् ॥ ३ ॥
कायमानं तृणकुटी दर्भटं निभृतं गृहम् ।
कुडङ्गोद्धाटपिठरा इन्द्रकोषस्तु मञ्चकः ॥ ४ ॥
वासागारं भोगगृहं कन्यापत्न्याटनिष्कुटाः ।
देवीगृहं तु वलभी लयनं सौगतालयः ॥ ५ ॥
शिवस्य वृषमण्डप्यां बुधैर्गोपिटकं स्मृतम् ।
वातायनं गृहाक्षं स्याद्वधूटशयनं तथा ॥ ६ ॥

यत्र सुन्दरस्थाने गत्वा सन्निहितजनपदवासिनो जनाः क्रयविक्रयादिना **जीवन्ति तादृशस्य ग्रामस्य पुरस्य नगरमात्रस्य वा॥** इह तु केचिद् "द्विशतग्रामध्ये" इति पठन्ति ॥ २४ ॥ इति भूमिवर्गः ॥१॥ गर्भागारम् । गर्भ इवागारम् । अपवारकम् इति द्वे **मध्यवर्त्तिनो वासगृहस्य॥** वास्तु गृहपोतकः इति द्वे **वासगृहभूमेः॥** प्रासादः देवकुलम् इति द्वे **राज्ञां देवानां वा गृहभेदस्य ॥** पुत्रिका शालभञ्जिका इति द्वे **काष्ठनिर्मितपुत्तलिकायाः** ॥ १ ॥ ओकः गृहम् इति द्वे **गृहस्य ॥** पिटं चालः इति द्वे **गृहाच्छादनतृणादेः ॥** वडभी "वलभी" "वडभिः" चन्द्रशालिका कूटागारम् इति त्रीणि **गृहचूडायाः प्रासादाग्रस्थगृहस्य च ॥** कपिशीर्षम् । कपीनां प्रियं शीर्षमग्रम् । घोटकशीर्षकम् "खोडकशीर्षकम्" ॥२॥ क्रमशीर्षम् इति त्रीणि **कपिशीर्षस्य प्राकाराग्रस्य च ॥** खरकुटी नापितशालिका इति द्वे **क्षुरकर्मकारकगृहस्य ॥** कुलायिका "कुशालिका" । कुलायाः पक्षिवासस्थानं विद्यतेऽस्याम् । पक्षिशाला इति द्वे **पक्षिशालायाः ॥** कारावेश्म । कारैव वेश्म । वधाङ्कम् इति द्वे **बन्धनागारस्य** ॥३॥ कायमानं तृणकुटी इति द्वे **तृणच्छन्नगृहस्य ॥** दर्भटम् "दर्भटः" "दर्भतः" इत्येकं **निभृत गृहस्य गुप्तागारस्य ।** कुडङ्गः "कुटङ्कः" उद्धाटः पिठरः इति त्रीणि **गृहभेदस्य ॥** इन्द्रकोषः । इन्द्रस्य कोष इव सुखदायकत्वात् । मञ्चकः इति द्वे **मञ्चस्य** ॥ ४ ॥ वासागारं भोगगृहं कन्याटः पत्न्याटः निष्कुटः इति पञ्च **वासयोग्यगृहस्य ॥** देवीगृहं वलभी इति द्वे **देवायतनस्य ॥** लयनं सौगतालयः इति द्वे **बुद्धार्थं कृतस्य गृहस्य** ॥ ५ ॥ गोपिटकम् "गोपुटिकम्" इत्येकं **शिवस्य वृषमण्डप्याः ॥** बुधैः पण्डितैः स्मृतं ज्ञातम् । वातायनम् । वातस्य अयनं गतिर्येन । गृहाक्षम् । गृहस्य अक्षमिन्द्रियम् । वधूट-

**उपशल्योपकण्ठे द्वे कपाटो द्वारकण्टकः ।**
**कवाटश्चाररं कन्थावाटः प्राकार इत्यपि ॥ ७ ॥**

**इति पुरवर्गः ॥ २ ॥**

**शैलः स्थावरधातुभृद्धरकुकीलौव्यङ्गकः सानुमा-**
**ञ्जीमूतः पृथुशेखरश्च कटकी दन्ती नगो निर्झरी ।**
**कुट्टारोऽथ हिमालयो नगपतिर्मेनाधवोमागुरू**
**कैलासो गणपर्वतश्च रजतप्रस्थः कुबेराचलः ॥ १ ॥**
**हिरण्यनाभमैनाकसुनाभा हिमवत्सुते ।**
**शैलाग्रे शिखरं शृङ्गं दन्तः प्राग्भारमित्यपि ॥ २ ॥**
**पूर्वाद्रिर्दिनमूर्धा स्यादस्ताद्रिश्चरमाचलः ।**
**चन्दनाद्रिस्तु मलयः कौञ्चः क्रौञ्चश्च माल्यवान् ॥ ३ ॥**
**महेन्द्रो मलयः सह्यः शुक्तिमान् गन्धमादनः ।**
**विन्ध्यश्च पारियात्रश्च सप्तैते च कुलाचलाः ॥ ४ ॥**

शयनम् इति त्रीणि **गवाक्षस्य** ॥६॥ उपशल्यम् उपकण्ठम् । उपगतं कण्टम् अस्थिस्थानम् । इति द्वे **ग्रामान्तस्य** ॥ कपाटः द्वारकण्टकः कवाटः अररम् इति चत्वारि **कवाटस्य** ॥ कन्थावाटः प्राकारः इति द्वे **प्राकारस्य** ॥ ७ ॥ इति पुरवर्गः ॥२॥ शैलः स्थावरः धातुभृत् धरः कुकीलः व्यङ्गकः "व्यंशकः" सानुमान् जीमूतः पृथुशेखरः कटकी दन्ती । दन्तः शिखरमस्त्यस्य अथवा दन्तः सानुरस्त्यस्य । नगः निर्झरी कुट्टारः इति चतुर्दश **पर्वतस्य** ॥ हिमालयः नगपतिः मेनाधवः । मेनायाः हिमालयपत्न्याः धवः स्वामी । उमागुरुः । उमायाः गुरुर्पिता । इति चत्वारि **हिमालयस्य** ॥ कैलासः । केलसः स्फटिकस्तस्येव शुभ्रः । केलं तेनास्यतेऽत्र वा । गणपर्वतः रजतप्रस्थः कुबेराचलः इति चत्वारि **कैलासस्य** ॥ १ ॥ हिरण्यनाभः मैनाकः सुनाभः इति त्रीणि **हिमवत्सुतस्य मैनाकस्य** ॥ शिखरं शृङ्गं दन्तः प्राग्भारम् इति चत्वारि **शैलाग्रस्य पर्वतशिखरस्य** ॥ २ ॥ पूर्वाद्रिः दिनमूर्धा इति द्वे **मलयपर्वतस्य**॥अस्ताद्रिः चरमाचलः इति द्वे **अस्तपर्वतस्य**॥चन्दनाद्रिः मलयः इति द्वे **मलयपर्वतस्य** ॥ कौञ्चः क्रौञ्चः माल्यवान् इति त्रीणि **माल्यवत्पर्वतस्य** ॥ कौञ्चक्रौञ्च शब्दयोः पृथक् प्रयोगौ दृष्टौ । उदाहरणे यथा-"सस्मार नूनं दृढकौञ्चकुञ्जभागच्छिदो भार्गवमार्गणस्य" इति जानकीहरणम् । "सशैलस्तस्य दैत्यस्य ख्यातश्चित्रेण कर्मणा । केतुतामगमत्तस्य नाम्ना क्रौञ्चः स उच्यते" इति पुराणम् ॥ ३ ॥ महेन्द्रः मलयः सह्यः शुक्तिमान् "शक्तिमान्" गन्धमादनः "ऋक्षः" विन्ध्यः पारियात्रः "पारियात्रकः" "पारिपात्रिकः" इति सप्त **पृथगेकैकमेकैकस्य कुलाचलस्य** । तथाप्याह ग्रन्थान्तरे-'महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ।

अश्मा पञ्जरुकः पाटः पारटीटश्च मृन्मरुः ।
घर्षणालः शिलापुत्रो गृहाश्मा गृहकच्छपः ॥ ५ ॥
गैरिकं तु वनालक्तं रक्तधातुर्गवेरुकम् ।
प्रत्यश्मा गिरिमृच्चाथ शिलाधातुः शितोपलः ॥ ६ ॥
मृत्कोलो वर्णलेखा च कठिनी कक्खटी खटी ॥ ७ ॥
इति शैलवर्गः ॥ ३ ॥

वार्क्षं वनं तलं तलकं गुहिलं समजं त्रसम् ।
लीलोद्यानं देवनं स्याद्वीथ्याली पङ्क्तिरावली ॥ १ ॥
वृक्षः कारस्करो गच्छः पलाशी विष्टरः स्थिरः ।
चैत्यो देवतरुर्देवावासे करिभकुञ्जरौ ॥ २ ॥
छायातरुः स्थिरच्छायो वन्दा काकरुहा स्मृताः ।
वनस्पतिर्निर्लुटः स्यात्फुल्लोन्निद्रविकस्वराः ॥ ३ ॥
स्मितोन्मुद्रौ किलिञ्जस्तु सूक्ष्मदार्वथ पल्लवः ।
किशलं किसलं चाथोत्कलिकाङ्गारिते समे ॥ ४ ॥

विन्ध्यश्च पारिपात्रश्च सप्तैते कुलपर्वताः" इति ॥४॥ अश्मा पञ्जरुकः "पवारुकः" पाटः "का पारटीटः मृत् मरुः इति षट् **अश्मनः**॥घर्षणालः।घर्षणाय अलति पर्याप्नोति।शिलापुत्रः।शिल पुत्र इव । इति द्वे **शिलापुत्र इति ख्यातस्य प्रस्तरखण्डस्य॥** गृहाश्मा गृहकच्छ गृहे कच्छप इव । इति द्वे **शिलापट्ट इति प्रसिद्धायाः पेषणाशिलायाः** ॥ ५॥ कं वनालक्तम् । वनस्य अलक्त इव । रक्तधातुः गवेरुकं प्रत्यश्मा गिरिमृद् । गिरेर्मृदिव । इति **गैरिकस्य ॥** शिलाधातुः शितोपलः "सितोपलः" "श्वेतोपलः" ॥ ६ ॥ मृत्कोलः 'मक्को इति त्रीणि **पीतवर्णस्य गैरिकभेदस्य ॥** वर्णलेखा कठिनी कक्खटी खटी इति च **वर्णलेखनसाधनायाः खटिकायाः** ॥ ७ ॥ इति शैलवर्गः ॥ ३ ॥ वार्क्षं वनं तलं गुहिलं "गुहिनं" । गहनमित्यादयोऽप्यत्र । समजं त्रसम् इति सप्त **वनस्य ॥** लीलोद्यान लीलार्थमुद्यानम् । देवनम् इति द्वे **क्रीडोद्यानस्य॥**वीथी "रिङ्खः" आली पङ्क्तिः आव इकारान्ताः वीथिः आलिः आवलिरप्यत्र।इति चत्वारि पङ्क्तेः॥१॥वृक्षः कारस्करः गच्छः।ब "गक्षः" पलाशी विष्टरः स्थिरः इति षट् **वृक्षस्य ॥** चैत्यः देवतरुः करिभः कुञ्जरः चत्वारि **ग्रामादिप्रसिद्धस्य देवावासवृक्षस्य** ॥२॥ छायातरुः।छायार्थमाश्रितः त स्थिरच्छायः । इति द्वे **छायार्थं निषेवितस्य तरोः ॥** वन्दा काकरुहा । का रोहति अन्तरिक्षे मूलशून्यतया जायते । इति द्वे **वन्दावृक्षस्य ॥** वनस्पतिः नि "निर्मुटः" इति द्वे **अपुष्पवृक्षस्य ॥** फुल्लः उन्निद्रः विकस्वरः ॥ ३ ॥ स्मितः उन्मुद्रः इति **कुसुमितवृक्षस्य ॥** किलिञ्जः सूक्ष्मदारुः इति द्वे **सूक्ष्मकाष्ठस्य॥**पल्लवः किशलं "वि

गुच्छो गुलुच्छः क्षेपः स्याच्चमरी मञ्जरं न ना ।
मञ्जिश्च गोन्दी गुन्दी च मकरन्दो मरन्दवत् ॥ ५ ॥
वेधकः कण्टके पत्रसूचिद्रुनखवङ्किलाः ।
पिप्पलो वादरङ्गः स्याच्चैत्यद्रुः केशवालयः ॥ ६ ॥
यक्षोऽडुम्बरकं त्वस्य फलेऽथ ग्रहनाशनः ।
देववृक्षो दलेगन्धिः सप्तपर्णः शिरोरुजा ॥ ७ ॥
दन्तकर्षणजम्बीरौ कतकोऽम्बुप्रसादनः ।
वरुणस्त्वऽश्मरीघ्नोऽथाध्वगभोग्यो मधुद्रुमः ॥ ८ ॥
कपिचूतोऽम्रातकोऽस्य फले पशुहरीतकी ।
पिकबन्धुस्तु चूतः स्यात्स्त्रीप्रियः षट्पदातिथिः ॥ ९ ॥
मधुदूतो वसन्तद्रुर्महाकालोरुकालकौ ।
शोभाञ्जनस्तु स्त्रीचित्तहारी विद्रधिनाशनः ॥ १० ॥
प्रभाञ्जनोऽथ प्राचीनपनसो गोहरीतकी ।
महाकपित्थो बिल्वश्च कोलिर्गृध्रनखी स्मृता ॥ ११ ॥

किसलम् । किसलयमप्यत्र।इति त्रीणि **पल्लवस्य॥** उत्कलिका अङ्गारिता इति द्वे **पलाशोत्कलिकायाः** ॥ ४ ॥ गुच्छः गुलुच्छः क्षेपः इति त्रीणि **कलिकाकुसुमादिसमूहवतः स्तबकस्य ॥** चमरी मञ्जरं मञ्जिः इति त्रीणि **पुष्पमञ्जर्याः ॥** अत्र मञ्जरशब्दः पुँल्लिङ्गे न भवति । गोन्दी गुन्दी इति द्वे **पुष्परेणोः ॥** मकरन्दः मरन्दः इति द्वे **पुष्पमधोः** ॥ ५ ॥ वेधकः पत्रसूचिः द्रुनखः । द्रोर्नखः । वङ्किलः इति चत्वारि **कण्टकस्य ॥** पिप्पलः वादरङ्गः चैत्यद्रुः "चैत्यदुः" केशवालयः ॥ ६ ॥ यक्षः इति पञ्च **पिप्पलस्य ॥** उडुम्बरकम् "उदुम्बरकम्" इत्येकं **तत्फलस्य ॥** ग्रहनाशनः "गृहनाशनः" । ग्रहं ग्रहजन्यारिष्टं नाशयति । देववृक्षः दलेगन्धिः "दानगन्धिः" सप्तपर्णः शिरोरुजा इति पञ्च **सप्तपर्णवृक्षस्य** ॥ ७ ॥ दन्तकर्षणः "दन्तहर्षणः" जम्बीरः "जम्भिरः"- इति द्वे **दन्तशठवृक्षस्य ॥** कतकः अम्बुप्रसादनः । अम्बूनि प्रसीदन्त्यनेन । अम्बुप्रसादोऽप्यत्र । इति द्वे **निर्माल्लीति ख्यातस्य कतकवृक्षस्य ॥** वरुणः अश्मरीघ्नः इति द्वे **वरुणवृक्षस्य ॥** अध्वगभोग्यः मधुद्रुमः ॥ ८ ॥ कपिचूतः अम्रातकः इति चत्वारि **अम्रातकवृक्षस्य ॥** पशुहरीतकी । पशूनां हरीतकीव हितकारित्वात् । इत्येकम् **अम्रातकफलस्य ॥** पिकबन्धुः । पिकानां कोकिलानां बन्धुः । चूतः स्त्रीप्रियः । स्त्रीणां प्रियः षट्पदातिथिः ॥ ९ ॥ मधुदूतः वसन्तद्रुः इति षट् **आम्रस्य ॥** महाकालः। महांश्चासौ कालश्च । उरुकालकः इति द्वे **महाकालस्य ॥** शोभाञ्जनः । शोभायै आज्यते । स्त्रीचित्तहारी । स्त्रियश्चित्तं हरति । विद्रधिनाशनः । विद्रधिं नाशयति ॥ १० ॥ प्रभाञ्जनः

स्या (त्पि)पिच्छलदला स्वादुफलाऽथो नागरङ्गकः ।
चक्राधिवासी नारङ्गः किर्मीरस्त्वक्सुगन्धकः ॥ १२ ॥
स्याद्वर्मणः पिच्छिलत्वग्धवस्तु मधुरत्वचः ।
पिशाचद्रुः पीतफलः शाकोटः कर्कशच्छदः ॥ १३ ॥
अर्शोहितस्तु रक्षोघ्नो भल्लातक्यथ शाल्मली ।
दुरारोहा स्मृता पिण्डीतगरः कफवर्धनः ॥ १४ ॥
काकचिञ्ची तुलाबीजं खदिरो बालपत्रकः ।
यूपद्रुः कुष्ठहच्चाथ करञ्जो घृतपूर्णकः ॥ १५ ॥
रसायनफला पथ्या शक्रसृष्टा सुधोद्भवा ।
सरलो धूपवृक्षः स्याच्छोणको न्यङ्गुभूरुहः ॥ १६ ॥
चम्पकोषस्तु मुरजफलः स्यात्पनसश्च सः ।
डहुः क्षुद्राम्लपनसो निचुलो रक्तमञ्जरः ॥ १७ ॥

इति चत्वारि **शोभाञ्जनवृक्षस्य** ॥ प्राचीनपनसः गोहरीतकी । गोः हरीतकीव हितकारित्वात् । महाकपित्थः । महांश्चासौ कपित्थश्च । बिल्वः इति चत्वारि **बिल्ववृक्षस्य** ॥ कोलिः गृध्रनखी । गृध्रस्य नख इव पत्रादि अस्याः ॥ ११ ॥ पिच्छिलदला स्वादुफला । स्वादु मधुररसं फलमस्याः । इति चत्वारि **बदर्याः** ॥ नागरङ्गकः चक्राधिवासी **नारङ्गः** किर्मीरः । किर्मीरं चित्रवर्णो यस्य । त्वक्सुगन्धकः ॥ १२ ॥ वर्मणः पिच्छलत्वक् इति सप्त **नागरङ्गकस्य** ॥ धवः मधुरत्वचः पिशाचद्रुः । पिशाचानां द्रुः । पीतफलः । पीतं पाण्डुवर्णं फलमस्य । इति चत्वारि **धवस्य** ॥ शाकोटः कर्कशच्छदः इति द्वे **शाकोटस्य** ॥ १३ ॥ अर्शोहितः । अर्शसः हितः पथ्यम् । रक्षोघ्नः भल्लातकी इति त्रीणि **भल्लातक्याः** ॥ शाल्मली दुरारोहा इति द्वे **शाल्मल्याः** ॥ पिण्डीतगरः ककवर्धनः इति द्वे **पण्डीतगरस्य** ॥ १४ ॥ काकचिञ्ची । काकवर्णा चिञ्चा प्रान्तभागः फले यस्याः । "काकविञ्चिः" "काकचिञ्चा" तुलाबीजम् । तुलायाः बीजं मूलम् । इति द्वे **काकचिञ्च्याः** ॥ खदिरः बालपत्रकः यूपद्रुः कुष्ठहृत् इति चत्वारि **खदिरस्य** ॥ करञ्जः घृतपूर्णकः इति द्वे **करञ्जस्य** ॥ १५ ॥ रसायनफला । रसायनमौषधविशेष इव फलं व्याधिघातकं यस्याः । पथ्या शक्रसृष्टा । शक्रेण सृष्टा निर्मिता । सुधोद्भवा इति चत्वारि **हरीतक्याः** ॥ सरलः धूपवृक्षः इति द्वे **सरलवृक्षस्य** ॥ शोणकः न्यङ्गुभूरुहः । न्यङ्गुरिव भूरुहः । तस्य बहुशृङ्गाकारत्वात् । "न्यङ्कुभूरुहः" इति द्वे **शोणकवृक्षस्य** ॥१६॥ चम्पकोषः "चम्पकालुः" "चम्पकोल्वः" मुरजफलः मुरज इव फलं यस्य । पनसः इति त्रीणि **पनसवृक्षस्य**॥ डहुः "डहूः" क्षुद्राम्लपनसः । आम्लः आम्लरसः पनसः क्षुद्रश्चासौ आम्लपनसश्च । इति द्वे **लकुचस्य** ॥ निचुलः रक्तमञ्जरः । रक्तवर्णा मञ्जरी अस्त्यस्य

निम्बोऽर्कपादपः पुण्यगन्धस्तु कुसुमाधिराट् ।
चयको वरलब्धश्च वकुलः सिंहकेशरः ॥ १८ ॥
सीधुगन्धोऽथ कङ्केलिर्नटः कान्ताङ्घ्रिदोहदः ।
अशोकः पिण्डपुष्पस्तु दाडिमः फलशाडवः ॥ १९ ॥
दाडिम्बः पर्वरुट् च स्यात्स्वाद्वम्लः शुकवल्लभः ।
पिण्डीरोऽथ सुवर्णभनागाख्यो नागकेशरः ॥ २० ॥
स्यात्पुष्परोचनश्चाऽपि चूर्णं तस्य हरिद्रवः ।
निशिपुष्पा तु शेफाली कुटजः पाण्डुरद्रुमः ॥ २१ ॥
लताशङ्कुतरुः शालो नीपो धाराकदम्बकः ।
कटङ्कटेरी हरिद्रा शिंशपा युग्मपत्रिका ॥ २२ ॥
पटोलं स्याद्राजफलं तस्य मूले तु रम्यकम् ।
सूत्रपुष्पस्तु कार्पासे जीर्णपर्णं कदम्बकम् ॥ २३ ॥

इति द्वे **हिज्जलवृक्षस्य** ॥ १७ ॥ निम्बः अर्कपादपः । अर्कः अर्कवृक्ष इव तीक्ष्णः पादपः । इति द्वे **निम्बवृक्षस्य** ॥ पुण्यगन्धः । पुण्यः पवित्रो गन्धो यस्य । कुसुमाधिराट् । कुसुमानां कुसुमेषु वा अधिराट् । कुसुमाधिपोऽप्यत्र । चयकः वरलब्धः । वरः उत्कर्षः पुष्पेषु लब्धो येन । इति चत्वारि **चम्पकवृक्षस्य** ॥ वकुलः "बकुलः" सिंहकेशरः ॥ १८ ॥ सीधुगन्धः इति त्रीणि **वकुलस्य** ॥ कङ्केलिः 'कङ्केल्लिः'। कङ्केम् अप्यत्र । नटः कान्ताङ्घ्रिदोहदः । कान्ताङ्घ्रिः नारीपादस्पर्शः दोहदं पुष्पोद्गमौषधं यस्य । अशोकः इति चत्वारि **अशोकवृक्षस्य** ॥ पिण्डपुष्पः । पिण्डं संहतं पुष्पं यस्य । दाडिमः फलशाडवः ॥ १९ ॥ दाडिम्बः पर्वरुट् । पर्वणि रोहति।स्वाद्वम्लः । स्वादुः अम्लः यस्यः । "स्वाद्वम्लः" शुकवल्लभः । शुकानां वल्लभः प्रियः। पिण्डीरः । पिण्डं पिण्डाकारं फलमीरयति । "दाडिम्बसारपिण्डीरस्वाद्वम्ल शुकवल्लभाः" इति रभसः ॥ इत्यष्टौ **दाडिमस्य** ॥ सुवर्णाख्यः "सुवर्णाख्यः" सुष्ठु वर्णं पत्रं तदाख्या यस्य । इभाख्यः नागाख्यः नागकेशरः ॥ २० ॥ पुष्परोचनः । "स्वर्णभसर्पाख्यो नागकेशरः षट्पदप्रियः" इति रभसः । इति पञ्च **नागकेशरस्य** ॥ हरिद्रवः । हरिवर्णः द्रवः गुणो यस्य । इत्येकं **नागकेशरचूर्णस्य** ॥ निशिपुष्पा । निशि रात्रौ पुष्पाणि यस्याः । शेफाली इति द्वे **शेफाल्याः** ॥ कुटजः पाण्डुरद्रुमः । पाण्डुरश्चासौ द्रुमश्च । इति द्वे **कुटजवृक्षस्य** ॥ २१ ॥ लताशङ्कुतरुः शालः इति द्वे **शालवृक्षस्य** ॥ नीपः धाराकदम्बकः ॥ धाराकालिकः कदम्बः । इति द्वे **नीपवृक्षस्य प्रावृषेण्यकदम्बभेदस्य च** ॥ कटङ्कटेरी हरिद्रा इति द्वे **हरिद्रायाः** ॥ शिंशपा युग्मपत्रिका "गुरुपत्रिका" इति द्वे **शिंशपायाः** ॥ २२ ॥ पटोलं राजफलम् इति द्वे **पटोलस्य** ॥ रम्यकम् इत्येकं **पटोलमूलस्य** ॥ सूत्रपुष्पः । सूत्रगर्भं पुष्पं यस्य । इत्येकं **कार्पासस्य** ॥ जीर्णपर्णम् । जीर्णानि पर्णान्यस्य ।

प्रहसन्ती तु यूथीस्याद्दमनः पुष्पचामरः ।
मालतीपुष्पकलिका सौमनस्यायनीं विदुः ॥ २४ ॥
कुन्दे स्याद्वोरटः पुंसि ग्रैष्मी तु नवमालिका ।
रक्तपिण्डस्त्वोड्रपुष्पः स्यादम्लानः कुरण्टकः ॥ २५ ॥
कन्दलशिलीन्ध्रपुष्पे श्लेष्मघ्ना त्रिपुरमल्लिका प्रोक्ता ।
एरण्डहस्तिकर्णौ प्राचीनामलकवारिबदरे द्वे ॥ २६ ॥
बृहत्पाटलिधुस्तूरौ कदली त्वायतच्छदा ।
स्यात्तन्तुविग्रहा मञ्जिफला वारणवल्लभा ॥ २७ ॥
वातिङ्गणस्तु वार्ताकुर्वार्ताकः शाकबिल्वकः ।
क्लीबे वङ्गं च वार्ताकी स्यान्महाबृहतीत्यपि ॥ २८ ॥
कुष्ठं गदाह्वयं मूलं त्वस्य पुष्करमूलकम् ।
वङ्गसेनस्त्वगस्तिद्रुः शुकनासो मुनिद्रुमः ॥ २९ ॥

कदम्बकम् इति द्वे **कदम्बवृक्षस्य** ॥ २३ ॥ प्रहसन्ती "प्रहसन्तिनी" यूथी इति द्वे **यूथिकायाः** ॥ दमनः पुष्पचामरः । पुष्पं चामर इव यस्य । इति द्वे **मदनस्य** ॥ मालती ॥ मां लक्ष्मीं शोभां वा लतति वेष्टते । इत्येकं **सौमनस्यायन्याः मालतीपुष्पकलिकायाः** ॥ २४ ॥ वोरटः "वोरवः" इत्येकं **कुन्दस्य** ॥ ग्रैष्मी । ग्रीष्मे भवा । नवमालिका "नवमल्लिका" इति द्वे **नवमाल्लिकायाः** ॥ रक्तपिण्डः । रक्तः पिण्डः यस्य । ओड्रपुष्पः "ओण्ड्रपुष्पः" ओण्ड्रं पुष्पमस्य । इति द्वे **जवावृक्षस्य** ॥ अम्लानः । नास्ति म्लानः अस्य । कुरण्टकः इति द्वे **महामहा इति प्रसिस्य कुरण्टकवृक्षस्य** ॥ २५ ॥ कन्दलं शिलीन्ध्रपुष्पम् इति द्वे **कन्दलीलतापुष्पस्य** ॥ श्लेष्मघ्ना "श्लेष्मघ्नी" त्रिपुरमल्लिका । त्रिपुराणां मल्लिका । इति द्वे **त्रिपुरमल्लिकायाः** ॥ एरण्डः हस्तिकर्णः । हस्तिनः कर्ण इव पर्णमस्य । इति द्वे **एरण्डस्य** ॥ प्राचीनामलकम् । प्राचीनं च तत् आमलकं च । वारिबदरा इति द्वे **पानीयामलक इति ख्यातस्य । प्राचीनामलकस्य** ॥ २६ ॥ बृहत्पाटलिः धुस्तूरः इति द्वे **धुस्तूरवृक्षस्य** ॥ कदली आयतच्छदा । आयताः दीर्घाः छदाः पत्राणि यस्याः । तन्तुविग्रहा मञ्जिफला । मञ्जिः मञ्जरी फले यस्याः । वारणवल्लभा । वारणानां हस्तीनां वल्लभा प्रिया । इति पञ्च **कदलीवृक्षस्य** ॥ २७ ॥ वातिङ्गणः वार्ताकुः वार्ताकः शाकबिल्वकः । शाकोपि बिल्व इव । स्वार्थे कन् प्रत्ययः । वङ्गं वार्ताकी महाबृहती । "वातिङ्गणस्तु वार्तागो वार्ताकः शाकबिल्वकः" इति रभसः । "वार्ता वातिङ्गणे वृत्तौ" इति विश्वः । इति सप्त **वार्ताकोः** ॥ २८ ॥ कुष्ठं गदाह्वयम् इति द्वे **कुष्ठस्य** ॥ पुष्करमूलकम् इत्येकं **कुष्ठमूलस्य** ॥ वङ्गसेनः । वङ्गमिव शुभ्रा सेना पुष्पमस्य। "वङ्गसेनः" अगस्तिद्रुङ्कः। अगस्तिप्रियः द्रुर्वृक्षः।शुकनासः। शुकस्य नासेव

अनलिः कुनली पुत्रञ्जीवस्तु क्षीपदापहः ।
छत्रको मल्लिपत्रं स्यात्कुब्जको वारिकण्टकः ॥ ३० ॥
वास्तूकष्टक्कदेशीयः शाकवीरो घनामलः ।
शोथजिद्गरहा कालशाकोऽप्यथ महौषधी ॥ ३१ ॥
मही विषघ्नी चक्राङ्गी मत्स्याक्षी हिलमोचिका ।
जलब्रह्मी च शालिञ्चे पत्तूरो लोहमारकः ॥ ३२ ॥
पेचुकं पेचुली पेचुर्नाडीचो विश्वरोचनः ।
केशराजो नागमारः वपरुर्भृङ्गसोदरः ॥ ३३ ॥
सुनिषण्णं चुचुः पुंसि छत्रपत्रं तमालकम् ।
स्थलपद्ममथो देवपली मध्वालुकं विदुः ॥ ३४ ॥
फलपुच्छो वरण्डालुः स्याद्रङ्गेष्टालुकं तु यत् ।
श्रीमस्तकः स्वस्तिकः स्याद्राहूच्छिष्टो रसोनकः ॥ ३५ ॥

पत्रमस्य । मुनिद्रुमः । मुनीनां प्रियो मुनिनामको वा द्रुमः ॥ २९ ॥ अनलिः कुनली इति षट् **मुनिवृक्षस्य**॥ पुत्रञ्जीवः "पुत्रजीवः" । पुत्रजीवकोऽप्यत्र । श्लीपदापहः श्लीपदं रोगमपहन्ति । इति द्वे **पुत्रञ्जीववृक्षस्य** ॥ छत्रकः मल्लिपत्रम् । मल्लिरिव पत्रमस्य । इति द्वे **छत्रकवृक्षस्य** ॥ कुब्जकः । इत्येकं महसह इति **ख्यातस्य पुष्पप्रधानवृक्षस्य** ॥ "अशोकात्पुष्पसाहस्रात्सेवतीपुष्पमुत्तमम् । सेवतीपुष्पसाहस्रात्कुब्जकं पुष्पमुत्तमम्" इति नारसिंहम् । वारिकण्टकः । वारिणः कण्टक इव । इत्येकं **शृङ्गाटकस्य** ॥ ३० ॥ वास्तुकः टक्कदेशीयः शाकवीरः । शाकेषु वीरः वीर्याधायकत्वात् । घनामलः । घनश्चासौ अमलश्च । इति चत्वारि **वास्तूकशाकस्य** ॥ शोथजित् । शोथं जयति । शोथजिह्वः शोथघ्नी शोथघ्नादयोऽप्यत्र । इत्येकं **पुनर्नवायाः** ॥ गरहा कालशाकः इति द्वे **श्राद्धीयस्य कालशाकस्य** ॥ महौषधी ॥ ३१ ॥ मही विषघ्नी चक्राङ्गी "चक्राङ्गा" चक्रमङ्गमस्य । इति चत्वारि **कटुरोहिण्याः** ॥ मत्स्याक्षी । मत्स्याक्षीव पुष्पमस्याः । हिलमोचिका जलब्रह्मी इति त्रीणि **हिलमोचिका इति ख्यातायाः जलब्रह्म्याः** पत्तूरः "पक्कूरः" लोहमारकः । लोहं मारयति जारयति । इति द्वे **शालिञ्चशाकस्य** ॥ ३२ ॥ पेचुकं "केचुकं" पेचुली पेचुः नाडीचः "नारीचः" विश्वरोचनः इति पञ्च **नाडीचशाकस्य** ॥ केशराजः । केशा राजन्तेऽनेन । नागमारः । नागं हस्तिनं मारयति । वपरुः "वररुः" भृङ्गसोदरः "भङ्गसोदरः" इति चत्वारि **भृङ्गराजस्य** ॥ ३३ ॥ सुनिषण्णम् । सुष्ठु निषण्णं स्वप्नो यस्मात् । चुचुः इति द्वे **सुनिषण्णशाकस्य** ॥ चुचुशब्दः पुँल्लिङ्गः । छत्रपत्रम् । छत्रमिव पत्रमस्य । तमालकं स्थलपद्मम् इति त्रीणि **स्थलपद्मस्य**॥ देवपली "देवपत्री" मध्वालुकः मधुर्मधुर आलुर्यस्य । इति द्वे **मध्वालिवति ख्यातस्य मूलभेदस्य** ॥ ३४ ॥ फलपुच्छः । फलं पुच्छमिव यस्य । वरण्डालुः इति द्वे **वरण्डालिवति प्रसिद्धस्य एरण्डवृक्ष-**

कुष्माण्डस्तु घृणावासस्तिमिषो ग्राम्यकर्कटी ।
वालुकी कर्कटी वारुर्मूत्रला रोमशा च सा ॥ ३६ ॥
स्याच्चेलानश्चित्रफलः सुखाशो राजतेनिशः ।
लतापनसनाटाम्लौ सेटुरूर्ध्वासितस्तु यः ॥ ३७ ॥
परारुः कारवेल्लोऽसौ गोडुम्बा राजचिर्भटः ।
मृत्युबीजस्तु वंशः स्यात्केतकः क्रकचच्छदः ॥ ३८ ॥
दक्कटो बहुमूलः स्यात्करीरे वेणुकर्करः ।
काशोऽश्ववालः काकेक्षुर्वनहासश्च जन्तुला ॥ ३९ ॥
गुडदारुर्मधुतृणं स्यादिक्षुरसिपत्रकः ।
खारोदको नारिकेलः करकाम्भाः शिरःफलः ॥ ४० ॥

**विशेषस्य ॥** रङ्गेष्टालुकं श्रीमस्तकः स्वस्तिकः इति त्रीणि **रङ्गेष्टालिवति ख्यातस्य सितावरशाकस्य॥** राहूच्छिष्टः । राहोः उच्छिष्टः । रसोनकः इति द्वे **लसुनस्य** ॥ ३५॥ कुष्माण्डः । कूष्माण्डोऽप्यत्र । घृणावासः तिमिषः ग्राम्यकर्कटी । ग्राम्या च सा कर्कटी च । इति चत्वारि **कुष्माण्डस्य॥** वालुकी कर्कटी वारुः मूत्रला रोमशा इति पञ्च **कर्कट्याः**॥३६॥ चेलानः "चेलालः" चित्रफलः । चित्रं फलं यस्य । सुखाशः । सुखेनाऽश्यते । राजतेनिशः "राजतामिषः" "राजतेमिषः" लतापनसः । लतायां पनसमिव स्थूलं फलमस्य । नाटाम्लः "नाटाम्रः" सेटुः "सेदुः" इति सप्त **राजतिनिश इति ख्यातस्य सुखाशवृक्षस्य॥** ऊर्ध्वासितः । ऊर्ध्वमुपरिभागे असितः कृष्णः आसितो वा ॥ ३७ ॥ परारुः "पवारुः" कारवेल्लः । कारं वेल्लते । गोडुम्बा । गां भूमिं तुम्बति अर्दते । राजचिर्भटः "राजचिर्चिटः" "राजचिर्भटी"अप्यत्र ।इति पञ्च **कारवेल्लस्य॥**मृत्युबीजः ।मृत्युं दाह एव बीजं कारणमस्य। तस्य दाहादेवाङ्कुरादेरुद्भवः । वंशः इति द्वे **वंशस्य ॥** केतकः क्रकचच्छदः इति द्वे **केतकस्य** ॥३८॥दक्कटः बहुमूलः । बहूनि मूलानि यस्य । इति द्वे **बहुमूल इति प्रसिद्धस्य शिग्रोः ॥** वेणुकर्करः "वेणुकर्कटः" इत्येकं **करीरस्य ॥** अन्यत्र करवीरस्येति दृश्यते । काशः अश्ववालः । अश्वस्य वालः केशर इव तदाकारपुष्पत्वात् । काकेक्षुः वनहासः । वनस्य हास इव प्रकाशकत्वात् । "वनहारः" जन्तुला "चुर्णला" । जन्तून् कीटान् लाति । इति पञ्च **काश इति ख्यातस्य काशतृणस्य** ॥ ३९ ॥ गुडदारुः । गुडप्रधानो दारुः शाकः । मधुतृणम् । मधु च तत्तृणं च । वा पुंस्त्वमपि । इक्षुः असिपत्रकः । असिरिव तीक्ष्णं पत्रमस्य । कप् वा । असिपत्रोऽप्यत्र । इति चत्वारि **इक्षोः ॥** खारोदकः "खानोदकः" नारिकेलः। नालिः केन वायुना जलेन वा इलति चलति। रलयोरैक्यम् । करकाम्भाः । करकाया अम्भ इवाम्भो यस्य । शिरःफलः । शिर इव फलमस्य ।

**सुरञ्जनो गोपदलो राजतालश्छटाफलः।**
**करमट्टस्तन्तुसारो गुवाको कोट इत्यपि॥ ४१॥**
**रामपूगस्तु कामीनो मुनिपूगः सुरेवटः।**
**पूगरोटस्तु हिन्तालः क्लीबं किरीटि तत्फलम्॥ ४२॥**
**घनामयः स्यात्खर्जूरो द्वौ तु काञ्चिमभञ्जरू।**
**तरौ देवकुलोद्भूते दूर्वा तु हरितालिका॥ ४३॥**

**इति वनौषधिवर्गः॥ ४॥**

**सिंहः कण्ठीरवो भीमविक्रान्तः करिमाचलः।**
**पञ्चशिखश्च शैलाटः पारीन्द्रः श्वेतपिङ्गलः॥ १॥**
**मरुत्प्लवश्च नादोऽस्य चुक्कारः क्ष्वेडितं च तत्।**
**उत्पादकस्तु शरभः शार्दूलोऽष्टापदश्च सः॥ २॥**
**अथ हिंस्रपशुर्व्याडः श्वापदः शिबिरित्यपि।**
**वाध्रीणसस्त्वेकचरो गणोत्साहश्च गण्डकः॥ ३॥**
**हिंसारुः श्वापदो व्याघ्रे महिषस्तु रजस्वलः।**
**दंशभीरुर्जरन्तश्च लौलिको यमवाहनः॥ ४॥**

इति चत्वारि **नारिकेलस्य** ॥ ४० ॥ सुरञ्जनः। सुरञ्जयति। गोपदलः। गोपदमात्रस्थानं लाति। राजतालः। राज्ञस्ताल इव प्रियः। छटाफलः। छटेव परस्परान्वितं फलमस्य। करमट्टः तन्तुसारः गुवाकः कोटः "झोरः" इत्यष्टौ **पूगवृक्षस्य** ॥ ४१ ॥ रामपूगः। रामः अभिरामः पूगः। कामीनः। काममनुगच्छति। मुनिपूगः सुरेवटः इति चत्वारि **रामपूग इति ख्यातस्य पूगभेदस्य**॥ पूगरोटः हिन्तालः। हीनस्तालो यस्मात्। इति द्वे **हिन्तालस्य** ॥ किरीटि "तिरीटि" इत्येकं **हिन्तालफलस्य** ॥ ४२ ॥ घनामयः खर्जूरः इति द्वे **खर्जूरस्य** ॥ काञ्चिमः भञ्जरुः इति द्वे **देवकुलोद्भूतस्य तरोः** ॥ दूर्वा हरितालिका। हरेस्तालो हस्ततालो यस्याम्। इति द्वे **दूर्वायाः** ॥ ४३ ॥ इति वनौषधिवर्गः ॥ ४ ॥ सिंहः कण्ठीरवः। कण्ठ्यां रवो यस्य। भीमविक्रान्तः। भीमो विक्रान्तो यस्य। करिमाचलः पञ्चशिखः। पंच शिखा यस्य। शैलाटः। शैलं पर्वतमटति।पारीन्द्रः। पारी इन्द्र इव। "पारिन्द्रः" श्वेतपिङ्गलः। देहेन श्वेतः जटया पिङ्गलः ॥१॥ मरुत्प्लवः "मरुत्पवः" इति नव **सिंहस्य**॥ चुक्कारः क्ष्वेडितं इति द्वे **सिंहवादस्य**॥उत्पादकः। ऊर्ध्वस्थिताः पादाः यस्य। अस्य पृष्ठस्थ चतुश्चरणत्वादूर्ध्वपादत्वम्। तस्य लक्षणम "अष्टपादूर्द्ध्वनयन ऊर्द्धपादचतुष्टयः" इत्युक्तम्। शरभः शार्दूलः अष्टापदः। अष्टसु धातुषु पदं प्रतिष्ठा यस्य। इति चत्वारि **शरभमृग इति ख्यातस्य गजारातेः** ॥२॥ हिंस्रपशुः व्याडः श्वापदः। शुन इवापदस्मात्। शिबिः इति चत्वारि **हिंस्रपशोः** ॥ वाध्रीणसः "वाधीनसः" एकचरः। एकः सन् चरति। गणोत्साहः गण्डकः इति चत्वारि **गण्डकपशोः** ॥ ३ ॥ हिंसारुः श्वापदः व्याघ्रः इति त्रीणि **व्याघ्रस्य** ॥ महिषः रज-

अथ शूकरे वनाहिरदन्तायुधवक्रवज्रदीर्घरदाः ।
सूचीरोमा बहुसूराखनिकः स्थूलनासिको भूक्षित् ॥ ५ ॥
एणः कुरङ्गमो रिश्यः स्यादृश्यश्चारुलोचनः ।
गोलाङ्गूले कपित्थास्यदधिशोणनगाटनाः ॥ ६ ॥
किखिश्च हूरवस्तु स्याच्छृगालो घोररासनः ।
लोपाशो मृतमत्तश्च वनश्वाऽथशृगालिका ॥ ७ ॥
लोपाशिका दीप्तजिह्वा किखिरुल्कामुखी च सा ।
विडालः कुन्दमो नक्तचारी दीप्ताक्षजाहकौ ॥ ८ ॥
शशकस्तु वनाखुः स्यात्खट्टाशी पूतिशालिका ।
गवयस्तु गवानूक एडकः शिशुवाह्यकः ॥ ९ ॥
वनच्छागोऽथ गन्धौतुः खट्टाशो वनवासनः ।
उन्दुरुस्तुटुमो रन्ध्रबभ्रुर्दीना तु मूषिका ॥ १० ॥

स्वलः दंशभीरुः। दंशात् वनमक्षिकायाः भीर्यस्य । जरन्तः लालिकः "नालिकः" यमवाहनः । यमं वाहयति । स्थानात् स्थानान्तरं नयति । इति **षट् महिषस्य** ॥४॥ वनाहिरः दन्तायुधः । दन्ता आयुधा इव यस्य। वक्ररदः वज्ररदः । वज्रदन्तादयोऽप्यत्र। दीर्घरदः "दीर्घरतः" दीर्घौ रदौ यस्य। सूचीरोमा सूची इव रोमाणि यस्य । बहुसूः आखनिकः स्थूलनासिकः । स्थूला नासिका यस्य । भूक्षित् इति दश **शूकरस्य**॥५॥ एणः कुरङ्गमः। कौ रङ्गं मिमीते । रिश्यः ऋश्यः चारुलोचनः। चारू लोचने यस्य । इति पञ्च **कुरङ्गस्य** ॥ तस्य लक्षणम् "कुरङ्गमीषत्ताम्रः स्याद्ध-रिणाकृतिको महान्" इत्युक्तम् । गोलाङ्गूलः । गोरिव कृष्णं लाङ्गूलमस्य । कपित्थास्यः । कपित्थमिवास्यं यस्य । दधिशोणः नगाटनः । नगेषु वृक्षेषु अटति ॥ ६ ॥ किखिः इति पञ्च **वानरस्य** ॥ हूरवः । हूहू इति रवो यस्य । शृगालः घोररासनः "घोरवाशनः" घोरं रासनं शब्दोऽस्य । लोपाशः "लोपाकः" मृतमत्तः वनश्वा । वने श्वा इव । इति षट् **शृगालस्य**॥ शृगालिका ॥ ७ ॥ लोपाशिका "लोमालिका" दीप्तजिह्वा । दीप्ता ज्वलन्ती जिह्वा यस्याः । तस्या हि रात्रौ जिह्वा ज्वलतीति प्रसिद्धम् । किखिः उल्कामुखी इति पञ्च **शृगालि-कायाः** ॥ विडालः कुन्दमः नक्तचारी । नक्ते रात्रौ चरतीति । दीप्ताक्षः । दीप्तमक्षं यस्य । जाहकः इति पञ्च **विडालस्य** ॥ ८ ॥ शशकः वनाखुः । वने आखुरिव । इति द्वे **शशकस्य** ॥ खट्टाशी "खट्टासी" पूतिशालिका "पूतिशारिजा" । इति द्वे **खट्टाश्याः** ॥ गवयः गवानूकः "गवालुकः" इति द्वे **गवानूकस्य** ॥ एडकः शिशुवाह्यकः ॥९॥ वनच्छागः इति त्रीणि **एडकस्य** ॥ गन्धौतुः । गन्धश्चासौ ओतुश्च गन्धेन युक्त ओतुर्वा । खट्टाशः वनवासनः इति त्रीणि **खट्टाशस्य** ॥ उन्दुरुः । उन्दुरः उन्दूरः उन्दरुश्चाप्यत्र । तुटुमः । "तुटुमो हारमहार्यवेपथुः" इति जानकीहरणम् । रन्ध्रबभ्रुः इति त्रीणि **मूषिकस्य** ॥ दीना।

स्याच्चिक्रो वेश्मनकुलः पुंवृषो गन्धमूषिकः ।
स्याद्वेदारः क्रकचपात्कृकलाशस्तृणाञ्जनः ॥ ११ ॥
प्रतिसूर्योऽप्याञ्जनस्तु चित्रकोलो हलाहलः ।
कारस्कराटिका कर्णजलौका स्यादथो वटिः ॥ १२ ॥
उत्पादिको देहिका स्यादष्टपादस्तु किन्तनुः ।
प्रासादकुक्कुटो झिल्लीकण्ठो गृहकपोतकः ॥ १३ ॥
पारावतोऽथ शक्राख्यो दिवान्धो वक्रनासिकः ।
हरिनेत्रो दिवाभीतो नखाशी पीयुघर्घरौ ॥ १४ ॥
काकभीरुर्नक्तचारी कणाटीनस्तु खञ्जनः ।
काकच्छदः खञ्जखेलस्ततालो मुनिपुत्रकः ॥ १५ ॥
भद्रनामा रत्ननिधिः काष्ठकुट्टः शतच्छदे ।
दीर्घपात्रस्तु कङ्कः स्याद्गलेगण्डस्तु मर्कटः ॥ १६ ॥
चातके बभ्रुवापीहघनतोलत्रिशङ्कवः ।
वर्षप्रियोऽथ मेधावी चिरिः कीरः पलाशनः ॥ १७ ॥

मूषिका इति द्वे **मूषिकायाः** ॥ १० ॥ चिक्रः "चिक्कः" वेश्मनकुलः । वेश्मनि नकुलः । पुंवृषः गन्धमूषिकः इति चत्वारि **छुछुन्दर्याः**॥ वेदारः क्रकचपाद् । क्रकचमिव पादौ यस्य । वा अन्त्यलोपः । "क्रकचपादः" कृकलाशः तृणाञ्जनः ॥ ११ ॥ प्रतिसूर्यः । प्रतिरूपः सूर्यः यस्य । इति **पञ्चकृकलाशस्य**॥आञ्जनः "अञ्जिनामा" चित्रकोलः हलाहलः इति त्रीणि **गृहगोधिकेति ख्यातायाः पल्ल्याः** ॥ कारस्कराटिका कर्णजलौका । कर्णजलूका अप्यत्र । इति द्वे **कर्णजलौका इति ख्यातायाः शतपद्याः** ॥ वटिः ॥ १२ ॥ उत्पादिकः देहिका । इति त्रीणि **उत्पादिकस्य** ॥ अष्टपादः । अष्टपाद् अष्टपदोऽप्यत्र। किन्तनुः इति द्वे **लूतेति-ख्यातस्य कीटभेदस्य** ॥ प्रासादकुक्कुटः झिल्लिकण्ठः गृहकपोतकः ॥ १३ ॥ पारावतः इति चत्वारि **पारावतस्य** ॥ शक्राख्यः । शक्रस्येवाख्या यस्य । दिवान्धः । दिवा दिवसे अन्धः, दर्शनाभावात् । वक्रनासिकः हरिनेत्रः । हरी पिङ्गलवर्णे नेत्रे यस्य । दिवाभीतः । दिवा दिवसे भीतः । नखाशी पीयुः घर्घरः ॥ १४ ॥ काकभीरुः । काकात् भीरुर्यः । नक्तचारी । नक्ते रात्रौ चरतीति । इति **दश उलूकस्य** ॥ कणाटीनः खञ्जनः काकच्छदः । काकस्य च्छदः पक्ष इव छदो यस्य । "काकच्छदिः" खञ्जखेलः । खञ्ज इव खेलति । तातलः "तातनः" मुनिपुत्रकः । मुनेः पुत्रः ॥ १५ ॥ भद्रनामा रत्ननिधिः इत्यष्टौ **खञ्जनस्य** ॥ काष्ठकुट्टः । काष्ठं कुट्टयति छिनत्ति । इत्येकं **शतच्छद इति प्रसिद्धस्य काष्ठकुट्ट-पक्षिणः** ॥ दीर्घपादः । दीर्घौ पादौ यस्य । कङ्कः इति द्वे **कङ्कस्य** ॥ गलेगण्डः । गले गण्ड इव यस्य । मर्कटः इति द्वे **गलेगण्डपक्षिणः** ॥ १६ ॥ बभ्रुः वापीहः घनतोलः

कुक्कुटस्तु विवृत्ताक्षो रात्रिवेदी कलाविकः ।
उषाकलोऽथ ताम्राक्षः काकपुष्टः कुहूमुखः ॥ १८ ॥
मधुकण्ठो घोषयित्नुः कामतालः सुतार्दनः ।
काको रतज्वरः सूत्री श्रावको गूढमैथुनः ॥ १९ ॥
कारवः परमृत्युश्च लुण्टाको मौकुलिर्द्विकः ।
शक्रजः सत्यवाक्काणोऽपकृष्टो नगरीवकः ॥ २० ॥
ऐन्द्रिश्च नाडीजङ्घोऽथ गृध्रः स्याद्दूरदर्शनः ।
शितिकण्ठस्तु दात्यूहः काकमद्गुः कगेटुरः ।
चिरम्भणस्तु चिल्लः स्यात्खभ्रान्तिः कण्ठनीडकः ॥ २१ ॥
सूक्ता मदनशलाका चित्राक्षी शालिकाऽवचण्डा च ।
शकुनज्ञा तु ज्येष्ठा गृहोलिकाऽटाट्टनी मूली ॥ २२ ॥
दीर्घजङ्घो निशैडः स्याद्बकोटः शुक्लवायसः ।
कङ्केरुर्द्वारबलिभुक्छर्वी चन्द्रविहङ्गमः ॥ २३ ॥

त्रिशङ्कुः। त्रिषु अवयवेषु शङ्कुरिव यस्य । वर्षप्रियः । वर्षाः प्रिया अस्य। इति पञ्च **चातकपक्षिणः** मेधावी । मेधाऽस्त्यस्य । चिरिः "चिमिः" कीरः पलाशनः "फलाशनः" पलादनोऽप्यत्र। "कीरस्तु शुको रक्तपादः पलादनः" इति हैमः । इति चत्वारि **कीरपक्षिणः** ॥ १७ ॥ कुक्कुटः विवृत्ताक्षः । विवृत्तमक्षं यस्य । रात्रिवेदी कलाविकः उषाकलः इति पञ्च **उषाकल इति-ख्यातस्य कुक्कुटस्य** ॥ ताम्राक्षः । ताम्रमक्षं यस्य । काकपुष्टः । काकेन पुष्टः यः । कुहूमुखः । कुहूरिति शब्दः मुखे यस्य ॥ १८ ॥ मधुकण्ठः । मधु मधुरः कण्ठो यस्य । घोषयित्नुः कामतालः सुतार्दनः । सुतस्य अर्दनं यस्य । "सुतर्दनः" इति सत **कोकिल-पक्षिणः**॥ काकः रतज्वरः "रतजरः" । रते रमणे ज्वरः यस्य । सूत्री श्रावकः गूढमैथुनः । गूढं केनाप्यदृश्यं मैथुनं यस्य ॥ १९ ॥ कारवः । का इति रवो यस्य । परमृत्युः लुण्टाकः मौकुलिः "मौद्गलिः" द्विकः । द्वौ कौ ककारौ यत्र । शक्रजः । शक्रात् जायते । सत्यवाक् । सत्यं वाक् यस्य । काणः अपकृष्टः "अपकृष्णः" नगरीवकः ॥ २० ॥ ऐन्द्रिः नाडीजङ्घः । नाडी जङ्घा यस्य । इति सप्तदश **काकस्य** ॥ गृध्रः दूरदर्शनः । दूरात् पश्यति । "दूरदर्शिनिः" दूरदृगप्यत्र । इति द्वे **गृध्रस्य** ॥ शितिकण्ठः । शितिः कण्ठो यस्य । दात्यूहः काकमद्गुः कगेटुरः "कचाटुरः" इति चत्वारि **दात्यूहस्य** ॥ चिरम्भणः चिल्लः "चिल्लः" खभ्रान्तिः कण्ठनीडकः इति चत्वारि **चिल्लस्य** ॥ २१ ॥ सूक्ता मदनशलाका चित्राक्षी चित्रमक्षमस्याः। शालिका शारिकाऽप्यत्र। अवचण्डा इति पञ्च **शारिकायाः** ॥ शकुनज्ञा ज्येष्ठा गृहोलिका अटाट्टनी "अट्टनी" मूली इति पञ्च **गृहगोधिकायाः** ॥ २२ ॥ दीर्घजङ्घः दीर्घजङ्घे यस्य । निशैडः "निशौतः" बकोटः शुक्लवायसः कङ्केरुः "कङ्केरुः" द्वारबलिभुक् "दारुबलि-

बकेरुका बलाका स्यात्कुररो मत्स्यनाशनः।
द्वन्द्वचारी चक्रवाकः सारसस्तु कलाङ्कुरः॥ २४॥
गोनर्दश्चित्रपक्षस्तु तित्तिरिः स्यात्कपिञ्जलः।
लघुमांसो मयूरस्तु चन्द्रकी चित्रमेखलः॥ २५॥
प्रचलाकी सितापाङ्गशिखावलगलव्रताः।
मार्जारकण्ठोऽथ तिलमयूरः स्यात्कुरुण्टकः॥ २६॥
झम्पाशनो मीनरङ्को नासाच्छिन्ना तु पूर्णिका।
पिपीलिका तु हारी स्याद्यमकीटस्तु घुर्घुरः॥ २७॥
स्यान्मर्कटस्तु शलक आशाबन्धोऽस्य जालके।
फालखेलागरुद्रोधा भारती व्योमनासिका॥ २८॥
चञ्चुसूचिस्तु सुगृहः पीततुण्डोऽथ सर्षपी।
हापुत्रिका खञ्जनिका तुलिकास्फोटिके समे॥ २९॥
करटुर्व्याधनः कर्चूनरः कूणिश्च वाग्गुदः।
वर्तिका विष्णुलिङ्गी स्याल्लावको लघुजङ्गलः॥ ३०॥

भुक्'' शिखी चन्द्रविहङ्गमः। चन्द्रश्चासौ विहङ्गमः। इत्यष्टौ बकस्य॥२३॥ बकेरुका बलाका इति द्वे **बलाकायाः**॥ कुररः मत्स्यनाशनः। इति द्वे **कुररस्य**॥ द्वन्द्वचारी चक्रवाकः इति द्वे **चक्रवाकस्य**॥ सारसः कलाङ्कुरः॥२४॥ गोनर्दः ''गोमर्दः'' इति त्रीणि **सारसपक्षिणः**॥ चित्रपक्षः। चित्रं पक्षमस्य। तित्तिरिः तित्तिरोऽप्यत्र। कपिञ्जलः। कमिव पिञ्जते। लघुमांसः। लघु मांसमस्य। इति चत्वारि **तित्तिरपक्षिणः**॥ मयूरः चन्द्रकी। चन्द्रका अस्यास्ति। चित्रमेखलः। चित्रा मेखलास्य॥ २५॥ प्रचलाकी सितापाङ्गः ''शिखापाङ्गः''। सितमपाङ्गं यस्य। शिखावलः। शिखास्त्यस्य। गलव्रतः मार्जारकण्ठः ''मार्जारकः''। मार्जालकोऽप्यत्र। इत्यष्टौ **मयूरस्य**॥ तिलमयूरः कुरुण्टकः ''गुरण्डकः'' इति द्वे **तिलमयूरस्य**॥२६॥ झम्पाशनः ''मत्स्याशनः'' मीनरङ्कः इति द्वे **मीनरङ्कस्य**॥ नासाच्छिन्ना पूर्णिका इति द्वे **पूर्णिकायाः**॥ पिपीलिका हारी ''होरा'' इति द्वे **पिपीलिकायाः**॥ यमकीटः। यमस्य कीटः। घुर्घुरः। घुरित्यव्यक्तं ध्वनिं घुरति। इति द्वे **घुर्घुरस्य**॥ २७॥ मर्कटः।शलकः। इति द्वे **मर्कटस्य**॥ आशाबन्धः। आशां दिशां बध्नाति। इत्येकं **मर्कटजालस्य**॥ फालखेला गरुद्रोधा ''गरुद्योधी'' भारती व्योमनासिका ''व्योमलासिका'' व्योम इव नासिका यस्याः। इति चत्वारि **भारत्याः**॥ एषा भारती तु पक्षिभेदे स्यात्॥२८॥ चञ्चुसूचिः। चञ्चुः सूचिरिव यस्य। सुगृहः पीततुण्डः ''पीतमुण्डः'' पीतम् ईषद्रक्तं तुण्डं यस्य। इति त्रीणि **कारण्डवपक्षिणः**॥ सर्षपी ''सर्षपा'' हापुत्रिका खञ्जनिका तुलिका स्फोटिका ''स्फोटिका'' इति पञ्च **हापुत्रिकायाः**॥ २९॥ करटुः ''करटः''

सरःकाकस्तु हंसः स्याज्जालपात्पुरुदंशकः ।
गोभण्डीरः पङ्ककीरः कोयष्टिर्जलकुक्कुभः ॥ ३१ ॥
जीवञ्जीवो विषमृत्युर्जीवजीवोऽथ मक्षिका ।
माचिका भम्भराली च दंशः स्याद्भाम्भरालिकः ॥ ३२ ॥
भाङ्कारी चर्मचट्यां तु जतुनी गृहमाचिका ।
विषसृक्को भृङ्गरोलो वरोलस्तृणषट्पदः ॥ ३३ ॥
वरटी तु वरोली स्याद्ब्राह्मण्यथ तमोमणिः ।
ध्वान्तोन्मेषश्च खद्योतो ज्योतिर्बीजो निमेषरुक् ॥ ३४ ॥
भ्रमरश्चञ्चरीकः स्याद्रोलम्बो मधुसूदनः ।
इन्दिन्दिरः पुष्पकीटो मधुदो मधुकेशटः ॥ ३५ ॥
रेणुवासोऽथ मशको घोषो रणरणश्चसः ।
पक्षी तु नाडीचरणः स्याच्चञ्चुभृदनेकजः ॥ ३६ ॥
स्युः खगोत्पतवारङ्ककण्ठाग्निव्योमचारिणः ।
युगलद्वन्द्वयुग्मानि युगं यमलयामले ॥ ३७ ॥

इति सिंहादिवर्गः ॥ ५ ॥

व्याधनः कर्चूर्नरः इति त्रीणि **करटपक्षिणः** ॥ कूणिः वाग्गुदः "वागदः" इति द्वे **वाग्दस्य** ॥ वर्तिका विष्णुलिङ्गी । विष्णोर्लिङ्गं लक्षणमस्याः । इति द्वे **वर्तिकायाः** ॥ लाव लघुजङ्गलः इति द्वे **लावकस्य** ॥ ३० ॥ सरःकाकः । सरसि जले काक इव । हंस जालपाद् । जाल इव पादावस्य । "जालपादिः" पुरुदंशकः । उरुदंशकः । उरुर्म दंशको यस्य । इति चत्वारि **हंसस्य** ॥ गोभण्डीरः पङ्ककीरः । पङ्के कीर इव । कोय जलकुक्कुभः इति चत्वारि **जलकुक्कुभस्य** ॥ ३१ ॥ जीवञ्जीवः जीवान् जीवयति द तृप्तिकरत्वात् । विषमृत्युः जीवजीवः । जीवान् जीवयति । इति त्रीणि **चकोरपक्षिणः** मक्षिका माचिका भम्भराली इति त्रीणि **मक्षिकायाः** ॥ दंशः भाम्भरालिकः "भ्रम लिका" ॥ ३२ ॥ भाङ्कारी "भङ्कारी" इति त्रीणि **दंशस्य** ॥ चर्मचटी जतुनी गृह चिका इति त्रीणि **चर्मचट्याः** ॥ विषसृक्कः भृङ्गरोलः । भृङ्ग इव रौति । वरोलः तृणषट् इति चत्वारि **भृङ्गरोलस्य** ॥ ३३ ॥ वरटी वरोली "वराली" ब्राह्मणी इति त्रं **वरट्याः** ॥ तमोमणिः । तमसि अन्धकारे मणिरिव । ध्वान्तोन्मेषः । ध्वान्ते अन्धकारे उ षोऽस्य । खद्योतः ज्योतिर्बीजः । ज्योतेः बीजं कारणं यस्य । निमेषरुक् इति पञ्च **खद्योत** ॥ ३४ ॥ भ्रमरः चञ्चरीकः रोलम्बः मधुसूदनः । मधु माध्वीकं सूदयति भक्षयति । इन्दिन्दिरः **पुष्पक** पुष्पस्थः कीट इव । मधुदः "मधुद्रोक्" मधुकेशटः ॥ ३५ ॥ रेणुवासः "वेणुवासः" । वासोस्य । इति नव **भ्रमरस्य** ॥ मशकः घोषः रणरणः इति त्रीणि **मशकस्य** ॥

नाडीचरणः चञ्चुभृत् अनेकजः ॥ ३६ ॥ खगः खे । आकाशे गच्छतीति । उत्पतः वाग

स्त्री वधूर्योषिता रामा मण्डयन्ती वधूजनः।
कन्यकाऽलकनन्दा सा दूषिता धर्मकारिणी ॥ १ ॥
सस्वेदा चाथ तरुणी दिक्करी धनिका च सा।
मरुण्डोच्चललाटा स्यात्सश्मश्रुर्नरमानिनी ॥ २ ॥
स्नुषा वधूटी मधुरनिस्वना हंसगद्गदा।
सुखोष्णशीता तुहिनग्रीष्मयोर्वरवर्णिनी।
क्रोधना भामिनी चण्डी दारुस्त्रीशालभञ्जिका ॥ ३ ॥
विरक्ता दुर्भगा सप्तपुत्रसूः सुतवस्करा।
पतिव्रतैकपत्नी स्याद्विधवा जालिका मता ॥ ४ ॥
विश्वस्ता लञ्जिनी तु स्याल्लञ्जिका कलकूजिका।
वेश्या शूला वारवाणिर्झर्झराप्यथ कुट्टिनी ॥ ५ ॥
इज्या स्याद्रततालो च घटदासी गणेरुका।
मलिष्ठा सरजाः षाण्मातुरद्वैमातुरौ समौ ॥ ६ ॥

कण्ठाग्निः। कण्ठे अग्निः पाकाग्निर्यस्य। व्योमचारी। व्योम्नि चरति। इति नव **पक्षिणः** ॥ युगलं द्वन्द्वं युग्मं युगं यमलं यामलम् इति षट् **युग्मस्य** ॥ ३७ ॥ इति सिंहादिवर्गः ॥ ९ ॥ स्त्री वधूः योषिता रामा मण्डयन्ती वधूजनः इति षट् **स्त्रियाः** ॥ कन्यका अलकनन्दा इति द्वे **कन्यायाः**॥"कन्यका दशमे प्रोक्ता" इति स्मृतिवचनात्। अयं तु कन्यकाशब्दो दशवर्षायां कुमार्यां वर्तते। दूषिता "भूषिता" धर्मकारिणी॥१॥ सस्वेदा इति त्रीणि **दूषितादिस्त्रीविशेषाणाम्** ॥ तरुणी दिक्करी धनिका इति त्रीणि **तरुण्याः** ॥ मरुण्डा उच्चललाटा। उच्चं ललाटं यस्याः। इति द्वे **उच्चललाटायाः**॥ सश्मश्रुः। सह श्मश्रुणा या वर्तते। नरमानिनी इति द्वे **सश्मश्रवाः** ॥ २ ॥ स्नुषा वधूटी इति द्वे **स्नुषायाः** ॥ मधुरनिस्वना। मधुरो निस्वनः शब्दो यस्याः। हंसगद्गदा "हंसगद्गदा" हंसस्येव गद्गदः स्वरविशेषः यस्याः। इति द्वे **मधुरनिस्वनायाः** ॥ वरवर्णिनी इत्येकं **शीतग्रीष्मकालयोः सुखोष्णायाः सुखशीतायाः स्त्रियाः**॥तथाप्युक्तम्—"शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला ॥ तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कीर्तिता" इति।क्रोधना भामिनी चण्डी इति त्रीणि **क्रोधनायाः**॥दारुस्त्री दारु इव स्त्री।शालभञ्जिका शालेन भज्यते निर्मीयते। इति द्वे **दारुस्त्रियाः**॥३॥ विरक्ता"विरक्ता" दुर्भगा।दुष्टं भगं भाग्यं यस्याः।इति द्वे **पतिस्नेहशून्यायाः दुर्भगायाः स्त्रियाः** ॥ सप्तपुत्रसूः सुतवस्करा इति द्वे **सप्तपुत्रायाः** ॥ पतिव्रता। पतिः पतिसेवनं व्रतं यस्याः। एकपत्नी। एकः समानः अनन्यो वा पतिर्यस्याः। इति द्वे **पतिव्रतायाः** ॥ विधवा। विगतो धवो यस्याः।जालिका ॥४॥ विश्वस्ता इति त्रीणि **विधवायाः**॥लञ्जिनी "वाञ्छिनी" लञ्जिका कलकूजिका"कलतूलिका"इति त्रीणि **लञ्जिन्याः**॥वेश्या शूला वारवाणिः"वारवाणी" अप्यत्र। झर्झरा इति चत्वारि **वेश्यायाः**॥ कुट्टिनी"कुट्टनी" ॥ ५ ॥ इज्या रततालो। [illegible]

**समदुर्दुहिता पुत्रो द्वितीयः कुलधारकः ।**
**पिता जनयिता वप्ता शिशुकः क्षीरकण्ठकः ॥ ७ ॥**
**बालो मुष्टिन्धयश्चाथ श्यालिका केलिकुञ्चिका ।**
**नागरो देवलः श्यालो वारकीरोऽथ साश्रुधीः ॥ ८ ॥**
**श्वश्रुर्वृद्धः शतानीको जरन्तः स्यादथांशकः ।**
**सगन्धाज्ञातिदायादा मातुलो मातुकेशटः ॥ ९ ॥**
**भर्ता भरुर्नर्मकीलः प्राणनाथः सुखोत्सवः ।**
**हृदयेशो रतगुरुर्जारः पापपतिः समौ ॥ १० ॥**
**कुमारभृत्या स्याद्बालतन्त्रं गर्भिण्यवेक्षणम् ।**
**गर्भाष्टमो देवमासो नाभिनालाऽमला स्मृता ॥ ११ ॥**
**आधानिकं पुंसवनं सीमन्तोन्नयनं च तत् ।**
**खल्लीटः खलितिः कल्लो बधिरः खोरखञ्जकौ ॥ १२ ॥**

स्त्रीपुंसयोः सङ्गमे मैथुने ताली तालजातसुरेव । घटदासी गणेरुका इति पञ्च **कुट्टिन्याः ॥** अलिष्ठा सरजाः इति द्वे **म्लानाङ्ग्याः ॥** षाण्मातुरः षण्णां मातॄणामपत्यम् । द्वैमातुरः । द्वयोर्मात्रोरपत्यम् । इति द्वे **षाण्मातुरस्य द्वैमातुरस्य च ॥** षाण्मातुरद्वैमातुराविति द्वौ शब्दौ कार्तिकेये गणेशे च स्तः-"षाण्मातुरः शक्तिधरः" इति अमरोक्तत्वात् ।कृत्तिकात्रिकं गङ्गा पृथिवी पार्वती चेति षण्मातरः कार्तिकेयस्य सन्ति तथा "विनायको विघ्नराजद्वैमातुरगणाधिपाः" इति अमरोक्तत्वात् । गणेशस्य दुर्गा चामुण्डेति द्वौ मातरौ भवतः ताभ्यां गणेशः पालित इति पुराणेषु प्रसिद्धिः जरासन्धस्य नृपस्यापि द्वौ मातरौ स्तः इति प्रतीतः ॥ ६ ॥ समदुः दुहिता इति द्वे **दुहितुः ॥** पुत्रः द्वितीयः । द्वयोः पूर्णः । कुलधारकः कुलस्य वंशस्य धारकः इति त्रीणि **पुत्रस्य ॥** पिता जनयिता वप्ता इति त्रीणि **पितुः ॥** शिशुकः क्षीरकण्ठकः । क्षीरं कण्ठे यस्य ॥ ७ ॥ बालः मुष्टिन्धयः । मुष्टिं धयति इति चत्वारि **बालस्य ॥** श्यालिका केलिकुञ्चिका इति द्वे **श्यालिकायाः॥**नागरः"वागारः"देवलः इति द्वे **देवरस्य॥** श्यालः वारकीरः इति द्वे **शालस्य॥**साश्रुधीः "सास्नुधीः"॥ ८॥ श्वश्रुः इति द्वे **श्वश्र्वाः ॥** वृद्धः शतानीकः जरन्तः इति त्रीणि **वृद्धस्य ॥** अंशकः सगन्धः ज्ञातिः दायादः इति चत्वारि **ज्ञातेः ॥** मातुलः मातुकेशटः "मातुकेशरः" इति द्वे **मातुलस्य** ॥ ९ ॥ भर्ता भरुः नर्मकीलः प्राणनाथः। प्राणानां नाथः।सुखोत्सवः। सुखकर उत्सवो यस्मात् । हृदयेशः हृदयस्य ईशः नाथः। रतगुरुः। रते स्त्रीपुंसयोः सङ्गमे मैथुने गुरुः । इति सप्त **भर्तुः॥** जारः पापपतिः। पापात्मकः पतिः । इति द्वे **जारस्य ॥** मुख्यादन्यभर्तुरित्यर्थः ॥१०॥ कुमारभृत्या बालतन्त्रं गर्भिण्यवेक्षणम् इति त्रीणि **प्रसवकाले गर्भिणीपरिचर्यायाः** गर्भाष्टमः देवमासः इति द्वे **गर्भग्रहणावधिकस्य अष्टममासस्य॥**नाभिनाला अमला इति द्वे **नाभिनालायाः॥** ॥ ११ ॥ आधानिकं पुंसवनम् । पुमान् सूयतेऽनेन।सीमन्तोन्नयनम् । सीमन्तस्य तदाख्यगर्भसं-

दोर्गडुर्बाहुकुण्टः स्यादौषधं तु भिषग्जितम् ।
त्वक्पुष्पिका किलासं स्याच्छ्लीपदं पादगण्डिरः ॥ १३ ॥
योन्यर्शः कन्दसंज्ञः स्यात्किणः शुष्कव्रणोऽपि च ।
अजीर्णे वायुगण्डोऽन्तर्वमिश्चपलताशयः ॥ १४ ॥
पापरोगो रक्तवटी मसूर्यथ तमोव्रणः ।
वल्मीकोऽथातिसारोऽन्नगन्धिः स्यादुदरामयः ॥ १५ ॥
कुरण्डवृद्धः सिङ्घाणशेटौ स्कन्दनरेचने ।
गर्भण्डो नाभिगुडकोऽभिमन्थो लोचनामये ॥ १६ ॥
युवगण्डोऽवगण्डः स्यात्पित्तं मायुः पलङ्करः ।
श्लेष्मा बलाशो मांसं तु जरूथमथ शोणितम् ॥ १७ ॥
पलक्षारोऽथ मस्तिष्को मस्तलुङ्गोऽप्यथ स्नसा ।
वस्नसाऽथोऽधरमधु क्लीबे वक्रासवः पुमान् ॥ १८ ॥

स्कारस्य उन्नयनमुद्भावनम् । इति त्रीणि **संस्काराणाम् एकैकमेकैकस्य** ॥ खल्लीटः खलितिः "खल्वतिः" इति द्वे **खल्लाटस्य** ॥ कल्लः बधिरः इति द्वे **बधिरस्य** ॥ खोरः खञ्जकः इति द्वे **खञ्जस्य** ॥ १२ ॥ दोर्गडुः बाहुकुण्टः इति द्वे **बाहुकुण्टस्य** ॥ औषधं भिषग्जितम् इति द्वे **औषधस्य** ॥ त्वक्पुष्पिका । त्वचि पुष्पमिव त्वचः पुष्पमिव वा । किलासम् इति द्वे **किलासस्य** ॥ श्लीपदम् । श्रीयुक्तं वृद्धियुक्तं पदमस्मात् । पादगण्डिरः "पादगण्डीरः" इति द्वे **श्लीपदस्य** ॥ १३ ॥ योन्यर्शः । योनौ अर्शः । कन्दसंज्ञः किणः शुष्कव्रणः । शुष्कश्चासौ व्रणश्च । इति चत्वारि **योन्यर्शसः** ॥ वायुगण्डः । वायोर्गण्डः । अन्तर्वमिः । अन्तः स्थित एव वामयति उद्गारशब्दं कारयति । चपलताशयः "पलताशयः" चपलतायाः चञ्चलतायाः आशयः । इति त्रीणि **अजीर्णस्य** ॥ १४ ॥ पापरोगः । पापश्चासौ रोगश्च । रक्तवटी रक्तवर्णा वटीव । मसूरी इति त्रीणि **वसन्तरोग इति ख्यातायाः मसूरिकायाः** ॥ तमोव्रणः वल्मीकः इति द्वे **वल्मीकस्य** ॥ अतिसारः अतीसारोऽप्यत्र । अन्नगन्धिः । अन्नस्य गन्ध इव गन्धो यस्य । उदरामयः । उदरस्यामं रोगं याति नयति । इति त्रीणि **अतिसारस्य** ॥ १५ ॥ कुरण्डवृद्धः सिङ्घानः सिङ्घाणोऽप्यत्र । शेटः "खेटः" इति त्रीणि **नासिकामलस्य** ॥ केचित् **कुरण्डस्य** इति वदन्ति । स्कन्दनं रेचनम् इति द्वे **विरेचनस्य** ॥ गर्भण्डः नाभिगुडकः इति द्वे **नाभिगुडस्य** ॥ अभिमन्थः इत्येकं **लोचनामयस्य नेत्ररोगस्य** ॥ १६ ॥ युवगण्डः । यूनां गण्डः । अवगण्डः इति द्वे **अवगण्डस्य** ॥ पित्तं मायुः पलङ्करः "पलज्वरः" इति त्रीणि **पित्तस्य** ॥ श्लेष्मा बलाशः "बलाशः" "रसाशः" इति द्वे **श्लेष्मणः** ॥ मांसं जरूथम् इति द्वे **मांसस्य** ॥ शोणितम् ॥ १७ ॥ पलक्षारः । पलस्य क्षारः । इति द्वे **रक्तस्य** ॥ मस्तिष्कः मस्तिं परिणतिभेदं मुष्कति । मस्तलुङ्गः "मस्तुलुङ्गः" इति द्वे **मस्तकस्थस्यस्नेहाकारद्रव्यस्य**

जिह्वामलं तु कुलुकं पिप्पिका दन्तजे मले ।
पिण्डोऽस्त्रियां कुलं क्षेत्रं शरीरं स्कन्धपञ्जरौ ॥ १९ ॥
शस्तं वपुः पुद्गलं स्यादाङ्गमङ्गं तु कोमलम् ।
पायुस्तनुह्रदो मार्ग उच्चारस्तु पुरीषणः ॥ २० ॥
भगं गुह्यं वराङ्गं च कलत्रं जन्मवर्त्म च ।
स्मरागारं रतिगृहमधोधस्थादिमेऽव्यये ॥ २१ ॥
ना सन्धिरधरोऽवाच्यदेशश्च स्मरकूपकः ।
संसारमार्गश्च रतिकुहरं प्रकृतिः स्त्रियाम् ॥ २२ ॥
पुष्पापत्यपथौ चाथ नितम्बः स्यात्कटीरकः ।
लिङ्गं तु लाङ्गलं शेफः साधनं मदनांकुशः ॥ २३ ॥
स्मरस्तम्भश्च कन्दर्पमुषलो ध्वज इत्यपि ।
स्त्रियां नागलता चाण्डकोषस्तु फलकोषकः ॥ २४ ॥
नाभिर्द्वयोस्तुन्दकूपी तुन्दिस्तुन्दीकरः पुमान् ।
अधोमर्मशकृद्द्वारमूरुः सक्थि च जाघनी ॥ २५ ॥

स्नसा वस्नसा । वस्नं त्वक् स्यति । इति द्वे **स्नायोः** ॥ अधरमधु । अधरे ओष्ठे सम्भूतं मधु । वक्त्रासवः । वक्त्रे मुखे जातः आसवः । इति द्वे **अधरमधुनः** ॥ १८॥ जिह्वामलम् । जिह्वायाः मलम् । कुलुकम् इति द्वे **जिह्वामलस्य** ॥ पिप्पिका इत्येकं **दन्तजस्य मलस्य** ॥ पिण्डः कुलं क्षेत्रं शरीरं स्कन्धः पञ्जरः पिञ्जरोऽप्यत्र ॥ १९ ॥ शस्तं "जस्तं वपुः पुद्गलम् आङ्गम् इति दश **शरीरस्य**॥ अङ्गम् इत्येकं **कोमलाङ्गस्य**॥ पायुः तनुह्रदः मार्गः इति त्रीणि **गुदस्य** ॥ उच्चारः पुरीषणः इति द्वे **उच्चारस्य** ॥ २० ॥ भगं गुह्यं वराङ्गं कलत्रं जन्मवर्त्म । जन्मनो-वर्त्म । स्मरागारं। स्मरस्य अगारम् । रतिगृहम् "रतगृहम्"। रतेर्गृहम्। अधः अधस्थात् । एतौ द्वौ निपातौ स्याताम् ॥२१॥ सन्धिः अधरः अवाच्यदेशः स्मरकूपकः। स्मरस्य कूपकः। संसारमार्गः । संसारस्य मार्गः तत एव हि बहिर्निर्गमनम्। रतिकुहरं। रतेः कुहरम् । प्रकृतिः "प्रकृतिः" ॥ २२ ॥ पुष्पपथः । पुष्पस्य ऋतुरुधिरस्य पथः । अपत्यपथः । अपत्यस्य पथः मार्गः इत्यष्टादश **स्त्री-चिह्नस्य** ॥ नितम्बः कटीरकः इति द्वे **नितम्बस्य** ॥ लिङ्गं लाङ्गलं शेफः साधनं मदनाङ्कुशः । मदनस्य कामस्य अङ्कुश इव ॥ २३ ॥ स्मरस्तम्भः । स्मरस्य कामस्य स्तम्भः । कन्दर्पमुषलः । कन्दर्पस्य अनङ्गस्य मुषलः । "कन्दर्पमुसलः" "कन्दर्पमुशलः" ध्वजः नागलता । नागाकारा लता । इति नव **लिङ्ग इति ख्यातस्य पुरुषचिह्नस्य** ॥ अण्डकोषः । अण्डयोः कोषः । फलकोषकः इति द्वे **पुंसोऽङ्गावयवस्य** ॥ २४ ॥ **नाभिः** । अयं तु नाभिशब्दः पुंस्त्रियोर्वर्त्तते । स्त्रियां वा ईङ् । "नाभी" तुन्दकूपी । तुन्दस्य कूपीव । तुन्दकूपिकाप्यत्र । तुन्दिः । "तुन्दिकः तुन्दी" अप्यत्र । क्वचित् "तुन्दः तुन्दिगडुः" ।

भुजा बाहा च बाहौ स्यात्कुलिर्हस्तो भुजादलः ।
कुचौ वक्षोरुहौ प्रोक्तौ हस्तपुच्छं तु कल्पुषम् ॥ २६ ॥
नखं पुनर्भवः कामाङ्कुशः स्यात्करकण्टकः ।
करेटुः करशूकश्च पुच्छटयङ्गुलिमोटनम् ॥ २७ ॥
स्यात्काकलं कण्ठमणिर्नसा नस्या च नासिका ।
गन्धनाली च नासिक्यं वाग्दलं दन्तवाससि ॥ २८ ॥
दन्तः खरुर्वक्रखुरो जम्भो हानुर्द्विजस्तथा ।
राजदन्तास्तु चत्वारो दशनानां पुरःस्थिताः ॥ २९ ॥
गोधिभालौ महाशङ्खो देवदीपस्तु लोचनम् ।
अम्बकं चाथ नेत्राम्बु बाष्पो ना लोतमस्त्रियाम् ॥ ३० ॥
कटाक्षकाक्षौ काकुस्तु जिह्वाऽथ प्रतिजिह्विका ।
सुधास्रवा च कर्णस्तु श्रोतः क्लीबे ध्वनिग्रहः ॥ ३१ ॥

तुन्दीकरः इति चत्वारि **नाभेः ॥** अधोमर्म शकृद्द्वारम् इति द्वे **विष्ठामार्गस्य ॥** ऊरुः सक्थि "शक्थि" जाघनी इति त्रीणि **ऊरोः** ॥२५॥ भुजा बाहा "बाहः" "बाहोऽश्वभुजयोः पुमान्" इति दामोदरः । इति द्वे **भुजस्य ॥** कुलिः हस्तः भुजादलः । भुजायाः दलः इति त्रीणि भुजादल इति ख्यातस्य **हस्तस्य ॥** कुचः वक्षोरुहः । वक्षसि रोहति । वक्षोजोऽप्यत्र । इति द्वे **स्तनस्य ॥** हस्तपुच्छम् । हस्तस्य पुच्छमिव । कल्पुषम् "कल्मषम्" इति द्वे **हस्तपुच्छस्य ॥** हस्तपश्चाद्भागस्येत्यर्थः ॥ २६ ॥ नखं पुनर्भवः कामाङ्कुशः । कामस्य अङ्कुश इव । करकण्टकः । करस्य कण्टक इव । करेटुः "कारटः" करशूकः । करस्य शूक इव । इति षट् **नखानाम् ॥** पुच्छटी "पुच्छटिः" अङ्गुलिमोटनम् इति द्वे **अङ्गुलिमोटनस्य** ॥२७॥ काकलं । काकलकोऽप्यत्र । कण्ठमणिः । कण्ठे मणिरिव । इति द्वे **ग्रीवायामुन्नतप्रदेशस्य ॥** नसा नस्या नासिका गन्धनाली । गन्धस्य नालीव । नासिक्यम् । नासिका एव । इति पञ्च **नासिकायाः ॥** वाग्दलं । वाचो दलम् । इत्येकं दन्तवाससीतिख्यातस्य **ओष्ठस्य ॥ २८ ॥** दन्तः खरुः वक्रखुरः । वक्रः खुरो यस्य । जम्भः हानुः द्विजः । द्विर्जायते । इति षट् **दन्तानाम् ॥** राजदन्ताः । इत्येकं **पुरःस्थितानां चतुर्णां महादन्तानाम् ॥** २९ ॥ गोधिः भालः महाशङ्खः "महाशङ्खम्" । इति त्रीणि **भालनेत्रस्य ॥** देवदीपः । देवेषु इन्द्रियेषु दीप इव। लोचनम् अम्बकम् इति त्रीणि **लोचनस्य ॥** नेत्राम्बु । नेत्रस्य नेत्रयोर्वा अम्बु । बाष्पः "बास्पः" लोतम् इति त्रीणि **अश्रुणः ॥** अत्र बाष्पशब्दः पुँल्लिङ्गे लोतशब्दः पुंनपुंसकयोः स्यादेव ॥ ३० ॥ कटाक्षः काक्षः इति द्वे **कटाक्षस्य ॥** ईषद्दर्शनस्याक्षिण इत्यर्थः । काकुः जिह्वा इति द्वे **जिह्वायाः ॥** प्रतिजिह्विका सुधास्रवा । सुधां स्रवति । "सुधाश्रवा" इति द्वे **जिह्वामूलस्थमांस-**

स्याच्छब्दाधिष्ठानमथ कबरः केशगर्भकः ।
कबरी जूटकश्चाथ कौटीरः स्याज्जटा सटा ॥ ३२ ॥
करारोटोऽङ्गुलीकः स्यात्ताडङ्कः कर्णदर्पणः ।
अन्दुकः पादकटकोऽभिषेकः स्नानमित्यपि ॥ ३३ ॥
पटच्चरो जीर्णवस्त्रं सिचयप्रोथशाटकाः ।
पटवापः पटमयं दूष्यं वस्त्रगृहं स्थलम् ॥ ३४ ॥
खरग्रहः खरगृहं कुंवा तु स्थूलशाटकः ।
चोलोण्डुकः शिरोवेष्टे विरिङ्गिन्यवगुण्ठिका ॥ ३५ ॥
पाठी यवनिका सूर्यरक्तसंज्ञं तु कुङ्कुमम् ।
जागुडं दीपनं घस्रं सौरभं सुघृणं च तत् ॥ ३६ ॥
स्याद्रङ्गमातृका लाक्षा गन्धकाष्ठं तु गोङ्गकम् ।
कपिचंचलतैलाख्यः सिह्लोऽथ सरलद्रवः ॥ ३७ ॥

**पिण्डस्य** ॥ कर्णः श्रोतः । श्रोतः शब्दः क्लीबे नपुंसके स्यात् । ध्वनिग्रहः ॥ ३१ ॥ शब्दाधिष्ठानम् । शब्दानाम् अधिष्ठानं स्थितिः । इति चत्वारि **कर्णस्य** ॥ कबरः केशगर्भकः । केशानां गर्भकः केशाः गर्भे यस्य वा । कबरी जूटकः "कूटकः" इति चत्वारि **केशपाश इति ख्याताया: कबर्याः** ॥ **केशविन्यासस्य** इत्यन्ये । कौटीरः जटा सटा इति त्रीणि **व्रतिनां केशसङ्घात इति ख्यातायाः जटायाः** ॥३२॥ करारोटः अङ्गुलीकः 'अङ्गुलीटः' इति द्वे **अङ्गुलीयकस्य**॥ताडङ्कः कर्णदर्पणः इति द्वे **ताडङ्कस्य**॥ अन्दुकः पादकटकः इति द्वे **पादकटकस्य** ॥ अभिषेकः स्नानम् इति द्वे **स्नानस्य** ॥३३॥ पटच्चरः जीर्णवस्त्रम् इति द्वे **जीर्णवस्त्रस्य** ॥ सिचयः प्रोथः शाटकः इति त्रीणि **शाटकस्य** ॥ पटवापः पटमयं दूष्यं वस्त्रगृहम् । वस्त्रेण निर्मितं गृहम् । स्थलम् । पटकुटी पटगृहादयोऽप्यत्र । इति पञ्च **वस्त्रगृहस्य** ॥ ३४ ॥ खरग्रहः खरगृहम् इति द्वे **खरगृहस्य**॥ कुंवा "श्विञ्चा" स्थूलशाटकः । स्थूलशाटिकादयोऽप्यत्र । इति द्वे **स्थूलवस्त्रस्य सुगहनावृतेश्च** ॥ चोलोण्डुकः "चेलोण्डकः" इत्येकम् **उष्णीष इति ख्यातस्य शिरोवेष्टस्य** ॥ विरिङ्गिनी "निरिङ्गिनी" अवगुण्ठिका ॥ ३५ ॥ पाठी "पटा" यवनिका "जवनिका" अप्यत्र । इति चत्वारि **जवनिकेति प्रसिद्धायाः तिरस्करिण्याः** ॥ सूर्यरक्तसंज्ञं सूर्यपर्य्यायनामानि रक्तपर्य्यायनामानि च । रक्तं शोणितं रविरप्यत्र । कुङ्कुमं जागुडं दीपनं घस्रं सौरभं सुघृणम् । "सुघृणैर्यत्र जलाशयोदरे" इति नैषधम् । इति सप्त कुङ्कुमस्य ॥ ३६ ॥ रङ्गमातृका लाक्षा इति द्वे **लाक्षायाः** ॥ गन्धकाष्ठं । गन्धयुक्तं काष्ठम् । गोङ्गकम् इति द्वे **अगरुचन्दन इति ख्यातस्य अगरुकाष्ठस्य** ॥ कपिचञ्चलं "कपिचन्दनं" तैल-

दधिक्षीरघृताह्वः स्याद्धूनको वह्निवल्लभः।
शालवेष्टः सर्जमणिः कस्तूरी गन्धचेलिका ॥ ३८ ॥
मदाह्वश्चाथ सञ्चारी धूपो गन्धपिशाचिका।
रेणुसारस्तु कर्पूरश्चन्द्रभस्म हिमाह्वयः ॥ ३९ ॥
वेधको मालयस्तु स्याच्छ्रीखण्डो रौहिणश्च सः।
विच्छित्तिस्तु कषायः स्यात्समालम्भनमित्यपि ॥ ४० ॥
ललाटिका शङ्खचरी विष्टरः पीठमस्त्रियाम्।
निषद्या खट्टिका सन्दी चातुरस्तु मसूरकः ॥ ४१ ॥
प्रतियत्नस्तु रचना कटकोलः पतद्ग्रहः।
पूगपीठं च दीपस्तु स्नेहाशः कज्जलध्वजः ॥ ४२ ॥
दशेन्धनो गृहमणिर्दोषातिलक इत्यपि।
शिखातरुर्दीपवृक्षो ज्योत्स्नावृक्षोऽथ लोचकः ॥ ४३ ॥

सिह्लः इति त्रीणि **सिह्लकस्य** ॥ सरलद्रवः ॥ ३७ ॥ दधि क्षीरं घृतम् इति चत्वारि **सरलद्रवस्य** ॥ धूनकः वह्निवल्लभः। वह्नेर्वल्लभ उद्दीपकत्वात्। शालवेष्टः। शालस्य वेष्ट इव। सर्जमणिः। सर्जस्य शालस्य मणिरिव। इति चत्वारि **धूनक इति प्रसिद्धस्य सर्जरसस्य** ॥ केचित्तु धूनकः वह्निवल्लभः इति द्वे **धूनकस्य** ॥ शालवेष्टः सर्जमणिः इति द्वे **शालवेष्टस्य** ॥ इति वदन्ति। कस्तूरी गन्धचेलिका। गन्धः चेलस्य यस्मिन् सा ॥ ३८ ॥ मदः "मदाह्वयः" इति त्रीणि **कस्तूर्याः** ॥ संचारी धूपः गन्धपिशाचिका। गन्धः पिशाचानां यस्मिन् सा। इति त्रीणि **धूपस्य** ॥ रेणुसारः "वेणुसारः" रेणुरिव सारोऽस्य। रेणुसारकोऽप्यत्र। कर्पूरः। कर्पूरं नपुंसकलिङ्गे च। चन्द्रभस्म। चन्द्र इव शुभ्रं भस्म यस्य। अथवा चन्द्रपर्यायनामकाः चन्द्रः शीतरश्मिः शीतांशुरित्यादयश्च। हिमाह्वयः हिमपर्यायनामकाः हिमः शिशिरः इत्यादयश्च ॥ ३९ ॥ वेधकः इति पञ्च **कर्पूरस्य** ॥ मालयः। मलये तन्नामकपर्वते भवः। श्रीखण्डः श्रियः शोभायाः खण्ड इव यत्र। रौहिणः इति त्रीणि **चन्दनस्य** ॥ विच्छित्तिः कषायः समालम्भनम् इति त्रीणि **कषायस्य** ॥ ४० ॥ ललाटिका। ललाटे आबध्यते। शङ्खचरी। शङ्खे ललाटास्थि चरतीति। इति द्वे **ललाटभूषणस्य ललाटस्थस्य चिह्नस्य वा** ॥ विष्टरः। "ऊर्द्धकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः" इति। "वामावृत्तिस्तु विष्टरः" इति च। पीठम् इति द्वे **पीठस्य** ॥ निषद्या खट्टिका सन्दी इति त्रीणि **खट्वायाः** ॥ "अष्टाभिः काष्ठखण्डैश्च कृता खट्वेति कथ्यते" इति। चातुरः मसूरकः इति द्वे **उपबर्हणस्य** ॥ ४१ ॥ प्रतियत्नः रचना इति द्वे **रचनायाः** ॥ कटकोलः पतद्ग्रहः। पतत् मुखादिभ्यः स्रवत् जलादि गृह्णाति। पूगपीठम्। पूगस्य इव पीठमस्य। इति त्रीणि **पतद्ग्रह इति ख्यातस्य पात्रभेदस्य** ॥ दीपः स्नेहाशः। स्नेहमश्नाति। कज्जलध्वजः। कज्जल एव ध्वजोऽस्य ॥ ४२ ॥ दशेन्धनः। दशा वर्तिकैव इन्धनं यस्य। गृहमणिः। गृहस्य

कज्जले स्यादिरिंपके कन्दुकश्चोदनागुडः ।
निश्चुक्कणं दन्तशाणं पिष्टातो धूलिगुच्छकः ॥ ४४ ॥

इति मनुष्यवर्गः ॥ ६ ॥

वंश्यः कुल्यश्च वीज्यः स्याद्ब्रह्मचारी वटुः समौ ।
स्याद्वटूकरणन्तूपनयनं गृहमेधिनि ॥ १ ॥
ज्येष्ठाश्रमी गृही वानप्रस्थो वैखानसोऽग्रहः ।
वक्त्रजस्त्वनमो विप्रो वर्णज्येष्ठः कठो द्विजः ॥ २ ॥
मैत्रः पुनरुक्तजन्मा स्यादथ ब्राह्मणायनः ॥
शुद्धसन्तानजो विप्रः श्रौत्रं श्रोत्रियतां विदुः ॥ ३ ॥

मणिरिव । दोषातिलकः । दोषायाः तिलक इव । इति षट् **प्रदीपस्य** ॥ शिखातरुः । शिखायाः दीपशिखायास्तरुरिव । दीपवृक्षः । दीपश्चासौ वृक्षश्च । दीपस्याधारो वृक्षो वा । ज्योत्स्नावृक्षः इति त्रीणि **दीपवृक्षस्य** ॥ लोचकः ॥ ४३ ॥ इत्येकं **कज्जलस्य** ॥ स्यादिर्त्यन्वयः । कन्दुकः चोदनागुडः । चोदनार्थे गुड इव । इति द्वे **इरिपकस्य** ॥ क्वचित् गिरिपके इति पाठः । कन्दुकस्येत्यर्थः । निश्चुक्कणं दन्तशाणम् इति द्वे **दन्तशाणस्य** ॥ पिष्टातः धूलिगुच्छकः "धूलिगुत्सकः" । धूलिप्रचुरः गच्छः अस्य । इति द्वे **पटवासनार्थं कृतस्य चूर्णगन्धद्रव्यस्य** ॥ ४४ ॥ इति मनुष्यवर्गः ॥ ६ ॥ वंश्यः कुल्यः । कुले भवः कुलाय हितो वा । वीज्यः । विशेषेण इज्यः । इति त्रीणि **वंश्यस्य** ॥ क्वचित् **कुलीनस्य** ॥ च । "कुल्यः कुलीनोऽभिजातः कौलेय कमहाकुलौ । जात्यो गोत्रं तु सन्तानोऽन्ववायोऽभिजनः कुलम् । अन्वयो जननं वंश" इति हैमः । ब्रह्मचारी वटुः इति द्वे **ब्रह्मचारिणः** ॥ वटूकरणम् उपनयनम् इति द्वे **उपनयनस्य** ॥ १ ॥ ज्येष्ठाश्रमी गृही इति द्वे **गृहिणः गृहमेधिनश्च** ॥ यो गृहे दारैर्मेधते संगच्छते स गृहमेधी तस्य । वानप्रस्थः । वने वनसमूहे प्रतिष्ठतीति वनप्रस्थः । स एव वानप्रस्थः । "गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । पुत्रेषु दारान्निक्षिप्य वनं गच्छेत्सहैव वा" इति । वैखानसः "वैखानशः" । "वैखानसेभ्यः श्रुतरामवार्ता" इति भट्टिः । अग्रहः "अगृहः" । नास्ति ग्रहः परिग्रहः अस्य । इति त्रीणि **वानप्रस्थ इति ख्यातस्य तापसभेदस्य** ॥ वक्त्रजः । वक्त्रात् मुखाज्जायते । अनमः विप्रः वर्णज्येष्ठः । वर्णेषु वर्णानां वा ज्येष्ठः प्रथममुत्पन्नत्वात् । केचित्तु वर्णज्येष्ठः क्षत्रिय एवेति पठन्ति । कठः । कठ इति प्रोक्तायाः ऋग्वेदशाखायाः अध्यायकत्वात् । द्विजः । द्विर्जायते । प्रथमं मातृगर्भाद्वितीयमुपनयनसंस्कारादिति वचनात् ॥ २ ॥ मैत्रः पुनरुक्तजन्मा इत्यष्टौ **विप्रस्य** ॥ ब्राह्मणायनः इत्येकं **शुद्धकुलोत्पन्नस्य विप्रस्य** ॥ श्रौत्रं श्रोत्रियता इति द्वे **वेदाध्ययनानुरतस्य ब्राह्मणस्य** ॥ तदुक्तम्,- "एकां शाखां

**स्याद्क्षरमुखः कालाक्षरिकः शिक्षिताक्षरः ।**
**काव्यस्य-कर्ता भविनी गुणनी शीलनं स्मृतम् ॥ ४ ॥**
**क्रियाकरो नवच्छात्रः कार्पटिकः स मर्मवित् ।**
**पर्षत्परिषदो गोष्ठी राजसूयो नृपाध्वरः ॥ ५ ॥**
**क्रतूत्तमश्चाऽथ चान्द्रायणमिन्दुव्रतं स्मृतम् ।**
**हवनी होमकुण्डं स्यान्महावीरो मखानलः ॥ ६ ॥**
**होमधूमस्तु निगणो होमभस्म तु वैष्टुभम् ।**
**आर्यकं पिण्डदानादिपितृकार्यमथो हविः ॥ ७ ॥**
**होत्रं हविष्यं सान्नाय्यं पाठको धर्मभाणकः ।**
**सभ्यास्तु प्राश्निका देवद्रोणी यात्रा दिवौकसाम् ॥ ८ ॥**
**इष्टापूर्तं तदेकोक्त्या यागखातादि कर्म्म यत् ।**
**यज्ञद्रव्यन्तु पात्रीयं प्राघुणस्त्वतिथिर्द्वयोः ॥ ९ ॥**

सकल्पां वा षड्भिरङ्गैरधीत्य च । षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्" इति ॥३॥ अक्षरमुखः । अक्षराणि मुखे यस्य । कालाक्षरिकः । काले अक्षराण्यधीयते । शिक्षिताक्षरः । शिक्षितानि अक्षराणि येन । काव्यस्य—कर्ता । इति चत्वारि **शिक्षिताक्षरस्य ॥** भविनी "भविनः" गुणनी शीलनम् इति त्रीणि **पाठनिश्चयस्य** ॥ ४ ॥ क्रियाकरः । क्रियां करोति । नवच्छात्रः । नवश्चासौ छात्रश्च । इति द्वे **नवच्छात्रस्य॥** कार्पटिकः । कर्पटेन काषायवस्त्रेण चरति । मर्मविद् । मर्म जानाति । इति द्वे **कर्पटिकस्य तीर्थयात्रोद्यतस्य ॥** पर्षद् परिषदः । परितः सीदति गच्छति । गोष्ठी । गावोऽनेका वाचः तिष्ठन्त्यत्र । इति त्रीणि **सभायाः ॥** राजसूयः । राज्ञा सूयते । नृपाध्वरः । नृपाणाम् अध्वरः ॥ ५ ॥ क्रतूत्तमः "क्रतुतमः" इति त्रीणि **राजमात्रकर्तव्ययज्ञभेदस्य॥** चान्द्रायणम् । चान्द्रस्य चन्द्रलोकस्यायनं यस्मात् । इन्दुव्रतम् । इन्दोश्चन्द्रलोकगमनं व्रतमस्य । इति द्वे **चान्द्रायण इति प्रसिद्धस्य व्रतस्य ॥** स्मृतं ज्ञातम् । हवनी । हूयतेऽस्याम् । होमकुण्डम् । होमार्थं कुण्डं पात्रं स्थानं वा । इति द्वे **यज्ञकुण्डस्य ॥** महावीरः । महांश्चाऽसौ वीरश्च । मखानलः । मखस्य यज्ञस्य अनलः । इति द्वे **यज्ञाग्नेः ॥** स्यादित्यन्वयः ॥ ६ ॥ होमधूमः । होमे जातः धूमः । निगणः इति द्वे **होमधूमस्य ॥** होमभस्म । होमे जातं भस्म । वैष्टुभम् इति द्वे **होमभस्मनः ॥** आर्यकम् इत्येकं **पिण्डदानादिपितृकार्यस्य ॥** हविः ॥ ७ ॥ होत्रं हविष्यं सान्नाय्यम् इति चत्वारि **हविषः ॥** पाठकः धर्मभाणकः । धर्मं भणति । इति द्वे **पाठकस्य ॥** सभ्याः प्राश्निकाः इति द्वे **सभ्यानाम् ॥** देवद्रोणी । देवानां द्रोणी । इत्येकं **देवयात्रायाः** ॥ ८ ॥ इष्टापूर्तम् । इष्टं च पूर्तं च द्वयोः समाहारः पूर्वपददीर्घः । यागखातादि यत् कर्म भवेत् तत् एकोक्त्या एकवचनेन

कौशली कुशलप्रश्नः समीची वन्दना मता ।
उपोषणन्तूपवासो रोगाद्यैर्लङ्घनं च तत् ॥ १० ॥
द्व्यन्तरे त्र्यन्तरे भुक्तमाहुः षष्ठान्नकालकम् ।
राद्धं सिद्धमथो चारुव्रता मासोपवासिनी ॥ ११ ॥
स्याद्गायत्री तु सावित्री ब्रह्मारण्यं तु पाठभूः ।
पवित्रं यज्ञोपवीतं ब्रह्मसूत्रं द्विजायनी ॥ १२ ॥
कच्छा कच्छटिका कक्षापटी कौपीनमित्यपि ।
बैडालव्रतिकः सर्वाभिसन्धी छद्मतापसः ॥ १३ ॥
कमण्डलुश्चैत्यमुखो जोतिण्टा तु महाव्रती ।
उरस्कटः पञ्चवटो बालयज्ञोपवीतकम् ॥ १४ ॥
भाले तिस्रो भस्मरेखास्त्रिपुण्ड्रकमथर्षयः ।
शापास्त्राः सत्यवचसो व्यासाद्यास्तु महर्षयः ॥ १५ ॥

इष्टापूर्तमिति कथ्यते । पूर्तं यथा—"वापीकूपतडागादि देवतायतनानि च । अन्नप्रदानमारामः पूर्तमित्यभिधीयते" इति । इत्येकम् **अग्निहोत्रादेरिष्टकर्मणः** ॥ यज्ञद्रव्यम् । यज्ञस्यार्थं द्रव्यम् । पात्रीयम् इति द्वे **यज्ञद्रव्यस्य** ॥ प्राघुणः अतिथिः इति द्वे **अतिथेः** ॥ कौशली कुशलप्रश्नः इति द्वे **कुशलप्रश्नस्य** ॥ समीची वन्दना इति द्वे **वन्दनायाः** ॥ मता ज्ञातेत्यर्थः ॥ ९ ॥ उपोषणम् उपवासः इति द्वे **अहोरात्राभोजन इति ख्यातस्य उपवास्य** ॥ लङ्घनम् इत्येकं **रोगोपवासस्य** ॥ १० ॥ षष्ठान्नकालकम् । षष्ठे दिवसे भक्ष्यान्नकालो यत्र । षष्ठान्नकालोऽप्यत्र । कचित् "षष्ठाल्लकालकम्" । राद्धं सिद्धम् इति त्रीणि **द्व्यन्तरत्र्यन्तरभुक्तस्य व्रतभेदस्य** ॥ चारुव्रता । चारु व्रतमस्याः। मासोपवासिनी । मासे उपवासोऽस्याः । इति द्वे **मासोपवासिन्याः** ॥ ११ ॥ गायत्री सावित्री इति द्वे **गायत्र्याः** ॥ स्यादित्यन्वयः । ब्रह्मारण्यम् । ब्रह्मणः आरण्यम् । पाठभूः । पाठस्य भूः भूमिः । इति द्वे **वेदपाठभुवः** ॥ पवित्रं यज्ञोपवीतं ब्रह्मसूत्रं द्विजायनी इति चत्वारि **यज्ञोपवीतस्य ब्रह्मप्रतिपादकस्य शारीरिकसूत्रस्य च** ॥ १२ ॥ कच्छा कच्छटिका कक्षापटी "कक्षाघटी" कौपीनम् इति चत्वारि **कौपीनस्य व्रतस्य** ॥ बैडालव्रतिकः । बिडालव्रतमस्त्यस्य । सर्वाभिसन्धी । सर्वत्र आचरणे अभिसन्धाऽस्त्यस्य । छद्मतापसः । छद्मना छलेन तापसः । इति त्रीणि **लोकप्रतारणार्थं तापसताख्यापनाय तापसलिङ्गधारिणः छद्मतापसस्य** ॥ १३ ॥ कमण्डलुः। मण्डनं मण्डः कस्य जलस्य मण्डं लाति । चैत्यमुखः । चैत्यमिव मुखं यस्य। इति द्वे **कमण्डलोः**॥ जोतिण्टा "जोतिण्टाः" महाव्रती । महत् व्रतमस्याम् । उरस्कटः । उरः कट्यते आव्रियतेऽनेन । पञ्चवटः । पञ्च वटाः यत्र । बालयज्ञोपवीतकम् इति पञ्च **उरस्कटस्य** ॥ १४ ॥ त्रिपुण्ड्रकम् । त्रयाणां पुण्ड्राणाम् इक्षु-

**परमर्षयस्तु भेलाद्या देवर्षयः कणादयः।**
**ब्रह्मर्षयो वसिष्ठाद्याः सुश्रुताद्याः श्रुतर्षयः॥ १६॥**
**ऋतर्पणादयो राजर्षयः काण्डर्षयस्त्वमी।**
**जैमिन्याद्या नारदस्तु कपिवक्रो विधातृभूः॥ १७॥**
**देवब्रह्मा देवलश्च दुर्वासास्तु कुसारणिः।**
**प्राचेतसस्तु वाल्मीकिः कविज्येष्ठः कुशीवशः॥ १८॥**
**अपि वल्मीकवाल्मीकौ कृतकोटिस्तु काश्यपः।**
**कृष्णद्वैपायनो वेदव्यासः स्यात्सत्यभारतः॥ १९॥**
**पाराशरिः सात्यवतो माठरो बादरायणः।**
**वसिष्ठा रुन्धतीनाथौ विश्वामित्रस्तु गाधिजः॥ २०॥**
**गौतमस्तु शतानन्दः कणादः काश्यपः समौ।**
**धन्वन्तरिर्दिवोदासः काशिराजः सुधोद्भवः॥ २१॥**
**पालकाव्यो गणपतिकरेणुरुचिरासुतः।**
**विष्णुगुप्तस्तु कौण्डिण्यश्चाणक्यो द्रोमिणोऽङ्गुलः॥ २२॥**

वदाकाराणां समाहारः। स्वार्थे कन्। त्रिपुण्ड्रमप्यत्र। ''वक्राः ललाटगास्तिस्रो भस्मरेखास्त्रिपुण्ड्रकम्'' इति। इत्येकं **भाले ललाटे तिसृणां भस्मरेखाणाम्॥** ऋषयः शापास्त्राः। शाप एवास्त्रं येषाम्। सत्यवचसः। सत्यानि वचांसि येषाम्। इति त्रीणि **ऋषीणाम्॥** व्यासाद्याः इत्येकं **महर्षीणाम्॥ १५॥** भेलाद्याः इत्येकं **परमऋषीणाम्॥** कणादयः इत्येकं **देवऋषीणाम्॥** वसिष्ठाद्याः इत्येकं **ब्रह्मऋषीणाम्॥** सुश्रुताद्याः इत्येकं **श्रुतऋषीणाम्॥ १६॥** ऋतर्पणादयः ''ऋतुपर्णादयः'' इत्येकं **राजर्षीणाम्॥** जैमिन्याद्याः इत्येकं **काण्डर्षीणाम्॥** नारदः कपिवक्रः विधातृभूः इति त्रीणि **नारदस्य॥ १७॥** देवब्रह्मा देवलः इति द्वे **देवल इति ख्यातस्य ऋषेः॥** दुर्वासाः कुसारणिः इति द्वे **अत्रिपुत्रस्य दुर्वाससः॥** प्राचेतसः वाल्मीकिः कविज्येष्ठः कुशीवशः॥ १८॥ वल्मीकः वाल्मीकः। ''वाल्मिकिः'' अप्यत्र। इति षट् **वाल्मीकऋषेः॥** कृतकोटिः काश्यपः इति द्वे **काश्यपऋषेः॥** कृष्णद्वैपायनः वेदव्यासः सत्यभारतः॥१९॥ पाराशरिः सात्यवतः माठरः बादरायणः इति सप्त **व्यासऋषेः॥** वसिष्ठः अरुन्धतीनाथः इति द्वे **वसिष्ठऋषेः॥** विश्वामित्रः गाधिजः इति द्वे **विश्वामित्रऋषेः॥२०॥** गौतमः शतानन्दः इति द्वे **गौतमऋषेः॥** कणादः काश्यपः इति द्वे **कणादऋषेः॥** धन्वन्तरिः दिवोदासः काशिराजः सुधोद्भव इति चत्वारि **धन्वन्तरेः॥ २१॥** पालकाव्यः ''पालकाप्यः'' गणपतिसुतः ''गणवतीसुतः'' करेणुसुतः रुचिरासुतः इति चत्वारि **पालकाव्ये:॥** प्रत्येकं द्वयं द्वयं च। विष्णुगुप्तः कौण्डिण्यः ''कौटिल्यः'' चाणक्यः द्रोमिणः ''द्रामिळः''

वात्स्यायनो मन्दनागः पक्षिलस्वामिनावपि ।
उपवर्षो हलभृतिः कृतकोटिरयाचितः ॥ २३ ॥
पाणिनिस्त्वाहिको दाक्षीपुत्रः शालङ्किपाणिनौ ।
शालोत्तुरीयोऽथ व्याडिर्विन्ध्यस्थो नन्दिनीसुतः ॥ २४ ॥
मेधावी चाऽथ मेधाजित्कात्यः कात्यायनश्च सः ।
पुनर्वसुर्वररुचिर्गोनर्दीयः पतञ्जलिः ॥ २५ ॥
चूर्णिकृद्भाष्यकारश्च हरिर्भर्तृहरिः स्मृतः ।
रघुकारः कालिदासो मेधारुद्रश्च कोटिजित ॥ २६ ॥
भारविः शत्रुलुम्पः स्याद्भवभूतिस्तु विस्मृतः ।
भूगर्भोऽप्यऽथ यः प्रातः स्मर्यते शुभकाम्यया ॥ २७ ॥
स सुगृहीतनामा स्यात्पैण्डिन्यं भैक्षजीविका ।
पाषाण्डकौलिकौ खञ्जनरतं यतिमैथुनम् ॥ २८ ॥
अभावादङ्गनात्यागस्तुरगब्रह्मचर्यकम् ।
मुखघण्टा हुलहुली नागवीटस्तु टात्कॅरः ॥ २९ ॥

अंशुलः "अङ्गुलः" ॥ २२ ॥ वात्स्यायनः मन्दनागः "मल्लनागः" पक्षिलः स्वामी इति नव **चाणक्यस्य ॥** उपवर्षः हलभृतिः । हलेन भृतिः पोषणं यस्य । कृतकोटिः अयाचितः इति चत्वारि **उपवर्षस्य** ॥ २३ ॥ पाणिनिः । पणनं पणः ततः अस्त्यर्थे इनिः । तदपत्यम् अण् प्रत्ययः । तस्य छात्रः इन्प्रत्ययश्च । आहिकः दाक्षीपुत्रः । दाक्ष्याः पुत्रः । शालङ्की । शालङ्क्यां भवः । पाणी शालोत्तुरीयः । शालोत्तुरे ग्रामे भवः । इति षट् **पाणिनि-ऋषेः ॥** व्याडिः विन्ध्यस्थः नन्दिनीसुतः । नन्दिन्याः सुतः पुत्रः ॥ २४ ॥ मेधावी इति चत्वारि **व्याडेः ॥** मेधाजित् कात्यः कात्यायनः पुनर्वसुः वररुचिः इति पञ्च **कात्यायनस्य ॥** गोनर्दीयः । गोनर्दे तन्नामकपर्वतसमीपे देशे भवः । "गोनन्दीयः" पतञ्जलिः । पतन् अञ्जलिर्यस्मै ॥ २५ ॥ चूर्णीकृत । चूर्णि महाभाष्यं करोतीति । भाष्यकारः इति चत्वारि **पतञ्जलिमुनेः ॥** हरिः भर्तृहरिः इति द्वे **भर्तृहरिकवेः ॥** रघुकारः कालिदासः मेधारुद्रः । मेधया रुद्रः । कोटिजित् इति चत्वारि **कालिदासकवेः** ॥ २६ ॥ भारविः शत्रुलुम्पः "शतपुष्पः" । शतं पुष्पाणि यस्य । इति द्वे **भारविकवेः ॥** भवभूतिः विस्मृतः भूगर्भः इति त्रीणि **भवभूतिकवेः** ॥ २७ ॥ सुगृहीतनामा इत्येकं **शुभकाम्यया प्रातःस्मरणीयस्य पूण्यकीर्तनस्य जनस्य॥** पैण्डिन्यं भैक्षजीविका इति द्वे **भिक्षाजीविनः॥** पाषाण्डः "पाखण्डः" इत्यपि। कौलिकः इति द्वे **वेदाचारत्यागिनः पाषाण्डस्य॥** खञ्जनरतं यतिमैथुनम् इति द्वे **यतिगोप्यरतेः** ॥ २८ ॥ तुरगब्रह्मचर्यकम् इत्येकम् **अभावात् स्त्रीत्यागस्य॥**मुखघण्टा हुलहुली इति द्वे **मुखघण्टायाः॥**नागवीटः "नागरीटः"

**खटकस्त्यक्षरश्चाऽथ दारकर्म करग्रहः ।**
**वाधुक्यं च विवाहः स्यात्कुहलिः पूगपुष्पिका ॥ ३० ॥**
**नान्दीको तोरणस्तम्भो सुरतं त्वभिमानितम् ।**
**धर्षितं सम्प्रयोगो ना रतं चाब्रह्मचार्यकम् ॥**
**उपसृष्टं त्रिभद्रं च क्रीडारत्नं महासुखम् ॥ ३१ ॥**

**इति ब्रह्मवर्गः ॥ ७ ॥**

**द्विजलिङ्गी नृपः क्षत्रः क्षत्रियोऽथ प्रजेश्वरः ।**
**राजाधिपौ मण्डलेश एकजन्मा भयापहः ॥ १ ॥**
**स्कन्धावारस्तु कटकः शिबिरं तु बलस्थितिः ।**
**आदिराजः पृथुर्वैन्यः काकुत्स्थस्तु पुरञ्जयः ॥ २ ॥**
**यौवनाश्वस्तु मान्धाता खट्वाङ्गस्तु दिलीपराट् ।**
**रामो दाशरथिः कौशल्यायनिर्दशकण्ठजित् ॥ ३ ॥**
**मैथिली जानकी सीता वैदेही भूमिजा च सा ।**
**रामपुत्रौ कुशलवावेकयोक्त्या कुशीलवौ ॥ ४ ॥**

टात्कर: "टाङ्करः" ॥ २९ ॥ खटकः त्यक्षरः इति चत्वारि **नागवीटस्य** ॥ दारकर्म । दारौपयिकं दारसम्पादकं कर्म । करग्रहः । करस्य वधूकरस्य वरेण ग्रहो ग्रहणं यत्र । वाधुक्यं विवाहः इति चत्वारि **विवाहस्य** ॥ कुहलिः । कुत्सितं हलति । पूगपुष्पिका इति द्वे **विवाहपुष्पादेः** ॥ ३० ॥ नान्दीकः तोरणस्तम्भः इति द्वे **मङ्गलस्तम्भस्य** ॥ सुरतम् अभिमानितं धर्षितं सम्प्रयोगः । पु० । रतम् अब्रह्मचर्यकम् उपसृष्टं त्रिभद्रं क्रीडारत्नं महासुखम् इति दश **सुरतस्य** ॥ ३१ ॥ इति ब्रह्मवर्गः ॥ ७ ॥ द्विजलिङ्गी नृपः क्षत्रः क्षत्रियः इति चत्वारि **क्षत्रियस्य** ॥ प्रजेश्वरः । प्रजानाम् ईश्वरः । राजा अधिपः इति त्रीणि **राज्ञः** ॥ मण्डलेशः । मण्डलस्य ईशः स्वामी । एकजन्मा भयापहः इति त्रीणि **मण्डलेशस्य** ॥ १ ॥ स्कन्धावारः कटकः इति द्वे **युद्धार्थमुद्युक्तसैन्यानां स्थापनस्य** ॥ शिबिरं बलस्थितिः इति द्वे **सैन्यनिवासस्थानस्य** ॥ आदिराजः पृथुः वैन्यः । वेनस्य दक्षिणबाहुमन्थनेन जातः । इति त्रीणि **सूर्यवंश्यस्य नृपस्य** । काकुत्स्थः पुरञ्जयः इति द्वे **सूर्यवंश्यस्य काकुत्स्थस्य नृपस्य** ॥ २ ॥ यौवनाश्वः । युवनाश्वस्य राज्ञः अपत्यम् । मान्धाता । माम् इन्द्रियं धयति । "मामयं धास्यतीत्यस्मात् मान्धाताऽसौ प्रकीर्तितः" इति । इति द्वे **युवनाश्वराजपुत्रस्य मान्धातृनृपस्य** ॥ खट्वाङ्गः "खट्वाङ्गः", दिलीपराट् इति द्वे **दिलीपस्य नृपस्य** ॥ रामः दाशरथिः । दशरथस्यापत्यम् । कौशल्यायनिः । कौशल्यायाः अपत्यम् । कौसल्यायनिरप्यत्र । दशकण्ठजित् । दशकण्ठं रावणं जयति । इति चत्वारि **दशरथपुत्रस्य रामस्य** ॥ ३ ॥ मैथिली जानकी सीता वैदेही

सौमित्रिर्लक्ष्मणो मेघनादजिच्चाथ रावणः ।
राक्षसेन्द्रो दशमुखो लङ्केशो धनदानुजः ॥ ५ ॥
मन्दोदरीशः पौलस्त्यो मेघनादस्तु शक्रजित् ।
हनूमान्हनुमानाञ्जनेयो योगचरानिली ॥ ६ ॥
हिडिम्बारमणो रामदूतश्चैवार्जुनध्वजः ।
ऐन्द्रिस्तु वाली वालिश्च सुग्रीवो रविनन्दनः ॥ ७ ॥
ऐलः पुरूरवो बौधिरुर्वशीवल्लभश्च सः ।
ययातिर्नाहुषिः शाकुन्तलेयो भरतः स्मृतः ॥ ८ ॥
दौष्मन्तिः सर्वदमनोऽर्जुनो बाहुसहस्रभृत् ।
हैहयः कार्तवीर्यश्च पुण्यश्लोकस्तु बाहुकः ॥ ९ ॥
नलोऽश्वविन्नैषधश्च महाभीष्मस्तु शान्तनुः ।
प्रातीपोऽस्य प्रिया काली दासेयी च झषोदरी ॥ १० ॥

भूमिजा इति पञ्च **सीतादेव्याः** ॥ कुशः लवः इति द्वे **रामपुत्रयोः प्रत्येकमेकैकमेकैकस्य** ॥ कुशीलवौ । कुशश्च लवश्चेति द्वन्द्वः । निपातनात् ईकारः । इत्येकम् एकयोक्त्या **रामपुत्रयोः** ॥ ४ ॥ सौमित्रिः । सुमित्रायाः अपत्यम् । लक्ष्मणः मेघनादजित् इति त्रीणि **रामभ्रातुर्लक्ष्मणस्य** ॥ रावणः । रवणस्यापत्यम् राक्षसेन्द्रः।राक्षसानाम् इन्द्रः । दशमुखः। दश मुखानि यस्य। अत्र मुखशब्दः उपाये वर्तते । लङ्केशः। लङ्कायाः ईशः।धनदानुजः। धनदस्य कुबेरस्य अनुजः कनीयभ्राता ॥ ५ ॥ मन्दोदरीशः पौलस्त्यः । पुलस्तस्यापत्यम् । इति सप्त **रावणस्य** ॥ मेघनादः । मेघस्येव नादो यस्य । शक्रजित् इति द्वे **मेघनादस्य** ॥ हनूमान् हनुमान् आञ्जनेयः । अञ्जना नाम वानरी तस्या अपत्यम् । योगचरः आनिलिः ॥ ६ ॥ हिडिम्बारमणः । हिडिम्बा राक्षसी तस्या रमणः पतिः । रामदूतः । रामस्य दूतः । अर्जुनध्वजः इत्यष्टौ **हनुमतः** ॥ ऐन्द्रिः । इन्द्रस्य अपत्यम् । वाली । बालिः । क्वचित् "वाली" "वालिः" इति त्रीणि **इन्द्रपुत्रस्य कपिराजस्य**॥ सुग्रीवः । सुष्ठु ग्रीवाऽस्य। रविनन्दनः। रवेः नन्दनः पुत्रः । इति द्वे **सूर्यपुत्रस्य वानरराजस्य** ॥ ७ ॥ ऐलः । इलायाः तन्नामिकायाः देव्या अपत्यम् । पुरूरवः बौधिः ।बुधस्य तन्नाम्नः चन्द्रवंशीयनृपस्य अपत्यम् । उर्वशीवल्लभः । उर्वश्याः वल्लभः प्रियः । इति चत्वारि **पुरूरव इति ख्यातस्य चन्द्रवंशीयनृपस्य**॥ ययातिः । नाहुषिः। नहुषस्याऽपत्यम्। इति द्वे **ययातिरिति ख्यातस्य नृपस्य** ॥ शाकुन्तलेयः । शकुन्तलाया अपत्यम् । भरतः ॥ ८॥ दौष्मन्तिः । दुष्मन्तस्यापत्यम् । सर्वदमनः । सर्वान् दाम्यति । इति चत्वारि **दुष्मन्तपुत्रस्य भरतनृपस्य** ॥ अर्जुनः। बाहुसहस्रभृत्। हैहयः । हैहयानां तन्नामकदेशविशेषाणाम् अधिपः । हैहयेश्वरोऽप्यत्र । कार्तवीर्यः । इति चत्वारि **कार्तवीर्य इति ख्यातस्य पाण्डवनृपस्य**॥ पुण्यश्लोकः । बाहुकः ॥९॥ नलः । अश्ववित् । नैषधः । निषधानां जनपदानामधिपतिः । इति पञ्च **चन्द्र-**

विचित्रवीर्या चित्राङ्गदसूर्योजनगन्धिका ।
व्यासमाता सत्यवती गाङ्गेयो गान्दिनीसुतः ॥ ११ ॥
देवव्रतः शान्तनवो गाङ्गो गाङ्गायनिश्च सः ।
भीष्मः कौणपदन्तश्च स्वेच्छामृत्युः पुरावसुः ॥ १२ ॥
धृतराष्ट्रस्त्वाम्बिकेयः पाण्डुर्माद्री पृथापतिः ।
दुर्योधनस्तु कुरुराड्गान्धारेयः सुयोधनः ॥ १३ ॥
धर्मपुत्रोऽजमीढः स्यात्कर्णानुजयुधिष्ठिरौ ।
अजातशत्रुः काङ्कोऽथ भीमसेनः कटव्रणः ॥ १४ ॥
वीररेणुर्नागबलो गुणकारो वृकोदरः ।
बककीचककिर्मीरजरासन्धहिडिम्बजित ॥ १५ ॥
पार्थः किरीटी गाण्डीवी गुडाकेशो बृहन्नलः ।
अर्जुनः फाल्गुनो जिष्णुर्विजयश्च धनञ्जयः ॥ १६ ॥

**वंशीयनृपस्य नलस्य** ॥ महाभीष्मः शान्तनुः प्रातीपः "प्रतीपः" इति त्रीणि **चन्द्रवंशीयप्रतीपराजपुत्रस्य शान्तनोः** ॥ काली दासेयी झपोदरी ॥ १० ॥ विचित्रवीर्या । विचित्रमाश्चर्यं वीर्यमस्याः । चित्राङ्गदसूः योजनगन्धिका । योजनं गन्धः अस्याः । व्यासमाता सत्यवती इत्यष्टौ **व्यासमातुः सत्यवत्याः** ॥ गाङ्गेयः गान्दिनीसुतः । गान्दिन्याः सुतः ॥ ११ ॥ देवव्रतः । देवम् इन्द्रियसंयमनं व्रतमस्य । शान्तनवः । शान्तनोरपत्यम् । गाङ्गः गाङ्गायनिः । गङ्गाया अपत्यम् । भीष्मः कौणपदन्तः स्वेच्छामृत्युः पुरावसुः इति दश **कुरुवंश्यस्य शान्तनुसुतस्य भीष्मनृपस्य** ॥ १२ ॥ धृतराष्ट्रः आम्बिकेयः । अम्बिकायाः अपत्यम् इति द्वे **चन्द्रवंशीयस्य दुर्योधनपितुर्धृतराष्ट्रस्य नृपस्य** ॥ पाण्डुः माद्री पृथापतिः । पृथायाः पतिः स्वामी । इति त्रीणि **पाण्डु इति ख्यातस्य चन्द्रवंशीयस्य नृपस्य** ॥ दुर्योधनः कुरुराट् गान्धारेयः सुयोधनः इति चत्वारि **धृतराष्ट्रनृपतेर्ज्येष्ठपुत्रस्य दुर्योधननृपस्य** ॥ १३ ॥ धर्मपुत्रः । धर्मस्य पुत्रः । अजमीढः कर्णानुजः । कर्णस्य अनुजः । युधिष्ठिरः । युधि युद्धे स्थिरः । । "गवियुधिभ्यां स्थिर" इति षत्वम् । अजातशत्रुः । जातस्य जन्तुमात्रस्य न शत्रुः ॥ अश्राद्धभोजीत्यादिवत् नञो व्यवहितेन शत्रुशब्देनान्वयात् असमर्थसमासः । अथवा अजात एव शत्रुः । काङ्कः इति षट् **पाण्डवश्रेष्ठस्य युधिष्ठिरनृपस्य** ॥ भीमसेनः कटव्रणः ॥ १४ ॥ वीररेणुः नागबलः । नागस्य हस्तिनः बलं शक्तिर्यस्य सः । गुणकारः वृकोदरः । वृकस्येव उदरं यस्य । अत्र जिच्छब्दो बकादिभिः शब्दैरन्वेति । बकजित् कीचकजित् किर्मीरजित् जरासन्धजित् हिडिम्बजित् । बकजित् त्रकान्तकादयोऽप्यत्र । इत्येकादश **युधिष्ठिरानुजस्य भीमसेनस्य** ॥ १५ ॥ पार्थः किरीटी गाण्डीवी गुडाकेशः बृहन्नलः बृहन्नडोऽप्यत्र । अर्जुनः फाल्गुनः जिष्णुः विजयः धन-

सव्यसाची सुभद्रेशः शब्दभेदी कपिध्वजः ।
वार्तज्ञश्चाऽपि बीभत्सुर्द्रौपदी पाण्डुशर्मिला ॥ १७ ॥
पाञ्चाली पार्वती कृष्णा चेदिजा नित्ययौवना ।
याज्ञसेन्यथ राधेयो वसुसेनोऽर्कनन्दनः ॥ १८ ॥
घटोत्कचान्तकः कर्णश्चम्पेशः सूतपुत्रकः ।
द्रोणस्तु गुरुराचार्योऽश्वत्थामा तु कृपीसुतः ॥ १९ ॥
द्रौणायनोऽथ राजर्षिर्जनमेजयसंज्ञकः ।
पारीक्षितोऽप्यथ जरत्कारुर्यायावरो मतः ॥ २० ॥
प्रियाऽस्य मनसादेवी जरत्कारुरथैतयोः ।
आस्तीकनामा तनयो विरोचनसुतो बलिः ॥ २१ ॥
बाणो बिन्ध्याबलिसुतस्त्वाष्ट्रो वृत्रोऽप्यहिश्च सः ।
दमघोषसुतश्चैद्यश्चेदिराट् शिशुपालकः ॥ २२ ॥

चयः ॥ १६ ॥ सव्यसाची सुभद्रेशः शब्दभेदी कपिध्वजः वार्तज्ञः बीभत्सुः इति षोडश **मध्यमपाण्डवस्य अर्जुनस्य** ॥ द्रौपदी पाण्डुशर्मिला ॥ १७ ॥ पाञ्चाली पार्वती कृष्णा चेदिजा नित्ययौवना याज्ञसेनी इत्यष्टौ **द्रुपदराजदुहितुः द्रौपद्याः** ॥ राधेयः । राधायाः अपत्यम् पुत्रत्वेन परिग्रहणेन तत्पालितत्वात् । वसुसेनः "वसुषेणः" अर्कनन्दनः ॥ १८ ॥ घटोत्कचान्तकः कर्णः चम्पेशः । चम्पायाः ईशः । सूतपुत्रकः । सूतस्य पुत्रकः । इति सप्त **अङ्गदेशाधिपस्य पृथात्मजस्य कर्णस्य** ॥ द्रोणः गुरुः आचार्यः इति त्रीणि **द्रोण इति ख्यातस्य राजगुरुविप्रस्य** ॥ अश्वत्थामा कृपीसुतः । कृप्याः द्रोणाचार्यपत्न्याः सुतः ॥ १९ ॥ द्रौणायनः । द्रोणस्यापत्यम् । इति त्रीणि **अश्वत्थाम्नः द्रोणाचार्यपुत्रस्य** ॥ राजर्षिः जनमेजयः । जन्मेजयोऽप्यत्र । पारीक्षितः इति त्रीणि **परीक्षितराजपुत्रस्य जनमेजयस्य नृपस्य** ॥ जरत्कारुः यायावरः इति द्वे **मनसादेवीवल्लभस्य मुनेर्जरत्कारोः** ॥ २० ॥ मनसादेवी जरत्कारुः इति द्वे **अस्य जरत्कारोः प्रियायाः मनसादेव्याः** ॥ आस्तीकः इत्येकम् **एतयो जरत्कारुमनसादेव्योः पुत्रस्य**॥ विरोचनसुतः । विरोचनस्य सुतः । बलिः । "येन बद्धो बली राजा दानवेन्द्रो महाबली" इति द्वे **विरोचनपुत्रस्य बलेः**॥२१॥बाणः बाणोऽप्यत्र । बिन्ध्यासुतः।विन्ध्यासुतोऽप्यत्र। बलिसुतः इति त्रीणि **बलिपुत्रस्य बाणस्य**। त्वाष्ट्रः वृत्रः अहिः इति त्रीणि **त्वष्टृपुत्रस्य वृत्रस्य** ॥ दमघोषसुतः । दमघोषस्य सुतः चैद्यः । चेदीनां जनपदानामयम् । चेदिराट् । चेदीनां जनपदानां राजा । शिशुपालकः शिशुतालकोऽप्यत्र । इति चत्वारि **दमघोषात्मजस्य चेदिदेशीयराजस्य शिशु**

बार्हद्रथिर्जरासन्धः कंसः स्यादुग्रसेनजः ।
कर्णीसुतो मूलदेवो मूलभद्रः कलाङ्कुरः ॥ २३ ॥
मन्त्री ग्रन्थिहरोऽमात्यो द्वाःस्थितो वेत्रधारकः ॥
द्वौःसाधिको वर्तरूको गर्वाटो दण्डवासिनिः ॥ २४ ॥
सहपांशुकिलः स्नेही वयसोऽप्यथ वार्त्तिकः ।
वार्त्तायनः प्रवृत्तिज्ञो मौहूर्तो दैवलेखकः ॥ २५ ॥
चित्तोक्तिः पुष्पशकटी दैवप्रश्न उपश्रुतिः ।
लेखको मसिपण्यः स्याद्बोलकः किरिकोऽपि सः ॥ २६ ॥
मसिधानी मसिमणिर्मेलान्धुर्वर्णकूपिका ।
मसिजलं तु मेला स्यात्पत्राञ्जनं मसिर्द्वयोः ॥ २७ ॥
लेखनी वर्णतूली स्याल्लेखो वाचिकहारकः ।
वर्णदूतः स्वस्तिमुखः काचनं तन्निबन्धनम् ॥ २८ ॥
लेखस्थानं ग्रन्थकुटी मुद्रा प्रत्ययकारिणी ।
यातुर्गन्तुश्च पथिको हारिः पथिकसन्ततिः ॥ २९ ॥

**पालस्य** ॥ २२ ॥ बार्हद्रथिः जरासन्धः । "जरायाः सन्धितो यस्मात् जरासन्धस्ततोऽभवत्" इति । द्वे **जरासन्धस्य नृपस्य** ॥ कंसः उग्रसेनजः । उग्रसेनात् जायते । कर्णीसुतः । कर्ण्याः सुतः पुत्रः । मूलदेवः मूलभद्रः कलाङ्कुरः इति षट् **उग्रसेनपुत्रस्य कंसस्य नृपस्य** ॥ २३ ॥ मन्त्री ग्रन्थिहरः अमात्यः । अमा सह समीपे वा भवः । "अमान्तिकसहार्थयोः" इति कोषान्तरम् । अव्ययात्त्यप् च । इति त्रीणि **अमात्यस्य** ॥ द्वाःस्थितः । "द्वास्थितः द्वास्थः द्वारस्थः द्वाःस्थादयः" अप्यत्र । वेत्रधारकः द्वौःसाधिकः "दौःसाधिकः" वर्तरूकः गर्वाटः दण्डवासिनिः । द्वारी द्वारपादयोऽप्यत्र । इति षट् **द्वारपालस्य** ॥ २४ ॥ सहपांशुकिलः स्नेही वयसः इति त्रीणि **वयस्यस्य** ॥ वार्त्तिकः वार्त्तायनः प्रवृत्तिज्ञः "प्रवृत्तज्ञः" इति त्रीणि **प्रवृत्तिविदस्य** ॥ मौहूर्त्तः दैवलेखकः इति द्वे **गणकस्य** ॥ २५ ॥ चित्तोक्तिः पुष्पशकटी दैवप्रश्नः उपश्रुतिः इति चत्वारि **आकाशवाण्याः** ॥ लेखकः मसिपण्यः बोलकः "बोरकः" किरिकः इति चत्वारि **लेखकस्य** ॥ २६ ॥ मसिधानी । मसिधानमप्यत्र । मसिमणिः मेलान्धुः वर्णकूपिका इति चत्वारि **मसिद्रव्यस्थापनभाजनस्य** ॥ मसिजलं मेला इति द्वे **लेखनद्रव्यस्य** ॥ पत्राञ्जनं मसिः इति द्वे **कज्जलयाः** ॥ २७ ॥ लेखनी वर्णतूली इति द्वे **लेखनसाधनस्य कलमस्य** ॥ लेखः वाचिकहारकः वर्णदूतः स्वस्तिमुखः इति चत्वारि **लेखनस्य** ॥ काचनम् "कञ्चलम्" इत्येकं **पत्रनिबन्धनस्य लाक्षाद्रव्यस्य** ॥ २८ ॥ लेखस्थानं ग्रन्थकुटी इति द्वे **लेखस्थानस्य** ॥ मुद्रा प्रत्ययकारिणी इति द्वे **मुद्रायाः** । यातुः

सन्देशः प्राभृतं कौशल्युत्कोचस्तूपदानकम् ।
जनान्तिकं त्वप्रकाशो लुण्डी स्यान्न्यायसारिणी ॥ ३० ॥
ताम्बूलदो वाग्गुलिकः संवाहकोऽङ्गमर्दकः ।
चामरं रोमगुत्सं च केशरं चावचूलकम् ॥ ३१ ॥
कुठेरुर्मन्थरुः प्रोतोत्सादनं वस्त्रकुट्टिमम् ।
छत्रं पुटोटजं राजशृङ्गं कनकदण्डकम् ॥ ३२ ॥
हस्ती महामृगः पीलुः सिन्धुरो दीर्घमारुतः ।
राजीवो जलकाङ्क्षश्च निर्झरः करटी कटी ॥ ३३ ॥
विलोमजिह्वान्तःस्वेदपिण्डपादलतालकाः ।
वराङ्गः पुष्करी शूर्पकर्णसामजपेचिलाः ॥ ३४ ॥
करिणी वासिता गम्भीरवेद्यंकुशदुर्धरः ।
चालकव्यालकौ राजवाह्यो विजयकुञ्जरः ॥ ३५ ॥

गन्तुः पथिकः इति त्रीणि **देशान्तरगमनाय गृहान्निःसृत्य पथि गन्तुः ॥** हारिः पथिकसन्ततिः इति द्वे **पथिकसङ्घस्य** ॥२९॥ सन्देशः प्राभृतं कौशली इति त्रीणि **सन्देशस्य ॥** उत्कोचः उपदानकम् इति द्वे **उत्कोचस्य ॥** जनान्तिकम् । जनानाम् अन्तिकं सामीप्यवत् । अप्रकाशः इति द्वे **अप्रकाशस्य ॥** लुण्डी न्यायसारिणी "न्यायसारणी" इति द्वे **न्यायसारिण्याः** ॥ ३० ॥ ताम्बूलदः वाग्गुलिकः इति द्वे **ताम्बूलदातुः ॥** संवाहकः "सवाहकः" अङ्गमर्दकः । अङ्गं मर्दयति । अङ्गमर्दोऽप्यत्र । इति द्वे **अङ्गमर्दकारकस्य सेवकस्य ॥** चामरम् । चमरस्य विकारं तत्पुच्छनिर्मितत्वात् । रोमगुत्सं रोमगुच्छमप्यत्र । केशरम् अवचूलकम इति चत्वारि **चमरपुच्छकृतस्य व्यजनस्य** ॥ ३१ ॥ कुठेरुः "कुठेरः" मन्थरुः "तन्मरुः" इति द्वे **चामरवातस्य ॥** प्रोतोत्सादनम् । प्रोतेन निर्मितम् उत्सादनं यत्र । वस्त्रकुट्टिमम् । वस्त्रनिर्मितं कुट्टिमम् । इति द्वे **वस्त्रनिर्मितस्य ॥** छत्रं पुटोटजम् । पुटनिर्मितम् उटजं यत्र । इति द्वे **छत्रस्य ॥** राजशृङ्गं कनकदण्डकम् । कनकेन निर्मितं दण्डं यस्य । इति द्वे **सुवर्णदण्डच्छत्रस्य** ॥ ३२ ॥ हस्ती महामृगः पीलुः सिन्धुरः । सिन्धुर्मदजलमस्यास्ति । "मदान्धसिन्धुरघटे" इति । दीर्घमारुतः दीर्घः मारुतो यस्य । राजीवः जलकाङ्क्षः निर्झरः "निर्ज्झरः" करटी । करटः गजगण्डोऽस्त्यस्य । कटी ॥ ३३ ॥ विलोमजिह्वः । विलोमा विपरीता जिह्वा यस्य । अन्तःस्वेदः । अन्तः स्वेदो मदस्यन्दनं घर्मजलं यस्य । पिण्डपादः । पिण्डं पादं यस्य । लतालकः वराङ्गः पुष्करी शूर्पकर्णः । शूर्प इव कर्णौ यस्य । सामजः पेचिलः । पेचमस्त्यस्य । इत्येकोनविंशतिः **हस्तिनः** ॥ ३४ ॥ करिणी वासिता इति द्वे **हस्तिन्याः ॥** गम्भीरवेदी । गम्भीरवेदितोऽप्यत्र । "त्वग्भेदात् शोणितस्रावात् मांसस्य कथनादपि । आत्मानं यो न जानाति स स्याद्गम्भीरवेदित इति । अङ्कुशदुर्धरः चालकः व्यालकः इति चत्वारि **अङ्कुशावेत्तुर्दु-**

ईषादन्तो महादन्तः कर्णास्फाले झलज्झला ।
मदप्रयोगो व्यस्तारः विक्कस्तु करिशावकः ॥ ३६ ॥
आरक्षः कुम्भसन्धिः स्यात्सन्दानोऽष्ठीवतोऽधः ।
नासापूर्वं स्थूलहस्तं दन्तमूले करीरिका ॥ ३७ ॥
शङ्खः कटो दन्तमध्यं प्रवेष्टः पृष्ठतल्पने ।
आयस्कारः प्रजङ्घाग्रे प्रोहश्चरणपर्वणि ॥ ३८ ॥
न ना गात्रावरे नाली कर्णारा कर्णवेधनी ।
आलानं शङ्कुरक्षोभः प्रारब्धिर्गजबन्धनी ॥ ३९ ॥
प्रार्ची तु शृङ्खला हिञ्जीरोऽस्त्री स्यादन्दुकश्च सः ।
पित्तज्वरः पाकलोऽस्य कूटपूर्वस्त्रिदोषजः ॥ ४० ॥
अश्वः किण्वी हरिक्रान्तः शालिहोत्रश्च मुद्गभुक् ।
श्रीपुत्रश्चामरी हेषी राजस्कन्धो मरुद्रथः ॥ ४१ ॥
वातायनश्चैकशफो यस्तु पञ्चाङ्गपुष्पितः ।
स पञ्चभद्रः सूर्याश्वे वानायुहरितौ समौ ॥ ४२ ॥

**दन्तहस्तिनः** ॥ राजवाह्यः विजयकुञ्जरः । विजयाय कुञ्जरः । इति द्वे **विजयगजस्य** ॥ ३५ ॥ ईषादन्तः । ईषेव दन्तौ यस्य । इत्येकम् **ईषादीर्घदन्तस्य हस्तिनः** ॥ महादन्तः । महान्तौ दन्तौ यस्य । इत्येकं **महादन्तस्य हस्तिनः** ॥ झलज्झला इत्येकं **हस्तिकर्णचालनस्य** ॥ मदप्रयोगः व्यस्तारः इति द्वे **मदप्रयोगस्य** ॥ विक्कः करिशावकः । करिणः शावकः । "करिशावकः" इति द्वे **करिशावकस्य** ॥ ३६ ॥ आरक्षः कुम्भसन्धिः इति द्वे **कुम्भसन्धेः** ॥ सन्दानः इत्येकं **गजस्याष्ठीवतोऽधोभागस्य** ॥ नासापूर्वं स्थूलहस्तम् इति द्वे **नासापूर्वभागस्य** ॥ करीरिका । करीराऽप्यत्र । इत्येकं **हस्तिदन्तमूलस्य** ॥ ३७ ॥ शङ्खः कटः "कूटः" दन्तमध्यम् इति त्रीणि **हस्तिदन्तमध्यस्य** ॥ प्रवेष्टः इत्येकं **गजपृष्ठतल्पनस्य** ॥ आयस्कारः इत्येकं **प्रजङ्घाग्रस्य** ॥ प्रोहः इत्येकं **चरणपर्वणः** ॥ ३८ ॥ गात्रम् इत्येकं **हस्तिनः पूर्वजङ्घादिदेशस्य** ॥ अवरम् इत्येकं **पश्चाज्जङ्घादिदेशस्य** ॥ इमौ शब्दौ न ना पुँल्लिङ्गे न स्याताम् । नाली "नाली" कर्णारा कर्णवेधनी इति त्रीणि **कर्णवेधन्याः** ॥ आलानं शङ्कुः अक्षोभः प्रारब्धिः गजबन्धनी इति पञ्च **हस्तिबन्धनस्तम्भस्य** ॥ ३९ ॥ प्रार्ची "पार्ची" शृङ्खला हिञ्जीरः इति त्रीणि **शृङ्खलायाः** ॥ अन्दुकः इत्येकं **हस्तिपादबन्धननिगडस्य** ॥ क्वचित् अङ्कुशः इत्येकं **हस्तिचालनोपयोगिनः वक्राग्रलोहास्त्रस्य** ॥ पाकलः इत्येकं **हस्तिनः पित्तज्वरस्य** ॥ कूटपूर्वः इत्येकं **हस्तिनः त्रिदोषजज्वरस्य** ॥ ४० ॥ अश्वः किण्वी "किल्वी" हरिक्रान्तः शालिहोत्रः मुद्गभुक् श्रीपुत्रः। श्रियाः पुत्रः । चामरी । चामरमिव पुच्छमस्यास्ति। हेषी राजस्कन्धः मरुद्रथः॥ ४१ ॥ वातायनः। वातस्येव अयनम् गतिर्यस्य । एकशफः ।

यायावरोऽश्वमेधीयः पारसीकः परादनः ।
आरट्टजश्च चोस्कस्तु सिन्धुवारो हयोत्तमः ॥ ४३ ॥
वाताश्वजात्याजानेयो वेशरोऽश्वतरः खरः ।
श्रीवृक्षोऽस्य ह्रदावर्तो रोचमानो गलोद्भवः ॥ ४४ ॥
ऊर्ध्वस्थितिः पुरुषिकं विक्रान्तिस्तु पुलायितम् ।
पुलासन्नाहप्रखरौ कवियं कविकोच्यते ॥ ४५ ॥
ग्रीवाघण्टा घर्घरा स्याद्रश्मिः प्रवयणं च तत् ।
प्रतोदोऽथ खुरो विक्खः पुटो लुण्टनवेल्लने ॥ ४६ ॥
वल्गा दन्तालिका पल्ययनं पर्याणमस्य तु ।
वङ्क्षाग्रभागः स्यादश्ववारो वल्लभपालकः ॥ ४७ ॥

एकः शफोऽस्य । इति द्वादश **वाजिनः**॥ यस्य अश्वस्य पञ्चसु शरीरावयवेषु पुष्पमस्ति सः । **पञ्चभद्रः** । पञ्चसु देहस्थानेषु भद्रः । तथोक्तम्—"पञ्चभद्रस्तु हृत्पृष्ठे मुखपार्श्वेषु पुष्पितः" इति । इत्येकं **पञ्चभद्र इति ख्यातस्य वाजिनः** ॥ वातायः हरित् इति द्वे **सूर्याश्वस्य** ॥ ४२ ॥ यायावरः देशाद्देशान्तरं याति । अश्वमेधीयः । अश्वमेधाय हितः । इति द्वे **अश्वमेधाङ्गस्य अश्वस्य** ॥ पारसीकः । "पारसीकांस्ततो जेतुम्" इति रघुः । परादनः आरट्टजः "आवटजः" । कचित् "आवट्टजः" । इति त्रीणि **पारसीकदेशीयाश्वस्य** ॥ चोस्कः सिन्धुवारः इति द्वे **सिन्धुदेशीयाश्वस्य** ॥ हयोत्तमः । हयानां हयेषु वा उत्तमः श्रेष्ठः ॥ ४३ ॥ वाताश्वजातीः । वाताश्वः वातहयः अप्यत्र । आजानेयः इति त्रीणि **कुलीनाश्वस्य** ॥ वेशरः । वेशं राति । वेसरोऽप्यत्र । अश्वतरः खरः इति त्रीणि **अश्वतरस्य**॥ श्रीवृक्षः "श्रीवृक्षकः" । श्रियः शोभायाः वृक्ष इव । ह्रदावर्त्तः । हृदि आवर्त्तः । इति द्वे **अश्वहृदयस्थस्य श्वेतरोमावर्तभेदस्य** ॥ रोचमानः इत्येकम् **अश्वगलोद्भवस्य रोमावर्तस्य** ॥४४॥ पुरुषिकम् इत्येकम् **अश्वस्योर्ध्वस्थितरोमावर्तस्य** ॥ विक्रान्तिः पुलायितम् इति द्वे **अश्वगतेः** ॥ पुलासन्नाहः प्रखरः । प्रकृष्टः खरः । प्रादिसमासः । इति द्वे **हयसज्जीकरणस्य**॥ कवियं कविका इति द्वे **अश्वमुखस्थायाः लौहमयायाः कविकायाः** ॥ उच्यते कथ्यते इत्यर्थः ॥ ४५ ॥ ग्रीवाघण्टा घर्घरा इति द्वे **ग्रीवाघण्टायाः** ॥ रश्मिः प्रवयणम् "प्रवपणम्" इति द्वे **अश्वादिदाम्नः** ॥ प्रतोदः इत्येकम् **अश्वादिताडनदण्डस्य** ॥ खुरः विक्खः पुटः इति त्रीणि **अश्वखुरस्य** ॥ लुण्टनम् । लुटनमप्यत्र । वेल्लनम् इति द्वे **अश्वादेर्भूम्यादौ श्रमापनयनार्थं पुनःपुनरङ्गचालनस्य** ॥४६॥ वल्गा दन्तालिका इति द्वे **अश्वमुखस्थस्य रज्जुभेदस्य** ॥ पल्ययनं पर्यायणम् । पर्याणमप्यत्र । वङ्क्षाग्रभागः इति त्रीणि **अश्वसज्जीकरणविशेषस्य** ॥ अश्ववारः । अश्वं वारयति । वल्लभपालकः । वल्लभं पालयति । इति द्वे **अश्वपालस्य** ॥४७ ॥

नन्दीघोषोऽर्जुनरथो नीतिघोषस्तु गीष्पतेः ।
चङ्कुरं धोरणं यानमात्रे चक्रं त्वरि स्मृतम् ॥ ४८ ॥
लध्वी त्वाष्ट्री रथी कालवलनं त्वङ्गवर्मणी ।
मेठो मेण्डो हस्तिपके जङ्घात्राणं तु मङ्खुणम् ॥ ४९ ॥
स्यान्नायकाग्रेसरिकौ नासीरं दर्प ऊष्मणि ।
शस्त्रमायुधमुद्घातः स्थावरं तु धनुर्गुणी ॥ ५० ॥
शरावापो धनुः स्त्री स्यात्तृणता त्रिणतापि च ।
व्यधस्तु प्रतिकायः स्याज्जीवा स्याद्भारवं गुणः ॥ ५१ ॥
शस्त्राभ्यासश्च खुरली बाणः स्यादस्त्रकण्टकः ।
स्थूलक्ष्वेडो विपाटश्च चित्रपुङ्खः शरः सरः ॥ ५२ ॥
पत्रवाहो विकर्षोऽथ तीरं विज्जालसायके ।
लोहनालस्तु नाराचः प्रसरः काण्डगोचरः ॥ ५३ ॥
ऋष्टिः खड्गः तरवारिः शस्त्रो भद्रात्मजश्च सः ।
धाराविषो विशसनो न्युब्जखड्गः करौतलः ॥ ५४ ॥

नन्दीघोषः इत्येकम **अर्जुनरथस्य** ॥ क्वचित् पार्थरथेति पाठः । नीतिघोषः इत्येकं **बृहस्पतिरथस्य** ॥ चङ्कुरं धोरणम् इति द्वे **यानमात्रस्य** ॥ चक्रम् आरि इति द्वे **चक्रस्य** ॥ स्मृतं ज्ञातम् ॥ ४८ ॥ लध्वी त्वाष्ट्री रथी इति त्रीणि **लघुरथस्य** ॥ कालवलनम् "कालकवनम" अङ्गकं वर्म इति त्रीणि **सन्नाह इति ख्यातस्य वर्मणः** ॥ मेठः "मेढः" मेण्डः इति द्वे **हस्तिपालस्य** ॥ जङ्घात्राणं मङ्खुणम् इति द्वे जङ्घात्राणस्य ॥ ४९ ॥ नायकः अग्रेसरिकः इति द्वे **नायकस्य** ॥ नासीरं दर्पः इति द्वे **दर्पस्य** ॥ शस्त्रम आयुधम् उद्घातः "उद्धातः" इति त्रीणि **शस्त्रस्य** ॥ स्थावरं धनुः गुणी ॥ ५० ॥ शरावापः । शराः आवाप्यन्तेऽत्र । शरारोपोऽप्यत्र । धनुः तृणता त्रिणता इमे द्वे स्त्रियां स्याताम् । इति सप्त **धनुषः** ॥ व्यधः "व्यध्यः" प्रतिकायः जीवा भारवं "मारवं" गुणः इति पञ्च धनुर्गुणस्य ॥ ५१ ॥ शस्त्राभ्यासः खुरली इति द्वे **शस्त्राभ्यासस्य** ॥ बाणः अस्त्रकण्टकः । अस्त्रं कण्टक इव । स्थूलक्ष्वेडः । स्थूलः क्ष्वेडः विषः यस्य । विपाटः चित्रपुङ्खः शरः सरः ॥ ५२ ॥ पत्रवाहः । पत्रस्य वाहः । विकर्षः इति नव **बाणस्य** ॥ तीरं विज्जालं सायकम् । शायकमप्यत्र । इति त्रीणि **सायकस्य** ॥ लोहनालः । लोहेन कृतं नालं यस्य । नाराचः प्रसरः काण्डगोचरः । काण्डं गोचरं यस्य । इति चत्वारि **नाराचस्य** ॥ ५३ ॥ ऋष्टिः खड्गः तरवारिः । तरं शत्रूणां गतिं वारयति । शस्त्रः भद्रात्मजः धाराविषः विशसनः । विशस्यतेऽनेन । "असिर्विशसनः खड्गः" इति खड्गस्तोत्रम् । इति सप्त **खड्गस्य** ॥ न्युब्जखड्गः । न्युब्जश्चाऽसौ खड्गश्च ।

स्यादट्टनं चक्रफलं पर्शुः परशुरित्यपि ।
दीर्घायुधं शलः कुन्तः शल्यः शङ्कुर्विषाङ्कुरः ॥ ५५ ॥
शूलोऽस्त्री सीसकं लग्नाः प्रातर्गेयाः स्तुतिव्रताः ।
भोगावली वन्दिपाठो वसुकीटस्तु याचकः ॥ ५६ ॥
वातकेतुः क्षितिकणः स्यात्पांशुर्मेदिनीद्रवः ।
सम्भारः सर्वपूर्णत्वं पताका व्योममण्डलम् ॥ ५७ ॥
कदली कन्दली चीनमक्षंवाटस्तु मल्लभूः ।
भीरुस्तु भेलो हरिणहृदयः स्यात्पलङ्कटः ॥ ५८ ॥
विद्रवस्तु शृगाली स्यादाघातस्तु वधस्थली ।
कदनं मारणं मन्थः सौप्तिकं रात्रिमारणम् ॥ ५९ ॥
निपातो भूमिलाभश्च मृत्युरप्यथ मारकः ।
मरको मारिरुत्पातः शवस्तु क्षितिवर्धनः ॥ ६० ॥
पञ्चावस्थः कटः स्थाणुः श्मशानं तु शतानकम् ।
रुद्राक्रीडो दाहसरः संस्क्रिया सत्क्रिया समे ॥ ६१ ॥

कटीतलः । कट्यां तलमास्पदमस्य । इति द्वे **वक्रखड्गस्य** ॥५४॥ अट्टनं "अत्तनं" चक्रफलम् इति द्वे **चक्रफलस्य** ॥ पर्शुः परशुः इति द्वे **परशोः** ॥ दीर्घायुधम् । दीर्घं च आयुधं च । शलः कुन्तः शल्यः शङ्कुः विषाङ्कुरः इति षट् **कुन्त इति ख्यातस्य प्रासाख्यायुधस्य** ॥५५॥ शूलः सीसकम् इति द्वे **सुतीक्ष्णस्य अयःफालस्य**॥लग्नाः प्रातर्गेयाः स्तुतिव्रताः इति त्रीणि **स्तुतिपाठकानाम्**॥ भोगावली वन्दिपाठः इति द्वे **स्तुतिग्रन्थस्य**॥वसुकीटः याचकः "याचितः" इति द्वे **याचकस्य**॥५६॥वातकेतुः। वातस्य केतुः । क्षितिकणः । क्षितेः कणः । पांशुः मेदिनीद्रवः । मेदिन्याः द्रवः । इति चत्वारि **पांशोः** ॥ सम्भारः सर्वपूर्णत्वम् इति द्वे **सम्भारस्य** ॥ पताका व्योममण्डलम् । व्योम्नः मण्डलम् । क्वचित् व्योममञ्जरमिति ॥ ५७ ॥ कदली कन्दली चीनम् इत्ति पञ्च **पताकायाः** ॥ अक्षंवाटः । क्वचित् "अक्षवाटः" । मल्लभूः इति द्वे **बाहुयुद्धभूमेः** ॥ भीरुः भेलः हरिणहृदयः । हरिणस्येव भीतं हृदयमस्य । पलङ्कटः इति चत्वारि **भीरोः** ॥ ५८ ॥ विद्रवः । विद्रावोऽप्यत्र । शृगाली । शृगालस्तत्पलायनं सादृश्येनास्त्यस्य । इति द्वे **पलायनस्य** ॥ आघातः वधस्थली इति द्वे **वधस्थानस्य** ॥ कदनं मारणं मन्थः इति त्रीणि **मारणस्य**॥ सौप्तिकम् । सुप्तिकाले रात्रौ भवम् । रात्रिमारणम् । रात्रौ मारणम् । इति द्वे **रात्रिमारणस्य** ॥ ५९ ॥ निपातः भूमिलाभः । भूम्याः भूमौ वा लाभः । मृत्युः "मृत्करः" इति त्रीणि **मृत्योः** ॥ मारकः मरकः "मरणः" मारिः । मारीत्यप्यत्र । "मारीभये राजभये" इति बटुकस्तवः । उत्पातः इति चत्वारि **मारिकभयस्य** ॥ शवः क्षितिवर्धनः । क्षितिं भूमिं वर्धयति स्वदेहस्यपार्थिवांशोपचयेन ॥ ६० ॥ पञ्चावस्थः । पञ्च अवस्थाः यस्य । कटः

चिता काष्ठमटी चैत्यं चितःचूडकमिष्यते ।
चितं चाऽथान्तशय्यायां खटिर्वारुठ इत्यपि ।
उपग्रहस्तु ग्राहः स्याद्वन्दी करमरीत्यपि ॥ ६२ ॥

इति क्षत्रियवर्गः ॥ ८ ॥

तृष्णा धनपिशाची स्याद्वार्धुष्यं धान्यवर्धने ।
प्रामार्ज्यमृणमर्थानां प्रयोगः स्यान्मलाम्लिका ॥ १ ॥
ऋणमुक्तिर्विगणनं क्षेत्रं वारटमुच्यते ।
हलिर्बृहद्धले मुद्गो हरिनामा वनाखुकः ॥ २ ॥
वासन्तश्चाऽथ मसुरो मसूरो व्रीहिकाञ्चनः ।
सर्षपः स्यात्सरिषपः कटुस्नेहश्च तन्तुभः ॥ ३ ॥
प्रवेटः सितशूकः स्याद्गोधूमो म्लेच्छभोजनः ।
ताम्रवृन्तः कुलत्थः स्यान्निःस्नेहश्चण्डिकाऽतसी ॥ ४ ॥

स्थागः "स्थालः" इति पञ्च **शवस्य** ॥ श्मशानम् । श्मानः शवाः शेरतेऽत्र । यतः, "श्मशब्देन शवः प्रोक्तः शानं तत्स्थानमुच्यते" इति निरुक्तेः । शतानकं रुद्राक्रीडः । रुद्रस्य आक्रीडा यत्र । दाहसरः । दाहस्य सरः । इति चत्वारि **श्मशानस्य** ॥ संस्क्रिया "संक्रिया" सत्क्रिया इति द्वे **संस्कारस्य** ॥ ६१ ॥ चिता काष्ठमटी चैत्यं चिताचूडकं चितम् इति पञ्च **शवदाहार्थं कृतायाः काष्ठचुल्ल्याः** ॥ इष्यते काम्यते । बुधैरिति शेषः । खटिः वारुठः । अपि शब्देन शवरथः शववाहनं शवयानमित्यादयः सङ्गृह्यन्ते । अत्र शववाहनशवयानशब्दाभ्यां मृतदेहवाहनं तल्पमपि कथ्यते । इति द्वे **शवरथस्य** ॥ उपग्रहः ग्राहः वन्दी "वन्दिः" करमरी । अपिशब्दात् करिमरिरप्यत्र । इति चत्वारि **कारावद्धमनुष्यादेर्वन्द्याश्च** ॥ ६२ ॥ इति क्षत्रियवर्गः ॥ ८ ॥ तृष्णा धनपिशाची । धने पिशाचीव इति । द्वे **तृष्णायाः** ॥ वार्धुष्यम् । वार्धुषेर्भावः । इत्येकं **धान्यादेर्वर्धनोपायस्य** ॥ प्रामार्ज्यम् "प्रामित्यम्" ऋणम् इति द्वे **ऋणस्य** ॥ मलाम्लिका "कलाम्बिका" । कश्चित् "कलम्बिका" इत्येकम् **अर्थानां प्रयोगस्य** ॥ १ ॥ ऋणमुक्तिः । ऋणात् मुक्तिः । विगणनम् । विशेषेण गणनम् । ऋणशोधनार्थे सङ्ख्यागणनमित्यर्थः । इति द्वे **ऋणमुक्तेः** ॥ क्षेत्रं वारटम् इति द्वे **क्षेत्रस्य** ॥ उच्यते कथ्यते । बुधैरिति शेषः । हलिः इत्येकं **बृहद्धल इति ख्यातस्य महालाङ्गलस्य** ॥ मुद्गः हरिनामा । हरेर्नाम तदाख्यानं वा । वनाखुकः । क्वचित् "वनाखुकः" । वनाखाकोऽप्यत्र ॥ २ ॥ वासन्तः । वसन्ते भवः । इति चत्वारि **मुद्गस्य** ॥ मसुरः मसूरः व्रीहिकाञ्चनः । व्रीहिषु काञ्चनं तद्रूपमस्त्यस्य । इति त्रीणि **मसूरस्य व्रीहिभेदस्य** ॥ सर्षपः सरिषपः कटुस्नेहः । कटुः स्नेहः तैलादिरूपो निर्यासो यस्य । क्वचित् "कटुस्नेहा । तन्तुभः" । तन्तुना सन्तत्या भाति । इति चत्वारि **सर्षपस्य** ॥ ३ ॥ प्रवेटः सितशूकः । सितः तीक्ष्णः शूको यस्य ।

**मूर्खः पुरीषिलो माषो राजमाषस्तु वर्वटः ।**
**फुल्लपालः शूर्पवाते न स्त्री तितउ चालनी ॥ ५ ॥**
**कण्डन्युदूखलं प्रस्थः पालिः सूदः प्रचेलकः ।**
**कुशूलो स्त्री व्रीह्यगारं कन्दुरम्भिष्ठ उच्यते ॥ ६ ॥**
**आलिञ्जरो ना नन्दा स्त्री मृत्सा भाण्डकमृष्टिका ।**
**वारासनं वाःसदनं क्कणनो हण्डिकासुतः ॥ ७ ॥**
**कलशी गर्गरी तुल्या स्याच्छरावस्तु मार्त्तिकः ।**
**शालाजिरः पार्थिवश्च मृत्कांस्यमथ लोहिका ॥ ८ ॥**
**खरसोल्लः खरपात्रं शिङ्खाणं काचभाजनम् ।**
**काष्ठलोही तु वातर्दिर्जीरको दीप्यकः स्मृतः ॥ ९ ॥**

इति द्वे **यवस्य ॥** गोधूमः म्लेच्छभोजनः । म्लेच्छैर्भुज्यते । इति द्वे **गोधूमस्य ॥** ताम्रवृन्तः । ताम्रं वृन्तमस्य । कुलत्थः इति द्वे **कुलत्थस्य ॥** निःस्नेहः चण्डिका अतसी इति त्रीणि **अतस्याः** ॥ ४ ॥ मूर्खः पुरीषिलः ''पुरीषमः'' माषः इति त्रीणि **माषस्य ॥** राजमाषः वर्वटः इति द्वे **राजमाषस्य ॥** फुल्लपालः इत्येकं **शूर्पवातस्य ॥** एतत् स्त्रियां न स्यात् । तितउ चालनी इति द्वे **चालन्याः** ॥ ५ ॥ कण्डनी उदूखलम् । उलूखलमप्यत्र । इति द्वे **उदूखलस्य ॥** प्रस्थः पालिः सूदः प्रचेलकः इति चत्वारि **चतुष्कुडवात्मकस्य-धान्यादेः परिमाणभेदस्य ॥** कुशूलः ''कुसूलः'' व्रीह्यगारम् । व्रीहीनाम् अगारम् । इति द्वे **इष्टकादिनिर्मितस्य धान्यादिस्थापनार्हगृहस्य ॥** कन्दुः अम्भिष्ठः । अग्नौ स्थातुमर्हति । इति द्वे **वह्निस्थितियोग्यस्य लौहमयकटाहादिपात्रस्य तण्डुलादिभर्जनपात्रस्य स्वेदनीपात्रस्य च ।** '' कन्दुपक्वं तैलपक्वम् '' इति स्मृतिः ॥ ६ ॥ आलिञ्जरः । अलिञ्जर एव । अयं तु पुँल्लिङ्गकः । नन्दा । इयं स्त्रियामेव । इति द्वे **जाला इति ख्यातस्य मृन्मयजलपात्रभेदस्य ॥** केचित्तु मणिक इति पठंति । मृत्सा ''मृत्स्ना'' भाण्डकमृष्टिका । भाण्डकाय कृता मृष्टिका । क्वचित् ''भाण्डकमुष्टिका'' इति द्वे **प्रशस्तमृत्तिकायाः,आढकीति ख्यातस्य भाण्डभेदस्य वा ॥** वारासनं वाःसदनम् इति द्वे **जलाधारस्य ॥** क्कणनः हण्डिकासुतः । हण्डिकायाः सुतः । इति द्वे **क्षुद्रमृत्पात्रस्य** ॥ ७ ॥ कलशी ''कलशिः'' । ''कलशिमुदधिगुर्वीम्'' इति माघः । गर्गरी । गर्ग इति शब्दं राति । इति द्वे **कलश्याः** ॥ इयं तुल्या समाना स्यात् । शरावः मार्त्तिकः । मृत्तिकया निर्मितः । शालाजिरः पार्थिवः मृत्कांस्यम् । इति पञ्च **शरावस्य ॥** लोहिका ॥ ८ ॥ खरसोल्लः ''खरसोन्द्रः'' खरपात्रम् खरं च तत् पात्रं च । इति त्रीणि

कटुभङ्गस्तु शुण्ठी स्यात्काञ्जिकं तु तुषोदकम् ।
गृहाम्लं सिद्धसलिलं रक्षोघ्नं धातुनाशनम् ॥ १० ॥
गृहिणी मधुरा हिङ्गु शूलहृत्सूपधूपनम् ।
वर्षिणी हेमरागिण्यो हरिद्रा पीतवालुका ॥ ११ ॥
गण्डोलं स्याद्गुडः स्वादुः पिप्यटा गुडशर्करा ।
महाश्वेता तु मधुजा प्रयस्तं स्यात्सुसंस्कृतम् ॥ १२ ॥
चिपिटो धान्यचमसश्चित्रापूपश्चरुव्रणः ।
आलिम्पना तर्पणा दीपनं मण्डोदकं च तत् ॥ १३ ॥
वटकः पिष्टपूरः स्याद्व्रतापायनवायने ।
प्रहेणकं चाऽथ पोली पूपाली चर्पटी च सा ॥ १४ ॥
सक्तुश्चूर्णक आपूप्यो भक्तं कुरुः प्रसादनः ।
मण्डो ज्येष्ठाम्बु खदिका लाजाः पारी तु दोहनी ॥ १५ ॥
निपानं स्त्री गवी तुम्बा निलिम्पा रोहिणी च सा ।
गव्यं श्रेष्ठं पुंसवनं स्याद्दोहापनयः पुमान् ॥ १६ ॥

परस्परजलदानक्रीडनस्य हस्तरूपपात्रस्य च॥ शिङ्घाणं काचभाजनम्। काचेन निर्मितं भाजनम्। इति द्वे **काचभाजनस्य** ॥ काष्ठलोही वार्तदिः इति द्वे **काष्ठलोह्याः**॥ जीरकः दीप्यकः इति द्वे **जीरकस्य** ॥ स्मृतः ज्ञातः । सुधीभिरिति शेषः ॥ ९ ॥ कटुभङ्गः शुण्ठी इति द्वे **शुण्ठ्याः**॥ काञ्जिकं तुषोदकं गृहाम्लम् । गृहे आम्लमिव। सिद्धसलिलम्। सिद्धं च तत् सलिलं च । रक्षोघ्नं धातुनाशनम् । धातून् नाशयति॥१०॥ गृहिणी मधुरा इत्यष्टौ **काञ्जिकस्य** ॥ हिङ्गु शूलहृत् सूपधूपनम्। सूपो धूप्यतेऽनेन । इति त्रीणि **हिङ्गुनः** ॥ वर्षिणी हेमरागिण्यः हरिद्रा पीतवालुका।पीता वालुकेव चूर्णनात् । इति चत्वारि **हरिद्रायाः**॥११॥गण्डोलं गुडः स्वादुः इति त्रीणि **गुडस्य** ॥ पिप्यटा "पिप्पटा" गुडशर्करा । गुडः शर्करेव । इति द्वे **शर्करायाः** ॥ महाश्वेता मधुजा इति द्वे **सितायाः** ॥ प्रयस्तं सुसंस्कृतम् इति द्वे **तैलसंस्कृतस्य**॥१२॥चिपिटः धान्यचमसः इति द्वे **पृथुकस्य**॥चित्रापूपः चरुव्रणः इति द्वे **पूपविशेषस्य**॥आलिम्पना तर्पणा इति द्वे **तृप्तेः**॥दीपनं मण्डोदकम्।मण्ड इव उदकम्।इति द्वे **मण्डोदक इति ख्यातस्य आतपतण्डुलचूर्णमिश्रितजलस्य** ॥ १३ ॥ वटकः पिष्टपूरः । पिष्टानां तण्डुलचूर्णानां पूरो यस्य । इति द्वे **वटक इति ख्यातस्य खाद्यभेदस्य** ॥ व्रतापायनं वायनं "वाचनम्" प्रहेणकम् इति त्रीणि **वायन इति प्रसिद्धस्य भक्षणभेदस्य** ॥ पोली । क्वचित् पौलीति पाठः। पूपाली चर्पटी इति त्रीणि **पोल्याः ईषत्पक्वस्य कलापयवादेश्च** ॥ १४ ॥ सक्तुः चूर्णकः इति द्वे **सक्तोः** ॥ आपूप्यः भक्तं कुरुः । "कुरुर्नृपान्तरे भक्ते पुमान् पुंभूम्नि नीवृतौ" इति मेदिनी । क्वचित् "कुरम्" "कूरः" । प्रसादनः इति चत्वारि **ओदनस्य** ॥ मण्डः ज्येष्ठाम्बु इति द्वे **मण्डस्य** ॥ खदिकाः लाजाः इति द्वे **लाजानाम्** ॥ पारी दोहनी ॥ १५ ॥ निपानं गवी तुम्बा निलिम्पा रोहिणी इति

अवदोहः पयः क्षीरं प्राग्गाढं श्रीधनं दधि ।
कद्वरं तु दधिस्नेहो जग्धिर्भोजनमक्षणे ॥ १७ ॥
देहयात्रा विष्वणनं भुक्तं प्रत्यवसानवत् ।
कल्यवर्तः प्रातराशः प्रातर्भोजनमित्यपि ॥ १८ ॥
अनड्वाञ्शाङ्करो गन्धमैथुनः शक्वरिर्वृषः ।
ककुद्मान्पुङ्गवश्चाऽथ कण्ठाला जालगोणिका ॥ १९ ॥
दोग्धा शकृत्करिर्वत्सस्तेषामाटीकनं क्रमः ।
गवादिकं जीवधनं पलिक्नी बालगर्भिणी ॥ २० ॥
करकं गोमयच्छत्रे गोग्रन्थिः शुष्कगोमयम् ।
करीषश्छगणो हम्भा रेभणं च गवां ध्वनौ ॥ २१ ॥
नैचिकं गोः शिरोदेशे वन्दनीया तु रोचना ।
मन्थानमन्थतक्राटाः स्यादुष्ट्रः कण्टकाशनः ॥ २२ ॥
लम्बौष्ठाध्वगवासन्तकुलनाशमरुद्विपाः ।
भौलिर्बहुकरो वक्रग्रीवो भेषस्तु रोमशः ॥ २३ ॥

सप्त **दोहन्याः** ॥ एते गवीत्यादयः शब्दाः स्त्रीलिङ्गे स्युः । गव्यं श्रेष्ठं पुंसवनं "प्रस्रवणं" दोहापनयः इति चत्वारि **गव्यस्य** ॥ अत्र दोहापनयशब्दस्तु पुंलिङ्गकः स्यात् । शेषाः क्लीबलिङ्गकाः ॥ १६ ॥ अवदोहः पयः क्षीरम् इति त्रीणि **दुग्धस्य** ॥ प्राग्गाढम् "प्राग्राटम्" श्रीधनम् इति द्वे **दध्नः**॥कद्वरं दधिस्नेहः "दधिस्वेदः" । दध्नः स्नेहः । इति द्वे **दधिस्नेहस्य** ॥ जग्धिः भोजनं भक्षणम् ॥ १७ ॥ देहयात्रा । देहस्य यात्रा प्रवर्तनं **यस्याः** । विष्वणनं भुक्तं प्रत्यवसानम् । वच्छब्देन अभ्यवहरणादयो गृह्यन्ते । इति सप्त **भोजनस्य** ॥ कल्यवर्तः । कल्ये प्रभाते वर्तः भोजनम् । प्रातराशः । प्रातः अश्यते भुज्यते । **अथवा प्रातः** प्रभाते आशो भोज्यम् । प्रातर्भोजनम । अपिशब्देन प्रभाताशः प्रभातभोजनमित्यादयोऽपि गृह्यन्ते । इति त्रीणि **प्रातर्भोजनस्य** ॥१८॥ अनडान शाङ्करः "शाक्करः" गन्धमैथुनः । गन्धो मैथुने यस्य । शक्वरिः वृषः ककुद्मान् पुङ्गवः इति सप्त **वृषस्य** ॥ कण्ठाला जालगोणिका इति द्वे **कण्ठालायाः** ॥ १९ ॥ दोग्धा शकृत्करिः । शकृतं किरति । वत्सः इति त्रीणि **वत्सस्य**॥ आटीकनम् इत्येकं **तेषां वत्सानां क्रमस्य गमनस्य** ॥ जीवधनम् । जीवस्य धनम् । इत्येकं **गवादिकस्य धनस्य** ॥ पलिक्नी बालगर्भिणी इति द्वे **बालगर्भिण्या गोः** ॥ २० ॥ करकम् "कवाकम्" इत्येकं **गोमयच्छत्रस्य शिलीन्ध्रस्य** ॥ गोग्रन्थिः।गोर्ग्रन्थिरिव,गवां ग्रन्थिः पङ्क्तिर्यत्र वा। शुष्कगोमयम् इति द्वे **शुष्कगोमयस्य** ॥ करीषः छगणः इति द्वे **करीषस्य** ॥ हम्भा रेभणम् इति द्वे **गवां ध्वनेः** ॥ २१ ॥ नैचिकम् इत्येकं **गोः शिरोदेशस्य** ॥ वन्दनीया रोचना इति द्वे **गोरोचनायाः** ॥ मन्थानः मन्थः तक्राटः इति त्रीणि **मन्थनदण्डस्य** ॥ स्यादिति पृथगन्वयः । उष्ट्रः कण्टकाशनः । कण्टकमश्नाति ॥ २२ ॥ लम्बौष्ठः । लम्बः ओष्ठो यस्य । अध्वगः वासन्तः

संस्फालहुडुमेंडाश्च मेषी स्याज्जालकिन्यविः ।
वर्करस्तु लम्बकर्णश्छागो बस्तः शिवाप्रियः ॥ २४ ॥
अल्पायुर्लघुकायश्च मेनादः पर्णभोजनः ।
परिक्रमसहो बुक्को देवानांप्रिय इत्यपि ॥ २५ ॥
छागी सज्ञा चुलम्पा स्याच्छङ्कुकर्णस्तु गर्दभः ।
स्मरस्मर्यश्चिरमेही ग्राम्याश्वो रेणुरूषितः ॥ २६ ॥
पशुश्चारिः शुद्रजङ्घो रत्नं चारुशिला मणिः ।
स्वाध्यायी पत्तनवणिग्घोटाबुक्कोश्वविक्रयी ॥ २७ ॥
सर्वमूल्यं द्यूतबीजं हिरण्यं च कपर्दकः ।
वराटकः पणास्थि स्याद्भासुरः स्फाटिकोपलः ॥ २८ ॥
शालिपिष्टं धौतशिलं गल्वर्कश्च सुसारवत् ।
अश्मसारस्त्विन्द्रनीलो वैदूर्यं बालवायजम् ॥ २९ ॥
बालसूर्यमथो रक्तकन्दलो विद्रुमश्च सः ।
लतामणिः प्रवालः स्याद्राजभद्रो विराटजः ॥ ३० ॥

कुलनाशः मरुद्विपः । मरौ वालुकाभूमौ द्विपः । मोलिः बहुकरः वक्रग्रीवः । वक्रा ग्रीवा यस्य । इति दश उष्ट्रस्य ॥ मेषः रोमशः "लोमशः" ॥ २३ ॥ संस्फालः हुडुः मेडः । मेढ्रोऽप्यत्र । इति पञ्च **मेषस्य** ॥ मेषी जालकिनी अविः इति त्रीणि **मेष्याः** ॥ वर्करः लम्बकर्णः । लम्बौ कर्णौ यस्य । छागः बस्तः "वस्तः" शिवाप्रियः । शिवायाः प्रियः ॥२४॥ अल्पायुः । अल्पम् आयुर्यस्य । लघुकायः लघुः कायो यस्य । मेनादः । मे इति नादो यस्य । पर्णभोजनः । पर्णानि भोजनानि यस्य । परिक्रमसहः । परिक्रमं पादगमनं सहत इति । बुक्कः देवानांप्रियः इति द्वादश **छागस्य** ॥ २५ ॥ छागी सज्ञा चुलम्पा इति त्रीणि **छाग्याः** ॥ शङ्कुकर्णः । शङ्कुरिव कर्णौ अस्य । गर्दभः स्मरस्मर्यः । स्मरस्य स्मर्यो यस्य । चिरमेही ग्राम्याश्वः रेणुरूषितः । रेणुभिः रूषितः धूलिमिश्रितः ॥ २६ ॥ पशुश्चारिः शुद्रजङ्घः । शुद्राः जङ्घाः यस्य । इत्यष्टौ **गर्दभस्य** ॥ रत्नं चारुशिला । चारुश्च सा शिला च । मणिः इति त्रीणि **रत्नस्य** ॥ स्वाध्यायी पत्तनवणिक् । पत्तने वणिक् । इति द्वे **पत्तनवणिजः** ॥ घोटाबुक्कः । क्वचित् "घेडाबुक्कः" । अश्वविक्रयी इति द्वे **अश्वविक्रयिणः** ॥२७॥ सर्वमूल्यम् । सर्वस्मिन् मूल्यम् । द्यूतबीजम् । द्यूतस्य बीजम् । हिरण्यं कपर्दकः । कपर्दिकाप्यत्र । वराटकः "वराटः" पणास्थि इति पञ्च **कपर्दकस्य** ॥ तत्र केचित् वराटः वराटकः इति द्वे **क्षुद्रकपर्दकस्य** ॥ इति वदन्ति । भासुरः स्फाटिकोपलः ॥२८॥ शालिपिष्टं धौतशिलम् । धौतं शिलेव । इति चत्वारि **स्फाटिकस्य** ॥ गल्वर्कः इत्येकं **रक्तखदिरसदृशस्य मणिविशेषस्य** ॥ अश्मसारः "मसारः" । अश्मस्य सारः । इन्द्रनीलः । इन्द्रस्येव नीलो यस्य । इन्द्र इव नीलो वा । इति द्वे **इन्द्रनीलस्य** ॥ वैदूर्यं "वैडूर्य" बालवायजम् ॥२९॥ बालसूर्यम् । इति त्रीणि **वैदूर्यस्य** ॥ रक्तकन्दलः । रक्तकन्दोऽस्त्यस्य । विद्रुमः विशिष्टो द्रुमः ।

कुरुविन्दः पद्मरागो दधीच्यस्थि तु हीरकम् ।
स्वर्णं लोहवरं चाऽग्निबीजं चाम्पेयमित्यपि ॥ ३१ ॥
रूप्ये श्वेतं रङ्गबीजमिन्दुकान्ते मणीचकम् ।
ताम्रकं तु लोहिताय: सूर्याह्वं मुनिपित्तलम् ॥ ३२ ॥
कंसे तु कंसं कंसास्थि ताम्रार्धमथ मौक्तिकम् ।
रसोपलं शुक्तिबीजं सिन्दूरं रक्तवालुकम् ॥ ३३ ॥
पारदः सिद्धधातुः स्याद्धरबीजं च सूतकम् ।
रङ्गं सुरेभं मृद्वङ्गं कुसुम्भं ग्राम्यकुङ्कुमम् ॥ ३४ ॥
हरिताले तु कर्वूरं गोदन्तो नटसंज्ञकः ।
दारदं तु हिङ्गुलु स्याद्धिङ्गुलं रक्तपारदम् ॥ ३५ ॥

लतामणिः प्रवालः इति चत्वारि **विद्रुमस्य॥** राजपट्टः । राज्ञः पट इव । विराटजः । विराटे तदाख्यदेशे जायते । इति द्वे **विराटजस्य मणेः॥**३०॥ कुरुविन्दः "कुरुविल्वः" पद्मरागः। पद्मस्येव रागो रक्तवर्णो यस्य । इति द्वे **पद्मरागस्य॥**दधीच्यस्थि । दधीचिनः अस्थि ।दधीचास्थि अप्यत्र । दधीचस्य अस्थि । हीरकम् इति द्वे **वज्र इति ख्यातस्य हीरकस्य॥** स्वर्णं लोहवरम् । लोहानां वरम् । अग्निबीजम्।अग्नेर्बीजम् । "अग्निवीजम्"चाम्पेयम् । चम्पायां तन्नामकायां नगर्यां भवम्। अपिशब्देन चाम्पेयकं गृह्यते । इति चत्वारि **स्वर्णस्य॥**३१॥ श्वेतं रङ्गबीजम् । रङ्गस्य बीजम् । "रङ्गबीजम्" इति द्वे **रूप्यस्य ॥** मणीचकम् । मणीनां चकं भ्रांतिर्यस्य । इत्येकं **चन्द्रकान्तमणेः ॥** केचित्तु **चन्द्रवर्णरूप्यस्य ॥** इति वदन्ति । ताम्रकं लोहिताय: । लोहितवर्णमेति । सूर्याह्व "सूर्याङ्ग" रव्यादयोऽप्यत्र । मुनिपित्तलम् । इति चत्वारि **ताम्रस्य ॥ ३२ ॥** कंसं कंसास्थि ताम्रार्धम् । ताम्रस्य अर्धम् । इति त्रीणि **काँस इति ख्यातस्य ताम्ररङ्गमिश्रितस्य उपधातोः ॥** यथाह–"उपधातुर्भवेत्कांस्यं द्वयोस्तरणिरङ्गयोः" इति । मौक्तिकं रसोपलम् । रसः पारदमिव उपलीयते । शुक्तिबीजम् इति त्रीणि **मौक्तिकस्य ॥** सिन्दूरं रक्तवालुकम् । रक्तं च तद्वालुकं च । "रक्तवालकम्" इति द्वे **सिन्दूरस्य ॥ ३३ ॥** पारदः "पारतः" सिद्धधातुः । सिद्धः प्रसिद्धश्चाऽसौ धातुश्च। हरबीजम् । हरस्य शङ्करस्य बीजम्। "धरबीजम्" सूतकम् इति चत्वारि **पारदस्य॥**रङ्गं सुरेभं मृद्वङ्गम् इति त्रीणि **रङ्गस्य धातुभेदस्य॥**कुसुम्भं ग्राम्यकुङ्कुमम्।ग्राम्यं च तत् कुङ्कुमं च इति द्वे **पुष्पप्रधानवृक्षस्य कुसुम्भस्य ॥** यथाह–"कुसुम्भं नालिकाशाकं वार्ताकुम्" इति स्मृतिः ॥ ३४ ॥ कर्वुरम् इत्येकं **हरितालस्य ॥** गोदन्तः । गोर्दन्त इवावयवो यस्य । नटः इति द्वे **गोदन्त इति ख्यातस्य हरितालस्य ॥** दारदं हिङ्गुलु हिङ्गुलं रक्तपारदम्। रक्तं च तत् पारदं च। "रक्तपारदः" इति चत्वारि **हिङ्गुलस्य॥**३५॥

रसगन्धो गन्धरसो गान्धारं मसिवर्धनम् ।
क्षारस्तु स्याद्यवक्षारो यवशूकश्च रेचकः ॥
शिलाजतु शिलाव्याधिस्त्रृफला त्रिफलाऽपि च ॥ ३६ ॥
इतिवैश्यवर्गः ॥ ९ ॥
शूद्रः स्यात्पादजो दासो ग्रामकूटो महत्तरः ।
मालिकः पुष्पलावः स्यात्कुम्भकारस्तु मृत्करः ॥ १ ॥
दण्डभृत्पलगण्डस्तु सुधाजीवी च लेपकः ।
कायस्थे कूटकृत्पञ्जीकरौ चित्रकरे कृणुः ॥ २ ॥
चर्मरुः कुरटः पादुकृत्कलादस्तु गौञ्जिकः ॥
नाडिन्धमः स्वर्णकारो वात्सीपुत्रस्तु नापितः ॥ ३ ॥
चन्द्रिलो नखकुट्टश्च रजकः कर्मकीलकः ।
कन्यापालः पालवाणिग्देवलस्त्वग्रद्विजः ॥ ४ ॥

रसगन्धः । रसे गन्धोऽस्य । रसगन्धकोऽप्यत्र । गन्धरसः । गन्धो रसोऽस्य । गान्धारम् । गन्धं सौरभमृच्छति । गन्धारमप्यत्र । मसिवर्धनम् इति चत्वारि **गन्धक इति ख्यातस्य रसगन्धस्य** ॥ क्षारः यवक्षारः । यवानां क्षारः । यवशूकः । यवानां शूकः । रेचकः इति चत्वारि **यवक्षारस्य**॥ शिलाजतु । शिलाजातं । अतु शिलाव्याधिः । शिलायाः व्याधिरिव । इति द्वे **शिलाजतु इति ख्यातस्य पर्वतजातस्य उपधातुभेदस्य** ॥ तृफला । त्रयाणां फलानां समाहारः । त्रिफला । त्रयाणां फलानां समाहारः । अपिशब्देन त्रिफली फलत्रयमादयोऽप्यत्र गृह्यन्ते । इति द्वे **त्रिफलायाः** ॥ ३६॥ इति वैश्यवर्गः॥९॥ शूद्रः पादजः । ब्रह्मणः पादाभ्यां जायते । दासः इति त्रीणि **शूद्र इति ख्यातस्य चतुर्थवर्णस्य** ॥ ग्रामकूटः । ग्रामस्य कूट इव । महत्तरः । अतिशयेन महान् । इति द्वे **अतिशयवृद्धिप्राप्तस्य** ॥ मालिकः । माला तन्निर्माणशिल्पमस्य । पुष्पलावः । पुष्पं लुनाति । इति द्वे **मालाकारस्य** ॥ कुम्भकारः । कुम्भं करोति । मृत्करः । मृदा मृत्तिकया भाजनविकृतिं करोति ॥ १ ॥ दण्डभृत् । दण्डं बिभर्ति । इति त्रीणि **कुम्भकारस्य** ॥ पलगण्डः । पलं मांसं गण्डति गण्डमिव करोति । सुधाजीवी । सुधां लेपनद्रव्यमाजीवति । लेपकः इति त्रीणि **लेपनकरस्य** ॥ कूटकृत् । कूटं मिथ्याभूतं करोति । पञ्जीकरः इति द्वे **कायस्थ इति ख्यातस्य लिपिकरवृत्तेः** ॥ कृणुः इत्येकं **चित्रकारस्य**॥ २ ॥ चर्मरुः कुरटः पादुकृत् । पादुकां करोति । इति त्रीणि **चर्मकारस्य** ॥ कलादः । कलामंशमादत्ते तेन हि अलङ्कारघटनार्थं गृहीतधनस्यांशोऽपह्रियते । गौञ्जिकः नाडिन्धमः । नाडीं वंशनर्लं धमति । स्वर्णकारः "स्वर्णतालः" । स्वर्णं स्वर्णमयालङ्कारादिकं करोति । इति चत्वारि **स्वर्णकारस्य** ॥ वात्सीपुत्रः नापितः ॥ ३ ॥ चन्द्रिलः नखकुट्टः । नखान् कुट्टयति । इति चत्वारि **क्षुरकर्मकारकस्य** ॥ रजकः कर्मकीलकः इति द्वे **वस्त्रादेः रागकारकस्य** ॥ कन्यापालः "कल्यपालः" । कन्यां पालयति । पालवाणिक

अजाजीवस्तु जाबालो निष्कश्चण्डाल उच्यते ।
कुक्कुरे दीर्घसुरतो वान्तादरसनालिहौ ॥ ५ ॥
रतव्रणो ग्राममृगस्तथेन्द्रमहकामुकः ।
कपिलो वक्रपुच्छश्च शयालुररपत्रपः ॥ ६ ॥
शुन्यां शुन्यं शुनीरं स्याच्चौरः शङ्कितवर्णकः ।
स्यात्कुम्भिलश्च प्रचुरपुरुषोऽथ कुजम्भिलः ॥ ७ ॥
सुरुङ्गोऽहिर्वधश्चौरे वन्दीकारस्तु माचलः ।
प्रसह्यचोरश्चिल्लाभः स्त्रीचोरो रतहिण्डकः ॥ ८ ॥
काव्यचोरश्चन्द्ररेणुः कुडयच्छेद्यं तु खानिकम् ।
सन्धिः सुरङ्गा तद्भेदाः श्रीवत्सगोमुखादयः ॥ ९ ॥
कपाललासिका तर्कुस्तर्कुशाणस्तु झामकः ।
वर्तनी तर्कुपीठी स्यात्पिञ्जनं तूलकार्मुकम् ॥ १० ॥

"पाणवणिक्"। पालस्य रक्षकस्य वणिक् । इति द्वे **कन्यापालकस्य**॥ देवलः अमरद्विजः । अमरपूजकः द्विजः । इति द्वे **देवलस्य** ॥४ ॥ अजाजीवः । अजैस्तद्रक्षणपोषणादिना तत्क्रयविक्रयादिना वा आजीवति । जाबालः इति द्वे **छागपालकस्य छागक्रयविक्रयाभ्यामाजीविनश्च** ॥ निष्कः चण्डालः "चाण्डालः" इति द्वे **चण्डालस्य** ॥ दीर्घसुरतः । दीर्घं सुरतं रतिक्रीडा यस्य । वान्तादरः । वान्तः आदरो येन । सनालिहः । सदा लिह्यते । अत्र सनाव्ययं सदेत्यर्थः ॥ ५ ॥ रतव्रणः । रते मैथुने व्रणं यस्य । ग्राममृगः । ग्रामे मृगः । इन्द्रमहकामुकः । इन्द्रमहं कामयते । कपिलः वक्रपुच्छः । वक्रं पुच्छं यस्य । शयालुः अरतत्रपः । नास्ति रते मैथुने त्रपा यस्य । इति दश **कुक्कुरस्य** ॥ ६ ॥ शुन्यं शुनीरम् इति द्वे **शुनीसङ्घस्य** ॥ क्वचित्तु सुनारः शुनीरम् इति **शुनीक्षीरे** ॥ दृश्यते । चौरः शङ्कितवर्णकः । शङ्कितो वर्णो यस्य । कुम्भिलः । कुम्भोऽस्त्यस्य । प्रचुरपुरुषः । प्रचुरश्चाऽसौ पुरुषश्च । इति चत्वारि **चौरस्य** ॥ कुजम्भिलः "कुजम्भिरः" ॥ ७ ॥ सुरुङ्गः अहिवधः "अहिवधः" इति त्रीणि **वधचोरस्य** ॥ वन्दीकारः "वन्दीकालः" माचलः प्रसह्यचोरः । प्रसह्य बलात्कारेण चोरः । चिल्लाभः इति चत्वारि **प्रसह्यचोरस्य** ॥ स्त्रीचोरः । स्त्रियाः चोरः । रतहिण्डकः । रतस्य हिण्डकः । इति द्वे **स्त्रीचोरस्य** ॥ ८ ॥ काव्यचोरः । काव्यस्य चोरः । चन्द्ररेणुः इति द्वे काव्यचोरस्य । कुडयच्छेद्यम् । "कुडयच्छेद्यः" कुडयं छेद्यं यस्य । खानिकम् । क्वचित् खानक इति च पाठः । संधिः । "संधिं कृत्वा तु चौर्यम्" इति स्मृतिः । सुरङ्गा । क्वचित् सुरुङ्गा सुरङ्गं सुरङ्गमिति च । इति चत्वारि **सन्धिचोरस्य** ॥ श्रीवत्सः गोमुखः । गोरिव मुखमस्य । इत्येकैकं **चोरादिकृतसन्धिभेदयोः** ॥ आदिना अतो निम्नदशाकारा अपि गृह्यन्ते ॥ ९ ॥ कपाललासिका "कर्पासनालिका" "कपालनालिका" । कपालानां लासिका । तर्कुः इति द्वे **तर्कुरिति ख्यातस्य यन्त्रभेदस्य** ॥ तर्कुशाणः झामकः इति द्वे **तर्कुशाणस्य** ॥ अन्यत्र तर्कुलासकः

तूलः पिचुः पिचुतूलं पिञ्जिका तूलनालिका।
त्रिषु द्वारापणं सूत्रपर्णं यत्तेन वेष्टचलें ॥ ११ ॥
निर्वेटनं नाडिर्चीरमेकाष्ठी तूलशर्करा।
तन्त्रकाष्ठं तुरी स्त्री स्याद्ग्रीष्महासेन्द्रतूलके ॥ १२ ॥
पत्रथी पादुका प्राणिहिता पदरथीत्यपि।
कावारी जङ्गमुकुटी भ्रमत्कुट्यथ खर्परः ॥ १३ ॥
वारित्रा मूर्धखोलश्च सैव पत्रपिशाचिका।
वासी तु तक्षणी न स्त्री क्रकचः पत्रदारकः ॥ १४ ॥
मद्यं त्वरिष्टं मैरेयं कत्तोयं कापिशायनम्।
माध्वी च मधु माध्वीकं कपिशीका च मालिका ॥ १५ ॥

त्रासकः इति द्वौ **तर्कुचालकयन्त्रस्य** ॥ दश्येते । वर्तनी तर्कुपीठो इति द्वे **तर्कुपीठ्याः** ॥ पिञ्जनं तूलकार्मुकम् इति द्वे **तूलधनुषः** ॥ १० ॥ तूलः पिचुः पिचुतूलम्। इति त्रीणि **तूलस्य** ॥ पिञ्जिका तूलनालिका। तूलनिर्मिता नाली। स्वार्थे कन्। इति द्वे **पिञ्जिकायाः** ॥ द्वारापणं सूत्रपर्णम् इति द्वे **सूत्रवेष्टनस्य** ॥ ११ ॥ निर्वेटनं नाडिचीरम् इति द्वे **नाडिचीरस्य** ॥ एकाष्ठी तूलशर्करा इति द्वे **पिचुशर्करायाः** ॥ तन्त्रकाष्ठम् तन्त्रवायस्य काष्ठम्। तुरी "तुरिः" इति द्वे **वयनसाधनस्य काष्ठस्य** ॥ तुरीशब्दोऽत्र स्त्रीलिङ्गकः। ग्रीष्महासम्। ग्रीष्मे हास इव। इन्द्रतूलकम्। इन्द्रस्येव तूलमाकाशे उड्डीयमानत्वादिन्द्रस्वामिकत्वं यस्य। इति द्वे **इन्द्रतूलस्य कर्पासस्य** ॥ १२ ॥ पत्रथी। पाद् नह्यतेऽनया। पादुका प्राणिहिता "प्राणहिता" प्राणिनां हिता। पदरथी। पदयोः रथ इव। इति चत्वारि **पादुकायाः चर्ममयस्य पदाच्छादनस्य च** ॥ अपिशब्देन पादुः उपानदादयोऽप्यत्र गृह्यन्ते। कावारी "कारावी" जङ्गमुकुटी भ्रमत्कुटी। इति त्रीणि **तृणादिकृतच्छत्रस्य** ॥ खर्परः ॥ १३ ॥ वारित्रा। वारिणस्त्रायते। मूर्धखोलम्। मूर्ध्नि खोलमस्य। पत्रपिशाचिका। पत्रमेव पिशाचो यस्याः। इति चत्वारि **वारित्राण इति ख्यातस्य छत्रस्य** ॥ वासी तक्षणी इति द्वे **तक्षण्याः** ॥ क्रकचः। क्र इति कचति शब्दायते। पत्रदारकः। पत्राकारः दारकः। इति द्वे **क्रकच इति ख्यातस्य करपत्रस्य** ॥ अयं तु न स्त्री स्त्रीलिङ्गे न स्यात्। पुंनपुंसकयोः स्यादेव ॥ १४ ॥ मद्यम् अरिष्टं मैरेयम्। मिरायां देशभेदे औषधिभेदे वा भवम्। "मैरेयं धातकीपुष्पगुडधानाम्लसम्भवम्" इति माधवः। अस्य गुडधानाम्बुसंहितमिति कश्चित् पाठः। कत्तोयम्। कुत्सितमीषद्वा तोयं यत्र। कापिशायनम्। कपिशस्य मद्यभेदस्यायनं स्थानम्। "कापिशायनी" माध्वी मधु "गर्ज गर्ज क्षणं मूढ मधु यावत्पिबाम्यहम्" इति चण्डी। माध्वीकम्। मधुना मधूकपुष्पेण निर्वृत्तम्। कपिशीका।

वीरा दैत्या प्रसन्ना च माधवी गन्धमादनी ।
गौडी च वाल्कली मध्वासवपक्वरसौ नरि ॥ १६ ॥
नलिनी नारिकेलस्य सुरा तालस्य तालिनी ।
स्मरासवो मुखसुरं पारी स्त्री पानभाजनम् ॥ १७ ॥
शुण्डापानं मदस्थानं द्यूतकृत्कृष्णकोहलः ।
देवसभ्यस्तु सभिको लग्नकस्तृणमत्कुणः ॥ १८ ॥
चुञ्चुरी तिन्तिडी द्यूते पञ्चाली शारिशृङ्खला ।
अष्टकाङ्गं नयपीठी नयस्तु जतुपुत्रकः ॥ १९ ॥

इति शूद्रवर्गः ॥ १० ॥

## इति त्रिकाण्डशेषकोषस्य द्वितीयः काण्डः समाप्तः २.

"'कपिशी अप्यत्र । मालिका ॥ १५ ॥ वीरा दैत्या प्रसन्ना माधवी **गन्धमादनी** । **गन्धेन** मदयति । इति पञ्चदश **मद्यस्य** ॥ तानि मद्यानि द्वादशविधानि भवन्ति । यथाह—"माध्वीकं पानसं द्राक्षं खार्जूरं तालमैक्षवम् । मैरेयं माक्षिकं टाङ्कं मधूकं नारिकेलजम् मुख्यमन्नविकारोत्थं मद्यानि द्वादशैव तु" इति । गौडी । गुडस्य विकारः । वाल्कली इति द्वे **गुडेन कृतायाः सुरायाः** ॥ मध्वासवः । मधुना पुष्परसेन कृतः आसवः । पक्वरसः "यक्षरसः" पक्वानां रसः । इति द्वे **मधुद्रुमपुष्पजातस्य मद्यस्य** ॥ इमौ द्वौ पुँल्लिङ्गिकौ ॥ १६ ॥ नलिनी इत्येकं **नारिकेलजातसुरायाः** ॥ तालिनी । **तालेन तन्निर्यासेन** निर्वृत्ता । "ताली" अप्यत्र । स्मरासवः । स्मरस्य आसवः । मुखसुरम् इति त्रीणि **तालजातसुरायाः** ॥ पारी । पारमस्यास्ति । पानभाजनम् इति द्वे **पानभाजनस्य** ॥ ॥ १७ ॥ शुण्डापानं मदस्थानम् इति द्वे **मद्यपानगृहस्य** ॥ कश्चित् शुण्डापानमिति पृथगपि "शुण्डा पानगृहे मता।अप्यम्बुहस्तिनी वेश्या हस्तिहस्तसुरासु च"इति मेदिनी। "शुण्डापि जलहस्तिन्यां मदिराकरिहस्तयोः" इति विश्वः । "पानं पीतिभाजनरक्षणे" इति मेदिनी । द्यूतकृत् । द्यूतं करोति। द्यूतकारोऽप्यत्र।कृष्णकोहलः इति द्वे **द्यूतकृतः** ॥ देवसभ्यः सभिकः। सभीकोऽप्यत्र । इति द्वे **द्यूतकारकस्य** ॥ लग्नकः तृणमत्कुणः इति द्वे **प्रतिभुवः**॥ १८॥ चुंचुरी तिंतिडी इति द्वे **द्यूतस्य**॥ पञ्चाली । "पञ्चनी" पञ्चं प्रपञ्चमलति पर्याप्नोति । शारिशृङ्खला । शारेः शृंखला । इति द्वे **शारिशृङ्खलेति ख्यातायाः वस्त्रकृतपुत्तलिकायाः** ॥ अष्टकाङ्गम् । अष्टकानि अङ्गानि यस्य । नयपीठी । नयानां द्यूतभेदानां पीठमस्य्स्याः। इति द्वे **नयपीठीति ख्यातस्य शारिफलकस्य**॥ नयः जतुपुत्रकः।जतोः पुत्रकः इति द्वे **द्यूतक्रीडासाधनपाशकस्य** ॥ १९ ॥ इति शूद्रवर्गः॥ १० ॥ इत्याचार्यश्रीशीलस्कन्धस्थविरविरचितायां सारार्थचन्द्रिकाख्यायां त्रिकाण्डशेषटीकायां द्वितीयः काण्डः समाप्तः ॥

## इति सटीकत्रिकाण्डशेषकोषस्य द्वितीयः काण्डः समाप्तः २.

# अथ

# सटीकत्रिकाण्डशेषकोषस्य-

## तृतीयः काण्डः ।

**क्षेमङ्करोऽरिष्टतातिः स्यान्मद्रङ्करशङ्करौ ।**
**आमुष्यायणविज्ञातौ पुत्रान्नादः कुटीचकः ॥ १ ॥**
**स्थपुटं विषमं सञ्चारजीवी शरणार्थकः ।**
**अभिपन्नः शरणार्थी पाण्डुपृष्ठस्त्वलक्षणः ॥ २ ॥**
**उद्भटोड्डामरोऽत्ताला आविष्टः प्रेतवाहितः ।**
**प्रेङ्खोलितस्तरलितस्तृषितस्तर्षितः सतृट् ॥ ३ ॥**
**ऊर्ध्वस्थोर्ध्वंदमौ तुल्यौ ग्राम्यो ग्रामेयकः स्मृतः ।**
**पराचीनः प्रतीपः स्यात्समीचीनः समञ्जसः ॥ ४ ॥**

ङ्करः । क्षेमं निर्भयं करोति । अरिष्टतातिः मद्रङ्करः "मद्रङ्करः" । मद्रं मङ्गलं करोति । । शं सुखं मङ्गलं वा करोति । इति चत्वारि **निर्भयकरस्य शुभङ्करस्य वा ॥** यणः । अमुष्याः प्रत्यक्षीकृतस्यापि सद्वंशत्वेन सच्चरितत्वेन च प्रख्यातस्याऽपत्यम् । "निज्ञातः" इति द्वे **सद्वंशोद्भवस्य ॥** पुत्रान्नादः । पुत्रस्य अन्नमाददाति । कुटी- कुटिचकोऽप्यत्र । कुट्यां कुटौ वा चकति तृप्यति । कुटीचरोऽप्यत्र । कुट्यां कुटौ वा इति द्वे **पुत्रान्नादस्य यतिभेदस्य** ॥ १ ॥ स्थपुटम् । "स्थपुटगतमपि क्रव्य- न्ते" इति मालतीमाधवम् । इत्येकं **विषमस्थानसञ्चारजीविनः ॥** शरणार्थकः । यते । "शरणार्पकः" अभिपन्नः शरणार्थी । शरणमर्थयते । इति त्रीणि **शरणा- शरणगतस्य वा ॥** पाण्डुपृष्ठः । पाण्डुवर्णं पृष्ठं यस्य । अलक्षणः । नास्ति लक्ष- णकं सुचिह्नं वा यस्य । इति द्वे **दुर्लक्षणस्य ॥ २ ॥** उद्भटः उड्डामरः उत्तालः इति त्यन्तप्रचण्डस्य ॥** आविष्टः प्रेतवाहितः । इति द्वे **भूतादिग्रस्तस्य, आविश- च ॥** प्रेङ्खोलितः तरलितः । तरल इवाचरति । इति द्वे **कम्पितस्य ॥** तृषितः सतृट् इति त्रीणि **पिपासायुक्तस्य ॥ ३ ॥** ऊर्ध्वस्थः ऊर्ध्वंदमः इति द्वे **ऊर्ध्व- स्य ॥** ग्राम्यः । ग्रामे भवः ग्रामेयकः । ग्रामे जातः । इति द्वे **ग्रामजातस्य ॥** स्मृतः राचीनः । पराग्भवः । प्रतीपः इति द्वे **पराङ्मुखस्य ॥** स्यादित्यन्वयः । समीचीनः । समञ्जसः । सम्यक् अञ्ज औचित्यं यत्र । इति द्वे **यथार्थस्य उचितस्य**

स्वस्थानस्थः परान्द्वेष्टि यः स गोष्ठश्च उच्यते ।
दाता तु दारुर्मुचिरः स्याद्विदग्धस्तु नागरः ॥ ५ ॥
पिङ्गो व्यलीकः षट्प्रज्ञः कामकेलिर्विदूषकः ।
पीठकेलिः पीठमर्दो भविलश्छिदुरो विटः ॥ ६ ॥
प्रघटाविच्छास्त्रगण्डो मेधावी मेधिरः समौ ।
युक्तं परिमिते भीमं त्वाऽभीले प्रश्लथः श्लथः ॥ ७ ॥
शिथिलोऽवोद आर्द्रः स्याच्चिरस्थो नायकः स्मृतः ।
स्यादायःशूलिकस्तीक्ष्णकर्माऽशौचोऽनहङ्कृतिः ॥ ८ ॥
कुसृत्या विभवान्वेषी पार्श्वकः सन्धिजीवकः ।
वाक्याभिधायी पुरुषः पृष्ठमांसाद उच्यते ॥ ९ ॥
भार्याटः स्वस्त्रियो दाताऽन्नार्थं दूषकपांसनौ ।
धृष्णुर्धृष्णुग्दधृग्धृष्टो दशेरः सुतघातुकः ॥ १० ॥

वा ॥ ४ ॥ गोष्ठः । गावस्तिष्ठन्त्यत्र । इत्येकं **गवांस्थान इति ख्यातस्य गोष्ठस्य ॥** यः स्वस्थानस्थः स्वकीये स्थाने स्थितः सन् परान् शेषान् द्वेष्टि द्वेषं करोति स गोष्ठ इति उच्यते कथ्यत इति व्यङ्गस्यार्थः । दाता दारुः मुचिरः इति त्रीणि **दानशीलस्य ॥** विदग्धः नागरः इति द्वे **पण्डितस्य** ॥ ५ ॥ पिङ्गः व्यलीकः षट्प्रज्ञः । षट्सु प्रज्ञा यस्य । "धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि। षट्सु प्रज्ञा तु यस्याऽसौ षट्प्रज्ञः परिकीर्तितः" इति । कामकेलि कामे रतौ केलिर्यस्य । विदूषकः पीठकेलिः।पीठे केलिर्यस्य। पीठमर्दः। पीठे मर्दो यस्य । भविलः छिदुरः विटः इति दश **कामुकस्य** ॥६॥ प्रघटावित् शास्त्रगण्डः। शास्त्रेषु गण्डो यस्य । इति द्वे **शास्त्राभिसक्तचित्तस्य ॥** मेधावी । मेधा अस्त्यस्य। मेधिरः । मेधा अस्त्यस्य । इति द्वे **मेधाविनः॥** युक्तम् इत्येकं **कृतपरिमाणस्य॥**भीमम् । बिभेत्यस्मात् । इत्येकं **भयानकस्य ॥** प्रश्लथः श्लथः शिथिलः इति त्रीणि **शिथिलस्य दुर्बलस्य वा** ॥ ७ ॥ अवोदः आर्द्रः इति द्वे **सजलस्य ॥** चिरस्थः नायकः इति द्वे **नायकस्य ॥** स्मृतः ज्ञात इत्यर्थः। आयःशूलिकः। अयःशूलेनार्थानन्विच्छति । तीक्ष्णकर्मा तीक्ष्णं कर्म यस्य।इति द्वे **तीक्ष्णोपायेनाभीष्टसाधकस्य॥** स्यादित्यन्वयः । अशौचः अनहङ्कृतिः इति द्वे **अहङ्कारविरहितस्य गर्वविहीनस्य वा** ॥ ८॥ सन्धिजीवकः । सन्धिं जीवति । इत्येकं **शाठ्येन-परार्थहारकस्य ॥** यः कुसृत्या शाठ्येन विभवान्वेषी सम्पत्तिगवेषणशीलः पार्श्वकः समीपवर्ती स सन्धिजीवक इत्युच्यते इत्यर्थः । पृष्ठमांसादः । पृष्ठे मांसमत्ति । इत्येकं **पृष्ठमांसभक्षकस्य ॥** यः पुरुषः सम्मुखे वाक्येन मधुरवचनेन अभिधायी भाषणशीलः पराङ्मुखे दोषं चाविष्करोति सः पृष्ठमांसाद उच्यते कथ्यते इत्यर्थः॥९॥ भार्याटः इत्येकम् **अन्नार्थं स्वभार्यादायकस्य॥** यः अन्नार्थम् आहारपर्येषणप्रयोजनाय स्वस्त्रियः निजभार्याया अपि दाता

**देशकः शासिता शास्ता शिक्कुरव्यवसायवान् ।**
**चकितः शङ्कितो भीतः प्रतियत्नः प्रयत्नवान् ॥ ११ ॥**
**आधार्मिकोऽधार्मिकः स्यात्प्रसृतान्तरितौ समौ ।**
**कृपणो दृढमुष्टिः स्याद्देवयुर्धार्मिकः सुकृत् ॥ १२ ॥**
**मनःस्मयो मनोज्ञः स्याच्चक्षुष्यः प्रियदर्शनः ।**
**लडहं भद्रकं न्युङ्खं लगडं चारुबन्धुरः ॥ १३ ॥**
**भट्टारो भगवान्पूज्यः शक्रप्रतिबलौ समौ ।**
**पटुः पाटविको धूर्तः स्थगस्तीक्ष्णस्तु राजघः ॥ १४ ॥**
**सम्बन्धी गुणवान्संयुङ्मित्रयुर्मित्रवत्सलः ।**
**धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि ॥ १५ ॥**
**षट्सु प्रज्ञाऽस्ति यस्योच्चैः स षट्प्रज्ञ इति स्मृतः ।**
**मध्यस्थस्तु निसृष्टः स्याद्ग्रपृष्ठस्तु सम्मुखः ॥ १६ ॥**

दानशीलः भवति परेभ्यः इति शेषः।सः मार्यांट इति कथ्यते।दूषकः पांसनः इति द्वे **दूषकस्य।** धृष्णुःधृष्णुग् दधृग् धृष्टः इति चत्वारि **प्रगल्भस्य निर्लज्जस्य वा ॥** दशेरः सुखवालुकः । सुखं शयनं हन्ति । इति द्वे **निद्रानाशकस्य** ॥ १० ॥ देशकः शासिता शास्ता इति त्रीणि **शासनकर्तुः ॥** शिक्कुः "शिक्नुः" अव्यवसायवान् इति द्वे **उद्यमविहीनस्य॥** चकितः शङ्कितः भीतः इति त्रीणि **भययुक्तस्य॥** प्रतियत्नः प्रयत्नवान् इति द्वे **उत्साहयुक्तस्य**॥ ११॥ आधार्मिकः। अधर्मं चरति सततमनुशीलयति।अधार्मिकः इति द्वे **अधर्मशीलस्य॥** प्रसृतः अन्तरितः अन्तरं व्यवधानं करोति। इति द्वे **व्यवधानं गतस्य॥** कृपणः दृढमुष्टिः।दृढा अशिथिला मुष्टिर्यस्य। इति द्वे **अदानशीलस्य ॥** देवयुः धार्मिकः।धर्मं चरति सततमनुशीलयति।सुकृत् इति त्रीणि **धार्मिकस्य** ॥१२॥ मनःस्मयः "मनआपः" मनोज्ञः चक्षुष्यः । चक्षुषे हितः । प्रियदर्शनः । प्रियं दर्शनमस्य । लडहं "लखण्डं" भद्रकं न्युङ्खं लगडं चारुबन्धुरः इति नव **प्रियदर्शनस्य** ॥ १३ ॥ भट्टारः । भट्टं स्वामित्वमृच्छति । भगवान् पूज्यः इति त्रीणि **पूज्यस्य॥** शक्तः प्रतिबलः इति द्वे **प्रतिबलस्य ॥** पटुः पाटविकः धूर्तः स्थगः इति चत्वारि **धूर्तस्य ॥** तीक्ष्णः राजघः इति द्वे **तीक्ष्णस्य** ॥ १४ ॥ सम्बन्धी गुणवान् इति द्वे **सम्बन्धिनः ॥** संयुग् मित्रयुः । मित्रं याति । मित्रवत्सलः । मित्रे वत्सलः । इति त्रीणि **मित्रवत्सलस्य** ॥ १५ ॥ षट्प्रज्ञः । षट्सु प्रज्ञा यस्य सः। इत्येकं **धर्मार्थाद्यभिज्ञस्य ॥** केष्वपि षट्स्विति चेत् ? धर्मार्थकाममोक्षेषु धर्मश्च अर्थश्च कामश्च मोक्षश्चेति द्वन्द्वः।एते प्रसिद्धाः। एतेषु चतुर्वर्गेषु च । तथा लोकतत्त्वार्थयोः । लोकतत्त्वं लोकस्वभावः अर्थः धनोपार्जनं च । एषु षट्सु यस्य उच्चैः महती अत्यर्थं वा प्रज्ञा अस्ति सः षट्प्रज्ञः इति स्मृतः ज्ञातः । सुधीभि रिति शेषः । अपिशब्देन इतराणि हितसाधनानि च गृह्यन्ते । मध्यस्थः । मध्ये तिष्ठति ।

स्यात्कथङ्कथिकः प्रष्टा विचक्षुर्विमनाः स्मृतः ।
प्रतारितो व्यंसितः स्यात्प्रोथस्तु प्रथितो मतः ॥ १७ ॥
माशब्दिकः प्रतिषेद्धा जडमातृसुखौ समौ ।
प्राणं पुराणं भिन्नं तु व्यवच्छिन्नं विशेषितम् ॥ १८ ॥
विनाकृतं विरहितं मुक्तं निर्व्यूढमुच्यते ॥
तिक्तः कषायः सुरभिः कक्खटो निर्भरो दृढः ॥ १९ ॥
निःसन्धिश्च निवातश्च समूढं शोधितं समे ।
स्यादागन्तुकमाहार्यं समे पक्त्रिमपाकिमे ॥ २० ॥
कोमलं पेलवं पापे त्वधमापसदौ धवः ।
रोमाञ्चितो हृष्टरोमा अजानेयस्तु निर्भयः ॥ २१ ॥
अन्यासाधारणं त्वावेशिकं प्रातिस्विकं च तत् ।
भिन्नकः क्षपणोऽह्रीको बौद्धो वैनायकः स्मृतः ॥ २२ ॥

निसृष्टः इति द्वे **मध्यस्थस्य** ॥ भग्नपृष्ठः "भुग्नपृष्ठः" । भग्नं पृष्ठं यस्य । सम्मुखः इति द्वे **सम्मुखस्य** ॥ १६ ॥ कथङ्कथिकः प्रष्टा इति द्वे **प्रष्टुः** ॥ विचक्षुः विमनाः इति द्वे **विमनसः** ॥ प्रतारितः व्यंसितः इति द्वे **प्रतारितस्य** ॥ प्रोथः प्रथितः इति द्वे **प्रथितस्य** ॥ १७ ॥ माशब्दिकः प्रतिषेद्धा इति द्वे **प्रतिषेधकारकस्य** ॥ जडः—जलति घनी भवति । लस्य डः । मातृसुखः इति द्वे **इष्टानिष्टाभिज्ञस्य जडस्य** ॥ प्राणं "प्रीणं" पुराणम् इति द्वे **पुराणस्य** ॥ भिन्नं व्यवच्छिन्नं विशेषितम् इति त्रीणि **विशेषितस्य** ॥ ॥ १८ ॥ विनाकृतं विरहितं मुक्तं नीव्यूढम् इति चत्वारि **त्यक्तस्य** ॥ उच्यते कथ्यते । बुधैरिति शेषः । तिक्तः । "तिक्तो रससुगन्धयोः" इति मेदिनी । कषायः । "कषायो रसभेदेऽपि निर्यासे च विलेपने। अङ्गरागे च न स्त्री स्यात् सुरभे लोहिते त्रिषु" इति मेदिनी । सुरभिः इति त्रीणि **सुगन्धेः** ॥ कक्खटः निर्भरः "निर्वहः" दृढः ॥ १९ ॥ निःसन्धिः । निर्गतः सन्धिर्यस्मात् । निवातः । निवृत्तो निरुद्धो वा वातोऽस्मात् । इति पञ्च **दृढस्य** ॥ समूढं शोधितम् इति द्वे **शोधितस्य** ॥ आगन्तुकम् आहार्यम् इति द्वे **आगन्तुकस्य** ॥ अत्र स्यादित्यन्वयः । पक्त्रिमं पाकिमम् इति द्वे **पाकनिर्वृत्तस्य** ॥ २० ॥ कोमलं पेलवम् इति द्वे **कोमलस्य** ॥ अधमः अपसदः धवः । "धवः पुमान् नरे धूर्ते पत्यौ वृक्षान्तरेऽपि च" इति मेदिनी । क्वचित् ध्रुवः । इति त्रीणि **पापस्य नीचस्य वा** ॥ रोमाञ्चितः । रोमाञ्चः जातोऽस्य । हृष्टरोमा । हृष्टमिव जाताङ्कुरं रोम यस्य । इति द्वे **रोमाञ्चितस्य** ॥ अजानेयः। अजाऽपि क्षेपेऽपि अनेयो यथास्थानं प्रापणीयो आरोहो येन । आजानीयशब्दोऽपि दृश्यते । तथाचाह । "शस्त्राभिर्भिन्नहृदयाः स्खलन्तश्च पदेपदे । आजानन्ति यतः संज्ञामाजानेयास्ततः स्मृताः" इति । निर्भयः इति द्वे **उत्तमाश्वस्य, निर्भयस्य वा** ॥ २१ ॥ अन्यासाधारणम्

**औध्वंश्रोतसिकः शैवः कौल आन्वयिकः स्मृतः ।**
**पञ्चार्थिकः पाशुपतश्चिद्रूपः स्फूर्तिमान्मतः ॥ २३ ॥**
**प्राज्ञ उद्घटितज्ञः स्याच्छंयुशंवशुभंयवः ।**
**गौरवितास्त्वार्यमिश्राः श्लाघ्यास्तत्राभवन्मुखाः ॥ २४ ॥**
**स्याद्देवानांप्रियः क्षेपे हतको बन्धुदग्धवत् ।**
**अणुः कनीयानल्पिष्ठः पिण्डितं गुणितं हतम् ॥ २५ ॥**
**खट्वारूढोऽविनीतः स्यान्मरालमसृणे समे ।**
**प्राञ्जलः प्रगुणोऽजिह्मः प्रणाय्यः साध्वनिन्दितौ ॥ २६ ॥**
**त्वं त्वद्भिन्नं चान्यतरदपष्ठुलमपष्ठु च ।**
**करम्बितं च खचितं रूषितं त्ववगुण्ठितम् ॥ २७ ॥**

आवेशिकम् । आवेशे गृहे भवः । प्रातिस्विकम् । प्रतिस्वे एकैकस्मिन् भवः । इति द्वे **असाधारणस्य ॥** भिक्षुकः क्षपणः । क्षपयति विषयरागम् । क्षपणकोऽप्यत्र । अह्रीकः । नास्ति ह्रीः लज्जा अस्य । इति त्रीणि **निर्ग्रन्थ इति ख्यातस्य तीर्थविशेषस्य ॥** बौद्धः । बुद्धो देवतास्य । वैनायकः । विनायकः सम्बुद्धो देवतास्य । क्वचित्तु वैनायिक इति दृश्यते । तत्र विनायं खण्डनमधिकृत्य कृतो ग्रन्थः । उपचारात् तदभिज्ञेऽपि वर्तते । इति द्वे **बौद्धस्य ॥ २२ ॥** और्ध्वश्रोतसिकः । ऊर्ध्वमुपरि श्रोतः इन्द्रियं शिवधर्मावलम्बनज्ञानमिति यावत् अस्त्यस्य । शैवः । शिवो देवताऽस्य । इति द्वे **शैवस्य ॥** कौलः । कुले सत्कुले भवः । आन्वयिकः । अन्वये प्रशस्तकुले भवः । इति द्वे **प्रशस्तकुलजातस्य ॥** स्मृतः ज्ञातः । पण्डितैरिति शेषः । पञ्चार्थिकः पाशुपतः चिद्रूपः । चिदेव रूपमस्य । स्फूर्तिमान् । स्फूर्तिरस्त्यस्य । इति चत्वारि **पाशुपताख्यस्य शैवभेदस्य ॥ २३ ॥** प्राज्ञः उद्घटितज्ञः इति द्वे **प्रज्ञाविशेषस्य ॥** शंयुः । शमस्त्यस्य । शंवः । शमस्त्यस्य । क्वचित् "शंत्रः" । शुभंयुः । शुभमस्त्यस्य । इति त्रीणि **शुभान्वितस्य ॥** एते शब्दाः त्रिषु लिङ्गेषु वर्तन्ते। **गौरविताः ।** गौरवं जातमेषाम् । आर्यमिश्राः । आर्याणां श्रेष्ठाचाराणां मिश्राः श्रेष्ठाः । इति द्वे **पूज्यस्य ॥** श्लाघ्याः इत्येकं **श्लाघनीयस्य ॥** ये तत्र तेषु मुखाः प्रधानाः ते श्लाघ्याः अभवन्निति सम्बन्धः । उभय त्र श्रेष्ठार्थद्योतनार्थं बहुवचनप्रयोगः ॥२४॥ देवानांप्रियः । अलुक्समासः । इत्येकं **क्षेपकोक्तेः मूर्खस्य वा ॥** हतकः । हत इव नष्टप्रायत्वात् । कन् प्रत्ययः । इत्येकं **नष्टप्रायस्य ॥** अणुः कनीयान् । अयमनयोरतिशयेनाल्पः । अल्पिष्ठः । अयमनयोरतिशयेनाल्पः । इति त्रीणि **अल्पतरस्य ॥** पिण्डितं गुणितं हतम् इति त्रीणि **गुणितस्य ॥ २५ ॥** खट्वारूढः अविनीतः इति द्वे **अविनीतस्य प्रमादितस्य वा ॥** मरालं मसृणम् इति द्वे **स्निग्धस्य ॥** प्राञ्जलः प्रगुणः अजिह्मः इति त्रीणि **ऋजुभावयुक्तस्य ॥** प्रणाय्यः साधुः अनिन्दितः इति त्रीणि **साधोः ॥ २६ ॥** त्वम् त्वत् भिन्नम्

स पात्रेसमितोऽन्यत्र भोजनान्मिलितो न यः ॥ २८ ॥

इति विशेष्यनिघ्नवर्गः ॥ १ ॥

विधिर्विधानं कर्मास्त्री क्रिया कृत्या विधा कृतिः ।
श्राप्यं तु साधनं कर्म्मयुताङ्गेय्ये तु सङ्गतम् ॥ १ ॥
अङ्गारितं पलाशानां कलिकोद्गमने स्मृतम् ।
जलयन्त्रगृहं धीरैः समुद्रगृहमुच्यते ॥ २ ॥
जलहं तु विदुः स्वल्पे सोमालं कुसुमाकरे ।
स्तनाभोगः स्तनभरः परभागः स्वसम्पदि ॥ ३ ॥
आलिङ्गनं त्वङ्कपालिः श्लिषा खट्टिस्त्वसद्ग्रहः ।
स्यादजेऽनेडकः सग्धिः सहभोजनमित्यपि ॥ ४ ॥

अन्यतरत् इति चत्वारि **भिन्नस्य अन्यार्थस्य वा ॥** अपष्ठुरम् अपष्ठु इति द्वे **विपरीतस्य ॥** करम्बितम् । करम्बो मिश्रणं जातोऽस्य । खचितं रूषितम् अवगुण्ठितम् "गुण्डितम्" इति चत्वारि **मिश्रितस्य** ॥२७॥ पात्रेसमितः । पात्रे भोजनपात्रासादनकाले एव समितः सङ्गतः । इत्येकं **भोजनादन्यत्र अनुपस्थितस्य कार्यदक्षस्य ॥** यः भोजनात् अन्यत्र न मिलितः न सङ्गतः स पात्रेसमित इत्यर्थः ॥ २८ ॥ इति विशेष्यनिघ्नवर्गः ॥ १ ॥ विधिः विधानं कर्म । इमे शब्दाः स्त्रीलिङ्गभिन्नाः पुन्नपुंसकाः स्युः । क्रिया कृत्या विधा कृतिः इति सप्त **कर्मणः ॥** इमे स्त्रीलिङ्गकाः । वाप्यं साधनम् इति द्वे **साधनस्य ॥** सङ्गतम् इत्येकं **कर्मयुक्ताङ्गेय्यस्य मिलितस्य** ॥ १ ॥ अङ्गारितम् । अङ्गारमिवाचरति । इत्येकं **पलाशकलिकोद्गमस्य ॥** पलाशानां स्वनामाख्यातानां वृक्षाणाम् कलिकानां कोरकाणाम् उद्गमने ऊर्ध्वगमने उत्पन्ने इत्यर्थः । स्मृतं ज्ञातम् । अथवा सामान्यवृक्षेषु पल्लवोद्गमनेऽपि अङ्गारितशब्दो दृष्ट इति केचित् । "नवपलाशपलाशवनम्" इति माघः । समुद्रगृहम् ।समुद्र इव प्रचुरजलं गृहम् । इति द्वे **जलयन्त्रयुक्तगृहस्य ॥** जलयन्त्रगृहं जलवहनयन्त्रयुक्तं मन्दिरं समुद्रगृहमिति धीरैः उच्यते इत्यर्थः ॥२॥ जलहम् इत्येकं **स्वल्पजलयन्त्रस्य ॥** सोमालं "समाली" इत्येकं **कुसुमाकरस्य ॥** स्तनाभोगः । स्तनस्य आभोगः परिपूर्णभावः । स्तनभरः । स्तनस्य भरः इति द्वे **स्थूलस्तनभारस्य तदाभोगस्य वा ॥** परभागः । भज्यते सेव्यतेऽनेन भागः । पश्चाऽसौ भागश्च परेषां भागो वा । इत्येकं **स्वसम्पदः** ॥ ३ ॥ आलिङ्गनम् अङ्कपालिः।अङ्कस्य पालिरिव । वा अङ्कपालिः। अङ्कं पाल्यते सम्बध्यतेऽत्र । श्लिषा इति त्रीणि **प्रीतिपूर्वकमन्योन्यदेहसंश्लेषणस्य ॥** खट्टिः असद्ग्रहः । असति अविद्यमाने वस्तुनिग्रहः आग्रहः । इति द्वे **बालादीनाम् आवदार इति ख्यातस्य आग्रहभेदस्य ॥** अनेडकः इत्येकम् **अजस्य ॥** सग्धिः "सन्धिः" सहभोजनम् इति द्वे **एकत्रभो-**

**धार्मिकाणां तु सम्भूय भोजनं गणचक्रकम्।**
**क्रीडाक्रीडकयोर्देश्च सेवायां सेवके च सेः॥ ५॥**
**दानं दायोऽथ दुर्जातं दुःषमं चासमञ्जसम्।**
**कलञ्जौ तौ विषास्त्रेण हतौ यौ मृगपक्षिणौ॥ ६॥**
**छेकोक्तिर्वक्रभणितं गोमुखं तूपलेपनम्।**
**हार्षायणाप्तं यत्पूर्णपात्रं पूर्णानकं च तत्॥ ७॥**
**शुत्शुको विक्रियामात्रादुद्घटायनमुच्यते।**
**बुद्धद्रव्यं स्तौपिकं स्यात्सत्त्वं द्रव्यं च वस्तु च॥ ८॥**
**लेशस्तूपपदं गन्धोऽनुबन्धेषत्करावपि।**
**छेदः खण्डोऽस्त्रियां गलिः शपनं शमनं शमः॥ ९॥**
**वप्रस्तु धूलिकेदारः प्सा वीतिर्भक्षणं च सा।**
**मैत्रेयिका मित्रयुद्धं पर्यङ्कस्त्ववसक्थिका॥ १०॥**

**जनस्य** ॥ ४ ॥ गणचक्रम् इत्येकं **धार्मिकसहभोजनस्य** ॥ धार्मिकाणां धर्मशीलानां बहूनां सम्भूय एकत्र सन्निपतित्या भोजनम् अदनं गणचक्रमिति कथितमित्यर्थः। देः इत्येकं **क्रीडाक्रीडकयोः**॥सेः इत्येकं **सेवासेवकयोश्च**॥५॥ दानं दायः इति द्वे **दानस्य**॥ दुर्जातम्। दुष्टं जातम्, दुष्टु जातमस्य वा। दुःषमम्। दुष्टं सममत्र। असमञ्जसम्। न समञ्जसं युक्तियुतम्। इति त्रीणि **असङ्गतस्य, असमञ्जसस्य वा**॥ कलञ्जः इत्येकं **विषास्त्रेण हतस्य मृगस्य,पक्षिणश्च**॥ "न कलञ्जं भक्षयेत्" इति श्रुतिः। यौ मृगपक्षिणौ विषास्त्रेण विषयुक्तेन शस्त्रेण हतौ विनाशितौ तौ मृगपक्षिणौ कलञ्जाविति ख्याताविन्यर्थः॥ ६॥ छेकोक्तिः। छेकायाः विदग्धायाः उक्तिः। वक्रोक्तिरप्यत्र क्वचित् "छेदोक्तिः" वक्रभणितम्। वक्रस्य भणितम् वक्रं च तद्भणितं च वा। इति द्वे **काकुवचनस्य**॥ "वक्रोक्तिर्वाक्यजीवितम्" इति अलङ्कारोक्तेः काव्याङ्गमस्य। गोमुखम्। गोरिव मुखमस्य। उपलेपनम् इति द्वे **लेपनस्य**॥पूर्णपात्रम्। पूर्णं च तत् पात्रं च।पूर्णानकम् "पूर्णालकम्"। पूर्णं च तत् आलकं च। इति द्वे **हर्षकाले पुत्रजननोत्सवजहर्षात् आकृष्य वस्त्रादेर्ग्रहणस्य**॥ यत् वस्त्रादिकं वस्तु हर्षायणे हर्षयुक्तकाले आप्तं लब्धं तत् पूर्णपात्रमिति कथितमित्यर्थः। क्वचित् भार्षायनाप्तं वर्षापनार्थमिति च पाठः॥ ७॥ शुत्शुकः इत्येकं **विक्रियामात्रतः उद्घटायनस्य**॥ बुद्धद्रव्यम्। बुद्धस्य दत्तं द्रव्यम्। स्तौपिकम्। स्तूपस्य दत्तं वा। इति द्वे **बुद्धायत्तद्रव्यस्य**॥ सत्त्वं द्रव्यं वस्तु इति त्रीणि **द्रव्यस्य**॥ ८॥ लेशः उपपदं गन्धः अनुबन्धः ईषत्करः इति पञ्च **लेशस्य, अणुमात्रस्य च**॥ छेदः खण्डः इति द्वे **खण्डस्य**॥ एतौ स्त्रियां न स्तः। गालिः शपनम् इति द्वे **शापस्य, आक्रोशस्य वा**॥शमनं शमः इति द्वे **शमनस्य**॥ ९॥ वप्रः धूलिकेदारः इति द्वे **क्षेत्रस्य**॥

अथ हेतुरुपादानं प्रत्ययाः सहकारिणः ।
अनुमा त्वनुमानं स्याद्व्याप्यं लिङ्गं च साधनम् ॥ ११ ॥
प्रत्यक्षोऽपाक्षमध्यक्षं धन्धो धान्ध्यमपाटवम् ।
बोधो बोधिः समन्तात्तु ज्ञानं स्यात्समुदागमः ॥ १२ ॥
ऋषिः शास्त्रकृदाचार्यः शास्त्रं तु स्मृतिरागमः ।
साङ्ख्यं समीक्षं स्याद्दिव्यदोहदं तूपयाचितम् ॥ १३ ॥
करिणो रूपमिच्छन्ति कर्णास्फाले झलज्झला ।
रामेण रावणवधो रामायणमथोच्चयः ॥ १४ ॥
वस्त्रग्रन्थिश्च नीवी स्यान्मणितं रतकूजितम् ।
श्वभ्रोऽवपातो हल्लेखस्तर्कश्चीर्णं तु शीलितम् ॥ १५ ॥

प्सा वीतिः भक्षणम् इति त्रीणि **भक्षणस्य** ॥ मैत्रेयिका । मित्रेण कृता । मित्रयुद्धम् । मित्रस्य युद्धम् । इति द्वे **मित्रयुद्धस्य** ॥ पर्यङ्कः अवसक्थिका इति द्वे **पर्यङ्कस्य**॥ १० ॥हेतुः उपादानम् इति द्वे **कार्यजननार्थमुपादीयमानस्य कार्यान्वितस्य कारणस्य** ॥ प्रत्ययाः सहकारिणः । सह सम्भूय करोति कार्यम् । इति द्वे **सहकारिणः** ॥ अनुमा अनुमानम् इति द्वे **व्याप्तिदर्शनेन व्यापकनिश्चयस्य अनुमानस्य** ॥ व्याप्यं लिङ्गं साधनम् । इति त्रीणि **अनुमितिसाधनस्य व्याप्तस्य** ॥ ११ ॥ प्रत्यक्षम् ,। प्रतिरूपमक्षणः । अपाक्षम् । अध्यक्षम् इति त्रीणि **प्रत्यक्षस्य** ॥ धन्धः धान्ध्यम् । अपाटवम् इति त्रीणि **पटुताभिन्नस्य** ॥ बोधः । बोधकोऽप्यत्र।बोधिः इति द्वे **बोधकस्वरूपस्य ज्ञानस्य** ॥ समुदागमः इत्येकं **समन्तात् ज्ञानस्य** ॥ क्वचित् समन्तादित्यत्र समज्ञा इति पाठः ॥ १२ ॥ ऋषिः शास्त्रकृत् । शास्त्रकर्ताप्यत्र । आचार्यः इति त्रीणि **शास्त्रद्रष्टुर्मुनेः** ॥ शास्त्रम् । शिष्यतेऽनेन । स्मृतिः आगमः इति त्रीणि **शास्त्रस्य** ॥ साङ्ख्यं समीक्षम् इति द्वे **साङ्ख्यस्य** ॥ दिव्यदोहदं "दिव्यदोहनम्" । दिव्यस्य दोहदम् "यद्दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं दिव्यदोहदं तद्विदुर्बुधाः" इति । उपयाचितम् । उपयाचितकमप्यत्र । इति द्वे **अभीष्टार्थसिद्धये देवेभ्यो देयस्य द्रव्यस्य** ॥ १३ ॥ झलज्झला । जलन्तं जलति । पृषोदरादित्वात् साधु । इत्येकं **हस्तिकर्णास्फालनस्य** ॥ करिणः हस्तिनः कर्णास्फाले कर्णचालने रूपं स्वभावं झलज्झलेति इच्छन्ति । बुधाः इति शेषः रामायणम् । रामस्यायनं चरितमधिकृत्य कृतो ग्रन्थः । इत्येकं **रामचरितप्रतिपादकस्य बाल्मीकिकृतकाव्यभेदस्य** ॥ रामेण श्रीकृष्णेन रावणवधः तन्नामकराक्षसहननम् तत्कथामधिकृत्य कृतो ग्रन्थस्तदुपचारवशात् रामायणं कथितमिति व्यङ्ग्यस्यार्थः । उच्चयः ॥ १४ ॥ वस्त्रग्रन्थिः । वस्त्रस्य ग्रन्थिः । नीवी "नीवीं प्रति प्रणिहिते तु करे" इति साहित्यम् । नीविरप्यत्र । इति त्रीणि **कटीवस्त्रबन्धनस्य** ॥ भणितं रतकूजितम् । रते कूजितम् । इति

एकीया एकपक्षाः स्युः सहायाः सहभाविनः ॥
कुलीरास्थ्ये गविर्जानपदा राष्ट्रनिवासिनः ॥ १६ ॥
प्रत्यक्षी व्यक्तदृष्टार्थश्चाऽथ कर्तनतर्कुटे ॥
चिरकालं दीर्घरात्रमामिक्षा मस्तु वाजिनम् ॥ १७ ॥
तदात्वं प्रमुखं राजमल्ल उत्सिक्त उद्धतः ।
द्वैधं विवाद आरम्भ आदराडम्बरार्थकः ॥ १८ ॥
रभसो गमकारित्वं कौमुदी कार्तिकोत्सवे ।
आवेशाटोपसंरम्भाः प्रियवाक्चटु चाटुनी ॥ १९ ॥
प्रतिरूपं प्रतिच्छन्दः संवेशनरतिक्रिये ।
अभ्यासः खुरली योग्या निर्वर्णननिभालने ॥ २० ॥
शालिनीकरणं न्यग्भावनं गन्धनसूचने ।
भावः पदार्थो धर्मः स्यात्सत्त्वं तत्त्वं च वस्तु च ॥ २१ ॥

**रतिकाले स्त्रीणामव्यक्तशब्दभेदस्य** ॥ श्वभ्रः अवपातः इति द्वे **गर्तस्य, छिद्रस्य वा** ॥ हृल्लेखः । हृदयं लिखति स्पृशति । तर्कः इति द्वे **तर्कस्य** ॥ चीर्णं शीलितम् इति द्वे **अभ्यस्तस्य** ॥ १५ ॥ एकीयाः एकपक्षाः सहायाः सहभाविनः इति चत्वारि **सहायानाम्** ॥ गविः इत्येकं **कुलीरशिशोः** ॥ जानपदाः।जनपदे भवाः, तत आगता वा।राष्ट्रनिवासिनः इति द्वे **देशनिवासिनाम्**॥ १६॥प्रत्यक्षी "प्रत्यक्षः" व्यक्तदृष्टार्थः।व्यक्तेन दृष्टाः अर्थाः येन । इति द्वे **साक्षिणः** ॥कर्तनम् "वर्तनं" तर्कुटम् । तर्कुरप्यस्त्र।इति द्वे **छेदनयन्त्रभेदस्य**॥ चिरकालं।कालस्य चिरम्,चिरः कालोऽस्य वा।दीर्घरात्रम्।रात्रेः दीर्घम्, दीर्घारात्री अस्य वा।इति द्वे **चिरकालस्य**॥ आमिक्षा । आमिष्यते सिच्यते । मस्तु वाजिनम् । "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इति श्रुतिः । इति त्रीणि **दधियोगजायाः विकृतेः आमिक्षानिःसृतजलस्य च** ॥ १७ ॥ तदात्वम् । तदेत्यस्य भावः । प्रमुखम् । प्रकृष्टं मुखमारम्भः । इति द्वे **तत्कालस्य** ॥ राजमल्लः उत्सिक्तः उद्धतः इति त्रीणि **उद्धतस्य** ॥ द्वैधम् विवादः इति द्वे **विवादस्य** ॥ आरम्भः आदरः आडम्बरः इति त्रीणि **आरम्भस्य, दर्पस्य च** ॥ १८ ॥ रभसः गमकारित्वम् इति द्वे **पौर्वापर्याविचारस्य**॥ कौमुदी इत्येकं **कार्तिकोत्सवस्य** ॥ आवेशः आटोपः संरम्भः इति त्रीणि **संरम्भस्य** ॥ प्रियवाक् चटु चाटुनी इति त्रीणि **प्रियवाक्यस्य** ॥ १९ ॥ प्रतिरूपं प्रतिच्छन्दः इति द्वे **प्रतिरूपस्य** ॥ संवेशनं रतिक्रिया इति द्वे **रतिक्रियायाः** ॥ अभ्यासः खुरली योग्या । इति त्रीणि **शास्त्राभ्यासस्य शराभ्यासस्य वा**॥ निर्वर्णनं निभालनम् इति द्वे **दर्शनस्य** ॥ २० ॥ शालिनीकरणं न्यग्भावनम् इति द्वे **अधःकरणस्य** ॥ गन्धनं सूचनम् इति द्वे **सूचनस्य प्रकाशनस्य**॥भावः पदार्थः धर्मः सत्त्वं तत्त्वं वस्तु इति षट् **वस्तुनः**॥२१॥

सन्दर्भस्तु प्रबन्धः स्याद्ग्रन्थो द्वात्रिंशदक्षरी ।
सर्गबन्धो महाकाव्यं महारूपकनाटके ॥ २२ ॥
अथ वाङ्मयभेदाः स्युश्चम्पूः खण्डकथा कथा ।
आख्यायिका परिकथा कलापकविशेषकौ ॥ २३ ॥
सन्दानमनिरुद्धं च प्रकीर्णं गुत्सकस्तथा ।
सर्गो वर्गः परिच्छेदोद्घाताध्यायाङ्कसङ्ग्रहाः ॥ २४ ॥
उच्छ्वासः परिवर्तश्च पटलः काण्डमस्त्रियाम् ।
स्थानं प्रकरणं पर्वाह्निकं च ग्रन्थसन्धयः ॥ २५ ॥
प्रज्ञप्तिः परिभाषाशैलीसङ्केतसमयकाराश्च ।
प्रतिवाणी प्रतिवचनं समुदाचारस्त्वभिप्रायः ॥ २६ ॥
अप्रतिरूपकथा स्यात्सङ्कणिका छोरणं परित्यागः ।
स्यादुद्वर्धनमन्तर्हासस्त्रिषु पिण्डमाहारः ॥ २७ ॥
अवसर्गः प्राकाम्यं स्वाच्छन्द्यानुमननमित्यपि च ।
आकल्पक उत्कण्ठा चिन्ताकर्मण्यथास्त्यानम् ॥ २८ ॥

सन्दर्भः प्रबन्धः इति द्वे **सन्दर्भस्य** ॥ ग्रन्थः द्वात्रिंशदक्षरी इति द्वे **ग्रन्थस्य** ॥ सर्ग महाकाव्यम् इति द्वे **महाकाव्यस्य** ॥ तल्लक्षणं :साहित्यदर्पणे षष्ठाध्याये वि निरूपितम् इच्छद्भिस्तत्रावलोकनीयम् । महारूपकं नाटकम् इति द्वे **नाटकस्य** ॥ चम्पूः खण्डकथा कथा आख्यायिका परिकथा इति पञ्च **एकैकवाङ्मयभेदस्य**॥त मपि साहित्यदर्पणे षष्ठाध्याये प्रकाशितम् । कलापकः विशेषकः इति द्वे **कलापकस्य**॥ क्षणं "कलापकं चतुर्भिश्च" इति साहित्यम् ॥२३॥ सन्दानम् अनिरुद्धम् इति द्वे **काव्यव विशेषस्य** ॥ "सन्दानितकं त्रिभिरिष्यते" इति साहित्यम् । प्रकीर्णं गुत्सकः **मिश्रकाव्यस्य** ॥ सर्गः वर्गः परिच्छेदः उद्घातः । क्वचित्तु उद्योत इति आध्यायः अङ्कः संग्रहः ॥ २४ ॥ उच्छ्वासः । उल्लासोप्यत्र । परिवर्तः इ **कथापरिच्छेदानाम् एकैकमेकैकस्य** ॥ पटलः काण्डम् । पुं वा । प्रकरणं पर्व आह्निकम् इति षट् **ग्रन्थसन्धीनाम् एकैकमेकैकस्य** ॥ २ प्रज्ञप्तिः परिभाषा शैली । "आचार्याणामियं शैली यत्सामान्येनाभिधाय विशेषेण विद इति प्राञ्चः । सङ्केतः समयकारः इति पञ्च **सङ्केतस्य** ॥ प्रतिवाणी "प्रतिवाणिः" चनम् इति द्वे **प्रतिवचनस्य** ॥ समुदाचारः अभिप्रायः इति द्वे **अभिप्रायस्य** ॥ सङ्कणिका इत्येकम् **अप्रतिरूपकथायाः** ॥ स्यादित्यन्वयः । छोरणं परित्यागः **परित्यागस्य** ॥ उद्वर्धनम् "उद्वर्तनम्" अन्तर्हासः इति द्वे **अन्तर्हासस्य** ॥ पि त्रि० । आहारः इति द्वे **आहारस्य** ॥ २७॥ अवसर्गः । क्वचित् अध्यमर्ग इति ।

**आक्षेपोऽत्याकारः स्वाध्यायः स्यान्निरन्तराभ्यासः ।**
**हर्षस्वनः किलकिला सदृशस्यन्दस्तु निःस्यन्दः ॥ २९ ॥**
**अवसानं तु विरामोऽमध्यमथो मण्डलं चक्रम् ।**
**स्यादारम्भः प्रस्तावना तदामुखमपि ज्ञेयम् ॥ ३० ॥**
**इति सङ्कीर्णवर्गः ॥ ५ ॥**

## अथ नानार्थः ।

**स्वरकाद्यादिकाद्यन्तक्रमान्नानार्थसङ्ग्रहम् ।**
**विहायाऽमरकोषोक्तमकार्षीत्पुरुषोत्तमः ॥ १ ॥**

म्यम् "प्राकाम्यं ते विभूतिषु" इति कुमारः । स्वाच्छन्द्यानुमननम् । अपिशब्दात् स्वाच्छन्द्यानुमतिरप्यत्र । इति त्रीणि **स्वाधीनतानुमतेः॥** आकल्पकः उत्कण्ठा इति द्वे **औत्सुक्य-इति ख्यातस्य चिन्ताकर्मणः ॥** आख्यानम् ॥ २८ ॥ आक्षेपः । आक्षेपकोऽप्यत्र । अत्याकारः इति त्रीणि **निन्दायाः, अपवादस्य वा ॥** स्वाध्यायः । स्वः स्वकीयत्वेन विहितः अध्यायः । "स्वाध्यायोऽध्येतव्यः" इति श्रुतिः । निरन्तराभ्यासः इति द्वे **स्वाध्यायस्य द्विजैः पाठ्यवेदभागभेदस्य वा ॥** हर्षस्वनः किलकिला इति द्वे **हर्षकारकशब्दस्य ॥** सदृशस्यन्दः "सदृशस्पन्दः" निःस्यन्दः "निस्पन्दः" इति द्वे **समानक्षरणस्य** ॥ २९ ॥ अवसानं विरामः अमध्यम् इति त्रीणि **अवसानस्य ॥** मण्डलं चक्रम इति द्वे **चक्रस्य ॥** आरम्भः "नटी विदूषको वापि" इत्यादि साहित्यम् । प्रस्तावना आमुखम् " आमुखं तद्विजानीयाद्बुधैः प्रस्तावना मता " इति साहित्यम् । इति त्रीणि **प्रस्तावनायाः** ॥ ३० ॥ इति सङ्कीर्णवर्गः ॥ २ ॥ अनन्तरमिहाऽनेकार्थशब्दा उच्यन्ते । किमर्थमत्र अनेकार्थशब्दा उच्यन्त इति ? प्रागुक्तेषु वर्गेषु तेषामनेकार्थवतां शब्दानां प्रायोऽभिहितत्वात् । ननु तत्र तेषामेकैकार्थ एव पर्यायेण समुद्दिष्टः । ततोऽत्र तेषां नानार्था विशेषतः प्रचक्ष्यन्ते । तर्हि कुतस्ते नानार्थाः ? प्रागुक्ता इत्यत आह—अथ नानार्थ इति। अत्र वक्ष्यमाणेषु कान्तादिवर्गेष्वेव केऽपि नानार्थाः पृथक्पृथगुक्ताः न तु प्रागुक्तेषु पर्यायशब्देषु । तेऽपि नानार्थशब्दाः प्रागुक्तेषु वर्गेपूक्ता अपि अत्रानेकार्थवर्गे प्रायस्तेषां शब्दानां नानार्थतैवोच्यते इति भावः । तत्रादौ नानार्थवर्गे तावत् पुरुषोत्तमः पुरुषोत्तमदेवनामा सुधीः अमरकोषे अमरकोषाभिधाने अभिधानशास्त्रे उक्तम् आचार्यामरसिंहेन भूयः कथितम् । तत्र येऽनेकार्थशब्दा भूरिप्रयोगवशादुक्ता इति भावः।तत्र कथितं तत् विहाय परित्यक्त्वा।स्वरकाद्यादिकाद्यन्तक्रमात् स्वराः अकारादयः । आदिशब्देनाकारेकारोकाराश्च । तेषां कादीनां च आद्यन्तक्रमात् आदिक्रमेण अन्तक्रमेण च । आदिपर्यवसानानां वर्णानां यथानुयोगवशेनेति भावः । नानार्थं नाम् अनेकार्थवाचिनां शब्दानाम् सङ्ग्रहं सङ्कलनम्। बह्वर्थकवाक्यानामेकत्र सङ्ग्रह-

**शक्रार्कपर्णयोश्चाऽर्कोऽभीकस्त्वभयकामिनोः ।**
**रूपकान्तिकयोश्चाङ्कोऽलिमकौ भेककोकिलौ ॥ २ ॥**
**अन्तिकं निकटे चुल्ल्यां नाट्योक्तौ चाग्रजान्तिका ।**
**अनीकोऽस्त्री रणे सैन्ये गौर्यां मातरि चाम्बिका ॥ ३ ॥**
**स्यादश्मन्तकमुद्धाने मल्लिकाछदनेऽपि च ।**
**आह्निकं दिननिर्वर्त्ये तत् क्लीबं नित्यकर्मणि ॥ ४ ॥**

करणमित्यर्थः । अकार्षीत् यथावत् कारयामास । पूर्वोक्तप्रयोगमनुगम्य अर्थावबोधनेन विरचयामासेति यावत्॥१॥अथ कान्तानाह । शक्रे इन्द्रे।अर्कपर्णे मन्दारे च। **अर्कः** इत्येकं ककारान्तं नाम वर्तते । अर्च्यत इति अर्कः।पु०। अर्च–पूजायाम् कर्मणि घञ्प्रत्ययः।कत्वम्।“अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ” इति मेदिनी ॥ अभये निर्भये । कामिनि कामुके च। **अभीकः** इति शब्दो वर्तते । अभिकामयते इति अभीकः। पु०। अभिपूर्वककम–वाञ्छायाम्। निपातनात् साधुः। “अभीकः कामुके क्रूरे निर्भये त्रिषु ना कवौ” इति मेदिनी।“अभीको निर्भये कवौ” इति हैमः॥ रूपे शरीरे । कान्तिके शोभान्विते च! **अङ्कः**इति शब्दो वर्तते । वर्तत इति अतः परं वक्ष्यमाणेषु शब्देषु सर्वत्रैवान्वयः । अङ्कयति अङ्कयते वेत्यङ्कः । पु० । अङ्क–सङ्ख्याकरणे । घञ् प्रत्ययः । केचित्तु अङ्कापयति अङ्कापयते इति च वदन्ति । “अङ्को रूपकभेदागश्चिह्नरेखाजिभूषणे। रूपकांशान्तिकोत्सङ्गे स्थाने” इति मेदिनी ॥ भेकः मण्डूकः । कोकिलः परभृतः । तयोश्च **अलिमकशब्दः** । पु०। “अलिमकः पिके भेके मधूके पद्मकेशरे” इति विश्वः॥२॥ निकटे समीपे । चुल्ल्यां पाकार्थमग्निस्थापनस्थाने च । **अन्तिकम्** । न० । अन्त्यते सम्बध्यते सामीप्येन । अन्त–बन्धने । घञ् प्रत्ययः । स्वार्थे ठन् ॥ नाट्योक्तौ नाटकविषयवचने । अग्रजायां ज्येष्ठभगिन्यां च। **अन्तिका** । स्त्री०। “अन्तिकं निकटे वाच्यलिङ्गं स्त्री सातलौषधौ । चुल्ल्यां ज्येष्ठभगिन्यां च नाट्योक्त्यां कथ्यतेऽन्तिका” इति मेदिनी । “अन्तिकं पुनः । पार्श्वेऽन्तिका तु चुल्ल्यां स्यात् सातलाख्यौषधेऽपि च । नाट्योक्तौ ज्येष्ठभगिनी अन्तिका प्रोच्यतेऽपि सा”.इति हैमः।रणे युद्धे। सैन्ये सेनासमुदाये च।**अनीकः**।पु०।न०।अन–जीवने। ईकन्।“अनीकोऽस्त्री रणे सैन्ये” इति मेदिनी। “अनीकं रणसैन्ययोः” इति हैमः॥ गौर्यां पार्वत्याम् । मातरि जनन्यां धृतराष्ट्रजमातरि च । **अम्बिका** । स्त्री० ॥ अम्बैव स्वार्थे के ह्रस्वे अत इत्वम्।“अम्बिका पार्वतीमात्रोर्धृतराष्ट्रस्य मातरि” इति मेदिनी“अम्बिका पार्वती पाण्डुजनन्योरपि मातरि।अम्बिका कैतवे मिश्रे सर्षप्यामपि कीर्त्यते” इति विश्वः । “अम्बिकोमापाण्डुमात्रोर्देवताभिदि मातरि” इति हैमः॥३॥उद्धाने चुल्ल्याम् उद्धते वा।मल्लिकाछदने मल्लिकापत्रे मल्लिकारचिते पिधाने च, दीपाधारच्छादने वा । **अश्मन्तकं** स्यात् । पु०।न०। अश्मानमन्तयति। अन्त–बन्धने । ण्वुल् प्रत्ययः । अश्मनोऽन्तोऽस्याम् । स्वार्थे को वा । “स्यादश्मन्तकमुद्धाने ल्लिकाछदनेऽपि च” इति मेदिनी ॥ दिननिर्वर्त्ये दिनसाध्ये । नित्यकर्मणि नित्यक्रियायाम् ।

**स्यादाच्छुरितकं हासविशेषे च नखक्षते ।**
**उदर्क एष्यत्कालीयफले मदनकण्टके ॥ ५ ॥**
**स्त्रियामुत्कलिका हेलोत्कण्ठासलिलवीचिषु ।**
**कोशज्ञे कौशिको विश्वामित्रे गौर्यां च कौशिकी ॥ ६ ॥**
**कृष्णत्वे च हिमान्यां च गौरीकाल्योश्च कालिका ।**
**वर्षोपले स्त्री करका करङ्के करकोऽस्त्रियाम् ॥ ७ ॥**

**आह्निकं** स्यात् । न० । अह्ना साध्यम् । ठञ् प्रत्ययः । "आह्निकं दिननिर्वर्त्ये त्रिलिङ्गमथ न द्वयोः । नित्यक्रियाभोजनयोर्द्वन्द्वे प्रकरणस्य च" इति मेदिनी । "आह्निकं स्यात्पुनरहर्निर्वर्त्ये नित्यकर्मणि । भोजने ग्रन्थभागे च" इति हैमः ॥ ४ ॥ हासविशेषे हास्यभेदे । "ईषद्विकसितै-र्दन्तैः कटाक्षैः सौष्टवान्वितम् । अवेक्षितं द्विजद्वारमुत्तमानां स्मितं भवेत्" इति । नखक्षते नखाघातव्रणे च **आच्छुरितकम्** । न० । आपूर्वच्छुर—छेदने, रञ्जने वा । क्तप्रत्ययः । पुनः स्वार्थे कश्च । "स्यादाच्छुरितकं हासनखराघातभेदयोः" इति मेदिनी । "स्यादाच्छुरितकं हासनखाघातप्रभेदयोः" इति विश्वः ॥ एष्यत्कालीयफले उत्तरकालभाविफले शुभाशुभे । मदनकण्टके च **उदर्कः** ॥ पु० । उद्—अर्क—उपतपे, अर्च—पूजायां वा । घञ् प्रत्ययः । "उदर्क एष्यत्काले तत्फले मदनकण्टके" इति मेदिनी । "उदर्कस्तूत्तरकालफले मदनकण्टके" इति हैमः ॥ ५ ॥ हेला स्त्रीणां शृङ्गारभावजा चेष्टा । तथोक्तम्—"प्रौढेच्छायातिरूढानां नारीणां सुरतोत्सवे" इति । उत्कण्ठा इष्टालाभे कालासहनरूपा । सलिलं जलम् । वीचिस्तरङ्गः । तत्र च । **उत्कलिका** स्यात् । स्त्री० । उद्पूर्वकल—सङ्ख्याने । वुन् प्रत्ययः । "कथितोऽत्कलिकोत्कण्ठा-हेलासलिलवीचिषु" इति मेदिनी । कोशज्ञे कोषाध्यक्षे । कचित्तु कोषाङ्गे बहुमूलवृक्षविशेषे इत्यर्थः । विश्वामित्रे तन्नामकमुनौ । **कौशिकः** । पु० । कुशिकस्य गोत्रापत्यम् । ऋष्यण् प्रत्ययः ॥ गौर्यां पार्वत्याम् । **कौशिकी** । स्त्री० । "कौशिको नकुले व्यालग्राहे गुग्गुलुशक्रयोः । कोशज्ञोलूकयोश्च स्याद्विश्वामित्रे मुनावपि । कौशिकी चण्डिकायां च नदीभेदे च योषिति" इति मेदिनी । तथा विश्वः । "कौशिकः शक्रघूकयोः । कोशज्ञे गुग्गुलावाहितुण्डिके नकुले मुनौ । कौशिकी चण्डिकानद्योः" इति हैमः ॥ ६ ॥ कृष्णत्वे कार्ष्ण्ये । हिमान्यां हिमसमूहे । गौरी पार्वती । काली तन्नामिका देवी । तयोश्च । **कालिका** । स्त्री० । कालं कृष्णवर्णमनुचरति । ठक्प्रत्ययः । कालो वर्णोऽस्त्यस्याः । ठन् प्रत्ययो वा । "कालिका चण्डिकाभेदे कार्ष्ण्यवृश्चिकपत्त्रयोः । क्रमदेये वस्तुमूल्ये घूसरी नवमेघयोः । पटोलशाखारोमाली-मांसीकाकीशिवासु च । मेघावली च" इति मेदिनी । "कालिका योगिनीभिदि । स्वर्णादि-दोषे मेघाल्यां सुरागौर्योर्नवाम्बुदे । क्रमदेय वस्तुमूल्ये कार्ष्ण्यवृश्चिकपत्त्रयोः । रोमाल्यां धूसरीकांस्योः काकीपटोलशाखयोः" इति हैमः ॥ वर्षोपले घनोपले । **करका** । स्त्री० । कृ—करणे । वुन् प्रत्ययः ॥ करङ्के नारिकेलास्थिन कमण्डलौ वा । **करकः** । पु० । न० ॥ ७ ॥

**कुसुम्भे दाडिमे पक्षिभेदे च करकः पुमान् ।**
**करमध्याङ्गुलौ च स्यात्कर्णिका च द्रुमान्तरे ॥ ८ ॥**
**द्रिके धृष्टे च काकः स्यात्कौतुकं मङ्गलेच्छयोः ।**
**भोग्येप्यथ स्यात्कुलकं श्लोकैकार्थपटोलयोः ॥ ९ ॥**
**कुलकौ नाककाकेन्दू क आत्मा च सुखं च कम् ।**
**पेचके स्त्रीजिते काकरुको कौलेयकः शुनि ॥ १० ॥**

कुसुम्भे दाडिमे पक्षिभेदे च **करकः** । पु० । कृ करणे । वुन् प्रत्ययः । "करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च । द्वयोर्वर्षोपले न स्त्री करङ्के च कमण्डलौ" इति मेदिनी । "करकस्तु करङ्के स्याद्दाडिमे च कमण्डलौ । पक्षिभेदे करे चापि करका च घनोपले" इति विश्वः । "करको दाडिमे पक्षिभेदे करकमण्डलौ । लट्वाकरञ्जयोर्वर्षोपले च" इति हैमः॥ करमध्याङ्गुलौ हस्तस्य मध्यमाङ्गुलौ।द्रुमान्तरे वृक्षविशेषे च।**कर्णिका** स्यात्।स्त्री०।कर्ण-भेदने। ण्वुल् प्रत्ययः। कर्णिका करिहस्ताग्रे करमध्याङ्गुलावपि।क्रमुकादिच्छटांशेऽब्जवराटे कर्णभूषणे" इति मेदिनी । तथा विश्वः । "कर्णिका कर्णभूषणे । बीजकोषे सरोजस्य करमध्याङ्गुलावपि। कुट्टिन्यां हस्तिहस्ताग्रे कणिका सूक्ष्मवस्तुनि । अग्निमन्थे" इति हैमः ॥ ८ ॥ द्रिके काके । द्वौ कौ ककारौ यत्र द्रिकः। "द्रिकः काके च कोके च" इति विश्वः । धृष्टे निर्लज्जे, प्रगल्भे च । धृष्टे इत्यत्र क्वचित् अदृष्टे इति पाठः । तस्यार्थः दर्शनायोग्ये इति **काकः** स्यात् । पु० । कै शब्दे । कन् प्रत्ययः । तस्य नेत्वम् । "काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि । शिरोऽवक्षाने मानप्रभेदे दीपमंदयोः" इति मेदिनी । तथा विश्वः ॥ मङ्गले प्रशस्ते अभीष्टार्थसिद्धौ वा । इच्छायाम् अभिलाषे । भोग्ये भोगार्हे च। "योग्ये"इति क्वचित् पाठः। **कौतुकम्**॥न० । कुतुकमेवेति प्रज्ञादित्वात् स्वार्थे अण् प्रत्ययः । "कौतुकन्त्वभिलाषे स्यादुत्सवे नर्महर्षयोः । तथा परम्परायाते मङ्गले च कुतूहले । विवाहसूत्रगीतादिभोगयोरपि न द्वयोः" इति मेदिनी । "कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि । पारम्पर्यागतख्याते मङ्गलोद्वाहसूत्रयोः । गीतादौ भोगकाले च" इति हैमः ॥ श्लोकैकार्थः एकवाक्यतापन्नस्य पञ्चादिकश्लोकसमुदायार्थः । पटोलः स्वनामाख्यातः लताभेदः । तयोश्च । **कुलकम्** । न०। कुल—बन्धे । अच्प्रत्ययः। संज्ञायां कन् ॥९॥ नाकः स्वर्गः । काकेन्दुः कटुतिन्दुकः । तयोः **कुलकः** स्यात् । पु० । कुलकं तु ॥ पटोले स्यात्सम्बन्धश्लोकसंहतौ । पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते" इति मेदिनी । "कुलकं पञ्चादिश्लोकसमन्वये पटोलके । कुलकः कुलप्रधाने वल्मीके काकतिन्दुके" इति हैमः ॥ आत्मा देहः । तत्र च **कः** । पु० ॥ सुख प्रसिद्धं तस्मिंश्च **कम्** । न० । अत्र चकारात् ब्रह्मणि वायौ यमे "दक्षप्रजापतौ सूर्ये अग्नौ विष्णौ काले कामग्रन्थौ राजनि मयूरे धने प्रकाशे शब्दे च ।तथा शिरसि जले रोगे च कम् । कै—शब्दे । कचदीप्तौ वा । डप्रत्ययः । "को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे । कामग्रन्थौ चक्रिणि च पतत्रिणि च पार्थिवे । मयूरेऽग्नौ च पुंसि स्यात्सुखशीर्षजलेषु

**कुलीने चाथ कनकं धुस्तूरे नागकेशरे ।**
**चम्पके किंशुके हेम्नि कृषकौ फालकर्षकौ ॥ ११ ॥**
**रोमाञ्चे क्षुद्रशत्रौ च द्रुमाङ्गे कण्टकोऽस्त्रियाम् ।**
**राजधान्यां नितम्बेऽद्रेर्वलये कटकोऽस्त्रियाम् ॥ १२ ॥**
**वेणौ ना कार्मुकं चापे गुणवृक्षेऽपि कूपकः ।**
**कल्को विभीतके तैलादिशेषे चाथ कञ्चुकः ॥ १३ ॥**

कम्" इति मेदिनी। "को ब्रह्मात्मानिलार्केषु शमने सर्वनाम्नि च । पावके च मयूरे च सुखशीर्ष-जलेषु कम्" इति विश्वः। पेचकः उलूकः । स्त्रीजितः स्त्रीपराजितः।तयोः **काकरुकः**।पु० । काकस्य रुकः ध्वनिरिव ध्वनिर्यस्य। "काकरुको नग्नदम्भस्त्रीजितोलूकभीरुषु" इति मेदिनी॥शुनि कुक्कुरे ॥ कुलीने सत्कुलोद्भवे श्रेष्ठहये वा । **कौलेयकः** । पु० । कुले भवः । ढकञ् प्रत्ययः । कुत्रचित् "कौलेयकः" इति पाठः ॥ धुस्तूरे तन्नामख्याते वृक्षे । नागकेशरे चम्पके किंशुके हेम्नि स्वर्णे च **कनकम्** । न० । कन—प्रीतौ, गतौ वा । वुन् प्रत्ययः । "कनकं हेम्नि पुंसि स्यात् किंशुके नागकेशरे । धुस्तूरे काञ्चनारे च कालीये चम्पकेऽपि च" इति मेदिनी । "कनकं हेम्नि कनको नागकेशरे । धूस्तूरे चम्पके काञ्चनारकिंशुकयोरपि" इति हैमः॥ फालम् लाङ्गलमुखस्थः लौहभेदः । कर्षकः कृषीवलः । तयोः **कृषकः**।पु० । कृषआकर्षणे । क्वुन् प्रत्ययः। "कृषकः पुंसि फाले स्यात् कर्षके त्वभिधेयवत्"इति मेदिनी ॥ १० ॥ ११ ॥ रोमाञ्चे रोमहर्षे । क्षुद्रशत्रौ नीचजातिकरिपौ । द्रुमाङ्गेवृक्षावयवे । तथा सूच्यग्रे मत्स्यादस्थि ज्योतिषोक्ते लग्ने ततः चतुर्थसप्तमदशमस्थानेषु च **कण्टकः** । पु० न० । कटि—भेदे । ण्वुल् प्रत्ययः ।"कण्टको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे । नैयायिकादिदोषोक्तौ स्याद्रोमाञ्चद्रुमा-ङ्गयोः" इति मेदिनी ॥ राजधान्याम् अद्रेर्नितम्बे मेखलाख्ये पर्वतमध्यभागे । वलये च **कटकः** । पु० न० । कट—वृतौ, वर्षणो वा । वुन् प्रत्ययः । कटकोऽस्त्री नितम्बेऽद्रेर्दन्तिनां दन्तमण्डले । सामुद्रलवणे राजधानीवलययोरपि" इति मेदिनी ॥ १२॥ वेणौ वंशे । चापे धनुषि च । **कार्मुकम्** । पु० न० । कर्मणे प्रभवति । उकञ् प्रत्ययः । "कार्मुकं धनुषि स्यान्ना वेणौ कर्मक्षमेऽन्यवत्" इति मेदिनी । "अथ कार्मुकः । वंशे कार्मुकमिष्वासे कर्मठे" इति हैमः ॥ गुणवृक्षे नौकाकर्षकदामाद्याधारे काष्ठे । अपिशब्दात् जलाधारे गर्ते च । **कूपकः** । पु० । कुत्सिता ईषद्वा आपो यत्र । स्वार्थे कः। अथवा कुवन्ति मण्डूकाः अस्मिन् । कु—शब्दे-पक्प्रत्ययः दीर्घश्च । कूपोऽप्यत्र । कूपको गुणवृक्षे स्यात्तैलपात्रे कुकुन्दरे" इति मेदिनी । तथा हैमः। "कूपको गुणवृक्षे स्यात्तैलपात्रे कुकुन्दरे । उदपाने चितायां च" इति विश्वः ॥ विभीतके विभीतकवृक्षे। तैलादिशेषे घृततैलादिशेषे च। **कल्कः** ॥ पु० न० । कल—गतौ । कप्रत्ययः। तस्य नेत्वम् । आदिशब्दात् दम्भे विष्ठायां तुरुष्कनामगन्धद्रव्ये घृततैलादिपाके देये औषधिद्रव्ये च । तदुक्तम् "द्रव्यमात्रं शिलापिष्टं शुष्कं वा जलमिश्रितम् । तदेव सूरिभिः पूर्वैः कल्कमित्य-

**निर्मोके चोलके वारवाणोऽथ कुशिको मुनौ ।**
**शाले किष्कुः प्रकोष्ठेऽपि व्याख्याश्लोकेऽपि कारिका ॥ १४ ॥**
**खगे यमे छद्मविप्रे कङ्कः सूच्यां च कूर्चिका ।**
**क्रमुको भद्रमुस्तेऽपि कोकश्चक्रे वृकेऽपि च ॥ १५ ॥**

भिधीयते'' इति । चात् शाठ्ये पापे। ''कल्कोऽस्त्री घृततैलादिशेषे दम्भे विभीतके । विट्किट्टयोश्च पापे च त्रिषु पापाशये पुनः'' इति मेदिनी । ''त्रिषु पापाशये कल्कोऽस्त्री विट्किट्टभदन्तयोः'' इति विश्वः ॥ निर्मोके सर्पकञ्चुके । चोलके स्त्रीणां कञ्चुकाख्ये आप्रपदने वस्त्रे पुंसां वस्त्रभेदे वा । वारबाणे कवचे । **कञ्चुकः** । पु० ॥ कचि-बन्धने, दीप्त्यां वा । उकन्प्रत्ययः । ''कञ्चुको वारबाणे स्यान्निर्मोके कवचेपि च । अर्धापकगृहीताङ्गस्थितवस्त्रे च चोलके'' इति मेदिनी ॥ मुनौ जमदग्निपितरि विश्वामित्रस्य पितरि च । मुनिभेदे, शाले सर्जवृक्षे च। **कुशिकः** । पु० । कुशोऽस्त्यस्येति ठन् प्रत्ययः, इवार्थे इकन् प्रत्ययो वा । ''कुशिकः स्यान्मुनौ तैलशेषे सर्जाक्षवृक्षयोः'' इति विश्वः । ''कुशिको'' मुनिभेदे स्यात् फाले सर्जे विभीतके'' इति हैमः ॥ प्रकोष्ठे कूर्परस्याधोभागस्थे मणिबन्धपर्यन्ते हस्तावयवे।**किष्कुः**।पु० स्त्री० । किष्क-वधे । उप्रत्ययः । अपिशब्दात् द्वादशाङ्गुलपरिमाणे हस्तपरिमाणे च । ''किष्कुर्वितस्तौ हस्ते च प्रकोष्ठे कुत्सितेऽपि च'' इति विश्वः । ''किष्कुर्द्वयोर्वितस्तौ च सप्रकोष्ठे करेऽपि च'' इति कोषान्तरम् ॥ व्याख्याश्लोके स्वल्पाक्षरवति बहुलार्थबोधके श्लोके । **कारिका** । स्त्री० । कृ-करणे । ण्वुल्प्रत्ययः । अपिशब्दात् क्रियायां नटयोषिति शिल्पे च ''कारिका नटयोषिति। कृतौ विवरणश्लोके शिल्पयातनयोरपि'' इति मेदिनी । ''कारिका यातनानटी । कृतिर्विवरणश्लोको नापितादिककर्म च'' इति हैमः ॥१३॥१४॥ खगे पक्षिभेदे। यमे कृतान्ते।छद्मविप्रे कपटब्राह्मणे । लोकप्रतारणार्थं ब्राह्मणताख्यापनाय ब्राह्मणलिङ्गधारिणि च । **कङ्कः** । पु० । ककि-गतौ । अच् प्रत्ययः । कङ्कश्छद्मद्विजे ख्यातो लोहपृष्ठकृतान्तयो'' इति मेदिनी । तथा विश्वः ॥ सूच्यां सूचिकायाम् । सूचिरत्र तुन्नवायसाधनार्थं लोकव्यवहारिता लोहमयी सूचिका । चकारात् दुग्धविकारे तूलिकायां कुड्मले कुञ्चिकायां तृणगुच्छे च।**कूर्चिका** स्यात् स्त्री० ।कूर्चं श्मश्रु अस्त्यस्येति ठनप्रत्ययः । ''कूर्चिका सूचिकायां च तूलिकायां ज कुड्मले । कवाटकुट्टके क्षीरविकृतावपि योषिति''इति मेदिनी । ''कूर्चिका क्षीरविकृतौ कुञ्चिकाया च कुड्मले। आलेख्यकूर्चिकासूच्योः'' इति हैमः ॥ भद्रमुस्ते नागरमुस्तके । अपिशब्दात् ब्रह्मदारुणि गुवाके पट्टिकालोध्रे च **क्रमुकः** । पु० । क्रम-गतौ । उन् प्रत्ययः । ततः संज्ञायां कन् च । ''क्रमुकः पट्टिकालोध्रे भद्रमुस्तकपूगयोः'' इति विश्वः । ''क्रमुको भद्रमुस्तके । गुवाके पट्टिकालोध्रे'' इति हैमः॥ःचक्रे चक्रवाके । वृके कुक्कुराकारे हरिणघातकव्याघ्रभेदे । अपिशब्दात् ज्येष्ठ्यां खर्जूरिवृक्षे दर्दुरे विष्णौ च **कोकः** । पु० । कुक-आदाने । अच्प्रत्ययः । ''कोकश्चक्रवृकज्यैष्ठीखर्जूरीद्रुमदर्दुरे'' इति मेदिनी । ''कोकश्चक्रे वृके ज्यैष्ठ्यां खर्जूरीद्रुमभेकयोः'' इति विश्वः ॥ १५ ॥

**पुनर्नवाकारवेल्लपर्णासेषु कठिल्लकः।**
**कृकवाकुर्मयूरेऽपि वंशे दैत्ये च कीचकः ॥ १६ ॥**
**नीचेऽपि क्षुल्लको मूर्धत्राणे नाकौ च खोलकः।**
**चौरोन्दुरू च खनकौ गोलकौ मणिजारजौ ॥ १७ ॥**
**खगे नग्ने च गोरङ्कुः सङ्ख्याभेदेऽपि गण्डकः।**
**शृङ्गयां च ग्रामयुद्धे च ग्राममद्दुरिका स्त्रियाम् ॥ १८ ॥**

पुनर्नवा वर्षाभूः सा च स्वनामख्यातः शाकभेदः। कारवेल्लः लताभेदः। पर्णासः तुलसी।तत्र च **कठिल्लकः**। पु०। कठ–गतौ। इल्लप्रत्ययः। स्वार्थे कन् च। "कठिल्लकस्तु पर्णासे वर्षाभूकारवेल्लयोः" इति मेदिनी। तथा विश्वः॥ मयूरे नीलग्रीवे। अपिशब्दात् कुक्कुटे सरटे च **कृकवाकुः**। पु०। कृकेण वक्ति। वच–परिभाषणे। उणप्रत्ययः कश्च। "कृकवाकुर्मयूरेपि सरटे चरणायुधे" इति मेदिनी॥ वंशे वेणौ। "कीचका नाम ते वंशा ये स्वनन्त्यनिलोहताः" इत्युक्ते वेणुभेदे। दैत्ये असुरे। चकारात् विराटराजश्याले केकयाधिपे नृपभेदे च **कीचकः**। पु०। कीत्यव्यक्तं चकति। चक–तृप्त्यादौ। अच्प्रत्ययः। "कीचको दैत्यभिद्वाताहतसस्वनवंशयोः" इति मेदिनी। "कीचको ध्वनिमद्वंशे दैत्यभेदे द्रुमान्तरे" इति हैमः॥ १६ ॥ नीचे निम्ने। अपिशब्दात् अल्पे पामरे च। **क्षुल्लकः**। त्रि०। क्षुधा लक्यते। लक–आस्वादने। कर्मार्थे कप्रत्ययः। "क्षुल्लकस्त्रिपु नीचेऽल्पे" इति मेदिनी। क्वचित् "**खुल्लक**" इति। "खुल्लकः स्वल्पनीचयोः" इति हैमः॥ मूर्धत्राणे शिरस्त्राणे।नाकौ वल्मीके। चकारात् पाके पूगकोषे च। **खोलकः**। पु०। खोल–गतिवैकल्ये। वुन्प्रत्ययः। "खोलकः पाकवल्मीकपूगकोषशिरस्त्रके" इति विश्वः। तथा मेदिनी। "खोलकः पूगकोषे स्याच्छिरस्त्रे नाकुपाकयोः" इति हैमः॥ चौरः सन्धिचौरः। उन्दुरुः मूषिकः तयोः। क्वचित् "उन्दरुः"। चकारात् भूमिदारके च **खनकः**। पु०। खन–विदारणे वुन्प्रत्ययः। "खनको नोन्दरौ सन्धिचोरे त्रिष्ववदारके" इति मेदिनी। "खनकः सन्धितस्करे। मूषके भूमिवित्तज्ञे" इति हैमः॥ मणिः मणिकः। जारजः मृते भर्तरि जारजातः पुत्रः। तयोः। तथा गुडे पिण्डे गन्धरसे कलाये च। **गोलकः**। पु०। गुड–वेष्टने, रक्षणे च। घञ् प्रत्ययः। डलयोरैक्यम्। "गोलको विधवापुत्रे जारात्स्यान्मणिके गुडे" इति मेदिनी। तथा विश्वः। "गोलकस्तु जारतो विधवासुते। अलिञ्जरे गुडे पिण्डे" इति हैमः॥ १७ ॥ खगे पक्षिभेदे। नग्ने विवस्त्रे। क्वचित् "लग्ने" इति च पाठः। "विकच्छः कच्छशेषश्च मुक्तकच्छस्तथैव च। एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः" इति। चकारात् प्रतिभुवि च **गोरङ्कुः**। पु०। गवि आकाशे रङ्कति। रकि–गतौ। उप्रत्ययः। "गोरङ्कुः स्यात्पुमान्पक्षिभेदे नग्नकबन्दिनोः" इति मेदिनी। तथा विश्वः। "गोरङ्कुर्नग्नबन्दिनोः। खगे च" इति हैमः॥ सङ्ख्याभेदे गणनाविशेषे। अपिशब्दात् स्वनामाख्याते पशौ अन्तराये अवच्छेदे च **गण्डकः**।

**गान्धिको लेखकेऽपि स्याद्गुह्यकश्छेकनिघ्नयोः ।**
**वेश्यायूथ्योश्च गणिका चषकं सरकेऽपि च ॥ १९ ॥**
**ग्रन्थिकौ पार्थदैवज्ञौ ग्रन्थिपर्णे च न द्वयोः ।**
**कण्ठालङ्कारखद्योतविद्युत्सु चिलिमीलिका ॥ २० ॥**
**चारको भोजके बन्धे नाटकाङ्गेऽपि चूलिका ।**
**चित्रकं चित्रके क्लीबं व्याघ्रैरण्डौ च चित्रकौ ॥ २१ ॥**

पु० । गडि—सन्निचये । अच् प्रत्ययः । स्वार्थे कन् च । "गण्डकः पुंसि खड्गे स्यात्सङ्ख्याविद्याप्रभेदयोः । अवच्छेदेऽन्तराये च" इति मेदिनी । "गण्डको विघ्ने विद्यायां सङ्ख्यावच्छेदखड्गिषु । गण्डकी तु सरिद्भेदे" इति हैमः ॥ शृङ्गयां शृङ्गीमत्स्ये । ग्रामयुद्धे ग्रामजातकोलाहले च । **ग्राममद्गुरिका** स्यात् । स्त्री० । ग्रामे मद्गुर इवास्य । "ग्राममद्गुरिका शृङ्गयां ग्रामयुद्धे च कीर्त्यते" इति विश्वः । क्वचित् "**ग्राममङ्गुरिका**" इति पाठः । "ग्राममङ्गुरिका ग्रामयुद्धे शृङ्गिझषे स्त्रियाम्" इति मेदिनी ॥ १८ ॥ लेखके लिपिकारे । अपिशब्दात् गन्धवणिजि च **गान्धिकः** । पु० । गन्धेन जीवति । ठक्प्रत्ययः । "गान्धिको लेखकेऽपि स्यात्सुगन्धिव्यवहारिणि" इति मेदिनी । तथा विश्वः । "गान्धिको लेखके गन्धवणिजे" इति हैमः ॥ छेकः दक्षः । निघ्नः अधीनः, गुणितो वा । तयोः **गुह्यकः** स्यात् । पु० । गुह्यं कं सुखं यस्य । गुह्यं कुत्सितं कायति । कै—शब्दे । कप्रत्ययो वा । अच् च । "गुह्यको निघ्नके छेके" इति मेदिनी ॥ वेश्या प्रसिद्धा । यूथी यूथिका पुष्पप्रधानवृक्षजातिः । तयोः **गणिका** । स्त्री० । गणः समूहोऽस्त्यस्याः । मतुत्वेन ठन्प्रत्ययः । "गणिका यूथिवेश्येभीतर्कारीषु ना तु दैवज्ञे" इति मेदिनी । "गणिकेभ्यां यूथिकायां तर्कार्यां पण्ययोषिति" इति हैमः ॥ सरके मद्यपानपात्रे । अपिशब्दात् मधुनि मद्यभेदे च **चषकम्** । न० पु० । चष—भक्षे । करणे क्वुन् प्रत्ययः । कर्मणि क्वुन् प्रत्ययो वा । "चषकोऽस्त्री पानपात्रे मधुमद्यप्रभेदयोः" इति मेदिनी । "चषकं तु सुरापात्रे मधुमद्यप्रभेदयोः" इति विश्वः ॥ १९ ॥ पार्थः । पृथापुत्रः युधिष्ठिरादिः । दैवज्ञः ज्योतिर्विद् । तयोः । ग्रन्थिपर्णे चोरनामगन्धद्रव्ये । स तु न द्वयोः स्त्रीपुंसोर्न स्यात् । चकारात् पिप्पलीमूले गुग्गुले करीरे च **ग्रन्थिकः** । पु० न० । पार्थ इत्यत्र क्वचित् "पाण्ड" इति पाठः । ग्रन्थोऽस्त्यस्य । ठन्प्रत्ययः । "ग्रन्थिकं पिप्पलीमूले गुग्गुलग्रन्थिपर्णयोः । करीरे पुंसि दैवज्ञे सहदेवाख्यपाण्डवे" इति मेदिनी । "ग्रन्थिकं पिप्पलीमूले ग्रन्थिपर्णकभेषजे । ग्रन्थिको गुग्गुलौ दैवज्ञे माद्रेयकरीरयोः" इति हैमः ॥ कण्ठालङ्कारः कण्ठभूषणम् । खद्योतः कीटभेदः । विद्युत् सौदामिनी । तत्र च **चिलिमीलिका** स्यात् । स्त्री० । चिलिमीलमस्त्यस्याः । क्वचित् "**चिलमीलिका**" इति च पाठः । "चिलमीलिका तु कण्ठीभेदे खद्योतविद्युतोः" इति मेदिनी । तथा विश्वः ॥ २० ॥ भोजके भोजनकारके । बन्धे च **चारकः** । पु० । चर—गमने । ण्वुल्प्रत्ययः । "चारकः पालकेऽश्वादेः

गृहासक्ते पक्षिमृगे छेको नागरिके त्रिषु ।
कम्बौ जलकरङ्कः स्यान्नारिकेलफलेऽपि च ॥ २२ ॥
जैवातृकः कृशे चन्द्रे दीर्घायुषि च स त्रिषु ।
जालिका वस्त्रभित्कूटकृत्कैवर्ते च जालिकः ॥ २३ ॥
जङ्घायामद्रिभित्तौ च खनित्रे ग्रावदारणे ।
कपित्थे चास्त्रियां टङ्कष्टुण्टुकावल्पशोणकौ ॥ २४ ॥

स्यात्सञ्चारकबन्धयोः" इति मेदिनी । "चारकोऽश्वादिपाले स्याद्बन्धे सञ्चारकेऽपि च" इति हैमः ॥ नाटकाङ्के नाटकाङ्गभेदे । अपिशब्दात् हस्तिकर्णमूले च **चूलिका** । स्त्री० । चुल—समुच्चये । ण्वुल्प्रत्ययः । पृषोदरादित्वात् दीर्घः । "चूलिका नाटकस्याङ्गे कर्णमूले च दन्तिनाम्" इति विश्वः । "चूलिका नाटकाङ्केऽकारिणः कर्णमूले च" इति हैमः ॥ चित्रके चित्रकवृक्षे । व्याघ्रः द्वीपिविशेषः । एरण्डः तयोः । चकारात् लेख्ये अद्भुते तिलके आकाशे कुष्ठभेदे नानावर्णे च **चित्रकम्** । न०पु० । चित् त्रायते । त्रै—पालने । कप्रत्ययः । वा तलोपः । चित्र—चित्रीकरणे । अच्प्रत्ययो वा । "चित्रकं तिलके ना तु व्याघ्रभिच्चञ्चुपाठिषु" इति मेदिनी । "चित्रकस्तु चित्रकारे द्रुमौषधिविशेषयोः" इति हैमः ॥ २१ ॥ गृहासक्ते गृहेषु दारेषु वा गेहे आसङ्गयुक्ते । पक्षिमृगे पक्षिणि मृगे च । नागरिके नागरे च । त्रि० । **छेकः** । पु० । छो—छेदने । इकन्प्रत्ययः । "छेको गृहाश्रितमृगे पक्षिणोर्नागरे त्रिषु" इति मेदिनी । छेको विदग्धे विश्वस्ते मृगनीडजयोरपि" इति हैमः । कम्बौ शङ्खे । नारिकेलफले तन्नामकफलविशेषे । अपिशब्दात् मेघे जललतायां च **जलकरङ्कः** । पु० । जलस्य करङ्क इवाधारः, जले करङ्क इव वा । "अथो जलकरङ्कः स्यान्नालिकेरफलेऽम्बुजे । शङ्खे जललतायां च वारिवाहे च कीर्तितः" इति मेदिनी ॥ २२ ॥ कृशे अल्पे, सूक्ष्मे च । चन्द्रे दीर्घायुषि दीर्घायुष्के । त्रि० । चकारात् औषधे कर्पूरे च **जैवातृकः** । पु० । जीव—प्राणधारणे । आतृच्प्रत्ययः । ततः कण् । वृद्धिश्च । "जैवातृकः पुमान् सोमे दीर्घायुः कृषयोस्त्रिषु" इति मेदिनी ॥ वस्त्रभित् वस्त्रभेदः । कूटकृत् दम्भभेदः ॥ तयोः **जालिका** । स्त्री० । "आनाये दम्भभेदे च वस्त्रभेदे च जालिका" इति विश्वः । कैवर्ते धीवरे । कैवर्ताविति क्वचित् पाठः । चकारात् वागुरिके जालजीविनि मर्कटके च **जालिकः** । पु० । जालेन चरति । जालात् ठक्प्रत्ययः । "जालिको वान्यबद्धग्रामजालिजालोपजीविनोः" इति मेदिनी ॥ २३ ॥ जङ्घायाम् अद्रिभित्तौ पर्वतभित्तौ खनित्रे अस्त्रभेदे । ग्रावदारणे पाषाणभेदने, अस्त्रे च । कपित्थे नीलकपित्थे । चकारात् कोपे कोषे खड्गे चतुर्माषकरूपे परिमाणे दर्पे च **टङ्कः** । पु० न० । टकि—गतौ । घञ्प्रत्ययः, अच् वा । "टङ्को नीलकपित्थे च खनित्रे टङ्कगेऽस्त्रियाम् । जङ्घायां स्त्री पुमान् कोपे कोपासिग्रावदारणे" इति मेदिनी ॥ अल्पः क्षुद्रः । शोणकः शोणकवृक्षः । तयोः **टुण्टुकः** स्यात् । पु० । टुटु—गतौ । उप्रत्ययः । स्वार्थे कन् च । "टुण्टुकः शोणकाल्पयोः" इति मेदिनी ॥ २४ ॥

**तिलकं चित्रके क्लोम्नि ना तरौ तिलकालके।**
**गृहदारौ तण्डकोऽस्त्री समासप्रायवाचि च ॥ २५ ॥**
**तुरुष्कः सिह्लके देशे प्राण्यङ्गे त्रितये त्रिकम्।**
**कूपाङ्गे स्त्री तिक्तशाकः खदिरे वरुणद्रुमे ॥ २६ ॥**
**दैत्ये ना कर्णधारे च तारकं दृशि भे न ना।**
**द्विकौ काकचक्रवाकौ पृश्न्यां कुन्दे दलाढकः ॥ २७ ॥**

चित्रके नानावर्णे । क्लोम्नि बाह्वोर्मध्ये स्थानभेदे । तदुक्तम् । "अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति । जलवाहिशिरामूलं तृष्णास्थानं मतं बुधैः" इति । तरौ वृक्षे । तिलकालके च । पु० । तथा नासादौ धार्ये चन्दनादिविशेषके । पु० न० । प्रधाने । त्रि० । "रघुकुलतिलकः" इति नाटकम् । **तिलकम्** । न० । तिल-स्नेहे । क्वुन्प्रत्ययः । इवार्थे स्वल्पार्थे वा कन्। "तिलको द्रुमरोगाश्वभेदेषु तिलकालके। क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके" इति मेदिनी। "तिलकोऽश्वद्रुमभिदोः पुण्ड्रके तिलकालके । तिलकं रुचके क्लोम्नि" इति हैमः॥ गृहदारौ गृहदारुणि । क्वचित् "गृहकारौ" । समासप्रायवाचि समासबहुलवाक्ये । चकारात् खञ्जने फेने तरुस्कन्धे मायाबहुले उपघातके जने परिष्कारे च **तण्डकः** । पु० न० । तडि-आघाते । ण्वुल्प्रत्ययः । "तण्डकः खञ्जने फेने समासप्रायवाचि च । गृहदारुतरुस्कन्धमायाबहुलकेष्वपि" इति मेदिनी। "तण्डकस्तु समस्तपदजातके । तरुस्कन्धे वेश्मदारुमायाबहुलयोरपि । फेनखञ्जनयोश्च" इति हैमः ॥२५॥ सिह्लके वृकधूपाख्ये गन्धद्रव्ये। देशे देशविशेषे च । **तुरुष्कः** । पु० । तुर-वेगे । उसिक्प्रत्ययः । स्वार्थे कन् च । इसुसोरिति षत्वम् । "तुरुष्कः सिह्लके म्लेच्छजातौ देशान्तरेपि च" इति मेदिनी।"तुरुष्कस्तु देशे श्रीवाससिह्लयोः" इति हैमः ॥ प्राण्यङ्गे पृष्ठवंशाधोभागे,कटीभागे च।त्रितये त्रित्वसङ्ख्यायाम्।कूपाङ्गे कूपस्य नेमौ च । स्त्री० । तथा त्रिफलायाम् त्रिकटुनि-वातादिषु मिलितेषु गोक्षुरवृक्षे च । **त्रिकम्** । न० । त्रयाणां समूहः । कन्प्रत्ययः । त्रिषु कायति । कै-शब्दे । कप्रत्ययश्च । "त्रिकं पृष्ठाधरे त्रये" इति मेदिनी । त्रिका कूपस्य नेमौ स्यात्त्रिके पृष्ठाधरे त्रये इति हैमः ॥ खदिरे वरुणद्रुमे वरुणवृक्षे च।**तिक्तशाकः** । पु०। तिक्तः शाकोऽस्य । "तिक्तशाकस्तु खदिरे वरुणे पत्रसुन्दरे" इति मेदिनी । तथा विश्वः। "तिक्तशाकस्तु पत्रसुन्दरे। वरुणे खदिरे" इति हैमः ॥ २६॥ दैत्ये तन्नामके असुरे। कर्णधारे नाविके च । पु० । दृशि नेत्रे भे नक्षत्रे च । न० स्त्री०।**तारकम्**। न० । तारयति । तॄ-तरणे । णिच् । ण्वुल्प्रत्ययः । "तारको दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि । कनीनिकायामृक्षे च न पुमान् त्रातरि त्रिषु" इति मेदिनी ॥ काकः प्रसिद्धः । चक्रवाकः स्वनामाख्यातः खगः । तयोश्च । द्वित्वसङ्ख्यायाम् तद्वति च । न०। "एकं द्विकं त्रिकं च" इति कारिका । **द्विकः** । पु० । द्वौ कौ ककारौ यत्र । "द्विकः काके च कोके च" इति विश्वः। "द्विकः स्यात्काककोकयोः" इति हैमः ॥ पृश्न्यां खर्वदुर्बलास्थिके ;। कुन्दे पुष्पवृक्ष-

**नरको निरये दैत्ये नौवाहे स्यान्नियामकः ।**
**सभ्ये गुरौ च नवफलिका नवरजस्यपि ॥ २८ ॥**
**नालीकौ पद्मनाराचौ वृन्देऽपि पेटकोऽस्त्रियाम् ।**
**सौभाग्येऽपि पताका स्यात्पङ्कोऽस्त्री कर्दमांहसोः ॥ २९ ॥**
**पञ्चालिका वस्त्रकृतपुत्रिकागीतभेदयोः ।**
**मणिदोषे शिलाभेदे पुलको लोमहर्षणे ॥ ३० ॥**

भेदे च । तथा स्वयञ्जाततिलवृक्षे नागकेशरे शिरीषे करिकर्णे फेने खातके गैरिके च **दलाढकः** । पु० । दलेनाढक इव । "दलाढकः स्वयञ्जाततिले पृश्न्यां च गैरिके । फेनखातकयोर्नागकेशरे च महत्तरे" इति मेदिनी। दलाढकस्तु कुन्दे स्यात्करिकर्णशिरीषयोः । स्वयञ्जाततिले फेने खातके नागकेशरे । वात्यायां पृश्निकायां च गैरिके च महत्तरे" इति विश्वः।हैमेऽप्येवम् ॥२७॥ निरये पापानां दुःखभोगस्थानभेदे, सञ्जीवप्रभृतौ च । तेषां भेदा बौद्धसमये बहुधा प्रपञ्चिताः । दैत्ये असुरे । **नरकः** । पु० । नॄ—नये । वुन्प्रत्ययः । "नरकः पुंसि निरये देवारातिप्रभेदयोः" इति मेदिनी । तथा विश्वहैमौ ॥ नौवाहे पोतवाहे, नियन्तरि च । त्रि० । **नियामकः** । पु० । निपूर्वयम—परिवेषणे । ण्वुल्प्रत्ययः । "नियामकः कर्णधारे पोतवाहे नियन्तरि" इति मेदिनी । तथा विश्वहैमौ ॥ सभ्ये सामाजिके, विश्रब्धे च । गुरौ नवरजसि नवजातरजोङ्गनायाम् । अपिशब्दात् नूतने रक्तपुनर्नवायां च **नवफलिका** । स्त्री० । नवफलमस्त्यस्य । ठन् प्रत्ययः । "नवफलिका स्त्रीनव्ये नवजातरजोङ्गनायां च" इति मेदिनी । तथा विश्वः ॥ २८ ॥ पद्मं पद्मषण्डम् । नाराचः शरभेदः । तयोः । तथा शरीरे च **नालीकः** । पु० । न० । नाल्या कायति । कै—शब्दे, क—शब्दे वा । अच् प्रत्ययः । "नालीकः शरशल्यास्त्रेऽप्यब्जषण्डे नपुंसकम्" इति मेदिनी । "नालीकं शरखण्डेऽब्जे नालीकः शरशल्ययोः" इति विश्वः । "नालीकोऽङ्गे शरे शल्ये नालीकं पद्मवर्धने" इति हैमः ॥ वृन्दे समूहे, कलहे वा । अपिशब्दात् पुस्तकादीनां स्थापनार्थं वेत्रादिनिर्मिते पदार्थे समूहे च **पेटकः** । पु० न० । पिट—सङ्घाते । ण्वुल्प्रत्ययः।"पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके", इति विश्वमेदिन्यौ । "पेटकस्त्रिषु वृन्देपि" इति कोषान्तरम् ॥ सौभाग्ये प्रियत्वे । अपिशब्दात् वंशोपरि देये त्रिकोणाकारे वस्त्रखण्डे । नाटकाङ्गे अङ्गे केतौ छन्दोग्रन्थोक्तलघुगुरुव्यक्तिज्ञानार्थं चक्रभेदे च **पताका** स्यात् । स्त्री० । पत्यते बोध्यते योधादिभेदोऽनया । पत—गतौ । आकन् प्रत्ययः । "पताका वैजयन्त्यां च सौभाग्यनाटकाङ्कयोः" इति मेदिनी । "पताकाङ्के ध्वजे केतौ सौभाग्ये नाटकांशके" इति हैमः॥ कर्दमः जम्बालः । अंहस् पापम् । तयोश्च **पङ्कः** । पु० न० । पचि—विस्तारे। घञ् प्रत्ययः।कुत्वम् । "पङ्कः कर्दमपापयोः" इति विश्वः। "पङ्कोऽघे कर्दमे" इति हैमः ॥२९॥ वस्त्रकृतपुत्रिका वस्त्रेण कृता पुत्तलिका। गीतभेदः गायनविशेषः । तयोश्च **पञ्चालिका** । स्त्री० । पञ्चं प्रपञ्चमलति पर्याप्नोति । अल—निवा-

**पर्यस्त्यामपि पल्यङ्कः प्रियको मृगनीपयोः ।**
**पुष्पकं कङ्कणेऽपि स्यात्पराको व्रतखड्गयोः ॥ ३१ ॥**
**चामरे ग्रन्थभेदे च विस्तरेऽपि प्रकीर्णकम् ।**
**सितच्छत्राब्जयोः पुण्डरीकं पुंसि तु दिग्गजे ॥ ३२ ॥**
**व्याघ्रे च कोषकारे च पाकौ पचनशावकौ ।**
**पुष्पलकौ गन्धमृगे कीलके क्षपणेऽपि च ॥ ३३ ॥**

रणे, भूषणे वा । अण्प्रत्ययः, कश्च । "पञ्चालिका भवेद्वस्त्रपुत्रिकागीतिभेदयोः" इति विश्वः॥ मणिदोषे मणिजातदोषे । शिलाभेदे पर्वतभेदे । लोमहर्षणे लोमोद्गमे च। तथा कृमिभेदे हरिताले गजान्नपिण्डे गन्धर्वे च **पुलकः** । पु० । पुल—महत्त्वे । कप्रत्ययः । ततः स्वार्थे कन् वा । "पुलकः कृमिभेदे प्रस्तरभेदे च मणिदोषे । रोमाञ्चे हरिताले गजान्नपिण्डे च गन्धर्वे" इति मेदिनी ॥ ३० ॥ पर्यस्त्यां शय्यायाम् । अपिशब्दात् मञ्चे पर्यङ्के वृष्यां च **पल्यङ्कः** । पु०। परिगतोऽङ्कम् । रस्य लः । "पल्यङ्को मञ्चपर्यङ्कवृषीपर्यास्तिकासु च" इति मेदिनी ॥ मृग' हरिणः । नीपः कदम्बः। तयोश्च । तथा भ्रमरे कुङ्कुमे असनवृक्षे च **प्रियकः** । पु०। प्रियात् संज्ञायां कन्प्रत्ययः। "प्रियकः प्रीतशालके। नीपे चित्रमृगे चालौ प्रियङ्गौ कुसुमेऽपि च" इति मेदिनी । "प्रियकस्तु चञ्चरीके नीपे कश्मीरजन्मनि । प्रियङ्गौ चित्रहरिणे पीतचालतरावपि" इति हैमः ॥ कङ्कणे करभूषणे, भूषणमात्रे वा । अपिशब्दात् कुबेरस्य विमाने नेत्ररोगभेदे रसाञ्जने लौहकांस्ये मृदङ्गारयोः शकव्यां कासीसे च **पुष्पकं** स्यात् । न० । पुष्प—विघसने । अच्प्रत्ययः । स्वार्थे कन् च । पुष्पकं रीतिकानेत्ररोगयो रत्नकङ्कणे । कुबेरस्य विमाने च कासीसे च रसाञ्जने। लौहकांस्ये मृदङ्गारशकव्यां च नपुंसकम्।" इति मेदिनी । तथा हैमः ॥ व्रतं पुण्यसाधनम् उपवासादिनियमभेदः, द्वादशाहोपवाससाध्यः, प्रायश्चित्तरूपो व्रतभेदो वा। "यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् । व्रतं पराको नाम"इति। खड्गः असिः । तयोश्च **पराकः** स्यात् । पु० । "पराकस्तु व्रते खड्गे" इति मेदिनी ॥३१॥ चामरे चमरपुच्छकृतव्यजने । ग्रन्थ भेदे विस्तरे। अपिशब्दात् विक्षिप्ते भिन्नजातीयैर्मिश्रिते अश्वे च **प्रकीर्णकम्**। न०। प्रपूर्वकृ—क्षेपणे । भावे कर्मणि वा क्तप्रत्ययः । स्वार्थे कन् । "प्रकीर्णकं ग्रन्थभेदे चामरे विस्तरे हये" इति विश्वः । प्रकीर्णकं चामरे स्याद्विस्तारे ना तुरङ्गमे''इति मेदिनी । सितच्छत्रं श्वेतच्छत्रम् । अब्जं पद्मम्। तयोः । दिग्गजे अग्निकोणस्थे दिग्भागे॥३२॥ व्याघ्रे कोषकारे शब्दादिसमूहकारके च । पु० । **पुण्डरीकम्** न०। पुडि—उत्सर्गे । ईकृ प्रत्ययः । "पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे । पुंसि व्याघ्रेऽग्निदिग्भागे कोषकारान्तरेऽपि च" इति मेदिनी । तथा अजयः ॥ पचनम् अन्नपचनम् । शावकः शिशुः । तयोश्च । तथा क्लेदने क्लेदनेन निष्पत्तौ परिणामे स्थाल्यादौ पेचके राष्ट्रादिभङ्गे भये च **पाकः** । पु० । पच—पाके । भावे घञ्प्रत्ययः । पा—पाने। कप्रत्ययो वा । "पाकः परिणतौ शिशौ । केशस्य रजसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च इति

**कपर्दे रज्जौ राजीवे बीजकोशे वराटकः ।**
**वृन्दारकौ सुरश्रेष्ठौ गिरिमेघौ बलाहकौ ॥ ३४ ॥**
**पिञ्जे ना सिकताकर्णभूषाकन्यासु बालिका ।**
**शिवमल्ल्यां बकः कह्वे राज्ञि भट्टारकः सुरे ॥ ३५ ॥**
**भूमिका रचनायां च मूर्त्यन्तरपरिग्रहे ।**
**मधुको वल्लिभेदे च बर्हिचन्द्रे च मेचकः ॥ ३६ ॥**

मेदिनी । "पाकः पचने शिशुदैत्ययोः" इति हैमः ॥ गन्धमृगे गन्धप्रधाने मृगविशेषे । "सीम्नि पुष्यलको हतः" इति । कीलके स्तम्भे, गवां दोहनार्थं बन्धनस्तम्भे, गवां कण्डूयनार्थं स्तम्भे वा । क्षपणे निर्ग्रन्थे च । अपिशब्दात् संन्यासिनि च **पुष्यलकः** । पु० । पुष–पोषणे । इन् प्रत्ययः । पुषिः पुष्टिस्तस्यै अलति पर्याप्नोति । अल–गतौ । ण्वुल्प्रत्ययः । "अथ पुष्यलको गन्धमृगे क्षपणकीलयोः" इति मेदिनी। क्वचित्तु "**पुष्कलक**" इति पाठः । "स्मृतः पुष्कलको गन्धमृगे क्षपणकीलयोः" इति विश्वः । तथा हैमश्च ॥ ३३ ॥ कपर्दः कपर्दकः । रज्जुः रश्मिः । राजीवं पद्मम् । बीजकोशः पद्मबीजाधारः । तत्र च **वराटकः** । पुं० । वरमल्पमटति । अट–गतौ । ण्वुल्प्रत्ययः । "वराटकः पद्मबीजकोशे रज्जौ कपर्दके" इति मेदिनी । तथा हैमः । "वराटकः स्थूलरज्जौ पद्मबीजे कपर्दके" इति विश्वः । "वराटकानां दशकद्वयं यत्" इति लीलावती ॥ सुरः देवः । श्रेष्ठः अतिशयेन प्रशस्तः मुख्यो वा । तयोः । तथा मनोहरे च । त्रि० । **वृन्दारकः** । पु० । वृन्दशब्दात् शृङ्गवृन्दाभ्यामारकन्निति आरकन् प्रत्ययः। "वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु" इति मेदिनी । गिरिः पर्वतः । मेघः जलधरः । तयोः । बकपक्षिणि च । स्त्रियां टाप् । **बलाहकः** । पु० । वारि वहति । पृषोदरादित्वात् साधुः । "बलाहको गिरौ मेघे दैत्यनागविशेषयोः" इति मेदिनी ॥ ३४ ॥ पिञ्जे बले । पु० । सिकता वालुका । कर्णभूषा कर्णालङ्कारविशेषः । कन्या दशवर्षानारी । तत्र च **बालिका** । स्त्री० । बल–समृद्धौ । अण्प्रत्ययः । स्वार्थे कन् च । "अङ्गुरीकह्वीबरवलये पुंसि बालिका । बालायां वालुकापत्रकाहले कर्णभूषणे" इति मेदिनी । "बालिका कर्णभूषणे । बालिका वालुका बाला पिञ्जोलायां" इति हैमः ॥ शिवमल्ल्यां बकवृक्षे । कह्वे च । तथा भीमसेनहतराक्षसभेदे श्रीकृष्णहतदैत्यभेदे कुबेरे स्वनामाख्यातविहगे च **बकः** । पु० । बकि गमने । अच्प्रत्ययः । पृषोदरादित्वात् नलोपः। "बकस्तु बकपुष्पे स्यात् कह्वे शीदे च रक्षसि" इति मेदिनी ॥ राज्ञि नृपे । सुरे देवे । अथवा सूरे सूर्ये । **भट्टारकः** । पु० । भट–भाषणे । क्विप् । तॄ तरणे । णिच्ण्वुल्प्रत्ययौ । "भट्टारको नृपे नाट्यवाचि देवे तपोधने" इति मेदिनी ॥ ३५ ॥ रचनायां मूर्त्यन्तरपरिग्रहे । "अन्यरूपैर्यदन्यस्य प्रवेशस्तत्र भूमिका इत्युक्ते" नाट्ये अभिनेयपात्रादिवेशान्तरग्रहणे। चकारात् ग्रन्थे वक्तव्यकथोद्घाते। कक्षायां च। **भूमिका**। स्त्री०।

**हारभेदे माणवको बाले कुपुरुषे वटौ ।**
**मयूरकोऽपामार्गे च हंसभेदेऽपि मल्लिकः ॥ ३७ ॥**
**युतकं वस्त्रभेदे च यौतके संशयेऽपि च ।**
**यमकं संयमे शब्दालङ्कारे यमजे त्रिषु ॥ ३८ ॥**
**याज्ञिको याजके दर्भे बिले रोकं रुचौ पुमान् ।**
**राका दृष्टरजःकन्या कच्छपूर्णेन्दुपूर्णिमाः ॥ ३९ ॥**

भूमिरिव कायति। कै—शब्दे। क प्रत्ययः।"भूमिका रचनायां स्याद्वेशान्तरपरिग्रहे" इति मेदिनी। "भूमिका तु रचनायां रूपान्तरपरिग्रहे" इति हैमः ॥ वल्लिभेदे लताविशेषे। चकारात् यष्टिमधौ मधुपर्णीवृक्षे च। **मधुका।** स्त्री०। मध्विव।मधुका इवार्थे कन्प्रत्ययः।"मधुका मधुपर्ण्यां स्त्री" इति मेदिनी।"मधुर्यष्टिश्च मधुको वल्लिश्रीवदपक्षिणोः" इति हैमः।बर्हिचन्द्रे मयूरचन्द्रके। चकारात् अन्धकारे स्रोतोऽञ्जने मेघे श्यामवर्णे च **मेचकः** । पु० । मच—कल्कने । वुन्प्रत्ययः । पृषोदरादित्वात् साधुः । "मेचकस्तु मयूरस्य चन्द्रके श्यामले पुमान् । यदुक्तं वाच्यवत् क्लीबं स्रोतोऽञ्जनान्धकारयोः" इति मेदिनी । "मेचकः श्यामले कृष्णे तिमिरे बर्हिचन्द्रिके" इति हैमः ॥ ३६ ॥ हारभेदे मुक्तावलिविशेषे। बाले कुपुरुषे कुत्सितपुरुषे नीचजने वा । वटौ ब्रह्मचारिणि च। **माणवकः** । पु०। मनोरपत्यम्। अण्प्रत्ययः । अल्पार्थे णत्वम् ।पुनः स्वार्थे कन् च । "**माणवको** हारभेदे बाले कुपुरुषे वटौ" इति मेदिनी ॥ अपामार्गे स्वनाम्ना ख्याते वृक्षे । चकारात् मयूरशिखावृक्षे । पु० । तुत्थाञ्जने च । न० । **मयूरकः** । पु० । मी—गमने, बोधने वा । ऊरन्प्रत्ययः । स्वार्थे कन् च । "मयूरकोऽप्यपामार्गे क्लीबं तुत्थाञ्जने पुनः" इति मेदिनी । मयूरकोऽप्यपामार्गे तुत्थके तु मयूरकम् इति विश्वः । तुत्थके इत्यत्र क्वचित् तुच्छके इति पाठः ॥ हंसभेदे धृतराष्ट्र इति ख्याते हंसविशेषे । धृतराष्ट्रहंसस्तु कृष्णवर्णदेहः आलोहितचञ्चुचरणः तत्र । पु० । अपिशब्दात् मल्लिकायां च । स्त्री० । **मल्लिकः** । पु० । मल्ल—धृतौ । इन्प्रत्ययः। संज्ञायां कन् च । "मल्लिको हंसभिद्यपि । मल्लिका तृणशून्येऽपि मीन-भृत्पात्रभेदयोः" इति मेदिनी ॥ ३७ ॥ वस्त्रभेदे स्त्रीवसनाञ्चले । यौतके विवाहकाले लब्धे धने । संशये सन्देहे । अपिशब्दात् युगे चरणाग्रे मैत्रीकरणे संश्रवे शूर्पाग्रे च । न० । संयुक्ते। त्रि० । **युतकम्** । यु—मिश्रणे । क्तप्रत्ययः । युत—भासौ । कप्रत्ययो वा । "युतकं संशये युगे । नारिवस्त्राञ्चले युक्ते चरणाग्रे च यौतके" इति मेदिनी। "युतकं तु यौतके युग्मयुक्तयोः । संशये चरणाग्रे स्त्री वस्त्रभेदे पटाञ्चले" इति हैमः ॥ संयमे व्रताङ्गतया पूर्वदिनकर्तव्ये नियम-भेदे, इन्द्रियनिग्रहे वा । शब्दालङ्कारे स्वनामाख्याते अलङ्कारविशेषे । तल्लक्षणमुक्तम्—"स-त्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते" इति । यमजे एकदा एकत्र गर्भजातयोश्च । त्रि० । **यमकम्** । न० । यम—उपरतौ । ण्वुल् प्रत्ययः । "यमकं यमजे शब्दालङ्कारे पुंसि संयमे" इति मेदिनी । "यमको यमजे व्रते । यमकं वागलङ्कारे" इति मः ॥ ३८ ॥ याजके यागकर्तरि । दर्भे कुशे । तथा चात् खदिरे पलाशे ऋत्विगादौ च

**नीलवस्त्रेऽक्षितारायां लोचको निर्मितौ त्रिषु ।**
**नगरीशाखयोर्लङ्का करिण्यामपि बन्धकी ॥ ४० ॥**
**गुरावनाथे गरुडे जिने विघ्ने विनायकः ।**
**वृषाङ्कौ शिवभल्लातौ वञ्चकौ धूर्तफेरवौ ॥ ४१ ॥**

**याज्ञिकः** । पु० । यज्ञाय हितः, यज्ञः प्रयोजनमस्य वा । ठक्प्रत्ययः । "याज्ञिको याजके कुशे" इति विश्वः। "याज्ञिकः याजके च कुथे च" इति मेदिनी ॥ बिले छिद्रे, गर्ते वा।न०। रुचौ दीप्तौ । पु० । तथा नौकायाम् क्रयभेदे च **रोकम्** न० । रु—गतौ । कन्प्रत्ययः । रुच—दीप्तौ । घञ् प्रत्ययः । निपातनात् कुत्वं च । "तन्मे रोकं च शोकं च" इति स्मृतिः । "रोको दीप्तौ बिले रोकं नौकाक्रयणभेदयोः" इति विश्वः । **रोकस्तु** क्रयभि-द्दीप्त्योः रोकं ना विमले बिले" इति मेदिनी । "रोकं क्रपणभेदे ना विमले च **बिले** चरे । रोकोंशौ" इति हैमः ॥ दृष्टरजःकन्या नवजातरजस्का कन्या । कच्छः जलप्रान्तः । पूर्णेन्दुः प्रतिपद्युक्ता पौर्णमासी । पूर्णिमा पूर्णचन्द्रयुक्ता तिथिः । तत्र च **राका** । स्त्री० । रा—दाने, ग्रहणे वा । कप्रत्ययः । "राका नद्यन्तरे कच्छे नवजातरजःस्त्रियाम् । सम्पूर्णेन्दु-तिथौ" इति मेदिनी । "राका कच्छे दृष्टरजःकन्यायां सरिदन्तरे । पूर्णेन्दुपूर्णिमायां च" इति हैमः ॥ ३९ ॥ नीलवस्त्रे नील्या रञ्जिते वस्त्रे । अक्षितारायां नेत्रमध्यस्थकनीनिकायाम् । निर्मितौ रचनायाम् । तथा मांसपिण्डे कज्जले स्त्रीणां ललाटाभरणे कर्णपूरे कदल्यां सूर्वायां सर्पकञ्चुके च **लोचकः** । त्रि० । लोच—दर्शने । ण्वुल्प्रत्ययः । "लोचको मांसपिण्डेऽक्षि-तारकायां च कज्जले । ललाटाभरणे स्त्रीणां कदलीनीलवस्त्रयोः । निर्बुद्धौ कर्णपूरे च मौर्व्यां भ्रूश्लथचर्मणि" इति मेदिनी । "लोचको नीलवाससि कज्जले मांसपिण्डेक्षितारे स्त्रीभालभूषणे । निर्बुद्धौ कर्णिकामोचाज्यासु प्रश्लथचर्मणि" इति हैमः ॥ नगरी स्वनामाख्याता पुरी । शाखा लता । तयोः । तथा शाकिन्याम् । कुलटायां च । **लङ्का** । स्त्री० । लक—आस्वादे । अच् प्रत्ययः । मुम् च । "लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च" इति मेदिनी ॥ करिण्यां हस्तिन्याम् । अपिशब्दात् पुंश्चल्यामसत्यां स्त्रियां च । बन्धकी।स्त्री०बन्ध—बन्धने।ण्वुल्प्रत्ययः । ङीप्। "पुंश्चल्यां स्यात्तु **बन्धकी**" इति मेदिनी ॥ ४० ॥ गुरौ अनाथे अशरणे । गरुडे जिने बुद्धे । विघ्ने तथा चात् गणेशे विनययुक्तं च **विनायकः** । पु० । विपूर्वनी—प्रापणे । ण्वुल् प्रत्ययः । "विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ"इति मेदिनी॥ शिवः शङ्करः । भल्लातः स्वनामाख्यातवृक्षः । तयोः । तथा पण्डे च **वृषाङ्कः** । पु० । वृषः अङ्कोऽस्य । "वृषाङ्कः शङ्करे साधौ भल्लातकमहोक्षयोः" इति मेदिनी । "वृषाङ्कः साधुभल्लातशङ्करेषु महल्लके" इति विश्वः ॥ धूर्तः खलः । फेरवः शृगालः । तयोः । तथा गृहबभ्रौ प्रतारे च **वञ्चकः** । पु० । वञ्चु वञ्चने णिच्ण्वुल्प्रत्ययौ । "वञ्चकस्तु खले धूर्ते गृहबभ्रौ च जम्बुके" इति

**वैदेहको वाणिजके वैश्यायामपि शूद्रजे ।**
**वैलक्ष्याकार्ययोः क्लीबं व्यलीकं त्रिषु नागरे ॥ ४२ ॥**
**वाह्लीकं बाह्लिकं धीरहिङ्गुनोर्नाऽश्वदेशयोः ।**
**विपाकः परिणामेऽपि तिलकेऽपि विशेषकः ॥ ४३ ॥**
**शङ्कुः कीलकसङ्ख्यास्त्रजलजन्तुषु दृश्यते ।**
**शिशुकः शिशुमारेऽपि शुकं ग्रन्थिशिरीषयोः ॥ ४४ ॥**

मेदिनी ॥ ४१ ॥ वाणिजके वणिग्जने । वैश्यायां शूद्रजे, शूद्रायां वैश्याज्जाते च । अपिशब्दात् विदेहराजे जनके नृपे च **वैदेहकः** । पु० । विदेहे भवः । अण् प्रत्ययः । ततः कन् च । वैदेहिकोऽप्यत्र । "वैदेहको वाणिजके शूद्राद्वैश्यासुतेऽपि च" इति मेदिनी ॥ वैलक्ष्यं लज्जास्वभाववैलक्षण्यम् । अकार्यमपराधः । तयोः । न० । नागरे च त्रि० । व्यलीकम् । विपूर्वं अल—भूषणे । ईकक् प्रत्ययः । "व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने । ना नागरे" इति मेदिनी । "व्यलीकं व्यङ्गवैलक्ष्याप्रियाकार्येषु पीडने" इति हैमः ॥ ४२ ॥ धीरः पण्डितः । हिङ्गु रामठम् । तयोः । न० । अश्वः तुरङ्गमः । देशः स्वनामाख्यातदेशभेदः । तयोश्च । पु० । **वाह्लीकम्** । न० पु० । **वाह्लिकम्** अप्यत्र । वह प्रापणे । ल्विण्प्रत्ययः । स्वार्थे कन् च । "वाह्लीकं । वाह्लिकं धीरहिङ्गुनोः । द्वावेतौ पुंसि देशस्य प्रभेदे तुरगान्तरे" इति मेदिनी । "बाह्लिकः। देशभेदेऽश्वभेदे च बाह्लिकं हिङ्गुकुङ्कुमम्" इति हैमः ॥ परिणामे प्रकृतेरन्यथाभावे विकारे । कर्मफलपरिणामे जात्यायुर्भोगरूपे पदार्थे । अपिशब्दात् पचने खेदे अर्थालङ्कारभेदे च **विपाकः** । पु० । विपूर्वपच—पाके । भावे घञ्प्रत्ययः । कर्मणि घञ्प्रत्ययो वा । "विपाकः पचने खेदे कर्मणो विसदृक्फले" इति मेदिनी । "विपाकः परिणामे च दुर्गतिस्वादुनोरपि" इति हैमः ॥ तिलके ललाटकृते तिलके । अपिशब्दात् विशेषकर्तरि । त्रि० । "त्रिभिर्ज्ञेयं विशेषकम्" इत्युक्ते एकवाक्यतापन्ने श्लोकत्रये च । न० । **विशेषकः** । पु० न० । विपूर्वशिष—परिशेषीकरणे । णिच्ण्वुल्प्रत्ययौ । "विशेषकोऽस्त्री तिलके विशेषयितरि त्रिषु" इति मेदिनी "विशेषकः स्यात्तिलके विशेषावहकेऽपि च" इति हैमः ॥ ४३ ॥ कीलकः गवां दोहनार्थं बन्धनस्तम्भः गवां कण्डूयनार्थं निहितः स्तम्भो वा। "अर्काङ्गुला तु सूच्यग्रा काष्ठा द्व्यङ्गुलमूलिका।शङ्कुसंज्ञा भवेत्"इति । सङ्ख्या दशकोटिसङ्ख्या । अस्त्रं शल्यास्त्रम् । जलजन्तुः जलस्थो ग्राहादिप्राणिविशेषः, मत्स्यभेदो वा । तत्र च ।तथा मेढ्रे महादेवे कलुषे पत्रशिराजाले च शङ्कुः । पु०। दृश्यत इत्यन्वयः । शकि—शक्तौ । उण्प्रत्ययः । "शङ्कुः सङ्ख्यास्त्रयादोभित्कीलेशकलुषेषु ना" इति मेदिनी । शिशुमारे जलजन्तुभेदे । अपिशब्दात् बालके स्वल्पे च **शिशुकः** । पु० । शिशुरिवेति इवार्थे कन्प्रत्ययः । "शिशुकः शिशुमारे स्याद्बालकोल्पिनोरपि" इति मेदिनी । "शिशुकः पादपे बाले शिशुमारे" इति हैमः ॥ ग्रन्थिः ग्रन्थिपर्णः । शिरीषः स्वनामाख्यातो वृक्षः, शोनक-

**कीरे रावणपात्रे ना वचाऽपि शतपर्विका ।**
**शल्कश्चूर्णेऽपि शूकस्तु स्यादनुक्रोशशृङ्गयोः ॥ ४५ ॥**
**शिलाटको विलेपेऽट्टे शुल्को यौतकदानयोः ।**
**श्वाविद्वृक्षौ च शल्लक्यौ मणौ खड्गे च सस्यकः ॥ ४६ ॥**
**शीधौ च शीधुपाने च सरकोऽस्त्र्यथ जन्मनि ।**
**सूतकं पारदेऽप्यस्त्री सूचकौ खलकुक्कुरौ ॥ ४७ ॥**

वृक्षश्च । तयोः **शुकम्** । न० ॥ ४४ ॥ कीरे कीरपक्षिणि । रावणपात्रे च । पु० । शुक-गतौ । कप्रत्ययः । "शुको व्याससुते कीरे रावणस्य च मन्त्रिणि । ग्रन्थिपर्णे शिरीषे च **शुकं** स्याच्छोणके क्वचित्" इति विश्वः ॥ वचा स्वनामाख्यातं द्रव्यम् । तत्र च अपिशब्दात् कटुकायां दूर्वायां च । स्त्री० । वंशे इक्षुभेदे यवे च । पु० । **शतपर्विका** । स्त्री० । शतं पर्वाणि ग्रन्थयो यस्याः । कन्प्रत्ययः । आप् च । "शतपर्विका दूर्वायां वचायामपि योषिति" इति मेदिनी ॥ चूर्णे पेषणजाते रजसि, धूलौ वा । पु० । अपिशब्दात् खण्डे वृक्षवल्कले मत्स्यत्वचि च । न० । **शल्कः** । पु० । शल-गतौ । कप्रत्ययः । कस्य नेत्त्वम् । "शल्कं तु शकले वल्के" इति मेदिनी ॥ अनुक्रोशः दया । शृङ्गं तीक्ष्णाग्रः, शिखा वा । तयोः **शूकः** । स्यात् । पु० न० । शो-तीक्ष्णे । ऊकन्प्रत्ययः । "शूकोऽस्त्री शृङ्ग-दययोः" इति मेदिनी ॥ ४५ ॥ विलेपे गात्रानुलेपनद्रव्ये । अट्टे प्रासादस्योपरि गृहे, प्राचीरो-परिस्थसैन्यगृहे[1] वा । तत्र स्थिता हि नरा अन्यान् हीनतया नाद्रियन्ते इति प्राञ्चः । अति-शये च **शिलाटकः** । पु० । शिलया अटति भ्रमतीति । शिलाशब्दपूर्वक अट-गतौ । ण्वुल् प्रत्ययः । "शिलाटकः पुमानट्टे विलेपे परिकीर्तितः" इति मेदिनी ॥ यौतकं विवाहकाले लब्धं धनम् । क्वचित् यौतुकं वा । दानं प्रसिद्धं तयोः । तथा राजग्राह्यकरभेदे वरपक्षात् कन्यापक्षीयैः ग्राह्ये धने स्त्रीधनभेदे । "भगिनीशुल्कं सोदराणाम्" इतिः स्मृतिः । स्त्रीभ्यः सम्भोगार्थं देये धने । "अशुल्कोपहृतानां तु पिण्डदा वोढुरेव ते" इति स्मृतिः । पणे च **शुल्कः** । पु० न० । शुल्क-कथने । शुल्क्यते अतिसृज्यते इति । कर्मणि घञ्प्रत्ययः । "शुल्कं घट्टादिदेये स्याद्वरादर्थग्रहेऽस्त्रियाम्" इति मेदिनी ॥ श्वाविध् शल्यकम् । वृक्षः प्रसिद्धः । तयोः **शल्लकी** । स्त्री० । शल-गतौ । ण्वुल्-प्रत्ययः ङीप् च । "छत्रादिकाष्ठीशरयोः शल्लकी पशुवृक्षयोः" इति मेदिनी ॥ मणौ माणि-क्यभेदे । खड्गे च **सस्यकः** । पु० । सस-हिंसने । यत्प्रत्ययः । पुनः कन् च । "सस्यको मणिभेदे" इति मेदिनी ॥ ४६ ॥ शीधौ इक्षुरसजाते, मद्यभेदे च । "इक्षोः पक्व-रसैः सिद्धः सीधुरित्यभिधीयते" इति । शीधुपाने तन्मद्यपाने तत्पात्रे च सरकः । पु० न० । सृ-गतौ । वुन्प्रत्ययः । "सरकोऽस्त्री सीधुपाने सीधुपात्रेऽक्षुसीधुनोः" इति मेदिनी ॥ जन्मनि प्रसूताशौचे । पारदे रसराजे च । अपिशब्दात् अशौचमात्रे च **सूतकम्** । पु०

[1] प्राचीरोनाम "गजस्था मनुजैरलङ्घ्याः प्राचीरखण्डा नृपतेर्भवन्ति" इत्यत्रोक्तः ।

**युग्मे सङ्घाटिका कुट्टन्यां च गद्येऽपि हारकः ।**
**वाद्यभेदे हुडुक्कः स्याद्दात्यूहे च मदोत्कटे ॥ ४८ ॥**

**इति कान्ताः ॥**

**इन्दुलेखा गुडूच्यां च पूः सुखं स्वर्नभश्च खम् ।**
**गोमुखं लेपने वाद्यभाण्डे सर्पेऽपि दुर्मुखः ॥ ५० ॥**
**त्रिशिखं स्यात्त्रिशूलेऽपि न्युङ्खः साम्नि मनोहरे ।**
**नखं शुक्तौ कररुहे कूर्मे पञ्चनखो गजे ॥ ५० ॥**

न० । क्वचित्तु "सुतकम्" इति च । सू-प्रसवे भावे । क्तप्रत्ययः । पुनः कन् च । "ओतौ काके सूतकोऽस्त्री पारदे न द्वयोर्जनौ" इति मेदिनी ॥ खलः दुर्जनः । कुक्कुरः प्रसिद्धः । तयोः **सूचकः** । त्रि० । सूच-पैशून्ये, अन्तर्दाहे वा । ण्वुल्प्रत्ययः । "सूचकः सीवनद्रव्ये बोधके पिशुने शुनि" इति मेदिनी ॥ ४७ ॥ युग्मे युगले । कुट्टन्यां परपुरुषेण सह परस्त्रियाः समागमकारयित्र्याम् । चकारेण जलकण्टके च **सङ्घाटिका** । स्त्री० । संपूर्वघट-सङ्घटने । णिच्ण्वुल्प्रत्ययौ । "सङ्घाटिका स्त्रियां युग्मे कुट्टिन्यां जलकण्टके" इति मेदिनी ॥ गद्ये कथनीये, पद्यभिन्ने कविकृते अपादे पदसमूहे वा । न० । अपिशब्दात् चौरे कितवे शाखोटकभेदे भाजकाङ्के च । पु० ।हरणकर्तरि । त्रि० । **हारकः**।पु० । हृ-हरणे । ण्वुल्प्रत्ययः । "हारकः कितवे चौरे गद्यविज्ञानभेदयोः" इति मेदिनी ॥ वाद्यभेदे मदङ्गादिवादनीयविशेषे । दात्यूहे कालकण्ठके पक्षिभेदे। मदोत्कटे,मदोद्धटे च। हुडुक्कः स्यात्।पु०।हुड-राशीकरणे।उकन्-प्रत्ययः । कन् च । "हुडुक्को वाद्यभेदे च मत्तदात्यूहपक्षिणि"इति मेदिनी॥४८॥ इति ककान्ताः समाप्ताः । अथ खान्तानाह॥ गुडूच्यां स्वनामाख्यातायां लतायाम् । चकारात् चन्द्रकलायां तदंशनाम्न्यां सोमलतायां यमानिकायां च । **इन्दुलेखा** । स्त्री० । इन्दोर्लेखेव ।"इन्दुलेखाऽमृतासोमलताशशिकलासु च" इति मेदिनी ॥ पूः पुरम् । स्वर्नाकः । तत्र च **सुखं** स्यात् । न० । सुख-सम्पादने । घञ्प्रत्ययः । "सुखं शर्मणि नाके च सुखा पुर्यां प्रचेतसः" इति मेदिनी ॥ नभः आकाशः तत्र नभसि । चकारात् सूर्ये । पु० । इन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ संवेदने देवलोके शर्मणि च **खं** स्यात् । न० । खर्व-गतौ । डप्रत्ययः । "खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि । संवेदने देवलोके शर्म्मण्यपि नपुंसकम्" इति मेदिनी ॥ लेपने लेप इति ख्याते व्यापारे, तुरुष्कनामगन्धद्रव्ये च । वाद्यभाण्डे **गोमुखम्** । न० । गोरिव मुखमस्य । "गोमुखं कुटिलाकारे वाद्यभाण्डे च लेपने । पुंसि मातलिपुत्रे च महादेवगणान्तरे" इति मेदिनी ॥ सर्पे नागभेदे । अपिशब्दात् अश्वे वानरे दैत्यभेदे अप्रियवादिनि च । त्रि० । **दुर्मुखः** । पु० । दुष्टं मुखमस्य । "दुर्मुखः कपिभिन्नागभिदोर्ना मुखरे त्रिषु" इति मेदिनी ॥ ४९ ॥ त्रिशूले स्वनामाख्याते अस्त्रभेदे । अपिशब्दात् बिल्वे राक्षसभेदे । पु० । मण्डलान्तरे । न० । शिखात्रयवति माणवकादौ च । त्रि० । **त्रिशिखं** । स्यात् । न० ।

**आदौ प्रधाने प्रमुखं वैशाखो मन्थमासयोः।**
**काण्डे ना विशिखा रथ्या विशाखा भे गुहे पुमान्॥५१॥**
**लेखो देवेऽपि पङ्क्तौ स्त्री शिखा चूडाग्रयोरपि।**
**शाखा वेदविभागेऽपि सखा मित्रसहाययोः॥५२॥**

तिस्रः शिखाः प्रतिपत्राण्यस्य। "त्रिशिखो राक्षसे क्लीबं त्रिशूले मण्डलान्तरे" इति मेदिनी॥ साम्नि सामवेदाङ्गे। मनोहरे अतिप्रिये च। **न्युङ्खः**। पु०। निपूर्वउङ्ख—गमने, प्राप्तौ वा। अच्प्रत्ययः। "न्युङ्खः सम्यङ्मनोज्ञे च साम्नः षट्प्रणवेऽपि च" इति मेदिनी॥ शुक्तौ जलजन्तु-भेदे शङ्खे वा। कररुहे नखे च। **नखम्**। पु० न०। नखं छिद्रमत्र। "नखी स्त्री क्लीबयोः शुक्तौ नखरे पुन्नपुंसकम्" इति मेदिनी॥ कूर्मे कच्छपे। गजे हस्तिनि च। **पञ्चनखः**। पु०। पञ्च नखाः यस्य "शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमः। भक्ष्यान्पञ्चनखेष्वाहुः" इति मनुः। "पञ्चनखो गजे कूर्मे" इति विश्वः॥ ५०॥ आदौ प्रथमे। प्रधाने श्रेष्ठे च। **प्रमु-खम्**। न०। प्रकृष्टं मुखमारम्भो यस्य। "प्रमुखः प्रथमे श्रेष्ठे" इति मेदिनी। "प्रमुखं प्रथमे मुख्ये" इति हैमः॥ मन्थः मन्थनदण्डः। मासः स्वनामाख्यातो मासः। तयोश्च **वैशाखः**। पु०। विशाखानक्षत्रयुक्ता पौर्णमासी वैशाखी। सा यत्र मासे। पुनः अण् च। "वैशाखो मा-सभेदे स्यान्मन्थाने च प्रकीर्तितः" इति मेदिनी॥ काण्डे शरे, तोमरे वा। पु०। रथ्या रथी। तस्यां रथ्यायां तथा शरे च। पु०। **विशिखा**। स्त्री०। विशिष्टा विगता वा शिखा यस्याः। "विशिखा तु खनित्र्यां च रथ्यानालिकयोरपि" इति मेदिनी। "विशिखा खनित्रिकायां रथ्यायां विशिखः शरे" इति हैमः॥ भे नक्षत्रे। गुहे स्कन्दे च। पु०। **विशाखा** स्त्री०। विशाखानक्षत्रे भवः। अण् प्रत्ययः। "विशाखस्तर्कके स्कन्दे स्त्रियामृक्षे कटिल्लके" इति मेदिनी। "विशाखो याचके स्कन्दे विशाखा भे कटिल्लके" इति हैमः॥ ५१॥ देवे सुरे। पङ्क्तौ सजातीयसन्ततौ। स्त्री०। अपिशब्दात् लेखने लेख्ये आधारे पत्रे लिपौ च। **लेखः**। पु०। लिख—लिखने। कर्मणि घञ्प्रत्ययः॥ चूडा मयूरशिखा, मस्तकमध्यस्थकेश-गुच्छो वा। अग्रः प्रधानः, उत्तमो वा। तयोः। अपिशब्दात् अग्निज्वालायां च। **शिखा**। स्त्री०। शी—शयने। खक्प्रत्ययः। खस्य नेत्त्वम्। "शिखा शाखा बर्हिचूडा लाङ्गलिक्यग्र-मात्रके। चूडामात्रे शिखायां च ज्वालायां प्रपदेऽपि च" इति मेदिनी॥ वेदविभागे वेदस्य अंशे, काण्डे वा। अपिशब्दात् पक्षान्तरे बाहौ द्रुमाङ्गे च। **शाखा**। स्त्री०। शाख—व्याप्तौ। अच्-प्रत्ययः। "शाखा पक्षान्तरे बाहौ वेदभागद्रुमाङ्गयोः" इति मेदिनी॥ मित्रं स्नेहान्वितः सुहृद्। सहायः अनुकूलः। तयोश्च। **सखा**। त्रि०। सह समानं ख्यायते। ख्या—कथने। इन्। निपातनात् साधुः। "सखा मित्रे सहाये ना वयस्यायां सखी मता" इति मेदिनी॥ ५२

सुमुखस्तार्क्ष्यपुत्रे च शोभनास्यगणेशयोः ।
सुमुखी शोभनास्या इति खान्ताःऽथाऽपवर्गस्त्यागमोक्षयोः ५३
शरीरोपायाप्रधानेष्वङ्गं पुंभूम्नि नीवृति ।
सम्बोधनेऽङ्गाऽव्ययं स्यादयोगो विधुरेऽपि च ॥ ५४ ॥
शपथेऽप्यभिषङ्गः स्यादनङ्गः खे स्मरे पुमान् ।
पूर्णत्वयत्नावाभोगावायोगो व्यापृतावपि ॥ ५५ ॥

तार्क्ष्यपुत्रे गरुडसुते । शोभनास्यं सुवदनम् । गणेशः स्वनामाख्यातो देवः तयोः । चकारात् पण्डिते शाकभेदे नागभेदे सितार्जके वर्वरे वनवर्वरिकायां च । मनोहरे च । त्रि० । **सुमुखः**। पु० । सुष्ठु मुखमस्मात् अस्य वा । "सुमुखस्तार्क्ष्यतनये शाकनागप्रभेदयोः" इति मेदिनी ॥ शोभनास्या सुप्रसन्नमुखी तस्याम् **सुमुखी** ।। स्त्री० ॥ खकारान्ताः समाप्ताः ॥ अथ गान्तानाह ॥ त्यागः वितरणम् । मोक्षः निर्वाणम् । तयोश्च,तथा फलसाधने समाप्तौ च। **अपवर्गः**॥ पु०। अप—पूर्व वृज वर्जने । घञ्प्रत्ययः । "स्यादपवर्गस्त्यागे मोक्षे कार्यावसानासाफल्ये" इति मेदिनी ॥ ५३ ॥ शरीरं देहः । उपायः रिपुनिराकरणादीनां हेतूनां साधनम् । अप्रधानः प्रधानभिन्नः । तत्र च । न० । भूम्नि नीवृति स्वनामाख्याते देशे, जनपदे वा । पु० । तथा अवयवे मनसि च । न० । अङ्ग—चिह्नयुक्तकरणे । अच्प्रत्ययः । "अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति।क्लीवैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके" इति मेदिनी॥ सम्बोधने सम्यग्ज्ञापने। "स्थितस्याभिमुखीभावमात्रं सम्बोधनं विदुः । प्राताभिमुख्यः पुरुषः क्रियासु विनियुज्यते" इति व्याकरणोक्तिः ॥ अव्यये च । अङ्ग स्यात् । "अङ्ग सम्बोधनेऽव्ययम्" इति विश्वः ॥ विधुरे विश्लेषे ॥ कूटे योगाभावे कुयोगे वियोगे न० । कठिनोदये च । **अयोगः** । पु० न० । युज—युतौ ॥ घञ्प्रत्ययः । नञ्तत्पुरुषः, बहुव्रीहिश्च । "अयोगो विधुरे कूटे विश्लेषे कठिनोद्यमे" इति मेदिनी ॥ ५४ ॥ शपथे सत्यताकरणाय दिव्यभेदकरणे । यथा । "एतत् यदि मिथ्या स्यात् तदा मे एतदनिष्टं स्यात्" इत्यादिशपने च । अपिशब्दात् पराभवे आक्रोशे व्यसने च **अभिषङ्गः** । पु० । अभिपूर्वसञ्ज—सङ्गे । घञ्प्रत्ययः । "अभिषङ्गः पुँल्लिङ्गः पराभवाक्रोशशपथेषु" इति मेदिनी ॥ खे आकाशे । स्मरे कन्दर्पे । **अनङ्गः** । पु० । नास्ति अङ्गमाकारो यस्य । "अनङ्गो मदनेऽनङ्गमाकाशमनसोरपि" इति मेदिनी ॥ पूर्णत्वं परिपूर्णता । यत्नमुत्साहः ॥ तयोश्च । तथा वरुणस्य छत्रे कवीनामाख्यापने च **आभोगः** । पु० । भुज—वक्रीकरणे, भक्षणे वा । भावे आधारे वा । घञ्प्रत्ययः । "आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपि" इति मेदिनी ॥ व्यापृतौ व्यापारयुक्ते । अपिशब्दात् गन्धमाल्योपहारे रोधे च **आयोगः** । पु० ॥ आपूर्व युज—युतौ।घञ्प्रत्ययः।"आयोगो व्यापृतौ गन्धमाल्योपहाररोधसोः"इति मेदिनी॥५५॥

जङ्गमेङ्गितयोरिङ्गो नाट्य ईहामृगो वृके ।
फलं पूगस्य चोद्वेगमुत्सर्गो न्यायदानयोः ॥ ५६ ॥
सामान्येऽप्युपरागस्तु ग्रहेऽर्केन्द्वोश्च दुर्नये ।
हस्तच्छेदे तु सस्यानां कटभङ्गो नृपात्यये ॥ ५७ ॥
कथाप्रसङ्गो वातूले विषवैद्येऽपि वाच्यवत् ।
देशे कलिङ्गो धूम्याटे कलिङ्गं कौटजे फले ॥ ५८ ॥
त्रिषु दक्षे विदग्धे च खड्गौ निस्त्रिंशगण्डकौ ।
स्वर्गे वज्रे च रश्मौ च बलिवर्दे च गौः पुमान् ॥ ५९ ॥

जङ्गमः गतिशक्तियुक्तः । इङ्गितम् अभिप्रायव्यञ्जकदैहिकचेष्टा । तयोश्च **इङ्गः** । पु० । इगि—गतौ घञ्प्रत्ययः । "इङ्गः स्यादद्भुते ज्ञाने जङ्गमेङ्गितयोरपि" इति मेदिनी ॥ नाट्ये अलङ्कारशास्त्रलक्षिते नाटकभेदे । वृके कुक्कुराकारे हरिणघातके व्याघ्रभेदे च । **ईहामृगः** । पु० । ईहां मृगयते । मृग—अन्वेषणे, याचने च । अणप्रत्ययः । ईहामृगो वृके जन्तौ प्रभेदे रूपकस्य च" इति विश्वः । "ईहामृगस्तु पुंसि स्यात्कोकरूपकभेदयोः" इति मेदिनी॥ पूगस्य फलं **क्रमुकफलम्** । तत्र च । न० । चकारात् व्याकुलचित्ततायाम् विरहजन्ये दुःखोद्गमे भये च । तथा निश्चले स्तिमिते । पु० । शीघ्रगामिनि च **उद्वेगम्** । न० । उद्पूर्व विज—भये, कम्पे च । घञ्प्रत्ययः । उद्गतो वेगो यस्मादिति बहुव्रीहिर्वा । "उद्वेगं क्रमुके फले" । उद्वेगोऽप्युद्भ्राहुलकोद्वेजनाकोद्गमेषु च" इति विश्वः ॥ न्यायः नयोपायः, युक्तिमूलकदृष्टान्तभेदो वा । दानं त्यागः तयोः । सामान्ये व्याकरणे सम्यगभिधाने। अपिशब्दात् योगभेदे अपानवायोर्व्यापारे च। **उत्सर्गः**।पु०। उद्पूर्व सृज—गतौ।घञ्प्रत्ययः।"उत्सर्गः पुंसि सामान्ये न्याये च त्यागदानयोः" इति मेदिनी॥५६॥अर्केन्द्वोः ग्रहे रविचन्द्रयोर्ग्रहणे ।ग्रहणन्तु राहुधिष्ठितभूमिच्छायया चन्द्रस्य । चन्द्रमण्डलेन च रवेर्मण्डलाच्छादनमिति सिद्धान्तः । दुर्नये दुर्नीतौ।चकारात् ग्रहकल्लोले व्यसने च **उपरागः**।पु०।उपपूर्वरञ्ज—घञ्प्रत्ययः।"उपरागस्तु पुंसि स्याद्राहुग्रासेऽर्कचन्द्रयोः"। दुर्नये ग्रहकल्लोले व्यसनेऽपि निगद्यते" इति मेदिनी ॥ सस्यानां हस्तच्छेदे धान्यानां करच्छेदने । नृपात्यये सैन्यभङ्गद्वारा राजविनाशे च **कटभङ्गः** । पु० । भञ्ज—भङ्गे । घञ्प्रत्ययः । पुनः कटस्य भङ्ग इति षष्ठीतत्पुरुषः । "कटभङ्गस्तु सस्यानां हस्तच्छेदे नृपात्यये" इति मेदिनी॥५७॥ वातूले वातरोगयुक्ते उन्मत्ते वा । विषवैद्ये अपिशब्दात् गोष्ठीवचने च **कथाप्रसङ्गः** ।पु० । वाच्यलिङ्गो वा । कथायां प्रसङ्गो यस्येति बहुव्रीहिः। "कथाप्रसङ्गेन जनैरुदीरितात्" इति भारविः । "कथाप्रसङ्गो वातूले विषवैद्येऽपि वाच्यवत्" इति मेदिनी ॥ देशे स्वनामाख्याते देशे । "जगन्नाथात्पूर्वभागे कृष्णातीरान्तरं शिवे ! कलिङ्गदेशः संप्रोक्तः" इति । "उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ" इति रघुः । धूम्याटे पक्षिभेदे । कौटजे—फले इन्द्रयवे, कुटजवृक्षे वा **कलिङ्गं** ॥ ५८ ॥ पु० न० । दक्षे शूरे । विदग्धे पण्डिते, निपुणे वा । त्रि० । चकारेण

**स्त्रीबाणरोहिणीदृग्दिग्वाग्भूमिष्वप्सु भूम्नि च ।**
**वैधव्ये नृपनाशे च छत्रभङ्गः प्रकीर्तितः ॥ ६० ॥**
**अश्वगन्धाऽपि तुरगी तुङ्गौ पुन्नागसोच्छ्रयौ ।**
**दीर्घाध्वगः स्यादुष्ट्रेऽपि निषङ्गः सङ्गतूणयोः ॥ ६१ ॥**
**नागः श्रेष्ठेभसर्पेषु क्लीबं सीसकरङ्गयोः ।**
**वृक्षे स्यात्पुंसि पुन्नागः पतङ्गः शलभे रवौ ॥ ६२ ॥**

पूतिकरञ्जे प्लक्षवृक्षे शिरीषवृक्षे योषिति त्रिवृतायां च **कालिङ्गः** । पु० । कलिं गच्छति । गम—गतौ । खच्प्रत्ययः । मुम् । डिच्च । "कलिङ्गः पूतिकरजे धूम्याटे भूम्नि नीवृति । न द्वयोः कौटजफले महिलायां तु योषिति" इति मेदिनी । निस्त्रिंशः असिः । गण्डकः गण्डकशृङ्गः । तद्वान् गण्डकपशुर्वा । तयोः **खड्गः** । पु० । खडि—भेदे । गप्रत्ययः । निपातनान्न लोपः । "खड्गो गण्डकशृङ्गासिबुद्धभेदेषु गण्डके" इति मेदिनी ॥ स्वर्गे स्वर्लोके । व्रजे हीरके । रश्मौ किरणे । बलिवर्दे वृषे । बाणे रोहिण्याम् दृष्टौ दिशि वाचि भूमौ अप्सु जले । भूम्नि बहुत्वे । चकारात् पशौ चन्द्रे वायौ सूर्ये ऋषभनामौषधे च । पु० । सौरभेय्याम् । स्त्री० । **गौः** । पु० । गम—गतौ । डो प्रत्ययः । "गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च" इति मेदिनी॥ वैधव्ये पतिविरहे । नृपनाशे चकारात् अस्वातन्त्र्ये च **छत्रभङ्गः** । पु० । प्रकीर्तितः कथितः।छत्रस्य भङ्गो यत्र "छत्रभङ्गोऽपि वैधव्येऽस्वातन्त्र्यनृपनाशयोः"इति मेदिनी॥५९॥६०॥अश्वगन्धा स्वनामाख्यातः क्षुद्रवृक्षभेदः तत्र। अपिशब्दात् हययोषिति च **तुरगी** । स्त्री० । तुरगस्तुरगन्धोऽस्त्यस्याः । अच्प्रत्ययः । गौरादित्वात् ङीप् । "तुरगी चाऽश्वगन्धायाम्" इति मेदिनी ॥ पुन्नागः स्वनामाख्यातो वृक्षः । सोच्छ्रयः उच्चतायुक्तः, उच्चः, पर्वतो वा । तयोः **तुङ्गः** । पु० । तुरङ्ग—गमने । घञ्प्रत्ययः । "तुङ्गः पुन्नागनगयोस्तुङ्गः स्यादुन्नतेऽन्यवत्" इति विश्वः । उष्ट्रे स्वनामाख्याते पशुभेदे अपिशब्दात् लेखहारे वाह्यरथे च **दीर्घाध्वगः** । पु० । दीर्घमध्वानं गच्छति । गम—गतौ । अच्प्रत्ययः । दीर्घोऽध्वगो यस्य वा । "दीर्घाध्वगः पुमानुष्ट्रे लेखहारेऽपि मेद्यवत्" इति मेदिनी॥ सङ्गः सम्बन्धः, विषयादिरागो वा । "ध्यायतो विषयान् पुंसः सङ्गस्तेषु प्रजायते" इति गीता । तूणः तुणीरः । तयोश्च **निषङ्गः** । पु० । निपूर्वसञ्ज—सङ्गे। घञ्प्रत्ययः । "निषङ्गः सङ्गे तूणे च" इति मेदिनी ॥ ६१ ॥ श्रेष्ठः प्रधानः । इभः हस्ती । सर्पः अहिः । तेषु च । पु० । सीसकः स्वनामाख्यातो धातुभेदः रङ्गः धातुभेदः । तयोश्च । न० । **नागः** । पु० । न गच्छति अगः । न अगः नागः । "नागं नपुंसके रङ्गे सीसके करणान्तरे । नागः पन्नगमातङ्गक्रूरचारिषु तोयदे । नागकेशरपुन्नागनागदन्तकमुस्तके । देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थिते" इति मेदिनी ॥ वृक्षे स्वनामाख्याते पुष्पप्रधाने वृक्षभेदे । तथा श्वेतोत्पले जातीफले पाण्डुवर्णहस्तिनि नरश्रेष्ठे च **पुन्नागः** स्यात् । पु० । पुमान् नाग इव श्रेष्ठः । "पुन्ना-

**काकोडुम्बरिकायां स्त्री फल्गुस्त्रिषु निरर्थके ।**
**पालनेऽभ्यवहारे च निर्वेशे पण्ययोषिताम् ॥ ६३ ॥**
**भोगः सुखे धने चाहेः शरीरफणयोरपि ।**
**भगं वैराग्ययोनीच्छाज्ञानैश्वर्येषु चेष्यते ॥ ६४ ॥**
**तरङ्गभेदयोर्भङ्गो भङ्गा सस्ये शणाह्वये ।**
**एकदेशांशयोर्भागो भृङ्गो धूम्याटकेऽपि च ॥ ६५ ॥**

गस्तु सितोत्पले । जातीफले नरश्रेष्ठे पाण्डुनागे द्रुमान्तरे" इति मेदिनी ॥ शलभे कीटविशेषे । रवौ सूर्ये । तथा खगे शालिभेदे मधूकवृक्षे च **पतङ्गः** । पु० । पतन् सन् गच्छति । गम—गतौ । खच्प्रत्ययः । डिच्च । "पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः" इति मेदिनी ॥ ६२ ॥ काकोडुम्बरिकायां स्वनामाख्यातायामौषधजात्याम् । काकोडुम्बरिकायामिति च पाठः । स्त्री० । निरर्थके निष्प्रयोजने । त्रि० । तथा रम्ये सारे वसन्तसमये मिथ्यावाक्ये च । पु० । गयातीर्थस्थनद्यां च । **फल्गुः** । पु० । फल—निष्पत्तौ, गतौ वा । उप्रत्ययः । गुक् च । "फल्गु-सारेऽभिधेयवत् । नदीभेदे मलप्वां स्त्री" इति मेदिनी । "फल्गुः प्रोक्ता मलप्वां च निःसारे फल्गुवाच्यवत्" इति विश्वः ॥ पालने रक्षणे । अभ्यवहारे आहारे च । पण्ययोषितां—निर्वेशे वेश्यानां भाटकादिरूपे वेतने ॥ ६३ ॥ सुखे धने अहेः—शरीरफणयोः सर्पशरीरे सर्पफणे च । अपिशब्दात् माने ज्योतिषोक्तग्रहाणां तत्तद्राशिस्थितौ च **भोगः** । पु० । भुज—पालने, अभ्यवहरणे वा । कर्मादौ घञ्प्रत्ययः । "भोगः सुखे धने चाहेः शरीरफणयो-रपि । पालनेऽभ्यवहारे च योषितादिभृतावपि" इति मेदिनी ॥ वैराग्यं विषयवासनाराहित्यम् । योनिः स्त्रीणामसाधारणचिह्नः । इच्छा अभिलाषः । ज्ञानं सामान्यविशेषरूपं बुद्धिमात्रम् । ऐश्वर्यम् अणिमाद्यष्टविधं तेषु । चकारात् सूर्ये यशसि श्रियां माहात्म्ये यत्ने धर्मे मोक्षे सौभाग्ये कान्तौ चन्द्रे च **भगम्** । पु० न० । भज—पाके, सेवायां वा । घप्रत्ययः । "भगं स्त्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु । माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षे च ना रवौ" इति मेदिनी ॥ ६४ ॥ तरङ्गः ऊर्मी । भेदः अन्यतो विशेषः । तयोः । तद्वत् पराजये खण्डे कौटिल्ये भये गमने पत्ररचनाभेदे जलनिर्गमे च **भङ्गः** । पु० । शणाह्वये सस्ये शण इति ख्याते द्रव्ये । तथा मातुल्यायां त्रिवृतायां च । **भङ्गा** । स्त्री । भञ्ज—पृथक्करणे । घञ्प्रत्ययः । "भङ्गो जयविपर्यये । भेदरोगतरङ्गेषु भङ्गा सस्यान्तरे स्त्रियाम्" इति मेदिनी ॥ एकदेशः अवयवः, प्रतीको वा । अंशः विभागः, राशित्रिभागो वा । "त्रिंशांशकस्तथा राशेर्भागमित्यभिधीयते" इति ज्योतिषोक्तिः । तयोः । **भागः** । पु० । भज—विभागे । भावे घञ्प्रत्ययः । भजने कर्मणि घञ् च । "भागो रूपार्धके भाग्यैकदेशयोः" इति मेदिनी ॥ धूम्याटके कलिङ्गविहगे । अपिशब्दात् भ्रमरे भृङ्गराजे जारे भृङ्गारे भृङ्गरोले च **भृङ्गः** । पु० । भृ—भरणे, धारणे वा । गन्प्रत्ययः । कित् नुट् च । "भृङ्गो धूम्याटषिङ्गयोः । मधुव्रते भृङ्गराजे पुंसि भृङ्गं गुडत्व-

**भुजङ्गो भुजगे षिड्गे जामदग्न्यतटौ भृगुः ।**
**मृगोऽन्विष्टौ च मार्गस्तु मासान्वेषणवर्त्मसु ॥ ६६ ॥**
**योगश्चारेऽपूर्वलाभे सूत्रे विश्रब्धघातिनि ।**
**उपाये सङ्गतौ ध्यानौषधसन्नाहयुक्तिषु ॥ ६७ ॥**
**नृत्ये रणे खले रागे रङ्गः क्लीबे त्रपुण्यऽपि ।**
**रागः क्लेशादिके रक्ते मात्सर्ये लोहितादिषु ॥ ६८ ॥**
**चक्रे रथाङ्गं कोके ना रक्ताङ्गो मङ्गलेपि च ।**
**व्यक्ते साङ्ख्योदिते लिङ्गं स्थाणौ शेफसि लक्षणे ॥ ६९ ॥**

चि । इति मेदिनी ॥ ६५ ॥ भुजगे सर्पे । षिड्गे कामुके, विटे वा । तद्वत् जारे आश्लेषानक्षत्रे च **भुजङ्गः**। पु०। भुजः सन् गच्छति। गम—गतौ। खच्प्रत्ययः । डिच्च।"भुजङ्गोऽहौ च षिङ्गे च" इति मेदिनी ॥ जामदग्न्यः मुनिभेदः । तटं नद्यादेः कूलम् । तयोः । तथा शिवे शुक्रग्रहे पर्वतसानौ उच्चप्रदेशे च **भृगुः** । पु०। भ्रस्ज—पाके।कुप्रत्ययः।पृषोदरादित्वात् साधुः । क्वचित "भृगू" इति पाठः । "भृगुः पुमान् । मुनौ हरौ तटे शुक्रे" इति मेदिनी॥अन्विष्टौ अन्वेषणे। चकारात् पशुमात्रे हरिणे गजभेदे अश्विन्यवधिके पञ्चमे नक्षत्रे याचने यज्ञभेदे मृगमदे मकरराशौ च **मृगः** । पु० । मृग—अन्वेषणे । कप्रत्ययः । "मृगः पशौ कुरङ्गे च कारनक्षत्रभेदयोः । अन्वेषणे च याच्ञायां मृगी तु वनितान्तरे"इति मेदिनी॥मासः मार्गशीर्षः।अन्वेषणं पर्येषणम् । वर्त्म पथः । तत्र च **मार्गः**। पु०। मार्ग—अन्वेषणे । मृज—शुद्धौ वा । घञ्प्रत्ययः। "मार्गो मृगमदे मार्गशीर्षे चान्वेषणाध्वनोः" इति मेदिनी ॥६६ ॥ चारे ग्रहादीनां गमने । अपूर्वलाभे अपूर्वार्थसम्प्राप्तौ।सूत्रे विश्रब्धघातिनि विश्वस्तघातके।उपायः साम्यादिः । सङ्गतः मेलनम्। ध्यानं चित्तस्यैकतानप्रवाहः । "ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः । ध्यानशब्देन विख्याता परमानन्ददायिनी"इति वेदान्तः।औषधं भेषजम्।सन्नाहः प्रसिद्धः।युक्तिः न्यायादिः।तेषु च **योगः** पु०।युज—युतौ, समाधौ वा । भावादौ घञ्प्रत्ययः। "योगो पूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु । वपुःस्थैर्यप्रयोगेऽपि विष्कम्भादिषु भेषजे । विश्रब्धघातके द्रव्योपायसन्नाहनेष्वपि"इति मेदिनी ॥ ६७ ॥ नृत्ये नाट्यस्थाने, नृत्ये च । रणे युद्धभूमौ । खले दुर्जने । रागे च । पु० । त्रपुणि स्वनामाख्याते धातुभेदे । न० । अपिशब्दात् टङ्कणे खदिरसारे च **रङ्गः** ।पु० । रगि—गतौ । अच्—प्रत्ययः । रञ्ज—रागे । भावे घञ्प्रत्ययश्च । "रङ्गो ना रागे नृत्ये रणक्षितौ अस्त्री त्रपुणि" इति मेदिनी ॥ क्लेशादिके रागादिक्लेशवस्तुनि । रक्ते रञ्जने । मात्सर्ये परगुणद्वेषे । "मात्सर्यमुत्सार्य विचार्य" इति साहित्यम् । लोहितादिषु रक्तादिषु वर्णेषु । आदिशब्दात् तद्विशिष्टे लाक्षादौ च । "तेन रक्तं रागात्" इति पाणिनिसूत्रम् । तथा प्रीतौ अनुरागे नृपे चन्द्रे आधारे च **रागः** । पु० । रञ्ज—रागे । भावे घञ्प्रत्ययः । निपातनात् नलोपकुत्वे । "रागस्तु मात्सर्ये लोहितादिषु । क्लेशादावनुरागे च गान्धारादौ नृपेऽपि च" इति मेदिनी ॥६८॥ चक्रे

**पुंस्त्वादौ च वराङ्गं तु गुडत्वचि गजे पुमान् ।**
**वल्गुश्छागेऽपि वेगस्तु महाकालफलेऽपि च ॥ ७० ॥**
**जलोत्क्षेपे समुत्सर्गे शृङ्गमुत्कर्षचिह्नयोः ।**
**शार्ङ्गं धनुर्विष्णुधनुः सम्भोगो रतभोगयोः ॥ ७१ ॥**

**इति गान्ताः ॥**

**ओघः स्याद्द्रुतनृत्ये च काचिघौ काञ्चनोन्दुरू ।**
**निदाघौ स्वेदतापौ च प्रतिघो रोषघातयोः ॥ ७२ ॥**

रथावयवे । कोके चक्रवाके, वृके वा । पु० । **रथाङ्गम्** । न० । अङ्ग्यते गम्यतेऽनेनेति । अगि—गतौ । करणे घञ्प्रत्ययः । पुनः रथस्य अङ्गं रथाङ्गमिति षष्ठीतत्पुरुषः । "रथाङ्गं न द्वयोश्चक्रे ना चक्राङ्गविहङ्गमे" इति मेदिनी ॥ मङ्गले भूमिसुते । अपिशब्दात् कुङ्कुमे कम्पिल्ले प्रवाले । पु० न० । जीवन्त्यां मञ्जिष्ठायां च । स्त्री० । **रक्ताङ्गः** । पु० । रक्तमङ्गं यस्य, यस्माद्वा । "रक्ताङ्गस्तु महीसुते । कम्पिल्ले स्त्री तु जीवन्त्यां क्लीवं विद्रुमधीरयोः" इति मेदिनी ॥ व्यक्ते स्फुटे, प्रकाशिते वा । साङ्ख्योदिते साङ्ख्योक्ते प्रधाने । स्थाणौ शिवमूर्तिभेदे । शेफसि मेहने । पुंस्त्वादौ लक्षणे पुरुषस्य असाधारणे चिह्ने च **लिङ्गम्** । न० । लिगि—गतौ । अच्प्रत्ययः । "लिङ्गं चिह्नेऽनुमाने च साङ्ख्योक्तप्रकृतावपि । शिवमूर्तिविशेषे च मेहनेऽपि नपुंसकम्" इति मेदिनी ॥ ६९ ॥ गुडत्वचि (दारचिनि) गजे हस्तिनि । तथा मस्तके गुह्ये योनौ विष्णौ कामदेवे । पु० । श्रेष्ठावयवयुक्ते । त्रि० । हरिद्रायाम् । स्त्री० । **वराङ्गम्** । न० । वृ—वरणे । अच्प्रत्ययः । वरं च तत् अङ्गम्, वरस्याङ्गं वेति समासः । "वराङ्गं योनिमातङ्गमस्तकेषु गुडत्वचि" इति मेदिनी ॥ छागे अजे । अपिशब्दात् मनोहरे चारुणि सुन्दरे च । त्रि० । चन्दने वने पणे च । न० । **वल्गुः** । पु० । वल—संवरणे । उप्रत्ययः । गुक् च । "वल्गुः स्याच्छागले पुंसि सुन्दरे चाभिधेयवत्" इति मेदिनी ॥ महाकालफले स्वनामाख्याते फलविशेषे । "महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णकम्" इति तन्त्रम् ॥ ७० ॥ जलोत्क्षेपे समुत्सर्गे मूत्रविष्ठानिःसरणे । अपिशब्दात् प्रवाहे जवे रेतसि न्यायोक्ते संस्कारभेदे च **वेगः** । पु० । विजि—चलने, कम्पने च । घञ्प्रत्ययः । "वेगो जवे प्रवाहे च महाकालफलेऽपि च" इति मेदिनी । उत्कर्षः अतिशयः, प्रभुत्वं वा । चिह्नं लक्षणम् । तयोः तथा पर्वतोपरिभागे प्राधान्ये कामोद्रेके पश्वादिविषाणे वाद्यभेदे च **शृङ्गम्** । न० शॄ—भेदे, वधे वा । गन्प्रत्ययः । पृषोदरादित्वात् ह्रस्वः । "शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोः" इति मेदिनी ॥ धनुः धनुर्मात्रम् । विष्णुधनुः विष्णोश्चापम् । तत्र शृङ्गजाते पदार्थे च **शार्ङ्गम्** । न० । शृङ्गस्य विकारः । अण्प्रत्ययः । "शार्ङ्गं कार्मुकमात्रेऽपि विष्णोरपि शरासने" इति मेदिनी । रतः सुरतः । भोगः धनम् । तयोः । तथा सम्यग्भोगे हर्षे केलिनागरे शृङ्गारस्यावस्थाभेदे जिनशासने च **सम्भोगः** । पु० । सम्पूर्वभुज—भक्षे, पालने च । घञ्प्रत्ययः । "सम्भोगस्तु पुमान् भोगे सुरते जिनशासने" इति मेदिनी ॥ ७१ ॥ इति गकारान्ताः समाप्ताः ॥ अथ घान्तानाह ॥ द्रुतनृत्ये चकारात् समूहे जलवेगे उपदेशे परम्प—

**परिघो योगभेदेऽपि मेघो वारिदमुस्तयोः ।**
**महार्घस्तु महामूल्ये पुंसि लावकपक्षिणि ।**
**पृक्कायां स्त्री लघुः क्लीबं शीघ्रे कृष्णागुरुण्यपि ॥ ७३ ॥**

**इति घान्ताः ॥**

**प्रतिमापूजयोरर्चा क्रौञ्चः पक्ष्यद्रिभेदयोः ।**
**कूर्चमस्त्री भ्रुवोर्मध्ये श्मश्रुकैतवयोरपि ॥ ७४ ॥**

रायां च । **ओघः** । पु० । स्यादित्यन्वयः । उच—समवेते । घञ्प्रत्ययः । पृषोदरादित्वात् वश्च । "ओघो वेगे जलस्य च । वृन्दे परम्परायां च द्रुतनृत्योपदेशयोः" इति मेदिनी ॥ काञ्चनं स्वर्णम् । उन्दुरुः मूषिकः । तयोः **काचिघः** । पु० । "काचिघः काञ्चनेऽपि स्या-च्छ्लेमण्डे मूषिकेऽपि च" इति मेदिनी ॥ स्वेदः घर्मजलम् । तापः सन्तापः तयोः । चकारात् उष्णे घर्मे घर्मकाले ( ज्येष्ठाषाढमासयोश्च ) **निदाघः** । पु० । निपूर्वदह—भस्मीकरणे । घञ्-प्रत्ययः । न्यङ्क्वादित्वात् कुत्वम् । "निदाघो ग्रीष्मकाले स्यादुष्मस्वेदाम्बुनोरपि" इति मेदिनी ॥ रोषः क्रोधः । घातः प्रहारः, मरणं वा । तयोश्च **प्रतिघः** । पु० । प्रतिपूर्वहन—हिंसा-याम् । डप्रत्ययः । न्यङ्क्वादित्वात् कुत्वम् । "प्रतिघः प्रतिघाते स्यात्क्रोधेऽपि परिकीर्तितः" इति मेदिनी ॥ ७२ ॥ योगभेदे विष्कम्भावधिके ऊनविंशतितमे योगे । अपिशब्दात् परिघा-तास्त्रे लोहमुद्गरादौ । यथा लोहमुखे लगुडे मुद्गरे शूले काचवटे गृहे च । **परिघः** । पु० । परिपूर्वहन—हिंसायाम् । कप्रत्ययः । निपातनात् साधुः । "परिघो योगभेदे स्याद्विशेषेऽर्गलघातके" इति मेदिनी ॥ वारिदः जलधरः । मुस्तः मुस्तकः । तयोः । तद्वत् राक्षसभेदे रागभेदे च **मेघः** । पु० । मिह—सेचने । घञ्प्रत्ययः । न्यङ्क्वादित्वात् कुत्वम् । "मेघो मुस्ताजलदयोः पुमान्" इति मेदिनी ॥ महामूल्ये अनर्घमूल्ये । लावकप-क्षिणि स्वनामाख्याते पक्षिभेदे च । पु० । **महार्घः** । त्रि० ।महानर्घो मूल्यं यस्य । "महार्घस्तु महामूल्ये त्रिषु स्याल्लावके पुमान्" इति मेदिनी । पृक्कायां स्वनामाख्याते औषधभेदे । स्त्री० । शीघ्रे विलम्बाभावे । कृष्णागुरुणि कालागुरुणि । न० । अपिशब्दात् वीरणमूले निःसारे लाघ-वगुणान्विते ह्रस्वे मनोहरे व्याकरणोक्ते लघुसंज्ञके अकारादौ वर्णे ज्योतिषोक्तेषु पुष्याश्विहस्ता लघुरित्युक्तेषु पुष्यादिनक्षत्रेषु लघ्ववस्थायां च **लघुः** । त्रि० । लघि—गतौ । कुप्रत्ययः । निपा-तनाल् नलोपः । "लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत्क्लीबम् । शीघ्रे कृष्णागुरुणि च पृक्का-नामौषधे तु स्त्री" इति मेदिनी ॥ ७३ ॥ इति घान्ताः समाप्ताः ॥ अथ चान्तानाह ॥ प्रतिमा प्रतिरूपम् । पूजा अर्चनं तयोः । **अर्चा** । स्त्री० । अर्च—पूजायाम् । आधारे अङ्प्रत्ययः । "अर्चा पूजाप्रतिमयोः" इति मेदिनी ॥ पक्षी कुररपक्षी, बकभेदो वा । अद्रिभेदः पर्वतविशेषः तयोः । तथा दैत्यभेदे क्षीरसागरेणावृते द्वीपभेदे च **क्रौञ्चः** । पु० । क्रुञ्च—गमने । स्वार्थे अण्प्रत्ययः । "क्रौञ्चो द्वीपविशेषे स्यात्पक्षिपर्वतभेदयोः" इति मेदिनी ॥ भ्रुवोर्मध्ये भ्रूमध्यस्थिते

**इभ्यां स्त्री गुरुपुत्रे ना केशे शुष्कव्रणे कचः ।**
**देशभेदेऽपि काञ्ची स्यात्तथा स्थासकतर्कयोः ॥ ७५ ॥**
**चर्चिकायां च चर्चा स्यात्त्वक् स्त्री चर्मगुडत्वचोः ।**
**वामने पामरे नीचो नमुचिर्दितिजे स्मरे ॥ ७६ ॥**
**मरीचिर्मुनिभेदेऽपि चौरवह्नी मलिम्लुचौ ।**
**कक्कोलेऽपि च मारीचो मोचा शाल्मलिरम्भयोः ॥ ७७ ॥**

लोमोच्चये । श्मश्रु प्रसिद्धम् । कैतवं दम्भः तयोः । अपिशब्दात् मयूरपुच्छे । कुशमुष्टौ अङ्गुष्ठशीर्षे आसनभेदे । तन्त्रोक्ते बीजभेदे च **कूर्चम् ।** पु० न० । कुर--शब्दे । चट्प्रत्ययः । निपातनाद्दीर्घः । "कूर्चमस्त्री भ्रुवोर्मध्ये कठिनश्मश्रुकैतवे" इति मेदिनी ॥ ७४ ॥ इभ्यां हस्तिन्याम् । स्त्री० । गुरुपुत्रे बृहस्पतितनये । केशे चिकुरे । शुष्कव्रणे तथा मेघे बन्धे शोभायां च **कचः ।** पु० । कच--बन्धे , दीप्तौ वा । अच्प्रत्ययः । "कचः केशे गुरोः सुते । बन्धे शुष्कव्रणे पुंसि करिण्यां तु कचा स्त्रियाम्" इति मेदिनी ॥ देशभेदे "अयोध्या मथुरा माया काशी काञ्ची अवन्तिका" इत्यादौ नगरविशेषे । स्थासकः स्त्रीकटीबद्धः अलङ्कारः । "एकयष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिका।वलयः षोडश ज्ञेयः" इत्युक्तलक्षणयष्टौ ।जलबुद्बुदे च।तर्कः प्रसिद्धः तयोः । अपिशब्दात् गुञ्जायां च । **काञ्ची ।** स्त्री० । काचि--दीप्तौ । करणे ल्युट्प्रत्ययः । ङीप् । "काञ्ची स्यान्मेखलादाम्नि प्रभेदे नगरस्य च" इति मेदिनी । कचित् "**काञ्चिः**" इत्यपि पाठः ॥ ७५ ॥ चर्चिकायां चन्दनादिना देहलेपने । चकारात् विचारे चिन्तायां च । **चर्चा** स्यात् । स्त्री० । चर्च--उक्तौ, भर्त्सने च । आप्रत्ययः । "चर्चा चिन्तास्थासकयोश्चर्चिकायां च योषिति" इति मेदिनी ॥ चर्म प्रसिद्धम् । गुडत्वक् इक्षुवल्कलं तयोः ।**त्वक् ।** स्त्री० । त्वच--संवरणे । क्विप्प्रत्ययः । "त्वक् स्त्री चर्मणि वल्के च गुडत्वचि विशेषयोः" इति मेदिनी ॥ वामने ह्रस्वे । पामरे मूर्खे, खले वा । **नीचः ।** त्रि० । निकृष्टामीं लक्ष्मीं चमति । चम--अदने ड-प्रत्ययः । "नीचः पामरे वामनेऽपि च" इति मेदिनी ॥ दितिजे असुरभेदे । स्मरे पुष्पकार्मुके च । **नमुचिः ।** पु० । नपूर्वमुच--मोचने । किप्रत्ययः । "नमुचिस्तु पुमान्दैत्यभेदे कुसुमकार्मुके" इति मेदिनी ॥ ७६ ॥ मुनिभेदे सप्तर्षीणामन्तरे ब्राह्मणे मानसे ज्येष्ठे पुत्रे मुनिविशेषे । अपिशब्दात् कृपणे च किरणे । पु० स्त्री० । **मरीचिः ।** पु० । मृ--मरणे । ईचि प्रत्ययः । "मरीचिर्मुनिभेदे ना गभस्तावनपुंसके" इति मेदिनी ॥ चौरः प्रसिद्धः ।वह्निः अग्निः तयोः । तथा मलीमसे वायौ च **मलिम्लुचः ।** पु० । मली वैदिककर्मानर्हत्वेन दुष्टः सन् म्लोचति गच्छति । म्लुच--गमने । कप्रत्ययः । "मलिम्लुचो मासभेदे चौरज्वलनयोः पुमान्" इति मेदिनी ॥ कक्कोले गन्धद्रव्यभेदे । अपिशब्दात् तारकाराक्षसीपुत्रे रावणानुचरे राक्षसभेदे । याजकब्राह्मणे च **मारीचः ।** पु० । मरीचस्यापत्यम् । "मारीचो राक्षसभेदे कक्कोले याजकद्विजे" इति मेदिनी ॥ शाल्मलिः प्रसिद्धः । रम्भा कदली तयोः । तद्वत् कदलिफले । शोभाञ्जने च। पु०।

कुक्कुरे रतनारीचः शीत्कारे वरयोषिताम् ।
केतुग्रहे तु विकचो वीचिः सुखतरङ्गयोः ॥ ७८ ॥
स्वल्पेऽपि सारिकायां च वचा ग्रीष्मानलौ शुचिः ।
सूची नृत्यप्रभेदे च व्यधनीशिखयोरपि ॥ ७९ ॥
इति चान्ताः ॥
वाराही चीरिका कच्छा कच्छोऽनूपे द्रुमान्तरे ।
पिच्छा स्त्रीभक्तमण्डेऽपि लाङ्गुले पिच्छमस्त्रियाम् ॥ ८० ॥
इति छान्ताः ॥

नीलिवृक्षे च । स्त्री० । **मोचा** । स्त्री० । मुच—मोचने । अच्प्रत्ययः । "मोचः शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयोः" इति मेदिनी ॥ ७७ ॥ कुक्कुरे शुनि । वरयोषितां शीत्कारे स्त्रीणां रतिकालवर्तिनि ध्वनिविशेषे । तथा स्मरे च **रतनारीचः** । पु० । "रतनारीचो नारीणां शीत्कारे च शुनि स्मरे" इति मेदिनी ॥ केतुग्रहे स्वनामाख्याते नभश्चरे । तथा क्षपणे संन्यासिभेदे ध्वजे केशशून्ये च त्रि० । **विकचः** । पु० । विगतः कचो यस्य । विपूर्व-कच—बन्धने । अच्प्रत्ययो वा । "विकचः क्षपणे केतौ नाऽकेशे स्फुटितेऽन्यवत्" इति मेदिनी ॥ सुखं प्रसिद्धम् । तरङ्गः ऊर्मी तयोः । स्वल्पे अत्यल्पे । अपिशब्दात् अवकाशे किरणे च **वीचिः** । पु० स्त्री० । वे तन्तुसन्ताने । डीच्प्रत्ययः । स्त्रीत्वे वा ङीप् । वीचिः स्वल्पे तरङ्गे स्यादवकाशे सुखे द्वयोः" इति मेदिनी ॥ सारिकायां स्वनामाख्याते पक्षिणि । चकारात् कीरे वचौषधे च **वचा** । स्त्री० । वच—व्यक्तायां वाचि । क्विप्प्रत्ययः । आप् च । "वचः कीरे वचौषधौ।सारिकायाञ्च" इति मेदिनी ॥ ग्रीष्मः प्रसिद्धः । अनलो वह्निः तयोः । तद्वत् चित्रवृक्षे ज्येष्ठमासे आषाढमासे श्वेतवर्णे शुद्धाचरणे शुद्धमन्त्रिणि ऋतौ च **शुचिः** । पु० । शुच—शोके । किन्प्रत्ययः ।"शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु"इति मेदिनी ॥ नृत्यप्रभेदे नृत्यविशेषे । व्यधनी सीवनसाधनी । शिखा प्रसिद्धा तयोः । अपिशब्दात् स्वनामाख्याते लौहमयपदार्थे च । **सूची** । स्त्री०।सूच—पैशून्ये, अन्तर्द्रोहे वा । इन्प्रत्ययः । ईप् च । **सूचिरप्यत्र**। "सूची तु सीवनद्रव्येऽप्यञ्जिकाभिनयान्तरे" इति मेदिनी ॥ ७८॥७९॥ इति चकारान्ताः समाप्ताः॥अथ छान्तानाह । वाराह्यां वराहयोषिति अष्टमातृकामध्ये वराहशक्तौ । "वाराही नारसिंही च" इति श्यामास्तवः । चीरिकायां स्वनामाख्याते कीटभेदे च । **कच्छा** । स्त्री० ॥ अनूपे जलप्रायदेशे । द्रुमान्तरे पुन्नागवृक्षे । तथा तटे नौकाङ्गे च **कच्छः** । पु० । कच—बन्धे । छप्रत्ययः । केन जलेन छृणाति दीप्यते । छृ—दीप्तौ । डप्रत्ययो वा । "कच्छः स्यादनूपे तुन्नकद्रुमे । नौकाङ्गे पुंसि वाराह्यां चीरकायां च योषिति" इति मेदिनी ॥ भक्तमण्डे भक्तस्य निस्रावे । अपिशब्दात् मयूरपुच्छे चूडायां शाल्मलिवृक्षे पूगे परम्परायां कोपे मोचायां पङ्क्तौ शिंशपावृक्षे कोकिलायाम् अश्वचरणरोगे च

पद्मधन्वन्तरी चाऽब्जावण्डजः खगमीनयोः
निचुलेऽप्यम्बुजोऽजस्तु ब्रह्मविष्णुस्मरेष्वपि ॥ ८१ ॥
स्यादङ्गजः स्मरे केशे पुत्रे रक्ते नपुंसकम् ।
उत्साहकार्तिकावूर्जौ कम्बोजो देशशङ्खयोः ॥ ८२ ॥
नखे करञ्जे करजः कुब्जो न्युब्जे द्रुमान्तरे ।
खनौ सुरागृहे गञ्जो गुञ्जा पटहकृष्णले ॥ ८३ ॥

**पिच्छा** । स्त्री० ॥ लाङ्गुले च । **पिच्छम्** । पु० न० । पिच्छ—बाधे । अच्प्रत्ययः । "पिच्छा पूगच्छटाकोशमोचाशाल्मलिवेष्टके । भक्तसम्भूतमण्डे च पङ्क्तावश्वपदामये । स्त्रियां पुंसि तु लाङ्गूले न द्वयोर्बर्हिचूडयोः" इति मेदिनी ॥ ८० ॥ इति छान्ताः समाप्ताः ॥ अथ जान्तानाह ॥ पद्मे पङ्कजम् । धन्वन्तरिः विक्रमराजसभाऽस्थः स्वनामाख्यातः पण्डितः तयोः । तथा शतकोटिसङ्ख्यायाम् "अर्बुदमब्जं खर्वनिखर्वं" इत्यादि भास्कराचार्योक्तेः । शङ्खे चन्द्रे च । पु० न० । **अब्जः** । पु० । अद्भ्यो जायते । जन—जनने डप्रत्ययः । "अब्जोऽस्त्री शङ्खे ना निचुले धन्वन्तरौ हिमकिरणे । क्लीबं पद्मे" इति मेदिनी ॥ खगः पक्षी।मीनः मत्स्यः तयोः । तथा सर्पे कृकलासे अण्डजातमात्रे मृगनाभिकस्तूर्यां च **अण्डजः** । पु०। अण्डात् डिम्बात् जायते । जन—जनने । डप्रत्ययः । "अण्डजो मृगनाभौ स्यात्सरटेऽहौ खगे झषे" इति मेदिनी ॥ निचुले हिज्जलवृक्षे ।"निचुलेज्जलहिज्जलौ" इति रभसः । अपिशब्दात् वेतसे पद्मे चन्द्रे शङ्खे । पु०न०। **अम्बुजः** । पु०। अम्बुनि जायते । जन—जनने।डप्रत्ययः। "अम्बुजो निचुले पुंसि कमले तु नपुंसकम्" इति मेदिनी ॥ ब्रह्मा विधाता । विष्णुः हरिः । स्मरः कामदेवः तत्र च । अपिशब्दात् हरे छागे मेषराशौ सूर्यवंशीयराजभेदे दशरथपितरि जन्मरहिते च **अजः** । पु० । न जायते । जन—जनने । डप्रत्ययः । नादितत्पुरुषः । "अजश्छागे हरिब्रह्मधातुस्मरहरे नृपे" इति मेदिनी ॥ ८१ ॥ स्मरे कामदेवे । केशे चिकुरे । पुत्रे रक्ते रुधिरे । न० । **अङ्गजः** । स्यात् । पु० अङ्गात् जायते । जन—जनने । डप्रत्ययः । अङ्गजं रुधिरेऽनङ्गकेशपुत्रमदेषु ना ।" इति मेदिनी ॥ उत्साहः उद्यमः । कार्त्तिकः स्वनामाख्यातो मासः तयोश्च। तथा बले प्राणने च **ऊर्जः** ।पु० । ऊर्ज—आधारे। घञ्प्रत्ययः ।"ऊर्जस्तु कार्त्तिकोत्साहबलेषु प्राणनेऽपि च" इति मेदिनी ॥ देशः स्वनाम्ना प्रसिद्धः। "पञ्चनदं समारभ्य म्लेच्छाद्दक्षिणपूर्वतः कम्बोजदेशः" इति । शङ्खे शङ्खभेदे । तथा हस्तिभेदे च **कम्बोजः** । पु० । कबि--गतौ । ओज प्रत्ययः । "कम्बोजो हस्तिभेदेऽपि शङ्खभेदविशेषयोः" इति मेदिनी ॥ ८२ ॥ नखे व्याघ्रनखादिगन्धद्रव्ये । करञ्जे स्वनामाख्याते वृक्षविशेषे च । **करजः** । पु० । कं शिरः जलं वा रञ्जयति । रञ्ज--रागे । णिच्अण्प्रत्ययौ । निपातनात् साधुः । करजं स्याद्व्याघ्रनखे करञ्जे नखयोः पुमान्" इति मेदिनी ॥ न्युब्जे अधोमुखे कुब्जे । हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक् । क्रुद्धो वायुर्यदा कुर्यात्तदा तं कुब्जमादिशेत्"

**जघन्यजोऽनुजे शूद्रे जलजं शङ्खपद्मयोः ।**
**चिह्नशेफपताकासु खट्वाङ्गेऽपि ध्वजोऽस्त्रियाम् ॥ ८४ ॥**
**नीरजं कमले कुष्ठे पिञ्जा हिंसाहरिद्रयोः ।**
**भारद्वाजो गुरोः पुत्रे व्याघ्राटाख्ये च पक्षिणि ॥ ८५ ॥**
**बुधैः ख्यातो भारद्वाजो द्रोणाचार्ये मुनावपि ।**
**भृङ्गराजः खगौषध्योर्लङ्घने मुनिभेषजम् ॥ ८६ ॥**

इत्युक्तलक्षणरोगवति । द्रुमान्तरे अपामार्गे । खड्गे च । **कुब्जः** । पु० । ईषत् उब्जमार्जवमस्य । शकन्ध्वादित्वात् पररूपम् ॥ खनौ आकरे, भूविदारणे च । सुरागृहे मदिरागृहे । स्त्री० । तथा अवज्ञायाम् आधारे भाण्डागारे कोष्ठागारे हट्टस्थाने पामरगृहे च **गञ्जः** । पु० । गजि--शब्दे, मत्ते च । घञ्प्रत्ययः । "गञ्जः स्यात्पुंसि रीढायां भाण्डागारे तु न स्त्रियाम्" इति मेदिनी ॥ पटहः ढक्कावाद्यम् । कृष्णला गुञ्जा तयोः । "तुल्या यवाभ्यां कथितात्र गुञ्जा" इति लीलावती । तथा चतुर्धान्यमाने गोधूमद्वयमाने । मदिरागृहे मधुरध्वनौ चर्चायां च । **गुञ्जा** । स्त्री० । गुजि--शब्दे । अच् प्रत्ययः । "गुञ्जा तु काकचिञ्चायां पटहे च कलध्वनौ" इति मेदिनी ॥ ८३ ॥ अनुजे कनिष्ठभ्रातरि । शूद्रे चतुर्थे वर्णे । शोकहेतुकगतियुक्ते । "अहहरे त्वा शूद्र" इति श्रुतिः । शुचा द्रवणात् क्षत्रियस्याऽपि शूद्रत्वमिति शारीरिकभाष्यम् । तथा अधमे चरमे गर्विते च **जघन्यजः** । पु० । जघन्ये चरमे जायते । जन-जनने । डप्रत्ययः । "जघन्यजः कनीयसि वृषले" इति मेदिनी ॥ शङ्खः स्वनामाख्यातः समुद्रजातः पदार्थः । पद्मं कमलं तयोः । तथा शैवले वानीरवृक्षे हिज्जलवृक्षे मत्स्ये ज्योतिषोक्तेषु कर्कटमीनमकरान्त्यार्धराशिषु क्षारभेदे जलजातमात्रे च **जलजम्** । पु० न० । जले जायते । जन-जनने । डप्रत्ययः । "जलजं कमले शङ्खे" इति मेदिनी ॥ चिह्नं लाञ्छनम् । शेफः शिश्नम्, अथवा मेढ्रम् । पताका वंशदण्डोपरिस्थितं चतुष्कोणाकारं वस्त्रखण्डं तासु । खट्वाङ्गे नरपञ्जरे, ईशायुधविशेषे च । अपिशब्दात् शौण्डिके सर्पे च । पु० न० । **ध्वजः** । पु० । ध्वज--गतौ अच् प्रत्ययः । "ध्वजः स्यात् शौण्डिके पुमान् । न स्त्रियां तु पताकायां खट्वाङ्गे मेढ्रचिह्नयोः" इति मेदिनी ॥ ८४ ॥ कमले पद्मे । कुष्ठे कुष्ठौषधे । तथा मुक्तायां जलजन्तुभेदे जलजमात्रे च **नीरजम्** । नीरे जायते । जन--जनने । डप्रत्ययः । "नीरजं कुष्ठपद्मयोः" इति मेदिनी ॥ हिंसा वधः । हरिद्रा स्वनामाख्यातः औषधिभेदः तयोः । तथा बले कर्पूरभेदे । पु० । व्याकुले । त्रि० । तूले च **पिञ्जा** । स्त्री० । पिजि--वधे, दाने च । अच् प्रत्ययः । "पिञ्जा तूलहरिद्रयोः । बले क्लीबे वधे पुंसि त्रिषु" इति मेदिनी । गुरोः पुत्रे बृहस्पतिपुत्रे । व्याघ्राटाख्ये पक्षिणि विघ्राटविहगे । चकारात् गोत्रप्रवर्तके मुनिभेदे **भारद्वाजः** । पु० ॥ ८५ ॥ द्रोणाचार्ये अगस्त्यमुनौ अपिशब्दात् वनकार्पास्याम् । स्त्री० । **भारद्वाजः** । पु० । बुधैः पण्डितैः ख्यातः कथितः इत्यर्थः । **भाद्वाजी**त्यप्यत्र । भरद्वाजस्य गोत्रापत्यम् । अण्प्रत्ययः । "भारद्वाजो गुरोः पुत्रे व्याघ्राटाख्य-

**अगस्त्ये च हरीतक्यां रुजा स्याद्रोगभङ्गयोः।**
**मुस्तेऽपि वनजो बीजं रेतस्तत्त्वार्थहेतुषु ॥ ८७ ॥**
**व्याजः शाठ्येऽपदेशे च स्वेदरक्तात्मजाः स्वजाः।**
**निसर्गे सहजः पुंसि सहोत्थे वाच्यलिङ्गकः ॥ ८८ ॥**
**सन्नद्धसम्भृतौ सज्जौ हिमजा पार्वती शची।**

**इति जान्ताः।**

**अज्ञस्त्रिषु जडे मूर्खे कृतज्ञः कुक्कुरेऽपि च ॥ ८९ ॥**

विहङ्गमे। भार्ङ्गीजी वनकार्पास्यां ना द्रोणकषिभेदयोः'' इति मेदिनी। खगः पक्षी। ओषधी फलपाकान्तव्रीहियवादिः तयोः। **भृङ्गराजः।** पु०। भृङ्गान् रञ्जयति। रञ्ज-रागे। णिच्-कनिन्प्रत्ययौ। निपातनात् साधुः। अथवा भृङ्गानां राजा इति षष्ठीतत्पुरुषः। ''अथ भृङ्ग-राज उक्तः पक्षिविशेषे च मार्कवे भ्रमरे'' इति मेदिनी ॥ लङ्घने आहाराभावे। अगस्त्ये स्वना-माख्याते मुनौ। हरीतक्यां च **मुनिभेषजम्।** न०। मुनीनां भेषजमिव। ''मुनिभेषजमा-गस्त्ये हरीतक्यां च लङ्घने'' इति मेदिनी ॥ रोगः व्याधिः। भङ्गः भेदः, खण्डो वा। तयोश्च **रुजा।** स्यात्। स्त्री०। रुज—भङ्गे, रोगे च। अङ्प्रत्ययः। टाप् च। ''रुजा। रोगे च भङ्गे'' इति मेदिनी ॥ मुस्ते मुस्तकभेषजे। अपिशब्दात् पद्मे वनमूरणे च। पु०। अश्वगन्धायां गन्धपत्रायां वनकार्पास्यां मुद्गपर्ण्याम्। स्त्री०। वनजातमात्रे त्रि०। **वनजः।** पु०। वने जलेऽरण्ये वा जायते। जन—जनने। डप्रत्ययः। ''वनजा मुद्ग-पर्ण्यां ना मुस्तके क्लीबमम्बुजे'' इति मेदिनी॥ रेतः शुक्रम्। तत्त्वार्थः तत्त्वावधानम्। हेतुः कारणम्। तत्र च। तथा अंकुरे मज्जनि अव्यक्तगणितभेदे मन्त्रभेदे धान्यादेः फलादौ च। **बीजम्।** न०। वी—कान्तौ, जनने। क्विप्रत्ययः। जन—जनने। डप्रत्ययः। कर्मधारयः। ''बीजमङ्कुरकारणे। हेतुतत्त्वावधानशुक्रे''इति मेदिनी ॥८६॥८७॥ शाठ्ये शठतायाम्। अपदेशे कारणान्तरेण प्रवृत्तस्य कारणान्तरेणोद्भवनरूपे च। **व्याजः।** पु०। विपूर्व अज—गमने, क्षेपणे च। घञ्प्रत्ययः। वीभावाभावः। ''व्याजः शाठ्येऽपदेशे'' इति मेदिनी। ''व्याजः शाठ्यापदेशयोः'' इति विश्वः ॥ स्वेदः घर्मजलं, पाकभेदो वा। रक्तः रुधिरः। आत्मजः पुत्रः तत्र च। तथा कन्यायाम्। स्त्री०। आत्मजाते च। त्रि०। **स्वजः।** पुं० न०। स्वस्मात् देहात् आत्मनो वा जायते। जन—जनने। डप्रत्ययः। ''स्वजः प्रस्वेदपुत्रयोः। क्लीबं रक्ते'' इति मेदिनी ॥ निसर्गे स्वभावे, स्वरूपे वा। सहोत्थे सहोदरे। त्रि०। तथा ज्योतिषोक्तजन्म-लग्नात् तृतीये स्थाने च। **सहजः।** पु०। सह जायते। जन—जनने। डप्रत्ययः। ''सह-जस्तु निसर्गे ना सहोत्थे पुनरन्यवत्'' इति मेदिनी ॥ ८८ ॥ सन्नद्धः कृतसन्नाहः, धृतवर्मा वा। सम्भृतः सम्यक् पोषणं तयोः। तथा उद्युक्ते निभृते आयोजने वेशे च **सज्जः।** त्रि०। सज—गतौ। अच्प्रत्ययः। ''सज्जः स्यात्सन्नद्धे, सम्भृते त्रिषु''इति मेदिनी। पार्वती दुर्गा।

संज्ञा सूर्यप्रियायां च सर्वज्ञः शङ्करे जिने ।
इति ज्ञान्ताः ॥
अरिष्टं सूतिकागारे तक्रेऽपि च पुमांस्त्वयम् ॥ ९० ॥
काके निम्बे च लशुने गर्त्ते कूपे खलेऽवटः ।
अत्यर्थक्षौमयोरट्टः क्रताविष्टं प्रिये त्रिषु ॥ ९१ ॥

शची इन्द्राणी तयोः । **हिमजा** । स्त्री० । हिमाज्जायते । जन-जनने । डप्रत्ययः । टाप् "हिमजा तु शचीगौर्योः पुंसि मैनाकपर्वते" इति मेदिनी ॥ इति जकारान्ताः समाप्ता अथ ञान्तानाह ॥ जडे इष्टानिष्टानभिज्ञे । मूर्खे ज्ञानशून्ये, मूढे च । **अज्ञः** । त्रि न जानाति । नञ्पूर्वज्ञा-बोधने । कप्रत्ययः । "अज्ञस्तु जडमूर्खयोः" इति विश्वः ॥ कु शुनि । पु० अपिशब्दात् कृतोपकारज्ञातरि प्रत्युपकारे च **कृतज्ञः** । त्रि० । कृतं ह पकारं जानाति । ज्ञा-बोधने । कप्रत्ययः । "कृतज्ञः कुक्कुरे पुंसि मर्यादिन्यभिधेयवत्" मेदिनी ॥ ८९ ॥ सूर्यप्रियायां सूर्यपत्न्याम् । तथा चेतानायां बुद्धौ आख्यायां हस्ताद्यैरर्थर गायत्र्याम् । स्त्री० । तथा पीतकाष्ठे कालीयके गन्धद्रव्ये च । न० । **संज्ञा** । स्त्री० । पूर्वज्ञा-बोधने । अङ्प्रत्ययः, कप्रत्ययश्च । "संज्ञा नामनि गायत्र्यां चेतनारवियोषितोः । अ सूचनायां च हस्ताद्यैरपि योषिति" इति मेदिनी ॥ शङ्करे शिवे । जिने बुद्धे च । **सर्वज्ञः** पु० । सर्वं जानाति । ज्ञा-बोधने । कप्रत्ययः । "सर्वज्ञः शिवबुद्धयोः" इति मेदिनी ॥ इति ञ समाप्ताः ॥ अथ टान्तानाह ॥ सूतिकागारे सूतिकागृहे । तक्रे चतुर्थांशजलयोगेन मथिते दध्नि । काके वायसे । निम्बे स्वनामाख्याते वृक्षे । लशुने च । अपिशब्दात् निपुणे वृषभासुरे अ भेदे कङ्कपक्षिणि फेणिलवृक्षे अशुभे मरणचिह्ने चक्षुर्जले मद्ये च **अरिष्टम्** । न० । रिष-वधे । क्तप्रत्ययः । नादिबहुव्रीहिः । "अरिष्टो लशुने निम्बे फेणिले काककङ्कयोः । ष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने चारिष्टमादेशिते त्रिषु" इति मेदिनी । भूमिच्छिद्रे । कूपे स्वनामख्याते जलाधारे । खले नीचे, अधमे च । **अवटः** पु० । अव-र गमने वा । अटन्प्रत्ययः । "अवटः स्यात्खले गर्ते कूपे कुहकजीविनि" इति मेदिनी ॥ अ अतिशयः । क्षौमः अतसीवल्कलजातं वस्त्रं तयोः । तथा प्रासादस्योऽपरि गृहे प्राचीरोपा सैन्यगृहे च । **अट्टः** । पु० । अट्ट-अनादरे । घञ्प्रत्ययः । "अट्टं भक्ते च शुष्के क्षौमेऽत्यर्थे गृहान्तरे" इति मेदिनी ॥ क्रतौ पुरुषप्रयत्ने, कर्तृव्यापारे वा । अपरे तु "एक कर्मभवनं त्रेतायां यच्च हूयते । अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते । अग्निहोत्रं सत्यं वेदानां चार्थपालनम् । आतिथ्यं वैश्वदेवं च प्राहुरिष्टम्" इत्युक्ते लक्षणे ध च वदन्ति । प्रिये वल्लभे । तथा पूजिते अभिलषिते च **इष्टम्** । त्रि० । इष-ग क्तप्रत्ययः । यज्ञादौ कर्मणि एरण्डवृक्षे संस्कारे च । पु० । यज-देवपूजने, दाने, सत्कृतौ क्तप्रत्ययः । "इष्टमाशिंसनेऽपि स्यात्पूजिते प्रेयसि त्रिषु । सप्ततन्तौ पुमान् क्लीबं संस्कारे

केशटः शोणके विष्णौ कूपीटमुदरे जले ।
पुंश्चले कुण्डकीटः स्याज्जाराच्च ब्राह्मणीसुते ॥ ९२ ॥
समये च क्रियाकारे किलिञ्जशरयोः कटः ।
कोटिः सङ्ख्याऽपि करटो वाद्यभाण्डकुविप्रयोः ॥ ९३ ॥
कुलीरे कर्कटो राशौ कृष्टिः कर्षे बुधे पुमान् ।
अप्रियेऽपि कटुः कुम्भे कुटो ना भवने द्वयोः ॥ ९४ ॥
सुरायां स्त्री कीकटस्तु निःस्वे देशे मितम्पचे ।
खेटः सिङ्घाणके हीने गृष्टिर्धेन्वौषधीभिदोः ॥ ९५ ॥

कर्मणि'' इति मेदिनी । ॥ ९० ॥ ९१ ॥ शोणके शोणकवृक्षे । विष्णौ तथा वरुणे ह्रीबेरे दैत्यभेदे च **केशटः** । पु० । क्लिश—उपतापे । अच्प्रत्ययः । ललोपश्च । कस्य ईशो वा । ''केशटो हर्यजौ कगे'' इति मेदिनी ॥ उदरे कुक्षौ जले तोये च । **कूपीटम्** । न० । कुप—द्युतौ, चित्रीकरणे वा । कीटन्प्रत्ययः । ''कूपीटमुदरे तोये'' इति मेदिनी ॥ पुंश्चले असद्वृत्ति पुरुषे । जाराच्च ब्राह्मणीसुते जारात् ब्राह्मणीजाते पुत्रे । तथा चार्वाकवचनाभिज्ञे च **कुण्डकीटः** स्यात् । पु० । कुण्डेन कीट्यते बध्यते । कीट—बन्धे, वने च । अच्प्रत्ययः । ''कुण्डकीटस्तु चार्वाकवचनाभिज्ञपूरुषे । जारजब्राह्मणीपुत्रदासीकामुकयोरपि'' इति विश्वः॥९२॥ समये काले । क्रियाकारे क्रियाकारके । किलिञ्जः नडादिरचितम् आसनम् । शरः बाणः तयोः । था हस्तिगण्डस्थले कटिपार्श्वे अतिशये तृणे शवे शवरथे ओषधौ श्मशाने च **कटः** । पु० । कट—वृतौ, वर्षणे वा । अच्प्रत्ययः । कर्मणि वो वा । ''कटः श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशये शरे । समये गजगण्डे च'' इति मेदिनी ॥ सङ्ख्या शतलक्षमितसङ्ख्या करटो गजगण्डः, काको वा तयोः । वाद्यभाण्डः तूर्यभाण्डः । कुविप्रो गर्हितब्राह्मणः तयोः । अपिशब्दात् धनुषोऽग्रभागे वस्तुमात्रस्याऽग्रभागे प्रकर्षे संशयस्यालम्बने वादे निर्णयार्थं कृते पूर्वपक्षे च । **कोटिः** । स्त्री० । कुट—कौटिल्ये । इञ्प्रत्ययः । कोटीत्यप्यत्र । ''कोटिः स्त्री धनुषोऽग्रेऽश्रौ सङ्ख्याभेदप्रकर्षयोः'' इति मेदिनी ॥ ९३ ॥ कुलीरे जलजन्तुभेदे । राशौ मेषादितश्चतुर्थे राशौ । तथा क्षुद्रामलके कट्फले कर्करेटौ पक्षिणि शाल्मलिवृक्षे च **कर्कटः** । पु० । कर्क—हासे । सौत्रः अटन्प्रत्ययः । ''कर्कटो विहगान्तरे । राशिभेदे कुलीरे स्त्री बालुङ्क्यां शाल्मलीफले'' इति मेदिनी ॥ कर्षे षोडशमाषके मानं, तन्मिते स्वर्णे वा । बुधे पण्डिते । पु० । **कृष्टिः** । स्त्री० । कृष—कर्षणे । क्तिच्प्रत्ययः । ''अथ कृष्टिः स्यादाकर्षे स्त्री बुधे पुमान्'' इति मेदिनी ॥ अप्रिये प्रियशून्ये । अपिशब्दात् दूषणे दुष्टकार्ये रसभेदे । त्रि० । चम्पके चीनकर्पूरे पटोले कटुकीलतायां च । स्त्री० । **कटुः** । पु० । कट—आच्छादने, वर्षणे वा । उप्रत्ययः । ''कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि । नपुंसकमकार्ये स्यात्पुँल्लिङ्गो रसमात्रके । त्रिषु तद्वत्सुगन्धयोश्च मत्सरेऽपि खरेऽपि च'' इति मेदिनी ॥ कुम्भे घटे । पु० । भवने गृहे ।

सूकरे पुंसि घृष्टिः स्यात्स्पर्द्धाघर्षणयोः स्त्रियाम् ।
घोण्टा तु बदरे पूगे देहांशे वर्णने चटुः ॥ ९६ ॥
निःश्वासे दशनोच्छिष्टश्चुम्बे दन्तच्छदेऽपि च ।
परिमाणमुदोर्दिष्टिर्दिष्टः कालोपदिष्टयोः ॥ ९७ ॥
धाराटौ चातकहयौ कपाटेऽपि च निष्कुटः ।
कोटरेऽप्यथ पट्टः स्यात्फलके नृपशासने ॥ ९८ ॥

पु० स्त्री० । सुरायाम् स्त्री० । तथा दुर्गे पर्वते वृक्षे शिलाकुट्टे अस्त्रे च **कुटः** । पु० । कुट—कौटिल्ये, वैकल्ये वा । अच्प्रत्ययः । "कुटः कोटे पुमानस्त्री घटे स्त्रीपुंसयोर्गृहे । कुटी स्यात्कुम्भदास्यां च सुरायां चित्रगुच्छके" इति मेदिनी ॥ निःस्वे निर्धने । देशे मगधदेशे । मितम्पचे कृपणे, परिमितपाचके वा । त्रि० । तथा अश्वे च **कीटकः** । पु० । किञ्चित् कुत्सितं कटति । कट—गतौ । अच्प्रत्ययः । पृषोदरादित्वात् साधुः । "कीटकः कृपणे निःस्वे त्रिषु पुम्भूम्नि नीवृति" इति मेदिनी ॥ सिङ्घाणके कफे । हीने अधमे । तथा सूर्यादिग्रहे । "यस्मिन्नृक्षे स्थिताः खेटाः" इति ज्योतिषम् । ग्रामभेदे मृगयायाम् । पु० न० । चर्मणि तृणे च । न० । **खेटः** । पु० । खेट—भोजने, गतौ वा । अच्प्रत्ययः । "खेटः कफे ग्रामभेदे चर्मण्यस्त्रवति त्रिषु" इति मेदिनी ॥ धेनुः सकृत्प्रसूता गौः । औषधीभिद् बदरानाम औषधीविशेषः तयोः । तथा वराहकान्तायां काश्मर्यां च **गृष्टिः** । स्त्री० । सकृद्गर्भं गृह्णाति । ग्रह—उपादाने । क्तिच्प्रत्ययः । पृषोदरादित्वान्निपातनात् साधुः । "अथ गृष्टिः सकृत्सूतगवी-बदरयोः स्त्रियाम्" इति मेदिनी ॥ ९४ ॥ ९५ ॥ सूकरे वराहे । पु० । स्पर्धा पराभिभवेच्छा, संहर्षो वा।घर्षणं वस्तुद्वयोः एकतः स्पर्शः तयोः।तथा विष्णुक्रान्तायां वराह्यां च **घृष्टिः** । स्यात् । स्त्री० । घृष—संघर्षे क्तिच्प्रत्ययः ।"घृष्टिः स्त्रीघर्षणस्पर्धाविष्णुक्रान्तासु ना किरौ" इति मेदिनी ॥ बदरे स्वनामाख्याते वृक्षभेदे । पूगे क्रमुके च । **घोण्टा** । स्त्री० । घुण--ग्रहणे, भ्रमणे च टप्रत्ययः । तस्य नेत्त्वम् । "घोण्टा तु बदरीपूगवृक्षयोरपि योषिति" इति मेदिनी ॥ देहांशे उदरे । वर्णने प्रियवाक्ये । तथा व्रतिनामासनभेदे च **चटुः** । पु०। चट—भेदे,वधे च । कुप्रत्ययः । "चटुश्चाटौ पिचिण्डेऽथ व्रतिनामासने पुमान्"इति मेदिनी॥९६॥ निःश्वासे मुखनासाभ्यां निर्गते वायौ । चुम्बे अधरादिचुम्बने । दन्तच्छदे दन्तोच्छिष्टे च । क्वचित् दन्तच्छिदे" इति पाठः । **दशनोच्छिष्टः** । पु० न० । दशनेनोच्छिष्टं यत्र । "रेवतीदशनोच्छिष्टपरिपूतपुटे" इति माघः । "दशनोच्छिष्टः पुंसि स्यान्निःश्वासाधरचुम्बयोः" इति मेदिनी ॥ परिमाणं तु लाङ्गूलप्रस्थादिभिर्द्रव्यस्य परिच्छेदः । मुद् हर्षः तयोः । **दिष्टिः** । स्त्री० । दिश देशने । क्तिच्प्रत्ययः । "दिष्टिर्मुत्परिमाणयोः" इति मेदिनी । कालः प्रसिद्धः । उपदिष्टः उपदेशदाता तयोः । तथा भाग्ये च **दिष्टः** । पु० न० ।दिश—देशने । क्तप्रत्ययः । "दिष्टं दैवे पुमान्काले" इति मेदिनी॥९७॥चातकः पक्षिविशेषः।हयः अश्वः तयोः।तथा मेघे मत्तमातङ्गे च **धाराटः** ।

**प्रत्याख्याते प्रेषिते च प्रतिसृष्टं त्रिलिङ्गकम् ।**
**पर्कटी प्लक्षवृक्षे च पूगादेश्च नवे फले ॥ ९९ ॥**
**वटी त्रिषु गुणे पुंसि न्यग्रोधे च कपर्दके ।**
**बर्बट्यौ व्रीहिभिद्वेश्ये नटौ भरतकामुकौ ॥ १०० ॥**
**मोरटं गोर्नवे क्षीरेऽङ्कोटपुष्पेक्षुमूलयोः ।**
**म्लिष्टं म्लाने कुवचने मर्कटी शूकशिम्ब्यपि ॥ १०१ ॥**

पु० । धारार्थमटति । धारं धारया वा अटति । धारशब्दोपपद अट—गतौ । अच्प्रत्ययः।"धाराटश्चातकाश्वयोः" इति मेदिनी ॥ कपाटे द्वारावरणेन वातरोधके स्वनामाख्याते काष्ठादौ । कोटरे वृक्षस्थगह्वरे । अपिशब्दात् गृहसमीपस्थे उपवने क्षेत्रे राज्ञाम् अन्तःपुरे च **निष्कुटः** । पु० । निस्पूर्व कुट—कौटिल्ये छेदने वा । क प्रत्ययः । "निष्कुटस्तु गृहोद्याने स्यात्केदारकपाटयोः" । इति मेदिनी ॥ फलके अस्त्रभेदे । नृपशासने राजाज्ञायाम् । तथा नगरे चतुष्पथे राजादिलेख्यपत्रे पीठे राजसिंहासने क्षौमे उत्तरीयवस्त्रे पेषणे पाषाणे च पट्टः स्यात् । पु० । न० वा । पट—गतौ । क्तप्रत्ययः । नेट् । ट वा । तस्य नेत्त्वम् । "**पट्टः** पेषणपाषाणे व्रणादीनां च बन्धने । चतुष्पथे तु राजादिशासनान्तरपीठयोः" इति मेदिनी ॥ ९८ ॥ प्रत्याख्याते निराकृते, दूरीकृते वा । प्रेषिते कृतप्रेषणे च । **प्रतिसृष्टम्** । त्रि० । प्रतिपूर्व सृज—विसर्गे । क्तप्रत्ययः । "प्रतिसृष्टः प्रेषिते स्यात्प्रत्याख्याते च वाच्यवत्" इति मेदिनी ॥ प्लक्षवृक्षे स्वनामाख्याततरुभेदे । पूगादेः क्रमुकादेश्च । नवे फले नूतने फले च । **पर्कटी** । पु० । स्त्री० वा । पृच—सम्पर्के । अटिनिप्रत्ययः निपातनात् कुत्वम् । "पर्कटी नूतनफले पूगादेः प्लक्षपादपे" इति मेदिनी ॥ ९९ ॥ गुणे गोलाकारे पदार्थे । त्रि० । न्यग्रोधे वटतरौ कपर्दके वराटके च । **वटी** । पु० स्त्री० वा । वट—वेष्टने । अच्प्रत्ययः । "वटी त्रिषु गुणे पुंसि स्यान्न्यग्रोधकपर्दयोः" इति मेदिनी ॥ व्रीहिभिद् व्रीहिभेदः, राजमाषो वा । वेश्या पण्ययोषित् । तयोश्च । **बर्बटी** । पु० । बर्ब—गतौ । अटिनिप्रत्ययः । क्वचित् "वर्वटी" इति पाठः । बर्बटी पण्ययोषायां व्रीहिभेदेऽपि योषिति" इति मेदिनी ॥ भरतः नाटकादिदृश्यकाव्याभिनयकर्ता मुनिः । कामुकः मैथुनकामयनातिशयवान् । तयोश्च । तथा नर्तकभेदे जायाजीविनि वर्णसङ्करभेदे अशोकवृक्षे शोणाकवृक्षे नले किष्कुपर्वणि गोदन्तहरिताले च **नटः** । पु० । नट—नृत्ये । अच्प्रत्ययः । "नटी नलौषधौ स्त्री स्याच्छैलूषाशोकयोः पुमान्" इति मेदिनी ॥ १०० ॥ गोर्नवे क्षीरे सप्तरात्रोषितक्षीरे । केचित्तु "नूतने क्षीरे" इति पठन्ति । अङ्कोटः पीतवर्णसारः गन्धयुक्तपुष्पः दीर्घकण्टयुक्तः रक्तवर्णफल इति ख्यातो वृक्षः तस्य पुष्पं । इक्षुमूलं प्रसिद्धं तयोः । तथा मूर्वालतायां च **मोरटम्** । न० । मुर—वेष्टने । अटन् प्रत्ययः । "मोरटं तु भवेदिक्षुमूलाङ्कोटप्रसूनयोः । सप्तरात्रात्परक्षीरे मूर्विकायां तु मोरटे" इति मेदिनी ॥ म्लाने मलिने ग्लानयुक्ते वा । त्रि० । कुवचने गर्हितवचने, अविस्पष्टवाक्ये वा । **म्लिष्टम्** । न० । म्लेच्छ-

**लाटोंऽशुके च देशे च व्युष्टं कल्ये त्रिपूषिते ।**
**पथि वास्तुनि वाटः स्याद्विकटं विकृतं बृहत् ॥ १०२ ॥**
**वर्कराटः कटाक्षे च स्त्रीणां स्तननखक्षते ।**
**भद्रप्रेषणयोर्विष्टिर्वर्णाटौ कामिगायनौ ॥ १०३ ॥**
**विटोऽद्रौ लवणे षिड्गे मूषिके खदिरेऽपि च ।**
**पाञ्चलौहे श्रुतिकटः प्रायश्चित्तभुजङ्गयोः ॥ १०४ ॥**

शब्दात् क्तप्रत्ययः । निपातनात् साधुः । "क्लिष्टं त्रिष्वव्यक्तवाचि म्लाने" इति मेदिनी ॥ शूकशिम्बी कपिकच्छू तस्याम् । अपिशब्दात् अपामार्गे अजमोदायां करञ्जभेदे वानरयोषिति च **मर्कटी** । स्त्री० । मर्कटोस्त्यस्याः । स्निग्धत्वेन अच्प्रत्ययः । गौरादित्वात् ङीप् । "अथ मर्कटी । करञ्जमिच्छूकशिम्ब्योः पुंसि वानरलूतयोः" इति मेदिनी ॥ १०१ ॥ अंशुके वस्त्रे । देशे स्वनामाख्याते देशभेदे । चकारात् जीर्णालङ्कारे विदग्धपुरुषे च **लाटः** । पु० । लट-संज्ञायाम् । घञ्प्रत्ययः । "लाटो देशान्तरे शुके" इति मेदिनी ॥ कल्ये प्रभाते । उषिते पर्युषिते । तथा फले दिवसे दग्धे च । न० । **व्युष्टम्** । त्रि० निपूर्व उष-दाहे । क्तप्रत्ययः । विपूर्ववस-निवासे । क्तप्रत्ययः । इड्भावो वा । "व्युष्टं कल्ये त्रिपूषिते" इति मेदिनी ॥ पथि मार्गे । वास्तुनि वास्तुभूमौ । स्त्री० । तथा वृतिस्थाने च **वाटः** स्यात् । पु० । वट-वेष्टने । घञ्प्रत्ययः । "वाटो मार्गे वृतिस्थाने स्यात्कुटीवास्तुनोः स्त्रियाम्" इति । मेदिनी ॥ विकृतं विकारयुक्तम् । बृहत् विशालं तत्र च । तथा विस्फोटके साकरण्डवृक्षे सुन्दरे दन्तुरे च । त्रि० । **विकटम्** । न० । विपूर्वकट-गतौ । अच्प्रत्ययः । "विकटः सुन्दरे प्रोक्तो विशालविकारयोरपि" इति विश्वः ॥ १०२ ॥ कटाक्षे अपाङ्गदृष्टौ । स्त्रीणां नारीणां स्तननखक्षते पयोधरयोः भर्तुर्दन्तनखक्षते । चकारात् तरुणसूर्यकिरणे च । **वर्कराटः** । पु० । वृक-गतौ । अटन्प्रत्ययः । "वर्करा[illegible]टः कटाक्षे स्यात्तरुणादित्यरोचिषि ॥ नारीपयोधरोत्सङ्क्रान्तदन्तनखक्षते" इति मेदिनी ॥ भद्रे सङ्गलम् । प्रेषणे प्रेरणे [illegible] । तथा वेतनं विनाभारादिवहनजन्ये क्लेशे वेतने कर्मणि । [illegible] कारणे कर्मकरे भृत्ये वेतनं विना कर्मकरे च । पु० । **विष्टिः** । स्त्री० । विश--प्रवेशने । क्तिन्-प्रत्ययः । क्तिच् वा । "विष्टिः कर्मकरे भद्रे प्रेषणे वेतनेऽपि च" इति विश्वः । कामी कामवान् पुरुषः । गायनः गानोपजीवी । तयोश्च **वर्णाटः** । पु० । [illegible] । वर्णशब्द-पूर्वक अट-गतौ । अच् प्रत्ययः । "वर्णाटो गायने चित्रकरे [illegible]" इति मेदिनी ॥ ॥ १०३ ॥ अद्रौ पर्वतभेदे । लवणे लवणविशेषे । षिड्गे परस्त्रीषु लोलुपे । मूषिके उन्दुरौ । खदिरे स्वनामाख्याते वृक्षे। अपिशब्दात् जारे [illegible] च **विटः** । पु० । विट-आक्रोशे । कप्रत्ययः । "विटोऽद्रौ लवणे षिड्गे मूषिके खदिरेऽपि च" इति मेदिनी । तथैव विश्वः ॥ पाञ्चलौहे लौहं धातुः तेषु पञ्चसु धातुषु । तदुक्तम् । "सुवर्णं रजतं

**स्फुटिः स्फोटे च कर्कट्यां हृष्टः प्रतिहतेऽपि च ।**
**इति टान्ताः ॥**
**वैश्याद्विजन्मजेऽम्बष्ठः पाठायूथिकयोः स्त्रियाम् ॥ १०५ ॥**
**काष्ठा कालेऽपि कोष्ठस्तु स्वकीयेऽप्यथ सुध्वनौ ।**
**ग्रीवादेशेऽपि कण्ठः स्यात्कुष्ठं रोगौषधीभिदोः ॥ १०६ ॥**
**दात्यूहे कालकण्ठः स्याच्छिवखञ्जनयोरपि ।**
**ज्येष्ठो मासि च वृद्धे च ज्येष्ठा च गृहगोधिका ॥ १०७ ॥**

ताम्रं रङ्गं नागं तथैव च । पञ्चलौहमिति प्रोक्तम्'' इति । ''प्रायश्चित्तं पापक्षयसाधनत्वेन विधिबोधितं कर्मचान्द्रायणादि । तथा चाहुः प्राञ्चः । ''प्रायो नामतपः प्रोक्तं चित्तं निश्चय उच्यते । तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्''इति । भुजङ्गः अहिः। तयोश्च **श्रुतिकटः।** पु० । श्रुतिं श्रवणं कटति । कट—गतौ, आच्छादने वा । अच्प्रत्ययः । केचित्तु '' श्रुतिकटुः'' इति पठन्ति । ''अथ श्रुतिकटः पाञ्चलौहेऽहौ पापशोधने'' इति मेदिनी ॥ १०४ ॥ स्फोटे पादस्फोटरोगे । कर्कट्यां स्वनामाख्यातफले च । **स्फुटिः** । स्त्री० । स्फुट—विकाशे:-हिंसे वा । इन्प्रत्ययः । वा ङीप् । ''स्फुटिर्योषित्पादस्फोटामयेऽपि च । निर्भिन्नकर्कटीसस्ये'' इति मेदिनी ॥ प्रतिहते प्रतिघाते । अपिशब्दात् प्रीते जातहर्षे जातरोमाञ्चे विस्मिते च **हृष्टः।** त्रि० । हृष—हर्षे, चित्तोत्साहे वा । क्तप्रत्ययः । ''हृष्टो रोमाञ्चितेऽपि च । जातहर्षे प्रहसिते विस्मितेऽप्यभिधेयवत्'' इति मेदिनी ॥ टकारान्ताः समाप्ताः॥ अथ ठान्तानाह ॥ वैश्यायां वैश्यकन्यायाम् । द्विजन्मजे विप्रात् जाते सङ्कीर्णवर्णे । पाठायां यूथिकायां च । स्त्री०। तथा चिकित्सके देशभेदे हस्तिपके च **अम्बष्ठः** । पु० । अम्बाय चिकित्सकशब्दाय तत्प्रख्यापनार्थं तिष्ठतेऽभिप्रैति । स्था—गतिनिरोधे । कप्रत्ययः । षत्वम् । ''अम्बष्ठो देशभेदेऽपि विप्राद्वैश्यासुतेऽपि च'' इति मेदिनी ॥१०५॥ काले अष्टादशनिमेषात्मके काले । अपिशब्दात् दिशि दारुहरिद्रायां स्थितौ पर्यवसानभूमौ उत्कर्षे सीमायां च **काष्ठा** स्त्री० । काश—दीप्तौ । क्थन्प्रत्ययः । ''काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम्'' इति मेदिनी ॥ स्वकीये आत्मीये । त्रि० । अपिशब्दात् गृहमध्ये उदरमध्ये धान्यादिस्थापने कुशूले च **कोष्ठः** । पु० । कुष—जनने, भेदने वा । थन्प्रत्ययः । ''कोष्ठः कुशूले चात्मीये मध्ये कुक्षेर्गृहस्य च'' इति मेदिनी ॥ सुध्वनौ सुन्दररावे । ग्रीवादेशे ग्रीवापुरोभागे । अपिशब्दात् मदनवृक्षे समीपे होमकुण्डाद्बाह्येऽङ्गुलिमितस्थाने च **कण्ठः** स्यात् । पु० । कण—गतौ, निमीलने वा । ठप्रत्ययः । यस्य नेत्त्वम् । कठि—मेदने । अच्प्रत्ययो वा । ''कण्ठो गले सन्निधाने ध्वनौ मदनपादपे'' इति मेदिनी ॥ रोगः स्वनामाख्यातरोगविशेषः । औषधिभिद् पुष्करम । तयोश्च **कुष्ठम्** । न० । कुष्णाति देहं रोगं वा कुष—निष्कर्षे । क्थन् प्रत्ययः । ''कुष्ठं रोगे पुष्करेऽस्त्री'' इति मेदिनी ॥ १०६ ॥ दात्यूहे स्वनामाख्यातपक्षिणि ।

**अम्ललोण्यां दन्तशठा ना जम्बीरकपित्थयोः ।**
**प्रकोष्ठौ बाहुगेहांशौ वरिष्ठं मरिचेऽपि च ॥ १०८ ॥**
**ताम्रे चोरुतरे चाऽथ मध्यस्थखलयोः शठः ।**
**शोठोऽलसे च मूर्खे च सूत्रकण्ठो द्विजन्मनि ॥ १०९ ॥**
**कपोतविहगेऽपि स्यात्प्रश्न्यां च प्रसभे हठः ।**

**इति ठान्ताः ॥**

शिवः नीलकण्ठः । खञ्जनः स्वनामाख्यातो विहगः तयोः । अपिशब्दात् पीतसारे मयूरे कलविङ्के च **कालकण्ठः** । पु० । कालः कण्ठो यस्य । "कालकण्ठस्तु दात्यूहे कलविङ्के च खञ्जने । मयूरे पीतसारे च स्यात्खण्डपरशौ पुमान्" इति मेदिनी ॥ मासि चित्रावधिके तृतीये मासि । वृद्धे अतिवृद्धे । चकारात् श्रेष्ठे अग्रजे च **ज्येष्ठः** । पु० । अतिशयेन वृद्ध इति वृद्धशब्दात् इष्ठन्प्रत्ययः । ज्यादेशः । "ज्येष्ठः श्रेष्ठेऽतिवृद्धे च त्रिषु मासान्तरे पुमान्" इति मेदिनी । गृहगोधिका स्वनामाख्याता जन्तुविशेषेति प्रसिद्धा । ( टिकटिकी ) तस्याम् । चकारात् ज्येष्ठभगिन्यां । वयोज्येष्ठायां ज्येष्ठस्य पत्न्यां गङ्गायाम् अलक्ष्म्याम् । अश्विन्यधिके अष्टादशे नक्षत्रे च **ज्येष्ठा** । स्त्री० । अतिशयेन वृद्धेति वृद्धशब्दात् इष्ठन्प्रत्ययः । ज्यादेशः। "ज्येष्ठा तु गृहगोधाख्यजन्तुनक्षत्रभेदयोः" इति मेदिनी ॥१०७॥ अम्ललोण्याम् अमरुल इति ख्याते लताभेदे चाङ्गेर्यां वा । जम्बीरः प्रसिद्धः । कपित्थः स्वनामाख्यातो वृक्षः तयोः । तथा कर्मरङ्गे नारङ्गे च । पु० । **दन्तशठा** । स्त्री० । दन्तान् शठति छेदयति । शठ-छेदने । अच्प्रत्ययः। स्याद्दन्तशठो जम्बीरे कपित्थे कर्मरङ्गके। नागरङ्गेऽपि च पुमान्स्याच्चाङ्गेर्यांतु योषिति" इति मेदिनी॥ बाहुः कुर्परस्याऽधोभागस्थो मणिबन्धपर्यन्तो हस्तावयवः । गेहांशः गृहद्वारपिण्डः । तयोश्च **प्रकोष्ठः** । पु० । प्रगतः कोष्ठम । प्रादिसमासः ।"प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च । भूपकक्षान्तरेऽपि स्यात्" इति मेदिनी ॥ ताम्रे स्वनामाख्याते लोहे । उरुतरे अतिशयमहति उरुतमे । मरिचे स्वनामाख्याते वृक्षे । अपिशब्दात् तित्तिरिविहगे पु० । वरे । न०। आदित्यभक्तायाम् । स्त्री०। वरिष्ठम् त्रि० । अतिशयेन उरुः । इष्ठन्प्रत्ययः । वरादेशश्च।"वरिष्ठं मरिचेऽपि च । ताम्रे क्लीबं तित्तिरौ ना वरोरुतरयोरपि" इति मेदिनी॥ मध्यस्थः मध्यस्थपुरुषः खलः धूर्तः तयोः । तथा तगरे कुङ्कुमे लौहे धुस्तूरे च **शठः** । पु० । शठ-दुष्टवचने, वधे वा । अच् प्रत्ययः । "शठो मध्यस्तपुरुषे धूर्तधुस्तूरयोरपि" इति मेदिनी॥ अलसे क्रियामन्दे । मूर्खे ज्ञानविरहिते च । **शोठः** । पु० । शुठ-गतिविघाते । घञ् प्रत्ययः। "शोठो मूर्खेऽलसेऽपि च" इति मेदिनी ॥ द्विजन्मनि विप्रे॥१०८॥१०९॥कपोतविहगे स्वनामाख्यातपक्षिणि।अपिशब्दात् खञ्जरीटे च **सूत्रकण्ठः**।पु०। सूत्रं कण्ठे यस्य।"सूत्रकण्ठः पुमान् विप्रे खञ्जरीटकपोतयोः" इति मेदिनी॥प्रश्न्यां कुम्भिकायाम् । प्रसभे बलात्कारे च **हठः**।पु०। हठ-बलात्कारे । प्लुतौ वा । अच्प्रत्ययः । "हठः स्यात्प्रसभे प्रश्न्याम्" इति मेनिदी ॥ इति

**प्राण्यङ्गकोषयोरण्डं कुष्माण्डौ फलभिद्गणौ ॥ ११० ॥**
**कुण्डं खातोखयोर्जारजे ना कुण्डी कमण्डलौ ।**
**सिंहोक्तौ स्त्री विषे क्ष्वेडः पशौ क्रोडो न नोरसि ॥ १११ ॥**
**खण्डोऽस्त्री शकले नेक्षुविकारमणिदोषयोः ।**
**गण्डः कपोले पिटके श्रेष्ठे गण्डकयोगयोः ॥ ११२ ॥**
**चण्डौषधिः खरश्चण्डो दण्डौ सैन्यार्कपार्श्वगौ ।**
**व्यथा कृपा च पीडे द्वे पाण्डुः कुन्तीपतौ सिते ॥ ११३ ॥**

ठकारान्ताः समाप्ताः॥अथ डान्तानाह ॥ प्राण्यङ्गं पुंसोऽङ्गावयवाः। कोषः पक्षिडिम्बः तयोः। तथा वीर्ये च **अण्डम्** । न० । अमन्ति संप्रयोगं यान्ति अनेन । अम—गतौ । डप्रत्ययः । टवर्गादित्वेऽपि डस्य नेत्त्वम् ॥ फलभिद् स्वनामाख्यातफलविशेषः गणः । शिवस्य गणदेवताभेदः। तयोः । तथा ओषधौ उमायां । कर्कारौ च **कुष्माण्डः** । पु० । ईषत् उष्मा पित्तहेतुत्वात् अण्डेषु बीजेषु यस्य । शकन्ध्वादित्वात् पररूपम् । कुष्माण्डकोऽप्यत्र । कुष्माण्डीत्यप्यत्र लताभेदे । ऋग्वेदप्रसिद्धेषु ऋग्विशेषेषु । "कुष्माण्डीं पावमानीं च" इति स्मृतिः । "कुष्माण्डयुमायां स्त्री पुंसि कर्कारौ च गणान्तरे । भ्रूणान्तरे" इति मेदिनी ॥ १०८—११० ॥ खातः गर्तः, जलाशयो वा । उखा स्थाली तयोः । तथा मानभेदे पात्रे होमीयाग्निस्थापनस्थानभेदे च । पु० न० । **कुण्डम्** । न० । कुड्यते । कुडि—भेदे, दाहे वा । घञ्प्रत्ययः । "कुण्डमग्न्यालये मानभेदे देवजलाशये" इति मेदिनी॥ जारजे जीवति भर्तरि जारात् जाते पुत्रे। पु० ।कमण्डलौ संन्यासिनां जलपात्रभेदे च । **कुण्डी** । स्त्री० । कुडि- भेदे,दाहे वा । घञ्प्रत्ययः । ङीप् च । "कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान्" इति मेदिनी ॥ सिंहोक्तौ सिंहनादे । स्त्री० । विषे वत्सनाभविषे, गरलमात्रे वा । तथा पीतघोषाद्रुमे वर्णात्मके ध्वनौ घोषातकीपुष्पे दुरासदे कुमिने च **क्ष्वेडः** । पु० । क्ष्विड—स्नेहे । अच्प्रत्ययः । "क्ष्वेडो ध्वनौ कर्णामये विषे । क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति" इति मेदिनी ॥ पशौ शूकरे । उरसि अश्वानामुरसि, भुजान्तरे वा । स्त्री०।तथा शनौ अङ्के राक्षसे वाराहीकन्दे। पु०स्त्री०। **क्रोडः** । पु० । क्रुड-बाल्ये । घञ्-प्रत्ययः । "क्रोडः शनौ शूकरे ना न पुमानङ्करक्षसोः" इति मेदिनी ॥ १११ ॥ शकले एकभागे । इक्षुविकारः खण्डशर्करा । मणिदोषः माणिक्यसञ्जातदोषः तयोः । तथा विड्लवणे च **खण्डः** । पु० । खडि-भेदेघञ्प्रत्ययः । "खण्डोऽस्त्री शकले नेक्षुविकारमणिदोषयोः" इति मेदिनी ॥ कपोले हस्तिकपोले, कपोलमात्रे वा । पिटके वंशपत्रादिनिर्मिते पात्रभेदे । श्रेष्ठे गण्डकः स्वनामाख्यातः पशुः अवच्छेदो वा । योगः ज्योतिषोक्तविष्कम्भादियोगभेदः तयोः। तथा चिह्ने हयभूषणे बुद्बुदे स्फोटके ग्रन्थौ त्याज्ये वैवाहिकजन्मलग्नस्थे अश्विन्यादितारादण्डभेदे च **गण्डः**। पु०। गडि—सन्निचये । अच्प्रत्ययः । "गण्डः स्यात्पुंसि खड्गिनि । ग्रहयोगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च । चिह्नवीरकपोलेषु हयभूषणबुद्बुदे" इति मेदिनी ॥ ११२ ॥ चण्डौषधिः तिन्तिडीवृक्षः । खरः तीक्ष्णः । तयोः ।

**पिण्डः सान्द्रे गृहांशेऽङ्गे पण्डः षण्डे मतौ स्त्रियाम् ।**
**स्तम्बे शस्ते प्रकाण्डोऽस्त्री वरण्डो वदनामये ॥ ११४ ॥**
**समूहे चान्तरावेद्यां मण्डः स्यात्सारपिच्छयोः ।**
**एरण्डे मस्तुनि क्लीबे मार्तण्डौ खगदंष्ट्रिणौ ॥ ११५ ॥**

तथा यमदूते दैत्यभेदे तीक्ष्णतावति अतिकोपने च । त्रि० । **चण्डः** । पु० । चडि-कोपे । अण्प्रत्ययः । "चण्डो ना तिन्तिडीवृक्षे यमकिङ्करदैत्ययोः" इति मेदिनी ॥ सैन्यः सेनासमुदायः । अर्कपार्श्वगः सूर्यानुचरः । तयोः । तथा लगुडे व्यूहभेदे प्रकाण्डे अश्वे कोणे मन्थनदण्डे षष्टिपलात्मके काले भूमिमानभेदे अर्थापहाररूपे राज्ञां चतुर्थोपाये यमे च **दण्डः** । पु० । न० । दण्ड-दण्डपातने । अच्प्रत्ययः । "दण्डोऽस्त्री लगुडे पुमान् । व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थनयोरपि । सैन्ये काले मानभेदे चण्डांशोः पारिपार्श्विके" इति मेदिनी ॥ व्यथा दुःखम् । कृपा दया तयोश्च । **पीडा** । स्त्री० । पीड-वधे, विलोडने वा । अप्रत्ययः । "पीडा कृपाशिरोमालापमर्दसरलद्रुषु" इति मेदिनी ॥ कुन्तीपतौ कुन्ती युधिष्ठिरादिमाता शूरसेनराजस्य पृथुनाम्नी कन्या तस्याः पतिः चन्द्रवंशीयनृपतिः । तत्र च । सिते श्वेतवर्णे । तद्वत् । नागभेदे श्वेतहस्तिनि रोगभेदे पटोलवृक्षे च । पु० । माषपर्ण्याम् । स्त्री० । **पाण्डुः** । पु० । पडि—गमने । कुप्रत्ययः । निपातनाद्दीर्घः । "पाण्डुर्ना नृपतौ सिते" इति मेदिनी ॥ ११३ ॥ सान्द्रे संहते घने । गृहांशे गृहैकदेशे । अङ्गे देहैकदेशे । तथा सामगानां पितृभ्यो देये गोलाकारे अन्ने देहे गोले सिह्लके ओड्रे वृन्दे कवले गजकुम्भे मदनवृक्षे च । पु० । आजीवने लौहे यजुर्वेदिभिः पितृभ्यो देये श्राद्धे विल्वाकारे अन्ने च । न० । **पिण्डः** । त्रि० । पिडि—राशीकरणे । घञ्प्रत्ययः । अच् वा । "पिण्डो गोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिह्लकयोरपि । ओड्रपुष्पे च पुंसि स्यात्क्लीबमाजीवनामयोः" इति मेदिनी ॥ षण्डे नपुंसके । पुं० । मतौ बुद्धौ । स्त्री० । तथा निष्फले च **पण्डः** । पु० । पण—व्यवहारे । डप्रत्ययः । तस्य नेत्त्वम् । "पण्डः षण्डे धियि स्त्री स्यात्" इति मेदिनी ॥ स्तम्बे वृक्षस्य मूलादारभ्य शाखान्ते भागे । शस्ते शंसनीये । न० । **प्रकाण्डः** । पु० । प्रकृष्टः काण्डः । प्रादिसमासः । "प्रकाण्डो न स्त्री विटपे मूलशाखान्तरे तरोः । शस्ते" इति मेदिनी ॥ वदनामये मुखरोगभेदे । समूहे राशौ । अन्तरावेद्यां मातङ्गयुद्धार्थ मध्यवेदौ च । **वरण्डः** । पु० । वृ—वरणे, सेवायां वा । अण्डच् प्रत्ययः । "वरण्डोऽप्यन्तरावेदौ समूहमुखरोगयोः" इति मेदिनी ॥ सारं नवनीतं जलं वा । पिच्छः मयूरपुच्छः तयोः । एरण्डे स्वनामाख्याते वृक्षे । मस्तुनि दधिमण्डे । न० । तथा सर्वान्नानामग्ररसे आमलक्यां सुरायां शाकभेदे भूषायां च **मण्डः** । पु० । मन—बोधे, धृतौ वा । डप्रत्ययः । तस्य नेत्त्वम् । "मण्डः पञ्चाङ्गुले शाकभेदे क्लीबं तु मस्तुनि । आमलक्यां स्त्रियां मण्डाऽथास्त्रियां सारपिच्छयोः" इति मेदिनी ॥ खगः सूर्यः, विहगो वा । दंष्ट्रिणी शूकरः, दंष्ट्रायुक्तो वा । तयोः । तथा मृताण्डजन्मनि मुनौ च । मार्तण्डः । पु० । मृते अण्डे भवः ।

**राहौ दैत्यान्तरे मुण्डो मूर्ध्न्यस्त्री मुण्डिते त्रिषु ।**
**रण्डा स्याद्विधवौषध्योर्वितण्डा शाकभिद्यपि ॥ ११६ ॥**
**शिखण्डो तु शिखाबर्हौ शुण्डा करिकरः सुरा ।**
**इति डान्ताः ॥**
**आषाढो व्रतिनां दण्डे मासे मलयपर्वते ॥ ११७ ॥**
**विचेष्टबालिशौ मूढौ राढा स्याद्दीप्तिदेशयोः ।**
**षण्डकञ्चुकिनौ षण्ढौ समूढः पुञ्जिते नवे ॥ ११८ ॥**

अणप्रत्ययः। शकन्ध्वादित्वात् पररूपम्। "मार्तण्डस्तपने क्रोडे" इति विश्वः। "मार्तण्डः क्रोडसूर्ययोः" इति मेदिनी ॥ ११४ ॥ ११५ ॥ राहौ राहुग्रहे। क्वचित्तु "बाहौ" इति पाठः। दैत्यान्तरे दैत्यभेदे। मूर्ध्नि मस्तके। पु० न०। मुण्डिते केशच्छेदिते। त्रि०। तथा नापिते बोले भुण्डायसे स्थाणुवृक्षे। पु०। महाश्रावणिकायां मुण्डरिकायां च। स्त्री०। **मुण्डः**। पु०। मुडि—केशादिच्छेदे, मर्दने वा। कर्मणि घञ्प्रत्ययः। "मुण्डो दैत्यान्तरे राहौ मूर्धमुण्डित-योरपि" इति विश्वः। "मुण्डो दैत्यान्तरे राहुग्रहे ना मुण्डिते त्रिषु। मुण्डा मुण्डीरिकायां स्यात् स्त्रियामस्त्री तु मूर्धनि" इति मेदिनी ॥ विधवा मृतपतिका स्त्री०। ओषधी मूषिकपर्णी तयोः। तथा धूर्ते विफले अर्द्धाङ्गविशिष्टतया छिन्नावयवे। त्रि। स्वार्थे कन्। अफलवृक्षादौ च **रण्डा**। **स्यात्**। स्त्री०। रण—गतौ, रवे वा। डप्रत्ययः। तस्य नेत्त्वम्। "रण्डा मूषिकपर्ण्यां च विधवायां च योषिति" इति मेदिनी ॥ शाकभिदि कलम्बीशाके। अपिशब्दात् स्वपक्षाव्यवस्था-पनेन परपक्षमात्रनिराकरणे कथाभेदे शिलाह्वये करवीर्यां च। **वितण्डा**। स्त्री०। विपूर्व-तडि—आहतौ। अप्रत्ययः। "वितण्डा वादभेदे स्यात्कचीशाके शिलाह्वये। करवीर्यामपि स्त्री स्यात्" इति मेदिनी ॥ ११६ ॥ शिखाचूडा। बर्हः बर्हं वा मयूरपिच्छम्। तयोश्च। **शि-खण्डः**। पु० क्वचित् शिखाण्ड इति पाठः। शिखाममति। अम—गतौ। डप्रत्ययः। तस्य नेत्त्वम्। षष्ठीतत्पुरुषः। वा शकन्ध्वादित्वात् पररूपम्। "शिखण्डो बर्हचूडयोः" इति मेदिनी ॥ करिकरः हस्तिशुण्डः। सुरा मद्यः। तयोः। तथा मदनिर्झरे। पु०। मद्यपानगृहे। वेश्यायां सुरायां नलिन्यां कुट्टिन्यां जलहस्तिन्यां च। स्त्री०। **शुण्डा**। स्त्री०। शुण—गतौ। डप्रत्ययः। तस्य नेत्त्वम्। "शुण्डा पानगृहे मता। अप्यम्बुहस्तिनीवेश्याहस्तिहस्तसुरासु च" इति मेदिनी ॥ इति डकारान्ताः समाप्ताः ॥ अथ ढान्तानाह ॥ व्रतिनां—दण्डेवतधारिणां—दण्डे। मासे स्वनामाख्याते चतुर्थे मासे। मलयपर्वते दक्षिणस्थे पर्वतभेदे च। **आषाढः**। पु०। आषाढी पूर्णिमास्मिन् मासे। अण् प्रत्ययः। "आषाढो व्रतिनां दण्डे मासे मलयपर्वते" इति मेदिनी॥ ११७ विचेष्टः बालः। बालिशः मूर्खः, शिशुर्वा। तयोः। तथा जडे औरसे च **मूढः**। त्रि०। मुह—मोहे, वैचित्त्ये वा। क्तप्रत्ययः। ढत्वम्। "मूढस्तु तन्द्रिते बाले" इति मेदिनी ॥ दीप्तिः शोभा। देशः राढा इति ख्यातदेशभेदः तयोः। तथा पुरीभेदे "गौडं राष्ट्रमनुत्तमं निरुपमा

भुग्नेऽनुपप्लुतेऽप्येष वाच्यलिङ्ग उदीर्यते ।
इति ढान्ताः ॥
अरुणो भास्करेऽनूरौ मञ्जिष्ठातिविषारुणा ॥ ११९ ॥
त्रिष्वारक्ते व्याकुलेऽथ सूक्ष्मे व्रीह्यन्तरेऽप्यणु ।
कीलकाग्र्याश्रिसीमासु स्यादाणिवदणिर्द्वयोः ॥ १२० ॥
अभीक्ष्णं तु भृशे नित्ये स्यादिन्द्राणीन्द्रयोषिति ।
स्त्री बन्धे सिन्धुवारे च चक्षुर्दर्शनमीक्षणम् ॥ १२१ ॥

तत्राऽपि राढापुरी'' इति प्रबोधचन्द्रोदयः । **राढा** । स्त्री० । रह—त्यागे । घञ्प्रत्ययः । ढत्वम् । ''राढा स्त्री सूक्ष्मशोभयोः'' इति मेदिनी ॥ षण्ढः नपुंसकम् । कञ्चुकी राज्ञामन्तःपुराधिकारी, द्वारपालो वा । तयोश्च । **षण्ढः** । पुं० । ''शण्ढः'' इति क्वचित् पाठः । षण—दाने, संभक्तौ वा । डप्रत्ययः । तस्य नेत्त्वम् । पृषोदरादित्वात् षत्वम्, शत्वं वा । ''षण्ढः स्यात्पुंसि गोपतौ । आकृष्टाण्डे वर्षवरे तृतीयाप्रकृतावपि'' इति मेदिनी ॥ पुञ्जिते राशीकृते । नवे सद्यो जाते ॥ भुग्ने रोगादिना कुटिलीकृते । अनुपप्लुते अनुपद्रुते, उपपीडरहिते वा । क्वचित्तु ''निरुपद्रवे'' इति पाठः । तथा दमिते कृतविवाहे शोधिते मूढसहिते च **समूढः** । त्रि० । वाच्यलिङ्गः अभिधेयलिङ्गः । उदीर्यते कथ्यते । सम्पूर्वऊह—वितर्के, वह—प्रापणे वा । क्तप्रत्ययः । ''समूढः पुञ्जिते भुग्ने सद्योजातेऽनुपप्लुते'' इति मेदिनी । इति ढकारान्ताः समाप्ताः ॥ अथ णान्तानाह ॥ भास्करे सूर्ये । अनूरौ सूर्यसारथौ । तद्वत् गुडे सन्ध्यारागे निःशब्दे दानवभेदे कुष्ठभेदे पुन्नागवृक्षे अव्यक्तरागे च । पु० । कुङ्कुमे सिन्दूरे च । न० । **अरुणः** । पु० । मञ्जिष्ठायाम् अतिविषायां तथा नदीभेदे श्यामाकायां कदम्बपुष्पायाम् । स्त्री० । आरक्ते कृष्णमिश्रितरक्ते वर्णे । पु० । तद्वति च । त्रि० । व्याकुले च **अरुणा** । स्त्री० । ऋ—गतौ । उनन् प्रत्ययः । ''अरुणोऽव्यक्तरागेऽर्के सन्ध्यारागेऽर्कसारथौ । निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु । अरुणातिविषाश्यामामञ्जिष्ठात्रिवृतासु च'' इति मेदिनी ॥ सूक्ष्मे सूक्ष्मपरिमाणवति । व्रीह्यन्तरे चिनाकाङ्नीश्यामाप्रभृतिसूक्ष्मधान्ये । अपिशब्दात् क्षुद्रे लेशे च स्त्रियाम् अणवी च । **अणुः** । पु० । ''अणुर्व्रीहिविशेषे स्यात्पुंसि सूक्ष्मेऽभिधेयवत्'' इति मेदिनी ॥ कीलकः आरा इति ख्यातः रथचक्राग्रस्थितः कीलकः । अग्रीः अग्रभागः कोटिः । आश्रिः आश्रयः । सीमा अण्डकोषः, मर्यादा वा । तत्र च । आणिवत् **अणिः** स्यात् । पु० स्त्री० । अणति शब्दायते । अण—शब्दे । इन्प्रत्ययः । अत्रादेर्दीर्घतापीष्यते । तेन आणिः आणी च ''आणिराणिवदक्षाग्रकीलाश्रिसीमसु द्वयोः'' इति मेदिनी ॥ ११८—१२० ॥ भृशे अतिशये । नित्ये सतते । तद्वति द्रव्ये च । **अभीक्ष्णम्** । त्रि० । अभि क्ष्णौति । क्ष्णु—तेजने । असुप्रत्ययः । दीर्घः । ''अभीक्ष्णं भृशे नित्येऽथ तद्युक्तक्रिययोरपि'' इति मेदिनी । एष अभीक्ष्णशब्दस्तु अव्ययश्च भवति । अजयस्तु अभीक्ष्णशब्दमनव्ययमप्याह । ''अभीक्ष्णं तु

**उन्मूलनेऽप्युद्धरणमुष्णं दक्षेऽपि नाऽऽतपे ।**
**साधने गीतनृत्यप्रभेदे कायस्थकर्मणि ॥ १२२ ॥**
**करणं पुंसि सङ्कीर्णे कल्याणं काञ्चने शुभे ।**
**कृष्णो वर्णे हरौ व्यासे कृष्णं मरिचलोहयोः ॥ १२३ ॥**
**पिप्पली द्रौपदी कृष्णा हस्तसूत्रेपि कङ्कणम् ।**
**श्रुतिराधेययोः कर्णः पिप्पल्यां जीरके कणा ॥ १२४ ॥**

पौनःपुन्ये सर्वदार्थे च दृश्यते'' इति अनव्ययप्रकरणे पाठात् ॥ इन्द्रयोषिति शचीनाम्न्यामिन्द्रपत्न्याम्। स्त्रीबन्धे स्त्रीकरणे । सिन्धुवारे स्वनामाख्याते वृक्षे।चकारात् स्थूलैलायां सूक्ष्मैलायां गौर्यादिषु षोडशमातृकासु मध्ये आद्यायां मातृकायां च । **इन्द्राणी** । स्त्री० । इन्द्रस्य पत्नी । ङीप् । आनुक् च । "इन्द्राणी करणे स्त्रीणां पौलोमीसिन्धुवारयोः" इति मेदिनी ॥ चक्षुर्नेत्रम्" दर्शनं चक्षुःपथसम्मुखीकरणम् । तयोश्च । **ईक्षणम्** । न० । ईक्ष—दर्शने । भावे ल्युट्प्रत्ययः । "ईक्षणं दर्शने दृशि" इति मेदिनी ॥ १२१ ॥ उन्मूलने उत्पाटने, उद्धृतमूलकरणे वा । अपिशब्दात् मुक्तौ वमने ऋणशुद्धौ वान्तेऽन्नादौ च **उद्धरणम्** । न० । उद्पूर्वहृ—हरणे । भावे ल्युट्प्रत्ययः । "स्यादुद्धरणमुद्धारवान्तान्नोन्मूलनेष्वपि" इति मेदिनी ॥ दक्षे आलस्यरहिते कुशले । त्रि० । आतपे सूर्याद्यालोके । अपिशब्दात् ग्रीष्मे ऋतौ पलाण्डौ नरकभेदे शीतभिन्ने स्पर्शे च । पु० । **उष्णम्** । न० । उष—दाहे, वधे वा । नक्प्रत्ययः । "उष्णो ग्रीष्मे पुमान्दक्षाशीतयोरन्यलिङ्गकः" इति मेदिनी ॥ साधने क्रियानिष्पत्तौ साक्षात् अव्यवधानेन साधने व्याकरणोक्ते कारकभेदे । गीतं गानं, नृत्यं नर्तनं तयोः । प्रभेदे कायस्थकर्म्मणि कायकर्मादौ करणे। संकीर्णे शूद्राविशोः सुते शूद्रायामुत्पादिते जातिभेदे वा । पु० । तथा वर्णे हेतौ क्षेत्रे इन्द्रिये गात्रे ज्योतिषोक्तेषु बवबालवादिष्वेकादशसु तिथ्यर्धेषु च । **करणम्** । न० । कृ—करणे । ल्युट्प्रत्ययः ।"करणं हेतुकर्मणोः। बालवादौ हस्तलेपे नृत्यगीतप्रभेदयोः । क्रियाभेदेऽन्द्रियक्षेत्रकायसंवेशनेषु च । कायस्थे साधने क्लीबं पुंसि शूद्राविशोः सुते'' इति मेदिनी ॥ काञ्चने स्वर्णे । शुभे मङ्गले । तथा अक्षये । शुभयुक्ते । त्रि० । **कल्याणम्** । न० । कल्ये-प्रातः अण्यते शब्द्यते । अणशब्दे । घञ्प्रत्ययः । "कल्याणमक्षये स्वर्णे मङ्गलेऽपि नपुंसकम्" इति मेदिनी ॥ वर्णे कालवर्णे । हरौ वासुदेवे । व्यासे वेदव्यासे । तथा "कृषिर्भूवाचकः शब्दः णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते'' इत्युक्ते परब्रह्मणि अर्जुने मध्यमपाण्डवे । काके कोकिले करमर्दके वृक्षे नीले कालागुरुणि अशुभकर्मणि च **कृष्णः** । पु० ॥ मरिचः प्रसिद्धः । लोहः धातुभेदःतयोः । तथा नीलाञ्जने च **कृष्णम्** । न०॥१२२॥१२३॥ पिप्पली कणा । द्रौपदी द्रुपदराजात्मजा । तयोः । तथा नीलीवृक्षे द्राक्षायां नीलपुनर्नवायां कृष्णजीरके गम्भार्यां कटुकायां राजसर्षपे पर्पट्यां काकोल्यां सोमराज्यां च **कृष्णा** । स्त्री०।

**कोणोऽश्रौ वाद्यलगुडे वधे हेतौ च कारणम् ।**
**ग्रहणं स्वीकृतौ हस्ते गुणः स्याद्रज्जुसूदयोः ॥ १२५ ॥**
**अङ्गुष्ठानामिकोन्माने गोकर्णोऽहौ मृगेऽपि च ।**
**नासिकाघ्रातयोर्घ्राणं चूर्णे गन्धयुतावपि ॥ १२६ ॥**

कृष-आकर्षणे, विलेखने वा । नक्प्रत्ययः । "कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्जुने । कृष्णा स्याद् द्रौपदीनीलीकणाद्राक्षासु योषिति । मेचके वाच्यलिङ्गः स्यात्क्लीबं मरिचलोहयोः" इति मेदिनी ॥ हस्तसूत्रे करभूषणे । अपिशब्दात् भूषणमात्रे मण्डले च **कङ्कणम्** । न० । कं शुभं कणति । कंशब्दोपपदकण—गतौ । अच्प्रत्ययः । "कङ्कणं करभूषायां सूत्रमण्डलयोरपि" इति मेदिनी ॥ श्रुतिः श्रोत्रेन्द्रियम् । राधेयः राधया पुत्रत्वेन पालितः अङ्गदेशाधिपः पृथासुतः। तयोः। तथा अरित्रे केनिपातके सूर्यात्मजे त्रिभुजक्षेत्रे भुजकोटिभिन्नायां तिर्यग्रेखायां च । **कर्णः**। पु० । कृ—करणे । ननूप्रत्ययः । कर्ण—भेदने । अच्प्रत्ययः । अथवा कीर्यते शब्दग्रहणाय । कृ—विक्षेपे, विज्ञाने वा । ननूप्रत्ययः । " कर्णः पृथाज्येष्ठपुत्रे सुवर्णालौ श्रुतावपि" इति मेदिनी ॥ पिप्पल्यां स्वनामख्यातायाम् । जीरके धान्यादेरतिसूक्ष्मांशे लेशे। पु०। वनजीरके श्वेतजीरके च **कणा** । स्त्री०।कण—निमीलने।अच्प्रत्ययः। कणा जीरककुम्भीरमक्षिकापिप्पलीषु च" इति मेदिनी ॥ १२४ ॥ अश्रौ वस्त्रादेरग्रभागे, गृहादिकोणे वा । वाद्ये येन धनुराकृतिना काष्ठेन वीणादयो वाद्यन्ते तस्मिन् वादनसाधने काष्ठे । लगुडे दण्डाकारे काष्ठनिर्मिते पदार्थे । तथा गृहादीनामेकदेशे अस्त्राणामग्रभागे मङ्गलग्रहे च **कोणः** । पु०। कुण-शब्दे, उपकरणे वा। करणे घञ्प्रत्ययः । कर्तरि अच् प्रत्ययो वा । "कोणो वाद्यप्रभेदे स्याद्वीणादीनां च वादने। एकदेशे गृहादीनामश्रौ च लगुडेऽपि च" इति मेदिनी ॥ वधे नाशे । हेतौ कारणे । चकारात् साधने इन्द्रिये देहे कर्मणि वाद्यभेदे हिंसायां यातनायां च । स्त्री० । **कारणम्** । न० । कृ—करणे । णिच्प्रत्ययः । करणे ल्युट्प्रत्ययो वा । "कारणं करणे हेतुवधयोश्च नपुंसकम् । स्त्रीयातनायाम्" इति मेदिनी ॥ स्वीकृते अङ्गीकृते । हस्ते करे । तद्वत् आदाने आदरे ज्ञाने बन्धने चन्द्रसूर्ययोर्ग्रासे इन्द्रिये च **ग्रहणम्** । न० । ग्रह—आदाने । भावादौ ल्युट्प्रत्ययः । "ग्रहणं स्वीकारादरकरोपरागोपलब्धिवन्दिषु" इति मेदिनी ॥ रज्जुः बन्धनसाधनं दाम । सूदः सूपकारकः । तयोः । तथा । धनुषो मौर्व्यां शौर्यादिधर्मे राज्ञां सन्धिविग्रहादिषु षट्सु साधनेषु ज्ञानविनयादिषु अप्रधाने न्यायमते रूपादिषु चतुर्विंशतिपदार्थेषु आवृत्तौ तन्तौ उत्कर्षे दूर्वायां च । गुणः। पु०। गुण-मन्त्रणे, आमेडने वा। अच्प्रत्ययः, घञ् वा। "गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये" इति मेदिनी ॥१२५॥ अङ्गुष्ठानामिकोन्माने अनामिकायुतविस्तृताङ्गुष्ठमाने। अहौ सर्पे । मृगे मृगभेदे । अपिशब्दात् अश्वतरे गणदेवताभेदे शैवे तीर्थभेदे च **गोकर्णः** । पु० । गौर्नेत्रं कर्णो यस्य । "गोकर्णोऽश्वतरे सर्पे सारङ्गे च गणान्तरे । अङ्गुष्ठानामिकोन्माने गोकर्णो मूर्विकोषधौ" इति मेदिनी ॥ नासिका प्रसिद्धा । आघ्रातः आक्रान्तः गृहीतगन्धो वा तयोश्च ।

**वेदांशे बह्वृचादौ च ब्रध्ने पादेऽपि चास्त्रियाम् ।**
**चरणश्चीर्णपर्णस्तु खर्जूरपिचुमन्दयोः ॥ १२७ ॥**
**जेतरीन्द्रेऽर्जुने जिष्णुर्झूणिः कठिनपूगयोः ।**
**तरुणः कुब्जपुष्पेऽपि त्राणं रक्षितरक्षयोः ॥ १२८ ॥**
**दुर्वर्णं रजकेऽपि स्याद्द्रुणोलिः कच्छपी द्रुणी ।**
**द्युमणौ तरणिः पुंसि कुमारीनौकयोः स्त्रियाम् ॥ १२९ ॥**

**घ्राणम् ।** न० । घ्रायतेऽनेन । घ्रा-गन्धग्रहणे । ल्युट्प्रत्ययः । "घ्राणं क्लीबं नासिकायां घ्राते-स्याद्वाच्यलिङ्गकम्" इति मेदिनी ॥ गन्धयुतौ गन्धवति द्रव्ये । अपिशब्दात् पेषणजाते रजसि धूलौ ताम्बूलचर्वणोपयोगिद्रव्ये कपर्दके च चूर्णम् । न० । चूर्ण—पेषणे । घञ्प्रत्ययः । "चूर्णः कपर्दके । चूर्णो धूलौ क्षारभेदे चूर्णा निवासयुक्तिषु" इति मेदिनी ॥ १२६ ॥ वेदांशे वेदैकदेशे शाखारूपे ग्रन्थे । बह्वृचादौ ऋग्वेदे । ब्रध्ने वृक्षमूले । पादे च । अपिशब्दात् वेदाध्येतरि जने गोत्रे गतौ भक्षणे आचारे शीले च **चरणः ।** पु० न० । चर—गतौ करणे ल्युट्प्रत्ययः । "चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च । भ्रमणे भक्षणे चाऽपि नपुंसक उदाहृतः" इति मेदिनी ॥ खर्जूरः द्रुमभेदः । पिचुमन्दः निम्बः तयोश्च । **चीर्णपर्णः ।** पु० । चीर्णमिव पर्णमस्य । "चीर्णपर्णस्तु निम्बेऽपि खर्जूरीभूरुहे पुमान्" इति मेदिनी ॥ १२७ ॥ जेतरि जित्वरे । इन्द्रे शक्रे । अर्जुने स्वनामाख्याते वृक्षे । तथा विष्णौ सूर्य्ये वसुषु च **जिष्णुः ।** पु० । जिस—सेके । रस्नुप्रत्ययः । "जिष्णु र्ना वासवेऽर्जुने । जित्वरे वाच्यवत्" इति मेदिनी ॥ कठिनः क्रूरः । पूगः क्रमुकः तयोश्च । झूणिः पु० । क्वचित् "जूर्णिः" "झणिः" इति पाठः । झूण—ग्रहे, पिधाने वा । इण्प्रत्ययः । "झूणिः क्रमुकभेदेऽपि दुष्टदैवप्रतावपि" इति विश्वः ॥ कुब्जपुष्पे महासहपुष्पे । अपिशब्दात् एरण्डवृक्षे स्थूलजीरके नूतने यूनि । त्रि० । दन्तीवृक्षे च **तरुणः ।** पु० । तृ—तरणे, प्लवने वा । उनन्प्रत्ययः । "तरुणं कुब्जपुष्पे ना रुवुके यूनि तु त्रिषु" इति मेदिनी ॥ रक्षितः पालितः, उपाधिभेदो वा । रक्षः पालनः तयोश्च । **त्राणम् ।** न० । त्रै—पालने । ल्युट्प्रत्ययः । "त्राणं तु त्रायमाणायां रक्षणे रक्षितेऽपि च" इति मेदिनी ॥ १२८ ॥ रजके रागकारके जातिभेदे । क्वचित्तु "रजते" इति पाठः । रजते रूप्ये । अपिशब्दात् एलवालुके मलिने दुष्टवर्णवति च । त्रि० । **दुर्वर्णम् ।** न० । दुष्टोऽपि वर्ण्यते रज्यतेऽनेन दुष्टं मलिनं वा वर्णयति शुभ्रतापादनेन रूपान्तरं करोति । दुर्पूर्ववर्ण—वर्णने । घञ्प्रत्ययः । "दुर्वर्णो त्रिष्वसद्वर्णे क्लीबमैलेयरूप्ययोः" इति मेदिनी ॥ अलिः भ्रमरः । तस्मिन् । **द्रुणः ।** पु० । द्रुण—कुटिलीकरणे । कप्रत्ययः । "अलिनि द्रुणः" इति मेदिनी ॥ कच्छपी प्रसिद्धा । तस्याम् । तथा कर्णजलौकायां काष्ठाम्बुवाहिन्यां च । **द्रुणी ।** स्त्री० । द्रुण—कुटिलीकरणे । कप्रत्ययः । गौरादित्वात् ङीप् । "द्रुण्यम्बुद्रोणीकच्छप्योः" इति मेदिनी ॥ द्युमणौ सूर्ये । पु० । कुमारी

**काष्ठागारेऽम्बुवाहिन्यां शैलसन्धौ च योषिति ।**
**द्रोणी न स्त्री मानभेदे द्रोणः काके कृपीपतौ ॥ १३० ॥**
**दक्षिणा दिशि दाने च दक्षिणः सरलेऽपि च ।**
**असती स्याद्धर्षणी च धर्षणं निकृतौ रते ॥ १३१ ॥**
**बुद्धमन्त्रे नाडिकायां धारणाऽथ च मज्जने ।**
**निर्वाणं निर्वृतौ मोक्षे प्रघणोऽस्त्रगृहांशयोः ॥ १३२ ॥**

घृतकुमारी । नौका प्रसिद्धा तयोः । तथा भेलके अर्कवृक्षे किरणे ताम्रे पद्मचारिण्यां च **तरणिः** । पु० । तृ–तरणे । अणिप्रत्ययः । "तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्" इति मेदिनी ॥ १२९ ॥ काष्ठागारेऽम्बुवाहिन्यां काष्ठादिरचिते नौकाजलसेचनीपात्रे । शैलसंधौ शैलजनामगन्धद्रव्ये । तथा जलाद्याधारे पात्रभेदे नदीभेदे च **द्रोणी** । स्त्री० । द्रोणिरप्यत्र । द्रुण–कुटिलीकरणे । इण्प्रत्ययः । वा ङीप् । "द्रोणी काष्ठाम्बुवाहिन्यां गवां घासभुजि स्थितौ" इति मेदिनी ॥ मानभेदे आढकचतुष्टये परिमाणे । काके द्रोणाख्ये वायसे । कृपीपतौ द्रोणाचार्ये । तथा भारतप्रसिद्धे स्वनामाख्याते योद्धृभेदे वृश्चिके मेघभेदे वृक्षभेदे जलाशयभेदे च **द्रोणः** । पु० । द्रुण–कुटिलीकरणे । अच्प्रत्ययः । "द्रोणोऽस्त्रियामाढके स्यादाढकानां चतुष्टये । पुमान् कृपीपतौ दग्धकाके स्त्री नीवृदन्तरे" इति मेदिनी ॥ १३० ॥ दिशि याम्यदिशि । दाने यज्ञशेषे कर्मणः साङ्गतार्थं देये द्रव्ये । चकारात् यज्ञपत्न्यां प्रतिष्ठायां दक्षिणकालिकायां रुचिप्रजापतेः कन्यायां परिक्रयद्रव्ये नायिकाभेदे च **दक्षिणा** । अव्ययम् । वा । स्त्री० ॥ सरले स्वनामाख्याते वृक्षे । अपिशब्दात् सर्वनायिकासु समानुरागे नायकभेदे मध्यदेशाद्दक्षिणे देशे शरीरस्य दक्षिणभागे अनुत्तरे परच्छन्दानुवर्तिनि अवामभागस्थे औदार्यवति च । त्रि० । **दक्षिणः** । पु० । दक्ष–वृद्धौ, शीघ्रार्थे वा । इनन् प्रत्ययः । "दक्षिणो दक्षिणोद्भूतसरलच्छन्दवृत्तिषु । आरामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम्" इति मेदिनी ॥ असती भिन्नपतिव्रता अभिसारिका स्त्री । तस्यां च । **धर्षणी** स्यात् । स्त्री० ॥ निकृतौ वञ्चायाम् । रते रमणे तथा परिभवे च **धर्षणम्** । न० । धृष–क्रोधे, अभिभवे वा । भावे ल्युट्प्रत्ययः । कर्मणि ल्युट् च । "धर्षणं स्यात्परिभवे रतेऽसत्यां तु धर्षणी" इति मेदिनी ॥ १३१ ॥ बुद्धमन्त्रे संसारमुक्तिसाधनार्थं भगवता शाक्यमुनिना उक्ते धर्मविशेषे । "यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि । धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः" इत्युक्तायामात्मनि चित्तस्य स्थितौ वा । नाडिकायां ( कलम्बी ) शाके, पट्टशाके वा । श्रेणौ च । स्त्रियां ङीप् । "कुसुम्भं नाडिकाशाकम्" इति स्मृतिः । तथा मर्यादायां न्याय्यपथस्थितौ निश्चये च **धारणा** । स्त्री० । धृ–धारणे, स्थितौ वा । णिच्युच्प्रत्ययौ । "धारणी नाडिकायां स्याद्बुद्धोक्तमन्त्रभिद्यपि । धारणाङ्गे च योगस्य न पुंसि स्याद्विधारणे" इति मेदिनी ॥ मज्जने गजमज्जने । निर्वृतौ निर्वृत्ते । मोक्षे मुक्तौ । तद्वत् आत्यन्तिकमोक्षे एकान्तसुखस्वरूपे निर्वृत्तौ विनाशे कर्दमे च । न० । शान्ते निश्चले शून्ये विश्रान्ते च । त्रि० । **निर्वाणम्** ।

**बोले वाते बले प्राणः पूर्णे पुं भूम्नि चासुषु ।
पर्णं पक्षे च पत्रे च प्रोक्षणं सेचने वधे ॥ १३३ ॥
ग्रन्थे कार्षापणे चास्त्री पुराणमनवे त्रिषु ।
पार्ष्णिः पादे व्यूहपृष्ठे वाणी व्यूतिश्च भारती ॥ १३४ ॥
मन्त्रान्यवेदे विप्रौघे क्लीबं ना ब्राह्मणो द्विजे ।
लिङ्गाग्रेऽलिञ्जरे मौक्तिकादौ स्त्रीपुंसयोर्मणिः ॥ १३५ ॥**

न० । निपूर्ववा—गतौ । भावे क्तप्रत्ययः । निपातनात् नत्वणत्वे च । "निर्वाणमस्तङ्गमने निर्वृतौ गजमज्जने । सङ्गमे चापवर्गे च" इति मेदिनी ॥ अस्त्रं लोहमुद्गरम् । गृहांशं बहिर्द्वारप्रकोष्ठकः अलिन्दः तयोश्च । **प्रघणः** । पु० । प्रपूर्वहन—वधे, गतौ च । अप्प्रत्ययः । निपातनात् कुत्वणत्वे। मतान्तरे अणत्वम् । "प्रघनः" वाप्यत्र । "प्रघणस्ताम्रकुम्भे स्यादलिन्दे लोहमुद्गरे" इति मेदिनी ॥ १३२ ॥ बोले गन्धरसे, गन्धरसद्रव्यभेदे वा । वाते वायुमात्रे । बले देहजे सामर्थ्ये । पूर्णे पूरिते । पु० । भूम्नि आसुषु हृदयस्थे नासाग्रवर्तिनि वायौ, पञ्चवृत्तके देहस्थे वायुभेदे वा । तथा काव्यजीवने रसे इन्द्रिये च **प्राणः** । पु० । प्रपूर्वअन—जीवने । घञ्प्रत्ययः । णत्वं च । "**प्राणो** हृन्मारुते बोले काव्यजीवेऽनिले बले । पुँल्लिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चाऽसुसु" इति मेदिनी ॥ पक्षे पक्षिणां पक्षपत्रे । पत्रे लेखनाधारे द्रव्ये च **पर्णम्** । न० । पॄ—पालने, पूर्तौ वा । नप्रत्ययः । पर्ण—हरितभावे । अच्प्रत्ययो वा । "पर्णः पत्रं किंशुके ना" इति मेदिनी ॥ सेचने समन्तात् सेचने । वधे यज्ञार्थं पशूनां हनने च । **प्रोक्षणम्** । न०। प्रपूर्वउक्ष—सेचने । ल्युट् प्रत्ययः । "प्रोक्षणं सेचने वधे" इति मेदिनी ॥ १३३ ॥ ग्रन्थे व्यासादिप्रणीते शास्त्रभेदे । तत्तु । "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणम्" इत्युक्तम् । कार्षापणे पणे, षोडशसु पणेषु वा । पु० न० । अनवे अनूतने च । **पुराणम्** । त्रि० । पुरा भवः । टयुप्रत्ययः । निपातनात् तुट् न । पुरा नीयते । नीप्रापणे । डप्रत्ययो वा । णत्वम् । "पुराणं पञ्चलक्षणम् । पणे पुंसि त्रिषु प्रत्ने" इति मेदिनी ॥ पादे पादग्रन्थे, गुल्फस्याधोभागे वा । व्यूहपृष्ठे सैन्यपृष्ठे । तथा पृष्ठे जिगीषायां च । पु० । **पार्ष्णिः** । पु० स्त्री० । पृष—सेके । निप्रत्ययः । णत्वम् । निपातनात् वृद्धिः। "पार्ष्णिः स्यादुन्मदस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च" इति मेदिनी ॥ व्यूतिर्वस्त्रादिवपनकर्म वपनं वा । भारती वाक्यम् । तयोश्च । तथा वापदण्डे वेम्नि सरस्वत्यां च। **वाणी** । स्त्री० । वण—शब्दे । इण्प्रत्ययः । वा ङीप् । "वाणिः स्याद्व्यूतिभारत्योर्वाणिर्मूले बलाहके" इति विश्वः ॥ १३४ ॥ मन्त्रान्यवेदे वेदभागविशेषे । विप्रौघे ब्रह्मसङ्घाते । न० । द्विजे विप्रे च । तथा फञ्जिकायां पृक्कायां ब्राह्मणपत्न्याम् । स्त्री० । **ब्राह्मणः** । पु०। ब्रह्म वेदं शुद्धं परचैतन्यं वा वेत्त्यधीते वा । अण्प्रत्ययः । ब्रह्मणो जातावित्ति न टिलोपः । ब्रह्मणो मुखजातत्वात् ब्रह्मणोऽपत्यम् । अण् प्रत्ययः । तेन न टिलोपः । "ब्राह्मणं ब्रह्मसङ्-

**अजागलस्तने चापि मसृणौ मृद्वकर्कशौ ।**
**निश्मश्रुपुरुषोद्दंशौ मत्कुणावथ रोहिणी ॥ १३६ ॥**
**नक्षत्रे रोहितायां च रणः क्वणनयुद्धयोः ।**
**लक्ष्मणा सारसी दाशरथिः श्रीमांश्च लक्ष्मणः ॥ १३७ ॥**
**छागेऽपि लम्बकर्णः स्याद्वेणुर्वंशे नृपान्तरे ।**
**बाणा झिण्ट्यां शरे बाणो वृष्णिर्यादवमेषयोः ॥ १३८ ॥**

घाते वेदभागे नपुंसकम् । भूमिदेवे तु पुँल्लिङ्गः फञ्जिकापृक्कयोः स्त्रियाम्'' इति मेदिनी । लिङ्गाग्रे लिङ्गकोटयाम् । अलिञ्जरे मृन्मयपात्रभेदे । मौक्तिकादौ रत्ने । अजागलस्तने अविग्रीवास्तने । अपिशब्दात् नागभेदे मणिबन्धे च **मणिः** । पु० स्त्री०। मण-अव्यक्तशब्दे । इन्प्रत्ययः । स्त्रीत्वपक्षे वा ङीप् । "मणिः स्त्रीपुंसयोरश्मजातौ मुक्तादिकेऽपि च । कण्ठदेशस्तनेऽजाया लिङ्गाग्रेऽलिञ्जरेऽपि च'' इति मेदिनी ॥ १३५ ॥ मृदुः स्निग्धः । अकर्कशः कोमलः, कार्कश्यरहितो वा । तयोश्च । तथा अतस्याम् । स्त्री०। **मसृणः** । त्रि० । मस-परिणामे,परिमाणे वा । ऋण् प्रत्ययः । सम्पूर्वेऋण- गतौ । कप्रत्ययो वा। पृषोदरादित्वात् साधुः । "मसृणोऽकर्कशे स्निग्धे त्रिषूमायां तु योषिति'' इति मेदिनी ॥ निश्मश्रुपुरुषः श्मश्रुरहितपुरुषः।उद्दंशः मस्तकदंशकः। ( उकुण ) निर्विषाणेभः कीटभेदो वा । तयोश्च । **मत्कुणः** । पु० । मद्-क्विप् कुणयति । कुण आभाषणे,मन्त्रणे च। अच्प्रत्ययः । "मत्कुणो निर्विषाणेभे निश्मश्रुपुरुषेऽपि च । उद्दंशे नारिकेले च'' इति मेदिनी ॥ १३६ ॥ नक्षत्रे अश्विन्यवधिके चतुर्थे नक्षत्रे । रोहितायां रक्तवर्णवत्यां स्त्रियाम् । चकारात् विद्युति स्त्रीगव्यां कटुतुम्ब्यां लतायां सोमवल्के हरीतक्यां काश्मर्यां मञ्जिष्ठायां च **रोहिणी** । स्त्री०।रुह-उद्भवे, जाते वा । इनन्प्रत्ययः। गौरादित्वात् ङीप्। "रोहिणी कण्ठरुग्भिदि । तडित्कटुम्भरासोमवल्केषु लोहिता गवेः''इति मेदिनी । क्वणनं नादः । युद्धः समरः । तयोः । तथा कोणे क्वणं गतौ च **रणः** । पु० । रण- रवे । रण्यते शब्द्यतेऽत्र । घञर्थे कप्रत्ययः । "रणः कोणे क्वणे पुंसि समरे पुन्नपुंसकम्'' इति मेदिनी ॥ सारसी सारसपक्षिणी । तस्याम् । स्त्री० । **लक्ष्मणा** । दाशरथिः दशरथपत्न्याः सुमित्रायाः स्वनामाख्यातः पुत्रः । श्रीमान् श्रीयुक्तः । तयोश्च । चकारात् चिह्ने प्रधाने श्वेतकण्टकार्यां च **लक्ष्मणः** । पु० । लक्ष-दर्शने, अङ्कने च । मनिन्प्रत्ययः । स्वार्थे अण् च । "लक्ष्मणा त्वोषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात्सश्रीके चाभिधेयवत्'' इति मेदिनी ॥ ॥ १३७ ॥ छागे अजे । अपिशब्दात् हस्तिनि राक्षसे श्येनपक्षिणि अङ्कोटवृक्षे लम्बश्रोत्रवति । त्रि० । **लम्बकर्णः** स्यात् । पु० । लम्बः कर्णो यस्य । "लम्बकर्णः स्मृतोऽङ्कोटपादपेयुगलेऽपि च'' इति मेदिनी । वंशे त्वक्सारे, तृणजातिभेदे वा । नृपान्तरे राजभेदे । तथा वंशीवाद्ये च **वेणुः** । पु० । वेण-वाद्यादाने । उणप्रत्ययः । "वेणुर्नृपान्तरे । त्वक्सारेपि च पुंसि स्यात्'' इति मेदिनी ॥ झिण्ट्यां नीलझिण्ट्याम् । **बाणा** ॥ स्त्री०॥ शरे

**कर्णे श्रुतौ च श्रवणं शरणं मारणेऽपि च ।**
**श्रेणिः पङ्क्तौ सेकपात्रे न क्लीबं कारुसंहतौ ॥ १३९ ॥**
**कषे मासचतुष्के च शाणः शोणो नदेऽरुणे ।**
**पक्के श्राणं यवाग्वां स्त्री श्रीपर्णं गणिकारिका ॥ १४० ॥**
**पद्मं च श्रमणा भिक्षुक्यां मुण्डीर्यां च दृश्यते ।**
**सुवर्णे मानभेदेऽपि स्थूणा शूर्मी च दारु च ॥ १४१ ॥**

काण्डे । तथा गवां—स्तने दैत्यभेदे केवले वह्नौ भट्टमुञ्जे कादम्बरीग्रन्थकारके कविभेदे च **वाणः** । पु० । वण—शब्दे । वञ्प्रत्ययः । "वाणः स्याद्गोस्तने दैत्यभेदे केवलकाण्डयोः । वाणा तु वाणमूले स्त्री नीलझिण्टयां पुनर्द्वयोः" इति मेदिनी ॥ यादवः यादववंशीयः श्रीविष्णुः । मेषः एडकः तयोश्च । **वृष्णिः** । पु० । वृष—प्रजननसामर्थ्ये । निप्रत्ययः । किच्च । "वृष्णिः पाषाण्डचण्डयोः । त्रिषु ना । यादवे मेषे" इति मेदिनी ॥ १३८ ॥ कर्णे शब्दग्राहकेन्द्रियभेदे । श्रुतौ श्रवणेन्द्रियजन्ये । चकारात् अश्विन्यादिषु द्वाविंशे नक्षत्रे मुण्डरिकावृक्षे च । स्त्री० । **श्रवणम्** । न० । शृणोत्यनेन । श्रु—श्रवणे, गतौ वा । ल्युट्प्रत्ययः । "श्रवणं स्याच्छ्रुतौ कर्णे नक्षत्रे न नपुंसकम्" इति मेदिनी ॥ मारणे घातके । अपिशब्दात् गृहे रक्षके रक्षणे वधे प्रसारण्याम् । स्त्री० । **शरणम्** । न० । शॄ—हिंसने । ल्युट्प्रत्ययः । "शरणं गृहरक्षित्रोर्वधरक्षणयोरपि" इति मेदिनी ॥ पङ्क्तौ छिद्रसहितायां पङ्क्तौ । सेकपात्रे जलसेचकपात्रभेदे । कारुसंहतौ समानशिल्पिसमूहे च । **श्रेणिः** ॥ स्त्री० । पु० । "श्रेणी" इति क्वचित् पाठः । श्रि—सेवने । निप्रत्ययः । वा ङीप् । "श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समानशिल्पिसंहतौ" इति मेदिनी ॥ १३९ ॥ कषे कषपाषाणे शस्त्रादीनां निकर्षणेन तीक्ष्णीकरणयन्त्रभेदे । क्वचित् "कर्षे" इति पाठः । मासचतुष्के मासचतुष्टये । तथा शणसूत्रनिर्मिते वस्त्रादौ च **शाणः** । पु० शणेन निर्वृत्तः । अण्प्रत्ययः । "शाणो मासचचतुष्टये । लोहादीनां च निकषे" इति मेदिनी । नदे नदभेदे । अरुणे ईषत् रक्तवर्णे । तथा सिन्दूरे रुधिरे रक्तेक्षौ मङ्गलग्रहे अहौ चित्रके श्योनाकवृक्षे वनहरिद्रायां च स्त्री० । **शोणः** । पु० । शोण—गतौ अच्प्रत्ययः । "शोणः कृशानौ श्योनाके लोहिताश्वे नदे पुमान् । त्रिषु कोकनदच्छाये" इति मेदिनी ॥ पक्वे कृतपाके, परिणते वा । यवाग्वां षड्गुणजलपक्के द्रवभेदे च । स्त्री० । **श्राणम्** । न० । श्रा—पाके । ल्युट्प्रत्ययः । "श्राणं पक्के यवाग्वां स्त्री" इति मेदिनी ॥ गणिकारिका गणिकारी द्रुमः अग्निमन्थवृक्षः । पद्मं कमलम् । तत्र च । **श्रीपर्णम्** । न० पु० । श्रीर्लक्ष्मीः पर्णे दलेऽस्य । अथवा श्रीयुक्तं पर्णमस्य । "श्रीपर्णी काश्मरी कुम्भे क्लीबे पद्माग्निमन्थयोः" इति मेदिनी ॥ १४० ॥ भिक्षुक्यां भिक्षोपजीविन्याम् । मुण्डीर्यां केशच्छेदिन्याम् । तथा जटामांस्यां सुदर्शनायां च । **श्रमणा** । दृश्यते ईक्ष्यते । स्त्री० । श्रम—तपसि, आयासे च । युच् प्रत्ययः । श्रमणो यतिभेदे ना

स्थाणू शङ्कुशिवौ विष्णौ सुषेणः करमर्दके ।
कपिवैद्यौ चाथऽहृतौ हरणं यौतकेऽपि च ॥ १४२ ॥
इति णान्ताः ॥
मोक्षः सुधा यज्ञशेषोऽयाचितं वारि चामृतम् ।
अमृता तु गुडूची स्याद्धरीतक्यामलक्यपि ॥ १४३ ॥
शेषे विष्णावनन्तो ना गुडूचीदूर्वयोः स्त्रियाम् ।
क्लीबं खे त्रिष्वनवधावनन्तं मरणेऽशुभे ॥ १४४ ॥

निन्द्यजीविनि तु त्रिषु । स्त्रियां सुदर्शनामांस्योर्मुण्डीरीशबरीभिदोः'' इति मेदिनी । ; परिमाणविशेषे । कर्षमिते ''सुवर्णो पञ्चधरणम्'' इति वचनात् । काञ्चने वा । ''व णस्य सुवर्णसंज्ञम्'' इत्युक्तम् । अपिशब्दात् स्वनामाख्याते धातुभेदे हरिचन्दने स्वर्णगै नागकेशरे यज्ञभेदे धुस्तूरे कणगुग्गुलौ च । पु० । सुरूपे सुन्दराक्षरयुक्ते च । त्रि० र्णम् । त्रि० । सुष्ठु वर्णोऽस्य । ''सुवर्णो ना स्वर्णकर्षे सुवर्णाख्यमखान्तरे । स्त्री कृष्ण क्लीबं काञ्चने हरिचन्दने'' इति मेदिनी ॥ शूर्मी लौहप्रतिमा । दारु गृहस्तम्भः । तयोश्च स्त्री० । स्था-गतिनिरोधे । नक्प्रत्ययः । पृषोदरादित्वात् ऊदन्तादेशः । ''अथ स्याच्छूर्म्यां स्तम्भे गृहस्य च'' इति मेदिनी ॥ १४१ ॥ शङ्कुः शाखाशून्यवृक्षः, कीः शिवः महादेवः तयोः । तथा अस्त्रभेदे स्थविरे च । त्रि० । स्थाणुः । पु० । स्था- रोधे । नुप्रत्ययः । पृषोदरादित्वात् णत्वम् । ''स्थाणुः कीले हरे पुमान् । अस्त्री ध्रु मेदिनी । विष्णौ हरौ । करमर्दके करञ्जवृक्षे । कपिः वानरभेदः, सुग्रीवो वा । वैद्य त्सकः । तयोश्च । तथा त्रिवृत् कृष्णत्रिवृत् । स्त्री० । सुषेणः । पु० । सुष्ठु सेनः करोति । अच्प्रत्ययः । णत्वम् । ''सुषेणः करमर्दः स्याद्विष्णुसुग्रीववैद्ययोः'' इति हृतौ स्थानान्तरकरणे । यौतके विवाहकाले लब्धे धने । अपिशब्दात् विभाजने च हृ न० । हृ-हरणे । भावे ल्युट्प्रत्ययः । ''हरणं यौतकादीनां द्रव्ये भुजे हृतावपि'' इति ॥ १४२ ॥ इति णकारान्ताः समाप्ताः ॥ अथ तान्तानाह ॥ मोक्षः मुक्तिः । सुधा यज्ञशेषः होमावशिष्टद्रव्यम् । अयाचितम् अयाचितलब्धम् । वारि जलम् । तथा घृते मरणशून्ये च अमृतम् । न० । मृ-मृतौ । क्तप्रत्ययः । नादिर ''अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना ध वयोः'' इति मेदिनी ॥ गुडुची स्वनामाख्याता लता । हरीतकी हरीतकं आमलकी धात्रीफलम् । तत्र च । अपिशब्दात् मागध्यां च अमृता स्यात् । स्त्री० । क्तप्रत्ययः । नादितत्पुरुषः । ''अमृता मागधीपथ्यागुडूच्यामलकीषु च'' इति मेदिनी । शेषे अनन्तनागराजे । विष्णौ श्रीकृष्णे । पु० । गुडूची अमृता । दूर्वा स्वनामाख्यातो तयोः । स्त्री० । खे आकाशे । न० । अनवधौ अवधिशून्ये । त्रि० । तथा मेघे बल

**चूल्यां च पूर्णिमाभेदेऽनुमतिः सम्मतावपि ।**
**स्वरूपेऽन्तं विनाशे ना न स्त्री शेषेऽन्तिके त्रिषु ॥ १४५ ॥**
**गते ज्ञातेऽप्यवसितमवन्तार्वश्वकुत्सितौ ।**
**अर्वती कुम्भदास्यश्वाऽथार्दितं प्रार्थिते हते ॥ १४६ ॥**
**क्षिप्राद्रिभेदयोरस्तः स्याल्लाजेष्वपि चाक्षतम् ।**
**कृषावसत्येऽप्यनृतमाकृतिर्जातिरूपयोः ॥ १४७ ॥**

वारवृक्षे च **अनन्तः** । पु० । नास्ति अन्तः गुणानां यस्य । "अनन्तः केशवे शेषे पुमानन-वधौ त्रिषु । अनन्ता च विशल्यायां शारिवादूर्वयोरपि" इति मेदिनी ॥ मरणे मृत्यौ । अशुभे शुभशून्ये ॥ १४४ ॥ चूल्यां च तदग्नितापाद्धि प्राणक्षयः । अस्वन्तम् ॥ न० । असूनामन्तो यस्मादिति पञ्चमीबहुव्रीहिः । "अस्वन्तमशुभे चुल्ल्यां मरणेऽनवधावपि" इति विश्वः ॥ पूर्णिमा-भेदे कलाहीनचन्द्रवत्याम् । शुक्लचतुर्दशीयुतपूर्णिमातिथौ च । सम्मतौ अपिशब्दात् अनुज्ञाते च **अनुमतिः** । स्त्री० । अनुपूर्वमन—बोधे । क्तिन्प्रत्ययः । "अथानुमतिरूनेन्दुपूर्णिमानु-ज्ञयोरपि" इति मेदिनी ॥ स्वरूपे स्वभावे । विनाशे । पु० । शेषे । पु०न० । अन्तिके निकटे । त्रि० । तथा प्रान्ते सीमायाम् निश्चये अवयवे । पु० । मनोहरे च । त्रि० । **अन्तम्** । न० । अम—गतौ । तन्प्रत्ययः । " अन्तं स्वरूपे नाशे ना न स्त्री शेषेन्तिके त्रिषु" इति मेदिनी । "अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽतिमनोहरे" इति विश्वः॥१४५॥ गते गमने । ज्ञाते अवगते । अपिशब्दात् ऋद्धे समाप्ते परिपक्वे निश्चिते मर्दितधान्ये च **अवसितम्** । न० । अवपूर्वसो—नाशे। क्तप्रत्ययः । "अवसितमृद्धे ज्ञातेऽप्यवसानगते च वाच्यलिङ्गं स्यात्" इति मेदिनी ॥ अश्वः घोटकः । कुत्सितः निन्दितः । तयोः । तथा इन्द्रे गोकर्णपरिणामे च **अर्वा** । पु० । ऋ—गतौ-वनिप्प्रत्ययः । "अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः" इति मेदिनी ॥ कुम्भदासी कुट्टनी । अश्वा वडवा । तयोः **अर्वती** । स्त्री० । ऋ—गतौ । वनिप्प्रत्ययः ङीप् च । "अर्वती कुम्भ-दास्यां च वडवायां च योषिति" इति मेदिनी ॥ प्रार्थिते याचिते । हते पीडिते, नष्टे वा । तथा गते याचिते वातरोगे च **अर्दितम्** । न० । अर्द—याचने, वधे वा । क्तप्रत्ययः । अर्दितं या-चितेऽपि स्याद्वातव्याधौ च हिंसिते" इति मेदिनी ॥१४६॥ क्षिप्तः त्यक्तः, विकीर्णो वा । अद्रि-भेदः पश्चिमाचलः तयोः । तथा अवसिते मृत्यौ ज्योतिषोक्ते लग्नात् सप्तमे स्थाने च **अस्तः**।पु०। अस—दीप्तौ।अस्यन्ते सूर्यकिरणा यत्र।आधारे क्तप्रत्ययः।"अस्तं क्षिप्तेऽप्यवसिते त्रिषु ना पश्चिमाच-ले"इति मेदिनी॥लाजेषु भृष्टधान्येषु।अपिशब्दात् यवे क्षतरहिते च **अक्षतं** स्यात् । न०।क्षण—वधे । क्तप्रत्ययः । नादितत्पुरुषः।अक्षतं न द्वयोः पण्डे लाजेषु त्रिष्वहिंसिते" इति मेदिनी॥कृषौ वैश्यवृत्तिभेदे, भूमिकर्षणरूपे, सस्योत्पादनव्यापारे वा । असत्ये सत्यभिन्ने अयथार्थे । अपिश-ब्दात् वाणिज्ये च **अनृतम्** । न० । ऋतं सत्यम् । नादितत्पुरुषः ।"अनृतं कृषावसत्येऽपि" इति मेदिनी ॥ जातिः जन्म । रूपं वपुः तयोः । तथा आकारे अवयवसंस्थाने च **आकृतिः**

**आप्तौ लब्धहितौ दैर्घ्ये भाविकालेऽपि चायतिः ।**
**आचितः शाकटोन्मेयेऽप्यावर्तश्चिन्तनेऽपि च ॥ १४८ ॥**
**आयस्तस्तेजिते क्षिप्तेऽथाऽऽख्यातं तिङि भाषिते ।**
**भ्रंशे तदात्वे चाऽपात आहतं गुणिते हते ॥ १४९ ॥**
**मृषोक्ते चाथ दग्धे स्यादुषितं स्थितवत्यपि ।**
**व्यसनार्त्ते चोऽपरक्त उदितं प्रोक्त उद्गते ॥ १५० ॥**

। स्त्री० । आपूर्वकृ—करणे । क्तिन्प्रत्ययः । "आकृतिस्तु स्त्रियां रूपे सामान्यवपुषोरपि" इति मेदिनी ॥ १४७ ॥ लब्धः प्राप्तः । हितः इष्टसाधनः । तयोः । तथा विश्वस्ते सत्ये रागद्वेषादिवर्जिते यथार्थोपदेष्टरि भ्रमादिशून्ये यथार्थज्ञातरि च **आप्तः** । त्रि० । आप—प्राप्तौ । क्तप्रत्ययः । "आप्तो लब्धे स्वसत्ययोः" इति मेदिनी ॥ दैर्घ्ये दीर्घकालभाविनि । भाविकाले उत्तरकालफलदाने । अपिशब्दात् सङ्गमे प्रापणे च **आयतिः** । स्त्री० । क्वचित्तु "आयती" इत्यपि। आपूर्वया—गतौ । डतिप्रत्ययः । वा ङीप् । "आयतिस्तु स्त्रियां दैर्घ्ये प्रभावागामिकालयोः" इति मेदिनी ॥ शाकटोन्मेये शकटपरिमाणे । अपिशब्दात् सङ्गृहीते वाक्ये ग्रथिते दशभारमितपरिमाणे छन्ने च **आचितः** । पु० । आपूर्वचि—चयने । क्तप्रत्ययः । "आचितः शाकटोन्मेये पलानामयुतद्वयोः । पुँल्लिङ्गः सङ्गृहीतेऽपि च्छन्नेऽपि स्यात्त्रिलिङ्गकः" इति मेदिनी ॥ चिन्तने संस्कारोद्बोधे पूर्वदृष्टपदार्थस्मरणे । अपिशब्दात् चक्राकारेण जलस्य स्वयं भ्रमणे ध्रुवाख्ये रोगसंस्थानभेदे घोटकचिह्ने वामावर्तनामके मणौ आवर्तने मेघाधिपभेदे माक्षिकधातौ च । न० । **आवर्त्तः** । पु० । आपूर्ववृत—वर्त्तने । घञ्प्रत्ययः । "आवर्त्तश्चिन्तने वारिभ्रमे चाऽवर्त्तने पुमान्" इति मेदिनी ॥ १४८ ॥ तेजिते तीक्ष्णीकृते । क्षिप्ते त्यक्ते । तथा क्लेशिते कुपिते हते च **आयस्तः** । पु० । आपूर्वयस—परिणामे च । क्तप्रत्ययः । "आयस्तस्तेजिते क्षिप्ते क्लेशिते कुपिते हते" इति मेदिनी ॥ तिङि व्याकरणप्रसिद्ध तिङन्ते पदे । भाषिते कथिते । तथा व्याख्याने च **आख्यातम्** । न० । आपूर्वख्या—कथने । क्तप्रत्ययः । "आख्यातं भाषिते तिङि" इति मेदिनी ॥ भ्रंशे सहसा पतने । तदात्वे तत्काले । चकारात् मार्गे च **आपातः** । पु० । आपूर्वपत—गतौ । भावे घञ्प्रत्ययः । "अहिंसितेऽपि चापातस्तदात्वे पतनेऽपि च" इति विश्वः ॥ गुणिते पूरिते, वर्धिते वा । हते ताडिते । मृषोक्ते वन्ध्यासुतोऽसीत्यादौ मृषार्थके वाक्ये । चकारात् ढक्काम् । पु० । पुरातने नूतनवस्त्रे वा । न० । **आहतम्** । आपूर्वहन्—हिंसायाम् । क्तप्रत्ययः । "आहतं गुणिते चाऽपि ताडिते च मृषार्थके । स्यात्पुरातनवस्त्रेऽपि नववस्त्रे च नाऽनके" इति मेदिनी ॥ १४९ ॥ दग्धे भस्मीकृते । स्थितवति कृतस्थिते । अपिशब्दात् पर्युषिते च **उषितम्** । त्रि० । उष—वधे, दाहे च । क्तप्रत्ययः । वस—निवासे । क्तो वा । "उषितं व्युषिते दग्धे" इति मेदिनी ॥ व्यसनार्ते व्यसनपीडिते, व्यसनेष्वासक्ते वा । चकारात् राहुग्रस्ते सूर्ये चन्द्रे च। रञ्जनद्रवेण रक्ते च **उपरक्तः** । पु० । उपपूर्वरञ्ज—रागे । क्तप्रत्ययः । "उपरक्तो व्यस-

**स्याद्धुस्तूरेऽपि चोन्मत्तः क्षिप्ते सृष्टेऽपि चोद्धृतम्।**
**उत्तप्तं शुष्कमांसेऽपि वह्न्युत्पातेऽप्युपाहितः॥ १५१॥**
**उदास्थितश्चरे द्वाःस्थे स्यादूतिः स्यूतिरक्षयोः।**
**ऋतमुञ्छशिले सत्ये एतावागतकर्बुरौ॥ १५२॥**
**ऐरावतो नागरङ्गेऽप्यथ कान्तिर्द्युतीच्छयोः।**
**किरातौ म्लेच्छभूनिम्बौ कान्तस्तु प्रियरम्ययोः॥ १५३॥**

नार्ते राहुग्रस्तेन्दुसूर्ययोः" इति मेदिनी॥ उद्गते उदिते। प्रोक्ते कथिते। तद्वत् उत्थिते वृद्धे च **उदितम्।** त्रि०। वद—वाक्ये, सन्देशे च। उद्पूर्वइण्—गतौ। क्तप्रत्ययो वा। "उत्तुङ्गे मुद्गरेऽपि स्यादुदितं तूक्त उद्गते" इति मेदिनी॥ १५०॥ धुस्तूरे स्वनामाख्याते वृक्षे। अपिशब्दात् मुचुकुन्दवृक्षे उन्मादवति ग्रहावेशवति च। त्रि०। **उन्मत्तः** स्यात्। पु०। उत्पूर्वमद्—जाड्ये। करणे क्तप्रत्ययः। "उन्मत्त उन्मादवति धुस्तूरमुचुकुन्दयोः" इति मेदिनी॥ क्षिप्ते उत्क्षिप्ते। सृष्टे त्यक्ते। अपिशब्दात् भुक्तोज्झिते कृतोद्धारे पृथक्कृते। उच्छेदिते च **उद्धृतम्।** त्रि०। उद्पूर्वहृ—हरणे। क्तप्रत्ययः। उद्पूर्वधृ—धारणे। क्तप्रत्ययो वा। "उद्धृतं स्यात्त्रिषूत्क्षिप्ते परिभुक्तोज्झितेऽपि च" इति मेदिनी। शुष्कमांसे आतपादिना कृतशोषणे मांसे। न०। अपिशब्दात् संतप्ते स्नाते च **उत्तप्तम्।** त्रि०। उद्पूर्वतप-दाहे, उपतापे वा। क्तप्रत्ययः। "उत्तप्तं शुष्कमांसेऽथ त्रिषु तप्ते परिप्लुते"इति मेदिनी। वह्न्युत्पाते अग्न्युत्पातरूपे उपद्रवे। अपिशब्दात् उल्कापातादौ आरोपिते योजिते च **उपाहितः।** पु०। उप आसङ्गमाहितं यतः। तथा उप—आपूर्वधृ—धारणे। क्तप्रत्ययो वा। "उपाहितोऽनलोत्पाते पुमानारोपिते त्रिषु" इति मेदिनी॥ १५१॥ चरे स्वपरराष्ट्रवृत्तान्तज्ञानार्थं राजनियोगेन इतस्ततो भ्रमणकर्तरि चारे। द्वाःस्थे द्वारपाले। तथा अध्यक्षे प्रव्रज्यारूपस्थानच्युते नष्टसंन्यासे परिव्राजके च। **उदास्थितः।** त्रि०। उदापूर्वस्था—गतिनिरोधे। क्तप्रत्ययः। "उदास्थितः प्रतीहारे प्रव्रज्या वसिते चरे" इति मेदिनी। स्यूतिः सूच्यादिना वस्त्रादिसीवनम्। रक्षः रक्षणं तयोः। तथा लीलायां क्षरणे च। **ऊतिः।** स्त्री०। ऊयी—तन्तुसन्ताने। क्तिन् प्रत्ययः। अव—रक्षणे। क्तिन्प्रत्ययो वा। "ऊतिः स्त्री रक्षणे स्यूतौ"इति मेदिनी॥ उञ्छशिले "ऋतमुञ्छशिलं ज्ञेयम्" इत्युक्तेः ब्राह्मणस्य उपजीव्यवृत्तौ मोक्षे। सत्ये सत्यवचने। तथा सुप्रिये—वाक्ये जले कर्मफले "ऋतं पिबन्तौ" इति श्रुतिः। दीप्ते पूजिते च **ऋतम्।** न०। ऋ—गतौ। क्तप्रत्ययः। "ऋतमुञ्छशिले जले। सत्ये दीप्ते पूजिते स्यात्" इति मेदिनी॥ आगतः उपस्थितः आयातो वा। कर्बूरः स्वर्णम्। हरितालः तद्वर्णे वा। तयोश्च **एतः।** त्रि०। पु०। इण्—गतौ। तन्प्रत्ययः। "एतः कर्बूर आगते" इति मेदिनी॥ ॥ १५२॥ नागरङ्गे स्वनामाख्याते जम्बीरभेदे। अपिशब्दात् समुद्रजाते इन्द्रगजे

**केतुर्ग्रहोत्पातचिह्ने कलितं विदिताप्तयोः ।**
**कपोतः पक्षिमात्रेऽपि गुप्तं रक्षितगूढयोः ॥ १५४ ॥**
**गतिर्यात्रादशोपायाः शण्डः सूर्यश्च गोपतिः ।**
**गृही सत्री गृहपतिर्गीतं शब्दितगानयोः ॥ १५५ ॥**

लकुचद्रुमे च **ऐरावतः** । पु० । इरा जलानि सन्त्यस्य । इराशब्दात् मतुप् प्रत्ययः ।मस्य वः । इरावान् समुद्रस्तत्र भवः । अण्प्रत्ययो वा । "ऐरावतोऽभ्रमातङ्गे नारङ्गे लकुचद्रुमे । नागभेदे च पुंसि स्याद्विद्युत्तद्भेदयोः स्त्रियाम्" इति मेदिनी ॥ द्युतिः शोभा । इच्छा अभिलाषः तयोः । तथा दीप्तौ च **कान्तिः** । स्त्री० । कम—वाञ्छायाम्, कामनायां वा । क्तिन्प्रत्ययः । "कान्तिः शोभेच्छयोः स्त्रियाम्" इति मेदिनी ॥ म्लेच्छः जातिभेदः पर्यन्तदेशाश्रयी । भूनिम्ब अरिष्टः । तयोः । तथा अल्पतनौ "तप्तकुण्डं समारभ्य रामक्षेत्रान्तकं शिवे ! किरातदेशो देवेशि ! विन्ध्यशैलेऽवतिष्ठति इत्युक्तदेशे च । **किरातः** । पु० । कीर्यन्तेऽवस्कारा अत्र । कॄ—विक्षेपे । कप्रत्ययः । पर्यन्तदेशमतति । अण्प्रत्ययः । "किरातो म्लेच्छदेशे स्याद्भूनिम्बेऽल्पतनावपि । स्त्रियां चामरधारिण्यां कुट्टिनीदुर्गयोरपि" इति मेदिनी ॥ प्रियः भर्ता पतिर्वा । रम्यः रमणीयः तयोः । तद्वत् लौहे सूर्यकान्तशिलायां चन्द्रकान्तमणौ वसन्ते हिज्जलवृक्षे वासुदेवे कुङ्कुमे शोभने अभीष्टे त्रि० । नार्यां प्रियङ्गुवृक्षे च । स्त्री० । **कान्तः** । पु० । कन—दीप्तौ । क्तप्रत्ययः । कम—वाञ्छायाम् । क्तो वा । "कान्ता नार्यां प्रियङ्गौ स्त्री शोभने त्रिषु माधवे । लोहे च चन्द्रसूर्याख्यां पर्य्यायान्तःशिलासु च" इति मेदिनी ॥ १५३ ॥ ग्रहोत्पातः ग्रहः राहोः शरीरात्मकः उपग्रहः, तेषामुत्पातरूपता । सा च ज्योतिःशास्त्रे प्रसिद्धा । चिह्नं लक्षणम् । तस्मिन् । न० । तथा रोगे द्युतौ पताकायां रिपौ च केतुः । पु० । चाय—दर्शने । तु प्रत्ययः । क्यादेशः । "केतुर्ना रुक्पताकाऽरिग्रहोत्पातेषु लक्षणे" इति मेदिनी ॥ विदितः ज्ञातः । आप्तः प्राप्तः तयोः । तथा । मेदिते गृहीते उक्ते सङ्ख्याते विचारिते बद्धे च **कलितम्** । त्रि० कल—गतौ, सङ्ख्यायां च । क्तप्रत्ययः ।"कलितं विदिताप्तयोः" इति मेदिनी॥ पक्षिमात्रे पक्षिसाकल्ये । अपिशब्दात् पारावते च **कपोतः** । पु० । को वातः पोत इव यस्य । "कपोतः स्याच्चित्रकण्ठपारावतविहङ्गयोः" इति मेदिनी ॥ रक्षितः त्राणम् । गूढं संवृतं तयोः । तथा वैश्यसंज्ञायां च । पु० । **गुप्तम्** । त्रि० । गुप—रक्षणे, गोपने वा । क्तप्रत्ययः। "गुप्तं स्याद्रक्षिते गूढे"इति मेदिनी ॥ १५४॥ यात्रा गमनम् । दशा अवस्था । उपायः राज्ञां रिपुनिराकरणहेतुसाम्यः, क्रियासाधनार्थमवश्यकरणीयः । तेषु च । तथा गमने पथि ज्ञाने नाडीव्रणपथे कर्मफले प्राप्तौ च **गतिः**। स्त्री०। गम—गतौ। भावादौ क्तिन्प्रत्ययः। "गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राभ्युपाययोः। नाडीव्रणे सरण्यां च"इति मेदिनी॥शण्डः गवां पतिर्वृषः। सूर्यः किरणपतिः । तत्र च । चकारात् शिवे भूमिपतौ नृपे श्रीकृष्णे स्वर्गपतौ—शक्रे ऋषभनामौषधौ च **गोपतिः** । पु० । गवां पतिरिति षष्ठीतत्पुरुषः । "गोपतिः शिवशण्डयोः । नृपभास्करयोः

**गर्जितं स्तनिते नेभे ग्रस्तं वाग्भेदभुक्तयोः ।**
**चर्मण्वत्यौ नदीरम्भे जातं व्यक्तौघजन्मसु ॥ १५६ ॥**
**सूर्यावर्तेऽपि जामाता ना वाते पिष्टपे जगत् ।**
**जातिश्छन्दसि मालत्यां चुल्ल्यां जातीफले कुले ॥ १५७ ॥**
**व्याप्तविस्तृतवाद्येषु ततं तिक्तं सुगन्ध्यपि ।**
**चापे तृणत्वे तृणता तातः पित्रनुकम्पयोः ॥ १५८ ॥**

पुंसि'' इति मेदिनी ॥ गृही गृहस्थः । सत्री गृहस्वामी । तयोः । तथा गन्त्रिणि धर्मे च **गृहपतिः** । पु० । गृहस्य पतिरिति षष्ठीतत्पुरुषः।''भवेद्गृहपतिः पुंसि गृहस्थेऽपि च सत्रिणि'' इति मेदिनी ॥ शब्दितः नादितम् । गानं गीतकर्म तयोश्च । **गीतम्** । न० । गै–शब्दे । क्तप्रत्ययः । ''गीतं शब्दितगानयोः'' इति मेदिनी ॥१५५॥ स्तनिते मेघशब्दे । इभे मत्तहस्तिनि । पु० । **गर्जितम्** । न० । गर्ज–शब्दे । क्तप्रत्ययः । ''गर्जितं वारिवाहादिध्वनौ ना मत्तकुञ्जरे'' इति मेदिनी ॥ वाग्भेदः लुप्तवर्णपदो वाग्विशेषः । भुक्तः भक्षितः तयोश्च । त्रि० । **ग्रस्तम्** । न० । ग्रस–भक्षणे । क्तप्रत्ययः । ''ग्रस्तं ग्रासीकृतेऽपि स्याल्लुप्तवर्णपदोदिते'' इति मेदिनी ॥ नदी गङ्गाभेदः । रम्भा कदलीपादपः । तयोश्च । **चर्मण्वती** । स्त्री०।चम्पाऽस्त्यस्याम् । मतुप्प्रत्ययः । निपातनात् साधुः । ''चर्मण्वती नदीभेदे कदलीपादपे स्त्रियाम्'' इति मेदिनी ॥ व्यक्तः स्फुटः, प्रकाशितो वा । ओघः समूहः । जन्म उत्पन्नम् । तेषु च । तथा प्रशस्ते च । त्रि० । **जातम्** । न० । जन–जनने । क्तप्रत्ययः । ''जातं व्यक्तौघजन्मसु । क्लीबं त्रिलिङ्गमुत्पन्ने'' इति मेदिनी ॥ १५६ ॥ सूर्यावर्ते क्षुपभेदे, शाके वा । अपिशब्दात् दुहितृपतौ वल्लभे स्वामिनि च **जामाता** । पु० । जायां माति मिनोति मिमीते वा । मा–माने, शब्दे वा । तृच्प्रत्ययः । ''जामाता दुहितुः पत्यौ सूर्यावर्ते धवे पुमान्'' इति मेदिनी ॥ वाते वायौ । पिष्टपे भुवने । न० । तथा जङ्गमे च । त्रि० । **जगत्** । पु० । गम–गतौ । क्विप्प्रत्ययः । निपातनात् साधुः । ''जगत्स्यात्पिष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु'' इति मेदिनी ॥ छन्दसि ( नियताक्षरवर्णमात्रादिसंनिवेशवशात् चतुश्चरणादौ ) उक्तादिछन्दोभेदे । मालत्यां जातिलतायाम् । चुल्ल्यां पाकार्थमग्निस्थापनस्थाने । जातीफले स्वनामाख्याते फले । कुले पौत्राद्यपत्यात्मके गोत्रे । तथा जन्मनि अनुगतैकाकारबुद्धिजनसमर्थे धर्मभेदे वेदशाखाभेदे षड्जरेतिषु सप्तसु स्वरेषु अलङ्कारभेदे आमलक्यां च **जातिः** । स्त्री०।जन–जनने। क्तिप्रत्ययः । ''जातिः स्त्री गोत्रजन्मनोः । अश्मन्तिकामलक्योश्च सामान्यछन्दसोरपि । जातिफले च मालत्याम्'' इति मेदिनी ॥ १५७ ॥ व्याप्तं पूर्णम् । विस्तृतं विस्तारयुक्तम् । वाद्यं वादनीयं मृदङ्गादिकम्, वीणावाद्यं वा तेषु । तथा वायौ । पु० ।पृथौ च। त्रि०। **ततम्** । न० । तन–विस्तृतौ । क्तप्रत्ययः । ''ततं व्याप्ते विस्तृते च त्रिलिङ्गकम् । क्लीबं वीणादिवाद्ये स्यात्पुंल्लिङ्गस्तु सदागतौ'' इति मेदिनी ॥ सुगन्धि इष्टगन्धि, सुरभि वा । तत्र च अपिशब्दात् वरुणद्रुमे कुटजे रसभेदे पर्पटौषधौ

दुर्गतिर्नरके नैःस्व्ये दुर्जातं व्यसनेऽपि च ।
दिवाभीत उलूके स्यात्कुम्भिले कुमुदाकरे ॥ १५९ ॥
विसृष्टे रक्षिते दत्तं द्रुतं शीघ्रविलीनयोः ।
दशने शैलशृङ्गे च दन्तः स्यादौषधे स्त्रियाम् ॥ १६० ॥
दितिः खण्डनदैत्याम्बे धृतिस्तुष्टौ क्रतावपि ।
राशौ च धातुनिर्वाणे सुस्थितत्वे च निर्वृतिः ॥ १६१ ॥

कटुकायां पाठायां छिक्कण्यां च । **तिक्तम्** । न० । तिज—तीक्ष्णीकरणे । क्तप्रत्ययः । "तिक्तो रससुगन्धयोः । तिक्ता तु कटुरोहिण्यां पर्पटे तु नपुंसकम्" इति मेदिनी ॥ चापे धनुषि । तृणत्वे तृणभावे च । **तृणता** । स्त्री० । तृणशब्दात् भावे ताप्रत्ययः । स्वार्थे तल्प्रत्ययश्च । तृणानां समूह इति समूहार्थे तल्प्रत्ययो वा । "तृणता धनुषि तृणत्वे" इति मेदिनी ॥ पिता जनकः । अनुकम्पा दया तयोः। तथा पूज्ये । त्रि० । **तातः** । पु० । तन उपकारे, श्रद्धायां वा । क्तप्रत्ययः, दीर्घश्च । "तातोऽनुकम्पो जनके इति मेदिनी ॥ १५८ ॥ नरके रौरवप्रभृते पापिनां दुःखभोगस्थानभेदे । नैःस्व्ये दारिद्रे । तथा दुष्टायां गतौ च **दुर्गतिः** । स्त्री० । दुर्पूर्व गम—गतौ । क्तिन्प्रत्ययः । "दुर्गतिर्नरके नैःस्व्ये" इति मेदिनी ॥ व्यसने विपत्तौ । अपिशब्दात् आपदादौ असम्यग्जाते अनुचिते च । त्रि० । **दुर्जातम्** । न० दुष्टं जातम् । प्रादिसमासः । "दुर्जातं व्यसने क्लीबेऽसम्यग्जातेऽन्यलिङ्गकम्" इति मेदिनी उलूके पेचके । कुम्भिले चौरे । कुमुदाकरे चन्द्रे च । **दिवाभीतः** । पु० । दिवा दिवः भीतः । "दिवाभीतः कुम्भिले स्यादुलूके कुमुदाकरे" इति मेदिनी ॥ १५९ ॥ विसृष्टे त्यक्ते प्रेरिते वा । रक्षिते गोपिते । तथा द्वादशपुत्रमध्ये दत्तक इति ख्याते पुत्रभेदे दत्तात्रेयाख्ये अवतारभेदे दाने "दत्तं सप्तविधं प्रोक्तमदत्तं षोडशात्मकम् । पण्यंमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः । स्त्रीणां चानुग्रहार्थं च दत्तं सप्तविधं स्मृतम्" इत्युक्ते दानभेदे च । न० । **दत्तम्** त्रि० । दा—दाने । क्तप्रत्ययः । "दत्तं विश्राणितेऽविते" इति मेदिनी ॥ शीघ्रं त्वरितम् विलीनं द्रवीभूतं तयोः ॥ तथा नृत्ये गीते वाद्ये पलायिते च **द्रुतम्** । त्रि० । द्रु—गतौ क्तप्रत्ययः । "अथ द्रुतं त्रिषु । शीघ्रे विलीने विद्रावे" इति मेदिनी ॥ दशने चर्वणसाधने अस्थिभेदे । शैलशृङ्गे पर्वतनितम्बे । औषधे स्वनामाख्याते भेषजद्रव्ये । स्त्री० । चकारात् इ सानुनि द्वात्रिंशत्सङ्ख्यायां च **दन्तः** । पु० । अन्तर्भावितण्यर्थे । दम—शमे, दण्डे च । त प्रत्ययः । "दन्तोऽद्रिकटके कुञ्जे दशने नौषधौ स्त्रियाम्" इति मेदिनी ॥ १६० ॥ खण्डनं भञ्जनं, भेदनं वा । दैत्याम्बा दैत्यमाता । तयोः । कश्यपपत्न्यां च **दितिः** । स्त्री० । अवखण्डने । क्तिच्प्रत्ययः । वा ङीप् । क्वचित् "**दिती**" च । भावे क्तिन्प्रत्ययः ङीप् । "दितिर्दैत्यजनन्यां च खण्डनेऽपि च योषिति" इति मेदिनी ॥ तुष्टौ सन्तोषे । यागे । अपिशब्दात् विष्कम्भावधिके अष्टमे योगे धारणे सुखे धारणायाम् अवसादेऽपि शार्

**अस्वाध्याये कुरूपे च प्रत्युक्तौ स्त्री निराकृतिः ।**
**जम्ब्वां स्त्री ना नदीकान्तः सिन्धुवारे जलाब्धिषु ॥ १६२ ॥**
**निमित्तं हेतुचिह्नाङ्गशकुनोद्देश्यपर्वसु ।**
**प्रसृतः कुब्जिते पाणौ जङ्घायां स्त्री गते त्रिषु ॥ १६३ ॥**
**प्रकृतिर्गुणसाम्ये स्यात्स्वभावामात्ययोरपि ।**
**प्रतीकारे प्रतिकृतिः प्रतिबिम्बेऽथ पद्धतिः ॥ १६४ ॥**

स्तम्भनशक्तौ अष्टादशाक्षरे छन्दोभेदे अष्टादशसङ्ख्यायां च । **धृतिः** । स्त्री० । धृ-धारणे । क्तिन्प्रत्ययः । "धृतिर्नेष्टौ स्त्रियां तुष्टौ योगिभिर्धैर्यधारणे" इति मेदिनी ॥ राशौ धान्यादिपुञ्जे, मेषादिराशौ वा । धातुः स्वर्णादिः । निर्वाणं मोक्षः । तत्र च । सुस्थितत्वे सुखे, आरोग्यत्वे वा । चकारात् अस्तङ्गमने मृत्यौ च **निर्वृतिः** । स्त्री० । निर्पूर्ववृ—आवरणे । क्तिन्प्रत्ययः । "निर्वृतिः स्वस्थितावस्तङ्गमने च सुखे स्त्रियाम्" इति मेदिनी ॥ ॥ १६१ ॥ अस्वाध्याये स्वाध्यायविरहिते, स्वकीयत्वेन विहिताध्यायरहिते । कुरूपे गर्हितरूपे । प्रत्युक्तौ विरुद्धवाक्ये । चकारात् वारणे च **निराकृतिः** । स्त्री० । निरआपूर्वकृ—करणे । क्तिन्प्रत्ययः । "निराकृतिरनाकारेऽस्वाध्याये त्रिषु वारणे" इति मेदिनी ॥ जम्ब्वां जम्बुवृक्षे । स्त्री० । सिन्धुवारे निर्गुण्डिवृक्षे । जलं तोयम् । अब्धिः समुद्रः तेषु । तथा हिज्जलवृक्षे काकजङ्घौषधौ च **नदीकान्तः** । पु० । नदी कान्ता यस्य । "नदीकान्तः समुद्रे स्याद्धिज्जले सिन्धुवारके" इति मेदिनी ॥ १६२ ॥ हेतुः कारणम् । चिह्नं लक्षणम् । अङ्गम् अवयवम् । शकुनं भावीशुभाशुभसूचकः ज्योतिषाद्युक्तः पक्षी । उद्देश्यम् अनुसन्धानम् अन्वेषणं वा । पर्व ग्रन्थिः, उत्सवो वा । तेषु च **निमित्तम्** । न० । निपूर्वमिद—स्नेहे । तक्प्रत्ययः । क्वचित्तु "निमित्तं हेतुचिह्नाङ्गं तु दैवादेशपर्वसु" इति पाठो दृश्यते । "निमित्तं हेतुलक्ष्मणोः" इति मेदिनी ॥ कुब्जिते पाणौ कुब्जहस्तवति । जङ्घायां गुल्फजान्वोरन्तराले अवयवे । स्त्री० । गते गमने । त्रि० । तथा अर्धाञ्जलौ प्रवृद्धे प्रसादिते विनीते वेगिते नियुक्ते च **प्रसृतः** । पु० । प्रपूर्वसृ--गतौ । क्तप्रत्ययः । "प्रसृतः सम्प्रचारे स्याद्विनीते वेगिते त्रिषु । अर्द्धाञ्जलौ तु पुँल्लिङ्गो जङ्घायां प्रसृता मता । प्रसृतं कुसुमे क्लीबं त्रिषु सञ्जातसूतयोः" इति मेदिनी ॥ १६३ ॥ गुणसाम्ये सत्त्वरजस्तमोरूपगुणत्रयात्मके साम्ये । अथवा स्वाम्यः स्वाम्यादिराज्याङ्गम् । तत्र च । स्वभावः प्रसिद्धः । अमात्यः मन्त्री तयोः । अपिशब्दात् उपादानकारणे लिङ्गे स्वामिनि अज्ञाने सुहृदि कोपे राष्ट्रे पौरश्रेणौ दुर्गे बले शिल्पिनि शक्तौ योषिति परमात्मनि पञ्चभूतेषु करणे गुह्ये जन्तौ एकविंशत्यक्षरपादके छन्दोभेदे मातरि व्याकरणोक्ते प्रत्ययोत्पत्तिनिमित्ते शब्दभेदे च **प्रकृतिः** स्यात् । स्त्री० । प्रकरोति । प्रपूर्वकृ—करणे । क्तिच्प्रत्ययः । "प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ लिङ्गे पौरवर्गेऽमी पक्षत्यादयः स्त्रियाम्" इति मेदिनी ॥ प्रतीकार वैर नेर्यातने कृतस्यापकारस्य तुल्यरूपापकारकरणेन शोधने, रोगादेश्चिकित्सायां वा ।

**पङ्क्तौ मार्गेऽपि पूतं तु पवित्रे बहुलीकृते ।**
**श्रेणिर्दश च पङ्क्तिः स्यात्प्रसूतिर्जन्मतोकयोः ॥ १६५ ॥**
**प्रतिपत्तिश्चित्प्रवृत्तिः प्राप्तिः प्रागल्भ्यगौरवे ।**
**पारावती गोपगीतिलवलीफलयोरपि ॥ १६६ ॥**
**पलितं कर्दमेऽपि स्याद्विधौ भूपे प्रजापतिः ।**
**शक्ते निवारणे वृत्तौ पर्याप्तं स्याद्यथेप्सिते ॥ १६७ ॥**

प्रतिबिम्बे प्रतिमायाम् । तथा सादृश्ये प्रतिनिधौ च **प्रतिकृतिः** । स्त्री० । प्रतिपूर्वकृ—करणे । क्तिन्प्रत्ययः । "प्रतिकृतिरर्चायां प्रतिनिधिप्रतिकारयोश्च स्त्री" इति मेदिनी ॥ पङ्क्तौ श्रेणौ । मार्गे पथि । अपिशब्दात् पूजादिज्ञापकग्रन्थभेदे च **पद्धतिः** । स्त्री० । पदपूर्वहन—वधे, गतौ वा । क्तिन्प्रत्ययः । वा ङीप् । "पद्धती" अप्यत्र । "पद्धतिः पङ्क्तिवर्त्मनोः" इति मेदिनी ॥ पवित्रे व्रतादिना शुद्धे । बहुलीकृते राशीकृतमात्रे वृषस्यापसारणेन राशीकृते खलस्थे धान्ये । तथा सत्ये शङ्खे श्वेतकुशे विकङ्कतवृक्षे च । पु० । दूर्वायाम् । स्त्री० । टाप् च । **पूतम्** । न० । पू—शोधे । क्तप्रत्ययः । "पूतं त्रिषु पवित्रे च शटिते बहुलीकृते" इति मेदिनी ॥ श्रेणिः सजातीयसन्ततिः । तत्र दश दशसङ्ख्यायाम् । तथा पञ्चाक्षरपादके दशाक्षरपादके च छन्दोभेदे पृथिव्यां गौरवे पाके प्रपञ्चे च **पङ्क्तिः** । स्यात् । स्त्री० । पचि—विस्तारे । क्तिन्प्रत्ययः । "पङ्क्तिः स्याद्गौरवे पाके" इति मेदिनी । "पङ्क्तिर्दशाक्षरच्छन्दोदशसङ्ख्यावलीष्वपि" इति विश्वः ॥ जन्म प्रसवम् । तोकम् अपत्यं तयोः । तथा उदरे मातरि च **प्रसूतिः** । स्त्री० । प्रपूर्वसू—प्रेरणे । क्तिन्प्रत्ययः।"प्रसूतिरुद्भवेऽपि स्यात्तनये दुहितर्यपि" इति मेदिनी॥१६४॥१६५॥ चित्प्रवृत्तिः चेतनाप्रयत्नभेदः । प्राप्तिः पदवृद्धिः । प्रागल्भ्यं प्रतिभान्वितम् । गौरवं गुरुत्वम्, अभ्युत्थानादिसम्मानं वा । तेषु । तथा कर्तव्यताज्ञाने च **प्रतिपत्तिः** । स्त्री० । प्रतिपूर्वपद—गतौ, स्थैर्ये वा । क्तिन्प्रत्ययः । "प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च । सम्प्राप्तौ च प्रबोधे च पदप्राप्तौ च योषिति" इति मेदिनी ॥ गोपगीतिः गोपालगीतिका । लवलीफलं लवली स्वनामाख्यातवृक्षः तत्फलं तयोः । अपिशब्दात् नदीभेदे च । **पारावती** । स्त्री० । परं जीवमवति । अव—रक्षणे । शतृप्रत्ययः । तस्येदमित्यण् । ङीप् च । "पारावती गोपगीतिर्नदीभिल्लवलीफले" इति मेदिनी ॥ १६६ ॥ कर्दमे पङ्के । अपिशब्दात् केशादौ जरया जातायां श्वेततायां मांसादेर्वलीपलितमात्रे शैलजे तापे वृद्धे च **पलितं** स्यात् । न० । पल—गतौ । भावे क्तप्रत्ययः । "पलितं शैलजे तापे केशपाके च कर्दमे" इति मेदिनी ॥ विधौ चतुर्मुखे ब्रह्मणि । भूपे भूपाले । तथा प्रजासर्जके दक्षादौ जामातरि सूर्ये वह्नौ त्वष्टरि च । **प्रजापतिः** । पु० । प्रजायाः पतिरिति षष्ठीतत्पुरुषः । "प्रजापतिर्ना दक्षादौ महीपाले विधातरि" इति मेदिनी ॥ शक्ते सामर्थ्ये । निवारणे निषेधे । वृत्तौ वर्तने । यथेप्सिते यथेष्टे ।

**प्रेतो मृते प्राणिभेदे पित्सन्पातेच्छुपक्षिणोः ।**
**क्लीबं बिन्दौ पृषन्नेणे पृषतोऽप्यनयोर्नरि ॥ १६८ ॥**
**खातादौ पूरिते पूर्तं पातो भ्रंशे च रक्षिते ।**
**प्रेषिते च प्रतिक्षिप्तं प्रतीतः सादरेऽपि च ॥ १६९ ॥**
**प्लुतः स्वरे चाऽभियुक्तहतौ च प्रार्थितौ स्मृतौ ।**
**द्विष्टेऽपि च प्रतिहतः पिण्डितं गुणिते घने ॥ १७० ॥**

तथा योग्यत्वे समर्थे आप्ते च । त्रि० । **पर्याप्तं** स्यात् । न० । परिपूर्वआप-प्राप्तौ । भावे क्तप्रत्ययः । कर्त्तरि वा । "पर्याप्तं तु यथेष्टे स्यात्तृप्तौ शक्ते निवारणे" इति मेदिनी ॥ ॥ १६७ ॥ मृते कालङ्कृते । प्राणिभेदे नरकस्थे जीवे, पिशाचभेदे वा । **प्रेतः** । पु० । प्रपूर्व-इण-गतौ । क्तप्रत्ययः । "प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः" इति मेदिनी ॥ पातेच्छुः पतनेच्छावान् । पक्षी विहङ्गमः तयोश्च । **पित्सन्** । पु० । पत-गतौ । सन् । शतृप्रत्ययः । "पित्सन्विहङ्गमे पुंसि पतनेच्छौ पुनस्त्रिपु" इति मेदिनी॥ बिन्दौ अल्पेंशे । न० । ऐणे शुभ्रबिन्दुमति मृगभेदे । पु० । **पृषत्** । न० । पृष-सेके । अतिप्रत्ययः । किच्च । अनयोः बिन्दुशुभ्रबिन्दुमन्मृगभेदयोः **पृषतः** । पु० । पृष-सेके अतच्प्रत्ययः । किच्च । "पृषन्मृगे पुमान्बिन्दौ न द्वयोः पृषतोऽपि ना । अनयोश्च त्रिपु श्वेतबिन्दुयुक्तेऽप्युभावपि" इति मेदिनी ॥ १६८ ॥ खातादौ खातादिकर्मणि विश्वजनोद्देशेन जलाशयदानादौ । पूरिते पूर्णे । तथा काले छन्ने । त्रि०। पूरणे च । न०। **पूर्तम्** । न० । पूर-पूर्तौ, प्रीणने च । क्तप्रत्ययः निपातनात् साधुः । "पूर्तं त्रिषु पूरिते स्यात्क्लीवं खातादिकर्मणि" इति मेदिनी ॥ भ्रंशे पतने । रक्षिते पालिते। त्रि०। चकारात् ज्योतिषोक्ते क्रान्तिसाम्यसम्पादके राहुरूपे ग्रहभेदे च **पातः**। पु० । पत--गतौ, पतने वा । घञ्प्रत्ययः । "पातो ना पतने त्राते" इति मेदिनी ॥ प्रेषिते प्रेरिते । चकारात् अधिक्षिप्ते बाधिते तिरस्कृते च **प्रतिक्षिप्तम्** । त्रि० । प्रतिपूर्वक्षिप--प्रेरणे, नोदने वा । क्तप्रत्ययः । "प्रतिक्षिप्तं वारिते स्यात्प्रेषिते पञ्चके त्रिपु" इति मेदिनी । "प्रतिक्षिप्तं प्रतिहते प्रेषिते च निराकृते" इति विश्वः॥ सादरे आदरान्विते । अपिशब्दात् ख्याते ज्ञाते हृष्टे च **प्रतीतः**। त्रि०। प्रतिपूर्व--इण--गतौ । क्तप्रत्ययः। "प्रतीतः सादरे ज्ञाते हृष्टप्रख्यातयो स्त्रिपु" इति मेदिनी ॥ १६९ ॥ स्वरे नादे । चकारात् तिर्यग्गतौ झम्पेन गतौ अश्वगतिभेदे च **प्लुतः** । पु० न०। प्लु--सर्पणे, उत्प्लुत्यगतौ च । क्तप्रत्ययः । "प्लुतं तुरङ्गमगतौ क्लीबं पुंसि त्रिमात्रके" इति मेदिनी । अभियुक्तः अभिहितः । हतः प्रसिद्धः । तयोः । चकारात् चालिते शत्रुसंरुद्धे च **प्रार्थितः** । स्मृतः ज्ञेयः । त्रि० । प्रपूर्वअर्थ--याचने । क्तप्रत्ययः । "प्रार्थितं याचिते शत्रुसंरुद्धेऽभिहिते त्रिषु" इति मेदिनी ॥ द्विष्टे शत्रौ। अपिशब्दात् रुद्धे निरस्ते प्रतिस्खलिते च **प्रतिहतम्** । त्रि०। प्रतिपूर्वहन--वधे । क्तप्रत्ययः। "भवेत्प्रतिहतं द्विष्टे प्रतिस्खलितरुद्धयोः" इति मेदिनी । गुणिते गुणीकृते । घने घनीभूते । तथा संहते तुरुष्के च

**प्राप्ते ज्ञाते परिगतं प्रपातौ भृगुनिर्झरौ ।**
**लोकायते कच्छपे च पञ्चगुतः स्मृतो बुधैः ॥ १७१ ॥**
**लब्धे समञ्जसे प्राप्तं पक्तिर्गौरवपाकयोः ।**
**पारिजातो देवतरौ मन्दारे पारिजातके ॥ १७२ ॥**
**वृत्तिवार्ताप्रवाहेषु प्रवृत्तिरथ घोटके ।**
**पाने च पीतिः सिक्ते तु प्रोक्षितं निहतेऽपि च ॥ १७३ ॥**
**रामानुजे नाट्यशास्त्रे दौष्मन्तौ भरतो नटे ।**
**जिने पूज्ये च भगवान्भोगवानाढ्यनागयोः ॥ १७४ ॥**

**पिण्डितम्** । त्रि० । पिण्ड—राशीकरणे क्तप्रत्ययः । पिण्डितं गुणिते घने'' इति मेदिनी ॥ १७० ॥ प्राप्ते प्रयाते । ज्ञाते प्रसिद्धे । तथा विस्मृते चेष्टिते वेष्टिते गते च **परिगतम्** । त्रि० । परिपूर्वगम—गतौ । क्तप्रत्ययः । ''त्रियां परिगतं प्राप्ते विस्मृतज्ञातचेष्टिते'' इति मेदिनी ॥ भृगुर्मुनिभेदः । निर्झरः पर्वतान्निःसृतजलप्रवाहः तयोः । तथा तटरहिते निरवलम्बे पर्वतस्थाने कूले अवस्कन्दे च **प्रपातः** । पु० । प्रपतत्यस्मात् । पत—पतने । घञ्प्रत्ययः । ''देवमुन्यन्तरे शैले प्रपातो निर्झरे तटे'' इति मेदिनी ॥ लोकायते चार्वाकमते । कच्छपे कमठे च । **पञ्चगुतः** । पु० । बुधैः पण्डितैः । स्मृतः ज्ञातः । पञ्च गुतानि यस्य । ''पञ्चगुतस्तु चार्वाकदर्शने कमठे पुमान्'' इति मेदिनी ॥ १७१ ॥ लब्धे लाभे । समञ्जसे उचिते, युक्ते वा । **प्राप्तम्** । त्रि० । प्रपूर्वआप—प्राप्तौ । क्तप्रत्ययः ॥ गौरवं गौरवणीयम् । पाकः पचनम् । तयोः । **पक्तिः** । स्त्री० । पचि—विस्तारे । क्तिन्-प्रत्ययः । पक्तिः स्त्री गौरवे पाके'' इति मेदिनी ॥ देवतरौ सुरद्रुमभेदे । मन्दारे स्वनामाख्याते वृक्षे । पारिजातके पारिभद्रवृक्षे च । **पारिजातः** । पु० । पारमस्यास्ति पारी समुद्रस्तत्र जातः । जन—जनने । क्तप्रत्ययः । ''पारिजातः सुरतरौ पारिभद्रतरावपि'' इति मेदिनी ॥ १७२ ॥ वृत्तिर्निवर्त्तनम् । वार्त्ता वृत्तान्तम् । प्रवाहः जलस्रोतः तेषु । तथा अवन्त्यादिदेशे हस्तिमदे न्यायोक्ते चिकीर्षाकृतिसाध्यताज्ञानाधीने प्रयत्नभेदे च **प्रवृत्तिः** । स्त्री० । प्रपूर्व-वृत—वर्त्तने । क्तिन्प्रत्ययः । ''प्रवृत्तिस्तु प्रवाहे स्यादुदन्ते च प्रवर्तने । अवन्त्यादौ च'' इति ...ी ॥ घोटके अश्वे । पाने द्रवद्रव्यस्य गलाधःसंयोजने । चकारात् गतौ शुण्डायां च । ...तः । पु० । पा—पाने । क्तिच्प्रत्ययः । भावे क्तिश्च । अज—गतौ, क्षेपणे च । व्यादेशे ...ीति र्वा । ''पीतिर्नाऽश्वे स्त्रियां पाने'' इति मेदिनी ॥ सिक्ते सेचनकर्मणि । निहते । अपिशब्दात् हिते यज्ञार्थे संस्कृते मांसादौ च । ''भक्षयेत्प्रोक्षितं मांसम्'' इति ... । **प्रोक्षितम्** । त्रि० । प्रपूर्वउक्ष—सेचने । क्तप्रत्ययः । ''प्रोक्षितं निहते सिक्ते'' इति मेदिनी ॥ १७३ ॥ रामानुजे दशरथकनिष्ठपुत्रे । नाट्यशास्त्रे भरतमुनिकृते नाटकशास्त्रे । दौष्मन्तौ चन्द्रवंशीये भरतराजपुत्रे । नटे नाटके । **भरतः** । पु० । तथा वेदव्यास-

**सेवाविभागयोर्भक्तिर्भवद्युष्मत्सदर्थयोः ।**
**पक्षिण्यां वाचि वृत्तौ च भारती भारतं पुनः ॥ १७५ ॥**
**जम्बुद्वीपे व्यासकृतौ भूतिर्भरणमूल्ययोः ।**
**कुड्यभेदनयोर्भित्तिर्भास्वन्तौ सूर्यभास्वरौ ॥ १७६ ॥**

प्रणीते लक्षश्लोकात्मके ग्रन्थभेदे । "हिमाह्वं दक्षिणं वर्षं भरताय ददौ पिता । तस्माच्च भारतं वर्षम्" इत्युक्ते जम्बुद्वीपान्तर्गते वर्षभेदे भरतनृपस्य वंश्ये अग्नौ च "**भारतं**" । न० । भरतान् भरतवंश्यानधिकृत्य कृतो ग्रन्थः।अण्प्रत्ययः । भरतेन चिह्नितं तस्येदं वा।अण्प्रत्ययः । भरतस्य गोत्रापत्यम्।अण्प्रत्ययः । तदधीयते पुनरण् च । इह भारतपदं मूलेन ग्रथितं अग्रेऽस्त्येव तथापि भरतपदानुषङ्गेण भारतपदस्य पर्यायास्तथा विवरणं कृतं वर्तते । "भरतो नाट्यशास्त्रे मुनौ नटे। रामानुजे च दौष्मन्तौ" । "भारतं ग्रन्थभेदे स्याद्वर्षभेदे" इति मेदिनी ॥ जिने सर्वज्ञे । पूज्ये पूजनीये । तथा ऐश्वर्यादियुक्ते । पु० । दुर्गायाम् । स्त्री० । **भगवान्** । पु० । भगम् ऐश्वर्यादि अस्त्यस्य । मतुप्प्रत्ययः । मस्य वः।"भगवान्ना जिने गौर्यां स्त्रियां पूज्ये तु वाच्यकम्" इति मेदिनी ॥ आढ्यः भोगयुक्तः । नागः सर्पः तयोः । तथा पातालगङ्गायां नागपुर्यां च । स्त्री०। **भोगवान्** । पु० । भोगः सर्पशरीरं भुञ्जास्त्यस्याम् । मतुप्प्रत्ययः । मस्य वः । "अथ भोगवती नागपुरीनद्योरहौ पुमान्" इति मेदिनी ॥ १७४ ॥ सेवा आसेवनक्रिया, आराधना वा। विभागः प्रसिद्ध, भागो वा तयोः । तथा तदेकाग्रचित्तवृत्तिभेदे गौण्यां वृत्तौ उपचारे अवयवे भङ्ग्यां श्रद्धायां रचनायां च । **भक्तिः** । स्त्री० । भज—भागे, सेवायां च । क्तिन्प्रत्ययः । "भक्तिर्विभागे सेवायां स्त्रियाम्" इति मेदिनी॥ युष्मदर्थे युष्मच्छब्दस्य अर्थे । सर्वनामता चास्य । भवत्याः पुत्रः भवत्पुत्रः । सदर्थे स्वार्थे, वा सदर्थः विद्यमानार्थः तयो- । **भवत्** । त्रि० । भा—दीप्तौ । डवतुप्रत्ययः । भू—सत्तायाम् । शतृ च । "भवद्युष्मत्सतोस्त्रिपु" इति मेदिनी ॥ पक्षिण्यां विहङ्गयोषिति । वाचि सरस्वत्याम् । वृत्तौ अलङ्कारोक्ते वृत्तिभेदे । "भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः" इति साहित्यम् ॥ १७५ ॥ पुनः जम्बूद्वीपे जम्बुवृक्षचिह्निते द्वीपे । व्यासकृतौ वेदव्यासरचनायां भारते च । **भारतम्** । न० । **भारती** । स्त्री० । भृ—धारणे, भरणे वा । अतच्प्रत्ययः । स्वार्थे प्रज्ञाद्यण् । "भारती । वचने च सरस्वत्यां पक्षिःवृत्तिप्रभेदयोः" इति मेदिनी ॥ भरणं पोषणं, धारणं वा । मूल्यं वेतनं तयोः । तथा भवने अणिमाद्यष्टविधैश्वर्ये शिवाङ्गभस्मनि भूतृणे सम्पत्तौ जात्यां वृद्धिनामौषधे च **भूतिः** । स्त्री० । भू—सत्तायाम् । क्तिन्प्रत्ययः । "भूतिर्भस्मनि सम्पत्तिहस्तिशृङ्गारयोः स्त्रियाम्" इति मेदिनी । कुड्यं गृहादेः कुड्यम् । भेदनं विदारणम् । तयोः । तथा पल्ल्यां च । **भित्तिः** । स्त्री० । भिद—द्विधाकरणे । क्तिन्प्रत्ययः । "भित्तिः कुड्यप्रदेशयोः" इति मेदिनी॥ सूर्यः अर्कः । भास्वरः दीप्तियुक्तः, अर्कवृक्षो वा तयोः । तथा वीरे च **भास्वान्** । पु० । भाः अस्त्यर्थे मतुप्-

पृथिवीजननीगावो ब्रह्माण्याद्याश्च मातरः ।
मूर्धाभिषिक्तोऽमात्येऽपि मुक्तौ निर्वृतमोचितौ ॥ १७७ ॥
मूर्तं स्यात्त्रिषु मूर्च्छाले कठिने मूर्तिमत्यपि ।
मतिरिच्छाऽप्यथ यतिः पाठच्छेदे मुनौ पुमान् ॥ १७८ ॥
न्याययोजनयोर्युक्तिः पाश्यब्धी यादसाम्पती ।
रेवती हलिपत्न्यां भे स्मरपत्न्यां रतेः रतिः ॥ १७९ ॥

प्रत्ययः । मस्य वः । "भास्वान्भास्वरसूर्ययोः" इति मेदिनी ॥ १७६ ॥ पृथिवी भूमिः । जननी अम्बा । गौः वृषः । तेषु । ब्रह्माणी ब्राह्मी । आदिपदात् माहेश्वरी चण्डी वाराही वैष्णवी कौमारी । चामुण्डा चर्चिकाश्चात्र सङ्गृह्यन्ते । तथोक्तम् । "ब्राह्मी माहेश्वरी चण्डी वाराही वैष्णवी तथा । कौमारी चैव चामुण्डा चर्चिकेत्यष्टमातरः" इति । तत्र शिवसहचरीभेदे तथा विभीतौ लक्ष्म्यां रेवत्याम् आखुकर्ण्याम् इन्द्रवारुण्यां जटामांस्यां च **माता** । त्रि० । मा–माने । तृच्प्रत्ययः । "माता गौर्यादिजननी गोब्रह्माण्यादिभूमिषु" इति मेदिनी ॥ अमात्ये मन्त्रिणि । अपिशब्दात् भूपाले क्षत्रिये च मूर्धाभिषिक्तः । पु० । मूर्ध्नि अभिषिक्तो यस्य । "मूर्धाभिषिक्तो भूपाले मन्त्रिणि क्षत्रियेऽपि च" इति मेदिनी ॥ निर्वृतः प्राप्तमोक्षः । मोचितः त्यक्तः तयोः । तथा आनन्दिते मौक्तिके च । स्त्री० । **मुक्तः** । त्रि० । मुच–त्यागे । क्तप्रत्ययः । "मुक्तः प्राप्तमोक्षे च मोचिते । त्रिषु स्त्री मौक्तिके" इति मेदिनी ॥ १७७ ॥ मूर्च्छाले मूर्च्छान्विते मूर्च्छाविशिष्टे वा । कठिने कर्कशे । मूर्तिमति देहे,आकारयुक्ते वा । अपिशब्दात् न्यायोक्तेषु क्षितिजलपावकपवनमनःसु च **मूर्तम्** । त्रि० । मूर्च्छ–मोहे । क्तप्रत्ययः । दीर्घः । "मूर्तं स्यात्त्रिषु मूर्च्छाले कठिने मूर्तिमत्यपि" इति मेदिनी ॥ इच्छा अभिलाषा । तत्र । अपिशब्दात् ज्ञाने स्मृतौ च **मतिः** । स्त्री० । मन–बोधे । भावे क्तिन्प्रत्ययः । क्तिच । "मतिः स्त्रीच्छाधियोः स्मृतौ" इति मेदिनी ॥ पाठच्छेदे उच्चारणकालविच्छेदे, छन्दोग्रन्थविख्याते जिह्वाया विश्रामस्थाने वा । मुनौ परिव्राजके, संन्यासिनि, बौद्धभिक्षौ वा । **यतिः** । पु० । यतते मोक्षाय । यत–यत्ने । इन्प्रत्ययः । यम्यते जिह्वा यत्र । यम–उपरतौ । क्तिन्प्रत्ययः । यत्–परिमाणे । यच्छब्दात् डतिप्रत्ययः । "यतिः स्त्रीपाठविच्छेदे निकारयतिनोः पुमान्" इति मेदिनी ॥ १७८ ॥ न्यायः नयोपायः, उचितो वा । योजनं संयोगः तयोः । तथा व्यवहारे अनुमाने तत्साधकलिङ्गज्ञानादौ नाटकाङ्गविशेषे च **युक्तिः** । स्त्री० । युज–युतौ । क्तिन्प्रत्ययः । "युक्तिः स्त्री न्याययोगयोः" इति मेदिनी ॥ पाशी पश्चिमदिशाधिपतिः वरुणः । अब्धिः समुद्रः तयोश्च । **यादसाम्पतिः** । पु० । षष्ठीतत्पुरुषः । अलुक्समासः । "यादसाम्पतिरम्भोधौ पश्चिमाशापतौ पुमान्" इति मेदिनी ॥ हलिपत्न्यां बलदेवपत्न्यां रेवतराजकन्यायां वा । भे अश्विन्यावधितः सप्तविंशतिसङ्ख्याते नक्षत्रे । तथा तत्सङ्ख्यायां मातृकाभेदे स्त्रीगव्यां नदीभेदे दुर्गायां च **रेवती** । स्त्री० । रेवतस्यापत्यम् । अण्प्रत्ययः । पृषोदरादित्वात् साधुः ।

**रिक्तं वनेऽपि रीतिस्तु लोहकिट्टारकूटयोः।**
**रोहितमृजुशक्रास्त्रे रक्ते ना मृगमीनयोः॥ १८०॥**
**शैलभेदे सुवर्णालौ शङ्करेऽपि च रैवतः।**
**स्वर्णाद्यक्तेऽपि रसितं कस्तूरीपृक्कयोर्लता॥ १८१॥**
**वर्तुलाधीतयोर्वृत्तं वार्तं कुशलनीरुजोः।**
**वासेऽपि वसतिर्वृक्षमात्रेऽपि च वनस्पतिः॥ १८२॥**

रेव—गतौ। अतच्प्रत्ययः। गौरादित्वात् ङीप्। "रेवती हलिपत्न्यां स्यात्ताराभिन्मातृभेदयोः" इति मेदिनी॥ स्मरपत्न्यां कामपत्न्याम्। रते रमणे। तथा रागे गुह्ये च **रतिः**। स्त्री०। रम—क्रीडायाम्। क्तिन्प्रत्ययः। "रतिः स्त्री स्मरदारेषु रागे सुरतगुह्ययोः" इति मेदिनी॥ ॥१७९॥ वने दावे। अपिशब्दात् शून्ये निरर्थके च **रिक्तम्**। न०। त्रि०। रिच—सम्पर्के, वियोगे च। क्तप्रत्ययः। "रिक्तं शून्ये वने" इति मेदिनी॥ लोहकिट्टं लौहमलम्। आरकूटः पित्तलं तयोः। तुकारात् प्रस्तावे क्षरणे सीमायां गतौ स्वभावे अलङ्कारोक्तौ गौड्यादिरचनाभेदे च **रीतिः**। स्त्री०। री—गतौ, क्षरणे च। क्तिन्प्रत्ययः। "रीतिः स्त्रियां स्यन्दप्रचारयोः। पित्तले लोहकिट्टे च" इति मेदिनी॥ ऋजुशक्रास्त्रे सरलेन्द्रचापे। रक्ते रुधिरे। मृगः स्वनामाख्यातः मृगविशेषः। मीनः स्वनामाख्यातो मत्स्यभेदः तयोः। तथा रक्तवर्णे स्वनामाख्याते वृक्षे कुङ्कुमे च **रोहितम्**। न०। रुह—उद्भवे। इतच्प्रत्ययः। "रोहितं रक्ते ऋजुशक्रशरासने। पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे" इति मेदिनी॥ १८०॥ शैलभेदे द्वारिकासमीपस्थे पर्वतभेदे। सुवर्णालौ स्वर्णालुवृक्षे। शङ्करे शिवे। अपिशब्दात् दैत्यभेदे चतुर्दशसु मनुषु मनुभेदे च **रैवतः**। पु०। रेवत्या नद्या अदूरो देशः। अण्प्रत्ययः। रेवत्यां भवः। ण्यप्रत्ययश्च। "रैवतस्तु सुवर्णालौ शैलभेदेऽपि शङ्करे" इति मेदिनी॥ स्वर्णाद्यक्ते सुवर्णादिलेपने। अपिशब्दात् मेघादिशब्दे विहगादिशब्दे शब्दध्वनि आस्वादिते च। त्रि०। **रसितम्**। न०। रस—आस्वादे। क्तप्रत्ययः कर्तरि, कर्मणि वा। "रसितः पुनः। रुतस्तनितयोः क्लीबं स्वर्णादिखचिते त्रिषु" इति मेदिनी॥ कस्तूरी मृगनाभः। पृक्का शाकभेदः तयोः। तथा शाखारहिते गुडूच्यादौ प्रियङ्गौ ज्योतिष्मत्यां वल्ल्यां च **लता**। स्त्री०। लत—आघाते। अच्प्रत्ययः। "लता प्रियङ्गुशाखयोः। पृक्काज्योतिष्मतीवल्लीलताकस्तूरिकासु च" इति मेदिनी॥ १८१॥ वर्तुलं गोलाकारः पदार्थः। अधीतम् अध्ययनं, पठितं वा तयोः। तथा "गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः। प्रवर्तनं हितानां च तत्सर्वं वृत्तमुच्यते" इत्युक्ते चारित्रे। पद्यभेदे वृत्तौ अतीते दृढे मृते जाते च। त्रि०। कूर्मे च। पु०। **वृत्तम्**। न०। वृत—वर्तने, संभक्तौ वा। भावे क्तप्रत्ययः। कर्तरि च। "वृत्तोऽधीतेऽप्यतीतेऽपि वर्तुलेऽपि वृते मृते। दृढेऽन्यलिङ्गवान्क्लीबं छन्दश्चारित्रवृत्तिषु" इति मेदिनी॥ कुशलम् आरोग्यम्। नीरुज् निरामयं तयोः। तथा वृत्तिशीले। त्रि०। दुर्गायां

**वर्तने विवृतौ वृत्तिर्वर्तिर्दीपदशास्वपि ।**
**लाभसम्बन्धयोर्व्याप्तिर्विश्वस्ता विधवापि च ॥ १८३ ॥**
**छेदे विनाशे विच्छित्तिर्विगतौ वीतनिष्प्रभौ ।**
**असारेऽश्वेभयोर्वीतं वीतमङ्कुशकर्मणि ॥ १८४ ॥**
**अभ्युद्गते विकसिते चेष्टिते च विजृम्भितम् ।**
**विकृतौ रोगिवीभत्सौ वित्तं ख्याते धनेऽपि च ॥ १८५ ॥**

कृषिकर्मणि वृत्तौ जनश्रुतौ वृत्तान्ते कालकर्तृके भूतनाशने च । स्त्री० । "अस्मिन् महामोहमये कटाहे सूर्याग्निना रात्रिदिनेन्धनेन । मासर्तुदर्वीपरिघट्टनेन भूतानि कालः पचतीति वार्ता" इति **वार्तम्** । न० । वृत्तिशब्दात् अण्प्रत्ययः । " वार्ता तु वर्तने वार्तिङ्गणे कृष्णाद्युदन्तयोः । निःसारारोग्ययोः क्लीबं वृत्तिमन्नीरुजोस्त्रिषु' इति मेदिनी ॥ वासे गृहे । अपिशब्दात् यामिन्यां निकेतने स्थाने च । **वसतिः** । स्त्री० । वस-निवासे । अतिप्रत्ययः । वा ङीप् । "वसतिः स्यात्स्त्रियां वासे यामिन्यां च निकेतने" इति मेदिनी ॥ वृक्षमात्रे द्रुममात्रके पुष्पं विना जायमानफले अश्वत्थादौ वृक्षे । अपिशब्दात् वनज्येष्ठवृक्षे च । **वनस्पतिः** । पु० । वनस्य पतिः । गतिसमासत्वात् सुट् । "वनस्पतिर्ना द्रुमात्रे विना पुष्पं फलिद्रुमे" इति मेदिनी॥१८२॥ वर्तने वृत्तौ । विवृत्तौ विवरणे । तथा स्थितौ जीविकायां कौशिकीसात्वतीभारत्यारभट्याख्ये रचनाभेदे वेदान्तोक्ते अन्तःकरणादेः परिणामभेदे च **वृत्तिः** । स्त्री० । वृत-वर्तने । क्तिन्प्रत्ययः । "वृत्तिर्विवरणाजीवकौशिकादिप्रवर्तने" इति मेदिनी ॥ दीपः प्रदीपः । दशा दीपदशा । अथवा दीपदशा प्रदीपदशा तासु । अपिशब्दात् नयनाञ्जने लेखे गात्रानुलेपने भेषजनिर्माणवर्तौ च **वर्तिः** । स्त्री० । वृत-दीप्तौ । इन्प्रत्ययः । वा ङीप् । "वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः । गात्रानुलेपनीदीपदशादीपेषु योषिति" इति मेदिनी ॥ लाभः प्रसिद्धः सम्बन्धः समृद्धिः तयोः । तथा ईश्वरस्य ऐश्वर्यभेदे । न्यायमते तदभाववति अविद्यमानरूपे पदार्थे च **व्याप्तिः** । स्त्री० । विपूर्व-आप-प्रापणे । क्तिन्प्रत्ययः । "व्याप्तिर्व्यापनलम्भयोः" इति मेदिनी । विधवा मृतपतिका तस्याम् । अपिशब्दात् जातविश्वासायां स्त्रियां च **विश्वस्ता** । स्त्री० । विपूर्वश्वस-जीवने । क्तप्रत्ययः । "विश्वस्ता विधवा स्त्रियाम्" इति मेदिनी ॥ ॥ १८३ ॥ छेदे छेदने । विनासे ध्वंसे, अदर्शने वा । तथा अङ्गरागे हारभेदे विच्छेदे स्त्रीण चेष्टाभेदे च **विच्छित्तिः** । स्त्री० । विपूर्वछिद-द्वधीकरणे । क्तिन्प्रत्ययः । "विच्छित्तिरङ्गरागे विच्छेदे हारभेदेके च स्त्री" इति मेदिनी ॥ वीतो गतः, शान्तो वा । निष्प्रभा दीप्तिरहिता । तयोः । तथा प्रमादरहिते विशेषगते अपगते च **विगतः** । पु० । विपूर्वगम-गतौ । क्तप्रत्ययः । असारे साररहिते, युद्धाय असमर्थे वा । अश्वः हयः । इभः हस्ती । तयोः ॥ अङ्कुशकर्मणि अङ्कुशक्रियायाम् । तथा न्यायायुक्ते अनुमानभेदे शान्ते गते च । त्रि०। **वीतम्** । न० । विपूर्वइण-गतौ । क्तप्रत्ययः।"वीतमसारगजे स्यादङ्कुशकर्मण्यसारतुरगे च" इति मेदिनी॥ ॥ १८४ ॥ अभ्युद्गते प्रकाशे । विकसिते विकासयुक्ते । चेष्टिते कायिके व्यापारे च । "आ-

**दृढेऽपि व्यायतं शुक्तिर्मुक्तास्फोटाश्वलक्ष्मणोः।**
**अस्त्रभेदेऽपि शुक्तिः स्याच्छान्तिः स्यान्मङ्गले शमे ॥ १८६ ॥**
**वेतसेऽपि च शीतो ना शुक्तं पूताम्लनिष्ठुरम्।**
**शितिर्भूर्जे सिते कृष्णे श्रीमन्तौ तिलकेश्वरौ ॥ १८७ ॥**

त्मजन्यं भवेदिच्छा इच्छाजन्या भवेत्कृतिः। कृतिजन्या भवेच्चेष्टा" इत्युक्तम्। **विजृम्भितम्**। त्रि०। विपूर्वजृभि—जृम्भे च। क्तप्रत्ययः। "विजृम्भितं तु चेष्टायां क्लीबं त्रिषु विकस्वरे" इति मेदिनी॥ रोगी रोगयुक्तः। बीभत्सः पापी, जुगुप्सितो वा। तयोः। तथा मलिनीकृते च **विकृतम्**। त्रि०। विपूर्वकृ—करणे क्तप्रत्ययः। "विकृतं त्रिषु बीभत्से रोगिते संस्कृतेऽपि च" इति मेदिनी॥ ख्याते प्रसिद्धे। धने वसुनि। अपिशब्दात् विचारिते ज्ञाते लब्धे च **वित्तम्**। त्रि०। वित्यते त्यज्यते। वित्त—त्यागे। घञ्प्रत्ययः। विद्—लाभे ज्ञाने च। क्तप्रत्ययः। "वित्तं क्लीबं धने वाच्यलिङ्गं ख्याते विचारिते" इति मेदिनी॥१८५॥ दृढे प्रगाढे, बलवति वा। अपिशब्दात् दीर्घे आयते दूरे अतिशये च **व्यायतम्**। त्रि०। विपूर्वयम—उपरतौ। क्तप्रत्ययः। "व्यायतं व्यावृते दीर्घे दृढे चातिशयेऽन्यवत्" इति विश्वः। मुक्तास्फोटा मुक्तायै स्फोटः शुक्तिरेव। अश्वलक्ष्म अश्वावर्तकः तयोः। तथा जलजन्तुभेदे कपालखण्डे शङ्खनखे नख्याम अर्शोरोगे चक्षुरोगविशेषे च। **शुक्तिः**। स्त्री०। शुच—शौचे, क्लेदे च। क्तिन्प्रत्ययः। "शुक्तिः कपालशकले शङ्खे शङ्खनखेऽपि च। नख्यश्वावर्तदुर्नाम मुक्तास्फोटेषु च स्त्रियाम्" इति मेदिनी॥ अस्त्रभेदे आयुधविशेषे। अपिशब्दात् सामर्थ्ये स्त्रीदेवतायां न्यायायुक्ते कारणनिष्ठे कार्योत्पादनयोग्ये धर्मभेदे शब्दनिष्ठे अर्थबोधकतारूपे वृत्तिभेदे च **शक्तिः** स्यात्। स्त्री०। शक—सामर्थ्ये। क्तिन्प्रत्ययः। "शक्तिरस्त्रान्तरे गौर्यामुत्साहादौ बले स्त्रियाम्" इति मेदिनी॥ मङ्गले प्रशस्ते, अभीष्टार्थसिद्धौ वा। शमे अन्तरिन्द्रियदमने। तथा कामक्रोधादिजये उपद्रवनिवारणे निवारणे च **शान्तिः** स्यात्। स्त्री०। शम—शान्तौ। क्तिन्प्रत्ययः। "शान्तोऽभियुक्तरसयोः पुंसि त्रिषु शमान्विते। अव्ययं वारणे शान्तम्" इति मेदिनी॥ १८६॥ वेतसे बहुवारवृक्षे, असनवृक्षे वा। अपिशब्दात् शीतले जले हिमे च। न०॥ शीतस्पर्शवति। त्रि०। **शीतः**। पु०। शी—गतौ। क्तप्रत्ययः। "शीतं हिमगुणे क्लीबं शीतलालसयोस्त्रिषु। वानीरे बहुवारे ना" इति मेदिनी॥ पूतम् अपनीतवुषम्। आम्लं तक्रम्, आम्लरसो वा। निष्ठुरं कर्कशम्। तेषु। तथा मांसे काञ्जिके द्रवद्रव्यभेदे श्लिष्टे दुर्जने च **शुक्तम्**। न०। शुच—शोके, शौचे च। क्तप्रत्ययः। "शुक्तं पूताम्लनिष्ठुरे" इति मेदिनी॥ भूर्जे भूर्जपत्रवृक्षे। सिते शुभ्रवर्णे। कृष्णे कालवर्णे च **शितिः**। पु०। शि—छेदने। क्तिच् प्रत्ययः। "निशिते च शितिर्भूर्जे ना सितासितयोस्त्रिषु" इति मेदिनी॥ तिलकः तिलकवृक्षः। ईश्वरः शिवः। तयोः। तथा शोभायुक्ते। त्रि०। विष्णौ अश्वत्थवृक्षे कुङ्कुरे राधिकायां च। स्त्री०। **श्रीमान्**। पु०। श्रीरस्त्यस्य। मतुप्प्रत्ययः। "श्रीमांस्तिलकवृक्षे ना मनोज्ञे धनिके त्रिषु" इति मेदिनी॥ १८७॥

ब्रह्मशक्रौ शतधृती वार्तायां श्रवणे श्रुतिः ।
दुर्बले निशिते स्यातां शितशातावथो वचः ॥ १८८ ॥
सरस्वती सरिद्गौश्च सूतो वन्दिनि पारदे ।
स्मृतिः स्याद्धर्मशास्त्रेऽपि प्रवाहेऽपि च सन्ततिः ॥ १८९ ॥
रणे सभायां समितिः स्तिमितौ क्लिन्ननिश्चलौ ।
स्थपतिः कञ्चुकी कारुभेदो गीर्पतियागकृत् ॥ १९० ॥

ब्रह्मा प्रजापतिः । शक्रः इन्द्रः । तयोः । तथा स्वर्गे च **शतधृतिः** । पु० । शतं धृतयोऽस्य । "**शतधृती**" अप्यत्र। "भवेच्छतधृतिः पुंसि शक्रे च परमेष्ठिनि" इति मेदिनी॥वार्तायां वृत्तान्ते। श्रवणे कर्णे । तथा श्रवणेन्द्रियजन्ये ज्ञाने वेदे अङ्कशास्त्रोक्ते त्रिभुजक्षेत्रादौ भुजकोटयोः संयुज्यमानरेखाभेदे च **श्रुतिः** । स्त्री० । श्रु—श्रवणे । क्तिन्प्रत्ययः । "श्रुतिः श्रोत्रे च तत्कर्मण्याम्नायवार्तयोः स्त्रियाम्" इति मेदिनी ॥ दुर्बले बलहीने । निशिते तीक्ष्णीकरणे, शाणिते वा । **शितशातौ** स्याताम् । पु० । शितश्च शातश्चेति द्वौ शब्दौ । "शातं शितं च दुर्बले निशिते च" इति मेदिनी ॥ वचः वचनम् । तत्र ॥ १८८ ॥ सरित् नदी । गौः प्रसिद्धः । तत्र च । तथा सरोवरे सागरे नदीभेदे ज्योतिष्मत्यां ब्राह्म्यां शक्तौ देवीभेदे च **सरस्वती** । स्त्री० । सरांसि जलानि सन्त्यस्य । मतुप्प्रत्ययः । मस्य वः । "सरस्वांस्तु नदे चाब्धौ नान्यवद्रसिके स्त्रियाम् । वाणी स्त्रीरत्नवाग्देवीगोनदीषु नदीभिदि" इति मेदिनी । बन्दिनि राजादेः स्तुतिपाठके । पारदे रसराजे । तद्वत् सूर्ये क्षत्रियजाते ब्राह्मणीगर्भजे वर्णशङ्करभेदे त्वष्टरि सारथौ मागधे लोमहर्षणाख्ये पुराणवक्तरि । पु० न० । प्रसूते प्रेरिते च। त्रि०। **सूतः**। पु०। सू—प्रसवे, प्रेरणे,ऐश्वर्ये वा । क्तप्रत्ययः।"सूतस्तु सारथौ तक्षिण.क्षत्रियाद्ब्राह्मणीसुते । बन्दिपारदयोः पुंसि प्रसूते प्रेरिते त्रिषु" इति मेदिनी ॥ धर्मशास्त्रे धर्मशासनशास्त्रे, वेदार्थानुभवजन्ये वेदार्थानुवादके, मुनिप्रणीते वाक्यरूपे शास्त्रे वा । अपिशब्दात् अनुभूतवस्तुनि उद्बोधकसहकारेण संस्काराधीने ज्ञानभेदे । "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्" इति मनुः ॥ **स्मृतिः** । स्यात् । स्त्री० । स्मर्यते धर्मोऽनेन । स्मृ—स्मरणे । क्तिन्प्रत्ययः । करणे वा । " ना त्रिपूते स्मृतिर्धर्मशास्त्रस्मरणयोः स्त्रियाम् " इति मेदिनी ॥ प्रवाहे अविच्छिन्नजलधारायाम् । अपिशब्दात् गोत्रे पुत्रे कन्यायां विस्तारे पङ्क्तौ च **सन्ततिः** । स्त्री० । सन्त्यतेऽनेनेति । संपूर्व्वतन—विस्तारे । क्तिप्रत्ययः । "सन्ततिः स्यात्पङ्क्तौ गोत्रे पारम्पर्ये च पुत्रयोः" इति मेदिनी ॥ १८९ ॥ रणे युद्धे । सभायां बहूनां समावेशनस्थाने । तथा सङ्गमे सम्पराये च **समितिः** । स्त्री० । सम्पूर्वइण—गतौ । क्तिन्प्रत्ययः । "समितिः सम्पराये स्यात्समायां सङ्गमेऽपि च" इति मेदिनी ॥ क्लिन्नम् आर्द्रः । निश्चलः चञ्चलरहितः । तयोः । तथा आर्द्रतायाम् अचाञ्चल्येऽपि । त्रि० । **स्तिमितः** । पु० । स्तिम—आर्द्रीकरणे, स्नेहने च । भावे क्तप्रत्ययः । " स्तिमितो निश्चलार्द्रयोः " इति

**सम्बन्धेऽपि च संवित्तिर्मर्यादायामपि स्थितिः ।**
**सीता लाङ्गलरेखा स्याद्व्योमगङ्गा च जानकी ॥ १९१ ॥**
**सूनृतं कुशले सत्ये सुदोहा गौश्च सुव्रता ।**
**शर्कराऽपि सिताऽथोर्ध्वे सत्प्रतिज्ञेऽपि च स्थितः ॥ १९२ ॥**
**सती कात्यायनीसाध्व्योः सङ्घातो नरके चये ।**
**हरीतकी हैमवती गौरी शुक्लवचावपि ॥ १९३ ॥**

मेदिनी । "स्तिमितोऽचञ्चलक्लिन्ने" इति विश्वः । कञ्चुकी राज्ञामन्तःपुराधिकारी, द्वारपालो वा । कारुभेदः शिल्पिभेदः । गीर्पतियागकृत् बृहस्पतिः स्वनामकयागकर्ता । तत्र च । तथा कुबेरे अधीशे सत्तमे । त्रि० । **स्थपतिः** । पु० । स्था—गतिनिरोधे । क्तप्रत्ययः । "स्थपतिः कञ्चुकिन्यपि । जीवेष्टियाजके शिल्पिभेदे ना सत्तमे त्रिषु" इति मेदिनी ॥ १९० ॥ सम्बन्धे जनस्याविवादे । अपिशब्दात् ज्ञाने प्रतिपत्तौ बुद्धौ अङ्गीकारे च **संवित्तिः** । स्त्री० । संपूर्वविद्—ज्ञाने । क्तिन्प्रत्ययः । "संवित्तिः प्रतिपत्तौ स्यादविवादे जनस्य च" इति मेदिनी ॥ मर्यादायां सीमायाम् । अपिशब्दात् न्यायपथावस्थाने स्थाने च **स्थितिः** । स्त्री०। स्था—गतिनिरोधे । क्तिन्प्रत्ययः। "स्थितिः स्त्रियामवस्थाने मर्यादायां च सीमनि" इति मेदिनी॥ लाङ्गलरेखा लाङ्गलपद्धती । व्योमगङ्गा भद्राश्ववर्षस्थितगङ्गा । जानकी जनकराजदुहिता । तासु च **सीता** स्यात् । स्त्री० । सि—बन्धने । तप्रत्ययः । पृषोदरादित्वात् दीर्घः । "सीता लाङ्गलपद्धती । वैदेहीस्वर्गगङ्गासु" इति मेदिनी ॥१९१ ॥ कुशले मङ्गले । सत्ये सत्यवचने । तथा प्रियवाक्ये च **सूनृतम्** । न०।सुनृत्यति अनेन । सुपूर्वनृत—नर्तने । घञर्थे कप्रत्ययः । "सूनृतं मङ्गलेऽपि स्यात्प्रियसत्यवचस्यपि" इति मेदिनी॥ सुदोहा गौः सुशीला गौः।तस्याम् । चकारात् सुन्दरव्रतयुक्ते च । त्रि० । **सुव्रता** । स्त्री० । सुष्ठु व्रतं नियमो यस्याः । "सुव्रता सुखसन्दोहा शोभनव्रतयोरपि" इति मेदिनी ॥ शर्करा खण्डविकारः । तत्र । अपिशब्दात् धवलस्त्रियां **सिता** । स्त्री० । सो—नाशे । क्तप्रत्ययः । "सितमवसिते च बद्धे धवले त्रिषु शर्करायां स्त्री" इति मेदिनी । ऊर्ध्वे ऊर्ध्वस्थतया दण्डायमाने । सत्प्रतिज्ञे शोभनस्वीकारे । अपिशब्दात् स्थिते निश्चले स्थितिशालिनि च **स्थितः** । त्रि० । स्था—गतिनिरोधे । क्तप्रत्ययः । "स्थितं प्रतिज्ञातवति चोर्ध्वनिश्चलयोस्त्रिषु" इति मेदिनी ॥ १९२ ॥ कात्यायनी दक्षकन्या । साध्वी पतिव्रता तयोः । "सती सतीयोगविसृष्टदेहा" इति कुमारः । ब्रह्मणि । न० । आदरे । अव्ययम् । "सदसती आदरानादरयोः" इति पाणिनिः । **सती** । स्त्री० । "सन्साधौ धीरशस्तयोः । मान्ये सत्ये विद्यमाने त्रिषु साध्व्युमयोः स्त्रियाम्" इति मेदिनी ॥ नरके नरकभेदे । चये समूहे । तथा सम्यग्घनने । दृढसंयोगे कफे च **सङ्घातः** । पु० । संपूर्वहन—हिंसायाम् । घञ्प्रत्ययः "सङ्घातः स्यात्पुंसि घाते संहतौ नरकान्तरे" इति मेदिनी । हरीतकी स्वनामाख्यातवृक्षः । तत्फलं च । तत्र । गौरी पार्वती । शुक्लवचा श्वेत, वचा । तयोः। अपिशब्दात्

**स्त्री हरिर्दिशि वर्णे ना दूर्वाऽपि हरिता मता ।**
**इति तान्ताः ॥**
**अतिथिः कुशपुत्रेऽपि हरीतक्यपि चाव्यथा ॥ १९४ ॥**
**अपेक्षालम्बनं चास्था स्यादर्थो विषयेऽपि च ।**
**भटे पुंस्यप्रतिरथं यात्रामङ्गलसाम्नि च ॥ १९५ ॥**
**उन्माथः कूटयन्त्रेऽपि कुथः कम्बलबर्हिषोः ।**
**काशे क्षुते च क्षवथुर्ग्रन्थो द्वात्रिंशदक्षरे ॥ १९६ ॥**

भारतवर्षभेदे हिमालयसम्बन्धिनि । त्रि० । त्रिषभेदे स्वर्णक्षीर्यां च **हैमवती** । स्त्री० । हिमवतोऽदूरभवो देशः, तस्येदं वा । अण्प्रत्ययः । "हैमवत्यभयास्वर्णक्षीर्योः श्वेतवचोमयोः" इति मेदिनी ॥ १९३ ॥ दिशि दिशायाम् । वर्णे नीलपीतमिश्रितवर्णे, पलाशवर्णे वा । त्रि० । तथा सूर्याश्वे मुद्गे सिंहे सूर्ये विष्णौ च **हरित** । पु० । हृ-हरणे । इतिप्रत्ययः । "हरिर्दिशि स्त्रियां पुंसि हयवर्णविशेषयोः" इति मेदिनी ॥ दूर्वा स्वनामाख्यातः घासभेदः । तत्र । अपिशब्दात् जयन्त्यां हरिद्रायां कपिलद्राक्षायां नीलदूर्वायां च **हरिता** । मता ज्ञातेत्यर्थः स्त्री० । हृ-हरणे इतच्प्रत्ययः । "हरिता स्त्री च दूर्वायां हरिद्वर्णयुतेऽन्यवत्" इति मेदिनी ॥ इति तकारान्ताः समाप्ताः ॥ अथ थान्तानाह ॥ कुशपुत्रे कुशराजसूनौ । अपिशब्दात् अध्वयोगेन आगन्तुके गृहागते विषये च तस्य इन्द्रियेषु संसर्गमात्रकाले एव चेतसि स्थितिर्नोत्तरकालमिति गतिरनुमीयते । **अतिथिः** । पु० । अतति गच्छति न तिष्ठति । अत-गमने । इथिन् प्रत्ययः । "अतिथिः कुशपुत्रे स्यात्पुमानागन्तुके त्रिषु" इति मेदिनी ॥ हरीतकी स्वनामाख्यातवृक्षः तत्फलम् । तत्र । स्त्री० । अपिशब्दात् शुण्ठ्याम् । स्त्री० । सर्पे । व्यथाशून्ये । त्रि० । **अव्यथा** । स्त्री० पु० । न व्यथते पद्भ्यां न सञ्चलति । व्यथ-भयचलनयोः । अच्प्रत्ययः । नास्ति व्यथा यस्माद्वा । "अव्यथो निर्व्यथे सर्पे चारटीपथ्ययोः स्त्रियाम्" इति मेदिनी ॥ १९४ ॥ अपेक्षा आकाङ्क्षा कार्यकारणयोरवश्यसम्बन्धः । तस्मिन् । आलम्बनम् आश्रयः । तस्मिन् । चकारात् श्रद्धायां स्थितौ प्रयत्ने प्रतिष्ठायां स्थाने च **आस्था** । स्त्री० । आपूर्वस्था-गतिनिरोधे । अङ्प्रत्ययः । "आस्था त्वालम्बनस्थानयत्नापेक्षासु योषिति" इति मेदिनी ॥ विषये इन्द्रियगोचरे शब्दादौ । अपिशब्दात् अभिधेये धने वस्तुनि प्रयोजने निवृत्तौ हेतौ प्रकारे अभिलाषे । उद्देशे च **अर्थः** । पु० । अर्थ-याचने । भावादौ घञ्प्रत्ययः । "अर्थो विषयार्थनयोर्धनकारणवस्तुषु । अभिधेये च शब्दानां निवृत्तौ च प्रयोजने" इति मेदिनी ॥ भटे योधे । पु० । यात्रामङ्गलं युद्धसमये यात्राकृतमङ्गलम् । साम सामावयवभेदः । तत्र च । चकारात् । अतुल्ये विष्णौ । पु० । युद्धार्थयाने च **अप्रतिरथम्** । न० । न प्रतिकूलो रथो यत्र । न प्रतिपक्षो रथो रथान्तरमस्येति षष्ठीबहुव्रीहिर्वा ॥ ॥ १९५ ॥ कूटयन्त्रे आमिषदानेन मृगादिबन्धनार्थं निवेशिते कूटयन्त्रे । अपिशब्दात् विलो-

**धनं च ग्रन्थना चाऽपि तीर्थं तूपाययोगयोः ।**
**कट्यंशघोणयोः प्रोथो वीथिः पङ्क्तौ गृहांशके ॥ १९७ ॥**
**वानप्रस्थो मधूकेऽपि स्यात्तृतीयेऽपि चाश्रमे ।**
**काकोल्यामलकी ब्राह्मी वयःस्था तरुणे त्रिषु ॥ १९८ ॥**

ड्योत्थापने । हिंसने च **उन्माथः** । पु० । उन्मथ्यतेऽनेन । उद्पूर्वमथ—विलोडने । करणे घञ्प्रत्ययः । "उन्माथः कूटयन्त्रे स्यान्मारणे घातके पुमान्" इति मेदिनी ॥ कम्बलः हस्तिपृष्ठस्थश्चित्रकम्बलः । बर्हिर्मयूरः तयोः । तथा कुशतृणे च **कुथः** । पु० । स्त्री० । कुथ—क्लेशे, पूतिगन्धे वा । अच्प्रत्ययः । "कुथः स्त्रीपुंसयोर्वर्णकम्बले पुंसि बर्हिषि" इति मेदिनी ॥ कासे रोगभेदे । क्षुते नासातः वायुनिःसरणजे शब्दे च **क्षवथुः** । पु० । क्षु—क्षुतौ । अथुच्प्रत्ययः। "क्षवथुर्ना क्षुते कासे" इति मेदिनी ॥ द्वात्रिंशदक्षरे अनुष्टुप्छन्दस्के पद्ये । द्वात्रिंशदक्षरीति क्वचित् पाठः । धनं मूल्यम् । तत्र । ग्रन्थना गुम्फनम् । तस्मिन् । अपिशब्दात् शास्त्रे च **ग्रन्थः** । पु० । ग्रन्थ—सन्दर्भे । घञ्प्रत्ययः । "ग्रन्थो ग्रन्थनाधनयोः स्याच्छास्त्रेऽक्षरसङ्ख्ययोः" इति मेदिनी ॥ १९६ ॥ उपायः राज्ञां रिपुनिराकरणहेतुः सामादिः साधनो वा । योगः ध्यानम् । "योगश्चित्तवृत्तिनिरोधः" इति पातञ्जलिः । तयोः । तुग्रहणात् शास्त्रे यज्ञे क्षेत्रे स्त्रीरजसि घट्टादौ नद्यादेरवतरणे विद्यादिगुणयुतपात्रे उपाध्याये मन्त्रिणि योनौ दर्शने ब्राह्मणे आगमे निदाने अग्नौ उपकूपजलाशये दैहिके मानसिके भौमिके त्रैविधे पवित्रस्थाने च **तीर्थम्**। न० । तॄ—तरणे, प्लवने, अभिभवे च । थक्प्रत्ययः । "तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च इति मेदिनी ॥ कट्यंशः कटीभागः । घोणा अश्वनासिका, नासिकामात्रं तयोः । तथा शाटके स्त्रीगर्भे गर्ते भीषणे स्फिचि अश्वमुखे । पु० । पान्थे स्थापिते प्रथिते च । त्रि० । **प्रोथः** । पु० । न० । प्रु—सर्पणे । थन्प्रत्ययः । प्रोथोऽस्त्री हयघोणायां ना कटयामध्वगे त्रिषु" इति मेदिनी॥ पङ्क्तौ श्रेणौ । गृहांशके गृहाङ्गे । तद्वत् वर्त्मनि दृश्यकाव्यनाटकाङ्गभेदे च **वीथिः** । स्त्री० । वीथ—याचने । इन्प्रत्ययः । पृषोदरादित्वात् ङीप् । "**वीथी**"अप्यत्र। "वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तारवर्त्मनोः" इति मेदिनी॥१९७॥मधूके मधूकवृक्षे । तृतीये आश्रमे वानप्रस्थाश्रमे । "गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । पुत्रेषु दारान्निक्षिप्य वनं गच्छेत्सहैव वा" इति । अपिशब्दात् पलाशवृक्षे च **वानप्रस्थः** । पु० । वाने वनसमूहे प्रतिष्ठति । स्था—गतिनिरोधे । कप्रत्ययः । वनप्रस्थ एव स्वार्थे अण्प्रत्ययो वा । "वानप्रस्थो मधूकेऽपि स्यात्तृतीयाश्रमे पुमान्" इति मेदिनी ॥ काकोली स्वनामाख्यातः औषधभेदः । आमलकी धात्री । ब्राह्मी शाकभेदः तत्र च । तरुणे यौवने च। त्रि० । **वयःस्था** । स्त्री० । वयसि यौवने तिष्ठति । स्था—गतिनिरोधे । कप्रत्ययः । "वयःस्था तु स्त्रियां ब्राह्मी

**सूर्यमन्थानयोर्मन्थः साक्तवेऽप्यथ मन्मथः ।**
**कपित्थे कामदेवेऽपि रथः पौरुषदेहयोः ॥ १९९ ॥**
**पुंसि स्त्रियां च षड्ग्रन्थः करञ्जवचयोः क्रमात् ।**
**सिद्धार्थः सर्षपे बुद्धे संस्था स्थितिविनाशयोः ॥ २०० ॥**
**संस्थः समाप्तिक्रतुषु वरूथो निजराष्ट्रकः ।**
**सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम् ॥ २०१ ॥**

**इति थान्ताः ॥**

सूर्यः अर्कः, अर्कवृक्षो वा । मन्थानः मन्थनदण्डः तयोः । साक्तवे सक्तुभिः कृतपेयभेदे । "सक्तुभिः सर्पिषाभ्यक्तैः शीतवारिपरिप्लुतैः । नात्यच्छो नातिसान्द्रश्च मन्थ इत्यभिधीयते" इति । अपिशब्दात् नेत्रमले किरणे आलोडनादौ च **मन्थः** । पु० । मन्थ—विलोडे, क्लेशे वा । करणे घञ्प्रत्ययः । "मन्थः स्यात्पुंसि मन्थाने साक्तवे च दिवाकरे" इति मेदिनी । कपित्थे स्वनामाख्यातवृक्षे । कामदेवे कन्दर्पे । अपिशब्दात् कामचिन्तायां च **मन्मथः** । पु० । मनः मथ्नातीति । मन—गर्वे, धृतौ वा । क्विप्प्रत्ययः । अच्प्रत्ययश्च । षष्ठीतत्पुरुषो वा । "मन्मथः कामचिन्तायां कपित्थे कुसुमायुधे" इति मेदिनी ॥ पौरुषं पुरुषनिर्वृत्तः स्वनामाख्यातयानभेदः, विक्रमो वा । देहं शरीरम् । "आत्मानं रथिनं विद्धि शरीरं रथमेव च" इति गीता । तयोः । तथा वेतसवृक्षे तिनिसवृक्षे पादे च **रथः** । पु० । रम्यतेऽनेन, अत्र वा । रम—क्रीडायाम् । क्थन्प्रत्ययः । रथः पुमानावयवे स्यन्दने वेतसेपि च' इति मेदिनी ॥ १९९ ॥ करञ्जः स्वनामख्यातवृक्षभेदः । वचा औषधविशेषः तयोश्च । **षड्ग्रन्थः** । क्रमात् क्रमेण।पु०। स्त्री० । षट् ग्रन्थाः यस्य । "षड्ग्रन्था तु वचायां स्त्री स्यात्करञ्जान्तरे पुमान्" इति मेदिनी ॥ सर्षपे श्वेतसर्षपे । बुद्धे गौतमबुद्धे । तथा प्रसिद्धे च । त्रि० । "सिद्धार्थं सिद्धसम्बन्धम्" इति प्राञ्चः । वटीवृक्षे च **सिद्धार्थः** । पु० । सिद्धः अर्थो यस्मादिति पञ्चमीबहुव्रीहिः । वा कप् । सिद्धार्थकोऽप्यत्र । " सिद्धार्थस्तु पुमाञ्छाक्यसिंहे च सितसर्षपे " इति मेदिनी ॥ स्थितिः स्थानम् । विनाशः नाशः तयोश्च । **संस्था** । स्त्री० । सम्पूर्वस्था—गतिनिरोधे । अङ्प्रत्ययः ॥ २०० ॥ समाप्तिः निष्ठा । क्रतवो यज्ञभेदाः । तेषु । तथा न्याय्यपथावस्थितौ स्थितौ व्यवस्थायां व्यक्तौ सादृश्ये प्रान्ते च **संस्थः** । पु० । सम्पूर्वस्था—गतिनिरोधे । कप्रत्ययः । "संस्थश्चरेऽवस्थिते स्त्री स्थितौ सादृश्यनाशयोः" इति मेदिनी ॥ निजराष्ट्रकः स्वजनपदः । तत्र । तथा तनुत्राणे वर्मणि रथगुप्तिस्थाने परप्रहाररक्षार्थमावृते स्थाने च **वरूथः** । पु० । वृ—वरणे । ऊथन्प्रत्ययः । "वरूथो रथगुप्तौ स्याद्वरूथं चर्मवेश्मनोः" इति मेदिनी ॥ भक्तपुलाके अन्नगुलिकायाम् । पु० । मधूच्छिष्टे मधुनः उच्छिष्टे अवशिष्टे वा । न० । तथा नील्यां ग्रासे च **सिक्थः** । पु० न० । सिच—सेचने । कर्तरि थक्प्रत्ययः ।

अष्टापदं शारिफले सुवर्णोऽस्त्री पशौ पुमान् ।
वामनेभ्यां स्त्रियां क्लीबं केयूरे नाऽङ्गदः कपौ ॥ २०२ ॥
अर्बुदो रुजि सङ्ख्यायामामोदो गन्धहर्षयोः ।
रहस्यं स्यादुपनिषत्समीपसदनेऽपि च ॥ २०३ ॥
कन्दोऽस्त्री शूरणे मूले राजलिङ्गविषाणयोः ।
स्त्री ककुत्ककुकन्दस्तु शृङ्गवेररसोनयोः ॥ २०४ ॥

"सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम्" इति मेदिनी ॥ २०१ ॥ इति थकारान्ताः समाप्ताः ॥ अथ दान्तानाह ॥ शारिफले शारिफलके । सुवर्णे कनके । न० । पशौ शरभे । तथा लूतायां कैलासे काले च **अष्टापदम्** । पु० न० । अष्टौ अष्टौ पदानि पङ्क्तावस्य वृत्तौ सङ्ख्याशब्दस्य वीप्सात्वाङ्गीकारात् आत्वम् । अष्टसु धातुषु पदं प्रतिष्ठा यस्य । अष्टाभिः सिद्धिभिरापद्यते । आपूर्व पद्—गतौ । अच् प्रत्ययः । अष्टसङ्ख्यातेन आपद्यते । ङीप् वा । "अष्टापदोऽस्त्री कनके शारीणां फलकेऽपि च । अष्टापदी चन्द्रमल्ल्यां शरभे मर्कटे पुमान्" इति मेदिनी ॥ वामनेभ्यां दक्षिणादिग्गजकरिण्याम् । स्त्री० । केयूरे बाहुभूषणे । न० । कपौ वालिपुत्रे वानरे । पु० । तथा अङ्गदानकर्तरि । त्रि० ॥ **अङ्गदः** । पु० । अङ्गं दायति शोधयति । दैप्—शोधने । कप्रत्ययः । "अङ्गदः कपिभेदे ना केयूरे तु नपुंसकम् । अङ्गदा याम्यदिग्दन्तिहस्तिन्यामपि योषिति" इति मेदिनी ॥२०२॥ रुजि रोगभेदे । सङ्ख्यायां दशकोटिसङ्ख्यायाम् । तत्सङ्ख्यातेषु च । तथा पर्वतभेदे च । **अर्बुदः** । न० पु० । अर्व—हिंसने । क्विप् प्रत्ययः । तमं उदेति अर्वशब्दोपपद उद्पूर्वइण्—गतौ डप्रत्ययः । "अर्बुदः" इत्यपि भवत्येव । "अर्बुदो मांसपुरुषे दशकोटिषु न स्त्रियाम् । महीधरविशेषे ना" इति मेदिनी ॥ गन्धः अतिदूरव्यापी—गन्धः, गन्धमात्रं वा । हर्षः सुखम्, इष्टाधिगमजन्यानन्दो वा तयोश्च । **आमोदः** । पु० । आसमन्तात् मोदयति । आपूर्व मुद—संमार्जने, हर्षे वा । णिच्—अच् प्रत्ययौ । भावे घञ् प्रत्ययो वा । "आमोदो गन्धहर्षयोः" इति मेदिनी ॥ रहस्ये गोप्ये । समीपसदने आसन्नगृहे । अपिशब्दात् ब्रह्मविद्यायाम् तत्प्रतिपादके वेदशिरोभागे वेदान्ते च । **उपनिषद्** स्त्री० । उप निषीदति प्राप्नोति ब्रह्मात्मभावोऽनया । उपनिपूर्वसद—आश्रयकरणे, गतौ च । क्विप् प्रत्ययः । "भवेदुपनिषद्धर्मवेदान्ते विजने स्त्रियाम्" इति मेदिनी ॥ २०३ ॥ शूरणे स्वनामख्याते मूलभेदे । मूले शस्यमात्रमूले । तथा गृञ्जने मेघे च । पु० । **कन्दः** । पु० न० । कन्दति, कन्दयति, कन्द्यते वा । कदि—रोदने, वैक्लवे, आह्वाने च । अच्—णिच्प्रत्ययौ। घञ्प्रत्ययो वा । "कन्दोऽस्त्री शूरणे शस्य—मूले जलधरे, पुमान्" इति मेदिनी ॥ राजलिंगं श्वेतच्छत्रादिनृपचिह्नम् । विषाणं वृषाङ्गं तयोः । तथा वृषस्कन्धपृष्ठस्थमांसपिण्डाकारे प्रधाने पर्वताग्रभागे च **ककुद्** । स्त्री० । कं सुखं कौति । कु—शब्दे । क्विप् प्रत्ययः । तुक् च तस्य दः । "ककुद् स्त्री ककुदोऽस्त्री वृषाङ्के राड्ध्वजे वरे" इति मेदिनी ॥ शृङ्गवेरस

**स्त्री गम्भार्यां क्लीबमब्जे दिङ्नागे कुमुदः कपौ ॥**
**पुष्पे क्लीबं भ्रमौ कुन्दः क्षोदो रजसि पेषणे ॥ २०५ ॥**
**शिवजूटे वराटेऽपि कपर्दोऽथाऽमये गदः ।**
**विष्णोर्भ्रातरि चास्त्रे स्त्री पलाशे गरुति च्छदः ॥ २०६ ॥**
**देशे जने जनपदो निषादौ श्वपचस्वरौ ।**
**वाक्ये शब्दे प्रदेशेऽपि पदं पापस्तु न द्वयोः ॥ २०७ ॥**

आर्द्रकम् । रसोनः लशुनम् तयोः । तथा शिग्रुवृक्षे च **कटुकन्दः** । पु० । कटुः कन्दो मूलं यस्य । "कटुकन्दः पुमाञ्छिग्रौ शृङ्गवेररसोनयोः" इति मेदिनी ॥ २०४ ॥ गम्भार्यां द्रुमभेदे । स्त्री० । अब्जे पद्मे । न० । दिङ्नागे दिग्गजे । कपौ वानरभेदे । तथा कैरवे कह्लारे श्वेतोत्पले दैत्यभेदे कर्पूरे च **कुमुदः** । पु० । कौ भूमौ मोदते । मुद–हर्षे । कप्रत्ययः । "कुमुदं कैरवे रक्तपद्मे स्त्री कुम्भिकौषधौ । गाम्भार्यां पुंसि दिङ्नागे नागे शाखामृगान्तरे" इति मेदिनी ॥ पुष्पे पुष्पवृक्षभेदे, माध्यकुसुमे वा । न० । भ्रमौ भ्रमियन्त्रे । तथा कुन्दुरुनाम गन्धद्रव्ये कुबेरस्य निधिभेदे करवीरवृक्षे च **कुन्दः** । पु० । कुं भूमिं दायति, द्यति वा दैपृ—शोधने । दो–छेदे वा । कप्रत्ययः । निपातनात् मुम् । "कुन्दो माध्ये स्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना" इति मेदिनी॥रजसि धूलौ। पेषणे चूर्णने तथा चूर्णे च **क्षोदः**। पु०। क्षुद–पेषणे । घञ्प्रत्ययः । "क्षोदः स्यात्पुंसि रजसि पेषणे च प्रकीर्त्तितः" इति मेदिनी ॥ २०५ ॥ शिवजूटे हरजटायाम् । वराटे कपर्दके । "वराटकानां दशकद्वयं यत्" इति लीलावती । अपिशब्दात् तुलामानभेदे च **कपर्दः** । पु० । पर्व–पूरणे । क्विप्प्रत्ययः । रात् वलोपे पर पूर्तिःकस्य गङ्गाजलस्य परा पूर्त्या दायति शुध्यति । कपरपूर्व दैपृ–शोधने । कप्रत्ययः । "कपर्दः खण्डपरशोर्जटाजूटे वराटके" इति मेदिनी ॥ आमये रोगे । विष्णोर्भ्रातरि श्रीकृष्णानुजे । अस्त्रे स्वनामाख्याते लौहादिकीलिते आयुधे । स्त्री० । तथा कथने विषे च **गदः** । पु० । गद–भाषणे । अच्प्रत्ययः । "गदो भ्रातरि विष्णोः स्यादामये नाऽयुधे गदे" इति मेदिनी । पलाशे पत्रे । गरुति पक्षिणां पक्षे । तद्वत् ग्रन्थिपर्णवृक्षे तमालवृक्षे च **छदः** । पु० । छद–संवरणे, अपवरणे च । कप्रत्ययः । "छदः पलाशे गरुति ग्रन्थिपर्णतमालयोः" इति मेदिनी ॥ २०६ ॥ देशे भूगोलविभागमात्रे कुरुपञ्चालादिषु प्रसिद्धजनपदेषु स्थानमात्रे जने लोके च **जनपदः** । पु० । जनाः पद्यन्ते गच्छन्ति यत्र । पद–गतौ । घञ्प्रत्ययः । अत्र "जानपदः" इत्यपि पाठः । "भवेज्जनपदो जानपदोऽपि जनदेशयोः" इति मेदिनी ॥ श्वपचः चण्डालः । ब्राह्मणात् शूद्रायामुत्पन्नः पारशवाख्यो वर्णसङ्करश्च । स्वरः ध्वनिभेदः । "निषादं रौति कुञ्जरः" इत्युक्तः । तन्त्री कण्ठोत्थितः स्वरविशेषः । तयोश्च । **निषादः** । पु० । निषीदति मनः पापं वा यस्मिन् । षद–गतौ, विषादे वा । घञ्प्रत्ययः । "निषादः स्वरभेदे स्याच्चण्डाले धीवरान्तरे" इति मेदिनी ॥ वाक्ये स्वार्थबोधसमाप्ते पदसमुदाये । "वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः

**मूले प्रत्यन्तशैले च प्रसादस्त्वनुरोधने।**
**स्वास्थ्ये काव्यगुणे चाऽथ प्रतिपत्तिथिसंविदोः॥ २०८॥**
**विप्रुट् ज्ञाता च बिन्दुः स्यान्मन्दौ स्वैरशनैश्चरौ।**
**हस्तिभेदश्चाऽथ मदः स्यात्कस्तूरीभदानयोः॥ २०९॥**
**गर्वे शुक्रेऽथ माकन्द्यामलक्यां नाऽम्रपादपे।**
**मर्यादा धारणासीम्नोर्महानादो गजेऽपि च॥ २१०॥**

पदोच्चयः'' इति॥ शब्दे सुप्तिङन्तरूपे शब्दभेदे। प्रदेशे एकदेशे। "पितुः प्रदेशास्तव" इति कुमारः। अपिशब्दात् चिह्ने स्थाने उद्यमे त्राणे वस्तुनि श्लोकपादे च **पदम्**। न०। पद—गतौ। अच्प्रत्ययः। "पदं शब्दे च वाक्ये च व्यवसायप्रदेशयोः। पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः। श्लोकपादेऽपि च क्लीबं पुँल्लिङ्गः किरणे पुनः'' इति मेदिनी॥ मूले वृक्षादेर्मूले। प्रत्यन्तशैले बृहत्पर्वतसमीपस्थे पर्वते। चकारात् चरणे चतुर्थांशे च **पादः**। पु०। पद्यते गम्यतेऽनेन। पद—गतौ। करणे घञ्। "पादो ब्रध्ने तुरीयांशे शैलप्रत्यन्तपर्वते'' इति मेदिनी॥ २०७॥ अनुरोधने आराध्यादेरिष्टसम्पादनेच्छायाम्, अनुग्रहे वा। स्वास्थ्ये आरोग्ये। काव्यगुणे अलङ्कारशास्त्रोक्ते प्रसादगुणे। चकारात् प्रसक्ते गुरुजनभुक्तावशिष्टे च **प्रसादः**। पु०। प्रपूर्वसद—गतौ, आश्रयकरणे च। घञ्प्रत्ययः। "प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसक्तिषु'' इति मेदिनी॥ तिथिः पक्षारम्भकः तिथिः संविद् बुद्धिः, प्रतिपत्तिर्वा तयोश्च। **प्रतिपद्**। स्त्री०। प्रतिपद्यते उपक्रम्यते पक्षोऽनया। प्रतिपूर्व पद—गतौ। क्विप्प्रत्ययः। "प्रतिपत्स्त्री तिथौ मतौ'' इति मेदिनी॥ २०८॥ विप्रुट् वेदपाठकाले मुखनिर्गतजलबिन्दुः। ज्ञाता वेदिता। तयोः। चकारात् अल्पांशे च **बिन्दुः**। स्यात्। पु०। विन्दुरिति वा पाठः। बिदि—अवयवे। उप्रत्ययः। विद्—ज्ञाने। उप्रत्ययः। निपातनात् साधुः। "बिन्दुर्दन्तक्षतान्तरे। भ्रुवोर्मध्ये रूपकार्थप्रकृतौ पृषते पुमान्'' इति मेदिनी। स्वैरं स्वेच्छा, स्वतन्त्रं वा। शनैश्चरः शनिग्रहः। तयोः। हस्तिभेदः हस्तीनां जातिविशेषः। तत्र च। तथा मूर्खे मृदौ प्रभाग्ये रोगिणि अल्पे ब्रले यमे प्रलये च। पु०। ज्यौतिषोक्ते रविसंक्रान्तिभेदे च। स्त्री०। **मन्दः**। त्रि०। मदि—हर्षे, जाड्ये च। अच्प्रत्ययः। "मन्दो तीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः। अल्पे च त्रिषु पुंसि स्याद्धस्तिजात्यन्तरे शनौ'' इति मेदिनी॥ कस्तूरी मृगनाभिजातं गन्धद्रव्यम्। इभादानं हस्तिगण्डजलं तयोः गर्वे अहङ्कारे। शुक्रे रेतसि। तथा आमोदे मत्ततायाम् नदे कल्याणकरे वस्तुनि च **मदः**। पु०। मद—गर्वे, मदे च। जाड्ये—वा अच्प्रत्ययः। "मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः'' इति मेदिनी॥ २०९॥ आमलक्यांधात्र्यां वृक्षे। अम्रपादपे सहकारवृक्षे। तथा पीतचन्दने नगरभेदे च। पु०। **माकन्दी**। स्त्री०। गौरादित्वान् ङीप्। पुंसि माकन्द इति वा। मा—मानो क्विप्प्रत्ययः। माः परिमितः कन्दोऽस्याः। "माकन्दः सहकारे स्त्री धात्रीनगरभेदयोः'' इति मेदिनी॥ धारणा आत्मनि

मेनादस्तु त्रयश्छागमार्जारकशिखण्डिनः ।
विशदः पाण्डरे व्यक्ते शारदोजलदेऽपि च ॥ २११ ॥
स्त्रियां च शारदी तोयपिप्पलीसप्तपर्णयोः ।
संवित्सङ्केतकेऽपि स्यात्समर्यादोऽन्तिके स्थिरे ॥ २१२ ॥
व्यञ्जने सूपकारे च सूदः सूपवदिष्यते ।
घर्मस्वेदनयोः स्वेदः सम्पल्लक्ष्म्यां समुच्चये ॥ २१३ ॥
इति दान्ताः ॥

चित्तस्य स्थितिः । "यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि । धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः" इति सीमा प्रसिद्धा । तयोः । तथा न्याय्यपथावस्थितौ कुले च **मर्यादा** । स्त्री० । मर्यायां सीमायां दीयते । दा—दाने । अच्प्रत्ययः । पर्यादीयते वा । परिआपूर्वदा—दाने । अङ्प्रत्ययः । पृषोदरादित्वात् पस्य मः । "मर्यादा सीमनि स्थितौ" इति मेदिनी । गजे हस्तिनि । अपिशब्दात् सिंहे उष्ट्रे गर्जन्मेघे च **महानादः** । पु० महान्नादोऽस्य । "महानादः कुञ्जरे स्याद्वर्षुकाब्दे महास्वने" इति मेदिनी ॥ २१० ॥ छागः अजः । मार्जारः बिडालः । शिखण्डी मयूरः । एतेषु त्रिष्वर्थेषु च । **मेनादः** स्यात् । पु० । मेनमत्ति । अद—भक्षणे । घञ्प्रत्ययः । मेघेन नन्दतीति वा । निपातनात् साधुः । "मेनादस्तु पुमान्केकी मार्जारच्छागलेषु च" इति मेदिनी ॥ पाण्डरे शुभ्रवर्णे । व्यक्ते स्फुटे, प्राज्ञे वा । त्रि० । तथा विमले च **विशदः** । पु० । विपूर्वशद—शातने, गतौ वा । अच्प्रत्ययः । "विशदः पाण्डरे व्यक्ते" इति मेदिनी । जलदे मेघे । अपिशब्दात् श्वेतपद्मे कासे बकुले हरिन्मुद्गे च । शरद्भवमात्रे । त्रि० । शारं श्वेतपद्ममस्त्यस्याः । अच्प्रत्ययः । सरस्वत्याम् । स्त्री० । **शारदः** । पु० । शरदि भवः । अण्प्रत्ययः । "शारदोऽब्दे स्त्रियां तोयपिप्पलीसप्तपर्णयोः । शस्ये क्लीब शरज्जाते नूतनाप्रतिभे त्रिषु" इति मेदिनी ॥२११॥ तोयपिप्पलीशाकभेदः,लाङ्गली वा । सप्तपर्णः स्वनामख्यातवृक्षः । तयोः । **शारदी** । स्त्री० शरदि भवा । अण्प्रत्ययः । "जलपिप्पल्यां सप्तपर्णे च शारदी" इति विश्वः । सङ्केतके मनोगतभावव्यञ्जनाय कृते हस्तादिचालनरूपे व्यापारे । अपिशब्दात् ज्ञाने प्रतिपत्तौ बुद्धौ अङ्गीकारे । समाधौ नाम्नि आचारे युद्धे तोषे च **संवित्** स्यात् । स्त्री० । सम्पूर्वविद—ज्ञाने । क्विप्प्रत्ययः । संवित्स्त्रियां प्रतिज्ञायामाचारज्ञानसङ्गरे। सम्भाषणे क्रियाकारे सङ्केते नाम्नि तोषणे" इति मेदिनी । अन्तिके समीपे । स्थिरे सीमायां, पर्वते वा । **समर्यादः** । त्रि० । सहमर्यादया । "समर्यादः समीपे ना मार्यादासहिते त्रिषु" इति मेदिनी ॥ २१२ ॥ व्यञ्जने सूपशाकादौ व्यञ्जनभेदे । सूपकारे सूपकारके । तथा सारथ्ये अपराधे लोध्रे पापे च **सूदः** । सूदशब्दः सूपवत् इष्यते काम्यत इत्यर्थः । शाब्दिकैरिति शेषः। पु० । सूदयति छागान् । सूद—हनने । अच्प्रत्ययः । "सूदस्तु कथितः सूपकारे च व्यञ्जनान्तरे" इति मेदिनी ॥ घर्मश्रमार्तस्य गात्रान्निस्यन्दिजलम्, आतपं वा । स्वेदनं गात्रादितो घर्मादिनिस्सारणव्यापारः तयोः । तथा

**खण्डे ना समभागेऽर्धमवधिः सीमकालयोः ।**
**आविद्धं प्रहतं वक्रमानद्धं वाद्यबद्धयोः ॥ २१४ ॥**
**अलङ्कारेऽपि चाबद्धः प्रत्याशाऽप्याधिरुच्यते ।**
**कुटुम्बव्यापृते धर्मचिन्तायां च विशेषणे ॥ २१५ ॥**
**उपाधिरुग्रगन्धस्तु वचा क्षेत्रयमानिके ।**
**उपलब्धिर्मतिप्राप्त्योर्ऋद्धिः सम्पदि चौषधे ॥ २१६ ॥**

पाकभेदे च **स्वेदः** । पु० । स्वेद–स्विद्–गतौ वा । घञ्प्रत्ययः । "स्वेदस्तु स्वेदने घर्मे" इति मेदिनी ॥ लक्ष्म्यां विभवे । समुच्चये राशीकरणे । तथा उत्कर्षगुणे हारविशेषे च **सम्पद्** स्त्री० । समपूर्वपद–गतौ । क्विप्प्रत्ययः । "सम्पद्भूतौ गुणोत्कर्षे हारभेदेऽपि च स्त्रियाम्" इति मेदिनी ॥ २१३ ॥ इति दकारान्ताः समाप्ताः ॥ अथ धान्तानाह ॥ खण्डे भेदे । "खण्डं खण्डं ययुर्घनाः" इति । खण्डने च । समभागे तुल्यांशे । तथा खण्डिते च । त्रि० । **अर्धम्** । न० पु० वा । ऋध–वृद्धे । घञ्प्रत्ययः । "अर्धं समांशे खण्डने" इति मेदिनी ॥ सीमा मर्यादा । कालः क्षणदण्डादिसमयः तयोः तथा अवधाने । बिले च **अवधिः** । पु० । अवपूर्व धा–धारणे, पोषणे च । किप्रत्ययः । आधारे किप्रत्ययो वा । "अवधिस्त्ववधाने स्यात्सीम्नि काले बिले पुमान्" इति मेदिनी ॥ प्रहतं पराहतम् । तत्र । वक्रं कुटिलम् । तत्र च । तथा विद्धे क्षिप्ते अभिभूते मूर्खे च **आविद्धम्** । त्रि० । आ पूर्व व्यध–वेधे, ताडने च । क्तप्रत्ययः । "आविद्धो वाच्यलिङ्गः स्यात्कुटिले च पराहते" इति मेदिनी ॥ वाद्ये चर्मणा बद्धमुखं पटहमुरजादि । बद्धः । कृतबन्धनः तयोः । तथा । केशभूषादिके ग्रथिते व्याप्ते च । त्रि० । **आनद्धम्** । आपूर्वनह–बन्धने । क्तप्रत्ययः । "आनद्धं मुरजादौ च क्लीबं स्यात्सन्दिते त्रिषु" इति मेदिनी ॥ २१४ ॥ अलङ्कारे । भूषणविशेषे । अपिशब्दात् दृढबन्धने प्रेम्णि योक्त्रे बद्धे आप्ते प्रतिरुद्धे च । त्रि० । **आबद्धः** । पु० । आसम्यक्बद्धः । आपूर्वबन्ध–बन्धने । भावे क्तप्रत्ययः । आधारे कर्मणि करणे च क्तः । क्वचित् "आबन्ध" वा । "आबन्धो दृढबन्धे स्यात्प्रेम्ण्यलङ्कारयोक्त्रयोः" इति मेदिनी ॥ प्रत्याशा प्रतीच्छा । तत्र । अपिशब्दात् मानसदुःखे अधिष्ठाने बन्धके व्यसने च **आधिः** । उच्यते कथ्यते । पु० । आधीयते मनोऽत्र । आपूर्व धा–धारणे । कि प्रत्ययः । "आधिः पुमांश्चित्तपीडा प्रत्याशाबन्धकेषु च" इति मेदिनी ॥ कुटुम्बव्यापृते सन्ततिव्यापारयुक्ते । धर्मचिन्तायां धर्मसम्बन्धवितर्के । स्वधर्मस्यान्यगततया वभासके विशेषणे भेदकधर्मे गुणक्रियादौ च ॥ २१५ ॥ **उपाधिः** । पु० । उपआपूर्वधा-धारणे । किप्रत्ययः । "उपाधिर्धर्मचिन्तायां कुटुम्बव्यापृते छले । विशेषणे" इति मेदिनी ॥ वचा स्वनामाख्यातं गन्धद्रव्यम् । क्षेत्रं प्रसिद्धम् । यमानिका हिङ्गु । तत्र च । तुकारात् चम्पके कट्फले अर्जवृक्षे लशुने उत्कटगन्धाढ्ये । त्रि० । अजमोदायां च **उग्रगन्धः** । पु० । उग्रः गन्धः पुष्पेऽस्य । उग्रगन्धाजमोदायां वचायां छिक्कौषधौ" इति मेदिनी ॥ मतिर्ज्ञानम् ।

राहौ शिरःशून्यकाये कबन्धः क्लीबमम्बुनि ।
गोधा तले निहाकायां गन्धो गर्वे लवेऽपि च ॥ २१७ ॥
दोग्धा गोपे कवौ वत्से दुग्धं क्षीरे प्रपूरिते ।
दिग्धं लिप्ते विषाक्ते च दुर्विधौ खलदुर्गतौ ॥ २१८ ॥
रोधे निरोधो नाशे च बुद्धो ज्ञाते जिने बुधे ।
निषेधे बुद्ध्योर्बाधो रौहिणेये कवौ बुधः ॥ २१९ ॥

प्राप्तिर्लाभः तयोश्च **उपलब्धिः** । स्त्री० । उपपूर्वलभ—प्राप्तौ । क्तिन्प्रत्ययः । "उपलब्धि-र्मतौ प्राप्तावपि ज्ञाने च योषिति" इति मेदिनी ॥ सम्पदि सम्पत्तौ । औषधे औषधिभेदे । चका-रात् वृद्धौ । देवभेदे च **ऋद्धिः** । स्त्री० ऋध—वृद्धौ । क्तिन्प्रत्ययः । "ऋद्धिः स्यादोषधीभेदे समृद्धावपि योषिति" इति मेदिनी ॥ २१६ ॥ राहौ स्वनामके ग्रहे । शिरः शून्यकाये मस्तक-शून्यक्रियायुक्तदेहे । "मनुष्याणां सहस्रेषु हतेषु हृतमूर्धसु । तदावेशात्कबन्धः स्यादेको मूर्वा क्रियान्वितः" इत्युक्तम । अम्बुनि जले । न० । उदरे धूमकेतौ राक्षसभेदे च **कबन्धः** । पु० । कं सुखं बध्नाति । बन्धबन्धने । अण्प्रत्ययः । कं बध्यते छिद्यतेऽस्मात् । बन्ध—बन्धने । घञ्प्रत्ययः । केन वायुना बध्यते । को वायुर्बन्धो वा यस्येति यथायथा वाक्यम् । कब-न्धोऽस्त्री क्रियायुक्तव्यपमूर्धकलेवरे । क्लीबं जले पुंस्युदरे राहुरक्षोविशेषयोः" इति मेदिनी ॥ तले स्वरूपे । निहाकायां गोधिकायां । तथा धनुर्गुणाघातवारणाय प्रकोष्ठे बद्धे चर्मणि सर्प-भेदे च **गोधा** । स्त्री० । गुध्यते वेष्ट्यते बाहुरनया । गुध—वेष्टने । करणे घञ्प्रत्ययः । "गोधा तलनिहाकयोः" इति मेदिनी ॥ गर्वे अहङ्कारे । लवे लेशे । अपिशब्दात् सम्बन्धे गन्धके शोभाञ्जने घृष्टचन्दनादीनां घ्राणग्राह्ये गुणभेदे । स च घ्राणग्राह्यः गन्धः पञ्चविधः । "चूर्णीकृतो वा घृष्टो वा दाहाकर्षित एव वा । रसः संमदजो वापि प्राण्यङ्गोद्भव एव वा" इति । गन्धः । पु० । गन्ध—सूचने । अच्प्रत्ययः । "गन्धः प्रतिवेश्यामोदलेशसम्बन्धगन्धके" इति मेदिनी ॥ २१७ ॥ गोपे गोपाले । कवौ सूक्ष्मदर्शिनि पण्डिते, काव्यकर्तरि वा । वत्से गवा-दिशिशौ । तथा दोहकर्तरि । त्रि० । गवि च । स्त्री० । **दोग्धा** । पु० । दुह—दोहे । तृच्प्रत्ययः "दोग्धाऽर्थोपजीविकवौ वत्सगोपालयोः पुमान्" इति मेदिनी ॥ क्षीरे पयसि स्त्रीजा-तिस्तननिस्यन्दिद्रवद्रव्ये वा । प्रपूरिते प्रकर्षेण पूर्णे । त्रि० । तद्वत् कृतदोहायां धेन्वादौ । स्त्री० । दोहने च । न० । **दुग्धम्** । न० । दुह—दोहे । क्तप्रत्ययः । कर्मणि भावे च । "दुग्धं प्रपूरिते क्षीरे दुग्धी क्षीराविकौषधौ" इति मेदिनी ॥ लिप्ते लेपने विषाक्ते विष-पीते वाणे । चकारात् वहो प्रबन्धे स्नेहे च **दिग्धम्** । न० । दिह—लेपने । क्तप्रत्ययः । भावे कर्मणि च । "दिग्धो विषाक्तवाणे स्यात्पुंसि लिप्तेऽन्यलिङ्गकः" इति मेदिनी । खलः दुर्जनः, मूर्खो वा । दुर्गतः दरिद्रः । तयोश्च । **दुर्विधः** । त्रि० । दुष्टा विधा यस्य । "दुर्विधो वाच्यलिङ्गः स्यादुर्गतेऽपि खलेऽपि च" इति मेदिनी ॥ २१८ ॥ रोधे आवरणे,

**दैत्येचैत्रवसन्तेषु द्रुमभेदे च ना मधुः ।**
**मिद्धं चिन्तातिसंक्षेपे निद्रायां चाऽथ मागधी ॥ २२० ॥**
**पिप्पल्यां यूथिकायां ना लग्ने मगधजे त्रिषु ।**
**लशुनेऽतिविषायां च शुण्ठ्यामपि महौषधम् ॥ २२१ ॥**
**सीता योजनगन्धा स्यात्कस्तूरी, व्याससूरपि ।**
**विधिर्ब्रह्मणि काले च प्रकारे वेधने विधा ॥ २२२ ॥**

निरुत्पत्त्यां वा । नाशे विनाशे । चकारात् प्रलये प्रतिरोधे च **निरोधः** । पु० । निपूर्वरुध—आवरणे । घञ्प्रत्ययः । "निरोधो नाशरोधयोः" इति मेदिनी ॥ ज्ञाते ज्ञातरि । त्रि० । जिने सर्व्वज्ञे । बुधे पण्डिते । तथा जागरिते च । बुद्धः । पु० । बुध—ज्ञाने । क्तप्रत्ययः । "बुद्धो जिने लब्धवर्णे पुंसि स्याद्बुद्धितेऽन्यवत्" इति मेदिनी ॥ निषेधः प्रतिरोधः । बुद्धः बोधप्रतिबन्धः तयोः । तथा न्यायमते स्वभाववत्पदार्थे यथा वह्निबुद्धौ वह्न्यभाववान् ह्रदो बाधः ।" प्रतिबन्धके पीडने उपद्रवे च **बाधः** । पु० । बाध—विहतौ । घञ्प्रत्ययः । कर्तरि अच्प्रात्ययः । भावे घञ् च । "बाधा दुःखे निषेधे च" इति मेदिनी । रौहिणेये बृहस्पतिभार्यायां तारायां चन्द्रेण जनिते पुत्रे ग्रहभेदे सौम्ये । तस्य रोहिण्या प्रतिपालनात् रौहिणेयत्वं प्रसिद्धम् । कवौ पण्डिते । काव्यकर्तरि च **बुधः** । पु० । बुध—ज्ञाने । कप्रत्ययः । "बुधः सौम्ये च पण्डिते" इति मेदिनी ॥ २१९ ॥ दैत्यः कुम्भीनस्याः भर्ता दैत्यभेदः । "विष्णुकर्णमलोद्भूता असुरौ मधुकैटभौ" इति पुराणम् । चैत्रं मासविशेषम् । वसन्तः ऋतुभेदः तेषु । द्रुमभेदे वृक्षभेदे । अशोकवृक्षे यष्टिमधौ च । पु० । तथा प्राणिनां शुभाशुभकर्मणि । न० । जीवन्त्याम् । स्त्री० । त्रपुणि च । न० । **मधुः** । पु० । मनबोधे, गर्वे वा । उप्रत्ययः । नस्य धः । "मधुपुष्परसक्षौद्रमद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति" इति मेदिनी । चिन्तातिसंक्षेपे चिन्ताप्रागनुभूतज्ञानजन्यः संस्कारोद्बोधः पूर्व्वदृष्टपदार्थस्मरणं वा तस्याः अतिसंक्षेपः अल्पवाक्यादिना प्रकाशनं तत्र । क्वचित् चित्ताभिसंक्षेपे इति पाठः । **मिद्धम्** । न० । मिध—कार्याक्षमे । क्तप्रत्ययः । "मिद्धं चित्ताभिसंक्षेपे क्लीबमालस्यनिद्रयोः" इति मेदिनी ॥ २२० ॥ पिप्पल्यां कणायाम् । यूथिकायां पुष्पप्रधानवृक्षे । पु० । लग्ने स्तुतिपाठके । मगधजे मगधदेशजाते । त्रि० । तथा वर्णसङ्करभेदे श्वेतजीरके च **मागधी** । स्त्री० । मगधदेशे भवा । अण्—ङीप्प्रत्ययौ । "मागधी स्त्री कणायूथ्योर्वाच्यवन्मगधोद्भवे । पुंसि वैश्याक्षत्रियाजे शुक्लजीरकबन्दिनोः" इति मेदिनी॥लशुने स्वनामाख्याते भेषजे । अतिविषायां शुण्ठ्यां स्वनामाख्यातायाम् । अपिशब्दात् वाराहीकन्दे वत्सनाभे विषे पिप्पल्यां वीर्याद्यौषधमात्रे च । **महौषधम्** । न० । महच्च तत् औषधमिति कर्मधारयः । "महौषधं तु शुण्ठ्यां स्याद्विषायां लशुनेऽपि च" इति मेदिनी ॥२२१॥ सीता जनकराजदुहिता । तस्याम् । कस्तूरीमृगनाभिः । व्याससूः व्यासमाता सत्यवती । तयोः । अपिशब्दात् तद्वति च **योजनगन्धा** ।

**पृक्का महिला च वधूर्विश्वस्तोऽनुद्धतश्च विश्रब्धः ।**
**विश्रब्धं बाढार्थे शुद्धं त्रिषु पूतकेवलयोः ॥ २२३ ॥**
**श्राद्धं निवापे श्रद्धालौ त्रिषु साधुर्धनिन्यपि ।**
**स्कन्धः सङ्घेऽपि सिद्धस्तु नित्यनिष्पन्दनाकिषु ॥ २२४ ॥**

स्त्री० । योजनं व्याप्य गन्धो यस्याः इति बहुव्रीहिः । "योजनगन्धा कस्तूर्यां सीतायां व्यास-मातरि" इति मेदिनी ॥ ब्रह्मणि प्रजापतौ । काले चकारात् भाग्ये क्रमे प्रवर्तनारूपे नियोगे "चिकीर्षाकृतिसाध्यत्वहेतुधीविषयोः" इत्युक्तम् । तज्जनके वाक्ये विष्णौ कर्मणि गजभक्ष्यान्ने वैद्ये अप्राप्तप्रापकरूपे वाक्यभेदे "संज्ञा च परिभाषा च विधिर्नियम एव च । अतिदेशोऽधिका-रश्च षड्विधं सूत्रलक्षणम्" इत्युक्ते सूत्रभेदे च । **विधिः** । पु० । विपूर्वधा-धारणे । कि प्रत्ययः । विधिर्ना नियतौ काले विधाने परमेष्ठिनि" इति मेदिनी ॥ प्रकारे भेदे । वेधने वेधन-कर्मणि । तथा विमाने । गजभक्ष्यान्ने वृद्धौ वेतने कर्मणि च । स्त्री० । **विधा** । स्त्री० । विध-विधाने । कप्रत्ययः । आङ् वा । "विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधौ" इति मेदिनी ॥ २२२ ॥ पृक्का शाकभेदः । महिला योषित् भर्या वा । तयोः । चकारात् नवोढायां पुत्रजायायां शठ्यां च **वधूः** । स्त्री० । उह्यते पितृगेहात् पतिगृहम् । वह-प्रापणे । ऊप्रत्ययः । धुकच् । "वधू स्त्री शारिवौषधौ । स्नुषाशटीनवोढासु भार्यापृक्काङ्गनासु च" इति मेदिनी ॥ विश्वस्तः जातविश्वासः । अनुद्धतः वाक्याद्यचञ्चलः, विनीतो वा । क्वचित्तु "अनुद्धटः" तयोः बाढार्थे गाढभावम् । तत्र । विश्रब्धं न० चकारात् शान्ते च **विश्रब्धः** । पु० । विपूर्व-श्रम्भु-प्रमादे । क्तप्रत्ययः । "विश्रब्धोऽनुद्धटेऽपि स्याद्गाढविश्वस्तयोस्त्रिषु" इति मेदिनी ॥ पूतं पवित्रम् । केवलमेकं, कृत्स्नं वा । तयोः । तथा सैन्धवलवणे मरिचे निर्दोषे शुभ्रे च । त्रि० । **शुद्धम्** । न० । शुध-शौचे, शोधने च । क्तप्रत्ययः । "शुद्धं स्यात्त्रिषु केवले ॥ निर्दोषे च पवित्रे च" इति मेदिनी ॥ २२३ ॥ निवापे पित्रुद्देशेन दाने, पित्रादिभ्यः श्रद्धया देये द्रव्ये च । "श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते" इत्युक्तम् । श्रद्धालौ श्रद्धायुक्ते । त्रि० । **श्राद्धम्** । न० । श्रद्धाहेतुत्वेनास्त्यस्य । अण् प्रत्ययः । "श्राद्धं श्रद्धान्विते त्रिषु" इति मेदिनी ॥ धनिनि धनस्वामिनि । अपिशब्दात् उत्तमकुलजाते सुन्दरे मनोहरे उचिते च । स्त्रियां वा ङीप् । मुनौ जिने च । "न प्रहृष्यति सम्माने नावमानेन कुप्यति । न क्रुद्धः परुषं ब्रूयादेतद्धि साधुलक्षणम्" इत्याद्युक्तधर्मवति जने वार्धुषिके च । पु० । **साधुः** । त्रि० । साध-सिद्धौ । उन् प्रत्ययः । "साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्" इति मेदिनी ॥ सङ्घे व्यूहे, समूहे च । अपिशब्दात् अंशे वृक्षस्य काण्डे नृपे काये भद्रादौ छन्दोभेदे सौगतमतसिद्धेषु विज्ञानादिषु पञ्चसु । "पञ्च इमे भिक्षवः स्कन्धाः" इति अङ्गोत्तरः । "मुक्त्वाङ्गस्कन्धपञ्चकम्" इति माघः । पथि ग्रन्थपरिच्छेदे च "स्कन्धैर्द्वादशभि-र्युक्तम्" इति भागवतम् । **स्कन्धः** । पु० स्कद्यते आरुह्यते । कर्मणि घञ्प्रत्ययः । पृषोदरा-

**सन्धिः पुमान्सुरङ्गायां भेदे संघट्टने भगे ।**

**इति धान्ताः ।**

**कुले ख्यातौ चाऽभिजनः स्यादध्वा कालवर्त्मनोः ॥ २२५ ॥**
**अतिवृत्तेऽवदानं स्यात्कर्मखण्डनयोरपि ।**
**अग्रजन्माऽग्रजे विप्रे स्यादन्नं भक्तभुक्तयोः ॥ २२६ ॥**
**विनीते विप्रभेदे चाऽनूचानोऽर्थी विवाद्यपि ।**
**अन्तावसायी चाण्डाले मुनिभेदे च नापिते ॥ २२७ ॥**

दित्वात् साधुः । "स्कन्धः स्यान्नृपतावंशे सम्परायसमूहयोः । काये तरुप्रकाण्डे च भद्रादौ छन्दसां भिदि" इति मेदिनी ॥ नित्यं निरन्तरम् । निष्पन्दं निश्चलम् । नाकी देवयोनिभेदः तेषु । तथा निष्पन्ने पक्वे व्यासादौ मुनौ गुडे कृष्णधुस्तूरे च । पु०।निश्चिते । त्रि०। **सिद्धः** । पुं०। सिध—सिद्धौ । क्तप्रत्ययः । "सिद्धो व्यासादौ भेदे योगस्य देवयोनेश्च त्रिषु निष्पन्ने" इति मेदिनी ॥ २२४ ॥ सुरङ्गायां चौरादिकृतसुरङ्गायाम् । क्वचित्तु "सुरङ्गायाम्" इति । "सन्धिः कृत्वा तु चौर्यम्" इति स्मृतिः। भेदे व्याकरणोक्ते वर्णद्वयपठितवर्णविकारभेदे । सङ्घट्टने नृपाणां षड्गुणान्तर्गते मेलनार्थं मैत्रीकरणरूपे व्यापारे । भगे योनौ । तथा संयोगे अस्थिद्वयसंयोगस्थाने नाटकाङ्गविशेषे च **सन्धिः** । पु० । समपूर्व धा—धारणे । कि प्रत्ययः । "सन्धिः पुमान्सुरङ्गायां भगे सङ्घट्टनेऽपि च" इति मेदिनी॥ इति धकारान्ताः समाप्ताः॥अथ नान्तानाह॥ कुले वंशे । ख्यातौ प्रसिद्धौ तयोः **अभिजनः**। स्यात्।पु०। अभिजन्यतेऽस्मिन्। जन—जनने। घञ्प्रत्ययः।अवृद्धिः।"भवेदभिजनः ख्यातौ जन्मभूम्यां कुलध्वजे। कुलेऽपि च"इति मेदिनी तथा जन्मभूमौ कुलश्रेष्ठे च कालवर्त्मनोः कालः प्रसिद्धः वर्त्म मार्गः तयोः **अध्वा** । ॥२२५॥अतिवृत्ते अतिक्रमे । कर्म शुद्धीकरणम्। खण्डनं भेदनं तयोः । अपिशब्दात् पराक्रमे । बीरणमूले च। **अवदानम्**। न०। अवपूर्व दो छेदे।ल्युट्प्रत्ययः।"अवदानं खण्डने स्यादति वृत्ते च कर्मणि" इति मेदिनी ॥ अग्रजे ज्येष्ठभ्रातरि । विप्रे ब्राह्मणे । तथा ब्रह्मणि-अग्रजातमात्रे च। त्रि० । **अग्रजन्मा** । पु० । अग्रे जन्म यस्य । अग्रशब्दोपपदजन—जनने । मनिन् प्रत्ययः । व्यधिकरणबहुव्रीहिः । अग्रजन्मा द्विजे ज्येष्ठभ्रातरि ब्रह्मणि स्मृतः" इति मेदिनी ॥ भक्तम् ओदनं, स्विन्नान्नं वा । "शस्यं क्षेत्रगतं प्रोक्तं सतुषं धान्यमुच्यते । आमं तु वितुषं ज्ञेयं स्विन्नमन्नमुदाहृतम्" इति । भुक्तं भक्षितं तयोः । तथा पृथिव्यां अन्नहेतुत्वात् तस्या अन्नत्वम् । अत एव वेदान्ते तेजोऽबन्नात्मिका प्रकृतिरित्युक्तम् । उपचारात् उपकरणे च । **अन्नम्** । न० । अनत्यनेन अन—जीवने । नन् प्रत्ययः । अद्यते इति वा । अद—भक्षणे, अवने वा । क्तप्रत्ययः । अन्नार्थतया न जग्धिः । "अन्नं भुक्ते च भक्ते स्यात्" इति मेदिनी ॥ ॥ २२६ ॥ विनीते विनययुक्ते, सुशिक्षिते च । विप्रभेदे ब्राह्मणविशेषे । चकारात् शिक्षादिषडङ्गसहितवेदाध्ययनकारिणि वेदार्थानुवचनसमर्थे च **अनूचानः** । पु० । अनुपूर्ववच—कथने ।

अश्वकुत्सितयोरर्वा वज्रे विद्युति चाऽशनिः ।
वर्णमात्रे विसर्गे चाऽभिनिष्णानोऽथ हैहये ॥ २२८ ॥
पार्थे द्रुमे मयूरे ना अर्जुनस्त्रिषु पाण्डरे ।
अर्जुनी गव्युषायां च भृङ्गवृश्चिकयोरली ॥ २२९ ॥
आत्मा मनस्याकलनं विबन्धपरिसङ्ख्ययोः ।
आवेशनं शिल्पगेहे भूतावेशेऽथ गेन्दुके ॥ २३० ॥

कानप्रत्ययः । निपातनात् साधुः । अनूचानो विनीते स्यात्साङ्गवेदविचक्षणे" इति मेदिनी ॥ विवादी विरुद्धवादी। "ऋणादिदायकलहे द्वयोर्बहुतरस्य वा । विवादो व्यवहारश्च" इत्युक्तलक्षणः व्यवहारः । तत्र । अपिशब्दात् याचके सेवके असन्निहितधने धनस्वामिनि च **अर्थी** । त्रि० ॥ अर्थ-याचने । इनिप्रत्ययः ।"अर्थः पुमान्याचके स्यात्सेवके च विवादिनि" इति मेदिनी॥चाण्डाले श्वपचे । अन्ताय स्वतोपकृते जन्तुनाशाय अवस्यति । पाणिहिंसके चाण्डालादौ । अन्ते वृद्धे वयसि अवस्यति निश्चिनोति तत्त्वम् । मुनिभेदे मुनिविशेषे । नखकेशानामन्तमवसातुं छेत्तुं शीलमस्य । नापिते क्षुरकर्मकारके च । **अन्तावसायी** । पु० । अन्तशब्दःअवपूर्वसानाशेणिनिप्रत्ययः । युक् च । "अन्तावसायी श्वपचे मुनिभेदे च नापिते" इदि मेदिनी ॥२२७॥ अश्वः घोटकः । कुत्सितः निन्दितः । तयोः । तथा इन्द्रे गोकर्णपरिमाणे वडवायां कुट्टिन्याम् । स्त्री०। अर्वा । पु० । ऋ-गतौ । वनिप्प्रत्ययः ।"अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः" इति मेदिनी ॥ वज्रे मेघोत्पन्ने ज्योतिषि पवौ । विद्युति तडिति । तथा प्रस्तरवर्षिणि उल्काविशेषे च **अशनिः** । स्त्री०। अश्नुते संहन्ति अश-संहतौ, व्याप्तौ च । अनिप्रत्ययः । "अशनिः स्त्रीपुंसयोः स्याच्च चञ्चलायां पवावपि" इति मेदिनी ॥ वर्णमात्रे अक्षरमात्रे । विसर्गे विसर्जनीये च । **अभिनिष्णानः** । पु० । अभिनिपूर्वस्ना-शौचे, शोधने च । ल्युट्प्रत्ययः । कश्चित्तु "अभिनिष्ठानः" इति पाठः । "अभिनिष्णानोऽप्यक्षरमात्रे विसर्जनीयेऽपि च" इति मेदिनी ॥ हैहये हैहयाधिपे कार्तवीर्ये ॥ २२८ ॥ पार्थे पृथापुत्रे, युधिष्ठिरादौ च द्रुमे स्वनामख्याते वृक्षे । मयूरे स्वानामाख्याते खभेदे । पु० । पाण्डरे शुभ्रवर्णवति । त्रि० । तथा मध्यमपाण्डवे करवीरे धवले आर्जुनी इति ख्याते नेत्ररोगे च । न० । अर्जुनः । पु० । अर्ज-संस्कारे, अर्जने च । उनन्प्रत्ययः । "अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः" इति मेदिनी । गवि नवप्रसूतायां धेन्वाम् । उषायां स्वनामख्याते काले । "तेजः परिहानिरुषा भानोरर्धोदयं यावत्" इति वराहोक्तम् । चकारात् बाहुदायां नद्यां कुट्टिन्यां अर्जुनी । स्त्री० । अर्ज-संस्कारे । उनन्प्रत्ययः । गौरादित्वात् ङीप् । "अर्जुनी गवि । उषायां वाहुदानद्यां कुट्टिन्यामपि च कचित्" इति मेदिनी ॥ भृङ्गः भ्रमरः । वृश्चिकः कीटभेदः तयोश्च । **अली** । पु० । अलः पर्याप्तः सर्वत्र गतिर्विद्यतेऽस्य । अल-पर्याप्तौ । इनिप्रत्ययः । "अली स्याद्वृश्चिके भ्रमरेऽपि च" इति मेदिनी ॥ २२९ ॥ मनसि चित्ते । तथा देहे स्वरूपे प्रयत्ने वृत्तौ बुद्धौ अर्के

**विशेषे चोपधानं स्याच्चुल्ल्यामुद्धानमुद्गमे ।**
**अगम्भीरेऽपि चोत्तानः शराभ्यासेऽप्युपासनम् ॥ २३१ ॥**
**स्यात्कात्यायन्यर्धवृद्धा गौर्योर्वररुचौ नरि ।**
**शिरीषाम्रातकाश्वत्थगर्दभाण्डे कपीतनः ॥ २३२ ॥**
**चीरेऽपि कौपीनमश्वे पुन्नागेऽपि च केशरी ।**
**कुलीनत्वे च गुह्ये च कौलीनमथ कञ्चुकी ॥ २३३ ॥**

वायौ वह्नौ जीवे ब्रह्मणि च । **आत्मा** । पु० । आपूर्वअत्--गतौ, प्रापणे च । मनिन्प्रत्ययः । "आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि । धृतावपि मनीषायां शरीरब्रह्मणोरपि" इति मेदिनी ॥ विबन्धः अनुसन्धानः, रोगभेदो वा । परिसङ्ख्या गणनं तयोः । तथा आकाङ्क्षायां च **आकलनम्** । न० । आपूर्वकल--सङ्ख्यायाम् । ल्युट्प्रत्ययः । "आकलनं विबन्धे स्यादाकाङ्क्षापरिसङ्ख्ययोः" इति विश्वः । शिल्पगेहे शिल्पशालायाम् । भूतावेशे अमनुष्याधिष्ठिते रोगे । तथा सूर्य्येन्दुपरिधौ च **आवेशनम्** । न० । आपूर्वविश--प्रवेशे । आधारे ल्युट्प्रत्ययः । "आवेशनं शिल्पिशाले भूतावेशप्रवेशयोः" इति मेदिनी ॥ गेन्दुके वस्त्रनिर्मितगोलाकारे क्रीडनके कन्दुके च । पृषोदरादिना वा डत्वे कृते "गेण्डुके" इति च ॥ २३० ॥ विशेषे व्रतभेदे । चकारात् शिरोधाने प्रणये विषे च **उपधानं** । स्यात् । न० । उपधीयते शिरोऽत्र । उपपूर्वधा--धारणे । आधारे ल्युट्प्रत्ययः । "उपधानं विषे गण्डौ प्रणयेऽपि नपुंसकम्" इति मेदिनी ॥ चुल्ल्यां पाकार्थमग्निस्थापनस्थाने । उद्गमे ऊर्द्ध्वगमने । तथा वमिते च **उद्धानम्** । न० । उपधीयतेऽस्मिन् । उद्पूर्वधाधारणे । ल्युट्प्रत्ययः । "उद्धानमुद्गते वाच्यलिङ्गं चुल्ल्यां नपुंसकम्" इति मेदिनी ॥ अगम्भीरे निम्नरहितस्थाने । अपिशब्दात् विस्तारशून्ये भूमिलग्नपृष्ठतया ऊर्द्ध्वभावेन स्थिते ऊर्द्ध्वमुखे वा । **उत्तानः** । त्रि० । उद्गतस्तानो विस्तारो यस्मादिति बहुव्रीहिः । "उत्तानमगंभीरे स्यादुद्धास्यशयिते त्रिषु" इति मेदिनी ॥ शराभ्यासे । बाणमोचनशिक्षायाम् । अपिशब्दात् सेवने देवताद्याराधने च **उपासनम्** । न० । उपपूर्वअस--क्षेपे । ल्युट्प्रत्ययः । उपपूर्वआस--उपवेसने । ल्युट्प्रत्ययः । युक् च । "उपासनं शराभ्यासेऽप्युपास्तावासनेपि च" इति मेदिनी ॥ ॥ २३१ ॥ अर्धवृद्धा अर्धवयस्का । गौरी दुर्गा । सा हि कल्पान्तरे कत्यस्यापत्यमासीदिति वेदोक्तिः तयोः । वररुचौ स्वनामाख्याते कवौ । पु० । तथा काषायवस्त्रायां विधवायां च । **कात्यायनी** । स्यात् । स्त्री० । कत्यस्यापत्यम् । स्त्री० । फञ्प्रत्ययः । "कात्यायनो वररुचौ विशेषे च मुनेः पुमान् । कषायवस्त्रे विधवार्धजरत्युभयोः स्त्रियाम्" इति मेदिनी ॥ शिरीशः स्वनामाख्यातो वृक्षः । आम्रातकः स्वनामाख्यातो वृक्षः । ( आमडा इति हिन्दी ) अश्वत्थः बोधिवृक्षः । गर्दभाण्डः पत्रादिष्वश्वत्थतुल्याकारो वृक्षः । तेषु च । **कपीतनः** । पु० । कपीनाम् ई लक्ष्मीं तनोति । तनु--विस्तारे । अच्प्रत्ययः । "कपीतनौ गर्दभाण्डशिरीषाम्रा केषु च" इति मेदिनी ॥ २३२॥ चीरे मेखला-

**स्थापत्ये वर्मिते सर्पे क्लृप्तौ छेदे च कल्पनम् ।**
**कामिनौ स्त्रैणचक्रौ च कृतिनौ योग्यपण्डितौ ॥ २३४ ॥**
**काञ्चनं तु हेम्नि नागकेशरे काञ्चनी निशा ।**
**धातुवादरते कांस्यकारे कारन्धमी नरि ॥ २३५ ॥**
**चर्चिकाचिल्लदयिते खकामिन्यौ प्रकीर्त्यते ।**
**विषदिग्धपशोर्मांसे गृञ्जनं ना रसोनके ॥ २३६ ॥**

निवद्धे वस्त्रखण्डे । "कौपीनवन्तः खलु भाग्यवन्तः" इति पुराणम् । अपिशब्दात् पापे तद्वत् काकार्ये च गोप्यत्वात् पुंत्रपलिङ्गे च **कौपीनम् ।** न० । कूपे पतनमर्हति । अकार्यार्थे निपातनात् साधुः । "कौपीनं स्यादकार्ये च गुह्यचीरप्रदेशयोः" इति विश्वः ॥ अश्वे तुरगे । **पुन्नागे** स्वनामाख्याते वृक्षे । अपिशब्दात् सिंहे नागकेशरवृक्षे बीजपूरकवृक्षे हनुमत्पितरि वानरभेदे च **केशरी ।** पु० । केशराः सन्त्यस्य इति क्वचित्तु "केसरी" अप्यत्र । "केशरी तुरगे सिंहे पुन्नागे नागकेशरे" इति मेदिनी ॥ कुलीनत्वे कुलीनभावे, कुलीनकर्मणि वा । गुह्ये लिङ्गे । चकारात् परीवादे दुष्टकार्ये प्राणिभिर्युते च **कौलीनम् ।** न० । कौ पृथिव्यां लीनं यस्मादिति अलुक्समासः । कुलीनस्य भावः कर्म वा । "कौलीनं गुह्यजन्ययोः । कुकर्मणि कुलीनत्वे युद्धे पश्वहिपक्षिणाम्" इति मेदिनी ॥ २३३ ॥ स्थापत्ये राज्ञामन्तः पुररक्षके द्वारपाले । वर्मिते कृतसन्नाहे । सर्पे भुजगे । तथा जारे यवे चणके च **कञ्चुकी ।** पु० कञ्चुकः अस्त्यस्य तं धारयति वा । इनिप्रत्ययः । "कञ्चुकयन्तः पुराध्यक्षेऽपिङ्गहौ जोङ्गकद्रुमे" इति मेदिनी ॥ क्लृप्तौ कृतौ । छेदे छेदने । चकारात् न्यायोक्ते अनुमितिभेदे च **कल्पनम् ।** न० । क्लृप—कल्पने । भावे ल्युट्प्रत्ययः "अथ कल्पना । करिणः सज्जनायां स्त्री क्लीबं क्लृप्तौ च" इति मेदिनी ॥ स्त्रैणं स्त्रीसम्बधी । चक्रः चक्रवाकपक्षी । तयोः । चकारात् पारावते चटके सारसपक्षिणि च । एतेषां कामाधिक्यात् कामित्वं प्रसिद्धम् । **कामवती ।** त्रि० । भीरुस्त्रियां दारुहरिद्रायां मदिरायां च । स्त्री० । **कामी ।** पु० । कामोऽस्त्यस्य । णिन्प्रत्ययः । "कामी तु कामुके चक्रवाके पारावतेऽपि च" इति इति मेदिनी ॥ योग्यः उचितः पण्डितः शास्त्रतत्त्वज्ञः । तयोः । तथा पुण्यवति निपुणे साधौ कृतार्थे च **कृती ।** स्त्री० । कृतमनेन । इष्टादित्वादिनिः । कृती स्यात्पण्डिते योग्ये" इति मेदिनी ॥ २३४ ॥ हेम्नि स्वर्णे । नागकेशरे स्वनामाख्याते पुष्पवृक्षे । न० । तथा चम्पके उदुम्बरे धूस्तूरे पद्मकेशरे स्वर्णादिपुष्पे । पु० । दीप्तौ । न० । काञ्चनम् । न० । निशा हरिद्रा । तस्याम् । तथा गोरोचनायां स्वर्णक्षीरिवृक्षे च **काञ्चनी ।** स्त्री० । कचि—दीप्तौ । ल्युट्प्रत्ययः । करणे ल्युट् । ङीप् वा । "काञ्चनः काञ्चनारे स्याच्चम्पके नागकेशरे । उदुम्बरे च धुस्तूरे हरिद्रायां च काञ्चनी" इति मेदिनी ॥ धातुवादरते धातवो हि वातादिवशाद्बहुविधाः तत्सम्बन्धवादानुरक्ते । कांस्यकारे स्वनामाख्याते जातिभेदे च **कारन्धमी ।** पु० । कारं धमति । ध्मा—मुखमारुतसंयोजने शब्दे । णिनिप्रत्ययः "कारन्धमी कांस्यकारे धातुवादरतेऽपि च" इति मेदिनी ॥२३५॥ चर्चिका चन्दनादिना गात्रले-

**गहनं गह्वरे दुःखे वनेऽथाम्बुदमुस्तयोः।**
**घनः पुंसि घनं वाद्यं चर्म स्यात्फलकत्वचोः॥ २३७॥**
**चीनौ वस्त्रव्रीहिभेदौ चिह्नं लक्ष्मपताकयोः।**
**चक्रिणो विष्णुभुजगकुलालग्रामजालिनः॥ २३८॥**
**कम्प्रे ना चलनं कम्पे चलनी वस्त्रघर्घरी।**
**भूर्जे फलकपाणौ च चर्म्यथालम्बुषे पुमान्॥ २३९॥**

पनम्। चिल्लदयिता पक्षिप्रिया, छिन्ननेत्रा वा। तयोः **खकामिनी**। प्रकीर्त्यते कथ्यते। स्त्री०। खे देहे, आकाशे वा कामिनी इति सप्तमीतत्पुरुषः॥ विषदिग्धपशोर्मांसे विषेण लिप्तमृगादेर्मांसे। रसोनके लशुने। "गन्धाकृतिरसैस्तुल्यः सूक्ष्मनालः पलाण्डुना" इत्युक्तलक्षणे मूलभेदे च। पु०। **गृञ्जनम्**। न०। गृञ्जते भक्ष्यत्वेन कथ्यते रोगेषु। गृजि—ध्वनौ। ल्युट्प्रत्ययः। "अथ गृञ्जनम्। विषदिग्धपशोर्मांसे क्लीबं पुंसि रसोनके" इति मेदिनी॥ २३६॥ गह्वरे निकुञ्जे। दुःखे पीडायाम्। वने कानने। तथा दुर्गमे। दुष्प्रवेशे च त्रि०। **गहनम्**। न०। गाह—विलोडने। युच् प्रत्ययः। पृषोदरादित्वात् ह्रस्वः। "गहनं कलिले त्रिषु। नपुंसकं गह्वरे स्याद्दुःखकाननयोरपि" इति मेदिनी॥ अम्बुदः मेघः। मुस्ता स्वनामाख्यात औषधभेदः तयोः। तथा दार्ढ्ये काठिन्ये विस्तारे ओघे देहे लौहमुद्गरे कफे अभ्रके निविडे सान्द्रे पूर्णे दृढे च **घनः**। पु०। वाद्यं कांस्यतालादिवाद्यम्। तत्र च। **घनम्**। न०। हन—वधे। अप् प्रत्ययः। घनादेशः। "घनं स्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः। ना मुस्तादौ वदार्ढ्येषु विस्तारे लौहमुद्गरे। त्रिषु सान्द्रे दृढे च" इति मेदिनी॥ फलकं स्वनामाख्यातमस्त्रम्। "शरीरावरकं शस्त्रं चर्म इत्यभिधीयते" इति। त्वक् वल्कलं, चर्म वा तयोः तथा रक्तधरायां कृत्तौ इन्द्रियभेदे **चर्म**। स्यात्। न०। चर—गतौ। मनिन् प्रत्ययः। "चर्म स्याद्वल्कलत्वचोः इति विश्वः॥ ॥ २३७॥ वस्त्रं चीनदेशोद्भववसनम्। व्रीहिभेदः कङ्गुधान्यविशेषः। तयोश्च। तथा मानसेशाद्दक्षपूर्वे चीनदेशः प्रकीर्तितः" इत्युक्ते देशे तद्देशस्थे जने तन्त्रोक्ते तद्देशाचारभेदे च तथा सूत्रे मृगभेदे च। पु०। पताकायां सीसके च **चीनः**। पु०। चि—चयने। नक् प्रत्ययः। पृषोदरादित्वाद्दीर्घः। "चीनो देशांशुकव्रीहिभेदे तन्तौ मृगान्तरे" इति मेदिनी। लक्ष्म लक्षणम्। पताका वंशोपरि देयं त्रिकोणाकारं वस्त्रखण्डं तयोश्च। **चिह्नम्**। न०। चिह्न-लक्षणे। अच् प्रत्ययः। चह—प्रतारणे। नप्रत्ययः। उपधाया इत्त्वं वा। "चिह्नं लक्ष्मपताकयोः" इति मेदिनी॥ विष्णुः श्रीकृष्णः। भुजगः सर्पः। कुलालः कुम्भकारः। ग्रामजाली ग्रामजालिकः। क्वचित्तु "ग्रामयाजिनः" इति दृश्यते। तेषु। तथा चक्रवाके सूचके तैलिकभेदे चक्रमर्दे चक्रवर्तिनि व्यालनखे खरे चक्रवति। त्रि०। **चक्री**। पु०। चक्रमस्त्यस्येति इनि प्रत्ययः। "चक्री तैलिकमित्कोककुलालाजामिसूचके" इति मेदिनी॥ २३८॥ कम्प्रे कम्पान्विते। पु०। कम्पे गात्रादिकम्पे, वेपथौ च। तथा भ्रमणे च **चलनम्**। न०।

**निम्बेऽपि छर्दनं वान्तौ जवनो देशवेगिनोः ।**
**बुद्धे जिनो जित्वरे च जीवनं वर्तनाम्भसोः ॥ २४० ॥**
**शूरे दातरि च त्यागी व्रतिशोच्यौ तपस्विनौ ।**
**तपनो नरके भानौ विरलेऽल्पे कृशे तनुः ॥ २४१ ॥**

चल—प्रेषणे, गतौ वा । ल्युट्प्रत्ययः । "चलनं भ्रमणे कम्पे कम्प्रे तु वाच्यलिङ्गकम्" इति मेदिनी ॥ वस्त्रघर्घरी वस्त्रैः कृतघण्टिका । वस्त्रकृत स्वरभेद इति वा । तस्याम् । तथा वारीभेदे च **चलनी** । स्त्री० । चल—कम्पने । ल्युट्—ङीप्प्रत्ययौ च । "चलनी वस्त्रघर्घर्यां वारीभेदेऽपि च क्वचित्" इति मेदिनी ॥ भूर्जे भूर्जवृक्षे । फलकपाणौ फलकास्त्रवति । तथा त्वग्रूपे चर्मवति । भृङ्गरोटे कदल्यां च **चर्मी** । पु० । चर्म फलकमस्त्यस्य । व्रीह्यादित्वादिनिः । चर्मी फलकपाणौ स्याद्भूर्जे भृङ्गरिटावपि'' इति मेदिनी ॥ अलम्बुषे लज्जालुवृक्षे । पु० । स्वर्वेश्यायाम् । स्त्री० ॥ २३९ ॥ निम्बे अरिष्टवृक्षे । वान्तौ वमने । अपिशब्दात् मदनवृक्षे च **छर्दनम्** । न० । छर्द—वमने । णिच्—ल्युट्प्रत्ययौ । "छर्दनं वमने क्लीबं निम्बालम्बुषयोः पुमान्" इति मेदिनी ॥ देशः देशविशेषः । वेगी वेगवान्, शीघ्रगः तयोः । तथा घोटके जातिभेदे च **जवनः** । पु० जुरंहसि, गतौ वा । युच्प्रत्ययः । "जवनं स्यात्तु वेगेऽपि हये ना वेगिनि त्रिषु'' इति मेदिनी ॥ बुद्धे सम्यक्सम्बुद्धे । जित्वरे जयशीले । चकारात् विष्णौ अर्हति च **जिनः** । पु० । जयति संसारम् । जि—जये । नक्प्रत्ययः । "जिनोऽर्हति च बुद्धे च पुंसि स्याज्जित्वरे त्रिषु'' इति मेदिनी ॥ वर्तनं वृत्तिः, प्राणधारणम् । अम्भः जलम् । तयोः तथा मज्जनि हैयङ्गवीने पुत्रे जीवकौषधे वायौ क्षुद्रफलकवृक्षे च **जीवनम्** । न० । जीव्यतेऽनेन । जीव—प्राणधारणे । करणे ल्युट्प्रत्ययः । जीवयति णिच् प्रत्ययो वा । "जीवनं वर्तने जीवप्राणधारणयोर्जले'' इति मेदिनी ॥२४०॥ शूरे वीरे, विक्रमवति वा । दातरि दानशीले । चकारात् वर्जनशीले कर्मफलत्यागिनि च "यस्तु कर्मफलत्यागी स त्यागी त्वभिधीयते'' इति । **त्यागी** । त्रि० । त्यज—दाने । घिणुन्प्रत्ययः । "त्यागी दातरि शूरे'' इति मेदिनी ॥ व्रतिश्चान्द्रायणादिव्रतधारणः । शोच्य अनुकम्पनीयः । तयोः । तथा तापसे दीने प्रशस्ततपोवति च घृतकरञ्ज मत्स्यभेदे चटके च । पु० । **तपस्वी** । त्रि० । तपोऽस्त्यस्येति विनिप्रत्ययः । "तपस्वी तापसे चानुकम्प्ये त्रिषु'' इति मेदिनी । नरके स्वनामाख्याते निरयभेदे । भानौ सूर्ये । तथा तापे ग्रीष्मे ऋतौ भल्लातकवृक्षे अर्कवृक्षे क्षुद्राग्निमन्थवृक्षे सूर्यकान्तमणौ च **तपनः** । पु० । तप—उपतापे । ल्युट् प्रत्ययः । "तपनोऽरुष्करेऽपि स्याद्भास्करे निरयान्तरे'' इति मेदिनी । विरले अनिबिडे । अल्पे क्षुद्रे, ईषदर्थे वा । कृशे अल्पे, सूक्ष्मे वा । तथा देहे मूर्तौ च । स्त्री० । वा ङीप् । तन्वी, तनूश्च । **तनुः** । स्त्री० । तन—विस्तृतौ । उप्रत्ययः । "तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे''इति मेदिनी॥२४१॥

क्रीडादौ देवनं ना ऽक्षे द्विजन्मा दन्तविप्रयोः ।
दानं गजमदे त्यागे खण्डने रक्षणेऽपि च ॥ २४२ ॥
दर्शनं वर्णमुकुरचक्षुःशास्त्रोपलब्धिषु ।
स्त्री दीर्घकोष्ठ्यां दुर्नामाऽर्शसि द्युम्नं बले धने ॥ २४३ ॥
धन्वा मरौ धन्वचापे धावनं गतिशौचयोः ।
निर्भर्त्सनं खलीकारालक्तयोरथ नन्दनम् ॥ २४४ ॥
देवोद्याने सुते पुंसि नग्नौ क्षपणवन्दिनौ ।
श्रुतौ दृष्ट्यां निशमनं खगङ्गाऽपि नलिन्यथ ॥ २४५ ॥

क्रीडादौ परिहासादौ, खेलने वा । अक्षे पाशके । तथा दीप्तौ व्यवहारे जिगीषायां स्तुतौ लीलोद्याने पद्मे च । पु० । **देवनं** । न० । दीव्यतेऽनेन । दिवजिगीषायाम्, व्यवहारे वा । करणे ल्युट्प्रत्ययः । दीव्यत्यत्राऽऽधारे ल्युट् वा । "देवनं व्यवहारे स्याज्जिगीषाक्रीडयोरपि । देवनोऽक्षेषु पुंसि स्यात्" इति मेदिनी ॥ दन्तः दशनः, चर्वणसाधनास्थिविशेषश्च । द्विजः ब्राह्मणः तयोः । तथा अण्डजे च **द्विजन्मा** । पु० । द्वे जन्मनी यस्य । "द्विजन्मा दशने विप्रे" इति मेदिनी ॥ गजमदे हस्तिमदजले । त्यागे वर्जने, दाने वा । खण्डने छेदने । रक्षणे पालने । अपिशब्दात् शुद्धौ च **दानम्** । न० । दो—छेदे, खण्डने च । दै—शुद्धे । दा—दाने वा । ल्युट्प्रत्ययः । "दानं गजमदे त्यागे पालनच्छेदशुद्धिषु" इति मेदिनी ॥ २४२ ॥ वर्णः शुक्लादिरूपभेदः । मुकुरः दर्पणम् । चक्षुः नेत्रम् । शास्त्रं हितानुशासनम्, आध्यात्मज्ञानोपायं, न्यायादिशास्त्रं वा । उपलब्धिर्ज्ञानं, प्राप्तिर्वा । "नाभाव उपलब्धेः" इति वेदान्तसूत्रम् । तेषु च । तथा स्वप्ने बुद्धौ धर्मे च **दर्शनम्** । न० । दृश—चाक्षुषज्ञाने । ल्युट्प्रत्ययः । "दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु । शास्त्रदर्शनयोश्च" इति मेदिनी । दीर्घकोष्ठ्यां दीर्घकोष्ठिकायाम् । अर्शसि गुदस्थरोगभेदे च । न० । **दुर्नामा** । पु० । दुष्टं निन्दितं नामास्य ङीप् । "दुर्नामा क्लीबमर्शसि । स्याद्दीर्घकोषायां स्त्री" इति मेदिनी ॥ बले शक्तौ । धने वित्ते च । **द्युम्नम्** । न० । दिवं मनति । म्ना—अभ्यासे । कप्रत्ययः । "द्युम्नं वित्ते बलेऽपि च" इति मेदिनी ॥ २४३ ॥ मरौ मरुदेशे । पु० । चापे धनुषि । न० । तथा स्थले च **धन्वा** । पु० । सौत्रसिद्धम् । धन्व—गतौ कनिन्प्रत्ययः । "धन्वा तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च" इति मेदिनी ॥ गतिः शीघ्रगमनम् । शौचं शोधनम् । तयोश्च । **धावनम्** । न० । धाव—जवे । ल्युट्प्रत्ययः । "धावनं गमने शुद्धौ पृश्निपर्ण्यां तु धावनी" इति मेदिनी ॥ खलीकारः अपकारः, अपकारवचनं वा । तत्करणे हि अखलोऽपि खलो भवति । अलक्तः लाक्षारसः तयोः । **निर्भर्त्सनम्** । न० । निर्पूर्वभर्त्स—अधिक्षेपे । ल्युट्प्रत्ययः । निर्भर्त्सनं खलीकारेऽलक्तकेऽपि नपुंसकम्" इति मेदिनी ॥ २४४ ॥ देवोद्याने नन्दनोद्याने । न० । सुते पुत्रे । तथा हर्षके भेके पर्वतभेदे । पु० । बहुक्षीरास्तथा गावो नन्दनं नन्दने प्रिये" । इत्युक्ते षष्टिवर्षमध्ये वत्स-

**ग्रन्थिप्रस्तावयोः पर्व विषुवत्प्रभृतिष्वपि ।**
**प्रतिमानं प्रतिच्छाया गजदन्तान्तरालयोः ॥ २४६ ॥**
**पाकस्थाने कुलालस्य वाते च पवनः पुमान् ।**
**हरीतकी राक्षसी च पूतनाऽथ वदालके ॥ २४७ ॥**
**पाठीनो गुग्गुलुद्रौ च रक्षोवृक्षौ पलाशिनौ ।**
**फाल्गुनो मासि पार्थे च स्त्री विदग्धा च वाणिनी ॥ २४८ ॥**

रभेदे च । नन्दकारके च । त्रि० । **नन्दनम्** । न० । नन्दयतीति । नदि–सन्तोषे । णिच्–ल्युट्प्रत्ययौ । "नन्दनं वासवोद्याने नन्दनो हर्षके सुते" इति मेदिनी ॥ क्षपणः निर्ग्रन्थः संन्यासिभेदः । वन्दी स्तुतिपाठकः तयोः । तथा विवस्त्रे स तु पञ्चविधो भवति । "द्विकच्छः कच्छशेषश्च मुक्तकच्छस्तथैव च । एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः" इति । **नग्नः** ।त्रि० नज–व्रीडायाम् । क्तप्रत्ययः । "नग्नो वन्दिक्षपणयोः पुंसि त्रिषु विवाससि" इति मेदिनी ॥ श्रुतौ श्रवणे । दृष्टयां दर्शने च । **निशमनम्** । न० । निपूर्वशम–शान्तौ, आलोचने वा । णिच्–ल्युट् प्रत्ययौ । वा ह्रस्वः । "निशामनम्" अप्यत्र । "निशमनमुक्तं दृष्टौ श्रुतौ" इति मेदिनी ॥ खगङ्गा खं व्योम तत्स्थिता या गङ्गा नदी । आकाशगङ्गा इत्यर्थः । अपिशब्दात् पद्मसङ्घे पद्म–युक्तदेशे नलिकायां च **नलिनी** । स्त्री० । नलाः सन्त्यस्याः । इनिप्रत्ययः । "नलिनी पद्मिनी व्योमनिम्नगा कमलाकरे । नपुंसकं नीलिकायां न पुंसि सरसीरुहे" इति मेदिनी ॥ ॥ २४९ ॥ ग्रन्थिः वंशादिसन्धिः, बन्धनं वा । प्रस्तावः अवसरः, प्रसङ्गो वा तयोः । विषु–वत् समरात्रिदिनकालकः अयनांशक्रमेण रवेः तुलामेषादिराशिसङ्क्रान्तिभेदः । समरात्रिदिनप्र–भृतियेषां तेषु पञ्चसु कालेषु । "चतुर्दश्यष्टमी चैव अमावस्या च पूर्णिमा । पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च" इत्युक्तम् । अपिशब्दात् उत्सवे लक्षणभेदे प्रस्तारे ग्रन्थविच्छेदनस्थाने च **पर्व** । न० । पॄ–पालने, पूर्तौ । वनिप्प्रत्ययः । "पर्व क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि" इति मेदिनी ॥ प्रतिच्छाया प्रतिमा । तत्र । गजदन्तः हस्तिदशनः, कुम्भस्याधोभागो वा । अन्तरालं तयोर्मध्यस्थानं तयोः । तथा प्रतिबिम्बे च **प्रतिमानम्** । न० । प्रतिमीयतेऽनेन । प्रतिपूर्वमि–क्षेपे । मा माने वा । ल्युट्प्रत्ययः । "प्रति–मानं प्रतीच्छायागजदन्तान्तरालयोः" इति मेदिनी ॥ २४६ ॥ कुलालस्य कुम्भकारस्य पाक–स्थाने आमघटादिपाकस्थाने । वाते वायौ । चकारात् धान्यादेः शोधने बहुलीकरणे व्यापारे च **पवनः** । पु० । पु–शोधे । कर्तरि ल्युट्प्रत्ययः । भावे करणे आधारे च ल्युट् वा ॥ "पवनं कुम्भकारस्य पाकस्थाने नपुंसकम् । निष्पावमरुतोः पुंसि" इति मेदिनी ॥ हरीतकी स्वनामाख्यातः औषधभेदः । तत्र । राक्षसी बालकमातृकाभेदः । "पूतना जम्भकादयः" इति । तस्याम् । चकारात् गन्धमांस्यां बकासुरभगिन्यां रोगभेदे च **पूतना** । स्त्री० । पूतं करोति पूतशब्दात् णिच–ल्युट्प्रत्ययौ । "पूतना तु हरीतक्यां दानवीरोगभेदयोः" इति मेदिनी ॥ वदालके मत्स्यभेदे ॥ २४७ ॥ गुग्गुलुद्रौ स्वनामाख्याते वृक्षे । चकारात् पाठके ।

**वर्धमानः प्रश्नभेदशरावैरण्डविष्णुषु ।**
**सेना नदी च वाहिन्यौ छेदे वृद्धौ, च वर्धनम् ॥ २४९ ॥**
**भुवनं विष्टपे तोये भिन्नं दीर्णे विशेषिते ।**
**जन्माश्रयश्च भवनं भाजनं पात्रयोग्ययोः ॥ २५० ॥**
**भृतिकाञ्चनयोर्भर्म मलिनं दूषितेऽसिते ।**
**मानं प्रमाणे तौल्ये च मीनो राश्यन्तरे झषे ॥ २५१ ॥**

त्रि० । पण्यवीथ्यां हट्टे च । स्त्री० । **पाठीनः ।** पु० । पाठिं पृष्ठं नमयति । नम—नमने डप्रत्ययः । दीर्घः । "पाठीनो मीनभेदे स्यात्पाठके गुग्गुलुद्रुमे" इति मेदिनी ॥ रक्षः राक्षसः । वृक्षः द्रुमः । तयोश्च । **पलाशी ।** पु० । पलाशानि सन्त्यस्य । इनिप्रत्ययः । "पलाशी वृक्षरक्षसोः" इति मेदिनी ॥ मासि चैत्रावधिके द्वादशे मासे । पार्थे अर्जुन-वृक्षे । चकारात् मध्यमपाण्डवे अश्विन्यवधिके एकादशे द्वादशे नक्षत्रे च **फाल्गुनः ।** पु० । फल—निष्पत्तौ, भेदने वा । उनन् प्रत्ययः । गुक् च । स्वार्थे प्रज्ञाद्यण् । "फाल्गुनस्तु गुडाकेशे नदीजार्जुनभूरुहे" इति मेदिनी ॥ विदग्धा निपुणा, पण्डिता वा । तस्याम् । चकारात् वाक्ये तद्देवतायां च । **वाणिनी ।** स्त्री० । वण—शब्दे । इणुप्रत्ययः । वा ङीप् । "वाणिनी नर्तकीमत्तविदग्धवनितासु च" इति विश्वः ॥ २४८ ॥ प्रश्नभेदः प्रश्नविशेषः । शरावः मृन्मयः पात्रभेदः, अथवा कुडवद्वयपरिमाणम् । एरण्डः स्वनामाख्यातो वृक्षः विष्णुः । श्रीकृष्णः तेषु । तथा वृद्धिशीले त्रि० । धनिनां गृहभेदे देशभेदे नगरभेदे च **वर्धमानः ।** पु० । वर्ध—पूरणे । शानच् प्रत्ययः । "वर्धमानः प्रश्नभेदे शरावैरण्डविष्णुषु" इति मेदिनी ॥ सेना सैन्यम् । नदी गङ्गा । तयोः । चकारात् तरङ्गिण्यां च **वाहिनी** । स्त्री० । वाहोऽस्त्यस्याः । इनिप्रत्ययः । ङीप् । वह- प्रापणे । णिनिप्रत्ययो वा । "वाहिनी स्यात्तरङ्गिण्यां सेना सैन्यप्रभेदयोः" इति मेदिनी ॥ छेदे छेदने । वृद्धौ वृद्धिकारके । त्रि० । "करोमि क्षितिवर्धनम्" इति भट्टिः । चकारात् पूरणे वृद्धियुक्ते च **वर्धनम् ।** न० । वृधु—वर्धने । ल्युट्प्रत्ययः । वृध—वर्धने । णिच्-ल्युट्-प्रत्ययौ च । वर्धनं छेदने वृद्धौ वारिधान्यां तु वर्धनी" इति विश्वः ॥ २४९ ॥ विष्टपे जगति । तोये सलिले । तथा आकाशे जने चतुर्दशसङ्ख्यायां च **भुवनम् ।** न० । भवत्यत्र । भू—सत्तायाम् । क्युन्प्रत्ययः । "भुवनं विष्टपेऽपि स्यात्सलिले गगने जने" इति मेदिनी ॥ दीर्णे विदारिते । विशेषिते भेदिते । तथा मिश्रिते सङ्गते अन्ये प्रस्फुटिते च **भिन्नम् ।** न० । भिद—द्विधाकरणे । क्तप्रत्ययः । "भिन्नमन्यार्थवचने सङ्गते दारिते स्फुटे" इति विश्वः ॥ जन्म उत्पत्तिः । आश्रयः गृहम् । तयोः । चकारात् भावे सत्तायां च **भवनम् ।** न० । भू—सत्तायाम् । आधारे ल्युट्प्रत्ययः । "भवन स्याद्गृहे भावे" इति ॥ मेदिनी पात्रं भोजनयोग्य मत्रम् । योग्यः योगार्हः उचितो वा तयोश्च । **भाजनम् ।** न० । भाज्यतेऽनेन । भाज—पृथक्क[illegible] । ल्युट् प्रत्ययः । "भाजनं पात्रयोग्ययोः" इति मेदिनी ॥ २५० ॥ भृतिर्भरणं, पोषणं [illegible] काञ्चनं

**मदनाः सिक्थधुस्तूरतरुभेदमनोभवाः ।**
**मुनिर्वाचंयमे बुद्धे छन्दश्चम्पा च मालिनी ॥ २५२ ॥**
**मातुलानी तु भङ्गायां मातृभ्रातृस्त्रियामपि ।**
**राशौ युग्मे च मिथुनं विष्णवली मधुसूदनौ ॥ २५३ ॥**
**यापनं स्यान्निरसने कालक्षेपे च वर्तने ।**
**चतुःक्रोश्यां च योगे च योजनं स्यात्तु वाहने ॥ २५४ ॥**

स्वर्णे तयोः । तथा भारे नाभौ धुस्तूरे च **भर्म** । न० । भृ—भरणे, धारणे वा । मन्प्रत्ययः, मनिन्प्रत्ययो वा । "भर्मस्वर्णे भृते भारे" इति विश्वः । दूषिते मलयुक्ते । असिते कृष्णे । तथा ऋतुमत्याम् । स्त्री० । टङ्कणे दोषे च **मलिनम्** । त्रि० । मलमस्त्यस्येति अस्त्यर्थे इनच्प्रत्ययः । "मलिनं दूषिते कृष्णे ऋतुमत्यां तु योषिति" इति मेदिनी ॥ प्रमाणे परिमाणे । तौल्ये हस्ततुलाप्रस्थाद्यैर्द्रव्यपरिच्छेदे । चकारात् गानाङ्गे कालक्रियायां तालविरामोपलक्षिते कालव्यापारे च **मानम्** । न० । मा—माने । ल्युट्प्रत्ययः । "मानश्चित्तोन्नतग्रहे । क्लीबं प्रमाणे प्रस्थादौ" इति मेदिनी ॥ राश्यन्तरे मेषादितो द्वादशे राशौ । झषे मत्स्ये । तथा विष्णोरवतारभेदे च **मीनः** । पु० । मी—वधे, गत्यां च । "मीनो मत्स्ये राश्यन्तरे झषे" इति मेदिनी ॥२५१॥ सिक्थः मधूच्छिष्टम् । धुस्तूरः स्वनामाख्यातो वृक्षः । तरुभेदः द्रुमविशेषः । मनोभवः कामदेवः । तेषु च । **मदनः** । माद्यत्यनेन । मद—मदे, गर्वे, तर्पणे च । करणे ल्युट्प्रत्ययः । "मदनः स्मरवसन्तद्रुभेदधुस्तूरसिक्थके" इति मेदिनी ॥ वाचंयमे मितभाषिणि, मौनावलम्बिनि च । बुद्धे सम्यक्संबुद्धे । तथा वीतरागादौ स्थिरचित्ते जने "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते" इति । सप्तसंख्यायां च **मुनिः** । पु० । मन—बोधे । इन्प्रत्ययः । उत्वं च । "मुनिः पुंसि वसिष्ठादौ वङ्गसेनतरौ जिने" इति मेदिनी ॥ छन्दः पञ्चदशाक्षरपादकः छन्दोभेदः । चम्पा स्वनामाख्याता पुरी । तयोः । तथा मालाकारे माल्यवति । त्रि० । मालाकारपत्न्यां गौर्यां मन्दाकिन्यां कण्वाश्रमान्तिकस्थे नदीभेदे अग्निशिखावृक्षे दुरालभायां च **मालिनी** । स्त्री० । माला शिल्पमस्त्यस्येति । इनिप्रत्ययः । ङीप् । "मालिनी मातृकावृत्तभिदोर्मालिकयोषिति" इति मेदिनी ॥ २५२ ॥ भङ्गायां मातुल्याम् । मातृभ्रातृस्त्रियाम् । अपिशब्दात् कलापे च **मातुलानी** । स्त्री० । इन्द्रवरुणेति ङीप् । आनुक् च । मातुलाटाप् । "मातुलानी कलापे स्याद्भङ्गायां मातुलस्त्रियाम्" इति मेदिनी ॥ राशौ मेषादितस्तृतीये राशौ । युग्मे स्त्रीपुंसयोश्च । **मिथुनम्** । न० । मिथ—वधे मेधायां च । उनन्प्रत्ययः । किञ्च । "मिथुने राशिभेदे स्यान्मिथुनं दम्पतीयुगे" इति विश्वः ॥ विष्णुः श्रीकृष्णः । मधुं तन्नामकासुरं सूदयति, मधुजीवानां शुभाशुभकर्मज्ञानदानेन सूदयति वा । "भक्तानां कर्मणां चैवसूदनान्मधुसूदनः" इति । अलिर्भ्रमरः । मधु माध्वीकं सूदयति भक्षयति । तयोः । मधु इव सूद्यते भक्ष्यते इति । पालङ्कीशाके च **मधुसूदनः** । पु० । मधुशब्दोपपदसूद—आश्रये, हनने च । ल्युप्रत्ययः । ल्युट् ङीप् वा । "मधूसूदनसंज्ञा च भ्रमरे वनमालिनि" इति विश्वः । "मधुसूदनस्तु पुंसि भ्रमरे वनमालिनि" इति मेदिनी ॥ २५३ ॥ निरसने प्रतिक्षेपे, परित्यागे च । कालक्षेपे कालादौ

**गतौ च यानं योनिस्तूत्पत्तिस्थाने भगेऽपि च।**
**रसनन्तु ध्वनौ स्वादे रसज्ञारास्नयोः स्त्रियाम्॥ २५५॥**
**यक्षे चन्द्रे च राजा स्यात् रक्तः कामी च रागिणौ।**
**गोपित्ते रोचना कूटशाल्मलौ रोचनः पुमान्॥ २५६॥**
**निशा हरिद्रा रजनी छेदे भूर्जे च लेखनम्।**
**राशीनामुदयो लग्नं सक्तलज्जितयोस्त्रिषु॥ २५७॥**

क्षेपणे वर्तने च **यापनम्**। न०। या–गतौ। णिच्–ल्युट्प्रत्ययौ। "यापनं वर्तने कालक्षेपे निरसनेऽपि च" इति मेदिनी॥ चतुःक्रोश्यां क्रोशचतुष्टयात्मके। योगे संयोगे। चकारात् संयोगकरणे च। **योजनं** स्यात्। न०। युज–योगे, युतौ च। भावादौ ल्युट्प्रत्ययः। योजनं परमात्मनि। चतुष्क्रोश्यां च योगे" इति मेदिनी॥ वाहने गमनसाधने रथादौ॥ २५४॥ गतौ गमने। चकारात् उपचितशक्तेः राज्ञः मूलराष्ट्रादिरक्षां कृत्वा रिपोरास्कन्दनाय गमने च **यानम्**। न०। या–गतौ। भावे ल्युट्प्रत्ययः। करणे ल्युट् वा। "यानं स्याद्वाहने गतौ" इति मेदिनी॥ उत्पत्तिस्थाने मण्यादीनामुत्पत्तिस्थाने आकरे। भगे स्त्रीणामसाधारणचिह्ने। अपिशब्दात् कारणे। जले। तद्दैवतके पूर्वफल्गुनिनक्षत्रे च। स्त्रीत्वे वा ङीप्। **योनिः**। पु०। यु–मिश्रणे, अमिश्रणे च। निप्रत्ययः। "योनिः स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे" इति मेदिनी॥ ध्वनौ नादे। स्वादे रसानुभवे। रसज्ञा जिह्वा, रसज्ञानसाधनं वा। रास्ना स्वनामाख्याता लता। तयोः। स्त्री०। **रसनम्**। न०। रस–आस्वादे। ल्युट्प्रत्ययः। करणे ल्युट् वा। "रसनं स्वादने ध्वनौ। जिह्वायाञ्च न पुंसि स्याद् रास्नायां रसना स्त्रियाम्" इति मेदिनी॥ २५५॥ यक्षे कुबेरे। चन्द्रे शीतरश्मौ। चकारात् नृपे शुचौ क्षत्रिये इन्द्रे च। पूर्वपदस्थः उत्तरपदस्थश्च समभिव्याहृतपदार्थश्रेष्ठवाचकः। यथा "राजमाषः मुनिराज" इत्यादि। **राजा**। स्यात्। पुं०। राज–दीप्तौ। कनिन्प्रत्ययः। "राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ। यक्षे शक्रे च पुंसि स्यात्" इति मेदिनी॥ रक्तः अनुरक्तः। तस्मिन्। कामी कामुकः। तस्मिन्। चकारात् रागवति। रतियुक्ते। गीत्यङ्गे। स्वरभेदे च। रागी। त्रि०। रागोऽस्त्यस्य। इनि प्रत्ययः। "रागी रक्तविकामुके" इति मेदिनी। गोपित्ते गोरोचनायाम्। तथा मनःशिलायाम्। आमलक्याम्। श्वेतत्रिवृति। गन्धद्रव्यभेदे। उत्तमायां स्त्रियाञ्च। **रोचना**। स्त्री०। रोचयतीति। रुच–प्रीतौ, प्रकाशे च। कर्तरि संज्ञायां ल्युट् प्रत्ययः। अजादित्वाट्टाप्। "रोचना रक्तकह्लारे गोपित्ते वारयोषिति" इति मेदिनी॥ कूटशाल्मलौ कूटशाल्मलिवृक्षे। तथा शोभाञ्जने। पलाण्डौ। करञ्जे। अङ्कोटे। आरग्वधे। दाडिमे च **रोचनः**। पु० रोचते इति। रुच–प्रीतौ, प्रकाशे च। ल्युट्प्रत्ययः। रुचयतीति वा ल्युट्। "रोचनः कूटशाल्मल्यां पुंसि स्याद् रोचके त्रिषु" इति मेदिनी॥ २५६॥ निशा रात्री। हरिद्रा स्वनामाख्यातः औषधिभेदः। तयोः। तथा जतुकायां च। **रजनी**। स्त्री०। रज्यतेऽत्र।

**योषिज्जिह्वा च ललना लाञ्छनं नामचिह्नयोः ।**
**रक्ते वितानमुल्लोचे विलग्नं मध्यलग्नयोः ॥ २५८ ॥**
**दैवानिष्टफले सक्तौ व्यसनं निष्फलोद्यमे ।**
**स्वतन्त्रता च व्युत्थानं वामनौ विष्णुदिग्गजौ ॥ २५९ ॥**

रञ्ज- रागे । कनिप्रत्ययः । वा ङीप् । रजनिरप्यत्र । "रजनी नीलिनीरात्रिहरिद्राजतुकाः च" इति मेदिनी ॥ छर्दे छर्दने । क्वचित्तु "छेदे" इति पाठः । भूर्जे भूर्जपत्रे । चकारा पत्रादौ वर्णादिविन्यासे । लेखनसाधने । स्त्रियां ङीप् । **लेखनम्** । न० । लिख—लिखने । ल्युट् प्रत्ययः । आधारे करणे च वा ल्युट् । "लेखनं छर्दने भूर्जे लिपिन्यासे" इति मेदिनी ॥ राशी नामुदये मेषादीनां राशीनाम् उदयरूपे । सक्तः । संसक्तः । लज्जितः जातलज्जः तयोः त्रि० । तथा स्तुतिपाठके । लग्न इव इवार्थे कन्प्रत्ययः । प्रतिभुवि च । "खादको वित्तहीनः स्यात् लग्नको वित्तवान् यदि" इति स्मृतिः ॥ **लग्नम्** । न० । लस्ज—व्रीडायाम् । क्तप्रत्ययः । तस्य नः । लगे—सङ्गे । क्तप्रत्ययः । पृषोदरादित्वात् साधुः । "लग्नं राश्युदये क्ली सक्तलज्जितयोस्त्रिषु" इति मेदिनी ॥ २५७ ॥ योषित् नारी । जिह्वा रसना । तयोः । तथ चालने । केलौ । वाले । सालवृक्षे च । पु० । **ललना** । स्त्री० । लल—इच्छायाम् । ल्युट्प्रत्ययः । लड—उत्पीडने, जिह्वाचालने, भाषणे वा । वुन्प्रत्ययः । डस्य लश्च । "ललना कामिनी नारीभेदजिह्वासु योषिति" इति मेदिनी ॥ नामनि । चिह्ने । तथा अङ्कने च । **लाञ्छनम्** । न० । लाञ्छ्यते । लाछि—अङ्कने । कर्मणि ल्युट्प्रत्ययः । "लाञ्छनं नामचिह्नयोः" इति मेदिनी ॥ रक्ते लोहितवर्णे । उल्लोचे विताने । तथा यज्ञे । विस्तारे । वृत्तविशेषे । न० मन्दे । तुच्छे च । त्रि० । **वितानम्** । न० । पु० । विपूर्वकतन—विस्तृतावित्यस्माद् घ प्रत्ययः । "वितानो यज्ञ उल्लोचे विस्तारे पुन्नपुंसकम् । क्लीबं वृत्तविशेषे स्यात् त्रिलिङ्गो मन्द तुच्छयोः" इति मेदिनी॥ मध्यं मध्यभागम् । लग्नं मेषादिराशीनामुदयम् । तयोः। तथा संलग्ने कटौ च । त्रि० । **विलग्नम्** । न० । विशेषेण लग्नम् । लस्ज—सङ्गे । क्तप्रत्ययः । तस्य नः जस्य गश्च । "विलग्नं न स्त्रियां मध्ये त्रिषु स्याल्लग्नमात्रके" इति मेदिनी ॥ २५८ ॥ दैव निष्टफले दैवादिकृते उपद्रवे । सक्तौ कामजाते कोपे । निष्फलोद्यमे निरर्थकव्यायामे । तः विपत्तौ । अंशे । स्त्रीभोगमद्यपानादौ दोषे च । **व्यसनम्** । न० । विपूर्वअस—ग्रहणे, दीप्तौ गतौ च । ल्युट्प्रत्ययः । "व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु । दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे" इति मेदिनी ॥ स्वतन्त्रता स्वाधीनत्वम् । तस्मिन् । चकारात् विरोधकरणे प्रतिरोधने । नृत्यभेदे । विशेषेण उत्थाने च । **व्युत्थानम्** । न० । वि—उद्—पूर्वकस्थ गतिनिरोधे । ल्युट्प्रत्ययः । "व्युत्थानं स्वातन्त्र्यकृत्ये विरोधाचरणेऽपि च" इति मेदिनी विष्णुर्हरिः । दिग्गजः दक्षिणदिङ्नागः । तयोः । खर्वः कुब्जः । तस्मिन् । चकार अङ्कोटवृक्षे । पाणिनिसूत्रस्य काशिकावृत्तिकारके पंडितभेदे च । ह्रस्वे । त्रि० । त्रि

**खर्व्वश्चाऽथ फले शुष्के वानं स्यूते कटे गतौ ।**
**वृषपर्वा शिवे दैत्ये वेष्टनं मुकुटे वृतौ ॥ २६० ॥**
**वर्ष्माकारेऽपि विषयी कामिनि क्लीबमिन्द्रिये ।**
**वृक्षादनी स्याद्वन्दायां स्त्रियां कुठारके पुमान् ॥ २६१ ॥**
**समालब्धे विभक्ते च विच्छिन्नं वाच्यलिङ्गकम् ।**
**लब्धे ज्ञाते स्थिते विन्नं वेदना ज्ञानपीडयोः ॥ २६२ ॥**

ङीप् । "वामनी मूर्तिमाददे" इति । **वामनः** । पु० । "वामनो नीचे खर्वे च त्रिषु पुंसि तु दिग्गजे । ह ावङ्कोटवृक्षे" इति मेदिनी ॥ २५९ ॥ फले शुष्कफले । शुष्के आतपादिना कृतशोषणे । स्यूते स्यूतिकर्मणि । कटे नडादिरचिते । गतौ गमने च । वनस्येदं, समूहो वा । अणूप्रत्ययः । वनसम्बन्धिनि । त्रि० । तत्समूहे च । न० । **वानम्** । न० । वन–याचने, उपतापे च । घञ्प्रत्ययः । "वानं शुष्कफले शुष्के स्यूति-कर्म्मकटे गतौ" इति मेदिनी ॥ शिवे महादेवे । दैत्ये असुरभेदे । तथा भृङ्गारवृक्षे । कशेरौ च **वृषपर्वा** । पु० । वृषे पर्व उत्सवो यस्य । वृषं बलकरं पर्व उत्सवो यस्य वेति बहुव्रीहिः । "वृष-पर्वा पुमान् दैत्यभेदेऽप्यन्धकसूदने" इति मेदिनी ॥ मुकुटे शिरोभूषणे । वृतौ वेष्टने । क्वचित्तु "गतौ" इति पाठः । तथा कर्णशष्कुल्याम् । उष्णीषे च । **वेष्टनम्** । न० । वेष्ट–वेष्टने । ल्युट्प्रत्ययः । "वेष्टनं कर्णशष्कुल्यामुष्णीषे मुकुटे वृतौ" इति मेदिनी ॥ २६० ॥ वर्ष्माकारे सुन्दराकारे, देहाकारे वा । वेशकारे इति क्वचित् पाठः । कामिनि विषयासक्ते । त्रि० । इन्द्रिये आत्मनो विषयोपलम्भीकरणे चक्षुरादौ । न० । अपिशब्दात् ज्ञाने । राज्ञि । कामदेवे । ध्वनौ च । पु० । **विषयी** । पु० । विषयोऽस्त्यस्य । इनि प्रत्ययः । "विषयी विषयासक्ते वाच्यवत् क्लीबमिन्द्रिये । पुंसि स्यात् नृपतौ कामदेवे वैषयिकेऽपि च" इति मेदिनी ॥ वन्दायां लताभेदे । कुठारके कुठारास्त्रे । पु० । "कुद्दालके" इति क्वचित् पाठः । तथा अश्वत्थवृक्षे । मधु-च्छत्रे । पियाले । विदारके च । पु० । **वृक्षादनी** स्यात् । स्त्री० । वृक्षमत्ति भिनत्ति वृक्षान्तरमत्ति भिनत्ति वा । अद–भक्षणे । ल्युट्प्रत्ययः । "वृक्षादनी तु वन्दायां विदारीकन्दके-ऽपि च" इति मेदिनी ॥ २६१ ॥ समालब्धे कुङ्कुमादिना कृतगात्रलेपने । विभक्ते कृतवि-भागे, पृथक्कृते च । तथा छेदने च । न० । **विच्छिन्नम्** । त्रि० । विपूर्व्वछिद–द्वैधी-करणे । क्तप्रत्ययः । विच्छिन्नं च समालब्धे विभक्ते चाभिधेयवत्" इति मेदिनी ॥ लब्धे प्राप्ते । ज्ञाते अवगते, अभिज्ञाते वा । स्थिते कृतस्थाने । तथा विचारिते च । **विन्नम्** । त्रि० । विद–लाभे, ज्ञाने च । क्तप्रत्ययः । "विन्नं विचारिते लब्धे" इति मेदिनी ॥ ज्ञाने सुखदुःखाद्यनुभवः । पीडा व्यथा, दुःखं वा । तयोः । तथा विवाहे च । "वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने" इति मनुः । **वेदना** । स्त्री० । विद–ज्ञाने । ल्युट्प्रत्ययः ।

**वर्त्तनी तर्कुपीठेऽपि स्त्रियां वर्त्तनवर्त्मनोः ।**
**वनश्वा जम्बुके व्याघ्रे विपन्नोऽहौ विपद्गते ॥ २६३ ॥**
**दैवशंसिनिमित्ते च शकुनं पुंसि पक्षिणि ।**
**चूडावान् कुक्कुटश्चापि शिखी शृङ्गारिणौ त्विमौ ॥ २६४ ॥**
**क्रमुकश्च सुवेशश्च पार्थेन्द्वोः श्वेतवाहनः ।**
**मयूरे भीष्मशत्रौ च शिखण्डयथ विहेठनम् ॥ २६५ ॥**

युच् वा । "वेदना ज्ञानदुःखयोः" इति मेदिनी ॥ २६२ ॥ तर्कुपीठे स्वनामाख्याते यन्त्रपीठभेदे । वर्त्तनं प्रवृत्तिः । वर्त्म मार्गः । तयोः । अपिशब्दात् वृत्तिमति । वर्त्तिष्णौ । वायसे । पु० । **वर्त्तनी** । स्त्री० । वर्त्यते पादावत्र । वृत—वर्त्तने, आधारे । ल्युट्प्रत्ययः । "वर्त्तनो वामने क्लीबं वृत्तौ स्त्री पेषणाध्वनोः । न पुंसि तुलनाख्यायां तर्कुपीठे च जीवने । वर्तिष्णौ त्रिषु" इति मेदिनी ॥ क्वचित् तर्कुपिण्डे इति दृश्यते । जम्बुके शृगाले । स्वनामाख्याते वृक्षे, श्योनाके वा । व्याघ्रे शार्दूले, जन्तुभेदे च । तथा गन्धमार्ज्जारे च । **वनश्वा** । पु० । वनस्य, वने वा अश्वा इव, इवार्थे बहुव्रीहिः । "वनश्वा गन्धमार्ज्जारे वन्यकः-व्याघ्रयोः पुमान्" इति मेदिनी ॥ अहौ सर्पे । विपद्गते विपद्युक्ते । तथा नष्टे च । **विपन्नः** । त्रि० । विपूर्वपद-गतौ । क्तप्रत्ययः । "विपन्नं विपदाक्रान्ते त्रिषु पुंसि भुजङ्गमे" इति मेदिनी ॥ २६३ ॥ दैवशंसिनिमित्ते शुभाशुभसूचकनिमित्ते, बाहुस्पन्दनकाकादिदर्शनादौ च । पक्षिणि पक्षिमात्रे, पक्षिभेदे च । पु० । चकारात् गृध्रे च । **शकुनम्** । न० । शक—सामर्थ्ये । उनन्प्रत्ययः । "शकुनस्तु पुमान् पक्षिमात्रपक्षिविशेषयोः । शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम्" इति मेदिनी ॥ चूडावान् शिखान्वितः । तस्मिन् । कुक्कुटः ताम्रचूडः । तस्मिन् । अपिशब्दात् मयूरे । अश्वे । केतुग्रहे । चित्रकवृक्षे । वृक्षे । वह्नौ । अजलोमि । पर्वते । ब्राह्मणे । मेथिकायाम् । मयूरशिखावृक्षे च । **शिखी** । पु० । शिखा अस्त्यस्य । इनिप्रत्ययः । "शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे । मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गकः" इति मेदिनी ॥ २६४ । क्रमुकः पूगः । तस्मिन् । "तत्फलभक्षणे हि कामोद्रेकः" इति । तथा-त्वम् । सुवेशः सुन्दरवेशयुक्तः । तस्मिन् । त्रि० । तथा गजे च **शृङ्गारी** । पु० । शृङ्गारः जन्यत्वेनास्त्यस्य । इनिप्रत्ययः । "शृङ्गारी पूगगजयोः सशृङ्गारसुवेशयोः" इति मेदिनी ॥ पार्थः अर्ज्जुनः । इन्दुश्चन्द्रः तयोः । तथा इन्द्रे च । **श्वेतवाहनः** । पु० । श्वेतं वाहनमस्येति बहुव्रीहिः । "श्वेतवाहन इत्येष सुधाधाम्नि धनञ्जये" इति मेदिनी ॥ मयूरे स्वनामाख्याते खगभेदे । भीष्मशत्रौ गाङ्गेयारिपौ, द्रुपदराजस्य पुत्रभेदे च । चकारात् विष्णौ । यूथिकायाम् । गुञ्जायां च । स्त्री० । **शिखण्डी** । पु० । शिखण्डोऽस्त्यस्य । इनिप्रत्ययः । "शिखण्डी ना कलापे स्याद्गाङ्गेयारिमयूरयोः । शिखण्डिनी यूथिकायां गुञ्जायामपि योषिति" इति मेदिनी ॥ २६५ ॥

**विहिंसायां विडम्बे च यमे ना शमनं वधे ।**
**श्येनः शुक्ले पक्षिभेदे शकुनिः सौबले खगे ॥ २६६ ॥**
**धान्यभेदे पुमान् षष्टिहायनः कुञ्जरेऽपि च ।**
**ना साधौ सज्जनं क्लृप्तौ साधनं सिद्धमेढ्रयोः ॥ २६७ ॥**
**समानो देहवायौ च संस्थानं मृत्युरूपयोः ।**
**सन्तानः सन्ततौ देववृक्षे चाऽपत्यगोत्रयोः ॥ २६८ ॥**

विहिंसायां विघातने । विडम्बे तिरस्कारे । चकारात् मर्दने च । **विहेठनम्** । न० । विपूर्व हेठ—बाधने । ल्युट्प्रत्ययः । "विहेठनंतु हिंसायां मर्दने च विडम्बने" इति मेदिनी ॥ यमे लोकानां पुण्यापुण्यफलदातृत्वेन दण्डकारके । पु० । वधे नाशे । तथा शान्तौ च **शमनम्** । न० । शमयति । शम-शान्तौ । णिच्ल्युटप्रत्ययौ । "शमनं शांतिवधयोः शमनः श्राद्धदैवते" इति मेदिनी ॥ शुक्ले पाण्डुरवर्णे । तद्युक्ते च पक्षिभेदे विहङ्गविशेषे च । **श्येनः** । पु० । श्यै—गतौ । इनन्-प्रत्ययः । "श्येनः पक्षिणि पाण्डुरे" इति मेदिनी ॥ सौबले सुबलराजपुत्रे, दुर्योधनमातुले च । खगे पक्षिमात्रे । तथा चिल्लपक्षिणि । श्यामापक्षिणि । स्त्री० । ङीप् । **शकुनिः** । पु० । शक—सामर्थ्ये । उन्प्रत्ययः । "शकुनिः पुंसि विहगे सौबले करणान्तरे" इति मेदिनी ॥ २६६ ॥ धान्यभेदे षष्टिकधान्ये । पु० । षष्टिदिनपच्यो हायनो व्रीहिः । शाकपार्थिवादितत्पुरुषः । कुञ्जरे षष्टिवयस्के गजे । अपिशब्दात् षष्टिसंवत्सरवति च । **षष्टिहायनः** । पु० । षष्टिर्हायनं वयोऽस्येति बहुव्रीहिः । "स्यात् षष्टिहायनो धान्यविशेषे कुञ्जरे पुमान्" इति मेदिनी ॥ साधौ सत्पुरुषे, सत्कुलोद्भवे च । "कुरु सज्जनरञ्जनम्" इति । पु० । क्लृप्तौ नृपादीना-मारोहणार्थं गजभूषाकरणादौ । तथा रक्षार्थं सैन्यस्थापने । घट्टे । आयोजने । सौजन्यवति जने च **सज्जनम्** । त्रि० । ससूज—सङ्गे । णिच्ल्युटप्रत्ययौ । ससूज—सङ्गे । ल्युट् च । "सज्जनंतु भवेत् क्लीबमुपरक्षणघट्टयोः । वाच्यलिङ्गं कुलीने स्यात् कल्पनायांतु योषिति" इति मेदिनी ॥ सिद्धः निष्पादनः । मेढ्रः पुंचिह्नम् । तयोः । तथा करणे । क्रियानिष्पादके हेतुभेदे । "क्रियायां परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्" इत्युक्त क्रियासाधकवति करणे । सैन्ये । युद्धोपकरणे । प्रमाणे । कारकभेदे । अनुमापके हेतौ च । भावे ल्युट् । मारणे । मृतसंस्कारे । अग्निदाने । गतौ । अनुगमने । कर्मणि ल्युट् । द्रव्ये । धने । मैत्रे च । **साधनम्** । न० । साध्यतेऽनेन । सिध—सिद्धौ, गतौ च । णिच्-ल्युट्प्रत्ययौ । साधादेशः । "साधनं मृतसंस्कारे सैन्ये सिद्धौषधौ गतौ । निवर्त्तनोपायमेढ्र-दापनेऽनुगमे धने" इति मेदिनी ॥ २६७ ॥ देहवायौ शरीरस्थे वाते, नाभिमारुते च । "समानो नाभिमण्डले" इत्यायुर्वेदः । चकारात् तुल्ये । साधौ । एकस्मिन्नित्यर्थे च "यत् समानाधिकरणम्" इति चिन्तामणिः । **समानः** । त्रि० । सममानयति । अन—जीवने । अण्प्रत्ययः । "समानः स्यात् समैकेषु त्रिषु ना नाभिमारुते" इति मेदिनी । मृत्युः मरणम् । रूपमाकृतिः । तयोः । तथा चतु-

**क्रतौ स्नाने च सवनं मारणेऽपि समापनम् ।**
**स्यन्दनं स्रवणे ना तु रथे तिनिशपादपे ॥ २६९ ॥**
**सुप्तज्ञाने च शयने स्वप्नोऽथ स्पर्शदानयोः ।**
**स्पर्शनं स्पर्शनो वाते सूनं पुष्पे वधालये ॥ २७० ॥**
**सेवनं सीवनोपास्त्योः शाश्वताजौ सनातनौ ।**
**पुत्रे रवौ च सूनुः स्याद्भ्रातर्यपि कनीयसी ॥ २७१ ॥**

ष्पथे । चिह्ने । सन्निवेशे । सम्यकूस्थितौ । अवयव्यारम्भकसंयोगभेदे च । **संस्थानम्** । न० । संपूर्व्वस्था—गतिनिरोधे । ल्युट्प्रत्ययः । "संस्थानमाकृतौ मृत्यौ सन्निवेशे चतुष्पथे" इति मेदिनी ॥ सन्ततौ वंशे । देववृक्षे तन्नामकदेवतरौ । अपत्यं पुत्रदुहितृरूपं सन्तानम् । गोत्रं सजातीयगणम् । तयोः । चकारात् विस्तारे च । **सन्तानः** । पु० । संपूर्वतन—विस्तृतौ, उपकारे च । घञ्प्रत्ययः । "सन्तानः सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे" इति मेदिनी ॥ २६८ ॥ क्रतौ स्नाने यज्ञाङ्गे स्नाने । चकारात् प्रसवे । यज्ञे । सोमपाने । सोमनिष्पादनव्यापारे, सोमनिष्पीडने च । **सवनम्** । न० । सु—स्नपने, मर्दने च । ल्युट्प्रत्ययः । "सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च" इति मेदिनी ॥ मारणे वधे, मृत्यौ वा । अपिशब्दात् समाप्तौ । परिच्छेदे शेषे च । **समापनम्** । न० । सम्पूर्व्वआप—प्राप्तौ । ल्युट्प्रत्ययः । समापनं परिच्छेदे समाप्तिवधयोरपि" इति मेदिनी ॥ स्रवणे मूत्रजले । रथे स्वनामाख्याते यानभेदे । तिनिशपादपे स्वनामाख्याते वृक्षे । पु० । तथा क्षरणे च । **स्यन्दनम्** । न० । स्यन्द—स्रवणे । कर्त्तरि ल्युट्प्रत्ययः । "स्यन्दनं तु स्रुतौ नीरे तिनिशे ना रथे स्त्रियाम्" इति मेदिनी ॥ २६९ ॥ सुप्तज्ञाने सुप्तस्य मानसिकज्ञानभेदे । शयने निद्रायाम् । चकारात् दर्शने च । **स्वप्नः** । पु० । स्वप—शयने । नन्प्रत्ययः । "स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्" इति मेदिनी ॥ स्पर्शः न्यायोक्तः त्वगिन्द्रियग्राह्यो गुणभेदः । दानं वितरणम् । तयोः । वाते वायौ । पु० । तथा ग्रहणे च । **स्पर्शनम्** । न० । स्पर्श—ग्रहणे । स्पृश—स्पर्शे वा । ल्युट्प्रत्ययः । "स्पर्शनो मारुते पुंसि दाने स्पर्शे नपुंसकम्" इति मेदिनी ॥ पुष्पे कुसुमे । वधालये प्राणिवधस्थाने । स्त्री० । "पञ्चसूना गृहस्थस्य" इति मनुः । तथा विकशिते । जाते च **सूनम्** । न० । सू—प्रसवे । क्तप्रत्ययः । तस्य नः । कर्त्तरि वा । "सूनं प्रसवपुष्पयोः" इति मेदिनी ॥ "सूनं वाच्यवदुत्पन्नेषु सूनं प्रसवपुष्पयोः" इति विश्वः ॥ २७० ॥ सीवनं सूच्यादिना वस्त्रादेर्योजनम् । उपास्तिः उपासना । "यदुपास्तिमसावत्र" इति कुसुमाञ्जलिः । तयोः । तथा आश्रयणे । उपभोगे । बन्धने । पूजने । भजने च । **सेवनम्** । न० । सीव्यतेऽनया । सिव—तन्तुसन्ताने । ल्युट्प्रत्ययः । "सेवनं सीवनोपास्त्योः" इति मेदिनी ॥ शाश्वतं सदाभवं वस्तु । अजः ब्रह्मा । तयोः । तथा निश्चले । सरस्वत्याम । लक्ष्म्याम् । स्त्री० । शिवे । दिव्यमनुष्ये च । **सनातनः** । पु० न० । सदा ल्युट्प्रत्ययः, तुट् च । निपातनात् साधुः । "सनातनः शाश्वतेऽजे पित्रतिथ्यन्तरे हरे" इति मेदिनी ॥ पुत्रे तनये । रवौ सूर्ये । कनीयसि भ्रातरि अनुजे । अपिशब्दात् अर्कवृक्षे । कन्यायाञ्च । स्त्री० । **सूनुः** स्यात्:

**सीमाऽघाटे स्थितौ क्षेत्रे स्वामी भर्तरि षण्मुखे ।**
**धूमवंशशरामर्त्याः सुपर्वाणः प्रकीर्तिताः ॥ २७२ ॥**
**हनुर्हट्टविलासिन्यां कपोलावयवेऽपि च ।**

**इति नान्ताः ॥**

**सजले महिषेऽनूपोऽवलेपः सङ्गगर्वयोः ॥ २७३ ॥**
**आक्षेपो भर्त्सनाकृष्टयोराकल्पौ वेशकल्पने ।**
**तृणभिद्गुल्मिन्युपलश्चन्द्रे ना स्त्र्युडुपः प्लवे ॥ २७४ ॥**

पु० । सू—प्रसवे । नुप्रत्ययः । "सूनुः पुत्रेऽनुजेऽर्के ना" इति मेदिनी ॥ २७१ ॥ आघाटे सीमायाम् । क्वचित्तु "आघाटे" इति पाठो दृश्यते । स्थितौ स्थानकरणे क्षेत्रे शस्याद्युत्पत्तिस्थाने केदारे । तथा मर्य्यादायाम् । अवधौ । अण्डकोशे । "सीम्नि पुष्कलको हतः" इति सिद्धान्तकौमुदी । वेलायाञ्च । **सीमा** । स्त्री० । सी—बन्धने । इमनिप्रत्ययः । पृषोदरादित्वान्न गुणादि "सीमाऽघाटस्थितिक्षेत्रेष्वण्डकोषेऽपि च स्त्रियाम्" इति मेदिनी ॥ भर्त्तरि प्रिये । षण्मुखे कार्तिकेये । तथा अधिपतौ । ईश्वरे । विभौ । नृपे । वात्स्यायनमुनौ । असौ मुनिस्तु कामशास्त्रस्य कर्त्ता इति प्रसिद्धः । गरुडे । परमहंसे । च ॥ **स्वामी** । पु० । स्व अस्त्यस्येति अस्त्यर्थे इनिप्रत्ययः । दीर्घश्च । "स्वामी प्रभौ विशाखे च" इति विश्वः ॥ धूमः प्रसिद्धः । वंशः वेणुः । शरः बाणः । अमर्त्यः देवः । तेषु । सुन्दरपर्वणि च । **सुपर्वा** । प्रकीर्तितः कथितः पु० । सुष्ठु पर्व यस्येति बहुव्रीहिः । प्रादिसमासो वा । "सुपर्वा ना शरे वंशे पर्वधूमसुरेष्वपि" इति मेदिनी ॥ २७२ ॥ हट्टविलासिन्यां गन्धद्रव्यभेदे । हरिद्रायां वा । कपोलावयवे कपोलद्वयोपरिस्थे मुखभागे । अपिशब्दात् रोगे । अस्त्रभेदे । मृतौ च । स्त्री० । **हनुः** । पु० । स्त्री० । हनूरप्यत्र । "हनुर्हट्टविलासिन्यां मृत्यावस्त्रे गदे स्त्रियाम् । द्वयोः कपोलावयवे" इति मेदिनी ॥ नकारान्ताः समाप्ताः ॥ अथ पान्तानाह ॥ सजले जलप्राये देशे । महिषे जलस्थले सर्व्वदावासिनि स्वनामाख्याते पशुभेदे । तथा देशविशेषे । "बह्वम्बुर्बहुवृक्षश्च वातश्लेष्मामयान्वितः । देशोऽनूपः" इति । अनूपसर इति प्रसिद्धे देशे वा । **अनूपः** । त्रि० । अनुगता आपो यत्रेतिसप्तमी बहुव्रीहिः । अच्समासो वा । आत ऊत्वम् "अनूपो महिषे ना म्बुप्रायदेशे तु वाच्यवत्" इति मेदिनी ॥ "अनूपं महिषे विद्याजलप्राये तु वाच्यवत्" इति विश्वः ॥ सङ्गः सम्बन्धः । गर्वः अहङ्कारः । तयोः । तथा लेपने । दूषणे च । **अवलेपः** । पु० । अवपूर्वलिप—लेपने । घञ्प्रत्ययः । "अवलेपस्तु गर्व्वे स्याल्लेपने दूषणेऽपि च" इति मेदिनी ॥ तथा विश्वः ॥ २७३ ॥ भर्त्सनम् अपकारवचनम् । भर्त्सनाऽप्यत्र । आकृष्टिः आकर्षणम् । तयोः । तथा अपवादे । धनादिन्यासरूपे निक्षेपे । अर्थालङ्कारभेदे च । "वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये । निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा" इति साहित्यम । **आक्षेपम्** । पु० । आपूर्व—क्षिप—प्रेरणे । नोदने वा । घञ्प्रत्ययः । "आक्षेपो भर्त्सनाकृष्टिकाव्यालङ्कृतिषु

**कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने ।**
**धान्ये कुशेऽष्टमांशेऽह्नः कुतपश्छागकम्बले ॥ २७५ ॥**
**गुणवृक्षेऽपि कूपो विट्सार्यां स्त्री कुणपः शवे ।**
**जिह्वापः शुनि मार्ज्जारे त्रपुसीसकरङ्गयोः ॥ २७६ ॥**
**पादुकायां स्त्रियां वृक्षे पादपीठे च पादपः ।**
**पिण्डपुष्पौ जवाशोकौ पुष्पं कुसुम आर्त्तवे ॥ २७७ ॥**

स्मृतः'' इति मेदिनी । वेशः वेशरचना । कल्पना न्यायोक्तः अनुमितिभेदः । तयोः । तथा भूषणे । कल्पपर्य्यन्ते च । अव्ययम् ''आकल्पं नरकं भुङ्क्ते'' इति स्मृतिः । **आकल्पः** । पु० । आपूर्वकृप—कल्पने । णिच्घञ्प्रत्ययौ । ''आकल्पः कल्पने वेशे'' इति मेदिनी ॥ तृणभिद् कोमलस्तृणविशेषः । गुल्मी शाखापत्रप्रचययुता लता । तयोश्च । **उलपः** । पु० । न० । वल—संवरणे । समवाये च । कपप्रत्ययः । सम्प्रसारणम् । ''उलपस्तृणभेदे स्याद्गुल्मिन्यामुलपः स्मृतः'' इति विश्वः । ''पुंस्युलपो न स्त्री गुल्मिन्यां ना तृणान्तरे'' इति मेदिनी ॥ चन्द्रे नक्षत्रपतौ । स हि ताराणां पतिरतो रक्षकः । पु० । प्लवे भेलके च । स्त्री० । **उडुपः** । पु० । उडपोऽप्यत्र । उडूनि जले पाति । उडूनि नक्षत्राणि पाति वा । पा—रक्षणे । कः प्रत्ययः । ''उडुपस्तु प्लवे चन्द्रे'' इति विश्वः । ''उडुपन्तु प्लवे स्त्रियां चन्द्रे'' इति मेदिनी ॥ २७४ ॥ शास्त्रे यज्ञक्रियाणामुपदेशके । शिक्षाकल्पव्याकरणादीनामन्यतमे वेदाङ्गभेदे च । विधौ ब्रह्मणि । न्याये । संवर्ते प्रलये । ब्रह्मदिने ब्रह्मणो दिवसे । तथा विकल्पे । कल्पवृक्षे । उत्तरपदस्थः सादृश्ये । कल्पः । यथा पितृकल्पः गुरुकल्पश्च । **कल्पः** । पु० । कृप—युतौ । चित्रीकरणे वा । अच्प्रत्ययः । घञ् वा । ''कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने'' इति मेदिनी ॥ धान्ये व्रीहिविशेषे । कुशे कुशतृणे । अह्नः अष्टमांशे पञ्चदशधाविभक्तदिनस्याष्टमांशे काले । पु० न० । स च मध्याह्नात् पूर्वोत्तरदण्डद्वयात्मकः मुहूर्त्तरूपः कालः । छागकम्बले नेपालकम्बले । तथा वह्नौ । सूर्ये । ब्राह्मणे । अतिथौ । गवि । भागिनेये । दौहित्रे वाद्ये च । **कुतपः** । पु० । कुत्सितं तपति । तप—उपतापे । अच्प्रत्ययः । ''कुतपोऽस्त्रियां दौहित्रे वाद्ये छागजकम्बले । कुशे दिनस्याष्टमांशे ना गव्ये'' इति मेदिनी ॥ २७५ ॥ गुणवृक्षे काष्ठमये वृक्षे । अपिशब्दात् स्वनामाख्याते जलाधारे । गर्ते च । **कूपः** । पु० । कुत्सिताः आपो यत्र अच्समासः । कुवन्ति मण्डूकाः अस्मिन् कु—शब्दे । पक्प्रत्ययः । दीर्घश्च । ''कूपं कूपकमृन्माने गर्त्तोऽम्बुगुणवृक्षके'' इति मेदिनी ॥ विट्सार्यां विट्सारिकायाम् । स्त्री० । शवे त्यक्तप्राणे मृतदेहे । तथा पूतिगन्धे च । **कुणपः** । पु० । क्वण—शब्दे । कपन्प्रत्ययः । सम्प्रसारणम् । ''कुणपः पूतिगन्धे शवेऽपि च'' इति मेदिनी ॥ शुनि कुक्कुरे । मार्जारे बिडाले । त्रपुसीसः स्वनामाख्यातो धातुभेदः । रङ्गः स्वनामाख्यातो धातुभेदः । तयोश्च । **जिह्वापः** । पु० । जिह्वया पीयते । पा—पाने । कः प्रत्ययः । ''जिह्वापः शुनि मार्ज्जारे'' इति मेदिनी ॥ २७६ ॥ पादुकायां चर्ममये पादाच्छादने पदार्थे ।

ग्रन्थावृत्तौ पशौ शब्दे स्वभावे नाटकादिषु ।
रूपमाकारसौन्दर्यनामकेष्वपि दृश्यते ॥ २७८ ॥
शररोपणयो रोपो लेपो लेपनभोजने ।
विटपः पल्लवे स्तम्बे षिङ्गे मेदोबिले वपा ॥ २७९ ॥
आक्रोशे शपथे शापः स्वापः शयननिद्रयोः ।
इति पान्ताः ॥

स्त्री० । वृक्षे द्रुमे । पादपीठे पादस्थापनासने च । **पादपः** । पु० । पादेन मूलेन पिबति सिक्तं जलम् । पा—पाने । कः प्रत्ययः । पादं पाति रक्षति । पा—रक्षणे । कः प्रत्ययो वा । "पादपः पादपीठेद्रौ पादुकायान्तु पादपा" इति मेदिनी ॥ जवा जवापुष्पम् । अशोकः अशोकपुष्पम् । तयोः । तथा पद्मपुष्पे । तगरपुष्पे च । **पिण्डपुष्पम्** । न०। पिण्डं संहतं पुष्पम् । "पिण्डपुष्पमशोके च जवायाञ्च कुशेशये" इति मेदिनी ॥ कुसुमे । आर्त्तवे स्त्रीरजसि। तथा विकाशे । कुबेरस्य विमाने । नेत्ररोगभेदे च । **पुष्पम्** । न० । पुष्प—विकाशे । अच्-प्रत्ययः । "पुष्पं विकाशकुसुमस्त्रीरजःसु नपुंसकम्" इति मेदिनी ॥ २७७ ॥ ग्रन्था वृत्तौ । पशौ मृगादौ । लोमवल्लाङ्गूलवति जन्तुभेदे च । शब्दे शब्दधातूनां विभक्ति-योगेन निष्पन्नशब्दे । स्वभावे । नाटकादिषु दृश्यकाव्ये नाटकादौ ॥ आकारः अवयवसं-स्थानविशेषः । सौन्दर्यञ्चारुता । अङ्गप्रत्यङ्गानां यः सन्निवेशो यथोचितम् । "सुश्लिष्टः सन्धिबन्धः स्यात् तत्सौन्दर्य्यमुदाहृतम्" इति। नामकः अभिधानम् । तेषु । अपिशब्दात् शुक्ला-दिवर्णे । श्लोके । उत्तरपदस्थः सदृशार्थे । त्रि० । यथा पितृरूपस्तनयः । मातृरूपा कन्या । एक-संख्यान्विते । न० । "रूपं भजेत् स्यात्परिपूर्त्तिकाले" इति लीलावती । "एकाव्यक्तं शोधयेद-न्यपक्षात् रूपाण्यन्यस्येतरस्माच्च पक्षात्" इति बीजगणितः । **रूपम्** । न०।दृश्यत इति क्रियापदे-नान्वयः। रूप—रूपान्वितकरणे । कः प्रत्ययः । भावे अच् वा । "रूपं स्वभावे सौन्दर्य्ये नामके पशुशब्दयोः । ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपि" इति मेदिनी ॥ २७८ ॥ शरः बाणः। रोपणः धान्यादेर्जननाय अङ्कुरादेरारोपणम् । तयोः । तथा छिद्रे च । **रोपः** । पु० । रुह—उद्भवे । णिच्प्रत्ययः । हस्य पः । कर्म्मणि अच्प्रत्ययश्च । "रोपो रोपणबाणयोः" इति मेदिनी ॥ लेपनं प्रलेपः । भोजनं कठिनद्रव्यस्य गलबिलाधःसंयोजनम् । तयोः । तथा क्षुधा-याञ्च । **लेपः** । पु० । लिप—लेपने । लेप—गमने वा । घञ्प्रत्ययः। "लेपः प्रलेपने जग्धौ" इति मेदिनी । पल्लवे अभिनवे पत्रविस्तारे । स्तम्बे तृणादौ गुच्छे । तथा शाखायाम् । त्रिटपा-लके च । **विटपः** । पु० । न० । विटं विस्तारं पाति।पा—रक्षणे । कप्रत्ययः। "विटपो ना स्त्रियां स्तम्बशाखाविस्तारपल्लवे । विटाधिपेना" इति मेदिनी॥षिङ्गे कामुके । मेदः मांसजन्यो धातुभेदः । बिलं छिद्रः । तयोश्च । तथा शरीरे । प्रशस्ताकारे च । **वपा** । स्त्री० । वप—बीजवपने । तन्तु-वपने । मुण्डने च । अच्प्रत्ययः । उसिप्रत्ययो वा । "वपाया हविषः" इति श्रुतिः । "वपा विव-रमेदसोः" इति मेदिनी ॥ २७९ ॥ आक्रोशे अनिष्टं भूयादिति एवं विरुद्धचिन्तने शपथे सत्यता

**त्रिषु स्यात्कुत्सिते रेफो रवर्णे तु पुमानऽयम् ॥ २८० ॥**
**इति फान्ताः ॥**
**गजे ग्रीवालके कम्बुः कलम्बः शरनालयोः ।**
**वृन्दे कदम्बं नीपे ना कादम्बौ शरपक्षिणौ ॥ २८१ ॥**
**प्लीहविप्लवयोर्डिम्बः प्रलम्बो दैत्यशाखयोः ।**
**बिम्बं बिम्बीफले रूपे शम्बस्तु मुशलानने ॥ २८२ ॥**

करणाय दिव्यभेदकरणे। यथा "एतत् यदि मिथ्या स्यात् तदा मे एतदनिष्टं स्यात्" इति। **शापः।** पु० । शप—आक्रोशे । घञ्प्रत्ययः । "शाप आक्रोशदिव्ययोः" इति मेदिनी । शयनं प्रसिद्धम् । निद्रा स्वप्नम् । "यदा तु मनसि क्रान्ते कर्म्मात्मानः क्षमान्विताः । विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः" इत्युक्ते जीवस्यावस्थाभेदे । तथा अज्ञाने च । **स्वापः।** पु० । स्वप—शयने । घञ्प्रत्ययः। "स्वापः शयननिद्रयोः" इति मेदिनी ॥ पकारान्ताः समाप्ताः ॥ अथ फान्तानाह ॥ कुत्सिते निन्दिते।त्रि०।रवर्णे रकारात्मके वर्णे। पु०।तुकारात् क्रूरे । अधमे । दुष्टे । कृपणे च । त्रि० । **रेफः** । पु० । र—गतौ । इफप्रत्ययः । "रेफः स्यान्निन्दिते क्रूरे" इति मेदिनी ॥ फकारान्ताः समाप्ताः ॥ २८० ॥ अथ बान्तानाह ॥ गजे हस्तिनि । ग्रीवालके सुवर्णालिसन्निभायां ग्रीवायाम् । तथा शङ्खे । शम्बूके । वलये । नलके च । न० । **कम्बुः** । पु० । न० । कम—वाञ्छायाम् । कामनायां वा । उप्रत्ययः । बुक् च । "कम्बुः शङ्खेऽस्त्रियां पुंसि शम्बूके वलये गजे" इति मेदिनी ॥ शरः बाणः । नालः नालिकाशाकः । तयोः । तथा कदम्बवृक्षे । शाकनाडयाञ्च । **कलम्बः**। पु०। कड—भक्षणे । हर्षे वा । अम्बच्प्रत्ययः। डस्य लः। "कलम्बः शायके नीपे नालिशाके कलम्ब्यपि" इति विश्वः । वृन्दे समूहे । न० । नीपे कदम्बवृक्षे । पु० । तथा सर्षपे । देवताडवृक्षे च । **कादम्बम्** । न० । कद—विह्वलीभावे । रोदने वा । अम्बच्प्रत्ययः । "कदम्बं निकुरम्बे स्यान्नीपसर्षपयोः पुमान्" इति मेदिनी । शरः बाणः । पक्षी कलहंसः । तयोः । इक्षौ च । **कादम्बः** । पु० । कद--विह्वलीभावे । णिच्—अम्बच्प्रत्ययौ । कदम्बे भवः अण्प्रत्ययो वा । "कादम्बः स्यात् पुमान् पक्षिविशेषे शायकेऽपि च" इति मेदिनी ॥ २८१ ॥ प्लीहा वामकुक्षिपार्श्वस्थः मांसकखण्डः । तद्वृद्धिहेतुकः रोगभेदश्च । विप्लवः राष्ट्रोपद्रवः । परनृपतिराष्ट्रादितो जातं भयं वा । तयोः । तथा शिशौ । अण्डे । अशस्ते । कलहे । एरण्डे । भयहेतुके ध्वनौ । भ्रमरे । फुप्फुसे च । न० । **डिम्बः** । पु० । डिबि—प्रेरणे । घञ्प्रत्ययः । "डिम्बो भयध्वनावण्डे फुप्फुसप्लीहविप्लवे" इति मेदिनी । दैत्यः स्वनामाख्यातः, असुरविशेषः । शाखा वृक्षस्यावयवः । तयोः । तथा प्रकर्षेण लम्बमाने च । **प्रलम्बः** । त्रि० । प्रपूर्वलम्ब—अवलम्बने । अच्प्रत्ययः । "प्रलम्बो दैत्यभेदे स्यात् त्रपुषेऽपि पयोधरे" इति मेदिनी ॥ बिम्बीफले । बिम्बिकाफले । रूपे दर्शनादौ । भासमानप्रतिबिम्बाश्रये । तथा कमण्डलौ । सूर्यादिमण्डले । कृकलासे

कल्याणवति वज्रे च हेरम्बो महिषेऽपि च ।
इति बान्ताः ॥
स्वर्णारम्भाववष्टम्भौ वाणी छन्दोऽप्यनुष्टुभौ ॥ २८३ ॥
आरम्भे उद्यमे दर्पे कामे ब्रह्मणि चाऽऽत्मभूः ।
ऋषभौ श्रेष्ठवृषभौ करभोऽधःकरोष्ट्रयोः ॥ २८४ ॥
कुम्भो वारस्त्रियाः कान्ते रक्षोराशिप्रभेदयोः ।
वीणा प्रसेवे ककुभो रागभेदेऽर्ज्जुनद्रुमे ॥ २८५ ॥

च । **बिम्बम्** । न० पु० । वी—कान्तौ । जनने च । वत्प्रत्ययः । मुच् । ह्रस्वः । "बिम्ब-स्तु प्रतिबिम्बे स्यान्मण्डले पुन्नपुंसकम् । बिम्बिकायाः फले क्लीबं कृकलासे पुनः पुमान्" इति मेदिनी ॥ मुशलानने मुशलाग्रस्थितलौहे । लौहकाञ्च्यांश्च । कल्याणवति गुणान्विते।वज्रे हीरके। तथा अनुलोमकर्षणे । दरिद्रे च । **शुम्बः** । पु० । शम्ब--गतौ । अच्प्रत्ययः । "शुम्बः स्यान्मुसलाग्रस्थलोहमण्डलके पवौ । शुभान्विते त्रिषु" इति मेदिनी ॥ २८२ ॥ महिषे स्वनामाख्याते पशुभेदे । अपिशब्दात् गणेशे । शौर्ये । गर्विते च । **हेरम्बः** । पु० । हे शिवे रम्बति रम्ब--गतौ शब्दे च । अच्प्रत्ययः । अलुक् समासः । "हेरम्बो विघ्नराजे स्यान्महिषे शौर्यगर्विते" इति मेदिनी ॥ इति वकारान्ताः समाप्ताः ॥ अथ भान्तानाह ॥ स्वर्ण कनकम् । आरम्भः प्रारम्भ । तयोः । तथा रोधने । स्तम्भे । गर्वे च । "रवोवष्टम्भमयेन मन्त्रिणा" इति रघुः । **अवष्टम्भः** ।पु०। अवपूर्वस्तन्भ—जडीकरणे जटीकरणे वा । घञ्प्रत्ययः। "अवष्टम्भः सुवर्णे च स्तम्भारम्भयोरपि" इति मेदिनी ॥ वाणी सरस्वती । छन्दः अष्टाक्षर-पादकश्छन्दोभेदः । तयोश्च । **अनुष्टुभ्** । स्त्री० । अनुपूर्व्वस्तन्भ—जडीकरणे । क्विप्प्रत्ययः । षत्वम् । "अनुष्टुभ् स्यात् सरस्वत्यां छन्दोभेदे च योषिति" इति मेदिनी ॥ २८३ ॥ आरम्भे उद्यमे । उद्योगे । दर्पे अहङ्कारे । कामे । ब्रह्मणि चतुर्मुखे च । **आत्मभूः** । पु० । आत्मना स्वयम् आत्मनि मनसि वा भवति।भू—सत्तायाम् । क्विप्प्रत्ययः। "आत्मभूर्ना विधौ कामे" इति मेदिनी॥श्रेष्ठः अतिशयेन प्रशस्तः । वृषभः प्रसिद्धः । तयोः । तथा ओषधिभेदे मुनिभेदे च । **ऋषभः** । पु० । ऋष—गतौ । अभच्प्रत्ययः । "ऋषभस्त्वौषधान्तरे" इति मेदिनी ॥ अधः करः मणिबन्धात् कनिष्ठापर्य्यन्तः करस्य बाह्यदेशः । उष्ट्रः प्रसिद्धः। उष्ट्रशिशुश्च । तयोः । तथा करिशावके । नामगन्धद्रव्ये च । **करभः** । पु० । कॄ—विक्षेपे । अभच्प्रत्ययः । करे भाति भा—दीप्तौ । कः प्रत्ययो वा । "करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते" इति मेदिनी॥२८४॥ वारस्त्रियाः कान्ते वेश्यायाः पतौ । वेश्यापताविल्यर्थः । रक्षः कुम्भकर्णस्य पुत्रः । राशिप्रभेदः मेषावधिकः एकादशराशिः । तयोः । तथा घटे । हस्तिशिरस्थमांसपिण्डद्वये । "तैः किं मत्तकरीन्द्रकुम्भकुहरे" इति प्रसन्नराघवम् । हृद्रोगभेदे । प्राणायामाङ्गे श्वासरोधके चेष्टाभेदे । परिमाणभेदे । "दशद्रोणा भवेत् खारी कुम्भस्तु द्रोणविंशतिः" इति । तथा गुग्गुलौ । त्रिवृत्ति

**गर्दभं शुक्लकुमुदे खरे पुंस्यऽथ दानवे ।**
**जम्बीरे व्यवहारे च जम्भो दन्तेऽपि चेष्यते ॥ २८६ ॥**
**दुन्दुभिर्दैत्यभेदेऽपि दम्भः कैतवकल्कयोः ।**
**दुर्लभः कर्चूरेऽकाम्ये सदृशव्याजयोर्निभः ॥ २८७ ॥**
**मुख्यराट्क्षत्त्रयोः पुंसि नाभिः प्राण्यङ्गके द्वयोः ।**
**चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे ॥ २८८ ॥**

च । **कुम्भः** । पु० । कुं भूमिं कुत्सितं वा उम्भति उन्भ—पूरणे । अच् प्रत्ययः । शाकपार्थिवादितत्पुरुषः । "कुम्भो राश्यन्तरे हस्तिमूर्द्धांशे राक्षसान्तरे । कामुके वारनार्य्याश्च घटे क्लीबन्तु गुग्गुलौ" इति मेदिनी ॥ वीणा प्रसेवे वीणाङ्गे । वीणायाः प्रान्तबद्धे काष्ठे च । रागभेदे रागिणी विशेषे । अर्जुनद्रुमे अर्जुनवृक्षे । तथा दिशि । रागिणि च स्त्री० । **ककुभः** । पु० । कं वातं स्कुभ्नातीति । कः प्रत्ययः । पृषोदरादिना साधुः । कस्य वातस्य कुः भूमिः भात्यस्मादिति । भा—दीप्तौ । कःप्रत्ययः । क्वचित्तु "कुकुभ" इति। "ककुभो रागभेदेऽपि वीणाङ्गेऽर्ज्जुनपादपे" इति मेदिनी ॥ २८५ ॥ शुक्लकुमुदे श्वेतकैरवे । न० । खरे स्वनामाख्याते पशौ । तथा गन्धभेदे । विडङ्गे च । पु० । **गर्दभम्** । न० । गर्द—रवे । अभच्प्रत्ययः "गर्दभः श्वेतकुमुदे गर्दभो गन्धभिद्यपि । रासभे गर्दभो क्षुद्ररोगजन्तुविशेषयोः" इति मेदिनी ॥ दानवे दैत्यभेदे । जम्बीरे स्वनामाख्याते वृक्षे । व्यवहारे । दन्ते दशने । अपिशब्दात् अंशे । हनौ । तृणे च । **जम्भः** । पु० । इष्यते इति क्रियापदेनान्वयः । जभि—जृम्भणे, मैथुने वा । घञ्प्रत्ययः । "जम्भो दैत्यविशेषे ना दन्ते जम्बीरभक्षयोः" इति मेदिनी ॥ २८६ ॥ दैत्यभेदे असुरविशेषे । अपिशब्दात् राक्षसभेदे । विषे । बृहत् ढक्कायाम् । भेर्य्याम् । वरुणे । षष्टिवर्षमध्ये वत्सरभेदे । "प्राणिनां जायते हर्षो दुन्दुभौ वरवर्णिनि" इति । पाशके वा । **दुन्दुभिः** । पु० । दुन्दु इति शब्देन उभति पूरयति । उभ—पूरणे । कः प्रत्ययः । शकन्ध्वादित्वात् पररूपम् । "दुन्दुभिः पुमान् । वरुणे दैत्यभेर्य्योश्च" इति मेदिनी ॥ कैतवः शाठ्यम् । कल्कः कपटः, पापो वा । तयोश्च। **दम्भः** । पु० । दम्भ—दम्भे, सङ्घाते वा । घञ्प्रत्ययः । "दम्भस्तु कैतवे कल्के" इति मेदिनी ॥ कर्चूरे गन्धद्रव्ये । शठ्यां वा । क्वचित्तु कच्छुरे इति दृश्यते । कच्छुरे कच्छुरोगवति । परस्त्रीगामिनि वा । अकाम्ये दुष्प्रापे । त्रि० । "मानुष्यं दुर्लभं लोके विद्या तत्र सुदुर्लभा" इति "दुर्लभश्च मनुष्यत्वं बुद्ध्युत्पादश्च दुर्लभः" इति । तथा दुरालभायाम् । श्वेतकण्टकार्य्याञ्च । स्त्री० । **दुर्लभः** । पु० । दुर्पूर्वः लभ—प्राप्तौ । खल् प्रत्ययः । "दुर्लभस्त्रिषु दुष्प्रापे कर्चूरे" इति मेदिनी । "दुर्लभः कर्चूरे ज्ञेयो दुष्प्रापे वल्लभेऽपि च" इति विश्वः ॥ सदृशः तुल्यः । यथा पितृनिभः मातृनिभ इत्यादि । तत्सदृश इत्यर्थः । व्याजः कपटः । तयोश्च **निभः** । पु० । निभाति निपूर्वः भा—दीप्तौ । कः प्रत्ययः। "निभस्तु कथितो व्याजे पुँल्लिङ्गः सदृशे त्रिषु" इति मेदिनी ॥ २८७ ॥ मुख्यराट् प्रधाननृपः, क्षत्रं

**भूर्भूमौ स्थानमात्रे च भमृक्षे भृगुजे पुमान्।**
**रम्भा कदल्यप्सरसोर्विभुः स्यात्स्वामिनित्ययोः॥ २८९॥**
**पुनर्नवायां वर्षाभूः स्त्री ना किञ्चुलुके प्लवे।**
**विश्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च॥ २९०॥**
**सुरभिः स्याद्वसन्तेऽपि सभा द्यूतालयेऽपि च।**

**इति भान्ताः॥**

**अभ्यागमो विरोधे च शास्त्रमायातमागमः॥ २९१॥**

क्षत्रिययः तयोः। प्राण्यङ्गके प्राण्यङ्गभेदे। पु०।स्त्री०। चक्रमध्ये द्वादशनृपचक्रस्य मध्ये। प्रधाने मुखे। कस्तूरिकामदे मृगमदे। स्त्री०। तथा रथचक्रस्य वामपिण्ड्याञ्च। **नाभिः**। पु०। नह्यन्ते अत्र नह्यतेऽनेन वा। नह—बन्धे। इञ्प्रत्ययः। भान्तादेशः। "नाभिमुख्यनृपे चक्रमध्य-क्षत्रिययोः पुमान्। द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे" इति मेदिनी॥ २८८॥ भूमौ पृथिव्याम्। स्थानमात्रे। तथा एकसङ्ख्यायाम्। यज्ञाग्नौ च। **भूः**। स्त्री०। भू-सत्तायाम्। क्विप्प्रत्ययः। "भूः स्थानमात्रे कथिता धरण्यामपि योषिति" इति मेदिनी॥ ऋक्षे नक्षत्रे। भृगुजे भृगुनन्दने। पु०। तथा मेषादिराशौ। ग्रहे शुक्राचार्ये। भ्रमरे भ्रान्तौ। छन्दोग्रन्थोक्ते आदिगुरुके अन्त्योपान्तलघुयुक्ते वर्णत्रिके च। पु०। **भम्**। न०। भा—दीप्तौ। कः प्रत्ययः। "भं नक्षत्रे गभस्तौ स्त्री पुंसि स्याद्भृगुनन्दने" इति मेदिनी॥ कदली वृक्ष-विशेषः। अप्सराः समुद्रादुत्पन्नत्वात् मेनकादिस्वर्वेश्याजातिः। तयोः। तथा गवां ध्वनौ। गौर्य्याञ्च। **रम्भा**। स्त्री०। रभि—गतौ। अच्प्रत्ययः। "रम्भा कदल्यप्सरसोर्ना वेणौ वानरान्तरे" इति मेदिनी। स्वामी प्रभुः। नित्यं ब्रह्म। तयोः। तथा सर्वमूर्तिसंयुक्ते शिवे च। **विभुः**। पु०। विपूर्वः भू—सत्तायाम्। डु प्रत्ययः। "विभुः प्रभौ सर्वगतशङ्करब्रह्म-णोस्तु ना" इति मेदिनी॥ २८९॥ पुनर्नवायाम्। किञ्चुलुके महीलताख्ये कीटभेदे। प्लवे भेके। तथा इन्द्रगोपे। भेक्याम्। स्त्री०। वर्षाभवमात्रे च। त्रि०। **वर्षाभूः**। पु०। वर्षासु भवति। भू—सत्तायाम्। क्विप् प्रत्ययः। "वर्षाभूः स्त्री च शोथघ्न्यां भूलताप्लवयोः पुमान्" इति मेदिनी॥ केलिकलहे परिहासाय कृतकलहे विश्वासे। प्रणये प्रीतौ, स्नेहे वा। अपिशब्दात् वधे च। **विश्रम्भः**। पु०। विपूर्वः श्रन्भ—प्रमादे। घञ् प्रत्ययः। "विश्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च" इति मेदिनी। "विश्रम्भः केलिकलहे विश्वासे प्रणये वधे" इति विश्वः॥२९०॥वसन्ते स्वनामाख्याते ऋतौ। "सुसुरभिं सुरभिं सुमनोभरैः" इति माघः। अपिशब्दात् स्वर्णे। चम्पके। गन्धाश्मनि। सुन्दरे। जातीफलवृक्षे। सुगन्धे। शमीवृक्षे कदम्बे। कणगुग्गुलौ। गन्धतृणे। बकुलवृक्षे। राले। चैत्रे मासि। पण्डिते। गन्धफले। पु०। शल्लक्याम्। रुद्रजटायाम्। मातृकाभेदे। गवि। सुरायाम्। नवमालिकायाम्। तुलस्याम्। पृथिव्याम्। गवां मातरि च। स्त्री०। वा ङीप्प्रत्ययः। **सुरभिः**। पु०। न०। सुपूर्वः रभ—औत्सुक्ये। शब्दे च।

**मठादौ ब्रह्मचर्य्यादिचतुष्के चाऽऽश्रमोऽस्त्रियाम् ।**
**अङ्गीकृतावुपगमः समीपगमनेऽपि च ॥ २९२ ॥**
**उमा दुर्गाऽतसी चाऽथ पीडायां वीचिवेगयोः ।**
**वस्त्रसूक्ष्मे च रेखायां चोर्म्मिः स्त्रीपुंसयोर्मतः ॥ २९३ ॥**

इनिप्रत्ययः । "सुरभिः शल्लकीमातृभिन्मुरागोषु योषिति । चम्पके च वसन्ते च तथा जातिफले पुमान् । स्वर्णे गन्धोत्पले क्लीबं सुगन्धिकान्तयोस्त्रिषु । विख्याते सचिवे धीरे चैत्रेऽपि च पुमानयम्" इति मेदिनी ॥ द्यूतं पाशकक्रीडा । आलयः मन्दिरम् । तस्मिन् । अपिशब्दात् बहूनां समावेशनस्थाने । तदधिष्ठायिजनसमूहे । **सभा** । स्त्री० । सह भान्ति अभीष्टनिश्चयार्थमेकत्र गृहे यत्र । भा—दीप्तौ । क्विप्प्रत्ययः । "सभा सामाजिके गोष्ठ्यां द्यूतमन्दिरयोरपि" इति मेदिनी ॥ इति भकारान्ताः समाप्ताः ॥ अथ मान्तानाह ॥ विरोधे विरुद्धतायाम् । चकारात् समरे । अभिगमने । भोगे । अन्तिके । स्वीकारे । फलसम्बंधे च । **अभ्यागमः** । पु० । अभिआपूर्वः गम—गतौ । घञ् प्रत्ययः । अवृद्धिः । "अभ्यागमो विरोधाजिवाताभ्युद्गमनान्तिके" । इति मेदिनी ॥ शास्त्रं शास्त्रमात्रम् । "सिद्धः सिद्धैः प्रमाणैस्तु हितं वाऽत्र परत्र च। आगमं शास्त्रमाप्तानाम्" इत्युक्तलक्षणम् । तस्मिन् । आयातम् आगतिः । तस्याम् । तथा उपदेशे । व्याकरणप्रसिद्धे प्रकृतिप्रत्ययानुपघातेन तन्मध्ये आगन्तरि इडादौ च। **आगमः** । पु० । आगच्छति प्राप्नोतीति । आपूर्व गम—गतौ । अच्प्रत्ययः । "आगमः शास्त्र आगतौ" इति मेदिनी॥२९१॥ मठादौ मुनीनां वासस्थानादौ । ब्रह्मचर्य्यादिचतुष्के ब्रह्मचर्य्यादिके शास्त्रोक्ते धर्म्मभेदे ब्रह्मचर्य्या श्रेष्ठाचर्य्या । आदिना वानप्रस्थः गृहस्थः भिक्षुकश्च ग्राह्यः । एषु चतुर्ष्वाश्रमेषु । कलौ तु ब्रह्मचर्यवानप्रस्थौ न स्तः । गृहस्थभिक्षुकाश्रमावेवेति वदन्ति । "गृहस्थो भिक्षुकश्चैव आश्रमौ द्वौ कलौ युगे" इति स्मरणात् । सर्वक्लेशहानेन विश्रामस्थाने । वने च । **आश्रमः** । पु० न० । आङ्पूर्वः श्रम—तपसि, आयासे च । आधारे घञ् प्रत्ययः । अवृद्धिः । "आश्रमो ब्रह्मचर्यादौ वानप्रस्थे मठे वने" इति मेदिनी ॥ अङ्गीकृतौ स्वीकारे । समीपगमने । अपिशब्दात् ज्ञाने च । **उपगमः** । पु० । उप-पूर्वः गम-गतौ । घञ्प्रत्ययः । अवृद्धिः । "उपगमः स्वीकारेऽन्तिकसर्पणे" इति मेदिनी ॥२९२॥ दुर्गा प्रसिद्धा। तस्याम् । "उमेति मात्रा तपसे निषिद्धा पश्चादुमाख्यां सुमुखी जगाम" इति । अतसी स्वनामाख्यातो वृक्षः । तस्मिन् । तथा हरिद्रायाम् । कीर्त्तौ । कान्तौ । शान्तौ च । **उमा** । स्त्री० । ओः शिवस्य मा लक्ष्मीः। अथवा उं शिवं माति पतित्वेन मन्यते मा—माने कः प्रत्ययः । वे—स्तुतौ । मक्प्रत्ययः । सं प्रसारणम् । "उमाऽतसीहैमवतीहरिद्राकीर्तिकान्तिषु" इति मेदिनी ॥ अथशब्दः अनन्तरार्थवाची । पीडायाम् । वीचिस्तरङ्गः । वेगः जवः, अश्वगतिर्वा । तयोः । वस्त्रसूक्ष्मे रेखायां । वस्त्रसङ्कोचरेखायाम् । चकारात् प्रकाशे । उत्कण्ठायाम् । बुभुक्षादिषु षट्सु । यथा "बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ। शोकमोहौ शरीरस्य जरामृत्यू षडूर्म्मयः" इति । **ऊर्म्मिः** ।

कुसुमं स्त्रीरजः पुष्पं क्षेमं कल्याणरक्षयोः ।
क्षेमा चण्डाऽथ कलमा लेखनीचौरशालयः ॥ २९४ ॥
रेतोनिकामकाम्येषु कामं पुंसि स्मरेच्छयोः ।
क्षौममट्टे दुकूले च ग्रामः संवसथे स्वरे ॥ २९५ ॥
गुल्मः स्तम्बे घट्टभेदे घर्मः स्वेदातपोष्मसु ।
जिह्मः स्यात्कुटिले मन्दे तलिमं तल्पकुट्टिमे ॥ २९६ ॥

पु० स्त्री० । मतः ज्ञात इत्यर्थः । ऋ—गतौ । मिः प्रत्ययः । अर्तेरुच्च । "ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः" इति मेदिनी ॥ २९३ ॥ स्त्रीरजः स्त्रिया आर्तवः । पुष्पं प्रसिद्धम् । तत्र च । तथा फले नेत्ररोगभेदे च । **कुसुमम्** । न० । कुस—श्लेषे । उमक्प्रत्ययः । "कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः" इति मेदिनी ॥ कल्याणं कुशलम् । न० । रक्षा लब्धवस्तुनो रक्षणम् । पु० । तयोः । चण्डा चोरनामगन्धद्रव्यम् । तस्याम् । तथा मुक्तौ च **क्षेमम्** । न० । क्षि—गतौ । मन्प्रत्ययः । "क्षेमोऽलब्धरक्षणे । चण्डायां ना शुभे न स्त्री कात्यायन्याञ्च योषिति" इति मेदिनी ॥ अथशब्दः अनन्तरार्थद्योतकः । लेखनी लेखनसाधनी । स्त्री० । चौरः तस्करः । शाली धान्यविशेषः । तेषु च । **कलमा** । स्त्री० । पु० । कल—शब्दे । अमप्रत्ययः । "कलमः पुंसि लेखन्यां शालौ पाटच्चरेऽपि च" इति मेदिनी ॥ ॥ २९४ ॥ रेतः शुक्रः । निकामः इष्टानतिक्रमः । काम्यः कमनीयः । "यत्किञ्चित्फलमुद्दिश्य यज्ञदानतपःक्रिया । क्रियते बहुलायासं तत्काम्यं परिकीर्तितम्" इति । तेषु । स्मरः अनङ्गः । इच्छा अभिलाषा । तयोः । पु० । तथा सुन्दरे च त्रि० । **कामम्** । न० । कम—कामनायाम्, वाञ्छायाम् । णिच्अच्प्रत्ययौ । "वाच्यवच्छक्तिहतयोः कामः स्मरेच्छयोः पुमान् । रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम्" इति मेदिनी ॥ अट्टे प्रासादस्योपरिगृहे । प्राचीरोपरिस्थसैन्यगृहे वा । तत्र स्थिता हि नरा अन्यान् हीनतया नाद्रियन्ते। "अट्टं भक्ते चतुष्के ना क्षौमेत्यर्थे गृहान्तरे" इति मेदिनी । अट्टालिकायां वा । दुकूले क्षौमवस्त्रे, सूक्ष्मवस्त्रे वा । चकारात् अतसीवल्कलजातवस्त्रे । शणजे वस्त्रे च । **क्षौमम्** । न० । पु०। क्षुमाया अतस्या विकारः । अण्प्रत्ययः । "क्षौममट्टे दुकूलेऽस्त्री क्षौमं वल्कलजांशुके । शणजेऽतसीजे" इति मेदिनी ॥ संवसथे विप्रादीनां वासस्थाने, जनसमूहनिवासस्थाने च । "विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि । स तु ग्राम इति प्रोक्तः शूद्राणां वास एव वा" । "तथा शूद्रजनप्रायाः ससमृद्धकृषीवलाः । क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसंज्ञिका" इति । स्वरे स्वरभेदे । "यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि । तथा स्वराणां सन्देहो ग्राम इत्यभिधीयते" इति । तथा किञ्चिच्छब्दोपपदे । तदर्थसङ्घाते च । यथा "शब्दग्रामः अर्थग्राम" इत्यादि । **ग्रामः** । पु० । ग्रस—भक्षणे । मन्प्रत्ययः । आदन्तादेशः । "ग्रामः स्वरे संवसथे" इति मेदिनी ॥ २९५ ॥ स्तम्बे अप्रकाण्डे लताप्रतानादौ वृक्षे । एकमूलेषु सङ्घातजातेषु शरेक्षुप्र-

**तोक्मं कर्णमले पुंसि हरिते च हरिद्यवे ।**
**द्रुमो यक्षेश्वरे वृक्षे दमो दमथुदण्डयोः ॥ २९७ ॥**
**धर्मोऽहिंसोपमायागोपनिषत्सु धनुष्यऽपि ।**
**कटे पुर्य्याश्च निगमो नियमो निश्चये वृते ॥ २९८ ॥**

भृतिपु तृणभेदेषु । घट्टभेदे घट्टदेशे । रक्षणार्थं स्थापिते सैन्ये । तथा प्रधानपुरुषाधिष्ठिते रणके पुरुषसङ्घे ( दशगजाः दशरथाः सप्तविंशतिः अश्वाः पञ्चचत्वारिंशत् पदातयः ) एतत्सङ्ख्यान्विते सैन्यसमुदाये । स्वनामख्याते रोगभेदे । प्लीहरोगे च । **गुल्मः** । पु० । गुड—रक्षणे, वेष्टने वा । मक्प्रत्ययः । "गुल्मः सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदोः । स्तम्बे स्त्रियामामलक्यां लावनीवस्त्रवेश्मसु" इति मेदिनी ॥ स्वेदः श्रमार्तस्य गात्रात् निष्यन्दि जलम् । आतपः सूर्य्यालोकः। उष्मः ग्रीष्मः। तेपु। **घर्मः**। घृ—सेके।मक्प्रत्ययः । निपातनाद्गुणः। "घर्म्मः स्यादातपे ग्रीष्मेऽप्युष्मस्वेदाम्भसोरपि" इति मेदिनी ॥ कुटिले वक्रे । मन्दे । तथा नगरवृक्षे च। **जिह्मः**। पु० । हा—त्यागे । मन्प्रत्ययः । द्वित्वादिनिपातनात् । "जिह्मस्तु कुटिले मन्दे क्लीबे तगरपादपे" इति मेदिनी ॥ तल्पः शय्या, अट्टालिका वा । कुट्टिमः तयोः । तथा चन्द्रहासे वितानके च । **तलिमम्**। न०। तलमस्त्यस्येति। इमन्प्रत्ययः।"तलिमं कुट्टिमे तल्पे चन्द्रहासे वितानके" इति मेदिनी॥२९६॥ कर्णमले श्रोतयोर्जाते मले । हरिते हरिद्वर्णे। हरिद्यवे हरिद्वर्णे यवे । शरदि पक्वयवे च । पु०। **तोक्मम्** । न०। तुच—समवाये । मन्प्रत्ययः । अन्तलोपश्च । "तोक्मं कर्णमले पुंसि हरिते च हरिद्यवे" इति मेदिनी॥यक्षेश्वरे कुबेरे । वृक्षे । तथा पारिजाते च। **द्रुमः**। पु०। द्रुः शाखास्त्यस्य । मः प्रत्ययः।"द्रुमो महीरुहे पारिजाते किम्पुरुषेश्वरे" इति मेदिनी।।दमथुर्दमनम्। दण्डः दण्डनम् । तयोः।तथा बाह्येन्द्रियाणां ध्येयविषयव्यतिरिक्तेभ्यो निवर्तने। "निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते" इति । पापकर्म्मभ्यो मनसो निवारणे । कर्दमे च । **दमः** । पु० । दम—शमे । घञ्प्रत्ययः । "दमस्तु दमथे दण्डे कर्दमे दमने पुमान्" इति मेदिनी ॥ ॥ २९७ ॥ अहिंसा वधविरहिता । उपमा सादृश्यम् । यागः यज्ञः । क्वचित्तु "योग" इति पाठः । उपनिषद् ब्रह्मविद्या । तत्प्रतिपादको वेदांशरूपोभागो वेदान्तश्च । तेषु । धनुषि चापे । अपिशब्दात् शास्त्रविहितकर्म्मानुष्ठानजन्ये भाविफलसाधनरूपे शुभादृष्टे । "श्रुतिस्मृतिभ्यामुदितं यत् स धर्म्म" इत्युक्ते श्रौते स्मार्ते कर्म्मणि। "विहितक्रियया साध्यो धर्म्मः पुंसां गुणो मतः" इत्युक्ते कर्म्मजन्ये अदृष्टे । आत्मनि । देहधारणात् जीवे । वस्तुगुणरूपे । आचारे । स्वभावे । न्याये।यमे। सत्सङ्गे । सोमपायिनि । लग्नात् नवमे स्थाने । दानादौ च । **धर्म्मः** । पु० न० । धृ—धारणे । मन्प्रत्ययः । "धर्म्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे" इति मेदिनी । कटे कटभेदे । पुर्य्यां पुरभेदे । क्वचित्तु "लुठ्याम्" इतिपाठः । चकारात् वणिक्पथे वाणिजे । निश्चये । अध्वनि । प्रतिज्ञायाम् । पर्य्यायकथनेन

यन्त्रणाबन्धयोश्चाऽथ पञ्चमः स्वरसङ्ख्ययोः ।
पद्मोऽस्त्री बिन्दुजालेऽब्जे व्यूहे सङ्ख्यान्तरे निधौ ॥ २९९ ॥
गजानां दन्तबन्धेऽपि प्रतिमाऽनुकृतावपि ।
भूमिः स्थानेऽपि कुन्दाम्बुनिर्गमभ्रान्तिषु भ्रमः ॥ ३०० ॥
गाङ्गेयभीषणौ भीष्मौ भीमः शम्भौ च पाण्डवे ।
नरके मङ्गले भौमः स्वरे मध्ये च मध्यमः ॥ ३०१ ॥

भेदे वेदे च । **निगमः** । पु० । निगम्यतेऽत्र अनेन वा । निपूर्वगम—गतौ । घञ्प्रत्ययः । निगमे पुरभेदे भवः । अण्प्रत्ययः । । अवृद्धिर्वा । "निगमो वाणिजे पुर्य्यां कटे वेदे वणिक्पथे" इति मेदिनी ॥ निश्चये निर्णये । व्रजे पुण्यसाधने उपवासादिनियमभेदे ॥ २९८ ॥ यन्त्रणं नि[?]मनम् । "नियमस्तु स यत्कर्म नित्यमागन्तुसाधनम्" इत्युक्ते अनित्ये आगन्तुकसाधने उपवासादौ कर्म्मणि, रक्षणे वा । आबन्धः दृढबन्धस्तयोः। चकारात् प्रतिज्ञायाम्। शौचादिषु च **नियमः** । पु० । निपूर्वयम—उपरतौ। घञ् प्रत्ययः । "नियमो यन्त्रणायाञ्च प्रतिज्ञानिश्चये व्रते" इति मेदिनी ॥ अथ अनन्तरार्थवाची । स्वरः पिकानां नादः । सङ्ख्या पञ्चसङ्ख्यायाः पूरणम् । सा च चन्द्रस्य पञ्चमकलाक्रियारूपायां तिथौ। तयोश्च। **पंचमः**। त्रि०।पञ्चानां पूरणः । पञ्चन्शब्दान्मट्प्रत्ययः । "पञ्चमो रागभेदे स्यात्स्वरभेदेऽथ पञ्चमी । पाण्डवानां चपत्न्यां स्त्री पञ्चानां पूरणे त्रिषु" इति मेदिनी ॥ बिन्दुजाले गजमुखादिस्थे बिन्दुसमूहे । अब्जे कमले । व्यूहे कमलाकारेण सैन्यादेरभिवेशनरूपे व्यूहभेदे । सङ्ख्यान्तरे "अर्बुदमब्जम्" इति पर्य्यायनाम्नोक्तायां दशार्बुदसङ्ख्यायाम् । निधौ निधिभेदे च । **पद्मः** । पु० न० । पद—गतौ । मन्प्रत्ययः । "पद्मोऽस्त्री पद्मके व्यूहनिधिसङ्ख्यान्तरेऽबुजे" इति मेदिनी ॥ २९९ ॥ गजानां दन्तबन्धे हस्तिदन्तस्य बन्धने । अनुकृतौ सदृशीकरणे । अपिशब्दात् सदृशमृत्तिकाशिलादिमूर्त्तौ । उत्तरपदस्थः सदृशे । त्रि० । यथा बुद्धप्रतिमः देवप्रतिमः । **प्रतिमा** । स्त्री० । प्रतिपूर्वमा—माने, परिमाणे वा । अः प्रत्ययः । "प्रतिमा गजदन्तस्य बन्धे चाऽनुकृतावपि" इति मेदिनी ॥ **स्थाने** स्थानमात्रे । अपिशब्दात् पृथिव्याम् । जिह्वायाम् । योगशास्त्रोक्ते योगिनां चित्तस्यावस्थाभेदे । एकसङ्ख्यायाञ्च । **भूमिः** । स्त्री० । भवन्त्यस्मिन् भूतानि । भू—सत्तायाम् । मिक्प्रत्ययः । वा ङीप् । भूमी अप्यत्र । "भूमिर्वसुन्धरायां स्यात् स्थानमात्रेऽपि च स्त्रियाम्" इति मेदिनी । कुन्दः भ्रमियन्त्रम् । अम्बुनिर्गमः जलनिर्गमस्थानम् । भ्रान्तिर्भ्रमणम् । तेषु । तथा मिथ्याज्ञाने । तद्धि अन्यथाभूतस्य वस्तुनोऽन्यथारूपेण ज्ञानम् । **भ्रमः** । पु० । भ्रम—चलने । घञ्प्रत्ययः । "भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दभ्रमणयोरपि" इति मेदिनी ॥ ३०० ॥ गाङ्गेयः गङ्गागर्भजातः शन्तनुसुतः स्वनामाख्यातः कुरुवंशसम्भवः क्षत्रियः । भीषणः भयानकरसः, भयहेतुर्वा । तयोश्च । **भीष्मः** । पु० । भी—भये । मक्प्रत्ययः, षुगागमश्च । "भीष्मो गाङ्गेयघोरयोः" इति मेदिनी ॥ शम्भौ महादेवे । पाण्डवे भीमसेने। चका-

**यमः संयमकीनाशयुग्मजेष्वथ राघवे ।**
**रामः पशौ भार्गवे च रुक्मं लोहसुवर्णयोः ॥ ३०२ ॥**
**सम्पत्कमलयोर्लक्ष्मीर्विभ्रमो भ्रमहावयोः ।**
**श्यामा गुन्द्रा कोकिला च श्रामो मण्डपकालयोः ॥ ३०३ ॥**

त्रास भयहेतौ । भयानकरसे आम्लवेतसे । पु० । दुर्गायाम् । स्त्री० । भीमः । त्रि० । बिभेत्यस्मादिति । भी—भयेमक्प्रत्ययः । "भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे" इति मेदिनी ॥ नरके नरकासुरे । मङ्गले मङ्गलग्रहे । तथा भूमिभवे च । त्रि० । **भौमः** । पु० । भूमेरपत्यं तस्या इदं वा । अण्प्रत्ययः । "भौमः कुजे च नरके पुंसि भूमिभवे त्रिषु" इति मेदिनी ॥ स्वरे सप्तस्वरमध्ये क्रौञ्चस्वरतुल्ये पञ्चमे स्वरे। मध्यजे मध्यभवे । चकारात् मध्यदेशे च। **मध्यमः** । त्रि० । मध्ये भवः । मः प्रत्ययः । "मध्यमो मध्यजेऽन्यवत् । पुमान् स्वरे मध्यदेशे" इति मेदिनी ॥ ३०१ ॥ संयमः इन्द्रियादीनां संयमनम् । कीनाशः यमः । अथवा प्राणिनां शुभाशुभकर्मानुसारेण दण्डविधायको दक्षिणस्थः देशभेदः। युग्मजः एकगर्भजायमानो यमजः । तेषु । तथा अहिंसादौ । "अहिंसा सत्यवचनं ब्रह्मचर्यमकल्कता । अस्तेयमिति पञ्चैते यमाख्यानि व्रतानि च" इति । भ्रातृत्वेन यमसम्बन्धिनि शनौ। काके। द्वित्वसङ्ख्यायां योगे च । **यमः** । पु० । यम—परिवेषणे । घञ्प्रत्ययः । "यमोऽन्यलिङ्गो यमजे ना काके गमने शनौ । शरीरसाधनापेक्षनित्यकर्मणि संयमे" इति मेदिनी ॥ अथ अनन्तरम् । राघवे दशरथज्येष्ठपुत्रे श्रीरामे। पशौ पशुभेदे । भार्गवे परशुरामे । चकारात् बलरामे। मनोहरे। शुभे च । त्रि०। वास्तूके कुष्टे। तमालपत्रे च । न०। **रामः**। पु०। रम—क्रीडायाम् । कर्त्तरि घञ्प्रत्ययः । णः प्रत्ययो वा। "रामा योषा हिङ्गुनद्योः क्लीबं वास्तूककुष्ठयोः।ना राघवे च वरुणे रेणुकेये हलायुधे"इति मेदिनी। "रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे । राघवे चाऽसितश्वेतमनोज्ञेषु च वाच्यवत्" इति विश्वः॥ लोहं प्रसिद्धम् । सुवर्णं काञ्चनं तयोः। तथा धुस्तूरे । नागकेशरे च । **रुक्मम्**। न०। रुच—प्रीतौ । मन्प्रत्ययः । निपातनात् कुत्वम् । "रुक्मञ्च काञ्चने लोहे"इति मेदिनी॥ ३०२॥ सम्पत् सम्पत्तिः । कमलं स्थलपद्मम् । तयोः । तथा शोभायाम् । कान्तौ । विष्णोः पत्न्याम् । हरिद्रायाम् । शटयाम् । मुक्तायाम् । ऋद्ध्योषधे। वृद्धिनामौषधे । फलिनीवृक्षे च । **लक्ष्मीः** । स्त्री० । लक्ष—दर्शने, अङ्कने च । ईप्रत्ययः । मडागमश्च । "लक्ष्मीः सम्पत्तिशोभयोः । ऋद्ध्योषधे च पद्मायां वृद्धिनामौषधेऽपि च । फलिन्यां स्त्री" इति मेदिनी ॥ भ्रमः भ्रमणम् । हावः स्त्रीणां शृङ्गाराङ्गे चेष्टाभेदः । त्वरया भूषास्थानवैपरीत्यम् । "विभ्रमस्त्वरयाऽकाले भूषास्थानविपर्ययः" इति । तयोः । तथा विशेषेण भ्रान्तौ । शोभायाम् । सन्देहे च । **विभ्रमः** । पु० । विपूर्वभ्रम—चलने । घञ्प्रत्ययः । "विभ्रमो भ्रान्तिहावयोः" इति मेदिनी ॥ गुन्द्रा प्रियङ्गुः । कोकिला स्वनामाख्यातो विहगभेदः । तयोः । चकारात् कृष्णत्रिवृति । गुडूच्याम् । कस्तूर्याम् । शारिवायाम् । निशायाम । वल्गुल्यां। नील्याम् । स्त्रीविशेषे च । "शीतकाले भवे-

**सार्वभौमो गजे राज्ञि सम्भ्रमौ साध्वसादरौ ।**
**कण्टकेऽल्पे च सूक्ष्मं स्यात्साधौ तुल्येऽखिले समः ॥ ३०४ ॥**
**सीमा वाटे स्थितौ क्षेत्रे हिमं शीतलशीतयोः ।**

**इति मान्ताः ॥**

**भिन्नासमानयोरन्यः स्यादभिख्या यशस्यपि ॥ ३०५ ॥**

ष्णा ग्रीष्मे च सुखशीतला । तप्तकाञ्चनवर्णाभा सा श्यामेति च कीर्तिता'' इति । **श्यामा ।** **स्त्री० । श्यै-गतौ** । मक्प्रत्ययः । स्त्रियामाप् च । ''श्यामा तु वल्गुली । अप्रसूताङ्गनायाञ्च तथा सोमलतौषधौ । त्रिवृताशारिवागुन्द्रानिशाकृष्णाप्रियङ्गुषु । श्यामा नील्यां पिके'' इति विश्वः ॥ मण्डपः तपाद्यासनादिना श्रमनिवारणम्, जनविश्रामस्थानं वा । कालः प्रसिद्धः । तयोः ।तथा मासि च । **श्रामः** । पु० । श्राम—मन्त्रणे । अः प्रत्ययः । ''श्रामो मासे मण्डपकालयोः'' इति मेदिनी ॥ ३०३ ॥ गजे उत्तरदिक्स्थे हस्तिनि । राज्ञि चक्रवर्तिनि, नृपे च । **सार्वभौमः** । पु० । सर्वस्या भूमेरीश्वरः । सर्वासु भूमीषु विदितो वा । अण्प्रत्ययः । ''सार्वभौमस्तु दिङ्नागे सर्वपृथ्वीपतावपि'' इति मेदिनी ॥ साध्वसं भयम्, भयादिजनितो वेगो वा । आदरः समादरः, सम्मानो वा । तयोः । तथा त्वरायाम् । अतिशयभ्रमे । मूत्रे च । **सम्भ्रमः** । पु० । सम्पूर्वभ्रमि—चलने । घञ्प्रत्ययः । न वृद्धिः । ''सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि'' इति मेदिनी ॥ कण्टके सूच्यग्रे । अल्पे । चकारात् कैतवे । अध्यात्मपदार्थे । अलङ्कारभेदे । कतकवृक्षे । पु० । अणुपरिमाणवति च । त्रि० । **सूक्ष्मम् ।** न० । सूच—पैशून्ये, अन्तर्द्रोहे च । स्मन्प्रत्ययः । ''सूक्ष्मं स्यात् कैतवेऽध्यात्मे पुंस्यऽणौ त्रिषु चाल्पके'' इति मेदिनी ॥ साधौ सज्जने । तुल्ये सदृशे । अखिले सर्वे । तथा समाने । युग्मे । ''समेऽर्द्धितेवर्गः'' इति लीलावती । संवत्सरे । स्त्री० । समताख्यातेषु द्वितीयचतुर्थषष्ठादिषु राशिषु च । **समः** । त्रि० । सम—अविकले, विह्वले वा । अच्प्रत्ययः । ''समा संवत्सरे स्त्रियाम् । सर्वसाधुसमानेषु समं स्यादभिधेयवत्'' इति मेदिनी ॥ ३०४ ॥ वाटे वृतिस्थाने । आघाटे इति क्वचित् पाठः । स्थितौ । क्षेत्रे केदारे । तथा मर्यादायाम् । ग्रामादेरन्तभागे । सीमन्शब्दार्थे च । **सीमा** । स्त्री० । सि—बन्धे । इमन्प्रत्ययः । पृषोदरादिना न गुणादि । ङीप् च । ''सीमाऽघाटे स्थितौ क्षेत्रे मर्य्यादावेलयोरपि'' इति विश्वः ॥ शीतलः शीतस्पर्शः । शीतं तुषारम् । तयोः । तथा आकाशच्युतजलकणे । त्रि० । सूक्ष्मैलायाम् । रेणुकायाम् । भद्रमुस्तायाम् । नागरमुस्तायाम् । पृक्कायाञ्च । स्त्री० । आग्रहायणपौषमासात्मके ऋतुभेदे । चन्दनवृक्षे । चन्द्रे । कर्पूरे च । पु० । **हिमम्** । न० । हि—गतौ, वर्द्धने च । मक्प्रत्ययः । ''हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गे'' इति मेदिनी ॥ इति मकारान्ताः समाप्ताः । अथ यान्तानाह ॥ भिन्नः अपरः । असमानः असदृशः । तयोश्च । **अन्यः** । त्रि० । स्यादित्यन्वयः । सर्वनामः । अन—जीवने । यत्प्रत्ययः । ''अन्योऽस-

**आत्रेयी पुष्पवत्यां स्यान्नदीभेदे च ना मुनौ ।**
**आशयश्छन्द आधार आदित्यो भास्करे सुरे ॥ ३०६ ॥**
**वेदोपदेशावाम्नायौ हृषीके चेतसीन्द्रियम् ।**
**इज्या स्यात्सङ्गमे दाने यागेऽर्चायां गुरौ पुमान् ॥ ३०७ ॥**
**उदयोऽद्रावुन्नतौ च कषायः सुरभौ रसे ।**
**कायः स्वभावे लक्ष्ये च सङ्घे मूर्त्तौ कदैवते ॥ ३०८ ॥**

दशेतरयोः'' इति मेदिनी ॥ यशसि कीर्त्तौ । अपिशब्दात् अभिधाने । शोभायाञ्च **अभिख्या** । स्त्री० । अभिपूर्वख्या—कथने । अङ्प्रत्ययः । ''अभिख्यात्वभिधाने स्यात् शोभायाञ्च यशस्यपि'' इति मेदिनी ॥ ३०५ ॥ पुष्पवत्याम् ऋतुमत्याम् । आर्त्तवसञ्जातायां स्त्रियाम् । नदीभेदे नदीविशेषे । मुनौ स्वनामाख्याते ऋषिभेदे च **आत्रेयी** । स्त्री० । न सन्ति कर्म्मयोग्यानि त्रीणि दिनानि यस्याः । अत्रि+ढक्+ङीप् ''आत्रेयी पुष्पवत्यां स्यान्नदीभेदे च ना मुनौ'' इति मेदिनी ॥ छन्दसि अभिप्राये । आधारे । तथा विभवे । पनसवृक्षे । वैद्यकोक्ते अजीर्णे स्थाने च । कर्म्मजन्ये वासनारूपे संस्कारे । धर्म्माधर्म्मरूपे अदृष्टे च । आशयवति चित्ते । शयने स्थाने च । **आशयः** । पु० । आपूर्वशी—शयने । अच्प्रत्ययः । ''आशयः स्यादभिप्राये पनसाधारयोरपि'' इति मेदिनी ॥ भास्करे सूर्य्ये । सुरे देवे । तथा आदित्यमण्डलस्थे हिरण्मये विष्णौ । अर्कवृक्षे । अदितिदेवताके पुनर्वसुनक्षत्रे च । **आदित्यः** । पु० । अदितौ भवः । ण्यः प्रत्ययः । ''आदित्यो भास्करे देवे'' इति मेदिनी ॥३०६॥ वेदः प्रसिद्धः । उपदेशः सदुपदेशः तयोः । तथा आगमे । निगमे । गुरुपरम्परागते वंशे । कुलक्रमेण कथने । अभ्यासे च **आम्नायः** । पु० । आम्नायते अभ्यस्यते । आपूर्वम्ना—अभ्यासे । घञ्प्रत्ययः । ''आम्नायो निगमेऽपि च । उपदेशेऽपि'' इति मेदिनी । हृषीके विषयग्राहके चक्षुरादौ । चेतसि चित्ते च । रेतसीति क्वचित्पाठः । **इन्द्रियम्** । न० । इन्द्रशब्दात् घः प्रत्ययः । ''इन्द्रियं तु हृषीके चेतसि स्मृतम्'' इति मेदिनी ॥ सङ्गमे सङ्गतौ । दाने वितरणे । यागे क्रतौ । अर्चायां पूजायाम् । गुरौ । पु० । तथा प्रतिमायाम् । गवि । कुट्टिन्याञ्च । **इज्या** । स्त्री० । स्यादित्यन्वयः । यज—देवपूजने, दाने वा । भावे क्यप्प्रत्ययः । कर्म्मणि क्यप् प्रत्ययो वा । स्त्रीत्वात् टाप् च । ''इज्या दानेऽध्वरेऽर्चायां सङ्गमे स्त्री गुरौ त्रिषु'' इति मेदिनी ॥३०७॥ अद्रौ उदयाचले पूर्वपर्वते । यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृतः''इत्युक्तेः दृष्टिगोचरस्थाने च॥उन्नतौ समुन्नतौ चकारात् राशेरुदयरूपे लग्ने । प्रथमदर्शनयोग्यभवने । वृद्धौ । उत्पत्तौ च । **उदयः**।पु०। उद्पूर्वइ—गतौ । अच्प्रत्ययः ।''उदयस्तु पुमान् पूर्वपर्वते च समुन्नतौ'' इति मेदिनी ॥ सुरभौ श्योनाकवृक्षे, जातिफलवृक्षे । रसे रसभेदे । तथा रागे । अंतःकरणदोषे । धववृक्षे । रक्तपीतमिश्रिते वर्णे । क्वाथे । पु० । क्षुद्रदुरालभायाञ्च । स्त्री०। निर्य्यासे । विलेपने च । **कषायः**। पु०। कषति कण्ठम् । कष—वधे । आयः प्रत्ययः । ''कषायो रसभेदेऽपि निर्यासे च विलपने ।

कौकृत्यमनुतापे स्यादयुक्तकरणेऽपि च ।
कश्यं कशार्हे मद्ये च काद्रवेयोऽहिरङ्गयोः ॥ ३०९ ॥
काव्यं प्रबन्धे शुक्रे ना कुलायः स्थाननीडयोः ।
गव्यं गोहितदुग्धादौ ज्यायां गव्या तु गोकुले ॥ ३१० ॥
भीष्मे ना हेम्नि गाङ्गेयं गोप्यौ गोप्तव्यचेटकौ ।
गातव्यगायनौ गेयौ गृह्यमस्वैरिपक्षयोः ॥ ३११ ॥

अङ्गरागे च न स्त्री स्यात्सुरभौ लोहिते त्रिषु'' इति मेदिनी ॥ स्वभावे निसर्गे । लक्ष्ये वेधार्थमुद्दिश्यमाने शरव्ये । लक्षणया बोधेऽर्थे च । सङ्घे राशौ । मूर्तौ देहे । कदैवते प्रजापतिदेवताके चरौ । कः प्रजापतिर्ब्रह्मा वा देवताऽस्य । अण्प्रत्ययः । इत्अन्तादेशः । वृद्धिरयादेशश्च । तथा प्राजापत्यविवाहे कनिष्ठानामिकयोरधोभागे । ब्राह्मे तीर्थे । मूलधने च । **कायः** । पु० । चीयतेऽन्नादिभिः । चिञ्—चयने । घञ् प्रत्ययः । निपातनात् साधुः । ''कायः कदैवते मूर्त्तौ सङ्घे लक्ष्यस्वभावयोः'' इति मेदिनी ॥ ३०८ ॥ अनुतापे (इदमनुचितं कृतमिति स्वकृतवस्तुनो दुःखजनकतया ज्ञानेन ) पश्चात्तापे । अयुक्तकरणे अनुचितकरणे । अपिशब्दात् दुष्कर्त्तव्ये च । **कौकृत्यम्** । न० । स्यादित्यन्वयः । कुकृतस्य भावः । यत्प्रत्ययः । ''कौकृत्यमनुतापे स्यादयुक्तकरणेऽपि च'' इति मेदिनी ॥ कशार्हे कशया ताड्ये अदन्तेऽश्वादौ । मद्ये मद्यभेदे । चकारात् अश्वमध्यभागे च । **कश्यम्** । न० । कश—शब्दे । यक्प्रत्ययः । अथवा कशामर्हतीति कशाशब्दात् यत्प्रत्ययः। ''कश्यं त्रिषु कशार्हे स्यात् क्लीबं मद्याश्वमध्ययोः''इति मेदिनी॥ अहिर्नराकारः फणालाङ्गूलवान् देवयोनिभेदो नागः, सर्पो वा । रङ्गः धातुभेदः । तयोश्च । **काद्रवेयः** । पु० । कद्र्वाः अपत्यम् । ढक्प्रत्ययः । काद्रवेयशब्दः कोषान्तरे नागतः ॥ ३०९ ॥ प्रबन्धे कवेः कर्म्मणि । ग्रन्थभेदे वा । शुक्रे असुराचार्ये । पु० । तथा कवित्वे । गृहे च । **काव्यम्** । न० । कविरेव स्वार्थे ष्यञ्प्रत्ययः । कवेः कर्म वा । ''काव्यं ग्रन्थे पुमान् शुक्रे'' इति मेदिनी ॥ स्थानमात्रम् । नीडः पक्षिनिलयः । तयोः । तथा देहे च । **कुलायः** । पु० । कुलं पक्षिसङ्घातोऽयतेऽत्र । अय—गतौ । घञ्प्रत्ययः । कौलायो गतिरस्मादिति वा । ''कुलायस्तु पुमान् स्थानमात्रे स्यात्पक्षिवासके'' इति मेदिनी ॥ गोहितं गोर्हितादि । दुग्धादि गोसम्बन्धि क्षीरादि तयोः । ज्यायां रागद्रव्ये गोकुले च । स्त्री० । **गव्यम्** । त्रि० । गोर्विकारः गवि भवम् । गोर्हितं गोरिदं वा । सर्वत्र यत्प्रत्ययः । ''गव्यं नपुंसकं ज्यायां रागद्रव्येऽप्यथ स्त्रियाम् । गोसमूहे त्रिलिङ्गन्तु दुग्धादौ चाऽपि गोहिते'' इति मेदिनी ॥ ३१० ॥ भीष्मे गङ्गागर्भजे शन्तनुसुते स्वनामाख्याते कुरुवंश्ये क्षत्रिये । कार्तिकेये च। पु०। हेम्नि। ''यं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम् । तदुल्वं पर्वते न्यस्तं हिरण्यं समपद्यत'' इत्युक्ते स्वर्णे । तथा तन्नामके धुस्तूरे । मुस्तके । कशेरुणि च । **गाङ्गेयम्** । न० । गङ्गाशब्दात् ढक्प्रत्ययः । ''गाङ्गेयः स्यात्पुमान् भीष्मे क्लीबं स्वर्णकशेरुणि'' इति मेदिनी ॥ गोप्तव्यं रक्ष्यम् । चेकटः

**चैत्यमायतने बुद्धबिम्बोद्देशकवृक्षयोः ।**
**चक्षुष्यं सुभगे चक्षुर्हिते स्त्रीकेतकेऽपि च ॥ ३१२ ॥**
**युद्धे हट्टे च जन्यं स्याज्ज्या स्यान्मौर्व्यां क्षितावपि ।**
**जटायुर्गुग्गुलुद्रौ च त्रिवेद्यां त्रितये त्रयी ॥ ३१३ ॥**

दासीपुत्रः । तयोः । तथा रक्षणीयमात्रे । गुह्ये च । त्रि० । **गोप्यः** । पु० । गुप—गोपने, रक्षणे च । यत्प्रत्ययः ॥ "गोप्यो दासीसुते पुंसि रक्षणीयेऽभिधेयवत्" इति मेदिनी ॥ गातव्यः गायनं गायनकर्म्म तयोः। तथा गीतौ च । **गेयः** । त्रि० । गै—गायने । कर्तरि यत्प्रत्ययः । भावे कर्म्मणि वा यत्प्रत्ययः । "गेयन्तु गीते गेयः स्याद्गातव्ये गायने त्रिषु" इति मेदिनी ॥ अस्वैरी स्वैरभावरहितः । आयत्तः । पक्षः स्वपक्षः तयोः । तथा गृहासक्ते खगे । मृगे च मलद्वारे । वेदोदितकर्मप्रयोगज्ञापके गोभिलसूत्रादौ ग्रन्थभेदे । गृहभवे वस्तुनि । त्रि० । **गुह्यम्** । न० । ग्रह—ग्रहणे, आदाने च । क्यप्प्रत्ययः । गृहे भवो वा । यत्प्रत्ययः । "गृह्यं गुदे ग्रन्थभेदे क्लीबं शाखापुरे स्त्रियाम् । गृहासक्तौ मृगादौ ना त्रिषु चास्वैरिपक्षयोः" इति मेदिनी ॥ ३११ ॥ आयतने बुद्धादिवन्दनस्थाने । बुद्धबिम्बं बुद्धप्रतिमा, बुद्धविशेषो वा । उद्देशकः यज्ञस्थानम् । वृक्षः ग्रामादिप्रसिद्धो महावृक्षः, देवावासवृक्षो वा । तयोः । तद्वत् जनानां समास्थतरौ। चिताचिह्ने । जनसभायाम् । जनानां विश्रामस्थाने । देवस्थाने च । **चैत्यम्** । न०।चित्याया इदमिति अण्प्रत्ययः।"चैत्यमायतने बुद्धबिम्बे नोद्देशपादपे" इति मेदिनी॥ सुभगे प्रियदर्शने । चक्षुर्हिते नयनयोर्हिते । स्त्री० । केतके केतकीवृक्षे । तत्पुष्पे । "कतके" इति क्वचित् पाठः । अपिशब्दात् पुण्डरीकवृक्षे । रसाञ्जने । शोभाञ्जने । सौवीराञ्जने स्थलपद्मे । खर्परीतुत्थे । न० । कुलत्थिकायाम् । सुभगायाम् । अजशृङ्ग्याम् । वनकुलत्थिकायां च । स्त्री० । **चक्षुष्यम्** । न० । चक्षुषे हितः । यत् प्रत्ययः । "चक्षुष्यः केतके पुण्डरीकसंज्ञकपादपे । कुलत्थिकासुभगयोः स्त्रियामक्षिहितेऽन्यवत्" इति मेदिनी ॥ ३१२॥ युद्धे संग्रामे । हट्टे क्रयविक्रयस्थाने। प्रतिहट्टपथे घरट्टजात्" इति नैषधम्। चकारात् जायमाने । जनके । उत्पाद्ये । नवोढाज्ञातिमित्रभृत्यस्निग्धेषु । त्रि०। परीवादे । प्रीतौ । देहे । पु०।जनने । न० । मातृवयस्यायाञ्च । स्त्री० । **जन्यम्** । त्रि०।स्यादित्यन्वयः । जन—जनने । कर्तरि यत्प्रत्ययः । अथवा । जन—जनने । णिच्यत्प्रत्ययौ । जनीं वधूं वहति नयति वा । यत् प्रत्ययश्च । "जन्यं हट्टे परीवादे संग्रामे च नपुंसकम्" इति मेदिनी । मौर्व्यां धनुषोगुणे।क्षितौ भूमौ।अपिशब्दात् मातरि च । **ज्या** । स्त्री० । स्यादित्यन्वयः। ज्या--जरायाम् । अङ्प्रत्ययः।"ज्या मातरि वसुधायां मौर्व्याम्" इति मेदिनी ॥गुग्गुलुद्रौ गुग्गुलुतरौ । चकारात् स्वनामाख्याते खगभेदे च। **जटायुः** । पु० । जटां याति या—गतौ । कुः प्रत्ययः । जट—संहतौ । अच्प्रत्ययः । जटं संहतमायुरस्य वा । क्वचित्तु "कूटायुः" इति पाठः । "जटायुः पुंसि सम्पातेः कनीयसि च गुग्गुलौ" इति मेदिनी। त्रिवेद्याम् ऋगादिवेदत्रये। "त्रयीव नीताङ्गगुणेन विस्तरम्" इति नैषधम् ।त्रितये त्रित्वस-

**निन्द्ये वस्त्रगृहे दूष्यं दस्युस्तस्करवैरिणौ ।**
**भेषजे द्रुविकारे च द्रव्यं भव्ये च पित्तले ॥ ३१४ ॥**
**द्वितीया तिथिभित्पत्न्योः पार्थेऽग्नौ च धनञ्जयः ।**
**निकायौ सङ्घनिलयौ नित्ये सततशाश्वते ॥ ३१५ ॥**
**पर्य्यायः स्यात्प्रकारेऽपि प्रायो ना भूयतुल्ययोः ।**
**पथ्यं हितेऽभया पथ्या पानीयं पेयनीरयोः ॥ ३१६ ॥**

ङ्ख्यायाम् । "ऋणत्रयमपाकृत्य" इति मनुः । स्त्रीत्वपक्षे "असौ नरशिखित्रयी" इति माघः। तथा त्रित्वसङ्ख्याविशिष्टे । त्रि० । ब्रह्मादिमूर्त्तित्रये । पुरन्ध्याम् । सुमतौ । सोमराजीवृक्षे च **त्रयी** । स्त्री० । त्रयाणामवयवः । त्रयोऽवयवा येषां वा । अयच्प्रत्ययः । "त्रयी त्रिवेद्यां त्रितये न" इति मेदिनी ॥ ३१३ ॥ निन्द्ये निन्दनीये । वस्त्रगृहे वस्त्रनिर्मिते गृहे । तथा दूषणीये । त्रि० । "दूष्यं वचो मम पुनर्निपुणं विभाव्य" इति शिरोमणिः । कक्षायाम् । गजमध्यबन्धनरज्ज्वांच । स्त्री० । **दूष्यम्** । न०। दुष–वैकृत्ये । णिच्यत्प्रत्ययौ । "दूष्यं त्रिषु दूषणीये क्लीबं वस्त्रे च तद्गृहे" इति मेदिनी ॥ तस्करः चौरः । वैरी रिपुः । तयोः । तथा महासाहसिके च । **दस्युः** ॥ पु० । दस–उत्क्षेपे । युच्प्रत्ययः । नानादेशः । "दस्युश्चौरे रिपौ पुंसि" इति मेदिनी ॥ भेषजे औषधे । द्रुविकारे वृक्षविकारे । भव्ये योग्ये, भाविनि च । पित्तले ताम्रादिजाते धातुभेदे । चकारात् वित्ते । जतुनि । विनये । मद्ये । न्यायोक्तेषु पृथिव्यादिषु गुणवत्सु नवसु । व्याकरणोक्ते लिङ्गसङ्ख्यान्वयिनि पदार्थे । विलेपने । तत्सम्बन्धिनि च । **द्रव्यम्** । त्रि०। द्रु–गतौ । यत् प्रत्ययः । द्रोर्वृक्षस्य विकारः । तस्येदं वा । यत्प्रत्ययः । "द्रव्यं तु पित्तले वित्ते पृथिव्यादौ विलेपने । क्लीवे च भेषजे भव्ये द्रुविकारे च वाच्यवत्" इति मेदिनी ॥ ३१४ ॥ तिथिभिद् चन्द्रस्य द्वितीयकला क्रियारूपस्थितिविशेषः । पत्नी ऊढा योषित् । तयोः । तथा द्वयोः पूरणे । द्वितीये भागे च । **द्वितीया** । स्त्री० पु० न० । द्वयोः पूरणः । तीयः प्रत्ययः । "द्वितीया तिथिभित्पत्न्योः पूरणे तूभयोस्त्रिषु" इति मेदिनी ॥ पार्थे अर्ज्जुने । अग्नौ । चकारात् नागभेदे । पोषणकरे देहव्यापिवायौ । ककुभवृक्षे । चित्रकवृक्षे च । **धनञ्जयः** । पु० । धनं जयति । जि–जये । खच्प्रत्ययः । मुमागमश्च । "धनञ्जयोऽर्ज्जुने वह्निनागभिद्देहमारुते" इति मेदिनी ॥ सङ्घः समानधर्मप्राणिसमूहः । निलयः निवासः । तयोश्च । **निकायः** । पु० । निपूर्वचि–चयने । घञ्प्रत्ययः कुत्वञ्च । "निकायस्तु पुमान् लक्षे सधर्मिप्राणसंहतौ" इति मेदिनी ॥ सततं निरन्तरम् । शाश्वतमन्वहं तयोः । तथा अहरहः क्रियमाणत्वेन विधिबोधिते । प्रत्यवायसाधनाभावप्रतियोगिनि कर्म्मणि । अविच्छिन्नपरम्पराके । उत्पत्तिविनाशरहिते । कालत्रयस्थे वस्तुनि । त्रि० । समुद्रे च । पु० । **नित्यम्** । न० । नियमेन नियतं वा भवम् । त्यप् प्रत्ययः । "नित्यं स्यात्सततेऽपि च । शाश्वते त्रिषु" इति मेदिनी ॥ ३१५ ॥ प्रकारे सादृश्ये । द्रव्यधर्म्मभेदे

**पौलस्त्यौ रावणश्रीदौ स्वर्गलाभौ फलोदयौ ।**
**ब्राह्मण्यं ब्रह्मसङ्घेऽपि बालेयौ मृदुगर्दभौ ॥ ३१७ ॥**
**वीर्यं प्रधानधातौ च भयं भीकुब्जपुष्पयोः ।**
**अनधीनेऽसहाये च भुजिष्यो हस्तसूत्रके ॥ ३१८ ॥**

वा । अपिशब्दात् अनुक्रमे । अवसरे । निर्माणे । समानार्थबोधके शब्दे च । **पर्यायः ।** पु० । स्यादित्यन्वयः । परिपूर्वः इण—गतौ । घञ्प्रत्ययः । "अथ पर्यायः प्रकारेऽवसरे क्रमे" इति मेदिनी ॥ भूयः बाहुल्यः । तुल्यः सादृश्यः । तयोः तथा मृत्यौ । अनशनमृत्यौ च । "प्रायेण सामग्र्यविधौ च" इति कुमारः । **प्रायः ।** पु० । प्रपूर्वः अय—गतौ । इण—गतौ वा । घञ् प्रत्ययः । अच्प्रत्ययो वा । "प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययोः" इति मेदिनी ॥ हिते हित-कारके । अभया हरीतकी, तद्वृक्षो वा । तत्र । स्त्री० । तथा चिकित्सोपयोगिनि रोगिसेव्ये वस्तुनि । वन्याकर्कोट्याञ्च । **पथ्यम् ।** त्रि० । पथिचिकित्सानुसारिमार्गाय हितम् । यत्प्रत्ययः । "पथ्या स्त्री हरीतक्यां हिते त्रिषु" इति मेदिनी ॥ पेयं पातव्यम् । नीरं जलम् । तयोः । तथा रक्षितव्ये च । त्रि० । **पानीयम् ।** न० । पीयते यत् । पा—पाने । अनीयरप्रत्ययः । "पानीयन्तु जले क्लीबं पातव्ये वाच्यलिङ्गकम्" इति मेदिनी ॥ ३१६ ॥ रावणः प्रसिद्धः । श्रीदः कुबेरः । तयोः । तथा शूर्पनखायाम् । स्त्री० । **पौलस्त्यः ।** पु० स्त्री० । पुलस्तस्याऽपत्यम् । यञ्प्रत्ययः । "पौलस्त्यस्तु कुबेरे स्याद्दशग्रीवेऽपि पुंस्ययम्" इति मेदिनी । स्वर्गः देवलोकः । लाभः फलोत्पत्तिः । प्राप्तो वा । तयोः । तथा हर्षे च । **फलोदयः ।** पु० । फलस्य उदय इति षष्ठीतत्पुरुषः । "फलोदयः पुमान् लाभे त्रिदिवेशालयेऽपि च" इति मेदिनी । ब्रह्मसङ्घे विप्रसमूहे । अपिशब्दात् ब्राह्मणधर्मे । विप्रत्वे च । **ब्राह्मण्यम् ।** न० । ब्राह्मणानां समूहः । भावो वा । ष्यञ्प्रत्ययः । कश्चित्तु ब्राह्मण्यमिति पाठः । "ब्राह्मण्यं ब्राह्मणत्वे च समूहे च द्विजन्मनाम्" इति मेदिनी । मृदुः कोमलः । गर्दभः रासभः तयोः । तथा दैत्यभेदे । बालहिते । अङ्गारवल्ल्याञ्च । **बालेयः ।** पु० । बलेरपत्यं बलये हितं वा । ढक्प्रत्ययः । "बालेयो गर्दभे पुंसि मृदौ बालहिते त्रिषु" इति मेदिनी॥ ३१७॥प्रधानधातौ देहस्थे चरमधातौ शुक्रे । चकारात् बले । पराक्रमे । प्रभावे । तेजसि । दीप्तौ च **वीर्य्यम् ।** न० । वीर—प्रयत्ने । यत्प्रत्ययः । वीरस्य भावो वा । यत्प्रत्ययः । "वीर्यं शुक्रे प्रभावे च तेजःसामर्थ्ययोरपि" इति मेदिनी ॥ भीर्भीतिः । कुब्जपुष्पं कुब्जकप्रसूनं तयोः । तथा भयहेतौ । दैत्यात्मके । स्वानिष्ट-सम्भावनरूपे वा । चित्तवृत्तिभेदे । नाटकप्रसिद्धे रसभेदे च । **भयम् ।** न० । बिभेत्यस्मात् । भी—भये । अच्प्रत्ययः । "भयं प्रतिभये घोरे प्रसूने कुब्जकस्य च" इति मेदिनी ॥ अनधीने स्वतन्त्रे । असहाये दासे । हस्तसूत्रके करसूत्रे । चकारात् रोगे । दास्याम् । वेश्यायाञ्च । स्त्री० । **भुजिष्यः ।** पु० । भुज—भक्षणे । किष्यन्प्रत्ययः । "भुजिष्यस्तु स्वतन्त्रे च हस्तसूत्रकदासयोः"

**स्यान्माया शाम्बरीबुद्धयोर्दैत्यशिल्प्युष्ट्रयोर्मयः ।**
**ययुरश्वे क्रतुहये रूप्यं त्रिषु सुरूपके ॥ ३१९ ॥**
**आहतस्वर्णरजते रजते च नपुंसकम् ।**
**वत्से बले बुधे रौहिणेयोऽथ श्लेषवाद्ययोः ॥ ३२० ॥**
**लयो युक्ते च लभ्यं स्याद्विषयौ देशगोचरौ ।**
**वर्गप्रस्थानयोर्व्रज्या वदान्यस्त्यागवान् सुवाक् ॥ ३२१ ॥**

इति मेदिनी॥३१८॥शाम्बरी माया । बुद्धी बुद्धमाता शुद्धोदनराज्ञः महिषी। तयोः । तथा छद्मनि । कापट्ये । इन्द्रजालादौ । मिथ्या बुद्धिहेतुत्वज्ञानभेदे । कृपायाम् । दम्भे । लक्ष्म्याम् । ईश्वरस्योपाधौ अघटनघटनसाधिकायां शक्तौ च । **माया** । स्त्री० । स्यादित्यन्वयः । मा—माने । शब्दे वा । यः प्रत्ययः। नैत्वम् । "माया स्यात् शाम्बरीबुद्धयोः" इति मेदिनी ॥ दैत्यशिल्पी दानवभेदः। उष्ट्रः करभः। तयोः तथा अश्वतरे च । **मयः** । पु० । मय—गतौ । अच् प्रत्ययः। "मयः शिल्पिनि दैत्यानां करभेऽश्वतरेऽपि च" इति मेदिनी॥अश्वे हयमात्रे। क्रतुहये अश्वमेधीये तुरङ्गमे च।**ययुः**। पु० । या—गतौ । कुः प्रत्ययः। द्वित्वञ्च। "ययुः पुमानश्वमेधतुरङ्गे च तुरङ्गमे" इति मेदिनी ॥ सुरूपके सुन्दरे ॥ ३१९॥ आहतस्वर्णरजते अलङ्कारादिनिर्म्माणाय आहन्यमाने स्वर्णे रजते च । न० । रजते रजतमात्रे च । **रूप्यम्** । त्रि० । रूपाय आहन्यते स्वर्णादि । यत्प्रत्ययः । स्वार्थे यत्प्रत्ययश्च । "रूप्यं स्यात् सुन्दरे त्रिषु । आहतस्वर्णरजते रजते च नपुंसकम्" इति मेदिनी ॥ वत्से गोवत्से बले बलरामे बुधे बुधग्रहे । तथा मरकतमणौ च । न० । **रौहिणेयः** । पु० । रोहिण्यां भवः । ढक्प्रत्ययः । "रौहिणेयोऽन्यवद्वत्से ना बुधे च हलायुधे" इति मेदिनी ॥ अथ अनन्तरम् । श्लेषः संश्लेषः । विनाशो वा । वाद्यः नृत्यगीतवाद्यानामेकतारूपः साम्यः । तयोः । तथा । सर्वभूतक्षयकरे प्रलयकाले । ईश्वरे च । **लयः** । पु० । ली—श्लेषे । अच्प्रत्ययः । "लयो विनाशे संश्लेषे साम्ये तौर्यत्रिके मतम्" इति मेदिनी ॥३२०॥ युक्ते उचिते । मिलिते वा चकारात् लब्धव्ये च । **लभ्यम्** । न० । स्यादित्यन्वयः । लभ प्राप्तौ । क्यप्प्रत्ययः । "लभ्यं युक्ते च लब्धव्ये" इति मेदिनी ॥ देशः कुरुपञ्चालादयः प्रसिद्धजनपदाः । स्थानमात्रं वा । गोचरः इन्द्रियगोचरः शब्दादिः । तयोश्च । **विषयः** । पु०। विषिण्वन्ति स्वात्मकतया विषयिणं निरूपयन्ति सम्बध्नन्ति वा । विपूर्वः षि—बन्धे । अच्प्रत्ययः । "विषयो गोचरे देशे तथा जनपदेऽपि च" इति मेदिनी ॥ वर्गः समानधर्मसमूहः । प्रस्थानं गमनं तयोः । तथा पर्य्यटने । जिगीषोर्युद्धार्थप्रयाणे च । **व्रज्या** । स्त्री० । व्रज—गतौ । संस्कारे च । क्यप्प्रत्ययः । "नृत्ये न व्रज्या प्रस्थाने वर्गे पर्यटनेऽपि च" इति मेदिनी ॥ त्यागवान् भूरिदानशीलः । सुवाक् सुन्दरवाची । तयोश्च । **वदान्यः** । पु०। वद—वाक्ये । अन्यः प्रत्ययः । पृषोदरादित्वात् साधुः । वा दीर्घः । "वदान्यो दानशौण्डे च चारु-

स्त्री मल्यां निर्जने शून्यं शौर्य्यं चारभटी बलम् ।
शाण्डिल्यो मुनिमाल्लूरौ सौरभ्यं चारुताऽपि च ॥ ३२२ ॥
सौम्यो बुधग्रहे पुंसि वाच्यवन्नीचबोधने ।
साध्या देवाः फलं साध्यं स्थेयौ नेतृपुरोहितौ ॥ ३२३ ॥
ना शैले सह्यमारोग्ये सामर्थ्यं शक्तियोग्यते ।
एकद्व्यादौ विचारे च सङ्ख्या क्लीबे च संयुगे ॥ ३२४ ॥

त्रादिनि वाच्यवत्'' इति मेदिनी ॥ ३२१ ॥ मल्ल्यां मल्लिकायाम् । स्त्री० । क्वचित्तु नल्याम् इति पाठः । निर्जने जनाभावस्थाने । तथा आकाशे । बिन्दुमात्रे । अभावे । असम्पूर्णे । ऊने तुच्छे च । **शून्यम्** । त्रि० । शूनायै प्राणिवधाय हितं रहस्यस्थानत्वात् । यत्प्रत्ययः । ''शून्यं स्यान्निर्जने वाच्यलिङ्गं नल्यान्तु योषिति'' इति मेदिनी॥ आरभटी नाट्यरचनाभेदः। बलं शक्तिः। तयोः।तथा वीर्य्ये च **शौर्यम्** । न०। शूरस्य भावः । ष्यञ्प्रत्ययः । ''शौर्यमारभटी शक्त्योः'' इति मेदिनी॥मुनिः गोत्रप्रवर्त्तकभक्तिशास्त्रकारको मुनिभेदः । माल्लूरः बिल्वः । तयोः । तथा वह्निभेदे च । **शाण्डिल्यः** । पु० । शण्डिलस्यापत्यम् । यञ्प्रत्ययः । ''शाण्डिल्यः पावकान्तरे मुनिभेदे च माल्लूरे'' इति मेदिनी ॥ चारुता मनोहरता । तत्र च । अपिशब्दात् सौगन्धे । गुणगौरवे च । **सौरभ्यम्** । न० । सुरभेर्भावः । अण् प्रत्ययः । सुरभिरस्यास्तीति । अण्प्रत्ययो वा । ''सौरभ्यन्तु मनोज्ञत्वे सौगन्धे गुणगौरवे'' इति मेदिनी ॥ ३२२ ॥ बुधग्रहे बुधे । नीचबोधने । त्रि० । तथा सोमदेवताके । स्त्री० । मनोहरे । प्रियदर्शने । अनुग्रे । वृषादिसमराशौ । उडुम्बरवृक्षे । सोमपायिनि विप्रे च । **सौम्यः** । पु० । सोमो देवतास्य ष्यण् प्रत्ययः । ''सौम्यो ज्ञे ना त्रिष्वनुग्रे मनोज्ञे सोमदैवते'' इति मेदिनी ॥ देवाः द्वादशसङ्ख्यकाः गणदेवताः । यथा ''मनो मन्ता तथा प्राणो नरोपानश्च वीर्य्यवान् ॥ निर्भयो नरकश्चैव दंशो नारायणो वृषः । प्रभुश्चेति समाख्याताः साध्या द्वादश देवता'' इति ॥ फलं साधनीयम् । तस्मिन् । त्रि० । तथा विष्कम्भादिषु योगेषु एकविंशे योगे । अष्टादशविवादेषु प्रमाणादिना उद्भाव्ये पदार्थे । व्यवहारे साधनार्हे प्रतिज्ञेये पक्षे । पु० । यथा ''प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम् । निश्चितं लोकसिद्धञ्च पक्षं पक्षविदो विदुः'' इति । अनुमित्या साधनीये वह्न्यादौ यथा वह्निमान् धूमात्'' इत्यादौ सिषाधयिषितः वह्निः साध्यः संस्कार्ये तन्त्रोक्ते मन्त्रमात्रे । ग्राह्यमन्त्रस्य स्वानुकूलता ग्राहकचक्रस्थे द्वितीयपञ्चमादिके । ''सिद्धिः साध्यः सुसिद्धोऽरिः क्रमाज्ज्ञेया मनीषिभिः'' इत्युक्तः मन्त्रभेदे च । **साध्या** । स्त्री० । सिध-सिद्धौ । पु० । णिच् यत्प्रत्ययौ । ''साध्यो योगान्तरे शरे । गणदेवविशेषे च साधनीये तु वाच्यवत्'' इति मेदिनी ॥ नेता विवादे संशयनिर्णायकः । पुरोहितः प्रसिद्धः । क्वचित् पुरोधः इति पाठः । तयोः । तथा स्थिरे च । **स्थेयः** । पु० । स्थीयते विवादनिर्णायकतयाऽसौ । स्था-गतिनिरोधे । यत्प्रत्ययः । ''स्थेयो विवादपक्षस्य निर्णेतरि पुरोहिते'' इति मेदिनी ॥ ३२३ ॥ शैले पश्चाद्देशसमीपस्थे पर्वतभेदे । पु० । आरोग्ये । तथा साहाय्ये ।

**हिरण्यं रेतसि स्वर्णे मानभेदे वराटयोः ।**
**उरस्यपि च बुक्कायां हृदयं मानसेऽपि च ॥ ३२५ ॥**

**इति यान्ताः ॥**

**अङ्कुरो रोम्णि रुधिरे वारिण्यभिनवोद्भिदि ।**
**अमरा नाभिनालायां गुडूच्यामप्यथाम्बरम् ॥ ३२६ ॥**
**नाकेऽतिगन्धद्रव्ये च स्यादस्रं रुधिराश्रुणोः ।**
**प्रस्तावेऽवसरो वर्षे चोष्ठे नीचेऽपि चाधरः ॥ ३२७ ॥**

"तत्रार्थे सह्यमकरोत्" इति पुराणम् । साम्ये माधुर्य्ये । सोढव्ये । त्रि० । **सह्यम्** । न० । सहायस्य भावः । यत्प्रत्ययः । निपातनात् साधुः । कर्म्मणि यत्प्रत्ययो वा । "सह्यं शैलान्तरे पुमान् । सोढव्ये वाच्यलिङ्गः स्यादारोग्ये तु नपुंसकम्" इति मेदिनी ॥ शक्तिर्देहजं बलम् । योग्यता । उचितत्वं तयोः । तथा सङ्गतार्थतायाञ्च । **सामर्थ्यम्** । न० । समर्थस्य भावः ष्यञ् प्रत्ययः । "सामर्थ्यं योग्यतायां स्याच्छक्तावपि नपुंसकम्" इति मेदिनी ॥ एकद्व्यादौ द्रव्याश्रिते एकत्वद्वित्वादौ गुणभेदे । स्त्री० । विचारे तत्त्वनिर्णये । संयुगे युद्धे । चकारात् बुद्धौ च । **सङ्ख्या** । स्त्री० । न० । सङ्ख्यायते परम्परनामोच्चारणं क्रियतेऽत्र । सम्पूर्वः ख्या—कथने । घञर्थे कः प्रत्ययः । "सङ्ख्यं समिति सङ्ख्या स्यादेकद्व्यादिविचारयोः" इति मेदिनी ॥ ३२४ ॥ रेतसि शुक्रे । स तु पुंसो रक्तादिपरिपाकजन्यो देहस्थो मज्जहेतुकश्चरमधातुः । स्वर्णे कनके । मानभेदः परिमाणविशेषः । वराटः खर्परः तयोः । तथा धुस्तूरे । अक्षये । द्रव्ये । अकुप्ये । रजते । धने च । **हिरण्यम्** । न० । हिरणमेव स्वार्थे यत्प्रत्ययः । "हिरण्यं रेतसि द्रव्ये, शातकुम्भवराटयोः । अक्षये मानभेदे च स्यादकुप्ये नपुंसकम्"इति मेदिनी । उरसि वक्षसि। बुक्कायां हृदयस्थे मांसपिण्डे। मानसे मनसि । अपिशब्दात् परब्रह्मणि च । "हृद्ययं तस्माद्धृदयम्"इति श्रुतिः । **हृदयम्** । न०। हृ—हरणे । कयन्प्रत्ययः । दुगागमश्च । हृत् एति इण—गतौ । अच्प्रत्ययो वा । "हृदयं मानसे बुक्कोरसोरपि नपुंसकम्" इति मेदिनी ॥ ३२५ ॥ इति यकारान्ताः समाप्ताः ॥ अथ रान्तानाह ॥ रोम्णि देहजाते अङ्कुराकारे केशतुल्ये पदार्थे लोम्नि । रुधिरे शरीरस्थे रसपाकजन्ये धातुभेदे । वारिणि जले । अभिनवः । बीजादभिनवोत्पन्नः । उद्भिद् मृत्तिकामुद्भिद्य जातस्तृणवृक्षादिः । तयोश्च । अङ्कुरः । पु० । न० । अङ्क—सङ्ख्याकरणे । चिह्नयुक्तकरणे च । उरच्प्रत्ययः । "अङ्कुरो रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि" इति मेदिनी ॥ नाभिनालायां जरायौ दूर्वायाम् । गुडूच्यां छिन्नरुहायाम् । सा हि छिन्नाऽपि पुनः पुनः प्ररोहति सहसा न म्रियते अपिशब्दात् स्थूणायाम् । देवनगर्याममरावत्याम् । घृतकुमार्य्याम् । वटवृक्षे च । **अमरा** । स्त्री० । मृ—मृतौ । पचाद्यच् प्रत्ययः । नञ्तत्पुरुषः । "अमरस्त्रिदशेप्यस्थिसंहारे कुलिशद्रुमे । स्त्रीगुडूच्यमरावत्योः स्थूणादूर्वाजरायुषु" इति मेदिनी ॥ अथ अनन्तरार्थवाची ॥ ३२६ ॥ नाके स्वर्गे ।

**श्रेष्ठेऽप्यग्रोऽवतारस्तु तीर्थेऽवतरणेऽपि च ।**
**गलहस्तेऽप्यर्धचन्द्रोऽकूपारः कमठेऽम्बुधौ ॥ ३२८ ॥**
**अलातेऽस्त्री कुजेऽङ्गारः श्रेष्ठा वाच्यावनुत्तरौ ।**
**नक्रे चौरे चावहारः स्यादभ्रं व्योममेघयोः ॥ ३२९ ॥**

आकाशे वा । अतिगन्धद्रव्ये स्वनामाख्यातगन्धद्रव्ये । चकारात् मर्म्मरशब्दयुक्ते वस्त्रे । अभ्रकधातौ च । **अम्बरम्** । न० । अबि-शब्दे । घञ्प्रत्ययः । अम्बः शब्दस्त राति धत्ते अम्बशब्दोपपदात् रा-दाने । ग्रहणे वा । कः प्रत्ययः । "अम्बरं न द्वयोर्व्योम्नि सुगन्ध्यन्तरवस्त्रयोः" इति मेदिनी ॥ रुधिरं रक्तम् । अश्रुश्चक्षुर्जलम् । तयोश्च । **अस्रम्** । न० । अश्नुते नेत्रं कण्ठं वा । अश-संहतौ । व्याप्तौ वा । रक्प्रत्ययः । क्वचित्तु अस्रमिति दन्त्यसकारपाठश्च । "अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते" इति मेदिनी ॥ प्रस्तावे प्रसङ्गे । वत्सरे च । चकारात् जिज्ञासानिवृत्तये अवश्यवक्तव्ये । वर्षणे मन्त्रभेदे । क्रियास्थितियोग्यतासम्पादकरूपे कालिकेऽवकाशे च । **अवसरः** । पु० । अवपूर्व-सृ-गतौ । अच्प्रत्ययः । "अथाऽवसरः पुमान् । प्रस्तावे मन्त्रभेदे च वर्षणे चाऽपि कीर्त्तितः" इति मेदिनी॥ओष्ठे दशनच्छदे । नीचे । अपिशब्दात् हीने । ऊर्ध्वे । तले च। **अधरः**। पु०। न ध्रियते। धृङ्-धारणे। अच्प्रत्ययः । नादितत्पुरुषः।"अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वेतु वाच्यवत्"इति मेदिनी ॥ ३२७ ॥ श्रेष्ठे अतिशयप्रशस्ते । अपिशब्दात् प्रधाने । अधिके । उपरिभागे शेषभागे । आलम्बने । पूर्वभागे । पलपरिमाणे । समूहे । प्रथमे च। त्रि०। **अग्रः** । पु०। न०। अङ्ग-चिह्नयुक्तकरणे। रक्प्रत्ययः । नलोपः।"अग्रं पुरस्तादुपरि परिमाणे पलस्य च। आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम्" इति मेदिनी ॥ तीर्थे पुष्करिण्यादेः सोपानपद्धतौ । अवतरणे नद्यादेरवरोहणे । अपिशब्दात् देवानामंशावेशवशेन प्रादुर्भावे च । **अवतारः** । पु० । अवपूर्वः तॄ-तरणे । करणे घञ्प्रत्ययः । भावे घञ्प्रत्ययो वा । "अवतारोऽवतरणे पुष्करिण्यादितीर्थयोः" इति मेदिनी ॥ गलहस्ते अपसारणार्थं गलेर्पिते हस्ते । अपिशब्दात् चन्द्रस्यार्द्धे । तदकारे नखक्षते । बाणभेदे । स्त्रीणां तिलकभेदे च । कृष्णत्रिवृति । स्त्री० । **अर्द्धचन्द्रः** । पु० ।अर्द्धं चन्द्रस्य एकादितत्पुरुषः । "अर्द्धचन्द्रो नखक्षते । गलहस्ते बाणभेदे कृष्णत्रिवृति तु स्त्रियाम्" इति मेदिनी । कमठे कच्छपे । अम्बुधौ समुद्रे । तथा महापारे समुद्रे । दूरपारे सूर्य्ये च । **अकूपारः** । पु० । न कूपपूर्व ऋ-गतौ । अण्प्रत्ययः । नकुपूर्वः पॄ-पूर्तौ । अण्प्रत्ययो वा । दीर्घः । "उपलादावकूपारः कूर्म्मराजे महोदधौ" इति मेदिनी ॥३२८ ॥ अलाते अर्द्धदग्धे अग्निसङ्क्रान्ते अग्निशून्ये वा काष्ठखण्डे । कुजे मङ्गलग्रहे । तथा रक्तवर्णे च। **अङ्गारः**। पु०। न०। अङ्ग-गतौ । आरण् प्रत्ययः । "अङ्गारमुल्मुके न स्त्री पुंल्लिङ्गस्तु महीसुते" इति मेदिनी ॥ श्रेष्ठः अत्यन्तप्रशस्तः । अवाच्यः उत्तरवाक्यरहितः । तयोः । तथा उत्तरभिन्ने च । स्त्री० । **अनुत्तरः** । त्रि०। नयादिपञ्चमीबहुव्रीहिः, षष्ठीबहुव्रीहिर्वा । नञ्तत्पुरुषश्च । "अनु-

**हविर्वह्नी चाऽग्निहोत्रौ वृक्षे लघुनि चाऽगुरुः ।**
**शक्तो निरण्डश्चाण्डीरावङ्घ्रिः स्यात्पादमूलयोः ॥ ३३० ॥**
**आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले ।**
**आरः शनैश्चरे भौमे इन्द्र आत्मनि वासवे ॥ ३३१ ॥**
**गौरीश्वरी शिवस्वामिकन्दर्पेष्वीश्वरः पुमान् ।**
**उदारौ दक्षिणस्थूलौ द्रुमे मेढ़ेऽप्युदुम्बरः ॥ ३३२ ॥**

त्तरं त्रिषु श्रेष्ठे प्रतिजल्पविवर्जिते'' इति मेदिनी ॥ नक्रे ग्राहनामके जलजन्तुभेदे । चौरे तस्करे । चकारात् युद्धादिविश्रामे । निमन्त्रितविप्रादिभ्यो देये द्रव्ये च । **अवहारः** । पु० । अवपूर्वः हृ—हरणे । कर्तरि णप्रत्ययः । भावे कर्मणि च । घञ्प्रत्ययः । ''अवहारः पुमान् चौरे द्यूतयुद्धादिविश्रमे''इति मेदिनी॥ व्योम आकाशः । मेघो जलधरः। तयोः । तथा स्वर्णे धातुभेदे च । **अभ्रम्** । न० । स्यादित्यन्वयः । अभ्र— गतौ । अच्प्रत्ययः । ''अभ्रं मेघे च गगने धातुभेदे च काञ्चने'' इति मेदिनी ॥३२९॥ हविर्मन्त्रकरणकवह्निस्थापनपूर्वकहोमादिः । वह्निः । अग्निहोत्रोऽग्निहविषोः'' इति मेदिनी ॥ स्वनामाख्याते अगुरुचन्दने । अग्निहोत्रसम्बन्धित्वात् वह्निः । तयोश्च । **अग्निहोत्रः** । पु० । अग्नौ हूयतेऽत्र । हु—होमे । अदने चात्रः प्रत्ययः । शिंशपावृक्षे । लघुनि गुरुभिन्ने । चकारात् उपदेशकशून्ये च । त्रि० । **अगुरुः** । न गुरु-र्यस्मादिति । नञ्बहुव्रीहिः । ''अगुरु क्लीबं जोङ्गकशिंशपयोर्वाच्यवल्लघुनि'' इति मेदिनी ॥ शक्तः समर्थः ॥ निरण्डः पुरुषः । अनिरण्ड इति क्वचित् पाठः । तयोः । अपिशब्दात् पुरुषावयवे च । **अण्डीरः** । पु० । अण्डः पुमवयवभेदः अस्त्यस्येति । अण्डशब्दात् ईरन्-प्रत्ययः । ''अण्डीरः पुरुषे शक्ते'' इति मेदिनी । ''अण्डीरः शक्तनरयोः'' इति हैमः । पादश्च-रणम् । मूलं वृक्षादेर्मूलम् । तयोश्च । **अङ्घ्रिः** । पु० । अव—गतौ । क्रिः प्रत्ययः । ''अङ्घ्रि-र्ना पादमूलयोः'' इति मेदिनी ॥ ३३० ॥ प्रसरणे प्रकृष्टगमने । वेगवृष्टौ धारासम्पाते । सुहृ-द्बले मित्ररूपे सैन्ये । तथा सैन्यानां सर्वतो व्याप्तौ च । **आसारः** । पु० । आपूर्वः सृ—गतौ । घञ्प्रत्ययः । ''आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले'' इति मेदिनी ॥ शनैश्चरे । शनि-ग्रहे । भौमे मङ्गलग्रहे । तथा मधुराम्लफले वृक्षभेदे । पित्तले । कोणे । प्रान्तभागे । मुण्डलोहे च । न० । **आरः** । पु० । ऋ—गतौ । घञ्प्रत्ययः । ''आरा चर्मप्रभेदिन्यां पुंसि भौमे शनैश्चरे'' इति मेदिनी ॥ आत्मनि मनसि । देहे वा । वासवे देवाधिपे । तथा परमेश्वरे । इन्द्र-दैवते ज्येष्ठानक्षत्रे । द्वादशार्कमध्ये अर्कभेदे । कुटकवृक्षे च । **इन्द्रः** । पु० । इदि—ऐश्वर्ये । रः प्रत्ययः ''इन्द्रः शक्रादित्यभेदे योगभेदान्तरात्मनि'' इति मेदिनी ॥ ३३१ ॥ ईश्वरी पार्वती । तत्र । ''शङ्खेन्दुकुन्दधवला ततो गौरी तु सा मता'' इति । तथा अष्टवर्षायामसञ्जातरज-स्कायां कन्यायाम् । ''अष्टवर्षा भवेद्गौरी'' इति । हरिद्रायाम् । दारुहरिद्रायाम् । गोरोचना-याम् । प्रियङ्गौ । भूमौ । नदीभेदे । मञ्जिष्ठायाम् । श्वेतदूर्वायाम् । मल्लिकायाम् । तुलस्याम् ।

उग्रोऽन्त्यजे शिवेऽत्युच्चे उस्रो दीप्तौ गवि स्त्रियाम् ।
सिंहजटासु पुन्नागे बकुले नागकेशरे ॥ ३३३ ॥
केशरः पुंसि किञ्जल्के न स्त्री हिङ्गुनि न द्वयोः ।
मक्षिकायामपि क्षुद्रा क्षुद्रः स्यात्कृपणे त्रिषु ॥ ३३४ ॥

सुवर्णकदल्याम् आकाशमांस्याम् । रागिणीभेदे च । **गौरी** । स्त्री० । गौरशब्दात् ङीप् च । "गौरी त्वसञ्जातरजःकन्याशङ्करभार्ययोः" इति मेदिनी ॥ शिवः महादेवः। स्वामी पतिः। कन्दर्पः अनङ्गः । तेषु । बहुवचनात् आढ्ये । स्वामिनि च । त्रि० । **ईश्वरः** । पु० । ईश–ऐश्वर्ये । वरच्प्रत्ययः । "ईश्वरो मन्मथे शम्भौ नाऽढये स्वामिनि वाच्यवत्" इति मेदिनी ॥ दक्षिणः सर्वनायिकासु समानुरागे नायकभेदे । स्थूलः महान् । तयोः। तथा दातरि । सरले । गम्भीरे । असाधारणे च । **उदारः** । त्रि० । उदुआपूर्वः रा–दाने। ग्रहणे च । कः प्रत्ययः। "उदारो दातृमहतोर्दक्षिणे चाऽभिधेयवत्" इति मेदिनी ॥ द्रुमे यज्ञाङ्गे वृक्षे । मेढ्रे पण्डके । अपिशब्दात् ताम्रे । ग्रहावग्रहण्यां देहल्याम् । कुष्ठभेदे च । न० । **उदुम्बरः** । पु० । उं शम्भुं वृणोति । वृ–वरणे । खश् प्रत्ययः । उम्बरः उत्कृष्ट उम्बरः पृषोदरादित्वात् साधुः । "उदुम्बरस्तु देहल्यां वृक्षभेदे च पण्डके । कुष्ठभेदेऽपि च पुमान् ताम्रे तु स्यान्नपुंसकम्" इति मेदिनी ॥ ३३२ ॥ अन्त्यजे क्षत्रियात् ऊढायां शूद्रायामुत्पन्ने संकीर्णवर्णे । "रजकश्चर्म्मकारश्च नटो वरुड एव च । कैवर्त्तमेदभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः" इति ॥ शिवे महादेवे । तथा वायुमूर्तिधारिणि शिवे । उग्रगुणत्वात् शोभाञ्जनवृक्षे । केरलदेशे । क्रूरसंज्ञके । "उग्रः पूर्वमघान्तका" इति ज्यौतिषोक्ते नक्षत्रसमुदाये । वत्सनाभाख्ये विषे । न० । उत्कटे । त्रि० । वचायाम् । यवान्याम् । धन्याके । उग्रजातेः स्त्रियाञ्च । स्त्री० । **उग्रः** । पु० । उच–समवाये । रक्प्रत्ययः । गश्चान्तादेशः । "उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिषूत्कटे । स्त्री वचाक्षुद्रयोरुग्री कर्कर्य्यां करभे पुमान्" इति मेदिनी ॥ अत्युच्चे उच्चतरे । दीप्तौ किरणे । सूर्य्यकिरणानां जलहेतुत्वात् रसवत्त्वम् । गवि वृषे । स्त्री० । तथा सुरभ्याम् । उपचित्रायाञ्च । स्त्री० । **उस्रः** । पु० । वसन्ति रसा अत्र । वस–निवासे । रक्प्रत्ययः । सम्प्रसारणञ्च । "उस्रो वृषे च किरणेऽप्युस्राऽर्जुन्युपचित्रयोः" इति मेदिनी ॥ सिंहजटासु सिंहस्कन्धस्थायां जटायाम् । बहुवचनप्रयोगात् अश्वस्कन्धस्थेषु केशेषु च कचित्तु सिंहसटासु इति पाठः । पुन्नागे स्वनामख्याते वृक्षे । बकुले बकुलवृक्षे । नागकेशरे स्वनामाख्याते पुष्पवृक्षे । पु० ॥ ३३३ ॥ किञ्जल्के । पु० न० । हिङ्गुनि । रामठे । निर्य्यासभेदे । न० । तथा हिङ्गुले । नीलकेशरवृक्षे । सुरानामगन्धद्रव्ये च । **केशरः** । पु० । के जले शीर्यते शॄ हिंसने भेदने च । अप्प्रत्ययः । एवं दन्त्यसकारान्तशब्दोऽपि एतेष्वर्थेषु दृश्यते । "केशरं हिङ्गुले क्लीबं किञ्जल्के न स्त्रियां पुमान् । सिंहसटायां पुन्नागे बकुले नागकेशरे" इति मेदिनी॥

कद्रुस्त्रिषु कडारे स्यात्कद्रुः स्त्री नागमातरि ।
नापितस्योपकरणे कोकिलाक्षेऽपि च क्षुरः ॥ ३३५ ॥
भस्मकाचरसाः क्षाराः कारुः कारकशिल्पिनोः ।
कर्बुरो राक्षसे पापे कर्बुरं शबले जले ॥ ३३६ ॥
कारे पीडा बन्धशाले क्रूरौ कठिनभीषणौ ।
जम्बुद्वीपसहाकन्याः कुमार्योऽथाश्ववारके ॥ ३३७ ॥

मक्षिकायां मक्षिकामात्रे । अपिशब्दात् वेश्यायाम् । कण्टकार्याम् । सरघायाम् । चाङ्गेर्य्याम् । हिंसायाम् । गवेधुकायाञ्च । **क्षुद्रा** । स्त्री० । क्षुद—प्रेषणे । रक्प्रत्ययः । "क्षुद्रा व्यङ्गानटी-कण्टकारिकासरघासु च । चाङ्गेरीवेश्ययोर्हिंसामक्षिकामात्रयोरपि" इति मेदिनी ॥ कृपणे व्यय-कुण्ठे । त्रि० । तथा नीचे । क्रूरे । दरिद्रे । अल्पे । मूलग्राहिणि च । **क्षुद्रः** । त्रि० । स्या-दित्यन्वयः । क्षुद—प्रेषणे । रक्प्रत्ययः । क्षुद्रः स्यादधमे क्रूरकृपणाल्पेषु वाच्यवत्" इति मेदिनी ॥ ३३४ ॥ कडारे पिङ्गलवर्णे । तद्वति । नागमातरि । स्त्री० । तथा कश्यपपत्न्याम् । **कद्रूः** । पु० । कुद—विह्वलीभावे, वैक्लवे च । रुः प्रत्ययः । "कद्रुस्त्रिषु स्वर्णपिङ्गे नागानां मातरि स्त्रियाम्" इति मेदिनी ॥ नापितस्य क्षुरकर्म्मकारकस्य उपकरणे क्षुरकर्म्मादिभाण्डसमूहे अस्त्रे च । कोकिलाक्षे स्वनामाख्याते वृक्षभेदे । अपिशब्दात् गोक्षुरे । महापिण्डीतके । बाणे । पश्वादीनां शफे च । **क्षुरः** । पु० । क्षुर—विलेखने । कः प्रत्ययः । क्षु—क्षुतौ । रक्प्रत्ययो वा । "क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे" इति मेदिनी ॥३३५॥ भस्मदेग्धगोमया-दिविकारः । काचः क्षारजातमृत्तिकाभेदः । रसः क्षार इति नाम्नाख्यातो रसः । तेषु । तथा लवणे । गुडे । धूर्त्ते । टङ्कणे । यवक्षारे । विड्लवणे । सर्जिकाक्षारे च । **क्षारः** । पु० । क्षर—संचलने । रः प्रत्ययः । "क्षारे रसान्तरे धूर्त्ते लवणे काचभस्मनोः" इति मेदिनी । कारकः करण-शीलः । शिल्पी चित्रादिकर्म्मकरः । तयोः । तथा विश्वकर्म्मणि च । **कारुः** । त्रि० । कृ—करणे । उण्प्रत्ययः । "कारुर्विश्वकर्म्मणि ना त्रिषु कारकशिल्पिनोः" इति मेदिनी ॥ राक्षसे । पापे शठयाम् । शबले कर्बुरवर्णे । जले सलिले । न० । क्वचित् जने इति पाठः । तथा स्वर्णे । हरिताले च । न० । **कर्बुरः** । पु० । कर्ब—गतौ । उरः प्रत्ययः । "कर्बुरः सलिले हेम्नि कर्ब्बुरः पापरक्षसोः" इति मेदिनी ॥ क्वचित् कर्बूर इति दीर्घोकारान्तपाठो दृश्यते । तस्यार्थोऽप्येवम् ॥ ३३६ ॥ पीडा व्यथा । बन्धशाला बन्धनागारम् । तयोः । तथा बन्धने । दूत्याम् । वीणाधःस्थकाष्ठमयदण्डे । सुवर्णकारिकायाञ्च । **कारा** । स्त्री० । कृ—हिंसने । भिदादित्वात् अङ्प्रत्ययः । निपातनात् दीर्घश्च । "कारा दूत्यां प्रसेवके । बन्धने बन्धनागारे हेमकारिकयोरपि" इति विश्वः । कठिनः निष्ठुरः । भीषणः निर्दयः, घोरो वा । तयोः । तथा परद्रोहकारिणि । नृशंसे । उष्णे । रक्तकरवीरे । श्येनखगे । कङ्कपक्षिणि । ज्योतिषोक्ते रविकुजशनिराहुकेतुरूपे ग्रहे । पूर्वात्रयभरणीमघारूपे नक्षत्रे च **क्रूरः** । त्रि० ।

**बालके कार्त्तिकेये च कुमारो भर्तृदारके ।**
**कलिकारस्तु धूम्याटे करञ्जे पीतमस्तके ॥ ३३८ ॥**
**सिद्धस्थानेऽपि च क्षेत्रं कर्करौ दृढदर्पणौ ।**
**शिंशपायां कृष्णसारः स्नुह्याश्चाऽथोत्पलेऽपि च ॥ ३३९ ॥**
**कर्णपूरः कुबेरस्तु नन्दीवृक्षैकपिङ्गयोः ।**
**शट्याश्च शूकशिम्ब्याश्च कच्छूरा पामने त्रिषु ॥ ३४० ॥**

कृत–छेदे, वेष्टे वा । रक्प्रत्ययः । धातोः क्रूआदेशश्च । "क्रूरस्तु कठिने घोरे नृशंसेऽप्यभिधेय वत्" इति मेदिनी । जम्बुद्वीपः प्रसिद्धः। सहा घृतकुमारी । कन्या अनूढा।"सम्प्राप्ते द्वादशे वर्षे कुमारीत्यभिधीयते" इति । एतेषु । तथा नवमल्लिकायाम्। अपराजितायाम्। वन्ध्याकर्कोटयाम् । स्थूलैलायाम् । नदीभेदे । श्यामापक्षिणि च । **कुमारी** । स्त्री० । कुमारशब्दात् ङीप्प्रत्ययः । "कुमारी शैलतनया नवमाल्योर्नदीभिदि । सहाऽपराजिताकन्याजम्बुद्वीपेषु च स्त्रियाम्" इति मेदिनी ॥ अथ अनन्तरार्थद्योतकः । अश्ववारके अश्वारोहिणि ॥ ३३७ ॥ बालके पञ्चवर्षीये बालके । कार्त्तिकेये स्कन्दे । भर्तृदारके नाट्योक्तौ राजकुमारे, युवराजे वा । चकारात् शुके पक्षिणि । सिन्धुनदे । वरुणवृक्षे च । **कुमारः** । पु० । कुमारयति क्रीडयति, कौमारयति दुष्टान् वा । कुमार–केलौ । अच्प्रत्ययः । कुत्सितो मारो यस्मादिति । "कुमारः स्याच्छुके स्कन्दयुवराजेऽश्ववारके । बालके वरुणद्रौ ना न द्वयोर्जात्यकाञ्चने" इति मेदिनी ॥ धूम्याटे स्वनामाख्याते पक्षिणि । करञ्जे पूतिकरञ्जे । पीतमस्तके पीतवर्णमस्तकयुक्ते च। **कलिकारः** । पु०। कलिं करोति । कृ—करणे । अण् प्रत्ययः । "कलिकारस्तु धूम्याटे करञ्जे पीतमस्तके" इति मेदिनी॥३३८॥सिद्धस्थाने पुण्यफलसाधनयोग्यस्थाने । अपिशब्दात् इन्द्रिये । देहे । अन्तःकरणे । इन्द्रियादिसङ्घाते । "इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः । इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः" । एतत्क्षेत्रमिति परिलक्षम् । सस्याद्युत्पत्तिस्थाने केदारे । कलत्रे । मेषादिद्वादशराशिषु च । **क्षेत्रम्** । न०। क्षि–गतौ, हिंसायां वा । ष्ट्रन्प्रत्ययः । "क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः" इति मेदिनी ॥ दृढः कठिनः । दर्पणः आदर्शः । तयोः । तथा चूर्णपाषाणखण्डे कङ्करे । मुद्गरे च । **कर्करः**। पु० । कर्क–हासे । अरन्प्रत्ययः । कर्कं हासं राति । रा–आदाने । कः प्रत्ययो वा । "कर्करो भाण्डभेदे ना दर्पणे कठिने त्रिषु"इति मेदिनी॥ शिंशपायां शिंशपावृक्षे । स्नुह्यां स्नुहीवृक्षे । चकारात् मृगविशेषे च । **कृष्णसारः** । पु० । कृष्णः सारोऽस्येति बहुव्रीहिः।"कृष्णसारा शिंशपायां पुंसि स्नुह्यां मृगान्तरे" इति मेदिनी ॥ अथ अनन्तरार्थवाची । उत्पले नीलोत्पले । अपिशब्दात् कर्णाभरणे । एतेषां पुष्पैः स्त्रीकर्णस्य भूषा इति लोकोक्तिः । शिरीषवृक्षे । अशोकवृक्षे च । **कर्णपूरः** । पु० । कर्णं पूरयति । पूर–पूर्तौ प्रीणने च । अण्प्रत्ययः । "कर्णपूरः शिरीषे स्यान्नीलोत्पलवतंसयोः" इति मेदिनी ॥

**कन्दरः स्याद्गुहासृण्योः कोट्टारौ कूपनागरौ ।**
**कदरः क्रकचे रोगे कदरः खदिरे सिते ॥ ३४१ ॥**
**कट्वरं कुत्सिते तक्रे किर्म्मीरौ शबलासुरौ ।**
**कपाले च कटाहे च शस्त्रभेदे च कर्परः ॥ ३४२ ॥**
**भिक्षापात्रे कपाले च खर्परस्तस्करेऽपि च ।**
**देवताडे खरा स्त्री स्यात्खरो गर्दभतीक्ष्णयोः ॥ ३४३ ॥**

नेत्रो जातः । पुनः शिवप्रसादात्तच्चक्षुषः पिङ्गलत्वं जातम् इति पुराणकथा । तयोः । कुशरीरे कुत्सिते शरीरे । "कुत्सायां क्विति शब्दोऽयं शरीरं बेरमुच्यते । कुबेरः कुशरीरत्वात्" इत्यवर्ग्यमध्योप्ययम् । कुवेर इति च । चकारात् मन्दे च । **कुबेरः** । पु० कुम्बति धनम् । कुबि—स्तुतौ । ऐरक्प्रत्ययः । कुत्सितं वेरं देहोऽस्येति बहुव्रीहिर्वा । "कुबेरः स्यात् पुंसि नन्दिवृक्षे पुण्यजनेश्वरे" इति मेदिनी॥ शट्यां स्वनामाख्याते औषधभेदे, गन्धशट्यां वा । शूकशिम्ब्यां कपिकच्छ्वाम्। पामने पामनरोगवति च। त्रि०। **कच्छूरा**। स्त्री०। कच्छूं राति ददाति। रा—आदाने । कः प्रत्ययः । "कच्छूरा शूकशिम्ब्याञ्च शटीदुःस्पर्शयोरपि" इति मेदिनी ॥ ॥ ३४० ॥ गुहा गह्वरम्, गुहाकारगिरिनितम्बदेशो । वा सृणिः अङ्कुशः । तयोः । तथा आर्द्रके । न० । **कन्दरः** । पु०। स्त्री०। कं जलेन दीर्यते । कम्शब्दोपपदः दृ—आदरे । अच्प्रत्ययः । "कन्दरस्त्वङ्कुशे पुंसि गुहायान्तु नपुंसकम्" इति मेदिनी ॥ कूपः स्वनामाख्यातो जलाधारगर्त्तः । नागरः प्रसिद्धः । तयोः । तथा पुष्करिण्याः पाटके च **कोट्टारः** । पु० । कुट्ट—प्रतापने । आरक्प्रत्ययः । पृषोदरादित्वात् साधुः । "कोट्टारो नागरे कूपे पुष्करिण्याश्च पाटके" इति मेदिनी ॥ क्रकचे ग्रन्थिलाख्ये वृक्षे, करपत्रे वा । रोगे रोगभेदे, क्षुद्ररोगे वा । सिते खदिरे श्वेतखदिरे च । **कदरः** । पु०। कं जलं दृणोति । दृ—वधे । वचादित्वात् अच्प्रत्ययः । "कदरः श्वेतखदिरे क्रकचव्याधिभेदयोः" इति मेदिनी ॥ ३४१ ॥ कुत्सिते मलिने । तक्रे चतुर्थांशजलयोगेन मथिते दध्नि । तथा दधिसारे व्यञ्जने च । **कट्वरम्** । न० । कट—गतौ, वर्षणे च । ष्वरन्प्रत्ययः । क्वचित् कच्चरमिति पाठः । "कच्चरं कुत्सिते तक्रे" इति विश्वः । कच्चरं कुत्सिते वाच्यलिङ्गं तक्रे नपुंसकम्" इति मेदिनी ॥ शबलः कर्बुरवर्णः, चित्रवर्णो वा । त्रि० । असुरः राक्षसभेदः । तयोः । तथा नागरङ्गे च । **किर्म्मीरः** । पु० । कॄ—हिंसने, विक्षेपे वा । ईरन्प्रत्ययः । कित्, मुडागमश्च । "किर्म्मीरो नागरङ्गे च कर्बुरे राक्षसान्तरे" इति मेदिनी॥ कपाले शीर्षोर्द्ध्वास्थिनि । कटाहे तैलादेः पाकसाधनपात्रे । शस्त्रभेदे अस्त्रविशेषे च । **कर्परः** । पु० । कृप—कल्पने । अरन्प्रत्ययः । लत्वाभावः । कर्परः स्यात्कपाले च शस्त्रभेदकटाहयोः" इति मेदिनी ॥ ३४२ ॥ भिक्षापात्रे भिक्षाभाण्डे । कपाले शिरोऽस्थनि । क्वचित्तु कपोले इति पाठः । तस्करे चौरे । अपिशब्दात् धूर्ते भिन्नमृन्मयखण्डे । धातुभेदे । तुत्थाञ्जनभेदे च । न० । **खर्परः** । पु० ।

भद्रमुस्ते गुवाके च खपुरोऽथ द्रुमे पुमान् ।
रूप्ये खले च खर्ज्जूरः खुरः कोलदले शफे ॥ ३४४ ॥
खरुरश्वे हरे दर्पे दन्ते श्वेते तु वाच्यवत् ।
गुरुस्त्रिलिङ्ग्यां महति दुर्ज्जरालघुनोरपि ॥ ३४५ ॥
गायत्री खदिरे स्त्री स्याच्छन्दस्यपि षडक्षरे ।
गुन्द्रस्तेजनके गुन्द्रा प्रियङ्ग्वां भद्रमुस्तके ॥ ३४६ ॥

क्रृप–कल्पने, युतौ वा । अरन्प्रत्ययः । पृषोदरादित्वात् खत्वम् । "खर्परस्तस्करे धूर्ते भिक्षाभाण्डकपालयोः" इति मेदिनी ॥ देवताडे स्वनामाख्याते वृक्षे। **खरा** । स्त्री० । गर्द्दभः प्रसिद्धः। तीक्ष्णः उग्रः । तयोः । तथा अश्वतरे । राक्षसभेदे । "चेरतुः खरदूषणौ" इति भट्टिः । कामे । कङ्कविहगे । कुररपक्षिणि । कण्टकीवृक्षभेदे। षष्टिसंवत्सरमध्ये वत्सरभेदे । रवेः पार्श्वचरे । तिग्मस्पर्शे कठिने च । त्रि० । **खरः** । पु० । खं मुखबिलमतिशयेनास्त्यस्य । रः प्रत्ययः । खमिन्द्रियं राति । रा–आदाने । कः प्रत्ययो वा । रलयोरेकत्वम् । "खरः स्यात्तीक्ष्णधर्मयोः । गर्द्दभे स्त्री देवताडे" इति मेदिनी ॥ ३४३ ॥ भद्रमुस्तके नागरमुस्तके । गुवाके क्रमुकवृक्षे । चकारात् व्याघ्रनखे । ऊर्द्ध्वगते पुरोघटे । न० । अलसे । त्रि० । **खपुरः** । खमिन्द्रियमाकाशं वा पिपर्त्ति । पॄ–पूर्त्तौ । कः प्रत्ययः । "खपुरः क्रमुके भद्रमुस्तके कलसेऽपि च" इति मेदिनी ॥ अथ अनन्तरार्थवाची । द्रुमे वृक्षभेदे । पु० स्त्री० । रूप्ये रजते । खले । चकारात् स्पर्शने । कीटभेदे च । **खर्ज्जूरम्** । न० । खर्ज्जूं राति । खण्डं ददाति । रा–दाने, ग्रहणे वा । कप्रत्ययः । "खर्ज्जूरं रूप्यखलयोर्वृश्चिके ना द्रुमे द्वयोः" इति मेदिनी ॥ कोलदले बदरीपत्रे । नखिनामगन्धद्रव्ये च । शफे स्वनामाख्याते पशूनां शफे । तथा नापितास्त्रे । खट्वादीनां पादे च । **खुरः** । पु० । खुर–विलेखने । कः प्रत्ययः । "खुरः कोलदले शफे" इति मेदिनी ॥ ३४४ ॥ अश्वे हये । हरे महादेवे, कामदेवे वा । दर्पे गर्वे । दन्ते चर्वणसाधनेऽस्थिभेदे । श्वेते श्वेतवर्णवति च । तुकारात् निषिद्धरुचौ । निर्बोधे । क्रूरे च। त्रि०। पतिंवरायां कन्यायाञ्च । स्त्री० । **खरुः** । पु० । खन–विदारे । कुःप्रत्ययः । रश्चान्तादेशः । "खरुर्दर्पे हरे हये । दन्ते पुंसि त्रिषु श्वेते" इति मेदिनी॥ महति बलवति । दुर्ज्जरः दुःखेन जीर्य्यतु-पदार्थः। अलघुः गुरुत्ववान् । तयोः । त्रि० । अपिशब्दात् मनूक्ते निषेकादिकर्त्तरि पित्रादौ । निषेकादीनि कर्म्माणि यः करोति यथाविधि । सम्भावयति चान्नेन स विप्रो गुरुरुच्यते" इति । आचार्ये "स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति" इति शास्त्रोपदेष्टरि । सम्प्रदायप्रवर्त्तके । उपाध्याये । तान्त्रिकशास्त्रोपदेष्टरि । बृहस्पतौ तदधिदैवे पुष्ये । द्विमात्रे दीर्घस्वरवर्णे । बिन्दुविसर्गयुक्ते एकमात्रे । संयुक्तवर्णात् पूर्वस्थिते एकमात्रेऽपि वर्णे । द्रोणाचार्ये । कपिकच्छ्वाम् । पूज्ये । "पतिरेको गुरुः स्त्रीणां सर्वत्राभ्यागतो गुरुः" इति पुराणम् । **गुरुः** । पु० । गिरत्यज्ञानं गृणाति उपदिशति वा धर्म्मम्। गॄ–शब्दे । कुः प्रत्ययः । उच्च। "गुरुस्त्रिलिङ्ग्यां महति दुर्ज्जरालघुनोरपि । पुमान्निषेकादिकरे पित्रादौ सुरमन्त्रिणि" इति मेदिनी ॥ ३४५ ॥ खदिरे स्वनामा-

**गह्वरे द्वे गुहाकुञ्जे पूर्द्वारि द्वारि गोपुरम् ।**
**नग्नकन्योमयोर्गौरी गौरः स्यादुज्ज्वलेऽपि च ॥ ३४७ ॥**
**गोत्रं नाम्नि कुले पुंसि शैले भूगव्ययोः स्त्रियाम् ।**
**स्वरे रणे च गान्धारो गृध्रः स्याल्लोभिपक्षिणोः ॥ ३४८ ॥**
**कर्बुरे तिलके चित्रं सुभद्रातारयोः स्त्रियाम् ।**
**चन्द्रः शशिनि कर्पूरे चारो बन्धापसर्पयोः ॥ ३४९ ॥**

ख्याते वृक्षे । छन्दसि वेदोक्ते । षडक्षरे षडक्षरपादके छन्दोभेदे । अपिशब्दात् मन्त्रभेदे च । **गायत्री** । स्त्री० । गायन्तं त्रायते । त्रै—पालने । कः प्रत्ययः । "गायत्री त्रिपदादेवी-छन्दोभित्खदिरेषु च" इति मेदिनी ॥ तेजनके वंशे । शरतृणे च । पु० । प्रियङ्ग्वाम् । भद्रमुस्तके नागरमुस्तके । तथा गवेधुकायाञ्च । स्त्री० । **गुन्द्रः** । पु० । गुन्द्र—क्रीडायाम् । अच्प्रत्ययः । "गुन्द्रस्तेजनके स्त्री तु प्रियङ्गौ भद्रमुस्तके" इति मेदिनी ॥ ३४६ ॥ गुहा अकृत्रिमः पर्वतगर्त्तः । कुञ्जं निकुञ्जम् । तयोः । तथा दम्भे । वने । रोदने । विषमस्थाने अनेकानर्थसङ्कटे च । **गह्वरम्** । न० पु० । गाहृ—विलोडने वरच्प्रत्ययः । निपातनात् साधुः । "अथ गह्वरम् । गुहागहनदम्भेषु निकुञ्जे तु पुमानयम्" इति मेदिनी ॥ पूर्द्वारि नगरद्वारे । द्वारे तथा कैवर्त्तिमुस्तके च । **गोपुरम्** । न० । गावः पूर्यन्ते यत्र । पृ—पूर्त्तौ । कः प्रत्ययः । "गोपुरं द्वारि पूर्द्वारि कैवर्त्ति मुस्तकेऽपि च" इति मेदिनी ॥ नग्नकन्या असञ्जातरजस्का कन्या । उमा पार्वती । तयोश्च । **गौरी** । स्त्री० । गौरशब्दात् ङीप् प्रत्ययः । "गौरी त्वसञ्जातरजःकन्याशङ्करभार्ययोः" इति मेदिनी ॥ उज्ज्वले स्वर्णे । अपिशब्दात् श्वेतसर्षपे । चन्द्रे । धववृक्षे । अरुणवर्णे । श्वेतवर्णे । तत्तद्वर्णवति । विशुद्धे च । त्रि० । पद्मकेशरे । पङ्कजे । कुङ्कुमे च । न० । **गौरः** । पु० । गुर—वधे, गत्याञ्च । रः प्रत्ययः । निपातनात् साधुः । "गौरः श्वेतेऽरुणे पीते विशुद्धे चाऽभिधेयवत् । ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेशरे" इति मेदिनी ॥ ३४७ ॥ नाम्नि आख्यायाम् । कुले पौत्राद्यपत्ये वंशे । पु० । शैले पर्वते । भूः पृथिवी । गव्या गोसम्बन्धिनी । तयोः । स्त्री० । तथा कानने । क्षेत्रे । पथि । छत्रे । सजातीयगणे च । **गोत्रम्** । न० । गां पृथिवीं त्रायते । त्रै—पालने । कः प्रत्ययः । "गोत्राः भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययो" इति मेदिनी ॥ स्वरे स्वरभेदे । रणे गीतिविषये । चकारात् सिन्दूरे । रागभेदे । कन्दार इति ख्याते देशोद्भवे । त्रि० । गन्धके च । **गान्धारः** । पु० । गन्धं सौरभमृच्छति । ऋ—गतौ । प्रज्ञाद्यण् इति अण्-प्रत्ययः । "गान्धारः पुंसि सिन्दूरे रागदेशप्रभेदयोः" इति मेदिनी ॥ लोभी लोभशीलः । पक्षी खगभेदः । तयोश्च । **गृध्रः** । पु० । गृध—लिप्सायाम् । क्रुन्प्रत्ययः । "गृध्रः खगान्तरे पुंसि वाच्यलिङ्गोऽथ लुब्धके" इति मेदिनी ॥ ३४८ ॥ कर्बुरे चित्रवर्णे । तिलके स्वनामाख्याते नासादौ धार्य्ये चन्दनादिविशेषके । तथा यमभेदे । अशोकवृक्षे । चित्रकवृक्षे एरण्डवृक्षे । आकाशे । कुष्ठभेदे । नानावर्णे । अद्भुते । त्रि० । लेख्ये । शब्दालङ्कारभेदे । व्याघ्रभेदे च । पु० । सुभद्रा प्रसिद्धा

**मृते देवकुले चैत्रं ना भूभृन्मासभेदयोः ।**
**सर्पे विष्णौ चक्रधरश्चिकुरौ वृक्षभित्कचौ ॥ ३५० ॥**
**चक्रः कोके व्रजे पुंसि क्लीबे सैन्यरथाङ्गयोः ।**
**ग्रामजाले कुम्भकारभाण्डे राष्ट्रे च दृश्यते ॥ ३५१ ॥**
**नदप्रभेदे वाद्ये च झर्झरोऽथ गुणध्वनौ ।**
**प्रसिद्धावपि टङ्कारस्तारोऽत्युच्चस्वरे त्रिषु ॥ ३५२ ॥**

तारा, तारका अक्षितारका वा । तयोः । स्त्री० । **चित्रम्** । न० । चित—स्मृतौ । क्विप्-प्रत्ययः । त्रायते । त्रै—पालने । कः प्रत्ययः । वा न लोपः । चित्र—क्षणिके, लेख्ये, अद्भुते च । अच्प्रत्ययो वा । "चित्राखुपर्णीगोडुम्बासुभद्रादन्तिकासु च । मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम् । तिलकालेख्ययोः क्लीबं कर्बुराद्भुतयोरपि" इति मेदिनी ॥ शशिनि हिमांशौ कर्पूरे स्वनामाख्याते गन्धद्रव्ये । तथा मृगशिरानक्षत्रे । काम्पिल्ले । हीरके । जले । काम्ये । सुन्दरे । कृष्णवर्णे । मयूरचन्द्रके । शोणमुक्ताफले । आह्लादकद्रव्ये । त्रि० । स्वर्णे । चुक्रे च । न० । **चन्द्रः** । पु० । चदि—आह्लादे, दीप्तौ च । रक्प्रत्ययः । "चन्द्रकर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु" इति मेदिनी ॥ बन्धः बन्धनम् । अपसर्पः गुप्तचरः, अपसरणं वा । तयोः । तथा चरे । "चारैः पश्यन्ति राजानः" इति नीतिः । गमके आचारे । कारागारे । कृत्रिमविषे । **चारः** । पु० । चर एव । स्वार्थे अण्प्रत्ययः । चरत्यत्र । चर—गतौ । घञ्प्रत्ययो वा । "चारः प्रियालवृक्षे स्याद्गतौ गन्धापसर्पयोः" इति मेदिनी ॥ ३४९ ॥ मृते । देवकुले देववंशे पु० । भूभृत्पर्वतभेदः । मासभेदः स्वनामाख्यातः शुक्लप्रतिपदादिदशान्तारूपो मासः । तयोश्च । **चैत्रम्** । न० । चित्रानक्षत्रेण युक्ता पौर्णमासी चैत्री । साऽस्मिन्मासे इति । अण्प्रत्ययः । "चैत्रं मृतदेवकुले ना भूभृन्मासभेदयोः" इति मेदिनी ॥ सर्पे भुजङ्गमे । विष्णौ श्रीकृष्णे । तथा ग्रामजालिनि च । **चक्रधरः** । पु० । चक्रमस्त्रभेदं फणमण्डलं वा धारयति । धृ—धारणे । अच्प्रत्ययः । "अथ चक्रधरोऽजेऽहौ ना त्रिषु ग्रामजालिनि" इति मेदिनी ॥ वृक्षभिद् वृक्षभेदः । कचः केशः । तयोः । तथा पर्वते । सरीसृपे । चपले । तरले । चञ्चले च । त्रि० । **चिकुरः** । पु० । चिइत्यव्यक्तं शब्दं कुरति । कुर—शब्दे । कः प्रत्ययः । "चिकुरस्तरलो गयोः । पक्षिवृक्षभिदोः केशे गृहमध्ये सरीसृपे" इति मेदिनी ॥ ३५० ॥ कोके चक्रवाके पक्षिणि । व्रजे समुदाये । पु० । सैन्यः सेनासमुदायः । रथाङ्गः । तयोः । ग्रामजाले कुम्भकारकभाण्डे । कुम्भकारस्य उपकरणे । राष्ट्रे । चकारात् व्यूहभेदे । अस्त्रभेदे । पुटभेदे । जलावर्ते । तगरपुष्पे । अलङ्कारोक्ते काव्यबन्धविशेषे । न० । वीरादिचक्रेषु । "प्रवृत्ते भैरवीचक्रे सर्वे वर्णा द्विजोत्तमाः" इति तन्त्रम् । तन्त्रोक्तेषु मूलाधारादिषु स्थितेषु षट्सु पद्मेषु च । **चक्रः** । दृश्यते । क्रियतेऽनेन । पु० । कृ—करणे । घञर्थे कः प्रत्ययः । निपातनात् द्वित्वम् । "चक्रः कोके पुमान् क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः । जलावर्ते" इति मेदिनी ॥ ३५१ ॥ नदप्रभेदे नदविशेषे । वाद्ये वाद्यभेदे पटहे । चकारात् कलियुगे च । **झर्झरः** । पु० झर्झ-

**तारिण्यङ्गदमात्रोः स्त्री न ना ऋक्षाक्षिमध्ययोः ।**
**दृग्रोगे तिमिरं ध्वान्ते तोत्रे प्राजनवेणुके ॥ ३९३ ॥**
**धान्याके तुम्बरी शुन्यां ताम्रं शुल्बेऽरुणे त्रिषु ।**
**पेटके नावि च तरी तुषारः शीकरे हिमे ॥ ३९४ ॥**
**इतिकर्तव्यता तन्त्रमुपायश्च द्विसाधकः ।**
**तीव्रं कटुनितान्तश्च दर्दरः शैलभुग्नयोः ॥ ३९५ ॥**

उक्तौ, भर्त्सने च । अरण्प्रत्ययः ।"झर्झरः स्यात् कलियुगे वाद्यभाण्डे नदान्तरे" इति मेदिनी॥ अथ अनन्तरार्थद्योतकः । गुणध्वनौ । धनुर्ज्याकर्षणजे शब्दे । प्रसिद्धौ । अपिशब्दात् विस्मयहेतुके शब्दे । ध्वनिभेदे च । **टङ्कारः** । पु० । टङ्गित्यव्यक्तशब्दस्य कारः । कृ—करणे । घञ्प्रत्ययः । "टङ्कारो विस्मये पुंसि प्रसिद्धौ सिञ्जिनी ध्वनौ" इति मेदिनी ॥ उच्चस्वरे अत्युच्चनादे । त्रि० ॥ ३९२ ॥ तारिणी तरणकर्त्री । अङ्गदमाता वालिपत्नी । तयोः । स्त्री० । ऋक्षः नक्षत्रम् । अक्षिमध्यः नेत्रमध्यस्थकनीनिका । तयोः । न० स्त्री० । तथा प्रणवे देवीप्रणवे । शिरोजातध्वनौ । रूप्ये । अत्युच्चे । निर्म्मले । त्रि० । महाविद्याभेदे । बृहस्पतिभार्य्यायाञ्च । स्त्री० । **तारः** । पु० । तॄ—तरणे, प्लवने, अभिभवने च । स्वार्थे णिच् । तदन्तात् अच्प्रत्ययः । तॄ प्रेरणे । णिच् । करणादौ घञ्प्रत्ययो वा । "तारो वानरभिन्मुक्ताविशुद्ध्योः शुद्धमौक्तिके । ना नक्षत्रेऽक्षिमध्ये च न ना रूप्ये नपुंसकम्" इति मेदिनी ॥ दृग्रोगे नेत्ररोगे । ध्वान्ते अन्धकारे च । **तिमिरम्** । न० । तिम—आर्द्रीकरणे । किरच् प्रत्ययः । "तिमिरं ध्वान्ते नेत्रामयान्तरे" इति मेदिनी ॥ प्राजनं गवादिताडनदण्डः । वेणुकं गजादिपालनार्थं लौहमुखो वंशदण्डः । तयोश्च । तथा त्रपुणि च । पु० । **तोत्रम्** । न० । तुद—व्यथने । ष्ट्रन्प्रत्ययः । पुंसि त्रपुणि तोत्रन्तु प्राजने वेणुकेऽपि च" इति मेदिनी ॥ ३९३ ॥ धान्याके औषधविशेषे । शुन्यां कुक्कुरयोषिति । तथा गन्धर्वभेदे च **तुम्बरी** । स्त्री० । तुबि—अर्दने । उरनप्रत्ययः । गौरादित्वात् ङीप् च । "तुम्बरी कुक्कुरस्त्रियाम् । धन्याकेऽपि" इति मेदिनी ॥ शुल्बे धातुभेदे । अरुणे अरुणप्रभायाम् । तथा कुष्ठरोगभेदे च । **ताम्रम्** । त्रि० । तम—खेदे । रक्प्रत्ययः, दीर्घश्च । "ताम्रं शुल्बेऽरुणेऽपि च" इति मेदिनी ॥ पेटके वसनपेटके, वसनदशायां वा । नावि नौकायाञ्च । **तरी** । स्त्री० । तॄ—तरणे । ईः प्रत्ययः । तरिरिति ह्रस्वेकारान्त पाठोऽपि शुद्ध्यते । "तरिस्तु तरणे पुंसि कृशानौ पेटके तरी" इति मेदिनी । शीकरे जलकणे । हिमे । तथा शीतले । कर्पूरे च । **तुषारः** । पु० । अन्तर्भूतण्यर्थे । तुष—तोषे। आरक्प्रत्ययः। "तुषारस्तु शीतले शीकरे हिमे" इति मेदिनी॥ ३९४ ॥ इतिकर्त्तव्यता इदं कृत्वा इदं कुर्यादित्येवं पारिपाटिरूपः कर्म्मानुष्ठानक्रमः । राष्ट्रम् । तत्र च । उपायः साधनम् । द्विसाधकः उभयार्थः । तस्मिन् । चकारात् सिद्धान्ते । औषधौ । कुटुम्बकार्य्ये । प्रधाने । तन्तुवाये । परिच्छेदे । हेतौ । सकृत्प्रवृत्तौ । तन्त्रौ ॥ स्वराष्ट्रचिन्तायाम । परिजने । तन्तुवायशलाका-

**उपाये निर्गमे द्वारं दारुः स्याद्देवदारु च ।**
**दासीसुतोष्ट्रौ दासेरौ देवयात्राऽशने मृतौ ॥ ३५६ ॥**
**दिगम्बरोऽन्धकारे च वाद्यमेघौ च दर्दुरौ ।**
**धात्री भुव्यामलक्याश्च हरिशैलौ धराधरौ ॥ ३५७ ॥**

याम् । प्रबन्धे । शपथे । धने । गृहे । वपनसाधने । करणे । कुले । वेदशाखाभेदे । वेदादि-शास्त्रे । स्वनामाख्याते शिवाद्युक्ते शास्त्रे च । **तन्त्रम्** । न० । तन-विस्तृतौ । ष्ट्रन्प्रत्ययः । "तन्त्रं कुटुम्बकृत्ये स्यात् सिद्धान्ते चौऽषधोत्तमे । प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे ॥ श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके । इतिकर्त्तव्यतायाञ्च" इति मेदिनी ॥ कटु तीक्ष्णम् । नितान्तम् अत्यन्तम् । तस्मिन् । न० । चकारात् शिवे । लौहे । सीसके । तद्वति दुःसहे । पु० । अत्युग्रे । कटुरोहिण्याम् । राजिकायाम् । गण्डदूर्वायाम् । महाज्योतिष्मत्याम् । नदी-भेदे च । स्त्री० । **तीव्रम्** । न० । तीव-स्थौल्ये । रक्प्रत्ययः । तीव्रा तु कटुरोहिण्यां राजिकाग-ण्डदूर्वयोः । त्रिष्वत्युष्णे नितान्ते च" इति मेदिनी ॥ शैलः पर्वतः । गुह्मम् । ईषद्भग्नभाजनम् ॥ कश्चित्त भग्न इति पाठः । तयोश्च । **दर्दरः** । पु० । दरपूर्वः दृ-वधे, आदरे च । अप्प्रत्ययः । "दर्दरः पर्वते पुंसि त्रिष्वीषद्भग्नभाजने" इति मेदिनी ॥ ३५५ ॥ उपाये निर्गमने गृहादिनि-र्गमनस्थाने । तथा प्रतीहारे । सुखे च । **द्वारम्** । न० । दृ-संवरणे । णिच्अच्प्रत्ययौ । "द्वारं निर्गमनेऽपि स्यादभ्युपाये" इति मेदिनी ॥ देवदारु स्वनामाख्यातो वृक्षः । तत्र च । चकारात् काष्ठे । पित्तले । शिल्पिनि । दारके च । त्रि० । **दारुः** । न० । स्यादित्यन्वयः । दृ-भये, विदारे च । उण्प्रत्ययः । "दारुः स्यात् पित्तले काष्ठे देवदारौ नपुंसकम्" इति मेदिनी ॥ दासीसुतः दासीपुत्रः । दासः । उष्ट्रः प्रसिद्धः । तयोश्च । **दासेरः** । पु० । दास-दाने । एरक्प्रत्ययः । दास्या अपत्यम् । ढक्प्रत्ययः । "दासेरो दासिकापत्ये त्रिषु पुंसि क्रमे-लके" इति मेदिनी ॥ अशने भोजने । मृतौ यमपुरगमने । तथा देवरथे च । **देवयात्रा** । स्त्री० । षष्ठीतत्पुरुषः । देवैरुपलक्षिता यात्रा वा । "देवयात्रा यमपुरीगमने भोजनेऽपि च" इति मेदिनी ॥ ३५६ ॥ अन्धकारे तमसि । चकारात् शिवे । क्षपणकभेदे । "दिगम्बरा मध्यमत्वमाहुरापादमस्तकम् । चैतन्यस्याप्तिसंदृष्टेरानखाग्रश्रुतेरपि" इत्युक्ते जीवस्य देहपरिमा-णाङ्गीकारके । बौद्धभेदे । नग्ने । त्रि० । कलिकायाम् । स्त्री० । **दिगम्बरः** । पु० । दिक्शून्यमेवाम्बरं यस्य । दिशामम्बरमिवावरकत्वाच्च । "दिगम्बरः स्यात् क्षपणे नग्ने तमसि शङ्करे" इति मेदिनी ॥ वाद्यः वाद्यभेदः । मेघः पवनसलिलसङ्घातजन्यो जलधरः । तयोः । चकारात् भेके । पर्वतभेदे । मृन्मयपात्रभेदे । ग्रामजाले च । न० । **दर्दुरः** । पु० । दुनाति कर्णौ शब्दैः । दु-उपतापे । उरन्प्रत्ययः । गतिसमासः । "दर्दुरस्तो-यदे भेके वाद्यभाण्डाद्रिभेदयोः । दर्दुरा चण्डिकायां स्याद्ग्रामजाले नपुंसकम्" इति मेदिनी ॥ भुवि पृथिव्याम् । आमलक्याम् । चकारात् मातरि । उपमातरि च । **धात्री** । स्त्री० ।

**धारा हरिद्राश्वगतिनिशाम्बुस्रुतिराजिषु ।**
**धाराधरो खड्गमेघौ धीरः पण्डितमन्दयोः ॥ ३५८ ॥**
**धीरञ्च कुङ्कुममथो धरा पृथ्वी धरो गिरिः ।**
**नेत्री नेतरि नेत्रञ्च गुणे मूले विलोचने ॥ ३५९ ॥**
**ना षिङ्गे नागरं शुण्ठ्यां नरोऽजे मनुजेऽर्ज्जुने ।**
**नरेन्द्रो वार्त्तिके राज्ञि विषवैद्येऽपि दृश्यते ॥ ३६० ॥**

धीयते पीयतेऽसौ । धा—धारणे । ष्ट्रन्प्रत्ययः । षित्त्वात् ङीप् च । "धात्री जनन्यामलकी वसुमत्युपमातृषु" इति मेदिनी॥ हरिः वराहरूपो विष्णुः । शैलः भूधरः। तयोश्च । **धराधरः** । पु० । धरं धारयति । धृ—धारणे । अच्प्रत्ययः । "धराधरो हरौ शैले" इति मेदिनी ॥ ॥ ३९७ ॥ हरिद्रा स्वनामाख्यात औषधभेदः । अश्वगतिः अश्वानां गतिपञ्चकम् । "अश्वानान्तु गतिर्धारा विभिन्ना सा च पञ्चधा" इति । निशा तीक्ष्णा । खड्गादेरग्रनिशिता इति यावत् । अम्बु मेघस्यासारवर्षणम् । स्रुतिः द्रवद्रव्यस्य सन्तत्यापतनम् । राजिः समूहः । एतेषु । तथा उत्कर्षे । सन्ततौ । अतिवृष्टौ । यशसि । सदृशे । पुरीभेदे । सैन्याग्रिमस्कंधे । घटादिच्छिद्रे च । **धारा** । स्त्री० । धृ—धारणे । णिच्अच्प्रत्ययौ । "धारा सैन्याग्रिमस्कन्धे तुरङ्गगतिपञ्चके । घटादिच्छिद्रसन्तत्योः प्रपाते स्याद्द्रवस्य च" इति मेदिनी ॥ खड्गः असिः । मेघः जलधरः । तयोश्च । **धाराधरः** । पु० । धारां धारयति । धृ—धारणे । णिच्अच्प्रत्ययौ । "धाराधरोऽसिमेघयोः" इति मेदिनी ॥ पण्डितः बुधः । मन्दः मूर्खः । तयोः । तथा धैर्यान्विते । विनीते । बलयुते । ऋषभौषधौ । बलिराजे । बुद्धिप्रेरके । बुद्धिसाक्षिणि । परमेश्वरे च । कुङ्कुमं प्रसिद्धम् । तत्र च । न० । चकारात् नायिकाभेदे । काकोल्याम् । महाज्योतिष्मत्याम् । स्थिरायां चित्तवृत्तौ च । स्त्री० । **धीरः** । पु० । धियं राति । रा—आदाने । कः प्रत्ययः । धियमीरयति । ईर—गतौ । अण् प्रत्ययः । धी—आधारे । क्रन् प्रत्ययो वा । "धीरो धैर्यान्विते स्वैरे बुधे क्लीबन्तु कुङ्कुमे" इति मेदिनी ॥३९८॥ अथो अथशब्दार्थवाची । पृथ्वी भूमिः । तथा गर्भाशये जरायौ। स्त्री०। मेदावहायां नाड्याञ्च । **धरा** । गिरिः शैलः । तथा कूर्मराजे । वसुभेदे । कार्पाससूत्रे च । **धरः** । पु० । धृ—धारणे । अच् प्रत्ययः । "धरो गिरौ।कर्पासतूलके कूर्म्मराजे वस्वन्तरेऽपि च" इति मेदिनी ॥ नेतरि नायके । प्रापके च । गुणे मूले । विलोचने नयने । न० । चकारात् मन्थदामनि । प्रवर्त्तके च । त्रि० । **नेत्रः** । पु० । नयति नीयते वाऽनेन । नी-प्रापणे । ष्ट्रन्प्रत्ययः । "नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च । रथे चक्षुषि नद्याञ्च" इति मेदिनी ॥३९९॥ षिङ्गे नारङ्गवृक्षे । पु० । शुण्ठ्यां स्वनामाख्याते औषधे । तथा देवरे । विदग्धे । जम्बीरभेदे । मुस्तकभेदे च । **नागरम्** । त्रि० । नगरे भवः । अण्प्रत्ययः । अगं राति अगरः न अगरः वा । "नागरं मुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे" इति मेदिनी ॥ अजे परमात्मनि । "आपो वै नरसूनवः" इति मनुः । विष्णौ वा।मनुजे मनुष्ये।अर्ज्जुने

धान्योत्क्षेपे निकारः स्याद्गुडूच्यामपि निर्जरा ।
नभश्चरौ पक्षिदेवौ पांशुला च निशाचरी ॥ ३६१ ॥
वलीकवनयोर्नीध्रं पूरः खाद्ये पयश्चये ।
यत्नारम्भौ परिकरौ खड्गफलेऽपि पुष्करम् ॥ ३६२ ॥

अर्जुनवृक्षे । तथा ऋषिभेदे । नरावतारे । गणितशास्त्रोक्ते छायाप्रमाणज्ञानोपयोगिनि । शङ्कौ च । **नरः** । पु० । नॄ-नृ-वा नीतौ अच्प्रत्ययः । "नरोऽजे मनुजेऽर्जुने" इति मेदिनी ॥ वार्त्तिके सूत्रानुक्ताद्यर्थविस्तारे ग्रन्थभेदे । राज्ञि राजिनि । विपवैद्ये । अपिशब्दात् एकविंशत्यक्षरपादके छन्दोभेदे च । **नरेन्द्रः** । पु० । दृश्यते इति क्रियापदेनान्वयः । नर इन्द्र इव । नराणाम् इन्द्र इति षष्ठीतत्पुरुषो वा । "नरेन्द्रस्तु महीपाले विषवैद्ये च पुंस्ययम्" इति मेदिनी ॥ ॥ ३६० ॥ धान्योत्क्षेपे व्रीह्यादिधान्यादेरूर्ध्वक्षेपे । तथा परिभवे । तिरस्कारे । अपकारे । मारणे च । **निकारः** । पु० । स्यादित्यन्वयः । निपूर्वः कृ-करणे । घञ्प्रत्ययः । कॄ-हिंसने । विक्षेपे च । वञ्प्रत्ययः । निपूर्वः कृ-करणे । णिच्घञ्प्रत्ययौ वा । "निकारः स्यात्परिभवे धान्यस्योत्पेक्षणेऽपि च" इति मेदिनी ॥ गुडूच्यां स्वनामाख्यातायां लतायाम् । अपिशब्दात् तालपर्ण्यां वा । **निर्जरा** । स्त्री० । निर्गता जरा यस्या इति पञ्चमीबहुव्रीहिः । "निर्जरा तु गुडूच्याञ्च तालपर्ण्यामपि स्त्रियाम्" इति मेदिनी ॥ पक्षी खगः । देवः अमरः । तयोः । तथा वायौ । मेघे । विद्याधरे । राक्षसे । सूर्य्यादिषु ग्रहेषु । आकाशगामिनि च । त्रि० । **नभश्चरः** । पु० । नभसि चरति । चर-गतौ, अच्प्रत्ययः । "नभश्चरो विहङ्गमे विद्याधरे घने वाते" इति मेदिनी ॥ पांशुला पुंश्चली, कुलटा वा । तस्याम् । "अपांशुलानां धुरि कीर्तनीया" इति रघुः । चकारात् राक्षस्याम् । शृगाल्याम् । पिशाच्याञ्च । **निशाचरी** । स्त्री० निशायां चरति चर-गतौ । टः प्रत्ययः । ङीप् च । "पांशुलायां निशाचरी" इति मेदिनी ॥ ३६१ ॥ वलीकः पटलान्तभागः । वनं वृक्षसमुदायात्मकम् अरण्यम् । तयोः । तथा नेमौ । चन्द्रे । रेवतीनक्षत्रे च । **नीध्रम्** । न० । निश्चयेन धरति जलादि धृ-धारणे । डप्रत्ययो वा मूलम् । कप्रत्ययः दीर्घश्च । क्वचित् नीव्रमिति पाठः । "नीध्रं नेमौ वलीकेन्द्वो रेवतीभे च कानने" इति विश्वः । नीव्रं नेमौ वलीकेन्द्वो रेवतीभेऽपि कानने" इति मेदिनी ॥ खाद्ये खादनीये । पयश्चये जलसमूहे । तथा व्रणशुद्धौ च । **पूरः** । पु० । पूर-पूर्त्तौ । कः प्रत्ययः । "पूरो जलसमूहे स्याद्व्रणसंशुद्धिखाद्ययोः" इति मेदिनी ॥ यत्नः उद्योगः । आरम्भः प्रसिद्धः । तयोः । क्वचित् "सन्नारम्भौ" इति पाठो । तथा परिवारे । समूहे । पर्यङ्के । प्रगाढगात्रबन्धे । विवेके । सहचारिणि च । **परिकरः** । पु० । परिपूर्व कृ-करणे । अप् प्रत्ययः । "भवेत् परिकरः सङ्घे पर्यङ्कपरिवारयोः" इति मेदिनी ॥ खड्गफले असिफलके । अपिशब्दात् गजकराग्रे । मुखे । जले । वाद्यभाण्डे । आपणे । पद्मे । तीर्थभेदे । कष्टौषधौ । पद्मकोशे । द्वीपभेदे । युद्धे च । नृपभेदे । रोगभेदे । नागभेदे । सारसपक्षिणि च । पु० । **पुष्करम्** । न० । पुष-भृतौ ।

नद्यन्तराले पात्रं स्याद्भाण्डे चाऽथ निशापतौ ।
पृथक्चारिगजे यूथभ्रष्टे पक्षचरः स्मृतः ॥ ३६३ ॥
स्थाल्यां मन्थेऽपि पिठरं पवित्रं कुशमेध्ययोः ।
देहे पाटलिपुत्रे च पुरं स्याद्गुग्गुलौ पुरः ॥ ३६४ ॥
वरो जामातरि वृतौ कुङ्कुमे च नपुंसकम् ।
वक्रः शनैश्चरे क्रूरे पुटभेदे तथा नृजौ ॥ ३६५ ॥

वृष्टौ च । करन्प्रत्ययः । कस्य नेत्त्वम् । "पुष्करं खेम्बुपद्मयोः । तूर्यवक्त्रे खड्गफले हस्तिहस्ताग्रकाण्डयोः । कुष्ठौषधे द्वीपतीर्थभेदयोश्च नपुंसकम्" इति मेदिनी॥ ३६२॥ नद्यन्तराले तीरद्वयमध्यवर्त्तिनि जलाधारस्थाने । भाण्डे । जलाद्याधारे । भोजनयोग्ये अमत्रे । चकारात् विद्यादियुक्ते दानयोग्ये ब्राह्मणे । "ब्राह्मणं पात्रमाहुः" इति स्मृतिः । यज्ञीये स्रुवादौ । नाटकेऽभिनेये । नायकादौ च । न० । **पात्रम्** । न० । स्त्री० । पाति रक्षत्याधेयम् । पिबत्यनेन वा । पा—रक्षणे । पाने च । ष्ट्रन्प्रत्ययः । स्त्रियां ङीप् च । "पात्रं स्रुवादौ पर्णे च भाजने राजमन्त्रिणि" इति मेदिनी ॥ अथ अनन्तरार्थवाची । निशापतौ चन्द्रे । यूथभ्रष्टे सजातीयसमुदायच्युते पृथक् वा एकचारिणि गजे हस्तिनि च । **पक्षचरः** । पु० । स्मृत इति क्रियापदं सम्बन्धनीयम् । पक्षात् समूहात् भिन्नो भूत्वा चरति । चर—गतौ । अच्प्रत्ययः । "अथ पक्षचरश्चन्द्रे पृथक्चारिगजेऽपि च" इति मेदिनी ॥ ३६३ ॥ स्थाल्यां पाकपात्रे । पु० । स्त्री० स्त्रियां ङीप् । मन्थे मन्थानदण्डे । अपिशब्दात् गृहभेदे । मुस्तायां च । **पिठरम्** । न०। पिठ—क्लेशे । करन्प्रत्ययः । "पिठरः स्थाल्यां ना क्लीबं मुस्ता मन्थनदण्डयोः" इति मेदिनी ॥ कुशं स्वनामाख्याततृणम् । मेध्यं शुचि । व्रतादिना शुद्ध इति यावत् । तयोः । तथा ताम्रे । जले । वर्षणे । धर्षणे । अर्घोपकरणे । यज्ञाद्यर्थे । यज्ञोपवीते । मधुनि । घृते । "अनन्तर्गर्भितं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं सर्वकर्म्मसु" इत्युक्ते कुशद्वये च । **पवित्रम्** । न० । स्त्री० । पू—शोधे । इत्रः प्रत्ययः । "पवित्रं वर्षणे कुशे । ताम्रे पयसि च क्लीबं मेध्ये स्यादभिधेयवत्" इति मेदिनी॥ देहे शरीरे । पाटलिपुत्रे स्वनामाख्याते नगरे । न०। गुग्गुलौ स्वनामाख्याते निर्यासे । पु० । तद्वत् गेहे । कुसुमदलवृत्तौ । नागरमुस्तायाम् । चर्म्मणि । गृहोपरि गृहे । राशौ । पीतझिण्ट्यां च । **पुरम्** । न० । पुर—अग्रगमने । कः प्रत्ययः । "पुरं नपुंसकं गेहे देहपाटलिपुत्रयोः । पुष्पादीनां दलावृत्तौ ना गुग्गुलौ न ना पुरि" इति । मेदिनी ॥ ३६४ ॥ जामातरि दुहितृपतौ । वृतौ आवरणे । कुङ्कुमे स्वनामाख्याते औषधे । न० चकारात् इच्छायाम् । याचने । वेष्टने । अभीष्टे । श्रेष्ठे । त्रि० । जारे । गुग्गुलौ । पत्यौ च । **वरः** । पु० । व्रियते । वृ—आवरणे । अप्प्रत्ययः । वर—ईप्से । घञ्प्रत्ययो वा । "वरो जामातरि वृतौ देवतादेरभीप्सिते । षिङ्गे पुंसि त्रिषु श्रेष्ठे कुङ्कुमे तु नपुंसकम्" इति मेदिनी ॥ शनैश्चरे शनिग्रहे । क्रूरे रुद्रे । पुटभेदे नगरे । अनृजौ कुटिलगतौ । तथा मङ्गलग्रहे । त्रिपुरा-

**कुब्जवृक्षे हरे वारो बन्धुरं रम्यनम्रयोः ।**
**भ्रमरः कामुके भृङ्गे भरोऽतिशयभारयोः ॥ ३६६ ॥**
**विषे स्वादौ च मधुरं मल्लिकायाञ्च माधुरम् ।**
**मखाग्नौ च महावीरो मक्षिकायाञ्च मत्सरः ॥ ३६७ ॥**

सुरे । पर्वते । कुटिलवति । "राहुकेतू सदा वक्रौ" इति ज्यौतिषम् । नदीवक्रे च । न० । **वक्रः** । पु० । वकि—कौटिल्ये । गतौ च । रन्प्रत्ययः । "वक्रः स्यात्कुटिले क्रूरे पुटभेदे शनैश्चरे । अग्रमालम्बने वाते परिमाणे पलस्य च" इति विश्वः। "वक्रः शनैश्चरे पुंसि पुटभेदे नपुंसकम् । त्रिषु क्रूरे च कुटिले" इति मेदिनी ॥३६५॥कुब्जवृक्षे स्वनामाख्याते द्रुमभेदे । हरे शिवे । तथा सङ्घे । अवसरे । स्वयोग्यकाले । द्वारे । क्षणे । सूर्यादिग्रहाणाम् अधिकृते दिने । यथा रविवारः रविस्वामिकं दिनमित्यादि । यज्ञपात्रे च । न० । **वारः** । पु० । वृ—आवरणे । घञ्प्रत्ययः । "वारः सूर्यादिदिवसे वारोऽवसरवृक्षयोः । कुब्जवृक्षे हरेर्वारं द्वारे मद्यस्य भाजने" इति विश्वः । "वारः सूर्यादिवासरे । द्वारे हरे कुब्जवृक्षे वृन्दावसरयोः क्षणे" इति मेदिनी ॥ रम्यं रमणीयम् । नम्रं नमनम् । तयोः । तथा उन्नतानते । मुकुटे । स्त्रीचिह्ने । तिलकल्के । बन्धुजीवकवृक्षे । बधिरे । हंसे । विडङ्गे । ऋषभौषधे । बके । विहङ्गे च । पु० । **बन्धुरम्** । न०। बन्ध—बन्धने । उरच्प्रत्ययः ।"बन्धुरं मुकुटे पुंसि स्त्रीचिह्ने तैलकल्कयोः । बन्धुके बधिरे हंसे त्रिषु स्याद्रम्यनम्रयोः" इति मेदिनी ॥ कामुके मैथुनकामनातिशयवति । भृङ्गे मधुकरे च । **भ्रमरः** । पु० । भ्रम—चलने । करन्प्रत्ययः । "भ्रमरः कामुके भृङ्गे" इति मेदिनी ॥ अतिशयः आधिक्यम् । भारः गुरुत्वपरिमाणम्, अष्टसहस्रतोलकपरिमाणं वा । तयोः । तथा भरणकर्त्तरि च । त्रि० **भरः** । पु० । भृ भरणे । अप्प्रत्ययः । "भरोऽतिशयभारयोः" इति मेदिनी ॥ ३६६ ॥ विषे । स्वादौ गुडादिस्थे मिष्टरसे । माधुर्यरसवति च । चकारात् इक्ष्वादौ । मनोहरे । "मधुरया मधुबोधितमाधवी" इति माघः । प्रिये । त्रि० । रक्तशिग्रौ । राजाम्रे । रक्तेक्षौ । गुडे । शालौ । जीरके । पु० । वङ्गे । शीसे । न० । शतपुष्प्याम् । यष्टिमधौ । काकोल्याम् । शतावर्याम् । बृहज्जीवन्त्याम् । मधुकर्कटिकायाम् । मधूल्याम् । मेदायाम् । पालङ्कशाके च। **मधुरम्** । न० । मधु माधुर्यं राति रा—आदाने । कः प्रत्ययः । मधु अस्यास्तीति अस्त्यर्थे रः प्रत्ययो वा । "मधुरा शतपुष्पायां मिश्रेयानगरीभिदोः । मधुकर्कटिकाभेदा मधुलीयष्टिकासु च । क्लीबं विषे पुंसि रसे तद्वत् स्वादुप्रियेन्यवत्" इति मेदिनी ॥ मल्लिकायां मल्लिकापुष्पे । चकारात् मदिरायाम् । स्त्री० । **माधुरम्** । न० । क्वचित् "मुद्गरम्" इति पाठः । मधु राति भ्रमरेभ्यो ददाति । रा—दाने कः प्रत्ययः । स्वार्थे अण्प्रत्ययश्च । माधुरशब्दः कोषान्तरेषु न दृष्टः । मखाग्नौ यज्ञाग्नौ । चकारात् हनुमति । गरुडे । सिंहे । वज्रे । श्वेततुरङ्गे । कोकिले । धनुर्धरे । एकवीरवृक्षे । महाशूरे । क्षीरकाकोलीवृक्षे च । स्त्री० । **महावीरः** । पु० । महांश्चाऽसौ वीरश्चेति कर्म्मधारयस-

**महेन्द्रो भूधरे शक्रे मन्दे वक्रे च मन्थरः ।**
**विघ्नमन्मथयोर्मारो मकरो राशियादसोः ॥ ३६८ ॥**
**गमनोत्सवयोर्यात्रा रुधिरं कुङ्कुमेऽपि च ।**
**वृक्षभित्पापयो रोध्रो दैत्यभेदे मृगे रुरुः ॥ ३६९ ॥**
**लम्बोदरः स्यादुद्धाने गणानामधिपेऽपि च ।**
**लक्ष्मीपुत्रौ स्मरहयौ विस्तारौ स्तम्बविस्तृती ॥ ३७० ॥**

मासः । "महावीरस्तु गरुडे शूरे सिंहे मखानले । वज्रे श्वेततुरङ्गे च सञ्चानविहगेऽपि च" । इति मेदिनी ॥ मक्षिकायां कीटभेदे । स्त्री० । चकारात् अन्यशुभद्वेषे । परसम्पत्त्यसहने । क्रोधे । कृपणे च त्रि० । **मत्सरः** । पु० । मद–गर्वे । दैन्ये च । सरः प्रत्ययः "मत्सरा मक्षिकायां स्यान्मत्सर्यक्रोधयोः पुमान् । असह्यपरसम्पत्तौ कृपणे चाऽभिधेयवत्" इति मेदिनी ॥ ३६७ ॥ भूधरे जम्बुद्वीपस्थपर्वतभेदे । शक्रे महैश्वर्यवति इन्द्रे तथा परमेश्वरे च । **महेन्द्रः** । पु० । महांश्चाऽसौ इन्द्रश्चेति इन्द्रस्याऽपि नियन्तृत्वात् । "महेन्द्रः पर्वते शक्रे" इति मेदिनी ॥ मन्दे । वक्रे । मन्थानदण्डे । चकारात् कोपे । फले । कुसुम्भ्याम् । नीचे । जडे । मन्दे । त्रि० । कैकेय्याः दास्याम् । स्त्री० । **मन्थरः** । पु० । मन्थ–विलोडे । करच्प्रत्ययः । "मन्थरः कोशफलयोर्बाधमन्थानयोः पुमान् । कुसुम्भ्यां न द्वयोर्मन्दे पृथौ वक्रेऽभिधेयवत्" इति मेदिनी ॥ विघ्नः व्याघातः । अन्तरायो वा । मन्मथः कामदेवः । तयोः । तथा मरणे । धुस्तूरे । पक्षिभेदे च । **मारः** । पु० । मृ–मृतौ । घञ्प्रत्ययः । "मारो मृत्यौ स्मरे विघ्ने" इति मेदिनी ॥ राशिः मकराकारत्वात् मेषादितो दशमो राशिः । यादसो जलजन्तुभेदः । तयोः । तथा निधिभेदे च । **मकरः** । पु० । मनुष्यं कृणाति हिनस्ति कृ–हिंसने । विक्षेपे । अच्प्रत्ययः । पृषोदरादित्वात् साधुः । "मकरो यादसो भेदे निधिराशिप्रभेदयोः" इति मेदिनी ॥ ३६८ ॥ गमनं जिगीषया राज्ञां गमनम् । उत्सवः देवोद्देशेन उत्सवभेदो रथयात्रादिः । तयोः । तथा गमनमात्रे च । यात्रा । स्त्री० । या–गतौ । ष्ट्रन्प्रत्ययः । "यात्रा तु यापनेऽपि स्याद्गमनोत्सवयोः स्त्रियाम्" इति मेदिनी । कुङ्कुमे स्वनामाख्याते औषधभेदे । अपिशब्दात् शरीरस्थे रसपाकजन्ये धातुभेदे । मङ्गलग्रहे । रक्तवर्णे । तद्वर्णवति । त्रि० । **रुधिरम्** । न० । रुध–आवरणे । किरच्प्रत्ययः । "रुधिरोऽङ्गारके पुंसि क्लीबन्तु कुङ्कुमासृजोः" इति मेदिनी ॥ वृक्षभिद् लोध्रवृक्षः । पापः किल्विषः । तयोः । तथा अपराधे च । **रोध्रः** । पु० । न० । रुध–आवरणे । रन्प्रत्ययः । "रोध्रो ना सावरे क्लीबमपराधे च किल्बिषे" इति मेदिनी ॥ दैत्यभेदे असुरविशेषे । मृगे मृगभेदे च । **रुरुः** । पु० । रु–वधे । गतौ च । कुः प्रत्ययः । "रुरुर्ना मृगदैत्ययोः" इति मेदिनी ॥ ३६९ ॥ उद्धाने दुष्पूरोदरवति । त्रि० । गणानामधिपे गणेशे । अपिशब्दात् तारानाम्न्यां देव्याम् । स्त्री० । ङीप् च । **लम्बोदरः** । पु० । स्यादित्यन्वयः । लम्बं दीर्घमुदरं यस्येति बहुव्रीहिः । "लम्बोदरः

**वप्रस्तातेऽस्त्रियां क्षेत्रे चये रेणौ च रोधसि ।**
**स्यादूषरे वनक्षेत्रे वल्लुरं गहनेऽपि च ॥ ३७१ ॥**
**वल्लूरा त्रिषु संशुष्कमांससूकरमांसयोः ।**
**वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिषु ॥ ३७२ ॥**
**विकारो विकृतौ रोगे विश्वकद्रुश्वभित्खलौ ।**
**वेरोऽङ्गे कुङ्कुमे वेरं वठरः शठमन्दयोः ॥ ३७३ ॥**

स्यादुद्याने गणानामधिपेऽपि च" इति मेदिनी ॥ स्मरः कामदेवः । हयः अश्वः । तयोः । तथा गन्धर्वभेदे । कुशे च । **लक्ष्मीपुत्रः** । पु० । लक्ष्म्याः पुत्र इति षष्ठीतत्पुरुषः । "लक्ष्मीपुत्रस्तु पुंल्लिङ्गः कामदेवे तुरङ्गमे" इति मेदिनी ॥ स्तम्भः विटपः । विस्तृतिः विस्तीर्णता । तयोः । तथा समासवाक्यस्थे पदसमूहे च । **विस्तारः** । पु० । विपूर्वस्तृ—आच्छादने । संज्ञायां कर्तरि घञ्प्रत्ययः । "विस्तारो विस्तृतौ स्तम्बे" इति मेदिनी ॥ ३७० ॥ताते जनके । क्षेत्रे केदारे। चये दुर्गनगरादौ परिखया उद्धृतमृत्तिकास्तूपे । रेणौ धूलौ । रोधसि तटे, नद्यादिकूले वा । चकारात् सीसके । प्राचीरे । प्रजापतौ । पु० । मतिग्राम् । स्त्री० । **वप्रः** । पु०न०। उप्यतेऽत्र । वप—बीजवपने । रन्प्रत्ययः । "वप्रस्ताते पुमानस्त्री रेणौ क्षेत्रे चये तटे" इति मेदिनी ॥ ऊषरे क्षारमृत्तिकायुक्ते देशे । वनक्षेत्रे । वनकेदारे । गहने । कुञ्जे । अपिशब्दात् मञ्जर्याम् । निर्जनस्थाने । शाद्वले च । **वल्लुरम्** । न० । स्यादित्यन्वयः । वल्ल—संवरणे । उरन्प्रत्ययः । "वल्लुरः स्याद्वनक्षेत्रे गहनोपरयोरपि" इति मेदिनी ॥ ३७१ ॥ संशुष्कमांसः आतपादिना शुष्कमांसः । सूकरमांसः । स्वनामाख्यातस्य पशोर्मांसः । तयोः । तथा वाहने । वनक्षेत्रे । ऊषरभूमौ च । **वल्लूरा** । त्रि० । वल्ल—संवरणे । ऊरन्प्रत्ययः । "वल्लूरा त्रिषु संशुष्कमांससूकरमांसयोः" इति मेदिनी ॥ वैकल्ये विकलत्वे । विश्लेषे विश्लिष्टे । शैथिल्ये वा । न० । विकले स्वभावहीने । अपिशब्दात् विह्वले च । **विधुरम्** । त्रि० । विगता धुर्यस्येति अच्समासः । "विधुरं स्यात्प्रविश्लेषे न क्लीबोर्विकले त्रिषु" इति मेदिनी ॥ ३७२ ॥ विकृतौ प्रकृतेरन्यरूपे, विकारयुक्ते वा । रोगे व्याधौ । तथा परिणामे च । **विकारः** । पु० । विपूर्वः कृ—करणे । घञ् प्रत्ययः ॥ श्वभित् श्वानभेदः । खलः दुर्जनः । तयोश्च । **विश्वकद्रुः** । पु० । विश्वं कलते । कल—विह्वलीभावे । रुः प्रत्ययः । "विश्वकद्रुस्त्रिषु खले श्वाना-खेटशुनोः पुमान्" इति मेदिनी ॥ "विश्वकद्रुः खले श्वानस्यादाखेटककुक्कुरे" इति विश्वः ॥ अङ्गे कलेवरे । देहे वा । पु० । कुङ्कुमे स्वनामाख्याते औषधभेदे । तथा वार्त्ताकौ । कर्पूरे च । **वेरम्** । न० । अज—गतौ । क्षेपणे च । रन्प्रत्ययः । वीभावश्च । "वेरं कलेवरे क्लीबं वार्त्ताकौ कुङ्कु-मेऽपि च" इति मेदिनी ॥ शठः धूर्तः । मन्दः मूर्खः । तयोः । तथा अम्बष्ठे च । **वठरः** ।

**अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः।**
**पर्याणेऽक्षोपकरणे शारिः शकुनिकान्तरे॥ ३७४॥**
**श्रीर्लक्ष्मीवेशसम्पत्सु भारतीशोभयोरपि।**
**शिखरं शैलवृक्षाग्रकक्षापुलककोटिषु॥ ३७५॥**
**पक्वदाडिमबीजाभमाणिक्यशकलेऽपि च।**
**शुक्रं रेतोक्षिरुक्शुक्रो ना काव्यज्यैष्ठवह्निषु॥ ३७६॥**
**गजभूषा च शृङ्गारः शुषिरं गर्तवाद्ययोः॥**
**कुटजे वासवे शक्रो वरीशच्योः शतावरी॥ ३७७॥**

मेदिनी॥ अथ अनन्तरार्थद्योतको निपातः। व्यसनं विपत्तिः। व्यतिषङ्गः परस्परमेलनम्। तयोः। तथा सम्बन्धे च। **व्यतिकरः**। पु०। विअतिपूर्वः कृ—करणे। अप्प्रत्ययः। "अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः" इति मेदिनी॥ "व्यतिकरः समाख्यातो व्यसनव्यतिषङ्गयोः" इति विश्वः॥ पर्याणे युद्धार्थं हस्तिपर्याणे। अक्षोपकरणे पाशकादिगुटिकायाम्। शकुनिकान्तरे पक्षिभेदे। "शारीं चरन्ती सखि मारय" इति नैषधम्। तथा व्यवहारभेदे। कपटे च। **शारिः**। स्त्री०। शॄ—हिंसने। इञ् प्रत्ययः। शारी अप्यत्र। वा ङीप्। "शारिर्नाक्षोपकरणे स्त्रियां शकुनिकान्तरे" इति मेदिनी॥३७४॥ लक्ष्मीः प्रसिद्धा। वेशः वेशरचना। सम्पत् धर्मार्थकामसम्पत्तिः। एतासु। भारती वाणी। शोभा दीप्तिः। तयोः। अपिशब्दात् लवङ्गे। प्रकारे। उपकरणे। बुद्धौ। विभूतौ। अधिकारे। प्रमायाम्। कीर्तौ। वृद्धौ। सिद्धौ। कमले। बिल्ववृक्षे। वृद्धिनामौषधौ। "देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम्। सिद्धं सिद्धादिकारांश्च श्रीपूर्वं समुदीरयेत्" इत्युक्तेषु देवादीनां नामोच्चारणायोपाधिभेदे च। रागभेदे च। पु०। **श्रीः**। स्त्री०। श्रि—सेवने। क्विप्प्रत्ययः। निपातनात् साधुः। "श्रीर्वेशरचनाशोभाभारतीसरलद्रुमे। लक्ष्म्यां त्रिवर्गसम्पत्तिविधोपकरणेषु च। विभूतौ च मतौ च स्त्री" इति मेदिनी॥ शैलः पर्वतः। वृक्षः तरुः तयोः अग्रम् उपरिभागः। कक्षा शुष्कतृणादिः। पुलकः रोमाञ्चः। कोटिः अन्तमात्रम् एतासु॥ ३७५॥ पक्वदाडिमबीजाभं परिणतदाडिमफलबीजवर्णं माणिक्यं रत्नभेदः। शकलं खण्डम् एकभागो वा एतेषु। अपिशब्दात् मूर्वायाञ्च। **शिखरम्**। न०। शिखा अस्त्यस्य। अरच्प्रत्ययः। आलोपश्च। "शिखरोऽस्त्री द्रुमाग्रेऽद्रिशृङ्गे पुलककक्षयोः। पक्वदाडिमबीजाभमाणिक्यशकलाग्रयोः" इति मेदिनी॥ रेतः मज्जजातश्चरमधातुः। अक्षिरुक् नेत्ररोगभेदः। काव्यः शुक्राचार्यः। ज्येष्ठः ज्येष्ठानक्षत्रयुक्तपौर्णमासीसम्बद्धः स्वनामाख्यातश्चान्द्रमासः। वह्निः दहनः। एतेषु। पु०। तथा चित्रकवृक्षे। विष्कम्भादिषु योगेषु मध्ये चतुर्विंशे योगे च। पु०। **शुक्रम्**। न०। शुच—शौचे। क्लेदे च। रक्प्रत्ययः। निपातनात् कुत्वम्। "शुक्रः स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान्। रेतोक्षिरुग्भिदोः क्लीबम्" इति मेदिनी॥ ३७६॥ गजभूषा हस्त्यलङ्कारः। तत्र। चकारात् नाट्योक्ते रसभेदे। लवङ्गे। सिन्दूरे। चूर्णे।

**शङ्करी मेखलाछन्दः शबरः सलिले शिवे ।**
**स्थिरा महीशालपर्ण्योः शम्बरं संयमे जले ॥ ३७८ ॥**
**शम्बरौ दैत्यहरिणौ सत्रं स्यात्कैतवे वने ।**
**स्रोतोञ्जने च सौवीरं काञ्जिके बदरेऽपि च ॥ ३७९ ॥**

कालागुरुणि । आर्द्रके । भूषणे च । **शृङ्गारः** । पु० । शृङ्गं कामोद्रेकमृच्छत्यनेन । ऋ-गतौ । अणप्रत्ययः । शृङ्गं कारणत्वेन ऋच्छति शृङ्गं प्राधान्यमृच्छत्यनेन वा इति । अण्-प्रत्ययः । "शृङ्गारः सुरते नाट्यरसे च गजमण्डने । नपुंसकं लवङ्गेऽपि नागसम्भवचूर्णयोः" इति मेदिनी ॥ गर्त्तं भूमिच्छिद्रम् । वाद्यं वंशादिवाद्यं तयोः । तथा सच्छिद्रे । त्रि० । मूषिके । अग्नौ । पु० । नद्याम् । नलीनामगन्धद्रव्ये च । स्त्री० । **शुषिरम्** । न० । शुष-शोषे । किरच्प्रत्ययः । "शुषिरं वंश्यादिवाद्ये विवरे च नपुंसकम् । मूषिके ना स्त्रियां नल्यौषधौ-रन्ध्रान्विते त्रिषु" इति मेदिनी ॥ कुटजे कुटजवृक्षे । वासवे इन्द्रे । तथा अर्जुनवृक्षे । पेचके । ज्येष्ठानक्षत्रे च । **शक्रः** । पु० । शक-सामर्थ्ये । रक्प्रत्ययः । "शक्रः पुमान् देवराजे कुटजार्जुनभूरुहोः" इति मेदिनी ॥ वरी शतमूली । शची इन्द्रभार्या तयोश्च । **शतावरी** । स्त्री० । शतमावृणोति । आपूर्वः वृ-आवरणे । अच्प्रत्ययः । गौरादित्वात् ङीप् च । "शतावरी तु शच्यां स्यादिन्दीवर्यामपि स्त्रियाम्" इति मेदिनी ॥ ३७७ ॥ मेखला स्त्रीकट्याभूषणम् । उपनयनकाले ब्रह्मचारिधार्यं कटिसूत्रं वा । छन्दः चतुर्दशाक्षरपादकः छन्दो-भेदः तयोः । तथा नदीभेदे । वृषे च । **शक्करी** । स्त्री० पु० । शक-सामर्थ्ये । करप्प्रत्ययः । कचित्तु "शकरी" "शर्करी" "शङ्करी" इति पाठा अपि दृश्यन्ते । "शर्करी छन्दसोभेदे नदीमे-खलयोरपि" इति मेदिनी ॥ सलिले जले । शिवे महादेवे । तथा म्लेच्छजातिभेदे च । **शबरः** । पु० न० । शव-विकारे गतौ च अरन्प्रत्ययः । "शबरो म्लेच्छभेदे च पानीये शङ्करेऽपि च" इति मेदिनी ॥ मही पृथिवी । शालपर्णी स्वनामाख्यात औषधभेदः तयोः । तथा शाल्मलौ । काकोल्याञ्च । **स्थिरा** । स्त्री० । स्था-गतिनिरोधे । किरच् प्रत्ययः । "स्थिरा भूशाल-पर्ण्योः" इति मेदिनी ॥ संयमे व्रताङ्गतया पूर्वदिनकर्त्तव्ये नियमभेदे । इन्द्रियनिग्रहे वा । जले पानीये । न० ॥ ३७८ ॥ दैत्यः असुरभेदः । हरिणः मृगभेदः तयोः । तथा मत्स्यभेदे । पर्वतभेदे । युद्धे । चित्रकवृक्षे । लोध्रे । अर्जुनवृक्षे । पु० । श्रेष्ठे । त्रि० । आखुपर्ण्याम् । स्त्री० । धने । चित्रे च । **शम्बरः** । पु० । शम्ब-गतौ । अरन्प्रत्ययः । शम्बरं सलिले पुंसि मृगदैत्यविशेषयोः । शम्बरी चाऽऽखुपर्ण्यां स्यात्"इति मेदिनी ॥ कैतवे कपटतायाम् । वने अरण्ये । तथा स्थाने । यज्ञे । सदादाने । आच्छादने । धने । गृहे । दाने सरसि च । **सत्रम्** । न० । सद-गतौ । आश्रयकरणे च । त्रल्प्रत्ययः । स्यादित्यन्वयः।"सत्रं यज्ञे सदा-दानाच्छादनारण्यकैतवे" इति मेदिनी ॥ स्रोतोञ्जने स्रोतसि यमुनास्रोतोजलसन्निकृष्टसौवीरदेशभवे अञ्जने । अथ वा सौवीरदेशजाते अञ्जने । काञ्जिके बदरे कोलिवृक्षे । अपिशब्दात् काञ्जिकभेदे

हलतिग्मकरौ सीरौ सान्द्रं मृदौ घने वने ।
तन्त्वादिग्रन्थयोः सूत्रं कारणेऽपि च दृश्यते ॥ ३८० ॥

इति रान्ताः ॥

शैलेऽचलोऽचला भूमावरालः सर्जवक्रयोः ।
अलिः सुरापुष्पलिहोः कल्लोलेऽप्याकुलं त्रिषु ॥
आलुर्गलन्तिकायां स्त्री क्लीबं मूले च भेलके ॥ ३८१ ॥

च । **सौवीरम्** । न० । पु० । सुष्ठुवीरो यत्र सुवीरो देशभेदः । तत्र भवः । अण्प्रत्ययः । "सौवीरं काञ्जिके स्रोतोऽञ्जने च बदरीफले" इति मेदिनी ॥ ३७९ ॥ हलः लाङ्गलः । तिग्मकरः सूर्यः तयोः । तथा अर्कवृक्षे च । **सीरः** । पु० । सि—बन्धे । रक्प्रत्ययः । पृषोदरादित्वात् साधुः ।"सीरोऽर्कहलयोः पुंसि"इति मेदिनी॥मृदौ कोमले । घने निबिडे । वने अरण्ये । न० । तथा स्निग्धे । मनोज्ञे च । **सान्द्रम्**। त्रि०। अदि—बन्धने । रक्प्रत्ययः । सह अन्द्रेण । "सान्द्रं वने घने मृदौ" इति मेदिनी ॥ तन्त्वादिः वस्त्रसाधनतन्तु । ग्रन्थः रचनाविशेषः, शास्त्रभेदो वा । स च'स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्। अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः।' इत्युक्तः । तयोः । कारणे । अपिशब्दात् व्यवस्थायाम् । नाटकसाधने । प्रस्तावे च । **सूत्रम्** । न० । दृश्यते इति क्रियापदं सम्बन्धनार्थम् । सूत्र—ग्रन्थने, वेष्टने च । अच्प्रत्ययः । "सूत्रं तन्तुव्यवस्थायां शास्त्रादिसूत्रग्रन्थने" इति मेदिनी ॥३८०॥ इति रकारान्ताः समाप्ताः ॥ अथ लान्तानाह ॥ शैले पर्वते । तथा शङ्कौ । महादेवे । ब्रह्मणि । चलशून्ये । त्रि० । भूमौ पृथिव्यां च । स्त्री० । **अचलः** । पु० । न चलति । चल—गतौ । अच्प्रत्ययः । नादितत्पुरुषः । "अचला वसुधायां स्यादचलः शैलकीलयोः" इति मेदिनी ॥ सर्जः सर्जरसः । वक्रः कुटिलः । तयोः । तथा मत्तहस्तिनि । वेश्यायाञ्च । स्त्री० । **अरालः** । पु० । ऋ—गतौ । विच्प्रत्ययः । अर।अरमालाति । आपूर्वः ला—आदाने । कः प्रत्ययः।"अरालः कुटिले सर्जरसे समददन्तिनि" इति मेदिनी ॥ सुरा मद्यम् । पुष्पलिहः भ्रमरः । तयोः । तथा वृश्चिके । कोकिले । काके च । **अलिः** । पु० । अलति दंशे कूजिते शब्दिते वा समर्थो भवति । अल—भूषणे, वारणे, पर्याप्तौ च । इन्प्रत्ययः । "अलिः सुरापुष्पलिहोः" इति मेदिनी ॥ कल्लोले महातरङ्गे । अपिशब्दात् व्याकुले च । **आकुलम्** । त्रि० । आपूर्वः कुल—बन्धे, संहतौ च । कः प्रत्ययः। आकुलशब्दो विश्वमेदिन्यादिषु न दृष्टः । गलन्तिकायां स्वल्पवारिधारायुतायाम्, कर्कर्यां वा । स्त्री० ।"देवे देये गलन्तिका"इति स्मृतिः । मूले स्वनामाख्याते कन्दभेदे । भेलके नद्यादितारणार्थे प्लवे । न०। चकारात् पेचकपक्षिणि । क्षुद्रघटिकायाञ्च । स्त्री० । **आलुः** । पु० । आपूर्वः लू—छेदने । डुः प्रत्ययः । "आलुर्गलन्तिकायां स्त्री क्लीबं मूले च भेलके" इति मेदिनी ॥ ३८१ ॥

आलिः सेतुः सखी यज्वा शौण्डिकश्चाऽऽसुतीवलः ।
आभीलं भीषणे कृच्छ्रे इला भूवाग्बुधाङ्गनाः ॥ ३८२ ॥
आर्द्रशूरणयो रोलः कालः स्यान्मृत्युकृष्णयोः ।
अंशे वृद्धावपि कला कदली ध्वजरम्भयोः ॥ ३८३ ॥
कफोणिघाते ज्वाले च कीलावत्कील इष्यते ।
शिरसोऽस्थ्नि कपालोऽस्त्री घटादेः शकले व्रजे ॥ ३८४ ॥

सेतुः आगन्तुकजलवारणार्थं सस्यसेकजलवारणार्थञ्च कृतो व्रतिरूपः सेतुः। सखी वयस्का तयोः। तथा पङ्क्तौ । आरामादिवृक्षश्रेण्याम् । सन्ततौ । शुद्धान्तःकरणे । अत्यर्थं च । त्रि० । **आलिः** । स्त्री० । आपूर्वः अल—भूषणे, वारणे च । इन्प्रत्ययः । आली अप्यत्र । "आलिर्विशदाशयोः । त्रिषु स्त्रियां वयस्कायां सेतौ पङ्क्तौ प्रकीर्त्तिता" इति मेदिनी॥ यज्वा सोमाभिषवशाली याज्ञिकः। शौण्डिकः मद्यविक्रेता । तयोः । चकारात् कन्यापालके च । **आसुतीवलः** । पु० । आसुतीरस्यास्ति । वलच् प्रत्ययः । दीर्घश्च । "आसुतीवल आख्यातः कन्यापालकयज्वनोः" इति मेदिनी । भीषणे भयानके । त्रि० । कृच्छ्रे कष्टे । तद्वति च । **आभीलम्** । न० । आसमन्तात् भियं लाति। आ—भी—पूर्वः ला—आदने। कः प्रत्ययः।"आभीलं न द्वयोः कृच्छ्रे वाच्यलिङ्गं भयानके" इति मेदिनी॥ भूः पृथ्वी । वाक् वचनम् । बुधाङ्गना वैवस्वतमनुकन्या बुधपत्नी । सा हि विष्णुवरात् पुंस्त्वमासाद्य पुनः शङ्करशापात् स्त्रीत्वं गता । बुधस्तु तामुपयम्य पुरूरवसमुत्पादयामास इति पुराणे प्रसिद्धम् । एतासु । तथा गवि । जम्बुद्वीपस्थनववर्षमध्ये वर्षभेदे च । **इला** । स्त्री० । इल—शयने, क्षेपे च । कः प्रत्ययः । "इला कल्ये सौम्यस्य धारिण्यां गवि वाचि च" इति मेदिनी ॥३८२॥आर्द्रः आर्द्रायां भूमौ जातःस्वनामाख्यातो मूलभेदः । त्रि० । शूरणं कन्दविशेषः।तयोश्च। **ओलः** । पु० । आ उनत्ति आपूर्वः उन्द—क्लेदे । कः प्रत्ययः । नलोपे पृषोदरादित्वाद्दस्य लत्वम । कचित् ओल्लः इति पाठः । "ओल्लस्तु शूरणे पुंसि स्यादार्द्रे वाच्यलिङ्गकः" इति मेदिनी ॥ मृत्युर्मरणम् । कृष्णः कालवर्णः । तद्वान् तयोः । तथा लोहे । कक्कोलके । यमे । महाकाले । शिवे । शनैश्चरे । कोकिले । रक्तचित्रके । कासमर्दे । क्षणदण्डादिसमये च । **कालः** । पु०। स्यादित्यन्वयः । कुत्सितमलति । अल—वारणे । अच्प्रत्ययः । कोः कादेशः। "कालो मृत्यौ महाकाले समये यमकृष्णयोः" इति मेदिनी ॥ अंशे चन्द्रमण्डलस्य षोडशे भागे। वृद्धौ दत्तधनस्याधिकलभ्यांशे । अपिशब्दात् कालपरिमाणे । ज्योतिषोक्ते राशेस्त्रिंशद्भागस्य षष्टिभागे । नौकायाम् । कपटे । विभूतौ । सामर्थ्ये । सङ्ख्यायाम् । मरीचिपत्न्याम् । चतुःषष्टिप्रकारेषु गीतवाद्यादिषु च । **कला** । स्त्री० । कल—सङ्ख्यायाम् । अच्प्रत्ययः । "कला स्यान्मूलविवृद्धौ शिल्पादावंशमात्रके । षोडशांशे च चन्द्रस्य कलनाकालमानयोः" इति मेदिनी॥ ध्वजः पताका ।:रम्भा रम्भावृक्षः । तयोः । तथा मृगविशेषे च । **कदली** । स्त्री० । काये दल्यते त्वगादौ जलबहुलत्वात् । काशब्दोपपदः दल—भेदे । अच्प्रत्ययः । ङीप् च। "कदली पताकामृगभेदयोः" इति मेदिनी ॥ ३८३ ॥ कफोणिः भुजमध्यग्रन्थिः कूर्परः । घातः शङ्कुः ।

**काको विषश्च काकोलौ सास्नायामपि कम्बलः ।**
**धूनकेऽपि कलकलः कामलः कामुके मधौ ॥ ३८५ ॥**
**कुलं गोत्रे गणे देहे न ना ज्ञाने च केवलम् ।**
**कपिला शिंशपाकौन्त्योः कपिलोऽग्नौ मुनौ शुनि ॥ ३८६ ॥**

तयोः । ज्वाले अग्निशिखायाम् । चकारात् शस्त्रे । स्तम्भे । लेशे च । कीलावत् कीलाशब्द इव । कीलः कीलशब्दः इष्यते काम्यते । शाब्दिकैरित्यध्याहारः । **कीलः** । पु० । कील—बन्धे । कप्रत्ययः । "कीलो लेशे द्वयोः स्तम्भे ज्वालाकफोणिशङ्कुषु" इति मेदिनी ॥ शिरसोऽस्थिन मस्तकास्थिन । घटादेः शकले कलशादेरवयवे । व्रजे समूहे । तथा यतीनां भिक्षापात्रे । कर्परे । कुष्ठरोगभेदे च । **कपालः** । पु० । कं जलं पालयति । पाल—रक्षणे । अण् प्रत्ययः । कप—कालन्प्रत्ययश्च । सौत्रिकः । "कपालोऽस्त्री शिरोऽस्थिन स्याद्घटादेः शकले व्रजे" इति मेदिनी ॥ ३८४ ॥ काकः द्रोणकाकः । विषं विषभेदः । तयोः । चकारात् सर्पे । सूकरभेदे । नरकभेदे । वायस्याम् । अश्वगन्धायाश्च । **काकोलः** । पु० । कक—लौल्ये । स्वार्थे णिच्ओलप्रत्ययौ । "काकोलं नरकान्तरे । ना कुलाले द्रोणकाके विषभेदे तु न स्त्रियाम्" इति मेदिनी ॥ सास्नायां गोगलस्थिते लोमसङ्घातात्मके कम्बले । अपिशब्दात् प्रावारे । नागभेदे । कृमौ । स्वनामाख्याते मेषरोमनिर्मिते वस्त्रासनादौ । जले च । न० । **कम्बलः** । पु० । कम्ब—गतौ । कलच्प्रत्ययः । "कम्बलो नागराजे स्यात् सास्नाप्रावरयोरपि । कृमावप्युत्तरासङ्गे सलिले तु नपुंसकम्" इति मेदिनी ॥ धूनके यक्षधूपे । सालनिर्यास इत्यर्थः । क्वचित् घुणक इति पाठः । अपिशब्दात् कोलाहले च । **कलकलः** । पु० । कल—शब्दे । घञ्प्रत्ययः । अवृद्धिः । कलप्रकारः गुणवचनवरात् प्रकारे द्वित्वम् । "कलकल उक्तः कोलाहले तथा शालनिर्यासे" इति मेदिनी ॥ कामयुक्ते । त्रि० । मधौ वसन्तकाले । तथा रोगभेदे च । **कामलः** । पु० । कामेन लस्यति । लस—श्लेषे, दीप्तौ च । डः प्रत्ययः । काम अस्याऽस्तीति । मत्वर्थे लच्प्रत्ययः। कामं कान्तिं लुनाति । लु—छेदे । डः प्रत्ययो वा । "कामला रोगभेदे वा न ना मरुवसन्तयोः । कामुके वाच्यलिङ्गः" इति मेदिनी ॥३८५॥ गोत्रे वंशे । गणे सजातीयगणे । देहे शरीरे । तथा देशे । गृहे । तन्त्रोक्ते जीवादौ । मध्यमहलद्वयेन कृष्यमाणायां भूमौ । शिल्पिकुलप्रधाने च । **कुलम्** । न० । कुल—बन्धे संहतौ च । कः प्रत्ययः । "कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीबं कण्टकार्योषधौ कुली" इति मेदिनी ॥ ज्ञाने ज्ञानभेदे । चकारात् शुद्धे । न० । निश्चिते । कृत्स्ने । एके च । **केवलम्** । त्रि० । केव—सेवने । कलच् प्रत्ययः । के सरसि वलयति । वल—संवरणे । अच्प्रत्ययः । अलुकसमासः । शिंशपा रक्तपुष्पयोगा शिंशपा । कौन्ती भस्मगन्धिनी औषधी । तयोः । अग्नौ ज्वलने । मुनौ साङ्ख्यशास्त्रकारे मुनिभेदे । स च कर्दमप्रजापतितो

कोलोऽङ्कपालावुत्सङ्गे वराहे मेलकेऽपि च ।
पिप्पल्यपि च कोला स्यात्कोलञ्च बदरीफले ॥ ३८७ ॥
मृगे जले च कमलं कुवले बदरोत्पले ।
कल्लोलो शात्रवोल्लोलौ पर्कट्याञ्च कमण्डलुः ॥ ३८८ ॥
कर्म्मरङ्गतरौ कर्म्मफलं दुःखे सुखेऽपि च ।
करालो धूनतैलेऽपि देशे केशे च कुन्तलः ॥ ३८९ ॥

पिङ्गलवर्णे । पु० । तद्वति । त्रि० । स्वर्णवर्णायां गवि । नदीभेदे । पुण्डरीकनामदिग्गजकारिण्याञ्च । **कपिला** । स्त्री० । कव—स्तुतौ—वर्णने च । इलच्प्रत्ययः । पादेशश्च । "कपिला रेणुकायाञ्च शिंशपागोविशेषयोः । पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम् । नाऽनले वासुदेवे च मुनिभेदे च कुक्कुरे" इति मेदिनी ॥ ३८६ ॥ अङ्कपालौ क्रोडप्रान्ते । उत्सङ्गे क्रोडे । वराहे सूकरे । मेलके नद्यादेस्तरणार्थे प्लवे । पिप्पली स्वनामाख्यातऔषधविशेषः । तत्र । स्त्री० । बदरीफले स्वनामाख्याते फले । न० । अपिशब्दात् शनिग्रहे । उडुपे । भुजान्तरे । चित्रकाख्ये । अस्त्रभेदे । टङ्कद्वयमाने । जातिभेदे । देशभेदे । चव्ये । मरिचे । तोलकमाने च । **कोलः** । पु० । कुल—संस्त्याने । अच्प्रत्ययः । "कोलं कोलिफले चव्ये पिप्पलीचव्ययोः स्त्रियाम् । नाऽङ्कपाली शनौ चित्रे वराहोत्सङ्गमेलके" इति मेदिनी ॥ ३८७ ॥ मृगे मृगभेदे । जले । कुवले मुक्ताफले । बदरः कोलिफलम् । उत्पलं नीलपद्मम् । तयोः । तथा ताम्रे । व्योम्नि । औषधे । सारसपक्षिणि च । पु० । **कमलम्** । न० । कं जलमलति भूषयति । कं शब्दोपपदः अल—भूषणे । अच्प्रत्ययः । कम—वाञ्छायाम् । कलन्प्रत्ययो वा । कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे । मृगभेदे तु कमलः कमला श्रीवरस्त्रियोः" इति मेदिनी ॥ शात्रवः वैरी । उल्लोलः महातरङ्गः । तयोः । तथा हर्षे च । **कल्लोलः** । पु० । कल—कूजने । अहच्छे च । ओलच्प्रत्ययः । "कल्लोलः पुंसि हर्षे स्यादुल्लोलवैरिणोरपि" इति मेदिनी ॥ पर्कट्यां प्लक्षवृक्षे । चकारात् करङ्के । संन्यासिनां जलपात्रभेदे । चतुष्पादजातौ च । **कमण्डलुः** । पु० न० । मण्डनं मण्डः । कस्य जलस्य मण्डं लाति । ला—आदाने । कुः प्रत्ययः । "कमण्डलुः स्यात्करके न स्त्री ना प्लक्षपादपे" इति मेदिनी ॥ ३८८ ॥ कर्मरङ्गतरौ कामरङ्गवृक्षे, तत्फले च । दुःखे कर्मविपाकजनिते प्रतिवेदनीये चित्तधर्मभेदे, दुःखसाधने वा । सुखे कर्मविपाकजनिते आनुकूल्यवेदनीये चित्तधर्मभेदे । सुखिनि, सुखकारके वा । अपिशब्दात् कर्मविपाकजन्ये च । **कर्म्मफलम्** । न० । कर्म्मणः फलमिति षष्ठीतत्पुरुषः । "अथ कर्म्मफलः कर्म्मरङ्गकर्मविपाकयोः" इति मेदिनी ॥ धूनतैले सर्जरसयुक्ततैले । अपिशब्दात् तैलभेदे । विकटे । भयानके । दन्तुरे । उच्चे । त्रि० । वृक्षभेदे च । **करालः** । पु० । कॄ—विक्षेपे । अप्प्रत्ययः । "करो विक्षेपः तमं अलति पर्य्याप्नोति । अल—पर्याप्तौ । अच्प्रत्ययः । "करालो दन्तुरे तुङ्गे भीषणे चाभिधेयवत् । ससर्जरसतैले ना क्लीबं कृष्णकुठेरके" इति मेदिनी । देशे देशभेदे । केशे

कुतूहलं प्रशस्तेऽपि खल्लश्चर्म्मणि चातके।
वस्त्रे निम्ने चाथ खलं सस्यस्थाने शठे त्रिषु ॥ ३९० ॥
मण्डले मणिके गोला गोलं गोदावरी सखी।
गोपो भूपश्च गोपालौ चपलः पारदेऽपि च ॥ ३९१ ॥
चपला पिप्पलीलक्ष्मीपुंश्चलीविद्युतः स्मृताः।
छलं छद्मस्खलितयोर्जम्बालौ पङ्कशैवलौ ॥ ३९२ ॥

चिकुरे। चकारात् पानपात्रे। जवे। हस्ते। जनपदभेदे च। **कुन्तलः**। पु०। कुन्तं कुन्ताकारं लाति। ला—आदाने। कः प्रत्ययः। "कुन्तलश्चषके बाले यवे पुंस्त्रि नीवृति" इति मेदिनी ॥ ३८९ ॥ प्रशस्ते प्रशंसनीये। अपिशब्दात् अपूर्ववस्तुदिदृक्षातिशये चेष्टाभेदे। फलनिरपेक्षतया चिकीर्षिते कौतुके च। अद्भुते च। त्रि०। **कुतूहलम्**। न०। कुतूं चर्म्ममयं स्नेहपात्रं हलति लिखति। हल—विलेखे। अच्प्रत्ययः। "कुतूहलं कौतुकं स्यात् प्रशस्तेऽति च दृश्यते" इति मेदिनी ॥ चर्म्मणि इन्द्रियभेदे। येन स्पर्श उपलभ्यते तस्मिन्। चातके स्वनामाख्याते पक्षिभेदे। वस्त्रे वसनभेदे। निम्ने गर्त्ते। नीचे स्थाने च। चकारात् इत्तौ। औषधमर्दनपात्रे च। **खल्लः**। पु०। खलतीति। खल—चलने, स्खलने च। क्विप्प्रत्ययः। खल्। तं लाति। ला—आदाने। कः प्रत्ययः। "खल्लो वस्त्रप्रभेदे स्याद्गर्त्ते चर्म्मणि चातके" इति मेदिनी ॥ सस्यस्थाने धान्यमर्दनस्थाने। शठे अधमे। तथा भुवि। तिलकल्के। नीचे। क्रूरे। सूर्ये। तमालद्रुमे च। **खलम्**। त्रि०। खल—चलने, स्खलने च। अच्प्रत्ययः। खे लीयते। लि—श्लेषे। डः प्रत्ययः। खं वर्णतः लाति। ला—आदाने। कः प्रत्ययो वा। "खलं भूस्थानकल्केषु नीचक्रूराधमे त्रिषु" इति मेदिनी ॥ ३९० ॥ मण्डले चक्राकारेण वेष्टने, मण्डलाकारेण विहिते पदार्थे वा। मणिके मृन्मयपात्रभेदे अलिञ्जरे। तथा सर्वतो वर्त्तुले। मदनतरौ। भर्त्तरि मृते जारजे पुत्रे। ज्योतिषोक्ते भूगोले खगोले। एकराशौ षड्ग्रहयोगे। पु०। गुडे। पिण्डे। गन्धरसे। कलाये च। गोदावरी स्वनामाख्याता नदी। सखी सहचरी, वयस्या वा। तयोः। तथा पत्राञ्जने। बालक्रीडनके। कुनट्याम्। मण्डले। मणिके च। स्त्री। **गोलम्**। न०। गुड—वेष्टने, रक्षणे, चूर्णने च। घञ्प्रत्ययः। डलयोरैक्यम्। "गोला गोदावरीसख्योः कुनटीदुर्गयोः स्त्रियाम्। पत्राञ्जने मण्डले चाऽलिञ्जरे बालखेलने" इति मेदिनी ॥ "गोला सखीवर्त्तुलयोर्गोलं लक्ष्यानुसारतः। पत्राञ्जने कुनट्यां च गोदावर्याञ्च मण्डले" इति विश्वः। गोपः कृष्णः। भूपः नृपतिः। तयोः। चकारात् गोपार्थे च। **गोपालः**। पु०। गां सुरभीवृषभादिकं भूमिं वा पालयति। पाल—रक्षणे। अच्प्रत्ययः। "गोपालो नृपगोपेशे" इति मेदिनी ॥ पारदे रसराजे ॥ ३९१ ॥ पिप्पल्याम्। लक्ष्म्याम्। पुंश्चल्याम्। विद्युति। अपिशब्दात्। विजयायाम्। मदिरायाम्। जिह्वायाम्। आर्याभेदे च। स्त्री०। **चपलः**। पु०। चप—सान्त्वने, गतौ च। णिच्घञ्-

**जङ्गलो निर्ज्जने देशे त्रिलिङ्गः पिशितेऽस्त्रियाम् ।**
**जालं दम्भेऽपि जम्बीरे देवभेदेऽपि जम्भलः ॥ ३९३ ॥**
**झलाऽऽतपोर्म्मिर्दुहिता तलं मूलचपेटयोः ।**
**तालो गीतक्रियामाने हरिताले द्रुमान्तरे ॥ ३९४ ॥**

नत्ययौ । चपं मान्त्वनं लाति । ला—आदाने । कः प्रत्ययो वा । मीने चोरनामगन्धद्रव्ये । प्रस्तरभेदे । राजमाषे । तरले । चञ्चले । क्षणिके । विकले । दुर्विनीते । त्रि० । "चपलः पारदे मीने चौरके प्रस्तरान्तरे । चपला कमला विद्युत्पुंश्चलीपिप्पलीषु च । नपुंसकन्तु शीघ्रे स्याद्वाच्यवत्तरले चले" इति मेदिनी ॥ छद्म स्वरूपाच्छादनः कपटः । स्खलितं कूटयुद्धादौ प्रवृत्त्या वीरमर्य्यादातः पतनं स्खलनमात्रम् । अथ वा न्यायोक्तं तत्पर्य्यायान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरकल्पनेन वाद्युक्तौ प्रतिवादिना दत्तदूषणञ्च । यथा नेपालादागतोऽयं नवकम्बलवत्त्वादिति वादिना उक्तौ नवशब्दस्य नूतनार्थपरत्वे स्थिते प्रतिवादिना तस्य न सङ्ख्यायुक्तार्थत्वकल्पनेप्रास्य नवसङ्ख्याकम्बलवत्त्वमिति यद्दूषणं दीयते । तयोश्च । **छलम्** । न० । छो—छेदने । कलच् प्रत्ययः । "छलः स्खलितशाठ्ययोः" इति मेदिनी ॥ पङ्कः कर्दमः । शैवालः जलजातपदार्थभेदः । तयोः । तथा केतक्याञ्च । **जम्बालः** । पु० । जम्ब—गतौ । घञ्प्रत्ययः । जम्बमालाति आदत्ते । आपूर्वला—आदाने । कः प्रत्ययः । "जम्बालः शैवले पङ्के" इति मेदिनी ॥ ३९२ ॥ निर्ज्जने देशे जनशून्ये वने रहसि वा । त्रि० । पिशिते मांसे । पु० न० । तथा वने च । **जङ्गलः** । पु० । गल—भक्षणे, स्रावे च । यङ्अच्प्रत्ययौ । पृषोदरादित्वात् साधुः । "जङ्गलं निर्जनस्थाने त्रिलिङ्गयां पिशितेऽस्त्रियाम्" इति मेदिनी ॥ दम्भे कपटे । अपिशब्दात् कदम्बवृक्षे । गवाक्षच्छिद्रे । "गवाक्षजालैरभिनिष्पतन्त्य" इति भट्टिः । मत्स्यधारणार्थे शणसूत्रनिर्म्मिते स्वनामाख्याते आनाये । अस्फुटकलिकायाम् । क्षुद्रफले । मृगपक्षादिधारणार्थे पाशे । शाठ्ये समूहे । इन्द्रजाले । न० । स्वार्थे कन्प्रत्ययः । गवाक्षच्छिद्रे । पु० । मोचकफले । नवकलिकासमूहे । क्षारके च । न० । **जालम्** । न० । जल—संवरणे । घञ्प्रत्ययः । जल—वातने । णिच्अच्प्रत्ययौ । "जालं गवाक्ष आनाये क्षारके दन्तवृन्दयोः" इति मेदिनी ॥ जम्बीरे स्वनामाख्याते वृक्षे । देवभेदे बुद्धदेवान्तरे । अपिशब्दात् राक्षसीभेदे । तस्याः स्मरणे ज्वरनाशात् ज्वरनाशे च । **जम्भला** । स्त्री० । "समुद्रस्योत्तरे तीरे जम्भला नाम राक्षसी" इति ग्रन्थान्तरम् । जम्भं जृम्भां लाति । ला—आदाने । कः प्रत्ययः । "जम्भलः पुंसि जम्बीरे बुद्धदेवान्तरेऽपि च" इति मेदिनी ॥ ३९३ ॥ आतपोर्म्मिः सूर्य्याद्यालोकस्य प्रकाशः । दुहिता पुत्री तयोश्च । **झला** । स्त्री० । झॄ—वयोहानौ । अप्प्रत्ययः । रस्य लत्वञ्च । "झला स्यादातपस्योर्मौ दुहितर्यपि च स्त्रियाम्" इति मेदिनी ॥ मूलं स्वरूपम् । यथा भूमितलम् । करतलम् । चपेटः विस्तृताङ्गुलिको हस्तः । तयोः । तथा अधोभागे । तालवृक्षे । खड्गमुष्टौ । आधारे । स्वभावे । पु० । वने । न० । व्याघातवारणे । गर्त्ते च ।

**लोहे हारमणौ पुंसि यवाग्वां तरला स्त्रियाम् ।**
**ब्रह्मदारौ पिचौ तूलं स्थूणासादृश्ययोस्तुला ॥ ३९५ ॥**
**तमालो वरुणे खड्गे तापिच्छे तिलकेऽपि च ।**
**गुवाकेऽपि च ताम्बूलं विडङ्गेऽपि च तण्डुलः ॥ ३९६ ॥**

स्त्री० न० । **तलम्** । न० । तल—प्रतिष्ठायाम् । अच्प्रत्ययः । "तलं स्वरूपेऽनूर्द्ध्वेऽस्त्री क्लीबं ज्याघातवारणे । कानने कार्यबीजे च पुंसि तालमहीरुहे । चपेटे च त्सरौ तन्त्रीघाते सव्येन पाणिना" इति मेदिनी॥गितक्रियामाने गीतादौ द्विमात्रादिकालक्रियामाने । हरिताले पीत वर्णे उपधातुभेदे । द्रुमान्तरे स्वनामाख्याते वृक्षभेदे । तथा विस्तृताभ्याम् अङ्गुष्ठमध्यमाभ्यां परिमिते दीर्घपरिमाणभेदे । करतले करस्फोटे । कांस्यमयवाद्यभेदे । खड्गमुष्टौ । लेख्यपत्रे । न०। "तालो द्वादशभिर्जानुभ्रमणात् परिकीर्त्तितः" इत्युक्ते द्वादशवाहस्तेन जानुमण्डलपरिभ्रमणोपलक्षिते कालरूपे मानभेदे च। **तालः** । पु०।तल—प्रतिष्ठायाम् । घञ्प्रत्ययः । णिच्अच्प्रत्ययौ वा । "तालः करतलेऽङ्गुष्ठमध्यमाभ्याञ्च सम्मिते । गीतकालक्रियामाने करास्फाले द्रुमान्तरे । वाद्यभाण्डे च कांस्यस्य त्सरौ ताल्यजटौषधौ।क्लीबन्तु हरिताले स्यात्" इति मेदिनी ॥३९४॥ लोहे धातुभेदे । हारमणौ हारमध्यस्थे मणौ । पु०। यवाग्वां षड्गुणजलपक्वे द्रवभेदे । पु० । तथा सुरायाम् । स्त्री० । हारे । तलेच । पु० । च पले । कामुके । विस्तारे भास्वरे । मध्यशून्ये द्रव्ये । द्रवीभूते पदार्थे च । त्रि० । **तरलः** । पु० । तॄ—तरणे, प्लवने, अभिभवने च । अञ्च्प्रत्ययः । "तरलं चञ्चले विङ्गे भास्वरेऽपि त्रिलिङ्गकम । हारमध्यमणौ पुंसि यवागुसुरयोः स्त्रियाम्" इति मेदिनी ॥ ब्रह्मदारौ अश्वत्थाकारे वृक्षभेदे । पिचौ कार्पासतूले । "तूलराशिमिवानलः" इति स्मृतिः । तथा आकाशे । वृक्षभेदे च । **तूलम्** । न० । तूल—इयत्तापरिच्छेदे, निष्काशने च । कः प्रत्ययः । "राशौ पलशते भाण्डे तूलं स्यात् ब्रह्मदारुणि । आकाशे च पिचौ न स्त्री" इति मेदिनी ॥ स्थूणा गृहस्तम्भः । सादृश्यः समानता । तयोः । तथा माने । मेषावधितः सप्तमे राशौ । तोलनदण्डे । दिव्यप्रमाणरूपे । परीक्षाभेदे च । "त्रिपवर्जं ब्राह्मणस्य सर्वेषान्तु तुला स्मृता" इति नारदोक्तिः । **तुला** । स्त्री० । तुल—उन्माने । भिदादित्वात् अङ्-प्रत्ययः। "तुला सादृश्यमानयोः। गृहाणां दारुबन्धायां पीठिकायामपीष्यते" इति मेदिनी॥३९५॥ वरुणे वरुणवृक्षे । खड्गे असिपत्रे।तापिच्छे स्वनामाख्याते वृक्षे। तिलके तिलकवृक्षे । अपिशब्दात् कृष्णखदिरे च वंशत्वचि । पु०न०। ताम्बूलवल्ल्याम् । वरुणवृक्षे च । स्त्री०।ङीप् । **तमालः** । पु० । तम—खेदे । कालन्प्रत्ययः । "तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे" इति मेदिनी ॥ गुवाके क्रमुके। अपिशब्दात् नागवल्लीदले च। स्त्री०। **ताम्बूलम्** । न०। तम- खेदे । ऊलच्-प्रत्ययः । बुगागमः दीर्घश्च । "ताम्बूली नागवल्ल्यां स्त्री क्रमुके तु नपुंसकम्" इति मेदिनी ॥ विडङ्गे स्वनामाख्याते ओषधभेदे । पु० । स्त्रियां टाप् । अपिशब्दात् धान्यादिसारे । निस्तुषे धान्यादौ तण्डुलीयशाके च । **तण्डुलः** । पु० । तडि—आहतौ । उलच्प्रत्ययः । "त-

दुकूलं श्लक्ष्णवस्त्रेऽपि चार्द्धे पत्रे छदे दलम् ।
धवला गवि ना शण्डे शुक्लसुन्दरयोस्त्रिषु ॥ ३९७ ॥
परमाणौ च पीलुः स्याद्देहे चात्मनि पुद्गलः ।
शस्ताकारेऽप्यथ तरौ पिप्पलः पिप्पलं जले ॥ ३९८ ॥
शाल्मली शिंशपा चैव पोतिका चाऽपि पिच्छिला ।
सश्मश्रुयुवती पालिः पङ्क्तिः कर्णलताऽपि च ॥ ३९९ ॥

ण्डुलः स्याद्विडङ्गे च धान्यादिनिकरे पुमान्'' इति मेदिनी ॥ ३९६ ॥ श्लक्ष्णवस्त्रे अल्प-घनवस्त्रे । क्वचित् शुक्लवस्त्रे इति पाठः । अपिशब्दात् क्षौमाम्बरे । सूक्ष्मवस्त्रे च । **दुकूलम्** । न० । दु-गतौ । ऊलच्प्रत्ययः । कुक् च । दुष्टं कूलति । कूल-आवरणे । कः प्रत्ययो वा । पृषोदरादित्वात् साधुः । ''दुकूलं श्लक्ष्णवस्त्रे स्यात् क्षौमे च'' इति मेदिनी ॥ अर्द्धे खण्डे । पत्रे । छदे तमालपत्रे । चकारात् शस्त्रच्छेदे । अपकृष्टद्रव्ये । उच्चतायाम् । पङ्के । उत्सेधवस्तुनि च । पु० । **दलम्** । न० । दल-भेदे । अच्प्रत्ययः । ''दलमुत्सेधखण्डयोः । शस्त्रच्छेदेप्यऽपद्रव्ये पत्रे'' इति मेदिनी ॥ गवि वृषे । पु० । शण्डे वृषश्रेष्ठे । शुक्लः श्वेतवर्णः । सुन्दरः मनोहरः । तयोः । त्रि० । तथा धववृक्षे । वीरणवृक्षे । श्वेतमरिचे । चीनकर्पूरे । शुक्लवर्णायां गवि । स्त्रियां टाप् । गौरादित्वात् ङीप् वा । **धवला** । स्त्री० । धवं कम्पं लाति । ला-आदाने । कः प्रत्ययः । ''धवला गवि । वृषश्रेष्ठे पुमान् वाच्यलिङ्गः शुक्ले च सुन्दरे'' इति मेदिनी ॥ ३९७ ॥ परमाणौ वैशेषिकसिद्धे पृथिव्यादीनां चतुर्णां भूतानां द्व्यणुकरूपावयवा-रम्भके सूक्ष्मभूते । यथा पीलुपाकः पिठरपाकः इति वैशेषिकभेदः । चकारात् गजे । अस्थि-खण्डे । तालकाण्डे । वासे । कुमौ । कोङ्कणदेशख्याते गुडफले वृक्षे । कुसुमे च । **पीलुः** । पु० । स्यादित्यन्वयः । पील-रोधे । उः प्रत्ययः । ''पीलुः पुमान् प्रसूने स्यात् परमाणौ मतङ्गजे । अस्थिखण्डे च तालस्य काण्डपादपभेदयोः'' इति मेदिनी ॥ देहे शरीरे । आत्मनि रूपादिविशिष्टे द्रव्ये । शस्ताकारे उत्कृष्टाकारे । चकारात् व्यणुकादिस्थानीये बौद्धायुक्ते पदार्थे च । **पुद्गलः** । पु० । गलतीति । गल-भक्षणे, स्रावे च अच्प्रत्ययः । पुत् कुत्सितं गलो यस्मादिति पञ्चमीबहुव्रीहिः । पुद्गलः सुन्दराकारे त्रिषु पुंस्यात्मदेहयोः'' इति मेदिनी ॥ अथ अनन्तरार्थवाची । तरौ अश्वत्थवृक्षे ।पु०। जले पानीये।तथा वस्त्रखण्डभेदे । बन्धनशून्ये पक्षिणि च।पु०। कणायाम् । स्त्रियां ङीप् वा । ह्रस्वः। ततः पिप्पलिः पिप्पली अप्यत्र । **पिप्पलम्** । न० पु० । पा-पाने, रक्षणे वा । अलच्प्रत्ययः । पृषोदरादित्वात् साधुः । ''पिप्पलं सलिले वस्त्रच्छेदभेदे च ना तरौ । निरंशुके पक्षिभदे कणायां पिप्पली मता'' इति मेदिनी ॥ ३९८ ॥ शाल्मली स्वनामाख्यातो वृक्षः। शिंशपा स्वनामाख्यातो वृक्षः। पोतिका श्लेष्मातकवृक्षः । एतेषु, स्त्री० । तथा मसृणे । स्निग्धे ''पिच्छिलानि च दधीनि'' इति काव्यप्रकाशः । भक्तमण्डे । सरसव्यञ्जनसूपादौ । मण्डयुक्तभक्ते च । पु० । **पिच्छिला** । त्रि० । पिच्छा अस्यास्तीति

**वीणादण्डे प्रवालोऽस्त्री विद्रुमे नवपल्लवे ।**
**नले काशे पोटगलः पित्तयुक्ते च पित्तलः ॥ ४०० ॥**
**पिङ्गलः स्यात् कपावग्नावाशुव्रीहिश्च पाटलः ।**
**फलं जातिफले लाभे बाणाग्रे फलकेऽपि च ॥ ४०१ ॥**

अस्त्यर्थे इलच् प्रत्ययः । "पिच्छिलो विजिलेऽन्यवत् । स्त्री पोतिका शिशपयोः शाल्मली सिन्धुभेदयोः" इति मेदिनी ॥ सश्मश्रुयुवती श्मश्रुयुक्ता तरुणी । पङ्क्तिः सजातीयसन्ततिः । कर्णलता कर्णपत्रम् एतासु । अपिशब्दात् कोणे यूकायाम् । सेतौ । प्रान्तभागे । प्रशंसायाम् । क्रोडे च । **पालिः** । स्त्री० । पाल—रक्षणे इन्प्रत्ययः । वा ङीप् । पाली अप्यत्र । "पालिः कर्णलताग्रेऽश्रौ पङ्क्तावङ्कप्रभेदयोः । छात्रादिदेये स्त्री पाली यूकाश्मश्रुयोषितोः" इति मेदिनी ॥ ३९९ ॥ वीणादण्डे वीणावाद्यस्थितालाबुपरिस्थे काष्ठदण्डे । विद्रुमे रक्तवर्णमणिभेदे । नवपल्लवे नूतनकिशलये । "पुष्पं प्रवालोपहितं यदि स्यात्" इति कुमारः । **प्रवालः** । पु० न० । प्रकर्षेण बलति अवकम्प्यते ज्वलादित्वात् । प्रपूर्वः वल—जीवने । णः प्रत्ययः । "प्रवालोऽस्त्री किशलये वीणादण्डे च विद्रुमे" इति मेदिनी ॥ नले तृणभेदे । काशे काशाख्ये तृणे । तथा मत्स्ये च । **पोटगलः** । पु० । पोटेन छेदमात्रेण गलति । गल—भक्षणे, स्रावे च । अच्प्रत्ययः । "अथ पोटगलः पुंसि नले च काशमत्स्ययोः" इति मेदिनी ॥ पित्तयुक्ते पित्ताबलवति, पित्तरोगवति च । चकारात् ताम्रादिजाते धातुभेदे । तोयपिप्पल्याम् । स्त्री० । **पित्तलः** । पु० । पित्तं लाति । ला—आदाने । कः प्रत्ययः । "पित्तला तोयपिप्पल्यां स्त्र्यन्यवत् पित्तसंयुते" इति मेदिनी ॥ ४०० ॥ कपौ वानरे । अग्नौ वैश्वानरे । तथा नागभेदे । रुद्रे । सूर्यपारिपार्श्वके । निधिभेदे । मुनिभेदे । मङ्गलग्रहे । स्थावरविषभेदे । क्षुद्रोलूके । षष्टिवर्षमध्ये । "पिङ्गले चारु पद्माक्षि दुर्भिक्षं नर्मदातटे" इत्युक्तलक्षणे वत्सरभेदे । प्राकृतछन्दोग्रन्थकारके । नागरूपे मुनिभेदे । दीपशिखातुल्ये वर्णे च । तद्वति । त्रि० । कुमुददिग्गजस्य योषिति । नाडिभेदे । राजनीतौ । शिंशपावृक्षे । वामनाख्यदिग्गजस्य योषिति । वेश्याभेदे । स्त्रियां टाप् । "यथा संछिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ।" इति पुराणम् । **पिङ्गलः** । पु० । पिङ्गं लाति । ला—आदाने । कः प्रत्ययः । पिजि—दीप्तौ, वासे, बले च । कलच्प्रत्ययो वा । कुत्वम् । "पिङ्गलो नागभिद्रुद्रचण्डांशुपारिपार्श्वके । निधिभेदे कपावग्नौ पुंसि स्यात् कपिलेऽन्यवत् । स्त्रियां वेश्याविशेषे च करिण्यां कुमुदस्य च" इति मेदिनी ॥ आशुव्रीहिः । आशुधान्यम् । तत्र । न० । चकारात् श्वेतरक्तवर्णे । तद्वति । त्रि० । स्वनामाख्याते वृक्षे । स्त्री० । तत्पुष्पे च । न० । **पाटलः** । पु० । पाटयति । पट—दीप्तौ, वेष्टने वा । णिच्कलच्प्रत्ययौ । "पाटला पाटलो स्त्रीस्यादस्य पुष्पे पुनर्न ना । आशुधान्ये पुमान् श्वेतरक्तवर्णेऽपि वाच्यवत्" इति मेदिनी ॥ जातिफले स्वनामाख्याते फले । लाभे । बाणाग्रे । फलके । अपिशब्दात् वृक्षादीनां सस्ये । कार्ये । उद्देश्ये । प्रयोजने । त्रिफलायाम् । कक्कोले । फाले । दाने । मुष्के च ।

फेणिलं बदरेऽरिष्टे बालो ह्रीवेरकेशयोः ।
बलिर्जराश्लथत्वे स्त्री गृहदार्वसुरौ बली ॥ ४०२ ॥
बलं गन्धरसे रूपे क्लीबं वाल्यालके स्त्रियाम् ।
बहुलः कृष्णपक्षेऽपि मेलानन्द्यपि वार्दलः ॥ ४०३ ॥

कुटजवृक्षे । पु० । सामर्थ्यादौ । कन् प्रत्ययः । चर्ममये अस्त्रप्रतिघातनिवारणे पदार्थे । अस्थिखण्डे । नागकेशरे । काष्ठादिपट्टके च । पु० । **फलम्** । न० । फल—निष्पत्तौ, गतौ वा । अच्प्रत्ययः । "फलं जातिफले सस्ये हेतूत्थे व्युष्टिलाभयोः । त्रिफलायाञ्च कक्कोले" इति मेदिनी ॥ ४०१ ॥ बदरे बदरवृक्षे । अरिष्टे निम्बवृक्षे । तद्वत् फेणविशिष्टे । कोलिफले । मदनवृक्षफले च । न० । **फेणिलम्** । त्रि० । फेणमस्यास्तीति । अस्त्यर्थे इलच्प्रत्ययः । अत्र फेनिल इति दन्त्यनकारमध्यपाठोऽपि युज्यते । "फेणिलोऽरिष्टपादपे । नासफेने त्रिषु क्लीवं कोलीमदनयोः फले" इति मेदिनी ॥ ह्रीवेरः गन्धद्रव्यभेदः । केशः निकुरः । तयोः । पु० । तथा मूर्खे । शिशौ च । त्रि० । अश्वशिशौ । अश्ववालधौ । हस्तिवालधौ । नारिकेले । पशुपुच्छे च । पु० । **बालः** । पु० न० । बल--जीवने, निरूपणे । वा वञ्प्रत्ययः । "बालो ना कुन्तलेऽश्वस्य कारिणश्चापि वालधौ । नारिकेले हरिद्रायां मल्लिकाभिद्यपि स्त्रियाम् । वाच्यलिङ्गोऽर्भके मूर्खे ह्रीवेरे पुन्नपुंसकम्" इति मेदिनी ॥ जराश्लथत्वे जरया श्लथचर्मणि । स्त्री० । वा ङीप्प्रत्ययः । "गृहस्थस्तु यदा पश्येद्वलीपलितामात्मनः" इति स्मृतिः । गृहदारु गेहदारुप्रभेदः । असुरः दैत्यभेदः, विरोचनपुत्रो वा । "येन बद्धो बली राजा दानवेन्द्रो महाबली" इति रक्षाबन्धनमन्त्रः । तयोः । तथा पूजोपहारे । "ददतुस्तौ बलिं चैव निजगात्रासृगुक्षितम्" इति चण्डी । राजग्राह्ये भागे । उपप्लवे । चामरदण्डे । गृहस्थकर्त्तव्ये पञ्चयज्ञमध्ये भूतयज्ञे । "बलिकर्म्म ततः कुर्यात्" इति स्मृतिः । उदरावयवे । "बलित्रयं चारु बभार बाला।" इति कुमारः । गुह्यस्थे अङ्कुराकारे मांसपिण्डे । अतिबलायाञ्च । **बलिः** । पु० । बल दाने, वधे, निरूपणे च । इन्प्रत्ययः । बलमस्त्यस्येति । अस्त्यर्थेऽपि इनिः प्रत्ययो वा । "बलिर्दैत्यप्रभेदे च करिचामरदण्डयोः । उपहारे पुमान् स्त्री तु जरया श्लथचर्मणि । गृहदारुप्रभेदे च जठरावयवेऽपि च" इति मेदिनी ॥ ४०२ ॥ गन्धरसे । रूपे । न० । वाल्यालके क्षुपभेदे । स्त्री० । तथा सैन्ये देहजे सामर्थ्ये । स्थौल्ये । देहे । पल्लवे । रक्ते च । बलयुक्ते । त्रि० । काके । बलदेवे । वरुणवृक्षे । दैत्यभेदे च । पु० । **बलम्** । न० । बल—जीवने । अच्प्रत्ययः । "बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः । पुमान् हलायुधे दैत्यप्रभेदे वायसेऽपि च" इति मेदिनी ॥ कृष्णपक्षे कालपक्षे । अपिशब्दात् अनेकसङ्ख्यान्विते प्रचुरे । अग्नौ । कृष्णवर्णे च । पु० । तद्वति । त्रि० । "बहुलेऽपि गते निशाकरः" इति कुमारः । आकाशे । न० । नीलिकायाम् । नीलवर्णायां गवि च । स्त्री० । प्रचुरे । त्रि० । अग्निदैवतत्वात् कृत्तिकानक्षत्रे च । स्त्रियां टाप् च । **बहुलः** । न० बहि-

**दुर्दिनेऽप्यथ वेला स्यात्सिन्धोः कूले च भोजने ।**
**ऋषिभेदे प्लवे पुंसि भेलं भीरुहृदि त्रिषु ॥ ४०४ ॥**
**मेखलाद्रिऽनितम्बेऽपि ग्रहे ना मङ्गलं शुभे ।**
**निकटेऽपि च मूलं स्याद्धुस्तूरेऽपि च मातुलः ॥ ४०५ ॥**

वृद्धौ । कुलच्प्रत्ययः । निपातनात् न लोपः । "बहुला नीलिकायां स्यादेलायां गवि योषिति । कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम् । पुंस्यग्नौ कृष्णपक्षे च वाच्यवत् प्राच्यकृष्णयोः" इति मेदिनी ॥ मेलानन्दा ( दोआत ) इति प्रसिद्धः मस्याधारः । पु० । दुर्दिने मेघाच्छन्ने दिवसे । अपिशब्दात् दक्षिणावर्त्तशङ्खे । काकचिञ्च्याम् । कृष्णलाबीजे । कृमिजे । आम्रबीजे च । न० । **वार्दलः** । पु० । वारे जलाय दीर्यते । दृ—आदरे । अप्प्रत्ययः । रस्य लश्च । क्वचित्तु वार्दर इति पाठः । "वार्दलः दुर्दिने मेलानन्दायां वार्दलः स्मृतः" इति मेदिनी ॥ ४०३ ॥ अथ अनन्तरार्थद्योतको निपातः । सिन्धोः कूले समुद्रकूले । स्त्री० । "वेलामूले विभावरीपरिहीने" इति भट्टिः । भोजने ईश्वरस्य भोजने । तथा उपवने । काले । समये । मर्यादायाञ्च । **वेला** । स्त्री० । स्यादित्यन्वयः । वेल—कालोपदेशे । अच् प्रत्ययः । वेला काले च सीमायामब्धेः कूलविकारयोः । अक्लिष्टमरणे रागे ईश्वरस्य च भोजने" इति मेदिनी ॥ ऋषिभेदे मुनिविशेषे । प्लवे नद्यादितारणार्थे प्लवे । पु० । भीरुहृदि भयशीलिनि चित्ते । त्रि० । तथा अंशे च । **भेलम्** । न० । भी—भये । रन्प्रत्ययः । रस्य लश्च । "भेलः प्लवे मुनौ पुंसि भीरावंशे च वाच्यवत्" इति मेदिनी ॥ ४०४ ॥ अद्रिनितम्बे पर्वतनितम्बे । अपिशब्दात् स्त्रीकट्या भूषणे उपनयनकाले ब्रह्मचारिधार्ये कटीसूत्रे । खड्गादेर्मुष्ट्या धारणार्थे उपर्यधोभागेन बन्धे । नर्मदायाम् । पृश्निपर्ण्याम् । होमकुण्डोपरिस्थे मृत्कृते वेष्टनभेदे च । **मेखला** । स्त्री० । मि—क्षेपे । खलच्प्रत्ययः । "मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोः" इति मेदिनी ॥ ग्रहे भूमिसुते, ग्रहभेदे वा । पु० । शुभे प्रशस्ते । न० । तथा अभीष्टार्थसिद्धौ च । तद्वति । त्रि० । दुर्गायाम् । हरिद्रायाम् । दूर्वायाम् । पतिव्रतायाञ्च । स्त्री० । **मङ्गलम्** । न० । मगि—सर्पणे । अलच्प्रत्ययः । "मङ्गला सितदूर्वायामुमायां पुंसि भूमिजे नपुंसकन्तु कल्याणे सर्वार्थरक्षणेऽपि च" इति मेदिनी ॥ निकटे अन्तिके । अपिशब्दात् शिफायाम् । आद्ये । निकुञ्जे । वाणिज्याद्युपयोगिनि मूलधने । निजे । चरणे । शूरणे । पिप्पलीमूले । टीकादिना व्याख्येयग्रन्थे च । अश्विन्यवधिके ऊनविंशे नक्षत्रे च । त्रि० । **मूलम्** । न० । स्यादित्यन्वयः । मूल—प्रतिष्ठायाम् । कः प्रत्ययः । "मूलं शिफाद्ययोः मूलवित्तेऽन्तिके वा ना भे" इति मेदिनी । धुस्तूरे मदनवृक्षे । अपिशब्दात् मातृभ्रातरि । तत्पत्न्यां वा । ङीप् वा । आनुक् च । "मातुलानी" "मातुली" मातुला चेति स्यात् । सर्पभेदे च । **मातुलः** । पु० । मातुर्भ्राता । मातृशब्दात् डुलच्प्रत्ययः । अथ वा । मद—हर्षे, गर्वे च । णिच्उलच्प्रत्ययौ । पृषोदरादित्वात् दस्य तः । "मातुलो व्रीहिभिन्मातृभ्रात्रोश्च मदनद्रुमे । धुस्तूरे माचलो बन्दि-

मौलिः कङ्केलिवृक्षेऽपि मल्लः पात्रे कपालिनि ।
बलीयसि च मत्स्ये च मण्डलं परिधौ गणे ॥ ४०६ ॥
बिम्बे देशे ना च शुनि रसालस्त्विक्षुचूतयोः ।
जिह्वाकमलयोर्लोला शाला स्याद्गृहशाखयोः ॥ ४०७ ॥
तरुजातौ मत्स्यभेदे शालो हाले नृपेऽपि च ।
निगडे पुंस्कटीबद्धवस्त्रे च शृङ्खलं त्रिषु ॥ ४०८ ॥

चौरे च ग्राहरोगयोः'' इति मेदिनी ॥ ४०५ ॥ कङ्केलिवृक्षे अशोकद्रुमे । अपिशब्दात् चूडायाम् । किरीटे । संयतकेशेषु च । भूमौ । स्त्री० । वा ङीप् । **मौलिः** । पु० । मूलस्यादूरभवः । इञ्प्रत्ययः । ''मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम् । नाऽशोकद्रौ स्त्रियां भूमौ'' इति मेदिनी ॥ पात्रे दीपाधारे पात्रे । कपालिनि कपोलौ । बलीयसि । मत्स्यभेदे । तथा बाहुयुद्धकारके नियोद्धरि च । **मल्लः** । पु० । मल्ल—धृतौ । अच्प्रत्ययः । ''मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि'' इति मेदिनी ॥ परिधौ चन्द्रसूर्यसमीपस्थे मेघादिसन्निकर्षात् जायमाने वेष्टनाकारे, चक्राकारेण वेष्टने वा। यथा । ''सूर्यमण्डलम् । भूमण्डलम्''। गणे समूहे । ''अर्थमण्डलमण्डलम्'' इति बोपदेवः ॥ ४०६ ॥ बिम्बे दर्पणादौ भासमानप्रतिबिम्बाश्रये, सूर्यादिमण्डले वा । देशे चतुःशतयोजनमिते देशभेदे । शुनि कुक्कुरे । तथा द्वादशनृपचक्रे । गोले चक्रे ''मण्डलाकारपादाख्यं मण्डलं स्थानमीरितम्'' इत्युक्ते धन्विनां स्थानभेदे । कृत्रिमरेखासन्निकटवशेन रचिते पदार्थे च । यथा ग्रहमण्डलं सर्वतोभद्रमण्डलमित्यादि । **मण्डलम्** । न० । मडि—भूषणे । कलच्प्रत्ययः । ''मण्डलं परिधौ कोटे देशे द्वादशराजसु । क्लीबेऽथ निवहे बिम्बे त्रिषु पुंसि तु कुक्कुरे'' इति मेदिनी॥ इक्षुः स्वनामाख्यातो वृक्षः । चूतः आम्रः । ''रसालसालः समदृश्यतामुना'' इति नैषधम् । तथा सिह्लके । गन्धरसे । शिखरिण्याम् । रास्नायाम् । दूर्वायाम् । विदार्याम् । द्राक्षायाम् । स्त्री० । पनसे । गोधूमे । पुण्ड्रकेक्षौ च । **रसालः** । पु० । रसमालाति । आपूर्वः ला—आदाने । कः प्रत्ययः । रसां भूमिमालयति । आपूर्वः ली—द्रावणे । श्लेषे च । डः प्रत्ययः । ''रसालं सिह्लके बोले रसालश्चेक्षुचूतयोः'' इति मेदिनी ॥ जिह्वा रसना । कमलं पद्मम् । तयोः । तथा सतृष्णे । चञ्चले । लक्ष्म्याश्च। **लोला**। स्त्री० । न० । लोड—उन्मादे । अच् प्रत्ययः । डस्य लः । ''सतृष्णे चञ्चले लोला जिह्वाकमलयोः स्त्रियाम्'' इति मेदिनी॥ गृहं सदनम् । शाखा वृक्षस्य स्कन्धशाखा। तयोश्च । **शाला** । स्त्री० । शाल—कथने । स्यादित्यन्वयः । अच्प्रत्ययः । ''शाला द्रुस्कन्धशाखायां गृहगेहैकदेशयोः । ना झषे'' इति मेदिनी ॥ ४०७ ॥ तरुजातौ स्वनामाख्याते वृक्षभेदे । मत्स्यभेदे झषविशेषे । हाले लाङ्गले । नृपे राजनि । क्वचित् ''हालनृपे'' इति पाठो दृश्यते । एवंसति तन्नामके राजनीत्यर्थः । अपिशब्दात् प्राकारे । वृक्षमात्रे । दन्त्यादिस्तु वृक्षमात्रे च । **शालः** । पु० । शल—गतौ।चालने च । घञ्प्रत्ययः । ''शालो हाले नृपे मत्स्यप्रभेदे सर्जपादपे'' इति विश्वः । निगडे अन्दुके।लौह-

**शालिर्गन्धमृगे धान्ये शयालुः कुक्कुरेऽलसे ।**
**शकलं वल्कले खण्डे शीतलः शिशिरेऽनिले ॥ ४०९ ॥**
**षण्डाली तैलमाने स्यात्सारसीकामुकस्त्रियोः ।**
**सिध्मला शुष्कमीने स्त्री त्रिलिङ्गयान्तु किलासिनि ॥ ४१० ॥**
**ऋजौ वृक्षे च सरलः सालो वरणसर्जयोः ।**
**हस्तिमल्लो गजास्ये च हेलाऽवज्ञाविलासयोः ॥ ४११ ॥**

**इति लान्ताः ॥**

मये पादबन्धने च । पुंस्कटीबद्धवस्त्रे गर्भसंस्कारकाले श्रोणिदेशे बद्धवस्त्रे । पुरुषस्य कटीप्रदेशबद्धवस्त्रखण्डे च । लौहमये हस्तिपादबन्धने च । **शृङ्खलम्** । त्रि० । शृङ्गात् प्राधान्यात् स्खल्यतेऽनेनेति । पृषोदरादित्वात् साधुः । शृङ्खला पुंस्कटीवस्त्रबन्धे च निगडे त्रिषु' इति मेदिनी ॥ ॥ ४०८ ॥ गन्धमृगे गन्धमार्जारे । धान्ये कलमादिधान्ये । षष्टिकादिधान्ये च । **शालिः** । पु० । शल--गतौ, श्लाघायाम् । इञ्प्रत्ययः । "शालिस्तु कलमादौ च गन्धमार्जारके पुमान्" इति मेदिनी ॥ कुक्कुरे शुनि । अलसे निद्राशीले । तथा अजगरे च । **शयालुः** । त्रि० । शी--शयने । आलुच्प्रत्ययः । "शयालुः स्यादजगरे निद्राशीले च कुक्कुरे" इति मेदिनी ॥ वल्कले वृक्षत्वचि । खण्डे एकभागे । तथा त्वचि । शल्के च । **शकलम्** । न० । शक--सामर्थ्ये । कलच्प्रत्ययः । "शकलं त्वचि खण्डे स्याद् रागवस्तुनि वल्कले" इति विश्वमेदिन्यौ । शिशिरे शीतस्पर्शे । अनिले वायौ । च तथा मलयोद्भवे चन्दने । शैलेये । न० । पद्मके । मौक्तिके । वीरणमूले । अशनपर्ण्याम् । बहुवारवृक्षे । चम्पके । चन्द्रे । कर्पूरे । राले च । **शीतलः** । पु० । शीतं लाति । ला--आदाने । कः प्रत्ययः । "शीतलं पुष्पकाशीशे शैलजे मलयोद्भवे । पुमानशनपर्ण्यां स्याच्छिशिरे वाच्यलिङ्गकम्" इति मेदिनी ॥ ४०९ ॥ तैलमाने तैलस्य मानयोग्ये । सारसी सारसपक्षिणी । कामुकस्त्री कामाभिलाषवती । एतयोश्च । **षण्डाली** । स्त्री० । स्यादित्यन्वयः । षडि--सङ्घाते, रोगे च । अलच्प्रत्ययः । ङीप् वा । पृषोदरादित्वात् पत्वम् । "षण्डाली तैलमाने च सारसीकामुकस्त्रियोः" इति मेदिनी ॥ शुष्कमीने आतपशुष्कमत्स्ये । स्त्री० । किलासिनि किलासरोगवति । तथा विकारे च । त्रि० । **सिध्मला** । स्त्री० । सिध--सिद्धौ । मनिन्प्रत्ययः । किच्च । सिध्मा अस्त्यस्येति अस्त्यर्थे पुनर्लच्प्रत्ययः । "सिध्मला मत्स्यविकृतौ वाच्यवत्तु किलासिनि" इति मेदिनी ॥ ४१० ॥ ऋजौ अवक्रे । वृक्षे पीतदारुणि । धूपकाष्ठभेदे । चकारात् उदारे च । त्रि० । त्रिपुटायाम् । स्त्री० । **सरलः** । पु० । सृ--गतौ । अलच्प्रत्ययः । "सरलः पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिषु" इति मेदिनी ॥ वरणः प्राकारः । सर्जः स्वनामाख्यातो वृक्षः । तयोः । तथा वृक्षमात्रे च । "रसालः सालः समदृश्यत" इति नैषधम् । **सालः** । पु० । सल--गतौ । घञ्प्रत्ययः

**यागे च मद्यसन्धाने स्नाने चाभिषवः पुमान् ।**
**मृतावसत्त्वे चाभावः स्याद्रजः पुष्पमार्त्तवम् ॥ ४१२ ॥**
**आश्रवोऽङ्गीकृतौ वश्ये आहवौ यागसङ्गरौ ।**
**उपप्लवौ राहूत्पातौ कितवौ मत्तवञ्चकौ ॥ ४१३ ॥**
**खलीने स्त्री कविः पुंसि काव्यकृच्छुक्रसूरिषु ।**
**कैतवन्तु छले द्यूते राजिकायां क्षुते क्षवः ॥ ४१४ ॥**

चकारात् अभ्रमातङ्गे । शङ्खनाभे च ॥ **हस्तिमल्लः** । पु० । हस्तिन इव मल्लो यस्येति बहुव्रीहिः । "हस्तिमल्लोऽभ्रमातङ्गे शङ्खनाभे विनायके" इति मेदिनी ॥ अवज्ञा निन्दा । विलासः स्त्रीणां शृङ्गारभावजः चेष्टाविशेषः । "प्रौढेच्छायाऽतिरूढानां नारीणां सुरतोत्सवे । शृङ्गारशास्त्रतत्त्वज्ञैर्हेला सा परिकीर्त्तिता" इति तयोश्च । **हेला** । स्त्री० । हेड—अनादरे । भावे अः प्रत्ययः । डस्य लश्च । "हेला स्त्रियामवज्ञायां विलासे वरयोषिताम्" इति मेदिनी ॥ ४११ ॥ इति लकारान्ताः समाप्ताः । अथ वान्तानाह ॥ यागे यज्ञे । मद्यसन्धाने सुरोत्पादनादिव्यापारे । स्नाने तथा पीडने । सोमलतापाने । तत्कण्डने । **अभिषवः** । पु० । अभिपूर्वः सू—प्रसवे । अप्प्रत्ययः । "भवेदभिषवः स्नाने मद्ये सन्धानयज्ञयोः" इति मेदिनी ॥ मृतौ मरणे । असत्त्वे अविद्यमानतायाम् । चकारात् न्यायमते । द्रव्यादिषट्कं भावः पदार्थः तद्भिन्ने च । **अभावः** । पु० । स्यादित्यन्वयः । भू—सत्तायाम् । घञ्प्रत्ययः । नञ्तत्पुरुषः । "अभावो मरणेऽसत्त्वे" इति मेदिनी ॥ रजः स्त्रीपुष्पम् । पुष्पं कुसुमम् । तयोः । तथा ऋतुजे फलपुष्पादौ । त्रि० । योषवयाम् । स्त्रियाम् ङीप् च । **आर्त्तवम्** । न० । ऋतौ भवम् । अणूप्रत्ययः । ऋतुरस्य प्राप्तः । अण्प्रत्ययश्च । "आर्त्तवं स्त्रीरजः पुष्पे क्लीबं स्यादृतुजे त्रिषु" इति मेदिनी ॥४१२॥ अङ्गीकृतौ स्वीकृतौ । कृताङ्गीकारे वा । अवश्ये आयत्ते । तथा क्लेशे । प्रवर्त्तयितुं निवर्त्तयितुं वा शक्ये । वचनस्थिते च । **आश्रवः** । पु० । आशृणोति वाक्यम् । आपूर्वः श्रु—श्रवणे । अप् प्रत्ययः । आश्रवोऽङ्गीकृतौ क्लेशे नान्यवद्वचनस्थिते" इति मेदिनी ॥ यागः यज्ञः । सङ्गरः युद्धम्, आपद्वा । तयोश्च । **आहवः** । पु० । न० । आहूयन्तेऽरयोऽत्र। आपूर्वः ह्वे—स्पर्द्धायाम्, शब्दे,आह्वानेऽर्थे च। अप्प्रत्ययः । संप्रसारणे गुणः। आहूयतेऽत्र । आपूर्वः हु—होमे, अदने च । अप्प्रत्ययः।"आहवो युद्धयज्ञयोः" इति मेदिनी ॥ राहुः ज्योतिश्चक्रस्थः सूर्यकिरणसम्पर्काभावेन जायमानः पृथिवीच्छायाधिष्ठाता ग्रहभेदः सिंहिकासुतो, दानवो वा। चन्द्रार्कग्रहणञ्च। उत्पातः गगनादुल्कापातादिरूप उपद्रवः तयोश्च। **उपप्लवः**। पु०। उपपूर्वः प्लु—सर्पणे,उत्प्लुत्यगतौ च। अप्प्रत्ययः।"उपप्लवः सैंहिकेये विप्लवोत्पातयोरपि" इति मेदिनी ॥ मत्तः धुस्तूरवृक्षः । वञ्चकः मायाकारः । तयोः । तथा खले । द्यूतकारके । चोरनामकगन्धद्रव्ये च । **कितवः**। पु०। कि—ज्ञाने । कः प्रत्ययः । किलेन वाति। वा—गतौ। कप्रत्ययः"कितवस्तु पुमान् मत्ते वञ्चके कनकाह्वये" इति मेदिनी॥४१३॥खलीने अश्वमुखस्थायां कविकायाम् । स्त्री०। वा ङीप्। काव्यकृत् काव्यनिर्माता । शुक्रः असुराचार्यः । सूरिः भास्करः।

**केशवः केशवी विष्णुर्गालवो मुनिलोध्रयोः ।**
**जीवोऽस्त्री जीविते पुंसि गुरुजन्त्वोः स्त्रियां गुणे ॥ ४१५ ॥**
**तत्त्वं विलम्बिते नृत्ये स्वरूपे परमात्मनि ।**
**मेघे राज्ञि सुरे देवो द्विजिह्वौ व्यालसूचकौ ॥ ४१६ ॥**

एतेषु । तथा वाल्मीकमुनौ । ब्रह्मणि च । अतीतानागतसर्वज्ञे सूक्ष्मार्थदर्शिनि पण्डिते । त्रि० । **कविः** । पु० । कु—शब्दे । इः प्रत्ययः । "कविर्वाल्मीकशुक्रयोः। सूरौ काव्यकरे पुंसि स्यात् खलाने तु योषिति" इति मेदिनी ॥ छले कपटतायाम् । द्यूते अक्षधूर्त्ते । तथा वैदूर्यमणौ । धुस्तूरपुष्पादौ च । **कैतवम्** । न० । कितवस्य कर्म्म । अण्प्रत्ययः । स्वार्थे अण्प्रत्ययो वा । "कैतवन्तु छले द्यूते" इति मेदिनी ॥ राजिकायां राजसर्षपे । स्त्री० । क्षुते नासातः वायुनिःसरणजे शब्दे च । **क्षवः** । पु०। क्षु—क्षुतौ। अः प्रत्ययः । "क्षवः क्षुते राजिकायाम्" इति मेदिनी ॥ ४१४ ॥ केशवी प्रशस्तकेशवान् । विष्णुः हरिः । "यस्मात्त्वयैष दुष्टात्मा हतः केशी जनार्द्दन ॥ तस्मात् केशवनाम्ना त्वं लोके ख्यातो भविष्यसि" इति तयोः । तथा सूर्यांचशवति परेश्वरे । "अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः । सर्वज्ञाः केशवं तस्मात् मां प्राहुर्द्विजसत्तमाः" इति परवादिमतम्। **केशवः** । पु०। केशौ ब्रह्मरुद्रौ सर्वेश्वरावपि अनुकम्प्यतया वाति । वा—गतौ । डः प्रत्ययः । केशं केशिनं वाति हिनस्ति । वा—गमने । कः प्रत्ययो वा। "केशवोऽजे च पुन्नागे पुंसि केशवति त्रिषु" इति मेदिनी ॥ मुनिः मुनिभेदः । लोध्रः लोध्रवृक्षः । तयोश्च । **गालवः** । पु० । गल—भक्षणे, स्रावे च । वञ्प्रत्ययः । तं गालं वाति । वा—गमने । कः प्रत्ययः । गालवस्तु मुनौ लोध्रे" इति मेदिनी ॥ जीविते प्राणधारणे । पु०। गुरुः बृहस्पतिः । जन्तुः प्राणी । प्राणान् क्षेत्रज्ञरूपेण धारयन् जीव उच्यते" इति । तयोः । गुणे धनुषो मौर्व्यां धनुराकर्षणदामनि । स्त्री० । तथा जीवनोपाये । वृक्षभेदे । देहाभिमानिनि आत्मनि । मनुष्यावधिकीटपर्यन्ते चेतने च **जीवः । पु० न०** । जीव—प्राणधारणे । कः प्रत्ययः । करणे भावे च घञ् प्रत्ययश्च । णिच्अच्प्रत्ययौ वा । "जीवः प्राणिनि वृत्तौ च वृक्षभेदे बृहस्पतौ । जीवा जीवन्तिका मौर्वी वचाशिञ्जिनभूमिषु । न स्त्री तु जीविते" इति मेदिनी ॥ ४१५ ॥ विलम्बिते अशीघ्रे मन्दे वा । नृत्ये नृत्यवाद्यादौ । स्वरूपे याथार्थ्ये । परमात्मनि । ब्रह्मणि । तथा चेतसि । ब्रह्मत्वे । वस्तुनि। सांख्योक्तेषु प्रकृत्यादिषु पञ्चविंशतौ पदार्थेषु च । **तत्त्वम्** । न० । तन—उपकारे, श्रद्धायाम् । शब्दे, आघाते च । क्विप्प्रत्ययः । ततो भवः तस्य भावो वा । त्वः प्रत्ययः । वा तलोपः । तत्त्वमिति । "तत्त्वं स्वरूपे परमात्मनि । स्याद्विलम्बितनृत्ये च" इति मेदिनी ॥ मेघे जलधरे । राज्ञि नाटयोक्तौ राजिनि । सुरे अमरे । तथा द्योतनात्मके आत्मनि । "दीव्यति क्रीडते यस्माद्रोचते द्योतते दिवि । तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतैः" इत्युक्ते परमेश्वरे । ब्राह्मणस्योपाधौ च । इन्द्रिये । न० । पूज्ये । त्रि० । **देवः** । पु० । दिव—प्रीतौ । पचाद्यच्प्रत्ययः । "देवो मेघे सुरे राज्ञि स्यान्नपुंसक-

ध्रुवो वटे स्मरारौ च गीतिस्रुग्भेदयोर्ध्रुवा ।
धवो धूर्तेऽप्यथ नवो नूतने वासवे स्तुतौ ॥ ४१७ ॥
प्लवो निषादे पर्कट्यां भेके भेले गतौ कपौ ।
पल्लवो विस्तरे षिड्गे किसले विटपे वने ॥ ४१८ ॥
घटादौ पार्थिवो राज्ञि बल्लवः सूदगोपयोः ।
गजे धन्विनि शुक्रे च परशुरामे च भार्गवः ॥ ४१९ ॥

मिन्द्रिये" इति मेदिनी ॥ व्यालः सर्पः । सूचकः पिशुनः, खलश्च । तयोः । तथा चौरे । दुःसाध्ये च । त्रि० द्विजिह्वः । पु० । द्वे जिह्वे यस्येति षष्ठीबहुव्रीहिः । "द्विजिह्वौ सर्पसूचकौ" इत्यमरः ॥ ४१६ ॥ वटे स्वनामाख्याते वृक्षे । स्मरारौ महादेवे । क्वचित् शराराविति पाठः । गीतिः गायना । स्रुच् वटपत्राकारविकङ्कतकाष्ठजं बाहुपात्रं यज्ञमात्रम् । तयोर्भेदयोर्विशेषयोः । स्त्री० । चकारात् शङ्कौ । विष्णौ । उत्तानपादनृपपुत्रे । वसुभेदे । ज्योतिषोक्तयोगभेदे । नासाग्रे । स्थाणौ । ललाटस्थे आवर्त्तभेदे । भूगोलस्थोत्तरदक्षिणकेन्द्रद्वयोपरिस्थे स्थिरे ताराभेदे च । निश्चिते । तर्के । आकाशे । उत्तरात्रयरोहिणीनक्षत्रेषु च । न० । सन्तते अपरिणामिनि नित्ये । स्थिरे च । त्रि० । मूर्वायाम् । शालपर्ण्याम् । स्त्री० । शरारिपक्षिणि च । पु० । स्त्री० । ध्रुवः । पु० । ध्रु—स्थैर्ये । अच्प्रत्ययः । "ध्रुवः शङ्कौ हरे विष्णौ वटे चोत्तानपादजे। वसुयोगभिदोः पुंसि क्लीबे निश्चिततर्कयोः। स्त्री मूर्वायां शालपर्ण्यां गीतिस्रुग्भेदयोस्त्रिषु । सन्तते शाश्वते च" इति मेदिनी ॥ धूर्त्ते वञ्चके, द्यूतकारे च । अपिशब्दात् पत्यौ । नरे । स्वनामाख्याते वृक्षे कम्पने च । धवः । पु० । धवति धुवति, धुनोति, धुनाति वा । धु—कम्पने वा । अच्प्रत्ययः । भावे अप्प्रत्ययो वा । "धवः पुमान् नरे धूर्ते पत्यौ वृक्षान्तरेऽपि च" इति मेदिनी ॥ अथ अनन्तरम् । नूतने नव्ये । त्रि० । वासवे इन्द्रे । वासवे इति क्वचित् पाठः । स्तुतौ स्तवे । तथा रक्तपुनर्नवायाञ्च । नवः । पु० । नु—स्तुतौ । अप्प्रत्ययः । "नवं नव्ये पुमान् स्तुतौ" इति मेदिनी ॥ ४१७ ॥ निषादे चण्डाले । पर्कट्यां पर्कटीवृक्षे । भेके जन्तुभेदे । भेले नद्यादितरणार्थं कृते प्लवे । गतौ प्लुतगमने । कपौ वानरे । तथा प्लवने । मेषे । जलकाके । प्रवणे । कारण्डवपक्षिणि । शब्दे । रिपौ । जलभेदे । जलकुक्कुटे । जलचरपक्षिमात्रे । सारसादौ च । कैवर्त्तिमुस्तके । गन्धतृणे च । न० । प्लवः । पु० । प्लु—प्लवने । भावे अप्प्रत्ययः । कर्त्तरि अच्प्रत्ययो वा । "प्लवः स्यात् प्लवने भेले भेकेऽवौ श्वपचेऽपि च । शाखामृगे च कुलके प्रवणे पर्कटिद्रुमे । कारण्डवाख्यविहगे शब्दे प्लुतगतौ पुमान् । कैवर्त्तिमुस्तके गन्धतृणेऽपि स्यान्नपुंसकम्" इति मेदिनी॥ विस्तरे अभिनवे पत्रयुक्तशाखाविस्तारे । षिड्गे विटे । किसलये पल्लवे । विटपे शाखायाम् । वने अरण्ये । तथा वले । अलक्तकरागे । वलये । वपने च पल्लवः । पु० । पल्यते । पल—गतौ । क्विप् प्रत्ययः । पल्लूयते । लू—छेदने । अप्प्रत्ययः । कर्मधारयः । पल्लवोऽस्त्री किसलये विटपे विस्तरे वने । शृङ्गारेऽलक्तरागे च" इति मेदिनी ॥ ४१८ ॥ घटादौ कलशादौ । पृथि

**दूर्वा गौरी च भार्गव्यौ सत्तासंसारयोर्भवः।**
**भावो गौरविते जन्तौ पदार्थेऽभिनयान्तरे ॥ ४२० ॥**
**माधवौ हरिवैशाखौ राजीवो मृगमीनयोः।**
**रौरवौ घोरनरकौ लवश्छेदनलेशयोः ॥ ४२१ ॥**

व्यादिविकारे भूमिभवे च। त्रि०। राज्ञि राजनि। तथा सीतायाम्। स्त्री०। तगरपुष्पे च। न०। **पार्थिवः**। पु०। पृथिव्या ईश्वरः। अण्प्रत्ययः। पृथिव्या विकारः इदं वा। अण्प्रत्ययः। "पार्थिवो नृपे। पार्थिवी तु सीतायां स्त्री पृथिव्या विकृतौ त्रिषु" इति मेदिनी॥ सूदः पाचकः। गोपः गोपालः। तयोः। तथा भीमसेने च। **वल्लवः**। पु०। वल्ल—संवरणे। अच्प्रत्ययः। तं वल्लं वाति। वा—सुखाप्तौ। कः प्रत्ययः। "वल्लवः सूपकारे स्याद्भीमसेने च गोदुहि" इति मेदिनी॥ गजे हस्तिनि। धन्विनि धनुर्द्धरे। शुक्रे शुक्राचार्य्ये। पर्शुरामे परशुरामे। दूर्वा प्रसिद्धा। गौरी पार्वती। तयोः। स्त्रियां ङीप्। चकारात् वेदप्रसिद्धे विद्याभेदे। लक्ष्म्याम्। स्त्रियां ङीप्। **भार्गवः**। पु०। भृगोरपत्यं तद्गोत्रापत्यं वा। अण्प्रत्ययः। "भार्गवो गजधन्विनोः। शुक्रे परशुरामे च भार्गवी पार्वतीश्रियोः। दूर्वायाम्" इति मेदिनी॥ ४१९॥ सत्ता द्रव्यगुणकर्मवृत्तिः, विद्यमानता वा। संसारः जातितो जातिसंसरणम्। तथाप्याह—"स्कन्धानां परिपाटिश्च धात्वायतनयोरपि। अव्यवच्छिन्नाद्वर्तमानः संसार इति प्रोच्यते" इति। मिथ्याज्ञानजन्यसंस्काररूपवासना वा। तयोः। तथा जन्मनि। प्राप्तौ। जलमूर्तिधरे। महादेवे। जलस्य पृथिवी हेतुत्वेन तद्रूपस्य शिवस्य जन्महेतुत्वम्। तथा भव्ये। वृक्षे। मङ्गले च। **भवः**। पु०। भू—सत्तायाम्। भावे अप्प्रत्ययः। भवत्यस्मात्। अपादाने अप्प्रत्ययः। आधारे, कर्त्तरि च अप्अच्प्रत्ययौ भवतः। "भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः" इति मेदिनी॥ "भवः संसारसम्प्राप्तिश्रेयःशङ्करजन्मसु" इति विश्वः। गौरविते जन्तौ नाटयोक्तौ नानापदार्थचिन्तके पण्डिते। पदार्थे। साध्यरूपे सिद्धरूपे वा। क्रियारूपे धातोरर्थे। अभिनयान्तरे हृद्गतावस्थावेदके मानसविकारे स्वेदकम्पादौ। तथा व्यभिचारिभावे। रागे। आशये च। **भावः**। पु०। भावयति चिन्तयति पदार्थान्। भू—प्राप्तौ। अच्प्रत्ययः। अथवा भावयति ज्ञापयति हृदयगतम्। भू—प्राप्तौ। णिच्अच्प्रत्ययौ। घञ्प्रत्ययो वा। "भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु। क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु। रत्यादौ" इति मेदिनी॥ ॥ ४२०॥ हरिः विष्णुः। वैशाखः स्वनामाख्यातो वर्षमध्ये द्वितीयश्चान्द्रमासः। तयोः। तथा वसन्ते। "स माधवेनाऽभिमतेन सख्या" इति कुमारः। मधूकपुष्पे। तत्पुष्पेण हि मद्यसम्भवः। वासन्तीलतायाम्। अस्याः मधुबाहुल्यतया। स्त्रियां ङीप्। **माधवः**। पु०। मायाः धवः माधव इति समासः। अथवा मधु अस्त्यस्येति अस्त्यर्थे स्वार्थे वा अण्प्रत्ययः। "माधवोऽजे मधौ राध्ये यादवे ना स्त्रियामसौ। मधुशर्करवासन्तीकुट्टिनीमदिरासु च" इति मेदिनी॥ मृगः हरिणविशेषः। मीनः मत्स्यभेदः। "राजीवसिततुण्डाश्च" इति मनुः। तयोः। तथा

**करञ्जभित्फले लट्वा वाद्यपक्षिप्रभेदयोः।**
**विश्वं शुण्ठ्यां समस्ते च निर्वाणे विभवो धने ॥ ४२२ ॥**
**अश्वौघे वाडवं न स्त्री पाताले ना द्विजौर्वयोः।**
**वडवाऽश्वाकुम्भदास्योर्योगे कीले हरे शिवः ॥ ४२३ ॥**

पद्मे। "राजीवराजीवशलोल" इति माघः। गजे सारसपक्षिणि च। **राजीवः**। पु०। राजी दलराजी अस्त्यस्येति अस्त्यर्थे वः प्रत्ययः। "राजीवं नलिने ना तु भेदे हरिणमीनयोः" इति मेदिनी॥ घोरं दारुणम्, भयानकं वा। नरकः पापिनां दुःखभोगस्थानभेदः तयोः। तथा चञ्चले। धूर्ते च। **रौरवः**। पु०। रोरूयतेऽत्र। रु—ध्वनौ। यङ्क्विप्प्रत्ययौ। तेन प्राप्यं तस्येदं वा अण्प्रत्ययः। "रौरवो नरके घोरे" इति मेदिनी॥ छेदनः छेदकः। लेशः अल्पः तयोः। तथा विनाशे। श्रीरामपुत्रे। कालपरिमाणभेदे। गोलाङ्गूललोम्नि। बाले च। **लवः**। पु०। लू—छेदने। अप्प्रत्ययः। "लवो लेशे विनाशे च छेदने रामनन्दने" इति मेदिनी॥
॥ ४२१ ॥ करञ्जभित् करञ्जभेदः। फलं वृक्षादीनां शस्यम्। तयोः। वाद्यं वादनीयं मृदङ्गादि। पक्षी खगः। तयोर्भेदयोर्विशेषयोः। तथा ग्रामचटके। कुसुम्भे। भ्रमरके च। **लट्वा**। स्त्री०। लट—बालभावे। वः प्रत्ययः। "लट्वा करञ्जभेदे स्यात् फले वाद्ये खगान्तरे" इति मेदिनी॥ शुण्ठ्याम् स्वनामाख्याते औषधविशेषे। समस्ते सकले। चकारात् जगति। संसारे। तदभिमानिनि। जीवे च। पु०। **विश्वम्**। न०। विश—प्रवेशे। वप् प्रत्ययः। "विश्वा त्वतिविषायां स्त्री जगति स्यान्नपुंसकम्। न ना शुण्ठ्यां पुंसि देवप्रभेदेष्वखिले त्रिषु" इति मेदिनी॥ निर्वाणे मोक्षे। धने वित्ते। तथा सर्वमूर्तिसंयोगरूपे ऐश्वर्ये। षष्टिसंवत्सरमध्ये वर्षभेदे। "हृष्टाः पुष्टा जनाः सर्वे विभवेऽब्दे वरानने।" इति परसमयः। **विभवः**। पु०। विपूर्वः भू—सत्तायाम्। अच्प्रत्ययः। "विभवो रै मोक्षैश्वर्ये" इति मेदिनी ॥ ४२२ ॥
अश्वौघे घोटकसमूहे। पाताले धरायास्तलस्थे भुवने। द्विजः ब्राह्मणः। और्वः समुद्रस्थो वडवानलः। तयोश्च। पु०। **वाडवम्**। न०। पु०। वडवानां समूहः। अण्प्रत्ययः। "वाडवं करणे स्त्रीणां घोटकौघे नपुंसकम्। पाताले न स्त्रियां पुंसि ब्राह्मणे वडवानले" इति मेदिनी॥ अश्वा घोटकी। कुम्भदासी तयोः। तथा तद्देवताके अश्विनीनक्षत्रे। दास्याञ्च। **वडवा**। स्त्री०। वलं वाति। वा—गमने। कः प्रत्ययः। लस्य डः। "वडवा द्विजयोषिति। अश्वायां कुम्भदास्याञ्च नारिजात्यन्तरेऽपि च" इति मेदिनी॥ योगे विष्कम्भादिषु मध्ये विंशतितमयोगे। कीले गवां गात्रकण्डूयनार्थे गोष्ठे निखाते काष्ठे। हरे महादेवे। मङ्गले। सुखे। मोक्षे। न०। शमीवृक्षे। आमलक्याम्। अभयायाम्। तथा मङ्गलवत्यां स्त्रियाम्। दुर्गायाम्। शृगाले। दूर्वायाम्। गोरोचनायाम्। स्त्री०। चकारात् जले। सैन्धवे। सामुद्रे लवणे श्वेतटङ्कणे च। मङ्गलवति। त्रि०। बालग्रहे। वालुके। गुग्गुलौ। वेदे। पुण्डरीकद्रुमे। कृष्णधुस्तूरे। पारदे। देवे। लिङ्गे च। **शिवः**। पु०। शो—तीक्ष्णीकरणे। वन्प्रत्ययः। पृषोदरादित्वात् साधुः।

**सुखं क्षेमं शिवं शम्यामलकी चाभया शिवा ।**
**षाडवस्तु रसे रागे सैन्धवो लवणाश्वयोः ॥ ४२४ ॥**
**स्वोऽस्त्रियां ज्ञातिधनयोः स्वमात्मनि नपुंसकम् ।**
**आधेयधारणे सत्त्वे मेलकेऽपि च सम्भवः ॥ ४२५ ॥**

**इति वान्ताः ।**

**अपभ्रंशो दुष्पतने भाषाभेदापशब्दयोः ।**
**टीकादर्पणावादर्शावाशा तृष्णादिशोः स्त्रियाम् ॥ ४२६ ॥**
**प्रभुशङ्करयोरीशः स्त्रियां लाङ्गलदण्डके ।**
**दिगम्बरे कपौ कीशः केशो वालप्रचेतसोः ॥ ४२७ ॥**

"शिवो मोक्षे महादेवे कीलकग्रहयोगयोः। वालुके गुग्गुलौ वेदे पुण्डरीकद्रुमे पुमान् । सुखक्षेमजले क्लीबम्" इति मेदिनी ॥ रसे रसभेदे । रागे रक्तवर्णे । तथा गीते च । **षाडवः** । पु० । पण—दाने । घञ्प्रत्ययः । णस्य डः । कचित्तु पाडव इति पाठो दृश्यते । "षाडवो गानरसयोः" इति मेदिनी ॥ लवणः सिन्धुनदीसमीपदेशे भवः लवणभेदः । अश्वः घोटकः । तस्य सिन्धुदेशसमुद्रसमीपस्थारहदेशोद्भवत्वात् । तयोः तथा सिन्धुभवे च । **सैन्धवः** । पु० । न० । सिन्धुनदीसमीपे देशे भवम् । अण् प्रत्ययः । सिन्धोरदूरभवः अण्प्रत्ययश्च। "सैन्धवोऽस्त्री माणिमन्थे नाऽश्वे सिन्धुभवे त्रिषु" इति मेदिनी ॥ ४२३ ॥४२४॥ ज्ञातिर्बन्धुः । धनं वित्तं तयोः आत्मनि । न० । तथा आत्मीये । त्रि० । आत्मनि । आत्मीये चार्थेऽस्य सर्वनामता च **स्वः** पु० । स्व—शब्दे, ध्याने वा । डः प्रत्ययः । "स्वः स्यात् पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये धनेऽस्त्रियाम् इति मेदिनी ॥ आधेयधारणे आधेयस्याधारे । सत्त्वे उत्पत्तौ । मेलके सङ्गे विवादे वा । अपिशब्दात् समावेशनयोग्यत्वरूपे व्यापारे । उत्कटसन्देहे । हेतौ च । **सम्भवः** पु०। सम्पूर्वः भू—सतायाम् । अप्प्रत्ययः । कर्तरि अच्प्रत्ययो वा । "सहाये सम्भवो हेतावुत्पत्तौ मेलकेऽपि च इति मेदिनी ॥ ४२५ ॥ इति वकारान्ताः समाप्ताः ॥ अथ शकारान्तानाह ॥ दुष्पतने अशोभनाकारपतने । भाषाभेदः भाषाविशेषः । अपशब्दः साधुशब्दभिन्नः अपशब्दः पक्षादिः तत्कथनस्य पापहेतुत्वात् तयोः । तथा पतने च । **अपभ्रंशः** । पु० न० । अपपूर्वः भ्रंशु—पतने । घञ्प्रत्ययः । अपभ्रश्यते अधर्महेतुतया पत्यतेऽनेन । करणे घञ्प्रत्ययो वा । "अपभ्रंशस्तु पतने भाषाभेदापशब्दयोः" इति मेदिनी ॥ टीका विषयपद्याख्या रूपाकृतिः । दर्पणः रूपप्रतिबिम्बदर्शनाधारः तयोः । तथा प्रतिबिम्बपुस्तके च । **आदर्शः** पु० । आदृश्यतेऽत्र । दृश—चाक्षुषज्ञाने । घञ्प्रत्ययः । "आदर्शो दर्पणे टीकाप्रतिपुस्तकयोरपि" इति मेदिनी ॥ तृष्णा अप्राप्ताभिलाषः । दिशा दिक् तयोः। तथा अशक्योपायार्थविषयायाम् । दीर्घकाङ्क्षायाञ्च । **आशा** । स्त्री०।आसमन्तात् अश्नुते। अश—भोजने। अच्प्रत्ययः "आशा तृष्णादिशोः स्त्रियाम्" इति मेदिनी ॥ ४२६ ॥ प्रभुः स्वामी । शङ्करः महादेवः तयोः

**जीवितेशो यमे नाथे दंशः संहननेऽपि च।**
**सर्पक्षतेऽथ ज्ञाने च लोचने दर्शने च दृक् ॥ ४२८ ॥**
**नाशः पलायने मृत्यौ निस्त्रिंशौ खड्गनिर्दयौ।**
**निशा रात्रिर्हरिद्रा च मृगादौ प्रमथे पशुः ॥ ४२९ ॥**

लाङ्गलदण्डके लाङ्गलमध्यस्थे काष्ठमये दण्डे। स्त्री०। तथा परमेश्वरे। हिरण्यगर्भे च। **ईशा**। पु०। ईश—ऐश्वर्ये। कः प्रत्ययः। "ईशा लाङ्गलदण्डके। ईशः प्रभौ महादेवे" इति मेदिनी॥ दिगम्बरे शिवे, क्षपणकभेदे च। "दिगम्बरः मध्यमत्वमाहुरापादमस्तकम्। चेतनस्याप्तिसंदष्टेरानखाग्रश्रुतेरपि" इत्युक्त जीवस्य देहपरिमाणाङ्गीकारे च। कपौ वानरे च। **कीशः**। पु०। कस्य वायोरपत्यम्। अत इञ्प्रत्ययः। किः हनुमान् ईशो यस्येति बहुव्रीहिः। "कीशो दिगम्बरे कपौ" इति मेदिनी॥ वालश्चिकुरः मज्जधातुजातोपधातुविशेषोऽयं केशः। अस्य परवर्त्तिनः पाशादिशब्दाः केशभूयस्त्ववाचिनः। "वालास्तु तत्पराः पाशो रचनाभार उच्चयः हस्तः पक्षः कलापश्च केशभूयस्त्ववाचकाः" इत्युक्तेः। प्रचेता वरुणः तयोः। तथा ह्रीवेरे च **केशः**। पु०। क्लिश्यते क्लिश्नाति वा। क्लिश—उपतापे। अच् प्रत्ययः। ललोपश्च। कस्य ईशो वेति षष्ठीतत्पुरुषः। "केशः स्यात् पुंसि वरुणे ह्रीवेरे कुन्तलेऽपि च" इति मेदिनी। ॥ ४२७ ॥ यमे प्राणस्वामिनि। "जीवितेशवसतिं जगाम सा" इति रघुः। तत्सम्बन्धाि अहिंसादीनि पञ्च व्रतानि। यथा—"अहिंसा सत्यवचनं ब्रह्मचर्यमकल्कता। अस्तेयमिति पञ्चै यमाख्यानि व्रतानि च" इति। नाथे प्रियनाथे। त्रि०। तथा जीवातौ। चन्द्रे। सूर्ये च **जीवितेशः**। पु०। जीवितस्य ईश इति षष्ठीतत्पुरुषः। "जीवितेशो यमे पुंसि त्रिषु स्याज्जीवितेश्वरे इति मेदिनी॥ संहनने सङ्घाते। क्वचित् संनहने इति पाठः। सर्पक्षते सर्पाघाते। अपि शब्दात् वनमक्षिकायाम्। वर्म्मणि। मर्म्मणि। दोषे। खण्डने। दन्ते च। **दंशः**। पु०। दशन्-दंशने। अच्प्रत्ययः। करणादौ घञ्प्रत्ययो वा। दंशः कीटविशेषे च वर्मदंशनयोः पुमान्" इ मेदिनी॥ अथ अनन्तरम्। ज्ञाने सामान्यविशेषरूपे बुद्धिमात्रे। नानाविधेषु बुद्धिपरिणामेषु। यथ "ज्ञानं द्विधा वस्तुमात्रद्योतकं निर्विकल्पकम्। सविकल्पन्तु संज्ञादिद्योतकत्वादनेकधा। संकल्पसंश यभ्रान्तिस्मृतिसादृश्यनिश्चयाः। ऊहोऽनध्यवसायश्च तथाऽन्येऽनुभवादयः" इति। लोच नेत्रे दर्शने चकारात् द्वित्वसङ्ख्यायाम्। साक्षिणि। द्रष्टरि। ज्ञातरि च। त्रि०। **दृक्** स्त्री०। दृश—चाक्षुष ज्ञाने। भावे क्विप्प्रत्ययः। करणे, कर्त्तरि च। क्विप्प्रत्ययः। वा टाप् "दृक् स्त्रियां दर्शने नेत्रे बुद्धौ च त्रिषु वीक्षके" इति मेदिनी ॥ ४२८ ॥ पलायने भयाि स्थानत्यागेनाऽन्यस्थानगमने मृत्यौ मरणे। तथा अदर्शने। अनुपलम्भे च। **नाशः**। पुं० नश—नाशे। अदर्शने च। घञ्प्रत्ययः। "नाशः पलायनेऽपि स्यान्निधनानुपलम्भयोः" इ मेदिनी॥ खड्गः असिः। त्रिंशदङ्गुल्यधिकस्यैव खड्गत्वात् ततो न्यूनत्वे छुरिका। तत्तुदर्या सक्तत्वात्। निर्दयः दयाराहित्यम्। त्रि०। तयोश्च। **निस्त्रिंशः**। पु०। निर्गतस्त्रिंशदभ्यो

**पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च।**
**रसे सोमलतायाश्च हुतशेषे च कीर्त्यते ॥ ४३० ॥**
**पाशः कचान्ते संघार्थः कर्णान्ते शोभनार्थकः।**
**छात्राद्यन्ते च निन्दार्थः पाशः पक्ष्यादिबन्धने ॥ ४३१ ॥**
**वार्त्ताहरे पुरोगे च सहाये च प्रतिस्पशः।**
**लोमशो मेढ्रकेऽपि स्याद्विवशाववशाविह्वलौ ॥ ४३२ ॥**

कुलिभ्यः। डच् प्रत्ययः। समासः। "अथ निस्त्रिंशः खड्गे ना निर्दये त्रिषु" इति मेदिनी॥ रात्रिः रजनी। हरिद्रा पीतवर्णः स्वनामाख्यात औषधभेदः। तयोः। चकारात् दारुहरिद्रायाम्। ज्योतिषोक्तेषु मेषादिराशिषु च। यथा—"अजगोमतियुग्मञ्च कर्किधन्विमृगा निशाः" इति। **निशा**। स्त्री०। नितरां श्यति व्यापारान्। निपूर्वः शो—तीक्ष्णीकरणे। कः प्रत्ययः। "निशा दारुहरिद्रायां स्यात्त्रियामाहरिद्रयोः" इति मेदिनी॥ मृगादौ लोमवल्लांगूलवति जन्तुभेदे। प्रथमे शिवानुचरे, अश्वे वा। तथा देवे। दर्शनार्थे अव्ययञ्च। **पशुः**। पु०। सर्वमविशेषेण पश्यति। दृश—चाक्षुषज्ञाने। कुः प्रत्ययः। पशादेशः। "पशुर्मृगादिदेवाजे नाऽव्ययं पशुदर्शने" इति मेदिनी॥ ४२९॥ हविर्भेदे यागविशेषे। पिष्टकस्य चमस्यां पिष्टकखाद्यभेदे। सोमलतायाः रसे सोमरससमानमात्रे। हुतशेषे यज्ञशेषे। चकारात् हविषि। यज्ञीयद्रव्ये च। **पुरोडाशः**। पु०। कीर्त्यते इति क्रियापदं सम्बन्धनीयम्। पुरो दाश्यते। दश—दाने। कर्मणि घञ्प्रत्ययः। क्विप्प्रत्ययो वा। "पुरोडाशो हविर्भेदे क्षमस्यां पिष्टकस्य च। हुतशेषे च" इति मेदिनी ॥४३०॥ कचान्ते केशादुत्तरं सङ्घार्थः। यथा केशपाशः। कर्णान्ते कर्णात्परं शोभनार्थकः। यथा कर्णपाशः शोभनकर्ण इत्यर्थः। छात्राद्यन्ते निन्दार्थः। यथा छात्रपाशः। गर्हितशिष्य इत्यर्थः। आदिना भिषक्पाशः। कुत्सितभिषगित्यर्थः। "याप्ये पाशप्" इत्यादिपाणिनीयसूत्रेण छात्रादिभ्यः पाशप्प्रत्ययः। पक्ष्यादिबन्धने मृगविहगादिबन्धने रज्जुभेदे। रज्जुमात्रे च। **पाशः**। पु०। पश्यते बध्यतेऽनेन। पश—बन्धे। घञ्प्रत्ययः। "पाशः केशादिपूर्वः स्यात् तत्सङ्घे कर्णपूर्वकः। सुकर्णे च स्वसामर्थ्यान्मृगपक्ष्यादिबन्धने" इति मेदिनी ॥४३१॥ वार्ताहरे वृत्तान्तहारके। पुरोगे अग्रगामिनि, प्रधाने वा। सहाये सहचरे, अनुकूले वा। "असावनुक्तोऽपि सहाय एव" इति कुमारः। **प्रतिस्पशः**। पु०। प्रतिपूर्वः स्पश—ग्रन्थे, बाधने च। अप्प्रत्ययः। "प्रतिस्पशः सहाये स्याद्वार्त्ताहरपुरोगयोः" इति मेदिनी॥ क्वचित् प्रतिष्कश इति पाठः। "प्रतिष्कशः सहाये स्याद्वार्त्ताहरपुरोगयोः" इति विश्वः। मेढ्रके मेषे। अपिशब्दात् मुनिभेदे। लोमयुक्ते। त्रि०। काकजङ्घायाम्। जटामांस्याम्। वचायाम्। शूकशिम्ब्याम्। महामेदायाम् बालायाञ्च। स्त्री०। **लोमशः**। पु०। लोमानि बाहुल्येन सन्त्यस्य। शः प्रत्ययः। "लोमशो मुनिमेषयोः। लोमान्विते स्त्रियां काकजङ्घामांसिवचासु च। शूकशिम्बी महामेदा काशीशे शाकिनीभिदि" इति मेदिनी॥ अवशः

वंशो वर्गे च पृष्ठांशे वेशो वेश्यागृहेऽपि च ।
आयत्तत्वाप्रभुत्वे द्वे वशः परवशे त्रिषु ॥ ४३३ ॥
दाने रोगेऽपि च स्पर्शः सदृशं तूचिते समे ।

इति शान्ताः ॥

भ्राष्ट्रे युध्यम्बरीषं ना किशोरहरिशम्भुषु ॥ ४३४ ॥
अभिलाषेऽनुतर्षः स्यात्पानेच्छायामथामिषम् ।
सम्भोगोत्कोचमांसेषु उषा बाणात्मजा निशा ॥ ४३५ ॥

अस्वतन्त्रः । विह्वलः भयादिना आकुलः तयोः । "विवशा काममधुरि" इति कुमारः । तथा कृतरोधे च । **विवशः** । त्रि० । विगतो वशः आयत्तता यस्येति बहुव्रीहिः । "विवशस्त्रि-ष्ववश्यात्मा[illegible]" इति मेदिनी ॥ ४३२ ॥ वर्गे पुत्रपौत्राद्यपत्यवर्गे । पृष्ठांशे पृष्ठावयवे । चकारात् वर्गे । तृणजातिभेदे । इक्षौ । सालवृक्षे च । वाद्यभेदे । स्त्री० । गौर्यादित्वात् ङीप् । "वंशीकलेन [illegible]" इति [illegible] । **वंशः** । पु० । वश—स्पृहायाम् । घप्प्रत्ययः । निपातनात् नुमागमः । "वंशः [illegible] कुले वेणौ पृष्ठावयववर्गयोः" इति मेदिनी ॥ वेश्यागृहे गणिकागृहे । अपिशब्दात् प्रवेशे । गृहमात्रे । अलङ्कारादिना कृतरूपान्तरे । नेपथ्यकर्मणि च । **वेशः** । पु० । विश—प्रवेशे । घञ्प्रत्ययः । "वेशो वेश्यागृहे गृहे । नेपथ्ये च" इति मेदिनी ॥ आयत्तत्वम् अधीनता । वशीभूतभाव इत्यर्थः । अप्रभुत्वम् अस्वामित्वम् । तयोः । परवशे पराधीने । परायत्त इत्यर्थः । त्रि० । **वशः** । पु० । वश—स्पृहायाम् । अच्प्रत्ययः । "वशमायत्ततायां स्याद्वशोऽनायत्तप्रभुत्वयोः । वशा वन्ध्यासुता योषा स्त्रीगवि कारिणीषु च" इति विश्वः ॥ ४३३ ॥ दाने त्यागे । रोगे वातुर्यपक्वजाते व्याधौ । अपिशब्दात् न्यायोक्ते त्वगिन्द्रियग्राह्ये गुणभेदे । युद्धे । ग्रहणे । गुप्तचरे । उपतापके च । वायौ । पु० । स्पर्शके । त्रि० । कादिषु मावसानेषु वर्गवर्णेषु । पु० । **स्पर्शः** । पु० । स्पर्श ग्रहणे । स्पृश—स्पर्शे वा । अच्प्रत्ययः । घञ्प्रत्ययो वा । अथवा—स्पृश—स्पर्शे । णिच्अच्प्रत्ययौ । स्पृश्यन्ते वायुना जिह्वाग्राद्योऽत्र । घञ्प्रत्ययश्च । "स्पर्शो रुजायां दाने च स्पर्शने स्पर्शकेऽपि च । स्पर्शः स्यात्सम्पराये च प्रणिधावपि पुंस्ययम्" इति मेदिनी ॥ उचिते युक्ते, परिचिते वा । समे तुल्यरूपे च । **सदृशम्** । न० । समानं दर्शनमस्य । समानशब्द-पूर्वः दृश—चाक्षुषे ज्ञाने । टक्प्रत्ययः । "सदृशं समे उचिते च" इति मेदिनी ॥ इति शका-रान्ताः समाप्ताः ॥ अथ षान्तानाह ॥ भ्राष्ट्रे भर्जनपात्रे । कचित्तु भ्राष्ट्र इति पाठः । युधि सङ्ग्रामे । किशोरः बालकः । हरिर्विष्णुः । शम्भुः ईश्वरः । एतेषु । तथा आम्रातकवृक्षे । नरकभेदे । अनुतापे सूर्यवंश्यनृपभेदे च । पु० । **अम्बरीषम्** । न० । अम्ब्यते पच्यतेऽत्र । अम्ब—गतौ । अरिषः प्रत्ययः । निपातनात् दीर्घः । अबरिषमप्यत्र । ह्रस्वेकारयुक्तम् । "अम्ब-रीषं रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे" इति मेदिनी ॥ ४३४ ॥ अभिलाषे इच्छायाम् । पानेच्छा

भल्लुके शोणके चक्षो नक्षत्रे पुंनपुंसकम् ।
ऋषिर्वेदेऽपि कक्षस्तु दोर्मूले शुष्ककानने ॥ ४३६ ॥
कक्षा वरत्रा प्रकोष्ठस्पर्द्धोदुग्रहणिकासु च ।
कुल्माषं काञ्जिके ना तु यवके स्यादथाऽखिले ॥ ४३७ ॥

मद्यपानेच्छा । तत्र। अपिशब्दात् सुरापानपात्रे । मद्ये । मद्यपाने च **अनुतर्षम्** । न० । अनु तृष्यतेऽनेन । अनुपूर्वः तृष—तृष्णायाम् । करणे घञ्प्रत्ययः । भावे घञ्प्रत्ययो वा । "अनुतर्षः सुरापानपात्रे तृष्णाभिलाषयोः" इति मेदिनी ॥ अथ अनन्तरार्थद्योतकः । सम्भोगः कामगुणः । उत्कोचः अन्यथाव्यकर्मकरणार्थं वादिप्रतिवादिभ्योऽर्थग्रहणम् । मांसः पिशितः । पललं । तथा भोग्यवस्तुनि रुचिररूपादौ । लोभसञ्चये । लाभे । विषये । भोजने च । **आमिषम्** । न० पु० । आपूर्वः मिष—पराभिभवेच्छायाम्, सेचने च । कप्रत्ययः । "आमिषं तु नपुंसकम् । भोग्यवस्तुनि सम्भोगेऽप्युत्कोचे पललेऽपि च" इति मेदिनी ॥ बाणात्मजा बाणराजनुजा । निशा रात्रौ । तयोः । तथा "तेजःपरिहानिरुषा भानोरर्द्धोदयं यावत्" इति । वराहोक्ते काले च । **उषा** । स्त्री० । उष—दाहे वधे च । कप्रत्ययः । टाप् च । "उषा बाणसुतारात्र्योः" इति मेदिनी ॥४३५॥ भल्लूके स्वनामाख्याते जन्तुभेदे । शोणके शोणकवृक्षे । नक्षत्रे । नक्षत्रात् मेषादौ च । पु० न० । पर्वतभेदे । **ऋक्षः** । पु० । ऋष—गतौ । सप्रत्ययः । किञ्च । "ऋक्षः पर्वतभेदे स्याद्भल्लूके शोणके पुमान् । कृतवेधनेऽन्यलिङ्गो नक्षत्रे पुंनपुंसकम्" इति मेदिनी ॥ वेदे धर्मब्रह्मप्रतिपादके संहिताब्राह्मणात्मके ग्रन्थभेदे । अपिशब्दात् मन्त्रद्रष्टरि मुनौ । अनुष्ठेयकर्मज्ञापकसूत्रकृताचार्ये । गोत्रप्रवरप्रवर्त्तके मुनौ च । **ऋषिः** । पु० । ऋष—गतौ । इन्प्रत्ययः । किञ्च । "ऋषिर्वेदे वशिष्ठादौ दीधितौ च पुमानयम्" इति मेदिनी ॥ दोर्मूले बाहुमूले । शुष्ककानने शुष्कवने ॥ ४३६ ॥ वरत्रा हस्तिबन्धनरज्जुः । प्रकोष्ठः कूर्परस्याधोभागस्थो मणिबन्धपर्यन्तो हस्तावयवः । स्पर्द्धा साम्या । उदुग्रहणिका कक्षरोगभेदः । एतेषु स्त्री० । चकारात् स्त्रीणाम् उत्तरीयवस्त्रस्य पश्चाद्भागस्थे अचले। लतायाम् । शुष्कतृणे । पार्श्वभागे । राजान्तःपुरे । पृष्ठप्रदेशनिहिताधोंशुकस्यैकदेशे वस्त्राञ्चले । काञ्च्याम् । गृहभित्तौ च । पु० । **कक्षा** । स्त्री० । कष—हिंसायाम् । सप्रत्ययः । "कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे । स्पर्द्धास्पदे ना दोर्मूले कच्छवीरतृणेषु च" इति मेदिनी ॥ काञ्जिके आरनाले । मसीपरिणामे च । न० । यवके यवादौ । तुकारात् अर्धस्विन्नगोधूमादिषु । "अर्धस्विन्ना च गोधूमा अन्ये च चणकादयः। कुल्माष इति कथ्यन्ते" इति । "स हि कुल्माषान् खादन्तं बिभिक्षे" इति श्रुतिः । सूर्यस्य पारिपार्श्विकभेदे । शूकधान्ये । **कुल्माषम्** । न० । स्यादित्यन्वयः । कोलति कुल—बन्धे । संहतौ च । क्विप्प्रत्ययः । कुल्माषोऽस्मिन्निति सप्तमीबहुव्रीहिः । "कुल्माषं काञ्जिके यावके पुमान्" इति मेदिनी ॥ अथ अनन्तरम् । अखिले

**पापे च कलुषं घोषः शब्दाभीरनिवासयोः ।**
**शुचौ दक्षे च चोक्षः स्यात्तर्षो लिप्सापिपासयोः ॥ ४३८ ॥**
**दक्षः प्रजापतौ ताम्रचूडे हरवृषे पटौ ।**
**पौरुषं मानभेदे च पुन्नागे पुरुषो नरे ॥ ४३९ ॥**
**पक्षो मासार्द्धपार्श्वौ च महिषी राजपत्न्यपि ।**
**मूर्खे माने फले माषो मेषो राश्यन्तरोरणौ ॥ ४४० ॥**

अक्षरहिते । आकुलिके ॥ ४३७ ॥ पापे नरकहेतौ । दूरस्थे चकारात् महिषे च । पु० । **कलुषम्** । न० क्ली० । कल—सङ्ख्यायाम् । उषन्प्रत्ययः । लुप—हिंसायाम् । कप्-प्रत्ययः । कस्य जलस्य लुपो घातक इति वेति पृषोदरादिः । "कलुषं त्वाविले पापे" इति मेदिनी ॥ शब्दः ध्वनिः । आभीरनिवासः आभीरपल्ली । तयोः । तथा मेघनादे । अपामार्गे । व्याकरणोक्ते वर्णविशेषोत्पत्तौ बाह्यप्रयत्नभेदे च । कांस्ये । **घोषः** । न० । घोषन्ति गावोऽत्र । घुष—आविष्करणे । आधारे घञ्प्रत्ययः । भावे घञ्प्रत्ययः । कर्त्तरि अच्प्रत्ययो वा । "घोष आभीरपल्ल्यां स्याद्गोपालध्वनिघोषके । कांस्ये चाम्बुदनादे ना घोषा मधुरिकौषधौ" इति मेदिनी ॥ शुचौ शुद्धाचरणे, पवित्रे वा । दक्षे कार्यकुशले । चकारात् गीते । तीक्ष्णे । मनोहरे च । **चोक्षः** । पु० । स्यादित्यन्वयः । चुक्ष—शौचाभावताहाम् । घञ्प्रत्ययः । क्वचित्तु चोक्षः इति पाठः । "चोक्षो गीते शुचौ दक्षे तथा तीक्ष्णे मनोज्ञयोः" इति मेदिनी ॥ लिप्सा अभिलाषः । पिपासा तृष्णा । तयोश्च । "विभक्तिविपर्यासोऽत्र" इति । **तर्षः** । पु० । तृष—तृष्णायाम् । घञ् प्रत्ययः । "तर्षो लिप्सोदन्ययोः" इति मेदिनी ॥ ४३८ ॥ प्रजापतौ ब्रह्मणः दक्षाङ्गुष्ठजाते प्रजापतिभेदे । ताम्रचूडे कुक्कुटे । हरवृषे शिववृषभे । पटौ निपुणे । तथा मुनिभेदे । शिक्षिते । अनलसे च । **दक्षः** । पु० । दक्ष—वृद्धौ, शीघ्रार्थे च । अच्प्रत्ययः । "दक्षस्त्रिषु पटौ पुंसि ताम्रचूडे प्रजापतौ । मुनिभेदे हरवृषे द्रुमभेदे स्त्रियां भुवि" इति मेदिनी ॥ मानभेदे ऊर्ध्वविस्तृतबाहुपाणिकमनुष्यपरिमाणे । "जयेऽपि मानेऽपि च पौरुषाधिकम्" इति नैषधम् । चकारात् पुरुषत्वे । विक्रमे । उद्यमे च । **पौरुषम्** । न० । पुरुषस्य भावः, कर्म वा । अण्प्रत्ययः । पुरुषस्य इदम् इति अण् प्रत्ययः । "पौरुषं पुरुषस्य स्याद्भावे कर्मणि तेजसि । ऊर्ध्वविस्तृतदोःपाणिनृमाने त्वभिधेयवत्" इति मेदिनी ॥ पुन्नागे स्वनामाख्याते वृक्षे । नरे पुरुषे । तथा साङ्ख्योक्ते च । **पुरुषः** । पु० । पुर—अग्रगतौ । कुषन् प्रत्ययः । "पुरुषः पूरुषे साङ्ख्यज्ञे च पुन्नागपादपे" इति मेदिनी ॥ ४३९ ॥ मासार्द्धः शुक्लकृष्णप्रतिपदादिपञ्चदश्यन्तपञ्चदशतित्यात्मकः कालः । पार्श्वः कक्षाधोभागः । तयोः । चकारात् खगानां पतत्रे । शरस्य पुङ्खस्थे पत्रे । सखे । केशात्परः समूहार्थे । यथा केश-पक्षः । गृहे । न्यायोक्ते संदिग्धसाध्यवति पदार्थे । यथा—पर्वतो वह्निमान् । विरोधे । बले ।

**सङ्ख्यायान्तु न ना लक्षा क्लीबं व्याजशरव्ययोः।**
**हरताक्ष्यौ विशालाक्षो शेषो नानन्तसीरिणोः॥ ४४१॥**
**उपयुक्तेतरे त्वस्त्री शैलूषो नटबिल्वयोः।**
**शुश्रूषा परिचर्य्या च संहर्षः स्पर्द्धने मुदि॥ ४४२॥**
**इति षान्ताः।**
**योग्यायामन्तिकेऽभ्यासोऽधिवासौ स्थानसंस्क्रिये।**
**आख्यायिका परिच्छेदे चाऽश्वासो निर्वृताऽवपि॥ ४४३॥**

पु०। पक्ष—परिग्रहे। अच्प्रत्ययः। "पक्षो मासार्द्धके पार्ष्णिग्रहे साध्यविरोधयोः। केशादे। परतो वृन्दे बले सखिसहाययोः। चुल्लीरन्ध्रे पतत्रे च बाजे कुञ्जरपार्श्वयोः" इति मेदिनी॥ राजपत्नी राज्ञः कृताभिषेका स्त्री। तस्याम्। अपिशब्दात् महिषजातिस्त्रियाम्। ओषधीभेदे च। **महिषी।** स्त्री०। मह—पूजने। वृद्धौ च। टिषच्प्रत्ययः। ङीप् च। "महिषी कृताभिषेकासैरिभ्योरोषधीभिदि" इति मेदिनी॥ मूर्खे अज्ञाने। माने परिमाणभेदे। "दशार्द्धगुञ्जं प्रवदन्ति माषम्" इति। "गुञ्जाभिर्दशभिर्माषमिति च। फले श्रीहिभेदे। **माषः।** पु०। मष—वधे। परिमाणे च। संज्ञायां घञ्प्रत्ययः। "माषो व्रीह्यन्तरे मूर्खे मानत्वग्दोषभेदयोः" इति मेदिनी॥ राश्यन्तरः। ज्योतिश्चक्रस्य द्वादशांशः अश्विनीभरणीकृत्तिकानक्षत्रपादात्मकः राशिभेदः, प्रथमराशौ ना। उरणः एडकः तयोश्च। **मेषः।** पु०। मिष—पराभिभवेच्छायाम्। अच्प्रत्ययः। "मेषो राश्यन्तरे हुडे" इति मेदिनी॥ ॥ ४४०॥ सङ्ख्यायां दशायुतसङ्ख्यायाम्। स्त्री०। न०। व्याजः कपटः। शरव्यं लक्ष्यं शरेण वेधनायोद्देश्यम्। तयोः। न०। तथा पदे। चिह्ने च। **लक्षा।** स्त्री०। लक्ष—दर्शने। अच्प्रत्ययः। "लक्षा न पुंसि सङ्ख्यायां क्लीबं व्याजशरव्ययोः" इति मेदिनी॥ हरः महादेवः। ताक्ष्यः गरुडः तयोः। तथा विष्णौ। वृहन्नेत्रे। त्रि०। पार्वत्याम्। नागदन्त्याम्। स्त्रियां ङीप्। **विशालाक्षः।** पु०। विशाले अक्षिणी यस्येति षष्ठीबहुव्रीहिः। "विशालाक्षो हरे ताक्ष्यें ना सुनेत्रेऽभिधेयवत्" इति मेदिनी॥ अनन्तः बहुशीर्षकत्वादपरिच्छिन्नः शेषनागः। सीरी बलरामः तयोः। उपयुक्तेतरे अवशेषे। तथा सर्पभेदे। **शेषः।** पु०। शिष—विशेषे, वधे च। अच्प्रत्ययः। "शेषः सङ्कर्षणे वधे। अनन्ते ना प्रसादे ना स्वनिर्माल्यार्पणे स्त्रियाम्" इति मेदिनी॥ ४४१॥ नटः नृत्यः। बिल्वः बिल्ववृक्षः तयोः। तथा धूर्ते। तालधारके च। **शैलूषः।** पु० न०। शिलूषस्यापत्यम्। अण्प्रत्ययः। "शैलूषो नटबिल्वयोः" इति मेदिनी॥ परिचर्या उपासना। तत्र। चकारात् श्रवणेच्छायाम्। **शुश्रूषा।** स्त्री०। श्रु—श्रवणे। सन्अप्रत्ययौ। "शुश्रूषा स्यादुपासने। कथने श्रोतुमिच्छायाम्" इति मेदिनी॥ स्पर्द्धने पराभिभवेच्छायाम्। मुदि आनन्दे। तथा वायौ च। **संहर्षः।** पु०। सम्यक् हर्षः। सम्पूर्वः हृष—हर्षे, चित्तोत्साहे च। घञ्प्रत्ययः। संहृष्यतेऽनेनेति घञ्प्रत्ययो वा। "संहर्षस्तु प्रमोदेऽपि स्पर्द्धायाञ्च प्रभञ्जने" इति मेदिनी॥ ४४२॥ इति षकारान्ताः समाप्ताः॥ अथ सकारान्तानाह॥ योग्यायां शास्त्राभ्यासे शिष्येभ्यो दानमित्येवंरूपशास्त्राभ्यासे वा। अन्तिके सामीप्ये। तथा गुरो-

उदर्चिरुत्प्रभे वह्नावेनः पापापराधयोः ।
कनीयाननुजेऽल्पे च कंसो मानेसुरान्तरे ॥ ४४४ ॥
तैजसे कंस्यपात्रे च गुत्सः स्तवकहारयोः ।
छन्दः पद्यश्रुतीच्छासु तरो वेगे बलेऽपि च ॥ ४४५ ॥

राकर्षणम्। तदर्थं युक्तायुक्तत्वविचारः । पौनःपुन्येन तदावृत्तिः। तस्याम् आवृत्तौ । पौनःपुन्यं कीर्त्तने । विजातीयज्ञानानन्तरित सजातीयैकरूपज्ञानप्रवाहरूपे ध्यानादेरभ्यासे च। **अभ्यासः** पु० । अभिपूर्वः अस--विद्यमानतायाम् । घञ्प्रत्ययः । "अभ्यासोऽभ्यसनेऽन्तिके" इ मेदिनी ॥स्थाने यज्ञारम्भपूर्वदिवसे देवतास्थापनादिकर्म । संस्क्रिया गन्धमाल्यैः संस्कारः ।तयोः तथा निवासे च । **अधिवासः** । पु० । अधिपूर्ववस--निवासे । घञ्प्रत्ययः । अधिवास यति देवता अनेनेति । अधिपूर्वः वस--निवासे । णिच् । करणे घञ् प्रत्ययो वा । "अधि वासो निवासे स्यात्संस्कारे धूपनादिभिः" इति मेदिनी ॥ आख्यायिकापरिच्छेदे गद्यपद्यमयप्र बन्धस्य विच्छेदे । निर्वृतौ । सुस्थितौ । अपिशब्दात् आश्रयदाने । भीतस्य भयनिवारणा सान्त्वने च । **आश्वासः** । पु० । आपूर्वः श्वस--जीवने । घञ्प्रत्ययः । "आश्वासः पुंि निर्वृतौ । आख्यायिकापरिच्छेदे च" इति मेदिनी ॥ ४४३ ॥ उत्प्रभे उद्गतकान्तौ । वह्नं दहने । तथा उच्छ्रिखे वह्नौ । उत्कृष्टकान्तित्वात् कन्दर्पे । ऊर्द्ध्वरेतस्त्वात् शिवे । उद्गता शिखायाञ्च । न० । **उदर्चिः** । पु० । उद्ऊर्द्ध्वमर्चिः रश्मिरस्येति षष्ठीबहुव्रीहिः । "उदर्चि रुत्प्रभे वाच्यलिङ्गः पुंसि हुताशने" इति मेदिनी ॥ पापं नरकहेतुर्दुरदृष्टम् । अपराधः अकार्या दिकरणरूपो दोषः । तयोश्च । **एनः** । न० । इण--गतौ । असुन्प्रत्ययः । नुडागमश्च "एनः पापापराधयोः" इति मेदिनी ॥ अनुजे कनिष्ठे । अल्पे द्वयोर्मध्ये अल्पतरे । चकारा युवतरे च । स्त्रियां ङीप् । **कनीयान्** । पु० । अयमनयोरतिशयेन युवा अल्पो वा । ईयसु प्रत्ययः । कनादेशः । "कनीयानतियूनि स्यादत्यल्पानुजयोस्त्रिषु" इति मेदिनी ॥ माने आढ इति प्रसिद्धे परिमाणे । पु० न० । असुरान्तरे श्रीकृष्णमातुले ॥ ४४४ ॥ तैजसे तैजसद्रव्ये कंस्यपात्रे स्वर्णरजतादिनिर्मिते पानपात्रे । क्वचित् तस्य पात्रे इति पाठः । चकारात् उग्रसेन सुते नृपे । ताम्ररङ्गमिश्रणजनितधातुद्रव्ये कांस्ये च । केचित् पृषोदरादित्वात् तालव्यान्त इ पठन्ति । **कंसः** । पु० । कम--वाञ्छायाम् । सप्प्रत्ययः । "कंसोऽस्त्री तैजसद्रव्ये कां माने सुरे तु ना" इति मेदिनी ॥ स्तबकः कलिकाकुसुमादिसमूहवान् गुच्छः । काण्डशून्यः मूल एव शाखाप्रधानसङ्घातमको धान्यमल्लिकादिस्तम्बो वा । हारः द्वात्रिंशद्यष्टिको हारभेदः। तयोः तथा मयूरपुच्छे । टीकाकरञ्जे । ग्रन्थिपर्णे च । न० । **गुत्सः** । पु० । गु--विष्ठोत्सर्गे । प० क्विप् प्रत्ययः । गुतं स्यति । सो--विनाशे । कः प्रत्ययः । गुत्स--गुत्सने । अः प्रत्यय वा । गुच्छोप्यत्र । क्वचित् कुत्स इति च ।"गुत्सः स्यात् स्तबके स्तम्बे हारभिद्ग्रन्थिपर्णयोः"

**तमः शोकेऽप्यथ हिमर्त्तौ ना धर्म्मे व्रते तपः ।**
**पद्मे स्वर्णे तामरसं निशा दुर्गा च तामसी ॥ ४४६ ॥**
**मणिदोषे दरे त्रासो दासो वित्तात्मचेटयोः ।**
**झिण्ट्याञ्च दासी दीर्घायुर्ऋषिः काकश्च शाल्मलिः ॥ ४४७ ॥**

इति मेदिनी ॥ पद्यं कविकृतं चतुश्चरणात्मकम् । "पद्यं चतुष्पदी तच्च वृत्तं जातिरितिद्विधा" इत्युक्तो वाक्यभेदो वा श्रुतिर्वेदः । इच्छा अभिलाषः । एतेषु । तथा स्वैराचारे । नियताक्षरवर्णमात्रादिसंनिवेशवशात् चतुश्चरणादौ उक्थादिभेदे गायत्र्यादौ छन्दसि च । **छन्दः ।** न० । छदि—इच्छायाम, संवरणे च । असिः प्रत्ययः । "छन्दः पद्ये च वेदे च स्वैराचाराभिलाषयोः" इति मेदिनी ॥ वेगे जवे, सवेगगमने वा । बले सैन्ये, बलशब्दार्थे च । अपिशब्दात् जले । रोगे । तीरे । वानरे च । **तरः ।** न० तॄ—तरणे, प्लवने, अभिभवने च । करणादौ असुन्प्रत्ययः । "तरो बले च वेगे च" इति मेदिनी ॥ ४४५ ॥ शोके चित्तवृत्तिभेदे, इष्टवियोगजाते दुःखानुगुणे वा । अपिशब्दात् नेत्रवृत्तिरोधके नैशादिध्वान्ते । पापे । कार्याकार्याविवेके विशेषदर्शनविरोधिदोषे । साङ्ख्योक्ते गुरुवरणकमेव तम इत्युक्ते गुणभेदे । राहौ च । **तमः ।** न० । तम—खेदे । असुन्प्रत्ययः । "तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुन्तुदे" इति मेदिनी ॥ अथ अनन्तरम् । हिमर्तौ शिशिरे ऋतौ । धर्मे स्वाश्रमविहितधर्मे । व्रते वैधे चान्द्रायणादौ कर्मणि । तथा चान्द्रे माघे मासि । जनलोकोपरिस्थे लोकभेदे । आलोचने । "स तपो कुरुत" इति श्रुतिः । ज्योतिषोक्ते लग्नतो नवमस्थाने च । न० । **तपः ।** पु० । तप—उपतापे । असुन्प्रत्ययः । "तपो लोकान्तरेऽपि च । चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः" इति मेदिनी ॥ पद्मे कमले । स्वर्णे कनके । तथा ताम्रे । धुस्तूरे द्वादशाक्षरपादके छन्दोभेदे च । **तामरसम् ।** न० । तामरे जले सस्ति । सस—हिंसने । डः प्रत्ययः । "अथ तामरसं पद्मे ताम्रकाञ्चनयोरपि" इति मेदिनी॥निशा रात्री।दुर्गा स्वनामाख्यातादेवी।चकारात् जटामांस्याम् । तमोधिकायां स्त्रियाञ्च । **तामसी ।** स्त्री० । तमसा व्याप्ता । अण्प्रत्ययः । ङीप् च । "तामसी निशि दुर्गायाम्" इति मेदिनी ॥ ४४६ ॥ मणिदोषे मणिजाते दोषे । दरे भये च । **त्रासः ।** पु० । त्रस—भये । घञ्प्रत्ययः । "त्रासो भये मणेर्दोषे" इति मेदिनी ॥ वित्तात्मा ज्ञातात्मा । चेटः दासः तयोः । झिण्ट्याम् । चकारात् काकजङ्घायाम् । नीलझिण्टयाम् । चेट्याम् । दासपत्न्याम् । क्षुद्रपत्न्याम् । कैवर्त्तभार्य्यायाञ्च । स्त्री० । तथा शूद्रे । धीवरे । दानपात्रे । शूद्रस्योपाधौ । "शूद्रे दासं प्रयोजयेत्" इति स्मृतिः। सेवके । च **दासः ।** पु० । दस—क्षेपे । कर्मणि घञ्प्रत्ययः । "दासो भृत्ये च शूद्रे च ज्ञातात्मनि च धीवरे" इति मेदिनी ॥ "दासी चेट्याञ्च झिण्ट्याञ्च" इति विश्वः । ऋषिः मार्कण्डेयः । काकः वायसः। शाल्मलिः शाल्मलीवृक्षः एतेषु । तथा जीवकद्रुमे । चिरजीविनि च । **दीर्घायुः ।** पु० । दीर्घम् आयुर्जीवनकालोऽस्येति षष्ठीबहुव्रीहिः। "दीर्घायुः शाल्मलीवृक्षे वायसे जीवकद्रुमे । मार्क-

योक्त्रे च वसुराख्याने स्वान्ते सरसि मानसम् ।
माश्चन्द्रमासयोः पुंसि खर्जूरक्ष्वोर्महारसः ॥ ४४८ ॥
राजहंसो नृपाग्र्ये च जिह्वाभूः शल्लकी रसा ।
जले शरीरधातौ च पारदस्वाद्वयो रसः ॥ ४४९ ॥
भाषाशृङ्खलके रासः क्रीडायामपि गोदुहाम् ।
रहो रतं च गुह्यं च रभसो हर्षवेगयोः ॥ ४५० ॥

ण्डेये च पुंसि स्याच्चिरजीविनि वाच्यवत्'' इति मेदिनी ॥ ४४७ ॥ योक्त्रे ईषादण्डादौ । युगबन्धनार्थे दाम्नि च । आख्याने प्रसिद्धे इति वृत्तकथने । यथा ''अमृतमन्थनादुपाख्यातम्'' इति । चकारात् धने । रत्ने । श्यामे । स्वर्णे । जले । वृद्धौषधे च । न० । वकवृक्षे । सूर्ये वह्नौ । रश्मौ । गणदेवताभेदे । अष्टसङ्ख्यायाम् । वसुन्धराने । धनिष्ठानक्षत्रे च । पु० । मधुरे । शुष्के च । त्रि० । दीप्तौ । वृद्धौषध्यौ च । स्त्री० । वसुः । पु० । वस-वसतागाम्, निवासे वा । उः प्रत्ययः । ''वसुर्नो देवभेदाग्निरश्मियोक्त्रकराजसु । क्लीबं वृद्धौषधे श्यामे रत्ने मधुरे त्रिषु'' इति मेदिनी ॥ स्वान्ते चित्ते । सरसि सरोवरे । कैलास ... ब्रह्मणा कृते सरोवरभेदे इति पठन्ति । मानसम् । न० । मन ... अणप्रत्ययः । ''मानसं सरसि स्वान्ते'' इति मेदिनी ॥ चन्द्रः प्रसिद्धः । मासः त्रिंशद्दिनात्मकः कालः तयोः । माः । पु० । माति परिच्छिनत्ति स्वगत्या कालम् । मा—क्षेपे । माने च । असुन्प्रत्ययः । ''माश्चन्द्रमासयोः पुमान्'' इति मेदिनी ॥ खर्जूरे स्वनामाख्याते वृक्षे । ... स्वनामाख्यातवृक्षः । तयोः । कशेरुणि पारदे च । कानिके । न० । महारसः । पु० । महान् रसो यस्येति षष्ठीबहुव्रीहिः । ''महारसः स्यात् खर्जूरे कोशकारकशेरुणोः'' इति मेदिनी ॥ ४४८ ॥ नृपाग्र्ये । नृपश्रेष्ठे । ... राजहंसः । पु० । राजा हंस इव ... । हंसानां राजा वा श्रेष्ठत्वात् । ''राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे'' इति मेदिनी ॥ जिह्वा रसना । भूः पृथिवी । शल्लकी गजभक्ष्यतरुः ... । तथा पाठायाम् । ... च । रसा । स्त्री० । रसो माधुर्यादिरूपोऽस्त्यस्याः अच्प्रत्ययः । ''स्त्रियान्तु रसना पाठा ... भूमिषु'' इति मेदिनी ॥ जले सलिले । शरीरधातौ देहस्थे धातुभेदे । ''... निगदितो रसः'' इति । पारदः रसराजः । स्वादः रसनेन्द्रियग्राह्यः ... गुणभेदः । चकारात् आस्वादे गुडादौ । पुष्पस्य मधुनि । वीर्ये । रागे । द्रवे च । रसः । पु० । रस्यते । रस—आस्वादे । अच्प्रत्ययः । ''रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः । देहधातुप्रभेदे च पारदस्वाद्वयोः पुमान्'' इति मेदिनी ॥ ४४९ ॥ भाषाशृङ्खलके शृङ्खलाबन्धवत् द्वयोर्द्वयोर्मध्यस्थित्या क्रीडाभेदे । गोदुहां गोपानां क्रीडायाम् । तथा शब्दे । ध्वनौ । धवले । कोलाहले च । रासः । पु० । रस—ध्वने आस्वादे च । घञ्प्रत्ययः । रास—

**विहायाः शकुने पुंसि विहायः खे नपुंसकम्।**
**पुत्रादौ तर्णके वर्षे वत्सः क्लीबन्तु वक्षसि ॥ ४५१ ॥**
**रसे क्रूरे च विकृतौ बीभत्सस्त्रिषु नाऽर्ज्जुने।**
**व्यासो मुनौ च विस्तारे बर्हिर्ना कुशशुष्मणोः ॥ ४५२ ॥**
**अग्रे प्रधाने च शिरः श्रीवासो विष्णुधूपयोः।**
**सुमनाः पुष्पमालत्योः स्त्रियां ना देवधीरयोः ॥ ४५३ ॥**

शब्दे। घञ्प्रत्ययो वा। "रासः कोलाहले ध्वाने भाषाशृङ्खलकेऽपि च। क्रीडाभेदे च गोपानाम्" इति मेदिनी। रते रमणे। गुह्ये गोप्ये। चकारात् निर्जने। याथार्थ्ये च। निर्जने अव्ययम्। **रहः**। न०। रह—त्यागे, गतौ च। असुन्प्रत्ययः। "रहस्तत्त्वे रते गुह्ये" इति मेदिनी॥ हर्षः इष्टाधिगमजन्य आनन्दः। वेगः जवः, औत्सुक्यं वा तयोः। तथा पौर्वापर्यविचारे च। **रभसः**। पु०। रभ—औत्सुक्ये। असच्प्रत्ययः। "रभसो वेगहर्षयोः" इति मेदिनी॥ ४५०॥ शकुने पक्षिणि। खे आकाशे च **विहायाः**। पु० न०। विपूर्वः हय—गतौ। असुन्प्रत्ययः। निपातनात् वृद्धिः। स्वार्थे अच्प्रत्ययः। विहायसमप्यत्र। आकाशे। न०। "विहायाः शकुने पुंसि गगने पुन्नपुंसकम्" इति मेदिनी॥ पुत्रादौ शिशौ। तर्णके गवादीनां वत्से वर्षे संवत्सरे। पु०। वक्षसि वक्षःस्थले। न०। **वत्सः**। पु०। वस—निवासे, स्तम्भे च। सप्प्रत्ययः। "वत्सः पुत्रादिहर्षयोः। तर्णके नोरसि क्लीबम्" इति मेदिनी॥ ४५१॥ रसे नाटयादौ प्रसिद्धे जुगुप्सास्थायिभावके रसभेदे। क्रूरे कर्कशे। विकृतौ तद्रसविषये विकृतमांसादौ। त्रि०। अर्जुने अर्जुनवृक्षे। पु०। तथा पाण्डिनि। जुगुप्सिते। घृणाविषये। **बीभत्सः**। त्रि०। बध—निन्दायाम्। स्वार्थे सन्। कर्म्मणि घञ्प्रत्ययः। बीभत्सो नाऽर्ज्जुने क्रूरघृणात्मविकृते त्रिषु" इति मेदिनी॥ मुनौ पराशरसुते मुनिभेदे। विस्तारे विस्तीर्णतायाम्। चकारात् समासादिसमार्थके विग्रहवाक्ये। गोलवृत्तक्षेत्रस्य मध्यस्थरेखायाम्। पुराणपाठके विप्रे च। "स एव वाचयेद्विप्रः स ब्रह्मन् व्यास उच्यते" इति। **व्यासः**। पु०। व्यस्यति वेदान्। विपूर्वः अस—क्षेपे। घञ्प्रत्ययः। "व्यासो ना विस्तृतौ मुनौ" इति मेदिनी॥ कुशं स्वनामाख्यातं तृणम्। शुष्मा वह्निः। "बर्हिषि रजतं न देयम्" इति श्रुतिः। तयोः। तथा ग्रन्थिपर्णे। चित्रके च। दीप्तियुक्ते। त्रि०। "बर्हिर्देवसदनम्" इति श्रुतिः। **बर्हिः**। पु० स्त्री०। बृहि—दीप्तौ, वृद्धौ च। इसुन्प्रत्ययः। निपातनात् नलोपश्च। बर्ह—दीप्तौ। इसुन्प्रत्ययो वा। "बर्हिः पुंसि हुताशने। न स्त्री कुशे" इति मेदिनी॥ ४५२॥ अग्रे उपरिभागे। प्रधाने सेनाग्रे च। श्रेष्ठे वा। चकारात् मस्तके। शिखरे च। **शिरः**। न०। शृ—हिंसने। असुन् प्रत्ययः। निपातनात् साधुः। "शिरः प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च" इति मेदिनी॥ विष्णुः श्रीरामः। धूपः वृकधूपः। सालवृक्षरसः तयोः। तथा पङ्कजे च। **श्रीवासः**। पु०। श्रियै वासः सौर-

**वीणाभेदे सर्जरसो धूनकेऽप्यथ सारसम् ।**
**पद्मे ना पक्षिणीन्दौ च सरो नीरतडागयोः ॥ ४५४ ॥**
**हविः सर्पिषि हव्ये च हंसस्तु खगसूर्ययोः ।**
**निर्लोभे नृपतौ विष्णावन्तरात्मनि चेष्यते ॥ ४५५ ॥**

**इति सान्ताः ॥**

**अवग्रहः स्यात्प्रकृतिभाववृष्टिविबन्धयोः ।**
**अवरोहोऽवतरणे विटपे च लतोद्गमे ॥ ४५६ ॥**

अमस्येति बहुव्रीहिः । "श्रीवासो वृकधूपे स्यात् पङ्कजे मधुसूदने" इति मेदिनी ॥ पुष्पं कुसुमम् । "किं सेव्यते सुमनसां मनसा विगन्धः" इति रसगङ्गाधरः । मालती स्वनामख्याता लता तयोः । स्त्री० । देवः सुरः । धीरः पण्डितः तयोः । पु० । प्रशान्तचित्तयुक्ते । त्रि० । प्रशान्तमनसि च । **सुमनाः** । न० । सुष्ठु मनो यस्मात् यस्येति वा बहुव्रीहिः । "सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोः" इति मेदिनी ॥ ४५३ ॥ वीणाभेदे वाद्यभाण्डभेदे । धूनके यक्षधूपे च । **सर्जरसः** । पु० । सर्जस्य रसः इति षष्ठीतत्पुरुषः । अथ अनन्तरम् । पद्मे सरसीरुहे । पु० । पक्षिणि स्वनामख्याते खगे । इन्दौ चन्द्रे । चकारात् पक्षिण्याम् । स्त्री० सरोवरसम्बन्धिनि च । त्रि० । **सारसम्** । न० । सरोऽभिजनो निवासस्थानमस्य । अण्प्रत्ययः सरस इदं वा । अण्प्रत्ययः । "सारसः पक्षिभेदेन्द्वोः क्लीबन्तु सरसीरुहे" इति मेदिनी ॥ नीरं जलम् । तडागः सरोवरम् । तयोश्च । गौरादित्वात् ङीप् च । सरस्यत्र । **सरः** । न० । सृ-गतौ असिः प्रत्ययः । "सरो नीरतडागयोः" इति मेदिनी ॥ ४५४ ॥ सर्पिषि घृते । हव्ये हवनीयद्रव्यमात्रे । "वपाया मेदसो हविषो नु ब्रूहि" इति श्रुतिः । चकारात् होमे च । **हविः** । पु० हूयते । हु-होमे, अदने च । कर्मणि असुन्प्रत्ययः । "हविर्होतव्यमात्रे च सर्पिष्यपि न पुंसकम्" इति मेदिनी ॥ खगः स्वनामख्यातः पक्षी । सूर्यः दिनकरः, तयोः । निर्लोभे नृपतौ निर्लोभराजनि । विष्णौ श्रीकृष्णे । अन्तरात्मनि परमात्मनि । "हंसं तनौ सन्निहितं चरन्तम्" इति नैषधम् । चकारात् मत्सरे । यतिभेदे । देहस्थवायुविशेषभेदे । मन्त्रभेदे । अश्वभेदे । सुमेरुपर्वते । शिवे । अग्निस्थले । श्रेष्ठे । विशुद्धे । अजपामन्त्ररूपे वर्णे च । "हकारेण बहिर्याति सकारेण विशेत् पुनः । हंसेति सततं मन्त्रं जीवो जपति सर्वदा" इति तन्त्रम् । **हंसः** । पु० । इत्यन्वयः । हस-हासे । अच्प्रत्ययः । पृषोदरादित्वात् साधुः । "हंसः स्यान्मानसौकसि निर्लोभनृपविष्ण्वर्के परमात्मनि मत्सरे । योगभेदे मन्त्रभेदे शरीरमरुदन्तरे । तुरङ्गमप्रभेदेऽपि" इति मेदिनी ॥ ४५५ ॥ इति सकारान्ताः समाप्ताः ॥ अथ हकारान्तानाह ॥ प्रकृतिभावः । वृष्टिविबन्धः वर्षाजलप्रतिघातः निदाघ इत्यर्थः । तयोश्च । **अवग्रहः** । पु० । अवपूर्वः ग्रह-ग्रहणे

**आरोहस्तु नितम्बे स्याद्दीर्घत्वे च समुच्छ्रये ।**
**शक्तौ स्नेहे चाग्रहः स्यादीहोद्यमवाञ्छयोः ॥ ४५७ ॥**
**सूपे च पाकपात्रे च कटाहो महिषीशिशौ ।**
**खड्गकोषे च कलहो दात्यूहश्चातकेऽपि च ॥ ४५८ ॥**
**समारम्भे च पटहो ब्रह्मण्यपि पितामहः ।**
**प्रवाहो व्यवहारे च बहुर्विपुलसङ्ख्ययोः ॥ ४५९ ॥**

ततो हि भोगावसाने सर्वेऽवतरन्ति । लतोद्गमे तरोर्मूलादग्रपर्यन्तमाच्छादायां गुडूच्यादिलतायाम् । चकारात् आरोहे । **अवरोहः** । पु० । अवपूर्वः रुह—उद्भवे । घञ् प्रत्ययः । अपादाने घञ्प्रत्ययश्च । "अवरोहोऽवतरणेऽप्यारोहे च लतोद्गमे" इति मेदिनी ॥ ४५६ ॥ नितम्बे उत्तमस्त्रीणां कटितटे । दीर्घत्वे दीर्घतायाम् । समुच्छ्रये अत्युन्नतौ । चकारात् आरोहणे । गजारोहे । परिमाणभेदे च । **आरोहः** । पु० । स्यादित्यन्वयः । आपूर्वः रुह—उद्भवे । घञ्प्रत्ययः । "आरोहस्त्ववरोहे च वरारोहाकटावपि । आरोहणे गजारोहे दीर्घत्वे च समुच्छ्रये" इति मेदिनी ॥ शक्तौ सामर्थ्ये । स्नेहे प्रेम्णि । चकारात् अनुग्रहे । आक्रमणे । ग्रहणे च । **आग्रहः** । पु० । स्यादित्यन्वयः । आपूर्वः ग्रह—ग्रहणे, आदाने च । अच्प्रत्ययः । "आग्रहोऽनुग्रहाशक्त्योराक्रमे ग्रहणेऽपि च" इति मेदिनी ॥ उद्यमे उत्साहे । वाञ्छा अभिलाषा तयोः । तथा चेष्टायाञ्च । **ईहा** । स्त्री० । ईह—चेष्टने । अः प्रत्ययः । "ईहोद्यमवाञ्छयोः" इति मेदिनी ॥ ४५७ ॥ सूपे पाचके । पाकपात्रे तैलादेः पाकसाधनपात्रे । महिषीशिशौ तुलायीशावके । चकारात् खर्परे । नरके च । **कटाहः** । पु० । कटामाहन्ति । आपूर्वः हन—वधे, गतौ च । डः प्रत्ययः । "कटाहः कूर्मखर्परे । द्वीपस्य च प्रभेदे स्यात् तैलादेः पाकभाजने । जायमानविषाणाग्रमहिषीशावकेऽपि च" इति मेदिनी ॥ खड्गकोशे असिकोशे । चकारात् विवादे । युद्धे च । **कलहः** । पु० न० । कलं हन्ति । हन—वधे । डः प्रत्ययः । कलहं युधि चाटे ना खड्गकोषे च भण्डने" इति मेदिनी ॥ चातके स्वनामाख्याते पक्षिभेदे । अपिशब्दात् कालकण्ठके च । **दात्यूहः** । पु० । दो—छेदे । क्तिन्प्रत्ययः । दितिं खण्डनं वहति ॥ वह—प्रापणे । क्विप्प्रत्ययः । दितिं वाट् । स्व एव अण्प्रत्ययः । वाह ऊठ् । आदेरिति आत्वम् । "दात्यूहस्तु पुमान् कालकण्ठचातकपक्षिणोः" इति मेदिनी ॥ ४५८ ॥ समारम्भे उद्यमे, दर्पे वा । चकारात् ढकावाद्ये च । **पटहः** । पु० न० । पटेन हन्यते । हन—वधे । पट इत्येवं शब्दं जहाति वा । हा—त्यागे । डः प्रत्ययः । "पटहो ना समारम्भे आनके पुन्नपुंसकम्" इति मेदिनी ॥ ब्रह्मणि विरिञ्चौ । अपिशब्दात् पितुः पितरि च । **पितामहः** । पु० । पितुः पिता पितृशब्दात् डामहः प्रत्ययः । पितुः पितृपत्न्याम् । स्त्री० । ङीप् च । "पितामहो विरिञ्चौ स्यात् तातस्य जनकेऽपि च" इति मेदिनी ॥ व्यवहारे अर्थविशेषबोधनाय शब्दविशेषप्रयोगे, महासनभोजनादौ वा । चकारात् प्रवृत्तौ । जलस्रोतसि ।

वराहः सूकरे मेघे मुस्तकेऽप्यथ मूर्च्छने ।
अविद्यायाञ्च मोहः स्याद्वृषस्कन्धेऽनिले वहः ॥ ४६० ॥
देहनिर्माणसैन्येषु व्यूहः स्यादथ विग्रहः ।
सङ्ग्रामे प्रविभागे च देहविस्तारयोरपि ॥ ४६१ ॥
वैदेही पिप्पलीसीतावणिक्स्त्रीरोचनास्वपि ।
संक्षेपेऽपि सङ्ग्रहः स्यात् सिंह्यौ वार्त्ताकवासकौ ॥ ४६२ ॥

उत्तमाश्वे च । **प्रवाहः** । पु० । प्रपूर्वः वह--प्रापणे । घञ्प्रत्ययः । "प्रवाहस्तु प्रवृत्तौ स्यादपि स्रोतसि वारिणः" इति मेदिनी ॥ विपुलः विस्तीर्णः । सङ्ख्या द्विप्रभृत्यनेकसङ्ख्यान्विता तयोश्च । **बहुः** । बह--वृद्धौ । कुः प्रत्ययः। न लोपः। "बहु स्यात् त्र्यादिसङ्ख्यासु विपुलेऽप्यभिधेयवत्" इति मेदिनी ॥ ४५९ ॥ सूकरे स्वनामाख्याते पशौ । मेघे जलधरे । क्वचित् मेषे इति पाठः । मुस्तके स्थावरविषभेदे । अपिशब्दात् यज्ञवराहाख्ये विष्णोरवतारभेदे । पर्वतभेदे । शिशुमारे । वाराहीकन्दे । द्वीपभेदे च । **वराहः** । पु० । वराय अभीष्टाय मुस्तादिलाभाय आहन्ति खनति भूमिम् । आपूर्वः हन--हिंसायाम् । डः प्रत्ययः । "वराहः सूकरे विष्णौ मानभेदेऽद्रिमुस्तयोः" इति मेदिनी॥ अथ अनन्तरार्थवाची । मूर्च्छने मूर्च्छायाम् । अविद्यायाम् अज्ञाने । चकारात् भ्रान्तिसाधने । वेदान्तोक्ते अविद्यावृत्तिभेदे । दुःखे । देहादिष्वात्माभिमाने च । **मोहः** । पु० । मुह--मोहे, वैचित्त्ये च । घञ्प्रत्ययः । "अथ मोहो पुल्लिङ्गः स्यादविद्यायाञ्च मूर्च्छने" इति मेदिनी॥ वृषस्कन्धे वृषभस्य स्कन्धदेशे।अनिले वायौ । तथा अश्वे। पथि । वाहे । नदे च । **वहः** । पु० । उह्यतेऽनेन । वह--प्रापणे । अच्प्रत्ययः । "वहः स्याद्वृषभस्कन्धे वाहे गन्धवहेऽपि च" इति मेदिनी ॥४६०॥ देहः कायः । निर्माणं रचना । सैन्यं सेनासमूहः । एतेषु । तथा सम्यक्तर्के । युद्धार्थं सैन्यसन्निवेशनविशेषे च । **व्यूहः** । पु० । विपूर्वः ऊह--वितर्के । घञ्प्रत्ययः । "व्यूहः स्याद्बलविन्यासे निर्माणे वृन्दतर्कयोः" इति मेदिनी ॥ अथ अनन्तरम् । सङ्ग्रामे युद्धे । प्रविभागे प्रकृष्टविभागे । देहः शरीरम् । विस्तारः विस्तीर्णः । तयोः । अपिशब्दात् समासादिवृत्तिसमानार्थकवाक्यभेदे । विशेषज्ञाने च । **विग्रहः** । पु० । विपूर्वः ग्रह--आदाने । ग्रहणे च, अच्प्रत्ययः । "विग्रहः कायविस्तारविभागे ना रणेऽस्त्रियाम्" इति मेदिनी ॥ ४६१ ॥ पिप्पली प्रसिद्धा । सीता जनकात्मजा । वणिक्स्त्री वणिजयोषिति । रोचना गोरोचना । एतासु । अपिशब्दात् हरिद्रायाञ्च । **वैदेही** । स्त्री० । विदेहेषु मिथिलादेशेषु भवा । अण्प्रत्ययः । "वैदेही रोचनासीतावणिक्स्त्रीपिप्पलीषु च" इति मेदिनी ॥ संक्षेपे संक्षिप्तकरणे । तथा सञ्चये । बह्वर्थकवाक्यानामेकत्र सङ्कलने च । **सङ्ग्रहः** । पु० । स्यादित्यन्वयः । सम्पूर्वः ग्रह--ग्रहणे । आदाने च । अप्प्रत्ययः । "सङ्ग्रहो बृहदुत्सङ्गे ग्रहसंक्षेपयोरपि" इति मेदिनी । वार्त्ताकः स्वनामाख्यातः लताविशेषः। वासकः स्वनामाख्यातो वृक्षः । येन तेन प्रकारेण वासकः काश-

**राशिभेदे हरौ सिंहः श्रेष्ठार्थे चोत्तरस्थितः**
**सौहृदे घृततैलादौ स्यात्स्नेहोऽप्यव्ययाः परे ॥ ४६३ ॥**
**इति हान्ताः ।**
**नञभावे निषेधे च तद्विरुद्धतदन्ययोः ।**
**सादृश्ये चेषदर्थे च हिरुङ्मध्यविलासयोः ॥ ४६४ ॥**

नाशक'' इति वैद्यकः । तयोः । तथा कण्टकार्याम् । बृहत्याम् । मुद्गपर्ण्याम् । राहुमातरि च । **सिंही** । स्त्री० । हिनस्ति रोगान् । हिन्स—हिंसने । अच्प्रत्ययः । पृषोदरादित्वात् साधुः । ''सिंही तु कण्टकार्यां स्याद्वार्त्ताकौ वासकेऽपि च'' इति मेदिनी ॥ ४६२॥ राशिभेदे मेषादितः पञ्चमे राशौ । हरौ स्वनामाख्याते पशुभेदे । उत्तरस्थितः उत्तरपदान्तस्थः । श्रेष्ठार्थे उत्तमार्थे । यथा नृसिंहः शाक्यसिंहः राजसिंहः इति । चकारात् रक्तशोभाञ्जने च । **सिंहः** । पु० । हिन्स—हिंसने । अच्प्रत्ययः । पृषोदरादित्वाद्वर्णविपर्ययश्च । ''सिंहः कण्ठीरवे राशौ सत्तमे चोत्तरस्थित'' इति मेदिनी ॥ सौहृदे सुहृद्भावे, प्रेम्णि च । घृततैलादौ सर्पिस्तैलादिरस-भेदे । अपिशब्दात् न्यायोक्ते गुणभेदे च । यद्वशात् दाहानुकूल्यम् । **स्नेहः** । पु० । स्यादि-त्यन्वयः । ष्णिह—प्रीतौ । घञ्प्रत्ययः । ''स्नेहः स्यात् पुंसि तैलादिरसद्रव्ये च सौहृदे'' इति मेदिनी ॥ ४६३ ॥ इति हकारान्ताः समाप्ताः ॥ अथ ऊर्ध्वं वक्ष्यमाणाः नामतो भिन्ना अन्ये अनेकार्थाः अव्ययाः । उच्यन्त इत्यत्रान्वयः । अस्मिन्वर्गे तेषामुपन्यासस्तु पूर्ववन्नानार्थत्वादे-वानेकार्थः । अतः नामानन्तरं परे अन्ये । अव्ययाः ''स्वरादिनिपातमव्ययम्'' इति पाणिन्युक्तेः निपाताः शिष्यशिक्षार्थं वक्तव्याः । ते च सर्वासु विभक्तिषु सर्वेषु वचनेषु च एकरूपाः शब्द-वृत्तिधर्मविशेषा एव भवन्ति । यथाह—''स्वरादयोऽव्ययाः सर्वत्रैकरूपाः'' इति । तल्लक्षणन्तु-'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्' इति श्रुतिः । तेषु नञित्यव्ययम् अभावादावर्थषट्के वर्तते । तस्य ञकारोऽनुबन्धः । अनुबन्धो हि कार्यविशेषार्थं ज्ञापयति । अत्रादौ शिष्यहिताय नञर्थो दिङ्मात्रं निद-र्श्यते । तत्तु बोधकैः सम्यग्बोधनीयम् । ननु सदसती नञा न निषेध्येयातां शक्य-त्वात् सिद्धत्वाच्च । तथा चोक्तम्—''सतां न च निषेधोऽस्ति सोऽसत्सु च न विद्यते । जगत्यनेन न्यायेन नञर्थः प्रलयं गतः'' इति । नच सन्निषेद्धुं शक्नोतीति वाच्यम् । पापं मे नास्तीति प्रायश्चित्तं न कुर्याम् । ततः कुत्र नञ् प्रवर्ततामिति । नैतदस्ति । सर्वो हि ज्ञातमर्थं ज्ञात-यितुं शब्दान् प्रयुनक्ति । तत्र ज्ञानमुभयं प्रमा प्रमश्च । तत्र पूर्वस्मिन्नञो व्यापारः परस्मिन्नास्ति । तत्रायं ब्राह्मण इति प्रतीतिर्मिथ्येति नञा ख्यायते । स च द्विविधः । पर्युदासवृत्तिः प्रसज्यवृ-त्तिश्च । आद्ये ब्राह्मणादन्यो ब्राह्मणत्वेनाध्यासितो राजन्यादिरब्राह्मणो ब्राह्मणसदृश इति प्रतीयते। उत्तरे तु मिथ्यानिवृत्तिरेव । ब्राह्मणोऽयं भवतीत्यत्र ब्राह्मणत्वेनाध्यवसितो न भवतीत्यर्थः । तस्मादुभयत्रापि पूर्वपदार्थप्रधानम् । तद्वशेन सदृशनिवृत्त्योः प्रतीतिः । एवञ्च न सतो नाप्यसतः

प्रतिषेधः । किन्तु भ्रमादतस्मिंस्तदिति प्रयुक्तस्य ब्राह्मणशब्दार्थो निषेध्यत इति तत्त्वम् । इह निपातानामनेकार्थत्वात्तत्रासादृश्यकृतादन्यता तदन्यता । "अभक्ष्यो ग्राम्यकुक्कुटः। अपेया सुरा" इत्यादावव्यवहार्यता निषेध एव नञा ख्याप्यते । "अनृतमधर्ममभिक्षुः" इति क्वचिद्विषयस्य तदन्यता। एवमन्यदूह्यम्। उक्तञ्चेति—"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः" इति । अत्र तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् "अवर्षा हेमन्तः असर्वस्मै" इत्यादौ तु स्वलिङ्गवचनसर्वनामत्वादिकं न विहन्यते । एकशब्दस्तु उपात्तसङ्ख्याद्वित्वबहुत्वेन वर्त्तत इति एकवचनमुत्पद्यते। अनेकशब्दस्याप्युक्तन्यायात्तथैव नियतम् । यथा—"करेणुः प्रस्थितोऽनेक" इति। यत्तु विजातीयानामर्थानामनेकत्वं प्रतीतं विवक्ष्यते। यथा—"कथं वर्णाः सन्ततमस्य सायका भवन्त्यनेके जलधेरिवोर्मयः" इति भारविः । न तद्भर्तृहरिणा व्यवस्थितमिति । पूर्वपदार्थप्राधान्ये तु अब्राह्मणमित्यव्ययीभावः । ब्राह्मणस्याभाव इत्यर्थः । ननु अब्राह्मण इत्यादौ उत्तरपदार्थसादृश्यस्य विधेयत्वाद्विधेरेव प्राधान्यम् । प्रतिषेधांशे तात्पर्याभावात् । उक्तञ्च—"प्राधान्यं विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तरपदे नञः" इति । अत एवोत्तरपदेन सह पर्युदासस्य परस्परसम्बन्धार्थस्य विद्यमानत्वादस्तु समासः । "किञ्चिन्न कुर्वाण" इत्यादौ तु विध्यंशस्याप्राधान्यम् । प्रतिषेधस्यैव प्राधान्यम् । तदर्थत्वेन शब्दयोगात् उत्तरपदेन सह नञः सम्बन्धो नास्ति । क्रियया सहैव सम्बन्धात् कथमत्र समासः । तथा चोक्तम्।—"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्" इति । सत्यम् । अनभिधानमेव समासनिषेधकारणम् । अत्र तु तदभावादेव समासः । अन्ये तु अलुगधिकारादुत्तरपदे । "वण्भावकारकयोरकर्त्तरि" इत्यादिनिर्देशात् समास इत्याहुः । अत्यधिकारात् क्वचिदसाक्षात्सम्बन्धेऽपि समास इति श्रीपतिः । यथा—"सूर्यं न पश्यन्त्यसूर्यम्पश्याः । किञ्चिन्न कुर्वाणोऽकिञ्चित्कुर्वाणः । मांसं न भक्षमाणोऽमांसभक्षमाणः । न पुनर्दीयन्तेऽपुनर्देयाः श्लोकाः । श्राद्धं न भुङ्क्ते अश्राद्धभोजी । एवमलवणभोजी । कर्णवेष्टकाभ्यां न शोभते अकर्णवेष्टकिकं मुखम् । वत्सेभ्यो न हितम् अवात्सीयो गोधुक् । वधं नार्हति अवध्यो ब्राह्मणः । सन्तापाय न भवति असन्तापिकः । असदुपदेशकः । असत्कर्मदेन वसुदेवनन्द" इत्यादि । अन्यत्र न स्यात् ब्राह्मणो न भवति । अथ केनचिन्नञ्समासः कर्मधारयान्तर्निवेशोऽङ्गीकृतः । स तु विदुषामसम्मतः । विशेषणविशेष्यभावस्याप्रसङ्गत्वात् । लक्षणकल्पना तु कल्पनैव । किञ्चाशुक्ल इत्यादौ विशेषणविशेष्याभावानियततया पूर्वनिपातसन्देहः स्यात् । अकर्मधारयत्वात् अपथी अपथिकः इत्यत्र इनिकौ स्याताम् इति श्रीपतिरिति पद्मनाभदत्तवचनमङ्गीकृतम् । तथा भट्टोजिदीक्षितादीनां पूर्वीयाणां शाब्दिकानाञ्च मतानुगम्यनञर्थस्य विशेषदर्शनार्थं मया किञ्चिन्मात्रमिहोपादितम् । ततः परमप्युक्तानुक्रमेणैव सार्थोदाहरणानामाविष्करणञ्च भवति । अभावे यथा—अपापम् । पापस्याभाव इत्यर्थः । एवमकुशलम्—अनुत्तरः अनुपलम्भः इत्यादि । तद्विरुद्धे यथा—असुरः सुरविरुद्ध इत्यर्थः । एवमलोभः अमित्रमित्यादि । तदन्ये यथा—अघटः

**पुनरर्थेऽङ्ग भोर्थे च सुष्ठ्वत्यर्थप्रशंसयोः ।**
**च पादपूरणे पक्षान्तरे हेतौ विनिश्चये ॥ ४६५ ॥**

घटभिन्न इत्यर्थः । एवमव्याकृता धर्माः । अपर्यापन्ना इत्यादि । निषेधे यथा—नैकधा न एक प्रकारेणेत्यर्थः । एवमसंस्कृताः । अकुर्वन् । अकृत्वा । अगम्य इत्यादि । सादृश्ये यथा—अब्राह्मणः ब्राह्मणसदृश इत्यर्थः । एवमश्रमणः अमनुष्यः अपुत्र इत्यादि । ईषदर्थे यथा । अनुदरी । अल्पोदरीत्यर्थः। कृशाङ्गीति यावत्।एवमनुदिता इत्यादि । एवमेतेष्वर्थेषु **नञ्** अव्ययंविद्धिः प्रायो निगद्यते । तत्र तात्पर्यार्थाः।तथा चाहुः प्राञ्चः। "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः" इति । "नञभावे निषेधे च स्वरूपार्थेऽप्यतिक्रमे । ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोः" इति । क्वचित्तु नभ्राटादिषु शब्देषु नञः आदेशो न स्यात् । यथा नभ्राट् । न भ्राजते इत्यर्थः। नपात् । न पातीत्यर्थः । नवेदाः । न वेत्तीत्यर्थः। नासत्याः । न असत्या इत्यर्थः । नमुचिः । न मुञ्चतीत्यर्थः । नकुलः । न कुलमस्येत्यर्थः । नखः । न खमस्येत्यर्थः। नपुंसकम् । न स्त्री न पुमानित्यर्थः। स्त्रीपुंसयोः नपुंसकभावो निपातनात् सिद्धः । नक्षत्रम् । न क्षरतीत्यर्थः । क्षीयते क्षरतेर्वा क्षत्रमिति निपात्यते । नक्रः । न क्रामतीत्यर्थः । नाकः । न अकमस्मिन्नित्यर्थः । तथा चोक्तम्—"नाको नवेदा नकुलश्च नक्रो नासत्यनक्षत्रनपाच्च नभ्राट् । नपुंसकं वै नमुचिर्नखश्च नादेशमेतेषु वदन्ति धीराः" इति । नद्वयस्य प्रयोगात् प्रकृतेर्दृढत्वञ्च सूच्यते । यथा—न नाभूत् । अभूदित्यर्थः। "द्वौ नञौ प्रकृतेर्दार्ढ्यं सूचयत" इति मधुकोशपञ्जिका ॥ मध्यः अन्तरम् । विलासः दीप्तिः तयोश्च । **हिरुक्** । मध्ये यथा । "कृष्णो हिरुग्ब्रह्मशम्भ्वोः" ब्रह्मणः शम्भोश्च मध्ये कृष्ण इत्यर्थः। विलासे यथा—"हिरुक् वह्नेरजायत" अग्नेर्दीप्तिरभवदित्यर्थः । तथा वर्जने समीप्ये च । वर्जने यथा । "हिरुक् कर्म न मोक्षः" कर्म विना संसारमुक्तिर्नास्तीत्यर्थः । सामीप्ये यथा—"पर्वतस्य हिरुङ्नदी" पर्वतस्य अन्तिके समीपे गङ्गा इत्यर्थः । "हिरुक्शब्दो विनार्थे च मध्यार्थेऽपि च दृश्यते" इति मेदिनी । "हिरुङ्मध्यविनार्थयोः" इति विश्वः॥४६४॥ पुनरर्थे भोर्थे सम्बोधने च **अङ्ग** शब्दः। पुनरर्थे यथा "मूर्खोऽपि नावमन्यते किमङ्ग विद्वान्" अज्ञोऽपि नावमन्यते पण्डितोऽपि किंपुनरवमन्यते नेत्यर्थः। सम्बोधनार्थे यथा—"अङ्ग भीम ! यज्ञं रक्षस्व" भो भीम ! तं क्रतुं पालयेत्यर्थः। "अङ्ग सम्बोधने हर्षे सम्भ्रमासूययोरपि" इति मेदिनी॥ अत्यर्थे अतिशये। प्रशंसायाञ्च । **सुष्ठु** शब्दः । अतिशये यथा—"सुष्ठु पीतं मया घृतम्" । मयाऽतिशयेन सर्पिः पीतमित्यर्थः । प्रशंसायां यथा । विद्वज्जनमनोहारि सुष्ठु काव्यं प्रजायते" । पण्डितानां मनोरञ्जनयोग्यं काव्यं सुष्ठु प्रसंसनीयम्भवतीत्यर्थः । "सुष्ठु प्रशंसनेऽपि स्यादत्यर्थे च निगद्यते" इति मेदिनी ॥ पादपूरणार्थचतुष्के **च** शब्दः । पादपूरणं श्लोकचरणपूर्णता । तत्र पादपूरणे यथा—"स च प्राह च राजानम्" । स राजानं न्यवेदयदित्यर्थः । पक्षान्तरे यथा—"सत्यं चेत् तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम्" यदि सत्यं भवेत् तपःकर्मणा किम् । यदि पवित्रचित्तं

**ह्री विस्मये प्रमोदे च ओमेवं प्रणवार्थयोः ।**
**युक्तार्थे चाधुनार्थे च साम्प्रतं तद्विदो विदुः ॥ ४६६ ॥**

विद्यात् तीर्थेन तीर्थचरणेन किं प्रयोजनमित्यर्थः । "पिबत्यसौ पाययते च सिन्धुः" । असौ समुद्रः स्वयं नदीः पिबति तरङ्गाधरं पाययते च इत्यर्थः । अत्र केचित्तु पक्षान्तरार्थं पठन्ति । अपरे तु "सर्वत्राण् तलोपश्च" इति पाणिनीयसूत्रे चकारः पक्षान्तरदीपक इति च। हेतौ यथा— "यच्च पुत्र अजायत" । अत्र चकारो हेत्वर्थबोधकः । यस्मात् हेतोः तस्य पुत्रः अजायत इत्यर्थः । निश्चये यथा—"ससैन्यैश्चान्वगाद्रामं दर्शितानाश्रमालयैः" । ससैन्यो भरतः राममन्वगाचेत्यर्थः । अत्र चकारो निश्चयार्थः । अन्ये तु—"निश्चित्य चानन्यनिवृत्तिवाच्यं त्यागेन पत्न्याः परिमार्ष्टुमैच्छत्" किञ्च वाच्यमपवादम् । अनन्यनिवृत्तिनिश्चयं कृत्वा पत्न्याः परित्यागेन परिहर्तुमैच्छदित्यर्थः । इत्यादौ निश्चयार्थ इति वदन्ति । तथा अन्वाचये समुच्चये इतरेतरयोगे । समाहारे च चकारः स्यात् । अन्वाचयो नाम एकस्य प्राधान्येन इतरस्यानुषङ्गेणोक्तिः । तत्र यथा—"ग्रामं गच्छ अजाञ्चानय" । अत्र ग्रामगमनमेव प्राधान्यम् । अजानयनन्त्वानुषङ्गिकम् । समुच्चयो नाम परस्परापेक्षारहितस्यानेकस्य एकस्मिन् कर्मादौ अन्वयः । तत्र यथा— "पिता पुत्रश्च ग्रामं गच्छति" अत्रैकस्मिन् गमने कर्मणि पितुरिव पुत्रस्यापि अन्वयः । तत्रान्वयश्च विशेष्यतया विशेषणतया च । क्रियासमुच्चयद्रव्यसमुच्चयतया वा द्विधा भवति।तत्राद्यम्— "चैत्रो गच्छति पचति च" इत्यादौ क्रियासमुच्चये । अन्त्यम्—"ईश्वरं गुरुञ्च भजस्व" इत्यादि द्रव्यसमुच्चये । इतरेतरयोगो नाम परस्परसापेक्षाणामेकस्मिन् कर्मादावन्वयः। तत्र च द्वन्द्वसमास एव । यथा—"पितापुत्रौ गच्छतः" अत्रोभयोरपि एकस्मिन् प्रत्येकरूपेण गमने परस्परसापेक्षतयैवान्वयः । अन्वाचयादयमेवास्य विशेषः । सापेक्षता च स्वघटितनामोत्तरवर्तिविभक्त्यन्वयित्वेन । समाहारो नाम मिलितानामन्वयः । परस्परापेक्षाणामुद्भूतावयवभेदकसमूहरूपो वा । तत्र यथा—"हस्तपादं वादयति" । अत्र हस्तादीनां मिलितानामेवान्वयः । इतरेतरयोगे तु प्रत्येकस्यैवान्वयः । अथवा तद्वर्तिपदसमुदायोपस्थाप्यतत्तत्पदार्थसंहतिरेव तत्र प्रधानम् । संहतेश्चैकत्वात् तत्रैकवचनता । व्यासवाक्ये च चकारेणोभयत्र इतरेतरयोगस्य समाहाररूपसंहतेश्च प्राधान्यं द्योत्यते । तद्वदविलम्बार्थे किञ्चार्थेऽपि चकारो दृश्यते । तत्राविलम्बार्थे यथा । "तेच प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः" । अत्र द्वौ चकारौ गमनप्रतिबोधयोरविलम्बार्थौ । तथा हि अव्याक्षेपो गमनस्याव्यासङ्गः । अविलम्ब इति यावत् । किञ्चार्थे यथा— "हेमपक्षप्रभाजालं गगने च वितन्वता" "पर्युपास्यन्त लक्ष्म्या च पद्मव्यजनहस्तया" एतयोः श्लोकपादयोश्चकारः किञ्चार्थश्च । "चान्वाचये समाहारेऽप्यन्यान्यार्थे समुच्चये । पक्षान्तरे तथा पादपूरणेऽप्यवधारणे" इति मेदिनी ॥ ४६५ ॥ विस्मये आश्चर्ये अद्भुते वा । प्रमोदे हर्षे । चकारात् विषादे शोके दुःखे पीडायां च **ह्रीकारः ।** तेषु विस्मये यथा—"ह्री चित्रम्" चित्रमाश्चर्यमित्यर्थः । प्रमोदे यथा—"ह्री पुत्रजन्म पितुः" पुत्रस्योत्पत्ति-

**हुं वितर्के चानुमतौ वार्त्तायामरुचौ किल।**
**प्रातर्दिने च पूर्वत्रेऽत्यर्थे पूर्वेद्युरिष्यते ॥ ४६७ ॥**

## इति नानार्थवर्गः ३.

जैनकस्य प्रमोद इत्यर्थः । दुःखे यथा—"ही कान्तारगमनम्" । कान्तारमार्गे गमनं दुःखमित्यर्थः । हेतौ यथा—"धनप्राप्तेर्हीं" धनलाभस्य हेतोरित्यर्थः । "ही दुःखे हेतावाख्यातो विषादे विस्मयेऽपि च" इति मेदिनी ॥ एष्वर्थेषु हाकारोऽपि दृश्यते । यथा "हा धिग्दैवकृतं स एव मधुपः कां कां दशां नागतः" । अत्र हाकारः विस्मये । प्रमोदे यथा—"हा कान्त मैवं वद मेनुरागम्" । अत्र हाकारः हर्षे । विषादे यथा—"हा तातेति क्रन्दितमाकर्ण्य निषण्णः" "हा हन्त हन्त नलिनीं गज उज्जहार" "हा प्रियङ्कर ! हा पुत्र! क्व नु पश्यामि ते मुखम्" इत्यादौ हाकारः खेदे । शोके यथा—"हा रमणीयो गतः कालः" "हा राम ! वनं गतोऽसि । अत्र हाकारः शोके । पीडायां यथा—"हा हतोऽस्मि" । अत्र हाकारः पीडायाम् । कुत्सितार्थेऽपि हाकारो दृश्यते । यथा—"हा वृषल त्वमेवं मा भाषसि" । वृषल ! त्वम् एवंरूपं कुत्सितवचनं न कथयेत्यर्थः । तथा खेदसूचके हाहाशब्दः हहाशब्दश्च स्यात् । यथा—"तदा जनसमूहस्य हाहाकारो महानभूत्" "वैदेही तु कथं भविष्यति हहा हा देवि ! धीरा भव" इत्यादि । "हा विषादे च शोके च कुत्सादुःखार्थयोरपि" इति मेदिनी ॥ प्रणवः ओङ्कारः वेदादौ पाठ्यः शब्दभेदः । अथः आरम्भः तयोः । तथा अङ्गीकारे मङ्गले शुभे ज्ञेये ब्रह्मणि च । सादृश्ये इत्थम्प्रकारे अवधारणे स्वीकारे प्रश्ने च । **ओमेवङ्कारौ** स्याताम् । उदाहरणानि यथाक्रमेणैव स्युः । अङ्गीकारे यथा—"ओमित्युक्तवतोऽथ शार्ङ्गिणः" इति । मङ्गले यथा—"ओं नमो रत्नत्रयाय" । शुभे यथा—"ओं भगवते त्रिलोकीनाथाय" । ज्ञेये यथा—ओं नमः शिवाय" । अपरे त्वत्र ओङ्कारो मङ्गलार्थवाची । ततस्तेन मङ्गलं सूचितमिति पठन्ति । ब्रह्मणि यथा—"ओं तत्सत्" इति च । सादृश्ये यथा—"एवम्भूतः" । इत्थम्प्रकारे यथा—"एवं मयाश्रुतम्" "एवं यदाह भगवान्" । अवधारणे यथा—"एवमेवम्" । स्वीकारे यथा—"एवं कुर्मो वयम्" । प्रश्ने यथा—"एवं त्वं करोषि । "ओमित्यनुमतौ प्रोक्तः प्रणवे चाप्युपक्रमे" इति च । "एवम्प्रकारोपमयोरङ्गीकारेऽवधारणे" इति च विश्वः ॥ युक्तार्थे अधुनार्थे च । **साम्प्रतम्** । तद्विदः निरुक्तिवेदिनः । विदः जानन्ति । तत्र युक्तार्थे यथा—"विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्" । विषद्रुमः अपि आदरेण संवर्द्धयित्वा आत्मना छेत्तुं न युक्तमित्यर्थः । तथा "प्रयोक्तुं साम साम्प्रतम्" । अधुनार्थे यथा—"क्रमशो वच्मि साम्प्रतम्" । तथा-तत्रास्ते साम्प्रतं मुनिः" इति च । "साम्प्रतं चाधुनार्थे स्यादुचितार्थे च दृश्यते" इति मेदिनी ॥ ४६६ ॥ वितर्के अनुमतौ च । तथा प्रश्ने क्रोधे भये निन्दायाम् अवज्ञायाञ्च । **हुङ्कारः** स्यात् । वितर्के यथा—"हुं जलं मृगतृष्णा हुं स्याच्चेत् किं हुं प्रपद्यते" । अनुमतौ यथा—"हुं त्वं गच्छ गृहं पुत्र !" । "हुं बाले । इमं कुरु" । प्रश्ने

**आनन्देऽस्तु शुभं दिष्ट्या कर्टरे कैटराद्भुतं ।**
**भूर्भुवः स्वस्त्रिभुवने मनागर्थे दरं स्मृतम् ॥ १ ॥**

यथा–"हुं देवदत्तोऽयम्"।क्रोधे यथा–"हुं हु नाहर चेटिके" भये यथा–"हुं राक्षस आगत निन्दायां यथा–"हुं पुत्र मैवं कुरु" । अवज्ञायां यथा–"हुं साधवोऽप्येवं न कुर्वन्ति" इति हुं वितर्के परिप्रश्ने हुं रुषोक्त्यनुनीतिषु" इति विश्वः । "हुं वितर्के परिप्रश्ने हुं लज्जायां नि रणे" इति हैमः । वार्तायाम् । अरुचौ च । तथा अनुशयार्थे । निश्चये । सम्भाव्ये सम्भ नीये, प्रसिद्धप्रमाणद्योतके वा । सत्ये हेतौ अलीके तिरस्कारे अनुनये च ॥ तथा ऐतिह्ये ई समाप्ते । **किल** शब्दः । तत्र वार्तायां यथा–"जघान कंसं किल वासुदेवः" "त्वं कि नुचितपूर्वभक्षणः" । अरुचौ यथा । "यूयं किल मा भणत माणवाः" । अनुशयार्थे यथ "समाधिनीतेन किलोपनीतः" । निश्चये यथा–"न किलानुययुस्तस्य" । सम्भाव्ये यथ "गुरून् किलातिशेते शिष्यः" "समदश्या किल स्वयम्"।सत्ये यथा–"पूतात्मनामत्र किला षेकात्" इति । हेतौ यथा–तत्किल एवमाहुः" । अलीके यथा । " प्रसह्य कि किल तां चकर्ष" । तिरस्कारे यथा–"जहार शक्रः किल गूढविग्रहः । अनुनये यथा । "त्व क्किल त्वं त्रिदिवादवातरः" इति । ऐतिह्यः पारम्पर्योपदेशः । तत्र यथा–"विनीतनागः कि सूत्रकारैः" । ईषदसमाप्ते यथा–"ब्राह्मे मुहूर्ते किल तस्य देवी" । किलशब्दस्तु वार्तायां सम्भ वनानुनयार्थयोः" इति विश्वः । "किल सम्भाव्यवार्तयोः । हेतुरुच्योरलीके च" इति हैमः ॥ प्र प्रभातकाले । पूर्वत्र दिने पूर्वस्मिन् दिवसे । इत्यर्थे च । **पूर्वेद्युः** इष्यते । काम्यते इत्यर्थः । पण्डि रित्यन्वयः । क्वचित्तु "पूर्वेद्युः" इति पाठः । "पूर्वेद्युरिष्यते प्रातः पूर्वेद्युः पूर्ववासरे" इति रुद्र "पूर्वेद्युः प्रातःकाले स्यात् तथैव धर्मवासरे" इति मेदिनी।"पूर्वेद्युरिष्यते प्रातः पूर्वेद्युःपूर्ववास इति विश्वः । चकारात् उत्तरेद्युः । अपरेद्युः । परेद्युः । अधरेद्युः । अन्येद्युः । अन्यतरेद्युः । इ रेद्युः । उभयद्युः । उभयेद्युः । तथा परेद्यव्यआदीनां ग्रहणञ्च । उदाहरणानि क्रमेणैव स्युः। यथा–पू स्मिन् दिवसे पूर्वेद्युः । "पूर्वेद्युरागतः"। प्रातःकाले आगत इत्यर्थः । उत्तरस्मिन् दिवसे उत्तरेद्युः "उत्तरेद्युर्विवाहः परिकीर्त्तितः" । एष्यद्दिवसे श्वो वा विवाहः कथित इत्यर्थः । अपरस्मिन् दिवसे अप रेद्युः । "अथापरेद्युर्विहितस्वकृत्ये" । "आगता न परेद्युस्तान्" । "अथापरेद्युः कश्चित् द्विजः" परस्मिन् दिवसे परेद्युः । "परेद्युः प्रातरेव" । अधरस्मिन् दिवसे अधरेद्युः "अधरेद्युः प्रस सा" । अन्यस्मिन् दिवसे अन्येद्युः । "अन्येद्युरात्मानुचरस्य भावम्"। "अथान्येद्युर्नरपतिः" अन्येद्युर्विज्ञातवृत्तान्तेन"। अन्यतरस्मिन् दिवसे अन्यतरेद्युः ; आरोप्यान्तरेद्युः स्वम् । अन्यत पितरं द्रक्ष्यसि" । इतरस्मिन् दिवसे इतरेद्युः। "कष्टदिनादितरेद्युः प्रियो द्रष्टव्यः" । उभयो सयोः उभयद्युः उभयेद्युर्वा । "उभयद्युरुपोषणम्" परस्मिन् दिवसे परेद्यवि । "मित्रं द्रक्ष्य द्यवि" "परेद्यवि प्रपञ्चबुद्धिः समागतः" इत्यादि॥४६७॥ इति नानार्थवर्गः समाप्तः॥३॥ अ **शुभं दिष्ट्या** इति त्रयम् आनन्दे। यथा–"साधयाम्यहमविघ्नमस्तु ते"तव अविघ्नं निरुपद्र

**आमाङमम्युपगमे नवरं केवलार्थकम्।**
**प्रातरर्थेऽनपयति क्षणमात्रे क्षणंक्षणम्॥ २॥**

अस्त्वित्यर्थः। अमरकोषे तु असूयापूर्वकस्वीकारे च। यथा—"तथा विन्नस्तानदशेषमस्तु नः"। "शुभं भूयान्महीपतेः" राज्ञः कल्याणं कुशलं वा भूयादित्यर्थः। "दिष्ट्या ते दर्शनं कान्ते"। हे कान्ते! तव दर्शनं सन्तोष इत्यर्थः। "दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान्" "अनेन सम्बन्धमुपेत्य दिष्ट्या" इति॥ **कटरे कटरा** इति निपातद्वयम् अद्भुते च स्यात्। क्वचित् कटवे कटवा इति कदरे कदरा इति च पाठाः। तयोश्च उदाहरणानि अप्रकटानि॥ **भूः भुवः स्वः** इति त्रयं भुवने जगति स्यादित्यन्वयः। केचित् त्रिभुवने इति पठन्ति। उदाहरणानि क्रमेण। यथा—"निष्प्रभश्च रिपुरास भूभृताम्"। "न परं भूपतिमाश्रयामहे" इति। अत्र भूशब्दः जगद्वाची। "भक्तिर्भुवश्चन्दनकल्पितेव"। "भर्त्ता भुवो भानुनिभः प्रभावैः" "भावितात्मा भुवोभर्त्तुरथैनं प्रत्यबोधयत्" इति अत्र भुवः शब्दोऽपि जगद्वाची। "स्वर्गतस्य क्रिया कार्या पुत्रैः परमभक्तितः" इति। अत्र स्वः शब्दः परलोकवाची॥ **दर** मनागर्थे अल्पार्थे स्मृतम् अभिमतमित्यर्थः। अल्पार्थे यथा—"दरादराभ्यां दरकम्पिता" इति। "दरहसितलीलाञ्छितमुखः"। "तनुस्पर्शादस्या दरमुकुलिते हन्त नयने" दरमुकुलिते ईषन्मुकुलमात्रं प्राप्नुत इत्यर्थः। "दराव्ययं मनागर्थे" इति मेदिनी॥ १॥ **आम्। आङ्। अम्।** इति त्रयञ्च। अभ्युपगमे अङ्गीकारे। समीपगतौ च। क्वचित् आमोमुमभ्युगपमे इति पाठः। क्रमेणोदाहरणानि। यथा—"आं कुर्मः सम्प्रति वयम्" "आ एवं किल तत्" "आ एवं मन्यसे" इति। तथा आङ्शब्दः ईषदर्थे अभिव्याप्तौ सीमार्थे अभिविधौ क्रियायोगे च वर्त्तते। तत्र ईषदर्थे यथा। "आ पिङ्गलः" ईषत्पिङ्गलमित्यर्थः। अभिव्याप्तौ यथा "आसंसारं न दीप्यते" सीमार्थे यथा "आसमुद्रं राजदण्डः"। अभिविधौ यथा। आजन्मशुद्धानाम्"। जन्म आरभ्य निषेकादिसर्वसंस्कारसम्पन्नानामित्यर्थः। आफलोदयकर्मणाम्। आफलसिद्धेः प्रारब्धकर्मान्तगानामित्यर्थः। "आसमुद्रक्षितीशानाम्"। सार्वभौमानामित्यर्थः। "आनाकरथवर्त्मनाम्"। इन्द्रसहचारिणामित्यर्थः। अत्र सर्वत्र आङोऽभिविध्यर्थत्वं द्रष्टव्यम्। अथवा मर्यादार्थत्वे जन्मादिषु शुध्यभावप्रसङ्गात् क्रियायोगे यथा- आहरति। आक्रमतीत्यादि। विसर्गयुक्तस्तु आनिपातः पीडायाम्। कोपे च वर्त्तते। पीडायां यथा। "आः शीतम्"। कोपे यथा। "आः पाप! किं विकत्थसे" "ऊ गच्छसि वहिर्धव"। ह्रस्वपाठे उमित्यपि। क्वचित् अमिति च दृश्यते। "रुषोक्तावुम्। उं प्रश्ने" इति पाठान्तरम्। हुं प्रश्ने इत्यपि पाठः। "आम् ज्ञाननिश्चयस्मृतः" इति। "प्रश्नेऽपि स्यादुम् रुषोक्तौ" इति। "आङ् सीमायामभिव्याप्तौ क्रियायोगेषदर्थयोः" इति मेदिनी। "आस्मरणेऽपाकरणे कोपसन्तापयोरपि" इति कोषान्तरम्॥ **नवरम्।** इत्येकं केवलार्थकं निश्चितार्थम्। तत्राप्युदाहरणमप्रकटम्। **अनपयति।** इत्येकं प्रातरथ प्रातःकालाथ। तत्राप्युदाहरणं न दृष्टम्। तानि सद्भिरूहनीयानि। **क्षणंक्षणम्।** इत्येकं केचित्तु

क्षेमे पुण्ये च स्वस्ति स्यादुच्चैरर्थेऽट्ट कीर्त्तितम् ।
वारंवारं शश्वदर्थे वारं वारेण चेष्यते ॥ ३ ॥
उताहो यदिवा यद्वा किं वा नेति समा इमे ।
किन्त्वर्थेऽपितु यद्यर्थे सचेत्प्रात्कादिवाचकम् ॥ ४ ॥

क्षणक्षणमिति च । क्षणमात्रे दशपलपरिमिते काले । निमेषक्रियाचतुर्थभागे काले च । "स्व बिलक्ष्यमुखैर्देवैर्वीक्ष्यमाणः क्षणंक्षणम्" "क्षणंक्षणं साधु समेधमानः" । क्षणंक्षणमित्यत्र प्रतिक्षणमित्यर्थः ॥ २ ॥ **स्वस्ति** इत्येकं क्षेमे निरुपद्रवे । पुण्ये च स्यात् । क्वचित् स्वस्तिना इति पाठः । तत्र क्षेमे यथा—"स्वस्ति प्रजाभ्यः सततम्" स्वस्ति राज्ञे च मन्त्रिणे" इति । पुण्ये यथा—"स्वस्तिमान् स्वर्गमश्नुते" । तथा मङ्गले आशंसायाञ्च । मङ्गले यथा—"स्वस्ति श्रीभोजराजस्त्रिभुवनविजयी धार्मिकः सत्यवादी" आशंसा अप्राप्तस्य प्राप्तीच्छा, आशीर्वादो वा । तत्र यथा । "स्वस्ति ते भूयान्महीपते" इति "स्वस्ति स्यान्मङ्गले पुण्येऽप्याशंसायामपि क्वचित्" इति मेदिनी ॥ **अट्ट** इत्येकम् उच्चैरर्थे अत्युच्चतरे । कीर्तितं कथितम् । यथा—"स्फुटमट्टहासमिव सौधपङ्क्तयः । एवमट्टालिका इति । **वारंवारं वारं वारेण** इति निपातत्रयं शश्वदर्थे नैरन्तर्यार्थे । पुनःपुनरित्यर्थे च । इष्यते काम्यते । शाब्दिकैरिति अनुसन्धेयः । शश्वदर्थे यथा—"वारंवारं शशिन्यपगते" "वारं दत्त्वा दिवं ययौ" । "वारेणासौ जगति विलसत् कीर्तिपीयूषसिन्धुः" इति ॥ ३ ॥ **उताहो यदिवा यद्वा किं वा न** इति षडिमे निपाताः । समाः विकल्पार्थे सदृशा इत्यर्थः । तेषां क्रमेणोदाहरणानि । उताहो शब्दस्य यथा उताहो ब्रह्म चोच्यते" "उताहो घटादिवत् स्वत उत्पद्यन्ताम्" इति । तथा उतशब्दोऽपि विकल्पे । यथा—"स्वविकल्पसम्भूता नरकाः उत स्वभावसम्भूताः" । "एको धर्मः सत्त्वस्थितये यदुत चत्वार आहाराः" । "एतद्धि भिक्षवः परमं सत्यं यदुताऽमोघधर्मो निर्वाणः" । केचित्तु उतशब्दः अवधारणेऽपि भवतीति पठन्ति । यदिवा शब्दो यथा—"भये वा यदिवा हर्षे सम्प्राप्ते यो विमर्शयेत्" । "स गन्ता संस्तावन् न गतीः प्राप्नोति यदिवा न करोति" । "यदि लक्ष्यं यदिवा लक्षणम्" । "पिता वा यदिवा भ्राता पुत्रो वा यदिवा सुहृत्" । "सन्धाय युवराजेन यदिवा मुख्यमन्त्रिणा" इति ॥ यद्वाशब्दो यथा—"यद्वा गङ्गायां घोष इतिवत्" । यद्वा समाहारद्वन्द्वः" । "यद्वा मीयतेऽनेनेति मानम्" इति । अयं यद्वाशब्दो शब्दकौस्तुभतत्त्वबोधिनीकुमारसम्भवटीकासु च नूतनकाव्यादिषु च मया दृष्टः । महाकाव्यादिषु न दृष्टः । वराहमिहिरकृतायां बृहत्संहितायामपि दृष्टः । नूतनकाव्यादिषु प्रायो यद्वा तद्वा इति एतौ द्वौ निपातौ दृष्टौ । केचित्त्वेतौ यत्तच्छब्दाभ्यां परं विकल्पार्थवाचिनो वाशब्दस्य प्रयोगौ इति विकल्पार्थवाचिनौ यद्वातद्वाशब्दौ इति च पठन्ति । यथा—"यद्वा तद्वा वदन्तश्चटुलखुरखरीपृष्ठमारोहयन्तः" इति "यद्वा तद्वा विषमपतितं साधु

**अस्त्याह कालसामान्ये तिङन्तप्रतिरूपकम्।**
**सज्जं सहार्थे नेत्याह निषेधे यदि शेषगीः॥ ५॥**

"बिभर्ति किं परिम्लानरक्तोत्पलवनश्रियम्"। तत्प्रभावोपमादाय किं स्वसत्यं वदाम्यहम्"। गर्भस्थितमपत्यं यत् किं रूपं तद्भविष्यति"। किमपि काम्यगिरा परपुष्टया"। "किमिव न शक्तिपरं ससाध्वसानाम्"। "किमपि रसेन रसान्तरं भवन्ति"। किमपीत्यनिर्वाच्यम्। तच्चेह किलकिञ्चिताख्यं विवक्षितमपरैः"। तथा किन्तर्हीति अन्यपदसंयुक्तनिपातोऽपि दृश्यते। यथा। "किन्तर्हि अस्मिन् सतीदं भवति"। "किन्तर्हि स्वप्रसिद्धनाऽपि"। तथा किंशब्दो सन्देहार्थे च दृश्यते। यथा—"किमलम्बताम्बरविलग्नमधः। किमवधतोर्ध्वमवनीतलतः"। वक्तव्यार्थे किञ्चार्थे च किमुकिमुतशब्दौ स्याताम्। "लीलाभिः किमु सति कारणे रमण्यः"। "किमु चोदिताः प्रियहितार्थकृतः"। "चिरमपि ताः किमुत प्रयासभाजः"। "किं वितर्के परिप्रश्ने क्षेपनिन्दाप्रकारयोः" इति विश्वः। वा शब्दो यथा—"जयो भवति पराजयो वा"। "शिवं वा यदि वा विष्णुम्"। "प्रविशेन्मुखमाहेयं दुस्तरं वा महार्णवम्"। "एकं हन्यान्न वा हन्यात्"। "दिवा वा यदि वा रात्रौ"इति। "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चय" इति विश्वः। नशब्दो यथा। "नच सर्वमस्मि न वा नास्ति पुनः"। "कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः"। अत्र नकारो विकल्पार्थे स्यात्। न निषेधार्थे **अपितु** शब्दः किन्त्वर्थे किञ्चशब्दार्थे। स्यादित्यन्वयः। यथा। "अपितु धर्मा एव शून्याः"। "अपितु धर्मा एवानिमित्ताः"। "तत् किं मन्यसे काश्यप! अपितु स पुरुषः"। केवलं तु विरहितः अपिशब्दः प्रश्ने कच्चिदर्थे च दृश्यते। प्रश्ने यथा—"अपि क्रियार्थं सुलभं समित्कुशम्"। "अपि स्वशक्त्या तपसि प्रवर्तसे"। अत्र देहमपीडयित्वा तपश्चरसि कच्चिदित्यर्थः॥ **सचेत्** शब्दो यद्यर्थे पक्षान्तरार्थे। प्रोक्तः कथित इत्यर्थः। यथा—"सचेत्त्ते कल्पजानीयः यथा जानाति नायकः"। "सचेत् कुलपुत्र! निर्वाणादप्यधिरूढो नान्यो धर्मोऽभविष्यत्"। अत्र सचेत् शब्दः चेत्यदिशब्दवत पक्षान्तरार्थद्योतकः॥ **प्राक्** इति अव्ययमादिवाचकम्। यथा—"धर्मः प्रागेव चिन्त्यः"। प्रपेदिरे प्राक्तनजन्मविद्याः" इति। "प्राक् पूर्वस्मिन्नवान्तरे। अग्रे प्रभातेऽतीते च देशे दिक्कालयोरपि" इति मेदिनी॥ ४॥ कालसामान्ये कालभूते सादृश्यप्रयोजकधर्मे च। **अस्ति आह** इति द्वौ निपातौ स्याताम्। तौ चात्र तिङन्तप्रतिरूपकं क्रियापदस्वरूपं भजतः। काले यथा—"अस्ति नास्ति न जानाति"। "अस्ति न स्तुतिवचोऽनृतन्तव"। पूर्वमानन्दार्थे अस्त्विति निपातो दर्शितः। तथा अनुज्ञायाम। अङ्गीकारे च। अस्त्वित्यव्ययं निपातोऽपि स्यादेव। यथा—"अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम्"। "अस्तु नाप्यनुमानप्रवेशः"। "अस्त्वेवं पृथिव्याः स्वलक्षणम्"इति। आहनिपातः सामान्ये भवति। यथा—"अथाह वर्णी विदितो महेश्वरः"इति। सहार्थे सहशब्दस्यार्थे। **सज्जम्** इति निपातः स्यात्। यथा—"ओ सृष्टायैवाज्ञा नरपतिना सज्जम् एव कृत्वा तत्र सकुशलं राजानमुपेत्य इदमावहः"

**विभाषान्यतरस्यां वा विकल्पार्थाः प्रकीर्त्तिताः ।**
**ते इति स्यात्त्वयेत्यर्थे मयेत्यर्थे च मे इति ॥ ६ ॥**
**इत्यव्ययवर्गः ।**

इति । महावस्तु । क्वचित्सजुः "सजूः" इति । "सजुः कृत्यरतिं वसेत्" इति भट्टिः । **सार्ध** सहेत्यर्थः। तस्मिन् सहार्थे सह सार्द्धम् समम् साकमित्येषामपि प्रयोगाश्च दृश्यन्ते । यथा-'कल्पद्रुमैः सह विचित्रफलैर्विरेजुः' । "सह मेघेन तडित् प्रलीयते"। "यतिभिः सार्द्धमनग्निमग्निचित्" । "ततः पौरजनैः सार्द्धं सामात्यः पृथिवीपतिः" । "बकुलैरर्धचितां समं मया" । "रणेन कडुवान्त्रिदशैः समं पुनः" । "ताभ्यां शाकं चन्द्रमुखी चन्द्रशेखरमार्चयत्" इत्यादि । **निषेधे** निवृत्तौ, प्रतिषेधे वा । **न** इति निपातम् । आह उवाचेत्यर्थः । यथा । "न पादपोन्मूलन-शक्तिरंहः शिलोच्चये मूर्च्छति मारुतस्य" । "न खलु दूरगतोऽप्यतिवर्त्तते" । "न महता महताः क्वचनारयः" इत्यादि । तथा माशब्दोऽपि निषेधे वर्त्तते। यथा-"अनृतगिरं गुणगौरि मा कृथा माम्" । "द्रुतपदमिति मा वयस्य यासीः"। "अवितथा वितथा सखि ! मा गिरः" इत्यादि । **यदि** इति निपातः शेषगीः अवशेषवाक्यम् । पक्षान्तरञ्च भवति । यथा-"यदि सन्धित्सुरसौ सहामुना"। "यदि सन्धत्स्व पुरा न नश्यति"। "रेवां यदि प्रेक्षितुमस्ति कामः" । "लज्जा तिरश्चां यदि चेतसि स्यात्" "मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः"इत्यादि । **तथा**—चेत्शब्दोऽपि पक्षान्तरार्थे वर्त्तते । यथा । "अनेन चेदिच्छसि गृह्यमाणम्" । "न चेदिदं द्वन्द्वमयोजयिष्यत्" । "स चेत् स्वयं कर्मसु धर्मचारिणाम्" । "सा तृष्णा चेत्परित्यक्ता को दरिद्रः क ईश्वरः । तस्याश्चेत् प्रसरो दत्तो दास्यञ्च शिरसि स्थितम्" इत्यादि । अत्र **सर्वत्र** चेत्शब्देन पक्षान्तरार्थवाचित्वमेवावगम्यते ॥ ५ ॥ **विभाषा । अन्यतरस्याम् । वा** इति त्रयं विकल्पार्था इति प्रकीर्त्तिताः । निरुक्तिवेदिभिरित्यन्वयः । तेषां क्रमेणोदाहरणानि। **यथा**—"विभाषा समीपे" एवंरूपो नियमो वा स्यादित्यर्थः । "युष्मदस्मदोरन्यतरस्यां खञ्च" युष्मा-कमस्माकं वा अयं युष्मदीयः अस्मदीय इत्यर्थः । "समर्थानाम्प्रथमाद्वा" । समर्थानां मध्ये सूत्रे प्रथ-मोपात्तात्प्रत्ययो वेदितव्यः । स च वेत्यर्थः । एषु च सर्वेषु पाणिनीयसूत्रेषु विभाषा अन्यतरस्यां वेति त्रयो निपाताः विकल्पार्थवाचका एव स्युः। एते निपाताः भूयिष्ठं पाणिन्यादिसूत्रेष्वेव दृश्यन्ते नाऽन्यत्र । तथा । "अन्यो न प्राप्स्यते प्राप्तो न द्रक्षत्यदहन्पुनः । न निर्वास्यत्यनिर्वाणः स्था स्यति वा स्वलिङ्गवान्" इति माध्यमिकाः । तद्वृत्तिकारेणाऽपि अत्र वा शब्दः अवधारणे द्रष्टव्यो विक-ल्पार्थो वा स्वलिङ्गे वेत्युक्तः । नैवाग्निः स्थास्यति यदि वा नास्त्यन्यत्त्वमग्नेरिन्धनादि इति समुच्चये वा अन्यो न प्राप्स्यति न द्रक्ष्यति न च निर्वास्यति स्वलिङ्गावाश्च स्थास्यति । तस्मादयुक्तमि-न्धनादन्यत्त्वमग्नेरिति च दर्शितम् । अत एक एव वाशब्दः एकत्र अवधारणे विकल्पार्थे समु-च्चये च भवितव्य इति केषाञ्चिद्विदुषां मतम् । ततस्तदूहनीयं विचारणबुद्धिशालिभिः सद्भिः । अत्र द्रक्ष्यतीति पाठः क्वचित् धक्ष्यति पक्ष्यतीति विशेषतया दृश्यते । सोऽपि अपाठ एवेत्यव-

**लिङ्गादिसङ्ग्रहेऽनुक्तममरेणाऽभिदध्महे ।**
**स्त्रियामाजिर्दरज्जातिः पूरुभाद्राः समाः शरत् ।**
**सिकताद्या बहुत्वेऽपि विंशत्याद्यैकवाग्गपि ॥ १ ॥**

गन्तव्यः । ते इति निपातः त्वया इत्यर्थे युष्मच्छब्दस्य कर्तृविभक्त्यर्थे च । मे इति निपातो मया इत्यर्थे अस्मच्छब्दस्य कर्तृविभक्त्यर्थे च स्यात् । क्रमेणोदाहरणानि यथा—"विचित्रं ते कृतं तात । सतां वर्त्मनि वर्तिना" । "अर्चितास्ते महर्षयः" । अत्र ते इति त्वयेत्यर्थः । "विलव्य वाणी न कदापि मे श्रुता" । "विदितं तप्यमानञ्च तेन मे भुवनत्रयम्" । अत्र मे इति मया इत्यर्थः । अत्र सर्वत्र कर्तरि षष्ठी स्यात् । तथा युष्मदस्मदोः षष्ठीचतुर्थ्येकवचनयोस्ते मे इति द्वे रूपे स्याताम् । तत्र सम्बन्धार्थे यथा—"योगप्रभावो नच लक्ष्यते ते" । अत्र तवेत्यर्थः । "त्वयि मे भावनिवन्धनारतिम्" मे इति ममेत्यर्थः । सम्प्रदानार्थे यथा । "प्रीतोस्मि ते सौम्य चिराय जीव" । अत्र ते इति तुभ्यमित्यर्थः । "ब्रूषे किमोमिति सखे ! कथयाशु तन्मे" । मे इति मह्यमित्यर्थः । सम्बन्धार्थवाचिनोस्तेमेशब्दयोरेकत्र प्रयोगोऽपि दृश्यते । यथा । "यामः सुन्दरि ! याहि पान्थ ! दयिते ! शोकं वृथा मा कृथा । शोकस्ते गमने कुतो ? मम ततो वाष्पं कथं मुञ्चसि । शीघ्रं न व्रजसीति ? मां गमयितुं कस्मादियं ते त्वरा ? । भूयानस्य सह त्वया जिगमिषोर्जीवस्य मे सम्भ्रमः" इति।इत्थं स्वरादीनां निपातानां भूरिप्रयोगा महाकाव्यादिषु दृश्यन्ते । तेषां विस्तरस्तु अमरकोषे च अमरविवेकाख्यायां तट्टीकायाञ्च तथा महाभाष्यसिद्धान्तकौमुद्यादिषु च अन्येषु मनोरमातत्त्वबोधिन्यादिषु च प्रायो दर्शितः । अतो नात्रान्यद्वक्तव्यमस्ति । ततस्तत्रानुक्तानां केषाञ्चिन्निपातानां विशेषो दिङ्मात्रमिह दर्शितः । अथाप्युक्तम् । "उपसर्गा निपाताश्च प्रत्ययाश्चापि ते त्रयः । नैके नैकार्थविषया इति नैरुक्तिका विदुः" इति ॥ ६ ॥ इति अव्ययवर्गः समाप्तः ॥ ४ ॥ अथ लिङ्गादिसङ्ग्रहवर्गमाह ॥ अमरेण आचार्यामरसिंहेन । स्वकृते अमरकोषाभिधे अभिधानशास्त्रे लिङ्गादिसङ्ग्रहे तन्नामके काण्डे । अनुक्तं प्रकृतिप्रत्ययादिविभागपरिदर्शनेन यानि नामानि अनुक्तानि अकथितानि । तानि च नामानि। अत्र त्रिकाण्डशेषकोषे । अभिदध्महे कथयाम इति । अत्र अनुक्तमिति जात्योपेक्षावशादेकवचनमङ्गीकृतम् । अयं त्रिकाण्डशेषस्तु प्रायेण पूर्वमनुक्तैरेव शब्दजातैः सङ्गृह्यत इत्यर्थः । अस्मिंस्तु सङ्ग्रहवर्गे लिङ्गमपि समुन्नेयम् । तत् कथमित्याकांक्षायां सति यथा सङ्कीर्णवर्गे प्रकृतिप्रत्ययादिभिर्लिङ्गमुन्नयेत् तथात्राप्युन्नयेदिति भावः । यद्यपि तेषु तेषु वर्गेषु तेषां तेषां नाम्नां कथनावसर एव पूर्वं लिङ्गमुक्तं ननु । तथाऽप्यत्र अप्राप्तानां प्रापणार्थं लिङ्गानुशासनमवश्यं कार्यम् । तद्धि प्राधान्यमेव प्रयोजनम् । अतोऽत्रातिविस्तरं तत्सर्वं दर्शयितव्यम् । अथापि प्रागुक्तानां सविशेषाणां पुनः कथनात् पुनरुक्तिदोषप्रसङ्गाद्ग्रन्थविस्तरभयाच्च तदप्यत्र पुनर्नाभिधीयते । ततस्तदभिज्ञातुमिच्छद्भिर्विद्यार्थिभिः अमरविवेके श्रीमता महेश्वरशर्मणा याथार्थ्यतः सोदाहरणक्रमेण प्रपञ्चितम् । तत्तत्रोक्तानुसारेणैवावगन्तव्यम् । अत्रायमाचार्यः पुरुषोत्तमदेवः स्त्रीलिङ्गानुशासनप्रारम्भे स्त्रिया-

**पुंस्त्वे हाहा हूहू-ग्रन्थिः पाणिः कलिर्द्दतिर्मौलि ।**
**अञ्जलिरङ्घ्रिः कुक्षिर्लीवकलोकोत्तरासङ्गाः ॥ २ ॥**

माजिरित्यादिमाह । अत्र स्त्रियामित्ययमधिकारः शरच्छब्दपर्यन्तं ज्ञेयः । आज्यादिशरत्पर्यन्तानां यदभिधानं तत् स्त्रियां स्यात् । यथा—**आजिः** रणभूमिः । "अथाजिः स्त्री समभूमौ च संग्रामे इति मेदिनी । "समे क्ष्मांशे रणेऽप्याजिः" इत्यमरः ॥ **दरद्** प्रपातः । "दरद् स्त्रियां प्रपातेऽपि भय-पर्वतयोरपि" इति मेदिनी । दरत् म्लेच्छजातिर्वा । **जातिः** जन्म । "जातिः स्त्री गोत्रजन्म-नोः" इति मेदिनी । पूः पुरी । क्वचित् पूः पुरौ इति रेफान्तः पूः शब्दः । "पूः स्त्री पुरी नगर्यौ वा" इत्यमरात् । **उरूः** महती । "विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् । वड्रोरु विपुलम्" इत्यमरः । **भाः** दीप्तिः । "भाःप्रभावे मयूखे स्त्री" इति मेदिनी । **द्वाः** गृहादि-निर्गमनस्थानम् । "स्त्री द्वार्द्वारं प्रतीहार" इत्यमरः । कचित्तु पुरुद्वाषाः इति पाठः । **समाः** वत्सरः । अमरकृताप्यस्य नित्यबहुवचनान्तता अङ्गीकृता । पाणिनिना तु—"समां समां विजायते" इति सूत्रे एकवचनान्तता निर्दिष्टा । समां समाम् इत्यत्र कालाधारे द्वितीया । प्रतिवर्षं विजातायां गवीत्यर्थः । "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः" इत्यमरः । "समा संवत्सरे स्त्रियाम्" इति मेदिनी ॥ **शरत्** संवत्सरः । आश्विनकार्त्तिकमासात्मकः ऋतुर्वा । शरदिति तवर्गतृतीयान्तश्च । "शरद् स्त्री वत्सरेऽप्यृतौ" इति मेदिनी ॥ **सिकताः** वालुकाः । "सिकताः स्युर्वालुकापि" इत्यमरः । "सिकता स्त्री सिकतिले वालुकायान्तु भूमनि" इति मेदिनी । आदिपदात् आपः जलानि । लाजाः भर्जितव्रीहयः । पुँल्लिङ्गत्वम-प्यत्र । अक्षताः क्षतरहिताः । "अक्षता यवा" इति पुराणम् । तथा टावंतो दाराशब्दोऽपि । "क्रोडा हारा तथा दारा त्रय एते यथाक्रमम् । क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनी-षिभिः" इति । हेमचन्द्रात् एकैकस्याभिधानं स्त्रीबहुत्वविधानार्थम् । बहुत्वेऽपि स्त्रीलिङ्ग-बहुवचनञ्च स्यात् । "लाजः स्यादार्द्रतण्डुले नपुंसकमुशीरेऽथ स्त्रियां पुं भूम्नि वाक्षताः" इति मेदिनी । अक्षतं न द्वयोः पण्डे लाजेषु त्रिष्वहिंसिते । यवेऽपि क्वचित्" इति मेदिनी ॥ **विंशतिः** द्विदशकसङ्ख्या । आदिपदात् । एकविंशतिः द्वाविंशतिः । तथा त्रिंशत् त्रिदश-सङ्ख्या । चत्वारिंशत् चतुर्दशसङ्ख्या । पञ्चाशत् पञ्चदशसङ्ख्या । षष्टि षड्दशसङ्ख्या । सप्तति: सप्तदशसङ्ख्या । अशीतिः अष्टादशसङ्ख्या । नवति नवदशसङ्ख्या च । बहुत्वा-भिधानं स्त्र्येकत्वविधानार्थम् । **एकवाग**पि स्त्रीलिङ्गैकवचनम्भवेदित्यर्थः ॥ १ ॥ इति स्त्रीलिङ्ग-सङ्ग्रहः समाप्तः ॥ अथ पुँल्लिङ्गसङ्ग्रहमाह ॥ पुंस्त्वे पुँल्लिङ्गे । स्यादित्यन्वयः । अयन्तु पुँल्लिङ्गपर्यन्तमधिकारः । **हाहाः** गन्धर्वभेदः । देवानां गायकः ॥ **हूहू**र्गन्धर्वविशेष एव । "हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम्" इत्यमरः । "हाहाः सान्तोऽपि गन्धर्वो हाहसि प्रोक्त" इति रत्नकोषः । अत्र हहा इत्यादि ह्रस्वः हुहुः इत्युभयह्रस्वश्च दृश्यते । "गीत-माधुर्य्यसम्पन्नौ विख्यातौ च हहाहुहू" इति व्यासोक्तेः ॥ **ग्रन्थिः** वंशादिसन्धौ ख्यातः कौटिल्यः । "ग्रन्थग्रन्थिरिह क्वचित्" इति नैषधम् ॥ **पाणिः** करः । "पञ्चशाखः

**अवटव्रातसङ्केतपोतगर्तगरुच्छदाः ।**
**श्लेष्मोष्मपापयक्ष्माश्मात्मानो वातायनः स्तनः ॥ ३ ॥**
**फेणाभिजनकलापनिकाया हारोच्चारोपलकल्लोलाः ।**
**फालचषालकीलनलतण्डुलशैवलखलविभवप्रसवाश्च ॥ ४ ॥**

शयः पाणिः'' इत्यमरः ॥ **कलिः** बिभीतकवृक्षः । कलिः कलहश्च । ''कलिः स्त्री कलिकायां ना सराजिकलहे युगे'' इति मेदिनी । शूरादिकलहे इति पाठान्तरम् ॥ **दृतिः** चर्मनिर्मितोदकपात्रं चर्मपुटको वा । ''दृतिश्चर्मपुटे ना'' इति मेदिनी ॥ **मौलिः** चूडा किरीटो वा । ''मौलिः किरीटे धम्मिले चूडायामनपुंसकम् । नाऽशोकद्रौ स्त्रियां भूमौ'' इति तु मेदिनी ॥ **अञ्जलिः** संयुतकरपुटः। ''अञ्जलिस्तु पुमान् हस्तसम्पुटे कुडवेऽपि च'' इति मेदिनी ॥ **अङ्घ्रिः** चरणम् ॥ **कुक्षिः** उदरम् । **लावकः** पक्षिभेदः । क्वचित् मारक इति पाठः । **लोकोत्तरः** । लोकादुद्गतः । अत्युत्तमः । सर्वक्लेशापगत इत्यर्थः । **असङ्गः** सङ्गरहितः ॥ २ ॥ **अवटः** गर्त्तः कूपो वा । क्वचित् ''यवक'' इति पाठः । क्वचित्तु स्यान्मौनो इति पाठः । **व्रातः** समूहः । क्वचित् थात इति पाठः ॥ **सङ्केतः** मनोगतभावव्यञ्जनाय कृतः हस्तादिचालनरूपो व्यापारः । **पोतः** बालकः, नौकारूपं यानं वा । ''यानपात्रे शिशौ पोत'' इत्यमरः । ''पोतः शिशौ बहित्रे च गृहस्थाने च वाससि'' इति मेदिनी ॥ **गर्त्तः** भूमिच्छिद्रः, रोगभेदो वा । **गरुत्** खगानां नभोगतिहेतुपक्षः ॥ **छदः** पत्रम्, पक्षिण पक्षो वा । ''छदः पलाशे गरुति ग्रन्थिपर्णतमालयोः'' इति मेदिनी ॥ **श्लेष्मा** कफः । **उष्मा** निदाघः, ग्रीष्मऋतुश्च । ऊष्माशब्दोप्यत्र । **पापः** दुरदृष्टः, दुराचारश्च । **यक्ष्मा** रोगभेदः ॥ **अश्म** पाषाणः ॥ **आत्मा** स्वरूपः, देहः, चित्तञ्च । ''आत्मा पुंसि स्वभावे च प्रयत्नमवसोरपि'' इति मेदिनी । **वातायनः** गवाक्षः, अश्वाश्च ॥ **स्तनः** स्त्रीणामङ्गभेदः, कुचश्च ॥ ३ ॥ फेणः दुग्धजलादेरुपर्युपरिस्थो बुद्बुदाकारः पदार्थः । पृषोदरादित्वान्मतान्तरे णत्वम् । ''हंसश्रेण्यो नदीतीरे निनदैः सम्प्रतीविरे । यथा सारस्वता मन्त्रा अन्तरे फेणसङ्गताः'' इत्युक्तेः । हिमश्च । फेन इति दन्त्यनकारयुक्तोऽप्यत्र । **अभिजनः** कुलम् । जन्मभूमिश्च । ''अभिजनः कुले ख्यातो जन्मभूम्यां कुलध्वजे'' इति विश्वः । **कलापः** समूहः, मयूरपिच्छो वा । ''कलापः संहतौ बर्हे काञ्च्यां भूषणतूणयोः'' इति मेदिनी । **निकायः** समानधर्मप्राणिसमूहः, निवासश्च । ''निकायस्तु पुमान् लक्ष्ये सधर्मिप्राणिसंहतौ'' इति मेदिनी ॥ **आहारः** द्रव्यमात्रस्य गलाधःकरणरूपं भोजनम् । ''आहारः स्यादाहरणे भोजने च पुमानयम्'' इति मेदिनी ॥ **उच्चारः** उच्चारणम् । विष्ठा च । ''उच्चारावस्करौ शमलं शकृत्'' इत्यमरः । उपलः प्रस्तरः । ''उपलः प्रस्तरे रत्ने शर्करायान्तु योषिति'' इति मेदिनी । **कल्लोलः** महातरङ्गः । ''कल्लोलः पुंसि हर्षे स्यादुल्लोलवैरिणोरपि'' इति मेदिनी ॥ **फालः** बलदेवः, महादेवश्च, जम्मीरबीजादिर्वा । ''फालः पुंसि महादेवे कालिन्दीभेदनेऽपि च'' इति मेदिनी ।

**आनापजननाडीभ्यो युगमङ्गं पदं व्रणम् ।**
**अनक्षे दुन्दुभिरथ बहुत्वेऽप्यसवो ग्रहाः ।**
**सक्तवो वल्कजालाजा दाराः प्राणा दशा इति ॥ ५ ॥**

फालः लाङ्गलस्याधःस्थितं काष्टम् । यस्याग्रलोहेन प्रबध्यते तदुपरिवर्ती लोहो वा "निर कुटकं फालः कृषको ( कुषको ) लाङ्गलं हलम्" इत्यमरः । **चषालः** यज्ञीयपशुबन्धन यूपमध्ये देयः वलयाकारः काष्ठमयो वा लौहमयो वा पदार्थश्च । **कीलः** शङ्कुः कफोणिः कीलः कफोणौ निर्घाते शङ्कौ ज्वाले तु कीलवत्" इति विश्वः ॥ **नलः** तृणभेदः नृपभेदश्च "नलः पोटगले राज्ञि पितृदेवे कपीश्वरे" इति मेदिनी॥**तण्डुलः** धान्यादिसारः निस्तुषःधान्यादि विडङ्गो वा । "तण्डुलः स्याद्विडङ्गे च धान्यादिनिकरे पुमान्" इति मेदिनी॥**शैवलः** पद्मकाष्ट जलजातः पदार्थविशेषश्च । "शैवलः पद्मकाष्ठे स्यात् शैवालेऽपि पुमानयम्" इति मेदिनी **खलः** क्रूरः, नीचः, अधमश्च । "खलं भूस्थानकल्केषु नीचक्रूराधमे त्रिषु" इति मेदिनी **विभवः** ऐश्वर्यः । धनं मोक्षश्च । षष्टिसंवत्सरमध्ये वत्सरविशेषः । "हृष्टाः पुष्टाः जनाः ः विभवेऽब्दे वरानने" इति ॥ **प्रसवः** गर्भमोचनम् । उत्पत्तिश्च । "उदश्चराचरं विश्वं प्रस स्तस्य गीयते" इति कुमारः । "प्रसवो गर्भमोचने । उत्पादे स्यादपत्येऽपि फले च कुसुमेऽ च" इति मेदिनी ॥ कॅचित्तु प्रभव इति पाठः ॥ ४ ॥ आनश्च अपश्च जनश्च नाडी चेति द्व तेभ्यः आनापजननाडीशब्देभ्यः परे युगम् । अङ्गं पदं व्रणम् इति इमे शब्दाः पुँल्लिङ्गे स्यु त्यर्थः ॥ यथा–**आनयुगः** नासिकापुटः । आन इति ख्यातस्य अन्तःस्थितस्य प्राणवायोः सिकयोच्छ्वासः । **अपाङ्गः** नेत्रप्रान्तः । अङ्गहीनश्च, तिलको वा । "अपाङ्गस्त्वङ्ग स्यान्नेत्रान्ते तिलकेऽपि च" इति मेदिनी ॥ **जनपदः** देशः । "भवेज्जनपदो जानपदो जनदेशयोः" इति विश्वमेदिन्यौ ॥ **नाडीव्रणः** यो व्रणः सदा गलति स तु नाडीव्रणः देहर शिरायुक्तो व्रणविशेषः । "नाडीव्रणः पुमान्" इत्यमरः । नालीव्रण इत्यपि पाठः । कॅचि अनोपजननाडीभ्य इति च पाठः ॥ अनक्षे चक्षुशून्ये चक्षुरादीन्द्रियशून्ये च । क्वचित् आन इति पाठः ॥ **दुन्दुभिः** । यथा प्राणिनां जायते हर्षो दुन्दुभौ वरवर्णिनि" इति । "दुन्दुभि पुमान् । वरुणे दैत्यभेर्योश्च स्त्र्यक्षबिन्दुत्रिकद्वये" इति मेदिनी । इमे शब्दा अपि पुँल्लिङ्गे स्युरि पूर्वेणान्वयः । अथ पुँल्लिङ्गैकवचनानन्तरं नियतपुंल्लिङ्गबहुवचनान्तशब्दानाह ॥ **असवः** पञ्च त्यो वायुभेदः । "पुंसि भूम्न्यसवः प्राणाः" इत्यमरः । **ग्रहाः** सूर्यादयो नवग्रहाः । त "सम्भाव्यते ग्रह" इति ज्योतिषम् । पूतनादयश्च । "ग्रहो निग्रहनिर्बन्धग्रहणेषु रणोद्यमे। सूर्या पूतनादौ च सैंहिकेयोपरागयोः" इति विश्वः ॥ **सक्तवः** भ्रष्टयवादिचूर्णाः । "मेषादौ सक्त देयाः" इति स्मृतिः ॥ **वल्कजाः** वृक्षत्वक्कृताः वस्त्रविशेषाः । क्वचित्तु वल्वजाः वल्क वल्कचाः इति च पाठाः दृश्यन्ते ॥ **लाजाः** भ्रष्टधान्यानि । "लाजः स्यादार्द्रतण्डुले । न सकमुषिरे च स्त्रियां पुंभूम्नि चाक्षते" इति मेदिनी ॥ **दाराः** पत्नी । सा हि पत्युः भ्रातृ भिनत्तीति लोकप्रसिद्धम् । पत्नी पाणिगृहिणी द्वितीया सहधर्मिणी भार्या जाया दाराः इ

**क्लीबे कलत्रविषबीजकुटुम्बरत्नतल्पोक्थकुङ्कुमप्रवीणतृणाक्षराणि ॥**
**शृङ्गाटपीठगृहभेषजपृष्ठकिण्वदैवाण्डभाण्डचिबुकोडुपसाहसानि ॥६॥**

सप्त परिणीतायाः स्त्रियाः । तासु दाराशब्दो नित्यं पुंसि बहुवचनान्तश्च ॥ प्राणाः पञ्चवृत्तयो देहस्थवायुभेदाः । इन्द्रियाणि च । "प्राणो ह्न्मारुते बोले काव्यजीवेऽनिले बले । पुँल्लिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चात्मसु" इति मेदिनी ॥ **दशाः** अवस्थाः, दीपवर्त्ती च । "अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् । परोपकारनिरता मणिदीपा इवोत्तमाः" इत्युद्भटः । "दशावस्थादीपवर्त्योर्वस्त्रान्ते भूम्नि योषिति" इति मेदिनी ॥ अनेकविधबाल्यादिरूपा दशा । वस्त्रान्तेऽपि दशा स्त्रियां बहुत्वे । "दशावर्ताववस्थायां वस्त्रान्ते स्युर्दशा अपि" इति । अत्र इतिशब्दो धर्ममाचरेदित्यादाविव परिसमाप्तौ । यथा—"इति स्वरूपे सान्निध्ये विवक्षानियमेऽपि च । हेतौ प्रकारप्रत्यक्षप्रकर्षेष्ववधारणे । एवमर्थे समाप्तौ स्यात्" इति हैमः ॥ इमे शब्दाः बहुत्वे पुँल्लिङ्गबहुवचने । स्युरित्यन्वयः । नत्विमे शब्दा एव पुंसि बहुवचनान्ताः । अन्ये जनपदवाचिनः शब्दा अपि बहुवचनान्तत्वेनैव निर्दिष्टाः । ग्रन्थविस्तरभिया नात्र ते निर्दिष्टाः ॥५॥ पुँल्लिङ्गसङ्ग्रहः समाप्तः ॥ अथ नपुंसकलिङ्गसङ्ग्रहमाह॥ **कलत्रं** नितम्बम्, भार्या च । "कलत्रं श्रोणिभार्ययोः" इति अमरमेदिन्यौ । "दुर्गस्थाने नृपादीनां कलत्रं श्रोणिभार्ययोः" इति रभसः ॥ **विषं** जलम् । पद्मकेशरं मृणालं गन्धरसः वत्सनाभश्च । "विषं जलेऽतिविषायाम्" इति मेदिनी ॥ **बीजं** धान्यादेः फलादि ॥ अङ्कुरं शुक्रम् । अव्यक्तगणितभेदः तत्त्वावधानं मन्त्रभेदश्च । "बीजमङ्कुरकारणे। हेतुतत्त्वावधानशुक्रे" इति मेदिनी॥ **कुटुम्बं** पोष्यवर्गः । बान्धवः सन्ततिः । द्वितीयगृहश्च । क्वचित् "कटस्व" इति पाठः । तत्र कटं नडादिरचितमासनम् । अतिशयः कालः । तृणञ्च । शानञ्च । "कटं श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशयं शरे । समये गजगण्डे च पिप्पल्यां तु कटी मता' "इति मेदिनी ॥ स्वयं धनम्, आत्मा च । "स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये धने स्त्रियाम्" इति मेदिनी ॥ "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वो स्त्रियां धने" इत्यमरः । **रत्नं** माणिक्यादिप्रस्तरम । स्वस्वजातिषु श्रेष्ठम् । हीरकञ्च । "रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्" इति मेदिनी ॥ **तल्पं** शय्या । अट्टालिका दाराश्च । "तल्पमट्टे कलत्रे च शयनीये च न द्वयोः" इति मेदिनी ॥ **उक्थं** नवविधात्मकसाम्नोऽवयवभेदः । महाव्रताख्यो यज्ञः । सामवेदस्याङ्गम् । प्राणाश्च । क्वचित् अक्तम्,उक्तमिति च पाठौ। तत्र अक्तं कृताञ्जनम्। परिमितं सङ्कुचञ्च । उक्तम् एकाक्षरपादकच्छन्दोभेदः। "उक्तमेकाक्षरश्छन्दसि" इति मेदिनी ॥ **कुङ्कुमं** काश्मीरदेशजं स्वनामाख्यातं गन्धद्रव्यम् । "सङ्कोचे मीनभेदे च बन्धे क्लीबन्तु कुङ्कुमम्" इति विश्वमेदिन्यौ ॥ "रक्तं नील्यादिरञ्जिते-कुङ्कुम"इति हैमः॥**प्रवीणं** निपुणम् । "प्रवीणो निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः" इत्यमरः। क्वचित् पुरीतप्रवीड इति च पाठौ । **तृणं** नडादि । खटश्च । "तृणमर्जुनम्" इत्यमरः । क्वचित् दग इति पाठः। **अक्षरं** नाशशून्यम् । मोक्षं ब्रह्म च। "अक्षरं स्यादपवर्गे परमब्रह्मवर्गयोः ।

**यकृत्कुहकसिध्मानि तीरं कशिपु जानु च ।**
**धामार्द्रसारमित्राण्यङ्गदलन्यायबन्धुषु ॥ ७ ॥**

गगने धर्मतपसोरम्बरे मूलकारणे'' इति हैमः ॥ शृङ्गाटः फलकण्टको जलवृक्षः । तत्फल **पीठं** व्रतोक्तमासनम् । आसनभेदश्च।''पीठमासनम्'' इत्यमरः । ''विष्टरः पीठमस्त्रियाम्'' चात्र । **गृहम्** इष्टकामृत्तिकादिरचितं गेहम् । कलत्रञ्च। न गृहं गृहमित्याहुर्गृहिणी गृहमुच्य इति स्मृतिः । ''गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि'' इति मेदिनी ॥ क्वचित् गुद पाठः । **भेषजम्** औषधम् । ''भेषजौषधभैषज्यान्यगदोजायुरित्यपि'' इत्यमरः ॥ **पृष्ठं** पश्चाद्भागः । वेदप्रसिद्धः स्तोत्रभेदश्च । ''पृष्ठन्तु चरमं तनोः'' इत्यमरः । ''पृष्ठं चरमभा देहस्यावयवान्तरे'' इति मेदिनी ॥ **किण्वं** सुराबीजं द्रव्यम् । ''किण्वादिभ्यो मदशक्तिव इति साङ्ख्यसूत्रम् । तण्डुलादिद्रव्यकृतसुराबीजं वा । पापञ्च। ''किण्वं बीजे च सीधु पापे क्लीबं नपुंसके षण्ढेऽन्यवदविक्रमे'' इति मेदिनी ॥ **दैवं** भाग्यम् । फलोन्मुखं शुभाशुभ ''प्राग्जन्मनि कृतं कर्म शुभं वा यदि वाऽशुभम् । दैवशब्देन निर्दिष्टमिह जन्मनि तद्बुधैः'' इ पूर्वजन्मार्जितं कर्म । दक्षिणहस्ताङ्गुलीनामग्ररूपं देवतीर्थम् । मन्त्राणामनुग्राहकदेवताज्ञा उत्पातज्ञानम् । विवाहभेदश्च । ''दैवं दिष्टं भागधेयं भाग्यं'' इत्यमरः । ''अङ्गुल्यग्रे दैवम्'' इत्यमरः । अङ्गुलीनामग्रे दैवं तीर्थं ज्ञेयमित्यर्थः । अतो दैवतीर्थेन तर्पयेदित्यत्राङ्गु ग्रेणेति बोध्यमिति परमतम् । **अण्डं** पुंसोऽण्डावयवः । पक्षिडिम्बः । वीर्यञ्च। ''अण्डं मुष्क पेश्यां स्यात्'' इति मेदिनी ॥ क्वचित् अशुभ इति पाठः ॥ **भाण्डं** पात्रम् । तैलाद्या भाजनम् । गृहभेदः । वणिजां मूलधनम् । ''ब्रह्माण्डभाण्डोदरे'' इति वीरचरितम् । '' पात्रे वणिङ्मूलधने भूषाश्वभूषयोः'' इति मेदिनी ॥ क्वचित् अशुचीति पाठः । **चिबुकं** अधराधोभागः । ''अधस्ताच्चिबुकम्'' इत्यमरः । क्वचित् 'बुक बुक' इति च पाठौ ॥ **उ** प्लवः । क्षुद्रनौका च। उडपमप्यत्र । उडुपशब्देन चन्द्र उच्यते । उडूनि नक्षत्राणि पातीति वि स हि ताराणां पतिरतो रक्षकः । पुँल्लिङ्गश्च । ''उडुपन्तु प्लवेऽस्त्रियाम् । चन्द्रे पुंसि'' मेदिनी ॥ **साहसं** बलेन कृतं चौर्यस्त्रीसङ्ग्रहादिदुष्टकर्म । ''सहसा क्रियते यत्तु तत्साह ति स्मृतम्'' इति तच्च पञ्चविधम् । ''मनुष्यमारणं स्तेयं परदारादिमर्षणम् । पारुष्यमन् साहसं पञ्चधा स्मृतम्'' इति स्मृतिः । सहसा अविवेचनेन कृतं कर्म, अविमृष्य कृतकर्म स्मृत्युक्तः दण्डविशेषश्च । ''साशीतिपणसाहस्रो दण्ड उत्तम साहसः । तदर्द्धं मध्यमः प्रोक्त दर्द्धमधमः स्मृतः'' इति स्मृतिः । ''साहसन्तु बलात्कारकृतकार्ये दमेऽपि च'' इति मेदि ''साहसन्तु दमो दण्ड'' इत्यमरः ॥ ६ ॥ **यकृत्** कुक्षौ दक्षिणभागस्थं मांसपिण्डम् । रोगश्च । ''कालखण्डयकृती'' इत्यमरः ॥ **कुहकं** कृतपापप्रतिच्छादनलक्षणा माया, इ लमाया वा । अन्यथा स्थितस्य वस्तुनोऽन्यथादर्शनमित्यर्थः ॥ **सिध्म** किलासरोगः । त वाश्च । ''किलाससिध्मे'' इत्यमरः ॥ **तीरं** नद्यादेः कूलम्, सायकञ्च । ''कूलं र

**पुन्नपुंसकयोर्दारुजीवातुस्थाणुसीधवः ।**
**स्याद्वास्तु हिङ्गु तितउ सानु कम्बु कमण्डलु ॥ ८ ॥**
**गोमयकुमुदबिम्बशङ्खाश्रमशूलसुवर्णतोरणाः ।**
**नूपुरशिखरतूर्यनिर्य्यासगृहाङ्कुशबर्हिपल्लवाः ॥ ९ ॥**

तीरञ्च" इत्यमरः । "तीरन्तु रोधसि" इति मेदिनी ॥ **कशिपु** अन्नम्, वस्त्रञ्च । "कशिपु त्वन्नमाच्छादनं द्वयम्" इत्यमरः । कशिपुरिति क्वचित्पुँल्लिङ्गोऽपि दृश्यते क्वचित् कालश्च ॥ **जानु** ऊरुजङ्घयोर्मध्यभागः ॥ "जानूरुपर्वाष्ठीवदस्त्रियाम्" इत्यमरः ॥ अङ्गे देहे । **धामन्** शब्दः । दले समांशे । खण्डे च । **अर्द्ध**शब्दः । न्याये गौतमोक्ते शास्त्रभेदे ॥ **सार**शब्दः । बन्धौ बान्धवे । ज्ञातिजने ॥ **मित्र**शब्दश्च । क्लीवलिङ्गः । स्यादित्यन्वयः। क्वचित् धर्मार्धसारमित्राण्यङ्गदनन्यय्यबन्धुषु इति पाठः ॥ ७ ॥ इति नपुंसकलिङ्गसङ्ग्रहः समाप्तः ॥ अथ पुन्नपुंसकलिङ्गसंग्रहमाह ॥ **दारुः** काष्ठम् । देवदारुः पित्तलञ्च ॥ **जीवातुः** अन्नम् । जीवितं जीवनौषधञ्च । "जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे" इति मेदिनी ॥ "जीवातुर्जीवनौषधम्" इत्यमरः ॥ **स्थाणुः** शिवः, शाखाशून्यवृक्षश्च । "स्थाणुः कीले हरे पुमान् । अस्त्री ध्रुव" इति मेदिनी ॥ **सीधुः** मद्यम् । "इक्षोः पक्वरसैः सिद्धः सीधुरित्यभिधीयते" इत्युक्तो मद्यभेदश्च । **वास्तु**र्वासयोग्यभूमिः । स्वनामाख्यातः शाकश्च । "वेश्मभूर्वास्तुरस्त्रियाम्" इत्यमरः । **हिंगुः** रामटदेशभवस्य वृक्षस्य निर्यासः। हिंगुद्रव्यञ्च। "सहस्रवेधि जतुकं बाह्लीकं हिङ्गु रामठम्" इत्यमरः । **तितउः** चालन इति प्रसिद्धः । अत्र सन्वच्च ड उ इति निर्देशात् न सन्धिः । "चालनी तितउः पुमान्" इत्यमरः ॥ **सानुः** पर्वतस्थसमभूमिदेशप्रस्थः । वनं वातसमूहश्च । "सानुः प्रस्थः सानुरस्त्रियाम्" इत्यमरः । "सानुरस्त्री वने प्रस्थे वात्यामार्गाग्रकोविदे" इति मेदिनी ॥ **कम्बुः** शङ्खम्, गजश्च । "कम्बुः शङ्खेऽस्त्रियां पुंसि शम्बूके वलये गजे" इति मेदिनी ॥ **कमण्डलुः** संन्यासिनां जलपात्रभेदः । करङ्कः प्लक्षवृक्षश्च । "कमण्डलुः स्यात् करके न स्त्री ना प्लक्षपादपे" इति मेदिनी ॥ ८ ॥ **गोमयं** गोपुरीषम् । "गोविट् गोमयमस्त्रियाम्" इत्यमरः । **कुमुदः** कैरवम् । कह्लारं श्वेतोत्पलं वानरभेदश्च । "कुमुदं कैरवे रक्तपद्मेऽस्त्री कुम्भिकौषधौ । गाम्भार्यां पुंसि दिङ्नागे नागे शाखामृगान्तरे" इति मेदिनी ॥ **बिम्बं** दर्पणादौ भासमानप्रतिबिम्बाश्रयम् ॥ कमण्डलुः । सूर्यादिमण्डलञ्च । "बिम्बोऽस्त्री मण्डलं त्रिषु" इत्यमरः । "बिम्बस्तु प्रतिबिम्बे स्यात्मण्डले पुन्नपुंसकम् । बिम्बिकायाः फले क्लीब कृकलासे पुनः पुमान्" इति मेदिनी ॥ **शङ्खः** स्वनामाख्यातः समुद्रजातः पदार्थः । ललाटास्थि । निधिभेदश्च । "शङ्खो निधौ ललाटास्थ्नि कम्बौ" इत्यमरः । "शङ्खः कम्बौ न योषिन्ना भालास्थिनिधिभिन्नखे" इति मेदिनी ॥ **आश्रमः** ब्रह्मचर्यादिकः शास्त्रोक्तो धर्मभेदः । मुनीनां वासस्थानम् । कलौ तु ब्रह्मचर्यवानप्रस्थौ न स्तः गृहस्थभिक्षुकाश्रमावेवेति केचिद्वदन्ति । यथा—"गृहस्थो भिक्षुकश्चैव आश्रमौ द्वौ कलौ युगे"

**व्रतदिनमासवर्षदलवल्कलकोटरषण्डचामराः ।**
**चन्दनपद्मधर्मकोलाहलकिसलयदेहदोहदाः ॥ १० ॥**

इति । "आश्रमो ब्रह्मचर्यादौ वानप्रस्थे मठे वने । अस्त्रियाम्" इति मेदिनी ॥ **शूलः** रोगभेद् व्यवायः । सुतीक्ष्णम् । अयःफालः त्रिशूलश्च । "शूलोऽस्त्री रोग आयुधे" इति मेदिनी ॥ क्वचित् "सृणिः" इति पाठः ॥ **सुवर्णः** स्वनामाख्यातो धातुभेदः । हरिचन्दनम् । स्वर्णगैरिकः । कर्षमितं काञ्चनञ्च । "कर्षं सुवर्णस्य सुवर्णसंज्ञम्" इति । "सुवर्णो ना स्वर्णकर्षे सुवर्णाख्यमखान्तरे । स्त्री कृष्णागुरुणि क्लीबं काञ्चने हरिचन्दने" इति मेदिनी ॥ **तोरणः** बहिर्द्वारम् । स्तम्बोपरिस्थं सिंहाकारकाष्टम् । द्वारबाह्यभागश्च । "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः ॥ **नूपुरः** पादाङ्गुदः । "पादाङ्गुदं तुलाकोटिर्मञ्जीरे नूपुरोऽस्त्रियाम्" इत्यमरः ॥ **शिखरः** वृक्षाग्रः । पर्वताग्रः । रत्नमात्रञ्च । "शिखरोऽस्त्री द्रुमाग्रेऽद्रिशृङ्गे पुलकक्षयोः । पक्वदाडिमबीजाभमाणिक्यसकलाग्रयोः" इति मेदिनी ॥ **तूर्यः** वाद्यभेदः ॥ **निर्यासः** वृक्षात् तरलतया निर्गतः कालेन कठिनतां प्राप्तः रसः । वृक्षरसः । क्वाथश्च ॥ **गृहम्** इष्टकामृत्तिकादिरचितं गेहम् । कलत्रञ्च । "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" इति स्मृतिः ॥ पुँल्लिङ्गस्तु बहुवचनान्त एव । "तत्रागारं धनपतिगृहान्" इति मेघदूतम् । कलत्रेऽपि दाराशब्दवद्बहुवचनम् । "गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि" इति मेदिनी ॥ **अङ्कुशः** हस्तिपालनोपयोगी वक्राग्रो लौहमयास्त्रभेदः । **बर्हिः** कुशः । "बर्हिर्देवसदनम्" इति श्रुतिः ॥ क्वचित् बर्ह इति पाठः । **पल्लवः** नवं पत्रविस्तारम्, शाखाविस्तारश्च । "लवोऽपि पल्लवे" इति नैषधम् । "पल्लवोऽस्त्री किसलयं विस्तारो विटपेऽस्त्रियाम" इत्यमरः । "पुंसि क्लीबे च पल्लव" इति तु व्याडिः ॥ ९ ॥ **व्रतः** पुण्यसाधनार्थम् उपवासादि नियमभेदः । भक्षणभेदश्च। "नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम्" इत्यमरः॥ **दिनं** सूर्यकिरणोपलक्षितं षष्टिदण्डात्मकं तद्विशिष्टं वा । चतुर्यामात्मकः कालश्च । "घस्रो दिनाहनी वा तु" इत्यमरः॥ **मासः** त्रिंशद्दिनात्मकः कालः । स च सौरसावनचान्द्रनक्षत्रभेदाच्चतुर्विधः । "पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ" इत्यमरः । पक्षो हि द्विविधः शुक्लः कृष्णश्चेति । तत्र मासस्य पूर्वः शुक्लः । कृष्णस्त्वपरः । यतः शुक्लादिक्रमेण प्रायशो मासप्रवृत्तिः । तावुभौ पक्षावेको मासः । चान्द्रेण मानेनेदमुक्तम् ॥ **वर्षः** द्वादशमासात्मकः कालः । जम्बुद्वीपः जम्बुद्वीपांशभेदश्च । तथा वृष्टिः प्रभवादयः षष्टिसंवत्सराश्च । "वर्षोऽस्त्री भारतादौ च जम्बुद्वीपाब्दवृष्टिषु" इति मेदिनी ॥ "स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम्" इत्यमरः ॥ **दलः** शस्त्रच्छेदः । अपकृष्टद्रव्यम्, पत्रं तमालपत्रं वा । तथा खण्डम् । उत्सेधवस्तु च । "अथ पिचौ न स्त्री दलमुत्सेधखण्डयोः । शस्त्रच्छेदेऽप्यपद्रव्ये पत्रे" इति मेदिनी ॥ **वल्कलः** वृक्षत्वक् । "वल्कं वल्कलमस्त्रियाम्" इत्यमरः । **कोटरः** वृक्षस्थगह्वरम् । "निष्कुहः कोटरं वा ना" इत्यमरः । **षण्डः** वृषः । नपुंसकम् । कमलादिसमूहः । "षण्डं पद्मादिसङ्घाते न स्त्री स्याद्गोपतौ

**कुलिशध्वजकार्षापणपिनाकमुस्तान्धकारशृङ्गवलयाः ।**
**पटलप्रवालचषकोपवासकासारकटकसन्तानाः ॥ ११ ॥**

पुमान्'' इति मेदिनी ॥ शण्ड इत्यपि पाठः ॥ **चामरः** चमरपुच्छकृतव्यजनम् । ''चक्रगण्डौ च पुंसि स्याच्चामरं चमराऽपि च । दण्डे च वालव्यजने'' इति मेदिनी ॥ क्वचित् वासव इति पाठः ॥ **चन्दनः** मलयजातो गन्धसारः । रक्तचन्दनम् । वानरभेदः । औषधिभेदश्च । ''चन्दनोऽस्त्री मलयजे भद्रकाल्यां नपुंसकम्'' इति मेदिनी ॥ **पद्मः** कमलम् । गजमुखादिस्थः । बिन्दुसमुदायः कमलाकारेण सैन्यादेरभिनिवेशनरूपो व्यूहभेदः । निधिभेदश्च । ''पद्मोऽस्त्री पद्मके व्यूहनिधिसङ्ख्यान्तरेऽम्बुजे'' इति मेदिनी ॥ **धर्मः** स्वभावः । ''विहितक्रियया साध्यो धर्मः पुंसां गुणो मत'' इत्युक्तः कर्म्मजन्यः अदृष्टः । शास्त्रविहितकर्मानुष्ठानजन्यः भाविफलसाधनभूतः शुभादृष्टश्च । ''धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे'' इति मेदिनी ॥ **कोलाहलः** बहुविधो दूरगामी अव्यक्तशब्दः । बहुभिः कृतः स्पष्टशब्दश्च । ''कोलाहलः कलकल'' इत्यमरः ॥ **किसलयः** किशलय इति तालुजशकारमध्यो वा पत्रादियुक्तशाखापर्वा । पल्लवश्च । ''पल्लवोऽस्त्री किसलयम्'' इत्यमरः । **देहः** स्थूलसूक्ष्मकार्यकारणरूपं शरीरम् । लग्नञ्च । ''कायो देहः क्लीबपुंसोः'' इत्यमरः ॥ **दोहदः** गर्भः । ''सुदक्षिणा दोहदलक्षणं दधौ'' इति रघुः । गर्भिण्यभिलाषः लालसा च । ''अथ दोहदम् । इच्छा काङ्क्षा स्पृहेहा'' इत्यमरः ॥१०॥ **कुलिशः** वज्रः । अस्थिसंहारवृक्षः । मत्स्यभेदश्च । ''ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः'' इत्यमरः ॥ ''यमे ना कुलिशो न स्त्री दम्भोलौ ना झषान्तरे'' इति मेदिनी ॥ **ध्वजः** चतुष्कोणाकारः वंशदण्डोपरिस्थः वस्त्रखण्डः । खट्वाङ्गः मेढ्रश्च । ''पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्'' इत्यमरः । ''ध्वजः स्यात्सौण्डिके पुमान् । न स्त्रियान्तु पताकायां खट्वाङ्गे मेढ्रचिह्नयोः'' इति मेदिनी ॥ **कार्षापणः** षोडशपणाः । पणश्च । ''कार्षापणः कार्षिकः स्यात्'' इत्यमरः । ''कार्षापणोऽस्त्री कार्षिके पणषोडशकेऽपि च'' इति मेदिनी ॥ **पिनाकः** शिवधनुः । तच्छूलास्त्रम् । पांशुवर्षणञ्च । ''पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः'' इति मेदिनी ॥ क्वचित् पिधाननिधानौ इति पाठौ । आश्रयः कार्यावसानश्च । **मुस्तः** मुस्तकः । स्थावरविषभेदश्च । ''कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्'' इत्यमरः ॥ **अन्धकारः** तेजोभावः । तमश्च । ''अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः'' इत्यमरः। क्वचित् कर्कारिति पाठः ॥ **शृङ्गः** पर्वतोपरिभागः। प्राधान्यः । कामोद्रेकश्च, पश्वादेर्विषाणं वा । ''शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कर्मशीर्षके'' इति मेदिनी॥ **वलयः** हस्तपादकटकादिः । उत्तरपदस्थः तदाकारवेष्टनञ्च । यथा ''भूवलयम्'' वेष्टभूमिः गोलश्च । ''आवापकः पारिवाहिः कटको वलयोऽस्त्रियाम्'' इति मेदिनी ॥ **पटलः** छदिः ।

**आकाशकुञ्जकुतपौदनवारवाणप्रस्थावतंसनखमण्डपकच्छपुच्छाः ।**
**कान्तारकङ्कणतडागकिरीटराष्ट्रतीर्थव्रणस्तबकसङ्क्रमपीठकानि ॥११**

पिटके च परिच्छदे । छदिर्दृग्रोगतिलके क्लीबं वृन्दे पुनर्न ना'' इति मेदिनी ॥ **प्रवालः** पल्लवः । प्रबाल इति कचित्पाठः । ''पुष्पं प्रबालोपहितं यदि स्यात्'' इति कुमारः । वर्णमणिभेदः । वीणादण्डश्च । ''प्रवालमङ्कुरेऽप्यस्त्री'' इत्यमरः ॥ ''प्रवालोऽस्त्री किसलयं वं दण्डे च विद्रुमे'' इति मेदिनी ॥ **चषकः** मद्यपानपात्रम् । ''चषकोऽस्त्री पानपात्रम्'' मरः । ''चषकोऽस्त्री पानपात्रे मधुमद्यप्रभेदयोः'' इति मेदिनी ॥ **उपवासः** अनाहा ''तपनोदयमारभ्य यामाष्टकमभोजनम् । उपवास इति ख्यात'' इति स्मृतिः । ''औ तूपवासः'' इत्यमरः । औपवस्तम् । उपवस्तमप्यत्र । औपवस्त्रम्'' इति च क्वचित् प **कासारः** सरोवरम् । सपद्मः निष्पद्मो वा महाजलाशयश्च । कासारः कृत्रिमपद्माकर केषाञ्चिन्मतम् । ''पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः'' इत्यमरः। **कटकः** मेखल पर्वतमध्यभागः । बाहुभूषणवलयः । हस्तिदन्तमण्डलञ्च । ''आवापकः पारिहार्यः कटको योऽस्त्रियाम्'' इत्यमरः । ''कटकोऽस्त्री नितम्बेऽद्रेर्दन्तिनां दन्तमण्डले । सामुद्रलवणे धानीवलययोरपि'' इति मेदिनी ॥ **सन्तानं** वंशः । विस्तारः अपत्यम् । कल्पवृ ''सन्तानः सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे'' इति मेदिनी ॥ ''वंशोऽन्ववायः सन्तानो स्युर्ब्राह्मणादयः'' इत्यमरः ॥ ११ ॥ **आकाशः** गगनम् । ''वियद्विष्णुपदं वा तु काशविहायसी'' इत्यमरः ॥ **कुञ्जः** समन्ताल्लतादिभिराच्छादितो मध्यशून्यः पर्वतादेः भेदः । हस्तिहनुश्च । ''कुञ्जो दन्तेऽपि न स्त्रियाम्'' इत्यमरः । ''कुञ्जोऽस्त्रियां नि हनौ दन्तेऽपि दन्तिनाम्'' इति मेदिनी ॥ **कुतपः** पञ्चदशधा विभक्तदिनस्या कालः । स च मध्याह्नात् पूर्वोत्तरदण्डद्वयात्मकः मुहूर्त्तरूपः कालः । ''अष्टमोऽह्नः पोऽस्त्रियाम्'' इत्यमरः । अत्र अह्नशब्दो मुहूर्त्तपर इति पठन्ति । यथा—''मुहूर्ता मादूर्ध्वं मुहूर्तान्नवमादधः । स कालः कुतपो ज्ञेय'' इति । ''क्लीबेऽपि कुतपम्'' इति व्युकारशब्दोऽपि शब्दरत्नावल्यामागतः । ''कुतपोऽस्त्रियां दौहित्रे वाद्येऽच्छागजव कुशे दिनस्याष्टमांशे ना सूर्ये'' इति मेदिनी ॥ **ओदनः** भक्तम् । स्विन्नान्नञ्च । ' स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः'' इत्यमरः । ''ओदनं न स्त्रियां भक्ते मोदनी स्त्रियाम्'' इति मेदिनी ॥ **वारवाणः** कवचः । ''कञ्चुकी वारवाणोऽस्त्री मरः । ''क्लीबे तु वारवाणम्'' इति च ॥ **प्रस्थः** पर्वतस्य वासयोग्यभूमी । सान ''प्रस्थोऽस्त्रियां मानभेदे सानावुन्मितवस्तुनि'' इति मेदिनी ॥ **अवतंसः** कर्णपूरः भूषणभेदश्च । ''पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे'' इत्यमरः । ''अवतंसो न स्त्रिय कर्णपूरे च शेखरे'' इति मेदिनी ॥ **नखः** करजः । अङ्गुल्यग्रथः कण्टकश्च । ' कररुहो नखोऽस्त्री'' इत्यमरः । ''नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुन्नपुंसकम्'' इति

**समरसरकरणविटपाङ्गारगैरिकदैवतकूटागाराः ।**
**प्रोथमुहूर्त्तदिवसफलकानिकांशानिदाघमुषलतिलकानि ॥ १३ ॥**

**मण्डपः** जनविश्रामस्थानम् । देवादिगृहञ्च । यथा धर्ममण्डपः । चण्डीमण्डपः । विष्णुमण्डप इत्यादि । "मण्डपोऽस्त्री जनाश्रयः" इत्यमरः ॥ **कच्छः** जलप्रायो देशः । ततः पुन्नागद्रुमश्च । "जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः" इत्यमरः । तथाविधः अनूपसदृशः कश्चिन्नद्यादेरुपान्तदेशः कच्छ इत्यपरैरुच्यते । "अथ कच्छः स्यादनूपे तुन्नकद्रुमे । नौकाङ्गे पुंसि वाराह्यां चीरिकायाञ्च योषिति" इति मेदिनी ॥ पुच्छः पश्चाद्भागः । लाङ्गुलञ्च । "पुच्छोऽस्त्री लूमलाङ्गुले" इत्यमरः । केचित् लाङ्गूलमप्यत्र । "पुच्छः पश्चात्प्रदेशेऽपि लाङ्गूले पुच्छमस्त्रियाम्" इति मेदिनी ॥ **कान्तारं** कोविदारवृक्षः । इक्षुभेदः उपद्रवः काननम् । दुर्गवर्त्म । गर्त्तञ्च । "महारण्ये दुर्गपथे कान्तारं पुन्नपुंसकम्" इत्यमरः ॥ कङ्कणं करभूषणम् । भूषणमात्रञ्च । "कङ्कणं करभूषणम्" इत्यमरः ॥ "कङ्कणो ना प्रतिसर" इति रत्नकोषः । "कङ्कणं करभूषायां सूत्रमण्डलयोरपि" इति मेदिनी ॥ **तडागं** पञ्चशता न्यूनधनुर्मितः द्विसहस्रन्यूनहस्तक्षेत्रफलकः पञ्चचत्वारिंशद्धस्तान्न्यूनदीर्घविस्तारः जलाशयः । यथा । "शतेनधनुर्भिः पुष्करणी । त्रिभिर्दीर्घिका । चतुर्भिर्द्रोणः । पञ्चभिस्तडाग इति वशिष्ठोक्तिः । "प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः । जलाशयस्तडागः स्यात्" इति । "पद्माकरस्तडागोऽस्त्री कासारः सरसी सर" इत्यमरः। क्वचित् तटाक इत्यपि पाठः । ततस्तटाकतडागावपि स्याताम् । "तडागोऽस्त्री जलाधारविशेषे यन्त्रकूटके" इति मेदिनी ॥ **किरीटं** मुकुटः । शिरोवेष्टनञ्च। "अथ मुकुटं किरीटं पुन्नपुंसकम्" इत्यमरः । मकुटमित्यपि पाठः ॥ **राष्ट्रं** जनपदः । "गौडं राष्ट्रमनुत्तमम्" इति प्रबोधचन्द्रोदयः । उपद्रवश्च । "अथ राष्ट्रोऽस्त्री विषये स्यादुपद्रवे" इत्यमरः। "राष्ट्रं स्यादुपवर्त्तने । उपद्रवे क्लीबपुंसोः" इति मेदिनी॥ **तीर्थं** शास्त्रम् । यज्ञः क्षेत्रम् उपायः । स्त्रीरजः । नद्यादेरवतरणम् । घट्टादिश्च । "निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ" इत्यमरः । निपानमित्यत्र कचिन्निदानमित्यपि पाठः। निदानमुपायः । सिंहलार्थव्याख्याने तु निदानमादिकारणमित्यर्थः । तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु" इति मेदिनी ॥ **व्रणं** क्षतम् । "व्रणोऽस्त्रियामीर्ममरुः" इत्यमरः ॥ **स्तबकं** गुच्छः । "स्याद्गुच्छकस्तु स्तबकः इत्यमरः ॥ **सङ्क्रमं** जलबन्धनस्थानम् । "आत्मानं सङ्क्रमं कृत्वा" इति स्मृतिः । रव्यादेः राश्यन्तरसञ्चारश्च । "अस्त्री तु सङ्क्रमो दुर्गसञ्चरः" इत्यमरः । "सङ्क्रमः क्रमणे पुंसि न स्त्री स्याद्दुर्गसञ्चरे" इति मेदिनी ॥ **पीठकम्** आसनभेदः । व्रतिनामासनञ्च । पीठ इत्यपि पाठः । "पीठमासनम्" इत्यमरः । अस्मिन् त्रिकाण्डशेषकोषेऽपि "विष्टरः पीठमस्त्रियाम्" इति च ॥ १२ ॥ **समरः** युद्धम् । "अस्त्रियां समरानीकरणाः कलहविग्रहौ" इत्यमरः॥ **सरकः** मद्यपानपात्रम् । मद्यपरिसेवनम् । इक्षुजमद्यम् । तत्पात्रञ्च । "सरकोऽप्यनुतर्पणम्" इत्यमरः । "सरकं वा नानुतर्षो ना" इति रत्नकोषः । "सरकः सीधुपानेक्षुसीधुनो

**वल्मीकवृषणद्रोणगाण्डीवनिगडानि च।**
**मुकुलादि च विज्ञेयं शिष्टसन्दर्भतोपरम् ॥ १४ ॥**

मद्यभाजनम्'' इत्यजयः। ''सरकोऽस्त्री मीधुपाने सीधुपात्रेक्षुसीधुनोः'' इति मेदिनी ॥ **रणः** युद्धम्। शब्दः। क्वणः। गतिश्च। ''अस्त्रियां समरानीकरणाः कलहविग्रहौ'' इत्यमरः। ''**रणः** कोणे क्वणे पुंसि समरे पुन्नपुंसकम्'' इति मेदिनी ॥ **विटपः** शाखा। पल्लवविस्तारः। स्तम्बः। पल्लवश्च। ''स्तम्बेऽपि विटपोऽस्त्रियाम्'' इत्यमरः ॥ ''विटपो न स्त्रियां स्तम्बशाखाविस्तार-पल्लवे'' इति मेदिनी ॥ **अङ्गारः** अर्धदग्धः अग्निसंक्रान्तः अग्निशून्यो वा काष्ठखण्डः। मङ्गल-ग्रहः। रक्तवर्णः। ''अथ न स्त्री स्यादङ्गारोऽलातमुल्मुकम्'' इत्यमरः। ''अङ्गारमुल्मुके न स्त्री पुँल्लिङ्गस्तु महीसुते'' इति मेदिनी ॥ **गैरिकः** पर्वतजात उपधातुभेदः। स्वर्णञ्च। ''स्वर्णेऽपि गैरिकम्'' इत्यमरः। अत्रापि शब्दाद्गेरू इति ख्यातः धातुश्च। ''गैरिकं धातुरुक्मयोः'' इति मेदिनी ॥ **दैवतः** देवः। देवतानां समूहश्च। ''वृन्दारका दैवतानि पुंसि वा'' इत्यमरः। **कूटागारः**। मृषागारम्। चन्द्रशालिका। क्रीडागृहञ्च ॥ **प्रोथम्** अश्वनासिका। कटी। शाटकम्। स्त्रीगर्भः। भीषणम्। स्थितिश्च। ''घोणा तु प्रोथमस्त्रियाम्'' इत्यमरः। ''प्रो-थोऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु''इति मेदिनी॥**मुहूर्त्तं** द्वादशक्षणमितः कालः। पञ्च-दशधा विभक्तस्य दिनस्य पञ्चदशभागः। किञ्चिन्न्यूनाधिकघटिकाद्वयरूपः कालश्च। ''तास्तु त्रिंशत्क्षणस्ते तु मुहूर्त्तो द्वादश स्त्रियाम्''इत्यमरः। **दिवसं** दिनम्। सावनादीनि दिनानि च। ''नाडी षष्टितमस्तत्र सावनो दिवसः स्मृतः। त्रिंशद्भागोर्कराशेस्तु दिवसः सौर उच्यते। चान्द्रस्य तिथ्यवच्छिन्नो भौमो भूपरिधेर्मतः''इति ॥ **फलकः** चर्म। वृक्षादीनां शस्यम्। लाभः। फलकम्। कार्यम्। दानम्। मुष्कश्च। फलोऽप्यत्र पाठः। ''फलकोऽस्त्री फलं चर्म'' इत्यमरः। ''फलं जातिफले शस्ये हेतूत्थे व्युष्टिलाभयोः। त्रिफलायाञ्च कक्कोले प्रियङ्गौ तु फली स्मृता''इति मेदिनी ॥ **काशः** रोगभेदः। क्षुतः तृणभेदः। तत्पुष्पञ्च। काशकोऽप्यत्र।''काशमस्त्रियाम्''इत्य-मरः। ''काशस्तृणे स्यात्क्षवथौ'' इति विश्वः। क्वचित् मास इति पाठः ॥ **निदाघम्** उष्णम्। घर्मः। घर्म्मकालः ज्यैष्ठाऽऽषाढमासयोः। घर्मजलञ्च। ''घर्मो निदाघः स्वेदः स्यात्'' इत्यमरः।''नि-दाघो ग्रीष्मकाले स्यादुष्मस्वेदाम्बुनोरपि'' इति मेदिनी ॥ **मुषलम्** अयोग्रम्। स्वनामाख्यातः धान्यादिखण्डनसाधनः पदार्थश्च। मुसलं मुशलञ्चेति दान्त्यतालुजसकारयुक्तौ पाठावपि स्याताम्। ''अयोग्रं मुषलोऽस्त्री स्यात्'' इत्यमरः ॥ ''मुषलं स्यादयोग्रे च पुन्नपुंसकयोः''इति मेदिनी ॥ **तिलकं** स्वनामाख्यातः नासादिधार्यश्चन्दनादिविशेषकः। क्लोम च। तमालपत्र-तिलकच्चित्रकान्यपि।''तिलकं क्लोम'' इत्यमरः। ''तिलको द्रुमरोगाश्वभेदेषु तिलकालके। क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके इति मेदिनी ॥ १३ ॥ **वल्मीकं** स्तूपम्। ''वामलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकम्'' इत्यमरः ''वल्मीको रोगभेदे च नाकौ च पुन्नपुंसकम्'' इति मेदिनी। ''वल्मीको वामलूरे स्यान्मुनिरोगविशेषयोः'' इति विश्वः ॥ **वृषणम्** अण्डकोषम्।

**अथ स्त्रीपुंसयोः केलिर्मणिर्योनिर्मसिर्मुनिः।**
**मरीचिः शाल्मलिः स्वातिः श्रेणिर्मुष्टिस्तिथिः सृणिः ॥ १५ ॥**

"मुष्कोण्डकोषो वृषणः" इत्यमरः। **द्रोणः** भारतप्रसिद्धः स्वनामाख्यातो योद्धृभेदः। भारतप्रसिद्धः स्वनामाख्यातो राजगुरुर्बौद्धोपासकब्राह्मणवरश्च। वृश्चिकः। मेघभेदः। वृक्षभेदः। आढकचतुष्टयरूपः परिमाणश्च। "अस्त्रियामाढकद्रोणौ" इत्यमरः। "द्रोणोऽस्त्रियामाढके स्यादाढकानां चतुष्टये। पुमान् कृपीपतौ दग्धकाके स्त्री नीवृदन्तरे। तथा काष्ठाम्बुवाहिन्यां गवादिन्यामपीष्यते" इति मेदिनी॥ **गाण्डीवम्।** अर्ज्जुनचापः। चापमात्रञ्च। "कपिध्वजस्य गाण्डीवगाण्डीवौ पुन्नपुंसकौ" इत्यमरः। "गाण्डीवो गाण्डीवश्चाऽस्त्री कार्मुकेर्ज्जुनकार्मुके" इति मेदिनी॥ **निगडं** श्रृङ्खला। लोहमयो हस्तिपादबन्धनः अन्दुकश्च। "अन्दुको निगडोऽस्त्री स्यात्" इत्यमरः॥ **मुकुला** ईषद्विकशितकलिका। "कुड्मलो मुकुलोऽस्त्रियाम्" इत्यमरः॥ **अपरम्** अत्रादिपदात् देहमृणालापणामिषादि अन्यच्च। शिष्टसन्दर्भतः शिष्टानां स्थिरबुद्धीनाम्। "न पाणिपादचपलो न नेत्रचपलो मुनिः। न च वागङ्गचपलः" इति शिष्टस्य लक्षणम्। इत्युक्तलक्षणवतां महेश्वरेन्द्रचन्द्रपाणिनिवररुचिप्रभृतीनाम्। सन्दर्भतः काव्यादिरचनाविशेषतः। प्रबन्धविशेषतश्चेति यावत्। "गूढार्थस्य प्रकाशश्च सारोक्तिः श्रेष्ठता तथा। नानार्थकत्वं वेद्यत्वं सन्दर्भः कथ्यते बुधैः" इत्युक्तलक्षणात् सन्दर्भविशेषाद्वा। विज्ञेयं बोद्धव्यम्। विशेषेण ज्ञातव्यमित्यर्थः। पुन्नपुंसकयोः पुँल्लिङ्गे च क्लीबलिङ्गे च पूर्वोक्ताः शब्दगणाः। भवेयुरिति पूर्वेणात्रान्वयः॥ १४॥ इति पुन्नपुंसकलिङ्गसङ्ग्रहः समाप्तः॥ अथ स्त्रीपुँल्लिङ्गसङ्ग्रहमाह॥ अथ अनन्तरार्थद्योतकः॥ **केलिः** परिहासः। क्रीडा। पृथिवी च। "द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च" इत्यमरः। परीहास इत्यत्र परिहास इति च। लीला इत्यत्र खेला इति च क्वचिद्दृश्यते॥ **मणिः** मुक्तादिरत्नम्। "मणिहारावलिरामणीयकम्" इति। "नृपनीलमणीगृहत्विषा" इति च नैषधम्। मृन्मयपात्रभेदः। अलिञ्जरः लिङ्गाग्रश्च। "रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च" इत्यमरः। "मणिः स्त्री पुंसयोरश्मजातौ मुक्तादिकेऽपि च। कण्ठदेशस्तनेऽजाया लिङ्गाग्रेऽलिञ्जरेऽपि च" इति मेदिनी॥ **योनिः** मण्यादीनामुत्पत्तिस्थानमाकरः कारणम्। स्त्रीणामसाधारणचिह्नम्। तद्दैवताक पूर्वफाल्गुनीनक्षत्रञ्च "भगं योनिर्द्वयोः" इत्यमरः। "योनिः स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे" इति मेदिनी॥ **मसिः** पत्रलेखनद्रवम्। कज्जलम्। नीलशेफालिकावृन्तञ्च। अत्र मशिरिति तालुजशकारान्तपाठोऽपि। **मुनिः** स्थिरचित्तो वीतरागादिश्च। "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः। वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते" इति गीतायाम्। मन्वत्रिविष्णुहारितादयश्च। "मुनित्रयं नमस्कृत्य" इति बुद्धश्च। "मुनीन्द्रः श्रीघनः शास्ता मुनिः" इत्यमरः। सप्तसङ्ख्या च। "मुनिगुहकार्णवैः कृतयतिवदकोकिलकम्" इति वृत्तरत्नाकरः। तपस्वी च। तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः" इत्यमरः। "मुनिः पुंसि वशिष्ठादौ वकसेन-

**ऊर्म्मिर्गभस्तिरशनिर्वैपार्ष्णीषुधिराशयः ।**
**वस्तिश्च किष्कुः कन्दुश्चरेणुतन्वीशबाहवः ॥ १६ ॥**

तरौ जिने'' इति मेदिनी ॥ मरीचिः किरणः। ''भानुः करो मरीचिः स्त्री पुंसयोः'' इत्यमरः। ''मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम्'' इति मेदिनी । **शाल्मलिः** स्वनामाख्यातो वृक्षः । ''स्थिरायुः शाल्मलिर्द्वयोः'' इत्यमरः । अत्र शाल्मली शाल्मलिः इति द्वयमपि । शाल्मलेर्दीर्घायुष्कत्वात् स्थिरायुः इति वदन्ति । स्थिरमायुर्यस्याः स्थिरायुः । ''षष्टिवर्षसहस्राणि वने जीवति शाल्मलिः'' इति वचनात्॥ '' शाल्मलिस्तरुभेदे स्याद्द्वीपभेदेऽपि च द्वयोः'' इति मेदिनी ॥ **स्वातिः** अश्विन्यादिषु पञ्चदशमं नक्षत्रम् । सूर्यपत्नीभेदश्च ॥ **श्रेणिः** छिद्ररहिता पङ्क्तिः । ''द्वयोः श्रेणिः सजातिभिः'' इत्यमरः । ''श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समानशिल्पिसंहतौ'' इति मेदिनी ॥ **मुष्टिः** बद्धपाणिः । पलपरिमाणम् । कुञ्च्यष्टभागः । मोषणञ्च । ''मुष्टिर्द्वयोः पले बद्धपाणौ त्सरौ'' इति मेदिनी ॥ **तिथिः** पञ्चदशचन्द्रकलाक्रियारूपा प्रतिपदादिः । पञ्चदशसङ्ख्या च । **सृणिः** शत्रुः । अङ्कुशास्त्रम् । अत्र तालुजशकारादिश्च । ''अङ्कुशोऽस्त्री सृणिः स्त्रियाम्'' इत्यमरः । ''शृणिरङ्कुशवाची च काशश्च तृणवाचकः'' इति शकारभेदः । ''आरक्षमग्नमवमत्य सृणिः सिताग्रम्'' इति माघः । केचित्त्वत्र सृणिरिति दन्त्यसकारान्तपाठोऽपि माघस्य प्रमादात्सम्भूत इति पठन्ति ॥ १५ ॥ **ऊर्मिः** तरङ्गः प्रकाशः । वेगः । वस्त्रसङ्कोचरेखा । पीडा । उत्कण्ठा । बुभुक्षादयः षट् च । यथा । ''बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ । शोकमोहौ शरीरस्य जरामृत्यु षड्र्मयः'' इति । ''ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसङ्कोचरेखायां वेदनापीडयोरपि'' इति मेदिनी ॥ **गभस्तिः** किरणः । सूर्यः स्वाहा । वह्निपत्नी च । ''किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः'' इत्यमरः । ''गभस्तिः किरणे सूर्ये ना स्वाहायान्तु योषिति'' इति मेदिनी । **अशनिः** मेघोत्पन्नः । ज्योतिषम् । वज्रम् । प्रस्तरवर्षी । उल्काविशेषः । विद्युच्च । ''शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः'' इत्यमरः । ''अशनिः स्त्रीपुंसयोः स्याच्चञ्चलायां पवावपि'' इति मेदिनी ॥ **पार्ष्णिः** पादग्रन्थः । गुल्फस्याधोभागः । पृष्ठश्च । ''पुमान् पार्ष्णिस्तयोरधः'' इत्यमरः । ''पार्ष्णिः स्त्रीपुंसयोः पादमूले स्याद्वजिनी कटौ'' इति रन्तिदेवः । ''पार्ष्णिः स्यादुन्मदस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च'' इति मेदिनी॥ अत्र वैशब्दस्तु पादपूरणे स्यात्। ''ऊर्म्मिर्गभस्तिरसनीरैपार्ष्णीषुधिराशयः'' इति क्वचित् पाठः । **इषुः** बाणः । तत्तुल्यसङ्ख्यम् । पञ्चसङ्ख्यान्वितञ्च । ''कलम्बमार्गणशराः पत्रीरोप इषुर्द्वयोः'' इत्यमरः । धिर्ज्ञानभेदः बुद्धिश्च । अत्र ईकारान्तधीशब्दोऽपि । ''धीः प्रज्ञा शेमुषीमतिः'' इत्यमरः । ''धिर्ज्ञानभेदे बुद्धौ च'' इति मेदिनी ॥ **राशिः** धान्यादीनां पुञ्जम् । ज्योतिश्चक्रस्य द्वादशांशो मेषादिः । व्यक्ताव्यक्तगणभेदश्च । ''द्वौ राशी पुञ्जमेषाद्यौ'' इत्यमरः । ''राशिर्मेषादिपुञ्जयोः'' इति मेदिनी ॥ **वस्तिः** नाभेरधोभागः

**गण्डूषगर्जजागर-भुजकीलज्वालवर्त्तकव्रीडाः ।**
**उत्कण्ठशटवराटक-रभसाः स्त्रीत्वे तु टावन्ताः ॥ १७ ॥**

मूत्राधारस्थानम् । **वासः** वसनदशा च । "वस्तिर्नाभेरधोर्द्वयोः" इत्यमरः । "वस्तिर्द्वयोर्निरूहे नाभ्यधोभूम्नि दशासु च" इति मेदिनी ॥ **किष्कुः** द्वादशाङ्गुलपरिमाणम् । प्रकोष्ठदेशः हस्तपरिमाणञ्च । किष्कुर्हस्ते वितस्तौ च" इत्यमरः । "प्रकोष्ठेऽप्यनपुंसकः" इति रुद्रः । "किष्कुर्द्वयोर्वितस्तौ च संप्रकोष्ठकरेऽपि च" इति मेदिनी ॥ **कन्दुः** स्वेदनीपात्रम् । "कन्दुपक्वं तैलपक्वम्" इति स्मृतिः॥ तण्डुलादेर्भर्जनपात्रमात्रञ्च । "गोकुले कन्दुशालायाम्" इति स्मृतिः। "कन्दुर्वा स्वेदनी स्त्रियाम्" इत्यमरः ॥ **रेणुः** परागः । धूली । पांशुः । पर्पटश्च । "रेणुः स्त्रीपुंसयोर्धूलौ पुँल्लिङ्गः पर्पटे पुनः" इति मेदिनी ॥ **तनुः** देहः । मूर्त्ती । अल्पम् । विरलश्च । "तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे" इति मेदिनी ॥ **ईशः** महादेवः । परमेश्वरः । हिरण्यगर्भः । शिवपत्नी च । "ईशः प्रभौ महादेवे" इति मेदिनी ॥ "ईशः प्रभौ शङ्करे स्यादीशा लाङ्गलदण्डके" इति विश्वः । क्वचित् वेणुतन्वीपवाहव इति पाठः ॥ **बाहुः** भुजः । कक्षावध्यङ्गुलिपर्यन्तोवयवश्च । "द्वौ परौ द्वयोः भुजबाहू" इत्यमरः ॥ १६ ॥

**गण्डूषः** मुखपूरणयोग्यं जलम् । "गजाय गण्डूषजलम्" इति कुमारः ॥ करिहस्तम् ॥ प्रसृत्या प्रमितं जलम्। कराङ्गुलिश्च । "गण्डूषो मुखपूर्त्तौ स्याद्गजहस्त्याङ्गुलावपि । प्रसृत्या प्रमितेऽपि स्यात्" इति हैमः ॥ "गण्डूषो मुखपूर्त्तीभपुष्करप्रसृतोन्मिते" इति मेदिनी ॥ **गर्जः** मेघनादः। मत्तकरी च ॥ **जागरः** निद्राभावः । जागरणम् । कवचश्च । "जागर्या जागरा द्वयोः" इत्यमरः ॥ **भुजः** बाहुः करः त्रिकोणचतुष्कोणादिक्षेत्रस्थरेखाविशेषः । "तथाऽयते तद्भुजकोटिघातः" इति लीलावती । "अस्त्री द्वौ परौ द्वयोः भुजबाहू" इत्यमरः । "भुजा द्वयोर्बाहौ करे" इति मेदिनी ॥ **कीलः** शङ्कुः । शस्त्रम् । अग्निशिखा । कफोणी । स्तम्भः । लेशश्च । "शङ्कावपि द्वयोः कीलः" इत्यमरः । "कीलोऽग्नितेजसि । कफोणिस्तम्भयोः शङ्कौ" इति हैमः । "कीलो लेशे द्वयोः स्तम्भज्वालाकफोणिशङ्कुषु" इति मेदिनी ॥ **ज्वालः** अग्निशिखा। दग्धान्नम् । दाहश्च । "वह्नेर्द्वयोर्ज्वालकीलौ" इत्यमरः । वर्त्तकः पक्षिभेदः । अश्वखुरश्च । "खुरेऽप्यश्वस्य वर्त्तकः" इत्यमरः। "वर्तकस्तु खुरेऽश्वस्य विहगे" इति मेदिनी॥ व्रीडा लज्जा । "मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इत्यमरः । तथा रभसकोपे स्त्रीपुँल्लिङ्गशब्दानां निर्देशे । "गण्डूषगर्जभुजजागरहारकीलज्वालाझटारभसवर्त्तकगद्धशङ्काः । व्रीडादयश्च वरटश्च वराटकश्च उत्कण्ठबाणकरकाश्च समामयाश्च" इत्युक्तम् ॥ **उत्कण्ठः** इष्टलाभे कालासहनरूपम् औत्सुक्यम "उत्कण्ठोत्कलिके समे" इत्यमरः ॥ "चिन्ता तु स्मृतिराध्यानं स्मरणं सस्पृहे पुनः । उत्कण्ठोत्कलिके तस्मिन्नभिध्या तूभयोरपि" इति शब्दार्णवः । **शटः** अम्बलः । सिंहकेशरः । जटा

शङ्खको वृश्चिकः कीटः शारस्तूणो घटः कटः ।
शफरो वेतसश्चामी स्त्रियां ङ्यन्ताः प्रकीर्त्तिताः ॥ १८ ॥
स्त्रीक्लीबयोरुडुर्दामा छर्दिर्ज्योतिः सदोर्चिषः ।
सुखं लक्षं वणिज्यश्च वडिशक्रोडपाटलम् ॥ १९ ॥

वरटशब्दोऽपि पुंस्त्रियोः स्यात् । रभसः वेगः । हर्षः । औत्सुक्यम् । पौर्वापर्याविचारे च "रभसो वेगहर्षयोः" इति मेदिनी । "रभसो हर्षवेगयोः" इति विश्वः । इमे शब्दाः । स्त्रीस्त्रीलिङ्गभावे तु । टाबन्ता टाप्प्रत्ययान्ता एवेति ज्ञेयाः । न तु ईबन्ता इत्यर्थः ॥ १७॥ शङ्खकत्वक् । भेकः । स्वार्थे कन् । त्वक् । शणवृक्षः । पक्षिभेदश्च । "छत्रादिकाष्ठिशरयोः शङ्खवपशुवृक्षयोः" इति मेदिनी ॥ वृश्चिकः कीटभेदः । शुककीटः । मेषादितः अष्टमो राशिः औषधिभेदः । मदनवृक्षः । कर्कटः । गोमयकीटश्च । "वृश्चिकः शुककीटः स्यादलिद्रुणौ वृश्चिके" इत्यमरः । "वृश्चिको द्रुण आलिः स्यात्" इति गोपालितः । "वृश्चिकस्तु द्रुणे राशूककीटौषधीभिदोः" इति मेदिनी ॥ कीटः कृमिभ्यः स्थूलं क्षुद्रजन्तुमात्रम् । स्वार्थे कन् मगधजातिश्च ॥ शारः कर्बुरवर्णः । वायुश्च । "शारो वायौ स तु त्रिषु । कर्बुरे" इत्यमरः "शारः स्याच्छैबले वाच्यलिङ्गः पुंसि समीरणे" इति मेदिनी । तूणः बाणधारः । स्वनामख्यातः इषुधिश्च । "तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः" इत्यमरः । "तूणेषुधी उपासङ्गः" इति रत्नकोषः । घटः कलसः । परिमाणभेदश्च । "कलसस्तु त्रिषु द्वयोः । घटः कुटनिपस्त्री" इत्यमरः । "घटः समाधिभेदेभशिरःकूटकुटेषु च" इति मेदिनी ॥ कटः हस्तिगण्डस्थलम् । कटिपार्श्वः । नडादिरचितमासनम् । अतिशयः । कालः । तृणम् । शवः । शवरथः । ओषधिः । श्मशानश्च । "कटः श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशये शरे । सवये गजगण्डे च" इति मेदिनी ॥ शफरः मत्स्यभेदः ॥ वेतसः वृक्षभेदः । "अथ वेतसः । रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः" इत्यमरः । अमी इमे शब्दाः । स्त्रियां स्त्रीलिङ्गे । ङ्यन्ता ङीप्प्रत्ययान्ताः । प्रकीर्त्तिताः कथिताः । न टाप्प्रत्ययान्ता इत्यर्थः । इमे शब्दगणाः । स्त्रीपुंसयोः स्त्रीलिङ्गे पुँल्लिङ्गे च । स्युरिति पूर्वेणान्वयः ॥ १८ ॥ इति स्त्रीपुँल्लिङ्गसङ्ग्रहः समाप्तः ॥ अथ स्त्रीनपुंसकलिङ्गसङ्ग्रहमाह ॥ उडुः नक्षत्रम् । जलञ्च । "नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्" इत्यमरः । दामा दोहनकाले पशुबन्धनरज्जुः । रज्जुमात्रम् । माला च । स्त्रीत्वे वा टाप् दामा दामे । "न पुंसि दामसन्दानं पशुरज्जुस्तु दामनि" इत्यमरः । छर्दिः वमनरोगः । ज्योतिः सूर्यः । अग्निः । मेथिकावृक्षः । नेत्रकनीनिकामध्यस्थं दर्शनसाधनं पदार्थः । नक्षत्रञ्च । "ज्वालाभासौ न पुंस्यर्चिर्ज्योतिर्भद्योतदृष्टिषु" इत्यमरः । सदः सभा । "समज्यापरिषद्गोष्ठीसभासमितिसंसदः । आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः" इत्यमरः । अर्चिर्वह्न्यादिदीप्तिः शिखा मयूखश्च । "ज्वालाभासौ न पुंस्यर्चिः" इत्यमरः । "अर्चिर्मयूखशिखयोर्न ना" इति मेदिनी सुखं पुण्यजन्यो गुणभेदः । सुखकारकम् । आत्मधर्म इति नैयायिकाः । चित्तधर्म इ

Single figures always refer to the verses. Roman figures have been employed for the chapters or acts in contradistinction to the pages, *e.g.*, in the quotations from the Bâlarâmâyaṇa.

I have to record my thanks to the Committee of the Imperial Academy of Sciences of Vienna, which entrusted me with the preparation of this edition of the Maṅkhakośa; to K. M. Chatfield, Esq., the late Director of Public Instruction, Bombay; to the Government of India, and to Professor Stein, of Lahore, for the loan of the manuscripts; to Professor Pischel for placing at my disposal his copy of the Berlin MS. of the Viśvakośa; and last, not least, to Hofrath G. Bühler, who first drew to light the Maṅkhakośa, and who, with his continued help and encouragement, furthered the publication of this book.

TH. ZACHARIAE.

*Halle, January 29th,* 1897.

# ओं स्वस्ति श्रीगणेशाय नमः । ओं नमः ॥

पातु वोधिधरं दूरविकीर्णकरशीकरः ।
दुःखबीजच्छिदे वर्षत्करका इव विघ्नजित् ॥ १ ॥
विषमपदविषधरालीं निहत्य संगृह्य शेवधिविशेषान् ।
सकलजनसुलभविभवान्कश्चन निर्मत्सरः कुरुते ॥ २ ॥
भागुरिकात्यहलायुधदुर्गामरसिंहशाश्वतादिकृतान् ।
कोशान्निरीक्ष्य निपुणं धन्वन्तरिनिर्मितं निघण्टुं च ॥ ३ ॥
लिङ्गानुशासनानि च विचार्य लक्ष्यं महाकवीनां च ।
कुरुतेनेकार्थानां शब्दानां मङ्खकः कोशम् ॥ ४ ॥
यथासंभवकान्तादिक्रमादक्षरसंख्यया ।
करामलकवत्साक्षादेष भासिष्यते सताम् ॥ ५ ॥
यत्रैक एव रूढोर्थो यौगिकस्तत्र दर्श्यते ।
अनेकस्मिंस्तु रूढेर्थे यौगिकः प्रोच्यते न वा ॥ ६ ॥
पदभङ्गादनेकोर्थः प्रकटीक्रियते न च ।
विशेषणप्रत्ययाद्यैः सिद्धं लिङ्गं न चोच्यते ॥ ७ ॥
प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित् ।
स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित् ॥ ८ ॥
त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति ।
निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक् ॥ ९ ॥

---

को धात्रर्कात्मवातेषु कं शिरोम्बुसुखेषु तु ।
आकाशे त्रिदिवे नाको लोकस्तु भुवने जने ॥ १० ॥
पद्ये यशसि च श्लोकष्टङ्को दर्पेश्मदारणे ।
अङ्क एकादिगणनान्यास उत्सङ्गचिह्नयोः ॥ ११ ॥

भानुद्रुस्फटिका अर्काः शल्के शकलवल्कले ।
किष्कुर्माने चतुर्विंशद्द्वादशाङ्गुलसंमिते ॥ १२ ॥
साष्टे शते सुवर्णानां हेम्नि हेमदले पले ।
उरोविभूषणे कर्षे दीनारे निष्कमस्त्रियाम् ॥ १३ ॥
रोकौ दीप्तौ बिले चूर्णे कल्कोऽस्त्री समलैनसोः ।
दम्भेल्पपुत्रयोः स्तोकः पाकौ पचनशावकौ ॥ १४ ॥
शुल्कोऽस्त्री घट्टलभ्येऽर्थो जामातुर्गृह्यते च यः ।
नगरीशाखयोर्लङ्का शङ्का त्रासवितर्कयोः ॥ १५ ॥
ऊहाकाङ्क्षावितर्केषु तर्को मुख्यान्यकेवलाः ।
एके त्रिषु च संख्यायां पङ्कोऽस्त्री कर्दमैनसोः ॥ १६ ॥
चक्रवाकवृकौ कोकौ भेकौ मण्डूकभीरुकौ ।
गृहासक्ताः पक्षिमृगाश्छेकाः सहृदया अपि ॥ १७ ॥
झषायुधभिदोः स्थाणौ शङ्कुः कीलकसंख्ययोः ।
कूपयन्त्रे त्रिका क्लीबे गात्राङ्गे त्रितये तथा ॥ १८ ॥
त्रिषु त्रयाणां संघाते मूकोवागज्ञयोस्त्रिषु ।
राका नवरजःकन्या पूर्णिमा प्रतिपद्युता ॥ १९ ॥
किंशारौ कण्टके च स्याच्छूकोनुक्रोशशुङ्गयोः ।
रत्नस्वरूपभिच्छत्त्रभाण्डाभ्यञ्जनतूलिकाः ॥ २० ॥
परीक्षा च शलाका स्याद्गुरौ देश्ये च दैशिकः ।
चित्रकृद्भाण्डशय्याभिच्छलाकासु च तूलिका ॥ २१ ॥
विलेपने चन्दने च परीक्षोद्धृतवस्तुनि ।
ना वर्णकस्तान्तवे स्याद्द्वयो रागेषु वर्णिका ॥ २२ ॥
पर्यायाद्यादिकथने व्याख्यातरि भवेत्त्रिषु ।
यूथीभ्यौ गणिका वेश्या दैवज्ञे त्रिषु चित्रकम् ॥ २३ ॥
तिलके ना तु शार्दूले पाठ्यामेरण्डके तथा ।
जम्बुकौ क्रोष्टुवरुणौ कलङ्कोङ्कापवादयोः ॥ २४ ॥
पृथुको बालको भक्ष्यं खलभृष्टार्द्रसस्यजम् ।
आलोकौ दर्शनोद्द्योतौ भेरीपटहमानकः ॥ २५ ॥

शराज्ञयोः स्यान्नालीकस्तक्षकौ नागवर्धकी ।
स्यात्पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके ॥ २६ ॥
उलूके करिणः पुच्छमूलोपान्ते च पेचकः ।
कमण्डलौ दाडिमे ना करकः करिका पुनः ॥ २७ ॥
मद्यभाण्डे च करका भवेद्वर्षोपले द्वयोः ।
करङ्को मांसरहिते ताम्बूलादेश्च भाजने ॥ २८ ॥
– – – – – – – – – – – – – – – – ।
प्रतिकूले प्रतीकं त्रिष्वंशे दीपे च पुंस्ययम् ॥ २९ ॥
छत्रायवान्योर्भूतीकं भूनिम्बे कट्फलेऽपि च ।
यवान्यां जीरके दीपे नालंकारे तु दीपकम् ॥ ३० ॥
कौशिका गाधिजोलूकगुग्गुल्विन्द्राहितुण्डिकाः ।
कनिष्ठे च दरिद्रे च स्वल्पेपि क्षुल्लकस्त्रिषु ॥ ३१ ॥
तिलकल्के सिल्हके च पिण्याकोथ द्वयोः खगे ।
वर्तकोश्वखुरे पुंसि शरे खड्गे च सायकः ॥ ३२ ॥
व्यलीकं कामजे दोषे विलक्षाप्रिययोरपि ।
विपर्यये रुजायामप्यकार्ये चाथ गैरिकम् ॥ ३३ ॥
स्वर्णे धातुविशेषे चाथाम्बिका मातृकोमयोः ।
भालानृताप्रियेलीकमनूकं कुलशीलयोः ॥ ३४ ॥
क्षुरिकोमा करेण्वां च धेनुका चाथ कालिका ।
देव्यां वृद्धौ स्वर्णमले मेघजालेथ कारिका ॥ ३५ ॥
यातनावृत्तिकृतिषु ना भृत्ये त्रिषु कर्तरि ।
कर्मादौ साधने क्लीबे कर्णिका कर्णभूषणे ॥ ३६ ॥
करिहस्ताङ्गुलौ पद्मबीजकोश्यां स्त्रिया गदे ।
वाह्लीकं कुङ्कुमे हिङ्गौ वाह्लिदेशोद्भवे त्रिषु ॥ ३७ ॥
विवाहमङ्गलद्रव्ये कौतुकं कुतुके तथा ।
द्वयोः शिशौ वालुकायां भूषाभेदे च वालिका ॥ ३८ ॥
कङ्कणे चाङ्गुलीये च ह्रीवेरे चापि वालकम् ।
प्रियकौ नीपबन्धूकौ कारम्भो मृगभित्तथा ॥ ३९ ॥

उदर्क उत्तरे काले फले चोत्तरकालिके ।
मेचकं त्रिषु कृष्णे स्यात्पुमांस्तु शिखिचन्द्रके ॥ ४० ॥
विधवाया जारजाते गुले पिण्डे च गोलकः ।
त्रिशलोक्यां कृष्णलवणे तिलकं क्लोम्नि चास्त्रियाम् ॥ ४१ ॥
जडुले चित्रके ना तु रातङ्कस्तापभीरुजः ।
गुणवृक्षः कूपकः स्यात्तोयार्थं विवरश्च यः ॥ ४२ ॥
अल्पकूपः श्रोणिपार्श्वगर्तावथशिलाजतु ।
सौभाञ्जनं गन्धकं स्याद्रेणुकौषधभित्तथा ॥ ४३ ॥
भार्गवाम्बा पुण्डकोतिमुक्तेक्षुतिलकेषु तु ।
प्रस्तरे पुलकं ना तु रोमाञ्चक्रिमिभेदयोः ॥ ४४ ॥
क्षुद्रवैरिणि रोमाञ्चे तरोरङ्गे च कण्टकः ।
कटकोस्त्री नितम्बोद्रेः क्लीबे वलयसैन्ययोः ॥ ४५ ॥
इक्षुशीधौ शीधुपाने सरकं मद्यभाजने ।
तारकक्ष्णि च न ना दैत्यभेदे पुमानयम् ॥ ४६ ॥
देवीभेदे तारिका स्यात्पिटके मत्स्यपक्षिणाम ।
क्षारकं कोरके चाथ जीवकः प्राणके त्रिषु ॥ ४७ ॥
बन्धूके क्षपणे पुंसि जीवने वेतने स्त्रियाम् ।
पर्यस्तिकायां शयने पर्यङ्कोथ भयोज्झिते ॥ ४८ ॥
त्रिष्वभीकः कामयिता कुलटेभी च बन्धकी ।
आधावस्त्री बन्धिका तु बन्धकारिणि वाच्यगा ॥ ४९ ॥
वार्द्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि ।
स्याद्दर्शकः प्रतीहारस्त्रिषु दर्शयिता पुनः ॥ ५० ॥
चर्चायां स्थासको ज्ञेयो हारभेदेपि बुद्बुदे ।
स्यादंशुकं शुक्लवस्त्रे वस्त्रमात्रोत्तरीययोः ॥ ५१ ॥
शिशुकः शिशुमाराख्यनक्रोलूप्योश्च बालके ।
त्रिष्वथो मधुयष्ट्यां स्यान्मधुकं वन्दिभित्पुमान् ॥ ५२ ॥
खनकी त्रिषु शिल्पिन्यां खनकौ भेत्तृमूषकौ ।
जलाधारे स्त्रियां रत्नाद्याकरे चाथ कार्मुकम् ॥ ५३ ॥

चापे त्रिषु तु कर्मण्ये शक्तमात्रेथ कञ्चुकः ।
निर्मोके कवचे वारवाणेथ धनदस्य पूः ॥ ५४ ॥
अलका स्त्रीकचे न त्वनीकं तु रणसैन्ययोः ।
वञ्चको जम्बुके धूर्ते स्त्री चुल्ल्यां निकटेन्तिकम् ॥ ५५ ॥
विपाकौ पचनस्त्वेदौ कृषकौ फालकार्षकौ ।
कनकं मातुले स्वर्णे रेखाद्वयोस्तु राजिका ॥ ५६ ॥
स्यादार्द्रायां शाकुनिके लुब्धको मध्यगो मणिः ।
नेता च नायको नाट्यपात्रभूम्युत्तमे द्वयोः ॥ ५७ ॥
खेटकौ ग्रामफलकौ पेटकं भाण्डवृन्दयोः ।
त्रिष्वतो जालिकौ धूर्तधीवरौ पद्मकेसरे ॥ ५८ ॥
पुष्परेणौ च किञ्जल्को दारकौ बालभेदकौ ।
करभ्यां भाण्डभेदे चाप्युष्ट्रिकाथ वितर्दिका ॥ ५९ ॥
वलभी चोन्नते देशे विटङ्कः पुंनपुंसकः ।
शांकरे शूलधनुषी पिनाकावथ जालकम् ॥ ६० ॥
जालाभे क्षारके संघे ना प्राणी स्त्री मुखावृतौ ।
सेवाजीवे प्रसेवे च सेवकः सूतको महे ॥ ६१ ॥
सूतिका सूतका सूता क्लीबे जन्मनि ना रसे ।
जनकौ पितृवैदेहौ दीक्ष्यभेदे तु पुत्रकः ॥ ६२ ॥
कृत्रिमादौ द्वयोः स्त्रीत्वे पुत्रका पुत्रिकापि च ।
अभ्रातृपितृका कन्या पूर्णदाया च पुत्रिका ॥ ६३ ॥
जलधानी वारिपर्णी वलनं नरकास्पदम् ।
कुम्भिका प्राणरोधे ना कुलकं श्लोकसंचये ॥ ६४ ॥
न स्त्री पटोले काकेन्दुतरौ श्रेष्ठिनि चापि ना ।
पट्टिकातूलपूगेषु क्रमुकोथौषधीभिदि ॥ ६५ ॥
आढकी मानभित्स्त्री कैशिकं केशसंचये ।
ना रागभेदे वृत्तौ तु कैशिकी हस्तिबिन्दुषु ॥ ६६ ॥
औषधे च कुसुम्भे च पद्मकं स्यात्तु यावकः ।
कुल्मासेलक्तके च स्युः सेनारक्षास्तु सैनिकाः ॥ ६७ ॥

सेनायां समवेताश्च रीतिपुष्पं तु पुष्पकम् ।
विमाने नेत्ररोगे ना पौष्पिकी त्रिषु शिल्पिनि ॥ ६८ ॥
रीतिपुष्पे भवेत्क्लीबं वातिकौ रोगिमान्त्रिकौ ।
भावुकं कुशलं क्लीबं भवेद्भवितरि त्रिषु ॥ ६९ ॥
रुचकः स्यान्मातुलुङ्गेरण्डभूषाललामसु ।
क्लीबे सौवर्चलेथान्तरङ्ग उण्डूकमुत्करे ॥ ७० ॥
पुंस्यथो मल्लिका दीपपात्रं शेफालिवाद्यभित् ।
मोचकः शल्मलिः सौभाञ्जनो रम्भा च मोक्तरि ॥ ७१ ॥
तद्धेतौ त्रिषु चाक्रेरी शौण्डिकी चुक्रिकाम्बिका ।
पदातिः पदिकः पुंसि भवेत्स्थानवति त्रिषु ॥ ७२ ॥
अलातमुल्मुकं वृष्णिराजभेदे पुमानयम् ।
मड्डुकं वाद्यभेदे च मुष्टौ स्यात्फलकस्य च ॥ ७३ ॥
खजाको दारुहस्ते च मन्थे च पदकः पुमान् ।
पदाध्येता मध्यमणिश्चरणत्रे नपुंसकम् ॥ ७४ ॥
क्रीताद्यर्थे पादिकः स्याद्वेद्यवत्पादिका पुनः ।
उपानद्रसतूर्येण वेधः स्वर्णादिकस्य च ॥ ७५ ॥
चालको दुष्टहस्ती स्याच्चाक्रिकश्चाथ चन्द्रकः ।
बर्हमपक्षे तोयस्थतैलादिप्रसरे तथा ॥ ७६ ॥
मोदको भक्ष्यभित्पुंसि हर्षहेतौ भवेत्त्रिषु ।
कीचकाः स्युर्विराटस्य स्याला वंशाश्च सस्वनाः ॥ ७७ ॥
सिंहिका राहुमाता स्याद्घ्राशिका सिंहपोतिका ।
लाक्षारक्तो लाक्षिकः स्याल्लक्षमूल्यश्च भेद्यवत् ॥ ७८ ॥
इक्ष्वाकुः कटुतुम्ब्यामप्यादिराजेथ कालिमा ।
स्वर्णव्याजो लोहमलं श्यामिका गण्डकं पुनः ॥ ७९ ॥
उपधाने स्त्रियां छेदे ना प्राण्यथ कदम्बकम् ।
समूहे सर्षपे पुंसि विषे सौराष्ट्रिकः पुमान् ॥ ८० ॥
सुराष्ट्रजे त्रिष्वथार्घोरुके चण्डातकं नरि ।
करवीरौषधौ गन्धाश्मनि सौगन्धिकं तथा ॥ ८१ ॥

कह्लारेथ क्लीतकिका मधुयष्टी च नीलिका ।
अश्मन्तकं भवेच्चुल्ल्यां ना वृक्षतृणभेदयोः ॥ ८२ ॥
तार्क्ष्ये गणेशे प्रेतेशे सुगते च विनायकः ।
पटोलिकाप्यपामार्गः कोशातक्यथ कट्फले ॥ ८३ ॥
करञ्जे खदिरे सोमवल्कः सालावृकः कपिः ।
क्रोष्टा श्वा स्यादथायुष्मान्भवेज्जैवात्रिकः शशी ॥ ८४ ॥
स्तनवृन्ते पिप्पलकः शल्लीसीवनसूत्रयोः ।
भङ्गारकः पक्षिभेदे भौमे वह्निकणे तथा ॥ ८५ ॥
द्वयोः कपर्दके बीजकोशेब्जस्य वराटकः ।
प्रसेवकस्तु ककुभे त्रिषु सेवापरायणे ॥ ८६ ॥
हारभेदे माणवको बाले कुपुरुषे द्वयोः ।
वैदेहको वाणिजके शूद्राद्वैश्यासुतेपि च ॥ ८७ ॥
विदेहादागतादौ च द्वयोः कौलेयकः शुनि ।
त्रिषु कुल्येथ यन्ता च पोतवाहो नियामकः ॥ ८८ ॥
स्याद्दाम्भिकः कौक्कुटिको यश्चादूरेरितेक्षणः ।
लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः ॥ ८९ ॥
वीच्युत्कण्ठे उत्कलिके देवे वृन्दारकः पुमान ।
त्रिषु मुख्ये मनोज्ञे च पुण्डरीकस्तु दिग्गजे ॥ ९० ॥
व्याघ्रे सिताम्बुजसितच्छत्रयोस्तु नपुंसके ।
अनेलमूकस्त्रिष्वन्धे शठे वाक्कायवर्जिते ॥ ९१ ॥
पीतयूथ्यां स्त्रियां हेमपुष्पिका चम्पके नरि ।
उपकर्त्र्यां त्रिषु स्त्री तु पटकुट्युपकारिका ॥ ९२ ॥
बोधके त्रिषु खट्वाङ्घ्र्याधारे स्यात्प्रतिपादकम् ।
मातुलापत्ये धतूरफले मातुलपुत्रकः ॥ ९३ ॥
खानि स्वरिन्द्रियाकाशा आद्युपायानने मुखम् ।
अग्रज्वालाकेकिचूडाचूडाशाखाशिफाः शिखाः ॥ ९४ ॥
शङ्खो निधौ ललाटास्थ्नि नागेह्नीशे नखौषधौ ।
कम्बावखी नखोप्येवमोषधौ करजे तथा ॥ ९५ ॥

व्युष्टौ मन्त्रषडोंकारमनोज्ञावथ दैवते ।
लेख्ये च लेखः पङ्क्तौ स्त्री चन्द्रांशाभोगयोरपि ॥ ९६ ॥
व्याज आभोग उल्लेख्ये रेखा स्यादल्पके तथा ।
उखा स्थाल्यां यज्ञभाण्डे शाखा वेदद्रुमांशयोः ॥ ९७ ॥
हस्तद्वाराङ्घ्र्यवयवे सखा मित्रसहाययोः ।
आदौ प्रधाने प्रमुखमग्रे चाथ नपुंसकम् ॥ ९८ ॥
धानुष्कस्थानभेदे ना वैशाखो मासमन्थयोः ।
वाद्यभाण्डे लेपने च गोमुखं विशिखा पुनः ॥ ९९ ॥
प्रतोल्यां च खनित्र्यां च निशूडे सायके पुमान् ।
विशाखः षण्मुखे शाखारहिते भे पुनः स्त्रियाम् ॥ १०० ॥
मयूखस्त्विट्करज्वालास्वलिबाणौ शिलीमुखौ ।
स्त्रियां वह्नयर्चिरोषध्योः क्लीबमग्निशिखं वरे ॥ १०१ ॥
क्लीबे जले ब्रह्मणि तु पुमान्स्यात्सर्वतोमुखः ।
स्यात्क्लीबे मकरमुखं मकराकारधारिणि ॥ १०२ ॥
जलनिर्गमनद्वारे जानूर्ध्वावयवे तथा ।
स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले ॥ १०३ ॥
लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः सङ्गः श्लेषरोधयोः ।
भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ॥ १०४ ॥
मोक्षविज्ञानवैराग्ययोनिधर्मेष्वथो मृगः ।
मृगशीर्षे हस्तिजातौ कुरङ्गे मार्गणे पशौ ॥ १०५ ॥
सषडङ्कुलयोनौ तु नायिकायां भवेन्मृगी ।
सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ॥ १०६ ॥
पालनेऽभ्यवहारे च निर्वेशे च पणस्त्रियः ।
भोगः स्याद्वित्तसुखयोरहेश्च फणकाययोः ॥ १०७ ॥
योगः संनहनोपायध्यानसंगतियुक्तिषु ।
अलब्धलाभे भैषज्ये शरे विस्रब्धघातिनि ॥ १०८ ॥
मासान्वेषणयोर्मार्गस्तथा मृगमदाध्वनोः ।
द्वयोरहौ गजे नागः क्लीबे सीसकरङ्गयोः ॥ १०९ ॥

संघगूवाकयोः पुगः शैलवृक्षौ नगात्रगौ ।
रागः क्लेशादिके सङ्गे पानके लोहितादिषु ॥ ११० ॥
यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु ।
चतुर्हस्तप्रमाणे च शरार्कविहगाः खगाः ॥ १११ ॥
सांख्योक्तप्रकृतौ बुद्धौ लिङ्गं स्याच्चिह्नशेपसोः ।
उपकारिण्युपायेऽङ्गं गात्रे ना त्वङ्गवत्यथ ॥ ११२ ॥
नृत्तयुद्धखले रागे रङ्गः क्लीबे त्रपुण्यथ ।
धनुर्मात्रे विष्णुचापे शार्ङ्गं भृङ्गस्तु षट्पदे ॥ ११३ ॥
धूम्राटे च त्वचे क्लीबे शृङ्गं स्वाम्याद्रिकूटयोः ।
क्रीडाम्बुपात्रे पदवङ्गे भागो भाग्यैकदेशयोः ॥ ११४ ॥
भेदोर्मिभक्तिकौटिल्यभीषु भङ्गः स्त्रियां शणे ।
वेगः प्रवाहजवयोर्भङ्गिर्भक्तितरंगयोः ॥ ११५ ॥
गिरीशभास्करौ भर्गौ खङ्गोसौ गण्डकेपि च ।
वर्गः पक्षे समूहे च त्यागस्त्यजनदानयोः ॥ ११६ ॥
वङ्गं त्रपुणि ना राज्ञि तद्देशे तत्सुते बहुः ।
भृगुः प्रपातो मुनिभित्तत्सुते पुंसि भूमनि ॥ ११७ ॥
तुङ्गाजगन्धा पुंनागे नोच्चे त्रिष्वल्पमोघयोः ।
काकोदुम्बरिकायां ना फल्गुरिङ्गं नरीङ्गिते ॥ ११८ ॥
क्लीबं जगति रक्ताङ्गः कम्पिल्येङ्गारके तथा ।
आशुगौ वायुविशिखौ भुजंगः शिङ्गसर्पयोः ॥ ११९ ॥
गन्धमाल्योपहारे स्यादायोगो व्यापृतावपि ।
परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि ॥ १२० ॥
कलिङ्गः स्यादिन्द्रयवे शाके धूम्याटदेशयोः ।
चातके हरिणे पुंसि सारङ्गः शबले त्रिषु ॥ १२१ ॥
शालिप्रभेदे शलभे पतंगः पक्षिसूर्ययोः ।
मातङ्गाविभचण्डालौ निषङ्गः सङ्गतूणयोः ॥ १२२ ॥
वराङ्गं मस्तके योनौ त्वचेथ कपिभेकयोः ।
प्लवगो लोचनान्ते स्यादपाङ्गस्तिलकेपि च ॥ १२३ ॥

रते भोगे च संभोगः प्रियङ्गुः कङ्गुसस्ययोः ।
निर्माणे च स्वभावे च निसर्गौ द्रुमिदघ्ययोः ॥ १२४ ॥
पुंनागोथ विसर्गः स्यात्त्यागे बिन्दुद्वये तथा ।
सामान्यविधिरुत्सर्गः प्रचारस्त्याग एव च ॥ १२५ ॥
समङ्गा गण्डकाल्याख्यशाकमञ्जिष्ठयोर्भवेत् ।
स्यादुद्वेगः पुनान्खेदे क्लीबे पूगफले पुनः ॥ १२६ ॥
त्रिवर्गौ धर्मकामार्थाः स्थानं वृद्धिः क्षयस्तथा ।
रतान्विती संप्रयोगावभिषङ्गः पराभवे ॥ १२७ ॥
आक्रोशशापयोश्चापवर्गौ मोक्षे क्रियाफले ।
त्यागे चाथोपरागः स्यादुपरक्तौ विधुंतुदे ॥ १२८ ॥
व्यसनेथ वृके काव्यभेद ईहामृगः पुमान् ।
पदभेदे तूपसर्गः पीडोपद्रवयोरपि ॥ १२९ ॥
उपयोगस्तु भोगे स्याद्विद्याया ग्रहणे तथा ।
कथाप्रसङ्गः संलापक्षणे गारुडिके तथा ॥ १३० ॥
वृन्दाम्बुवेगयोरोघो दुःखांहोव्यसनेष्वघम् ।
स्त्री स्पृक्काल्पेष्टाद्रवसारे लघु त्रिष्वगुरौ तु ना ॥ १३१ ॥
मूल्ये पूजाविधावर्घौ द्रव्ये तदुपकारके ।
आयुधार्गलघातेषु परिघः प्रतिघः पुनः ॥ १३२ ॥
द्वेषे शत्रावथ ग्रीष्मे निदाघः स्वेदतापयोः ।
तापके त्रिष्वथामोघा विडङ्गं पाटला तथा ॥ १३३ ॥
दिग्देशकाले पूर्वादिभावे प्रागादयस्त्रिषु ।
वल्कचर्मत्वचेषु त्वग्वाग्वाण्यां वाचकार्थयोः ॥ १३४ ॥
शुक्शोके व्यसने तापे रुक्स्याद्दीप्त्यभिलाषयोः ।
श्मश्रुमर्मभिदोर्दम्भे केशभञ्जनभाजने ॥ १३५ ॥
कुविन्दभाण्डे कूर्चः स्याच्चित्रकृद्भाजने द्वयोः ।
सौवर्णरसदाने स्त्री ताम्रादेः पावके शुचिः १३६ ॥
मास्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु ।
इच्छांशुसङ्गेषु रुचिः केशे शुक्रसुते कचः ॥ १३७ ॥

अर्चे पूजाकृती काचाः शिक्यमृज्ञेददृग्रुजः ।
व्यधनेभिनये सूचा वीचिः स्वल्पतरंगयोः ॥ १३८ ॥
देवीस्थासकचिन्तासु चर्चा नीचमधोधमम् ।
त्रिषूर्ध्वोत्कृष्टयोश्चोचः पिचुः स्यात्पायुतूलयोः ॥ १३९ ॥
मोचा कदल्यां ना वृक्षे चोचं पालेवते त्वचे ।
देशमेखलयोः काञ्ची प्रपञ्चस्ततिमाययोः ॥ १४० ॥
संकोचं कुङ्कुमे क्लीबं ना विकासविपर्यये ।
त्रिषूत्फुल्ले तु विकचो द्रव्यभेदे नपुंसकम् ॥ १४१ ॥
सूक्ष्मैला नीलिनी तुच्छा लाघवेल्पे भवेत्त्रिषु ।
कच्छस्तु गहनो देशस्तुन्याख्या चौषधिर्भवेत् ॥ १४२ ॥
स्तवके हारभेदे च गुच्छोच्छो निर्मलेल्पके ।
मोचस्रावो भवेत्पिच्छा द्वयोस्तु विषदेतरे ॥ १४३ ॥
अब्जो धन्वन्तरौ चन्द्रे शङ्खे पद्मे नपुंसकम् ।
त्रिषु कुब्जेधोमुखे च न्युब्जो बीजं तु रेतसि ॥ १४४ ॥
हेतावङ्कुरकार्ये च दन्तविप्राण्डजा द्विजाः ।
स्त्री करेण्वोषधौ व्याजो दोषे दम्भापदेशयोः ॥ १४५ ॥
छागोजो ब्रह्मविष्ण्वीशा गोष्ठाध्वनिवहा व्रजाः ।
समे क्ष्मांशे रणेप्याजिः प्रजा स्यात्संततौ जने ॥ १४६ ॥
ध्वजश्चिह्ने पताकायां स्वके नित्ये निजं त्रिषु ।
खनौ सुरागृहे गञ्जा भाण्डागारे पुमानथ ॥ १४७ ॥
कुञ्जोत्री गहने दन्ते गुञ्जा स्यात्काकचिञ्चिका ।
वाद्यभाण्डे च वाणिज्ये तज्जीविन्यपि ना वणिक् ॥ १४८ ॥
निसर्गे च सहोत्थे च सहजं त्रिष्वथाण्डजाः ।
मीनपक्ष्यहयः सामजाते हस्तिनि सामजः ॥ १४९ ॥
बलजे क्षेत्रपूर्द्वारे त्रिषु स्याद्वल्गुदर्शने ।
अङ्गजो मन्मथे पुत्रे शोणिते तु नपुंसकम् ॥ १५० ॥
कोकिताक्ष्यविहिभुजावग्रजो भ्रातृविप्रयोः ।
लाक्षा स्त्रियां स्यात्क्रिमिजा पट्टवस्त्रे नपुंसकम् ॥ १५१ ॥

करजो नक्तमाले स्यान्नखे च निचुलोम्बुजः ।
पद्मे क्लीबं विप्रवरे द्विजराजः शशिन्यपि ॥ १५२ ॥
धर्मराजः प्रेतराजे षडभिज्ञे युधिष्ठिरे ।
ग्रहराजौ चन्द्रसूर्यौ शूद्रनीचौ जघन्यजौ १५३ ॥
ज्ञः सौम्ये त्रिषु सूरौ त्रिष्वज्ञो मूर्खेर्भके द्वयोः ।
ज्ञे प्राज्ञस्त्रिषु धीः प्रज्ञा संज्ञाश्चिन्नामसूचनाः ॥ १५४ ॥
शिवबुद्धौ तु सर्वज्ञौ दोषज्ञा वैद्यवित्खलाः ।
पुंस्यात्मनि प्रवीणे तु क्षेत्रज्ञो वाच्यलिङ्गकः ॥ १५५ ॥
मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ।
अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ॥ १५६ ॥
क्लीबे हस्तिनखे घण्टा किङ्किणी पाटलिस्तरुः ।
सूक्ष्मैलायां त्रुटिः स्त्री स्यात्कालेल्पे संशये तथा ॥ १५७ ॥
अर्त्यर्बुदाश्रयः कोटयो मूले लग्नकचे जटा ।
मांस्यां नटस्तु पत्तोर्णो नड्यां स्त्री नर्तके द्वयोः ॥ १५८ ॥
व्युष्टिः फले समृद्धौ च दृष्टिर्ज्ञानेक्ष्णि दर्शने ।
इष्टिर्यागेच्छयोः स्पष्टं निश्चिते बहुनि त्रिषु ॥ १५९ ॥
शवे श्रोणौ कलिञ्जे च गजगण्डे भृशे कटः ।
रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः ॥ १६० ॥
चट्टुः पिचण्डे भूपादेरपि सद्गुणवर्णने ।
कष्टे तु कृच्छ्रगहने कृष्टिः कर्षे बुधे तु ना ॥ १६१ ॥
देवशिल्पिनि तक्ष्ण्यर्के त्वष्टाथ चतुरेरुजि ।
त्रिष्वगुरौ ना पटोले क्लीबं तु लवणे पटु ॥ १६२ ॥
दिष्टं दैवे पुमान्काले कुटः कुम्भे गृहे द्वयोः ।
अत्यर्थगृहयोरट्टः सिद्धान्ने च वणिक्पथे ॥ १६३ ॥
पोटा दासी द्विलिङ्गा च सृष्टिः सर्गस्वभावयोः ।
पुटं व्याघ्रनखे जातीफले हस्तादिसंपुटे ॥ १६४ ॥
त्सरौ पणे पाणिबन्धे मुष्टिः पर्यन्तवस्त्रयोः ।
पट्टो घट्टः शुल्कदेशे तरोपाये घटी द्वयोः ॥ १६५ ॥

भाण्डे गोष्ठ्यां हस्तिपङ्क्तौ घटनायां तथा घटा।
दिष्टिः स्यात्तु परीमाणभेद आनन्दने स्त्रियाम् ॥ १६६ ॥
आजूवेतनयोर्विष्टिः करणे कर्मकृत्यपि।
अविस्पष्टे तु वचसि म्लिष्टं म्लाने त्रिलिङ्गकम् ॥ १६७ ॥
आशंसिते भवेदिष्टं यज्ञादौ दीयते च यत्।
दृष्टं स्यादैहिके दृष्टौ त्रिषु ज्ञातेवतारिते ॥ १६८ ॥
ग्रामभेदे मले खेटः कुत्सिते च भवेत्त्रिषु।
रिष्टं स्यादशुभे पापे घृष्टिर्घर्षे किरे तु ना ॥ १६९ ॥
वातवर्षप्रतिहते विस्मिते हर्षिते त्रिषु।
रोमाञ्चविषये क्लीबे हृष्टः केशेषु पुंस्ययम् ॥ १७० ॥
झाटामलक्यां गहने ना सटा सिंहकुन्तले।
जटायां स्वादु शुद्धं च क्षान्तं मृष्टं भवेत्त्रिषु ॥ १७१ ॥
शिष्टस्तु साधौ खसिते विहिते शिक्षिते त्रिषु।
त्रोटिः स्यात्पक्षिचञ्च्वां स्त्री द्विधाभावे च वस्तुषु ॥ १७२ ॥
अरिष्टमासवे तक्रे लक्षणे मृत्युसूचके।
सूतिगेहे चाप्यशुभे शुभे तद्वति तु त्रिषु ॥ १७३ ॥
ना दैत्ये लशुने काके निम्बफेनिलवृक्षयोः।
सुवासिन्यां चिरण्टी स्याद् द्वितीयवयसि स्त्रियाम् ॥ १७४ ॥
परिचर्यान्वेषणयोः परीष्टिः स्त्री त्रिषूत्कटः।
प्रबले च प्रमत्ते च कूपीटमुदरे जले ॥ १७५ ॥
विकटस्तु करालोर्वोरवटः कूपगर्तयोः।
त्रिषु प्रमत्ते करटः स्यात्तु काकेभगण्डयोः ॥ १७६ ॥
खाद्यप्रभेदे चिपिटस्तथा पिच्चितविस्तृते।
अज्ञानादर्शनासौम्याक्षिष्वदृष्टिरथ त्रिवृत् ॥ १७७ ॥
सूक्ष्मैला त्रिपुटा मर्कटचपामार्गः करञ्जभित्।
कपिकच्छूद्वयोः प्राणीभगण्डद्वारपट्टयोः ॥ १७८ ॥
कवाटः स्यादथोच्छिष्टं भुक्तशेषे नपुंसके।
क्षते च वृक्षभेदस्तु पत्त्रोर्णाख्यः कुटन्नटः ॥ १७९ ॥

कुटन्नटा दाशपुरे शाकभेदे न पुंसि च ।
देशानोकहयोर्भेदे करहाटोम्बुजाङ्कुरे ॥ १८० ॥
शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे ।
प्रत्याख्याते प्रेषिते च प्रतिशिष्टस्त्रिलिङ्गकः ॥ १८१ ॥
तुलाकोटिर्मानभेदेर्बुदे स्यान्नूपुरे पुमान् ।
पुंसि कोष्ठोन्तर्जठरं कुसूलोन्तर्गृहं तथा ॥ १८२ ॥
दिक्कालोत्कर्षमर्यादाः काष्ठाः क्लीबे तु दारुणि ।
समीपगलशब्देषु कण्ठोथर्क्षभिदि स्त्रियाम् ॥ १८३ ॥
मासभेदे पुमाञ्ज्येष्ठस्त्रिषु वृद्धप्रशस्ययोः ।
गोस्थानाङ्गनयोर्गोष्ठं कुष्ठमोषधिरोगयोः ॥ १८४ ॥
निष्ठा निष्पत्तिनाशान्ताः पार्ष्णिगप्रसभौ हठौ ।
पाठः पुमानध्ययने स्त्रियां स्यादोषधीभिदि ॥ १८५ ॥
देशभेदे महादेवे श्रीकण्ठः संकरोद्भवे ।
अम्बष्ठो यूथिकापाठाचाङ्गेरीषु स्त्रियां भवेत् ॥ १८६ ॥
प्रतिष्ठास्पदमर्यादादेवादिस्थापनेष्वथ ।
अतिविस्तीर्णवरयोर्वरिष्ठं स्यात्त्रिलिङ्गकम् ॥ १८७ ॥
कमठौ मानभिल्कूर्मौ कनिष्ठोतियुवाल्पयोः ।
नीलकण्ठः शिवो बर्ही कलकण्ठौ स्रवाक्पिकौ ॥ १८८ ॥
चाङ्गेरी स्याद्दन्तशठा ना जम्बीरकपित्थयोः ।
पतिवत्नीसुते जारात्कुण्डः क्लीबे न भाजने ॥ १८९ ॥
न ना कुण्डी जलाग्न्यादेराधारे स्यान्नपुंसकम् ।
वंशाङ्कुरे सिंहनादे क्ष्वेडा ना विषशब्दयोः ॥ १९० ॥
इषौ पुमान्विपाठः स्यात्पाठहीने तु वाच्यवत् ।
मस्त्वाचामद्रवा मण्डास्तरुस्कन्धलतेपि च ॥ १९१ ॥
काण्डोस्त्री दण्डबाणार्ववर्गावसरवारिषु ।
स्याद्भाण्डमश्वाभरणे पात्रे मूलवणिग्धने ॥ १९२ ॥
तुर्योपाये राजबले दण्डोस्त्री लगुडे मथि ।
गुडौ गोलेक्षुविकृती स्नुहीगुलिकयोः स्त्रियाम् ॥ १९३ ॥

संघातमासयोः पिण्डी द्वयोः पुंसि कलेवरे ।
गण्डौ कपोलविस्फोटौ मुण्डं के त्रिषु मुण्डिते ॥ १९४ ॥
स्थाणौ तु ना त्रिष्वजातशृङ्गकाकृतचूडयोः ।
खण्डोऽस्त्री शकलेपीक्षुभेदे स्फुटितशृङ्गके ॥ १९५ ॥
द्वयोर्गवादौ शौण्डा तु पिप्पली वृषभे नरि ।
समर्थे मधुसक्ते च विज्ञेयो वाच्यलिङ्गकः ॥ १९६ ॥
रण्डा मूषकपर्णी स्याद्विधवा कठिने तथा ।
मुष्के खगादिकोशेऽण्डं किरि क्रोडो न नोरसि ॥ १९७ ॥
कृपावमर्दयोः पीडा नीडं स्थानकुलाययोः ।
न स्त्री कायसिरा नाडी नालं कालश्च षट्क्षणः ॥ १९८ ॥
शुण्डा पानमदस्थानं स्तम्बेरमकरस्तथा ।
सुरा वक्त्रैकदेशश्च कुब्जे पृष्ठगले गडुः ॥ १९९ ॥
रोगेथौषधिभिच्चण्डा गणे ना कोपने त्रिषु ।
चण्डी देव्यां गोपतौ तु षण्डो वह्न्यादिसंचये ॥ २०० ॥
सर्पमांसात्पशू व्याडौ भूगोवागप्सरःस्विडा ।
तरुस्कन्धे प्रकाण्डोऽस्त्री प्रशंसायां नपुंसकम् ॥ २०१ ॥
सपिण्डौ पुत्रदायादौ शिखण्डो बर्हचूडयोः ।
पोगण्डो विकलाङ्गः स्याद्बालश्चाषोडशाब्दगः ॥ २०२ ॥
शक्तस्थूलौ त्रिषु दृढौ व्यूढौ विन्यस्तसंहतौ ।
जडतन्द्रितयोर्मूढो रूढोङ्कुरितलग्नयोः ॥ २०३ ॥
भृशप्रतिज्ञयोर्बाढं लीढं स्वादितम्लिष्टयोः ।
गाढौ विलोडितदृढावूढौ धृतविवाहितौ ॥ २०४ ॥
ऊढावूढपृथुलावुद्गाढं भृशकृच्छ्रयोः ।
उपोढमूढमात्रे स्यात्समासन्नेपि च त्रिषु ॥ २०५ ॥
आषाढो व्रतिनां दण्डे मासभूधरभेदयोः ।
श्लिष्टस्पृष्टास्वादिते त्रिष्वालीढं चापभृत्स्थितौ ॥ २०६ ॥
अतिक्रमेत्यूर्ध्वगमे चात्यारूढं नपुंसकम् ।
अध्यारूढः सहेवाके त्रिषु पृष्ठगते तथा ॥ २०७ ॥

भ्रूणोऽर्भके स्त्रैणगर्भे बाणो बलिसुते शरे ।
देवभेदे स्त्रियां वाचि द्वयोर्दासीकुरण्टके ॥ २०८ ॥
स्त्रियामजाज्यतिविषापिप्पलीष्वल्पविप्रुषोः ।
कणोऽतिसूक्ष्मधान्यांशे कर्णोऽरित्रे श्रुतौ नृपे ॥ २०९ ॥
गणः समूहे प्रमथे संख्यासैन्यप्रभेदयोः ।
ग्लहे माने श्वेतिकानां मूल्ये कार्षापणे धने ॥ २१० ॥
द्यूतादौ कल्पिते चैव बद्धमुष्टौ भृतौ पणः ।
रज्जौ मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये ॥ २११ ॥
भागभाण्डोत्कर्षशौर्यसत्त्वसंध्यादिके गुणः ।
निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ॥ २१२ ॥
वर्णो गुणव्रतयशःशुक्लादिब्राह्मणादिषु ।
विलेपने कुथायां च गीते रूपेऽक्षरेऽस्त्रियाम् ॥ २१३ ॥
ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः ।
सूर्मीस्तम्भगदाः स्थूणास्तृष्णेषणपिपासयोः ॥ २१४ ॥
विषाजिलोहाभिसरे तीक्ष्णमस्त्री खरे त्रिषु ।
अलिञ्जरे मेहनांशे रत्नेजादिगलस्तने ॥ २१५ ॥
मणिः कृष्णस्तु बीभत्सौ व्यासशक्रकविष्णुषु ।
वर्णे त्रिषूषणे क्लीबे द्रौपदीकणयोः स्त्रियाम् ॥ २१६ ॥
वीणादिवादनोपाये कोणोऽस्रौ लगुडेऽपि च ।
शोणः स्याद्बन्धुजीवाभे नदे लोहितवाजिनि ॥ २१७ ॥
बलवाय्वसवः प्राणा जुगुप्साकरुणे घृणे ।
श्रेणिः स्त्री तुल्यशिल्पानां संहतिः कुलमावलिः ॥ २१८ ॥
पादग्रन्थेरधः पार्ष्णिः स्त्रियां स्याद्वाहिनीकटिः ।
मध्यमे पाण्डवे शक्रे जिष्णुः स्यात्त्रिषु जित्वरे ॥ २१९ ॥
प्रमाणकाकयोर्भेदे द्रोणोऽर्जुनगुरावपि ।
द्रोणी काष्ठाम्बुवाहिन्यां भवेदन्नादिभाजने ॥ २२० ॥
नीलिन्यां च गुहायां च देवताडो नदीस्रुतिः ।
वेणी केशकलापः स्यादुष्णः स्वेदनिदाघयोः ॥ २२१ ॥

त्रिषु तप्ते निर्वृते त्रिष्वणुरल्पोन्नभित्पुमान् ।
चूर्णो धूलौ क्षारभेदे क्लीवे भून्यधिवासके ॥ २२२ ॥
अक्षामकीलकाभ्योः स्यादाणिः क्वाणे मृधे रणः ।
मेषयादवयोर्वृष्णिः क्षुण्णः प्रहतदक्षयोः ॥ २२३ ॥
मानभेदे कषे शाणः पर्णं स्यात्किंशुके छदे ।
वृक्षे शाखाविरहिते पुंसि स्थाणुर्महेश्वरे ॥ २२४ ॥
रात्रिभेदे शकुन्ती च पक्षिणी वरणस्तरौ ।
प्राकारे स्वीकृतौ रोधे क्लीवे स्याद्रूषणा कणा ॥ २२५ ॥
क्लीवे तु मरिचे पङ्क्तौ धोरणी वाहने स्थितौ ।
श्रीपर्णी स्यात्तु काश्मीरी क्लीवे पद्माग्निमन्थयोः ॥ २२६ ॥
ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ।
हरिण्येणे द्वयोर्हेमप्रतिमा हरिता च या ॥ २२७ ॥
यूथिका त्रिषु पाण्डौ स्यात्सुरा प्रत्यक् च वारुणी ।
पण्याध्वहट्टौ विपणी ग्रामीणा नीलिनी त्रिषु ॥ २२८ ॥
ग्राम्ये पट्टांशुके तु स्यात्पत्तोर्णं वृक्षभित्पुमान् ।
करेणुरिभ्यां स्त्री नेभे द्रविणं तु बले धने ॥ २२९ ॥
शरणं गृहरक्षित्रोः प्रोक्षणं सेचने वधे ।
प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ॥ २३० ॥
करणं साधकतमक्षेत्रगात्रेन्द्रियक्रियाः ।
नाट्यकन्दर्पशास्त्रोक्तिं कार्ये कायस्थकर्मणि ॥ २३१ ॥
निर्वाणं निर्वृतौ क्लीवे शान्तिमोक्षेभमज्जने ।
शान्ते च त्रिष्वथेन्द्राणी करणे कामशास्त्रजे ॥ २३२ ॥
सिन्धुवारे शक्रपत्न्यां काकिणी तु वराटके ।
पणतुर्ये मानभेदे सरणिः पङ्क्तिमार्गयोः ॥ २३३ ॥
सक्तौ स्यात्तर्पणः क्लीवे तृप्तिबृंहणपोषणे ।
पित्राद्युद्देशदाने च पारणा व्रतभोजने ॥ २३४ ॥
कर्मान्ते क्लीवमपि च धर्षणं रतधाष्टर्ययोः ।
अनुकूले दक्षिणस्त्रिष्वृजौ दक्षिणदिग्भवे ॥ २३५ ॥

दिक्श्रद्धादेययोस्तु स्त्री सव्यहस्ते पुमानयम् ।
अरुणाः स्युः सांध्यरागसूर्यसूतदिवाकराः ॥ २३६ ॥
त्रिषु शोणेऽव्यक्तरागे लक्षणं नामचिह्नयोः ।
नक्षत्रे श्रवणः पुंसि क्लीबे तु श्रुतिकर्णयोः ॥ २३७ ॥
श्रावण्यां श्रवणा बुद्धिर्धिषणा वाक्पतौ पुमान् ।
वरुणो द्रुभिदप्पत्योर्हरणं यौतके हृतौ ॥ २३८ ॥
निर्याणं निर्गमेभाङ्गे कल्याणं स्वर्णमङ्गले ।
सुवर्णं हेम्नि तन्माने धने वेश्यादिभाटके ॥ २३९ ॥
सोमग्रहादौ स्वीकारे वन्द्यां ग्रहणमादरे ।
कङ्कणं मण्डले सूत्रे रत्नाढ्यकरभूषणे ॥ २४० ॥
कारणं घातने हेतौ कारणा यातने स्त्रियाम् ।
याचके त्रिषु बाणे ना मार्गणो याचने न ना ॥ २४१ ॥
वृक्षादिमूले प्राण्यङ्गे चरणो बह्वृचादिके ।
नूतने यूनि तरुणस्त्रिष्वर्के तरणिः पुमान् ॥ २४२ ॥
कुमार्यौषधिनावोः स्त्री ब्राह्मणी भार्गिविप्रयोः ।
कुथे प्रवेणी वेण्यां च नक्षत्रे गवि रोहिणी ॥ २४३ ॥
रूप्ये कुवर्णे दुर्वर्णं भरणं वेतने भृतौ ।
अतस्त्रिषु विषाणं स्यात्पशुशृङ्गेभदन्तयोः ॥ २४४ ॥
प्रवणः क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ।
संकीर्णौ निचिताशुद्धाविरिणं शून्यमूषरम् ॥ २४५ ॥
रोहणं रोपणे रूढौ पर्वते नाथ धारणा ।
योगिकर्मणि साम्ये च धारके धारणी त्रिषु ॥ २४६ ॥
वारणं वृत्तिघाते ना गजे स्याद्वारके त्रिषु ।
धरणी भूर्धृतौ क्लीबे चारणौ देवभिद्विटौ ॥ २४७ ॥
सारणा स्वरसंस्थाने सरिदल्पा च सारणी ।
रसभिन्ना घृणायां स्त्री दीने तु करुणा त्रिषु ॥ २४८ ॥
समीरणो मरुवके वायौ सोपानमुद्गमः ।
आरोहणे आस्तरणं शय्यायां वर्णकम्बले ॥ २४९ ॥

विलक्षणं व्यर्थसंस्थाविश्लिष्टेन्यत्र च त्रिषु ।
मधुपर्णी तु काश्मारी गुडूची नालिका तथा ॥ २९० ॥
व्यादानं स्याद्विहरणं प्रापणं क्रीडनं तथा ।
प्राण्युत्पादे संसरणमसंबाधचमूगतौ ॥ २९१ ॥
घण्टापथेश्च वान्तान्ने समुद्धरणमुन्नये ।
वस्त्रेजीर्ण आवरणमर्गले छादने त्रिषु ॥ २९२ ॥
प्रस्तावः स्यात्प्रकरणं कीर्णं रूपकभित्तथा ।
निरूपणे दृष्टिचर्चे लज्जाभेदी विदारणे ॥ २९३ ॥
आश्रये भर्त्सनेभीक्ष्णे क्लीवं तु स्यात्परायणम् ।
पारायणं समासङ्गे कार्त्स्न्येय प्रविदारणम् ॥ २९४ ॥
रणमारणयोरुक्तौ नियमोनियमेन यः ।
यः सनिन्दमुपालम्भस्तच्च स्यात्परिभाषणम् ॥ २९५ ॥
मण्डूकपर्णी मञ्जिष्ठा पत्तोर्णे नाधिरोहिणी ।
निःश्रेण्यभिनिवेशो तु क्लीवमूर्ध्वगतौ तथा ॥ २९६ ॥
छदिः प्रवृत्तिघातश्चाप्यन्तर्धिरपवारणम् ।
स्यादुदाहरणं क्लीवमभिधाने निदर्शने ॥ २९७ ॥
सत्सत्येभ्यर्हिते साधौ विद्यमानप्रशस्तयोः ।
त्रिषु स्त्रियां दक्षपुत्र्यां भृती भरणवेतने ॥ २९८ ॥
धत्तूरे ना त्रिषु प्राज्ञे धूर्तो वञ्चकदीव्यतोः ।
खातं वाप्यां रोपिते स्याद्वाच्यलिङ्गं विदारिते ॥ २९९ ॥
सेतुर्ना वृक्षभित्सीमा तरणोपाय एव च ।
लता प्रियङ्गुर्वीरुच्च ज्योतिष्मत्यपि शारिवा ॥ २६० ॥
हारादिसरिकायां च व्रततावतिमुक्तके ।
प्रसक्तासादितौ प्राप्तावाप्तौ संप्राप्तबान्धवौ २६१ ॥
अविसंवादकः पक्षी पतन्गच्छंल्लुठन्नधः ।
यन्ता हस्तिपके सूते भर्तारौ पतिधारकौ ॥ २६२ ॥
यानपात्रे शिशौ पोतः प्रेतः सत्त्वान्तरे मृते ।
निर्वाणे मोचने मुक्तिर्युक्तौ श्लिष्टसमञ्जसौ ॥ २६३

वह्नित्रये युगे त्रेता लिप्ता कालेऽञ्जिते त्रिषु ।
ग्रहभेदे ध्वजे केतुः पार्थिवे तनये सुतः ॥ २६४ ॥
क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे ।
श्लेष्मादिरस्थिरक्तादि महाभूतानि तद्गुणाः ॥ २६५ ॥
इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः ।
कासूसामर्थ्ययोः शक्तिर्मूर्तिः काठिन्यकाययोः ॥ २६६ ॥
अर्तिः पीडाधनुष्कोट्योः सातिर्दानावसानयोः ।
उदयेऽधिगमे प्राप्तिरीतिर्डिम्बप्रवासयोः ॥ २६७ ॥
रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः ।
त्यक्तकम्पितयोर्धूतं भूतिर्भस्मसु धर्द्धयः ॥ २६८ ॥
श्रुतिः श्रवसि वेदे च स्वरांशे श्रवणे स्त्रियाम् ।
श्रुतं शास्त्रावधृतयोर्युगपर्याप्तयोः कृतम् ॥ २६९ ॥
निःसारारोग्ययोर्वार्त्तं नीरुग्वृत्तिमतोस्त्रिषु ।
वार्त्ताकवर्तनोदन्तपाशुपाल्यादिषु स्त्रियाम् ॥ २७० ॥
वृत्तमध्ययने पद्ये चरित्रे वर्तने मृते ।
अल्पाशये त्रिलिङ्गः स्यादतीते निस्तले दृढे ॥ २७१ ॥
प्रियङ्गुयोषितोः कान्ता त्रिषु प्रियमनोज्ञयोः ।
जातिश्छन्दसि सामान्ये मालतीगोत्रजन्मसु ॥ २७२ ॥
काव्यालंकारभेदे च स्वभावे च स्त्रियामयम् ।
सेनाविशेषे पत्तिः स्त्री गतौ च पदगे पुमान् ॥ २७३ ॥
वैदर्भ्यादावारकूटे प्रचारस्यन्दयोस्तथा ।
मर्यादायां च रीतिः स्त्री रूप्ये श्वेतं सिते त्रिषु ॥ २७४ ॥
श्वेता स्त्री सूर्यभार्यायां राजभेदे पुमानयम् ।
शर्कराभित्क्षिता शुक्ले बद्धावासितयोस्त्रिषु ॥ २७५ ॥
छन्दोविशेषः पङ्क्तिः स्त्री दशसंख्यावलिस्तथा ।
क्षये निवासे मेदिन्यां क्षितिः कान्तिप्रभे द्युती ॥ २७६ ॥
त्रिषु प्राप्ते विस्तृते च ततं वाद्ये नपुंसकम् ।
ब्राह्मण्यां क्षत्रियात्सूतस्त्रिषु क्लीबं तु पारते ॥ २७७ ॥

रथकारे सारथौ ना वन्दिन्याज्याम्बुनोर्घृतम् ।
मानभेदे प्रशंसायां हस्तः करभभेदयोः ॥ २७८ ॥
असाराश्वगजे शान्ते वीतमङ्कुशकर्मणि ।
सांख्यसाधर्म्यहेतौ च विगतच्छन्नयोस्त्रिषु ॥ २७९ ॥
लुप्तवर्णपदं ग्रस्तं त्रिषु ग्रासीकृते तथा ।
तिक्ता स्यात्कटुरोहिण्यां शुभगन्धे रसे त्रिषु ॥ २८० ॥
नतं नितम्बे तगरे कुटिलेधःकृते त्रिषु ।
जन्तौ क्ष्मादौ पिशाचादौ भूतं न्याय्योपमानयोः ॥ २८१ ॥
प्राप्ते त्रिषु युतं युक्ते वियुक्ते च तथा त्रिषु ।
गुप्तिः कारा च रक्षा च दीर्णं च विवरं भुवः ॥ २८२ ॥
मूर्छाले कठिने मूर्तो वस्तिर्वस्त्राञ्चले द्वयोः ।
अपानमार्गे तत्कर्मण्यश्वप्रस्रवणे तथा ॥ २८३ ॥
लूता तु स्यादूर्णनाभे व्याधिभेदे पिपीलके ।
रतिः स्मरकलत्रे स्याद्रताभिष्वङ्गयोरपि ॥ २८४ ॥
चित्तावस्थानशृङ्गारभावकामफलेष्वपि ।
वित्तं स्याद्द्रविणे हेम्नि त्रिषु ख्याते विचारिते ॥ २८५ ॥
धूपे दीपशिखायां च वर्तिर्गात्रानुलेपने ।
आलेख्यभाण्डे दीपस्य दशायां चक्षुरञ्जने ॥ २८६ ॥
प्राप्तिसंबन्धयोराप्तिर्गमने पद्धतौ सृतिः ।
वर्तने विवृतौ वृत्तिः कैशिक्यादौ मनस्कृतौ ॥ २८७ ॥
कान्त्याङ्के कामभार्यायां प्रीतिः प्रेमप्रमोदयोः ।
पक्तिः पाके व्यवहृतौ वीतिर्याने तुरंगमे ॥ २८८ ॥
विच्छित्तौ सेवने भक्तिर्भित्तिः कुड्यप्रदेशयोः ।
चितिश्चित्सङ्गचित्याश्च द्रुतं शीघ्रविलीनयोः ॥ २८९ ॥
दन्तौ रदाद्रिकटकौ मृत्युयाचितयोर्मृतम् ।
जातं जन्म प्रकारश्च त्रिषु संपन्नपुत्रयोः ॥ २९० ॥
व्यक्तं स्फुटे बुधे व्यक्तः शितौ शातासितौ त्रिषु ।
यतिर्विरामव्रतिनोस्तूतिः स्यात्स्यूतिरक्षयोः ॥ २९१ ॥

स्थित ऊर्ध्वे वर्तमाने प्रतिष्ठावति च त्रिषु ।
कुङ्कुमे क्षतजे रक्तं सरागारुणयोस्त्रिषु ॥ २९२ ॥
मत्तः करी मदकलो मदेनाव्यक्तवाक्त्रिषु ।
अवस्थायां गतिर्यात्राधीनतोपायवर्त्मसु ॥ २९३ ॥
शुक्तं स्यात्परुषेम्ले च ग्रीष्मादौ स्त्रीरजस्यृतुः ।
विनाशान्तिकयोरन्तः स्वरूपेशावसानयोः ॥ २९४ ॥
माता गौर्जननी देव्यो रेवत्याद्या बहुस्त्रियाम् ।
मर्यादायां स्थितिः स्थाने भास्वद्दीप्तविवस्वतोः ॥ २९५ ॥
भूभृद्भूमिधरे भूपे स्यादर्हञ्जिनपूज्ययोः ।
सूर्याश्वेषु हरिर्पुंसि नीले त्रिषु दिशि स्त्रियाम् ॥ २९६ ॥
महद्राज्ये सांख्यबुद्धौ न स्त्री बृहति तु त्रिषु ।
छन्दोभिज्जगती भूश्च जगज्जङ्गमलोकयोः ॥ २९७ ॥
समित्सभासंगरयोः पित्सन्पातेच्छुपक्षिणोः ।
क्लीबे बिन्दौ पृषन्ना तु हरिणे पृषतोनयोः ॥ २९८ ॥
हल्या भूर्जानकी सीते एतौ शारासितौ त्रिषु ।
धाता ब्रह्मा च धर्ता च क्षिप्तेस्तः पश्चिमाचले ॥ २९९ ॥
गुणे शीतं त्रिषु तद्वन्ना श्लेष्मातकवेतसौ ।
यातरो भ्रातृजायाः स्युर्गतिशीले भवेत्त्रिषु ॥ ३०० ॥
मुक्तास्फोटे हयावर्ते शुक्तिर्मानखौषधी ।
पूतः पवित्रे निःशूके धारिते सुस्थिते धृतम् ॥ ३०१ ॥
शान्तिः शमे निर्वृतौ च तथा कुशलकर्मणि ।
संक्रान्ताक्रान्तयोः क्रान्तो मरुतौ पवनामरौ ॥ ३०२ ॥
देवसूर्यौ विवस्वन्तौ सरस्वन्तौ नदार्णवौ ।
पक्षितार्क्ष्यौ गरुत्मन्तौ शकुन्तौ भासपक्षिणौ ॥ ३०३ ॥
स्थपतिः कञ्चुकी तक्षा बृहस्पतिसवेष्टवान् ।
जातहर्षे प्रतिहते रोमाञ्चविषये तथा ॥ ३०४ ॥
विस्मिते हृषितः स्यात्त्रिष्वमृतं मोक्षवारिणोः ।
अयाचिते यज्ञशेषे देवान्नसुधयोरपि ॥ ३०५ ॥

दुरालभामलक्योः स्त्री गुडूचीपथ्ययोस्तथा ।
परस्यां वाच्यर्करश्मिसमाधानभिदोस्तथा ॥ ३०६ ॥
दूर्वादुरालभाभूमिष्वनन्ता क्लीबमम्बरे ।
पुमान्नागाधिपे विष्णावनाशेनवधौ त्रिषु ॥ ३०७ ॥
प्रियं सत्यं च वचनं कल्याणमपि सूनृतम् ।
कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु ॥ ३०८ ॥
वृत्तान्तः स्यात्प्रकरणे कात्स्न्यें वार्त्ताप्रकारयोः ।
निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् ॥ ३०९ ॥
जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिता उत्थितास्त्वमी ।
वृद्धिमत्प्रोन्नतोत्पन्ना आदृतौ सादरार्चितौ ॥ ३१० ॥
विविक्तौ पूतविजनौ मूर्छितौ मूढसोच्छ्रयौ ।
प्रख्यातज्ञातदृष्टेषु प्रतीतं त्रिषु संस्कृतम् ॥ ३११ ॥
कृत्रिमे लक्षणोपेते पिण्डितं गुणिते घने ।
वनिता जनितात्यर्थानुरागा स्त्र्यङ्गनापि च ॥ ३१२ ॥
पलितं जरसा शौक्ल्यं केशादेः कर्दमं तथा ।
समञ्जसे स्यादुचितमभ्यस्ते च त्रिलिङ्गकम् ॥ ३१३ ॥
कुङ्कुमे शोणिते क्लीबमरुणे त्रिषु लोहितम् ।
शक्ते निवारिते पूर्णे पर्याप्ते त्रिष्वपीप्सिते ॥ ३१४ ॥
आनर्तः समरे नृत्तस्थाननीवृद्विशेषयोः ।
मिथ्योक्तावाहतं क्लीबे ताडिते गुणिते त्रिषु ॥ ३१५ ॥
आचितः स्यात्त्रिषु व्याप्ते पलानामयुतद्वये ।
दुर्जातं व्यसनेसम्यग्जातवस्तुनि तु त्रिषु ॥ ३१६ ॥
त्रिष्वव्यक्तमस्फुटे स्यात्पुमांस्तु परमात्मनि ।
त्रिषु प्रणीतो विहिते संस्कृतेग्नौ प्रवेशिते ॥ ३१७ ॥
विप्रलब्धे विप्रकृते निकृतस्त्रिष्वयोकृतम् ।
भुक्तोज्झिते तोलिते च सुकृतं शुभपुण्ययोः ॥ ३१८ ॥
आयस्तं लेशितोत्क्षिप्ते कोपिते तेजिते त्रिषु ।
निरस्तं त्रिष्वधिक्षिप्ते त्यक्ते च त्वरितोदिते ॥ ३१९ ॥

विश्वास्ये त्रिषु विश्वस्तो विधवायां पुनः स्त्रियाम् ।
लिङ्गे स्वभावे प्रकृतिर्धात्वमात्यादियोनिषु ॥ ३२० ॥
सभासंगतियुद्धेषु समितिर्निर्वृतिः पुनः ।
स्वस्थतायामस्तमये निकृतिः शठशाठ्ययोः ॥ ३२१ ॥
दुर्गतिर्नरके दौस्थ्ये पद्धतिः पङ्क्तिवर्त्मनोः ।
काये रूपे चाकृतिः स्यात्प्रसूतिर्जन्मपुत्रयोः ॥ ३२२ ॥
वसतिः स्थितियामिन्योः प्रवृत्तिर्वृत्तिवार्तयोः ।
ऋक्षे लाङ्गलिदारेषु रेवत्याख्यापि मातृषु ॥ ३२३ ॥
स्तिमितेतरलक्लिन्ने निशान्तं गेहशान्तयोः ।
अनृते कुकृतासत्ये वाशिता करिणीस्त्रियोः ॥ ३२४ ॥
उदितावुद्गतप्रोक्तावर्दितं पीडितेर्थिते ।
द्विजातिर्विहगे विप्रे जीवातुर्जायुजीवयोः ॥ ३२५ ॥
निमित्तं लक्षणे हेतौ जीमूतौ मेघपर्वतौ ।
देवताड्द्रुरुत्तप्तं शुष्कमांसं वितापितम् ॥ ३२६ ॥
सिकता वालुकायां च देशे च सिकतान्विते ।
विस्तारवल्ल्योर्व्रततिः कलितं विदितात्तयोः ॥ ३२७ ॥
संख्याते तुलिते क्षिप्ते शब्दिते च भवेत्त्रिषु ।
बृहती क्षुद्रवार्ताकी छन्दोभेदे महत्यपि ॥ ३२८ ॥
गर्जितं स्तनितेभ्राणां पुंसि स्यान्मत्तकुञ्जरे ।
प्रार्थितं प्रार्थनालभ्येभियुक्ते सान्त्विते त्रिषु ॥ ३२९ ॥
विततं प्रस्तुते व्याप्ते विस्तृते च भवेत्त्रिषु ।
परंपरायां पुत्रे च विस्तारेपि च संततिः ॥ ३३० ॥
संमतिः स्यादनुज्ञानमभिलाषोपि च स्त्रियाम् ।
रूप्ये हारे च रजतं शुक्ले स्याद्वाच्यलिङ्गकः ॥ ३३१ ॥
पारावते कपोतः स्याद्विहगान्तरवर्णयोः ।
संवित्तिः प्रतिपत्तिः स्याद्व्यवस्था चाविवादिता ॥ ३३२ ॥
ऋज्विन्द्राख्ये रोहितं ना मत्स्यभिद्यरुणे त्रिषु ।
प्रतिपत्पक्षतिः पक्षमूलं च द्वीपवाद्यदे ॥ ३३३ ॥

अब्धी नदी स्त्री दृष्टान्त उदाहरणशास्त्रयोः ।
स्यादायतिर्दीर्घतायां प्रतापागामिकालयोः ॥ ३३४ ॥
विधूतः कम्पिते त्यक्ते नियती दैवसंयमौ ।
बीभत्से विकृतोऽस्वस्थे चाप्लुतः स्नातमात्रके ॥ ३३५ ॥
स्नातके चाप्यथोद्घात आरम्भे स्खलिते तथा ।
पाणिर्निकुञ्जः प्रसृतः स्त्री जङ्घा विस्तृते त्रिषु ॥ ३३६ ॥
दान्ते ककुब्मान्स्त्री कटयां परेतो दूरगे मृते ।
दैवतं देवता देवाः सरस्वन्तौ नदार्णवौ ॥ ३३७ ॥
मारजिच्छंकरे बुद्धे शान्तेथ भगवाञ्जिने ।
पूज्ये द्वयोरथोन्मत्तो धतूरे मादिनि त्रिषु ॥ ३३८ ॥
निर्ऋती यमदिक्पालौ ह्यलक्ष्मीराक्षसाम्बयोः ।
आवर्तो रोमभेदेम्भोभ्रमे पठनरूपयोः ॥ ३३९ ॥
एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ।
रजस्वला पुष्पवती माल्यधारिणि तु त्रिषु ॥ ३४० ॥
विवृतः कोशनिष्कृष्टे व्याकृतेपि प्रकाशिते ।
विकासिते वर्णपाठधर्मे च सुशिरे तथा ॥ ३४१ ॥
एषां भावे तु विवृतिः स्थगितासत्यभूतयोः ।
वर्णपाठगुणे गुप्ते संवृतो विवृतेतरे ॥ ३४२ ॥
एषां भावे संवृतिः स्यादेकान्तो निश्चयो रहः ।
गुणैकदेशयोरव्यभिचारिणि च पुंस्ययम् ॥ ३४३ ॥
प्रत्यन्तौ म्लेच्छदेशान्तौ देव्यौषधिविशेषयोः ।
जयन्तीन्द्रात्मजे पुंसि स्त्र्यास्फोता गिरिकर्णिका ॥ ३४४ ॥
गिरिपर्णी शारिवा च भवेदर्कतरौ पुमान् ।
साक्षात्कृतोत्पादितयोराद्रवस्ते भावितं त्रिषु ॥ ३४५ ॥
भक्तवासितयोश्चाथाहृतमानीतभुक्तयोः ।
परावृत्ते च लुठितं भ्रष्टे त्रिषु पदाच्युते ॥ ३४६ ॥
तिरोहिते स्तुते भुक्ते पतिते गलितं त्रिषु ।
छन्दोविशेषे गलिता निर्मुक्तो मुक्तकञ्चुके ॥ ३४७ ॥

त्यक्ते निर्ग्रन्थिके वाच्यलिङ्गो वसुमती भुवि ।
त्रिषु स्फीते चित्रकरे चित्रकृद्वत्सुले तथा ॥ ३४८ ॥
पर्याप्तिः पूर्णताशक्त्योर्गुडूचीशाकभेदयोः ।
जीवन्ती स्याद्वृक्षरुहा विनीतः शिक्षिते हये ॥ ३४९ ॥
सप्रश्रये निरस्ते च त्रिष्वथो यज्ञसूत्रके ।
कण्ठालम्बे प्रावृते च निवीतं वाच्यलिङ्गकम् ॥ ३५० ॥
स्वकर्महीने पतितो गते भ्रष्टेपि च त्रिषु ।
यवे स्यादक्षतः पुंसि क्षत्यभावे त्रिलिङ्गकः ॥ ३५१ ॥
कलधौतं रूप्यहेम्नोर्विष्णौ लक्ष्मीपतिर्नृपे ।
अग्रेकृताभ्यर्चितयोर्भवेत्त्रिषु पुरस्कृतः ॥ ३५२ ॥
दुष्टे त्रिष्ववगीतं स्यान्निर्वादे गर्हितेपि च ।
अभिनीतं संस्कृते च प्रापितेमर्षवत्यपि ॥ ३५३ ॥
प्रतिस्खलितविद्विष्टौ त्रिषु प्रतिहतावपि ।
सुकुमारेभिजातं स्यात्कुलीनबुधयोस्त्रिषु ॥ ३५४ ॥
नन्द्यावर्त ऋद्धवेश्मप्रकारे तगरद्रुमे ।
स्त्रियामपचितिर्हानौ निष्कृतावर्चने व्यये ॥ ३५५ ॥
अत्याहितं महाभीतिर्जीवे च निरपेक्षता ।
समाहितं समाधिस्थे तथा दत्तोत्तरे त्रिषु ॥ ३५६ ॥
उपाहितोनलोत्पाते भवेदारोपिते त्रिषु ।
उपस्थितः प्रतीहारे द्वारभेदे समाश्रिते ॥ ३५७ ॥
वाच्यलिङ्गो निन्दिते स्यादवध्वस्तोवचूर्णिते ।
अवसानं गते ज्ञाते निश्चितेवसितस्त्रिषु ॥ ३५८ ॥
विजृम्भितं विकसिते चेष्टायां प्रसृते त्रिषु ।
विज्ञाते वेष्टिते प्राप्ते भवेत्परिगतस्त्रिषु ॥ ३५९ ॥
मध्यप्राप्तं विस्मृतं च भवेदन्तर्गतं त्रिषु ।
अवदातः सिते पीते विशुद्धे वाच्यलिङ्गकः ॥ ३६० ॥
निराकृते प्रेषिते च प्रतिक्षिप्तं त्रिलिङ्गकम् ।
ऊर्ध्वाहिते भर्त्सिते त्रिष्वधिक्षिप्तो विनिन्दिते ॥ ३६१ ॥

नागानां नगरीनद्यौ भोगवत्यौ शतक्रतोः।
चाप ऋज्वायते न स्त्री गजे त्वैरावतः पुमान् ॥ ३६२ ॥
अस्त्राध्याये पुमान्स्त्री तु प्रत्यादेशे निराकृतिः।
प्रतिमायां प्रतीकारे भवेत्प्रतिकृतिः स्त्रियाम् ॥ ३६३ ॥
अभिशापप्रार्थनयोरभिशस्तिः स्तुतावपि।
जनंगमो दिवाकीर्तिर्नापितश्च भवेद्द्वयोः ॥ ३६४ ॥
प्रागल्भ्यगौरवारम्भाप्तिबोधाः प्रतिपत्तयः।
अग्न्युत्पातौ धूमकेतू वत्रा गौरी च काञ्चनी ॥ ३६५ ॥
गङ्गा हरीतकी हैमवत्यस्तज्जादिषु त्रिषु।
वैजयन्ती पताका स्यात्तर्कारी च यमो मनुः ॥ ३६६ ॥
सौरः कर्णो रविसुतः सुग्रीवश्च निपातितः।
मारितः साधितश्च स्याद्देवखातं ह्रदो गुहा ॥ ३६७ ॥
प्रजावती भ्रातृजाया प्रजायुक्ते भवेत्त्रिषु।
स्पृक्का भूमिश्च कार्पासी समुद्रान्ता दुरालभा ॥ ३६८ ॥
राहुग्रस्तार्कशशिनोर्व्यसनार्तात्तरागयोः।
उपरक्तोवगमितेपास्तनिद्रे प्रबोधितः ॥ ३६९ ॥
समाघातो वधे युद्धे प्रहारेथ विहंगमे।
पातेच्छो स्यात्पिपतिषंस्त्रिषु न्यस्ते समाहिते ॥ ३७० ॥
त्रिषु प्रणिहितं न्यासे समाधौ च नपुंसकम्।
सक्ताक्षिप्तावभियुक्तौ भूपाले क्षत्रिये तथा ॥ ३७१ ॥
मूर्धाभिषिक्तोथाम्भोधौ वरुणे यादसांपतिः।
समन्तादुच्यमाने स्यान्नियमे परिभाषितम् ॥ ३७२ ॥
आदिराजे पृथुर्दीर्घे त्रिषु कृष्णे च जीरके।
द्वयोः स्याद्धिङ्गुपर्ण्यां च पृथ्वी धरणिवृत्तयोः ॥ ३७३ ॥
पर्वसंधानपिटकयन्त्रणा ग्रन्थयो नरि।
अर्थोभिधेयविषयरैप्रयोजनवस्तुषु ॥ ३७४ ॥
सोपानपात्रयोस्तीर्थमर्हद्भिः सेविते गुरौ।
व्युतौ सत्त्रिण्युपाये च प्रस्थोस्त्री सानुमानयोः ॥ ३७५ ॥

वृत्तवाग्भेदयोर्गाथा ग्रन्थो द्रविणशास्त्रयोः ।
आस्थान्याशादराश्वासयत्नेष्वास्थाथ ना स्पशे ॥ ३७६ ॥
संस्था व्यवस्थामरणयागोपस्करणेषु च ।
वीथी रूपकभेदः स्यात्पङ्क्तिर्वेश्माङ्गवर्त्मसु ॥ ३७७ ॥
सिक्थः पुलाके मदने क्लीवेथो वर्णकम्बले ।
द्वयोर्दर्भेषु च कुथः सक्तूनां द्रवताविधौ ॥ ३७८ ॥
मन्थानेक्षिगदे मन्थः सिद्धार्थौ बुधसर्षपौ ।
समर्थस्त्रिषु शक्तिस्थे संबद्धार्थे हिते तथा ॥ ३७९ ॥
क्षवथुस्तु क्षुते कास उपस्थस्त्वङ्कगुह्ययोः ।
निर्ग्रन्थो निष्परीवारे त्रिषु स्यात्क्षपणे पुमान् ॥ ३८० ॥
पाशयन्त्रकमुन्माथं न स्त्री ना वधघातयोः ।
वयःस्थामलकी क्षीरकाकोली यूनि तु त्रिषु ॥ ३८१ ॥
पथ्या कयस्था काकोल्यव्यथा पद्मा हरीतकी ।
कपित्थे मन्मथः कामे मधूकाभ्रमिभेदयोः ॥ ३८२ ॥
वानप्रस्थः क्षीणरागे दशमीस्थो वयोतिगे ।
राजरक्षिष्वनीकस्थो गजशिक्षाविचक्षणे ॥ ३८३ ॥
हन्मनोवक्षसोः क्लीवे स्त्री भिदारणभेदयोः ।
वन्दी तु पणबन्धः स्याच्चारी चापि हठाहृता ॥ ३८४ ॥
व्यवसाये परित्राणे स्थाने वस्त्वपदेशयोः ।
पादतन्मुद्रयोश्चिह्ने पदं न्यासेक्षशब्दयोः ॥ ३८५ ॥
पादा रश्म्यङ्घ्रितुर्यांश ऋगंशाद्रयन्तपर्वताः ।
वृक्षमूलं चाथ संवित्संकेते ज्ञानकालयोः ॥ ३८६ ॥
संभाषणे क्रियाकारे प्रतिज्ञाचारनामसु ।
दृशन्निष्पेषणशिला शिला चाथ विदारणे ॥ ३८७ ॥
उपजापे विशेषे च भेदः स्यात्तु गदो हरेः ।
भ्राता व्याधिश्चायुधे तु स्त्री संपच्छ्रीस्तयोच्छ्रयः ॥ ३८८ ॥
मूलसूरणयोः कन्दः पर्णौष्ठगरुतश्छदाः ।
ह्रदस्तोयाशयः स्रोतो बिन्दुर्वेदितृविप्रुषोः ॥ ३८९ ॥

दन्तक्षतेर्थप्रकृतौ शून्ये भ्रूमध्यतेजसि ।
त्रिष्विष्टमधुरौ स्वादू मृदू चातीक्ष्णकोमलौ ॥ ३९० ॥
अभिप्रायवशौ छन्दावब्दौ जीमूतवत्सरौ ।
घर्मस्वेदनयोः स्वेदः सात्त्विके भावभिद्यपि ॥ ३९१ ॥
छेदो विरामे खण्डे च शादो जम्बालशष्पयोः ।
विमर्दचूर्णयोः क्षोदो नादः स्यात्प्राणशब्दयोः ॥ ३९२ ॥
स्त्री शरद्वत्सरर्त्वोः स्यात्क्रव्यान्मांसाशिरक्षसोः ।
सूदः सूपे सूपकरे देशे चोषरभूमिके ॥ ३९३ ॥
भ्रमे भवेत्पुमान्कुन्दः पुष्पभेदे नपुंसकम् ।
मन्दोपटौ शनैरर्थे मूढे च त्रिषु पुंसि तु ॥ ३९४ ॥
सौरेभजात्योः स्यात्क्षैब्ये गर्वे हर्षेभदानयोः ।
मदो मद्ये राजलिङ्गे पृष्ठाङ्गश्रेष्ठयोः ककुत् ॥ ३९५ ॥
दायादौ बान्धवसुतावामोदो हर्षगन्धयोः ।
निषादो लुब्धके गीतस्वरे संकरजन्मनि ॥ ३९६ ॥
प्रधाने राजलिङ्गे च पृष्ठाङ्गे ककुदोस्त्रियाम् ।
मर्यादा धारणासीम्नोर्विषदो व्यक्तशुक्लयोः ॥ ३९७ ॥
गोष्ठाध्यक्षे च विष्णौ च गोविन्दः कपिनागयोः ।
कुमुदो जलजे क्लीवं कुसूदं वृद्धिजीवने ॥ ३९८ ॥
कुसेवके त्रिषु ज्ञाने तिथौ च प्रतिपत्स्त्रियाम् ।
स्यात्प्रसादोनुग्रहेपि नैर्मल्यप्रीतिदानयोः ॥ ३९९ ॥
सारावे रुदिते त्रातर्याक्रन्दो दारुणे रणे ।
पश्चाद्राजविशेषे च गोष्पदे मानसेविते ॥ ४०० ॥
त्रिष्वधृष्टे नवे शुद्धे शारदोपि शरद्भवे ।
अस्त्री संवत्सरे सप्तपर्णे ना शारदी पुनः ॥ ४०१ ॥
लाङ्गली शारदा देवी कुविन्दौ भ्रमिवायकौ ।
प्रमदा तरुणी ना तु हर्षेधिकमदे त्रिषु ॥ ४०२ ॥
धर्मे रहस्युपनिषद्वेदान्ते च शतह्रदा ।
विद्युद्भेदे विद्युति च वह्नीन्द्वर्कास्तमोनुदाः ॥ ४०३ ॥

मर्यादासहितेभ्यर्णे समर्यादं त्रिलिङ्गकम् ।
अववादो तु निन्दाज्ञे देशो जनपदो जने ॥ ४०४ ॥
गङ्गा विष्णुपदी क्लीवे हर्यङ्घ्र्याकाशविष्टपे ।
अभिमर्दो युद्धपीडे धृष्टो ऽथ विशारदः ॥ ४०५ ॥
त्रिषु कोकनदं रक्तकुमुदे रक्तवारिजे ।
निर्वादे वादनोपाये परिवादोथ हेमनि ॥ ४०६ ॥
अष्टापदं शारिफले स्त्रियां तु पशुगर्भिणी ।
अपवादस्तु गर्हायां बाधके बाधनेपि च ॥ ४०७ ॥
ऋद्धिरोषधिभिल्लक्ष्मीः प्रभावोतिशयः स्त्रियाम् ।
कुष्ठाख्यायामोषधौ च व्याधिः पुंस्यामये तथा ॥ ४०८ ॥
वसन्तदैत्यभिच्चैत्रमधूका मधवो मधु ।
मद्यं पुष्परसः क्षौद्रं मधुरे वाच्यलिङ्गकः ॥ ४०९ ॥
बन्धको व्यसनं चेतःपीडाधिष्ठानमाधयः ।
विधुर्विष्णुः शशी बाधा द्वयोर्दुःखनिषेधयोः ॥ ४१० ॥
नददेशभिदोरब्धौ सिन्धुर्ना सरिति स्त्रियाम् ।
द्वयोर्विधौ प्रकारे च गजान्ने वेतने विधा ॥ ४११ ॥
वधूर्जाया स्नुषा स्त्री च प्रियङ्गुस्पृक्कयोरपि ।
निधी निक्षेपगूढार्थौ स्थानं श्रद्धादरः स्पृहा ॥ ४१२ ॥
क्लीवे तमोम्भसोरन्धमदृष्टौ वाच्यलिङ्गकः ।
संधा प्रतिज्ञा मर्यादा मक्कोलामृतयोः सुधा ॥ ४१३ ॥
विधिर्विधायके वाक्ये दैवे स्रष्टृविधानयोः ।
हव्यकव्यविधौ श्राद्धं त्रिषु श्रद्धासमन्विते ॥ ४१४ ॥
संधिर्भगे सुरुङ्गायां संधानगुणभेदयोः ।
गोधा तले निहाकायां बुधा विद्वद्ग्रहामराः ॥ ४१५ ॥
राधा तु कृष्णजायायां शरव्ये कर्णमातरि ।
मूलाधिकेर्थे वृद्धिः स्याद्वर्धनौषधिभेदयोः ॥ ४१६ ॥
सिद्धिरोषधिनिष्पत्त्योर्बन्धः स्नेहाधिबन्धने ।
वृन्ते च रचनायां च वातादिनियतावधौ ॥ ४१७ ॥

अंसे महीपतौ स्कन्धस्तरुजङ्घासमूहयोः ।
लताविटपयोर्वीरुत्खण्डोर्धेर्धे समेंशके ॥ ४१८ ॥
दोषज्ञे सुगते बुद्धः शुद्धस्त्रिष्वेकपूतयोः ।
पण्डिते स्थविरे वृद्धस्त्रिषु साधुस्तु शोभने ॥ ४१९ ॥
वार्धुषौ सज्जने सिद्धो देवे निष्पन्नपूज्ययोः ।
विषलिप्ते शरे दिग्धो लिप्तमात्रे त्रिलिङ्गकः ॥ ४२० ॥
मुग्धं मनोहरे मूढे त्रिषु योषिति तु स्त्रियाम् ।
विद्धं सूच्यादिभिर्भिन्ने सादृश्ये ज्ञे त्रिलिङ्गकः ॥ ४२१ ॥
घ्राणग्राह्याल्पयोर्गन्धो द्रव्ये संबन्धमात्रके ।
लुब्धः स्पृहावान्मृगयुः क्षत्रियायां तु वैश्यजः ॥ ४२२ ॥
वन्दी च मागधः स्त्री स्यात्पिप्पली यूथिका तथा ।
व्यामो वटश्च न्यग्रोधो न्यग्रोधी चोपचित्रिका ॥ ४२३ ॥
प्रबोधौ जागरोद्घाटावुत्सेधौ वपुरुन्नती ।
पर्याहाराध्वभारेषु विवधो वीवधोपि च ॥ ४२४ ॥
परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ।
समाधिर्ध्याननीवाकनियमेषु समर्थने ॥ ४२५ ॥
प्रणिधी प्रार्थनचरौ परिच्छेदे बिलेवधिः ।
अगाधमतलस्पर्शे त्रिषु गर्ते नपुंसकम् ॥ ४२६ ॥
व्याजे रथाङ्गेप्युपधिर्विबुधौ सुरपण्डितौ ।
वाद्यं मृदङ्गाद्यानद्धं बद्धमात्रे त्रिलिङ्गकम् ॥ ४२७ ॥
उपाधिर्धर्मचिन्ता च कुटुम्बव्यापृतेपि च ।
विशेषणोपार्जनयोः प्रबुद्धो ज्ञानिजाग्रतोः ॥ ४२८ ॥
सम्यक्सिद्धौ स्वभावे स्त्री संसिद्धिः संनिधिस्तु ना ।
प्रत्यक्षे संनिधाने च निरोधो नाशरोधयोः ॥ ४२९ ॥
निषधः कठिने देशे राजभेदे नगान्तरे ।
तोये कबन्धं ना रक्षोभेदे शिरसि न स्त्रियाम् ॥ ४३० ॥
भृशार्थदोषावाबाधौ संबाधौ योनिसंकटौ ।
अतस्त्रिषु तु विस्रब्धो विश्वस्ते प्रोद्भटे तथा ॥ ४३१ ॥

आविद्धौ कुटिलोत्क्षिप्तौ प्रसिद्धौ ख्यातभूषितौ ।
विरुद्धौ वैरिविगुणौ दुर्विधौ खलदुर्गतौ ॥ ४३२ ॥
अविदूरस्त्ववष्टब्धो बद्धश्चाप्यवलम्बितः ।
ब्रह्मबन्धुरधिक्षेपे निर्देशे ब्राह्मणस्य च ॥ ४३३ ॥
दोषोत्पादेनुबन्धः स्यात्प्रकृत्यादेर्विनश्वरे ।
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ॥ ४३४ ॥
कर्णिकारः परिव्याधो जलवेतस इत्यपि ।
तमालः श्यामखदिरः कालस्कन्धोपि तिन्दुकः ॥ ४३५ ॥
इक्षुगन्धा विदारी स्यात्कोकिलो गोक्षुरोपि च ।
महौषधं प्रतिविषा लशुनं नागरं विषम् ॥ ४३६ ॥
अजमोदोग्रगन्धा स्याद्वचा गन्धोत्कटे त्रिषु ।
पृश्निरल्पतनू रश्मिवर्णभेदे गवि स्त्रियाम् ॥ ४३७ ॥
व्याधिभिद्यक्ष्मयोर्यक्ष्मा मुनिर्बुद्ध ऋषिस्तथा ।
शुष्मा वह्निर्बले क्लीबे शृङ्गी प्रतिविषा विषम् ॥ ४३८ ॥
वृषाख्यौषधिभिद्दान्तपर्वतौ शृङ्गवांस्त्रिषु ।
हनुर्नखौषधिः सृक्व जटी प्लक्षतरुर्व्रती ॥ ४३९ ॥
घनो मेघे मूर्तिगुणे विस्तारे लोहमुद्गरे ।
मुस्ते च न द्वयोर्वाद्ये त्रिषु मूर्तिनिरन्तरे ॥ ४४० ॥
इनः सूर्ये प्रभौ राजा मृगाङ्के क्षत्रिये नृपे ।
त्वग्देहयोस्तनुः स्त्री स्यात्तद्गुणे त्रिषु पर्व तु ॥ ४४१ ॥
तिथिभेदे क्षणे ग्रन्थौ वर्त्म नेत्रच्छदेध्वनि ।
वेदस्तत्त्वं तपो ब्रह्म पुमान्विप्रे प्रजापतौ ॥ ४४२ ॥
पक्ष्माक्षिलोम्नि किञ्जल्के तन्त्वाद्यंशेप्यणीयसि ।
आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ॥ ४४३ ॥
देहप्रमाणयोर्वर्ष्म स्यादाकारेपि सुन्दरे ।
ग्रावाणौ शैलपाषाणौ पत्त्रिणौ शरपक्षिणौ ॥ ४४४ ॥
वृक्षोर्मिः कुक्कुटो वर्ही शिखिनोथ तु सादिनौ ।
द्वौ सारथिहयारोहौ वाजिनोश्वेषुपक्षिणः ॥ ४४५ ॥

स्थितौ क्षेत्रेवधौ मार्गे सीमा लक्ष्माप्यचिह्नयोः ।
गृहं देहस्त्विट् प्रभावो धाम धन्व स्थलं धनुः ॥ ४४६ ॥
पुमान्मरावथ स्वप्नः स्वापे सुप्तस्य संविदि ।
सूनं पुष्पे वधस्थाने स्त्रियां जिह्वातलेपि च ॥ ४४७ ॥
पुष्पिते त्रिष्वहिहरी चक्रिणौ रथतैलिकौ ।
भृतौ सुवर्णे भर्म स्याद्वर्म स्यात्फलके त्वचि ॥ ४४८ ॥
स्वामिनौ गृहभर्तारौ जनौ लोकपृथग्जनौ ।
जनी वधूश्चन्द्रयुता रात्रिर्ज्योत्स्नी पटोलिका ॥ ४४९ ॥
अश्वकुत्सितयोरर्वा प्रेमास्त्री स्नेहनर्मणोः ।
मन्दस्वच्छन्दयोः स्वैरी श्येनौ श्वेतविहंगमौ ॥ ४५० ॥
गभस्तिव्रध्नयोर्भानुर्वनं काननीरयोः ।
समूहे पर्वते च स्यात्तानस्तात्पर्यगीतयोः ॥ ४५१ ॥
मणिप्रकृष्टयो रत्नं यानं गमनयुग्मयोः ।
गुणभेदे च नृपतेर्धेनुर्दोग्ध्र्यां तथा गवि ॥ ४५२ ॥
रूपे धने बले द्युम्नं विन्नं लब्धे विचारिते ।
सेवके याचके चार्थी स्थानं स्थित्यवकाशयोः ॥ ४५३ ॥
सादृश्ये गीतविषये स्याच्च योग्यप्रसङ्गयोः ।
वैयापृत्यकरो भोगी त्रिषु राजभुजंगयोः ॥ ४५४ ॥
ज्योत्स्ना ज्योतिष्मती रात्रिस्तथा चन्द्रमसः प्रभा ।
मानं प्रमाणे प्रस्थादौ पुमांश्चित्तसमुन्नतौ ॥ ४५५ ॥
दिग्वासास्त्रिषु नग्नः स्यान्नग्ना वैतालिकादयः ।
संस्कृते दारिते भिन्नस्त्रिषु स्यादन्यवाचकः ॥ ४५६ ॥
शुष्के शुष्कफले वानं तथा सीवनकर्मणि ।
भगाकरौ द्वयोर्योनी कृती सूरिकृतार्थयोः ॥ ४५७ ॥
स्नानीये सवने स्नानं धनं गोसंघवित्तयोः ।
पताकालक्ष्मणोश्चिह्नं स्यादन्नं भुक्तभक्तयोः ॥ ४५८ ॥
छादिते रहसि च्छन्नं पानं पीतौ च रक्षणे ।
खण्डने रक्षणे दानं त्यागे गजमदे तथा ॥ ४५९ ॥

शुद्धिलून्योश्चोनगर्ह्यौ हीनन्यूनौ त्रिलिङ्गकौ ।
जिह्वायां रसना क्लीबे ध्वनावास्वादने न ना ॥ ४६० ॥
कुहना दम्भचर्यायामीर्ष्यालौ तु भवेत्त्रिषु ।
तरुशैलौ शिखरिणौ बली वेगी तरस्विनौ ॥ ४६१ ॥
विषाणिनौ करी शृङ्गी प्रीणने रक्षणेवनम् ।
स्वच्छे तलिनमल्पे च गम्भीरे गहनं वने ॥ ४६२ ॥
रोदनं त्वस्रुणि क्रन्दे प्रज्ञानं बुद्धिचिह्नयोः ।
भुवने विष्टपजले धावने गतिशोधने ॥ ४६३ ॥
त्रैवर्णिकेण्डजे दन्ते द्विजन्मा तारकासु च ।
न ना तु परिहारे स्याद्वर्जनं त्यागहिंसयोः ॥ ४६४ ॥
कुले नाशे च निधनं सूत्रना स्त्रीनपुंसकम् ।
व्यधनेभिनये संज्ञापैशुन्यक्रिययोरपि ॥ ४६५ ॥
जीवनं राजलभ्यांशे जीविते तोयवर्तने ।
उद्यानमुद्गमे चुल्ल्यां शयनं रतशय्ययोः ॥ ४६६ ॥
शासनं लेखशास्त्राज्ञा वर्तनी वृत्तिमार्गयोः ।
तोदनं व्यधने तोत्त्रे प्रसूनं फलपुष्पयोः ॥ ४६७ ॥
दले पतत्रे छदनं विलग्नो लग्नमध्ययोः ।
मेषादौ च तनुस्थे स्यात्प्रभोराराधने भवेत् ॥ ४६८ ॥
सेवनं सीवने पाशे बन्धनं स्नेहवृन्तयोः ।
अब्जाकरेब्जे नलिनी वाहिनी सिन्धुसेनयोः ॥ ४६९ ॥
मैथुने रतसंबन्धौ मिथुने युग्मदंपती ।
सेनान्यौ गुहसेनेशौ ह्रादिन्यौ वज्रविद्युतौ ॥ ४७० ॥
सल्लकी च नदी च स्यात्त्रिष्वयं नादवत्यपि ।
द्वयोर्वज्रेशनिः शम्पा रक्षोवृक्षौ पलाशिनौ ॥ ४७१ ॥
अरत्निः कूर्परे हस्ते सप्रकोष्ठतताङ्गुलौ ।
वाणिन्यौ नर्तकीदूत्यौ भोगिनी देवताभिदि ॥ ४७२ ॥
विहाय महिषीमन्या भोगिन्यो राजयोषितः ।
प्रधानं धीमहामात्यप्रकृत्यात्मसु सत्तमे ॥ ४७३ ॥

अश्वादीनां च संनाहे जये च जयनं भवेत् ।
व्यञ्जनं लाञ्छनश्मश्रुनिष्ठानावयवेष्वपि ॥ ४७४ ॥
संस्कारके भवेत्क्लीबे वादित्रकरणे पुमान् ।
स्यात्कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम् ॥ ४७५ ॥
स्यादुद्यानं राजमार्गे वनभेदे प्रयोजने ।
क्रतौ करकुके चास्त्री वितानं त्रिषु तुच्छके ॥ ४७६ ॥
मन्दे शून्ये विस्तृतौ ना गृहान्ते तूद्यमे तथा ।
उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेपि च ॥ ४७७ ॥
व्युत्थानं प्रतिरोधे च विरोधाचरणेपि च ।
अञ्जनं कज्जलं माता कपेः स्त्री दिग्गजे पुमान् ॥ ४७८ ॥
प्रभिन्नोनेकतां प्राप्ते गजे जातमदे तथा ।
नालिकेरे हलधरे लाङ्गली जननं कुले ॥ ४७९ ॥
जन्मन्यम्बा च जननी वृद्धौ छेदे च वर्धनम् ।
अर्जुनो वृक्षभित्पार्थौ तृणे क्लीबेर्जुनी गवि ॥ ४८० ॥
त्रिषु शुक्ले केतनं तु गृहे केतौ निमन्त्रणे ।
आपन्न आपदं प्राप्ते प्राप्ते च स्याच्चिलिङ्गकः ॥ ४८१ ॥
देहवायौ समानो ना सत्तुल्यैकेषु तु त्रिषु ।
व्योमयानं विमानोस्त्री सप्तभूमे च वेश्मनि ॥ ४८२ ॥
इन्द्रिये विषयि क्लीबे त्रिषु स्याद्विषयान्विते ।
तपनोर्को नरकभित्प्राचीनं प्रान्ततो वृतिः ॥ ४८३ ॥
पाठायां स्त्री प्राग्भवे त्रिष्वन्तर्द्वारे रहस्यपि ।
प्रच्छन्नं छादिते गूढे त्रिष्वथ श्वसनो मरुत् ॥ ४८४ ॥
श्वासयुक्ते मरुवके पूतना तु हरीतकी ।
भूतभेदे द्वयोर्लीला स्यन्दिनी निम्नगा तथा ॥ ४८५ ॥
द्राक्षायां गोस्तनी हारभेदे ना धमनी नडी ।
सिराग्न्युद्दीपनं भाण्डं नडे नाथ नभोगतौ ॥ ४८६ ॥
कर्णीरथे च डयनं मार्जनी पांसुशोधनी ।
उपस्पर्शोत्पुंसनयोः क्लीबे ना रोध्रपादपे ॥ ४८७ ॥

मार्जना वाद्यपिण्ड्यां स्यात्तत्परीक्षार्थवादने ।
कुण्डली भुजगे बद्धकुण्डले तु भवेत्रिषु ॥ ४८८ ॥
त्रिषु शान्तो वराकश्च तपस्वी स्त्री तु मल्लकी ।
संधिन्यकालदुग्धा गौर्वृषाक्रान्ता च हायनाः ॥ ४८९ ॥
वत्सरार्चिर्व्रीहिभेदाः क्रन्दने ध्वानरोदने ।
विपत्तावशुभे भ्रंशे पानस्त्रीमृगयादिषु ॥ ४९० ॥
दैवानिष्टफले सक्तौ व्यसनं क्रोधदूषणे ।
निवृत्तौ दापने सिद्धौ गत्तावनुगमे धने ॥ ४९१ ॥
उपायमृतसंस्कारवधमेढ्रेषु साधनम् ।
अयनं पथि सूर्यस्याप्युदग्दक्षिणतो गतौ ॥ ४९२ ॥
पाकस्थाने कुलालस्य पवनं ना प्रभञ्जने ।
सोमनिर्मथने स्नाने सवनं यजने तथा ॥ ४९३ ॥
वामनो दिग्गजे विष्णौ निखर्वे मेढ्यलिङ्गकः ।
अन्तके शमनः क्लीबे वधेथ जघनं कटौ ॥ ४९४ ॥
पश्चादर्थे नितम्बाग्रे कौपीनं गर्ह्यगुह्ययोः ।
पुमानक्षे जिघांसायां क्रीडायामपि देवनम् ॥ ४९५ ॥
मधूच्छिष्टे स्मरे वृक्षे वसन्ते मदनः पुमान् ।
पिण्डीतके कपित्थे च धतूरे मदकारिणि ॥ ४९६ ॥
वेदनानुभवः पीडा यापने त्यागवर्तने ।
कल्पना कर्तने क्लृप्तावुद्देशे गजसज्जने ॥ ४९७ ॥
विकल्पे स्यादाकलने विधानेपि विभाजने ।
समीरणः स्पर्शनः स्यात्क्लीबे तु स्पर्शदानयोः ॥ ४९८ ॥
हिंसात्मके सूचने च गन्धनं स्यात्प्रकाशने ।
संतानः संततौ देववृक्षे चापत्यगोत्रयोः ॥ ४९९ ॥
स्तननं कुत्सिते ध्वाने देवशब्देथ सज्जना ।
न नेभसज्जीकरणे त्रिषु साधौ नपुंसकम् ॥ ५०० ॥
पटगुल्मे चेतना धीः पुंसि प्राणिनि तेजनी ।
मूर्वा शाणोपलस्तेजोवती वेणौ शरे पुमान् ॥ ५०१ ॥

स्पृक्कायां पिशुना दुष्टे सूचके त्रिषु वेष्टनम् ।
उष्णीषे मुकुटे चाथ शकुनी पक्षिणि द्वयोः ॥ ५०२ ॥
शुभशंसिनिमित्ते तु क्लीबेथ वृजिनः कचे ।
चर्मकिल्बिषयोः क्लीबे भूतात्मा धातृदेहयोः ॥ ५०३ ॥
संस्थानमाकृतौ मृत्यौ संनिवेशे चतुष्पथे ।
समाप्तौ च विभक्ते च विच्छिन्नं त्रिष्वथासनम् ॥ ५०४ ।
करिस्कन्धे च पीठे च मलिनं समलैनसोः ।
आराधनं साधने स्यात्तोषणोपासयोरपि ॥ ५०५ ॥
अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि ।
आतञ्चनं प्रतीवापे जवनाप्यायने तथा ॥ ५०६ ॥
आस्कन्दने रणाक्रान्ती शोषणप्रापणे तथा ।
सूर्यवह्नी चित्रभानू मूर्खनीचौ पृथग्जनौ ॥ ५०७ ॥
कुलेप्यभिजनो जन्मभूम्यां चाथ समापनम् ।
वधेन्ते चापदानं तु खण्डनेद्भुतकर्मणि ॥ ५०८ ॥
निर्वासनं मारणे स्यान्नगरादेर्बहिष्कृतौ ।
शक्रघातुकमत्तेभवर्षुकाब्दा घनाघनाः ॥ ५०९ ॥
अभिमानोर्थादिदर्पे ज्ञाने प्रणयहिंसयोः ।
स्यादावेशनमावेशे शालायामपि शिल्पिनाम् ॥ ५१० ॥
निसूदने निरसनं निष्कासे च विरोचनाः ।
चन्द्राग्न्यर्का विश्वकर्मा मार्ताण्डसुरशिल्पिनोः ॥ ५११ ॥
निर्यातनं वैरशुद्धौ दाने न्यासार्पणेपि च ।
अभिपन्नोपराद्धाभिग्रस्तव्यापन्नतद्गताः ॥ ५१२ ॥
आच्छादनं संवननमपवारणमित्यपि ।
आयोधनं निघातः स्याद्युद्धं चाथ सनातनम् ॥ ५१३ ॥
नित्ये त्रिषु पुमान्विष्णौ स्तनयित्नुर्बलाहके ।
तद्ध्वनौ च महासेनो गुहे सेनापतावपि ॥ ५१४ ॥
ब्रह्मा कामश्चात्मयोनी पिञ्जे विहननं वधे ।
संस्कारे प्रतियत्नः स्यादुपग्रहणलिप्सयोः ॥ ५१५ ॥

विपर्यस्तमपाचीनं त्रिषु क्लीबे त्वपागपि।
मेखलायां सारसनमुरस्त्रे च नपुंसकम् ॥ ९१६ ॥
उत्पत्तिः स्यादुत्पतनमूर्ध्वगमनमित्यपि।
ग्रहणे कलनायां च बन्धे चाकलनं वृतौ ॥ ९१७ ॥
विद्यात्प्रवचनं वेदे व्याख्याने सुवचस्यापि।
प्रतिमानं प्रतिच्छायागजदन्तान्तरालयोः ॥ ९१८ ॥
सामिधेनी त्वृक्समिधोरग्र्यजन्मा द्विजोग्रजः।
विनीते त्रिष्वनूचानः साङ्गे वेदे च पाठकः ॥ ९१९ ॥
काषायवस्त्रार्धवृद्धा स्यात्कात्यायन्युमापि च।
दृष्टौ श्रुते निशमनं कार्यहेत्वोः प्रयोजनम् ॥ ९२० ॥
आवर्जनं दाननती तथा भ्रंशमनोहृती।
संमार्जनी शोधनी स्यात्क्लीबे क्षालनलेपने ॥ ९२१ ॥
संस्कृतौ क्षीरिकोत्कृष्टभोज्ये राजादनं भवेत्।
पियालेथोपधानं स्याद्दृष्टान्तप्रतिबिम्बयोः ॥ ९२२ ॥
गण्डके चाथ कारम्भा विश्वक्सेना हरौ गणे।
पुमानथ क्रतुध्वंसी प्रोक्तः शर्वश्च दानवः ॥ ९२३ ॥
प्रसाधनी कङ्कतिका क्लीबे त्वाराधनार्जने।
मण्डनायां कृष्णवर्त्मा हव्यवाहनपापयोः ॥ ९२४ ॥
उपासनं शराभ्यासे नमस्यासेवयोर्न ना।
आम्रातके शिरीषे च प्लक्षे च स्यात्कपीतनः ॥ ९२५ ॥
उष्ट्राहितुण्डिकौ व्यालग्राहिणी मातुलप्रिया।
मातुलानी तथा भङ्गा विषौषध्योः प्रदीपनः ॥ ९२६ ॥
बोधने प्रतिदाने च भवेत्तु प्रतिपादनम्।
कुङ्कुमे देववृक्षे च पुंसि वा हरिचन्दनम् ॥ ९२७ ॥
अन्तावसायी चण्डाले नापिते च द्विलिङ्गकः।
वधेतिसर्जनं दाने शुद्धौ त्यागेपमार्जनम् ॥ ९२८ ॥
स्यादुपस्पर्शनं स्पर्शे स्नानाचमनयोरपि।
विसर्जनीयाक्षरयोरभिनिष्टानमस्त्रियाम् ॥ ९२९ ॥

मेघवाहन इन्द्रः स्याद्वायुश्च शकुलादनी।
कटुका लाङ्गली च स्याद्धरिद्रा वरवर्णिनी ॥ ६३० ॥
नायिका च तपस्वी स्यात्सर्पश्च पवनाशनः।
प्रतिबिम्बे प्रतीकारे न पुंसि प्रतियातना ॥ ६३१ ॥
वेश्या नखौषधिर्हट्टविलासिन्यावपि स्मृते.।
ओड्रपुष्पे जपा मन्त्रावृत्तौ ना भयवेपथू ॥ ६३२ ॥
स्वरभिद्वरुणः कम्पो भावभेदश्च सात्त्विकः।
ग्रन्थावृत्तौ पशौ शब्दे नाटकादिस्वभावयोः ॥ ६३३ ॥
सौन्दर्याकारयो रूपं रङ्गसीसकयोस्त्रपु।
कल्पः शास्त्रे विधौ न्याय्ये संवर्ते ब्रह्मणो दिने ॥ ६३४ ॥
गर्तोदपानयोः कूपस्तथा स्याद्गुणवृक्षके।
क्षिपणावज्ञयोः क्षेपो लेपो लेपनमृत्क्रिये ॥ ६३५ ॥
आक्रोशे शपथे शापः पुष्पमार्तवसूनयोः।
द्वयोर्गोपी वल्लवी स्त्री शारिवा पातरीश्वरे ॥ ६३६ ॥
गोष्ठाध्यक्षे ग्रामवृन्दपतौ गोपो भवेत्त्रिषु।
तल्पं शय्याट्टदारेषूपर्याधारेषु वेश्मनः ॥ ६३७ ॥
तापद्रव्यभिदौ धूपौ वपा विवरमेदसोः।
वाष्पावूष्माश्रुणी सूपो व्यञ्जने सूपकारके ॥ ६३८ ॥
ग्रन्थिपर्णे तु शष्पं स्याद्व्रीहौ रूढे हरित्तृणे।
शाखायां विस्तृतौ स्तम्बे विटपं पुंनपुंसकम् ॥ ६३९ ॥
आक्षेपौ भर्त्सनाकर्षावुडुपः प्लवचन्द्रयोः।
आवाप आलवाले स्यात्प्रक्षेपे वलये तथा ॥ ६४० ॥
रूढप्रधानयोर्नीतितन्त्रे स्यादथ कल्पने।
वेशे चाकल्प आच्छादनान्ने कशिपु ते पृथक् ॥ ६४१ ॥
कुतपो वाद्यविन्यासे दर्भकालप्रभेदयोः।
छागरोममये वस्त्रे कूर्मी वीणा च कच्छपी ॥ ६४२॥
कलापः संहतौ बर्हे काञ्चीतूणीरयोरपि।
प्रतापावातपख्याती स्वरूपो बुधरूपिणोः ॥ ६४३ ॥

प्राप्तरूपाभिरूपौ चावलेपौ मदगर्हणे।
परिच्छदे परीवापो वपने सलिलस्थितौ॥ ५४४॥
वृषाकपी विष्णुशिवावग्निरिन्द्रो दिवाकरः।
हेमपुष्पी तु दुःस्पर्शा बिम्बिका पीतयूथिका॥ ५४५॥
श्रीवासः सिल्हकश्च स्याद्वृकधूपोथ वेतसे।
जले च मेघपुष्पं स्यादुपक्षेप उपक्रमे॥ ५४६॥
कालादेरतिवाहे च रेफः स्यात्पापवर्णयोः।
कम्बुर्ना वलये शङ्खे शालिधूलौ च मण्डले॥ ५४७॥
बिम्बोस्त्री प्रतिबिम्बे ना क्लीवे स्याद्बिम्बिकाफले।
पूर्वोन्यलिङ्गः प्रागाह पुंबहुत्वेपि पूर्वजान्॥ ५४८॥
आद्यर्थे तु भवेत्क्लीवे डिम्बौ तु प्लीहविप्लवौ।
शम्बः स्यान्मुसलाग्रस्थे लोहे श्रेयोन्विते पवौ॥ ५४९॥
कादम्बः सायकः पक्षी कदम्बः संहतौ द्रुमे।
द्विजिह्वः सर्पखलयोर्नितम्बोद्रितटे कटौ॥ ५५०॥
अन्तराभवसत्त्वेश्वे गन्धर्वो दिव्यगायने॥
मृगभेदेथ हेरम्बो महिषे विघ्ननायके॥ ५५१॥
संविभज्ये जने गेहे कुटुम्बं स्यान्नपुंसकम्।
नक्षत्रे भं प्रभायां स्त्री कुम्भी स्यात्कट्फले द्वयोः॥ ५५२॥
जलादिभाण्डे ना हस्तिकटराशिभिदोस्तथा।
सावष्टम्भे ग्रहे कुम्भा शंभुरर्हन्विधिः शिवः॥ ५५३॥
विभुः स्वामी व्यापकश्च डिम्भौ तु शिशुबालिशौ।
स्तम्भाः स्थूणागर्वभावाः स्वभूर्गौविन्दवेधसोः॥ ५५४॥
कुक्षिभ्रूणाशया गर्भा बालकाभ्यन्तरेपि च।
जृम्भा विकासे प्रसरे व्यादाने वदनस्य तु॥ ५५५॥
त्रिषु गात्रविरामेजे शुभो भद्रे नपुंसकम्।
क्षत्रिये विजिगीषौ च ना प्राण्यवयवे पुनः॥ ५५६॥
नाभिः स्त्री चक्रमध्येपि निभो व्याजे समे त्रिषु।
संसद्गोष्ठ्योर्गृहे द्यूते सभा जम्भो रयेशने॥ ५५७॥

दैत्यभेदे मुखे शक्रस्वामिनोस्तु प्रभुस्त्रिषु ।
रम्भाप्सरोभित्कदली दण्डे स्याद्वैणवे पुमान् ॥ ६५८ ॥
वीणाप्रसेवे ककुभो गेयभेदेऽर्जुनद्रुमे ।
गीतस्वरे वलीवर्दे श्रेष्ठे च ऋषभः पुमान् ॥ ६५९ ॥
कनिष्ठामणिबन्धान्तरोष्ट्रयोः करभोऽथ गौः ।
सुरभिः स्त्री कामधेनुः सल्लकी चैलवालुकी ॥ ६६० ॥
सुरायां स्यात्सुगन्धौ तु मनोज्ञे त्रिषु ना मधौ ।
ना भेर्यां दुन्दुभिः स्त्री स्यादक्षबिन्दुत्रिकद्वये ॥ ६६१ ॥
स्यान्महारजने क्लीबे कुसुम्भं करके पुमान् ।
पुनर्नवायां वर्षाभूः स्त्री वर्षाभ्वी द्वयोः प्लवे ॥ ६६२ ॥
विस्तारे प्रतिबिम्बे च विष्कम्भो नाटकांशके ।
वल्लभो दयितेऽध्यक्षे हये च प्रणये पुनः ॥ ६६३ ॥
स्यादाश्वासे च विस्रम्भो वृषभो द्रव्यभिद्गवोः ।
आलम्भौ स्पर्शनवधावारम्भौ तु क्रमोद्यमौ ॥ ६६४ ॥
जनाभ्यन्तरयोः पुंसि विदर्भस्त्रिषु निष्कुशे ।
विप्रलम्भो विसंवादो विरहो वञ्चना तथा ॥ ६६५ ॥
कुत्साप्रश्नवितर्केषु किं मा लक्ष्मीप्रमाणयोः ।
लक्ष्मीर्हरिप्रिया संपच्छोभा ब्राह्मी तु मातृभित् ॥ ६६६ ॥
वागोषधिभिदौ ब्रह्मभवादौ तु भवेत्त्रिषु ।
रामा योषिद्दाशरथौ जामदग्न्ये हलायुधे ॥ ६६७ ॥
मृगभेदे च पुंसि स्यात्कृष्णे चारौ सिते त्रिषु ।
भार्गीश्रीपद्मचारिण्यः पद्मा अब्जेऽस्त्रियां पुमान् ॥ ६६८ ॥
संख्यानिधिव्यूहनागभित्क्लीबे गजबिन्दुषु ।
स्याद्धर्ममस्त्रियां पुण्ये क्लीबे तत्साधने पुमान् ॥ ६६९ ॥
स्वभावदेवभिन्न्याययमाचारेषु सोमपे ।
अहिंसोपमयोश्चाथ जामिः स्वसृकुलस्त्रियोः ॥ ६७० ॥
काम्ये स्वैरे च कामः स्यादभिलाषे मनोभवे ।
अव्ययं त्वभ्यनुज्ञाने सोम ओषधिभेशयोः ॥ ६७१ ॥

यमोन्तकः कर्म च यन्नित्यं सहजयोरपि ।
क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु ॥ ९७२ ॥
त्रिषु श्यामौ हरित्कृष्णौ स्त्रियां स्याच्छारिवानिशोः ।
कान्ता प्रियङ्गुः पालिन्दी वटभेदे तु पुंस्ययम् ॥ ९७३ ॥
समा वर्षेनुच्चनीचे त्रिषु सर्वसदृक्षयोः ।
गुल्मो रुक्स्तम्बसेनाभिद्रक्षास्थानेषु गह्वरे ॥ ९७४ ॥
उष्णे स्वेदाम्भसि ग्रीष्मे घर्मो भावभिदातपे ।
त्रिषु तोकमं हरिन्मात्रे न स्त्रियां हरिते यवे ॥ ९७५ ॥
सीमावधौ स्थितौ क्षेत्रे विषये केशभूषणे ।
वृक्षमात्रे पारिजाते द्रुमश्चैद्यकुलोद्भवे ॥ ९७६ ॥
कुशलं क्षेममस्त्री ना त्वौषधे लब्धरक्षणे ।
ग्रामः संवसथे गेयभेदे वृन्दे सपूर्वकः ॥ ९७७ ॥
भ्रमिर्मोहस्तक्षभाण्डं स्यादतस्मिंस्तु तद्ग्रहः ।
भ्रमो मूर्छा तक्षभाण्डं छन्नमम्बुविनिर्गमः ॥ ९७८ ॥
रश्मिर्घृणिप्रग्रहयोः स्याद्गङ्गादुर्गयोरुमा ।
भीमो रुद्रे सभीष्मस्तु राजभेदे भयानके ॥ ९७९ ॥
अध्यात्मं सूक्ष्ममल्पे तु त्रिषु शीते हिमं त्रिषु ।
क्लीबे तुषारे भूमिः स्यात्स्थानं पात्रं धरा दशा ॥ ९८० ॥
वामा योषित्त्रिषु वल्गौ स्यात्सव्यप्रतिकूलयोः ।
वाम्यश्वा हार्यवस्त्वर्थवाहयुग्मकृतेपि सा ॥ ९८१ ॥
कुटिले मन्दके जिह्मो दमौ दण्डेन्द्रियग्रहौ ।
श्रमः प्रयत्ने खेदे च क्रिमिः स्यात्कीटरोगयोः ॥ ९८२ ॥
परिपाटी क्रमः कल्पः पादक्षेपः परंपरा ।
आनन्तर्यं पदसंधिः शमी शिम्बा द्रुभिस्त्रियाम् ॥ ९८३ ॥
कूर्मी भवेद्रयोः प्राणी यमिनामासनेस्त्रियाम् ।
नेमिः स्त्री रथचक्रान्ते कूपाङ्गे तिनिशे तु ना ॥ ९८४ ॥
शान्तिर्हस्तः शमो राज्ञां व्यवस्था निजमण्डले ।
आमो रोगे त्रिष्वपक्वे स्तोमः संघेध्वरे स्तुतौ ॥ ९८५ ॥

पाणेर्मध्याङ्गुलिर्दृष्टरजाः कन्या च मध्यमा।
गीतस्वरे देहमध्ये देशराजभिदोः पुमान् ॥ ५८६ ॥
अन्यूनानतिरिक्ते च तथा मध्यभवे त्रिषु।
भयसंवेगादरेषु संभ्रमोथ परिश्रमे ॥ ५८७ ॥
व्यायामः पौरुषे कृत्ये विद्रुमो वृक्षरत्नयोः।
यन्त्रणायां प्रतिज्ञायां नियमो निश्चये व्रते ॥ ५८८ ॥
हेलाभ्रान्त्योर्विभ्रमः स्याच्छक्तौ क्रान्तौ च विक्रमः।
तलिमः कुट्टिमे तल्पे शास्त्रे ग्रहण आगमः ॥ ५८९ ॥
गत्यभावद्रुदुर्गेष्वगमो बुद्धस्तु गौतमः।
मुनौ द्वयोः संगमस्तु नदीसंभेदसङ्गयोः ॥ ५९० ॥
आश्रमो ब्रह्मचर्यादौ मठे स्थाने तपस्विनाम्।
वणिक्पथः पुरं वेदो निगमास्त्रिष्वतो वणिक् ॥ ५९१ ॥
नैगमो नागरो विप्रः श्रेष्ठः साधुश्च सत्तमः।
आद्ये प्रधाने प्रथमोथाधमौ न्यूनगर्हितौ ॥ ५९२ ॥
बुध्नस्थश्चावमोप्येवमग्रिमोग्यप्रधानयोः।
उत्कृष्टे परमश्चाप्यभ्यनुज्ञानेव्ययं पुनः ॥ ५९३ ॥
ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु।
रत्ने शृङ्गे श्वेतगुणे तिलके स्याल्ललाम च ॥ ५९४ ॥
निष्क्रमो निर्गमो बुद्धिसंपच्चाथ परिश्रमः।
व्यायामयत्नखेदेषु युद्धे त्वभ्यागमो भवेत् ॥ ५९५ ॥
आभिमुख्यागतौ चोपशमः शान्तिर्विनीतता।
उपक्रमश्चिकित्सायामारम्भोपधयोरपि ॥ ५९६ ॥
अङ्गीकृतावुपगमः समीपगमनेपि च।
जीर्णं च परिभुक्तं च यातयामं भवेत्त्रिषु ॥ ५९७ ॥
ज्या मौर्वी भूश्च नाके द्यौरन्तरिक्षे तथा स्त्रियाम्।
ज्या गव्या गोसमूहे च रागद्रव्ये नपुंसकम् ॥ ५९८ ॥
गोक्षीरादौ त्रिषु पुनः स्यादर्यः स्वामिवैश्ययोः।
कल्यं प्रातः सुरायां स्त्री कल्याण्यां वाच्यपि त्रिषु ॥ ५९९ ॥

सज्जनीरोगदक्षेषु काल्यं तु स्यादहर्मुखे ।
प्राप्तकाले त्रिषु भवेद्भाग्यं कर्म शुभाशुभम् ॥ ६०० ॥
यौतकादौ धने दायो दाने भोज्ये च पैतृके ।
विवाह्याया ज्ञातिभृत्या जन्याः स्निग्धा वरस्य च ॥ ६०१ ॥
निर्वादे जनके युद्धे क्लीबे कार्ये तु स त्रिषु ।
आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् ॥ ६०२ ॥
उपायः कर्म चेष्टा च चिकित्सा करणं क्रियाः ।
धात्वर्थाख्यातसंस्कारा और्ध्वदैहिकमेव च ॥ ६०३ ॥
शाखापुरे न ना गृह्यं त्रिषु स्वस्वैरिपक्ष्ययोः ।
गृहासक्ताण्डजमृगे गृह्या तु स्याद्बहिर्भवा ॥ ६०४ ॥
आहते हेम्नि रजते वा रूप्यं रजतेपि च ।
त्रिषु प्रशस्तरूपे स्यान्माल्यं पुष्पेपि तत्स्रजि ॥ ६०५ ॥
हृद्भवं हृत्प्रियं हृद्यं हृदयाय हितं त्रिषु ।
वशीकरणमन्त्रे ना सत्यं शपथतथ्ययोः ॥ ६०६ ॥
भव्यौषधधने द्रव्यं गुणाधारगवोस्तथा ।
विशेष्ये परमाणौ च तिष्यपुष्यौ कलौ च भे ॥ ६०७ ॥
पुण्यं तु धर्मे सुकृते त्रिषु पूतमनोज्ञयोः ।
सौम्यो बुधे मनोज्ञे च त्रिषु स्यात्सोमदैवते ॥ ६०८ ॥
पूजार्थं द्रव्यमर्घ्यं स्यादर्घार्थार्घार्हयोस्त्रिषु ।
शरामान्तर्व्रणौ शल्ये प्राण्योषधिनृपेषु ना ॥ ६०९ ॥
स्पर्धाकाञ्च्योर्दन्तिमध्यरज्जौ कक्ष्या गृहान्तरे ।
प्रतिज्ञायां तुलायां च पुंसः सारसनेपि च ॥ ६१० ॥
त्रिषु रथ्यो रथोद्वाहे स्त्रियां मार्गरथौघयोः ।
देहसंघातलक्ष्येषु कायस्त्रिषु कदैवते ॥ ६११ ॥
क्षयो निलयकल्पान्तरोगापचयमृत्युषु ।
त्रिषु सद्भावियोग्येषु भव्यः क्लीबे शिवे फले ॥ ६१२ ॥
मृतावनशने प्रायो बाहुल्ये सदृशे त्रिषु ।
धिष्ण्यं स्थाने गृहे भे ना दैत्याचार्याग्निभेदयोः ॥ ६१३ ॥

सर्वज्ञभिषजौ वैद्यौ स्याच्छय्या तल्पगुम्फयोः ।
तुरंगगरुडौ तार्क्ष्यौ पूज्यौ श्वशुरसज्जनौ ॥ ६१४ ॥
रिपुतस्करयोर्दस्युर्धर्यः प्रार्थ्यप्रधानयोः।
वामदक्षिणयोः सव्यमर्थ्यौ न्याय्यविपश्चितोः ॥ ६१५ ॥
अधमान्तभुवोरन्त्यो मध्यो न्याय्यावलग्नयोः ।
अन्तरेनधिकन्यूने मध्ये तुर्द्वितयवाचकः ॥ ६१६ ॥
इतरासदृशावन्यौ त्रिवेद्यां त्रितये त्रयी ।
रहस्योपस्थयोर्गुह्यं मन्युर्दैन्ये क्रतौ क्रुधि ॥ ६१७ ॥
पूजाव्रतक्रिये चर्ये गेयौ गातव्यगायनौ ।
ययुरश्वेऽश्वमेधाश्वे मूल्यं विनिमये धने ॥ ६१८ ॥
काव्यं ग्रन्थे ग्रहे पुंसि कुल्या नीरप्रणालिका ।
नदी च क्लीवमस्थ्नि स्याद्वाच्यलिङ्गं कुलोद्भवे ॥ ६१९ ॥
त्रिषु चोद्यं चोदनार्हे क्लीवे स्याच्चोदनेऽद्भुते ।
त्रिषु गोप्यं गोपनीये गोप्या दासस्य सूनवः ॥ ६२० ॥
प्रवीणोचितयोर्योग्यस्त्रिष्वभ्यासे भवेत्स्त्रियाम् ।
एकत्वादौ विचारे च संख्या क्लीवे तु संयुगे ॥ ६२१ ॥
प्राप्तव्येम्बुमथ चाप्यं याप्ये नेतव्यगर्हिते ।
मुखं मुखान्तरं चास्यमासने स्त्री हरीतकी ॥ ६२२ ॥
पथ्यार्याभिद्यौषधे तु क्लीवे त्रिष्वगते पथः ।
पाक्यं काचे यवक्षारे विडे पाकार्हणे त्रिषु ॥ ६२३ ॥
छेदनीये त्रिषु भवेत्कृत्यो विद्विष्टकार्ययोः ।
स्त्रियां क्रियादेवतयोर्वाच्यं तु त्रिषु कुत्सिते ॥ ६२४ ॥
उपालभ्ये च चैत्यः स्यात्स्तूप उद्देशपादपे ।
प्राकारमूलबन्धे च संवसंचययोश्चयः ॥ ६२५ ॥
साध्या देवभिदः पुंसि भूम्नि शक्ये पुनस्त्रिषु ।
वन्या वनसमूहे स्त्री वने साधुनि तु त्रिषु ॥ ६२६ ॥
छाया स्यादातपाभावे प्रभाप्रतिमयोरपि ।
सूर्यप्रियायां गङ्गायां संवाहन्याय्ययोरपि ॥ ६२७ ॥

सद्योगे त्रिषु सोढव्य आरोग्ये तु नपुंसकम् ।
वीर्यं बलं प्रभावश्च रेतः स्याद्वीरकर्म च ॥ ६२८ ॥
देवीभेदे जयौषध्योर्द्वयोर्ना भारते गणे ।
उत्कर्षेभिभवे चार्या ज्येष्ठब्राह्मणसज्जनाः ॥ ६२९ ॥
छन्दोभित्स्त्री चिता चित्या स्यादग्निचयने न ना ।
सभ्यः सामाजिकेग्नौ च तथा प्रत्ययिते त्रिषु ॥ ६३० ॥
दूष्येभमध्यबन्धन्यां क्लीबे पटगृहे त्रिषु ।
दूषणीये बले सैन्यं त्रिषु तत्समवायिनि ॥ ६३१ ॥
माया स्याद्बुद्धजननी वञ्चनाविद्ययोरपि ।
तदधिष्ठातृदेव्यां च जात्यं कुलजकान्तयोः ॥ ६३२ ॥
आदित्यौ सूर्यगीर्वाणौ श्वशुर्यौ स्यालदेवरौ ।
त्रिषु हर्तुमशक्ये स्यादहार्यः पर्वते पुमान् ॥ ६३३ ॥
स्यान्नादेयी भूमिजम्बूस्तर्कारी जलवेतसः ।
त्रिषु नद्यां भवे पश्चाज्जघन्यं त्रिषु गर्हिते ॥ ६३४ ॥
अभिलाषविनिर्मुक्ते प्रणाय्यः स्यादसंमते ।
आधार आशयः स्याद्धृद्यभिप्रायेश्वसंहतिः ॥ ६३५ ॥
अश्वीयं स्यादश्वहिते त्रिष्वपत्यं तु पुत्रयोः ।
ब्राह्मण्यं ब्राह्मणत्वे च तथा तत्कर्मसंघयोः ॥ ६३६ ॥
मलयौ पर्वतारामौ भ्रातृव्यौ भ्रातृजद्विषौ ।
विस्रम्भयाञ्चाप्रेमाणः प्रणयाः संस्तवोपि च ॥ ६३७ ॥
संघाते संनिवेशे च संस्त्यायः स्याद्गृहे तथा ।
पश्चादवस्थायिबलं संनयो द्रव्यमेलनम् ॥ ६३८ ॥
कषायः सुरभौ स्निग्धे भाविते त्रिषु ना रसे ।
द्रवे वर्णे चित्तधर्मेवलेहे स्त्री पुनर्मले ॥ ६३९ ॥
काञ्चिकस्य द्वितीया तु जाया स्यात्पूरणे त्रिषु ।
स्थाने विहंगमावासे कुलायं पुंनपुंसकम् ॥ ६४० ॥
कशेरुहेम्नोर्गाङ्गेयं पुंसि भीष्मे गणाधिपे ।
त्रिषु वामे प्रसव्यः स्यात्प्रतिकूलानुकूलयोः ॥ ६४१ ॥

शोभायां नाम्नि कीर्तावप्यभिख्या क्षेत्रियस्त्रिषु ।
अन्यदेहचिकित्स्यार्हे त्रिषादी क्षेत्रिजे तृणे ॥ ६४२ ॥
असाध्यरोगे दुःशोध्ये तृणादौ पारदारिके ।
विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि ॥ ६४३ ॥
आधारे ग्रामसंघे च व्यवायो व्यवधौ रते ।
हृदयं वक्षसि स्वान्तेभिप्रायाभ्यन्तरोण्डुके ॥ ६४४ ॥
चित्रादर्षौ विस्मयौ तु पर्यायोर्थसमे क्रमे ।
निकायः स्यान्निवासे च संघे राशीकृतौ तथा ॥ ६४५ ॥
समयाः शपथाचारकालसिद्धान्तसंविदः ।
प्रत्ययोधीनशपथज्ञानविश्वासहेतुषु ॥ ६४६ ॥
रन्ध्रे शब्दे प्रथायां च संवादे मेषकम्बलौ ।
ऊर्णायू स्यात्तु सौरभ्यं सौगन्ध्यं रम्यता तथा ॥ ६४७ ॥
मेघे तु सध्वनौ शक्रे पर्जन्यो मेघदैवते ।
हिरण्यं हेम्नि तन्मानभेदेर्थे स्यादकुप्यके ॥ ६४८ ॥
प्रलयौ मृत्युसंवर्तौ मूर्छा भावश्च सात्त्विकः ।
न नातिथ्यमतिथ्यर्थमतिथौ तु नपुंसकम् ॥ ६४९ ॥
व्यसनान्यशुभं दैवं विपदित्यनयास्त्रयः ।
क्लेशे दण्डे च दोषे च बिनाशेतिक्रमेत्ययः ॥ ६५० ॥
पानीयं सलिले पेयरक्ष्ययोस्त्रिष्वथोदयः ।
पूर्वाद्रिरुद्गमो वृद्धिः स्थेये स्थानहिते पुरे ॥ ६५१ ॥
स्थानीयमुत्तरपदे त्रिषु स्यादुपमार्थकम् ।
छन्नायां पुंसि शालेयः क्षेत्रे क्लीबमथाभयम् ॥ ६५२ ॥
भयाभाव उशीरं च स्त्री पथ्या निर्भये त्रिषु ।
राजस्याले राष्ट्रियः स्यात्त्रिषु राष्ट्रभवादिके ॥ ६५३ ॥
शीर्षण्यो विषदे केशे शिरस्त्रे तु नपुंसकम् ।
शिरोभवे तद्धिते च प्रधाने चान्यलिङ्गकः ॥ ६५४ ॥
संचयः संग्रहे संघ आत्रेयी स्याद्रजस्वला ।
अत्र्यपत्ये त्रिषु फले मदनस्यापि कट्फले ॥ ६५५ ॥

कैडर्यै तूलवृक्षे तु ब्रह्मण्यो ब्रह्मणो हिते।
त्रिष्वन्वयो वंशवाक्यपदमेलनयोस्तथा ॥ ६५६ ॥
संबन्धेव्यभिचारे च चाम्पेयो नागकेसरे।
चम्पके चाथ विजयो गणभेदेर्जुने गतौ ॥ ६५७ ॥
पराभिभूतौ देव्यां स्त्री हृषीके शेपसीन्द्रियम्।
हृच्छयौ मदनात्मानौ स्यादाम्नायोन्वये श्रुतौ ॥ ६५८ ॥
निलयः स्याल्लये स्थाने निचयौ संघसंचयौ।
पर्वतादेश्च वप्रं स्यादुच्चयोप्युच्छसंघयोः ॥ ६५९ ॥
शाण्डिल्यो मुनिभेदे स्यात्पुंसि बिल्वमहीरुहे।
प्रचयौ स्वरभित्संघौ भूरिमायस्तु राक्षसः ॥ ६६० ॥
सृगालश्चाथ नलदे जलाधारे जलाशयः।
समवायौ श्लेषसंघौ मेरुस्वर्गौ सुरालयौ ॥ ६६१ ॥
देवागारेप्यथ सुरा सीरिभार्या हलिप्रिया।
नीपे नाथोपकार्या स्यात्पटकुट्यां तथा त्रिषु ॥ ६६२ ॥
संविभज्ये रणे संघे समुदायोपि संविदि।
आतिथेयी स्त्रियां पूजातिथिसाधौ भवेत्त्रिषु ॥ ६६३ ॥
युद्धायत्योः संपरायो वैरोन्नत्योः समुच्छ्रयः।
स्थूलोच्चयस्त्वसाकल्ये हस्तिनां मध्यमे गते ॥ ६६४ ॥
समुद्गमे समुदयः संग्रामनिकुरुम्बयोः।
दोषे द्वेषे चानुशयः पश्चात्तापानुबन्धयोः ॥ ६६५ ॥
पुंसां संघे पौरुषेयं त्रिषु तेन कृते वधे।
विकारे तस्य हुतभुक्पार्थयोः स्याद्धनंजयः ॥ ६६६ ॥
हलीन्दुजौ रौहिणेयौ सभास्थाने प्रतिश्रयौ।
भयंकरे प्रतिभयं त्रिषु भीतौ नपुंसकम् ॥ ६६७ ॥
भागधेयो बलौ भागे भाग्ये क्लीबे समाह्वयः।
रणे द्यूते वासतेयी रात्रौ तत्साधुनि त्रिषु ॥ ६६८ ॥
स्यादभ्यासे परिचयः संस्कारे मेलने तथा।
चन्द्रोदयो विताने स्याद्द्विजराजोद्गमे तथा ॥ ६६९ ॥

वक्ता प्रवचनीयः स्यात्प्रवाच्यश्च त्रिलिङ्गकः ।
वृषाकपायी श्रीगौरी स्वाहेन्द्राण्यृषिभार्ययोः ॥ ६७० ॥
राः स्वर्णधनयोः श्रीस्तु शोभालक्ष्मीसमृद्धिषु ।
प्रशंसायां पुरे पूः स्याद्गृहे काये स्त्रियामथ ॥ ६७१ ॥
धू रथावयवे स्त्री स्यात्तथा वोढव्यमात्रके ।
द्रुर्द्रुमे विटपे शौरी नारायणशनैश्चरौ ॥ ६७२ ॥
उरुर्महांस्त्रिषु स्त्री भूश्चीरी स्याज्झिल्लिका मृगे ।
ना क्लीबे व्रतिनां वस्त्रे वारः काले क्रमे चये ॥ ६७३ ॥
छत्रौषधात्रातपत्रे क्लीबे पादे नखौषधौ ।
खुरः शरो नडे बाणे दधिसारेथ वायसे ॥ ६७४ ॥
वाल्यर्जुनजयन्तेषु स्यादैन्द्रिरथ राक्षसे ।
रुरुश्चित्रमृगे गुन्द्रा प्रियङ्गुः सैरिकैरका ॥ ६७५ ॥
अक्षमालाप्रफलके मेरुः सुरगिरौ तथा ।
अम्लवेतसवृक्षाम्लाम्लाश्चुक्रास्त्रिषु तद्रसे ॥ ६७६ ॥
रोमच्छेदककाण्डेक्षू क्षुरौ तीक्ष्णे भवेत्त्रिषु ।
शब्दोपतापिनोर्वर्णे षड्जोदात्तादिषु स्वरः ॥ ६७७ ॥
गौर्यजातरजाः कन्या पार्वती त्रिषु पाण्डुनि ।
पीतेरुणे च राष्ट्रोस्त्री विषये स्यादुपद्रवे ॥ ६७८ ॥
मित्रं सुहृदि पुंस्यर्के मरु धन्वधराधरौ ।
अद्रयो द्रुमशैलार्काः कारुः कारकशिल्पिनोः ॥ ६७९ ॥
गोत्रा भूर्गोसमूहश्च नाद्रौ क्लीबेभिधाकुले ।
तिलकालेख्याद्भुतेषु चित्रं त्रिषु तु कर्बुरे ॥ ६८० ॥
सुभद्रौषधिभेषु स्त्री क्षेत्रं पत्नीशरीरयोः ।
गणितव्यवहारे च तीर्थे केदारयोग्ययोः ॥ ६८१ ॥
ज्यैष्ठेमौ भार्गवे शुक्रः क्लीबे रेतोक्षिरोगयोः ।
गुरुः संस्कारके पुंसि पित्रादौ सुरमन्त्रिणि ॥ ६८२ ॥
दुर्जरालघुनोः स्थूल आराध्ये च त्रिलिङ्गकः ।
त्रिषु क्षुद्रोल्पकृपणक्रूरगर्ह्येष्वपि स्त्रियाम् ॥ ६८३ ॥

व्यङ्गा नटी शीलहीना सरघा कण्टकारिका ।
वरो विवाहे देवादेः प्रार्थिते स्वीकृतौ गत्रि ॥ ६८४ ॥
श्रेष्ठे त्रिष्वोषधौ स्त्री स्यान्मनागिष्टेव्ययं पुनः ।
क्लीबे च कुङ्कुमे पारी पात्रं पारा नदीभिदि ॥ ६८५ ॥
तीरात्तीरान्तरे क्लीबं समाप्तौ सर्वसंग्रहे ।
तन्त्रं प्रधाने सिद्धान्ते तन्तुवाने परिच्छदे ॥ ६८६ ॥
आयत्तश्लेषशास्त्रोक्तप्रक्रियाशब्दसिद्धिषु ।
स्वमण्डलादिचिन्तायामौषधादावुपस्करे ॥ ६८७ ॥
वीणादीनां गुणे नाड्यां तन्त्री स्यादात्मनः पृथक् ।
युक्तश्च दूरश्रेष्ठारिपूर्वान्या भेद्यवत्पराः ॥ ६८८ ॥
शारोनिले द्यूतभाण्डे त्रिषु वर्णे तु कर्बुरे ।
गर्तदूषणयोश्छिद्रं रन्ध्रं च विवरं तथा ॥ ६८९ ॥
मुक्ताशुद्धौ स्वरेत्युच्चे स्यात्तारः शुद्धमौक्तिके ।
देवीभनेत्रमध्ये स्त्री क्लीबे रूप्ये त्रिषूद्भटे ॥ ६९० ॥
अभ्युत्कर्षाम्बुवेगाश्वगतिभेदेषु संततौ ।
अग्रस्कन्धे तु सैन्यस्य धारोत्क्रोशौ गवि द्वयोः ॥ ६९१ ॥
दम्भराष्ट्रायुध - - चक्रं सेनारथाङ्गयोः ।
पुटभेदे चये शिल्पिभाण्डे चक्राह्वये पुमान् ॥ ६९२ ॥
परिच्छदाल्पमानेषु धने कर्णविभूषणे ।
तालाङ्केप्यक्षरांशे स्त्री मात्रं कार्त्स्न्येवधारणे ॥ ६९३ ॥
यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ।
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥ ६९४ ॥
पुरोधिकमुपर्यग्रं भिक्षाभेदप्रधानयोः ।
गजाग्रजङ्घयोः शक्तौ गात्रमङ्गे कलेवरे ॥ ६९५ ॥
उग्रः शूद्रासुते क्षत्रादुत्कटे त्रिषु ना शिवे ।
दीक्षितस्याधिदैवे च व्याघ्री प्राण्योषधी द्वयोः ॥ ६९६ ॥
नागानां जननी कद्रूः कद्रुस्तु त्रिषु पिङ्गले ।
विपुले नकुलेग्नौ च बभ्रुः स्यात्पिङ्गले त्रिषु ॥ ६९७ ॥

नेत्रं पट्टे मन्थगुणे तरुमूले विलोचने ।
वस्तिनाड्यां चाथ पोत्रं मुखाग्रे हलकोलयोः ॥ ६९८ ॥
जरा रुग्भङ्गयोरस्त्री वप्रः प्राकाररोधसोः ।
केदारे सीसके स्वर्णे क्लीबे पितरि ना पुनः ॥ ६९९ ॥
स्नुह्योषधौ विद्युति च वज्रोऽस्त्री हीरके पवौ ।
स्नुह्यां रक्ताम्लुणोरस्त्रं पुंसि केशे दरो भये ॥ ७०० ॥
गर्ते दरी गुहाल्पार्थे त्वव्ययं पर्वते धरः ।
धरा भूमावथ क्रूरो नृशंसे कठिने तथा ॥ ७०१ ॥
भयंकरे चाथ सत्त्वं यज्ञेरण्ये च साधने ।
सदादाने च दम्भे च धनाच्छादनयोरपि ॥ ७०२ ॥
धारार्तिकोणेष्वश्रिः स्त्री कारा बन्धे च तद्गृहे ।
राजग्राह्ये पुमान्भागेथाङ्घ्रिः पादद्रुमूलयोः ॥ ७०३ ॥
करिणां बन्धनोर्व्यौ स्त्री वारिस्तोये नपुंसकम् ।
सारं न्याय्ये वस्तुनि च पुमान्मज्ज्ञि स्थिरे बले ॥ ७०४ ॥
त्रिषूत्कृष्टे वस्तुनि तु दुर्वहेतिशयान्विते ।
वीवधे द्विसहस्रे च पलानां भार इक्षुभित् ॥ ७०५ ॥
चित्रकं देशभेदश्च पुण्ड्रः पत्त्रं तु वाहने ।
पर्णे पक्षे चाथ धात्री स्तनदा क्ष्मामलक्यपि ॥ ७०६ ॥
योग्यभाजनयोः पात्रं नदीकूलद्वयान्तरे ।
स्रुगादौ नाट्यविषये शास्त्रं ग्रन्थनिदेशयोः ॥ ७०७ ॥
कृच्छ्रं दुःखं तपोभेदः शस्त्रमायुधलोहयोः ।
हस्तिभेदे वृषे भद्रो भद्रं शर्म सति त्रिषु ॥ ७०८ ॥
राखायां स्त्री शारिरक्षे पक्षिपर्याणभेदयोः ।
पीलौ गिरियकक्रीडागुलके पर्वते गिरिः ॥ ७०९ ॥
ताम्रं शुल्बे त्रिषु गुणे तन्द्री निद्राप्रमीलयोः ।
व्यापृताकुलयोर्व्यग्रस्त्रिषु भाण्डं हविश्चरुः ॥ ७१० ॥
चक्राद्यश्रौ शीघ्रगे च त्रिषु क्लीबे त्वरं द्रुतौ ।
बलौ मेघोपले हस्तिहस्ते पाणौ करोंशुषु ॥ ७११ ॥

क्षारं रसविशेषे च पुंसि स्यात्काचभस्मनोः ।
ध्वान्तदैत्यारयो वृत्रा अभ्रमाकाशमेघयोः ॥ ७१२ ॥
स्त्रीभेदे कातरे भीरुः स्वरुर्यूपाङ्गवज्रयोः ।
क्षीरं दुग्धाम्बुनोश्चन्द्रं स्वर्णे कम्पिल्यके तु ना ॥ ७१३ ॥
कर्पूरेन्द्वोश्च कुटजे शक्रः स्याद्वासवे तथा ।
मर्त्ये नरो देवभेदे भरोतिशयभारयोः ॥ ७१४ ॥
चारे चरस्त्रिषु चले भूरि स्वर्णे बहौ त्रिषु ।
प्रस्थाने वर्तनोपाये यात्रा देवोत्सवेपि च ॥ ७१५ ॥
सालपर्ण्यां स्थिरा भूमौ दृढे स्थास्नौ च भेद्यवत् ।
खरस्तीक्ष्णे त्रिषु क्रूरे गर्दभे तु खरी द्वयोः ॥ ७१६ ॥
रक्षोभेदे पुमान्द्वारमुपायप्रतिहारयोः ।
इरा भूवाक्सुरान्नापोप्सराश्चाथ पुरं पुरि ॥ ७१७ ॥
न ना देहे सर्वभद्रयागे क्लीबे गृहेपि च ।
धीरं स्यात्कुङ्कुमे सूरौ गम्भीरसहयोस्त्रिषु ॥ ७१८ ॥
मारी भृशमृतौ कामे मरणे मारणे पुमान् ।
चारी ताण्डवचेष्टायां नृपतिप्रणिधौ पुमान् ॥ ७१९ ॥
संधानाच्छादने वस्त्रे शुभ्रौ दीप्तसितौ त्रिषु ।
संकरो मार्जनक्षिप्ते मेलने लोमजे त्रिष ॥ ७२० ॥
उच्चारः पाठशकृती उद्भवे मार्गगे त्रिषु ।
इन्द्रद्रुर्देवदारुः स्याल्लकुचः कुटजार्जुनौ ॥ ७२१ ॥
मन्दारः सुरवृक्षे स्यात्पारिभद्रकरम्भयोः ।
मयूरस्तुत्थको दीप्योप्यपामार्गश्च बर्हिणः ॥ ७२२ ॥
कुकुरं ग्रन्थिपर्णे स्याद्द्वयोः शुन्यथ बर्बरः ।
अजगन्धा बर्द्धकद्रुः शाकभेदे तु बर्बरा ॥ ७२३ ॥
चिकुरः केशपाशे स्त्री भ्रूलये चपले त्रिषु ।
पश्चाज्जङ्घा न नेभस्यावरा दक्षिणदिक्स्त्रियाम् ॥ ७२४ ॥
परान्यानन्तरोनाथ त्रिष्वेवमपरोप्यरौ ।
पश्चिमायामेव दिशि चतुरो वेगिदक्षयोः ॥ ७२५ ॥

किञ्जल्केऽस्त्री केसरो ना पुंनागे नागकेसरे ।
सटाबकुलयोर्नीचः पाण्डुरोगी च पामरः ॥ ७२६ ॥
सौवीरमञ्जनं कोलं काञ्चिकं त्रिषु देशजे ।
जम्भीरः स्याद्दन्तशठे मरुवे हस्तिपिप्पली ॥ ७२७ ॥
अपामार्गोऽब्धिलवणं वसिरो बदरी द्रुभित् ।
कर्पासी तत्फले क्लीबे कबरी केशपाशभित् ॥ ७२८ ॥
कडारस्त्रिषु कल्माष उद्धारः संग्रहर्णयोः ।
भुक्तोच्छिष्टे परावर्त उत्क्षेपे चाथ बर्करः ॥ ७२९ ॥
युवमेषे द्वयोः सोपहासे स्याद्वाच्यलिङ्गकः ।
युवराजे शिशौ स्कन्दे कुमारोऽश्वानुचारके ॥ ७३० ॥
द्वीपे कुमारो ना स्त्री तु कन्यकौषधिभेदयोः ।
मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ॥ ७३१ ॥
संगराः स्युः क्रियाकारविपदाजिप्रतिश्रवाः ।
क्लीबे शमीफलेऽथेभहस्ताग्रे व्योम्नि पङ्कजे ॥ ७३२ ॥
वाद्यभाण्डमुखे नीरे तीर्थौषधिविशेषयोः ।
असेः फले पुष्करं स्यादन्तरं त्वन्यभेदयोः ॥ ७३३ ॥
अवकाशेऽवधौ मध्ये व्यवधानपिधानयोः ।
परिधानात्मरन्ध्रेषु स्थानावसरयोरपि ॥ ७३४ ॥
तादर्थ्यस्वकबाह्येषु मध्यगेऽप्यभिधेयवत् ।
अजिरं प्राङ्गणे काये रूपादिविषये तथा ॥ ७३५ ॥
सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।
वर्णसंकरजाता च संस्तरौ स्रस्तराध्वरौ ॥ ७३६ ॥
प्रकरः संहतौ पुष्पोपकारेऽथोत्तरा दिशि ।
भे पार्थवध्वां चोदीच्यानन्तरोर्ध्वेषु भेद्यवत् ॥ ७३७ ॥
श्रेष्ठप्रधानयोश्चापि प्रतिवाक्ये नपुंसकम् ।
विराटतनये पुंसि द्वापरौ युगसंशयौ ॥ ७३८ ॥
स्याद्वाद्यभेदे सुशिरं गर्ते गर्तान्विते त्रिषु ।
नडे तु सुशिराभीरुः शतावर्यभये त्रिषु ॥ ७३९ ॥

शिशिरोऽस्त्री ऋतौ शीते त्रिषु क्लीबे हिमे भवेत् ।
वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना ॥ ७४० ॥
इक्षोर्विकारः सूक्ष्माश्मा रोगभेदश्च शर्करा ।
विष्टरः कुशमुष्टौ च पीठपादपयोरपि ॥ ७४१ ॥
गायत्री खदिरे मन्त्रे छन्दोभेदे त्रिलिङ्गकः ।
उदारो दातृमहतोर्दक्षिणोऽद्भटयोस्त्रिषु ॥ ७४२ ॥
शाक्करोऽनडुहि च्छन्दोभेदे त्रिष्वथ रोगभित् ।
प्रदरः शरभङ्गौ च केदारः क्षेत्रतीर्थयोः ॥ ७४३ ॥
ओष्ठाधरोनूर्ध्वहीने त्रिषु दम्भे मृगेऽसुरे ।
मायायां शम्बरः पुंसि जले क्लीबेऽथ गह्वरे ॥ ७४४ ॥
सृमरस्त्रिषु पुंस्येणे कलत्रं श्रोणिभार्ययोः ।
तमस्तमिस्रे सतमा रात्रिः स्त्री गजसज्जनम् ॥ ७४५ ॥
शृङ्गारो रसराजश्च तूवरोऽश्मश्रुणि त्रिषु ।
अजातशृङ्गे छागे च सामुद्रं देहलक्षणे ॥ ७४६ ॥
लवणादौ समुद्रस्याथाकाराविङ्गिताकृती ।
प्रकारे मुखरागादावाह्वाने वर्णभित्यपि ॥ ७४७ ॥
अम्बरे वसनाकाशौ सुगन्धिद्रव्यमाश्रयः ।
वाप्यालवाले चाधारो विस्तारो तज्ज्ञविस्तृतौ ॥ ७४८ ॥
विटपेऽस्त्री भास्वरा स्यात्पाठा त्रिषु तु भासुरे ।
औशीरं चामरे दण्डे सहिते शयनासने ॥ ७४९ ॥
इन्द्रध्वजे विशीर्णे च सच्छिद्रे चापि जर्जरः ।
उर्वरा सर्वसस्याढ्या भूस्तथा भूमिमात्रकम् ॥ ७५० ॥
खपुरो लसकः पूगो विहारः सुगतालये ।
परिक्रमक्रीडनयोः संस्कारः शास्त्रजो गुणः ॥ ७५१ ॥
वासना प्रतियत्नश्चाथाकरो निकरे खनौ ।
आसारः स्यात्प्रसरणे वेगाद्वर्षे सुहृद्बले ॥ ७५२ ॥
निकारः परिभावे च धान्यस्योत्क्षेपणेऽपि च ।
प्रस्तरा मणिपाषाणशय्यास्त्रिषु मनोहरे ॥ ७५३ ॥

स्वादौ च मधुरो नीचपरयोरितरस्त्रिषु ।
व्यायामे प्रसरो वेगे प्रपञ्चे प्रणये तथा ॥ ७५४ ॥
गोपुरं द्वारि पूर्द्वारि तथा दाशपुरौषधौ ।
दुर्भिक्षादिकृते दुःखे कान्तारं दुर्गमे पथि ॥ ७५५ ॥
माणिक्यमुज्ज्वलं शृङ्गमूर्ध्वाग्रं शिखरत्रयम् ।
गुहादम्भनिकुञ्जेषु गह्वरं स्यात्तु चत्वरम् ॥ ७५६ ॥
चतुष्पथे प्राङ्गणे च नरेन्द्रौ नृपवैशिकौ ।
उदरे जठरं क्लीबे कठिने वाच्यलिङ्गकः ॥ ७५७ ॥
कन्दे राजकशेर्वाख्ये शुण्ठ्यामपि च नागरम् ।
पूर्भवे वाच्यलिङ्गं स्यात्कुहरं गह्वरे बिले ॥ ७५८ ॥
शार्वरं त्वन्धतमसे घातुकेऽभे त्रिलिङ्गकः ।
वर्णे मोक्षे परब्रह्मण्यक्षरं त्रिषु चाक्षये ॥ ७५९ ॥
आण्डीरो बालके पुंसि सुवर्णे तु नपुंसकम् ।
मन्दिरं नगरे गेहे पिठिरं चरुपस्तयोः ॥ ७६० ॥
किंशारु व्रीहिशूकेषू विकारी वैरवैकृते ।
ऋषौ मन्त्रे कुशे देवे पवित्रं पाविते त्रिषु ॥ ७६१ ॥
सुवर्णे कर्बुरं पापे कल्माषे तु त्रिलिङ्गकः ।
बन्धुरं संनते रम्ये खर्जूरं फलरूप्ययोः ॥ ७६२ ॥
ना द्रुमेनाकुले तु स्यादेकाग्रं तत्परे त्रिषु ।
आहारः स्वीकृतौ भुक्तौ छन्दःकाञ्च्योस्तु शक्करी ॥ ७६३ ॥
तुषारस्तु कणे क्लीबे तुहिने शीतले त्रिषु ।
कठोरः कठिनपक्के संहारो नाशसंघयोः ॥ ७६४ ॥
प्रत्याहारे संग्रहे च तथा नारकभूभिदि ।
कर्पूरे पुंसि नासीरो भवेदग्रसरे त्रिषु ॥ ७६५ ॥
कालसूत्रं कृष्णसूत्रे तथा नारकभूभिदि ।
विद्याधरी देवभेदे द्वयोर्विद्यावति त्रिषु ॥ ७६६ ॥
विद्याधरः शक्तिधरः स्कन्दः शक्तिमति त्रिषु ।
तुण्डिकेरी तु कर्पासी बिम्बी च पितृकाननम् ॥ ७६७ ॥

करवीरः पुष्पभिद्योपचित्रा पृश्निपर्णिका ।
दन्ती दण्डधरो राजा यमो दण्डभृति त्रिषु ॥ ७६८ ॥
चतुरश्चतुःस्रक्तिस्त्रिषु कालोपयुक्तिवित् ।
द्यूतयुद्धादिविश्रान्तौ ग्राहाभिख्ये च यादसि ॥ ७६९ ॥
निमन्त्रणोपनेतव्येष्वहारोथ परिच्छदे ।
प्रगाढगात्रिकाबन्धे पर्यङ्कारम्भयोरपि ॥ ७७० ॥
समूहे स्यात्परिकरः स्यात्तु प्रतिसरोस्त्रियाम् ।
हस्तसूत्रे चमूपश्चाद्भागे यागादिके पुमान् ॥ ७७१ ॥
आरक्षे मण्डने च स्यान्नियोज्ये वाच्यलिङ्गकः ।
उपकारस्तूपकृतौ कुसुमप्रकरेपि च ॥ ७७२ ॥
दुरोदरो द्यूतकरे पणे द्यूते नपुंसकम् ।
उदुम्बरो वृक्षभेदे देहल्यां चाप्यरुष्करः ॥ ७७३ ॥
व्रणकृद्वृक्षभेदश्च क्लीबे तु स्यात्सरोरुहे ।
शतपत्त्रं पुमान्दार्वाघाटे स्यादथ सागरे ॥ ७७४ ॥
अकूवारः कूवरे स्त्री भुवि विश्वंभरोच्युते ।
आडम्बरोस्त्री संरम्भे रवे च गजतूर्ययोः ॥ ७७५ ॥
अभिहारोभियोगे च चौर्ये संनहनेपि च ।
शिशुमारो जलोद्भूतजन्तौ तारागमाच्युते ॥ ७७६ ॥
परिवारः परिजने खड्गकोशेप्युपह्वरः ।
विविक्ते च समीपे च महामात्रो महर्द्धिके ॥ ७७७ ॥
हस्त्यारोहाधिपे चाभिसरः स्वबलसाध्वसे ।
युद्धे च व्यभिचारः स्याद्धिंसायामप्यसंभवे ॥ ७७८ ॥
संकरे व्यसने वृत्तान्तेपि व्यतिकरः कृतौ ।
तीर्थेवतारो देवादेरंशे स्यादवरोहणे ॥ ७७९ ॥
वर्धापके पूर्णपात्रं पात्रे पूर्णे जलादिना ।
प्रतीहारो द्वारि तत्स्थे द्वयोर्गुह्येप्यवस्करः ॥ ७८० ॥
वर्चस्के चापचारस्तु दुष्कृतभ्रंशयोरपि ।
आचारे परिचर्यायां प्राभृतारोपयोरपि ॥ ७८१ ॥

उपचारः सहचरी भार्यापत्योः परस्परम् ।
लताभेदे द्वयोर्मित्रे सार्धसंचारिणि त्रिषु ॥ ७८२ ॥
अर्धचन्द्रा तु पालिन्दी गलहस्ते पुमाञ् शरे ।
नखक्षतविशेषे च हंसभित्कौरवस्तथा ॥ ७८३ ॥
धार्तराष्ट्रः कृष्णशारः शवले त्रिषु ना मृगे ।
पारिभद्रः पारिजाते बदर्यां सुरदारुणि ॥ ७८४ ॥
ब्रह्मपुत्रो द्विजसुतो विषभिन्नारदादयः ।
सुकुमारस्त्रिषु मृदौ घृतभेदे नपुंसकम् ॥ ७८५ ॥
उपस्करो वेशवारो गृहभाण्डाद्यथाम्बुदे ।
पयोधरः स्तनेपि स्यादुपस्कारो गुणाहितौ ॥ ७८६ ॥
अध्याहारे वैकृते च दीर्घसूत्रश्चिरक्रियः ।
तन्तौ च विस्तृते क्लीबे दीर्घनिद्रा मृतिस्तथा ॥ ७८७ ॥
अतिस्वापरतिश्चाथ काव्यमण्डलवेश्मभित् ।
निम्बश्च सर्वतोभद्रो व्यूहः कल्याणवांस्त्रिषु ॥ ७८८ ॥
चूडा किरीटं केशाश्च संहता मौलयस्त्रयः ।
मातृभेदे क्षारकीटे काली दुर्गानवाब्दयोः ॥ ७८९ ॥
पालिन्दी पाटला कृष्णाजाजी कालापि नीलिनी ।
तिन्दुकेन्द्रौ यमे मृत्यौ समये नासिते त्रिषु ॥ ७९० ॥
मूलान्याद्यशिफाभान्ताः कलहेन्त्ययुगे कलिः ।
करोपहारदैत्येषु बलिर्ना गात्रजे स्त्रियाम् ॥ ७९१ ॥
स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः ।
दैत्यभेदे च बलिनि त्रिष्वोषधिभिदि स्त्रियाम् ॥ ७९२ ॥
भेद्यलिङ्गः शठे व्यालो द्वयोः शार्दूलसर्पयोः ।
कुटीग्रामकयोः पल्लिः स्वयस्त्री शूलं रुगायुधम् ॥ ७९३ ॥
तच्छिखा वंधकं काष्टं शूला वारविलासिनी ।
ज्वालाशङ्कू द्वयोः कीलौ कूर्परः प्रहतं रते ॥ ७९४ ॥
कर्णाधो भाजने प्रान्ते पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु ।
कल्पनाकालशिल्पेषु वृद्धौ मूलधनस्य च ॥ ७९५ ॥

इन्द्रेशे तालगुरौ निवृत्त्यादौ छले कला ।
शक्तावव्यक्तमधुरे ध्वाने त्रिषु मनोहरे ॥ ७९६ ॥
आल्यनर्थे सखीपङ्क्त्योः सेतौ ना वृश्चिके फलम् ।
सस्यादौ फलके लाभ आयुधाग्रे कणेकृते ॥ ७९७ ॥
अब्ध्यम्बुविकृतौ वेला मर्यादा गिरिकालयोः ।
फालो हलाग्रेऽप्लवयोर्लोलश्चलसतृष्णयोः ॥ ७९८ ॥
लीला विलासेनुकृतौ दलं दण्डार्धयोश्छदे ।
सुगन्धपञ्चोपादानहेत्वो रन्ध्रगुहे बिलम् ॥ ७९९ ॥
गण्यौषधिभिदो रागद्रव्ये नील्यथ झिल्लिका ।
नीला त्रिषु प्राणिगुणे कपिरत्नभिदोस्तु ना ॥ ८०० ॥
मलोस्त्री पापविट्किट्टे कृपणे मलिने त्रिषु ।
आणवादावशुद्धौ च कालिम्नि स्याद्रसादिषु ॥ ८०१ ॥
गवाक्षे कोरके वृन्दे दम्भे मत्स्यादिबन्धने ।
धूर्तकृत्ये च जालं स्याच्छीलं वृत्तस्वभावयोः ॥ ८०२ ॥
तलं गोधास्वरूपाधःपृष्ठेष्वस्त्री पुमान्द्रुभित् ।
चपेटे च वितस्तौ च व्याजस्खलितयोश्छलम् ॥ ८०३ ॥
चेलं वस्त्रे त्रिष्वधमे पलमुन्मानमांसयोः ।
त्रिषु स्थूलं जडे पीने हेलावज्ञाविलासयोः ॥ ८०४ ॥
गीतकालक्रियामाने मध्याङ्गुष्ठमिते तरौ ।
तालः करतले चाथ तुला सादृश्यमानयोः ॥ ८०५ ॥
गृहाणां दारुबन्धार्थपीठिका सदृशं तथा ।
जलोदञ्चनभाण्डे च राशिभेदे घटे द्वयोः ॥ ८०६ ॥
जलं तोयं त्रिषु जडे त्रिषु बालोऽर्भकाज्ञयोः ।
क्लीबे ह्रीवेरके नाङ्गरुहे गोत्रे गृहे तथा ॥ ८०७ ॥
कुलं सजातीयगणे संघे शास्त्रशरीरयोः ।
क्लिन्नाक्षे त्रिषु चुल्लोक्ष्णि क्लीबे चुल्ली तु पाकभूः ॥ ८०८ ॥
खलं भूस्थानकर्णेषु क्रूरपामरयोस्त्रिषु ।
सैन्यस्य पश्चिमे भागे कूलमन्तिकतीरयोः ॥॥ ८०९

शिला द्वाराधरं दारु दृशच करका तथा।
प्राकारवृक्षयोः सालः सर्जे चाथ प्लवे किरे॥ ८१०॥
कोलः क्लीबे बदर्यां स्यात्कणा कोलाथ भूरिला।
वाकस्त्रःस्त्री गौर्द्रुशाखायां गेहे गेहैकदेशयोः॥ ८११॥
शाला स्याद्दर्दुरे भेलो भीरुके वाच्यलिङ्गकः।
तूलिश्चित्रोपकरणे शलाकातूलशय्ययोः॥ ८१२॥
खेला क्रीडा विलासाक्षे त्रिषु दोला तु दोलिनी।
प्रेङ्खा स्थाली पाकभाण्डं पाटलास्त्री तु भाजने॥ ८१३॥
शिली गण्डूपदी भेका शिलोञ्छेषु शिलश्च ना।
प्राण्यङ्गे तृणकाण्डे च ना नाली धमनी स्त्रियाम्॥ ८१४॥
न ना नालाब्जादिकाण्डे त्रिषु स्याज्जलनिर्गमे।
कमला श्रीर्मृगे पुंसि क्लीबे स्यात्पद्मतोययोः॥ ८१५॥
सास्नायां नागभेदे चाप्यूर्णावाससि कम्बलः।
वातूलः पुंसि वात्यायां वाते वातासहे त्रिषु॥ ८१६॥
वातलो वातुलश्चैवमाभीलं भीमकृच्छ्रयोः।
बहुलाः कृत्तिका गाव एलाः पुंस्यग्निपक्षयोः॥ ८१७॥
प्रभूते च प्रायिके च शितौ च स्यात्त्रिलिङ्गकः।
उपलेक्षुविकारे स्याच्छर्करायां च नाश्मनि॥ ८१८॥
रत्ने चाथामृते तोये कीलालं मण्डरक्तयोः।
छर्दिर्नेत्ररुजोः क्लीबे समूहे पटलं न ना॥ ८१९॥
पुष्पादिभाण्डे नाध्याये प्रियङ्गुर्महिला वधूः।
पातालमौर्वाग्निरसातलयोः शङ्कुभिश्चिते॥ ८२०॥
श्वभ्रे कुकूलं पुंसि स्यात्तुषाग्नावथ केवलम्।
निर्णीते त्रिषु कृत्स्ने स्यादसहायेथ शिक्षिते॥ ८२१॥
कुशलस्त्रिषु पर्याप्ते क्लीबे स्यात्क्षेमपुण्ययोः।
वीणादण्डे प्रवालोस्त्री विद्रुमे नवपल्लवे॥ ८२२॥
देवीभेदे करालोच्चे त्रिषु स्याद्दन्तुराग्रभीमयोः।
खण्डेस्त्री शकलं वल्के रागभेदेस्थिभिद्यपि॥ ८२३॥

मृदौ स्निग्धे त्रिषु भवेद्दक्षे चारौ च पेशलः ।
मण्डली स्यान्न ना संघे देशबिम्बे च मण्डलः ॥ ८२४ ॥
त्रिषु वृत्ते स्थानके तु परिधौ तु नपुंसकम् ।
कर्माङ्गेऽप्युपलेपादौ कुष्ठं नीलाब्जमुत्पलम् ॥ ८२५ ॥
ऊषणा पिप्पली ना तु तरुवस्त्राच्छिदाभिदोः ।
क्लीबे जले स्यात्कुद्दालः खनित्रे कोविदारके ॥ ८२६ ॥
संकुलं व्याकुले व्याप्तेविस्पष्टार्थवचस्यपि ।
यवाग्वां तरला रत्ने पुंसि दीप्ते चले त्रिषु ॥ ८२७ ॥
पललं तिलकल्के स्यान्मांसे च जगलस्त्रिषु ।
मेचके पिष्टमद्ये ना मेखला खङ्गबन्धने ॥ ८२८ ॥
काञ्च्यद्रिदेशमौञ्जीषु कपालं कर्परे त्रिषु ।
उत्तमाङ्गास्थिन भक्ष्ये तु शष्कुली कर्णपुत्रिका ॥ ८२९ ॥
तुमुलं व्याकुले शब्दे त्रिषु स्यात्संकुले रणे ।
पाटला त्रिषु वर्णे स्याद्द्रीहौ ना कुसुमे न ना ॥ ८३० ॥
जाङ्गलो निर्जले देशे पिशिते स्यान्नपुंसकम् ।
दुगूलं तनुवासः स्यात्क्षौमं च चपला तडित् ॥ ८३१ ॥
कुलटे स्याद्द्वयोर्ना तु पारते चञ्चले त्रिषु ।
तण्डुलो धान्यसारे स्याद्विडङ्गे कदली स्त्रियाम् ॥ ८३२ ॥
मृगभेदे ध्वजे रम्भास्तम्भे स्यादथ मञ्जुलः ।
मधुरे भेद्यलिङ्गो ना जलरङ्कुपतत्रिणि ॥ ८३३ ॥
काकोलो द्रोणकाके स्याद्विषे चाप्योषधौ स्त्रियाम् ।
धवलं सुन्दरे शुक्ले त्रिषु युनि गवि द्वयोः ॥ ८३४ ॥
अचलोद्री स्त्रियां भूमौ देहोन्मानौ तु बाहुली ।
कार्त्तिकः कोमला वृत्तिः स्निग्धे तुल्ये त्रिषु त्रिषु ॥ ८३५ ॥
शृङ्खला पुंस्कटीकाञ्च्यां बन्धने चायसादिके ।
रसाला मधुरा भाषा भोज्यं ना त्विक्षुचूतयोः ॥ ८३६ ॥
निचुलो वेतसे चापादिकोशे ———गैला ।
न पुमान्यन्त्रणायां च कपिलागुरुशिंशपा ॥ ८३७ ॥

हरेण्वाख्यौषधिर्गोश्च मुनौ ना तद्गुणे त्रिषु ।
धत्तूरो मातुलो मातुर्भ्राता भार्यास्य मातुली ॥ ८३८ ॥
[ दारिकाबीजमाज्यं च राजसर्षप एव च । ]
श्रद्धालुर्दोहदवती श्रद्धाशीले भवेत्त्रिषु ॥ ८३९ ॥
नीलिन्यां श्रीफली बिल्वे नेभरोगे तु पाकलः ।
कुष्ठे क्लीवं फेनिलं तु कुवलेरिष्टपादपे ॥ ८४० ॥
ना फेनयुक्ते त्रिषु च लाङ्गली गर्भपातनी ।
तोयपिप्पल्यथ स्पष्टोशठश्च सरलस्त्रिषु ॥ ८४१ ॥
त्रिवृत्स्त्री ना तु पीतद्रौ पिच्छिलागुरुशिंशपा ।
मोचातरुस्त्रिषु स्निग्धे तिनिशाशोकवेतसाः ॥ ८४२ ॥
वञ्जुलाः कन्दली वीरुत्तद्भेदमृगभेदयोः ।
कपालमूलयोः क्लीवे निष्कला विगतार्तवा ॥ ८४३ ॥
विमले मन्त्रदेवादौ त्रिषु वाद्ये नपुंसकम् ।
विकङ्कतः करीरश्च संनिवेशविशेषवान् ॥ ८४४ ॥
खड्गादिश्च ग्रन्थिलः स्याच्छमलं कल्मषं शकृत् ।
पुंभूम्नि केशे देशे च द्वयोस्तत्स्थे च कुन्तली ॥ ८४५ ॥
मधुपात्रे भवेत्क्लीवे मरालौ हंसविस्तृतौ ।
स्यान्मङ्गलः कुजे क्लीवे शुभे देव्यां स्त्रियामपि ॥ ८४६ ॥
एकाष्ठीला तु पाठायां ना वुके नडकाशयोः ।
भवेत्पोटगलो गन्धफला चम्पकमालिका ॥ ८४७ ॥
प्रियङ्गुः स्यात्पुष्पफलः कूष्माण्डककपित्थयोः ।
धूम्रे त्रिषु महाकालः किंपाके प्रमथे शिवे ॥ ८४८ ॥
यमतद्दूतयोः पुंसि चक्रवालं तु मण्डले ।
लोकालोके पुमान्स्यात्तु विमर्दे परिशीलने ॥ ८४९ ॥
अत्युत्कृष्टे परिमलो गन्धे जनमनोहरे ।
मत्तः करी मदकलस्त्रिषु चाव्यक्तवाङ्मुदात् ॥ ८५० ॥
ऐरावणे गणेशे च हस्तिमल्लोथ यज्वनि ।
मदिराक्रयशिल्पे च त्रिषु स्यादाग्नुतीबलः ॥ ८५१ ॥

स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने ।
स्वर्गेन्तरिक्षे च द्यौः स्त्री शैले मेषे रवावविः ॥ ८५२ ॥
दवदावौ वनारण्यवह्नी जन्महरौ भवौ ।
कल्याणप्राप्तिसंसारसत्ताश्चाथाध्वरो हवः ॥ ८५३ ॥
आज्ञाह्वाने चाथ योषित्पतिः शाखी नरो धवः ।
भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ॥ ८५४ ॥
क्रियासुरतसंवेगलीलातात्पर्यवस्तुषु ।
स्थायिसात्त्विकसंचारिविभावेषु च पूज्यवत् ॥ ८५५ ॥
शब्दप्रवृत्तिहेतौ च योन्यैश्वर्योदयेषु च ।
ध्रुवा भभित्स्थाणुकीला निश्चले शाश्वते त्रिषु ॥ ८५६ ॥
सत्यनिश्चितयोः क्लीबे गीतिस्रुग्भेदयोः स्त्रियाम् ।
सालपर्ण्यां क्षवस्तु स्याद्राजक्षवथौ तथा ॥ ८५७ ॥
अभयामलकी गौरी शमी क्रोष्टा शिवा पुमान् ।
हरे कीले च कल्याणे क्लीबे तद्वति तु त्रिषु ॥ ८५८ ॥
पक्वं विनाशाभिमुखं तथा परिणते त्रिषु ।
रहस्ये कलहे दुःखे द्वंद्वं मिथुनयुग्मयोः ॥ ८५९ ॥
क्लीबो नपुंसके शण्ढे दैन्ययुक्ते जने त्रिषु ।
वक्रोपायश्चान्तिकं च पार्श्वं कुक्ष्यङ्गभित्तथा ॥ ८६० ॥
ज्या जीवा जीविते न स्त्री पुमाञ्जन्तौ बृहस्पतौ ।
अत्यध्वगोतिप्रणतः प्राध्वः क्लीबे तु बन्धने ॥ ८६१ ॥
उशनाः काव्यकृद्विद्वान्कविर्नाश्वाङ्गगा कवी ।
केलौ स्रवे द्रवो-पे छेदेल्पे न कणे लवः ॥ ८६२ ॥
विश्वं जगच्च शुण्ठी च सर्वस्मिन्वाच्यलिङ्गकः ।
स्त्रियां प्रतिविषायां च पुंबहुत्वे च देवभित् ॥ ८६३ ॥
स्त्रीकटीवस्त्रबन्धे स्यान्नीविः परिपणे स्त्रियाम् ।
आयव्ययविशुद्धे च धने कारागृहे तथा ॥ ८६४ ॥
मनःसत्यत्वात्मभावे पिशाचादौ गुणे बले ।
द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु ॥ ८६५ ॥

क्रमनिम्ने भुवो भागे भेकपक्षिभिदोः प्लवः ।
प्लवनोडुपचण्डालेष्वोषधौ स्यान्नपुंसकम् ॥ ८६६ ॥
देवी मूर्वा द्वयो राजतस्त्रियोर्दैवते तथा ।
मन्त्री सहायः सचिवौ प्रभवः स्थानमूलयोः ॥ ८६७ ॥
स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने ।
अपत्येप्यथाविश्वासे निकृतौ चापि निह्नवः ॥ ८६८ ॥
अपलापेप्यथाधारानतिरेके च संभवः ।
जन्मोपपत्तिसंघेषु गाण्डीवं गाण्डिवं तथा ॥ ८६९ ॥
जिष्णोर्धनुषि कोदण्डे वैशाखे माधवो हरौ ।
वसन्ते चाथ राजीवो मृगभिन्मीनभेदयोः ॥ ८७० ॥
क्लीवे पद्मेथ वडवा स्त्रीविशेषो हयी तथा ।
कुम्भदासी पल्लवोस्त्री विटपे क्षेत्रपत्त्रयोः ॥ ८७१ ॥
वस्त्रैकदेशे रहसि सैन्धवो लवणाश्वयोः ।
अभावौ निधनासक्ते व्याजे द्यूते च कैतवम् ॥ ८७२ ॥
उत्सेकामर्षयोरिच्छाप्रसरे मह उत्सवः ।
विप्रौर्वाश्वा वाडवाः स्युर्वल्लवो गोपसूदयोः ॥ ८७३ ॥
विप्लवौ रणनिर्बाधावुत्सवो यदुरुद्धवः ।
धत्तूरे ना वञ्चकस्तु कितवो द्यूतकृत्त्रिषु ॥ ८७४ ॥
सामुद्रलवणेक्षीवो महानिम्बे च गन्धके ।
नील्यां त्रिषु निरुन्मादे कारवी कृष्णजीरके ॥ ८७५ ॥
हिङ्गुपर्ण्यां प्रसेवस्तु भल्लादौ ककुभे तथा ।
कैरवं जलजेरौ ना देवरागभिदोर्द्वयोः ॥ ८७६ ॥
भैरवी त्रिषु भीमे स्याद्गन्धर्वौ मृगदेवभित् ।
ऐरण्डाश्वौ गायनश्च राहूत्पातावुपप्लवौ ॥ ८७७ ॥
अनाश्वासोपलापश्च स्नेहश्च स्यादपह्नवः ।
अनुभावः प्रभावे च सतां च मतिनिश्चये ॥ ८७८ ॥
सवने मद्यसंधाने स्नाने चाभिषवः पुमान् ।
क्लीवे पारशवं शस्त्रे वर्णभेदे त्रिलिङ्गकम् ॥ ८७९ ॥

द्वौ विशौ वैश्यमनुजौ संततौ स्त्री जने वहु।
दृग्बुद्धी दर्शनेक्ष्णि स्त्री दिगुपाये निदर्शने ॥ ८८० ॥
मार्गे ककुभि च स्त्री स्याद्वौ चराभिसरौ स्पशौ।
द्वौ राशी पुञ्जमेषाद्यौ लब्धव्ये गणिते च ना ॥ ८८१ ॥
ईशो महेश्वरः स्वामी पृष्ठ्यास्थ्यस्यादिमध्यभूः।
वंशोन्वयः समूहश्च काण्डं वेणुरथो दशा ॥ ८८२ ॥
अवस्था वर्तिरन्ते तु वाससो भूमनि स्त्रियाम्।
कुशा वल्गा कुशी फालो दर्भेस्त्री क्लीबमम्बुनि ॥ ८८३ ॥
निधनानुपलम्भौ तु नाशौ क्लीबे पलायने।
पशुर्मृगादौ छगले दर्शनार्थे तदव्ययम् ॥ ८८४ ॥
रुजायां स्पर्शके स्पर्शौ दानस्पर्शनयोरपि।
आशा ककुभि तृष्णायां दर्शः सूर्येन्दुसंगमे ॥ ८८५ ॥
कृष्णपक्षान्तयागे च पाशोक्षे बन्धने तथा।
रज्ज्वादिवलयच्छिद्रे प्रशस्ते तु सपूर्वकः ॥ ८८६ ॥
त्रिष्वायत्ते यन्त्रणेच्छा प्रभावः प्रभुता वशः।
शुन्यां वेश्यावन्ध्यगवीस्त्रीकरेणुषु तु स्त्रियाम् ॥ ८८७ ॥
पेश्यां धने तद्गृहे च चषके पट्टयोनिषु।
दिव्ये च कोशः पुष्पादिकुट्मलासिपिधानयोः ॥ ८८८ ॥
कायावृतौ द्वयोः पद्मकर्णिकायां समाश्रये।
वेश्यानां वेश आकल्पे दुःस्पर्शा कण्टकारिका ॥ ८८९ ॥
यवाशे पुंसि परुषे निर्दये च भवेत्त्रिषु।
रहःप्रकाशौ वीकाशौ निर्वेशो भृतिभोगयोः ॥ ८९० ॥
प्रसरे चाथ निर्देश आज्ञायां कथने तथा।
कृतान्ते पुंसि कीनाशः क्षुद्रकार्षकयोस्त्रिषु ॥ ८९१ ॥
राक्षसे किंशुके पर्णे पलाशो हरिते त्रिषु।
शटीपर्णे भवेत्क्लीबमभीशुः प्रग्रहे करे ॥ ८९२ ॥
विवशः स्यादवश्यादौ त्रिलिङ्गोनिष्टदुष्टधीः।
कर्कशः स्यात्साहसिके दुःस्पर्शे कठिनेदये ॥ ८९३ ॥

कम्पिल्ये च प्रदेशस्तु मानभित्स्थानभेदयोः ।
वागीशो देवताभेदे ना जीवे हयमूर्धनि ॥ ८९४ ॥
ब्रह्मणि ज्ञे त्रिषु भवेत्कलशोऽब्धौ त्वपां निधौ ।
दधिमन्थनकुम्भ्यां च कलशी कलशिः स्त्रियौ ॥ ८९५ ॥
निवेशौ शिबिरोद्वाहौ बालिशौ मूर्खशावकौ ।
त्रिषु स्फुटे प्रसिद्धे च प्रकाशो भासि पुंस्ययम् ॥ ८९६ ॥
संध्यङ्गभिद्विमर्शो ना स्यात्परामर्शबाधयोः ।
निस्त्रिंशोऽसौ त्रिषु क्रूरे नगेशोऽद्रिपतौ शिवे ॥ ८९७ ॥
भूमिस्पृशो नरा वैश्या व्यपदेशोऽभिधा छलम् ।
अपदेशौ व्याजहेतू जीवितेशौ यमप्रियौ ॥ ८९८ ॥
वार्त्ताहरे सहाये च पुरोगे च प्रतिष्कशः ।
पतने स्यादपभ्रंशो भाषाभेदापशब्दयोः ॥ ८९९ ॥
त्विट् शोभा रुक तृड् लिप्सा तर्षौ विड् मलगूथयोः ।
ऋषिर्वेदे वसिष्ठादौ भवेद् घोषो गवां गणे ॥ ९०० ॥
गोपपल्लौ गह्वरे च स्वरे मेघादिनिःस्वने ।
उपयुक्तेतरच्छेषं त्रिषु ना नागसीरिणोः ॥ ९०१ ॥
प्रसादान्निजनिर्माल्यदाने स्त्री स्याद्वृषो गवि ।
शुक्ले मूषके श्रेष्ठे शृङ्गीबाशिकयोः शुभे ॥ ९०२ ॥
झषा नागबला ना तु मत्स्ये स्याद्वत्सरेऽस्त्रियाम् ।
वर्षो वृष्टौ लोकधातावुषा बाणसुता निशा ॥ ९०३ ॥
दोषो गुणेतरे रात्रौ स्त्री श्रेषो नाशगर्हयोः ।
करीषाग्नौ पुमान्कर्षूस्त्रिषु कृष्यल्पकुल्ययोः ॥ ९०४ ॥
शुषिः शोषे बले क्लीबे विषं क्ष्वेडे जले तथा ।
स्त्रियां प्रतिविषायां स्याच्छोषस्तानवरोगयोः ॥ ९०५ ॥
तुषो विभीतको दोषो धान्यचर्मावृतौ धने ।
तद्गृहे पट्टयोन्यादौ कोषः शान्तश्च कैश्चन ॥ ९०६ ॥
शैलूषो नर्तके बिल्वे मनीषा धिषणेच्छयोः ।
अभीषुः प्रग्रहे रश्मौ पुरुषा आत्मसाधनः ॥ ९०७ ॥

पञ्चहस्तप्रमाणे च कल्माषौ कृष्णकर्बुरौ ।
रोहिषं रक्तकत्तृणं मत्स्यभिद्धरिणान्तरम् ॥ १०८ ॥
शुण्डाग्रभागे गण्डूषा द्वयोश्च मुखपूरणे ।
प्रसृतोन्मित उष्णीषः शिरोवेष्टकिरीटयोः ॥ १०९ ॥
पुंसः कृत्यविशेषे स्यात्पौरुषं तन्मिते त्रिषु ।
आमिषे पललोत्कोचावामिषी स्यात्तु मञ्जकी ॥ ११० ॥
पीयूषममृते नूत्नदुग्धक्वाथे घने द्वयोः ।
व्यक्तौ भेदे विशेषः स्यात्प्रदोषो दोषिकालयोः ॥ १११ ॥
त्रिष्वाविले स्यात्कलुषं पापे च महिषी प्रभोः ।
स्त्रियां द्वयोः पशावंहस्यपराधे च किल्बिषम् ॥ ११२ ॥
आकर्षः शारिफलक आक्षेपे पाशके तथा ।
निष्ठुरे वचने रूक्षे परुषं कर्बुरे त्रिषु ॥ ११३ ॥
सदृशे च जिगीषा स्याज्जयेच्छाव्यवसाययोः ।
संघर्षौ कषणस्पर्धे उपासाश्रवणेच्छयोः ॥ ११४ ॥
शुश्रूषानिमिषा मत्स्याः क्षुराः शम्यां तु न स्त्रियाम् ।
कपिशीर्षं भित्तिशृङ्गे रथाधो दारु कर्षणम् ॥ ११५ ॥
अनुकर्षमनुतर्षोभिलाषश्चषकः सुरा ।
परिवेषस्तु वलने परिधौ मण्डले तथा ॥ ११६ ॥
कालमेषी तु माञ्जिष्ठा बृहती सोमराजिका ।
पलंकषा भवेल्लाक्षा गोक्षुरो गुग्गुलुस्तथा ॥ ११७ ॥
भा रश्मिदीप्त्योर्न पुमान्वासौ रतगृहौकसी ।
देवा देवभिदोमिश्च योक्त्रांशू च वुकै वसुः ॥ ११८ ॥
भासि रत्ने धने क्लीबे पाठाराखाभुवो रसाः ।
मांसे नाट्ये देहधातौ वीर्ये रागे द्रवे विषे ॥ ११९ ॥
स्वादेम्बाद्दौ चर्वणे ना ध्वनौ क्लीबे तु पारते ।
खगयोगिभिदोर्हंसो निर्लोभनृपसूर्ययोः ॥ १२० ॥
विष्णौ प्राणे चात्मनि च ज्योतिर्भद्युतिदृष्टिषु ।
पुत्रादौ तर्णके वर्षे वत्सः क्लीबे तु वक्षसि ॥ १२१ ॥

ध्वान्ते राहौ गुणे शोके तमो वेधा विधातरि ।
विष्णौ विदुषि चाथार्चिर्ज्वालाभासोर्न पुंस्ययम् ॥ १२२ ॥
सरित्प्रवाहे खद्वारे स्रोतः स्यात्करिणः करे ।
वर्चांसि रूपविड्भासो रहः सुरतगुह्ययोः ॥ १२३ ॥
एनोपराधे दुरितेप्यागः पापापराधयोः ।
रजो गुणे च रेणौ च योषितामार्तवेपि च ॥ १२४ ॥
द्वारोर्ध्वदारु नासा स्यान्नासिका चाथ यौवनम् ।
देहावस्था वयः पक्षी मह उत्सवतेजसोः ॥ १२५ ॥
छन्दः पद्येभिलाषे च वेदे चौजो बले रुचौ ।
गृहं सदाश्रयश्चौकः पयः क्षीरे जलेपि च ॥ १२६ ॥
तेजः प्रभावो दीप्तिश्च बलशुक्रासहिष्णुताः ।
नभा वर्षाः श्रावणोभ्रमन्तरिक्षे नपुंसकम् ॥ १२७ ॥
सहो दीप्तौ बले मार्गशीर्षहेमन्तयोः पुमान् ।
तपास्तु शिशिरे माघे क्लीवं कृच्छ्रादिके व्रते ॥ १२८ ॥
चौर्यादिकर्म हिंसा स्याद्ध्वश्च जननी प्रसूः ।
श्वश्रूवा चाथ स्त्रियामाशीर्हिताशंसाहिदंष्ट्रयोः ॥ १२९ ॥
स्युषाः संध्या प्रभाते तु क्लीवे भासः प्रभांशवः ।
मणिदोषो भयं त्रासः सर्पिर्होतव्ययोर्हविः ॥ १३० ॥
नाम्नि क्लीवे कुशे बर्हिरुरः श्रेष्ठेपि वक्षसि ।
असिः खड्गे तथा चापे शुभाकारे तनौ वपुः ॥ १३१ ॥
अदः परस्मिन्नत्रापि शंसोक्तौ स्तुतिवाञ्छयोः ।
आत्मज्ञे पण्डिते विद्वान्क्लीवे द्यौर्भूश्च रोदसी ॥ १३२ ॥
पुनरर्थेव्ययं भूयोतिवह्वर्थे त्रिलिङ्गकः ।
[ प्रशस्तवृद्धयोर्ज्यायानुत्कर्षार्थे त्रिलिङ्गकः ] ॥ १३३ ॥
मृत्स्नौषधिः प्रशस्ता मृद्दासी वीरुच्च नर्तकी ।
भृत्ये द्वयोर्वरासी तु वरखड्गोचशाटकौ ॥ १३४ ॥
लालसे प्रार्थनौत्सुक्ये तद्वति स्यात्त्रिलिङ्गकः ।
[ आशंसा वचनं वाञ्छा स्तुतिः संभावना तथा ] ॥ १३५ ॥

स्तुतिः प्रशंसा श्लाघा च दिवौकाश्चातके सुरे ।
उदर्चिरुत्प्रभे वह्नौ रभसो हर्षवेगयोः ॥ १३६ ॥
वतंसोस्त्री कर्णपूर उत्तंसश्चापि शेखरे ।
सुमनाः स्त्री पुष्पजात्योर्देवपण्डितयोः पुमान् ॥ १३७ ॥
सारसः खगभेदे स्यात्क्लीबे तु सरसीरुहे ।
त्रिषु धानुष्क इष्वासो भवेत्क्लीबे तु कार्मुके ॥ १३८ ॥
व्योम्न्यस्त्रियां विहायः स्यात्पुंबहुत्वे पतत्रिषु ।
बलात्कारकृतं कर्म साहसं दण्डभित्तथा ॥ १३९ ॥
बीभत्सो विकृते क्रूरे निन्द्ये च त्रिषु फल्गुने ।
पुंसि नाट्यरसे च स्याज्जुगुप्सायां नपुंसकम् ॥ १४० ॥
वरीयानतिविस्तीर्णे तथा वरतरे त्रिषु ।
बाढसाध्वोरतिशये साधीयान्वाच्यलिङ्गकः ॥ १४१ ॥
युवाल्पयोरतिशये कनीयानपि भेद्यवत् ।
पाठा हरीतकी हस्तिपिप्पली श्रेयसी त्रिषु ॥ १४२ ॥
शस्तेथ पायसं दुग्धसंस्कृते बलिभिद्यपि ।
श्रीवासे नौषधिभिदि राक्षसी रक्षसि द्वयोः ॥ १४३ ॥
तद्वद्वादौ त्रिष्वभुक्तावुपवासो व्रतस्थितौ ।
मूर्वाद्राक्षे मधुरसे मृद्वीका च शतावरी ॥ १४४ ॥
काकोली परिहासः स्यात्क्रीडोपहसनं तथा ।
शेखरे कर्णपूरे चावतंसं पुंनपुंसकम् ॥ १४५ ॥
जले सान्द्रे च निर्यासे भवेद्घनरसोस्त्रियाम् ।
कादम्बे राजहंसे च कलहंसो द्वयोर्भवेत् ॥ १४६ ॥
चन्द्रहासो रावणासावसिमात्रेथ संस्कृतौ ।
धूपमन्त्रादिभिर्वासेप्यधिवासः पुमानयम् ॥ १४७ ॥
निःश्रेयसं शिवे मोक्षे सूर्यवह्नी विभावसू ।
निम्बे स्याद्धिङ्गुनिर्यासस्तथा हिङ्गुतरुद्रवे ॥ १४८ ॥
शिखिपिच्छदले बर्हे ईहा स्यादुद्यमेच्छयोः ।
गृहं गेहे बहुत्वे तु न स्त्री दारेषु संग्रहः ॥ १४९ ॥

दान्तस्कन्धेश्वावयवे वोढर्याचरणे तथा ।
वहो वाहे वर्णके च मुद्गपर्णी वचा सहा ॥ ९५० ॥
कुमारी त्रिषु शक्ते स्याद्वार्त्ताकी वाशिका तथा ।
सिंही द्वयोः प्राणिभेदे त्वप्रवृत्तोरगेष्वहिः ॥ ९५१ ॥
अविद्यामूर्छयोर्मोहो ग्राहो यादोवहारयोः ।
स्नेहस्तैलादिकप्रेम्णोः सौहार्दे चाथ गह्वरे ॥ ९५२ ॥
गुहा स्यात्पृश्निपर्ण्यां च पुमान्स्कन्देथ संचये ।
सूर्यादौ पूतनादौ च राहुर्निर्बन्धयोर्ग्रहः ॥ ९५३ ॥
राहुग्रस्तेन्दुपूष्णोश्च मही भूरुत्सवे पुमान् ।
वाहा बाहुतरे स्त्री स्यात्पुमान्माने हयादिषु ॥ ९५४ ॥
वर्गविन्यासयोर्व्यूहो विस्तारे पृथुले त्रिषु ।
विपुले त्र्यादिसंख्यायां बहुः स्याद्वाच्यलिङ्गकः ॥ ९५५ ॥
प्रग्रहः स्यात्तुलासूत्रे वन्द्यां रज्जौ हयस्य च ।
हयरश्मौ तुलासूत्रे प्रग्राहो जीविकाकृतौ ॥ ९५६ ॥
संवाहः परिचर्यायां विग्रहः कायविस्तरौ ।
वैरवाक्ये तिरस्कारोभिध्या भर्त्सा च निग्रहः ॥ ९५७ ॥
स्यादूर्ध्वमाने स्त्रीश्रोणावारोहोङ्घ्रि तरोरपि ।
तथाश्वाद्यध्यासितरि स्यात्स्पष्टा मलसंसृतिः ॥ ९५८ ॥
प्रवृत्तिर्जलवेगश्च प्रवाहा अथ संग्रहः ।
संचये महदुद्धारे फलादिस्वीकृतावपि ॥ ९५९ ॥
हार्यापीडे क्वाथरसे निर्यूहो नागदन्तके ।
वैदेह्यौ पिप्पलीसीते वाराह्यौ देवतौषधी ॥ ९६० ॥
रास्ना शेफालिका गन्धनाकुली सुवहा त्रिषु ।
रम्ये दैर्घ्ये रोगभेदे स्यादानाहोपि बन्धने ॥ ९६१ ॥
गजभाले वृष्टिरोधे प्रतिबन्धेप्यवग्रहः ।
पदपर्वविभागे च भूमौ सर्वंसहा सहे ॥ ९६२ ॥
स्यादारम्भे स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे ।
द्विजेभ्यो विधिवद्देये तद्ग्रहे च प्रतिग्रहः ॥ ९६३ ॥

पत्नीपरिजनादानमूलशापाः परिग्रहाः ।
समीरणे गन्धग्रहो नासिकायां स्त्रियामथ ॥ ९६४ ॥
पितामहः पितृपिता ब्रह्मा चाथ तमोपहाः ।
अग्नीन्द्वर्का नृपार्हेऽर्थे परिबर्हः परिच्छदे ॥ ९६५ ॥
ध्वाङ्क्षः काके बके कक्षः पार्श्वपातकभित्तिषु ।
तृणे वीरुधि च स्त्री तु प्रतिज्ञास्थानभेदयोः ॥ ९६६ ॥
परिधानस्य च बहिः कटीनिगडने भवेत् ।
रथांशेऽक्षो दैत्यभिदि पाशकद्यूतयोरपि ॥ ९६७ ॥
बीजे विभीतके कर्षे स्रोतोमे क्लीब इन्द्रिये ।
सौवर्चले च पक्षस्तु वर्गे कालसहाययोः ॥ ९६८ ॥
गरुत्साध्यविरोधेषु पुष्पच्छेदेभपार्श्वयोः ।
रुचौ विकल्पिते पार्श्वे परः केशात्तु संहतौ ॥ ९६९ ॥
प्रजापतौ कुक्कुटे च दक्षः स्याच्चतुरे त्रिषु ।
प्रेक्षा नृत्तेक्षणं प्रज्ञा भिक्षा सेवार्थना भृतिः ॥ ९७० ॥
याच्ञाप्राप्यं तथान्नादि न्यक्षं कार्त्स्न्यनिकर्षयोः ।
ऋक्षं भे पुंसि भल्लूके रूक्षस्त्वप्रेम्ण्यचिक्कणे ॥ ९७१ ॥
चोक्षो गीते मनोज्ञे च मोक्षो मुक्तौ च पाटलौ ।
पर्कट्यां पिप्पले प्लक्षो यक्षौ यक्षेशगुह्यकौ ॥ ९७२ ॥
न ना शतसहस्रं स्याल्लक्षं व्याजशरव्ययोः ।
प्रत्यक्षेऽधिकृते साक्षिण्यध्यक्ष - - धातकी ॥ ९७३ ॥
सुभिक्षा सुलभान्नत्वे क्लीबे हंसाश्वभेदयोः ।
मल्लिकाक्षो विरूपाक्षो हरे विकृतलोचने ॥ ९७४ ॥

---

आ प्रगृह्यः स्मृतौ वाक्य आश्रित्ये कोपपीडयोः ।
आश्लेषदर्थे व्याप्तौ च मर्यादायां क्रियान्वये ॥ ९७५ ॥
इ दुःखभावने कोप उदाहाने विसर्जने ।
पापकुत्सेषदर्थे कु धिङ् निर्भर्त्सननिन्दयोः ॥ ९७६ ॥

चोन्वाचये समाहारेतरेतरसमुच्चये ।
विनियोगे तुल्यकाले हेतौ यथार्थ एव च ॥ १७७ ॥
स्वित्प्रश्ने च वितर्के च तुर्विशेषेवधारणे ।
यद्वाक्योपक्रमे हेतौ यदायद्यर्थयोरपि ॥ १७८ ॥
तद्धेतावुपसंहारे तदातर्ह्यर्थयोरपि ।
सकृत्सहैकवारार्थे सदार्थे चाथ मङ्गले ॥ १७९ ॥
स्वस्त्याशीःक्षेमपुण्यादौ प्रकर्षे लङ्घनेप्यतिः ।
प्रतीच्यां चरमे पश्चादाराद्दूरसमीपयोः ॥ १८० ॥
विकल्पप्रश्नसत्यार्थेषूतासत्यविकल्पयोः ।
पुनः सह सदा शश्वत्साक्षात्प्रत्यक्षतत्त्वयोः ॥ १८१ ॥
खेदानुकम्पासंतोषविस्मयामन्त्रणे बत ।
हन्त हर्षे कृपादाने वाक्यारम्भविषादयोः ॥ १८२ ॥
प्रतिः प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ।
इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु ॥ १८३ ॥
मतस्वरूपैवमर्थविवक्षानियमादिषु ।
यावत्तावच्च साकल्ये हेतौ मानेवधारणे ॥ १८४ ॥
संप्रत्यवधिभाव्यर्थेष्वीर्ष्यापीडाप्रतिश्रवे ।
पुरस्तात्प्रथमं प्राच्यामानन्तर्येप्यतोपि च ॥ १८५ ॥
देशे कालेपि चाधस्ताद्दक्षिणेधोभवेपि च ।
किमुत स्याददतिशये प्रश्नमध्यविकल्पयोः ॥ १८६ ॥
मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ।
अङ्गीकारेधिकारे च स्याद्वितर्कविकल्पयोः ॥ १८७ ॥
वृथा निरर्थकाविध्योः सादृश्ये प्रक्रमे यथा ।
प्रकारयोग्यतावीप्सापदार्थानतिलङ्घने ॥ १८८ ॥
तथातिदेशेनुज्ञाने प्रकारेपि समुच्चये ।
नुः पृच्छायां वितर्के च पश्चात्सादृश्ययोरनु ॥ १८९ ॥
दैर्घ्ये च लक्षणादौ च तस्वाख्यानेप्यथो ननु ।
प्रश्नावधारणानुज्ञानुनयामन्त्रणोत्तरे ॥ १९० ॥

आक्षेपेच्छानिश्चयेषु वाक्यादिप्रतिवाक्ययोः ।
गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ॥ ९९१ ॥
आक्षेपादौ पदार्थे च वर्जने गर्हणेप्यपः ।
उपः समीप.आधिक्ये हीनत्वेङ्गीकृतावपि ॥ ९९२ ॥
किं पृच्छायां जुगुप्सायामाक्षेपेल्पावसानयोः ।
हुं वितर्के परिप्रश्ने प्रक्रान्तोक्तिनिवारणे ॥ ९९३ ॥
भयादौ भर्त्सने कोपेनिच्छायामथ कं जले ।
मूर्धनिन्दासुखेषु स्यादां सत्यार्थे स्मृतौ तथा ॥ ९९४ ॥
अमा सह समीपे स्यात्सामि स्वर्धे जुगुप्सने ।
तूष्णीमर्थे सुखे जोषं नूनं तर्केर्थनिश्चये ॥ ९९५ ॥
उपांशु वचने तूष्णीमेवमित्थंतथार्थयोः ।
निर्देशे चोपदेशे च निश्चये च प्रतिश्रवे ॥ ९९६ ॥
नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ।
विस्मयस्मृत्यलीकेषु समं तुल्यसहार्थयोः ॥ ९९७ ॥
अलं भूषणपर्याप्तिसामर्थ्येषु निवारणे ।
सांप्रतं वर्तमानार्थे युक्तार्थेनन्तरं तथा ॥ ९९८ ॥
मध्येन्तिके च समया निर्निश्चयनिषेधयोः ।
स्वर्गे परे च लोके स्वर्भेदाप्रथमयोः पुनः ॥ ९९९ ॥
प्रातः प्रभाते स्वार्थे च मध्ये बाह्येन्तरित्यपि ।
स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा ॥ १००० ॥
ऊर्युररीं चैते विस्तारेङ्गीकृतावपि ।
किल संभाव्यवार्त्तार्थहेत्वलीकारुचिष्वथ ॥ १००१ ॥
निषेधवाक्यालंकारजिज्ञासानुनये खलु ।
– ल शंसानिश्चययोर्वा विकल्पोपमानयोः ॥ १००२ ॥
द्वंद्वे समुच्चये च स्यादेवौपम्येवधारणे ।
अवज्ञायां मनागर्थ उत्प्रेक्षातर्कयोरपि ॥ १००३ ॥
तिरोन्तर्धौ तिर्यगर्थे मिथोन्योन्यं रहस्यपि ।
जन्मप्राकाश्ययोः प्रादुरधो वुधनिकारयोः ॥ १००४ ॥

नमः पूजाप्रह्वतयोस्तत्त्वं मुख्यत्वमञ्जसा ।
कष्टे क्षतौ हशब्दः स्यादा - - र्थस्य सूचने ॥ १००५ ॥
दुःखे शोके विषादे [ हा ] - - - - - - - - - ।
हिशब्दः स्याद्विशेषा - - - - त्रावधारणे ॥ १००६ ॥
अह क्षेपे विनियोगेहह खेदेद्भुत - - ॥
अभ्यादानेभ्युपगमे तूष्णींभावे समर्चने ।
दानप्रतिग्रहादौ स्यादोंकारोपि च मङ्गले ॥ १००७ ॥

॥ इति मङ्खकोशः समाप्तः ॥

# EXTRACTS FROM THE COMMENTARY.

[ क ] चतुर्ष्वाद्येष्वर्थेषु कशब्दः पुंलिङ्गः । उत्तरेषु त्रिषु तु नपुंसकम् । कंपः को वा गुरुस्ते Dhv. 104, 10 इत्यादौ जले । कंपो वरुणः । कं कणविशेष इत्यादौ सुखे । कं सुखाय कं सुखं वा यथाद्यात् [ ? ] । तथा कणति शब्दायते । कमिति प्रकृत्य मस्तके च सुखेपि चेति अव्ययप्रकरणे मेदिनिः । कंशब्द अंकारान्तो [ ? ] वक्ष्यते । अयं च कशब्दः किंशब्दप्रकृतिश्च प्रातिपदिकं च भाष्यकारेण कस्येदित्यत्र स्थापितत्वात् c. Bh. Pâ. 4, 2, 25 । ततश्च । कस्मै च काय चेत्यादि लक्ष्यसिद्धिः ॥ एकाक्षरः ॥ [ नाक ] नाकतटिनीत्यादावाकाशे । नाकौकसामित्यादौ त्रिदिवे ॥ [ लोक ] आ° Su. 2594 इत्यादौ भुवने । मां° Ra. 14, 61 इत्यादौ जने ॥ **10** ॥

[ श्लोक ] पद्ये । Ra. 14, 70 ॥ [ टङ्क ] दर्पे । दृष्टः स पौरैस्तरुणः सटङ्कः ॥ [ अङ्क ] किं तस्य संख्येव नवा नवाङ्का इत्यादावेकादिगणनायाम् । उत्सङ्गे । Ra. 3, 26 । चिह्ने । शशाङ्केनेव शर्वरी ॥ **11** ॥

[ अर्क ] सूर्ये स्फटिके च । H. V. 1, 4 ॥ [ शल्क ] वार्क्षत्वचि । भूर्जशल्कं वसानाः ॥ [ किष्कु ] ग्रामात्किष्कुशतं व्रजेदित्यादौ चतुर्विंशत्यङ्गुले हस्तप्रमाणे । किष्कुसंमिताः समिधः । द्वादशाङ्गुला वितस्तिप्रमाणाः ॥ **12** ॥

[ निष्क ] सह अष्टभिर्वर्तते साष्टम् । बहु° Pâ. 5, 4, 73 इति डच् । सुवर्णं षोडश माषकाः । पलं सुवर्णकाश्चत्वारः । दीनैरर्थते दीनारो रूपकम् । निःशेषेण कस्यते निष्कः ॥ **13** ॥

[ कल्क ] समले पापाशये । एनसि पापमात्रे ॥ [ स्तोक ] दमे दमयुक्ते विनीते यथा । स्तोको गुर्वन्तिके भूयात् । पुत्रे । धन्यस्य गृहिणः स्तोको गृहे खेलति खेलनैः ॥ [ पाक ] शावके । काकपाकैरटद्भिः ॥ **14** ॥

[ लङ्का ] रावणनगर्याम् । Śi. 1, 68 । वृक्षशाखायाम् । द्रुमलङ्कां समाश्रित्य वानरः कुत्र संस्थितः ॥ 15 ॥

[ एक ] तथा च कात्यः । प्रधानान्यसहायेषु संख्यायां चैक इष्यते ॥ [पङ्क] द्वयेपि । पङ्कः पङ्कं व्यपोहति ॥ 16 ॥

[ भेक ] मण्डूके । Su. 843 । उभयत्रापि । भेकाः पान्थजना घनस्तनितत्रद्भेकारवेत्राप्यलम् ॥ [ छेक ] छेकानुप्रास इत्यादौ सहृदयश्छेकाः [ sic ] ॥ 17 ॥

[ शङ्कु ] आयुधभेदे । शङ्कुः प्रहरणान्तरम् c. Śâśv. 385 । स्थाणौ । मुष्णन्ति शङ्कुः [ sic ] परितो निधाय । कीलके । Ra. 8, 92 । संख्याभेदे । शङ्कु° c. Mh. 2, 17 । मानभेदे । आयामविभेद [ sic ] संख्यालक्षणया ॥ [ त्रिक ] कूपयन्त्रे । त्रिकार्क्कारखचिताः ॥ त्रिकानामित्यादौ हर्षचरिते गात्राङ्गवर्णने गात्राङ्गे । तत्र ि त्रिकदर्शनमित्यादौ त्रये ॥ 18 ॥

त्रयाणां संघः । त्रिकः । संख्याया° Pâ. 5, 1, 22 । त्रिलिङ्गः । त्रिकामन्त्र इत्यादावादिग्रहणात् ॥ [ राका ] नवरजसि कन्यायाम् । राका नान्यमुखं पश्येद्विना भर्तुः ॥ 19 ॥

[ शूक ] कण्टके । शूकैरिवाचितः कण्ठः । अनुक्रोशे । निःशूक किं भाषसे । शुङ्गे तुङ्गाङ्कुरे । नवचारुशूकविशदैः ॥ [ शलाका ] रत्नस्वरूपभिदि । Ku. 1, 24 । शस्त्रभाण्डे । Su. 3401 । अञ्जनतूलिकायाम् । Ku. 1, 47 ॥ 20 ॥

परीक्षायाम् । शलाकया कोपि भिनत्ति मन्त्रम् ॥ [ देशिक ] सद्देशिकमुखाम्नायपारंपर्यक्रमागता इत्यादौ गुरौ ॥ देश्ये । अपूर्वो देशिक इवासीत् ॥ [ तूलिका ] चित्रकूर्चाण्डे । Ku. 1, 32 । शलाकायाम् । गृहीत्वाञ्जनतूलिकाम् ॥ 21 ॥

[ वर्णक ] विलेपने चन्दने च क्लीबे । वर्णकं मेकं [ sic ] संसदि सोपठदित्यादौ परीक्षोद्धृतवस्तुनि ना पुंलिङ्गः । वर्णकावृततत्त्वः स हि मत्तो [ ? ] इत्यादौ तान्तवे विकारे वस्त्रविशेषे । वर्णका तान्तवे Pâ. 7, 3, 45, 7 इति हि वार्त्तिकमिति द्वयोः । शोधनाय निष्क्रम्य वर्णिका आदाय पुनः प्रविशतीत्यादौ रागे [ sic ] गैरिकादिषु स्त्रीपुंसयोः । ततः° M. M. 17, 1 इत्यादौ भूमिकायां स्वरूपविपर्यासेन रागोपचरणात् ॥ 22 ॥

पर्यायादिषु । वर्णिकाभिः किमाभिः । किमेतैर्बहुभिर्वर्णैरित्यर्थः । आदिशब्दादर्हणीवृत्तिषु [ sic ] । वर्णयितरि । अहं तव वर्णको भवामि ॥ [ गणिका ] इभ्याम् । प्राप्तेषु परिजनेषु गणिकामारुह्य ययौ ॥ [गणक] दैवज्ञे । K. V. 9,6 ॥ **23** ॥

[ कलङ्क ] अपवादे । न जाने कोमुष्मिन्रघुकुलकलङ्कः कविरभूत् ॥ **24** ॥

[ पृथुक ] भक्ष्ये खाद्यविशेषे चिवरी इति भाषया प्रसिद्धे खलभृष्टे ॥ [ आलोक ] दर्शने । Me. 82 ॥ **25** ॥

[ नालीक ] अब्जे । विवृतेनापि॰ Mh. 3, 52 ॥ [ पुलाक ] तुच्छ॰ । Sp. 4150 संक्षेपे । पुलाककारी विपुलाशयः स्यात् । भक्त॰ । स्थालीपुलाकन्यायेन ॥ **26** ॥

[ करक ] कमण्डलौ नालिकेरास्थिभवे । करककरः ॑जगाम मस्करी ॥ करककुसुमताम्र इत्यादौ दाडिमे । करिका मद्यभाण्डं प्रसिद्धम् ॥ **27** ॥

[ करङ्क ] करङ्कशेषात्॑ारित्यादौ मांसरहिते ॥ ताम्बूलादिभाजने । आजुहाव च करङ्कवाहिनीम् ॥ **28** ॥

[ वृश्चिक ] राशिभेदे प्रसिद्ध एव । मदनिकायाम् । एता॰ Mh. 3, 91 । शूकप्रधानः कीटः कण्टकी क्रिमिः । गोमयाद्वृश्चिको जायते इत्यादौ ॥ [प्रतीक] मरुत्प्रतीकबाहीत्यादौ प्रतिकूले ॥ अंशे । नाममालाप्रतीकमपश्यम् c. V. K. I, 3, 6, C. । दीपे । प्राज्यप्रतीकजालाभिः शार्वरे शकलीकृते ॥ अङ्गं प्रतीकोवयव इत्यादावंशाभिप्रायेणैव c. AK. 148, 70 ॥ **29** ॥

[ दीपक ] दीपे । Su. 2490 ॥ **30** ॥

[ कौशिक ] गाधिजे । Ra. 11, 1 । उलूके । M. M. 176, 7 । गुग्गुलौ । अगुरु॰ Mh. 3, 29 । इन्द्रे । Śi. 1, 53 । आहितुण्डिके गारुडिके । उरग इव च कौशिकात्स बिभ्यत् ॥ [क्षुल्लक ] के अन्ये [ sic ] राजानः क्षुल्लका इत्यादौ कनिष्ठादिषु यथायोगं योज्यम् ॥ **31** ॥

[ पिण्याक ] सिल्हके । पिण्याकगन्ध इव तुष्टिकृदत्र सोभूत् ॥ [ वर्तिका ] वर्तका शकुनौ प्राचामित्यत्र वार्त्तिकविकल्पेनेत्त्वस्मरणाद्वर्तकापि c. Pâ. 7,

3, 45, 8 ॥ [ वर्तक ] वर्तकक्षुण्णपाद इत्यादावश्वखुरे ॥ [ सायक ] शरे । Ra. 2, 31 । खड्गे । आकृष्य सायकमुपाद्रवदेकवीरः ॥ 32 ॥

[ व्यलीक ] कामजे दोषे । मेहे [ sic ] न गोत्रस्खलितव्यलीकम् ॥ न किंचिदूचे किल स व्यलीक इत्यादौ विलक्षे । विलक्षः सलज्जः । अप्रिये । मया॰ Mh. 3, 86 । विपर्यये । पृष्टो॰ Mh. 3, 86 । रोगे । चिरं व्यलीकेन जगाम शान्तिम् । अकार्ये । सुजनो॰ Mh. 3, 86 ॥ 33 ॥

[ गैरिक ] स्वर्णे । जगाल गैरिकं पाकात् ॥ [अलीक] त्रयेपि । Sp. 2606 ॥

[ अनूक ] द्वयोरपि । वरस्यानूकवृत्तानि प्रेक्ष्य कन्या प्रदीयते ॥ 34 ॥

[ धेनुका ] क्षुरिकायाम् । बन्धासिधेनुकैः॥ भक्तजनकामधेनुधेनुक इत्यादावुमायाम् । करेण्वाम् । आरुह्य वरधेनुकाम ॥ [ कालिका ] देव्याम् । विज्ञेयः कालिकामते [ sic ] । नियतकाले निर्वाह्यो लाभः कालिकाख्या वृद्धिः । तथा च कारि[ता] कालिका चेत्यादि नारदादौ । स्वर्णमले । विना निकषणं हेम्नः कालिका केन लक्ष्यते । मेघ॰ । Ra. 11, 15 ॥ 35 ॥

[ कारिका ] यातनायाम् । सह्या॰ Mh. 3, 18 । वृत्तौ । भंधोक्तकारिकेयम् [ sic ] । क्रियायाम् । कां कारिकामकार्षीः ॥ [ कारक ] भृत्ये । कारकेषु तताशौचम् । कारके [ sic ] । स कर्ता नाम कारकम् c. Kât. p. 497 ॥ [ कर्णिका ] कर्ण॰ Pâ. 4, 3, 65 इति कर्णभूषणे तालपत्रादौ । कर्णिकाकिरणबन्धुरितस्येत्यादौ ॥ 36 ॥

करिहस्ताङ्गुलौ पद्मबीजकोश्यां च । स्थिता श्रीः पद्मे च भ्राम्यन्मधुपकर्णिके । स्त्रिया नार्या गदे कर्णिका भगव्याधिरित्यायुर्वेदप्रसिद्धो गदः ॥ [ वाह्लीक ] कुङ्कुमे । वाह्लीक॰ Mh. 3, 87 । हिङ्गौ । वाह्लीकार्द्रकसैन्धवैः सुरभिणी ॥ 37 ॥

[ कौतुक ] मङ्गलद्रव्ये । Ra. 8, 1 । कुतुके । कौतुकाक्षिप्तचित्तः ॥ [ वालुकालिका ] सिन्धुर्वीचिकरानुवाह बहलप्रौढोन्मिषद्वालिकानित्यादौ श्लेषेण वालुकोर्मिकयोः ॥ 38 ॥

कङ्कणे । वालिकालंकृतप्रकोष्ठः ॥ [ वालक ] अङ्गुलीयश्रीवेरयोः प्रसिद्धः ॥ [ प्रियक ] मृगभिदि । Śi. 4, 32 ॥ **39** ॥

[ उदर्क ] उत्तरकाले । सुखोदर्का वनभुवः । उत्तरकालिके फले । कुशलोदर्कं तर्कयामि ॥ [ मेचक ] शिखि° । मेचकिकुलकोलाहला । मेचकिनः शिखिनः ॥ **40** ॥

[ गोलक ] गुले । गुग्गुलुगोलकहिङ्गुवचाभिः । गुलं मस्तिष्कम् ॥ पिण्डे । भूगोलः ॥ [ तिलक ] त्रिश्लोक्याम् । युगलकतिलकचक्कलकानि ॥ **41** ॥

विशेषके वृक्षभिदि च । Ra. 9, 41 ॥ [ आतङ्क ] निरातङ्कः पङ्क इत्यादौ तापे । आतङ्कः कुसुमायुध इत्यादौ द्वयोरपि । निरातङ्कः प° M. M. 195, 1 इत्यादौ भीरेव ॥ **42** ॥

[ रेणुका ] भार्गवाम्बायाम् । Bâ. II, 37 ॥ [ पुण्ड्रक ] इक्षौ । स्फुरति च रुचिमत्ता पर्वणां पुण्ड्रके स्यात् ॥ [ पुलक ] प्रस्तरे श्लक्ष्णेश्मविशेषे । पुलकमृष्टधौताम्बराः । क्रिमिभेदे । वर्त्मनां° Mh. 3, 61 ॥ **44** ॥

[ कण्टक ] क्षुद्र° । निष्कण्टकं राज्यमथो चकार । रोमाञ्चे । Ku. 6, 15 । तरोरङ्गे । A. S. 60, 4 । अत्र कण्टकं तीक्ष्णलतापर्व ॥ **45** ॥

[ सरक ] इक्षुशीधौ । वरतनुवक्त्रसङ्गसुगन्धितरं सरकम् । शीधुपाने । सरककेलिमत्ताः स्त्रियः ॥ [ तारक ] दैत्यभेदे । Ku. 2, 1 ॥ **46** ॥

[ तारिका ] देवीभेदे । तारिका भवसमुद्रतारिका ॥ [ क्षारक ] पिटकं भाण्डविशेषः । क्षारकाङ्कितकूर्परा इत्यादौ । कोरके । क्षारकैः कुसुमचापसायकैः । कोरकं मुकुलिका ॥ [ जीवक ] विषयविषहतानां जीवकस्त्वं पुराण इत्यादौ प्राणके ॥ **47** ॥

जीवकदर्शने सर्वचैतन्यवाद इत्यादौ क्षपणे ॥ [ जीविका ] द्वयोः । कां जीविकां बिभर्षि ॥ [ पर्यङ्क ] उभयत्रापि । यदैव पर्यङ्कतले विमुक्ते त्वमिष्टया भावनयापगूढः ॥ **48** ॥

[ बन्धकी ] इभ्याम् । बन्धकीनिकटमगमन्नृपतिः ॥ [ बन्धक ] आधौ । न वृद्धिर्बन्धके नष्टे सर्वनाशे न रुद्धम् । विनिमयस्थाप्यं वस्तुरूपमाधिः । बन्धकारिणि । संसारबन्धिका माया ॥ **49** ॥

[ वार्धक ] वृद्धसंघाते । वार्द्धकमतानुसारी न व्यापदमेति हन्त तरुणोपि । वृद्धत्वे । Ra. 1, 8 । वृद्धकर्मणि । तरुणोपि शास्त्रदृष्ट्या वार्द्धक एव प्रवर्तते प्राज्ञः ॥ [ दर्शक ] प्रतीहारे । दर्शक° Mh. 3, 47 ॥ **50** ॥

[ स्थासक ] चर्चायामुपलेपने । चन्दनस्थासकाङ्कः । हारभेदे । कुचयोः स्थासकमौक्तिकार्चिराभात् । बुद्बुदे । स्थासकावलिनिभेन हसन्ती नर्मदा ॥ [ अंशुक ] मलयज° K. Pr. 345, 5 । तथा । शुचिनी चीनांशुके बिभ्रतीत्यादौ शुक्लवस्त्रे c. V. Ś. III, 16 । शुक्लांशुकोपरचितं घनसारेत्यादौ वस्त्रमात्रे । उत्तरीये । Ku. 1, 14 ॥ **51** ॥

[ मधुक ] मधुका वन्दिनः केपि c. Śâśv. 453 इति शाश्वतोक्त्या वन्दिभिदि पुंलिङ्गः ॥ **52** ॥

[ खनकी ] शिल्पिनि ष्वुनि c. Pâ. 3, 1, 145 । खनकी ॥ [ खनिका ] जलाधारे । वनिका खनिका रथ्या प्रपा सत्त्वावरोहणम् । खनिराकरः खनिरेव खनिका ॥ **53** ॥

[ कार्मुक ] चापे । क्रेंकारः स्मरकार्मुकस्य किमपि c. K. Pr. 160, 4. A. S. 37, 7 । कार्मुकः कस्य न प्रिय इत्यादौ कर्मण्ये शक्तमात्रे च ॥ [ कञ्चुक ] निर्मोकवारवाणयोः । Su. 1219 । कवचे । संनद्धकञ्चुकोचण्डवक्षसस्ते धनुर्धराः ॥ **54** ॥

[ अलका ] धनदपुरि । Ku. 6, 37 ॥ [ अलक ] स्त्रीकचे । Me. 88 ॥ [ अनीक ] रणे । सहस्र° V. K. 2, 1, 14, C. । सैन्ये । Ra. 18, 9 ॥ [ वञ्चक ] उभयत्रापि । वञ्चकैरावृता—स्ते दुर्गमा वत भूभृतः c. Mh. 3, 84 ॥ [ अन्तिका ] चुल्ल्याम् । न दुष्येदन्तिकास्थितम् ॥ **55** ॥

[ विपाक ] पचने । विपाके कटु शीतं च । स्वेदे । आमज्वरे विपाकं प्रयुञ्जीत ॥ स्नेहस्य तस्याद्य विपाक एष इत्यादौ परिणाम उपचारात् ॥ [ कृषक ] फाले । लाङ्गलं कृषकाङ्कितम् ॥ [ कनक ] मातुलं धतूरबीजम् । स्वर्णे । Me. 74 ॥ [ राजिका ] रेखायाम् । अराजिके भूर्जपत्त्रे । आसुर्याम् । राजिकाः सर्षपास्तथा । आसुरी शाकविशेषबीजम् ॥ **56** ॥

[ लुब्धक ] शाकुनिके । किमिव° Bh. Ś. 73 ॥ [ नायक ] नेतरि मध्यमणौ च । H. Ch. 9, 10 । नाट्योत्तमपात्रयोः प्रसिद्धः ॥ 57 ॥

[ खेटक ] गिरिखेटकेत्यादौ ग्रामे । कांस्यधातुकृतखेटकं कटकमित्यादौ फलके । फलकं चर्म ॥ [ पेटक ] भाण्डे । कनकपेटकं तस्करः ॥ [ जालिक ] जालेन चरति जालिकः । ऐन्द्रजालिकः । जालं व्याजः । जालिकाकृष्टनक्र इत्यादौ धीवरे ॥ 58 ॥

[किञ्जल्क ] पुष्परेणौ । किञ्जल्कपुञ्जैः परिपिञ्जरासु स्थलीषु c. Vik. Ch. 10, 11 ॥ [ उष्ट्रिका ] भाण्डभेदे । नहि भवति पञ्चानामुष्ट्रिकानां पूरणो घटः ॥ 59 ॥

[ विटङ्क ] वितर्दिकायाम् । निर्विघ्नमङ्घ्रिप्रहता विटङ्काः । वलभ्याम् । यस्यां शशी निशि स्फुटङ्कविटङ्कलग्नः । उन्नते देशे । Kâd. I, v. 4 ॥ [ पिनाक ] शूले । Ku. 5, 53 । धनुषि । Ku. 3, 10 ॥ 60 ॥

[ जालक ] जालाभे । Ra. 9, 68 । आनने विलग्नं जालकं जालाकृतिर्यस्य तं स्वेदं वनानिल आचचामेति ह्यत्रार्थः ॥ क्षारके । Me. 95 । अलिजालक इत्यादौ संघे । मर्कटे । जालक इव निवेशितसूत्रः ॥ [ जालिका ] मुखावृतौ । तां जालिकापहरणे मरु न्यमीलत् ॥ [ सेवक ] सेवाजीवे । वद कोन्यः सेवकादधमः c. Sp. 4217 । प्रसेवे । वीणापि सेवकवियोगवशान्न सीदेत् । प्रसेवकः ककुभाख्यं वीणापुटम् ॥ [ सूतक । सूतिका ] ग्रहे । धूपः सूतकनाशनः ॥ 61 ॥

सूतार्थे सूतिकायां सूतिका सूतका च । वा सू° Pâ. 7, 3, 45, 10 इति विकल्पेनेत्वविधानात् । अथ गावो महिष्यश्च ब्राह्मणी चैव सूतिका इत्यादि लक्ष्यम् । जनने । तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम् । रसे पारते । सूतकं गन्धमृत्तिकारसेन संमृद्य ॥ [ पुत्रक । पुत्रिका ] दीक्ष्यभेदे । समयी साधकश्चैव आचार्यश्चापि पुत्रकः । दीक्ष्यो दीक्षणीयः शिष्यः ॥ 62 ॥

सा° Ku. 1, 29 इत्यादौ कृत्रिमादौ द्वयोः स्त्रीपुंसयोः स्त्रियां तु द्वैरूप्यं पुत्रका पुत्रिका च । वा सूतकेति Pâ. 7, 3, 45, 10 विकल्पेनेत्वविधानात् । बालिका° Mh. 3, 68 इत्यादौ लक्ष्यम् । अभ्रातृपितृकपूर्णदायायां कन्यायाम् । M. 3, 11 ॥ 63 ॥

[ कुम्भिका ] जलधान्याम् । प्रपां शीतलकुम्भिकाम् । वलनं क्रोडीकरणम् । नरकास्पदे । पच्यन्ते कुम्भिकासु ते ॥ [ कुम्भक ] प्राणरोधे । ये॰ Pr. P. 2। तथा । रेचकः पूरकश्चैव तृतीयः कुम्भकस्तथा ॥ [ कुलक ] श्लोक॰ । Kd. 1, 13 ॥ **64** ॥

श्रेष्ठिनि । कुलकः कुलवर्धनः । श्रेष्ठी शिल्पाजीवी प्रधानात् । श्लोकसंचय-साहचर्यात्सुगन्धद्रव्यसंचयेपि कुलकम् ॥ [ क्रमुक ] क्रमुकः फलेप्युपचाराद्वर्तते नपुंसकं तु ॥ **65** ॥

[ कैशिक ] केशाश्वादन्यतरस्यामिति पाक्षिके ठकि केशसमूहे c. Pâ. 4, 2, 48 । रागभेदः स्वरविशेषः । गीतविषयः । रचितकैशिकमध्यमश्रीरित्यादौ ॥ [पद्मक] हस्ति॰ । विकसत्पद्मकः करी ॥ **66** ॥

[ सैनिक ] सेनारक्षितरि । भूभृदर्जुन इवास्त सैनिकः ॥ **67** ॥

सेनासमवेतेषु योद्धृषु । Ra. 3, 61 ॥ [ पुष्पक ] नेत्ररोगे पुंसि प्रसिद्धः ॥ [ पौष्पक ] पुष्पाणि शिल्पमस्याः पौष्पिकी ॥ **68** ॥

[ वातिक ] रोगिणि । प्राक् पिबेच्छ्लैष्मिको मद्यं भुक्तस्योपरि पैत्तिकः । वातिकस्तु पिबेन्मध्ये समदोषो यथेच्छति ॥ मान्त्रिके । अक्षुरविवरमिति वातिकैः H. Ch. 108, 5 c. A. S. 47, 10 । मान्त्रिकोत्राखुरविवरव्यसनी c. H. Ch. 47, 17. 223, 4 ॥ [ भावुक ] कुशले । ददातु वो॰ K. Pr. 140, 11 ॥ **69** ॥

[ रुचक ] भूषाभेदे । स्वस्तिकाकृतिरुपमृष रुचकाः क्रियन्ते ॥ अधररुचक इत्यादौ ललामनि c. Kâd. 73, 1 । ललाम रत्नम् । अधररत्नमित्यर्थः । सौवर्च-लं कृष्णलवणम् ॥ [ उण्डूक ] अन्तरङ्गमान्तरीवयवविशेषः । उत्करे केशोण्डु-कादौ c. Vyutp. 139, 25 । फेनोण्डूकविपाण्डुकीर्तिलहरीनिर्धौतदिग्भित्तय इ-त्यादावुत्करेपि ॥ **70** ॥

[ मल्लिका ] दीपपात्रे । मल्लिकाङ्कितकरा विविशुस्ताः । शेफालिकायाम् । Ra. 16, 50 । वाद्यभेदे । मल्लिका झल्लरीध्वनिः ॥ [ मोचक ] मोक्तरि । तपसा पापमोचकः ॥ **71** ॥

तद्धेतौ मोचयितरि । भवपाशमोचकः ॥ [ अम्बिलका ] एष्वोषधिद्रव्यविशेषेष्वम्बिलकाशब्दः ॥ [ पदिक ] इत्येपि । पदिकाः पदिका इवासते प्रभुकार्योद्यतमानसा रणे ॥ 72 ॥

[ उल्मुक ] इत्येपि । उल्मुकेन द्रुमं प्राप्य संकुचत्पत्रसंपदम् ॥ [ मड्डुक ] वाद्यभेदे । Śi. 5, 29 । फलकमुष्टौ । Śi. 18, 21 ॥ **73** ॥

[ खजाक ] दारुहस्ते । एताः शिरोधृतखजाकविभूषणाङ्ग्यः प[रि]भ्रमन्ति शिवरात्रिमुखेषु वृद्धाः । मन्थदण्डे । गोप्यः खजाकपरिकर्षणकम्पिताङ्ग्यो मथ्नन्ति मानसमलं सहसैव यूनाम् ॥ [ पदक ] पदाध्येतृमध्यमण्योः । शिष्याणामिव मुक्तानां भात्यस्यास्त्रिवलीतटे । गुरुणा पदकेनेदमङ्कितं मण्डलं महत् [ c. H. Ch. 9, 10, C. ] । चरणत्रं प्रसिद्धम् ॥ **74** ॥

[ पादिक । पादिका ] क्रीताद्यर्थे । ग्राम्यः कामी विपणिसरणौ पादिकीर्वेशयोषाः स्वीकृत्योच्चैर्विलसति लसद्गर्वसर्वस्वपूर्णः ॥ उपानहि रसतुर्येण पारतचतुर्भागेन स्वर्णादिवेधे च । भस्त्रा पूषाश्मजुषस्तारक्रियया विलुप्ततारस्य । जन्मप्रवृत्तयाचे [ sic ] पादिकया चर्मपादिका नास्ति c. Mh. 2, 417 ॥ **75** ॥

[ चालक ] इत्येपि । निर्धूतवीतमपि चालक॰ Śi. 5, 47 ॥ [ चन्द्रक ] वर्हम॰ । Śi. 5, 19 । तोयस्थ॰ । Śi. 5, 40 ॥ **76** ॥

[ मोदक ] इत्येपि । मुदितामोदकमुदितरवीन्दुकवलैकगृध्नुम् c. Mh. 3, 76
[ कीचक ] विराटस्य स्याला राजपुत्रभेदाः । सस्वनेषु वंशेषु । Ku. 1, 8 ॥ **77** ॥

[ सिंहिका ] राहुमातृसिंहपोतिकयोः । K. Pr. 335, 9. 10 ॥ [ लाक्षिक ] इत्येपि । अधररुचकरूपं लाक्षिकं येन पीतम् ॥ **78** ॥

[इक्ष्वाकु] राजभेदे । Ra. 1, 72 ॥ [ श्यामिका ] कालिमनि । Ku. 5, 21 । स्वर्णव्याजे । Ra. 1, 10 । लोहमले । श्यामिकालिप्तहस्ताग्रा लोहकारा विभान्त्यमी ॥ **79** ॥

[ गण्डक ] उपधाने शय्योपकरणविशेषे खड्गाख्ये प्राणिनि च । शय्येव विन्ध्यवनभूः पृथुगण्डकश्रीः । छेदे । गण्डिकाभिस्तथेक्षोः ॥ शिखण्डिगण्डिकापद्मरागमणेररुणांशुजालकैरित्यादौ रक्षायां छेदोपचारात् c. H.Ch. 24,6 ॥ **80** ॥

[ क्षीतकिका ] एते ओषध्यौ क्षीतकिकाशब्दवाच्ये ॥ [ अश्मन्तक ] चुल्ल्याम् । अश्मन्तकान्तिकचलाचलकुम्भदासी । वृक्षे यमलपत्त्राख्ये । M. M. 305, 1 तृणभेदे । M. 2, 43 । एवमित्याहुः शिम्बिसंबन्धात् ॥ 82॥

[ जैवात्रिक ] आयुष्मति । बालोस्तु जैवात्रिकः । चन्द्रे । राजीवजैवात्रिकः । जीवेरात्रिकन् [ ? ] वृद्धिश्च c. Uṇ. 1, 81 ॥ 84 ॥

[ पिप्पलक ] शल्लीसीवनसूत्रयोश्चर्मकारे प्रसिद्धः ॥ 85 ॥

[ लालाटिक ] यः सेवकः कोपप्रमादचिह्नाय प्रभोर्ललाटमेव पश्यति यश्च प्रभोः कार्याक्षमः कार्यं कर्तुमक्षमः अशक्तः स लालाटिकः । भावदर्शीति च पाठः। लालाटिकः सदालस्यप्रभुभावनिरीक्षक इत्यजयः c. AK. 290, 17, C. ॥ 89 ॥

[ पुण्डरीक ] व्याघ्रे । पुण्डरीकै-हरिणैः ॥ 91 ॥

[ प्रतिपादक ] बोधके । शिक्षणां [ sic ] प्रतिपादकः । खट्वाया अङ्घ्रयश्चत्वारः । तदाधारे क्लीबे ॥ 93 ॥

[ ख ] स्वर्गे । तस्मिन्गते खं सुकृतोपलभ्यम् c. Ra. 18, 21 । इन्द्रिये । M. 5, 138 । आकाशे । Ku. 7, 49 ॥ [ मुख ] आदौ वक्त्रे च । Sp. 1311 । उपाये । नृपतिर्मन्त्रमुखेन संस्पृशेत् ॥ [ शिखा ] अग्रे । आरूढः स सुपर्वपर्वतशिखाम् । ज्वालायाम् Sp. 2497 । केकिचूडायाम् । Me. 101 । शाखायाम्। वृक्षशाखावलम्बिनम् [ sic ] c. Ra. 15, 49 । शिफायाम् । विटपिनां वातावधूताः शिखाः । शिफा कन्दः ॥ 94 ॥

[ शङ्ख ] निधौ । Me. 77 । ललाटास्थ्नि । Ku. 7, 33 ॥ न खलु शङ्खधवलं शङ्खपालकुलं मलिनीकरोमीत्यादौ शङ्खपालशब्ददर्शनाद्भीमोपि भीमसेनवदित्यतः शङ्खपालाख्यो नागः शङ्खः ॥ दिनांशे । स शङ्खमात्रशेषेह्नि । कम्बौ । Ku. 1, 23 ॥ [ नख ] एवमिति नखौषधावस्त्री चेति तथेत्यस्त्रीत्यर्थः ॥ 95 ॥

[ व्युङ्ख ] मन्त्रे षडोंकाराः । मन्त्रषडोंकारम् । ते व्युङ्ख इत्युच्यन्ते । मनोज्ञे । दिव्यत्वव्यभिचारमेति न सखे व्युङ्खयमस्याकृतिः । मनोज्ञो व्युङ्ख इत्याकारोपि [ ? ] ॥ [ लेख ] दैवतलेख्ययोः । सलेखवर्गस्य विमुद्रमाननम् ॥ [ लेखा ] नवलेखेत्यादि चन्द्रांशे । आभोगे । Ra. 7, 24 ॥ 96 ॥

[ रेखा ] व्याजे । Bâ. I, 16 । आभोगे । आसीत्° Mh. 2, 24 ॥ उल्लेख्ये । चित्रेपि° Mh. 2, 24 । अल्पके । Ra. 1, 17 ॥ [ उखा ] यज्ञभाण्डे । उखां सिकताभिः पूरयित्वा ॥ [ शाखा ] द्रुमांशे । Ra. 13, 24 ॥ 97 ॥

हस्तावयवे । पञ्चशाखेन पाणिना । अङ्घ्र्यवयवे । मुकुट° Mh. 2, 26 । द्वारावयवे । दृढतरशाखमिदं द्वारम् ॥ [ सखि ] मित्रे । Śi. 2, 36 । सहाये । Ra. 14, 87 ॥ [ प्रमुख ] आदौ । श्लाघ्याः कस्य न ते सन्तः प्रमुखप्रियभाषिणः । प्रधाने । Ku. 7, 71 । अग्रे । Ku. 8, 5 ॥ 98 ॥

[ वैशाख ] धानुष्क° । वैष्णवं° Mh. 3, 105 ॥ [ गोमुख ] लेपने । Śi. 3, 48 ॥ 99 ॥

[ विशिखा ] प्रतोल्याम् । विशिखायां सौवर्णप्रचारः । खनित्र्याम् । मुनिभिर्विशिखानिखातमृद्भिः । खनित्री मुनीनां मृदवदारणभाण्डं शस्त्रप्रायम् ॥ निश्रूडे । Ṛigv. 6, 75, 17 ॥ [ विशाखा ] राधा विशाखेति नक्षत्रे स्त्री । 'अत्र च स्त्रीत्व एकत्वे चामरसिंहेनोक्तम् c. AK. 19, 22 । विशाखयोश्चेति Pâ. 1, 2, 62 द्वित्वनपुंसकत्वं पाणिनिना । कृत्तिकासु विशाखासु मघासु भरणीषु चेति बहुत्वं स्त्रीत्वं च ज्योतिःशास्त्रे स्थितमिति लक्ष्यादनुसर्तव्यम् ॥ 100 ॥

[ मयूख ] त्विषि । मणिमयूखजालैः । करेषु रश्मिषु । Ku. 3, 65 । ज्वालायाम् । अभ्युन्नता° Mh. 3, 104 ॥ [ शिलीमुख ] उभयत्रापि । K. Pr. 26, 7 ॥ [ अग्निशिख, °खा ] भालं वह्निशिखाङ्कितं दधदित्यादावुभयत्रापि c. Râj. I, 2 । ओषधौ निघण्टुप्रसिद्धः ॥ 101 ॥

[ सर्वतोमुख ] जले । प्रभासे° Mh. 5, 9 । ब्रह्मणि । Ku. 2, 3 ॥ [ मकरमुख ] मकराकारधारिणि जानुभागे च । H. Ch. 80, 13 ॥ 102 ॥

जानुभागे जलनिर्गमनद्वारे च । हिमकरमहसेव निर्मितौ यौ मकरमुखप्रसृतामृतप्रवाहौ c. H. Ch. 25, 13. 157, 15 ॥ [ गो ] स्वर्गे । स गोपतिर्वज्रविघट्टनेन । इषौ । गोभिः स विद्धकवचः । धेनुलक्षणे पशौ रश्मौ च । Sû. 9 । लक्ष्यदृष्ट्या पशौ पुंसि । सुखं स्वपिति गौर्गडी c. Sp. 2135 । वाचि । Ra. 2, 59 । वज्रे । गोघातेनैव शैलेन्द्राः । दिशि । गोभ्यः संभृतसद्वित्तः । नेत्रे । गोजलार्द्रितकपोलतलास्ताः । भूमौ । Ra. 5, 26 । जले । गावो वहन्ति

विमलाः शरदि स्रवन्त्याम् ॥ नपुंसकत्वं यत्किंचिदक्षिजलविषयमुक्तं तदर्थयुक्तम् ॥ 103 ॥

[ सङ्ग ] श्लेषे । Ku. 1, 53 । रोधे । Ra. 2,42 ॥ [ भग ] एतदर्कयोर्निर्वर्जितं भगवानित्यत्र भगविषयमेव व्याख्यानमर्हति ॥ 104 ॥

[ मृग ] मृगीदृशामित्यादौ कुरङ्गे स्त्रियामपि । पशुमात्रे । Ki. 6, 34 ॥ मृगपति॰ H. Ch. 87, 6; Su. 622 इत्यादौ पशुमात्र एव ज्ञेयः । ये त्वेवमादौ हरिणपर्यायं मृगशब्दं मन्वाना दृष्ट्वैणीरेणपतिरित्यादि प्रयुञ्जते । ते नादं॰ Bh. Ś. 66; Su. 995 इत्यादिवत्सामान्ये शेषाणां स्वीकार इत्यदूरविप्रकर्षे समर्थयन्त इत्याहुः ॥ 105 ॥

[ सर्ग ] स्वभावे । सर्ग एष महतामविक्रियः । निर्मोक्षे । सुवृष्टिसर्गादिव सस्यसंपदः । निश्चये । Ra. 3, 51 । अध्याये । Kd. 1, 14 । अध्यायः परिच्छेदः । सृष्टौ । Ra. 10, 43 ॥ 106 ॥

[ भोग ] पालने । राजानो भोगिनो वैद्याः । भोगो पालनं विद्यते येषामिति व्युत्पत्त्या । अभ्यवहारे । Sp. 4637 । पणस्त्रीनिर्वेशे । पण्यवनिताभोगैः ॥ वित्ते भोगप्रत्यययोः c. Pâ. 8, 2, 58 इत्यत्र वित्ते उक्तः । सुखे । Sp. 4631 । अहिफणकाययोः । तान्भोगिनः कुण्डलिनो वदन्ति c. Mh. 3, 359 ॥ 107 ॥

[ योग ] संनहने बन्धने । जटाहियोगादचलोर्ध्वजूटः । उपाये । प्राप्ते योगत्रासनां रहस्यदुर्गस्य । ध्याने । Ki. 3,28 । संगतौ । Ra. 1, 46 । युक्तौ । तस्या दृशोः कार्मणचूर्णयोगः । अलब्धलाभे । योगक्षेमार्थमीश्वरमधिगच्छेत् । भैषज्ये । योगेन रोगान्स भिषग्निहन्ति । विस्रब्धघातिनि शरे । H. Ch. 131, 1 ॥ 108 ॥

[ मार्ग ] मासे । मार्गबहुलपञ्चम्याम् । अन्वेषणेऽध्वनि च । सतां मार्गे मार्गो भवति यदि च । मृगमदे । शिलातले मार्गसुगन्धिनि स्थितः ॥ अदृष्टेनापि मार्गेण मार्गेणैव न्यवेद्यत इत्यादौ यौगिकत्वान्मृगसमूहेपि ॥ [ नाग ] गजे । Ku. 1, 36 । विगलन्नागवेटक [?] इत्यादौ सीसकरङ्गयोः । रङ्गं त्रपु । ज्योतिःशास्त्रे करणभेदेपि ॥ 109 ॥

[ पूग ] पूगीफलमित्यादौ स्त्रियामपि ॥ [ राग ] क्लेशादिके । रागद्वेषौ मनुष्यस्य खादितारौ वृकाविव c. Sp. 2350, Kâś. Pâ. 5, 3, 115 । सङ्गे । रागः

प्रतिष्ठां हृदये करोति । पानके । तर्षोपकर्षं रागेण गमितः । लौहित्ये । Sp. 5857 । आदिग्रहणाल्लाक्षादिद्रव्याणि गान्धर्वविषया भिन्नषड्जादयोपि ॥ 110 ॥

[युग] यानाद्यङ्गे काष्ठविशेषे । Ra. 3, 34 । युग्मे कृतादिषु च । H. Ch. 50, 8 । चतुर्हस्तप्रमाणे । विचरेद्युगमात्रदृक् । एषु त्रिषु नपुंसकम् ॥ [ खग ] शरविहगयोः । खगपीतासृजो योधाः । अर्के । खगमयूखैररुणिताः ॥ 111 ॥

[लिङ्ग ] प्रकृतिबुद्धौ । लिङ्गा० Mh. 2, 46 । चिह्ने । K. K. S. 1, 42 ॥ व्यक्तौ स्त्रीपुंनपुंसकादौ च । शिवमूर्तिभेदे च लीनं गमयतीति पृषोदरादिः ॥ [ अङ्ग ] उपकारिणि । अङ्गेनातिप्रसङ्गेन । उपाये । सर्वाङ्गमाराधितशंकरस्य । गात्रे । Ku. 3, 23 । अधिकृते । Pâ. 2, 3, 20 ॥ 112 ॥

[ रङ्ग ] नृत्तखले । M. M. 8, 1 । युद्धखले । संग्रामरङ्गे हतः । संग्रामो युद्धम् । भूमौ तूपचारात् खलशब्दः स्थानपर्यायः । रागे लौहित्यादौ । पञ्चरङ्गः कुरङ्गः । त्रपुणि । रङ्गस्य तु पलान्यष्टौ ॥ [ शार्ङ्ग ] धनुर्मात्रे । Ra. 4, 62 । विष्णुचापे । Me. 107 ॥ 113 ॥

[ शृङ्ग ] स्वाम्ये । शृङ्गारूढविभूतयः । स्वाम्यं प्राधान्यम् । अद्रिकूटे । Me. 14 । पशवङ्गे । Ku. 3, 36 ॥ [ भाग ] भाग्ये । महाभाग रमणीय एष वः संनिवेशः c. M. M. 57, 5 । एकदेशे । Ku. 3, 59 ॥ 114 ॥

[ भङ्ग ] भेदे । M. St. 14 । ऊर्मौ । रङ्गद्भङ्गां स गङ्गाम् । भक्तौ विच्छित्तौ । Vik. 115 । कौटिल्ये । Śâ. 7 । भये । संसारभङ्गेन तरङ्गिताङ्गः ॥ [ वेग ] प्रवाहे । वाष्पो० Mh. 2, 47 । जवे । Ku. 2, 25 ॥ [ भङ्गि ] भक्तौ विच्छित्तौ । K. Pr. 222, 2 । तरंगे । Me. 60 ॥ चीनांशुकं भङ्गियुतं दधान इत्यादौ तरंगोपचारात् । भक्तिर्यत्र विभागवर्त्मनि वेशपर्यायो विवक्षितः ॥ 115 ॥

[ भर्ग ] भास्करे । S. P. 10 ॥ [वर्ग] पक्षे हुभये [?] । आर- स्ते वि- तकवचा -ि वर्गाः सहेलम् । कवर्गो भूवर्ग इत्यादौ पक्ष – – । समूहे । Ku. 7, 2 ॥ [त्याग] त्यजने । Ra. 12, 10 । दाने । Ra. 1, 22 ॥ 116 ॥

[ वङ्ग ] त्रपुणि । वङ्गपत्ररचनाविचित्रिताः । राजनि पुंसि । वङ्गो भङ्गं गमितः । तद्देशतत्पुत्रयोः पुंभूम्नि । Ra. 4, 36 ॥ [ भृगु ] प्रपाते । आत्मानं

घातयेद्यस्तु भृग्वग्न्यनशमादिभिः [ sic ] । मुनौ । वन्द्योसौ भृगुनन्दनः । तत्पुत्रे पुंभूम्नि । भृगौ च जामदग्नय [ ? ] ॥ 117 ॥

[ तुङ्ग ] पुंनागो नागकेसरवृक्षभेदः । तुङ्गात्मनां० Su. 259 तत्र तुङ्गा इत्यादावुच्चे त्रिषु । अत्र तु तुङ्गेति स्त्रियाम् ॥ [फल्गु] अल्पे । अफल्गु वित्त व्यतरद्विजेभ्यः । मोघे निःसारे । अवल्गु फल्गु भाषसे । काकोदुम्बरिका ओषधिभेदः । तस्यां तु पुंसि c. Mh. 2, 35 । सौवीरवदरांकोलवल्गुश्लेष्मातकोङ्गेव [ sic ] इत्यादौ पुंसि ॥ [ इङ्ग ] इङ्गिते । इङ्गो न ज्ञायते मुनेः । अभिप्रायसूचकव्यापारे पुंसि ॥ 118 ॥

जगति । इङ्गमङ्ग सफलीकृतं त्वया ॥ [ रक्ताङ्ग ] अङ्गारके । रक्ताङ्गे पञ्चमस्थे ॥ [ आशुग ] वायौ । आशुगापहृतपुष्पसंततिः । विशिखे । तीव्रघातिनममुञ्चदाशुगम् ॥ [ भुजंग ] शिङ्गे विदग्धकामुके । महानयं भुजंग आसीत् c. H. Ch. 87, 13. 97, 3. Vâs. 273, 3 । सर्पे । M. M. 196, 6 । स्त्रियां तु भुजंगी ॥ 119 ॥

[ आयोग ] गन्धमाल्योपहारे । आयोगयोगविहिताखिलदेवपूजः । व्यापृतौ । आयोगो रथकर्मणि ॥ [ पराग ] कौसुमे रेणौ । परागपटलीसंलीनभृङ्गावली । स्नानीये । परागैर्वर्तितैरङ्गैः । आदिशब्दात्पटवासादौ । दृष्टा केशवगोपरागहृतये- त्यादौ रजोमात्रेपि ॥ 120 ॥

[ कलिङ्ग ] शाकभेदे । कलिङ्गे चारुचि—टम् । देशे । Ra. 4, 38 ॥ [ सारङ्ग ] चातके । Me. 21 । हरिणे । Sp. 778 ॥ 121 ॥

[ पतंग ] शालिभेदे । पतंगास्तपनीयाश्च ये चान्ये शालयः शुभाः । शलभे । Ku. 3, 64 । सूर्ये । Śi. 9, 18 ॥ [ निषङ्ग ] सङ्गे । गहनवननिषङ्गो मोक्षते [ sic ] न कस्य c. Mh. 3, 113 । तूणे । Ra. 3, 64 ॥ 122 ॥

[ वराङ्ग ] मस्तके । गङ्गां वराङ्गे दधतः पुरारेः । त्वचे । वराङ्ग० Mh. 3, 120 ॥ [प्लवग] कपौ । प्लवगसैन्यमु० V. K. 2, 1, 13, C. ॥ 123 ॥

[ प्रियङ्गु ] कङ्गौ लताभेदे । प्रियङ्गुश्यामाङ्गः प्रकृतिसुभगः ॥ [ निसर्ग ] निर्माणे । जगन्निसर्गसंहारकारकः परमेश्वरः । स्वभावे । Śi. 1, 8 ॥ [ पुंनाग ] उभयत्रापि । विभूषितकुलोद्यानस्त्वं पुंनागः ॥ 124 ॥

[ विसर्ग ] उभयत्रापि । विहितरसविसर्गः साधुशब्दैकपात्रे ॥ [ उत्सर्ग ] सामान्यविधौ । Ku. 2, 27 । प्रचारे पुरीषादित्यागे । उत्सर्गे मानमाचरेत् [?] । त्यागे । Me. 19 ॥ **125** ॥

[ समङ्गा ] मञ्जिष्ठायाम् । रङ्गत्समङ्गारुचिः ॥ [उद्वेग] खेदे । महानुद्वेगो-यं शिशिरकिरणे यत्किल मलम् । उभयत्रापि । आत्मानमेव जनयत्युत्सर्व [ sic ] उद्वेगबहुलोयम् ॥ **126** ॥

[ त्रिवर्ग ] धर्मकामार्थेषु । Su. 2919 । स्थानवृद्धिक्षयेषु । तेषां सा विलस-त्त्रिवर्गविषया सन्मन्त्रिणां शेमुषी ॥ [अभिषङ्ग] पराभवे । Ku. 3, 73 ॥ **127** ॥

आक्रोशे संवेगे । कोपाभिषङ्गविगलत्सकलाङ्गसंधिः । शापे । चचाल तस्माद-भिषङ्गभङ्गात् ॥ [अपवर्ग] क्रियाफले । Ki. 1, 14 ॥ [उपराग] उपरक्तौ विधुं-तुदे राहुभेदे च । रत्युपरागवशा ― तिर्भेदमुपैति का गणना तु स्फटिकमणेः ॥ **128** ॥

व्यसने । द्वेषोपरागकलुषीकृतमानसस्य ॥ [ उपसर्ग ] त्रयेपि । तुहिनोपनि-पातैरप्यस्खल ― ― संधिनि । विद्वानिदपसर्ग ― ं यं काव्यं तु कवेरिव [?] ॥ **129** ॥

[ उपयोग ] भोगे । मासोपयोगात्स सुखी जीवत्यब्दशतत्रयम् । विद्याग्रहणे । आप्यातोपयोगः [ sic ] ॥ [ कथाप्रसङ्ग ] द्वयेपि । Ki. 1, 24 ॥ **130** ॥

[ ओघ ] वृन्दे । Śi. 1, 18 । अम्बुवेगे । Ku. 2, 25 ॥ [अघ] दुःखे । हन्त्यघं विपदुद्भवम् । अंहसि पापे । Śi. 1, 26 । व्यसने । अनघापि हि संश्रयक्रमे गर्गग्नेपेतनाय [ sic ] वल्लरी ॥ [ लघु ] अल्पे । ये गुणा लङ्घने प्रोक्तास्ते ― ― लघुभोजने । इष्टे । Ra. 11, 12 । असारे । Me. 20 ॥ **131** ॥

[ अर्घ ] मूल्ये पूजाविधौ च । Ku. 1, 58 । तम० Śi. 1, 14 इत्यादौ पूजो-पकारके द्रव्ये प्रचरे [ sic ] चेति शेषः । यथा कालिकाः कलयोति [ sic ] नूतनविकासिनीर्मधुलिहामर्घः । इत्यादौ ॥ [ परिघ ] आयुधे । भुजपरिघदगम-हणम् [ sic ] । घाते । Ra. 11, 88 ॥ **132** ॥

[ प्रतिघ ] द्वेषे । उद्दामप्रतिघानलप्रतिहतप्रज्ञा । शत्रौ । तस्य निष्प्रतिघभाव-नाविधिं तन्वते ॥ [निदाघ] ग्रीष्मे । Su. 1693 । स्वेदे । निदाघमम्भो महता-म― ―म् । तापे । बहलनिदाघग्लपितैः । तापके त्रिषु । Śi. 1, 24 ॥ [अमोघा] पाटला लताभेदः [ ? ] ॥ **133** ॥

[ प्राच् ] दिशि । प्राचीवालविडाललोचनदशां [ रुचां ? ] जाताचपत्रं [sic] ककुप् । देशकालयोः । Sû. 12 । आदिग्रहणेन प्रत्यगुदगवागित्यादयः ॥[ त्वच् ] वल्के । Ku. 1, 7 । चर्मणि । Ra. 3, 31 । त्वचं सुगन्धद्रव्यभेदः । खलापत्रं त्वचो वंश इत्यादौ [ sic ; c. Mh. 1, 7] । एष्वर्थेषु अकारान्तस्त्वच्शब्दोपि ॥ [ वाच् ] वाण्याम् । Śi. 1, 25 । वाचके । Ra. 1, 1 । उभयत्रापि । इत्यत एव वागलंकाराः कैश्चिदुदाहृताः c. Kd. 2, 7 । वागलंकाराः शब्दालंकारा अर्थालंकाराश्चेत्यर्थः ॥ 134 ॥

[रुच्] दीप्तौ । नाभीसरोजस्य रुचं जहार । उभयत्रापि । Ra. 8, 94 v. l. ॥ [ कूर्च ] मर्मभिदि । तस्योर्ध्वं ह्यङ्गुले कूर्चः [ ? ] ॥ परिहृतकारे कुचीकूर्चाकूता इत्यादौ दम्भे दष्टमन्यत् [ sic ; c. Mh. 2,56 ] ॥ 135 ॥

[ शुचि ] पावके । शुचिज्वालाजालाविलजलधिः ॥ 136 ॥

मासि आषाढे । Ku. 5, 20 । अमात्येत्युपधे परीक्षिते । व्यवहारान्नृपः पश्येद्धर्मज्ञैः शुचिभिः सह c. M. 8, 1 । धर्मार्थकामभयमुखेन सचिवपरीक्ष [sic] तामतिक्रान्तोत्युपधः । यत्कौटिल्यः । उपधाभिः शौचाशौचपरिज्ञानममात्यानामिति ॥ [ रुचि ] इच्छायाम् । M. St. 7 ॥ 137 ॥

[ अर्चा ] आकृतौ प्रतिमायाम् । आभ्यां लिङ्गैर्चितः शंभुरर्चायां भवता पुनः ॥ [ काच ] शिक्ये । आदाय काचमथ पान्थजनः प्रतस्थे । शिक्यं रज्जुयन्त्रम् । मृद्भेदे । Bh. Ś. 3 । मृद्भेदो धातुविशेषः । यद्यकाचा [ ? ] घटिकादिविकारः ॥ [ सूचा ] व्यधने । सूचाग्रमपि नो — —त् । अभिनये । अयं सूचाक्रमोपि ॥ [ वीचि ] स्वल्पेन्वेष्यः ॥ 138 ॥

[ चर्चा ] देव्यां चण्डिकाभेदे । चर्चाव्रतं सुरुचिरं सुचिरं विचार्य ॥ [ नीच ] उभयत्रापि । Sp. 2606 ॥ [पिचु] पाचौ । विज्ञानमेतत्पिचुवस्त्रनिर्गतम् । उपहासविषयमेतत् ॥ 139 ॥

[मोचा] कदल्याम् । मुमोच मोचारसम् ॥ [चोच] विसेक्षचोचं [sic] मोचेत्यादौ पालेवते फलविशेषे । मोचचोचदलैर्युक्तमित्यादौ द्वयेपि ॥ [काञ्ची] उभयत्रापि । या लग्नकाञ्चीविषयेण कान्तिः N. Ch. 1, 43 । द्वयेपि । काञ्च्यां करः पातितः ॥[ प्रपञ्च] उभयत्रापि । विश्वप्रपञ्चरचनाचतुराय तस्मै c. Su. 92 ॥140॥

[ संकोच ] विकासविपर्यये । इत्याशादर्शनाहितमहासंकोचा ॥ [ विकच ] द्रव्यभेदे निघण्टौ प्रसिद्धः ॥ **141** ॥

[ तुच्छ ] लाघवेल्पे च । तुच्छश्च पुच्छच्छटयेव वाचा [?] ॥ [कच्छ] गहने देशे । कूलकच्छस्थलेषु । तुन्याख्या ओषधी रागद्रव्यभेदः ॥ **142** ॥

[ गुच्छ ] स्तवके । तापिच्छगुच्छविहितैः ॥ [ अच्छ ] निर्मले । Sp. 7001 । उभयत्रापि । प्रातरच्छजलबिन्दुवारिभिः ॥ [पिच्छ] विषदविपरीते गुणे । सुपिच्छः स्तिमितो गुदः [?] । लोमादि॰ Pâ. 5, 2, 100 । इति दर्शनात् ॥ **143** ॥

[ अब्ज ] धन्वन्तरौ । अब्जोपदिष्टैरगदैः स्थिरायुः ॥ [ न्युब्ज ] ¯ज- मवं चकारेत्यादौ [ sic ; c. Mh. 2, 70 ] । न्युब्जः कुणिरित्यादौ कुब्जेधोमुखे च ॥ [ बीज ] रेतसि । Ku. 2, 5 ॥ **144** ॥

हेतौ । अस्ति किंचिन्मन्त्रबीजम् । अङ्कुरकार्ये । Ku. 3, 18 । अङ्कुरः कार्यो यस्य । अङ्कुरस्य कार्यमित्यपि च ॥ [द्विज] विप्रेण्डजे च । सत्पक्षो द्विजराज एषः । विप्रश्चात्रोपलक्षणं तेन क्षत्रियवैश्ययोरपि ॥ [ व्याज ] दोषे । व्याजः सत्यं द्विजस्य यदि । दम्भे । Nâg. 1 । अपदेशे । Bâ. I, 6 । अपदेशश्छलम् ॥ **145** ॥

[ अज ] ब्रह्मणि । Ku. 2, 5 । विष्णौ । Ra. 10, 24 । ईशे महेश्वरे । जयत्यजः प॰ Mh. 2, 64 ॥ [ व्रज ] गोष्ठे । Śi. 2, 64 । अध्वनि । व्रजेषु सर्वेषु निरुद्धसंचरः ॥ [ आजि ] समे क्ष्मांशे । उपवनाजिममी नृपसूनवो जगुः ॥ [ प्रजा ] संततौ । Ra. 1, 77 । जने । Ra. 1, 18 ॥ **146** ॥

[ ध्वज ] चिह्ने । Ku. 3, 62 ॥ [ निज ] द्वयेपि । Śi. 1, 37 ॥ [ गञ्जा ] खनावाकरे । गञ्जाजातो मणिरिव शिशुः क्रूप्रसंस्कारचारुः । सुरागृहे । गञ्जासंजातमदः ॥ [ गञ्ज ] भाण्डागारे । गञ्ज॰ Mh. 2, 67 ॥ **147** ॥

[ कुञ्ज ] खमुखकुञ्जेभ्यो दे वक्तव्ययवति [ sic ] हस्तिदन्ते कुञ्जशब्दः c. Pâ. 5, 2, 107, 1 ॥ [ गुञ्जा ] काकत्रिञ्चिका रक्तिकाफलम् । पटहे । विरहिणीप्राणाध्वगुञ्जा इमाः ॥ [ वणिज् ] वाणिज्ये शिल्पकर्मणि । वणिक्पथप्रस्थितः ॥ **148** ॥

[ सहज ] निसर्गे । विशेषतः सहजलङ्घनस्य कुमारीजनस्य c. H. Ch. 28, 4-6 । सहोत्थे भ्रातरि । सहजकालकूटशिक्षितक्रौर्येव लक्ष्मीः ॥ [ सामज ] द्वयेपि । विस्फूर्जत्सामजस्वरैः ॥ **149** ॥

[ बलज ] क्षेत्रे । प्रत्यक्षमिक्षुबलजे क्षपितेक्षुयष्टिः । पूर्द्वारे । रुरुधुर्बलजं बलाद्बलानि । वल्गुदर्शने भद्राकृतौ । वन्द्यास्ते साधवो बलजाः ॥ [ अङ्गज ] मन्मथे शोणिते च । अङ्गजरञ्जितगात्रो विलपन्वनितानाम् । पुत्रे । तस्याङ्गजो- जनि जयन्तसमानसारः ॥ 150 ॥

[ अहिभुज् ] द्वयेपि । अहिभुजावृतचित्रपत्त्रशोभा ॥ [ अग्रज ] भ्रातरि । M. 3, 171 । विप्रे । अग्रजेभ्यो ददौ वसु c. Ra. 17, 17 ॥ [ क्रिमिज ] कौ- शेयं० AK. II, 6, 111 इत्युक्त्या पट्टसूत्रे नपुंसकम् ॥ 151 ॥

[ करज ] नखे । Dhv. 229, 3 ॥ [ अम्बुज ] पद्मे । P. St. 3, 1 ॥ [ द्विजराज ] वीनां प्रवरो विप्रवरो द्विजाग्रश्रेष्ठश्च । त्रयेपि । सत्पक्षो द्विजराज एषः ॥ 152 ॥

[ धर्मराज ] द्वयेपि [ sic ] । धर्मराज० । Mh. 4, 55 ॥ [ ग्रहराज ] द्वयेपि । अस्मिन्विग्रहराजे काले कश्चक्षुषामुदयः ॥ [ जघन्यज ] द्वयेपि । तर्कि० Mh. 4, 54 ॥ 153 ॥

[ ज्ञ ] सूरौ । Ra. 10, 56 ॥ [ अज्ञ ] मूर्खे । Sp. 105 । अर्भके । जा- नन्नेवं परिणतवया अज्ञवद्भाषसे किम् ॥ सति पादत्रये ज्ञाज्ञौ भिषजावत्र कारण- म् । इत्युदाहरणम् । पूर्वसूत्रे सूरावत्र मूर्खे स्पष्टम् ॥ [ प्रज्ञा ] धियि । Ra. 1, 15 ॥ [ संज्ञा ] चिति चेतनायाम् । त्वग्भेदाच्छोणितस्रावादा मांसव्यथ- नादपि । संज्ञां न लभते यस्तं विद्याद्गम्भीरवेदिनम् c. Mall. on Ra. 4, 39, Śi. 5, 49 । नाम्नि । सर्वज्ञं तदुपज्ञमज्ञ इति तु ख्याता वयं संज्ञया । सूचनायाम् । Ku. 3,41 ॥ 154 ॥

[ सर्वज्ञ ] शिवे । सर्वग सर्वज्ञ शर्व सर्वात्मन् । बुद्धे । प्रणम्य सर्वज्ञम- भीतिविप्लवम् ॥ [ दोषज्ञ ] वैद्ये विदि पण्डिते च । बुद्धिगमलरोगदोषज्ञः । खले । गुणदोषौ दोषगुणौ दोषज्ञो वेत्ति नैव गुणी ॥ [ क्षेत्रज्ञ ] प्रवीणे । क्षेत्रज्ञः कुरुते किंचिन्नाविचार्य हिताहिते ॥ 155 ॥

[ कूट ] मायायाम् । कूटयुद्धविकल्पेपि Ra. 17, 69 v.l. । निश्चले । कू- टस्थोक्षर उच्यते । यन्त्रे । Ra. 13, 39 । मायाकैतवानृतानां बाहुल्येनेकार्थता- माहुः । राशौ । भक्तानामा० Mh. 2, 83 । अयोघनः । अयःसंस्कारको भा- ण्डविशेषः । सीराङ्गं दारुमयं यस्य लोके कूटमिति प्रसिद्धिः ॥ 156 ॥

हस्तिनखेश्वशालानिःसरणमार्गे अवाचीने ॥ [ घण्टा ] किङ्किण्याम् । M. M. 159, 4 ॥ [ त्रुटि ] क्षणलवमुहूर्ततुटीत्यादौ कालेल्पे । संशये । त्रु- टिं प्राप्ते जीवे सपदि जलजे जातविभवे ॥ 157 ॥

[ कोटि ] त्रयेपि । Su. 2631 ॥ [ जटा ] मूले लग्नकचे च । कचिदा- श्रितजटावल्कलाः कपिलाः c. H. Ch. 56, 5. A. S. 40, 1 ॥ [ नट ] पञ्चो- र्णो नडी च तृणवृक्षभेदौ ॥ 158 ॥

[ व्युष्टि ] फलं सस्यसंपत् । उभयत्रापि । व्रीहीणां व्युष्टिरिष्टेयम् ॥ [दृष्टि] ज्ञानाक्ष्णोः । K. K. S. 1, 3 । दर्शने नयनव्यापारे । तीक्ष्णाः क्षणं दृष्टयः ॥ [ इष्टि ] यागे । Ra. 10, 4 । इच्छायाम् । इष्टयुपसंख्यानवती Kâś. I., 2॥ [ स्पष्ट ] अत्रोदाहरणमन्वेष्यम् ॥ 159 ॥

[ कट ] शवे अस्तमारणे । प्रचलितकटपूतनोत्तालवेताल c. M. M. 182, 2 । कट इति श्रोणौ । कलिञ्जे । कटं करोति भीष्ममुदारं शोभनं दर्शनीयम् । क- लिञ्जः कुनालक इति प्रसिद्धः । अविकटमित्यादौ भृशे संघाते । अवीनां कटः । अविकटः c. Pâ. 5, 2, 29 ॥ [ कटु ] रसे ऊषणे ॥ तत्कटु० Pa. 1150 इत्यादौ तिक्तेपि । अकार्ये । कट्वाचारो हि दुर्जनः । मत्सरे । खलानां० c. Mh. 2, 81 । तीक्ष्णे । Su. 692 ॥ 160 ॥

[ चटु ] पिचण्डे । अत्याश्चटुमर्दनैकनिरते । सद्गुणवर्णने । भूयो भूयः प्रि- यचटुशतैः प्रार्थ्यमानापि तैस्तैः ॥ [ कष्ट ] कृच्छ्रे । M. M. 183, 4 । गहने । कष्टं व्याकरणं कष्टं तपः ॥ [ कृष्टि ] कर्षे । Sp. 2463 । बुधे । येषामि- ष्टाः कृष्टयस्तेपि मन्ये ॥ 161 ॥

[ त्वष्टृ ] देवशिल्पिनि । Ra. 6, 32 । अर्के । सूर्योर्यमा भगस्त्वष्टा ॥ [ पटु ] चतुरे । Su. 692 । अरुजि । औषधविशेषयोगान्नियतं पटुतां प्रयाति विकलोपि । अगुरौ लघौ । जीर्णान्ते पटुयूषभुक् । लवणे त्रिकटु त्रिपटु श्रेष्ठेत्या- दौ नपुंसकम् ॥ 162 ॥

[ दिष्ट ] दैवे भाग्ये । Ra. 9, 79 । काले । कष्टैरनिष्टबहलैर्गच्छति दिष्टो विनष्टमतेः ॥ [ कुट ] कुम्भे । आहूतैः कुटकारकैः । गृहे । Sû. 2 ॥ [अट्ट] अत्यर्थे । सर्वस्वापहृतौ । हि कामुकजनस्याट्टायते कुट्टिनी । अट्टमत्यर्थमाचरतीति । गृहे । वितीर्ण० Ra. 16, 11 । सिद्धान्ते मण्डिकादौ अट्टस्थितोपचारादित्यर्थः । अत्यर्थवणिक्पथयोः । H. Ch. 50, 9 ॥ 163 ॥

[ पोटा ] दास्याम् । नखमुखपाटितपोटाकुचतटसंघर्षहर्षरभसेन । पोट इत्यादौ द्विलिङ्गायाम् । उभयव्यञ्जना पोटेत्युक्तत्वात् c. Kâś. Pâ. 2, 1, 65 ॥ [ सृष्टि ] सर्गे । Śâ. 1 । स्वभावे । स्त्रीणां सृष्टिर्हि । चापलम् ॥ [ पुट ] व्याघ्रनखे । Ra. 17, 12 । अभिन्नमन्त्रस्तं यत्पुटं तच्च रक्षार्थं बालानां गले क्रियत इति प्रसिद्धिः । ऊर्णामयः कार्पासो वा कङ्कण इत्यक्षराम्नातम् । करपुटमुकुटाटोपभुग्नोत्तमाङ्ग इत्यादौ हस्तादिसंपुटे ॥ 164 ॥

[ मुष्टि ] खड्गो मुष्टिविनष्ट इत्यादौ त्सरौ । विक्रये द्रव्यविशेषे पणः । यदाहुः । शाणं पाणितलं मुष्टिं कुडवं प्रस्थमाढकम् । नीवारमुष्टिंपच इति वा c. Bâ. IV, 35. X, 92 । पाणिबन्धे । Sp. 4677 ॥ [ पट्ट ] पर्यन्ते । तवाष्टमीचन्द्रसहोदरोयं ललाममुक्तः किमलीकपट्टः । वस्त्रे कौशेये । वात्याघट्टितपट्टवस्त्रनिचया यान्ति द्रुतं योषितः ॥ [ घट्ट ] शुल्कदेशे । अलिप्सूनन्तरङ्गांश्च स्वान्घट्टेषु नियोजयेत् । तरोपाये । घट्टालङ्घितजाह्नवीजलभराः संप्राप्तपारास्ततः ॥ [ घटी ] अरघट्टघटीयन्त्रन्यायादित्यादौ भाण्डे घटीशब्दः स्त्रीपुंसयोः ॥ 165 ॥

[ घटा ] गोष्ठ्यां सहृदयासनबन्धे । घटाबन्धं प्रविष्टैस्तैः । हस्तिपङ्क्तौ । विकटकरिघटाकवाटपाटनपटोः । घटनायाम् । एतदत्र घटामुपैति यत् ॥ [दिष्टि] परीमाणे द्वादशाङ्गुले । दिष्टिमात्रास्तु समिधः । आनन्दने प्रियनिवेदने । दिष्ट्या वर्धसे । कैश्चित्तु तृतीयान्तं प्रतिरूपमिष्यते ॥ 166 ॥

[ विष्टि ] आज्ञां वेगे । विष्टिगामी । वेतनं भृतिः । करणं दैवज्ञशास्त्रोक्तम् । विष्ट्या शतसहस्रं तु इत्यादौ । कर्मकृति भारिकादौ । विशन्तु विष्टयः शीघ्रं रुद्रा इव महौजसः c. V. A. 21, 27 ॥ [ म्लिष्ट ] अविस्पष्टे वचसि । रोगावृत० Mh. 2, 94 । म्लाने विच्छाये । म्लिष्टं चित्रममुत्र वासभवने वह्निं त्वदीयं यशः । केचित्त्वत्र वदनगताविस्पष्टत्वोपचारान्म्लिष्टत्वमाहुः ॥ 167 ॥

[ इष्ट ] यज्ञाय दाने । M. M. 12, 2 । तेन क्रतुभिरिष्टं स्यात्सहस्रदक्षिणैरित्यादौ यागेपि ॥ [ दृष्ट ] ऐहिके इहलोकोपभोग्यफले । दृष्टादृष्टतरः साधुः । दृष्टौ नयनव्यापारे प्रसिद्धम् । ज्ञाते । दृष्टानि विप्रियशतान्यथ शीलितेयम् । अवतारिते प्रचारिते । Pâ. 4, 2, 7 ॥ 168 ॥

[ खेट ] ग्रामभेदे गह्वरप्राये । एतैः खेट॰ Mh. 2, 85 । मलेन्वेष्यम् । कुत्सिते । अरिखेटनिराकृते ॥ [ रिष्ट ] द्वयेपि । भवेच्च कस्यापि हि रिष्टमिष्टकृत् ॥ [ घृष्टि ] वर्षे । वृक्षैर्विभिन्नैरिभकुम्भघृष्ट्या । किरे । वनावनिं घृष्टिनिखातमुस्ताम् ॥ 169 ॥

[ हृष्ट ] वातवर्षप्रतिहते । शीतहृष्टवदनः सवेपथुः । विस्मिते । दृष्ट्वा कष्टं विधिविनमितं हृष्टबुद्धिः स साधुः । हर्षिते संजातहर्षे । प्रियं॰ Mh. 2. 100 । एषु त्रिषु । रोमाञ्चविषये । हृष्टैर्लोमभिरेष रञ्जिततनुर्धत्ते कदम्बश्रियम् । केशेषु । दाहव्यापच्छमनविधये कॢप्तशीतोपचारैर्हृष्टाः केशा विरहशिखिनो धूमतां यान्ति तस्याः ॥ 170 ॥

[ झाट ] शुष्यज्जम्बीरझाटेत्यादौ गहने ॥ [ सटा ] सिंहकुन्तले । Su. 995 । जटायाम् । Ku. 8, 46 ॥ [ मृष्ट ] स्वादुनि । मृष्टान्नदाता तरुणाग्निहोत्री । शुद्धे । उन्मृष्टपाणिपादास्यो भुञ्जीतान्नं समाहितः । क्षान्ते । मृष्ट एकोपराधस्ते ॥ 171 ॥

[ शिष्ट ] साधौ । Ra. 1, 28 । खसिते । शिष्टमिष्टैः सहाश्नीयात् । विहिते । यत्र शिष्टाप्रतिहतम् ॥ [त्रोटि] पक्षिचञ्च्वाम् । त्रोटि॰ Mh. 2, 89 । वस्तुद्विधाभावे । कुचतटात्त्रोटिमापन्न हारः ॥ 172 ॥

[ अरिष्ट ] आसवे । अरिष्टमिष्टैः सह सेवेत । मृत्युसूचके लक्षणे । षण्मासिकमरिष्टं तत् । सूतिगेहे । Ra. 3, 15 । अशुभे । अरिष्टो जन्मकार्येषु वर्जनीयः प्रयत्नतः । अरिष्टाः सन्तु नः पन्थान इत्यादौ शुभे तद्वति च त्रिषु ॥ 173 ॥

दैत्यविशेषे । दुष्टारिष्टकठोरकण्ठवलनाः । अरिष्टैरिव मूर्तैस्तैररिष्टैर्वलितं गृहमित्यादौ काकेपि । लशुननिम्बफेनिलक्षीरवृक्षा आयुर्वेदप्रसिद्धाः ॥ [चिरण्टी] सुवासिनी गूढा गृहिणी वृद्धापि चिरण्ट्युच्यते । द्वितीयवयास्तरुणी स्त्री सर्वैव चिरण्टीशब्दवाच्या ॥ 174 ॥

[ परीष्टि ] परिचर्यायामन्वेषणे च । इष्टा परीष्टिः शिष्टानां दुष्टकर्मविपाटनी ॥ [ उत्कट ] द्वयेपि । उत्कटकरिकवाटपटुपाटनबद्धरतिः ॥ [ कूपीट ] उदरे । शूलोद्भिन्नकूपीटपीठमकरोदन्धासुरं यः शिवः । जले । कूपीटयोनेरुदियाय धूमः c. Ra. 7, 23 । अङ्गचो॰ M. 9, 321 इत्याम्नायः ॥ 175 ॥

[ विकट ] उभयत्रापि । व्यादाय विकटमास्यम् ॥ [ अवट ] अवटवटा-

करघटितघटीत्यादौ कूपे । गर्ते । अवटाटनपटुगतिः । प्रमत्ते । अवटातङ्कसंकेतनिकेतनसमाश्रयम् ॥ [ करट ] कटु रटत्करटेत्यादौ काके ॥ 176 ॥

[ चिपिट ] खाद्यप्रभेदे खलभृष्टादौ । पिच्चितविस्तृते मर्दितविपुले यथा चिपिटनास इति ॥ [ अदृष्टि ] अज्ञाने । अदृष्टिकलुषीकृते हृदयवारिधौ मज्जते । अदर्शने आन्ध्ये असौम्ये क्रोधाद्युपप्लुते अक्ष्णि च । विवेकाञ्जनदानेन ममादृष्टिं निवारय ॥ 177 ॥

[ कवाट ] इभगण्डे । Su. 2461 । द्वारपट्टे । Ra. 3, 34 ॥ 178 ॥

[ उच्छिष्ट ] भुक्तशेषे । उच्छिष्टभोजी विप्रोऽसौ । क्षते । रेवतीवदनोच्छिष्टमदपूर्णपुटे दृशौ c. Śi. 2, 16; S. K. 72, 25 ॥ 179 ॥

[ करहाट ] देशभेदे वृक्षभेदे अम्बुजाङ्कुरे प्रसिद्धः ॥ 180 ॥

[ शिपिविष्ट ] दुश्चर्मणि चर्मरहितशेपसि पुरुषे ॥ [ प्रतिशिष्ट ] प्रत्याख्याते । अप्रियाणि° Mh. 4, 63 । मैत्रीं प्रति प्रयततः प्रतिशिष्टदूत इत्यादौ प्रेषिते द्वयोरपि त्रिषु ॥ 181 ॥

[ तुलाकोटि ] उभयत्रापि । अमूल्यस्य मम स्वर्णतुलाकोटिरियं कियत् । इतीव कोपादाताम्रं° Vik. Ch. 8, 8 ॥ [ कोष्ठ ] अन्तर्जठरे । कोष्ठे मृदुः । कोष्ठागार इत्यादौ कुसूले । अन्तर्गृहे । कोष्ठात्° Mh. 2, 103 ॥ 182 ॥

[ काष्ठा । काष्ठ ] दिशि दारुणि च । काष्ठावस्थितमाश्रयं ज्वलति ते तीव्रः प्रतापानलः । उत्कर्षे । Ku. 3, 35 । मर्यादायाम् । Ku. 5, 28 ॥ [ कण्ठ ] समीपगलयोः । Ku. 7,51 । शब्दे । Ra. 8, 63 । समीपशब्दयोरत्र रूढिलक्षणया वृत्तिमाहुः ॥ 183 ॥

[ ज्येष्ठ ] ज्येष्ठे मासि निरभ्रेत्यादौ मासभेदे c. Mh. 2, 104 । वृद्धतमे । ज्येष्ठो भ्राता समः पित्रा M. 4, 184 । प्रशस्यतमे । वर्णज्येष्ठान्कुलश्रेष्ठान् ॥ [ गोष्ठ ] अङ्गने । गोष्ठेश्व इव सेवकः ॥ 184 ॥

[ निष्ठा ] निष्पत्तौ । निष्ठां गतं तस्य तपो विलोक्य । नाशे अन्ते च । Râj. 4, 637 ॥ [ हठ ] द्वयेऽपि । हठैरनुसृतो हठात् ॥ 185 ॥

[ श्रीकण्ठ ] देशभेदो हर्षचरिते व्याख्यातः c. H. Ch. 104-107 ॥ [अम्बष्ठ] संकरोद्भवे । M. 10, 8 ॥ 186 ॥

[ प्रतिष्ठा ] आस्पदे । Ra. 6, 21 । मर्यादायां शिष्टाचारे । धृतप्रतिष्ठाः क्व न सन्ति सन्तः । देवादिस्थापने । इष्टे प्रतिष्ठासमये पुरारेः । आदिग्रहणान्मठादौ ॥ 187 ॥

[ कमठ ] मानभित्प्रमाणविशेषः । कूर्मे । Su. 36 ॥ [ नीलकण्ठ ] शिवे । Ku. 5, 57 । वर्हिणि । Me. 76 ॥ [ कलकण्ठ ] कलकण्ठपञ्चमरवेण ह्यभुवामित्यादौ पिके रूढः ॥ 188 ॥

[ कुण्ड ] पत्यौ॰ M. 3, 174 इत्युक्त्या जारजाते द्वयोः । परिमालकपादानामुत्सवे चोपयुज्यते । दर्वीबृसीपटलिकाकुण्डभाण्डकरण्डकमित्यादौ भाजने पात्रभेदे स्त्रीपुंनपुंसकेषु ॥ 189 ॥

वह्न्याधारे । क्रियाशक्तिस्तु वै कुण्डं ज्ञानशक्तिर्हुताशनः ॥ [ क्ष्वेडा ] वंशाङ्कुरे । क्ष्वेडाचर्वणतृप्तसिन्धुरवधूतर्षप्रहर्षापहः । सिंहनादे । एष॰ Mh. 2, 111 ॥ [ क्ष्वेड ] विषे शब्दमात्रे च । तस्य॰ Mh. 2, 110 ॥ 190 ॥

[ विपाठ ] इषौ । तत्र पेतुर्विपाठाः ॥ [ मण्ड ] द्रवे । मण्ड॰ Mh. 2, 124 । [ काण्ड ] तरुस्कन्धे । आदाय काण्डात्तरुमुज्जिहानम् । लतायाम् । Śi. 5, 50 ॥ 191 ॥

दण्डे । दोःकाण्डकण्डूजुषः । बाणे । आसील्लाघवमस्य शत्रुविजये कोदण्डकाण्डाहतौ । अर्वति कुत्सिते । Śi. 1, 38 c. Gaṇ. 45, 12 । वर्गे । षण्डे तरूणां मृगकाण्डमेतत् । अवसरे । H. Ch. 60, 6 । वारिणि गवेषणीयम् ॥ [ भाण्ड ] अश्वाभरणे पर्याणादौ । भाण्डत्रासी हयः । पात्रविशेषे । Ch. I, 54 । तरीषु॰ Śi. 3, 76 इत्यादौ मूलवणिग्धनोपचारात् ॥ 192 ॥

[ दण्ड ] तुर्योपाये दण्डनायके । पतिमथ कुलनारी दण्डभीत्याभ्युपैति Sp. 3734 । राजबले । दण्डेन पीडयति शत्रुसमूहमेषः । लगुडे । Ku. 2, 23 । मथि मन्थकाष्ठे । AK. 2, 9, 53 ॥ [ गुड ] गोले वर्तुले पिण्डे । भक्षितो वाप्ययोगुडः ॥ 193 ॥

[ पिण्ड । पिण्डी ] संघाते । Sp. 4952 । ग्रासे । Ra. 2, 59 । पिण्डीमात्रोपहतवदनस्ताडितोपि प्रचण्डमित्यादौ ग्रासोपचारात् । कलेवरे । Ra. 2, 57 ॥ [ गण्ड ] विस्फोटे । समाश्लिष्यत्युच्चैः पिशितघनगण्डौ॰ Su. 3388 ॥ [मुण्ड]

के शिरसि। आस्वादयामि यदि रोहितमुण्डखण्डम् । मुण्डिते कूप्रकचे। M. 2, 219 ॥ **194** ॥

स्थाणौ। व्यालैरा० Mh. 2, 125 । शाबलेयबाहुलेयखण्डमुण्डेत्यादावजातशृङ्गे गवि। अकृतचूडे। जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥ [ खण्ड ] शकले। खण्डेन्दुचूडामणिः। इक्षुभेदे। खण्डस्य षोडश पलानि शशिप्रभस्य c. AK. 2, 9, 44, C.। शाबलेयो बाहुलेयः खण्डो मुण्ड इत्यादौ स्फुटितशृङ्गके गवि द्वयोः। स्त्रियां तु खण्डेति ॥ **195** ॥

[ शौण्ड ] वृषभे। Bh. S. 88 । समर्थे। अक्षशौण्डः। मधुसक्ते। शौण्डः पिबति पानागारे ॥ **196** ॥

[ रण्डा ] विधवायाम्। पञ्चाक्षरी जयति रण्डिकया प्रयुक्ता ॥ [ अण्ड ] कठिने। खण्डी० Mh. 2, 108। मुष्के। निरण्डास्ते हयाः शूराः। खगादिकोशे। M. 1, 44। आदिग्रहणात्। अव्यक्तादण्डमभूदण्डाद्ब्रह्मेत्यादौ ब्रह्मकोशे ॥ [ क्रोडं ] उरसि। Sp. 1969 ॥ मुकुल० Sû. 2, a इत्यादावुपचारात् ॥ **197** ॥

[ पीडा ] द्वयोरपि। Bh. Ś. 56। कृपा हि परार्थे दुःखानुभवनम् ॥ [ नीड ] स्थानमात्रे। स बद्धकक्ष्यः परनीडपीडने। तत्रागत्य० K. K. S. 1, 61 इत्यादौ द्वयोरपि पुंनपुंसकयोः ॥ [ नाडी ] कायसिरायाम्। M. M. 158, 1। नाले पद्मादिषण्डे। आसेदुरुन्नाडिनि पुण्डरीके। षट्क्षणे काले घटिकाख्ये। नाडिकाविच्छेदध्वनिरुदचरत् ॥ **198** ॥

[ शुण्डा ] सुरायां तत्पानमदस्थाने च। शुण्डायां० Mh. 2, 125। वक्त्रैकदेशे चिबुके। शुण्डा० Mh. 2, 126 ॥ [ गडु ] कुब्जे। असौ गडुर्जानुनिविष्टहस्तः। पृष्ठगले। गडुलश्चापलमाचरत्यसौ ॥ **199** ॥

रोगे। यद्येत्रमन्तर्गडुना कोऽर्थः स्यात्स्थायिनात्मना ॥ [ चण्ड । चण्डी ] ओषधिभेदे महेश्वरगणे च प्रसिद्धः। कोपने। Dhv. 77, 2 c. Vik. 130। देव्याम्। चण्डश्चण्डीपतेरंशः c. Mh. 2, 134 ॥ [ षण्ड ] गोपतौ वृषभे। हालिकः षण्डमारुह्य। वह्न्यादिसंचये। जम्बूषण्ड० Me. 20 ॥ **200** ॥

[ व्याड ] व्यालास्ते॰ Su. 1007 c. Bh. Ś. 83 इत्यादौ लडयोरेकत्वस्मरणात् सर्पे । मांसात्पशौ क्रव्यादे श्वसृगालादौ । व्याडैर्व्याप्ते वनान्तरे ॥ [इडा] इडामुदहरत्क्रोड इत्यादौ भूमौ । इडाभ्या गौः पयस्विनीत्युक्त्या गवि । वाचि । व्रीडादिडां नैव ददाति वीरः । अप्सरसि । ऐडः पुरूरवास्तत्र ॥ [ प्रकाण्ड ] तरुस्कन्धे । कण्डूयमानः सरलप्रकाण्डान् ॥ 201 ॥

[ सपिण्ड ] पुत्रे । सपिण्डः पितृदायादः । दायादे । एकाहस्तम ----- --तु वै पितुः ॥ [ शिखण्ड ] बर्हे । Ra. 1,39 । चूडायाम् । Ra. 11, 5 ॥ [ पोगण्ड ] विकलाङ्गे । पोगण्डाः संभवन्ति ते । बालश्चा षोडशाद्वर्षात्पोगण्डश्चाभिधीयत इत्युक्त्या बाले ॥ 202 ॥

[ दृढ ] शक्ते । उदीर्णे रागाग्नौ सुदृढघनमाश्लिष्यति वधूरित्यादौ c. Sp. 2596 । स्थूले व्यायते । कस्ते स्याद्दृढघातकस्य समरे प्रत्यक्षवर्ती रिपुः ॥ [ व्यूढ ] विन्यस्ते विपुलीकृते । अनूर्ध्वज्ञुर्व्यूढजानुर्जुहुयात्सर्वदा हविः Śâṅkh. Gṛihy. 1, 10 । संहते घने । Ra. 1, 13 ॥ [ मूढ ] जडे । मूढे नास्ति मतिः क्वचित् । तन्द्रिते अलसे । किं॰ Mh. 2, 128 ॥ [ रूढ ] अङ्कुरिते । निरूढव्रीहयः शष्पम् । लग्ने । Su. 1617 c. Sp. 4554 ॥ रूढे॰ Ra. 13, 73 इत्यादौ लग्नत्वोपचारात् ॥ 203 ॥

[ बाढ ] भृशेत्यर्थे । बाढमाविद्धकर्णः । प्रतिज्ञायाम् । आं बाढं क्रियते भवद्भिरुचितम् ॥ [ लीढ ] स्वादिते । लीढं मधुकरैर्मधु । श्लिष्टमीषद्यचक्तम् । लीढमद्य व्याख्यानं जातमित्यादौ ॥ [ गाढ ] विलोडिते । नौभिर्विगाढां सरयूं विलोक्य c. Ra. 14, 30 । दृढे । Pa. 3683 ॥ 204 ॥

[ उदूढ ] उदूढा [sic] धृतो विवाहितश्च । पृथुलेन्वेष्यः ॥ [ उद्गाढ ] भृशे । Sû. 8 । कृच्छ्रे । निदाघोद्गाढसंताप॰ c. Su. 1693 ॥ [ उपोढ ] ऊढमात्रे । Sp. 1311 । समासन्ने । उपोढपाणि॰ c. Ku. 7, 4 ॥ 205 ॥

[ आषाढ ] व्रतिदण्डे । Ku. 5, 30 । मासे प्रसिद्धः । भूधरभेदेपि ॥ [ आलीढ ] श्लिष्टे । वत्सालीढं भाष्यम् । स्पृष्टे । Ra. 2, 37 । आस्वादिते । आलीढं मधुसर्पिषा सह कथम् । धानुष्कस्थानभेदे । Ra. 3, 52 ॥ 206 ॥

[ अध्यारूढ ] संदेवाके । अध्यारूढं तु तं विद्यात्स परीक्ष्यः प्रयत्नतः ।

पृष्ठगते उपरिस्थानं प्राप्ते । गगनमध्यारूढे सवितरि ॥ 207 ॥

[ भ्रूण ] द्वयोरपि । M. 8, 317 ॥ [ बाण ] बलिद्वेते । Kâd. I. v. 2 । देवभेदे । बाणलिङ्गे॰ Mh. 2, 148 । बाणीयबाणी यदि कर्णगोचरेत्यादौ वाचि स्त्रियाम् । दासीकुरण्टको वृक्षभेदः ॥ 208 ॥

[ कण ] अल्पे । Ra. 1, 85 । विप्रुषि । Suv. 37, 7 । अतिसूक्ष्मधान्यांशे । Su. 2446 ॥ [ कर्ण ] संसारवारांनिधिकर्णधार इत्यादावरित्रे लोके खेडाशब्द-वाच्ये । श्रुतौ । Sâ. 22 । राजभेदे । षड्भिः कर्णो निपातितः ॥ 209 ॥

[ गण ] प्रमथे । Ku. 1, 55 । संख्याभेदे । विवेक्तारो येषां दिशि दिशि गुणानां गणतया ॥ [ पण ] ग्लहे द्यूतार्थे धने । कोलिद्यूतपणीकृतो विहरता पूतः स बिम्बाधरः । अशीतिः श्वेतिकाः पण इत्युक्त्या श्वेतिकामाने वराटकपरि-च्छेदे । मूल्ये । दश कार्षापणाः पणः । कार्षापणे रूपकद्वये । नातिरिक्तोधिका-रोस्ति सार्धात्पणसहस्रतः । धने गवादौ स्वे बहुधन आपणिक इत्यादौ ॥ 210 ॥

द्यूतादौ कल्पिते संध्यर्थं मुद्रिकादिदाने । पणबन्ध॰ Ra. 8, 21 । पणो बध्यतेस्मिन्निति पणबन्धः संधिः । बद्धमुष्टौ मुष्टिगृहीतशाकादिपरिमाणे । नात्तुं शाकपणो रटन्न चलति द्वारान्धनी संततम् । भृतौ वेतने प्रसिद्धः । पण्यवनिते-त्यादौ ॥ [ गुण ] रज्जावुत्कर्षे च । H. Ch. 49, 2 c. Sp. 7617 । आदौ यस्य गुणास्ततः किल च येत्यादौ तन्तुषु राजसाधर्म्यात् । मौर्व्याम् । Su. 2455 । गुणाः खलु गुणा एवेत्यादौ द्वितीयो गुणशब्दः प्रधाने s. Su. 2672 । गुणवति यौवनशालिनीत्यादौ रूपादौ द्रव्याश्रिते सर्वत्र । आदिग्रहणाद्बुद्ध्यादौ । कणादोक्ते सत्त्वे निविशत इत्यादौ लौकिके च शुक्लादौ । सूदे भक्तकरे । AK. 2, 9, 28 । धृतराष्ट्रो गुणप्रिय इत्यादौ c. Vâs. 15, 1 । अत्र हि विरोधाभासे गुणशब्देन विराट-गृहे भक्तकरावलम्बी भीमसेनो विवक्षितः । इन्द्रिये । Bhag. 3, 29 ॥ 211 ॥

भागे । Ra. 2, 25 । भाण्डेन्वेष्यः । शौर्यादौ । Ra. 1, 22 । सत्त्वादौ । Kâd. I. v. 1 । संध्यादिके । Ra. 8, 21 ॥ [ क्षण ] निर्व्यापारस्थितौ । किं न कुर्वन्ति सक्षणाः । कालविशेषे । Śi. 4, 17 । उत्सवे । क्षणे रक्ष्याः कुल-स्त्रियः ॥ क्षणं॰ Śi. 1, 4 इत्यादौ प्रकरणमाहात्म्यान्नृत्तोत्सवे ॥ 212 ॥

[ वर्ण ] गुणे । Ra. 11, 2 । लब्धो वर्णो गुणो यैस्ते लब्धवर्णा विद्वांसः ।

स्वगुणो० Śi. 16, 29 इत्यादौ तु स्पष्ट एव गुणे वर्णशब्दः । व्रते । Ki. 1, 1 । यशसि । अवर्णवादाङ्कुशमुद्विजेन्न कः । शुक्लादिकेपि । दुर्वर्णतामेति च दुर्जनस्य N. Ch. 1, 14; Su. 168 । ब्राह्मणादौ । Ra. 5, 19 । विलेपने । वर्णितं मुखमेतस्याः । कुथायाम् । वर्णास्तरणोपविष्टः । गीतप्रसङ्गे । Ku. 5, 56 । रूपे । Ku. 3, 28 ॥ **213** ॥

[ स्थूणा ] शस्त्रमयः स्त्रीविशेषः सूर्मी यस्यां प्रतप्तायां गुरुतल्पगेन प्रायश्चित्तं चर्यते ॥ [ तृष्णा ] इयेपि । Sp. 4089 ॥ **214** ॥

[ तीक्ष्ण ] विषे क्लीबे । तीक्ष्णेन नीतः क्षयमित्यवैमि । आजौ । तीक्ष्णेषु शत्रुहननप्रयतस्य तस्य । लोहं शस्त्रम् । अभिसरे । यदि तत्र तीक्ष्णाः संचरेयुः । अभिसरो जीवनिरपेक्षश्च । अभिसरो मरकं युद्धं चेत्यन्ये । खरे । Śi. 2, 109 ॥ [ मणि ] अलिञ्जरो घटः । क्रमादपामपि मणौ पङ्कोवश्यं प्रवर्धते । उत्तिष्ठेत यथाकालं मलानां शोधनं प्रतीत्यादौ ॥ रत्ने । Sp. 4657 । अजागलस्तने । अजामणेरिवैतस्य जन्म जातं निरर्थकम् c. Sp. 3120 ॥ **215** ॥

[ कृष्ण ] बीभत्सुरर्जुनः । कृष्णद्वैपायन इत्यस्य कृष्णशब्दस्य भीमोपि भीमसेन इति न्यायेन व्यासे प्रयोगः । अथ द्वैपायनशब्देनास्य चण्डश्चण्डीपतेरंशो मुनिर्द्वैपायनोस्तु वः । रथयोजितगोविन्दो रुक्मिणीकः सदा मुदे ॥ इत्यादौ दुर्वाससस्यपि वर्तनात्कृष्णशब्देनैव व्यासवाचिना विशिष्यते द्वैपायनशब्दः ॥ वर्णे । कृष्णस्ते करपुष्करोदरतले खड्गः सदा जृम्भते । तम० V. S. 4 इत्यादौ पापेपि मालिन्योपचारात् । द्रौपद्याम् । V. S. 22 ॥ **216** ॥

[ कोण ] वीणावादनोपायेश्रौ च । H. V. 1, 9 । लगुडे । उद्गीर्णकोणरभसादरविद्रुतस्य ॥ [ शोण ] नदे । हिरण्यवाहनामानं शोणमद्राक्षीत् c. H. Ch. 22, 2 । लोहिताश्वे । शोणलङ्घितरणाजिरस्य ते ॥ **217** ॥

[ प्राण ] बले । भावात् [?] प्राणः कुतस्ते । वायुः शरीरस्थः प्राणः । समानोदानव्यानाश्चेत्युक्त्या । भ्रुवो० Bhag. 8, 10 इत्यादौ । असुषु जीवेषु । Bh. Ś. 102 ॥ [ घृणा ] इयेपि । चेतसि घृणा काये च यस्यानिशम् ॥ [ श्रेणि ] कुले प्रसिद्धः । आवलौ । R. K. 1, 1 ॥ **218** ॥

[ पार्ष्णि ] पादग्रन्थेर्गुल्फस्याधोभागे । Ku. 1, 11 । वाहिनीकटौ । Ra. 4, 26 ॥ [ जिष्णु ] शक्रे । जिष्णुना विजिते वृत्रे ॥ **219** ॥

[ द्रोण ] काकभेदे । द्रोणैराश्रितगह्वरे ॥ [ द्रोणी ] काष्ठाम्बुवाहिनी दीर्घा नौवाहनार्थं दण्डः । गवाद्यन्नादिभाजने । सुरभिसलिलपूर्णां द्रोणीमवततार ॥ 220 ॥

नीलिनी ओषधिभेदः । गुहायाम् । कुर्वाणो रुधिरार्द्रचञ्चुकषणैर्द्रोणीरिवाद्रे-र्नेवाः ॥ [ वेणी ] नदीस्रुतौ । Me. 29 । केशकलापे । Ku. 2, 61 ॥ [उष्ण] त्रयेपि [ sic ] । अत्युष्णमुष्णाभिगमे हि देहादुष्णं वमन्नुष्णमनाः स जिष्णुः ॥ 221 ॥

[ अणु ] अल्पे । Bhag. 8, 9 ॥ [ चूर्ण ] धूलौ । Me. 67 । क्षारभेदे ताम्बूलोपकरणे । न विना चूर्णं रञ्जयति ॥ चूर्णरञ्जितचलालकावलिरित्यादाव-धिवासके कर्पूरादिक्षोदकृते द्रव्यविशेषे नपुंसके बहुत्वे च । चूर्णानि वासयोगाः स्युरिति चामरसिंहः AK. 2, 6, 134 ॥ 222 ॥

[ आणि ] अक्षस्य रथनाभिक्षेप्यकाष्ठस्यान्ते बन्धार्थं कीलक आणिः । आणीमाण्डव्य इत्यादौ । अश्रिः कोणः ॥ [ रण ] क्वाणे । कर्षन्ति॰ Mh. 2, 149 । मृधे । Ra. 12, 72 ॥ [ क्षुण्ण ] प्रहते । Ku. 2, 43 । दक्षे । क्षुण्णाः शास्त्रेषु सर्वेषु ॥ 223 ॥

[ शाण ] मानभेदे माषके । सुवर्णशाणं च लोमशसूत्रेण वेष्टयेत् । कषे । Su. 3457 । कषतेस्मिन्निति कषः कुरुविन्दाख्यो द्रव्यभेदः ॥ [ स्थाणु ] उभयत्रापि । तस्मै जगत्तरुध्वंसस्थाणवे स्थाणवे नमः ॥ 224 ॥

[ वरण ] प्राकारे । प्रोत्तुङ्गवरणावृतः । स्वीकृतौ । कन्यावरणमिच्छन्ति । रोधे । कृतवरणान्प्रविमुच्य मारुतान् ॥ 225 ॥

[ धोरणी ] पङ्क्तौ । जलधरजलधाराधोरणीधौतमूर्धा c. Vik. Ch. 13, 86 । वाहने युग्यभेदे सर्वस्मिन् स्थितौ नपुंसकलिङ्गे । धोरणं वाहनं पत्रमित्यमरसिंहः c. AK. 2, 8, 58 ॥ 226 ॥

[ ग्रामणी ] नापिते प्रसिद्धः । श्रेष्ठे । Bâ. III, 10 । ग्रामाधिपे । ग्राम-णीदुहितृपाविते तले ॥ [ हरिणी ] हेमप्रतिमायाम् । हरिणीभिर्हतस्तम्भा भान्ति पूर्वं न देवताः । हरिणीर्ब्रह्मवर्चसकाम इत्यादौ हरितायाम् ॥ 227 ॥

[ हरिण ] पाण्डौ । हरिण॰ Mh. 3, 223 ॥ [ विपणि ] पण्याध्वा हट्टप्र-देशेन जनानां मार्गः । हट्टो वणिक्स्थानम् । द्वयेपि । पूर्णापणं विपणिनो विपणिं विभेजुः c. Śi. 3, 24 ॥ 228 ॥

[ ग्रामीण ] ग्राम्ये । ग्रामीणैः पुनरध्वगस्य वसति॰ Sp. 3158 ॥ [करेणु] इभ्याम् । Ku. 3, 37 ॥ [ द्रविण ] बले । उपोढबाहु॰ Ra. 18, 13 । धने । Bh. Ś. 5 ॥ **229** ॥

[शरण] गृहे । प्रविशेदग्निशरणमुद्धृते दक्षिणे करे । रक्षितरि । शरणमसि संश्रयो ऽसि गतिरसि ॥ [ प्रोक्षण ] वधे । प्राणप्रोक्षणकेतनेत्र विजने किं भीरु बम्भ्रम्यसे ॥ [ प्रमाण ]हेतौ ज्ञप्तिनिमित्ते । प्रत्यक्षं चानुमानं च [sic] M. 12, 105 । मर्यादायाम् । राजानं मां च प्रमाणं कृत्वा वयस्याकुशलं पश्यसि । प्रमाणव्युत्पादके शास्त्रे । पद॰ Mh. 3, 204 । इयत्तायाम् । कियत्प्रमाणमुदकम् । प्रमातरि । साहित्यमाणिक्यविदः प्रमाणम् ॥ **230** ॥

[ करण ] साधकतमे । सुभगः करणैर्मन्त्रैः । क्षेत्रे । ग्रन्थिपर्णकरणेषु विचेरुः । गात्रे शरीरे । Ku. 4, 5 । इन्द्रिये । Ra. 2, 11 । क्रियाभेदे । स्पष्टं [sic] करणं स्पर्शानाम् c. Ath. Prât. 1, 29 । चेतोहराणि करणानि गणाधिनाथा इत्यादौ नाट्यशास्त्रोक्ते । संवेशनं करणमेत्य विभेदि वस्त्वित्यादौ कन्दर्पशास्त्रोक्ते कार्ये । कायस्थकर्मणि लेख्यादौ । आक्षपटली समस्तकरणपरिवृतः ॥ **231** ॥

[ निर्वाण ] निर्वृतौ । निर्वाणमेति न मनो विषयेषु सक्तम् । शान्तिमोक्षयोः । Ra. 12, 1 । इभमज्जने । निर्वाणमापि सरसीषु गजाधिपेन । शान्ते । Ku. 2, 23 ॥ [ इन्द्राणी ] तथैवमिन्द्राण्यपि पार्श्वयोः स्त्रियाः समास्थितोर्वोः प्रियजानुयोजनादित्यादिलक्षण इन्द्राणी कामशास्त्रोक्तं करणम् ॥ **232** ॥

[ काकिणी ] वराटके श्वेतके । असिधाराक्रयक्रीता वरमेकापि काकिणी । अशीतिः श्वेतिकाः पणः । तस्य चतुर्भागः c. 210 । मानभेदे प्रसृतिमध्ये । दरिद्रः काकिणीं दद्यात् ॥ [ सरणि ] पङ्क्तौ । सरणिः पिपीलकानां निर्याता वर्षसूचनं कुरुते ॥ अपवर्गसिद्धिनगरस्य सरणिरिव ते वधूरत इत्यादौ मार्गे ॥ **233** ॥

[ तर्पण ] सक्तौ । पेयाः स्युर्लाजतर्पणाः । तृप्तिः सौहित्यम् । बृंहणं वातव्याधुद्देशेन स्निग्धौषधदानम् । पोषणे । कुर्याद्ब्राह्मणतर्पणम् । पित्राद्युद्देशदाने । आन्त्रिकवासाः स्थलगो न कुर्यात्तर्पणं बुधः ॥ [ पारणा ] व्रतभोजने । Ra. 2, 39 ॥ **234** ॥

[ पारण ] कर्मान्ते । समीहितं संगरपारणेन ॥ [ धर्षण ] द्वयोरपि । अविरतधर्षणरसिकः खल इव वेश्याजनो जगति ॥ [ दक्षिण । दक्षिणा ] अनुकूले श्रद्धादेये च । Śi. 14, 33 । ऋजौ । Ra. 1, 31 । निर्दिश्यमानविषयं ह्यानुकूल्यम् । आर्जवं तु सर्वविषयम् । दक्षिणदिग्भवे । Ku. 8, 25 ॥ **235** ॥

दिग्भेदे । M. 2, 52 । सव्यहस्ते । धर्मविद्दक्षिणं पाणिं नाधश्शौचे नियोजयेत् ॥ [ अरुण ] सांध्यरागे । Ra. 5, 71 । सूर्यसूते । अरुणसारथिरेष समुद्गतः । दिवाकरे । Sp. 562 ॥ **236** ॥

शोणे । परिरमणम° [sic] R. K. 2, 23 । अव्यक्तरागे अस्फुटलौहित्ये ॥ [ लक्षण ] नाम्नि । Ra. 6, 71 । चिह्ने । श्रीलक्षणोत्सङ्गविनीतवेशः ॥ [ श्रवण ] नक्षत्र° Kâd. 11, 13 इत्यादौ नक्षत्रेपि । श्रुतिकर्णयोः । Kâd. I., v. 14; c. Ujjv. Uṇ. IV., 233 ॥ **237** ॥

[ श्रवणा ] श्रावण्याम् । श्रवणायां ददातु ये ॥ [ धिषण । धिषणा ] द्वयेपि । सुविमलधिषणो धिषण इव ॥ [ वरुण ] अप्पतौ । Ra. 9, 6 ॥ [ हरण ] यौतके सुदायादिप्राये आयाते वस्तुनि । सत्त्वानुरूपं हरणीकृतश्रीः c. Ra. 7, 29 v. l. ॥ **238** ॥

[ निर्याण ] निर्गमे । ततो° Mh. 3, 200 ॥ [ कल्याण ] द्वयेपि । त्वया वितीर्णं कल्याणमस्तु देव तदेव ते ॥ [ सुवर्ण ] सुवर्णस्य सुवर्णस्य सुवर्णस्य वरानने । प्रहितं तव रामेण सुवर्णस्याङ्गुलीयकमित्यादौ द्वयेपि तन्माने षोडशमाषके ॥ [ ग्रहण ] धने । द्विगुणं ग्रहणम् । सा राहुमूर्तिरिव न ग्रहणं जहातीत्यादौ द्वये वेश्यादिभाटके सोमादिग्रहे च ॥ **239** ॥

स्वीकारे प्रसिद्धः । वन्द्यां हठहृतस्त्रियाम् । ग्रहणीकृतरिपुलक्ष्मीः । आदरे । Ku. 7, 35 ॥ [ कङ्कण ] मण्डलं यागाद्यर्थं नानावर्णो रेखासंनिवेशः । रक्षाकङ्कणबन्धबन्धुररुचिरित्यादौ सूत्रे ऊर्णादिमये रत्नाढ्यकरभूषणे ॥ **240** ॥

[ कारण । कारणा ] घातने यातनायां च । कारणोपहितमानसस्य ते कारणा निरयवह्निषु स्थिता । हेतौ । किं कारणं नु कविराज मृगा यतेते [sic] c. V. A. 11, 6 । करणे साधकतमे । भक्ति० Mh. 3, 188 ॥ [ मार्गण ] बाणे याचके च । Su. 2455 । मार्गणाभिः किमाभिरित्यादौ याचने स्त्रीनपुंसकलिङ्गः ॥ **241** ॥

[ चरण ] वृक्षादिमूले । चरणसेकविवर्धितवृक्षकः ॥ शिष्यद्वयेनेव नूपुरयुगेन वाचालितचरणा H. Ch. 9, 6 इत्यादौ प्राण्यङ्गे पादे बह्वृचादिके शाखाविशेषे चरणशब्दः शाखानिमित्तकः पुरुषेषु रूढः ॥ [ तरुण ] तरुणारुणरागभाजीत्यादौ नूतने । यूनि । R. K. 2, 22 ॥ [ तरणि ] अर्के नावि वा । दारिद्र्योदधितरणिः सरणिर्निःश्रेयसस्य नित्यमसि ॥ **242** ॥

[ ब्राह्मणी ] विप्रश्च विप्रा च तयोर्द्विलिङ्गः ॥ [ प्रवेणी ] द्वयेपि । प्रवेणी मदनस्येव प्रवेणी कुसुमाञ्चिता ॥ [ रोहिणी ] नक्षत्रे । तां रोहिणीं विजानीहि ज्योतिषा मित्रमण्डले [sic] c. V. K. 4, 2, 7, C. । गवि । रोहिणीविपुलापीनस्तुतिसिक्तोटजाङ्गने ॥ **243** ॥

[ दुर्वर्ण ] द्वयोः । N. Ch. 1, 14; Su. 168 ॥ [ भरण ] वेतनं जीविकाभरणं भृतिः पूरणम् ॥ [ विषाण ] पशुशृङ्गे । Ra. 9, 62 । इभदन्ते । Śi. 4, 63 ॥ **244** ॥

[ प्रवण ] क्रमनिम्नोर्व्याम् । प्रागुदक्प्रवणा भूमिः श्लक्ष्णा यागे प्रशस्यते । प्रह्वे । शंभोर्भक्तिप्रवणमुकुटा । अनयोस्त्रिषु । चतुष्पथे । प्रवणे चरन्ति भूताः ॥ [ संकीर्ण ] निचितं व्याप्तम् । अशुद्धे । संकीर्णे चरति काकपदैव काकवर्गः ॥ [ इरिण ] द्वयेपि । संसारे° Mh. 3, 182 ॥ **245** ॥

[ रोहण ] रोपणे । कामास्त्रव्रणरोहणं मृगदृशो बिम्बाधरस्यामृतम् । रूढौ । स्नेहरोहणमसत्सु दुर्लभम् । रत्नसंभवहेतौ पर्वतविशेषे । साहित्यसिन्धुशिशिरांशुरशेषशास्त्रसेवावदातमणिसंचयरोहणाद्रिः ॥ [ धारणा योगिकर्मणि । पञ्च चञ्चलगतीन्समीरणान्धारणाभिरभितो निरुद्धवान् । साम्ये । ] धारणायां स्थितो लोकः ॥ बुद्धिरद्भुतशतस्य धारणीत्यादौ धारके त्रिषु ॥ **246** ॥

[ वारण ] वृत्तिघाते । विषयाकृष्टमनसः शक्यते वारणं कथम् । वारके गजे च । Sp. 227 ॥ [ चारण ] देवभेदे । सिद्धचारणगणैरधिष्ठिते । विटे । चारणगणैरारब्धहास्याकुले ॥ **247** ॥

[ सारणा ] स्वरसंस्थाने । रचयति परिपाकं सारणा गीतमार्गे ॥ [ सारणी] अल्पसरिति । सारणी ग्रन्थिपर्णम् ॥ [ करुण ] दीने विच्छाये । स्थिराल्पतारां करुणेन्दुमण्डलाम् c. Ra. 3, 2, v. l. ॥ **248** ॥

[ समीरण ] वायौ । Ku. 3, 21 ॥ [ आरोहण ] सोपाने । आरोहणेषु० Mh. 4, 75 । उद्गमे । Ku. 1, 39 ॥ [ आस्तरण ] द्वयेपि । आस्तीर्णबाला-स्तरणेषु धन्याः ॥ 249 ॥

[ विलक्षण ] व्यर्थसंस्थायां निरर्थके चेष्टिते । दृष्टिविलक्षणतया तत्र शून्य-भावमाख्याति । विश्लिष्टे । सदसि तत्र बभूव विलक्षणा । अन्यस्मिन् तस्मा-द्व्यतिरिक्ते । मूर्खोपि साधुसंपर्कात्पणितान्न विलक्षणः ॥ 250 ॥

[ विहरण ] व्यादाने विकासे । Pâ. 1, 3, 20 । प्रापणे देशाद्देशान्तरनय-ने । भग्नेर्विहरणं कृत्वा । क्रीडने । वनविहरणलग्नप्रीतयस्ते मुनीन्द्राः ॥[संसरण] प्राण्युत्पादे पुनर्भवे । तस्मिन्संसरणे विवेकविषदो यातो गतिं सज्जनः । असंबा-धचमूगतौ असंकटे सेनागमे । एत० Mh. 4, 91 ॥ 251 ॥

घण्टापथे राजमार्गे । यान्ति द्रुतं संसरणेषु योधाः ॥ [ समुद्धरण ] वान्ता-न्ने भुक्तोज्झिते । अस्मत्समुद्धरणलब्धधृतेस्तवैष गर्वः कथं वद सखे ननु निस्त्र-पोसि । उन्नये उत्क्षेपे । देवः समुद्धरणधीरमतिः परेषाम् c. V. A. 44, 21 । एतच्च उद्धरणापेक्षया चतुरक्षरमध्ये क्षिप्तम् । यद्वृत्तिर्यस्योद्धरणमिति लोकप्रसिद्धि-रिति पञ्चाक्षरमध्येपि द्रष्टव्यम् ॥ [आवरण] वस्त्रे आच्छादने च । Ra. 13, 8 v. l. । अजीर्णे अर्गले च । गुर्वावरणनिषिद्धा न रुचिर्भक्तेपि नारीणाम् ॥ 252 ॥

[ प्रकरण ] प्रस्तावे । प्रकरणकथितं वाक्यं भवति हि निष्पत्तये पुंसाम् । कीर्णे प्रक्षेपे । पुष्पप्रकरणरुचिरे ॥ [ निरूपण ] दृष्टौ चर्चायां विचारे च । उपरागस्य निरूपणं न कार्यम् ॥ [ विदारण ] लज्जायां भेदे च । हृदयविदारण-कृद्भूत् ॥ 253 ॥

[ परायण ] आश्रये । Ku. 4, 1 । अभीक्ष्णे भर्त्सने चान्वेष्यम् ॥ [ पारायण ] समासङ्गे समाश्लेषे । M. Ch. I, 14 । कात्स्न्यें । धातुपाराय-णादिषु c. Kâś. I., v. 1 ॥ 254 ॥

[ प्रविदारण ] द्वयेपि । बिभ्यति प्रविदारणात् ॥ [ परिभाषण ] सनिन्दो-पालम्भे । बाला अपि प्रवर्तन्ते कृतेपि परिभाषणे । अनियमेन उक्तौ यो नियमस्त-त्परिभाषणम् ॥ 255 ॥

[ अधिरोहिणी ] निःश्रेण्याम् । स्वर्गाधिरोहिणीमेतां चक्रे क्रतुपरंपराम् । अभिनिवेशे । नो दृष्टाय न दृष्टाय स्यादवस्त्वधिरोहिणी ॥ [ अधिरोहण ] ऊर्ध्वगतौ । शैलाधिरोहणं कार्यम् ॥ 256 ॥

[ अपवारण ] छदिः पटलम् । प्रवृत्तिघात इन्द्रियादीनाम् c. Kâś. Pâ. 1, 4, 27 । अन्तर्धिराच्छादनम् ॥ [उदाहरण] अभिधाने । Ku. 6. 65 । निदर्शने । Śi. 2, 33 ॥ 257 ॥

[ सत् ] सत्ये । यदेवार्थक्रियाकारि तदेव परमात्मसत् । अभ्यर्हिते । Ku. 1, 12 । साधौ । असन्तो नाभ्यर्च्याः c. Su. 280 । विद्यमानप्रशस्तयोः । Su. 3161 ॥ [ सती ] दक्षपुत्र्याम् । Ku. 1, 21 ॥ [ भृति ] भरणे । कुक्षेर्यावदमी भवन्ति भृतये c. Sp. 7337 । वेतने । भृतिग्रहणमेवैषां फलं मुख्यम् ॥ 258 ॥

[ धूर्त ] सर्वत्र । धूर्तप्रियस्य किमसाध्यमिहेश्वरस्य ( c. Pa. 1058 ) ॥ [ खात ] वाप्यां रोपिते च । सद्रूक्षैः खाततटेषु खातैः । विदारिते । खाते पुष्पशरेण तस्य हृदये शान्तः प्रविष्टः सुखम् ॥ 259 ॥

[ सेतु ] सीमनि मर्यादायाम् । Ra. 16, 2 । तरणोपाये । समुत्तरणसेतवे ॥ [ लता ] प्रियङ्गुर्गन्धप्रियाङ्गुरिति प्रसिद्धौ । वीरुत्समया लता ॥ 260 ॥

सरिकायाम् । चतुःषष्टिलतो हारः । आदिग्रहणादाभरणान्तराणाम् । वृक्षसूक्ष्मावयवे । Ra. 2, 8 ॥ [ प्राप्त ] प्रसक्ते । प्राप्तमितो गमनं वा । आसादिते । Pa. 3668 ॥ [ आप्त ] संप्राप्ते । Su, 3264 । बान्धवे । आप्तैः सुहृद्भिरपि संप्रथितप्रभावैः ॥ 261 ॥

अविसंवादके । Ra 3, 12 ॥ [ पतत् ] पक्षिणि । Ra. 13, 19 । गच्छति । Ku. 8, 21 v. l. । अधो लुठति । Śi. 1, 12 ॥ [ यन्तृ ] हस्तिपके । Śi. 5,47 । सूते । M. St. 18 ॥ [ भर्तृ ] पत्यौ स्वामिनि । Ku. 3, 22 । वरे । Ku. 7, 83 । तत्रोपासितलोकभर्तरीत्यादौ धारकेपि ॥ 262 ॥

[ प्रेत ] सत्त्वान्तरे । M. M. 174, 1 । मृते । Ra. 11, 16 ॥ [मुक्ति] निर्वाणे । S. P. 19 ॥ 263 ॥

[ त्रेता ] युगविशेषे । त्रेतायां ज्ञानमुत्तमम् c. M. 1, 86 ॥ [ लिप्त ]

अञ्चिते दिग्धे। K. Pr. 98, 3 ॥ [ केतु ] ग्रहभेदे। एकोत्तरं केतुशतम्। ध्वजे। Śi. 5, 13 ॥ [ सुत ] पार्थिवे। असौ सुतः पालनबद्धकीर्तिः। तनये। Śi. 1, 13 ॥ **264** ॥

[ क्षत्तृ ] सारथौ। क्षत्तारं पुरुहूतस्य। द्वाःस्थे। अनेकक्षत्तृसंकुलम् ॥ [ धातु ] श्लेष्मादौ। धातवोस्य स्थिरा बुद्धिः। अस्थिरक्तादौ। Sp. 4180। महाभूतेषु। षडुक्तालोकनालोका धातवो विश्वधारणात्। तद्गुणाः शब्दादयः ॥ **265** ॥

इन्द्रियेषु। धातुपाटवमपेक्ष्य तिष्ठते। अश्मविकारे मनःशिलादौ। Ku. 1,7। शब्दयोनौ। Ra. 12, 58 ॥ [ शक्ति ] कास्वामायुधभेदे। H. Ch. 4, 6। सामर्थ्ये। Bh. Ś. 41 ॥ [ मूर्ति ] काठिन्ये। अद्रवं मूर्तिमत्स्वाङ्गम् Kâś. Pâ. 4, 1, 54। काये। U. R. 9, 4; M. M. 307, 2 ॥ **266** ॥

[ अर्ति ] पीडायाम्। शिरोर्त्यजीर्णज्वररोगशान्तये। धनुष्कोट्याम्। संग्रामे° Mh. 2, 156 ॥ [ साति ] दाने। यज्ञे धेनुसहस्रसातिरभसात्संपूर्णकीर्तिर्भुवि। अवसाने। संसारसातिकरुणप्रवणस्य शंभोः ॥ [ प्राप्ति ] उदये उत्साहे। प्राप्तिः कस्य न साधुसंगमवशाच्छीघ्रं भवे जन्मिनः। अधिगमे आसादने। Nâg. 12 ॥ [ ईति ] डिम्बे उपप्लवे। Ra. 1, 63। प्रवासे। ईतिवर्धितवियोगपीडया ॥ **267** ॥

[ हेति ] रवेरर्चिषि वह्निज्वालायां च। उदिते सहस्रहेतौ वह्नेर्हेतिर्न दृश्यते क्वापि। शस्त्र आयुधे। Śi. 9, 15 ॥ [ धूत ] त्यक्ते। धूतः पापः समीरैः। कम्पिते। Ku. 8, 25 ॥ [ भूति ] सुधायां मक्कोले। Me. 19 ॥ **268** ॥

[ श्रुति ] श्रवसि कर्णे। श्रुतिसुखं गायन्ति गुञ्जद्विरः। वेदे। Ra. 2, 2। स्वरांशे मन्थके। Śi. 11, 1। श्रवण आकर्णने। श्रुतौ बद्धरतिः ॥ [ श्रुत ] शास्त्रे। एष श्रुते परिचितः। अवधृते। Bhag. 2, 52 ॥ [ कृत ] युगभेदे। M. 1, 86। पर्याप्ते। Bh. Ś. 9 ॥ **269** ॥

[ वार्त्त ] निःसारे। वार्त्तमेतदुदितं वृथा त्वया। आरोग्ये। Ra. 5, 13। अनयोः क्लीबे। नीरुजि। वार्त्ताः किं किं न भुञ्जते। अनुद्वेगो वार्त्तलक्षणानामिति चाप्याख्यायः [?]। वार्त्ता शरदि केरय [sic] इत्यादौ वृत्तिमति जीवि-

कायुक्ते । वार्त्ताकेपि भवेद्वार्त्ता इति शाश्वतोक्त्या वार्त्ताके c. Śâśv. 748 । वर्तने । जीवने तस्य वार्त्ता का वार्त्ताका यस्य भोजने । त्रिंशद्यस्य न वार्त्ताका वार्त्ता का तस्य भोजने ॥ उदन्ते वृत्तान्ते । भूतानि कालः पचतीति वार्त्ता c. Sp. 1688 । पाशुपाल्यादिके । Ra. 16, 2 । विद्यायां तूपचारात् ॥ **270** ॥

[ वृत्त ] नैरध्ययने वृत्तमिति वचनादध्ययने c. Pâ. 7, 2, 26 । वृत्तं श्लोक इति यथा । बहुवृत्तान्तगामिनीत्यादौ पद्ये c. H. Ch. 4, 1 । चरित्रे । Sp. 6250 । वर्तने । ऋतेन वृत्तं प्रवदन्ति मोक्षम् । वृत्तमुञ्छशिलम् [ sic; c. Mh. 2, 194 ] । मृते । वृत्तास्ते क्षितिपाः प्रतापनिधयः । प्राणिविषयं मृतम् । अप्राणिविषयं त्वतीतं यथा । वृत्तोत्सवं तत्पुरमित्यादौ । अल्पाशये । Bh. Ś. 71; Su. 968 । निस्तलेपि । सद्वृत्ते महति स्वभावसरले बद्धोपि यस्मिन्गुणैः । दृढे । वृत्तदेहः स्नायुसारः ॥ **271** ॥

[ कान्ता ] योषिति । Sp. 1626 ॥ [ कान्त ] प्रिये । Me. 1 । मनोज्ञे । M. M. 44, 1 v. l. ॥ [ जाति ] छन्दसि वैतालीयादौ । सामान्ये । जातिः समाप्ता प्रत्येकम् । मालत्याम् । Pa. 818 । गोत्रे । कठजातिरियं न शक्यते सुकुमारैर्वचनैरुपासितुम् । जन्मनि । ततस्तद्विपाकजात्यायुर्भोगाः ॥ **272** ॥

काव्यालंकारभेदे स्वभावे च । H. Ch. 5, 4 ॥ [ पत्ति ] गतौ । पत्तिः स्वर्गगृहे भवेत्सुकृतिनः कस्यापि । पदगे । Ra. 7, 34 ॥ **273** ॥

[ रीति ] प्रचारः । व्यवहारः कुलाचार इति यावत् । प्रचारः शैली इति स्वामी । स्यन्दः स्रवणम् । रीङ् स्रवणे दिवादौ अनेकार्थतया प्रचारे वर्तते इति रीतिः ॥ रम्यरीति° Stutik. I, 3 इत्यादौ वैदर्भ्यादौ । वैदर्भी रीतिः । मुख्या प्रणयिनी । पक्षे प्रचारः । व्यवहारः । मर्यादा शैली च ॥ **274** ॥

[ श्वेत ] राजभेदे । श्वेताभयार्पणविधिप्रथितप्रभावः c. Stutik. II, 21. III, 19 ॥ **275** ॥

[ पङ्क्ति ] छन्दोविशेषो दशाक्षरः । दशसंख्यायाम् । Ra. 9, 74 । आवलौ । पङ्क्तौ विशन्तु गणिताः c. Bh. Ś. 11 ॥ [ क्षिति ] त्रिषु । यत्प्रतापयशसोः क्षितिः क्षितौ वैरिणस्तव समाः किमन्तरम् ॥ [ द्युति ] कान्तिः सौन्दर्यम् । प्रभा प्रसारिणी दीप्तिः ॥ **276** ॥

[ तत ] प्राप्ते संभृते [sic] च । ऋत्विजोथ वितते महाक्रतौ । वाद्ये तन्त्रीगते । ततघनसुषिरसमस्वयुतम् ॥ [ सूत ] संकरजातिभेदः सूतः ॥ 277 ॥

रथकारः स्थपतिः । सारथी रथवाहे । सूर्यसूतोवताइः । वन्दिभेदे । सूतमागधवन्दिभिः ॥ [ घृत ] द्रयेपि । घृत॰ Mh. 2, 165 ॥ [ हस्त ] मानभेदे करे च । कृष्णश्चतुर्हस्तकः । प्रशंसायामुत्तरपदीभूतः । करेण रुद्धोपि न केशहस्तः c. Ra. 7, 6 । भभेदे नक्षत्रविशेषे । हस्तायाः पञ्च वस्त्रादौ प्रशस्तास्तिस्र उत्तराः c. Mh. 3, 518 ॥ 278 ॥

[ वीत ] असाराश्वगजे । वीतमात्रावशेषाणि सैन्यानि तव विद्विषः । शान्ते । वीतदावानले वने । अङ्कुशकर्मणि । निर्धूतवीतमपि चालकमुन्नसन्तम् c. Si. 5, 47 । चालको दुष्टहस्ती । सांख्यसाधर्म्यहेतौ । वीतावीतविषाणस्य । विगते । Sû. 4 । छन्ने आच्छादिते । संवीतचीनांशुकमूर्तिरेषा ॥ 279 ॥

[ ग्रस्त ] द्वये । ग्रस्तवर्णपदतां समादधज्जाति दुष्टकविवल्गजेश्वरः ॥ [तिक्त] शुभगन्धे रसे च । Me. 20 ॥ 280 ॥

[ नत ] नितम्बेधःकृते च । परिणमति कामहस्ती कामिन्या विचलितांशुके नतेमुष्मिन् [ c. Mh. 2, 173 ] .। कुटिले । विडम्बनार्थं नमयन्नतभ्रूः ॥

[ भूत ] जन्तौ । भूतानि कालः पचतीति वार्त्ता c. Sp. 1688 । क्ष्मादौ । Ra. 2, 57 । पिशाचादौ । Ku. 3, 74 । न्यायोपपादिते । भूतम॰ Mh. 2, 180 । उपमाने । स्वहस्तभूतः शिशिरात्ययस्य c. Ku. 3, 61 ॥ 281 ॥

प्राप्ते । प्रमाणभूताय जगद्धितैषिणे ॥ भू प्राप्ताविल्यस्या — — त्वेति विकल्पिताणिच्छस्य [?] प्रयोगात् ॥ [ युत ] वियुक्ते । अयुतसिद्धानामाधार्याधारभाव इह प्रत्ययहेतुः संबन्धः समवायः ॥ [ गुप्ति ] कारारक्षयोः । Ku. 6, 38 । दीर्णे च विवरं बिलम् ॥ 282 ॥

[ मूर्त ] मूर्छाले । मूर्तत्वहेतुं धिगमुं वसन्तम् । कठिने । Śi. 3, 18 ॥ [वस्ति] शूद्रापनेयादथ वस्तिना स्थितेत्यादौ वस्त्राञ्चले । अपानमार्गे । वस्तेरूर्ध्वमधो नाभेः । अपानमार्गकर्मणि । वस्तेर्विना भेषजमस्ति किंचित् । अश्वप्रस्रवणे अश्वस्य मुखे यत्प्रस्रवति तत्र वस्तिशब्दः । अश्वशालीयेषु प्रसिद्धः ॥ 283

[ लूता ] व्याधिभेदे विस्फोटाख्ये । न तल्लूताहरं चक्रम् । पिपीलके । लूताततिः सूत्रयतीह वर्षम् ॥ [ रति ] स्मरकलत्रे । Ku. 3, 23 । रते । तत्सिद्धये रतिविलासमतोभिधास्ये । अभिष्वङ्गे । Sp. 1450 ॥ 284

चित्तावस्थाने । Ra. 8, 65 । शृङ्गारभावे । K. Pr. IV, 30 । यद्वल्लभेन रतिरङ्गसमानकाल इत्यादौ कामफले ॥ [ वित्त ] द्रविणे । बहुवित्तव्ययायाससाध्ये कर्मण्यनादरः । हेम्नि । Ra. 5, 21 । ख्याते । विद्यावित्तेष्वनादरः । विचारिते । वित्तानि तानि शास्त्राणि ॥ 285 ॥

[ वर्ति ] धूपे । परिपीतधूपवर्तिः Kuṭṭ. 148 or Kâd. 16, 23 । दीपशिखायाम् । Sû. 23 । गात्रानुलेपने । अङ्गैः कुङ्कुमवर्तिपिञ्जरतरैः । आलेख्यभाण्डे तूलिकायाम् । स्वेदकम्पवशसन्नवर्तिकः c. Ra. 19, 19 । दीपदशायाम् । वर्तिर्वः प्रतनुः प्रियेति शमिते तस्मिन्नुपध्माक्षरैः । चक्षुरञ्जने । षोडशाङ्गो भवेद्वर्तिः ॥ 286 ॥

[ आप्ति ] संबन्धे । न० Mh. 2, 156 ॥ [ सृति ] गमने । Bh. Ś. 83 । पद्धतौ पदपङ्क्तौ । दुर्लक्ष्या विपिने सृतिः ॥ [ वृत्ति ] वर्तने । वृत्तिरावन्ध्यं च स्त्रीधनम् । विवृतौ । Kâś. I., v. 2 । मनस्कृतौ । Y. S. I, 4 ॥ 287 ॥

काव्याङ्गे । परुषा नाम वृत्तिः स्याद्दृह्याद्यैश्च योजिता c. A. S. 21, C. । तीव्रा० Ku. 3, 73 इत्यादौ वर्तनं प्रवर्तनमपि वृत्तिः ॥ [ प्रीति ] कामभार्यायाम् । रतिप्रीत्योः कामं कवलयितुराराधनविधौ । प्रेम्णि स्नेहे । प्रीतिभोज्यानि चान्नानि । प्रमोदे हर्षे । Ra. 11, 12 ॥ [ पक्ति ] द्वयोरपि । नष्टप्रतापाग्नितया नृपाणां पक्तिर्न संभूतमुपैति काचित् ॥ [ वीति ] द्वयेऽपि । ते निपेतुरवसन्नवीतयः ॥ 288 ॥

[ भक्ति ] विच्छित्तौ । Me. 19 । सेवने । Su. 43 ॥ [ भित्ति ] कुड्ये । K. Pr. 324, 3 । प्रदेशे । गण्डभित्तिषु मदेन दन्तिनाम् ॥ [ चिति ] चिति । चितिः प्रत्यवमर्शात्मा । सङ्घचित्ययोः । चितये काष्ठचितिं तनोति सः ॥ 289 ॥

[ दन्त ] अद्रिकटके । दन्त० Mh. 2, 169 ॥ [ मृत ] याचिते । मृतामृताभ्यां जीवेत c. M. 4, 4 । मृतं तु याचितं भैक्षमिति स्मृतिः M. 4. 5 ॥ [ ज्ञात

जन्मनि । तस्य पुत्रस्य जातेभूत् । प्रकारे । Ra. 5, 1 । संपन्ने । जाते देहप्रत्यय-द्वीपभङ्गे । पुत्रे । जात° Mh. 2, 166 ॥ **290** ॥

[ व्यक्त ] बुधे पण्डिते । व्यक्ताः किल्बिषमोषपेशलतया यान्ति प्रथां सर्वतः ॥ [ शिति ] शारे शबले । रोमन्थ° Mh. 2, 198 । असिते । शितिकण्ठः कालगलः ॥ [ यति ] विरामे । गोपुच्छप्रमुखाः क्रमेण यतयस्तिस्रोपि संपादिताः । व्रतिनि । मुदा विकासं यतिमभ्युपेयुषी c. Śi. 1, 24 ॥ [ ऊति ] स्यूतौ रक्षणे च । कन्थी° Mh. 2, 157 ॥ **291** ॥

[ स्थित ] ऊर्ध्वे । Ra. 2, 6 । वर्तमानेपि । Ku. 1, 1 । प्रतिष्ठावति । अत्र° Mh. 2, 204 ॥ [ रक्त ] कुङ्कुमे । हेमन्ते घनरक्तपङ्कमलनक्रीडाजुषो योषितः । क्षतजे सरागे च । V. S. 7 । अरुणे । रक्तासक्तैरिवौघैः c. Sû. 1 । अनयोर्द्वयोस्त्रिषु ॥ **292** ॥

[ मत्त ] मदकले करिणि । Bh. Ś. 66; Bhoj. 53, 12 । मदाव्यक्तवाचि । Śi. 11, 39 ॥ [ गति ] अवस्थायाम् । इमां गतिमनुप्राप्ताः । यात्रायाम् । Pr. P. 28; Pa. 3282 । अधीनतायामस्वायत्ततायाम् । सर्वेषां पार्थिवो गतिः । उपाये । शरणमसि संश्रयो ह्यसि गतिरसि नाथोसि सर्वभूतानाम् । वर्त्मनि । Ra. 1, 4 ॥ **293** ॥

[ शुक्त ] परुषे । यत्सत्यं पुनरुक्तशुक्तविरसः सर्गक्रमो वेधसः c. Pa. 3373; V. A. 38, 9; 59, 8 ॥ [ ऋतु ] ग्रीष्मादौ । Ku. 2, 36 । स्त्रीरजसि । इमां देवीमृतुस्नाताम् Ra. 1, 76 v. l. ॥ [ अन्त ] विनाशे । Bhag. 2, 18 । अन्तिके । आ उदकान्तात्प्रियं प्रोषितमनुव्रजेत् c. Śâ. 54, 21; Bhâshya Pâ. 1, 4, 56 । स्वरूपे गाधे [?] । नान्तोस्य ज्ञायते कैश्चित् । अंशे एकदेशे । Sp. 5714 । अवसाने । Sp. 6948 ॥ **294** ॥

[ मातृ ] गवि शाश्वतोक्त्या । ओमिति [?] पदद्वयं विवक्षितार्थप्रतीतिकृतम् । जनन्याम् । Sp. 2761 । रेवत्याद्यासु देवीषु । Ku. 7, 38 । क्वचिदेता ब्राह्म्यादिशब्देनोक्ताः । बहुत्ववर्तमाना स्त्रीव स्त्री तस्यां बहुस्त्रियाम् । मातर इत्यादौ ॥ [ स्थिति ] द्वयेपि । Ku. 1, 18 ॥ [ भास्वत् ] द्वयेपि । H. Ch. 9, 10 ॥ **295** ॥

[ अर्हत् ] द्वयेपि । अर्हते श्रुतवतां सदार्हते ॥ [ हरित् ] सूर्याश्वेषु । Ku. 2, 43 । नीले दिशि च । रीतिर्व्यामहरित् ॥ 296 ॥

[ महत् ] राज्ये । महति कृतपदस्त्वमेव नित्यम् । सांख्योक्तबुद्धौ । Sâ. Kâ. 3 । बृहति । H. Ch. 131, 2 ॥ [ जगती ] छन्दोभेदे द्वादशाक्षरपादे भुवि च । विकासमीयुर्जगतीशमार्गणाः ॥ [ जगत् ] जङ्गमे । जयति [sic] जगतां गुरोः K. K. S. 1, 2 v. l. ॥ 297 ॥

[ समित् ] द्वयेपि । समिति तस्य पुरः पततीह कः ॥ [ पित्सत् ] पातेच्छौ पक्षिणि वा । पित्सन्तः किलकिञ्चितेन हृदयं द्रक्ष्यन्त्यमी बालकाः ॥ [ पृषत् ] बिन्दौ । पाथःपथे ननु पृषन्त्यपि दूषितानि । हरिणे । रुरुपृषद्गणसंकुलसंचरे । अनयोः पृषतशब्दः अकारान्तः पुंलिङ्गः ॥ 298 ॥

[ सीता ] हल्यायां भुवि । Ku. 5, 61 । जानक्याम् । K. K. S. 1, 58 ॥ [ एत ] द्वयोरपि । ईदृग्वर्णा एताः कृतवत्यः किं तथोक्तमत्रैव ॥ [ धातृ ] ब्रह्मणि । Ra. 10, 43 । धर्तरि । M. M. 40, 1 ॥ [ अस्त ] पश्चिमाचले । Bâ. III, 10 । नास्तमेति भवितव्यता क्वचिदित्यादौ नाशार्थे अस्तंशब्दो मकारान्तोऽव्ययः ॥ 299 ॥

[ शीत ] गुणे क्लीबम् । Bhag. 2, 14 । तद्वति शीतलगुणवति त्रिषु । Sp. 6410 ॥ [ यातृ ] भ्रातृजायायां गतिशीले च पुंसि । प्रथमाद्विवचनबहुवचनद्वितीयाविभक्तिवर्जं सर्वत्र सारूप्यम् । यातृशब्दो भ्रातृजायायां साहचर्यात्स्त्रीलिङ्गः । गतिशीले पुंसि । Sp. 668 ॥ 300 ॥

[ शुक्ति ] मुक्तास्फोटहयावर्तयोः । Śi. 5, 4 । मानभेदे अर्धपले । द्रव्यशुक्ति जलप्रस्थे ॥ [ पूत ] पवित्रे । Ku. 1, 28 । निःशूकमपासितबुसकिंशारु सस्यादिकम् ॥ [ धृत ] धारिते । धृतायुधो यावदहं तावदन्यैः किमायुधैः । सुस्थिते । H. Ch. 226, 3; Su. 2269 ॥ 301 ॥

[ शान्ति ] शमे । तस्य युक्तैव शान्तिः । निर्वृतौ । Ku. 4, 17 । कुशलकर्मणि । आरब्धव्यं यथाशक्ति शान्तिस्वस्त्ययनादिकम् ॥ [ क्रान्त ] संक्रान्ते । Śi. 10, 3 । आक्रान्ते । Sû 7 ॥ [ मरुत् ] पवने । Ra. 2, 10 । अमरे । Ku. 3, 72 ॥ 302 ॥

[ विवस्वत् ] सूर्ये । Ku. 1, 16 । देवेन्वेष्यम् ॥ [ सरस्वत् ] इयेपि । सरस्वांस्तव गाम्भीर्ये न समः ॥ [गरुत्मत्] तार्क्ष्ये । Ra. 3, 57 ॥ [शकुन्त] भासः पक्षिविशेष एव । इयेपि पक्षिणि । पयोधिमध्यस्थितपोतकूपकस्थिता शकुन्तीव मुहुः प्रकम्पिता ॥ 303 ॥

[ स्थपति ] कञ्चुकितक्ष्णोः । स्थपतिर्नियतकक्ष्ये को विशेद्राजमार्गे । बृहस्पतिसवो यज्ञविशेषो वाजपेययज्ञादनन्तरं क्रियते तेन च इष्टवान्स स्थपतिः ॥ [ हृषित ] जातहर्षे । हृषितः प्रियदर्शनेन मन्ये । प्रतिहते । शीतेन हृषिता दन्ताः । रोमाञ्चविषये । Śi. 7, 16 ॥ 304 ॥

विस्मिते । दृष्ट्वा रूपं हृषित इव स प्रेयसीनां तदानीम् ॥ [ अमृत ] मोक्षे । Bhag. 2, 15 । वारिणि । ववर्षामृतसारौघाम् । अयाचिते । M. 4, 4 । यज्ञशेषे । नित्यं चामृतभोजनः M. 3, 285 । हुतशिष्टमथामृतमिति स्मरणात् । देवान्ने । Śi. 2, 107 । सुधायाम् । Sp. 532 ॥ 305 ॥

[ अमृता ] परस्यां वाचि । वन्दामहे च तां वाचममृतामात्मनः कलाम् c. U. R. I, 1; Mh. 2, 466 । अर्करश्मिभेदे । Ra. 10, 58 । धर्ममेघाख्यः समाधिरमृताशब्दवाच्यः ॥ 306 ॥

[ अनन्ता ] दूर्वा शादः । भूमौ । सप्त° Mh. 3, 231 ॥ [ अनन्त ] अम्बरे । अनन्तमारोहति तेजसा रविः । विष्णौ । लक्ष्मीरनन्तस्य निबद्धभावा । अनाशे अनवधौ च । अनन्तो जगदन्तगः ॥ 307 ॥

[ सूनृत ] त्रयेपि । Ra. 1, 93 ॥ [कृतान्त] यमे । या कुपितकृतान्तमुखग्रस्तानाम् । सिद्धान्ते । कृतान्तमाप्नोति न निर्विवेकः । दैवे । Me. 102 । अकुशलकर्मणि क्रूराचारे । मया कृतान्तेन न सा परीक्षिता ॥ 308 ॥

[ वृत्तान्त ] प्रकरणे । वृत्तान्ता° Mh. 3, 294 । प्रकारकार्त्स्न्ययोरन्वेष्यम् । वार्त्तायाम् । Su. 2544 ॥ [निवात] आश्रये । एते निवातास्तरवो मुनीनाम् । अवाते वाताभावे । Ku. 3, 48 । शस्त्राभेद्ये वर्मणि । निवातकवच° Mh. 3, 261 ॥ 309 ॥

[ उच्छ्रित ] जाते । उच्छ्रिताङ्कुरविराजितान्तराः । उन्नद्धे ऊर्ध्वप्रसृते । अत्युच्छ्रितेषु गिरितटकूटेषु वायोः । प्रवृद्धे । उच्छ्रितविभवो भवोपशान्तिः ॥ [उत्थित]

इयेपि । नवोत्थिताभ्यां कुचकुट्मलाभ्याम् ॥ [ आदृत ] सादरे । पृच्छति स्म समयेदमादृतः । अर्चिते । अत्यादृतः स तरसा रससारवद्भिः ॥ 310 ॥

[ विविक्त] इयेपि । Śi. 3, 53 ॥ [ मूर्छित ] इयेपि । Dhv. 113, 11 ॥ [ प्रतीत ] प्रख्याते ज्ञाते वा । Ra. 13, 53 । हृष्टे । अतिप्रतीतेन तदा स चेतसा ॥ 311 ॥

[संस्कृत] कृत्रिमे । स्वप्नं च विद्युदभ्रं च पश्येदेवं च संस्कृतम् । लक्षणोपेते । संस्कृतं प्राकृतं द्विधा ॥ [ पिण्डित ] गुणिते । षष्टांशेन तु पिण्डितम् । घने । M. Ch. I, 54 ॥ [ वनिता ] जनितात्यर्थानुरागायां स्त्रियाम् । Ku. 1, 10 । अङ्गनामात्रे । वनितासु वीचिचलचित्तवृत्तिषु ॥ 312 ॥

[ पलित ] जरसा शौक्ल्ये । M. 2, 156 । पानीयनिर्गमनमार्गनिवर्तनेन याता ह्रदाः पलितधूसरताममी यदित्यादौ कर्दमोपचारात्पानीयपृष्ठवर्तमाने मलविशेषे ॥ [ उचित ] समञ्जसे । किमिदमुचितं शुद्धं स्पृष्टं [?] स्वपक्षसमुन्नतेः Bh. Ś. 67; Su. 999 । अभ्यस्ते । Ra. 11, 9 ॥ 313 ॥

[ लोहित ] कुङ्कुमे । गोरोचना° Mh. 3, 281 । अरुणे । Ku. 8, 28 ॥ [ पर्याप्त ] शक्ते । पर्याप्तोपि स योद्धुमुद्धतमातिर्धत्ते न याच्ञोचिताम् । निवारिते । पर्याप्तोयं न्यायः प्रायेण । पूर्णे । पर्याप्तपुष्पस्तवकस्तनीभ्यः Ku. 3, 39 । ईप्सिते । पर्याप्तमेतद्विदुषां सदैव ॥ 314 ॥

[ आनर्त ] समरे नृत्तस्थाने च । आनर्त° Mh. 3, 236 । नीवृज्जनपदो देश इत्यर्थान्तरम् ॥ [ आहत ] मिथ्योक्तौ । धिग्भिक्षमाहतमिदं वचनं वञ्चनापटोः । ताडिते । Śi. 2, 46 ॥ 315 ॥

[ आचित ] व्याप्ते । Ra. 7, 10 । अयुतद्वयं विंशतिसाहस्री ॥ [ दुर्जात] व्यसने । Ra. 13, 72 । असम्यग्जातवस्तुनि । दुर्जाता° Mh. 3, 258 ॥ 316 ॥

[ अव्यक्त ] परमात्मनि । अव्यक्तादण्डमभूत् ॥ [ प्रणीत ] विहिते । Ku. 6, 31 । संस्कृतेग्नौ । प्रणीते जुहुयाद्धव्यम् । प्रवेशिते । प्रधानवर्गस्य पुरः प्रणीतः ॥ 317 ॥

[ निकृत ] इयेपि । निकृतोपि न याति विक्रियाम् ॥ [ उद्धृत ] भुक्तोज्झिते । क्षिपेदप्सूद्धृतं ततः । तोलिते उत्क्षिप्ते । Su. 54 ॥ [ सुकृत ] इयेपि । महता सुकृतौघेन प्राप्तोस्यतिचिरान्मया ॥ 318 ॥

[ आयस्त ] लेशिते अंशेन वीक्षिते । सव्रीडमायस्तकटाक्षपातैः । उत्क्षिप्ते निपुणे । Śi. 5, 6 । कोपिते । आयस्तशत्रुनिवहाहननप्रवृत्तः । तेजिते । आयस्तासिलतोल्लसद्रिपुकुले कालायमाने c. Mh. 3, 238 ॥ [ निरस्त ] अधिक्षिप्ते । Ra. 5, 71 । त्यक्ते । Ki. 1, 28 । त्वरितोदिते । एते निरस्तवचनाः सूचयन्त्यार्तिमान्तरीम् ॥ 319 ॥

[विश्वस्त] इयेपि । Śi. 16, 14 ॥ [प्रकृति] लिङ्गे प्रधाने । Ku. 2, 13 । स्वभावे । Ra. 8, 86 । धात्वादौ । प्रकृतय इव दुर्ग्रहा गणिकाः । अमात्यादिषु । Ra. 12, 12 । योनौ । प्रकृतिगुणाः स्थविरकृतिः ॥ 320 ॥

[समिति] त्रयेपि । Śi. 16, 13 ॥ [निर्वृति] इयेपि । निर्वृतिः सुहृदि शत्रुजने च ॥ [निकृति] शाठे । वर्जय निकृतीः खलानेतान् । शाठ्ये । Ki. 1, 45 ॥ 321 ॥

[ दुर्गति ] इयेपि । त्वत्पादपङ्केरुहधूलिलिप्तो न दुर्गतिं याति जनः कदाचित् ॥ [पद्धति] पङ्क्तौ । पदपद्धतिमायातामपश्यत् ॥ [आकृति] कार्ये । भव्येयमाकृतिर्भाविमौलिमाला विलोक्यते । रूपे । Sp. 5076; c. Mall. Ki. 6, 1 ॥

प्रसूतिं ] जन्मनि । प्रसूतिं भज कल्याणि मर्त्यलोकेतिदारुणे । पुत्रे । Ra. 1, 77 । कारणेपि । Ra. 2, 63 ॥ 322 ॥

[ वसति ] स्थितौ । Ku. 6, 37 । रात्रौ । Ra. 7, 30 ॥ [ रेवती ] लाङ्गलिदारेषु । Pr. P. 52 । मातरो ब्राह्म्याद्याः ॥ 323 ॥

[ स्तिमित ] इयेपि । M. M. 49, 3 ॥ [ निशान्त ] गेहे । Śi. 1, 61 । शान्ते । निशान्तचित्ते मुनिपुंगवेपि ॥ [अनृत] इयेपि । अनृते वर्ततेधमः ॥ 324 ॥

[ अर्दित ] इयेपि । अर्दितो वितरति क्षणाद्रसम् । नार्दितं नवनीतवदित्यादौ शिरोरोगेपि पीडितोपचारात् ॥ [ द्विजाति ] इयेपि । द्विजातीनां° Mh. 3, 258 । पुष्पेषुराजवचनेन मतं द्विजानामित्यादौ विप्रदन्तयोः [ sic ] ॥ [जीवातु] जात्यत्रामौषधे । जीवातुरध्यं मथितं महण्याम् । जीवे । U. R. 31, 5 ॥ 325 ॥

[ जीमूत ] मेघे । Me. 4 । पर्वते । धन्यास्ते° Mh. 3, 254 ॥ [ उत्तप्त ] देवताडद्रुर्वृक्षविशेषः । शुष्कमांसे । उत्तप्ते कृमयो यथा । वितापिते । उत्तप्तहाटकाचितानि तटानि मेरोः ॥ 326 ॥

[ व्रतति ] विस्तारे । वात्यासंवेगविश्वग्व्रततिवलयितस्फीतधूपाधिवासा c. M. M. 162, 7 । वल्ल्याम् । Śi. 1, 5 ॥ [कलित] विदिते । अकलितदैवनियोगाः । आत्ते । शशिकलाकलितावतंसः c. Mh. 3, 247 ॥ 327 ॥

संख्याते । M. M. 96, 1 । तुलिते । करकलितहराद्रे° Bâ. I, 37; c. Bâ. I, 47 । क्षिप्ते । संग्रामे कलितोऽप्यमित्रनिवहस्तुष्टावकीर्तिं तव । शब्दिते । कलितकीर्तिषु शत्रुमुखेषु ते ॥ 328 ॥

[ गर्जित ] मत्तकुञ्जरे भारतादौ प्रसिद्धः ॥ [ प्रार्थित ] अभियुक्ते आक्षिप्ते । Ra. 9, 56 । सान्त्विते । प्रार्थितापि न विमुञ्चति मानम् ॥ 329 ॥

[ वितत ] प्रस्तुते । Ku. 2, 46 । व्याप्ते । विततमतिसिताभिर्व्योम सोमप्रभाभिः । विस्तृते व्यात्ते । श्रमविततमुखभ्रंशिभिः कीर्णवर्त्मा c. Śâ. 7 ॥ [ संतति ] परंपरायाम् । अभूमिर्मादृशादृशामियमाश्चर्यसंततिः । संतत्यर्थं दारा व्याधिप्रशमाय चेति श्लेष इत्यादौ पुत्रे । विस्तारे । पश्यैतां मरुसंततिं कुसुमितां संतोषतान्तिच्छिदम् c. Mh. 3, 301 ॥ 330 ॥

[ संमति ] द्वयेपि । संमतिर्न विमतिर्नियोगिनः ॥ [ रजत ] रूप्ये । M. 3, 202 । हारेन्वेष्यम् । शुक्ले । रजतमराजत वसनम् ॥ 331 ॥

[ कपोत ] पारावते पक्षिभेदे । Śi. 3, 51 । विहगान्तरे एतन्नाम्नैव प्रसिद्धे । Ku. 4, 27 । वर्णे । कपोतपोतकपोताः ॥ [ संवित्ति ] प्रतिपत्तौ । Bh. Ś. 53 । संवित्तिः कान्तायुगेत्यादावविवादितायां व्यवस्थायाम् ॥ 332 ॥

[ पक्षति ] द्वयेपि । गगन० Mh. 3, 268 ॥ [ द्वीपवत् ] नदे अब्धौ च । द्वीपवत्सु विचरन्ति कीर्तयः ॥ 333 ॥

नद्यां प्रसिद्धः । यथा द्वीपवती ॥ [ दृष्टान्त ] उदाहरणे । Śi. 2, 31 । शास्त्रे । अभ्यस्तदृष्टान्तशतस्य तस्य ॥ [आयति ] सर्वत्र । कुचद्वंद्वेन तन्वङ्ग्या राजता प्रकटायतिः ॥ 334 ॥

[ विधूत ] कम्पिते । एते विधूततरलायतपक्ष्मवामाः । त्यक्ते । विधूतकल्पनाजालगम्भीरोदारमूर्तये ॥ [ नियति ] दैवे । नियतिः केन विलङ्घ्यते सखि । संयमे ! नियतिं विधाय चित्ते ॥ [ विकृत ] द्वयेपि । विकृततरमिदं निगृह्य चित्तम् ॥ [ आप्लुत ] स्नातमात्रके । Ku. 6, 5 ॥ 335 ॥

गुरुकुलान्निवृत्तः स्नातक उच्यते ॥ [ उद्धात ] आरम्भे । Ra. 4, 20 । स्खलिते । Ra. 2, 72 ॥ [प्रसृत] निकुब्जपाणौ । एतां॰ Mh. 3, 267 । उद्दाम॰ H. Ch. 13, 8 इत्यादौ जङ्घायां स्त्रीलिङ्गः । विस्तृते च त्रिलिङ्गः ॥ 336 ॥

[ ककुद्मत् ] दान्ते । Ku. 1, 56 । ककुद्मती तीव्रनखक्षताङ्किता इत्यादौ कट्यां स्त्रीलिङ्गः ॥ [ परेत ] दूरगेन्वेष्यः । मृते । परेतभवने तदा चरणमाशु चक्रे जनः ॥ [ दैवत ] दैवतशब्दो देवतायामधिष्ठाने देवेषु च जातिविशेषे वर्तते ॥ [ सरस्वत् ] नदे अर्णवे वा । सर स्वतिप्रसादं मे कुरु चित्तसरस्वति D. Ś. 50; K. Pr. 235, 1 ॥ 337 ॥

[ मारजित् ] त्रयेपि । मारजिज्जयति जाह्नवीजले लोलवीचिवलये समादधत् ॥ [ भगवत् ] जिने । अथ खलु भगवान्स लोकधातौ । पूज्ये । K. K. S. 2, 4 ॥ [ उन्मत्त ] धतूरे । उन्मत्तकरसास्वादात् । मादिनि । Su. 2544 ॥ 338 ॥

[ निर्ऋति ] सर्वत्र । यः पुण्य॰ Mh. 3, 263 ॥ [ आवर्त ] रोमभेदे अम्भोभ्रमे च । Śi. 5, 4 । पठने आवर्तो मुखस्थितिर्ग्रन्थस्य । रूपे गणनायाम् । देवा अयुग्मावर्ताः ॥ 339 ॥

[ पुष्पवत्] दिवाकरनिशाकरयोरपि । Śr. Ch. 25, 132 । स्पृशति तिलकहेतोः शोणितं पुष्पवत्या इत्यादौ रजस्वलायाम् माल्यधारिणि पुष्पयुक्ते ॥ 340 ॥

[ विवृत ] कोशनिष्कृष्टे । Ra. 12, 40 । व्याकृते व्याख्याते । विवृतोभिनवो मया । प्रकाशिते । विवृतेत्र रहस्ये । विकासिते । Ku. 4, 26 । वर्णधर्मे । स्पृष्टत्वमीषत्स्पृष्टत्वं विवृतत्वं तथैव च । पाठधर्मे । अभ्यासं विवृतं पठेत् । सुशिरे । M. M. 160, 1 ॥ 341 ॥

[विवृति ] एषामेवार्थानां भावे धात्वर्थरूपतायां विवृतिशब्दः ॥ [ संवृत ] स्थगिते असंपुटिते । अयं पटः संवृत एव शोभते Mṛichchh. 33, 17 । असत्यभूते । असंवृतमिदं वाक्यम् । वर्णगुणे । संवृतत्वं च वर्णानामन्तःकरणमि-

ष्यते । पाठगुणे । संवृते संवृते कुर्वन् । गुप्ते । Ra. 1, 20 । वर्णपाठगुण इत्यस्य विशेषणं विवृतेतर इति ॥ 342 ॥

[संवृति] कठिनहृदये संवृतिरियम् Sp. 1876 इत्यादि पूर्ववत् ॥ [एकान्त] निश्चये । शत्रुः शत्रुर्मित्रं मित्रं भवतीति नायमेकान्तः । रहसि । कान्ते क्रान्तजनान्तिकं तरसि चेदेकान्तमेकान्ततः । गुणे । तस्य त्वितदेकान्तमेकान्तग्रहणम् । एकदेशे । एकान्तोन्नमितभ्रु विभ्रमभरभ्राम्यद्विलासायुधम् । अव्यभिचारिणि । Ku. 1, 36 ॥ 343 ॥

[प्रत्यन्त] द्वयेपि । प्रत्यन्तेष्वविमूढतामुपगतास्तिष्ठन्ति शिष्टाः कथम् ॥ [जयन्ती] देवी वामस्रोतःप्रसिद्धा ॥ [जयन्त] इन्द्रात्मजे । Ra. 3, 23 ॥ 344 ॥

[भावित] साक्षात्कृते । Ra. 1, 74 । अन्यत्रान्वेष्यम् [c. Mh. 3, 275] ॥ 345 ॥

[आहृत] आनीते । आहृतैर्गुह्यकव्रातैः । भुक्ते । आहृतानि सुरभीणि फलानि ॥ [लुठित] लुठितोत्थितकेशज इत्यादौ परावृत्ते । लुठितश्चेतयते जनोधम इत्यादौ भ्रष्टे पदाच्युते च ॥ 346 ॥

[गलित] गलितस्य स नेत्रगोचरादित्यादौ तिरोहिते । — — — — त्यादौ स्रुते । गल अदन इत्यस्य धातोः प्रयोगे भुक्ते । पतिते । Me. 44 ॥ [गलिता] छन्दोविशेषे द्विपदीभेदे ॥ 347 ॥

[निर्मुक्त] त्यक्ते । निर्मुक्तसर्वभावस्य । निर्ग्रन्थिके । निर्मुक्तकबरीभारव्याप्तवक्षःस्थलाथ सा ॥ [वसुमत्] स्फीते । वसुमानद्युमद्भिरर्च्यते ॥ [चित्रकृत्] वञ्जुलो वेतसः ॥ 348 ॥

[पर्याप्ति] पूर्णतायाम् । पर्याप्तिर्बहुमानस्य । शक्तौ । पर्याप्तिः कस्य तावती ॥ [विनीत] शिक्षिते हये । वनायुजैर्विनीतैस्तैः ॥ 349 ॥

सप्रश्रये । निन्ये विनीतैरवरोधरक्षैः । निरस्तेन्वेष्यम् ॥ [निवीत] कण्ठालम्बे यज्ञसूत्रके । वैश्यस्य तु निवीतं स्यात् । प्रावृते । निवीतचीनांशुकशुभ्रकान्तिभिः ॥ 350 ॥

[पतित] स्पष्टम् ॥ [अक्षत] यवे । Ra. 2, 21 ॥ 351 ॥

[कलधौत] रूप्यहेम्नोः । कल° Mh. 4, 106 ॥ [पुरस्कृत] अभिवृते । Ra. 2, 20 । अभ्यर्चिते । हरिर्मरुद्भिः स पुरस्कृतः ॥ 352 ॥

[ अवगीत ] दुष्टे । Ki. 2, 7 । गर्हितो निर्वादः । निन्दितो लोकापवादः ॥ [ अभिनीत ] संस्कृते वागादिनाभिनयविषयतां नीते । अभि° Mh. 4, 95 । प्रापिते । Ra. 18, 39 v. l. । अमर्षवत्यन्वेष्यः ॥ **353** ॥

[ प्रतिहत ] प्रतिस्खलिते । Ku. 2, 48 । विद्विष्टे बाधिते । धिग्धिक्छान्तं प्रतिहतमिदं तीव्रमत्याहितं नः c. 356 ॥ [ अभिजात ] सुकुमारे । अभिजातां नवमालिकामिव । कुलीने बुधे वा । अभिजाततमेन तेन सा यदि युज्येत हि दैव-योगतः ॥ **354** ॥

[ अपचिति ] हानौ निष्कृतौ वा । Śi. 16, 9 । अर्चने । केचिदपचितिभाञ्जि म -- ष्यमपठन् c. H. Ch. 8, 5 । व्यये । गृहे° Mh. 4, 98 ॥ **355** ॥

[ अत्याहित ] महाभीतौ जीवनिरपेक्षतायां वा । धिग्धिक्छान्तं प्रतिहतमिदं दुष्टम° c. 354 ॥ [ समाहित ] समाधिस्थे । पञ्च चञ्चलगतीन्समीरणान् संनि-यम्य हृदये समाहितः । दत्तोत्तरे । समाहितो° Mh. 4, 129 ॥ **356** ॥

[ उपाहित ] अनलोत्पाते । उपाहितोद्विग्नभियोतिविक्लवाः । आरोपिते । उष्ट्रो॰ Mh. 4, 100 ॥ [ उपस्थित ] समाश्रिते । Ra. 2, 39 । अन्यत्रान्वे-ष्यम् ॥ **357** ॥

[ अवध्वस्त ] स्पष्टम् ॥ [ अवसित ] अवसानं गते । अवसितमन्त्रसाधन° M. M. 160, 5 । ज्ञाते । अवसितमन्त्रो राजा । निश्चिते । M. M. 191, 2 ॥ **358** ॥

[ विजृम्भित ] विकसिते । पुष्पेषुसंततिविजृम्भितपल्लवेषु । चेष्टायाम् । तस्का-स्यापि विजृम्भितं भगवतः सन्मन्त्रलीलाजुषः c. Bh. Ś. 96; Su. 1019 । प्रसृते । अत्रान्तरे तत्र विजृम्भितेषु तूर्येषु ॥ [ परिगत ] विज्ञाते । इति परिगतमेतत्स्था-नमासाद्य सद्यः । वेष्टिते । कुसुमपरिगतोसौ केशपाशो भवत्याः । प्राप्ते । परिगत° Mh. 4, 119 ॥ **359** ॥

[ अन्तर्गत ] ह्रयेपि । हृदयान्तर्गतो मन्युर्नादग्ध्वा विनिवर्तते ॥ [ अवदात ] सिते । कुन्दावदातं यशः । पीते । द्विरदरदनावदातम् । विशुद्धे । सत्यावदाते वचसि त्वदीये ॥ **360** ॥

[ प्रतिक्षिप्त ] निराकृते । प्रतिक्षिप्तो॰ Mh. 4, 115 । प्रेषिते । पर° Mh. 4, 115 ॥ [ अधिक्षिप्त ] ऊर्ध्वाहिते । अधि॰ Mh. 4, 98 । भर्त्सिते निन्दिते च । अधिक्षिप्तोपि विकृतिं न याति क्वापि सज्जनः ॥ **361** ॥

[ भोगवती ] इयेपि । भोगवत्यपि वसुंधरां श्रिता ॥ [ ऐरावत ] ऋज्वायते शतक्रतुचापे । Ra. 1, 36 । गजे । ऐरावते° Su. 2493 ॥ **362** ॥

[ निराकृति ] अस्वाध्याये । ब्रह्मबन्धो मुनिखेटे निराकृतिः [ sic ] c. H. Ch. 12, 1 । प्रत्यादेशे । एतन्माननिराकृतौ कुलिशतां यातं विधोर्मण्डलम् ॥ [ प्रतिकृति ] प्रतिमायां प्रतिबिम्बे । रम्यां रघुप्रतिकृतिः स° c. Ra. 5, 63 । प्रतीकारे । वैरप्रतिकृतौ दक्षः ॥ **363** ॥

[ अभिशस्ति ] इयेपि । Mh. 4, 99 ॥ [ दिवाकीर्ति ] इयेपि । Mh. 4, 110 ॥ **364** ॥

[ प्रतिपत्ति ] प्रागल्भ्ये । Ra. 1, 1 । गौरवे । Ra. 8, 64 । आरम्भे प्राप्तौ बोधे वा । अर्थानर्था विचिन्त्याः स्युः कार्याणां प्रतिपत्तयः ॥ [ धूमकेतु । उत्पाते । Ku. 2, 32 ॥ [ हैमवती ] वचाकाञ्चनीहरीतक्य ओषधिभेदाः । गङ्गागौर्योः । चुकोप° Mh. 4, 132 ॥ **365** ॥

तत्र जातादिषु त्रिलिङ्ग्याम् । Ku. 3, 23 ॥ [ वैजयन्ती ] पताकायाम् । Śi. 6, 69 ॥ [ रविसुत ] यमे । रविसुतभयं न पश्यति । मनौ । रविसुतगदितेन निश्चयः स्यात् ॥ **366** ॥

सौरे । उच्चैः स्थितो रविसुतो विदधाति सर्वम् । कर्णे । तीक्ष्णाः शरा रविसुतस्य निपेतुरुग्राः । सुग्रीवे । Ra. 12, 104 ॥ [ निपातित ] इयेपि । निपातितपितृभ्रातृमातामहपितामहम् ॥ [ देवखात ] ह्रदे । M. 4, 203 । गुहायां प्रसिद्धम् ॥ **367** ॥

[ प्रजावती ] भ्रातृजायायाम् । Ra. 14, 45 ॥ [ समुद्रान्ता ] भूमौ । समुद्रान्तां स्थिरां शुद्धाम् । कार्पासी तूलम् ॥ **368** ॥

[ उपरक्त ] राहुग्रस्तेर्के । उपरक्तोपि वित्रस्तान्न जातु कान्तिं निजां त्यजति । व्यसनार्ते । नैत्रोपरक्तहृदयस्य हिताहिते स्तः । आत्तरागे । एतन्मे नितरां दुनोति हृदयं कोपोपरक्तं मुखम् ॥ [ प्रबोधित ] अवगमिते । उपदेशवचः प्रबोधितस्तव संयाति विहाय संवृतिम् । अपास्तनिद्रे । प्रबोधितो यः स्तुतिगीतमङ्गलैः c. Ki. 1, 38 ॥ **369** ॥

[ समाघात ] एषां सूक्ष्मो भेदः ॥ [ पिपतिषत् ] इयेपि । पिपतिषतां किमसाध्यं इवभ्रेपि स्वं परिक्षिपताम् ॥ [ प्रणिहित ] न्यस्ते । मन्दं० Mh. 4, 115 । समाहिते । माव्यं त्वया प्रणिहितचेतसा ॥ 370 ॥

न्यासे समाधौ च प्रणिहितं भात्रमात्रम् ॥ [ अभियुक्त ] सक्ते। युक्तोभियुक्तो जनः । आक्षिप्ते । अभियुक्त इमान्महीभुजः c. Ki. 2, 46 ॥ [ मूर्धाभिषिक्त ] इयेपि । Mh. 5, 20 ॥ 371 ॥

[ यादसांपति ] इयेपि । Mh. 5, 21 ॥ [ परिभाषित ] समन्तादुच्यमाने । परिभाषितभाष्यशिष्यत्रगै गुरुगेहम् । नियमे । षट्कर्मानुष्ठानं द्विजानां परिभाषितम् ॥ 372 ॥

[ पृथु ] आदिराजे दीर्घे च । Su. 2502 ॥ [ पृथ्वी ] धरण्याम् । Bâ. I, 48 ॥ 373 ॥

[ ग्रन्थि ] पर्वणि यन्त्रणायां च । Su. 1002 c. Bh. Ś. 82 । संधाने । मृगत्वचं ग्रन्थिमतीं वसानम् c. Ku. 3, 46 । पिटके । ग्रन्थे मा गुरुगर्वमुद्वह सखे ग्रैवेयकोऽस्मीति भोः ॥ [ अर्थ ] अभिधेये । Ra. 1, 1 । विषये । इन्द्रियाणीन्द्रियार्थेषु । रायि धने । Sp. 606 । प्रयोजने । Su. 1472 । वस्तुनि । सर्वमि० Mh. 2, 209 ॥ 374 ॥

[ तीर्थ ] सोपाने । Ra. 16, 33 । अत्र हि सोपानेन तरणमार्गो लक्ष्यते । पात्रे । Ra. 5, 15 । अर्हत्सेविते । नृणां पापकृतां तीर्थे पापस्य शमनं भवेत् ॥ दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषगित्यादावागमे । गुरूपचारात् ॥ स्त्र्यृतौ । कामं तीर्थे स्त्रियं यायाद् ब्रह्मचार्यन्यथा भवेत् । सत्त्रिणि यज्ञप्रवृत्ते । फल० Mh. 2, 213 । उपाये । अनेन तीर्थेन हि किं न साध्यते ॥ [ प्रस्थ ] सानौ । Ku. 1, 54 । सर्वारम्भास्तण्डुलप्रस्थमूला इत्यादौ माने । पलानां विंशतिः शतं च प्रस्थः ॥ 375 ॥

[ गाथा ] या संस्कृते आर्या सा प्राकृते गाथा । वाग्भेदे सा गीतपदपाठे । यथा । गाथाः पठेश्च मधुरं मदनायदूतीरित्यादौ ॥ [ ग्रन्थ ] निर्ग्रन्था आर्हता निर्धना इत्यर्थः ॥ [ आस्था ] आस्थीयतेस्यामित्यास्था आस्थानी । आशायाम् । आस्थापरास्था सदृशी तवैवम् । आदरे । Ku. 6, 63 । यत्ने । आस्थापरेणैव

जनेन लभ्या पदद्वयी ते यदपि त्रिनेत्र ॥ [ संस्थ ] स्वशे चरे पुंसि । संस्थैः सभीक्ष्य परकृत्यमनन्यकार्यः ॥ 376 ॥

[ संस्था ] व्यवस्थायाम् । संस्थामनालोच्य विकारमेति । मरणे । संस्थां गतो विकारः । यागोपकरणे [sic] । ईधं संस्थां कृत्वा यमै सौत्ये प्रयुञ्जीत ॥ [ वीथि] वेश्माङ्केन्वेष्वम् । वर्त्मनि । विहारवीथीव मनोभयस्य ॥ 377 ॥

[ सिक्थ ] पुलाक ओदननिष्पत्तिपरीक्षा । अन्तर्निविष्टसिक्थिततौरुष्किकखुरिशकादिचरणत्रः c. Kuṭṭ. 64 इत्यादौ मदने नपुंसकम् । एतत्तु मचनमिति वैद्याः । मच मुचि कल्क इति धात्वर्थानुगुण्यमस्मिन्नेव पक्षे दृश्यते ॥ [ कुथ] दर्भेषु । कुथपवित्रकपूतकरो द्विजः ॥ 378 ॥

[ मन्थ ] मन्थाने । Su. 35 ॥ [ सिद्धार्थ ] द्वयेपि । सिद्धार्थता स्फुरति तावदियं स्फुटैव सद्वृत्तता स्फुरति सर्षप तावदेव ॥ [ समर्थ ] शक्तिस्थे । समर्थो धर्ममाचरेत् । संबद्धार्थे हिते वा । तथा समर्थां गिरमूचिवांसम् ॥ 379॥

[ क्षवथु ] द्वये । सुतीक्ष्णक्षवथूद्गारसंतापाचान्तविग्रहः ॥ [ उपस्थ ] अङ्के उत्सङ्गे गुह्ये च । उपस्थसंस्थापरिचुम्बनोन्मुखी ॥ [ निर्ग्रन्थ ] निष्परीवारः परिवारकरहितः क्षपण आर्हतः ॥ 380 ॥

[ उन्माथ ] पाशयन्त्रके । उन्माथबद्धमार्गस्य गजस्येव विचेष्टितम् । वधो मारणम् । घातस्ताडनं च ॥ [वयःस्थ] यूनि । एते वयःस्थाः स्थपुटेपि मार्गे ॥ 381॥

[ मन्मथ ] कपित्थः फलविशेषः । कामे । Ku. 3, 21 ॥ 382 ॥

[दशमीस्थ] क्षीणरागः शान्तचित्तः । वयोतिगो वृद्धः । यथा । M. 2, 138॥ [ अनीकस्थ ] द्वयेपि । अनीकस्थैः स्वस्थैः स्थितिरिह कथं शत्रुनिधने ॥ 383 ॥

[ हृद् ] मनसि । हृद्युन्मादकराः शशाङ्करुचयश्चेतोहरः पञ्चमः । वक्षसि । Ku. 3, 50 ॥ [ भिद् ] दारणं मारणादि भेदो विशेषः ॥ [ वन्दी ] मर्यादापालनधनादिनिर्वाहणार्थं स्वकपुत्रादिनिवेशनं पणबन्धः । हठहृतायाम् । मोक्ष्यथ स्वर्गवन्दीनां वेणीर्वीर्यविभूतिभिः c. Ra. 10, 47 ॥ 384

[ पद ] व्यवसाये निश्चये । चित्ते विचाररहिते च पदं न किंचित्समस्यक्स्फुरत्यहह कोपि विधिः प्रमादः । परमं पदमार्तचेतसामभविष्यं यदनश्कमीश्वर इत्यादौ परित्राणे [ ?c. Mh. 2, 226] । स्थाने । Ki. 2, 30 । वस्तुनि न्यासे चरणक्रमे

च । पदे पदे स स्खलितानि रक्षन् । अपदेशे व्याजे । अस्तुपदेन विगलितस्त्यक्तो मानस्तया वाचीत्यादौ । पादे । Ku. 5, 85 । तन्मुद्रायाम् । Ku. 1, 6 । चिह्ने । Ku. 2, 64 । अक्षे अक्षांशे । पदमपि वेलापतितं बह्वपि विभवः प्रशंसन्ति । शब्दे । यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् ।। 385 ।।

[ पाद ] रश्म्यङ्घ्र्योः । Su. 547 । तुर्यांशो दीनारादीनाम् । द्विपादा ऋगित्यादौ ऋगंशे । अद्र्यन्तपर्वते । Me. 19 । वृक्षमूले । पादघातेन पादपाः ।। [ संविद् ] संकेते । Ra. 7, 28 । ज्ञाने । तद्दृष्टाविव दृष्टेषु संवित्सामर्थ्यभाविनः । कालेन्वेष्यम् ।। 386 ।।

संभाषणे । तदा॰ Mh. 2, 232 । क्रियाकारे प्रतिज्ञायां वा । संविदि स्मरणीयं तदन्यथा हीयते ततः । आचारे । कथं॰ Mh. 2, 233 । नाम्न्यप्यन्वेष्यम् ।। [ दृशद् ] निष्पेषणशिलायाम् । संपिष्यतां दृशदि संप्रति चन्द्रमूर्तिः । शिलामात्रे । Me. 55 ।। [ भेद ] विदारणे । Ku. 8, 86 ।। 387 ।।

उपजापे । आकोपितान् भेदसहान्करोति सः । विशेषे । शब्दभेदे स्मृतिः कथम् ।। [ गद ] हरेर्भ्रातरि आयुधे च । सगदः सह सारणेन तम् c. Śi. 16, 13 ।। [ संपद् ] श्रियाम् । संपदि दानं दीनजने विपदि न धैर्यं यस्य । उच्छ्रये आधिक्ये । Ki. 1, 17 ।। 388 ।।

[ कन्द ] ---- इत्यादौ मूले । किं॰ Sp. 1725 इत्यादौ सूरणाख्ये शाकभेदे । सूरणशब्देन च समस्तशाकोपलक्षणम् ।। [ छद ] ओष्ठे । दन्तच्छदे बिन्दुपवित्रितोदरे । गरुत्सु पक्षेषु । सितच्छदैर्मण्डलितोग्रपुच्छैः ।। [ ह्रद ] तोयाशये । Ra. 7, 27 । स्रोतसि । प्रवृत्तघोषा रुधिरह्रदाकुलाः ।। [ बिन्दु ] तथेयं बैन्दवी कलेत्यादौ बवयोरेकत्वस्मरणाद्वेदितरि बिन्दुः । विप्रुषि । Ku. 5, 24 ।। 389 ।।

दन्तक्षते शून्ये च । एतच्चित्रं त्वदधरदलं बिन्दुनैकेन युक्तं धत्ते शोभां तव सुवदने यत्पराश्रीतिरिक्ताम् [ sic ] । अर्थप्रकृतौ । बीजं बिन्दुः पताका च c. Daś. I, 17 । भ्रूमध्यतेजसि । S. P. 25 ।। [ स्वादु ] इष्टेपि । Śi. 10, 3 ।। [ मृदु ] अतीक्ष्णे । मृदु धनुर्वहता किल कौसुमं किमिव कृत्यमनेन तपस्विना । कोमले । मृदुभाषिणि ते मुखेन्दुना ।। 390 ।।

[ छन्द ] अभिप्राये । छन्दानुवर्ती विपदं न याति । वशे । Su. 1472 ॥ [अब्द] जीमूते । शारदाब्दसदृशं यशस्तव । वत्सरे । लौकिकाब्दान्विनिक्षिपेत् ॥ [ स्वेद ] घर्मे । स्वेदो नवः किं° c. Ku. 3, 33 । स्वेदने । स्वेदोदयो नवज्वरे । स्तम्भः स्वेदोथ रोमाञ्च इत्यादौ कामहेतुके घर्म एव सात्त्विको भावः ॥ 391 ॥

[ छेद ] विरामे । Ku. 2, 41 । खण्डे । Me. 11 ॥ [ शाद ] जम्बाले । आस्यान° Mh. 2, 232 । शष्पे । Ra. 2, 17 ॥ [क्षोद] विमर्दे । क्षोदक्षमक्षुण्णं° c. R. K. II, 8 । चूर्णे । कर्पूरक्षोदधूसरम् ॥ [ नाद ] प्राणे । बिन्दुनादगमनागमनाभ्याम् । शब्दे । M. M. 178, 2 ॥ 392 ॥

[ शरद् ] वत्सरे । M. Ch. I, 42 । ऋतौ । Su. 965 ॥ [ क्रव्याद् ] हयेपि । Ra. 15, 16 ॥ [ सूद ] सूपे । सूदखादनविषूचिकाचितः । ऊषरभूमिके देशे । सूदे दामोदरीये हि विप्रशापात्समर्पिताम् c. Râj. I, 157, 167 ॥ 393 ॥

[ कुन्द ] भ्रमे उल्लेखयन्त्रे । An. II, 80; c. Nai. 19, 54 । पुष्पभेदे शैशिरे । कुन्दे नन्दति कैरवे विहरति पङ्केरुहे रोहति ॥ [ मन्द ] अपटौ इभजातौ च । Śi. 5, 49 । शनैरर्थे । Me. 9 । मूढे । Ra. 1, 3 ॥ 394 ॥

[ मद ] क्षैब्ये । दृष्ट्वा ततश्च तरुणेन मदेन लब्धाम् । गर्वहर्षयोः । Ra. 4, 22 । इभदाने । R. K. 1, 1 । मद्ये । Ku. 8, 76 v. l. ॥ [ ककुद् ] राजलिङ्गे । उच्छ्रितककुदि महाबलचतुरङ्गबलान्विते नृपतौ । पृष्ठाङ्गे । आवर्तान्घ्नन्त्यशुभानभिमकाये ककुद्यवं मुक्त्वा [c. Pa. 1662] । समुल्लिखन्° Ku. 1, 56 इत्यादौ स्वतिशयिते पृष्ठाङ्गे रूढः । श्रेष्ठे प्रसिद्धः ॥ 395 ॥

[ निषाद ] लुब्धके । Ra. 13, 59 । संकरजन्मनि । M. 10, 8 ॥ 396 ॥

[ ककुद ] प्रधाने । अस्य राजककुदस्य कापि सा कीर्तिरुल्लसति लोकपावनी । राजलिङ्गे । Ra. 3, 70 । पृष्ठाङ्गे । ककुद° Mh. 2, 220 ॥ [ मर्यादा ] धारणायां स्थितौ । Bh. Ś. 92 । सीमनि । मर्यादां सागरस्त्यजेत् ॥ [ विषद ] व्यक्ते । Ku. 3, 33 । विषदचन्द्रिकया व्यवभासितमित्यादौ विषदे पिच्छिलगुणविपरीते शुक्लस्योपचारात् ॥ 397 ॥

[ गोविन्द ] इयेपि । गोविन्दता च विहिता भवता यथार्था ॥ [ कुमुद ] कपिजलजयोः । H. Ch. 5, 5 । नागो दिग्गजः । भुजगविशेषश्च ॥ [ कुमूद ] वृद्धिजीवने । कुसूदकृषिवाणिज्यैर्वैश्यवृत्तिरुदाहृता ॥ 398 ॥

कुसेवकैः आलस्योपहते । प्रज्ञा करोति किं तस्य यः कुसूदेन वर्तते ॥ [ प्रतिपद् ] ज्ञाने । भावैर्नित्यानुबद्धा प्रतिपदियमहो दीर्घदीर्घा स्थिता ते । तिथौ । Ra. 8, 64 ॥ [ प्रसाद ] अनुग्रहे । Ku. 3, 10 । नैर्मल्ये । प्रसादमादर्श इवान्तरात्मनि । प्रीतिदाने । राज्ञां प्रसादीकृतमेतदत्र ॥ 399 ॥

[ आक्रन्द] साराबे रुदिते । आक्रन्दस्तनिते° Dhv. 92, 11 ; Su. 1776 । त्रातरि । निराक्रन्दो जीवलोकः । दारुणे रणे । आक्रन्दे महति जहर्ष राजलोकः । पाश्चात्ये राजविशेषे । आक्रन्दसंदीपितजैत्रयात्रः ॥ [ गोष्पद ] माने । K. K. S. 1, 1 । सेविते देशे । गोष्पदेषु विचरन्न पूयते ॥ 400 ॥

[ शारद ] अधृष्टनवसंवत्सरेष्वन्वेष्यम् । शरद्भवे देव्यां च । Su. 1 ॥ मुद्गोपि शारद आयुर्वेदे प्रसिद्धः ॥ 401 ॥

[ कुविन्द ] भ्रमिः शिल्पिभाण्डम् । वायकेपि । K. Pr. 141, 6 ॥ [प्रमदा] तरुण्याम् । Ra. 9, 41 । हर्षे पुंसि । Śi. 13, 2 । अधिकमदे त्रिषु । प्रमदद्विरदोपबृंहितः ॥ 402 ॥

[ उपनिषद् ] त्रयेपि । M. M. 14, 3 । रहःशब्देन रहसि भवं वस्तूच्यते ॥ [ शतह्रदा ] शतह्रदेन्द्रायुधभीमदर्शन इत्यादौ द्वयेपि ॥ [ तमोनुद ] त्रयेपि । उदिते तमोनुदे हि प्रभवति न तमः क्वचित्स्थातुम् ॥ 403 ॥

[ समर्याद ] मर्यादासहिते । K. Pr. 121, 3 । अभ्यर्णे निकटम् ॥ [ अववाद ] निन्दायाम् । दुष्टोयमववादस्ते ॥ [जनपद] देशे । H. Ch. 106, 5 । जने । Ra. 9, 4 ॥ 404 ॥

[ विष्णुपद ] गङ्गायां हर्यङ्घ्रौ च । स्नात्वा विष्णुपदीतोये याति विष्णुपदं पुमान् । आकाशे विष्टपे लोकमात्रे च । भ्रान्त्वा विष्णुपदं प्रयाति शनकैरस्ताचलं भास्करः ॥ [ अभिमर्द ] युद्धे । युक्तं° Mh. 4, 136 । पीडायाम् । तीव्राभिमर्दपरिहारनिविष्टबुद्धेः ॥ [ विशारद ] द्वयेपि । Su. 1 ॥ 405 ॥

[ कोकनद ] इयेपि । फुल्लकोकनदकान्तितस्करी ॥ [ परिवाद ] वादनोपाये । Śi. 6, 9 ॥ [ अष्टापद ] हेमनि । Ku. 7, 10 ॥ **406** ॥

शारिफले । H. Ch. 10, 11 ॥ [ अपवाद ] गर्हायाम् । जनापवादादपरज्यति श्रीः । बाधके । Ku. 2, 27 । बाधने । सुखापवादाय भवन्ति शत्रवः ॥ **407** ॥

[ ऋद्धि ] लक्ष्म्याम् । Ku. 7, 52 । प्रभावे । K. K. S. 1, 8 । अतिशये । Bh. Ś. 28 ॥ [ व्याधि ] आमये । Su. 1103 ॥ **408** ॥

[ मधु ] वसन्ते । Ku. 3, 21 । दैत्यभिदि । त्रायन्तां वो॰ Dhv. 1 । चैत्रे । Ra. 11, 7 । मद्ये । Śi. 10, 3 । पुष्परसे । मधुपिपासुमधुव्रतसेविभिः c. V. K. V, 2, 14, C. । क्षौद्रे । यन्माधुर्यं मधुनि विदधेन्यत्र तन्नैव वेधाः । मधुरे । मधुनि विमले मद्ये चेतो न कस्य विधास्यति ॥ **409** ॥

[ आधि ] बन्धके विनिमयस्थापिते वस्तुनि । आधिः सीमा बालधनं निक्षेपोः [ sic ] स्वामिविक्रयः c. M. 8, 149 । व्यसने । Me. 86 । चेतसः॰पीडायाम् । शाधि मामाधिपीडितम् । अधिष्ठानेन्वेष्यम् ॥ [ विधु ] विष्णौ । विधुर्दीनवनारीणां वैधव्यव्रतशिक्षकः । शशिनि । Śi. 2, 61 ॥ [ बाध ] दुःखे । प्रशान्तबाधं द्विषतोभिरक्षयेत् । निषेधे । निर्बाधे विधुरेप्यधीर इति मां येनाभिधत्ते भवान् ॥ **410** ॥

[ सिन्धु ] नदभिदि । Ku. 3, 6 । देशभिदि । स्फूर्जत्सिन्धुरभङ्गुरे रणमुखे जित्वा भटान्सैन्धवान् । अब्धौ । स्वत्स्मृत्या तु प्रथितविभवोप्यन्धुतामेति सिन्धुः । सरिति । Pa. 1151, Z. D. M. G. 36, 535, 2 ॥ [ विधा ] विधौ विधाने । Ra. 1, 94 । प्रकारे । M. St. 2 । गजान्ने वेतने च । स्व॰ Mh. 2, 245 ॥ **411** ॥

[ वधू ] जायायाम् । Ku. 6, 82 । स्नुषायाम् । Ra. 1, 65 । स्त्रियाम् । M. M. 154, 1 । प्रियङ्गुर्लता ॥ [ निधि ] निक्षेपे । अनिक्षिप्ते निधौ यत्र विवादः संप्रजायते । गूढार्थे । तस्य शङ्खनिधिन्यायो न कथं पर्यवस्यति । स्थाने । स्वं तावत्त्वधिगगसामसहना मानोन्नता सा पुनः ॥ [ श्रद्धा ] इयेपि । Ra. 2, 16 ॥ **412** ॥

[अन्ध] तमसि । अन्धा॰ Mh. 2, 234 । जले । आदरेण धृतिं तन्वी सा बबन्धान्धकेलिषु । अदृष्टौ । श्रुत्वापि नाम बधिरो दृष्ट्वाप्यन्धो जडो विदित्वापि । अज्ञानेपि ॥ निःश्वासान्ध इवादर्श इत्यादौ तूपचारात् c. Dhv. 63, 3; Mh. 2, 234 ॥ [संधा] इयेपि । Ra. 14, 52 ॥ [सुधा] मङ्कोले । V. Ś. III, 2 । अमृते ओषधिभेदे च । सुधासारस्यन्दी शिशिरकिरणः शष्पकवलः ॥ 413 ॥

[विधि] विधायके वाक्ये विधाने च । Ku. 5, 32 । दैवे । K. Pr. 237, 2 । स्रष्टरि । कोयं विधेः प्रक्रमः K. Pr. 54, 2 or M. M. 183, 4 ॥ [श्राद्ध] हव्यकव्यविधौ दैवे पित्र्ये कर्मणि । M. 3, 145 । श्रद्धासमन्विते । श्राद्धैवान-सूयश्च c. M. 4, 158 ॥ 414 ॥

[संधि] भगे सुरुङ्गायां च । संधिं भित्त्वाविशच्चोरश्छिद्रान्वेषणतत्परः । संधाने । दूतोङ्क कामकलहेषु विसर्जनीयः संधिः कथं नु सखि तत्र स यत्र लुप्तः । गुणभेदे । संधिं करोतु भवतां नृपतिः पणेन ॥ [गोधा] तले ज्याघातवारणे । शरासनाभ्यासविधौ समाप्ते क्षिप्तेव गोधा मकरध्वजेन N. Ch. I, 28 । निहाका पञ्चनखो बिलेशयः प्राणिविशेषः । यथा । गोधा लङ्गूलबद्धेवाक्षिप्यमाणा बलीय-सेत्यादौ ॥ [बुध] विदुषि । Dhv. 2, 1 । महामरयोः । Ra. 1, 47 ॥ 415 ॥

[राधा] कृष्णजायायाम् । Gît. I,1, d । शरव्ये । राधायन्त्रं रचयत पुन-र्विद्धमप्यस्तु विद्धाम् [?] । कर्णमातरि । Ki. 3, 21 ॥ [वृद्धि] वर्धने । A. S. 70, 9 ॥ 416 ॥

[सिद्धि] निष्पत्तौ । Ku. 3, 57 ॥ [बन्ध] खेदे । बिभेद नो तां प्रति तस्य बन्धः । आधिर्विनिमयस्थाप्यं वस्तु । बन्धने रचनायां च । H. Ch. 3, 3 । वृन्तेपि । Me. 10 ॥ [स्कन्ध] स्कन्धावलम्बी भगवानेष बालदिवाकर इत्यादौ वातनियतावधौ । वातस्कन्ध इति प्रसिद्धः । अंसे च । आदिग्रहणाद्दीना-रादिनियतावधौ ॥ 417 ॥

राजनि । विवेश सहसा तत्र स्कन्धावारमवारितः । अत्र हि स्कन्धं राजान-मावृणोतीति स्कन्धावारः सेनासंनिवेशः । तरुजङ्घायाम् । Ku. 3, 26 । समूहे । Śi. 2, 28 ॥ [वीरुध्] इयेपि । M. M. 305, 3 ॥ [अर्ध] खण्डे । Me. 55 । समेंशके । Śi. 9, 29 ॥ 418 ॥

[ बुद्ध ] दोषज्ञः पण्डितः । सुगते । बुद्धं सधर्ममथ सार्यगणं प्रणम्य ॥ [ शुद्ध ] एकस्मिन्नसहाये पूते च । K. Pr. 363, 9 ॥ [ वृद्ध ] द्वयेपि । अनु° Mh. 2, 247 ॥ [ साधु ] शोभने । Ki. 1, 5 ॥ **419** ॥

वार्द्धुषिर्वृद्धिजीवी । सज्जने । तत्साधवो ननु विदन्ति वदन्ति° Su. 271 ॥ [ सिद्ध ] देवविशेषे । Ku. 1, 5 । निष्पन्ने । M. St. 15 । पूज्ये । अवाप्त° Mh. 2, 251 ॥ [दिग्ध] विषलिप्ते शरे । अथ तैः परिदेविताक्षरैर्हृदये दिग्धफलैरिवार्दितः c. Ku. 4, 25 । लिप्तमात्रके । M. M. 54, 5 ॥ **420** ॥

[मुग्ध] मनोहरे । M. M. 51, 2 । योषिति । दीपं मुग्धा वयमरुता [sic] यत्र शान्तिं नयन्ति c. Mh. 2, 242 ॥ [विद्ध] सूच्यादिभिन्ने । विन्यस्तवैडूर्यशिले च तस्मिन्नाविद्ध° c. Ku. 7, 10 । सम्याग्विद्धं तु तत्ताम्रमित्यादावादिग्रहणाद्रसादिव्यवधानेपि । सादृश्येन्वेष्यम् । क्षे । किमिव हि न विवेक्तुं रजते [ sic ] हन्त विद्धाः c. Mh. 2, 245 ॥ **421** ॥

[ गन्ध ] घ्राणग्राह्ये । यद्गन्धान्धं भ्रमरपटलम् । स्वल्पे । जलदगन्धिरराजत सानुमान् । अल्पे जलदा यत्र स जलदगन्धिरिति व्युत्पत्त्या । द्रव्ये । गान्धिकैर्विपणयो विराजिताः । अत्र हि गन्धशब्दस्तद्वति वर्तते । संबन्धमात्रके । वशानागौ सगन्धाल्पकलभानुगताविव ॥ [ लुब्ध ] स्पृहावति । Ku. 1, 34 । मृगयौ ॥ तेपि क्रूरचमूर° Su. 1016 c. Bh. Ś. 87 ॥ **422** ॥

[ मागध ] वन्दिनि । Śi. 11, 1 ।पिप्पली द्रव्यभेदः । यूथिका हरणिका अत्र मागधिशब्दः ॥ [ न्यग्रोध ] व्यामे प्रसारितकरद्वयवलिते । न्यग्रोधभेयचतुरश्रनितम्बबिम्बा ॥ **423** ॥

[ प्रबोध ] जागरे उद्घाटे च । सुखप्रबोधगलिता सुवर्णघटनोज्ज्वला c. H. Ch. 7, 1 । उद्घाटोर्थावगमः ॥ [ उत्सेध ] वपुषि । स्थूलोत्सेधव्यवहितरविस्यन्दनः कुम्भकर्णः । उन्नतौ । Ku. 5, 8 ॥ [ विवध । वीवध ] पर्याहारे अध्वनि च । Śi. 2, 64 । पर्याहारस्तृणजलान्नादीनामन्यत आनयनम् । भारे । H. Ch. 13, 14 ॥ **424** ॥

[ परिधि ] उपसूर्यके मण्डले । परिधिमुक्त इवाहिमदीधितिः c. Ra. 8, 30 ॥

[ समाधि ] ध्याने । Ku. 3, 40 । नीवाकः । नियतं वचनम् । नियमे । यदा फलं सर्वसमाधिसाधनं° c. Ku. 5, 18 । समर्थनेपि । कृतसमाधिरपि चपलः ॥ 425 ॥

[ प्रणिधि ] प्रार्थने । प्रणिधिवशादुपजातसत्प्रभावः । चरे । Ku. 3, 6 ॥ [ अवधि ] परिच्छेदे । Me. 84 । बिलेन्वेष्यम् ॥ [ अगाध ] अतलस्पर्शे । अगाधसंशयाम्भोधिसमुत्तरणसाधनी । गर्ते । दुष्टा° Mh. 3, 333 ॥ 426 ॥

[ उपधि ] व्याजे । Ki. 1, 45 । रथाङ्गं चक्रनाभ्यन्तःप्रवेशी काष्ठविशेषः ॥ [ विबुध ] द्वयेपि । K. Pr. 255, 5 ॥ [ आनद्ध ] द्वयेपि । आरब्धानद्धतूर्यध्वनिमुखरमुखा रेजुरुच्चा निवासाः ॥ 427 ॥

[ उपाधि ] धर्मचिन्तायाम् । विनोपाधेः शास्त्रं तृणतुषबुसप्रख्यमखिलम् । कुटुम्बव्यापृतेन्वेष्यम् । विशेषणोपार्जनयोः । उपाधि° Mh. 3, 335 ॥ [ प्रबुद्ध ] ज्ञानिनि जाग्रति च । प्रबुद्धः सर्वदा तिष्ठेत् ॥ 428 ॥

[ संसिद्धि ] सम्यक्सिद्धौ । संसिद्धिसिद्धविभवा मुनयः प्रयाताः । स्वभावे । संसिद्धि° Mh. 3, 343 ॥ [ संनिधि ] प्रत्यक्षे । यातः सं° Mh. 3, 343 । संनिधाने । Ra. 7, 3 ॥ [ निरोध ] नाशे । स्थिति° Mh. 3, 338 । रोधे । Ku. 3, 48 ॥ 429 ॥

[ निषध ] कठिनेन्वेष्यम् । राजभेदे नगान्तरे च । Ra. 18, 1 ॥ [ कबन्ध ] त्रयेपि । स्फूर्जत्कबन्धविधुरारवपूरिताशं संग्रामवारिधिमवलोक्य न दृश्यते कः ॥ 430 ॥

[ आबाध ] द्वयेपि । आबाधविधुरे चित्ते धृतिः कस्य न हीयते ॥ [ संबाध ] योनौ । करिहस्तेन संबाधं विलोडयेत् c. K. Pr. 190, 1 । संकटे । ययावसंबाधसुखेन मार्गम् c. Ra. 2, 72 ॥ [ विलब्ध ] द्वयेपि । Śà. 39 । इतोनन्तरमवष्टब्धावधि त्रिषु ॥ 431 ॥

[ आविद्ध ] द्वयेपि । Vik. 115, c ॥ [ प्रसिद्ध ] द्वयेपि । Ku. 5, 9 ॥ [ विरुद्ध ] वैरिणि । त्वद्विरुद्धवनितासुसंततिः । विगुणे । नश्येद्विरुद्धाचरणेन बुद्धिः ॥ [ दुर्विध ] द्वयेपि । दुर्विधेषु विनयो न शोभते ॥ 432 ॥

[ अवष्टब्ध ] त्रयेपि । Mh. 4, 149 ॥ [ ब्रह्मबन्धु ] अधिक्षेपे । आ दुरात्मन्मुनिखेट ब्रह्मबन्धो c. H. Ch. 11, 14–12, 1 । ब्राह्मणनिर्देशे । ब्रह्मबन्धुरयमागतोतिथिः ॥ 433 ॥

[ अनुबन्ध ] दोषोत्पादे । महतां नास्ति कदाचनानुबन्धः । प्रकृत्यादेर्धातुप्रत्ययादिमध्याद्यः प्रयोगं नार्हति सोनुबन्धः । मुख्यानुयायिनि शिशौ चोदाहरणमन्वेष्यम् । प्रकृतस्यानुवर्तने । Ra. 1, 64 ॥ 434 ॥

[ महौषध ] एते द्रव्यभेदा महौषधाख्याः ॥ 436 ॥

[ पृश्नि ] अल्पतनौ । पृश्निवर्षवरमुख्यसेविते राजवेश्मनि विवेश संकटे । रश्मौ । अशुवन्ति रविपृश्नयो रसम् । वर्णभेदे ईषद्रक्ते । अल्पतनुवर्णयोस्त्रिलिङ्गः। रश्मौ पुंसि । गवि । पृश्नयः पपुरपः समागताः ॥ 437 ॥

[ यक्ष्मन् ] व्याधिभेदे । यक्ष्मणापि परि° Ra. 19, 50 v. l. । यक्षे प्रसिद्धः ॥ [ मुनि ] बुद्धे । मुनेर्मतं कस्य न माननीयम् । ऋषौ । Ku. 3, 24 ॥ [ शुष्मन् ] वह्नौ । शुष्मणि प्रणयनाभिसंस्कृते c. Śi. 14, 22 । बले । कः सहेत तव शुष्मसोष्मणः ॥ [ शृङ्गिन् ] प्रतिविषाविषयोरिन्नन्त एव पुंलिङ्गः । शृङ्गी विषं बलामोटा इति निदर्शनात् । केचिच्छृङ्गीशब्दमनयोरीकारान्तं मन्यन्ते । तत्पक्षे गान्तेषु स्त्रीलिङ्गो द्रष्टव्यः ॥ 438 ॥

दान्ते पर्वते च । आरुह्य सौधधवलं शृङ्गिणं व्यहरद्धरः । शृङ्गवति । Sp. 3214 ॥ [ हनु ] सृक्कणि । Su. 1677, d ॥ [ जटिन् ] उभयत्रापि । निःसृता मन्मुखाम्भोधेरपूर्वेयं सरस्वती । स्थाणुं त्वां जटिनं प्राप्य सामरस्यमुपैति या ॥ व्रतिनि । जटी मुण्डी शिखी वापि यत्र तत्राश्रमे रतः । पञ्चविंशतितत्त्वज्ञो मुच्यते नात्र संशयः ॥ 439 ॥

[ घन ] मेघे । Śi. 1, 7 । मूर्तिगुणे काठिन्ये । पेतुर्जनादभ्रघनादिवापः । घनादभ्रादिति ह्यत्रार्थः । विस्तारे । अर्धैकादशपुरुषो घनो भवेन्मण्डले तु रथचक्रे । लोहमुद्गरे । अपतत्स घनैरिवाहतः ॥ अथ सुशिरघनावनद्धवाद्यध्वनिरहितेन हि रङ्गमङ्गलेनेत्यादौ वाद्ये नपुंसके । अन्यत्र तु पुंसि । मूर्तिनिरन्तरे कठिने । Śi. 5, 29 ॥ क्व प्रस्थितासि करभोरु घने निशीथे Sp. 1991, वर्त्मभिर्घनतमोमलीमसैः Bh. Ś. 6 इत्यादौ भूरितमोनैरन्तर्यमात्रे ॥ 440 ।

[ इन ] प्रभौ । Ra. 9, 5 ॥ [ राजन् ] त्रयेपि । राजा राजति राजवत् ॥ [ तनु ] त्वचि । तरुतनुभिः कृतवस्त्रसंहतिः । देहे । Śi. 1, 23 । तद्गुणे । Sp. 4554 ॥ **441** ॥

[ पर्वन् ] तिथिभेदे प्रतिपत्पञ्चदश्यन्तरे । पार्वणेन शशाङ्केन । क्षणे उत्सवे । विलोक्य° Mh. 2, 269 ॥ [ वर्त्मन् ] अध्वनि । Su. 2641 ॥ [ब्रह्मन्] वेदे । Ku. 6, 16 । तत्त्वे । Bhag. 4, 24 । तपसि । Bhag. 6, 14 । विप्रे । Pr. P. 5 ॥ **442** ॥

[ पक्ष्मन् ] अक्षिलोम्नि । Ku. 5, 24 । किञ्जल्के । कुसुमैस्तनुलग्नपक्ष्मभिः कुसुमेषोरिव यस्य सायकैः । निसर्ग° Śi. 1, 8 इत्यादौ आदिग्रहणाल्लोममात्रेपि ॥ [ आत्मन् ] यत्ने । Ra. 7, 12; Ku. 7, 64 । धृतौ । अवष्टभ्यात्मनात्मानं त्वं सारं वक्तुमर्हसि । बुद्धौ । Ku. 5, 76 । स्वभावे । न सन्ति याथात्म्यविदः पिनाकिनः c. Ku. 5, 77 । ब्रह्मणि वर्ष्मणि शरीरे च । Ku. 3, 50 ॥ कुत्रापि पुत्रेपि दृश्यते । Ku. 2, 61 । तथा । आत्मा वै पुत्रनामासीति निदर्शनात्पुत्रे c. Mahâbhâr. 1, 74, 63 ॥ **443** ॥

[ वर्ष्मन् ] देहे प्रमाणे च । व्याप्तं व्योमनि वर्ष्मणा यमपुरद्वारार्गलादारुणौ । आकारे सुन्दरे । वर्ष्मणा विदधती जगज्जयम् ॥ [ ग्रावन् ] द्वयेपि । अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ **444** ॥

[ शिखिन् ] वृक्षे अग्नौ च । शिखिमूलानि शिखी निहन्ति चित्रम् । कुक्कुटे । शिखिकुलकूजितसुभगे । बर्हिणि । Me. 101 ॥ [ सादिन् ] द्वयेपि । सादिभिः सुविहितेथ रथाश्वे ॥ [ वाजिन् ] अश्वे इषौ च । युक्तं चक्रुर्वाजिनो वाजितायाः c. Śi. 18, 13 । पक्षिणि । वाजिनो वियति संभ्रममापुः ॥ **445** ॥

[ सीमन् ] स्थितौ । अनुल्लङ्घितसीमानः सागरा इव साधवः । क्षेत्रे । अथाग्रे सीमानः परिणतशरच्छालिसुभगाः । अवधौ । Bâ. 1, 8 । मार्गविषये । यत्राज्ञातचरश्चिरान्नयनयोः सीमानमेति प्रियः ॥ [ लक्ष्मन् ] अग्र्ये प्रधाने । दृष्ट्वैव तं सूर्यकुलैकलक्ष्मा । चिह्ने लाञ्छने । Su. 1343 ॥ [ धामन् ] गृहे । Ku. 2, 1 । देहत्विट्प्रभावेषु । आत्मा° Mh. 2, 266 ॥ [ धन्वन् ] स्थले ।

नीलेषु धन्वसु लुठन्ति नदन्ति दान्ता भूमिं खनन्ति रभसान्निशितैः खुराग्रैः । धनुषि । धुन्वन्धन्व विघट्टयञ्शितशरैर्दर्पोद्धुरान्सिन्धुरान् ॥ **446** ॥

मरौ । धन्वनि तृषितः पुरुषो रश्मिषु तोयाशया पतति ॥ [ स्वम ] द्वयेपि । A. S. 187, 3 c. Dhv. 72, 4. Su. 2570 ॥ [ सून ] पुष्पे । Śi. 3, 17 । वधस्थाने । M. 3, 68 । जिह्वातले । सूना° Mh. 2, 286 ॥ **447** ॥

पुष्पितेष्वेष्यम् ॥ [ चक्रिन् ] अहौ । पदा स्पृशन्तं सहते न चक्री । रथे । वेगा° Mh. 2, 259 । तैलिके । दशसूनासमश्चक्री c. M. 4, 85 ॥ [ भर्मन् ] भृतौ । कर्मणे भवति भर्म सर्वथा । सुवर्णे । भाति भर्म परिकर्मवर्मदम् ॥ [ चर्मन् ] फलके । Śi. 18, 21 । त्वचि । Su. 803 ॥ **448** ॥

[ स्वामिन् ] द्वयेपि । प्रतिहतदुर्गः स्वामी ॥ [ जन ] द्वयेपि । Su. 1141 ॥ [ जनी ] वध्वाम् । यातेति जन्यान° Ra. 6, 30 v. l. ॥ [ज्योत्स्नी] चन्द्रयुतायां रात्रौ । V. Ś. III, 1 ॥ **449** ॥

[ अर्वन् ] द्वयेपि । वत योधाः स्थिरार्वाणः शत्रोरिव महीपतेः ॥ [ प्रेमन् ] स्नेहे । Sp. 1939 । नर्मणि । दृढस्थेमा प्रेमा रमयति मनो मार्गविधुरम् ॥ [ स्वैरिन् ] मन्दः शनैर्गामी । स्वच्छन्दे । बम्भ्रम्यन्ते वनभुवि सदा स्वैरिणो वैरिणस्ते ॥ [ श्येन ] श्वेते । श्येनीभिः सुरसिन्धुरोधसि तरुच्छाये कृतं मण्डलम् । विहंगमे प्राजिकाख्ये । श्येनावदाते चकिता वनवर्तिका c. M. M. 286, 7 ॥ **450** ॥

[भानु] द्वयेपि । Sû. 1 ॥ [ वन ] काननीरयोः । सदृशे वनवृद्धानां कमलानां तदीक्षणे c. Mh. 3, 622 । समूहे । नवनलिनवनच्छायां धत्ते विभुरमरभुवि । पर्वते । Nâg. 4 ॥ [ तान ] तात्पर्ये । त्वदेकताना तनुतां तनोति सा । गीतविशेषे । तानास्त्वेकोनपञ्चाशत् ॥ **451** ॥

[ रत्न ] द्वयेपि । Ku. 1, 3 ॥ [ यान ] गमने । दिनैः कतिपयैर्यानं जीवितस्य विचिन्त्यताम् । युग्ये । Ra. 6, 10 । नृपगुणभेदे । यानं समाचरेच्छक्तौ ॥ [ धेनु ] दोग्ध्र्याम् । अजधेनुभिः सह समावसेत्क्षयी । गोमात्रे । Ra. 11, 74 ॥ **452** ॥

[ द्युम्न ] बयेपि । Kutt. 304 ॥ [ विन्न ] अनिर्विण्णो विन्नो यदि भवति नुन्नः स्मरशरैरित्यादौ लब्धे विद्लृ लाभ इत्यस्य । अन्यत्र विद विचारणे ॥ [ अर्थिन् ] द्वयेपि । Sp. 3336 ॥ [ स्थान ] स्थितौ भावमात्रे । स्थानं यद्यपि ते नास्ति विषयावेशचञ्चलम् । अवकाशे आस्पदे । Ku. 8, 33 ॥ **453** ॥

सादृश्ये । धत्ते पितृस्थानतया यः स्नेहं सर्वेषु जन्तुषु । गीतविषये । स्थानप्रदायित्व° c. Ku. 1, 8 । योग्ये । स्थानमेतदुचितस्य वस्तुनः । प्रसङ्गे । दर्भाणां स्थाने शरैरास्तरितव्यम् ॥ [ भोगिन् ] वैयापृत्यकरो व्यावहारिकः । व्यावहारिकभुजंगयोः । Bh. Ś. 37 । राजनि । अनयेन नदन्ति भोगिन इत्यादौ ॥ **454** ॥

[ ज्योत्स्ना ] ज्योतिष्मत्यां व्यभ्रायां रात्रौ । ज्योत्स्नासङ्गप्रसरसुभगे सैकतेस्मिन्सरय्वाः । चन्द्रमसः प्रभायाम् । Ku. 1, 25 ॥ [मान] प्रमाणे प्रत्यक्षादौ । मातृमानमिति मेयममीभिरित्यादौ प्रमाणे । प्रस्थादौ । तन्वङ्ग्यो मानमानव्यतिकरविधुराः । आदिग्रहणादुन्मानादयो गृह्यन्ते । चित्तसमुन्नतिश्चित्तोद्रेकः । तत्र पुंलिङ्गः । मन्यतेर्घञि । मानं° Su. 1161 । इत्यादौ ॥ **455** ॥

[ नग्न ] दिग्वाससि । Bâ. II, 4 । वैतालिके । नग्नाः पठन्तु यदि । आदिग्रहणाद्बन्द्यादयः ॥ [ भिन्न ] संस्कृते । Ku. 8, 74 । संस्कृतो विशेषितः । दारिते । भिन्नं भासा ननु हिमरुचेर्दण्डकाण्डं द्विजानाम् । अहमद्य प्रभृत्येव भिन्नो भवद्भ्य इत्यादावन्यशब्दाभिधायकः ॥ **456** ॥

[ वान ] शुष्के । Sû. 37 । शुष्कफले । आवानं कस्यचिन्मधु । सीवनकर्मण्यनुसर्तव्यम् । पै — — विशोषणे वेञ् तन्तुसंताने इति च धातुद्वयस्य रूपम् ॥ [ योनि ] भगे । Su. 2823 । आकरे । Ku. 6, 18 । आकर उत्पत्तिस्थानम् ॥ [ कृतिन् ] सूरौ । कल्यः कलासु च कृती दृढभक्तिराढ्यः । कृतकृत्ये । Ku. 6, 18 ॥ **457** ॥

[ स्नान ] सवने अभिषेके । स्नानैर्धूपैस्तथा दीपैर्नित्यमाराधयेच्छिवम् ॥ [ धन ] गोसंघे । धनमाराधयेत्केशवः ॥ [ चिह्न ] पताकायाम् । उच्चचिह्नसुरसद्मगोचरः । लक्ष्मणि । Ra. 2, 22 । लक्ष्म वस्तुनो विशेषकमभिज्ञानम् ॥ [ अन्न ] भुक्ते । अन्नेन कुक्षेर्द्वावंशौ । अद्यते चान्नमिति चान्नम् ॥ **458** ॥

[ छन्न ] छादिते । Me. 18 । रहसि । Sp. 2173 ॥ [ पान ] सदा रक्षस्युर्वी तदपि च न पानव्यसनितेत्यादौ प्रकृतत्वेन रक्षणे ॥ [ दान ] खण्डने त्यागे च । गोत्राणां शतकोटिदाननिरतः । भूमण्डलदानसक्ता इत्यादौ रक्षणे च ॥459॥

संगीयमानत्रिपुरापदान इत्यादौ शुद्धिसंबन्धाच्छुद्धे कर्मणि c. Ku. 7, 48 । लूनौ । नामूलं° Mh. 2, 264 ॥ [ हीन ] ऊने । हीनातिमात्रमवशम् । गर्ह्ये । हीनजन्मा स वर्ज्यः ॥ [ रसन ] शृङ्गाररसना नाट्य इत्यादावास्वादने । एवं शृङ्गाररसनं नाट्यमित्यपि ज्ञेयम् ॥ 460 ॥

[ कुहना ] दम्भचर्यायाम् । An. IV, 11 । ईर्ष्यालौ त्रिलिङ्गकः । H. Ch. 202, 13 ॥ [ शिखरिन् ] तरौ । नास्त्याकाशः किमु शिखरिणां येन ते स्युः प्रलम्बाः । शैले । Su. 2030 ॥ [ तरस्विन् ] बलिनि । समरमूर्धनि तेन तरस्विना V. K. 5, 1, 9, C. । वेगिनि । अवनिमेकरथेन वरूथिना जितवतः किल तस्य तरस्विनः c. Ra. 9, 11 ॥ 461 ॥

[ विषाणिन् ] करिणि । Śi. 4, 63 । शृङ्गिणि वृषभे । वादे वादिविषाणिनां प्रशमितास्ता दर्पकण्डूतयः ॥ [ अवन ] प्रीणने तर्पणे । तृष्णालोर्हि मधूकपानमवनम् । अव रक्षणादिषु ॥ [ तलिन ] स्वच्छे निर्मले । सौधानां तलिनोदरेषु । अल्पे । तलिनोदरीणां निरन्तरकार्शितानाम् c. Mh. 3, 370 ॥ [ गहन ] गम्भीरे । गहनाशयानाम् । वने वृक्षबहलप्रदेशे । अविशदशनैर्विन्ध्यगहनम् ॥ 462 ॥

[ रोदन ] अश्रुणि नयनजलविमोचनव्यापारे । नेत्रे विरोदनाताम्रे । क्रन्दे । करुणो रोदनध्वनिः ॥[ प्रज्ञान ] बुद्धौ । प्रज्ञानमीदृग्विधमस्ति यस्य । चिह्ने । प्रज्ञानेन वृषेण विद्धि गिरिशम् । भावे करणे च ल्युट् ॥ [ भुवन ] विष्टपे । Ku. 2, 40 । भुवनाभोगभूषणमित्यादौ जलेपि ॥ 463 ॥

[ द्विजन्मन् ] त्रैवर्णिके अण्डजे तारकासु च । Kâd. I., v. 13 । त्रय एव वर्णास्त्रैवर्णिकम् । ब्राह्मणक्षत्रियवैश्याः । विनयादिपाठात् स्वार्थे ठक् । दन्ते । सद्य° Mh. 3, 375 ॥ [ वर्जन ] परिहारे वर्जने पृथक्करणे । खलानां सुमतिः कुर्याद्दूरादेव तु वर्जनम् । त्यागे । रायामधाद्वर्जनमर्जितानाम् । हिंसायाम् । न स्यात्कलौ वर्जनमर्जुनीनाम् c. Mh. 3, 402 ॥ 464 ॥

[ निधन ] कुले । कलिपुरि निधनाधनानि न स्युः । अन्ते लक्ष्यतः । अन्तोत्र द्वादशं स्थानम् ॥ [ सूचन, °ना ] व्यधने । सीव्येत्ततः सूचनया कर्णपालीम् । विध्यतेनेन व्यधनम् । सीवनी ॥ अभिनये । सामाजिकाः सूचनाभिः सर्व एवात्र रञ्जिताः । संज्ञाक्रियायाम् । नयनसूचनयाप्यवगम्यते किमुत शब्दपरंपरया न किम् । पैशुन्यक्रियायाम् । न सूचनेभ्यो विरमन्ति दुर्जनाः ॥ **465** ॥

[ जीवन ] राजलभ्यांशे जीविते च । H. Ch. 60, 6 । तोये वर्तने च । तापे मरौ जीवनमेव जीवनम् । वर्तनं जीविका ॥ [ उद्वान ] उद्गमे ऊर्ध्वगमने । उद्वाने बाष्पपङ्क्तेः । चुल्ह्याम् । उद्वानाद्भाण्डमुत्क्षिप्य ॥ सुगन्धिगन्धनद्रोः शोषण इति च ॥ [ शयन ] रते । क्लान्ति° Mh. 3, 414 । शय्यायाम् । Su. 2112 ॥ **466** ॥

[ शासन ] लेखे । Ra. 3, 68 । लेखो हि संदेशप्रधानः । वस्त्रपट्टकादिः सर्वः ॥ शास्त्रे । शासनोक्तेन कर्मणा । आज्ञायाम् । Ra. 1, 30 ॥ [ वर्तनी ] वृत्तौ जीविकायाम् । कां वर्तनीमनुसरत्विह साधुमार्गः । मार्गे । V. K. p. 2, 2 ॥ [ तोदन ] व्यधने भर्त्सनादारभ्य लोहितव्युत्पादनपर्यन्ते ताडने । साहसं तु दमो दाप्यः कृते ब्राह्मणतोदने । तोत्त्रे प्राजनके । नाल° Mh. 3, 373 ॥ [प्रसून] उभयत्रापि । Śi. 1, 66 ॥ **467** ॥

[ छदन ] दले पल्लवे । छदनान्तरितातपांस्तरून्सः । पतत्रे पक्षे । चरन्ति चित्रच्छदनाः शिखण्डिनः ॥ [ विलग्न ] लग्ने सक्ते । नमन्ति° Mh. 3, 407 । शरीरमध्ये । Ku. 1, 39 । मेषादौ । विलग्नभवनं गते । तनुस्थे प्राग्लग्नगते ॥ [ सेवन ] प्रभोराराधने । स्वामिनः सेवनप्रीताः फलन्ति ॥ **468** ॥

सेवनगृहीतानां स्वामिपटानां क्षतिः क्व दृष्टेत्यादौ सीवनेपि । इत्यादौ पाशे [ sic ] ॥ [ बन्धन ] स्नेहे । किमस्ति मे बन्धनमत्र वस्तुनि । वृन्ते पुष्पनाले । कृतं न कर्णार्पितचारुबन्धनम् c. Śā. 145 ॥ [ नलिनी ] पद्माकरे । Ku. 4, 6 अब्जे । नयननलिनीनालापीतं° c. Su. 2057, V. A. 54, 16 ॥ **469** ॥

[ मैथुन ] संबन्धे । मेखलयोस्तत्र मैथुनं मतम् । संबन्धः श्लेषमात्रम् ॥ [ मिथुन ] उभयत्रापि । चक्रवाकमिथुनानि पीडयन् ॥ मिथुनमुपगतो ब्रह्मणो वज्रपाणेरित्यादौ युग्मरूढ्यैव राशिवाचकत्वम् ॥ [ सेनानी ] गुहे षण्मुखे ।

Ra. 2, 37 । सेनापतौ । Ku. 2, 51 । गुहे पुंसि सेनेशे तु त्रिषु ॥ [ ह्रादिनी ] वज्रे । ह्रादिनीव त्रिवृतस्थितिरेषा । विद्युति । तासामासीत्तमसि शरणं ह्रादिनीनां प्रकाशः ॥ 470 ॥

सल्लक्याम् । ह्रादिनीभङ्गिम् । नद्याम् । श्रान्तो याति त्वरितममरह्रादिनीपार्श्वमश्वः । नादवति त्रिलिङ्गः । निर्ह्रादिन्या॰ Nâg. I, 12 । सल्लकी ओषधिभेदः ॥ [अशनि] वज्रे विद्युति च अशनिः स्त्रीपुंलिङ्गः । वज्रे । Sp. 6389 । शम्पायां विद्युति च [sic] । Ku. 4, 43 ॥ [पलाशिन्] उभयत्रापि । पलाशिनां कः सहते विजृम्भितम् ॥ पलं मांसमश्नाति पलाशानि पत्त्राणि विद्यन्ते यस्य ॥ 471 ॥

[अरत्नि] कूर्परे बाहुमध्यसंधौ । छिन्नास्ताः प्रसरन्त्वरत्निभिरपि क्रुद्धा हि वीराङ्कुराः ॥ [वाणिनी] वाणिनी समदस्यतेत्यादौ तन्त्रोक्त्या द्वयोरपि ॥ [ भोगिनी ] द्वयेपि । भोगिनी भाति सुभगा नरेन्द्रास्ते चकासति ॥ 472 ॥

[ प्रधान ] धीमहामात्यात्मसु । वृत्तिः प्रधानानुगता जनस्य । प्रकृतिसत्तमयोः । Śi. 15, prakshiptaśl. 2 ॥ प्रधाने हि कृते यत्नः फलवान्भवतीत्यादौ तु गुणापेक्षया दान्ते प्रधाने एव ॥ 473 ॥

[ जयन ] द्वयेपि । जयनमहाहवसत्वराः । संनाहः संग्रामैकसात्करणम् ॥ [ व्यञ्जन ] लाञ्छने । अमात्यव्यञ्जना॰ Śi. 2, 56 । अत्र हि अमात्यव्यञ्जनं येषामित्यतोर्थः । निष्ठाने संस्कारके च । व्यञ्जनैः प्रववृते सुसंस्कृते वागियं रसवती कवेरिव । निष्ठानमक्षरम् । संस्कारकं दध्याद्यवयवा [?] अत्र व्यक्तयः । जात्यभिव्यञ्जकत्वाद्व्यञ्जनशब्दवाच्याः । यथा । सामान्यव्यञ्जने व्यक्तिरित्यादौ ॥ 474 ॥

वादित्रकरणे पुंसि । व्यक्तिर्व्यञ्जनधातुना दशविधेनाप्यत्र लब्धामुना । तथा च भरताचार्यः । विस्तारकरणश्चैव आविद्धो व्यञ्जनस्तथा ॥ [कौलीन] लोकवादे । Me. 109 । पशुवहिपक्षियुद्धे । कौलीनकेलिसमये समये क्षितोभत् ॥ 475 ॥

[ उद्यान ] राजमार्गवनभेदयोः । उद्यानविहितक्रीडाभ्रूडाचुम्बितमस्तकाः । प्रयोजनेन्वेष्यम् ॥ [ वितान ] करकुके । Ki. 3, 42 । क्रतौ । Śâ. 83, d । तुच्छे । चित्ते तेतिवितानमारमति चेदेवं भवानीपतिम् ॥ 476 ॥

मन्दे । पाण्डुत्वादनुमीयते तव सखे चित्तं वितानं मया । शून्येपि । Śi. 3, 50 । विस्तृतौ विस्तारे ना पुंलिङ्गः । प्रसिद्धमाताननवितानत्वात् ॥ [उत्थान] गृहान्तोद्यमपौरुषेषु । उत्थाने सुजने जनस्य रमते चेतो यथा सद्मनि । तन्त्रे राज्ञश्चतुरङ्गसाधने । उत्थाना° Mh. 3, 351 । संनिविष्टोद्गम आसीनस्य ऊर्ध्वक्रिया ॥ 477 ॥

[व्युत्थान] प्रतिरोधे प्रत्यक्षतद्योगादेश्चलने । प्रत्याहाराद्यसंस्पृष्टो विशेषोस्तिं महानयम् । योगिभ्यो भक्तिभाजो यद्व्युत्थानेपि समाहिताः ॥ विरोधे । व्युत्थानं° Mh. 3, 412 ॥ [अञ्जन] कज्जले । Ku. 1, 47 । आञ्जनेयेन तत्त्वत इत्यादौ कपेर्हनूमतो माता अञ्जना ॥ अञ्जनभूभृद्भाति यथायं परिपतदभिनवदिनकरकिरण इत्यादावञ्जनसंबन्धादेव तद्युक्ते पर्वतविशेषे ॥ 478 ॥

[प्रभिन्न] अनेकतां प्राप्ते । M. St. 7 । जातमदे उत्पन्नमदे हस्तिनि । Ku. 5, 80 ॥ [लाङ्गलिन्] हयेपि । लाङ्गलि° Mh. 3, 400 ॥ [जनन] कुले जन्मनि च । जननजने नयनानां ह्लादकमाप्याय नास्ति संतोषः ॥ 479 ॥

[वर्धन] छेदे । M. 2, 29 ॥ [अर्जुन] वृक्षभिदि । M. M. 313, 5 । गवि । अस्ते पुञ्जितमर्जुनीकुलमपस्तम्बे पलाशेगर इत्यादौ [sic; c. Mh. 3, 453] ॥ 480 ॥

शुक्ले । Śi. 1, 6 ॥ [केतन] गृहे । जनस्य साकेतनिकेतनस्य c. Ra. 5, 31 । केतौ ध्वजे । Ku. 5, 84 । निमन्त्रणे । पूर्वेद्युः° Mh. 3, 360 ॥ 481 ॥

[समान] सति साधौ । समानः कोपि जायते । सह मानेन वर्तत इति कृत्वा ॥ तुल्ये । समानान्सुहृदश्च बन्धुभिः । एकस्मिन्नसाधारणे । समानस्थानलाभेन हर्षमापत् ॥ [विमान] व्योमयाने । Ra. 14, 20 । देशं समुत्तुङ्गविमानभाज इत्यादौ सप्तभूमे वेश्मनि । सप्त भूमयः कक्ष्या यस्य । कृष्णो° Kârikâ Pâ. 5, 4, 75 इति व्युत्पत्त्या ॥ 482 ॥

[तपन] अर्के । तपति ललाटं तपस्तपनः c. H. Ch. 51, 5 ॥ [प्राचीन] प्रान्ततो वृतौ । प्राचीनप्रतिरुद्धः ॥ 483 ॥

प्राचीनमलकोपमानेत्यादौ प्राग्भवे ॥ प्रान्ततो वृतिः पार्णिकाख्या । प्राग्भवे दिशि देशे काले वा । विभाषा° Pâ. 5, 4, 8 इति खप्रत्ययः ॥ [प्रच्छन्न]

अन्तर्द्वारे खडक्किकायाम् । अनेन संजनेन प्रच्छन्नेन निर्गत्य । रहसि । Sp. 2173 । छादिते । भ्रमरप्रच्छन्नमब्जाकरम् । गूढे । प्रच्छन्नं वहति दृढं चिरं च वैरम् ॥ [श्वसन] मरुति वायौ श्वासयुक्ते च । श्वसनमरुजवं [?] संत्यजोर्ध्वप्रवृत्तम् ॥ 484 ॥

कामाग्निः श्वसनेन दीपित इत्यादौ मरुवकेपि । मरुवकं पुष्पभेदः ॥ [पूतन] भूतभेदे स्त्रीपुंलिङ्गः । M.M. 342, 4 ॥ [स्यन्दिनी] लालायाम् । तं स्यन्दिनीलिप्तमुखं कुमारम् । निम्नगायाम् । सा वृन्दारकवृन्दवन्दितजला संक्रन्दनस्यन्दिनी ॥ 485 ॥

[गोस्तनी] गोस्तन्यां [sic] कपिलायां द्राक्षायाम् । संजातो° Mh. 3, 364 । [गोस्तन] हारभेदे । तस्याः कम्पितगोस्तनस्तनतटी ॥ [धमनी] नडीनडयोस्तृणभेदयोर्धमनीधमनशब्दौ निघण्टौ प्रसिद्धौ । अग्न्युद्दीपनभाण्डे । मुखेनोपधमेदग्निं धमन्यन्तरितेन तु ॥ [डयन] नभोगतौ । K.K.S. 1, 67 ॥ 486 ॥

कर्णीरथे । डयनगतः स ददर्श मार्गवृक्षान् । कर्णीरथो दोलाकारो वाहननेविशेषः ॥ [मार्जनी] पांसुशोधन्याम् । मार्जनीरेणुकेशाम्बु हन्ति पुण्यं पुराकृतम् ॥ [मार्जन] उपस्पर्शे आचमनादिके । ततः कुर्यात्प्रमार्जनम् । उत्पुंसने भस्मादिशोधने । सप्तभिर्मार्जनैः शुद्धचेल्लोहं [sic] विण्मूत्रवर्जितम् ॥ 487॥

[मार्जना] आसीना किमपि स्थिता ननु सखे प्रस्तूयतां मार्जनेत्यादौ वाद्यपिण्डयाम् । मृदङ्गमुखे मृदितभक्तादिदाने । तत्परीक्षार्थवादने तूपचाराद्रूढः ॥ [कुण्डलिन्] द्वयेपि । जात्यैव° Mh. 3, 359 ॥ 488 ॥

[तपस्विन्] शान्ते । Ku. 3, 34 । मल्लक्यां निघण्टौ प्रसिद्धः स्त्रीलिङ्गः ॥ [संधिनी] द्वयेपि । आविकं संधिनीक्षीरं न भोक्तव्यं द्विजातिभिः c. M. 5, 8 । वृषाक्रान्ता लग्नगर्भा ॥ 489 ॥

[हायन] वत्सरे । M. M. 152, 1 । अर्चिषि । लेलिह्यमान° Mh. 3, 429 ॥ [क्रन्दन] द्वयेपि । किं° Mh. 3, 355 ॥ [व्यसन] विपत्तौ मरणे । रिपुव्यसनवर्धितः पृथुलहर्षबाष्पाकुलः । अशुभे । व्यसने यो जयेच्छत्रुम् । भ्रंशे । नाशे पाते च । Ki. 3, 45 । पानस्त्रीमृगयादिषु । राजा दुरन्तैर्व्यसनैर्विहीनः c. Ra. 18, 13; K. N. 15, 1 ॥ 490 ॥

दैवानिष्टफले। व्यसनिनं त्रातुं समग्रं जनम्। सक्तौ । वनमवनं व्यसनमव्यसनम् । क्रोधदूषणं क्रोधजो दोषः । वाक्पारुष्यदण्डपारुष्यार्थदूषणानि ॥ [ साधन ] निवृत्तौ निवर्तने । विधानमारब्धमसाधनं वृथा । दापने। साधनं द्विगुणं कार्थमृणिकस्योत्तमे दमे । सिद्धौ निष्पत्तौ कर्तृव्यापारे । स्वार्थ° Mh. 3, 425 । गतौ । गङ्गातीरे साधनं सिद्धिहेतोः । अनुगमे अनुव्रज्यायाम् । गुरूणां साधनं कार्यमुदकात्प्रागिति स्थितिः c. Śâ. 54, 21; Bhâshya Pâ. 1, 4,56। धने । तपस्वि° Mh. 3, 426 ॥ **491** ॥

उपाये उपकरणे । Ku. 5, 52। कारणे। Ra. 3, 13 । सैन्यरूपे उपकरणे । Ra. 4, 36 । कारके क्रियाभिर्निर्वर्तके । Śi. 9, 6। बभूव° Ku. 5, 22 इत्यादि च सर्वमुपायग्रहणात्स्वीकृतम् ॥ मृतसंस्कारे दाहादौ । शरीरसाधनं कार्यम् । वधे । अहन्यहनि भूपालः कुर्याच्चौरस्य साधनम् । व्यञ्जकवृत्त्या मेढ्रे । न साधनोन्नतिर्या स्यात्कलत्ररतिदायिनी ॥ [ अयन ] पथि । स्निग्धस्य सूक्ष्मेष्वयनेषु लीनं स्वेदस्तु दोषं नयति द्रवत्वम् । सूर्यस्य दक्षिणगतावपि । Ra. 16, 44 । सूर्यस्योदग्गतौ । उदगयने शशिसूर्यौ वक्रेन्यस्निग्धविपुलाश्च ॥ **492** ॥

[ पवन ] कुलालपाकस्थाने । अग्नेस्तेजसातपेभिनिवेश्य पवने महावीरम् । प्रभञ्जने । Śi. 4, 36 ॥ [ सवन ] सोमस्यौषधिराजस्य निर्मथने । एतस्मिन्सवनविधुतपापे । स्नाने । मध्यंदिनसवनवेलां नातिक्रामेत् । यजने । H. Ch. 16, 4 ॥ **493** ॥

[ वामन ] काव्यालंकारभूरुर्वी वामनेनैव धारितेत्यादौ दिग्गजे । आलंकारिकभेदेपि ॥ विष्णौ । Ra. 11,22 । निखर्वे । Ra. 1, 3 । वामनोलंकारभेदः ॥ [ शमन ] अन्तके । असिभुजगविभूषणस्तथासावरिशमनो जयतु क्षितीश बाहुः । वधे । विवर्जयेद्यः शमनं पशूनाम् ॥ [ जघन ] कटौ । स्फीतप्रथिम्नि जघने गुरुपाटलिम्नि बिम्बाधरे ॥ **494** ॥

पश्चादर्थे । पश्यन्ति यत्र रिपवो जघनं हयानाम् । नितम्बाग्रे । Me. 41 ॥ [ कौपीन ] गर्ह्ये । उत्सर्पत्पीनकौपीननाशिताशेषपौरुषः । गुह्ये । Bâ. II, 2। गुह्यस्थे तूपचारात् ॥ [ देवन ] अक्षे । देवनाच्छलकृतो हि किमत्र । त्रयेपि । प्रकटीकृतदेवनान्कुरून् ॥ **495** ॥

[मदन] मधूच्छिष्टे । मदनगोलकमृष्टरदच्छदाः । वसन्तवृक्षयोः । उपययौ॰ Mh. 3, 389 । मदकारी सामान्येन यः कश्चित्तत्र त्रिलिङ्गः । मधूच्छिष्टं सिक्थकं [sic] तत्र केचन मदनशब्दमाहुः । तत्र च मद मुचि कल्के इति धातुरन्वर्थः साधकः ॥ 496 ॥

[वेदना] अनुभवे । संमू॰ Mh. 3, 414 ॥ [यापन] त्यागे । प्रबलशत्रुपराभवशङ्कया यदि करोति धनस्य स यापनम् । वर्तने अतिवाहने । मुक्त्यर्थी यत्रतत्रस्थः कुर्याज्जीवस्य यापनम् । यापनं च यापना च ते यापने इत्युत्पत्त्योभयलिङ्गत्वम् ॥ [कल्पना] कर्तने छेदनक्रियायाम् । श्मश्रुकेशनखदैर्घ्यकल्पना । कर्तने छेदनभाण्डेपि । यावन्न सेव्यते शंभोर्भक्तिः संसारकल्पना । कॢप्तौ रचनायाम् । आकल्पकल्पनासज्जाः । उद्देशे ब्राह्मणार्थं वस्तुस्थापने । अर्घपाद्यादिकल्पनाम् । गजसज्जने शृङ्गारणे । कल्पनासज्जसेनानीनीतिबन्धुरबन्धुर इत्यादौ ॥ 497 ॥

विकल्पे । विधूतकल्पनाजालेत्यादौ । आकलने । त्याज्याः संसारकल्पनाः । विधाने । दिव्येयं कल्पना धातुः । विभाजने । विध्यर्थवादमन्त्रार्थनामधेयादिकल्पना ॥ [स्पर्शन] समीरणे । स्पर्शनं हि क उपैति चक्षुषा । स्पर्शे । गोः स्पर्शनं ब्राह्मणतर्पणं च c. Mh. 3, 421 । दाने । स्पर्शनं पुण्यदर्शनम् ॥ 498 ॥

[गन्धन] क्षयेपि । तद्गन्धनं प्रोद्धुरकंधराणां नैवाद्रियन्ते सुजनाः खलानाम् ॥ [संतान] संततौ प्रवाहे । अस्यां॰ Mh. 3, 423 । देववृक्षे वृक्षसंतानाद्धिपुष्पे [ ? ] । Ku. 7, 3 । अपत्ये । Ra. 2, 65 । गोत्रे । संतान॰ Mh. 3, 422 ॥ 499 ॥

[स्तनन] कुत्सिते ध्वाने अम्भःस्थशब्दे । स्तननितम्बभरात्स्तननं मुहुः। देवशब्दे । दुन्दुभिस्तननपुष्पवर्षणैरन्वमोद्यत भवः सुरैरपि ॥ [सज्जन] इभसज्जीकरणे साधौ च । किं दुष्करं भवति सज्जनसंस्कृतानाम् ॥ 500 ॥

पटगुल्मे सेनासंनिवेशविशेषे । सेर्ष्येपि सज्जनमुखे सुखमेत्यधीरः ॥ [चेतन] प्राणिनि । Me. 5 ॥ [तेजनी] मूर्वातेजोवत्यौ ओषधिभेदौ । शाणोपले । केनासिर्वा रणभुवि रसत्तेजनीलीढरूढः ॥ [तेजन] वेणौ शरे वा । हिमवति तेजनसरलेङ्गुदीकान्ते ॥ 501 ॥

[ पिशुन ] स्पृक्का दुरालभा । दुष्टे जने । Sp. 4931 । सूचके । Ku. 8, 86 v. l. ॥ [ वेष्टन ] द्वयेपि । अस्पृष्टालकवेष्टनौ ॥ [ शकुन ] द्वयेपि । अवामवाशितशकुनसूचितशकुनः ॥ 502 ॥

[ वृजिन ] केशे । क्वचन विजने कूप्रवृजिन इत्यादौ । चर्मणि । वृजिनप्रावरणान्व्यधादरीन् । किल्बिषे । Bhag.4,36 ॥ [ भूतात्मन् ] धातरि । स ते भगवान्भूतात्मा श्वःश्रेयसं दास्यति ॥ 503 ॥

[ संस्थान ] आकृतौ टङ्के । संस्थानमास्थाय मनो जहार । मृत्यौ संनिवेशे च । मालाकार इव स्वयं स विदधे संस्थानमुच्चैर्द्विषाम् । चतुष्पथे । स तस्मै अपदिशति अमुष्मिन्संस्थाने हस्तदक्षिणो ग्रहीतव्यः ॥ [ विच्छिन्न ] द्वयेपि । Śr. Ch. 2, 51 ॥ 504 ॥

[ आसन ] करिस्कन्धे । आसना° Mh. 3, 349 । पीठे । Ki. 2, 57 ॥ [ मलिन ] समले । Su. 3049 । एनसि पापे । मलिनैः पापकर्मभिः ॥ [ आराधन ] साधने । न्यस्या° Mh. 4, 159 । तोषणे । शंकराराधनं धनम् । उपासायाम् । Ku. 1, 58 ॥ 505 ॥

[ अधिष्ठान ] पुराध्यासनयोः । उच्चैस्त्वेकस्तूर्णमस्नापगाभ्यः साधिष्ठानास्ते किमाश्चर्यमत्र ॥ [ आतञ्चन ] प्रतीवापे द्रवद्रव्यस्य भाण्डाद्भाण्डान्तरक्षेपे आप्यायने वा । सुधारसातञ्चनचञ्चुचञ्चच्चन्द्रांशुशुभ्रीकृतचन्द्रलेखाः । जवने वेगे । आतञ्चनं पञ्चशरस्य बाणाः संप्राप्य शीघ्रं भुवनं जयन्ति c. Mh. 4, 161 ॥ 506 ॥

[ आस्कन्दन ] रणे । आस्कन्दने° Mh. 4, 162 । आक्रान्तौ बलात्स्वीकारे । एते हठास्कन्दनमन्तरेण रणेषु योग्या न भवन्ति वाहाः । शोषणे प्रापणे वा । भीष्मा° Mh. 4, 162 ॥ [ चित्रभानु ] द्वयेपि । सांध्य° Mh. 4, 173 ॥ [ पृथग्जन ] द्वयेपि । Ki. 14, 24 ॥ 507 ॥

[ अभिजन ] कुले । Ku. 1, 26 । जन्मभूमौ । यः कन्यकुब्जाभिजनः स राजा ॥ [ समापन ] द्वयेपि । राजा° Mh. 4, 197 ॥ [ अपदान ] खण्डने । सौन्दर्यमालोक्य विलोलचक्षुषामात्मापदानं विधुना विधीयते । अद्भुतकर्मणि । Ku. 7, 48 ॥ 508 ॥

[ निर्वासन ] मारणेपि । मोक्षे चित्तमिव व्यधास्त बहुधा निर्वासनं विद्विषाम् ॥ [ घनाघन ] शक्रे घातुके वा । परमदानवलोकघनाघनाः । मत्तेभवर्षुकाब्दयोः । घनाघना नीलघनाघनप्रियां प्रियामिमामुत्सुकयन्ति यन्ति च ॥ 509 ॥

[ अभिमान ] अर्थादिदर्पे । Ki. 2, 13 । ज्ञाने । दृढाभिमानेन विना न मोक्षः । प्रणये । प्रिया° Mh. 4, 156 । हिंसायाम् । यः श° Mh. 4, 156 ॥ [ आवेशन ] आवेशे । दर्पा° Mh. 4, 161 ॥ 510 ॥

[ निरसन ] इयेपि । निरसनमरिसार्थस्याथ चक्रे स तत्र ॥ [ विरोचन ] चन्द्रे । वैरोचने महसि मुक्तशुचश्चकोराः । अग्नौ । दध्रे विरोचनरुचिं निकरो जटानाम् ॥ [ विश्वकर्मन् ] मार्ताण्डे । अब्जानामिव विश्वकर्मकिरणाः । सुरशिल्पिन्यपि । स्वकीयं निन्दति व्याधो विश्वकर्माणमर्जुनम् c. Mh. p. 51, 8 ॥ 511 ॥

[ निर्यातन ] वैरशुद्धौ । निर्यातनं यातनया रिपूणाम् । दाने । निर्यातनं धनततेः स विधाय पात्रे । न्यासार्पणे निक्षेपप्रतिदाने । ज्ञात्वा° Mh. 4, 177 ॥ [ अभिपन्न ] अपराद्धे प्रमादवति । अभिपन्नेषुरभूदथार्जुनोपि । अभिग्रस्ते । औचित्यं खलताभिपन्नहृदयः कुर्यात्कथं दुर्जनः । व्यापन्नते । त्राणं यदभिपन्नस्य व्रतमाहुर्मनीषिणाम् । द्रुते अभिद्रुते । अभिपन्नं बलवता दुर्बलं हीनसाधनम् c. Sp. 500 ॥ 512 ॥

[ आयोधन ] निघाते । शस्त्रा° Mh. 4, 159 । इयेपि युद्धे च । Ra. 5, 71 ॥ 513 ॥

[ सनातन ] नित्ये । K. N. 2, 42 । विष्णौ । ददृशे तेन सनातनः क्षणात् ॥ [ स्तनयित्नु ] इयेपि । यत्तोयं स्तनयित्नुना विरचितो मन्ये तदुच्छित्तये ॥ [महासेन] इयेपि । अपरित्यक्तकुमारभावेपि महासेन इत्यादौ ॥ 514 ॥

[ आत्मयोनि ] ब्रह्मणि । Ki. 3, 7 ॥ [ विहनन ] पिञ्जे विघ्ने । वने विहननाकुले । वधे । विहननमबुधाः शत्रोरिच्छन्ति पराक्रमान्न बुद्धिबलात् ॥ [ प्रतियत्न ] संस्कारे सतो गुणान्तराधाने । प्रतियत्नमपेक्षते नहि प्रतिभातत्त्वसहोदरी सभा । लिप्सायाम् । मिथ्यैव कुरुते मूढः प्रतियत्नं धनं प्रति ॥ 515 ॥

[ अपाचीन ] विपर्यस्ते अन्यथादृष्टे वस्तुनि । सोपाचीनानि पश्यति Sp. 5360 । अपाक्पश्चादित्यस्यार्थे । सेवेत पाठे प्राचीनमपाचीनमतोन्यदा ॥ [ सारसन ] मेखलायाम् । विश्वंभरासारसनायमाना पुपोष लोकत्रयसामरस्यम् । उरत्रे । Śi. 3, 10 । कञ्चुकमात्रेपि ॥ 516 ॥

[ उत्पतन ] उत्पत्तौ । लोकत्रयोत्पतनहेतुतया तवायं लोकः करोति हृदयं प्रणतिप्रवीणम् ॥ [ आकलन ] ग्रहणे स्वीकारे । कलनायां चिन्तने वा । गूढार्थाकलने भाव्यं सावधानेन धीमता ॥ 517 ॥

[ प्रवचन ] वेदे । AK. II, 7, 10 । व्याख्याने सुवचसि शोभने वचने वा । प्रवचनचर्चाचतुरे परिचयमुचितं न मुञ्चन्ति ॥ [ प्रतिमान ] प्रतिच्छायायां प्रतिबिम्बे । किं तस्याप्रतिमानमानमहसः सिंहस्य गण्यो गजः । गजदन्तान्तराले । Śi. 5, 36 ॥ 518 ॥

[ सामिधेनी ] ऋचि समिधां प्रक्षेपणमन्त्रे । सामिधेनीरनुब्रुवन् । समिधि प्रक्षेप्ये काष्ठे । दूरेप्यशङ्कितधियः कुशसामिधेनीर्नीरं च पुष्पफलमूलमुपाहरन्ते ॥ [ अग्र्यजन्मन् ] द्विजे ब्राह्मणे । M. 10, 75 । अग्रजे ज्येष्ठे । अग्रजन्मा यदा तिष्ठेदादध्यादनुजः कुशम् ॥ [ अनूचान ] द्वयेपि । Ku. 6, 15 ॥ 519 ॥

[ कात्यायनी ] काषायवस्त्रावनद्धायां [sic] तपस्विन्याम् । कात्यायनी नीतिविशारदा च । उमायाम् । कात्यायनी जरद्केसरिणाहरन्तीत्यादौ ॥ [ निशमन ] द्वयेपि । निशमनमपि पाप्मनां निषिद्धम् ॥ [ प्रयोजन ] कार्ये । Ku. 3, 1 । हेतौ । तदुच्यतामागमनप्रयोजनम् ॥ 520 ॥

[ आवर्जन ] दाने । अर्थावर्जनमन्तरेण न भवेत्पुण्यस्य वृद्धिः परा । नतौ मनोहृतौ वा । आवर्जनेन जनसंसदि सज्जनानाम् । भ्रंशेपि । योगीव पृथिवीनाथः परावर्जनपण्डितः ॥ [संमार्जनी] शोधन्याम् । संमार्जनीभिः परितः क्रियन्ते विसूत्रितैकावलिमौक्तिकानि N. Ch. I, 27 ॥ [ संमार्जन ] क्षालने । संमार्जनं तत्कथितं मलानाम् । लेपने संस्कृतौ च । त्वद्धामसंमार्जनजीर्णपाणिः ॥ 521 ॥

[ राजादन ] उत्कृष्टभोज्ये । राजादनं पुण्यकृतो लभन्ते ॥ [ उपधान ] दृष्टान्ते गण्डके मूर्धाधारे च । Śi. 2, 77 । प्रतिबिम्बे प्रतिफले तत्समर्पके वा । अन्यत्वमुपधानानि स्फटिकस्येव कुर्वते ॥ 522 ॥

[ विश्वक्सेन ] हरौ । विश्वक्सेनं सेनया सोऽभ्यगाच्च । गणेऽत्र तत्संबन्ध्येऽत्र ॥ [ क्रतुध्वंसिन् ] शिवे । नमोस्तु ते क्रतुध्वंसिन्सर्वकामफलप्रद । दानवे । नात्र क्रतुध्वंसिनमाद्रियन्ते ॥ **523** ॥

[ प्रसाधनी ] कङ्कतिकायाम् । Mh. 4, 183 ॥ [ प्रसाधन ] आराधनमण्डनयोः । H. Ch. 6, 1 । अर्जने । अर्थप्रसाधनमनन्यधिया प्रचिन्त्यम् ॥ [ कृष्णवर्त्मन् ] द्वयेपि । कृष्णवर्त्मास्यदहन इत्यादौ ॥ **524** ॥

[ उपासन ] त्रयेपि । Mh. 4, 163 ॥ **525** ॥

[ व्यालग्राहिन् ] द्वयेपि । Sp. 6329 ॥ [ मातुलानी ] मातुलप्रियायाम् । M. 2, 131 । भङ्गायामोषधिभेदे । Mh. 4, 187 ॥ [ प्रदीपन ] ओषधिरेव त्वस्त्रैव [?] प्रसिद्धा ॥ **526** ॥

[ प्रतिपादन ] बोधने । शास्त्रस्य शिष्यप्रतिपादनं न यदित्यादौ [?] । प्रतिदाने । फलं तु पात्रप्रतिपादनं श्रियः ॥ [ हरिचन्दन ] कुङ्कुमे ॥ Ku. 5, 69 ॥ **527** ॥

[ अन्तावसायिन् ] द्वयेपि । अन्ता° Mh. 5, 24 ॥ [ अतिसर्जन ] वधे । विविधप्रणत्यातिसर्जनप्रियाः [ sic ] । दाने । अर्थातिसर्जत्पुण्या पुण्यसमाश्रयेत्यादौ [ sic ] ॥ [ अपमार्जन ] शुद्धौ । त्रिराचामेदपः पूर्वं द्विः कार्यमपमार्जनम् c. M. 2, 60 । त्यागे । शत्रूणामपमार्जनं यदि भवेशाभ्यन्तराणां [ sic ] तत इत्यादौ ॥ **528** ॥

[ उपस्पर्शन ] स्पर्शे । यूपोपस्पर्शने स्नानम् । स्नानाचमनयोः । कृतोपस्पर्शने शुचौ ॥ [ अभिनिष्टान ] अक्षरे । नासिक्यत्त्र [?] अभिनिष्टाना निर्यान्ति ॥ **529** ॥

[ मेघवाहन ] द्वयेपि । मूर्तिमानपि स मेघवाहनः ॥ **530** ॥

[ पवनाशन ] द्वयेपि । पवनाशना अकुटिलाः ॥ [ प्रतियातना ] प्रतिबिम्बे । H. Ch. 78, 5 । प्रतिबिम्बद्वारेण प्रतिमायामपि । H. Ch. 63, 18 । प्रतीकारे । K. Pr. 293, 2 ॥ **531** ॥

[ हट्टविलासिनी ] वेश्यायाम् । नेत्राञ्जने हट्टविलासिनीनाम् ॥ [ जपा ] द्वयेपि । Pa. 824 c. Su. 726 ॥ [ कम्प ] कम्पः को वा गुरुस्ते भवतु बलभिदा जृम्भितेनात्र याहीत्यादौ भयवेपथुसात्त्विकभावभेदवरुणेषु यथासहृदयत्वं व्याख्येयम् c. Dhv. 104, 10 ॥ **532** ॥

स्वरभेदो गान्धर्वशास्त्रप्रातिशाख्यशास्त्रादिषु कृतलक्षणः ॥ [ रूप ] ग्रन्थावृत्तौ । अयुग्मैः संपठेद्रूपैर्युग्मैः रक्षसगामि तु [ sic ] । मृगसौन्दर्ययोः । क्रूराकारमपि नाटकादौ आकारे च । H. V. 1, 2 । स्वभावे । तद० Mh. 2, 294 ॥ **533** ॥

[ त्रपु ] रङ्गे सीसके वा । विचलत्त्रपुकर्णवेष्टने । एतौ लोहद्रव्यभेदौ ॥ [ कल्प ] विधौ न्याये [ sic ] वा । स एव प्रथमः कल्पः । संवर्ते प्रलये । Sp. 7371 । ब्रह्मदिने । अनेककल्पजीवी यः ॥ **534** ॥

[ कूप ] गर्ते । एतन्मूषककूपनिर्गतमहामृत्स्नाकुलं वैरिणाम् । उदपाने । H. Ch. 49, 1 । गुणवृक्षके नौबन्धनकाष्ठे । नौः कूप० Mh. 2, 288 ॥ [ क्षेप ] क्षेपणे । Me. 47 । अवज्ञायामपि । क्षेपोन्ये न विहस्यान्यं युक्त्या चक्र—वारितेत्यादौ ॥ [ लेप ] लेपने । स्तनान्तरे चन्दनपङ्कलेपः । मृत्क्रियायाम् । लेप० Mh. 2, 295 । प्रत्युप्तेत्र० M. M. 166, 4 इत्यादौ मृत्क्रियात्वोपचारात् ॥ **535** ॥

[ शाप ] आक्रोशे वाक्पारुष्ये । Ra. 1, 78 । शपथे सत्यंकारे । त्वत्० Mh. 2, 296 ॥ [ पुष्प ] द्वयेपि । पुष्पितवल्लीसंसक्ताः ॥ [ गोप ] वल्लव्यां गोधारिकभार्यायां द्विलिङ्गकः । गोप्यैवं कथितः सलेशमवताद्गोष्ठे हसन्वो हरिः c. Dhv. 98, 4 । शारिवा ओषधिभेदः । तत्र च स्त्रियामेव । पातरि रक्षके गोष्ठाध्यक्षे च । Śi. 6, 49 ॥ **536** ॥

ग्रामवृन्दपतौ । कुलानि श्रेणयो गोपाः शिल्पिनो वाणिजास्तथा । पात्रादिषु गोपायते इति गोप इत्यादि स्त्रियां गोपाशब्दः । गोष्ठाध्यक्षेपि । गाः पातीति पातेर्ज्ञातोनुपसर्गेति [ Pâ. 3, 2, 3 ] कप्रत्यये तथैव स्त्रियां गोपाशब्दः । वल्लव्यां तु जातिवाचित्वात्पुंयोगाद्वा ङीपि [ sic ? ] गोपीशब्दः c. Pâ. 4, 1, 63. 48 ।

शारिवायां जातिवाचित्वादेव गोपीशब्दः । शालिगोप्यो जगुर्यश इत्यादौ [ Ra. 4, 20 ] गोपायतेः कर्मण्यणि Pâ. 3, 2, 1 ॥ [ तल्प ] शय्यायाम् । तल्पमस्वल्पमुर्वी । अट्टदारेषु । यत्राधिरूढगुरुतल्पमतिग्मरश्मिं भ्रष्टप्रभं दुरितराशिरिव प्रचक्रे । अट्टः कोट्टादिप्राकारकोपरि युद्धस्थानम् । विशीर्ण° Ra. 16, 11 इत्यादौ वेश्मन उपर्याधारे । अस्मद्देशभाषया तालावशब्दवाच्ये ॥ 537 ॥

[ धूप ] द्वयेपि । H. V. 1, 1 ॥ [ वपा ] द्वयेपि । एते वपानिवसनादिव जातगन्धा धूर्ता मुदं समरभूमिमतामदन्ति ॥ [ वाष्प ] द्वयेपि । Me. 12 ॥ [ सूप ] सूपकारके । सूपैः सूपायनैरिव ॥ 538 ॥

[ शष्प ] ग्रन्थिपर्णं सुगन्धद्रव्यभेदः । व्रीहौ रूढे । क्लीवात्क्लीणीत शष्पाणि । हरित्तृणे । शष्पैरर्धावकीर्णैः श्रमवित्ततमुख° Sâ. 7 ॥ [ विटप ] शाखायाम् । कुर्वन्त्या विटपात्रसक्तविलसत्कृष्णाजिनौघानिव । विस्तृतौ स्तम्बे च । वृक्षेष्वपेतविटपेषु विवृद्धिमेति । स्तम्बस्तृणादिगुच्छः ॥ 539 ॥

[आक्षेप] आकर्षणे । य उत्पलाक्षेपचलैर्विलोचनैस्तवाक्षिसापत्न्यमिव प्रयुञ्जते c. Ku. 5, 35 ॥ [उडुप] द्वयेपि । H. Ch. 52, 1 ॥ [आवाप] आलवाले । आवापेषु° Mb. 3, 430 । प्रक्षेपे । स्रस्तं शरावापमपि स्वहस्तात् । प्रक्षिप्यते अस्मिन् प्रक्षिप्यते अनेन प्रक्षेपणमिति वा प्रक्षेपः । वलये । प्रकोष्ठं शुशुभे तस्या गतमावापशून्यताम् ॥ 540 ॥

रूढे । आवापपूता प्रतिभा विभाति । प्रधाने यज्ञादौ पूर्वोत्तरत्र यो मध्यं पाति हविरादिः । तत्रावापशब्दः । नीतितन्त्रे । Bâ. I, 24 । [ आकल्प ] कल्पने उद्देशे । Mh. 3, 432 ॥ [ कशिपु ] आच्छादनान्ने युगपद्भिन्नतया च कशिपुशब्देनोच्यते । द्वयेपि । सतां गृहे यत्करोषि हिरण्यकशिपुस्थितिम् ॥ 541 ॥

[ कुतप ] वाद्यविन्यासे वाद्यानां ततादीनां सज्जीकरणे । कुतपविधौ भरतः स्फुटं प्रवृत्ता इत्यादौ । दर्भकालप्रभेदच्छागरोममयवस्त्रेषु । त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः । कालप्रभेदो दिनस्याष्टमोंशः ॥ [कच्छपी] कूर्म्याम् । कच्छपीमायतां विद्यात्कूर्मं तु परिमण्डलम् । वीणायां वीणाभेदे सारस्वताख्ये । उद्गच्छत्कच्छपीध्वानश्रवणोन्मुखसंसदि ॥ कूर्मीव° H. V. I, 9 इत्यत्र कूर्मीशब्दः कच्छप्यामेव कविना भ्रमात्प्रयुक्तः ॥ 542 ॥

[कलाप] संहतौ समूहे । भुजंगमोन्नद्धजटाकलापम् । बर्हे मयूरपिञ्छे [sic] काञ्च्यां च । लसत्कलापाङ्कबृहन्नितम्बे वने च कान्ता जघने च चेरुः । तूणीरे इषुधौ । कलापयुक्तं कवचं धनुश्च ॥ [प्रताप] इयेपि । यत पिहितसत्प्रतापास्तेमी सालाः खलाश्च वर्धन्ते ॥ [सुरूप] इयेपि । Mh. 3, 438 ॥ 543 ॥

[प्राप्तरूप । अभिरूप] बुधरूपिणोरित्येव । इयेपि । प्राप्तरूपपरिभावितं वचः कस्य चेतसि चमत्करोति न । अभिरूपाय कन्या दातव्या c. M. 9, 88 ॥ [अवलेप] इयेपि । H. Ch. 10,8 । गर्हणा अवज्ञा ॥ [परीवाप] परिच्छदे परिजने सलिलस्थितौ च जलाधारे । भृतपरिवापा मुनयो वनभुवि राज्यं प्रतायन्ते । वपने केशनिवारणे । एत° Mh. 4, 209 ॥ पर्युप्तात्तु भाण्डाद्भाण्डान्तरक्षेपे सलिलस्थित्युपचारात् ॥ 544 ॥

[वृषाकपि] विष्णुशिवयोः । वृषे सङ्गं बिभ्रद्वसि सततं तार्क्ष्यवहने रिपोः शूलोद्भेदी प्रथम इह सन्नन्दक इति । सदा शक्तेर्भर्ता भवसि ननु मां चापि भजसे [c. 566, C.] समयानुग्राही प्रभवसि वृषाकप्युपमितः ॥ अग्नौ इन्द्रे दिवाकरे वा । वृषाकपिरिवातपम् ॥ 545 ॥

[मेघपुष्प] वेतसो लताभेदः । जले । मेघपुष्पविवशीकृता दिशः ॥ [उपक्षेप] इयेपि । पूजोपक्षेपसक्तो मे कालोपक्षेपहेतुना ॥ 546 ॥

[रेफ] इयेपि । पापद्विरेफाध्युषितान्वनान्तान् ॥ वाद्यविशेषे तु रेफवर्णसाधर्म्यात्प्रयोगेपि उपचाराद्रेफः ॥ [कम्बु] वलये । शङ्खकम्बुरुचिरीकृतबाहुः । शङ्खे । H. Ch. 11, 13 । शालिधूलौ । कम्बुकमिव तण्डुलककणविनिविष्टं भिन्नमप्यभिदेत्यादौ । अत्र तु नपुंसकलिङ्गः ॥ [बिम्ब] मण्डलप्रतिबिम्बयोः । Ku. 8, 61 ॥ 547 ॥

बिम्बिकाफले । Ku. 3, 56 । देवप्रतिमाद्याकारे तु प्रतिबिम्बोपचारात् ॥

[पूर्व] प्राचि देशे दिशि वा । Ra. 3, 42 । पूर्वजेषु पितृषु पुंबहुत्वे । Ra. 1, 67 ॥ 548 ॥

आद्यर्थे । Ku. 7, 54 ॥ [डिम्ब] विप्लवे । M. 5, 95 ॥ [शम्ब] मुसलाग्रस्थे लोहे लोहमण्डलके । शम्बाकृत इव क्षेत्रे बीजमाशु प्ररोहति । शम्बाकृतो दारुदण्डाग्रस्थितलोहमण्डलचूर्णीकृतः । श्रेयोन्विते पवौ च । अरालकलितापा हंसि शम्बः [sic] त्वत्तः परोत्र क इत्यादौ c. Mh. 2, 301 ॥ 549 ॥

[ कादम्ब ] इयेपि । कादम्बाः स्फुटमभिसस्रुरन्तरिक्षे ॥ [ कदम्ब ] संहतौ । Śâ. 39 ॥ [ द्विजिह्व ] इयेपि । वंशे कुटिलगतीनां द्विजिह्वतादोषरहितानाम् । [ नितम्ब ] इयेपि । Sp. 4811 ॥ **550** ॥

[ गन्धर्व ] अन्तराभवसत्त्वे अन्तरिक्षवासिनि भूतभेदे । अस्माभि° Mh. 3 692 । अश्वमृगभेदयोः । राजधानीव गन्धर्वाधिष्ठिता । दिव्यगायने । Sû. 36 ॥ पूर्वद्विजिह्वगन्धर्वा वान्तेषु कैश्चित्पठिताः ॥ [ हेरम्ब ] महिषे । हेरम्बवाहनभयादपयान्ति सन्तः ॥ **551** ॥

[ कुटुम्ब ] संविभज्ये जने । Su. 498 । गेहे । M. 11, 12 ॥ [ भा ] प्रभायाम् । Su. 1999 ॥ [ कुम्भ ] कट्फलं वत्सकत्वगाख्यौषधिः ॥ **552** ॥

सात्रष्टम्भे ग्रहे । कुम्भापरुद्धगमनः कुपितेति कष्टम् ॥ [ शंभु ] अर्हति क्षपणकानां दैवते । शंभुः° Mh. 2, 307 । विधिशिवयोः । H. Ch. v. 1 ॥ **553** ॥

[ विभु ] स्वामिनि । Śi. 1, 3 । व्यापके । येनोद्धारे धरित्र्याः स जयति विभुताविघ्नितेच्छो वराहः ॥ [ डिम्भ ] शिशौ । R. K. 7, 32 । बालिशे मूर्खे । पार्थः पालालमूलः प्रविशति नगरं ग्रामडिम्भैः परीतः ॥ [ स्तम्भ ] स्थूणागर्वयोः । Śi. 5, 48 । भावे सात्त्विके । देहस्तम्भः स्थगयति गतिं° M. M. 178, 5 ॥ [ स्वभू ] इयेपि । देया° Mh. 2, 308 ॥ **554** ॥

[ गर्भ ] कुक्षौ । गर्भस्थेन समस्तदा । भ्रूणे तदन्तरस्थे जन्तौ । Me. 9 । आशये । गर्भं न जानाति खलस्य कश्चित् । बालके । इन्दरा गर्भरूपाः । अभ्यन्तरे । Sû. 3 । भ्रूणत्वोपचारात् । Ra. 13, 4 ॥ [ जृम्भा ] विकासे प्रसरे वा । M. M. 312, 3 । वदनव्यादाने । H. V. 1, 2 ॥ **555** ॥

गात्रविरामे अङ्गघाटने । भ्रूभङ्गोत्कम्पजृम्भा स्मितललितकृता दिव्यनारीजनेन॥

[ शुभ ] इयेपि । कः स्या° Mh. 2, 307 ॥ [ नाभि ] प्रयुक्त° Mh. 2, 305 इत्यादौ क्षत्रिये द्वादशराजमण्डलमध्यगते चक्रवर्तिनि विजिगीषौ जेतुं प्रवृत्ते च

राशि । तथा चक्रमध्येपि ॥ प्राण्यवयवे । Ra. 7, 9; Ku. 7, 60 ॥ निर्नाभि कौशेयमुपोढबाणमित्यादौ तु भीमोपि भीमसेन इव मृगनाभौ नाभिशब्दः c. Ku. 7, 7 । नाभौ कौशेयं नाभिकौशेयमिति तु न व्याख्या । अभ्यङ्गनेपथ्ये प्राण्यङ्गोद्भवानां द्रव्याणां निषिद्धत्वात् ॥ 556 ॥

[ निभ ] व्याजे । कालकूटनिभात्कण्ठे कालकूटः कृतस्त्वया ॥ [ सभा ] संसदि गृहे वा । Ku. 7, 29 । गोष्ठयां सहृदयसहासनबन्धे । K. K. S. 1, 46 । द्यूते द्यूतक्रीडास्थाने । सभायामुद्योगं विदधति यथा धूर्तनिवहाः ॥ [ जम्भ ] रये मुखे वा । अहि° Mh. 2, 304 । अशने । सज्जम्भजृम्भं भवति क्षणेन ॥ 557 ॥

दैत्यभेदे । Sû. 1 ॥ [ प्रभु ] शक्ते । महेश त्वदृते नास्ति संसारोत्तारणप्रभुः । स्वामिनि । Ku. 3, 1 ॥ [ रम्भा ] कदल्याम् । रम्भोरु संहर रुषम् c. M. M. 268, 4 ॥ [ रम्भ ] वैणवे दण्डे । अमुष्य संतापमुषा महिम्ना तृष्णा प्रशाम्येद्रजसा सदैव । श्रीमन्महाहंसनिषेवितत्वाददः सरोम्भो न न रोचते मे । अत्र हि सरो रेफसहितोम्भो मह्यं रोचते स चादो दकाररहित इति व्याख्यायाम् । दम्भो न रोचतेपि तु रम्भो वैणवदण्ड इति संपद्यते । रम्भस्तु वैणवदण्ड इति तु व्याख्या ॥ 558 ॥

[ ककुभ ] वीणाप्रसेवे वीणाधस्तात्तन्त्रीनिबन्धनस्थाने गेयभेदे ना [ sic ] । ककुभध्वनिनादितैः । अर्जुनद्रुमे दिशि वा । ककुभः ककुभैरिवाजिता इत्यादौ ॥ [ ऋषभ ] गीतस्वरे । Śi. 11, 1 ॥ 559 ॥

[ करभ ] कनिष्ठामणिबन्धान्तरे । Sp. 1991 । उष्ट्रे । Bh. Ś. 22 ॥ [ सुरभि ] गवि । Śi. 5, 64 । कामधेनौ मनोज्ञे च । Ra. 2, 3 । सल्लक्यैलवालुक्यौ लताभेदौ ॥ 560 ॥

सुरायाम् । सुरभिपानमदोत्कटमानसा । सुगन्धौ मधौ च । Śi. 6, 2 ॥ [ दुन्दुभि ] भेर्याम् । V. S. 25 । अक्षबिन्दुत्रिकद्वये । दुन्दुभ्या किल किं तया पतितया यद्द्रौपदी हारिता ॥ 561 ॥

[ कुसुम्भ ] महारजने पद्मके । कौसुम्भाम्बरधारिणी रतिलघुप्रालम्बमुक्ताङ्किता । करके जलभाण्डे । विस्रम्भेण कुसुम्भसंभृतजलैर्यात्रासु जग्मे जनैः ॥ [ वर्षाभू ] प्लवे । वर्षाभूभिः सवर्षा भूः प्रावृषं द्योतयत्यसौ ॥ 562 ॥

[ विष्कम्भ ] विस्तारे । विष्कम्भषष्ठभागश्च विष्कम्भत्रिगुणश्च यः । प्रतिबिम्बे । दिशः प्रकाशयत्याशु रविविष्कम्भ--- । नाटकांशे भाव्यर्थसूचकेङ्कखण्डे । शुद्धः संकीर्णो वा द्विविधो विष्कम्भकः प्रयोगज्ञैः c. Bh. N. 18, 35 ॥ [वल्लभ] दयिते । राजीविनीजीवितवल्लभस्य Vik. Ch. 1, 35 । अध्यक्षे । गोष्ठेषु वल्लभकृतातिथिविप्रियेषु । हये । Śi. 5, 56 ॥ [ विस्रम्भ ] द्वयेपि । याचन्ते ये सविस्रम्भमर्थिनः स्वजना इव ॥ 563 ॥

[ वृषभ ] द्व्यभिद्वाशकाख्यः ॥ [ आलम्भ ] स्पर्शने । दुरालम्भा हि विषयाः कण्टका इव वेधिनः । वधे । गवालम्भः कलियुगे विहितोपि न शस्यते ॥ [ आरम्भ ] द्वयेपि । Ra. 1, 15 v. l. ॥ 564 ॥

[ विदर्भ ] जने पुंसि । ततो विदर्भाधिपतेस्तनूजाम् । अभ्यन्तरे पुंस्येव । करकमलविदर्भे वैष्णवीं तत्र दध्रे । कुशावियुक्तेनुसर्तव्यम् ॥ [ विप्रलम्भ ] विसंवादे । सभ्रद्धमेत्य तृषिता जलविप्रलम्भा दुःखात्प्रयान्ति हरिणा मृगतृष्णिकाभ्यः । विरहे । Kd. 1, 17 । वञ्चनायाम् । कं बाधते न सुजनं खलविप्रलम्भः ॥ 565 ॥

[ किम् ] कुत्सायाम् । Ki. 1, 5 । प्रश्ने । किं किं सिंहतनूरसदृशवपुः । वितर्के । M. M. 178, 5 । प्रश्न एवाक्षेपपर्यवसायिनि । Su. 3451 ॥ [ मा ] लक्ष्म्यामपि । सदा शक्तेर्भर्ता भवसि ननु मां चापि भजसे see 545, C. । प्रमाणे । मेयानुषङ्गिनी मा च ॥ [ लक्ष्मी ] हरिप्रियायाम् । Su. 79 । संपदि । Su. 278 । शोभायाम् । Śā. 19 । ओषधिभिद्यपि निघण्टौ प्रसिद्धा ॥ 566 ॥

[ ब्राह्मी ] वाचि । चतुर्मुखमुखप्रसूतं चतुर्धा ब्रह्मस्यादौ ॥ [ ब्राह्म ] ब्रह्मभवादौ । ब्राह्मीं कुर्यान्न वा कुर्याच्छैवीं चैव नियोगतः । आदिग्रहणादिदमाद्यर्थे ॥ 567 ॥

[ राम ] मृगभेदे । रामसेविता व्यसनता । कृष्णे । रामेण° Mh. 2, 326 । चारौ । विश्वाभिराम तव नाम सदा स्मराम । सिते । रामो यशोरामः ॥ [ पद्म ] श्यब्जयोः । पद्माकरास्तं गता इत्यादौ ॥ 568 ॥

संख्याभेदे निधिभेदे व्यूहभेदे च । असंख्यैः पद्मैर्यो विजितबहुसंख्यः परिवृतः । गजबिन्दुषु । नागजस्य [ sic ] चत्वारिंशद्वर्षदेशीयस्य गात्रे शोणा बिन्दवः पद्मसाच्या उत्पद्यन्ते ॥ [ धर्म ]: पुण्ये देवभिदि च । Ki. 3, 4 । तत्साधनोपाये पुण्ये । Pr. P. 18 ॥ **569** ॥

स्वभावे । न शक्तिरस्तीह मनुष्यधर्मणः । न्याये । M. 8, 20 । आचारे । Ra. 1, 13 । सोमपे याज्ञिके । धर्मः स्वकर्मकुशलो नयतीह पारम् । अहिंसायाम् । न° Mh. 2, 319 । उपमायाम् । भवरेट इव ख्यातः शूद्रधर्मा स जातितः ॥ [ जामि ] द्वयेपि । Sp. 2407 ॥ भर्तृभगिन्यां तत्स्वसृत्वात् ॥ **570** ॥

[ काम ] काम्ये अभिलाषे च । Sp. 3241 । स्वैरे । Ku. 1, 50 । मनोभवे । Ra. 16, 50 । अभ्यनुज्ञाने । K. Pr. 98, 5 ॥ **571** ॥

[ यम ] अन्तके । Ku. 2, 23 । नित्यकर्मणि । M. 4, 204 । यौ यमावधिगतौ सुमित्रया इत्यादौ सहजयोः सहजातयोर्द्वयोः प्रत्येकं च तयोर्यमशब्दः । यमस्य यमस्वसुश्चैतौ [ ? ] शब्दावनेनैव निमित्तेन ॥ [ क्षमा ] क्षितिक्षान्त्योः । क्षमस्व बाल्यादुदितं क्षमापते ॥ [ क्षम ] युक्ते । Ki. 1, 45 । हिते । स्वत्° Mh. 2, 310 ॥ **572** ॥

[ श्याम ] हरिति । M. M. 161, 5 । कृष्णे । Me. 18 । निशि । K. Pr. 180, 1; c. V. Ś. III, 1 । कान्तायामप्रसूता भवेच्छ्यामा इत्यादिकृतलक्षणायां नायिकायाम् । Me. 79; c. Sp. 6542 । प्रियङ्गुलतायाम् । Me. 101 । वटभेदे । Ra. 13, 53 ॥ **573** ॥

[ समा ] वर्षे । U. R. 27, 16 ॥ [ सम ] अनुचनीचे देशे । क्षणप्राप्तो वेगव्युपरतिमवाप्नोति च समम् । सर्वस्मिन् । यातः समेषामुपजीव्यतां यः । सदृक्षे । Bhag. 12, 18 ॥ [ गुल्म ] सेनाभिदि । न० Mh. 2, 315 । रक्षास्थाने व्रजाद्री । ममापि नाम वारणस्य रक्षापेक्षीणि गुल्मकस्थानानि । गह्वरे । अशोकगुल्मे पिहितस्त्वमास्स्व ॥ **574** ॥

[ घर्म ] उष्णे गुणे । Sû. 6 । स्वेदाम्भसि । M. M. 66, 10 । ग्रीष्मे । Ra. 16, 43 । भावभिदि सात्त्विके भावविशेषे रूढ्या वर्तते । Śi. 1, 58 । आतपे । Bâ. VI, 36 ॥ [ तोक्म ] हरिन्मात्रे आर्द्रतोपलक्षके । ब्रह्म° Mh. 2, 317 । हरिते यवे । क्लीवः क्रीणीत तोक्मानि ॥ **575** ॥

। [सीमा] अवधौ। M. 8, 6। स्थितौ मर्यादायाम्। सीमां° Mh. 2, 333। क्षेत्रे। सीमाः पक्वफला बिदन्ति परितः साधुर्यथा सत्क्रियाः। विषये। सीमां यदा याति दृशोः कृशाङ्गी। केशभूषणे। सीमाभूषितसीमन्ताः॥ [द्रुम] वृक्षमात्रे चैत्रकुलोद्भवे च। Śi. 19, 8। पारिजाते। द्रुममुच्चखान तृणवत्तदद्भुतम्। ॥ 576 ॥

[क्षेम] कुशले। Dhv. 77, 5। लब्धरक्षणे। क्षेमे सुभिक्षे° Bh. Pâ. 5, 4, 68 vol. II., 438, 9॥ [ग्राम] संवसथे बसत्यन्नपानादिविशिष्टे स्थाने। Su. 1771। गेयभेदे। Śi. 1, 10। एतेनैव निदर्शनेन करणग्रामः समग्रो गत इत्यादौ वृन्दे समूहे सपूर्वक उत्तरपदीभूतः केवलस्याप्रयुज्यमानत्वात्॥ 577 ॥

[भ्रमि] मोहे। K. Pr. 105, 8॥ [भ्रम] अतस्मिंस्तद्ग्रहे। Śâ. 137। मूर्छायाम्। यष्टी° Mh. 2, 323। तक्षभाण्डे। Ra. 6, 32। छत्रे। शुशुभे शारदो राजा सिताभ्रभ्रमविभ्रमेण यः [?] ॥ 578 ॥

[रश्मि] घृणौ। Śâ. 54। प्रग्रहे। Ra. 2, 28। वल्गायामपि॥ [उमा] भङ्गायाम्। समन्ता° Mh. 2, 309। दुर्गायाम्। Ku. 1, 26॥ [भीम। भीष्म] रुद्रे। M. St. 28। राजभेदे। V. S. 21। भयानके। भीमां भ्रुकुटिमाबध्नन्॥ राजभेदे। Ki. 3, 19। गाङ्गेयादिपदपरिहारेण पर्यायवक्रतया भयानकेपि तौ भयानकेभिधेयवल्लिङ्गौ॥ 579 ॥

[सूक्ष्म] अध्यात्मविषये। S. P. 20। अध्यात्ममन्तरात्मविषयं रूपम्। अल्पे। सूक्ष्माक्षरेक्षणदिवाशयनैश्च नित्यम्॥ [हिम] शीते। Ku. ?, 33। तुषारे। Ku. 1, 3॥ [भूमि] स्थाने आश्रयमात्रे। Ku. 5, 45। पात्रे योग्ये। H. Ch. 18, 13। दशायाम्। सा भूमिर्दुर्गमा नृणाम्॥ 580 ॥

[वाम] योषिति प्रतिकूले च। वामा अवामा अपि नैव सव्याः। वल्गौ चारौ। Me. 9। सव्ये दक्षिणेतरे। Me. 93॥ [वामी] अश्वायाम्। तवामी वामीभिः सदनसविधा भान्ति सुचिरम्। हार्यवस्त्वर्थवाहयुग्मकृते नेतव्यपदार्थप्रयोजनवाहनद्वयसंपादिते गन्ड्यादौ। Ra. 5, 32॥ 581 ॥

[जिह्म] कुटिले मन्दके वा। Ki. 1, 8॥ [श्रम] प्रयत्ने खेदे वा। Ku

5, 45 ]| [ क्रिमि ] रोगे क्रिम्युपलक्षिते । मयोष्टकं क्रिमिकरम् || 582 ||

[ क्रम ] परिपाट्याम् । Ku. 5, 32 । कल्पे न्याये । कोयं क्रमो यत्प-रिगृह्य° Mh. 2, 310 । पादक्षेपे । K. K. S. 1, 1 । परंपरायां प्रवाहे । गुरुपर्वक्रमाक्रान्तस्मृतिश्रवणशालिनीत्यादौ । आनन्तर्ये । Ra. 3, 7 । पदसंधौ पदमेलनायाम् । नानृषिः कुरुते काव्यं नारुद्रः क्रमपाठकः ॥ [ शमी ] शि-म्बायां फलपूर्णे शाखावयवे । न्यग्रोध° Mh. 2, 330 । द्रुमभिदि । Ra. 3, 9 || 583 ||

[ कूर्म ] प्राणिनि । Su. 1033 । यमिनामासने । निबध्य कूर्मं निगृहीत-चित्तः ॥ [ नेमि ] नीचैर्ग° Me. 106 इत्यादौ कूपाङ्गे खरटिकायाम् [ sic ] । तिनिशो वृक्षभेदः || 584 ||

[ शम ] हस्ते । षट्त्रिंशच्छमषड्भागसंमिता वेदिरुत्तमा । निजमण्डलव्यव-स्थायां राज्ञाम् । Bâ. I, 24 || [ आम ] रोगे । Śi. 2, 54 || [ स्तोम । अध्वरे । अग्निष्टोमादयो यज्ञाः । स्तुतौ । शंभोः स्तोमविधौ समुद्धतधियो धन्या जनाः केचन || 585 ||

[ मध्यमा ] दृष्टरजस्कायां कन्यायाम् । मध्यमा° Mh. 3, 464 ] [ मध्यम ] गीतस्वरे मध्यमध्ये स्वरन्यासत्वात् । सुप्रतिष्ठौ स्मृतौ ज्ञेयौ द्वौ ग्रा-मौ षड्जमध्यमौ । देहमध्ये । Ku. 5, 20 । देशभेदे । देशोसौ मध्यमः ख्यात-स्त्वन्तरा हिमविन्ध्ययोः । राजभेदे । Ra. 13, 7 || 586 ||

अन्यूनानतिरिक्ते । द्वयोस्तु तज्ज्ञं प्रवदन्ति मध्यमं° c. Su. 2919 || [ संभ्रम ] भये । पौलस्त्यपीनभुजसंपदुदस्यमानकैलाससंभ्रमविलोलदृशः प्रियायाः । संवेगे त्वरायाम् । ससंभ्रमा सत्त्रसुहृत्समाहितैः । आदरे । सुभ्रु किं संभ्रमेण ते || [ व्यायाम ] परिश्रमे । व्यायामक्षुण्णगात्रस्य Kâś. Pâ. 6, 1, 63; Suśr. II, 139, 12 || 587 ||

पौरुषे । फलन्ति व्यायामा यदि भवति चैत्रं वशगतम् । कृत्ये चाणक्यल-क्षिते कर्तव्यविशेषे । Bâ. I, 24 || [ विद्रुम ] वृक्षे । वेलातटेषून्नतविद्रुमेषु । रत्ने । Ku. I, 44 || [ नियम ] यन्त्रणायाम् । आकारवांस्त्वं नियमादुपास्यो

न वस्त्वनाकारमुपैति बुद्धिः । प्रतिज्ञायाम् । इति° Mh. 3, 459 । निश्चये । अयं मे नियमो देव यस्यां दिशि स वर्तते । व्रते । Ra. 1, 94 । नियमार्थोयं योग इत्यादौ व्यावृत्तौ यन्त्रणापर्यवसायिन्याम् ॥ 588 ॥

[ विभ्रम ] हेलायाम् । Ku. 1, 4 । भरते हेलाविभ्रमादीनां भेद उक्तः स इह हेलासामान्येन प्रसिद्धत्वा – – लक्षत्वाच्च न गृहीतः । भ्रान्तौ । पुंसोपि मृगतृष्णाया यस्यास्ति जलविभ्रमः ॥ [ विक्रम ] शक्तौ । विक्रमोर्जित° Su. 581 । क्रान्तौ । व्यञ्जितक्रम इव त्रिविक्रमः ॥ [ तलिम ] द्वयेपि । V. Ś. II, 23 ॥ [ आगम ] शास्त्रे । आगमास्तत्त्वशंसिनः । ग्रहणेपि Ra. 1, 15 ॥ 589 ॥

[ अगम ] गत्यभावे द्रुसाधर्म्याद्द्रौ च । U. R. 27, 16 । दुर्गे दुर्गमे देशे । अगमशिखरारूढश्चन्द्रः कथं वद जीयते ॥ [ गौतम ] बुद्धे । गौतमेन यदुदस्य-ताशयं प्रोद्धृतं जगदुपप्लुवाश्रयम् । मुनौ मुनिविशेषे । Ra. 11, 34 ॥ [संगम ] नदीसंभवे । ससंगमो यत्र समुद्रकान्तयोर्विहारवीथी ध्रुवमिन्दुलक्ष्मणः । सङ्गे । संगमविरहविवेके° Sp. 6671 ॥ 590 ॥

[ आश्रम ] ब्रह्मचर्यादौ । Ku. 5, 30 । मठे । आश्रमेषु सततप्रवृत्तान्न मन्त्रेषु । तपस्विनां स्थाने । कुसुमशरमुनिराश्रमब्रह्मचारी ॥ [ निगम ] वणिक्पथे पुरे वा । न खलु निगममार्गे याति साध्वी कदाचित् । वेदे । साम्राज्ये निगमस्य सर्वविषये शंभोरिवोज्जृम्भते ॥ [ नैगम ] वणिजि नागरे वा । पुराणि श्रेणयश्चैव शिल्पिनो नैगमास्तथा ॥ 591 ॥

विप्रे । नैगमाः सानुमन्तः ॥ अतस्त्रिष्विति । त्रिष्वित्येतत्परमशब्दं यावदनुवर्तते ॥ [ सत्तम ] द्वयेपि । शृणु त्वं मुनिसत्तम ॥ [ प्रथम ] द्वयेपि । इक्ष्वाकुवंश्यः प्रथमो° Ra. 6, 71 ॥ उत्कृत्यो° M. M. 173, 2 इत्यादौ क्रियाविशेषणत्वादादित्वमेव गम्यते ॥ [ अधम ] न्यूने गर्हिते वा । Pa. 3508, d ॥ 592 ॥

बुध्नस्थेपि । अधमावस्थितकुशला न जडा उच्चैःपदं यान्ति ॥ [अवम] एवमिति त्र्यर्थम् । न्यूने गर्हिते वा प्रतिषिद्धे । अद्य प्रभृत्यनवमाङ्गि° Ku. 5, 86 । बुध्नस्थेपि । जडैरापूर्यतेम्भोभिरवमोसौ किमङ्गु-

तम् ॥ [ अग्रिम ] अग्र्ये अग्रेभवे । अग्रिमं न परिपीडयेद्भृशम् । प्र-धाने । सर्वेषामग्रिमो ब्रह्मा वृणुयात्प्रथमं तु तम् ॥ [ परम ] उत्कृष्टे । परम यो महत्तेजः परमं यो महत्तपः । अभ्यनुज्ञाने । Ku. 6, 35 ॥ **593** ॥

[ ललाम । ललामन् ] नवस्वर्थेषु ललामललामन्शब्दौ । ललामन्शब्दो नान्तोऽप्यर्थसाधारण्यादिह गृहीतः । उदाहरणमन्वेष्यम् । दिङ्मात्रं तु दर्श्यते । पुच्छे । लीला° Mh. 3, 398 । पुण्ड्रे अश्वस्य स्वाभाविके श्वेते मुखपट्टे । सिन्दूरपूरपरिपूर्णललामभङ्ग्या पत्युः प्रतापमिव दर्शयते वराश्वः । ललामन्श-ब्दो रत्ने । Ra. 5, 64 ॥ **594** ॥

[ निष्क्रम ] बुद्धिसंपदि । निष्क्रमो° Mh. 3, 458 ॥ [ परिश्रम ] व्यायामे यत्ने वा । साफल्यं भजतु परिश्रमो विधातुः । खेदे । वृथा कृथा मा स्म सखे परिश्रमम् c. Ki. 8, 7 ॥ [ अभ्यागम ] युद्धे । अभ्यागमो° Mh. 4, 214 । आभिमुख्यागतौ । Śi. 1, 23 ॥ **595** ॥

[ उपशम ] शान्तौ । प्रवाते वाते यन्नहि भवति वह्नेरुपशमः । विनीतता-याम् । श्रुतमुपशमैकश्रमफलम् c. Sp. 5256, b ॥ [उपक्रम ] चिकित्सायाम् । असाध्योपक्रमा रोगा नारभ्यन्ते चिकित्सितुम् । आरम्भे । उपक्रमः संप्रति निष्फलो भवेत् ॥ नन्दोपक्रमं प्रमाणानीत्यादौ आरम्भ एव । तदाद्याचिख्यासा तु समाससंनियोगशिष्टान्नपुंसकलिङ्गादवगम्यते । चिकित्सायामुपक्रमशब्दो रूढ एव न तूपायपूर्वारम्भस्योपचाराद्वर्तते ॥ उपधायां धर्मादिना सचिवपरीक्षायाम् । उपक्रमैरस्खलितैर्विशुद्धाः c. Ra. 18, 14 ॥ **596** ॥

[उपगम ] अङ्गीकृतौ । धर्मोपगमशुद्धात्मा । समीपगमने । उप° Mh. 4, 216 ॥ [ यातयाम ] जीर्णे । यातयामं गतरसं पूतिपर्युषितं च यत् । परिभुक्ते । दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः । अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥ **597** ॥

[ ज्या ] मौर्व्याम् । Ra. 6, 40 । भूमावपि । ज्याबद्धबाहुः स च तन्त्रिपु-श्र ॥ [ द्यो ] नाके देवस्थाने मेरुपृष्ठादौ । द्यां नीतपौरा° Ra. 16, 9 । अन्त-रिक्षे आकाशे । द्यामालोकयतां कलाः कलयतां छायाः समाचिन्वताम् । द्योशब्द-

स्यैतद्रूपम् ॥ [ गव्य ] ज्यायां गोसमूहे च गव्याशब्दः । गव्योपचारकुशलः शलभानिवारीन् । रागद्रव्ये गोरोचनाख्ये । गव्यकर्पूरकुङ्कुमैः ॥ 598 ॥

गोक्षीरादौ दधि । Ku. 7, 72 । आदिग्रहणाज्जवहितादौ ॥ [ अर्थ ] इयेपि । Su. 487 ॥ [ कल्य ] सुरायां स्त्रियाम् । कल्यपालगृहं गत्वा येन्विषन्त्यासुतीबलम् ॥ 599 ॥

सज्जनीरोगदक्षेषु । कल्यः कलासु च कृती दृढभक्तिराढ्यः ॥ [ काल्य ] अहर्मुखे । काल्यमुत्थाय संस्मरेत् । प्राप्तकाले । नाकाल्यस्तु कदाचन ॥ [भाग्य] शुभे कर्मणि । अस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् । अशुभेपि । सुखं वा दुःखं वा भवति हि नृणां भाग्यविहितम् ॥ 600 ॥

[ दाय ] यौतकादिधने सुदायादौ । प्रकृतौ° Mh. 2, 357 । दाने । M. M. 106, 8 । पैतृके भोज्ये । M. 9, 158 ॥ [ जन्य ] विवाह्याया ज्ञातिषु । समेन समयं जन्यैर्ब्रह्मदेयां प्रकल्पयेत् । विवाह्याया भृत्येषु । Ra. 6, 30 v. l. । वरस्निग्धेषु । M. M. 197, 4 ॥ 601 ॥

निर्वादे लोकवादे । तत्त्वो° Mh. 2, 353 । जनके । जन्येन तेनाजनि सुप्रतिष्ठः । युद्धे क्लीबे । Śi. 19, 13 । कार्ये उत्पाद्ये त्रिषु । अनन्यजन्यं दौर्जन्यम् । अयमुत्पादितेपि कैश्चिद्दर्शितः ॥ [ क्रिया ] आरम्भे । मन्त्रमूलाः क्रिया राज्ञाम् । निष्कृतौ । महा° Mh. 2, 344 । शिक्षायाम् । Ra. 3, 29 । पूजायाम् । Ra. 2, 16 । संप्रधारणे विचारे । क्रियां विना कोभिजानाति कृत्यम् ॥ 602 ॥

उपाये । सप्त सामादिकाः क्रियाः । कर्मणि व्यापारे । Ku. 3, 35 । चेष्टायाम् । Bh. Ś. 77, c । चिकित्सायाम् । अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् । करणे निष्पादने । Ku. 1, 7 । धात्वर्थे । विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता । आख्याते तिङन्ते धातौ । AK. I, 6, 2 । संस्कारे । Ra. 3, 10 । और्ध्वदैहिके मृतसंस्कारे । Sp. 6592 ॥ 603 ॥

[ गृह्य ] शाखापुरे मूलनगरादन्यस्मिन्पत्तने । गृह्ये श्रीमदवन्तिवर्मनगरे ते भूमिदेवाः स्थिताः । अस्वैरिणि अधीने । स्वा° Mh. 2, 347 । पक्ष्ये तद्गर्भप्रविष्टे । Ki. 2, 5 । गृहासक्ताण्डजमृगे । गृह्यकेलिकलनाकुतूहलात् ॥ गृह्या

एव न ताः पुनः पतिकुलं योग्याः समालम्बितुमित्यादौ बहिर्भवायां स्त्रीलिङ्ग एव निपातितः ॥ 604 ॥

[ रूप्य ] हेम्नि रजते वाहते टङ्करूपतां नीते। मणि° Mh. 2,370 । रजते प्रशस्ते वा। रूप्यभित्तिषु संक्रान्तप्रतिबिम्बाः पुरस्त्रियः ॥ [ माल्य ] पुष्पे तत्स्रजि वा। Ku. 7, 19 ॥ 605 ॥

[ हृद्य ] हृद्भवे। जगाद रूप्यं व्यवहारयोग्यं हृद्योस्य शोकस्तु न निर्जगाम। हृत्प्रिये सांप्रतिकतुष्टिकरे हृदयहिते परिणामसुखदे वा। Ra. 11,68। वशीकरणमन्त्रे। हृद्यसाधनविधौ निबद्धधीः ॥ [ सत्य ] शपथे। न पक्षपातेन वदामि सत्यम् N. Ch. 1, 27 ॥ 606 ॥

[ द्रव्य ] भव्ये योग्ये। न शास्त्रमद्रव्येष्वर्थवत्। औषधे। द्रव्यं पीत्वा तु न स्वपेत्। धने। द्रव्यसंचयपरो नराधमः। गुणाधारे। Śi. 5, 38। गव्यन्वेष्यम्। विशेष्ये। कस्य° Mh. 2, 356। परमाणौ। अद्रव्यमनेकद्रव्यं च द्रव्यम् ॥ [ तिष्य । पुष्य ] कलौ युगविशेषे भे नक्षत्रे च। तिष्योप्यनर्थकर इत्यतिचित्रमेतत् ॥ द्वयेपि। पुष्ययोगपरिपोषितश्रियः ॥ पुष्यरागेपि मणिविशेषे पुष्यशब्दं केचिदद्राक्षुः। स च भीमो भीमसेन इतिवद्भविष्यति ॥ 607 ॥

[ पुण्य ] धर्मे सुकृतफले। Me. 30। सुकृते धर्मसाधने कर्मणि। पूर्वपुण्यपरिपाकलभ्यया। पूते पवित्रे मनोज्ञे रमणीये वा। Me. 33 ॥

[ सौम्य ] मनोज्ञे। क्वायं गरुत्मान्क्व च नाम सोमसौम्यस्वभावाकृतिरेव साधुः ॥ 608 ॥

[ अर्घ्य ] त्रयेपि। Ku. 1, 58। पूजार्थं द्रव्यमुदकतण्डुलादि — र्घरूपमर्घ्यशब्दवाच्यम्। अर्घार्थं चोदकादिभिन्नं --- ॥ 609 ॥

[ कक्ष्या ] स्पर्धायाम्। स तुल्यकक्ष्यो रिपुणा धनंजयः। काञ्च्याम्। कक्ष्यावबद्धसिचया किमियं नु शेते। गृहान्तरे। Ku. 7, 70। एवं सप्तकक्ष्यं राजवेश्मेत्यादौ ज्ञेयम्। प्रतिज्ञायाम्। Nâg. 64। तुलायाम्। वणि° Mh. 2, 341। पुंसः सारसने कटीवस्त्रमन्थनभाण्डे। परिधानाद्बहिः कक्ष्या निबद्धा ह्यासुरीभवेत् ॥ 610 ॥

[ रथ्य ] रथोद्वाहे वाजिनि । हरिरथ्यं रथं° c. Ra. 12, 84 । मार्गे । M. M. 27, 1 । रथसमूहे । अश्वीयरथ्यागजताकुलेस्मिन् ॥ [ काय ] संघातलक्ष्ययोः शाश्वतोक्त्या गृहीतः c. Śâśv. 490. 748 । उदाहरणं त्वन्वेष्यम् । कदैवते । कायं हविर्निर्वपतीह । कः प्रजापतिर्देवतास्येति व्युत्पत्त्या ॥ 611 ॥

[ क्षय ] निलये मृत्यौ च । Su. 44, d । कल्पान्ते । क्षयकालेपि निराकुलः कृती । विशिष्टे रोगे राजयक्ष्मणि । क्षयः क्षीयेत नान्यथा । अपचये । Ki. 2, 9 ॥ [ भव्य ] सति विद्यमाने भाविनि वा । अर्थोयमर्थोत्तरभव्य एव c. Ku. 3, 18 । योग्ये । Ku. 1, 22 । शिवे कल्याणे । भव्यं भव्यमिदं कुतः परिणतं यद्दृश्यते त्वादृश इत्यादौ । फलभेदे । रे भव्य पालेवत रे चिरे रे ॥ 612 ॥

[ प्राय ] मृतावनशने वा । Ra. 8, 93 । बाहुल्ये । Ku. 3, 28 । सदृशे उत्तरपदीभूतः । कार्यं° Mh. 2, 361 ॥ प्रायश्चापं° Me. 71 इत्यादौ प्रायःशब्दः समासान्तो निपातो बाहुल्यार्थः ॥ [ धिष्ण्य ] स्थाने । Śâ. 83 । दैत्याचार्ये । गोष्ठीषु धिष्ण्यधिषणाविव राजमानौ । वह्निभेदे अग्निविशेषे । ऋत्विजस्तत्र° Mh. 2, 360 ॥ 613 ॥

[ वैद्य ] द्वयेपि । औत्सुक्यमोहारतिदाञ्ज्वरान योपूर्ववैद्याय नमोस्तु तस्मै ॥ [ शय्या ] द्वयेपि । Kâd. I., v. 8 ॥ [ तार्क्ष्य ] द्वयेपि । वृषे सङ्गं बिभ्रद्वसि सततं तार्क्ष्यंवहनः c. 545, C. ॥ [ पूज्य ] श्वशुरे । पूज्यागारे° Mh. 2, 362 । सज्जने । सदा सेव्याः पूज्याः प्रचुरतरसंतोषविभवाः ॥ 614 ॥

[दस्यु] द्वयेपि । दस्युदस्यकृपाण° [sic] M. M. 188, 5 ॥ [ वर्य ] द्वयेपि । वर्याश्चाञ्चल्यचर्चायां न कुर्युर्मानसं बुधाः ॥ [ सव्य ] वामे । R. V. 1 । दक्षिणे । Ku. 3, 70 ॥ [ अर्थ्य ] न्याय्ये । Ra. 1, 59 । विपश्चिति । अर्थ्यो° Mh. 2, 336 ॥ 615 ॥

[अन्त्य ] अधमे । अन्त्येषु जन्तुषु च यस्तमसावृतेषु M. M. 39, 8; c. 373, 15 । अन्तभुवि अवसानभवे । अन्त्यगुणमादिना विभजेत् ॥ [ मध्य ] न्याय्ये । मध्ये वर्त्मनि वर्तते नहि खलो दौर्जन्यपण्याश्रयः । अवलग्ने कायस्य

मध्यमे स्थाने | Ku. 1, 39 | अन्तरे | Me. 18 | अनधिकन्यूने |
K. K. S. 1, 44 || [ मध्ये ] स्त्रीणां मध्येनुरागो विगलितहृदयान्नैव कस्यापि
जन्तोरित्यादौ उद्दिश्यवाचक उद्दिश्यशब्दार्थप्रतिपादकः | मध्येशब्दः सप्तम्य-
न्तप्रतिरूपको निपातः स्त्रीणां मध्ये स्त्रियः प्रतीत्यर्थः || 616 ||

[ अन्य ] इतरस्मिन् | अन्या हि सन्ति सखि भाजनमीदृशानां वैरी भवेद्य-
दि न वेपथुरन्तरायः c. S. K. 27, 14 | असदृशे असाधारणे | अन्यैव
काचिल्लिपिः || [ त्रयी ] त्रिवेद्यां वेदत्रयीसमवेते | M. St. 7 | त्रितये |
Śi. 2, 3 || [ मन्यु ] दैन्ये | तीव्राभिषङ्गप्रभवेण मन्युना c. Ku. 3, 73 |
क्रतौ | न° Mh. 2, 365 | क्रुधि | Ki. 1, 27 || 617 ||

[ चर्या ] पूजायां व्रतक्रियायां वा | M. M. 343, 7 || [ गेय ] गातव्ये |
प्रगे यो गेयानि प्रथयति पुरस्ताद्भगवतः | गायने | साम्नां° Mh. 2, 348 |
भव्यगेयेत्यत्र कर्तरि निपातितः c. Pâ. 3, 4, 68 || [ ययु ] अश्वे | ययुयायि
ययोयेय इत्यादौ c. D. Ś. 22 | अश्वमेधाश्वे | राजन्यास्ते° Mh. 2, 367 ||
[ मूल्य ] विनिमये एव द्रव्यान्तरप्रतिदाने | मूल्यं तस्य ससागरा वसुमती सत्यं
कियद्वर्ण्यते | भृतिविनिमये एव | पञ्चकं मूल्यमस्य | धने | पश्वा° Mh. 2,
367 || 618 ||

[ काव्य ] मद्दे | Śi. 2, 2 || [ कुल्या ] नीरप्रणालिकायाम् | उदीर्णे
शीतांशौ मकरमुखकुल्याभिरभितः प्रसर्पन्ति स्फीताः शशिमणिरसौघाः प्रतिनि-
शम् || कुल्यातुल्यं प्रसरति सदा नेत्रयोरम्बु तस्या इत्यादौ नद्यां कुल्याल्पा
कृत्रिमा सरिदित्यादौ लक्षितायाम् c. AK. I, 10, 34 || [ कुल्य ] अस्थिन |
कुल्याभरणभूषिताम् | कुलोद्भवे | Sp. 4102 || 619 ||

[ चोद्य ] चोदनार्हे | अधीयानोप्यलब्धार्थो न चोद्यः स्यात्कथंचन | चोदने आ-
क्षेपे अद्भुते वा | Śi. 9, 16 || [ गोप्य ] दाससूनुषु | आरोप्यते° Mh. 2,
348 || 620 ||

[ योग्य ] प्रवीणे | सेवां° Mh. 2, 368 | उचिते | तूष्णीमेवासितुं योग्यं
विदुषा वृद्धसंनिधौ || [ योग्या ] अभ्यासे | Ra. 8, 19 || [ संख्या ] एकत्वा-
दौ | H. Ch. 3, 1 | विचारे | संख्यातीतं वेत्ति को वस्तुतत्त्वम् || 621 ||

[आप्य] द्रयेपि । अनाप्यं जलसंसर्गाद्विरुद्धं खलचेष्टितम् ॥ [याप्य] नेतव्ये । याप्यः कालो भवति विधुरे दैवयोगे कथंचित् ॥ शेषत्वादायुषो याप्य इत्यादौ नेतव्यत्वोपचाराद्रोगे दैर्घकालिके ॥ गर्हिते । M. 9, 4 v. l. ॥ [ आस्य ] मुखान्तरे । आस्यं° Mh. 2, 337 । आसने स्त्रीलिङ्गः । उपास्या स्यादास्या समवहितचित्तेन विदुषा ॥ 622 ॥

[ पथ्या ] आद्येषु त्रिषु पादो भवति भवति तु पथ्येत्येवंलक्षणलक्षित आर्याभेदः ॥ [ पथ्य ] औषधे । पथ्यं॰ Mh. 2, 360 । अगते पथः । न्याय्ये । Sp. 7131 ॥ [ पाक्य ] विधुरं तस्य किं यस्य पाक्यं ---- । पाक्यरसवाक्यविचारणाभिरित्यादौ पाकार्हणे ॥ 623 ॥

[ कृत्य ] छेदनीये कार्ये च । कृत्यं कुकृत्यं धिषणाशलाकया । विद्विष्टे परैरवमानिते धनादिभिर्भेद्ये । तान्कृत्यानवमन्यते यदि नृपस्तस्यात्कृतार्थः श्रमः । यत्कौटिल्यः । क्रुद्धलुब्धभीतावमानिताः परेषां कृत्या इति ॥ [ कृत्या ] देवतायाम् । कृत्यां देवीमबन्धयम् ॥ [ वाच्य ] कुत्सिते । न वाच्यस्तेन वर्णितः ॥ 624 ॥

उपालभ्ये । Ra. 14, 61 ॥ [ चैत्य ] स्तूपे बौद्धदेवताभेदे । चैत्यं वन्देत स्वर्गकामः । उद्देपशादपे प्रसिद्धिहेतौ वृक्षे । Me. 23 ॥ [ चय ] प्राकारमूलबन्धे संचये च । प्राकारश्चयहीनः सततं विपरीततां वहति । संघे । Śi. 1, 3 ॥ 625 ॥

[ साध्य ] द्वयेपि । असाध्यां साध्यपदवीम् ॥ [ वन्य ] वनसमूहे । वन्यां जगाहे वनलब्धवर्णः । वने साधुनि । Ra. 2, 37 ॥ 626 ॥

[ छाया ] आतपाभावे । Ku., 1, 5 । प्रभायामपि । Kâd. 5, 11 । प्रतिमायाम् । Ra. 2, 6 । गङ्गायाम् । Ra. 13, 2 । संवाहे । छाया° Mh. 2, 351 । येन केनचित्प्रकारेण सेवकसंतोषणं संवाहः । न्याय्ये औचित्ये । यः Mh. 2, 351 । उत्तरपदीभूतः प्रायेणात्र प्रतिबिम्बार्थ एव ॥ 627 ॥

[ सह्य ] आरोग्ये शाश्वतेनोक्तः c. Śâśv. 485 । उदाहरणं त्वन्वेष्यम् ॥ [ वीर्य ] बले प्रभावे वीरकर्मणि वा । Ra. 5, 37 । रेतसि । उभे एव क्षमे सोढुमुभयोर्वीर्यमाहितम् c. Ku. 2, 60 ॥ 628 ॥

[ जया ] देवीभेदे । तां जयाविजयादानसंमुखीम् । ओषधिद्वयोर्द्वयोः स्त्रीपुंसयोः । एका जया अन्यो जयः ॥ [ जय ] भारते । ततो जयमुदीरयेत् e. g. Mahâbhâr. I, 1, 1 ! जयो नामेतिहासोयमिति वचनात् । गणे प्रमथे उत्कर्षे च । तस्मै जयाय निजवर्गजयैककर्त्रे । अभिभवे । Kd. 1, 22 ॥ [ आर्य ] ज्येष्ठे । M. Ch. I, 54, b । ब्राह्मणे । आर्यकर्म न कुर्वीत शूद्रस्तत्कर्म वा द्विजः । सज्जने । Sp. 4811 ॥ **629** ॥

[ आर्या ] छन्दोभिदि । जघनचपलाप्यनार्याः Kuṭṭ. 312, c. 757 ॥ [ चित्या ] चितायाम् । चित्यामा° Mh. 2, 349 । अग्निचयने । चित्य° Mh. 2, 349 ॥ [ सभ्य ] सामाजिके प्रत्ययिते अविसंवादके वा । Ku. 7, 29 । अग्नौ अग्निविशेषे शालाग्नौ । सभ्योग्निरिव पञ्चमः ॥ **630** ॥

[ दूष्य ] इभमध्यबन्धन्यां दूषणीये च । दूष्यो° Mh. 2, 358 । पटगृहे ! Śi. 5, 21 ॥ [ सैन्य ] बले सेनायाम् । Ku. 2, 52 । तत्समवायिनि सैनिके । Śi. 5, 28 ॥ **631** ॥

[ माया ] बुद्धजनन्यविद्ययोः । मायाजन्मापि° Mh. 2, 366 । वञ्चनायामिन्द्रजाले । Ra. 2, 62 । वञ्चनाविद्याधिष्ठातृदेवतायाम् । मायादेवी° Mh. 2, 366 ॥ [ जात्य ] कुलजे । चतुरगमनो यो जात्यश्वः [ sic ] स गौरिव वाह्यते Su. 283 । कान्ते उत्कृष्टे । M. M. 110, 1 v. l. ॥ **632** ॥

[ आदित्य ] सूर्ये । Ku. 2, 24 । गीर्वाणे । आदित्या व्यत्ययं हित्वा त्वां स्तुवन्ति पुरातनम् ॥ [ श्वशुर्य ] स्याले देवरे च । ज्येष्ठः श्वशुर्यः स्याली च संमान्यौ गुरुवत्स्मृतौ ॥ [ अहार्य ] द्वयेपि । Ku. 5, 8 ॥ **633** ॥

[ नादेय ] भूमिजम्ब्वादयः प्रायो लताभेदाः । नद्यां भवे । नादेयं° Mh. 3, 482 ॥ [ जघन्य ] पश्चादर्थे । उत्तिष्ठेत्° Mh. 3, 480 । गर्हिते । Su. 2919 ॥ **634** ॥

[ प्रणाय्य ] अभिलाषविनिर्मुक्ते । ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्प्रणाय्याय वान्तेवासिने Chh. U. 3, 11, 5 । असंमते चौरादिके । अवाप्नुयास्सोप्यचिरेण निग्रहं समं प्रणाय्यैर्यदि संवसेच्चरः ॥ [ आशय ] आधारे । त्रिर्निमज्जेज्जलाशयम् । हृदि । निर्मलाशयतया जितं जगत् । अभिप्राये । कस्याप्यत्र परिस्फुरन्ति विदुषो गूढाशया उक्तयः ॥ [ अश्वीय ] अश्वसंहतौ । अश्वीयरथ्यागजसंकुलेस्मिन्संग्राममूर्ध्नि प्रसहेत कस्त्वाम् c. Mh. 2, 369 ॥ **635** ॥

Hemacandra surpasses in bulk the Ekârtha. All these facts lead to the conclusion that Halâyudha preceded Hemacandra, and we shall hardly go too for back if we place him at the end of the eleventh century.

In Mallinâthas commentary on the Mâghakâvya (Calc. ed.) two passages (I, 19. XVI, 18) are cited from an Abhidhânaratnamâlâ which seems to have been different from that of Halâyudha.

In compiling the glossary, the editor has constantly consulted the commentaries of Kshîrasvâmin and Râyamukuṭa on Amara, which form the only valuable basis of all later scholiasts. Of modern writers, he feels himself under great obligation to Colebrooke's edition of the Amarakosha, and to Molesworth's Mahrati and English Dictionary.

In conclusion he would express his thanks to the publishers for having most obligingly undertaken to bring out a work which, from its nature, can be of interest only to a limited number of Sanskrit scholars.

## The abbreviations employed in the glossary are:

Ait. Br. - Aitareyabrâhmaṇa.
Anandal. - Ânandalaharî.
Av. - Atharvaveda.
Bhk. - Bhaṭṭikâvya.
Bhv. - Bhâminîvilâsa.
Brahmap. - Brahmapurâṇa.
Brahmav. - Brahmavaivartapurâṇa.
Bṛihadâr. - Bṛihadâraṇyakopanishad.
Çat. Br. - Çatapathabrâhmaṇa.
Chând. U. - Chândogyopanishad.
Çiçup. - Mâgha's Çiçupâla.
Çivap. - Çivapurâṇa.
Daṇḍin - Daṇḍin's Kâvyâdarça.
Devîbhâg. - Devîbhâgavatapurâṇa.
Dhânv.Nigh.-Dhânvantaranighaṇṭu.
Gg. - Gîtagovinda ed. Lassen.
HC. - Hemacandra, and the commentary ascribed to him.
Kâçîkh. - Kâçîkhaṇḍa.
Kir. - Kirâtârjunîya.
Ks. or Kum. - Kumârasambhava.
Ksh. - Kshîrasvâmin on Amara.
Mâgha - Mâgha's Çiçupâla.
Mahi. - Mahimnaḥ stava.
Manu - Mânavadharmaçâstra.
Mârk. - Mârkaṇḍeyapurâṇa.
Matsyap. - Matsyapurâṇa.
Mhbh. - Mahâbhârata.
Mit. - Mitâksharâ.
P. - Pâṇini.
Phetk. - Phetkâriṇîtantra.
Pk. - Pârçvanâthakâvya by Padmasundara.
Râyam or Rk. - Râyamukuṭa on Amara.
Rasamanj. - Bhânudatta's Rasamanjarî.
Rasatar. - Rasataranginî.
Rgh. - Raghuvança.
Rigvidh. - Ṛigvidhâna.
Rv. - Ṛigveda.
Sâhityad. - Sâhityadarpaṇa.
Sarasvatîk. - Sarasvatîkaṇṭhâbharaṇa.
Taitt. Br. - Taittirîyabrâhmaṇa.
U. or Urv. - Urvaçî ed. Bollensen.
Ujj. - Ujjvaladatta.
Vâgbh. Al. - Vâgbhaṭṭa Alankâra.
Vâmanap. - Vâmanapurâṇa.
Vârâhap. - Vârâhapurâṇa.
Vṛihann. - Vṛihannâradîyapurâṇa.
Vs. - Vâjasaneyisamhitâ.
Yv. or Yâjn. - Yâjnavalkya ed. Stenzler.

॥ श्रीगणेशाय नमः ॥

शब्दब्रह्म यदेकं यच्चैतन्यं च सर्वभूतानां।
यत्परिणामस्त्रिभुवनमखिलमिदं जयति सा वाणी ॥१॥
इयममरदत्तवररुचिभागुरिवोपालिताद्दिशास्त्रेभ्यः।
अभिधानरत्नमाला कविकंठविभूषणार्थमुद्ध्रियते ॥२॥
स्वः स्वर्गः सुरसद्म त्रिदशावासस्त्रिविष्टपं त्रिदिवं।
द्योर्गौरमर्त्यभुवनं नाकः स्यादूर्ध्वलोकश्च ॥३॥
आदित्यास्त्रिदशाः सुराः सुमनसः स्वर्गौकसो देवता
गीर्वाणा ऋभवोऽमराश्च मरुतो वृंदारका निर्जराः।
अस्वप्ना विबुधास्त्रिविष्टपसदो लेखाः सुपर्वाण इत्याख्याता
अमृताशना अनिमिषा देवास्तथा देवतं ॥४॥
असुरा दानवा दैत्या दैतेयाः सुरशत्रवः।
पूर्वदेवाः शुक्रशिष्याः पातालनिलयाः स्मृताः ॥५॥
ब्रह्मा स्रष्टा धाता परमेष्ठी पद्मभूः सुरज्येष्ठः।
वेधा विधिर्विरिंचो हिरण्यगर्भः शतानंदः ॥६॥

शंभुः स्वयंभूर्द्रुहिणश्चतुर्वक्त्रः प्रजापतिः।
पितामहो जगत्कर्ता विरंचिः कमलासनः ॥७॥
वाग्वाणी भारती भाषा गौर्गीर्ब्राह्मी सरस्वती।
ओंकारः प्रणवः प्रोक्तस्त्रयो वेदास्त्रयी स्मृता ॥८॥
वेदः श्रुतिस्तथाम्नायः स्वाध्यायश्छंद आगमः।
वेदांतश्च रहस्यं च बुधैरुपनिषन्मता ॥९॥
ऊहस्तर्को ऽनुमानोक्तिर्मीमांसा स्याद्विचारणा।
स्मृताः कृतांतराद्धांतसिद्धांतसमयाः समाः ॥१०॥
ईशानः शशिशेखरः पशुपतिः शूली शिवः शंकरः
शर्वः शंभुरुमापतिश्च गिरिशः श्रीकंठ उग्रो हरः।
सर्वज्ञस्त्रिपुरांतकस्त्रिनयनो कपर्दी भवो भूतेशः
परमेश्वरो ऽंधकरिपुर्दक्षाध्वरध्वंसकृत् ॥११॥
स्थाणुः स्रष्टा धूर्जटिर्वामदेवः कामध्वंसी व्योमकेशः कपाली।
नीलग्रीवोवह्निरेताः पिनाकीभीमोभर्गः कृत्तिवासावृषांकः
॥१२॥

अहिर्बुध्नो विरूपाक्षः शिपिविष्टो गणाधिपः।
गंगाधरो महादेवो मृडः स्यान्नीललोहितः ॥१३।
पिनाकं स्यादजगवं प्रमथास्तु गणाः स्मृताः।
कपर्दो ऽस्य जटाबंधस्तंडुः स्यान्नंदिकेश्वरः ॥१४॥
रुद्राणी शर्वाणी काली कात्यायनी भवानी च

आर्याम्बिका मृडानी हैमवती पार्वती गौरी ॥१५॥
उमा भगवती दुर्गा चंडी दाक्षायणी शिवा।
अपर्णा स्यान्महादेवी गिरिजा मेनकात्मजा ॥१६॥
ब्रह्माण्याद्याः स्मृताः सप्त देवता मातरो बुधैः।
चामुंडा कर्णमोटी च चर्चा स्याद्भैरवी तथा ॥१७॥
हेरंबो लंबोदर आखुरथो गणपतिश्च गजवदनः।
परशुधर एकदंतो विनायको विघ्नराजश्च ॥१८॥
गौरीपुत्रः षण्मुखः शक्तिपाणिः
क्रौंचारातिः कार्त्तिकेयो विशाखः।
स्कंदः स्वामी तारकारिः कुमारः
सेनानीः स्यादग्निभूर्बाहुलेयः ॥१९॥
गांगेयो ब्रह्मचारी च गुहो बर्हिणवाहनः।
महासेनो महातेजाः शरजन्मा च कथ्यते ॥२०॥
विष्णुः कृष्णः केशवो मंजुकेशी
श्रीवत्सांकः श्रीपतिः पीतवासाः।
विष्वक्सेनो विश्वरूपो मुरारिः
शौरिः शार्ङ्गी पद्मनाभो मुकुंदः ॥२१॥
गोविंदो धरणीधरः सुपर्णकेतुर्वैकुंठो जलशयनश्चतुर्भुजश्च।
दैत्यारिर्मधुमथनो रथांगपाणिर्दाशार्हः क्रतुपुरुषो वृषाकपिः
स्यात् ॥२२॥

जनार्दनाधोक्षजवासुदेवं दामोदरं श्रीधरमच्युतं च।
उपेंद्रमिंद्रावरजं च बभ्रुं हरिं हृषीकेशमुदाहरंति ॥२३॥
आत्मभूः पुंडरीकाक्षः श्रीवत्सो विष्टरश्रवाः।
नारायणो जगन्नाथो वनमाली गदाधरः ॥२४॥
सनातनो जिनः शंभुर्विधिर्वेधा गदाग्रजः।
कैटभारिरजो जिष्णुः कंसजित्पुरुषोत्तमः ॥२५॥
चक्रं सुदर्शनं चापं शार्ङ्गं कौमोदकी गदा।
खड्गो ऽस्य नंदकः शंखः पांचजन्यः प्रकीर्तितः ॥२६॥
कौस्तुभो वक्षसि मणिः श्रीवत्सो ऽस्य च लांछनं।
वसुदेवस्तु कथितो बुधैरानकदुंदुभिः ॥२७॥
बलदेवो बलभद्रो मुशली नीलांबरः प्रलंबघ्नः।
सीरी च सात्वतः स्यात्तालध्वज एककुंडलो ऽनंतः ॥२८॥
संकर्षणो रौहिणेयः कालिंदीकर्षणो बलः।
रेवतीरमणो रामः कामपालो हलायुधः ॥२९॥
विहंगराजो गरुडो गरुत्मान् तार्क्ष्यः सुपर्णीतनयः सुपर्णः।
स्याद्वैनतेयः पवनाशनाशः सुरेंद्रजित्कश्यपनंदनश्च ॥३०॥
लक्ष्मीः श्रीः कमला पद्मा पद्मवासा हरिप्रिया।
क्षीरोदतनया मा च शब्दज्ञैरिंदिरा स्मृता ॥३१॥
प्रद्युम्नो मकरध्वजो मनसिजः संकल्पजन्मांगजः
पंचेषुः कुसुमायुधश्च मदनो मारः स्मरो मन्मथः।

कंदर्पो झषकेतनो रतिपतिः श्रीनंदनो हृच्छयः
काम: शंबरसूदनो मधुसखः शृंगारयोनिः स्मृतः ॥३२॥
दर्पकः शूर्पकारातिरनंगो विषमायुधः।
आत्मभूर्मनसिशयः पुष्पधन्वा मनोभवः ॥३३॥
मापत्यमिरजश्चैव कामपत्नी रतिः स्मृता।
अनिरुद्धश्च तत्सूनुरुषारमणा इष्यते ॥३४॥
आदित्यः सविता सहस्रकिरणः प्रद्योतनो भास्कर-
स्तिग्मांशुस्तरणिस्तथा दिनमणिर्भास्वान्विवस्वान्हरिः।
मार्तंडस्तपनो विकर्तन इनः पूषा पतंगो भगः
सूर्यो गोपतिरर्यमा दिनकरः सूरो ऽंशुमाली रविः ॥३५॥
मिहिरो विरोचनो ऽर्कस्तिमिररिपुर्द्युमणिरंशुमानंशुः।
हरिदश्वः सप्ताश्वः प्रभाकरो भानुमान्भानुः ॥३६॥
ब्रध्नो हंसः खगो मित्रश्चित्रभानुरहर्पतिः।
कर्मसाक्षी जगच्चक्षुर्द्वादशात्मा त्रयीतनुः ॥३७॥
रोचिः शोचिरभीशुः प्रद्योतगभस्तिरश्मिघृणिकिरणाः।
रुचिरुग्दीधितिदीप्तिद्युतिप्रभाभाविभाभासः ॥३८॥
उस्रधामवसुकेतुमरीचिप्रग्रहोपधृतिवृष्णिमयूखाः।
अंशुभानुकरपादविरोका गाव इत्यभिहितास्तु समानाः ॥३९॥
तिग्मं तीक्ष्णं खरं तीव्रं चंडमुष्णं पटु स्मृतं।
आतपः कथ्यते रौद्रं निदाघो घर्म उच्यते ॥४०॥

परिधिः परिवेषः स्यान्मंडलं चोपसूर्यकं।
उच्यते राहुसंस्पर्श उपराग उपप्लवः ॥४१॥
इंदुश्चंद्रश्चंद्रमा ओषधीशः सोमो राजा रोहिणीवल्लभोऽब्जः।
नक्षत्रेशः स्यादत्रिनेत्रप्रसूतः प्रालेयांशुः श्वेतरोचिः शशांकः॥४२॥
द्विजराजो रजनिकरः पीयूषरुचिर्निशीथिनीनाथः।
जैवातृको मृगांको विधुश्च दाक्षायणीरमणः ॥४३॥
चंद्रिका कौमुदी ज्योत्स्ना तथा चंद्रातपः स्मृतः।
मंडलं बिंबमाख्यातं हृदये लांछनं मृगः ॥४४॥
अंकश्चिह्नमभिज्ञानं लांछनं लक्ष्म लक्षणं।
कलंकश्चेति विज्ञेया नातिनानार्थवाचकाः ॥४५॥
वक्रमंगारकं भौमं लोहितांगं धरात्मजं।
रौहिणेयं बुधं सौम्यमाहुश्चांद्रमसायनं ॥४६॥
वाचस्पतिरांगिरसो बृहस्पतिः कथ्यते गुरुर्जीवः।
धिषणास्त्रिदशाचार्यश्चित्रशिखंडिप्रसूतश्च ॥४७॥
उशना शुक्रः काव्यो दैत्यगुरुर्भार्गवः कविर्धिष्ण्यः।
असितः क्रोडः पंगुश्छायातनयः शनैश्चरः शौरिः॥४८॥
स्वर्भानुः सैंहिकेयश्च तमो राहुर्विधुंतुदः।
केतवः शिखिनः प्रोक्ता आर्द्रालुब्धक उच्यते ॥४९॥
सप्तर्षयस्तु विद्वद्भिः स्मृताश्चित्रशिखंडिनः।
कृत्तिका बहुला प्रोक्ताः पक्षस्तु बहुलोऽसितः ॥५०॥

भं नक्षत्रं तारकं तारका च ज्योतिस्तारा धिष्ण्यमृक्षं तथोडु ।
पुष्यस्तिष्यः स्याद्धनिष्ठाश्रविष्ठा दाक्षायण्यः कीर्तिताश्चंद्रदाराः
॥५१॥

इंद्रो दुश्च्यवनो हरिः सुरपतिः संक्रंदनो वासवो
वृत्रारिर्बलसूदनः शतमखो वृद्धश्रवाः कौशिकः ।
जिष्णुर्वज्रधरः सहस्रनयनो वास्तोष्पतिर्गोपतिः
पर्जन्यो मघवा वृषा हरिहयः प्राचीनबर्हिः स्मृतः ॥५२॥
पुरुहूतः पृतनाषाट् पुंरदरः पूर्वदिक्पतिः स्वाराट् ।
आखंडलस्तुराषाट् सुत्रामा गोत्रभित्सुनासीरः ॥५३॥
शक्रः स्यादुग्रधन्वा च हरिवान्पाकशासनः ।
दिवस्पतिर्बिडौजाश्च मरुत्वान्मेघवाहनः ॥५४॥
इंद्राणी पौलोमी शची जयंतश्च तत्सुतो ज्ञेयः ।
अमरावती च नगरी नंदनमुद्यानमिंद्रस्य ॥५५॥
पविरशनिः शतधारं वज्रं कुलिशं च भवति दंभोलिः ।
गौर्भिदुरं व्याधामः स्वरुरिंद्रप्रहरणं तथा शंबः ॥५६॥
स्फूर्जथुर्वज्रनिर्घोषो वज्रज्वालातिभीः स्मृता ।
रज्जु रोहितमिच्छंति बुधाः शक्रशरासनं ॥५७॥
अभ्रमब्दो घनो मेघः स्तनयित्नुः पयोधरः ।
धाराधरो धूमयोनिर्जीमूतश्च बलाहकः ॥५८॥
धारासंपात आसारो वातास्तं वारि सीकरः ।

दुर्दिनं मेघतिमिरं करकः स्याद्घनोपलः।
चलन्नवाभ्रमाला च बुधैः कादंबिनी स्मृता ॥५९॥
शंपा चपला क्षणिका शतह्रदा ह्लादिनी तडिद्विद्युत्।
सौदामिन्यचिरांशुः प्राज्ञैरैरावती च विज्ञेया ॥६०॥
ऐरावतो ऽभ्रमातंगः स चैरावण उच्यते।
उच्चैःश्रवास्तु देवाश्वो मातलिः शक्रसारथिः ॥६१॥
सप्तार्चिर्बहुलः शिखी कृतवहो वैश्वानरो ऽग्निर्वसु-
र्वह्निर्वायुसखः सितेतरगतिः स्वाहाप्रियः पावकः।
अर्चिष्मान् ज्वलनः कृशानुरनलो धूमध्वजो हव्यवाट्
बर्हिर्ज्योतिरुषर्बुधश्च दहनः स्याच्चित्रभानुः शुचिः ॥६२॥
कृपीटयोनिर्दमुनाः कृष्णवर्त्माशुशुक्षणिः।
विभावसुरपां पित्तं जातवेदास्तनूनपात् ॥६३॥
वीतिहोत्रो बृहद्भानुराश्रयाशो धनंजयः।
हिरण्यरेतास्तमोघ्नो रोहिताश्वो हुताशनः ॥६४॥
अर्चिः कीला ज्वाला वर्चस्तेजस्त्विषस्तथा ज्योतिः।
हेतिद्युतिदीप्तिरुचः शिखाप्रभारश्मयः समानार्थाः ॥६५॥
स्मृतः प्रकाश आलोक उद्द्योतश्च समास्त्रयः।
अग्नायी कथ्यते स्वाहा धूम्या स्याद्धूमसंहतिः ॥६६॥
ऊष्मा बाष्पः स्फुलिंगश्च कणा जिह्वास्तथार्चिषः।
अलातमुल्मुकं ज्ञेयमुल्का ज्वालास्य निर्गता ॥६७॥

भवति हिरण्या कनका रक्ता कृष्णा सुप्रभा चान्या।
अतिरक्ता बहुरूपेति सप्त सप्तार्चिषो जिह्वाः ॥६८॥
एधस्तर्पणमिंधनमेधः समिदिध्म इत्यभिन्नार्थाः।
भूतिर्भसितं भस्म क्षारं रक्षा च निर्दिष्टा ॥६९॥
वनवह्निर्दवो दावो मेघवह्निरिरंमदः।
और्वः समुद्रवह्निः स्याद्वाडवो वडवामुखः ॥७०॥
शमनः समवर्ती च प्रेतपतिः पितृपतिश्च कीनाशः।
वैवस्वतः कृतांतः कालिंदीसोदरः कालः ॥७१॥
अंतको धर्मराजश्च यमो दंडधरो हरिः।
दक्षिणाशापतिः सद्भिः श्राद्धदेवश्च कथ्यते ॥७२॥
यातूनि यातुधानाः क्रव्यादा राक्षसाश्च रक्षांसि।
नक्तंचरनैर्ऋतकौणपास्तथा नैकषेयाः स्युः ॥७३॥
वरुणं यादसां नाथं पाशपाणिं प्रचेतसं।
जलाधिदैवतं प्राहुः प्रत्यगाशापतिं बुधाः ॥७४॥
पवनः श्वसनो वायुर्मरुदनिलो मारुतो जगत्प्राणः।
पृषदश्वः पवमानः प्रभंजनः स्पर्शनो वातः ॥७५॥
नभस्वान्मातरिश्वा च समीरश्च समीरणः।
सदागतिर्गंधवहो हरिः प्रोक्तो महाबलः ॥७६॥
झंझावातः सवृष्टिः स्याद्वात्या वातस्य मंडली।
आमोदः स्यात्परिमलः सौरभ्यं च सुगंधिता ॥७७॥

ऐलविलः पौलस्त्यो वैश्रवणः किंनरेश्वरो धनदः।
श्रीदः श्रीकंठसखो मनुष्यधर्मा धनाध्यक्षः॥७८॥
उत्तराशापतिर्यक्षः कुबेरो नरवाहनः।
गुह्यको राजराजश्च धनी पुण्यजनेश्वरः॥७९॥
द्युम्नं द्रव्यं द्रविणं राः सारं स्वापतेयमर्थः स्वं।
ऋक्थं पृक्थं वित्तं धनं हिरण्यं च वसु विभवः॥८०॥
अकुप्यं रूप्यहेमाख्यं कुप्यमन्यद्धनं भवेत्।
गोमहिष्यादिकं सर्वं बुधैर्जीवधनं स्मृतं॥८१॥
निक्षेपः स्यादुपनिधिः कथ्यते शेवधिर्निधिः।
किंनरः स्यात्किंपुरुषो मयुरश्वमुखस्तथा॥८२॥
उद्यानं स्याच्चैत्ररथं विमानं चास्य पुष्पकं।
अलका नगरी ज्ञेया पुत्रस्तु नलकूवरः॥८३॥
विश्वकृद्विश्वकर्मा च त्वष्टा स्याद्देववर्धकिः।
नासत्यावश्विनौ दस्रौ प्रोक्तौ देवचिकित्सकौ॥८४॥
शौद्धोदनिर्दशबलो बुद्धः शाक्यस्तथागतः सुगतः।
मारजिद्द्वयवादी समंतभद्रो जिनश्च सिद्धार्थः॥८५॥
जिनेंद्रो वीतरागो ऽर्हन् केवली च त्रिकालवित्।
अलक्ष्मीर्निर्ऋतिर्ज्ञेया नियतिर्विधिरुच्यते॥८६॥
यक्षराक्षसगंधर्वसिद्धकिंनरगुह्यकाः।
विद्याधराप्सरोभूतपिशाचा देवयोनयः॥८७॥

घृताची मेनका रंभा उर्वशी च तिलोत्तमा।
सुकेशी मंजुघोषाद्याः कथ्यंते ऽप्सरसो बुधैः ॥८८॥
हेलाविलासबिब्बोकलीलाललितविभ्रमाः।
स्त्रीणां शृंगारचेष्टाः स्युर्हावपर्यायवाचकाः ॥८९॥
बाह्यार्थालंबनो यस्तु विकारो मानसो भवेत्।
स भावः कथ्यते सद्भिस्तस्योत्कर्षो रसः स्मृतः ॥९०॥
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिताः ॥९१॥
शृंगारहास्यकरुणा रौद्रवीरभयानकाः।
बीभत्साद्भुतशांताश्च नव नाट्ये रसाः स्मृताः ॥९२॥
गीतं गानमिति प्रोक्तं वाद्यमातोद्यमिष्यते।
नृत्यं तु तांडवं लास्यं त्रितयं नाट्यमुच्यते ॥९३॥
तालः कालक्रियामानं लयः साम्यमुदाहृतं।
अंगहारो ऽंगविक्षेपः सूच्यो ऽर्थो ऽभिनयः स्मृतः ॥९४॥
प्रेक्षार्थं गीतवाद्यं तु संगीतमभिधीयते।
आदावेव तु यन्नाट्यं पूर्वरंगः स उच्यते ॥९५॥
प्रोक्ता घोषवती वीणा विपंची परिवादिनी।
वल्लकी चेति तद्भेदास्तंत्रीभेदसमुद्भवाः ॥९६॥
रंगः स्यान्नर्तनस्थानं मृदंगो मुरजः स्मृतः।
आनकः पटहो ज्ञेयो डिंडिमः पणवस्तथा ॥९७॥

कोणो वादनदंडः स्याद्भेरी दुंदुभिरिष्यते।
नाट्ये राज्ञी स्मृता देवी कुमारो भर्तृदारकः ॥९८॥
भाव इत्युच्यते विद्वान् भावुको भगिनीपतिः।
आवुकस्तु पिता ज्ञेय आर्यो मारिष उच्यते ॥९९॥
आशाः ककुभः काष्ठा हरितश्च दिशः समाख्याताः।
इंद्रानलयमनैर्ऋतवरुणमरुद्धनदरुद्रदिक्पालाः ॥१००॥
ऐंद्री पूर्वा प्राची याम्या दिग्दक्षिणा तथावाची।
स्याद्वारुणी प्रतीची कौवेरी चोत्तरोदीची ॥१०१॥
अंतराला दिशश्चान्या विदिशः प्रदिशः स्मृताः।
उपरिष्टादुपर्यूर्ध्वं तथाधस्तादवागधः ॥१०२॥
प्राचीनं प्राक् स्मृतं प्राग्भिरुदीचीनमुदक् तथा।
प्रत्यक् चैव प्रतीचीनमपाचीनमपागिति ॥१०३॥
ऐरावतः पुंडरीकः कुमुदांजनवामनाः।
पुष्पदंतः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥१०४॥
दिष्टः कालस्तथानेहास्तद्भेदाः स्युः कलादयः।
अहोरात्रं च विद्वद्भिः कथ्यते षष्टिनाडिकं ॥१०५।
दिवसो दिवा दिनं द्युः प्रोक्तमहर्वासरस्तथा घस्रः।
प्रहरो यामः संध्ये रजनीदिनयोः प्रवेशनिष्कासौ ॥१०६॥
तमी तमिस्रा कथिता तमस्विनी
विभावरी नक्तमुखा च शर्वरी।

क्षपा त्रियामा क्षणदा निशीथिनी
निशा च दोषा रजनी च यामिनी ॥१०७॥
वसतिर्वासतेयी च श्यामा रात्रिश्च कथ्यते।
गणरात्रो निशा बह्वयश्चिररात्रस्ततः परं ॥१०८॥
सायं दिवावसानं स्यात्प्रदोषो रजनीमुखं।
निशीथो मध्यमा रात्रिः प्रोक्ता सा च महानिशा ॥१०९॥
अवतमसमंधतमसं संतमसं ध्वांतमंधकारं च।
तिमिरं तमस्तमिस्रं तमिस्रमिच्छंति भूछायां ॥११०॥
कल्यमुषः प्रत्यूषं प्रगे प्रभातं भवेद्विभातं च।
दिवसमुखं गोसर्गः प्रातर्व्युष्टं च निर्दिष्टं ॥१११॥
शशिनि सिनीवाली स्याद्दृष्टे नष्टे कुहूरमावास्या।
अनुमतिरूने राका संपूर्णे पूर्णमासी च ॥११२॥
त्रिंशदहोरात्रः स्यान्मासस्ताभ्यामृतुर्वसंताद्याः।
ग्रीष्मः प्रावृट् शरदा हेमंतः शिशिर इति ते षट् ॥११३॥
चैत्रादिमासा मधुमाधवौ द्वौ ततः परं शुक्रशुची क्रमेण।
नभोनभस्यौ कथिताविषोर्जौ सहःसहस्यौ च तपस्तपस्यौ॥११४॥
मासेन मनुष्याणां पित्र्यमहोरात्रमेकमिच्छंति।
अब्देन तु देवानां ब्राह्मं देवयुगसहस्राभ्यां ॥११५॥
हायनाब्दशरद्वर्षसंवत्सरसमाः समाः।
निदाघः कथ्यते ग्रीष्मो वर्षाः प्रावृट् तपात्ययः ॥११६॥

संवर्तः परिवर्तः क्षयो युगांतो जगद्विनाशश्च ।
कल्पांतः समसुप्तिः संहारः स्यान्महाप्रलयः ॥११७॥
सांदृष्टिकं फलं सद्य उदर्क फलमुत्तरं ।
तत्कालं तु तदात्वं स्यादुत्तरः काल आयतिः ॥११८॥
दितिरदितिर्दनुकद्रूनिकषाविनताश्च मातरः प्रोक्ताः ।
दैत्यसुरदानवोरगपिशिताशनपक्षिराजानां ॥११९॥
चंद्रार्कावेकवाक्येन पुष्पदंतौ प्रकीर्तितौ ।
जायापती च विद्वद्भिर्जंपती दंपती तथा ॥१२०॥
द्यावाभूमी च रोदस्यौ रोदसी रोदसीति च ।
कशिपुर्भोजनाच्छादावौशीरं शयनासने ॥१२१॥
श्वःश्रेयसं स्यात्कल्याणं श्वोवसीयं शिवं शुभं
भविकं भावुकं श्रेयो भव्यं भद्रं च मंगलं ॥१२२॥
प्रमोदप्रमदौ हर्षः प्रीतिरुत्कर्ष उद्भवः ।
संमदो मुत्तथानंदः शर्म जोषं च शं सुखं ॥१२३॥
कैवल्यं निर्वाणं निःश्रेयसममृतमक्षरं ब्रह्म ।
अपुनर्भवो ऽपवर्गो मुक्तिर्मोक्षो महानंदः ॥१२४॥
सनातनं ध्रुवं नित्यं शाश्वतं स्यादनश्वरं ।
धर्मः पुण्यं वृषः श्रेयंः सुकृतं च समं स्मृतं ॥१२५॥
इष्टानिष्टफलं प्राज्ञैः स्मृतं दैवमयानयं ।
भागधेयं तथा भाग्यं विपाको भवितव्यता ॥१२६॥

उपलिंगमरिष्टं स्यादुपसर्ग उपद्रवस्तथोत्पातः।
ईतिरजन्यं च बुधैर्डमरो डिंबश्च विप्लवः कथितः ॥१२७॥
अर्चा पूजा सपर्या स्यादुपहारो बलिः स्मृतः।
प्रणिधानं समाधानं समाधिश्च समास्त्रयः ॥१२८॥
वरिवस्या परिचर्या शुश्रूषोपासना परीष्टिः स्यात्।
सेवा भक्तिरुपास्तिः प्रसादनाराधनोपचारश्च ॥१२९॥
प्रतिबिंबं प्रतिरूपं प्रतिमानं प्रतिकृतिं प्रतिच्छंदं।
प्रतिकायं च प्रतिनिधिमाहुः प्रतियातनां प्रतिच्छायां ॥१३०॥
अर्चा तु प्रतिमा प्रोक्ता हरिणी स्याद्धिरण्मयी।
अन्यलोहमयी प्राज्ञैः सूर्मी स्थूणा च कथ्यते ॥१३१॥
शुचिर्मेध्यं पवित्रं च पुण्यं पावनमुच्यते।
विमलं विशदं वीध्रमुज्ज्वलं स्यादनाविलं ॥१३२॥
भुवनं विष्टपं लोको जगदेकार्थवाचकाः।
अमृतं त्रिदशाहारः सुधा पीयूषमुच्यते ॥१३३॥
असवो जीवितं प्राणा जीवो जीवा च कथ्यते।
क्षेत्रज्ञः पुरुषो ह्यात्मा संसारी चेतनो मतः ॥१३४॥
मंदारपारिजातकहरिचंदनकल्पवृक्षसंतानाः।
पंचैते सुरतरवो मेरुः सुरपर्वतो ज्ञेयः ॥१३५॥
शक्रक्रीडाचलो मेरुः सुमेरुर्हेमपर्वतः।
रत्नसानुरिति ख्यातो हेमाद्रिस्त्रिदशालयः ॥१३६॥

नभो मरुद्वर्त्म वियद्विहायस्तारापथः पुष्करमंतरिक्षं।
व्योमांबरं विष्णुपदं च खं द्यौर्विहायसा स्याद्गगनं
तथा द्युः ॥१३७॥
ह्रादो नादः शब्दः स्वानो ध्वानः स्वरो रवो घोषः।
अभिधानव्याहारोदीरणकथनादयस्तु तद्भेदाः ॥१३८॥
कोलाहलः कलकलस्तुमलो व्याकुलो रवः।
उच्चावचमिति प्रोक्तमनिबद्धं तु यद्वचः ॥१३९॥
उच्चैस्तरो ध्वनिस्तारो मंद्रो गंभीर उच्यते।
कलश्च मधुरोऽव्यक्तो विक्रुष्टो निष्ठुरो मतः ॥१४०॥
सांत्वं स्यान्मधुरं वाक्यं प्रियं सत्यं च सूनृतं।
व्यातं क्लिष्टमविस्पष्टमबद्धं वियुतार्थकं ॥१४१॥
तूर्णोदितं निरस्तं स्याद्ग्रस्तं लुप्तपदं स्मृतं।
अंबूकृतं सनिष्ठीवं ग्राम्यमश्लीलमुच्यते ॥१४२॥
भिन्नकंठो ध्वनिर्धीरैः काकुरित्यभिधीयते।
समासप्रायमाख्यातं पदजातं च तंडकं ॥१४३॥
ऋतं सत्यं समीचीनं सम्यक् तथ्यं यथातथं।
अलीकं वितथं मिथ्या मृषा स्यादनृतं तथा ॥१४४॥
अर्थवादः प्रशंसा च स्तोत्रमीडा स्तुतिर्नुतिः।
विकत्थनं स्तवः श्लाघा वर्णना च निगद्यते ॥१४५॥
चटु चाटु प्रियं वाक्यं हृद्यार्थं हृदयंगमं।
वार्त्तोदितः प्रवृत्तिश्च वृत्तांतश्च समाः स्मृताः ॥१४६॥

अनादिवार्त्ता स्त्रैतिह्यं किंवदंती जनश्रुतिः।
कौलीनं जनवादः स्याद्विगानं वचनीयता ॥१४७॥
अपवाद उपक्रोशो निर्वादावर्णवादपरिवादाः।
एकार्थाः कथ्यंते गर्हा निंदा जुगुप्सा च ॥१४८॥
शाप आक्रोश आक्षेपः क्षारणा स्याद्विदूक्षणं।
स्मृताः सोल्लुंठसोत्प्रासोपह्रासाः समास्त्रयः ॥१४९॥
अनुलापो मुहुर्भाषा प्रलापो ऽनर्थकं वचः।
काङ्क्षा वर्णनमुल्लापः संलापो भाषणं मिथः ॥१५०॥
मर्मरः शुष्कपर्णानां विस्फारो धनुषां ध्वनिः।
बृंहितं वारणानां च ह्रेषा ह्रेषा च वाजिनां ॥१५१॥
आख्या संज्ञाभिधाह्वानं नामधेयं च नाम च।
आख्यायिका कथाख्यानं प्रह्लीका प्रहेलिका ॥१५२॥
विदुराम्रेडितं प्राज्ञा द्विस्त्रिर्व्याहरणं च यत्।
कीर्तिः श्लोको यशोभिख्यासमाख्यास्तुल्यलक्षणाः ॥१५३॥
प्रश्नः स्यादनुयोगः पर्यनुयोगो भवेदुपालंभः।
आकारणमाह्वानं कथयंत्यभिमंत्रणं प्राज्ञाः ॥१५४॥
तत्रभवान् भगवानिति शब्दो वृद्धैः प्रयुज्यते पूज्ये।
पादा इति नामांते देवो भट्टारको वापि ॥१५५॥

॥ इति श्रीभट्टहलायुधकृतायामभिधानरत्नमालायां स्वर्गकांडं प्रथमं समाप्तं ॥

भूर्भूमिर्वसुधावनिर्वसुमती धात्री धरित्री धरा
गौर्गोत्रा जगती रसा क्षितिरिला क्षोणी क्षमा क्ष्माचला।
कुः पृथ्वी पृथिवी स्थिरा च धरणी विश्वंभरा मेदिनी
स्यानंता विपुला समुद्रवसना सर्वंसहोर्वी मही ॥१॥
काश्यपी भूतधात्री च रत्नगर्भा वसुंधरा।
धराधारा च विज्ञेया तद्विशेषान्निबोधत ॥२॥
उर्वरा सर्वसस्या भूर्भवेदिरिणमूषरं।
खिलमप्रहतं स्थानं मरुर्धन्वा स्थलं स्थली ॥३॥
मृन्मृत्तिका प्रशस्तासौ मृत्सा मृत्स्नेति कथ्यते।
शाड्वलं हरितं प्रोक्तं नड्वलं नलसंयुतं ॥४॥
कृष्णभूमः प्रदेशो ऽसौ यत्र स्यात्कृष्णमृत्तिका।
पांडुभूमस्तथा प्रोक्त उदग्भूमश्च पंडितैः ॥५॥
नद्यंबुजीवनो देशो नदीमातृक उच्यते।
वृष्टिनिष्पाद्यसस्यस्तु विज्ञेयो देवमातृकः ॥६॥
मुद्गादीनां क्षेत्रं मौद्गीनं कौद्रवीणमित्यादि।
व्रैहेयं शालेयं भवति पुनर्व्रीहिशाल्योर्यत् ॥७॥
तिल्यं तैलीनं स्यान्माष्यं माषीणमुम्यमौमीनं।
भंग्यं भांगीनं वा यव्यं षष्टिक्यमेषां च ॥८॥

शाकशाकटमाख्यातमथवा शाकशाकिनं।
शाकस्य क्षेत्रमन्येषामेवं क्षेत्रेषु संहतिः॥९।
अचलशिलोच्चयशैलक्षितिधरगिरिगोत्रपर्वताहार्याः।
नगशिखरिसानुमंतो धराद्रिकुध्राश्च तुल्यार्थाः॥१०॥
नितंबः कटको ज्ञेयः सानु प्रस्थं तटं भृगुः।
शृंगं च शिखरं कूटं निर्झरः प्रस्रवो ऽंभसां॥११॥
गुहा पाषाणसंधिः स्यात्कंदरः कंदरा दरी।
निकुंजं गह्वरं प्रोक्तं पादाः प्रत्यंतपर्वताः॥१२॥
शिलोपलाश्मपाषाणग्रावाणः प्रस्तरो दृषत्।
गलिताः स्थूलपाषाणा गंडशैला इति स्मृताः॥१३॥
अयस्कांतविशेषाः स्युश्चुंबकभ्रामकादयः।
आकरः स्यात्खनिर्गंजा रुमा च लवणाकरः॥१४॥
उच्यते गैरिकं धातुस्ताम्रं शुल्वमुदुंबरं।
आरकूटः स्मृतो रीतिः कांस्यं सौराष्ट्रकं तथा॥१५।
गिरिसारमश्मसारं लोहं कालायसं तथा शस्त्रं।
तीक्ष्णमयः पारशवं कवयः कथयंत्यभिन्नार्थं॥१६॥
सीसकं सीसपत्रं स्याद्वंगं च मधुकं त्रपु।
रजतं कलधौतं च रूप्यं तारं च कथ्यते॥१७॥
हेम स्वर्णं जातरूपं सुवर्णं भर्म रुक्मं हाटकं शातकुंभं।
गांगेयं स्याद्गैरिकं भूरि चंद्रं राः कल्याणं निष्कमष्टापदं च।१८॥

जांबूनदं हिरण्यं कनकमहारजतकाचनानि स्युः।
कार्तस्वरचामीकरकर्बुरतपनीयनामानि ॥१९॥
अश्मगर्भं मरकतं हरिन्मणिरिति स्मृतः।
शोणाश्मा पद्मरागः स्याद्वैदूर्यं बालवायजं ॥२०॥
स्फटिकः सूर्यकांतः स्यादर्काश्मा दहनोपलः।
रत्नं वसु मणिः सर्वं सर्वं लोहं च तैजसं ॥२१॥
वृक्षो ऽंह्रिपः क्षितिरुहः शिखरी च शाखी
 शालो वनस्पतिरगो विटपी कुठश्च।
अद्रिः कुजस्तरुरनोकह इत्यभिन्नाः
 शब्दा द्रुविष्टरनगद्रुमपादपाश्च ॥२२॥
अवकेशी स विज्ञेयः फलैर्बंध्यस्तु यो भवेत्।
क्षुपो ह्रस्वशिफाशाखी फलवान् फलिनः फली ॥२३॥
वानस्पत्याः स्मृता वृक्षा ये पुष्प्यंति फलंति च।
फलंति ये विना पुष्पं तान्वदंति वनस्पतीन् ॥२४॥
फलपाकावसानास्तु बुधैरोषधयः स्मृताः।
लता प्रतानिनी वल्ली प्रततिर्व्रततिस्तथा ॥२५॥
अवाग्भागो भवेद्बुध्नः प्राग्रं तु शिखरं शिरः।
विस्तारो विटपः प्रोक्त आरोहस्तु समुच्छ्रयः ॥२६॥
स्कंधादधः प्रकांडः स्यात् प्रघाणः स्कंध उच्यते।
स्कंधशाखा तु शाला स्यान्निष्कुटः कोटरः स्मृतः ॥२७॥

त्वग्वल्कं वल्कलं प्रोक्तं मज्जा सार उदाहृतः।
काष्ठाटं भवेत्कंदः पादो मूलं जटा शिफा ॥२८॥
आवाल आलवालः स्यादावापः स्थानकं तथा।
लतोद्गमो ऽवरोहस्तु प्रवालः पल्लवांकुरः ॥२९॥
पल्लवः स्यात्किसलयं वल्लरी मंजरी तथा।
बर्हं पर्णं दलं पत्रं पलाशं छदनं छदः।
अंकूरश्चांकुरः प्रोक्तो वृंतं प्रसवबंधनं ॥३०॥
पुष्पं प्रसवः कुसुमं प्रसूनकं सुमनसः समाख्याताः।
कोरकजालककलिकाकुद्मलमुकुलानि तुल्यानि ॥३१॥
उन्मीलितमुन्मिषितं स्मितमुन्निद्रं विजृंभितं हसितं।
उद्बुद्धं व्याकोशं पुष्पेषु विकाशवाचकाः शब्दाः ॥३२॥
पौष्पं रजः परागः स्यान्मकरंदो मधु स्मृतः।
स्तवको गुच्छको गुच्छो गुलुंछः परिकीर्तितः ॥३३॥
शलाटुः कोमलं प्रोक्तं वानं शुष्कफलं भवेत्।
बीजकोशी शमी शिंबा ग्रंथिः पर्व परुस्तथा ॥३४॥
उलपस्तंबगुल्माश्च वीरुधो विटपाः स्मृताः।
शष्पं बालतृणं प्रोक्तं सर्वं च तृणमर्जुनं ॥३५॥
घासस्तु यवसः प्रोक्तो बर्हिर्दर्भः कुथः कुशः।
उलपो वल्वजः प्रोक्त इषीका काश उच्यते।
हरिताली भवेद्दूर्वा शरो मुंज इति स्मृतः ॥३६॥

रंभा कदली मोचा तृणराजः कथ्यते तलस्तालः।
कंकेलिरशोकः स्यादाम्रश्चूतश्च सहकारः॥३७॥
मृद्वीका गोस्तनी द्राक्षा हारहूरा च कथ्यते।
प्रियंगुः फलिनी श्यामा कुटजो गिरिमल्लिका॥३८॥
करवीरो हयमारो मालूरः श्रीफलो भवेद्बिल्वः।
करुणो जंबीरः स्याद्बदरी कुवली च कर्कंधुः॥३९॥
अर्जुनं ककुभं प्राकुः साले सर्जे च सूरयः।
जाबुकः पिचुलः प्रोक्त इज्जलो निचुलः स्मृतः॥४०॥
अरिष्टः पिचुमंदः स्यात् न्यग्रोधो वट उच्यते।
श्रीवृक्षः पिप्पलो ऽश्वत्थो बुधैर्बोधिश्च कथ्यते॥४१॥
ब्रह्मवृक्षः पलाशः स्यात्किंशुकश्च त्रिपत्रकः।
महावृक्षः स्नुहिः प्रोक्तः शेलुः श्लेष्मातकः स्मृतः॥४२॥
नक्तमालः करंजः स्याद्वृषा वासाटरूषकः।
आरग्वधः कृतमालः स्वर्णपुष्पी च कथ्यते॥४३॥
वृक्षोत्पलः कर्णिकारः पीतसालो ऽसनः स्मृतः।
दंडोत्पलः सहदेवा सल्लकी स्याद्गजप्रिया॥४४॥
निर्गुंडी सिंदुवारः स्यान्मंदारः पारिभद्रकः।
तांबूली नागवल्ली स्याद्गुवाक पूग उच्यते॥४५॥
वानीरो वंजुलः शीतो विदुलो वेतसः स्मृतः।
गोक्षुरः स्थलशृंगाटः षडंष्ट्रा स्यात्त्रिकंटकः॥४६॥

पिचव्यो बादरः प्रोक्तः कर्पासस्तूलकं पिचुः।
कोशातकी पटोली स्याङ्गिरिकार्ण्यपराजिता ॥४७॥
कथ्यते कृष्णला गुंजा तापिच्छः काकतुंडिका।
किंपाकः स्यान्महाकाल ओष्ठी विंबी च तुंडिका ॥४८॥
त्वचिसारश्च यो वंशो वेणुत्वक्सारमस्कराः।
स्वनंति ये ऽनिलोद्भूता वेणवस्ते तु कीचकाः ॥४९॥
नीला झिंटी भवेद्बाणः पीता सहचरी भवेत्।
मालती कथ्यते जातिर्मागधी यूथिका तथा ॥५०॥
हेमपुष्पमिह नागकेसरं केसरं च वकुलं प्रचक्षते।
कोविदारमपि कांचनारकं मल्लिकां विचकिलं
विचक्षणाः ॥५१॥
वर्णपुष्पममलानकं तथा किंकिरातमुदितं कुरंटकं।
ओड्रपुष्पमभिधीयते जपा सप्तला च नवमालिका स्मृता ॥५२॥
बंधूकं बंधुजीवं स्यात्पुन्नागः सुरपर्णिका।
अतिमुक्तकमिच्छंति वासंती माधवी लता ॥५३॥
एर्वारुश्चिर्भटः प्रोक्तो वालुकी कर्कटी तथा।
कर्कारुरथ कूष्मांडस्तुंब्यलाबूश्च दुग्धिका ॥५४॥
अरण्यमटवी सत्त्वं कांतारं काननं वनं।
विपिनं गहनं चेति नातिभिन्नार्थमिष्यते ॥५५॥
तटोपकंठे या जाता वनराजी महीभृतां।

उपत्यकां तु तामाकुरुपरिष्टादधित्यकां ॥५६॥
नगरान्नातिदूरेण यः सद्भिरुपरोपितः।
तरुषंडः स आरामस्तथोपवनमुच्यते ॥५७॥
विज्ञेयं प्रमदवनं नृपस्तु यस्मिन् शुद्धांतैः सह रमते गृहोपकंठे।
उद्यानं स्वयमपरैः समं च लोकैरन्येषां विभववतां च
पुष्पवाटी ॥५८॥

मातंगद्विरदद्विपाः करिगजस्तंबेरमानेकपाः
कुंभी कुंजरवारणेभरदिनः सामोद्भवः सिंधुरः।
तुल्यार्थाः कथिता हरिर्मृगपतिः पंचाननः केसरी
हर्यक्षो नखरायुधो मृगरिपुः सिंहश्च कंठीरवः ॥५९॥
भद्रो मंद्रो मृगश्चेति विज्ञेयास्त्रिविधा गजाः।
वनप्रचारसादृश्यसत्त्वभेदोपलक्षिताः ॥६०॥
मूर्धपिंडौ स्मृतौ कुंभौ कुंभयोरंतरं विदुः।
करटः स्यात्कटो गंडो वमथुः करसीकरः ॥६१॥
दानं मदो विषाणौ च दशनौ स्कंध आसनं।
अपांगदेशो निर्याणं कर्णमूलं तु चूलिका ॥६२॥
अवग्रहो ललाटं स्यादारक्षः कुंभयोरधः।
दंतयोरुभयोर्मध्यं प्रतिमानं प्रचक्ष्यते ॥६३॥
कराग्रं पुष्करं प्रोक्तमंगुलिः कर्णिका मता।
पेचकः पुच्छमूलं तु पक्षं स्याद्विंदुजालकं ॥६४॥

लग्नः प्रभिन्नो मत्तः स्यादुपात्तो मदवर्जितः।
तिर्यग्दंतप्रहारस्तु गजः परिणतो मतः॥६५॥
सज्जितः कल्पितो ज्ञेयो बहूनां घटना घटा।
चूषा कक्ष्या वरत्रा स्यादालानं स्तंभ उच्यते॥६६॥
पादकर्म यतं प्रोक्तं यातमंकुशवारणं।
उभयं वीतमाख्यातं भेदः स्थूलोच्चयो गतेः॥६७॥
करीरी दंतमूलं स्याद्वारी च गजबंधनं।
निगडः पादबंधश्च हिंजीरः शृङ्खलो ऽन्दुकः॥६८॥
कलभः करिपोतः स्यादंकुशः सृणिरुच्यते।
औपवाह्यो राजवाह्यः सांनाह्यः समरोचितः॥६९॥
व्यालो दुष्टगजः प्रोक्तो हस्तिनी तु वशा स्मृता।
आधोरणा हस्तिपका हस्त्यारोहा निषादिनः।
गजाजीवास्तु शास्त्रज्ञैर्महामात्रा इति स्मृताः॥७०॥
कोलः क्रोडः शूकरः स्याद्वराहः
पोत्री दंष्ट्री घृष्टिरुक्तः किरिश्च।
व्याघ्रो द्वीपी पुंडरीकस्तरक्षुः
शार्दूलः स्याच्चित्रकायो मृगारिः॥७१॥
महिषः सैरिभ उक्तो रक्ताक्षः कासरो लुलायश्च।
वाध्रीणसश्च खड्गी गंडक इति कथ्यते सद्भिः॥७२॥
ऋक्षाच्छभल्लभाल्लूकभल्लूकाश्च समाः स्मृताः।

अरण्यश्वा बुधैर्ज्ञेयः कोक ईहामृगो वृकः ॥७३॥
गोमायुर्भूरिमायः स्याच्छृगालो जंबुकः शिवा।
फेरंडः फेरवः फेरुः क्रोष्टा च मृगधूर्तकः ॥७४॥
एणः कुरंगो हरिणो मृगः स्यात्सारंग ऋष्यः पृषतो रुरुश्च।
न्यंकुस्तथा रंकुरिति प्रसिद्धा वातप्रमीशंबरकृष्णसाराः ॥७५॥
बलीमुखो मर्कटको वनौकाः प्लवंगमः स्यात् प्लवगः प्लवंगः।
हरिः कपिः कीश इमे च शब्दाः शाखामृगो वानर
इत्यभिन्नाः ॥७६॥
गोलांगूल इति प्रोक्तः कृष्णवक्त्रस्तु मर्कटः।
कवेः क्रीडादिकं किं चित्कापेयमिति कथ्यते ॥७७॥
शललः शल्लकः श्वावित्तत्सूची शललं शलं।
व्याघ्राद्यो वनचराः पशवः श्वापदाः स्मृताः ॥७८॥
गोधा मुशलिका प्रोक्ता गौधेरास्तत्सुता मताः।
सरटः कृकलासः स्यात्प्रतिसूर्यशयानकः ॥७९॥
आखुर्वृषो मूषकः स्यादुंदुरः खनकस्तथा।
कुच्छुंदरी च विज्ञेया विद्वाद्भिर्गंधमूषिका ॥८०॥
ओतुर्बिडालो मार्जारो वृषदंशश्च कथ्यते।
जाहकी गात्रसंकोची मंडली च बुधैः स्मृतः ॥८१॥
पतन्पतंगः पतगः पतत्री पत्री शकुंतिः शकुनिः शकुंतः।
वयो विहायो विहगो विहंगो विहंगमः पत्त्ररथो
गरुत्मान् ॥८२॥

शकुनः खगो नगौकाः पक्षी विर्विष्किरस्तथा विकिरः।
अंडजनीडजवाजिद्विजाश्च कथिताः समानार्थाः॥८३॥
तनूरुहं गरुत्पत्रं पतत्रं छदनं छदः।
पिच्छं वाजस्तथा पक्षः पक्षमूलं तु पक्षतिः॥८४॥
पेशीकोशः स्मृतो ऽंडश्च कुलायो नीड उच्यते।
चंचुश्चंचूस्तथा त्रोटिर्डयनं गगने गतिः॥८५॥
केकी शिखी शिखंडी प्रचलाकी बर्हिणः कलापी च।
सर्पाशनो मयूरः शिखावलः श्यामकंठश्च॥८६॥
वाणी केका शिखा चूडा चंद्रको मेचकः स्मृतः।
प्रचलाकः शिखंडश्च कलापो बर्ह उच्यते॥८७॥
अन्यभृतः परपुष्टः कलकंठः कोकिलः पिकः प्रोक्तः।
कलविंकश्चटकः स्याद्गृहबलिभुक् नीलकंठश्च॥८८॥
क्रौंचः क्रुङ् स्यात् खंजनः खंजरीटः
कोकश्चक्रश्चक्रवाको रथांगः।
दार्वाघाटः सारसः पुष्कराख्यः
प्रोक्ता सद्भिः सारसी लक्ष्मणा च॥८९॥
अरिष्टः करटः काको बलिपुष्टः सकृत्प्रजः।
एकदृग्बलिभुक् ध्वांक्षश्चिरंजीवी च वायसः॥९०॥
उलूकः कौशिकः प्रोक्तो ध्वांक्षारातिर्निशाटनः।
काकोलो मौकलिर्द्रोणः कृष्णकाको वनाश्रयः॥९१॥

कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः।
किकिदीविः स्मृतश्चाषः शकुंतो भास उच्यते ॥९२॥
भृंगः कालिंगो धूम्याटः सारंगश्चातको मतः।
व्याघ्राटस्तु भरद्वाजः शुकः कीर उदाहृतः॥९३॥
आटिः शरारिरातिः स्यादुत्क्रोशः कुररो मतः।
दात्यूहो जलरंकुः स्यात्कोयष्टिः शिखरी स्मृतः॥९४॥
वको वकोटो विज्ञेयो बलाका विसकंठिका।
आतायी शकुनिश्चिल्लो मुद्गः स्याज्जलवायसः॥९५॥
हंसाः श्वेतच्छदाः प्रोक्ताश्चक्रांगा मानसौकसः।
वारला हंसकांता स्याद्वरला वरटा तथा॥९६॥
आताम्रै राजहंसाश्च धार्तराष्ट्राः सितेतरैः।
मलिनैर्मल्लिकाख्याश्च कथ्यते चरणाननैः॥९७॥
पत्रैराधूसरैर्हंसाः कलहंसा इति स्मृताः।
प्रोच्यंते प्राचिकाः श्येनाश्चटिकाः क्षुद्रपक्षिकाः॥९८॥
जीवंजीवकपिंजलचकोरहारीतवंजुलकपोताः।
कारंडवकादंबक्रकराद्याः पक्षिजातयो ज्ञेयाः॥९९॥
मधुकरमधुपमधुव्रतशिलीमुखभ्रमरभृंगपुष्पलिहः।
इंदिंदिरालिषट्चरणचंचरीकालिनो द्विरेफाः स्युः॥१००॥
झिल्लीका चीरी स्यात्सरघा मधुमक्षिका भवेत्क्षुद्रा।
लूतोर्णनाभमर्कटजालिककृमयश्च तुल्यार्थाः॥१०१॥

पतंगः शलभः प्रोक्तः खद्योतो द्योतिरिंगणः।
हालाहलश्चांजनिका ज्येष्ठा स्याद्गृहगोधिका ॥१०२॥
ग्रामः संवसथो ज्ञेयो ग्रामाधानं च खेटकं।
ग्रामीणास्तु निगद्यंते ग्राम्या ग्रामेयका इति ॥१०३॥
ग्रामांतिकमुपशल्यं पर्यंतः परिसरः कटः प्रोक्तः।
अवधिर्मर्यादा स्याद्आघाटः सीम सीमा च ॥१०४॥
अध्वा पंथाः पद्धतिरेकपदी वर्त्म वर्तनी सरणिः।
अयनं पद्वी मार्गः पद्या च निगद्यते निगमः ॥१०५॥
ग्रामयोरंतरं दीर्घं प्रांतरं परिकीर्त्यते।
घोष आभीरपल्ली स्यात्पक्कणः शवरालयः ॥१०६॥
व्रजः स्याद्गोकुलं गोष्ठं गोवृंदं गोधनं धनं।
गोमान् गोमी च गोस्वामी गोविंदो ऽधिकृतो गवां ॥१०७॥
उक्षानड्वान्बलीवर्दः ककुद्मान्वृषभो वृषः।
ऋषभः सौरभेयो गौर्वाडवेयो ऽथ शाक्करः ॥१०८॥
तर्णकः स्मर्यते वत्सो दम्यो वत्सतरः स्मृतः।
आर्षभ्यः स च विज्ञेयः षंढत्वे यस्य योग्यता ॥१०९॥
महोक्षः स्यादुक्षतरो वृद्धोक्षस्तु जरद्गवः।
धुरं वहति यो धुर्यो धौरेयः स च कथ्यते ॥११०॥
स्थूरी स्यात्पृष्ठवाह्यस्तु स्कंधिकः स्कंधवाहकः।
असकूटस्तु ककुदं सास्ना स्याद्गलकंबलः ॥१११॥

नीचकी च शिरोदेशः स्कंधदेशो वहः स्मृतः।
नस्योतो नास्तितः प्रोक्तः षोडन् षड्दशनः स्मृतः।
भग्नशृंगस्तु तु कूटः स्याद्विषाणं शृंगमुच्यते ॥११२॥
अघ्न्या गौर्माहेयी सुरभिर्बहुला च सौरभेयी च।
उस्रार्जुनी च रोहिण्युक्तानडुही बुधैरनड्वाही ॥११३॥
वेहद्वृषभोपगता प्रष्ठौही गर्भिणी वशा बंध्या।
धेनुर्नवप्रसूता वष्कयणी प्रौढवत्सा स्यात् ॥११४॥
अवतोका स्रवद्गर्भा भद्रा गौर्गोमतल्लिका।
अचंडी सूरता प्रोक्ता वत्सकामा तु वत्सला ॥११५॥
ऊधः स्यादापीनं पीनोध्री पीवरस्तनी प्रोक्ता।
श्रेष्ठा च नैचिकी स्यात् द्रोणदुघा प्रचुरदुग्धा च ॥११६॥
काल्योपसर्या प्रजने प्रसिद्धा परेष्टुका च प्रचुरप्रसूतिः।
विजायते या प्रतिवत्सरं गौः समासमीनेति निगद्यते
ऽसौ ॥११७॥
गृष्टिः सकृत्प्रसूता स्यात्पलिक्नी बालगर्भिणी।
गव्यं गोसंभवं सर्वं करीषं गोमयं स्मृतं ॥११८॥
ऊधस्यं क्षीरं स्याद्दुग्धं स्तन्यं पयश्च पीयूषं।
दधिसारं नवनीतं ब्रुवते हैयंगवीनं च ॥११९॥
तक्रमरिष्टमुदश्विदंडाहतकालशेयमथितानि।
द्रप्सं दध्यघनं स्यात्सर्पिर्घृतमाज्यमाघारः ॥१२०॥

शीनं स्त्यानं घृतं पक्कं विलीनं द्रुतमुच्यते।
मंथा मंथश्च मंथानो वैशाखः खजकस्तथा ॥१२१॥
संदानं दामनी दाम पशूनां बंधनं मतं।
अजः प्रोक्तः स्तभो बस्तश्छागश्छागलकश्छगः ॥१२२॥
वर्करः कथ्यते सद्भिः सर्वोऽपि तरुणः पशुः।
तूवरः शृंगहीनस्तु पुमानव्यंजनश्च यः ॥१२३॥
अविहूर्णायुरश्रो रुडुरुरणो वृष्णिमेत्रमेण्ढाः स्युः।
अविसोढमविमरीसं स्याद्विहूसं च दुग्धमवेः ॥१२४॥
दासेरकः क्रमेलक उष्ट्रो मयरवणकरभशृंखलकाः।
बालेयश्चक्रीवान् खरगर्दभरासभाश्च तुल्यार्थाः ॥१२५॥
कौलेयकः सारमेयो भषणः श्वा च कुर्कुरः।
शुनको मृगदंशश्च बुधैः शालावृको मतः ॥१२६॥
मृगव्ये कुशलः श्वा च विश्वकद्रुरिति स्मृतः।
अलर्को रोगितो ज्ञेयः शुनकी सरमोच्यते ॥१२७॥
पशूनां षट्कसंख्यायां षड्गवं स्मर्यते बुधैः।
द्वित्वे च गोयुगं तेषां नामोच्चारणपूर्वकं ॥१२८॥
नीवृज्जनपदो देश उपवर्तनमिष्यते।
जनो लोकः प्रजा प्रोक्ता विषयो ग्रामसंख्यया ॥१२९॥
पत्तनं स्याद्धिष्ठानं निगमः पुटभेदनं।
नगरं नगरी दुर्गः स्थानीयं पूः पुरी पुरं ॥१३०॥

स्कंधावार इति प्राज्ञै राजधानी निगद्यते।
शाखानगरमाख्यातं तथोपनगरं बुधैः॥१३१॥
विदेहा मिथिला प्रोक्ता काशिर्वाराणसी स्मृता।
अवंत्युज्जयिनी ज्ञेया कन्यकुब्जा महोदया॥१३२॥
हस्तिनखः परिकूटं च कथ्यते गोपुरं पुरद्वारं।
वप्रं शालं प्राकारमाहुरररं कपाटं च॥१३३॥
प्रतोली विशिखा रथ्या मुखं निःसरणं स्मृतं।
शृंगाटकः पथां श्लेषः संस्थानं तु चतुष्पथं॥१३४॥
गृहभूमिस्तु वास्तुः स्याद्वाट आवेष्टको वृतिः।
गृहस्थानं स्मृतं राज्ञामुपकार्योपकारिका॥१३५॥
आवासावसथं गृहं च भवनं स्थानं निशांतं कुलं
संस्त्यायो निलयो निकाय्यमुटजं गेहं कुटं मंदिरं।
धिष्ण्यं धाम निकेतनं च सदनं पस्त्यं च वास्तु क्षयः
शाला वेश्म निवेशनोदवसिते प्रोक्ते च सद्मौकसी॥१३६॥
शरणमगारं निवसनमालय एकार्थवाचकाः शब्दाः।
अपवरकं गर्भगृहं संजवनं स्याच्चतुःशालं॥१३७॥
गृहमिष्टकादिरचितं प्रासादो देवतानरेंद्राणां।
आयतनं देवानामन्येषां धनवतां हर्म्यं॥१३८॥
सुधाधवलितं सौधं कुट्टिमं बद्धभूमिकं।
इंद्रकोशस्तमंगः स्याद्दृष्टाट्टालको मतः॥१३९॥

पाकस्थानं रसवती कथ्यते तन्महानसं।
उशंति शयनस्थानं वासागारं विशारदाः ॥१४०॥
आवेशनं शिल्पिशाला वाजिशाला तु मंडुरा।
पण्यविक्रयशाला स्यादापणो विपणिस्तथा ॥१४१॥
कर्मशाला च कारूणामन्वासनमुदाहृतं।
प्रपा पानीयशाला स्यात्सत्त्रशाला प्रतिश्रयः ॥१४२॥
उपघ्न आश्रयः प्रोक्तो मुनीनां स्थानमाश्रमः।
मठश्च व्रतिनां स्थानं मंडपः स्याज्जनाश्रयः ॥१४३॥
वेश्मैकदेशः प्रघणः प्रघाणः स्यादलिंदकः।
अजिरं प्रांगणं प्रोक्तं वेदिका च वितर्दिका ॥१४४॥
द्वार्द्वारं बलजं ज्ञेयमर्गला परिघः स्मृतः।
उत्तरंगं मतं तिर्यक् द्वारस्योपरि दारु यत् ॥१४५॥
बुधैर्वंदनमाला तु तोरणं परिकीर्त्यते।
आरोहणं स्यात्सोपानं निःश्रेणिरधिरोहिणी ॥१४६॥
गृहावग्रहणी प्रोक्ता देहली तु मनीषिभिः।
संमार्जनी वर्धनी स्यात्संकरो ऽवकरः स्मृतः ॥१४७॥
आच्छादनं स्याद्वलभी गृहाणां गोपानसी दारु च वक्रसंस्थं।
नीव्रं वलीकं पटलांतमाहुः कपोतपाली च
विटंकसंज्ञा ॥१४८॥

वातायनो गवाक्षश्च जालकं जालमुच्यते।

कक्षांतरं प्रकोष्ठं च चंद्रशाला शिरोगृहं ॥१४९॥
स्वस्तिको वर्धमानश्च नंद्यावर्तादयस्तथा।
विच्छंदकविशेषाः स्युरमी भूपतिवेश्मनां ॥१५०॥
परिवारः परिकरः परिस्पंदः परिग्रहः।
तथोपकरणं प्रोक्तं परिवर्हः परिच्छदः ॥१५१॥
पर्यंकः शयनं शय्या तल्पं च तलिनं स्मृतं।
अपाश्रयस्तु विद्वद्भिः कथ्यते मत्तवारणः ॥१५२॥
प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथः कुथा।
नवतं चेति तुल्यार्थाः प्रच्छदश्चोत्तरच्छदः ॥१५३॥
अपटी कांडपटः स्यात्प्रतिसीरा जवनिका तिरस्करिणी।
उच्छीर्षकमुपधानं धीरैरुपवर्हमाख्यातं ॥१५४॥
चंद्रोदयो वितानं स्याडुल्लोचः कदकस्तथा।
व्यंजनं तालवृंतं च विष्टरः पीठमासनं ॥१५५॥
वेत्रासनं तथासंदी कंकतं केशमार्जनं।
पादुकानुपदीना स्यादुपानत्पादरक्षणं ॥१५६॥
दर्वी तर्दूश्च खजिका कथ्यते दारुहस्तकः।
पेटां वदंति मंजूषां कुशूलं धान्यकोष्ठकं ॥१५७॥
अंबरीषो भवेद्भ्राष्ट्रः कंडुः स्वेदनिका स्मृता।
चुल्ल्यश्मंतकमुद्धमानं स्मृताधिश्रयणी बुधैः ॥१५८॥
अंगारशकटीं प्राकुर्हसंतीं च हसंतिकां।

उखा स्थाली चरुः कुंभी पिठरं कुडमुच्यते ॥१५९॥
कटाहः कर्परो ज्ञेयो भृंगारः कनकालुका।
शालाजिरो वर्धमानः शरावः स्मर्यते बुधैः ॥१६०॥
कोशिका मल्लिका प्रोक्ता पिधानं स्यादुदंचनं।
घटः करीरः कलशः कुटः कुंभो निपः स्मृतः ॥१६१॥
कर्करी करकः प्रोक्तो वर्धनी च गलंतिका।
गर्गरी मंथनी प्रोक्ता मणिकः स्यादलिंजरः ॥१६२॥
धान्याम्लमारनालं संधानं कांजिकं च सौवीरं।
अभिषवमवंतिसोमं तुषोदकं शुक्तमिच्छंति ॥१६३॥
अंधः कूरं भक्तं दिदीविरन्नं तथौदनो भिस्सा।
अशनं स्यादाहारः पूपापूपौ च पूपलिका ॥१६४॥
यवागूरुष्णिका श्राणा तरला च विलेपिका।
क्षैरेयी पायसं प्रोक्तं परमान्नं च सूरिभिः ॥१६५॥
मिष्टान्नं व्यंजनं ज्ञेयं वेषवार उपस्करः।
दधिमंडो भवेन्मस्तु करंभो दधिसक्तवः ॥१६६॥
दाधिकं संस्कृतं दध्ना सार्पिषं सर्पिषा स्मृतं।
लवणोदकसंसिद्धमुदलावणिकं मतं ॥१६७॥
अंगारेषु विपक्कं मांसं भूतिर्भटूटकं भृष्टं।
उख्यमुखासंसिद्धं शूले शूल्यं भटित्रं च ॥१६८॥
किलाटः कूर्चिका चेति क्षीरस्य विकृती उभे।

फाणितविकृतिर्गौडी मत्स्यंडी खंडशर्करा: ॥१६९॥

वल्भनमभ्यवहार: प्रत्यवसानं च जेमनं जग्धि: ।
खादनमशनं भक्षणमाहारो भोजनं स्वदनं ॥१७०॥

पर्याप्तमुपसंपन्नं तृप्ति: सौहित्यमुच्यते ।
विघसो भुक्तशेषं स्याद्भुक्तोच्छिष्टं तु फेलिका ॥१७१॥

अमत्रं भाजनं पात्रं स्थालं तुल्यार्थमिष्यते ।
गल्वर्कश्चानुतर्षश्च चषक: सरक: स्मृत: ॥१७२॥

आपानं पानगोष्ठी स्यात्सपीति: सहपानकं ।
उपदंशावदंशौ च चक्षणं संप्रचक्षते ॥१७३॥

मद्यासव: शीधु सुरा प्रसन्ना परिस्रुता स्यान्मदिरा मदिष्ठा ।
कादंबरी स्वादुरसा च शुंडा गंधोत्तमा माधवकश्च

हाला ॥१७४॥

कल्यं कम्यं तथा मद्यं मैरेयं कापिशायनं ।
माध्वीकमासव: प्रोक्त: परिस्रुद्वारुणी मधु ॥१७५॥

मनुष्यो मानुषो मर्त्यो मनुजो मानवो नर: ।
पुमान्पंचजनो ना च पुरुष: पूरुषश्च विट् ॥१७६॥

धीरो धीमान् लब्धवर्णो विपश्चित्
वृद्धो विद्वान् प्राप्तरूपो ऽभिरूप: ।
सूरि: प्राज्ञ: पंडित: सन्मनीषी
ज्ञो दोषज्ञ: कोविद: स्यात्प्रबुद्ध: ॥१७७॥

बुधः सुधीः कृती कृष्टिः कविर्व्यक्तो विशारदः।
विचक्षणश्च मेधावी संख्यावान्मतिमान्मतः ॥१७८॥
प्रेक्षा प्रज्ञा प्रतिभा धीर्धिषणा शेमुषी मनीषा च।
बुद्धिर्मतिश्च मेधा संख्या संवित्तिरुपलब्धिः ॥१७९॥
चतुरः स्यात्क्षेत्रज्ञः कृतहस्तः कृतमुखश्च कृतकर्मा।
दक्षः कुशलो ऽभिज्ञो निष्णातः शिक्षितः प्रवीणश्च ॥१८०॥
वैधेयो बालिशो बालो जडो जाल्मो यथोद्गतः।
मूढो मंदो विवर्णश्च मूर्खः स्यान्मातृशासितः ॥१८१॥
अर्वाणमणकमपसदमवममवद्यं निकृष्टमपकृष्टं।
अधमं चेलं कांडं खेटं पापं च रेफसं प्राकु ॥१८२॥
ऐकागारिकतस्करदस्युप्रतिरोधकाः परास्कंदी।
चौरो मलिम्लुचः स्यात्परिमोषी पारिपंथिकः स्तेनः ॥१८३॥
पश्यतो यो हरत्यर्थं स चौरः पश्यतोहरः।
द्रव्यं ह्यपहृतं लोप्त्रं स्तेयं चौर्यमिति स्मृतं ॥१८४॥
पाटच्चरः पटचौरो बद्धो नद्धश्च संयतः।
क्षेमंकरो रिष्टतातिः शिवतातिः शिवंकरः ॥१८५॥
परवांस्तु पराधीनो निघ्नः परवशस्तथा।
परतंत्रः परायत्तः परच्छंदश्च गृह्यकः ॥१८६॥
कठोरः कठिनः क्रूरः कक्खटः कर्कशो दृढः।
उच्यते बहुलः स्थूलः पीनः पीवा च पीवरः ॥१८७॥

अर्यः परिवृढः स्वामी प्रभुर्नेता च नायकः।
अधिभूरधिपः प्रोक्तो ह्यधीशो ऽधिपतिस्तथा ॥१८८॥
तपस्वी संयतः शांतो मुनिर्लिंगी यतिर्व्रती।
रजोहरणधारी च श्वेतवासाः सितांबरः॥१८९॥
नग्नाटो दिग्वासाः क्षपणः श्रमणश्च जीवको जैनः।
आजीवो मलधारी निर्ग्रंथः कथ्यते सद्भिः॥१९०॥
दुर्जनः पिशुनः क्षुद्रो नीचः कर्णेजपः खलः।
दोषग्राही पुरोभागी द्विजिह्वो मत्सरी मतः॥१९१॥
कदर्यहीनकीनाशकिंपचानमितंपचाः।
कृपणक्षुल्लकक्लीबक्षुद्रा एकार्थवाचकाः॥१९२॥
क्षुद्रदरिद्राकिंचनदुर्विधदुःस्थाश्च दुर्गताः प्रोक्ताः।
इतरप्राकृतपामरपृथग्जना वर्वराश्च तुल्यार्थाः॥१९३॥
दांडाजिनिकः कुहकः कार्पटिको जालिकश्च कौसृतिकः।
धूर्तो व्यंसक उक्तो मायावी मायिको मायी॥१९४॥
आद्यूनः स्यादौदरिको भक्षको घस्मरो ऽद्मरः।
तमसेचनकं प्राहुस्तृप्तिर्यस्य न जायते॥१९५॥
परान्नः परपिंडादः परजातः परैधितः।
सर्वान्नीनः सर्वभक्षो मांसादी शौष्कलः स्मृतः॥१९६॥
उच्यते प्रवणः प्रह्वस्तत्परश्च परायणः।
व्युत्पन्नः प्रहृतः क्षुण्णः संस्कृतश्च निगद्यते॥१९७॥

लोलुभं लोलुपं लोलं लालसं लंपटं विदुः।
प्रतूर्णस्त्वरितस्तूर्ण उत्सुकः प्रसृतः स्मृतः। ॥१९८॥
शूरो वीरश्च विक्रांतो भटश्चारभटो भवेत्।
दरितश्चकितो भीतस्त्रस्तो भीरुश्च कातरः॥१९९॥
क्षुभितः शंकितश्चेति नातिनानार्थवाचकाः।
महोत्साहो महोद्योगो महेच्छः स्यान्महामनाः॥२००॥
उदात्तश्च तथोदीर्णो महात्मोदार उच्यते।
आढ्यः संमृद्धो धनवानिन ईशो धनीश्वरः॥२०१॥
अभ्यागारिकमिच्छंति कुटुंबव्यापृतं जनाः।
पांथो ऽध्वगो ऽध्वनीनः स्यादध्वन्यः पथिकस्तथा॥२०२॥
जंघालो जवनो वेगी पाथेयं शंबलं स्मृतं।
आवेशिकः प्राघुणक आगंतुरतिथिः स्मृतः॥२०३॥
आतिथेयं तथातिथ्यमातिथेयी च कथ्यते।
अर्थी मार्गणकः प्रोक्तो याचकश्च वनीपकः॥२०४॥
अध्येषणैषणा याञ्चा याचना प्रार्थना स्मृता।
क्षुद्वान्बुभुक्षितः प्सातो जिघत्सुः क्षुधितस्तथा॥२०५॥
अशनाया बुभुक्षा प्सा जिघत्साक्षुत्क्षुधाः समाः।
कोपनः क्रोधनः क्रोधी रोषणः स्यादमर्षणः॥२०६॥
कोपः क्रोधस्तथामर्षो रोषः प्रतिघ उच्यते।
तृषितस्तर्षितः प्रोक्तः पिपासुश्च पिपासितः॥२०७॥

उदन्या तर्षतृट्तृष्णापिपासाश्च समाः स्मृताः।
तृष्णक्को गर्धनो गृध्नुर्लिप्सुर्लुब्धो ऽभिलाषुकः॥२०८॥
तृष्णाभिलाषो लिप्साशा धनाया गर्धनोच्यते।
अधरो हीनवादी स्यात्प्रसक्तः प्रसृतः स्मृतः॥२०९॥
दासो दासेरकश्चेटो भुजिष्यः किंकरो मतः।
श्लक्ष्णो मधुरवाक् प्रोक्तः स्थूललक्षो बहुव्ययी॥२१०॥
प्रियवाग्दानशीलश्च वदान्यः परिकीर्तितः।
भवेद्दक्षिगतो द्वेष्यः प्रणाय्यो ऽसंमतो मतः॥२११॥
चक्षुष्यः सुभगो ज्ञेयो वल्लभो दयितः प्रियः।
गेहेनर्दी गेहेशूरः पिंडीशूरश्च कथ्यते॥२१२॥
स्थानस्थो यो परान् द्वेष्टि गोष्ठश्वं तं विदुर्बुधाः।
असौ पंचजनीनः स्याद्यो भांडादिरतो नरः॥२१३॥
वैरंगिको विरागार्हो धनवानस्तिमान्मतः।
प्रेष्यः प्रोक्तः परिस्कंदः कर्मशूरश्च कर्मठः॥२१४॥
अलंकर्मीणा इत्युक्तः कर्मशीलस्तु यः पुमान्।
उत्तालस्त्वरितो ज्ञेयो विश्रब्धः स्थिर उच्यते॥२१५॥
तीक्ष्णोपायेन यो ऽन्विच्छेत्स आयःशूलिको मतः।
अरुंतुदः स्याद्व्यथको वियातो धृष्ट उच्यते॥२१६॥
शरारुर्घातको हिंस्रो नृशंसः क्रूरकर्मकृत्।
साधुः सज्जन आर्यः स्याद्गृहमेधी गृहाधिपः॥२१७॥

कुशाग्रीयमतिः प्रोक्तः सूक्ष्मदर्शी च यः पुमान्।
चिद्रूपः स्यात्सहृदयः सहस्तः शिक्षितायुधः॥२१८॥
समुखः स खलु प्रोक्तो यो वक्ति प्रतिभान्वितः।
नीलीरागः स विज्ञेयः स्थिरप्रेमा च यः पुमान्॥२१९॥
क्षणमात्रानुरागी च हरिद्राराग उच्यते।
शाली श्रेयानधृष्टौ च प्रोक्तौ शालीनशारदौ॥२२०॥
दूरार्थानर्थसंदर्शी दीर्घदृष्टिः प्रकीर्तितः।
प्रत्युत्पन्नमतिर्ज्ञेयस्तत्कालोत्पन्नधीर्नरः॥२२१॥
यज्ञविष्णो दैवपरो यद्वदः स्यादनुत्तरः।
अज्ञो मातृमुखः प्रोक्तो दुर्मुखो मुखरः स्मृतः॥२२२॥
कद्वदो गर्ह्यवादी स्यात्कद्वरः कुत्सितो भवेत्।
प्रकांडोद्धौ प्रशंसायामाक्षेपे हतकः स्मृतः॥२२३॥
अहंयुः स्यादहंकारी शुभंयुः शुभसंयुतः।
यथाकामी स्वरुचिः स्यात्स्वच्छंदो निरवग्रहः॥२२४॥
अन्वेष्टानुपदी प्रोक्तः प्रतिभूर्लग्नकः स्मृतः।
रोगादुन्मुक्त उल्लाघः कल्यो वार्तो निरामयः॥२२५॥
जैवातृकः स्यादायुष्मान् बलवानंसलो मतः।
जाबालः स्यादजाजीवः कम्रः कामी च कामुकः॥२२६॥
वेश्यापतिर्भुजंगः स्याद्विटः पल्लवकः स्मृतः।
विह्वस्तो व्याकुलः प्रोक्तः कुंठो मंदः क्रियासु यः॥२२७॥

क्रियावान् कर्मसूद्युक्तो दीर्घसूत्रो जडक्रियः।
निकृतो विप्रलब्धः स्यात्समुन्नद्धो ऽतिगर्वितः॥२२८॥
प्रतीक्ष्यः कथ्यते पूज्यः पूजितो ऽपचितो भवेत्।
ईर्ष्यालुः कुहनः प्रोक्तो जारो ह्युपपतिः स्मृतः॥२२९॥
सरलो दक्षिणो ज्ञेयो विदग्धश्छेक उच्यते।
उत्पश्यमुन्मुखं विद्यात् न्युब्जं विद्यादधोमुखं॥२३०॥
आसीन उपविष्टः स्यादूर्ध्व ऊर्ध्वंदमः स्थितः।
क्षीवो मत्तः क्षमः शक्तः प्रगल्भः प्रौढ उच्यते।
उत्क उत्कंठितः प्रोक्तो विक्लवो विह्वलः स्मृतः॥२३१॥
अलसः शीतको मंदो जडो जिह्मश्च मंथरः।
पोगंडो विकलांगः स्याल्लोहलो ऽव्यक्तवाग्भवेत्॥२३२॥
कितवः स्यात् द्यूतकारो द्यूतमक्षवती भवेत्।
अक्षो दुरोदरं प्रोक्तं सभिको द्यूतकारकः॥२३३॥
परीक्षकः कारणिको गृह्यः पक्ष उदाहृतः।
अभिजातः कुलीनः स्यात्कुचरः कुटिलाशयः॥२३४॥
निषादिनो गजारोहा अश्वारोहास्तु सादिनः।
रथिनः स्यंदनारोहा नावारोहास्तु नाविकाः॥२३५॥
ब्राह्मणो वाडवो विप्रो भूमिदेवो द्विजोत्तमः।
अग्रजन्मा द्विजन्मा च षट्कर्मा सोमपा द्विजः॥२३६॥
ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः।

शूद्रस्तुरीयवर्णः स्यात्तद्भेदास्त्वंत्यजाः स्मृताः ॥२३७॥
ब्रह्मचार्यादयो वेदे प्रोक्ताश्चत्वार आश्रमाः।
शूद्रो ऽगृहस्थ एव स्यात्क्षत्रियो न यतिर्भवेत् ॥२३८॥
ब्रह्मचारी भवेद्वर्णी गृहस्थः स्नातकस्तथा।
वैखानसो वानप्रस्थः कर्मसंन्यासिको यतिः ॥२३९॥
अनूचानः सर्ववेदः श्रोत्रियश्छांदसो मतः।
प्राख्यातात्पितुरुत्पन्न आमुष्यायण इष्यते ॥२४०॥
अन्ववायो ऽन्वयो वंशो गोत्रं चाभिजनः कुलं।
चरित्रं चरितं शीलं चारित्रं च समं स्मृतं ॥२४१॥
वृत्ताध्ययनसंपत्तिरिष्यते ब्रह्मवर्चसं।
ब्रह्मचर्यं बुधाः प्राहुः समस्तेंद्रियसंयमं ॥२४२॥
संज्ञेय उपसंग्राह्यो यो ऽभिवाद्यो यथाविधि।
उपसंग्रहणं चापि प्राहुः संतो ऽभिवादनं ॥२४३॥
निवृत्तेंद्रियलौल्यस्तु श्रांतः शांतश्च कथ्यते।
तपःक्लेशसहो दांतो ह्यंतर्वाणिश्च शास्त्रवित् ॥२४४॥
अध्यापक उपाध्यायो व्याख्या विवरणं स्मृतं।
शिष्यांतेवासिनौ छात्रः शैक्षः प्राथमकल्पिकः ॥२४५॥
विघ्नो ऽंतरायः प्रत्यूहो व्यवायश्च प्रकीर्तितः।
साकल्यवचनं प्राज्ञैः पारायणमुदाहृतं ॥२४६॥
आम्नायः संप्रदायः स्यात्पारंपर्यं गुरुक्रमः।

प्रयतः स्यादनुच्छिष्टः संशितश्च सुनिश्चितः ॥२४७॥
सांवत्सरो ज्योतिषिको ज्ञानी मौहूर्तिकस्तथा।
कार्तांतिकस्तु दैवज्ञ आदेशी गणकः स्मृतः ॥२४८॥
व्रात्यः संस्कारहीनः स्यादवकीर्णी क्षतव्रतः।
शिश्निदानो दुराचारस्त्यक्ताग्निर्वीरहा द्विजः ॥२४९॥
धर्मध्वजो लिंगवृत्तिरस्वाध्यायो निराकृतिः।
शस्त्राजीवः कांडस्पृष्टो ब्रह्मबंधुर्द्विजो ऽधमः ॥२५०॥
जातिमात्रोपजीवी च कथ्यते ब्राह्मणब्रुवः।
अब्रह्मण्यमवध्यं स्यात् ब्रह्मण्यं ब्रह्मणे हितं ॥२५१॥
उपवीतं ब्रह्मसूत्रं प्रक्षिप्तं दक्षिणे करे।
प्राचीनावीतमन्यस्मिन्निवीतं कंठलंबितं ॥२५२॥
आचमनमुपस्पर्शनमाप्लवनं स्नानमिष्यते सवनं।
निर्णिक्तं प्रक्षालितमाकुधौतं च तुल्यार्थं ॥२५३॥
पाराशरी व्रती भिक्षुर्मस्करी पारिरक्षिकः।
परिव्राजिकस्तपस्वी कर्मंदी तापसः स्मृतः ॥२५४॥
वैकक्षमुत्तरासंगः प्रोक्ता वृहतिका तथा।
पर्यस्तिका परिकरः पर्यंकश्चेति कथ्यते ॥२५५॥
कक्षापटः स्यात्कौपीनं कुंडिका च कमंडलुः।
आषाढो व्रतिनां दंडो व्रतिनामासनं वृषी ॥२५६॥
ऋषिस्त्रिकालदर्शी स्यान्मुनिर्वाचंयमो मतः।

प्राचेतसस्तु वाल्मीकिर्मैत्रावरुण उच्यते ॥२५७॥
उक्तो ऽगस्तिरगस्त्यो लोपामुद्रापतिश्च घटयोनिः।
सात्यवतेयः पाराशर्यो द्वैपायनो व्यासः ॥२५८॥
यागो यज्ञः क्रतुः स्तोमः सप्ततंतुर्मखो ऽध्वरः।
वितानं संस्तरो बर्हिः सवः सत्त्रं च कथ्यते ॥२५९॥
निर्मंथकाष्ठमरणिः प्रणीतो ऽग्निश्च संस्कृतः।
वेदी परिष्कृता भूमिः पात्रमुक्तं स्रुगादिकं ॥२६०॥
हव्यपाकश्चरुः प्रोक्तः संनाय्यं हविरुच्यते।
शृते क्षीरे दधि क्षिप्तमामिक्षा कथ्यते बुधैः ॥२६१॥
उपाकृतस्तु विज्ञेयो मंत्रेण प्रोक्षितः पशुः।
हुतं वषट्कृतं ज्ञेयं यज्ञांतो ऽवभृथः स्मृतः ॥२६२॥
बृहस्पतिसवेनेष्टं येनासौ स्थपतिर्भवेत्।
सर्ववेदास्तु विज्ञेयो दत्तसर्वस्वदक्षिणः ॥२६३॥
विश्राणनं विहापितमंहतिरपवर्जनं वितरणं च।
निर्वपणं च स्पर्शनमुत्सर्गः स्यात्प्रदेशनं दानं ॥२६४॥
यष्टा च यजमानः स्यादादेष्टा दीक्षितो व्रती।
इज्याशीलो यायजूको यज्वा स्यादासुतीवलः ॥२६५॥
राजा राजन्यो राट् प्रजापतिः क्षत्रियो नृपः क्षत्रं।
मूर्धाभिषिक्तभूपतिपार्थिवनरदेवलोकपालाः स्युः ॥२६६॥
येनेष्टं राजसूयेन स सम्राट् परिकीर्तितः।

चक्रवर्ती सार्वभौमो मध्यमो मंडलेश्वरः ॥२६७॥
आतपत्रं भवेच्छत्रं चामरं तु प्रकीर्णकं।
हैमं सिंहासनं राज्ञां स्मृतं भद्रासनं बुधैः ॥२६८॥
द्वाःस्थो दौवारिकः क्षत्ता दंडी वेत्रधरस्तथा।
उत्सारको द्वारपालः प्रतीहारो बुधैः स्मृतः ॥२६९॥
अपसर्पश्चरश्चारः प्रणिधिर्गूढपूरुषः।
यथार्थवर्णो मंत्रज्ञः स्पशो हेरक उच्यते ॥२७०॥
मंत्री बुद्धिसहायः स्यादमात्यः सचिवस्तथा।
सौवस्तिक इति प्रोक्तः पुरोधाश्च पुरोहितः ॥२७१॥
महामात्रः प्रधानं स्यादध्यक्षो ऽधिकृतः स्मृतः।
सौविदः सौविदल्लश्च स्थापत्यः कंचुकी मतः ॥२७२॥
मित्रं सखा वयस्यश्च सुहृत्स्निग्धश्च कथ्यते।
अनुजीवी सहायः स्यात्सेवको ऽनुचरो ऽनुगः ॥२७३॥
प्राड्विवाको ऽक्षदर्शक् स्थेयो न्यायो ऽक्ष इति कथ्यते।
अंतःपुरेष्वधिकृतः स्मृतो ऽंतर्वंशिको नरः ॥२७४॥
क्लीवो वर्षधरः षंढः पंडकश्च नपुंसकः।
उभयव्यंजनं पोटा तृतीया प्रकृतिः स्मृता ॥२७५॥
आरालिकः सूपकारः सूदः स्याद्बल्लवस्तथा।
पौरोगवस्तु विज्ञेयः सूदाध्यक्षो मनीषिभिः ॥२७६॥
वैहासिकः केलिकिलो बुधैर्वासंतिको मतः।

परिहासो द्रवो नर्म केलिः क्रीडा च खेलनं ॥१७७॥
रक्षिवर्गो ह्यनीकस्थः सेनानीर्वाहिनीपतिः।
अर्थागमो भवेद्दायो भागधेयो बलिः करः॥१७८॥
उपदा प्राभृतं प्रोक्तमुपग्राह्यमुपायनं।
लंचोत्कोचमुपादानमुपचारस्तथामिषं॥१७९॥
प्रबोधका मागधवंदिसूता वैतालिका मंगलपाठकाश्च।
अच्छोटनं स्यान्मृगया मृगव्यं पापर्द्धिराखेटक इत्यभिन्नं॥१८०॥
अर्वा गंधर्वो ऽश्वः सप्तिर्वाजी तुरंगमस्तुरगः।
तार्क्ष्यो हरिस्तुरंगो ययुरुक्तो घोटको हयो वाहः॥१८१॥
गुणादेशकृतास्तेषां संज्ञाः स्युरनेकधा लोके।
कर्कः श्वेतः शोणो रक्तो हेमश्च कृष्णवर्णो ऽश्वः॥१८२॥
मल्लिकाक्षः सितैर्नेत्रैः कृष्णैरिंद्रायुधो मतः।
श्रीवृक्षकी स विज्ञेयः श्रीवृक्षो यस्य लांछनं॥१८३॥
आजानेयाः कुलीनाः स्युः पारसीका वनायुजाः।
कांबोजा वाह्लिकाः प्रोक्ताः सैंधवाः सिंधुपारजाः॥१८४॥
शूलको दुर्विनीतो ऽश्वः पोतः प्रोक्तः किशोरकः।
अर्वती वडवा वामी प्रसूता वाजिनी स्मृता॥१८५॥
लूनं पुच्छं तु लांगूलं वालहस्तश्च वालधिः।
प्रोथ इत्युच्यते घोणा मध्यं कश्यं खुरः शफः॥१८६॥
पर्याणं स्यात्पल्ययनं खलीनं कविकं स्मृतं।

चर्मदंडः कशा प्रोक्ता वल्गारश्मिकुशाः स्मृताः ॥२८७॥
रंहस्तरः स्यदः स्यात्प्रसरो वेगो रयो जवो वाजः।
पांशुः ज्ञोदो रेणुश्चूर्णं धूली रजश्च तुल्यार्थाः ॥२८८॥
अनः शतांगः शकटः स्यंदनः कथ्यते रथः।
गंत्री कंबलवाह्यस्तु कूवरी च निगद्यते ॥२८९॥
योग्यारथो वैनयिको ह्यधन्यः पारियानिकः।
कर्णीरथः प्रवहणं डयनं चेति कथ्यते ॥२९०॥
देवतार्थो देवरथो युद्धार्थः सांपरायिकः।
क्रीडारथः पुष्परथो जेता जैत्ररथः स्मृतः ॥२९१॥
चक्रं रथांगमाख्यातं कूवरं च युगंधरं।
चक्रधारा प्रधिर्नेमिर्नाभिश्चक्रस्य पिंडिका ॥२९२॥
अपस्करो रथांगः स्यादणिरक्षाग्रकीलिका।
नियंता प्राजिता ज्ञत्ता दक्षिणस्थश्च सारथिः ॥२९३॥
सव्येष्ठः कथ्यते सूतो वरूथं रथगोपनं।
वाहनं धोरणं युग्यं यानं पत्नमिति स्मृतं ॥२९४॥
शिविका याप्ययानं स्याद्वेसरो ऽश्वतरो मतः।
पदातपत्तिपादातपदातिकपदातयः।
पद्गश्च पदगश्चेति कथ्यंते पादचारिणः ॥२९५॥
दूष्यं स्थुलं पटकुटी गुणलयनी केणिका च निर्दिष्टा।
ध्रुवकः शिवकः शंकुः पुष्पलकः कीलकः प्रोक्तः ॥२९६॥

यात्रा प्रयाणं प्रस्थानं निवेशः शिबिरं स्मृतं।
अवस्कंदः प्रपातश्च सौप्तिकं च निगद्यते ॥२९७॥
संग्रामः समितिः समिच्च समरं संख्यं समीकं रणं
युद्धं युत्प्रधनं मृधं समुदयः संयत्कलिः संयुगं।
द्वंद्वायोधनसंप्रहारकलहाक्रंदाहवाभ्यागमाः
संस्फोटप्रविदारणप्रहरणानीकाजयः संगरः ॥२९८॥
संपरायः समाघातः प्रघातश्च समाह्वयः।
जन्यं स्यादभिसंपातः संमर्दो विग्रहस्तथा ॥२९९॥
अभियातिररातिरमित्ररिपू प्रतिपक्षविपक्षविरोध्यरयः।
अहितो ऽसहनश्च जिघांसुरिति प्रथिताः परिपंथिपरा
सुहृदः ॥३००॥
प्रत्यर्थी पर्यवस्थाता द्वेषी वैरी च शात्रवः।
शत्रुः सपत्नो भ्रातृव्यः प्रत्यनीको द्विषन्मतः ॥३०१॥
पृतना सेना ध्वजिनी पताकिनी वाहिनी बलं सैन्यं।
चक्रं चमूर्वरूथिन्यनीकिनी स्यादनीकं च ॥३०२॥
वैजयंती पताका च केतुः स्यात्केतनं ध्वजः।
अस्योच्चूलावचूलाख्यावूर्ध्वाधोमुखकूर्चकौ ॥३०३॥
संनाहः कवचं वर्म तनुत्राणमुरश्छदः।
जगरः कंकटो माठी दंशनं जालिका स्मृता ॥३०४॥
खेटकं फलकं चर्म प्रोक्तमावरणं बुधैः।

वर्मितः स्यात्कवचितः संनद्धो दंशितस्तथा ॥३०५॥
सर्वाभिसारमिच्छंति सर्वसंनहनं बुधाः।
यत्सेनयाभिनिर्याणं स्मृतं तदभिषेणनं ॥३०६॥
हेतिः शस्त्रं प्रहरणमायुधमस्त्रं चतुर्विधं तच्च।
मुक्तामुक्तममुक्तं करमुक्तं यंत्रमुक्तं च ॥३०७॥
शक्त्यादि पाणिमुक्तं स्यादमुक्तं क्षुरिकादिकं।
मुक्तामुक्तं तु यष्ट्यादि यंत्रमुक्तं शरादिकं ॥३०८॥
अस्त्रं धनुरिष्वासं कोदंडं धन्व कार्मुकं चापं।
बाणासनं द्रुणा स्यान्मौर्वी ज्या सिंजिनी गुणो जीवा ॥३०९॥
तूणीरमुपासंगस्तूणं तूणी निषंग इषुधिश्च।
बाणाश्रयः कलापः कार्मुककोटिर्भवेदटनिः ॥३१०॥
कंकपत्त्रशरमार्गणबाणाश्चित्रपुंखविशिखेषुकलंबाः।
सायकप्रदरकांडपृषत्काः पत्त्रिणः खगशिलीमुखरोपाः ॥३११॥
सवार्यसस्तु बाणः प्रक्ष्वेडन एषणाश्च नाराचः।
तीरीतह्लदंडासनादयः कांडभेदाः स्युः ॥३१२॥
पत्त्रपाली भवेद्वाजः कर्तरी पुंख उच्यते।
वेध्यं लक्ष्यं शरव्यं च निमित्तं च समं विदुः ॥३१३॥
अर्धचंद्रक्षुरप्रादि धाराग्रं मुखमुच्यते।
आराग्रं तु मुखं तेषां पुष्पपत्त्रादिभेदतः ॥३१४॥
बाणमुक्तिर्व्यवच्छेदो दीप्तिर्वेगस्य तीव्रता।

अभ्यासः कथ्यते योग्या श्रमस्थानं खलूरिका ॥३१५॥
लघुहस्तः शीघ्रवेधी कृतपुंखस्तु शिक्षितः।
स भवेदपराद्धेषुर्यस्य लक्ष्याच्युतः खगः॥३१६॥
निस्त्रिंशः करबालः खड्गः कौक्षेयकः कृपाणः स्यात्।
रिष्टिरसिचंद्रहासौ तरवारिर्मंडलाग्रं च ॥३१७॥
कोशः प्रत्याकारः खड्गपिधानं त्सरुर्भवेन्मुष्टिः।
असिपुत्रिकासिधेनुः छुरिका पत्त्रं च शस्त्रिका ज्ञेया ॥३१८॥
परश्वधः कुठारः स्यात्परशुः स्वधितिस्तथा।
निशातं निशितं धौतं तेजितं च समं स्मृतं ॥३१९॥
प्रासो निगदितः कुंतो मुद्गरो द्रुघणः स्मृतः।
क्रकचं करपत्त्रं स्यात्परिघः परिघातनः॥३२०॥
यष्टिपट्टिसडुःस्फोटमुखंडीशंकुशक्तयः।
भिंदिमालगदादंडचक्राद्याः शस्त्रजातयः॥३२१॥
मारणं निशरणं निबर्हणं सूदनं निरसनं निशुंभनं।
घातनं प्रशमनं प्रमापणं वर्जनं विशसनं प्रवासनं ॥३२२॥
निर्वापणनिर्वासनकदनव्यापादनानि तुल्यानि।
निर्ग्रंथनमालंभः प्रमया हिंसा च संज्ञपनं ॥३२३॥
नष्टो गृहीतदिक् प्रोक्तः कांदिशीको भयद्रुतः।
प्रस्कन्नः पतितो ज्ञेयो जितकाशी जिताहवः॥३२४॥
शुद्धांतमवरोधश्च राज्ञो ऽंतःपुरमुच्यते।

कृताभिषेका महिषी भोगिन्य इतराः स्मृताः ॥३२५॥
रामा वामा वामनेत्रा पुरंध्री
नारी भीरुर्भामिनी कामिनी च।
योषा योषिद्वासिता वर्णिनी स्त्री
स्यात्सीमंतिन्यंगना सुंदरी च ॥३२६॥
अबला महिला ललना प्रमदा रमणी नितंबिनी वनिता।
दयिता प्रतीपदर्शिन्युत्का कांता वधूर्वशा युवतिः ॥३२७॥
कुमारी कथिता कन्या किंचित्प्रौढा सुवासिनी।
वर्या पतिंवरा प्रोक्ता नग्ना प्रोक्ता च कोटवी ॥३२८॥
अदृष्टरजसं नारीं नग्निकां ब्रुवते बुधाः।
वधूटी च चिरंटी च द्वितीयवयसौ स्त्रियौ ॥३२९॥
अर्धवृद्धा तु या नारी सा कात्यायनिका स्मृता।
पुनर्भूर्दिधिषूः प्रोक्ता वृषस्यंती रतार्थिनी ॥३३०॥
पतिवत्नी जीवत्पतिर्जीवतोका च जीवसूः।
रहिता पतिपुत्राभ्यां निर्वीरेत्यभिधीयते ॥३३१॥
विश्वस्ता विधवा प्रोक्ता पुष्पहीना च निष्कला।
श्रमणा भिक्षुकी मुंडा वयस्याली साध्वी स्मृता ॥३३२॥
अवीरुदक्या च रजस्वला स्यादात्रेयिका पुष्पवती च नारी।
राका भवेज्जातरजास्तु कन्या नग्न्यत्प्रसूतिः कथिता च
भिंडुः ॥३३३॥

मुख्या नारी वरारोहा वरस्त्री मत्तकाशिनी।
स्त्री विदग्धा च मत्ता च वाणिनीत्यभिधीयते ॥३३४॥
रूपाजीवा वेश्या गणिका पण्यांगना तथा तुद्रा।
राजकुलप्रतिबद्धा वारस्त्री वारमुख्या च ॥३३५॥
गाणिक्यं गणिकानां च समूहः कथ्यते बुधैः।
असिक्न्यंतःपुरप्रेष्या दूती संचारिका स्मृता ॥३३६॥
कुट्टिनी शंभली चुंदी सैरंध्री गंधकारिका।
पोटा वोटा तथा चेटी दासी स्यात्कुटहारिका ॥३३७॥
पांचालिका पुत्रिका स्यात्काष्ठदंतादिनिर्मिता।
स्मृता लेप्यमयी स्त्री तु बुधैर्जलिकारिका ॥३३८॥
दाराः क्षेत्रं कलत्रं च भार्या सहचरी वधूः।
सधर्मचारिणी पत्नी जाया च गृहिणी गृहाः ॥३३९॥
उपयामः परिणयनं पाणिग्रहणं विवाह उद्वाहः।
कुलबालिका कुलस्त्री पतिव्रता सुचरिता सती साध्वी ॥३४०॥
पांशुला बंधुकी स्वैरिण्यसती पुंश्चलीत्वरी।
धर्षिणी कुलटा प्रोक्ता त्वविनीताभिसारिका ॥३४१॥
कांतः स्यात्कमिता पतिर्वरयिता भर्ता च भोक्ता धवो
    रुच्याभीकवराभिकाश्च रमणः प्राणाधिनाथो ऽनुगः।
सूनुः संततिरात्मजश्च तनुजः पुत्रः प्रसूतिः सुत-
    स्तुक् तोकं तनयश्च नंदन इति प्राज्ञैरपत्यं स्मृतं ॥३४२॥

आपन्नसत्त्वा गुर्वी स्यादंतर्वत्नी च गर्भिणी।
दोहदं दौर्हृदं श्रद्धा लालसा च समाः स्मृताः॥३४३॥
सूतिमासो वैजननो गर्भो भ्रूण इति स्मृतः।
अरिष्टगृहमिच्छंति सूतिकाभवनं बुधाः॥३४४॥
विजाता च प्रजाता च प्रसूता स्त्री निगद्यते।
गर्भाशयो जरायुः स्यादुल्वं च कललं स्मृतं॥३४५॥
कन्यापुत्रस्तु कानीनो नाटेरः स्यान्नटीसुतः।
बंधुको बंधुकीपुत्रो गोप्यो दासीसुतः स्मृतः॥३४६॥
बालः पाको ऽर्भको गर्भः पोतश्च पृथुकः शिशुः।
शावो डिंभश्च विज्ञेयो वटुर्माणवको मतः॥३४७॥
प्रवयाः स्थविरो वृद्धो यातयामश्च कथ्यते।
जरा तु विस्रसा प्रोक्ता दारकस्तरुणो युवा॥३४८॥
अंबा सवित्री जननी च माता वप्ता च तातो जनकः पिता च।
स्नुषा जनी पुत्रवधूर्वधूः स्यात्प्रजावती भ्रातृवधूः
स्मृता च॥३४९॥
दुहिता तनया पुत्री जामाती दुहितुःपतिः।
दौहित्रस्तत्सुतो नप्ता स च पौत्रश्च कथ्यते॥३५०॥
अग्रजः पूर्वजो ज्येष्ठः कनिष्ठो ऽवरजो ऽनुजः।
भ्रातृव्यो भ्रातृपुत्रः स्यात् भ्रात्रीयो भ्रातृजस्तथा॥३५१॥
धात्री स्यादुपमाता भगिनी जामिः स्वसा च विज्ञेया।

तत्पुत्रः स्वस्रीयो जामेयो भागिनेयः स्यात् ॥३५२॥
समानोदर्यसोदर्यसगर्भाः सोदराः समाः।
भ्रातृवर्गस्य या जाया यातरस्ताः परस्परं ॥३५३॥
आत्मीयः स्वजनो बंधुराप्तो ज्ञातिश्च बांधवः।
सनाभयः सपिंडाश्च सगोत्राश्च समाः स्मृताः ॥३५४॥
तनुस्तनूः संहननं शरीरं कलेवरं विग्रहदेहकायाः।
अंगं वपुर्वर्ष्म पुरं च पिंडं क्षेत्रं च गात्रं च घनश्च मूर्त्तिः ॥३५५॥
अंह्रिः पादश्चरणः पाणिः शयपंचशाखकरहस्ताः।
कामांकुशाः कररुहाः पुनर्नवाः पाणिजा नखा नखराः ॥३५६॥
कांचीपदं कलत्रं जघनं श्रोणी ककुद्मती ज्ञेया।
आरोहश्च नितंबः कटी कटीरं त्रिकस्थानं ॥३५७॥
गुदः पायुरपानं स्यात्कटिप्रोथौ स्फिजौ पुतौ।
कुकुंदरौ समाचष्टे जनो जघनकूपकौ ॥३५८॥
भगो योनिरुपस्थश्च वरांगं स्मरमंदिरं।
शिश्नः शेफो ऽथ मेढ्रश्च तुल्ये मेहनशेफसी ॥३५९॥
जानुः स्यादष्ठीवान् प्रसृता जंघा च घुंडको गुल्फः।
ऊरुः सक्थि पिचंडं जठरोदरतुंदकुक्षिगर्भाः स्यु ः ॥३६०॥
अंगुल्यः करशाखाः कर्णः श्रोत्रं श्रुतिः श्रवः श्रवणं।
ग्रीवा धमनिर्मन्या शिरोधरा कंधरा गलः कंठः ॥३६१॥
रेखात्रयांकिता ग्रीवा कंबुग्रीवेति कथ्यते।

अवलग्नं विलग्नं च मध्यमं मध्यमुच्यते ॥३६२॥
मुंडोत्तमांगमस्तकमौलिशिरःशीर्षमूर्धकानि स्युः।
तुंडं वदनं वक्त्रं लपनं मुखमास्यमाननं च समं ॥३६३॥
दृग्दृष्टिनेत्रलोचनचक्षुर्नयनांबकेक्षणाक्षीणि।
अश्रूणि वाष्परोदननयनजलास्राम्बुनामानि ॥३६४॥
नयनोपांतमपांगः कनीनिका नयनमध्यतारा च।
कूर्चं भ्रुवोश्च मध्यं सृक्का स्यादोष्ठपर्यंतः ॥३६५॥
सिंघिनी नासिका नासा घ्राणं घोणा च कथ्यते।
रसज्ञा रसना जिह्वा तालु काकुदमुच्यते ॥३६६॥
दोः प्रवेष्टो भुजो बाहुर्भुजा च स्मर्यते बुधैः।
गंडो गल्लः कपोलश्च हनुस्तुल्यार्थवाचकाः ॥३६७॥
मुष्को ऽंडं वृषणः कोशः संग्राहो मुष्टिरुच्यते।
जत्रु वक्षोंसयोः संधिरूरुसंधिश्च वंक्षणः ॥३६८॥
रोम तनूरुहमुक्तं नयनगतं पक्ष्म मुखगतं श्मश्रु।
अधरो दंतच्छद ओष्ठ उच्यते दंतवासश्च ॥३६९॥
ओष्ठस्याधश्चिबुकं ललाटमलिकं भुजाग्रमंसं च।
कक्षा च बाहुमूलं घाटामवटुं कृकाटिकामाहुः ॥३७०॥
उरसिजकुचवक्षोरुहपयोधराः स्तनसमाननामानि।
उक्ताः कुचमुखचूचुकवृंतानि शिखा च तुल्यानि ॥३७१॥
भुजमध्यमुरो वक्षो हृदयस्थानं च वत्समिच्छंति।

एकार्था: कथ्यंते दशनद्विजदंतरदरदना: ॥३७२॥
क्रोडमंकस्तथोत्संग: प्राग्भागो वपुष: स्मृत:।
पृष्ठं स्यात्पश्चिमो भाग: कटौ च कटिशीर्षकौ ॥३७३॥
जीवस्थानं भवेन्मर्म पादाग्रं प्रपदं मतं।
सीमंत: कथ्यते स्त्रीणां केशमध्ये तु पद्धति: ॥३७४॥
केशा: शिरसिजमूर्धजकचचिकुरशिरोरुहा: स्मृता वाला:।
तद्बंधविशेषा: स्युर्वेणीधम्मिल्लकुंतलकवर्य: ॥३७५॥
हस्त: पक्ष: पाश: केशेषु बहुत्ववाचका: शब्दा:।
अलकं कुटिला: केशा भ्रमरकमुक्तं ललाटस्थं ॥३७६॥
बालानां तु शिखा प्रोक्ता काकपक्ष: शिखंडिका।
पलितं पांडुरा: केशा व्रतिनां तु जटा सटा ॥३७७॥
मणिबंध: पाणिमूलं कफणि: कूर्पर: स्मृत:।
तयोर्मध्यं प्रकोष्ठ: स्यात्प्रकांड: कूर्परांसयो: ॥३७८॥
चेतश्चित्तं मन: स्वांतं हृदयं मानसं समं।
एकायनं तथैकाग्रमेकतानं च तद्गतं ॥३७९॥
आधिस्तु मानसी पीडा वांछितो ऽर्थो मनोरथ:।
खमक्षामिंद्रियं स्रोतो हृषीकं करणं स्मृतं ॥३८०॥
मध्यांगुलीकूर्परयोर्मध्ये प्रामाणिक: कर:।
बद्धमुष्टिकरो रत्निररत्नि: सकनिष्ठिक: ॥३८१॥
संपिंडितांगुलिर्मुष्टि: प्रसृति: कुंचितांगुलि:।

प्रसारितांगुलिः पाणिः कथ्यते प्रतलस्तलः ॥३८२॥
प्रादेशः स्यात्प्रदेशिन्या तालो मध्यमया भवेत्।
गोकर्णो ऽनामया प्रोक्तो वितस्तिः स्यात्कनिष्ठया ॥३८३॥
आकल्पो मंडनं वेषः प्रतिकर्म प्रसाधनं।
भूषणं स्यादलंकारो नेपथ्याभरणे तथा ॥३८४॥
समालभनमिच्छंति चर्चां मार्ष्टिं च सूरयः।
स्थासकं हस्तबिंबं स्यात्परिष्कारश्च भूषणं ॥३८५॥
तिलकं तमालपत्रं चित्रकमुक्तं विशेषकः पुंड्रं।
रचिता ललाटपट्टे ललाटिका कथ्यते रेखा ॥३८६॥
भुजशिखरस्तनमंडलकपोलकंठेषु विरचिता कुशलैः।
अनुलेपनेन लेखा निगद्यते पत्रवल्लीति ॥३८७॥
कुंकुमं घुसृणं वर्णं प्रोक्तं लोहितचंदनं।
काश्मीरजं च विद्वद्भिः कालेयं जागुडं स्मृतं ॥३८८॥
चंदनं स्यान्मलयजं श्रीखंडं रोहणद्रुमः।
मृगनाभिर्मृगमदः प्रोक्ता कस्तूरिका बुधैः ॥३८९॥
कर्पूरो घनसारः स्यात्काकतुंडो ऽगरुः स्मृतः।
तांबूलं क्रमुकं प्रोक्तमंगरागो विलेपनं ॥३९०॥
उपसंव्यानं परिधानमंतरीयं च निवसनं तुल्यं।
प्रावरणं संव्यानं प्रच्छादनमुत्तरीयं च ॥३९१॥
अर्धोरुकं वरस्त्रीणां वासश्चंडातकं स्मृतं।

परिधानांशुकग्रंथिः प्रोक्ता नीवी तथोच्चयः ॥३९२॥
चेलं चीरं वासः कर्पटमाच्छादनं निवसनं च।
अंबरमंशुकमुक्तं वस्त्रं सिचयः पटः पोटः ॥३९३॥
चतुर्विधं तु विज्ञेयं त्वक्सूत्रकृमिरोमजं।
पत्रोर्णं धौतकौशेयं दुकूलं क्षौममिष्यते ॥३९४॥
कार्पासं बादरं प्रोक्तं वस्त्रस्यांतो मतो ऽंचलः।
अहतं स्यान्नवं वासो जीर्णमुक्तं पटच्चरं ॥३९५॥
धौतमुद्गमनीयं च वर्तिर्वस्तिर्दशाः सिचः।
एकार्था आविकौरभ्ररल्लकोर्णायुकंबलाः ॥३९६॥
कंचुको वारवाणः स्यात्कूर्पासश्च निचोलकः।
स्रग्माला माल्यमाख्यातं केशमध्ये तु गर्भकः ॥३९७॥
प्रभ्रष्टकं शिखालंबि पुरो न्यस्तं ललामकं।
तिर्यग्वक्षसि विक्षिप्तं वैकक्षकमुदाहृतं।
ग्रीवायां लंबितं प्राज्ञैः प्रालंबकमिति स्मृतं ॥३९८॥
आपीडः शेखरोत्तंसावतंसाः शिरसि स्रजः।
कर्णपूरे ऽपि दृश्येते तथोत्तंसावतंसकौ ॥३९९॥
जतुयावकलाक्षालक्तकाः समाः सिक्थकं मधूच्छिष्टं।
कज्जलमंजनमभिहितमादर्शो दर्पणो मुकुरः ॥४००॥
ताडंकस्ताडपत्रं स्यात्कुंडलं कर्णवेष्टनं।
कर्णालंकरणं सर्वं कर्णिकेत्यभिधीयते ॥४०१॥

केयूरमंगदं प्रोक्तं बाहुमूलविभूषणं।
आवापः परिहार्यः स्यात्कटको वलयं तथा ॥४०२॥
कंकणं हस्तसूत्रं च विदुः प्रतिसरं बुधाः।
ग्रीवालंकरणं सर्वं ग्रैवेयकमितीष्यते ॥४०३॥
अंगुल्याभरणं प्रोक्तमंगुलीयकमूर्मिका।
कथ्यते ऽंगुलिमुद्रा च भवेद्या लिखिताक्षरा ॥४०४॥
कलापः सप्तकी कांची मेखला रसना तथा।
कटिसूत्रं सारसनं किंकिणी क्षुद्रघंटिका ॥४०५॥
सिंजिनी पादकटकस्तुलाकोटिस्तु नूपुरं।
मंजीरं हंसकं स्त्रीणां चरणाभरणं स्मृतं ॥४०६॥
देवच्छंदः शतयष्टिरर्धो माणवकः स्मृतः।
हारो गुच्छार्धगुच्छौ च गोपुच्छश्च भवेत्क्रमात् ॥४०७॥
एकावल्येकयष्टिः स्यात्कथ्यते सा च कंठिका।
प्रोक्ता नक्षत्रमाला च सप्तविंशतिमौक्तिका ॥४०८॥
हारामध्यस्थितं रत्नं नायकं तरलं विदुः।
चूडामणिं च विद्वांसो वदंति शिरसि स्थितं ॥४०९॥
आहुः किरीटमुष्णीषं कोटीरं मुकुटं समं।
राढा शोभा विभूषा स्यादभिख्या सुषमा समाः ॥४१०॥
निभालनं निशामनं निध्यानमवलोकनं।
ईक्षणं दर्शनं दृष्टिर्द्योतनं च समं स्मृतं ॥४११॥

कटाक्षो दृष्टिविक्षेप ईषच्च हसितं स्मितं।
ह्रीर्लज्जापत्रपा व्रीडा त्रपा मंदाक्षमुच्यते ॥४१२॥
आलिंगनमुपगूहनमांकुः परिरंभणं परिष्वंगं।
आश्लेषमंकपालीं क्रोडीकरणं च तुल्यार्थं ॥४१३॥
संवेशनं निधुवनं संप्रयोगो रहो रतिः।
सुरतं मोहनं प्रोक्तं मणितं रतकूजितं ॥४१४॥
आर्या भूमिस्पृशो वैश्या ऊरव्याश्च विशः स्मृताः।
जीवनं वृत्तिराजीवो वार्त्ता चेति निगद्यते ॥४१५॥
पण्याजीवा वणिजः प्रापणिका नैगमाश्च वैदेहाः।
द्वैगुणिको वार्धुषिको वृद्ध्याजीवः कुसीदिकः प्रोक्तः ॥४१६॥
अपमित्यकमुद्धारं ऋणं स्यात्पर्युदंचनं।
वृद्धिः कलांतरं प्रोक्तं कुसीदं वृद्धिजीवनं ॥४१७॥
परिवृत्तिर्विनिमयो वैमेयश्च निगद्यते।
प्रक्रयः क्रयिकं प्रोक्तं भाटको ऽवक्रयः स्मृतः ॥४१८॥
क्षेत्राजीवः कृषिकः कृषीवलः कर्षकः कुटुंबी च।
सीत्यं सस्यं प्रोक्तं वप्रं क्षेत्रं च केदारं ॥४१९॥
हलं स्याल्लांगलं सीरः फालः कुशिक उच्यते।
योक्रं तु रश्मिराबंधः शम्या च युगकीलकः ॥४२०॥
कथितो लोष्टको लोष्टः कोटीशं लोष्टभेदनं।
शंबाकृतं द्विसीत्यं स्यात्सीता लांगलपद्धतिः ॥४२१॥

गोदारणं च कुद्दालं लवित्रं दात्रमुच्यते।
प्रतोदः प्राजनं तोत्त्रं लूनं दातमिति स्मृतं ॥४२२॥
खलेवाली भवेन्मेठिः खलधान्यं खलं स्मृतं।
बुशः कडंगरः प्रोक्तः कणः स्यात्क्षुद्रतंडुलः॥४२३॥
धान्यशूकं च किंशारुः कणिशं धान्यशीर्षकं।
नालं कांडं क्षुपो गुच्छो व्रीह्निः स्तंबकरिः स्मृतः॥४२४॥
रक्तशालिर्महाशालिः कलमाश्चेति शालयः।
उद्दालः कथितः प्राज्ञैः कोद्रवः कोरदूषकः॥४२५॥
मंगल्यको मसूरः स्यात्सिद्धार्थः सर्षपः स्मृतः।
आसुरी राजिका चेति कथ्यते राजसर्षपः॥४२६॥
प्रियंगुः कथ्यते कंगुरतसी स्यादुमा क्षुमा।
कलायः खंडिको ज्ञेयः सातीनश्च मनीषिभिः॥४२७॥
जर्तिलः कथ्यते सद्भिररण्यप्रभवस्तिलः।
तिलपिंजस्तिलपेजस्तथा षंढतिलः स्मृतः॥४२८॥
तृणधान्यं तु नीवारः श्यामाकः श्यामको भवेत्।
वल्ला निष्पावकाः प्रोक्ता आढकी तुवरी स्मृता॥४२९॥
भृष्टं धान्यं लाजाः पृथुकाश्चिपिटाश्च कुट्टितास्ते स्युः।
भृष्टा यवास्तु धाना दरपक्वा कथ्यते ऽभ्यूषः॥४३०॥
शूद्रो ऽंत्यवर्णो वृषलः पद्यः पज्जश्च कथ्यते।
लेखकः स्याल्लिपिकरः कायस्थो ऽक्षरजीवकः॥४३१॥

आभीरः स्यान्महाशूद्रो गोपालो वल्लवस्तथा।
त्वष्टा च काष्ठतट् तक्षा रथकारश्च वर्धकिः ॥४३२॥
नाडिंधमः कलादः सुवर्णकारश्च मुष्टिको ज्ञेयः।
वैकटिको मणिकारो ध्माकारो लोहकारः स्यात् ॥४३३॥
क्षुरमर्दी दिवाकीर्तिश्चंडिलो नापितः स्मृतः।
मालाकारस्तु विज्ञेयो मालिकः प्रातिहारिकः ॥४३४॥
कुंभकारः कुलालः स्यात्तंतुवायः कुविंदकः।
संवाहको ऽंगमर्दी स्यात्तुन्नवायश्च सौचिकः ॥४३५॥
लेपकः पलगंडः स्याद्रंगाजीवस्तु चित्रकृत्।
कर्म लेप्यादिकं सर्वं पुस्तकर्म स्मृतं बुधैः ॥४३६॥
शैलाली शैलूषः कुशीलवश्चारणः कृशाश्वी च।
जायाजीवो भरतो नटस्तथा स्यान्नटी क्षुद्रा ॥४३७॥
शिल्पिनः कारवः प्रोक्ताः प्रकृतिश्च मनीषिभिः।
निर्णेजकः स्याद्रजकः कल्पपालस्तु शौंडिकः ॥४३८॥
कैवर्तो धीवरो दासो मत्स्यबंधी च जालिकः।
आनायः कथ्यते जालं कुवेणी मत्स्यबंधनी ॥४३९॥
वैतंसिकः सौनिकः स्यात्कौटिको मांसविक्रयी।
सूना स्याद्घातनस्थानं कृपाणिली च कर्तरी ॥४४०॥
चर्मकृत्पादुकाकारो नद्ध्री वद्ध्री च कथ्यते।
मृगयुर्लुब्धको व्याधो बुधैर्वागुरिकः स्मृतः ॥४४१॥

शुल्वा रज्जुर्वराटश्च वटस्तंत्रीर्गुणः स्मृतः।
पाशः स्याद्बंधनग्रंथिर्वागुरा मृगजालिका ॥४४२॥
अंतावसायी चंडालो निषादश्च जनंगमः।
श्वपचः पक्कशश्चैव मातंगः प्लवकः स्मृतः ॥४४३॥
किराताः शबरा निष्ट्याः पुलिंद्रा नाहला भटाः।
माला म्लेच्छादयो भिल्लाः कथ्यंते ऽंत्यजातयः ॥४४४॥
रोगो रुक् व्याधिराकल्यं गदो मांद्यमपाटवं।
आम आमय आतंक उपतापो रुजा स्मृता ॥४४५॥
क्षवथुः कथ्यते कासो वेपथुः कंप उच्यते।
दवथुः परितापः स्यात् ग्लानिश्च क्लमथुः स्मृतः ॥४४६॥
राजयक्ष्मा क्षयः शोषः शोफः श्वयथुरिष्यते।
किलासं कथ्यते सिध्म पामा कच्छूः खसः स्मृतः ॥४४७॥
कंडूतिः कंडूया कंडूः कंडूयनं तथा खर्जूः।
जागर्या जागरणं प्रजागरो जागरा च विज्ञेया ॥४४८॥
पिटकः स्फोटको गंडः श्वित्रं कुष्ठं च पांडुरं।
श्लीपदं पादवल्मीकः पृष्ठग्रंथिर्गडुः स्मृतः ॥४४९॥
केशघ्नमिंद्रलुप्तं स्यादर्शश्च गुदकीलकः।
मायुः पित्तः कफः श्लेष्मा प्रतिश्यायश्च पीनसः ॥४५०॥
वातकी वातरोगी स्यात्सातिसारो ऽतिसारकी।
सिध्मश्लेष्मार्शसंयोगात्सिध्मलः श्लेष्मलो ऽर्शसः ॥४५१॥

दद्रुणो दद्रुरोगी स्यान्नःक्षुद्रः क्षुद्रनासिकः।
क्लिन्ने यस्याक्षिणी पिल्लश्चिल्लश्चुल्लश्च स स्मृतः ॥४५२॥
पिचंडिलो वृहत्कुक्षिस्तुंदिलोदरिलौ च सः।
खलतिः शिपिविष्टः स्यादिंद्रलुप्तिक एव च ॥४५३॥
अंधो ह्यनेडमूकः स्यादेडो बधिर उच्यते।
जडः कडः स्मृतो मूकः कल्लमूकस्त्ववाक्श्रुतिः ॥४५४॥
खंजः पंगुस्तथा श्रोणः कुणिर्विकलपाणिकः।
तुंडिरुन्नतनाभिः स्याद्विग्रो विगतनासिकः ॥४५५॥
गडुलः कथ्यते कुब्जः खर्वशाखस्तु वामनः।
पृश्निः स्वल्पशरीरः स्यात्किरातः स च कथ्यते ॥४५६॥
आयुर्वेदी भिषग्वैद्यो दोषज्ञः स्याच्चिकित्सकः।
उपचर्या चिकित्सा स्यान्निदानं हेतुरुच्यते ॥४५७॥
जांगुलिको विषभिषक् व्यालग्राह्याहितुंडिकः।
भैषज्यं भेषजं जायुरगदस्तंत्रमौषधं ॥४५८॥
सिंधूत्थं माणिमंथं च सैंधवं लवणोत्तमं।
कृष्णोपकुल्या वैदेही मागधी पिप्पली कणा ॥४५९॥
शुंठी नागरमुक्ता महौषधं विश्वभेषजं विश्वा।
मधुकं यष्टिमधु स्यादमृता वत्सादनी गुडूची च ॥४६०॥
आर्द्रकं शृंगवेरं स्यादजाजी जीरकः स्मृतः।
वेल्लजं मरिचं प्रोक्तमूषणं च मनीषिभिः ॥४६१॥

सौवर्चलस्तु रुचकः कुस्तुंबुरु च धान्यकं ।
त्रिकटु त्र्यूषणं व्योषं हिंगु रामठ उच्यते ॥४६२॥
हरीतक्यभया पथ्या धात्री चामलकी शिवा ।
कलिरक्षो विभीतः स्यात् त्रितयं त्रिफला स्मृता ॥४६३॥
एडगजः प्रपुनाटो दद्रुघ्नश्चक्रमर्द्दकः प्रोक्तः ।
शतमूलिका त्वभीरुर्निदिग्धिका कंटकारिका व्याघ्री ॥४६४॥
पुराख्यो महिषाक्षश्च गुग्गुलः स्यात्पलंकषः ।
महारजनमिच्छंति कुसुंभं च सुमेधसः ॥४६५॥
हिंगुलं हंसपादं च कुरुविंदं निगद्यते ।
सारघं माक्षिकं क्षौद्रं मधु पुष्परसस्तथा ॥४६६॥
उशीरं वीरणीमूलं ह्रीवेरं वालकं जलं ।
मुस्तकः कुरुविंदः स्याद्भुंद्रा च जलदाह्वयः ॥४६७॥

॥ इति श्रीभट्टहलायुधकृतायामभिधानरत्नमालायां
भूमिकांडं द्वितीयं समाप्तं ॥

वडवामुखं पातालं वैरोचननिकेतनं ।
तथाधोभुवनं प्रोक्तं नागलोको रसातलं ॥१॥
निम्नमगाधो गर्तः श्वभ्रं शुषिरं वपा बिलं विवरं ।
अंतरमवटु छिद्रं निर्व्यथनं रंध्रोककुहरदराः ॥२॥

निरयो दुर्गतिश्चैव नरकः परिकीर्तितः।
नारका जंतवः प्रेता यात्याश्चैवातिवाहिकाः ॥३॥
यातना कारणा प्रोक्ता कारा बंधनमुच्यते।
आबाधा वेदना दुःखमार्त्तिः पीडा व्यथा तथा ॥४॥
वृजिनं दुरितं दुष्कृतमघमंहः किल्बिषं तमः कल्कं।
एनः कल्मषमशुभं पापं स्यात्पातकं पाप्मा ॥५॥
निधनं नाशो मृत्युर्मरणं पंचत्वमत्ययः कालः।
संस्था स्याद्दिष्टांतो निमीलनं दीर्घनिद्रा च ॥६॥
परासुरुपसंपन्नः प्रमीतः संस्थितो मृतः।
प्रेतः परेतश्च तथा कुणपः शवमुच्यते ॥७॥
कबंधः कथ्यते रुंडः क्षतमीर्मम रुर्व्रणः।
असृग्धराजिनं चर्म कृत्तिस्त्वक् परिकीर्तिता ॥८॥
पललं जांगलं मांसं पलं पिशितमामिषं।
क्रव्यं तरसमेकार्थं विस्रं स्यादामगंधिकं ॥९॥
क्षतजं लोहितमस्रं रुधिरमसृक् शोणितं च रक्तं स्यात्।
अस्थीनि धातुकीकसकुल्यानि भवंति तुल्यानि ॥१०॥
शरीरस्यास्थि कंकालं तथा स्यादस्थिपंजरं।
शिरसो ऽस्थि करोटिः स्यात्कपालं शकलं च तत् ॥११॥
शाखास्थि नलकं प्रोक्तं पृष्ठस्यास्थि कसेरु च।
कंडरा स्यान्महास्नायुः स्नसा स्नायुः शिरा स्मृता ॥१२॥

मस्तिष्कं मस्तकस्नेहो वपा मेदो वसा स्मृता।
अंत्रं पुरीतत्कथितं कालखंडं यकृन्मतं ॥१३॥
बुक्कं स्यादग्रमांसं च तिलकं क्लोम कथ्यते।
कृमिः कीटस्तु नीलंगुः पुलकश्च समः स्मृतः ॥१४॥
उच्यते वर्च उच्चारो वर्चस्को ऽवस्करः शकृत्।
गूथं कीटं च विट् विष्ठा पुरीषं शमलं मलं ॥१५॥
शुक्रं वीर्यं बलं बीजमिंद्रियं रेत उच्यते।
श्मशानं स्यात्पितृवनं चिता चित्या च कथ्यते ॥१६॥
क्रंदितं रुदितं प्रोक्तं विलापः परिदेवनं।
अपस्नानं मृतस्नानं निवापः पितृतर्पणं ॥१७॥
विषधरदंदशूकपवनाशनसर्पसरीसृपोरुगव्याल-
भुजगभुजंगकुंभीनसपन्नगनागभोगिनः।
अहिफणभृत्पृदाकुकाकोदरकंचुकिचक्रिगूढपा-
त् द्विरसनकाद्रवेयदर्वीकाटकश्रुतयो भुजंगमाः ॥१८॥
आशीविषो दीर्घपृष्ठः कुंडली जिह्मगः स्मृतः।
फणः फणा फटा प्रोक्ता विषं स्याद्गरलं गरः ॥१९॥
अहेः शरीरं भोगः स्यादाशीर्दंष्ट्राभिधीयते।
भवेत्तिलित्सो गोनासो वाहसो ऽजगरः शयुः ॥२०॥
अलगर्दो जलव्यालो राजिलो डुंडुभः स्मृतः।
अहीरणी स्यात् द्विमुखो राजसर्पश्च सर्पभुक् ॥२१॥

निर्ल्वयनी निर्मोकः कंचुक उक्ता भुजंगमुक्ता त्वक् ।
वम्रीकूटं नाकुर्वल्मीको वामलूरश्च ॥२२॥
उपजिह्वोपदीका च वम्री स्यादुपदेहिका ।
अलं वृश्चिकलांगूलं द्रुत आलिश्च वृश्चिकः ॥२३॥
ब्रह्मपुत्रः शौल्किकेयो दारदश्च प्रदीपनः ।
रसः सौराष्ट्रिकः क्ष्वेडस्तीक्ष्णश्च विषमुच्यते ॥२४॥
शृंगिको वत्सनाभश्च कालकूटो हलाहलः ।
काकोलो विस्फुलिंगश्च तद्भेदाः स्युरनेकधा ॥२५॥
आपस्तोयं घनरसपयः पुष्करं मेघपुष्पं
कं पानीयं सलिलमुदकं वारि वाः शंबरं च ।
अर्णः पाथः कुशजलवनं क्षीरमंभो ऽंबु नीरं
प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं दकं च ॥२६॥
अतलस्पर्शमगाधं गंभीरं स्याद्गभीरमस्थागं ।
नावा तार्यं नाव्यं द्रागभृतकं तत्क्षणोद्धृतं तोयं ॥२७॥
प्रालेयमवश्यायस्तुहिनं शिशिरं हिमं तुषारं च ।
मिहिका स्यान्नीहारो हिमसंघातो हिमानी च ॥२८॥
रोमांचः पुलकः स्यात्कंटकमुद्धुषणमुल्लकसनं च ।
रोमोद्गमरोमविकाररोमहर्षाः समानार्थाः ॥२९॥
रत्नाकरः सरस्वानुदधिरुदन्वान्सरित्पतिरकूपारः ।
पारावारस्तोयनिधिरर्णवजलराशिसागरसमुद्राः ॥३०॥

वीची भंगस्तरंगः स्यात्तन्महत्त्वे च कथ्यते ॥
ऊर्मिरुत्कलिकोल्लोलः कल्लोलो लहरी तथा ॥३१॥
मर्यादा कूलदेशो ऽस्य वेला वृद्धिश्च वारिणः ।
वेलावनं तु विज्ञेयमुपकंठे ऽस्य यद्वनं ॥३२॥
सांयात्रिकः पोतवणिक् पोतः प्रवहणं स्मृतं ।
कूपको गुणवृक्षः स्यान्निर्यामः कर्णधारकः ॥३३॥
अंतर्जलचरं सत्त्वं क्रूरं यादो ऽभिधीयते ।
अवहारः स्मृतो ग्राहः कुंभीरो नक्र उच्यते ।
कच्छपः कमठः कूर्मस्तद्भार्या च डुली स्मृता ॥३४॥
वैसारिणो विसारः पृथुरोमा जलचरो कषो मत्स्यः ।
तिमिरनिमिषश्च मीनः शकली शल्की च विज्ञेयः ॥३५॥
सहस्रदंष्ट्रः पाठीनः प्रोष्ठी च शफरी स्मृता ।
नलमीनश्चिलिचिमः कुलीरः कर्कटो मतः ॥३६॥
शालः शकुलः कुलिशो राजीवो रोहितश्च पल्लवकः ।
शृंगीमद्गुरवागुसनंद्यावर्तादयो महामत्स्याः ॥३७॥
मत्स्यविशेषो मकरः कारिमकरो भवति तद्विशेषस्तु ।
चीरिल्लितिमितिमिंगिलगिलादयो महामत्स्याः ॥३८॥
क्षुद्रांडो मत्स्यसंघातः पोताधानं च कथ्यते ।
गंडूपदः किंचुलको जलौकाः स्युर्जलौकसः ॥३९॥
मंडूकः प्लवको भेकः शालूरो दर्दुरो हरिः ।

प्लवंगमः प्लवगः स्याद्वर्षाभूस्तद्वधूः स्मृता ॥४०॥
यावंतो दृश्यंते नरकरितुरगादयः स्थले जीवाः।
तावंतः सलिलेष्वपि जलपूर्वास्ते तु विज्ञेयाः ॥४१॥
उक्ता मुक्ता मौक्तिकं शौक्तिकेयं
मुक्तास्फोटः शुक्तिराख्यायते च।
कंबुः शंखः क्षुल्लकाः क्षुद्रशंखाः
शंबूकास्ते स्युः कपर्दो वराटः ॥४२॥
सिंधुः स्रवंती तटिनी तरंगिणी
नदी धुनी निर्झरिणी च निम्नगा।
कूलंकषा शैवलिनी सरस्वती
समुद्रकांता ह्रदिनी तथापगा ॥४३॥
स्रोतः स्रोतस्विनी कर्षूः कुल्या द्वीपवती सरित्।
रोधोवप्रस्तु विज्ञेयो भिद्य उद्यो नदः स्मृतः ॥४४॥
तीरं कूलं तटं कच्छः प्रपातो रोध उच्यते।
अर्वाक्कूलमपारं स्यात्परं पारमिति स्मृतं ॥४५॥
पात्रं तु कूलयोर्मध्यमावर्तः पयसां भ्रमः।
पूरः स्यादंभसो वृद्धिः फेनो डिंडीर उच्यते ॥४६॥
ओघः प्रवाहो वेणी च धारा स्रोतो रयः स्मृतः।
संभेदः संगमो नद्योः संवेद्यश्च निगद्यते ॥४७॥
सैकतं पुलिनं द्वीपं सिकता वालुका स्मृता।

मध्ये द्वीपमंतरीपं ह्रदस्तोयाशयो मतः ॥४८॥
चक्राणि पुटभेदाः स्युः सेतुर्वरण उच्यते।
आतरस्तरपण्यं च तल्पं स्यादुडुपः प्लवः ॥४९॥
तरीनौर्भगिनी बेडा नौदंडः क्षेपणी स्मृता।
अरित्रं कोटिपात्रं स्यात्पुलिंदो मंग उच्यते ॥५०॥
भागीरथी सुरसरिद्विष्णुपदी जाह्नवी तथा गंगा।
मंदाकिनी त्रिपथगा सरिद्वरा त्रिदशदीर्घिका प्रोक्ता ॥५१॥
गोदावरी च गोदा कालिंदी दिनकरात्मजा यमुना।
शोणो हिरण्यबाहुर्मेकलकन्या च नर्मदा रेवा ॥५२॥
वेशंतः पल्वलं तछं कासारः सरसी सरः।
आखातो देवखातः स्यात्खाता पुष्करिणी भवेत् ॥५३॥
आधारश्च तडागं स्याद्दाली पाली च कथ्यते।
परिखा दीर्घिका प्रोक्ता खाता या परितः पुरं ॥५४॥
परीवाहो जलोच्छ्वास उत्सः प्रस्रवणं स्मृतं।
विप्रुषो विंदवः प्रोक्ताः पृषतः पृषतास्तथा ॥५५॥
पिच्छिलं स्याद्विजपिलं पंकः शादो निषद्वरः।
जंबालः कर्दमः प्रोक्तो बुधैरिचिक्किलस्तथा ॥५६॥
सहस्रपत्त्रं शतपत्त्रमंबुजं कुशेशयं तामरसं सरोरुहं।
विसप्रसूनं कमलं महोत्पलं सरोजमब्जं नलिनं च पुष्करं ॥५७॥
राजीवमरविंदं च पद्मं पंकजमिष्यते।

रक्तं कोकनदं प्रोक्तं पुंडरीकं सितांबुजं ॥५८॥
सौगंधिकं च कह्लारं स्यादिंदीवरमुत्पलं ।
नीलोत्पलं कुवलयं कैरवं कुमुदं विदुः ॥५९॥
कर्णिका बीजकोशः स्यात्किंजल्कं केसरं स्मृतं ।
मृणालं स्याद्बिसं कंदो बिसिनी नलिनी भवेत् ॥६०॥
कुमुद्वती कुमुदिनी बुधैः कैरविणी स्मृता ।
शेवालं शैवलं प्रोक्तं जलशूकं च नीलिका ॥६१॥
अंधुः कूपः प्रधिर्नेमिश्चुरी चुंठी च चूतकः ।
निपानमुदपानं च वाप्याह्वावश्च कथ्यते ॥६२॥
उद्घाटकं घटीयंत्रं पादावर्तो ऽरघट्टकः ।
पानं तु सारणिः प्रोक्ता प्रणाली जलपद्धतिः ॥६३॥

॥ इति श्रीभट्टहलायुधकृतायामभिधानरत्नमालायां
पातालकांडं तृतीयं समाप्तं ॥

निकरनिकायनिवहविसरव्रजपुंजसमूहसंचयाः
समुदयसार्थयूथनिकुरंबकदंबकपूगराशयः ।
चयसमवायवृंदसंदोहसमाजवितानसंहति-
प्रकरघनौघसंघसंघातव्रातकुलोत्कराः स्मृताः ॥१॥
पटलं पेटकं चक्रं चक्रवालं च मंडलं ।

जालं जातं तथा व्यूहवारस्तोमाश्च ते स्मृताः ॥२॥
सूक्ष्मलेशलवश्लक्ष्णाक्षुद्रदभ्रकणाणवः।
किंचिन्मात्रतनुस्तोकह्रस्वाल्पत्रुटयः समाः ॥३॥
प्राग्र्यं प्राग्रहरं प्रवेकमपरं वर्यं वरेण्यं वरं
श्रेष्ठं प्रेष्ठमनुत्तमं च मधुरं मंजु प्रियं मंजुलं।
हृद्यं हारि मनोहरं च रुचिरं कांतं परं सुंदरं
सौम्यं साधु च वल्गु चारु सुषमं वामं शुभं पेशलं ॥४॥
अग्र्यं प्रधानं प्रमुखं पुरोगं मुख्यं परार्ध्यं प्रवरं प्रबर्हं।
अग्रेसरं सत्तममुत्तमं च ग्रामण्यमग्रण्यमुदाहरंति ॥५॥
शंका वितर्कः संदेहः संशयारेकविभ्रमाः।
विचिकित्सा विकल्पश्च भ्रांतिरेकार्थवाचकाः ॥६॥
समीपं सनीडं समर्यादमारा-
त्सदेशं सवेशं ससीमोपकंठं।
तथाभ्यर्णमभ्यग्रमभ्याशमाहु-
र्बुधाः संनिधानांतिके संनिकृष्टं ॥७॥
आसन्नं सविधं पार्श्वमुपांतमपदांतरं।
विप्रकृष्टं परं दूरमाराद्व्यवहितं स्मृतं ॥८॥
सदृक् समानः सदृशः सदृक्षः प्रख्यः प्रकाशः प्रतिमः प्रकारः।
तुल्यः समः संनिभ इत्यभिन्नाः शब्दाः प्रयोगेषु गवेषणीयाः ॥९॥
लोलं चपलं चटुलं प्रचलं तरलं परिप्लवमधीरं।

पारिप्लवं च धीराश्चलाचलं चंचलं च कथयंति ॥१०॥
वक्रं वृजिनं भंगुरमाविद्धं वेल्लितं नतं जिह्मं।
भुग्नमरालं कुटिलं व्याकुंचितमूर्मिमत्कथितं ॥११॥
द्राक् चपलं लघु मंत्तु स्राक् तूर्णं त्वरितमाशु शीघ्रमरं।
अह्नाय सत्वरं च क्षिप्रं द्रुतमंजसा झटिति ॥१२॥
सततं संततमनिशं नित्यमजस्रं च शश्वदश्रांतं।
अविरतमनवरतं स्यादेकार्थमनारतमसक्तं ॥१३॥
वृहदुरु गुरु विस्तीर्णं पुरु पृथु पृथुलं महद्विशालं च।
व्यूढं विपुलं रुन्द्रं वरिष्ठमेकार्थमुद्दिष्टं ॥१४॥
युग्मं युगं च युगलं द्वंद्वं द्वितयं यमं यमलं।
स्त्रीपुंसयोस्तु युग्मं मिथुनं परिकथ्यते सद्भिः ॥१५॥
प्राज्यं भूरि प्रभूतं च प्रचुरं बहुलं बहु।
पुरुजं पुष्कलं पुष्टमदभ्रमभिधीयते ॥१६॥
आचितं निचितं व्याप्तं छन्नं कीर्णं च संकुलं।
आकुलं भरितं पूर्णं नातिनानार्थवाचकाः ॥१७॥
प्रत्याख्यातं प्रतिक्षिप्तं प्रत्यादिष्टं निराकृतं।
निरस्तमपविद्धं च प्राज्ञाः परिहृतं विदुः ॥१८॥
अत्याकारः परिभवो निकारश्च पराभवः।
अनादरश्चाभिभवस्तिरस्कारश्च कथ्यते ॥१९॥
घोरं प्रतिभयं भीमं दारुणं स्याद्भयानकं।

आभीलं भीषणं भीष्मं भैरवं च भयावहं ॥२०॥
सख्यं साप्तपदीनं सौहार्दं सौहृदं तथा स्नेहः।
मैत्री प्रीतिरजर्यं सभाजनं संगतं प्रोक्तं ॥२१॥
आदिरग्रं पुरा पूर्वं प्रथमं प्राक् पुरः स्मृतं।
उपज्ञोपक्रमारंभौ पश्चाच्च चरमं भवेत् ॥२२॥
रहः प्रच्छन्नमेकांतं निःशलाकमुपह्वरं।
उपांशु विजनं प्रोक्तं रहस्यं गुह्यमुच्यते ॥२३॥
कैतवं कपटं कूटं व्याजच्छद्मोपधिच्छलं।
मिषं निभं च निर्दिष्टं व्यपदेशश्च सूरिभिः ॥२४॥
इच्छा वांछा स्पृहा कांक्षा कामनेप्सा रुचिस्तथा।
आशंसा चेति तुल्यार्था निश्चितं नियतं स्मृतं ॥२५॥
जीर्णं जरत्पुराणं प्रत्नं प्रतनं पुरातनं प्रोक्तं।
नव्यं नवं नवीनं स्यान्नूतनमभिनवं नूत्नं ॥२६॥
निवृतं वेष्टितमुक्तं परिवृत्तं वलयितं परिक्षिप्तं।
आवर्हितमुन्मूलितमुत्पाटितमुद्धृतं च समं ॥२७॥
कृत्स्नं समग्रं सकलं समस्तं सर्वं च विश्वं निखिलाखिले च।
खंडार्धनेमाः शकलं च भित्तं सामीत्यसंपूर्णसमानसंज्ञाः ॥२८॥
अवकीर्णमवधस्तं त्यक्तमुत्सृष्टमुज्झितं।
अनादृतमवज्ञातमपहस्तितमिष्यते ॥२९॥
आगूः संगरसंधाप्रतिश्रवाः संश्रवः प्रतिज्ञा च।

हेला स्यादवहेलं रीढावज्ञावलीढा च ॥३०॥
मूलीकर्म प्रोक्तं संवननं कार्मणं वशीकरणं।
विप्रतिसारो ऽनुशयः पश्चात्तापो ऽनुतापः स्यात् ॥३१॥
क्षामं शातं कृशं क्षीणं पेलवं तलिनं तनु।
निरंतरं घनं सांद्रं बहुलं विरलेतरं ॥३२॥
निबिडं निबिरीशं च दृढं गाढं प्रचक्षते।
कामं प्रकामं पर्याप्तं नितांतं भृशमुच्यते ॥३३॥
अत्यर्थमतिमर्यादमतिवेलं च कथ्यते।
व्यवधानं तिरोधानमंतर्धिरपवारणं ॥३४॥
परस्परं मिथः प्रोक्तमन्योन्यमितरेतरं।
कौतूहलं विनोदः स्यात्कौतुकं च कुतूहलं ॥३५॥
आली श्रेण्यावली पंक्तिर्वीथी राजी च कथ्यते।
क्षौरं च भद्राकरणं मुंडनं वपनं स्मृतं ॥३६॥
दर्पो मदो ऽवलेपो मानो गर्वो भवेदहंकारः।
आवेशः संवेगः संरंभः संभ्रमस्तथाटोपः ॥३७॥
प्राणः स्थाम बलं द्युम्नमोजः शुष्म तरः सहः।
प्रतापः पौरुषं तेजो विक्रमः स्यात्पराक्रमः ॥३८॥
अनुक्रोशः कृपा शूकं दया च करुणा घृणा।
प्रतिक्षणमभीक्ष्णं च भूयः स्यादसकृन्मुहुः ॥३९॥
आतंको भयमाशंका दरस्त्रासश्च साधसं।

मर्षः क्षमा तितिक्षा च क्षांतिरुक्ता सहिष्णुता ॥४०॥
वैणवो लगुडो दंभो दंडो यष्टिश्च कथ्यते।
गतिर्वीखा विहारः स्यात्परिसर्पः परिक्रमः ॥४१॥
अणिरश्रिस्तथा कोटिरश्रः कोणश्च कथ्यते।
कश्मलं मलिनं म्लानं मलीमसमुदाहृतं ॥४२॥
भृतिर्भृत्या च कर्मण्या वेता मूल्यं च वेतनं।
लिपिरालेख्यलेखा स्याल्लिपिर्लेखाक्षरस्य च ॥४३॥
कल्पनं कर्तनं प्रोक्तं वर्धनं छेदनं तथा।
व्यत्ययः स्याद्विपर्यासो वैपरीत्यं विपर्ययः ॥४४॥
अपह्नवो ऽपलापः स्यादपज्ञानमपात्ययः।
श्रंथनं ग्रंथनं गुंफः संदर्भो रचना स्मृता ॥४५॥
उद्वर्तनमुत्सादनमाकुः सोत्प्रासहसितमुपहसितं।
उत्पिंजलमाकुलकं स्यादनुपदमन्वगन्वक्षं ॥४६॥
गौरः श्वेतः सितः शुभ्रो वलक्षो धवलो ऽर्जुनः।
हरिणः पांडुरः पांडुरवदातश्च पांडरः ॥४७॥
अरुणः शोणो रक्तो मांजिष्ठः पाटलस्तथा ताम्रः।
लोहित इत्येकार्थाः कविभिः शब्दाः प्रयुज्यंते ॥४८॥
असितं शिति कृष्णं च कालं नीलं च मेचकं।
श्यामं तु श्यामलं रामं पालाशं हरितं हरित् ॥४९॥
हरिः कद्रुः कडारश्च पिंगलः परिकीर्तितः।

पीतं हारिद्रमाख्यातं श्यावं तु कपिशं स्मृतं ॥५०॥
पिंगः पिशंग इत्युक्तो बभ्रुः कपिलः पिंगलः।
सारंगः शबलो वर्णः कल्माषः कृष्णपांडुरः ॥५१॥
पिंजरः पीतरक्तः स्याडूसरः स्तोकपांडुरः।
रक्तश्यामो भवेडूम्रो धूमलः स च कथ्यते ॥५२॥
श्येनी कुमुदपत्राभा शुकाभा हरिणी स्मृता।
जपाकुसुमसंकाशा लोहिनी परिकीर्तिता ॥५३॥
परिपाद्यानुपूर्वी स्याडुपशायो ऽनुपात्ययः।
अनुक्रमश्च पर्यायो विशायः परिकीर्तितः ॥५४॥
ईर्ष्या स्यात्कुहना दंभो मिथ्याचर्या च कुक्कुटिः।
कुसृतिर्निकृतिर्माया शांबरी पथकल्पना ॥५५॥
चित्रकिर्मीरकल्माषशबलोन्मिश्रकर्बुराः।
करंबः कवरः शारः संपृक्तः खचितः समाः ॥५६॥
आयल्लकमुत्कंठा स्याडुत्कलिकारतिश्च रणरणकं।
औत्सुक्यं हृल्लेखो विरहवियोगौ च तुल्यार्थौ ॥५७॥
प्रतिकूलं प्रतिलोमं प्रतीपमुक्तं प्रसव्यमेकार्थं।
अपवारितं च पिहितं संवीतं संवृतं स्थगितं ॥५८॥
आङुः प्रतीकमवयवमपघनमंगं तथैकदेशं च।
उल्वणमुद्धतमुद्भटमुत्कटमिति नातिनानार्थाः ॥५९॥
समाजः संसदास्थानी सभा स्यात्परिषत्सदः।

चित्रमद्भुतमाश्चर्यं विस्मयश्चोद्यमुच्यते ॥६०॥
प्रेंखोलितं तरलितं प्रेंखितं लुलितं स्मृतं।
युक्तं स्यादुचितं न्याय्यं प्राप्तमौपयिकं तथा ॥६१॥
आहितं निहितं न्यस्तमारोपितमिति स्मृतं।
बद्धं पिनद्धमामुक्तमपिनद्धं च कथ्यते ॥६२॥
वंचनं चातिसंधानं व्यलीकं स्यात्प्रतारणं।
विप्रलंभो विसंवादो विप्रलापश्च कीर्तितः ॥६३॥
व्यलीकमपराधः स्यादागो मंतुश्च विप्रियं।
प्रणतिः स्यादनुनयः प्रणिपातश्च सांत्वनं ॥६४॥
उद्घात उक्तः प्रस्तावो वारश्चावसरः क्षणः।
वदंत्युपनतं प्राप्ता उपसन्नमुपास्थितं ॥६५॥
प्रांशूच्चमुन्नतं तुंगमुदग्रं दीर्घमायतं।
अयंत्रितं स्यादुद्दाममुच्छृंखलमनर्गलं ॥६६॥
विशदं प्रकटं स्पष्टं प्रकाशं स्फुटमिष्यते।
तत्क्षणैकपदे तुल्ये सद्यः सपदि च स्मृते ॥६७॥
विशंकटं विशालं स्यात्करालं विकटं तथा।
निस्तलं वर्तुलं वृत्तं स्थपुटं विषमोन्नतं ॥६८॥
अवगाह्नो जलद्रोणी निर्वेदः खेद उच्यते।
प्रमादो ऽनवधानं स्यादत्याधानमतिक्रमः ॥६९॥
निर्वेश उपभोगः स्यादाभोगः परिपूर्णता।

अवगीतं मुहुर्दृष्टमुपलब्धं च यद्भवेत् ॥७०॥
वामं सव्यं विदुः प्राज्ञा अपसव्यं च दक्षिणं ।
प्रतिकूलानुकूलार्थे अपष्ठु त्वनपष्ठु च ॥७१॥
विपरीतं पराचीनमपाचीनं पराङ्मुखं ।
स्मृतं कौसीद्यमालस्यमुपधा तु परीक्षणं ॥७२॥
विवधो वीवधो भारः पर्याह्वारश्च कथ्यते ।
काचं शिक्यमिति प्रोक्तं भारयष्टिर्विहंगिका ॥७३॥
सौष्ठवं स्यादवष्टंभो हठः प्रसभमुच्यते ।
प्रग्रहो ग्रहको वंदी पणो ऽक्षेषु ग्लहः स्मृतः ॥७४॥
प्रायः स्याद्भोजनत्यागः संन्यासो ऽनशनं स्मृतं ।
मोघं मुधाफलं बंध्यं नतं नम्रं च बंधुरं ॥७५॥
स्मृतं वाणिज्यं वाणिज्यं वणिज्या च समं त्रयं ।
युद्धार्थे द्वे प्रयुज्येते दौर्मंथ्यं च करीरकं ॥७६॥
आकूतं स्यादभिप्रायो व्याकूतिर्भंगिरुच्यते ।
स्थंडिलं संस्कृता भूमिरयनं स्थानमुच्यते ॥७७॥
प्रत्यग्रमुक्तं सद्यस्कमुपाग्रमुपसर्जनं ।
दोला प्रेंखोलनं प्रेंखा उत्सवः स्यान्महः क्षणः ॥७८॥
गवलं माहिषं शृंगं दृतिश्चर्मप्रसेवकः ।
समुद्गः संपुटो ज्ञेयो वडिशं मत्स्यबंधनं ॥७९॥
कृते प्रतिकृतं प्राज्ञैः प्रतिनिर्यातनं स्मृतं ।

सपत्नाकरणं प्रोक्तं यत्परस्यातिपीडनं ॥८०॥
समासः स्यात्समाहारः संक्षेपः संग्रहस्तथा ।
व्यासः प्रपंचो विस्तारः स च शब्दस्य विस्तरः ॥८१॥
उन्नं क्लिन्नं स्मृतं नुन्नं क्षिप्तं तुन्नं च पीडितं ।
पन्नं तु पतितं प्रोक्तं सन्नं शांतं च सूरिभिः ॥८२॥
न्यंचितं स्यादधः क्षिप्तं क्षिप्तमूर्धमुदंचितं ।
काचितं सज्जितं प्रोक्तं जूषितं गुंडितं स्मृतं ॥८३॥
विष्कंभः प्रतिबंधो विश्रंभः कथ्यते च विश्वासः ।
संमर्दः स्यात्परिमल उपमर्दो विप्रकारः स्यात् ॥८४॥
उपाधिर्धर्मचिंता स्यान्निःशोध्यमनवस्करः ।
कुप्रियं तु जघन्यं स्यान्निःशेषं न्यक्षमिष्यते ॥८५॥
अपकारो भवेद्द्रोहो दोष आदीनवो मतः ।
कषायं तुवरं प्रोक्तं सुरुंगा संधिरुच्यते ॥८६॥
असौम्यं यद्भवेद्यक्षुरचक्षुस्तत्प्रचक्षते ।
अवहित्थं च शब्दज्ञा आकारस्य निगूहनं ।८७॥
संस्तवः स्यात्परिचयः प्रसादः प्रणयः स्मृतः ।
प्रवारणं महादानं संकल्पः कर्ममानसं ॥८८॥
अनायासार्थकं फांटमंतर्गडु निरर्थकं ।
स्वाच्छंद्यं निर्निमित्तं च यदृच्छेत्यभिधीयते ॥८९॥
आद्यमादिममंत्यं स्यादंतिमं चाग्र्यमाग्रिमं ।

मध्यमं मध्यमीयं च मध्यंदिनमुदाहृतं ॥१०॥
नमस्या वंदना प्रोक्ता तपस्या नियमस्थितिः।
परिव्रज्या व्रतादानं व्रज्याख्या च गतिः स्मृता ॥११॥
रिक्तं तुच्छमसारं तु फल्गु व्युष्टिः फलं स्मृतं।
कलिलं गहनं प्रोक्तं श्लथं शिथिलमुच्यते ॥१२॥
स्वतंत्रवृत्तिर्व्युत्थानमभ्युत्थानं च गौरवं।
संस्थानं संनिवेशः स्यादास्थानं नृपतेः सभा ॥१३॥
संकथान्योन्यसंगीतिः प्रतिपत्तिः प्रगल्भता।
उच्यत ऊर्ज उत्साहो भृकुटिर्भ्रुकुटिस्तथा ॥१४॥
उपजापो भवेद्भेदः साम सांत्वमिति स्मृतं।
तथेति प्रत्ययः श्रद्धा संस्कारो वासना स्मृता ॥१५॥
स्मृतमास्थितमाक्रांतं प्रतीष्टं पतदाहृतं।
प्रच्छादितं स्यात्संवीतं प्रशस्तं संस्कृतं स्मृतं ॥१६॥
उन्माथः कूटयंत्रं स्यादवपातो ऽवटः स्मृतः।
धर्मः स्वभाव आत्मा स्यादवेक्षा प्रतिजागरः ॥१७॥
स्मृतं परुषमस्निग्धमाचारातिक्रमः क्रिया।
उच्चंडमप्रलंबं स्यान्माढिः पत्त्रशिरा स्मृता ॥१८॥
अहमहमिका तु सा स्याद्यत्क्रियते स्पर्धयाधिकं किंचित्।
यत्र वृथाभिनिवेशस्तामाहोपुरुषिकां विदुः प्राज्ञाः ॥१९॥
सिंहनादो भवेत् क्ष्वेडा गंडूषो मुखपूरणं।

प्रभावतां वदंत्यार्याः प्रभुतां प्रभविष्णुतां ॥१००॥
परभागो गुणोत्कर्षः स्पर्धा संहर्ष उच्यते।
आयामः स्मृत आनाहः परिणाहो विशालता ॥१०१॥

॥ इति श्रीभट्टहलायुधकृतायामभिधानरत्नमालायां
सामान्यकांडं चतुर्थं समाप्तं ॥

एको ऽर्थो बहुभिः शब्दैः कथितः कथ्यते ऽधुना।
एकस्यैव तु शब्दस्य बहुष्वर्थेषु वर्तनं ॥१॥
रुद्रे ऽपि खंडपरशुर्वैश्रवणे ऽप्येककुंडलः प्रोक्तः।
द्वारे ऽपि प्रतिहारः प्राकाराग्रे ऽपि कपिशीर्षं ॥२॥
पर्याप्ते ऽपि कृतं स्यादाहवनीयादिषु त्रिषु त्रेता।
संदेहे ऽपि द्वापरमाहुः कलहे ऽपि कलिशब्दं ॥३॥
सेनायामपि कटकं प्राणिद्यूतं वदंति युद्धे ऽपि।
रक्षस्यपि पुण्यजनं मृद्भांडे ऽप्युष्ट्रिकामार्याः ॥४॥
श्वेतं रजते ऽप्युक्तं रजतं हारे शरे ऽपि किंशारुः।
दंभे ऽपि गह्वरं स्यादुपह्वरं संनिधाने ऽपि ॥५॥
नयनच्छदे ऽपि वर्त्म प्रतिग्रहः सैन्यपृष्ठभागे ऽपि।
श्लेष्मण्यपि खेटः स्याज्जामिः कुलबालिकायां च ॥६॥
गंधो लेशे ऽप्युक्तः करुणाप्रतिपादने तपस्वी च।

मणिबंधकनिष्ठकयोर्मध्यविभागे ऽपि करभः स्यात् ॥७॥
चिंतायामपि चर्चा जगती राजप्रधानलोके ऽपि।
ऋतुरंगनारजस्यपि विकटं श्रेष्ठे ऽपि निर्दिष्टं ॥८॥
कवचे ऽपि वारवाणं जीमूतं पर्वते ऽपि कथयंति।
व्यूहं रचनायामपि दार्वाघाटे ऽपि शतपत्त्रं ॥९॥
करणं काये ऽपि स्यादुष्णीषो मूर्धवेष्टने ऽप्युक्तः।
मात्रा परिच्छदे ऽपि चुद्रः क्रूरे श्रुतौ निगमः ॥१०॥
वृजिनः केशे ऽप्युक्तः स्थाणुः कीले ऽपि कुंजरे नागः।
गंजो भांडागारे गोमुखमुपलेपने ऽपि स्यात् ॥११॥
तेजस्यपि धाम स्यादाधारे ऽप्याशयो घटा गोष्ठ्यां।
कुल्या कुलस्त्रियामपि तारो मुक्तागुणे ऽप्युक्तः ॥१२॥
कर्मविपाके ऽपि दशागती स्मृते कानने ऽपि दवदावौ।
चूडाशिखे शिरस्यपि हस्तिन्यां धेनुकागणिके ॥१३॥
प्रतिपत्प्रतिपत्तावपि शादः शष्पे घृणा जुगुप्सायां।
उत्तालमुन्नते ऽपि श्रेष्ठे ऽपि निगद्यते सुरभिः ॥१४॥
संवर्तः परिवर्तश्च हायने कथ्यते ऽंबरे नाकः।
परिमाणे ऽपि प्रस्थः सर्वात्मनि सर्वसंनाहः ॥१५॥
पत्न्यामपि द्वितीया दर्भे ऽपि पवित्रमवधिरवटे ऽपि।
प्रकृतावपि प्रधानं विवक्षितं शोभने ऽपि स्यात् ॥१६॥
अतिमात्रे ऽप्यतिवेलं काये ऽप्युत्सेध इष्यते सद्भिः।

पृष्ठास्थन्यपि वंशः कदली करिवैजयंत्यां च ॥१७॥
जालं कपटे ऽप्युक्तं कपालमुक्तं घटादिशकले ऽपि।
रिष्टं पापाशुभयोररिष्टमशुभे ऽपि निर्दिष्टं ॥१८॥
व्यासे ऽपि विग्रहः स्यान्मानविशेषे ऽपि पौरुषव्यामौ।
हेला प्रस्तावे ऽपि प्रग्रह आबंधने ऽप्युक्तः ॥१९॥
कुंजरकरे ऽपि शुंडा ग्रावा शैले भवश्च संसारे।
बाले ऽपि बालिशः स्यात्कलधौतं शातकुंभे ऽपि ॥२०॥
शाखायामपि परिधिर्वसतिर्जैनाश्रमे ऽपि निर्दिष्टा।
अन्वेषणे ऽपि मार्गो भद्रो वृषभे वके ध्वांक्षः ॥२१॥
मणिदोषे ऽपि त्रासो वत्सः संवत्सरे ऽपि निर्दिष्टः।
वामः प्रतिकूले ऽपि प्रोक्तौ शुक्ले ऽपि शुचिरामौ ॥२२॥
ह्यस्तनदिने ऽपि कल्यं नेत्रं मूले रजस्यपि परागः।
भ्रूणो गर्भिण्यामपि भूतिर्विभवे बलः काके ॥२३॥
गिरिसानुन्यपि वप्रं तल्पं दारेषु चक्षुषि ज्योतिः।
चौर्यादावपि हिंसा प्रसरः प्रणये ऽपि निर्दिष्टः ॥२४॥
संघाते ऽपि ग्रामो भूतेंद्रियशब्दविषयकरणानां।
षंडश्च पादपानां स्कंधः करिनरतुरंगाणां ॥२५॥
नंद्यावर्तः सरलः शालः काको धवो ऽंजनस्तिलकः।
पद्मस्यंदनमोचा वृक्षविशेषे ऽपि दृश्यंते ॥२६॥
कटुतिक्तकषायास्तु सौरभ्ये ऽपि प्रकीर्तिताः।

शोभार्थे ऽपि प्रयुज्यंते लक्ष्मीश्रीकांतिविभ्रमाः ॥२७॥
आर्यः स्यात्सौविदल्ले ऽपि व्रीडावप्यणुरिष्यते ।
चंडाले ऽपि दिवाकीर्तिर्विवस्वान्देवतास्वपि ॥२८॥
स्नेहे ऽप्यपह्नवः प्रोक्तो द्वेषे ऽप्यनुशयः स्मृतः ।
सुरते ऽपि व्यवायः स्यान्निगमश्च क्रतावपि ॥२९॥
दुर्गमार्गे ऽपि कांतारं गृहवाट्यां च निष्कुटः ।
रूपं मृगे ऽपि विज्ञेयं बभ्रुः स्यान्नकुले ऽपि च ॥३०॥
अंतर्द्वंद्वे ऽपि कोष्ठः स्याच्चत्वरं प्रांगणे ऽपि च ।
दुश्चर्मण्यपि निर्दिष्टः शिपिविष्टो मनीषिभिः ॥३१॥
संस्तरः प्रस्तरे ऽप्युक्तो वह्नौ कुंजो रणे स्वशः ।
गर्जन्मेघे ऽपि पर्जन्यः संधा स्यादवधावपि ॥३२॥
व्यवस्थायां च संस्था स्यात्संवित्तावपि वेदना ।
यात्रा स्यादनुवृत्तौ च संज्ञायां च समाह्वयः ॥३३॥
क्लीबो विक्रमहीने ऽपि समये ऽपि कटः स्मृतः ।
कलंकं लाञ्छने दोषे ऽप्यद्रिः प्रोक्तो रवावपि ॥३४॥
समितिः संगतिसभयोः ककुदं शृंगे विदुः प्रधाने ऽपि ।
टंकः स्यादभिमाने प्रस्तरघटनोपकरणे च ॥३५॥
संकेते चैतन्ये च सूरिभिः कथ्यते तथा संज्ञा ।
दंडो दमने सैन्ये कुतपो दर्भे ऽपराह्णे च ॥३६॥
कारुण्ये ऽप्यनुषंगः स्यात्प्रोक्तो गुह्ये ऽप्यवस्करः ।

वेदिकांगुलिमुद्रायां लाक्षायां च कृमिस्तथा ॥३७॥
नीवी परिपणे ऽप्युक्ता कटिदेशे ऽपि मेखला ।
प्रत्यवाये ऽपि विश्लेषे विधुरं स्मर्यते बुधैः ॥३८॥
निदानमवसाने ऽपि स्वामिन्यपि भवेदिनः ।
जठरः कठिने ऽप्युक्तः प्राज्ञैः परिणते ऽपि च ॥३९॥
काले कल्पे ऽपि विधिर्घनाघनः शक्रवर्षुकांबुदयोः ।
अत्ययशब्दः प्राज्ञैः कृच्छ्रे चातिक्रमे च निर्दिष्टः ॥४०॥
उदरे जले कृपीटं संबाधः संकटे भगे ऽप्युक्तः ।
पार्ष्णिः प्रत्यासारे च रणस्य च पश्चिमे भागे ॥४१॥
रतिभुक्त्योः संभोगः पथिदेये स्त्रीधने च शुल्कं स्यात् ।
वंशांकुरे करीरं वृक्षविशेषे ऽपि कथयंति ॥४२॥
अनूकमन्वये शीले गोत्रं नाम्नि तथान्वये ।
पुलाकं भक्तसिक्थे च क्षुद्रधान्ये च कथ्यते ॥४३॥
अकार्ये गुह्ये कौपीनं कीलालं रुधिरे जले ।
कुकूलं शंकुमद्गर्ते तुषाग्नौ च निगद्यते ॥४४॥
चैत्यं बुद्धांडके ऽप्युक्तं देवतायतने तथा ।
छत्रके वृक्षजातौ च शिलींध्रं स्मर्यते बुधैः ॥४५॥
अर्थव्ययसहे व्यालस्तथा हिंस्रपशौ स्मृतः ।
पोत्रमित्युच्यते प्राज्ञैर्हलशूकरयोर्मुखं ॥४६॥
मंदस्वच्छंदयोः स्वैरं कक्षः स्यात्कच्छवीरुधोः ।

करेणुर्गजहस्तिन्योः पीलुश्च गजवृक्षयोः ॥४७॥
शलाकायुधयोः शल्यं बाधा दुःखनिषेधयोः ।
स्थूणास्तब्धत्वयोः स्तंभ इला वागध्ययोरपि ॥४८॥
अर्चनामूल्ययोरर्घो विसर्गो मुक्तिवर्चसोः ।
मुनिकुक्कुटयोर्दक्षः संधिः संश्लेषरंध्रयोः ॥४९॥
अवश्यभृशयोर्बाढं दायादस्तुक्सपिंडयोः ।
कुलीनश्रेष्ठयोर्जात्यं कोटिरुत्कर्षसंख्ययोः ॥५०॥
त्र्यक्षस्तंडुगिरिशयोः स्थितिः स्थानव्यवस्थयोः ।
वीकाशः स्फुटरहसोः काष्ठा कालप्रकर्षयोः ॥५१॥
नदीसमुद्रयोः सिंधुर्देशपर्वतयोर्मरुः ।
मैथुनं कथ्यते सद्भिः संबंधग्राम्यधर्मयोः ॥५२॥
प्रह्वबंधनयोः प्राधं मोहः स्यान्मौढ्यमूर्छयोः ।
व्यवस्थाने ऽंभसो वेला रविः पर्वतसूर्ययोः ॥५३॥
अभ्युत्पातौ धूमकेतू श्वशुर्यौ श्यालदेवरौ ।
दिव्यार्थसंग्रहौ कोशौ नरेंद्रौ नृपवार्त्तिकौ ॥५४॥
आडंबरो गजानां पटहरवे गर्जिते प्रपंचे च ।
ग्रहशब्दः सूर्यादिषु भूतादिष्वभिनिवेशे च ॥५५॥
अव्यक्तः परमात्मनि मूर्खे स्पष्टेतरे च निर्दिष्टः ।
कक्षा गुह्यपिधाने कांच्यां गेहे प्रकोष्ठे च ॥५६॥
प्रतियत्नः संस्कारे लिप्सोपग्रहणयोश्च निर्दिष्टः ।

अभिहारः संनाहे स्यादभियोगे परस्वहरणे च ॥५७॥
दानविशेषे लब्धौ दायो भागार्हपित्र्यरिक्थे च।
लिपिसंख्यायां शास्त्रे द्रव्ये च ग्रंथशब्दमिच्छंति ॥५८॥
द्यूताक्षसारिफलकास्त्रयो ऽप्याकर्षसंज्ञकाः।
संसर्गाभिभवाक्रोशेष्वभिषंगः प्रकीर्तितः ॥५९॥
त्वाष्ट्रे तमसि शत्रौ च वृत्रशब्दस्त्रिषु स्मृतः।
मन्युर्दैन्ये क्रतौ कोपे नाडीस्वर्गक्षितिष्विडा ॥६०॥
उक्तानामप्यनुक्तानां शब्दानामिह संग्रहः।
कशब्दः सुखवार्यंबुब्रह्ममस्तकवाचकः ॥६१॥
प्रत्ययाः शपथज्ञानहेतुविश्वासनिश्चयाः।
विस्तारे कटके शून्ये वितानं स्यात्क्रतौ क्षणे ॥६२॥
देहावयवमासार्धपतत्रगृहभित्तिषु।
परिग्रहे समीपे च पक्षः षट्सु निगद्यते ॥६३॥
अग्निधनरश्मिरत्नत्रिदशविशेषेषु भवति वसुशब्दः।
चेष्टात्मजन्मसत्ताभिप्रायेष्वभिहितो भावः ॥६४॥
कालविशेषे ऽवसरे ऽव्यापारे पारतंत्र्ये च।
मध्ये तथोत्सवे च क्षणशब्दः कथ्यते सद्भिः ॥६५॥
आचारे नयनादौ द्यूतविशेषे तथा रथावयवे।
अक्षं विभीतके ऽपि प्रयुंजते पंचसु प्राज्ञाः ॥६६॥
निष्ठा क्लेशे ऽवसाने च व्यवस्थोत्कर्षयोर्व्रते।

श्रेष्ठे स्थाम्नि धने शुक्रे मज्ज्ञि सार उदाहृतः ॥६७॥
दिग्दृष्टिदीधितिस्वर्गवज्रवाग्वाणवारिषु ।
भूमौ पशौ च गोशब्दो विद्वद्भिर्दशसु स्मृतः ॥६८॥
भूषायां लांगूले प्रधानशृंगप्रभावपुंड्रेषु ।
ध्वजलक्ष्मतुरंगेषु च नवसु ललामं प्रचक्षते प्राज्ञाः ॥६९॥
अर्कमर्कटमंडूकविष्णुवासववायवः ।
तुरंगसिंहशीतांशुयमाश्च हरयो दश ॥७०॥
पृथिव्यादिषु भूतेषु शरीरेषु रसादिषु ।
लोहेषु च स्मृतो धातुः स्वभावे गैरिकादिषु ॥७१॥
द्विरदकराग्रे पद्मे खड्गफले व्योम्नि वाद्यभांडमुखे ।
अगदे जले च तीर्थे पुष्करमष्टासु निर्दिष्टं ॥७२॥
चतुर्विधेषु जीवेषु पृथिव्यादिषु पंचसु ।
अतीते देवयोनौ च भूतशब्दं प्रचक्षते ॥७३॥
शुक्लादौ ब्राह्मणादौ च शोभायामक्षरे व्रते ।
गीतक्रमे स्तुतौ वेषे वर्णशब्दं प्रचक्षते ॥७४॥
शृंगारादिषु नवसु च लवणादिषु षट्सु पारदे रागे ।
निर्यासवीर्यगुणधातुविषघृतादौ रसः प्रोक्तः ॥७५॥
योनौ जलावतारे च मंत्राद्यष्टादशस्वपि ।
पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेषु च ॥७६॥
अकारादिषु वर्णेषु षड्जादिषु च सप्तसु ।

उदात्तादिषु विज्ञेयः प्राणिनां च स्वने स्वरः ॥७७॥
सत्त्वादीनां साम्यावस्थां प्रकृतिं वदंति तत्त्वज्ञाः।
पौरामात्यादीनि च कारणकारुस्वरूपाणि ॥७८॥
सत्त्वादौ रूपादौ शौर्यादौ तंतुषु प्रयोगज्ञाः।
गुणशब्दं सिंजिन्यां प्रयोजयंत्यप्रधाने ऽपि ॥७९॥
उपकरणे करणे च द्रविणे लिंगे च यातनायां च।
सेनांगे संसिद्धौ साधनशब्दप्रयोगः स्यात् ॥८०॥
अभिधेयाभिप्रायप्रयोजनद्रव्यवाचकेष्वर्थः।
प्रस्तावे संघाते कुत्सायामायुधे जले कांडं ॥८१॥
वेदाध्यात्मब्राह्मणहिरण्यगर्भेषु कथ्यते ब्रह्म।
प्रकृतिगुणे सत्तायां स्थामनि भूते च सत्त्वं स्यात् ॥८२॥
इराशब्दो बुधैर्ज्ञेयो भुवि वाच्यशने ऽंभसि।
निमेषादौ यमे वर्णे कालो मृत्यौ च कीर्त्यते
कालसंकेतकाचारसिद्धांताः समयाः समाः ॥८३॥
तंत्रं तंतुषु मंत्रेषु सिद्धांतपरिच्छदप्रधानेषु।
उत्साहनसूचनयोः प्रकाशने गंधनं प्रोक्तं ॥८४॥
वस्त्रे मध्ये तथा छिद्रे व्यवधाने ऽंतरात्मनि।
अवकाशे बहिर्योगे विशेषे ऽवसरे ऽंतरं ॥८५॥
प्रागेवेव नामपर्याये निपाताः के ऽपि कीर्तिताः।
कथ्यंते केचिदन्ये ऽपि दिष्ट्या स्यान्मंगलादिषु ॥८६॥

चिराय चिररात्राय दीर्घकाले प्रयुज्यते।
चिरं चिराच्चिरेणेति वा विकल्पोपमानयोः ॥८७॥
परितः सर्वतो विष्वक् समंताच्च समंततः।
प्रत्यक्षसदृशोः साक्षाद्वार्त्तासंभाषयोः किल ॥८८॥
शोचने संप्रहर्षे च हंतशब्दः प्रयुज्यते।
ई दुःखभावने क्रोधे प्रत्यक्षे संनिधावपि ॥८९॥
पृथग्विनांतरेणार्ते व्यतिरेकार्थवाचकाः।
प्रत्यारंभे मुहुः प्रोक्तो कुं संप्रश्नवितर्कयोः ॥९०॥
इतिह स्यात्संप्रदाये प्रेत्यामुत्र भवांतरे।
साकं सार्धं समं सत्रं सहार्थे संप्रकीर्तिताः ॥९१॥
अधरस्तादधरतः स्यादधस्तादधो ऽधरे।
अत इत्युच्यते हेतौ निंदायां विस्मये वत ॥९२॥
समयानिकषाशब्दौ सामीप्ये कीर्तितौ बुधैः।
तर्कनिश्चितयोर्नूनं कच्चित्स्यात्प्रश्नकामयोः ॥९३॥
आहो उताहो संदेहे नु स्वित्प्रश्नवितर्कयोः।
वर्तमाने च युक्ते च सांप्रतं संप्रचक्षते ॥९४॥
प्रकाशे संभवे प्रादुः प्रधानसदृशोः प्रति।
हि स्याद्विशेषणे हेतौ तु स्याद्भेदे ऽवधारणे ॥९५॥
अयि प्रश्ने सानुनये सत्ये शीघ्रे तथांजसा।
ईषत्किंचिन्मनाक् प्रोक्ताः किंचनस्तोकवाचकाः ॥९६॥

तूष्णीं जोषं भवेन्मौने स्म स्यात्संस्मरणादिषु।
अंगेत्यामंत्रणे हे हो भो भो इति च कथ्यते ॥९७॥
अनेकार्थे भवेन्नाना ननु प्रश्ने ऽवधारणे।
आकस्मिकार्थे सहसा तत्काले च निगद्यते ॥९८॥
विस्तारे ऽंगीकृतावूरी कथ्यत उररी तथा।
असंशये भवेदड्डा सहार्थातिकयोरमा ॥९९॥
अथानंतरकल्याणसंप्रश्नादिषु कथ्यते।
अथो इति तथा प्रोक्तो नामाभ्युपगमादिषु ॥१००॥
सदा सना च नित्यत्वे स्वस्ति स्यान्मंगलादिषु।
इतिशब्दः स्मृतो हेतौ प्रकारादिसमाप्तिषु ॥१०१॥

॥ इति श्रीभट्टहलायुधकृतायामभिधानरत्नमाला-
:यामनेकार्थकांडं पंचमं समाप्तं ॥

# N O T E S.

## BOOK I.

Verse 9. वेदांगश्च A. दांतस्य CD. — 13. अह्निर्ब्रध्नो R. अह्निर्बुध्न्यो C. अह्निर्बुध्न्या D. — 14. °धस्तंद्दुः A. °धस्तद्दु C. °धस्तंद्दु D. °धस्तुंडि R. — 25. ज्ञितः A. — 26. कौमुदकी A. — 28. शारी च साबतः A. शीरी च स्यावत्तः R. — 30. तार्त्तः A. — 32. °सूदन A. — 33. सूर्यका° A. सूर्षका° CD. — 34. °रमणामुच्यते A. °रमण इष्यते CDR. — 36. मिव्हरो AR. — 39. °धिष्णय R. °धृष्णि° CD. — 40. तपः स्मृतं R. — 43. रजनिचरः CD. ज्ञोकात्रिको A. — 44. चंद्रतपः A. व्हृदयं CD. — 46. °सायनिः A. — 48. क्रौडः A. — 49. शखिनः R. — 51. °मृत्तमथो A. दात्ता-यिणयः R. दात्तणायणयः C. दत्तणायणयः D. — 53. From पुरंदरः to तुराषाट् is omitted in A. सूत्रामा CD. — 54. स्यादग्रधन्वा AR.

°विंडोत्ताश्च CD. — 56. संबः A. शंबुः C. शवु D. — 58. धूमज्योति° AR. — 59. कर्कः A. करका CD. चरभ्रमाला A. — 60. ह्लादिनी D. ह्लादिनी C. — 63. °र्दमुना CD. °दमना BR. — 64. वीतहोत्रो AR. — 66. आग्नेयी CDR. — 68. अतिरिक्ता A. अतिरिक्ताक्ता CD. — 70. वडवानलः C. वाडवानलः D. — 71. शमवर्ती CDR. — 73. °नैरतकोपा° A. °नैऋतकोणपा° R. नैर्ऋतकोणपा° CD. — 75. स्पर्शनो वायुः A. — 79. पुण्यधनेश्वरः A. — 80. °मर्थं A. रिक्तं पृक्थं A. ऋक्थं पित्तं R. ऋक्थं पृक्थं CD. — 85. बुधः AR. सुमंतभद्रो AR. तुल्यार्थाः R. — 89. शृंगारचेष्टा स्यु° A. शृंगारचेष्टा च CD. — 90. स्वभावः CD. भावकः A. — 91. °समाः AR. — 93. इष्यते instead of उच्यते CDR. — 94. कालः क्रि° CDR. — 98. भद्रदारुकः A. भट्टदारकः R. — A. inserts after 99. the following stanzas: रागनाम ।

श्रीरागो वसंतस्य पंचमो भैरवस्तथा ।
मेघरागस्तु विज्ञेयो षष्ठो नटनरायणाः ॥१॥
गौडी कोलाहलांधारी द्रविडी मालवकौशिका ।
षष्ठी स्याद्देवगांधारी श्रीरागा च विनिर्मिता ॥२॥
आदोला कौशिकी चैव तथा पटमंजरी ।
गुडकरी चैव देशाख्या रामकरी च वसंतजा ॥३॥
त्रिगुणा स्तंभतीर्थी च आभेरी कुकुभा तथा ।

विपराड़ी तथा चेरी षडेते पंचमे मताः ॥४॥
भैरवी गूर्ज्जरी चैव भाषा वेलाउली तथा ।
कर्णाटी रक्तहंसा च षडेते भैरवे मता ॥५॥
वंगुला मथुरा चैव कामोदा चोषसाटिका ।
देवगिरी च देवाला षडेते मेघरामज्ञाः ॥६॥
त्रोटकी मोटकी चैव डुंविनट् विराटिका ।
मल्लारी सैधवी चैव एता नटनरायणे ॥७॥

Râjendralâl Mittra of Calcutta had the kindness to supply me with the following information. He writes: „My correspondents at Benares, Agra and Mathurâ have all disappointed me. None of them has been able to find out the verses in question. They do not occur in the College of Fort William Mss., nor are they traceable in the Sanskrit College exemplar. I asked Râjâ Râdhâkânta about the Mss. whence he quoted the Abhidhânaratnamâlâ, and he referred me to Professor Wilson, from whom he had obtained the loan of the work. There are now five Mss. of Halâyudha in Calcutta accessible to me, but the verses occur in none of these, and I am disposed to think from this circumstance, that they are perhaps not authentic.“ I am much indebted to Professor Wilson for having kindly sent me some extracts from several Râgamâlas in the E. I. H. Library, but neither these nor some others in the Bodleian Library contain precisely the same system, or the same names of the Râgâs and Râginîs. A passage in Keçava's Kalpadru (Wilson. Mss. 334. fol. 152.) bears, on the whole,

the greatest resemblance to our verses.—102. प्रदिशस्तथा CD. — 104. कुमुदों ज्ञनवामनौ CD. — 106. °निष्काशौ CD. — 110. तिमिस्रा A. तमिस्रा CD. — 111. गोत्सर्गः A. — 112. शशिनी A. — 113. शरदे A. शरदो CD. — 114. चैत्रादिमासौ CD. — 115. ब्राक्ल्य ACD. — 116. °संवत्सरसमयाः A. — 118. सांसृष्टिकं R. सांसृष्टकं A. — 119. °निकषाश्चनताश्च A. — 120. पुष्पवंतौ CD. Hemacandra II. 38. gives both. — 121. द्यावाभूम्यौ CD. — 122. स्वश्रेयंसं AR. श्वोवशीयं A. श्वाःश्रेय, श्वोवशीयं D. श्वःश्रेयं, द्योवशीयं C. शुभं शिवं भविकं भाविकं A. प्रमोदः प्रमदो CD. — 124. मुक्तिर्मोत्ता A. — 125. स्यादनुस्त्वरं A. स्यादनस्वरं R. — 126. दैवभयानयं AR. दैवमयायनं CD. — 127. डंबश्च A. डिंभश्च CD. — °पासनं CD. प्रसाधना ACD. — 130. प्रतिकृतं AR. प्रतियातना प्रतिक्षायं A. — 131. व्हिरण्यी स्याड्डिरणायां A. — 133. पीयूष उच्यते A. — 136[b]. This pâda appears only in CDR. and in B. s. m. भीमाद्रि° CD. धीमद्रि° R. हेमाद्रि° B. tertia m. — 138. °दयश्च A. — 139. °भिवड्ं च A. — 140. उच्चैःस्वरो A. कलश्च CDR. — 142. °श्लीलमिष्यते CD. — 144. From सम्यक् to तथा is wanting in A. — 145. कविकत्थनं च A. — 147. क्षौतिक्षं CD. क्षौतक्षं R. क्षौतिर्यं A. — 149. शाप आत्तेप आत्तेक्रोशः D. शाप आ ऽक्राशः C. आपत्रआक्रोश

आक्षेपः A. °सोत्प्राशोपहासा : A. °सोत्प्रासः सोपहासाः R. — 152. प्रह्लीका. The reading approved by the best authorities is प्रवल्हिका. — 153. द्वित्रिव्या° AR. — 154. आकरणा° A.

# BOOK II.

1ᵇ. धरिणी A. — 3. °द्रिणाम्° CDR. खिलमप्रहितं CDR. — 4. It would be more correct to write शाद्वलं. See P. IV, 2, 88. — 11. सानुः CD. प्रसवो ABCF. प्रश्रवो R. — 12. पर्यंत-पर्वताः CDF. — 15. °मुदंबरं ACDF. — 18. भस्म instead of भर्म A. हर्म्यं F. — 20. च after मरकतं ABEF. — 20. स्याद्वै-डूर्यं ABCFR. — सर्वलोहं CD. — 22. घ्रिपः CD. कुञ्ज ACDEF. °रनोकुह, द्रुविष्टिर° A. — 23. ह्रस्वशिखः शाखी ACDR. ह्रस्वशिखशाखी F. ह्रस्वशाखः शिखी E. स्मृतः instead of फली CDER. — 24. पुष्यंति Mss. — 27. स्कंधशाखास्तु AFR. स्कंधशाखासु CD. — 30. बर्ह्ं पत्रं दलं पर्णं CD. — 31. प्रसवं CDEF. — 32. उद्घई AF. — 32. विकाश° EFR. — 33. गुंछो गुलंछः A. गुंछो गुलुंछः R. गुत्सो गुलुंछः E. ग्लुछो ग्लुंछः F. pr. m. गुंछो ग्लुंछः F. s. m. — 34. शिलाटुः A. शलाटु CDE. शलाडुः F.

शंबा ACDFR. शंवा E. According to Râyamukuta it ought to be written सिंवा. पर्व पुरः स्मृतः F. — 36. यवसं प्रोक्तं A. बार्ह्हिर्दर्भकुथः स्मृतः D. बर्ह्हिर्दर्भकथः स्मृतः C. कुथः कुशः FR. विल्वजः AE. बिल्वजः R. ईषिका काय CD. इषीका कास FR. — 38. पलिनी CD. — 39. करणो ADF. कुवला CD. — 40. शालं ACDFR. इज्जुलः A. इचुलः CD. प्रोक्तः गज्जलो E. प्रोक्त वंजुलो F. — 42. शैलुः CD. शलुः R. — 44. पीतशालो ACDFR. सह्लदेवी CD. — 45. शंडुवारः A. सिंधुवारः CD. — 46. सीतो CDF. Boehtlingk in his edition of Hemacandra has printed सीत against the authority of the commentary. स्थूलशृं° ACD. — 47. केशातकी A. शाकातकी पटोला CD. — 52. °ममिलानकं AR. °ममिल्लातकं CE. °मसिल्लातकं D. Râyamukuṭa quotes this verse in his comm. on Am. II, 4, 2, 54, and writes अमल्लातकं and कुरुंटकं. करंटकं AF. कुरुंटकं R. — 53. माधवीलता AE. माधवीं माधवीं लतां C. माधवौ लता D.—54. ईर्वारश्चर्भटः A. एर्वारुश्चिर्भटः CD. एर्वार श्चिर्भटः F. एर्वातुश्चितिः E. एर्वारुश्चिर्भिटः R. वालुंकी AR. डुश्चिका A. डुग्घिका C. डुधिका D.—55. नातिनानार्थ° CDE.—57. तरुषंडः ACD. — 58. °कंठं CD. — 61. मूर्ध्नि F. करकः A. °कटो गुंजो R. कटो गंजो F. करशीरः E. — 62. From दशनौ to प्रोक्तं in

v. 64. is wanting in CD. — 64. पेचुकः AE. पचकः CD. पेयुकः F. — 65. स्याड्डडातो E. तिर्यग्दृत्तः प्र° AR. — 66. सर्जितः AF. भूषा CDEFR. and A. pr. m. कत्ता DEFR. वत्ता C. — 67. पादकर्म युतं CDF. पादकमायतं A. उभयो A. उभय D. — 69. सृणि ACDR. श्रेणि° F. सान्नाह्यः A. सनाह्यः R. — 70. From मत्हामात्रा to द्वीपी is omitted in CD.—71. करिश्च A. किरश्च FR. विडिश्च A. — 72. सेरभ ACDF. सेरिभ R. — 73. °भाल्लूक° CD. — 74. °भूरिमायु EFR. स्यात् मृगालो R. स्याङ्गोलो CD. फेरुडः ER. — 75. अच्चः CDR. तप्रसाराः D. तप्रस्याराः C. — 78. शल्यकः D. — 79. मुशली CD. गोधेरा° ABDEFR. गोघेरा C. — 80. स्याड्डुरुः CD. स्याड्दरः E. — 83. विर्विकरस्तथा A. — 84. वाजिस्तथा EFR. — 85. पेशीकोशः According to Râyamukuṭa this term signifies 'egg' as a compound, or it may be separated into पेशी and कोशः — 90. From धांत्त° to धांत्त° is omitted in CD. — 91. मौष्कलि° ACD. मौकलि° ER. Purushottama gives another term very similar in sound, मौद्गलि.—92. भाश A. — 94. शराररिाख्यात उत्क्रो° CDEF. — 95. आतापी ACEFR. — 98. प्राचिका mss. सेना चटिका A. सेनाश्चिटिका E. सेनाश्चिटिकाः F. — 99. कारंडवकादंबकचक्रकाराद्याः A. कारं कारंडवकादंबकराद्याः CD. कादवः कदंबकः क्रकराद्याः E.

कारंडवकादंबकः कृकराख्या F. कारंडवकादंबककक्ककराख्याः R. — 100. °चिंचिरीका° AD. °चिंचरीका° R. °चिरीका° C. — 101. °जालिकक्रिमयश्च A. °क्रिमयश्च A. °क्रम° F. — 102. ज्योतिरिंगिणः CDR. ज्योतिरिंगणः E. द्योतिरिंगिणः A. द्योतिरंगणः F. — 103. तु instead of च CD. — 106. परिकीर्तितं CD. — 109. स तु CDE. — 111. स्थौरी R. °त्पृष्टि° A. — 112. नीचिकी E. — 114. प्रौढवत्सा च CD. — 115. सूरता E. सूरिना E. सूरिता R. — 116. नीचकी AFR. नैचका CD. — 117. प्रचुरप्रवृत्तिः CD. — 122. दामिनी AEF. वस्तः छागः R. गड्डः छाग° A. बस्तुः छागः C. वस्तुः छागः D. वर्त्सम्छाग° E. गड्डछागड्डगल° F. — 123. °व्यंजनस्तु A. — 127. °कडूरिति ACDR. विश्वडूरिति E. — 128. पट्व° AE. षड्ड° C. षड्ढ° D. — 129. उपपर्वत° CD. — 132. °ज्ञयनी FR. — 133. हस्तिनाखं E °कुररकं A. °कुररिं E. °कुररीं C. °कुररं D. कुररविं F. — 134. च for तु CDE. — 135. वास्तु E. It is wanting in CD. — 138. गृह्मिष्ट° R. AFR. insert च after आयतनं, A. also before हर्म्यं. The whole stanza is wanting in CD. — 139. इंद्रकोशस्तु° A. आवेशिनं A. — 143. व्रतिनां शाला CD. — 146. °माला च CDEFR. °रोह्णी A. रोह्नि CD. — 147. गृह्णावगृह्णिणी ACF. गृह्णाचगृह्णिणी D. देहली च CDEF. वस्करः E. विक्करः F. — 148. नीध्रं CD.

°पाली and संज्ञां R. — 149. गवाक्षस्तु R. प्रकोष्ठ स्यात् CD. प्रकाष्ठं तु E.— 151. परिस्यंद: CD. परिकंद: AFR. तथोपकारणां CD. — 152. उपाश्रयस्तु A. आयाश्रयस्तु CD. अपाश्रियस्तु F. Wanting in E. — 153. नवनं AFR. — 155. खंजक° E. खज्जक° F. कद्° C. कडु° D. — 157. खद्रिका CD. Am. and HC. have only खज्जाका. — 158. °मुध्मानं A. °मुड्डानं CDE. ° मुद्दानं R. °मधानं F. — 161. कौशिका E. — 162. मंथिनी CDFR. — 163. कांचिकं CD. शुक्ति° CD. सुक्त° A. शिक्त° E. — 164. क्रूरं E. तथोदनं भित्सा A. तथौदनो भित्सा EFR. तथोदनो भि:सा CD. पूपिका CD — 165. तरणां ACDR. तरुणां F. नरणां E. क्षीरेयी AF. क्षैरेयं CE. क्षेरेयं D. — 166. मिष्टान्नं भोजनं ज्ञेयं R. वेसवार A. वेशवार CDF. कारंबो CDE. — 167. मतं instead of स्मृतं FR. — 168. From संसिद्धं in the preceding stanza to संसिद्धं is wanting in CD. उव्य° मुखायां AFR. उव्यमुखाया E. — 169. फाणितं AR. फणितं CDE. — 172. °चानुकर्षश्च CDE. — 173. °त्संपीति: CD. °पदंशो FR. — 174. सीधु ACDFR. परिश्रुता ABEFR. परिस्मृता CD. सुंडा ABFR. सुडा CD. — 175. कस्यं ACDFR. परिश्रुद्दा AR. परिशुड्डा° E. परिस्मृड्डा° CD. — 182. °पशदम° A. °मपकृष्ट R. — 185. पाटचर: ACDF. पट्टचौरो E. — 187. काखट: A. कषड: CDR. कषढ: F. Omitted in E. which has कर्कशो दृढ उच्यते. वल्लत E. —

188. आर्यः परिहृढः CDE. — 189. अन्नोह्वरिणा° CD. ररोह्वरणा° F. The whole stanza is omitted in ER. — 190. अवणाश्च AEFR. मधमारी A. निर्ग्रंथः AF. निर्गंथः CD. — 193. इतरः AEF. — 194. दांडाजनिकः A. दंडाजनिकः CDE. दांडोजनिकः F. दंडाजिनकः R. See P. V, 2, 76. कापठिको CDR. — 196. पैरधिकः CD. पैर्धृतः E. सौष्कलः E. and A. pr. m. मौष्कलः A. s. m. मौष्कलिः DFR. मोष्कलिः C. — 197. प्रह्वितः CDF. — 198. प्रोक्तं for लोलं CD. उत्सकः AEFR. प्रस्ततः E. प्रसितः R. — 201. मह्वात्म्यो° A. माह्वात्म्यो F. — 202. आभ्यागा° AR. कुटंब° AEFR. — 203. जंवालो A. जांघालो CD. जंघाजो E. आवेशकः ACDEF. प्राघुणिक CDFR. प्राघ्युणिक E. — 204. वनीयकः D. — 205. ज्ञुद्गान् A. ज्ञुड्ढान् E. ज्ञु CD. बुभुज्ञितप्सतो C. बुभुज्ञितप्सातो D. — 207. इष्यते for उच्यते CDE. — 208. तृग्निको E. — 209. लिप्सा च शाथनाया C. लिप्सा च शाधनाया D. लिप्सा स्याड्डनाया E. लिप्सा स्याद्दनाया F. प्रासितः ER. — 211. प्राणाघः A. प्रेणाय्यः CD. प्राणाद्यय्यः E. प्रोणाय्यः F. प्राणाय्ये R. See P. III, 1, 128. — 214. °स्तिमान्स्मृतः E. °स्तिवान्मतः AR. °स्तिभवा मतः E. प्रेन्त्यः R. प्रेन्तः F. — 219. सुमुखः ACDF. The whole stanza is wanting in E. — 220. शीली CD. — 223. °त्कह्वरः ACF. करह्वरः D.

कांडूर: E. प्रकांडोघ्नौ AEF. प्रकांडोघौ R. प्रकांडाब्धौ CD. — 225. नार्थश्च कथ्यते CD. वात्तश्च कथ्यते E. नार्त्तश्च कथ्यते FR. — 226. बलवान्मांसलो E. — 227. पक्षविक: CDE. — 228. दीर्घसूत्री AER. निष्कृतो A. नि:कृतो E. नि:क्रुष्टो F. स्यादूर्द्धमूर्द्धमः स्थित: E. स्यादूर्द्धमूर्द्धमवस्थित: R. स्यात् ऊर्धमूर्धमद्स्थित: C. स्यात् ऊर्धमूधमर्द्स्थित: D. स्यादूर्द्ध ऊर्द्दमास्थिति:E.—232. सीतको ACD. शीतगो E. विपुलांग: A. —233. दरोदरं AE. —234. कुलीनश्च कु° AE.—239. कर्मसां° AD. कर्मसो° C. — 241. °भिजनं A. °भिजन R. — 242. This and the preceding stanza are wanting in CD. — 244. शांत: श्रांतश्च A. —245. शैक्ष्य: A. शिष्य: CD. शैष्य: R.— 246. °णमिति स्मृतं A. — 247. शंसितश्च AR. — 248. ज्योतिषको CD. —250. धर्मधजो. Both Am. and HC. write धर्मधजी. कांडपृष्टो CD. कांडपृष्टे E. °द्विजाधम: R. °द्विजोत्तम: CD. — 251. अब्रह्मण्यवर्ण्यं D. अब्रह्मण्यं C. अब्रह्मण्यमवर्ध्यं R. ब्रह्मणो D. ब्राह्मणे AER. — 254. पारिरक्षक: CER. परिरक्षक: D. — 255. वैकल्य° CD. वैकक्ष्य° R. — 256. वृसी A. भृसी E. — 260. पारिस्कृता mss. — 261. सान्नायं CD. नार्यह्वविरूच्यते E. See the notes on HC. 3, 495. आमिष्या AR. आमक्ष: E. — 264. विह्वायनमं- ह्नि° A. विह्वायितमं° CD. विह्वायतमं° E. विक्षायनमं° R.

निर्वापणं AR. निर्व्रापणं E. — 266. °पालाश्च ER. — 268. च instead of तु CD. प्रकीर्तितं ACD. — 270. गूढपौरुष: ADR. गूढपोरुषः C. व्हरक CD. धेरिक E. The comm. to HC. 3, 397 writes व्हैरिक without giving a derivation.—272. मह्रामात्यः AE. प्रधानः E. प्रधानः प्रधानः स्या° R. — 274. स्तयो E. स्नेयो CD. — 275. वर्षचरः CD. उभयं व्यंजनं mss. पोटो A. योथोया CD. — 277. केलिकत्तो CE. केलिकल D. केलिकिरो R. pr. m. केलिकरो R. s. m. — 279. लंबोत्को° A. नुचोत्कों° CD. लंकोत्को° E. — 280. आक्रोटनं AR. अक्रोएनं CD. आक्रोदनं D. °खोटकमि° CD. °खेटकमि° E. — 281. तात्तो AE. — 285. सूकलो E. HC. IV, 301. writes शूकल. — 286. कस्यं CDR. खुराः शिफाः R. pr. m. खराः शफाः R. s. m. — 287. कसा A. कसाः R. वल्गारश्मिकशाः स्मृताः A. वल्गुरश्मिः कशा स्मृता CD. बलारश्मिकुशाः स्मृताः E. वल्यारश्मिकुशाः स्मृताः R. — 290. अधन्यः A. वैनविको अधन्यः E. वैनयको अधन्यः R. पारियात्रकः CD. पारियातिकः R. तनयं CD. नयनं E. — 291. सांपरायकः R. — 294. युग्मं E. युग्घं C. युग्धं D. — 295[a]. पदातिपादातिपादिकपदातयः C. पदातिपत्तिपादातिपादिकपदातयः D. पदातिः पादतिः पत्तिः पदातिकः पदातयः E. पदातिः etc. R. — 295[b]. पादाकः पदिकश्चेति C.

पादाकः पदिक पदिकश्चेति D. पादतः पदिकश्चेति E. पदातः पदिकश्चेति R. — 296. केलिका CDER. — 298. संजिल्कलिःA. संस्फोटःER. संस्फोटो CD. प्रविदारणं CD. — 300. अभिजाति° CDR. — 303. तु for च E. — 304. संनाहं E. — 308. त्तुरकादिकं CDE. — 309. स्थान्मूर्वी A. — 310. °वेदटिनिः A. वेदटनी CD. °वेदटिनः E. — 311. °कदंबाः A. — 312. This stanza is wanting in CD. — 319. परस्वधः AE. निशानं A. निशांतं CE. निशांतां D. — 321. °पट्टिश° mss. °मुषंडी° A. °भृशंडी° CD. °मुखंढी° E. °मुखंढी° R. The comm. to HC. III, 451. writes मुखुंढी. भिंडिमाला° CD. भिंडिमाल° E. भिंडुमाल° R. Am. and HC. have भिंदिपाल. — 322. निःसरणं CD. निसरणं E. — 323. HC. III, 34 reads प्रमयः. — 324. जितकासी A. — 328. Râyamuk. on Am. II, 6, 1, 17. reads कोट्टवी. — 332. च निष्फला ACD. तु निष्फली E. अवणा AR. अमणा CD. — 333. बिडुः C. विंडुः D. किंडुः E. भिडुः R. HC. reads निंडुः — 334. मत्तकामिनी AR. मत्तगामिनी E. मतकाशिनी CD. — 336. तु for च CD. — 337. कुह्निनी CD. Am. and HC. write कुट्टनी. चुंढी AR. चंडी CD. कुट्टि° A. कुदि° CD. — 338. च for तु CDR. — 339. गृह्णणी ADE. — 340. कुलवालिका E. कुलबाधिका CD. — 341. बंधका Am. and HC. धर्षणी ER. दुर्विनीता CD.

करटो गजगण्डे स्यात् कुसुम्भे निन्द्यजीविनि।
एकादशाहादिश्राद्धे दुर्द्दुरूटेऽपि वायसे ॥३७॥
करटो वाद्यभेदेऽथ कार्प्पटो जतुकार्य्यिणोः।
कीकटः कृपणे निःस्वे त्रिषु पुंभूम्नि नीवृति ॥३८॥
कुरुण्टी दारुपुत्र्यां ना झिण्ट्यम्लानप्रभेदयोः।
कुक्कुट्यनृतचर्य्यायां पुंसि स्यात् चरणायुधे ॥३९॥
निषादशूद्रयोः पुत्रे तृणोल्कायाञ्च कुक्कुभे।
कुनटी मनःशिलायां नैपाल्यामपि योषिति ॥४०॥
कपीटमुदरे तोये केशटो हर्य्यजौकसे।
चर्पटः स्फारविपुले चपेटे पर्प्पटेऽपि च ॥४१॥
चक्राटो विषवैद्ये च धूर्त्तदीनारयोरपि।
चिपिटः खाद्यभेदे ना त्रिषु पिच्छिकविस्तृते ॥४२॥
चिरण्टी च सुवासिन्यां स्याद् द्वितीयवयःस्त्रियाम्।
जकुटं वार्त्ताकुपुष्पे जकुटो मलये शुनि ॥४३॥
त्र्यङ्कटं शिक्यभेदेऽपि धौताञ्जन्याञ्च न द्वयोः।
त्रिकूटं सिन्धुलवणे त्रिकूटः पर्व्वतान्तरे ॥४४॥
त्रिपुटा मल्लिकायाञ्च सूक्ष्मैलात्रिवृतोः स्त्रियाम्।
सतीलके च तीरे च त्रिपुटः समुदाहृतः ॥४५॥
द्राहाटः कथितो गाथाप्रभेदे मृगलुब्धके।
वैड़ालव्रतिके चाथ धाराटश्चातकाश्वयोः ॥४६॥

निर्द्दटस्तु दयाशून्ये कथितो निष्प्रयोजने ।
परापवादरक्ते च वाच्यलिङ्गोऽयमिष्यते ॥४७॥
निष्कुटस्तु गृहोद्याने स्यात् केदारकपाटयोः ।
पर्क्कटी नूतनफले पूगादेः प्लक्षपादपे ॥४८॥
परीष्टिः परिचर्य्यायां प्राकाम्येऽन्वेषणे स्त्रियाम् ।
पर्प्पटी पिष्टभेदे स्यात् पर्प्पटो भेषजान्तरे ॥४९॥
पाच्चटः कर्पटे पुंसि कृशे स्यादभिधेयवत् ।
पिच्चटो नेत्ररोगे स्यात् क्लीवं सीसकरङ्गयोः ॥५०॥
बरटो द्वयो र्बरट्यां स्त्री हंस्यां तत्पतौ पुमान् ।
बर्व्वटी पण्ययोषायां व्रीहिभेदेऽपि योषिति ॥५१॥
बेकटः स्याद् वैकटिके मत्स्यभेदे च यूनि च ।
भावाटो भावके साधौ निवेशे कामुके नटे ॥५२॥
भाकूटः शैलझषयो र्भेदे स्यादथ मर्कटी ।
करञ्जभिच्छुकशिम्ब्योः पुंसि वानरलूतयोः ॥५३॥
मोचाटः कृष्णजीरे च रम्भास्थि मलयोद्भवे ।
मोरटन्तु भवेदिक्षुमूलाङ्कोठप्रसूनयोः ॥५४॥
सप्तरात्रात् परक्षीरे मूर्व्विकायान्तु मोरटा ।
वर्णाटो गायने चित्रकरे स्त्रीकृतजीवने ॥५५॥
विकटा वज्रवाराह्यां त्रिषूग्रविकरालयोः ।

शाकटं शकटस्येदमित्यर्थे तस्य वोढरि ॥५६॥
शैलाटो देवले सिंहे शुक्लकाच-किरातयोः ।
संसृष्टं त्रिषु संसर्गे संशुद्धे वसनादिना ॥५७॥

टचतुष्कम् ।

उच्चिङ्गटस्तृणगडूमत्स्यकोपनयोः पुमान् ।
करहाटः शिफाकन्दे पद्मस्य मदनद्रुमे ॥५८॥
स्यात्कार्य्यपुटः क्षपणोन्मत्तानर्थकरेषु च ।
कामकूटस्तु वेश्यायाः प्रियविभ्रमयोः पुमान् ॥५९॥
कुटन्नटन्तु कैवर्त्तीमुस्तके पुंसि शोणके ।
कुण्डकीटस्तु चार्व्वाकवचनाभिज्ञपूरुषे ॥६०॥
पतितब्राह्मणी पुत्र-दासीकामुकयोरपि ।
खड्गरीटस्तु फलकासिधारव्रतधारिणोः ॥६१॥
गाढमुष्टिः कृपाणे ना कृपणे त्वभिधेयवत् ।
चक्रवाटः क्रियारोहे पर्य्यन्ते च शिखातरौ ॥६२॥
चतुःषष्टिः कलासङ्ख्याभेदयो र्वऋचि स्त्रियाम् ।
नारकीटोऽश्मकीटे स्यात् स्वदत्ताशाविहन्तरि ॥६३॥
परपुष्टः परभृते वारनार्य्यान्तु योषिति ।
प्रतिकृष्टं मतं गर्ह्ये द्विरावृत्त्या च कर्षिते ॥६४॥
प्रतिसृष्टः प्रेषिते स्यात् प्रत्याख्याते च वाच्यवत् ।
वर्करा्टः कटाक्षे स्यात् तरुणादित्यरोचिषि ॥६५॥

नारीपयोधरोत्सङ्ग-कान्तदत्तनखक्षते।
शिपिविष्टस्तु खल्वतौ शिवे दुश्चर्म्मणि स्मृतः ॥६६॥
अथ श्रुतिकटः प्रायश्चित्तेऽहौ पापशोधने।

टपञ्चकम्।

दशनोच्छिष्टः पुंसि स्यात् निश्वासाधरचुम्बयोः॥६७॥

टान्तवर्गः समाप्तः।

---

ठैककम्।

ठो मण्डले चन्द्रबिम्बे शून्ये च लोकगोचरे।

ठद्विकम्।

कठो मुनौ तदाख्यातवेदाध्येतृकयोः स्वरे ॥१॥
कण्ठो गले सन्निधाने ध्वनौ मदनपादपे।
काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः ॥२॥
स्थानमात्रे दिशि च स्त्री दारुणि स्यात् नपुंसकम्।
कुष्ठं रोगे पुष्करेऽस्त्री कुण्ठोऽकर्म्मण्यमूर्खयोः ॥३॥
कोष्ठः कुसूले चात्मीये मध्ये कुक्षे गृहस्य च।
गोष्ठं गोस्थानके गोष्ठी सभासंलापयो स्त्रियाम् ॥४॥
ज्येष्ठः श्रेष्ठेऽतिवृद्धे च त्रिषु मासान्तरे पुमान।
ज्येष्ठा तु गृहगोधाख्यजन्तुनक्षत्रभेदयोः ॥५॥
निष्ठा निष्पत्तिनाशान्तयाञ्चानिर्वहणेषु च।

प्रष्ठस्त्रिष्वग्रगे श्रेष्ठे पुंसि चाण्डालिकौषधौ ॥६॥
पाठस्तु पठने ख्यातो विद्धकर्ण्यान्तु योषिति ।
पृष्ठं चरमगात्रेऽपि देहस्यावयवान्तरे ॥७॥
वण्ठः स्यादकृतोद्वाहे खर्व्वे कुन्तायुधेऽपि च ।
शठो मध्यस्थपुरुषे धूर्त्त-धूस्तूरयोरपि ॥८॥
श्रेष्ठो वरे कुवेरे च शेठो मूर्खेऽलसेऽपि च ।
षष्ठी कात्यायनीतिथ्योः स्त्रिषु षण्णाञ्च पूरणे ॥९॥
हठः स्यात्प्रसभे प्रश्नग्रां हेठो बाधाविहेठयोः ।

ठत्रिकम् ।

अपष्ठुः पुंसि काले च वामे स्यादन्यलिङ्गकः ॥१०॥
अम्बष्ठो देशभेदेऽपि विप्राद् वैश्यासुतेऽपि च ।
अम्बष्ठा चाम्ललोण्यां स्यात्पाठायूतिकयोरपि ॥११॥
कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम् ।
कनिष्ठोऽतियुवाल्पयोरनुजे स्त्री दुर्बलाङ्गुलौ ॥१२॥
जरठः कर्कशे पाण्डौ कठिनेऽप्यभिधेयवत् ।
नर्म्मठश्चुचुके षिङ्गे प्रतिष्ठा गौरवे स्थितौ ॥१३॥
स्थाने च यागनिष्पत्ति-चतुरक्षरपद्ययोः ।
प्रकोष्ठो मणिबन्धस्य कुर्परस्यान्तरेऽपि च ॥१४॥
भूपकक्ष्यान्तरेऽपि स्याद् वरिष्ठं मरिचेऽपि च ।
ताम्रे क्लीवं तित्तिरौ ना वरोरुतरयोरपि ॥१५॥

मकुष्ठो व्रीहिभेदे ना मन्थरे पुनरन्यवत्।
लघिष्ठोऽत्यल्पके भेले वैकुण्ठः कृष्णशक्रयोः ॥१६॥
श्रीकण्ठो देशभिद्युग्मे साधिष्ठोऽतिदृढार्य्ययोः।

ठचतुष्कम्।

कलकण्ठः कलध्वाने हंसे पारावते पिके ॥१७॥
कालकण्ठस्तु दात्यूहे कलविङ्के च खञ्जने।
मयूरे पीतसारे च स्यात् खण्डपरशौ पुमान् ॥१८॥
कालपृष्ठं कर्णचापे पुंसि कङ्कविहङ्गमे।
स्याद् दन्तशठो जम्बीरे कपित्थे कर्म्मरङ्गके ॥१९॥
नागरङ्गेऽपि च पुमान् स्याच्चाङ्गेर्य्यान्तु योषिति।
पूतिकाष्ठन्तु सरल-देवदारुमहीरुहोः ॥२०॥
सूत्रकण्ठः पुमान् विप्रे खञ्जरीटकपोतयोः।
हारिकण्ठः पिके पुंसि हारान्वितगले त्रिषु ॥२१॥

ठान्तवर्गः समाप्तः।

---

डैककम्।

डः पुमान् वाड़वाग्नौ स्याड् डाकिन्यां स्त्री निगद्यते।

डद्विकम्।

अण्डं मुष्के च पेश्यां स्यादिड़ा तु बुधयोषिति ॥२॥
सौरभेय्याञ्च वचने वसुमत्यामपि स्त्रियाम्।

काण्डः स्तम्बे तरुस्कन्धे वाणेऽवसरनीरयोः ॥२॥
कुत्सिते वृत्तभिन्नाड़ीवृन्दे रहसि न स्त्रियाम् ।
क्रीड़ा केलिप्रकारे स्यात् खेलावज्ञानयोरपि ॥३॥
कुण्डमग्न्यालये मानभेदे देवजलाशये ।
कुण्डी कमण्डलौ जारात् पतिवत्नीसुते पुमान् ॥४॥
पिठरे तु न ना च्वेडो ध्वनौ कर्णामये विषे ।
च्वेड़ा वंशशलाकायां सिंहनादे च योषिति ॥५॥
लोहितार्कपर्णफले घोषपुष्पे नपुंसकम् ।
दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्त्तितः ॥६॥
क्रोड़ः शनौ शूकरे ना नपुमानङ्करक्षसोः ।
खण्डोऽस्त्री शकले नेक्षुविकारमणिदोषयोः ॥७॥
खड़ः पानान्तरे भेदे गण्डः स्यात् पुंसि खड्गिनि ।
ग्रहयोगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च ॥८॥
चिह्नवीरकपोलेषु हयभूषणवुद्बुदे ।
गडुः पृष्ठगुडे कुब्जे गड़ो मीनान्तराययोः ॥९॥
गुडः स्याद् गोलके हस्तिसन्नाहेक्षुविकारयोः ।
गुड़ा स्नुह्यां च कथिता गुड़िकायां च योषिति ॥१०॥
गोण्डः पामरजातौ च वृद्धनाभौ च तद्वति ।
चण्डो ना तिन्तिड़ीवृक्षे यमकिङ्करदैत्ययोः ॥११॥
चण्डी कात्यायनीदेव्यां हिंस्रकोपनयोषितोः ।

चण्डा धनहरीशङ्खपुष्प्योः स्त्रियमतिकोपने ॥१२॥
तीव्रेऽपि चूडा वडभौ शिखायां बाहुभूषणे ।
चोडः प्रावरणे भूम्नि देशभेदे जडा स्त्रियाम् ॥१३॥
मूकशिम्बयां हिमग्रस्तमूकाप्राज्ञेषु तु त्रिषु ।
ताडस्तु ताडने घोषे मुष्टिमेयतृणादिषु ॥१४॥
ताडी पत्रद्रुमे चाथ दण्डोऽस्त्री लगुडे पुमान् ।
व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि ॥१५॥
सैन्ये काले मानभेदे चण्डांशोः पारिपार्श्विके ।
दमे यमेऽभिमाने च नाडी नाल्ने व्रणान्तरे ॥१६॥
शिरायां गण्डदूर्व्वायां चर्य्यायां कुहनस्य च ।
तथा षट्क्षणकालेऽपि नीडं स्थानकुलाययोः ॥१७॥
पण्डः षण्डे धियि स्त्री स्यात् पाण्डु र्ना नृपतौ सिते ।
पिण्डो वोले बले सान्द्रे देहागारैकदेशयोः ॥१८॥
देहमात्रे निवापे च गोलसिह्लकयोरपि ।
ओड्रपुष्पे च पुंसि स्यात् क्लीवमाजीवनायसोः ॥१९॥
पिण्डी तु पिण्डीतगरेऽलाबुखर्ज्जूरभेदयोः ।
पीडा कृपाशिरोमालाऽपमर्द्दसरलद्रुषु ॥२०॥
भाण्डं पात्रे वणिङ्मूलधने भूषाश्वभूषयोः ।
मण्डः पञ्चाङ्गुले शाकभेदे क्लीवन्तु मस्तुनि ॥२१॥
आमलक्यां स्त्रियां मण्डाथाऽस्त्रियां सारपिच्छयोः ।

मुण्डो दैत्यान्तरे राहुग्रहे ना मुण्डिते त्रिषु ॥२२॥
मुण्डा मुण्डीरिकायां स्यात् स्त्रियामस्त्री तु मूर्द्धनि ।
रण्डा मूषिकपर्ण्याञ्च विधवायाञ्च योषिति ॥२३॥
रोडः क्षोभे भवेत् पुंसि तृप्ते तु वाच्यलिङ्गकः ।
वण्डा तु पांशुलायां स्त्री त्रिषु हस्तादिवर्ज्जिते ॥२४॥
व्याडो हिंस्रपशौ सर्पे शुण्डा पानगृहे मता ।
अप्यम्बुहस्तिनीवेश्याहस्तिहस्तसुरासु च ॥२५॥
शौण्डो मत्ते च विख्यातः पिप्पल्यान्तु भवेत् स्त्रियाम् ।
षण्डं पद्मादिसङ्घाते न स्त्री स्याद् गोपतौ पुमान् ॥२६॥

डत्रिकम् ।

करण्डो मधुकोषासिकारण्डेषु दलाढके ।
कुष्माण्डप्रमायां स्त्री पुंसि कर्क्कारौ च गणान्तरे ॥२७॥
भ्रूणान्तरेऽथ कोदण्डं चापे ना नीवृदन्तरे ।
भ्रुव्यथो गारुडं क्ष्वेडमन्त्रे मरकतेऽपि च ॥२८॥
तरण्डो वडिशोसूत्रबद्धकाष्ठादिके प्लवे ।
नौकायामपि नस्त्री स्यात् तिन्तिडीडिम्बचिञ्चयोः ॥२९॥
द्राविडो देशभिज्जाते सङ्ख्याभिद्वेधमुख्ययोः ।
निर्गुण्डी नीलशेफाल्यां सिन्धुवारद्रुमेऽपि च ॥३०॥
प्रचण्डो दुर्व्वहे श्वेतकरवीरे प्रतापिनि ।
प्रकाण्डो नस्त्री विटपे मूलशाखान्तरे तरोः ॥३१॥

शस्ते पिचिण्ड उदरे पशोरवयवे पुमान्।
पूत्यण्डो गन्धकोटेऽपि तथा जन्त्वन्तरे पुमान् ॥३२॥
वरण्डोऽप्यन्तरावेदौ समूहमुखरोगयोः।
वारुण्डी द्वारपिण्ड्यां स्त्री फणिनां राजके पुमान् ॥३३॥
नस्त्रियां सेकपात्रे च मलेऽद्यणः श्रवणस्य च।
भेरुण्डा देवताभेदयक्षिण्यन्तरयोः स्त्रियाम् ॥३४॥
भयानके वाच्यवत् स्यात् मार्त्तण्डः क्रोड सूर्य्ययोः।
मारुण्डोऽण्डे भुजङ्गीनां मार्गे गोमयमण्डले ॥३५॥
वरण्डा सारिकावर्त्तिशस्त्रभेदेषु योषिति।
वितण्डा वादभेदे स्यात् कच्ची शाके शिलाह्वये ॥३६॥
करवीर्य्यामपि स्त्री स्यात् शिखण्डो वर्हचूडयोः।
सरण्डस्तु पुमान् धूर्त्ते सरटे भूषणान्तरे ॥३७॥

डचतुष्कम्।

अपोगण्डन्तु बलिभे विकलाङ्गे शिशावपि।
चक्रवाडोऽद्रिभेदे स्यात् चक्रवाडन्तु मण्डले ॥३८॥
जलरण्डो जलावर्त्ते पयोरेणौ भुजङ्गमे।
देवताड़ः सैंहिकेये जीमूते च हुताशने ॥३९॥
अथ वातशुण्डा वात्यावातशोणितयोरपि।
पिच्छिलस्फोटिकायाञ्च वामायामपि योषिति ॥४०॥

डान्तवर्गः समाप्तः।

ढैकक्म्।

ढो ढक्कायां पुमानुक्तः ध्वनि तस्य च लाङ्गुले।

ढद्विकम्।

गूढं रहसि गुह्ये च न द्वयो संवृते त्रिषु ॥१॥
दृढं स्थूले नितान्ते च प्रगाढ़ बलवत्यपि।
माढ़िः स्त्री पत्रभङ्गा च दैन्यस्यापि प्रकाशने ॥२॥
मूढस्तु तन्द्रिते बाले राढा स्त्री सूक्ष्मशोभयोः।
रूढं जाते प्रसिद्धे च वाढं दृढ़प्रतिज्ञयोः ॥३॥
व्यूढः संहतविन्यस्तपृथुलेष्वभिधेयवत्।
वोढा ना भारिके सूते षण्ढः स्यात् पुंसि गोपतौ ॥४॥
आक्षष्टाण्डे वर्षवरे तृतीयाप्रकृतावपि।
सोढा तितिक्षासंयुक्ते शक्ते चाप्यभिधेयवत् ॥५॥

ढत्रिकम्।

अध्यूढा कृतसापत्न्यनार्य्यामध्यूढ ईश्वरे।
आषाढो व्रतिनां दण्डे मासे मलयपर्व्वते ॥६॥
स्त्री पूर्णिमायामालीढं पादन्यासेऽशिते त्रिषु।
उदूढः ऊढ स्थूले स्यादुपोढो निकटोढयोः ॥७॥
प्रगाढ़ क्षच्छ्रदृढयोः प्रमीढो मूत्रिते घने।
प्ररूढो जठरे बद्धमूले वारूढ इत्ययम् ॥८॥
वस्त्राञ्चले कपाटेऽग्नौ पञ्जरे सम्बलेऽपि च।

विरूढोऽङ्कुरिते जाते विगूढो गर्हिते त्रिषु ॥९॥
गुप्तेऽपि त्रिषु संरूढः प्रौढे चाङ्कुरिते त्रिषु ।
समूढः पुञ्जिते भुग्ने सद्योजातेऽनुपप्लुते ॥१०॥

ढचतुष्कम् ।

अध्यारूढं समारूढेऽत्यधिके चाभिधेयवत् ।
खट्वारूढः श्रिते खट्वामविनीते च वाच्यवत् ॥११॥
प्रत्यालीढस्तु चरणन्यासभेदेऽशिते त्रिषु ।

ढान्तवर्गः समाप्तः ।

---

णैककम् ।

णः पुमान् विन्दुदेवे स्याद् भूषणे गुणवर्जिते ।
पानीयनिलये चापि केचिदाहुर्विपश्चितः ॥१॥

णद्विकम् ।

अणुर्व्रीहिविशेषे स्यात् पुंसि सूक्ष्मेऽभिधेयवत् ।
अणिराणिवद्वयाग्रकीलाश्रिसीमसु द्वयोः ॥२॥
उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गकः ।
ऊर्णा मेषादिलोम्नि स्यादन्तरावर्त्तके भ्रुवोः ॥३॥
कर्णः पृथाज्येष्ठपुत्रे सुवर्णालौ श्रुतावपि ।
क्षणः पर्व्वोत्सवाव्यापारेषु मानेऽप्यनेहसः ॥४॥
कणा जीरककुम्भीरमक्षिकापिप्पलीषु च ।

कणोऽतिसूक्ष्मे धान्यांशे काणः काकैकचक्षुषोः ॥५॥
कीर्णं छन्ने च विक्षिप्ते हिंसितेऽप्यभिधेयवत्।
कुणिस्तुन्नकवृक्षे ना कुकरे त्वभिधेयवत् ॥६॥
कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्ज्जुने।
कृष्णा स्याद् द्रौपदीनीलीकणाद्राक्षासु योषिति॥७॥
मेचके वाच्यलिङ्गः स्यात् क्लीवं मरिचलोहयोः।
कोणो वाद्यप्रभेदे स्याद् वीणादीनाञ्च वादने ॥८॥
एकदेशे गृहादीनामस्रौ च लगुडेऽपि च।
गणः प्रमथसङ्घौघे चण्डासैन्यप्रभेदयोः ॥९॥
गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये।
त्यागे शौर्य्यादिसत्वादिसन्ध्याद्यावृत्तिरज्जुषु ॥१०॥
शुक्लादावपि वस्याञ्च गेष्णु र्ना गायने नटे।
घ्राणं क्लीवं नासिकायां घ्राते स्याद् वाच्यलिङ्गकम्॥११
घृणा जगुप्सा-कृपयोरथ चूर्णी कपर्द्दके।
चूर्णो धूलौ क्षारभेदे चूर्णानि वासयुक्तिषु ॥१२॥
जर्णश्चन्द्रे च वृक्षे च जिष्णु र्ना वासवेऽर्ज्जुने।
जित्वरे वाच्यवत् जीर्णं परिपक्वपुराणयोः ॥१३॥
झणिः क्रमुकभेदेऽपि दुष्टदैवश्रुतौ स्त्रियाम्।
त्राणन्तु त्रायमाणायां रक्षणे रक्षितेऽपि च ॥१४॥
तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके।

क्लीवं यवाग्रजे पुंसि तिग्मात्मत्यागिनोस्त्रिषु ॥१५॥
तूणी नील्यां निषङ्गे ना तृष्णा स्यात्तर्षलिप्सयोः ।
दीर्णं विदारिते भीते द्रुणं चापेऽलिनि द्रुणः ॥१६॥
द्रुण्यम्बुद्रोणीकच्छप्योर्देष्णुर्दातरि दुर्म्मदे ।
द्रोणोऽस्त्रियामाढके स्यादाढकानां चतुष्टये ॥१७॥
पुमान् कृपीपतौ दग्धकाके स्त्री नीवृदन्तरे ।
तथा काष्ठाम्बुवाहिन्यां गवादन्यामपीष्यते ॥१८॥
पणो वराटमाने स्यात् मूल्ये कार्षापणे ग्लहे ।
क्रय्यशाकाट्टिकाद्यूतव्यवहारे भृतौ धने ॥१९॥
पर्णं पत्रे किंशुके ना पार्ष्णिः स्यादुन्मदस्त्रियाम् ।
स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च ॥२०॥
प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले ।
पुंलिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चात्मसु ॥२१॥
पूर्णः शक्ते समग्रे ना पूरितेत्वभिधेयवत् ।
फाणिर्गुडे करम्बे च स्त्रियां वाणी तु योषिति ॥२२॥
व्रूणावपि सरस्वत्यां भ्रूणः स्त्रीगर्भडिम्बयोः ।
मणिः स्त्रीपुंसयोरश्मजातौ मुक्तादिकेऽपि च ॥२३॥
कण्ठदेशस्तनेऽजाया लिङ्गाग्रेऽलिञ्जरेऽपि च ।
मोणः शुष्कफले नक्रे मक्षिकाहिकरण्डयोः ॥२४॥

रणः क्वाणे क्वणे पुंसि समरे पुन्नपुंसकम् ।
रेणुः स्त्रीपुंसयो र्धूलौ पुंलिङ्गः पर्पटे पुनः ॥२५॥
वर्णो द्विजादि-शुक्लादि-यशो गुणकथासु च ।
स्तुतौ ना नस्त्रियां भेदरूपाक्षरविलेपने ॥२६॥
वाणः स्याद् गोस्तने दैत्यभेदे केवलकाण्डयोः ।
वाणा तु वाणमूले स्त्री नीलझिण्ट्यां पुनर्द्वयोः ॥२७॥
वीणा विद्युति वल्लक्यां वृष्णिः पाषण्डचण्डयोः ।
त्रिषु ना यादवे मेषे वेणी केशस्य बन्धने ॥२८॥
नद्यादेरन्तरे देवताड़े वेणुर्नृपान्तरे ।
त्वक्सारेऽपि च पुंसि स्यात् शाणो मासचतुष्टये ॥२९॥
लोहादीनाञ्च निकषे शाणी प्रावरणान्तरे ।
श्राणं पक्वे यवाग्वां स्त्री शीर्णं तुन्नविशीर्णयोः ॥३०॥
श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समानशिल्पिसंहतौ ।
शोणः कृशानौ श्योनाके लोहिताश्वे नदे पुमान् ॥३१॥
त्रिषु कोकनदच्छाये स्थाणुः कीले हरे पुमान् ।
अस्त्री ध्रुवेऽथ स्थूणा स्यात् सूर्म्यां स्तम्भे गृहस्य च ॥३२॥

णत्रिकम् ।

अरुणोऽव्यक्तरागेऽर्के सन्ध्यारागेऽर्कसारथौ ।
निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु ॥३३॥
अरुणाऽतिविषा-श्यामा-मञ्जिष्ठा-त्रिवृतासु च ।

अरणि र्वह्निमन्थे ना द्वयो र्निर्मन्थ्यदारुणि ॥३४॥
अभीक्ष्णं भृशे नित्येऽथ तद्युक्तक्रिययोरपि ।
इन्द्राणी करणे स्त्रीणां पौलोमीसिन्धुवारयोः ३५॥
ईरिणन्तूषरे शून्येऽपीक्षणं दर्शने दृशि ।
ऊषणं मरिचे क्लीवं कणायामूषणा स्त्रियाम् ॥३६॥
एषणी व्रणमार्गानुसारिण्याञ्च तुलाभिदि ।
करुणस्तु रसे वृक्षे कृपायां करुणा मता ॥३७॥
कर्त्तृणं तृणभित्पृश्न्योः करणं हेतुकर्म्मणोः ।
बालवादौ हस्तलेपे नृत्यगीतप्रभेदयोः ॥३८॥
क्रियाभेदेन्द्रियक्षेत्रकायसंवेशनेषु च ।
कायस्थे साधने क्लीवं पुंसि शूद्राविशोः सुते ॥३९॥
कल्याणमक्षये स्वर्गे मङ्गलेऽपि नपुंसकम् ।
कङ्कणं करभूषायां सूत्रमण्डलयोरपि ॥४०॥
करेणु र्गजयोषायां स्त्रियां पुंसि मतङ्गजे ।
कार्म्मणं मन्त्रतन्त्रादियोजने कर्म्मकेऽपि च ॥४१॥
काकिणी पणतुर्य्यांशे मानदण्डेऽपि दृश्यते ।
कृष्णलैकवराट्योः स्यादुन्मानस्यांशकेऽपि च ॥४२॥
कारणं करणे हेतुबधयोश्च नपुंसकम् ।
स्त्री यातनायां कुर्व्वाणो भृत्यकारकयोस्त्रिषु ॥४३॥
कृपाणः खड्गे छुरिकाकर्त्तर्य्योरपि योषिति ।

कृपणस्तु कृमौ पुंसि मन्दकुत्सितयोस्त्रिषु ।
क्षेपणं प्रेरणे नौकादण्डजालभिदोः स्त्रियाम् ॥४४॥
ग्रहणं स्वीकारादरकरोपरागोपलब्धिवन्दिषु ।
स्याद्ग्रामणीः प्रधानेऽधिपतौ च त्रिषु नापिते पुंसि॥४५॥
ग्रामीणा नीलिकायां स्त्री ग्रामोद्भूतेऽभिधेयवत् ।
गोकर्णोऽश्वतरे सर्पे सारङ्गे च गणान्तरे ॥४६॥
अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्व्विकौषधौ ।
चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च ॥४७॥
भ्रमणे भक्षणे वापि नपुंसक उदाहृतः ।
जरणं जिरकेऽपि स्यात् कृष्णसौवर्च्चलेऽपि च ॥४८॥
तरुणं कुब्जपुष्पे ना रुवुके यूनि तु त्रिषु ।
तरणि र्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम् ॥४९॥
दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्त्तिषु ।
आरामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम्॥५०॥
द्रविणं न द्वयो र्वित्ते काञ्चने च पराक्रमे ।
दारुणो रसभेदे ना त्रिषु स्यात्तु भयावहे ॥५१॥
द्रुघणो मुद्गरेऽपि स्याद्द्रुहिणे च परश्वधे ।
दुर्व्वर्णं त्रिष्वसद्वर्णे क्लीवमैलेयरूप्ययोः ॥५२॥
दौर्व्वीणं स्पृष्टपर्णे स्याद् दूर्व्वायां स्वरसेऽपि च ।
धर्म्मणस्तु पमान् वृक्षभेद-सर्पप्रभेदयोः ॥५३॥

धरणं मानभेदेऽपि धारणे धरणीभुवि।
घर्षणं स्यात् परिभवे रतेऽसत्यान्तु घर्षणी ॥५४॥
धरुणः सम्मते नीरे स्वर्लोके परमेष्ठिनि।
धारणी नाडिकायां स्याद् वृद्धोक्तमन्त्रभिद्यपि ॥५५॥
धारणाऽङ्गे च योगस्य न पुंसि स्याद्विधारणे।
धिषणस्त्रिदशाचार्य्ये धिषणा धियि योषिति ॥५६॥
निःश्रेणिरधिरोहिण्यां खर्जूरीपादपे स्त्रियाम्।
निर्य्याणं वारणापाङ्गदेशे मोक्षेऽध्वनिर्गमे ॥५७॥
निर्म्माणं निर्म्मितौ सारे समञ्जसे नपुंसकम्।
निर्व्वाणमस्तङ्गमने निर्वृतौ गजमज्जने ॥५८॥
सङ्गमे चापवर्गे च प्रवणो ना चतुष्पथे।
क्रमभिन्नमहीभागोदरप्रह्वेषु च त्रिषु ॥५९॥
प्रघणस्ताम्रकुम्भे स्यादलिन्दे लोहमुद्गरे।
प्रमाणं नित्यमर्य्यादाशास्त्रेषु सत्यवादिनि ॥६०॥
इयत्तायाञ्च हेतौ च क्लीवैकत्वे प्रमातरि।
पत्रोर्णं धौतकौषेये क्लीवं स्यात् शोणके पुमान्॥६१॥
पक्षिणी पूर्णिमायां स्याद् विहग्यां शाकिनीभिदि।
आगामिवर्त्तमानाहर्युक्तरात्रावपि स्त्रियाम् ॥६२॥
प्रवेणिः स्त्री कुथावेण्योः पुराणं पञ्चलक्षणे।
पणे पुंसि त्रिषु प्रत्ने पूरणः पूरके त्रिषु ॥६३॥

क्लीवं पिण्डप्रभेदे च पूरणी शाल्मलिद्रुमे।
पटारम्भकसूत्रेषु प्रोक्षणं सेचने वधे ॥६४॥
वरुणस्तरुभेदेऽम्बु पश्चिमाशापतावपि।
वरणस्तु पुमान् तिक्तशाकप्राकारयोरपि ॥६५॥
क्लीवं कन्यादिवरणे वेष्टने स्त्री नदीभिदि।
वारणं प्रतिषेधे स्याद् वारणस्तु मतङ्गजे ॥६६॥
ब्राह्मणं ब्रह्मसङ्घाते वेदभागे नपुंसकम्।
भूमिदेवे तु पुंलिङ्गः स्पृक्काकापृक्कयोः स्त्रियाम्॥६७॥
वारुणी गण्डदूर्वायां प्रतीचीसुरयोरपि।
भरणी घोषके ऋक्षे भरणं वेतने भृतौ ॥६८॥
श्रमणी कारुण्डिकायां क्रीडाढ्यायामधीशितुः।
भीषणो रसे शल्लक्यां ना गाढे दारुणे त्रिषु ॥६९॥
मसृणोऽकर्कशे स्निग्धे त्रिषूमायान्तु योषिति।
मत्कुणो निर्विषाणेभे निश्मश्रुपुरुषेऽपि च ॥७०॥
उद्दंशे नारिकेले च मार्गणो याचके शरे।
याञ्ञान्वेषणयोः क्लीवं यन्त्रणं रक्षणे स्मृतम् ॥७१॥
बन्धने स्यात् नियमने रवणः शब्दने खरे।
रमणं पटोलमूले नार्यां स्त्री ना धवे स्मरे ॥७२॥
रोषणः पारदे हेमघर्षणी-परयोः पुमान्।
क्रोधने नाच्यलिङ्गः स्याद् रोहिणी कण्ठरुग्भिदि॥७३॥

तडित् कटुम्भरा सोमवल्कयोषु लोहिताग्गवोः ।
लवणं सैन्धवादौ ना सिन्धुरक्षोभिदो रसे ॥७४॥
तद्युक्ते वाच्यलिङ्गः स्यान्नदीभेदविषोः स्त्रियाम् ।
लक्षणं नाम्नि चिह्ने च सारस्यां लक्षणा मता ॥७५॥
लक्ष्मणा त्वोषधीभेदे सारस्यामपि योषिति ।
रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत् ॥७६॥
विषाणी क्षीरकाकोल्यामजशृङ्ग्याञ्च योषिति ।
कुष्ठानामौषधे क्लीवं पशुशृङ्गेभदन्तयोः ॥७७॥
विपणिः पण्यवीथ्याञ्च भवेदापणपण्ययोः ।
शरणं गृहरक्षित्रोर्वधरक्षणयोरपि ॥७८॥
श्रवणं स्यात् श्रुतौ कर्णे नक्षत्रे न नपुंसकम् ।
श्रवणो यतिभेदे ना भिक्षुजीविनि तु त्रिषु ॥७९॥
स्त्रियां सुदर्शनामांस्योर्मुण्डीरीशबरीभिदोः ।
श्रावणो मासि पाषण्डे दध्यालव्यां श्रावणा मता ॥८०
शिङ्घाणं काचपात्रे स्यात् लौहनासिकयोर्मले ।
श्रीपर्णी काश्मरीकुम्भोः क्लीवे पद्माग्निमन्थयोः ॥८१॥
सङ्कीर्णं निचितेऽपि स्यादशुद्धे चापि वाच्यवत् ।
सरणिः पङ्क्तौ मार्गे स्त्री सारणो राक्षसान्तरे ॥८२॥
रुग्भेदे ना प्रसारिण्यां स्वल्पनद्याञ्च सारणी ।
सुषेणः करमर्दे स्याद् विष्णुसुग्रीववैद्ययोः ॥८३॥

सुवर्णो ना स्वर्णकर्षे सुवर्णाख्यमखान्तरे ।
स्त्री कृष्णागुरुणि क्लीवं काञ्चने हरिचन्दने ॥८४॥
सुपर्णः स्वर्णचूडे च गरुडे कृतमालके ।
सुपर्णा कमलिन्याञ्च वैनतेयस्य मातरि ॥८५॥
हरेणु र्ना सतीले स्त्री रेणुका कुलयोषितोः ।
हरणं यौतकादीनां द्रव्ये भुजे हृतावपि ॥८६॥
हरिणः पुंसि सारङ्गे विशदे त्वभिधेयवत् ।
हरिणी हरितायाञ्च नारीभिद्वृत्तभेदयोः ॥८७॥
सुवर्णप्रतिमायाञ्च हर्षणोऽक्षिरुगन्तरे ।
हर्षके योगभेदे च श्राद्धदेवेऽपि च क्वचित् ॥८८॥
हिरणं रेतसि स्वर्णे वराटे च नपुंसकम् ।

णचतुष्कम् ।

अङ्गारिणी हसन्त्याञ्च भास्करत्यक्तदिश्यपि ॥८९॥
आथर्व्वणि र्नाऽथर्व्वज्ञब्राह्मणे च पुरोधसि ।
आतर्पणं प्रीणने स्यान् मङ्गलालेपनेऽपि च ॥९०॥
आरोहणं स्यात् सोपाने समारोहे प्ररोहणे ।
उत्क्षेपणन्तु व्यजने धान्यमर्द्दनवस्तुनि ॥९१॥
स्यादुद्धरणमुद्धारवान्तान्नोन्मूलनेष्वपि ।
कार्षापणोऽस्त्री कार्षिके पणषोडशकेऽपि च ॥९२॥
अथ कामगुणो रागे विषयाभोगयोरपि ।

चीर्णपर्णस्तु निम्बेऽपि खर्ज्जूरीभूरुहे पुमान् ॥९३॥
चूड़ामणिः शिरोरत्ने काकचिञ्चाफले पुमान् ।
जुहुराणोऽपि चाध्वर्य्यावपि स्यात् जातवेदसि ॥९४॥
तण्डुरीणः कीटमात्रे वर्व्वरे तण्डुलोदके ।
त्रायमाणा वार्षिके स्त्री रक्ष्यमाणेऽभिधेयवत् ॥९५॥
तैलपर्णी मलयजे श्रीवासे सिह्लकेऽपि च ।
दाक्षायणी त्वपर्णायामश्विन्याद्युडुषु स्त्रियाम् ॥९६॥
अथ देवमणिर्भर्गेऽश्वावर्त्ते कौस्तुभे च ना ।
नारायणोऽच्युतेऽभीरु गौर्य्यां नारायणी मता ॥९७॥
अथो निगरणं क्लीवं भोजने स्याद् गले पुमान् ।
अथ निःसरणं मृत्यूपायमोक्षेषु निर्गमे ॥९८॥
स्यान् निस्तरणमुपाये निस्तारे तरणेऽपि च ।
निरूपणं स्यादालोके विचारे च निदर्शने ॥९९॥
पर्व्वरीणस्तु पर्णस्य शिरायां द्यूतकम्बले ।
पर्णवृन्तरसेऽपि स्यात् पर्व्वरीणन्तु पर्व्वणि ॥१००॥
प्रवारणं निषेधे स्यात् काम्यदाने च न द्वयोः ।
परीरणः स्यात् कमठे दण्डे च पट्टशाटके ॥१०१॥
परायणमभीष्टे स्यात् तत्पराश्रययोरपि ।
परवाणिः पुमान् धर्म्माध्यक्षवत्सरयोरपि ॥१०२॥
पारायणं समासङ्गे कात्स्न्र्ये पारगतावपि ।

पिलुपर्णी विम्बिकायां मूर्व्वायामोषधिभिदि ॥१०३॥
अथ पुष्करिणी चेभ्यां सरोजिन्यां जलाशये ।
मधुपर्णी च गाम्भार्य्यां नीलीसंज्ञौषधावपि ॥१०४॥
मीनाम्नीणस्तु पुंलिङ्गो दर्दुराम्रे च खञ्जने ।
रक्तरेणुस्तु सिन्दूरे पलाशकोरके पुमान् ॥१०५॥
रागचूर्णः पुमान् दन्तधावने मकरध्वजे ।
रेरिहाणस्तु पुंसि स्यात् महादेवेऽसुरेऽपि च ॥१०६॥
लम्बकर्णः स्मृतोऽङ्कोटपादपे युगलेऽपि च ।
विदारणं विडम्बे च भेदे क्लीवं रणे द्वयोः ॥१०७॥
अथ वैतरणी नद्यां प्रेतानां यातुमातरि ।
शरवाणिः शरमुखे पायिके शरजीविनि ॥१०८॥
पुमानथ शिखरिणी रसालावृत्तभेदयोः ।
नारीरत्ने मल्लिकायां रोमावल्यामपि स्त्रियाम् ॥१०९॥
अथ संसरणं क्लीवमसम्बाधचमूगतौ ।
घण्टापथे च संसारे रणारम्भे च कुत्रचित् ॥११०॥
समीरणः स्यात् पवने पथिके च फणिज्झके ।
हस्तिकर्णश्चोरुवूके पलाशगणभेदयोः ॥१११॥

णपञ्चकम् ।

अवग्रहणमित्येतत् प्रतिरोधेऽप्यनादरे ।
अवतारणं भूतादिग्रहे वस्त्राञ्चलेऽर्च्चने ॥११२॥

प्रविदारणमाख्यातं सम्परायेऽवदारणे।
परिभाषणं सनिन्दोपालम्भने नियमेऽपि च ॥११३॥
उक्तो मत्तवारणस्तु प्रक्लिन्नकटकुञ्जरे।
क्लीवं प्रासादवीथीनां कुन्दवृत्तवृतावपि ॥११४॥
मण्डूकपर्णी मञ्जिष्ठा ब्राह्मण्योर्ना तु शोणके।
लोमहर्षणं रोमाञ्चे ना हृते च विभीतके ॥११५॥
वातरायण उन्मत्ते निष्प्रयोजनपूरुषे।
काण्डे च करपात्रे च कूटे च परसंक्रमे ॥११६॥

णषट्कम्।

दोहदलक्षणमुक्तं वयसः सन्धौ च गर्भे च।
यौवनलक्षणमप्याख्यातं लावण्यकुचयोः ॥११७॥

णान्तवर्गः समाप्तः।

---

तैककम्।

तस्तौरास्नुतपुच्छेषु क्रोडे म्लेच्छेऽपि कुत्रचित्।
अपुमान् तरणे पुण्ये कथितः शब्दवेदिभिः ॥१॥

तद्विकम्।

अस्तं क्षिप्तेऽप्यवसिते त्रिषु ना पश्चिमाचले।
अन्तं स्वरूपे नाशे ना नस्त्री शेषेऽन्तिके त्रिषु ॥२॥
आर्त्तिः पीडाधनुष्कोट्योः व्याप्तौ लब्धे स्वसत्ययोः।

आप्तिः स्त्री योगसम्प्राप्त्योरितं स्मृते गते त्रिषु॥३॥
ईतिर्डिम्बे प्रवासेऽतिवृष्ट्यादिषट्सु च स्त्रियाम्।
उक्तमेकाक्षरच्छन्दस्युक्तः स्याद्भाषिते त्रिषु॥४॥
ऊतिः स्त्री रक्षणे स्यूता वृत्तिः कल्याणवर्त्मनोः।
जुगुप्सास्पर्द्धयोः स्त्री स्यादुतमुच्चशीले जवे॥५॥
सत्ये दीप्ते पूजिते स्यादृतुर्वर्षादिषट्सु च।
आर्त्तवे मासि च पुमानेतः कर्ब्बुर आगते॥६॥
क्षत्ता शूद्रात् क्षत्रियाजे प्रतीहारे च सारथौ।
भुजिष्यातनयेऽपि स्यात् नियुक्तवेधसोः पुमान्॥७॥
कर्त्ता तु कारके वाच्यलिङ्गो ना परमेष्ठिनि।
क्रतुर्यज्ञे मुनौ पुंसि कान्तिः शोभेच्छयोः स्त्रियाम्॥८॥
कान्ता नार्य्यां प्रियङ्गौ स्त्री शोभने त्रिषु माधवे।
लोहे च चन्द्रसूर्य्यायः पर्य्यायान्तःशिलासु च॥९॥
क्षितिर्निवासे मेदिन्यां कालभेदे क्षये स्त्रियाम्।
कीर्त्तिःप्रसादयशसोर्योषित्कुन्तोगवेधुकायां स्यात्॥१०॥
प्रासायुधे च कुन्ती गुग्गुलुपृथयोश्च शल्लक्याम्।
कृतं युगेऽलमर्थेऽपि विहिते हिंसिते त्रिषु॥११॥
कृत्तन्तु वेष्टिते छिन्ने कृतिः करणहिंसयोः।
कृत्तिश्चर्म्मत्वचोर्भूर्जे कृत्तिकायां द्वयं स्त्रियाम्॥१२॥
केतुर्ना रुक्पताकाविग्रहोत्पातेषु लक्षणे।

गर्त्तस्त्रिगर्त्तभेदे स्यादवटे च कुकुन्दरे ॥१३॥
ग्रस्तं ग्रासीकृतेऽपि स्याल्लुप्तवर्णपदोदिते ।
गतिः स्त्री मार्गदशयो र्ज्ञाने यात्राभ्युपाययोः ॥१४॥
नाडीव्रणे सरण्याञ्च गतं विज्ञातयातयोः ।
गातु-र्ना कोकिले भृङ्गे गन्धर्व्वे त्रिषु रोषणे ॥१५॥
गीतिश्छन्दसि गाने स्त्री गीतं शब्दितगानयोः ।
गुप्तिः स्त्र्यवकरस्थाने कारागारे च रक्षणे ॥१६॥
गुप्तं स्याद् रक्षिते गूढ़े घातः काण्डप्रहारयोः ।
घृतमाज्ये जले क्लीवं प्रदीप्ते त्वभिधेयवत् ॥१७॥
चितं कृन्ने त्रिषु चिता चित्यायां संहतौ स्त्रियाम् ।
चितिश्चित्यावृन्दयोः स्त्री जातं व्यक्तौघजन्मसु ॥१८॥
क्लीवं त्रिलिङ्गमुत्पन्ने जातिः स्त्री गोत्रजन्मनोः ।
अश्मन्तिकामलक्योश्च सामान्यच्छन्दसोरपि ॥१९॥
जातीफले च मालत्यां ज्ञातिस्तातसगोत्रयोः ।
पुमानथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम् ॥२०॥
क्लीवं वीणादिवाद्ये स्यात् पुंलिङ्गस्तु सदागतौ ।
तातोऽनुकम्प्ये जनके तिक्तो रससुगन्धयोः ॥२१॥
तिक्ता तु कटुरोहिण्यां पर्पटे तु नपुंसकम् ।
ध्वस्तं धूलौ च पापे च जटायाञ्च नपुंसकम् ॥२२॥
त्रेता युगेऽग्नित्रितये दत्तं विश्राणितेऽविते ।

दन्तोऽद्रिकटके कुञ्जे दशने:नौषधौ स्त्रियाम् ॥२३॥
दान्तस्तु दमितेऽपि स्यात् तपःक्लेशसहे त्रिषु।
दिति दैत्यजनन्यास्त्र खण्डनेऽपि च योषिति ॥२४॥
दीप्तं निर्भासिते दग्धे ज्वलितेऽथ द्रुतं त्रिषु।
शीघ्रे विलीने विद्रावे द्युतिः स्त्री रश्मिशोभयोः॥२५॥
दृति श्चर्म्मपुटे मत्स्ये ना धातु र्नेन्द्रियेषु च।
शब्दयोनिमहाभूततद्गुणेषु रसादिषु ॥२६॥
मनःशिलादौ श्लेष्मादौ विशेषाद् गैरिकेऽस्थ्नि च।
धाता हिरण्यगर्भे ना पालके त्रिष्वथो धुतम्॥२७॥
त्यक्ते विधूते धूतन्तु कम्पिते भर्त्सिते त्रिषु।
धूर्त्तन्तु खण्डलवणे धूस्तूरे ना विटे त्रिषु ॥२८॥
धृति र्नैष्टौ स्त्रियां तुष्टौ योगभिद्धैर्य्यधारणे।
नतं तगरपाद्यां स्यात् क्लीवं कुटिलनम्रयोः ॥२९॥
त्रिषु नीति र्नयेऽपि स्यात् प्रापणेऽपि च योषिति।
पक्तिः स्त्री गौरवे पाके पत्ति र्ना पदगे स्त्रियाम् ॥३०
गतावेकरथैकेभत्र्यश्वपञ्चपदातिके।
पङ्क्ति र्दशाक्षरच्छन्दोदशसङ्ख्यालिषु स्त्रियाम् ॥३१॥
पति र्धवे ना त्रिष्वीशे प्राप्तं लब्धे समञ्जसे।
पातोनापतने त्राते त्रिषु प्राप्ति र्महोदये ॥३२॥
लाभेऽपि च स्त्रियां प्रीतिः पूर्त्तिप्रदेशयोः स्त्रियाम्।

पीतिर्नाश्वे स्त्रियां पाने पीतं हृषितनर्म्मणोः ॥३३॥
पीतं पाने हरिद्रायां स्त्रियां गौरेऽभिधेयवत् ।
प्रीति र्योगान्तरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम् ॥३४॥
पुस्तं क्लीवं पुस्तके च लेप्यादिशिल्पकर्म्मणि ।
प्लुतं तुरङ्गमगतौ क्लीवं पुंसि त्रिमात्रके ॥३५॥
पूतं त्रिषु पवित्रे च शठिते बहुलीकृते ।
पूर्त्तं त्रिषु पूरिते स्यात् क्लीवं खातादिकर्म्मणि ॥३६॥
प्रोतं नपुंसकं वस्त्रे खचिते वाच्यलिङ्गकम् ।
प्रेतो भूतान्तरे पुंसि मृते स्याद् वाच्यलिङ्गकः ।
पोतः शिशौ वहित्रे च गृहस्थाने च वाससि ॥३७॥
वृतिस्तु वरणेऽपि स्याद् वेष्टनेऽपि च योषिति ।
भर्त्ता स्वामिनि पुंसिस्यात् त्रिषु धातरि पोष्टरि॥३८॥
भक्ति र्विभागे सेवायां स्त्रियां भ्रान्तिस्तु योषिति ।
मिथ्यामतौ च भ्रमणे भित्तिः कुड्यप्रदेशयोः ॥३९॥
भीतिर्भये स्त्रियां भीतं भयेऽथ भीयुते त्रिषु ।
भूति र्भस्मनि सम्पत्तिहस्तिशृङ्गारयोः स्त्रियाम् ॥४०॥
भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीवं त्रिषूचिते ।
प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तु ना ॥४१॥
कुमारेऽपि भृतिः स्त्री स्यान् मूल्येऽपि भरणेऽपि च ।
मतन्तु सम्मते ज्ञाते मतिः स्त्रीच्छाधियोः स्मृतौ॥४२॥

मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ ।
माता गौर्य्यादिजननी गोब्राह्मण्यादिभूमिषु ॥४३॥
मितिर्मानेऽप्यवच्छेदे मुक्ति र्मोक्षे च मोक्षणे ।
मात्रादयः स्त्रियां मुक्तः प्राप्तमोक्षे च मोचिते ॥४४॥
त्रिषु स्त्री मौक्तिके मूर्त्तिः कायकाठिन्ययोःस्त्रियाम् ।
मूर्त्तं स्यात् त्रिषु मूर्च्छाले कठिने मूर्त्तिमत्यपि ॥४५॥
मृतन्तु याचिते मृत्यौ क्लीवं मृत्युमति त्रिषु ।
यतिः स्त्री पाठविच्छेदे निकारयतिनोः पुमान् ॥४६॥
यन्ता हस्तिपके सूते युक्तिः स्त्री न्याययोगयोः ।
युते युक्तोऽपृथग्भूते क्लीवं हस्तचतुष्टये ॥४७॥
रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु ।
क्लीवन्तु कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि ॥४८॥
रतिः स्त्री स्मरदारेषु रागे सुरतगुह्ययोः ।
रथ्या वर्त्मनि नद्यां स्त्री रतं सुरतगुह्ययोः ॥४९॥
रतस्त्रिष्वनुरक्ते स्यात् तत्परे चाभिधेयवत् ।
रिक्तं शून्ये वने रीतिः स्त्रियां स्यन्दप्रचारयोः ॥५०॥
पित्तले लोहकिट्टे च लता प्रियङ्गुशाखयोः ।
पृक्काज्योतिष्मतीवल्लीलता कस्तूरिकासु च ॥५१॥
माधवीदूर्व्वयो र्लिप्तं विलिप्तविषदिग्धयोः ।
भक्ते लूता तन्तुनाभे पिपीलिकागदान्तरे ॥५२॥

वप्ता तु जनके पुंसि वापकेऽप्यभिधेयवत् ।
वक्ता तु पण्डितेऽपि स्याद् वाग्मिन्यप्यन्यलिङ्गकः ॥५३॥
व्यस्तन्तु व्याकुले व्याप्ते व्यक्तः स्फुटमनीषिणोः ।
वस्ति र्द्वयो र्निरूहे नाभ्यधो भूम्नि दशासु च ॥५४॥
वर्त्ति र्भैषजनिर्म्माणे नयनाञ्जनलेखयोः ।
गात्रानुलेपनीदीपदशादीपेषु योषिति ॥५५॥
वार्त्ता तु वर्त्तने वार्त्तिङ्गणे कृष्याद्युदन्तयोः ।
निःसारारोग्ययोः क्लीवं वृत्तिमन्नीरुजोस्त्रिषु ॥५६॥
व्याप्तं ख्याते समाक्रान्ते व्याप्ति र्व्यापनलम्भयोः ।
स्त्रियां वित्ति र्विचारे च लाभसम्भावयोः स्त्रियाम्॥५७॥
वित्तं क्लीवं धने वाच्यलिङ्गं ख्याते विचारिते ।
वीतमसारगजे स्यादङ्कुशकर्म्मण्यसारतुरगे च॥५८॥
वीति र्गतौ च दीप्तौ प्रजनाशनधावनेषु स्त्री ।
वृत्ति र्विवरणाजीवकौशिक्यादिप्रवर्त्तने ॥५९॥
वृन्तं प्रसवबन्धेऽस्त्री घटीधाराकुचाग्रयोः ।
वृत्तोऽधीतेऽप्यतीतेऽपि वर्त्तुलेऽपि वृते मृते ॥६०॥
दृढेऽन्यलिङ्गवान् क्लीवं छन्दस्यारितवृत्तिषु ।
शक्ति रस्त्रान्तरे गौर्य्यामुत्साहादौ बले स्त्रियाम् ॥६१॥
शस्तं त्वम प्रशस्ते च शान्तिः स्त्री मङ्गले शमे ।
शाल्मा समन्तभद्र ना शासके पुनरन्यवत् ॥६२॥

शान्तोऽभियुक्तरसयोः पुंसि त्रिषु शमान्विते।
अव्ययं वारणे शान्तं शान्तं शितञ्च दुर्बले॥६३॥
निशिते च शिति र्भूर्जे ना सितासितयो स्त्रिषु।
शीतं हिमगुणे क्लीवं शीतलालसयोस्त्रिषु॥६४॥
वानीरे बहुवारे ना शुक्तं पूताम्लनिष्ठुरे।
श्रुतिः श्रोत्रे च तत्कर्म्मण्याम्नायवार्त्तयोः स्त्रियाम्॥६५॥
शुक्तिः कपालशकले शङ्खे शङ्खनखेऽपि च।
नख्य आवर्त्तदुर्नाम मुक्तास्फोटेषु च स्त्रियाम्॥६६॥
श्रुतमाकर्णिते शास्त्रे श्वेतो द्वीपाद्रिभेदयोः।
श्वेता वराटिकाकाष्ठपाटलाशङ्खिनीषु च॥६७॥
क्लीवं रूप्येऽन्यवत् शुक्ले सन् साधौ धीरशस्तयोः।
मान्ये सत्ये विद्यमाने त्रिषु साध्व्युमयोः स्त्रियाम्॥६८॥
साति र्दानेऽवसाने स्त्री स्वान्तं चेतसि गह्वरे।
स्थितं प्रतिज्ञातवति चोर्द्ध्वनिश्चलयोस्त्रिषु॥६९॥
स्थितिः स्त्रियामवस्थाने मर्य्यादायाञ्च सीमनि।
सितमवसिते च बद्धे धवले त्रिषु शर्करायां स्त्री॥७०॥
सीता लाङ्गलपद्धतिवैदेहीस्वर्गगङ्गासु।
सुतस्तु पार्थिवे पुत्रे त्व्यपत्ये तु सुता स्मृता॥७१॥
सुप्तिः स्पर्शाज्ञतानिद्राविश्रम्भे शयने स्त्रियाम्।
सूतस्तु सारथौ तद्विण क्षत्रियाद् ब्राह्मणीसुते॥७२॥

वन्दिपारदयोः पुंसि प्रहृते प्रेरिते त्रिषु।
स्यूतिः सीवनसन्तत्योः स्त्रियां स्यूतः प्रसेवके ॥७३॥
ना त्रिषूते स्मृति र्धर्म्मशास्त्रस्मरणयोः स्त्रियाम्।
सृतिः स्त्री गमने मार्गे सेतु र्नाली कुमारके ॥७४॥
हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च।
कचे केशात्परो व्राते हितं पथ्ये गते धृते ॥७५॥
हेतिः स्यादायुधज्वालासूर्य्यतेजःसु योषिति।

तत्रिकम्।

अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते ॥७६॥
अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः।
अमृता मागधीपथ्यागुडूच्यामलकीषु च ॥७७॥
अनृतं कृषावसत्येऽप्यजितो ना हरौ त्रिषु।
अनिर्ज्जिते चाच्युतस्तु हरौ पुंसि त्रिषु स्थिरे ॥७८॥
अर्द्दितं याचितेऽपि स्यात् वातव्याधौ च हिंसिते।
अक्षतं न द्वयोः षण्डे लाजेषु त्रिष्वहिंसिते ॥७९॥
यवेऽपि क्वचिदव्यक्तो हरौ स्मरहरे पुमान्।
परमात्ममहदाद्योः क्लीवं स्यादस्फुटे त्रिषु ॥८०॥
अनन्तः केशवे शेषे पुमाननवधौ त्रिषु।
अनन्ता च विशल्यायां शारिवादूर्व्वयोरपि ॥८१॥
कणादुरालभापथ्यापार्व्वत्यामलकीषु च।

विश्वम्भरागुडूच्योः स्यादनन्तं सुरवर्त्मनि ॥८२॥
अश्मन्तमशुभे चुल्यां मरणेऽनवधावपि ।
क्षेत्रेऽप्यथायतिः पुंसि हिमदीधितिकालयोः ॥८३॥
अर्हंस्तु क्षपणे बुद्धे पुंसि मान्येऽन्यलिङ्गकः ।
अर्हन्तस्यापि सुगते क्षपणेऽपि च दृश्यते ॥८४॥
अगस्तिः कुम्भयोनौ च वङ्गसेनतरौ पुमान् ।
अर्व्वती कुम्भदास्याञ्च बडवायाञ्च योषिति ॥८५॥
अङ्गतिः पुंस्यग्निहोत्रब्रह्मवह्निष्वथादितिः ।
भूदेवमात्रोरंहतिस्त्यागे रोगेप्युभे स्त्रियौ ॥८६॥
आपातः पुंसि पतने तदात्वे च प्रकीर्त्तितः ।
आघ्रातं शिङ्घिते क्रान्तेऽप्याख्यातं भाषिते तिङि ॥८७॥
आध्मातः शब्दिते दग्धे वातरुग्भेदसंयुते ।
आप्लुतः स्नातके स्नातेऽप्यादृतः सादरेऽर्च्चिते॥८८॥
आचितः शकटोन्मेये पलानामयुतद्वये ।
पुंलिङ्गः सङ्गृहीतेऽपि च्छन्नेऽपि स्यात् त्रिलिङ्गकः ॥८९॥
आहतं गुणिते चापि ताड़िते च मृषार्थके ।
स्यात् पुरातनवस्त्रेऽपि नववस्त्रे च नाऽऽनके ॥९०॥
आनर्त्तो देशभेदेऽपि नृत्यस्थाने जले रणे ।
आवर्त्तश्चिन्तने वारिभ्रमे चावर्त्तने पुमान् ॥९१॥
आस्फोतस्तु पुमानर्कपत्रे स्यात् कोविदारके ।

आस्फोता गिरिकर्ण्याञ्च वनमल्ल्याञ्च योषिति॥९२॥
आयस्तस्तेजिते क्षिप्ते क्रोधिते कुपिते हते।
आयतिस्तु स्त्रियां दैर्घ्ये प्रभावागामिकालयोः॥९३॥
आयत्तिस्तु स्त्रियां स्नेहे वशित्वे वासरे बले।
आकृतिस्तु स्त्रियां रूपे सामान्यवपुषोरपि॥९४॥
आसत्तिः सङ्गमे लाभे स्त्रियामापत्तिरापदि।
प्रापणेऽपि च योषित् स्यादुदन्तः साधुवार्त्तयोः॥९५॥
उषितं व्युषिते दग्धेऽप्युदात्तस्तु स्वरान्तरे।
दयात्यागादिसम्पन्ने काव्यालङ्कारकृत्ययोः॥९६॥
उत्तप्तं शुष्कमांसेऽथ त्रिषु तप्ते परिप्लुते।
उचितन्तु भवेन् न्यस्ते मिते ज्ञाते समञ्जसे॥९७॥
उद्वृत्तं स्यात् त्रिषूच्छिन्ने परिभुक्तोज्झितेऽपि च।
उत्थितं स्यात् त्रिषूत्पन्ने प्रोद्यते वृद्धिमत्यपि॥९८॥
उद्घातस्तु पुमान् पादस्खलने समुपक्रमे।
पवनाभ्यासयोगाय कुम्भकादित्रयेऽपि च॥९९॥
उत्तुङ्गे मुद्गरेऽपि स्यादुदितन्तूक्त उद्गते।
उच्छ्रितं त्रिषु सञ्जाते समुन्नतप्रवृद्धयोः॥१००॥
उन्मत्त उन्मादवति धूस्तूरमुचुकुन्दयोः।
उद्दान्तो निर्मदगजे पुमानुद्दमिते त्रिषु॥१०१॥
एधतुः पुरुषेऽग्नौ ना कलितं विदिताप्तयोः।

कपोतः स्याच्चित्रकण्ठपारावतविहङ्गयोः ॥१०२॥
अथ क्रन्दितमाह्वाने रुदितेऽपि नपुंसकम्।
चारितः स्राविते चारे चाभिशस्तेऽपि च त्रिषु ॥१०३॥
कापोतो रुचके क्लीबे कपोतौ घेऽञ्जनान्तरे।
किरातो म्लेच्छभेदे स्याद् भूनिम्बेऽल्पतनावपि ॥१०४॥
स्त्रियां चामरधारिण्यां कुट्टिनीदुर्गयोरपि।
कृतान्तो यमसिद्धान्तदैवाकुशलकर्म्मसु ॥१०५॥
गर्ज्जितं वारिवाहादिध्वनौ ना मत्तकुञ्जरे।
ग्रथितं गुम्फिते क्रान्ते हिंसिते च त्रिलिङ्गकम् ॥१०६॥
गभस्तिः किरणे सूर्य्ये ना स्वाहायान्तु योषिति।
गर्म्मुत् स्त्री स्वर्णनड्योर्गोपतिः शिवषण्डयोः॥१०७॥
नृपभास्करयोः पुंसि चेष्टितं गतिचेष्टयोः।
जगत् स्यात् पिष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु॥१०८॥
जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च।
जयन्ती वृक्षभिद्गौर्य्योरिन्द्रपुत्रीपताकयोः ॥१०९॥
पुमानैन्द्रौ हरे भीमे ज्वलितं दग्धउज्ज्वले।
जामाता दुहितुः पत्यौ सूर्य्यावर्त्ते धवे पुमान् ॥११०॥
जीमूतोऽद्रौ घृतिकरे देवताड़े पयोधरे।
जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे ॥१११॥
जीवन्ती जीवनीशम्यो र्गडूची वन्दयोरपि।

जृम्भितं करणे स्त्रीणामीहा स्फुटितयोरपि ॥११२॥
त्वरितं प्रजवे शीघ्रे त्रिगर्त्ता गणितान्तरे।
देशेऽपि ना घुर्घुरिका कामुकाङ्गनयोः स्त्रियाम्।
तृणता धनुषि तृणत्वे दंशितमपि जातदंशे स्यात्॥११३॥
कवचार्चिते द्विजाति र्विप्राण्डजयोश्च पुंलिङ्गः।
दुर्ज्जातं व्यसने क्लीवेऽसम्यग् जातेऽन्यलिङ्गकम्॥११४॥
दुर्गति र्नरके नैःस्व्ये स्त्री दृष्टान्त उदाहृतौ।
शास्त्रे च मरणे धीमान् पण्डिते च बृहस्पतौ॥११५॥
निर्ऋतिः स्यादलक्ष्म्यां स्त्री दिशाम्पालान्तरे पुमान्
निकृतं विप्रलब्धे स्यात् शठे विप्रकृते त्रिषु॥११६॥
निर्मुक्त स्त्यक्तसङ्गे स्यान् मुक्तकञ्चुकभोगिनि।
निरस्त स्त्रिषु निष्ठ्यूते प्रेषितेषौ द्रुतोदिते॥११७॥
सन्त्यक्ते च प्रतिहते निमित्तं हेतुलक्ष्मणोः।
निवातो दृढसन्नाहे वातशून्येऽपि चाश्रये॥११८॥
निशान्त स्त्रिषु शान्ते स्यात् क्लीवन्तु भवनोषसोः।
निकृति र्भर्त्सने क्षेपे शठे शाठ्येऽपि च स्त्रियाम्॥११९॥
निर्वृतिः स्वस्थितावस्तं गमने च सुखे स्त्रियाम्।
नियति र्नियमे दैवे स्त्री पतन् पातुके खगे॥१२०॥
प्रहतं वितते क्षुण्णे पर्य्यस्तः पतिते हते।
प्रभूतमुद्गते प्राज्ये पण्डितः सिह्लके कवौ॥१२१॥

पलितं शैलजे तापे केशपाके च कर्द्दमे।
प्रसृतः सम्प्रचारे स्याद् विनीते वेगिते त्रिषु ॥१२२॥
अर्द्धाञ्जलौ तु पुंलिङ्गो जङ्घायां प्रसृता मता।
प्रसूतं कुसुमे क्लीवं त्रिषु सञ्जातसूतयोः ॥१२३॥
प्रणीतः संस्कृताग्नौ ना यज्ञपात्रान्तरे स्त्रियाम्।
त्रिषु क्षिप्तोपसम्पन्नविहितेषु प्रवेशिते ॥१२४॥
प्रतीतः सादरे ज्ञाते हृष्टप्रख्यातयोः स्त्रिषु।
प्रमीतं वाच्यलिङ्गं स्यात् प्रोक्षितेऽपि मृतेऽपि च॥१२५॥
परेतो वाच्यलिङ्गः स्यान् मृते भूतान्तरे पुमान्।
पर्व्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः ॥१२६॥
देवमुन्यन्तरे शैले प्रपातो निर्झरेऽतटे।
पर्य्याप्तन्तु यथेष्टे स्यात् तृप्तौ शक्ते निवारणे ॥१२७॥
पञ्चता पञ्चभावेऽपि मरणेऽपि च योषिति।
पत्तिस्तु भवेत् पक्षमूले च प्रतिपत्तिथौ ॥१२८॥
प्रसूतिरुद्भवेऽपि स्यात् तनये दुहितर्य्यपि।
प्रतति विस्तृतौ वल्ल्यां पद्धतिः पङ्क्तिवर्त्मनोः ॥१२९॥
प्रवृत्तिस्तु प्रवाहे स्यादुदन्ते च प्रवर्त्तने।
अवन्त्यादौ च पर्य्याप्तिः प्रकामप्राप्तिरक्षणे ॥१३०॥
प्रकृतिर्गुणसाम्ये स्यादमात्यादि स्वभावयोः।
योनौ लिङ्गे पौरवर्गेऽमी पत्त्यादयः स्त्रियाम् ॥१३१॥

पार्व्वती शल्लकी दुर्गा गोपालपुत्त्रिकासु च ।
प्रार्थितं याचिते शत्रुसंरुद्धेऽभिहिते त्रिषु ॥१३२॥
पित्सन् विहङ्गमे पुंसि पतनेच्छौ पुनस्त्रिषु ।
पिशितं मांसे मांस्यां स्त्री पिण्डितं गणिते घने॥१३३॥
पीडितं करणे स्त्रीणां यन्त्रिते बाधितेऽपि च ।
पुटितं स्याद् हस्तपुटे पाटितस्यूतयोरपि ॥१३४॥
पृषन्मृगे पुमान् विन्दौ न द्वयोः पृषतोऽपि ना ।
अनयोस्तु त्रिषु श्वेतविन्दुयुक्तेऽप्युभावपि ॥ १३५॥
प्रोक्षितं निहते सिक्ते वृहती वसनान्तरे ।
छन्दोभित् क्षुद्रवार्त्ताकी वारिधानीषु वाचि च ॥१३६॥
कण्टकारी महत्योस्तु भवत् युष्मत् सतो स्त्रिषु ।
स्त्री वाणभेदे भरतो नाट्यशास्त्रे मुनौ नटे ॥१३७॥
रामानुजे च दौष्मन्तौ भास्वान् भास्वरसूर्य्ययोः ।
भारतं ग्रन्थभेदे स्याद् वर्षभेदेऽथ भारती ॥१३८॥
वचने च सरस्वत्यां पक्षिवृत्तिप्रभेदयोः ।
भासन्तः सुन्दराकारे त्रिषु ना भासपक्षिणि ॥१३९॥
भावितं वासिते प्राप्ते भूभृत् नाऽद्रौ महीपतौ ।
महती वल्लकीभेदे राज्ये स्यात् तु नपुंसकम् ॥१४०॥
तत्त्वभेदे पुमान् वड्रे वाच्यवन्मथितं पुनः ।
क्लीवं निर्ज्जलघोले स्यात् त्रिष्वालोडितघृष्टयोः ॥१४१॥

मरुद्देवे समीरे ना ग्रन्थिपर्णे नपुंसकम्।
मुषितं हृतखण्डितयो र्मूर्च्छितमपि सोच्छ्रये चमूढे च॥१४२॥
रजतं त्रिषु शुक्ले स्यात् क्लीवं हारे च दुर्वर्णे।
रमति र्नायके नाके पुंसि स्याद् रेसितं पुनः ॥१४३॥
रुतस्तनितयोः क्लीवं स्वर्णादिखचिते त्रिषु।
रेवती हलिपत्न्यां स्यात् ताराभिन्मातृभेदयोः ॥१४४॥
रैवतस्तु सुवर्णालौ शैलभेदेऽपि शङ्करे।
रोचितं कुङ्कुमे रक्ते स्टजुशक्रशरासने ॥१४५॥
पुंसि स्यान् मीनमृगयो र्भेदे रोचितकद्रुमे।
रोहित् मृग्यां लताभेदे स्त्री नाऽर्के ललितं त्रिषु॥१४६॥
ललिते चेप्सितेऽपि स्याद् हारभेदे तु न द्वयोः।
लोहितं रक्तगोशीर्षे कुङ्कुमादिकुचन्दने ॥१४७॥
पुमान् नदान्तरे भौमे वर्णे च त्रिषु तद्वति।
वर्द्धितं प्रहृते छिन्ने पूरिते वहति र्गवि ॥१४८॥
सचिवे पुंसि वहतुः पथिके वृषभे पुमान्।
वनिता जातरागस्त्रीस्त्रियोः स्त्री त्रिषु याचिते॥१४९॥
सेविते वापितं वीजाकृतमुण्डितयो स्त्रिषु।
वसतिः स्यात् स्त्रियां वासे यामिन्याञ्च निकेतने॥१५०॥
व्यायतं व्यापृते दीर्घे दृढे चातिशयेऽन्यवत्।
व्याघातो योगभेदे स्यादन्तरायप्रहारयोः ॥१५१॥

वासिता करिणीनार्य्यो र्वासितं भाविते रुते।
वासन्ती माधवीयूथ्योरुष्ट्रे नाऽवहिते त्रिषु ॥१५२॥
विविक्तं त्रिष्वसम्पृक्ते रहःपूतविवेकिषु।
वसुनन्दे ना विहस्तः पण्डे ना व्याकुले त्रिषु ॥१५३॥
विनीतः सुवहाश्वे स्याद् वणिज्यपि पुमान् त्रिषु।
जितेन्द्रियेऽपनीते च निभृते विनयान्विते ॥१५४॥
विश्वस्तो जातविश्वासे विश्वस्ता विधवास्त्रियाम्।
विद्युत् तड़िति सन्ध्यायां स्त्रियां त्रिषु तु निष्प्रभे॥१५५॥
विवृता क्षुद्ररुग्भेदे विस्तृते त्वभिधेयवत्।
विनेताऽऽदेशके राज्ञि ना विधाता तु वेधसि ॥१५६॥
स्मरे ना विनता तार्क्ष्यजनन्यां पिटकाभिदि।
विनतः प्रणते भुग्ने शिक्षिते चाभिधेयवत् ॥१५७॥
विक्लृतं त्रिषु बीभत्से रोगितेऽसंस्कृतेऽपि च।
विच्छित्ति रङ्गरागे च विच्छेदे हारभेदे स्त्री ॥१५८॥
विदितं बुधितार्थितयो र्विपत्तिरपि यातनापदोर्योषित्।
वृत्तान्तः प्रक्रियायां स्यात्कात्स्न्यवार्त्ताप्रभेदयोः॥१५९
प्रस्तावे वेष्टितं रुद्धे शालके करणान्तरे।
वेल्लितं गमने क्लीवं कुटिले विधुते त्रिषु ॥१६०॥
शकुन्तः कीटभेदे स्यात् भासपक्षिविहङ्गयोः।
श्रीमान् तिलकवृक्षे ना मनोज्ञे धनिके त्रिषु ॥१६१॥

श्रीपतिः पुंसि पृथिवीनाथे च मधुसूदने।
शुद्धान्तोऽन्तःपुरे क्ष्माभृद्रहः कक्षान्तरेऽपि च॥१६२॥
स्रवन्ती तु तरङ्गिण्यां गुल्मस्थानौषधीभिदोः॥
संवर्त्तः प्रलये मुन्यन्तरे कर्षफलेऽपि च॥१६३॥
स्खलितं चलिते भ्रंशे संहतं सङ्गते दृढे।
संस्कृतः कृत्रिमे शस्ते भूषितेऽप्यन्यलिङ्गकः॥१६४॥
क्लीवन्तु लक्षणोपेते स्थपतिः कञ्चुकिन्यपि।
जीवेष्टि याजके शिल्पिभेदे ना सत्तमे त्रिषु॥१६५॥
सङ्घातः स्यात् पुंसि घाते संहतौ नरकान्तरे।
संवित्तिः प्रतिपत्तौ स्यादविवादे जनस्य च॥१६६॥
सन्ततिः स्यात् पङ्क्तौ गोत्रे पारम्पर्य्ये च पुत्रयोः।
समितिः सम्पराये स्यात् सभायां सङ्गमेऽपि च॥१६७॥
समाप्तिरवसाने स्यात् समर्थनेऽथ सम्मतिः।
अभिलाषेऽप्यनुज्ञायां संवित्त्याद्यास्तु योषिति॥१६८॥
स्थापितं निश्चिते न्यस्ते स्तिमितो निश्चलार्द्रयोः।
सिकता स्त्री सिकतिले वालुकायान्तु भूमनि॥१६९॥
सुरतं स्यान्निधुवने देवत्वे सुरता मता।
सुकृतन्तु शुभे पुण्ये क्लीवं सुविहिते त्रिषु॥१७०॥
सुव्रता सुखसन्दोह्याशोभनव्रतयोरपि।
सुनीतिः शोभननये ध्रुवमातरि योषिति॥१७१॥

ह्रुनृतं मङ्गलेऽपि स्यात् प्रियसत्यवचस्यपि ।
हरित् दिशि स्त्रियां पुंसि हयवर्णविशेषयोः ॥१७२॥
अस्त्रियां स्यात् तृणे चाथ हर्म्मितं चिप्तदग्धयोः ।
हरिता स्त्री च दूर्व्वायां हरिद्वर्णयुतेऽन्यवत् ॥१७३॥
हसन्त्यङ्गारधान्याञ्च मल्लिकाशाकिनीभिदोः ।
हारीतः पक्षिभेदे स्यात् मुनिभेदे च कैतवे ॥१७४॥
हृषितं विस्मिते प्रीते प्रहते हृष्टरोमणि ।

## तचतुष्कम् ।

अवसितम्हृद्धेज्ञातेऽप्यवमानगतेचवाच्यलिङ्गंस्यात्१७५
अर्थपतिः पुंलिङ्गो धनाधिनाथे च नरनाथे ।
अवदातं सिते गैारे विशुद्धेऽप्यन्यलिङ्गकम् ॥१७६॥
अवगीतन्तु निर्व्वादे दुष्टगर्हितयोरपि ।
अन्तर्गतं विस्मृते स्यान् मध्यप्राप्ते च वाच्यवत् ॥१७७॥
अङ्गारितन्तु दग्धे स्यात्पलाशकलिकोद्गमे ।
अपावृतस्तु पिहिते स्वतन्त्रे चापि वाच्यवत् ॥१७८॥
अत्याहितं महाभीतैा जीवनापेक्षकर्मणि ।
अभिनीतस्त्रिषु न्याय्ये संस्कृतामर्षिणोरपि ॥१७९॥
अभिजातः कुलीने स्यान् न्याय्यपण्डितयोरपि ।
अभियुक्तः परै रुद्धे तत्परेऽप्यभिधेयवत् ॥१८०॥

अतिमुक्तस्तु निःसङ्गे वासन्त्यां तिनिशेऽपि च।
अपध्वस्तः परित्यक्ते निन्दितेऽप्यवचूर्णिते ॥१८१॥
अधिक्षिप्तः प्रणिहिते कुत्सिते भर्त्सिते त्रिषु।
अंशुमान् भास्करे शालपर्ण्यामंशुमती स्मृता॥१८२॥
भवेदपचितिः पूजाव्ययनिष्कृतिहानिषु।
अथानुमतिरूनेन्दुपूर्णिमानुज्ञयोरपि ॥१८३॥
अभिशस्तिः प्रार्थनापवादयोश्च त्रयं स्त्रियाम्।
आयुष्मान्योगभेदे ना वाच्यवच्चिरजीविनि॥१८४॥
उपाहितोऽनलोत्पाते पुमानारोपिते त्रिषु।
उपाकृतोऽध्वरहतपशौ नोपद्रुते त्रिषु ॥१८५॥
उदास्थितः प्रतीहारे प्रव्रज्यावसिते चरे।
स्यादुल्लिखितमुत्कीर्णे तनूकृते च वाच्यवत् ॥१८६॥
उद्ग्राहितमुदीर्णे स्याद् बद्धग्राहितयोस्त्रिषु।
भवेदुपचितं दिग्धे समृद्धे चान्यलिङ्गकम् ॥१८७॥
उज्जृम्भितं त्रिषूत्फुल्ले चेष्टायाञ्च नपुंसकम्।
उपरक्तो व्यसनार्ते राहुग्रस्तेन्दुसूर्ययोः ॥१८८॥
उपसत्तिः सङ्गमाचे सेवायामपि योषिति।
ऋष्यप्रोक्ता शतावर्य्यतिबलाशूकशिम्बिषु ॥१८९॥
ऐरावतोऽभ्रमातङ्गे नारङ्गे लकुचद्रुमे।
नागभेदे च पुंसि स्याद् विद्युत्तद्भेदयोः स्त्रियाम्॥१९०॥

नपुंसकं महेन्द्रस्य ऋजुदीर्घशरासने।
कलधौतं सुवर्णे स्याद् रजते च नपुंसकम् ॥१९१॥
भवेत् कुहरितं क्लीबं पिकालापे रतध्वनौ।
कुमुद्वान् कुमुदप्राये देशे स्याद् वाच्यलिङ्गकः ॥१९२॥
कुमुद्वती कुमुदिन्यां कुशपत्न्याञ्च योषिति।
कृष्णवृन्ता पाटलायां माषपर्ण्याञ्च योषिति ॥१९३॥
अथ गन्धवती पृथ्वी पुरीभिद् व्यासमातृषु।
सुरायाञ्च गरुत्मांस्तु पक्षिमात्रे खगाधिपे ॥१९४॥
भवेद् गृहपतिः पुंसि गृहस्थेऽपि च सत्रिणि।
चन्द्रकान्तस्तु पुंसि स्यान् मणिभेदे च कैरवे ॥१९५॥
चर्म्मण्वती नदीभेदे कदलीपादपे स्त्रियाम्।
चित्रगुप्तस्तु पुंसि स्याद् यमे तस्य च लेखके ॥१९६॥
दिवाभीतः कुम्भिले स्याद् उलूके कुमुदाकरे।
दिवाकीर्त्तिस्तु पुंसि स्यान् नापितान्तावसायिनोः ॥१९७॥
दीपवान् सिन्धुनद्योर्दीपवत्यापगाभुवोः।
दृशद्वती नदीभेदे कात्यायन्यामपि स्त्रियाम् ॥१९८॥
स्याद् धूमकेतुरुत्पातभेदे वैश्वानरे पुमान्।
नन्द्यावर्त्तः पुमान् वेश्मप्रभेदे तगरद्रुमे ॥१९९॥
नदीकान्तः समुद्रे स्यात् हिज्जले सिन्धुवारके।
नदीकान्ता स्त्रियां जम्ब्वां काकजङ्घौषधावपि ॥२००॥

नागदन्तो द्विपरदे गृहान्निर्गतदारुणि ।
नागदन्ती तु कुम्भायां श्रीहस्तिन्यामपि स्त्रियाम्॥२०१
निष्कासितो निर्गमितेऽप्याहिते धिक्कृतेऽपि च ।
अथ निस्तुषितं त्यक्ते त्वग्विहीने लघूकृते ॥२०२॥
निराकृतिरनाकारेऽस्वाध्याये त्रिषु वारणे ।
स्त्रियां परिगतं प्राप्ते विस्मृतज्ञातचेष्टिते ॥२०३॥
अथ प्रणिहितं न्यस्ते प्राप्तेऽपि च समाहिते ।
अथ पल्लवितं लाक्षारक्ते सपल्लवे तते ॥२०४॥
भवेत् प्रतिहतं द्विष्टे प्रतिस्खलितरुद्धयोः ।
प्रतिच्छिन्नं वारिते स्यात् प्रोषिते पञ्चकं त्रिषु ॥२०५॥
परिवर्त्तो विनिमये कूर्म्मराजे ऽपवर्त्तने ।
परिस्रुता स्त्री वारुण्यां स्यन्दे स्यादभिधेयवत् ॥२०६॥
प्रधूपिता क्लेशितायां सूर्य्यगन्तव्यदिश्यपि ।
पर्य्युषितः पुंसि प्रेते प्रत्यक्तवस्तुनि त्रिषु॥२०७।
पञ्चगुप्तस्तु चार्व्वाकदर्शने कमठे पुमान् ।
प्रजापति र्ना दक्षादौ महीपाले विधातरि ॥२०८॥
प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च ।
सम्प्राप्तौ च प्रबोधे च पदप्राप्तौ च योषिति ॥२०९॥
अथ प्रव्रजिता मांसी मुण्डीरी तापसीषु च ।
प्रतिकृतिरर्च्चायां प्रतिनिधिप्रतिकारयोश्च स्त्री ॥२१०॥

पाशुपतो वकपुष्पे पशुपत्यधिदैवते च तद्भक्ते।
पारिजातः सुरतरौ पारिभद्रतरावपि ॥२११॥
पारावती गोपगीति नद्योर्भिल्लवल्ली फले।
पारावतः कलरवे तथा मर्कटतिन्दुके ॥२१२॥
पुष्पदन्तस्तु दिङ्नागभेदे विद्याधरान्तरे।
पुरस्कृतोऽभिशस्तारिग्रस्ताग्रे कृतपूजिते ॥२१३॥
भगवान् ना जिने गौर्य्यां स्त्रियां पूज्ये तु वाच्यवत्।
अथ भोगवती नागपुरी नद्योरहौ पुमान् ॥२१४॥
रङ्गमाता तु कुट्टन्यां वृत्तरोगान्तरे पुमान्।
लक्ष्मीपतिः पुमान् वासुदेवे नरपतावपि ॥२१५॥
व्यतीपातो महोत्पाते योगभेदापमानयोः।
वनस्पति र्ना द्रुमात्रे विना पुष्पं फलिद्रुमे ॥२१६॥
विनिपातो निपाते स्याद् दैवादिव्यसने पुमान्।
विजृम्भितन्तु चेष्टायां क्लीवं त्रिषु विकस्वरे ॥२१७॥
विवस्वांस्तु सुरे सूर्य्ये तन्नगर्य्यां विवस्वती।
वैजयन्तो महेन्द्रस्य ध्वजप्रासादयोः पुमान् ॥२१८॥
वैजयन्ती पताकायां जयन्तीपादपे स्त्रियाम्।
भवेत् शतधृतिः पुंसि शक्रे च परमेष्ठिनि ॥२१९॥
शुभदन्ती सुदत्यां स्यात् पुष्पदन्तेभयोषिति।
समुद्धतं समुद्गीर्णेऽप्यविनीते च वाच्यवत् ॥२२०॥

सदागति र्नार्कवातनिर्व्वाणेषु सदीश्वरे।
सरस्वांस्तु नदे चाब्धौ नान्यवद् रसिके स्त्रियाम्॥२२१॥
वाणी स्त्री रत्नवाग्देवी गोनदीषु नदीभिदि।
अनुपत्नगामपि सत्यवती व्यासस्य मातरि ॥२२२॥
नारदर्च्चीकयोः पत्नगां स्त्रियां पुंसि नृपान्तरे।
समुद्रान्ता तु कार्पासी पृक्कादुरालभासु च ॥२२३॥
समाहितः समाधिस्थेऽप्युक्तसिद्धान्त आहिते।
निर्विवादीकृतेऽपि स्यात् प्रतिज्ञाते च वाच्यवत्॥२२४॥
समाघातो वधे युद्धे सद्भावान् पण्डिते पुमान्।
सद्भायुक्तेऽन्यलिङ्गोऽथ सुधासूतिः पुमान् मखे ॥२२५॥
चन्द्रे सुभाषितो बुद्धे पुमान् सूक्ते नपुंसकम्।
सूर्य्यभक्तस्तु बन्धूके पुंसि त्रिष्वर्कपूजके॥२२६॥
सेनापतिः कार्त्तिकेयेऽप्यनीकाधिकृते पुमान्।
हिमारातिः पुमान् वीतिहोत्रे किरणमालिनि ॥२२७॥
हैमवत्यभया स्वर्णक्षीर्य्योः श्वेतवचो मयोः।

तपञ्चकम्।

अवलोकितो ना लोकनाथे त्रिषु निरीक्षिते ॥२२८॥
अपराजित ईशाजेश्यान्तरे नाऽजिते त्रिषु।
गिरिकर्णी जयादुर्गासनपर्णीषु योषिति॥२२९॥

उपधूपित आसन्नमरणे परिधूपिते।
स्याद् गणाधिपतिः पुंसि शङ्करेऽपि गजानने ॥२३०॥
भवेत् पिपतिषन् पित्सौ त्रिषु पुंसि विहङ्गमे।
पृथिवीपतिस्तु भूपे ऋषभाख्यौषधौ पुमान् ॥२३१॥
मूर्द्धाभिषिक्तो भूपाले मन्त्रिणि क्षत्त्रियेऽपि च।
यादसाम्पतिरम्भोधौ पश्चिमाशापतौ पुमान् ॥२३२॥
वसन्तदूतश्चूते स्यात् पिकपञ्चमरागयोः।
वसन्तदूती पाटल्यामतिमुक्ते च योषिति।

तषट्कम्।

अर्द्धपारावतश्चित्रकण्ठे तित्तिरपक्षिणि ॥२३३॥

तसप्तकम्।

समुद्रनवनीतं स्यात् क्लीवं पीयूषचन्द्रयोः।

तान्तवर्गः समाप्तः।

---

थैककम्।

थं रक्षणे मङ्गले च साध्वसे च नपुंसकम्।
शिलोच्चये पुमानेव क्वचित्तु भयरक्षके ॥१॥

थद्विकम्।

अर्थो विषयार्थनयो र्धनकारणवस्तुषु।
अभिधेये च शब्दानां निवृत्तौ च प्रयोजने ॥२॥

आस्थात्वालम्बनास्थानयत्नापेक्षासु योषिति।
कन्था मृन्मयभित्तौ स्यात् तथा प्रावरणान्तरे ॥३॥
क्राथः स्यादतिदुःखेऽपि निष्पाके च द्रवस्य च।
कुथः स्त्रीपुंसयोर्वर्णकम्बले पुंसि वर्हिषि ॥४॥
कोथो ना नेत्ररोगस्य भेदे च शटिते त्रिषु।
ग्रन्थो ग्रन्थनाधनयोः स्यात् शास्त्राक्षरसङ्ख्ययोः ॥५॥
ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्व्वणोः।
गाथा श्लोके संस्कृतान्यभाषायां गेयवृत्तयोः ॥६॥
तीर्थं शास्त्राध्वरक्षेत्रोपाय नारीरजःसु च।
अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु ॥७॥
तुत्थमञ्जनभेदे स्यात् नीलीसूक्ष्मैलयोः स्त्रियाम्।
दुःस्थः स्याद् दुर्गते मूर्खे दुःखेन तिष्ठति त्रिषु॥८॥
प्रस्थोऽस्त्रियां मानभेदे सानावुन्नितवस्तुनि।
पाथोऽर्केऽग्नौ जले क्लीवं पृथुः स्यान्महति त्रिषु॥९॥
त्वक्पर्ण्यां कृष्णजीरे स्त्री पुमानग्नौ नृपान्तरे।
प्रोथोऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु॥१०॥
मन्थः स्यात् पुंसि मन्थाने सात्तवे च दिवाकरे।
यूथं तिर्य्यक् समूहेऽस्त्री पुष्पभेदे तु योषिति ॥११॥
रथः पुनानवयवे स्यन्दने वेतसेऽपि च।
वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरवर्त्मनोः ॥१२॥

संस्थस्वरेऽवस्थिते स्त्री स्थितौ सादृश्यनाशयोः ।
सार्थौ वणिक्समूहे स्यादपि सङ्घातमात्रके ॥१३॥
सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम् ।

## थत्रिकम् ।

अतिथिः कुशपुत्रे स्यात् पुमानागन्तुके त्रिषु ॥१४॥
अश्वत्थः पिप्पलद्रौ स्यादश्वत्था पूर्णिमातिथौ ।
अव्यथो निर्व्यथे सर्पे चारटीपथ्ययोः स्त्रियाम् ॥१५॥
उन्माथः कूटयन्त्रे स्यान्मारणे घातके पुमान् ।
उपस्थः शेफसि क्रोड़े तथा मदनमन्दिरे ॥१६॥
उद्गथो रथकीले स्यात् ताम्रचूड़ाख्यपक्षिणि ।
क्षवथुर्ना क्षुते कासे कायस्थः परमात्मनि ॥१७॥
नरजातिविशेषे ना हरितक्यान्तु योषिति ।
कापथः कुत्सितपथे उशीरे क्लीवमिष्यते ॥१८॥
गोग्रन्थिर्नाकरीषे स्याद् गोष्ठे गोजिह्विकौषधौ ।
दमथस्तु पुमान् दण्डे दमे च परिकीर्त्तितः ॥१९॥
निशीथस्तु पुमानर्द्धरात्रे स्याद् रात्रिमात्रके ।
निर्ग्रन्थो नग्नकेऽपि स्यान् निस्ववालिशयोरपि ॥२०॥
प्रमथा स्यात् हरीतक्यां हरपारिषदे पुमान् ।
वरूथो रथगुप्तौ स्यात् वरूथं चर्म्मवेश्मनोः ॥२१॥

मन्मथः कामचिन्तायां कपित्थे कुसुमायुधे ।
वयःस्था तु स्त्रियां ब्राह्मीगुडूच्यामलकीषु च ॥२२॥
सूक्ष्मैलायाञ्च काकोल्यां पथ्यायां तरुणे त्रिषु ।
वमथुः पुंसि वमने गजस्य करशीकरे ॥२३॥
विदिशो योगिकृतिनोः शमथः शान्तिमन्त्रिणोः ।
षड्ग्रन्थातु वचायां स्त्री स्यात्करञ्जान्तरे पुमान्॥२४॥
समर्थस्तु हिते शक्ते सम्बद्धेऽप्यन्यलिङ्गकः ।
सिद्धार्थस्तु पुमान् शाक्यसिंहे च सितसर्षपे ॥२५॥

थचतुष्कम् ।

अनीकस्थो रणगते हस्तिशिक्षाविचक्षणे ।
राजरक्षिणि चिह्ने च वीरमर्द्दनकेऽपि च ॥२६॥
भवेदिति कथाऽपार्थवाच्यश्रद्धेयनष्टयोः ।
चतुष्पथं चतुर्मार्गे सङ्गमे ब्राह्मणेऽपि ना ॥२७॥
अथ चित्ररथः सूर्य्यगन्धर्व्वान्तरयोः पुमान् ।
दशमीस्थो नष्टवीर्य्ये स्थविरेऽप्यलिङ्गकः ॥२८॥
वाणप्रस्थो मधूकेऽपि स्यात् तृतीयाश्रमे पुमान् ।
भवेदुदरथिः पुंसि समुद्रे च वियन्मणौ ॥२९॥

थान्तवर्गः समाप्तः ।

---

दैकक्रम्।

दः पुमानचले दत्ते स्त्रियां शोधनदानयोः।
छेदोपतापरक्षासु पुमांस्तु दातरि स्मृतः॥१॥

दद्विकम्।

अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमान्।
अन्दः स्त्रियां स्यान्-निगडे प्रभेदे भूषणस्य च॥२॥
कन्दोऽस्त्री सूरणे शस्यमूले जलधरे पुमान्।
कुन्दो माघ्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना॥३॥
चोदः स्यात् पुंसि रजसि पेषणे च प्रकीर्त्तितः।
गदो भ्रातरि विष्णोः स्यादामये नाऽऽयुधे गदा॥४॥
छदः पलाशे गरुति ग्रन्थिपर्णतमालयोः।
छन्दोवशेऽभिप्राये धोदा पुत्त्रीमनीषयोः॥५॥
नन्दिर्द्यूताङ्ग आनन्देऽस्त्री नन्दिकेश्वरे पुमान्।
नदी सरिति शोणादौ ना नन्दा स्यादलिञ्जरे॥६॥
गौर्य्यां तिथिविशेषे स्त्री निधिराजभिदोः पुमान्।
निन्दा स्यादपवादेऽपि कुत्सायामपि योषिति॥७॥
पदं शब्दे च वाक्ये च व्यवसायप्रदेशयोः।
पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः॥८॥
श्लोकपादेऽपि च क्लीवं पुंलिङ्गः किरणे पुनः।
पादो ब्रध्ने तुरीयांशे शैलप्रत्यन्तपर्व्वते॥९॥

चरणे च मयूखे च वन्दा लतान्तरे स्मृता।
भिक्षुक्यामपि वन्द्याञ्च विन्दुर्दन्तक्षतान्तरे ॥१०॥
भ्रुवोर्मध्ये रूपकार्थप्रकृतौ पृषते पुमान्।
वेदितर्य्यन्यलिङ्गः स्याद् भद्रं कल्याणशर्म्मणोः॥११॥
भेदो द्वैधे विशेषे स्यादुपजापे विदारणे।
मदो रेतसि कस्तूर्य्यां गर्व्वे हर्षेभदानयोः ॥१२॥
मन्दोऽतीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः।
अल्पे च त्रिषु पुंसि स्यात् हस्तिजात्यन्तरे शनौ॥१३॥
मृदुः स्यात् कोमलेऽतीक्ष्णे रदो दन्ते विलेखने।
विद्या ज्ञाने च निर्द्दिष्टा मनीषायाञ्च योषिति ॥१४॥
वेदः श्रुतौ च वृत्ते च वेदिः स्यात् पण्डिते पुमान्।
स्त्रियामङ्गुलिमुद्रायां स्यात् परिष्कृतभूतले ॥१५॥
शादः स्यात् कर्द्दमे शष्पे स्वादुर्मिष्टमनोज्ञयोः।
सूदस्तु कथितः सूपकारे च व्यञ्जनान्तरे॥१६॥
स्वेदस्तु स्वेदने घर्म्मे हृद् क्लीवं वुक्कचित्तयोः।

दत्रिकम्।

अङ्गदः कपिभेदे ना केयूरे तु नपुंसकम् ॥१७॥
अङ्गदा याम्यदिग्दन्तिहस्तिन्यामपि योषिति।
अर्द्धेन्दुरर्द्धचन्द्रे स्याद् गलहस्तनखाङ्कयोः ॥१८॥

अर्द्धेन्दुः स्याद्दतिप्रौढ़स्त्रीयोन्यङ्गुलियोजने।
अर्व्वुदो मांसपुरुषे दशकोटिषु न स्त्रियाम्॥१९॥
महीधरविशेषे नाऽथास्पदं पदकृत्ययोः।
आसन्दो वासुदेवे स्यात् खट्वाभेदे च योषिति॥२०॥
आक्रन्दः क्रन्दने काने मित्रदारुणयुद्धयोः।
आतर्थ्यपि च पुंसि स्यादामोदो गन्धहर्षयोः॥२१॥
ककुद् स्त्री ककुदोऽप्यस्त्री वृषाङ्के राङ्ध्वजे वरे।
क्षणदो गणके रात्रौ क्षणदा क्षणदं जले॥२२॥
कपर्द्दः खण्डपरशो जटाजूटे वराटके।
कर्णान्दुरन्त्विष्टिकायां कर्णपाश्यामपि स्त्रियाम्॥२३॥
क्रव्याद् रक्षसि पुंसि स्यान्-मांसाशिन्यन्यलिङ्गकः।
कामदा कामधेनौ स्त्री कामदातरि वाच्यवत्॥२४॥
कुमुद् त्रिषु स्यात् कृपणे कैरवे तु नपुंसकम्।
कुमुदं कैरवे रक्तपद्मे स्त्री कुम्भिकौषधौ॥२५॥
गाम्भार्य्यां पुंसि दिङ्नागे नागे शाखामृगान्तरे।
कुसीदं जीवने वृद्ध्या क्लीवं त्रिषु कुसीदिके॥२६॥
कौमुदः स्यात् कार्त्तिकिके चन्द्रिकायान्तु कौमुदी।
गोष्पदं गोपदश्वभ्रे गवाञ्च गतिगोचरे॥२७॥
गोविन्दो वासुदेवे स्याद् गवाध्यक्षे वृहस्पतौ।
गोनर्द्दमपि कैवर्त्तीमुस्तके पुंसि सारसे॥२८॥

जलदो मुस्तके मेघे जीवदो वैद्यविद्विषोः ।
तरद् स्त्रियां प्लवेऽपि स्यात् कारण्डवविहङ्गमे ॥२९॥
तोयदो मुस्तके मेघे पुमानाज्ये नपुंसकम् ।
दरद् स्त्रियां प्रपातेऽपि भयपर्व्वतयोरपि ॥३०॥
दारदो विषभेदे स्यात् पारदे हिङ्गुले पुमान् ।
दायादस्तु भवेत्पुंसि सपिण्डे तनयेऽपि च ॥३१॥
दृषद् निर्ष्पेषणशिलापट्टप्रस्तरयोः स्त्रियाम् ।
धनदस्तु कुवेरे स्यात् पुंलिङ्गो दातरि त्रिषु ॥३२॥
नलदं स्यात् पुष्परसोशीरमांसीषु न द्वयोः ।
नर्म्मदः केलिसचिवे नर्म्मदा सरिदन्तरे ॥३३॥
निर्व्वादः स्यात् लोकवादपरिनिष्ठितवादयोः ।
निषादः स्वरभेदे स्यात् चण्डाले धीवरान्तरे ॥३४॥
प्रमदः सम्मदे मत्ते स्त्रियामुत्तमयोषिति ।
प्रसादोऽनुग्रहे काव्यगुण स्वास्थ्यप्रसत्तिषु ॥३५॥
प्रणादस्तु पुमान् तारशब्दे च श्रवणामये ।
प्रासादो देवनृपयो-र्गृहेऽथ वरदा स्त्रियाम् ॥३६॥
कन्यायां वाच्यलिङ्गस्तु प्रसन्ने च समर्द्धके ।
भसद् स्त्री भास्करे योनौ मर्य्यादा सीमनि स्थितौ॥३७॥
माकन्दः सहकारे स्त्री धात्रीनगरभेदयोः ।
मुकुन्दो निधिभिद्विष्णु रत्नभेदेषु कुन्दुरौ ॥३८॥

मेनादस्तु पुमान् केकिमार्ज्जारच्छागलेषु च।
विशदः पाण्डरे व्यक्ते शरद् स्त्री वत्सरेऽप्यृतौ ॥३९॥
शारदोऽब्दे स्त्रियां तोयपिप्पलीसप्तपर्णयोः।
शस्ये क्लीवं शरज्जाते नूतना प्रतिभे त्रिषु ॥४०॥
षड्बिन्दुः स्यात्कीटभेदपुण्डरीकाच्चयोः पुमान्।
सम्पद् भूतौ गुणोत्कर्षे हारभेदेऽपि च स्त्रियाम्॥४१॥
संविद् स्त्रियां प्रतिज्ञायामाचारज्ञानसङ्गरे।
सम्भाषणे क्रियाकारे सङ्केते नाम्नि तोषणे ॥४२॥
सम्भेदः स्फुटने सङ्गे सुनन्दा रोचनोमयोः।

दचतुष्कम्।

अभिष्यन्दोऽतिवृद्धौ स्यादास्रवेऽक्षिगदेऽपि च ॥४३॥
अष्टापदोऽस्त्री कनके शारीणां फलकेऽपि च।
अष्टापदी चन्द्रमल्ल्यां शरभे मर्कटे पुमान् ॥४४॥
अपवादस्तु निन्दायामाज्ञाविश्रम्भयोरपि।
अभिमर्दस्तु पुंसि स्यादवमर्दे सम्पराये च ॥४५॥
एकपदं तत्काले नपुंसकं वर्त्मनि स्त्री स्यात्।
कटुकन्दः पुमान् शिग्रौ शृङ्गवेररसोनयोः ॥४६॥
करविन्दं रत्नभेदे मुस्ताकुल्माषयोः पुमान्।
अथ कोकनदं रक्तकुमुदे रक्तपङ्कजे ॥४७॥
चतुष्पदी तु पद्ये ना पशौ च करणान्तरे।

भवेज्जनपदो जानपदोऽपि जनदेशयोः ॥४८॥
तमोनुदग्नीन्द्वर्के ना प्रतिपद् स्त्री तिथौ मतौ।
परिवादोऽपवादे स्यात् वीणावादनवस्तुनि ॥४९॥
प्रियंवदः खेचरे ना प्रियवाचि तु वाच्यवत्।
पीठमर्द्दोऽतिधृष्टे स्यात् नायकस्य प्रियेऽपि च ॥५०॥
पुरभेदो नदीवक्रे पत्तनातोद्ययोरपि।
महानादः कुञ्जरे स्याद् वर्षुकाब्दे महास्वने ॥५१॥
मुचुकुन्दो वृक्षभेदे मान्धातृतनयेऽपि च।
मेघनादस्तु वरुणे तनये रावणस्य च ॥५२॥
विशारदः पण्डितेऽपि धृष्टे विष्णुपदन्तु खे।
क्षीरोदे च स्त्रियां गङ्गारविसंक्रान्तिभेदयोः ॥५३॥
शशविन्दुः पुमान् वासुदेवे राजान्तरेऽपि च।
शतानन्दो मुनेर्भेदे देवकीनन्दनेऽपि च ॥५४॥
शतह्रदा स्त्रियां वज्रे सौदामन्याञ्च कीर्त्तिता।
समर्य्यादः समीपे ना मर्य्यादासहिते त्रिषु ॥५५॥

दपञ्चकम्।

भवेदुपनिषद् धर्म्मे वेदान्ते विजने स्त्रियाम्।
सहस्रपादः कारण्डे मार्त्तण्डे यज्ञपूरुषे ॥५६॥

दान्तवर्गः समाप्तः।

धैककम्।

धो ना धर्म्मे कुवेरे च क्लीवन्तु वस्तुनि स्मृतम्।
धो धा च ब्रह्मणि ख्याता धा च स्याद् धारकेऽपि च॥१॥
धी र्ज्ञानभेदे बुद्धौ च धुः स्मृता धूनने स्त्रियाम्।

धद्विकम्।

अर्द्धं समांशे खण्डे नाऽब्धि-र्ना सरसि वारिधौ॥२॥
अन्धं स्यात् तिमिरे क्लीवं चक्षुर्हीनेऽभिधेयवत्।
आधिः पुमांश्चित्तपीड़ा प्रत्याशा बन्धकेषु च॥३॥
व्यसने चाप्यधिष्ठानेऽपीद्धमातपदीप्तयोः।
ऋद्धं सम्पन्नधान्ये च सुसमृद्धे च वाच्यवत्॥४॥
ऋद्धिः स्यादोषधीभेदे समृद्धावपि योषिति।
गन्धः प्रतिवेश्याक्रोदलेशसम्बन्धगन्धके॥५॥
गाधः स्थाने च लिप्सायां गोधा तलनिहाकयोः।
दधि क्षीरान्तरावस्थाभावे श्रीवासवासयोः॥६॥
दग्धः प्लुष्टेऽन्यलिङ्गः स्यात् स्थितार्कदिशि च स्त्रियाम्।
दिग्धो विषाक्तवाणे स्यात् पुंसि लिप्तेऽन्यलिङ्गकः॥७॥
दुग्धं प्रपूरिते क्षीरे दुग्धी क्षीरविकौषधौ।
दोग्धाऽर्थोपजीविकवौ वत्सगोपालयोः पुमान्॥८॥
नद्धो बद्धे तथोद्वृत्ते बन्धस्त्वाधौ च बन्धने।
बन्धुः स्यात् पुंसि बन्धूके मित्रे भ्रातरि बान्धवे॥९॥

बाधा दुःखे निषेधे च बुधः सौम्ये च पण्डिते ।
बुद्धो जिने लब्धवर्णे पुंसि स्याद् बुधितेऽन्यवत् ॥१०॥
बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे ।
मधु पुष्परसक्षौद्रमद्ये ना तु मधुद्रुमे ॥११॥
वसन्तदैत्यभिच्चैत्रे स्याज् जीवन्त्यान्तु योषिति ।
मिद्धं चित्ताभिसङ्कल्पे क्लीवमालस्यनिद्रयोः ॥१२॥
मुग्धस्तु सुन्दरे मूढे मेधा बुद्धौ क्रतौ पुमान् ।
राधो मासान्तरे राधा चित्रभेदे च धन्विनाम् ॥१३॥
रोध्री विशाखामलकीविष्णुक्रान्तासु विद्युति ।
लुब्ध आकाङ्क्षिणि व्याधे वधूः स्त्री सारिवौषधौ ॥१४॥
स्नुषाशटीनवोढ़ासु भार्य्यापृक्काङ्गनासु च ।
व्याधिः कुष्ठे च रोगे ना व्याधो मृगयुदुष्टयोः ॥१५॥
तारामयेशे च विधु-र्ना कर्पूरेन्दुविष्णुषु ।
विद्धं स्याद् वेधिते क्षिप्ते सदृशे बाधिते त्रिषु ॥१६॥
विधि-र्ना नियतौ काले विधाने परमेष्ठिनि ।
विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधौ ॥१७॥
वृद्धो जीर्णे प्रवृद्धे ज्ञे त्रिषु क्लीवन्तु शैलजे ।
वृद्धिस्तु वर्द्धने योगेऽप्यष्टवर्गौषधान्तरे ॥१८॥
कलान्तरे चाभ्युदये समृद्धावपि योषिति ।
श्रद्धाऽऽदरे च काङ्क्षायां श्राद्धं श्रद्धान्विते त्रिषु ॥१९॥

ह्रव्यकव्यविधौ क्लीवं शुद्धं स्यात् त्रिषु केवले।
निर्द्दोषे च पवित्रे च सन्धा स्थितिप्रतिज्ञयोः ॥२०॥
स्पर्द्धा संघर्षणेऽपि स्यात् साम्ये क्रमसमुन्नतौ।
सन्धिः पुमान् सुरुङ्गायां भगे सङ्घटनेऽपि च ॥२१॥
रूपकाणां मुखाद्यङ्गेऽप्यवकाशे च कीर्त्तितः।
स्कन्धः स्यात् नृपतावंशे सम्परायसमूहयोः ॥२२॥
काये तरुप्रकाण्डे च भद्रादौ छन्दसो भिदि।
साधु र्वार्द्धुषिके चारौ सज्जने चाभिधेयवत् ॥२३॥
सिद्धो व्यासादौ भेदे योगस्य देवयोनिस्व।
त्रिषु निष्पन्ने स्निग्धं स्नेहयुक्ते चिक्कणेऽपि स्यात् ॥२४॥
सिन्धु र्वमथुदेशाब्धिनदे ना सरिति स्त्रियाम्।
सिद्धिः स्त्री योगनिष्पत्तिपादुकान्तर्द्धिवृद्धिषु ॥२५॥
सुधा स्त्री लेपने मूर्व्वायां स्नुहीगङ्गेष्टकामृते।

## धत्रिकम्।

अवधिस्त्ववधाने स्यात् सीम्नि काले विले पुमान् ॥२६॥
अगाधमतलस्पर्शे त्रिषु श्वभ्रे नपुंसकम्।
आनद्धं मुरजादौ च क्लीवं स्यात् सन्दिते त्रिषु ॥२७॥
आविद्धो वाच्यलिङ्गः स्यात् कुटिले च पराहते।
आबन्धो दृढबन्धे स्यात् प्रेम्न्यलङ्कारयोक्त्रयोः ॥२८॥

उत्सेधस्तूच्छ्रये न स्त्री क्लीवं संहननेऽपि च ।
उपाधि र्धर्म्मचिन्तायां कुटुम्बव्यापृते छले ॥२९॥
विशेषणे पुंस्युपधिः पुंसि व्याजरथाङ्गयोः ।
कबन्धोऽस्त्री क्रियायुक्तव्यपमूर्द्धकलेवरे ॥३०॥
क्लीवं जले पुंस्युदरे वाङ्करचोविशेषयोः ।
दुर्व्विधो वाच्यलिङ्गः स्याद् दुर्गतेऽपि खलेऽपि च ॥३१॥
न्यग्रोधस्तु पुमान् व्यामवटयोश्च शमीतरौ ।
न्यग्रोधी त्वपचित्रायां निरोधेनाशरोधयोः ॥३२॥
निषधः कठिने देशे तद्राजे पर्व्वतान्तरे ।
परिधिर्ना यज्ञियद्रुशाखायामुपसूर्य्यके ॥३३॥
प्रसिद्धो भूषिते ख्याते प्रणिधि र्नाथने चरे ।
मागधी स्त्री कणायूथ्यो र्वाच्यवत् मगधोद्भवे ॥३४॥
पुंसि वैश्यात् क्षत्रियाजे शुक्लजीरकवन्दिनोः ।
विवधोवीवधश्चापि पर्य्यहारेऽध्वभारयोः ॥३५॥
विश्रब्धोऽनुद्भटेऽपि स्याद् गाढविश्वस्तयोस्त्रिषु ।
विबुधो ज्ञे सुरे वीरुध् लताविटपयोः स्त्रियाम् ॥३६॥
सन्नद्धो वर्म्मिते व्यूढे सम्बाधः सङ्कटे भगे ।
सन्निधिस्तु पुमान् सन्निधानेऽपीन्द्रियगोचरे ॥३७॥
संसिद्धिः प्रकृतौ सिद्धौ मदोन्मायामपि स्त्रियाम् ।
सम्बोधो बोधने क्षेपे समाधि र्ना समर्थने ॥३८॥

ध्याननीवाकनियमे काव्यस्य च गुणान्तरे।
सुगन्धिः स्यादिष्टगन्धे त्रिषु क्लीवन्तु वालुके ॥३९॥

धचतुष्कम्।

अवरोधस्तिरोधाने राजदारेषु तद्गृहे।
अवष्टब्धोऽविदूरे स्यादाक्रान्ते चावलम्बिते ॥४०॥
अनुबन्धः शिशौ दोषोत्पादे मुख्यानुयायिनि।
विनश्वरे प्रकृत्यादौ प्रवृत्तस्यानुवर्त्तने ॥४१॥
अनुबन्धी तु हिक्कायां तृष्णायामपि योषिति।
अनिरुद्ध उषानाथे पुंसि चानर्गलेऽन्यवत् ॥४२॥
आशाबन्धः समाश्वासे तथा मर्कटजालके।
इष्टगन्धः सुगन्धौ स्यात् त्रिषु क्लीवन्तु वालुके ॥४३॥
इक्षुगन्धा कोकिलाक्षे क्रोष्ट्यां काशे च गोक्षुरे।
उपलब्धि र्मतौ प्राप्तावपि ज्ञाने च योषिति ॥४४॥
उग्रगन्धाऽजमोदायां वचायां क्लिक्कौषधौ।
कालस्कन्धस्तमाले स्यात् तिन्दुके जीवकद्रुमे ॥४५॥
तीक्ष्णगन्धा वचाराजिकयोः शोभाञ्जने पुमान्।
तृणगोधा चित्रकोले कृकलासेऽपि योषिति ॥४६॥
परिव्याधस्तु पुंसि स्याद् वेतसे च द्रुमोत्पले।
ब्रह्मबन्धुरधिक्षिप्ते निर्द्देशे ब्राह्मणस्य च ॥४७॥

महौषधन्तु शुण्ठ्यां स्याद् विषायां लशुनेऽपि च।
समुन्नद्धः समुद्भूते पण्डितम्मन्यगर्व्विते ॥४८॥

धपञ्चकम्।

योजनगन्धा कस्तूर्य्यां सितायां व्यासमातरि ॥

धान्तवर्गः समाप्तः।

---

नैककम्।

नः पुमान् सुगते बन्धे द्विरण्डे प्रस्तुतेऽपि च।

नद्विकम्।

अग्निं वैश्वानरेऽपि स्याच् चित्रकाख्यौषधौ पुमान्॥१
अन्नं भुक्ते च भक्ते स्याद् इनः पत्यौ नृपार्कयोः।
उन्नं क्लिन्ने च सुरते क्नतस्नं सर्व्वाम्बुकुक्षिषु ॥२॥
घनं स्यात् कांस्यतालादिवाद्यमध्यमनृत्ययोः।
ना मुस्ताब्दौघदार्ढ्येषु विस्तारे लोहमुद्गरे ॥३॥
त्रिषु सान्द्रे दृढे चाथ चिह्नं लक्ष्मपताकयोः।
चीनो देशांशुकव्रीहिभेदे तन्तौ मृगान्तरे ॥४॥
छन्नन्तु रहसि क्लीवं छादिते वाच्यलिङ्गकम्।
छिन्नं छृत्ते त्रिलिङ्गं स्याद् गुडूच्यामपि योषिति ॥५॥
जनो लोके महर्लोकात् परलोके च पामरे।
जनी सीमन्तिनीवध्वोरुत्पत्तावोषधीभिदि ॥६॥

जह्नुः स्यात् पुंसि राजर्षिभेदे च मधुसूदने ।
ज्यानिर्जीर्णौ च हानौ च तटिन्यामपि योषिति ॥७॥
जिनोऽर्हति च वृद्धे च पुंसि स्याज् जित्वरे त्रिषु ।
ज्योत्स्ना चन्द्रातपेऽपि स्यात्ज्योत्स्नायुक्तनिशि स्मृता ॥८॥
ज्योत्स्नीपटोलिकायां स्याज्ज्योत्स्नायुक्तनिशि स्त्रियाम् ।
तनुः काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे ॥९॥
दानं गजमदे त्यागे पालनच्छेदशुद्धिषु ।
दानुर्दातरि विक्रान्ते दीना स्त्री मूषिकस्त्रियाम् ॥१०॥
वाच्यवद् दुर्गते भीते द्युम्नं वित्ते बलेऽपि च ।
धनुः पुमान् पियालद्रौ राशिभेदे शरासने ॥११॥
धनं स्याद् गोधने वित्ते धाना भृष्टयवे स्त्रियाम् ।
धन्याकेऽभिनवोद्भिन्ने धुनी नद्यां नदे पुमान् ॥१२॥
नग्नो वन्दिक्षपणयोः पुंसि त्रिषु विवाससि ।
न्यूनं गर्ह्योनयोः पानं पीतिभाजनरक्षणे ॥१३॥
भानुर्ना किरणे सूर्य्ये भिन्नं स्यात् त्रिषु दारिते ।
सङ्गतेऽन्यत्र फुल्ले च मानश्चित्तोन्नतौ ग्रहे ॥१४॥
क्लीवं प्रमाणे प्रस्थादौ मीनो राश्यन्तरे झषे ।
मुनिः पुंसि वशिष्ठादौ वकसेनतरौ जिने ॥१५॥
मृत्स्ना मृत्सा तुवर्य्याः स्त्री यानं स्याद् वाहने गतौ ।
योनिः स्त्रीपुंसयोस्तु स्यादाकरे स्मरमन्दिरे ॥१६॥

रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम् ।
रास्ना तु स्याद् भुजङ्गाख्यामेलापर्ण्यामपि स्त्रियाम् ॥१७॥
लग्नं राश्युदये क्लीवं सक्तलज्जितयोस्त्रिषु ।
वस्नस्त्ववक्रये पुंसि वेतने स्यान् नपुंसकम् ॥१८॥
वनं नपुंसकं नीरे निवासालयकानने ।
वह्निर्वैश्वानरेऽपि स्याच् चित्रकाख्यौषधौ पुमान् ॥१९॥
वानं शुष्कफले शुष्के स्यूतिकर्म्मकटे गतौ ।
विन्नं विचारिते लब्धे वुघ्नो ना मूलरुद्रयोः ॥२०॥
श्वा पुमान् कुक्कुरे ख्यातः स्थानभेदे च वास्तुनः ।
शीनो मूर्खे चाजगरे श्येनः पत्रिणि पाण्डरे ॥२१॥
स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान् ।
सानुस्त्री वने प्रस्थे वात्यामार्गाग्रकोविदे ॥२२॥
स्थानं सादृश्येऽवकाशे स्थितौ वृद्धिक्षयेतरे ।
स्त्यानं स्निग्धे प्रतिध्वाने घनत्वालस्ययोरपि ॥२३॥
स्नानं स्नानीयेऽभिषवे सूनं प्रसवपुष्पयोः ।
सूना पुत्र्यां बधस्थानगलशुण्डिकयोः स्त्रियाम् ॥२४॥
सूनुः पुत्रेऽनुजेऽर्के ना स्यूनः किरणसूर्य्ययोः ।
स्यनु हट्टविलासिन्यां मृत्यावस्त्रे गदे स्त्रियाम् ॥२५॥
द्वयोः कपोलावयवे हीनं गर्ह्योनयोस्त्रिषु ।

नत्रिकम् ।

अञ्जनं कज्जले चाक्तौ सौवीरे च रसाञ्जने ॥२६॥
पुंसि ज्येष्ठादिग्गजयो रञ्जना वानरीभिदि ।
अञ्जनी लेप्यनार्य्याञ्चावनं प्रीतौ च रक्षणे ॥२७।
अयनं पथि भानोरप्युदग्दक्षिणतो गतौ ।
अपानन्तु गुदे क्लीवं पुंसि स्यात् तस्य मारुते ॥२८॥
असनं क्षेपणे क्लीवं पुंसि स्याज्जीवकद्रुमे ।
अङ्गनं प्राङ्गणे याने कामिन्यामङ्गना मता ॥२९॥
अर्ज्जुनः ककुभे पार्थे कार्त्तवीर्य्यमयूरयोः ।
मातुरेकसुतेऽपि स्यात् पुंलिङ्गो धवलेऽन्यवत् ॥३०॥
नपुंसकं तृणे नेत्रगदे चाप्यर्ज्जुनी गवि ।
उषायां बाणदानद्यां कुट्टिन्यामपि च क्वचित् ॥३१॥
अम्लानो महासहायां नाऽन्यलिङ्गस्तु निर्म्मले ।
अर्शोघ्नी तालमूल्यां स्यादर्शोघ्नः शूरणेऽपि च ॥३२॥
असिक्नी स्यादवृद्धान्तःपुरप्रेष्यानदीभिदोः ।
अशनिः स्त्रीपुंसयोः स्याच्च चञ्चलायां पवावपि ॥३३।
अरत्नि र्ना सप्रकोष्ठततार्ङ्गुलिकरेऽपि च ।
कफोणावप्ययाऽली स्याद् वृश्चिके भ्रमरेऽपि च ॥३४॥
अर्थी पुमान् याचके स्यात् सेवके च विवादिनि ।
अध्वा ना पथि संस्थाने स्यादवस्कन्दकालयोः ॥३५॥

अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः ।
आसनं द्विरदस्कन्धे पीठे यात्रानिवर्त्तने ॥३६॥
आसनी विपणौ स्थित्यामासनो जीरकद्रुमे ।
आदानं ग्रहणेऽपि स्यादलङ्कारे च वाजिनाम् ॥३७॥
आपन्नः सविपत्तौ च प्राप्ते वाच्यवदीरितः ।
आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि ॥३८॥
धृतावपि मनीषायां शरीरब्रह्मणोरपि ।
आलानं करिणां बन्धस्तम्भे रज्जौ च न स्त्रियाम् ॥३९॥
ईशानं ज्योतिषि क्लीवं पुंलिङ्गः स्यात् त्रिलोचने ।
उत्तानमगभीरे स्यादूर्द्धास्यशयिते त्रिषु ॥४०॥
उत्थानमुद्यमे तन्त्रे पौरुषे पुस्तके रणे ।
प्राङ्गणाङ्गमहर्षेषु मलवेगेऽपि न द्वयोः ॥४१॥
उद्यानं स्यान् निःसरणे वनभेदे प्रयोजने ।
उदानोऽप्युदरावर्त्ते वायुभेदे भुजङ्गमे ॥४२॥
उद्वानमुद्गते वाच्यलिङ्गं चुल्ल्यां नपुंसकम् ।
ओदनं न स्त्रियां भक्ते बलायामोदनी स्त्रियाम् ॥४३॥
कमनः कामुके कामेऽभिरूपेऽशोकपादपे ।
कम्पनं न द्वयोः कम्पे कम्रे स्यादभिधेयवत् ॥४४॥
कठिनमपि निष्ठुरे स्यात् स्तब्धेऽपि त्रिषु नपुंसकं स्थाल्याम्
कठिनी खटिकायामपि कठिना गुडशर्करायाञ्च ॥४५॥

क्रन्दनं रोदनेऽपि स्यादाह्वानेऽप्यथ कल्पना।
कर्त्तनः सज्जनायां स्त्री क्लीवं क्लृप्तौ च कर्त्तने ॥४६॥
कर्त्तनं न द्वयोश्छेदे नारीणां सूत्रनिर्म्मितौ।
कर्म्माऽस्त्री व्याप्यक्रिययोः कदनं मर्द्दपापयोः ॥४७॥
काञ्चनः काञ्चनाले स्याच् चम्पके नागकेशरे।
उदुम्बरे च धुस्तूरे हरिद्रायाञ्च काञ्चनी ॥४८॥
क्लीवेऽब्जकेशरे हेम्नि कामिनी भीरुवन्दयोः।
कामी तु कामुके चक्रवाके पारावतेऽपि च ॥४९॥
कानीनः कन्यकाजाततनये व्यासकर्णयोः।
काकिनी पणपादेऽपि मानपादे वराटके ॥५०॥
काननं विपिने गेहे परमेष्ठिमुखेऽपि च।
कुहनं मृत्तिकाभाण्डविशेषे काचभाजने ॥५१॥
कुहना दम्भचर्य्यायामीर्ष्यालौ कुहनस्त्रिषु।
कृती स्यात् पण्डिते योग्ये केतनन्तु निमन्त्रणे ॥५२॥
गृहे केतौ च कृत्येऽथ केशी केशवति त्रिषु।
दैत्ये ना चौरपुष्प्यां स्त्री कौलीनं गुह्यजन्ययोः ॥५३॥
कुकर्म्मणि कुलीनत्वे युद्धे पश्वहिपक्षिणाम्।
कौपीनं स्यादकार्य्येऽपि चौरगुह्यप्रदेशयोः ॥५४॥
खलिनी खलवृन्दे स्यात् तालपर्ण्यामपि स्त्रियाम्।
खञ्जनः खञ्जरीटे स्त्री सर्षप्यां खञ्जनं गतौ ॥५५॥

खड्गी ना गण्डके मञ्जुघोषे खड्गधरे त्रिषु।
गर्जनं निनदे कोपे गहनं कलिले त्रिषु ॥५६॥
नपुंसकं गह्वरे स्याद् दुःखकाननयोरपि।
गन्धनमुत्साहे स्यात् प्रकाशने सूचनेच हिंसायाम् ॥५७॥
ग्रामीणः शुनि काके पुंसि त्रिषु सम्भृते ग्रामैः।
ग्रावा तु प्रस्तरे पृथ्वीधरे पुंस्यथ गृञ्जनम् ॥५८॥
विषदिग्धपशोर्मांसे क्लीवं पुंसि रसोनके।
गोस्तनो हारभेदे ना द्राक्षायां गोस्तनी स्त्रियाम् ॥५९॥
गोमी शृगाले पुंसि स्यात् त्रिषु गोमत्युपासके।
घट्टना चलनावृत्त्योः स्यन्दनी तु नदीभिदि ॥६०॥
चन्दनोऽस्त्री मलयजे भद्रकाल्यां नपुंसकम्।
चलनं भ्रमणे कम्पे कम्प्रे तु वाच्यलिङ्गकम् ॥६१॥
चलनी वस्त्रघर्घर्यां वारीभेदेऽपि च क्वचित्।
चक्री तैलिकभित्-काककुलालाजाऽहि सूचके ॥६२॥
चर्म्मी फलकपाणौ स्याद् भूर्ज्जे भृङ्गरिटावपि।
चर्म्मकृतौ च फलके चेतना संविदि स्त्रियाम् ॥६३॥
वाच्यवत् प्राणयुक्तेऽथ छद्म शाठ्यापदेशयोः।
छर्द्दनं वमने क्लीवं निम्बालम्बुषयोः पुमान् ॥६४॥
छदनञ्च दले पत्रेऽपिधाने छेदनं भिदि।
कर्त्तने च जनुः पुंसि जन्तौ वैश्वानरेऽपि च ॥६५॥

जवनं स्यात्तु वेगेऽपि हये ना वेगिनि त्रिषु।
जननी तु दयामात्रोर्जननं वंशजन्मनोः ॥६६॥
जयनं स्यात् तुरङ्गादिसन्नाहे विजयेऽपि च।
जघनञ्च स्त्रियाः श्रोणिपुरोभागे कटावपि ॥६७॥
ज्ञानी स्यात् पुंसि दैवज्ञे ज्ञानयुक्तोऽन्यलिङ्गकः।
जीवनं वर्त्तने जीवप्राणधारणयोर्जले ॥६८॥
जीवनी जीवनाचापि जीवन्तीमेदयोः क्रमात्।
तपनोऽरुष्करेऽपि स्याद् भास्करे निरयान्तरे ॥६९॥
तलुनः पवने यूनि युवत्यां तलुनी स्मृता।
तलिनं विरले स्तोके स्वच्छेऽपि वाच्यलिङ्गकम् ॥७०॥
तमोघ्नः सूर्य्यवह्नीन्दुबुद्धशङ्करविष्णुषु।
त्यागी दातरि शूरेऽथ तेवनं केलिकानने ॥७१॥
क्रीड़ायां तेमनन्त्वार्द्रीकरणे व्यञ्जनेऽपि च।
तेजनः पुंसि वंशे स्यात् तेजनी तृणपूलके ॥७२॥
तोदनं व्यथने तोत्त्रे दंशनं दंशवर्म्मणोः।
दर्शनं नयनस्वप्नबुद्धिधर्म्मोपलब्धिषु ॥७३॥
शास्त्रदर्पणयोश्चाथ दमनः पुष्पवीरयोः।
दशनः शिखरे दन्ते कवचे तु नपुंसकम् ॥७४॥
दहनस्चित्रके भल्लातकेऽग्नौ दुष्टचेष्टिते।
दशानं ज्योतिषि क्लीवं पुंलिङ्गः स्याद् विरोचने ॥७५॥

देवनं व्यवहारे स्याज् जिगीषाक्रीड़योरपि।
देवनोऽक्षेषु पुंसि स्याद् ध्वजीतु पृथिवीधरे ॥७६॥
रथब्राह्मणयोश्चापि भुजङ्गमतुरङ्गयोः।
धन्वी धनुर्धरेऽपि स्यादर्ज्जुने ककुभद्रुमे ॥७७॥
धन्वा तु मरुदेशे ना क्लीवं चापे स्थलेऽपि च।
धमनो नाऽनले भस्त्राधमापकक्रूरयोस्त्रिषु ॥७८॥
धमनी तु शिराहट्टविलासिन्योश्च योषिति।
धावनं गमने शुद्धौ पृश्निपर्ण्यान्तु धावनी ॥७९॥
धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः।
नन्दनं वासवोद्याने नन्दनो हर्षके सुते ॥८०॥
नन्दी हरप्रतीहारे गर्दभाण्डे वटद्रुमे।
नन्दिन्युमायां गङ्गायां ननान्दृधेनुभेदयोः ॥८१॥
नलिनी पद्मिनी व्योमनिम्नगाकमलाकरे।
नपुंसकं नीलिकायां न पुंसि सरसीरुहे ॥८२॥
निदानं कारणे वत्सदामादिकारणक्षये।
निधनं स्यात् कुले नाशे प्रधनं दारणे रणे ॥८३॥
पवनं कुम्भकारस्य पाकस्थाने नपुंसकम्।
निष्पावमरुतोः पुंसि प्रज्ञानं बुद्धिचिह्नयोः ॥८४॥
प्रधानं स्यान् महामात्रे प्रकृतौ परमात्मनि।
प्रज्ञायामपि च क्लीवमेकत्वे तूत्तमे सदा ॥८५॥

पद्मिनी पद्मसङ्घाते स्त्रीविशेषे सरोऽम्बुजे ।
प्रसन्ना स्त्री सुरायां स्याद्स्वच्छसन्तुष्टयोस्त्रिषु ॥८६॥
प्रस्रवणो वाच्यवज्जाते क्लीवन्तु फलपुष्पयोः ।
पत्री श्येने पत्ररथे काण्डद्रुरथिकाद्रिषु ॥८७॥
पर्व्व क्लीवं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे ।
दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि ॥८८॥
पक्ष्म सूत्रादिसूक्ष्मांशे किञ्जल्के नेत्रलोमनि ।
पाठीनो मीनभेदे स्यात् पाठके गुग्गुलद्रुमे ॥८९॥
पावनन्तु जले कृच्छ्रे ना व्यासे पावके त्रिषु ।
पाचनं दशमूल्यादौ प्रायश्चित्ते च नाऽनले ॥९०॥
वाच्यवत् पाचयितरि हरीतक्यान्तु योषिति ।
पाशी व्याधे च वरुणे पिशुनं कुङ्कुमे स्मृतम् ॥९१॥
कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु ।
पृक्कायां पिशुना स्त्री स्यात् पीतनं पीतदारुणि ॥९२॥
कुङ्कुमे हरिताले च पुमानाम्रातके मतः ।
पूतना तु हरीतक्यां दानवीरोगभेदयोः ॥९३॥
पृतना तु स्त्रियां सेनामात्रसेनाविशेषयोः ।
प्रेमा ना वासवे वाते प्रेमाऽस्त्री स्नेहनर्म्मणोः ॥९४॥
फलिन्यग्निशिखायाञ्च फल्यां स्त्रीफलिनि त्रिषु ।
फाल्गुनस्तु गुडाकेशे नदीजार्ज्जुनभूरुहे ॥९५॥

तपस्यसंज्ञमासे तत्-पूर्णिमायान्तु फाल्गुनी।
ब्रह्म तत्त्वतपोवेदेन द्वयोः पुंसि वेधसि ॥९६॥
ऋत्विग्योगभिदोर्विप्रे बन्धनं बधबन्धयोः।
वन्दनी नतिजीवातुरुटी याचनकर्म्मसु ॥९७॥
वाहिनी स्यात् तरङ्गिण्यां सेनासैन्यप्रभेदयोः।
वाणिनी नर्त्तकी मत्ताविदग्धवनितासु च ॥९८॥
बुधानस्तु गुरौ विज्ञे बोधनं गन्धदीपने।
बोधनी बोधपिप्पल्यो र्भस्म स्यात् काञ्चने भूतौ॥९९॥
भण्डनं कवचे युद्धे खलीकारेऽपि न द्वयोः।
भट्टिनी द्विजभार्य्यायां नाट्योक्त्या राजयोषिति ॥१००॥
भवनं स्याद् गृहे भावे भाजनं योग्यपात्रयोः।
भावना तु न ना ध्याने पर्य्यालोचेऽधिवासने॥१०१॥
भुवनं विष्टपेऽपि स्यात् सलिले गगने जने।
भोगी भुजङ्गमेऽपि स्याद् ग्रामपात्रे नृपे पुमान्॥१०२॥
विहाय महिषीमन्यराजयोषिति भोगिनी।
मदनः स्मरवसन्तद्रुभेदधत्तूरसिक्थके ॥१०३॥
मलनः पटवासे ना कर्द्दमे तु नपुंसकम्।
मलिनं दूषिते कृष्णे ऋतुमत्यान्तु योषिति ॥१०४॥
मण्डनं भूषणे क्लीवं स्यात् त्रिष्वलङ्करिष्णुनि।
मसनं गण्डगोले स्यात् तपस्ये परमेष्ठिनि ॥१०५॥

मन्दनं तार्किके रम्ये गृहे देहे जलाशये।
मन्दनोऽस्त्री जित्वरे स्यात् मेषादौ मदिषेऽपि च ॥१०६॥
मार्ज्जनं न पुमान् मार्ष्टौ पुंसि स्याल्लोध्रशाखिनि।
मालिनी मातृकावृत्तभिदो मालिकयोषिति ॥१०७॥
गौरी चम्पा नगर्य्योश्च मन्दाकिन्यां नदीभिदि।
माधुनोऽस्त्री कलङ्के स्यादिन्दौ विपथगामिनि ॥१०८॥
मानिनी तु स्त्रियां फल्ग्यां मानी मानवति त्रिषु।
मिथुनं न द्वयोः राशिभेदे स्त्रीपुंसयुग्मके ॥१०९॥
मुण्डनं वपने त्राणे मेहनं मूत्रशिश्नयोः।
मैथुनं सुरतेऽपि स्यात् सङ्गतेऽपि नपुंसकम् ॥११०॥
यमनं बन्धने चोपरतौ क्लीवं यमे पुमान्।
यवनो देशभेदे ना वेगवेगाधिकाश्वयोः ॥१११॥
यवन्योषधिभेदे स्त्री वाच्यवद् वेगिनि स्मृता।
यापनं वर्त्तने कालक्षेपे निरसनेऽपि च ॥११२॥
युवा स्यात् तरुणे श्रेष्ठे निसर्गबलशालिनि।
युञ्जानः सारथौ विप्रे योजनं परमात्मनि ॥११३॥
चतुष्क्रोश्याञ्च योगेऽथ रसनं स्वदने ध्वनौ।
जिह्वायाञ्च नपुंसि स्याद् रास्नायां रसना स्त्रियाम् ॥११४॥
रञ्जनो रागजनके रञ्जनं रक्तचन्दने।
शुण्डारोचनिकानीलीमञ्जिष्ठासु च रञ्जनी ॥११५॥

रजनी नीलनीरात्रिहरिद्राजतुकासु च।
राधनं साधने प्राप्तौ राधना भाषणे स्त्रियाम्॥११६॥
राजाप्रभौ च नृपतौ क्षत्त्रिये रजनीपतौ।
यक्षे शक्रे च पुंसि स्याद् रागी रक्तविकामुके ॥११७॥
रेचनी त्रिवृतादन्त्योः रोचनी कर्कशे स्मृता।
रोचना रक्तकह्लारे गोपित्तवारयोषितोः ॥११८॥
रोचनः कूटशाल्मल्यां पुंसि स्याद् रोचके त्रिषु।
रोदनं क्रन्दनेऽस्रेऽपि दुरालभौषधौ स्त्रियाम् ॥११९॥
रोही रोहितकेऽश्वत्थवटपादपयोः पुमान्।
लङ्घनन्तूपवासे स्याच् चङ्क्रमे प्लवनेऽपि च ॥१२०॥
ललना कामिनी नारीभेदजिह्वासु योषिति।
लक्ष्म चिह्ने प्रधानेऽथ लाञ्छनं नामचिह्नयोः ॥१२१॥
लेखनं छर्दने भूर्जे लिपिन्यासेऽथ वर्ज्जनम्।
हिंसात्यागयोर्वपनं वीजाधाने च मुण्डने ॥१२२॥
वसनं छादने वस्त्रे वमनं छर्द्दनेऽर्द्दने।
वर्द्धनं वृद्धिवर्द्धिष्णु च्छेदे घस्यान्तु वर्द्धनी ॥१२३॥
व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेऽहनि।
व्यसनन्त्वशुभे सक्तौ पानस्त्रीमृगयादिषु ॥१२४॥
दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे।
वर्त्तनो वामने क्लीवं वृत्तौ स्त्री पेषणाध्वनोः ॥१२५॥

न पुंसि तूलनालायां तर्कुपिण्डे च जीवने ।
वर्त्तिष्णौ त्रिषु वज्री तु बुद्धे देवाधिपे पुमान् ॥१२६॥
वचक्नु स्तु पुमान् विप्रे वावदूकेऽभिधेयवत् ।
वर्णी स्याल्लेखके चित्रकरेऽपि ब्रह्मचारिणि ॥१२७॥
वर्ष्म देहप्रमाणातिसुन्दराकृतिषु स्मृतम् ।
वर्त्म नेत्रच्छदे मार्गे वाजी वाणाश्वपक्षिषु ॥१२८॥
वामनो नीचे खर्व्वे च त्रिषु पुंसि तु दिग्गजे ।
हराङ्कोटवृक्षेऽथ वासनं धूपनेऽपि च ॥१२९॥
वारिधान्याञ्च वस्त्रे च प्रत्याशाज्ञानयोः स्त्रियाम् ।
वाग्मी पटौ सुराचार्य्ये विज्ञानं ज्ञानकर्म्मणोः ॥१३०॥
वितुन्नं सुनिषण्णे च शैवाले च नपुंसकम् ।
वितानो यज्ञ उल्लोचे विस्तारे पुन्नपुंसकम् ॥१३१॥
क्लीवं वृत्तविशेषे स्यात् त्रिलिङ्गोमन्दतुच्छयोः ।
विमानं व्योमयाने च सार्व्वभौमगृहेऽपि च ॥१३२॥
घोटके यानमात्रे च पुन्नपुंसकयो र्मतम् ।
विक्लिन्नो जरया जीर्णे शीर्णे चार्द्रे च वाच्यवत् ॥१३३॥
विपन्नं विपदाक्रान्ते त्रिषु पुंसि भुजङ्गमे ।
विच्छिन्नस्तु समालब्धे विभक्ते चाभिधेयवत् ॥१३४॥
विलग्नं न स्त्रियां मध्ये त्रिषु स्यात् लग्नमात्रके ।
विषघ्नस्तु शिरीषे ना गुडूची त्रिवृतोः स्त्रियाम् ॥१३५॥

व्युत्थानं स्वातन्त्र्यकृत्ये विरोधाचरणेऽपि च ।
वृजिनं कल्मषे क्लीवं केशे ना कुटिले त्रिषु ॥१३६॥
वृषा कर्णे महेन्द्रे ना वेदना ज्ञानदुःखयोः ।
वेष्टनं कर्णशष्कुल्यामुष्णीषे मुकुटे वृतौ ॥१३७॥
व्योम वारिणि चाकाशे भास्करस्यार्चनाश्रये ।
शकुनिः पुंसि विहगे सौबले करणान्तरे ॥१३८॥
शयनं सुरते निद्राशय्ययोश्च नपुंसकम् ।
शमनं शान्तिवधयोः शमनः श्राद्धदैवते ॥ १३९ ॥
श्वसनं श्वसिते पुंसि मारुते मदनद्रुमे ।
शकुनस्तु पुमान् पक्षिमात्रपक्षिविशेषयोः ॥१४०॥
शुभशंसिनिमित्ते च शकुनं स्यान् नपुंसकम् ।
शङ्खिनी श्वेतवृन्दायां चोरपुष्प्यां वधूभिदि ॥१४१॥
शङ्खी हरौ समुद्रे ना शङ्खवत्यभिधेयवत् ।
शतघ्नी शस्त्रभेदे स्याद् वृश्चिकाल्यां करञ्जके ॥१४२॥
शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशास्तिषु ।
शाखीस्यात्पादपे वेदे तुरुष्काख्यजनेपुमान्॥१४३॥
शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे ।
मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गकः ॥१४४॥
शिल्पी तु वाच्यवत् कारौ स्त्रियां कोलदलौषधौ ।
शृङ्गी शृङ्गयुते नागे वृक्षपर्वतयोरपि ॥१४५॥

शूली स्याच्छङ्करे पुंसि शूलरोगिणि वाच्यवत्।
श्लेष्मघ्नीमल्लिकायाञ्च ज्योतिष्मत्याञ्च योषिति॥१४६॥
शोभनो योगभेदे ना सुन्दरे वाच्यलिङ्गकः।
सवनन्त्वध्वरे स्नाने सोमनिर्द्दलनेऽपि च॥१४७॥
स्तननं ध्वनिमात्रे स्यान् मेघशब्दे च कुन्थिते।
समानः सत्समैकेषु त्रिषु ना नाभिमारुते॥१४८॥
सन्तानः सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे।
स्पर्शनो मारुते पुंसि दाने स्पर्शे नपुंसकम्॥१४९॥
संस्थानमाकृतौ मृत्यौ सन्निवेशे चतुष्पथे।
स्यन्दनन्तु स्रुतौ नीरे तिनिशे ना रथेऽस्त्रियाम्॥१५०॥
सज्जनन्तु भवेत् क्लीवमुपरक्षणघट्टयोः।
वाच्यलिङ्गं कुलीने स्यात् कल्पनायान्तु योषिति॥१५१॥
सन्धानं स्यादभिषवे तथा सङ्घटनेऽपि च।
सम्पन्नं साधितेऽपि स्यात् सम्पत्तिसहितेऽन्यवत्॥१५२॥
सन्धिनी वृषभाक्रान्ताऽकालदुग्धोस्रयोः स्त्रियाम्।
सद्म स्यान् मन्दिरे नीरे संव्यानं छादनेंऽशुके॥१५३॥
सदनं मन्दिरे तोये स्वामी प्रभुविशाखयोः।
सादी तुरङ्गमातङ्गरथारोहेषु दृश्यते॥१५४॥
स्थापनं रोपणे पुंसवने पाठौषधौ स्त्रियाम्।
सावनो यज्ञकर्म्मान्ते यजमानप्रचेतसोः॥१५५॥

साधनं मृतसंस्कारे सैन्ये सिद्धौषधौ गतौ ।
निवर्त्तनोपाय भेदे दापनेऽनुगमे धने ॥१५६॥
साम क्लीवमुपायस्य भेदे वेदान्तरेऽपि च ।
सीमाऽघाटस्थितिक्षेत्रेष्वण्डकोषेऽपि च स्त्रियाम्॥१५७॥
सूचना व्यधने दृष्टौ गन्धनेऽभिनयेऽपि च ।
सेचनं रक्षणे सेके नौकायाः सेकभाजने ॥१५८॥
सेनानीः स्यात् पुमान् कार्त्तिकेये सेनापतावपि ।
सेवनं सीवनोपास्त्योर्हली रामे च कर्षके ॥१५९॥
हस्तिनी गजयोषायां जाति भेदे च योषितः ।
हसनं न द्वयोर्हासेऽङ्गारधान्याञ्च योषिति ॥१६०॥
हायनो न स्त्रियां वर्षे पुंस्यर्च्चिर्व्रीहि भेदयोः ।
ह्रादिनी वज्रतडितो र्हिण्डनं भ्रमणे रते ॥१६१॥

नचतुष्कम् ।

अवलग्नोऽस्त्रियाम् मध्ये त्रिषु स्याल् लग्नमात्रके ।
अनूचानो विनीते स्यात् साङ्गवेदविचक्षणे ॥१६२॥
अपाचीनोऽवागर्थे विपर्य्यस्ते च वाच्यवत् ।
अभिपन्नोऽपराद्धेऽभियस्तेचापद्गते त्रिषु ॥१६३॥
अवदानं खण्डने स्यादतिवृत्ते च कर्म्मणि ।
अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः ॥१६४॥

अनीकिनी स्त्रियां सेनामात्रसेनाप्रभेदयोः।
अधिष्ठानं पुरे चक्रे प्रभावेऽध्यासनेऽपि च ॥१६५॥
अन्वासनं स्नेहवस्तावुपास्तावनुशोचने।
अर्य्यमा तु पुमान् सूर्य्ये पितृदेवान्तरेऽपि च ॥१६६॥
अथर्व्वा ब्राह्मणे पुंसि वेदे तु स्यात् नपुंसकम्।
भवेदभिजनः ख्यातौ जन्मभूम्यां कुलध्वजे ॥१६७॥
कुलेऽपि च पुमानायोधनं युद्धे वधेऽपि च।
स्यादाकलनमाकाङ्क्षा परिसङ्ख्यानबन्धने ॥१६८॥
आतञ्चनं प्रतीवापजवनाप्यायनेषु च।
आराधनञ्च पचने प्राप्तौ सन्तोषणेऽपि च ॥१६९॥
आच्छादनं सम्पिधाने वस्त्रे प्रवृतिमात्रके।
आस्कन्दनं तिरस्कारे रणे संशोषणेऽपि च ॥१७०॥
आवेशनं शिल्पिशाले भूतावेशप्रवेशयोः।
आत्मयोनिः पुमान् कामदेवे च परमेष्ठिनि ॥१७१॥
उपधानं विषे गण्डौ प्रणयेऽपि नपुंसकम्।
उत्पादनं समुल्लेखोद्घाटनोद्वर्त्तनेषु च ॥१७२॥
स्यादुत्पतनमुत्पत्तौ तथोर्द्धगमनेऽपि च।
उद्वर्त्तनमुत्पतने विलेपने घर्षणे क्लीवम् ॥१७३॥
उदयनमुदये क्लीवं वत्सभागस्थयोः पुंसि।
उद्वाहनं द्विसीत्ये स्याद् रज्जावुद्वाहिनी मता ॥१७४॥

उपासनं शराभ्यासेऽप्युपास्तावासनेऽपि च।
कपोतनो गर्द्दभाण्डशिरीषाम्रातकेषु च ॥१७५॥
अश्वत्थे च कलापी तु प्लक्षवर्हिणयोः पुमान्।
कलध्वनिः पुमान् पारावते पिककमयूरयोः ॥१७६॥
कञ्चुक्यन्तःपुराध्यक्षे षिङ्गेऽहौ जोङ्गकद्रुमे।
कात्यायनो वररुचौ विशेषे च मुनेः पुमान् ॥१७७॥
काषायवस्त्रे विधवाईजरत्युमयोः स्त्रियाम्।
कुम्भयोनिरगस्त्ये स्याद् वशिष्ठद्रोणयोः पुमान्॥१७८॥
कुचन्दनन्तु पत्राङ्गे द्रुभेदे रक्तचन्दने।
कुण्डली वरुणे केकिभोगिनोश्च सकुण्डले ॥१७९॥
केशरी तुरगे सिंहे पुन्नागे नागकेशरे।
क्रौञ्चादनस्तु पिप्पल्यां चिञ्चोटकमृणालयोः॥१८०॥
खड्गधेनुः स्त्रियां खड्गपुत्रिकागण्डकस्त्रियोः।
गवादनीन्द्रवारुण्यां गवां घासादनाश्रये॥१८१॥
गदयित्नुः पुमान् कामे जल्पके कामुकेऽपि च।
घनाघनो वर्षुकाब्दे मत्तघातुककुञ्जरे ॥१८२॥
शक्रे च घोषयित्नु स्तु विप्रकोकिलयोः पुमान्।
चित्रभानुः पुमान् वैश्वानरे चाहस्करेऽपि च ॥१८३॥
चोलकी तु करीरे स्यान् नारङ्गे किष्कुपर्व्वणि।
जलाटनो लोहपृष्ठे जलौकायां जलाटनी ॥१८४॥

तपस्वी तापसे चानुकम्प्ये च त्रिष्वथ योषिति।
मांसिका कटुरोहिण्यो स्तरस्वी शूरवेगिनोः ॥१८५॥
तपोधनस्तापसे स्यात् मुण्डिर्य्यान्तु तपोधना।
द्विजन्मा दशने विप्रे दुर्नाम क्लीवमर्शसि ॥१८६॥
स्याद् दीर्घकोषिकायां स्त्री देवसेना तु वज्रिणः।
सुतायामपि सेनायां देवतानाञ्च योषिति ॥१८७॥
नागञ्जनेभ सुन्दर्य्यां नागयष्टौ च योषिति।
भवेन् निधुवनं कम्पे सुरते च नपुंसकम् ॥१८८॥
निर्वासनं हिंसने स्यान् नगरादे र्वहिष्कृतौ।
निर्भर्त्सनं खलीकारेऽलक्तकेऽपि नपुंसकम् ॥१८९॥
निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च।
निशामनं दर्शने स्यादालोचने च नद्वयोः ॥१९०॥
निशमनमुक्तं दृष्टौ श्रुतौ निरसनं वधे प्रतिक्षेपे।
निष्ठीवने प्रजननं योनौ जन्मन्यपि क्लीवम् ॥१९१॥
प्रसदनमपि भङ्गे स्यात् क्षेपे पञ्चाननः शिवे सिंहे।
प्रहसनमपि प्रहासे रूपभेदे च परिहासे ॥१९२॥
प्रणिधानं प्रयत्ने स्यात् समाधौ च प्रवेशने।
प्रयोजनं कार्य्यहेत्वोः पलाशी वृक्षरक्षसोः ॥१९३॥
अथ प्रवचनं वेदे प्रकृष्टवचनेऽपि च।
प्रतिपन्नोऽन्यलिङ्गः स्याद् विज्ञातेऽङ्गीकृतेऽपि च ॥१९४॥

प्रस्फोटनन्तु शूर्पे स्यात् ताड़ने च विकासने।
प्रतिमानं प्रतिच्छाया गजदन्तान्तरालयोः ॥१९५॥
प्रतियत्नस्तु संस्कारलिप्सोपग्रहणेषु च।
प्रत्यर्थी वाच्यलिङ्गः स्यात् शत्रौ च प्रतिवादिनि॥१९६॥
परिज्वा तु पुमानिन्दौ याज्ञिके परिचारके।
प्रसाधनी तु कङ्कत्यां सिद्धौ वेशे प्रसाधनम् ॥१९७॥
पयस्विनी नदीधेन्वो र्विभावर्य्याञ्च योषिति।
अथ पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च ॥१९८॥
पृथग्जनस्तु पुंलिङ्गः कथितो नीचमूर्खयोः।
फलकी मत्स्यभेदे ना वाच्यवत् फलकान्विते ॥१९९॥
वारकी शत्रुचित्राश्वपर्णजीविपयोधिषु।
भूतात्मा पुंसि निर्दिष्टो देहे च परमेष्ठिनि ॥२००॥
महाधनं महामूल्ये सुवस्त्रे सिह्लकेऽपि च।
महासेनः कार्त्तिकेये महासेनापतावपि॥२०१॥
मदयित्नुः कामदेवे पुमान् मद्ये नपुंसकम्।
महामुनिरगस्त्ये ना कुस्तुम्बुरुणि नद्वयोः ॥२०२॥
मातुलानी कलाये स्याद् भङ्गायां मातुलस्त्रियाम्।
मालुधानो मातुलाहौ मालुधानी लतान्तरे ॥२०३॥
मेधावी ना शुके ब्राह्म्यां स्त्रियां मेधान्विते त्रिषु।
रसायनं विषेऽपि स्याज्ज जराव्याधि जिदौषधे ॥२०४॥

पुंलिङ्गः पक्षिराजे च विडङ्गाख्यौषधेऽपि च।
राजादनं क्षीरिकायां पियाले किंशुकेऽपि च॥२०५॥
ललाम स्यात् प्रभावे च लाञ्छनध्वजवाजिषु।
शृङ्गे प्रधाने भूषायामपि बालधिपुण्ड्रयोः॥२०६॥
लाङ्गली नारिकेलद्रौ रेवतीरमणे पुमान्।
वनश्वा गन्धमार्ज्जारे वञ्चक-व्याघ्रयोः पुमान्॥२०७॥
वर्द्धमानः प्रश्नभेदे शरावैरण्ड विष्णुषु।
विस्मापनः स्यात् कुहके गन्धर्व्वनगरे स्मरे॥२०८॥
विसर्ज्जनं परित्यागे दाने सम्प्रेषणेऽपि च।
विरोचनः प्रह्लादस्य तनयेऽर्केऽग्निचन्द्रयोः॥२०९॥
विहेठनन्तु हिंसायां मर्द्दने च विड़म्बने।
भवेद् विहननं विघ्नहिंसयो स्तूलपिञ्जने॥२१०॥
विषयी विषयासक्ते वाच्यवत् क्लीवमिन्द्रिये।
पुंसि स्यान्नृपतौ कामदेवे वैषयिकेऽपि च॥२११॥
विष्वक्सेना फलिन्यां स्याद् विश्वक्सेनो जनार्दने।
विलेपनी सुवेशस्त्री यवाग्वोरपि योषिति॥२१२॥
विलासी भोगिनि व्याले विश्वपा नाग्निचन्द्रयोः।
वृक्षादनी तु वन्दायां विदारीकन्दकेऽपि च॥२१३॥
वैरोचनस्तु सुगते बलिदैत्यार्कपुत्रयोः।
शिखरी स्यादपामार्गे शैलपादपयोः पुमान्॥२१४॥

शिखण्डी ना कलापे स्याद् गाङ्गेयारिमयूरयोः ।
शिखण्डिनी यूथिकायां गुञ्जायामपि योषिति ॥२१५॥
शृङ्गारी पूगगजयोः सशृङ्गारसुवेशयोः ।
अथ श्लेष्मघनामल्यां केतक्यामपि योषिति ॥२१६॥
सम्मूर्च्छनमभिव्याप्तौ वृद्धायमोहयोरपि ।
समुत्थानं समुद्योगे व्याधीनां निर्णयेऽपि च ॥२१७॥
सदादानोऽभ्रमातङ्गे हेरम्बे गन्धहस्तिनि ।
स्यात् संवदनमालोचे वशीकारे नपुंसकम् ॥२१८॥
समादानं समीचीनग्रहणे सौगताह्निके ।
संवाहनं वाहने स्याद् भारादेरङ्गमर्द्दने ॥२१९॥
समापनं परिच्छेदे समाप्तिबधयोरपि ।
सनातनः शाश्वतेऽजे पितृतिथ्यन्तरे हरे ॥२२०॥
स्तनयित्नुः पुमान् वारिधरेऽपि स्तनितेऽपि च ।
सरोजिनी तु कमलाकरे पद्मे च योषिति ॥२२१॥
समापन्नं समाप्ते स्यात् प्राप्ते क्लिष्टे बधेऽपि च ।
सम्बाधनं द्वाःसदने शूलाग्रद्वारपालयोः ॥२२२॥
संयमनी यमपुर्यां संयमनं बन्धने व्रतेऽपि स्यात् ।
सारसनमप्युरस्त्रे तनुत्रिणां मेखलायाञ्च ॥२२३॥
सामिधेनी तु धाय्यायां समिध्यपि च योषिति ।
सामयोनिस्तु सामोत्थे ब्रह्मकुञ्जरयोरपि ॥२२४॥

सुदर्शनो हरेश्चक्रे मेरुजम्बुद्रुमे पुमान्।
न द्वयोः शक्रनगरे स्त्रीनौषधिभिदोः स्त्रियाम्॥२२५॥
सुयामुनो वत्सराजे प्रासादेऽभ्रान्तरेऽच्युते।
सुकर्म्मा तु पुमान् योगभेदे स्याद् देवशिल्पिनि॥२२६॥
सुधन्वा प्रौढ़धानुष्के त्रिषु ना विश्वकर्म्मणि।
सुपर्व्वा ना शरे वंशे पर्व्वधूमसुरेष्वपि॥२२७॥
सुदामा तु पुमान् वारिधरपर्व्वतभेदयोः।
सौदामन्यप्सरोभेदे तड़ित्तद्भेदयोः स्त्रियाम्॥२२८॥
हर्षयित्नुः पुमान् पुत्रे काञ्चने च नपुंसकम्।

## नपञ्चकम्।

अथातिसर्ज्जनं दाने वधेऽपि च नपुंसकम्॥२२९॥
अपवर्ज्जनन्तु दाने निर्व्वाणत्यागयोरपि।
अपसर्ज्जनमाम्नाते परिवर्ज्जनदानयोः॥२३०॥
अग्रजन्मा द्विजे ज्येष्ठे भ्रातरि ब्रह्मणि स्मृतः।
अथानुवासनं स्नेहवस्तिधूपनयोरपि॥२३१॥
अभिनिष्ठानोऽप्यक्षरमात्रे विसर्ज्जनीयेऽपि च।
अन्तेवासी शिष्येऽपि स्यात् चण्डाले प्रान्तगेऽपि च॥२३२॥
स्यादुपस्पर्शनं स्पर्शे स्नानाचमनयोरपि।
उपसम्पन्नमुद्दिष्टं निहते च सुसंस्कृते॥२३३॥

कारन्धमी कांस्यकारे धातुवादरतेऽपि च ।
कामचारी कामुके स्यात् स्वच्छन्दकलविङ्कयोः ॥२३४॥
किष्कुपर्व्वा पुमानिक्षौ वेणौ पोटगलेऽपि च ।
कृष्णवर्त्मा पुमानग्नौ दुराचारे विधुन्तुदे ॥२३५॥
स्याद् गन्धमादनो भृङ्गे गन्धके वानरान्तरे ।
स्त्री सुरायां नगे न स्त्री चिरजीवी ककाकयोः ॥२३६॥
तिक्तपर्व्वा छिन्नमोची गुडूची यष्टिषु स्त्रियाम् ।
दन्तधावनः खदिरे दन्तशुद्धौ नपुंसकम् ॥२३७॥
स्याद् धूमकेतनः पुंसि केतुग्रहकृताशयोः ।
स्यान्-नन्दिवर्द्धनो भर्गे पक्षान्ते तनयेऽपि च ॥२३८॥
प्रतिपादनन्तु दाने प्रतिपत्तौ च बोधने ।
स्यात् पृष्ठछायनो धान्यविशेषे च मतङ्गजे ॥२३९॥
प्रचलाकी मयूरे स्याद् भुजङ्गे चापि दृश्यते ।
स्यात् पद्मलाञ्छनो लोकेश्वरे ब्रह्मणि भास्करे ॥२४०॥
धनदे च स्त्रियां तारालक्ष्मीवाग्देवतासु च ।
पीतचन्दनमुद्दिष्टं कालीयकहरिद्रयोः ॥२४१॥
पृष्ठशृङ्गी पुमान् दंशभीरौ षण्डे वृकोदरे ।
वरचन्दनमाख्यातं कालीये देवदारुणि ॥२४२॥
वरवर्णिनी तु लाक्षाहरिद्रारोचनासु च ।
स्त्रीरत्ने च फलिन्याञ्च साधीयस्यामपि स्त्रियाम् ॥२४३॥

मधुसूदनस्तु पुंसि भ्रमरे वनमालिनि ।
महारजनमुद्दिष्टं शातकुम्भकुसुम्भयोः ॥२४४॥
स्यान्-मृत्युवञ्चनः शम्भौ श्रीफलद्रोणकाकयोः ।
वनमाली च गोविन्दे वाराह्यां वनमालिनी ॥२४५॥
विषायी स्यात् पुमान् राज्ञि वैषयिकजनेऽपि च ।
इन्द्रिये कामदेवे च विषयासक्तपूरुषे ॥२४६॥
विश्वकर्म्मा सहस्रांशौ मुनिभिद्देवशिल्पिनोः ।
विघ्नकारी स्मृतो घोरदर्शनेऽपि विघातिनि ॥२४७॥
वृषपर्व्वा पुमान् दैत्यभेदेऽप्यन्धकसूदने ।
व्योमचारी तु निर्द्दिष्टो देवतायां विहङ्गमे ॥२४८॥
शकुलादनी स्त्रियां कृष्णभेदीकटुकशाकयोः ।
शालङ्कायन उद्दिष्टो मुनिभेदे च नन्दिनि ॥२४९॥
शिवकीर्त्तनस्तु पुंसि स्याद् भृङ्गरीटेऽसुरद्विषि ।
श्वेतवाहन इत्येष सुधाधाम्नि धनञ्जये ॥२५०॥
श्वेतधामा पुमानिन्दौ घनसाराब्धिफेनयोः ।
स्यात् षष्टिहायनो धान्यविशेषे कुञ्जरे पुमान् ॥२५१॥
सम्प्रयोगी कलाकेलौ कामुके सम्प्रयोजके ।
हरिचन्दनमस्त्री स्याद् देवतानां महीरुहे ॥२५२॥
नपुंसकन्तु गोशीर्षे ज्योत्स्ना कुङ्कुमयोरपि ।
हरिवाहनस्तु पुंसि शचीपति-विवस्वतोः ॥२५३॥

नषट्कम्।

अन्तावसायी श्वपचे मुनिभेदे च नापिते।
कलानुनादी रोलम्बे कलविङ्के कपिञ्जले॥२५४॥
जायानुजीवी पुंसि स्यान्-नटे च वकपक्षिणि।
सहस्रवेधि क्लीवं स्याद् रामठे नाम्बुवेतसे॥२५५॥

नान्तवर्गः समाप्तः।

---

पैकम्।

पा ना वाताण्डपूतेषु पाने पातरि कीर्त्तितः।
स्त्रियान्तु रक्षणे पाने पूते पूरितके च सः॥१॥

पद्विकम्।

कल्पः शास्त्रे विधौ न्याये संवर्त्ते ब्रह्मणो दिने।
कपिर्ना सिह्लके शाखामृगे च मधुसूदने॥२॥
कूपः कूपकमृन्माने गर्त्ताम्बुगुणवृक्षके।
कृपो द्रोणश्यालके स्याद् द्रोणपत्न्यांकृपीमता॥३॥
कृपा दयायां क्षेपस्तु निन्दाविक्षेपलेपने।
विलम्बप्रेरणे गर्व्वे खष्पः क्रोधे बलात्कृतौ॥४॥
गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि।
ग्रामौघाधिकृते पुंसि शारिवाख्यौषधौ स्त्रियाम्॥५॥

कुपः क्षुपस्पर्शनयोस्त्रपु सीसकरङ्गयोः।
तल्पमट्टे कलत्रे च शयनीये च न द्वयोः ॥६॥
त्रपा लज्जा कुलटयोस्तापः सन्तापकृच्छ्रयोः।
तापी नद्यन्तरे दर्पः कस्तूर्य्यामप्यहङ्कृतौ ॥७॥
नीपः कदम्बबन्धूकनीलाशोकद्रुमेष्वपि।
पुष्पं विकाशकुसुमस्त्रीरजःसु नपुंसकम् ॥८॥
रूपं स्वभावे सौन्दर्य्ये नाम् गे पशुशब्दयोः।
ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपि ॥९॥
रेपः स्यान् निन्दिते क्रूरे रोपो रोपणवाणयोः।
लेपः प्रलेपने जग्धौ वपा विवरमेदसोः ॥१०॥
वाष्प ऊष्मणि नाऽस्त्रेऽथ शष्पं बालतृणे स्मृतम्।
पुंसि स्यात् प्रतिभाहानौ शाप आक्रोशदिव्ययोः॥११॥
शिल्पं स्रुवे क्रियायोग्ये स्वापः शयननिद्रयोः।
स्पर्शाज्ञतायामज्ञाने सूपो व्यञ्जनसूदयोः ॥१२॥

## पत्रिकम्।

अनूपो महिषे नाऽम्बुप्रायदेशे तु वाच्यवत्।
अस्रपा तु जलौकायां डाकिन्यां राक्षसे तु ना ॥१३॥
आवापो भाण्डे वपने परिक्षेपालवालयोः।
आक्षेपो भर्त्सनाकृष्टिकाव्यालङ्कृतिषु स्मृतः ॥१४॥

आकल्पः कल्पने वेशे उडुपन्तु प्लवेऽस्त्रियाम् ।
चन्द्रे पुंस्युलपो न स्त्री गुल्मिन्यां ना तृणान्तरे ॥१५॥
कच्छपी वल्लकीभेदे द्वयोः क्षुद्रगदान्तरे ।
पुंसि निध्यन्तरे कूर्मे मल्लबन्धान्तरेऽपि च ॥१६॥
कलापः संहतौ बर्हे काञ्च्यां भूषणतूणयोः ।
चन्द्रे विदग्धे व्याकरणभेदेऽपि कथ्यते बुधैः ॥१७॥
कशिपु र्भक्ताच्छादनयोरेकोक्त्या पृथक्तयोः पुंसि ।
कश्यप उक्तो मुनिमृगयोर्भेदे काश्यपी क्ष्मायाम् ॥१८॥
कुतपोऽस्त्रियां दौहित्रे वाद्ये छागजकम्बले ।
कुशे दिनस्याष्टमांशे ना सूर्य्ये कुणपो पुनः ॥१९॥
विट्सारिकायां कुणपः पूतिगन्धौ शवेऽपि च ।
जिह्वापः शुनि मार्ज्जारे प्रतापस्तापतेजसोः ॥२०॥
पादपः पादपीठे द्रौ पादुकायान्तु पादपा ।
रक्तपा स्याज्जलौकायां डाकिन्यां ना तु राक्षसे ॥२१॥
विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे ।
विटाधिपे ना विकल्पः पुंसि भ्रान्तौ च कल्पने ॥२२॥

## पचतुष्कम् ।

अभिरूपो बुधे रम्येऽपलापः प्रेमण्यपह्नवे ।
अवलेपस्तु गर्व्वे स्याल्लेपने भूषणेऽपि च ॥२३॥

उपतापस्त्वरायां स्यादुत्तापगदयोरपि।
जलकूपी कूपगर्त्ते पुष्करिण्याञ्च योषिति ॥२४॥
नागपुष्पस्तु पुन्नागनागकेशरचम्पके।
परिवापस्तु पर्य्युप्तौ जलस्थाने परिच्छदे ॥२५॥
परितापस्तु पुंसि स्यात् दुःखे च नरकान्तरे।
परिकम्पो भये कम्पे प्राप्तरूपो ज्ञरम्ययोः ॥२६॥
पिण्डपुष्पमशोके च जवायाञ्च कुशेशये।
बहुरूपः शिवे विष्णौ धूनके सरटे स्मरे ॥२७॥
मेघपुष्पं पिण्डाभ्राम्बुनादेये ना हरेर्हये।
विप्रलापो विरोधोक्तावपार्थवचनेऽपि च ॥२८॥
वीजपुष्पं मरुवके तथा मदनकेऽपि च।
वृकधूपस्तु सरलद्रवकृत्रिमधूपयोः ॥२९॥
वृषाकपिः पुमान् कृष्णे शङ्करे जातवेदसि।
हेमपुष्पमशोकेऽपि जवापुष्पे नपुंसकम् ॥३०॥

पपञ्चकम्।

भवेच्चामरपुष्पन्तु पूगे काशाम्रकेतके।

पान्तवर्गः समाप्तः।

---

फैककम्।

फो यज्ञसाधने स्फाने झञ्झावाते च पुंस्ययम्।

फं रूक्षोक्तौ फुत्कारे च तथा निष्फलभाषणे ॥१॥

फद्विकम्।

गुम्फस्तु गुम्फने बाहोरलङ्कारे च कीर्त्त्यते।
रेफो वर्णे च पुंसि स्यात् कुत्सिते पुनरन्यवत्॥२॥
शफं मूले तरूणां स्याद् गवादीनां खुरेऽपि च।
शिफा जटायां सरिति मांसिकायाञ्च मातरि ॥३॥

फान्तवर्गः समाप्तः।

---

बैककम्।

वः पुमान् वरुणे सिन्धौ भगे तोये गतेऽपि च।
गन्धने तन्तुसन्ताने पुंस्येव वपने स्मृतः॥१॥

बद्विकम्।

कम्बुः शङ्खेऽस्त्रियां पुंसि शम्बूके वलये गजे।
कम्बिरंशे च वंशस्य खजाकायामपि स्त्रियाम् ॥२॥
क्लीवं स्यात् पण्डके न स्त्री वाच्यलिङ्गस्त्वविक्रमे।
खर्व्वं सङ्ख्यान्तरे क्लीवं नीचे वामनके त्रिषु ॥३॥
गर्व्वोऽभिमानेऽवलेपे जम्बुः स्यात् पादपान्तरे।
तथा सुमेरुसरिति द्वीपभेदेऽपि च स्त्रियाम् ॥४॥
डिम्बो भयध्वनावण्डे फुप्फुसप्लीहविप्लवे।
दर्व्विः स्त्रियां खजाकायां फणायामुरगस्य च॥५॥

पूर्व्वे तु पूर्व्वजेषु स्युः पूर्व्वः प्रागाद्ययोस्त्रिषु ।
लम्बा पद्मालया-गौर्य्योस्तिक्ततुम्बप्रामपि स्त्रियाम् ॥६॥
विम्बस्तु प्रतिविम्बे स्यान् मण्डले पुन्नपुंसकम् ।
विम्बिकायाः फले क्लीवं कृकलासे पुनः पुमान् ॥७॥
शम्बः स्यान् मुषलाग्रस्थलोहमण्डलके पवौ ।
शुभान्विते त्रिषु स्तम्बोऽप्रकाण्डद्रुमगुच्छयोः ॥८॥

वन्तिकम् ।

कदम्बं निकुरम्बे स्यान्-नीपसर्षपयोः पुमान् ।
कलम्बी शाकभेदे स्यात् कदम्बशरयोः पुमान् ॥९॥
कादम्बः स्यात् पुमान् पक्षिविशेषे शायकेऽपि च ।
गजाह्वा गजपिप्पल्यां गजाह्वं हस्तिनापुरे ॥१०॥
गन्धर्व्वः पशुभेदे स्यात् पुंस्कोकिलतुरङ्गयोः ।
अन्तराभवसत्वे च गायने खेचरेऽपि च ॥११॥
गोडुम्बः शीर्णवृन्ते च गवादन्यान्तु योषिति ।
द्विजिह्वस्तु खले सर्पे नितम्बः स्कन्धरोधसोः ॥१२॥
स्त्रियाः पश्चात् कटावद्रेः कटके कटिमात्रके ।
प्रलम्बो दैत्यभेदे स्यात् त्रपुषेऽपि पयोधरे ॥१३॥
लताङ्कुरे च शाखायां हारभेदे प्रलम्बने ।
भूजम्बूरपि गोधूमे विकङ्कतफले स्त्रियाम् ॥१४॥
हेरम्बो विघ्नराजे स्यान्-महिषे शौर्य्यगर्व्विते ।

बचतुष्कम् ।

राजजम्बूस्तु जम्बूभित् पिण्डखर्ज्जूरयोः स्त्रियाम् ॥१५॥
लम्बजिह्वोऽन्यवत् हिंस्रे क्रमेलकश्रुनोः पुमान् ।
शतपर्व्वा तु दूर्व्वायां वचाभार्गवयोषितोः ॥१६॥

बपञ्चकम् ।

धूलीकदम्बो नीपे स्यात् तिनिशे वरुणद्रुमे ।
शृगालजम्बूर्गोडुम्बे तथा घोण्टाफले स्त्रियाम् ॥१७॥

बान्तवर्गः समाप्तः ।

---

भैककम् ।

भं नक्षत्रे गभस्तौ स्त्री पुंसि स्याद् भृगुनन्दने ।
भूः स्थानमात्रे कथिता धरण्यामपि योषिति ॥१॥

भद्विकम् ।

कुम्भो राश्यन्तरे हस्तिमूर्द्धांशे राक्षसान्तरे ।
कार्मुके वारनार्य्याञ्च घटे क्लीवन्तु गुग्गुलौ ॥२॥
स्त्रियामुखाकट्फलयोः पृश्निकायाञ्च पाटलौ ।
गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके ॥३॥
जम्भो दैत्यविशेषे ना दन्ते जम्बीरभक्षयोः ।
जृम्भा विकाशजृम्भणयो स्त्रिषु डिम्भोऽपि बालिशे बाले ॥४॥

दम्भस्तु कैतवे कल्के दन्-भूः स्त्री सर्पचक्रयोः ।
नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् ॥५॥
द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे ।
निभस्तु कथितो व्याजे पुंलिङ्गः सदृशे त्रिषु ॥६॥
रम्भा कदल्यप्सरसो र्नां वेणौ वानरान्तरे ।
विभुः प्रभौ सर्व्वगत शङ्करब्रह्मणोस्तु ना ॥७॥
शम्भुः पुंसि महादेवे परमेष्ठिनि चार्हति ।
शुभो योगे शुभं क्षेमे वाच्यवत् क्षेमशालिनि ॥८॥
खसम्भारिपुरे स्त्री तु शोभा कान्तीच्छयो-र्मता ।
सभा सामाजिके गोष्ठ्यां द्यूतमन्दिरयोरपि ॥९॥
स्वभू र्ना ब्रह्मणि हरौ स्तम्भः स्थूणाजड़त्वयोः ।

भन्तिकम् ।

आरम्भस्तु त्वरायां स्यादुद्यमे बधदर्पयोः ॥१०॥
आत्मभू र्ना विधौ कामेऽप्यृषभस्त्वौषधान्तरे ।
स्वरभिद्वृषयोः कर्णरन्ध्रकुम्भीरपुच्छयोः ॥११॥
उत्तरस्थः स्मृतः श्रेष्ठे स्त्री नराकारयोषिति ।
शुकशिम्ब्यां शिरालायां विधवायां क्वचिन्-मता ॥१२॥
ककुभ् स्त्रियां प्रवेणीदिक्शोभास्तु चम्पकस्रजि ।
ककुभो रागभेदेऽपि वीणाङ्गेऽर्ज्जुनपादपे ॥१३॥

करभी वृक्षभेदेऽपि ज्योतिष्मत्यामपि स्त्रियाम् ।
करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते ॥१४॥
कुसुम्भं हेमनि महारजने ना कमण्डलौ ।
गर्द्दभं श्वेतकुमुदे गर्द्दभो गन्धभिद्यपि ॥१५॥
रासभे गर्द्दभी क्षुद्ररोगजन्तुविशेषयोः ।
दुर्लभस्त्रिषु दुष्प्रापे कर्चूरे दुन्दुभिः पुमान् ॥१६॥
वरुणे दैत्यभेर्य्योश्च स्त्र्यक्षविन्दुत्रिकद्वये ।
निकुम्भः कुम्भकर्णस्य तनये दन्तिकौषधौ ॥१७॥
वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरङ्गमे ।
वर्षाभूः स्त्री च शोथघ्न्यां भूलताभ्रवयोः पुमान् ॥१८॥
विष्कम्भो योगभेदे स्याद् विस्तारप्रतिबन्धयोः ।
रूपकाङ्गप्रभेदे च बन्धभेदे च योगिनाम् ॥१९॥
विस्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च ।
विष्टम्भः प्रतिबन्धे स्यात् प्रभेदे चामयस्य च ॥२०॥
वृषभः श्रेष्ठवृषयोर्वैदर्भी रीतिभिद्यपि ।
वैदर्भं वाक्यवक्रत्वे शरभस्तु पशोर्भिदि ॥२१॥
करभे वानरभिदि सनाभि र्ज्ञातितुल्ययोः ।
सुरभिः शल्लकीमातृभिन्मुरागोषु योषिति ॥२२॥
चम्पके च वसन्ते च तथा जातीफले पुमान् ।
स्वर्णे गन्धोत्पले क्लीवं सुगन्धिकान्तयोस्त्रिषु ॥२३॥

विख्याते शुचिवे धीरे चैत्रेऽपि च पुमानयम्।

भचतुष्कम्।

अनुष्टुभ् स्यात् सरस्वत्यां छन्दोभेदे च योषिति ॥२४॥
अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि।
शातकुम्भं सुवर्णं स्यात् शातकुम्भोऽश्वमारके ॥२५॥

भान्तवर्गः समाप्तः।

---

मैककम्।

मा यमे समयेऽपि स्याद् विषे च मधुसूदने।
मा स्त्री पद्मालयायां स्यात् पुंलिङ्गश्चन्द्रशेखरे ॥१॥

मद्विकम्।

आमोरुक् तद्भिदोः पुंसि स्यादपक्वेऽन्यलिङ्गकः।
उमाऽतसी हैमवती हरिद्राकीर्त्तिकान्तिषु ॥२॥
ऊर्म्मिः स्त्रीपुंसयो वीच्यां प्रकाशे वेगभङ्गयोः।
वस्त्रसङ्कोचरेखायां वेदनापीड़योरपि ॥३॥
क्रमस्त्वानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च।
क्षमा भूमौ तितिक्षायां स्त्रियां युक्ते नपुंसकम् ॥४॥
वाच्यवत् शक्तहितयोः कामः स्मरेच्छयोः पुमान्।
रेतस्यपि निकामे च काम्येऽपि स्यान् नपुंसकम् ॥५॥

कामि र्ना कामुके रत्यां स्त्री किम् क्षेपवितर्कयोः ।
निन्दायाञ्च परिप्रश्ने वाच्यलिङ्गमुदाहृतम् ॥६॥
क्रमि र्ना क्रिमिवत्कीटे लाक्षायां क्रमिले खरे ।
किर्म्मी पलाशे शालायां हेमपुत्र्याञ्च योषिति ॥७॥
क्षुमाऽतसीनीलिकयोः क्षेमं स्याल्लब्धरक्षणे ।
चण्डायां ना शुभे न स्त्री कात्यायन्याञ्च योषिति॥८॥
क्षौमममट्टे दुकूलेऽस्त्री क्षौमं वल्कलजांशुके ।
शणजेऽतसीजे खर्म्मं पौरुषे कोषजांशुके ॥९॥
गमो नाऽक्षविवर्त्ते स्यादपर्य्यालोचनेऽध्वनि ।
ग्रामः स्वरे संवसथे ग्रीष्म ऊष्मर्त्तुभेदयोः ॥१०॥
गुल्मः सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदोः ।
स्तम्बे स्त्रियामामलक्यो लावनीवस्त्रवेश्मसु ॥११॥
घर्म्मः स्यादातपे ग्रीष्मेऽप्युष्मस्वेदाम्भसोरपि ।
चमूः सेनाविशेषे च सेनामात्रे च योषिति ॥१२॥
जाल्मः स्यात्पामरे क्रूरेऽसमीक्ष्यकारिणि त्रिषु ।
जिह्मस्तु कुटिले मन्दे क्लीवं तगरपादपे ॥१३॥
तोक्मं कर्णमले पुंसि हरिते च हरिद्यवे ।
दमस्तु दमथे दण्डे कर्द्दमे दमने पुमान् ॥१४॥
दस्मस्तु यजमाने स्यादपि चौरे हुताशने ।
द्रुमो महीरुहे पारिजाते किम्पुरुषेश्वरे ॥१५॥

धर्म्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ ।
अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे ॥१६॥
ध्यामं दमनके गन्धतृणेऽथ श्यामले त्रिषु ।
नेमिर्ना तिनिशे कूपत्रिकाचक्रान्तयोःस्त्रियाम् ॥१७॥
नेमः कीलेऽवधौ गर्त्ते प्राकारे कैतवेऽपि च ।
पद्मोऽस्त्री पद्मके व्यूहनिधिसङ्ख्यान्तरेऽम्बुजे ॥१८॥
नानागे स्त्री फञ्जिकाश्रीचारटीपन्नगेषु च ।
ब्रह्मी तु फञ्जिकायां स्यात् शाकमत्स्यप्रभेदयोः ॥१९॥
ब्राह्मी तु भारती सोमवल्लरीब्रह्मशक्तिषु ।
भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दभ्रमणयोरपि ॥२०॥
भामः क्रोधे रवौ दीप्तौ भाम्मो गाङ्गेयघोरयोः ।
भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे ॥२१॥
भूमिर्वसुन्धरायां स्यात् स्थानमात्रेऽपि च स्त्रियाम् ।
भौमः कुजे च नरके पुंसि भूमिभवे त्रिषु ॥२२॥
यमोऽन्यलिङ्गो यमजे ना काके शमने शनौ ।
शरीरसाधनापेक्षनित्यकर्म्मणि संयमे ॥२३॥
यामस्तु पुंसि प्रहरे संयमे च प्रकीर्त्तितः ।
यामिः कुलस्त्रीस्वस्रोः स्त्री युग्मो धनुषि संयुगे ॥२४॥
रश्मिः पुमान् दीधितौ स्यात् पक्ष्मप्रग्रहयोरपि ।
रमा लक्ष्म्यां रमः कान्ते रक्ताशोकद्रुमे स्मरे ॥२५॥

रामा योषाहिङ्गुनद्योः क्लीवं वास्तूककुष्ठयोः।
ना राघवे च वरुणे रैणुकेये हलायुधे ॥२६॥
हये च पशुभेदे च त्रिषु चारौ सितेऽसिते।
रुमा सुग्रीवदारेषु विशिष्टलवणाकरे ॥२७॥
रुक्मञ्च काञ्चने लोहे लक्ष्मीः सम्पत्तिशोभयोः।
ऋद्ध्यौषधे च पद्मायां वृद्धिनामौषधेऽपि च ॥२८॥
फलिन्यां स्त्री वम्रिर्वान्तौ स्त्रियां पुंसि हुताशने।
वामं धने पुंसि हरे कामदेवे पयोधरे ॥२९॥
वल्गु प्रतीपसव्येषु त्रिषु नार्य्यां स्त्रियामथ।
वामी शृगाली वड़वा रासभी करभीषु च ॥३०॥
शमी शक्तुफलायाञ्च शिम्बिकायाञ्च वाग्गुलौ।
श्यामो वटे प्रयागस्य वारिदे वृद्धदारके ॥३१॥
पिके च कृष्णहरितोः पुंसि स्यात् तद्वति त्रिषु।
मरीचे सिन्धुलवणे क्लीवं स्त्री शारिवौषधौ ॥३२॥
अप्रसूताङ्गनायाञ्च प्रियङ्गावपि वागुजौ।
यमुनायां त्रियामायां कृष्णत्रिवृतिकौषधौ ॥३३॥
नीलिकायामथ श्रामो मासे मण्डपकालयोः।
शुष्मं तेजसि सूर्य्ये ना समा संवत्सरे स्त्रियाम् ॥३४॥
सर्व्वसाधुसमानेषु समं स्यादभिधेयवत्।
सीमाऽऽघाटस्थिति क्षेत्रेष्वण्डकोषेऽपि च स्त्रियाम्॥३५॥

सूक्ष्मं स्यात् कैतवेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके।
सूमं क्षीरे च नभसि सोमस्तु हिमदीधितौ ॥३६॥
वानरे च कुवेरे च पितृदेवे समीरणे।
वस्तुप्रभेदे कर्पूरे नीरे सोमलतौषधौ ॥३७॥
हिमं तुषारमलयोद्भवयोः स्यान् नपुंसकम्।
शीतले वाच्यलिङ्गोऽथ होमि र्ना पावके घृते ॥३८॥

मत्रिकम्।

अधमः स्याद् गर्ह्यजनेऽप्यागमः शास्त्र आगतौ।
आश्रमो ब्रह्मचर्य्यादौ वानप्रस्थे मठे वने ॥३९॥
अस्त्रियामुत्तमा दुग्धिकायां स्त्री त्रिषु भद्रके।
उद्दामो बन्धरहिते स्वतन्त्रे च प्रचेतसि ॥४०॥
कलमः पुंसि लेखन्यां शालौ पटच्चरेऽपि च।
कुसुमं स्त्री रजो नेत्ररोगयोः फलपुष्पयोः ॥४१॥
कृत्रिमं लवणभेदे ना सिह्लके रचिते त्रिषु।
गोलोमी श्वेतदूर्व्वायां स्याद् वचाभूतकेशयोः ॥४२॥
गोधूमो नागरङ्गे स्यादोषधिव्रीहिभेदयोः।
गौतमो ना मुनौ बुद्धे रोचनी दुर्गयोः स्त्रियाम् ॥४३॥
तलिमं कुट्टिमे तल्पे चन्द्रहासे वितानके।
दाड़िमस्तु त्रिलिङ्गः स्यादेलायां करके त्रिषु ॥४४॥
निष्क्रमो बुद्धिसम्पत्तौ निर्गमे दुष्कुलेऽपि च।

निगमो वाणिजे पुर्य्यां कटे वेदे वणिक्पथे ॥४५॥
नियमो मन्त्रणायाञ्च प्रतिज्ञानिश्चये व्रते ।
नैगमः स्यादुपनिषद्वणिजो नागरेऽपि च ॥४६॥
परमं स्यादनुज्ञायामव्ययं परमं परे ।
प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत् ॥४७॥
प्रतिमा गजदन्तस्य बन्धे चानुकृतावपि ।
पञ्चमो रागभेदे स्यात् स्वरभेदेऽथ पञ्चमी ॥४८॥
पाण्डवानाञ्च पत्न्यां स्त्री पञ्चानां पूरणे त्रिषु ।
प्रक्रमः क्रमेऽवसरे मध्यमो मध्यजेऽन्यवत् ॥४९॥
पुमान् स्वरे मध्यदेशेऽप्यवलग्ने तु न स्त्रियाम् ।
स्त्रियां दृष्टरजोनार्य्यां कर्णिकाङ्गुलिभेदयोः ॥५०॥
व्यक्षरच्छन्दसि तथा ललामं लाञ्छने ध्वजे ।
शृङ्गे प्रधाने भूषायां तथा बालधिपुण्ड्रयोः ॥५१॥
तुरङ्गे च प्रभावेऽथ व्यायामः पौरुषे श्रमे ।
विषमे दुर्गसञ्चारे विभ्रमो भ्रान्तिहावयोः ॥५२॥
विद्रुमो रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम् ।
विलोमस्तु प्रतीपे स्याद् भुजङ्गे वरुणे श्वनि ॥५३॥
आमलक्यां विलोमी च विलोमञ्चारघट्टके ।
विक्रमस्तु पुमान् क्रान्तिमात्रे स्यात् शक्तिसम्पदि ॥५४॥
संक्रमः क्रमणे पुंसि न स्त्री स्याद् दुर्गसञ्चरे ।

सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि ॥५५॥
सत्तमः स्यात् पूज्यतमे साधीयस्युत्तमे त्रिषु ।
सरमा कुक्कुरी देवशून्योः स्याद् राक्षसीभिदि ॥५६॥
सुषमाऽत्यन्तशोभायां स्त्री चारौ च समे त्रिषु ।
सुषीमः शीतले चारौ त्रिषु ना पन्नगान्तरे ॥५७॥

मचतुष्कम् ।

भवेदनुपमा सुप्रतीकिन्यां स्त्री त्रिषूत्तमे ।
अभ्यागमो विरोधाजिघाताभ्युद्गमनान्तिके ॥५८॥
उपक्रमस्तूपधायां ज्ञात्वारम्भे च विक्रमे ।
चिकित्सायामुपगमः स्वीकारेऽन्तिकसर्पणे ॥५९॥
जलगुल्मो जलावर्त्ते कच्छपे जलचत्वरे ।
दण्डयामस्तु कीनाशे दिवसे कुम्भसम्भवे ॥६०॥
प्लवङ्गमस्तु मण्डूके तथा शाखामृगेऽपि च ।
पराक्रमो विक्रमे स्यात् सामर्थ्योद्योगयोरपि ॥६१॥
महापद्मः पुमान् नागनिधिसङ्ख्यान्तरेषु च ।
यातयामोन्यवज् जीर्णे परिभुक्तोज्झितेऽपि च ॥६२॥
सार्व्वभौमस्तु दिङ्नागे सर्व्वपृथ्वीपतावपि ।
अभ्युपगमस्तु पुंसि स्वीकारे निकटगमने च ॥६३॥
नक्षत्रनेमिरुक्ता रेवत्यां ना ध्रुवे चन्द्रे ।

मान्तवर्गः समाप्तः ।

## यैककम्।

योनावायौ यमने या यात्राप्तिधूमितत्यागेषु।
वारणयोगसमज्ञायानेषु पुमांस्तु गन्तरि विख्यातः॥१॥
ज्या मातरि वसुधायां मौर्व्यां द्यु क्लीवमह्नि गगने च।
ना ज्वलने द्यौ स्त्रिदशालयत्रिदशवर्त्मनो र्योषित्॥२॥

## यद्विकम्।

अब्यः स्यात् पङ्कजे पुंसि त्रिषु रम्ये च नाविके।
अर्थ्यं शिलाजतुन्यार्थ्ये बुधे न्याय्ये च वाच्यवत्॥३॥
अन्त्यस्तु पुंसि मुस्तायामन्त्योद्भूतेऽधमे त्रिषु।
अर्घ्यमर्घस्य योग्ये स्यात् अर्घार्थेऽपि च वाच्यवत्॥४॥
अन्योऽसदृशेतरयोरर्य्यः स्यात् स्वामिवैश्ययोः।
आस्यं मुखे च तन्मध्ये तद्भवे च स्त्रियां स्थितौ॥५॥
इज्या दानेऽध्वरेऽर्चायां सङ्गमे स्त्री गुरौ त्रिषु।
इभ्या करेणु शल्लक्योः स्त्रियामाढ्ये तु वाच्यवत्॥६॥
कश्यं त्रिषु कशार्हे स्यात् क्लीवं मद्याश्वमध्ययोः।
कन्या कुमारिकानार्य्यो रोषधीराशिभेदयोः॥७॥
चयोरोगान्तरे वेश्मकल्यान्तापचयेषु च।
कल्यं प्रभाते क्लीवं स्यात् कल्योवाक् श्रुतिवर्ज्जिते॥८॥
सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च।
उपायवचनेऽपि स्यात् त्रिषु मद्येतु योषिति॥९॥

कच्या बृहतिकायां स्यात् काञ्च्यां मध्येभबन्धने।
हर्म्यादीनां प्रकोष्ठेऽपि कार्य्ये हेतौ प्रयोजने॥१०॥
काव्यं ग्रन्थे पुमान् शुक्रे काव्या स्यात् पतनाधियोः।
कांस्यं वाद्यान्तरे पानपात्रे स्यात् तैजसान्तरे॥११॥
कायः कदैवते मूर्त्तौ सङ्घे लच्यस्वभावयोः।
मनुष्यतीर्थे कायं स्यात् क्रियारूपायचेष्टयोः॥१२॥
आरम्भे निष्कृतौ पूजासम्प्रधारणकर्म्मसु।
शिक्षाचिकित्साकरणे कृत्यं स्यात्तु नपुंसकम्॥१३॥
विलेपने च भित्तौ च तथा कौतूहलेऽपि च।
कुल्यं स्यात् कीकसेऽप्यष्टद्रोणी शूर्पामिषेषु च॥१४॥
कुल्या पयःप्रणाल्यां च नद्यां जीवन्तिकौषधौ।
कुलोद्भवे कुलहिते त्रिषु मान्ये पुनः पुमान्॥१५॥
कृत्या क्रियादेवतयोस्त्रिषु विद्विष्टकार्य्ययोः।
गयः स्यात् पशुराजर्ष्यौर्भेदे तीर्थे पुनर्गया॥१६॥
गव्यं नपुंसकं ज्यायां रागद्रव्येऽप्यथ स्त्रियाम्।
गोसमूहे त्रिलिङ्गन्तु दुग्धादौ च गोहिते॥१७॥
ग्राम्यं स्त्रीकरणे क्लीवेऽश्लीलप्राकृतयोस्त्रिषु।
गुह्यं रहस्युपस्थे च गुह्यः कमठदम्भयोः॥१८॥
गृह्यं गुदे ग्रन्थभेदे क्लीवं शाखापुरे स्त्रियाम्।
गृहासक्तौ मृगादौ ना त्रिषु चास्वैरिपक्षयोः॥१९॥

गेयन्तु गीते गेयः स्याद् गातव्ये गायने त्रिषु।
गोप्यो दासीसुते पुंसि रक्षणीयेऽभिधेयवत् ॥२०॥
चव्यन्तु चविके क्लीवं वचायामपि योषिति।
चयः समूहे प्राकारे मूलबन्धे समाहृतौ ॥२१॥
चित्यं मृतकचैत्ये स्याच्चित्यामृत चितौ स्त्रियाम्।
चैत्यमायतने बुद्धबिम्बे नोद्देशपादपे ॥२२॥
चोद्यं स्यादद्भुते प्रश्ने चोदनार्हे तु वाच्यवत्।
छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः ॥२३॥
पालनोत्कोचयोर्दीप्तिसच्छोभापङ्क्तिषु स्त्रियाम्।
जया जयन्तीतिथिभित्पथ्यामातृसखीषु च ॥२४॥
अग्निमन्थे ना जयन्ते विजये च युधिष्ठिरे।
जन्यं हट्टे परीवादे संग्रामे च नपुंसकम् ॥२५॥
जन्या मातृवयस्यायां जन्यः स्याज् जनके पुमान्।
त्रिषूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययोः ॥२६॥
वरस्निग्धेऽथ जन्युः स्यात् पुंसि प्राण्यग्निधातृषु।
त्रयी त्रिवेद्यां त्रितये न ना तार्क्ष्योऽश्वशालयोः ॥२७॥
गरुडाग्रजे सुपर्णे पुंसि क्लीवं रसाञ्जने।
तिष्यो नक्षत्रभेदे स्यात् कलौ धात्र्याञ्च योषिति ॥२८॥
द्रव्यन्तु पित्तले वित्ते पृथिव्यादौ विलेपने।
क्लीवे च भेषजे भव्ये द्रुविकारे च वाच्यवत् ॥२९॥

दस्यु स्तैरे रिपौ पुंसि दायः सोल्लुण्ठभाषणे।
विभक्तव्यपितृद्रव्ये तथा हरणदानयोः ॥३०॥
दिव्यं लवङ्गे धात्र्यां स्त्री वल्गौ दिवि भवे त्रिषु।
दूष्यं त्रिषु दूषणीये क्लीवं वस्त्रे च तद्गृहे ॥३१॥
दूत्यं दूतस्य भागे च भावे कर्म्मण्यपि स्मृतम्।
दैत्योऽसुरे सुरायान्तु दैत्या चण्डौषधावपि ॥३२॥
धन्या धात्र्यामलक्योः स्याद् धन्यं पुण्यवति त्रिषु।
धान्यं ब्रीहिषु धन्याके विष्ण्यः स्थानाग्निसद्मसु ॥३३॥
शक्तावृत्तेऽप्यथ नयो नीतिद्यूतविशेषयोः।
नाट्यं तौर्य्यत्रिके लास्ये नित्यं स्यात् सततेऽपि च ॥३४॥
शाश्वते त्रिषु पथ्या स्त्री हरितक्यां हिते त्रिषु।
पद्यं श्लोके पुमान् शूद्रे पद्या वर्त्मनि कीर्त्तिता ॥३५॥
पाक्यं विटाख्यलवणे यवक्षारे पुनः पुमान्।
प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययोः ॥३६॥
प्रियो हृद्येऽन्यवत् पुंसि वृद्धिनामौषधे धवे।
पीयुः काले रवौ घूके ना पुण्यं शोभने त्रिषु ॥३७॥
क्लीवं धर्म्मे च सुकृते पुष्यः कलियुगे स्मृतः।
नक्षत्रमासयो र्भेदे पूज्यः श्वशुरवन्द्ययोः ॥३८॥
पेयं पातव्यपयसोः पेयाश्राणाच्छमण्डयोः।
वन्ध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रजः स्त्रियाम् ॥३९॥

वर्य्या पतिंवरायां स्त्री वरेण्ये त्रिषु ना स्मरे।
बल्यं प्रधानधातौ स्यात् क्लीवं बलकरे त्रिषु ॥४०॥
वीर्य्यं शुक्रे प्रभावे च तेजः सामर्थ्ययोरपि।
भयं प्रतिभये घोरे प्रसूने कुब्जकस्य च ॥४१॥
भव्यं शुभे च सत्ये च योग्ये भाविनि च त्रिषु।
कर्मरङ्गतरौ पुंसि स्त्रियां करिकणामयोः ॥४२॥
क्लीवमस्थिनि भाग्यन्तु स्यात् शुभाशुभकर्मणोः।
भृत्यो दासे भृतौ भृत्या मयु र्ना किन्नरे मृगे ॥४३॥
मयः शिल्पिनि दैत्यानां करभेऽश्वतरेऽपि च।
मध्यं विलग्ने न स्त्री स्यान् न्याय्येऽन्तरेऽधमेऽन्यवत्॥४४॥
मत्स्यो मीनेऽथ पुंभूम्नि देशे मन्युः पुमान् क्रुधि।
दैन्ये शोके च यज्ञे च माल्यं कुसुमतत्स्रजोः ॥४५॥
माया स्यात् शांवरीबुद्ध्यो र्मायः पीताम्बरेऽसुरे।
मूल्यं स्याद् वेतने प्रश्न मृत्यु र्ना मरणे यमे ॥४६॥
मेध्यं त्रिषु शुचौ रक्तवचारोचनयोः स्त्रियाम्।
ययुः पुमानश्वमेधतुरङ्गे च तुरङ्गमे ॥४७॥
याप्यस्तु यापनीये स्यान् निन्दितेऽप्यभिधेयवत्।
याम्याऽप्राच्यां भरण्याञ्च पुंस्यगस्त्ये च चन्दने ॥४८॥
योग्यः प्रवीणयोगार्होपायिशक्तेषु वाच्यवत्।
क्लीवन्त्वौषधे पुष्ये ना त्व्यभ्यासार्कयोषितोः ॥४९॥

रम्या रात्रौ चम्पके ना मनोज्ञे त्वभिधेयवत्।
नपुंसकं पटोलस्य मूले सूरिभिरिष्यते ॥५०॥
रथ्या रथौघविशिखावर्त्तनीषु च योषिति।
रथवोढरि पुंलिङ्गो रूप्यः स्यात् सुन्दरे त्रिषु ॥५१॥
आहतस्वर्णरजते रजते च नपुंसकम्।
लयो विनाशे संश्लेषे साम्ये तौर्य्यत्रिके मतम् ॥५२॥
लक्ष्यं स्यादपदेशेऽपि शरव्येऽपि नपुंसकम्।
लभ्यं युक्ते च लब्धव्ये लास्यं तौर्य्यत्रिके मतम् ॥५३॥
नृत्ये च व्रज्या प्रस्थाने वर्गे पर्य्यटनेऽपि च।
वन्यं त्रिषु वनोद्भूते स्त्री वनाम्बुसमूहयोः ॥५४॥
वाच्यन्तु कुत्सिते हीने वचनार्हे च वाच्यवत्।
विन्ध्या स्त्रियां लवल्यां स्यात् पुंसि व्याधाद्रिभेदयोः॥५५॥
वीक्ष्यन्तु विस्मये दृश्ये पुंसि लासकवाजिनोः।
वेश्यं वेश्यागृहे क्लीवं गणिकायान्तु योषिति ॥५६॥
शल्यन्तु नस्त्रियां शङ्कौ क्लीवं क्ष्वेडेषु तोमरे।
मदनद्रुश्वाविधोर्ना शयः शय्याहि पाणिषु ॥५७॥
शय्या स्यात् शयनीये च गुम्फनेऽपि च योषिति।
शून्यं स्यान् निर्ज्जने वाच्यलिङ्गं नल्यान्तु योषिति॥५८॥
शौर्य्यमारभटी शक्त्योः सह्यः शैलान्तरे पुमान्।
सोढव्ये वाच्यलिङ्गः स्यादारोग्ये तु नपुंसकम् ॥५९॥

सङ्ख्यं समिति सङ्ख्या स्यादेकाद्यदि विचारयोः।
सन्ध्या पितृप्रसूनद्यन्तरयो र्युगसन्धिषु ॥६०॥
सत्यं कृते च शपथे तथ्ये त्रिषु तु तद्वति।
सव्यं वामे प्रतीपे च स्मयो नाऽद्भुतगर्व्वयोः ॥६१॥
सायः काण्डे दिनान्ते च साध्यो योगान्तरे शरे।
गणदेवविशेषे च साधनीये तु वाच्यवत् ॥६२॥
सूर्य्योऽर्कपर्णे तपने स्त्री तद्भार्य्यौषधीभिदोः।
स्थेयो विवादपक्षस्य निर्णेतरि पुरोहिते ॥६३॥
सेव्यं क्लीवमुशीरे स्यात् सेवार्हे पुनरन्यवत्।
सैन्यं क्लीवं बले सेनासमवेते तु वाच्यवत् ॥६४॥
सौम्यो ज्ञे ना त्रिष्वनुग्रे मनोज्ञे सोमदैवते।
हार्य्यो विभीतकतरौ हर्त्तव्ये पुनरन्यवत् ॥६५॥
हृद्यं जवनेऽथत्रिषु हृज्जहृद्गतहृत्प्रिये।
वषट्कृद् वेदमन्त्रे ना वृद्धिनामौषधे स्त्रियाम् ॥६६॥

यत्रिकम्।

अनयस्तु विपद्दैवाशुभयोर्व्यसनेषु च।
अत्ययोऽतिक्रमे दण्डे विनाशे दोषकृच्छ्रयोः ॥६७॥
अश्वीयमश्वसङ्घाते क्लीवमश्वहितेऽन्यवत्।
अधृष्या तटिनीभेदे प्रगल्भे वाच्यलिङ्गकः ॥६८॥

अभिख्या त्वभिधाने स्यात् शोभायाञ्च यशस्यपि ।
अभया तु हरितक्यामुशीरे तु नपुंसकम् ॥६९॥
निर्भये वाच्यलिङ्गं स्यादपत्यं पुत्रयो र्मतम् ।
अगस्त्यः स्यात् कुम्भयोनौ वङ्गसेनतरावपि ॥७०॥
अबध्यमबधार्हे स्यादनर्थकवचस्यपि ।
अव्ययोऽस्त्री शब्दभेदे ना विष्णौ निर्व्यये त्रिषु ॥७१॥
अहल्या त्वप्सरो भेदे भार्य्यायां गौतमस्य च ।
अहार्य्यः पर्व्वते ना स्यादहर्त्तव्ये तु वाच्यवत् ॥७२॥
आशयः स्यादभिप्राये पनसाधारयोरपि ।
स्यादातिथ्यमतिथ्यर्थे त्रिलिङ्गमतिथौ पुमान् ॥७३॥
आत्रेयी पुष्पवत्यां स्यात् नदीभेदे च ना मुनौ ।
आदित्यो भास्करे देवेऽप्याम्नायो निगमेऽपि च॥७४॥
उपदेशेऽपीन्द्रियन्तु हृषीके चेतसि स्मृतम् ।
उदयस्तु पुमान् पूर्व्वपर्व्वते च समुन्नतौ ॥७५॥
उपायः सामभेदादौ तथैवोपागतौ पुमान् ।
ऊर्णायु र्ना चणभङ्गे मेषकम्बलमेषयोः ॥७६॥
औचित्यमुचितत्वे स्यात् सत्येऽपि च नपुंसकम् ।
कषायो रसभेदेऽपि निर्य्यासे च विलेपने ॥७७॥
अङ्गरागे च नस्त्री स्यात् सुरभौ लोहिते त्रिषु ।
कालेयो दैत्यभेदे स्यात् कालखण्डे नपुंसकम् ॥७८॥

क्षिपण्युस्तु पुमान् देहे सुरभौ वाच्यलिङ्गकः।
कुलायस्तु पुमान् स्थानमात्रे स्यात् पक्षिवासके॥७९॥
क्षेत्रियं क्षेत्रजतृणे परदेहचिकित्सयोः।
परदाररतासाध्यरोगयोः क्षेत्रियः पुमान्॥८०॥
कौकृत्यमनुतापे स्यादयुक्तकरणेऽपि च।
गाङ्गेयः स्यात् पुमान् भीष्मे क्लीवं स्वर्णकशेरुणोः॥८१॥
चक्षुष्यः केतके पुण्डरीकसंज्ञकपादपे।
कुलत्थिका सुभगयोः स्त्रियामक्षिहितेऽन्यवत्॥८२॥
चाम्पेयश्चम्पके स्वर्णे किञ्जल्के नागकेशरे।
जघन्यं मेहने क्लीवं चरमे गर्हितेऽन्यवत्॥८३॥
जटायुः पुंसि सम्पातेः कनीयसि च गुग्गुलौ।
जरायुरपि तत्पक्षिराजे गर्भाशये पुमान्॥८४॥
तपस्या व्रतचर्य्यायां तपस्यः फाल्गुने पुमान्।
द्वितीया तिथिभित्पत्नोः पूरणे तु भयोः स्त्रिषु॥८५॥
देवयुर्वाच्यलिङ्गः स्याद् धार्म्मिके लोकयात्रिके।
नादेयी नागरङ्गे स्याज् जयायामम्बुवेतसे॥८६॥
भूमिजम्ब्वां जवायाञ्च व्यङ्गुष्ठेऽपि च योषिति।
निकायस्तु पुमान् लक्ष्ये सधर्म्मिप्राणिसंहतौ॥८७॥
समुच्चये संहतानां निलये परमात्मनि।
नेपथ्यं स्यादलङ्कारे रङ्गज्यायां नपुंसकम्॥८८॥

प्रणयः प्रश्रये प्रेम्णि चाज्ञाविश्रम्भयोरपि।
निर्व्वाणेऽप्यथ पर्य्यायः प्रकारेऽवसरे क्रमे ॥८९॥
प्रलयो मृत्युकल्पान्तमूर्च्छापायेषु पुंस्ययम्।
प्रत्ययः प्रथितत्वे च मत्यादिज्ञानयोरपि ॥९०॥
आचारे शपथे रन्ध्रविश्वासाधीनहेतुषु।
पर्य्यन्यो मेघशब्देऽपि ध्वनदम्बुदशक्रयोः ॥९१॥
प्रसव्यं वाच्यलिङ्गं स्यात् प्रतिकूलानुकूलयोः।
प्रकीर्य्यः पूतिकरजे विनिकीर्य्ये तु वाच्यवत् ॥९२॥
प्रणाय्योऽसम्मतेऽपि स्यादभिलाषविवर्ज्जिते।
पयस्यन्तु पयोजातहितयो र्वाच्यलिङ्गकम् ॥९३॥
दुग्धिकाक्षीरकाकोल्योः स्वर्णक्षीर्य्यामपि स्त्रियाम्।
पारुष्यं परुषत्वे च दुर्व्वाक्ये पुंसि गीष्पतौ ॥९४॥
पानीयन्तु जले क्लीवं पातव्ये वाच्यलिङ्गकम्।
पौलस्त्यस्तु कुवेरे स्याद् दशग्रीवेऽपि पुंस्ययम् ॥९५॥
वलयः कण्ठरोगे ना कटके पुन्नपुंसकम्।
ब्रह्मण्यः स्याद् ब्रह्मसाधुब्रह्मदारुशणेश्वरे ॥९६॥
वालेयो गर्द्दभे पुंसि मृदौ वालहिते त्रिषु।
ब्राह्मण्यं ब्राह्मणत्वे च समूहे च द्विजन्मानाम् ॥९७॥
भुवन्युः स्यात् पुमान् भानौ ज्वलने शशलाञ्छने।
भुजिष्यस्तु स्वतन्त्रे च हस्तसूत्रकदासयोः ॥९८॥

स्त्रियां दासी गणिकयोर्मलयः पर्व्वतान्तरे।
शैलांशे देश आरामे त्रिवृतायान्तु योषिति ॥९९॥
मङ्गल्यः स्यात् त्रायमाणाश्वत्थबिल्वमसूरके।
स्त्रियां शम्यामधः पुष्पीमिसीशुक्लवचासु च ॥१००॥
रोचनायामथो दध्नि क्लीवं शिवकरे त्रिषु।
मृगयुः पुंसि गोमायौ व्याधे च परमेष्ठिनि ॥१०१॥
रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवत्।
लौहित्यं लोहितत्वे च क्लीवं पुंसि नदान्तरे ॥१०२॥
वदान्यो दानशौण्डे च चारुवादिनि वाच्यवत्।
व्यवायः सुरतेऽन्तर्द्धौ पुंसि क्लीवन्तु तेजसि ॥१०३॥
वक्तव्यं कुत्सिते हीने वचनार्हे तु वाच्यवत्।
विजयः स्याज् जये पार्थे स्त्रियां तिथ्यन्तरे स्मृता ॥१०४॥
उमासख्यां विस्मयः स्यादाश्चर्य्यगर्व्वयोः पुमान्।
विनया तु बलायां स्त्री शिक्षायां प्रणतौ पुमान् ॥१०५॥
विषयो गोचरे देशे तथा जनपदेऽपि च।
प्रबन्धाद् यस्य यो ज्ञातस्तत्र रूपादिके पुमान् ॥१०६॥
विशल्याऽग्निशिखादन्ती गुडूची त्रिपुटासु च।
श्वशुर्य्यो देवरे श्याले शाण्डिल्यः पावकान्तरे ॥१०७॥
मुनिभेदे च मालूरे शालेयः स्यान्मिसौ पुमान्।
त्रिषु शाल्युद्भवे क्षेत्रे स्यात् शीर्षण्यन्तु शीर्षके ॥१०८॥

सुकेशे पुंसि शैलेयं तालपर्ण्याञ्च सैन्धवे।
शैलजे ना तु मधुपे शिलातुल्येऽन्यलिङ्गकम् ॥१०९॥
संस्त्यायः सन्निवेशे च संस्थाने विस्तृतावपि।
सन्नयः समवाये स्यात् पृष्ठस्थायि बले पुमान् ॥११०॥
समयः शपथाचारसिद्धान्तेषु तथा धियि।
क्रियाकारे च निर्द्दिशे सङ्केते कालभाषयोः ॥१११॥
सरण्युस्तु पुमान् वारिवाहे स्यान् मातरिश्वनि।
सामर्थ्यं योग्यतायां स्यात् शक्तावपि नपुंसकम् ॥११२॥
सौरभ्यन्तु मनोज्ञत्वे सौगन्धे गुणगौरवे।
सौभाग्यं सुभगत्वे स्याद् योगभेदे नपुंसकम् ॥११३॥
हिरण्यं रेतसि द्रव्ये शातकुम्भवराटयोः।
अक्षये मानभेदे स्यादकुप्ये च नपुंसकम् ॥११४॥
हृदयं मानसे वुक्कोरसोरपि नपुंसकम्।

## यचतुष्कम्।

भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः ॥११५॥
अवश्याय स्तु नीहारेऽप्यभिमानेऽपि पुंस्ययम्।
अध्यवसायः शेषे स्यात् समाप्तौ निश्चयेऽपि च॥११६
अपसव्यं त्रिलिङ्गन्तु दक्षिणप्रतिकूलयोः।
अन्तशय्या मृतौ भूमिशय्यायां पितृकानने ॥११७॥

उपकार्य्या राजसद्मन्युपकारोचितेऽन्यवत्।
जलाशयो जलाधारे स्यादुशीरे नपुंसकम् ॥११८॥
तण्डुलीयः शाकभेदे विडङ्गतरुताप्ययोः।
तृणशून्यं मल्लिकायां तथा स्यात् केतकीफले ॥११९॥
दाक्षिणात्यो नारिकेले त्रिषु दक्षिणदिग्भवे।
धनञ्जयोऽर्ज्जुने वह्निनागभिद्देहमारुते ॥१२०॥
निरामयस्तु पुंसि स्यादिड्डिक्के त्रिषु नीरुजि।
परिधायो जनस्थाने परिच्छेद नितम्बयोः ॥१२१॥
प्रतिश्रयः सभायाञ्चाश्रये प्रतिभयं भये।
घोरेऽपि पाञ्चजन्यस्तु विष्णुशङ्खे हुताशने ॥१२२॥
प्रावृषेण्यः पुमान् नीपे प्रावृट्कालभवे त्रिषु।
पौरुषेयः कृते पुंसां विकारे पुरुषस्य च ॥१२३॥
त्रिषु ना सङ्घवधयोः पुरुषस्य पदान्तरे।
फलोदयः पुमान् लाभे त्रिदिवे शालयेऽपि च ॥१२४॥
भागधेयं मतं भाग्ये भागप्रत्याययोः पुमान्।
महालयो विहारे स्यात् तीर्थे च परमात्मनि ॥१२५॥
महोदयः कान्यकुब्जे चाधिपत्यापवर्गयोः।
महामूल्यः पद्मरागे ना महार्घेऽन्यलिङ्गकः ॥१२६॥
मार्ज्जारीयः स्मृतः शूद्रे विडाले कायशोधने।
रौहिणेयोऽन्यवद् वत्से ना बुधे च हलायुधे ॥१२७॥

विलेशयस्तु पुंलिङ्गो मूषिके च भुजङ्गमे।
वैतनेयस्तु गरुडे स्यात् प्रभाकरसारथौ ॥१२८॥
सम्परायः समीके स्यादापदुत्तरकालयोः।
समाह्वयस्तु पशुभिः खगैर्द्यूते च सङ्गरे ॥१२९॥
भवेत् समुदयः सङ्घे सङ्गमे च समुद्गमे।
समुदायः समूहे स्याद् युद्धे समुच्छ्रयः पुमान् ॥१३०॥
विरोधोत्सेधयोः स्थलोच्चयोर्गण्डोपलेऽपि च।
गजानां मध्यमगतेऽप्यसाकल्यवराण्डयोः ॥१३१॥
हिरण्मयः सुरज्येष्ठे ना सुवर्णमये त्रिषु।

यपञ्चकम्।

कालानुसार्य्यं शलेये कालीये शिंशपाद्रुमे ॥१३२॥
दुग्धतालीयमित्येत् दुग्धाम्रक्षीरफेणयोः।
अथ प्रवचनीयञ्च स्यात् प्रवक्तृप्रवाच्ययोः ॥१३३॥
वृषाकपायी श्रीगौरीवरो जीवन्तिकासु च।

यषट्कम्।

प्रत्युद्गमनीयमुपस्थेये धौतांशुकद्वये ॥१३४॥
विश्वक्सेनप्रिया लक्ष्म्यां वाराह्यामपि योषिति।

यान्तवर्गः समाप्तः।

———

रैकम्।

रः स्मृतः पावके तीक्ष्णे राः पुंसि स्वर्णवित्तयोः।
श्रीर्वेशरचनाशोभा भारतीसरलद्रुमे ॥१॥
लक्ष्म्यां त्रिवर्गसम्पत्तिविधोपकरणेषु च।
विभूतौ च मतौ च स्त्री स्रुः स्त्रियां निर्झरे स्रवे॥२॥

रद्विकम्।

अरं शीघ्रे च चक्राङ्गे शीघ्रगे पुनरन्यवत्।
अग्रं पुरस्तादुपरि परिमाणे पलस्य च ॥३॥
आलम्बने समूहे च प्रान्ते च स्यान् नपुंसकम्।
अधिके च प्रधाने च प्रथमे चाभिधेयवत् ॥४॥
अस्रः कोणे कचे पुंसि क्लीवमश्रुणि शोणिते।
अस्त्रं प्रहरणे चापे करवाले नपुंसकम् ॥५॥
अभ्रं मेघे च गगने धातुभेदे च काञ्चने।
अद्रिः शैलद्रुमार्के ना अथाङ्घ्रिर्ना पादमूलयोः॥६॥
आरा चर्मप्रभेदिन्यां पुंसि भौमे शनैश्चरे।
आर्द्रा नक्षत्रभेदे स्यात् स्त्रियां क्लिन्नेऽभिधेयवत्॥७॥
आरुः पुंसि तरोर्भेदे तथा कर्कटदंष्ट्रिणोः।
इन्द्रः शक्रादित्यभेदे योगभेदान्तरात्मनि ॥८॥
इन्द्रा फणिज्झके स्त्री स्यादिरा भूवाक्सुराम्बुषु।
उग्रः शूद्रासुते क्षत्राद् रुद्रे पुंसि त्रिषूत्कटे ॥९॥

स्त्री वचाचुद्रयो रुष्ट्रो कर्कव्यां करभे पुमान् ।
उस्रो वृषे च किरणेऽप्युस्राऽर्ज्जुन्युपचित्रयोः ॥१०॥
ऐन्द्रिः काके जयन्ते नाऽथौड्राः पुंभूम्नि नीवृति ।
ओड्रस्तु तरुभेदे स्यात् चरं नीरे चरोऽम्बुदे ॥११॥
करा वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः ।
कद्रुस्त्रिषु स्वर्णपिङ्गे नागानां मातरि स्त्रियाम् ॥१२॥
करा वधे निश्चये च बलौ यत्ने यतावपि ।
तुषारशैलेऽपि पुमान् स्त्रियां दूत्यां प्रसेवके ॥१३॥
सुवर्णकारिकायाञ्च बन्धनागारबन्धयोः ।
चारो रसान्तरे धूर्त्ते लवणे काचभस्मनोः ॥१४॥
कारिः स्त्रियां क्रियायां स्याद्वाच्यलिङ्गस्तु शिल्पिनि ।
कारुर्विश्वकर्म्मणि ना त्रिषु कारकशिल्पिनोः ॥१५॥
चीरं दुग्धे जले कीरः शुके पुंभूम्नि नीवृति ।
कुरुर्नृपान्तरे भक्ते पुमान् पुंभूम्नि नीवृति ॥१६॥
चुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवत् ।
चुद्रा व्यङ्गानटीकण्टकारिकासरघासु च ॥१७॥
चाङ्गेरी वेश्ययोर्हिंस्रामक्षिकामात्रयोरपि ।
चुरः स्याच्छेदनद्रव्ये कोकिलाचे च गोचुरे ॥१८॥
क्रूरस्तु कठिने घोरे नृशंसेऽप्यभिधेयवत् ।
कृच्छ्रमाख्यातमाभीले पापसान्तपनादिनोः ॥१९॥

क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः ।
क्रोष्ट्री शृगालिकाकृष्णविदारी लाङ्गलीषु च ॥२०॥
क्षौद्रं मधुनि पानीये खरः स्यात् तीक्ष्णघर्म्मयोः ।
गर्द्दभे स्त्री देवताड़े खरुर्दर्पे हरे हये ॥२१॥
दन्ते पुंसि त्रिषु श्वेते खुरः कोलदले शफे ।
गरी खरायां करणे क्लीवं नोपविषे विषे ॥२२॥
गात्रं गजाग्रजङ्घादिभागेऽप्यङ्गे कलेवरे ।
गीः स्त्री भाषासरस्वत्या र्गिरि र्ना नेत्ररुग्भिदि ॥२३॥
अद्रौ गिरियके योषिद् गौर्य्यां पूज्ये पुनस्त्रिषु ।
गुन्द्रः स्तेजनके स्त्री तु प्रियङ्गौ भद्रमुस्तके ॥२४॥
गुरु स्त्रिलिङ्गयां महति दुर्ज्जरालघुनोरपि ।
पुमान् निषेकादिकरे पित्रादौ सुरमन्त्रिणि ॥२५॥
गृध्रः खगान्तरे पुंसि वाच्यलिङ्गोऽथ लुब्धके ।
गोत्रा भूगव्ययो र्गोत्रः शैले गोत्रं कुलाख्ययोः॥२६॥
सम्भावनीयबोधे च काननक्षेत्रवर्त्मसु ।
गौरः श्वेतेऽरुणे पीते विशुद्धे चाभिधेयवत् ॥२७॥
ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेशरे ।
गौरो त्वसञ्जातरजः कन्या शङ्करभार्य्ययोः ॥२८॥
रोचनी रजनी पिङ्गा प्रियङ्गुवसुधासु च ।
आपगाया विशेषे च यादसां पतियोषिति ॥२९॥

घस्रस्तु दिवसे हिंस्रे घोरो भीमे हरेऽपि च ।
चरोऽक्षद्यूतभेदे च भौमे चारे त्रसे चले ॥३०॥
चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु ।
चक्रः कोके पुमान् क्लीवं व्रजे सैन्यरथाङ्गयोः ॥३१॥
राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः ।
जलावर्त्तेऽप्यथ चरुः पुमान् हव्यान्नभाण्डयोः ॥३२॥
चारः पियालवृक्षे स्याद् गतौ बन्धापसर्पयोः ।
चारुर्बृहस्पतौ पुंसि शोभने त्वभिधेयवत् ॥३३॥
चित्राऽऽखुपर्णी गोडुम्बा सुभद्रादन्तिकासु च ।
मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम् ॥३४॥
तिलकालेख्ययोः क्लीवं कर्बुराद्भुतयोरपि ।
तद्युक्तयोस्त्वन्यलिङ्गं चीरी झिल्ल्यां नपुंसकम् ॥३५॥
गोस्तने वस्त्रभेदे च रेखालिखनभेदयोः ।
चुक्रं वृक्षाम्ले चाङ्गेर्यां स्त्री पुंस्यम्लेऽम्लवेतसे ॥३६॥
चैत्रं मृतदेवकुले ना भूभृन्मासभेदयोः ।
चौरः पाटच्चरेऽपि स्यात् चौरपुष्पौषधावपि ॥३७॥
छत्रा मिषावतिच्छत्रे कुस्तुम्बुरुशिलीन्ध्रयोः ।
नपुंसकन्त्वातपत्रे छिद्रं दूषणरन्ध्रयोः ॥३८॥
जारी स्यादोषधीभेदे स्त्रियामुपपतौ पुमान् ।
जीरस्तु जरणे खड्गे टारो लङ्गतुरङ्गयोः ॥३९॥

तरस्तु तरणे पुंसि कृशानौ पेटके तरी।
तन्त्रं कुटुम्बकृत्ये स्यात् सिद्धान्ते चौषधोत्तमे ॥४०॥
प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे।
श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके ॥४१॥
इति कर्त्तव्यतायाञ्च तन्त्री वीणागुणे मता।
अमृतादेहशिरयोस्तन्द्री निद्राप्रमीलयोः ॥४२॥
तारो वानरभिन्मुक्ताविशुद्धोः शुद्धमौक्तिके।
ना नक्षत्रेऽक्षिमध्ये च न ना रूप्ये नपुंसकम् ॥४३॥
स्त्री बुद्धदेवताभेदे वालिगीष्पतिभार्य्ययोः।
त्रिलिङ्गोऽत्युच्चशब्दे च ताम्रं शुल्वेऽरुणेऽपि च॥४४
तीव्रातु कटुरोहिण्यां राजिकागण्डदूर्व्वयोः।
त्रिष्वत्युष्णे नितान्ते च कटौ तीरन्तु रोधसि ॥४५॥
पुंसि त्रपुणि तोत्रन्तु प्राजने वेणुकेऽपि च।
दरोऽस्त्री साध्वसे गर्त्ते कन्दरेतु दरी मता ॥४६॥
दराऽव्ययं मनागर्थे दस्रः खरेऽश्विनीसुते।
दारुः स्यात् पित्तले काष्ठे देवदारौ नपुंसकम् ॥४७॥
द्वारं निर्गमनेऽपि स्यादभ्युपाये धरो गिरौ।
कार्पासतूलके कूर्म्मराजे वस्वन्तरेऽपि च ॥४८॥
धरा विश्वम्भरायाञ्च स्त्री गर्भाशयमेदसोः।
धात्री जनन्यामलकीवसुमत्युपमातृषु ॥४९॥

धारा सैन्याग्रिमस्कन्दे तुरङ्गगतिपञ्चके।
घटादिच्छिद्रसन्तत्योः प्रपाते स्याद् द्रवस्य च ॥५०॥
खड्गादेर्निशितमुखे धारो ग्रावान्तरेऽप्यृणे।
धीरो धैर्य्यान्विते स्वैरे बुधे क्लीवन्तु कुङ्कुमे ॥५१॥
स्त्रियां प्रवणतुल्यायां नरोऽजे मनुजेऽर्ज्जुने।
क्लीवन्तु रामकर्पूरे नक्रं स्यादग्रदारुणि ॥५२॥
नासायां पुंसि कुम्भीरे नारस्तर्णकनीरयोः।
नीव्रं नेमौ वलीकेन्द्वोः रेवतीभेऽपि कानने ॥५३॥
नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च।
रथे चक्षुषि नद्याञ्च नेत्री नाड्याञ्च योषिति ॥५४॥
परः श्रेष्ठारिदूरान्योत्तरे क्लीवन्तु केवले।
पत्रन्तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः ॥५५॥
पारं परतटे प्रान्ते नस्त्री पारा नदीभिदि।
पारी पूरे च कर्क्कर्य्यां पादरज्जौ च दन्तिनः ॥५६॥
पात्रं स्रुवादौ पर्णे च भाजने राजमन्त्रिणि।
तीरद्वयान्तरे योग्ये पुरुः प्राज्येऽभिधेयवत् ॥५७॥
पुंसि स्याद् देवलोके च नृपभेदपरागयोः।
पुरं नपुंसकं गेहे देहपाटलिपुत्त्रयोः ॥५८॥
पुष्पादीनां दलावृत्तौ ना गुग्गुलौ न ना पुरि।
पुण्ड्रो दैत्यविशेषेक्षुभेदयोरतिमुक्तके ॥५९॥

चित्रे क्रमौ पुण्डरीके पुंभ्रूम्नि नीवृदन्तरे ।
पूरो जलसमूहे स्याद् व्रणसंशुद्धिखाद्ययोः ॥६०॥
पोत्रं वज्रे मुखाग्रे च शूकरस्य हलस्य च ।
पौरं त्रिषु पुरोद्भूते कत्तृणे तु नपुंसकम् ॥६१॥
वरो जामातरि वृतौ देवतादेरभीप्सिते ।
सिड्गे पुंसि त्रिषु श्रेष्ठे कुङ्कुमे तु नपुंसकम् ॥६२॥
वरी प्रोक्ता शतावर्य्यां वरा च स्यात् फलत्रिके ।
मनागिष्टे वरं क्लीवे केचिदाहुस्तदव्ययम् ॥६३॥
बभ्रु वैश्वानरे शूलपाणौ च गरुड़ध्वजे ।
विशाले नकुले पुंसि पिङ्गले त्वभिधेयवत् ॥६४॥
वक्रः शनैश्चरे पुंसि पुटभेदे नपुंसकम् ।
त्रिषु क्रूरे च कुटिले वारः सूर्य्यादिवासरे ॥६५॥
द्वारे हरे कुजवृक्षे वृन्दावसरयोः क्षणे ।
वारी स्याद् गजबन्धन्यां कलस्यामपि योषिति ॥६६॥
वारि वाग्गजबन्धन्योः स्त्री क्लीवेऽम्बुनि बालके ।
वीरो रसविशेषे पुंस्युत्तर सुभटे त्रिषु ॥६७॥
स्त्री सुराक्षीरकाकोलीतामलक्येलवालुके ।
पतिपुत्रवतीरम्भागम्भारीदुग्धिकासु च ॥६८॥
मलपूक्षीरविदार्य्योः क्लीवं शृङ्गयां नलेऽपि च ।
भरुः स्वर्णे हरे पुंसि भरोऽतिशयभारयोः ॥६९॥

भद्रः शिवे खञ्जरीटे वृषभे च कदम्बके ।
करिजातिविशेषे ना क्लीवं मङ्गलमुस्तयोः ॥७०॥
काञ्चने च स्त्रियां रास्नाकृष्णाव्योमनदीषु च ।
तिथिभेदे प्रसारिण्यां कट्फलानन्तयोरपि ॥७१॥
त्रिषु श्रेष्ठे च साधौ स्यात् नपुंसि करणान्तरे ।
भारः स्याद् वीवधे विष्णौ पलानां द्विसहस्रके ॥७२॥
भीरुरार्त्ते त्रिलिङ्गः स्याद् वरयोषिति योषिति ।
भूरि ना वासुदेवे च हरे च परमेष्ठिनि ॥७३॥
नपुंसकं सुवर्णे च प्राज्ये स्याद् वाच्यलिङ्गकः ।
मन्त्रो वेदविशेषे स्याद् देवादीनाञ्च साधने ॥७४॥
गुह्यवादेऽपि च पुमान् मरु ना गिरिधन्वनोः ।
मात्रा कर्णविभूषायां वित्ते माने परिच्छदे ॥७५॥
अक्षरावयवे स्वल्पे क्लीवं कार्त्स्न्येऽवधारणे ।
मारो मृत्यौ स्मरे विघ्ने मारी चण्ड्यां जनक्षये ॥७६॥
मारिः स्त्री मारणे वर्षे मित्रं सुहृदि न द्वयोः ।
सूर्ये पुंसि मुरा गन्धद्रव्ये दैत्यान्तरे पुमान् ॥७७॥
यात्रा तु यापनेऽपि स्याद् गमनोत्सवयोः स्त्रियाम् ।
रन्ध्रन्तु दूषणे छिद्रे राष्ट्रं स्यादुपवर्त्तने ॥७८॥
उपद्रवे क्लीवपुंसोः रुरु ना मृगदैत्ययोः ।
रेत्रं रेतसि पीयूषे पटवासे च सूतके ॥७९॥

रोध्रो ना स्थावरे क्लीवमपराधे च किल्बिषे ।
रौद्रो घर्म्मे रसे चण्ड्यां स्त्री तीव्रे भीषणे त्रिषु ॥८०॥
वज्रं स्याद् बालके धात्र्यां क्लीवं योगान्तरे पुमान् ।
वज्रा स्नुह्यां गुडुच्याञ्च वज्री स्नुह्यन्तरे स्मृता ॥८१॥
दम्भोलौ हीरकेऽप्यस्त्री बध्नं त्रिपुवरत्रयोः ।
वप्र स्तातेपुमानस्त्री रेणौ क्षेत्रे चये तटे ॥८२॥
वक्त्रं मुखे वृत्तभेदे व्यग्रो व्यासक्त आकुले ।
वास्रो ना दिवसे क्लीवं मन्दिरे च चतुष्पथे ॥८३॥
व्याघ्रः स्यात् पुंसि शार्दूले रक्तैरण्डकरञ्जयोः ।
श्रेष्ठे नराद्युत्तरस्थः कण्टकार्य्यान्तु योषिति ॥८४॥
वृत्रो रिपौ घने ध्वान्ते शैलभेदे च दानवे ।
वेरं कलेवरे क्लीवं वार्त्ताकौ कुङ्कुमेऽपि च ॥८५॥
वोड्रीस्त्री पणपादे ना गोनसाहो झषान्तरे ।
शर स्तेजनके वाणे दध्यग्रे ना शरं जले ॥८६॥
शस्त्रं लौहास्त्रयोः क्लीवं क्षुरिकायान्तु योषिति ।
शक्रः पुमान् देवराजे कुटजार्ज्जुनभूरुहोः ॥८७॥
शद्रि र्नाऽम्भोधरे जिष्णौ शरु र्ना कोपवज्रयोः ।
शारि र्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे ॥८८॥
युद्धार्थगजपर्य्याणे व्यवहारान्तरेऽपि च ।
शारः स्यात् शवले वाच्यलिङ्गः पुंसि समीरणे ॥८९॥

अस्त्रोपकरणे शास्त्रं न द्वयोरागमाज्ञयोः ।
शिग्रु र्ना शाकमात्रे च शोभाञ्जनमहीरुहे ॥९०॥
शिरा ना पिप्पलीमूले स्याद् धमन्याञ्च योषिति ।
शीघ्रं नलदे चक्राङ्गे क्लीवं द्रुतगतौ त्रिषु ॥९१॥
शुभ्रं स्यादभ्रके क्लीवमुद्दीप्तशुक्लयो स्त्रिषु ।
शुक्रः स्याद् भार्गवे ज्यैष्ठमासे वैश्वानरे पुमान् ॥९२॥
रेतोऽक्षिरुग्भिदोः क्लीवं शूरः स्याद् यादवे भटे ।
स्वरुः पुंसि यूपखण्डे भेदुरेऽप्यधरे शरे ॥९३॥
सत्रं यज्ञे सदादानाच्छादनारण्यकैतवे ।
सरो दध्यग्रगत्यो र्ना स्वरो नासासमीरणे ॥९४॥
उदात्तादावकारादौ षड्जादौ च ध्वनौ पुमान् ।
सारो बले स्थिरांशे च मज्ज्नि पुंसि जले धने ॥९५॥
न्याय्ये क्लीवं त्रिषु वरे सान्द्रं वने घने मृदौ ।
स्फारः स्यात् पुंसि विकटे कनकादेश्च बुद्बुदे ॥९६॥
सिप्रो निदाघसलिले सिप्रा तु सरिदन्तरे ।
स्थिरा भूशालपर्ण्यो र्ना शनौ मोक्षेऽचले त्रिषु ॥९७॥
सीरोऽर्कहलयोः पुंसि सुरा चषकमद्ययोः ।
पुंलिङ्ग स्त्रिदिवेशे स्यात् सूत्रं तन्तुव्यवस्थयोः ॥९८॥
शास्त्रादिसूचनाग्रन्थे स्वैरः स्वच्छन्दमन्दयोः ।
हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु ॥९९॥

कपौ। सिंहे हरेऽजेऽंशौ शक्रे लोकान्तरे पुमान्।
वाच्यवत् पिङ्गहरितो हारो मुक्तावलौ युधि ॥१००॥
हारिः पथिकसन्तानद्यूतादिभङ्गयोः स्त्रियाम्।
हिंस्रा त्वेलावलीमांस्योः स्त्रियां स्याद् घातुकेऽन्यवत्॥
हीरो तैलाम्बुकालव्योऽगाः पुंसि शङ्करवज्रयोः।
होरा लग्नेऽपि राश्यर्द्धे रेखाशास्त्रभिदोरपि ॥१०२॥

रत्रिकम्।

अमर स्त्रिदशेऽप्यस्थिसंहारे कुलिशद्रुमे।
स्त्री गुडुच्यमरावत्योः स्थूणादूर्व्वाजरायुषु ॥१०३॥
अपरं गजपश्चार्द्धे स्याज् जरायौ तु योषिति।
इतरस्मिन्नपि तथाऽर्व्वाचीनेऽप्यन्यलिङ्गकम् ॥१०४॥
अधरस्तु पुमानोष्ठे हीनेऽनूर्द्ध्वे तु वाच्यवत्।
अध्वरः सावधाने स्याद् वसुभेदे क्रतौ पुमान्॥१०५॥
अन्तरमवकाशावधि परिधानान्तर्द्धिभेदतादर्थ्ये।
छिद्रात्मीयविनावहिरवसरमध्यात्मसदृशेषु ॥१०६॥
अवरं गजान्त्यजङ्घादिदेशे चरमे त्रिषु।
अम्बरं न द्वयोर्व्योम्नि सुगन्ध्यन्तरवस्त्रयोः ॥१०७॥
अङ्गारमुल्मुके न स्त्री पुंलिङ्गस्तु महीसुते।
अङ्कुरो रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि॥१०८॥

अजिरं प्राङ्गणे वाते विषये दर्दुरे तनौ।
स्त्री चण्डग्रामक्षरं ब्रह्मवर्णयोः पुंसि शङ्करे ॥१०९॥
अशिरो वीतिहोत्रे स्याद् राक्षसे भास्करे पुमान्।
अण्डीरः पुरुषे शक्तेऽररं क्षदकपाटयोः ॥११०॥
अवीराऽपतिपुत्रायां स्त्री सत्त्वरहिते त्रिषु।
अगुरु क्लीबं जोङ्कशिंशपयो र्वाच्यवल्लघुनि॥१११॥
असुरा रजनीराश्योरसुरो दैवारिभास्करयोः।
आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यते ॥११२॥
आधारश्चाधिकरणेऽप्यालबालेऽम्बुधारणे।
आसारः स्यात् प्रसरणे वेगवृष्टौ सुहृद्बले ॥११३॥
आहारः स्यादाहरणे भोजने च पुमानयम्।
आशरस्तु पुमान् वैश्वानरे च रजनीचरे ॥११४॥
आकार इङ्गिताकृत्योरितरोऽन्यत्र पामरे।
इत्वर्य्यसत्यां पथिके क्रूरकर्म्मणि च त्रिषु ॥११५॥
ईश्वरो मन्मथे शम्भौ नाऽऽढ्ये स्वामिनि वाच्यवत्।
ईश्वरी चेश्वरीमायामुदरं जठरे युधि ॥११६॥
उदारो दातृमहतो र्दक्षिणे चाभिधेयवत्।
उर्व्वरा सर्व्वशस्याढ्यभूमौ स्याद् भूमिमात्रके॥११७॥
उत्तरा दिग्विशेषे च स्नुषायामर्ज्जुनस्य च।
विराटस्य सुते ना स्यादूर्द्ध्वोदीच्योत्तमे त्रिषु ॥११८॥

नपुंसकं प्रतिवाक्येऽथोद्गार श्चोद्गृ,तावृणे।
च्छत्वरं वारिधारायाम्च्छत्वरश्चर्त्विजि स्मृतः ॥११९॥
एकाग्रमन्यलिङ्गं स्यादेकतानेऽप्यनाकुले।
औशीरंशयनासनचामरदण्डेऽप्युशीरजेप्रोक्तम्॥१२०॥
ककरः करीरवृक्षे दीने क्रकचे च पक्षिभेदे च।
कदरः श्वेतखदिरे क्रकचव्याधिभेदयोः ॥१२१॥
कर्व्वुरं सलिले हेम्नि कर्व्वुरः पापरक्षसोः।
कर्व्वुरा कृष्णवृन्तायां शवले पुनरन्यवत् ॥१२२॥
कर्परः स्यात् कपाले च शस्त्रभेदकटाहयोः।
कन्धरो वारिवाहे स्याद् ग्रीवायां कन्धरा मता॥१२३॥
कर्व्वरः कथितो व्याघ्रे शिवायामपि कर्व्वरी।
कञ्जरो जठरे सूर्य्ये विरिञ्चौ वारणे मुनौ ॥१२४॥
करीरो वंशाङ्कुरेऽस्त्री वृक्षभिद् घटयोः पुमान्।
करीरी चीरिकायाञ्च दन्तमूले च दन्तिनाम् ॥१२५॥
कटित्रं रसनायाञ्च चर्म्माङ्गे कटिवाससि।
कच्छुरा शूकशिम्ब्याञ्च शटीदुष्पर्शयोरपि ॥१२६॥
कच्छुरः पुंश्चले कच्छुयुक्ते च कवरी पुनः।
पृथ्वीतुङ्गाः केशवेशे कवरं लवणाम्लयोः ॥१२७॥
कर्व्वय्युमायां ना रक्षःपापयो र्भेषजान्तरे।
कर्म्मारो जातिभेदे च त्वचिसारे च पुंस्ययम् ॥१२८॥

करेणुः कर्णिकारे च करिणीवेश्ययोः स्त्रियाम् ।
कच्चरं कुत्सिते वाच्यलिङ्गं तक्रे नपुंसकम् ॥१२९॥
कर्करी भाण्डभेदे ना दर्पणे कठिने त्रिषु ।
कडारः पिङ्गले दासे कलत्रं श्रोणिभार्य्ययोः ॥१३०॥
दुर्गस्थाने नृपादीनां कटप्रूः पुंसि राक्षसे ।
विद्याधरे महादेवे तथा स्याद् द्यदेवते ॥१३१॥
कन्दरस्त्वङ्कुशे पुंसि गुहायां नपुंसकम् ।
कर्व्वूरः स्यात् पुमान् शट्यां सुवर्णे तु नपुंसकम् ॥१३२॥
काश्मीरं कुङ्कुमेऽपि स्यात् टङ्कपुष्करमूलयोः ।
कावेरी स्यात् सरिद्भेदे पण्यनारी हरिद्रयो ॥१३३॥
कान्तारोऽस्त्री महारण्ये विले दुर्गमवर्त्मनि ।
पुंसि स्यादिक्षुभेदेऽथ किशोरोऽश्वस्य शावके ॥१३४॥
तैलपर्ण्योषधौ च स्यात् तरुणावस्थसूर्य्ययोः ।
किर्म्मीरो नागरङ्गे च कर्बुरे राक्षसान्तरे ॥१३५॥
किंशारुर्ना शस्यशूके विशिखे कङ्कपक्षिणि ।
कुहरं गह्वरे छिद्रे क्लीवं नागान्तरे पुमान् ॥१३६॥
कुक्कुरः सारमेये ना ग्रन्थिपर्णे नपुंसकम् ।
कुर्परः स्यात् कफोणौ च जानुन्यपि च पुंस्ययम् ॥१३७॥
कुञ्जरोऽनेकपे केशे स्त्री धातक्याञ्च पाटलौ ।
कुमारः स्यात् शुके स्कन्दे युवराजेऽश्वचारके ॥१३८॥

वालके वरुणद्रौ ना न द्वयो र्जात्यकाञ्चने।
कुमारी शैलतनया नवमाल्यो र्नदीभिदि ॥१३९॥
सहाऽपराजिता कन्या जम्बूद्वीपेषु च स्त्रियाम्।
कुठारु र्ना द्रुमे कीशे कुठारं केवले रते ॥१४०॥
कुवेरः स्यात् पुंसि नन्दीवृक्षे पुण्यजनेश्वरे।
कूवरस्त्रिषु चारौ ना कुब्जके स्त्री युगन्धरे ॥१४१॥
केशरं हिङ्गुले क्लीवं किञ्जल्के न स्त्रियां पुमान्।
सिंहसटायां पुन्नागे वकुले नागकेशरे ॥१४२॥
केदारोऽद्रौ शिवे क्षेत्रे भूमिभेदालवालयोः।
केनारः कुम्भिनरके शिरःकपोलसन्धिषु ॥१४३॥
कोटिरः पुंसि नकुले शक्रगोपकशक्रयोः।
कोट्टारो नागरे कूपे पुष्करिण्याश्च पाटके ॥१४४॥
खपरः क्रमुके भद्रमुस्तके कलसेऽपि च।
खपरस्तस्करे धूर्त्ते भिक्षाभाण्डकपालयोः ॥१४५॥
खर्ज्जूरं रूप्यखलयो र्वृश्चिके ना द्रुमे द्वयोः।
खदिरी शाकभेदे स्त्री ना चन्द्रे दन्तधावने ॥१४६॥
खण्डाभ्रमभ्रलेशे स्यात् तथा दन्तक्षतान्तरे।
खिङ्खिरस्तु शिवाभेदे खट्वाङ्गे वारिवालके ॥१४७॥
गण्डूः कर्णिकाराद्रौ करिणी वेश्ययोः स्त्रियाम्।
गर्गरो मीनभेदे स्त्री मन्थन्यामथ गह्वरम् ॥१४८॥

गुहागह्वनदम्भेषु निकुञ्जे तु पुमानयम् ।
गान्धारः पुंसि सिन्दूरे रागदेशप्रभेदयोः ॥१४९॥
गायत्री त्रिपदादेवीच्छन्दोभित् खदिरेषु च ।
गोपुरं द्वारि पूर्द्वारि कैवर्त्तीमुस्तकेऽपि च ॥१५०॥
घर्घरो ना चलद्वारि ध्वानोलूक नदान्तरे ।
स्त्री क्षुद्रघण्ट्यां वीणाया भेदे स्वरान्तरे त्रिषु ॥१५१॥
चमरं चामरे स्त्री तु मञ्जरी मृगभेदयोः ।
चन्दिरोऽनेकपे चन्द्रे चत्वरं स्थण्डिलेऽङ्गने ॥१५२॥
चक्कुरः स्याद् रथे वृक्षे चातुरो नेत्रगोचरे ।
चाटुकारि नियन्तोश्च त्रिषु दाक्ष्ये तु चातुरी ॥१५३॥
चक्रगण्डौ च पुंसि स्याच्च चामरं चमरोऽपि च ।
दण्डे च बालव्यजने चिकुर स्तरलागासौः ॥१५४॥
पक्षिवृक्षभिदोः केशे गृहवभ्रौ सरीसृपे ।
क्षिदिरः पावके रज्जौ करबाले परश्वधे ॥१५५॥
क्षिदुरश्छेदनद्रव्ये धूर्त्ते वैरिणि च त्रिषु ।
जठरो न स्त्रियां कुक्षौ वृद्धकर्कटयोस्त्रिषु ॥१५६॥
जर्ज्जरः शैवले शक्रध्वजे त्रिषु जरातुरे ।
जम्बीरः प्रस्थपुष्पे स्यात् तथा दन्तशठद्रुमे ॥१५७॥
जलेन्द्रः पुंसि वरुणे जम्भले च महोदधौ ।
झर्झरः स्यात् कलियुगे वाद्यभाण्डे नदान्तरे ॥१५८॥

झल्लरी झल्लरो च ढे झडुके बालचक्रके।
टट्टरी स्यान् मृषावादे लम्पापटहवाद्ययोः ॥१५९॥
टङ्कारो विस्मये पुंसि प्रसिद्धौ सिञ्जिनीध्वनौ।
टगरष्टङ्कणक्षारे हेलाविभ्रमगोचरे ॥१६०॥
नाऽन्यवत् केकराक्षे स्याड् डिङ्गरो डङ्गरेऽपि च।
क्षेपे तमिस्रं तिमिरे कोपे स्त्री तु तमस्ततौ ॥१६१॥
कृष्णपक्षनिशायाञ्च त्वक्पत्रन्तु वराङ्गके।
स्त्री कारव्याञ्च तिमिरं ध्वान्ते नेत्रामयान्तरे ॥१६२॥
तीवरो नाम्बुधौ व्याधे तुम्बुरी कुकुरस्त्रियाम्।
धन्याकेऽपि तुषारस्तु शीतले शीकरे हिमे ॥१६३॥
तुवरस्तु कषाये स्यात् काक्ष्याढक्योस्तु वर्य्यपि।
तूवरोऽश्मश्रुपुरुषेऽप्रौढ़शृङ्गगवेऽपि च ॥१६४॥
पुरुषव्यञ्जनत्यक्ते स्यात् कषायरसेऽपि च।
दहरी भ्रातरि स्वल्पे मूषिकायाञ्च बालके ॥१६५॥
दन्तुरस्तून्नतरदे तथोन्नतानते त्रिषु।
दर्द्दरः पर्व्वते पुंसि त्रिष्वीषद् भग्नभाजने ॥१६६॥
दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः।
दर्दुराचण्डिकायां स्याद् ग्रामजालेनपुंसकम्॥१६७॥
दण्डारो वहने मत्तवारणे शरयन्त्रके।
कुम्भकारस्य चक्रे च द्वापरः संशये युगे ॥१६८॥

दासेरो दासिकापत्ये त्रिषु पुंसि क्रमेलके।
दुर्द्दरः पुंसि नरकान्तरे स्वाद्दषभौषधे ॥१६९॥
दैत्यारिः पुंसि सामान्यदेवे च गरुड़ध्वजे।
धूसरी किन्नरीभेदे ना खरे त्रिषु पाण्डुरे ॥१७०॥
नरेन्द्रस्तु महीपाले विषवैद्ये च पुंस्ययम्।
नर्म्मदा तु दरीभस्त्रा सरला निष्कलासु च ॥१७१॥
नागरं मुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे।
निकरो निवहे सारे न्यायदेयधने निधौ ॥१७२॥
निर्ज्जरः स्यात् पुमान् देवे जरात्यक्ते तु वाच्यवत्।
निर्ज्जरा तु गुडुच्यास्च तालपर्ण्यामपि स्त्रियाम् ॥१७३॥
निर्झरस्तु सहस्रांशुतुरङ्गे तुषपावके।
निकारस्यात् परिभवे धान्यस्योत्क्षेपणेऽपि च ॥१७४॥
निर्द्दरं निर्भरे सारेऽन्यवत्तु कठिनेऽत्रपे।
स्यान्नीवरो वाणिजके वास्तव्ये च पुमानयम् ॥१७५॥
प्रवरं सन्ततौ गोत्रे क्लीवं श्रेष्ठे तु वाच्यवत्।
प्रखरं हयसन्नाहे कुक्कुरेऽश्वतरेऽपि च ॥१७६॥
पुंसि त्रिष्वत्यन्तखरे पवित्रं वर्षणे कुशे।
ताम्रे पयसि च क्लीवं मेध्ये स्यादभिधेयवत् ॥१७७॥
प्रदरो रोगभेदे स्याद् विदारे शरभङ्गयोः।
प्रकरः स्यात् पुमान् सङ्घे विकीर्णकुसुमादिषु ॥१७८॥

नपुंसकं जोङ्गके स्त्री नाट्याङ्गे चत्वरावनौ ।
पङ्कारः शैवले सेतौ सोपाने जलकुब्जके ॥१७९॥
प्रस्तरो ग्रावनि च मणौ प्रकारस्तुल्यभेदयोः ।
पदारः पादधूलौ स्यात् पादालिन्देऽपि पुंस्ययम्॥१८०॥
प्रसरः प्रणये वेगे स्यात् पटीरस्तु मूलके ।
केदारे वेणुसारे च वारिदे तितउन्यपि ॥१८१॥
स्याद् रङ्गे वातिके पुंसि पामरः खलनीचयोः ।
पाण्डुरः स्यान् मरुवके वर्णे ना तद्वति त्रिषु ॥१८२॥
पार्परो भक्तसिक्थे स्यात् कीनाशे राजयक्ष्मणि ।
जराटेऽपि कदम्बस्य केशरे च गदान्तरे ॥१८३॥
प्रान्तरं विपिने दूरशून्यवर्त्मनि कोटरे ।
पिठरः स्थाल्यां ना क्लीवं मुस्तामन्थानदण्डयोः॥१८४
पिञ्जरोऽश्वान्तरे पीते क्लीवं स्वर्णे च पीतने ।
पिण्डारः क्षपणे गोपे महिषीरक्षके द्रुमे ॥१८५॥
पीवरः कच्छपे स्थूले पुष्करं खेऽम्बुपद्मयोः ।
तूर्य्यवक्त्रे खड्गफले हस्तिहस्ताग्रकाण्डयोः ॥१८६॥
कुष्ठौषधे द्वीपतीर्थभेदयोश्च नपुंसकम् ।
ना रागनागविहगनृपभेदेषु वारुणौ ॥१८७॥
वण्ठरः स्थगिकारज्जौ लाङ्गुले कुक्कुरस्य च ।
करीरकोषे तालस्य पल्लवे च पयोधरे ॥१८८॥

बन्धुरं मुकुटे पुंसि स्त्रीचिक्कतैलकल्कयोः ।
बन्धूके वधिरे हंसे त्रिषु स्याद् रम्यनम्रयोः ॥१८९॥
बन्धूरा पण्ययोषायां स्त्रियां पुंभूम्नि सक्तुषु ।
बन्धूरः शोभने नम्रे वरत्रा वर्द्धीकत्रयोः ॥१९०॥
भ्रमरः कामुके भृङ्गे भ्रामरं मधुनि स्मृतम् ।
पुंसि प्रस्तरभेदेऽथ भास्करोऽग्नौ प्रभाकरे ॥१९१॥
भार्य्यारुः शैलभेदे स्यान् मृगभेदे च तत्र च ।
क्रीड़या परभार्य्यायां पुत्रो येनोपपादितः ॥१९२॥
भृङ्गारी झिल्लिकायां स्यात् कनकालौ पुनः पुमान् ।
मत्सरा मक्षिकायां स्यान्मात्सर्य्यक्रोधयोःपुमान्॥१९३॥
असह्यपरसम्पत्तौ कृपणे चाभिधेयवत् ।
मधुरा शतपुष्पायां मिश्रेयानगरीभिदोः ॥१९४॥
मधुकर्कटिकाभेदामधुलीयष्टिकासु च ।
क्लीवं विषे पुंसि रसे तद्वत् स्वादुप्रियेऽन्यवत् ॥१९५॥
मन्दरस्तु पुमान् मन्थशैले मन्दारपादपे ।
वाच्यवद् वहले मन्दे मन्दारः स्यात् सुरद्रुमे ॥१९६॥
पारिभद्रेऽर्कपर्णे च मदारो हस्तिधूर्त्तयोः ।
मन्दिरं नगरेऽगारे क्लीवं ना मकरालये ॥१९७॥
मन्थरः कोषफलयो र्वाधमन्थानयो पुमान् ।
कुसुम्भरां नद्दयो र्मन्दे पृथौ वक्रेऽभिधेयवत् ॥१९८॥

मकरो यादसोभेदे निधिराशिप्रभेदयोः।
मयूरो वर्हिचूडायामपामार्गे शिखण्डिनि ॥१९९॥
महेन्द्रः पर्व्वते शक्रे मधुद्रोऽलौ च कामुके।
मन्दुरा वाजिशालायां शयनीयार्थवस्तुनि ॥२००॥
मल्लरामसुरा वा ना वेश्याब्रीहिप्रभेदयोः।
मल्लरी पापरोगे स्यादुपधाने पुनः पुमान् ॥२०१॥
मर्म्मरो वस्त्रपर्णादि स्वने स्त्री पीतदारुणि।
मञ्जरी तिलकद्रुमुक्तयो र्वल्लरौ द्वयोः ॥२०२॥
मकुरः स्यात् मुकुरवद् दर्पणे वकुलद्रुमे।
कुलालदण्डे माठरो व्यासेऽर्कपारिपार्श्विके ॥२०३॥
मार्ज्जार ऋोतौ खट्टाशे मिहिरः सूर्य्यवृद्धयोः।
मुद्गरं कलिकाभेदे पुंसि लोष्ट्रादिभेदने ॥२०४॥
मुदिरः कामुके मेघे मुहिरः काममूर्खयोः।
मुर्म्मुर स्तुषवह्नौ स्यान् मन्मथे रविवाजिनि ॥२०५॥
मृगारि स्यात् पुंसि कण्ठीरशार्दूलयोरपि।
रुधिरोऽङ्गारके पुंसि क्लीवन्तु कुङ्कुमास्रजोः ॥२०६॥
वदरा गृष्टिकार्पास्यो रेलापर्ण्यां स्त्रियां पुमान्।
कार्पासस्यास्थ्नि वदरी कोलौ क्लीवन्तु तत् फले ॥२०७॥
वटरः कुक्कुटे वस्ले शठे च वशिरः पुमान्।
किनिही हस्तिपिप्पल्योः क्लीवेऽब्धिलवणे स्मृतः ॥२०८॥

वर्व्वरः पामरे केशे चक्रले नीवृदन्तरे ।
फञ्जिकायां पुमान् शाकभेदेपुष्पभिदोःस्त्रियाम्॥२०९॥
वर्करः परिहासे स्यात् छागे युवपशावपि ।
वल्गुरं स्याद्वनक्षेत्रे गहनोषरयोरपि ॥२१०॥
वल्गुरा त्रिषु संशुष्कमांसशूकरमांसयोः ।
वार्द्दरं कृष्णलावीजदक्षिणावर्त्तशङ्खयोः ॥२११॥
नीरे च काकचिञ्चायां भारत्याञ्च नपुंसकम् ।
वागरस्तु गतातङ्के मुमुक्षौ वातवेष्टके ॥२१२॥
विशारदे विषाणेऽपि निर्णये वारकेऽपि च ।
वासरस्तु पुमान् नागविशेषे दिवसेऽस्त्रियाम्॥२१३॥
वासुरा वासितायां स्याद् वासतेयभुवि स्त्रियाम् ।
विष्टरः कुशमुष्टौ स्यादासने च महीरुहे ॥२१४॥
विस्तरो वाक्प्रपञ्चे स्याद् विस्तारे प्रणयेऽपि च ।
विदुरो नागरे धीरे कौरवाणाञ्च मन्त्रिणि ॥२१५॥
विधुरं स्यात् प्रविश्लेषे न द्वयोर्विकले त्रिषु ।
रसालायां स्त्री विदारी जलोच्छ्वासाजिदारणे ॥२१६॥
विदारी शालपर्ण्याञ्च रोगभेदेक्षुगन्धयोः ।
विवरं दूषणे गर्त्ते विसरः प्रसरे व्रजे ॥२१७॥
विस्तारो विस्तृतौ स्तम्बे विकारो विकृतौ रुजि ।
विहारो भ्रमणे स्कन्धे लीलायां सुगतालये ॥२१८॥

शवरो म्लेच्छभेदे च पानीये शङ्करेऽपि च।
शम्बरं सलिले पुंसि मृगदैत्यविशेषयोः ॥२१९॥
शम्बरी चाखुपर्ण्यां स्यात् शर्व्वरी यामिनीस्त्रियोः।
शर्करा खण्डविकृतावुपलाकर्परांशयोः ॥२२०॥
शर्करान्वितदेशेऽपि रुग्भेदे सकलेऽपि च।
शर्करी छन्दसोभेदे नद्यो मेखलयोरपि ॥२२१॥
शणीरं शोणमध्यस्थपुलिने दर्द्दरीतटे।
श्वशुरः पूज्ये स्त्री ब्राह्मणं शारीरं देहजे वृषे ॥२२२॥
शार्करः स्याद् दुग्धफेनशर्करान्वितदेशयोः।
शाक्करस्तु बलीवर्द्दे छन्दोभेदे नपुंसकम् ॥२२३॥
शार्व्वरन्त्वन्धतमसे घातुके भेद्यलिङ्गकम्।
शालारं स्याद् हस्तिनखे सोपाने पक्षिपञ्जरे ॥२२४॥
शावरी शूकशिम्ब्यां स्यात् पुंसि पापापराधयोः।
लोध्रे च शाङ्करिः पुंसि कार्त्तिकेये गणाधिपे ॥२२५॥
शिखरोऽस्त्री द्रुमाग्रेऽद्रिशृङ्गे पुलककक्षयोः।
पक्वदाडिमवीजाभमाणिक्यसकलाग्रयोः ॥२२६॥
शिशिरो ना हिमे नस्त्री ऋतुभेदे जडे त्रिषु।
शिलीन्ध्रं कन्दलीपुष्पे करके ना झसान्तरे ॥२२७॥
द्रुभेदे स्त्री तु विहगीभेदे गण्डूपदीमृदोः।
शीकरं शरले वातसृताम्बुकणयोः पुमान् ॥२२८॥

शुषिरं वंश्यादिवाद्ये विवरे च नपुंसकम्।
मूषिके ना स्त्रियां नद्यौषधौ रन्ध्रान्विते त्रिषु ॥२२९॥
शृङ्गारः सुरते नाट्यरसे च गजमण्डने।
नपुंसकं लवङ्गेऽपि नागसम्भवचूर्णयोः ॥२३०॥
सम्बरो दैत्यहरिणमत्स्यशैलजिनान्तरे।
नपुंसकन्तु सलिलबौद्धव्रतविशेषयोः ॥२३१॥
सङ्कारोऽग्निचटत्कारे सम्मार्ज्जन्यवपुञ्जिते।
नवदूषितकन्यायां सङ्कारी पुनरुच्यते ॥२३२॥
संस्कारः प्रतियत्नेऽनुभवे मानसकर्म्मणि।
संस्तरः प्रस्तरे यज्ञे सङ्गरो युधि चापदि ॥२३३॥
क्रियाकारे विषे चाङ्गीकारे क्लीवं शमीफले।
सम्भारः सम्भृतौ सङ्घे सामुद्रं देहलक्षणे ॥२३४॥
समुद्रजेऽन्यलिङ्गोऽथ सावित्रः शङ्करे वसौ।
सावित्री सत्यवत्पत्न्यां ब्रह्मपत्न्युमयोरपि ॥२३५॥
सिन्दूरस्तरुभेदे स्यात् सिन्दूरं रक्तचूर्णके।
सिन्दूरी रोचनारक्तचेलिकाधातकीषु च ॥२३६॥
सुनारस्तु शुनीस्तन्ये सर्पाण्डकलविङ्कयोः।
सुन्दरी तरुभिन्नारीभिदोः स्त्री रुचिरेऽन्यवत् ॥२३७॥
सैरिन्ध्री परवेश्मस्थशिल्पकृत्स्ववशस्त्रियाम्।
वर्णसङ्करसम्भूतस्त्रीमहल्लिकयोरपि ॥२३८॥

सौवीरं काञ्जिके स्रोतोऽञ्जने बदरीफले ।
ना तु नीवृति हारिद्रं हरिद्रा रञ्जिते त्रिषु ॥२३९॥
ना नीपवृक्षे हिण्डीरः फेणवार्त्ताकुपुरुषे ।

## रचतुष्कम् ।

अरुष्करो व्रणकृति त्रिषु भल्लातके पुमान् ॥२४०॥
भवेदभिमरो युद्धे वधे स्वबलसाध्वसे ।
अनुत्तरं त्रिषु श्रेष्ठे प्रतिजल्पविवर्ज्जिते ॥२४१॥
अलङ्कारस्तु हारादावुपमादावलङ्कृतौ ।
अवहारः पुमान् चौरे द्यूतयुद्धादिविश्रमे ॥२४२॥
निमन्त्रणोपनेतव्यद्रव्ये ग्राहाह्वयादसि ।
अवतारोऽवतरणे पुष्करिण्यादितीर्थयोः ॥२४३॥
अवस्कारोऽपि वर्च्चस्के गुह्येऽथावसरः पुमान ।
प्रस्तावे मन्त्रभेदे च वर्षणे चापि कीर्त्तितः ॥२४४॥
उपलादावकूपारः कूर्म्मराजे महोदधौ ।
असिपत्रः खड्गकोषे पुमानिक्षौ च नारके ॥२४५॥
भवेदश्वतरो वेगसरे नागान्तरेऽपि च ।
अभिहारोऽभियोगे च चौर्य्ये सन्नहनेऽपि च ॥२४६॥
अग्निहोत्रोऽग्निहविषोरङ्ग्चन्द्रो नखक्षते ।
गलहस्ते वाणभेदे कृष्णत्रिवृति तु स्त्रियाम् ॥२४७॥

आडम्बरस्तूर्य्यपक्षसंरम्भे गजगर्ज्जिते ।
आत्मवीरः प्राणवति श्यालके च विदूषके ॥२४८॥
इन्दीवरं कुवलये शतावर्य्यान्तु योषिति ।
उदुम्बरस्तु देहल्यां वृक्षभेदे च षण्डके ॥२४९॥
कुष्ठभेदेऽपि च पुमान् ताम्रे तु स्यान् नपुंसकम् ।
उपह्वरं समीपे स्यादेकान्ते च नपुंसकम ॥२५०॥
उद्दन्तुरस्त्रिषूत्तुङ्गे करालोत्कटदण्डयोः ।
उपकारश्चोपकृतौ विकीर्णकुसुमादिषु ॥२५१॥
औदुम्बरः आहट्टेवे रोगभेदे नपुंसकम् ।
अथ कर्म्मकरो भृत्ये वेतनाजीविनि त्रिषु ॥२५२॥
कीनाशे पुंसि मूर्व्वायां विम्बिकायामपि स्त्रियाम् ।
कलिकारस्तु धूम्याटे करञ्जे पीतमस्तके ॥३५३॥
कर्णिकारः पुमानारग्बधद्रौ च द्रुमोत्पले ।
कर्णपूरः शिरीषे स्यान् नीलोत्पलावतंसयोः ॥२५४॥
करवीरः कृपाणे स्याद् दैत्यभेदाशुमारयोः ।
करवीर्य्यदितिश्रेष्ठगवीपुत्रवतीषु च ॥२५५॥
कटम्भरा प्रसारण्यां रोहिण्यां गजयोषिति ।
कलविङ्कायां गोलायां वर्षाभूमूर्व्वयोरपि ॥२५६॥
कादम्बरस्तु दध्यग्रे मद्यभेदे नपुंसकम् ।
स्त्री वारुणीपरभृता भारतीशारिकासु च ॥२५७॥

कालञ्जरो योगिचक्रमेलके भैरवे गिरौ।
कुम्भकारो कुलत्थयाञ्च पुंलिङ्गो घटकारके ॥२५८॥
कृष्णसारा शिंशपायां पुंसि स्नुह्यां मृगान्तरे।
गिरिसारः पुमान् लोहे वङ्गे मलयपर्व्वते ॥२५९॥
घनसारस्तु कर्पूरे दक्षिणावर्त्तपारदे।
चराचरं वाच्यलिङ्गमिङ्गे जगति न द्वयोः ॥२६०॥
चर्म्मकारः पादूकृति स्त्रियां चर्म्मकषौषधौ।
अथ चक्रधरोऽजेऽहौ ना त्रिषु ग्रामजालिनि ॥२६१॥
चित्रटीरो विधौ भालमङ्कितं येन तत्र च।
घण्टाकर्णापहाराय हतच्छागास्रविन्दुभिः॥२६२॥
तालपत्रन्तु ताडङ्के रण्डायां तालपत्र्यपि।
तुङ्गभद्रा नदीभेदे स्त्रियां पुंसि मदोत्कटे ॥२६३॥
तुण्डिकेरी तु कार्पास्यां विम्बिकायामपि स्त्रियाम्।
तुलाधारस्तुलाराशौ पुंसि वाणिजके त्रिषु ॥२६४॥
अथ तोयधरो मुस्तासुनिषण्णौषधी घने।
दण्डयात्रा दिग्विजये संयानवरयात्रयोः ॥२६५॥
अथो दशपुरं देशे मुवेऽपि स्यान् नपुंसकम्।
दण्डधरः पुमान् पृथ्वीनाथे प्रेताधिपेऽपि च॥२६६॥
दिगम्बरः स्यात् चपणे नग्ने तमसि शङ्करे।
दुरोदरं द्यूतभेदे द्यूतकृत्पणयोः पुमान् ॥२६७॥

देहयात्रा यमपुरीगमने भोजनेऽपि च।
द्वैमातुरो जरासन्धवारणाननयोः पुमान् ॥२६८॥
धराधरो हरौ शैले धाराधरोऽसिमेघयोः।
धाराङ्कुरस्तु नासीरे शीकरेऽपि घनोपले ॥२६९॥
धार्त्तराष्ट्रोऽसितास्याङ्घ्रि हंसे कौरवसर्पयोः।
धुन्धुमारः शक्रगोपे गृहधूमे पदालिके ॥२७०॥
धुरन्धरो धवद्रौ ना वाच्यलिङ्गस्तु धूर्व्वहे।
धृतराष्ट्रः सुराज्ञि स्यात् नागक्षत्रियभेदयोः ॥२७१॥
धृतराष्ट्री हंसपत्न्यां नभश्चरो विहङ्गमे।
विद्याधरे घने वाते निशाचरस्तु रक्षसि ॥२७२॥
फेरुपेचकसर्पेषु पांशुलायां निशाचरी।
निषद्वरस्तु जम्बाले निशायान्तु निषद्वरी ॥२७३॥
नीलाम्बरः प्रलम्बघ्ने कौणपे च शनैश्चरे।
भवेत् परिकरः सङ्घे पर्य्यङ्कपरिवारयोः ॥२७४॥
प्रगाढगात्रिकाबन्धे समारम्भविवेकयोः।
अथ पक्षचरश्चन्द्रे पृथक्चारिगजेऽपि च ॥२७५॥
भवेत् प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे।
व्रणशुद्धौ चमूपृष्ठे पुंसि न स्त्री तु मण्डने ॥२७६॥
आरक्षे करसूत्रे च नियोज्ये त्वन्यलिङ्गकः।
भवेत् परिसरो मृत्यौ विधावपि च पुंस्ययम् ॥२७७॥

परम्परो मृगभेदे प्रपौत्रे तनयस्य च।
परम्परा परिपाट्यां हिंसासन्तानयोरपि ॥२७८॥
पयोधरः कोषकारे नारिकेले स्तनेऽपि च।
कशेरुमेघयोः पुंसि प्रभाकरोऽग्निसूर्य्ययोः ॥२७९॥
प्रतीहारो द्वारि द्वाःस्थे द्वाःस्थितायान्तु योषिति।
परिवारः परिजने खड्गकोषे परिच्छदे ॥२८०॥
पारावारः समुद्रे ना तटद्वये नपुंसकम्।
पात्रटीरस्तु पुंलिङ्गो युक्तव्यापारमन्त्रिणि ॥२८१॥
लोहकांस्यरजत्पात्रे सिंहाणे पावकेऽपि च।
पारिभद्रस्तु मन्दारे निम्बद्रौ देवदारुणि ॥२८२॥
पीताम्बरस्तु शैलूषे पुंसि कैटभसूदने।
पीतसारो मलयजे गोमेदकमणावपि ॥२८३॥
पूर्णपात्रं वस्तुपूर्णपात्रे वर्द्धापकेऽपि च।
बलभद्रा त्रायमानाकुमार्य्योः पुंसि सीरिणि ॥२८४॥
ब्रह्मपुत्रः क्षेत्रभेदे नदभेदे च पुंस्ययम्।
वक्रनक्रस्तु पिशुने तथैव शुकपक्षिणि ॥२८५॥
वार्बटीरो रङ्ग आम्रास्थ्यङ्कुरे गणिकासुते।
वारकीरस्तु पुंसि स्यात् भारग्राहिणि वाड़वे ॥२८६
यूकायां वेणिवेधिन्यां नीराजितहयेऽपि च।
विन्दुतन्त्रः पुमान् शारिफलके च तुरङ्गके ॥२८७॥

वीरभद्रोऽश्वमेधाश्वे वीरश्रेष्ठे च वीरणे।
स्याद् वीरतरं वीरणे वीरश्रेष्ठे शरे च ना ॥२८८॥
महावीरस्तु गरुडे शूरे सिंहे मखानले।
वज्रे श्वेततुरङ्गे च सञ्चानविहगेऽपि च ॥२८९॥
महामात्रः समृद्धे चामात्ये हस्तिपकाधिपे।
मणिच्छिदा तु मेदायामृषभाख्यौषधेऽपि च ॥२९०॥
महेश्वरो महादेवे कथितोऽधीश्वरेऽपि च।
मृगनेत्रा रात्रिभेदे विशेषे योषितस्तथा ॥२९१॥
रथकारस्तु माहिष्यात् करणीजे च तक्षणि।
रागसूत्रं तुलासूत्रे पट्टसूत्रे नपुंसकम् ॥२९२॥
लम्बोदरः स्यादुद्राने गणानामधिपेऽपि च।
लक्ष्मीपुत्रस्तु पुंलिङ्गः कामदेवे तुरङ्गमे ॥२९३॥
व्यवहारो द्रुभेदे स्यान् न्यायेऽपि च पणे स्थितौ।
अथ व्यतिकरः पुंसि व्यसन व्यतिषङ्गयोः ॥२९४॥
वातपुत्रो महाधूर्त्ते भीमसेने हनूमति।
विश्वम्भरोऽच्युते शक्रे पुंसि विश्वम्भरा भुवि ॥२९५॥
विश्वकद्रुस्त्रिषु खले ध्वानाखेटशुनोः पुमान्।
विभावरी निशारात्र्योः कुट्टन्यां वक्रयोषिति ॥२९६॥
विवादवल्गुणद्याञ्च विभाकरोऽग्निसूर्य्ययोः।
वीतिहोत्रोऽनलेऽर्के च शतपत्रः शिखण्डिनि ॥२९७॥

दार्व्वाघाटे सारसे च कमले तु नपुंसकम्।
शतावरीतुशुण्ड्यां स्यादिन्दीवर्य्यामपिस्त्रियाम्॥२९८॥
शिशुमारोऽम्बुसम्भूतजन्तौ तारात्मकाच्युते।
भवेत्सहचरो झिण्ट्यां द्वयोरनुचरे त्रिषु॥२९९॥
समुद्रारुः पुमान् ग्राहे सेतुबन्धे तिमिङ्गिले।
सम्प्रहारो गतौ युद्धे स्थिरदंष्ट्रो भुजङ्गमे॥३००॥
वराहाकृतिविष्णौ च सुकुमारो मृदौ त्रिषु।
पुंसि पुण्ड्राभिधानेक्षौ सूत्रधारः शचीपतौ॥३०१॥
नान्द्यन्तरसञ्चारिपात्रशिल्पिप्रभेदयोः।

रपञ्चकम्।

तमालपत्रं तापिञ्छे तिलके पत्रकेऽपि च॥३०२॥
तालीशपत्रं भूम्यामलकीतालीशयोः स्मृतम्।
स्यात् पांशुचामरः पुंसि दूर्व्वाञ्चिततटीभुवि॥३०३॥
वर्द्धापके प्रशंसायां पुरोटौ धूलिगुच्छके।
स्यात् पादचत्वरश्छागे सैकते पिप्पलेऽपि च॥३०४॥
करके परदोषैकप्रवक्तृपुरुषेऽपि च।
पीतकावेरमित्येतत् कुङ्कुमे पित्तलेऽपि च॥३०५॥
स्याद्राजवदरं रक्तामलके लवणेऽपि च।
वस्वौकसारेन्द्रपुरे कुवेरनलिनीपुरोः॥३०६॥

विप्रतीसार उद्दिष्टः कौकृत्येऽनुशये रुषि ।
भवेत् समभिहारस्तु पौनः पुन्यभृशार्थयोः ॥३०७॥
सर्व्वतो भद्र इत्युक्तः काव्यचित्रे गृहान्तरे ।
निम्बे ना सर्व्वतोभद्रा गम्भारी नटयोषितोः ॥३०८॥
रान्तवर्गः समाप्तः ।

---

लैककम् ।

लः शक्रे लातु दाने स्याद् ग्रहणेऽपि निगद्यते ।
ली श्लेषणे च चपले ल्मौ धरण्यां निशापतौ ॥१॥

लद्विकम् ।

अम्लो रसस्य भेदे स्यादाम्ली चाङ्गेरिकौषधौ ।
अलिः सुरापुष्पलिहोः पुंस्यालिर्विशदाशये ॥२॥
त्रिषु स्त्रियां वयस्यायां सेतौ पङ्क्तौ प्रकीर्त्तिता ।
आलुर्गलन्तिकायां स्त्री क्लीवं मूले च भेलके ॥३॥
इला कलत्रे सौम्यस्य धरित्र्यां गवि वाचि च ।
ओलस्तु शूरणे पुंसि स्यादार्द्रे वाच्यलिङ्गकः ॥४॥
कला स्यान् मूलवृद्धौ शिल्पादावंशमात्रके ।
षोड़शांशे च चन्द्रस्य कलनाकालमानयोः ॥५॥
कलं शुक्रे त्रिष्वजीर्णे चाव्यक्तमधुरध्वनौ ।
कलिः स्त्री कलिकायां ना शराजिकलहे युगे ॥६॥

कालो मृतौ महाकाले समये यमकृष्णयोः ।
काला तु कृष्णत्रिवृतामञ्जिष्ठा नीलिनीषु च ॥७॥
काली गौर्य्यां चीरकीटे कालिका मातृभेदयोः ।
कीलो लेशे द्वयोः स्तम्भज्वालाकफोणिशङ्कुषु ॥८॥
कुलं जनपदे गोत्रे सजातीयगणेऽपि च ।
भवने च तनौ क्लीवं कण्टकार्य्यौषधौ कुली ॥९॥
अथ कूलं तटे स्तूपे सैन्यपृष्ठतडागयोः ।
कोलं कोलिफले क्लीवं पिप्पलीचव्ययोः स्त्रियाम् ॥१०॥
नाऽङ्कपालौ शनौ चित्रे वराहोत्सङ्गभेलके ।
खलं भूस्थानकल्केषु नीचक्रूराधमे त्रिषु ॥११॥
खल्लो वस्त्रप्रभेदे स्याद् गर्त्ते चर्म्मणि चातके ।
खल्ली तु हस्तपादावमर्द्दनाख्यरुजि स्त्रियाम् ॥१२॥
खिलमप्रहतेऽपि स्यात् सारसंक्षिप्तवेधसोः ।
गलः सर्ज्जरसे कण्ठे गुलः स्यादैक्षवे पुमान् ॥१३॥
गुली तु गुटिकारोगभिदोः स्नुह्यां गुला स्मृता ।
गोला गोदावरीसख्योः कुनटीदुर्गयोः स्त्रियाम् ॥१४॥
पत्राञ्जने मण्डले चालिञ्जरे बालखेलने ।
चला लक्ष्म्यां पुमान् कम्पे कम्पयुक्तेऽभिधेयवत् ॥१५॥
चिल्लः पुमान् क्लिन्ननेत्रे क्लिन्नाक्षेऽप्यभिधेयवत् ।
आततायिनि च संप्रोक्तश्चिल्लो स्यात् क्षुद्रवास्तुके ॥१६॥

चुल्ली चितायामुद्धाने स्त्रियां चेलोऽधमे त्रिषु ।
नपुंसकन्तु वसने छलं स्खलितशाठ्ययोः ॥१७॥
छल्ली वीरुधि सन्ताने वल्कले कुसुमान्तरे ।
जलं गोकलने नीरे ह्रीवेरेऽप्यन्यवज्जडे ॥१८॥
जालं गवाक्ष आनाये क्षारके दन्तवृन्दयोः ।
जालो नीपद्रुमे जाली पटोलिकौषधौ स्त्रियाम् ॥१९॥
झला स्यादातपस्तोम्यां दुहितर्य्यपि च स्त्रियाम् ।
झिल्ली चीर्य्यातपरुचो र्वर्त्त्यामुद्वर्त्तनांशुके ॥२०॥
तलं स्वरूपेऽनूर्द्धेऽस्त्री क्लीवं ज्याघातवारणे ।
कानने कार्य्यवीजे च पुंसि तालमहीरुहे ॥२१॥
चपेटे च त्सरौ तन्त्रीघाते सव्येन पाणिना ।
तल्ली तरुण्यां तल्लस्तु जलाधारान्तरे पुमान् ॥२२॥
तालः करतलेऽङ्गुष्ठमध्यमाभ्याञ्च सम्मिते ।
गीतकालक्रियामाने करास्फाले द्रुमान्तरे ॥२३॥
वाद्यभाण्डे च कांस्यस्य त्सरौ ताल्यजटौषधौ ।
क्लीवन्तु हरिताले स्यात् तुला सादृश्यमानयोः ॥२४॥
गृहाणां दारुबन्धाय पीठिकायामपीष्यते ।
राशौ पलशते भाण्डे तूलं स्याद् ब्रह्मदारुणि ॥२५॥
आकाशेऽथ पिचौ न स्त्री दलमुत्सेधखण्डयोः ।
शस्त्रीच्छदेऽप्यपद्रव्ये पत्रेऽप्यथ दुलिः स्त्रियाम् ॥२६॥

कमठ्यां ना मुनौ दोला नील्यां यानान्तरेऽपि च।
नलः पोटगले राज्ञि पितृदेवे कपीश्वरे ॥२७॥
कमलेऽपि च नल्यास्तु क्रमेण क्लीवयोषितोः।
नाला न ना पद्मदण्डे नाली शाककडम्बके ॥२८॥
नीलन्तु नीलरक्ते ना निध्यद्रिवानरान्तरे।
नीली रुग्भेदनीलिन्योः पलमुन्मानमांसयोः ॥२९॥
पल्ल्यल्पग्रामकुट्योः स्त्री पल्लः स्थूलकुसूलके।
पालिः कर्णलताग्रेऽश्रौ पङ्क्तावङ्कप्रभेदयोः ॥३०॥
श्मश्रुवत्याद्रियै स्त्री पाली यूकासश्मश्रुयोषितोः।
पिल्लः पुमान् क्लिन्ननेत्रे क्लिन्नाक्षे पुनरन्यवत् ॥३१॥
पीलुः पुमान् प्रसूने स्यात् परमाणौ मतङ्गजे।
अस्थिखण्डे च तालस्य काण्डपादपभेदयोः ॥३२॥
पूलः स्यात् पूलके पुंसि विपुलेऽप्यन्यलिङ्गकः।
फलं जातीफले सस्ये हेतुत्थे व्युष्टिलाभयोः ॥३३॥
त्रिफलायाञ्च कक्कोले प्रियङ्गौ तु फली स्मृता।
फालः पुंसि महादेवे कालिन्दीभेदनेऽपि च ॥३४॥
क्लीवं सीरोपकरणे त्रिषु कार्पासवाससि।
बलि दैत्यप्रभेदे च करचामरदण्डयोः ॥३५॥
उपहारे पुमान् स्त्री तु जरया श्लथचर्म्मणि।
गृहदारुप्रभेदे च जठरावयवेऽपि च ॥३६॥

वलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः।
पुमान् हलायुधे दैत्यप्रभेदे वायसेऽपि च ॥३७॥
बलयुक्तोऽन्यलिङ्गः स्याद् वाट्यालके तु योषिति।
वल्ली स्यादजमोदायां व्रतत्यामपि योषिति ॥३८॥
बालो ना कुन्तलेऽश्वस्य करिणश्चापि बालधौ।
नारिकेले हरिद्रायां मल्लिकाभिद्यपि स्त्रियाम् ॥३९॥
वाच्यलिङ्गोऽर्भके मूर्खे ह्रीबेरे पुन्नपुंसकम्।
अलङ्कारान्तरे मेध्ये बाली बाला त्रुटौ स्त्रियाम् ॥४०॥
वेला काले च सीमायामब्धेः कूलविकारयोः।
अक्लिष्टमरणे रागे ईश्वरस्य च भोजने ॥४१॥
भल्लः स्यात् पुंसि भल्लूके शस्त्रभेदे पुनर्द्वयोः।
भल्लातक्यां स्त्रियां भल्ली भालं तेजोललाटयोः ॥४२॥
भेलः प्लवे मुनौ पुंसि भीरावज्ञे च वाच्यवत्।
भोलो मीनान्तरे पुंसि त्रिषु कामादिविह्वले ॥४३॥
मलोऽस्त्री पापविड्किट्टे कृपणेऽत्वभिधेयवत्।
मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि ॥४४॥
मालं क्षेत्रे स्त्रियां पुष्पस्रजो जात्यन्तरे पुमान्।
मालुः पत्रलतानार्योः स्त्रियां मूलं शिफाद्ययोः ॥४५॥
मूलवित्तेऽन्तिके वा ना भे मेला मेलके मसौ।
मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम् ॥४६॥

नाऽशोकद्रौ। स्त्रियां भूमौ लीला केलिविलासयोः।
शृङ्गारभावचेष्टायां लोलः स्याद् वाच्यलिङ्गकः॥४७॥
सतृष्णे चञ्चले लोला जिह्वाकमलयोः स्त्रियाम्।
व्यालो दुष्टगजे सर्पे श्वापदे नान्यवत् खले॥४८॥
विलं छिद्रे गुहायाञ्च पुमानुच्चैःश्रवोहये।
शलन्तु शल्ले पुंसि भृङ्गिन्नेत्रभिदो र्विधौ॥४९॥
शालुः कषायद्रव्ये स्यात् चौरकाख्यौषधौ पुमान्।
शालिस्तु कलमादौ च गन्धमार्ज्जारके पुमान्॥५०॥
शाला द्रुस्कन्धशाखायां गृहगेहैकदेशयोः।
ना झषे शिलमुञ्छे स्याद् गण्डूपद्यां शिली मता॥५१॥
स्तम्भशीर्षे शिलाशिल्यौ शिला तु प्रस्तरे मता।
तथा मनःशिलायाञ्च द्वाराधःस्थितदारुणि॥५२॥
शीलं स्वभावे सद्वृत्ते शुक्लो योगान्तरे सिते।
नपुंसकन्तु रजते शूलोऽस्त्री रोग आयुधे॥५३॥
मृत्युकेतनयोगेषु शूल्या स्यात् पण्ययोषिति।
शैलो भूभृति शैलं तु शैलेये तार्क्ष्यशैलके॥५४॥
सालः पादपमात्रे स्यात् प्राकारे सर्ज्जपादपे।
स्थालं भाजनभेदेऽपि स्थाली स्यात्पाटलोखयोः॥५५॥
स्थूलं कूटेऽथ निष्प्रज्ञे पीवरेऽप्यन्यलिङ्गकः।
हालो हले पुमान् हाला मदिरायाञ्च योषिति॥५६॥

हेला स्त्रियामवज्ञायां विलासे वरयोषिताम्।

लत्रिकम्।

अनलो वसुभेदेऽग्नावनिलो वसुवातयोः ॥५७॥
अर्गला त्रिषु कल्लोलेऽन्तर्दण्डवारयो र्न ना।
अरालः कुटिले सर्ज्जरसे समदन्तिनि ॥५८॥
अङ्गुली करशाखायां कर्णिकायां गजस्य च।
अचला वसुधायां स्यादचलः शैलकीलयोः ॥५९॥
अमलन्त्वभ्रके क्लीवं लक्ष्म्यां स्त्री निर्म्मले त्रिषु।
अञ्जलिस्तु पुमान् हस्तसम्पुटे कुडवेऽपि च ॥६०॥
अवेलस्त्वपलापे स्यादवेला पूगचर्व्विते।
आभीलं न द्वयोः कृच्छ्रे वाच्यलिङ्गं भयानके ॥६१॥
इल्वला तारकाभेदे ना भेदे दैत्यमत्स्ययोः।
उत्पली तुषचर्पट्यां क्लीवं कुष्ठप्रसूनयोः ॥६२॥
उपलः प्रस्तरे रत्ने शर्करायान्तु योषिति।
उज्ज्वलो दीप्तशृङ्गारविशदेषु विकाशिनि ॥६३॥
उत्फुल्लं करणे स्त्रीणामुत्तानेऽपि विकस्वरे।
उत्ताल उत्कटे श्रेष्ठे विकराले प्लवङ्गमे ॥६४॥
कमलं सलिले ताम्रे जलजे क्लोम्नि भेषजे।
मृगभेदे तु कमलः कमला श्रीवरस्त्रियोः ॥६५॥
कपिला रेणुकायाञ्च शिंशपागोविशेषयोः।

पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम् ॥६६॥
नाऽनले वासुदेवे च मुनिभेदे च कुक्कुरे।
कम्बलो नागराजे स्यात् सास्नाप्रावरयोरपि ॥६७॥
कृमावप्युत्तरासङ्गे सलिले तु नपुंसकम्।
करालो दन्तुरे तुङ्गे भीषणे चाभिधेयवत् ॥६८॥
ससर्ज्जरसतैले ना क्लीवं कृष्णकुठेरके।
कन्दलं त्रिषु कपालेऽप्युपरागे नवाङ्कुरे ॥६९॥
कलध्वनौ कन्दली तु मृगगुल्मप्रभेदयोः।
कदलाकदलौ पृश्न्यां कदलीकदलौ पुनः ॥७०॥
रम्भावृक्षेऽथ कदली पताकामृगभेदयोः।
कदला डिम्बिकायाञ्च शाल्मलीभूरुहेऽपि च ॥७१॥
कपालोऽस्त्री शिरोऽस्थ्नि स्याद् घटादेः शकले व्रजे।
कण्ठाला तु द्वयो द्रोणीप्रभेदे ना क्रमेलके ॥७२॥
कल्लोलः पुंसि हर्षे स्यादुल्लोलवैरिणोरपि।
कामला रोगभेदे वा नानामरुवसन्तयोः ॥७३॥
कामुके वाच्यलिङ्गोऽथ काकोलं नरकान्तरे।
ना कुलाले द्रोणकाके विषभेदे तु न स्त्रियाम् ॥७४॥
काहला वाद्यभाण्डस्य भेदे चाप्सरसां भिदि।
काहली तु तरुण्यां स्यात् काहलस्वरणायुधे ॥७५॥
शब्दमात्रेऽपि पुंलिङ्ग स्त्रिषु शुष्के भृशे खले।

किट्टालः पुंसि ताम्रस्य कलसे लोहगूथके ॥७६॥
कीलालं रुधिरे तोये कुशलः शिक्षिते त्रिषु ।
क्षेमे च सुकृते चापि पर्य्याप्तौ च नपुंसकम् ॥७७॥
कुवलञ्चोत्पले मुक्ताफले च वदरीफले ।
कुड्मलो मुकुले पुंसि न द्वयो र्नरकान्तरे ॥७८॥
कुटिला तगरपाद्यां स्त्री भुग्ने च वाच्यलिङ्गकः ।
कुन्तलस्त्वपके बाले यवे पुंभूम्नि नीवृति ॥७९॥
कुलालः कुक्कुभे कुम्भकारे स्त्रीत्वञ्जनान्तरे ।
कुम्भिलः शालमीने च चौरश्लोकार्थचौरयोः ॥८०॥
कुद्दालः स्यात् पुमान् भूमिदारणे युगपत्रके ।
कुचेला विद्धकर्ण्यां स्त्री वाच्यवत्तु कुवाससि ॥८१॥
कुकूलं शङ्कुसङ्कीर्णश्वभ्रे ना तु तुषानले ।
कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि च ॥८२॥
काञ्चनद्रुगुडूच्योः स्त्री केवलः कुहने पुमान् ।
नपुंसकन्तु निर्णीते वाच्यवच्चैककृत्स्नयोः ॥८३॥
केवली ज्ञानभेदेऽथ कोमलं मृदुले जले ।
कोहलो वाद्यभेदे स्यान् नाट्यशास्त्रप्रवक्तरि ॥८४॥
ग्रन्थिलस्तु करीरद्रौ विकङ्कततरौ पुमान् ।
संग्रन्थौ त्रिषु गन्धोली भद्राशट्योस्त्र योषिति ॥८५॥

गरलं तृणपूले च विषे माने नपुंसकम्।
गोपालो नृपगोपेशे गोकीलो मुषले हले ॥८६॥
गौरिलस्तु पुमान् लौहचूर्णे स्याद् गौरसर्षपे।
चपलः पारदे मीने चौरके प्रस्तरान्तरे ॥८७॥
चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च।
नपुंसकन्तु शीघ्रे स्याद् वाच्यवत् तरले चले ॥८८॥
चत्वालो होमकुण्डे स्यात् पुंसि दर्भेऽपि दृश्यते।
चन्द्रिलः पुंसि वास्तूकशाके भर्गे च नापिते ॥८९॥
चञ्चला तु तड़िल्लक्ष्म्योगश्चञ्चलः कामुकेऽनिले।
चूड़ाला तृचटायां स्त्री चूड़ावति च वाच्यवत् ॥९०॥
छगलं नीलवस्त्रे ना छागे स्त्री वृद्धदारके।
जम्बालः शैवले पङ्के जगलोमदनद्रुमे ॥९१॥
मेदके पिष्टमद्ये च पुंसि धूर्त्तेऽभिधेयवत्।
जटिला पिप्पली मांस्यो जटायुक्ते च वाच्यवत् ॥९२॥
जङ्गलं निर्जनस्थाने त्रिलिङ्गयां पिशितेऽस्त्रियाम्।
जम्भलः पुंसि जम्बीरे बुद्धदेवान्तरेऽपि च ॥९३॥
जम्बूलस्तु पुमान् जम्बूविटपे क्रकचच्छदे।
जाङ्गुली विषविद्यायां जाङ्गुलं जालिनीफले ॥९४॥
जाङ्गली शूकशीम्ब्यां स्त्री जाङ्गलो ना कपिञ्जले।
तरलं चञ्चले षिड्गे भास्वरेऽपि त्रिलिङ्गकम् ॥९५॥

हारमध्यमणौ पुंसि यवागूसुरयोः स्त्रियाम्।
तण्डुलः स्याद् विडङ्गे च धान्यादिनिकरे पुमान्॥९६
तमालस्तिलके खड्गे तापिञ्छे वरुणद्रुमे।
ताम्बूली नागवल्ल्यां स्त्री क्रमुके तु नपुंसकम्॥९७॥
तातलो रुजि पाके च लोहकूटे मनोजवे।
तुमुलः कलिवृक्षे ना क्लीवन्तु रणसङ्कुले॥९८॥
तैतिलो गण्डके पुंसि क्लीवन्तु करणान्तरे।
दुकूलं श्लक्ष्णवस्त्रे स्यात् क्षौमे च धवला गवि॥९९॥
वृषश्रेष्ठे पुमान् वाच्यलिङ्गः शुक्ले च सुन्दरे।
नकुली कुक्कुटीमांस्योः पशुपाण्डवयोः पुमान्॥१००॥
नाकुली कुक्कुटीकन्दे रास्नायां चविके स्त्रियाम्।
नाभीलं वङ्क्षणे नार्य्याः कृच्छ्रगर्भाण्डयोरपि॥१०१॥
निचुलस्तु निचोले स्यादिज्जलाख्यमहीरुहे।
निर्म्मलं स्यात्तु निर्म्माल्ये चाभ्रके च नपुंसकम्॥१०२
मलहीनेऽन्यलिङ्गञ्च निस्तलं वर्त्तुले चले।
निष्कलस्तु कलाशून्ये नष्टवीर्य्ये च वाच्यवत्॥१०३॥
नैपाली तु नवमालीकुनटीसुवहासु च।
पललं तिलचूर्णे च पङ्के मांसे नपुंसकम्॥१०४॥
ना राक्षसेऽथ पटलं पिटके च परिच्छदे।
छदिर्हग्रोगतिलके क्लीवं वृन्देपुनर्न ना॥१०५॥

प्रतलं पातालभेदे तताङ्गुलिकरे पुमान्।
पटोलं वस्त्रभेदे नौषधौ ज्योत्स्न्यां तु योषिति॥१०६॥
प्रबालोऽस्त्री किसलये वीणादण्डे च विद्रुमे।
पञ्चाली पुत्रिकागीत्योः स्त्रियां पुम्भूम्नि नीवृति ॥१०७॥
पांशुलः पुंश्चले शम्भोः खट्वाङ्गे स्त्र्यसतीभुवोः।
पाकलं कुष्ठभैषज्ये पुंसि स्यात् कुञ्जरज्वरे ॥१०८॥
पाचलं पाचने नाग्नौ राधनद्रव्यवातयोः।
पाटला पाटलौ स्त्री स्यादस्य पुष्पे पुनर्न ना॥१०९॥
आशुधान्ये पुमान् श्वेतरक्तवर्णेऽपि वाच्यवत्।
पातालं नागलोके स्याद् विवरे बडवानले॥११०॥
पातिली वागुरायां स्यान् नारीपात्रप्रभेदयोः।
पिप्पलं सलिले वस्त्रच्छेदभेदे च ना तरौ॥१११॥
निरंशुके पक्षिभेदे कणायां पिप्पली मता।
पिचुलो झावुकेऽपि स्यादिज्जले जलवायसे ॥११२॥
पिङ्गलो नागभिद्रुद्रचण्डांशुपारिपार्श्विके।
निधिभेदे कपावग्नौ पुंसि स्यात् कपिलेऽन्यवत्॥११३॥
स्त्रियां वेश्याविशेषे च करिण्यां कुमुदस्य च।
पित्तला तोयपिप्पल्यां स्त्र्यन्यवत् पित्तसंयुते ॥११४॥
क्लीवन्तु तैजसद्रव्ये पिच्छिलो विजिलेऽन्यवत्।
स्त्री पोतिकाशिंशपयोः शाल्मलीसिन्धुभेदयोः ॥११५॥

पुङ्गलः सुन्दराकारे त्रिषु पुंस्यात्मदेहयोः।
पेषलो रुचिरे दक्षे फेनिलोऽरिष्टपादपे ॥११६॥
ना सफेने त्रिषु क्लीवं कोलीमदनयोः फले।
वञ्जुला नीलिकायां स्यादेलायां गवि योषिति ॥११७॥
कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम्।
पुंस्यग्नौ कृष्णपक्षे च वाच्यवत् प्राज्यकृष्णयोः ॥११८॥
बरला बारला चापि गन्धोलीहंसकान्तयोः।
वार्द्दलं दुर्द्दिने मेलानन्दायां वार्द्दलः स्मृतः ॥११९॥
मङ्गला सितदूर्व्वायामुमायां पुंसि भूमिजे।
नपुंसकन्तु कल्याणे सर्व्वार्थरक्षणेऽपि च ॥१२०॥
मण्डलं परिधौ कोठे देशे द्वादशराजसु।
क्लीवेऽथ निवहे विम्बे त्रिषु पुंसि तु कुक्कुरे ॥१२१॥
मञ्जुलं त्रिषु मञ्जौ ना जलरङ्कौ नपुंसकम्।
जलाश्वले निकुञ्जे च महिला फलिनीस्त्रियोः ॥१२२॥
मातुलो ब्रीहिभिन्नाटभ्रातोश्च मदनद्रुमे।
धूस्तूरे माचलो वन्दिचौरे च ग्राहरोगयोः ॥१२३॥
मूषलं स्यादयोग्रे च पुन्नपुंसकयोः स्त्रियाम्।
तालमूल्यामाखुपर्णी गृहगोधिकयोरपि ॥१२४॥
मृणालं नलदे क्लीवं पुन्नपुंसकयो विसे।
मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोः॥१२५॥

यमलं युगले क्लीवं यमली चोटिकाद्वये।
रसाला रसनादूर्व्वाविदारीमार्ज्जितासु च ॥१२६॥
रसालं सिह्लके वोले रसालश्चेक्षुचूतयोः।
रामिलो रमणे कामे लाङ्गुलं पुच्छशेफयोः ॥१२७॥
लाङ्गली तोयपिप्पल्यां क्लीवन्तु कुसुमान्तरे।
गोदारणे हलराजगृहदारुविशेषयोः ॥१२८॥
लोहलः शृङ्खलाचार्य्येऽव्यक्तवाचिनि च त्रिषु।
वञ्जुलः पुंसि तिनिशे वेतसाशोकयोरपि ॥१२९॥
वण्डालो युद्धभेदे च नैाकायाञ्च खनित्रके।
वातूलः पुंसि वात्यायां वाच्यवन्मारुतासहे ॥१३०॥
वामिलो दाम्भिके वामे त्रिषु स्याद् विमला स्त्रियाम्।
शातलायां भुवोभेदे निर्म्मलेत्वभिधेयवत् ॥१३१॥
विपुलः पृथुलेऽगाधे मेरुपश्चिमभूधरे।
विदुलस्तु पुमानम्बुवेतसे वेतसेऽपि च ॥१३२॥
विड़ालो नेत्रपिण्डे स्याद् वृषदंशकके पुमान्।
विशाला त्विन्द्रवारुण्यामुज्जयिन्यान्तु योषिति ॥१३३॥
मृगपक्षिभिदो पुंसि पृथुले त्वभिधेयवत्।
वृषलो गृञ्जने शूद्रे चन्द्रगुप्तेऽपि राजनि ॥१३४॥
शकलं त्वचि खण्डे स्याद् रागवस्तुनि वल्कले।
शम्बलोऽस्त्री सम्बलवत् कूलपाथेय मत्सरे ॥१३५॥

शयालुः स्यादजगरे निद्राशीले च कुक्कुरे।
श्रद्धालुः दोहदिन्यां स्त्री श्रद्धायुक्ते तु वाच्यवत्॥१३६॥
श्यामलः पिप्पले कृष्णे शार्दूलो राक्षसान्तरे।
व्याघ्रे च पशुभेदे च सत्तमे उत्तरस्थितः॥१३७॥
शाल्मलि स्तरुभेदे स्याद् द्वीपभेदेऽपि च द्वयोः।
श्रीफलः पुंसि मालूरे धात्रीनीलिकयोः स्त्रियाम्॥१३८॥
शीवलं स्याच्च शैवाले शैलेये च नपुंसकम्।
शीतलं पुष्पकाशीशे शैलजे मलयोद्भवे॥१३९॥
पुमानसनपर्ण्यां स्यात् शिशिरे वाच्यलिङ्गकम्।
शृगालो वञ्चके दैत्यभेदे ना डमरे स्त्रियाम्॥१४०॥
शृङ्खला पुंस्कटीवस्त्रबन्धे च निगडे त्रिषु।
शैवलं पद्मकाष्ठे स्यात् शैवालेऽपि पुमानयम्॥१४१॥
शौष्कलः शुष्कमांसस्य पण्ये पिशिताशिनि।
षण्डाली तैलमाने च सरसीकामुकस्त्रियोः॥१४२॥
सरलः पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिषु।
सङ्कुलं त्रिषु विस्पष्टवाचि व्याप्तेऽथ सप्तला॥१४३॥
नवमाली चर्मकषागुञ्जासु पाटलौ स्त्रियाम्।
सन्धिला तु सुरङ्गायां नदीमदिरयोः स्त्रियाम्॥१४४॥
सिध्मला मत्स्यविकृतौ वाच्यवत्तु किलासिनि।
सुवेलः प्रणते शान्ते त्रिषु ना पर्व्वतान्तरे॥१४५॥

सुतलोऽट्टालिकाबन्धनागलोकप्रभेदयोः ।
हिङ्गुलो वर्णकद्रव्ये ना भण्टाक्यान्तु हिङ्गुली ॥१४६॥
हेमलः स्वर्णकारे स्यात् कृकलासे शिलान्तरे ।

लचतुष्कम् ।

अक्षमालाऽक्षसूत्रे स्यादरुन्धत्यामपि स्त्रियाम् ॥१४७॥
अङ्कपाली परीरम्भे धात्रीवैदिकयोः स्त्रियाम् ।
अथातिबलः प्रबले त्रिषु स्त्रीत्वौषधीभिदि ॥१४८॥
उदूखलं गुग्गुलौ स्यादुलूखलेऽपि न द्वयोः ।
एकाष्ठीला वनतिक्तिकौषधौ पुंसि वकपुष्पे च ॥१४९॥
कलकल उक्तः कोलाहले तथा सालनिर्य्यासे ।
अथ कर्म्मफलं कर्म्मरङ्गकर्म्मविपाकयोः ॥१५०॥
कन्दरालः पुमान् गर्दभाण्डे प्लक्षतरावपि ।
कमण्डलुः स्यात् करके नस्त्री ना प्लक्षपादपे ॥१५१॥
कुतूहलं कौतुके स्यात् प्रशस्तेऽपि च दृश्यते ।
खतमालस्तु पुंलिङ्गो धूमेऽपि च बलाहके ॥१५२॥
गण्डशैलो ललाटे स्यात् च्युतस्थूलोपले गिरेः ।
गन्धफल्यपि गुन्द्रायां चम्पकस्य च कोरके ॥१५३॥
चक्रवालोऽद्रिभेदे स्याच्च चक्रवालन्तु मण्डले ।
जलाञ्चलं स्रोतो वारिनिर्गमे शैवलेऽपि च ॥१५४॥

दलामलं मरुवके दमनेऽपि नपुंसकम्।
ध्वनिनाला तु वीणायां वेणुकाहलयोरपि ॥२५५॥
स्यात् परिमलोऽतिमर्द्दातिमनोहरगन्धयोश्चापि।
सुरतोपमर्दविकसच्छरीररागादिसौरभे पुंसि॥२५६॥
अथ पोटगलः पुंसि नले च काशमत्स्ययोः।
भवेद् वज्रफलो नीपे नाऽऽमलक्यान्तु योषिति॥२५७॥
भस्मतूलं ग्रामकूटे पांशुवर्षे हिमेऽपि च।
भद्रकाली तु गन्धोल्यां कात्यायन्यामपि स्त्रियाम्॥२५८॥
महाकालो महादेवे किम्पाके प्रमथान्तरे।
भवेन् मदकलो मत्तेभमदाव्यक्तवाचिनोः ॥२५९॥
महाबलं सीसकेऽतिबलायां स्त्री बलान्तरे।
त्रिलिङ्गं मणिमाला तु हारे दन्तक्षतान्तरे ॥२६०॥
महानीलो भृङ्गराजे मणिनागविशेषयोः।
मुक्ताफलन्तु कर्पूरे मौक्तिके लवलीफले ॥२६१॥
स्यान् मृत्युफला कदल्यां महाकालफले पुमान्।
भवेद् यवफलो वेणौ मांसीकुटजयोरपि ॥२६२॥
रजस्वला पुष्पवत्यां स्त्रियां स्यात् सैरभे पुमान्।
वातकेलिः कलालापे षिड्गदन्तक्षते पुमान् ॥२६३॥
अथ वायुफलं शक्रकार्मुके करकेऽपि च।
भवेद् विचकिलो मल्लीप्रभेदे मदने पुमान् ॥२६४॥

बृहन्नला गुडाकेशे महापीटगले पुमान् ।
सदाफलः स्कन्दफले नारिकेलेऽप्युदुम्बरे ॥१६५॥
सिनीवाली तु दृष्टेन्दुकलामादुर्गयोरपि ।
अथ सौर्व्वचलं सर्ज्जक्षारे च लवणान्तरे ॥१६६॥
हस्तिमल्लोऽभ्रमातङ्गे शङ्खनागे विनायके ।
हरितालं धातुभेदे स्त्री दूर्व्वाकाशरेखयोः ॥१६७॥
हलाहलो ब्रह्मसर्पेऽञ्जनायां ना विषेऽस्त्रियाम् ।

लपञ्चकम् ।

आस्तीबल आख्यातः कन्यापालकयज्वनोः ॥१६८॥
उद्दण्डपालः पुंसि स्यात् सर्पमत्स्यप्रभेदयोः ।
एककुण्डल आख्यातो बलभद्रे धनाधिपे ॥१६९॥
कूपीटपाल उद्दिष्टः केनिपातसमुद्रयोः ।
स्यात् पाण्डुकम्बलः श्वेतप्रावारग्रावभेदयोः ॥१७०॥
भवेत् सुरतताली तु दूतिकायां शिरःस्रजि ।

लान्तवर्गः समाप्तः ।

---

वैककम् ।

वः सान्त्वने च वाते च वरुणे च निगद्यते ।
वं प्रचेतसि जानीयादिवार्थे च तदव्ययम् ॥१॥
स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये धनेऽस्त्रियाम् ।

वद्विकम्।

अवि र्नाथे रवौ मेषे शैलमूषिककम्बले ॥२॥
अश्वः पुञ्जातिभेदे च तुरगे च पुमानयम्।
उर्द्ध्वं स्यादुच्छ्रिते तुङ्गे चोपरिष्टादपि स्मृतम् ॥३॥
च्यवः च्युते राजिकायां कवि र्वाल्मीकिशुक्रयोः।
सूरौ काव्यकरे पुंसि स्यात् खलीने तु योषिति ॥४॥
कण्वं पापे मुनौ पुंसि किण्वं वीजे च शीधुनः।
पापे क्लीवं नपुंसके षण्डेऽन्यवदविक्रमे ॥५॥
स्यात्तु ग्रीवा कन्धरायां तच्छिरायाञ्च योषिति।
चार्व्वी तु शोभनाबुद्धौ ज्यौत्स्नाधनदभार्य्ययोः॥६॥
छविः शोभारुचो र्योषिज् जवो वेगवति त्रिषु।
पुंलिङ्गस्तु भवेद् वेगे चोड्रपुष्पे जवा स्मृता ॥७॥
जीवः प्राणिनि वृत्तौ च वृक्षभेदे वृहस्पतौ।
जीवा जीवन्तिकामौर्व्वीवचाशिञ्जितभूमिषु ॥८॥
न स्त्री तु जीविते तत्त्वं स्वरूपे परमात्मनि।
स्याद् विलम्बितनृत्ये च द्रवः प्रद्रावनर्म्मणोः ॥९॥
रसेऽपि दवदावौ तु वनवह्नौ वनेऽप्युभौ।
द्वन्द्वं रहस्ये कलहे तथा मिथुनयुग्मयोः ॥१०॥
दार्व्वी दारुहरिद्रायां तथा गोजिह्विकौषधौ।
द्यौः स्त्री स्वर्गे च गगने दिवं क्लीवं तयोः स्मृतम् ॥११॥

द्रवो मेघे सुरे राज्ञि स्यान् नपुंसकमिन्द्रिये।
देवी कृताभिषेकायां तेजनीपृक्कयोरपि ॥१२॥
धवः पुमान् नरे धूर्त्ते पत्यौ वृक्षान्तरेऽपि च।
ध्रुवः शङ्कौ हरे विष्णौ वटे चोत्तानपादजे ॥१३॥
वसुयोगभिदोः पुंसि क्लीवं निश्चिततर्कयोः।
स्त्रीमूर्व्वाद्योःशालपर्ण्यां गीतिसुगभेदयो स्त्रिषु ॥१४॥
सन्तते शाश्वते चाथ नवं नव्ये पुमान् स्तुतौ।
नीवी परिपणे स्त्रीणां कटीवसनबन्धने ॥१५॥
पक्कं परिणतेऽपि स्याद् विनाशाभिमुखे त्रिषु।
प्लवः स्यात् प्लवने भेल्ले भेकेऽवौ श्वपचेऽपि च ॥१६॥
शाखामृगे च कुलके प्रवणे पर्कटीद्रुमे।
कारण्डवाख्यविहगे शब्दे प्लुतगतौ पुमान् ॥१७॥
कैवर्त्तीमुस्तके गन्धतृणेऽपि स्यान् नपुंसकम्॥
पार्श्वं कक्षाधरे चक्रोपान्ते पर्शुगणेऽपि च ॥१८॥
प्राध्वन्तु प्रणते चातिदूरवर्त्मनि बन्धने।
पृथ्वी भूमौ महत्याञ्च त्वक्पत्र्यां कृष्णजीरके ॥१९॥
भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः।
भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ॥२०॥
क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु।
रत्यादौ चाथ रेवा स्यान् नील्यां रत्यां नदीभिदि॥२१॥

लवो लेशे विनाशे च छेदने रामनन्दने।
लट्वा करञ्जभेदे स्यात् फले वाद्ये खगान्तरे ॥२२॥
लघ्वी लाघवयुक्तायां प्रभेदे स्यन्दनस्य च।
विश्वा त्वतिविषायां स्त्री जगति स्यान् नपुंसकम्॥२३॥
न ना शुण्ठ्यां पुंसि देवप्रभेदेष्वखिले त्रिषु।
विल्वं फले श्रीफले ना शवःस्यात् कुणपे पुमान्॥२४॥
नपुंसकन्तु पानीये शिवि भूर्ज्जे नृपे पुमान्।
शिवो मोक्षे महादेवे कीलकग्रहयोगयोः ॥२५॥
वालुके गुग्गुलौ वेदे पुण्डरीकद्रुमे पुमान्।
सुखक्षेमजले क्लीवं शिवा झाटामलौषधौ ॥२६॥
अभयामलकीगौरी फेरुसक्तुफलास्वपि।
शुल्वं ताम्रे यज्ञकर्म्मण्याचारे जलसन्निधौ ॥२७॥
सत्वं गुणे पिशाचादौ वले द्रव्यस्वभावयोः।
आत्मत्वे व्यवसायासुचित्तेष्वस्त्री तु जन्तुषु ॥२८॥
सयो यज्ञे च सन्ताने सान्त्वं दाक्षिण्यसामनोः।
स्रुवा द्वयो र्यज्ञपात्रे शल्लकीमूर्व्वयोः स्त्रियाम् ॥ २९॥
ह्वव आह्वाध्वराह्वाने ह्रस्वो न्यक् खर्व्वयो स्त्रिषु।

## वत्रिकम्।

अक्षीवं वशिरे शिग्रौ नाऽमत्ते पुनरन्यवत् ॥३०॥

अभावो मरणेऽसत्त्वे आहवो युद्धयज्ञयोः ।
आर्त्तवं स्त्रीरजःपुष्पे क्लीवं स्यादृतुजे त्रिषु ॥३१॥
आश्रवोऽङ्गीकृतौ क्लेशे नाऽन्यवत् वचनस्थिते ।
उद्धवो यादवभिदि महे च क्रतुपावके ॥३२॥
उत्सवो मह उत्सेके इच्छाप्रसवकोपयोः ।
कारवी मधुरादीप्यत्वक्पत्रीकृष्णजीरके ॥३३॥
कितवस्तु पुमान् मत्ते वञ्चके कनकाह्वये ।
केशवोऽजे च पुन्नागे पुंसि केशवति त्रिषु ॥३४॥
कैतवन्तु छले द्यूते कैरवः कितवे रिपौ ।
नपुंसकञ्च कुमुदे चन्द्रिकायान्तु कैरवी ॥३५॥
गाण्डीवो गाण्डिवश्चास्त्री कार्म्मुकेऽर्जुनकार्म्मुके ।
गालवस्तु मुनौ लोध्रे ताण्डवोऽस्त्री तृणान्तरे ॥३६॥
भवेदुद्धतनृत्ये च त्रिदिवा सरिदन्तरे ।
पुंसि स्वर्गे दीदिविर्ना धिषणेऽन्ने तदस्त्रियाम् ॥३७॥
निष्पावः शूर्पपवने राजमाषे कडङ्गके ।
पवने शिम्बिकायां ना निर्विकल्पेऽन्यलिङ्गकः ॥३८॥
निह्नवः पुंसि निकृतावविश्वासापलापयोः ।
पल्लवोऽस्त्री किसलये विटपे बिस्तरे वने ॥३९॥
शृङ्गारेऽलक्तरागे च प्रभावः शान्तितेजसोः ।
पञ्चत्वं पञ्चानां भावे प्राणानामत्ययेऽपि च ॥४०॥

प्रभवो जन्ममूले स्याज् जन्महेतौ पराक्रमे ।
ज्ञानस्य चादिमस्थाने प्रसवो गर्भमोचने ॥४१॥
उत्पादे स्यादपत्येऽपि फले च कुसुमेऽपि च ।
प्रसेवः पुंसि वीणाङ्गे स्यूते च पार्थिवो नृपे ॥४२॥
पार्थिवी तु सीतायां स्त्री पृथिव्या विकृतौ त्रिषु ।
पुङ्गवः स्याद् बलीवर्दे प्रभेदेऽप्यौषधस्य च ॥४३॥
उत्तरस्थः पुनः श्रेष्ठे फेरवो जम्बुकेऽसुपे ।
बल्लवः सूपकारे स्याद् भीमसेने च गोदुहि ॥४४॥
बान्धवो ज्ञातिसुहृदो र्भार्गवो गजधन्विनोः ।
भृगौ परशुरामे च भार्गवी पार्व्वतीश्रियोः ॥४५॥
दूर्व्वायां भैरवः पुंसि शङ्करे भीषणे त्रिषु ।
माधवोऽजे मधौ राधे यादवे ना स्त्रियां मिसौ ॥४६॥
मधुशर्करावासन्तीकुट्टनीमदिरासु च ।
गोमहिष्यादिसम्पत्तौ यादवः पुंसि केशवे ॥४७॥
राजीवं नलिने ना तु भेदे हरिणमीनयोः ।
राघवोऽब्धे महामीनभेदे च रघुवंशजे ॥४८॥
रौरवो नरके घोरे वड़वा द्विजयोषिति ।
अश्वायां कुम्भदास्याञ्च नारीजात्यन्तरेऽपि च ॥४९॥
वाड़वं करणे स्त्रीणां घोटकौघे नपुंसकम् ।
पाताल्ने न स्त्रियां पुंसि ब्राह्मणे बड़वानले ॥५०॥

विभवो रैमोक्षैश्वर्य्ये विद्रवो विद्रुतौ धियि ।
विभावः स्यात् परिचये रसस्योद्दीपनादिषु ॥५१॥
शात्रवं भावसंहत्योः शत्रूणां शात्रवो द्विषि ।
षाड्वो गानरसयोः सचिवो मन्त्रिणि स्मृतः ॥५२॥
सहाये सम्भवो हेतावुत्पत्तौ मेलकेऽपि च ।
आधारानतिरिक्तत्वेऽप्याधेयस्य निगद्यते ॥५३॥
सुग्रीवो वासुदेवस्य [illegible] ।
सुषवी कारवेल्ले स्यात् कृष्णजीरकजीरयोः ॥५४॥
सैन्धवोऽस्त्री माणिमन्थे नाऽश्वे सिन्धुभवे त्रिषु ।

वचतुष्कम् ।

अनुभावः प्रभावे स्यात् निश्चये भावबोधके ॥५५॥
भवेदभिषवः स्नाने मद्ये सन्धानयज्ञयोः ।
अपह्नवस्तु पुंलिङ्गः स्मृतः स्नेहापलापयोः ॥५६॥
आदीनवः पुमान् दोषे परिक्लेशदुरन्तयोः ।
उपप्लवः सैंहिकेये विप्लवोत्पातयोरपि ॥५७॥
कुशीलवस्तु वाल्मीकौ नटयाचकयोरपि ।
जलबिल्वः कर्कटे स्यात् पञ्चाङ्गे जलचत्वरे ॥५८॥
जीवञ्जीव श्चकोरे स्याद् द्रुमभेदेऽपि पुंस्ययम् ।
धामार्गवस्तु पुंसि स्यादपामार्गे च घोषके ॥५९॥
पारिप्लवश्चाकुले स्याच् चञ्चले च पराभवः ।

तिरस्कारे विनाशे च पुंसि पारशवः पुमान् ॥६०॥
परस्त्रीतनये शस्त्रे द्विजात् शूद्रासुतेऽपि च।
पुटग्रीवस्तु पुंलिङ्गो गर्गरीताम्रकुम्भयोः ॥६१॥
बलदेवो बले वाते त्रायमाणौषधौ स्त्रियाम्।
रन्तिदेवस्तु नृपते र्भेदे च गरुड़ध्वजे ॥६२॥
रोहिताश्व श्चित्रभानौ हरिश्चन्द्र नृपात्मजे।
अथ शीतशिवं क्लीवं शैलेयमणिमन्थयोः ॥६३॥
पुंसि सक्तुफलावृक्षे तथा मधुरिकौषधौ।
सहदेवा बलादण्डोत्पलयोः शारिवौषधौ ॥६४॥
सहदेवी तु सर्पाक्ष्यां पुंसि स्यात् पाण्डवे पुनः।

## वपञ्चकम्।

आश्रितम्भवमन्नाद्ये तृप्तौ स्यादाश्रितम्भवः ॥६५॥

वान्तवर्गः समाप्तः।

---

## शैककम्।

शं वदन्ति बुधाः श्रेयः शश्च शस्त्रं निगद्यते।
शी स्च शयनमित्याहुः शास्त्रं शा च निगद्यते ॥१॥

## शद्विकम्।

अंशुरर्कप्रभासूत्रेषु नाऽऽशा तृष्णादिशोः स्त्रियाम्।
आशु धान्यान्तरे शीघ्रेऽपीशा लाङ्गलदण्डके ॥२॥

ईशः प्रभौ महादेवे काशी वाराणसीपुरे।
न स्त्रियां तृणभेदे स्यात् कीशो दिगम्बरे कपौ ॥३॥
कृशी फाले कुशा रज्वां त्रिषु पापिष्ठमत्तयोः।
योक्त्ररामसुतद्वीपे ना दर्भेऽस्त्री कुशं जले ॥४॥
केशः स्यात् पुंसि वरुणे ह्रीवेरे कुन्तलेऽपि च।
क्लेशो दुःखेऽपि कोपेऽपि व्यवसायेऽपि दृश्यते ॥५॥
कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके।
जातिकोषेऽर्थसङ्घाते पेश्यां शब्दादिसंग्रहे ॥६॥
दर्शस्तु स्याद‌मावस्यायागभेदावलोकने।
दंशः कीटविशेषे च वर्मदंशनयोः पुमान् ॥७॥
दशा वस्त्रादोपवर्त्त्यां वस्त्रान्ते भूम्नि योषिति।
दृक् स्त्रियां दर्शने नेत्रे बुद्धौ च त्रिषु वीक्षके ॥८॥
नाशः पलायनेऽपि स्यान् निधनानुपलम्भयोः।
निशा दारुहरिद्रायां स्यात् त्रियामाहरिद्रयोः॥९॥
पशु र्मृगादिदेवाजे नाऽव्ययं पशु दर्शने।
पाशः केशादिपूर्वः स्यात् तत्सङ्घे कर्णपूर्व्वकः ॥१०॥
सुकर्णे च स्वसामर्थ्यान् मृगपक्ष्यादिबन्धने।
पांशुर्धूलौ च शस्यार्थचिरसञ्चितगोमये॥११॥
पेशी सुपक्वकलिके मांस्यां खड्गपिधानके।
मांसपीण्डामण्डभेदे राशि र्मेषादिपुञ्जयोः ॥१२॥

वंशः पुंसि कुले वेणौ पृष्ठावयववर्गयोः।
वशा वन्ध्यासुतायोषास्त्रीगवीकरिणीषु च ॥१३॥
त्रिष्वायत्ते क्लीवमायत्तत्वे चेच्छाप्रभुत्वयोः॥
विट् पुंसि मनुजे वैश्ये वेशो वेश्यागृहे गृहे ॥१४॥
नेपथ्ये च शशो वोले लोध्रे नृपशुभेदयोः।
स्पर्शो रुजायां दाने च स्पर्शने स्पर्शकेऽपि च ॥१५॥
स्पर्शः स्यात् सम्पराये च प्रणिधावपि पुंस्ययम्।

शान्तिकम्।

आदर्शो दर्पणे टीकाप्रतिपुस्तकयोरपि ॥१६॥
उड्डीशो ग्रन्थभेदे स्यादुड्डीशश्चन्द्रिकापतौ।
उपांशु जपभेदे स्यादुपांशु विजनेऽव्ययम् ॥१७॥
कपिशस्त्रिषु श्यावे स्त्री माधव्यां सिह्लके पुमान्।
कर्कशः काशमर्दे तु काम्पिल्येष्वप्यसौ पुमान् ॥१८॥
त्रिषु साहसिके क्रूरे दृढामसृणनिर्दये।
कीनाशः कर्षकक्षुद्रोपांशुघातिषु वाच्यवत् ॥१९॥
यमे ना कुलिशो न स्त्री दम्भोलौ ना झषान्तरे।
गिरिशोऽद्रिपतौ वाचस्पतिशङ्करयोः पुमान् ॥२०॥
तुङ्गीशस्तु पुमान् गौरीवल्लभे हिमदीधितौ।
दुःस्पर्शो धन्वयासे ना कण्टकार्यां स्त्रियां त्रिषु।
खरस्पर्शेऽथ निस्त्रिंशः खड्गे ना निर्दये त्रिषु ॥२१॥

निर्वेशस्तु पुमान् भोगे वेतने मूर्च्छनेऽपि च।
निवेशः पुंसि विन्यासे शिविरोद्वाहयोरपि ॥२२॥
निदेशः शासनेऽपि स्यात् कथनोपान्तयोरपि।
नीकाशो निश्चये तुल्ये पलाशं छदने मतम् ॥२३॥
शठीकिंशुकरक्षःसु पुंसि स्याद् हरिते त्रिषु।
प्रकाशस्तु स्फुटे ख्याते प्रहासातपयोरपि ॥२४॥
प्रदेशो देशमात्रे स्यात् तर्ज्जन्यङ्गुष्ठसम्मिते।
भित्तावपि च पिङ्गाशी नीलिकायां नपुंसकम ॥२५॥
जात्यस्वर्णे पुमान् पल्लीपतौ मत्स्यान्तरेऽपि च।
बालिशस्तु शिशौ मूर्खे भूकेशः शैवले वटे ॥२६॥
भूकेश्यवरगुजेऽपि स्यात् लोमशो मुनिमेषयोः।
लोमान्विते स्त्रियां काकजङ्घामांसीवचासु च ॥२७॥
शूकशिम्बि महामेदाकाशीशे शाकिनीभिदि।
विवशस्त्रिष्ववश्यात्मारिष्टदुष्टधियोरपि ॥२८॥
विकाशः पुंसि विजने प्रकाशे सदृशं समे।
उचिते चाथ संवेशः स्वापस्त्रीरतबन्धयोः ॥२९॥
सुखाशो वरुणे राजतिनिशे सुखभोजने।
हताशो निर्द्दये चाशारहिते पिशुनेऽपि च ॥३०॥

शचतुष्कम्।

अपदेशः पुमान् लक्ष्ये निमित्तव्याजयोरपि।

अपभ्रंशस्तु पतने भाषाभेदापशब्दयोः ॥३१॥
आश्रयाशः पुमान् वह्नौ त्रिषु चाश्रयनाशके।
उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपि ॥३२॥
उपदंशो विदंशे च मेढ्ररोगान्तरेऽपि च।
क्रूरदृक् पिशुने वाच्यलिङ्गः पुंसि शनैश्चरे ॥३३॥
खण्डपर्शुः पशुरामे शङ्करे चूर्णलेपिनि।
[illegible]पञ्ये सिंहकातनयेऽपि ना ॥३४॥
जीवितेशो यमे पुंसि त्रिषु स्याज् जीवितेश्वरे।
नागपाशः पुमान् स्त्रीणां करणे वरुणायुधे ॥३५॥
पञ्चदशी त्वमावास्यापौर्णमास्योश्च योषिति।
प्रतिस्पशः सहाये स्याद् वार्त्ताहरपुरोगयोः ॥३६॥
परिवेशो वेष्टने स्यात् परिधावपि पुंस्ययम्।
पादपाशी खड्डुकायां शृङ्खलायामपि स्त्रियाम् ॥३७॥
पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च।
हुतशेषे च भूमिस्पृक् पुंसि मानुषवैश्ययोः ॥३८॥

शान्तवर्गः समाप्तः।

---

क्षैककम्।

क्षः कक्षे पुंसि विज्ञेयः श्रेष्ठे स्यादभिधेयवत्।
क्षः संवर्त्ते राक्षसे च नरसिंहे च विद्युति ॥१॥
क्षेत्रे नाशे क्षेत्रपाले क्षि निवासे गतौ क्षये।

क्षद्विकम्।

अक्षो ज्ञातार्थप्रकाटव्यवहारेषु पांशके ॥२॥
रुद्राक्षेन्द्राक्षयोः सर्पे विभीतकतरावपि।
चक्रे कर्षे पुमान् क्लीबं तुत्थे सौवर्चलेन्द्रिये ॥३॥
उषा बाणसुतारात्र्योरुषः कामिनी गुग्गुलौ।
रात्रिशेषे उषायान्तु केचिदाहुस्तदव्ययम् ॥४॥
उषः क्षारमृत्तिकायां प्रभातेऽपि पुमानयम्।
तत्सन्ध्यायाञ्च रन्ध्रे च चन्दनाद्रौ अवोविले ॥५॥
ऋषि वेदे वशिष्ठादौ दीधितौ च पुमानयम्।
ऋक्षः पर्व्वतभेदे स्याद् भल्लूके शोणके पुमान् ॥६॥
क्षतवेधनेऽन्यलिङ्गो नक्षत्रे पुन्नपुंसकम्।
कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे ॥७॥
स्पर्द्धास्पदे ना दोर्मूले कच्छवीरुत्तृणेषु च।
कर्षो ना कर्षणे मानप्रभेदे पुन्नपुंसकम् ॥८॥
कर्षूः पुमान् करीषाग्नौ स्त्रियां कुल्येष्टिखातयोः।

काञ्ची तुवरिकायाञ्च सौराष्ट्रमृद्यपि स्त्रियाम् ॥९॥
कोषोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके ।
जातिकोषेऽर्थसङ्घाते पेश्यां शब्दादिसङ्ग्रहे ॥१०॥
घोष आभीरपल्ल्यां स्याद् गोपालध्वनिघोषके ।
कांस्ये चाम्बुदनादे ना घोषा मधुरिकौषधौ ॥११॥
चोक्षो गीते शुचौ दक्षे तथा तीक्ष्णमनोज्ञयोः ।
झषा नागबलायां स्त्री तापमत्स्याटवीषु ना ॥१२॥
तर्षोभिलाषोदन्ययोस्त्विट् कान्तौवाचिरुचौस्त्रियाम् ।
तुषोधान्यत्वगक्षद्रोस्तृषा लिप्सातर्षोःस्त्रियाम् ॥१३॥
तृट् लिप्सायामुदन्यायां स्मरपत्न्यामपि स्त्रियाम् ।
दक्षस्त्रिषु पटौ पुंसि ताम्रचूडे प्रजापतौ ॥१४॥
मुनिभेदे हरवृषे द्रुमभेदे स्त्रियां भुवि ।
दोषःस्याद् दूषणेपापे दोषा रात्रौ भुजेऽपिच ॥१५॥
ध्माङ्क्षो मत्स्यात् खगे काके तक्षके भिक्षुकेऽपि च ।
ध्माङ्क्षीकक्कोलिकायांस्यान् न्युब्जकाख्ये तृणेऽपिच ॥१६॥
क्लीबेऽथ पुंसि महिषे निकृष्टे पुनरन्यवत् ।
प्लक्षो जटीगर्द्दभाण्डद्वीपभित् कुञ्जराशने ॥१७॥
पक्षो मासार्द्धके पार्श्वे ग्रहे साध्यविरोधयोः ।
केशादेः परतो वृन्दे बले सखिसहाययोः ॥१८॥
चुल्लीरन्ध्रे पतत्रे च वाजे कुञ्जरपार्श्वयोः ।

प्रेक्षा नृत्येक्षणे बुद्धौ प्रैषः क्लेशे च मर्द्दने ॥१९॥
उन्मादे प्रेषणे पौषो मासे तत्पूर्णिमातिथौ ।
स्त्रियां भिक्षा भृतौ याञ्चा सेवाभिक्षितवस्तुषु ॥२०॥
माषो व्रीह्यन्तरे मूर्खे मानत्वग्दोषभेदयोः ।
मिषं व्याजे स्पर्द्धने ना मेषो राश्यन्तरे ऊडे ॥२१॥
भैषज्यभिदि मोक्षस्तु मुक्तिपाटलीमोचने ।
यक्षो गुह्यकमात्रे च गुह्यकाधीश्वरेऽपि च ॥२२॥
रक्षा जतुरक्षणयोः रूक्षस्त्वप्रेम्णचिक्कणे ।
लक्षा नपुंसि सङ्ख्यायां क्लीवं व्याजशरव्ययोः ॥२३॥
वर्षोऽस्त्री भारतादौ च जम्बूद्वीपाब्दवृष्टिषु ।
प्रावृट्काले स्त्रियां भूम्नि विट्स्त्रीव्यापनविष्ठयोः ॥२४॥
विषं जलेऽतिविषायां स्त्रियां क्ष्वेडे तु नस्त्रियाम् ।
वृषो धर्म्मे बलीवर्द्दे शृङ्ग्यां पुंराशिभेदयोः ॥२५॥
श्रेष्ठे स्यादुत्तरस्थस्य वासामूषिकशुक्रले ।
तथा वास्तुस्थानभेदे पुमानयं प्रकीर्त्तितः ॥२६॥
वृषा मूषिकपर्ण्याञ्च यतीनामासने वृषी ।
व्योषं स्यात् त्रिकटुद्रव्ये करिभेदे पुमानयम् ॥२७॥
शुषिः शोषे बिले स्त्री स्यात् शेषः सङ्कर्षणे बधे ।
अनन्तेनाप्रसादे न स्वनिर्म्माल्यार्पणेस्त्रियाम् ॥२८॥
उपयुक्तेतरे न स्त्री शोषो यक्ष्मणि शोषणे ।

षन्तिकम्।

अध्यक्षोऽधिकृते पुंसि प्रत्यक्षे त्वभिधेयवत्॥२९॥
अभीषुः प्रग्रहे रश्मौ नाऽऽकर्षौ द्यूत इन्द्रिये।
पाशके शारिफलके कोदण्डाभ्यासवस्तुनि॥३०॥
आकर्षणेऽपि पुंसि स्यादामिषं पुन्नपुंसकम्।
भोग्यवस्तुनि सम्भोगेऽप्युत्कोचे पललेऽपि च॥३१॥
उष्णीषन्तु शिरोवेष्टे किरीटे लक्षणान्तरे।
उत्प्रेक्षाऽनवधानेऽपि काव्यालङ्करणान्तरे॥३२॥
कल्मषं किल्बिषे क्लीवं पुंसि स्यान् नरकान्तरे।
कल्माषो यातुधाने च कृष्णपाण्डरकृष्णयोः॥३३॥
कलुषं त्वाविले पापे किल्बिषं पापरोगयोः।
अपराधेऽपि कुल्माषं काञ्जिके यावके पुमान्॥३४॥
गण्डूषो मुखपूर्त्तौभपुष्करप्रसृतोन्मिते।
गवाक्षी शक्रवारुण्यां गवाक्षो जालके कपौ॥३५॥
गोरक्षो नागरङ्गे स्याद् गवाञ्च परिरक्षके।
जिगीषा जेतुमिच्छायां व्यवसायप्रकर्षयोः॥३६॥
तरीषः शोभनाकारे भेलेऽब्धिव्यवसाययोः।
तरीषी शक्रकन्यायां पुंसि स्वर्गे महोदधौ॥३७॥
तारीषी चन्द्रकन्यायां ना स्वर्गाम्बुधिकाञ्चने।

नहुषो नागभेदे स्यात् सोमवंश्यनृपेऽपि च ॥३८॥
निकषः शाणफलके निकषा यातुमातरि।
निमेषनिमिषौ कालप्रभेदेऽक्षिनिमीलने ॥३९॥
परुषं कर्व्वुरे रुक्षे निष्ठुरोक्तौ च वाच्यवत्।
प्रदोषः समये दोषे प्रत्यूषोऽहर्मुखे वसौ ॥४०॥
पीयूषं सप्तदिवसावधिक्षीरे तथामृते।
पुरुषः पूरुषे साङ्ख्यज्ञे च पुन्नागपादपे ॥४१॥
पौरुषं पुरुषस्य स्याद् भावे कर्म्मणि तेजसि।
ऊर्द्ध्वविस्तृतदोःपाणिनृमाने त्वभिधेयवत् ॥४२॥
महिषी कृताभिषेकासैरिभ्योरोषधिभिदि।
मारिषः शाकभिद्यार्य्ये नाट्योक्ता पुंसि योषिति ॥४३॥
दक्षाम्बायां मृगाक्षी तु विशालामृगनेत्रयोः।
रक्ताक्षः कासरे क्रूरे पारावतचकोरयोः ॥४४॥
रौहिषं कतृणे क्लीवं पुंसि स्याद् हरिणान्तरे।
विश्लेषो विधुरेऽयोगे शुश्रूषा स्यादुपासने ॥४५॥
कथने श्रोतुमिच्छायां शैलूषो नटविल्वयोः।
संहर्षस्तु प्रमोदेऽपि स्पर्द्धायाञ्च प्रभञ्जने ॥४६॥
सङ्घर्षः स्यात् पुमान् घृष्टौ स्पर्द्धायामपि दृश्यते।
समीक्षा तु स्त्रियां तत्त्वे बुद्धावपि निभालने ॥४७॥

षचतुष्कम् ।

अनुकर्षो रथाधःस्थदारुण्यप्यनुकर्षणे ।
अम्बरीषं रणे भ्राष्ट्रे क्लीवं पुंसि नृपान्तरे ॥४८॥
नरकस्य प्रभेदे च किशोरे भास्करेऽपि च ।
आम्रातकेऽनुतापे चानिमेषो मत्स्यदेवयोः ॥४९॥
अनुतर्षः सुरापानपात्रे तृष्णाभिलाषयोः ।
अहिद्विट् गरुडे शक्रे मयूरे नकुले पुमान् ॥५०॥
अलम्बुषः प्रहस्ते च कर्द्दने राक्षसान्तरे ।
अलम्बुषा तु मुण्डीर्य्यां स्वर्गवाराङ्गनान्तरे ॥५१॥
अथ किम्पुरुषो लोकभेदकिन्नरयोः पुमान् ।
देववृक्षः सप्तपर्णे मन्दारादिषु गुग्गुलौ ॥५२॥
नन्दिघोषोऽर्ज्जुनरथे घोषे वन्दिजनस्य च ।
परिवेषस्तु पुंलिङ्गः परिधौ परिवेषणे ॥५३॥
परिघोषो निनादे स्यादवाच्ये जलदध्वनौ ।
पलङ्कषा गोक्षुरके रास्नागुग्गुलुकिंशुके ॥५४॥
मुण्डीरीलाक्षयोश्च स्त्री राक्षसे तु पलङ्कषः ।
वीरवृक्षो भल्लातककुभद्रुमयोः पुमान् ॥५५॥
भूतवृक्षस्तु शाखोटद्रुमे श्योनाकपादपे ।
महाघोषा तु कर्कटशृङ्ग्यां पुंस्यतिघोषणे ॥५६॥
महाघोषा तु कर्कटशृङ्ग्यां पुंस्यतिघोषणे ॥
क्लीवं हट्टे राजवृक्षः सुवर्णकपियालयोः ।

वातरूषस्तु वातूलोत्कचयोः शक्रकार्मुके ॥५७॥
विशालाक्षो हरे तार्क्ष्ये ना सुनेत्रेऽभिधेयवत्।
सकटाक्षो वराक्षे ना कटाक्षसहिते त्रिषु ॥५८॥

षान्तवर्गः समाप्तः।

---

सैककम्।

सा जीवेच्छे पञ्चवक्रे भृगौ भसि निशापतौ।
शक्तौ तु सा स्त्रियां सुस्तु प्रसवे गर्भमोचने ॥१॥

सद्विकम्।

कंसोऽस्त्री तैजसद्रव्ये कांस्ये मानेऽसुरे तु ना।
कासूर्विकलवाचि स्यात् तथा शक्त्यायुधे स्त्रियाम् ॥२॥
गुत्सः स्यात् स्तवके स्तम्बे हारभिद्ग्रन्थिपर्णयोः।
गोसो वोलोषसो स्रास इत्युपचितिभिदोः पुमान् ॥३॥
त्रासो भये मणेर्दोषे दासो वाणाभुजिष्ययोः।
दासो भृत्ये च शूद्रे च ज्ञातात्मनि च धीवरे ॥४॥
नासा तु नासिकायाञ्च दारोर्ध्वदारुणि स्त्रियाम्।
प्रसूरश्वाजनन्योश्च कन्दलीवीरुधोः स्त्रियाम् ॥५॥
वसुर्ना देवभेदाग्निभायोक्त्रवकराजसु।
क्लीबं वृद्ध्यौषधे श्याम रैरत्ने मधुरे त्रिषु ॥६॥
भासः पुंसि प्रभायां स्याद विशेषे विहगस्य च।

भास्वप्रभावे मयूखेऽस्त्री माश्चन्द्रमासयोः पुमान् ॥७॥
मांसं स्यादामिषे क्लीवं कक्कोलीजटयोः स्त्रियाम् ।
मिसिः स्त्री मधुरामांस्योः शतपुष्पाजमोदयोः ॥८॥
मृत्स्ना काच्यां श्रेष्ठमृदि रसो गन्धरसे जले ।
शृङ्गारादौ विषे वीर्य्ये तिक्तादौ द्रवरागयोः ॥९॥
देहधातुप्रभेदे च पारदस्वादयोः पुमान् ।
स्त्रियान्तु रसनापाठाशल्लकीकङ्गुभूमिषु ॥१०॥
रासः कोलाहले ध्वाने भाषाशृङ्खलकेऽपि च ।
क्रीडाभेदे च गोपानां वत्सः पुत्रादिवर्षयोः॥११॥
तर्णके नोरसि क्लीवं व्यासो ना विस्तृतौ मुनौ ।
शंसा वचसि वाञ्छायां हंसः स्यान् मानसौकसि॥१२॥
निर्लोभनृपविष्ण्वर्के परमात्मनि मत्सरे ।
योगिभेदे मन्त्रभेदे शरीरमरुदन्तरे ॥१३॥
तुरङ्गमप्रभेदेऽपि हिंसा चौर्य्यादिघातयोः ।

सान्तक्रम् ।

अलसा हंसपद्यां ना पादरोगद्रुभेदयोः ॥१४॥
क्रियामन्दे त्रिष्वथार्च्चिर्मयूखशिखयोर्न ना ।
अदस् परस्मिन्नत्र स्यादभ्यासोऽभ्यसनेऽन्तिके॥१५॥
आगोऽपराधे पापे स्यादाश्वासः पुंसि निर्वृतौ ।
आख्यायिकापरिच्छेदे चाशीर्दन्ते मरुज्जाम् ॥१६॥

हितस्याशंसने स्त्री स्याद्विश्वासः कार्म्मुके पुमान्।
त्रिषु स्यात् क्षेपके चेषोरुच्छ्वासः प्राणनेऽपि च ॥१७॥
आख्यायिका परिच्छेदेऽप्याश्वासेऽपि पुमानयम्।
उत्तंसः कर्णपूरेऽपि शिखरेऽपि च नस्त्रियाम् ॥१८॥
उषस् प्रत्यूषसि क्लीवं पितृप्रस्वाञ्च योषिति।
उरस् वक्षसि च श्रेष्ठेऽप्येनः पापापराधयोः ॥१९॥
ओजस् दीप्ताववष्टम्भे प्रकाशबलयोरपि।
ओकस् आश्रयमात्रे च मन्दिरे च नपुंसकम् ॥२०॥
कीकसः कृमिजातौ स्यात् पुंसि कुल्ये नपुंसकम्।
चमसो यज्ञपात्रस्य भेदेऽस्त्री पिष्टके स्त्रियाम् ॥२१॥
छन्दस् पद्ये च वेदे च स्वैराचाराभिलाषयोः।
ज्यायान् वृद्धेऽतिप्रशस्ते ज्योतिरग्नौ दिवाकरे ॥२२॥
पुमान् नपुंसकं दृष्टौ स्यान् नक्षत्रप्रकाशयोः।
तरो बले च वेगे च तपो लोकान्तरेऽपि च ॥२३॥
चान्द्रायणादौ धर्म्मे च पुमान् शिशिरमाघयोः।
तमो ध्वान्ते गुणे शोके क्लीवं वा ना विधुन्तुदे ॥२४॥
तामसी निशि दुर्गायां तामसो भुजगे खले।
तेजो दीप्तौ प्रभावे च स्यात् पराक्रमरेतसोः ॥२५॥
धनुः पियाले ना नस्त्री राशिभेदे शरासने।
धनुर्द्धरे त्रिषु नभः क्लीवं व्योम्नि पुमान् घने ॥२६॥

घ्राणश्रावणवर्षासु विसतन्तौ पतद्ग्रहे।
पनसः कण्टकीफले कण्टके वानरान्तरे ॥२७॥
स्त्रियां रोगप्रभेदे स्यात् पयस् स्यात् क्षीरनीरयोः।
पायसस्तु क्लीवपुंसो श्रीवासपरमान्नयोः ॥२८॥
पुक्कसी कलिकानील्योः पुक्कसः श्वपचेऽधमे।
बीभत्सो नाऽर्ज्जुने क्रूरघृणात्मविकृते त्रिषु ॥२९॥
भूयान् त्रिषु बहुतरे पुनरर्थे त्वदोऽव्ययम्।
मनस् चित्ते मनीषायां मह उत्सवतेजसोः ॥३०॥
मानसं सरसि स्वान्ते रभसो वेगहर्षयोः।
रहस् तत्त्वे रते गुह्ये रजस् क्लीवं गुणान्तरे ॥३१॥
आर्त्तवे च परागे च रेणुमात्रे च दृश्यते।
राक्षसो यातुधाने स्याच् चण्डायां राक्षसी स्मृता ॥३२॥
रेपाः स्यादधमे क्रूरे कृपणेऽप्यभिधेयवत्।
रेतस् शुक्रे पारदे च रोदश्च रोदसीति च ॥३३॥
दिवि भूमौ पृथक् च स्यात् सहोक्त्याप्येतयोस्तथा।
लालसौत्सुक्यतृष्णातिरेकयाञ्चासु च द्वयोः ॥३४॥
वयस् पक्षिणि बाल्यादौ यौवने च नपुंसकम्।
वर्चो नपुंसकं रूपे विष्ठायामपि तेजसि ॥३५॥
पुंसि चन्द्रस्य तनये वर्हिस पुंसि हुताशने।
नस्ती कुशे वपुस् क्लीवं तनौ शस्ताकृतावपि ॥३६॥

वतंसस्तु पुमान् कर्णपूरशेखरयोरपि ।
वाहसो जलनिर्याने शयालौ सुनिषसके ॥३७॥
वायसोऽगुरुवृक्षे च श्रीवासधमाङ्क्षयोः पुमान् ।
काकोडुम्बरिकायाञ्च काकमाच्याञ्च वायसी ॥३८॥
विद्वानात्मविदि प्राज्ञे पण्डिते चाभिधेयवत् ।
विलासो हावभेदे स्याल् लीलायामपि पुंस्ययम् ॥३९॥
वीतंसो बन्धनोपाये मृगाणां पक्षिणामपि ।
तेषामपि च विश्वासहेतोः प्रावरणेऽपि च ॥४०॥
वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि ।
शिरस् प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च ॥४१॥
श्रीवासो वृकधूपे स्यात् पङ्कजे मधुसूदने ।
श्रेयो मुक्तौ शुभे धर्म्मेऽतिप्रशस्ते च वाच्यवत् ॥४२॥
श्रेयसी करिपिप्पल्यामभयापाठयोरपि ।
सहो बले ज्योतिषि च पुंसि हेमन्तमार्गयोः ॥४३॥
सरसी विल्वे कासारे सरो नीरतड़ागयोः ।
स्यात् समासस्तु पुंलिङ्गः सङ्क्षेपे च समर्थने ॥४४॥
सारसः पक्षिभेदेन्द्वोः क्लीवन्तु सरसीरुहे ।
साहसन्तु बलात्कारकृतकार्य्ये दमेऽपि च ॥४५॥
सुरसन्तु त्रिषु स्वादौ पर्णासे तु नपुंसकम् ।
स्त्री रास्नानागमात्रोश्च स्रोतोऽम्बुवेग इन्द्रिये ॥४६॥

हवि र्होतव्यमात्रे च सर्पिष्यपि नपुंसकम्।

## सचतुष्कम्।

अधिवासो निवासे स्यात् संस्कारे धूपनादिभिः ॥४७॥
अवध्वंसः परित्यागे निन्दनेऽप्यवचूर्णने।
अवतंसो नस्त्रियां स्यात् कर्णपूरे च शेखरे ॥४८॥
अशौकाः पुंसि शरभे पक्षिपञ्चास्ययोरपि।
उदर्चिरुत्प्रभे वाच्यलिङ्गः पुंसि हुताशने ॥४९॥
कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे।
कनीयानतियुनि स्यादत्यल्पानुजयोः स्त्रिषु ॥५०॥
कुम्भीनसः क्रूरसर्पे स्त्रियां लवणमातरि।
भवेद् घनरसः सान्द्रनिर्यासे मोरटेऽम्बुनि ॥५१॥
कर्पूरे पीलुपर्ण्याञ्च सम्यक् सिद्धरसेऽपि च।
चन्द्रहासो दशग्रीवकरबालेऽसिमात्रके ॥५२॥
जटायुस् पुंसि सम्पातेः कनीयसि च गुग्गुलौ।
अथ तामरसं पद्मे ताम्रकाञ्चनयोरपि ॥५३॥
त्रिस्रोता जह्नुकन्यायां स्रोतस्वत्यन्तरेऽपि च।
दिवोकाश्च दिवौकाश्च पुंसि देवे च चातके ॥५४॥
दीर्घायुः शाल्मलीवृक्षे वायसे जीवकद्रुमे।
मार्कण्डेये च पुंसि स्याच्च चिरजीविनि वाच्यवत् ॥५५॥

नगौकाः पुंसि शरभे पक्षिपञ्चास्ययोरपि।
निःश्रेयसन्तु कल्याणमोक्षयोः शङ्करे पुमान् ॥५६॥
नीलाञ्जसाऽप्सरोभेदे सरिद्भेदे च विद्युति।
प्रचेता पाशिनि मुनौ ना प्रहृष्टहृदि त्रिषु ॥५७॥
पुनर्वसुर्ना मुनिभिद्यज्ञे द्विले तु भान्तरे।
पौर्णमासः पुमान् यज्ञभेदे स्त्री पूर्णिमातिथौ ॥५८॥
महारसः स्यात् खर्ज्जूरे कोषकारकशेरुणोः।
मलीमसस्तु मलिने पुष्पकाशीशलोहयोः ॥५९॥
भवेन्मधुरसा द्राक्षामुर्व्विकादुग्धिकासु च।
यमस्वसा तु दूर्गायां यमुनायामपि स्त्रियाम् ॥६०॥
यवीयाननुजेऽपि स्यादतियूनि च वाच्यवत्।
रासेरसस्तु गोष्ठ्यां स्याद् रासशृङ्गारयोरपि ॥६१॥
रससिद्धौ रसावासे षष्ठीजागरकेऽपि च।
राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे ॥६२॥
वरीयान् योगभिच्छ्रेष्ठवरिष्ठेष्वतियूनि च।
विहायाः शकुनौ पुंसि गगने पुन्नपुंसकम् ॥६३॥
विभावसुः पुमान् सूर्य्ये हारभेदे च पावके।
श्वःश्रेयसन्तु कल्याणे परमात्मनि शर्म्मणि ॥६४॥
अथ सर्व्वरसो वाद्यभाण्डभेदे च धूनके।
सप्तार्च्चिः पावके पुंसि क्रूरचक्षुषि तु त्रिषु ॥६५॥

साधीयानतिवाढे स्यादतिसाधौ तु वाच्यवत्।
सिद्धरसो रसे पुंसि धातुप्रभृतिषु त्रिषु ॥६६॥
सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोः।
सुमेधास्तु स्त्रियां ज्योतिष्मत्यां त्रिषु सुबुद्धिनि ॥६७॥

सपञ्चकम्।

दिव्यचक्षुः सुगन्धस्य भेदे नाऽन्धे सुलोचने।
स्यान्नभश्चमस श्चन्द्रे चित्रापूपेन्द्रजालयोः ॥६८॥
हिङ्गुनिर्य्यास इत्येष निम्बे हिङ्गुरसेऽपि च।

सषट्कम्।

हिरण्यरेताः पुंसि स्याद् दिवाकरहविर्भुजोः ॥६९॥

सान्तवर्गः समाप्तः।

---

हैककम्।

हः शिवे सलिले शून्ये धारणे मङ्गलेऽपि च।
गगने नकुलीशे च रक्ते नाके च वर्ण्यते ॥१॥

हद्विकम्।

अहि र्वृत्रासुरे सर्पे पुंसीहोद्यमवाञ्छयोः।
कुहूः स्त्री कोकिलालापनष्टेन्दुकलदर्शयोः ॥२॥

ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे ।
सूर्य्यादौ पूतनादौ च सैंहिकेयोपरागयोः ॥३॥
ग्राहो ग्रहेऽवहारे च गुहः षाण्मातुरे गुहा ।
सिंहपुच्छयाञ्च गर्त्ते च पर्व्वतादेश्च गह्वरे ॥४॥
गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि ।
नाहस्तु बन्धने कूटे प्रोहो गजाङ्घ्रिपर्व्वणोः ॥५॥
वाच्यवत् निपुणे तर्के वर्हं पिच्छे दलेऽस्त्रियाम् ।
बहु स्यात् व्यादिसङ्ख्यासु विपुलेऽप्यभिधेयवत् ॥६॥
मही नद्यन्तरे भूमौ मह उत्सवतेजसोः ।
अथ मोहो नृलिङ्गः स्यादविद्यायाञ्च मूर्च्छने ॥७॥
लोहोऽस्त्री शस्त्रके लौहे जोङ्गके सर्व्वतैजसे ।
वहः स्याद् वृषभस्कन्धे वाहे गन्धवहेऽपि च ॥८॥
वाहो भुजे पुमान् मानभेदाश्ववृषवायुषु ।
व्रीहिः सामान्यधान्ये स्यादाशुधान्ये तु पुंस्ययम् ॥९॥
व्यूहः स्याद् बलविन्यासे निर्म्माणे वृन्दतर्कयोः ।
सहो बले नस्त्रियां स्यात् स्त्रियान्तु नखभेषजे ॥१०॥
दण्डोत्पलामुद्गपर्णीकुमारीपृथिवीषु च ।
सिंहः कण्ठीरवे राशौ सत्तमे चोत्तरस्थितः ॥११॥
सिंही तु कण्टकार्य्यां स्याद् वार्त्ताकौ वासकेऽपि च ।
स्नेहः स्यात् पुंसि तैलादिरसद्रव्ये च सौहृदे ॥१२॥

हत्रिकम् ।

अत्यूहा नीलिकायां स्त्री कालकण्ठखगे पुमान् ।
आग्रहोऽनुग्रहासक्त्योराक्रमे ग्रहणेऽपि च ॥१३॥
आरोह स्त्ववरोहे च वरारोहाकटावपि ।
आरोहणे गजारोहे दीर्घत्वे च समुच्छ्रये ॥१४॥
उत्साह स्तूद्यमे सूत्रे कटाहः कूर्म्मकर्परे ।
द्वीपस्य च प्रभेदे स्यात् तैलादेः पाकभाजने ॥१५॥
जायमानविषाणाग्रमहिषीशावकेऽपि च ।
कलहं युधि वाटे ना खड्गकोषे च भण्डने ॥१६॥
दात्यूहस्तु पुमान् कालकण्ठचातकपक्षिणोः ।
निग्रहो भर्त्सनेऽपि स्यान् मर्य्यादायाञ्च बन्धने ॥१७॥
निर्य्यूहः शिखरे द्वारे निर्य्यासे नागदन्तके ।
निरूहो वस्तिभेदे स्यादूहशून्ये च निश्चिते ॥१८॥
प्रग्राहस्तु तुलासूत्रे वृषादिप्रग्रहेऽपि च ।
पटहो ना समारम्भे आनके पुन्नपुंसकम् ॥१९॥
प्रवहस्तु वहिर्याने मातरिश्वप्रभेदयोः ।
प्रग्रहस्तु तुलासूत्रे वन्द्यां नियमने भुजे ॥२०॥
हयादिरश्मौ रश्मौ च सुवर्णालुमहीरुहे ।
प्रवाहस्तु प्रवृत्तौ स्यादपि स्रोतसि वारिणः ॥२१॥

वराहः शूकरे विष्णौ मानभेदेऽद्रिमुस्तयोः।
वाराही मातृभेदे स्याद् विश्वक्सेनप्रियौषधौ ॥२२॥
राजार्हं जोङ्गके क्लीवं राजयोग्येऽभिधेयवत्।
विग्रहः कायविस्तारविभागे ना रणेऽस्त्रियाम् ॥२३॥
विदेहः कायशून्ये स्याज् जनकान्वयभूमिपे।
वैदेही रोचनासीतावणिक्स्त्रीपिप्पलीषु च ॥२४॥
सङ्ग्रहो बृहदुत्तुङ्गे ग्रहसंक्षेपयोरपि।
सुवहा शल्लकीलापर्णीगोधापदीषु वीणायाम् ॥२५॥
रास्ना शेफालिकयोः स्त्री सुखवाह्योऽन्यलिङ्गः स्यात्।

## हचतुष्कम्।

अवग्रहो वृष्टिरोधे प्रतिबन्धे गजालिके ॥२६॥
अभिग्रहोऽभिग्रहणेऽभियोगेऽपि च गौरवे।
अवरोहोऽवतरणेऽप्यारोहे च लतोद्गमे ॥२७॥
अश्वारोहाऽश्वगन्धायां स्त्रियां त्रिष्वश्ववाहके।
उपनाहो व्रणालेपपिण्डे वीणानिबन्धने ॥२८॥
उपग्रहः पुमान् वन्द्यामुपयोगेऽनुकूलने।
स्याद् गन्धवहा नासायां पुंलिङ्गो मातरिश्वनि ॥२९॥
तनूरुहन्तु लोम्नि स्यात् पतत्रे च नपुंसकम्।
तमोपहः सहस्रांशुमृगाङ्कजिनवह्निषु ॥३०॥

प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे ।
द्विजेभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे ॥३१॥
परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः ।
शापे परिवर्हो राजयोग्यद्रव्ये परिच्छदे ॥३२॥
परीवाहो जलोच्छ्वासे महीभृद्योग्यवस्तुनि ।
पितामहो विरिञ्चौ स्यात् तातस्य जनकेऽपि च ॥३३॥
महासहा माषपर्ण्यामम्लानेऽपि च योषिति ।

हपञ्चकम् ।

प्रपितामह इत्येष विधौ पितृपितामहे ॥३४॥

हान्तवर्गः समाप्तः ।

## अव्ययानि ।

अथाव्ययानि वक्ष्यन्ते व्यक्तं पूर्व्वोदितैः क्रमैः ।
अकाराद्यन्तता चास्मिन् तस्मादप्यतिरिच्यते ॥१॥

अ

अशब्दः स्यादभावेऽपि स्वल्पार्थप्रतिषेधयोः ।
अनुकम्पायाञ्च तथा वासुदेवे त्वनव्ययम् ॥२॥

आ

आ प्रगृह्यं स्मृतौ वाक्येऽनुकम्पायां समुच्चये ।

इ

इ खेदे च रुषोक्तौ चापाकरणानुकम्पयोः ॥३॥

ई

ई विषादेऽनुकम्पायां लक्ष्म्यां पुनरनव्ययम् ।

उ

उ सम्बोधनरोषोक्त्योरनुकम्पानियोगयोः ॥४॥
पदस्य पूरणे पादपूरणेऽपि च दृश्यते ।

ऊ

ऊ वाक्यारम्भरक्षानुकम्पास्वपि च दृश्यते ॥५॥

ऋ

ऋ शब्दो गर्हणे वाक्ये देवमातायां त्वनव्ययम् ।

ॠ

ॠ वाक्यारम्भे रक्षायां वक्तः स्मृत्योरन्ययम् ॥६॥
देवाम्बायां दनौ चापि भैरवे दनुजे गतौ ।

ऌ

ऌकारो देवताम्बायां भुवि कुध्रे च कीर्त्तितः ॥७॥

ॡ

ॡकारो देवनार्य्यां स्यात् नार्य्यात्मन्यपि मातरि ।

ए

ए स्मृतावप्यसूयानुकम्पामन्त्रणहूतिषु ॥८॥

ऐ

ऐ शब्दो दृश्यते हूतौ स्मृत्यामन्त्रणयोरपि ।

ओ

ओ सम्बोधन आह्वाने स्मरणे चानुकम्पने ॥९॥

औ

औ शब्दः कथितो हूतौ तथा सम्बोधनेऽपि च ।
स्त्री तु विश्वम्भरायां स्यात् पुमांस्तु निस्वने स्मृतः॥१०॥

कैककम् ।

कु पापे चेषदर्थे च कुत्सायाञ्च निवारणे ।

कद्विकम् ।

धिक् भर्त्सने च निन्दायां

कत्रिकम्।

मनागप्यल्पमन्दयोः ॥११॥

हिरुक्शब्दो विनार्थे च मध्यार्थेऽपि च दृश्यते।

गद्विकम्।

अङ्ग सम्बोधने हर्षे सम्भ्रमासूययोरपि ॥१२॥

ङद्विकम्।

आङ् सीमायामभिव्याप्तौ क्रियायोगेषदर्थयोः।

चैककम्।

चान्वाचये समाहारेऽप्यन्योन्यार्थे समुच्चये ॥१३॥

पक्षान्तरे तथा पादपूरणेऽप्यवधारणे।

चद्विकम्।

किञ्चारम्भे च साकल्ये प्राक् पूर्वस्मिन्नवान्तरे ॥१४॥

अग्रे प्रभातेऽतीते च देशे दिक्कालयोरपि।

चत्रिकम्।

तिर्य्यक् तिरोर्थे वक्रे च विहङ्गादौ त्वनव्ययम् ॥१५॥

ननु च प्रश्नदुष्टोक्त्याः सम्यक् दृढप्रशंसयोः।

ञद्विकम्।

नञभावे निषेधे च स्वरूपार्थेऽप्यतिक्रमे ॥१६॥

ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोः।

ठद्विकम्।

सुष्ठु प्रशंसनेऽपि स्यादत्यर्थे च निगद्यते॥१७॥

ठत्रिकम्।

अपष्ठु निरवद्ये च शोभनार्थे च दृश्यते।

णचतुष्कम्।

अन्तरेणपदं विद्याद् विनामध्यार्थयोरपि॥१८॥

तैककम्।

तु पादपूरणे भेदे समुच्चयेऽवधारणे।

पक्षान्तरे नियोगे च प्रशंसायां विनिग्रहे॥१९॥

तद्विकम्।

अतिशब्दः प्रशंसायां प्रकर्षे लङ्घनेऽपि च।

नितान्तासम्प्रतिक्षेपवाचकोऽप्येष दर्शितः॥२०॥

अस्तु स्यादभ्यनुज्ञानेऽप्यसूयापीड़योरपि।

प्रतिक्षेपे प्रशंसायां प्रकर्षे लक्षणेऽपि च॥२१॥

असम्प्रत्यर्थ उद्दिष्टमिति हेतौ प्रकाशने।

निदर्शने प्रकारे स्यात् परकृत्यनुकर्षयोः॥२२॥

समाप्तौ च प्रकरणेष्वुतात्यर्थविकल्पयोः।

समुच्चये वितर्के च प्रश्ने च पादपूरणे॥२३॥

उत स्यात् प्रश्ने वितर्के च चेत् कुत्सितप्रशंसयोः।

पक्षान्तरेऽप्यसाकल्ये जातुशब्दो विगर्हणे॥२४॥

कदाचिदर्थेऽपि तथा नेत् विकल्पनिषेधयोः ।
प्रति प्रतिनिधावित्थम्भूताख्यानाभिमुख्ययोः ॥२५॥
मात्रार्थभागवीप्सासु लक्षणप्रतिदानयोः ।
वता मन्त्रणसन्तोषखेदानुक्रोशविस्मये ॥२६॥
स्वस्ति स्यान् मङ्गले पुण्येऽप्याशंसायामपि क्वचित् ।
स्वित् प्रश्ने च वितर्के च तथैव पादपूरणे ॥२७॥
हन्त वाक्यारम्भखेदविषादहर्षसम्भ्रमे ।

तत्रिकम् ।

आरात् दूरे समीपे च कच्चित् कामप्रवेदने ॥२८॥
प्रश्ने हर्षे मङ्गले च किमुत प्रश्नतर्कयोः ।
विकल्पेऽतिशयेऽपि स्यात् तावन् मानेऽवधारणे॥२९॥
सम्भ्रमे च परिच्छेदे तथा कार्त्स्न्याधिकारयोः ।
पश्यत् स्यात् प्रशंसायां विस्मये च निगद्यते ॥३०॥
पश्चात् प्रतीच्यां चरमेऽप्यधिकारेऽपि दृश्यते ।
यद्वत् प्रश्ने वितर्के च यावत् कार्त्स्न्येऽवधारणे ॥३१॥
प्रशंसायां परिच्छेदे मानाधिकारसम्भ्रमे ।
पक्षान्तरे च शश्वत् स्यादनुप्रश्ने च मङ्गले ॥३२॥
पुरा कल्पे सदार्थे च पुनरर्थे च दृश्यते ।
सकृत् सहैकवारे स्यात् साक्षात् प्रत्यक्षतुल्ययोः॥३३॥

नचतुष्कम्।

अहोवतानुकम्पायां खेदे सम्बोधनेऽपि च।
पुरस्तात् प्रथमे प्राच्यामग्रतोर्थपुरार्थयोः ॥३४॥

थद्विकम्।

अथाथो संशये स्यातामधिकारे च मङ्गले।
विकल्पानन्तरप्रश्नकार्त्स्न्यारम्भसमुच्चये ॥३५॥
तथाऽभ्युपगमे पृष्टप्रतिवाक्ये समुच्चये।
सदृशे निश्चयेऽपि स्यात् यथा तुल्यार्थमानयोः ॥३६॥
प्रशंसायां वृथा बन्ध्ये

थत्रिकम्।

निष्कारणेऽन्यथा पुनः।
वितथे चापरार्थे च सर्व्वथा हेतुवादयोः ॥३७॥

दद्विकम्।

उत्प्रकाशे विभागे च प्रावल्या स्वास्थ्यशक्तिषु।
प्राधान्ये बन्धने भावे मोक्षे लाभोर्द्ध्वकर्म्मणोः ॥३८॥
यद् गर्हा हेत्ववधृत्यो र्यदि गर्हा विकल्पयोः।

धद्विकम्।

अधि स्यादधिकारे चापीश्वरे च निगद्यते ॥३९॥

नैककम्।

न स्यान् निषेधोपमयो र्नि निवेशस्थ्मार्थयोः।

नित्यार्थसंशयक्षेपकोशलोपरमेषु च ॥ ४० ॥
सामीप्याश्रयदानेषु मोक्षान्तर्भावबन्धने ।
राश्यधोभावविन्यासे नु वितर्कोपमानयोः ॥४१॥
विकल्पानुनयातीते प्रश्ने हेत्वपदेशयोः ।

नद्विकम् ।

अनु हीने सहार्थे च पश्चात् सादृश्ययोरपि ॥४२॥
लक्षणेत्थम्भूताख्यानभागवीप्सास्वनुक्रमे ।
आयामे च समीपे च किन्नु प्रश्नवितर्कयोः ॥४३॥
चन विस्मये साकल्ये ननु शब्दो विनिग्रहे ।
अनुप्रश्ने परकृतावधिकारे च सम्भ्रमे ॥४४॥
आमन्त्रणेऽप्यनुनये प्रश्नानुज्ञावधारणे ।
नानाशब्दो विनार्थेऽपि तथानेकोभयार्थयोः ॥४५॥
स्थाने तु कारणार्थे स्याद् युक्तसादृश्ययोरपि ।

पद्विकम ।

अप स्यादपकृष्टार्थे वर्ज्जनार्थवियोगयोः ॥४६॥
विपर्य्यये च विकृतौ चौर्य्ये निर्द्देशहर्षयोः ।
अपि सम्भावनाप्रश्नशङ्कागर्हासमुच्चये ॥४७॥
तथा युक्तपदार्थेऽपि कामकारक्रियासु च ।
उप स्यादधिकार्थे च हीनार्थासन्नयोरपि ॥४८॥

भद्दिकम्।

अभीत्यम्भूतकथने चाभिमुख्याभिलाषयोः।

मैककम्।

मा वारणे विकल्पे च स्मातीते पादपूरणे ॥४९॥
स्यान् मङ्गले परकृतौ

मद्दिकम्।

अमान्तिकसहार्थयोः।

आम् ज्ञाननिश्चयस्मृत्योरूम् रोषेऽङ्गीकृतावपि ॥५०
प्रश्नेऽपि स्यादूम् रुषोक्तौ पृच्छायामोमुपक्रमे।
प्रणवे चाभ्युपगमे चापाकृतौ च मङ्गले ॥५१॥
कम् पादपूरणे तोये मस्तके च सुखेऽपि च।
किम् कुत्सायां वितर्के च निषेधप्रश्नयोरपि ॥५२॥
किमु सम्भावनायां स्याद् विमर्षे चापि दृश्यते।
नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च ॥५३॥
सम्भाव्यकुत्साप्राकाश्यविकल्पेऽपि च दृश्यते।
सम् कल्याणे सुखे सन्तु शोभनार्थसमार्थयोः॥५४॥
सङ्गार्थे च प्रहृष्टार्थे सामिनिन्दार्द्धयो मतम्॥
हम् रुषोक्तावनुनये ऊम् स्मृतावप्यपाकृतौ ॥५५॥
अनुप्रश्नेऽभ्यनुज्ञायां हुम् स्यात् प्रश्नवितर्कयोः।

मत्रिकम् ।

अलम् भूषणपर्य्याप्तिवारणेषु निरर्थके ॥५६॥
शक्तावेवम् प्रकारे स्यादङ्गीकारेऽवधारणे ।
अनुप्रश्ने परकृतावुपमापृच्छयोरपि ॥५७॥
कथम् हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे ।
प्रश्ने सम्भावनायाञ्च कामम् चानुमतौ स्मृतम् ॥५८॥
प्रकामे चाप्यसूयायां तथानुगमनेऽपि च ।
जोषम् सुखे प्रशंसायां तूष्णीं लङ्घनयोरपि ॥५९॥
नूनन्तु निश्चिते तर्के स्मरणे वाक्यपूरणे ।
परम् नियोगे चेपे च प्राध्वम् नर्म्मानुकूलयोः ॥६०॥
सत्यम् प्रश्नेऽभ्युपगमे

मचतुष्कम् ।

ऽवश्यम् नित्यप्रयत्नयोः ।
अभीक्ष्णम् मुहुरश्रान्ते शीघ्रप्रकर्षयोरपि ॥६१॥
इदानीं वाक्यभूषायां सम्प्रत्यर्थे च दृश्यते ।
तद्दिनम् दिनमध्ये स्यात् तथैव प्रतिवासरे ॥६२॥
साम्प्रतम् चाधुनार्थे स्यादुचितार्थे च दृश्यते ।

यद्विकम् ।

अयि प्रश्नानुनययो स्तथा सम्बोधनेऽपि च ॥६३॥
अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि च ।

दिष्ट्या हर्ष मङ्गले च पश्यशब्दस्तु विस्मये ॥६४॥
प्रशंसायामपि तथा

यत्रिकम्।

समयाऽन्तिकमध्ययोः।

रैकम्।

प्र प्रकर्षे गताद्यर्थेऽपि

रद्विकम्।

अरेऽपाकृत्यहृययोः ॥६५॥

उर्य्यूरी चाप्युभौ शब्दौ विस्तारेऽङ्गीकृतावपि।
दु निषेधे च कष्टे च नि निर्णयनिषेधयोः ॥६६॥
परि स्यात् सर्व्वतोभावे वर्ज्जने व्याधिशेषयोः।
इत्यम्भूताख्यानभागवीप्सालिङ्गनलक्षणे ॥६७॥
दोषाख्याने निरसने पूजाव्याप्त्योश्च भूषणे।
परा विमोक्षप्राधान्यप्रातिलोम्येषु धर्षणे ॥६८॥
आभिमुख्ये ऽ शार्थे च विक्रमे च गतौ बधे।
पुरा पुराणे निकटे प्रबन्धातीत भाविषु ॥६९॥
स्वः प्रेत्यव्योम्नि नाके चापि

रत्रिकम्।

अन्तः स्वीकारमध्ययोः।

अन्तरा तु विनार्थे स्यान् मध्यार्थनिकटार्थयोः ॥७०॥

उररर्युरुर्य्यूररी च विस्तारेऽङ्गीकृतौ त्रयम्।
नकि निषेधोपमयोः प्रादुः प्राकाश्य इष्यते ॥७१॥
सम्भाव्ये च प्रवृत्तौ च पुनरप्रथमे मतम्।
अधिकारे च भेदे च तथा पक्षान्तरेऽपि च ॥७२॥

लद्विकम्।

किलशब्दस्तु वार्त्तायां सम्भाव्यानुनयार्थयोः।
खलु स्याद् वाक्यभूषायां जिज्ञासायाञ्च सान्त्वने॥७३॥
वीप्सामाननिषेधेषु पूरणे पदवाक्ययोः।

वैककम्।

वा स्याद् विकल्पोपमयो र्वितर्के पादपूरणे ॥७४॥
समुच्चये च विस्रम्भे नानार्थातीतयोरपि।
वै स्यात् सम्बोधने पादपूरणेऽनुनयेऽपि च ॥७५॥
वि निग्रहे नियोगे च तथैव पदपूरणे।
निश्चये;सहने हेतावव्याप्तिविनियोगयोः ॥७६॥
ईषदर्थे परिभवे श्रुद्धावालम्बनेऽपि च।
विज्ञाने (वद्विकम्)
अथैव चौपम्ये नियोगे वाक्यपूरणे ॥७७॥
अवधारणे च चारनियोगे च विनिग्रहे।

षद्विकम्।

उषा रात्रौ तदन्ते च दोषा रात्रौ च तन्मुखे ॥७८॥

मङ्क्षु शीघ्रे भृशार्थे च

षत्रिकम्।

निकषाऽन्तिकमध्ययोः।

सैककम्।

सु पूजायां भृशार्थानुमतिकृच्छ्रसमृद्धिषु ॥७९॥

सद्विकम्।

आस् स्मरणेऽपाकरणे कोपसन्तापयोरपि।
ई दुःखभावने कोपे नि निषेधे च निश्चये ॥८०॥
साकल्यातीतयोर्भोस्तु सम्बोधनविषादयोः।

सत्रिकम्।

अञ्जसाशब्द आख्यातस्तत्त्वतूर्णार्थयोरपि ॥८१॥
तिरोऽन्तर्द्धौ तिर्य्यगर्थे निचैः स्वैराल्पयोर्मतम्।
पुरोऽग्रे प्रथमे भूयोऽधिकारे च पुनः पुनः ॥८२॥
मिथोऽन्योन्ये रहोऽर्थे च शनैः स्वैरे शनैश्चरे।

सचतुष्कम्।

अभितः शीघ्रसाकल्यसम्मुखाभयतोऽन्तिके ॥८३॥
अग्रतः प्रथमे चाग्रे पुरतः प्रथमाग्रयोः।
पूर्व्वेद्युः प्रातःकाले स्यात् तथैव धर्म्मवासरे ॥८४॥

हैककम्।

ह स्यात् सम्बोधने पादपूरणे च विनिग्रहे।

नियोगे च क्षिपायां स्यात् कुत्सायामपि दृश्यते ॥८५॥
हा विषादे च शोके च कुत्सादुःखार्थयोरपि।
हि पादपूरणे हेतौ विशेषेऽप्यवधारणे ॥८६॥
प्रश्ने हेत्वपदेशे च सम्भ्रमासूययोरपि।
ही दूःखे हेतावाख्यातो विषादे विस्मयेऽपि च ॥८७॥
हे सम्बोधन आह्वानेऽप्यसूयादौ च दृश्यते।
है सम्बोधन आह्वाने हो हौ शब्दौ तथैतयोः॥८८॥

हद्विकम्।

अह प्रशंसाक्षिपयो नियोगे च विनिग्रहे।
अहो धिगर्थे शोके च करुणार्थविषादयोः ॥८९॥
सम्बोधने प्रशंसायां विस्मये पदपूरणे।
असूयायां वितर्के स्यादाह क्षेपनियोगयोः ॥९०॥
आहो प्रश्ने वितर्के च सह साकल्य इष्यते।
विद्यमाने च सादृश्ययोगपद्यसमृद्धिषु ॥९१॥
सम्बन्धे च तथा हीही शब्दो विस्मयहास्ययोः।
हे है सम्बोधने हुतौ होहौ शब्दस्तथैतयोः ॥९२॥

हत्रिकम्।

अहहेत्यद्भुते खेदे परिक्लेशप्रकर्षयोः।
सम्बोधनेऽपि चोताहो परिप्रश्नविचारयोः ॥९३॥

अव्ययानेकार्थवर्गः समाप्तः।

सम्पूर्णा।

THE FOLLOWING IS THE LIST OF

PROFESSOR TARKAVACHASPATI'S

## WORKS & PUBLICATIONS.

| No. | Title | | Rs. | As. |
|---|---|---|---|---|
| 1. | Asubodham Vyakaranam. | ... ... | 3 | 4 |
| 2. | Dhaturupadarsha. | ... ... ... | 2 | ,, |
| 3. | Sabdastoma Mahanidhi. | ... ... | 10 | ,, |
| 4. | Sidhantakoumudi with Sarala. | ... ... | 11 | ,, |
| 5. | Sidhantavindusara. | ... ... ... | ,, | 8 |
| 6. | Tuladanadipadhati. | ... ... ... | 4 | ,, |
| 7. | Gaya Shradhadipadhati. | ... ... | 1 | ,, |
| 8. | Sabdartharatna. | ... ... ... | ,, | 12 |
| 9. | Vakyamanjari. | ... ... ... | ,, | 4 |
| 10. | Vrittaratnakara and Chhandomanjari with notes. | | ,, | 10 |
| 11. | Venisanhara with a Commentary. | ... | 1 | ,, |
| 12. | Mudarrakshasa. | Ditto ... ... | 1 | 8 |
| 13. | Ratnavali | Ditto ... ... | 1 | 8 |
| 14. | Malavikagnimitra. | Ditto ... ... | 1 | 8 |
| 15. | Dhananjayavijaya. | Ditto ... ... | ,, | 4 |
| 16. | Mahaviracharita. | Ditto ... ... | 1 | 8 |
| 17. | Sankhyatatwakoumudi. | Ditto ... ... | 2 | 8 |
| 18. | Veiyakarana Bhusanasara. | ... ... | 2 | ,, |
| 19. | Lilavati.... | ... ... ... | ,, | 12 |
| 20. | Vijaganita. | ... ... ... | 1 | ,, |
| 21. | Sishupalabadha with Mallinatha. | ... | 6 | ,, |
| 22. | Kiratarjuniya. | Ditto ... ... | 2 | 8 |
| 23. | Kumarasambhava Purvakhandam. | Ditto ... | 1 | ,, |
| 24. | Kumarasambhava Uttarakhandam. | ... | ,, | 8 |
| 25. | Panini Sutras. | ... ... ... | ,, | 12 |
| 26. | A comprehensive Sanscrit Dictionary ( In the Press ) | | 60 | ,, |
| 27. | Kadambari with a commentary. | ... ... | 4 | " |

„ 2

| No. | Title | | | Rs. | As. |
|---|---|---|---|---|---|
| 28. | Rajaprasasti. | ... ... | ... | 1 | 8 |
| 29. | Anumanachintamani. | ... | ... | 2 | 8 |
| 30. | Anumanachintamanididhiti. | ... | ... | 2 | „ |
| 31. | Sarvadarshanasangraha. | ... | ... | 1 | „ |
| 32. | Bhaminibilasha with notes. | ... | ... | 1 | „ |
| 33. | Hitopodesha with notes. | ... | ... | 1 | „ |
| 34. | Bhasha parichheda and Muktavali. | | ... | „ | 4 |
| 35. | A discourse on Hindu polygamy. | | ... | 1 | 8 |
| 36. | Dashakumaracharita with notes. | | ... | 1 | 8 |
| 37. | Paribhashendusekhara. | ... | ... | „ | 8 |
| 38. | Kavikalpadruma. | ... ... | ... | 2 | 8 |
| 39. | Chakradatta. | ... ... | ... | 2 | „ |
| 40. | Unadisutra with a commentary. | ... | ... | 2 | 8 |
| 41. | Medini Kosha. | ... ... | ... | 2 | 8 |
| 42. | Panchatantra of Vishnusharma. | ... | ... | „ | 8 |
| 43. | Bidwanmodatarangini. | ... | ... | „ | 6 |
| 44. | Madhavachampu. | ... ... | ... | „ | 8 |
| 45. | Tarkasangraha with an English translation. | | ... | 1 | 8 |
| 46. | Prasannaraghava of Jayadeva. | ... | ... | „ | 6 |
| 47. | Vivekachuramani. | ... ... | ... | 5 | „ |
| 48. | Kavyasangraha (complete work.) | | ... | „ | 4 |
| 49. | Panini on Genders with a commentary. | | ... | „ | 6 |
| 50. | Ritusanhara with a commentary.... | | ... | 1 | 8 |
| 51. | Vikramorvashi with a commentary. | | ... | „ | 6 |
| 52. | Vasantatilaka. | ... ... | ... | ... | |
| 53. | Gayitri explained. | ... ... | ... | | |

Apyly to Pandit Jibananda Vidyasagara B. A.

The 20th July 1872. } *Govt. Sanskrit College.* CALCUTTA.

॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

२१६

श्रीमद्मङ्खविरचितः

# मङ्खकोशः

मङ्खविरचितटीकासारसहित-

त्रिप्रकारक-शब्दसूच्यादि-विभूषितः

सम्पादकः

थियोडोर ज़कारिया

चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

१९७२

प्रकाशक : चौखम्बा संस्कृत सीरीज आफिस, वाराणसी
मुद्रक : विद्याविलास प्रेस, वाराणसी
संस्करण : द्वितीय, वि० संवत् २०२९
मूल्य : रु० ३०-०० ( साधारण संस्करण )
: रु० ४०-०० ( विशिष्ट संस्करण )


गोपाल मन्दिर लेन
पो० बा० ८, वाराणसी-१ ( भारतवर्ष )
फोन : ६३१४५

प्रधान शाखा
चौखम्बा विद्याभवन
चौक, पो० बा० ६९, वाराणसी-१
फोन : ६३०७६

THE
KASHI SANSKRIT SERIES
216

# THE
# MAṄKHAKOŚA

*EDITED, TOGETHER WITH EXTRACTS FROM THE COMMENTARY, AND THREE INDEXES,*

BY

THEODOR ZACHARIAE.

THE
CHOWKHAMBA SANSKRIT SERIES OFFICE
VARANASI-1
1972

## PUBLISHERS' NOTE

The present edition of the Maṅkhakośa, with extracts from a commentary composed by Maṅkha himself is based on seven manuscripts.

This ancient kośa ( Dictionary ) contains numerous uncommon words and uncommon meanings, not available elsewhere. The examples adduced in the commentary amount to about 3,400. The editor has scrupulously tried to preserve the peculiarities of the Maṅkha even with regard to the orthography. Besides he has given almost full cross references from Amarkośa, Nighantus, Ayurvedic works and various other Indian kośa works. All this, besides of course The Maṅkha kośa itself, has made it a unique work almost unparalleled in the Indian kośa-works, with the exception of the celebrated Amarkośa.

The work of Editing this kośa for the first time, was entrusted to the Editor by the committee of the Imperial Academy of Sciences of Vienna and was first published in the year 1897. Soon after, however, it went out-of-print and remained so for such a long time. We are therefore reprinting it in the series numerous other such out of print works reprinted by us so far.

# PREFACE.

The present edition of the Maṅkhakośa,[1] with extracts from a commentary composed probably by Maṅkha himself, is based on the following materials :—

(1) A., an excellent birch bark manuscript in Śâradâ characters, containing the text only, No. 338 of the Government Collection of 1875-76 in the Deccan College Library at Puna ; see Prof. Bühler's Kaśmîr Report, p. XXII. It consisted originally of 84 or 85 leaves. The first five leaves, and three (or four?) leaves at the end of the book, are missing. Leaves 6—80 contain the text from कनकं v. 56 down to नागदन्तके v. 960. This part of the manuscript is, on the whole, well preserved, apart from a few leaves which are slightly damaged at the bottom, especially at the beginning of the book. Some leaves are covered with glosses mostly consisting of extracts from the commentary. The last leaf of the MS., which is not numbered, has been pasted on paper and is in such a bad condition, that it could be deciphered only with the utmost difficulty. It comprises the conclusion of the work from v. 1003-1007. Compare, in the Kaśmîr Report, p. CXLI, Paṇḍit Vâmanâchârya's reproduction of this part of the MS., which, I am sorry to say, little agrees with what I have printed. For my part I have, without the help of any other manuscript, restored the concluding verses to the best of my ability, and I think I have at least succeeded in discovering that Maṅkha explains the particle ओम् in the last verse of his Kośa apparently in order to conclude his work with an auspicious word. The MS. just described, containing as it does nine-tenths of the whole, and being exceedingly correct in most places, forms the basis of my edition of the text.

---

1. Regarding the Maṅkhakośa compare my edition of the Śâśvatakośa, pp. XI.-XIV., and my Beiträge zur indischen Lexicographie, pp. 70-75. Some of the statements made there require modifications on the ground of the manuscript S described below.

(2) B., a modern paper manuscript, in Devanâgarî characters, No. 337 of the same collection (Kaśmîr Report, p. XXII.), consisting of 92 leaves. It is—as may be gathered from certain clerical blunders—a direct or indirect transcript from a Śâradâ original. It contains both the text and the commentary complete—apart from some minor gaps which, for the most part, have been duly noted in the Various Readings—from the beginning to v. 683, a. It abruptly ends with यत्रावलीढ p. 97, 5. Many parts of the MS. are very corrupt; indeed, with this MS. alone an edition of the commentary would have been impossible. Yet not a few leaves are pretty correct, *e. g.*, 37-46, containing verses 271-358 and the commentary thereon.

(3) C., a modern paper MS. in Devanâgari characters, consisting of 51 leaves, and belonging to the Calcutta collection of the Government, likewise has been derived from an original in Śâradâ. I first discovered it among the manuscripts catalogued in the Notices of Sanskrit MSS. published under orders of the Government of Bengal, Vol. VIII., p. 40, No. 2584, where it has been entered as an anonymous work. It is described a second time, and more accurately in Vol. X., p. 225, under No. 4105. Here the author's name has been correctly given in the extracts from the introduction (v. 4), and recently again in the Alphabetical Index of MSS. purchased up to 1891, in Vol. XI. of the Notices (Calcutta, 1895), p. 5. The manuscript itself bears the number 2535. Apart from a gap extending from रक्तं v. 292 to जनितात्मर्थानुरागा v. 312, it contains the text complete from the beginning up to अञ्जसा v. 1005. Although it is fairly correct in general, it has proved of little value to me by the side of the excellent Śâradâ manuscript A. But verses 960, b. to 1002 of my edition rest on C. alone. Without the help of the Calcutta manuscript, I should not have been able to give the complete text of the Maṅkhakośa.

(4) S., a paper MS. of text and commentary, in Śâradâ characters, written about 200 years ago, according to the opinion of the owner. It is the property of Professor Stein, of Lahore, who bought it in October 1892 at Śrînagar, Kaśmîr, from Prasâda Paṇḍit, son of Nârâyaṇa Paṇḍit and grandson of Sâhib Paṇḍit,

through Vishṇubhaṭṭa Kâchari, Kârkun, his Yajamâna. It originally consisted of 92 leaves, eight of which (*viz.*, 1-3, 12-15 and 65) are now lost. It begins with विवाहमङ्गलद्रव्ये v. 38 and ends abruptly with the comment on the word क्षुद्र v. 683, b, thus carrying the commentary a little farther than B. Some minor lacunæ, *e.g.*, from v. 85, b. to 93 have been noted in the Various Readings. The first two leaves are damaged at the bottom. The rest of the MS. is well preserved, and exceedingly correct in general, except in the commencement, and in some parts of the second half of the book. In spite of the omissions and defects just named, S. is by far the most important of my MSS. I have not hesitated to make it the basis of my edition of the commentary. In some cases, it is true, it may be I have followed it too closely, instead of giving the preference to B.

(5) Vi., a MS. of the Viśvaprakâśakośa, Orient. Oct. 99 of the Royal Library of Berlin, described in Prof. Weber's Verzeichniss I. (Berlin, 1853) under No. 803. As is evident from certain peculiarities in the spelling of words, the MS. is of Kaśmîrian origin. It contains a fair number of extracts from the Maṅkhakośa,—no doubt, originally marginal glosses which were subsequently mixed up with the genuine Viśva by ignorant scribes. I have used a copy of these extracts—which were recognized by me as such fifteen years ago[1] —made by Professor Pischel in 1872 and liberally placed at my disposal. The fragments would have been of much greater use to me than they have actually been, if not, unfortunately, about 100 verses among the रान्ता: were missing in Vi., and if the extracts from Maṅkha did not entirely cease from about the middle of the लान्ता: . Thus, the assistance of Vi. has failed me just in that part of my work where my materials were rather scanty. Incompleteness is a sad peculiarity of the Kaśmir manuscripts.

(6) Mh., the numerous quotations, both from the text and the commentary, found in Mahendrasûri's ṭîkâ on the Anekârthasaṁgraha, for which see the first volume of this Series. The

---

[1] See my Beiträge zur indischen Lexicographie, p. 73, n. 2.

irretrievable loss [1] of the last third of the Maṅkhaṭîkâ is, to a certain degree, made up by Mahendra's extracts from it. By the way, the fact that Mahendra (last quarter of the 12th century) quotes the Maṅkhaṭîkâ, proves that the commentary has been written either by Maṅkha himself (about 1150 A. D.) or, perhaps, by one of his contemporaries or pupils.

(7) Stutik., the quotations from the text, found in Râjânaka Ratnakaṇṭha's commentary on the Stutikusumâñjali. These have been of little use to me, as Ratnakaṇṭha generally quotes only what is common to most Anekârthakośas, and not what is peculiar to the Maṅkhakośa. Ratnakaṇṭha's ṭîkâ on the Yudhishṭhiravijayakâvya likewise contains a few quotations from Maṅkha. But when the manuscript of my text was sent to the press, only about thirty pages of that poem had appeared in the Kâvyamâlâ.

Now as to my edition of the text, I think that the two first thirds (v. 1-683) are exhibited, almost without exception, in their original wording, accompanied as they are by a commentary. Of the fact that in the last third of the work there are passages requiring further emendation, I am but too conscious. Compare, *e. g.*, verses 748, 749, 775, 809, 813, 814, 835, 838. Sometimes the two only MSS. at my disposal coincide in what is decidedly wrong. Thus, among the कान्ताः v. 813, A and C read हेला. This cannot be correct, because हेला. has been explained already at 804. I have conjectured खेला.—I should remark that, in the MSS., the verses are not numbered; and that the headings, or rather colophons एकाक्षराः, कान्ताः, etc., regularly introduced in the MSS., have been omitted by me.

My edition of the Maṅkhaṭîkâ is absolutely reliable only as far as it is based upon S. Those parts, which have been edited according to B. alone, are corrupt and defective in many places, and, besides, not free from interpolation. I shall have to say

---

[1]. There is but little hope that a complete MS. of the commentary will ever turn up. Professor Stein, who spared no trouble in hunting for MSS. in Maṅkha's native country, could get hold of no other MS. than of the incomplete copy S above described. Yet a complete copy may be hidden somewhere in India proper, although the editors of the Abhidhânasaṁgraha (Vol. I., Bombay, 1889; last leaf) enumerate the Maṅkhakośa among the अप्राप्तकोशाः.

more on this point in a special paper.[1] Here I can only warn the reader against considering the extracts from B as equal to those from S. The Various Readings should be consulted in every doubtful case.

As I had not a single complete MS. of the Commentary at my disposal, I resolved, though with great reluctance, on giving only extracts, *i.e.*, a selection from the examples illustrating the meanings of the words, to which—unlike the Anekârthakairavâkarakaumudî—the Mankhaṭîkâ almost entirely confines itself. I have retained all examples given for uncommon words and uncommon meanings, and all examples that I could trace to their sources. In case the examples are identical with those quoted in the Commentary on the Anekârthasaṁgraha, a reference to Mh. (Mahendra) has been thought sufficient. On the other hand, I have omitted, as a rule, the examples for words with common meanings, and most of the general references to the Amarakośa, Nighaṇṭu, Âyurveda, &c. But the reader may rest assured that all that is really important, and all that is peculiar to Mankha, has not been omitted. Of the examples, a good many more have been given here than in my extracts from the Anekârthakairavâkarakaumudî, specially whenever my MSS. furnished me with a readable and apparently correct text.

While in Mahendra's Commentary the examples are introduced by यथा and stand after the meanings to which they belong,[2] the author of the Mankhaṭîkâ has followed a different, but certainly not better, method : he has placed the examples before the meanings, separating the latter from the former by the words इत्यादौ. See, *e.g.*, p. 4, l. 24. Now, in order to save space, I have, as a rule, omitted the इत्यादौ and placed the examples after the meanings, just as in my extracts from Mahendra's Commentary.

---

1. I intend to write a supplement to this Preface, corresponding to the Epilegomena to the edition of the Anekârthasaṁgraha, which appeared in the Proceedings of the Imperial Academy of Vienna, Vol. CXXIX, No. XI., Vienna, 1893.

2. A single instance of this method of quoting is found also below, s. v. स्तोक p. 1. 20. This passage, however, is missing in S. Mahendra's method seems to be an improvement upon Mankha's.

The examples adduced in the MSS. of the Commentary amount to about 3,400. Of those which are given in my extracts, many, I regret, had to be left unidentified. No sufficient time was permitted to me for examining thoroughly the extensive literature quoted by the commentator. Those who are better read in classical literature, or have access to books unknown to me, will easily identify a greater number of passages.

As regards the spelling of individual words, I have often adhered to the orthography of the Kaśmîr MSS. (see Prof. Stein's Râjataraṁgiṇî, Preface to vol. I., p. xvi), thus deviating from the authority of the St. Petersburg Dictionaries. It may be that I have gone too far: but I thought it expedient to preserve the peculiarities of the Maṅkhakośa also with regard to the orthography.

In the Various Readings, II. Commentary, pp. 108-116, I have taken into account chiefly the manuscript S., the basis of my edition. I have noted only the more important variations from B.; more especially the numerous interpolations, consisting mostly of quotations from the Viśvaprakâśa and extracts from the Râyamukuṭî ṭîkâ on the Amarakośa, have not been given complete. A few conjectures and corrections and a few additional references and miscellaneous notes have been added to the Various Readings. The reader is requested to pay regard also to the additional corrections at the end of the volume.

The three Indexes, p. 117, will, it is hoped, prove useful to those who, with me, believe in the importance of the native dictionaries and their commentaries.

Finally, the abbreviations, which I have introduced into the Commentary and the Various Readings, have been duly explained at the end of the volume. As to the figures following the *sigla*, the reader is requested to bear in mind that two figures usually refer to the pages and lines in the case of dramas, romances and Alaṁkâraśâstras, but to the cantos (chapters) and verses in the case of Kâvyas, of the Kâvyâdarśa and of the Rudraṭâlaṁkâra.

Single figures always refer to the verses. Roman figures have been employed for the chapters or acts in contradistinction to the pages, *e.g.*, in the quotations from the Bâlarâmâyaṇa.

I have to record my thanks to the Committee of the Imperial Academy of Sciences of Vienna, which entrusted me with the preparation of this edition of the Maṅkhakośa; to K. M. Chatfield, Esq., the late Director of Public Instruction, Bombay; to the Government of India, and to Professor Stein, of Lahore, for the loan of the manuscripts; to Professor Pischel for placing at my disposal his copy of the Berlin MS. of the Viśvakośa; and last, not least, to Hofrath G. Bühler, who first drew to light the Maṅkhakośa, and who, with his continued help and encouragement, furthered the publication of this book.

TH. ZACHARIAE.

*Halle, January 29th,* 1897.

# ओं स्वस्ति श्रीगणेशाय नमः। ओं नमः॥

पातु वोऽधिधरं दूरविकीर्णकरशीकरः।
दुःखबीजच्छिदे वर्षत्करका इव विघ्नजित्॥ १॥
विषमपदविषधरालीं निहत्य संगृह्य शेवधिविशेषान्।
सकलजनसुलभविभवान्कथन निर्मत्सरः कुरुते॥ २॥
भागुरिकात्यहलायुधदुर्गामरसिंहशाश्वतादिकृतान्।
कोशान्निरीक्ष्य निपुणं धन्वन्तरिनिर्मितं निघण्टुं च॥ ३॥
लिङ्गानुशासनानि च विचार्य लक्ष्यं महाकवीनां च।
कुरुतेनेकार्थानां शब्दानां मङ्खकः कोशम्॥ ४॥
यथासंभवकान्तादिक्रमादक्षरसंख्यया।
करामलकवत्साक्षादेष भासिष्यते सताम्॥ ५॥
यत्रैक एव रूढोर्थो यौगिकस्तत्र दर्श्यते।
अनेकस्मिंस्तु रूढेर्थे यौगिकः प्रोच्यते न वा॥ ६॥
पदभङ्गादनेकोर्थः प्रकटीक्रियते न च।
विशेषणप्रत्ययार्थैः सिद्धं लिङ्गं न चोच्यते॥ ७॥
प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित्।
स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित्॥ ८॥
त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति।
निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक्॥ ९॥

---

को धात्रर्कात्मवातेषु कं शिरोम्बुसुखेषु तु।
आकाशे त्रिदिवे नाको लोकस्तु भुवने जने॥ १०॥
पद्ये यशसि च श्लोकष्टङ्को दर्पेश्मदारणे।
अङ्क एकादिगणनान्यास उत्सङ्गचिह्नयोः॥ ११॥

भानुद्रुस्फटिका अर्काः शल्के शकलवल्कले ।
किष्कुर्माने चतुर्विंशद्द्वादशाङ्गुलसंमिते ॥ १२ ॥
साष्टे शते सुवर्णानां हेम्नि हेमदले पले ।
उरोविभूषणे कर्षे दीनारे निष्कमस्त्रियाम् ॥ १३ ॥
रोकौ दीप्तौ बिले चूर्णे कल्कोऽस्त्री समलैनसोः ।
दमेल्पपुत्रयोः स्तोकः पाकौ पचनशावकौ ॥ १४ ॥
शुल्कोऽस्त्री घट्टलभ्योर्यो जामातुर्गृह्यते च यः ।
नगरीशाखयोर्लङ्का शङ्का त्रासवितर्कयोः ॥ १५ ॥
ऊहाकाङ्क्षावितर्केषु तर्कौ मुख्यान्यकेवलाः ।
एके त्रिषु च संख्यायां पङ्कोऽस्त्री कर्दमैनसोः ॥ १६ ॥
चक्रवाकवृकौ कोकौ भेकौ मण्डूकभीरुकौ ।
गृहासक्ताः पक्षिमृगाश्छेकाः सहृदया अपि ॥ १७ ॥
झषायुधभिदोः स्थाणौ शङ्कुः कीलकसंख्ययोः ।
कूपयन्त्रे त्रिका क्लीबे गात्राङ्के त्रितये तथा ॥ १८ ॥
त्रिषु त्रयाणां संघादौ मूकोवागज्ञयोस्त्रिषु ।
राका नवरजःकन्या पूर्णिमा प्रतिपद्युता ॥ १९ ॥
किंशारौ कण्टके च स्याच्छूकोनुक्रोशशुङ्गयोः ।
रत्नस्वरूपभिच्छस्त्रभाण्डाभ्यञ्जनतूलिकाः ॥ २० ॥
परीक्षा च शलाका स्याद्गुरौ देश्ये च दैशिकः ।
चित्रकृद्ब्राण्डशय्याभिच्छलाकासु च तूलिका ॥ २१ ॥
विलेपने चन्दने च परीक्षोद्धृतवस्तुनि ।
ना वर्णकस्तान्तवे स्याद्द्वयो रागेषु वर्णिका ॥ २२ ॥
पर्यायार्थादिकथने व्याख्यातरि भवेत्त्रिषु ।
यूथीभ्यौ गणिका वेश्या दैवज्ञे त्रिषु चित्रकम् ॥ २३ ॥
तिलके ना तु शार्दूले पाठ्यामेरण्डके तथा ।
जम्बुकौ क्रोष्टुवरुणौ कलङ्कोङ्कापवादयोः ॥ २४ ॥
पृथुको बालको भक्ष्यं खलभृष्टार्द्रसस्यजम् ।
आलोकौ दर्शनोद्द्योतौ भेरीपटहमानकः ॥ २५ ॥

शराजयोः स्यान्नालीकस्तक्षकौ नागवर्धकी।
स्यात्पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके ॥ २६ ॥
उलूके करिणः पुच्छमूलोपान्ते च पेचकः।
कमण्डलौ दाडिमे ना करकः करिका पुनः ॥ २७ ॥
मद्यभाण्डे च करका भवेद्वर्षोपले द्वयोः।
करङ्को मांसरहिते ताम्बूलादेश्च भाजने ॥ २८ ॥
— — — — — — — — — — — — — — — — —।
प्रतिकूले प्रतीकं त्रिष्वंशे दीपे च पुंस्ययम् ॥ २९ ॥
छत्रायवान्योर्भूतीकं भूनिम्बे कट्फलेऽपि च।
यवान्यां जीरके दीपे नालंकारे तु दीपकम् ॥ ३० ॥
कौशिका गाधिजोलूकगुग्गुल्विन्द्राहितुण्डिकाः।
कनिष्ठे च दरिद्रे च स्वल्पेऽपि क्षुल्लकस्त्रिषु ॥ ३१ ॥
तिलकल्के सिल्हके च पिण्याकोऽथ द्वयोः खगे।
वर्तकोऽश्वखुरे पुंसि शरे खड्गे च सायकः ॥ ३२ ॥
व्यलीकं कामजे दोषे विलक्षाप्रिययोरपि।
विपर्यये रुजायामप्यकार्ये चाथ गैरिकम् ॥ ३३ ॥
स्वर्णे धातुविशेषे चाथाम्बिका मातृकोमयोः।
भालानृताप्रियेऽलीकमनूकं कुलशीलयोः ॥ ३४ ॥
क्षुरिकोमा करेण्वां च धेनुका चाथ कालिका।
देव्यां वृद्धौ स्वर्णमले मेघजालेऽथ कारिका ॥ ३५ ॥
यातनावृत्तिकृतिषु ना भृत्ये त्रिषु कर्तरि।
कर्मादौ साधने क्लीबे कर्णिका कर्णभूषणे ॥ ३६ ॥
करिहस्ताङ्गुलौ पद्मबीजकोश्यां स्त्रिया गदे।
बाह्लीकं कुङ्कुमे हिङ्गौ वाह्लिदेशोद्भवे त्रिषु ॥ ३७ ॥
विवाहमङ्गलद्रव्ये कौतुकं कुतुके तथा।
द्वयोः शिशौ वालुकायां भूषाभेदे च वालिका ॥ ३८ ॥
कङ्कणे चाङ्गुलीये च ह्रीवेरे चापि वालकम्।
प्रियकौ नीपबन्धूकौ कारम्भो मृगभित्तथा ॥ ३९ ॥

उदर्के उत्तरे काले फले चोत्तरकालिके ।
मेचकं त्रिषु कृष्णे स्यात्पुमांस्तु शिखिचन्द्रके ॥ ४० ॥
विधवाया जारजाते गुले पिण्डे च गोलकः ।
त्रिश्लोक्यां कृष्णलवणे तिलकं क्लोम्नि चास्त्रियाम् ॥ ४१ ॥
जडुले चित्रके ना द्रुरातङ्कास्तापभीरुजः ।
गुणवृक्षः कूपकः स्यात्तोयार्थं विवरश्च यः ॥ ४२ ॥
अल्पकूपः श्रोणिपार्श्वगर्तावथशिलाजतु ।
सौभाञ्जनं गन्धकं स्याद्रेणुकौषधभित्तथा ॥ ४३ ॥
भार्गवाम्बा पुण्डकोतिमुक्तेक्षुतिलकेषु तु ।
प्रस्तरे पुलकं ना तु रोमाञ्चक्रिमिभेदयोः ॥ ४४ ॥
क्षुद्रवैरिणि रोमाञ्चे तरोरङ्गे च कण्टकः ।
कटकोस्त्री नितम्बोद्रेः क्लीवे वलयसैन्ययोः ॥ ४५ ॥
इक्षुशीधौ शीधुपाने सरकं मद्यभाजने ।
तारकर्क्षेक्षिण च न ना दैत्यभेदे पुमानयम् ॥ ४६ ॥
देवीभेदे तारिका स्यात्पिटके मत्स्यपक्षिणाम ।
क्षारकं कोरके चाथ जीवकः प्राणके त्रिषु ॥ ४७ ॥
बन्धूके क्षपणे पुंसि जीवने वेतने स्त्रियाम् ।
पर्यस्तिकायां शयने पर्यङ्कोथ भयोज्झिते ॥ ४८ ॥
त्रिष्वभीकः कामयिता कुलटेभी च बन्धकी ।
आधावस्त्री बन्धिका तु बन्धकारिणि वाच्यगा ॥ ४९ ॥
वार्द्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि ।
स्याद्दर्शकः प्रतीहारस्त्रिषु दर्शयिता पुनः ॥ ५० ॥
चर्चायां स्थासको ज्ञेयो हारभेदेपि बुद्बुदे ।
स्यादंशुकं शुक्लवस्त्रे वस्त्रमात्रोत्तरीययोः ॥ ५१ ॥
शिशुकः शिशुमाराख्यनक्रोलूप्योश्च बालके ।
त्रिष्वथो मधुयष्ट्यां स्यान्मधुकं वन्दिभित्पुमान् ॥ ५२ ॥
खनकी त्रिषु शिल्पिन्यां खनकी भेत्तृमूषकौ ।
जलाधारे स्त्रियां रत्नाद्याकरे चाथ कार्मुकम् ॥ ५३ ॥

चापे त्रिषु तु कर्मण्ये शक्तमात्रेथ कञ्चुकः ।
निर्मोके कवचे वारवाणेथ धनदस्य पूः ॥ ५४ ॥
अलका स्त्रीकचे न स्यनीकं तु रणसैन्ययोः ।
वञ्चको जम्बुके धूर्ते स्त्री चुल्ल्यां निकटेन्तिकम् ॥ ५५ ॥
विपाकौ पचनस्वेदौ कृषकौ फालकार्षकौ ।
कनकं मातुले स्वर्णे रेखाश्रुयोस्तु राजिका ॥ ५६ ॥
स्यादार्याया शाकुनिके लुब्धको मध्यगो मणिः ।
नेता च नायको नाट्यपात्रभूम्युत्तमे द्वयोः ॥ ५७ ॥
खेटकौ ग्रामफलकौ पेटकं भाण्डवृन्दयोः ।
त्रिष्वतो जालिकौ धूर्तधीवरौ पद्मकेसरे ॥ ५८ ॥
पुष्परेणौ च किञ्जल्को दारकौ बालभेदकौ ।
करम्भ्यां भाण्डभेदे चाप्युष्ट्रिकाथ वितर्दिका ॥ ५९ ॥
वलभी चोन्नते देशे विटङ्कः पुंनपुंसकः ।
शांकरे शूलधनुषी पिनाकावथ जालकम् ॥ ६० ॥
जालाभे क्षारके संघे ना प्राणी स्त्री मुखावृतौ ।
सेवाजीवे प्रसेवे च सेवकः सूतको ग्रहे ॥ ६१ ॥
सूतिका सूतका सूता क्लीवे जन्मनि ना रसे ।
जनकौ पितृवैदेहौ दीक्ष्यभेदे तु पुत्रकः ॥ ६२ ॥
कृत्रिमादौ द्वयोः स्त्रीत्वे पुत्रका पुत्रिकापि च ।
अभ्रातृपितृका कन्या पूर्णदाया च पुत्रिका ॥ ६३ ॥
जलधानी वारिपर्णी वलनं नरकास्पदम् ।
कुम्भिका प्राणरोधे ना कुलकं श्लोकसंचये ॥ ६४ ॥
न स्त्री पटोले काकेन्दुतरौ श्रेष्ठिनि चापि ना ।
पट्टिकातूलपूगेषु क्रमुकोथौषधीभिदि ॥ ६५ ॥
आढकी मानभित्स्त्री कैशिकं केशसंचये ।
ना रागभेदे वृत्तौ तु कैशिकी हस्तिबिन्दुषु ॥ ६६ ॥
औषधे च कुसुम्भे च पद्मकं स्यात्तु यावकः ।
कुल्माषेलक्तके च स्युः सेनारक्षास्तु सैनिकाः ॥ ६७ ॥

सेनायां समवेताथ रीतिपुष्पं तु पुष्पकम् ।
विमाने नेत्ररोगे ना पौष्पिकी त्रिषु शिल्पिनि ॥ ६८ ॥
रीतिपुष्पे भवेत्क्लीबं वातिकौ रोगिमान्त्रिकौ ।
भावुकं कुशलं क्लीबं भवेद्भवितरि त्रिषु ॥ ६९ ॥
रुचकः स्यान्मातुलुङ्गैरण्डभूषाललामसु ।
क्लीबे सौवर्चलेथान्तरङ्गः उण्डूकमुत्करे ॥ ७० ॥
पुंस्यथो मल्लिका दीपपात्रं शेफालिवाद्यभित् ।
मोचकः शल्मलिः सौभाञ्जनो रम्भा च मोक्तरि ॥ ७१ ॥
तद्धेतौ त्रिषु चाङ्केरी शौण्डिकी चुक्रिकाम्लिका ।
पदातिः पदिकः पुंसि भवेत्स्थानवति त्रिषु ॥ ७२ ॥
अलातमुल्मुकं वृष्णिराजभेदे पुमानयम् ।
मड्डुकं वाद्यभेदे च मुष्टौ स्यात्फलकस्य च ॥ ७३ ॥
खजाको दारुहस्ते च मन्थे च पदकः पुमान् ।
पदाध्येता मध्यमणिश्चरणत्रे नपुंसकम् ॥ ७४ ॥
क्रीताद्यर्थे पादिकः स्याद्भेद्यवत्पादिका पुनः ।
उपानद्गसतूर्येण वेधः स्वर्णादिकस्य च ॥ ७५ ॥
चालको दुष्टहस्ती स्याच्चाक्रिकश्चाथ चन्द्रकः ।
वर्हमपक्षे तोयस्थतैलादिप्रसरे तथा ॥ ७६ ॥
मोदको भक्ष्यभित्पुंसि हर्षहेतौ भवेत्त्रिषु ।
कीचकाः स्युर्विराटस्य स्याला वंशाश्च सस्वनाः ॥ ७७ ॥
सिंहिका राहुमाता स्याद्घाशिका सिंहपोतिका ।
लाक्षारक्तो लाक्षिकः स्याल्लक्षमूल्यश्च भेद्यवत् ॥ ७८ ॥
इक्ष्वाकुः कटुतुम्ब्यामप्यादिराजेथ कालिमा ।
स्वर्णव्याजो लोहमलं श्यामिका गण्डकं पुनः ॥ ७९ ॥
उपधाने स्त्रियां छेदे ना प्राण्यथ कदम्बकम् ।
समूहे सर्षपे पुंसि विषे सौराष्ट्रिकः पुमान् ॥ ८० ॥
सुराष्ट्रजे त्रिष्वथार्घोरुके चण्डातकं नरि ।
करवीरौषधौ गन्धाश्मनि सौगन्धिकं तथा ॥ ८१ ॥

कह्लारेथ क्लीतकिका मधुयष्टी च नीलिका ।
अश्मन्तकं भवेच्चुह्ल्यां ना वृक्षतृणभेदयोः ।। ८२ ।।
तार्क्ष्ये गणेशे प्रेतेशे सुगते च विनायकः ।
पटोलिकाप्यपामार्गः कोशातक्यथ कट्फले ।। ८३ ।।
करञ्जे खदिरे सोमवल्कः सालावृकः कपिः ।
क्रोष्टा श्वा स्यादथायुष्मान्भवेज्जैवात्रिकः शशी ।। ८४ ।।
स्तनवृन्ते पिप्पलकः शस्त्रीसीवनसूत्रयोः ।
अङ्गारकः पक्षिभेदे भौमे वह्निकणे तथा ।। ८५ ।।
द्वयोः कपर्दके बीजकोशेब्जस्य वराटकः ।
प्रसेवकस्तु ककुभे त्रिषु सेवापरायणे ।। ८६ ।।
हारभेदे माणवको बाले कुपुरुषे द्वयोः ।
वैदेहको वाणिजके शूद्राद्वैश्यासुतेपि च ।। ८७ ।।
विदेहादागतादौ च द्वयोः कौलेयकः शुनि ।
त्रिषु कुल्येथ यन्ता च पोतवाहो नियामकः ।। ८८ ।।
स्याद्दाम्भिकः कौक्कुटिको यश्चादूरेरितेक्षणः ।
लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः ।। ८९ ।।
वीच्युत्कण्ठे उत्कलिके देवे वृन्दारकः पुमान ।
त्रिषु मुख्ये मनोज्ञे च पुण्डरीकस्तु दिग्गजे ।। ९० ।।
व्याघ्रे सिताम्बुजसितच्छत्त्रयोस्तु नपुंसके ।
अनेलमूकस्त्रिष्वन्धे शठे वाक्कायवर्जिते ।। ९१ ।।
पीतयूथ्यां स्त्रियां हेमपुष्पिका चम्पके नरि ।
उपकर्य्यां त्रिषु स्त्री तु पटकुट्युपकारिका ।। ९२ ।।
बोधके त्रिषु खट्वाङ्ग्याधारे स्यात्प्रतिपादकम् ।
मातुलापत्ये धत्तूरफले मातुलपुत्रकः ।। ९३ ।।
खानि स्वरिन्द्रियाकाशा आद्युपायानने मुखम् ।
अग्रज्वालाकेकिचूडाचूडाशाखाशिफाः शिखाः ।। ९४ ।।
शङ्खो निधौ ललाटास्थ्नि नागेन्द्रांशे नखौषधौ ।
कम्बावस्त्री नखोप्येवमोषधौ करजे तथा ।। ९५ ।।

व्युष्टौ मन्त्रषडोंकारमनोज्ञावथ दैवते ।
लेख्ये च लेखः पङ्क्तौ स्त्री चन्द्रांशाभोगयोरपि ॥ ९६ ॥
व्याज आभोग उल्लेख्ये रेखा स्यादल्पके तथा ।
उखा स्थाल्यां यज्ञभाण्डे शाखा वेदद्रुमांशयोः ॥ ९७ ॥
हस्तद्वाराङ्घ्र्यवयवे सखा मित्रसहाययोः ।
आदौ प्रधाने प्रमुखमग्रे चाथ नपुंसकम् ॥ ९८ ॥
धनुष्कस्थानभेदे ना वैशाखो मासमन्थयोः ।
वाद्यभाण्डे लेपने च गोमुखं विशिखा पुनः ॥ ९९ ॥
प्रतोल्यां च खनित्र्यां च निशूडे सायके पुमान् ।
विशाखः षण्मुखे शाखारहिते भे पुनः स्त्रियाम् ॥ १०० ॥
मयूखस्त्विट्करज्वालास्वलिबाणौ शिलीमुखौ ।
स्त्रियां वह्न्यर्चिरोषध्योः क्लीबमग्निशिखं वरे ॥ १०१ ॥
क्लीबे जले ब्रह्मणि तु पुमान्स्यात्सर्वतोमुखः ।
स्यात्क्लीबे मकरमुखं मकराकारधारिणि ॥ १०२ ॥
जलनिर्गमनद्वारे जानूर्ध्वावयवे तथा ।
स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले ॥ १०३ ॥
लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः सङ्गः श्लेषरोधयोः ।
भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ॥ १०४ ॥
मोक्षविज्ञानवैराग्ययोनिधर्मैश्वर्यो मृगः ।
मृगशीर्षे हस्तिजातौ कुरङ्गे मार्गणे पशौ ॥ १०५ ॥
सषडङ्गुलयोनौ तु नायिकायां भवेन्मगी ।
सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ॥ १०६ ॥
पालनेभ्यवहारे च निर्वेशे च पणस्त्रियः ।
भोगः स्याद्वित्तसुखयोरहेश्च फणकाययोः ॥ १०७ ॥
योगः संनहनोपायध्यानसंगतियुक्तिषु ।
अलब्धलाभे भैषज्ये शरे विस्रब्धघातिनि ॥ १०८ ॥
मासान्वेषणयोर्मार्गस्तथा मृगमदाध्वनोः ।
द्वयोरहौ गजे नागः क्लीबे सीसकरङ्गयोः ॥ १०९ ॥

संघगूवाकयोः पुगः शैलवृक्षौ नगात्रगौ ।
रागः क्लेशादिके सङ्गे पानके लोहितादिषु ॥ ११० ॥
यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु ।
चतुर्हस्तप्रमाणे च शरार्कविहगाः खगाः ॥ १११ ॥
सांख्योक्तप्रकृतौ बुद्धौ लिङ्गं स्याच्चिह्नशेपसोः ।
उपकारिण्युपायेऽङ्गं गात्रे ना त्वङ्गवत्यथ ॥ ११२ ॥
नृत्तयुद्धखले रागे रङ्गः क्लीवे त्रपुण्यथ ।
धनुर्मात्रे विष्णुचापे शार्ङ्गं भृङ्गस्तु षट्पदे ॥ ११३ ॥
धूम्राटे च त्वचे क्लीवे शृङ्गं स्वाम्याद्रिकूटयोः ।
क्रीडाम्बुपात्रे पश्वङ्गे भागो भाग्यैकदेशयोः ॥ ११४ ॥
भेदोर्मिभक्तिकौटिल्यभीषु भङ्गः स्त्रियां शणे ।
वेगः प्रवाहजवयोर्भङ्गिर्भक्तितरंगयोः ॥ ११५ ॥
गिरीशभास्करौ भर्गौ खङ्गोसौ गण्डकेपि च ।
वर्गः पक्षे समूहे च त्यागस्त्यजनदानयोः ॥ ११६ ॥
वङ्गं त्रपुणि ना राशि तद्देशे तत्सुते बहुः ।
भृगुः प्रपातो मुनिभित्तत्सुते पुंसि भूमनि ॥ ११७ ॥
तुङ्गाजगन्धा पुंनागे नोच्चे त्रिष्वल्पमोघयोः ।
काकोदुम्बरिकायां ना फल्गुरिङ्गं नरीङ्गिते ॥ ११८ ॥
क्लीवं जगति रक्ताङ्गः कम्पिल्येङ्गारके तथा ।
आशुगौ वायुविशिखौ भुजंगः शिङ्गसर्पयोः ॥ ११९ ॥
गन्धमाल्योपहारे स्यादायोगो व्यापृतावपि ।
परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि ॥ १२० ॥
कलिङ्गः स्यादिन्द्रयवे शाके धूम्याटदेशयोः ।
चातके हरिणे पुंसि सारङ्गः शबले त्रिषु ॥ १२१ ॥
शालिप्रभेदे शलभे पतंगः पक्षिसूर्ययोः ।
मातङ्गाविभचण्डालौ निषङ्गः सङ्गतूणयोः ॥ १२२ ॥
वराङ्गं मस्तके योनौ त्वचेथ कपिभेकयोः ।
प्लवगो लोचनान्ते स्यादपाङ्गस्तिलकेपि च ॥ १२३ ॥

रते भोगे च संभोगः प्रियङ्गुः कङ्गुसस्ययोः ।
निर्माणे च स्वभावे च निसर्गो द्रुभिदग्ययोः ॥ १२४ ॥
पुंनागोथ विसर्गः स्यात्त्यागे बिन्दुद्वये तथा ।
सामान्यविधिरुत्सर्गः प्रचारस्त्याग एव च ॥ १२५ ॥
समङ्गा गण्डकाल्याख्यशाकमञ्जिष्ठयोर्भवेत् ।
स्यादुद्वेगः पुनान्खेदे क्लीबे पूगफले पुनः ॥ १२६ ॥
त्रिवर्गो धर्मकामार्थाः स्थानं वृद्धिः क्षयस्तथा ।
रतान्विती संप्रयोगाद्यभिषङ्गः पराभवे ॥ १२७ ॥
आक्रोशशापयोश्चापवर्गो मोक्षे क्रियाफले ।
त्यागे चाथोपरागः स्यादुपरक्तौ विधुंतुदे ॥ १२८ ॥
व्यसनेथ वृके काव्यभेद ईहामृगः पुमान् ।
पदभेदे तूपसर्गः पीडोपद्रवयोरपि ॥ १२९ ॥
उपयोगस्तु भोगे स्याद्विद्याया ग्रहणे तथा ।
कथाप्रसङ्गः संलापक्षणे गारुडिके तथा ॥ १३० ॥
वृन्दाम्बुवेगयोरोघो दुःखांहोव्यसनेष्वघम् ।
स्त्री स्पृक्काल्पेष्टाश्वसारे लघु त्रिष्वगुरौ तु ना ॥ १३१ ॥
मूल्ये पूजाविधावर्घो द्रव्ये तदुपकारके ।
आयुधार्गलघातेषु परिघः प्रतिघः पुनः ॥ १३२ ॥
द्वेषे शत्रावथ ग्रीष्मे निदाघः स्वेदतापयोः ।
तापके त्रिष्वथामोघा विडङ्गं पाटला तथा ॥ १३३ ॥
दिग्देशकाले पूर्वादिभावे प्रागादयस्त्रिषु ।
वल्कचर्मत्वचेषु त्वग्वाग्वाण्यां वाचकार्थयोः ॥ १३४ ॥
शुक्छोके व्यसने तापे रुक्स्यादीप्त्यभिलाषयोः ।
श्मश्रुमर्मभिदोर्दम्भे केशभञ्जनभाजने ॥ १३५ ॥
कुविन्दभाण्डे कूर्चः स्याच्चित्रकृद्भाजने द्वयोः ।
सौवर्णरसदाने स्त्री ताम्रादेः पावके शुचिः १३६ ॥
मास्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु ।
इच्छांशुसङ्गेषु रुचिः केशे शुक्रसुते कचः ॥ १३७ ॥

अर्चे पूजाकृती काचाः शिक्यमृद्भेददृग्रुजः ।
व्यधनेभिनये सूचा वीचिः स्वल्पतरंगयोः ॥ १३८ ॥
देवीस्थासकचिन्तासु चर्चा नीचमधोधमम् ।
त्रिषूर्ध्वोत्कृष्टयोश्चोच्चः पिचुः स्यात्पायुतूलयोः ॥ १३९ ॥
मोचा कदल्यां ना वृक्षे चोचं पालेवते त्वचे ।
देशमेखलयोः काञ्ची प्रपञ्चस्ततिमाययोः ॥ १४० ॥
संकोचं कुङ्कुमे क्लीवं ना विकासविपर्यये ।
त्रिषूत्फुल्ले तु विकचो द्रव्यभेदे नपुंसकम् ॥ १४१ ॥
सूक्ष्मैला नीलिनी तुच्छा लाघवेल्पे भवेत्त्रिषु ।
कच्छस्तु गहनो देशस्तुन्याख्या नौषधिर्भवेत् ॥ १४२ ॥
स्तवके हारभेदे च गुच्छोच्छो निर्मलेल्पके ।
मोचस्रावो भवेत्पिच्छा द्वयोस्तु विषदेतरे ॥ १४३ ॥
अब्जो धन्वन्तरौ चन्द्रे शङ्खे पद्मे नपुंसकम् ।
त्रिषु कुब्जेधोमुखे च न्युब्जो बीजं तु रेतसि ॥ १४४ ॥
हेतावङ्कुरकार्ये च दन्तविप्राण्डजा द्विजाः ।
स्त्री करेण्वोषधौ व्याजो दोषे दम्भापदेशयोः ॥ १४५ ॥
छागोजो ब्रह्मविष्णीशा गोष्ठाध्वनिवहा व्रजाः ।
समे क्ष्मांशे रणेप्याजिः प्रजा स्यात्संततौ जने ॥ १४६ ॥
ध्वजश्चिह्ने पताकायां स्वके नित्ये निजं त्रिषु ।
खनौ सुरागृहे गञ्जा भाण्डागारे पुमानथ ॥ १४७ ॥
कुञ्जोस्त्री गहने दन्ते गुञ्जा स्यात्काकचिञ्चिका ।
वाद्यभाण्डे च वाणिज्ये तज्जीविन्यपि ना वणिक् ॥ १४८ ॥
निसर्गे च सहोत्थे च सहजं त्रिष्वथाण्डजाः ।
मीनपक्ष्यहयः सामजाते हस्तिनि सामजः ॥ १४९ ॥
वलजे क्षेत्रपूर्द्वारे त्रिषु स्याद्वल्गुदर्शने ।
अङ्गजो मन्मथे पुत्रे शोणिते तु नपुंसकम् ॥ १५० ॥
लोहिताक्ष्यांवहिभुजावग्रजो भ्रातृविप्रयोः ।
लाक्षा स्त्रियां स्यात्क्रिमिजा पट्टवस्त्रे नपुंसकम् ॥ १५१ ॥

करजो नक्तमाले स्यान्नखे च निचुलोम्बुजः ।
पद्मे क्लीवं विप्रवरे द्विजराजः शशिन्यपि ॥ १५२ ॥
धर्मराजः प्रेतराजे षडभिज्ञे युधिष्ठिरे ।
ग्रहराजौ चन्द्रसूर्यौ शूद्रनीचौ जघन्यजौ १५३ ॥
ज्ञः सौम्ये त्रिषु सूरौ त्रिष्वज्ञो मूर्खेर्भके द्वयोः ।
ज्ञे प्राज्ञस्त्रिषु धीः प्रज्ञा संज्ञाश्चिन्नामसूचनाः ॥ १५४ ॥
शिवबुद्धौ तु सर्वज्ञौ दोषज्ञा वैद्यवित्खलाः ।
पुंस्यात्मनि प्रवीणे तु क्षेत्रज्ञो वाच्यलिङ्गकः ॥ १५५ ॥
मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ।
अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ॥ १५६ ॥
क्लीवे हस्तिनखे घण्टा किङ्किणी पाटलिस्तरुः ।
सूक्ष्मैलायां त्रुटिः स्त्री स्यात्कालेल्पे संशये तथा ॥ १५७ ॥
अत्यर्बुदाश्रयः कोटचो मूले लग्नकचे जटा ।
मांस्यां नटस्तु पत्तोर्णो नडचां स्त्री नर्तके द्वयोः ॥ १५८ ॥
व्युष्टिः फले समृद्धौ च दृष्टिर्ज्ञानेक्षिण दर्शने ।
इष्टिर्यागेच्छयोः स्पष्टं निश्चिते बहुनि त्रिषु ॥ १५९ ॥
शवे श्रोणौ कलिञ्जे च गजगण्डे भृशे कटः ।
रसे कटुः कटुकार्ये त्रिषु मत्सरतीक्ष्णयोः ॥ १६० ॥
चटुः पिचण्डे भूपादेरपि सद्गुणवर्णने ।
कष्टे तु कृच्छ्रगहने कृष्टिः कर्षे बुधे तु ना ॥ १६१ ॥
देवशिल्पिनि तक्ष्ण्यर्के त्वष्टाथ चतुरेरुजि ।
त्रिष्वगुरौ ना पटोले क्लीवं तु लवणे पटु ॥ १६२ ॥
दिष्टं दैवे पुमान्काले कुटः कुम्भे गृहे द्वयोः ।
अत्यर्थगृहयोरट्टः सिद्धान्ने च वणिक्पथे ॥ १६३ ॥
पोटा दासी द्विलिङ्गा च सृष्टिः सर्गस्वभावयोः ।
पुटं व्याघ्रनखे जातीफले हस्तादिसंपुटे ॥ १६४ ॥
त्सरौ पणे पाणिबन्धे मुष्टिः पर्यन्तवस्त्रयोः ।
पट्टो घट्टः शुल्कदेशे तरोपाये घटी द्वयोः ॥ १६५ ॥

भाण्डे गोष्ठ्यां हस्तिपङ्क्तौ घटनायां तथा घटा ।
दिष्टिः स्यात्तु परीमाणभेद आनन्दने स्त्रियाम् ॥ १६६ ॥
आजूवेतनयोर्विष्टिः करणे कर्मकृत्यपि ।
अविस्पष्टे तु वचासि म्लिष्टं म्लाने त्रिलिङ्गकम् ॥ १६७ ॥
आशंसिते भवेदिष्टं यज्ञादौ दीयते च यत् ।
दृष्टं स्याद्दैहिके दृष्टौ त्रिषु ज्ञातेवतारिते ॥ १६८ ॥
ग्रामभेदे मले खेटः कुत्सिते च भवेत्त्रिषु ।
रिष्टं स्यादशुभे पापे घृष्टिर्घर्षे किरे तु ना ॥ १६९ ॥
वातवर्षप्रतिहते विस्मिते हर्षिते त्रिषु ।
रोमाञ्चविषये क्लीवे हृष्टः केशेषु पुंस्ययम् ॥ १७० ॥
झाटामलक्यां गहने ना सटा सिंहकुन्तले ।
जटायां स्वादु शुद्धं च क्षान्तं मृष्टं भवेत्त्रिषु ॥ १७१ ॥
शिष्टस्तु साधौ खसिते विहिते शिक्षिते त्रिषु ।
त्रोटिः स्यात्पक्षिचञ्च्वां स्त्री द्विधाभावे च वस्तुषु ॥ १७२ ॥
अरिष्टमासवे तक्रे लक्षणे मृत्युसूचके ।
सूतिगेहे चाप्यशुभे शुभे तद्वति तु त्रिषु ॥ १७३ ॥
ना दैत्ये लशुने काके निम्बफेनिलवृक्षयोः ।
सुवासिन्यां चिरण्टी स्याद् द्वितीयवयसि स्त्रियाम् ॥ १७४ ॥
परिचर्यान्वेषणयोः परीष्टिः स्त्री त्रिषूत्कटः ।
प्रबले च प्रमत्ते च कूपीटमुदरे जले ॥ १७५ ॥
त्रिकटस्तु करालोर्वोरवटः कूपगर्तयोः ।
त्रिषु प्रमत्ते करटः स्यात्तु काकेभगण्डयोः ॥ १७६ ॥
खाद्यप्रभेदे चिपिटस्तथा पिच्चितविस्तृते ।
अज्ञानादर्शनासौम्याक्षिष्वदृष्टिरथ त्रिवृत् ॥ १७७ ॥
सूक्ष्मैला त्रिपुटा मर्कटचपामार्गः करञ्जभित् ।
कपिकच्छूद्वयोः प्राणीभगण्डद्वारपट्टयोः ॥ १७८ ॥
कवाटः स्यादथोच्छिष्टं भुक्तशेषे नपुंसके ।
क्षते च वृक्षभेदस्तु पत्तोर्णाख्यः कुटन्नटः ॥ १७९ ॥

कुटन्नटा दाशपुरे शाकभेदे न पुंसि च ।
देशानोकहयोर्भेदे करहाटोम्बुजाङ्कुरे ॥ १८० ॥
शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे ।
प्रत्याख्याते प्रेषिते च प्रतिशिष्टस्त्रिलिङ्गकः ॥ १८१ ॥
तुलाकोटिर्मानभेदेर्बुदे स्यान्नूपुरे पुमान् ।
पुंसि कोष्ठोन्तर्जठरं कुसूलोन्तर्गृहं तथा ॥ १८२ ॥
दिक्कालोत्कर्षमर्यादाः काष्ठाः क्लीबे तु दारुणि ।
समीपगलशब्देषु कण्ठोथर्क्षभिदि स्त्रियाम् ॥ १८३ ॥
मासभेदे पुमाञ्ज्येष्ठस्त्रिषु वृद्धप्रशस्ययोः ।
गोस्थानाङ्गनयोर्गोष्ठं कुष्ठमोषधिरोगयोः ॥ १८४ ॥
निष्ठा निष्पत्तिनाशान्ताः पार्ष्णिगप्रसभौ हठौ ।
पाठः पुमानध्ययने स्त्रियां स्यादोषधीभिदि ॥ १८५ ॥
देशभेदे महादेवे श्रीकण्ठः संकरोद्भवे ।
अम्बष्ठो यूथिकापाठाचाङ्गेरीषु स्त्रियां भवेत् ॥ १८६ ॥
प्रतिष्ठास्पदमर्यादादेवादिस्थापनेष्वथ ।
अतिविस्तीर्णवरयोर्वरिष्ठं स्यात्त्रिलिङ्गकम् ॥ १८७ ॥
कमठौ मानभित्कूर्मौ कनिष्ठोतियुवाल्पयोः ।
नीलकण्ठः शिवो बर्ही कलकण्ठौ सुवाक्पिकौ ॥ १८८ ॥
चाङ्गेरी स्याद्दन्तशठा ना जम्बीरकपित्थयोः ।
पतिवत्नीसुते जारात्कुण्डः क्लीबे न भाजने ॥ १८९ ॥
न ना कुण्डी जलाभ्यादेराधारे स्यान्नपुंसकम् ।
वंशाङ्कुरे सिंहनादे क्ष्वेडा ना विषशब्दयोः ॥ १९० ॥
इषौ पुमान्विपाठः स्यात्पाठहीने तु वाच्यवत् ।
मस्त्वाचामद्रवा मण्डास्तरुस्कन्धलतेपि च ॥ १९१ ॥
काण्डोस्त्री दण्डबाणार्ववर्गावसरवारिषु ।
स्याद्भाण्डमश्वाभरणे पात्रे मूलवणिग्धने ॥ १९२ ॥
तुर्योपाये राजबले दण्डोस्त्री लगुडे मथि ।
गुडौ गोलेक्षुविकृती स्नुहीगुलिकयोः स्त्रियाम् ॥ १९३ ॥

संघातमासयोः पिण्डी द्वयोः पुंसि कलेवरे ।
गण्डौ कपोलविस्फोटौ मुण्डं के त्रिषु मुण्डिते ॥ १९४ ॥
स्थाणौ तु ना त्रिष्वजातशृङ्गकाकृत्तचूडयोः ।
खण्डोस्त्री शकलेपीक्षुभेदे स्फुटितशृङ्गके ॥ १९५ ॥
द्वयोर्गवादौ शौण्डा तु पिप्पली वृषभे नरि ।
समर्थे मधुसक्ते च विज्ञेयो वाच्यलिङ्गकः ॥ १९६ ॥
रण्डा मूषकपर्णी स्याद्विधवा कठिने तथा ।
मुष्के खगादिकोशेण्डं क्रिरि क्रोडो न नोरसि ॥ १९७ ॥
कृपावमर्दयोः पीडा नीडं स्थानकुलाययोः ।
न स्त्री कायसिरा नाडी नालं कालश्च षट्क्षणः ॥ १९८ ॥
शुण्डा पानमदस्थानं स्तम्बेरमकरस्तथा ।
क्षुरा वक्त्रैकदेशश्च कुब्जे पृष्ठगले गडुः ॥ १९९ ॥
रोगेथौषधिभिचण्डा गणे ना कोपने त्रिषु ।
चण्डी देव्यां गोपतौ तु षण्डो वत्स्यादिसंचये ॥ २०० ॥
सर्पमांसात्पशू व्याडौ भूगोवागप्सरःस्विडा ।
तरुस्कन्धे प्रकाण्डोस्त्री प्रशंसायां नपुंसकम् ॥ २०१ ॥
सपिण्डौ पुत्रदायादौ शिखण्डो बर्हचूडयोः ।
पोगण्डो विकलाङ्गः स्याद्बालश्चाषोडशाब्दगः ॥ २०२ ॥
शक्तस्थूलौ त्रिषु दृढौ व्यूढौ विन्यस्तसंहतौ ।
जडतन्द्रितयोर्मूढो रूढोङ्कुरितलग्नयोः ॥ २०३ ॥
भृशप्रतिज्ञयोर्बाढं लीढं स्वादितम्लिष्टयोः ।
गाढौ विलोडितवृढावूढौ धृतविवाहितौ ॥ २०४ ॥
उदूढावूढपृथुलावुत्राढं भृशकृच्छ्रयोः ।
उपोढमूढमात्रे स्यात्समासन्नेपि च त्रिषु ॥ २०५ ॥
आषाढो व्रतिनां दण्डे मासभूधरभेदयोः ।
श्लिष्टस्पृष्टास्वादिते त्रिष्वालीढं चापभृत्स्थितौ ॥ २०६ ॥
अतिक्रमेत्यूर्ध्वगमे चात्यारूढं नपुंसकम् ।
अध्यारूढः सहेवाके त्रिषु पृष्ठगते तथा ॥ २०७ ॥

भ्रूणोऽर्भके स्त्रैणगर्भे बाणो बलिसुते शरे ।
देवभेदे स्त्रियां वाचि द्वयोर्दासीकुरण्टके ॥ २०८ ॥
स्त्रियामजाज्यतिविषापिप्पलीष्वल्पविप्रुषोः ।
कणोऽतिसूक्ष्मधान्यांशे कर्णोऽरित्रे श्रुतौ नृपे ॥ २०९ ॥
गणः समूहे प्रमथे संख्यासैन्यप्रभेदयोः ।
ग्लहे माने श्वेतिकानां मूल्ये कार्षापणे धने ॥ २१० ॥
द्यूतादौ कल्पिते चैव बद्धमुष्टौ भृतौ पणः ।
रज्जौ मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये ॥ २११ ॥
भागभाण्डोत्कर्षशौर्यसत्त्वसंध्यादिके गुणः ।
निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ॥ २१२ ॥
वर्णो गुणव्रतयशःशुक्लादिब्राह्मणादिषु ।
विलेपने कुथायां च गीते रूपेऽक्षरेऽस्त्रियाम् ॥ २१३ ॥
ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः ।
सूर्मीस्तम्भगदाः स्थूणास्तृष्णेषणपिपासयोः ॥ २१४ ॥
विषाजिलोहाभिसरे तीक्ष्णमस्त्री खरे त्रिषु ।
अलिञ्जरे मेहनांशे स्तनेऽजादिगलस्तने ॥ २१५ ॥
मणिः कृष्णस्तु बीभत्सौ व्यासशक्रकविष्णुषु ।
वर्णे त्रिषूषणे क्लीबे द्रौपदीकणयोः स्त्रियाम् ॥ २१६ ॥
वीणादिवादनोपाये कोणोऽश्रौ लगुडेऽपि च ।
शोणः स्याद्बन्धुजीवाभे नदे लोहितवाजिनि ॥ २१७ ॥
बलवाय्वसवः प्राणा जुगुप्साकरुणे घृणे ।
श्रेणिः स्त्री तुल्यशिल्पानां संहतिः कुलमावलिः ॥ २१८ ॥
पादग्रन्थेरधः पार्ष्णिः स्त्रियां स्याद्वाहिनीकटिः ।
मध्यमे पाण्डवे शक्रे जिष्णुः स्यात्त्रिषु जित्वरे ॥ २१९ ॥
प्रमाणकाकयोर्भेदे द्रोणोऽर्जुनगुरावपि ।
द्रोणी काष्ठाम्बुवाहिन्यां भवेदन्नादिभाजने ॥ २२० ॥
नीलिन्यां च गुहायां च देवताडो नदीस्रुतिः ।
वेणी केशकलापः स्यादुष्णः स्वेदनिदाघयोः ॥ २२१ ॥

त्रिषु तप्ते निर्वृते त्रिष्वणुरल्पोच्चभित्पुमान् ।
चूर्णो धूलौ क्षारभेदे क्लीबे भूम्न्यधिवासके ॥ २२२ ॥
अक्षाग्रकीलकाभ्योः स्यादाणिः क्वाणे मृधे रणः ।
मेषयादवयोर्वृष्णिः क्षुण्णः प्रहतदक्षयोः ॥ २२३ ॥
मानभेदे कषे शाणः पर्णं स्यात्किंशुके छदे ।
वृक्षे शाखाविरहिते पुंसि स्थाणुर्महेश्वरे ॥ २२४ ॥
रात्रिभेदे शकुन्ती च पक्षिणी वरणस्तरौ ।
प्राकारे स्वीकृतौ रोधे क्लीबे स्याद्दूषणा कणा ॥ २२५ ॥
क्लीबे तु मरिचे पङ्क्तौ धोरणी वाहने स्थितौ ।
श्रीपर्णी स्यात्तु काश्मीरी क्लीबे पद्माग्निमन्थयोः ॥ २२६ ॥
ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ।
हरिण्येणे द्वयोर्हेमप्रतिमा हरिता च या ॥ २२७ ॥
यूथिका त्रिषु पाण्डौ स्यात्क्षुरा प्रत्यक् च वारुणी ।
पण्याध्वहट्टौ विपणी ग्रामीणा नीलिनी त्रिषु ॥ २२८ ॥
ग्राम्ये पट्टांशुके तु स्यात्पत्तोर्णं वृक्षभित्पुमान् ।
करेणुरिभ्यां स्त्री नेभे द्रविणं तु बले धने ॥ २२९ ॥
शरणं गृहरक्षित्रोः प्रोक्षणं सेचने वधे ।
प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ॥ २३० ॥
करणं साधकतमक्षेत्रगात्रेन्द्रियक्रियाः ।
नाट्यकन्दर्पशास्त्रोक्तं कार्ये कायस्थकर्मणि ॥ २३१ ॥
निर्वाणं निर्वृतौ क्लीबे शान्तिमोक्षेभमज्जने ।
शान्ते च त्रिष्वथेन्द्राणी करणे कामशास्त्रजे ॥ २३२ ॥
सिन्धुवारे शक्रपत्न्यां काकिणी तु वराटके ।
पणतुर्ये मानभेदे सरणिः पङ्क्तिमार्गयोः ॥ २३३ ॥
सक्तौ स्यात्तर्पणः क्लीबे तृप्तिबृंहणपोषणे ।
पित्राद्युद्देशदाने च पारणा व्रतभोजने ॥ २३४ ॥
कर्मान्ते क्लीबमपि च धर्षणं रतधाष्टर्ययोः ।
अनुकूले दक्षिणस्त्रिष्वृजौ दक्षिणदिग्भवे ॥ २३५ ॥

दिक्भद्धादेययोस्तु स्त्री सव्यहस्ते पुमानयम् ।
अरुणाः स्युः सांध्यरागसूर्यसूतदिवाकराः ॥ २३६ ॥
त्रिषु शोणेऽव्यक्तरागे लक्षणं नामचिह्नयोः ।
नक्षत्रे श्रवणः पुंसि क्लीबे तु श्रुतिकर्णयोः ॥ २३७ ॥
श्रावण्यां श्रवणा बुद्धिर्धिषणा वाक्पतौ पुमान् ।
वरुणो द्रुभिदप्पत्योर्हरणं यौतके हृतौ ॥ २३८ ॥
निर्याणं निर्गमेभाङ्गे कल्याणं स्वर्णमङ्गले ।
सुवर्णे हेम्नि तन्माने धने वेश्यादिभाटके ॥ २३९ ॥
सोमग्रहादौ स्वीकारे वन्द्यां ग्रहणमादरे ।
कङ्कणं मण्डले सूत्रे रत्नाढ्यकरभूषणे ॥ २४० ॥
कारणं घातने हेतौ कारणा यातने स्त्रियाम् ।
याचके त्रिषु बाणे ना मार्गणो याचने न ना ॥ २४१ ॥
वृक्षादिमूले प्राण्यङ्गे चरणो बहृचादिके ।
नूतने यूनि तरुणस्त्रिष्वर्के तरणिः पुमान् ॥ २४२ ॥
कुमार्योषधिनावोः स्त्री ब्राह्मणी भार्गिविप्रयोः ।
कुथे प्रवेणी वेण्यां च नक्षत्रे गवि रोहिणी ॥ २४३ ॥
रूप्ये कुवर्णे दुर्वर्णे भरणं वेतने भृतौ ।
अतस्त्रिषु विषाणं स्यात्पशुशृङ्गेभदन्तयोः ॥ २४४ ॥
प्रवणः क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ।
संकीर्णौ निचिताशुद्धाविरिणं शून्यमूषरम् ॥ २४५ ॥
रोहणं रोपणे रूढौ पर्वते नाथ धारणा ।
योगिकर्मणि साम्ये च धारके धारणी त्रिषु ॥ २४६ ॥
वारणं वृत्तिघाते ना गजे स्याद्वारके त्रिषु ।
धरणी भूर्धृतौ क्लीबे चारणो देवभिद्विटौ ॥ २४७ ॥
सारणा स्वरसंस्थाने सरिदल्पा च सारणी ।
रसभिन्ना घृणायां स्त्री दीने तु करुणा त्रिषु ॥ २४८ ॥
समीरणो मरुवके वायौ सोपानमुद्गमः ।
आरोहणे आस्तरणं शय्यायां वर्णकम्बले ॥ २४९ ॥

विलक्षणं व्यर्थसंस्थाविश्लिष्टेऽन्यत्र च त्रिषु ।
मधुपर्णी तु काश्मारी गुडूची नालिका तथा ॥ २५० ॥
व्यादानं स्याद्विहरणं प्रापणं क्रीडनं तथा ।
प्राण्युत्पादे संसरणमसंबाधचमूगतौ ॥ २५१ ॥
घण्टापथेऽथ वान्तान्ने समुद्धरणमुन्नये ।
वस्त्रेजीर्ण आवरणमर्गले छादने त्रिषु ॥ २५२ ॥
प्रस्तावः स्यात्प्रकरणं कीर्णे रूपकभित्तथा ।
निरूपणे दृष्टिचर्चे लज्जाभेदौ विदारणे ॥ २५३ ॥
आश्रये भर्त्सनेभीक्ष्णे क्लीवं तु स्यात्परायणम् ।
पारायणं समासङ्गे कात्स्न्र्येऽथ प्रविदारणम् ॥ २५४ ॥
रणमारणयोरुक्तौ नियमोनियमेन यः ।
यः सनिन्दमुपालम्भस्तच्च स्यात्परिभाषणम् ॥ २५५ ॥
मण्डूकपर्णी मञ्जिष्ठा पत्तोर्णे नाधिरोहिणी ।
निःश्रेण्यभिनिवेशे तु क्लीवमूर्ध्वगतौ तथा ॥ २५६ ॥
छर्दिः प्रवृत्तिघातश्चाप्यन्तर्धिरपवारणम् ।
स्यादुदाहरणं क्लीवमभिधाने निदर्शने ॥ २५७ ॥
सत्सत्येऽभ्यर्हिते साधौ विद्यमानप्रशस्तयोः ।
त्रिषु स्त्रियां दक्षपुत्र्यां भृती भरणवेतने ॥ २५८ ॥
धत्तूरे ना त्रिषु प्राज्ञे धूर्तौ वञ्चकदीव्यतोः ।
खातं वाप्यां रोपिते स्याद्वाच्यलिङ्गं विदारिते ॥ २५९ ॥
सेतुर्ना वृक्षभित्सीमा तरणोपाय एव च ।
लता प्रियङ्गुर्वीरुच्च ज्योतिष्मत्यपि शारिवा ॥ २६० ॥
हारादिसरिकायां च व्रततावतिमुक्तके ।
प्रसक्तासादितौ प्राप्तावाप्तौ संप्राप्तबान्धवौ २६१ ॥
अविसंवादकः पक्षी पतन्गच्छंल्लुठन्नधः ।
यन्ता हस्तिपके सूते भर्तारौ पतिधारकौ ॥ २६२ ॥
यानपात्रे शिशौ पोतः प्रेतः सत्त्वान्तरे मृते ।
निर्वाणे मोचने मुक्तिर्युक्तौ श्लिष्टसमञ्जसौ ॥ २६३

वह्नित्रये युगे त्रेता लिप्ता कालेऽञ्जिते त्रिषु ।
ग्रहभेदे ध्वजे केतुः पार्थिवे तनये सुतः ॥ २६४ ॥
क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे ।
श्लेष्मादिरस्थिरक्तादि महाभूतानि तद्गुणाः ॥ २६५ ॥
इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः ।
कासूसामर्थ्ययोः शक्तिर्मूर्तिः काठिन्यकाययोः ॥ २६६ ॥
अर्तिः पीडाधनुष्कोट्योः सातिर्दानावसानयोः ।
उदयेऽधिगमे प्राप्तिरीतिर्डिम्बप्रवासयोः ॥ २६७ ॥
रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः ।
त्यक्तकम्पितयोर्धूतं भूतिर्भस्मन्युधर्द्धयः ॥ २६८ ॥
श्रुतिः श्रवसि वेदे च स्वरांशे श्रवणे स्त्रियाम् ।
श्रुतं शास्त्रावधृतयोर्युगपर्याप्तयोः कृतम् ॥ २६९ ॥
निःसारारोग्ययोर्वार्त्तं नीरुग्वृत्तिमतोस्त्रिषु ।
वार्त्ताकवर्तनोदन्तपाशुपाल्यादिषु स्त्रियाम् ॥ २७० ॥
वृत्तमध्ययने पद्ये चरित्रे वर्तने मृते ।
अल्पाशये त्रिलिङ्गः स्यादतीते निस्तले वृद्धे ॥ २७१ ॥
प्रियङ्गुयोषितोः कान्ता त्रिषु प्रियमनोज्ञयोः ।
जातिश्छन्दसि सामान्ये मालतीगोत्रजन्मसु ॥ २७२ ॥
काव्यालंकारभेदे च स्वभावे च स्त्रियामयम् ।
सेनाविशेषे पत्तिः स्त्री गतौ च पदगे पुमान् ॥ २७३ ॥
वैदर्भ्यादावारकूटे प्रचारस्यन्दयोस्तथा ।
मर्यादायां च रीतिः स्त्री रूप्ये श्वेतं सिते त्रिषु ॥ २७४ ॥
श्वेता स्त्री सूर्यभार्यायां राजभेदे पुमानयम् ।
शर्कराभित्सिता शुक्ले बद्धावसितयोस्त्रिषु ॥ २७५ ॥
छन्दोविशेषः पङ्क्तिः स्त्री दशसंख्यावलिस्तथा ।
क्षये निवासे मेदिन्यां क्षितिः कान्तिप्रभे द्युती ॥ २७६ ॥
त्रिषु प्राप्ते विस्तृते च ततं वाद्ये नपुंसकम् ।
ब्राह्मण्यां क्षत्रियात्सूतस्त्रिषु क्लीबं तु पारते ॥ २७७ ॥

रथकारे सारथौ ना वन्दिन्याज्याम्बुनोर्घृतम् ।
मानभेदे प्रशंसायां हस्तः करभभेदयोः ॥ २७८ ॥
असाराश्वगजे शान्ते वीतमङ्कुशकर्मणि ।
सांख्यसाधर्म्यहेतौ च विगतच्छन्नयोस्त्रिषु ॥ २७९ ॥
लुप्तवर्णपदं मस्तं त्रिषु ग्रासीकृते तथा ।
तिक्ता स्यात्कटुरोहिण्यां शुभगन्धे रसे त्रिषु ॥ २८० ॥
नतं नितम्बे तगरे कुटिलेऽधःकृते त्रिषु ।
जन्तौ क्ष्मादौ पिशाचादौ भूतं न्याय्योपमानयोः ॥ २८१ ॥
प्राप्ते त्रिषु युतं युक्ते वियुक्ते च तथा त्रिषु ।
गुप्तिः कारा च रक्षा च दीर्णे च विवरं भुवः ॥ २८२ ॥
मूर्छाले कठिने मूर्ती वस्तिर्वस्त्राञ्चले द्वयोः ।
अपानमार्गे तत्कर्मण्यश्वप्रस्रवणे तथा ॥ २८३ ॥
लूता तु स्यादूर्णनाभे व्याधिभेदे पिपीलके ।
रतिः स्मरकलत्रे स्याद्रताभिष्वङ्गयोरपि ॥ २८४ ॥
चित्तावस्थानशृङ्गारभावकामफलेष्वपि ।
वित्तं स्याद्द्रविणे हेम्नि त्रिषु ख्याते विचारिते ॥ २८५ ॥
धूपे दीपशिखायां च वर्तिर्गात्रानुलेपने ।
आलेख्यभाण्डे दीपस्य दशायां चक्षुरञ्जने ॥ २८६ ॥
प्राप्तिसंबन्धयोराप्तिर्गमने पद्धतौ सृतिः ।
वर्तने विवृतौ वृत्तिः कैशिक्यादौ मनस्कृतौ ॥ २८७ ॥
काव्याङ्गे कामभार्यायां प्रीतिः प्रेमप्रमोदयोः ।
पक्तिः पाके व्यवहृतौ वीतिर्याने तुरंगमे ॥ २८८ ॥
विच्छित्तौ सेवने भक्तिर्भित्तिः कुड्यप्रदेशयोः ।
चितिश्चित्संङ्गचित्यासु द्रुतं शीघ्रविलीनयोः ॥ २८९ ॥
दन्तौ रदाद्रिकटकौ मृत्युयाचितयोर्मृतम् ।
जातं जन्म प्रकारश्च त्रिषु संपन्नपुत्रयोः ॥ २९० ॥
व्यक्तं स्फुटे बुधे व्यक्तः शिती शारासितौ त्रिषु ।
यतिर्विरामव्रतिनोरूतिः स्यात्स्यूतिरक्षयोः ॥ २९१ ॥

स्थित ऊर्ध्वे वर्तमाने प्रतिष्ठावति च त्रिषु ।
कुङ्कुमे क्षतजे रक्तं सरागारुणयोस्त्रिषु ॥ २९२ ॥
मत्तः करी मदकलो मदेनाव्यक्तवाक्त्रिषु ।
अवस्थायां गतिर्यात्राधीनतोपायवर्त्मसु ॥ २९३ ॥
शुक्लं स्यात्पुरुषेम्ब्रे च ग्रीष्मादौ स्त्रीरजस्यृतुः ।
विनाशान्तिकयोरन्तः स्वरूपेंशावसानयोः ॥ २९४ ॥
माता गौर्जननी देव्यो रेवत्याद्या बहुस्त्रियाम् ।
मर्यादायां स्थितिः स्थाने भास्वद्दीप्तविवस्वतोः ॥ २९५ ॥
भूभृद्भूमिधरे भूपे स्यादर्हञ्जिनपूज्ययोः ।
सूर्याश्वेषु हरित्पुंसि नीले त्रिषु दिशि स्त्रियाम् ॥ २९६ ॥
महद्राज्ये सांख्यबुद्धौ न स्त्री बृहति तु त्रिषु ।
छन्दोभिज्जगती भूश्च जगज्जङ्गमलोकयोः ॥ २९७ ॥
समित्सभासंगरयोः पित्सन्पातेच्छुपक्षिणोः ।
क्लीवे बिन्दौ पृषन्ना तु हरिणे पृषतोनयोः ॥ २९८ ॥
हल्या भूर्जानकी सीते एतौ शारासितौ त्रिषु ।
धाता ब्रह्मा च धर्ता च क्षिप्तेस्तः पश्चिमाचले ॥ २९९ ॥
गुणे शीतं त्रिषु तद्वन्ना श्लेष्मातकवेतसौ ।
यातरो भ्रातृजायाः स्युर्गतिशीले भवेत्त्रिषु ॥ ३०० ॥
मुक्तास्फोटे हयावर्ते शुक्तिर्मानिनखौषधी ।
पूतः पवित्रे निःशूके धारिते सुस्थिते धृतम् ॥ ३०१ ॥
शान्तिः शमे निर्वृतौ च तथा कुशलकर्मणि ।
संक्रान्ताक्रान्तयोः क्रान्तो मरुतौ पवनामरौ ॥ ३०२ ॥
देवसूर्यौ विवस्वन्तौ सरस्वन्तौ नदार्णवौ ।
पक्षिताक्ष्यौ गरुत्मन्तौ शकुन्तौ भासपक्षिणौ ॥ ३०३ ॥
स्थपतिः कञ्चुकी तक्षा बृहस्पतिसवेष्टवान् ।
जातहर्षे प्रतिहते रोमाञ्चविषये तथा ॥ ३०४ ॥
विस्मिते हृषितः स्यात्त्रिष्वमृतं मोक्षवारिणोः ।
अयाचिते यज्ञशेषे देवान्नसुधयोरपि ॥ ३०५ ॥

दुरालभामलक्योः स्त्री गुडूचीपथ्ययोस्तथा ।
परस्यां वाच्यर्करश्मिसमाधानभिदोस्तथा ॥ ३०६ ॥
दूर्वादुरालभाभूमिष्वनन्ता क्लीबमम्बरे ।
पुमान्नागाधिपे विष्णावनाशेनवधौ त्रिषु ॥ ३०७ ॥
प्रियं सत्यं च वचनं कल्याणमपि सूनृतम् ।
कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु ॥ ३०८ ॥
वृत्तान्तः स्यात्प्रकरणे कार्त्स्न्ये वार्त्ताप्रकारयोः ।
निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् ॥ ३०९ ॥
जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिता उत्थितास्त्वमी ।
वृद्धिमत्प्रोन्नतोत्पन्ना आदृतौ सादरार्चितौ ॥ ३१० ॥
विविक्तौ पूतविजनौ मूर्छितौ मूढसोच्छ्रयौ ।
प्रख्यातज्ञातहृष्टेषु प्रतीतं त्रिषु संस्कृतम् ॥ ३११ ॥
कृत्रिमे लक्षणोपेते पिण्डितं गुणिते घने ।
वनिता जनितात्यर्थानुरागा स्त्र्यङ्गनापि च ॥ ३१२ ॥
पलितं जरसा शौक्ल्यं केशादेः कर्दमं तथा ।
समञ्जसे स्यादुचितमभ्यस्ते च त्रिलिङ्गकम् ॥ ३१३ ॥
कुङ्कुमे शोणिते क्लीबमरुणे त्रिषु लोहितम् ।
शक्ते निवारिते पूर्णे पर्याप्तं त्रिष्वपीप्सिते ॥ ३१४ ॥
आनर्तः समरे नृत्तस्थाननीवृद्विशेषयोः ।
मिथ्योक्त्यावाहतं क्लीबे ताडिते गुणिते त्रिषु ॥ ३१५ ॥
आचितः स्यात्त्रिषु व्याप्ते पलानामयुतद्वये ।
दुर्जातं व्यसनेसम्यग्जातवस्तुनि तु त्रिषु ॥ ३१६ ॥
त्रिष्वव्यक्तमस्फुटे स्यात्पुमांस्तु परमात्मनि ।
त्रिषु प्रणीतो विहिते संस्कृतेग्नौ प्रवेशिते ॥ ३१७ ॥
विप्रलब्धे विप्रकृते निकृतस्त्रिष्वयोद्धृतम् ।
भुक्तोज्झिते तोलिते च सुकृतं शुभपुण्ययोः ॥ ३१८ ॥
आयस्तं लेशितोत्क्षिप्ते कोपिते तेजिते त्रिषु ।
निरस्तं त्रिष्वधिक्षिप्ते त्यक्ते च त्वरितोदिते ॥ ३१९ ॥

त्रिश्वास्ये त्रिषु विश्वस्तो विधवायां पुनः स्त्रियाम् ।
लिङ्गे स्वभावे प्रकृतिर्धात्वमात्यादियोनिषु ॥ ३२० ॥
सभासंगतियुद्धेषु समितिर्निर्वृतिः पुनः ।
स्वस्थतायामस्तमये निकृतिः शठशाठ्ययोः ॥ ३२१ ॥
दुर्गतिर्नरके दौस्थ्ये पद्धतिः पङ्क्तिवर्त्मनोः ।
काये रूपे चाकृतिः स्यात्प्रसूतिर्जन्मपुत्रयोः ॥ ३२२ ॥
वसतिः स्थितियामिन्योः प्रवृत्तिर्वृत्तिवार्त्तयोः ।
ऋक्षे लाङ्गलिदारेषु रेवत्याख्यापि मातृषु ॥ ३२३ ॥
स्तिमितेतरलक्लिन्ने निशान्तं गेहशान्तयोः ।
अनृते कुकृतासत्ये वाशिता करिणीस्त्रियोः ॥ ३२४ ॥
उदितावुद्गतप्रोक्तावर्दितं पीडितेर्थिते ।
द्विजातिर्विहगे विप्रे जीवातुर्जायुजीवयोः ॥ ३२५ ॥
निमित्तं लक्षणे हेतौ जीमूतौ मेघपर्वतौ ।
देवताडद्रुरुत्तप्तं शुष्कमांसं वितापितम् ॥ ३२६ ॥
सिकता वालुकायां च देशे च सिकतान्विते ।
विस्तारवल्ल्योर्व्रततिः कलितं विदिताप्तयोः ॥ ३२७ ॥
संख्याते तुलिते क्षिप्ते शब्दिते च भवेत्त्रिषु ।
बृहती क्षुद्रवार्ताकी छन्दोभेदे महत्यपि ॥ ३२८ ॥
गर्जितं स्तनितेभ्राणां पुंसि स्यान्मत्तकुञ्जरे ।
प्रार्थितं प्रार्थनालभ्येभियुक्ते सान्त्विते त्रिषु ॥ ३२९ ॥
विततं प्रस्तुते व्याप्ते विस्तृते च भवेत्त्रिषु ।
परंपरायां पुत्रे च विस्तारेपि च संततिः ॥ ३३० ॥
संमतिः स्यादनुज्ञानमभिलाषोपि च स्त्रियाम् ।
रूप्ये हारे च रजतं शुक्ले स्याद्वाच्यलिङ्गकः ॥ ३३१ ॥
पारावते कपोतः स्याद्विहगान्तरवर्णयोः ।
संवित्तिः प्रतिपत्तिः स्याद्व्यवस्था चाविवादिता ॥ ३३२ ॥
ऋज्विन्द्रास्त्रे रोहितं ना मत्स्यभिद्यरुणे त्रिषु ।
प्रतिपत्पक्षतिः पक्षमूलं च द्वीपवाम्नदे ॥ ३३३ ॥

अब्धौ नदी स्त्री दृष्टान्त उदाहरणशास्त्रयोः।
स्यादायतिर्दीर्घतायां प्रतापागामिकालयोः ॥ ३३४ ॥
विधूतः कम्पिते त्यक्ते नियती दैवसंयमौ।
बीभत्से विकृतोऽस्वस्थे चाप्लुतः स्नातमात्रके ॥ ३३५ ॥
स्नातके चाप्यथोद्धात आरम्भे स्खलिते तथा।
पाणिर्निकुञ्जः प्रसृतः स्त्री जङ्घा विस्तृते त्रिषु ॥ ३३६ ॥
दान्ते ककुद्मान्स्त्री कट्यां परेतो दूरगे मृते।
दैवतं देवता देवाः सरस्वन्तौ नदार्णवौ ॥ ३३७ ॥
मारजिच्छंकरे बुद्धे शान्तेऽथ भगवाञ्जिने।
पूज्ये द्वयोरथोन्मत्तो धत्तूरे मादिनि त्रिषु ॥ ३३८ ॥
निर्ऋती यमदिक्पालौ ह्यलक्ष्मीराक्षसास्वयोः।
आवर्तौ रोमभेदेऽम्भोभ्रमे पठनरूपयोः ॥ ३३९ ॥
एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ।
रजस्वला पुष्पवती माल्यधारिणि तु त्रिषु ॥ ३४० ॥
विवृतः कोशनिष्कृष्टे व्याकृतेऽपि प्रकाशिते।
विकासिते वर्णपाठधर्मे च सुशिरे तथा ॥ ३४१ ॥
एषां भावे तु विवृतिः स्थगितासत्यभूतयोः।
वर्णपाठगुणे गुप्ते संवृतो विवृतेतरे ॥ ३४२ ॥
एषां भावे संवृतिः स्यादेकान्तो निश्चयो रहः।
गुणैकदेशयोरव्यभिचारिणि च पुंस्ययम् ॥ ३४३ ॥
प्रत्यन्तौ म्लेच्छदेशान्तौ देव्यौषधिविशेषयोः।
जयन्तीन्द्रात्मजे पुंसि स्त्र्यास्फोता गिरिकर्णिका ॥ ३४४ ॥
गिरिपर्णी शारिवा च भवेदर्कतरौ पुमान्।
साक्षात्कृतोत्पादितयोरास्वस्ते भावितं त्रिषु ॥ ३४५ ॥
भक्तवासितयोश्चाथाहृतमानीतभुक्तयोः।
परावृत्ते च लुठितं भ्रष्टे त्रिषु पदाच्युते ॥ ३४६ ॥
तिरोहिते स्रुते भुक्ते प्रतीते गलितं त्रिषु।
छन्दोविशेषे गलिता निर्मुक्तो मुक्तकञ्चुके ॥ ३४७ ॥

त्यक्ते विर्ग्रन्थिके वाच्यलिङ्गो वसुमती भुवि ।
त्रिषु स्फीते चित्रकरे चित्रकृद्वञ्जुले तथा ॥ ३४८ ॥
पर्याप्तिः पूर्णताशक्त्योर्गुडूचीशाकभेदयोः ।
जीवन्ती स्याद्वृक्षरुहा विनीतः शिक्षिते हये ॥ ३४९ ॥
सप्रश्रये निरस्ते च त्रिष्वथो यज्ञसूत्रके ।
कण्ठालम्बे प्रावृते च निवीतं वाच्यलिङ्गकम् ॥ ३५० ॥
स्वकर्महीने पतितो गते भ्रष्टेपि च त्रिषु ।
यवे स्यादक्षतः पुंसि क्षत्यभावे त्रिलिङ्गकः ॥ ३५१ ॥
कलधौतं रूप्यहेम्नोर्विष्णौ लक्ष्मीपतिर्नृपे ।
अग्रेकृताभ्यर्चितयोर्भवेत्त्रिषु पुरस्कृतः ॥ ३५२ ॥
दुष्टे त्रिष्ववगीतं स्यान्निर्वादे गर्हितेपि च ।
अभिनीतं संस्कृते च प्रापितेमर्षवत्यपि ॥ ३५३ ॥
प्रतिस्खलितविद्विष्टौ त्रिषु प्रतिहतावपि ।
सुकुमारेभिजातं स्यात्कुलीनबुधयोस्त्रिषु ॥ ३५४ ॥
नन्द्यावर्त ऋद्धवेश्मप्रकारे तगरद्रुमे ।
स्त्रियामपचितिर्हानौ निष्कृतावर्चने व्यये ॥ ३५५ ॥
अत्याहितं महाभीतिर्जीवे च निरपेक्षता ।
समाहितं समाधिस्थे तथा दत्तोत्तरे त्रिषु ॥ ३५६ ॥
उपाहितोनलोत्पाते भवेदारोपिते त्रिषु ।
उपस्थितः प्रतीहारे द्वारभेदे समाश्रिते ॥ ३५७ ॥
वाच्यलिङ्गो निन्दिते स्यादवध्वस्तोवचूर्णिते ।
अवसानं गते ज्ञाते निश्चितेवसितस्त्रिषु ॥ ३५८ ॥
विजृम्भितं विकसिते चेष्टायां प्रसृते त्रिषु ।
विज्ञाते वेष्टिते प्राप्ते भवेत्परिगतस्त्रिषु ॥ ३५९ ॥
मध्यप्राप्तं विस्मृतं च भवेदन्तर्गतं त्रिषु ।
अवदातः सिते पीते विशुद्धे वाच्यलिङ्गकः ॥ ३६० ॥
निराकृते प्रेषिते च प्रतिक्षिप्तं त्रिलिङ्गकम् ।
ऊर्ध्वाहिते भर्त्सिते त्रिष्वधिक्षिप्तो विनिन्दिते ॥ ३६१ ॥

नागानां नगरीनद्यौ भोगवत्यौ शतक्रतोः ।
चाप ऋज्वायते न स्त्री गजे त्वैरावतः पुमान् ॥ ३६२ ॥
अस्वाध्याये पुमान्स्त्री तु प्रत्यादेशे निराकृतिः ।
प्रतिमायां प्रतीकारे भवेत्प्रतिकृतिः स्त्रियाम् ॥ ३६३ ॥
अभिशापप्रार्थनयोरभिशस्तिः स्तुतावपि ।
जनंगमो दिवाकीर्तिर्नापितश्च भवेद्द्वयोः ॥ ३६४ ॥
प्रागल्भ्यगौरवारम्भाभिबोधाः प्रतिपत्तयः ।
अग्न्युत्पातौ धूमकेतू वत्रा गौरी च काञ्चनी ॥ ३६५ ॥
गङ्गा हरीतकी हैमवत्यस्तज्जादिषु त्रिषु ।
वैजयन्ती पताका स्यात्तर्कारी च यमो मनुः ॥ ३६६ ॥
सौरः कर्णो रविसुतः सुग्रीवश्च निपातितः ।
मारितः साधितश्च स्याद्देवखातं ह्रदो गुहा ॥ ३६७ ॥
प्रजावती भ्रातृजाया प्रजायुक्ते भवेत्त्रिषु ।
स्पृक्का भूमिश्च कार्पासी समुद्रान्ता दुरालभा ॥ ३६८ ॥
राहुग्रस्तार्कशशिनोर्व्यसनार्तात्तरागयोः ।
उपरक्तोवगमितेपास्तनिद्रे प्रबोधितः ॥ ३६९ ॥
समाघातो वधे युद्धे प्रहारेथ विहंगमे ।
पातेच्छौ स्यात्पिपतिषंस्त्रिषु न्यस्ते समाहिते ॥ ३७० ॥
त्रिषु प्रणिहितं न्यासे समाधौ च नपुंसकम् ।
सक्ताक्षिप्तावभियुक्तौ भूपाले क्षत्रिये तथा ॥ ३७१ ॥
मूर्धाभिषिक्तोथाम्भोधौ वरुणे यादसांपतिः ।
समन्तादुच्यमाने स्यान्नियमे परिभाषितम् ॥ ३७२ ॥
आदिराजे पृथुर्दीर्घे त्रिषु कृष्णे च जीरके ।
द्वयोः स्याद्धिङ्गुपर्ण्यां च पृथ्वी धरणिवृत्तयोः ॥ ३७३ ॥
पर्वसंधानपिटकयन्त्रणा ग्रन्थयो नरि ।
अर्थोभिधेयविषयरैप्रयोजनवस्तुषु ॥ ३७४ ॥
सोपानपात्रयोस्तीर्थमर्हद्भिः सेविते गुरौ ।
स्मृतौ सत्त्रिण्युपाये च प्रस्थोस्त्री सानुमानयोः ॥ ३७५ ॥

वृत्तवाग्भेदयोर्गाथा मन्थो द्रविणशास्त्रयोः ।
आस्थान्याशादराश्वासयत्नेष्वास्थाथ ना स्पशे ॥ ३७६ ॥
संस्था व्यवस्थामरणयागोपस्करणेषु च ।
वीथी रूपकभेदः स्यात्पङ्क्तिर्वेश्माङ्गवर्त्मसु ॥ ३७७ ॥
सिक्थः पुलाके मदने क्लीवेथो वर्णकम्बले ।
द्वयोर्दर्भेषु च कुथः सक्तूनां द्रवताविधौ ॥ ३७८ ॥
मन्थानेक्षिगदे मन्थः सिद्धार्थौ बुधसर्षपौ ।
समर्थस्त्रिषु शक्तिस्थे संबद्धार्थे हिते तथा ॥ ३७९ ॥
क्षवथुस्तु क्षुते कास उपस्थस्त्वङ्कगुह्ययोः ।
निर्ग्रन्थो निष्परीवारे त्रिषु स्यात्क्षपणे पुमान् ॥ ३८० ॥
पाशयन्त्रक्रमुन्माथं न स्त्री ना वधघातयोः ।
वयःस्थामलकी क्षीरकाकोली यूनि तु त्रिषु ॥ ३८१ ॥
पथ्या वयस्था काकोल्यव्यथा पद्मा हरितकी ।
कपित्थे मन्मथः कामे मधूकाश्मभिभेदयोः ॥ ३८२ ॥
वानप्रस्थः क्षीणरागे दशमीस्थो वयोतिगे ।
राजरक्षिष्वनीकस्थो गजशिक्षाविचक्षणे ॥ ३८३ ॥
हन्मनोवक्षसोः क्लीवे स्त्री भिद्दारणभेदयोः ।
वन्दी तु पणबन्धः स्यान्नारी चापि हठाहृता ॥ ३८४ ॥
व्यवसाये परित्राणे स्थाने वस्त्वपदेशयोः ।
पादतन्मुद्रयोश्चिह्ने पदं न्यासेक्षशब्दयोः ॥ ३८५ ॥
पादा रश्म्यङ्घ्रितुर्यांशा ऋगंशाद्र्यन्तपर्वताः ।
वृक्षमूलं चाथ संवित्संकेते ज्ञानकालयोः ॥ ३८६ ॥
संभाषणे क्रियाकारे प्रतिज्ञाचारनामसु ।
दृशन्निष्पेषणशिला शिला चाथ विदारणे ॥ ३८७ ॥
उपजापे विशेषे च भेदः स्यात्तु गदो हरेः ।
भ्राता व्याधिश्चायुधे तु स्त्री संपच्छ्रीस्तयोच्छ्रयः ॥ ३८८ ॥
मूलसूरणयोः कन्दः पर्णाष्ठगरुतश्छदाः ।
ह्रदस्तोयाशयः स्रोतो बिन्दुर्वेदितृविप्रुषोः ॥ ३८९ ॥

दन्तक्षतेर्थप्रकृतौ शून्ये भ्रूमध्यतेजसि ।
त्रिष्विष्टमधुरौ स्वादू मृदू चातीक्ष्णकोमलौ ॥ ३९० ॥
अभिप्रायवशौ छन्दावब्दौ जीमूतवत्सरौ ।
घर्मस्वेदनयोः स्वेदः सात्त्विके भावभिद्यपि ॥ ३९१ ॥
छेदो विरामे खण्डे च शादो जम्बालशष्पयोः ।
विमर्दचूर्णयोः क्षोदो नादः स्यात्प्राणशब्दयोः ॥ ३९२ ॥
स्त्री शरद्वत्सरर्त्वोः स्यात्क्रव्यान्मांसाशिरक्षसोः ।
सूदः सूपे सूपकरे देशे चोषरभूमिके ॥ ३९३ ॥
भ्रमे भवेत्पुमान्कुन्दः पुष्पभेदे नपुंसकम् ।
मन्दोपटौ शनैरर्थे मूढे च त्रिषु पुंसि तु ॥ ३९४ ॥
सैरेभजाल्योः स्यात्क्षैव्ये गर्वे हर्षेभदानयोः ।
मदो मद्ये राजलिङ्गे पृष्ठाङ्गश्रेष्ठयोः ककुत् ॥ ३९५ ॥
दायादौ बान्धवसुतावामोदो हर्षगन्धयोः ।
निषादो लुब्धके गीतस्वरे संकरजन्मनि ॥ ३९६ ॥
प्रधाने राजलिङ्गे च पृष्ठाङ्गे ककुदोस्त्रियाम् ।
मर्यादा धारणासीम्नोर्विषदो व्यक्तशुक्लयोः ॥ ३९७ ॥
गोष्ठाध्यक्षे च विष्णौ च गोविन्दः कपिनागयोः ।
कुमुदो जलजे क्लीवं कुसूदं वृद्धिजीवने ॥ ३९८ ॥
कुसेवके त्रिषु ज्ञाने तिथौ च प्रतिपत्स्त्रियाम् ।
स्यात्प्रसादोनुग्रहेपि नैर्मल्यप्रीतिदानयोः ॥ ३९९ ॥
साराव रुदिते त्रातर्याक्रन्दो दारुणे रणे ।
पश्चाद्राजविशेषे च गोष्पदे मानसेविते ॥ ४०० ॥
त्रिष्वधृष्टे नवे शुद्धे शारदोपि शरद्भवे ।
अस्त्री संवत्सरे सप्तपर्णे ना शारदी पुनः ॥ ४०१ ॥
लाङ्गली शारदा देवी कुविन्दौ भ्रमिवायकौ ।
प्रमदा तरुणी ना तु हर्षेधिकमदे त्रिषु ॥ ४०२ ॥
धर्मे रहस्युपनिषद्वेदान्ते च शतह्रदा ।
विद्युद्भेदे विद्युति च वह्नीन्द्वर्कास्तमोनुदाः ॥ ४०३ ॥

मर्यादासहितेभ्यर्णे समर्यादं त्रिलिङ्गकम् ।
अववादौ तु निन्दाज्ञे देशे जनपदो जने ॥ ४०४ ॥
गङ्गा विष्णुपदी क्लीबे हर्यङ्घ्र्याकाशविष्टपे ।
अभिमर्दौ युद्धपीडे धृष्टो ज्ञश्च विशारदः ॥ ४०५ ॥
त्रिषु कोकनदं रक्तकुमुदे रक्तवारिजे ।
निर्वादे वादनोपाये परिवादोथ हेमनि ॥ ४०६ ॥
अष्टापदं शारिफले स्त्रियां तु पशुगर्भिणी ।
अपवादस्तु गर्हायां बाधके बाधनेपि च ॥ ४०७ ॥
ऋद्धिरोषधिभिल्लक्ष्मीः प्रभावोतिशयः स्त्रियाम् ।
कुष्ठाख्यायामोषधौ च व्याधिः पुंस्यामये तथा ॥ ४०८ ॥
वसन्तदैत्यभिच्चैत्रमधूका मधवो मधु ।
मद्यं पुष्परसः क्षौद्रं मधुरे वाच्यलिङ्गकः ॥ ४०९ ॥
बन्धको व्यसनं चेतःपीडाधिष्ठानमाधयः ।
विधुर्विष्णुः शशी बाधा द्वयोर्दुःखनिषेधयोः ॥ ४१० ॥
नददेशभिदोरब्धौ सिन्धुर्ना सरिति स्त्रियाम् ।
द्वयोर्विधौ प्रकारे च गजान्ने वेतने विधा ॥ ४११ ॥
वधूर्जाया स्नुषा स्त्री च प्रियङ्गुस्पृक्कयोरपि ।
निधी निक्षेपगूढार्थौ स्थानं श्रद्धादरः स्पृहा ॥ ४१२ ॥
क्लीबे तमोम्भसोरन्धमदृष्टौ वाच्यलिङ्गकः ।
संधा प्रतिज्ञा मर्यादा मक्कोलामृतयोः सुधा ॥ ४१३ ॥
विधिर्विधायके वाक्ये दैवे स्रष्टृविधानयोः ।
हव्यकव्यविधौ श्राद्धं त्रिषु श्रद्धासमन्विते ॥ ४१४ ॥
संधिर्भगे सुरुङ्गायां संधानगुणभेदयोः ।
गोधा तले निहाकायां बुधा विद्वद्ग्रहामराः ॥ ४१५ ॥
राधा तु कृष्णजायायां शरव्ये कर्णमातरि ।
मूलाधिकेर्थे वृद्धिः स्याद्वर्धनौषधिभेदयोः ॥ ४१६ ॥
सिद्धिरोषधिनिष्पत्त्योर्बन्धः स्नेहाधिबन्धने ।
वृन्ते च रचनायां च वातादिनियतावधौ ॥ ४१७ ॥

अंसे महीपतौ स्कन्धस्तरुजङ्घासमूहयोः ।
लताविटपयोर्वीरुत्खण्डोर्धोर्ध समेंशके ॥ ४१८ ॥
दोषज्ञे सुगते बुद्धः शुद्धस्त्रिष्वेकपूतयोः ।
पण्डिते स्थविरे वृद्धस्त्रिषु साधुस्तु शोभने ॥ ४१९ ॥
वार्द्धुषौ सज्जने सिद्धो देवे निष्पन्नपूज्ययोः ।
विषलिप्ते शरे दिग्धो लिप्तमात्रे त्रिलिङ्गकः ॥ ४२० ॥
मुग्धं मनोहरे मूढे त्रिषु योषिति तु स्त्रियाम् ।
विद्धं सूच्यादिभिर्भिन्ने सादृश्ये ज्ञे त्रिलिङ्गकः ॥ ४२१ ॥
घ्राणग्राह्याल्पयोर्गन्धो द्रव्ये संबन्धमात्रके ।
लुब्धः स्पृहावान्मृगयुः क्षत्रियायां तु वैश्यजः ॥ ४२२ ॥
वन्दी च मागधः स्त्री स्यात्पिप्पली यूथिका तथा ।
व्यामो वटश्च न्यग्रोधो न्यग्रोधी चोपचित्रिका ॥ ४२३ ॥
प्रबोधौ जागरोद्घाटावुत्सेधौ वपुरुन्नती ।
पर्याहाराध्वभारेषु विवधो वीवधोपि च ॥ ४२४ ॥
परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ।
समाधिर्ध्याननीवाकनियमेषु समर्थने ॥ ४२५ ॥
प्रणिधी प्रार्थनचरौ परिच्छेदे बिलेवधिः ।
अगाधमतलस्पर्शे त्रिषु गर्ते नपुंसकम् ॥ ४२६ ॥
व्याजे रथाङ्गेप्युपधिर्विबुधौ सुरपण्डितौ ।
वाद्यं मृदङ्गाद्यानद्धं बद्धमात्रे त्रिलिङ्गकम् ॥ ४२७ ॥
उपाधिर्धर्मचिन्ता च कुटुम्बव्यापृतेपि च ।
विशेषणोपार्जनयोः प्रबुद्धो ज्ञानिजाग्रतोः ॥ ४२८ ॥
सम्यक्सिद्धौ स्वभावे स्त्री संसिद्धिः संनिधिस्तु ना ।
प्रत्यक्षे संनिधाने च निरोधो नाशरोधयोः ॥ ४२९ ॥
निषधः कठिने देशे राजभेदे नगान्तरे ।
तोये कबन्धं ना रक्षोभेदे शिरसि न स्त्रियाम् ॥ ४३० ॥
भृशार्थदोषावाबाधौ संबाधौ योनिसंकटौ ।
अतस्त्रिषु तु विस्रब्धो विश्वस्ते प्रोद्भटे तथा ॥ ४३१ ॥

आविद्धौ कुटिलोत्क्षिप्तौ प्रसिद्धौ ख्यातभूषितौ ।
विरुद्धौ वैरिविगुणौ दुर्विधौ खलदुर्गतौ ॥ ४३२ ॥
अविदूरस्त्वत्रष्टब्धो बद्धश्चाप्यवलम्बितः ।
ब्रह्मबन्धुरधिक्षेपे निर्देशे ब्राह्मणस्य च ॥ ४३३ ॥
दोषोत्पादेनुबन्धः स्यात्प्रकृत्यादेर्विनश्वरे ।
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ॥ ४३४ ॥
कर्णिकारः परिव्याधो जलवेतस इत्यपि ।
तमालः श्यामखदिरः कालस्कन्धोपि तिन्दुकः ॥ ४३५ ॥
इक्षुगन्धा विदारी स्यात्कोकिलो गोक्षुरोपि च ।
महौषधं प्रतिविषा लशुनं नागरं विषम् ॥ ४३६ ॥
अजमोदोग्रगन्धा स्यादुग्रा गन्धोत्कटे त्रिषु ।
पृश्निरल्पतनू रश्मिवर्णभेदे गवि स्त्रियाम् ॥ ४३७ ॥
व्याधिभिद्यक्षयोर्यक्ष्मा मुनिर्बुद्ध ऋषिस्तथा ।
शुष्मा वह्निर्बले क्लीवे शृङ्गी प्रतिविषा विषम् ॥ ४३८ ॥
वृषाख्यौषधिभिद्दान्तपर्वतौ शृङ्गवांस्त्रिषु ।
हनुर्नखौषधिः सृक्क जटी प्लक्षतरुर्व्रती ॥ ४३९ ॥
घनो मेघे मूर्तिगुणे विस्तारे लोहमुद्गरे ।
मुस्ते च न द्वयोर्वाद्ये त्रिषु मूर्तिनिरन्तरे ॥ ४४० ॥
इनः सूर्ये प्रभौ राजा मृगाङ्के क्षत्रिये नृपे ।
त्वग्देहयोस्तनुः स्त्री स्यात्तद्गुणे त्रिषु पर्व तु ॥ ४४१ ॥
तिथिभेदे क्षणे ग्रन्थौ वर्त्म नेत्रच्छदेध्वनि ।
वेदस्तत्त्वं तपो ब्रह्म पुमान्विप्रे प्रजापतौ ॥ ४४२ ॥
पक्ष्माक्षिलोम्नि किञ्जल्के तन्त्वाद्यंशेप्यणीयसि ।
आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ॥ ४४३ ॥
देहप्रमाणयोर्वर्ष्म स्यादाकारेपि सुन्दरे ।
ग्रावाणौ शैलपाषाणौ पत्त्रिणौ शरपक्षिणौ ॥ ४४४ ॥
वृक्षोग्निः कुक्कुटो वर्ही शिखिनोथ तु सादिनौ ।
द्वौ सारथिहयारोहौ वाजिनोश्वेषुपक्षिणः ॥ ४४५ ॥

स्थितौ क्षेत्रवधौ मार्गे सीमा लक्ष्माग्यचिह्नयोः ।
गृहं देहस्त्विट् प्रभावो धाम धन्व स्थलं धनुः ॥ ४४६ ॥
पुमान्मरावथ स्वप्नः स्वापे सुप्तस्य संविदि ।
सूनं पुष्पे वधस्थाने स्त्रियां जिह्वातलेपि च ॥ ४४७ ॥
पुष्पिते त्रिष्वहिहरी चक्रिणौ रथतैलिकौ ।
भृतौ सुवर्णे भर्म स्याच्चर्म स्यात्फलके त्वचि ॥ ४४८ ॥
स्वामिनौ गुहभर्तारौ जनौ लोकपृथग्जनौ ।
जनी वधूश्चन्द्रयुता रात्रिर्ज्यौत्स्नी पटोलिका ॥ ४४९ ॥
अश्वकुत्सितयोरर्वा प्रेमास्त्री स्नेहनर्मणोः ।
मन्दस्वच्छन्दयोः स्वैरी श्येनौ श्वेतविहंगमौ ॥ ४५० ॥
गभस्तिब्रध्नयोर्भानुर्वनं काननीरयोः ।
समूहे पर्वते च स्यात्तानस्तात्पर्यगीतयोः ॥ ४५१ ॥
मणिप्रकृष्टयो रत्नं यानं गमनयुग्मयोः ।
गुणभेदे च नृपतेर्धेनुर्दोग्ध्र्यां तथा गवि ॥ ४५२ ॥
रूपे धने बले द्युम्नं विन्नं लब्धे विचारिते ।
सेवके याचके चार्थी स्थानं स्थित्यवकाशयोः ॥ ४५३ ॥
सादृश्ये गीतविषये स्याच्च योग्यप्रसङ्गयोः ।
वैयापृत्यकरो भोगी त्रिषु राजभुजंगयोः ॥ ४५४ ॥
ज्योत्स्ना ज्योतिष्मती रात्रिस्तथा चन्द्रमसः प्रभा ।
मानं प्रमाणे प्रस्थादौ पुमांश्चित्तसमुन्नतौ ॥ ४५५ ॥
दिग्वासास्त्रिषु नग्नः स्यान्नग्ना वैतालिकादयः ।
संस्कृते दारिते भिन्नस्त्रिषु स्यादन्यवाचकः ॥ ४५६ ॥
शुष्के शुष्कफले वानं तथा सीवनकर्मणि ।
भगाकरौ द्वयोर्योनी कृती सूरिकृतार्थयोः ॥ ४५७ ॥
स्नानीये सवने स्नानं धनं गोसंघवित्तयोः ।
पताकालक्ष्मणोश्चिह्नं स्यादन्नं भुक्तभक्तयोः ॥ ४५८ ॥
छादिते रहसि च्छन्नं पानं पीतौ च रक्षणे ।
खण्डने रक्षणे दानं त्यागे गजमदे तथा ॥ ४५९ ॥

शुद्धिलून्योश्चोनगर्ह्यौ हीनन्यूनौ त्रिलिङ्गकौ ।
जिह्वायां रसना क्लीबे ध्वनावास्वादने न ना ॥ ४६० ॥
कुहना दम्भचर्यायामीर्ष्यालौ तु भवेत्त्रिषु ।
तरुशैलौ शिखरिणौ बली वेगी तरस्विनौ ॥ ४६१ ॥
विषाणिनौ करी शृङ्गी प्रीणने रक्षणेवनम् ।
स्वच्छे तलिनमल्पे च गम्भीरे गहनं वने ॥ ४६२ ॥
रोदनं त्वस्तुणि क्रन्दे प्रज्ञानं बुद्धिचिह्नयोः ।
भुवने विष्टपजले धावने गतिशोधने ॥ ४६३ ॥
त्रैवर्णिकेण्डजे दन्ते द्विजन्मा तारकासु च ।
न ना तु परिहारे स्याद्वर्जनं त्यागहिंसयोः ॥ ४६४ ॥
कुले नाशे च निधनं सूचना स्त्रीनपुंसकम् ।
व्यधनेभिनये संज्ञापैशुन्यक्रिययोरपि ॥ ४६५ ॥
जीवनं राजलभ्यांशे जीविते तोयवर्तने ।
उद्दानमुद्गमे चुल्ल्यां शयनं रतशय्ययोः ॥ ४६६ ॥
शासनं लेखशास्त्राज्ञा वर्तनी वृत्तिमार्गयोः ।
तोदनं व्यधने तोत्त्रे प्रसूनं फलपुष्पयोः ॥ ४६७ ॥
दले पतत्रे छदनं विलग्नो लग्नमध्ययोः ।
मेषादौ च तनुस्थे स्याल्लभोराराधने भवेत् ॥ ४६८ ॥
सेवनं सीवने पाशे बन्धनं स्नेहवृन्तयोः ।
अब्जाकरेब्जे नलिनी वाहिनी सिन्धुसेनयोः ॥ ४६९ ॥
मैथुने रतसंबन्धौ मिथुने युग्मदंपती ।
सेनान्यौ गुहसेनेशौ ह्रादिन्यौ वज्रविद्युतौ ॥ ४७० ॥
सल्लकी च नदी च स्यात्त्रिष्वयं नादवत्यपि ।
द्वयोर्वज्रेशनिः शम्पा रक्षोवृक्षौ पलाशिनौ ॥ ४७१ ॥
अरत्निः कूर्परे हस्ते सप्रकोष्ठतताङ्गुलौ ।
वाणिन्यौ नर्तकीदूत्यौ भोगिनी देवताभिदि ॥ ४७२ ॥
विहाय महिषीमन्या भोगिन्यो राजयोषितः ।
प्रधानं धीमहामात्यप्रकृत्यात्मसु सत्तमे ॥ ४७३ ॥

अश्वादीनां च संनाहे जये च जयनं भवेत् ।
व्यञ्जनं लाञ्छनश्मश्रुनिष्ठानावयवेष्वपि ॥ ४७४ ॥
संस्कारके भवेत्क्लीबे वादित्रकरणे पुमान् ।
स्यात्कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम् ॥ ४७५ ॥
स्यादुद्यानं राजमार्गे वनभेदे प्रयोजने ।
क्रतौ करकुके चास्त्री वितानं त्रिषु तुच्छके ॥ ४७६ ॥
मन्दे शून्ये विस्तृतौ ना गृहान्ते तूद्यमे तथा ।
उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेपि च ॥ ४७७ ॥
व्युत्थानं प्रतिरोधे च विरोधाचरणेपि च ।
अञ्जनं कज्जलं माता कपेः स्त्री दिग्गजे पुमान् ॥ ४७८ ॥
प्रभिन्नोनेकतां प्राप्ते गजे जातमदे तथा ।
नालिकेरे हलधरे लाङ्गली जननं कुले ॥ ४७९ ॥
जन्मन्यम्बा च जननी वृद्धौ छेदे च वर्धनम् ।
अर्जुनौ वृक्षभित्पार्थौ तृणे क्लीबेर्जुनी गवि ॥ ४८० ॥
त्रिषु शुक्ले केतनं तु गृहे केतौ निमन्त्रणे ।
आपन्न आपदं प्राप्ते प्राप्ते च स्यात्त्रिलिङ्गकः ॥ ४८१ ॥
देहवायौ समानो ना सत्तुल्यैकेषु तु त्रिषु ।
व्योमयानं विमानोस्त्री सप्तभूमे च वेश्मनि ॥ ४८२ ॥
इन्द्रिये विषयि क्लीबे त्रिषु स्याद्विषयान्विते ।
तपनोर्को नरकभित्प्राचीनं प्रान्ततो वृतिः ॥ ४८३ ॥
पाठायां स्त्री प्राग्भवे त्रिष्वन्तर्द्वारे रहस्यपि ।
प्रच्छन्नं छादिते गूढे त्रिष्वथ श्वसनो मरुत् ॥ ४८४ ॥
श्वासयुक्ते मरुवके पूतना तु हरीतकी ।
भूतभेदे द्वयोर्लाला स्यन्दिनी निम्नगा तथा ॥ ४८५ ॥
द्राक्षायां गोस्तनी हारभेदे ना धमनी नडी ।
सिराग्न्युद्दीपनं भाण्डं नडे नाथ नभोगतौ ॥ ४८६ ॥
कर्णीरथे च डयनं मार्जनी पांसुशोधनी ।
उपस्पर्शोत्पुंसनयोः क्लीबे ना रोध्रपादपे ॥ ४८७ ॥

मार्जना वाद्यपिण्डयां स्यात्तत्परीक्षार्थवादने।
कुण्डली भुजगे बद्धकुण्डले तु भवेत्त्रिषु ॥ ४८८ ॥
त्रिषु शान्तो वराकश्च तपस्वी स्त्री तु मल्लकी।
संधिन्यकालदुग्धा गौर्वृषाक्रान्ता च हायनाः ॥ ४८९ ॥
वत्सरार्चिर्व्रीहिभेदाः क्रन्दने ध्वानरोदने।
विपत्तावशुभे भ्रंशे पानस्त्रीमृगयादिषु ॥ ४९० ॥
दैवानिष्टफले सक्तौ व्यसनं क्रोधदूषणे।
निवृत्तौ दापने सिद्धौ गत्यावनुगमे धने ॥ ४९१ ॥
उपायमृतसंस्कारवधमेढ्रेषु साधनम्।
अयनं पथि सूर्यस्याप्युदग्दक्षिणतो गतौ ॥ ४९२ ॥
पाकस्थाने कुलालस्य पवनं ना प्रभञ्जने।
सोमनिर्मथने स्नाने सवनं यजने तथा ॥ ४९३ ॥
वामनो दिग्गजे विष्णौ निखर्वे मेढ्यलिङ्गकः।
अन्तके शमनः क्लीबे वधेथ जघनं कटौ ॥ ४९४ ॥
पश्चादर्धे नितम्बाग्रे कौपीनं गर्ह्यगुह्ययोः।
पुमानक्षे जिघांसायां क्रीडायामपि देवनम् ॥ ४९५ ॥
मधूच्छिष्टे स्मरे वृक्षे वसन्ते मदनः पुमान्।
पिण्डीतके कपित्थे च धतूरे मदकारिणि ॥ ४९६ ॥
वेदनानुभवः पीडा यापने त्यागवर्तने।
कल्पना कर्तने कॢप्तावुद्देशे गजसज्जने ॥ ४९७ ॥
विकल्पे स्यादाकलने विधानेपि विभाजने।
समीरणः स्पर्शनः स्यात्क्लीबे तु स्पर्शदानयोः ॥ ४९८ ॥
हिंसात्मके सूचने च गन्धनं स्यात्प्रकाशने।
संतानः संततौ देववृक्षे चापत्यगोत्रयोः ॥ ४९९ ॥
स्तननं कुत्सिते ध्वाने देवशब्देथ सज्जना।
न नेभसज्जीकरणे त्रिषु साधौ नपुंसकम् ॥ ५०० ॥
पटगुल्मे चेतना धीः पुंसि प्राणिनि तेजनी।
मूर्वा शाणोपलस्तेजोवती वेणौ शरे पुमान् ॥ ५०१ ॥

स्पृक्कायां पिशुना दुष्टे सूचके त्रिषु वेष्टनम् ।
उष्णीषे मुकुटे चाथ शकुनी पक्षिणि द्वयोः ॥ ६०२ ॥
शुभशंसिनिमित्ते तु क्लीबेथ वृजिनः कचे ।
चर्मकिल्बिषयोः क्लीबे भूतात्मा धातृदेहयोः ॥ ६०३ ॥
संस्थानमाकृतौ मूर्त्यौ संनिवेशे चतुष्पथे ।
समाप्तौ च विभक्ते च विच्छिन्नं त्रिष्वथासनम् ॥ ६०४ ।
करिस्कन्धे च पीठे च मलिनं समलैनसोः ।
आराधनं साधने स्यात्तोषणोपासयोरपि ॥ ६०५ ॥
अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि ।
आतञ्चनं प्रतीवापे जवनाप्यायने तथा ॥ ६०६ ॥
आस्कन्दने रणाक्रान्ती शोषणप्रापणे तथा ।
सूर्यवह्नी चित्रभानू मूर्खनीचौ पृथग्जनौ ॥ ६०७ ॥
कुलेप्यभिजनो जन्मभूम्यां चाथ समापनम् ।
वधेन्ते चापदानं तु खण्डनेद्भुतकर्मणि ॥ ६०८ ॥
निर्वासनं मारणे स्यान्नगरादेर्बहिष्कृतौ ।
शक्रघातुकमत्तेभवर्षुकाब्दा घनाघनाः ॥ ६०९ ॥
अभिमानोर्थादिदर्पे ज्ञाने प्रणयहिंसयोः ।
स्यादावेशनमावेशे शालायामपि शिल्पिनाम् ॥ ६१० ॥
निसूदने निरसनं निष्कासे च विरोचनाः ।
चन्द्राग्न्यर्का विश्वकर्मा मार्ताण्डसुरशिल्पिनोः ॥ ६११ ॥
निर्यातनं वैरशुद्धौ दाने न्यासार्पणेपि च ।
अभिपन्नोपराद्धाभिग्रस्तव्यापद्गतद्रुताः ॥ ६१२ ॥
आच्छादनं संवननमपवारणमित्यपि ।
आयोधनं निघातः स्याद्युद्धं चाथ सनातनम् ॥ ६१३ ॥
नित्ये त्रिषु पुमान्विष्णौ स्तनयित्नुर्बलाहके ।
तद्ध्वनौ च महासेनो गुहे सेनापतावपि ॥ ६१४ ॥
ब्रह्मा कामश्चात्मयोनी पिञ्जे विहननं वधे ।
संस्कारे प्रतियत्नः स्यादुपग्रहणलिप्सयोः ॥ ६१५ ॥

विपर्यस्तमपाचीनं त्रिषु क्लीबे त्वपागपि ।
मेखलायां सारसनमुरस्त्रे च नपुंसकम् ॥ ९१६ ॥
उत्पत्तिः स्यादुत्पतनमूर्ध्वगमनमित्यपि ।
ग्रहणे कलनायां च बन्धे चाकलनं वृतौ ॥ ९१७ ॥
विद्याप्रवचनं वेदे व्याख्याने सुवचस्यापि ।
प्रतिमानं प्रतिच्छायागजदन्तान्तरालयोः ॥ ९१८ ॥
सामिधेनी त्वृक्समिधोरग्र्यजन्मा द्विजोग्रजः ।
विनीते त्रिष्वनूचानः साङ्गे वेदे च पाठकः ॥ ९१९ ॥
काषायवस्त्रार्धवृद्धा स्यात्कात्यायन्युमापि च ।
वृष्टौ श्रुते निशमनं कार्यहेत्वोः प्रयोजनम् ॥ ९२० ॥
आवर्जनं दाननती तथा भ्रंशमनोहृती ।
संमार्जनी शोधनी स्यात्क्लीबे क्षालनलेपने ॥ ९२१ ॥
संस्कृतौ क्षीरिकोत्कृष्टभोज्ये राजादनं भवेत् ।
पियालेथोपधानं स्याद्दृष्टान्तप्रतिबिम्बयोः ॥ ९२२ ॥
गण्डके चाथ कारम्भा विश्वक्सेना हरौ गणे ।
पुमानथ क्रतुध्वंसी प्रोक्तः शर्वश्च दानवः ॥ ९२३ ॥
प्रसाधनी कङ्कतिका क्लीबे त्वाराधनार्जने ।
मण्डनायां कृष्णवर्त्मा हव्यवाहनपापयोः ॥ ९२४ ॥
उपासनं शराभ्यासे नमस्यासेवयोर्न ना ।
आम्रातके शिरीषे च प्लक्षे च स्यात्कपीतनः ॥ ९२५ ॥
उष्ट्राहितुण्डिकौ व्यालग्राहिणी मातुलप्रिया ।
मातुलानी तथा भङ्गा विषौषध्योः प्रदीपनः ॥ ९२६ ॥
बोधने प्रतिदाने च भवेत्तु प्रतिपादनम् ।
कुङ्कुमे देववृक्षे च पुंसि वा हरिचन्दनम् ॥ ९२७ ॥
अन्तावसायी चण्डाले नापिते च द्विलिङ्गकः ।
वधेतिसर्जनं दाने शुद्धौ त्यागेपमार्जनम् ॥ ९२८ ॥
स्यादुपस्पर्शनं स्पर्शे स्नानाचमनयोरपि ।
विसर्जनीयाक्षरयोरभिनिष्टानमस्त्रियाम् ॥ ९२९ ॥

मेघवाहन इन्द्रः स्याद्वायुश्च शकुलादनी ।
कटुका लाङ्गली च स्याद्धरिद्रा वरवर्णिनी ॥ ९३० ॥
नायिका च तपस्वी स्यात्सर्पश्च पवनाशनः ।
प्रतिबिम्बे प्रतीकारे न पुंसि प्रतियातना ॥ ९३१ ॥
वेश्या नखौषधिर्हट्टविलासिन्यावपि स्मृते.।
ओड्रपुष्पे जपा मन्त्रावृत्तौ ना भयवेपथू ॥ ९३२ ॥
स्वरभिद्वरुणः कम्पो भावभेदश्च सात्त्विकः ।
ग्रन्थावृत्तौ पशौ शब्दे नाटकादिस्वभावयोः ॥ ९३३ ॥
सौन्दर्याकारयो रूपं रङ्गसीसकयोस्त्रपु ।
कल्पः शास्त्रे विधौ न्याय्ये संवर्ते ब्रह्मणो दिने ॥ ९३४ ॥
गर्तोदपानयोः कूपस्तथा स्याद्गुणवृक्षके ।
क्षेपणावज्ञयोः क्षेपो लेपो लेपनमृत्क्रिये ॥ ९३५ ॥
आक्रोशे शपथे शापः पुष्पमार्तवसूनयोः ।
द्वयोर्गोपी वल्लवी स्त्री शारिवा पातरीश्वरे ॥ ९३६ ॥
गोष्ठाध्यक्षे ग्रामवृन्दपतौ गोपो भवेत्त्रिषु ।
तल्पं शय्याट्टदारेषूपर्याधारेषु वेश्मनः ॥ ९३७ ॥
तापद्व्यभिदौ धूपौ वपा विवरमेदसोः ।
वाष्पावूष्माश्रुणी सूपो व्यञ्जने सूपकारके ॥ ९३८ ॥
ग्रन्थिपर्णे तु शष्पं स्याद्व्रीहौ रूढे हरित्तृणे ।
शाखायां विस्तृतौ स्तम्बे विटपं पुंनपुंसकम् ॥ ९३९ ॥
आक्षेपौ भर्त्सनाकर्षावुडुपः प्लवचन्द्रयोः ।
आवाप आलवाले स्यात्प्रक्षेपे वलये तथा ॥ ९४० ॥
रूढप्रधानयोर्नीतितन्त्रे स्यादथ कल्पने ।
वेशे चाकल्प आच्छादनान्ने कशिपु ते पृथक् ॥ ९४१ ॥
कुतपो वाद्यविन्यासे दर्भकालप्रभेदयोः ।
छागरोममये वस्त्रे कूर्मी वीणा च कच्छपी ॥ ९४२॥
कलापः संहतौ वर्हे काञ्चीतूणीरयोरपि ।
प्रतापावातपख्याती स्वरूपो बुधरूपिणोः ॥ ९४३ ॥

प्राप्तरूपाभिरूपौ चावलेपो मदगर्हणे।
परिच्छदे परीवापो वपने सलिलस्थितौ॥ ५४४॥
वृषाकपी विष्णुशिवावग्निरिन्द्रो दिवाकरः।
हेमपुष्पी तु दुःस्पर्शा बिम्बिका पीतयूथिका॥ ५४५॥
श्रीवासः सिल्हकश्च स्याद्गुग्गुलधूपोथ वेतसे।
जले च मेघपुष्पं स्यादुपक्षेप उपक्रमे॥ ५४६॥
कालादेरतिवाहे च रेफः स्यात्पापवर्णयोः।
कम्बुर्ना वलये शङ्खे शालिधूलौ च मण्डले॥ ५४७॥
बिम्बोस्त्री प्रतिबिम्बे ना क्लीबे स्याद्बिम्बिकाफले।
पूर्वोन्यलिङ्गः प्रागाह पुंबहुत्वेपि पूर्वजान्॥ ५४८॥
आद्यर्थे तु भवेत्क्लीबे डिम्बौ तु प्लीहविप्लवौ।
शम्बः स्यान्मुसलाग्रस्थे लोहे श्रेयोन्विते पवौ॥ ५४९॥
कादम्बः सायकः पक्षी कदम्बः संहतौ द्रुमे।
द्विजिह्वः सर्पखलयोर्नितम्बोद्रितटे कटौ॥ ५५०॥
अन्तराभवसत्त्वेश्वे गन्धर्वो दिव्यगायने॥
मृगभेदेथ हेरम्बो महिषे विघ्ननायके॥ ५५१॥
संविभज्ये जने गेहे कुटुम्बं स्यान्नपुंसकम्।
नक्षत्रे भं प्रभायां स्त्री कुम्भी स्यात्कट्फले द्वयोः॥ ५५२॥
जलादिभाण्डे ना हस्तिकटराशिभिदोस्तथा।
सावष्टम्भे महे कुम्भा शंभुरर्हन्विधिः शिवः॥ ५५३॥
विभुः स्वामी व्यापकश्च डिम्भौ तु शिशुबालिशौ।
स्तम्भाः स्थूणागर्वभावाः स्वभूर्गोविन्दवेधसोः॥ ५५४॥
कुक्षिभ्रूणाशया गर्भा बालकाभ्यन्तरेपि च।
जृम्भा विकासे प्रसरे व्यादाने वदनस्य तु॥ ५५५॥
त्रिषु गात्रविरामेजे शुभो भद्रे नपुंसकम्।
क्षत्रिये विजिगीषौ च ना प्राण्यवयवे पुनः॥ ५५६॥
नाभिः स्त्री चक्रमध्येपि निभो व्याजे समे त्रिषु।
संसद्गोष्ठ्योर्गृहे द्यूते सभा जम्भो रयेशने॥ ५५७॥

दैत्यभेदे मुखे शक्तस्वामिनोस्तु प्रभुस्त्रिषु ।
रम्भाप्सरोभित्कदली दण्डे स्याद्वैणवे पुमान् ॥ ९९८ ॥
वीणाप्रसेवे ककुभो गेयभेदेऽर्जुनद्रुमे ।
गीतस्वरे बलीवर्दे श्रेष्ठे च ऋषभः पुमान् ॥ ९९९ ॥
कनिष्ठामणिबन्धान्तरोष्ट्रयोः करभोथ गौः ।
सुरभिः स्त्री कामधेनुः सल्लकी चैलवालुकी ॥ ९६० ॥
सुरायां स्यात्सुगन्धौ तु मनोज्ञे त्रिषु ना मधौ ।
ना भेर्यां दुन्दुभिः स्त्री स्यादक्षबिन्दुत्रिकद्वये ॥ ९६१ ॥
स्यान्महारजने क्लीबे कुसुम्भं करके पुमान् ।
पुनर्नवायां वर्षाभूः स्त्री वर्षाभ्वी द्वयोः प्लवे ॥ ९६२ ॥
विस्तारे प्रतिबिम्बे च विष्कम्भो नाटकांशके ।
वल्लभो दयितेऽध्यक्षे हये च प्रणये पुनः ॥ ९६३ ॥
स्यादाश्वासे च विस्रम्भो वृषभो द्रव्यभिद्गवोः ।
आलम्भौ स्पर्शनवधावारम्भौ तु क्रमोद्यमौ ॥ ९६४ ॥
जनाभ्यन्तरयोः पुंसि विदर्भस्त्रिषु निष्कुशे ।
विप्रलम्भो विसंवादो विरहे वञ्चना तथा ॥ ९६९ ॥
कुत्साप्रश्नवितर्केषु किं मा लक्ष्मीप्रमाणयोः ।
लक्ष्मीर्हरिप्रिया संपच्छोभा ब्राह्मी तु मातृभित् ॥ ९६६ ॥
वागोषधिभिदौ ब्रह्मभवादौ तु भवेत्त्रिषु ।
रामा योषिद्दाशरथौ जामदग्न्ये हलायुधे ॥ ९६७ ॥
मृगभेदे च पुंसि स्यात्कृष्णे चारौ सिते त्रिषु ।
भार्गीश्रीपद्मचारिण्यः पद्मा अब्जेऽस्त्रियां पुमान् ॥ ९६८ ॥
संख्यानिधिव्यूहनागभित्क्लीबे गजबिन्दुषु ।
स्याद्धर्ममस्त्रियां पुण्ये क्लीबे तत्साधने पुमान् ॥ ९६९ ॥
स्वभावदेवभिन्न्याययमाचारेषु सोमपे ।
अहिंसोपमयोश्चाथ जामिः स्वसृकुलस्त्रियोः ॥ ९७० ॥
काम्ये स्वैरे च कामः स्यादभिलाषे मनोभवे ।
अव्ययं त्वभ्यनुज्ञाने सोम ओषधिभेशयोः ॥ ९७१ ॥

यमोन्तकः कर्म च यन्नित्यं सहजयोरपि ।
क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु ॥ ५७२ ॥
त्रिषु श्यामौ हरित्कृष्णौ स्त्रियां स्याच्छारिवानिशोः ।
कान्ता प्रियङ्गुः पालिन्दी वटभेदे तु पुंस्ययम् ॥ ५७३ ॥
समा वर्षेनुचनींचे त्रिषु सर्वसदृक्षयोः ।
गुल्मो रुक्स्तम्बसेनाभिद्रक्षास्थानेषु गह्वरे ॥ ५७४ ॥
उष्णे स्वेदाम्भसि ग्रीष्मे घर्मो भावभिदातपे ।
त्रिषु तोक्मं हरिन्मात्रे न स्त्रियां हरिते यवे ॥ ५७५ ॥
सीमावधौ स्थितौ क्षेत्रे विषये केशभूषणे ।
वृक्षमात्रे पारिजाते द्रुमश्चैद्यकुलोद्भवे ॥ ५७६ ॥
कुशलं क्षेममस्त्री ना त्वौषधे लब्धरक्षणे ।
ग्रामः संवसथे गेयभेदे वृन्दे सपूर्वकः ॥ ५७७ ॥
भ्रमिर्मोहस्तक्षभाण्डं स्यादतस्मिंस्तु तद्ग्रहः ।
भ्रमो मूर्छा तक्षभाण्डं छन्नमम्बुविनिर्गमः ॥ ५७८ ॥
रश्मिर्घृणिप्रग्रहयोः स्याद्गङ्गादुर्गयोरुमा ।
भीमो रुद्रे सभीष्मस्तु राजभेदे भयानके ॥ ५७९ ॥
अध्यात्मं सूक्ष्ममल्पे तु त्रिषु शीते हिमं त्रिषु ।
क्लीबे तुषारे भूमिः स्यात्स्थानं पात्रं धरा दशा ॥ ५८० ॥
वामा योषित्त्रिषु वल्गौ स्यात्सव्यप्रतिकूलयोः ।
वाम्यश्वा शार्यवस्त्वर्थवाहयुग्मकृतेपि सा ॥ ५८१ ॥
कुटिले मन्दके जिह्मो दमौ दण्डेन्द्रियमही ।
श्रमः प्रयत्ने खेदे च क्रिमिः स्यात्कीटरोगयोः ॥ ५८२ ॥
परिपाटी क्रमः कल्पः पादक्षेपः परंपरा ।
आनन्तर्यं पदसंधिः शमी शिम्बा द्रुभित्स्त्रियाम् ॥ ५८३ ॥
कूर्मी भवेद्द्वयोः प्राणी यमिनामासनेस्त्रियाम् ।
नेमिः स्त्री रथचक्रान्ते कूपाङ्गे तिनिशे तु ना ॥ ५८४ ॥
शान्तिर्हस्तः शमो राज्ञां व्यवस्था निजमण्डले ।
आमो रोगे त्रिष्वपक्के स्तोमः संघेध्वरे स्तुतौ ॥ ५८५ ॥

पाणेर्मध्याङ्गुलिर्दृष्टरजाः कन्या च मध्यमा।
गीतस्वरे देहमध्ये देशराजभिदोः पुमान् ॥ ६८६ ॥
अन्यूनानतिरिक्ते च तथा मध्यभवे त्रिषु।
भयसंवेगादरेषु संभ्रमोथ परिश्रमे ॥ ६८७ ॥
व्यायामः पौरुषे कृत्ये विद्रुमो वृक्षरत्नयोः।
यन्त्रणायां प्रतिज्ञायां नियमो निश्चये व्रते ॥ ६८८ ॥
हेलाभ्रान्त्योर्विभ्रमः स्याच्छक्तौ क्रान्तौ च विक्रमः।
तलिमः कुट्टिमे तल्पे शास्त्रे महण आगमः ॥ ६८९ ॥
गत्यभावद्रुदुर्गेष्वगमो बुद्धस्तु गौतमः।
मुनौ द्वयोः संगमस्तु नदीसंभेदसङ्गयोः ॥ ६९० ॥
आश्रमो ब्रह्मचर्यादौ मठे स्थाने तपस्विनाम्।
वणिक्पथः पुरं वेदो निगमाख्रिष्वतो वणिक् ॥ ६९१ ॥
नैगमो नागरो विप्रः श्रेष्ठः साधुश्च सत्तमः।
आद्ये प्रधाने प्रथमोथाधमौ न्यूनगर्हितौ ॥ ६९२ ॥
बुध्नस्थश्चावमोप्येवमग्रिमोग्र्यप्रधानयोः।
उत्कृष्टे परमश्चाप्यभ्यनुज्ञानेव्ययं पुनः ॥ ६९३ ॥
ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु।
रत्ने शृङ्गे श्वेतगुणे तिलके स्याल्ललाम च ॥ ६९४ ॥
निष्क्रमो निर्गमो बुद्धिसंपच्चाथ परिश्रमः।
व्यायामयत्नखेदेषु युद्धे त्वभ्यागमो भवेत् ॥ ६९५ ॥
आभिमुख्यागतौ चोपशमः शान्तिर्विनीतता।
उपक्रमश्चिकित्सायामारम्भोपधयोरपि ॥ ६९६ ॥
अङ्गीकृतावुपगमः समीपगमनेपि च।
जीर्णे च परिभुक्ते च यातयामं भवेत्त्रिषु ॥ ६९७ ॥
ज्या मौर्वी भूश्च नाके द्यौरन्तरिक्षे तथा स्त्रियाम्।
ज्या गव्या गोसमूहे च रागद्रव्ये नपुंसकम् ॥ ६९८ ॥
गोक्षीरादौ त्रिषु पुनः स्यादर्यः स्वामिवैश्ययोः।
कल्यं प्रातः सुरायां स्त्री कल्याण्यां वाच्यपि त्रिषु ॥ ६९९ ॥

सज्जनीरोगदक्षेषु काल्यं तु स्यादहर्मुखे ।
प्राप्तकाले त्रिषु भवेद्भाग्यं कर्म शुभाशुभम् ॥ ६०० ॥
यौतकादौ धने दायो दाने भोज्ये च पैतृके ।
विवाद्याया ज्ञातिभृत्या जन्याः स्निग्धा वरस्य च ॥ ६०१ ॥
निर्वादे जनके युद्धे क्लीबे कार्ये तु स त्रिषु ।
आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् ॥ ६०२ ॥
उपायः कर्म चेष्टा च चिकित्सा करणं क्रियाः ।
धात्वर्थाख्यातसंस्कारा और्ध्वदैहिकमेव च ॥ ६०३ ॥
शाखापुरे न ना गृह्यं त्रिषु त्वस्वैरिपक्ष्ययोः ।
गृहासक्ताण्डजमृगे गृह्या तु स्याद्बहिर्भवा ॥ ६०४ ॥
आहते हेम्नि रजते वा रूप्यं रजतेपि च ।
त्रिषु प्रशस्तरूपे स्यान्माल्यं पुष्पेपि तत्स्रजि ॥ ६०५ ॥
हृद्भवं हृत्प्रियं हृद्यं हृदयाय हितं त्रिषु ।
वशीकरणमन्त्रे ना सत्यं शपथतथ्ययोः ॥ ६०६ ॥
भव्यौषधधने द्रव्यं गुणाधारगवोस्तथा ।
विशेष्ये परमाणौ च तिष्यपुष्यौ कलौ च भे ॥ ६०७ ॥
पुण्यं तु धर्मे सुकृते त्रिषु पूतमनोज्ञयोः ।
सौम्यो बुधे मनोज्ञे च त्रिषु स्यात्सोमदैवते ॥ ६०८ ॥
पूजार्थे द्रव्यमर्घ्यं स्यादर्घार्थार्घार्हयोस्त्रिषु ।
शरामान्तर्व्रणौ शल्ये प्राण्योषधिनृपेषु ना ॥ ६०९ ॥
स्पर्धाकाञ्च्योर्दन्तिमध्यरज्जौ कक्ष्या गृहान्तरे ।
प्रतिज्ञायां तुलायां च पुंसः सारसनेपि च ॥ ६१० ॥
त्रिषु रथ्यो रथोद्वाहे स्त्रियां मार्गरथौघयोः ।
देहसंघातलक्ष्येषु कायस्त्रिषु कदैवते ॥ ६११ ॥
क्षयो निलयकल्पान्तरोगापचयमृत्युषु ।
त्रिषु सद्भावियोग्येषु भव्यः क्लीबे शिवे फले ॥ ६१२ ॥
मृतावनशने प्रायो बाहुल्ये सदृशे त्रिषु ।
धिष्ण्यं स्थाने गृहे भे ना दैत्याचार्याग्निभेदयोः ॥ ६१३ ॥

सर्वज्ञभिषजौ वैद्यौ स्याच्छय्या तल्पगुम्फयोः ।
तुरंगगरुडौ तार्क्ष्यौ पूज्यौ श्वशुरसज्जनौ ॥ ६१४ ॥
रिपुतस्करयोर्दस्युर्वर्यः प्रार्थ्यप्रधानयोः।
वामदक्षिणयोः सव्यमर्थ्यो न्याय्यविपश्चितोः ॥ ६१५ ॥
अधमान्तभुवोरन्त्यो मध्यो न्याय्यावलग्नयोः ।
अन्तरेनधिकन्यूने मध्ये तुद्वियवाचकः ॥ ६१६ ॥
इतरासदृशावन्यौ त्रिवेद्यां त्रितये त्रयी ।
रहस्योपस्थयोर्गुह्यं मन्युर्दैन्ये क्रतौ क्रुधि ॥ ६१७ ॥
पूजाव्रतक्रिये चर्ये गेयौ गातव्यगायनौ ।
ययुरश्वेश्वमेधाश्वे मूल्यं विनिमये धने ॥ ६१८ ॥
काव्यं ग्रन्थे ग्रहे पुंसि कुल्या नीरप्रणालिका ।
नदी च क्लीवमस्थ्नि स्याद्वाच्यलिङ्गं कुलोद्भवे ॥ ६१९ ॥
त्रिषु चोद्यं चोदनार्हे क्लीवे स्याच्चोदनेद्भुते ।
त्रिषु गोप्यं गोपनीये गोप्या दासस्य सूनवः ॥ ६२० ॥
प्रवीणोचितयोर्योग्यस्त्रिष्वभ्यासे भवेत्स्त्रियाम् ।
एकत्वादौ विचारे च संख्या क्लीवे तु संयुगे ॥ ६२१ ॥
प्राप्तव्येम्बुमय चाप्यं याप्ये नेतव्यगर्हिते ।
मुखं मुखान्तरं चास्यमासने स्त्री हरीतकी ॥ ६२२ ॥
पथ्यार्याभिच्चौषधे तु क्लीवे त्रिष्वगते पथः ।
पाक्यं काचे यवक्षारे विडे पाकार्हणे त्रिषु ॥ ६२३ ॥
छेदनीये त्रिषु भवेत्कृत्यो विद्विष्टकार्ययोः ।
स्त्रियां क्रियादेवतयोर्वाच्यं तु त्रिषु कुत्सिते ॥ ६२४ ॥
उपालभ्ये च चैत्यः स्यात्स्तूप उद्देशपादपे ।
प्राकारमूलबन्धे च संवसंचययोश्चयः ॥ ६२५ ॥
साध्या देवभिदः पुंसि भूम्नि शक्ये पुनस्त्रिषु ।
वन्या वनसमूहे स्त्री वने साधुनि तु त्रिषु ॥ ६२६ ॥
छाया स्यादातपाभावे प्रभाप्रतिमयोरपि ।
सूर्यप्रियायां गङ्गायां संवाहन्याय्ययोरपि ॥ ६२७ ॥

सद्योगे त्रिषु सोढव्य आरोग्ये तु नपुंसकम् ।
वीर्यं बलं प्रभावश्च रेतः स्याद्वीरकर्म च ॥ ६२८ ॥
देवीभेदे जयौषध्योर्द्वयोर्ना भारते गणे ।
उत्कर्षेऽभिभवे चार्या ज्येष्ठब्राह्मणसज्जनाः ॥ ६२९ ॥
छन्दोभिल्ली चिता चित्या स्यादभिचयने न ना ।
सभ्यः सामाजिकेऽभौ च तथा प्रत्ययिते त्रिषु ॥ ६३० ॥
दूष्येभमध्यबन्धन्यां क्लीवे पटगृहे त्रिषु ।
दूषणीये बले सैन्यं त्रिषु तत्समवायिनि ॥ ६३१ ॥
माया स्याद्बुद्धजननी वञ्चनाविद्ययोरपि ।
तदधिष्ठातृदेव्यां च जात्यं कुलजकान्तयोः ॥ ६३२ ॥
आदित्यौ सूर्यगीर्वाणौ श्वशुर्यौ स्यालदेवरौ ।
त्रिषु हर्तुमशक्ये स्यादहार्यः पर्वते पुमान् ॥ ६३३ ॥
स्यान्नादेयी भूमिजम्बूस्तर्कारी जलवेतसः ।
त्रिषु नद्यां भवे पश्चाज्जघन्यं त्रिषु गर्हिते ॥ ६३४ ॥
अभिलाषविनिर्मुक्ते प्रणाय्यः स्यादसंमते ।
आधार आशयः स्याद्धृद्यभिप्रायेऽश्वसंहतिः ॥ ६३५ ॥
अश्वीयं स्यादश्वहिते त्रिष्वपत्यं तु पुत्रयोः ।
ब्राह्मण्यं ब्राह्मणत्वे च तथा तत्कर्मसंघयोः ॥ ६३६ ॥
मलयौ पर्वतारामौ भ्रातृव्यौ भ्रातृजद्विषौ ।
विस्रम्भयाच्ञाप्रेमाणः प्रणयाः संस्तवोऽपि च ॥ ६३७ ॥
संघाते संनिवेशे च संस्त्यायः स्याद्गृहे तथा ।
पश्चादवस्थायिबलं संनयो द्रव्यमेलनम् ॥ ६३८ ॥
कषायः सुरभौ स्निग्धे भाविते त्रिषु ना रसे ।
द्रवे वर्णे चित्तधर्मेऽवस्नेहे स्त्री पुनर्मले ॥ ६३९ ॥
काञ्चिकस्य द्वितीया तु जाया स्यात्पूरणे त्रिषु ।
स्थाने विहंगमावासे कुलायं पुंनपुंसकम् ॥ ६४० ॥
कशेरुहेम्नोर्गाङ्गेयं पुंसि भीष्मे गणाधिपे ।
त्रिषु वामे प्रसव्यः स्यात्प्रतिकूलानुकूलयोः ॥ ६४१ ॥

शोभायां नाम्नि कीर्तावप्यभिख्या क्षेत्रियस्त्रिषु।
अन्यदेहचिकित्सार्हे त्रिषादौ क्षेत्रिजे तृणे ॥ ६४२ ॥
असाध्यरोगे दुःशोध्ये तृणादौ पारदारिके।
विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि ॥ ६४३ ॥
आधारे ग्रामसंघे च व्यवायो व्यवधौ रते।
हृदयं वक्षसि स्वान्तेभिप्रायाभ्यन्तरोण्डुके ॥ ६४४ ॥
चित्रादर्षौ विस्मयौ तु पर्यायोर्थसमे क्रमे।
निकायः स्यान्निवासे च संघे राशीकृतौ तथा ॥ ६४५ ॥
समयाः शपथाचारकालसिद्धान्तसंविदः।
प्रत्ययोधीनशपथज्ञानविश्वासहेतुषु ॥ ६४६ ॥
रन्ध्रे शब्दे प्रथायां च संवादे मेषकम्बलौ।
ऊर्णायू स्यात्तु सौरभ्यं सौगन्ध्यं रम्यता तथा ॥ ६४७ ॥
मेघे तु सध्वनौ शक्रे पर्जन्यो मेघदेवते।
हिरण्यं हेम्नि तन्मानभेदेर्थे स्यादकुप्यके ॥ ६४८ ॥
प्रलयौ मृत्युसंवर्तौ मूर्छा भावश्च सात्त्विकः।
न नातिथ्यमतिथ्यर्थमतिथौ तु नपुंसकम् ॥ ६४९ ॥
व्यसनान्यशुभं दैवं विपदित्यनयास्त्रयः।
क्लेशे दण्डे च दोषे च विनाशेतिक्रमेत्ययः ॥ ६५० ॥
पानीयं सलिले पेयरक्ष्ययोस्त्रिष्वथोदयः।
पूर्वाद्रिरुद्गमो वृद्धिः स्थेये स्थानहिते पुरे ॥ ६५१ ॥
स्थानीयमुत्तरपदे त्रिषु स्यादुपमार्थकम्।
छत्त्रायां पुंसि शालेयः क्षेत्रे क्लीबमथाभयम् ॥ ६५२ ॥
भयाभाव उशीरं च स्त्री पथ्या निर्भये त्रिषु।
राजश्याले राष्ट्रियः स्यात्त्रिषु राष्ट्रभवादिके ॥ ६५३ ॥
शीर्षण्यो विषदे केशे शिरस्त्रे तु नपुंसकम्।
शिरोभवे तद्धिते च प्रधाने चान्यलिङ्गकः ॥ ६५४ ॥
संचयः संग्रहे संघ आत्रेयी स्याद्रजस्वला।
अत्र्यपत्ये त्रिषु फले मदनस्यापि कट्फले ॥ ६५५ ॥

कैडर्यं तूलवृक्षे तु ब्रह्मण्यो ब्रह्मणो हिते।
त्रिष्वन्वयो वंशवाक्यपदमेलनयोस्तथा ॥ ६५६ ॥
संबन्धेव्यभिचारे च चाम्पेयो नागकेसरे।
चम्पके चाथ विजयो गणभेदेर्जुने गतौ ॥ ६५७ ॥
पराभिभूतौ देव्यां स्त्री हृषीके शेपसीन्द्रियम्।
हृच्छयौ मदनात्मानौ स्यादाम्नायोन्वये श्रुतौ ॥ ६५८ ॥
निलयः स्यालये स्थाने निचयौ संघसंचयौ।
पर्वतादेश्च वप्रं स्यादुच्चयोप्युञ्छसंघयोः ॥ ६५९ ॥
शाण्डिल्यो मुनिभेदे स्यात्पुंसि बिल्वमहीरुहे।
प्रत्ययौ स्वरभित्संघौ भूरिमायस्तु राक्षसः ॥ ६६० ॥
सृगालश्चाथ नलदे जलाधारे जलाशयः।
समवायौ श्लेषसंघौ मेरुस्वर्गौ सुरालयौ ॥ ६६१ ॥
देवागारेप्यथ सुरा सीरिभार्या हलिप्रिया।
नीपे नाथोपकार्या स्यात्पटकुट्यां तथा त्रिषु ॥ ६६२ ॥
संविभज्ये रणे संघे समुदायोपि संविदि।
आतिथेयी स्त्रियां पूजातिथिसाधौ भवेत्त्रिषु ॥ ६६३ ॥
युद्धायत्योः संपरायो वैरोद्धत्योः समुच्छ्रयः।
स्थूलोच्चयस्त्वसाकल्ये दन्तिमां मध्यमे गते ॥ ६६४ ॥
समुद्गमे समुदयः संग्रामनिकुरुम्बयोः।
दोषे द्वेषे चानुशयः पश्चात्तापानुबन्धयोः ॥ ६६५ ॥
पुंसां संघे पौरुषेयं त्रिषु तेन कृते वधे।
विकारे तस्य हुतभुक्पार्थयोः स्याद्धनंजयः ॥ ६६६ ॥
हलीन्दुजौ रौहिणेयौ सभास्थाने प्रतिश्रयौ।
भयंकरे प्रतिभयं त्रिषु भीतौ नपुंसकम् ॥ ६६७ ॥
भागधेयो बलौ भागे भाग्ये क्लीबे समाह्वयः।
रणे द्यूते वासतेयी रात्रौ तत्साधुनि त्रिषु ॥ ६६८ ॥
स्यादभ्यासे परिचयः संस्कारे मेलने तथा।
चन्द्रोदयो विताने स्याद्द्विजराजोद्गमे तथा ॥ ६६९ ॥

वक्ता प्रवचनीयः स्यात्प्रवाच्यश्च त्रिलिङ्गकः।
वृषाकपायी श्रीगौरी स्वाहेन्द्राण्यृषिभार्ययोः॥ ६७० ॥
राः स्वर्णधनयोः श्रीस्तु शोभालक्ष्मीसमृद्धिषु।
प्रशंसायां पुरे पूः स्याद्गृहे काये स्त्रियामथ॥ ६७१ ॥
धू रथावयवे स्त्री स्यात्तथा वोढव्यमात्रके।
द्रुर्द्रुमे विटपे शौरी नारायणशनैश्चरौ॥ ६७२ ॥
उरुर्महत्स्विषु स्त्री भूश्चीरी स्याज्झिल्लिका मृगे।
ना क्लीबे व्रतिनां वस्त्रे वारः काले क्रमे चये॥ ६७३ ॥
छत्त्रौषधावातपत्रे क्लीबे पादे नखौषधौ।
खुरः शरो नडे बाणे दधिसारेथ वायसे॥ ६७४ ॥
वाल्यर्जुनजयन्तेषु स्यादैन्द्रिरथ राक्षसे।
रुरुश्चित्रमृगे गुन्द्रा प्रियङ्गुः सैरिकैरका॥ ६७५ ॥
अक्षमालाग्रफलके मेरुः सुरगिरौ तथा।
अम्लवेतसवृक्षाम्लाम्लाश्चुक्रास्त्रिषु तद्रसे॥ ६७६ ॥
रोमच्छेदककाण्डेक्षू क्षुरौ तीक्ष्णे भवेत्त्रिषु।
शब्दोपतापिनोर्वर्णे षड्जोदात्तादिषु स्वरः॥ ६७७ ॥
गौर्यजातरजाः कन्या पार्वती त्रिषु पाण्डुनि।
पीतरुणे त्त्र राष्ट्रोस्त्री विषये स्यादुपद्रवे॥ ६७८ ॥
मित्रं सुहृदि पुंस्यर्के मरू धन्वधराधरौ।
अद्रयो द्रुमशैलार्काः कारुः कारकशिल्पिनोः॥ ६७९ ॥
गोत्रा भूर्गोसमूहश्च नाद्रौ क्लीबेभिधाकुले।
तिलकालेख्याद्भुतेषु चित्रं त्रिषु तु कर्बुरे॥ ६८० ॥
सुभद्रौषधिभेषु स्त्री क्षेत्रं पत्नीशरीरयोः।
गणितव्यवहारे च तीर्थे केदारयोग्ययोः॥ ६८१ ॥
ज्यैष्ठेग्नौ भार्गवे शुक्रः क्लीबे रेतोक्षिरोगयोः।
गुरुः संस्कारके पुंसि पित्रादौ सुरमन्त्रिणि॥ ६८२ ॥
दुर्जरालघुनोः स्थूल आराध्ये च त्रिलिङ्गकः।
त्रिषु क्षुद्रोल्पकृपणक्रूरगर्ह्येष्वपि स्त्रियाम्॥ ६८३ ॥

व्यङ्गा नटी शीलहीना सरघा कण्टकारिका ।
वरो विवाह्ये देवादेः प्रार्थिते स्वीकृतौ गत्रि ॥ ६८४ ॥
श्रेष्ठे त्रिष्वोषधौ स्त्री स्यान्मनागिष्टेऽव्ययं पुनः ।
क्लीबे च कुङ्कुमे पारी पात्रं पारा नदीभिदि ॥ ६८५ ॥
तीरात्तीरान्तरे क्लीबं समाप्तौ सर्वसंग्रहे ।
तन्त्रं प्रधाने सिद्धान्ते तन्तुवाने परिच्छदे ॥ ६८६ ॥
आयत्तश्लेषशास्त्रोक्तप्रक्रियाशब्दसिद्धिषु ।
स्वमण्डलादिचिन्तायामौषधादावुपस्करे ॥ ६८७ ॥
वीणादीनां गुणे नाड्यां तन्त्री स्यादात्मनः पृथक् ।
युक्तश्च दूरश्रेष्ठारिपूर्वान्या भेद्यवत्पराः ॥ ६८८ ॥
शारोऽनिले द्यूतभाण्डे त्रिषु वर्णे तु कर्बुरे ।
गर्तदूषणयोश्छिद्रं रन्ध्रं च विवरं तथा ॥ ६८९ ॥
मुक्ताशुद्धौ स्वरेऽप्युच्चे स्यात्तारः शुद्धमौक्तिके ।
देवीभनेत्रमध्ये स्त्री क्लीबे रूप्ये त्रिषूज्ज्वटे ॥ ६९० ॥
अभ्युत्कर्षाम्बुवेगाश्वगतिभेदेषु संततौ ।
अग्रस्कन्धे तु सैन्यस्य धारोत्सौंशौ गवि द्वयोः ॥ ६९१ ॥
दम्भराष्ट्रायुध - - चक्रं सेनारथाङ्गयोः ।
पुटभेदे चये शिल्पिभाण्डे चक्राह्वये पुमान् ॥ ६९२ ॥
परिच्छदाल्पमानेषु धने कर्णविभूषणे ।
तालाङ्क्यक्षरांशे स्त्री मात्रं कार्त्स्न्यैवधारणे ॥ ६९३ ॥
यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ।
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥ ६९४ ॥
पुरोऽधिकमुपर्यग्रं भिक्षाभेदप्रधानयोः ।
गजाग्रजङ्घयोः शक्तौ गात्रमङ्गे कलेवरे ॥ ६९५ ॥
उग्रः शूद्रासुते क्षत्रादुत्कटे त्रिषु ना शिवे ।
दीक्षितस्याधिदेवे च व्याघ्री प्राण्योषधी द्वयोः ॥ ६९६ ॥
नागानां जननी कद्रूः कद्रुस्तु त्रिषु पिङ्गले ।
विपुले नकुलेऽग्नौ च बभ्रुः स्यात्पिङ्गले त्रिषु ॥ ६९७ ॥

नेत्रं पट्टे मन्थगुणे तरुमूले विलोचने।
वस्तिनाड्यां चाथ पोत्रं मुखाग्रे हलकोलयोः ॥ ६९८ ॥
जरा रुग्भङ्गयोरस्त्री वप्रः प्राकाररोधसोः।
केदारे सीसके स्वर्णे क्लीबे पितरि ना पुनः ॥ ६९९ ॥
स्नुह्योषधौ विद्युति च वज्रोऽस्त्री हीरके पवौ।
स्नुह्यां रक्तास्रुणोरस्रं पुंसि केशे दरो भये ॥ ७०० ॥
गर्ते दरी गुहाल्पार्थे त्वव्ययं पर्वते धरः।
धरा भूमावथ क्रूरो नृशंसे कठिने तथा ॥ ७०१ ॥
भयंकरे चाथ सत्त्रं यज्ञेरण्ये च साधने।
सदादाने च दम्भे च धनाच्छादनयोरपि ॥ ७०२ ॥
धारार्तिकोणेष्वश्रिः स्त्री कारा बन्धे च तद्गृहे।
राजग्राह्ये पुमान्भागेथाङ्घ्रिः पादद्रुमूलयोः ॥ ७०३ ॥
करिणां बन्धनोर्व्यां स्त्री वारिस्तोये नपुंसकम्।
सारं न्याय्ये वस्तुनि च पुमान्मज्ज्ञि स्थिरे बले ॥ ७०४ ॥
त्रिषूत्कृष्टे वस्तुनि तु दुर्वहेतिशयान्विते।
वीवधे द्विसहस्रे च पलानां भार इक्षुभित् ॥ ७०५ ॥
चित्रकं देशभेदश्च पुण्ड्रः पत्त्रं तु वाहने।
पर्णे पक्षे चाथ धात्री स्तनदा क्ष्मामलक्यपि ॥ ७०६ ॥
योग्यभाजनयोः पात्रं नदीकूलद्वयान्तरे।
स्रुगादौ नाट्यविषये शास्त्रं ग्रन्थनिदेशयोः ॥ ७०७ ॥
कृच्छ्रं दुःखं तपोभेदः शस्त्रमायुधलोहयोः।
हस्तिभेदे वृषे भद्रो भद्रं शर्म सति त्रिषु ॥ ७०८ ॥
रास्नायां स्त्री शारिरक्षे पक्षिपर्याणभेदयोः।
पीलौ गिरियकक्रीडागुलके पर्वते गिरिः ॥ ७०९ ॥
ताम्रं शुल्वे त्रिषु गुणे तन्द्री निद्राप्रमीलयोः।
व्यापृताकुलयोर्व्यग्रस्त्रिषु भाण्डं हविश्चरुः ॥ ७१० ॥
चक्राद्यश्रौ शीघ्रगे च त्रिषु क्लीबे त्वरं द्रुतौ।
बलौ मेघोपले हस्तिहस्ते पाणौ करोंशुषु ॥ ७११ ॥

क्षारं रसविशेषे च पुंसि स्यात्काचभस्मनोः ।
ध्वान्तदैत्यारयो वृत्रा अभ्रमाकाशमेघयोः ॥ ७१२ ॥
स्त्रीभेदे कातरे भीरुः स्वरुर्यूपाङ्गवज्रयोः ।
क्षीरं दुग्धाम्बुनोश्चन्द्रं स्वर्णे कम्पिल्यके तु ना ॥ ७१३ ॥
कर्पूरेन्द्वोश्च कुटजे शक्रः स्याद्वासवे तथा ।
मर्त्ये नरो देवभेदे भरोतिशयभारयोः ॥ ७१४ ॥
चारे चरस्त्रिषु चले भूरि स्वर्णे बहौ त्रिषु ।
प्रस्थाने वर्तनोपाये यात्रा देवोत्सवेपि च ॥ ७१५ ॥
सालपर्ण्यां स्थिरा भूमौ दृढे स्थास्नौ च मेद्यवत् ।
खरस्तीक्ष्णे त्रिषु क्रूरे गर्दभे तु खरी द्वयोः ॥ ७१६ ॥
रक्षोभेदे पुमान्द्वारमुपायप्रतिहारयोः ।
इरा भुवाक्सुराज्ञापोप्सराश्चाथ पुरं पुरि ॥ ७१७ ॥
न ना देहे सर्वभद्रयागे क्लीबे गृहेपि च ।
धीरं स्यात्कुङ्कुमे सूरौ गम्भीरसहयोस्त्रिषु ॥ ७१८ ॥
मारी भृशमृतौ कामे मरणे मारणे पुमान् ।
चारी ताण्डवचेष्टायां नृपतिप्रणिधौ पुमान् ॥ ७१९ ॥
संधानाच्छादने वस्त्रे शुभ्रौ दीप्रसितौ त्रिषु ।
संकरो मार्जनक्षिप्ते मेलने लोमजे त्रिष ॥ ७२० ॥
उच्चारः पाठशकृती उद्भवे मार्गगे त्रिषु ।
इन्द्रद्रुर्देवदारुः स्याल्लकुचः कुटजार्जुनौ ॥ ७२१ ॥
मन्दारः सुरवृक्षे स्यात्पारिभद्रकरम्भयोः ।
मयूरस्तुत्थको दीप्योप्यपामार्गश्च बर्हिणः ॥ ७२२ ॥
कुक्कुरं ग्रन्थिपर्णे स्याद्द्वयोः शुन्यथ वर्बरः ।
अजगन्धा बर्द्धकद्रुः शाकभेदे तु बर्बरा ॥ ७२३ ॥
चिकुरः केशपाशे स्त्री भ्रूलये चपले त्रिषु ।
पश्चाज्जङ्घा न नेभस्यावरा दक्षिणदिक्स्त्रियाम् ॥ ७२४ ॥
परान्यानन्तरोनाश्च त्रिष्वेवमपरोप्यरौ ।
पश्चिमायामेव दिशि चतुरो वेगिदक्षयोः ॥ ७२५ ॥

किञ्जल्केऽस्त्री केसरो ना पुंनागे नागकेसरे ।
सटाबकुलयोर्नीचः पाण्डुरोगी च पामरः ॥ ७२६ ॥
सौवीरमञ्जनं कोलं काञ्चिकं त्रिषु देशजे ।
जम्भीरः स्याद्दन्तशठे मरुवे हस्तिपिप्पली ॥ ७२७ ॥
अपामार्गोऽब्धिलवणं वसिरो बदरी द्रुभित् ।
कर्पासी तत्फले क्लीबे कबरी केशपाशभित् ॥ ७२८ ॥
कडारस्त्रिषु कल्माष उद्धारः संग्रहर्णयोः ।
भुक्तोच्छिष्टे परावर्त उत्क्षेपे चाथ बर्करः ॥ ७२९ ॥
युवमेषे द्वयोः सोपहासे स्याद्वाच्यलिङ्गकः ।
युवराजे शिशौ स्कन्दे कुमारोऽश्वानुचारके ॥ ७३० ॥
द्वीपे कुमारो ना स्त्री तु कन्यकौषधिभेदयोः ।
मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ॥ ७३१ ॥
संगराः स्युः क्रियाकाराविपदाजिप्रतिश्रवाः ।
क्लीबे शमीफलेऽथेभहस्ताग्रे व्योम्नि पङ्कजे ॥ ७३२ ॥
वाद्यभाण्डमुखे नीरे तीर्थौषधिविशेषयोः ।
असेः फले पुष्करं स्यादन्तरं त्वन्यभेदयोः ॥ ७३३ ॥
अवकाशेऽवधौ मध्ये व्यवधानपिधानयोः ।
परिधानात्मरन्ध्रेषु स्थानावसरयोरपि ॥ ७३४ ॥
तादर्थ्यस्वकबाह्येषु मध्यगेप्यभिधेयवत् ।
अजिरं प्राङ्गणे काये रूपादिविषये तथा ॥ ७३५ ॥
सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।
वर्णसंकरजाता च संस्तरौ स्रस्तराध्वरौ ॥ ७३६ ॥
प्रकरः संहतौ पुष्पोपकारेऽथोत्तरा दिशि ।
भे पार्थवध्वां चोदीच्यानन्तरोर्ध्वेषु भेद्यवत् ॥ ७३७ ॥
श्रेष्ठप्रधानयोश्चापि प्रतिवाक्ये नपुंसकम् ।
विराटतनये पुंसि द्वापरौ युगसंशयौ ॥ ७३८ ॥
स्याद्वाद्यभेदे सुशिरं गर्ते गर्तान्विते त्रिषु ।
नडे तु सुशिराभीरुः शतावर्यभये त्रिषु ॥ ७३९ ॥

शिशिरोऽस्त्री कतौ शीते त्रिषु क्लीबे हिमे भवेत् ।
वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना ॥ ७४० ॥
इक्षोर्विकारः सूक्ष्माश्मा रोगभेदश्च शर्करा ।
विष्टरः कुशमुष्टौ च पीठपादपयोरपि ॥ ७४१ ॥
गायत्री खदिरे मन्त्रे छन्दोभेदे त्रिलिङ्गकः ।
उदारो दातृमहतोर्दक्षिणोऽङ्गटयोस्त्रिषु ॥ ७४२ ॥
शाक्वरोऽनडुहि च्छन्दोभेदे त्रिष्वथ रोगभित् ।
प्रदरः शरभङ्गौ च केदारः क्षेत्रतीर्थयोः ॥ ७४३ ॥
ओष्ठोऽधरोऽनूर्ध्वहीने त्रिषु दम्भे मृगेऽसुरे ।
मायायां शम्बरः पुंसि जले क्लीबेऽथ गत्वरे ॥ ७४४ ॥
सृमरस्त्रिषु पुंस्येणे कलत्रं श्रोणिभार्ययोः ।
तमस्तमिस्रं सतमा रात्रिः स्त्री गजसज्जनम् ॥ ७४५ ॥
शृङ्गारो रसराजश्च तूवरोऽश्मश्रुणि त्रिषु ।
अजातशृङ्गे छागे च सामुद्रं देहलक्षणे ॥ ७४६ ॥
लवणादौ समुद्रस्याथाकारा विङ्गिताकृती ।
प्रकारे मुखरागादावाह्वाने वर्णभिद्यपि ॥ ७४७ ॥
अम्बरे वसनाकाशौ सुगन्धिद्रव्यमाश्रयः ।
वाप्यालवाले चाधारो विस्तारौ तज्ज्ञविस्तृतौ ॥ ७४८ ॥
विटपेऽस्त्री भास्वरा स्यात्पाठा त्रिषु तु भासुरे ।
औशीरं चामरे दण्डे सहिते शयनासने ॥ ७४९ ॥
इन्द्रध्वजे विशीर्णे च सच्छिद्रे चापि जर्जरः ।
उर्वरा सर्वसस्याढ्या भूस्तथा भूमिमात्रकम् ॥ ७५० ॥
खपुरो लसकः पूगो विहारः सुगतालये ।
परिक्रमक्रीडनयोः संस्कारः शास्त्रजो गुणः ॥ ७५१ ॥
वासना प्रतियत्नश्चाथाकरो निकरे खनौ ।
आसारः स्यात्प्रसरणे वेगाद्वर्षे सुहृद्बले ॥ ७५२ ॥
निकारः परिभावे च धान्यस्योत्क्षेपणेऽपि च ।
प्रस्तरा मणिपाषाणशय्यास्त्रिषु मनोहरे ॥ ७५३ ॥

स्वादौ च मधुरो नीचपरयोरितरस्त्रिषु ।
व्यायामे प्रसरो वेगे प्रपञ्चे प्रणये तथा ॥ ७५४ ॥
गोपुरं द्वारि पूर्द्वारि तथा दाशपुरौषधौ ।
दुर्भिक्षादिकृते दुःखे कान्तारं दुर्गमे पथि ॥ ७५५ ॥
माणिक्यमुज्ज्वलं शृङ्गमूर्ध्वाग्रं शिखरत्रयम् ।
गुहादम्भनिकुञ्जेषु गह्वरं स्याच्चु चत्वरम् ॥ ७५६ ॥
चतुष्पथे प्राङ्गणे च नरेन्द्रौ नृपवैशिकौ ।
उदरे जठरं क्लीबे कठिने वाच्यलिङ्गकः ॥ ७५७ ॥
कन्दे राजकशेर्वाख्ये शुण्ठ्यामपि च नागरम् ।
पूर्भवे वाच्यलिङ्गं स्यात्कुहरं गह्वरे बिले ॥ ७५८ ॥
शार्वरं त्वन्धतमसे घातुकेभे त्रिलिङ्गकः ।
वर्णे मोक्षे परब्रह्मण्यक्षरं त्रिषु चाक्षये ॥ ७५९ ॥
भाण्डीरो बालके पुंसि सुवर्णे तु नपुंसकम् ।
मन्दिरं नगरे गेहे पिठिरं चरुपस्तयोः ॥ ७६० ॥
किंशारू व्रीहिशूकेषू विकारौ वैरवैकृते ।
ऋषौ मन्त्रे कुशे देवे पवित्रं पाविते त्रिषु ॥ ७६१ ॥
सुवर्णे कर्बुरं पापे कल्माषे तु त्रिलिङ्गकः ।
बन्धुरं संनते रम्ये खर्जूरं फलरूप्ययोः ॥ ७६२ ॥
ना द्रुमेनाकुले तु स्यादेकाग्रं तत्परे त्रिषु ।
आहारः स्वीकृतौ भुक्तौ छन्दःकाम्ब्योस्तु शक्करी ॥ ७६३ ॥
तुषारस्तु कणे क्लीबे तुहिने शीतले त्रिषु ।
कठोरः कठिनेपक्के संहारो नाशसंघयोः ॥ ७६४ ॥
प्रत्याहारे संग्रहे च तथा नारकभूभिदि ।
कर्पूरे पुंसि नासीरो भवेदग्रसरे त्रिषु ॥ ७६५ ॥
कालसूत्रं कृष्णसूत्रे तथा नारकभूभिदि ।
विद्याधरी देवभेदे द्वयोर्विद्यावति त्रिषु ॥ ७६६ ॥
विद्याधरः शक्तिधरः स्कन्दः शक्तिमति त्रिषु ।
तुण्डिकेरी तु कर्पासी बिम्बी च पितृकाननम् ॥ ७६७ ॥

करवीरः पुष्पभिद्योपचित्रा पृश्निपर्णिका ।
दन्ती दण्डधरो राजा यमो दण्डभृति त्रिषु ॥ ७६८ ॥
चतुरश्चतुःसक्तिस्त्रिषु कालोपयुक्तिवित् ।
द्यूतयुद्धादिविभ्रान्तौ ग्राहाभिख्ये च यादसि ॥ ७६९ ॥
निमन्त्रणोपनेतव्येवहारोथ परिच्छदे ।
प्रगाढगात्रिकाबन्धे पर्यङ्कारम्भयोरपि ॥ ७७० ॥
समूहे स्यात्परिकरः स्यात्तु प्रतिसरोस्त्रियाम् ।
हस्तसूत्रे चमूपश्चाद्भागे यागादिके पुमान् ॥ ७७१ ॥
आरक्षे मण्डने च स्यान्नियोज्ये वाच्यलिङ्गकः ।
उपकारस्तूपकृतौ कुसुमप्रकरेपि च ॥ ७७२ ॥
दुरोदरो द्यूतकरे पणे द्यूते नपुंसकम् ।
उदुम्बरो वृक्षभेदे देहल्यां चाप्यरुष्करः ॥ ७७३ ॥
व्रणकृद्वृक्षभेदश्च क्लीबे तु स्यात्सरोरुहे ।
शतपत्त्रं पुमान्दार्वाघाटे स्यादथ सागरे ॥ ७७४ ॥
अकूपारः कूवरे स्त्री भुवि विश्वंभरोच्युते ।
आडम्बरोस्त्री संरम्भे रवे च गजतूर्ययोः ॥ ७७५ ॥
अभिहारोभियोगे च चौर्ये संनहनेपि च ।
शिशुमारो जलोद्भूतजन्तौ तारागमाच्युते ॥ ७७६ ॥
परिवारः परिजने खड्गकोशेप्युपह्वरः ।
विविक्ते च समीपे च महामात्रो महर्द्धिके ॥ ७७७ ॥
हस्त्यारोहाधिपे चाभिसरः स्वबलसाध्वसे ।
युद्धे च व्यभिचारः स्याद्धिंसायामप्यसंभवे ॥ ७७८ ॥
संकरे व्यसने वृत्तान्तेपि व्यतिकरः कृतौ ।
तीर्थेवतारो देवादेरंशे स्यादवरोहणे ॥ ७७९ ॥
वर्धापके पूर्णपात्रं पात्रे पूर्णे जलादिना ।
प्रतीहारो द्वारि तत्स्थे द्वयोर्गुह्येप्यवस्करः ॥ ७८० ॥
वर्चस्के चापचारस्तु दुष्कृतभ्रंशयोरपि ।
आचारे परिचर्यायां प्राभृतारोपयोरपि ॥ ७८१ ॥

उपचारः सहचरी भार्यापत्योः परस्परम् ।
लताभेदे द्वयोर्मित्रे सार्धसंचारिणि त्रिषु ॥ ७८२ ॥
अर्धचन्द्रा तु पालिन्दी गलहस्ते पुमाञ् शरे ।
नखक्षतविशेषे च हंसभित्कौरवस्तथा ॥ ७८३ ॥
धार्तराष्ट्रः कृष्णशारः शवले त्रिषु ना मृगे ।
पारिभद्रः पारिजाते बदर्या सुरदारुणि ॥ ७८४ ॥
ब्रह्मपुत्रो द्विजसुतो विषभिन्नारदादयः ।
सुकुमारस्त्रिषु मृदौ घृतभेदे नपुंसकम् ॥ ७८५ ॥
उपस्करो वेशवारो गृहभाण्डाद्यथाम्बुदे ।
पयोधरः स्तनेपि स्यादुपस्कारो गुणाहितौ ॥ ७८६ ॥
अध्याहारे वैकृते च दीर्घसूत्रश्चिरक्रियः ।
तन्तौ च विस्तृते क्लीबे दीर्घनिद्रा मृतिस्तथा ॥ ७८७ ॥
अतिस्वापरतिश्चाथ काव्यमण्डलवेश्मभित् ।
निम्बश्च सर्वतोभद्रो व्यूहः कल्याणवांस्त्रिषु ॥ ७८८ ॥
चूडा किरीटं केशाश्च संहता मौलयस्त्रयः ।
मातृभेदे क्षारकीटे काली दुर्गानवाब्दयोः ॥ ७८९ ॥
पालिन्दी पाटला कृष्णाजाजी कालापि नीलिनी ।
तिन्दुकेद्रौ यमे मृत्यौ समये नासिते त्रिषु ॥ ७९० ॥
मूलान्याद्यशिफाभान्ताः कलहेन्त्ययुगे कलिः ।
करोपहारदैत्येषु बलिर्ना गात्रजे स्त्रियाम् ॥ ७९१ ॥
स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः ।
दैत्यभेदे च बलिनि त्रिष्वोषधिभिदि स्त्रियाम् ॥ ७९२ ॥
भेद्यलिङ्गः शठे व्यालो द्वयोः शार्दूलसर्पयोः ।
कुटीग्रामकयोः पल्लिः स्वयस्त्री शूलं रुगायुधम् ॥ ७९३ ॥
तच्छिखा वंधकं काष्ठं शूला वारविलासिनी ।
ज्वालाशङ्कू द्वयोः कीलौ कूर्परः प्रहतं रते ॥ ७९४ ॥
कर्णाधो भाजने प्रान्ते पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु ।
कल्पनाकालशिल्पेषु वृद्धौ मूलधनस्य च ॥ ७९५ ॥

इन्द्वंशेंशे तालगुरौ निवृत्त्यादौ छले कला।
शक्तावव्यक्तमधुरे ध्वाने त्रिषु मनोहरे ॥ ७९६ ॥
आल्यनर्थे सखीपङ्क्त्योः सेतौ ना वृश्चिके फलम्।
सस्यादौ फलके लाभ आयुधाग्रे कणेकृते ॥ ७९७ ॥
अब्ध्यम्बुविकृतौ वेला मर्यादा गिरिकालयोः।
फालो हलाग्रेऽल्पवयोर्लोलश्चलसतृष्णयोः ॥ ७९८ ॥
लीला विलासेनुकृतौ दलं दण्डार्धयोश्छदे।
सुगन्धपत्त्रोपादानहेत्वो रन्ध्रगुहे बिलम् ॥ ७९९ ॥
गण्यौषधिभिदो रागद्रव्ये नील्यथ झिल्लिका।
नीला त्रिषु प्राणिगुणे कपिरत्नभिदोस्तु ना ॥ ८०० ॥
मलोऽस्त्री पापविट्किट्टे कृपणे मलिने त्रिषु।
आणवादावशुद्धौ च कालिम्नि स्याद्रसादिषु ॥ ८०१ ॥
गवाक्षे कोरके वृन्दे दम्भे मत्स्यादिबन्धने।
धूर्तकृत्ये च जालं स्याच्छीलं वृत्तस्वभावयोः ॥ ८०२ ॥
तलं गोधास्वरूपाधःपृष्ठेष्वस्त्री पुमान्द्रुभित्।
चपेटे च वितस्तौ च व्याजस्खलितयोश्छलम् ॥ ८०३ ॥
चेलं वस्त्रे त्रिष्वधमे पलमुन्मानमांसयोः।
त्रिषु स्थूलं जडे पीने हेलावज्ञाविलासयोः ॥ ८०४ ॥
गीतकालक्रियामाने मध्याङ्गुष्ठमिते तरौ।
तालः करतले चाथ तुला सादृश्यमानयोः ॥ ८०५ ॥
गृहाणां दारुबन्धार्थपीठिका सदृशं तथा।
जलोदञ्चनभाण्डे च राशिभेदे घटे द्वयोः ॥ ८०६ ॥
जलं तोयं त्रिषु जडे त्रिषु बालोऽर्भकाज्ञयोः।
क्लीबे ह्रीवेरके नाङ्गरुहे गोत्रे गृहे तथा ॥ ८०७ ॥
कुलं सजातीयगणे संघे शास्त्रशरीरयोः।
क्लिन्नाक्षे त्रिषु चुल्लोक्ष्णि क्लीबे चुल्ली तु पाकभूः ॥ ८०८ ॥
खलं भूस्थानकर्णेषु क्रूरपामरयोस्त्रिषु।
सैन्यस्य पश्चिमे भागे कूलमन्तिकतीरयोः ॥ ८०९ ॥

शिला द्वाराधरं दारु दृशच्च करका तथा ।
प्राकारवृक्षयोः सालः सर्जे चाथ प्लवे किरे ॥ ८१० ॥
कोलः क्लीवे बदर्यां स्यात्कणा कोलाथ भूरिला ।
वाक्स्रवःस्त्री गौर्द्रुशाखायां गेहे गेहैकदेशयोः ॥ ८११ ॥
शाला स्याद्दर्दुरे भेलो भीरुके वाच्यलिङ्गकः ।
तूलिश्चित्रोपकरणे शलाकातूलशय्ययोः ॥ ८१२ ॥
खेला क्रीडा विलासाक्षि त्रिषु दोला तु दोलिनी ।
प्रेङ्खा स्थाली पाकभाण्डं पाटलास्त्री तु भाजने ॥ ८१३ ॥
शिली गण्डूपदी भेका शिलोञ्छेषु शिलश्च ना ।
प्राण्यङ्गे तृणकाण्डे च ना नाली धमनी स्त्रियाम् ॥ ८१४ ॥
न ना नालाब्जादिकाण्डे त्रिषु स्याज्जलनिर्गमे ।
कमला श्रीर्मृगे पुंसि क्लीवे स्यात्पद्मतोययोः ॥ ८१५ ॥
सास्नायां नागभेदे चाप्यूर्णावाससि कम्बलः ।
वातूलः पुंसि वात्यायां वाते वातासहे त्रिषु ॥ ८१६ ॥
वातलो वातुलश्चैवमाभीलं भीमकृच्छ्रयोः ।
बहुलाः कृत्तिका गाव एलाः पुंस्यग्निपक्षयोः ॥ ८१७ ॥
प्रभूते च प्रायिके च शितौ च स्यात्त्रिलिङ्गकः ।
उपलेक्षुविकारे स्याच्छर्करायां च नाश्मनि ॥ ८१८॥
रत्ने चाथामृते तोये कीलालं मण्डरक्तयोः ।
छर्दिर्नेत्ररुजोः क्लीवे समूहे पटलं न ना ॥ ८१९ ॥
पुष्पादिभाण्डे नाध्याये प्रियङ्गुर्महिला वधूः ।
पातालमौर्वाग्निरसातलयोः शङ्कुभिश्रिते ॥ ८२० ॥
श्वभ्रे कुकूलं पुंसि स्यात्तुषाग्नावथ केवलम् ।
निर्णीते त्रिषु कृत्स्ने स्यादसहायेथ शिक्षिते ॥ ८२१ ॥
कुशलस्त्रिषु पर्याप्ते क्लीवे स्यात्क्षेमपुण्ययोः ।
वीणादण्डे प्रवालोस्त्री विद्रुमे नवपल्लवे ॥ ८२२ ॥
देवीभेदे करालोच्चे त्रिषु स्याद्व्याघ्रभीमयोः ।
खण्डेस्त्री शकलं वल्के रागभेदेस्थिभिद्यपि ॥ ८२३ ॥

मृदौ स्निग्धे त्रिषु भवेद्दक्षे चारौ च पेशलः ।
मण्डली स्यान्न ना संघे देशबिम्बे च मण्डलः ॥ ८२४ ॥
त्रिषु वृत्ते स्थानके तु परिधौ तु नपुंसकम् ।
कर्माङ्गेऽप्युपलेपादौ कुष्ठं नीलाब्जमुत्पलम् ॥ ८२५ ॥
ऊषणा पिप्पली ना तु तरुवस्त्राच्छिदाभिदोः ।
क्लीवे जले स्यात्कुद्दालः खनित्रे कोविदारके ॥ ८२६ ॥
संकुलं व्याकुले व्याप्तेविस्पष्टार्थवचस्यपि ।
यवाग्वां तरला रले पुंसि दीप्ते चले त्रिषु ॥ ८२७ ॥
पललं तिलकल्के स्यान्मांसे च जगलस्त्रिषु ।
मेचके पिष्टमद्ये ना मेखला खड्गबन्धने ॥ ८२८ ॥
काञ्च्यद्रिदेशमौञ्जीषु कपालं कर्परे त्रिषु ।
उत्तमाङ्गास्थिन भक्ष्ये तु शष्कुली कर्णपुत्रिका ॥ ८२९ ॥
तुमुलं व्याकुले शब्दे त्रिषु स्यात्संकुले रणे ।
पाटला त्रिषु वर्णे स्याद्व्रीहौ ना कुसुमे न ना ॥ ८३० ॥
जाङ्गलो निर्जले देशे पिशिते स्यान्नपुंसकम् ।
दुगूलं तनुवासः स्यात्क्षौमं च चपला तडित् ॥ ८३१ ॥
कुलटे स्याद्वयोर्ना तु पारते चञ्चले त्रिषु ।
तण्डुलो धान्यसारे स्याद्विडङ्गे कदली स्त्रियाम् ॥ ८३२ ॥
मृगभेदे ध्वजे रम्भास्तम्भे स्यादथ मञ्जुलः ।
मधुरे मेद्यलिङ्गो ना जलरङ्कुपतत्रिणि ॥ ८३३ ॥
काकोलो द्रोणकाके स्याद्विषे चाप्योषधौ स्त्रियाम् ।
धवलं सुन्दरे शुक्ले त्रिषु यूनि गवि द्वयोः ॥ ८३४ ॥
अचलोऽद्रौ स्त्रियां भूमौ देहोन्मानौ तु बाहुलौ ।
कार्त्तिकः कोमला वृत्तिः स्निग्धे तुल्ये त्रिषु त्रिषु ॥ ८३५ ॥
शृङ्खला पुंस्कटीकाञ्च्यां बन्धने चायसादिके ।
रसाला मधुरा भाषा भोज्यं ना त्विक्षुचूतयोः ॥ ८३६ ॥
निचुलो वेतसे चापादिकोशे — — — गैला ।
न पुमान्यन्त्रणायां च कपिलागुरुशिंशपा ॥ ८३७ ॥

हरेण्वाख्यौषधिर्गोश्च मुनौ ना तद्गुणे त्रिषु ।
धत्तूरो मातुलो मातुर्भ्राता भार्यास्य मातुली ॥ ८३८ ॥
[ दारिकाबीजमाज्यं च राजसर्षप एव च । ]
श्रद्धालुर्दोहदवती श्रद्धाशीले भवेत्त्रिषु ॥ ८३९ ॥
नीलिन्यां श्रीफली बिल्वे नेभरोगे तु पाकलः ।
कुष्ठे क्लीवं फेनिलं तु कुवलेरिष्टपादपे ॥ ८४० ॥
ना फेनयुक्ते त्रिषु च लाङ्गली गर्भपातनी ।
तोयपिप्पल्यथ स्पष्टोशठश्च सरलस्त्रिषु ॥ ८४१ ॥
त्रिवृत्स्त्री ना तु पीतद्रौ पिच्छिलागुरुशिंशपा ।
मोचातरुस्त्रिषु स्निग्धे तिनिशाशोकवेतसाः ॥ ८४२ ॥
वञ्जुलाः कन्दली वीरुत्तद्भेदमृगभेदयोः ।
कपालमूलयोः क्लीवे निष्कला विगतार्तवा ॥ ८४३ ॥
विमले मन्त्रदेवादौ त्रिषु वाद्ये नपुंसकम् ।
विकङ्कतः करीरश्च संनिवेशविशेषवान् ॥ ८४४ ॥
खड्गादिश्च मन्थिलः स्याच्छमलं कल्मषं शकृत् ।
पुंभूम्नि केशे देशे च द्वयोस्तत्स्थे च कुन्तली ॥ ८४५ ॥
मधुपात्रे भवेत्क्लीवे मरालौ हंसविस्तृतौ ।
स्यान्मङ्गलः कुजे क्लीवे शुभे देव्यां स्त्रियामपि ॥ ८४६ ॥
एकाष्ठीला तु पाठायां ना वुके नडकाशयोः ।
भवेत्पोटगलो गन्धफला चण्पकमालिका ॥ ८४७ ॥
प्रियङ्गुः स्यात्पुष्पफलः कूष्माण्डककपित्थयोः ।
धूम्रे त्रिषु महाकालः किंपाके प्रमथे शिवे ॥ ८४८ ॥
यमतद्दूतयोः पुंसि चक्रवालं तु मण्डले ।
लोकालोके पुमान्स्यात्तु विमर्दे परिशीलने ॥ ८४९ ॥
अत्युत्कृष्टे परिमलो गन्धे जनमनोहरे ।
मत्तः करी मदकलस्त्रिषु चाव्यक्तवाङ्मदात् ॥ ८५० ॥
ऐरावणे गणेशे च हस्तिमल्लोथ यज्वनि ।
मदिराक्रयशिल्पे च त्रिषु स्यादासुतीबलः ॥ ८५१ ॥

स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने।
स्वर्गेन्तरिक्षे च द्यौः स्त्री शैले मेषे रवावविः ॥ ८५२ ॥
दवदावौ वनारण्यवह्नी जन्महरौ भवौ।
कल्याणप्राप्तिसंसारसत्ताश्चाथाध्वरो हवः ॥ ८५३ ॥
आज्ञाह्वाने चाथ योषित्पतिः शाखी नरो धवः।
भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ॥ ८५४ ॥
क्रियासुरतसंवेगलीलातात्पर्यवस्तुषु।
स्थायिसात्त्विकसंचारिविभावेषु च पूज्यवत् ॥ ८५५ ॥
शब्दप्रवृत्तिहेतौ च योन्यैश्वर्योदयेषु च।
ध्रुवा भभित्स्थाणुकीला निश्चले शाश्वते त्रिषु ॥ ८५६ ॥
सत्यनिश्चितयोः क्लीबे गीतिस्रुग्भेदयोः स्त्रियाम्।
सालपर्ण्यां क्षवस्तु स्याद्राजक्षुर्यां क्षवथौ तथा ॥ ८५७ ॥
अभयामलकी गौरी शमी क्रोष्टा शिवा पुमान्।
हरे कीले च कल्याणे क्लीबे तद्वति तु त्रिषु ॥ ८५८ ॥
पक्वं विनाशाभिमुखं तथा परिणते त्रिषु।
रहस्ये कलहे दुःखे द्वंद्वं मिथुनयुग्मयोः ॥ ८५९ ॥
क्लीबो नपुंसके शण्ढे दैन्ययुक्ते जने त्रिषु।
वक्रोपायश्चान्तिकं च पार्श्वं कुक्ष्यङ्गभित्तथा ॥ ८६० ॥
ज्या जीवा जीविते न स्त्री पुमाञ्जन्तौ बृहस्पतौ।
अत्यध्वगोतिप्रणतः प्राध्वः क्लीबे तु बन्धने ॥ ८६१ ॥
उशनाः काव्यकृद्विद्वान्कविर्नाश्वाङ्गगा कवी।
केलौ स्रवे द्रवोऽपे छेदेल्पे च कणे लवः ॥ ८६२ ॥
विश्वं जगच्च शुण्ठी च सर्वस्मिन्वाच्यलिङ्गकः।
स्त्रियां प्रतिविषायां च पुंबहुत्वे च देवभित् ॥ ८६३ ॥
स्त्रीकटीवस्त्रबन्धे स्यान्नीविः परिपणे स्त्रियाम्।
आयव्ययविशुद्धे च धने कारागृहे तथा ॥ ८६४ ॥
मनःसत्यत्वात्मभावे पिशाचादौ गुणे बले।
द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु ॥ ८६५ ॥

क्रमनिम्ने भुवो भागे भेकपक्षिभिदोः प्लवः ।
प्लवनोडुपचण्डालेष्वोषधौ स्यान्नपुंसकम् ॥ ८६६ ॥
देवी मूर्वा द्वयो राजतस्त्रियोर्दैवते तथा ।
मन्त्री सहायः सचिवौ प्रभवः स्थानमूलयोः ॥ ८६७ ॥
स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने ।
अपत्येप्यथाविश्वासे निकृतौ चापि निह्नवः ॥ ८६८ ॥
अपलापेप्यथाधारानतिरेके च संभवः ।
जन्मोपपत्तिसंघेषु गाण्डीवं गाण्डिवं तथा ॥ ८६९ ॥
जिष्णोर्धनुषि कोदण्डे वैशाखे माधवो हरौ ।
वसन्ते चाथ राजीवो मृगभिन्मीनभेदयोः ॥ ८७० ॥
क्लीवे पद्मेथ वडवा स्त्रीविशेषो हयी तथा ।
कुम्भदासी पल्लवोस्त्री विटपे क्षेत्रपत्त्रयोः ॥ ८७१ ॥
वस्त्रैकदेशे रहसि सैन्धवो लवणाश्वयोः ।
अभावौ निधनासत्ते व्याजे द्यूते च कैतवम् ॥ ८७२ ॥
उत्सेकामर्षयोरिच्छाप्रसरे मह उत्सवः ।
विप्रौर्वाश्वा वाडवाः स्युर्वल्लवो गोपसूदयोः ॥ ८७३ ॥
विप्लवौ रणनिर्बाधावुत्सवो यदुरुद्धवः ।
धतूरे ना वञ्चकस्तु कितवो द्यूतकृत्त्रिषु ॥ ८७४ ॥
सामुद्रलवणेक्षीवो महानिम्बे च गन्धके ।
नील्यां त्रिषु निरुन्मादे कारवी कृष्णजीरके ॥ ८७५ ॥
हिङ्गुपर्ण्यां प्रसेवस्तु भल्लादौ ककुभे तथा ।
कैरवं जलजेरौ ना देवरागभिदोर्द्वयोः ॥ ८७६ ॥
भैरवी त्रिषु भीमे स्याद्गन्धर्वो मृगदेवभित् ।
ऐरण्डाश्वौ गायनश्च राहूत्पातावुपप्लवौ ॥ ८७७ ॥
अनाश्वासोपलापश्च स्नेहश्च स्यादपह्नवः ।
अनुभावः प्रभावे च सतां च मतिनिश्चये ॥ ८७८ ॥
सवने मद्यसंधाने स्नाने चाभिषवः पुमान् ।
क्लीवे पारशवं शस्त्रे वर्णभेदे त्रिलिङ्गकम् ॥ ८७९ ॥

द्वौ विशौ वैश्यमनुजौ संततौ स्त्री जने बहु।
दृग्बुद्धी दर्शनेक्षिण स्त्री दिगुपाये निदर्शने ॥ ८८० ॥
मार्गे ककुभि च स्त्री स्याद्द्वौ चराभिसरौ स्पशौ।
द्वौ राशी पुञ्जमेषाद्यौ लब्धव्ये गणिते च ना ॥ ८८१ ॥
ईशो महेश्वरः स्वामी पृष्ठ्यास्थ्यस्यादिमध्यभूः।
वंशोन्वयः समूहश्च काण्डं वेणुरथो दशा ॥ ८८२ ॥
अवस्था वर्तिरन्ते तु वाससो भूमनि स्त्रियाम्।
कुशा वल्गा कुशी फालो दर्भेस्त्री क्लीबमम्बुनि ॥ ८८३ ॥
निधनानुपलम्भौ तु नाशौ क्लीवे पलायने।
पशुर्मृगादौ छगले दर्शनार्थे तदव्ययम् ॥ ८८४ ॥
रुजायां स्पर्शके स्पर्शौ दानस्पर्शनयोरपि।
आशा ककुभि तृष्णायां दर्शः सूर्येन्दुसंगमे ॥ ८८५ ॥
कृष्णपक्षान्तयागे च पाशोक्षे बन्धने तथा।
रज्ज्वादिवलयच्छिद्रे प्रशस्ते तु सपूर्वकः ॥ ८८६ ॥
त्रिष्वायत्ते यन्त्रणेच्छा प्रभावः प्रभुता वशः।
शुन्यां वेश्यावन्ध्यगवीस्त्रीकरेणुषु तु स्त्रियाम् ॥ ८८७ ॥
पेश्यां धने तद्गृहे च चषके पद्मयोनिषु।
दिव्ये च कोशः पुष्पादिकुड्मलासिपिधानयोः ॥ ८८८ ॥
कायावृतौ द्वयोः पद्मकर्णिकायां समाश्रये।
वेश्यानां वेश आकल्पे दुःस्पर्शा कण्टकारिका ॥ ८८९ ॥
यवाशे पुंसि परुषे निर्दये च भवेत्त्रिषु।
रहःप्रकाशौ वीकाशौ निर्वेशो भृतिभोगयोः ॥ ८९० ॥
प्रसरे चाथ निर्देश आज्ञायां कथने तथा।
कृतान्ते पुंसि कीनाशः क्षुद्रकार्षकयोस्त्रिषु ॥ ८९१ ॥
राक्षसे किंशुके पर्णे पलाशो हरिते त्रिषु।
शटीपर्णे भवेत्क्लीबमभींशुः प्रग्रहे करे ॥ ८९२ ॥
विवशः स्यादवश्यादौ त्रिलिङ्गोनिष्टदुष्टधीः।
कर्कशः स्यात्साहसिके दुःस्पर्शे कठिनेदये ॥ ८९३ ॥

कम्पिल्ये च प्रदेशस्तु मानभित्स्थानभेदयोः।
वागीशो देवताभेदे ना जीवे हयमूर्धनि ॥ ८९४ ॥
ब्रह्मणि ज्ञे त्रिषु भवेत्कलशोऽस्त्री त्वपां निधौ।
दधिमन्थनकुम्भ्यां च कलशी कलशिः स्त्रियौ ॥ ८९५ ॥
निवेशौ शिबिरोद्वाहौ बालिशौ मूर्खशावकौ।
त्रिषु स्फुटे प्रसिद्धे च प्रकाशो भासि पुंस्ययम् ॥ ८९६ ॥
संध्यङ्गभिद्विमर्शो ना स्यात्परामर्शबाधयोः।
निस्त्रिंशोऽसौ त्रिषु क्रूरे नगेशोऽद्रिपतौ शिवे ॥ ८९७ ॥
भूमिस्पृशो नरा वैश्या व्यपदेशोऽभिधा छलम्।
अपदेशौ व्याजहेतू जीवितेशौ यमप्रियौ ॥ ८९८ ॥
वार्त्ताहरे सहाये च पुरोगे च प्रतिष्कशः।
पतने स्यादपभ्रंशो भाषाभेदापशब्दयोः ॥ ८९९ ॥
त्विट् शोभा रुक् तृड् लिप्सा तर्षौ विड् मलगूथयोः।
ऋषिर्वेदे वसिष्ठादौ भवेद् घोषो गवां गणे ॥ ९०० ॥
गोपपल्लौ गर्हरे च स्वरे मेघादिनिःस्वने।
उपयुक्तेतरच्छेषं त्रिषु ना नागसीरिणोः ॥ ९०१ ॥
प्रसादान्निजनिर्माल्यदाने स्त्री स्याद्वृषो गवि।
शुक्ले मूषके श्रेष्ठे शृङ्गीषाशिकयोः शुभे ॥ ९०२ ॥
झषा नागबला ना तु मत्स्ये स्याद्वत्सरेऽस्त्रियाम्।
वर्षो वृष्टौ लोकधातावुषा बाणसुता निशा ॥ ९०३ ॥
दोषो गुणेतरे रात्रौ स्त्री भ्रेषो नाशगर्हयोः।
करीषाग्नौ पुमान्कर्षूस्त्रिषु कृष्यल्पकुल्ययोः ॥ ९०४ ॥
शुषिः शोषे बले क्लीबे विषं क्ष्वेडे जले तथा।
स्त्रियां प्रतिविषायां स्याच्छोषस्तानवरोगयोः ॥ ९०५ ॥
तुषो बिभीतको दोषो धान्यचर्मावृतौ धने।
तद्गृहे पट्टयोन्यादौ कोषः शान्तश्च कैश्चन ॥ ९०६ ॥
शैलूषो नर्तके बिल्वे मनीषा धिषणेच्छयोः।
अभीषुः प्रग्रहे रश्मौ पुरुषा आत्मसाधनः ॥ ९०७ ॥

पञ्चहस्तप्रमाणे च कल्माषौ कृष्णकर्बुरौ ।
रोहिषं रक्तकत्तृणं मत्स्यभिद्धरिणान्तरम् ॥ १०८ ॥
शुण्डाग्रभागे गण्डूषा द्वयोश्च मुखपूरणे ।
प्रसृतोन्मित उष्णीषः शिरोवेष्टकिरीटयोः ॥ १०९ ॥
पुंसः कृत्यविशेषे स्यात्पौरुषं तन्मिते त्रिषु ।
आमिषे पललोत्कोचावामिषी स्यात्तु मङ्ककी ॥ ११० ॥
पीयूषममृते नूत्नदुग्धक्वाथे घने द्वयोः ।
व्यक्तौ भेदे विशेषः स्यात्प्रदोषो दोषिकालयोः ॥ १११ ॥
त्रिष्वाविले स्यात्कलुषं पापे च महिषी प्रभोः ।
स्त्रियां द्वयोः पशावंहस्यपराधे च किल्बिषम् ॥ ११२ ॥
आकर्षः शारिफलक आक्षेपे पाशके तथा ।
निष्ठुरे वचने रूक्षे परुषं कर्बुरे त्रिषु ॥ ११३ ॥
सदृशे च जिगीषा स्याज्जयेच्छाव्यवसाययोः ।
संघर्षौ कषणस्पर्धे उपासाश्रवणेच्छयोः ॥ ११४ ॥
शुश्रूषानिमिषा मत्स्याः सुराः शम्यां तु न स्त्रियाम् ।
कपिशीर्षं भित्तिशृङ्गे रथाधो दारु कर्षणम् ॥ ११५ ॥
अनुकर्षमनुतर्षोऽभिलाषश्चषकः सुरा ।
परिवेषस्तु वलने परिधौ मण्डले तथा ॥ ११६ ॥
कालमेषी तु मञ्जिष्ठा बृहती सोमराजिका ।
पलंकषा भवेल्लाक्षा गोक्षुरो गुग्गुलुस्तथा ॥ ११७ ॥
भा रश्मिदीप्त्योर्न पुमान्वासौ रतगृहौकसी ।
देवा देवभिदोर्मिश्च योक्त्रांशू च वुके वसुः ॥ ११८ ॥
भासि रत्ने धने क्लीबे पाठारास्नाभुवो रसाः ।
मांसे नाट्ये देहधातौ वीर्ये रागे द्रवे विषे ॥ ११९ ॥
स्वादेम्बुादौ चर्वणे ना ध्वनौ क्लीबे तु पारते ।
खगयोगिभिदोर्हंसो निर्लोभनृपसूर्ययोः ॥ १२० ॥
विष्णौ प्राणे चात्मनि च ज्योतिर्भेद्युनिदृष्टिषु ।
पुत्रादौ तर्णके वर्षे वत्सः क्लीबे तु वक्षसि ॥ १२१ ॥

ध्वान्ते राहौ गुणे शोके तमो वेधा विधातरि ।
विष्णौ विदुषि चार्थाचिर्ज्वालाभासोर्न पुंस्ययम् ॥ १२२ ॥
सरित्प्रवाहे खद्वारे स्रोतः स्यात्करिणः करे ।
वर्चांसि रूपविड्भासो रहः सुरतगुह्ययोः ॥ १२३ ॥
एनोपराधे दुरितेप्यागः पापापराधयोः ।
रजो गुणे च रेणौ च योषितामार्तवेपि च ॥ १२४ ॥
द्वारोर्ध्वदारु नासा स्यान्नासिका चाथ यौवनम् ।
देहावस्था वयः पक्षी मह उत्सवतेजसोः ॥ १२५ ॥
छन्दः पद्येभिलाषे च वेदे चौजो बले रुचौ ।
गृहं सदाश्रयश्चौकः पयः क्षीरे जलेपि च ॥ १२६ ॥
तेजः प्रभावो दीप्तिश्च बलशुक्रासहिष्णुताः ।
नभा वर्षाः श्रावणोभ्रमन्तरिक्षे नपुंसकम् ॥ १२७ ॥
सहो दीप्तौ बले मार्गशीर्षहेमन्तयोः पुमान् ।
तपास्तु शिशिरे माघे क्लीवं कृच्छ्रादिके व्रते ॥ १२८ ॥
चौर्यादिकर्म हिंसा स्याद्वधश्च जननी प्रसूः ।
अश्वा चाथ स्त्रियामाशीर्हिताशंसाहिदंष्ट्रयोः ॥ १२९ ॥
रुयुषाः संध्या प्रभाते तु क्लीवे भासः प्रभांशवः ।
मणिदोषो भयं त्रासः सर्पिर्हौतव्ययोर्हविः ॥ १३० ॥
नाम्नी क्लीवे कुशे बर्हिरुरः श्रेष्ठेपि वक्षसि ।
असिः खड्गे तथा चापे शुभाकारे तनौ वपुः ॥ १३१ ॥
अदः परस्मिन्नत्रापि शंसोक्तौ स्तुतिवाञ्छयोः ।
आत्मज्ञे पण्डिते विद्वान्क्लीवे द्यौर्भूश्च रोदसी ॥ १३२ ॥
पुनरर्थेव्ययं भूयोतिवद्वर्थे त्रिलिङ्गकः ।
[ प्रशस्तवृद्धयोर्ज्यायानुत्कर्षार्थे त्रिलिङ्गकः ] ॥ १३३ ॥
मृत्स्नौषधिः प्रशस्ता मृद्दासी वीरुच्च नर्तकी ।
भृत्ये द्वयोर्वरासी तु वरखङ्गोचशाटकौ ॥ १३४ ॥
लालसे प्रार्थनौत्सुक्ये तद्वति स्यात्त्रिलिङ्गकः ।
[ आशंसा वचनं वाञ्छा स्तुतिः संभावना तथा ] ॥ १३५ ॥

स्तुतिः प्रशंसा श्लाघा च दिवौकाश्चातके सुरे ।
छर्दात्रिरुत्यभे वह्नौ रभसो हर्षवेगयोः ॥ १३६ ॥
वतंसोस्त्री कर्णपूर उत्तंसश्चापि शेखरे ।
सुमनाः स्त्री पुष्पजात्योर्देवपण्डितयोः पुमान् ॥ १३७ ॥
सारसः खगभेदे स्यात्क्लीबे तु सरसीरुहे ।
त्रिषु धानुष्क इष्वासो भवेत्क्लीबे तु कार्मुके ॥ १३८ ॥
व्योम्न्यस्त्रियां विहायः स्यात्पुंबहुत्वे पतत्रिषु ।
बलात्कारकृतं कर्म साहसं दण्डभित्तथा ॥ १३९ ॥
बीभत्सो विकृते क्रूरे निन्द्ये च त्रिषु फल्गुने ।
पुंसि नाट्यरसे च स्याज्जुगुप्सायां नपुंसकम् ॥ १४० ॥
वरीयानतिविस्तीर्णे तथा वरतरे त्रिषु ।
बाढसाध्वोरतिशये साधीयान्वाच्यलिङ्गकः ॥ १४१ ॥
युवाल्पयोरतिशये कनीयानपि मेध्यवत् ।
पाठा हरीतकी हस्तिपिप्पली श्रेयसी त्रिषु ॥ १४२ ॥
शस्तेथ पायसं दुग्धसंस्कृते बलिभिद्यपि ।
श्रीवासे नौषधिभिदि राक्षसी रक्षसि द्वयोः ॥ १४३ ॥
तद्भवादौ त्रिष्वभुक्तावुपवासो व्रतस्थितौ ।
मूर्वाद्राक्षे मधुरसे मृद्वीका च शतावरी ॥ १४४ ॥
काकोली परिहासः स्यात्क्रीडोपहसनं तथा ।
शेखरे कर्णपूरे चावतंसं पुंनपुंसकम् ॥ १४५ ॥
जले सान्द्रे च निर्यासे भवेद्घनरसोस्त्रियाम् ।
कादम्बे राजहंसे च कलहंसो द्वयोर्भवेत् ॥ १४६ ॥
चन्द्रहासो रावणासावसिमात्रेथ संस्कृतौ ।
धूपमन्त्रादिभिर्वासेप्यधिवासः पुमानयम् ॥ १४७ ॥
निःश्रेयसं शिवे मोक्षे सूर्यवह्नी विभावसू ।
निम्बे स्याद्धिङ्गुनिर्यासस्तथा हिङ्गुतरुद्रवे ॥ १४८ ॥
शिखिपिञ्छदले बर्हे ईहा स्यादुद्यमेच्छयोः ।
गृहं गेहे बहुत्वे तु न स्त्री दारेषु संवहः ॥ १४९ ॥

दान्तस्कन्धेऽप्यवयवे वोढर्याचरणे तथा ।
वहो वाहे वर्णके च मुद्गपर्णी वचा सहा ॥ ९५० ॥
कुमारी त्रिषु शक्ते स्याद्वार्त्ताकी वाशिका तथा ।
सिंही द्वयोः प्राणिभेदे त्रपत्रोरगेष्वहिः ॥ ९५१ ॥
अविद्यामूर्छयोर्मोहो ग्राहो यादोवहारयोः ।
स्नेहस्तैलादिकप्रेम्णोः सौहार्दे चाथ गह्वरे ॥ ९५२ ॥
गुहा स्यात्पृश्निपर्ण्यां च पुमान्रकन्देथ संचये ।
सूर्यादौ पूतनादौ च राहुनिर्बन्धयोर्ग्रहः ॥ ९५३ ॥
राहुग्रस्तेन्दुपूष्णोश्च मही भूरुत्सवे पुमान् ।
वाहा बाहुतरे स्त्री स्यात्पुमान्माने हयादिषु ॥ ९५४ ॥
वर्गविन्यासयोर्व्यूहो विस्तारे पृथुले त्रिषु ।
विपुले त्र्यादिसंख्यायां बहुः स्याद्वाच्यलिङ्गकः ॥ ९५५ ॥
प्रग्रहः स्यात्तुलासूत्रे वन्द्यां रज्जौ हयस्य च ।
हयरश्मौ तुलासूत्रे प्रग्राहो जीविकाकृतौ ॥ ९५६ ॥
संवाहः परिचर्यायां विग्रहः कायविस्तरौ ।
वैरवाक्ये तिरस्कारोभिध्या भर्त्सा च निग्रहः ॥ ९५७ ॥
स्यादूर्ध्वमाने स्त्रीश्रोणावारोहोङ्के तरोरपि ।
तथाश्वाद्यध्यासितरि स्यात्स्पष्टा मलसंसृतिः ॥ ९५८ ॥
प्रवृत्तिर्जलवेगश्च प्रवाहा अथ संग्रहः ।
संचये महदुद्धारे फलादिस्वीकृतावपि ॥ ९५९ ॥
द्वार्यापीडे क्राथरसे निर्यूहो नागदन्तके ।
वैदेह्यौ पिप्पलीसीते वाराह्यौ देवतौषधी ॥ ९६० ॥
रास्ना शेफालिका गन्धनाकुली सुवहा त्रिषु ।
रम्ये दैर्घ्ये रोगभेदे स्यादानाहोपि बन्धने ॥ ९६१ ॥
गजभाले वृष्टिरोधे प्रतिबन्धेप्यवग्रहः ।
पदपर्वविभागे च भूमौ सर्वसहा सहे ॥ ९६२ ॥
स्यादारम्भे स्वीकरणे सैन्यपृष्ठे पतद्गृहे ।
द्विजेभ्यो विधिवद्देये तद्गृहे च प्रतिग्रहः ॥ ९६३ ॥

पत्नीपरिजनादानमूलशापाः परिग्रहाः ।
समीरणे गन्धवहो नासिकायां स्त्रियामथ ॥ १६४ ॥
पितामहः पितृपिता ब्रह्मा चाथ तमोपहाः ।
अग्नीन्द्वर्का नृपार्हेऽर्थे परिबर्हः परिच्छदे ॥ १६५ ॥
ध्वाङ्क्षः काके बके कक्षः पार्श्वपातकभित्तिषु ।
तृणे वीरुधि च स्त्री तु प्रतिज्ञास्थानभेदयोः ॥ १६६ ॥
परिधानस्य च बहिः कटीनिगडने भवेत् ।
रथांशेऽक्षो दैत्यभिदि पाशकद्यूतयोरपि ॥ १६७ ॥
बीजे विभीतके कर्षे स्रोतोग्रे क्लीब इन्द्रिये ।
सौवर्चले च पक्षस्तु वर्गे कालसहाययोः ॥ १६८ ॥
गरुत्साध्यविरोधेषु पुष्पच्छेदेभपार्श्वयोः ।
रुचौ विकल्पिते पार्श्वे परः केशात्तु संहतौ ॥ १६९ ॥
प्रजापतौ कुक्कुटे च दक्षः स्याच्चतुरे त्रिषु ।
प्रेक्षा नृत्तेक्षणं प्रज्ञा भिक्षा सेवार्थना भृतिः ॥ १७० ॥
याच्ञाप्राप्यं तथान्नादि न्यक्षं कार्त्स्न्यनिकर्षयोः ।
ऋक्षं भे पुंसि भल्लूके रूक्षस्त्वप्रेम्ण्यचिक्कणे ॥ १७१ ॥
चोक्षो गीते मनोज्ञे च मोक्षो मुक्तौ च पाटलौ ।
पर्कट्यां पिप्पले प्लक्षो यक्षौ यक्षेशगुह्यकौ ॥ १७२ ॥
न ना शतसहस्रं स्याल्लक्षं व्याजशरव्ययोः ।
प्रत्यक्षेऽधिकृते साक्षिण्यध्यक्ष ˜ ˜ धातकी ॥ १७३ ॥
सुभिक्षा सुलभान्नत्वे क्लीबे हंसाश्वभेदयोः ।
मल्लिकाक्षो विरूपाक्षो हरे विकृतलोचने ॥ १७४ ॥

---

आ प्रगृह्यः स्मृतौ वाक्य आश्लिष्टे कोपपीडयोः ।
आङीषदर्थे व्याप्तौ च मर्यादायां क्रियान्वये ॥ १७५ ॥
इ दुःखभावने कोप उपाह्वाने विसर्जने ।
पापकुत्सेषदर्थे कु धिङ् निर्भर्त्सननिन्दयोः ॥ १७६ ॥

चोन्वाचये समाहारेतरेतरसमुच्चये ।
विनियोगे तुल्यकाले हेतौ यथार्थ एव च ॥ १७७ ॥
स्विलम्भे च वितर्के च तुर्विशेषेवधारणे ।
यद्वाक्योपक्रमे हेतौ यदायद्यर्थयोरपि ॥ १७८ ॥
तद्धेतावुपसंहारे तदातर्ह्यर्थयोरपि ।
सकृत्सहैकवारार्थे सदार्थे चाथ मङ्गले ॥ १७९ ॥
स्वस्त्याशीःक्षेमपुण्यादौ प्रकर्षे लङ्घनेप्यतिः ।
प्रतीच्यां चरमे पश्चादाराद्दूरसमीपयोः ॥ १८० ॥
विकल्पप्रश्नसत्यार्थेषूतासत्यविकल्पयोः ।
पुनः सह सदा शश्वत्साक्षात्प्रत्यक्षतत्त्वयोः ॥ १८१ ॥
खेदानुकम्पासंतोषविस्मयामन्त्रणे बत ।
हन्त हर्षे कृपादाने वाक्यारम्भविषादयोः ॥ १८२ ॥
प्रतिः प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ।
इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु ॥ १८३ ॥
मतस्वरूपैवमर्थविवक्षानियमादिषु ।
यावत्तावच्च साकल्ये हेतौ मानेवधारणे ॥ १८४ ॥
संप्रत्यवधिभाव्यर्थेष्वीर्ष्यापीडाप्रतिश्रवे ।
पुरस्तात्प्रथमं प्राच्यामानन्तर्यैमतोपि च ॥ १८५ ॥
देशे कालेपि चाधस्ताद्दक्षिणेधोभवेपि च ।
किमुत स्यादतिशये प्रश्नमध्यविकल्पयोः ॥ १८६ ॥
मङ्गलानन्तरारम्भप्रश्नकात्स्न्येष्वथो अथ ।
अङ्गीकारेधिकारे च स्याद्वितर्कविकल्पयोः ॥ १८७ ॥
वृथा निरर्थकाविध्योः सादृश्ये प्रक्रमे यथा ।
प्रकारयोग्यतावीप्सापदार्थानतिलङ्घने ॥ १८८ ॥
तथातिदेशेनुज्ञाने प्रकारेपि समुच्चये ।
नुः पृच्छायां वितर्के च पश्चात्सादृश्ययोरनु ॥ १८९ ॥
दैर्घ्ये च लक्षणादौ च तत्त्वाख्यानेप्यथो ननु ।
प्रश्नावधारणानुज्ञानुनयामन्त्रणोत्तरे ॥ १९० ॥

आक्षेपेच्छानिश्चयेषु वाक्यादिप्रतिवाक्ययोः ।
गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ॥ ९९१ ॥
आक्षेपादौ पदार्थे च वर्जने गर्हणेष्वपः ।
उपः समीप आधिक्ये हीनत्वेङ्गीकृतावपि ॥ ९९२ ॥
किं पृच्छायां जुगुप्सायामाक्षेपेल्पावसानयोः ।
हुं वितर्के परिप्रश्ने प्रक्रान्तोक्तिनिवारणे ॥ ९९३ ॥
भयादौ भर्त्सने कोपेनिच्छायामथ कं जले ।
मूर्धनिन्दासुखेषु स्यादां सत्यार्थे स्मृतौ तथा ॥ ९९४ ॥
अमा सह समीपे स्यात्सामि त्वर्धे जुगुप्सने ।
तूष्णीमर्थे सुखे जोषं नूनं तर्केर्थनिश्चये ॥ ९९५ ॥
उपांशु वचने तूष्णीमेवमित्थंतथार्थयोः ।
निर्देशे चोपदेशे च निश्चये च प्रतिश्रवे ॥ ९९६ ॥
नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ।
विस्मयस्मृत्यलीकेषु समं तुल्यसहार्थयोः ॥ ९९७ ॥
अलं भूषणपर्याप्तिसामर्थ्येषु निवारणे ।
सांप्रतं वर्तमानार्थे युक्तार्थेनन्तरं तथा ॥ ९९८ ॥
मध्येन्तिके च समया निर्निश्चयनिषेधयोः ।
स्वर्गे परे च लोके स्वर्भेदाप्रथमयोः पुनः ॥ ९९९ ॥
प्रातः प्रभाते स्वार्थे च मध्ये बाह्येन्तरित्यपि ।
स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा ॥ १००० ॥
ऊर्युररीच्युररी चैते विस्तारेङ्गीकृतावपि ।
किल संभाव्यवार्तार्थहेत्वलीकारुचिष्वथ ॥ १००१ ॥
निषेधवाक्यालंकारजिज्ञासानुनये खलु ।
– ल शंसानिश्चययोर्वा विकल्पोपमानयोः ॥ १००२ ॥
हंहे समुच्चये च स्यादेवौपम्येवधारणे ।
अवज्ञायां मनागर्थ उत्प्रेक्षातर्कयोरपि ॥ १००३ ॥
तिरोन्तर्धौ तिर्यगर्थे मिथोन्योन्यं रहस्यपि ।
जन्मप्राकाश्ययोः प्रादुरधो वुध्ननिकारयोः ॥ १००४ ॥

नमः पूजाप्रह्वतयोस्तत्त्वं मुख्यत्वमञ्जसा ।
कष्टे क्षतौ हशब्दः स्यादा - - र्थस्य सूचने ॥ १००५ ॥
दुःखे शोके विषादे [ हा ] - - - - - - - - - ।
हिशब्दः स्याद्विशेषा - - - - त्रावधारणे ॥ १००६ ॥
अह क्षेपे विनियोगेहह खेदेद्भुत - - ॥
अभ्यादानेभ्युपगमे तूष्णींभावे समर्चने ।
दानप्रतिग्रहादौ स्यादोंकारोपि च मङ्गले ॥ १००७ ॥

॥ इति मङ्खकोशः समाप्तः ॥

# EXTRACTS FROM THE COMMENTARY.

[ क ] चतुर्ष्वाद्येष्वर्थेषु कशब्दः पुंलिङ्गः । उत्तरेषु त्रिषु तु नपुंसकम् । कंपः को वा गुरुस्ते Dhv. 104, 10 इत्यादौ जले । कंपो वरुणः । कं कणविशेष इत्यादौ सुखे । कं सुखाय कं सुखं वा यथाद्यात् [ ? ] । तथा कणति शब्दायते । कमिति प्रकृत्य मस्तके च सुखेपि चेति अव्ययप्रकरणे मेदिनिः । कंशब्द अंकारान्तो [ ? ] वक्ष्यते । अयं च कशब्दः किंशब्दप्रकृतिश्च प्रातिपदिकं च भाष्यकारेण कस्येदित्यत्र स्थापितत्वात् c. Bh. Pâ. 4, 2, 25 । ततश्च । कस्मै च काय चेत्यादि लक्ष्यसिद्धिः ॥ एकाक्षरः ॥ [ नाक ] नाकतटिनीत्यादावाकाशे । नाकौकसामित्यादौ त्रिदिवे ॥ [ लोक ] भा॰ Su. 2594 इत्यादौ भुवने । मां॰ Ra. 14, 61 इत्यादौ जने ॥ **10** ॥

[ श्लोक ] पद्ये । Ra. 14, 70 ॥ [ टङ्क ] दर्पे । दृष्टः स पौरैस्तरुणः सटङ्कः ॥ [ अङ्क ] किं तस्य संख्येव नवा नवाङ्का इत्यादावेकादिगणनायाम् । उत्सङ्गे । Ra. 3, 26 । चिह्ने । शशाङ्केनेव शर्वरी ॥ **11** ॥

[ अर्क ] सूर्ये स्फटिके च । H. V. 1, 4 ॥ [शल्क] वार्क्षत्वचि । भूर्जशल्कं वसानाः ॥ [ किष्कु ] मामात्किष्कुशतं व्रजेदित्यादौ चतुर्विंशत्यङ्गुले हस्तप्रमाणे । किष्कुसंमिताः समिधः । द्वादशाङ्गुला वितस्तिप्रमाणाः ॥ **12** ॥

[ निष्क ] सह अष्टभिर्वर्तते साष्टम् । बहु॰ Pâ. 5, 4, 73 इति डच् । सुवर्णं षोडश माषकाः । पलं सुवर्णकाश्चत्वारः । दीनैरर्यते दीनारो रूपकम् । निःशेषेण कस्यते निष्कः ॥ **13** ॥

[ कल्क ] समले पापाशये । एनसि पापमात्रे ॥ [ स्तोक ] दमे दमयुक्ते विनीते यथा । स्तोको गुर्वन्तिके भूयात् । पुत्रे । धन्यस्य गृहिणः स्तोको गृहे खेलति खेलनैः ॥ [ पाक ] शावके । काकपाकैरटद्भिः ॥ **14** ॥

[ लङ्का ] रावणनगर्याम् । Śi. 1, 68 । वृक्षशाखायाम् । द्रुमलङ्कां समाश्रित्य वानरः कुत्र संस्थितः ॥ 15 ॥

[ एक ] तथा च कात्यः । प्रधानान्यसहायेषु संख्यायां चैक इष्यते ॥ [पङ्क] द्वयेपि । पङ्कः पङ्कं व्यपोहति ॥ 16 ॥

[ भेक ] मण्डूके । Su. 843 । उभयत्रापि । भेकाः पान्थजना घनस्तनितत्र-ङ्केकारवेत्राप्यलम् ॥ [ छेक ] छेकानुप्रास इत्यादौ सहृदयश्छेकाः [ sic ] ॥ 17 ॥

[ शङ्कु ] आयुधभेदे । शङ्कुः प्रहरणान्तरम् c. Śâśv. 385 । स्थाणौ । मुष्णन्ति शङ्कुः [ sic ] परितो निधाय । कीलके । Ra. 8, 92 । संख्याभेदे । शङ्कु° c. Mh. 2, 17 । मानभेदे । आयामत्रिभेद [ sic ] संख्यालक्षणया ॥ [ त्रिक ] कूपयन्त्रे । त्रिकाङ्किकारसूचिताः ॥ त्रिकानामित्यादौ हर्षचरिते गात्राङ्गवर्णने गात्राङ्गे । तत्र त्रि त्रिकदर्शनमित्यादौ त्रये ॥ 18 ॥

त्रयाणां संघः । त्रिकः । संख्याया° Pâ. 5, 1, 22 । त्रिलिङ्गः । त्रिकामन्त्र इत्यादावादिग्रहणात् ॥ [ राका ] नवरजसि कन्यायाम् । राका नान्यमुखं पश्येद्विना भर्तुः ॥ 19 ॥

[ शूक ] कण्टके । शूकैरिवाचितः कण्ठः । अनुक्रोशे । निःशूक किं भाषसे । शुङ्गे तुङ्गाङ्कुरे । नवचारुशूकविशदैः ॥ [ शलाका ] रत्नस्वरूपभिदि । Ku. 1, 24 । शस्त्रभाण्डे । Su. 3401 । अञ्जनतूलिकायाम् । Ku. 1, 47 ॥ 20 ॥

परीक्षायाम् । शलाकया कोपि भिनत्ति मन्त्रम् ॥ [ दैशिक ] सद्दैशिकमुखाम्नायपारंपर्यक्रमागता इत्यादौ गुरौ ॥ देश्ये । अपूर्वो दैशिक इवासीत् ॥ [ तूलिका ] चित्रकूर्चाण्डे । Ku. 1, 32 । शलाकायाम् । गृहीत्वाञ्जनतूलिकाम् ॥ 21 ॥

[ वर्णक ] विलेपने चन्दने च क्लीबे । वर्णकं मेकं [ sic ] संसदि सोपठदित्यादौ परीक्षोद्धृतवस्तुनि ना पुंलिङ्गः । वर्णकावृततत्त्वः स हि मत्तो [ ? ] इत्यादौ तान्तवे विकारे वस्त्रविशेषे । वर्णका तान्तवे Pâ. 7, 3, 45, 7 इति हि वार्त्तिकमिति द्वयोः । शोधनाय निष्क्रम्य वर्णिका आदाय पुनः प्रविशतीत्यादौ रागे [ sic ] गैरिकादिषु स्त्रीपुंसयोः । ततः° M. M. 17, 1 इत्यादौ भूमिकायां स्वरूपविपर्यासेन रागोपचरणात् ॥ 22 ॥

पर्यायादिषु । वर्णिकाभिः किमाभिः । किमेतैर्बहुभिर्वर्णैरित्यर्थः । आदिशब्दादर्हणीवृत्तिषु [ sic ] । वर्णयितरि । अहं तव वर्णको भवामि ॥ [ गणिका ] इभ्याम् । ग्रामेषु परिजनेषु गणिकामारुह्य ययौ ॥ [गणक] दैवज्ञे । K. V. 9,6 ॥ **23** ॥

[ कलङ्क ] अपवादे । न जाने कोमुष्मिन्रघुकुलकलङ्के कविरभूत् ॥ **24** ॥

[ पृथुक ] भक्ष्ये खाद्यविशेषे चिवरी इति भाषया प्रसिद्धे खलभृष्टे ॥ [ आलोक ] दर्शने । Me. 82 ॥ **25** ॥

[ नालीक ] अज्ञे । विवृतेनापि॰ Mh. 3, 52 ॥ [ पुलाक ] तुच्छ॰ । Sp. 4150 संक्षेपे । पुलाककारी विपुलाशयः स्यात् । भक्त॰ । स्थालीपुलाकन्यायेन ॥ **26** ॥

[ करक ] कमण्डलौ नालिकेरास्थिभवे । करककरः जगाम मस्करी ॥ करककुसुमताम्र इत्यादौ दाडिमे । करिका मद्यभाण्डं प्रसिद्धम् ॥ **27** ॥

[ करङ्क ] करङ्कशेषात ारित्यादौ मांसरहिते ॥ ताम्बूलादिभाजने । आजुहाव च करङ्कवाहिनीम् ॥ **28** ॥

[ वृश्चिक ] राशिभेदे प्रसिद्ध एव । मदनिकायाम् । एता॰ Mh. 3, 91 । शूकप्रधानः कीटः कण्टकी क्रिमिः । गोमयाद्वृश्चिको जायते इत्यादौ ॥ [प्रतीक] मरुत्प्रतीकवाहीत्यादौ प्रतिकूले ॥ अंशे । नाममालाप्रतीकमपश्यम् c. V. K. I, 3, 6, C. । दीपे । प्राज्यप्रतीकजालाभिः शार्वरे शकलीकृते ॥ अङ्गं प्रतीकोवयव इत्यादावंशाभिप्रायेणैव c. AK. 148, 70 ॥ **29** ॥

[ दीपक ] दीपे । Su. 2490 ॥ **30** ॥

[ कौशिक ] गाधिजे । Ra. 11, 1 । उलूके । M. M. 176, 7 । गुग्गुलौ । अगुरु॰ Mh. 3, 29 । इन्द्रे । Śi. 1, 53 । आहितुण्डिके गारुडिके । उरग इव च कौशिकात्त्रस विभ्यत् ॥ [क्षुल्लक ] के अन्ये [ sic ]राजानः क्षुल्लका इत्यादौ कनिष्ठादिषु यथायोगं योज्यम् ॥ **31** ॥

[ पिण्याक ] सिल्हके । पिण्याकगन्ध इव तुष्टिकृदत्र सोभूत् ॥ [ वर्तिका ] वर्तका शकुनौ मात्रामित्यत्र वार्त्तिकविकल्पेनेत्त्वस्मरणाद्वर्तकापि c. Pâ. 7,

3, 45, 8 ॥ [ वर्तक ] वर्तकक्षुण्णपाद इत्यादावश्वखुरे ॥ [ सायक ] शरे । Ra. 2, 31 । खड्गे । आकृष्य सायकमुपाद्रवदेकवीरः ॥ **32** ॥

[ व्यलीक ] कामजे दोषे । मेहे [ sic ] न गोत्रस्खलितव्यलीकम् ॥ न किंचिदूचे किल स व्यलीक इत्यादौ विलक्षे । विलक्षः सलज्जः । अप्रिये । मया° Mh. 3, 86 । विपर्यये । पृष्टो° Mh. 3, 86 । रोगे । चिरं व्यलीकेन जगाम शान्तिम् । अकार्ये । सुजनो° Mh. 3, 86 ॥ **33** ॥

[ गैरिक ] स्वर्णे । जगाल गैरिकं पाकात् ॥ [अलीक] त्रयेपि । Sp. 2606 ॥

[ अनूक ] द्वयोरपि । वरस्यानूकवृत्तानि प्रेक्ष्य कन्या प्रदीयते ॥ **34** ॥

[ धेनुका ] क्षुरिकायाम् । बन्धासिधेनुकैः॥ भक्तजनकामधेनुधेनुक इत्यादावुमायाम् । करेण्वाम् । आरुह्य वरधेनुकाम ॥ [ कालिका ] देव्याम् । विज्ञेयः कालिकामते [ sic ] । नियतकाले निर्वाह्यो लाभः कालिकाख्या वृद्धिः । तथा च कारि[ता] कालिका चेत्यादि नारदादौ । स्वर्णमले । विना निकषणं हेम्नः कालिका केन लक्ष्यते । मेघ° । Ra. 11, 15 ॥ **35** ॥

[ कारिका ] यातनायाम् । सद्या° Mh. 3, 18 । वृत्तौ । भंधोक्तकारिकेयम् [ sic ] । क्रियायाम् । कां कारिकामकार्षीः ॥ [ कारक ] भृत्ये । कारकेषु तताशौचम् । कारके [ sic ] । स कर्ता नाम कारकम् c. Kât. p. 497 ॥ [ कर्णिका ] कर्ण° Pâ. 4, 3, 65 इति कर्णभूषणे तालपत्रादौ । कर्णिकाकिरणबन्धुरितस्येत्यादौ ॥ **36** ॥

करिहस्ताङ्गुलौ पद्मबीजकोश्यां च । स्थिता श्रीः पद्मे च भ्राम्यन्मधुपकर्णिके । स्त्रिया नार्या गदे कर्णिका भगव्याधिरित्यायुर्वेदप्रसिद्धो गदः ॥ [ वाह्लीक ] कुङ्कुमे । वाह्लीक° Mh. 3, 87 । हिङ्गौ । वाह्लीकार्द्रकसैन्धवैः सुरभिणी ॥ **37** ॥

[ कौतुक ] मङ्गलद्रव्ये । Ra. 8, 1 । कुतुके । कौतुकाक्षिप्तचित्तः ॥ [ वालिका ] सिन्धुर्वीचिकरानुवाह बहलप्रौढोन्मिषद्वालिकानित्यादौ श्लेषेण वालुकोर्मिकयोः ॥ **38** ॥

कङ्कणे । वालिकालंकृतप्रकोष्ठः ॥ [ वालक ] अङ्गुलीयह्रीवेरयोः प्रसिद्धः ॥ [ प्रियक ] मृगभिदि । Śi. 4, 32 ॥ **39** ॥

[ उदर्क ] उत्तरकाले । सुखोदर्का वनभुवः । उत्तरकालिके फले । कुशलोदर्कं तर्कयामि ॥ [ मेचक ] शिखि° । मेचकिकुलकोलाहला । मेचकिनः शिखिनः ॥ **40** ॥

[ गोलक ] गुले । गुग्गुलुगोलकहिङ्गुवचाभिः । गुलं मस्तिष्कम् ॥ पिण्डे । भूगोलः ॥ [ तिलक ] त्रिश्लोक्याम् । युगलकतिलकचक्कलकानि ॥ **41** ॥

विशेषके वृक्षभिदि च । Ra. 9, 41 ॥ [ आतङ्क ] निरातङ्कः पङ्क इत्यादौ तापे । आतङ्कः कुसुमायुध इत्यादौ द्वयोरपि । निरातङ्कः प° M. M. 195, 1 इत्यादौ भीरेव ॥ **42** ॥

[ रेणुका ] भार्गवाम्बायाम् । Bâ. II, 37 ॥ [ पुण्ड्रक ] इक्षौ । स्फुरति च रुचिमत्ता पर्वणां पुण्ड्रके स्यात् ॥ [ पुलक ] प्रस्तरे श्लक्ष्णेश्मविशेषे । पुलकमृष्टधौताम्बराः । क्रिमिभेदे । वर्त्मनां° Mh. 3, 61 ॥ **44** ॥

[ कण्टक ] क्षुद्र° । निष्कण्टकं राज्यमथो चकार । रोमाञ्चे । Ku. 6, 15 । तरोरङ्गे । A. S. 60, 4 । अत्र कण्टकं तीक्ष्णलतापर्व ॥ **45** ॥

[ सरक ] इक्षुशीधौ । वरतनुवक्त्रसङ्गसुगन्धितरं सरकम् । शीधुपाने । सरककेलिमत्ताः स्त्रियः ॥ [ तारक ] दैत्यभेदे । Ku. 2, 1 ॥ **46** ॥

[ तारिका ] देवीभेदे । तारिका भवसमुद्रतारिका ॥ [ क्षारक ] पिटकं भाण्डविशेषः । क्षारकाङ्कितकूर्परा इत्यादौ । कोरके । क्षारकैः कुसुमचापसायकैः । कोरकं मुकुलिका ॥ [ जीवक ] विषयविषहतानां जीवकस्त्वं पुराण इत्यादौ प्राणके ॥ **47** ॥

जीवकदर्शने सर्वचैतन्यवाद इत्यादौ क्षपणे ॥ [ जीविका ] द्वयोः । कां जीविकां बिभर्षि ॥ [ पर्यङ्क ] उभयत्रापि । यदैव पर्यङ्कतले विमुक्ते त्वमिष्टया भावनयापगूढः ॥ **48** ॥

[ बन्धकी ] इभ्याम् । बन्धकीनिकटमगमन्नृपतिः ॥ [ बन्धक ] आधौ । न वृद्धिर्बन्धके नष्टे सर्वनाशे न रुद्धम् । विनिमयस्थाप्यं वस्तुरूपमाधिः । बन्धकारिणि । संसारबन्धिका माया ॥ **49** ॥

[ वार्धक ] वृद्धसंघाते । वार्द्धकमतानुसारी न व्यापदमेति हन्त तरुणोपि । वृद्धत्वे । Ra. 1, 8 । वृद्धकर्मणि । तरुणोपि शास्त्रदृष्ट्या वार्द्धक एव प्रवर्तते प्राज्ञः ॥ [ दर्शक ] प्रतीहारे । दर्शक° Mh. 3, 47 ॥ **50** ॥

[ स्थासक ] चर्चायामुपलेपने । चन्दनस्थासकाङ्कः । हारभेदे । कुचयोः स्थासकमौक्तिकार्चिराभात् । बुद्बुदे । स्थासकावलिनिभेन हसन्ती नर्मदा ॥ [ अंशुक ] मलयज° K. Pr. 345, 5 । तथा । शुचिनी चीनांशुके बिभ्रतीत्यादौ शुक्लवस्त्रे c. V. Ś. III, 16 । शुक्लांशुकोपरचितं घनसारेत्यादौ वस्त्रमात्रे । उत्तरीये । Ku. 1, 14 ॥ **51** ॥

[ मधुक ] मधुका वन्दिनः केपि c. Śâśv. 453 इति शाश्वतोक्त्या वन्दिभिदि पुंलिङ्गः ॥ **52** ॥

[ खनकी ] शिल्पिनि ष्वुनि c. Pâ. 3, 1, 145 । खनकी ॥ [ खनिका ] जलाधारे । वनिका खनिका रथ्या प्रपा सत्त्वात्ररोहणम् । खनिराकरः खनिरेव खनिका ॥ **53** ॥

[ कार्मुक ] चापे । क्रेंकारः स्मरकार्मुकस्य किमपि c. K. Pr. 160, 4. A. S. 37, 7 । कार्मुकः कस्य न प्रिय इत्यादौ कर्मण्ये शक्तमात्रे च ॥ [ कञ्चुक ] निर्मोकवारवाणयोः । Su. 1219 । कवचे । संनद्धकञ्चुकोच्चण्डवक्षसस्ते धनुर्धराः ॥ **54** ॥

[ अलका ] धनदपुरि । Ku. 6, 37 ॥ [ अलक ] स्त्रीकचे । Me. 88 ॥ [ अनीक ] रणे । सहस्र° V. K. 2, 1, 14, C. । सैन्ये । Ra. 18, 9 ॥ [ वञ्चक ] उभयत्रापि । वञ्चकैरावृता—स्ते दुर्गमा वत भूभृतः c. Mh. 3, 84 ॥ [ अन्तिका] चुल्ल्याम् । न दुष्येदन्तिकास्थितम् ॥ **55** ॥

[ विपाक ] पचने । विपाके कटु शीतं च । स्वेदे । आमज्वरे विपाकं प्रयुञ्जीत ॥ स्नेहस्य तस्याद्य विपाक एष इत्यादौ परिणाम उपचारात् ॥ [ कृषक ] फाले । लाङ्गलं कृषकाङ्कितम् ॥ [ कनक ] मातुलं धतूरबीजम् । स्वर्णे । Me. 74 ॥ [ राजिका ] रेखायाम् । अराजिके भूर्जपत्त्रे । आसुर्याम् । राजिकाः सर्षपास्तथा । आसुरी शाकविशेषबीजम् ॥ **56** ॥

[ लुब्धक ] शाकुनिके। किमिव॰ Bh. Ś. 73 ॥ [ नायक ] नेतरि मध्यमणौ च। H. Ch. 9, 10। नाट्योत्तमपात्रयोः प्रसिद्धः ॥ 57 ॥

[ खेटक ] गिरिखेटकेत्यादौ ग्रामे। कांस्यधातुकृतखेटकं कटकमित्यादौ फलके। फलकं चर्म ॥ [ पेटक ] भाण्डे। कनकपेटके तस्करः ॥ [ जालिक ] जालेन चरति जालिकः। ऐन्द्रजालिकः। जालं व्याजः। जालिकाकृष्टनक्र इत्यादौ धीवरे ॥ 58 ॥

[किञ्जल्क ] पुष्परेणौ। किञ्जल्कपुञ्जैः परिपिञ्जरासु स्थलीषु c. Vik. Ch. 10, 11 ॥ [ उष्ट्रिका ] भाण्डभेदे। नहि भवति पञ्चानामुष्ट्रिकानां पूरणो घटः ॥ 59 ॥

[ विटङ्क ] वितर्दिकायाम्। निर्विघ्नमङ्घ्रिप्रहता विटङ्काः। वलभ्याम्। यस्यां शशी निशि स्फुटङ्कविटङ्कलग्नः। उन्नते देशे। Kâd. I, v. 4 ॥ [ पिनाक ] शूले। Ku. 5, 53। धनुषि। Ku. 3, 10 ॥ 60 ॥

[ जालक ] जालाभे। Ra. 9, 68। आनने विलग्नं जालकं जालाकृतिर्यस्य तं स्वेदं वनानिल आचचामेति ह्यत्रार्थः ॥ क्षारके। Me. 95। अलिजालक इत्यादौ संघे। मर्कटे। जालक इव निवेशितसूत्रः ॥ [ जालिका ] मुखावृतौ। तां जालिकापहरणे मरु¯ न्यमीलत् ॥ [ सेवक ] सेवाजीवे। वद कोन्यः सेवकादधमः c. Sp. 4217। प्रसेवे। वीणापि सेवकवियोगवशान्न सीदेत्। प्रसेवकः ककुभाख्यं वीणापुटम् ॥ [ सूतक। सूतिका ] ग्रहे। धूपः सूतकनाशनः ॥ 61 ॥

सूतार्थे सूतिकायां सूतिका सूतका च। वा सू॰ Pâ. 7, 3, 45, 10 इति विकल्पेनेत्वविधानात्। अथ गावो महिष्यश्च ब्राह्मणी चैव सूतिका इत्यादि लक्ष्यम्। जनने। तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम्। रसे पारते। सूतकं गन्धमृत्तिकारसेन संमृद्य ॥ [ पुत्रक। पुत्रिका ] दीक्ष्यभेदे। समयी साधकश्चैव आचार्यश्चापि पुत्रकः। दीक्ष्यो दीक्षणीयः शिष्यः ॥ 62 ॥

सा॰ Ku. 1, 29 इत्यादौ कृत्रिमादौ द्वयोः स्त्रीपुंसयोः स्त्रियां तु द्वैरूप्यं पुत्रका पुत्रिका च। वा सूतकेति Pâ. 7, 3, 45, 10 विकल्पेनेत्वविधानात्। बालिका॰ Mh. 3, 68 इत्यादौ लक्ष्यम्। अभ्रातृपितृकपूर्णदायायां कन्यायाम्। M. 3, 11 ॥ 63 ॥

[ कुम्भिका ] जलधान्याम् । प्रपां शीतलकुम्भिकाम् । वलनं क्रोडीकरणम् । नरकास्पदे । पच्यन्ते कुम्भिकासु ते ॥ [ कुम्भक ] प्राणरोधे । ये० Pr. P. 2। तथा । रेचकः पूरकश्चैव तृतीयः कुम्भकस्तथा ॥ [ कुलक ] श्लोक० । Kd. 1, 13 ॥ **64** ॥

श्रेष्ठिनि । कुलकः कुलवर्धनः । श्रेष्ठी शिल्पाजीवी प्रधानात् । श्लोकसंचय-साहचर्यात्सुगन्धद्रव्यसंचयेपि कुलकम् ॥ [ क्रमुक ] क्रमुकः फलेप्युपचाराद्वर्तते नपुंसकं तु ॥ **65** ॥

[ कैशिक ] केशाश्वादन्यतरस्यामिति पाक्षिके ठक्रि केशसमूहे c. Pâ. 4, 2, 48 । रागभेदः स्वरविशेषः । गीतविषयः । रचितकैशिकमध्यमश्रीरित्यादौ ॥ [पद्मक] हस्ति० । विकसत्पद्मकः करी ॥ **66** ॥

[ सैनिक ] सेनारक्षितरि । भूभृदर्जुन इवास्त सैनिकः ॥ **67** ॥

सेनासमवेतेषु योद्धृषु । Ra. 3, 61 ॥ [ पुष्पक ] नेत्ररोगे पुंसि प्रसिद्धः ॥ [ पौष्पक ] पुष्पाणि शिल्पमस्याः पौष्पिकी ॥ **68** ॥

[ वातिक ] रोगिणि । प्राक् पिबेच्छ्लैष्मिको मद्यं भुक्तस्योपरि पैत्तिकः । वातिकस्तु पिबेन्मध्ये समदोषो यथेच्छति ॥ मान्त्रिके । असुरविवरमिति वातिकैः H. Ch. 108, 5 c. A. S. 47, 10 । मान्त्रिकोत्रासुरविवरव्यसनी c. H. Ch. 47, 17. 223, 4 ॥ [ भावुक ] कुशले । ददातु वो० K. Pr. 140, 11 ॥ **69** ॥

[ रुचक ] भूषाभेदे । स्वस्तिकाकृतिरुपमृष्य रुचकाः क्रियन्ते ॥ अधररुचक इत्यादौ ललामनि c. Kâd. 73, 1 । ललाम रत्नम् । अधररत्नमित्यर्थः । सौवर्चलं कृष्णलवणम् ॥ [ उण्डुक ] अन्तरङ्गमान्तरोवयवविशेषः । उत्करे केशोण्डुकादौ c. Vyutp. 139, 25 । फेनोण्डुकाविपाण्डुकीर्तिलहरीनिर्धौतदिग्भित्तय इत्यादावुत्करेपि ॥ **70** ॥

[ मल्लिका ] दीपपात्रे । मल्लिकाङ्कितकरा विविशुस्ताः । शेफालिकायाम् । Ra. 16, 50 । वाद्यभेदे । मल्लिका झल्लरीध्वनिः ॥ [ मोचक ] मोक्तरि । तपसा पापमोचकः ॥ **71** ॥

तद्धेतौ मोचयितरि । भवपाशमोचकः ।। [ अम्बिलका ] एष्वोषधिद्रव्यविशेषेष्वम्बिलकाशब्दः ।। [ पदिक ] द्वयेपि । पदिकाः पदिका इवासते प्रभुकार्योद्यतमानसा रणे ।। 72 ।।

[ उल्मुक ] द्वयेपि । उल्मुकेन द्रुमं प्राप्य संकुचत्पत्त्रसंपदम् ।। [ मड्डुक ] वाद्यभेदे । Śi. 5, 29 । फलकमुष्टौ । Śi. 18, 21 ।। 73 ।।

[ खजाक ] दारुहस्ते । एताः शिरोधृतखजाकविभूषणाङ्ग्यः प[रि]भ्रमन्ति शिवरात्रिमुखेद्य वृद्धाः । मन्थदण्डे । गोप्यः खजाकपरिकर्षणकम्पिताङ्ग्यो मथ्नन्ति मानसमलं सहसैव यूनाम् ।। [ पदक ] पदाध्येतृमध्यमण्योः । शिष्याणामिव मुक्तानां भात्यस्यास्त्रिवलीतटे । गुरुणा पदकेनेरमङ्कितं मण्डलं महत् [ c. H. Ch. 9, 10, C. ] । चरणत्रं प्रसिद्धम् ।। 74 ।।

[ पादिक । पादिका ] क्रीताद्यर्थे । माम्यः कामी विपणिसरणौ पादिकीर्वेशयोषाः स्वीकृत्योच्चैर्विलसति लसद्गर्वसर्वस्वपूर्णः ।। उपानहि रसतुर्येण पारतचतुर्भागेन स्वर्णादिवेधे च । भत्रा पूषाश्मजुषस्तारक्रियया विलुप्ततारस्य । जन्मप्रवृत्तयाचे [ sic ] पादिकया चर्मपादिका नास्ति c. Mh. 2, 417 ।। 75 ।।

[ चालक ] द्वयेपि । निर्धूतवीतमपि चालक० Śi. 5, 47 ।। [ चन्द्रक ] वर्हम० । Śi. 5, 19 । तोयस्थ० । Śi. 5, 40 ।। 76 ।।

[ मोदक ] द्वयेपि । मुदितामोदकमुदितरवीन्दुकवलैकगृध्नुम् c. Mh. 3, 76 [ कीचक ] विराटस्य स्याला राजपुत्रभेदाः । सस्वनेषु वंशेषु । Ku. 1, 8 ।। 77 ।।

[ सिंहिका ] राहुमातृसिंहपोतिकयोः । K. Pr. 335, 9. 10 ।। [ लाक्षिक ] द्वयेपि । अधररुचकरूपं लाक्षिकं येन पीतम् ।। 78 ।।

[इक्ष्वाकु] राजभेदे । Ra. 1, 72 ।। [ श्यामिका ] कालिमनि । Ku. 5, 21 । स्वर्णव्याजे । Ra. 1, 10 । लोहमले । श्यामिकालिप्तहस्ताग्रा लोहकारा विभान्त्यमी ।। 79 ।।

[ गण्डक ] उपधाने शय्योपकरणविशेषे खड्गाख्ये प्राणिनि च । शय्येव विन्ध्यवनभूः पृथुगण्डकश्रीः । छेदे । गण्डिकाभिस्तथेक्षोः ।। शिखण्डिगण्डिकापद्मरागमणेररुणांशुजालकैरित्यादौ रक्षायां छेदोपचारात् c. H.Ch. 24,6 ।। 80 ।।

[ शीतकिका ] एते ओषध्यौ शीतकिकाशब्दवाच्ये ॥ [ अश्मन्तक ] चुल्ल्याम् । अश्मन्तकान्तिकचलाचलकुम्भदासी । वृक्षे यमलपत्त्राख्ये । M. M. 305, 1 तृणभेदे । M. 2, 43 । एवमित्याहुः शिम्बिसंबन्धात् ॥ 82॥

[ जैवात्रिक ] आयुष्मति । बालोस्तु जैवात्रिकः । चन्द्रे । राजीवजैवात्रिकः । जीवेरात्रिकन् [ ? ] वृद्धिश्च c. Uṇ. 1, 81 ॥ 84 ॥

[ पिप्पलक ] शर्म्मसीवनसूत्रयोश्चर्मकारे प्रसिद्धः ॥ 85 ॥

[ लालाटिक ] यः सेवकः कोपप्रसादचिह्नाय प्रभोर्ललाटमेव पश्यति यश्च प्रभोः कार्याक्षमः कार्यं कर्तुमक्षमः अशक्तः स लालाटिकः । भावदर्शीति च पाठः। लालाटिकः सदालस्यप्रभुभावनिरीक्षक इत्यजयः c. AK. 290, 17, C. ॥ 89 ॥

[ पुण्डरीक ] व्याघ्रे । पुण्डरीकै–हरिणैः ॥ 91 ॥

[ प्रतिपादक ] बोधके । शिक्षणां [ sic ] प्रतिपादकः । खट्वाया अङ्घ्रयश्चत्वारः । तदाधारे क्लीबे ॥ 93 ॥

[ ख ] स्वर्गे । तस्मिन्गते खं सुकृतोपलभ्यम् c. Ra. 18, 21 । इन्द्रिये । M. 5, 138 । आकाशे । Ku. 7, 49 ॥ [ मुख ] आदौ वक्त्रे च । Sp. 1311 । उपाये । नृपतिर्मन्त्रमुखेन संस्पृशेत् ॥ [ शिखा ] अग्रे । आरूढः स सुपर्वपर्वतशिखाम् । ज्वालायाम् Sp. 2497 । केकिचूडायाम् । Me. 101 । शाखायाम्। वृक्षशाखावलम्बिनम् [ sic ] c. Ra. 15, 49 । शिफायाम् । विटपिनां वातावधूताः शिखाः । शिफा कन्दः ॥ 94 ॥

[ शङ्ख ] निधौ । Me. 77 । ललाटास्थिन । Ku. 7, 33 ॥ न खलु शङ्खधवलं शङ्खपालकुलं मलिनीकरोमीत्यादौ शङ्खपालशब्ददर्शनाद्भीमोपि भीमसेनवदित्यतः शङ्खपालाख्यो नागः शङ्खः ॥ दिनांशे । स शङ्खमात्रशेषेह्नि । कम्बौ । Ku. 1, 23 ॥ [ नख ] एवमिति नखौषधावस्त्री चेति तथेत्यस्त्रीत्यर्थः ॥ 95 ॥

[ व्युङ्ख ] मन्त्रे षडोंकाराः । मन्त्रषडोंकारम् । ते व्युङ्ख इत्युच्यन्ते । मनोज्ञे । दिव्यत्वव्यभिचारमेति न सखे व्युङ्खयमस्याकृतिः । मनोज्ञो व्युङ्ख इत्याकारोपि [ ? ] ॥ [ लेख ] दैवतलेख्ययोः । सलेखवर्गस्य विमुद्रमाननम् ॥ [ लेखा ] नवलेखेत्यादि चन्द्रांशे । आभोगे । Ra. 7, 24 ॥ 96 ॥

[ रेखा ] व्याजे । Bâ. I, 16 । आभोगे । आसीत्° Mh. 2, 24 ॥ उल्लेख्ये । चित्रेपि° Mh. 2, 24 । अल्पके । Ra. 1, 17 ॥ [ उखा ] यज्ञभाण्डे। उखां सिकताभिः पूरयित्वा ॥ [ शाखा ] द्रुमांशे । Ra. 13, 24 ॥ **97** ॥

हस्तावयवे । पञ्चशाखेन पाणिना । अङ्घ्र्यवयवे । मुकुट° Mh. 2, 26 । द्वारावयवे । दृढतरशाखमिदं द्वारम् ॥ [ सखि ] मित्रे । Śi. 2, 36 । सहाये । Ra. 14, 87 ॥ [ प्रमुख ] आदौ । श्लाघ्याः कस्य न ते सन्तः प्रमुखप्रियभाषिणः । प्रधाने । Ku. 7, 71 । अग्रे । Ku. 8, 5 ॥ **98** ॥

[ वैशाख ] धानुष्क° । वैष्णवं॰ Mh. 3, 105 ॥ [ गोमुख ] लेपने । Śi. 3, 48 ॥ **99** ॥

[ विशिखा ] प्रतोल्याम् । विशिखायां सौवर्णप्रचारः । खनित्र्याम् । मुनिभिर्विशिखानिखातमृद्भिः । खनित्री मुनीनां मृदवदारणभाण्डं शस्त्रप्रायम् ॥ निश्रूडे । Ṛigv. 6, 75, 17 ॥ [ विशाखा ] राधा विशाखेति नक्षत्रे स्त्री । 'अत्र च स्त्रीत्व एकत्वे चामरसिंहेनोक्तम् c. AK. 19, 22 । विशाखयोश्चेति Pâ. 1, 2, 62 द्वित्वनपुंसकत्वं पाणिनिना । कृत्तिकासु विशाखासु मघासु भरणीषु चेति बहुत्वं स्त्रीत्वं च ज्योतिःशास्त्रे स्थितमिति लक्ष्यादनुसर्तव्यम् ॥ **100** ॥

[ मयूख ] त्विषि । मणिमयूखजालैः । करेषु रश्मिषु । Ku. 3, 65 । ज्वालायाम् । अभ्युद्गता° Mh. 3, 104 ॥ [ शिलीमुख ] उभयत्रापि । K. Pr. 26, 7 ॥ [ अग्निशिख,°खा ] भालं वह्निशिखाङ्कितं दधदित्यादावुभयत्रापि c. Râj. I, 2 । ओषधौ निघण्टुप्रसिद्धः ॥ **101** ॥

[ सर्वतोमुख ] जले । प्रभासे° Mh. 5, 9 । ब्रह्मणि । Ku. 2, 3 ॥ [ मकरमुख ] मकराकारधारिणि जानुभागे च । H. Ch. 80, 13 ॥ **102** ॥

जानुभागे जलनिर्गमनद्वारे च । हिमकरमहसैव निर्मितौ यौ मकरमुखप्रसृतामृतप्रवाहैः c. H. Ch. 25, 13. 157, 15 ॥ [ गो ] स्वर्गे । स गोपतिर्वज्रविघट्टनेन । इषौ । गोभिः स विद्धकवचः । धेनुलक्षणे पशौ रश्मौ च। Sû. 9 । लक्ष्यदृष्ट्या पशौ पुंसि । सुखं स्वपिति गौर्गडी c. Sp. 2135 । वाचि । Ra. 2, 59 । वज्रे । गोघातेनैव शैलेन्द्राः । दिशि । गोभ्यः संभृतसद्वित्तः । नेत्रे । गोजलार्द्रितकपोलतलास्ताः । भूमौ । Ra. 5, 26 । जले। गावो वहन्ति

विमलाः शरदि स्रवन्त्याम् ॥ नपुंसकत्वं यत्किंचिदक्षिजलविषयमुक्तं तदर्थयुक्तम् ॥ 103 ॥

[ सङ्ग ] श्लेषे । Ku. 1, 53 । रोधे । Ra. 2,42 ॥ [ भग ] एतदर्कयोर्निर्वर्जितं भगवानित्यत्र भग्नविषयमेव व्याख्यानमर्हति ॥ 104 ॥

[ मृग ] मृगीदृशामित्यादौ कुरङ्गे स्त्रियामपि । पशुमात्रे । Ki. 6, 34 ॥ मृगपति॰ H. Ch. 87, 6; Su. 622 इत्यादौ पशुमात्र एव ज्ञेयः । ये त्वेवमादौ हरिणपर्यायं मृगशब्दं मन्वाना दृष्ट्वैणीरेणपतिरित्यादि प्रयुञ्जते । ते नादं॰ Bh. Ś. 66; Su. 995 इत्यादिवत्सामान्ये शेषाणां स्वीकार इत्यदूरविप्रकर्षं समर्थयन्त इत्याहुः ॥ 105 ॥

[ सर्ग ] स्वभावे । सर्ग एष महतामविक्रियः । निर्मोक्षे । सुवृष्टिसर्गादिव सस्यसंपदः । निश्चये । Ra. 3, 51 । अध्याये । Kd. 1, 14 । अध्यायः परिच्छेदः । सृष्टौ । Ra. 10, 43 ॥ 106 ॥

[ भोग ] पालने । राजानो भोगिनो वैद्याः । भोगो पालनं विद्यते येषामिति व्युत्पत्त्या । अभ्यवहारे । Sp. 4637 । पणस्त्रीनिर्वेशे । पण्यवनिताभोगैः ॥ वित्ते भोगप्रत्यययोः c. Pâ. 8, 2, 58 इत्यत्र वित्ते उक्तः । सुखे । Sp. 4631 । अहिफणकाययोः । तान्भोगिनः कुण्डलिनो वदन्ति c. Mh. 3, 359 ॥ 107 ॥

[ योग ] संनहने बन्धने । जटाहियोगादचलोर्ध्वजूटः । उपाये । प्राप्ते योगवासनां रहस्यदुर्गस्य । ध्याने । Ki. 3,28 । संगतौ । Ra. 1, 46 । युक्तौ । तस्या दृशोः कार्मणचूर्णयोगः । अलब्धलाभे । योगक्षेमार्थमीश्वरमधिगच्छेत् । भैषज्ये । योगेन रोगान्स भिषग्निहन्ति । विस्रब्धघातिनि शरे । H. Ch. 131, 1 ॥ 108 ॥

[ मार्ग ] मासे । मार्गबहुलपञ्चम्याम् । अन्वेषणेऽध्वनि च । सतां मार्गे मार्गो भवति यदि च । मृगमदे । शिलातले मार्गसुगन्धिनि स्थितः ॥ अदृष्टेनापि मार्गेण मार्गेणैव न्यवेद्यत इत्यादौ यौगिकत्वान्मृगसमूहेपि ॥ [ नाग ] गजे । Ku. 1, 36 । विगलन्नागवेटक [ ? ] इत्यादौ सीसकरङ्गयोः । रङ्गं त्रपु । ज्योतिःशास्त्रे करणभेदेपि ॥ 109 ॥

[ पूग ] पूगीफलमित्यादौ स्त्रियामपि ॥ [ राग ] क्लेशादिके । रागद्वेषौ मनुष्यस्य खादितारौ वृकाविव c. Sp. 2350, Kâś. Pâ. 5, 3, 115 । सङ्गे । रागः

प्रतिष्ठां हृदये करोति । पानके । तर्षोपकर्षं रागेण गमितः । लौहित्ये । Sp. 5857 । आदिग्रहणाल्लाक्षादिद्रव्याणि गान्धर्वविषया भिन्नषड्जादयोपि ॥ 110 ॥

[युग] यानाद्यङ्गे काष्ठविशेषे । Ra. 3, 34 । युग्मे कृतादिषु च । H. Ch. 50, 8 । चतुर्हस्तप्रमाणे । विचरेद्युगमात्रदृक् । एषु त्रिषु नपुंसकम् ॥ [खग] शरविहगयोः । खगपीतासृजो योधाः । अर्के । खगमयूखैररुणिताः ॥ 111 ॥

[लिङ्ग] प्रकृतिबुद्धौ । लिङ्गा० Mh. 2, 46 । चिह्ने । K. K. S. 1, 42 ॥ व्यक्तौ स्त्रीपुंनपुंसकादौ च । शिवमूर्तिभेदे च लीनं गमयतीति पृषोदरादिः ॥ [अङ्ग] उपकारिणि । अङ्गेनातिप्रसङ्गेन । उपाये । सर्वाङ्गमाराधितशंकरस्य । गात्रे । Ku. 3, 23 । अधिकृते । Pâ. 2, 3, 20 ॥ 112 ॥

[रङ्ग] नृत्तखले । M. M. 8, 1 । युद्धखले । संग्रामरङ्गे हतः । संग्रामो युद्धम् । भूमौ तूपचारात् खलशब्दः स्थानपर्यायः । रागे लौहित्यादौ । पञ्चरङ्गः कुरङ्गः । त्रपुणि । रङ्गस्य तु पलान्यष्टौ ॥ [शार्ङ्ग] धनुर्मात्रे । Ra. 4, 62 । विष्णुचापे । Me. 107 ॥ 113 ॥

[शृङ्ग] स्वाम्ये । शृङ्गारूढविभूतयः । स्वाम्यं प्राधान्यम् । अद्रिकूटे । Me. 14 । पशवङ्गे । Ku. 3, 36 ॥ [भाग] भाग्ये । महाभाग रमणीय एष वः संनिवेशः c. M. M. 57, 5 । एकदेशे । Ku. 3, 59 ॥ 114 ॥

[भङ्ग] भेदे । M. St. 14 । ऊर्मौ । रङ्गद्भङ्गां स गङ्गाम् । भक्तौ विच्छित्तौ । Vik. 115 । कौटिल्ये । Śâ. 7 । भये । संसारभङ्गेन तरङ्गिताङ्गः ॥ [वेग] प्रवाहे । वाष्पो० Mh. 2, 47 । जवे । Ku. 2, 25 ॥ [भङ्गि] भक्तौ विच्छित्तौ । K. Pr. 222, 2 । तरंगे । Me. 60 ॥ चीनांशुकं भङ्गियुतं दधान इत्यादौ तरंगोपचारात् । भक्तिर्यत्र विभागवर्त्मनि वेशपर्यायो विवक्षितः ॥ 115 ॥

[भर्ग] भास्करे । S. P. 10 ॥ [वर्ग] पक्षे दुभये [?] । आर- स्ते वितकवचा -- वर्गाः सहेलम् । कवर्गो भूवर्ग इत्यादौ पक्ष -- । समूहे । Ku. 7, 2 ॥ [त्याग] त्यजने । Ra. 12, 10 । दाने । Ra. 1, 22 ॥ 116 ॥

[वङ्ग] त्रपुणि । वङ्गपत्त्ररचनाविचित्रिताः । राजनि पुंसि । वङ्गो भङ्गं गमितः । तद्देशतत्पुत्रयोः पुंभूम्नि । Ra. 4, 36 ॥ [भृगु] प्रपाते । आत्मानं

घातयेद्यस्तु भृग्वग्यनशमादिभिः [ sic ] । मुनौ । बन्धोसौ भृगुनन्दनः । तत्पुत्रे पुंभूम्नि । भृगौ त्र जामदग्नय [ ? ] ॥ 117 ॥

[ तुङ्ग ] पुंनागो नागकेसरवृक्षभेदः । तुङ्गात्मनां॰ Su. 259 तत्र तुङ्गा इत्यादावुचे त्रिषु । अत्र तु तुङ्गेति स्त्रियाम् ॥ [फल्गु] अल्पे । अफल्गु वित्त व्यतरद्विजेभ्यः । मोघे निःसारे । अवल्गु फल्गु भाषसे । काकोदुम्बरिका ओषधिभेदः । तस्यां तु पुंसि c. Mh. 2, 35 । सौवीरवदरांकोल्लवल्गुश्लेष्मातकोद्भेव [ sic ] इत्यादौ पुंसि ॥ [ इङ्ग ] इङ्गिते । इङ्गो न ज्ञायते मुनेः । अभिप्रायसूचकव्यापारे पुंसि ॥ 118 ॥

जगति । इङ्गमङ्ग सफलीकृतं त्वया ॥ [ रक्ताङ्ग ] अङ्गारके । रक्ताङ्गे पञ्चमस्थे ॥ [ आशुग ] वायौ । आशुगापहृतपुष्पसंततिः । विशिखे । तीव्रघातिनममुञ्चदाशुगम् ॥ [ भुजंग ] शिङ्गे विदग्धकामुके । महानयं भुजंग आसीत् c. H. Ch. 87, 13. 97, 3. Vâs. 273, 3 । सर्पे । M. M. 196, 6 । स्त्रियां तु भुजंगी ॥ 119 ॥

[ आयोग ] गन्धमाल्योपहारे । आयोगयोगविहिताखिलदेवपूजः । व्यापृतौ । आयोगो रथकर्मणि ॥ [ पराग ] कौसुमे रेणौ । परागपटलीसंलीनभृङ्गावली । स्नानीये । परागोद्वर्तितैरङ्गैः । आदिशब्दात्पटवासादौ । दृष्टा केशवगोपरागहृतये-त्यादौ रजोमात्रेपि ॥ 120 ॥

[ कलिङ्ग ] शाकभेदे । कलिङ्गे चारुचि—टम् । देशे । Ra. 4, 38 ॥ [ सारङ्ग ] चातके । Me. 21 । हरिणे । Sp. 778 ॥ 121 ॥

[ पतंग ] शालिभेदे । पतंगास्तपनीयाश्च ये चान्ये शालयः शुभाः । शलभे । Ku. 3, 64 । सूर्ये । Śi. 9, 18 ॥ [ निषङ्ग ] सङ्गे । गहनवननिषङ्गो मोक्षते [ sic ] न कस्य c. Mh. 3, 113 । तूणे । Ra. 3, 64 ॥ 122 ॥

[ वराङ्ग ] मस्तके । गङ्गां वराङ्गे दधतः पुरारेः । त्वचे । वराङ्ग॰ Mh. 3, 120 ॥ [प्लवग] कपौ । प्लवगसैन्यमु॰ V. K. 2, 1, 13, C. ॥ 123 ॥

[ प्रियङ्गु ] कङ्गौ लताभेदे । प्रियङ्गुश्यामाङ्गः प्रकृतिसुभगः ॥ [ निसर्ग ] निर्माणे । जगन्निसर्गसंहारकारकः परमेश्वरः । स्वभावे । Śi. 1, 8 ॥ [ पुंनाग ] उभयत्रापि । विभूषितकुलोद्यानस्त्वं पुंनागः ॥ 124 ॥

[ विसर्ग ] उभयत्रापि । विहितरसविसर्गः साधुशब्दैकपात्रे ॥ [ उत्सर्ग ] सामान्यविधौ । Ku. 2, 27 । प्रचारे पुरीषादित्यागे । उत्सर्गे मानमाचरेत् [?] । त्यागे । Me. 19 ॥ **125** ॥

[ समङ्गा ] मञ्जिष्ठायाम् । रङ्गत्समङ्गारुचिः ॥ [उद्वेग] खेदे । महानुद्वेगोयं शिशिरकिरणे यत्किल मलम् । उभयत्रापि । आत्मानमेव जनयत्युत्सर्व [ sic ] उद्वेगबहुलोयम् ॥ **126** ॥

[ त्रिवर्ग ] धर्मकामार्थेषु । Su. 2919 । स्थानवृद्धिक्षयेषु । तेषां सा विलसत्त्रिवर्गविषया सन्मान्त्रिणां शेमुषी ॥ [अभिषङ्ग] पराभवे । Ku. 3, 73 ॥ **127** ॥

आक्रोशे संवेगे । कोपाभिषङ्गविगलत्सकलाङ्गसंधिः । शापे । चचाल तस्मादभिषङ्गभङ्गात् ॥ [अपवर्ग] क्रियाफले । Ki. 1, 14 ॥ [उपराग] उपरक्तौ विधुंतुदे राहुभेदे च । रत्युपरागवशा— तिर्भेदमुपैति का गणना तु स्फटिकमणेः ॥ **128** ॥

व्यसने । द्वेषोपरागकलुषीकृतमानसस्य ॥ [ उपसर्ग ] त्रयेपि । तुहिनोपनिपातैरप्यस्खल — — संधिनि । विद्वानिदपसर्ग— ं यं काव्यं तु कवेरिव [?] ॥ **129** ॥

[ उपयोग ] भोगे । मासोपयोगात्स सुखी जीवत्यब्दशतत्रयम् । विद्याग्रहणे । आप्यातोपयोगः [ sic ] ॥ [ कथाप्रसङ्ग ] द्वयेपि । Ki. 1, 24 ॥ **130** ॥

[ ओघ ] वृन्दे । Śi. 1, 18 । अम्बुवेगे । Ku. 2, 25 ॥ [अघ] दुःखे । हन्त्यघं विपदुद्भवम् । अंहसि पापे । Śi. 1, 26 । व्यसने । अनघापि हि संभयक्रमे गर्गग्नेपेतनाय [ sic ] वल्लरी ॥ [ लघु ] अल्पे । ये गुणा लङ्घने प्रोक्तास्ते — — लघुभोजने । इष्टे । Ra. 11, 12 । असारे । Me. 20 ॥ **131** ॥

[ अर्घ ] मूल्ये पूजाविधौ च । Ku. 1, 58 । तम॰ Śi. 1, 14 इत्यादौ पूजोपकारके द्रव्ये प्रचरे [ sic ] चेति शेषः । यथा कालिकाः कलयोति [ sic ] नूतनविकासिनीर्मधुलिहामर्घः । इत्यादौ ॥ [ परिघ ] आयुधे । भुजपरिघदगमहणम् [ sic ] । घाते । Ra. 11, 88 ॥ **132** ॥

[ प्रतिघ ] द्वेषे । उद्दामप्रतिघानलप्रतिहतप्रज्ञा । शत्रौ । तस्य निष्प्रतिघभावनाविधिं तन्वते ॥ [निदाघ] ग्रीष्मे । Su. 1693 । स्वेदे । निदाघमम्भो मरुताम— —म् । तापे । बहलनिदाघग्लपितैः । तापके त्रिषु । Śi. 1, 24 ॥ [अमोघा] पाटला लताभेदः [ ? ] ॥ **133** ॥

[ प्राच् ] दिशि । प्राचीबालविडाललोचनदशां [ रुचां ? ] जाताचपत्रं [sic] ककुप् । देशकालयोः । Sû. 12 । आदिग्रहणेन प्रत्यगुदगवागित्यादयः ॥[ त्वच् ] वल्के । Ku. 1, 7 । चर्मणि । Ra. 3, 31 । त्वचं सुगन्धद्रव्यभेदः । खलापत्रं त्वचो वंश इत्यादौ [ sic ; c. Mh. 1, 7] । एष्वर्थेषु अकारान्तस्त्वचशब्दोपि ॥ [ वाच् ] वाण्याम् । Śi. 1, 25 । वाचके । Ra. 1, 1 । उभयत्रापि । इत्यत एव वागलंकाराः कैश्चिदुदाहृताः c. Kd. 2, 7 । वागलंकाराः शब्दालंकारा अर्थालंकाराश्चेत्यर्थः ॥ 134 ॥

[रुच्] दीप्तौ । नाभीसरोजस्य रुचं जहार । उभयत्रापि । Ra. 8, 94 v. l. ॥ [ कूर्च ] मर्मभिदि । तस्योर्ध्वं द्व्यङ्गुले कूर्चः [ ? ] ॥ परिहृतकारे कुचीकूर्चाकृता इत्यादौ दम्भे दष्टमन्यत् [ sic ; c. Mh. 2,56 ] ॥ 135 ॥

[ शुचि ] पावके । शुचिज्वालाजालाविलजलधिः ॥ 136 ॥

मासि आषाढे । Ku. 5, 20 । अमात्येत्युपधे परीक्षिते । व्यवहारान्नृपः पश्येद्धर्मज्ञैः शुचिभिः सह c. M. 8, 1 । धर्मार्थकामभयमुखेन सचिवपरीक्ष [sic] तामतिक्रान्तोत्युपधः । यत्कौटिल्यः । उपधाभिः शौचाशौचपरिज्ञानममात्यानामिति ॥ [ रुचि ] इच्छायाम् । M. St. 7 ॥ 137 ॥

[ अर्चा ] आकृतौ प्रतिमायाम् । आभ्यां लिङ्गेर्चितः शंभुरर्चायां भवता पुनः ॥ [ काच ] शिक्ये । आदाय काचमथ पान्थजनः प्रतस्थे । शिक्यं रज्जुयन्त्रम् । मृद्भेदे । Bh. Ś. 3 । मृद्भेदो धातुविशेषः । यद्यकाचा [ ? ] घटिकादिविकारः ॥ [ सूचा ] व्यधने । सूचाग्रमपि नो – –त् । अभिनये । अयं सूचाक्रमोपि ॥ [ वीचि ] स्वल्पेन्वेष्यः ॥ 138 ॥

[ चर्चा ] देव्यां चण्डिकाभेदे । चर्चाव्रतं सुरुचिरं सुचिरं विचार्य ॥ [ नीच ] उभयत्रापि । Sp. 2606 ॥ [पिचु] पायौ । विज्ञानमेतत्पिचुवक्त्रनिर्गतम् । उपहासविषयमेतत् ॥ 139 ॥

[मोचा] कदल्याम् । मुमोच मोचारसम् ॥ [चोच] विसेक्षचोचं [sic] मोचेत्यादौ पालेवते फलविशेषे । मोचचोचदलैर्युक्तमित्यादौ द्वयेपि ॥ [काञ्ची] उभयत्रापि । या लग्नकाञ्चीविषयेण कान्तिः N. Ch. 1, 43 । द्वयेपि । काञ्च्यां करः पातितः॥[ प्रपञ्च] उभयत्रापि । विश्वप्रपञ्चरचनाचतुराय तस्मै c. Su. 92 ॥140॥

[ संकोच ] विकासविपर्यये । इत्याशादर्शनाहितमहासंकोचा ॥ [ विकच ] द्रव्यभेदे निघण्टौ प्रसिद्धः ॥ 141 ॥

[ तुच्छ ] लाघवेल्पे च । तुच्छश्च पुच्छच्छटयेव वाचा [?] ॥ [कच्छ] गहने देशे । कूलकच्छस्थलेषु । तुन्याख्या ओषधी रागद्रव्यभेदः ॥ 142 ॥

[ गुच्छ ] स्तवके । तापिच्छगुच्छविहितैः ॥ [ अच्छ ] निर्मले । Sp. 7001 । उभयत्रापि । प्रातरच्छजलबिन्दुवारिभिः ॥ [पिच्छ] विषदविपरीते गुणे । सुपिच्छः स्तिमितो गुदः [?] । लोमादि० Pâ. 5, 2, 100 । इति दर्शनात् ॥ 143 ॥

[ अब्ज ] धन्वन्तरौ । अब्जोपदिष्टैरगदैः स्थिरायुः ॥ [ न्युब्ज ] ¯ज-मवं चकारेत्यादौ [ sic; c. Mh. 2, 70 ] । न्युब्जः कुणिरित्यादौ कुब्जेधोमुखे च ॥ [ वीज ] रेतसि । Ku. 2, 5 ॥ 144 ॥

हेतौ । अस्ति किंचिन्मन्त्रबीजम् । अङ्कुरकार्ये । Ku. 3, 18 । अङ्कुरः कार्यो यस्य । अङ्कुरस्य कार्यमित्यपि च ॥ [द्विज] विप्रेण्डजे च । सत्पक्षो द्विजराज एषः । विप्रश्चात्रोपलक्षणं तेन क्षत्रियवैश्ययोरपि ॥ [ व्याज ] दोषे । व्याजः सत्यं द्विजस्य यदि । दम्भे । Nâg. 1 । अपदेशे । Bâ. I, 6 । अपदेशश्छलम् ॥ 145 ॥

[ अज ] ब्रह्मणि । Ku. 2, 5 । विष्णौ । Ra. 10, 24 । ईशे महेश्वरे । जयत्यजः प० Mh. 2, 64 ॥ [ व्रज ] गोष्ठे । Śi. 2, 64 । अध्वनि । व्रजेषु सर्वेषु निरुद्धसंचरः ॥ [ आजि ] समे क्ष्मांशे । उपवनाजिममी नृपसूनवो जगुः ॥ [ प्रजा ] संततौ । Ra. 1, 77 । जने । Ra. 1, 18 ॥ 146 ॥

[ ध्वज ] चिह्ने । Ku. 3, 62 ॥ [ निज ] द्वयेपि । Śi. 1, 37 ॥ [ गञ्जा ] खनावाकरे । गञ्जाजातो मणिरिव शिशुः कूप्तसंस्कारचारुः । सुरागृहे । गञ्जासंजातमदः ॥ [ गञ्ज ] भाण्डागारे । गञ्ज० Mh. 2, 67 ॥ 147 ॥

[ कुञ्ज ] खमुखकुञ्जेभ्यो दे वक्तव्ययवति [ sic ] हस्तिदन्ते कुञ्जशब्दः c. Pâ. 5, 2, 107, 1 ॥ [ गुञ्जा ] काकचिञ्चिका रक्तिकाफलम् । पटहे । विरहिणीप्राणाध्वगुञ्जा इमाः ॥ [ वणिज् ] वाणिज्ये शिल्पकर्मणि । वणिक्पथप्रस्थितः ॥ 148 ॥

[ सहज ] निसर्गे । विशेषतः सहजलङ्काधनस्य कुमारीजनस्य c. H. Ch. 28, 4-6 । सहोत्थे भ्रातरि । सहजकालकूटशिक्षितक्रौर्येव लक्ष्मीः ॥ [ सामज ] द्वयेपि । विस्फूर्जत्सामजस्वरैः ॥ 149 ॥

[ बलज ] क्षेत्रे । प्रत्यक्षमिक्षुबलजे क्षपितेक्षुयष्टिः । पुर्द्वारे । रुरुधुर्बलजं बलाद्बलानि । वल्गुदर्शने भद्राकृतौ । वन्द्यास्ते साधवो बलजाः ॥ [ अङ्गज ] मन्मथे शोणिते च । अङ्गजरञ्जितगात्रो विलपन्वनितानाम् । पुत्रे । तस्याङ्गजोजनि जयन्तसमानसारः ॥ 150 ॥

[ अहिभुज् ] द्वयेपि । अहिभुजावृतचित्रपच्चशोभा ॥ [ अग्रज ] भ्रातरि । M. 3, 171 । विप्रे । अग्रजेभ्यो ददौ वसु c. Ra. 17, 17 ॥ [ क्रिमिज ] कौशेयं॰ AK. II, 6, 111 इत्युक्तया पट्टसूत्रे नपुंसकम् ॥ 151 ॥

[ करज ] नखे । Dhv. 229, 3 ॥ [ अम्बुज ] पद्मे । P. St. 3, 1 ॥ [ द्विजराज ] वीनां प्रवरो विप्रवरो द्विजाग्रश्रेष्ठश्च । त्रयेपि । सत्पक्षो द्विजराज एषः ॥ 152 ॥

[ धर्मराज ] द्वयेपि [ sic ] । धर्मराज॰ । Mh. 4, 55 ॥ [ ग्रहराज ] द्वयेपि । अस्मिन्विग्रहराजे काले कश्चक्षुषामुदयः ॥ [ जघन्यज ] द्वयेपि । तर्कि॰ Mh. 4, 54 ॥ 153 ॥

[ ज्ञ ] सूरौ । Ra. 10, 56 ॥ [ अज्ञ ] मूर्खे । Sp. 105 । अर्भके । जानन्नेवं परिणतवया अज्ञवद्भाषसे किम् ॥ सति पादत्रये ज्ञाज्ञौ भिषजावत्र कारणम् । इत्युदाहरणम् । पूर्वसूत्रे सूरावत्र मूर्खे स्पष्टम् ॥ [ प्रज्ञा ] धियि । Ra. 1, 15 ॥ [ संज्ञा ] चिति चेतनायाम् । त्वग्भेदाच्छोणितस्रावादा मांसव्यथनादपि । संज्ञां न लभते यस्तं विद्याद्गम्भीरवेदिनम् c. Mall. on Ra. 4, 39, Śi. 5, 49 । नाम्नि । सर्वज्ञं तदुपज्ञमज्ञ इति तु ख्याता वयं संज्ञया । सूचनायाम् । Ku. 3,41 ॥ 154 ॥

[ सर्वज्ञ ] शिवे । सर्वग सर्वज्ञ शर्व सर्वात्मन् । बुद्धे । प्रणम्य सर्वज्ञमभीतिविप्लवम् ॥ [ दोषज्ञ ] वैद्ये विदि पण्डिते च । बुद्धिगमलरोगदोषज्ञः । खले । गुणदोषौ दोषगुणौ दोषज्ञो वेत्ति नैव गुणी ॥ [ क्षेत्रज्ञ] प्रवीणे । क्षेत्रज्ञः कुरुते किंचिन्नाविचार्य हिताहिते ॥ 155 ॥

[ कूट ] मायायाम् । कूटयुद्धविकल्पेपि Ra. 17, 69 v.l. । निश्चले । कूटस्थोक्षर उच्यते । यन्त्रे । Ra. 13, 39 । मायाकैतवानृतानां बाहुल्येनैकार्थतामाहुः । राशौ । भक्तानामा॰ Mh. 2, 83 । अयोघनः । अयःसंस्कारको भाण्डविशेषः । सीराङ्गं दारुमयं यस्य लोके कूटमिति प्रसिद्धिः ॥ 156 ॥

हस्तिनखेऽश्वशालानिःसरणमार्गे अवाचीने ॥ [ घण्टा ] किङ्किण्याम् । M. M. 159, 4 ॥ [ त्रुटि ] क्षणलवमुहूर्ततुटीत्यादौ कालेल्पे । संशये । तु-टिं प्राप्ते जीवे सपदि जलजे जातविभवे ॥ 157 ॥

[ कोटि ] त्रयेपि । Su. 2631 ॥ [ जटा ] मूले लग्नकचे च । क्वचिदा-श्रितजटावल्कलाः कपिलाः c. H. Ch. 56, 5. A. S. 40, 1 ॥ [ नट ] पत्तो-र्णो नडी च तृणवृक्षभेदौ ॥ 158 ॥

[ व्युष्टि ] फलं सस्यसंपत् । उभयत्रापि । व्रीहीणां व्युष्टिरिष्टेयम् ॥ [दृष्टि] ज्ञानाक्ष्णोः । K. K. S. 1, 3 । दर्शने नयनव्यापारे । तीक्ष्णाः क्षणं दृष्टयः ॥ [ इष्टि ] यागे । Ra. 10, 4 । इच्छायाम् । इष्ट्युपसंख्यानवती Kâś. I., 2॥ [ स्पष्ट ] अत्रोदाहरणमन्वेष्यम् ॥ 159 ॥

[ कट ] शवे सस्तमारणे । प्रचलितकटपूतनोत्तालवेताल c. M. M. 182, 2 । कट इति श्रोणौ । कलिञ्जे । कटं करोति भीष्ममुदारं शोभनं दर्शनीयम् । क-लिञ्जः कुनालक इति प्रसिद्धः । अविकटमित्यादौ भृशे संघाते । अवीनां कटः । अविकटः c. Pâ. 5, 2, 29 ॥ [ कटु ] रसे ऊषणे ॥ तत्कटु॰ Pa. 1150 इत्यादौ तिक्तेपि । अकार्ये । कट्वाचारो हि दुर्जनः । मत्सरे । खलानां॰ c. Mh. 2, 81 । तीक्ष्णे । Su. 692 ॥ 160 ॥

[ चटु ] पिचण्डे । अस्याश्चटुमर्दनैकनिरते । सद्गुणवर्णने । भूयो भूयः प्रि-यचटुशतैः प्रार्थ्यमानापि तैस्तैः ॥ [ कष्ट ] कृच्छ्रे । M. M. 183, 4 । गहने । कष्टं व्याकरणं कष्टं तपः ॥ [ कृष्टि ] कर्षे । Sp. 2463 । बुधे । येषामि-ष्टाः कृष्टयस्तेपि मन्ये ॥ 161 ॥

[ त्वष्टृ ] देवशिल्पिनि । Ra. 6, 32 । अर्के । सूर्योर्यमा भगस्त्वष्टा ॥ [ पटु ] चतुरे । Su. 692 । अरुजि । औषधविशेषयोगान्नियतं पटुतां प्रयाति विकलोपि । अगुरौ लघौ । जीर्णान्ते पटुयूषभुक् । लवणे त्रिकटु त्रिपटु श्रेष्ठेत्या-दौ नपुंसकम् ॥ 162 ॥

[ दिष्ट ] दैवे भाग्ये । Ra. 9, 79 । काले । कष्टैरनिष्टबहलैर्गच्छति दिष्टो विनष्टमतेः ॥ [ कुट ] कुम्भे । आहृतैः कुटकारकैः । गृहे । Sû. 2 ॥ [अट्ट] अत्यर्थे । सर्वस्वापहर्तौ । हि कामुकजनस्याट्टायते कुट्टिनी । अट्टमत्यर्थमाचरतीति । गृहे । वितीर्ण॰ Ra. 16, 11 । सिद्धान्ने मण्डिकादौ अट्टस्थितोपचारादित्यर्थः । अत्यर्थवणिक्पथयोः । H. Ch. 50, 9 ॥ 163 ॥

[ पोटा ] दास्याम् । नखमुखपाटितपोटाकुचतटसंघर्षहर्षरभसेन । पोट इत्यादौ द्विलिङ्गायाम् । उभयव्यञ्जना पोटेत्युक्तत्वात् c. Kâś. Pâ. 2, 1, 65 ॥ [ सृष्टि ] सर्गे । Śâ. 1 । स्वभावे । स्त्रीणां सृष्टिर्हि । चापलम् ॥ [ पुट ] व्याघ्रनखे । Ra. 17, 12 । अभिन्नमन्त्रस्तं यत्पुटं तच्च रक्षार्थं बालानां गले क्रियत इति प्रसिद्धिः । ऊर्णामयः कार्पासो वा कङ्कण इत्यक्षराम्नातम् । करपुटमुकुटाटोपभुग्नोत्तमाङ्ग इत्यादौ हस्तादिसंपुटे ॥ 164 ॥

[ मुष्टि ] खड्गो मुष्टिविनष्ट इत्यादौ त्सरौ । विक्रये द्रव्यविशेषे पणः । यदाहुः । शाणं पाणितलं मुष्टिं कुडवं प्रस्थमाढकम् । नीवारमुष्टिंपच इति वा c. Bâ. IV, 35. X, 92 । पाणिबन्धे । Sp. 4677 ॥ [ पट्ट ] पर्यन्ते । नवाष्टमीचन्द्रसहोदरोयं ललाममुक्तः किमलीकपट्टः । वस्त्रे कौशेये । वात्याघट्टितपट्टवस्त्रनिचया यान्ति द्रुतं योषितः ॥ [ घट्ट ] शुल्कदेशे । अलिप्सून्नन्तरङ्गांश्च स्वान्घट्टेषु नियोजयेत् । तरोपाये । घट्टालङ्घितजाह्नवीजलभराः संप्राप्तपारास्ततः ॥ [ घटी ] अरघट्टघटीयन्त्रन्यायादित्यादौ भाण्डे घटीशब्दः स्त्रीपुंसयोः ॥ 165 ॥

[ घटा ] गोष्ठ्यां सहृदयासनबन्धे । घटाबन्धं प्रविष्टैस्तैः । हस्तिपङ्क्तौ । विकटकरिघटाकवाटपाटनपटोः । घटनायाम् । एतदत्र घटामुपैति यत् ॥ [दिष्टि] परीमाणे द्वादशाङ्गुले । दिष्टिमात्रास्तु समिधः । आनन्दने प्रियनिवेदने । दिष्ट्या वर्धसे । कैश्चित्तु तृतीयान्तं प्रतिरूपमिष्यते ॥ 166 ॥

[ विष्टि ] आज्यां वेगे । विष्टिगामी । वेतनं भृतिः । करणं दैवज्ञशास्त्रोक्तम् । विष्ट्या शतसहस्रं तु इत्यादौ । कर्मकृति भारिकादौ । विशन्तु विष्टयः शीघ्रं रुद्रा इव महौजसः c. V. A. 21, 27 ॥ [ म्लिष्ट ] अविस्पष्टे वचसि । रोगावृत० Mh. 2, 94 । म्लाने विच्छाये । म्लिष्टं चित्रममुत्र वासभवने वक्ति त्वदीयं यशः । केचित्त्वत्र वदनगताविस्पष्टत्वोपचाराम्लिष्टत्वमाहुः ॥ 167 ॥

[ इष्ट ] यज्ञाय दाने । M. M. 12, 2 । तेन क्रतुभिरिष्टं स्यात्सहस्रदक्षिणैरित्यादौ यागेपि ॥ [ दृष्ट ] ऐहिके इहलोकोपभोग्यफले । दृष्टादृष्टतरः साधुः । दृष्टौ नयनव्यापारे प्रसिद्धम् । ज्ञाते । दृष्टानि विप्रियशतान्यथ शीलितेयम् । अवतारिते प्रचारिते । Pâ. 4, 2, 7 ॥ 168 ॥

[ खेट ] ग्रामभेदे गह्वरप्राये । एतैः खेट॰ Mh. 2, 85 । मलेन्वेष्यम् । कुत्सिते । अरिखेटनिराकृते ॥ [ रिष्ट ] द्वयेपि । भवेन्न कस्यापि हि रिष्टमिष्टकृत् ॥ [ घृष्टि ] घर्षे । वृक्षैर्विभिन्नैरिभकुम्भघृष्ट्या । किरे । वनावनिं घृष्टिनिखातमुस्ताम् ॥ 169 ॥

[ हृष्ट ] वातवर्षप्रतिहते । शीतहृष्टवदनः सवेपथुः । विस्मिते । दृष्ट्वा कष्टं विधिविनमितं हृष्टबुद्धिः स साधुः । हर्षिते संजातहर्षे । प्रियं॰ Mh. 2. 100 । एषु त्रिषु । रोमाञ्चविषये । हृष्टैर्लोमभिरेष रञ्जिततनुर्धत्ते कदम्बश्रियम् । केशेषु । दाहव्यापच्छमनविधये कॢप्तशीतोपचारैर्हृष्टाः केशा विरहशिखिनो धूमतां यान्ति तस्याः ॥ 170 ॥

[ झाट ] शुष्यज्जम्बीरझाटेत्यादौ गहने ॥ [ सटा ] सिंहकुन्तले । Su. 995 । जटायाम् । Ku. 8, 46 ॥ [ मृष्ट ] स्वादुनि । मृष्टान्नदाता तरुणाग्निहोत्री । शुद्धे । उन्मृष्टपाणिपादास्यो भुञ्जीतान्नं समाहितः । क्षान्ते । मृष्ट एकोपराधस्ते ॥ 171 ॥

[ शिष्ट ] साधौ । Ra. 1, 28 । खसिते । शिष्टमिष्टैः सहाश्नीयात् । विहिते । यत्र शिष्टाप्रतिहतम् ॥ [त्रोटि] पक्षिचञ्च्वाम् । त्रोटि॰ Mh. 2, 89 । वस्तुद्विधाभावे । कुचतटात्रोटिमापद्य हारः ॥ 172 ॥

[ अरिष्ट ] आसवे । अरिष्टमिष्टैः सह सेवेत । मृत्युसूचके लक्षणे । षण्मासिकमरिष्टं तत् । सूतिगेहे । Ra. 3, 15 । अशुभे । अरिष्टो जन्मकार्येषु वर्जनीयः प्रयत्नतः । अरिष्टाः सन्तु नः पन्थान इत्यादौ शुभे तद्वति च त्रिषु ॥ 173 ॥

दैत्यविशेषे । दुष्टारिष्टकठोरकण्ठवलनाः । अरिष्टैरिव मूर्तैस्तैररिष्टैर्वलितं गृहमित्यादौ काकेपि । लशुननिम्बफेनिलक्षीरवृक्षा आयुर्वेदप्रसिद्धाः ॥ [चिरण्टी] सुवासिनी गूढा गृहिणी वृद्धापि चिरण्ट्युच्यते । द्वितीयवयास्तरुणी स्त्री सर्वैव चिरण्टीशब्दवाच्या ॥ 174 ॥

[ परीष्टि ] परिचर्यायामन्वेषणे च । इष्टा परीष्टिः शिष्टानां दुष्टकर्मविपाटनी ॥ [ उत्कट ] द्वयेपि । उत्कटकरिकवाटपटुपाटनबद्धरतिः ॥ [ कूपीट ] उदरे । शूलोद्भिन्नकूपीटपीठमकरोदन्धासुरं यः शिवः । जले । कूपीटयोनेरुदियाय धूमः c. Ra. 7, 23 । अद्भ्यो॰ M. 9, 321 इत्याम्नायः ॥ 175 ॥

[ विकट ] उभयत्रापि । व्यादाय विकटमास्यम् ॥ [ अवट ] अवटवटा-

करघटितघटीत्यादौ कूपे । गर्ते । अवटाटनपटुगतिः । प्रमत्ते । अवटातङ्कसंकेत-निकेतनसमाश्रयम् ॥ [ करट ] कटु रटत्करटेत्यादौ काके ॥ 176 ॥

[ चिपिट ] खाद्यप्रभेदे खलभृष्टादौ । पिचितविस्तृते मर्दितविपुले यथा चिपिटनास इति ॥ [ अदृष्टि ] अज्ञाने । अदृष्टिकलुषीकृते हृदयवारिधौ मज्जते । अदर्शने आन्ध्ये असौम्ये क्रोधाद्युपप्लुते अक्षिणि च । विवेकाञ्जनदानेन ममादृष्टिं निवारय ॥ 177 ॥

[ कवाट ] इभगण्डे । Su. 2461। द्वारपट्टे। Ra. 3, 34 ॥ 178 ॥

[ उच्छिष्ट ] भुक्तशेषे । उच्छिष्टभोजी विप्रोसौ । क्षते । रेवतीवदनोच्छिष्ट-मदपूर्णपुटे दृशौ c. Śi. 2, 16; S. K. 72, 25 ॥ 179 ॥

[ करहाट ] देशभेदे वृक्षभेदे अम्बुजाङ्कुरे प्रसिद्धः ॥ 180 ॥

[ शिपिविष्ट ] दुश्चर्मणि चर्मरहितशेपसि पुरुषे ॥ [ प्रतिशिष्ट ] प्रत्या-ख्याते । अप्रियाणि° Mh. 4, 63 । मैत्रीं प्रति प्रयततः प्रतिशिष्टदूत इत्यादौ प्रेषिते द्वयोरपि त्रिषु ॥ 181 ॥

[ तुलाकोटि ] उभयत्रापि । अमूल्यस्य मम स्वर्णतुलाकोटिद्वयं कियत् । इतीव कोपादाताम्रं° Vik. Ch. 8, 8 ॥ [ कोष्ठ ] अन्तर्जठरे । कोष्ठे मृदुः । कोष्ठागार इत्यादौ कुसूले । अन्तर्गृहे । कोष्ठात्° Mh. 2, 103 ॥ 182 ॥

[ काष्ठा । काष्ठ ] दिशि दारुणि च । काष्ठावस्थितमाश्रयं ज्वलति ते तीव्रः प्रतापानलः । उत्कर्षे । Ku. 3, 35 । मर्यादायाम् । Ku. 5, 28 ॥ [ कण्ठ ] समीपगलयोः । Ku. 7,51 । शब्दे । Ra. 8, 63 । समीपशब्दयोरत्र रूढि-लक्षणया वृत्तिमाहुः ॥ 183 ॥

[ ज्येष्ठ ] ज्येष्ठे मासि निरभ्रेत्यादौ मासभेदे c. Mh. 2, 104 । वृद्धतमे । ज्येष्ठो भ्राता समः पित्रा M. 4, 184 । प्रशस्यतमे । वर्णज्येष्ठान्कुलश्रेष्ठान् ॥ [ गोष्ठ ] अङ्गने । गोष्ठेश्व इव सेवकः ॥ 184 ॥

[ निष्ठा ] निष्पत्तौ । निष्ठां गतं तस्य तपो विलोक्य । नाशे अन्ते च । Râj. 4, 637 ॥ [ हठ ] द्वयेपि । हठैरनुसृतो हठात् ॥ 185 ॥

[ श्रीकण्ठ ] देशभेदो हर्षचरिते व्याख्यातः c. H. Ch. 104-107 ॥ [अम्बष्ठ] संकरोद्भवे । M. 10, 8 ॥ 186 ॥

[ प्रतिष्ठा ] आस्पदे । Ra. 6, 21 । मर्यादायां शिष्टाचारे । धृतप्रतिष्ठाः क्व न सन्ति सन्तः । देवादिस्थापने । इष्टे प्रतिष्ठासमये पुरारेः । आदिग्रहणान्मठादौ ॥ **187** ॥

[ कमठ ] मानभित्प्रमाणविशेषः । कूर्मे । Su. 36 ॥ [ नीलकण्ठ ] शिवे । Ku. 5, 57 । बर्हिणि । Me. 76 ॥ [ कलकण्ठ ] कलकण्ठपञ्चमरवेण झभ्रुवामित्यादौ पिके रूढः ॥ **188** ॥

[ कुण्ड ] पत्यौ॰ M. 3, 174 इत्युक्तया जारजाते द्वयोः । परिमालकपादानामुत्सवे चोपयुज्यते । दर्वीवृसीपटलिकाकुण्डभाण्डकरण्डकमित्यादौ भाजने पात्रभेदे स्त्रीपुंनपुंसकेषु ॥ **189** ॥

वह्न्याधारे । क्रियाशक्तिस्तु वै कुण्डं ज्ञानशक्तिर्हुताशनः ॥ [ क्ष्वेडा ] वंशाङ्कुरे । क्ष्वेडाचर्वणतृप्तसिन्धुरवधूतर्षप्रहर्षापहः । सिंहनादे । एष॰ Mh. 2, 111 ॥ [ क्ष्वेड ] विषे शब्दमात्रे च । तस्य॰ Mh. 2, 110 ॥ **190** ॥

[ विपाठ ] इषौ । तत्र पेतुर्विपाठाः ॥ [ मण्ड] द्रवे । मण्ड॰ Mh. 2, 124 । [ काण्ड ] तरुस्कन्धे । आदाय काण्डात्तरुमुज्जिहानम् । लतायाम् । Śi. 5, 50 ॥ **191** ॥

दण्डे । दोःकाण्डकण्डूजुषः । बाणे । आसील्लाघवमस्य शत्रुविजये कोदण्डकाण्डाहृतौ । अर्वति कुत्सिते । Śi. 1, 38 c. Gaṇ. 45, 12 । वर्गे । षण्डे तरूणां मृगकाण्डमेतत् । अवसरे । H. Ch. 60, 6 । वारिणि गवेषणीयम् ॥ [ भाण्ड ] अश्वाभरणे पर्याणादौ । भाण्डत्रासी हयः । पात्रविशेषे । Ch. I, 54 । तरीषु॰ Śi. 3, 76 इत्यादौ मूलवणिग्धनोपचारात् ॥ **192** ॥

[ दण्ड ] तुर्योपाये दण्डनायके । पतिमथ कुलनारी दण्डभीत्याभ्युपैति Sp. 3734 । राजबले । दण्डेन पीडयति शत्रुसमूहमेषः । लगुडे । Ku. 2, 23 । मथि मन्थकाष्ठे । AK. 2, 9, 53 ॥ [ गुड ] गोले वर्तुले पिण्डे । भक्षितो वाप्ययोगुडः ॥ **193** ॥

[ पिण्ड । पिण्डी ] संघाते । Sp. 4952 । ग्रासे । Ra. 2, 59 । पिण्डीमात्रोपहतवदनस्ताडितोपि प्रचण्डमित्यादौ ग्रासोपचारात् । कलेवरे । Ra. 2, 57 ॥ [ गण्ड ] विस्फोटे । समादिलिष्यत्युच्चैः पिशितघनगण्डौ॰ Su. 3388 ॥ [मुण्ड]

के शिरसि । आस्वादयामि यदि रोहितमुण्डखण्डम् । मुण्डिते कूप्रकचे । M. 2, 219 ॥ 194 ॥

स्थाणौ । व्यालैरा° Mh. 2, 125 । शावलेयबाहुलेयखण्डमुण्डेत्यादावजातशृङ्गे गवि । अकृतचूडे । जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥ [ खण्ड ] शकले । खण्डेन्दुचूडामणिः । इक्षुभेदे । खण्डस्य षोडश पलानि शशिप्रभस्य c. AK. 2, 9, 44, C. । शावलेयो बाहुलेयः खण्डो मुण्ड इत्यादौ स्फुटितशृङ्गके गवि द्वयोः । स्त्रियां तु खण्डेति ॥ 195 ॥

[ शौण्ड ] वृषभे । Bh. S. 88 । समर्थे । अक्षशौण्डः । मधुसक्ते । शौण्डः पिबति पानागारे ॥ 196 ॥

[ रण्डा ] विधवायाम् । पञ्चाक्षरी जयति रण्डिकया प्रयुक्ता ॥ [ अण्ड ] कठिने । खण्डी° Mh. 2, 108 । मुष्के । निरण्डास्ते हयाः शूराः । खगादिकोशे । M. 1, 44 । आदिग्रहणात् । अव्यक्तादण्डमभूदण्डाद्ब्रह्मेत्यादौ ब्रह्मकोशे ॥ [ क्रोड ] उरसि । Sp. 1969 ॥ मुकुल° Sû. 2, a इत्यादावुपचारात् ॥ 197 ॥

[ पीडा ] द्वयोरपि । Bh. Ś. 56 । कृपा हि परार्थे दुःखानुभवनम् ॥ [ नीड ] स्थानमात्रे । स बद्धकक्ष्यः परनीडपीडने । तत्रागत्य° K. K. S. 1, 61 इत्यादौ द्वयोरपि पुंनपुंसकयोः ॥ [ नाडी ] कायसिरायाम् । M. M. 158, 1 । नाले पद्मादिषण्डे । आसेदुरुन्नाडिनि पुण्डरीके । षट्क्षणे काले घटिकाख्ये । नाडिकाविच्छेदध्वनिरुदचरत् ॥ 198 ॥

[ शुण्डा ] सुरायां तत्पानमदस्थाने च । शुण्डायां° Mh. 2, 125 । वक्त्रैकदेशे चिबुके । शुण्डा° Mh. 2, 126 ॥ [ गडु ] कुब्जे । असौ गडुर्जानुनिविष्टहस्तः । पृष्ठगले । गडुलश्चापलमाचरत्यसौ ॥ 199 ॥

रोगे । यद्येवमन्तर्गडुना कोऽर्थः स्यात्स्थायिनात्मना ॥ [ चण्ड । चण्डी ] ओषधिभेदे महेश्वरगणे च प्रसिद्धः । कोपने । Dhv. 77, 2 c. Vik. 130 । देव्याम् । चण्डश्चण्डीपतेरंशः c. Mh. 2, 134 ॥ [ षण्ड ] गोपतौ वृषभे । हालिकः षण्डमारुह्य । वह्न्यादिसंचये । जम्बूषण्ड° Me. 20 ॥ 200 ॥

[ व्याड ] व्यालास्ते° Su. 1007 c. Bh. Ś. 83 इत्यादौ लडयोरेकत्वस्मरणात् सर्पे । मांसात्पशौ क्रव्यादे श्वसृगालादौ । व्याडैर्व्याप्ते वनान्तरे ॥ [इडा] इडामुद्हरत्क्रोड इत्यादौ भूमौ । इडाख्या गौः पयस्विनीत्युक्त्या गवि । वाचि । व्रीडादिडां नैव ददाति वीरः । अप्सरसि । ऐडः पुरूरवास्तत्र ॥ [ प्रकाण्ड ] तरुस्कन्धे । कण्डूयमानः सरलप्रकाण्डान् ॥ 201 ॥

[ सपिण्ड ] पुत्रे । सपिण्डः पितृदायादः । दायादे । एकाहस्तम -----
--तु वै पितुः ॥ [ शिखण्ड ] बर्हे । Ra. 1,39 । चूडायाम् । Ra. 11, 5 ॥ [ पोगण्ड ] विकलाङ्गे । पोगण्डाः संभवन्ति ते । बालश्चा षोडशाद्वर्षात्पोगण्डश्चाभिधीयत इत्युक्त्या बाले ॥ 202 ॥

[ दृढ ] शक्ते । उदीर्णे रागाग्नौ सुदृढघनमाश्लिष्यति वधूरित्यादौ c. Sp. 2596 । स्थूले व्यायते । कस्ते स्याद्दृढघातकस्य समरे प्रत्यक्षवर्ती रिपुः ॥ [ व्यूढ ] विन्यस्ते विपुलीकृते । अनूर्ध्वज्ञुर्व्यूढजानुर्जुहुयात्सर्वदा हविः Śânkh. Grihy. 1, 10 । संहते घने । Ra. 1, 13 ॥ [ मूढ ] जडे । मूढे नास्ति मतिः क्वचित् । तन्द्रिते अलसे । किं° Mh. 2, 128 ॥ [ रूढ ] अङ्कुरिते । निरूढव्रीहयः शष्पम् । लग्ने । Su. 1617 c. Sp. 4554 ॥ रूढे° Ra. 13, 73 इत्यादौ लग्नत्वोपचारात् ॥ 203 ॥

[ बाढ ] भृशेत्यर्थे । बाढमाविद्धकर्णः । प्रतिज्ञायाम् । आं बाढं क्रियते भवद्भिरुचितम् ॥ [ लीढ ] स्वादिते । लीढं मधुकरैर्मधु । श्लिष्टमीषद्व्यक्तम् । लीढमद्य व्याख्यानं जातमित्यादौ ॥ [ गाढ ] विलोडिते । नौभिर्विगाढां सरयूं विलोक्य c. Ra. 14, 30 । दृढे । Pa. 3683 ॥ 204 ॥

[ उदूढ ] उदूढा [sic] धृतो विवाहितश्च । पृथुलेन्वेष्यः ॥ [ उद्गाढ ] भृशे । Sû. 8 । कृच्छ्रे । निदाघोद्गाढसंताप° c. Su. 1693 ॥ [ उपोढ ] ऊढमात्रे । Sp. 1311 । समासन्ने । उपोढपाणि° c. Ku. 7, 4 ॥ 205 ॥

[ आषाढ ] व्रतिदण्डे । Ku. 5, 30 । मासे प्रसिद्धः । भूधरभेदेपि ॥ [ आलीढ ] श्लिष्टे । वत्सालीढं भाष्यम् । स्पृष्टे । Ra. 2, 37 । आस्वादिते । आलीढं मधुसर्पिषा सह कथम् । धानुष्कस्थानभेदे । Ra. 3, 52 ॥ 206 ॥

[ अध्यारूढ ] सहेवाके । अध्यारूढं तु तं विद्यात्स परीक्ष्यः प्रयत्नतः ।

पृष्ठगते उपरिस्थानं प्राप्ते । गगनमध्यारूढे सवितरि ॥ 207 ॥

[ भ्रूण ] द्वयोरपि । M. 8, 317 ॥ [ बाण ] बलिसुते । Kâd. I. v. 2 । देवभेदे । बाणलिङ्गे॰ Mh. 2, 148 । बाणीयबाणी यदि कर्णगोचरेत्यादौ वाचि स्त्रियाम् । दासीकुरण्टको वृक्षभेदः ॥ 208 ॥

[ कण ] अल्पे । Ra. 1, 85 । विप्रुषि । Suv. 37, 7 । अतिसूक्ष्मधान्यांशे । Su. 2446 ॥ [ कर्ण ] संसारवारांनिधिकर्णधार इत्यादावरित्रे लोके खेडाशब्दवाच्ये । श्रुतौ । Sâ. 22 । राजभेदे । षड्भिः कर्णो निपातितः ॥ 209 ॥

[ गण ] प्रमथे । Ku. 1, 55 । संख्याभेदे । विवेक्तारो येषां दिशि दिशि गुणानां गणतया ॥ [ पण ] ग्लहे द्यूतार्थे धने । कोलिद्यूतपणीकृतो विहरता पूतः स बिम्बाधरः । अशीतिः श्वेतिकाः पण इत्युक्त्या श्वेतिकामाने वराटकपरिच्छेदे । मूल्ये । दश कार्षापणाः पणः । कार्षापणे रूपकद्वये । नातिरिक्तोधिकारोस्ति सार्धात्पणसहस्रतः । धने गवादौ स्वे बहुधन आपणिक इत्यादौ ॥ 210 ॥

द्यूतादौ कल्पिते संध्यर्थे मुद्रिकादिदाने । पणबन्ध॰ Ra. 8, 21 । पणो बध्यतेस्मिन्निति पणबन्धः संधिः । बद्धमुष्टौ मुष्टिगृहीतशाकादिपरिमाणे । नात्तुं शाकपणो रटन्न चलति द्वारान्धनी संततम् । भृतौ वेतने प्रसिद्धः । पण्यवनितेत्यादौ ॥ [ गुण ] रज्ज्वावुत्कर्षे च । H. Ch. 49, 2 c. Sp. 7617 । आदौ यस्य गुणास्ततः किल च येत्यादौ तन्तुषु राजसाधर्म्यात् । मौर्व्याम् । Su. 2455 । गुणाः खलु गुणा एवेत्यादौ द्वितीयो गुणशब्दः प्रधाने s. Su. 2672 । गुणवति यौवनशालिनीत्यादौ रूपादौ द्रव्याश्रिते सर्वत्र । आदिग्रहणाद्बुद्ध्यादौ । कणादोक्ते सत्त्वे निविशत इत्यादौ लौकिके च शुक्लादौ । सूदे भक्तकरे । AK. 2, 9,28 । धृतराष्ट्रो गुणप्रिय इत्यादौ c. Vâs. 15, 1 । अत्र हि विरोधाभासे गुणशब्देन विराटगृहे भक्तकरावलम्बी भीमसेनो विवक्षितः । इन्द्रिये । Bhag. 3, 29 ॥ 211 ॥

भागे । Ra. 2, 25 । भाण्डेन्वेष्यः । शौर्यादौ । Ra. 1, 22 । सत्त्वादौ । Kâd. I. v. 1 । संध्यादिके । Ra. 8, 21 ॥ [ क्षण ] निर्व्यापारस्थितौ । किं न कुर्वन्ति सक्षणाः । कालविशेषे । Śi. 4, 17 । उत्सवे । क्षणे रक्ष्याः कुलस्त्रियः ॥ क्षणं॰ Śi. 1, 4 इत्यादौ प्रकरणमाहात्म्यान्नृत्तोत्सवे ॥ 212 ॥

[ वर्ण ] गुणे । Ra. 11, 2 । लब्धो वर्णो गुणो यैस्ते लब्धवर्णा विद्वांसः ।

स्वगुणो॰ Śi. 16, 29 इत्यादौ तु स्पष्ट एव गुणे वर्णशब्दः । व्रते । Ki. 1, 1 । यशसि । अवर्णवादाङ्कुशमुद्विजेन्न कः । शुक्लादिकेपि । दुर्वर्णतामेति च दुर्जनस्य N. Ch. 1, 14; Su. 168 । ब्राह्मणादौ । Ra. 5, 19 । विलेपने । वर्णितं मुखमेतस्याः । कुथायाम् । वर्णास्तरणोपविष्टः । गीतप्रसङ्गे । Ku. 5, 56 । रूपे । Ku. 3, 28 ॥ **213** ॥

[ स्थूणा ] शस्त्रमयः स्त्रीविशेषः सूर्मी यस्यां प्रतप्तायां गुरुतल्पगेन प्रायश्चित्तं चर्यते ॥ [ तृष्णा ] इच्छेपि । Sp. 4089 ॥ **214** ॥

[ तीक्ष्ण ] विषे क्लीबे । तीक्ष्णेन नीतः क्षयमित्यवैमि । आजौ । तीक्ष्णेषु शत्रुहननप्रयतस्य तस्य । लोहं शस्त्रम् । अभिसरे । यदि तत्र तीक्ष्णाः संचरेयुः । अभिसरो जीवनिरपेक्षश्च । अभिसरो मरकं युद्धं चेत्यन्ये । खरे । Śi. 2, 109 ॥ [ मणि ] अलिञ्जरो घटः । क्रमादपामपि मणौ पङ्कोवश्यं प्रवर्धते । उत्तिष्ठेत यथाकालं मलानां शोधनं प्रतीत्यादौ ॥ रत्ने । Sp. 4657 । अजागलस्तने । अजामणेरिवैतस्य जन्म जातं निरर्थकम् c. Sp. 3120 ॥ **215** ॥

[ कृष्ण ] बीभत्सुरर्जुनः । कृष्णद्वैपायन इत्यस्य कृष्णशब्दस्य भीमोपि भीमसेन इति न्यायेन व्यासे प्रयोगः । अथ द्वैपायनशब्देनास्य चण्डश्चण्डीपतेरंशो मुनिर्द्वैपायनोस्तु वः । रथयोजितगोविन्दो रुक्मिणीकः सदा मुदे ॥ इत्यादौ दुर्वाससर्यपि वर्तनात्कृष्णशब्देनैव व्यासवाचिना विशिष्यते द्वैपायनशब्दः ॥ वर्णे । कृष्णस्ते करपुष्करोदरतले खड्गः सदा जृम्भते । तम॰ V. S. 4 इत्यादौ पापेपि मालिन्योपचारात् । द्रौपद्याम् । V. S. 22 ॥ **216** ॥

[ कोण ] वीणावादनोपायेश्रौ च । H. V. 1, 9 । लगुडे । उद्गीर्णकोणरभसादरविद्रुतस्य ॥ [ शोण ] नदे । हिरण्यवाहनामानं शोणमद्राक्षीत् c. H. Ch. 22, 2 । लोहिताश्वे । शोणलङ्घितरणाजिरस्य ते ॥ **217** ॥

[ प्राण ] बले । भावात् [?] प्राणः कुतस्ते । वायुः शरीरस्थः प्राणः । समानोदानव्यानाश्चेत्युक्त्या । भ्रुवो॰ Bhag. 8, 10 इत्यादौ । असुषु जीवेषु । Bh. Ś. 102 ॥ [ घृणा ] इच्छेपि । चेतसि घृणा काये च यस्यानिशम् ॥ [ श्रेणि ] कुले प्रसिद्धः । आवलौ । R. K. 1, 1 ॥ **218** ॥

[ पार्ष्णि ] पादग्रन्थेर्गुल्फस्याधोभागे । Ku. 1, 11 । वाहिनीकटौ । Ra. 4, 26 ॥ [ जिष्णु ] शक्रे । जिष्णुना विजिते वृत्रे ॥ **219** ॥

[ द्रोण ] काकभेदे । द्रोणैराश्रितगह्वरे ॥ [ द्रोणी ] काष्ठाम्बुवाहिनी दीर्घो नौवाहनार्थं दण्डः । गवाद्यन्नादिभाजने । सुरभिसलिलपूर्णां द्रोणीमवततार ॥ 220 ॥

नीलिनी ओषधिभेदः । गुहायाम् । कुर्वाणो रुधिरार्द्रचञ्चुकषणैर्द्रोणीरिवाद्रे-नैत्राः ॥ [ वेणी ] नदीसुतौ । Me. 29 । केशकलापे । Ku. 2, 61 ॥ [उष्ण] त्रयेपि [ sic ] । अत्युष्णमुष्णाभिगमे हि देहादुष्णं वमन्नुष्णमनाः स जिष्णुः ॥ 221 ॥

[ अणु ] अल्पे । Bhag. 8, 9 ॥ [ चूर्ण ] धूलौ । Me. 67 । क्षारभेदे ताम्बूलोपकरणे । न विना चूर्णं रञ्जयति ॥ चूर्णरञ्जितचलालकावलिरित्यादाव-धिवासके कर्पूरादिक्षोदकृते द्रव्यविशेषे नपुंसके बहुत्वे च । चूर्णानि वासयोगाः स्युरिति चामरसिंहः AK. 2, 6, 134 ॥ 222 ॥

[ आणि ] अक्षस्य रथनाभिक्षेप्यकाष्ठस्यान्ते बन्धार्थं कीलक आणिः । आणीमाण्डव्य इत्यादौ । अश्रिः कोणः ॥ [ रण ] क्वाणे । कर्षन्ति० Mh. 2, 149 । मृधे । Ra. 12, 72 ॥ [ क्षुण्ण ] प्रहते । Ku. 2, 43 । दक्षे । क्षुण्णाः शास्त्रेषु सर्वेषु ॥ 223 ॥

[ शाण ] मानभेदे माषके । सुवर्णशाणं च लोमशसूत्रेण वेष्टयेत् । कषे । Su. 3457 । कषतेस्मिन्निति कषः कुरुविन्दाख्यो द्रव्यभेदः ॥ [ स्थाणु ] उभयत्रापि । तस्मै जगत्त्रध्वंसस्थाणवे स्थाणवे नमः ॥ 224 ॥

[ वरण ] प्राकारे । प्रोत्तुङ्गवरणावृतः । स्वीकृतौ । कन्यावरणमिच्छन्ति । रोधे । कृतवरणान्प्रविमुच्य मारुतान् ॥ 225 ॥

[ धोरणी ] पङ्क्तौ । जलधरजलधाराधोरणीधौतमूर्धा c. Vik. Ch. 13, 86 । वाहने युग्यभेदे सर्वस्मिन् स्थितौ नपुंसकलिङ्गे । धोरणं वाहनं पत्त्रमित्यमरसिंहः c. AK. 2, 8, 58 ॥ 226 ॥

[ ग्रामणी ] नापिते प्रसिद्धः । श्रेष्ठे । Bâ. III, 10 । ग्रामाधिपे । ग्राम-णीदुहितृपाविते तले ॥ [ हरिणी ] हेमप्रतिमायाम् । हरिणीभिर्हतस्तम्भा भान्ति पूर्वं न देवताः । हरिणीर्ब्रह्मवर्चसकाम इत्यादौ हरितायाम् ॥ 227 ॥

[ हरिण ] पाण्डौ । हरिण० Mh. 3, 223 ॥ [ विपणि ] पण्याध्वा हट्टप्र-देशेन जनानां मार्गः । हट्टो वणिक्स्थानम् । द्वयेपि । पूर्णापणं विपणिनो विपणिं विभेजुः c. Śi. 3, 24 ॥ 228 ॥

[ ग्रामीण ] ग्राम्ये । ग्रामीणैः पुनरध्वगस्य वसति॰ Sp. 3158 ॥ [करेणु] इभ्याम् । Ku. 3, 37 ॥ [ द्रविण ] बले । उपोढबाहु॰ Ra. 18, 13 । धने । Bh. Ś. 5 ॥ **229** ॥

[शरण] गृहे । प्रविशेदग्निशरणमुद्धृते दक्षिणे करे । रक्षितरि । शरणमसि संभयो ह्यसि गतिरसि ॥ [ प्रेक्षण ] वधे । प्राणप्रोक्षणकेतनेत्र विजने किं भीरु बम्भ्रम्यसे ॥ [ प्रमाण ]हेतौ ज्ञप्तिनिमित्ते । प्रत्यक्षं चानुमानं च [sic] M. 12, 105 । मर्यादायाम् । राजानं मां च प्रमाणं कृत्वा यद्यस्याकुशलं पश्यसि । प्रमाणव्युत्पादके शास्त्रे । पद॰ Mh. 3, 204 । इयत्तायाम् । कियत्प्रमाणमुदकम् । प्रमातरि । साहित्यमाणिक्यविदः प्रमाणम् ॥ **230** ॥

[ करण ] साधकतमे । सुभगः करणैर्मन्त्रैः । क्षेत्रे । ग्रन्थिपर्णकरणेषु विचेरुः । गात्रे शरीरे । Ku. 4, 5 । इन्द्रिये । Ra. 2, 11 । क्रियाभेदे । स्पष्टं [sic] करणं स्पर्शानाम् c. Ath. Prât. 1, 29 । चेतोहराणि करणानि गणाधिनाथा इत्यादौ नाट्यशास्त्रोक्ते । संवेशनं करणमेत्य विभेदि वस्त्वित्यादौ कन्दर्पशास्त्रोक्ते कार्ये । कायस्थकर्माणि लेख्यादौ । आक्षपटली समस्तकरणपरिवृतः ॥ **231** ॥

[ निर्वाण ] निर्वृतौ । निर्वाणमेति न मनो विषयेषु सक्तम् । शान्तिमोक्षयोः । Ra. 12, 1 । इभमज्जने । निर्वाणमापि सरसीषु गजाधिपेन । शान्ते । Ku. 2, 23 ॥ [ इन्द्राणी ] तथैवमिन्द्राण्यपि पार्श्वयोः स्त्रियाः समास्थितोर्वोः प्रियजानुयोजनादित्यादिलक्षण इन्द्राणी कामशास्त्रोक्तं करणम् ॥ **232** ॥

[ काकिणी ] वराटके श्वेतके । असिधाराक्रयक्रीता वरमेकापि काकिणी । अशीतिः श्वेतिकाः पणः । तस्य चतुर्भागः c. 210 । मानभेदे प्रसृतिमध्ये । दरिद्रः काकिणीं दद्यात् ॥ [ सरणि ] पङ्क्तौ । सरणिः पिपीलकानां निर्याता वर्षसूचनं कुरुते ॥ अपवर्गसिद्धिनगरस्य सरणिरिव ते वधूरत इत्यादौ मार्गे ॥ **233** ॥

[ तर्पण ] सक्तौ । पेयाः स्युर्लाजतर्पणाः । तृप्तिः सौहित्यम् । बृंहणं वातव्याधुद्देशेन स्निग्धौषधदानम् । पोषणे । कुर्याद्ब्राह्मणतर्पणम् । पित्राद्युद्देशदाने । आन्त्रिकवासाः स्थलगो न कुर्यात्तर्पणं बुधः ॥ [ पारणा ] व्रतभोजने । Ra. 2, 39 ॥ **234** ॥

[ पारण ] कर्मान्ते । समीहितं संगरपारणेन ॥ [ धर्षण ] द्वयोरपि । अविरतधर्षणरसिकः खल इव वेश्याजनो जगति ॥ [ दक्षिण । दक्षिणा ] अनुकूले श्रद्धादेये च । Śi. 14, 33 । ऋजौ । Ra. 1, 31 । निर्दिश्यमानविषयं ह्यानुकूल्यम् । आर्जवं तु सर्वविषयम् । दक्षिणदिग्भवे । Ku. 8, 25 ॥ **235** ॥

दिग्भेदे । M. 2, 52 । सव्यहस्ते । धर्मविद्दक्षिणं पाणिं नाधश्शौचे नियोजयेत् ॥ [ अरुण ] सांध्यरागे । Ra. 5, 71 । सूर्यसूते । अरुणसारथिरेष समुद्गतः । दिवाकरे । Sp. 562 ॥ **236** ॥

शोणे । परिरमणम° [sic] R. K. 2, 23 । अव्यक्तरागे अस्फुटलौहित्ये ॥ [ लक्षण ] नाम्नि । Ra. 6, 71 । चिह्ने । श्रीलक्षणोत्सङ्गविनीतवेशः ॥ [ श्रवण ] नक्षत्र° Kâd. 11, 13 इत्यादौ नक्षत्रेपि । श्रुतिकर्णयोः । Kâd. I., v. 14; c. Ujjv. Uṇ. IV., 233 ॥ **237** ॥

[ श्रवणा ] श्रावण्याम् । श्रवणायां ददातु ये ॥ [ धिषण । धिषणा ] द्वयेपि । सुविमलधिषणो धिषण इव ॥ [ वरुण ] अप्पतौ । Ra. 9, 6 ॥ [ हरण ] यौतके सुदायादिप्राये आयाते वस्तुनि । सत्त्वानुरूपं हरणीकृतश्रीः c. Ra. 7, 29 v. l. ॥ **238** ॥

[ निर्याण ] निर्गमे । ततो° Mh. 3, 200 ॥ [ कल्याण ] द्वयेपि । त्वया वितीर्णं कल्याणमस्तु देव तदेव ते ॥ [ सुवर्ण ] सुवर्णस्य सुवर्णस्य सुवर्णस्य वरानने । प्रहितं तव रामेण सुवर्णस्याङ्गुलीयकमित्यादौ द्वयेपि तन्माने षोडशमाषके ॥ [ ग्रहण ] धने । द्विगुणं ग्रहणम् । सा राहुमूर्तिरिव न ग्रहणं जहातीत्यादौ द्वये वेश्यादिभाटके सोमादिग्रहे च ॥ **239** ॥

स्वीकारे प्रसिद्धः । वन्द्यां हठहृतस्त्रियाम् । ग्रहणीकृतरिपुलक्ष्मीः । आदरे । Ku. 7, 35 ॥ [ कङ्कण ] मण्डलं यागाद्यर्थं नानावर्णो रेखासंनिवेशः । रक्षाकङ्कणबन्धबन्धुररुचिरित्यादौ सूत्रे ऊर्णादिमये रत्नाढ्यकरभूषणे ॥ **240** ॥

[ कारण । कारणा ] घातने यातनायां च । कारणोपहितमानसस्य ते कारणा निरयवह्निषु स्थिता । हेतौ । किं कारणं नु कविराज मृगा यतेते [sic] c. V. A. 11, 6 । करणे साधकतमे । भक्ति° Mh. 3, 188 ॥ [ मार्गण ] बाणे याचके च । Su. 2455 । मार्गणाभिः किमाभिरित्यादौ याचने स्त्रीनपुंसकलिङ्गः ॥ **241** ॥

[ चरण ] वृक्षादिमूले । चरणसेकविवर्धितवृक्षकः ॥ शिष्यद्वयेनेव नूपुरयुगेन वाचालितचरणा H. Ch. 9, 6 इत्यादौ प्राण्यङ्गे पादे बह्वृचादिके शाखाविशेषे चरणशब्दः शाखानिमित्तकः पुरुषेषु रूढः ॥ [ तरुण ] तरुणारुणरागभाजीत्यादौ नूतने । यूनि । R. K. 2, 22 ॥ [ तरणि ] अर्के नावि वा । दारिद्र्योदधितरणिः सरणिर्निःश्रेयसस्य नित्यमसि ॥ **242** ॥

[ ब्राह्मणी ] विप्रश्च विप्रा च तयोर्द्विलिङ्गः ॥ [ प्रवेणी ] द्वयेपि । प्रवेणी मदनस्येव प्रवेणी कुसुमाञ्चिता ॥ [ रोहिणी ] नक्षत्रे । तां रोहिणीं विजानीहि ज्योतिषा मित्त्रमण्डले [sic] c. V. K. 4, 2, 7, C. । गवि । रोहिणीविपुलापीनस्तुतिसिक्तोटजाङ्गने ॥ **243** ॥

[ दुर्वर्ण ] द्वयोः । N. Ch. 1, 14; Su. 168 ॥ [ भरण ] वेतनं जीविकाभरणं भृतिः पूरणम् ॥ [ विषाण ] पशुशृङ्गे । Ra. 9, 62 । इभदन्ते । Śi. 4, 63 ॥ **244** ॥

[ प्रवण ] क्रमनिम्नोर्व्याम् । प्रागुदक्प्रवणा भूमिः श्लक्ष्णा यागे प्रशस्यते । प्रह्वे । शंभोर्भक्तिप्रवणमुकुटा । अनयोस्त्रिषु । चतुष्पथे । प्रवणे चरन्ति भूताः ॥ [ संकीर्ण ] निचितं व्याप्तम् । अशुद्धे । संकीर्णे चरति काकपदेव काकवर्गः ॥ [ इरिण ] द्वयेपि । संसारे° Mh. 3, 182 ॥ **245** ॥

[ रोहण ] रोपणे । कामास्त्रव्रणरोहणं मृगदृशो बिम्बाधरस्यामृतम् । रूढौ । स्नेहरोहणमसत्सु दुर्लभम् । रत्नसंभवहेतौ पर्वतविशेषे । साहित्यसिन्धुशिशिरांशुरशेषशास्त्रसेवावदातमणिसंचयरोहणाद्रिः ॥ [ धारणा योगिकर्मणि । पञ्च चञ्चलगतीन्समीरणान्धारणाभिरभितो निरुद्धवान् । साम्ये । ] धारणायां स्थितो लोकः ॥ बुद्धिरद्भुतशतस्य धारणीत्यादौ धारके त्रिषु ॥ **246** ॥

[ वारण ] वृत्तिघाते । विषयाकृष्टमनसः शक्यते वारणं कथम् । वारके गजे च । Sp. 227 ॥ [ चारण ] देवभेदे । सिद्धचारणगणैरधिष्ठिते । विटे । चारणगणैरारब्धहास्याकुले ॥ **247** ॥

[ सारणा ] स्वरसंस्थाने । रचयति परिपाकं सारणा गीतमार्गे ॥ [ सारणी] अल्पसरिति । सारणी मन्थिपर्णम् ॥ [ करुण ] दीने विच्छाये । स्थिराल्पतारां करुणेन्दुमण्डलाम् c. Ra. 3, 2, v. l. ॥ **248** ॥

[ समीरण ] वायौ । Ku. 3, 21 ॥ [ आरोहण ] सोपाने । आरोहणेषु० Mh. 4, 75 । उद्गमे । Ku. 1, 39 ॥ [ आस्तरण ] द्वयेपि । आस्तीर्णवालास्तरणेषु धन्याः ॥ 249 ॥

[ विलक्षण ] व्यर्थसंस्थायां निरर्थके चेष्टिते । दृष्टिर्विलक्षणतया तत्र शून्यभावमाख्याति । विश्लिष्टे । सदसि तत्र बभूव विलक्षणा । अन्यस्मिन् तस्माद्व्यतिरिक्ते । मूर्खोपि साधुसंपर्कात्पणिताच्च विलक्षणः ॥ 250 ॥

[ विहरण ] व्यादाने विकासे । Pâ. 1, 3, 20 । प्रापणे देशाद्देशान्तरनयने । अग्नेर्विहरणं कृत्वा । क्रीडने । वनविहरणलब्धप्रीतयस्ते मुनीन्द्राः ॥ [संसरण] प्राण्युत्पादे पुनर्भवे । तस्मिन्संसरणे विवेकविषदो याता गतिं सज्जनः । असंबाधचमूगतौ असंकटे सेनागमे । एत० Mh. 4, 91 ॥ 251 ॥

घण्टापथे राजमार्गे । यान्ति द्रुतं संसरणेषु योधाः ॥ [ समुद्धरण ] वान्तान्ने भुक्तोज्झिते । अस्मत्समुद्धरणलब्धधृतेस्तवैष गर्वः कथं वद सखे ननु निस्त्रपोसि । उन्नये उत्क्षेपे । देवः समुद्धरणधीरमतिः परेषाम् c. V. A. 44, 21 । एतच्च उद्धरणापेक्षया चतुरक्षरमध्ये क्षिप्तम् । यद्वृत्तिर्यस्योद्धरणमिति लोकप्रसिद्धिरिति पञ्चाक्षरमध्येपि द्रष्टव्यम् ॥ [आवरण] वस्त्रे आच्छादने च । Ra. 13, 8 v. l. । अजीर्णे अर्गले च । गुर्वावरणनिषिद्धा न रुचिर्भक्तेपि नारीणाम् ॥ 252 ॥

[ प्रकरण ] प्रस्तावे । प्रकरणकथितं वाक्यं भवति हि निष्पत्तये पुंसाम् । कीर्णे प्रक्षेपे । पुष्पप्रकरणरुचिरे ॥ [ निरूपण ] दृष्टौ चर्चायां विचारे च । उपरागस्य निरूपणं न कार्यम् ॥ [ विदारण ] लज्जायां भेदे च । हृदयविदारणकृदभूत् ॥ 253 ॥

[ परायण ] आश्रये । Ku. 4, 1 । अभीक्ष्णे भर्त्सने चान्वेष्यम् ॥ [ पारायण ] समासङ्गे समाश्लेषे । M. Ch. I, 14 । कार्त्स्न्ये । धातुपारायणादिषु c. Kâś. I., v. 1 ॥ 254 ॥

[ प्रविदारण ] द्वयेपि । बिभ्यति प्रविदारणात् ॥ [ परिभाषण ] सनिन्दोपालम्भे । बाला अपि प्रवर्तन्ते कृतेपि परिभाषणे । अनियमेन उक्तौ यो नियमस्तत्परिभाषणम् ॥ 255 ॥

[ अधिरोहिणी ] निःश्रेण्याम् । स्वर्गाधिरोहिणीमेतां चक्रे क्रतुपरंपराम् । अभिनिवेशे । नो दृष्टाय न दृष्टाय स्यादवस्त्वधिरोहिणी ॥ [ अधिरोहण ] ऊर्ध्वगतौ । शैलाधिरोहणं कार्यम् ॥ **256** ॥

[ अपवारण ] छदिः पटलम् । प्रवृत्तिघात इन्द्रियादीनाम् c. Kâś. Pâ. 1, 4, 27 । अन्तर्धिराच्छादनम् ॥ [उदाहरण] अभिधाने । Ku. 6. 65 । निदर्शने । Śi. 2, 33 ॥ **257** ॥

[ सत् ] सत्ये । यदेवार्थक्रियाकारि तदेव परमात्मसत् । अभ्यर्हिते । Ku. 1, 12 । साधौ । असन्तो नाभ्यर्च्याः c. Su. 280 । विद्यमानप्रशस्तयोः । Su. 3161 ॥ [ सती ] दक्षपुत्र्याम् । Ku. 1, 21 ॥ [ भृति ] भरणे । कुक्षेर्यावदमी भवन्ति भृतये c. Sp. 7337 । वेतने । भृतिग्रहणमेवैषां फलं मुख्यम् ॥ **258** ॥

[ धूर्त ] सर्वत्र । धूर्तप्रियस्य किमसाध्यमिहेश्वरस्य ( c. Pa. 1058 ) ॥ [ खात ] वाप्यां रोपिते च । सद्वृक्षैः खाततटेषु खातैः । विदारिते । खाते पुष्पशरेण तस्य हृदये शान्तः प्रविष्टः सुखम् ॥ **259** ॥

[ सेतु ] सीमनि मर्यादायाम् । Ra. 16, 2 । तरणोपाये । समुत्तरणसेतवे ॥ [ लता ] प्रियङ्गुर्गन्धप्रियाङ्गुरिति प्रसिद्धौ । वीरुत्समग्रा लता ॥ **260** ॥

सरिकायाम् । चतुःषष्टिलतो हारः । आदिग्रहणादाभरणान्तराणाम् । वृक्षसूक्ष्मावयवे । Ra. 2, 8 ॥ [ प्राप्त ] प्रसक्ते । प्राप्तमितो गमनं वा । आसादिते । Pa. 3668 ॥ [ आप्त ] संप्राप्ते । Su, 3264 । बान्धवे । आप्तैः सुहृद्भिरपि संप्रथितप्रभावैः ॥ **261** ॥

अविसंवादके । Ra 3, 12 ॥ [ पतत् ] पक्षिणि । Ra. 13, 19 । गच्छति । Ku. 8, 21 v. l. । अधो लुठति । Śi. 1, 12 ॥ [ यन्तृ ] हस्तिपके । Śi. 5, 47 । सूते । M. St. 18 ॥ [ भर्तृ ] पत्यौ स्वामिनि । Ku. 3, 22 । वरे । Ku. 7, 83 । तत्रोपासितलोकभर्तरीत्यादौ धारकेपि ॥ **262** ॥

[ प्रेत ] सत्त्वान्तरे । M. M. 174, 1 । मृते । Ra. 11, 16 ॥ [मुक्ति] निर्वाणे । S. P. 19 ॥ **263** ॥

[ त्रेता ] युगविशेषे । त्रेतायां ज्ञानमुत्तमम् c. M. 1, 86 ॥ [ लिप्त ]

अञ्जिते दिग्धे । K. Pr. 98, 3 ॥ [ केतु ] ग्रहभेदे । एकोत्तरं केतुशतम् । ध्वजे । Śi. 5, 13 ॥ [ सुत ] पार्थिवे । असौ सुतः पालनबद्धकीर्तिः । तनये। Śi. 1, 13 ॥ **264** ॥

[ क्षत्तृ ] सारथौ । क्षत्तारं पुरुहूतस्य । द्वाःस्थे । अनेकक्षत्तृसंकुलम् ॥ [ धातु ] श्लेष्मादौ । धातवोस्य स्थिरा बुद्धिः । अस्थिरक्तादौ । Sp. 4180 । महाभूतेषु । षडुक्तालोकनालोका धातवो विश्वधारणात् । तद्गुणाः शब्दादयः ॥ **265** ॥

इन्द्रियेषु । धातुपाटवमपेक्ष्य तिष्टते । अश्मविकारे मनःशिलादौ । Ku. 1,7 । शब्दयोनौ । Ra. 12, 58 ॥ [ शक्ति ] कास्त्रामायुधभेदे । H. Ch. 4, 6 । सामर्थ्ये । Bh. Ś. 41 ॥ [ मूर्ति ] काठिन्ये । अद्रवं मूर्तिमत्स्वाङ्गम् Kâś. Pâ. 4, 1, 54 । काये । U. R. 9, 4; M. M. 307, 2 ॥ **266** ॥

[ अर्ति ] पीडायाम् । शिरोर्त्यर्जीर्णज्वररोगशान्तये । धनुष्कोट्याम् । संग्रामे° Mh. 2, 156 ॥ [ साति ] दाने । यज्ञे धेनुसहस्रसातिरभसात्संपूर्ण-कीर्तिर्भुवि । अवसाने । संसारसातिकरुणप्रवणस्य शंभोः ॥ [ प्राप्ति ] उदये उत्साहे । प्राप्तिः कस्य न साधुसंगमवशाच्छीघ्रं भवे जन्मिनः । अधिगमे आसा-दने । Nâg. 12 ॥ [ ईति ] डिम्बे उपप्लवे । Ra. 1, 63 । प्रवासे । ईति-वर्धितवियोगपीडया ॥ **267** ॥

[ हेति ] रवेरर्चिषि वह्निज्वालायां च । उदिते सहस्रहेतौ वह्नेर्हेतिर्न दृश्यते क्वापि । शस्त्र आयुधे । Śi. 9, 15 ॥ [ धूत ] त्यक्ते । धूतः पापः समीरैः । कम्पिते । Ku. 8, 25 ॥ [ भूति ] सुधायां मक्कोले । Me. 19 ॥ **268** ॥

[ श्रुति ] श्रवसि कर्णे । श्रुतिसुखं गायन्ति गुञ्जद्गिरः । वेदे । Ra. 2, 2 । स्वरांशे मन्थके । Śi. 11, 1 । श्रवण आकर्णने । श्रुतौ बद्धरतिः ॥ [ श्रुत ] शास्त्रे । एष श्रुते परिचितः । अवधृते । Bhag. 2, 52 ॥ [ कृत ] युगभेदे । M. 1, 86 । पर्याप्ते । Bh. Ś. 9 ॥ **269** ॥

[ वार्त्त ] निःसारे । वार्त्तमेतदुदितं वृथा त्वया । आरोग्ये । Ra. 5, 13 । अनयोः क्लीबे । नीरुजि । वार्त्ताः किं किं न भुञ्जते । अनुद्वेगो वार्त्तलक्षणाना-मिति चाप्याख्यायः [?] । वार्त्ता शरदि केरथ [sic] इत्यादौ वृत्तिमति जीवि-

कायुक्ते । वार्त्ताकेपि भवेद्वार्त्ता इति शाश्वतोक्त्या वार्त्ताके c. Śâśv. 748 । वर्तने । जीवने तस्य वार्त्ता का वार्त्ताका यस्य भोजने । त्रिंशद्यस्य न वार्त्ताका वार्त्ता का तस्य भोजने ॥ उदन्ते वृत्तान्ते । भूतानि कालः पचतीति वार्त्ता c. Sp. 1688 । पाशुपाल्यादिके । Ra. 16, 2 । विद्यायां तूपचारात् ॥ **270** ॥

[ वृत्त ] नैरध्ययने वृत्तमिति वचनादध्ययने c. Pâ. 7, 2, 26 । वृत्तं श्लोक इति यथा । बहुवृत्तान्तगामिनीत्यादौ पद्ये c. H. Ch. 4, 1 । चरित्रे । Sp. 6250 । वर्तने । ऋतेन वृत्तं प्रवदन्ति मोक्षम् । वृत्तमुञ्छशिलम् [ sic; c. Mh. 2, 194 ] । मृते । वृत्तास्ते क्षितिपाः प्रतापनिधयः । प्राणिविषयं मृतम् । अप्राणिविषयं त्वतीतं यथा । वृत्तोत्सवं तत्पुरमित्यादौ । अल्पाशये । Bh. Ś. 71; Su. 968 । निस्तलेपि । सद्वृत्ते महति स्वभावसरले बद्धोपि यस्मिन्गुणैः । दृढे । वृत्तदेहः स्नायुसारः ॥ **271** ॥

[ कान्ता ] योषिति । Sp. 1626 ॥ [ कान्त ] प्रिये । Me. 1 । मनोज्ञे । M. M. 44, 1 v. l. ॥ [ जाति ] छन्दसि वैतालीयादौ । सामान्ये । जातिः समाप्ता प्रत्येकम् । मालत्याम् । Pa. 818 । गोत्रे । कठजातिरियं न शक्यते सुकुमारैर्वचनैरुपासितुम् । जन्मनि । ततस्तद्विपाकजात्यायुर्भोगाः ॥ **272** ॥

काव्यालंकारभेदे स्वभावे च । H. Ch. 5, 4 ॥ [ पत्ति ] गतौ । पत्तिः स्वर्गगृहे भवेत्सुकृतिनः कस्यापि । पदगे । Ra. 7, 34 ॥ **273** ॥

[ रीति ] प्रचारः । व्यवहारः कुलाचार इति यावत् । प्रचारः शैली इति स्वामी । स्यन्दः स्रवणम् । रीङ् स्रवणे दिवादौ अनेकार्थतया प्रचारे वर्तते इति रीतिः ॥ रम्यरीति° Stutik. I, 3 इत्यादौ वैदर्भ्यादौ । वैदर्भी रीतिः । मुख्या प्रणयिनी । पक्षे प्रचारः । व्यवहारः । मर्यादा शैली च ॥ **274** ॥

[ श्वेत ] राजभेदे । श्वेताभयार्पणविधिप्रथितप्रभावः c. Stutik. II, 21. III, 19 ॥ **275** ॥

[ पङ्क्ति ] छन्दोविशेषो दशाक्षरः । दशसंख्यायाम् । Ra. 9, 74 । आवलौ । पङ्क्तौ विशन्तु गणिताः c. Bh. Ś. 11 ॥ [ क्षिति ] त्रिषु । यत्प्रतापयशसोः क्षितिः क्षितौ वैरिणस्तव समाः किमन्तरम् ॥ [ द्युति ] कान्तिः सौन्दर्यम् । प्रभा प्रसारिणी दीप्तिः ॥ **276** ॥

[ तत ] प्राप्ते संभृते [sic] च । ऋत्विजोथ वितते महाक्रतौ । वाद्ये तन्त्रीगते । ततघनसुषिरसमत्वयुतम् ॥ [ सूत ] संकरजातिभेदः सूतः ॥ **277** ॥

रथकारः स्थपतिः । सारथौ रथवाहे । सूर्यसूतोवताद्वः । वन्दिभेदे । सूतमागधवन्दिभिः ॥ [ घृत ] द्वयेपि । घृत° Mh. 2, 165 ॥ [ हस्त ] मानभेदे करे च । कृष्णश्चतुर्हस्तकः । प्रशंसायामुत्तरपदीभूतः । करेण रुद्धोपि न केशहस्तः c. Ra. 7, 6 । भभेदे नक्षत्रविशेषे । हस्ताद्याः पञ्च वस्त्रादौ प्रशस्तास्तिस्र उत्तराः c. Mh. 3, 518 ॥ **278** ॥

[ वीत ] असाराश्वगजे । वीतमात्रावशेषाणि सैन्यानि तव विद्विषः । शान्ते । वीतदावानले वने । अङ्कुशकर्मणि । निर्धूतवीतमपि चालकमुल्लसन्तम् c. Si. 5, 47 । चालको दुष्टहस्ती । सांख्यसाधर्म्यहेतौ । वीतावीतविषाणस्य । विगते । Sū. 4 । छन्ने आच्छादिते । संवीतचीनांशुकमूर्तिरेषा ॥ **279** ॥

[ ग्रस्त ] द्वये । ग्रस्तवर्णपदतां समादधाति दुष्टकविवत्प्रजेश्वरः ॥ [तिक्त] शुभगन्धे रसे च । Me. 20 ॥ **280** ॥

[ नत ] नितम्बेधःकृते च । परिणमति कामहस्ती कामिन्या विचलितांशुके नतेमुष्मिन् [ c. Mh. 2, 173 ] ।। कुटिले । विडम्बनार्थं नमयन्नतभ्रूः ॥

[ भूत ] जन्तौ । भूतानि कालः पचतीति वार्त्ता c. Sp. 1688 । क्ष्मादौ । Ra. 2, 57 । पिशाचादौ । Ku. 3, 74 । न्यायोपपादिते । भूतम° Mh. 2, 180 । उपमाने । स्वहस्तभूतः शिशिरात्ययस्य c. Ku. 3, 61 ॥ **281** ॥

प्राप्ते । प्रमाणभूताय जगद्धितैषिणे ॥ भू प्राप्तावित्यस्या — — त्वेति विकल्पिताणिच्छस्य [?] प्रयोगात् ॥ [ युत ] वियुक्ते । अयुतसिद्धानामाधार्याधारभाव इह प्रत्ययहेतुः संबन्धः समवायः ॥ [ गुप्ति ] काराराक्षयोः । Ku. 6, 38 । दीर्णे च विवरं बिलम् ॥ **282** ॥

[ मूर्त ] मूर्छाले । मूर्तत्वहेतुं धिगमुं वसन्तम् । कठिने । Si. 3, 18 ॥ [वस्ति] शूद्रापनेयादथ वस्तिना स्थितेत्यादौ वस्त्राञ्चले । अपानमार्गे । वस्तेरूर्ध्वमधो नाभेः । अपानमार्गकर्मणि । वस्तेर्विना भेषजमस्ति किंचित् । अश्वप्रस्रवणे अश्वस्य मुखे यत्प्रस्रवति तत्र वस्तिशब्दः । अश्वशालीयेषु प्रसिद्धः ॥ **283**

[ लूता ] व्याधिभेदे विस्फोटाख्ये । न तल्लूताहरं चक्रम् । पिपीलके । लूताततिः सूचयतीह वर्षम् ॥ [ रति ] स्मरकलत्रे । Ku. 3, 23 । रते । तल्लिद्वये रतिविलासमतोभिधास्ये । अभिष्वङ्गे । Sp. 1450 ॥ 284

चित्तावस्थाने । Ra. 8, 65 । शृङ्गारभावे । K. Pr. IV, 30 । यद्वलभेन रतिरङ्गसमानकाल इत्यादौ कामफले ॥ [ वित्त ] द्रविणे । बहुवित्तव्ययायाससाध्ये कर्मण्यनादरः । हेम्नि । Ra. 5, 21 । ख्याते । विद्यावित्तेष्वनादरः । विचारिते । वित्तानि तानि शास्त्राणि ॥ 285 ॥

[ वर्ति ] धूपे । परिपीतधूपवर्तिः Kuṭṭ. 148 or Kâd. 16, 23 । दीपशिखायाम् । Sû. 23 । गात्रानुलेपने । भङ्गैः कुङ्कुमवर्तिपिञ्जरतरैः । आलेख्यभाण्डे तूलिकायाम् । स्वेदकम्पवशसन्नवर्तिकः c. Ra. 19, 19 । दीपदशायाम् । वर्तिर्वः प्रतनुः प्रियेति शमिते तस्मिन्नुपध्माक्षरैः । चक्षुरञ्जने । षोडशाङ्गो भवेद्वर्तिः ॥ 286 ॥

[ आप्ति ] संबन्धे । न॰ Mh. 2, 156 ॥ [ सृति ] गमने । Bh. Ś. 83 । पद्धतौ पदपङ्क्तौ । दुर्लक्ष्या विपिने सृतिः ॥ [ वृत्ति ] वर्तने । वृत्तिरावन्ध्यं त्र स्त्रीधनम् । विवृतौ । Kâś. I., v. 2 । मनस्कृतौ । Y. S. I, 4 ॥ 287 ॥
काव्याङ्गे । परुषा नाम वृत्तिः स्याद्दृहल्याद्यैश्च योजिता c. A. S. 21, C. । तीव्रा॰ Ku. 3, 73 इत्यादौ वर्तनं प्रवर्तनमपि वृत्तिः ॥ [ प्रीति ] कामभार्यायाम् । रतिप्रीत्योः कामं कवलयितुराराधनविधौ । प्रेम्णि स्नेहे । प्रीतिभोज्यानि चान्नानि । प्रमोदे हर्षे । Ra. 11, 12 ॥ [ पक्ति ] द्वयोरपि । नष्टप्रतापाश्रितया नृपाणां पक्तिर्न संभूतमुपैति काचित् ॥ [ वीति ] द्वयेपि । ते निपेतुरवसन्नवीतयः ॥ 288 ॥

[ भक्ति ] विच्छित्तौ । Me. 19 । सेवने । Su. 43 ॥ [ भित्ति ] कुड्ये । K. Pr. 324, 3 । प्रदेशे । गण्डभित्तिषु मदेन दन्तिनाम् ॥ [ चिति ] चिति । चितिः प्रत्यवमर्शात्मा । सङ्घचित्ययोः । चितये काष्ठचितिं तनोति सः ॥ 289 ॥

[ दन्त ] अद्रिकटके । दन्त॰ Mh. 2, 169 ॥ [ मृत ] याचिते । मृतामृताभ्यां जीवेत c. M. 4, 4 । मृतं तु याचितं भैक्षमिति स्मृतिः M. 4. 5 ॥ [ ज्ञात

जन्मनि । तस्य पुत्रस्य जातेभूत् । प्रकारे । Ra. 5, 1 । संपन्ने । जाते देहप्रत्यय-द्वीपभङ्गे । पुत्रे । जात° Mh. 2, 166 ॥ **290** ॥

[ व्यक्त ] बुधे पण्डिते । व्यक्ताः किल्बिषमोषपेशलतया यान्ति प्रथां सर्वतः ॥ [ शिति ] शारे शबले । रोमन्थ° Mh. 2, 198 । असिते । शितिकण्ठः कालगलः ॥ [ यति ] विरामे । गोपुच्छप्रमुखाः क्रमेण यतयस्तिस्रोपि संपादिताः । व्रतिनि । मुदा विकासं यतिमभ्युपेयुषी c. Śi. 1, 24 ॥ [ ऊति ] स्यूतौ रक्षणे च । कन्थी° Mh. 2, 157 ॥ **291** ॥

[ स्थित ] ऊर्ध्वे । Ra. 2, 6 । वर्तमानेपि । Ku. 1, 1 । प्रतिष्ठावति । अत्र° Mh. 2, 204 ॥ [ रक्त ] कुङ्कुमे । हेमन्ते घनरक्तपङ्कमलनक्रीडाजुषो योषितः । क्षतजे सरागे च । V. S. 7 । अरुणे । रक्तासक्तैरिवौघैः c. Sû. 1 । अनयोर्द्वयोस्त्रिषु ॥ **292** ॥

[ मत्त ] मदकले करिणि । Bh. Ś. 66; Bhoj. 53, 12 । मदाव्यक्तवाचि । Śi. 11, 39 ॥ [ गति ] अवस्थायाम् । इमां गतिमनुप्राप्ताः । यात्रायाम् । Pr. P. 28; Pa. 3282 । अधीनतायामस्वायत्ततायाम् । सर्वेषां पार्थिवो गतिः । उपाये । शरणमसि संश्रयो ह्यसि गतिरसि नाथोसि सर्वभूतानाम् । वर्त्मनि । Ra. 1, 4 ॥ **293** ॥

[ शुक्त ] परुषे । यत्सत्यं पुनरुक्तशुक्तविरसः सर्गक्रमो वेधसः c. Pa. 3373; V. A. 38, 9; 59, 8 ॥ [ ऋतु ] ग्रीष्मादौ । Ku. 2, 36 । स्त्रीरजसि । इमां देवीमृतुस्नाताम् Ra. 1, 76 v. l. ॥ [ अन्त ] विनाशे । Bhag. 2, 18 । अन्तिके । आ उदकान्तात्प्रियं प्रोषितमनुव्रजेत् c. Śâ. 54, 21; Bhâshya Pâ. 1, 4, 56 । स्वरूपे गाधे [?] । नान्तोस्य ज्ञायते कैश्चित् । अंशे एकदेशे । Sp. 5714 । अवसाने । Sp. 6948 ॥ **294** ॥

[ मातृ ] गवि शाश्वतोक्त्या । ओमिति [?] पदद्वयं विवक्षितार्थप्रतीतिकृतम् । जनन्याम् । Sp. 2761 । रेवत्याद्यासु देवीषु । Ku. 7, 38 । क्वचिदेता ब्राह्म्यादिशब्देनोक्ताः । बहुत्ववर्तमाना स्त्रीव स्त्री तस्यां बहुस्त्रियाम् । मातर इत्यादौ ॥ [ स्थिति ] द्वयेपि । Ku. 1, 18 ॥ [ भास्वत् ] द्वयेपि । H. Ch. 9, 10 ॥ **295** ॥

[ अर्हत् ] द्वयेपि । अर्हते श्रुतवतां सदार्हते ॥ [ हरित् ] सूर्याश्वेषु । Ku. 2, 43 । नीले दिशि च । रीतिव्याप्तहरित् ॥ 296 ॥

[ महत् ] राज्ये । महति कृतपदस्त्वमेव नित्यम् । सांख्योक्तबुद्धौ । Sâ. Kâ. 3 । बृहति । H. Ch. 131, 2 ॥ [ जगती ] छन्दोभेदे द्वादशाक्षरपादे भुवि च । विकासमीयुर्जगतीशमार्गणाः ॥ [ जगत् ] जङ्गमे । जयति [sic] जगतां गुरोः K. K. S. 1, 2 v. l. ॥ 297 ॥

[ समित् ] द्वयेपि । समिति तस्य पुरः पततीह कः ॥ [ पित्सत् ] पातेच्छौ पक्षिणि वा । पित्सन्तः किलकिञ्चितेन हृदयं द्रक्ष्यन्त्यमी बालकाः ॥ [ पृषत् ] बिन्दौ । पाथःपथे ननु पृषन्त्यपि दूषितानि । हरिणे । रुरुपृषद्गणसंकुलसंचरे । अनयोः पृषतशब्दः अकारान्तः पुंलिङ्गः ॥ 298 ॥

[ सीता ] हल्यायां भुवि । Ku. 5, 61 । जानक्याम् । K. K. S. 1, 58 ॥ [ एत ] द्वयोरपि । ईदृग्वर्णा एताः कृतवत्यः किं तथोक्तमत्रैव ॥ [ धातृ ] ब्रह्मणि । Ra. 10, 43 । धर्तरि । M. M. 40, 1 ॥ [ अस्त ] पश्चिमाचले । Bâ. III, 10 । नास्तमेति भवितव्यता क्वचिदित्यादौ नाशार्थे अस्तंशब्दो मकारान्तोऽव्ययः ॥ 299 ॥

[ शीत ] गुणे क्लीबम् । Bhag. 2, 14 । तद्वति शीतलगुणवति त्रिषु । Sp. 6410 ॥ [ यातृ ] भ्रातृजायायां गतिशीले च पुंसि । प्रथमाद्विवचनबहुवचनद्वितीयाविभक्तिवर्जं सर्वत्र सारूप्यम् । यातृशब्दो भ्रातृजायायां साहचर्यात्स्त्रीलिङ्गः । गतिशीले पुंसि । Sp. 668 ॥ 300 ॥

[ शुक्ति ] मुक्तास्फोटहयावर्तयोः । Śi. 5, 4 । मानभेदे अर्धपले । द्रव्यशुक्ति जलप्रस्थे ॥ [ पूत ] पवित्रे । Ku. 1, 28 । निःशूकमपासितबुसकिंशारु सस्यादिकम् ॥ [ धृत ] धारिते । धृतायुधो यावदहं तावदन्यैः किमायुधैः । सुस्थिते । H. Ch. 226, 3; Su. 2269 ॥ 301 ॥

[ शान्ति ] शमे । तस्य युक्तैव शान्तिः । निर्वृतौ । Ku. 4, 17 । कुशलकर्मणि । आरब्धव्यं यथाशक्ति शान्तिस्वस्त्ययनादिकम् ॥ [ क्रान्त ] संक्रान्ते । Śi. 10, 3 । आक्रान्ते । Sû. 7 ॥ [ मरुत् ] पवने । Ra. 2, 10 । अमरे । Ku. 3, 72 ॥ 302 ॥

[ विवस्वत् ] सूर्ये । Ku. 1, 16 । देवेन्वेष्यम् ।। [ सरस्वत् ] द्वयेपि । सरस्वांस्तव गाम्भीर्ये न समः ।। [गरुत्मत्] तार्क्ष्ये । Ra. 3, 57 ।। [शकुन्त] भासः पक्षिविशेष एव । द्वयेपि पक्षिणि । पयोधिमध्यस्थितपोतकूपकस्थिता शकुन्तीव मुहुः प्रकम्पिता ।। 303 ।।

[ स्थपति ] कञ्चुकितक्ष्णोः । स्थपतिर्नियतकक्ष्ये को विशेद्राजमार्गे । बृहस्पतिसवो यज्ञविशेषो वाजपेययज्ञादनन्तरं क्रियते तेन य इष्टवान्स स्थपतिः ।। [ हृषित ] जातहर्षे । हृषितः प्रियदर्शनेन मन्ये । प्रतिहते । शीतेन हृषिता दन्ताः । रोमाञ्चविषये । Śi. 7, 16 ।। 304 ।।

विस्मिते । दृष्ट्वा रूपं हृषित इव स प्रेयसीनां तदानीम् ।। [ अमृत ] मोक्षे । Bhag. 2, 15 । वारिणि । ववर्षामृतसारौघाम् । अयाचिते । M. 4, 4 । यज्ञशेषे । नित्यं चामृतभोजनः M. 3, 285 । हुतशिष्टमथामृतमिति स्मरणात् । देवान्ने । Śi. 2, 107 । सुधायाम् । Sp. 532 ।। 305 ।।

[ अमृता ] परस्यां वाचि । वन्दामहे च तां वाचममृतामात्मनः कलाम् c. U. R. I, 1; Mh. 2, 466 । अर्करश्मिभेदे । Ra. 10, 58 । धर्ममेघाख्यः समाधिरमृताशब्दवाच्यः ।। 306 ।।

[ अनन्ता ] दूर्वा शादः । भूमौ । सप्त° Mh. 3, 231 ।। [ अनन्त ] अम्बरे । अनन्तमारोहति तेजसा रविः । विष्णौ । लक्ष्मीरनन्तस्य निबद्धभावा । अनाशे अनवधौ च । अनन्तो जगदन्तगः ।। 307 ।।

[ सूनृत ] त्रयेपि । Ra. 1, 93 ।। [कृतान्त] यमे । या कुपितकृतान्तमुखग्रस्तानाम् । सिद्धान्ते । कृतान्तमाप्नोति न निर्विवेकः । दैवे । Me. 102 । अकुशलकर्मणि क्रूराचारे । मया कृतान्तेन न सा परीक्षिता ।। 308 ।।

[ वृत्तान्त ] प्रकरणे । वृत्तान्ता° Mh. 3, 294 । प्रकारकार्त्स्न्ययोरन्वेष्यम् । वार्त्तायाम् । Su. 2544 ।। [निवात] आश्रये । एते निवातास्तरवो मुनीनाम् । अवाते वाताभावे । Ku. 3, 48 । शस्त्राभेद्ये वर्मणि । निवातकवच° Mh. 3, 261 ।। 309 ।।

[ उच्छ्रित ] जाते । उच्छ्रिताङ्कुरविराजितान्तराः । उन्नद्धे ऊर्ध्वप्रसृते । अत्युच्छ्रितेषु गिरितटकूटेषु वायोः । प्रवृद्धे । उच्छ्रितविभवो भवोपशान्तिः ।। [उत्थित]

ऽर्येपि । नवोत्थिताभ्यां कुचकुट्मलाभ्याम् ।। [ आदृत ] सादरे । पृच्छति स्म समर्थेदमादृतः । अर्चिते । अत्यादृतः स तरसा रससारवद्भिः ।। 310 ।।

[ विविक्त] इत्येपि । Si. 3, 53 ।। [ मूर्छित ] इत्येपि । Dhv. 113, 11 ।। [ प्रतीत ] प्रख्याते ज्ञाते वा । Ra. 13, 53 । हृष्टे । अतिप्रतीतेन तदा स चेतसा ।। 311 ।।

[संस्कृत] कृत्रिमे । स्वप्नं च विद्युदभ्रं च पश्येद्वेत्वं च संस्कृतम् । लक्षणोपेते । संस्कृतं प्राकृतं द्विधा ।। [ पिण्डित ] गुणिते । षष्ठांशेन तु पिण्डितम् । घने । M. Ch. I, 54 ।। [ वनिता ] जनितात्यर्थानुरागायां स्त्रियाम् । Ku. 1, 10 । अङ्गनामात्रे । वनितासु वीचिचलचित्तवृत्तिषु ।। 312 ।।

[ पलित ] जरसा शौक्ल्ये । M. 2, 156 । पानीयनिर्गमनमार्गनिवर्तनेन याता ह्रदाः पलितधूसरतामभी यदित्यादौ कर्दमोपचारात्पानीयपृष्ठवर्तमाने मलविशेषे ।। [ उचित ] समञ्जसे । किमिदमुचितं शुद्धं स्पृष्टं [?] स्वपक्षसमुन्नतेः Bh. Ś. 67; Su. 999 । अभ्यस्ते । Ra. 11, 9 ।। 313 ।।

[ लोहित ] कुङ्कुमे । गोरोचना° Mh. 3, 281 । अरुणे । Ku. 8, 28 ।। [ पर्याप्त ] शक्ते । पर्याप्तोपि स योद्धुमुद्धतमतिर्धत्ते न याञ्चीचताम् । निवारिते । पर्याप्तोयं न्यायः प्रायेण । पूर्णे । पर्याप्तपुष्पस्तवकस्तनीभ्यः Ku. 3, 39 । ईप्सिते । पर्याप्तमेतद्विदुषां सदैव ।। 314 ।।

[ आनर्त ] समरे नृत्तस्थाने च । आनर्त° Mh. 3, 236 । नीवृज्जनपदो देश इत्यर्थान्तरम् ।। [ आहत ] मिथ्योक्तौ । धिग्धिक्कमाहतमिदं वचनं वञ्चनापटोः । ताडिते । Si. 2, 46 ।। 315 ।।

[ आचित ] व्याप्ते । Ra. 7, 10 । अयुतद्वयं विंशतिसाहस्री ।। [ दुर्जात] व्यसने । Ra. 13, 72 । असम्यग्जातवस्तुनि । दुर्जाता° Mh. 3, 258 ।। 316 ।।

[ अव्यक्त ] परमात्मनि । अव्यक्तादण्डमभूत् ।। [ प्रणीत ] विहिते । Ku. 6, 31 । संस्कृतेमौ । प्रणीते जुहुयाद्धव्यम् । प्रवेशिते । प्रधानवर्गस्य पुरः प्रणीतः ।। 317 ।।

[ निकृत ] द्वयेपि । निकृतोपि न याति विक्रियाम् ॥ [ उद्धृत ] भुक्तोज्झिते । क्षिपेदप्सूद्धृतं ततः । तोलिते उत्क्षिप्ते । Su. 54 ॥ [ सुकृत ] द्वयेपि । महता सुकृतौघेन प्राप्तोस्यतिचिरान्मया ॥ **318** ॥

[ आयस्त ] लेशिते अंशेन वीक्षिते । सव्रीडमायस्तकटाक्षपातैः । उत्क्षिप्ते निपुणे । Śi. 5, 6 । कोपिते । आयस्तशत्रुनिवहाहननप्रवृत्तः । तेजिते । आयस्तासिलतोल्लसद्रिपुकुले कालायमाने c. Mh. 3, 238 ॥ [ निरस्त ] अधिक्षिप्ते । Ra. 5, 71 । त्यक्ते । Ki. 1, 28 । त्वरितोदिते । एते निरस्तवचनाः सूचयन्त्यार्तिमान्तरीम् ॥ **319** ॥

[विश्वस्त] द्वयेपि । Śi. 16, 14 ॥ [प्रकृति] लिङ्गे प्रधाने । Ku. 2, 13 । स्वभावे । Ra. 8, 86 । धात्वादौ । प्रकृतय इव दुर्ग्रहा गणिकाः । अमात्यादिषु । Ra. 12, 12 । योनौ । प्रकृतिगुणाः स्थविरकृतिः ॥ **320** ॥

[समिति] त्रयेपि । Śi. 16, 13 ॥ [निर्वृति] द्वयेपि । निर्वृतिः सुहृदि शत्रुजने च ॥ [निकृति] शठे । वर्जय निकृतीः खलानेतान् । शाठ्ये । Ki. 1, 45 ॥ **321** ॥

[ दुर्गति ] द्वयेपि । त्वत्पादपङ्केरुहधूलिलिप्तो न दुर्गतिं याति जनः कदाचित् ॥ [पद्धति] पङ्क्तौ । पदपद्धतिमायातामपश्यत् ॥ [आकृति] काये । भव्येयमाकृतिर्भाविमौलिमाला विलोक्यते । रूपे । Sp. 5076; c. Mall. Ki. 6, 1 ॥ प्रसूति ] जन्मनि । प्रसूतिं भज कल्याणि मर्त्यलोकेतिदारुणे । पुत्रे । Ra. 1, 77 । कारणेपि । Ra. 2, 63 ॥ **322** ॥

[ वसति ] स्थितौ । Ku. 6, 37 । रात्रौ । Ra. 7, 30 ॥ [ रेवती ] लाङ्गलिदारेषु । Pr. P. 52 । मातरो ब्राह्म्याद्याः ॥ **323** ॥

[ स्तिमित ] द्वयेपि । M. M. 49, 3 ॥ [ निशान्त ] गेहे । Śi. 1, 61 । शान्ते । निशान्तचित्ते मुनिपुंगवेपि ॥ [अनृत] द्वयेपि । अनृते वर्ततेधमः ॥ **324** ॥

[ अर्दित ] द्वयेपि । अर्दितो वितरति क्षणाद्रसम् । नार्दितं नवनीतवदित्यादौ शिरोरोगेपि पीडितोपचारात् ॥ [ द्विजाति ] द्वयेपि । द्विजातीनां° Mh. 3, 258 । पुष्पेषुराजवचनेन मतं द्विजानामित्यादौ विप्रदन्तयोः [ sic ] ॥ [जीवातु] जाय्वामौषधे । जीवातुरग्र्यं मथितं ग्रहण्याम् । जीवे । U. R. 31, 5 ॥ **325** ॥

[ जीमूत ] मेघे । Me. 4 । पर्वते । धन्यास्ते° Mh. 3, 254 ॥ [ उत्तप्त ] देवताडद्रुवृक्षविशेषः । शुष्कमांसे । उत्तप्ते कृमयो यथा । वितापिते । उत्तप्तहाटकाचितानि तटानि मेरोः ॥ 326 ॥

[ व्रतति ] विस्तारे । वात्यासंवेगविश्वग्व्रततिवलयितस्फीतधूपाधिवासा c. M. M. 162, 7 । वल्ल्याम् । Śi. 1, 5 ॥ [कलित] विदिते । अकलितदैवनियोगाः । आत्ते । शशिकलाकलितावतंसः c. Mh. 3, 247 ॥ 327 ॥

संख्याते । M. M. 96, 1 । तुलिते । करकलितहराद्रे° Bâ. I, 37; c. Bâ. I, 47 । क्षिप्ते । संग्रामे कलितोऽप्यमित्रनिवहस्तुष्टावकीर्तिं तव । शब्दिते । कलितकीर्तिषु शत्रुमुखेषु ते ॥ 328 ॥

[ गर्जित ] मत्तकुञ्जरे भारतादौ प्रसिद्धः ॥ [ प्रार्थित ] अभियुक्ते आक्षिप्ते । Ra. 9, 56 । सान्त्विते । प्रार्थितापि न विमुञ्चति मानम् ॥ 329 ॥

[ वितत ] प्रस्तुते । Ku. 2, 46 । व्याप्ते । विततमतिसिताभिर्व्योम सोमप्रभाभिः । विस्तृते व्यात्ते । श्रमविततमुखभ्रंशिभिः कीर्णवर्त्मा c. Śâ. 7 ॥ [ संतति ] परंपरायाम् । अभूमिर्मादृशद्दृशामियमाश्चर्यसंततिः । संतत्यर्थं दारा व्याधिप्रशमाय चेति श्लेष इत्यादौ पुत्रे । विस्तारे । पश्यैतां मरुसंततिं कुसुमितां संतोषतान्तिच्छिदम् c. Mh. 3, 301 ॥ 330 ॥

[ संमति ] द्वयेपि । संमतिर्न विमतिर्नियोगिनः ॥ [ रजत ] रूप्ये । M. 3, 202 । हारेन्वेष्यम् । शुक्ले । रजतमराजत वसनम् ॥ 331 ॥

[ कपोत ] पारावते पक्षिभेदे । Śi. 3, 51 । विहगान्तरे एतन्नाम्नैव प्रसिद्धे । Ku. 4, 27 । वर्णे । कपोतपोतकपोताः ॥ [ संवित्ति ] प्रतिपत्तौ । Bh. Ś. 53 । संवित्तिः कान्तायुगित्यादावविवादितायां व्यवस्थायाम् ॥ 332 ॥

[ पक्षति ] द्वयेपि । गगन० Mh. 3, 268 ॥ [ द्वीपवत् ] नदे अब्धौ च । द्वीपवत्सु विचरन्ति कीर्तयः ॥ 333 ॥

नद्यां प्रसिद्धः । यथा द्वीपवती ॥ [ दृष्टान्त ] उदाहरणे । Śi. 2, 31 । शास्त्रे । अभ्यस्तदृष्टान्तशतस्य तस्य ॥ [ आयति ] सर्वत्र । कुचद्वंद्वेन तन्वङ्ग्या राजता प्रकटायतिः ॥ 334 ॥

[ विधूत ] कम्पिते । एते विधूततरलायतपक्ष्मवामाः । त्यक्ते । विधूतकल्पनाजालगम्भीरोदारमूर्तये ॥ [ नियति ] दैवे । नियतिः केन विलङ्घ्यते सखि । संयमे ! नियतिं विधाय चित्ते ॥ [ विकृत ] द्वयेपि । विकृततरमिदं निगृह्य चित्तम् ॥ [ आप्लुत ] स्नातमात्रके । Ku. 6, 5 ॥ **335** ॥

गुरुकुलान्निवृत्तः स्नातक उच्यते ॥ [ उद्घात ] आरम्भे । Ra. 4, 20 । स्खलिते । Ra. 2, 72 ॥ [प्रसृत] निकुब्जपाणौ । एतां॰ Mh. 3, 267 । उद्दाम॰ H. Ch. 13, 8 इत्यादौ जङ्घायां स्त्रीलिङ्गः । विस्तृते च त्रिलिङ्गः ॥ **336** ॥

[ ककुद्मत् ] दान्ते । Ku. 1, 56 । ककुद्मती तीव्रनखक्षताङ्किता इत्यादौ कट्यां स्त्रीलिङ्गः ॥ [ परेत ] दूरगेन्वेष्यः । मृते । परेतभवने तदा चरणमाशु चक्रे जनः ॥ [ दैवत ] दैवतशब्दो देवतायामधिष्ठाने देवेषु च जातिविशेषे वर्तते ॥ [ सरस्वत् ] नदे अर्णवे वा । सर स्त्वतिप्रसादं मे कुरु चित्तसरस्वति D. Ś. 50; K. Pr. 235, 1 ॥ **337** ॥

[ मारजित् ] त्रयेपि । मारजिज्जयति जाह्नवीजले लोलवीचिवलये समादधत् ॥ [ भगवत् ] जिने । अथ खलु भगवान्स लोकधातौ । पूज्ये । K. K. S. 2, 4 ॥ [ उन्मत्त ] धत्तूरे । उन्मत्तकरसास्वादात् । मादिनि । Su. 2544 ॥ **338** ॥

[ निर्ऋति ] सर्वत्र । यः पुण्य॰ Mh. 3, 263 ॥ [ आवर्त ] रोमभेदे अम्भोभ्रमे च । Śi. 5, 4 । पठने आवर्तो मुखस्थितिर्ग्रन्थस्य । रूपे गणनायाम् । देवा अयुग्मावर्ताः ॥ **339** ॥

[ पुष्पवत्] दिवाकरनिशाकरयोरपि । Śr. Ch. 25, 132 । स्पृशति तिलकहेतोः शोणितं पुष्पवत्या इत्यादौ रजस्वलायाम् माल्यधारिणि पुष्पयुक्ते ॥ **340** ॥

[ विवृत ] कोशनिष्कृष्टे । Ra. 12, 40 । व्याकृते व्याख्याते । विवृतोभिनवो मया । प्रकाशिते । विवृतेत्र रहस्ये । विकासिते । Ku. 4, 26 । वर्णधर्मे । स्पृष्टत्वमीषत्स्पृष्टत्वं विवृतत्वं तथैव च । पाठधर्मे । अभ्यासं विवृतं पठेत् । सुशिरे । M. M. 160, 1 ॥ **341** ॥

[विवृति ] एषामेवार्थानां भावे धात्वर्थरूपतायां विवृतिशब्दः ॥ [ संवृत ] स्थगिते असंपुटिते । अयं पटः संवृत एव शोभते Mṛichchh. 33, 17 । असत्यभूते । असंवृतमिदं वाक्यम् । वर्णगुणे । संवृतत्वं च वर्णानामन्तःकरणमि-

च्यते । पाठगुणे । संवृते संवृते कुर्वन् । गुप्ते । Ra. 1, 20 । वर्णपाठगुण इत्यस्य विशेषणं विवृतेतर इति ॥ 342 ॥

[संवृति] कठिनहृदये संवृतिरियम् Sp. 1876 इत्यादि पूर्ववत् ॥ [एकान्त] निश्चये । शत्रुः शत्रुर्मित्रं मित्रं भवतीति नायमेकान्तः । रहसि । कान्ते क्रान्तजनान्तिकं तरसि चेदेकान्तमेकान्ततः । गुणे । तस्य त्वेतदेकान्तमेकान्तग्रहणम् । एकदेशे । एकान्तोन्नमितभ्रु विभ्रमभरभ्राम्यद्विलासायुधम् । अव्यभिचारिणि । Ku. 1, 36 ॥ 343 ॥

[ प्रत्यन्त ] द्वयेपि । प्रत्यन्तेष्वविमूढतामुपगतास्तिष्ठन्ति शिष्टाः कथम् ॥ [जयन्ती] देवी वामस्रोतःप्रसिद्धा ॥ [जयन्त] इन्द्रात्मजे । Ra. 3, 23 ॥ 344 ॥

[ भावित ] साक्षात्कृते । Ra. 1, 74 । अन्यत्रान्वेष्यम् [ c. Mh. 3, 275 ] ॥ 345 ॥

[ आहृत ] आनीते । आहृतैर्गुह्यकव्रातैः । भुक्ते । आहृतानि सुरभीणि फलानि ॥ [ लुठित ] लुठितोत्थितकेशज इत्यादौ परावृत्ते । लुठितश्चेतयते जनोधम इत्यादौ भ्रष्टे पदाच्युते च ॥ 346 ॥

[ गलित ] गलितस्य स नेत्रगोचरादित्यादौ तिरोहिते । — — — — त्यादौ स्रुते । गल अदन इत्यस्य धातोः प्रयोगे भुक्ते । पतिते । Me. 44 ॥ [ गलिता ] छन्दोविशेषे द्विपदीभेदे ॥ 347 ॥

[ निर्मुक्त ] त्यक्ते । निर्मुक्तसर्वभावस्य । निर्ग्रन्थिके । निर्मुक्तकवरीभारव्याप्तवक्षःस्थलाथ सा ॥ [ वसुमत् ] स्फीते । वसुमानसुमद्भिरर्च्यते ॥ [ चित्रकृत् ] वञ्जुलो वेतसः ॥ 348 ॥

[ पर्याप्ति ] पूर्णतायाम् । पर्याप्तिर्बहुमानस्य । शक्तौ । पर्याप्तिः कस्य तावती ॥ [ विनीत ] शिक्षिते हये । वनायुजैर्विनीतैस्तैः ॥ 349 ॥

सप्रश्रये । निन्ये विनीतैरवरोधरक्षैः । निरस्तेन्वेष्यम् ॥ [ निवीत ] कण्ठालम्बे यज्ञसूत्रके । वैश्यस्य तु निवीतं स्यात् । प्रावृते । निवीतचीनांशुकशुभ्रकान्तिभिः ॥ 350 ॥

[ पतित ] स्पष्टम् ॥ [ अक्षत ] यवे । Ra. 2, 21 ॥ 351 ॥

[ कलधौत ] रूप्यहेम्नोः । कल° Mh. 4, 106 ॥ [ पुरस्कृत ] अग्रेकृते । Ra. 2, 20 । अभ्यर्चिते । हरिर्मरुद्भिः स पुरस्कृतः ॥ 352 ॥

[ अवगीत ] दुष्टे । Ki. 2, 7 । गर्हितो निर्वादः । निन्दितो लोकापवादः ॥ [ अभिनीत ] संस्कृते वागादिनाभिनयविषयतां नीते । अभि° Mh. 4, 95 । प्रापिते । Ra. 18, 39 v. l. । अमर्षवत्यन्वेष्यः ॥ **353** ॥

[ प्रतिहत ] प्रतिस्खलिते । Ku. 2, 48 । विद्विष्टे बाधिते । धिग्धिक्छान्तं प्रतिहतमिदं तीव्रमत्याहितं नः c. 356 ॥ [ अभिजात ] सुकुमारे । अभिजातां नवमालिकामिव । कुलीने बुधे वा । अभिजाततमेन तेन सा यदि युज्येत हि दैवयोगतः ॥ **354** ॥

[ अपचिति ] हानौ निष्कृतौ वा । Śi. 16, 9 । अर्चने । केचिदपचितिभाञ्जि म -- ष्यमपठन् c. H. Ch. 8, 5 । व्यये । गृहे° Mh. 4, 98 ॥ **355** ॥

[ अत्याहित ] महाभीतौ जीवनिरपेक्षतायां वा । धिग्धिक्छान्तं प्रतिहतमिदं दुष्टम° c. 354 ॥ [ समाहित ] समाधिस्थे । पञ्च चञ्चलगतीन्समीरणान् संनियम्य हृदये समाहितः । दत्तोत्तरे । समाहितो° Mh. 4, 129 ॥ **356** ॥

[ उपाहित ] अनलोत्पाते । उपाहितोद्विग्नभियोतिविक्लवाः । आरोपिते । उष्ट्रो° Mh. 4, 100 ॥ [ उपस्थित ] समाश्रिते । Ra. 2, 39 । अन्यत्रान्वेष्यम् ॥ **357** ॥

[ अवध्वस्त ] स्पष्टम् ॥ [ अवसित ] अवसानं गते । अवसितमन्त्रसाधन° M. M. 160, 5 । ज्ञाते । अवसितमन्त्रो राजा । निश्चिते । M. M. 191, 2 ॥ **358** ॥

[ विजृम्भित ] विकसिते । पुष्पेषुसंततिविजृम्भितपल्लवेषु । चेष्टायाम् । तत्कस्यापि विजृम्भितं भगवतः सन्मन्त्रलीलाजुषः c. Bh. Ś. 96; Su. 1019 । प्रसृते । अत्रान्तरे तत्र विजृम्भितेषु तूर्येषु ॥ [ परिगत ] विज्ञाते । इति परिगतमेतत्स्थानमासाद्य सद्यः । वेष्टिते । कुसुमपरिगतोसौ केशपाशो भवत्याः । प्राप्ते । परिगत° Mh. 4, 119 ॥ **359** ॥

[ अन्तर्गत ] ह्येपि । हृदयान्तर्गतो मन्युर्नादग्ध्वा विनिवर्तते ॥ [ अवदात ] सिते । कुन्दावदातं यशः । पीते । द्विरदरदनावदातम् । विशुद्धे । सत्यावदाते वचसि त्वदीये ॥ **360** ॥

[ प्रतिक्षिप्त ] निराकृते । प्रतिक्षिप्तो° Mh. 4, 115 । प्रेषिते । पर° Mh. 4, 115 ॥ [ अधिक्षिप्त ] ऊर्ध्वाहिते । अधि° Mh. 4, 98 । भर्त्सिते निन्दिते च । अधिक्षिप्तोपि विकृतिं न याति क्वापि सज्जनः ॥ **361** ॥

[ भोगवती ] द्वयेपि । भोगवत्यपि वसुंधरां श्रिता ॥ [ ऐरावत ] ऋज्वायते शतक्रतुचापे । Ra. 1, 36 । गजे । ऐरावते° Su. 2493 ॥ **362** ॥

[ निराकृति ] अस्वाध्याये । ब्रह्मबन्धो मुनिखेटे निराकृतिः [ sic ] c. H. Ch. 12, 1 । प्रत्यादेशे । एतन्माननिराकृतौ कुलिशतां यातं विधोर्मण्डलम् ॥ [ प्रतिकृति ] प्रतिमायां प्रतिबिम्बे । रम्यां रघुप्रतिकृतिः स° c. Ra. 5, 63 । प्रतीकारे । वैरप्रतिकृतौ दक्षः ॥ **363** ॥

[ अभिशस्ति ] त्रयेपि । Mh. 4, 99 ॥ [ दिवाकीर्ति ] द्वयेपि । Mh. 4, 110 ॥ **364** ॥

[ प्रतिपत्ति ] प्रागल्भ्ये । Ra. 1, 1 । गौरवे । Ra. 8, 64 । आरम्भे प्राप्तौ बोधे वा । अर्थानर्था विचिन्त्याः स्युः कार्याणां प्रतिपत्तयः ॥ [ धूमकेतु । उत्पाते । Ku. 2, 32 ॥ [ हैमवती ] वचाकाञ्चनीहरीतक्य ओषधिभेदाः । गङ्गागौर्योः । चुकोप° Mh. 4, 132 ॥ **365** ॥

तत्र जातादिषु त्रिलिङ्ग्याम् । Ku. 3, 23 ॥ [ वैजयन्ती ] पताकायाम् । Śi. 6, 69 ॥ [ रविसुत ] यमे । रविसुतभयं न पश्यति । मनौ । रविसुतगदितेन निश्चयः स्यात् ॥ **366** ॥

सौरे । उच्चैः स्थितो रविसुतो विदधाति सर्वम् । कर्णे । तीक्ष्णाः शरा रविसुतस्य निपेतुरुग्राः । सुग्रीवे । Ra. 12, 104 ॥ [ निपातित ] द्वयेपि । निपातितपितृभ्रातृमातामहपितामहम् ॥ [ देवखात ] ह्रदे । M. 4, 203 । गुहायां प्रसिद्धम् ॥ **367** ॥

[ प्रजावती ] भ्रातृजायायाम् । Ra. 14, 45 ॥ [ समुद्रान्ता ] भूमौ । समुद्रान्तां स्थिरां शुद्धाम् । कार्पासी तूलम् ॥ **368** ॥

[ उपरक्त ] राहुग्रस्तेर्के । उपरक्तोपि विवस्वान्न जातु कान्तिं निजां त्यजति । व्यसनार्ते । नैवोपरक्तहृदयस्य हिताहिते स्तः । आत्तरागे । एतन्मे नितरां दुनोति हृदयं कोपोपरक्तं मुखम् ॥ [ प्रबोधित ] अवगमिते । उपदेशवचः प्रबोधितस्तव संयाति विहाय संवृतिम् । अपास्तनिद्रे । प्रबोधितो यः स्तुतिगीतमङ्गलैः c. Ki. 1, 38 ॥ **369** ॥

[ समाघात ] एषां सूक्ष्मो भेदः ॥ [ पिपतिषत् ] द्वयेपि । पिपतिषतां किमसाध्यं श्वभ्रेपि स्वं परिक्षिपताम् ॥ [ प्रणिहित ] न्यस्ते । मन्द॰ Mh. 4, 115 । समाहिते । भाव्यं त्वया प्रणिहितचेतसा ॥ 370 ॥

न्यासे समाधौ च प्रणिहितं भावमात्रम् ॥ [ अभियुक्त ] सक्ते। युक्तोभियुक्तो जनः । आक्षिप्ते । अभियुक्त इमान्महीभुजः c. Ki. 2, 46 ॥ [ मूर्धाभिषिक्त ] द्वयेपि । Mh. 5, 20 ॥ 371 ॥

[ यादसांपति ] द्वयेपि । Mh. 5, 21 ॥ [ परिभाषित ] समन्तादुच्यमाने। परिभाषितभाष्यशिष्यवर्गं गुरुगेहम् । नियमे । षट्कर्मानुष्ठानं द्विजानां परिभाषितम् ॥ 372 ॥

[ पृथु ] आदिराजे दीर्घे च । Su. 2502 ॥ [ पृथ्वी ] धरण्याम् । Bā. I, 48 ॥ 373 ॥

[ ग्रन्थि ] पर्वणि यन्त्रणायां च । Śu. 1002 c. Bh. Ś. 82 । संधाने। मृगत्वचं ग्रन्थिमतीं वसानम् c. Ku. 3, 46 । पिटके । ग्रन्थे मा गुरुगर्वमुद्वह सखे ग्रैवेयकोस्मीति भोः ॥ [ अर्थ ] अभिधेये । Ra. 1, 1 । विषये । इन्द्रियाणीन्द्रियार्थेषु । राथि धने । Sp. 606 । प्रयोजने । Su. 1472 । वस्तुनि । सर्वमि॰ Mh. 2, 209 ॥ 374 ॥

[ तीर्थ ] सोपाने । Ra. 16, 33 । अत्र हि सोपानेन तरणमार्गो लक्ष्यते । पात्रे । Ra. 5, 15 । अर्हत्सेविते । नृणां पापकृतां तीर्थे पापस्य शमनं भवेत् ॥ दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषगित्यादावागमे । गुरूपचारात् ॥ स्त्र्यृतौ । कामं तीर्थे स्त्रियं यायाद् ब्रह्मचार्यन्यथा भवेत् । सत्त्रिणि यज्ञप्रवृत्ते । फल॰ Mh. 2, 213 । उपाये । अनेन तीर्थेन हि किं न साध्यते ॥ [ प्रस्थ ] सानौ । Ku. 1, 54 । सर्वारम्भास्तण्डुलप्रस्थमूला इत्यादौ माने । पलानां विंशतिः शतं च प्रस्थः ॥ 375 ॥

[ गाथा ] या संस्कृते आर्या सा प्राकृते गाथा । वाग्भेदे सा गीतपदपाठे । यथा । गाथाः पठेश्च मधुरं मदनाग्रदूतीरित्यादौ ॥ [ ग्रन्थ ] निर्ग्रन्था आर्हता निर्धना इत्यर्थः ॥ [ आस्था ] आस्थीयतेस्यामित्यास्था आस्थानी । आशायाम् । आस्थापरास्था सदृशी तवैवम् । आदरे । Ku. 6, 63 । यत्ने । आस्थापरेणैव

जनेन लभ्या पदद्वयी ते यदपि त्रिनेत्र ॥ [ संस्थ ] स्पशे चरे पुंसि । संस्थैः स भीक्ष्य परकृत्यमनन्यकार्यः ॥ 376 ॥

[ संस्था ] व्यवस्थायाम् । संस्थामनालोच्य विकारमेति । मरणे । संस्थां गतो विकारः । यागोपकरणे [sic] । द्वैधं संस्थां कृत्वा घर्मं सौत्ये प्रयुञ्जीत ॥ [ वीथी] वेश्माङ्गेन्वेष्यम् । वर्त्मनि । विहारवीथीव मनोभवस्य ॥ 377 ॥

[ सिक्थ ] पुलाक ओदननिष्पत्तिपरीक्षा । अन्तर्निविष्टसिक्थिततौरुष्किकखुरिशकादिचरणत्रः c. Kuṭṭ. 64 इत्यादौ मदने नपुंसकम् । एतत्तु मचनमिति वैद्याः । मच मुचि कल्क इति धात्वर्थानुगुण्यमस्मिन्नेव पक्षे दृश्यते ॥ [ कुथ] दर्भेषु । कुथपवित्रकपूतकरो द्विजः ॥ 378 ॥

[ मन्थ ] मन्थाने । Su. 35 ॥ [ सिद्धार्थ ] द्वयेपि । सिद्धार्थता स्फुरति तावदियं स्फुटैव सद्वृत्तता स्फुरति सर्षप तावदेव ॥ [ समर्थ ] शक्तिस्थे । समर्थो धर्ममाचरेत् । संबद्धार्थे हिते वा । तथा समर्थां गिरमूचिवांसम् ॥ 379॥

[ क्षवथु ] द्वये । सुतीक्ष्णक्षवथूद्गारसंतापाचान्तविग्रहः ॥ [ उपस्थ ] अङ्के उत्सङ्गे गुह्ये च । उपस्थसंस्थापरिचुम्बनोन्मुखी ॥ [ निर्ग्रन्थ ] निष्परीवारः परिवारकरहितः क्षपण आर्हतः ॥ 380 ॥

[ उन्माथ ] पाशयन्त्रके । उन्माथबद्धमार्गस्य गजस्येव विचेष्टितम् । वधो मारणम् । घातस्ताडनं च ॥ [वयःस्थ] यूनि । एते वयःस्थाः स्थपुटेपि मार्गे ॥ 381॥

[ मन्मथ ] कपित्थः फलविशेषः । कामे । Ku. 3, 21 ॥ 382 ॥

[दशमीस्थ] क्षीणरागः शान्तचित्तः । वयोतिगो वृद्धः । यथा । M. 2, 138॥ [ अनीकस्थ ] द्वयेपि । अनीकस्थैः स्वस्थैः स्थितिरिह कथं शत्रुनिधने ॥ 383 ॥

[ हृद् ] मनसि । हृद्युन्मादकराः शशाङ्करुचयश्चेतोहरः पञ्चमः । वक्षसि । Ku. 3, 50 ॥ [ भिद् ] दारणं मारणादि भेदो विशेषः ॥ [ वन्दी ] मर्यादापालनधनादिनिर्ग्राहणार्थं स्वकपुत्रादिनिवेशनं पणबन्धः । हठहृतायाम् । मोक्ष्यथ स्वर्गवन्दीनां वेणीर्वीर्यविभूतिभिः c. Ra. 10, 47 ॥ 384

[ पद ] व्यवसाये निश्चये । चित्ते विचाररहिते च पदं न किंचित्समयस्स्फुरत्यहह कोपि विधिः प्रमादः । परमं पदमार्तचेतसामभविष्यं यदनश्वमीश्वर इत्यादौ परित्राणे [ ?c. Mh. 2, 226] । स्थाने । Ki. 2, 30 । वस्तुनि न्यासे चरणक्रमे

च। पदे पदे स स्खलितानि रक्षन्। अपदेशे व्याजे। अलुपदेन विगलितस्त्यक्तो मानस्तया वाचीत्यादौ। पादे। Ku. 5, 85। तन्मुद्रायाम्। Ku. 1, 6। चिह्ने। Ku. 2, 64। अक्षे अक्षांशे। पदमपि वेलापतितं बह्वपि विभवः प्रशंसन्ति। शब्दे। यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम्॥ **385**॥

[पाद] रश्म्यङ्घ्र्योः। Su. 547। तुर्यांशो दीनारादीनाम्। द्विपादा ऋगित्यादौ ऋगंशे। अग्र्यन्तपर्वते। Me. 19। वृक्षमूले। पादघातेन पादपाः॥ [संविद्] संकेते। Ra. 7, 28। ज्ञाने। तदृष्टाविव दृष्टेषु संवित्सामर्थ्यभाविनः। कालेन्वेष्यम्॥ **386**॥

संभाषणे। तदा° Mh. 2, 232। क्रियाकारे प्रतिज्ञायां वा। संविदि स्मरणीयं तदन्यथा हीयते ततः। आचारे। कथं° Mh. 2, 233। नाम्न्यप्यन्वेष्यम्॥ [दृशद्] निष्पेषणशिलायाम्। संपिष्यतां दृशदि संप्रति चन्द्रमूर्तिः। शिलामात्रे। Me. 55॥ [भेद] विदारणे। Ku. 8, 86॥ **387**॥

उपजापे। आकोपितान् भेदसहान्करोति सः। विशेषे। शब्दभेदे स्मृतिः कथम्॥ [गद] हरेर्भ्रातरि आयुधे च। सगदः सह सारणेन तम् c. Śi. 16, 13॥ [संपद्] श्रियाम्। संपदि दानं दीनजने विपदि न धैर्यं यस्य। उच्छ्र्ये आधिक्ये। Ki. 1, 17॥ **388**॥

[कन्द] — — — — इत्यादौ मूले। किं° Sp. 1725 इत्यादौ सूरणाख्ये शाकभेदे। सूरणशब्देन च समस्तशाकोपलक्षणम्॥ [छद] ओष्ठे। दन्तच्छदे बिन्दुपवित्रितोदरे। गरुत्सु पक्षेषु। सितच्छदैर्मण्डलितोच्चपुच्छैः॥ [ह्रद] तोयाशये। Ra. 7, 27। स्रोतसि। प्रवृत्तघोषा रुधिरह्रदाकुलाः॥ [बिन्दु] तथेयं बैन्दवी कलेत्यादौ वबयोरेकत्वस्मरणाद्वेदितरि बिन्दुः। विप्रुषि। Ku. 5, 24॥ **389**॥

दन्तक्षते शून्ये च। एतच्चित्रं त्वदधरदलं बिन्दुनैकेन युक्तं धत्ते शोभां तव सुवदने यत्परात्रीतिरिक्ताम् [sic]। अर्थप्रकृतौ। बीजं बिन्दुः पताका च c. Daś. I, 17। भ्रूमध्यतेजसि। S. P. 25॥ [स्वादु] इष्टेपि। Śi. 10, 3॥ [मृदु] अभीक्ष्णे। मृदु धनुर्वहता किल कौसुमं किमिव कृत्यमनेन तपस्विना। कोमले। मृदुभाषिणि ते मुखेन्दुना॥ **390**॥

[ छन्द ] अभिप्राये । छन्दानुवर्ती विपदं न याति । वशे । Su. 1472 ॥ [अब्द] जीमूते । शारदाब्दसदृशं यशस्तव । वत्सरे । लौकिकाब्दान्विनिक्षिपेत् ॥ [ स्वेद ] घर्मे । स्वेदो नवः किं° c. Ku. 3, 33 । स्वेदने । स्वेदोदयो नवज्वरे । स्तम्भः स्वेदोथ रोमाञ्च इत्यादौ कामहेतुके घर्म एव सात्त्विको भावः ॥ 391 ॥

[ छेद ] विरामे । Ku. 2, 41 । खण्डे । Me. 11 ॥ [ शाद ] जम्बाले । आस्त्यान° Mh. 2, 232 । शष्पे । Ra. 2, 17 ॥ [क्षोद] विमर्दे । क्षोदक्षमक्षुण्णं° c. R. K. II, 8 । चूर्णे । कर्पूरक्षोदधूसरम् ॥ [ नाद ] प्राणे । बिन्दुनादगमनागमनाभ्याम् । शब्दे । M. M. 178, 2 ॥ 392 ॥

[ शरद् ] वत्सरे । M. Ch. I, 42 । ऋतौ । Su. 965 ॥ [ क्रव्याद् ] हयेपि । Ra. 15, 16 ॥ [ सूद ] सूपे । सूदखादनविषूचिकाचितः । ऊषरभूमिके देशे । सूदे दामोदरीये हि विप्रशापात्समर्पिताम् c. Râj. I, 157, 167 ॥ 393 ॥

[ कुन्द ] भ्रमे उल्लेखयन्त्रे । An. II, 80; c. Nai. 19, 54 । पुष्पभेदे शैशिरे । कुन्दे नन्दति कैरवे विहरति पङ्केरुहे रोहति ॥ [ मन्द ] अपटौ इभजातौ च । Śi. 5, 49 । शनैरर्थे । Me. 9 । मूढे । Ra. 1, 3 ॥ 394 ॥

[ मद ] क्षैब्ये । दृष्ट्वा ततश्च तरुणेन मदेन लब्धाम् । गर्वहर्षयोः । Ra. 4, 22 । इभदाने । R. K. 1, 1 । मद्ये । Ku. 8, 76 v. l. ॥ [ ककुद् ] राजलिङ्गे । उच्छ्रितककुदि महाबलचतुरङ्गबलान्विते नृपतौ । पृष्ठाङ्गे । आवर्तान्द्यन्त्यशुभानभिमकाये ककुद्धवं मुक्त्वा [c. Pa. 1662] । समुल्लिखन्° Ku. 1, 56 इत्यादौ त्वतिशयिते पृष्ठाङ्गे रूढः । श्रेष्ठे प्रसिद्धः ॥ 395 ॥

[ निषाद ] लुब्धके । Ra. 13, 59 । संकरजन्मनि । M. 10, 8 ॥ 396 ॥

[ ककुद ] प्रधाने । अस्य राजककुदस्य कापि सा कीर्तिरुल्लसति लोकपावनी । राजलिङ्गे । Ra. 3, 70 । पृष्ठाङ्गे । ककुद° Mh. 2, 220 ॥ [ मर्यादा ] धारणायां स्थितौ । Bh. Ś. 92 । सीमनि । मर्यादां सागरस्त्यजेत् ॥ [ विषद ] व्यक्ते । Ku. 3, 33 । विषदचन्द्रिकया व्यवभासितमित्यादौ विषदे पिच्छिलगुणविपरीते शुक्लत्वोपचारात् ॥ 397 ॥

[ गोविन्द ] इयेपि । गोविन्दता च विहिता भवता यथार्था ॥ [ कुमुद ] कपिजलजयोः । H. Ch. 5, 5 । नागो दिग्गजः । भुजगविशेषश्च ॥ [ कुमूद ] वृद्धिजीवने । कुसूदकृषिवाणिज्यैर्वैश्यवृत्तिरुदाहृता ॥ 398 ॥

कुसेवके आलस्योपहते । प्रज्ञा करोति किं तस्य यः कुसूदेन वर्तते ॥ [ प्रतिपद् ] ज्ञाने । भावैर्नित्यानुबद्धा प्रतिपदियमहो दीर्घदीर्घा स्थिता ते । तिथौ । Ra. 8, 64 ॥ [ प्रसाद ] अनुग्रहे । Ku. 3, 10 । नैर्मल्ये । प्रसादमादर्श इवान्तरात्मनि । प्रीतिदाने । राज्ञां प्रसादीकृतमेतदत्र ॥ 399 ॥

[ आक्रन्द] साराव रुदिते । आक्रन्दस्तनिते० Dhv. 92, 11 ; Su. 1776 । भ्रातरि । निराक्रन्दो जीवलोकः । दारुणे रणे । आक्रन्दे महति जहर्ष राजलोकः । पाश्चात्ये राजविशेषे । आक्रन्दसदीपितजैत्रयात्रः ॥ [ गोष्पद ] माने । K. K. S. 1, 1 । सेविते देशे । गोष्पदेषु विचरन्न पूयते ॥ 400 ॥

[ शारद ] अधृष्टनवसंवत्सरेष्वन्वेष्यम् । शरद्भवे देव्यां च । Su. 1 ॥ मुद्गेपि शारद आयुर्वेदे प्रसिद्धः ॥ 401 ॥

[ कुविन्द ] भ्रमिः शिल्पिभाण्डम् । वायकेपि । K. Pr. 141, 6 ॥ [प्रमदा] तरुण्याम् । Ra. 9, 41 । हर्षे पुंसि । Śi. 13, 2 । अधिकमदे त्रिषु । प्रमदद्विरदोपबृंहितः ॥ 402 ॥

[ उपनिषद् ] त्रयेपि । M. M. 14, 3 । रहःशब्देन रहसि भवं वस्तूच्यते ॥ [ शतह्रदा ] शतह्रदेन्द्रायुधभीमदर्शन इत्यादौ द्वयेपि ॥ [ तमोनुद ] त्रयेपि । उदिते तमोनुदे हि प्रभवति न तमः क्वचित्स्थातुम् ॥ 403 ॥

[ समर्याद ] मर्यादासहिते । K. Pr. 121, 3 । अभ्यर्णे निकटम् ॥ [ अववाद ] निन्दायाम् । दुष्टोयमववादस्ते ॥ [जनपद] देशे । H. Ch. 106, 5 । जने । Ra. 9, 4 ॥ 404 ॥

[ विष्णुपद ] गङ्गायां हर्यङ्घ्रौ च । स्नात्वा विष्णुपदीतोये याति विष्णुपदं पुमान् । आकाशे विष्टपे लोकमात्रे च । भ्रान्त्वा विष्णुपदं प्रयाति शनकैरस्ताचलं भास्करः ॥ [ अभिमर्द ] युद्धे । युक्तं० Mh. 4, 136 । पीडायाम् । तीव्राभिमर्दपरिहारनिविष्टबुद्धेः ॥ [ विशारद ] द्वयेपि । Su. 1 ॥ 405 ॥

[ कोकनद ] द्वयेपि । फुल्लकोकनदकान्तितस्करी ॥ [ परिवाद ] वादनोपाये । Śi. 6, 9 ॥ [ अष्टापद ] हेमनि । Ku. 7, 10 ॥ **406** ॥

शारिफले । H. Ch. 10, 11 ॥ [ अपवाद ] गर्हायाम् । जनापवादादपरज्यति श्रीः । बाधके । Ku. 2, 27 । बाधने । सुखापवादाय भवन्ति शत्रवः ॥ **407** ॥

[ ऋद्धि ] लक्ष्म्याम् । Ku. 7, 52 । प्रभावे । K. K. S. 1, 8 । अतिशये । Bh. Ś. 28 ॥ [ व्याधि ] आमये । Su. 1103 ॥ **408** ॥

[ मधु ] वसन्ते । Ku. 3, 21 । दैत्यभिदि । त्रायन्तां वो° Dhv. 1 । चैत्रे । Ra. 11, 7 । मद्ये । Śi. 10, 3 । पुष्परसे । मधुपिपासुमधुव्रतसेविभिः c. V. K. V, 2, 14, C. । क्षौद्रे । यन्माधुर्यं मधुनि त्रिदशेन्यत्र तन्नैव वेधाः । मधुरे । मधुनि विमले मद्ये चेतो न कस्य विधास्यति ॥ **409** ॥

[ आधि ] बन्धके विनिमयस्थापिते वस्तुनि । आधिः सीमा बालधनं निक्षेपोः [ sic ] स्वामिविक्रयः c. M. 8, 149 । व्यसने । Me. 86 । चेतसः पीडायाम् । शाधि मामाधिपीडितम् । अधिष्ठानेन्वेष्यम् ॥ [ विधु ] विष्णौ । विधुर्दानवनारीणां वैधव्यव्रतशिक्षकः । शशिनि । Śi. 2, 61 ॥ [ बाध ] दुःखे । प्रशान्तबाधं द्विषतोभिरक्षयेत् । निषेधे । निर्बाधे विधुरेप्यधीर इति मां येनाभिधत्ते भवान् ॥ **410** ॥

[ सिन्धु ] नदभिदि । Ku. 3, 6 । देशभिदि । स्फूर्जत्सिन्धुरभङ्गुरे रणमुखे जित्वा भटान्सैन्धवान् । अब्धौ । त्वत्स्मृत्या तु प्रथितविभवोप्यन्धुतामेति सिन्धुः । सरिति । Pa. 1151, Z. D. M. G. 36, 535, 2 ॥ [ विधा ] विधौ विधाने । Ra. 1, 94 । प्रकारे । M. St. 2 । गजान्ने वेतने च । स्व° Mh. 2, 245 ॥ **411** ॥

[ वधू ] जायायाम् । Ku. 6, 82 । स्नुषायाम् । Ra. 1, 65 । स्त्रियाम् । M. M. 154, 1 । प्रियङ्गुलता ॥ [ निधि ] निक्षेपे । अनिक्षिप्ते निधौ यत्र विवादः संप्रजायते । गूढार्थे । तस्य शङ्कनिधिन्यायो न कथं पर्यवस्यति । स्थाने । त्वं तावत्त्रिधिग्गसामसहना मानोन्नता सा पुनः ॥ [ श्रद्धा ] द्वयेपि । Ra. 2, 16 ॥ **412** ॥

[अन्ध] तमसि । अन्धा॰ Mh. 2, 234 । जले । आदरेण धृतिं सन्वी सा बबन्धान्धकेलिषु । अदृष्टौ । श्रुत्वापि नाम बधिरो दृष्ट्वाप्यन्धो जडो विदित्वापि । अज्ञानेपि ॥ निःश्वासान्ध इवादर्श इत्यादौ तूपचारात् c. Dhv. 63, 3; Mh. 2, 234 ॥ [संधा] द्वयेपि । Ra. 14, 52 ॥ [सुधा] मक्षोले । V. Ś. III, 2 । अमृते ओषधिभेदे च । सुधासारस्यन्दी शिशिरकिरणः शष्पकवलः ॥ **413** ॥

[विधि] विधायके वाक्ये विधाने च । Ku. 5, 32 । दैवे । K. Pr. 237, 2 । स्रष्टरि । कोयं विधेः प्रक्रमः K. Pr. 54, 2 or M. M. 183, 4 ॥ [श्राद्ध] हव्यकव्यविधौ दैवे पित्र्ये कर्मणि । M. 3, 145 । श्रद्धासमन्विते । श्राद्धश्चान-सूयश्च c. M. 4, 158 ॥ **414** ॥

[संधि] भगे सुरुङ्गायां च । संधिं भित्त्वाविशच्चोरश्छिद्रान्वेषणतत्परः । संधाने । दूतोक्त कामकलहेषु विसर्जनीयः संधिः कथं नु सखि तत्र स यत्र लुप्तः । गुणभेदे । संधिं करोतु भवतां नृपतिः पणेन ॥ [गोधा] तले ज्याघातवारणे । शरासनाभ्यासविधौ समाप्ते क्षिप्तेव गोधा मकरध्वजेन N. Ch. I, 28 । निहाका पञ्चनखो बिलेशयः प्राणिविशेषः । यथा । गोधा लङ्गूलबद्धेवाक्षिप्यमाणा बलीय-सेत्यादौ ॥ [बुध] विदुषि । Dhv. 2, 1 । महामरयोः । Ra. 1, 47 ॥ **415** ॥

[राधा] कृष्णजायायाम् । Gît. I,1, d । शरव्ये । राधायन्त्रं रचयत पुन-र्विद्धमप्यस्तु विद्धाम् [?] । कर्णमातरि । Ki. 3, 21 ॥ [वृद्धि] वर्धने । A. S. 70, 9 ॥ **416** ॥

[सिद्धि] निष्पत्तौ । Ku. 3, 57 ॥ [बन्ध] स्नेहे । बिभेद नो तां प्रति तस्य बन्धः । आधिर्विनिमयस्थाप्यं वस्तु । बन्धने रचनायां च । H. Ch. 3, 3 । वृन्तेपि । Me. 10 ॥ [स्कन्ध] स्कन्धावलम्बी भगवानेष बालदिवाकर इत्यादौ वातनियतावधौ । वातस्कन्ध इति प्रसिद्धः । अंसे च । आदिग्रहणाद्दीना-रादिनियतावधौ ॥ **417** ॥

राजनि । विवेश सहसा तत्र स्कन्धावारमवारितः । अत्र हि स्कन्धं राजान-मावृणोतीति स्कन्धावारः सेनासंनिवेशः । तरुजङ्घायाम् । Ku. 3, 26 । समूहे । Śi. 2, 28 ॥ [वीरुध्] द्वयेपि । M. M. 305, 3 ॥ [अर्ध] खण्डे । Me. 55 । समेंशके । Śi. 9, 29 ॥ **418** ॥

[ बुद्ध ] दोषज्ञः पण्डितः । सुगते । बुद्धं सधर्ममथ सार्यगणं प्रणम्य ॥ [ शुद्ध ] एकस्मिन्नसहाये पूते च । K. Pr. 363, 9 ॥ [ वृद्ध ] द्वयेपि । अनु° Mh. 2, 247 ॥ [ साधु ] शोभने । Ki. 1, 5 ॥ **419** ॥

वार्द्धुषिर्वृद्धिजीवी । सज्जने । तत्साधवो ननु विदन्ति वदन्ति° Su. 271 ॥ [ सिद्ध ] देवविशेषे । Ku. 1, 5 । निष्पन्ने । M. St. 15 । पूज्ये । अवाप्त° Mh. 2, 251 ॥ [दिग्ध] विषलिप्ते शरे । अथ तैः परिदेविताक्षरैर्हृदये दिग्धफलैरिवार्दितः c. Ku. 4, 25 । लिप्तमात्रके । M. M. 54, 5 ॥ **420** ॥

[मुग्ध] मनोहरे । M. M. 51, 2 । योषिति । दीपं मुग्धा वयमरुता [sic] यत्र शान्तिं नयन्ति c. Mh. 2, 242 ॥ [विद्ध] सूच्यादिभिन्ने । विन्यस्तवैडूर्यशिले च तस्मिन्नाविद्ध° c. Ku. 7, 10 । सम्यग्विद्धं तु तत्ताम्रमित्यादावादिमहणाद्रसादिव्यत्रधानेपि । साहृदयेन्वेष्यम् । ज्ञे । किमिव हि न विवेक्तुं रजते [ sic ] हन्त विद्धाः c. Mh. 2, 245 ॥ **421** ॥

[ गन्ध ] घ्राणग्राह्ये । यद्गन्धान्धं भ्रमरपटलम् । स्वल्पे । जलदगन्धिरराजत सानुमान् । अल्पे जलदा यत्र स जलदगन्धिरिति व्युत्पत्त्या । द्रव्ये । गान्धिकैर्विपणयो विराजिताः । अत्र हि गन्धशब्दस्तद्वति वर्तते । संबन्धमात्रके । वशानागौ सगन्धाल्पकलभानुगताविव ॥ [ लुब्ध ] स्पृहावति । Ku. 1, 34 । मृगयौ ॥ तेपि क्रूरचमूर° Su. 1016 c. Bh. Ś. 87 ॥ **422** ॥

[ मागध ] वन्दिनि । Śi. 11, 1 ।पिप्पली द्रव्यभेदः । यूथिका हरणिका अत्र मागधिशब्दः ॥ [ न्यग्रोध ] व्यामे प्रसारितकरद्वयवलिते । न्यग्रोधभेयचतुरश्रनितम्बबिम्बा ॥ **423** ॥

[ प्रबोध ] जागरे उद्घाटे च । सुखप्रबोधगलिता सुवर्णघटनोज्ज्वला c. H. Ch. 7, 1 । उद्घाटोर्थात्रगमः ॥ [ उत्सेध ] वपुषि । स्थूलोत्सेधव्यवहितरविस्यन्दनः कुम्भकर्णः । उन्नतौ । Ku. 5, 8 ॥ [ विवध । वीवध ] पर्याहारे अध्वनि च । Śi. 2, 64 । पर्याहारस्तृणजलान्नादीनामन्यत आनयनम् । भारे । H. Ch. 13, 14 ॥ **424** ॥

[ परिधि ] उपसूर्यके मण्डले । परिधिमुक्त इवाहिमदीधितिः c. Ra. 8, 30 ॥

[ समाधि ] ध्याने । Ku. 3, 40 । नीवाकः । नियतं वचनम् । नियमे । यदा फलं सर्वसमाधिसाधनं° c. Ku. 5, 18 । समर्थनेपि । कृतसमाधिरपि चपलः ॥ 425 ॥

[ प्रणिधि ] प्रार्थने । प्रणिधिवशादुपजातसत्प्रभावः । चरे । Ku. 3, 6 ॥ [ अवधि ] परिच्छेदे । Me. 84 । बिलेन्वेष्यम् ॥ [ अगाध ] अतलस्पर्शे । अगाधसंशयाम्भोधिसमुत्तरणसाधनी । गर्ते । दुष्टा° Mh. 3, 333 ॥ 426 ॥

[ उपधि ] व्याजे । Ki. 1, 45 । रथाङ्गं चक्रनाभ्यन्तःप्रवेशी काष्ठविशेषः ॥ [ विबुध ] द्वयेपि । K. Pr. 255, 5 ॥ [ आनद्ध ] द्वयेपि । आरब्धानद्धतूर्यध्वनिमुखरमुखा रेजुरुच्चा निवासाः ॥ 427 ॥

[ उपाधि ] धर्मचिन्तायाम् । विनोपाधेः शास्त्रं तृणतुषबुसप्रख्यमखिलम् । कुटुम्बव्यापृतेन्वेष्यम् । विशेषणोपार्जनयोः । उपाधि° Mh. 3, 335 ॥ [ प्रबुद्ध ] ज्ञानिनि जाग्रति च । प्रबुद्धः सर्वदा तिष्ठेत् ॥ 428 ॥

[ संसिद्धि ] सम्यक्सिद्धौ । संसिद्धिसिद्धविभवा मुनयः प्रयाताः । स्वभावे । संसिद्धि° Mh. 3, 343 ॥ [ संनिधि ] प्रत्यक्षे । यातः सं° Mh. 3, 343 । संनिधाने । Ra. 7, 3 ॥ [ निरोध ] नाशे । स्थिति° Mh. 3, 338 । रोधे । Ku. 3, 48 ॥ 429 ॥

[ निषध ] कठिनेन्वेष्यम् । राजभेदे नगान्तरे च । Ra. 18, 1 ॥ [ कबन्ध ] त्रयेपि । स्फूर्जत्कबन्धविधुरारवपूरिताशं संग्रामवार्धिमवलोक्य न हृष्यते कः ॥ 430 ॥

[ आबाध ] द्वयेपि । आबाधविधुरे चित्ते धृतिः कस्य न हीयते ॥ [ संबाध ] योनौ । करिहस्तेन संबाधं विलोडयेत् c. K. Pr. 190, 1 । संकटे । ययावसंबाधसुखेन मार्गम् c. Ra. 2, 72 ॥ [ विलब्ध ] द्वयेपि । Śâ. 39 । इतोनन्तरमवष्टब्धावधि त्रिषु ॥ 431 ॥

[ आविद्ध ] द्वयेपि । Vik. 115, c ॥ [ प्रसिद्ध ] द्वयेपि । Ku. 5, 9 ॥ [ विरुद्ध ] वैरिणि । त्वद्विरुद्धवनितासुसंततिः । विगुणे । नश्येद्विरुद्धाचरणेन बुद्धिः ॥ [ दुर्विध ] द्वयेपि । दुर्विधेषु विनयो न शोभते ॥ 432 ॥

[ अवष्टब्ध ] त्रयेपि । Mh. 4, 149 ॥ [ ब्रह्मबन्धु ] अधिक्षेपे । आ दुरात्मन्मुनिखेट ब्रह्मबन्धो c. H. Ch. 11, 14-12, 1 । ब्राह्मणनिर्देशे । ब्रह्मबन्धुरयमागतोतिथिः ॥ 433 ॥

[ अनुबन्ध ] दोषोत्पादे । महतां नास्ति कदाचनानुबन्धः । प्रकृत्यादेर्धातुप्रत्ययादिमध्याद्यः प्रयोगं नार्हति सोनुबन्धः । मुख्यानुयायिनि शिशौ चोदाहरणमन्वेष्यम् । प्रकृतस्यानुवर्तने । Ra. 1, 64 ॥ 434 ॥

[ महौषध ] एते द्रव्यभेदा महौषधाख्याः ॥ 436 ॥

[ पृश्नि ] अल्पतनौ । पृश्निवर्षवरमुख्यसेविते राजवेश्मनि विवेश संकटे । रश्मौ । अश्नुवन्ति रविपृश्नयो रसम् । वर्णभेदे ईषद्रक्ते । अल्पतनुवर्णयोस्त्रिलिङ्गः। रश्मौ पुंसि । गवि । पृश्नयः पपुरपः समागताः ॥ 437 ॥

[ यक्ष्मन् ] व्याधिभेदे । यक्ष्मणापि परि° Ra. 19, 50 v. l. । यक्षे प्रसिद्धः ॥ [ मुनि ] बुद्धे । मुनेर्मतं कस्य न माननीयम् । ऋषौ । Ku. 3, 24 ॥ [ शुष्मन् ] वह्नौ । शुष्मणि प्रणयनाभिसंस्कृते c. Śi. 14, 22 । बले । कः सहेत तव शुष्मसोष्मणः ॥ [ शृङ्गिन् ] प्रतिविषाविषयोरिन्नन्त एव पुंलिङ्गः । शृङ्गी विषं बलामोटा इति निदर्शनात् । केचिच्छृङ्गीशब्दमनयोरीकारान्तं मन्यन्ते । तत्पक्षे गान्तेषु स्त्रीलिङ्गो द्रष्टव्यः ॥ 438 ॥

दान्ते पर्वते च । आरुह्य सौधधवलं शृङ्गिणं व्यहरद्धरः । शृङ्गवति । Sp. 3214 ॥ [ हनु ] सृक्कणि । Su. 1677, d ॥ [ जटिन् ] उभयत्रापि । निःसृता मन्मुखाम्भोधेरपूर्वेयं सरस्वती । स्थाणुं त्वां जटिनं प्राप्य सामरस्यमुपैति या ॥ व्रतिनि । जटी मुण्डी शिखी वापि यत्र तत्राश्रमे रतः । पञ्चविंशतितत्त्वज्ञो मुच्यते नात्र संशयः ॥ 439 ॥

[ घन ] मेघे । Śi. 1, 7 । मूर्तिगुणे काठिन्ये । पेतुर्जनादभ्रघनादिवापः । घनादभ्रादिति द्वन्द्वार्थः । विस्तारे । अर्धैकादशपुरुषो घनो भवेन्मण्डले तु रथचक्रे । लोहमुद्गरे । अपतत्स घनैरिवाहतः ॥ अथ सुशिरघनावनद्धवाद्यध्वनिरहितेन हि रङ्गमङ्गलेनेत्यादौ वाद्ये नपुंसके । अन्यत्र तु पुंसि । मूर्तिनिरन्तरे कठिने । Śi. 5, 29 ॥ क्व प्रस्थितासि करभोरु घने निशीथे Sp. 1991, वर्त्मभिर्घनतमोमलीमसैः Bh. Ś. 6 इत्यादौ भूरितमोनैरन्तर्यमात्रे ॥ 440 ।

[ इन ] प्रभौ । Ra. 9, 5 ॥ [ राजन् ] त्रयेपि । राजा राजति राजवत् ॥ [ तनु ] त्वचि । तरुतनुभिः कृतवल्कसंहतिः । देहे । Śi. 1, 23 । तद्गुणे । Sp. 4554 ॥ **441** ॥

[ पर्वन् ] तिथिभेदे प्रतिपत्पञ्चदश्यन्तरे । पार्वणेन शशाङ्केन । क्षणे उत्सवे । विलोक्य° Mh. 2, 269 ॥ [ वर्त्मन् ] अध्वनि । Su. 2641 ॥ [ब्रह्मन्] वेदे । Ku. 6, 16 । तत्त्वे । Bhag. 4, 24 । तपसि । Bhag. 6, 14 । विप्रे । Pr. P. 5 ॥ **442** ॥

[ पक्ष्मन् ] अक्षिलोम्नि । Ku. 5, 24 । किञ्जल्के । कुसुमैस्तनुलग्नपक्ष्मभिः कुसुमेषोरिव यस्य सायकैः । निसर्ग° Śi. 1, 8 इत्यादौ आदिग्रहणाल्लोममात्रेपि ॥ [ आत्मन् ] यत्ने । Ra. 7, 12; Ku. 7, 64 । धृतौ । अवष्टभ्यात्मनात्मानं त्वं सारं वक्तुमर्हसि । बुद्धौ । Ku. 5, 76 । स्वभावे । न सन्ति याथात्म्यविदः पिनाकिनः c. Ku. 5, 77 । ब्रह्मणि वर्ष्मणि शरीरे च । Ku. 3, 50 ॥ क्वापि पुत्रेपि दृश्यते । Ku. 2, 61 । तथा । आत्मा वै पुत्रनामासीति निदर्शनात्पुत्रे c. Mahâbhâr. 1, 74, 63 ॥ **443** ॥

[ वर्ष्मन् ] देहे प्रमाणे च । व्याप्तं व्योमनि वर्ष्मणा यमपुरद्वारार्गलादारुणौ । आकारे सुन्दरे । वर्ष्मणा विदधती जगज्जयम् ॥ [ ग्रावन् ] द्वयेपि । अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ **444** ॥

[ शिखिन् ] वृक्षे अग्नौ च । शिखिमूलानि शिखी निहन्ति चित्रम् । कुक्कुटे । शिखिकुलकूजितसुभगे । बर्हिणि । Me. 101 ॥ [ सादिन् ] द्वयेपि । सादिभिः सुविहितेथ रथाश्वे ॥ [ वाजिन् ] अश्वे इषौ च । युक्तं चक्रुर्वाजिनो वाजितायाः c. Śi. 18, 13 । पक्षिणि । वाजिनो वियति संभ्रममापुः ॥ **445** ॥

[ सीमन् ] स्थितौ । अनुल्लङ्घितसीमानः सागरा इव साधवः । क्षेत्रे । अथाग्रे सीमानः परिणतशरच्छालिसुभगाः । अवधौ । Bâ. 1, 8 । मार्गविषये । यत्राज्ञातचराश्चिरान्नयनयोः सीमानमेति प्रियः ॥ [ लक्ष्मन् ] अग्र्ये प्रधाने । दृष्ट्वैव तं सूर्यकुलैकलक्ष्मा । चिह्ने लाञ्छने । Su. 1343 ॥ [ धामन् ] गृहे । Ku. 2, 1 । देहत्विट्प्रभावेषु । आत्मा° Mh. 2, 266 ॥ [ धन्वन् ] स्थले ।

नीलेषु धन्वसु लुठन्ति नदन्ति दान्ता भूमिं खनन्ति रभसान्निशितैः खुराग्रैः । धनुषि । धुन्वन्धन्व विघट्टयञ्शितशरैर्दर्पोद्धुरान्सिन्धुरान् ॥ 446 ॥

मरौ । धन्वनि तृषितः पुरुषो रश्मिषु तोयाशया पतति ॥ [ स्वम ] द्वयेपि । A. S. 187, 3 c. Dhv. 72, 4. Su. 2570 ॥ [ सून ] पुष्पे । Śi. 3, 17 । वधस्थाने । M. 3, 68 । जिह्वातले । सूना° Mh. 2, 286 ॥ 447 ॥

पुष्पितेन्त्वेष्यम् ॥ [ चक्रिन् ] अहौ । पदा स्पृशन्तं सहते न चक्री । रथे । वेगा° Mh. 2, 259 । तैलिके । दशसूनासमश्चक्री c. M. 4, 85 ॥ [ भर्मन् ] भृतौ । कर्मणे भवति भर्म सर्वथा । सुवर्णे । भाति भर्म परिकर्मवर्मदम् ॥ [ चर्मन् ] फलके । Śi. 18, 21 । त्वचि । Su. 803 ॥ 448 ॥

[ स्वामिन् ] द्वयेपि । प्रतिहतदुर्गः स्वामी ॥ [ जन ] द्वयेपि । Su. 1141 ॥ [ जनी ] वध्वाम् । यातेति जन्यान° Ra. 6, 30 v. l. ॥ [ज्योत्स्नी] चन्द्रयुतायां रात्रौ । V. Ś. III, 1 ॥ 449 ॥

[ अर्वन् ] द्वयेपि । वत योधाः स्थिरार्वाणः शत्रोरिव महीपतेः ॥ [ प्रेमन् ] स्नेहे । Sp. 1939 । नर्मणि । दृढस्थेमा प्रेमा रमयति मनो मार्गविधुरम् ॥ [ स्वैरिन् ] मन्दः शनैर्गामी । स्वच्छन्दे । बम्भ्रम्यन्ते वनभुवि सदा स्वैरिणो वैरिणस्ते ॥ [ श्येन ] श्वेते । श्येनीभिः सुरसिन्धुरोधसि तरुच्छाये कृतं मण्डलम् । विहंगमे पाजिकाख्ये । श्येनावदाते चकिता वनवर्तिका c. M. M. 286, 7 ॥ 450 ॥

[भानु] द्वयेपि । Sû. 1 ॥ [ वन ] काननीरयोः । सदृशे वनवृद्धानां कमलानां तदीक्षणे c. Mh. 3, 622 । समूहे । नवनलिनवनच्छायां धत्ते विधुरमरभुवि । पर्वते । Nâg. 4 ॥ [ तान ] तात्पर्ये । त्वदेकताना तनुतां तनोति सा । गीतविशेषे । तानास्त्वेकोनपञ्चाशत् ॥ 451 ॥

[ रत्न ] द्वयेपि । Ku. 1, 3 ॥ [ यान ] गमने । दिनैः कतिपयैर्यानं जीवितस्य विचिन्त्यताम् । युग्ये । Ra. 6, 10 । नृपगुणभेदे । यानं समाचरेच्छक्तौ ॥ [ धेनु ] दोग्ध्र्याम् । अजधेनुभिः सह समावसेत्क्षयी । गोमात्रे । Ra. 11, 74 ॥ 452 ॥

[ ग्रुम्न ] चयेपि । Kuṭṭ. 304 ॥ [ विन्न ] अनिर्विण्णो विन्नो यदि भवति नुन्नः स्मरशरैरित्यादौ लब्धे विद्लृ लाभ इत्यस्य । अन्यत्र विद विचारणे ॥ [ अर्थिन् ] द्वयेपि । Sp. 3336 ॥ [ स्थान ] स्थितौ भावमात्रे । स्थानं यद्यपि ते नास्ति विषयावेशचञ्चलम् । अवकाशे आस्पदे । Ku. 8, 33 ॥ **453** ॥

सादृश्ये । धत्ते पितृस्थानतया यः स्नेहं सर्वेषु जन्तुषु । गीतविषये । स्थानप्रदायित्व° c. Ku. 1, 8 । योग्ये । स्थानमेतदुचितस्य वस्तुनः । प्रसङ्गे । दर्भाणां स्थाने शरैरास्तरितव्यम् ॥ [ भोगिन् ] वैयापृत्यकरो व्यावहारिकः । व्यावहारिकभुजंगयोः । Bh. Ś. 37 । राजनि । अनयेन नदन्ति भोगिन इत्यादौ ॥ **454** ॥

[ ज्योत्स्ना ] ज्योतिष्मत्यां व्यभ्रायां रात्रौ । ज्योत्स्नासङ्गप्रसरसुभगे सैकतेस्मिन्सरय्वाः । चन्द्रमसः प्रभायाम् । Ku. 1, 25 ॥ [मान] प्रमाणे प्रत्यक्षादौ । मातृमानमिति मेयममीभिरित्यादौ प्रमाणे । प्रस्थादौ । तन्वङ्ग्यो मानमानव्यतिकरविधुराः । आदिग्रहणादुन्मानादयो गृह्यन्ते । चित्तसमुन्नतिश्चित्तोद्रेकः । तत्र पुंलिङ्गः । मन्यतेर्घञि । मानं° Su. 1161 । इत्यादौ ॥ **455** ॥

[ नग्न ] दिग्वाससि । Bâ. II, 4 । वैतालिके । नग्नाः पठन्तु यदि । आदिग्रहणाद्बन्द्यादयः ॥ [ भिन्न ] संस्कृते । Ku. 8, 74 । संस्कृतो विशेषितः । दारिते । भिन्नं भासा ननु हिमरुचेर्दण्डकाण्डं द्विजानाम् । अहमद्य प्रभृत्येव भिन्नो भवद्भ्य इत्यादावन्यशब्दाभिधायकः ॥ **456** ॥

[ वान ] शुष्के । Sû. 37 । शुष्कफले । आवानं कस्यचिन्मधु । सीवनकर्मण्यनुसर्तव्यम् । पै — — विशोषणे वेञ् तन्तुसंताने इति च धातुद्वयस्य रूपम् ॥ [ योनि ] भगे । Su. 2823 । आकरे । Ku. 6, 18 । आकर उत्पत्तिस्थानम् ॥ [ कृतिन् ] सूरौ । कल्यः कलासु च कृती दृढभक्तिराढ्यः । कृतकृत्ये । Ku. 6, 18 ॥ **457** ॥

[ स्नान ] सवने अभिषेके । स्नानैर्धूपैस्तथा दीपैर्नित्यमाराधयेच्छिवम् ॥ [ धन ] गोसंघे । धनमाराधयेत्केशवः ॥ [ चिह्न ] पताकायाम् । उच्चचिह्नसुरसद्मगोचरः । लक्ष्मणि । Ra. 2, 22 । लक्ष्म वस्तुनो विशेषकमभिज्ञानम् ॥ [ अन्न ] भुक्ते । अन्नेन कुक्षेर्द्वावंशौ । अद्यते चान्नमिति चान्नम् ॥ **458** ॥

[ छन्न ] छादिते । Me. 18 । रहसि । Sp. 2173 ॥ [ पान ] सदा रक्षस्युर्वीं तदपि च न पानव्यसनितेत्यादौ प्रकृतत्वेन रक्षणे ॥ [ दान ] खण्डने त्यागे च । गोत्राणां शतकोटिदाननिरतः । भूमण्डलदानसक्ता इत्यादौ रक्षणे च ॥459॥

संगीयमानत्रिपुरापदान इत्यादौ शुद्धिसंबन्धाच्छुद्धे कर्मणि c. Ku. 7, 48 । लूनौ । नामूलं° Mh. 2, 264 ॥ [ हीन ] ऊने । हीनातिमात्रमवशम् । गर्ह्ये । हीनजन्मा स वर्ज्यः ॥ [ रसन ] शृङ्गाररसना नाट्य इत्यादावास्वादने । एवं शृङ्गाररसनं नाट्यमित्यपि ज्ञेयम् ॥ 460 ॥

[ कुहना ] दम्भचर्यायाम् । An. IV, 11 । ईर्ष्यालौ त्रिलिङ्गकः । H. Ch. 202, 13 ॥ [ शिखरिन् ] तरौ । नास्त्याकाशः किमु शिखरिणां येन ते स्युः प्रलम्बाः । शैले । Su. 2030 ॥ [ तरस्विन् ] बलिनि । समरमूर्धनि तेन तरस्विना V. K. 5, 1, 9, C. । वेगिनि । अवनिमेकरथेन वरूथिना जितवतः किल तस्य तरस्विनः c. Ra. 9, 11 ॥ 461 ॥

[ विषाणिन् ] करिणि । Śi. 4, 63 । शृङ्गिणि वृषभे । वादे वादिविषाणिनां प्रशमितास्ता दर्पकण्डूतयः ॥ [ अवन ] प्रीणने तर्पणे । तृष्णालोर्हि मधूकपानमवनम् । अत्र रक्षणादिषु ॥ [ तलिन ] स्वच्छे निर्मले । सौधानां तलिनोदरेषु । अल्पे । तलिनोदरीणां निरन्तरकार्षितानाम् c. Mh. 3, 370 ॥ [ गहन ] गम्भीरे । गहनाशयानाम् । वने वृक्षबहलप्रदेशे । अविशदशनैर्विन्ध्यगहनम् ॥ 462 ॥

[ रोदन ] अश्रुणि नयनजलविमोचनव्यापारे । नेत्रे विरोदनाताम्रे । क्रन्दे । करुणो रोदनध्वनिः ॥ [ प्रज्ञान ] बुद्धौ । प्रज्ञानमीदृग्विधमस्ति यस्य । चिह्ने । प्रज्ञानेन वृषेण विद्धि गिरिशम् । भावे करणे च ल्युट् ॥ [ भुवन ] विष्टपे । Ku. 2, 40 । भुवनाभोगभूषणमित्यादौ जलेपि ॥ 463 ॥

[ द्विजन्मन् ] त्रैवर्णिके अण्डजे तारकासु च । Kâd. I., v. 13 । त्रय एव वर्णास्त्रैवर्णिकम् । ब्राह्मणक्षत्रियवैश्याः । विनयादिपाठात् स्वार्थे ठक् । दन्ते । सद्य° Mh. 3, 375 ॥ [ वर्जन ] परिहारे वर्जने पृथक्करणे । खलानां सुमतिः कुर्याद्दूरादेव तु वर्जनम् । त्यागे । रायामधाद्वर्जनमर्जितानाम् । हिंसायाम् । न स्यात्कलौ धर्जनमर्जुनीनाम् c. Mh. 3, 402 ॥ 464 ॥

[ निधन ] कुले । कलिपुरि निधनाधनानि न स्युः । अन्ते लक्ष्यतः । अन्तोत्र द्वादशं स्थानम् ॥ [ सूचन, °ना ] व्यधने । सीव्येत्ततः सूचनया कर्णपालीम् । विध्यतेनेन व्यधनम् । सीवनी ॥ अभिनये । सामाजिकाः सूचनाभिः सर्व एवात्र रञ्जिताः । संज्ञाक्रियायाम् । नयनसूचनयाप्यवगम्यते किमुत शब्दपरंपरया न किम् । पैशुन्यक्रियायाम् । न सूचनेभ्यो विरमन्ति दुर्जनाः ॥ 465 ॥

[ जीवन ] राजलभ्यांशे जीविते च । H. Ch. 60, 6 । तोये वर्तने च । तापे मरौ जीवनमेव जीवनम् । वर्तनं जीविका ॥ [ उद्वान ] उद्गमे ऊर्ध्वगमने । उद्वाने वाष्पपङ्क्तेः । चुल्ह्याम् । उद्वानाद्भाण्डमुत्क्षिप्य ॥ सुगन्धिगन्धनयोः शोषण इति च ॥ [ शयन ] रते । क्रान्ति° Mh. 3, 414 । शय्यायाम् । Su. 2112 ॥ 466 ॥

[ शासन ] लेखे । Ra. 3, 68 । लेखो हि संदेशप्रधानः । वस्त्रपट्टकादिः सर्वः ॥ शास्त्रे । शासनोक्तेन कर्मणा । आज्ञायाम् । Ra. 1, 30 ॥ [ वर्तनी ] वृत्तौ जीविकायाम् । कां वर्तनीमनुसरत्विह साधुमार्गः । मार्गे । V. K. p. 2, 2 ॥ [ तोदन ] व्यधने भर्त्सनादारभ्य लोहितव्युत्पादनपर्यन्ते ताडने । साहसं तु दमो दाप्यः कृते ब्राह्मणतोदने । तोत्त्रे प्राजनके । नाल° Mh. 3, 373 ॥ [प्रसून] उभयत्रापि । Śi. 1, 66 ॥ 467 ॥

[ छदन ] दले पल्लवे । छदनान्तरितातपांस्तरून्सः । पतत्रे पक्षे । चरन्ति चित्रच्छदनाः शिखण्डिनः ॥ [ विलग्न ] लग्ने सक्ते । नमन्ति° Mh. 3, 407 । शरीरमध्ये । Ku. 1, 39 । मेषादौ । विलग्नभवनं गते । तनुस्थे प्राग्लग्नगते ॥ [ सेवन ] प्रभोराराधने । स्वामिनः सेवनप्रीताः फलन्ति ॥ 468 ॥

सेवनगृहीतानां स्वामिपटानां क्षतिः क्व दृष्टेत्यादौ सीवनेपि । इत्यादौ पाशे [ sic ] ॥ [ बन्धन ] स्नेहे । किमस्ति मे बन्धनमत्र वस्तुनि । वृन्ते पुष्पनाले । कृतं न कर्णार्पितचारुबन्धनम् c. Śā. 145 ॥ [ नलिनी ] पद्माकरे । Ku. 4, 6 अब्जे । नयननलिनीनालपीतं° c. Su. 2057, V. A. 54, 16 ॥ 469 ॥

[ मैथुन ] संबन्धे । मेखलयोस्तत्र मैथुनं मतम् । संबन्धः श्लेषमात्रम् ॥ [ मिथुन ] उभयत्रापि । चक्रवाकमिथुनानि पीडयन् ॥ मिथुनमुपगतो ब्रह्मणो वज्रपाणेरित्यादौ युग्मरूढयैव राशिवाचकत्वम् ॥ [ सेनानी ] गुहे षण्मुखे ।

Ra. 2, 37 । सेनापतौ । Ku. 2, 51 । गुहे पुंसि सेनेशे तु त्रिषु ॥ [ ह्रादिनी ] वज्रे । ह्रादिनीव त्रिवृतस्थितिरेषा । विद्युति । तासामासीत्तमसि शरणं ह्रादिनीनां प्रकाशः ॥ 470 ॥

सल्लक्याम् । ह्रादिनीभङ्गिम् । नद्याम् । श्रान्तो याति त्वरितममरह्रादिनीपार्श्वमश्वः । नादवति त्रिलिङ्गः । निर्ह्रादिन्या॰ Nâg. I, 12 । सल्लकी ओषधिभेदः ॥ [ अशनि ] वज्रे विद्युति च अशनिः स्त्रीपुंलिङ्गः । वज्रे । Sp. 6389 । शम्पायां विद्युति च [sic] । Ku. 4, 43 ॥ [ पलाशिन् ] उभयत्रापि । पलाशिनां कः सहते विजृम्भितम् ॥ पलं मांसमश्नाति पलाशानि पत्राणि विद्यन्ते यस्य ॥ 471 ॥

[ अरत्नि ] कूर्परे बाहुमध्यसंधौ । छिन्नास्ताः प्रसरन्त्वरत्निभिरपि क्रुद्धा हि वीराङ्कुराः ॥ [ वागिनी ] वाणिनी समदस्यतेत्यादौ तन्त्रोक्त्या द्वयोरपि ॥ [ भोगिनी ] द्वयेपि । भोगिनी भाति सुभगा नरेन्द्रास्ते चकासति ॥ 472 ॥

[ प्रधान ] धीमहामात्यात्मसु । वृत्तिः प्रधानानुगता जनस्य । प्रकृतिसत्तमयोः । Śi. 15, prakshiptaśl. 2 ॥ प्रधाने हि कृते यत्नः फलवान्भवतीत्यादौ तु गुणापेक्षया दान्ते प्रधाने एव ॥ 473 ॥

[ जयन ] द्वयेपि । जयनमहाश्वसत्वराः । संनाहः संग्रामैकसात्करणम् ॥ [ व्यञ्जन ] लाञ्छने । अमात्यव्यञ्जना॰ Śi. 2, 56 । अत्र हि अमात्यव्यञ्जनं येषामित्यतोर्थः । निष्ठाने संस्कारके च । व्यञ्जनैः प्रववृते सुसंस्कृते वागियं रसवती कवेरिव । निष्ठानमक्षरम् । संस्कारकं दध्याद्यवयवा [?] अत्र व्यक्तयः । जात्यभिव्यञ्जकत्वाद्व्यञ्जनशब्दवाच्याः । यथा । सामान्यव्यञ्जने व्यक्तिरित्यादौ ॥ 474 ॥

वादित्रकरणे पुंसि । व्यक्तिर्व्यञ्जनधातुना दशविधेनाप्यत्र लब्धामुना । तथा च भरताचार्यः । विस्तारकरणश्चैव आविद्धो व्यञ्जनस्तथा ॥ [ कौलीन ] लोकवादे । Me. 109 । पश्वहिपक्षियुद्धे । कौलीनकेलिसमये समये क्षितीभृत् ॥ 475 ॥

[ उद्यान ] राजमार्गवनभेदयोः । उद्यानविहितक्रीडाभ्रूडाचुम्बितमस्तकाः । प्रयोजनेन्वेष्यम् ॥ [ वितान ] करकुके । Ki. 3, 42 । क्रतौ । Śâ. 83, d । तुच्छे । चित्ते तेतिवितानमारमति चेद्देवं भवानीपतिम् ॥ 476 ॥

मन्दे । पाण्डुत्वादनुमीयते तव सखे चित्तं वितानं मया । शून्येपि । Śi. 3, 50 । विस्तृतौ विस्तारे ना पुंलिङ्गः । प्रसिद्धमाताननवितानत्वात् ॥ [उत्थान] गृहान्तोद्यमपौरुषेषु । उत्थाने सुजने जनस्य रमते चेतो यथा सद्मनि । तन्त्रे राज्ञश्चतुरङ्गसाधने । उत्थाना° Mh. 3, 351 । संनिविष्टोद्गम आसीनस्य ऊर्ध्वक्रिया ॥ 477 ॥

[व्युत्थान] प्रतिरोधे प्रत्यक्षतद्योगादेश्चलने । प्रत्याहाराद्यसंस्पृष्टो विशेषोस्ति महानयम् । योगिभ्यो भक्तिभाजो यद्व्युत्थानेपि समाहिताः ॥ विरोधे । व्युत्थानं° Mh. 3, 412 ॥ [अञ्जन] कज्जले । Ku. 1, 47 । आञ्जनेयेन तत्त्वत इत्यादौ कपेर्हनूमतो माता अञ्जना ॥ अञ्जनभूभृद्भाति यथायं परिपतदभिनवदिनकरकिरण इत्यादावञ्जनसंबन्धादेव तद्युक्ते पर्वतविशेषे ॥ 478 ॥

[प्रभिन्न] अनेकतां प्राप्ते । M. St. 7 । जातमदे उत्पन्नमदे हस्तिनि । Ku. 5, 80 ॥ [लाङ्गलिन्] द्वयेपि । लाङ्गलि° Mh. 3, 400 ॥ [जनन] कुले जन्मनि च । जननजने नयनानां ह्लादकमाप्याय नास्ति संतोषः ॥ 479 ॥

[वर्धन] छेदे । M. 2, 29 ॥ [अर्जुन] वृक्षभिदि । M. M. 313, 5 । गवि । अस्ते पुञ्जितमर्जुनीकुलमपस्तम्बे पलाशेगर इत्यादौ [sic; c. Mh. 3, 453] ॥ 480 ॥

शुक्ले । Śi. 1, 6 ॥ [केतन] गृहे । जनस्य साकेतनिकेतनस्य c. Ra. 5, 31 । केतौ ध्वजे । Ku. 5, 84 । निमन्त्रणे । पूर्वेद्युः° Mh. 3, 360 ॥ 481 ॥

[समान] सति साधौ । समानः कोपि जायते । सह मानेन वर्तत इति कृत्वा ॥ तुल्ये । समानान्सुहृदश्च बन्धुभिः । एकस्मिन्नसाधारणे । समानस्थानलाभेन हर्षमापत् ॥ [विमान] व्योमयाने । Ra. 14, 20 । देशं समुत्तुङ्गविमानभाज इत्यादौ सप्तभूमे वेश्मनि । सप्त भूमयः कक्ष्या यस्य । कृष्णो° Kârikâ Pâ. 5, 4, 75 इति व्युत्पत्त्या ॥ 482 ॥

[तपन] अर्के । तपति ललाटं तपस्तपनः c. H. Ch. 51, 5 ॥ [प्राचीन] प्रान्ततो वृतौ । प्राचीनप्रतिरुद्धः ॥ 483 ॥

प्राचीनमलकोपमानेत्यादौ प्राग्भवे ॥ प्रान्ततो वृतिः पार्णिकाख्या । प्राग्भवे दिशि देशे काले सा । विभाषा° Pâ. 5, 4, 8 इति खप्रत्ययः ॥ [प्रच्छन्न]

अन्तर्द्वारे खडक्किकायाम् । अनेन संजनेन प्रच्छन्नेन निर्गत्य । रहसि । Sp. 2173 । छादिते । भ्रमरप्रच्छन्नमब्जाकरम् । गूढे । प्रच्छन्नं वहति दृढं चिरं च वैरम् ॥ [श्वसन] मरुति वायौ श्वासयुक्ते च । श्वसनमरुजवं [?] संत्यजोर्ध्वप्रवृत्तम् ॥ 484 ॥

कामाग्निः श्वसनेन दीपित इत्यादौ मरुवकेपि । मरुवकं पुष्पभेदः ॥ [पूतन] भूतभेदे स्त्रीपुंलिङ्गः । M.M. 342, 4 ॥ [स्यन्दिनी] लालायाम् । तं स्यन्दिनीलिप्तमुखं कुमारम् । निम्नगायाम् । सा वृन्दारकवृन्दवन्दितजला संक्रन्दनस्यन्दिनी ॥ 485 ॥

[गोस्तनी] गोस्तन्यां [sic] कपिलायां द्राक्षायाम् । संजातो° Mh. 3, 364 । [गोस्तन] हारभेदे । तस्याः कम्पितगोस्तनस्तनतटी ॥ [धमनी] नडीनडयोस्तृणभेदयोर्धमनीधमनशब्दौ निघण्टौ प्रसिद्धौ । अग्न्युद्दीपनभाण्डे । मुखेनोपधमेदग्निं धमन्यन्तरितेन तु ॥ [डयन] नभोगतौ । K.K.S. 1, 67 ॥ 486 ॥

कर्णीरथे । डयनगतः स ददर्श मार्गवृक्षान् । कर्णीरथो दोलाकारो वाहनविशेषः ॥ [मार्जनी] पांसुशोधन्याम् । मार्जनीरेणुकेशाम्बु हन्ति पुण्यं पुराकृतम् ॥ [मार्जन] उपस्पर्शे आचमनादिके । ततः कुर्यात्प्रमार्जनम् । उत्पुंसने भस्मादिशोधने । सप्तभिर्मार्जनैः शुद्धचेल्लोहं [sic] विण्मूत्रवर्जितम् ॥ 487 ॥

[मार्जना] आसीना किमपि स्थिता ननु सखे प्रस्तूयतां मार्जनेत्यादौ वाद्यपिण्डद्याम् । मृदङ्गमुखे मृदितभक्तादिदाने । तत्परीक्षार्थवादने तूपचाराद्रूढः ॥ [कुण्डलिन्] द्वयेपि । जात्यैव° Mh. 3, 359 ॥ 488 ॥

[तपस्विन्] शान्ते । Ku. 3, 34 । मञ्जर्यां निघण्टौ प्रसिद्धः स्त्रीलिङ्गः ॥ [संधिनी] द्वयेपि । आविकं संधिनीक्षीरं न भोक्तव्यं द्विजातिभिः c. M. 5, 8 । वृषाक्रान्ता लब्धगर्भा ॥ 489 ॥

[हायन] वत्सरे । M. M. 152, 1 । अर्चिषि । लेलिह्यमान° Mh. 3, 429 ॥ [क्रन्दन] द्वयेपि । किं° Mh. 3, 355 ॥ [व्यसन] विपत्तौ मरणे । रिपुव्यसनवर्धितः पृथुलहर्षवाष्पाकुलः । अशुभे । व्यसने यो जयेच्छत्रुम् । भ्रंशे । नाशे पाते च । Ki. 3, 45 । पानस्त्रीमृगयादिषु । राजा दुरन्तैर्व्यसनैर्विहीनः c. Ra. 18, 13; K. N. 15, 1 ॥ 490 ॥

दैवानिष्टफले । व्यसनिनं त्रातुं समर्थं जनम् । सक्तौ । वनमवनं व्यसनमव्यसनम् । क्रोधदूषणं क्रोधजो दोषः । वाक्पारुष्यदण्डपारुष्यार्थदूषणानि ॥ [ साधन ] निवृत्तौ निवर्तने । विधानमारब्धमसाधनं वृथा । दापने । साधनं द्विगुणं कार्यमृणिकस्योत्तमे दमे । सिद्धौ निष्पत्तौ कर्तृव्यापारे । स्वार्थ° Mh. 3, 425 । गतौ । गङ्गातीरे साधनं सिद्धिहेतोः । अनुगमे अनुव्रज्यायाम् । गुरूणां साधनं कार्यमुदकान्ताद्गिति स्थितिः c. Śâ. 54, 21; Bhâshya Pâ. 1, 4,56। धने । तपस्वि° Mh. 3, 426 ॥ **491** ॥

उपाये उपकरणे । Ku. 5, 52 । कारणे । Ra. 3, 13 । सैन्यरूपे उपकरणे । Ra. 4, 36 । कारके क्रियाभिर्निर्वर्तके । Śi. 9, 6 । बभूव° Ku. 5, 22 इत्यादि च सर्वमुपायग्रहणात्स्वीकृतम् ॥ मृतसंस्कारे दाहादौ । शरीरसाधनं कार्यम् । वधे । अहन्यहनि भूपालः कुर्याच्चौरस्य साधनम् । व्यञ्जकवृत्त्या मेढ्रे । न साधनोन्नतिर्या स्यात्कलत्ररतिदायिनी ॥ [ अयन ] पथि । स्निग्धस्य सूक्ष्मेष्वयनेषु लीनं स्वेदस्तु दोषं नयति द्रवत्वम् । सूर्यस्य दक्षिणगतावपि । Ra. 16, 44 । सूर्यस्योदग्गतौ । उदगयने शशिसूर्यौ वक्रेन्यस्निग्धविपुलाश्च ॥ **492** ॥

[ पवन ] कुलालपाकस्थाने । अग्नेस्तेजसातपेभिनिवेश्य पवने महावीरम् । प्रभञ्जने । Śi. 4, 36 ॥ [ सवन ] सोमस्यौषधिराजस्य निर्मथने । एतस्मिन्सवनविधुतपापे । स्नाने । मध्यंदिनसवनवेलां नातिक्रामेत् । यजने । H. Ch. 16, 4 ॥ **493** ॥

[ वामन ] काव्यालंकारभूरुर्वी वामनेनैव धारितेत्यादौ दिग्गजे । आलंकारिकभेदेपि ॥ विष्णौ । Ra. 11, 22 । निखर्वे । Ra. 1, 3 । वामनोलंकारभेदः ॥ [ शमन ] अन्तके । असिभुजगविभूषणस्तथासात्वरिशमनो जयतु क्षितीश बाहुः । वधे । विवर्जयेद्यः शमनं पशूनाम् ॥ [ जघन ] कटौ । स्फीतप्रथिम्नि जघने गुरुपाटलिम्नि बिम्बाधरे ॥ **494** ॥

पश्चादर्थे । पश्यन्ति यत्र रिपवो जघनं हयानाम् । नितम्बाग्रे । Me. 41 ॥ [ कौपीन ] गर्ह्ये । उत्सर्पत्पीनकौपीननाशिताशेषपौरुषः । गुह्ये । Bâ. II, 2 । गुह्यस्थे तूपचारात् ॥ [ देवन ] अक्षे । देवनाच्छलकृतो हि किमत्र । त्रयेपि । प्रकटीकृतदेवनान्कुरून् ॥ **495** ॥

[मदन] मधूच्छिष्टे । मदनगोलकमृष्टरदच्छदाः । वसन्तवृक्षयोः । उपययौ० Mh. 3, 389 । मदकारी सामान्येन यः कश्चित्तत्र त्रिलिङ्गः । मधूच्छिष्टं सिक्थकं [sic] तत्र केचन मदनशब्दमाहुः । तत्र च मद मुचि कल्के इति धातुरन्वर्थः साधकः ॥ 496 ॥

[वेदना] अनुभवे । संमू० Mh. 3, 414 ॥ [यापन] त्यागे । प्रबलशत्रुपराभवशङ्कया यदि करोति धनस्य स यापनम् । वर्तने अतिवाहने । मुक्त्यर्थी यत्रतत्रस्थः कुर्याज्जीवस्य यापनम् । यापनं च यापना च ते यापने इत्युत्पत्त्योभयलिङ्गत्वम् ॥ [कल्पना] कर्तने छेदनक्रियायाम् । श्मश्रुकेशनखदैर्घ्यकल्पना । कर्तने छेदनभाण्डेपि । यावन्न सेव्यते शंभोर्भक्तिः संसारकल्पना । कॢप्तौ रचनायाम् । आकल्पकल्पनासज्जाः । उद्देशे ब्राह्मणार्थं वस्तुस्थापने । अर्घपाद्यादिकल्पनाम् । गजसज्जने शृङ्गारणे । कल्पनासज्जसेनानीनीतिबन्धुरबन्धुर इत्यादौ ॥ 497 ॥

विकल्पे । विधूतकल्पनाजालेत्यादौ । आकलने । त्याज्याः संसारकल्पनाः । विधाने । दिव्येयं कल्पना धातुः । विभाजने । विध्यर्थवादमन्त्रार्थनामधेयादिकल्पना ॥ [स्पर्शन] समीरणे । स्पर्शनं हि क उपैति चक्षुषा । स्पर्शे । गोः स्पर्शनं ब्राह्मणतर्पणं च c. Mh. 3, 421 । दाने । स्पर्शनं पुण्यदर्शनम् ॥ 498 ॥

[गन्धन] द्वयेपि । तद्गन्धनं प्रोद्धुरकंधराणां नैवाद्रियन्ते सुजनाः खलानाम् ॥ [संतान] संततौ प्रवाहे । अस्यां० Mh. 3, 423 । देववृक्षे वृक्षसंतानाद्धिपुष्पे [ ? ] । Ku. 7, 3 । अपत्ये । Ra. 2, 65 । गोत्रे । संतान० Mh. 3, 422 ॥ 499 ॥

[स्तनन] कुत्सिते ध्वाने अम्भःस्थशब्दे । स्तननितम्बभरास्तननं मुहुः। देवशब्दे । दुन्दुभिस्तननपुष्पवर्षणैरन्वमोद्यत भवः सुरैरपि ॥ [सज्जन] इभसज्जीकरणे साधौ च । किं दुष्करं भवति सज्जनसंस्कृतानाम् ॥ 500 ॥

पटगुल्मे सेनासंनिवेशविशेषे । सेर्ष्येपि सज्जनमुखे सुखमेत्यधीरः ॥ [चेतन] प्राणिनि । Me. 5 ॥ [तेजनी] मूर्वातेजोवत्यौ ओषधिभेदौ । शाणोपले । केनासिर्वा रणभुवि रसत्तेजनीलीढरूढः ॥ [तेजन] वेणौ शरे वा । हिमवति तेजनसरलेङ्गुदीकान्ते ॥ 501 ॥

[ पिशुन ] स्पृक्का दुरालभा । दुष्टे जने । Sp. 4931 । सूचके । Ku. 8, 86 v. l. ॥ [ वेष्टन ] द्वयेपि । अस्पृष्टालकवेष्टनौ ॥ [ शकुन ] द्वयेपि । अवामवाशितशकुनसूचितशकुनः ॥ 502 ॥

[ वृजिन ] केशे । क्वचन विजने कूप्रवृजिन इत्यादौ । चर्मणि । वृजिनप्राधरणान्व्यधादरीन् । किल्बिषे । Bhag.4,36 ॥ [ भूतात्मन् ] धातरि । स ते भगवान्भूतात्मा श्वःश्रेयसं दास्यति ॥ 503 ॥

[ संस्थान ] आकृतौ टङ्के । संस्थानमास्थाय मनो जहार । मृत्यौ संनिवेशे च । मालाकार इव स्वयं स विदधे संस्थानमुच्चैर्द्विषाम् । चतुष्पथे । स तस्मै अपदिशति अमुष्मिन्संस्थाने हस्तदक्षिणो ग्रहीतव्यः ॥ [ विच्छिन्न ] द्वयेपि । Śr. Ch. 2, 51 ॥ 504 ॥

[ आसन ] करिस्कन्धे । आसना° Mh. 3, 349 । पीठे । Ki. 2, 57 ॥ [ मलिन ] समले । Su. 3049 । एनसि पापे । मलिनैः पापकर्मभिः ॥ [ आराधन ] साधने । न्यस्या° Mh. 4, 159 । तोषणे । शंकराराधनं धनम् । उपासायाम् । Ku. 1, 58 ॥ 505 ॥

[ अधिष्ठान ] पुराध्यासनयोः । उच्चैस्त्वेकस्तूर्णमस्मापगाभ्यः साधिष्ठानास्ते किमाश्चर्यमत्र ॥ [ आतञ्चन ] प्रतीवापे द्रवद्रव्यस्य भाण्डाद्भाण्डान्तरक्षेपे आप्यायने वा । सुधारसातञ्चनचञ्चुचञ्चचन्द्रांशुशुभ्रीकृतचन्द्रलेखाः । जवने वेगे । आतञ्चनं पञ्चशरस्य बाणाः संप्राप्य शीघ्रं भुवनं जयन्ति c. Mh. 4, 161 ॥ 506 ॥

[ आस्कन्दन ] रणे । आस्कन्दने° Mh. 4, 162 । आक्रान्तौ बलात्स्वीकारे । एते हठास्कन्दनमन्तरेण रणेषु योग्या न भवन्ति वाहाः । शोषणे भापणे वा । ग्रीष्मा° Mh. 4, 162 ॥ [ चित्रभानु ] द्वयेपि । सांध्य° Mh. 4, 173 ॥ [ पृथग्जन ] द्वयेपि । Ki. 14, 24 ॥ 507 ॥

[ अभिजन ] कुले । Ku. 1, 26 । जन्मभूमौ । यः कन्यकुब्जाभिजनः स राजा ॥ [ समापन ] द्वयेपि । राजा° Mh. 4, 197 ॥ [ अपदान ] खण्डने । सौन्दर्यमालोक्य विलोलचक्षुषामात्मापदानं विधुना विधीयते । अद्भुतकर्मणि । Ku. 7, 48 ॥ 508 ॥

[ निर्वासन ] मारणेपि । मोक्षे चित्तमिव व्यधात्स बहुधा निर्वासनं विद्दिषाम् ॥ [ घनाघन ] शक्रे घातुके वा । परमदानवलोकघनाघनाः । मत्तेभवर्षुकाब्दयोः । घनाघना नीलघनाघनप्रियां प्रियामिमामुत्सुकयन्ति यन्ति च ॥ 509 ॥

[ अभिमान ] अर्थादिदर्पे । Ki. 2, 13 । ज्ञाने । दृढाभिमानेन विना न मोक्षः । प्रणये । प्रिया० Mh. 4, 156 । हिंसायाम् । यः श० Mh. 4, 156 ॥ [ आवेशन ] आवेशे । दर्पा० Mh. 4, 161 ॥ 510 ॥

[ निरसन ] द्वयेपि । निरसनमरिसार्थस्याथ चक्रे स तत्र ॥ [ विरोचन ] चन्द्रे । वैरोचने महसि मुक्तशुचश्चकोराः । अग्नौ । दध्रे विरोचनरुचिं निकरो जटानाम् ॥ [ विश्वकर्मन् ] मार्तण्डे । अब्जानामिव विश्वकर्मकिरणाः । सुरशिल्पिन्यपि । स्वकीयं निन्दति व्याधो विश्वकर्माणमर्जुनम् c. Mh. p. 51, 8 ॥ 511 ॥

[ निर्यातन ] वैरशुद्धौ । निर्यातनं यातनया रिपूणाम् । दाने । निर्यातनं धनततेः स विधाय पात्रे । न्यासार्पणे निक्षेपप्रतिदाने । ज्ञात्वा० Mh. 4, 177 ॥ [ अभिपन्न ] अपराद्धे प्रमादवति । अभिपन्नेषुरभूदथार्जुनोपि । अभिग्रस्ते । औचित्यं खलताभिपन्नहृदयः कुर्यात्कथं दुर्जनः । व्यापन्नते । त्राणं यदभिपन्नस्य व्रतमाहुर्मनीषिणाम् । द्रुते अभिद्रुते । अभिपन्नं बलवता दुर्बलं हीनसाधनम् c. Sp. 500 ॥ 512 ॥

[ आयोधन ] निघाते । शस्त्रा० Mh. 4, 159 । द्वयेपि युद्धे च । Ra. 5, 71 ॥ 513 ॥

[ सनातन ] नित्ये । K. N. 2, 42 । विष्णौ । ददृशे तेन सनातनः क्षणात् ॥ [ स्तनयित्नु ] द्वयेपि । यत्नोयं स्तनयित्नुना विरचितो मन्ये तदुच्छित्तये ॥ [महासेन] द्वयेपि । अपरित्यक्तकुमारभावेपि महासेन इत्यादौ ॥ 514 ॥

[ आत्मयोनि ] ब्रह्मणि । Ki. 3, 7 ॥ [ विहनन ] पिञ्जे विप्लवे । वने विहननाकुले । वधे । विहननमबुधाः शत्रोरिच्छन्ति पराक्रमान्न बुद्धिबलात् ॥ [ प्रतियत्न ] संस्कारे सतो गुणान्तराधाने । प्रतियत्नमपेक्षते नहि प्रतिभातत्त्वसहोदरी सभा । लिप्सायाम् । मिथ्यैव कुरुते मूढः प्रतियत्नं धनं प्रति ॥ 515 ॥

[ **अपाचीन** ] विपर्यस्ते अन्यथादृष्टे वस्तुनि । सोपाचीनानि पश्यति Sp. 5360 । अपाक्पश्चादित्यस्यार्थे । सेवेत पाठे प्राचीनमपाचीनमतोन्यदा ॥ [ **सारसन** ] मेखलायाम् । विश्वंभरासारसनायमाना पुपोष लोकत्रयसामरस्यम् । उरस्त्रे । Śi. 3, 10 । कञ्चुकमात्रेपि ॥ **516** ॥

[ **उत्पतन** ] उत्पत्तौ । लोकत्रयोत्पतनहेतुतया तवायं लोकः करोति ददयं प्रणतिप्रवीणम् ॥ [ **आकलन** ] ग्रहणे स्वीकारे । कलनायां चिन्तने वा । गूढार्थाकलने भाव्यं सावधानेन धीमता ॥ **517** ॥

[ **प्रवचन** ] वेदे । AK. II, 7, 10 । व्याख्याने सुवचसि शोभने वचने वा । प्रवचनचर्चाचतुरे परिचयमुचितं न मुञ्चन्ति ॥ [ **प्रतिमान** ] प्रतिच्छायायां प्रतिबिम्बे । किं तस्याप्रतिमानमानमहसः सिंहस्य गण्यो गजः । गजदन्तान्तराले । Śi. 5, 36 ॥ **518** ॥

[ **सामिधेनी** ] ऋचि समिधां प्रक्षेपणमन्त्रे । सामिधेनीरनुब्रुवन् । समिधि प्रक्षेप्ये काष्ठे । दूरेप्यशङ्कितधियः कुशसामिधेनीर्नीरं च पुष्पफलमूलमुपाहरन्ते ॥ [ **अग्र्यजन्मन्** ] द्विजे ब्राह्मणे । M. 10, 75 । अग्रजे ज्येष्ठे । अग्रजन्मा यदा तिष्ठेदादध्यादनुजः कुशम् ॥ [ **अनूचान** ] द्वयेपि । Ku. 6, 15 ॥ **519** ॥

[ **कात्यायनी** ] काषायवस्त्रावनद्धायां [sic] तपस्विन्याम् । कात्यायनी नीतिविशारदा च । उमायाम् । कात्यायनी जरद्वकेसरिणाहरन्तीत्यादौ ॥ [ **निशमन** ] द्वयेपि । निशमनमपि पाप्मनां निषिद्धम् ॥ [ **प्रयोजन** ] कार्ये । Ku. 3, 1 । हेतौ । तदुच्यतामागमनप्रयोजनम् ॥ **520** ॥

[ **आवर्जन** ] दाने । अर्थावर्जनमन्तरेण न भवेत्पुण्यस्य वृद्धिः परा । नतौ मनोहृतौ वा । आवर्जनेन जनसंसदि सज्जनानाम् । भ्रंशेपि । योगीव पृथिवीनाथः परावर्जनपण्डितः ॥ [ **संमार्जनी** ] शोधन्याम् । संमार्जनीभिः परितः क्रियन्ते विसूत्रितैकावलिमौक्तिकानि N. Ch. I, 27 ॥ [ **संमार्जन** ] क्षालने । संमार्जनं तत्कथितं मलानाम् । लेपने संस्कृतौ च । स्वद्धामसंमार्जनजीर्णपाणिः ॥ **521** ॥

[ **राजादन** ] उत्कृष्टभोज्ये । राजादनं पुण्यकृतो लभन्ते ॥ [ **उपधान** ] दृष्टान्ते गण्डके मूर्धाधारे च । Śi. 2, 77 । प्रतिबिम्बे प्रतिफले तत्समर्पके वा । अन्यत्वमुपधानानि स्फटिकस्येव कुर्वते ॥ **522** ॥

[ विश्वक्सेन ] हरौ । विश्वक्सेनं सेनया सोभ्यगाच्च । गणेत्र तत्संबन्ध्येव ॥ [ क्रतुध्वंसिन् ] शिवे । नमोस्तु ते क्रतुध्वंसिन्सर्वकामफलप्रद । दानवे । नात्र क्रतुध्वंसिनमाद्रियन्ते ॥ 523 ॥

[ प्रसाधनी ] कङ्कतिकायाम् । Mh. 4, 183 ॥ [ प्रसाधन ] आराधनमण्डनयोः । H. Ch. 6, 1 । अर्जने । अर्थप्रसाधनमनन्यधिया प्रचिन्त्यम् ॥ [ कृष्णवर्त्मन् ] द्वयेपि । कृष्णवर्त्मास्यदहन इत्यादौ ॥ 524 ॥

[ उपासन ] त्रयेपि । Mh. 4, 163 ॥ 525 ॥

[ व्यालग्राहिन् ] द्वयेपि । Sp. 6329 ॥ [ मातुलानी ] मातुलप्रियायाम् । M. 2, 131 । भङ्गायामोषधिभेदे । Mh. 4, 187 ॥ [ प्रदीपन ] ओषधिरेव त्रस्यैव [?] प्रसिद्धा ॥ 526 ॥

[ प्रतिपादन ] बोधने । शास्त्रस्य शिष्यप्रतिपादनं न यदित्यादौ [?] । प्रतिदाने । फलं तु पात्रप्रतिपादनं श्रियः ॥ [ हरिचन्दन ] कुङ्कुमे ॥ Ku. 5, 69 ॥ 527 ॥

[ अन्तावसायिन् ] द्वयेपि । अन्ता° Mh. 5, 24 ॥ [ अतिसर्जन ] वधे । विविधप्रणत्यातिसर्जनप्रियाः [ sic ] । दाने । अर्थातिसर्जत्पुण्या पुण्यसमाश्रयेत्यादौ [ sic ] ॥ [ अपमार्जन ] शुद्धौ । त्रिराचामेदपः पूर्वं द्विः कार्यमपमार्जनम् c. M. 2, 60 । त्यागे । शत्रूणामपमार्जनं यदि भवेशाभ्यन्तराणां [ sic ] तत इत्यादौ ॥ 528 ॥

[ उपस्पर्शन ] स्पर्शे । यूपोपस्पर्शने स्नानम् । स्नानाचमनयोः । कृतोपस्पर्शने शुचौ ॥ [ अभिनिष्टान ] अक्षरे । नासिक्यत्त्व [?] अभिनिष्टाना निर्यान्ति ॥ 529 ॥

[ मेघवाहन ] द्वयेपि । मूर्तिमानपि स मेघवाहनः ॥ 530 ॥

[ पवनाशन ] द्वयेपि । पवनाशना अकुटिलाः ॥ [ प्रतियातना ] प्रतिबिम्बे । H. Ch. 78, 5 । प्रतिबिम्बद्वारेण प्रतिमायामपि । H. Ch. 63, 18 । प्रतीकारे । K. Pr. 293, 2 ॥ 531 ॥

[ हट्टविलासिनी ] वेश्यायाम् । नेत्राञ्जने हट्टविलासिनीनाम् ॥ [ जपा ] द्वयेपि । Pa. 824 c. Su. 726 ॥ [ कम्प ] कम्पः को वा गुरुस्ते भवतु बलभिदा जृम्भितेनात्र याहीत्यादौ भयवेपथुसात्त्विकभावभेदवरुणेषु यथासहृदयत्वं व्याख्येयम् c. Dhv. 104, 10 ॥ 532 ॥

स्वरभेदो गान्धर्वशास्त्रप्रातिशाख्यशास्त्रादिषु कृतलक्षणः ॥ [ रूप ] ग्रन्थावृत्तौ । अयुग्मैः संपठेद्रूपैर्युग्मैः रक्षसगामि तु [ sic ] । मृगसौन्दर्ययोः । क्रूराकारमपि रूपसंपन्नम् । शब्दे । संबोधने चोशनसस्त्रिरूपम् Kârikâ Pâ. 7, 1, 94 । नाटकादौ आकारे च । H. V. 1, 2 । स्वभावे । तद० Mh. 2, 294 ॥ 533 ॥

[ त्रपु ] रङ्गे सीसके वा । विचलत्त्रपुकर्णवेष्टने । एतौ लोहद्रव्यभेदौ ॥ [कल्प] विधौ न्याये [sic] वा । स एव प्रथमः कल्पः । संवर्ते प्रलये । Sp. 7371 । ब्रह्मदिने । अनेककल्पजीवी यः ॥ 534 ॥

[ कूप ] गर्ते । एतन्मूषककूपनिर्गतमहामृत्स्नाकुलं वैरिणाम् । उदपाने । H. Ch. 49, 1 । गुणवृक्षके नौबन्धनकाष्ठे । नौः कूप० Mh. 2, 288 ॥ [ क्षेप ] क्षेपणे । Me. 47 । अवज्ञायामपि । क्षेपोन्ये न विहस्यान्यं युक्त्या चक्र—वारितेत्यादौ ॥ [ लेप ] लेपने । स्तनान्तरे चन्दनपङ्कलेपः । मृत्क्रियायाम् । लेप० Mh. 2, 295 । प्रत्युप्तेन्त्र० M. M. 166, 4 इत्यादौ मृत्क्रियात्वोपचारात् ॥ 535 ॥

[ शाप ] आक्रोशे वाक्पारुष्ये । Ra. 1, 78 । शपथे सत्यंकारे । त्वत्० Mh. 2, 296 ॥ [ पुष्प ] द्वयेपि । पुष्पितवल्लीसंसक्ताः ॥ [ गोप ] वल्लव्यां गोधारिकभार्यायां द्विलिङ्गकः । गोप्यैवं कथितः सलेशमवताद्गोष्ठे हसन्वो हरिः c. Dhv. 98, 4 । शारिवा ओषधिभेदः । तत्र च स्त्रियामेव । पातरि रक्षके गोष्ठाध्यक्षे च । Śi. 6, 49 ॥ 536 ॥

ग्रामवृन्दपतौ । कुलानि श्रेणयो गोपाः शिल्पिनो वाणिजास्तथा । पात्रादिषु गोपायते इति गोप इत्यादि स्त्रियां गोपाशब्दः । गोष्ठाध्यक्षेपि । गाः पातीति पातेरातोनुपसर्गेति [ Pâ. 3, 2, 3 ] कप्रत्यये तथैव स्त्रियां गोपाशब्दः । वल्लव्यां तु जातिवाचित्वात्पुंयोगाद्वा ङीपि [ sic ? ] गोपीशब्दः c. Pâ. 4, 1, 63. 48 ।

शारिवायां जातिवाचित्वादेव गोपीशब्दः । शालिगोप्यो जगुर्यश इत्यादौ [ Ra. 4, 20 ] गोपायतेः कर्मण्यणि Pâ. 3, 2, 1 ॥ [ तल्प ] शय्यायाम् । तल्प-मस्वल्पमुर्वी । अट्टदारेषु । यत्राधिरूढगुरुतल्पमतिग्मरश्मिं भ्रष्टप्रभं दुरितराशिरिव प्रचक्रे । अट्टः कोट्टादिप्राकारकोपरि युद्धस्थानम् । विशीर्ण° Ra. 16, 11 इत्यादौ वेश्मन उपर्याधारे । अस्मद्देशभाषया तालावशब्दवाच्ये ॥ 537 ॥

[ धूप ] द्वयेपि । H. V. 1, 1 ॥ [ वपा ] द्वयेपि । एते वपानिवसनादिव जातगन्धा धूर्ता मुदं समरभूमिमतामदन्ति ॥ [ वाष्प ] द्वयेपि । Me. 12 ॥ [ सूप ] सूपकारके । सूपैः सूपायनैरिव ॥ 538 ॥

[ शष्प ] ग्रन्थिपर्णे सुगन्धद्रव्यभेदः । व्रीहौ रूढे । क्लीवात्क्लीणीत शष्पाणि । हरित्तृणे । शष्पैरर्धावकीर्णैः श्रमविततमुख° Sâ. 7 ॥ [ विटप ] शाखायाम् । कुर्वन्त्या विटपात्रसक्तविलसत्कृष्णाजिनौघानिव । विस्तृतौ स्तम्बे च । वृक्षेष्व-पेतविटपेषु विवृद्धिमेति । स्तम्बस्तृणादिगुच्छः ॥ 539 ॥

[ आक्षेप ] आकर्षणे । य उत्पलाक्षेपचलैर्विलोचनैस्तवाक्षिसापत्न्यमिव प्रयुज्जते c. Ku. 5, 35 ॥ [ उडुप ] द्वयेपि । H. Ch. 52, 1 ॥ [ आवाप ] आलवाले । आवापेषु° Mh. 3, 430 । प्रक्षेपे । स्रस्तं शरावापमपि स्वहस्तात् । प्रक्षिप्यते अस्मिन् प्रक्षिप्यते अनेन प्रक्षेपणमिति वा प्रक्षेपः । वलये । प्रकोष्ठं शुशुभे तस्या गतमावापशून्यताम् ॥ 540 ॥

रूढे । आवापपूता प्रतिभा विभाति । प्रधाने यज्ञादौ पूर्वोत्तरत्र यो मध्यं पाति हविरादिः । तत्रावापशब्दः । नीतितन्त्रे । Bâ. I, 24 । [ आकल्प ] कल्पने उद्देशे । Mh. 3, 432 ॥ [ कशिपु ] आच्छादनान्ने युगपद्विन्नतया च कशिपुशब्दे-नोच्यते । द्वयेपि । सतां गृहे यत्करोषि हिरण्यकशिपुस्थितिम् ॥ 541 ॥

[ कुतप ] वाद्यविन्यासे वाद्यानां ततादीनां सज्जीकरणे । कुतपविधौ भरतः स्फुटं प्रवृत्ता इत्यादौ । दर्भकालप्रभेदच्छागरोममयवस्त्रेषु । त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः । कालप्रभेदो दिनस्याष्टमोंशः ॥ [ कच्छपी ] कूर्म्याम् । कच्छ-पीमायतां विद्यात्कूर्मं तु परिमण्डलम् । वीणायां वीणाभेदे सारस्वताख्ये । उद्गच्छ-त्कच्छपीध्वानश्रवणोन्मुखसंसदि ॥ कूर्मीव° H. V. I, 9 इत्यत्र कूर्मीशब्दः कच्छप्यामेव कविना भ्रमात्प्रयुक्तः ॥ 542 ॥

[कलाप] संहतौ समूहे । भुजंगमोन्नद्धजटाकलापम् । बर्हे मयूरपिञ्छे [sic] काञ्च्यां च । लसत्कलापाङ्कबृहन्नितम्बे वने च कान्ता जघने च चेरुः । तूणीरे इषुधौ । कलापयुक्तं कवचं धनुश्च ॥ [प्रताप] इयेपि । वन पिहितसत्प्रतापास्तेमी सालाः खलाश्च वर्धन्ते ॥ [सुरूप] इयेपि । Mh. 3, 438 ॥ 543 ॥

[प्राप्तरूप । अभिरूप] बुधरूपिणोरित्येव । इयेपि । प्राप्तरूपपरिभाषितं वचः कस्य चेतसि चमत्करोति न । अभिरूपाय कन्या दातव्या c. M. 9, 88 ॥ [अवलेप] इयेपि । H. Ch. 10,8 । गर्हणा अवज्ञा ॥ [परीवाप] परिच्छदे परिजने सलिलस्थितौ च जलाधारे । भृतपरिवापा मुनयो वनभुवि राज्यं प्रतायन्ते । वपने केशनिवारणे । एत° Mh. 4, 209 ॥ पर्युप्तास्तु भाण्डाद्भाण्डान्तरक्षेपे सलिलस्थित्युपचारात् ॥ 544 ॥

[वृषाकपि] विष्णुशिवयोः । वृषे सङ्गं बिभ्रद्वसि सततं तार्क्ष्यवहने रिपोः शूलोद्भेदी प्रथम इह सनन्दक इति । सदा शक्तेर्भर्ता भवसि ननु मां चापि भजसे [c. 566, C.] समग्रानुग्राही प्रभवसि वृषाकप्युपमितः ॥ अग्नौ इन्द्रे दिवाकरे वा । वृषाकपिरिवातपम् ॥ 545 ॥

[मेघपुष्प] वेतसो लताभेदः । जले । मेघपुष्पविवशीकृता दिशः ॥ [उपक्षेप] इयेपि । पूजोपक्षेपसक्तो मे कालोपक्षेपहेतुना ॥ 546 ॥

[रेफ] इयेपि । पापद्भिरेफाध्युषितान्वनान्तान् ॥ वाद्यविशेषे तु रेफवर्णसाधर्म्यात्प्रयोगेपि उपचाराद्रेफः ॥ [कम्बु] वलये । शङ्खकम्बुरुचिरीकृतबाहुः । शङ्खे । H. Ch. 11, 13 । शालिधूलौ । कम्बुकमिव तण्डुलककणविनिविष्टं भिन्नमप्यभिदेत्यादौ । अत्र तु नपुंसकलिङ्गः ॥ [बिम्ब] मण्डलप्रतिबिम्बयोः । Ku. 8, 61 ॥ 547 ॥

बिम्बिकाफले । Ku. 3, 56 । देवप्रतिमाद्याकारे तु प्रतिबिम्बोपचारात् ॥

[पूर्व] प्राचि देशे दिशि वा । Ra. 3, 42 । पूर्वजेषु पितृषु पुंबहुत्वे । Ra. 1, 67 ॥ 548 ॥

आद्यर्थे । Ku. 7, 54 ॥ [डिम्ब] विप्लवे । M. 5, 95 ॥ [शम्ब] मुसलाग्रस्थे लोहे लोहमण्डलके । शम्बाकृत इव क्षेत्रे बीजमाशु प्ररोहति । शम्बाकृतो दारुदण्डाग्रस्थितलोहमण्डलचूर्णीकृतः । श्रेयोन्विते पवौ च । अरालकलितापा हंसि शम्बः [sic] त्वत्तः परोत्र क इत्यादौ c. Mh. 2, 301 ॥ 549 ॥

[ कादम्ब ] द्वयेपि । कादम्बाः स्फुटमभिसस्रुरन्तरिक्षे ॥ [ कदम्ब ] संहतौ । Sâ. 39 ॥ [ द्विजिह्व ] द्वयेपि । वंशे कुटिलगतीनां द्विजिह्वतादोषरहितानाम् । [ नितम्ब ] द्वयेपि । Sp. 4811 ॥ **550** ॥

[ गन्धर्व ] अन्तराभवसत्त्वे अन्तरिक्षवासिनि भूतभेदे । अस्माभि° Mh. 3 692 । अश्वमृगभेदयोः । राजधानीव गन्धर्वाधिष्ठिता । दिव्यगायने । Sû. 36 ॥ पूर्वद्विजिह्वगन्धर्वा वान्तेषु कैश्चित्पतिताः ॥ [ हेरम्ब ] महिषे । हेरम्बवाहनभयादपयान्ति सन्तः ॥ **551** ॥

[ कुटुम्ब ] संविभज्ये जने । Su. 498 । गेहे । M. 11, 12 ॥ [ भा ] प्रभायाम् । Su. 1999 ॥ [ कुम्भ ] कट्फलं वत्सकत्वगाख्यौषधिः ॥ **552** ॥

सावष्टम्भे ग्रहे । कुम्भापरुद्धगमनः कुपितेति कष्टम् ॥ [ शंभु ] अर्हति क्षपणकानां देवते । शंभुः° Mh. 2, 307 । विधिशिवयोः । H. Ch. v. 1 ॥ **553** ॥

[ विभु ] स्वामिनि । Śi. 1, 3 । व्यापके । येनोद्धारे धरित्र्याः स जयति विभुताविघ्नितेच्छो वराहः ॥ [ डिम्भ ] शिशौ । R. K. 7, 32 । बालिशे मूर्खे । पार्थः पातालमूलः प्रविशति नगरं ग्रामडिम्भैः परीतः ॥ [ स्तम्भ ] स्थूणागर्वयोः । Śi. 5, 48 । भावे सात्त्विके । देहस्तम्भः स्थगयति गतिं° M. M. 178, 5 ॥ [ स्वभू ] द्वयेपि । देया° Mh. 2, 308 ॥ **554** ॥

[ गर्भ ] कुक्षौ । गर्भस्थेन समस्तदा । भ्रूणे तदन्तरस्थे जन्तौ । Me. 9 । आशये । गर्भं न जानाति खलस्य कश्चित् । बालके । सुन्दरा गर्भरूपाः । अभ्यन्तरे । Sû. 3 । भ्रूणत्वोपचारात् । Ra. 13, 4 ॥ [ जृम्भा ] विकासे प्रसरे वा । M. M. 312, 3 । वदनव्यादाने । H. V. 1, 2 ॥ **555** ॥

गात्रविरामे अङ्गघाटने । भ्रूभङ्गोत्कम्पजृम्भा स्मितललितकृता दिव्यनारीजनेन॥

[ शुभ ] द्वयेपि । कः स्या° Mh. 2, 307 ॥ [ नाभि ] प्रयुक्त° Mh. 2, 305 इत्यादौ क्षत्रिये द्वादशराजमण्डलमध्यगते चक्रवर्तिनि विजिगीषौ जेतुं प्रवृत्ते च

राज्ञि । तथा चक्रमध्येपि ॥ प्राण्यवयवे । Ra. 7, 9; Ku. 7, 60 ॥ निर्नाभि कौशेयमुपोढबाणमित्यादौ तु भीमोपि भीमसेन इव मृगनाभौ नाभिशब्दः c. Ku. 7, 7 । नाभौ कौशेयं नाभिकौशेयमिति तु न व्याख्या । अभ्यङ्गनेपथ्ये प्राण्यङ्गोद्भवानां द्रव्याणां निषिद्धत्वात् ॥ 556 ॥

[ निभ ] व्याजे । कालकूटनिभात्कण्ठे कालकूटः कृतस्त्वया ॥ [ सभा ] संसदि गृहे वा । Ku. 7, 29 । गोष्ठ्यां सहृदयसहासनबन्धे । K. K. S. 1, 46 । द्यूते द्यूतक्रीडास्थाने । सभायामुद्योगं विदधति यथा धूर्तनिवहाः ॥ [ जम्भ ] रये मुखे वा । अहि° Mh. 2, 304 । अशने । सज्जम्भजृम्भं भवति क्षणेन ॥ 557 ॥

दैत्यभेदे । Sû. 1 ॥ [ प्रभु ] शक्ते । महेश त्वदृते नास्ति संसारोत्तारणप्रभुः । स्वामिनि । Ku. 3, 1 ॥ [ रम्भा ] कदल्याम् । रम्भोरु संहर रुषम् c. M. M. 268, 4 ॥ [ रम्भ ] वैणवे दण्डे । अमुष्य संतापमुषा महिम्ना तृष्णा प्रशाम्येद्रजसा सदैव । श्रीमन्महाहंसनिषेवितत्वाददः सरोम्भो न न रोचते मे । अत्र हि सरो रेफसहितोम्भो मह्यं रोचते स चादो दकाररहित इति व्याख्यायाम् । दम्भो न रोचतेपि तु रम्भो वैणवदण्ड इति संपद्यते । रम्भस्तु वैणवदण्ड इति तु व्याख्या ॥ 558 ॥

[ ककुभ ] वीणाप्रसेवे वीणाधस्तात्तन्त्रीनिबन्धनस्थाने गेयभेदे ना [ sic ] । ककुभध्वनिनादितैः । अर्जुनद्रुमे दिशि वा । ककुभः ककुभैरिवाजिता इत्यादौ ॥ [ ऋषभ ] गीतस्वरे । Śi. 11, 1 ॥ 559 ॥

[ करभ ] कनिष्ठामणिबन्धान्तरे । Sp. 1991 । उष्ट्रे । Bh. Ś. 22 ॥ [ सुरभि ] गवि । Śi. 5, 64 । कामधेनौ मनोज्ञे च । Ra. 2, 3 । सल्लक्यैलवालुक्यौ लताभेदौ ॥ 560 ॥

सुरायाम् । सुरभिपानमदोत्कटमानसा । सुगन्धौ मधौ च । Śi. 6, 2 ॥ [ दुन्दुभि ] भेर्याम् । V. S. 25 । अक्षबिन्दुत्रिकद्वये । दुन्दुभ्या किल किं तया पतितया यद्द्रौपदी हारिता ॥ 561 ॥

[ कुसुम्भ ] महारजने पञ्चके । कौसुम्भाम्बरधारिणी रतिलघुप्रालम्बमुक्ताङ्किता । करके जलभाण्डे । विस्रम्भेण कुसुम्भसंभृतजलैर्यात्रासु जग्मे जनैः ॥ [ वर्षाभू ] प्लवे । वर्षाभूभिः सत्वर्षा भूः प्रावृषं द्योतयत्यसौ ॥ 562 ॥

[ विष्कम्भ ] विस्तारे । विष्कम्भषष्ठभागश्च विष्कम्भत्रिगुणश्च यः । प्रतिबिम्बे । दिशः प्रकाशयत्याशु रविविष्कम्भ--- । नाटकांशे भाव्यर्थसूचकेऽङ्कखण्डे । शुद्धः संकीर्णो वा द्विविधो विष्कम्भकः प्रयोगज्ञैः c. Bh. N. 18, 35 ॥ [वल्लभ] दयिते । राजीविनीजीवितवल्लभस्य Vik. Ch. 1, 35 । अध्यक्षे । गोष्ठेषु वल्लभकृतातिथिविप्रियेषु । हये । Śi. 5, 56 ॥ [ विस्रम्भ ] द्वयेपि । याचन्ते ये सविस्रम्भमर्थिनः स्वजना इव ॥ 563 ॥

[ वृषभ ] द्रव्यभिद्वाशकाख्यः ॥ [ आलम्भ ] स्पर्शने । दुरालम्भा हि विषयाः कण्टका इव वेधिनः । वधे । गवालम्भः कलियुगे विहितोपि न शस्यते ॥ [ आरम्भ ] द्वयेपि । Ra. 1, 15 v. l. ॥ 564 ॥

[ विदर्भ ] जने पुंसि । ततो विदर्भाधिपतेस्तनूजाम् । अभ्यन्तरे पुंस्येव । करकमलविदर्भे वैष्णवी तत्र दध्रे । कुशावियुक्तेनुसर्तव्यम् ॥ [ विप्रलम्भ ] विसंवादे । सभ्रद्धमेत्य तृषिता जलविप्रलम्भा दुःखात्प्रयान्ति हरिणा मृगतृष्णिकाभ्यः । विरहे । Kd. 1, 17 । वञ्चनायाम् । कं बाधते न सुजनं खलविप्रलम्भः ॥ 565 ॥

[ किम् ] कुत्सायाम् । Ki. 1, 5 । प्रश्ने । किं किं सिंहतनूरसदृशवपुः । वितर्के । M. M. 178, 5 । प्रश्न एवाक्षेपपर्यवसायिनि । Su. 3451 ॥ [ मा ] लक्ष्म्यामपि । सदा शक्तेर्भर्ता भवसि ननु मां चापि भजसे see 545, C. । प्रमाणे । मेयानुषङ्गिनी मा च ॥ [ लक्ष्मी ] हरिप्रियायाम् । Su. 79 । संपदि । Su. 278 । शोभायाम् । Śâ. 19 । ओषधिभिद्यपि निघण्टौ प्रसिद्धा ॥ 566 ॥

[ ब्राह्मी ] वाचि । चतुर्मुखमुखप्रसूतं चतुर्धा ब्रह्मेत्यादौ ॥ [ ब्राह्म ] ब्रह्मभवादौ । ब्राह्मीं कुर्यान्न वा कुर्याच्छैवीं चैव नियोगतः । आदिग्रहणादिदमाद्यर्थे ॥ 567 ॥

[ राम ] मृगभेदे । रामसेविता व्यसनता । कृष्णे । रामेण° Mh. 2, 326 । चारौ । विश्वाभिराम तव नाम सदा स्मराम । सिते । रामो यशोरामः ॥ [ पद्म ] अप्यब्जयोः । पद्माकरास्तं गता इत्यादौ ॥ 568 ॥

संख्याभेदे निधिभेदे व्यूहभेदे च । असंख्यैः पद्मैर्यो विजितबहुसंख्यः परिवृतः । गजबिन्दुषु । नागजस्य [ sic ] चत्वारिंशद्वर्षदेशीयस्य गात्रे शोणा बिन्दवः पद्मवाच्या उत्पद्यन्ते ॥ [ धर्म ] पुण्ये देवभिदि च । Ki. 3, 4 । तत्साधनोपाये पुण्ये । Pr. P. 18 ॥ **569** ॥

स्वभावे । न शक्तिरस्तीह मनुष्यधर्मणः । न्याये । M. 8, 20 । आचारे । Ra. 1, 13 । सोमपे याज्ञिके । धर्मः स्वकर्मकुशलो नयतीह पारम् । अहिंसायाम् । न° Mh. 2, 319 । उपमायाम् । अवरेट इव ख्यातः शूद्रधर्मा स जातितः ॥ [ जामि ] द्वयेपि । Sp. 2407 ॥ भर्तृभगिन्यां तत्स्वसृत्वात् ॥ **570** ॥

[ काम ] काम्ये अभिलाषे च । Sp. 3241 । स्वैरे । Ku. 1, 50 । मनोभवे । Ra. 16, 50 । अभ्यनुज्ञाने । K. Pr. 98, 5 ॥ **571** ॥

[ यम ] अन्तके । Ku. 2, 23 । नित्यकर्मणि । M. 4, 204 । यौ यमावधिगतौ सुमित्रया इत्यादौ सहजयोः सहजातयोर्द्वयोः प्रत्येकं च तयोर्यमशब्दः । यमस्य यमस्वसुश्चैतौ [ ? ] शब्दावनेनैव निमित्तेन ॥ [ क्षमा ] क्षितिक्षान्त्योः । क्षमस्व बाल्यादुदितं क्षमापते ॥ [ क्षम ] युक्ते । Ki. 1, 45 । हिते । त्वत्° Mh. 2, 310 ॥ **572** ॥

[ श्याम ] हरिति । M. M. 161, 5 । कृष्णे । Me. 18 । निशि । K. Pr. 180, 1; c. V. Ś. III, 1 । कान्तायामप्रसूता भवेच्छ्यामा इत्यादिकृतलक्षणायां नायिकायाम् । Me. 79; c. Sp. 6542 । प्रियङ्गुलतायाम् । Me. 101 । वटभेदे । Ra. 13, 53 ॥ **573** ॥

[ समा ] वर्षे । U. R. 27, 16 ॥ [ सम ] अनुच्चनीचे देशे । क्षणप्राप्तो वेगव्युपरतिमवाप्नोति च समम् । सर्वस्मिन् । यातः समेषामुपजीव्यतां यः । सदृक्षे । Bhag. 12, 18 ॥ [ गुल्म ] सेनाभिदि । न० Mh. 2, 315 । रक्षास्थाने व्रज्ञादौ । ममापि नाम वारणस्य रक्षापेक्षीणि गुल्मकस्थानानि । गह्वरे । अशोकगुल्मे पिहितस्त्वमास्स्व ॥ **574** ॥

[ घर्म ] उष्णे गुणे । Sû. 6 । स्वेदाम्भसि । M. M. 66, 10 । ग्रीष्मे । Ra. 16, 43 । भावभिदि सात्त्विके भावविशेषे रूढ्या वर्तते । Śi. 1, 58 । आतपे । Bâ. VI, 36 ॥ [ तोकम ] हरिन्मात्रे आर्द्रतोपलक्षके । ब्रह्म० Mh. 2, 317 । हरिते यवे । क्लीवः क्रीणीत तोक्मानि ॥ **575** ॥

। [सीमा] अवधौ। M. 8, 6। स्थितौ मर्यादायाम्। सीमां॰ Mh. 2, 333। क्षेत्रे। सीमाः पक्वफला विदन्ति परितः साधुर्यथा सत्क्रियाः। विषये। सीमां यदा याति दृशोः कृशाङ्गी। केशभूषणे। सीमाभूषितसीमन्ताः॥ [द्रुम] वृक्षमात्रे वैद्यकुलोद्भवे च। Śi. 19, 8। पारिजाते। द्रुममुच्चखान तृणवत्तदद्भुतम्। ॥ 576 ॥

[क्षेम] कुशले। Dhv. 77, 5। लब्धरक्षणे। क्षेमे सुभिक्षे॰ Bh. Pâ. 5, 4, 68 vol. II., 438, 9॥ [ग्राम] संवसथे वसत्यन्नपानादिविशिष्टे स्थाने। Su. 1771। गेयभेदे। Śi. 1, 10। एतेनैव निदर्शनेन करणग्रामः समग्रो गत इत्यादौ वृन्दे समूहे सपूर्वक उत्तरपदीभूतः केवलस्याप्रयुज्यमानत्वात्॥ 577 ॥

[भ्रमि] मोहे। K. Pr. 105, 8॥ [भ्रम] अतस्मिंस्तद्ग्रहे। Śâ. 137। मूर्छायाम्। यष्टी॰ Mh. 2, 323। तक्षभाण्डे। Ra. 6, 32। छत्रे। शुशुभे शारदो राजा सिताभ्रभ्रमविभ्रमेण यः [?]॥ 578 ॥

[रश्मि] घृणौ। Śâ. 54। प्रग्रहे। Ra. 2, 28। वल्गायामपि॥ [उमा] भङ्गायाम्। समन्ता॰ Mh. 2, 309। दुर्गायाम्। Ku. 1, 26॥ [भीम। भीष्म] रुद्रे। M. St. 28। राजभेदे। V. S. 21। भयानके। भीमां भ्रुकुटिमाबध्नन्॥ राजभेदे। Ki. 3, 19। गाङ्गेयादिपदपरिहारेण पर्यायवक्रतया भयानकेपि तौ भयानकेभिधेयवल्लिङ्गौ॥ 579 ॥

[सूक्ष्म] अध्यात्मविषये। S. P. 20। अध्यात्ममन्तरात्मविषयं रूपम्। अल्पे। सूक्ष्माक्षरेक्षणदिवाशयनैश्च नित्यम्॥ [हिम] शीते। Ku. 3, 33। तुषारे। Ku. 1, 3॥ [भूमि] स्थाने आश्रयमात्रे। Ku. 5, 45। पात्रे योग्ये। H. Ch. 18, 13। दशायाम्। सा भूमिर्दुर्गमा नृणाम्॥ 580 ॥

[वाम] योषिति प्रतिकूले च। वामा अवामा अपि नैव सव्याः। वल्गौ चारौ। Me. 9। सव्ये दक्षिणेतरे। Me. 93॥ [वामी] अश्वायाम्। सवामी वामीभिः सदनसविधा भान्ति सुचिरम्। हार्यवस्त्वर्थवाहयुग्मकृते नेतव्यपदार्थप्रयोजनवाहनद्वयसंपादिते गन्त्र्यादौ। Ra. 5, 32॥ 581 ॥

[जिह्म] कुटिले मन्दके वा। Ki. 1, 8॥ [श्रम] प्रयत्ने खेदे वा। Ku

5, 45 ]॥ [ क्रिमि ] रोगे क्रिम्युपलक्षिते । मयोष्टकं क्रिमिकरम् ॥ 582 ॥

[ क्रम ] परिपाट्याम् । Ku. 5, 32 । कल्पे न्याये । कोयं क्रमो यत्प-रिगृह्य° Mh. 2, 310 । पादक्षेपे । K. K. S. 1, 1 । परंपरायां प्रवाहे । गुरुपर्वक्रमाक्रान्तस्मृतिश्रवणशालिनीत्यादौ । आनन्तर्ये । Ra. 3, 7 । पदसंधौ पदमेलनायाम् । नानृषिः कुरुते काव्यं नारुद्रः क्रमपाठकः ॥ [ शमी ] शि-म्बायां फलपूर्णे शाखावयवे । न्यग्रोध° Mh. 2, 330 । द्रुमभिदि । Ra. 3, 9 ॥ 583 ॥

[ कूर्म ] प्राणिनि । Su. 1033 । यमिनामासने । निबध्य कूर्मं निगृहीत-चित्तः ॥ [ नेमि ] नीचैर्ग° Me. 106 इत्यादौ कूपाङ्गे खरटिकायाम् [ sic ] । तिनिशो वृक्षभेदः ॥ 584 ॥

[ शम ] हस्ते । षट्त्रिंशच्छमषड्भागसंमिता वेदिरुत्तमा । निजमण्डलव्यव-स्थायां राज्ञाम् । Bâ. I, 24 ॥ [ आम ] रोगे । Śi. 2, 54 ॥ [ स्तोम । अध्वरे । अग्निष्टोमादयो यज्ञाः । स्तुतौ । शंभोः स्तोमविधौ समुद्धतधियो धन्या जनाः केचन ॥ 585 ॥

[ मध्यमा ] दृष्टरजस्कायां कन्यायाम् । मध्यमा° Mh. 3, 464 ] [ मध्यम ] गीतस्वरे मध्यमध्ये स्वरन्यासत्वात् । सुप्रतिष्ठौ स्मृतौ ज्ञेयौ द्वौ ग्रा-मौ षड्जमध्यमौ । देहमध्ये । Ku. 5, 20 । देशभेदे । देशोसौ मध्यमः ख्यात-स्त्वन्तरा हिमविन्ध्ययोः । राजभेदे । Ra. 13, 7 ॥ 586 ॥

अन्यूनानतिरिक्ते । द्वयोस्तु तज्ज्ञं प्रवदन्ति मध्यमं° c. Su. 2919 ॥ [ संभ्रम ] भये । पौलस्त्यपीनभुजसंपदुदस्यमानकैलाससंभ्रमविलोलदृशः प्रियायाः । संवेगे त्वरायाम् । ससंभ्रमा सत्त्रसुहृत्समाहितैः । आदरे । सुभ्रु किं संभ्रमेण ते ॥ [ व्यायाम ] परिश्रमे । व्यायामक्षुण्णगात्रस्य Kâś. Pâ. 6, 1, 63; Suśr. II, 139, 12 ॥ 587 ॥

पौरुषे । फलन्ति व्यायामा यदि भवति चैत्रं वशगतम् । कृत्ये चाणक्यल-क्षिते कर्तव्यविशेषे । Bâ. I, 24 ॥ [ विद्रुम ] वृक्षे । वेलातटेषून्नतविद्रुमेषु । रत्ने । Ku. I, 44 ॥ [ नियम ] यन्त्रणायाम् । आकारवांस्त्वं नियमादुपास्यो

न वस्त्वनाकारमुपैति बुद्धिः । प्रतिज्ञायाम् । इति॰ Mh. 3, 459 । निश्चये । अयं मे नियमो देव यस्यां दिशि स वर्तते । व्रते । Ra. 1, 94 । नियमार्थोयं योग इत्यादौ व्यावृत्तौ यन्त्रणापर्यवसायिन्याम् ॥ 588 ॥

[ विभ्रम ] हेलायाम् । Ku. 1, 4 । भरते हेलाविभ्रमादीनां भेद उक्तः स इह हेलासामान्येन प्रसिद्धत्वा - - लक्षत्वाच्च न गृहीतः । भ्रान्तौ । पुंसोपि मृगतृष्णाया यस्यास्ति जलविभ्रमः ॥ [ विक्रम ] शक्तौ । विक्रमोर्जित॰ Su. 581 । क्रान्तौ । व्यञ्जितक्रम इव त्रिविक्रमः ॥ [ तलिम ] द्वयेपि । V. Ś. II, 23 ॥ [ आगम ] शास्त्रे । आगमास्तत्त्वशंसिनः । ग्रहणेपि Ra. 1, 15 ॥ 589 ॥

[ अगम ] गत्यभावे द्रुसाधर्म्याद्द्रौ च । U. R. 27, 16 । दुर्गे दुर्गमे देशे । अगमशिखरारूढश्चन्द्रः कथं वद जीयते ॥ [ गौतम ] बुद्धे । गौतमेन यदुदस्यताशयं प्रोद्धृतं जगदुपप्लुताशयम् । मुनौ मुनिविशेषे । Ra. 11, 34 ॥ [संगम ] नदीसंभवे । ससंगमो यत्र समुद्रकान्तयोर्विहारवीथी ध्रुवमिन्दुलक्ष्मणः । सङ्गे । संगमविरहविर्तके॰ Sp. 6671 ॥ 590 ॥

[ आश्रम ] ब्रह्मचर्यादौ । Ku. 5, 30 । मठे । आश्रमेषु सततप्रवृत्ताश्च मन्त्रेषु । तपस्विनां स्थाने । कुसुमशरमुनिराश्रमब्रह्मचारी ॥ [ निगम ] वणिक्पथे पुरे वा । न खलु निगममार्गे याति साध्वी कदाचित् । वेदे । साम्राज्ये निगमस्य सर्वविषये शंभोरिवोज्जृम्भते ॥ [ नैगम ] वणिजि नागरे वा । पुराणि श्रेणयश्चैव शिल्पिनो नैगमास्तथा ॥ 591 ॥

विप्रे । नैगमाः सानुमन्तः ॥ अतस्त्रिष्वित्ति । त्रिष्वित्येतत्परमशब्दं यावदनुवर्तते ॥ [ सत्तम ] द्वयेपि । शृणु त्वं मुनिसत्तम ॥ [ प्रथम ] द्वयेपि । इक्ष्वाकुवंश्यः प्रथमो॰ Ra. 6, 71 ॥ उत्कृत्यो॰ M. M. 173, 2 इत्यादौ क्रियाविशेषणत्वादादित्वमेव गम्यते ॥ [ अधम ] न्यूने गर्हिते वा । Pa. 3508, d ॥ 592 ॥

बुध्नस्थेपि । अधमावस्थितकुशला न जडा उच्चैःपदं यान्ति ॥ [अवम] एवमिति त्र्यर्थम् । न्यूने गर्हिते वा प्रतिषिद्धे । अद्य प्रभृत्यनवमाङ्गि॰ Ku. 5, 86 । बुध्नस्थेपि । जडैरापूर्यतेम्भोधिरवमोसौ किमद्गु-

तम् ॥ [ अग्रिम ] अग्रे अग्रेभवे । अग्रिमं न परिपीडयेद्दृशम् । प्रधाने । सर्वेषामग्रिमो ब्रह्मा वृणुयात्प्रथमं तु तम् ॥ [ परम ] उत्कृष्टे । परम यो महत्तेजः परमं यो महत्तपः । अभ्यनुज्ञाने । Ku. 6, 35 ॥ **593** ॥

[ ललाम । ललामन् ] नवस्वर्थेषु ललामललामन्शब्दौ । ललामन्शब्दो नान्तोऽप्यर्थसाधारण्यादिह गृहीतः । उदाहरणमन्वेष्यम् । दिङ्मात्रं तु दर्श्यते । पुच्छे । लीला° Mh. 3, 398 । पुण्ड्रे अश्वस्य स्वाभाविके श्वेते मुखपट्टे । सिन्दूरपूरपरिपूर्णललामभङ्ग्या पत्युः प्रतापमिव दर्शयते वराश्वः । ललामन्शब्दो रत्ने । Ra. 5, 64 ॥ **594** ॥

[ निष्क्रम ] बुद्धिसंपदि । निष्क्रमो° Mh. 3, 458 ॥ [ परिश्रम ] व्यायामे यत्ने वा । साफल्यं भजतु परिश्रमो विधातुः । खेदे । वृथा कृथा मा स्म सखे परिश्रमम् c. Ki. 8, 7 ॥ [ अभ्यागम ] युद्धे । अभ्यागमो° Mh. 4, 214 । आभिमुख्यागतौ । Śi. 1, 23 ॥ **595** ॥

[ उपशम ] शान्तौ । प्रवाते वाते यन्नहि भवति वह्नेरुपशमः । विनीततायाम् । श्रुतमुपशमैकश्रमफलम् c. Sp. 5256, b ॥ [उपक्रम ] चिकित्सायाम् । असाध्योपक्रमा रोगा नारभ्यन्ते चिकित्सितुम् । आरम्भे । उपक्रमः संप्रति निष्फलो भवेत् ॥ नन्दोपक्रमं प्रमाणानीत्यादौ आरम्भ एव । तदाद्याचिख्यासा तु समाससंनियोगशिष्टान्नपुंसकलिङ्गादवगम्यते । चिकित्सायामुपक्रमशब्दो रूढ एव न तूपायपूर्वारम्भत्वोपचाराद्वर्तते ॥ उपधायां धर्मादिना सचिवपरीक्षायाम् । उपक्रमैरस्खलितैर्विशुद्धाः c. Ra. 18, 14 ॥ **596** ॥

[उपगम ] अङ्गीकृतौ । धर्मोपगमशुद्धात्मा । समीपगमने । उप° Mh. 4, 216 ॥ [ यातयाम ] जीर्णे । यातयामं गतरसं पूतिपर्युषितं च यत् । परिभुक्ते । दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः । अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥ **597** ॥

[ ज्या ] मौर्व्याम् । Ra. 6, 40 । भूमावपि । ज्याबद्धबाहुः स च तद्रिपुश्च ॥ [ द्यो ] नाके देवस्थाने मेरुपृष्ठादौ । द्यां नीतपौरा° Ra. 16, 9 । अन्तरिक्षे आकाशे । द्यामालोकयतां कलाः कलयतां छायाः समाचिन्वताम् । द्योशब्द-

स्यैतद्रूपम् ॥ [ गव्य ] ज्यायां गोसमूहे च गव्याशब्दः । गव्योपचारकुशलः शलभानित्वारीन् । रागद्रव्ये गोरोचनाख्ये । गव्यकर्पूरकुङ्कुमैः ॥ 598 ॥

गोक्षीरादौ दधि । Ku. 7, 72 । आदिग्रहणाद्गवहितादौ ॥ [ अर्य ] द्वयेपि । Su. 487 ॥ [ कल्य ] सुरायां स्त्रियाम् । कल्यपालगृहं गत्वा येन्विषन्त्यासुती-बलम् ॥ 599 ॥

सज्जनीरोगदक्षेषु । कल्यः कलासु च कृती दृढभक्तिराढ्यः ॥ [ काल्य ] अहर्मुखे । काल्यमुत्थाय संस्मरेत् । प्राप्तकाले । नाकाल्यस्तु कदाचन ॥ [भाग्य] शुभे कर्मणि । अस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् । अशुभेपि । सुखं वा दुःखं वा भवति हि नृणां भाग्यविहितम् ॥ 600 ॥

[ दाय ] यौतकादिधने सुदायादौ । प्रकृतौ° Mh. 2, 357 । दाने । M. M. 106, 8 । पैतृके भोज्ये । M. 9, 158 ॥ [ जन्य ] विवाह्याया ज्ञातिषु । समेन समयं जन्यैर्ब्रह्मदेयां प्रकल्पयेत् । विवाह्याया भृत्येषु । Ra. 6, 30 v. l. । वरस्निग्धेषु । M. M. 197, 4 ॥ 601 ॥

निर्वादे लोकवादे । तत्त्वो° Mh. 2, 353 । जनके । जन्येन तेनाजनि सुप्रतिष्ठः । युद्धे क्लीबे । Śi. 19, 13 । कार्ये उत्पाद्ये त्रिषु । अनन्यजन्यं दौर्ज-न्यम् । अयमुत्पादितेपि कैश्चिद्दर्शितः ॥ [ क्रिया ] आरम्भे । मन्त्रमूलाः क्रिया राज्ञाम् । निष्कृतौ । महा° Mh. 2, 344 । शिक्षायाम् । Ra. 3, 29 । पूजायाम् । Ra. 2, 16 । संप्रधारणे विचारे । क्रियां विना कोभिजानाति कृत्यम् ॥ 602 ॥

उपाये । सप्त सामादिकाः क्रियाः । कर्मणि व्यापारे । Ku. 3, 35 । चेष्टायाम् । Bh. Ś. 77, c । चिकित्सायाम् । अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् । करणे निष्पादने । Ku. 1, 7 । धात्वर्थे । विशे-षदर्शनं यत्र क्रिया तत्र व्यवस्थिता । आख्याते तिङन्ते धातौ । AK. I, 6, 2 । संस्कारे । Ra. 3, 10 । और्ध्वदैहिके मृतसंस्कारे । Sp. 6592 ॥ 603 ॥

[ गृह्य ] शाखापुरे मूलनगरादन्यस्मिन्पत्तने । गृह्ये श्रीमदवन्तिवर्मनगरे ते भूमिदेवाः स्थिताः । अस्वैरिणि अधीने । स्वा° Mh. 2, 347 । पक्ष्ये तद्ग-र्गप्रविष्टे । Ki. 2, 5 । गृहासक्ताण्डजमृगे । गृह्यकेलिकलनाकुतूहलात् ॥ गृह्या

एव न ताः पुनः पतिकुलं योग्याः समालम्बितुमित्यादौ बहिर्भवायां स्त्रीलिङ्ग एव निपातितः ॥ 604 ॥

[ रूप्य ] हेम्नि रजते वाहते टङ्करूपतां नीते। मणि° Mh. 2,370 । रजते प्रशस्ते वा । रूप्यभित्तिषु संक्रान्तप्रतिबिम्बाः पुरस्त्रियः ॥ [ माल्य ] पुष्पे तत्स्रजि वा । Ku. 7, 19 ॥ 605 ॥

[ हृद्य ] हृद्भवे । जग्राह रूप्यं व्यवहारयोग्यं हृद्योस्य शोकस्तु न निर्जगाम । हृत्प्रिये सांप्रतिकतुष्टिकरे हृदयहिते परिणामसुखदे वा । Ra. 11,68 । वशीकरणमन्त्रे । हृद्यसाधनविधौ निबद्धधीः ॥ [ सत्य ] शपथे । न पक्षपातेन वदामि सत्यम् N. Ch. 1, 27 ॥ 606 ॥

[ द्रव्य ] भव्ये योग्ये । न शास्त्रमद्रव्येष्वर्थवत् । औषधे । द्रव्यं पीत्वा तु न स्वपेत् । धने । द्रव्यसंचयपरो नराधमः । गुणाधारे । Śi. 5, 38 । गव्यन्वेष्यम् । विशेष्ये । कस्य० Mh. 2, 356 । परमाणौ । अद्रव्यमनेकद्रव्यं च द्रव्यम् ॥ [ तिष्य । पुष्य ] कलौ युगविशेषे भे नक्षत्रे च । तिष्योप्यनर्थकर इत्यतिचित्रमेतत् ॥ द्वयेपि । पुष्ययोगपरिपोषितश्रियः ॥ पुष्यरागेपि मणिविशेषे पुष्यशब्दं केचिदद्राक्षुः । स च भीमो भीमसेन इतिवद्भविष्यति ॥ 607 ॥

[ पुण्य ] धर्मे सुकृतफले । Me. 30 । सुकृते धर्मसाधने कर्मणि । पूर्वपुण्यपरिपाकलभ्यया । पूते पवित्रे मनोज्ञे रमणीये वा । Me. 33 ॥

[ सौम्य ] मनोज्ञे । क्वायं गरुत्मान्क्व च नाम सोमसौम्यस्वभावाकृतिरेव साधुः ॥ 608 ॥

[ अर्घ्य ] त्रयेपि । Ku. 1, 58 । पूजार्थं द्रव्यमुदकतण्डुलादि – र्घरूपमर्घ्यशब्दवाच्यम् । अर्घार्थं चोदकादिभिन्नं - - - ॥ 609 ॥

[ कक्ष्या ] स्पर्धायाम् । स तुल्यकक्ष्यो रिपुणा धनंजयः । काञ्च्याम् । कक्ष्यावबद्धसिचया किमियं नु शेते । गृहान्तरे । Ku. 7, 70 । एवं सप्तकक्ष्यं राजवेश्मेत्यादौ ज्ञेयम् । प्रतिज्ञायाम् । Nâg. 64 । तुलायाम् । वणि° Mh. 2, 341 । पुंसः सारसने कटीवस्त्रमन्थनभाण्डे । परिधानाद्बहिः कक्ष्या निबद्धा ह्यासुरीभवेत् ॥ 610 ॥

[ रथ्य ] रथोद्वाहे वाजिनि । हरिरथ्यं रथं° c. Ra. 12, 84 । मार्गे । M. M. 27, 1 । रथसमूहे । अश्वीयरथ्यागजताकुलेस्मिन् ॥ [ काय ] संघातलक्ष्ययोः शाश्वतोक्त्या गृहीतः c. Śâśv. 490. 748 । उदाहरणं त्वन्वेष्यम् । कदैवते । कायं हविर्निर्वपतीह । कः प्रजापतिर्देवतास्येति व्युत्पत्त्या ॥ **611** ॥

[ क्षय ] निलये मृत्यौ च । Su. 44, d । कल्पान्ते । क्षयकालेपि निराकुलः कृती । विशिष्टे रोगे राजयक्ष्मणि । क्षयः क्षीयेत नान्यथा । अपचये । Ki. 2, 9 ॥ [ भव्य ] सति विद्यमाने भाविनि वा । अर्थोयमर्थान्तरभव्य एव c. Ku. 3, 18 । योग्ये । Ku. 1, 22 । शिवे कल्याणे । भव्यं भव्यमिदं कुतः परिणतं यद्दृश्यते त्वादृश इत्यादौ । फलभेदे । रे भव्य पालेवत रे चिरे रे ॥ **612** ॥

[ प्राय ] मृतावनशने वा । Ra. 8, 93 । बाहुल्ये । Ku. 3, 28 । सदृशे उत्तरपदीभूतः । कार्यं° Mh. 2, 361 ॥ प्रायश्चापं° Me. 71 इत्यादौ प्रायःशब्दः समासान्तो निपातो बाहुल्यार्थः ॥ [ धिष्ण्य ] स्थाने । Śâ. 83 । दैत्याचार्ये । गोष्ठीषु धिष्ण्यधिषणाविव राजमानौ । वह्निभेदे अग्निविशेषे । ऋत्विजस्तत्र° Mh. 2, 360 ॥ **613** ॥

[ वैद्य ] द्वयेपि । औत्सुक्यमोहारतिदाञ्ज्वरान योपूर्ववैद्याय नमोस्तु तस्मै ॥ [ शय्या ] द्वयेपि । Kâd. I., v. 8 ॥ [ तार्क्ष्य ] द्वयेपि । वृषे सङ्गं बिभ्रद्वसि सततं तार्क्ष्यवहनः c. 545, C. ॥ [ पूज्य ] श्वशुरे । पूज्यागारे° Mh. 2, 362 । सज्जने । सदा सेव्याः पूज्याः प्रचुरतरसंतोषविभवाः ॥ **614** ॥

[ दस्यु ] द्वयेपि । दस्यूदस्यकृपाण° [sic] M. M. 188, 5 ॥ [ वर्य ] द्वयेपि । वर्याश्चाञ्चल्यचर्चायां न कुर्युर्मानसं बुधाः ॥ [ सव्य ] वामे । R. V. 1 । दक्षिणे । Ku. 3, 70 ॥ [ अर्थ्य ] न्याय्ये । Ra. 1, 59 । विपश्चिति । अर्थ्या° Mh. 2, 336 ॥ **615** ॥

[ अन्त्य ] अधमे । अन्त्येषु जन्तुषु च यस्तमसावृतेषु M. M. 39, 8; c. 373, 15 । अन्तभुवि अवसानभवे । अन्त्यगुणमादिना विभजेत् ॥ [ मध्य ] न्याय्ये । मध्ये वर्त्मनि वर्तते नहि खलो दौर्जन्यपण्याश्रयः । अवलग्ने कायस्य

मध्यमे स्थाने । Ku. 1, 39 । अन्तरे । Me. 18 । अनधिकन्यूने । K. K. S. 1, 44 ॥ [ मध्ये ] स्त्रीणां मध्येनुरागो विगलितहृदयान्नैव कस्यापि जन्तोरित्यादौ उद्दिश्यवाचक उद्दिश्यशब्दार्थप्रतिपादकः । मध्येशब्दः सप्तम्यन्तप्रतिरूपको निपातः स्त्रीणां मध्ये स्त्रियः प्रतीत्यर्थः ॥ 616 ॥

[ अन्य ] इतरस्मिन् । अन्या हि सन्ति सखि भाजनमीदृशानां वैरी भवेद्यदि न वेपथुरन्तरायः c. S. K. 27, 14 । असदृशे असाधारणे । अन्यैव काचिल्लिपिः ॥ [ त्रयी ] त्रिवेद्यां वेदत्रयीसमवेते । M. St. 7 । त्रितये । Śi. 2, 3 ॥ [ मन्यु ] दैन्ये । तीव्राभिषङ्गप्रभवेण मन्युना c. Ku. 3, 73 । क्रतौ । न° Mh. 2, 365 । क्रुधि । Ki. 1, 27 ॥ 617 ॥

[ चर्या ] पूजायां व्रतक्रियायां वा । M. M. 343, 7 ॥ [ गेय ] गातव्ये । प्रगे यो गेयानि प्रथयति पुरस्ताद्भगवतः । गायने । साम्नां° Mh. 2, 348 । भव्यगेयेत्यत्र कर्तरि निपातितः c. Pâ. 3, 4, 68 ॥ [ ययु ] अश्वे । ययुयायि ययोयेय इत्यादौ c. D. Ś. 22 । अश्वमेधाश्वे । राजन्यास्ते° Mh. 2, 367 ॥ [ मूल्य ] विनिमये एव द्रव्यान्तरप्रतिदाने । मूल्यं तस्यससागरा वसुमती सत्यं कियद्वर्ण्यते । भृतिविनिमये एव । पञ्चकं मूल्यमस्य । धने । पश्चा० Mh. 2, 367 ॥ 618 ॥

[ काव्य ] मद्दे । Śi. 2, 2 ॥ [ कुल्या ] नीरप्रणालिकायाम् । उदीर्णे शीतांशौ मकरमुखकुल्याभिरभितः प्रसर्पन्ति स्फीताः शशिमणिरसौघाः प्रतिनिशम् ॥ कुल्यातुल्यं प्रसरति सदा नेत्रयोरस्तु तस्या इत्यादौ नद्यां कुल्याल्पा कृत्रिमा सरिदित्यादौ लक्षितायाम् c. AK. I, 10, 34 ॥ [ कुल्य ] अस्थिन । कुल्याभरणभूषिताम् । कुलोद्भवे । Sp. 4102 ॥ 619 ॥

[ चोद्य ] चोदनार्हे । अधीयानोप्यलब्धार्थो न चोद्यः स्यात्कथंचन । चोदने आक्षेपे अद्भुते वा । Śi. 9, 16 ॥ [ गोप्य ] दाससूनुषु । आरोप्यते० Mh. 2, 348 ॥ 620 ॥

[ योग्य ] प्रवीणे । सेवां° Mh. 2, 368 । उचिते । तूष्णीमेवासितुं योग्यं विदुषा वृद्धसंनिधौ ॥ [ योग्या ] अभ्यासे । Ra. 8, 19 ॥ [ संख्या ] एकत्वादौ । H. Ch. 3, 1 । विचारे । संख्यातीतं वेत्ति को वस्तुतत्त्वम् ॥ 621 ॥

[आप्य] द्वयेपि । अनाप्यं जलसंसर्गाद्विरुद्धं खलचेष्टितम् ॥ [याप्य] नेतव्ये । याप्यः कालो भवति विधुरे दैवयोगे कथंचित् ॥ शेषत्वादायुषो याप्य इत्यादौ नेतव्यत्वोपचाराद्रोगे दैर्घकालिके ॥ गर्हिते । M. 9, 4 v. l. ॥ [ आस्य ] मुखान्तरे । आस्यं° Mh. 2, 337 । आसने स्त्रीलिङ्गः । उपास्या स्यादास्या समवहितचित्तेन विदुषा ॥ 622 ॥

[ पथ्या ] आर्येषु त्रिषु पादो भवति भवति तु पथ्येत्येवंलक्षणलक्षित आर्याभेदः ॥ [ पथ्य ] औषधे । पथ्यं० Mh. 2, 360 । अगते पथः । न्याय्ये । Sp. 7131 ॥ [ पाक्य ] विधुरं तस्य किं यस्य पाक्यं ⏑ ⏑ ⏑ ⏑ । पाक्यरसवाक्यविचारणाभिरित्यादौ पाकार्हणे ॥ 623 ॥

[ कृत्य ] छेदनीये कार्ये च । कृत्यं कुकृत्यं धिषणाशलाकया । विद्विष्टे परैरवमानिते धनादिभिर्भेद्ये । तान्कृत्यानवमन्यते यदि नृपस्तस्यात्कृतार्थः श्रमः । यत्कौटिल्यः । क्रुद्धलुब्धभीतावमानिताः परेषां कृत्या इति ॥ [ कृत्या ] देवतायाम् । कृत्यां देवीमबन्धयम् ॥ [ वाच्य ] कुत्सिते । न वाच्यस्तेन वर्णितः ॥ 624 ॥

उपालभ्ये । Ra. 14, 61 ॥ [ चैत्य ] स्तूपे बौद्धदेवताभेदे । चैत्यं वन्देत स्वर्गकामः । उद्देपशादपे प्रसिद्धिहेतौ वृक्षे । Me. 23 ॥ [ चय ] प्राकारमूलबन्धे संचये च । प्राकारश्चयहीनः सततं विपरीततां वहति । संघे । Śi. 1, 3 ॥ 625 ॥

[ साध्य ] द्वयेपि । असाध्यां साध्यपदवीम् ॥ [ वन्य ] वनसमूहे । वन्यां जगाहे वनलब्धवर्णः । वने साधुनि । Ra. 2, 37 ॥ 626 ॥

[ छाया ] आतपाभावे । Ku., 1, 5 । प्रभायामपि । Kâd. 5, 11 । प्रतिमायाम् । Ra. 2, 6 । गङ्गायाम् । Ra. 13, 2 । संवाहे । छाया° Mh. 2, 351 । येन केनचित्प्रकारेण सेवकसंतोषणं संवाहः । न्याय्ये औचित्ये । यः Mh. 2, 351 । उत्तरपदीभूतः प्रायेणात्र प्रतिबिम्बार्थ एव ॥ 627 ॥

[ सह्य ] आरोग्ये शाश्वतेनोक्तः c. Śâśv. 485 । उदाहरणं त्वन्वेष्यम् ॥ [ वीर्य ] बले प्रभावे वीरकर्मणि वा । Ra. 5, 37 । रेतसि । उभे एव क्षमे सोढुमुभयोर्वीर्यमाहितम् c. Ku. 2, 60 ॥ 628 ॥

[ जया ] देवीभेदे । तां जयाविजयादानसंमुखीम् । ओषधिर्द्वयोर्द्वयोः स्त्रीपुंसयोः । एका जया अन्यो जयः ॥ [ जय ] भारते । ततो जयमुदीरयेत् e. g. Mahâbhâr. I, 1, 1 ! जयो नामेतिहासोयमिति वचनात् । गणे प्रमथे उत्कर्षे च । तस्मै जयाय निजवर्गजयैककर्त्रे । अभिभवे । Kd. 1, 22 ॥ [ आर्य ] ज्येष्ठे । M. Ch. I, 54, b । ब्राह्मणे । आर्यकर्म न कुर्वीत शूद्रस्तत्कर्म वा द्विजः । सज्जने । Sp. 4811 ॥ **629** ॥

[ आर्या ] छन्दोभिदि । जघनचपलाप्यनार्याः Kuṭṭ. 312, c. 757 ॥ [ चित्या ] चितायाम् । चित्यामा° Mh. 2, 349 । अग्निचयने । चित्य° Mh. 2, 349 ॥ [ सभ्य ] सामाजिके प्रत्ययिते अविसंवादके वा । Ku. 7, 29 । अग्नौ अग्निविशेषे शालाग्नौ । सभ्योग्निरिव पञ्चमः ॥ **630** ॥

[ दूष्य ] इभमध्यबन्धन्यां दूषणीये च । दूष्यो° Mh. 2, 358 । पटगृहे ! Śi. 5, 21 ॥ [ सैन्य ] बले सेनायाम् । Ku. 2, 52 । तत्समवायिनि सैनिके । Śi. 5, 28 ॥ **631** ॥

[ माया ] बुद्धजनन्यविद्ययोः । मायाजन्मापि° Mh. 2, 366 । वञ्चनाया-मिन्द्रजाले । Ra. 2, 62 । वञ्चनाविद्याधिष्ठातृदेवतायाम् । मायादेवी° Mh. 2, 366 ॥ [ जात्य ] कुलजे । चतुरगमनो यो जात्यश्वः [ sic ] स गौरिव वाह्यते Su. 283 । कान्ते उत्कृष्टे । M. M. 110, 1 v. l. ॥ **632** ॥

[ आदित्य ] सूर्ये । Ku. 2, 24 । गीर्वाणे । आदित्या व्यत्ययं हित्वा त्वां स्तुवन्ति पुरातनम् ॥ [ श्वशुर्य ] स्याले देवरे च । ज्येष्ठः श्वशुर्यः स्याली च संमान्यौ गुरुवत्स्मृतौ ॥ [ अहार्य ] द्रयेपि । Ku. 5, 8 ॥ **633** ॥

[ नादेय ] भूमिजम्ब्वादयः प्रायो लताभेदाः । नद्यां भवे । नादेयं° Mh. 3, 482 ॥ [ जघन्य ] पश्चादर्थे । उत्तिष्ठेत्° Mh. 3, 480 । गर्हिते । Su. 2919 ॥ **634** ॥

[ प्रणाय्य ] अभिलाषविनिर्मुक्ते । ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्प्रणा-य्याय वान्तेवासिने Chh. U. 3, 11, 5 । असंमते चौरादिके । अवामुया-दसोप्यचिरेण निग्रहं समं प्रणाय्यैर्यदि संवसेन्नरः ॥ [ आशय ] आधारे । त्रिर्नि-मज्जेज्जलाशयम् । हृदि । निर्मलाशयतया जितं जगत् । अभिप्राये । कस्याप्यत्र परिस्फुरन्ति विदुषो गूढाशया उक्तयः ॥ [ अश्वीय ] अश्वसंहतौ । अश्वीय-रथ्यागजसंकुलेस्मिन्संग्राममूर्ध्नि प्रसहेत कस्त्वाम् c. Mh. 2, 369 ॥ **635** ॥

**वारिधिर्वर्ण्यतेऽधुना ॥२३॥**

**अधुना** इदानीं **वारिधिर्वर्ण्यते** कथ्यते । केन ? भाष्यकर्त्रा मुनिश्रीमदमरकीर्तिना ।

साम्प्रतं समुद्रनामानि प्रारभ्यन्ते—

**स्रोतस्विनी धुनी सिन्धुः स्रवन्ती निम्नगाऽपगा ।**
**नदी नदो द्विरेफश्च सरिन्नामा तरङ्गिणी ॥२४॥**

एकादश नद्याम् । स्रोतः प्रवाहोऽस्त्यस्याः **स्रोतस्विनी** । धुनोति कम्पते धुनिः[1] । स्त्रियामीः । **धुनी** । स्यन्दति जले चलति **सिन्धुः** । त्रिषु । "स्यन्देः[2] सम्प्रसारणं धश्च ।" तटेभ्यो जलं स्रवति **स्रवन्ती** । निम्नं गच्छति निम्नगा । आ समन्तादाप्नोति अद्भिरगति वा **आपगा**[3] । आपेन वा गच्छति **आपगा** । नदद्व्यक्तं शब्दं करोति **नदी** । नदति **नदः** । "अच्[4] पचादिभ्यश्च" अच् । द्वौ रेफौ तटौ यस्य **द्विरेफः** । सरति समुद्रं गच्छति **सरित्** । तान्नाम् । तरङ्गाः सन्त्यस्यां **तरङ्गिणी** । तटिनी, निर्झरिणी, कूलङ्कषा, शैवलिनी, सरस्वती, समुद्रकान्ता, ह्लादिनी, स्रोतः, कर्षूः[5], कुल्या, द्वीपवती, रोधोवक्रा ।

**तत्पतिश्च भवत्यब्धिः,**

**तस्या** धुन्याः **पतिर्धु**नीपतिरित्यादिसमुद्रनामानि भवन्ति । स्रोतस्विनीपतिः, धुनीपतिः, सिन्धुपतिः, स्रवन्तीपतिः, निम्नगापतिः, आपगापतिः, नदीपतिः, नदपतिः, द्विरेफपतिः, सरित्पतिः, तरङ्गिणीपतिः ।

**पारावारोऽमृतोद्भवः ।**
**अपारवारकूपारौ रत्नमीनाऽभिधाऽकरः ॥२५॥**
**समुद्रो वारिराशिश्च सरस्वान् सागरोऽर्णवः ।**

नव समुद्रे । पारमावृणोति **पारावारः** । अमृतस्योद्भवः **अमृतोद्भवः** । अपारं वार् जलं यत्राऽसौ **अपारवारः** । न कुं पृणोति मर्यादापालनाद**कूपारः** । हलायुधे—"न कुं पृथिवीं पिपर्त्ति व्याप्नोतीति अकूपारः ।" अकूवारोऽपि । **रत्नमीन**शब्दयोरग्रे **आकरे** प्रयुज्यमाने समुद्रनामानि भवन्ति । रत्नाकरः, पृथुरोमाकरः, धवलोयाकरः, यादाकरः[6], वैसारिणाकरः, मत्स्याकरः, जिसार्णाकरः, शकराकरः, मीनाकरः, पाठीनाकरः, निमिषाकरः, तिम्याकरः । 'उन्दी क्लेदने' सम्पूर्वः । समन्तादुनत्त्यस्मादिति **समुद्रः**[7] । "स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विमिजनिमदिमन्दिभ्यो रक्" "अनिदनुबन्धानाम-गुणेऽनुषङ्गः" । तथा च हलायुधे[8]—"मुदन्ति मिश्रीभवन्ति भौमाऽन्तरीक्षनादेयजलान्यत्र समुद्रः ।" अमरसिंहे-"[9]समुनत्ति समुद्रः" । वारीणां जलानां राशि**र्वारिराशिः** । सरांसि जलप्रवाहणानि सन्त्यस्य **सरस्वान्** । सागरस्यापत्यं **सागरः**, सगरतनयैः खातत्वात् । अर्णांसि सन्त्यस्य **अर्णवः** ।

---

१. धुनोति कम्पयति वेतसादीन् । धुञ् कम्पने । क्विप् । पृषोदरादित्वात्कुक् । नान्तत्वान्ङीप् धुनी इति रामाश्रमः । २. का० उ० १।७ । ३. अद्भिरगतीति विग्रहेऽपः पकारस्य वत्वाभावोऽकारस्य दीर्घत्वं च पृषोदरादित्वेन निपातात्साध्यम् । ४. का० सू० ४।२।४८ । ५. अत्र कर्पूरिति दीर्घोकारान्तपाठो गुरुः । तदुक्तम्—कर्षूर्नदी करीषाग्न्योरिति शाश्वतः ६७२ । ६. यादस् शब्दस्य सकारान्तत्वाद् याद आकर इत्येव न तु यादाकरः । ७. समन्तादुनत्ति आर्द्रीकरोति भूभागानेतावानेव विग्रहः । अत्रास्मादित्यपादानार्थस्तोकोक्तो नापेक्षणीयः । समीचीना मुद्रा जलचरविशेषा यस्मिन् सह मुद्रया मर्यादया वर्तते वेति व्युत्पत्त्यन्तरमप्यूह्यम् । ८. का० उ० २।१४ । ९. का० सू० ३।६।१ । १०. मुद संसर्गे चुरादिः सम्पूर्वः । कथादावदन्ते तत्पाठाच्चुरादिणिचो वैकल्पिकत्वान्मुदन्तीत्यपि पक्षे । समो मकारलोपः पृषोदरादित्वादत्र बोध्यः । ११. क्षी० भा० १।६।१।

तथा च क्षीरस्वामिभाष्ये–"[१] अर्णोऽस्यास्त्यर्णवः । 'अर्णसो लोपश्च' इति वः सलोपश्च ।" उदधिः, उदन्वान्, तोयनिधिः, जलराशिः, वीचिमाली, शशध्वजः[२] । तद्भेदाः सप्त–लवणोदः, क्षीरोदः, सुरोदः, इक्षूदः, स्वादूदः, दध्युदः, घृतोदः ।

## सीमोपकण्ठं तीरञ्च पारं रोधोऽवधिस्तटम् ॥२६॥

सप्त समीपे । षिञ् बन्धने । सिनोति बध्नातीति **सीमा** । "[३]घर्मसीमाग्रीष्माऽश्मानः" एते मक्प्रत्ययान्ता निपात्यन्ते । कण्ठस्य समीपे **उपकण्ठम्** । तरन्त्यस्मात्**तीरम्**[४] । तरति प्लवते इव के **तीरं वा** । [५]पिपर्ति पृणोति जलेनेति **पारम्** । पार्यते समाप्यतेऽस्मिन्निति वा । रुणद्धि जलं वेगेन **रोधस्** । प्रान्तम् । उभयम् । अवधानम् **अवधिः** । "[६]उपसर्गे दः किः" । तट्यते आहन्यतेऽम्भसा **तटम्** । त्रिषु । तटः । तटी । इदन्तो वा । तटिः । स्त्रियामीः, तटी । कूलम्, कच्छः, प्रपातः, तीरम् ।

## भङ्गस्तरङ्गः कल्लोलो वीचिरुत्कलिकाऽवलिः ।
## पाली वेला तटोच्छ्वासौ विभ्रमोऽयमुदन्वतः ॥२७॥

एकादश तरङ्गे । भज्यते जले स्वयमेव **भङ्गः** । तरति प्लवते **तरङ्गः** । "[७]तॄपतिभ्यामङ्गः" आभ्यामङ्गप्रत्ययो भवति । [८]कल्लयन्तेऽनेन नद्यः **कल्लोलः** । कुत्सितं लोडति **कल्लोल** इत्येकः । याति (वयति) गच्छति **वीचिः**[९] । स्त्रियामीः, वीची । वृद्धिमुत्कर्षेण कलयति **उत्कलिका** । स्त्रियाम् । आ समन्ताद् वलते **आवलिः** । पाल्यते पालिः । स्त्रियामीः । **पाली** । वेलयति पूर्णिमादिकालमुपदिशति **वेला** । स्त्रियाम् । तटश्च उच्छ्वासश्च तटोच्छ्वासौ । तटति **तटः** । उच्छ्वसनम् **उच्छ्वासः** । विभ्रमति **विभ्रमः** विकारः । कस्य ? **उदन्वतः** समुद्रस्य । ऊर्मिः, लहरी ।

सम्प्रति **मनुष्यवर्गः** आरभ्यते श्रीमदमरकीर्तिना—

## मनुष्यो मानुषो मर्त्यो मनुजो मानवो नरः ।
## ना पुमान् पुरुषो गोधा

एकादश मनुष्ये । मनोरपत्यं **मनुष्यः** । *[१०]"कुरुनिषादेभ्यः प्रथमापत्येऽपि" । कुरुनिषादाभ्यामखीपि मनोः षान्तश्च । क्वचिद्वृद्धिस्वरस्य न वृद्धिः । अण्वा । * मनुष्यः । मानुषः । उणादौ च । मन्यते सुखदुःखादिकमिति **मनुष्यः** । "[११]मनेरुस्यः" उस्यप्रत्ययः । मानयति मान्यते इति वा मानुषः । "[१२]मानेरुसः" उस्प्रत्ययः । उभयम् ।

---

१ क्षी० भा० १।६ । २. कोषान्तरेषु समुद्रस्य शशध्वज इति नाम नोपलब्धम् । कथंचित्समाधानापेक्षायां शशिध्वज इति पाठो बोध्यः । शशी चन्द्रो ध्वजश्चिह्नं वंशप्रख्यापकं यस्येति तद्विग्रहः । चन्द्रस्य समुद्रप्रभवत्वं पुराणप्रसिद्धम् । ३. का० उ० १।५६ । ४. तॄ प्लवनतरणयोः । कप्रत्यये ॠत इर् दीर्घत्वं च । अत्रोणादिः शरणम् । सरलः पन्थास्तु पार तीर कर्मसमाप्तौ । ततस्तीरयतीति विग्रहे पचाद्यच् । ५. पालनपूरणयोः पॄ धातुस्तेन पिपर्तीत्यस्य पूरयतीति पर्यायो युक्तो न तु पृणोतीति । ज्वलादित्वाण्णः । क्षीरस्वामी तु परे पार्श्वे भवं कूलम् पारम् इत्याह । ६ का० सू० ४।५।७० इति किः । ७. का० उ० ५।२२ । ८. कल्ल अव्यक्ते शब्दे कल्लन्ते इत्यस्य शब्दायन्ते इत्यर्थः । उणादित्वादोलच्प्र० । के जलम् तस्य लोलश्चञ्चलोऽवयवः । अनुस्वारस्य परसवर्णो लकार इति रामाश्रमः । ९. वेञ् तन्तुसंवरणे । वेञो डिच् उ० सू० ४।७२ इतीचिप्र० । १०. *एवं चिह्नितांशस्थाने "मनोः षण्यौ" का० त०पू० ४१३ इति ष्य षण् प्रत्ययौ इति पाठो युक्तः । ११. का० उ० ६।१० । १२. का० उ० ६।११ ।

"वञ्छीय वाञ्छितं यान्तो वरमेते भुजङ्गमाः ।
न पुनः पक्षहीनत्वात् पङ्गुप्रायन्तु मानुषम् ॥"

म्रियते मर्त्यः । "[1]ऋहलोर्ण्यत्" । स्वार्थे ष्यो वा । मनोर्जातः मनुजः । मनोरपत्यं मानवः[2] । नृणाति विनयति नरः, 'णीञ् प्रापणे' नयतीति वा । "[3]नियो डाऽनुबन्धश्च" । अस्मात् ऋन् प्रत्ययो भवति, स च डाऽनुबन्ध इष्यतेऽन्त्यस्वरादिलोपार्थः । पूर्यते कुलमनेन सान्तः—[4]पुमान् । उणादौ पूङः पवते पुनातीति वा पुमान् । "[5]सिर्मनन्तश्च ।" अस्मात्सिः प्रत्ययो भवति, अस्य च मन् अन्तः चकाराद् ह्रस्वत्वं च । इकार उच्चारणार्थः । पुरि पुरि शयनात् पूरणाद्वा पुरुषः । पृणाति पूरयति वा स्त्रीणामुदरं गर्भेणेति पुरुषः[6] । "पृणातेः[7] कुषः" । अस्मात्कुषः प्रत्ययो भवति । कोऽनुबन्धः । अन्येषामपीति वा दीर्घः । पूरुषः । लत्वे पुलुषः, पुलुषश्च । "गुध परिवेष्टने" । गुध्यति गोधा[8] ।

**धवः स्यात्तत्पतिर्नृपः ॥२८॥**

तस्य मनुष्यशब्दस्याग्रे धव—पतिशब्दप्रयोगे नृपनामानि भवन्ति । मनुष्यधवः, मानुषधवः, मर्त्यधवः, मनुजधवः, मानवधवः नरधवः, नृधवः, पुन्धवः, पुरुषधवः गोधाधवः । मनुष्यपतिः, मानुषपतिः मर्त्यपतिः मनुजपतिः, मानवपतिः, नरपतिः, नृपतिः, पुंस्पतिः, पुरुषपतिः, गोधापतिः ।

**भृत्योऽथ भृतकः पत्तिः पदातिः पदगोऽनुगः ।**
**भटोऽनुजीव्यनुचरः शस्त्रजीवी च किङ्करः ॥२९॥**

एकादश सेवके । भ्रियते इति भृत्यः । "[9]भृञोऽसंज्ञायाम्" । भ्रियते राज्ञा भृतः । स्वार्थे कः । भृतकः । पतति अधो गच्छति पत्तिः[10], पतनं वा । [पादाभ्याम्] अतति [पदातिः[11]] । पादातिकः । औणादिक इकः । [12]विनयादित्वात्स्वार्थे ठक् । पद्भ्यां[13] गच्छतीति पदगः । अनु पश्चाद् गच्छति अनुगः । भटति युद्धं बिभर्ति भटः । अनुजीवतीत्येवंशीलः अनुजीवी । अनु पश्चाच्चरतीत्यनुचरः । शस्त्रेण आयुधेन जीवतीत्येवंशीलः शस्त्रजीवी । किं कुत्सितं कार्यं विदधाति किङ्करः । सहायः, सेवकः, पदजेयः, पद्गः पदिकश्च । तथा च यशस्तिलके—(श्लो० १३० )

"सत्यं दूरे विहरति समं साधुभावेन पुंसां धर्मश्चित्तात्सह करुणया याति देशान्तराणि ।
पापं शापादिव च तनुते नीचवृत्तेन सार्धं सेवावृत्तेः परमिह परं पातकं नास्ति किञ्चित् ॥"

**स्त्री नारी वनिता मुग्धा भामिनी भीरुरङ्गना ।**
**ललना कामिनी योषिद् योषा सीमन्तिनीति च ॥३०॥**

---

१. का० उ० ६।१२ । २. वाचस्पत्ये का० रू० पृ० ४७३ इत्यशुद्धम् । ३. का० उ० २।४१ । ४. पाति पुनाति वा पुमान् । पातेर्डुम्सुन् पूर्वो डुम्सुन्, पा० उ० ४।१७० इति डुम्सुन् इति प्रक्रियाऽन्यत्र । ५. का०उ० ४।४२ । ६. पुरि शयनादिति तु निरुक्तप्रकारो विग्रहस्तु पृणातीत्यादिरेव । ७. का०उ० ३।५४ । ८. गोधाशब्दस्य पुरुषार्थे कोषान्तरप्रमाणं नोपलब्धम् । तदुक्तम्—"गोधा तलनिहाकयोः" वि०लो० । गोधा प्राणिविशेषे स्याज्ज्याघातत्र च वारणे । आकारान्तस्त्रीलिंगत्वं च सर्वत्रास्योक्तम् । अ०कं० २४३ । अतोऽस्य मूलं मृग्यम् । गोद इति पाठे तु गोदो मस्तिष्कमस्यास्तीति गोदः मुख्यमस्तिष्कवत्त्वात् पुरुष इति समाधेयम् । तदुक्तम् गोदं तु मस्तकस्नेहो मस्तिष्को मस्तुलुङ्गकः अ० चि० ३।२८९ । ९. का० सू० ४।२।२५ इति क्यप् । १०. औणादिकस्तिः, क्तिच् क्तौ च संज्ञायामिति वा क्तिच् । पतनं वा इति व्युत्पत्तिस्त्वप्रासङ्गिकत्वादुपेक्ष्या । ११. अज्यतिभ्यां च पा०उ० ४।१३० इत्यतेरिञ् । पादस्य पदाज्यातिगतेषु इति पदादेशश्च । १२. विनयादेष्ठण् जै० सू० ४।२।४० । १३. पद्भ्यां पादाभ्यां वेति वक्तव्यम्, न तु पद्भ्यामिति । पाद इत्यापत्तेः । पादस्य पदाज्यातीति पादस्य पद् ।

**नितम्बिन्यबला बाला कामुकी वामलोचना ।**
**भामा तनूदरी रामा सुन्दरी युवती चला ॥३१॥**

द्वाविंशतिः स्त्रियाम् । "स्तृञ् आच्छादने" स्तृणात्याच्छादयति स्वदोषान् परगुणानिति **स्त्री** । उणादौ । स्तृणात्याच्छादयति लज्जयाऽऽत्मानमिति **स्त्री** । स्तृणातेड्ट्[1] " प्रत्ययो भवति । अकारमात्रः । "रमृवर्णाः[2]" । अथवा ड्रट्पाठः । ड्-ऽनुबन्धोऽन्त्यस्वरादिलोपार्थः । डकारो नदाद्यर्थः । रकारमात्र एव । अमरसिंहभाष्ये[3]—"स्त्यायत्य(ते)ऽस्यां गर्भः स्त्री ।" तथा च हलायुधे—"स्तृणाति विवेकमाच्छिनत्ति स्त्री" । नरस्य स्त्री जातिश्चेत् **नारी** । नरं वनति भजते **वनिता** । मुह वैचित्ये कार्येषु मुह्यति **मुग्धा** । "मुहेर्घक्[4] हस्य गः ।" भामते कुप्यते (ति) **भामिनी** । [भामः] क्रोधोऽस्त्यस्याः वा **भामिनी** । बिभेत्यस्माद्(त्यसौ) **भीरुः** । "[5]भियो रुक्लुकौ च ।" भीरुः । प्रशस्तान्यङ्गान्यस्या **अङ्गना** । लाडयति, (लडति) विलसति, लसयति (ललति) नरमीप्सते वा **ललना** । "लल ईप्सायाम्" । भोगान् कामयते **कामिनी** । युषः सौत्रोऽयं धातुः सेवार्थे । योषति पुरुषं गच्छति रतेच्छया आत्मनो **योषा** । "रुष रिष जष झष दष मष रुष रिष युष जूष हिंसार्थाः" । योषति हिनस्ति हन्तीति योषित् । "[6]हसृतडिरुहियुषिभ्य इतिः" एभ्य इतिप्रत्ययो भवति । इकार उच्चारणार्थः । अमरसिंहे—"[7]योषित् पुंसा योषित् ।" अजादित्वादाप्प्रत्यये योषिता च । सीमन्तोऽस्त्यस्याः **सीमन्तिनी** । बध्नाति चित्तं **बधूः** । नितम्बोऽस्त्यस्या **नितम्बिनी** । न विद्यते बलमस्या **अबला** । 'बा' सौभाग्यं लाति गृह्णातीति **बाला** । "कमु कान्तौ" कम् । "[8]कमेरिनिङ् कारितम्" इन् । "अस्योप०" दीर्घः । कामयते इत्येवंशीला **कामुकी** । "[9]शृकमगमहनवृषभूस्थालषपतपदामुकञ् ।" [10]कारितलोपः । "[11]निमि०" दीर्घाभावः । अकाराऽनुबन्धत्वात्पूर्वस्योप०दीर्घः । वामे सुन्दरे लोचने नेत्रे यस्याः सा **वामलोचना** । "भाम क्रोधे" चुरादौ । भामयति । "भाम क्रोधे" भ्वादावकाराऽनुबन्ध आत्मनेपदी । भामते **भामा** । चक्षुर्दोषादिदर्शनात् । तनु सूक्ष्ममुदरं यस्याः सा **तनूदरी** । नरेषु रमते, मनांसि रमयति वा **रामा**[12] । सुष्ठु द्रियते आद्रियते जनोऽत्र, शोभनो दरो वराङ्गच्छिद्रमस्या वा [13]**सुन्दरी** । अथवा 'सुन्दर' इति सौत्रोऽयं धातुः । युवत्शब्दान्नदादिविहितस्तिः[14], **युवतिः** । यु मिश्रणे यौति नरान् मिश्रयति औणादिको वा अतिः युवतिः । स्त्रियामीः । **युवती** । यूनीत्यन्यः । तथाहि प्रयोगः—

> "भर्ता संगर एव मृत्युवसतिं प्राप्तः समं बन्धुभिः,
> यूनी काममयं दुनोति च मनो वैधव्यदुःखाद् बधूः ।
> बालो दुस्त्यज एक एव च शिशुः कष्टं कृतं वेधसा,
> जीवामीति महीपते प्रलपति यद्वैरिसीमन्तिनी ॥"

चलचित्तान्पुरुषान् चालयतीति **चला**[15] । वामनेत्रा, पुरन्ध्री, वासिता, वर्णिनी, प्रमदा, रमणी,

---

१. का० उ० ४।३६ । २. का० सू० १।२।१० । ३. क्षी० भा० २।६।२ । ४ का० उ० ६।२८४ इति घिक् प्र० हस्य गश्च । ५. का० सू० ४।४।५६ । ६. का० उ० १।३५ । ७. क्षी० भा० २।६।२ । ८. का० सू० उ० ४६२ । ९. का० सू० ४।४।३४ । १०. कारितस्यानामिड्विकरणे का० सू० ३।६।४४ इतीनो लोपः । इनः कारितसंज्ञा कातन्त्रव्याकरणे । ११. निमित्तापाये नैमित्तिकस्याप्यपायः इति परिभाषेन्दुशेखरे अकृतव्यूहपरिभाषार्थरूपः । १२. रमते रामा । ज्वलादित्वाण्णः । रमयतीति तु न युक्तम्, ण्यन्तस्य ज्वलादित्वाभावात् । १३ सु-अतीव उनत्ति सुन्दरी । उन्दी क्लेदने । बाहुलकादरप्र० । शकन्ध्वादित्वादुकारस्य पररूपम् । गौरादित्वान्ङीप् इति रामाश्रमः । १४. का० सू० २।४।५० । १५. चलचित्तैः पुरुषैश्चलतीति चलन्त्येव विग्रहः । पचाद्यच् । णिजन्तात्तु चाला इति स्यात् ।

दयिता, प्रतीपदर्शिनी, कान्ता, वशा, महिला, महेला च ।

**भार्या जाया जनिः कुल्या कलत्रं गेहिनी गृहम् ।**
**महिला मानिनी पत्नी तथा दाराः पुरन्ध्रयः ॥३२॥**

दश कलत्रे । "डुभृञ् धारणपोषणयोः" । भ्रियते पुष्यते भर्त्रेति **भार्या** । "[1]ऋवर्णव्यञ्जनान्तात्ध्यण्" । यकारमात्रः । अस्योपधावृद्धिः । भार्या इति जातम् । "[2]स्त्रियामादा" । आप्रत्ययः । प्र० सिः । "[3]अद्धायाः सिर्लोपम् ।" सिलोपः । "ज्या वयोहानौ" जा (जि) नाति **जाया** । 'जनी प्रादुर्भावे च' । सुखी जायते आत्मा ऽत्र **जाया** । "[4]सन्ध्यादयः–सन्ध्या वन्ध्या जाया इत्यादयः शब्दाः यक्प्रत्ययान्ता निपात्यन्ते । जनयति पुत्रान् **जनिः** । इः "[5]सर्वधातुभ्यः" । कुले साधुः **कुल्या** "[6]यदुगवादितः" । "कड मदे" कड लौदादिकः । कडति माद्यति यौवनेनेति [7]**कलत्रम्** । "अमिनक्षिकडिभ्योऽत्रः" अत्रप्रत्ययः । कडत्रम् । डलयोरैक्यम् । प्रथ० सि० नपुं० [8]अका० सुरा० । [9]मोऽनु० । गेहमस्त्यस्या **गेहिनी** । 'ग्रह उपादाने" । गृह्णाति प्रत्युपार्जितं **गृहम्** । "[10]गेहेत्वक्" अक्प्रत्ययः । "ग्रहिज्या[11]"—सम्प्रसारणम् । मह्यते पूज्यते । **महिला** । मानः प्रणयकोपोऽस्या **मानिनी** । पतिं पतति याति **पत्नी** । 'दृ विदारणे' । द० क्र० । दीर्यते शतखण्डीभवति पुरुषः एभिरिति **दाराः** । "[12]भावे" घञ् । अकारमात्रः । [13]वृद्धिः । दार इति जातम् । प्रथमा जस् । प्रायो बहुत्वं च । पुरं धमयन्ति, नेत्रान्ते पुरं शरीरं धरन्तीति [14]**पुरन्ध्रयः** । चेचम्, सहधर्मचारिणी, गृहाः, सहचरी, सहचरा ।[15]

**वल्लभा प्रेयसी प्रेष्ठा रमणी दयिता प्रिया ।**
**इष्टा च प्रमदा कान्ता चण्डी प्रणयिनी तथा ॥ ३३ ॥**

एकादश वल्लभायाम् । वल्लते पत्युश्चित्तं संवृणोतीति **वल्लभा** । "[16]कृशृशलिगर्दिरासिवलिवल्लिभ्योऽभः" अभः प्रत्ययः आप्रत्ययः । अतिशयेन प्रिया **प्रेयसी** । "तर[17]तमेयस्विष्ठाः" प्रकर्षेऽर्थे 'तर तम ईयसु इष्ठ' इत्येते प्रत्यया भवन्ति । अतिशयेन प्रिया **प्रेष्ठा** । रमते जनोऽत्र, मनांसि रमयति

१. का० सू० ४।२।३५ इति घ्यण्प्रत्ययः । २. का० सू० २।४।४९ । ३. का० सू० २।१।३७ । ४. का० उ० ४।३७ । ५. का० उ० ३।१४ । ६. का० सू० २।६।११ इति यत्प्र० ।–७.– का० उ० ३।५। गड सेचने । गडति गड्यते वा "गडेरादेश्च कः" पा० उ० इत्यत्रन् । डलयोरैकत्वम् । कड शासने मदे । कडति कड्यते वा बाहुलकादत्रन् । कलं मधुरं ध्वनिं त्रायते रक्षति वा । त्रैङ् पालने कः इत्यन्यत्र । ८. अकारादसम्बुद्धौ मुश्च इति पूर्णं का० सू० २।२।७ इति सेर्लोपो मुरागमश्च । ९. मोऽनुस्वारं व्यञ्जने इति पूर्णं का० सू० १।४।१५ इत्यनुस्वारः । १०. का० सू० ४।२।६० । ११. का० सू० ३।४।२ ग्रहिज्यावयिव्यधिवष्टिव्यचिप्रच्छिव्रश्चिभ्रस्जीनामगुणे इति पूर्णसूत्रम् । १२ का० सू० ४।५।१३ । १३ का० सू० ३।६।१ । अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु इति सूत्रस्वरूपम् । १४. स्यात्तु कुटुम्बिनी पुरन्ध्री २।६।६ । इत्यमरादिकोशेषु दीर्घेकारान्तपुरन्ध्रीशब्दस्यैव सत्त्वादत्र पुरन्ध्रय इति पाठोऽयुक्त इति न भ्रमितव्यम् । पुरं धरन्तीति विग्रहे "अन इः" पा० उ० ४।१३९ इति इः । पृषोदरादित्वात्पुरोऽकारान्तत्वं मुमागमश्चेति रीत्या तस्याप्युपपत्तेः । अत एव "तौ स्नातकैर्बन्धुमता च राज्ञा पुरन्ध्रिभिश्च क्रमशः प्रयुक्तम्" इति रघुः । पुरन्धमयन्तीति न विचारसहम्, तत्साधकानुशासनविरहात् । १५. भार्यादिपुरन्ध्र्यन्तशब्देषु सामान्यविशेषभावादर्थभेदो न विस्मर्तव्यः । तद्यथा–भार्या, जाया, कुल्या, कलत्र, गेहिनी, गृह, पत्नी दारा परिणीतस्त्रीवाचकाः । महिलामानिन्यौ विशिष्टनायिके । पुरन्ध्री पतिपुत्रवती । १६. का० उ० ३।१२ । १७. एतच्च कातन्त्रसूत्रं नोपलभ्यम् । गुणाङ्गाद्वेष्ठेयसू शा० सू० ३।४।७५ इतीयसुप्रत्ययो बोध्यः ।

वा **रमणी**। नरेषु दयते गच्छति ईष्टे वा **दयिता**। प्रीणाति पतिचित्तं रञ्जयति **प्रिया**। इष्यते इष्यते वा **इष्टा**। प्रकृष्टो मदोऽस्याः **प्रमदा**। काम्यते नरेण **कान्ता**। चण्डते कुप्यति **चण्डी**। चण्डिका च। प्रणयोऽस्या अस्तीति **प्रणयिनी**।

**सती पतिव्रता साध्वी पतिवत्न्येकपत्न्यपि।**

**मनस्विनी भवत्यार्या—** ५

सप्त पतिव्रतायाम्। एकः पतिरस्तीति **सती**[1]। पतिव्रतं करोति,पतिरेव व्रतं सेव्यो नान्यो यस्याः इति वा **पतिव्रता**। पतिसेवैव व्रतं यस्याः **पतिव्रता**। यत्स्मृतिः—"**नास्ति[2] स्त्रीणां पृथग्यज्ञो न व्रतमिति**।" साधयति **साध्वी**। पतिरस्या अस्तीति **पतिवती**[3]। एकः पतिर्यस्याः सा **एकपती**। मनोऽस्या अस्तीति **मनस्विनी**। अर्यते सेव्यते **आर्या**। सुचरिता।

**विपरीता निरूप्यते॥ ३४॥**

१० तथा अनङ्गेन, भर्तृकर्म कर्मणः विपरीता वा कथ्यते **विपरीता** असदृशा।

**बन्धकी कुलटा मुक्ता पुनर्भूः पुंश्चली खला।**

षड् बन्धक्याम्। बध्नाति तरुणचित्तानि **बन्धकी**। कुलमटति **कुलटा**। तथा चोणादौ "टल ट्वल वैकल्ये" इत्यस्मात्। अस्योपधाया दीर्घः। कुलपूर्वः। कुलं टालयति **कुलटा**। "कुले[4] टालेरिलुक् डश्च" कुले उपपदे टालेरिञ्ञन्तस्य डः प्रत्ययो भवति इलुक् च। स्वाचारं मुच्यते (स्म) यया जनैर्वा **मुक्ता**। पुनर्भवतीति **पुनर्भूः**। पुमांसं चालयति **पुंश्चली**। खं पञ्चेन्द्रियोत्पन्नसुखं लाति गृह्णातीति **खला**, अन्यपुरुषलम्पटत्वात्। पांशुला, स्वैरिणी, असती, इत्वरी, धर्षणी, अविनीता, अभिसारिका, चपला। १५

**स्पर्शाऽभिसारिका दूती स्वैरिणी शम्फली तथा।**

षड् दूत्याम्। 'स्पृश संस्पर्शे'। स्पृशति, स्प्रक्ष्यति, अस्प्राक्षीत्, पस्पर्श वा घञ्। स्पर्शः। "पद[5]-रुजविशस्पृशो वा घञ्"। नामिन[6]श्च गुणः। "स्त्रियामादा" आप्रत्ययः। **स्पर्शा**। पुरुषान्तरमभिसरति **अभिसारिका**। दूयन्तेऽस्या[7] मौरव्यात् **दूती**। 'ईर् गतौ कम्पने च'। ईर्। ईरणम् ईरः। "भावे"[8] २० घञ् प्रत्ययः। स्वस्य ईरः स्वैरः। **स्वैरो** विद्यतेऽस्या **स्वैरिणी**। "तदस्यास्तीति[9] मन्त्वन्त्वीन्" इन्। "[10]"नदाद्यञ्च्यवाहू" ई प्रत्ययः। "रपूर्वेभ्यः[11]" नस्य णत्वम्। शं सुखम् फलति निष्पादयतीति **शम्फली**। तथा तेनैव प्रकारेण।

**गणिका लञ्जिका वेश्या रूपाजीवा विलासिनी।**

**पण्यस्त्री दारिका दासी कामुकी सर्ववल्लभा॥ ३६॥** २५

नव वेश्यायाम्। गणः पेटकोऽस्त्यस्याः, गणयतीश्वरानीश्वरौ वा **गणिका**। 'लजि लाजि लाजा लज तर्ज भर्त्सने'। लज्जयति निःस्वान्पुरुषान् तर्जयतीति **लञ्जिका**। वेशे वेश्यावाटे भवा **वेश्या**[12]। रूपेण आ समन्ताज्जीवतीति **रूपाजीवा**। विलासोऽस्याऽस्तीति **विलासिनी**। तथा चोक्तम्—

"हावो मुखविकारः स्याद् भावश्चित्तसमुद्भवः।
विलासो नेत्रजो ज्ञेयो विभ्रमोऽत्र दृगन्तयोः॥ ३०

---

१ असधातोः शतृप्रत्ययान्तो ङीबन्तः सतीशब्दः। २ "नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं नाप्युपोषणम्। पतिं शुश्रूषते येन तेन स्वर्गे न हीयते" इति मनुस्मृतिः ५।१५५। ३. पतिवत्नी, एकपत्नी इति पाठो युक्तः। ४. का० उ० ५।४७। ५. का० सू० ४।५।१। ६. का०सू० ३।५।२ नामिनश्चोपधाया लघोः इति पूर्णसूत्रम्। ७. दूयन्ते परितप्यन्ते। अस्य कर्तारः स्त्रीपुमांसः। ८. का० सू० ४।५।३। ९. का० सू० २।६।१५। १०.का० सू० २।६।५०। ११. का० सू० २।४।४८। "रपूर्वेभ्यो नोऽमनन्त्यः स्वरहयवकवर्गान्तरोऽपि" इति पूर्णं सूत्रम्। १२. वेशेन नेपथ्येन शोभते,"कर्मवेशाद्यत्" इति यत्। वेशे भवा दिगादित्वाद्यत्।

पण्यस्य स्त्री पण्यस्त्री । परिमार्यां कृत्वा रमयतीत्यर्थः । दृणाति विदारयति कामिनम् वारिका । दस्यति परिकर्मणा क्षयति, ददात्यात्मानं वा दासी । दाशी । तालव्यदन्त्यः । कामयते इत्येवंशीला कामुकी । सर्वेषां पुरुषाणां वल्लभा सर्ववल्लभा । सैरिन्ध्री ।

"[१]चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी ।
प्रसाधनोपचारज्ञा सैरिन्ध्री कथ्यते बुधैः ॥"

गन्धकारिका । पण्यस्त्री च ।

**कान्तेष्टौ दयितः प्रीतः प्रियः कामी च कामुकः ।**
**वल्लभोऽसुपतिः प्रेयान् विटश्च रमणो वरः ॥३७॥**

त्रयोदश कान्ते । काम्यतेऽभिलष्यते कान्तः । इष्यते इष्टः । दया कृपा संजाता अस्येति दयितः । "[२]तारकितादिदर्शनात्संजातेऽर्थे इतच् ।" "[३]इवर्णावर्णयोर्लोपः स्वरे प्रत्यये ये च ।" आकारलोपः । सौरेफः । प्र प्रकर्षेण ई कामसुखम् इतः प्राप्तः प्रीतः । पृषोदरादित्वात् आकारलोपः । प्रीणातिस्म प्रीतः । प्रीणाति प्रीणीते वा प्रियः । "[४]नाम्युपधप्रीकृगृज्ञां कः" । "[५]स्वरादाविवर्णोवर्णान्तस्य धातोरियुवौ ।" कामोऽस्यास्तीति कामी । कामयते इत्येवंशीलः कामुकः । वल्लते वल्लभः । "[६]कृशृशलिगर्दिरासिवलिवल्लिभ्योऽभः ।" अभः प्रत्ययः । असूनां प्राणानां पतिः असुपतिः । अतिशयेन प्रियः प्रेयान् । "[७]प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः ।" विट शब्दे विटति कामोद्रेकशब्दं करोतीति विटः । "[८]इगुपधेति कः । 'रमु क्रीडायाम् ।' रम् । रमते कश्चित् । तं प्रयुङ्क्ते इन् । अस्योपधादीर्घः । "[९]मानुबन्धानां ह्रस्वः ।" रमयतीति रमणः । "[१०]नन्द्यादेर्युः ।" "[११]युवुभानामनाकान्ताः" अनः । "[१२]कारितस्य०" कारितलोपः । "[१३]रषृ०" नस्य णत्वम् । वृणोति वरयति वा वरः । कमिता । पतिः । वरयिता । भर्ता । भोक्ता । धवः । रुच्यः । अभीकः । "[१४]अम्यनुभ्यां कामयितरि कौ वा दीर्घश्च" जनयति कः । अभिकः । अमुकः । प्राणाधिनाथः । सेक्ता ।

**सवित्री जननी माता**

त्रयः मातरि । सूते जनयति सवित्री । जनयति जायतेऽस्यां वा जननी । माति गर्भोऽत्र [१५]मानयति वा माता । अम्बा ।

**जनकः सविता पिता ।**

त्रयः पितरि । जनयति उत्पादयतीति जनकः । पुत्रान् सूयते (सूते) सविता । अहितात् पाति रक्षतीति पिता । "उणादौ" पा रक्षणे, पातीति पिता । 'स्वस्रादयः'[१६] । 'स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृप्रशास्तृपितृमातृदुहितृजामातृभ्रातरः' एते शब्दास्तृन्प्रत्ययान्ता निपात्यन्ते ।

---

१. 'चतुष्षष्टिकलाऽभिज्ञा शीलरूपादिसेविनी । प्रसाधनोपचारज्ञा सैरन्ध्री स्ववशेति चेति कात्यः" इत्यमरकोशे स्त्री० स्वा० । २. का० रू० पृ० ५०८ । ३. का०सू० २।६।४४ । ४. का० सू० ४।२।५१ । ५. का०सू० ३।४।५५। इतीप् । ६. का० उ० सू० ३।१२ । ७. पा०सू० ६।४।१५७। इति प्रियशब्दस्य प्रादेशः । ८. "इगुपधज्ञाप्रीकिरः कः" पा० सू० ३।१।१३५। ९. का० सू० ३।४।६५। इति ह्रस्वः । १०. का० सू० ४।२।४९। इति युप्रत्ययः । ११. का० सू० ४।६।५४। इति योरनादेशः । १२. का० सू० ३।६।४४। इतीनो लोपः । १३. का० सू० २।४।४८। १४. कातन्त्रे नैतत्सूत्रमुपलब्धम् । जैनेन्द्रव्याकरणे-"मृदृक्वलिकोदरिके" इत्यादि सूत्रम् ४।१।१७। तेन कप्रत्ययान्तः पक्षे दीर्घान्तश्चाभिकोऽभीक इति निपातितः । १५. मानयतीत्यर्थः, विग्रहस्तु मातीत्येव । मा माने । तृच् प्रत्ययान्तः । १६. का० उ० २।४२ ।

**देहापघनकायाङ्गं वपुः संहननं तनुः ॥ ३८ ॥**
**कलेवरं शरीरं च मूर्त्तिः**

दश देहे । देहश्च अपघनश्च कायश्च अङ्गं च । समाहारसमासत्वादेकवचनम् । दिह् । देग्धीति देहः । "[1]दिहिलिहिश्लिषिश्वसिव्यध्यतीण्श्यातां च" । एभ्यः णः भवति । अपहन्यते अपघनः । "मूर्तौ[2] घनिश्च" अल् । चिञ् चयने । चि । चीयतेऽसौ कायः । "[3]शरीरनिवासयोः कश्चादेः" चिनोतेः शरीरे निवासे चार्थे घञ् भवति आदेश्च को भवति । अख, गख, वख, मख, रख, लखि, इखि, वल्ग, रगि, लगि, अगि, वगि, मगि, स्वगि, इगि, रिगि, लिगि गत्यर्थाः । अङ्गति मरणं गच्छतीति **अङ्गम्** । उप्यन्ते पुरुषार्था अनेनेति **वपुः** । "अ[4]र्तिपृवपियजितनिधनि-धनिभ्य उस्" एभ्य उस् प्रत्ययो भवति । संहन्यन्ते संघट्यन्ते धातवोऽत्र **संहननम्** । धातुभिः रसासृग्मांस-मेदोऽस्थिमज्जशुक्रैस्तन्यन्ते **तनुः** । तनूः । उणादौ तनुविस्तारे । तनोतीति तनूः । "कृषि[5]चमितनिधनि-सर्जिखर्जिभ्य ऊः" एभ्य ऊप्रत्ययो भवति । कलते स्थिरत्वं गच्छति **कलेवरम्**[6] । कडति माद्यति वा **कलेवरम्** । कडेवरं च । अमरसिंहभाष्ये[7] 'कलयते कलेवरम्' । शीर्यते क्षयं गच्छति रोगज्वरादिभिः **शरीरम्** । "कॄ[8]शॄशौण्डृभ्य ईरः ।" एभ्य ईरप्रत्ययो भवति । उणादित्वात् । 'मूर्छा मोहसमुच्छ्राययोः' मूर्छ् । मूर्छनं **मूर्त्तिः** । स्त्रियां[9] क्तिः । "घोषवतोश्च कृति"[10] इति नेट् । "राल्लोपः (य्वौ)"[11] इति छकार-लोपः । "नामिनार्वोरकुर्छुरोर्व्यञ्जने"[12] दीर्घः । व्यञ्जनम्[13] । प्रथ० विः । "रेफ०[14]" । विग्रहः । वर्ष्म । पुरम् । पिण्डम् । क्षेत्रम् । गात्रम् । घनः । पुद्गलः । प्रतीकः । अवयवः ।

**अस्मिन् भवः**

**अस्मिन्** काये **भवः** कायभवः । देहभवः । अपघनभवः । अङ्गभवः । वपुर्भवः । संहनन-भवः । तनुभवः । कलेवरभवः । शरीरभवः । मूर्तिभवः । कायजः । देहजः । अपघनजः । अङ्गजः । वपुर्जः । संहननजः । तनुजः । कलेवरजः । शरीरजः । मूर्त्तिजः । एतानि पुत्रनामानि भवन्ति । भव प्रयोगे ।

**सुतः ।**

**पुत्रः सूनुरपत्यं च तुक् तोकं चात्मजः प्रजा ॥३९॥**

अष्टौ पुत्रे । सूयते **सुतः** । पुनातीति **पुत्रः** । "[15]पूञो ह्रस्वश्च ।" अस्मात् त्रक्प्रत्ययो भवति धातोर्ह्रस्वश्च । कोऽसावर्थः । तथा च सोमनीत्याम्[16]—"य उत्पन्नः पुनाति वंशं स पुत्रः । अथ पुन्नाम्नो नरकात्त्रायते वा पुत्रः । सूयते **सूनुः** । "[17]सुविधिभ्यां णुवत् ।" आभ्यां नु प्रत्ययो भवति, स च णवत् ।" षूङ् प्राणिगर्भविमोचने ।" पत्ल शल पत्लृ पथे च गतौ ।" पत् नञ् पूर्वः । न पतन्ति येन जातेन पूर्वजा नरकादौ **तदपत्यम्** । "नञि[18] पतेर्यः" यप्रत्ययः । नस्य[19] तत्पु० वि० । नपु०

१. का० सू० ४।२।५८। २. का० सू० ४।५।५८। इत्यल् घन्यादेशश्च । ३. का० सू० ४।५।२५ । ४. का० उ० २।४६। ५. का० उ० १।३१। ६. कले शुक्रे मधुराव्यक्तध्वनौ वा वरं श्रेष्ठम् । 'हलदन्तादि' ति सप्तम्या अलुक् । इत्यन्यत्र । ७. क्षीर० भा० २।६।७०। ८. का० उ० ३।४८। ९. का० सू० ४।५।७२। इति क्तिप्रत्ययः । १०. का० सू० ४।६।८०। ११. का० सू० ४।१।५८। १२. का० सू० ३।८।१४। १३. "व्यञ्जनमस्वरं परं वर्णं नयेत्" इति पूर्णं कातन्त्रसूत्रम् ।१।१।२१। इति व्यञ्जनस्य पर-वर्णयोगः । १४. "रेफसोर्विसर्जनीयः" इति पूर्णम् । का० सू० २।३।६३। इति सकारस्य विसर्गः । १५. का० उ० ४।४१। १६. नी० वा० समु० ५ सू० ११ । १७. का० उ० २।८। १८. का० उ० ६।३०। १९. "नस्य तत्पुरुषे लोप्यः" इति पूर्णम् । का० सू० २।५।२२। इति नलोपः ।

अका०[1] । मोऽनु०[2] । तोजनि [3]नक् । स्तूयते तोकम्[4] । आत्मनो जातः आत्मजः । प्रकर्षेण जाता प्रजा । [5]"सप्तमीपञ्चम्यन्ते जनेर्डः ।" बालः, पाकः, अर्भकः, गर्भपोतश्च । पृथुकः, शिशुः, शावः, डिम्भः, बटुः, माणवकः, भ्रूणः ।

**उद्वहस्तनयः पोतो दारको नन्दनोऽर्भकः ।**
**स्तनन्धयोत्तानशयौ—**

अष्टौ बालके । उद्वहतीति उद्वहः । अच् । तनोति विस्तारयति वंशम्, तनयः । "तनेः[6] कयः ।" पवते वातेन पोतः[7] । दारयति दृणाति वा तरुणीनां मनांसि [8]दारकः । 'टुनदि समृद्धौ ।' नद् । अत एव नन्द् । नन्दति कश्चित्तमन्यः प्रयुङ्क्ते । "[9]धातोश्च हेतौ ( हेतौ )" इन् । नन्दयतीति नन्दनः । "नन्दि[10]वाशिमदिदूषिसाधिशोभिवर्धिभ्य इनन्तेभ्योऽसंज्ञायाम्" युप्रत्ययः । स्वमते "नन्यादेर्युः" यु प्रत्ययः "[11]युवुभकानाम०"— इति युस्थाने अनः । "[12]कारितस्यानामि० कारितलोपः । 'अर्ह मह पूजायाम्' अर्हत्यर्भकः । "[13]मूकादयः ।" मूकयुकाऽर्भकपृथुकवृकस्कमूकाः एते कप्रत्ययान्ता निपात्यन्ते । स्तनौ धयतीति स्तनन्धयः । [14]"शुनीस्तनमुञ्जकूलास्यपुष्पेषु घेटः ।" खश् । उत्तानः शेते उत्तानशयः । [15]"उत्तानादिषु कर्तृषु" अच् ।

**स्त्री चेद् दुहितरं विदुः ॥४०॥**

पुत्र्यां दुहितरं[16] दोग्धि मातृकुलं दुनोति वा विदुः कथयन्ति । तनया, पुत्री ।

**वयस्याऽली सहचरी सध्रीची सवयाः सखी ।**

षट् सख्याम् । वयसा तुल्या वयस्या । वयसी च । आ समन्ताच्चित्तं लाति आलिः । स्त्रियामीः । आली । सह सार्धं चरतीति सहचरी । सहाञ्चतीति सध्र्यङ् । [17]"सहसन्तिरसां सध्रिसमितिरयः ।" ईप्रत्यये सध्रीची । सह वयसा वर्तते सवयाः[18] । समानं ख्यातीति सखिः ( खा ) । स्त्रियामीः सखी । [19]"सख्यादयः" सखि अखि प्रहि इत्यादयो डिप्रत्ययान्ता निपात्यन्ते ।

**आलीविवर्जितं मित्रं सम्बन्धो मित्रयुक् सुहृत् ॥४१॥**

चत्वारो मित्रे । आली रहितानि वयस्यादीनि नामानि मित्रवाच्यानि स्युरित्यर्थः । 'ञिमिदा स्नेहने' । मेद्यति स्म मेदते स्म वा स्नेहयुक्तो भवति स्म वा मित्रम् । [20]"चिमिदिभ्यां त्रक्" आभ्यां[21]

---

१. "अकारादसम्बुद्धौ मुश्च" इति पूर्णम् । का० सू० २।२।७। इति सेर्लोपो मुरागमश्च । २ "मोऽनुस्वारं व्यञ्जने" इति पूर्णम् । का० सू० १।५।१५। ३. "तुज हिंसाबलादाननिकेतनेषु" । चुरादौ वा णिच् । तोजति पितृधनमादत्ते "तुक्" इति टीकाशयः । ४. तौति पूरयति पितृकार्यं पितुरभावेऽपीति तोकम् । तुः सौत्रो धातुर्हिंसावृत्तिपूर्तिषु । बाहुलकात्कः इति व्युत्पत्त्यन्तरमप्यूह्यम् । ५. का० सू० ४।५।५१। इति जनेर्डः । ६. का० उ० २।२५। इति तन् धातोः कयप्रत्ययः । ७. पवते वातेनेति विग्रहस्तु नौकावाचकपोते बोध्यः । पुत्रार्थे तु पुनाति पवते वा वंशं पोतः । 'मृगृवाहस्यामि' – इति का० उ० ४।२७। सूत्रेण तप्रत्ययः । ८. युवतिमनोदारणं बालद्वारा न घटते । अतो दृणाति दारयति वा मातुर्यौवनम्, पित्रोर्निस्सन्तानता जन्यासितेति तदाशयोऽप्यूह्यः । ९. का० सू० ३।२।१०। १०. का० सू० ४।२।४९। "नन्यादेर्युः" इति सूत्रे दुर्गवृत्तिः । ११. का० सू० ४।६।५४ । १२. का० सू० ३।६।१४। इतीनो लोपः । इनः कारितसंज्ञा कातन्त्रे । १३. का० उ० २।५८। १४. का० सू० ४।३।३१। १५. का० सू० ४।३।१८ अत्र दुर्गवृत्तिः । १६. दोग्धि पितृकुलं दहति दुनोति वा मातृकुलं दुहिता । स्वस्रादित्वात्तृन्प्रत्यय इत्याशयः । १७. का० सू० ४।६।७१। इति सहस्य सध्र्यादेशः । १८. समानं वयो यस्या इति विग्रहो न्याय्यः । ज्योतिर्जनपदेति समानस्य सादेशः । १९. का० उ० ४।१। २०. का० उ० ४।४० । २१. मेद्यति मेदते इति वर्तमानकालिको विग्रहो युक्तः, न तु भूतकालिकः ।

क् प्रत्ययो भवति । ककारो यण्वद्भावार्थस्तेनागुणत्वम् । सम्यक् स्नेहेन बध्नातीति **सम्बन्धः** । मित्रं युनक्तीति **मित्रयुक्** । सुष्ठु हरति चित्तं **सुहृत्**[1] । शोभनं हृदयं यस्य वा । सखा, स्निग्धः ।

**सहकृत्वा सहकारी सहायः सामवायिकः ।**

चत्वारः सहाये । सहकृतवान् **सहकृत्वा** । "कृञश्च[2]" क्वनिप् प्रत्ययः । प्र० सि० । "घुटि[3] चा०" दीर्घः । सह समन्तात्करोतीति **सहकारी** । "नाम्न्यजातौ[4] णिनिस्ताच्छील्ये" । सह सार्धम् अयते ५ गच्छति **सहायः** । समवाये नियुक्तः **सामवायिकः** । इकण् ।

**सनाभिः सगोत्रो बन्धुश्च सोदर्यः**

चत्वारो भ्रातरि । समाना नाभिर्यस्य **सनाभिः** । समानं गोत्रं यस्य **सगोत्रः** । बध्नाति स्नेहेन **बन्धुः** । "फलूमसि[5] यसिहनिमनिमपीन्दिकन्दिबन्धिवह्यरिभ्यश्च" एभ्य एकादशभ्य उः प्रत्ययो भवति । सोदर्यः । सोदर्यः, सगर्भः, सोदरः, समानोदरः, आत्मीयः, स्वजनः, आप्तः, ज्ञातिः, १० सनाभेयः, सपिण्डः ।

**अवरजोऽनुजः ॥ ४२ ॥**

**कनीयान्—**

द्वौ (त्रयो) लघुभ्रातरि । अवरं पश्चाज्जातः **अवरजः** । (अनु) पश्चाज्जातः **अनुजः** । "सप्तमी-[6] पञ्चम्योर्जे ( न्यन्ते ज ) नेर्डः" । अयमनयोरतिशयेन युवा **कनीयान्** । "युवाऽल्पयोः[7] कन्वा । कनिष्ठः । १५

**अग्रजो ज्येष्ठः**

अग्रे जातः **अग्रजः** । प्रकृष्टो वृद्धो **ज्येष्ठः** । "वृद्धस्य[8] ज्यः" वृद्धशब्दस्य ज्य आदेशो भवति । पूर्वजः, वरिष्ठः, वर्षीयान्, अग्रियः ।

**भ्रातृजानी स्वसाऽनुजा ।**

त्रयो भगिन्याम् । भ्रातुर्जाता **भ्रातृजानी**[9] । स्वस (स्य) ति क्षिपति चित्तं **स्वसा**[10] । २० ऋदन्तः । अनु पश्चाज्जाता **अनुजा** । भगिनी । भगी च । जामिः । यामिश्च ।

**भर्तुः स्वसा ननान्दा स्यात्—**

**स्यात्** भवेत् । **भर्तुःस्वसा** भगिनी । **ननान्दा** । "टुनदि समृद्धौ" । नद् । "अत[11] एव०" नञ् पूर्वः । न नन्दति भ्रातृजाया यस्यां सत्यां सा ननान्दा । "नञि[12] च नन्देर्ऋन् दीर्घश्च" नञि उपपदे

---

१. सुष्ठु हरतीतिव्युत्पत्तिस्तु तान्तसुहृत्शब्दे सम्भवति । मित्रवाचकदान्तसुहृद्शब्दे तु शोभनं हृदयं यस्येत्येव । हृदयस्य हृदादेशः समासे । २. का०सू० ४।३।९०। ३. "घुटि चासम्बुद्धौ" ।४.का०सू० २।२।१७। का०सू० ४।३।७६। ५.का०उ० १।६। ६. का०सू० ४।३।९१। ७. वर्तमानकातन्त्रे नोपलब्धम् । ८. वर्तमान-कातन्त्रे नोपलब्धम् । ९. नान्यस्मिन्कोषे भ्रातृजानीशब्द उपलब्धः, नाप्येतत्साधकं किमपि व्याकरण-सूत्रम् । भ्रातुर्जातेति विग्रहोऽपि भगिन्यर्थेऽसंगतः । तथापि भ्रात्रा सह मातुर्जातेति विग्रह्य बाहुलकादौ-णादिकमण्प्रत्ययं जनधातोः प्रकल्प्य अणन्तत्वान्ङीपि भ्रातृजानीति शब्दो ग्रन्थकारप्रत्ययात् कथञ्चित् समाधेयः । १० स्वस्यति क्षिपति चित्तं भ्रातुः स्वसेति विग्रहो बोध्यः । "असु क्षेपणे" दिवादौ । सुपूर्वकात्ततः "सुञ्यसेर्ऋन्" इति ऋन्प्रत्ययः । कातन्त्रौणादौ तु 'स्वस्रादयः' इति 'शस् प्राणने' इत्यत ऋन्प्रत्यये शकारस्य सकारे च "शश्वसितीति स्वसा" इत्याह । अत्र क्षिपतीति दर्शनात् 'असु क्षेपणे' इत्येव भाष्य-कर्तुरभिप्रेत इति ज्ञायते । ११. "अत एव वर्जनादिदमनुबन्धानां नोऽस्तीति" दुर्गवृत्तिः । का० सू० ३।६।१०। १२. का० उ० सू० २।३९।

सति नन्देर्धातोऋ न् प्रत्ययो भवति अकारो दीर्घश्च भवति। ननान्दा इति जातम्।

**मातुलानी प्रियाम्बिका ॥ ४३ ॥**

द्वौ मातुलभार्यायाम्। मातुलस्येयं भार्या **मातुलानी**। "इन्द्र[1]वरुणभवशर्वरुद्रहिमयमारण्य-यवयवनमातुलाचार्याणामानुक् ङीप् च"। अम्बैव अम्बिका। "अम्बादिभ्यो डलेकाः" ड, ल, इक, प्रत्यया
५ भवन्ति। प्रिया चासौ अम्बिका **प्रियाम्बिका**।

**वैर्यरातिरमित्रोऽरिर्द्विट् सपत्नो द्विषद्रिपुः।**

**भ्रातृव्यो दुर्जनः शत्रुर्दुष्टो द्वेषी खलोऽहितः ॥ ४४ ॥**

पञ्चदश शत्रौ। विशिष्टाम् ईं लक्ष्मीम् ईरयति निर्गमयति वीरः, वीरस्य कर्म वैरम्[2]। [ **वैरमस्यास्तीति वैरी**। ] वैरिपुरमियर्ति गच्छति **आरातिः**[3] अरातिश्च। न मित्रम् **अमित्रम्**।
१० अधर्मानृतादिवत्। "**विपक्षे नञ्**" इति सारस्वत[4]सूत्रम्। शत्रुत्वमियर्ति **अरिः**। द्वेष्टीति **द्विट्**। "सत्सूद्विषद्रुहदुहयुजविदभिदछिदजिनीराजामुपसर्गेऽपि" क्विप्। एकार्थाऽभिनिवेशेन समानं पतति **सपत्नः**। द्विष्टे **द्विषन्**। निष्ठुरं रपति **रिपुः**। "[5]रज्जुतर्कुवल्गुफल्गुशिशुरिपुपृथुलघवः।" एते उप्रत्ययान्ता निपात्यन्ते। निपातनमप्राप्तप्रापणार्थं प्राप्तस्य बाधनार्थम्। लक्षणेन यद्यदसिद्धं तत्सर्वं निपातनात्सिद्धम्। तथा क्षीरस्वामिनः—[7]"रेपयति रिपुः। रेपृ गतौ। भ्रातरं व्ययति मारयति
१५ [8]**भ्रातृव्यः**। दुष्टजनः **दुर्जनः**। परमभट्टारकश्रीयशःकीर्तिप्रभाषितग्रन्थे—

"प्रशस्या न नमस्याऽपि दुर्जनैर्या विधीयते।
कण्टकः पादलग्नोऽपि न शुभाय प्रजायते॥"

तथा च सूक्तिमुक्तावल्याम्[9]—

"**वरं क्षिप्तः पाणिः कुपितफणिनो वक्त्रकुहरे**
**वरं झम्पापातो ज्वलदनलकुण्डे विरचितः।**
२० **वरं प्रासप्रान्तः सपदि जठरान्तर्विनिहितो**
**न जन्यं दौर्जन्यं तदपि विपदां सद्म विदुषा॥"**

अत्र ये केचिद् दुर्जनाः सन्ति, तेषां मस्तकेऽशनिपातो भवतु। तथा च[10]—

"**दुज्जण सुहियउ होउ जगि सुयणु पयासिउ जेण।**
**अमिउ विसें वासरु तिमिरु जिमि मरगउ कच्चेण॥"**
२५
श्यति शीर्यते वा [11]**शत्रुः**। दूष्यते निन्द्यते लोके **दुष्टः**। द्वेष्टि [12]द्वेषोऽस्त्यस्य वा **द्विषन्**।

---

१. पा० सू० ४।१।४९। अत्र सूत्रे यमेत्यधिकः पाठः। २. "हायनान्तयुवादिभ्योऽण्" युवादित्वादण्। ततो मत्वर्थे "अत इनिठनौ" इतीन्। ३. "ऋ गतौ"। आङ्पूर्वकाद् ऋधातोर्बाहुलकादातिप्रत्ययः। अन्यत्र तु न राति सुखं ददातीति नञ्पूर्वकात् 'रा' (दाने) धातोः क्तिच् क्तौ च संज्ञायामिति क्तिच्। ४. "तदन्यतद्विरुद्धतदभावेषु नञ् वर्तते" इति वक्तव्यम्। "अन् स्वरे" सार० समा० १४ सू०। ५ का० सू० ४।३।७४। ६. का० उ० सू० १।६। ७. क्षीर० भा० २।८।१०। ८. "व्येञ् संवरणे" धातूनामनेकार्थत्वाद्धिंसाऽर्थे वृत्तिः। आतोऽनुपसर्गे कः। ९. निर्णयसागरयन्त्रालयप्रकाशितकाव्यमालासप्तमगुच्छे सूक्तिमुक्तावली ६१ श्लो०। १० सावयध० दो० २। ११. "जन्वादयः। जनुश्मश्रुशिग्रुशत्रवः। एते कप्रत्ययान्ता निपात्यन्ते"। इति का० उ० दुर्ग० सू० ३।६६। १२. द्वेषोऽस्त्यस्येति केवलमर्थाऽभिप्रायेण। विग्रहस्तु द्वेष्टीत्येव। शत्रुप्र०।

खलति सज्जनगुणानाच्छादयतीति **खलः**। न मैत्रीं हिनोति गच्छति, न हितो वा, [1]**अहितः**। **अभियातिः**, प्रतिपक्षः, अग्रहनः, जिघांसुः, परिपन्थी, परः, असुहृत्, अपथी, पर्यवस्थाता, शात्रवः, प्रत्यनीकः, द्वेषणः, दुर्हृद्, दस्युः, अभिमन्थी।

**दीधितिर्भानुरुस्रोंऽशुर्गभस्तिः किरणः करः।**
**पादो रुचिर्मरीचिर्भास्तेजोऽर्चिर्गौर्द्युतिः प्रभा ॥४५॥** ५

षोडश किरणे। दिधीते दीप्यते **दीधितिः**। [2]"दीधीङो क्तिः" दीधीङो धातोर्क्तिः प्रत्ययो भवति। 'भा दीप्तौ' भाति **भानुः**। [3]"दाभाभ्यां नुः।" एभ्यो नुः प्रत्ययः स्यात्। वसति रवौ [4]**उस्रः**। पुंसि। अश्नुते जगद् व्याप्नोति **अंशुः**। स्त्री। उणादौ। अनच्। अनितीति **अंशुः**। अनेः [5] शुः" अनेर्धातोः शुप्रत्ययो भवति। [ [6]"भा दीप्तौ" भाति **भानुः**। "दाभाभ्यां" ] गां भुवं बभस्ति [7]**गभस्तिः**। १०

"[8]वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः।
षोडशादौ विकारस्तु वर्णनाशः पृषोदरे॥"

कीर्यते **किरणः**। हलायुधे–"**किरति विक्षिपति तमांसि किरणः**।" "[9]कॄभूभ्यां कनः। कीर्यते **करः**। पद्यते **पादः**। "[10]पदरुजविशस्पृशोभ्यां घञ्।" रोचते **रुचिः**। म्रियते तमोऽनेन **मरीचिः**। स्त्रीनौः। उणादौ। म्रियते **मरीचिः**। "[11]मृकणिभ्यामीचिः" आभ्यामीचिः प्रत्ययो भवति। भासते क्विपि सान्तो **भास्**। स्त्रीनौः।" पुंस्येवेति शब्दभेदः। भाः। भासौ। भासः। तेजयतीति **तेजस्**। अर्चयतीति अर्चिष्। अर्च्यते पूज्यते **अर्चिः**। "अर्चि [12]शुचिरुचिहुसृपिछादिछर्दिभ्य इसिः।" गच्छति तमोऽत्रेति **गौः**। स्त्रीनौः। द्योतनं **द्युतिः**। द्योतते (वा) **द्युतिः**। प्रभाति **प्रभा**। रोचिः, अभीशुः, प्रद्योतः, रश्मिः, घृणिः, रुचिः, विभा, धाम, वसुः, केतुः, प्रग्रहः, उपधृतिः, धृष्णिः, पृश्निः, मयूखः, विरोकः, शोकश्च। १५ २०

**दीप्तिर्ज्योतिर्महो धाम रश्मिरूर्जो विभावसुः।**

सप्त तेजसि। दीप्यते **दीप्तिः**। द्योतते **ज्योतिः**। 'ज्योतिरादयः [13]। ज्योतिर्महिरादयः। महति **महः**[14]। सान्तम्। धीयते सर्वेण नान्तम् **धामन्**। रशिः सौत्रः। रशति अश्नुते **रश्मिः**। "ऊर्ज बलप्राणनयोः।" ऊर्जयतीति **ऊर्जः**। कः। [ [15]विभा वसुर्यस्य स **विभावसुः**। ] ( विभा। वसुः। )

**शीतोष्णप्रायपूर्वाच्चौ तदन्ताविन्दुभास्करौ ॥४६॥** २५

तयोरन्तौ [16]**तदन्तौ**। **इन्दुभास्करौ**। इन्दुश्च भास्करश्च इन्दुभास्करौ। कथंभूतौ ? **शीतोष्ण-**

१. न मैत्रीं हिनोतिरमेति भूते विग्रहो बोध्यः। गत्यर्थत्वाकर्तरि क्तः। न हितमस्मादिति रामाश्रमः। २. का० उ० सू० ६।२६। ३. का० उ० सू० २।७। ४ "वस् निवासे" वस् धातोः "स्फायि तञ्चि" त्यादि उ० सूत्रेण रक्प्रत्ययः सम्प्रसारणं च। ५. का० उ० सू० ५।४८। अंशयति विभाजयति "अंश विभाजने" उप्रत्ययः व्युत्पत्त्यन्तरं च। ६. पुनरुक्तत्वात्परिहार्यः। ७. बभस्ति दीपयति। "भस भर्त्सनदीप्त्योः"। तिप्रत्ययः। पृषोदरादित्वात्षोडशादौ वर्णविकारवदोकारस्याकारः। ८. शा० सू० २।२।१७२। "पृषोदरादयः" इत्यत्र कारिकारूपेण पठितः। ९ का० उ० सू० ६।१८। १०. का० सू० ४।५।१। ११ का० उ० सू० ३।४३। १२. का० उ० सू० २।४४। १३. का० उ० सू० २।४५। १४. महनं महः। मह्यते पूज्यते वेति रामाश्रमः। १५. वस्तुतस्तु "विभा" इति "वसु" इति च तेजसः संज्ञा। समुदितो "विभावसु" शब्दस्तु सूर्याग्निवाची। तदुक्तं "सूर्यवह्नी विभावसू" इति अम० को० ३।३।२२६। १६. ते दीधित्यादयः शब्दा अन्ते ययोस्तौ तदन्तौ इत्येवं समासो बोध्यः। तयोरन्ताविति समासस्तु लेखकप्रमादात्प्रयुक्तः।

( प्राय ) **पूर्वाञ्चौ** । शीतोष्णौ ( प्रायेण ) पूर्वाञ्चौ यथेन्दुभास्करयोः (तौ) शीतोष्णा (प्राय) पूर्वाञ्चौ । शीतदीधितिः । शीतदीधितिमान् । शीतभानुः । शीतभानुमान् । शीतांशुः । शीतांशुमान् । शीतगभस्तिः । शीतगभस्तिमान् । शीतकिरणः । शीतकिरणवान् । शीतपादः । शीतपादवान् । शीतरुचिः । शीतरुचिमान् । शीतमरीचिः । शीतमरीचिमान् । शीतार्चिः । शीतार्चिष्मान् । शीतभाः । शीतभावान् । शीतगुः । शीतगोवा[1] (मा) न् । शीतद्युतिः । शीतद्युतिमान् । शीतप्रभः । शीतप्रभावान् । शीतदीप्तिः । शीतदीप्तिमान् । शीतज्योतिः । शीतज्योतिष्मान् । शीतमहाः । शीतमहस्वान् । शीतधामा । शीतधामवान् । शीतरश्मिः । शीतरश्मिवान् । शीतोर्जः । शीतोर्जवान् । शीतविभावसुः । शीतविभावसुमान् । किरणशब्दानां ( ब्देभ्यः ) पूर्वं शीतशब्दप्रयोगे चन्द्रनामानि भवन्ति । उष्णशब्दप्रयोगे सूर्यनामानि भवन्ति । उष्णदीधितिः । उष्णदीधितिमान् । उष्णभानुः । उष्णभानुमान् । उष्णोस्रः । उष्णोस्रवान् । उष्णांशुः । उष्णांशुमान् । उष्णगभस्तिः । उष्णगभस्तिमान् । उष्णकिरणः । उष्णकिरणवान् । उष्णपादः । उष्णपादवान् । उष्णरुचिः । उष्णरुचिमान् । उष्णमरीचिः । उष्णमरीचिमान् । उष्णभाः । उष्णभास्वान् । उष्णतेजाः । उष्णतेजस्वान् । उष्णार्चिः । उष्णार्चिष्मान् । उष्णगुः । उष्णगोमान् । उष्णद्युतिः । उष्णद्युतिमान् । उष्णप्रभः । उष्णप्रभावान् । उष्णदीप्तिः । उष्णदीप्तिमान् । उष्णज्योतिः । उष्णज्योतिष्मान् । उष्णमहाः । उष्णमहस्वान् । उष्णधामा । उष्णधामवान् । उष्णरश्मिः । उष्णरश्मिवान् । उष्णोर्जः । उष्णोर्जवान् । उष्णविभावसुः । उष्णविभावसुमान् ।

**शशी विधुः सुधासूतिः कौमुदीकुमुदप्रियः ।**
**कलाभृच्चन्द्रमाश्चन्द्रः कान्तिमानोषधीश्वरः ॥ ४७ ॥**

दश चन्द्रे । शशोऽस्यास्तीति **शशी** । विदधात्यमृतं **विधुः** । "वौ धाञश्च[2]" । सुधा अमृतं सूयते **सुधासूतिः** । कुमुदानामियं विकाश (स) हेतुत्वात्**कौमुदी** ( ज्योत्स्ना तस्याः प्रियः कौमुदीप्रियः ) । कुमुदानां प्रियः अभीष्टः **कुमुदप्रियः** । कलां बिभर्त्तीति **कलाभृत्** । "मा माने" चन्द्रं मातीति **चन्द्रमाः**[3] । "चन्द्रे[4] मातेः" चन्द्रे उपपदे अस्मादसन् प्रत्ययो भवति । अगुणवद्भावादकारलोपः । भिन्नयोगः स्वरार्थ एव । चन्दतीति **चन्द्रः** । "स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृदिमदिमन्दिचन्द्युन्दीन्दिभ्यो रक्[5]" । कान्तिरस्यास्ति **कान्तिमान्** । ओषधीनामीश्वरः **ओषधीश्वरः** । इन्दुः, सोमः, राजा, रोहिणीवल्लभः, अब्जः, नक्षत्रेशः, अत्रिनेत्रप्रसूतः । तथा चोक्तं यशस्तिलके—[6]

"आहुर्नेत्रोत्थमत्रेः सुतममृतनिधे यं हरेर्नर्मबन्धु
मित्रं पुष्पायुधस्य त्रिपुरविजयिनो मौलिभूषाविधानम् ।
वृत्तिक्षेत्रं सुराणां यदुकुलतिलकं बान्धवं कैरवाणां,
सम्प्रीतिं वस्तनोतु द्विजरजनियतिश्चन्द्रमाः सर्वकालम् ॥"

---

१. "मादुपधायाश्च०" इत्यादि वत्वविधायकं सूत्रम् । मवर्णाऽवर्णान्तान्मवर्णावर्णोपधाच्च मतोर्मकारस्य वकारं शास्ति । अत्र तथात्वाभावात् "शीतगोमान्" इति वक्तव्यम् । वस्तुतस्तु शीतगोशब्दस्य कर्मधारये ततो "गोरतद्धितलुकि" इति टचो दुर्वारत्वात् "शीतगववान्" इति सुवचम् । सिद्धान्तस्तु नेदृशस्थले मतुबिष्टः । तदुक्तं "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः" । २. का० उ० सू० ५।२। कुप्रत्ययः । ३. चन्द्रं कर्पूरं माति तुलयति सादृश्येनेति अन्वर्थेन विग्रहार्थः । चन्द्रमाह्लादं मिमीते तुलयति सादृश्येनेति विग्रहान्तरमप्यूह्यम् । ४. का० उ० सू० ४।५।७। ५. का० उ० सू० २।१४। ६. आश्वा० ३।४७ श्लो० ।

प्रालेयांशुः, श्वेतरोचिः, शशाङ्कः, द्विजराजः, रजनिकरः, पीयूषरुचिः, निशीथिनीनाथः, जैवातृकः, मृगाङ्कः, दाक्षायणीरमणः, मा[1] अप्युच्यते, सत्यभामेतिवत्। सुधामूर्तिः अमृतनिर्गमः, समुद्रनवनीतम्। देश्याम्[2]।

## उडूनि भानि तारर्क्षं नक्षत्रम्–

चत्वारो नक्षत्रे। अवति प्रभाम् उडुः[3]। क्लीबे। तथा चामरसिंहे[4]—

"नक्षत्रमृक्षं भन्तारा तारकाऽप्युडु वा स्त्रियाम्।"

भाति दीप्यते भम्। क्षीरस्वामिनि–[5]"भा विद्यतेऽस्य भम्।" तरन्त्यनया तारा[6]। तारयति वा। ऋच्छतीति हिनस्ति तम ऋक्षम्[7]। नक्षति खे याति न तमः क्षि (क्ष) णोति वा नक्षत्रम्। "अमि[8]नक्षिकडिभ्योऽत्रः"। तारकं क्लीबेऽपि। यच्च[9] शाश्वतः—

"नक्षत्रे चाऽक्षिमध्ये च तारकं तारकाऽपि च।

लक्ष्यं च—

छिन्नैर्व्योम्नि पुराणमौक्तिकघनच्छायैः स्थितं तारकैः"

## तत्पतिः

(नक्षत्र पर्यायेभ्यः परं) पतिशब्दप्रयोगे चन्द्रनामानि भवन्ति। उडुपतिः। तारापतिः। ऋक्षपतिः। नक्षत्रपतिः। उडुराजः। उडुस्वामी। उडुनाथः। नक्षत्रेश्वरः। तारेन्द्रः।

## निशा।

## क्षणदा रजनी नक्तं दोषा श्यामा क्षिपा

सप्त रात्रौ। निशाति तनूकरोति चेष्टामिति निशा, निशो वा। "आत[10]श्चोपसर्गे"। क्षणमवसरं ददातीति क्षणदा। तमसा रजति रजनिः। त्रियामीः। रजनी। रजनशब्दाद् वा नदादित्वाद्दीः। नेनेक्ति नक्तम्। दुष्टं दूषयति षाऽत्र दोषा। आदन्तोऽव्ययाऽनव्ययः। श्यायन्ते गच्छन्ति रात्रिञ्चरा अत्र श्यामा। तथाऽनेकार्थे[11] (ध्वनि) मञ्जर्याम्—

"श्यामा रात्रिस्तु विट्श्यामा श्यामा स्त्री मुग्धयौवना।

श्यामा प्रियङ्गुराख्याता श्यामा स्याद् वृद्धदारिका॥"

क्षिप प्रेरणे। क्षिप्। क्षेपणं क्षिपा। "[12]षाऽनुबन्धभिदादिभ्यस्त्वङ्।" क्षिप्यते स्वापेन जनैः निर्गम्यते वा। तमी। तमा आदन्तोऽव्ययानव्ययः। तमिस्रा। तमस्विनी। विभावरी। नक्तमुखा। शर्वरी। त्रियामा। निशीथिनी। यामिनी। वसतिः। वासतेयी। रात्रिः।

---

१. "लोपः पूर्वपदस्य च अवृत्तये लथैवेष्टः" इति कात्यायनवार्तिकम् ।५।३।८३। पा० सूत्रस्थं पूर्वपदलोपविधायकमत्र प्रमाणं बोध्यम्। २. "देशी" शब्दः प्रान्तभाषावाचकः। क्षीरस्वामिकृताऽमरभाष्येऽपि बहुत्र उपलभ्यते। साधुत्वमस्य पचादेराकृतिगणत्वात् "देवी" इतिवद् बोध्यम्। वस्तुतस्त्वयं शब्दो दैशिक एव। ३. अवति प्रभां रक्षतीति ऊः। "अव रक्षणे" क्विप्। "ज्वरत्वरे" त्यूठ्। डयते इति डुः। डयतेर्डुप्रत्ययः। ऊश्चासौ डुश्चेति कर्मधारयः। नक्षत्राणां रक्षणार्हत्वादाकाशोत्पतनशीलत्वाच्च उडुत्वमुपपन्नम्। "इको ह्रस्वः" इत्यूकारस्य ह्रस्व इति टीकाशयः। ४. अम० को० १।३।२१। ५. क्षीर० भा० १।३।२१। ६. भिदादित्वादङ्। अङि परे गुणः। निपातनाद्दीर्घः। ७. ऋच्छति गच्छति "ऋछी गतौ" तुदादिः। औणादिकः सप्रत्ययः किन्। पलकरवङ्खानि। ऋच्छमिति। ८. का० उ० सू० ३।५। ९. "यच्च शाश्वतः" इत्यारभ्य "स्थितं तारकैः" इत्यन्तः पाठः १।२।२२। क्षीरस्वामिभाष्यस्थोऽत्र गृहीतः। १०. का० सू० ४।५।८४। ११. ९६ श्लो० श्लोका०। १२. का० सू० ४।५।८२।

करः ॥४८॥

(निशापर्यायात्परं) करशब्दे प्रयुज्यमाने चन्द्रनामानि भवन्ति। निशाकरः। क्षणदाकरः। रजनीकरः। नक्तङ्करः। दोषाकरः। श्यामाकरः। क्षपाकरः।

**तरणिस्तपनो भानुर्ब्रध्नः पूषाऽर्यमा रविः।**
**तिग्मः पतङ्गो द्युमणिर्मार्तण्डोऽर्को ग्रहाधिपः ॥४९॥**
**इनः सूर्यस्तमोध्वान्ततिमिरारिर्विरोचनः।**

सप्तदश सूर्ये। तारयत्यनेनेति **तरणिः**। "ऋतृ[1]सृधृञ् धम्यश्यविवृतिग्रहिभ्योऽनिः।" तपति त्रिलोकीं **तपनः**। भाति दीप्यते करैः **भानुः**। "[2]दाभाभ्यां नुः" नुः प्रत्ययः। "बन्ध बन्धने" बध्नाति जन्तुदृष्टीः **ब्रध्नः**। "[3]बन्धेर्ब्रधिश्च"। अस्मान्नक् प्रत्ययो भवति ब्रध्यादेशश्च। इकार उच्चारणार्थः। पुष पुष्टौ। पुष्णाति वर्धते तेजसा **पूषा**। पूषादयः[4]— "पूषन्नर्यमन्नुक्षन्वृषन्प्लीहन्मातरिश्वन्क्लेदन्स्नेहन्मूर्धन्मज्जन्युवन्दीपन्" एते कन्यन्ता निपात्यन्ते। इयर्तीति **अर्यमा**। 'ऋ गतौ'। रूयते स्तूयते **रविः**। "[5]इः सर्वधातुभ्यः"। तीतिक्षतीति **तिग्मः**। "युजिरुचितिजां [6]ग्मक्"। पतति नक्षत्रपथे **पतङ्गः**। "[7]पतिभ्यामङ्गः"। आभ्यामङ्गः प्रत्ययो भवति। दिवो मणिरिव **द्युमणिः**। मृतण्डस्यापत्यं **मार्तण्डः**। मृतण्डश्च। आकाशमियर्ति **अर्कः**। उणादौ "अर्च पूजायाम्।" अर्च्यते **अर्कः**। "[8]इण्भीकापाशल्यचिकृदाधाराभ्यः कः" एभ्यः कः प्रत्ययो भवति। ग्रहाणामधिपः स्वामी **ग्रहाधिपः**। एतीति **इनः**। "[9]इण्जिकृषिभ्यो नक्"। सुवति (प्रेरयति कर्मणि) लोकान् **सूर्यः**। "सूर्यरुच्याव्यथ्याः[10] कर्तरि"। सूर्य इति यप्रत्ययान्तो निपातः। तमश्च ध्वान्तं च तिमिरश्च **तमोध्वान्ततिमिराः**,तेषामरिः,— तमोऽरिः, ध्वान्तारिः, तिमिरारिः। विरोचते इत्येवंशीलो **विरोचनः**। "[11]हलादेश्च व्यञ्जनादेः"। हलादेर्गणाद् व्यञ्जनादेर्युः भवति। आदित्यः, सविता, सहस्रकिरणः, प्रद्योतनः, भास्करः, तिग्मांशुः, दिनमणिः, भास्वान्, विवस्वान्, हरिः, विकर्तनः, भगः, गोपतिः, दिनकरः, सूरः शूरश्च, अंशुमाली, मिहिरः, तिमिररिपुः, अंशुमान्, अंशुः, हरिदश्वः, सप्ताश्वः, प्रभाकरः, भानुमान्, हंसः, खगः, मित्रः, चित्रभानुः, अहर्पतिः, कर्मसाक्षी, जगच्चक्षुः, द्वादशात्मा, त्रयीतनुः।

**दिनं दिवाऽहर्दिवसो वासरः—**

पञ्च दिवसे। "दो ऽवखण्डने" द्यति खण्डयति अन्धकारमिति दिनम्। "दीनात[12] इ (प्रतेरि) " इते नंप्रत्ययो भवत्याकारस्येच। रविर्दी [ घाम् दी] प्यतेऽत्र; आदन्तमव्ययम् **दिवा**। अदन्तं क्लीबम्। दिवं विदन्। न जहाति काल(रवि)म् **अहः**। "नञि[13] जहातेः" इति क्विप्(कनिः)। दीव्यतीति **दिवसः**[14]; दिवसम्। "[15]वेतसवाहसदिवसफनसाः" एतेऽसप्रत्ययान्ता निपात्यन्ते। वासयत्यत्र **वासरः**[16]। वासोऽपि। उभयम्। "देवि[17]वञ्चिजठिभ्रमिवासिभ्योऽरः" एभ्योऽर् प्रत्ययो भवति। द्युः। घस्रः।

---

१. का० उ० सू० २।४३। २. का० उ० सू० २।७। ३. का० उ० सू० २।५२। दुर्गवृत्तिश्च। ४. का० उ० सू० २।५। ५. का० उ० सू० ३।१४। ६. का० उ० सू० १।५७। ७. का० उ० सू० ५।२२। ८. का० उ० सू० २।५७। ९. का० उ० सू० २।५१। १०. का० सू० ४।२।३०। ११. का० सू० ४।४।३१। १२. का० उ० सू० ६।३७। १३. का० उ०सू० २।४। १४. दीव्यन्ति क्रीडन्ति प्राणिनोऽत्र दिवस इत्यपि। १५. का०उ०सू० ३।११। १६. "वास उपसेवायाम्" वासयति सूर्यालोकं प्राणिनं वा वासरः। विग्रहे "अत्र" इति पदमधिकम्। १७. नैतत्सूत्रम् का० उणादौ लब्धम्। तत्र "कृवाभ्यः सरक्" ३।६२। इति सूत्रम्। वातीति वासरः,वाधातोः सरक् प्रत्यय इत्युक्तम्। तत्रैव चतुर्थपादे ३३ तमपरमपि सूत्रम् "मयसिवशिवासिभ्यः सरः" इति वासिधातोः सरप्रत्यय उक्तः। वासयतीति वासरः। कौमुदीस्थमुणादिसूत्रम् "अर्तिकमिचमिभ्रमिदिविवासिभ्यश्चित्" ३।१२७। इति वासिधातोररप्रत्ययः।

**तत्करश्च सः ॥ ५० ॥**

दिनकरः, दिवाकरः, अहस्करः, दिवसकरः, वासरकरः, इत्यादि सूर्यनामानि भवन्ति ।

**चक्रवाकाब्जपर्यायबन्धुः—**

चक्रवाकश्च अब्जं च चक्रवाकाब्जे, तयोश्चक्रवाकाब्जयोः (परत्र) **बन्धु** शब्दप्रयोगे सूर्यनामानि भवन्ति । चक्रवाकबन्धुः । अब्जबन्धुः । पद्मबन्धुः । कमलबन्धुः । इत्यादीनि ज्ञातव्यानि । ५

**कुमुदविप्रियः ।**

**कुमुदानां** (परत्र) **विप्रिय**शब्दे प्रयुज्यमाने सूर्यनामानि भवन्ति । कुमुदविप्रियः । कैरवविप्रियः । कुमुदविवल्लभः । इत्यादि ।

**यमुनायमकानीनजनकः सविता मतः ॥ ५१ ॥**

**यमुनाजनकः । यमजनकः ।** [1]**कानीनजनकः । सविता । मतः कथितः ।** १०

**वाहोऽश्वस्तुरगो वाजी हयो धुर्यस्तुरङ्गमः ।**
**सप्तिरर्वा हरी रथ्यः—**

एकादशाश्वे । वाह्यते गम्यतेऽश्वबाहैर्वाहः । तथाऽनेकार्थ[2] ( ध्वनि ) मञ्जर्याम्—

"वाहो युग्यं घनो वाहो वाहके वाह इत्यपि ।
वाहो मानविशेषश्च वाहो बाहुरिति स्मृतः ॥" १५

"अशू व्याप्तौ ॥ अश् । अश्नुते व्याप्नोति वेगेनाभीष्टस्थानमित्यश्वः । अथवा "अश भोजने" अश्नाति भक्षयति मुद्गादीनित्यश्वः । "[3]अशिलटिखटिविशिभ्यः क्वः" । वमात्वः । "धौण्वत्योश्च[4] कृति" नेट् । "उरो ( रसा ) गच्छतीति उरगः । "डोऽ[5]संज्ञायामपि" । पूर्वमश्वानां वाजा अभूवन्निति श्रुतिः । वाजाः सन्त्यस्य वजतीत्येवंशीलो वा **वाजी** । इदन्तोऽपि, वाजिः । तथा हैमनाममालायाम्[6]—

"वाजं वाजस्तु पक्षेऽपि मुनौ निःस्वनवेगयोः ।" २०

हिनोति गच्छति वर्धते (वा) अनेन **हयः** । धुरि सङ्ग्रामे साधुर्धुर्यः[7]। "[8]यदुगवादितः" । तुरं (वेग) गच्छति तु (तौ) तौति त्वरते वा **तुरङ्गमः**[9]। 'गमश्च[10]' नाम्न्युपपदे गमेश्च संज्ञायां खो भवति "धात्वादेः[11] षः सः" । सपत्यश्वानं गच्छतीति **सप्तिः** । "[12]सपेस्तिलतितनः" सपेर्धातोरित तति तन् एते प्रत्यया भवन्ति । अर्वति गच्छति अनेन नान्तः, [13]**अर्वन्** । हरत्यनेन **हरिः** । रथे साधु **रथ्यः**[14]। गन्धर्वः, तार्क्ष्यः, ययुः, घोटकः, अर्दनिः[15], वीतिः, पीतिः । २५

1. कानीनः कर्णः । कन्याऽवस्थायां कुन्त्याः कर्णोद्भवश्च इति पौराणिकी कथाऽनुसन्धेया । २. ११ श्लो०श्लोका० । ३.का०उ०सू० २।१। ४. का०सू० ४।६।८०। ५. भ्रान्तोऽयं पाठः । उचितस्तु तुरेण वेगेन गच्छतीति तुरगः । ६. का०सू० ४।३।४७। ७. अने०सं० २।७८। ८. धुरं वहतीति धुर्यः । 'धुरो यड्ढकौ' इत्यन्यत्र । ९. का०सू०२।६।११। १०.तुरपूर्वकाद्गमेः "गमश्च" इति खे तुरङ्गमः । तौतीति त्वरते वेति विग्रहे तत्सिद्धिप्रकारोऽन्यथा कल्पनीयः । ११. का० सू० ४।३।४५। १२. का० सू० ३।८।२४। १३. का० उ० सू० ५।२८। १४, "अर्व गतौ" बाहुलकात्कनिन् । १५. "रथं वहतीति सुवचः । "तद् वहति रथयुगप्रासङ्गम्" इति यत् । १६. अर्दनिशब्दस्याश्वार्थे प्रमाणं मृग्यम् । कोशान्तरेऽर्दनिशब्दार्थश्चेत्थम्—"अर्दनी त्वार्दनिरपि स्त्रियः स्युः प्रार्थनाऽर्थना" कल्प० को० १।९।२१। अर्वतीशब्दोऽश्विनीपर्यायस्तु सर्वसम्मतः । "वीति" "पीति" शब्दयोरश्वार्थे प्रमाणमस्त्यात् "वीतिः सन्तिर्धिकावा वातसकन्धार्थ इत्यपि" कल्प० को० १।५।१९३। "पीतिः पाने सपूर्वा तु सहपाने हये पुमान्" विश्व० ।

## सप्ताद्यश्वो मयूखवान् ॥ ५२ ॥

अश्वशब्दस्य (ऽश्वात्) पूर्वं यदि सप्तादि (स शब्दः) तदा सूर्यनामानि भवन्ति। सप्तवाहः। सप्ताश्वः। सप्ततुरगः। सप्तवाजी। सप्तहयः। सप्तधुर्यः। सप्ततुरङ्गमः। सप्तसप्तिः। सप्तार्वा। सप्तहरिः। सप्तरथ्यः।

५ **खं विहायो वियद् व्योम गगनाकाशमम्बरम्।**
**द्यौर्नभोऽभ्रोऽन्तरीक्षं च-**

एकादश गगने। खनति शून्यत्वेन खन्यते वा[1] **खम्**। विजहाति सर्वं **विहायः**[2]। अथाय विहायसां पक्षिणां मार्गं विदं यच्छतीति **वियत्**। (अथवा वीनां पक्षिणां मार्गं यच्छति वियत्)। अमरेन्द्रभाष्ये—"**वियच्छति**[3] **विरमति वियत्**।" वायुना वीयते (व्यवति व्यय्यते वा) **व्योमन्**। "स्रिव्यवि[4]मविज्वरि-

१० त्वरामुपधायाः" एषामुपधाया वकारस्य चोट् भवति। "सर्वधातुभ्यो मन्[5]" (इति विपूर्वकादवेर्मन्)। गम्यते सर्वमनेन **गगनम्**[6]। क्लीबे वा। गच्छत्यनेन गगनं वा। आकाशन्ते सूर्यादयोऽस्मिन्नित्याकाशम्। न काशते वा छान्दसो दीर्घः। अम्बते शब्दायते **अम्बरम्**। दीव्यन्ति पक्षिणोऽत्र **द्यौः**। [द्याम्]। नहाति बध्नाति सर्वमात्मना सान्तम् **नभः**। नभम् इत्यदन्तम् नभसं च। न भ्राजतेऽभ्रम्। **अभ्रम्**। अन्तः **ऋक्षाण्यत्र अन्तरीक्षम्**। पृषोदरादित्वम्। द्यावाभूम्योरन्तरीक्ष्यते वा अन्तरिक्षम्, अन्तरीक्षं च। मरुद्वर्त्मन्। तारापथः। पुष्करम्।

१५ विष्णुपदम्। त्रिदिवम्। नाकम्। अनन्तम्। सुरवर्त्म। महाब[7] (वि) लम्। देवयान्।

## मेघवायुपथोऽप्यथ ॥ ५३ ॥

मेघशब्दाग्रे वायुशब्दाग्रे च पथशब्दे प्रयुज्यमाने आकाशनामानि भवन्ति। मेघपथः। मेघमार्गः। घनपथः। घनमार्गः। पर्जन्यपथः। पर्जन्यमार्गः। मिहिरपथः। मिहिरमार्गः। नभ्राट्पथः। नभ्राण्मार्गः। तडित्पतिपथः। तडित्पतिमार्गः। सौदामिनीपतिपथः। सौदामिनीपतिमार्गः। वायुपथः। वायुमार्गः।

२० वातपथः। वातमार्गः। अनिलपथः। अनिलमार्गः। मरुत्पथः। मरुन्मार्गः। समीरणपथः। समीरण-मार्गः। गन्धवाहपथः। गन्धवाहमार्गः। श्वसनपथः। श्वसनमार्गः। सदागतिपथः। सदागतिमार्गः।

**तच्चरः खेचरः-**

तत्र आकाशे चरतीति **तच्चरः**। आकाशाग्रे चरशब्दे प्रयुज्यमाने विद्याधरनामानि भवन्ति। खचरः। विहायश्चरः। वियच्चरः। व्योमचरः। नभश्चरः। गगनचरः। अम्बरचरः। आकाशचरः। अन्तरिक्ष-

२५ चरः। मेघपथचरः। मेघमार्गचरः। वायुपथचरः। वायुमार्गचरः। घनपथचरः। घनमार्गचरः। घनाघन-पथचरः। घनाघनमार्गचरः। जीमूतपथचरः। जीमूतमार्गचरः। अभ्रपथचरः। अभ्रमार्गचरः। बलाहक-पथचरः। बलाहकमार्गचरः। पर्जन्यपथचरः। पर्जन्यमार्गचरः। इत्यादिनामानि विद्याधरस्य ज्ञेयानि।

**तद्गः,**

तत्र गगने गच्छतीति **तद्गः**। गगनाग्रे "ग" शब्दे प्रयुज्यमाने शकुन्तनामानि भवन्ति।

३० खगः। विहायोगः। वियद्गः। व्योमगः। नभोगः। गगनगः। द्योगः। आकाशगः। अन्तरिक्षगः।

---

१. "खनु अवदारणे" डप्रत्ययः। "खर्व गतौ" खर्वत्यस्मिन्निति वा विग्रहः। अत्रापि डः। २. उक्त-विग्रहे "ओहाक् त्यागे" हाधातोः "वहिहाधाञ्भ्यश्छन्दसि" ४।२२। इत्यसुन् णित्वं च। णित्वाद्युक्। विशेषेण हाययति गमयति विमानादीन् इत्यपि बोध्यम्। "हय गतौ" ण्यन्तादसुन्। ३. क्षीर०भा० १।२।२। ४. का० सू० ४।१।५७। ५. का० उ० सू० ४।२८। ६. "गमेर्गश्च" इति युच् गश्चान्तादेशः। ७. महाबिल-शब्दस्याकाशवाचकत्वेऽमरकोषमधस्तात्प्रमाणम्—"तारापथोऽन्तरीक्षं च मेघाध्वा च महाबिलम्" १।२।२। क्षेपक।

मेघपथगः । मेघमार्गगः । इत्यादीनि शतम्यानि ।

**पक्षी पत्री पतत्र्यपि ।**
**शकुन्तिः शकुनिर्विश्च पतङ्गो विष्किरोऽन्यथा ॥५४॥**

सप्त पतङ्गे । पक्षाः सन्त्यस्य **पक्षी** । पत्राणि सन्त्यस्य **पत्री** । नान्तः । पततीति पत्रिः । त्रिप्रत्यये इदन्तः । पतत्राणि सन्त्यस्य **पतत्री** । नान्तः । पततीति पतेः परतोऽत्रिप्रत्यये इदन्तो वा पतत्रिः । हलायुध- भाष्यकारेण हालायुधिकेन—पत्रिशब्दः पत्रिन् नकारान्तः पत्रिरिकारान्तश्च व्याख्यातः । अमरसिंह-[1] नाममालायाम्—

"पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः ।
नगौकोवाजिविकिरविविष्किरपतत्रयः ॥"

इकारान्तः पत्रिशब्दः पठितोऽस्ति । भाष्यकर्त्रा क्षीरस्वामिना पतत्रिरिकारान्तो निषिद्धः । "पतेरत्रिरिति" भ्रान्त्या पतत्रिं ग्रन्थकृदिदन्तं [2]मन्यते । एवं कथितमस्ति श्रीमदमरकीर्तिना द्वयोर्वचनं प्रमाणम् । शब्दानां वैचित्र्यं वर्तते । नभसा गन्तुं शक्नोति **शकुन्तः** । **शकुन्तिः** । एवं **शकुनिः** । एवं शकुनी । शकुन्तः । शकुनः । द्वौ अदन्तौ । वयतीति विः । "वेञो डिः[3]" । पतेन वेगेन गच्छतीति **पतङ्गः**[4] । विकिरति पत्राणि **विष्किरः** ।

"[5]वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः ।
षोडशादौ विकारस्तु वर्णनाशः पृषोदरे ॥"

सुडागमः । विकिरश्च ।

**जाङ्गलं पिशितं मांसं पलं पेशी च—**

पञ्च मांसे । गल्यते अद्यते **जाङ्गलं** जङ्गलं च । पिश्यते रुधिरादिभिः पूर्यते **पिशितम्**[6] । मन्यते सम्भाव्यते शरीरोपचयोऽनेनेति **मांसम्** । "वृतृ[7]वदिहनिमनिकषशिकपिभ्यः सः" । एभ्यः सः प्रत्ययो भवति । पलयते ( पालयते ) देहं **पलम्** । रुधिरादिभिः पिश्यते (पिंशति) शरीरम् **पेशी** । आमिषम् । क्रव्यम् । तरसम् ।

**तत्प्रियः ।**

**तस्य मांसस्य प्रियः** । आमिषशब्दाग्रे प्रियशब्दे प्रयुज्यमाने राक्षसनामानि भवन्ति । जाङ्गल-प्रियः । पिशितप्रियः । मांसप्रियः । पलप्रियः । पेशीप्रियः ।

**यातुधानस्तथा रक्षो—**

द्वौ यातुधाने । यातूनि यातना धीयन्तेऽस्मिन् **यातुधानः** । रक्षतीति **रक्षः**[8] । राक्षसः । कौणपः । क्रव्यादः । नैऋतः । नैकसेयः । नैकषेयश्च । विपुसेऽपि ( कर्बुरः । असृपः ) । कीनाशो नानार्थे ।

**राज्यादिचर इष्यते ॥ ५५ ॥**

---

१. अम० को० २।५।३४। २. क्षीर० भा० २।५।३४। ३. का० उ० सू० ४।६। रामाश्रमस्तु वातीति विः । "वातेर्डिच" इत्याह । ४. पतेन वेगेन गच्छतीति विग्रहे तत्साधुत्वं कल्पनीयम् । तादृशसूत्राऽनुपलम्भात् । पतत्युङ्ख्यते इति पतङ्गः । "तृपतिभ्यामङ्गः" का० उ० सू० ५।२२। इत्यङ्गप्रत्ययस्तु युक्तः । "तृपतिभ्यामङ्ग" इत्यङ्गप्रत्ययः । ५. "पृषोदरादयः" २।२।१७२। शा० कारिका । ६. "पिश अवयवे" पिंशति पिश्यते स्म वा पिशितम् । "पिशेः किच्च" उ०सू० ३।९५। इतीतन् । अथवा क्तः । इति रामाश्रमः । ७. का० उ० सू०४।५३ । ८. रक्षन्त्यस्मादिति रक्षः । "सर्वधातुभ्योऽसुन्" । "भीमादयोऽपादाने" इत्यन्यत्र ।

रात्रिशब्दाग्रे चरशब्दे प्रयुज्यमाने राक्षसनामानि भवन्ति। रात्रिचरः। निशाचरः। क्षणदाचरः। रजनीचरः। नक्तञ्चरः। दोषाचरः। इत्यादीनि ज्ञातव्यानि।

प्रारभ्यते स्वर्गवर्गः

सुतोऽदितेस्—

५ अदितिशब्दाग्रे सुतशब्दे प्रयुज्यमाने दैत्य ( देव ) नामानि भवन्ति। अदितिसुतः। अदितितनयः। अदितिपोतः। अदितिदारकः। अदितिनन्दनः। अदित्यर्भकः। अदितिस्तनन्धयः। अदित्युत्तानशयः।

**तडिद्घन्वा सेन्द्रो देवः सुरोऽमरः।**

पञ्च देवे। सह इन्द्रेण वर्तते इति सेन्द्रः। "दिवु क्री०"—। दिव्। दीव्यन्ति क्रीडन्ति स्वर्गेऽ१० प्सरोभिः सह विलसन्ति देवाः। अत्रा सिद्धम्। अथवा दीव्यति क्रीडति परमानन्दपदे देवः। सुष्ठु राजते सुरः। तथा सुरन्ति सुराः। "सुर ऐश्वर्ये" सुरा एषामस्तीति वा। "अर्शआदिभ्योऽच्"। यतोऽब्धिजा सुरा तैः पीता। न म्रियते अमरः। आदित्याः। त्रिदशाः। सुमनसः। स्वर्गौकसः। देवताः। गीर्वाणाः। ऋभवः। मरुतः। वृन्दारकाः। निर्जराः। अस्वप्नाः। विबुधाः। त्रिविष्टपसदः। लेखाः। सुपर्वाणः। अमृताशनाः। अनिमिषाः। दैवतम्।

१५ **स्वर्द्यौः स्वर्गोऽथ नाकश्च,**

चत्वारः स्वर्गे। सुदितो जनः स्वरति शब्दं करोत्यत्र रान्तमव्ययम्। स्वर्। "दिवु क्रीडादिषु"। दीव्यन्ति क्रीडन्ति अत्र पुण्यवन्तः इति द्यौः। "दिवेर्डिविः[२]" प्रत्ययो भवति। असौ सुष्ठु अर्ज्यते स्वर्गः। "स्वृ[३] भूम्यां गः" गप्रत्ययः। नास्त्यकं दुःखमत्र नाकः। उभयम्।

**तद्वासस्त्रिदशो मतः॥ ५६॥**

२० तस्य स्वर्गस्य वासः,तद्[४]वासः—स्वर्गवासः। द्योवासः,स्वर्गवासः,इत्यादीनि देवनामानि भवन्ति।

**तत्पतिः**

तस्य देवस्य ( स्वर्गस्य च) पतिः, तत्पतिः। देवपतिः, सेन्द्रपतिः, स्वर्गवासपतिः, स्वर्गपतिः, नाकपतिः, नाकेन्द्रः, इत्यादिपर्यायनामानि इन्द्रस्य ज्ञेयानि।

**शक्र इन्द्रश्च शुनासीरः शतक्रतुः।**
**प्राचीनबर्हिः सुत्रामा वज्री चाखण्डलो हरिः॥ ५७॥**
२५ **शत्रुर्बलस्य गोत्रस्य पाकस्य नमुचेरपि।**
**वृत्रहा च सहस्राक्षो गीर्वाणेशः पुरन्दरः॥ ५८॥**
**बिडौजाश्चाप्सरोनाथो वासवो हरिवाहनः।**
**मरुतश्च मरुत्वाँश्च वृषा चैरावणाधिपः॥ ५९॥**
३० **शतमन्युस्तुराषाट् च पुरुहूतश्च कौशिकः।**
**संक्रन्दनोऽथ मघवान् पुलोमारिर्मरुत्सखः॥ ६०॥**

त्रयस्त्रिंशदिन्द्रे। पातुं शक्नोतीति शक्रः। "[५]स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृदिमदिचन्दु-

---

१. "अर्श आदेरः" जै० सू० ४।१।१५०। २. का० उ० सू० ६।५१। ३. का० उ० सू० ५।६०। ४. तस्मिन् स्वर्गे वसतीति तद्वासः। णप्रत्ययः। स्वर्गपर्यायार्थात् परत्र वासशब्दे प्रयुज्यमाने त्रिदशनामानि भवन्तीत्यर्थः। ५. का० उ० सू० २।१४।

ऋज्रेन्द्रिस्यो रक्"। इन्दति परमैश्वर्ययुक्तो भवति **इन्द्रः**। रक्। शुन आदित्यः शीरो वायुस्तयोरपत्यमकर्णो (?) पृथक्भेदाद्वा, दीर्घे **शुनाशीरः**। तालव्यद्वयम्। शोभनं नासीरं कटकं वा यस्य स सुनासीरः। द्वौ दन्त्यौ। शु अव्ययं तालव्यमपि। अत्र पक्षे प्रथमस्तालव्यो द्वितीयो दन्त्यो भवति। तथा च शोभना नासीरा अग्रेसरा अस्य, शुनासीरः। शुः पूजायाम्, श्वशुरवत्[1]। शुनासीरयोरपत्यमित्येके। शतं क्रतवो यज्ञा यस्य **शतक्रतुः**। प्राचीना प्राचीनमुखा बर्हिषी दर्भा यस्य सः। सुष्ठु त्रायते नान्तः **सुत्रामा**। वज्रं विद्यते यस्य स वज्री। आखण्डयति भिनत्त्यरीनाखण्डलः। ह्रियते शचीकटाक्षैर्हरिः।

"शत्रुर्बलस्य गोत्रस्य पाकस्य नमुचेरपि"—

बलशत्रुर्गोत्रशत्रुः पाकशत्रुर्नमुचिशत्रुः, इत्यादीनि इन्द्रनामानि भवन्ति। वृत्रं दानवं यज्ञं वा हतवान् **वृत्रहा**। क्विप्। "([2]क्विप्)ब्रह्मभ्रूणवृत्रेषु" क्विप् सहस्रमक्षीणि यस्य स **सहस्राक्षः**। गीर्वाणानां देवाना मीशः(गीर्वाणेशः)। विट्सु प्रजासु ओजो यस्य। पृषोदरादित्वाद् वृद्धिः। विड भेदने वा। विडं भेदकमोजो यस्य वा(विडौजाः[3])। अप्सरसां नाथोऽप्सरोनाथः। वस्वपत्यं **वासवः**। हरिर्वाहनं[4] यस्य **हरिवाहनः**। पुण्यक्षये म्रियते च्यवते मरुत्। तान्तम्। मरुतो देवाः सन्त्यस्य **मरुत्वान्**[5]। वर्षति, नान्तम्,वृषा। ऐरावणानामधिपः (ऐरावणाधिपः)। शतं मन्यवः क्रतवोऽस्य **शतमन्युः**। "षह मर्षणे"। षह्। "धात्वादेः[6] षः सः"। सहते कश्चित्तमपरः प्रयुङ्क्ते "धातोश्च[7] हेतौ" इन्। अस्योप० दीर्घः। साहि जाते। तुरपूर्वकः। तुरं त्वरितं साहयत्यभिभवत्यरीनिति तुराषाट्। "सहश्छन्दसि[8]" विण्। "कारितस्या०[9]" कारितलोपः। वेर्लोपः[10]। "नहि[11] वृतिवृषिव्यधिरुचिसहितनिषु क्वौ" क्विबन्तेषु प्राधिकारात्सा दीर्घः। तुरा जातम्। तुरासाह् निष्पन्नः। सिः। "व्यञ्जनान्ताच्च[12]" सिलोपः। "हशष[13]छान्तेजादीनां डः" हस्य डः। "सहेः साडः षः[14]" सस्य षत्वम्। एपरत्वात्परपदेऽपि सस्य षत्वम्। स्वमते अपिशब्दबलात्। अथवा तुरं वेगं सहते **तुराषाट्**। "सह[15]श्छन्दसि" विण् पूर्ववत्। पुरु प्रभूतं हूतं यज्ञे यज्ञेष्वा (ह्वे आ) ह्वानं यस्य **पुरुहूतः**। जातमात्रोऽदित्या कुशैराच्छादितत्वात् (कौशिकः)। तथा पुराणम्[16]—

"जातमात्रोऽथ भगवानदित्या स कुशैर्वृतः।
तदा प्रभृति देवेशः कौशिकत्वमुपागतः॥"

कुशैर्दर्भैश्चरति वा। अरिस्त्रीः सङ्क्रन्दयति **सङ्क्रन्दनः**। मह्यते पूज्यते नान्तो **मघवा**। "महेर्[17]घेर्लुगवन्तश्च" महेर्घेः कनिः प्रत्ययो भवति. नलुगवन्तश्च। पुलोमस्या (म्नोऽ) रिः **पुलोमारिः**। मरुतां पवनानां सखा मित्रः (त्रं) **मरुत्सखः**। दुश्च्यवनः। वृत्रारिः। बलसूदनः। वृद्धश्रवाः। जिष्णुः। वज्रधरः। वास्तोष्पतिः। गोपतिः। पर्जन्यः। हरिहयः। पूर्वदिक्पतिः। स्वराट्। गोत्रभिद्। अप्रधन्वा। हरिमान्। पाकशासनः। दिवस्पतिः।

१. शु पूजायाम् अश्नुते व्याप्नोति 'श्वशुरः' इति व्युत्पत्त्या "श्वशुर" शब्दो निष्पन्नः। तद्वच्छुनासीरशब्देऽपि शु शब्दः पूजार्थ इत्याशयः। २. का० सू० ४।३।८३। ३. वेवेष्टि व्याप्नोति विट्। "विष्लृ व्याप्तौ" क्विप्। विड् व्यापकमोजो यस्य स विडौजाः। पृषोदरादित्वादोकारस्यौकारः। इत्यप्यूह्यम्। ४. त्वक्केशवालरोमाणि सुवर्णाभानि यस्य तु। हरिः स वर्णतोऽश्वस्तु पीतकौशेयसप्रभः। इति शालिहोत्रोक्तप्रकारोऽश्वो हरिः। ५. मरुतो देवाः शाश्वतत्वेन सन्त्यस्येति यावत्। ६. का० सू० ३।८।२४। ७. का० सू० ३।२।१०। ८. का० सू० ४।३।६७। ९. का० सू० ३।६।४४। १०. "वेरपृक्तस्य" पा० सू० ६।१।६७। ११. पा०सू० ६।३।११६। १२. का० सू० २।१।४९। १३. का० सू० २।३।४६। १४. पा० सू० ८।३।५६। १५. का० सू० ४।३।६७। १६. श्लोकोऽयम् अभि० चि० २।८७। टीकायामप्येवमेवोपलभ्यते। १७. का० उ० सू० ५।४।

**काष्ठा ककुब् दिगाशा च दक्षकन्या तथा हरित् ।**

षड् दिशायाम् । काशन्ते राजन्ते (नक्षत्रादयोऽत्र) **काष्ठा**[1] । कं स्कुम्नाति विस्तारयति **ककुप्**[2] । भान्तम् । दिशत्यवकाशं **दिक्** । "[3]ऋत्विग्दधृक् स्रग्दिगुष्णिगञ्च" इति साधुः । अश्नुते **आशा** । दक्षः प्रजापतिः, तस्य कन्या, **दक्षकन्या** । हरत्यनया **हरित्**[4] ।

**तत्पर्यायपरं योज्यं प्राज्ञैः पालगजाम्बरम् ॥ ६१ ॥**

काष्ठादिनामतः **परं योज्यं प्राज्ञैः** विद्वद्भिः **पालगजाम्बरम्** । काष्ठापालः । ककुप्पालः । दिक्पालः । आशापालः । दक्षकन्यापालः । हरित्पालः । पालप्रयोगे दिग्गजनामानि भवन्ति । काष्ठागजः । ककुब्गजः । दिग्गजः । आशागजः । दक्षकन्यागजः । हरिद्गजः । अम्बरशब्दप्रयोगे दिगम्बर-नामानि भवन्ति । काष्ठाऽम्बरः । ककुबम्बरः । दिगम्बरः । आशाऽम्बरः । दक्षकन्याम्बरः । हरिदम्बरः । तथा च—

"गिरिकन्दरदुर्गेषु ये वसन्ति दिगम्बराः ।
पाणिपात्रपुटाहारास्ते यान्तु परमां गतिम् ॥"

एवंविधा मुनयो भव्यानां शरणं भवन्तु जन्मनि जन्मनि ।

**पवनः पवमानश्च वायुर्वातोऽनिलो मरुत् ।**
**समीरणो गन्धवाहः श्वसनश्च सदागतिः ॥ ६२ ॥**
**नभस्वान् मातरिश्वा च चरण्युर्जवनस्तथा ।**
**प्रभञ्जनः—**

पञ्चदश वायौ । पवते जगत् पवित्रीकरोति **पवनः** । युच् । "पूङ् पवने ।" पू । पवते **पवमानः** । "[5]पूङ्यजोः शानङ्" आनमात्रः । अन्वि०[6] अनिच०[7] नाम्यन्तगुणः । "ओ[8]अव् ।" "आन्मो[9]ऽन्त आने" मोऽन्तः । वातीति **वायुः** । "[10]कृवापाजी"—ति उण् । वाति सर्वत्राऽस्खलितं वा वायुः । वाति अस्खलितं याति, **वातः** । "[11]मृगृवाहस्यमिदमिलूपूम्यस्तः" । अनेन जगत् अनिति प्राणिति, न निलति वा **अनिलः** । "निल गहने" । क्षुद्रजन्तवो म्रियन्ते स्पर्शेनास्य **मरुत्** । तान्तन् । "[12]मृग्रोरुतिः" उतिप्रत्ययः । समन्तादीरयति **समीरणः** । गन्धं वहति गन्धवहः । **गन्धवाहः** । गन्धवाही । श्वसन्त्यनेन **श्वसनः** । सदा सर्वकालं गतिर्यस्य स **सदागतिः** । नभ आकाशमस्यास्तीति **नभस्वान्** । मातरि रेतः श्वयति वर्द्धते नाम्नो मातरिश्वन् । मातरिश्वैव भवति [13]**मातरिश्वा** । चराचरं याति चरे-

१. "काशृ दीप्तौ" "हनिकुशि" इत्यादि २।२। पा०उ० सूत्रेण क्थन् । २. कं वातं स्कुम्नाति विस्तारयति । क्विप् । पृषोदरादित्वात्सलोपः । केनादित्येन जलेन वा कुत्सितानि भानि नक्षत्राणि यस्मा-मिति "ककुभा" इत्याबन्तोऽपीति केचित् । ३. का०सू० ४।३।७३। ४. हरन्ति नयन्ति अनया हरित् दिग्-ज्ञानेनैव कश्चित् कुतश्चित् कुत्रचिन्नयति । "दृसृरुहियुषिभ्य इतिः" इतीतिः । ५. का०सू० ४।४।८ । ६. "अन्विकरणः कर्तरि" इति पूर्णं सूत्रम् । का० सू० ३।२।३२। इत्यन्विकरणः । ७. "अनि च विकरणे" का० सू० ३।५।३। ८. का० सू० १।२।१४। ९. का० सू० ४।४।७। १०. का० उ०सू० १।१। ११. का०उ० सू० ४।२७। १२. का०उ०सू० १।३०। १३. मातरि जनन्यां रेतः प्रसिक्तं यथा वर्धते, तथाऽन्तरीक्षे वर्धमानो वायुः 'मातरिश्वा' इत्याशयः । क्षीरस्वामी तु—"मातरि खे श्वयति" इत्याह । रामाश्रमस्तु—'मातरि जनन्यां श्वयति वर्धते सप्तसप्तकरूपत्वात्" इत्याह । आपन्नसत्त्वाया दितेर्निद्रावस्थायां तत्कुक्षिप्रविष्टेनेन्द्रेण कुलिशद्वारा तद्गर्भस्यैकोनपञ्चाशत्खण्डीकरणस्य पुराणप्रसिद्धत्वात्सप्तसप्तकत्वमुपपन्नम् । "टु ओश्वि गतिवृद्ध्योः ।" श्विधातोः "श्वन्नुक्षन्नि" ति कनिन्नन्तो निपातः सप्तम्या अलुक् च ।

"रण्युः । "केवयुभुरण्य्वध्वर्य्वादयः" केवयवादयः शब्दा युप्रत्ययान्ता निपात्यन्ते । तथा च द्विसन्धानकाव्ये[२]—

"असूयया ऽगम्य निशाम्य यां पुरो
विलज्जया ऽम्भःपरिणामिनीदृशाम् ।
गता इवाभान्ति कुलाद्रिपेशला-
श्चरण्युलोलाः परिखा ऽम्बुवीचयः ॥"

"जु" इति सौत्रो धातुर्गतौ । सौत्रा धातवोऽपि भ्वादौ पठ्यन्ते । जवतीति **जवनः** । "[३]जुचङ्-क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदाम्" एभ्यो युर्भवति । सर्वा दिशाः प्रभनक्ति **प्रभञ्जनः** । जगत्प्राणः । पृषदश्वः । स्पर्शनः । समीरः । हरिः । महाबलः । आशुगः ।

## अस्य पर्यायपुत्रौ भीमाञ्जनात्मजौ ॥६३॥

**अस्य** पर्यायात् प्रभञ्जनादिशब्दात्परत्र पुत्रशब्दो दीयते तदा भीमहनुमतोर्नामानि भवन्ति । पवनपुत्रः । पवनतनयः । पवमानतनयः । वायुपुत्रः । वायुतनयः । वातपुत्रः । वाततनयः । अनिलपुत्रः । अनिलतनयः । समीरणपुत्रः । समीरणतनयः । गन्धवाहपुत्रः । गन्धवाहतनयः । श्वसनपुत्रः । श्वसनतनयः । सदागतिपुत्रः । सदागतितनयः । नभस्वत्पुत्रः । नभस्वत्तनयः । मातरिश्वपुत्रः । मातरिश्वतनयः । चरण्युपुत्रः । चरण्युतनयः । जवनपुत्रः । जवनतनयः । चलपुत्रः । चलतनयः । प्रभञ्जनपुत्रः । प्रभञ्जन-तनयः । भीमस्य हनुमतश्च नामानि ज्ञातव्यानि ।

## तत्सखाऽग्निः,

तस्य वायोः सखा, **तत्सखः** । वायुशब्दाग्रे सखशब्दे प्रयुज्यमाने अग्निनामानि भवन्ति । पवनसखः । वायुसखः । अनिलसखः । वातसखः । मरुत्सखः । गन्धवाहसखः । समीरणसखः । श्वसनसखः । सदागतिसखः । नभस्वत्सखः । मातरिश्वसखः । चरण्युसखः । जवनसखः । चलसखः । प्रभञ्जनसखः । पवनेष्टः । पवमानेष्टः । इत्यादीनि अग्नेर्नामानि ज्ञातव्यानि ।

## शिखी वह्निः पावकश्चाशुशुक्षणिः ।
## हिरण्यरेता सप्तार्चिर्जातवेदास्तनूनपात् ॥ ६४ ॥
## स्वाहापतिर्हुताशश्च ज्वलनो दहनोऽनलः ।
## वैश्वानरः कृशानुश्च रोहिताश्वो विभावसुः ॥ ६५ ॥
## वृषाकपिः समीगर्भो हव्यवाहो हुताशनः ।

एकविंशतिरग्नौ । "अक अग कुटिलायां गतौ ।" अगति वायुवशादूर्ध्वं गच्छतीत्यग्निः । शिखाऽस्त्यस्य **शिखी** । उह्यते **वह्निः**[४] । "[५]अग्निशुश्रियुवह्निभ्यो निः" एभ्यो धातुभ्यो निः प्रत्ययो भवति । पुनाति **पावकः** । आशु शोषयति रसान् [६]**आशुशुक्षणिः** । "[७]आशौ शुषेः सनिक्" । "शुष

---

१. चरण्युशब्दोऽयम्; न तु चरेण्युः । द्विसन्धानेऽपि चरण्युशब्दस्यैव दर्शनात् । एतत्साधकमुणा-दिसूत्रम् अभिधानचिन्तामणिटीकायाम् ( ३।४८३ ) उपलभ्यते; नैवान्यत्र । वस्तुतस्तु वैदिकोऽयं प्रयोगः । "चरण् वरण् गतौ" कण्ड्वादौ चरण् धातुर्यक् प्रत्ययान्तः । ततः "क्याच्छन्दसि" पा०सू० ३।२।७० । इत्यु-प्रत्ययः । सुम्नयु, तुरण्यु, भुरण्य, सपर्यु, आदिशब्दवदस्य सिद्धिः । विशेषस्तु "क्याच्छन्दसि" इत्यस्य तत्त्वबोधिन्यां द्रष्टव्यः । चरण्यतीति चरण्युः । २. स० १ श्लो० १९ । ३. का० सू० ४।४।२२ । ४. वहति हव्यं वह्निरिति व्युत्पत्तिरन्यत्र । ५. का० उ० सू० ३।५० । ६. आशोषुमिच्छतीति आङ्पूर्वकाच्छुषेः सन्नन्तात् "आङि शुषेः सनश्छन्दसि" पा०उ०सू० २।१०६ । अनिः । आशु शीघ्रम्, आशुं व्रीहिं वा शु सुष्ठु क्षणोतीति वा । "सर्वधातुभ्य इन्" इत्यन्यत्र । ७. का० उ० सू० ५।१५ ।

शोषे।" अन्तर्भूतकारितार्थोऽयम्। आशुपूर्वः। आशावुपपदे शुषेः क्सनिक् प्रत्ययो भवति। हिरण्यं रेतोऽस्य स **हिरण्यरेताः**। यत् स्मृतिः[1]—"अग्नेरपत्यं प्रथमं सुवर्णम्"। सप्तार्चिषो यस्य स **सप्तार्चिः**। भवन्ति "हिरण्या, कनका, रक्ता, कृष्णा, प्रसुप्तभावाऽन्या। अतिरिक्ता बहुरूपेति सप्त सप्तार्चिषो जिह्वाः।" जाते जाते विद्यते सन्तो जातवेदसः। जाता वेदा अस्माद् वा **जातवेदाः**[2]।

५ तनू न पातयति [3]**तनूनपात्**। ...... "स्वाहा" इत्यस्य (स्वाः) पतिः भर्ता **स्वाहापतिः**। हुतं वषट्कारकृतं वस्तु अश्नातीति **हुताशः**। हुतम् आशो भोजनं यस्य वा। ज्वलतीत्येवंशीलो **ज्वलनः**। दहतीत्येवंशीलो **दहनः**। अनिति प्राणित्यनेन **अनलः**। विश्वानरस्यापत्यं **वैश्वानरः**। कृश्यति तनूकरोति [4]**कृशानुः**। रोहिताऽश्वो मृगोऽश्वो वाहनमस्य **रोहिताश्वः**। विभा वसुर्धनं यस्य स **विभावसुः**। वृषो धर्मः कपिर्वराहः श्रेष्ठश्च तद्रूपात् **वृषाकपिः**। [5]पुराणम्—

१० "कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते।
तस्माद् वृषाकपिं प्राह काश्यपो मां प्रजापतिः॥"

हैमीनाममालायाम्[6]—

"वृषाकपिर्वासुदेवे शिवेऽग्नौ च।"

शम्यां गर्भो यस्य स **शमीगर्भः**। हव्यं वहतीति **हव्यवाट्**। हुतमश्नातीति **हुताशनः**। बहुलः।

१५ वसुः। सितेतरगतिः। अर्चिष्मान्। धूमध्वजः। बर्हिर्ज्योतिः। उषर्बुधः। चित्रभानुः। शुचिः। कृपीटयोनिः। दमुना। कृष्णवर्त्मा। अपांपित्तम्। वीतिहोत्रः। बृहद्भानुः। आश्रयाशः। धनञ्जयः। तमोघ्नः। दमूना इत्येके। दमेरूनसि।

## तदादिसूनुः,

अग्निसूनुः। वह्निपुत्रः। वृषाकपिसूनुः। वृषाकपिपुत्रः। इत्यादीनि स्कन्दनामानि भवन्ति।

२० **सेनानीः स्कन्दश्च शिखिवाहनः॥ ६६॥**
**कार्तिकेयो विशाखश्च कुमारः षण्मुखो गुहः।**
**शक्तिमान् क्रौञ्चभेदी च स्वामी शरवणोद्भवः॥ ६७॥**

द्वादश स्कन्दे। सेनां नयतीति **सेनानीः**। "सत्सू[7]द्विषद्रुहदुहयुजविदभिदछिदजिनीराजामुपसर्गेऽपि" एषामुपसर्गेऽप्यनुपसर्गेऽपि नाम्न्यनाम्न्युपपदे क्विब् भवति। स्कन्दत्यरीन् **स्कन्दः**। स्कन्नं[8]

२५ शुष्कं रेतोऽस्य वा। शिखी मयूरो वाहनमस्य **शिखिवाहनः**। कृत्तिकानामपत्यं **कार्तिकेयः**। दानवबलौजस्तेजांसि श्यति विशेषेण तनूकरोति **विशाखः**[9]। विशाखासुतो वा। **कुमारो** ब्रह्मचारित्वात्।

१. अम. को० क्षीर० भा० १।१।५५। २. सर्वत्रोत्पन्नपदार्थे वर्तमानत्वाद् वेदोत्पत्तिकारणत्वेन चाग्नेरुक्तत्वाच्च। जातं वेदो धनं (सुवर्णं) यस्मात्, जातं वेत्ति वेदयते वा इति व्युत्पत्तिरपि। ३. तनूं स्वस्वरूपं न पातयति दहतीत्यर्थः। क्विप्। "नभ्राण्नपात्" इति नलोपाभावः। तनूं न पाति रक्षति जाते जाते विनश्वरत्वादिति वा। पातेः शतृप्रत्ययः। तन्वा ऊनं पाति रक्षतीति तनूनपं घृतं तदत्तीति। "अदोऽनन्ने" इति विट्। इत्यप्यूह्यम्। ४. कृशोऽयमिति वर्धते कृशानुरिति वा। ५. श्लोकोऽयम्, अभि० चि० २।१२९। टीकायामेवोपलभ्यते। ६. अनेका० सं० ४।२१८। ७. का० सू० ४।३।७४। ८. स्कन्नं रेतोऽस्येत्यर्थाभिप्रायेण। विग्रहस्तु स्कन्दति शुष्करेता भवतीति स्कन्द इत्येवंरूपः। ब्रह्मचारित्वात् शुष्करेतस्त्वमागमादिसिद्धम्। पचाद्यच्। ९. विपूर्वात् "शो तनूकरणे" इत्यस्माद् बाहुलकात्खप्रत्ययः, विशाखानक्षत्रे जातो वा। विशाखयति विशेषेण व्याप्नोति दानवबलमिति वा। "शाखृ व्याप्तौ।" पचाद्यच्।

कुत्सितो मारोऽस्येति कुमारः[1] । षण्मुखानि यस्य स षण्मुखः । गूहति रक्षति देवसैन्यं गुहः । "[2]नाम्युपधप्रीकृगृज्ञां कः ।" शक्तिर्विद्यतेऽस्य शक्तिमान् । क्रौञ्चं पर्वतं भिनत्तीति क्रौञ्चभेदी । स्वमस्त्यस्य स्वामी[3] । शराणां वनम्, शरवणम्, तस्मिन्नुद्भवः शरवणोद्भवः । गौरीपुत्रः । शक्तिपाणिः । तारकारिः । अग्निभूः । बाहुलेयः । गाङ्गेयः । ब्रह्मचारी । महासेनः । महातेजाः । पार्वतीनन्दनः ।

तत्पिता शङ्करः शम्भुः शिवः स्थाणुर्महेश्वरः ।
त्र्यम्बको धूर्जटिः शर्वः पिनाकी प्रमथाधिपः ॥ ६८ ॥
त्रिपुरारिर्विशालाक्षो गिरीशो नीललोहितः ।
रुद्रेन्दुमौलिर्यज्ञारिस्त्रिनेत्रो वृषभध्वजः ॥ ६९ ॥
उग्रः शूली कपाली च शिपिविष्टो भवो हरः ।
उमापतिर्विरूपाक्षो विश्वरूपः कपर्द्यपि ॥ ७० ॥

एकोनत्रिंशदीश्वरे । तस्य स्कन्दस्य पिता । शं सुखं करोतीति शङ्करः । शम्भवती (त्यस्मादि) ति [4]शम्भुः । "सुखे[5]ड्डुविशम्भ्रेषु च ।" शेते प्रलयकाले जगदत्र शिवः[6] । जगति प्रलीनेऽपि तिष्ठति स्थाणुः । महाँश्चासौ ईश्वरः महेश्वरः । त्रीण्यम्बकानि अक्षीण्यस्य त्र्यम्बकः । त्रयाणां लोकानाम् अम्बकः पितेत्यागमः । धूम्रैर्भूता जटयो जटा यस्य, धूर्गङ्गा जटिषु यस्य वा धूर्जटिः । शृणाति दैत्यान् शर्वः । "[7]शर्वजिह्वाग्रीवा" एते कप्रत्ययान्ता निपात्यन्ते । पिनाकमस्त्यस्य पिनाकी । प्रमथाया [8]अधिपः, प्रमथाधिपः । त्रिपुरासुरस्यारिस्त्रिपुरारिः । विशाले विस्तीर्णे अक्षिणी यस्य विशालाक्षः । "[9]सक्थ्यक्ष्णोः स्वाङ्गे ।" गिरीणामीशो गिरीशः । कालकूटभक्षणान्नीलं कृष्णं लोहितं यस्य स नीललोहितः[10] । "नीलः[11] कण्ठे लोहितश्च केशे इति नीललोहितः" इति पुराणम् । रोदयत्यरीन् रुद्रः । "स्फायितञ्चिवञ्चि-[12]शकिक्षिपिक्षुदिसृदिमदिमन्दिचन्द्युन्दीन्दिभ्यो रक् ।" इन्दुर्मौलिर्मुकुटं यस्य (सः) इन्दुमौलिः[13] । यज्ञानां पशुकारणलक्षणानाम् अरिः, यज्ञारिः । त्रीणि नेत्राण्यस्य त्रिनेत्रः । वृषभो बलीवर्दो ध्वजायां यस्य स वृषभध्वजः । कोपमूर्जति उग्रः[14] । शूलमस्त्यस्य शूली । कपालं मनुष्यकरोटिरस्त्यस्य कपाली । शिवः पिण्डो हतौ अस्थिरूपौ (पिण्डे) मूर्ध्नि यस्य स शिपिविष्टः[15] । भवतीति भवः[16] । हरत्यघं हरः ।

---

१. "कुमार क्रीडायाम् ।" कुमारयतीति पचाद्यच् । कौ पृथिव्यां मारयति दुष्टानिति वा विग्रहो बोध्यः । २. का० उ० सू० ६।६८ । इतीन्प्रत्ययः । ३. स्वशब्दादामिन् प्रत्ययः । "स्वामिन्नैश्वर्ये" पा० सू० ५।२।१२६ । अथवा शोभनममसि रक्षतीति स्वामी । "सावमेरिन् दीर्घश्च" का० उ० सू० ६।६८ इतीन् प्रत्ययः । ४. शम्भवति भावयतीत्यर्थो वा । अन्तर्भावितण्यर्थोऽत्र भवतिः । ५. का० सू० ४।४।५६। ६. उक्तविग्रहे शेतेर्बाहुलकाड्विप्रत्ययः । शिवं करोतीति शिवयति, ततः पचाद्यचि शिवो वा । शिवमस्यास्त्यस्मिन्नेत्यपि विग्रहो बोध्यः । ७. का० उ० सू० २।२। ८. प्रमथाया दुर्गायाः । परन्तु "प्रमथाः स्युः पारिषदाः" इत्यमरादिषु प्रमथशब्दस्य शिवपर्षत्त्वेन प्रसिद्धेः, दुर्गात्वेनाप्रसिद्धेः प्रमथानामधिपः इति सुवचम् । ९. "राजादीनामदन्तता" का० सू० २।४१। वृत्तिः ५०। १०. नीलं कण्ठे लोहितं जटायामङ्गं यस्येति विग्रहार्थः । तदुक्तम्—"नीलं येन ममाङ्गं रक्तं लोहितं त्विषा । नीललोहित इत्येष ततोऽहं परिकीर्तितः ॥ इति स्कान्दे" इति मुकुटः । ११. अम०को०क्षीर०भा० १।१।३३। १२. का० उ०सू० २।१४। १३. इन्दुर्मौलौ यस्येति विग्रहः सरलः । १४. उच्यति कुधा समवैति उग्रः । "उच् समवाये" उच् धातुः । ततो रक् । गश्चान्तादेशः । ऋज्रेन्द्रादि उ० सू० । १५. शिपिविष्टशब्दयोरायद्वयोपादानेन शिपिशब्दोऽ । १६. भव्याय भवति कल्पते इत्यर्थः ।

उमायाः पतिः **उमापतिः**। विरूपाण्यक्षीण्यस्य **विरूपाक्षः**। त्रिदशेषु रूपं यस्य स **त्रिदशरूपः**। कपर्दोऽस्त्यस्य **कपर्दी**। कपर्दो जटाजूटः। कं शिरः पिपर्तीति कपर्दः। औणादिको दः। अधिपशब्दात्–ईशानः। शशिशेखरः। पशुपतिः। शम्भुः। गिरिशः। श्रीकण्ठः। सर्वज्ञः। त्रिपुरान्तकः। भूतेशः। परमेश्वरः। अन्धकरिपुः। दक्षाध्वरध्वंसकः। स्रष्टा। वामदेवः। कामध्वंसी। व्योमकेशः। वह्निरेताः। भीमः। भर्गः।
५ कृत्तिवासाः। वृषाङ्कः।

**भागीरथी त्रिपथगा जाह्नवी हिमवत्सुता।**
**मन्दाकिनी—**

पञ्च गङ्गायाम्। भगीरथेन राज्ञाऽवतारितत्वात्तस्यापत्यं वा **भागीरथी**। त्रिभिः पथिभिर्गच्छति **त्रिपथगा**[1]। त्रिमार्गगा च। जह्नुना पीता श्रोत्रेण त्यक्ता **जाह्नवी**। जह्नोरपत्यं वा जाह्नवी।
१० हिमवतो हिमाचलस्य सुता **हिमवत्सुता**। मन्दाका मन्दा गतिरस्त्यस्या [2]**मन्दाकिनी**। सुरसरित्। विष्णुपदी। सरिद्वरा। त्रिदशदीर्घिका। त्रिस्रोताः। भीष्मसूः। सुरनिम्नगा।

**द्युपर्यायधुनी**

आकाशशब्दतो (तः परत्र) नदीपर्यायेषु गङ्गानामानि भवन्ति। खस्रोतस्विनी। विहायोधुनी। वियत्सिन्धुः। व्योमस्रवन्ती। नभोनदी। गगननिम्नगा। अम्बरापगा। द्योनदी। आकाशनदी।
१५ अन्तरीक्षनिरेका। मेघपथसरित्। वायुपथतरङ्गिणी। इत्यादीनि ज्ञातव्यानि।

**गङ्गानदीश्वरः॥ ७१॥**

भागीरथ्यादिशब्दतः (परत्र) **ईश्वर**पर्यायेषु हरनामानि भवन्ति। भागीरथीराजः। त्रिपथगाधिपः। जाह्नवीपतिः। हिमवत्सुतास्वामी। मन्दाकिनीनाथः। इत्यादीनि ज्ञातव्यानि।

**विधिर्वेधा विधाता च द्रुहिणोऽजश्चतुर्मुखः।**
२० **पद्मपर्यायियोनिश्च पितामहविरिञ्चिनौ॥७२॥**
**हिरण्यगर्भः स्रष्टा च प्रजापतिस्सहस्रपात्।**
**ब्रह्मात्मभूरनन्तात्मा कः**

सप्तदश ब्रह्मणि। विधति[3] सृजति **विधिः**। विधत्ते वा विधिः। "उपसर्गे घोः किः[4]।" विधति सृजति **वेधाः**। "[5]सर्वधातुभ्योऽसुन्।" "विध विधाने।" विदधाति धारयति भूतानीति **विधाता**।
२५ द्रुह्यत्यसुरेभ्यो **द्रुहिणः**। न जायतेऽजः। चत्वारि मुखानि वक्त्राण्यस्य **चतुर्मुखः**। "**पद्मपर्याययोनिः**"–**पद्मपर्याय**शब्दाग्रे **योनि**शब्दे प्रयुज्यमाने धातुर्नामानि भवन्ति। तामरसयोनिः। कमलयोनिः। नलिनयोनिः। पद्मयोनिः। सरोजयोनिः। सरसीरुहयोनिः। अरविन्दयोनिः। शतपत्रयोनिः। पुष्करयोनिः। इत्यादीनि ज्ञातव्यानि। दक्षमन्वादीनां लोकपितॄणां पिता **पितामहः**। आत्मनी भूतानि विरिङ्क्ते पृथक् करोति **विरिञ्चिनः**। विरिञ्चः। विरिञ्चिश्च।

१. त्रयाणां पथां समाहारस्त्रिपथं तेन गच्छतीति वा। इत्थं च पूर्वं समाहारद्विगौ कृते तत्र समासान्तविधानेन त्रिपथशब्दस्याकारान्तत्वं सुपपाद्यं भवति। गंगायास्त्रिपथगामित्वे भारतोक्तं वचनम्–"क्षितौ तारयते मर्त्यान् नागांस्तारयतेऽप्यधः। दिवि तारयते देवांस्तेन त्रिपथगा स्मृता॥" २. मन्दमकितुं गन्तुं शीलमस्या इति वा। "अक कुटिलायां गतौ।" णिन्। ङीप्। अन्योक्तविग्रहे मन्दाकशब्दस्य मन्दगत्यर्थे प्रमाणं मृग्यम्। ३. "विध विधाने"। तुदादिः। सर्वे धातुभ्य इन् कित्वं च। ४. का० सू० ४।५।७०। ५. का० उ० सू० ४।२६।

हिरण्यं गर्भे यस्य, हिरण्यं गर्भो वा यस्य **हिरण्यगर्भः** । [1]पुराणम्—

"हिरण्यगर्भमभवत्तत्राण्डमुदके तथा ।
तत्र यज्ञे स्वयं ब्रह्मा स्वयम्भूर्लोकविश्रुतः ॥"

सृजतीति सृष्टिः स्रष्टा । प्रजानां पतिः **प्रजापतिः** । "पद गतौ ।" पद् । पद्यन्ते गम्यन्ते (गच्छन्ति) प्राणिनः, तान् पद्यमानान् जन्तून् चरणा एव प्रयुञ्जते । "[2]धातोश्च हेतौ" इण् । अस्योप० दीर्घः । पादि जा० । पादयन्तीति पादः । क्विप् च । "[3]कारितस्या०" कारितलोपः । नेर्लोपः । पाद् । सहस्रं पादो यस्य स **सहस्रपाद्** । बृंहन्ति वर्धन्ते चराचराण्यत्र **ब्रह्म** । उभयम् । इदं ब्रह्म । अयं ब्रह्मा । अथवा बृंहन्ति भूतानि यस्मिन्निति ब्रह्म । बृंहेः [4]मन् प्रत्ययो भवति, अश्च हकारात् पूर्वम् । आत्मना भवति **आत्मभूः** । न अन्तो विद्यते यस्य सोऽनन्तः, अनन्तो विनाशरहित आत्मा यस्य सः **अनन्तात्मा** । कायतीति [5]**कः** । परमेष्ठी । सुरज्येष्ठः । शतानन्दः । स्वयम्भूः । जगत्कर्ता । शतधृतिः । स्थविरः ।

**तत्पुत्रोऽथ नारदः ॥७३॥**

तस्य पुत्र**स्तत्पुत्रः** । ब्रह्मणः शब्दात् (परत्र) पुत्रशब्दे प्रयुज्यमाने **नारदनामानि** भवन्ति । विधिपुत्रः । वेधःपुत्रः । विधातृपुत्रः । विरिञ्चिपुत्रः । द्रुहिणपुत्रः । अजपुत्रः । चतुर्मुखपुत्रः । पद्मयोनिपुत्रः । पितामहपुत्रः । हिरण्यगर्भपुत्रः । प्रजापतिपुत्रः । सहस्रपात्पुत्रः । ब्रह्मपुत्रः । आत्मभूसुतः । अनन्तात्मपुत्रः । इत्यादीनि ज्ञातव्यानि ।

**कृष्णो दामोदरो विष्णुरुपेन्द्रः पुरुषोत्तमः ।
केशवश्च हृषीकेशः शार्ङ्गी नारायणो हरिः ॥ ७४ ॥
केशी मधुर्बलिर्बाणो हिरण्यकशिपुर्मुरः ।
तदादिसूदनः शौरिः पद्मनाभोऽप्यधोऽक्षजः ॥७५॥
गोविन्दो वासुदेवश्च—**

एकविंशतिर्नारायणे । कर्षत्यरीन् कृष्णवर्णत्वाद्वा **कृष्णः** । "[6]इण्जिकृषिभ्यो नक् ।" दाम उदरे यस्य स **दामोदरः** । यल्लक्षणम्[7]-बालो हि चापलाद्दाम्ना बद्धोऽभूत् । वेवेष्टि व्याप्नोति **विष्णुः** । "[8]सुविदिभ्यां णवत् ।" उपगतमिन्द्रमुपेन्द्रः । इन्द्रं उपगतोऽनुजत्वाद् वा **उपेन्द्रः** । पुरुषेषु उत्तमः **पुरुषोत्तमः** । केशाः सन्त्यस्य **केशवः** । हृषीकाणामिन्द्रियाणामीशो नाद् **हृषीकेशः** । शार्ङ्गं धनुरस्त्यस्य **शार्ङ्गी** । नारा आपः अयनं यस्य **नारायणः**[9] । यत्स्मृतिः[10]—

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥"

---

१. "पुराणम्" इत्यारभ्य "लोक विश्रुतः" इत्यन्तम् अभिधानचिन्तामणिटीकायाम् २।१२७। उपलभ्यते । २. का० सू० ३।२।१०। ३. का० सू० ३।६।४४। ४. "सर्वधातुभ्यो मन्" का० उ० सू० ४।२८। ५. "कै शब्दे" वेदध्वनिकर्तृत्वेन ब्रह्माणि कायतीति क इति विग्रहः । 'कच दीप्तौ' कचते वा । "अन्येभ्योऽपि दृश्यते" पा०सू० ३।२।१०१। सूत्रवार्तिकेन डः । ६. का०उ०सू० २।५।१। ७. बालकृष्णो हि यशोदया लञ्चापल्यनिवारणाय कटिप्रदेशे बद्ध इति पौराणिकी कथा "लक्षणम्" इति पदेन स्मार्यते ८. का० उ० सू० २।८। ९. नराणां समूहो नारम्; तदयनं यस्य, नराद् विराट्पुरुषाज्जातं तत्त्वं नारम्; तदयते जानाति वा, आययति प्रवर्तयति वा, "नारायणः" इत्यपि व्युत्पत्तिरत्र । १०. मनुस्मृति १।१०। तृतीयचरणे "ता यदस्यायनम्पूर्वम्" इति पाठो लभ्यते ।

नरस्यापत्यं वा । नरानयते इति वाक्येन नरायणोऽपि । हरत्यघं **हरिः** । केशाः सन्त्यस्य **केशी** । [1]मन्यते जनैः मधुः । "[2]मनिजनिनमां मधजतनाकाश्च" एषामुप्रत्ययो भवति मधजतनाकाश्च यथासंख्य-मादेशा भवन्ति । "बल वल्ल च ।" बलतीति **बलिः** । "इः[3]सर्वधातुभ्यः ।" बण्यते **बाणः** । **तदादि-सूदनः** । तदादीनां केश्यादीनां सूदनो नाशकर्ताऽरिः । केशी, मधुः, बलिः, बाणः, हरिण्यकशिपुः, मुरः,

५ एभ्यः शब्देभ्यः परत्रारिशब्दे प्रयुज्यमाने नारायणनामानि भवन्ति । केशिवैरी । केश्यरातिः । केश्यमित्रः । केशिद्विट् । केशिसपत्नः । मधुवैरी । मध्वरातिः । मध्वमित्रः । मध्वारिः । मधुद्विट् । मधुसपत्नः । मधुरिपुः । बलिवैरी । बल्यरातिः । बल्यमित्रः । बलिद्विट् । बलिसपत्नः । बलिरिपुः । बाणवैरी । बाणारातिः । बाणा-मित्रः । बाणारिः । बाणद्विट् । बाणसपत्नः । बाणरिपुः । हिरण्यकशिपुद्विट् । हिरण्यकशिपुसपत्नः । हिरण्यकशिपुरिपुः । मुरवैरी । मुरारिः । मुरारातिः । मुरद्विट् । मुरसपत्नः । मुररिपुः । मधुशत्रुः । बाण-

१० शत्रुः । मधुसूदनः । बलिसूदनः । बलिबन्धनः । बाणसूदनः । हिरण्यकशिपुसूदनः । केशिसूदनः । इत्यादि पर्यायनामानि । शूरस्तस्यादिपुरुषस्तस्यापत्यम्, **शौरिः** । सौरिर्वा । पद्मं नाभावस्य **पद्मनाभः** । "[4]संज्ञायां नाभिः ।" अधोऽक्षाणां जितेन्द्रियाणां जायते प्रत्यक्षीभवति, **अधोक्षजः**[5] । गां भुवं विन्दति **गोविन्दः** । वसुदेवस्यापत्यं **वासुदेवः** । [6]मञ्जुकेशः । श्रीवत्साङ्कः । श्रीपतिः । पीतवासाः । विष्वक्सेनः । विश्व-रूपः । मुकुन्दः । धरणिधरः । सुपर्णकेतुः । वैकुण्ठः । जलशयनः । रथाङ्गपाणिः । दाशार्हः । क्रतुपुरुषः ।

१५ वृषाकपिः । अच्युतः । इन्द्रावरजः । [7]बभ्रुः । विष्टरश्रवाः । वनमाली । सनातनः । जिनः । शम्भुः । इत्याद्यूह्यम् ।

## लक्ष्मीः श्रीर्गोमिनीन्दिरा ।

चत्वारः श्रियाम् । "लक्ष दर्शनाङ्कनयोः ।" लक्षयति दर्शयति पुण्यकर्माणं जनमिति **लक्ष्मीः** । "[8]लक्षेर्मोऽन्तश्च" अस्मादीप्रत्ययो भवति मोऽन्तश्च । "भज् श्रिञ् ( सेवायाम् ) ।" पुण्यकृतं श्रयतीति

२० **श्रीः** । "[9]वचिप्रच्छिश्रिद्रुप्रुज्वां क्विब्दीर्घश्च" एभ्यः क्विप्प्रत्ययो भवति दीर्घश्च स्वरस्य चैषाम् । गां मिनो-तीति **गोमिनी**[10] । इन्दति परमैश्वर्ययुक्ता भवति **इन्दिरा** । कमला । पद्मा । पद्मवासा । **हरिप्रिया** । क्षीरोदतनया । माया । मा । ता[11] । ई । आ । रमा । सीता । बला ( चला ) । भर्भरी । अब्धिजाऽपि ।

## तत्पतिः शैलभूम्यादिधरश्चक्रधरस्तथा ॥ ७६ ॥

तस्याः पतिस्**तत्पतिः** । लक्ष्मीपतिः । श्रीपतिः । गोमिनीपतिः । इन्दिरापतिः । इत्यादीनि हरि-

२५ नामानि स्युः । **शैलभूम्यादिधरः** । पर्वतधरः । शैलधरः । दरीभृद्धरः । अचलधरः । शृङ्गिधरः । सानुम-द्धरः । गिरिधरः । नगधरः । शिलोच्चयधरः । भूमिधरः । भूधरः । पृथ्वीधरः । गह्वरीधरः । मेदिनीधरः ।

---

१. मन्यते जनैः "खलत्वेन" इति शेषः । २. का० उ० सू० १।८ । ३. का० उ० सू० ३।१४ । ४. का० सू० २।६।४१ । वृत्तिः । ८ । ५. अधः कृतमक्षजमैन्द्रियकं ज्ञानं येन, अधो न क्षीयते जातु इति वा विग्रहोऽधिकोऽन्यत्र । ६. "मञ्जुकेश" शब्दस्य "विष्णु" पर्यायत्वे कल्पद्रुरपि प्रमाणम्—"मञ्जुकेशः कौस्तुभोरः सोमगर्भो धराधरः ।" ३।२।७ । ७. बभ्रुशब्दस्य नारायणार्थेऽमरोऽपि प्रमाणम् । "विपुले नकुले विष्णौ बभ्रुः स्यात्पिङ्गले त्रिषु ।" ३।३।१७० । ८. का० उ० सू० ३।३५ । ९. का० उ० सू० २।२३ । १०. "गोमिनी" शब्दस्य लक्ष्म्यर्थे प्रमाणं मृग्यम् । अत्रत्यविग्रहोऽपि चिन्त्यः । मत्वर्थे गोशब्दा-न्मिनिप्रत्यये ङीपि गोपालिकार्थे तस्य प्रसिद्धौ कोषान्तरसंवादः । ११. ता, ई, आ, एषां लक्ष्म्यर्थे प्रमाणम्— "लक्ष्मी पद्मा रमा या मा ता श्री कमलेन्दिरा" अभि० चि० २।१४० । "या" इत्यत्र ई आ इति च्छेदः । "लक्ष्म्यान्तु भर्भरो विष्णुशक्तिः क्षीराब्धितनुजा ।" इति तट्टीकायाम् ।

महीधरः । धराधरः । वसुन्धराधरः । धात्रीधरः । क्ष्माधारः । वसुमतीधरः । विश्वम्भराधरः । अवनीधरः । धरणीधरः । क्ष्माधरः । धरित्रीधरः । क्षितिधरः । कुधरः ( भ्रः ) । कुम्भिनीधरः । इलाधरः । उर्वरीधरः । उर्वीधरः । गोधरः । जगतीधरः । इत्यादीनि हरेर्नामानि ज्ञातव्यानि । तथा **चक्रधरो**ऽपि ।

**तत्पुत्रो मन्मथः कामः शूर्पकाराति (कारि) रनन्यजः ।**
**कायपर्यायरहितो मदनो मकरध्वजः ॥ ७७ ॥**

षट् कामे । तत्पुत्रः । कृष्णपुत्रः । दामोदरपुत्रः । विष्णुपुत्रः । उपेन्द्रतनयः । पुरुषोत्तमसूनुः । केशवपुत्रः । हृषीकेशपुत्रः । हृषीकेशतनयः । शार्ङ्गिनन्दनः । नारायणोद्वहः । हरिसूनुः । गोविन्दतुक् । इमानि मदनस्य पर्यायनामानि ज्ञातव्यानि । मथ्नाति चित्तं [1]**मन्मथः** । कामयते जनः (अनेन) **कामः** । [2]**शूर्पकारातिः** । मनसोऽन्यस्माश्च जायते **अनन्यजः** । **कायपर्यायरहितः** । विदेहः । अकायः । अनङ्गः । अनवयवः । अवपुः । असंहननः । अकलेवरः । अमूर्तिः । इत्यादि (दीन्यपि तस्य) पर्यायनामानि । जनं मदयतीति **मदनः** । मकरो ध्वजे यस्य स **मकरध्वजः** । प्रद्युम्नः । मनसिजः । सङ्कल्पजन्मा । अङ्गजः । पञ्चेषुः । श्रीनन्दनः । हृच्छयः । मधुसखः ।

**शिलीमुखः शरो बाणो मार्गणो रोपणः कणः ।**
**इषुः काण्डं क्षुरप्रं च नाराचं तोमरं खगः ॥ ७८ ॥**

द्वादश बाणे । शिलीव सूक्ष्माग्रं मुखं यस्य [3]**शिलीमुखः** । "शृ हिंसायाम्" । शृणन्त्यनेनेति **शरः** । [4]"पुंसि संज्ञायां घः" घप्रत्ययः । बणति "बाणः । [5]"व्यञ्जनाच्च" घञ् । मार्गयति अन्वेषयति **मार्गणः** । रोप्यते देहे निखन्यते **रोपणः** । कणति [7]**कणः** । "इष गतौ" । इष्यते गम्यते शत्रुसम्मुखमिति [8]**इषुः** । जन्तुमिष्यति छिनत्तीति वा **इषुः** । "[9]इषिधृषिभिदिगृधिमृदिपृभ्यः कुः" । काम्यते रिपुवधाय [10]**काण्डम्** । उभयम् । खनति भिनत्ति [11]**क्षुरप्रम्** । नारं नरसमूहम् अञ्चतीति [12]**नाराचम्** । स्तोम्यते श्लाघ्यते **तोमरम्**[13] । खमाकाशं गच्छतीति **खगः** । कङ्कपत्रः । चित्रपुङ्खः । विशिखः । कलम्बः । कदम्बोऽपि । सायकः । प्रदरः । पृषत्कः । रोपः । गार्ध्रपक्षः । [14]खरुः । भल्लिः । भल्लः ।

---

१. विग्रहे चित्तस्थाने मनःशब्दपाठो योज्यः । मनस उल्लोपार्थं पृषोदरादिगणपाठायासोऽपि तस्य कार्यः । क्षीरस्वामिरामाश्रमौ तु मननं मत् चेतना । मथ्नातीति मथः । पचाद्यच् । मतश्चेतनाया मथः "मन्मथः" इत्याहतुः । २. छन्दोभङ्गभयाच्छूर्पकारिरिति पाठो बोध्यः । शूर्पको नाम कश्चिद् दानवस्तस्य नाशकारित्वात्कामः शूर्पकारिः । तदुक्तम्— अभि० चि० २।१४२ । "पुष्पाण्यस्त्रेषुचापास्त्रा-ण्यरी शम्बरशूर्पकौ ।" ३. शिली नाम गण्डूपदः । "केचुवा" इति लोके ख्यातः । ४. का० सू० ४।५।९६ । ५. बणति शब्दायते पुङ्खोऽस्मिन्निति पूर्णो विग्रहः । ६. का० सू० ४।५।९९ । ७. कणति शब्दायते कणः । पचाद्यच् । ८. इषति गच्छति शत्रुसम्मुखमिति वा । ९. का० उ० सू० १।१० । १०. कनति दीप्यते काण्ड इति रामाश्रमः । "कनी दीप्तौ" । "कादिभ्यः कित्" उ० ११२ । इति डः । अनुनासिकस्येत्यु-पधादीर्घश्च । अमरकोटुत्तविग्रहे "कमु कान्तौ" कमधातोः स एव प्रत्ययः । कणत्यनेनाहतः काण्ड इति हेमचन्द्रः । "कण शब्दे" इत्यतो डः । ११. क्षुरं तैक्ष्ण्येन प्राति गच्छतीति क्षुरप्रम् इत्यपि । क्षुराभं लोहं प्राति गच्छति वा । १२ नारमाचामतीति रामाश्रमः । नरमञ्चतीति नराची, नराच्यास्तुल्यो नाराच इति हेमचन्द्रः । १३. "तु गतौ" सौत्रः । तौतीति तौः । विच् । म्रियतेऽनेनेति मरः । पुंसि संज्ञायां घः । तौश्चासौ मरश्चेति तोमर इत्यन्यम् । १४. खरुर्बाणः । तदुक्तं कल्पद्रुकोशे १।५।२६९ । "विकर्णः पत्रवाहश्च चित्रपुङ्खः शरः खरुः ।" इति ।

**कार्मुकं धन्व चापं च धर्म कोदण्डकं धनुः ।**
**शिलीमुखादेरसनम्—**

धञ् धनुषि । कर्मणे शत्रुवधलक्षणाय प्रभवतीति [1]**कार्मुकम्** । दधन्ति मारयत्यनेन [2]**धन्वन्** । अदन्तम् धन्वम् । चपस्य वेणोर्विकारश्**चापम्** । उभयम् । धरति [3]**धर्मन्** । धर्म च । "कुट अप्रतभाषणे" । कोदयत्यनेन [4]**कोदण्डम्** । शत्रुवधार्थं धन्यते अर्थ्यते धार्यते वा **धनुः** । उभयम् । उणादौ दधन्तीति धनुः (नुः) । "[5]कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः" । **शिलीमुखादेरसनम्** । शिलीमुखासनः । शरासनः । मार्गणासनः । रोपणासनः । कणासनः । इष्वासनः । काण्डासनः । क्षुरप्रासनः । नाराचासनः । तोमरासनः ।

**तत्कोटिमटनीं विदुः ॥ ७९ ॥**

तस्य धनुषः कोटिरग्रभागम् । कार्मुककोटिः । धन्वकोटिः । चापकोटिः । काण्डकोटिः । धनुष्कोटिः । शिलीमुखासनकोटिः । शरासनकोटिः । बाणासनकोटिः । रोपणासनकोटिः । मार्गणासन-कोटिः । इत्यादिकमटनीति कथ्यते । अटति गच्छति भूमिमटनिः । ङ्याम् । **अटनी** । द्वौ स्त्रियाम् ।

**पुष्पं सुमनसः फुल्लं लतान्तं प्रसवोद्गमौ ।**
**प्रसूनं कुसुमं ज्ञेयम्—**

पट् (पुष्ट) पुष्पे । पुष्यति विकसति **पुष्पम्** । सुष्ठु मन्यन्ते आभिः **सुमनसः**[6] । स्त्रीत्वबहुत्वे । "त्रिफला विशरणे ।" फल् । फलति स्म फुल्लः । **फुल्लं** वा । "[7]गत्यर्थाऽकर्मक-" तः । "[8]आदितश्च" इति नेट् । "[9]अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः" निष्ठातकारस्य लत्वम् । "[10]चरफलोश्च" तकारादावगुणे उत्वम् । खिः । रेफः । लताया अन्तं पतितं **लतान्तम्** । प्रसू (य) ते **प्रसवम्** । उद्गच्छति प्रादुर्भवति **उद्गमः** । श्रियं प्रसूते **प्रसूनम्** । सूनं सूनकं च । एता उभयम् । कौ शोभां सूते [11]**कुसुमम्** । सुमं च । ज्ञेयं ज्ञातव्यम् ।

**तदाद्यस्त्रशरः स्मरः ॥ ८० ॥**

पुष्पपर्यायतो (तः परत्रा) अपयर्यिषु तथा बाणपर्यायेष्वपि **स्मर**नामानि भवन्ति । पुष्पेषुः । पुष्पबाणः । पुष्पशिलीमुखः । पुष्पशरः । पुष्पमार्गणः । पुष्परोपणः । पुष्पकाण्डः । पुष्पकणः । पुष्पक्षुरप्रः । पुष्पनाराचः । पुष्पतोमरः । सुमनःक्षुरप्रः । सुमशिलीमुखः । सुमनोनाराचः । लतान्तेषुः ।

१. "कर्मण उकञ्" पा० सू० ५।१।१०३ । इति प्रभवत्यर्थे उकञ् । टिलोपः । २. "धन धान्ये" जुहोत्यादिः । वनप्रत्ययः । धातूनामनेकार्थत्वान्मारयतीत्यर्थः । धात्वर्थानुरोधे तु दधति धान्यमर्जयत्यनेने-त्यर्थो बोध्यः । वीराणां धनधान्यार्जनसाधनत्वाद् धनुषः । धन्वति गच्छति धन्वेति क्षीरस्वामिरामाश्रम-हेमचन्द्राः । कनिन्प्रत्ययः । ३. धरती रक्षत्यापत्सत्त्वानित्यर्थः । मनिन्प्रत्ययः । अकारान्तधर्मशब्द-स्य धनुर्वाचित्वे मेदिनी प्रमाणम्—"धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे ॥" मान्तव० १६ श्लो० ॥ ४. बाहुलकादण्डप्रत्ययः । रामाश्रमस्तु "कुट अप्रतभाषणे" कोटती विग्रहमाह । स एव प्रत्ययः । पृषोदरादित्वाट्टस्य दः । कदिः सौत्रः । कद्यतेऽनेनेति हेमचन्द्रः । "कु शब्दे" कौतीति कौः । कौः शब्दायमानो दण्डोऽस्येत्यप्यन्यत्र । ५. का० उ० सू० १।३१ । ६. सुप्रीतं मन आभिरिति मुकुटः । ७. का०सू० ४।६।४२। ८. का०सू० ४।५।९१। ९. का०सू० ४।६।११५। १०. का० सू० ४।१।७६। ११. कुष्यति कुसुमम् । "कुस संश्लेषणे" दिवादिः । "कुसेरुम्भोमेदेताः" पा०उ० सू० ४।१०६। इत्युमप्रत्ययः । इति रामाश्रमः ।

लतान्तकाण्डः। लतान्तक्षुरप्रः। लतान्तनाराचः। लतान्ततोमरः। प्रसवमार्गणः। प्रसवरोपणः। प्रसवकणः। प्रसवेषुः। प्रसवकाण्डः। प्रसवक्षुरप्रः। प्रसवनाराचः। प्रसवतोमरः। उद्गमशिलीमुखः। उद्गमशरः। उद्गमबाणः। उद्गममार्गणः। उद्गमरोपणः। उद्गमकणः। उद्गमेषुः। उद्गमक्षुरप्रः। उद्गमनाराचः। उद्गमतोमरः। प्रसूनशिलीमुखः। प्रसूनशरः। प्रसूनबाणः। प्रसूनरोपणः। प्रसूनकणः। प्रसूनकाण्डः। प्रसूनेषुः। प्रसूनक्षुरप्रः। प्रसूननाराचः। प्रसूनतोमरः। कुसुमशिलीमुखः। कुसुमशरः। कुसुमबाणः। कुसुममार्गणः। कुसुमरोपणः। कुसुमकणः। कुसुमेषुः। कुसुमकाण्डः। कुसुमक्षुरप्रः। कुसुमनाराचः। कुसुमतोमरः। पुष्पशब्दाग्रे धनुषि शब्दे प्रयुज्यमाने कन्दर्पनामानि भवन्ति। पुष्पकार्मुकः। पुष्पधन्वा। पुष्पचापः। पुष्पधर्मा। पुष्पकोदण्डः। पुष्पधनुः (न्वा)। लतान्तकार्मुकः। लतान्तधनुः (न्वा)। लतान्तचापः। लतान्तधर्मः (र्मा)। लतान्तकोदण्डः। लतान्तधन्वा। प्रसवचापः। प्रसवकोदण्डः। प्रसवधनुः (न्वा)। प्रसूनकार्मुकः। कुसुमधन्वा। कुसुमचापः। कुसुमधर्मः (र्मा)। कुसुमकोदण्डः। कुसुमधनुः (न्वा)। इत्यादीनि ज्ञातव्यानि।

**स्वान्तमास्वनितं चित्तं चेतोऽन्तःकरणं मनः।**

**हृदयं विशिखाऽकूतम्—**

चित चिते। "स्वम स्वन ध्वज शब्दे।" आङ्पूर्वः। स्वनति स्म, आस्वनति स्म इति **स्वान्तम्**, **आस्वान्तम्**। "गत्यर्था०"[1] निष्ठा क्तः। "वा [2]रुष्यमत्वरसंघुषाऽऽस्वनाम्" एभ्यः क्ते विभाषयेड् भवति। वेट्। "पञ्चमो०"[3]। "मनोरनुस्वारो[4] धुटि"। मनोऽर्थे "क्षुभिवाही"[5] त्यादिना क्ते नेट्। कथितत्वकथनेऽपि परस्वात्पूर्वोक्तपरोक्तयोः परोक्तविधिर्बलवान् इति वचनात्। अनेन सूत्रेणायमेव विकल्पो भवति। मनोऽभिधानेऽपि परत्वादयमेव [6]विधिर्भवति। चेतति **चित्तम्**[7]। चेतति जानाति अनेनात्मा **चेतस्** सान्तम्। अन्तः निश्चयः क्रियतेऽनेन, **अन्तःकरणम्**[8]। मन्यते बुध्यतेऽनेन सान्तम् **मनस्**। बुद्ध्याऽर्थं हरति **हृदयम्**। "हृञो[9] दोऽन्तश्च"। दान्तं च हृद्। विगतं (ता) नष्टं (ष्टा) शिखं (खा) यस्य तत्, **विशिखम्**[10]। आ समन्तात् कूयते आकूयते (**आकूतम्**)। तथा चाम्रसाहस्याम्[11]— "ज्ञाताकूतेनाकारेणेति मानसम्"।

**मारस्तत्रोद्भवो मतः ॥ ८१ ॥**

तत्र चित्ते **उद्भवो मारो मतः** कथितः। स्वान्तसम्भवः। स्वान्तजः। आस्वनितजः। चित्तसम्भवः। चित्तजः। चेतस्सम्भवः। चेतोजः। अन्तःकरणसम्भवः। हृदयसम्भवः। हृदयजः। विशिखसम्भवः। विशिखजः। आकूतसम्भवः। इत्यादीनि कन्दर्पनामानि ज्ञातव्यानि।

**मौर्वी जीवा गुणो गव्या ज्या—**

मुर्व् गुणे। मूर्वति हिनस्त्यनया मूर्वा। तदाख्यस्य तृणस्य विकारो **मौर्वी**। धनुरनया जीवतीति

---

१. का० सू० ४।६।४९। २. का० सू० ४।६।९७। ३. का० सू० ४।१।५५। 'पञ्चमोपधाया धुटि चागुणे" इति पूर्णं सूत्रम्। ४. का० सू० २।४।४४। ५. का० सू० ४।६।९३। ६. आस्वनितमित्यत्र मनोऽर्थेऽपि परत्वात् "वा रुष्यमत्वरे" ति वेट्। आङ्पूर्वकत्वाभावे तु स्वान्तमित्यत्र "क्षुभिवाही" त्यादिनेट्प्रतिषेधः। तेन स्वान्तमित्येकमेव रूपम्। आङ्पूर्वकत्वे तु आस्वनितमास्वान्तमित्युभयमित्याशयः। ७. 'ञ्यनुबन्धमतिबुद्धिपूजार्थेभ्यः क्तः" इति का० ४।४।६६। सूत्रेण ज्ञानार्थत्वाद्वर्तमाने क्तः। ८. अन्तःशब्दस्याऽत्राधिकरणशक्तिप्रधानरेफान्ताव्ययत्वेनान्तो निश्चय इति व्युत्पत्तिर्न युक्ता। अन्तर्गतं करणम्, करणानामन्तर्गतं चेति व्युत्पत्तिर्बोध्या। ९. का० उ० सू० २।२६। १०. विशिखशब्दस्य हृदयार्थे न किमप्यन्यत्र प्रमाणमुपलब्धम्। अधोमुखपुण्डरीकाकारत्वाद्धृदयस्य शिखारहितत्वं कथञ्चिन्नेयम्।

**जीवा**। गुण्यते अभ्यस्यतेऽनेन **गुणः**। पुंसि। गोभ्यो हिता **गव्या**[1]। जीयतेऽनया **ज्या**[2]। आद्यासनम्। द्रुणा।

**अलिर्भृङ्गः शिलीमुखः।**

**भ्रमरः षट्पदो ज्ञेयो द्विरेफश्च मधुव्रतः॥ ८२॥**

सम भृङ्गे। अलति भण्डयति पुष्पजातीः **अलिः**[3]। मधुना बिभर्त्यात्मानं **भृङ्गः**।[4]"भृङ्ग-
५ भृङ्गाङ्गानि" एतेऽङ्गप्रत्ययान्ता निपात्यन्ते। शिलीसदृशं शिलासदृशं वा मुखमस्य **शिलीमुखः**। भ्रमन्
रौतीति निरुक्त्या **भ्रमरः**। "शकन्ध्वादयः[5]" शकन्धुप्रभृतीनाम् अकारस्य लोपो भवति। आदिशब्दात्
नकारस्य लोपः। उणादौ "**भ्रमु चलने**"। भ्रमतीति **भ्रमरः**। "देवि[6]वदिजठिभ्रमिवाशिभ्यो ऽरः"।
षट् पदानि चरणा अस्य **षट्पदः**। द्वौ रेफौ यस्य **द्विरेफः**[7]। मधु व्रतयति भुङ्क्ते **मधुव्रतः**। मधुकरः।
पुष्पलिट्। इन्दिन्दिरः। षट्चरणः। षडङ्घ्रिः। चञ्चरीकः। भसलः। रोलम्बः। देश्याम्।

१० **मौर्व्यादिप्रान्तमल्यादिगान्दर्पस्यैक्षवं धनुः।**

इक्षोर्विकार **ऐक्षवम्**। अलिमौर्वी (कम्)। भृङ्गमौर्वी (कम्)। शिलीमुखमौर्वी (कम्)।
भ्रमरमौर्वी (कम्)। षट्पदमौर्वी (कम्) द्विरेफमौर्वी (कम्)। मधुव्रतमौर्वी (कम्)। अलिजीवा (वम्)।
भृङ्गजीवा (वम्)। शिलीमुखजीवा (वम्)। भ्रमरजीवा (वम्)। षट्पदजीवा (वम्)। द्विरेफजीवा (वम्)।
मधुव्रतजीवा (वम्)। अलिगुणः (णम्)। भृङ्गगुणः (णम्)। शिलीमुखगुणः (णम्)।भ्रमरगुणः (णम्)।
१५ षट्पदगुणः (णम्)। द्विरेफगुणः (णम्)। मधुव्रतगुणः (णम्)। अलिज्या (ज्यम्)। भृङ्गज्या (ज्यम्)।
द्विरेफज्या (ज्यम्)। मधुव्रतज्या (ज्यम्)। इत्यादीनि कन्दर्पशिलीमुख (धनुः) नामानि ज्ञेयानि।

**हेतिरस्त्राऽयुधं शस्त्रम्—**

चत्वारः शस्त्रे। हिनोति अनया **हेतिः**[9]। स्त्रियाम्। "[10]"सातिहेतियूतिजूतयश्च"। एते
क्तिप्रत्ययान्ता निपात्यन्ते। अस्यते क्षिप्यतेऽनेनेति **अस्त्रम्**। आयुध्यतेऽनेन **आयुधम्**। उभयम्।
२० शस्यतेऽनेन **शस्त्रम्**।[11]"नीदाप्शसुयुयुजस्तुतुदसिसिचमिहपतदशनहां करणे" ष्ट्रन्। चमात्रः। "[12]व्यञ्जनम्"
इति सपरगमनम्। ननु अस्येट्प्रतिषेधाभावात् ष्ट्रनि प्रत्यये इडागमः कथं भवति। आगमशास्त्रमनित्यमिति
वचनात् शसुधातोः ष्ट्रनि प्रत्यये इट् न भवति। "युग्यं[13] पत्रे" इति ज्ञापकादेव (ढा)।

**पुष्पाद्यस्त्रः स्मरो मतः॥ ८३॥**

पुष्पपर्यायतः अस्त्रपर्यायेषु शरपर्यायेषु तथा चापपर्यायेष्वपि स्मरनामानि भवन्ति। पुष्प-

---

१. गोभ्यो बाणेभ्यो हितेत्यर्थः। २. जिनाति जीयतेऽनया। "ज्या वयोहानौ"। "अन्येष्वपि
दृश्यते" इति डः। ३. अल भूषणादौ। सर्वधातुभ्य इन्। ४. का० उ० ३।४८। ५. का० सू० वृ०।
६. कातन्त्रोणादौ नोपलब्धम्। ७. भ्रमरपदे रेफद्वयसत्त्वाद् द्विरेफः। ८. कन्दर्पस्य धनुरैक्षवम्। इक्षुदण्ड-
निर्मितम्। अत एव काम इक्षुधन्वेत्युच्यते। मौर्व्यादयः शब्दा अन्ते यस्य, अलिः अलिपर्याय आदौ यस्येदृशं
तद्धनुरिति यथाश्रुतपाठार्थः। अस्मिन्नर्थे धनुर्विशेषणतया अलिमौर्वीकम् भृङ्गमौर्वीकम् इत्यादि
टीकायां वक्तव्यम्। वस्तुतस्तु मौर्व्यादिप्रोक्तमल्यादिरिति पाठो युक्तः। तत्र पदार्थयोजनापि साधु संगच्छते।
अल्यादिः कन्दर्पस्य मौर्व्यादि धनुश्च ऐक्षवम् इत्यर्थः। तदुक्तम्—"मौर्वी रोलम्बमाला धनुरथ विशिखाः
कौसुमाः पुष्पकेतोः" इति साहित्यदर्पणे। टीकैषा तु यथाश्रुतपाठानुगामिनी। ९. "हि गतौ वृद्धौ च"।
इयं वृत्तिरग्निशिखार्थे बोध्या। शस्त्रार्थे "हन् हिंसायाम्" हन्यतेऽनयेति सुवचम्। १०. का० सू०
४।५।७३। ११. का० सू० ४।४।६१। व्यञ्जनमस्वरं परवर्णं नयेत्"। १२. का० सू० १।१।२१। इति सकारस्य
परगमनम्। १३. का० सू० ४।२।३३।

हेतिः । पुष्पास्त्रः । पुष्पायुधः । पुष्पशस्त्रः । सुमनोहेतिः । सुमनोऽस्त्रः । सुमनआयुधः । सुमनश्शस्त्रः । लतान्तहेतिः । लतान्तास्त्रः । लतान्तायुधः । लतान्तशस्त्रः । प्रसवास्त्रः । प्रसवायुधः । प्रसवशस्त्रः । उद्गमहेतिः । उद्गमायुधः । उद्गमशस्त्रः । प्रसूनहेतिः । प्रसूनास्त्रः । प्रसूनायुधः । प्रसूनशस्त्रः । कुसुमहेतिः । कुसुमास्त्रः । कुसुमायुधः । कुसुमशस्त्रः । इत्यादिकानि नामानि ज्ञातव्यानि ।

**ध्वजं पताका केतुश्च चिह्नं तद्वैजयन्त्यपि ।** ५

पञ्च पताकायाम् । ध्वजते (ति) धूयते ध्वजः[1] । तथाऽमरसिंहे—"[2]**ध्वजमस्त्रियाम्** ।" ध्वजिश्च । पताकादण्डे ध्वज इत्यन्यः । पत्यते क्षिप्यते वातेन **पताका** । बलाकादयः[3]—"बलाकापिनाकपताकाश्यामाकशलाकाः" एते अकप्रत्ययान्ता निपात्यन्ते । पटाका च । स्त्रियाम् । कीयते सैन्यमनेन **केतुः** । [4]केत्वादयः—"केतुरुतुकत्वाप्तुपीत्वैवतुक्तुजीवातवः" एते तुन्प्रत्ययान्ता निपात्यन्ते । चह परिकल्कने । चहयति (अनेन) **चिह्नम्** । विजयतेऽनया **वैजयन्ती**[5] । जयन्ती च । स्त्रीत्वे । वैजयन्तः । जयन्तः । १०

**[6]तत्तदन्तो झषाद्यादिः शम्भोर्विघ्नकरः स्मरः ॥ ८४ ॥**

झषध्वजः । झषपताकः । झषकेतुः । झषचिह्नः । झषवैजयन्तिः । पडक्षीणध्वजः । पडक्षीणपताकः । पडक्षीणकेतुः । पडक्षीणचिह्नः । पडक्षीणवैजयन्तिः । सफरध्वजः । सफरपताकः । सफरकेतुः । सफरचिह्नः । सफरवैजयन्तिः । अनिमिषध्वजः । अनिमिषपताकः । अनिमिषकेतुः । अनिमिषचिह्नः । अनिमिषवैजयन्तिः । तिमिध्वजः । तिमिपताकः । तिमिकेतुः । तिमिचिह्नः । तिमिवैजयन्तिः । मीनध्वजः । मीनपताकः । मीनकेतुः । मीनचिह्नः । मीनवैजयन्तिः । पाठीनध्वजः । पाठीनपताकः । पाठीनकेतुः । पाठीनचिह्नः । पाठीनवैजयन्तिः । **शम्भोर्विघ्नकरः** । हरविघ्नकरः । इत्यादीनि स्मरनामानि ज्ञातव्यानि । १५

**कौक्षेयकासिनिस्त्रिंशकृपाणाः करवालकः ।**

**तरवारिर्मण्डलाग्रं खड्गनामावलिं विदुः ॥ ८५ ॥**

अष्टौ खड्गे । कुक्षौ भवः **कौक्षेयकः**[7] । कौक्षेयः । अस्यते क्षिप्यतेऽसौ **असिः** । निष्क्रान्तस्त्रिंशतोऽङ्गुलिभ्यो **निस्त्रिंशः** । तालव्यान्तः । शत्रून् हन्तुं कल्पते याचते **कृपाणः**[8] । "कृपेः काणः[9]" । करे वलते **करवालः**[10] । करपालः । तरति (तरं) प्लवमानं वारि यत्रेति निरुक्त्या **तरवारिः** । मण्डलं वर्तुलमग्रं यस्य तन्**मण्डलाग्रम्** । खण्डति परमर्माण्यनेन **खड्गः** । "खण्डेर्गक्[11]" । स्त्रीत्वे । **असिः** । चन्द्रहासः । २०

**अक्षौहिणी बलानीकं वाहिनी साधनं चमूः ।**

**ध्वजिनी पृतना सेना सैन्यं दण्डो वरूथिनी ॥ ८६ ॥** २५

द्वादश सेनायाम् । अक्षाणां रथानामूहिनी **अक्षौहिणी** । "अक्षस्यौत्वमूहिन्याम्[12]" औत्वम् । अथवा धात्वर्थेन साध्यते भाष्यकर्त्रा श्रीमदमरकीर्तिना । अशू व्याप्तौ । अश्नुते व्याप्नोतीति **अक्षः** । "[13]कृन्-

१. "ध्वज गतौ" । पचाद्यच् । २. अम० को० २।८।९९ ३. का० उ० ३।४०। ४. का० उ० १।२८। ५. विजयते विजयन्तः, विजयशाली पुरुषः । औणादिको झच्प्रत्ययः । झस्यान्तादेशः । विजयन्तस्येयं पताका वैजयन्तीति । ६. ते ते ध्वजपर्य्याया अन्ते यस्य झषादिर्मीनपर्यायश्चादौ यस्य ईदृशस्तथा शम्भुविघ्नकरश्च स्मरः कामः । तेऽपि स्मरपर्य्यायाः । तद्यथा झषध्वजेत्यादि । ७. कुलकुक्षिग्रीवाभ्यः श्वाऽस्यलङ्कारेषु" पा०सू० ४।२।९६। इति खड्गार्थे ढकञ् । ८. कृपां नुदति कृपाणः इत्यपि । ९. का०उ०सू० ५।१७। १०. "वल वेष्टने"। ज्वलादित्वाण्णः । वलनं वालो वेष्टनम । करे वालो यस्य, करेण वल्यते वीभयमप्यन्यत्र । ११. का० उ० सू० ५।५२। १२. का०सू० वृ० १।२।७। १३. का०उ०सू० ४।५३।

षदिहनिमनिकम्यशिकदिभ्यः सः[1] स प्रत्ययः । "क्षशोश्च[1]"प । "षढोः कः[2]से" अक्ष् प । "[3]कषसंयोगे क्षः" । अक्ष इति जातः । ऊहनं ऊहः । ऊहो विद्यते यस्याः सा ऊहिनी । अक्षाणामूहिनी अक्षौहिणी । "समासान्तसमीपयोरसुवादेः" अस्यार्थः समासस्य अन्ते समासस्य समीपे च नकारस्य पूर्वपदस्थात् निमित्तात् (परस्य) णो भवति वा । इदानीम् अक्षौहिणीप्रमाणं क्रियते । यद्भारतम्—

> "[4]एको रथो गजश्चैको नराः पञ्च पदातयः ।
> अश्वश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥
> पत्त्यंगैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ।
> सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ॥
> अनीकिनी"

पत्तेस्त्रिगुणं सेनामुखम् । गजाः ३, रथाः ३, अश्वाः ९, पदातयः १५ इति सेनामुखम् । गजाः ९, रथाः ९, अश्वाः २७, पदातयः ४५ इति गुल्मम् । गजाः २७, रथाः २७, अश्वाः ८१, पदातयः १३५, इति गणः । गजाः ८१, रथाः ८१, अश्वाः २४३, पदातयः ४०५ इति वाहिनी । गजाः २४३, रथाः २४३, अश्वाः ७२९, पदातयः १२१५, इति पृतना । गजाः ७२९, रथाः ७२९, अश्वाः २१८७, पदातयः ३६४५ इति चमूः । गजाः २१८७, रथाः २१८७, अश्वाः ६५६१, पदातयः १०९३५ इत्यनीकिनी । दशानी-किन्योऽक्षौहिणी । गजाः २१८७०, रथाः २१८७०, अश्वाः ६५६१०, पदातयः १०९३५० । बलते संवृणोति परभूमिं बलम् । उभयम् । अनिति प्राणिति तूर्यस्वनैः न नीयते पराभवं वा अनीकम् । वाहा अश्वाः सन्त्यस्यां वाहिनी । साध्यते (अनेन) साधनम् । परान् शत्रून् चमति ग्रसते चमूः । "[6]कृषि-चमितनिधनिवधिसर्जिखर्जिभ्य ऊः ।" चमुश्च । ध्वजाः सन्त्यस्यां ध्वजिनी । नायकं पिपर्ति पृतना । अङ्गैः सिनोति बध्नाति सेना । "सिनोतेर्नः[7]" । सेनायाः स्वार्थे यणि सैन्यम् । दाम्यति दण्डः । वरूथो रथ-गुप्तिरस्त्यस्या वरूथिनी । पताकिनी । चक्रम् । अनीकिनी । [8]गूढः । तन्त्रम् ।

**कदनं समरं युद्धं संयुगं कलहं रणम् ।**
**संग्रामं सम्परायाजी संयदाहुर्महाहवम् ॥ ८७ ॥**

एकादश युद्धे । कद्यते **कदनम्**[9] । समियृति प्रतिविकला भवन्त्यत्र नराः **समरम्** । युध्यते-(ऽत्र) रिभि**र्युद्धम्** । भटाः संयुज्यन्ते मिलन्त्यत्र **संयुगम्** । कलं मधुरं वाक्यं हन्त्यत्र **कलहः** । रणन्ति दुन्दुभयोऽत्र **रणम्** । संग्रस्यन्ते सत्वान्यनेनेति **संग्रामः**[10] । पुंसि । संपरैति मृत्युरत्र **सम्परायः** । भटा अज्यन्ते क्षिप्यन्तेऽत्र **आजिः** । स्त्रीचौः । संयतन्तेऽत्र तान्तं **संयत्** । महांश्चासौ आहवः[11] **महाहवः** । तम् **आहुः**

---

१. का० सू० ३।६।६०। २. का० सू० ३।८।४। ३. 'कषयोगे क्षः' । का० रू० पृ० २५६ सू० । ४. प्रथमः श्लोको महाभारत उपलभ्यते । तस्योपलब्धिस्तु द्वितीयाध्याये पञ्चदशश्लोकत्वेन । इतरस्तत्र नोपलभ्यते । तत्र "एको रथः" इति श्लोकानन्तरम् —"पत्तिन्तु त्रिगुणामेतामाहुः सेनामुखं बुधाः । त्रीणि सैनामुखान्येको गुल्म इत्यभिधीयते ॥ त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः । स्मृता-स्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः ॥ चमूस्तु पृतनास्तिस्रस्तिस्रश्चम्वस्त्वनीकिनी । अनीकिनी दशगुणां प्राहुः सेनामुखं बुधाः ॥ इति । श्लो० १६, १७,१८ । ५. अभि० चि० ३।४१३। ६. का० उ० सू० १।३१। ७. का० उ० सू० ६।३६। ८. गूढशब्दस्य सेनार्थेऽन्यत्र प्रमाणं मृग्यम् । ९. "कद वैक्लव्ये" । कद्यते विक्लूयतेऽनेनास्मिन्वा । करणेऽधिकरणे वा ल्युट् । १०. सङ्ग्राम युद्धे" । सङ्ग्रामयन्तेऽत्रेति । हेमचन्द्रः । सङ्ग्रामणं सङ्ग्राम इति रामाश्रमः । ११. आहूयन्ते योद्धारोऽत्रेत्याहवः ।

द्रुघन्ति । आयोधनम् । जन्यम् । प्रधनम् । प्रविदारणम् । मृधम् । आस्कन्दनम् । संख्यम् । समीकम् । अनीकम् । विग्रहः । समुदायः । अभ्यागमः । संस्फोटिः ( टः ) । समितिः । समित् । द्वन्द्वम् । सम्मर्दः । संगरः ।

**गजो मतङ्गजो हस्ती वारणोऽनेकपः करी ।**
**दन्ती स्तम्बेरमः कुम्भी द्विरदेभमितङ्गमाः ॥ ८८ ॥** ५
**शुण्डालः सामजो नागो मातङ्गः पुष्करी द्विपः ।**
**करेणुः सिन्धुरः—**

विंशतिर्गजे । गजति माद्यति **गजः**[1] । अच् । मतङ्गादृषेर्जातो **मतङ्गजः** । "[2]सप्तमीपञ्चम्यन्ते जनेर्डः"[3] । हस्तो विद्यतेऽस्य **हस्ती** । "जातौ तु दन्तहस्ताभ्यां कराच्चैव इनेव हि" । वारयति परान् शत्रून् **वारणः** । न एकेन पिबत्यनेकपः । करोऽस्त्यस्य **करिन्** । इदन्तोऽपि करिः । दन्तौ विद्येतेऽस्य **दन्ती** । स्तम्बे तृणे रमते **स्तम्बेरमः** । "[4]स्तम्बकर्णयो रमिजपोः" खच् । कुम्भौ विद्येतेऽस्य **कुम्भी** । द्वौ रदौ यस्य **द्विरदः** । एति गच्छति **इभः** ... "इणः ... [5]" ... प्रत्ययो भवति स च वच्चत् । मितं गच्छतीति **मितङ्गमः** । "गमेरच्[6]" खप्रत्ययः "ह्रस्वा रुपांमोन्तः[7]" । शुण्डां लाति गृह्णातीति, **शुण्डालः**[8] । साम्नः[9] सामवेदाज्जातः **सामजः** । नगे पर्वते भवो **नागः** । मन्यते जनेन **मातङ्गः** । पुष्करं विद्यतेऽस्य **पुष्करी** । द्वाभ्यां पिबति **द्विपः** । करोति कार्यं **करेणुः** । "इकृञ्स्यामेणुः"[10] १५ आभ्यामेणुः प्रत्ययो भवति । स्यन्दते स्रवति मदं **सिन्धुरः**[11] । दन्तावलः । पद्मी[12] । पीलुः । कालिङ्गः ।

**तेषु यन्ता याता निषाद्यपि ॥ ८९ ॥**

त्रयो हस्तिपके । यच्छतीति **यन्ता** । यातीति **याता** । निषीदति इत्येवंशीलो **निषादी** । गजयन्ता । गजयाता । हस्तियन्ता । हस्तियाता । इत्यादीनि ज्ञातव्यानि । अपिशब्दात्— आधोरणः । हस्तिपः । हस्त्यारोहः । गजाजीवः । महामात्रः । २०

**नागाद्यरिः कण्ठी[13] (ण्ठि) रवो मृगेन्द्रः केसरी हरिः ।**

चत्वारः सिंहे । नागारिः । गजरिपुः । मतङ्गवैरी । हस्तिद्विट् । वारणवैरी । अनेकपसपत्नः । करिरिपुः । दन्तिवैरी । स्तम्बेरमरिपुः । क्वचिद्दृश्यते ईदृशः पाठः । कुम्भिवैरी । इभवैरी । मतङ्गशत्रुः । शुण्डालरिपुः । सामजद्वेषी । नागारिः । पुष्करिरिपुः । द्विपवैरी । करेणुरिपुः । सिन्धुरवैरी । इत्यादीनि पर्यायनामानि सिंहस्य ज्ञातव्यानि । कण्ठे रवो ध्वनिर्यस्य **कण्ठीरवः** । २५

१. गजति माद्यति गर्जति वा गजः । २. का० सू० ५।३।११ ३. का० सू० २।६।१५। वृत्तिः । ४. का० सू० ४।३।१६। ५. का० उ० सू० २।२६। ६. का० सू० ४।३। ४५। ७. का० सू० ४।१।२२। ८. शुण्डाऽस्त्यस्येत्यपि । "प्राणिस्थादातो लजन्यतरस्याम्" पा०सू० ५।२।९६। इति मत्वर्थीयो लच्प्रत्ययः । ९. सामवेदो हि गीतपरः । तत्स्वरेण समाकृष्टा हस्तिनो वद्धा अभवन् । बद्धाश्चाकृष्य जनपदे समानीताः । गीतमूढा यतो बद्धसमानीताः । अत एव सामजा इत्युच्यन्ते । इति सङ्गतिः । प्रमाणान्तरमपि मुख्यम् । सामवेदमुच्चारयन् त्रिधिर्गजान् ससर्ज । साम्ना सह जातत्वात्सामजा इति । १०. का० उ० सू० २।६। ११. स्यन्दधातोरकर्मकत्वात्स्रवति मदमित्यर्थश्चिन्तनीयः । १२. अत्र कल्पद्रुकोषः।१।५।१४४। प्रमाणम्— "करी मतङ्गजः पद्मी सूर्पकर्णी लतारसः" । इति । १३. छन्दोभङ्गभियाऽत्र कण्ठिरव इति पाठः प्रतिभाति । वर्णागमो गवेन्द्रादावित्येकारस्य इकार ईकारश्च विधेयः ।

"[1]वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः ।
षोडशादौ विकारस्तु वर्णनाशः पृषोदरे ॥"

इत्यनेन एकारस्य ईकारः । मृगाणां चतुष्पदानां मध्ये इन्द्रः **मृगेन्द्रः** । केसराः स्कन्धकेशाः सन्त्यस्य **केसरी** । क्रमप्राप्ते हरति [2]**हरिः** । पञ्चाननः । हर्यक्षः । नखरायुधः । मृगरिपुः । सिंहः ।

५ **व्याघ्रश्चमूरः शार्दूलः—**

त्रयो व्याघ्रे । व्याजिघ्रति प्राणान् उपादत्ते **व्याघ्रः** । चमति अत्ति पशून् **चमूरः** । परान् शृणाति हिनस्ति [3]**शार्दूलः** । द्वीपी । पुण्डरीकः । तरक्षुः । चित्रकायः । मृगारिः ।

**शरभोऽष्टापदोऽष्टपात् ॥ ९० ॥**

त्रयोऽष्टापदे । शृणाति हिनस्ति **शरभः** । "[4]कृशृशलिगर्दिरासवलिवल्लिभ्योऽभः" । अष्टौ १० पदान्यस्य **अष्टापदः** । अष्टौ पादा यस्यासौ **अष्टपात्** ।

**क्रोडो वराहो दंष्ट्री च घृष्टिः पोत्री च शूकरः ।**

अष्टौ ( षट् ) शूकरे । पल्वलं संक्रमति **क्रोडः**[5] । वरानाहन्ति **वराहः**[6] । दंष्ट्राः सन्त्यस्य **दंष्ट्री** । घर्षतीति **घृष्टिः** । घृष्टिश्च । पूञ् पवने । पू । भौ० । पूञ् पवने वा । क्रै० । उभयपदी । पूयतेऽनेनेति **पोत्रम्** "[7]हलसूकरयोः पुवः" ष्ट्रन् । तदस्य । [illegible] । पोत्रमस्त्यस्य पोत्री । सूते प्रचुरा- १५ पत्यानि, स्वयति वर्धते वा पीनत्वेन **सूकरः**[8] । शूकरश्च । दन्त्यतालव्यः । कोलः । किरः । किरिश्च ।

**उष्ट्रो मयः शृंखलिकः करभः शीघ्रगामुकः ॥ ९१ ॥**

पञ्चोष्ट्रे । उष्यते दह्यते मरौ **उष्ट्रः**[9] । "[10]सर्वधातुभ्यः ष्ट्रन्" । मयते गच्छति **मयः**[11] । मयते इत्येके । शृङ्खलं बन्धनमस्य **शृङ्खलिकः**[12] । कं शिरो रभते उन्नमयतीति **कलभः** । करभश्च । शीघ्रं गच्छतीति **शीघ्रगामुकः** । दासेरकः । दीर्घजङ्घः । क्रौष्ट्री । रवणः । धूम्रकः ( धूमकः ) ।

२० **कौलेयकः सारमेयो मण्डलः श्वा पुरोगतिः ।**
**जिह्वापो ग्रामशार्दूलः कुक्कुरो रात्रिजागरः ॥ ९२ ॥**

नव सारमेये । कुले गृहे भवः **कौलेयः**[13] ( यकः ) । सरमाया अपत्यं **सारमेयः** । मण्डं लाति **मण्डलः** । चौरादीन् श्वयति गच्छति **श्वा** । श्वन्नोऽदन्तोऽपि । पुरो गच्छति **पुरोगतिः** । [14]जिह्वया शरीरं

---

१. "पृषोदरादयः" इति शा० सू० २।२।१७२। कारिका । २. प्राणान् हरतीत्येतावानेवान्यत्र । ३. यद्वा शारयतीति शार् । क्विप् । दूयते इति दूलः । अन्तर्भावितणिचर्थो दूङ् । शार् चासौ दूलश्चेति विग्रहः । ४. का०उ०सू० ३।१२। ५. "क्रुड घनत्वे" । क्रोडनं घनत्वं सोऽस्यास्तीति क्रोडः । "अर्श आद्यच्" इति रामाश्रमः । ६. वरमाहन्तीति, वर आहारो यस्येति वा पृषोदरादित्वात् । ७. का०सू० ४६।६२। ८. सुखं प्रसवं करोतीति । शूकोऽस्त्यस्य शूकरः सरोमत्वात् । शूकं राति वा । शू इतिध्वनिं करोति वा । ९. वष्टि इच्छति कण्टकिवृक्षादनं मरुभूमिं वा इति उष्ट्रः । "सर्वधातुभ्यः ष्ट्रन्" इति का० उ० ४।२६। सूत्रे दुर्गसिंहः—"वश कान्तौ" । वष्टीति उष्ट्रः करभः । अस्य ष्ट्रन्नन्तस्य सम्प्रसारणं निपातनात्त्वं च" । इत्याह । १०. का०उ०सू० ४।२६ । ११. मीनाति हिनस्ति मयः । "मीञ् हिंसायाम्" । पचाद्यच् । इति वा । १२. शृङ्खलमस्य बन्धनं करभे" पा० सू० ५।२।७९ । इति कन् । तेन शृङ्खलक इति साधुः । "स तु शृङ्खलकः काष्ठमयैः स्यात्पादबन्धनैः" । इति अभि० चिं० । १३."कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु" पा० सू० ४।२।९६। इति श्वार्थे ढकञ् । १४. जिह्वया रसनया पिबतीति विग्रहः सुवचः । जिह्वया शरीरं पातीत्यपि सम्भवति ।

ग्रामं रक्षति **ग्रिलायः** । ग्रामाणां शार्दूलो व्याघ्रः **ग्रामशार्दूलः** । कुक् शब्दं करोतीति **कुक्कुरः**[1] । कुर् शब्दे । कुकुरश्च । रात्रौ जागर्ति **रात्रिजागरः** । लेढ्वहः । वुक्कणः । भषणः । मृगदंशः । शालावृकः ।

**हेम चाष्टापदं स्वर्णं कनकार्जुनकाञ्चनम् ।**
**सुवर्णं हिरण्यं भर्म जातरूपं च हाटकम् ॥ ६३ ॥**
**तपनीयं कलधौतं कार्तस्वरशिलोद्भवम् ।**

पञ्चदश स्वर्णे । हिनोति वर्धतेऽनेन **हेमन्** । नान्तम् । अदन्तं हेमं च । अष्टसु लोहेषु पदं प्रतिष्ठाऽस्य **अष्टापदम्** । "अष्टनः[2] संज्ञायाम्" इति दीर्घः । शोभनो वर्णोऽस्य **स्वर्णम्** । उकारलोपः । अथवा समासे वर्णस्य वा वलोपमाहुः । यथा पञ्चार्णो मन्त्रः । कनति दीप्यते **कनकम्** । "कनिचनिभ्यामकः[3]" । कनी दीप्तिकान्तिगतिषु । अर्ज सर्ज अर्जने । **अर्जतीत्यर्जुनम्**[4] । "अर्कुलबृन्तर्मि[5]दार्यर्जिभ्य उनः" । काञ्चति शोभां बध्नाति **काञ्चनम्** । शोभनो वर्णो यस्य **सुवर्णम्** । उभयम् । पुण्यं जिहीते **हिरण्यम्** । अथवा ओहाक् त्यागे । हीयते हिरण्यम् । "हौ[6] हिरश्च" अस्मादन्यः प्रत्ययो भवति हिरादेशश्च । भ्रियते धार्यते नान्तम् **भर्मन्** । अदन्तं च भर्मम् । जातं रूपं यस्य **जातरूपम्**[7] । क्लीबे । तथा च 'यशस्तिलके—"असङ्गस्पृहोऽपि जातरूपस्पृहः ।" हटति **हाटकम्**[8] । हट दीप्तौ । अग्निना तप्यते **तपनीयम्** । कला धावति गच्छति **कलधौतम्**[10] । कृतस्वराकरे भवं **कार्तस्वरम्** । शिलायाः पाषाणादुद्भवो यस्य **शिलोद्भवम्** । शातकुम्भम् । गाङ्गेयम् । कर्बुरम् । चामीकरम् । महारजतम् । रुक्मम् । रुम्मम् । जाम्बूनदम् । कल्याणम् । गिरिकं । चन्द्रवसु च ।

**रूप्यं रजतं गुलिका—**

त्रयो रूप्ये । रूप्यते जना मुह्यतेऽनेन **रूप्यम्**[11] । जनं रजति **रजतम्** । रज्यते हेम्ना रजतं वा । गुड रक्षायाम् । गुडति रक्षति व्यापदः सकाशाद् **गुलिका** । गुडिका च । कलधौतम् । तारम् । सितम् । दुर्वर्णम् । खर्जूरम् । श्वेतम् ।

**शुक्तिजं मौक्तिकं तथा ॥ ६४ ॥**

द्वौ मौक्तिके । शुक्त्या जलादियानोपकरणद्रव्यविशेषाज्जातम् **शुक्तिजम्** । मुक्तानां समूहो **मौक्तिकम्** । समूहेऽर्थे ठकण् ।

**वित्तं वस्तु वसु द्रव्यं स्वापतेयं रा द्रविणं धनम्—**
**कस्वरं**

दश धने । विन्दति पुण्यकृतं **वित्तम्** । धात्वर्थेन व्युत्पत्तिः क्रियतेऽमरकीर्तिना । 'विद्लृ लाभे । विद् । विद्यते स्म भुज्यते (स्म) वित्तम् । निष्ठान्तः । "भित्तवित्तः[12] शकलाधमर्णभोगेषु" वित्तमिति

---

१. कुक् इति शब्दं कुरति उच्चारयतीति विग्रहः । इगुपधत्वात्कप्रत्ययः । यद्वा कोकते ऽध्वादिकमादत्ते कुक् । "कुक् आदाने" । क्विप् । कुरति शब्दायते कुरः । कुक् चासौ कुरश्चेति विग्रहः । २. पा० सू० ६।३।१२५ । ३. का० उ० सू० ३।४८ । ४. अर्ज्यते पुण्यैरर्जुनम् । ५. का० उ० सू० २।६७। ६. का० उ० सू० ३।२। ७. अकृतककल्पमित्यर्थः । अथवा प्रशस्तं जातं जातरूपम् । प्रशंसायां रूपप्रत्ययः । ८. सुदत्तमुनिवर्णने आ० । ९. हाटकाकरप्रभवत्वाद् वा हाटकम् । १०. कला सुवर्णकलिका धौता गता धावति गच्छति वा यस्मादिति कलधौतम् । ११. रूप रूपक्रियायाम् । ण्यन्तः । अचो यत् । १२. का० सू० ४।६।११४।

निपातः । निपातस्येड् न भवति । "दाद्दस्य[1] च" तौ नौ न भवति । वसति सुखमनेन **वस्तु** । "कमि[2]मनिजनिवसिहिभ्यश्च" एभ्यस्तुन् प्रत्ययो भवति । वसति सुखमनेन **वसु** । "पत्य[3]सिवहिदनिमनिभपीन्दिकन्दिवभ्रिवधुखिभ्यश्च" एभ्य एकादशभ्यः उः प्रत्ययो भवति । द्रूयते गम्यते **द्रव्यम्** । परं स्वति अन्तं नयति अथवा पुण्यं स्वनति स्वः[4] **स्वम्** । उभयम् । पुण्यकृतमियर्त्ति **अर्थम्** । गुणान् राति रैः । "राते[5]र्डैः ।" डीवोः । द्रूयते गम्यते **द्रविणम्** । दधाति धारयति सारत्वं **धनम्** । कश गतौ । कशतीत्येवं शीलं **कस्वरम्** । "[6]कसिपिसिपासीशस्थाप्रमदां च" वरप्रत्ययः । द्युम्नं । सारम् । स्वापतेयम् । ऋक्थम् । रिक्थम् । हिरण्यम् । विभवः ।

**तत्पतिं प्राहुः कुबेरं चैकपिङ्गलम् ॥ ६५ ॥**

**वैश्रवणं राजराजमुत्तराशापतिं तथा ।**

**अलकानिलयं श्रीदं धनपर्यायदायकम् ॥ ६६ ॥**

सप्त कुबेरे । तस्य पतिः **तत्पतिः** तं **कुबेरं** प्राहुर्ब्रुवन्ति । वित्तपतिः । वसुपतिः । वस्तुपतिः । द्रव्यपतिः । स्वपतिः । अर्थपतिः । रा(रै)पतिः । द्रविणपतिः । धनपतिः । कस्वरपतिः । इत्यादिपर्यायनामानि कुबेरस्य ज्ञातव्यानि । कुत्सितो बेरो देहः कुब्जत्वाद्यस्य स कुबेरः । पिङ्गलैकनेत्रत्वादेकपिङ्गलः । विश्रवसोऽपत्यमणि शिवादित्वात् । णादेशो **वैश्रवणः** । राज्ञां यक्षाणां राजा **राजराजः** । उत्तराशायाः पतिः **उत्तराशापतिः** । अलका निलयो गृहं यस्य **अलकानिलयः** । श्रियं दयते **श्रीदः** । **धनपर्यायदायकः** । धनदायकः । धनदः । वित्तदायकः । वित्तदः । वसुदायकः । वसुदः । द्रव्यदायकः । द्रव्यदः । स्वदायकः । स्वदः । रैदायकः । रैदः । द्रविणदायकः । द्रविणदः । कस्वरदायकः । कस्वरदः ।

**राष्ट्रं जनपदो निर्गो जनान्तो विषयः स्मृतः ॥**

पञ्च जनपदे । राजते **राष्ट्रम्** । तथा च सोमनीतौ[7]—"पशुधान्यहिरण्यसंपदा राजते शोभते इति राष्ट्रम्" । जनी प्रादुर्भावे । जन् । जायते कश्चित्तमन्ये प्रयुञ्जते ।"धातोश्च[8] हेतौ" इन् प्रत्ययः । अस्योप० दीर्घः । जानिरिति जातम् । "[9]जनिवध्योश्च" ह्रस्वः । जनि जातम् । जनयन्ति प्रजां धनमिति जनाः । "अच्[10] पचादिभ्यः" अच् प्रत्ययः ।"कारितस्यानाम०[11]" कारितलोपः । पद गतौ । पद् । जनैर्वर्णाश्रमलक्षणैः पद्यते गम्यते प्राप्यते आश्रीयत इति **जनपदः** ।"अच् पचादेः[12]" अच् प्रत्ययः । जनपद इति जातः । तथा च सोमनीतौ—"[13]जनस्य वर्णाश्रमलक्षणस्य द्रव्योत्पत्तेर्वा स्थानमिति जनपदः ।" निर्गम्यते यस्मिन्निति **निर्गः** । "निर्गो[14] देशेऽधिकरणे" इति डप्रत्ययः । देशादन्यत्र— निर्गम्यते यस्मिन्निति निर्गमनो गिरिः । जनानामन्तो निकटे **जनान्तः** । षिञ् बन्धने । "धात्वादेः[15] षः सः" सि० विषू० । विषिण्वन्ति अस्मिन्निति **विषयः** । "पुंसि संज्ञायां[16] घः "नाम्यं०[17]" गुणः । "ए[18] अय्" तथा । च सोमनीतौ—"[19]विविधवस्तुप्रदानेन स्वामिनः सद्मनि गजान् तृवाजिनश्च सिनोति बध्नातीति विषयः ।"

**पूः पुरी नगरं चैव पट्टनं पुटभेदनम् ॥ ६७ ॥**

---

१. का० सू० ४।३।१०२। २. का० उ० सू० १।२७। ३. का० उ० सू० १।६। ४. "घोऽन्त-कर्मणि" । घप्रत्ययः । "स्वन शब्दे" डप्रत्ययो वा । ५. का० उ० सू० २।२३। ६. का० सू० ४।४।५७। ७. जन० समु० १। ८. का० सू० ३।२।१०। ९. का० सू० ३।४।६७। १०. का० सू० ४।२।४८। ११. का० सू० ३।६।४४। १२. घञर्थे कविधानम्, पुंसि संज्ञायां घः इति कर्मणि कप्रत्ययो घप्रत्ययो वा वक्तव्यः । न तु पचाद्यच्; तस्य कर्तरि विधानात् । १३. जन० समु० ५। १४. हे० श० ५।१।१३३। १५. का० सू० ३।८।२४। १६. का० सू० ४।५।६६। १७. का० सू० ४।५।२। १८. का० सू० १।२।१२। १९. जन० समु० २।

षट् (पञ्च) नगरे। पॄ पालनपूरणयोः। पॄ। क्विप्। पृणातीत्येवंशीला पूः। "[1]क्विब्भ्राजिपृधुर्वि-भासाम्" क्विप्। "[2]उरोष्ठ्योपधस्य च" उर्। पुर् जातम्। "[3]नामिनोर्वोर०" पूर्। वेर्लोपः[4]। सिः। "व्यञ्जनाच्च[5]" सिलोपः। "[6]रेफसोर्विसर्जनीयः" रस्य विसर्गः। पूः। अदन्तः। पुरं पुरी च। इदन्तोऽपि पुरिः। नगाः सन्त्यत्र, प्रासादत्वं नश्यत्यत्र वा नगरम्[7]। क्लीबे। नगरी च। नानादिग्देशागतानां वणिजां भाण्डानि पतन्त्यत्र पत्तनम्। पट्टनं च। अत्र स्मृतिभेदः— ५

> "पट्टनं शकटैर्गम्यं घोटकैर्नौभिरेव वा।
> नौभिरेव तु यद्गम्यं पत्तनं तत्प्रचक्षते॥"

पुटा वासा भिद्यन्तेऽत्र पुटभेदनम्। क्लीबे। अधिष्ठानम्। निगमः। द्रङ्गः। स्थानीयम्।

**वक्त्रं लपनमास्यं च वदनं मुखमाननम्।**

षण्मुखे। वच परिभाषणे। उच्यतेऽनेन वक्त्रम्। "सर्वधातुभ्यः[8] ष्ट्रन्"। रत् लप् जल्प् व्यक्तायां १० वाचि। लप्यतेऽनेन लपनम्। युट्। अस्यतेऽस्मिन्नास्यम्। "[10]कृत्यल्युटो बहुल"मिति ण्यत्। वद व्यक्तायां वाचि। उद्यतेऽनेन वदनम्। महति मुह्यति स्तौतीति वा मुखम्[11]। खन्यते वा मुखम्। उणादौ। सुख दुःख तत्क्रियायाम्। चौरादिकत्वादिन्। सुखयति अन्नादिखादनेनेति मुखम्। "सुखेः[12] को मुखिश्च"। सुखेः कः प्रत्ययो भवति धातोर्मुखिश्च। इकार उच्चारणार्थः। अन अनिति श्वसित्यनेन आननम्। तुण्डम्।

**श्रवणं श्रोत्रं श्रवश्चापि कर्णं चैव श्रुतिं विदुः॥ ६८॥** १५

पञ्च कर्णे। श्रूयतेऽनेन श्रवणम्। श्रूयतेऽनेन श्रोत्रम्। क्लीबे। शृणोत्यनेन सान्तम् श्रवः। क्लीबे। करोति शब्दावधानं कर्णः[13]। कर्णयति वा कर्णः। क्लिदः कर्णभेदे। श्रूयतेऽनया श्रुतिः। स्त्रियाम्। विदुः कथयन्ति।

**दृगक्षि चक्षुर्नयनं दृष्टिर्नेत्रं विलोचनम्।**

सप्त नेत्रे। दृश्यतेऽनया दृक्। तालव्यान्तः। अशू व्याप्तौ। अश्नुते व्याप्नोत्यनेनात्मा घटादीन- २० र्थानिति अक्षि। "[14]अशिकुषिभ्यां सिक्"। चष्टे हृदयाकूतं सान्तम् चक्षुः। "[15]अपूर्वपिचक्षिजीव-तनिधनिभ्य उस्"। नीयते चित्तं विषयेषु अनेन नयनम्। दृश्यते प्रकटार्थोऽनया दृष्टिः। नीयतेऽनेन दृश्यं नेत्रम्। उभयम्। विशेषेण लोच्यते अवलोक्यतेऽनेन विलोचनम्। अक्षम्। तारका। ज्योतिः।

**कटाक्षं केकरापाङ्गं विभ्रमस्तस्य वैकृतम्॥ ६९॥**

तस्य नेत्रस्य वैकृते षट् (पञ्च)। कटयतीति [16]कटाक्षम्। उभयम्। के (शिरसि) २५

---

१. का० सू० ४।४।५७। २. का०सू० ।३।५।४३। ऋकारस्योत्वम्। ३. का०सू० ३।८।१४। इति दीर्घः। ४. का० सू० ४।१।३४। ५. का० सू० २।१।४९। ६. का० सू० २।३।६३। ७. "नगपांसु-पाण्डुभ्यश्चेति" पा० सू० ५।२।१०७। वार्तिकेन मत्वर्थीयो रः। अथवा नश् धातोरौणादिकोऽरप्रत्ययः शस्य गत्वं च। ८. का० उ० सू० ४।३१। ९. आस्यन्दतेऽस्मादिना प्रस्रवत्यनेति। १०. "कृत्यल्युटोऽ-न्यत्रापि" इति का० सूत्रम्। ४।५।९२। टीकोक्तयथाश्रुतसूत्रन्तु पाणिनीयम् ३।३।११३। ११. खन्यतेऽ-वदार्यते फलादिकमनेनेत्यपि। "दिल्खनेर्मुट् चोदात्तः" उ० अच् स च डित् मुडागमश्चेत्यन्यत्र। "मुदि-तानि ज्ञानेन्द्रियाण्यत्रेत्येके" इति क्षीर० स्वा०। १२. का०उ०सू० ६।६५। १३. टीकोक्तविग्रहे करोतेरौणा-दिको णप्रत्ययः। कीर्यते शब्दग्रहणाय क्षिप्यते, कीर्यते शब्दोऽस्मिन्निति वा, किरति शरीरे सुखमिति वा। १४. का० उ० सू० ६।५७। १५. का० उ० सू० २।४६। १६. कटेऽतिशयितेऽक्षिणी यत्र, कटं गण्डमक्षति व्याप्नोति वेति रामाश्रमः। कटे आक्षिपतीति क्षीरस्वा०।

किरति विक्षेपं क्षिपतीति (करोतीति) **केकरः**। न पाति कामिन**मपाङ्गः**[1]। उभयम्। विभ्रमणं **विभ्रमः**। विकृतस्य भावो **वैकृतम्**।

**दन्तवासोऽधरोऽप्योष्ठो वर्णितो दशनच्छदः।**

चत्वारश्चतुर्थं ओष्ठे। दन्तानां वासो **दन्तवासः**। अवति शोभाम**धरः**। "अधो[2] भवोऽधरो

५ वा। ओष्ठाभ्यां सहिताधरौ वा। अधरोऽप्योष्ठमात्रे वर्तते"। उषति दहति सपत्नीहृदय**मोष्ठः**। उष्यते तीक्ष्णाहारैरोष्ठो वा। **वर्णितः** कथितः। दशनस्य छदो [3]**दशनच्छदः**।

**शिरोधरो गलो ग्रीवा कण्ठश्च धमनी धमः॥ १००॥**

षड् गले। शिरो धरति **शिरोधरः**। शिरोधरा **च**। गलति भोजनं **गलः**। गृणाति गिरति वा **ग्रीवा**। उणादौ गृशब्दे पठ्यतीति ग्रीवा। "शीङ्जिह्वाग्रीवाः[4]" एते वप्रत्ययान्ता निपात्यन्ते। कणति

१० **कण्ठः**। "कणेष्ठः[5]" अस्माट्ठप्रत्ययो भवति। धमः सौत्रो धातुः। धम्यतेऽनया **धमनिः**। इदन्तः। स्त्रियामीः। **धमनी**। धमति **धमः**। मन्या। कन्धरा।

**दोर्दोषा च भुजो बाहुः–**

चत्वारो बाहौ। दम्यते विनीयते परोऽनेन **दोः**। सान्तम्। "[6]दमेर्डोस्"। दूषयति दुष्टं वा इति **दोषा**। आदन्तः। अव्ययः। न व्ययते। भुज्यतेऽनेन **भुजः**। निपातनात् चजोः कगत्वं न भवति। नाम्नि

१५ इति गुणश्च न भवति। "भुजन्युब्जौ[7] पाणिरोगयोः" इत्यस्मिन्नर्थे निपातनात्। भुजा **च**। वहत्यनेनेति **बाहुः**। "त्रहिस्वदि[8] (रहि) तलि पंशिभ्य उण्"। प्रकोष्ठः।

**पाणिर्हस्तः करस्तथा।**

त्रयो हस्ते। पणायते व्यवहरत्यनेन **पाणिः**। "[9]अजिजन्यतिरशिपणिभ्यः" एभ्य इण् भवति। हसते **हस्तः**। "[10]हसेस्तः"। कीर्यते क्षिप्यतेऽनेन **करः**। शयः। शम[11] इत्यन्यः। पञ्चशाखः।

२० **प्राहुर्बाहुशिरोंऽसश्च–**

बाहुशिरसोः **अंस** इति संज्ञां **प्राहुः** कथयन्ति। अस्यते भारैरस्या**सः**[12]। स्कन्धश्च।

**हस्तशाखा कराङ्गुलिः॥ १०१॥**

द्वौ अङ्गुल्याम्। हस्तस्य शाखा इव **हस्तशाखा**। आकुञ्चनादिकर्माणि अङ्गति गच्छति **अङ्गुलम्**। ओक्लीबे। अङ्गुली। करस्याङ्गुलिः[13] **कराङ्गुलिः**। एवमङ्गुरम्। अङ्गुरी।

**नासा घ्राणम्–**

२५

---

१. अपाङ्गतीत्यपाङ्गः। "अगि गतौ"। अच्। २. "अधो भवः" इत्यारभ्य "वर्तते" इत्यन्तं क्षीरस्वामिभाष्यमत्रोद्धृतम्। तद्भाष्ये "ओष्ठाधरौ तु" इत्यमरोक्तमूलपदस्य व्याख्यारूपम् "ओष्ठाभ्यां सहिताधरौ" इति वाक्यमन्धानुसरणेनात्रोद्धृतमप्रस्तुतमिति विवेकः। ३. दन्ताश्छाद्यन्तेऽनेनेति तदाशयः। पुंसि संज्ञायां घः। ४. का० उ० सू० २।२। ५. का० उ० सू० १।४२। ६. का० उ० सू० २।३१। ७. का० सू० ४।६।६४। ८. का० उ० सू० १।३। ९. का० उ० सू० ४।६। १०. का० उ० सू० ४।२७। "नृगवाहस्यमिदमिलपूभ्यस्तः" इति पूर्णं सूत्रम्। ११. अत्र प्रमाणम्—"पाणिः शयः शमो हस्तः" इत्यमरमाला। "पञ्चशाखः शयः शमः" इति अभि० चि०। १२. अस्यते समाहन्यते इत्यर्थः। "असु क्षेपणे"। अंस धातुश्चुरादिः। यद्वा "अम गतौ" अमति अम्यते वा अंसः। औणादिकः सन्प्रत्ययः। १३. अङ्गुल इत्यत्र "अङ्गेरुलः" का० उ० सू० ६।४८। इत्यङ्गधातोरुलप्रत्ययः। अङ्गुलिशब्दे तु "अङ्गयतिभ्यामुलीयि" का० उ० ३।३०। इत्युलिप्रत्ययः। स्त्रियामीः। अङ्गुली इत्यपि।

द्वौ नासिकायाम् । नासते शब्दायते नास्यतेऽनया वा **नासा**[1] । नेस्ना[2] च । जिघ्रत्यनेन **घ्राणम्** । क्लीबे । सिङ्घनी । नासिका । घोणा ।

## उरो वक्षः

द्वौ भुजमध्ये । अर्यते गम्यते **उरः**[3] । [4]"अर्तेरुश्च" अस्मादसुन्प्रत्ययो भवति अस्य उरादेशो भवति । ऋ गतौ । अस्य धातोः प्रयोगः । वक्ति वाणीं **वक्षः** । "वक्षेः" सोऽन्तश्च" अस्मादसन् प्रत्ययो भवति सो ऽन्तः । अकार उच्चारणार्थः । [6]चवर्गस्य किः । "[7]निमित्तादि" इत्यादिना षत्वं च ।

## कुक्षिः स्याज्जठरोदरम् ।

त्रयो जठरे । कुषति (कुष्णाति) निष्कर्षत्याहारं **कुक्षिः**[8] । पुंसि । कुक्षम् । क्लीबे । जमति **जठरम्** । अथवा जठ सौत्रोऽयं धातुः । उणादौ निपातोऽयम् । उनत्ति क्लेदयत्याहारम् **उदरम्** । एते उभयम् । पिचण्डम् । तुन्दम् ।

## स्तनः पयोधरकुचौ वक्षोज इति वर्णितः ॥ १०२ ।

चत्वारः कुचौ । स्तन्यते बालैः [9]**स्तनः** । पयो धरतीति **पयोधरः**[10] । कोचते स्त्री मृद्य-मानेऽत्र, कुच्यते मर्दनेन आकुलीक्रियते वा **कुचः** । कूचश्च । वक्षसि जातो **वक्षोजः** । उरसिजः । वक्षोरुहः ।

## कटिर्नितम्बं श्रोणी च जघनं–

चत्वारः कटग्रम् । कट्यते वस्त्रैराच्छाद्यते **कटिः** । कटी । कटः । कटम् । नितरामतिशयेन तम्यते काङ्क्ष्यते [11]**नितम्बः** । आश्रीयते कामिभिः **श्रोणः** । नदादित्वादीः **श्रोणी** । इदन्तोऽपि श्रोणिः [12] । स्त्रियामीः । श्रोणी । हन्ति चित्तमिति **जघनम्** । "[13]हन्तेर्जश्च" । चकारात् काञ्चीपदम् । कलत्रम् । कडत्रम् । जघनम् । ककुद्मती । आरोहः । कटीरम् । त्रिकस्थानकम् । स्थानपदाभावेऽपि त्रिकम् । कलवं च ।

## जानु जङ्घु च ।

द्वौ जानौ । गन्तुं जायते **जानुः**[14] । "[15]कृवापाजिमिस्वदिसाध्यशूहसनिजनिचरिचटिभ्य उण्" । जहाति [16]**जङ्घुः** । अष्ठीवान् । जङ्घा[17] ।

## चलनं चरणं पादं क्रमोऽङ्घ्रिश्च पदं विदुः ॥ १०३ ॥

---

१. "णास् शब्दे" । नास् धातुः । अच् घञ् वा । २. नेदमतो ऽन्यत्र समुपलब्धम् । ३. अर्यते गम्यते बलेनेति शेषः । अथवा उरस् बलार्थः कण्ड्वादिः । उरस्यति बलमाधत्ते उरः । क्विप् । ४. का० उ० सू० ४।६७। ५. का०उ०सू० ४।६२। ६. का०सू० ३।६।५५। "चवर्गस्य किरसवर्णे" । इति पूर्णं सूत्रम् । ७. का० सू० ३।८।२६। "निमित्तात्प्रत्ययविकारागमस्थः सः षत्वम्" इति पूर्णं सूत्रम् । ८. "कुष निष्कर्षे" "अशिकुषिभ्यां सिक्" का०उ०सू० ६।५७। ९. "स्तन गदी शब्दे" स्तनति कथयति यौवनोदयम् । स्तन्य-ते वर्ण्यते कामुकैर्वा स्तन इत्यन्यत्र । १०. धरतीति धरः । पचाद्यच् । पयसो धरः पयोधरः । इति बोध्यम् । टीकोक्तविग्रहे तु कर्मण्यण् पयोधार इति स्यात् । "११. तम्र गतौ" नितम्यति गच्छतीति, निभृतं तम्यते कामुकैः निभृतं ताम्यति सुरतसम्मर्दाद्वा नितम्ब इति रामाश्रमः । १२. श्रूयते किङ्किणिध्वनिरत्र "श्रु श्रवणे" औणादिको णिः । इति हेमचन्द्रः । "श्रोणृ सङ्घाते" श्रोणति विविधशरीरावयवैः सङ्घातीभवतीति श्रोणिः । "सर्वधातुभ्य इन्" इति रामाश्रमः । १३. का० उ० सू० २।३७। १४. आयते ऽनेनाकुञ्चनादि जानुरिति हेमचन्द्रः । १५. का०उ०सू० १।१। १६. नात्र कोषान्तरप्रमाणमुपलब्धम् । १७. यद्यपि जानोरध आगुल्फान्तं जङ्घा, जङ्घाजघनयोः सन्धिर्जानुरिति भेदः । तथापि जङ्घासामीप्याद् भेदाविवक्षया जानु-पर्यायो जङ्घेत्युक्तम् । तत्र भेदस्तु न विस्मर्तव्यः ।

पद चरणे । चाल्यते **चलनम्**[1] । चरत्यनेन **चरणम्** । पद्यतेऽनेन **पादः** । पुंस् । दान्तोऽपि पाद् । 'क्रमु पादविक्षेपे' । काम्यत्यनेनेति **क्रमः** । 'अहि गतौ'[2] । इदनुबन्धत्वान्नागमः । अंहत्यनेनेत्यंह्रिः । "[3]अंहेरिः" अंहेर्धातोरिप्रत्ययो भवति । अङ्घ्रिश्च । पद्यते **पदम्** । क्लीबे ।

**शिरो मूर्धोत्तमाङ्गं कम्—**

चत्वारो मस्तके । शॄ हिंसायाम् । शीर्यते हिंस्यते **शिरः** । "[3]अर्तिशीर्ङ्भ्यो यण्वत्" एभ्योऽसन् प्रत्ययो भवति स च यण्वत् । तेनागुणः । अनुषङ्गलोपः । 'मूर्छा मोहसमुच्छ्राययोः' । मूर्छन्त्य-श्रिताः प्राणिनो **मूर्धा** । "[4]पूषादयः—"पूषन्नर्यमन्मज्जन्नुक्षन्तक्षन्प्लीहन्मातरिश्वन्क्लेदन्स्नेहन्मूर्धन्युषन्" एते कन्यन्ता निपात्यन्ते । उत्तमं च तद् अङ्गम् **उत्तमाङ्गम्** । कै गै शब्दे.[5] कायतीति **कम्** । शीर्षम् । मस्तकः । "कन्याङ्ग" च नानार्थे ।

**प्रारब्धं प्रेरितेरितम् ।**

त्रयः प्रेरणे । प्रारभ्यते **प्रारब्धम्** । "[6]शकिसहिपवर्गान्ताच्च" यः प्रत्ययः । ईर गतौ कम्पने च । प्रेर्यते **प्रेरितम्** । **ईरितम्** । "नपुंसके भावे क्तः" ।

साम्प्रतं सरस्वतीनामानि आरभ्यन्ते आचार्यश्रीमदमरकीर्तिना—

**वाग्वचो वचनं वाणी भारती गीः सरस्वती ॥ १०४ ॥**

सप्त वाण्याम् । उच्यते **वाक्** । "[7]वचिप्रच्छिश्रिद्रुश्रुप्रुज्वां क्विप् दीर्घश्च" एभ्यः क्विप् प्रत्ययो भवति दीर्घश्चरवरस्यैषाम् । वक्ति **वचः**[8] । "[9]सर्वधातुभ्योऽसन्" । उच्यते **वचनम्** । वाण्यते वाणिः[10] । स्त्रियामीः । **वाणी** । बिभर्ति जगद् धारयति, भरतो ब्रह्मा तस्येयं **भारती** । तथा च—

"आत्मनि मोक्षे ज्ञाने वृत्तौ ताते च भरतराजस्य ।
ब्रह्मेति गीः प्रगीता न चापरो विद्यते ब्रह्मा ॥"

गीर्यते उच्चार्यते शास्त्रं **गीः** । सरः प्रसरणमस्त्यस्याः **सरस्वती** । ब्राह्मी । तथाहि—

"गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः ।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥"

**सिंहद्विपघने गर्जः—**

**सिंहे** कण्ठीरवे, **द्विपे** गजे, **घने** मेघे च **गर्जः**[11] शब्दः कथ्यते । गर्जनं **गर्जः** ।

**हेषाऽश्वे**

अश्वानां शब्दे **हेषा** । हेषणम् । हेषा ह्रेषा च ।

**बृंहितं गजे ।**

गजशब्दे **बृंहितम्** । बृंहणम् ।

**स्फीत्कृतं धेनुकलभे—**

---

१. चलत्यनेनेति चलनमिति सुवचः । २. अत्राभिधानचिन्तामणिः प्रमाणम — "चरणः क्रमणः पादः पदोऽङ्घ्रिश्चलनः क्रमः" । इति । ३।२८०। ३. का० उ० सू० ४।५९। ४. का०उ०सू० ४।५१। ५. अत्र प्रमाणान्तराभावः । वराङ्गं कमनीयाङ्गमिति वा स्यात् । ६. का०सू० ४।२।११। ७. का०उ०सू० २।६३। ८. उच्यते वच "इति कर्मणि विग्रहो युक्तः । ९. का० उ० सू० ४।५६। १०. "वण शब्दे" चुरादिः । ११. सिंहगजमेघध्वनौ गर्जशब्दः प्रयुज्यते । एवं वक्ष्यमाणतत्तद्ध्वनौ सर्वत्र योज्यम् ।

**धेनुकलभे** शिशुवत्से **स्फीत्कृतं**[1] स्फीत्‌शब्दः कथ्यते।

**स्तमितं जलदे तथा ॥ १०५ ॥**

**जलदे** मेघे मेघानां शब्दे **स्तनितं** कथ्यते। स्तन्यते **स्तनितम्**।

**स्यन्दने चीत्कृतं मन्त्रे भटे च हुङ्कृतं तथा।**

स्यन्दने रथशब्दे **चीत्कृतं** कथ्यते। **मन्त्रे भटे च** हुंशब्दः कथ्यते। हुं मन्त्रे, हुं परिप्रश्ने ५
हुं सर्वं सुप्तं ते भयादी राक्षसोऽयम्। कुत्सने हुं निर्लज्ज। अनिच्छायाम् हुं हुं मुञ्च।

**सीत्कृतं मणितं कामे–**

**कामे** कन्दर्पभोगप्रस्तावशब्दे **सीत्कृतं मणितम्**। सीत्क्रियते सीत्कृतम्। मण्यते मणितम्।

**खनत्कृतं शृङ्खलायुधे ॥ १०६ ॥**

**शृङ्खलाऽयुधे खनत्कृतम्**। सुगमम्। १०

**मञ्जीरकं तुलाकोटिर्नूपुरं–**

त्रयः स्त्रीणां चरणाभरणे। मञ्जिः सौत्रः। मञ्जत्याकर्षति चित्तं **मञ्जीरम्**। अथवा मञ्जु मधुर-मीरयति मञ्जीरम्। तुलाकुलेर्जङ्घाया कोटिरिव **तुलाकोटिः**[2]। स्त्रोणति नौतीति **नूपुरम्**[3]। शिञ्जिनी। पादकटकः। हंसकम्। पदाङ्गदम्। कलापो नानार्थे।

**तत्र संसृतम्।** १५

तत्र तस्मिन् मञ्जीरके तच्छब्दे **संसृतं** कथ्यते।

**झाङ्कृतं चाथ मरुति–**

**मरुति** वायौ तच्छब्दे **झाङ्कृतं** कथ्यते।

**क्रेङ्कृतं क्रौञ्चहंसयोः ॥ १०७ ॥**

क्रौञ्चश्च हंसश्च क्रौञ्चहंसौ तयोः **क्रौञ्चहंसयोः क्रेङ्कृतशब्दो मतः** कथितः। तथा[4] चामरसिंहः– २०

"निषादर्षभगान्धारषड्जमध्यमधैवताः।
पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः॥"[5]

तथा च भरतनाटके[5]–

[6]"षड्जं मयूरा ब्रुवते गावस्त्वृषभभाषिणः।
अजाविकं तु गान्धारं क्रौञ्चः क्वणति मध्यमम्॥ २५
पुष्पसाधारणे काले पिकः कूजति पञ्चमम्।
धैवतं ह्रेषते वाजी निषादं बृंहते गजः॥
नासाकण्ठमुरस्तालुजिह्वादन्तांश्च संस्पृशन्।
षड्भ्यः संजायते यस्मात्तस्मात्षड्ज इति स्मृतः॥"

---

१. नवप्रसूता गौ धेनुः त्रिंशद्वर्षी हस्तिशावकः कलभस्तयोः शब्दः स्फीत्कृतमुच्यते इति शब्दार्थः। टीकास्वारस्यन्तु गोवत्सशब्दः स्फीत्कृतमित्येव प्रतिभाति। अत्र कोशान्तरप्रमाणाभावात्कविप्रयोगादर्शनाच्च मूलशब्दार्थानुसरणमेव शरणम्। २. तुलां तुलया वा कोटयति। कुट प्रतापने चुरादिः। अच् इः। यद्वा तुलाकारः कोटिरग्रमस्येति रामाश्रमः। ३. नुवनं नूयते वा नूः। णू स्तवने। क्विप्। नुवि पुरति नूपुरम्। पुर अग्रगमने। इगुपधेति कः। ४. शब्दभेदप्रसङ्गाद् ग्रन्थान्तरोक्तमन्यशब्दभेदं स्वरभेदं चाह। ५. अम० को० १।७।१। ६. "षड्जं" इत्यारभ्य "इति स्मृतः" इत्यन्तः "तथा च भरतनाटके" इत्येवं टीकायामुपन्यस्तः पाठः "निषादर्षभगान्धार"—इति क्षीरस्वामिभाष्येऽमरेऽविकल उपलभ्यते।

**प्रतीतं संस्तुतं लब्धं दृष्टं परिचितं स्मृतम् ।**

इट् स्तुते । प्रतीयते **प्रतीतम्** । ष्टुञ् स्तुतौ । ष्टु । "धात्वादेः षः सः ।" स्तुः सम्पूर्वः । सम्यक् प्रकारेण स्तूयते स्म **संस्तुतम्** । लभ्यते स्म **लब्धम्** । परिचीयते स्म **परिचितम्** । स्मर्यते स्म **स्मृतम्** ।

**संस्थितं दशमीस्थं च परासुं च मृतं विदुः ॥ १०८ ॥**

चत्वारो मृते । संतिष्ठते स्म **संस्थितः** । सम्पूर्वकस्तिष्ठतिः । दशमीं तिष्ठतीति **दशमीस्थः** । तथा च—

"प्रथमे जायते चिन्ता द्वितीये द्रष्टुमिच्छति ।
तृतीये दीर्घनिःश्वासश्चतुर्थे भजते ज्वरम् ॥
पञ्चमे दह्यते गात्रं षष्ठे भुक्तं न रोचते ।
सप्तमे स्यान्महामूर्छा उन्मत्तत्वमथाष्टमे ॥
नवमे प्राणसन्देहो दशमे मुच्यतेऽसुभिः ।
एतैर्वेगैः समाक्रान्तो जीवस्तत्त्वं न पश्यति ॥"

दशानां पूरणी दशमी तत्र तिष्ठतीति वा **दशमीस्थः** । परागता असवोऽस्य **परासुः** । म्रियते स्म **मृतं विदुः** कथयन्ति ।

**खेदो द्वेषोऽप्यमर्षश्च रुट्कोपक्रोधमन्यवः ।**

सप्त क्रोधे । खिद परिघाते । तुदादौ खिन्दति । दैन्ये रुधादिपाठात् खिन्ते (ततः खेदनं) [1]**खेदः** । भावे घञ्प्रत्ययः । द्विष अप्रीतौ अदादौ । द्वेषणं **द्वेषः** । मृष तितिक्षायाम् । चुरादौ । शक मृष क्षमायाम् । दिवादौ विभाषितः । मृषु सहने भ्वादौ परस्मैपदी । अमर्षणम् **अमर्षः** । कुप क्रुध रुष रोषे । रोषणं **रुट्** । सम्पदादित्वाद्भावे क्विप् । कोपनं **कोपः** । क्रोधनं **क्रोधः** । मन ज्ञाने । मन्यते[2] **मन्युः** । "[3]जनिमनिदसिभ्यो युः" । एभ्यो युप्रत्ययो भवति । उणादित्वाद्योरनादेशो न भवति ।

**हर्षः प्रमोदः प्रमदो मुत्तोषानन्दमुत्सवः ॥१०९॥**

सप्त हर्षे । हर्षणं **हर्षः** । प्रहर्षश्च । प्रमोदनं **प्रमोदः** । मदी हर्षे । प्रमदनं **प्रमदः** । "[4]मदेः प्रसमोर्हर्षे" प्रसमोरुपपदयोर्मदेरल् भवति हर्षार्थे । मोदनं **मुद्** दान्तः स्त्रियाम् । तुष तुष्टौ । तोषणं **तोषः** । आनन्दनम् **आनन्दः** । पुंसि । टुनदि समृद्धौ । उत्सवनम् **उत्सवः** । प्रीतिः । उत्कर्षः । उद्धवः[5] ।

**कृपाऽनुकम्पाऽनुक्रोशोऽहन्तोक्तिः करुणा दया ।**

षड् दयायाम् । क्रप कृपायाम् । क्रपणं **कृपा** । "[6]षानुबन्धभिदादिभ्योऽङ्" इत्यङ् । "क्रपेः सम्प्रसारणम्" इति परसूत्रेणाङ् सम्प्रसारणं च । स्वमते[8] क्रप कृपायाम् इति ज्ञापकात् सम्प्रसारणम् । "स्त्रियामादा ।" अनुकम्पनम् **अनुकम्पा** । अनुक्रोशत्यनेन **अनुक्रोशः** । पुंसि । न हन्तोक्तिः **अहन्तोक्तिः** । करोति विषादं चित्ते किरति वा **करुणा** । उणादौ डुकृञ् करणे । क्रियते **करुणा** । "ऋकृतॄवृदमिदःयो"

---

१ द्वेषपर्याये खेदपाठश्चिन्तनीयः । खेदपर्यायस्तु "शोकः शुक् शोचनं खेदः" इति अभि० चि० । क्रोधपर्यायस्तु—"कोपक्रोधाऽमर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ" इत्यमरः । २. मन्यते ह्यनया-वस्थयेनेति शेषः । ३. का० उ० सू० ४।१। ४. का० सू० ४।५।४४। ५. उद्धवशब्दस्योत्सवार्थे प्रमाणम्—"उद्धवो यादवभिदि मखे च क्रतुपावके" । इति मेदि० को० वा० व० ३२ श्लो० । ६ का० सू० ४।५।८२। ७ "क्रपेः सम्प्रसारणं च" पा०गण सू० ३।३।१०४। ८. कातन्त्रमतमत्र स्वमतम् । पाणिन्यादि-सूत्रं परमतम् । ९. का० उ० सू० २।६०।

र्विभ्य उनः" एभ्य उनः प्रत्ययो भवति । दवनं द्रुघणः । दव दानगतिहिंसादानेषु । भिदाद्यङ् ।

**शेमुषी धिषणा प्रज्ञा मनीषा धीस्तथाऽऽशयः ॥ ११० ॥**

षड् बुद्धौ । शे इत्यव्ययम् । मोहः । तं मुष्णाति शमयति इति **शेमुषी**[1] । धृष्णोत्यनया **धिषणा**[2] । प्रज्ञानं प्रज्ञा[3] । मनुते जानात्यनया **मनीषा** । मनस ईषा मनीषा वा । "हल[4]लाङ्गलयोरीषे मनसश्च" इत्यनेन अन्त्यस्वरादिर्लोपः । अत्र सलोपश्च । चकाराधिकाराल्लोकोपचाराद्वा सलोपः । ध्यै चिन्तायाम् । ध्यानं **धीः**[5] । सम्पदादित्वाद्भावे क्विप्[6] । 'ध्याप्योः सम्प्रसारणम्'[7] अनेनैव सम्प्रसारणं दीर्घत्वं च । प्र० सिः । "[8]रेफसोर्विसर्जनीयः" । आशेते तिष्ठति सर्वमत्राशयः । तथा—प्रेक्षा । प्रतिभा । बुद्धिः । मतिः । मेधा । संख्या । संवित्तिः । उपलब्धिः ।

**प्राज्ञमेधाविनौ विद्वानभिरूपो विचक्षणः ।**
**पण्डितः सूरिराचार्यो वाग्मी नैयायिकः स्मृतः ॥ १११ ॥**

दश विदुषि । प्रजानातीति प्रज्ञः । प्रज्ञादित्वादण् **प्राज्ञः** । मेधास्त्यस्य **मेधावी** । "मायामेधास्रजो विन्" वाग्विन्यास्योऽस्त्यर्थे विन्नन्तः विन्विनाः । शेषेभ्यो मतुरित्यर्थे । मतिमान् । बुद्धिमान् । विद ज्ञाने । विद । वेत्ति जानातीति **विद्वान्** ।[9] "वर्तमाने शन्तृ" शतृङ् । "[10]अन्वि०" **अदादि**[11] । "वेत्तेः [12]शतुर्वसुः" । शतृङ् स्थाने वसुः । तदादेशास्तद्वद्भवन्ति इति वचनात् वसोः शतृवद्भावेन सार्वधातुकत्वात् "अर्तीण्[13]धयेवैकस्वरातामिड्वसौ" अनेनैकस्वरत्वात्प्राप्त इड् न भवति । विद्वन् संजातम् । "सिः । "[14]सान्तमहतोर्नोपधायाः" दीर्घः । विदुषोऽपि । अभिगतं रूपं येनाभिरूपः । रूपं विद्या ।

"कोकिलानां स्वरो रूपं नारीरूपं पतिव्रता ।
विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ।"

चक्ष धातुर्विपूर्वः । विविधं चष्टे **विचक्षणः** । नन्दादेयुः । योऽनः । [15]स्पु० णत्वम् । विचक्षणो विद्वान् इत्यनेन विचक्षण इति निपातः । निपातस्य फलं ख्यादेशो न भवति । पण्डा बुद्धिः । पण्डा संजाताऽस्येति **पण्डितः** । "[17]तारकितादिदर्शनात्संजातेऽर्थे इतच् ।" "[18]इवर्णावर्णे०" आकारलोपः । सिः । रेफः । षूङ् प्राणिगर्भविमोचने । सूते बुद्धिं **सूरिः** । "[19]भूस्वदिभ्यः क्रिः" एभ्यः क्रिप्रत्ययो भवति । को यावदर्थः । [20]आचर्यते **आचार्यः** । "चरेराङि चागुरौ" । तथा चोक्तम् -[21]इन्द्रनन्दिनीतिशास्त्रे—

"पञ्चाचाररतो नित्यं मूलाचारविदग्रणीः ।
चतुर्वर्णस्य सङ्घस्य यः स आचार्य इष्यते ॥"

---

१. शेते इति शेमोहः । विच् । तम्मुष्णातीति, मूलविभुजादित्वात्कः । गौरादिङीप् । शमेः ढसो एत्वाऽभ्यासलोपे उगितश्चेति ङीपि शशामेति शेमुषीति क्षी० स्वा० । २. "धिष शब्दे" । दधेशीति । क्षी० स्वा० । ३. प्रज्ञायतेऽनयेत्यन्यत्र । ४. का० रू० पूर्वा० २८ सू० । ५. ध्यायतेऽनया धीरित्यन्यत्र । ६. "सम्पदादिभ्यः क्विप्" का० रू० उ० ८०५ सू० । ७. का० रू० मा० ६५८ सू० । ८. का० सू० २।३।६३। ९. का० सू० ३।६।१५। अत्र दुर्गवृत्तिः । १०. "वर्तमाने शन्तृङानशावप्रथमैकाधिकरणामन्त्रितयोः" । का० सू० ४।४।२। ११. "अन्विकरणः कर्तरि" का० सू० ३।२।३२। १२. "अदादेर्लुग्विकरणस्य" का० सू० ३।४।९२। १३. "शन्तुर्वसुः" । का० सू० ४।४।४। १४. का० सू० ४।६।७६। १५. का० सू० २।२।१८। १६. का० सू० २।४।४८। १७. का० रू० पू० ५०८ । १८. का० सू० २।६।४४। १९. का० उ० सू० ३।५३ । २०. का० सू० ४।२।१४। २१. नीतिसा० १५ श्लो० ।

प्रशस्ता वागस्त्यस्य **वाग्मी**। न्याये विचारे नियुक्तो **नैयायिकः**। धीरः। लब्धवर्णः। विपश्चित्। वृद्धः। आप्तरूपः। सन्। मनीषी। ज्ञः। दोषज्ञः। कोविदः। प्रबुद्धः। सुधीः। कृती। कृष्टिः। कविः। व्यक्तः। विशारदः। संख्यावान्। मतिमान्।

## पारिषद्यो बुधः सभ्यः सदः संसत्सभोचितः।

षद् सभापुरुषे। परिषदि सभायां भवः **पारिषद्यः**। यण्। बुध अवगमने। बोधतीति **बुधः**। सभायां साधुः **सभ्यः**। कुशलो योग्यो हितश्च साधुरुच्यते। सदसि उचितो योग्यः **सदउचितः**। **संसदुचितः, सभोचितः**। सभासद्। सभास्तारः। सामाजिकः।

## परिषत्सभाऽस्थानपती—

षदः सभायाम्। परिषीदन्त्यस्यां **परिषद्**। सह भान्त्यस्यां सभा। आसमन्तात्स्थीयतेऽस्मिन् **आस्थानम्**।

([२] **अधिपति राजा**) **पतिः**—आस्थानं सभा इत्यादिपर्यायनामतोऽधिपतिः **पति**रित्यादिपर्यायशब्देषु सत्सु राज्ञो नामानि भवन्ति। परिषदधिपतिः। परिषत्पतिः। सभाधिपतिः। सभापतिः। आस्थानाधिपतिः। आस्थानपतिः।

## राजसूयो नृपक्रतुः ॥ ११२ ॥

मण्डलेश्वरप्रजायां (प्रयाजे) क्रौ। षुञ् अभिषवे। षु। "[३]धात्वा०" सः। राजन्पूर्वः राज्ञा सोतव्यो राजा सूयते वा यस्मिन्निति **राजसूयः**। "[४]राजसूयश्च"। क्यप्प्रत्ययान्तो निपातः। नृपाणां राज्ञां क्रतुः **नृपक्रतुः**। तथा च "[५]स्मृतौ—

> "गोसवे सुरभिं हन्याद्राजसूये तु भूभुजम्।
> अश्वमेधे हयं हन्यात् पौण्डरीके च दन्तिनम् ॥"

## विष्टरं मल्लिकापीठमासन्दीमासनं विन्दुः।

षद्वासने। स्तृञ् आच्छादने। विपूर्वः। विस्तरणं **विष्टरः**। "स्वर[६]वृदृगमिग्रहामल्।" अल्। नाम्यन्तगुणः। "[७]वौस्तृणातेः"। संज्ञायां सस्य षत्वम्। "[८]तवर्गस्य षटवर्गाट्टवर्गः।" मल्ल्यते धार्यते **मल्लिका**। पेठतीति **पीठम्**। "[९]पृषोदरादित्वाद्दीर्घः। आ समन्तात्सीदति तिष्ठत्यस्यामासन्दी"। आस्यते

१. अत्र प्रमाणम् अभि० चि० ३।५। "विद्वान् सुधीः कविर्विचक्षणलब्धवर्णा ज्ञः प्राप्तरूप-कृतिकृष्ट्यभिरूपधीराः। मेधाविकोविदविशारदसूरिदोषज्ञाः प्राज्ञपण्डितमनीषिबुधप्रबुद्धाः ॥ व्यक्तो विपश्चित्संख्यावान् सन्।" इति। २. "अधिपतो राजा" इति प्रतीकमाश्रित्य व्याख्यादर्शनादयं मूल-पद्यांश इति, न भ्रमितव्यम्। पूर्वापरपादयोर्मध्ये तत्समावेशासम्भवात् पद्यत्वेन स्वतन्त्रपादत्वाभावात्, अत्र राजवर्णनस्याप्रसक्तत्वाच्च। एवं च सभाप्रसङ्गेन तदधिपते राजव्यपदेशार्थं-टीकाकर्तुर्विशेषवचनमित्येव युक्तं भाति। ३. का० सू० ३।८।२४। ४. का० सू० ४।२।४१। ५. 'स्मृतौ' इत्युक्तम्। परमविकलः श्लोको यशस्तिलके आ० ७ क० ३० श्लो० २ उपलभ्यते। ६. का० सू० ४।५।४१। ७. का० सू० ३।८।५। ८. शा० सू० १।२।१३२। ९. "आस उपवेशने"। अव्ययः" पा० उ० सू० ४।१६८। इति दप्रत्ययो भवति, अनागमश्चित्वं च। ङित्वान्ङीप्। तथा चोक्तम्—"स्याद् वेत्रासनमासन्दी" इति ३।३४८। अभि० चि०।

उपविश्यतेऽस्मिन्नासनम् । "[1]कृत्ययुटोऽन्यत्रापि च" युट् । विदुः कथयन्ति ।

विष्टपं भुवनं लोको जगत्—

चत्वारो जगति । [2]विष्टपन्त्यत्र विष्टपम्[3] । भूतानि भवन्त्यस्माद्भुवनम् । लोक्यते लोकः । गच्छतीत्येवंशीलं जगत् । "[4]द्युतिगमोर्द्वे च" क्विप् । गमो द्विर्वचनम् । अभ्यासमकारलोपः । "[5]कवर्गस्य चवर्गः" गस्य जः । ज गम् जातम् । "[6]पञ्चमो०" । दीर्घः । "[7]यमनतनगमां क्वौ" पञ्चमलोपः । आत् अत् । "[8]धातोस्तोऽन्तः पानुबन्धे" तोऽन्तः । [9]वेर्लोपः । सिः । नपुंसकम् ।

तस्य पतिर्जिनः ॥ ११३ ॥

तस्य भुवनस्य पतिर्जिनः कथ्यते । अनेकभवगहनव्यसनप्रापणहेतून् कर्मारातीन् जयतीति जिनः । "[10]इण्नशजिकृषिभ्यो नक्" । विष्टपपतिः । लोकपतिः । जगत्पतिः । इत्यादीनि जिनस्य पर्यायनामानि ज्ञातव्यानि ।

वर्षीयान् वृषभो ज्यायान् पुरुराद्यः प्रजापतिः ।

ऐक्ष्वाकुः (कः) काश्यपो ब्रह्मा गौतमो नाभिजोऽग्रजः ॥११४॥

द्वादश वृषभे । अतिशयेन वृद्धो वर्षीयान् । "[11]प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः" । वृषेण अहिंसालक्षणोपेतधर्मेण भातीति [12]वृषभः । "[13]ऋषिवृषिभ्यां यण्वत्" । आभ्यामभः प्रत्ययो भवति स च यण्वत् । अयमेषां मध्ये प्रकृष्टो वृद्धः प्रशस्यो वा ज्यायान् । "वृद्धस्य[14] च ज्यः" वृद्धशब्दस्य ज्यादेशो भवति । पॄ पालनपूरणयोः । पृणाति पालयतीति पुरुः । "[15]इषिशृविभिदिगृधिचुदिपॄभ्य कुः" एभ्यः कुप्रत्ययो भवति । अस्मिन्नहनि अद्य[16] । इदमोऽह्नार्थो यश्च परविधिः "सद्योऽद्या[17] निपात्यन्ते" इति वचनात् । ( आदौ भव आद्यः ) प्रजानाम् इन्द्रधरणेन्द्रचक्रवर्त्यादीनां पतिः स्वामी प्रजापतिः । इषु इच्छायाम् । वाञ्छ्यते लोकैः ऐक्ष्वाकः[18] । तथा चार्षे महापुराणे—

"अक्नानाच्च तदेक्षूणां रससंग्रहणे नृणाम् ।
इक्ष्वाकुरित्यभूद्देवो जगतामभिसम्मतः ॥"

काश्यं क्षत्रियतेजः पातीति काश्यपः । तथा च महापुराणे—

"काश्यमित्युच्यते तेजः काश्यपस्तस्य पालनात् ।"

बृंहतीति ब्रह्मा ।

---

१. का० सू० ४।५।९२। २. "विप स्तप प्रतिघाते" अम० को० क्षी० स्वा० भाष्य एवोपलभ्यते, न तु पाणिनिधातुपाठे । ३. विशन्त्यत्रेति रामाश्रमः । विशन्त्यस्मिन् जीवाजीवा इति हेमचन्द्रः । ४. का० सू० ४।४।४८ । ५. का० सू० ३।३।१३ । ६. का० सू० ४।१।५५। ७. का० सू० ४।१।६९। ८. का० सू० ४।१।३०। ९. का० सू० ४।१।३४।" वेर्लोपोऽपृक्तस्य" इति पूर्णं सूत्रम् । १०. का० उ० सू० २।५।१ ११. पा०सू० ६।४।१५७। १२. वृषेण भातीति विग्रहे आतोऽनुपसर्गे कः । भा दीप्तौ । वर्षति धर्मामृतमिति विग्रहे "ऋषिवृषिभ्यां यण्वत्" इत्यभः । "वृषु सेचने" । १३. का०उ०सू० ३।१३ । १४. हे०श० ७।४।५।२ १५.का० उ० सू० १।१०। १६. अत्र आद्यशब्दो न त्वद्यशब्दः । तेनादौ भव आद्य इति युक्तः प्रतिभाति । १७. का० सू० २।६।३७ १८. इक्षूणाम् आ ( रसापकर्षणम् ) अक्नीति इक्ष्वाकुः । तत ऐक्ष्वाकः । तत्र प्रमाणमाह—"अक्नानाच्चेति" सङ्गतिः ।

"आत्मनि मोक्षे ज्ञाने वृत्तौ ताते च भरतराजस्य ।
ब्रह्मेति गीः प्रगीता न चापरो विद्यते ब्रह्मा ॥"

अतः परो ब्रह्मा नास्ति । गौतमो गोत्रोज्ज्वलत्वाद् **गौतमः** । आर्षे महापुराणे—

"गौः स्वर्गः स प्रकृष्टात्मा गौतमोऽभिमतः सताम् ।
स तस्मादागतो देवो गौतमश्रुतिमन्वभूत् ॥"

नाभेर्जातो **नाभिजः** । अग्रे जातोऽ**ग्रजः** । अदृष्टत्वात् ।

**सन्मतिर्महतिर्वीरो महावीरोऽन्त्यकाश्यपः ।**
**नाथान्वयो वर्धमानो यत्तीर्थमिह साम्प्रतम् ॥ ११५ ॥**

सती समीचीना मतिर्यस्य स **सन्मतिः** । महापुराणे—

"तत्सन्देहे गते ताभ्यां चरणाभ्यां च भक्तितः ।
अस्तावि सन्मतिर्देवो भावीति समुदाहृतः ॥"

( महाते पूज्यते इति महतिः ) । महती पूजा यस्य स **महतिः** । विशिष्टाम् इन्द्राद्यसम्भाविनीम् ईम् अन्तरङ्गां समवसरणानन्तचतुष्टयलक्षणां लक्ष्मीं रात्यादत्ते इति **वीरः** । वीर इति नाम कस्माज्जातम् ? जन्माभिषेके बालवपुःशरीरदर्शनादाशङ्कितवृत्तेरिन्द्रस्य सामर्थ्यख्यापनार्थं पादाङ्गुष्ठेन मेरुसंचालनादिन्द्रेण वीरनाम कृतम् । महांश्चासौ वीरः **महावीरः** । तथा च बृहत्प्रतिक्रमणभाष्ये—

"कुमारकाले आमलकीक्रीडायां क्रीडतः सङ्गमदेवेन विमानस्खलनाद्भगवत्पो (त्रो)दनार्थं महाफणाटोपोपेतं भयानकं सर्परूपं विकृत्य वृक्षो वेष्टितः । भगवाँस्तस्मान्मस्तकादिपादन्यासं कृत्वा वृक्षादुत्तीर्णः । ततस्तेन महावीर इति नाम कृतम् ।" अन्त्यं कार्श्यं तेजः पातीति **अन्त्यकाश्यपः** । ततः परस्तीर्थंकरो नास्ति । नाथोऽन्वयो यस्य स **नाथान्वयः** । तथा च—

"चत्वारः पुरुवंशजा जिनवृषा धर्मोदयस्ते पुन-
र्नेमिश्रीमुनिसुव्रतौ हरिकुले वीरोऽथ नाथान्वये ॥
शेषाः सप्तदशाधिका जिनवरा इक्ष्वाकुवंशोद्भवाः
प्रोद्यन्मोहविनाशनैकनिपुणाः सङ्घस्य सन्तु श्रियै ॥"

अव समन्तात् ऋद्धं परमातिशयप्राप्तं मानं केवलज्ञानं यस्यासौ **वर्धमानः** ।

"वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥"

इत्यवशब्दस्याकारलोपः । तथा ऋषिश्च प्रत्यक्षवेदी—भगवतो हि गर्भावतारादौ पित्रे-न्द्रादिविनिर्मितां विशिष्टां पूजां स्तुतिं स्वस्य च ऋद्धिवृद्ध्यादिकं दृष्ट्वा वर्धमान इति नाम कृतम् । **इह** अस्मिन् पञ्चमकाले यस्य तीर्थं **यत्तीर्थम् साम्प्रतम्** अधुना वर्तते ।

**सर्वज्ञो वीतरागोऽर्हन् केवली धर्मचक्रभृत् ।**
**तीर्थङ्करस्तीर्थकरस्तीर्थकृद्दिव्यवाक्पतिः ॥ ११६ ॥**

नव जिनेन्द्रे । ज्ञा अवबोधने । ज्ञः । **सर्वज्ञः** । सर्वं जानाति वेत्तीति सर्वज्ञः । "आतोऽनुपसर्गात्कः"[1] अप्रत्ययः । "के यण्वच्च योक्तवर्जम्"[2] इति यण्वद्भावात् आलोपः । विशिष्टा ई तां प्रति इतः प्राप्तो रागो यस्य स **वीतरागः** । अरिहननाद्रजोहनन (स्या) भावाच्च परिप्राप्तानन्तचतुष्टयस्वरूपः सन् इन्द्रनिर्मिता-

---

१. का० सू० ४।३।४ । २. का० सू० ४।१।७।

मतिशयवतीं पूजामर्हतीति अर्हन् । पाठित्वाऽज्जमनरजादिजनुर्दं निग्रहार्थं यतेति वाऽर्हन् । त्रिकालं केवलज्ञानमस्त्यस्य **केवली** । जिनधर्मचक्रं सहस्रारयुक्तं तीर्थकृदग्रे निराधारतया विहारकाले गगने गच्छत् सर्वजीवदयासूचकं रत्नमयमायुधविशेषं बिभर्ति तद्वाऽनुभवतीति **धर्मचक्रभृत्** । तीर्थं द्वादशाङ्गशास्त्रं करोतीति **तीर्थङ्करः** । तीर्थं करोतीति तीर्थंकृत् । दिव्यवाचाम्पतिः **दिव्यवाक्पतिः** । तथा चोक्तम्—

"यत्सर्वात्महितं न वर्णसहितं न स्पन्दितौष्ठद्वयं
नो वाञ्छाकलितं न दोषमलिनं न श्वासरुद्धक्रमम् ।
शान्तामर्षविषैः समं पशुगणैः संकर्णितं कर्णिभि-
स्तन्नः सर्वविदः प्रनष्टविपदः पायादपूर्वं वचः ॥" ५

**चेलं निवसनं वासश्चीरमम्बरमंशुकम् ।**

चल् वस्त्रे । चिल्यते वस्यतेऽनेन **चेलं** चैलं च । निवसत्यनेन **निवसनं**, विवसनं, वसनं च । वस्यतेऽनेनाङ्गं **वासः** । सान्तम् । चिनोति उपार्जयति सारतां **चीरम्**, चीवरं च । अम्बते गच्छति शोभामनेन **अम्बरम्** । उभयम् । अंशून् कारयति **अंशुकम्** । क्लीबे । कर्पटम् । आच्छादनम् । वस्त्रम् । सिचयः । पटः, पटम्, पटी । पोतः । प्रावरः । प्रावारः । संव्यानं च । १०

**वस्त्राद्यन्तः दिगाद्यादिसंज्ञितो वृषभेश्वरः ।**

वस्त्रादयः वस्त्रपर्याया अन्ते दिगादयो दिक्पर्याया आदौ यस्य **तत्संज्ञितो वृषभेश्वरः** । वस्त्रादिकं नाम अन्ते दिगादिकं नाम आदौ यथा—दिक्चेलः । दिग्वासाः । दिग्वसनः । दिगम्बरः । दिगंशुकः । दिग्वस्त्रः । काष्ठाचेलः । काष्ठानिवसनः । काष्ठावासाः । काष्ठाचीरः । काष्ठाम्बरः । काष्ठांशुकः । काष्ठावस्त्रः । ककुप्चेलः । ककुन्निवसनः । ककुब्वासाः । ककुप्चीरः । ककुबम्बरः । ककुबंशुकः । ककुब्वस्त्रः । आशाचेलः । आशानिवसनः । आशावासाः । आशाचीरः । आशाम्बरः । आशांशुकः । आशावस्त्रः । दक्षकन्याचेलः । दक्षकन्यावासाः । दक्षकन्याचीरः । दक्षकन्याम्बरः । दक्षकन्यांशुकः । दक्षकन्यावस्त्रः । हरिच्चेलः । हरिन्निवसनः । हरिद्वासाः । हरिच्चीरः । हरिदम्बरः । हरिदंशुकः । हरिद्वस्त्रः । इत्यादीनि वृषभेश्वरनामानि ज्ञातव्यानि । १५ २०

**कुङ्कुमं रुधिरं रक्तम्—**

त्रयः कुङ्कुमे । काम्यते जनैः **कुङ्कुमम्**[1] । रुधिर् आवरणे । रुणद्धि **रुधिरम्** । "[2]तिमिरुधिमन्दिमुदिचिशुषिभ्यः किरः" । रज्यतेऽनेन **रक्तम्**[3] । २५

**कस्तूरी मृगनाभिजम् ॥ ११७ ॥**

द्वौ मृगमदे । के सूयते **कस्तूरी**[4] । मृगनाभेर्जातम् **मृगनाभिजम्** । मृगनाभीजं च ।

**कर्पूरं घनसारं च हिमं सेवेत पुण्यवान् ।**

कृपू सामर्थ्ये । कल्पते **कर्पूरः** । "[5]कृपेर्लरप्रत्ययः । "[6]नाम्यन्तगुणः ।" "कृपे[7] रोलः" कथम्,

---

१. कुक्यते आदीयते कुङ्कुमम् । कुक् आदाने । "कुकुकौतुम च" औ० उ० इति उमक् प्रत्ययो नुमागमश्च । इति रामाश्रमः । कुं कौतीति क्षीरस्वामी । २. का० उ० १।२३। ३. तथा चोक्तम्-मेदिन्याम् ता० ५० श्लो० ४९ । "रक्तोऽनुरक्ते नील्यादि रञ्जिते लोहिते त्रिषु । क्लीबन्तु कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि" । इति । ४. के शिरसि सूयते प्रशस्तधार्यत्वेन मन्यते इत्यर्थः । विकसति सौगन्ध्यमस्या इति टी० स्वा० । "कस गतौ" कसति गच्छति गन्धोऽस्या इति रामाश्रमः । "श्वर्जिपिञ्जादिभ्य ऊरोलचौ" । पा० उ० ४।९० । इत्यमरः । पृषोदरादित्वात्तुट्, गौरादित्वान्ङीप् च । ५. "खर्जिकृपिमसिपिञ्जादिभ्य ऊरोलौ" इति का० उ० ३।६०। । ६. नाम्यन्तयोर्धातुविकरणयोर्गुणः" का० सू० ३।५।१ । ७. का० सू० ३।६।९७।

त्यम् । उणादयो हि बहुलम्, तेन—

"[1]क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥"

घनस्येव सारोऽस्य **घनसारः** । हि गतौ । हिनोतीति **हिमम्**[2] । "[3]इन्धियुधिश्याधूहिभ्यो

५ मक्" । चन्द्रसंज्ञः । **सिताभ्रः** । हिमवालुकः ।

**समालम्भोऽङ्गरागश्च प्रसाधनविलेपनम् ॥ ११८ ॥**

चत्वारो रागे । सम्यक् प्रकारेणालभ्यते [4]**समालम्भः** । अङ्गस्य रागोऽ**ङ्गरागः** । प्रकर्षेण साध्यते मण्ड्यते **प्रसाधनम्** । विलिप्यते **विलेपनम्** ।

**भूषणाभरणं रुच्यम्—**

१० त्रय आभरणे । तसि भूष अलङ्कारे । भूष्यते मण्ड्यतेऽनेन **भूषणम्** । आ समन्ताद् भ्रियते शोभा धार्यतेऽनेन **आभरणम्** । रोचते **रुच्यम्** । अलङ्कारः । परिष्कारः । मण्डनम् ।

**माल्यं मालागुणस्रजः ।**

चत्वारः पुष्पमालायाम् । मालैव **माल्यम्** । चातुर्वर्ण्यादित्वात्ष्यञ् । माल्यते धार्यते **माला** । अथवा मां लान्ति पुष्पाण्यत्र माला । स्त्रियाम् । गुणतीति **गुणः** । "नाम्युपधप्रीकृगृज्ञां[5] कः" । सृज्यते

१५ **स्रक्** । "ऋत्विग्[6]दधृक्स्रगिति" साधुः ।

**मेखला रसना काञ्ची ।**

त्रयः काञ्च्याम् । मेहनस्य खं तस्य मां लातीति निरुक्तिः । मिनोति प्रक्षिपति कामिचित्तमिति वा **मेखला**[7] । रसति शब्दं करोतीति **रसना**[8] । रस कान्तौ ( शब्दे ) सौत्रोऽयं धातुः । श्रोणी शोभां कचति( काञ्चते )[9] बध्नातीति काञ्चिः । स्त्रियामीः । **काञ्ची** । तसकी । कलापः । कटिसूत्रम् । सारसनम् ।

२० शिञ्जिनी[10] च ।

**हेमपर्यायसूत्रकम् ॥ ११९ ॥**

**हेमशब्दात्सूत्रशब्दे** प्रयुज्यमाने मेखलापर्यायनामानि भवन्ति । हेमसूत्रम् । अष्टापदसूत्रम् । स्वर्णसूत्रम् । कनकसूत्रम् । अर्जुनसूत्रम् । काञ्चनसूत्रम् । हिरण्यसूत्रम् । जातरूपसूत्रम् । शातकुम्भसूत्रम् । हाटकसूत्रम् । कलधौतसूत्रम् । तपनीयसूत्रम् । कार्तस्वरसूत्रम् । इत्यादीनि ज्ञातव्यानि ।

२५ **श्रोणीबिम्बं कटीसूत्रं मानसूत्रमिताहितम् ।**

त्रयः पट्टसूत्रे । श्रोण्याः कट्याः बिम्बं प्रच्छादकं **श्रोणीबिम्बम्** । कटीं सूत्रयति वेष्टयतीति

---

१. शा०सू० १।३।१४९। अत्र कारिकारूपेण पठितः । २. हिनोति गच्छतीत्यर्थः । कर्पूरस्याशूत्पतनस्वभावात् । हन्ति औष्ण्यमिति रामाश्रमः । ३. का० उ० १।५५। ४. आलभ्यते विलिप्यते इत्यर्थः । ५. का०सू० ४।२।५१। ६. का०सू० ४।३।७३। ७. मखं गतिं लातीति पृषोदरादित्वान्मेखलेति रामाश्रमः । मुहुः स्खलतीति हेमचन्द्रः । मीयते प्रक्षिप्यते इति क्षी०स्वा० । "मिञः खलच्चैच्च" २।३।१७। सर० कं० । ८. अश्नुते कटिम्,अश्नाति कामिचित्तं वेति रामाश्रमहेमचन्द्रौ । 'अशो रश्च' इति सूत्रादेशश्च । ९. "काचि दीप्तिबन्धनयोः" । "सर्वधातुभ्य इन्" । १०. शिञ्जिनी नूपुरम् । मेखलापर्याये तत्पाठोऽयुक्तः । तदुक्तम्—"नूपुरन्तु तुलाकोटिः पादतः कटकाङ्गदे । मञ्जीरं हंसकं शिञ्जिनी,—अभि० चि० ३।३३०।

कटीसूत्रम् । मानं प्रमाणीभूतं सूत्रयतीति मानसूत्रम् । केचिद् रागसूत्रं पठन्ति पट्टसूत्रं च ।

**मदिरां मद्यमैरेयं शीधु कादम्बरीमिराम् ॥ १२० ॥**

**प्रसन्नां वारुणीं हालां मधुवारां सुरां विदुः ।**

एकादश मद्ये । माद्यत्यनया मदिरा । मधिष्ठा च । माद्यतेऽनेन मद्यम् । "[1]यमिकदिगदा त्वनुपसर्गे" । इरायां ग्रामसीमायाम् साधु ऐरेयम् । शेरतेऽनेन शीधुः । "[2]शीङो धुक्" । शीधो(धो)स्त्रिके पठितत्वात् शीधुप्रकृतेः[3] क इति व्याख्यत् । अथवा पीतेऽत्र जनः शेते शीधुः । उभयम् । तालव्यः । कुत्सितं नीलमम्बरं यस्य स कदम्बरो बलदेवः । तस्येयं प्रिया कादम्बरी । कुत्सितमम्बते यात्यनया वा कादम्बरी । एति परिभ्राम्यत्यनया इरा । आत्मा प्रसीदत्यनया प्रसन्ना । आदन्तः । वरुणस्यापत्यं वारुणी । जहाति लज्जामनया हाला । स्त्रियाम् । मधु वारयतीति मधुवारा । सुवति सूते मदं सुरा । तथा द्विसन्धानभाष्ये—"अतिप्रबलप्रभावेन समुद्रमथनान्निष्कासिता सुरैः सुरा ।"

"लक्ष्मीकौस्तुभपारिजातकसुरा धन्वन्तरिश्चन्द्रमा
गावः कामदुघाः सुरेश्वरगजो रम्भादिदेवाङ्गना ॥
अश्वः सप्तमुखः सुधा हरिधनुः शङ्खो विषं चाम्बुधेः
रत्नानीति चतुर्दश प्रतिदिनं कुर्वन्तु ते मङ्गलम् ॥

विदुः कथयन्ति । मधुः । आसवः । परिस्रुता । स्वादुरसा । शुण्डा । गन्धोत्तमा । माधवकः । माधवः । कल्यं, कल्या । कश्यं, कश्या । परिस्रुत् । तान्तं स्त्रियाम् । तालव्यदन्त्यः । [4]हारहूरं । कापिशायनम् । मृद्वीकम् । माध्वीकम् ।

**शुण्डासवः—**

मद्यविशेषौ द्वौ । सुन्व(न्व)न्ति तृप्तिं गच्छन्त्यनया शुण्य (न्य) ते पातुमभिगम्यते वा शुण्डा[5] । स्त्रीबोः । शुण्डः । आसुते जनयति मदम् आसवः । पुंसि ।

**तद्विधायी शौण्डो मद्येत मद्यपः ॥ १२१ ॥**

द्वौ कल्यपालके । शुण्डायां मद्ये भवः शौण्डः[6] । मद्यं पिबति पाययतीति वा मद्यपः ।

**सक्तोऽक्षद्यूतपानेषु विचित्रा शब्दपद्धतिः ।**

त्रयो मद्यासक्ते । अक्षेषु द्यूतेषु सक्तः अक्षसक्तः । द्यूतसक्तः । पानेषु सक्तः पानसक्तः । विचित्रा नाना प्रकारा शब्दानां पद्धतिः श्रेणिः शब्दपद्धतिर्वर्तते । अक्षशौण्डः । अक्षधूर्तः । अक्षकितवः । "[7]सप्तमी शौण्डैः" । व्याल, अभि, पटु, पण्डित, कुशल, चपल, निपुण, स्वेत्यादि शौण्डादिराकृतिगणः ।

**सर्पिर्हैयङ्गवीनाज्यं—**

त्रियः सर्पिषि । सप धातवः सर्पन्त्यनेन सान्तं सपः । क्लीबे । "[8]अर्चिशुचिरुचिहुसृपिछादिछर्दिभ्य इसिः" । सृप्लृ गतौ । ह्यो गोदोहस्य विकारो हैयङ्गवीनम् । इदं हैयङ्गवीनं ह्यस्तनदिनगोदोहे सञ्जातम् । उक्तं च—

"[9]तत्तु हैयङ्गवीनं यद् ह्योगोदोहोद्भवं घृतम् ।"

---

१. का० सू० ४।२।११३। २. उ० सू० २।३३। ३. सीधुरिति दन्त्योऽप्यन्यत्र पाठः । ४. "शुण्डा हाला हारहूरं प्रसन्ना वारुणी सुरा ।" अभि० चि० ३।५६७। ५. शुण्डाशब्दो मदिरावाची पानमदस्थानमपि । तदुक्तम्—"शुण्डा हाला हारहूरम्" अभि० चि० ३।५६७। "शुण्डा पानमदस्थानम्" अभि० चि० ३।५७०। ६. शुण्डायां मदिरापानागारे भव इति रामाश्रमः । 'शुण्डा मदिरा तुल्यस्येति ज्योत्स्नादित्वादण्' इति हेमचन्द्रः । ७. पा०सू० २।१।४०। ८. का०उ०सू० २।४४ । ९. अम० को० २।९।५२।

तथा चाशाधरमहाभिषेके—

"आयुः पीयूषकुण्डैः स्मृतिमणिखनिभिः शेमुषीवल्लिकन्दै-
र्मेधासस्याम्बुवाहैर्वरफलतरुभिर्न प्ररत्नाधिदेवैः।
निष्टप्तैर्माणपेयप्रचुरमधुरिमस्नेहधूमोऽपि येषां
५ कुर्मो हैयङ्गवीनैः स्नपनमपनय ध्वान्तभानोर्जिनस्य ॥"

पीयते क्षिप्यते पित्तमनेनाज्यम्। तथा क्षीरस्वामिनि—"आ अञ्जनीयमाज्यम्"। "आङ्पूर्वादञ्जेः संज्ञायाम्" क्यप्। घृतम्। आधारः। स्नूलम्। साज्यम्। हविः।

**दुग्धं क्षीराऽमृतं पयः ॥१२२॥**

चत्वारो दुग्धे। दुह प्रपूरणे। दुह्यते **दुग्धम्**। घस्लृ अदने। सौत्रोऽयम्। घस्यते **क्षीरम्**।
१० 'घसेः किच्च' ईरमात्रः। गमहनजनेत्युपधालोपः। "अघोषेष्वशिटां प्रथमः" कः। "शासिवसि-घसीनां च" षत्वम्। कृषसंयोगे क्षः। "व्यञ्जनमस्वर०"। उणादौ क्षिणु क्षणु हिंसायाम्। क्षणोतीति **क्षीरम्**। "क्षीरोशीरगभीरगम्भीरा" एते ईरप्रत्ययान्ता निपात्यन्ते। न म्रियतेऽनेन **अमृतम्**। अजरामरकारित्वात्। पीयते वा सरसत्वात् **पयः**। अमृत्। ऊधस्यम्। स्तन्यम्। पीयूषं, पयूषं च।

**उदश्विन्मथितं तक्रं कालशेयं पिबेद् गुरुः।**

१५ चत्वारस्तक्रे। उदकेन श्वयति वर्धते **उदश्वित्**। तान्तस्तालव्यमध्यः। मथ्यते (स्म) **मथितं** घोलं च। तञ्चति द्रवं गच्छति तक्रम्। उभयम्। "तक्रं त्रिभागभिन्नं तु केवलं मथितं स्मृतम्" इति धन्वन्तरिः। कलश्यां गर्गर्यां भवं **कालशेयं पिबेत् गुरुः**। तत्कालीनं गरिष्ठम्। अरिष्टम्। दण्डाहतम्।

**प्रायो वयो दशानेहा पूर्णं यौवनकं विदुः ॥ १२३ ॥**
२० **तारुण्यं यौवनं च**

अष्टौ तारुण्ये। प्रकर्षेण परलोकमेत्यनेन **प्रायः** पुंसि। सान्तोऽपि प्रायस्। वयते **वयः**। दशति चुम्बति स्त्रीमुखं **दशा**। न ईहते चेष्टते **अनेहा**। "अनेहसोऽप्सरसोऽङ्गिरसः०" एते असन्-प्रत्ययान्ता निपात्यन्ते। ईह चेष्टायाम्। पूरी आप्यायने दिवादौ आत्मनेपदी। अदन्तानां प्राक् तृ(ऋ)लीयः परस्मैपदी। पूर्यते कश्चित्, पूरयति कश्चित्। इन् चुराद्यपेक्षया वा। "कारित०" कारितलोपः। उभयथा
२५ पूरि जातम्। पूर्यते स्म **पूर्णः**। निष्ठाक्तः। "दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताश्चेनन्ताः" इत्यनेन पूर्णेति निपातः। यूनो भावो यौवनम्। स्वार्थे कः। **यौवनकम्**। युवादित्वादण्विष्णु। वृद्धौ। तरुणस्य

१. पा० सू० ३।१।१०६। वार्तिकम्। २. पा० उ० सू० ४।३२। ३. का० सू० ३।६।४३। ४. का० सू० ३।८।१। ५. का० सू० ३।८।२७। ६. का० रू० पू० सू० २५६। ७. "व्यञ्जनमस्वरं परं वर्णं नयेत्" का० सू० १।१।२१। ८. का० उ० सू० ३।४६। ९. अत्र प्रायादयोऽनेहोऽन्ताश्चत्वारो वयोवाचकाः। पूर्णपूर्वका एते चत्वारो यौवनकतारुण्ययौवनानीति त्रयः; एवं च सप्त तारुण्ये इति वक्तुं युक्तम्। १०. प्रकर्षेण शरीरस्य क्रमेणायते गच्छति इति हे० च०। ११. शरीरस्य क्रमेण वियन्ति वयः, बाल्यादीनि दश्यन्ते दशा इति हैमः। १२. नाहन्ति नागच्छति नाहन्यते नागम्यते चेति रामाश्रमः। "नञ्याहन एह च" इति साधुः। १३. का० उ० सू० ४।१८। १४. का० सू० ३।६।४४। १५. का० सू० ४।६।१००। १६. हे० श० ७।१।६७। युवादेरण् इति सूत्रम्।

भावस्त्वाधम्। भावार्थे यण्। यूनो भावो यौवनम्।

**अन्त्यो वार्द्धीनः स्थविरो मतः।**

त्रयो वृद्धे। अन्ते भवोऽन्त्यः। वृद्धे नियुक्तो **वार्द्धीनः**[1]। तिष्ठतीति **स्थविरः**[2]। गतिभङ्गात्**मतः** कथितः। प्रवयाः। यातयामः। दशमीस्थः। जरन्। जरठः। जीर्णः। वृद्धः।

**वंशोऽन्वयोऽन्ववायः स्यादाम्नायः संततिः कुलम्॥ १२४॥** ५

षड् वंशे। उश्यते काम्यते जनेन **वंशः**[3]। पुंसि। अन्वयते सन्ततिरत्रान्**वयः**[4]। अन्ववैत्यपत्यमत्रान्**ववायः**। आम्नायते **आम्नायः**[5]। सम् सम्यक् प्रकारेण तनोति विस्तारयतीति **सन्ततिः**[6]। सन्तननं वा सन्ततिः। कु (कौ) लति सर्वं भवत्यत्र **कुलम्**। उभयम्। गोत्रम्। अभिजनः।

**ओघो वर्गश्च सन्तानः**

त्रयः समूहे (वंशस्यावान्तरवर्गभेदे)। ओह्यते **ओघः**[7]। वृज्यते विजातीयेन पृथक् क्रियते **वर्गः**। सन्तन्यते **सन्तानः**। विकरः। निकायः। निवहः। विसरः। व्रजः। पुञ्जः। समूहः। सञ्चयः। समुदयः। समुदायः। सार्थः। यूथः। निकुरम्बः। कदम्बम्। पूगः। राशिः। चयः। समवायः। मण्डलम्। चक्रवालम्। जालम्। स्तोमः। व्यूहः। १०

**काव्यमेव कविस्थितिः।**

द्वौ काव्ये। कवेर्भावः **काव्यम्**। तथा च यशस्तिलके— १५

> "दुर्जनानां[8] विनोदाय बुधानां मतिजन्मने।
> मध्यस्थानां न मौनाय मन्ये काव्यमिदम्भवेत्॥"

कवीनां स्थितिः **कविस्थितिः**।

पक्षिवर्गः प्रारभ्यते श्रीमदमरकीर्तिना—

**हंसो मरालश्चक्राङ्गः** २०

त्रयो हंसे। विषं हन्ति खण्डयति, चारुगत्या हन्ति गच्छति वा **हंसः**। हन्तेः[9] सः। मरं मलं कमलमण्डिततडागमियर्ति गच्छतीति **मरालः**। चक्रमङ्गेति चक्राण्यङ्गानि वा यस्य **चक्राङ्गः**। मानसौकाः। श्वेतच्छदः।

**हंसवाहः सनातनः॥ १२४॥**

हंसशब्दाद् वाहशब्दे प्रयुज्यमाने ब्रह्मणो नामानि भवन्ति। **हंसवाहः**। मरालवाहः। चक्राङ्गवाहः। इत्यादीनि ज्ञातव्यानि। २५

**मयूरो बर्हिणः केकी शिखी प्रावृषिकस्तथा॥**

**नीलकण्ठः कलापी च शिखण्डी—**

अष्टौ मयूरे। मह्यां रौति **मयूरः**। मीनाति वा [illegible] मयूरः। उणादौ। मीञ् हिंसायाम्। मयते

---

1. अत्रान्यत्प्रमाणं नोपलब्धम्। 2. यौवनमतिक्रम्य तिष्ठतीति हे० च०। "अजिरशिशिरेत्यादि पा०उ० १।५३ इति किरप्रत्ययो वुगागमो ह्रस्वत्वं च। 3. "वश कान्तौ" घञ्। नुम्। वन्यते कन्यतेऽनेनेति स्वामी। 4. अन्ववैति अन्वीयते। अन्वयः। "इण् गतौ"। अच्। इत्यन्यत्र 5. अत्र प्रमाणम्—"आम्नायः कुल आगमे उपदेशे" इति हैम०। ३।५।११। 6. सन्तन्यते सम्यग्विस्तारयतीति रामाश्रमः। 7. आ ऊह्यते। ऊह वितर्के। न्यङ्क्वादित्वाद् हस्य घः। 8. आ० १ श्लो० २५। 9. का० उ० सू० ४१५। "वृतृवदिहनिमतिकस्यशिकषेभ्यः सः" इति।

इति मयूरः । "मयते रूरो खौ" । बर्हमस्यास्ति **बर्ही** । "फलबर्हाभ्यामिनच्" । केका वाणी अस्त्यस्य **केकी** । शिखाऽस्त्यस्य **शिखी** । प्रावृषि वर्षाकाले प्रयुक्तः **प्रावृषिकः** । नीलं कण्ठे यस्य स **नीलकण्ठः** । कलापोऽस्त्यस्य **कलापी** । शिखण्डोऽस्त्यस्य **शिखण्डी** । प्रचलाकी । सर्पाशनः । शिखावलः । श्यामकण्ठः । चन्द्रकी । शुक्लापाङ्गः ।

५ **तत्पतिर्गुहः ॥ १२६ ॥**

तस्य पतिस्तत्पतिर्गुहः कार्तिकेयः । मयूरशब्दात् पतिशब्दे प्रयुज्यमाने कार्तिकेयपर्यायनामानि भवन्ति । मयूरपतिः । बर्हिणपतिः । केकिपतिः । शिखिपतिः । प्रावृषिकपतिः । नीलकण्ठपतिः । कलापिपतिः । शिखण्डिपतिः । इत्यादीनि ज्ञातव्यानि ।

**वरटा वारली हंसी—**

१० त्रयो हंसभार्यायाम् । वरं विशिष्टमटति गच्छति **वरटा** । वरलस्य भार्या **वारली** । स्वार्थेऽणि । वरला च । हन्तीति **हंसी** ।

**कोक ईहामृगो वृकः ।**

अजादिकं कोकते आदत्ते **कोकः** । ईहा मृगोऽस्य **ईहामृगः** । ईहां मृगयते वा [३]ईहामृगः । वृक वृक आदाने । वर्कते [४]**वृकः** । अरण्यश्वा ।

१५ **हरिणो मृगश्च पृषतः—**

त्रयो मृगे । गीतेन ह्रियते **हरिणः** । व्याधैर्मृग्यते **मृगः** । पर्षति सिंचति मूत्रेण **पृषतः**[५] । तान्तोऽपि पृषत् । एणः । कुरङ्गः । कुरङ्गमः । सारङ्गः । ऋश्यः । रिश्यः । ऋष्यश्च । रुरुः । न्यङ्कुः । वातप्रमी । शम्बरः । शबलः । कृष्णसारः । कालसारोऽपि ।

**तदङ्कः शर्वरीकरः ॥ १२७ ॥**

२० हरिणपर्यायादङ्कपर्याये प्रयुज्यमाने चन्द्रस्य नामानि भवन्ति । हरिणाङ्कः । मृगाङ्कः । पृषताङ्कः । इत्यादीनि ज्ञातव्यानि ।

**पन्नगोऽहिर्विषधरो लेलिहानो भुजङ्गमः ॥**
**नागोरगौ फणी सर्पः—**

नव सर्पे । पद्भ्यां न गच्छतीति **पन्नगः**[६] । नभ्राण्नपादित्यस्योपलक्षणत्वात् । आंहत्य ( ते ऽ ) २५ हिः । "अंहि[७]कम्योर्नलोपश्च" नलोपः । विषं धरति **विषधरः** । लिलेढीति **लेलिहानः**[८] । भुजाभ्यां गच्छति [९]**भुजङ्गमः** । न गच्छतीति [१०]**नागः** । उरसा गच्छतीत्युरगः । "[११]उरो विहायसो रुरविहौ च" । उरो विहायसोरुपपदयोर्गमश्च संज्ञायां खो भवति तयोश्च उरविहौ यथासंख्यं भवतः । फणाऽस्त्यस्य **फणी** ।

१. का० उ० सू० ६।४७ । २. पा० ५।२।१२२ वार्तिकम्—"फलबर्हाभ्यामिनच्" । ३. ईहया महताऽयासेन मृग्यते आखेटीक्रियते इत्यन्यत्र । ४. वर्कतेऽजादिकमादत्ते, वृणोति वा वृकः । ५. रामाश्रमस्तु—"पृषता बिन्दवो बिन्दुसदृशलक्षणान्यस्य पृषतः । अर्श आदयच् इत्यादि । पृषतो बिन्दुचित्र इति च्यो० स्वा० । ६. पन्नं पतितं यथा स्यात्तथा गच्छतीति रामाश्रमः । सर्वपत्नयोरिति वार्तिकेन डः । ७. का० उ०सू०४।४। किप्रत्ययो नलोपश्च । अहि गतौ । अंहति वेगेन गच्छति । ८. भृशं लेढीत्येवंशीलो लेलिहानः । लिहेर्यङ्लुगन्तात्—"ताच्छील्यवयोवचनशक्तिषु चानश्" पा० सू० ३।२।१२९। इति चानश् । ९. भुजेन कौटिल्येन गच्छति, भुज इव गच्छति वेत्यन्यत्र । "गमश्च" का० सू० ४।३।४७। इति । "विहङ्गतुरङ्गभुजङ्गाश्च" का० सू० ४।३।४८। इति खचि, डे च, भुजङ्गमः, भुजङ्ग इति । १०. नगे पर्वते भवो नागः । अथवा न गच्छतीत्यगः, न अगः, नाग इत्यन्यत्र । ११. का० सू० ४।३।४६।

सर्पति गच्छति सर्पः । पृदाकुः । भुजगः । आशीविषः । चक्री । व्यालः । सरीसृपः । कुण्डली । गूढपात् । द्विरसनः । चक्षुःश्रवाः । काकोदरः । दर्वीकरः । दीर्घपृष्ठः । दन्दशूकः । विलेशयः । भोगी । जिह्मगः । पवनाशनः । गोकर्णः । कुम्भीनसः । कञ्चुकी । राजसर्पः । भुजङ्गभुक् । दृक्श्रुतिः ।

**तद्वैरी विनतात्मजः ॥ १२७ ॥**

**तस्य** पन्नगस्य **वैरी** शत्रुः **विनतात्मजः** गरुडः । पन्नगवैरी । अहिरिपुः । विषधरारातिः । लेलिहानरिपुः । भुजङ्गशत्रुः । नागद्विट् । भुजङ्गसपत्नः । फणिद्विट् । सर्पहृत् । सर्पद्वेषी । इत्यादीनि गरुडनामानि स्युः । ५

**सुपर्णो गरुडस्तार्क्ष्यो गरुत्मान् शकुनीश्वरः ।**
**इन्द्रजिन्मन्त्रपूतात्मा वैनतेयो विषाशयः ॥ १२८ ॥**

नव गरुडे । शोभनं स्वर्णमयं पर्णमस्य **सुपर्णः** । तथा च—"सुपर्णो[१] हेमपक्षत्वात् ।" डीङ् विहायसा गतौ । गरुत्पूर्वः । गरुद्भिः पक्षैर्डयते **गरुडः** । १०

"[२]वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः ।
षोडशादौ विकारस्तु वर्णनाशः पृषोदरे ॥"

इत्यनेन श्लोकेन गरुत्शब्दस्य तकारस्य लोपः । लत्वे गरुलः । गरुडश्च । तृक्षस्यापत्यं **तार्क्ष्यः** । गरुतः पक्षाः सन्त्यस्य **गरुत्मान्** । शकुनीनां विहङ्गानामीश्वरः स्वामी **शकुनीश्वरः** । इन्द्रं जितवान् **इन्द्रजित्** । मन्त्रेण पूतः पवित्र आत्मा यस्य स **मन्त्रपूतात्मा** । विनताया अपत्यं **वैनतेयः** । विषं क्षयतीति **विषक्षयः** । काश्यपनन्दनः । विष्णुरथः । पन्नगाशनः । नागान्तकः । १५

**खमिन्द्रियं हृषीकं च श्रो ( स्रो ) तोऽक्षं करणं विदुः ।**

षडिन्द्रिये । स्वर्गमोक्षौ खनति विदारयतीति **खम्**[३] । इन्द्रस्यात्मनो लिङ्ग**मिन्द्रियम्**[४] । हृष्यति हर्षं प्राप्नोति विषयेषु शब्दस्पर्शरूपरसगन्धेषु **हृषीकम्** । शृणोत्यनेन सान्तम् **श्रोतः**[५] । तालव्यादिः । अश्नोति विषयं व्याप्नोति **अक्षम्** । क्रियते मनोऽनेन विषयेषु **करणम्** । शेषं [विषयि] । कम्बलम्[६] । २०

**पुण्यं भाग्यं च सुकृतं भागधेयं च सत्कृतम् ॥१२६॥**

पञ्च पुण्ये । पुण शोभे । पुणति शोभते पवते वा "**पुण्यम्** । "[७]पर्जन्यपुण्ये" । भगस्यैश्वर्यादेरिदं [कारणम्] भाग्यं । भागमेव **भाग्यम्** । "भागाद्यच्च" । सुष्ठु क्रियते **सुकृतम्** । २५

"[८]ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
वैराग्यस्याथ मोक्षस्य षण्णां भग इति स्मृतिः ॥"

१. क्षी० स्वा० भा० १।१।२९ । २. शा० सू० २।२।१७२ । अत्र कारिकारूपेण पठितः । ३. खनयतेः तदिन्द्रियाधिष्ठानस्य खातसदृशत्वदर्शनात् खम् । 'खनु अवदारणे' । डप्रत्यय इत्यन्यत्र । ४. इन्द्रियमिन्द्रलिङ्गमित्यादिना घच् । घस्येयः । ५ तालव्यश्रोतःशब्दः कर्णेन्द्रियवाचकः, दन्त्यस्रोतःशब्द इन्द्रियवाची, सोऽत्र पठितव्यः । तदुक्तम्—"हृषीकमक्षं करणं स्रोतः खं विषयीन्द्रियम्" अ० चि० 'स्रोत इन्द्रिये निम्नगारये ।" इत्यमरः ३।३।२३३। ६. नात्रान्यत्प्रमाणमुपलभ्यम् । क्लिष्टसमाधानप्रकारस्तु—कमिति सुखार्थकमव्ययम्, तस्य बलं साधनमिन्द्रियमिति । ७. पुणतीति पुणः । "पुण शुभे कर्मणि । इगुपधेति कः । पुणमर्हति पुण्यम् । "तदर्हति" । पा० सू० ५।१।६३ । इति यत् । पुनाति पवते वेत्यन्यत्र । ८. का० उ० सू० ३।४ । ९. श्लोकोऽयं विष्णुपुराणस्थत्वेनोल्लिखितः अम० क्षी० स्वा० भाष्ये १।१।१३।

भगस्येदं भाग भागमेव **भागधेयम्**। "नामरूपभागेभ्यो धेयः"[1]। सत्सभीर्नाम क्रियते (स्म) **सत्कृतम्**।

**अघमंहश्च दुरितं पाप्मा पापं च किल्विषम्।**
**वृजिनं कलिलं ह्येनो दुष्कृतम्**

५ दश पापे। न जहाति प्राणिनम् **अघम्**[2]। अंहति गच्छति नरकादिकमनेन **अंहः**। सान्तम्। **दुरितम्**[3]। दुर् सौत्रोऽयं धातुः। पाति सुगतेर्वारयति **पाप्मा**। पुंसि। "सर्वधातुभ्यो मन्।" पाति सुगतेर्वारयति **पापम्**। "पातेः पः"[4]। निम्नत्वेन कल्यते मुहुर्मुहुः किरति सद्गति वा **किल्विषम्**। "किल्विषा[5] व्यथिषौ" एतौ टिषप्रत्ययान्तौ निपात्येते। वृज्यतेऽवर्ज्यतेऽनेन **वृजिनम्**[6]। कलयति **कलिलम्**[7]। "कलेरिलः"[8]। एति गच्छति [सुखम्] अनेन **एनः**। सान्तम्। दुःक्रियते स्म **दुष्कृतम्**। तमः। कल्कम्।
१० कल्मषम्। अशुभम्। प्रतिकिष्टम्। पङ्कम्। किण्वम्। मलः। अनेकार्थे।

**तज्जयी जिनः॥ १३०॥**

तस्य पापस्य जयी **तज्जयी**। अघजयी। दुरितजयी। पापजयी। इत्यादीनि जिनस्य नामानि भवन्ति।

**सदनं सद्म भवनं धिष्ण्यं वेश्माथ मन्दिरम्।**
**गेहं निकेतनागारं निशान्तं निवृतं गृहम्॥ १३२॥**
१५ **वसत्यावसथावासं स्थानं धामास्पदं पदम्।**
**निकायं निलयं पस्त्यं शरणं विदुरालयम्॥ १३३॥**

चतुर्विंशतिर्गृहे। जनाः सीदन्त्यत्र **सदनम्**। क्लीबे। सीदन्ति सुखं गच्छन्त्यत्र **सद्म**। "सर्वधातुभ्यो मन्" प्रायेण। भवति भूतान्यत्र **भवनम्**। धिष शब्दे। देवैरपि शब्दं करोत्यत्र **धिष्ण्यम्**। "धिषेर्ण्यक्"[9] प्रत्ययो भवति। विशन्त्यत्र **वेश्म**। नान्तम्। माद्यन्ति जना अत्र **मन्दिरम्**[10]। स्त्री-
२० क्लीबे। मन्दिरा। गेहृः सौत्रो निवारणग्रहयोः। गेहति शीतवातातपादिकं निवारयतीति **गेहम्**। गृह्णाति वा गेहम्। "गेहे कः"[11]। सुखं निकितन्ति जानन्त्यत्र **निकेतनम्**। अङ्गन्ति गच्छन्त्यत्र **आगारम्**[12]। अगारं च। निशाम्यन्त्यत्र **निशान्तम्**[13]। निव्रियते आच्छाद्यते **निवृतम्**। गृह्णाति नरेणोपार्जितं धनं **गृहम्**। वसनं **वसतिः**। आवसन्त्यत्र जना **आवसथम्**। आ समन्तादुष्यतेऽत्रावासः। स्थीयते जनेनात्र **स्थानम्**। दधाति धनादि **धाम**। नान्तम्। अदन्तं च धामम्। क्लीबे। आस(प)द्यतेऽत्रास्पदम्[14]। पद्यते
२५ गम्यते **पदम्**। निचीयतेऽसौ **निकायः**। "[15]शरीरनिवासयोः कश्चादेः" घञ्। निलीयते आश्लिष्यते(अत्र) **निलयम्**। पसिः सौत्रो निवासे। जनाः पसन्ति वसन्त्यत्र **पस्त्यम्**[16]। वस्तौ वासे साधु वस्त्यम्। वस्तौ

१. पा० सू० ५।४।३५ वार्तिकम्। २. अङ्ग्यते गच्छति दानादिनाऽघम्। "अघि गतौ"। पचादाच्। आगमशास्त्रस्यानित्यत्वान्न नुम्। ३. दुष्टमितं गमनमनेनेति गमाश्रमः। ४. का० उ० सू० २।५।५। ५. "किल्विषाव्यथिषौ" का० उ० सू० १।२२। ६. "वृजी वर्जने"। "वृजेः किच्चेतीनच्। वृज्यते वर्जनमित्यपि। ७. कलयति जनयति दुःखमिति शेषः। ८. का० उ० सू० ४।२८। ९ का० उ० सू० ३।६०। १०. "तिमिरुधिमदिमन्दिचन्दिवधिरुचिशुषिभ्यः किरः" का० उ० सू० १।२३। ११. का० सू० ४।३।६०। इति निर्देशाद् गेह इति निपातः। १२. आ अङ्गति अङ्ग्यते वाऽम् बाहुलकात् आरप्रत्ययः। "अगि गतौ" आङ्पूर्वः। नलोपश्च। १३. निशाया अन्तोऽत्रेत्यत्र। निशायाम् अन्यतं गम्यते स्मेति रामाश्रमः। "अम गतौ"। क्तः। १४. "आस्पदं प्रतिष्ठायाम्" पा० सू० ६।१।१४६। इति सुट्। १५ का० सू० ४।५।३५। १६. अपस्त्यायन्ति सङ्घीभवन्त्यत्र पस्त्यम्। "स्त्यै शब्दसङ्घातयोः"।

वासे साधु [1]वस्त्यमिति श्रीभोजः । शीर्यते हिंस्यते शीतादत्र शरणम् । आलीयते जनेनाऽऽलयः । पुंसि । निलयः कथयन्ति । पुरम् । कुलाय । संस्त्यायः ।

**खेयं खातं च परिखा**

त्रयः परिखायाम् । खनु अवदारणे । खन् । खन्यते खेयम् । "आत्खनोरिच[2]" यप्रत्यये नकारस्येकारः । "[3]अवर्णाद्‌इवर्णे ए" अवर्णइवर्णयोरेकारः । खन्यते [स्म] खातम् । परिखन्यते परिखा । ५

**वप्रं स्याद्धूलिकुट्टिमम् ।**

द्वौ प्राकारे । शुल्कादिकं वपन्त्यत्र वप्रम् । धूल्याः कुट्टिमं धूलिकुट्टिमम् । बद्धभूमिकम् । धूलिकुट्टिमम् ।

**प्राकारः परिधिः सालः**

त्रयो दुर्गे । प्रकुर्वन्ति तमिति प्राकारः[4] । "अकर्तरि च" कारके संज्ञायाम्" घञ् । परि १० समन्तात् धीयते परिधिः[5] । श्यति तनूकरोति स्वनगरपर्यन्तं शालं सालं[7] च ।

**प्रतोली गोपुराकृतिः ॥ १३४ ॥**

द्वौ विशिखायाम् । प्रविशन् जनः प्रतोल्यते परिमीयतेऽत्र प्रतोली । गोप्यते रक्ष्यते गोपुरं तस्याकृतिः गोपुराकृतिः[8] ।

**प्रासादसौधहर्म्याणि**

त्रयः सौधे । प्रासादश्च सौधं च हर्म्यं च प्रासादसौधहर्म्याणि । प्रसीदन्त्यस्मिन्नयनमनांसीति १५ प्रासादः । "अकर्तरि च कारके संज्ञायाम्" । सुधायां लिप्तायां भवं [10]सौधम् । चन्द्रकरान् हरति हर्म्यम्[11] ।

**निर्व्यूहो मत्तवारणः ।**

द्वौ आश्रये । निर्व्यूह्यते निर्व्यूहः । मत्ताः प्रमादिनः पतन्तो वार्यन्तेऽनेन मत्तवारणः । २०

**वातायनं मतालम्बम्**

द्वौ गवाक्षे । वातस्यायनं मार्गो वातायनम् । उभयम् । मतमभीष्टम् आलम्बनं मतालम्बम् । जालकम् । जालम् ।

**आलम्ब्यसुखमासनम् ॥ १३५ ॥**

राजासनस्तम्भे द्वौ । आलम्ब्यस्य अवलम्बनस्य सुखम् आलम्ब्यसुखम् सुखेनाऽऽस्यते आसनम् । २५

**समः सवर्णः सजातिः सदृक्षः सदृशः सदृक् ।**

**तुल्यः सधर्मरूपश्च तुला कक्षोपमा विधा ॥ १३६ ॥**

१. यद्यपि मूले वस्त्यशब्दो नास्ति, तथापि पाठभेदात् "निशान्तवस्त्यसदनम्" २।२।५। इत्यमरे वस्त्यशब्दपाठात् टीकाकृता तदपि विवृणीतम् । २. का० सू० ४।२।१२। ३. का० सू० १।२।२। ४. प्रक्रियते इति कर्मणि घञ् । इति रामाश्रमः । ५. का० सू० ४।५।४। ६. परितो धीयते बध्यते नगरमनेनेति रामाश्रमः । ७. दन्त्यपाठे तु सल्यते सालः । "सल गतौ" । घञ् । ८. पुरद्वारन्तु गोपुरं मदरक्षितम् । तस्याकृतिरिवाकृतिर्यस्यास्तत्सदृशीत्यर्थः । ९. का० सू० ४।३।४। १०. सुधया लिप्तः सौधः । शेषे ऽण् । ११. हरति मनांसि हर्म्यमित्यन्यत्र । प्रासादसौधहर्म्याणामत्राविशेषेणोपादानम् । परं तद्विशेषो न विस्मर्तव्यः । तदुक्तम्-"हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम् । सौधोऽस्त्री राजसदनम्" २।२।१०। इत्यमरः ।

[1]एकादश समाने । समानं मातीति[2] समः । समानः सदृशो वर्णोऽस्य सवर्णः । समाना जातिः अस्य सजातिः । समान इव दृश्यते सदृक्षः । "[3]समानान्ययोश्च" सक् प्रत्ययः । शस्य च षत्वम् । "षढोः[4] कस्सि" षस्य कत्वम् । "कषयोगे" क्षः" । समान इव दृश्यते सदृशः । "[5]समानान्ययोश्च टक्प्रत्ययः । अमात्रः । कानुबन्धत्वाद्गुणनिषेधः । टानुबन्धत्वान्नदादौ पठ्यते । "ईक्[6] दृश" इति समानस्य सभावः । समान इव दृश्यते सदृक् । "[7]समानान्ययोश्च" क्विप् । तुलया सम्मितस्तुल्यः । समानो

५ धर्मो यस्य सधर्मः । समानं रूपं यस्य स सरूपः । "[8]रूपनामगोत्रस्थानवर्णवयोवचस्सु" इति समानस्य सादेशः । तोलनं तुला । "[9]तोलेरच्" अच्प्रत्ययः । औकारस्याकारश्च । कषति कक्षा । उपमा । विधा । प्रख्यः । प्रकाशः । प्रतिमः । सन्निभः । प्रकारः ।

विन्मान्यो विधमानश्च गुरुस्थानाम्बुजाननाः ।

१० सिंहादीनि च पर्यायमुपमानेषु योजयेत् ॥ १३७ ॥

योजयेत् जोडयेत् । पर्यायं विशेषणम् उपमानेषु । वित्समः । वित्सवर्णः । वित्सजातिः । वित्सदृक्षः । वित्सदृशः । वित्सदृक् । वित्तुल्यः । वित्सधर्मः । वित्सरूपः । वित्तुल्यः । वित्कक्षः । अनेन प्रकारेण मान्यविधमानगुरुस्थानाम्बुजाननसिंहादिशब्दा उपमानेषु प्रयोजनीयाः ।

व्यपदेशो निभं व्याजः पदं व्यतिकरश्छलम् ।

१५ छद्म

छम कैतवे । व्यपदेशनं व्यपदेशः[11] । पुंसि । निर् अतिशयेन भाति निभम्[12] । व्यज्यते[13] व्याजः । पुंसि । पद्यते गम्यते कैतवेन पदम् । व्यतिकरणं व्यतिकरः । छलति [14]छलम् । क्लीबे छादयति छद्म[15] । नान्तम् । क्लीबम् । कैतवम् । कपटम् । कूटम् । उपाधिः । मिषम् । लक्षम्[16] ।

वृत्तान्तमुत्प्रेक्षा शब्दमन्यं च निर्णयेत् ॥ १३८ ॥

२० ड्वी वार्तायाम् । वृत्तस्य चरितस्यान्तो वृत्तान्तः[17] । उत्प्रेक्षणम् उत्प्रेक्षा । वार्ता । प्रवृत्तिः । उदन्तः ।

---

१. अत्र समादयः सरूपान्ता नव समाने । तुलाकक्षोपमा विधा इति चत्वारस्तुलायामिति पार्थक्येन वक्तव्येऽपि सदृशाऽभिप्रायेण तदाह । क्वचिदभिधेति पाठः । परन्तु तुलार्थकविधाशब्दोऽत्र युक्तः । एवं च त्रयोदश इति वक्तव्यम् । अभिधापाठे तु "उपमाऽभिधा" इत्यनयोरुपमावाचकत्वे सति "एकादश" इति सङ्गच्छते । २. मकारे परे समानस्य सादेशविधायकवचनाभावात्समानं मातीति विग्रहश्चिन्त्यः । "सम वैक्लव्ये" समति वैक्लव्यं करोतीति समः । समः समस्य वैक्लव्यं करोत्येव । पचाद्यच् । ३. "कर्मण्युपमाने त्यदादौ दृशष्टक् सकौ च" का० सू० ४।३।७५। अत्र वृत्तिः । ४. का० सू० ३।८।४। ५. का० रू० सू० २५६ । सू० ६. "समानान्ययोश्चेति वक्तव्यम्" इति वार्तिकरूपेणोपलभ्यते ३।२।६०। काशिकायाम् । कातन्त्रसूत्रन्तु नैतादृशानुपलभ्यम् । वृत्तिरपीदृशी क्वापि नास्ति । काशिकायां टीकोक्तवचनसाम्येऽपि प्रत्ययानुरूपसाम्यं नास्ति । ७. "दृगदृशदृक्षेषु समानस्य सः" का० सू० ४।६।६५। ८. का० सू० ४।३।७५। वृत्तिः । ९. "ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु" इति० पा० सू० ६।३।८५। १०. वाचनिकं नैतत्, अतुलोपमाभ्यामिति ज्ञापितमिति प्रतिभाति । ११. व्यपदिश्यते व्यपदेशोऽतद्रूपस्य तद्रूपम् । १२. नि निरतां तदिव भाति निभम् इत्यन्यत्र । १३. व्यजन्ति विच्छिन्दन्ति अनेन व्याजः । "अज गतिक्षेपणयोः" । घञ् । १४. छ्यति छिनत्ति वस्तुतत्त्वमनेनेति क्ल । छो छेदने । कल प्रत्ययः । १५. छाद्यते रूपमनेन छद्म । मनिन् । ह्रस्वः । "छद अपवारणे" । चुरादिः । १६. लक्ष शब्दोऽप्ययम् । १७. वृत्तोऽनुष्ठानीयो गवेषणीयोऽन्तः समाप्तिर्यस्येति रामाश्रमः ।

**व्रातः[1] पूगः समाजश्च समूहः सन्ततिर्व्रजः ।**
**व्यूहो निकायो निकरो निकुरम्बं कदम्बकम् ॥ १३९ ॥**
**ओघः समुदयः सङ्घः सङ्घातः समितिस्ततिः ।**
**निचयः प्रकरः पङ्क्तिः**

विंशतिस्समूहे । वृणोति छादयति **व्रातः**[2]। पूज्यते पूयते वा **पूगः**[3]। संवीयते **समाजः**[4]। घञ् । समूह्यते सम्यग् ढौक्यते **समूहः** । संतन्यते **सन्ततिः** । व्रजन्त्यत्र **व्रजः** । उभयम् । विशेषेण उह्यते **व्यूहः** । निचीयते पुंसि **निकायः** । कायश्च । निकीर्यते **निकरः** । अन्यान् निकुरन्ति वदन्ति (छिन्दन्ति) **निकुरम्बः** । कुत्सितम् अम्बते कदम्बम् । स्वार्थे के **कदम्बकम्** । द्वौ क्लीबे । उह्यते **ओघः**[6]। "न्यङ्क्वादीनां[7] हश्च घः।" समुदीयतेऽत्र **समुदयः**[8] । समुदायश्च । संहन्यन्तेऽस्मिन्नवयवाः **सङ्घः**[9] । संहन्यते **संघातः** । हन्तेर्घः । इण् गतौ सम्पूर्वः । समयनं **समितिः** । स्त्रियां क्तिः । तननं **ततिः** । निचीयतेऽसौ **निचयः** । उच्चयः । प्रचयः । सञ्चयः । प्रक्रियते **प्रकरः** । पचि विस्तारवचने । घञ् । इदनुबन्धानां धातूनां नलोपो नास्तीति । पञ्चनं **पङ्क्तिः** । स्त्रियां क्तिः ।

**पशूनां समजो व्रजः ॥ १४० ॥**

पशूनां व्रजः समूहः **समजः** कथ्यते । अज क्षेपणे । अल् सम्पूर्वः । समजनं समजः । "समुदोरजः पशुषु[10]" अल् ।

**समीपाभ्यासमासन्नमभ्यर्णं सन्निधिं विदुः ।**
**अविदूरं च निकटमवलग्नमनन्तरम् ॥ १४१ ॥**

नव समीपे । समाप्नोति **समीपम्**[11] । अभ्युपेत्य चास्यते **अभ्यासः** । घञ् । आसद्यते स्म **आसन्नम्** । अर्द गतौ याचने च । अर्द अभिपूर्वः। अभ्यर्दति स्म **अभ्यर्णः** निष्ठान्तः । "सामीप्ये[12]" नेट् । "दाद्[13]स्य च" दकारतकारयोर्नत्वम् । "रषा[14]"–धातोर्नकारस्य णत्वम् । [15]"तवर्गस्य" निष्ठानस्य णत्वम् । सन्निधीयते **सन्निधिः**। अ(व)विदुनोतीति **अविदूरम्** । "दुनोतेर्दीर्घश्च[16]" दुनोतेरक् प्रत्ययो भवति दीर्घश्च । टुदु उपतापे । निकटति **निकटम्** । (नि) नास्ति कटोऽस्येति वा निकटः । कटे वर्षावरणयोः । अवलगति (स्म) **अवलग्नः** । न अन्तरम् **अनन्तरम्** । सनीडम् । समर्यादम् । आरात् । सदेशम् । उपक-

---

१. चेतनाचेतनसर्वसमूहे व्रातादयो विंशतिशब्दाः प्रयुज्यन्ते । ओघो वर्गश्च सन्तान इति वंशस्यावान्तरवर्गभेद इति द्रष्टव्यः । परन्तु व्यवहारे प्रयोगसाङ्कर्यमपि दृश्यते । २. "वृञ् वरणे" । आतक् प्रत्ययः । अन्यत्र तु मन्यते एकस्मिन् राशौ नियम्यते इति मुण्डमिश्र इति यमन्ताद्व्रतेर्घञ् । व्रातच्फञोरिति निर्देशाद् दीर्घः । ३. पूज्यते राशित्वेन मन्यते, पूयते जनसमुदायात् राशिभेदेन निर्वाच्यते वा पूगः । "छापूखडिभ्यः कित्" । उ०सू० १२४। इति पूङः पूञो वा किद् ग प्रत्ययः । पूगयतेः पूगसाधुत्वे घञि कृतेऽपि स्थानिवत्त्वेन ण्यन्तात्कुत्वं दुस्साध्यम् । ४. "अज गतिक्षेपणयोः" । घञ् । ५. "कुर् छेदने" । बाहुलकादम्बच् । अस्योत्वे निकुरम्ब इत्यपि । ६. आङ्पूर्वादुहतेर्घञ् । "ऊह वितर्के" । ७. का० सू० ४।६।५७ । ८. सम्-उद्पूर्वकः "इण् गतौ" इणधातुः । अलि समुदयः । घञि समुदायः । ९. "समुदोः-गणप्रशंसयोः" का०सू० ४।५।६४। इति हन्तेरप्रत्ययो घादेशश्च । १०. का०सू० ४।५।५१ । ११. सङ्गता आपोऽस्मिन्निति विग्रहे समासः । अच्समासान्तः । "द्व्यन्तरुपसर्गेभ्योऽप ईत्" इतीकारः । उपचारादभ्यर्णमपि समीपम् । १२. का० सू० ४।६।६७ । १३. का० सू० ४।३।१०२। १४. का० सू० २।४।४८ । १५. "तवर्गस्य षटवर्गाट्टवर्गः" का० सू० ३।८।५। १६. का० उ० सू० ६।५ ।

ष्ठम् । अभ्यग्रम् । सन्निकटम् । आसन्नम् ।

**जित्या हलिर्हलं सीरं लाङ्गलम्**

पञ्च हले । जि जये । जि । जीयते **जित्या** । "[1]जयतेर्हली क्यबेव" क्यप् । "[2]धातोस्तोऽन्तः पानुबन्धे ।" "[3]हस्वस्य पिति कृति तुक्" । हलति हलिः । महद्धलं हलिरुच्यते । भूमिं हलति विलिखति **हलम्** । सीयते बध्यते वरत्रया **सीरम्** । लङ्गति भूमिं गच्छति **लाङ्गलम्** ।

**तत्करो बलः ।**

हलपर्यायतः करपर्यायेषु बलभद्रनामानि भवन्ति । जित्याकरः । हलिकरः । हलकरः । सीरकरः । लाङ्गलकरः । हलपाणिः । इत्यादीनि ज्ञातव्यानि ।

**रेवतीदयितो नीलवसनः केशवाग्रजः ॥ १४२ ॥**

त्रयो बलभद्रे । रेवत्या दयितो भर्ता **रेवतीदयितः** । नीलं कृष्णं वर्णं वसनं यस्य स **नीलवसनः** । केशवस्याग्रजः **केशवाग्रजः** । कालिन्दीकर्षणः । बलः । प्रलम्बघ्नः ।

**अर्जुनः फाल्गुनो जिष्णुः श्वेतवाजी कपिध्वजः ।**
**गाण्डीवी कार्मुकी सव्यसाची मध्यमपाण्डवः ॥ १४३ ॥**
**वृषसेनः सुनिर्मोको दैत्यारिः शक्रनन्दनः ।**
**कर्णशूली किरीटी च शब्दभेदी धनञ्जयः ॥ १४४ ॥**

सप्तदशार्जुने । अर्ज सर्ज अर्जने । अर्जति (कीर्तिम्) **अर्जुनः** । "[4]अर्जिदृशिकम्यमिपंसिबाधामृजिपसितुथुरिदिषिदिशिकृष्णज्यभिम्यो जित्य उनः" फल निष्पत्तौ । फलतीति **फाल्गुनः** । "[5]पिशुनफाल्गुनौ" एतौ उनप्रत्ययान्तौ निपात्येते । जयतीत्येवंशीलो **जिष्णुः** । "[6]जिभुवोः स्नुक्" । श्वेता वाजिनो यस्य स **श्वेतवाजी** । कपिर्वानरो ध्वजे यस्य स **कपिध्वजः** । गां जीवतीत्येवंशीलो [7]**गाण्डीवी** । कार्मुकं धनुरस्तीत्यस्य **कार्मुकी** । सव्ये साचयतीति [8]**सव्यसाची** । मध्यमश्चासौ पाण्डवः **मध्यमपाण्डवः** । युधिष्ठिरभीमयोः सहदेवनकुलयोर्मध्येऽर्जुनः, तेन मध्यमपाण्डवः कथ्यते । वृषं सिनोति बध्नातीति **वृषसेनः** । सुनिर्मुच्यते शत्रुभिः **सुनिर्मोकः** । दुःसाध्यत्वात् । दैत्यस्यारिः शत्रुर्**दैत्यारिः** । शक्रस्येन्द्रस्य नन्दनः **शक्रनन्दनः** अर्जुनः कथ्यते । यमस्य पुत्रो युधिष्ठिरः । वायोर्भीमः । इन्द्रस्यार्जुनः, अश्विनीकुमारयोर्नकुलसहदेवौ पुत्रौ । असत्यमेवं तत् । कर्णे शूलं विद्यते यस्यासौ **कर्णशूली** । किरीटं शेखरं विद्यते यस्यासौ **किरीटी** । शब्दभेदोऽस्त्यस्य **शब्दभेदी** ।

---

१. का० सू० ४।२।२६ । अत्र दुर्गवृत्तिः । २. का० सू० ४।१।३० । ३. का० सू० ३।४।४६ । ४. का० उ० सू० २।६० । ५. का० उ० सू० २।६१ । "फल निष्पत्तौ" उनप्रत्ययो गोऽन्तश्च । फलति कर्मसिद्धिमयते इत्यर्थः । ६. का० सू० ४।४।१८ । ७. गां जीवयतीति बोध्यम् । विराटनगरे पाण्डवानुसन्धानाय भीष्मकर्णकृपादिकौरवसेनायाः अर्जुनद्वारा पराजयस्य महाभारतोक्तत्वात् । वस्तुतस्तु गाण्डीवं गाण्डीवमिति अर्जुनधनुषो नाम, तदस्यास्तीति गाण्डीवी इति मत्वर्थीय इन् । तदुक्तं कल्पद्रुकोषे — "गाण्डीवो गाण्डिवोऽस्त्रियाम् । गाण्डीवो गाण्डिवोऽप्यस्त्री" इति १।५।४४। मूले गाण्डीवीशब्दस्तु गाण्डी ग्रन्थिरस्यास्तीति गाण्डीवम् । "गाण्ड्यजगात्संज्ञायाम्" पा० सू० ५।२।११० । इति मत्वर्थीयो वः । तदस्यास्तीति मत्वर्थीय इन् । ८. सव्येन वामपाणिनाऽपि सचते बाणान् वर्षतीति सव्यसाची ।

केचित् शब्दभेदीति पठन्ति इत्यपि स्यात् । जि जये । धनपूर्वः । धनं जितवान् धनञ्जयः । "नाम्नि[1]" खः । "[2]नाम्यन्त०" गुणः । "ए[3]श्रय्" । "ह्रस्वा[4]रुषोर्मोन्तः ।" धनञ्जयेति कवेर्नामाभिधानमपि ज्ञातव्यम् । स कथम्भूतः ? शब्दभेदी । अतः[5] परः कोऽपि नास्ति । पाण्डवनाम मिषेण स्वनाम कथितमस्ति ।

**कुरुकीचकयोर्वैरी वायुपुत्रो वृकोदरः ।**

कुरुवैरी । कीचकवैरी । कुरुशत्रुः । कीचकशत्रुः । कुरुरिपुः । कीचकरिपुः । अनिलसुतः । पवनात्मजः । इत्यादीनि भीमस्य पर्यायनामानि ज्ञातव्यानि । वृकोऽग्निस्तद्वत् उदरं यस्य स वृकोदरः[6] । ५

**समवर्ती यमः कालः कृतान्तो मृत्युरन्तकः ॥ १४५ ॥**

यम् यमे । सर्वेषु धर्मं तुल्यं वर्तते समवर्ती । नान्तः । रिपौ मित्रे च समं वर्तते इति वा । यमयति निगृह्णाति प्रजां यमः । यमलजातत्वाद्वा । कलयति जन्तून् विनाशहेतुत्वेन कालः[7] । कृतोऽन्तो विनाशो येन स कृतान्तः । म्रियतेऽनेनेति मृत्युः । "[8]भुजिमृङ्भ्यां युक्त्युकौ" । अन्तं करोतीति अन्तकः[9] । १० शमनः । प्रेतपतिः । पितृपतिः । कीनाशः । वैवस्वतः । कालिन्दीसोदरः । धर्मराजः । दण्डधरः । हरिः । दक्षिणापतिः । श्राद्धदेवः ।

**तदात्मजो जातरिपुः कौन्तेयो भरतान्वयः ।**
**कौरव्यो राजयक्ष्माऽसौ सोमवंशो युधिष्ठिरः ॥ १४६ ॥**

सप्त युधिष्ठिरे । तस्य धर्मस्यात्मजस्तदात्मजः । समवर्तिपुत्रः । यमोद्भवः । कृतान्तपोतः । १५ मृत्युनन्दनः । अन्तकदारकः । इत्यादीनि युधिष्ठिरपर्यायनामानि ज्ञातव्यानि । जातस्य स्वगोत्रस्य रिपुः [10]जातरिपुः । कुन्त्या अपत्यं पुमान् कौन्तेयः । भरतोऽन्वयोऽस्य भरतान्वयः । कुरोरपत्यं पुमान् कौरव्यः । राजभिर्नरेन्द्रैर्यक्ष्यते पूज्यते राजयक्ष्मा । [11]"सर्वधातुभ्यो मन्" । राजलक्ष्मा चेति केचित्पठन्ति । सोमो वंशोऽस्य सोमवंशः । युधि संग्रामे स्थिरतीति युधिष्ठिरः ।

**श्वेतार्जुनौ शुचिः श्वेतो वलक्षं सितपाण्डुरम् ।** २०
**शुक्लावदातं धवलं पाण्डुः शुभ्रं शशिप्रभम् ॥ १४७ ॥**

त्रयोदश श्वेते । श्वेतते श्वेतः[12] । अर्ज्यतेऽर्जुनः[13] । शोचतीति शुचिः[14] । शुच शोके । श्यायते श्येतः[15] । अवलक्षयति अवलक्षः । वलक्षश्च[16] । सिनोति बध्नाति(मनः)सितः । पण्डते याति मनोऽत्र पाण्डुरः । अथवा "नगपांशुपाण्डुभ्यो रः" पाण्डुत्वमस्यास्तीति पाण्डुरः। पाण्डुः । पाण्डरः । शोकति मनोऽस्मिन् शुक्लः । शुक गतौ । अवदायते शोध्यते अवदातः[17] । धवति धवलः[18] । पण्डते याति २५

१. "नाम्नि तृभृवृजिधारितपिदमिसहां संज्ञायाम्" का० सू० ४।३।४४ । २. का० सू० ३।५।१। ३. का० सू०१।२।१२ । ४. का० सू० ४।१।२२ । ५. धनञ्जयात्परं कश्चिच्छब्दभेदवेत्ता नास्तीत्यर्थः । ६. वृको भीमजठराग्निः स उदरे यस्येत्यपि । ७. कलयतीत्यस्य स्थाने कालयतीति वक्तव्यम् । ८. का० उ० सू० २।३४ । ९. अन्तङ्करोत्यन्तयति, अन्तयत्यन्तक इति यावत् । १०. कोशान्तरप्रमाणान्महाभारतादिकथासंवादात् महाकविव्यवहाराच्च "अजातरिपुः" इतिच्छेदोऽत्र युक्तः । न जाता रिपवो यस्येति युधिष्ठिरस्य "अजातशत्रुः" इति संज्ञा । तदुक्तम्—"अजातशत्रुः शल्यारिर्धर्मपुत्रो युधिष्ठिरः" । अभि० चि० ३।३०८ । ११. का०उ०सू० ४।२८ । १२. "श्विता वर्णे" । श्वादि० आत्म०। पचाद्यच् । १३. अर्ज्यते सङ्गृह्यते जनैः । १४. शुक्लवुज्ज्वलवस्तूनां सर्वसङ्ग्रहणीयत्वं लोकानुभवसिद्धम् । शोचति निर्मलीभवति शुचिः । शुच दीप्तौ । इक् । १५. श्यैङ् गतौ । श्यायते गच्छति नीलादिवर्णविशुद्धत्वम् । "हश्याभ्यामितन्" । पा० उ० सू० ३।९३ । इतन् । १६. अवलक्षयति अवलक्ष्यते वा अन्यवर्णापेक्षया उत्कृष्टत्वेनेति । वष्टि भागुरिरल्लोप इत्यल्लोपपक्षे । १७. अवदायते स्म । दैप् शोधने । कर्मणि क्तः । १८. धुनोत्यशोभाम् इति हेमचन्द्रः । धावति मनोऽत्र । धावु गतिशुद्धयोः । कलच्, ह्रस्वश्चेतीति रामाश्रमः ।

मनोऽस्मिन् **पाण्डुः**[1]। शोभते **शुभ्रः**। शशिन इव प्रभा यस्य **शशिप्रभम्**। गौरः। हरिणः।

**कृष्णं नीलासितं कालम्**

चत्वारः कृष्णे। वर्णान् कर्षति[2] **कृष्णः**। नीलति **नीलम्**[3]। उभयम्। न सितम् **असितम्**। कं मुखमालाति **कालः**। कालयति वा मनः[4] कालः। मेचकम्। श्यामलम्। श्यामं च। पालाशम्[5]। ५ हरित्। शिखिकण्ठाभः इति दुर्गः।

**धूमं धूम्रमलिप्रभः।**

विशिष्ट[6]कृष्णे त्रयः। धूनोति **धूमः**। धूमोऽस्यभिभवति रागं **धूम्रः**। धूमलश्च। अलिवत्प्रभा यस्य सोऽ**लिप्रभः**।

**तमोऽन्धकारं तिमिरं ध्वान्तं संतमसं तमम् ॥ १४८ ॥**

१० ताम्यति मन्दीभवति चक्षुरत्र **तमः**। सान्तम्। क्लीबे। अन्धं दृष्ट्युपघातं करोतीति **अन्धकारम्**। तिम्यते आच्छाद्यतेऽनेन **तिमिरम्**। कान्तारे ध्वन्यते **ध्वान्तम्**[7]। सम् सम्यक् प्रकारेण तमः **सन्तमसम्**। ताम्यतीति **तममि**त्यदन्तम्। क्लीबे। अवतमसम्। अन्धतमसम्। तमिस्रम्। भूछाया। भूछायम्। दिगम्बरम्।

**लोहितं रक्तमाताम्रं पाटलं विशदारुणम्।**

षड् रक्ते[8]। रोहति जायते शोभाऽत्र **लोहितः**[9]। रज्यते **रक्तम्**[10]। आताम्यते काङ्क्ष्यते १५ कर्णेषु **आताम्रः**। पाटयतीति **पाटलः**। पाटेरलः। विशीयते **विशदः**। अर्च्छति इयर्ति (र्ति वाऽ) **रुणः**।

**पीतं गौरं हरिद्राभम्**

हरिद्रारक्तवर्णे त्रयः। पीयते मनोऽनेन **पीतम्**[11]। गाते गच्छति वर्णविशेषं **गौरः**[12]। तथा च नाममालायाम्[13]–"**गौरः** श्वेतेऽरुणे पीते विशुद्धे चन्द्रमस्यपि। विशदे"। हरिद्रावत् आभा २० छविर्यस्य **हरिद्राभः**।

**पालाशं हरितं हरित् ॥१४९॥**

हरिद्वर्णे त्रयः। पलाशस्य वर्णस्यायं **पालाशः**। पलाश इत्याह[14]–"**राक्षसे**। किंशुके वर्णे पलाशाख्या। हरित्यपि"। हरति चित्तं **हरितम्**। **हरित्**।

१. पन्यते स्तूयते पाण्डुः। "पनेर्दीर्घश्च" इति डुः। इति हेमचन्द्रः। २. कर्षति मन इति रामाश्रमः। कृषेर्वर्णे इति नक्। ३. "णील वर्णे"। नाम्युपधेति का० सू० कः। ४. कालयति मन इत्यन्यत्र। ५. अयं पाठोऽत्र न युक्तः। "पालाशं हरितं हरित्" इति पद्यस्य टीकायामग्रे द्रष्टव्यः। ६.कृष्णमिश्रितलोहिते धूम्रधूमलशब्दाविति वैशिष्ट्यार्थः। तदुक्तम्–"धूम्रधूमलौ कृष्णलोहिते" इत्यमरः। १।५।१६। ७. कान्ताप्रदेशादिषु तमसोऽविच्छिन्ननिवेशात्तदाह—"कान्तारे ध्वन्यते" इति। सर्वरोगहरतया ध्वन्यते ध्वान्तमिति हैमचन्द्रः। ८. अत्र ड्रौ रक्ते, त्रयो विशदारुणे, इति वक्तव्यम्। विशदं च तद्रूपम्, श्वेतविशिष्टरक्तमित्यर्थः। तदेव पाटलम्। तदुक्तम्—"श्वेतरक्तस्तु पाटलः" इत्यमरः। ९. "रुह बीजजन्मनि प्रादुर्भावे"। "रुहे रश्च लो वा"। पा०उ०सू० ३।९४। इतीतन्, लत्वं च वा। १०. रज्यति स्म रज्यते स्म वा रक्तमित्यन्यत्र। ११.पीयते वर्णान् पीतः। "पीङ् पाने"। दि०। इत्यपि। १२.गूरते उद्युङ्क्ते मनोऽस्मिन् गौरः। "गूरी उद्यमने"। ऋज्रेन्द्र इत्युणादिसूत्रेण व्युत्पादितः। "गूयते गौरः" इति हेमचन्द्रः। "गृङ् संश्लेषणे। १३. अने० सं० २।४२५। १४. शा० को० ५२९।

**हरिणी लोहिनी शोणी गौरी श्येनी पिशङ्ग्यपि ।**

षड् रक्तवर्णे[1] । "श्येतैतहरितलोहितेभ्यस्तो नः[2]" अनेन ईप्रत्यये तकारस्य नकारश्च । **हरिणी** । तथा च हलायुधे[3]—"**शुकाभा हरिणी स्मृता ।**" हरिता च । रोहति जायते शोभाऽत्र लोहितः । रलयोरैक्यम् । "श्येतैतहरितलोहितेभ्यस्तो नः" अनेन ईस्तकारस्य च नकारः । लोहिनी जाता । हलायुधे[4]—

"जपाकुसुमसंकाशा लोहिनी परिकीर्तिता"

शोणते **शोणी** । गाते गौरः । नदादित्वादीः । **गौरी** । श्यायते गच्छति श्रियं **श्येनी** । हलायुधे[5]—"**श्येनी कुमुदपत्राभा** ।" श्येना च । पिंशति पिशङ्गः । ईप्रत्यये **पिशङ्गी** ।

**सारङ्गी शबरी काली कल्माषी नीलपिञ्जरी ॥१५०॥**

षड्[6] पद्म वर्णे । सारयति गमयति [ बहुवर्णान् ] **सारङ्गः** । ईप्रत्यये **सारङ्गी** । शवति याति वर्णान् **शवरः** शबलश्च । ईप्रत्यये **शबरी** । कालयति कालः । ईप्रत्यये **काली** । कलयति वर्णान् कल्मषः । ईः **कल्माषी** । नील गन्धे । नीलति नीलम् । ईप्रत्यये **नीली** । पिञ्जति पिञ्जरः । ईप्रत्यये **पिञ्जरी** ।

**परागं मधु किञ्जल्कं मकरन्दं च कौसुमम् ।**

पञ्च[7] कुसुमरेणौ । परं प्रकर्षमगच्छते सम्भाव्यते पुष्पेषु **परागः**[8] । उभयम् । मन्यते सम्भाव्यते पुष्पेषु **मधु** । उभयम् । किं अल्पति **किञ्जल्कम्**[9] । मङ्कते मण्डयते पुष्पमनेन **मकरन्दम्**[10] । कुसुमस्येदं **कौसुमम्** ।

**उपचाराद्रजः पांसुरेणुधूलीश्च योजयेत् ॥१५१॥**

चत्वारो धूल्याम् । रंज रागे । रज्यतेनेन **रजः** । "उषिरंजिभ्यो यण्वत्[11]" । नाक धाक पंशि नाशने । पंशयते **पांशुः** । "[12]अद्दिरहितलिभेशिभ्य उण् ।" रीङ् गतौ । रीयते **रेणुः** । 'दाभारीनुभ्यो[13] नुः' । धूयते धुनोति दृष्टिं वा **धूलिः** । **उपचारात्** पुष्परजः । सुमनःपांशुः । पुष्परेणुः । लतान्तधूलिः । प्रसवरजः । प्रसूनरेणुः । इत्यादीनि पुष्परजो नामानि ज्ञातव्यानि ।

**कलङ्कावद्यमलिनं किञ्जल्कं लक्ष्म लाञ्छनम्**
**निर्बोधमघर्म पङ्कं मलीमसमपि त्यजेत् ॥१५२॥**

१. अत्र षट्स्त्रीलिङ्गवाचके तत्तद्वर्णविशिष्टे इति वक्तव्यम्, न तु रक्तवर्णे । तत्तद्वर्णभेदो यथा—हरिणी शुकाभा, लोहिनी जपाकुसुमसङ्काशा, शोणी कोकनदच्छविः, गौरी हरिद्राभा, श्येनी कुमुदपत्राभा, पिशङ्गी पीतरक्ता । २. "श्येतैतहरितभरितरोहिताद् वर्णान्तो नः" है० श० २।४।३६ । ३ "श्येनी कुमुदपत्राभा शुकाभा हरिणी स्मृता । जपाकुसुमसङ्काशा रोहिणी परिकीर्तिता ।" इति पूर्णः श्लोकः । ३. हलायु० ४।५३ । ४. हला० ४।५३ । ५. हला० ४।५३ । ६. अत्र षट् स्त्रीलिङ्गवाचके तत्तद्वर्णविशिष्टे इति वक्तव्यम् । तद्भेदो यथा—सारङ्गीशम्बरीकल्माष्यश्चित्रवर्णाः । काली नील्यावसिते । पिञ्जरी पीतरक्ता । ७. अत्र परागकिञ्जल्कशब्दौ पुष्परजोवाचकौ, मधुमकरन्दशब्दौ पुष्परसवाचकौ, कौसुमशब्दस्तदुभयवाचकः, इति विवेकः । ८. परागच्छति परमुत्कर्षमगति वेति विग्रहः सरलः । ९. किञ्चिज्जलति, "जल अपवारणे" । बाहुलकात्कः । किञ्चिज्जलति जडीभवति इति नी० स्वा० । १०. मकरमपि द्यति कामजनकत्वान्मकरन्दः । "दो अवखण्डने" । कः । मकरमपि अन्दति बध्नातीति वा । "अदि बन्धने" । कर्मण्यण् । शकन्ध्वादिः । इति रामाश्रमः । ११. का० उ० सू० ४।५९ । १२. का० उ० सू० १।३ । १३. का० उ० सू० २।७ ।

द्वौ कलङ्के । कल्यते लक्षणेन **कलङ्कः**[1] । न वद्यं समीचीनम् **अवद्यम्**[2] । मल्यते धार्यतेऽपयशो-ऽनेन **मलिनम्** । किं कुत्सितं जल्पति **किञ्जल्कम्** । लक्षयति परं नान्तम् **लक्ष्म** । लाञ्छ्यतेऽनेन **लाञ्छनम्** । निरुध्यते **निरोधम्**[3] । नञ् पूर्वो धाञ् । न दधातीत्यधमः । "धर्मसीमाभीष्माधमाः[4]" । "पञ्च्यते **पङ्कम्** । मलिना कदर्येण मस्यते[5] परिमाणीक्रियते **मलीमसः** । तं त्यजेत् सत्पुरुषः ।

## जनोदाहरणं कीर्तिं साधुवादं यशो विदुः ।
## वर्णं गुणावलिं ख्यातिं

सप्त यशसि । जनानां लोकानामुदाहरणं, जनेन लोकेनोदाह्रियते वा **जनोदाहरणम्** । कृत संशब्दे । कृत्–"चुरादिश्च[6] ।" इन् । कृतः[7] कारिते इर् । किर्ति जातः । नामिनोर्वा[8] । कीर्ति जातम् । कीर्तनं कीर्तिः । "कीर्तीपोः क्तिश्च[9]" क्तिप्रत्ययः । कारितलोपः । त्रिषु व्यञ्जनेषु सञ्जातेषु स्वजातीयानां मध्ये एकव्यञ्जनलोपः । एकस्तकारो लुप्यते । क्तिः । रेफः । साधूनां सत्पुरुषाणां वादः **साधुवादः** । कुशलो योग्यो हितश्च साधुरूच्यते । यज देवपूजादिषु । इज्यते **यशः** । "[10]यजः शिश्च" अस्मादसन् प्रत्ययो भवति स च यूण्वत् । जस्य शिः । इकार उच्चारणार्थः । वर्ण्यते साधुजनेन **वर्णः** । गुणानामवलिः श्रेणिः **गुणावलिः** । ख्यायते **ख्यातिः** । श्लोकः । अभिख्या । समाख्या ।

## अवधानं तु साहसम् ॥१५३॥

साहसे द्वौ । अवधीयतेऽवधानम् । अवदानं च । साध्यते [11]**साहसम्** ।

## प्रेष्यादेशनिदेशाज्ञानियोगाः शासनं तथा ।

षडादेशे । प्रेष्यते इति **प्रेष्यः** । आ समन्ताद् दिशतीत्यादेशः[13] । निदिश्यते निदिशतीति वा **निदेशः** । आजानातीत्याज्ञा[14] । नियुज्यन्ते **नियोगाः** । शास्यते प्रतिपाद्यते **शासनम्** । शासु अनुशिष्टौ ।

## सन्देशः प्रिययोः

स्त्रीपुरुषयोः सुखवार्तायां सन्देशः । सन्दिशति [15]**सन्देशः** । अमरसिंहनाममालायाम्[16]–"सन्देशवाग्वाचिकं स्यात् ।"

## वार्ता प्रवृत्तिः किंवदन्त्यपि ॥१५४॥

त्रयो नवीनवार्तायाम् । वृत्तिर्लोकवृत्तं विद्यतेऽस्या वार्ता । "[17]प्रज्ञाश्रद्धाऽर्चावृत्तिभ्यो णः"

---

१. कं ब्रह्माणमपि लङ्कयति हीनतां गमयतीत्यन्यत्र । २. न वदितुं योग्यमित्यवद्यं गर्ह्यम् । "अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु" इति यत् । ३. नात्र प्रमाणान्तरमुपलब्धम् । निरुध्यते निश्चयेन ज्ञायते कलङ्किजनोऽनेनेति करणे घञ् । कलङ्किनां राजशासनचिह्नितत्वदर्शनात् । ४. का० उ० सू० ५१५३ । ५. पच्यते दुःखमनेन । पचि व्यक्तीकरणे विस्तारे वा । कर्मणि घञ् । ६. "मसी समी परिमाणे" । पुंसि संज्ञायां घः । यद्वा मलोऽस्यास्तीति "ज्योत्स्नातमिस्रे" त्यादिना मत्वर्थीय ईमसच् प्रत्ययः । टीकोक्तविग्रहश्चिन्त्यः । तत्र मलिमस इत्यापत्तेः । ७. का० सू० ३।२।११ । ८. कीर्तीपोः क्तिश्चेति निर्देशात् कृतः कारिते इर् । ९. "नामिनोर्वोऽकुर्छुरोर्व्यञ्जने" का०सू० ३।८।१४ । १०. का०सू० ४।५।८६ । ११. का०उ० सू० ४।६० । १२. सहसि बले भवं साहसम् । १३. आदेशनम् आदिश्यते वेति विग्रहः । १४. अत्रापि आज्ञायते आज्ञानं वेति विग्रहः । १५. सन्दिश्यते इति कर्मणि घञ् न्याय्यः । १६. अम० को० १।६।१७ । १७. पा० सू० ५।२।१०१ ।

स्त्रीक्लीबे वार्त्तं च। प्रवर्तते जनोऽनया **प्रवृत्तिः**। स्त्रियाम्। किं कुत्सितं वदन्त्यत्र **किंवदन्ती**[1]। वृत्तान्तः। उदन्तः।

## कठोरं कठिनं स्तब्धं कर्कशं परुषं दृढम्।

षड् दृढे। कठति कृच्छ्रेण जीवति **कठोरः**[2]। कठति **कठिनः**। स्तभ्नोति स्म **स्तब्धः**। कर्कः सौत्रोऽयं धातुः। कर्कति करोति निर्दयत्वं **कर्कशः**। परुष्यति कुप्यतीति **परुषः**[3]। कुप कुष रुष रोषे। ५ दृह दृहि वृद्धौ। दृहति स्म **दृढः**। "[4]परिवृढदृढौ प्रभुबलवतोः।" क्रूरः। कक्खटः। खरः। चण्डः। निष्ठुरः। जरठः। मूर्तिमत्। मूर्तम्। प्रवृद्धम्। प्रौढम्। एधितम्। सर्वे त्रिषु।

## अश्लीलं काहलं फल्गु

निस्सारे वचसि त्रयः। न श्लीयते न श्लिष्यते सतां चित्तम् **अश्लीलम्**[5]। वचनम्। कं शिरः आ समन्तात् हलति अशोभमानं करोतीति **काहलम्**[6]। लोहलश्च। लुदः सौत्रः। फल निष्पत्तौ। १० फलति **फल्गुः**[7]। "[8]रज्जुतर्कुवल्गुफल्गुशिशुरिपुपृथुलघवः।

## कोमलं मृदु पेशलम् ॥ १५५॥

त्रयः कोमले। कौ पृथिव्यां मलते **कोमलम्**[9]। मृद क्षोदे। मृद्नातीति **मृदु**[10]। पिंशति **पेशलम्**[11]। सुकुमारः। मृदुलम्।

## प्रत्यग्रं साम्प्रतं नव्यं नवं नूतनमग्रिमम्। १५

षड् नवीने। प्रत्यग्रगति **प्रत्यग्रम्**[12]। सम्प्रति भवं **साम्प्रतम्**। नूयते **नव्यम्**[13]। नौति **नवम्**[14]। नूयते **नूतनम्**[15]। अग्रे भवम् **अग्रिमम्**[16]। "पृथ्वादिभ्य इमन्वा"। अभिनवम्।

---

१. कोऽपि वादः। किम्पूर्वाद् वदेरौणादिको झच् प्रत्ययः, झत्यान्तः। गौरादित्वान्ङीप्। इति रामाश्रमः। २ "कठिचकिभ्यामोरः" का० उ० सू० ४।३७। "कठ कृच्छ्रजीवने"। ३. बहिभाशुरिरल्लोपमित्यपेरल्लोपो नत्वपरस्येति टीकोक्तविग्रहश्चिन्त्यः। रामाश्रमस्तु—"पिपर्ति पूरयति अलं बुद्धिं करोति। "पृ पालनपूरणयोः"। "पृनहि" इत्यादिना उ० सू० ४।७५। उषन्। इत्याह।" पृणाति पूरयति परं कोपेनेति हेमचन्द्रः। ४. का० सू० ४।६।१५। ५. न श्रियं लातीति अश्लीलम्। कप्रत्ययः। कपिलकादित्वाल्लत्वम्। इति रामाश्रमः। न श्रीरस्यास्तीति सिध्मादित्वान्मत्वर्थीयो लः। ६. काहलोऽस्फुटवागिति हेमचन्द्रः। ७. फलति विशीर्यते इत्यन्यत्र। ८. का० उ० सू० १।९। इत्युप्रत्ययः गश्च। ९. कौ पृथिव्यां मलते धारयति श्रियम् इत्यर्थः। "मल मल्ल धारणे" पचाद्यच्। परमेवं कुमल इत्येव सिध्यति। वस्तुतस्तु "कोमल" शब्दस्य सिद्धिः प्रकारान्तरेणैव साधनीया। कौतीति कोमलः इति विग्रहोऽभिधानचिन्तामणौ। काम्यते जनैः इत्यन्यत्र। १०. मृद्यते इति कर्मणि कुप्रत्ययो व्याख्यः। ११. पिंशत्येकदेशेन सर्वं करोतीति। औणादिकोऽलच्। रामाश्रमस्तु—'पिश समाधौ' पेशनं पेशः समाहितचित्तता, सोऽस्यास्तीति सिध्मादित्वादलच् इत्याह। पेशलशब्दस्य दक्षार्थो मुख्यः कोमलार्थो गौणः। तदुक्तम्—"दक्षे चतुरपेशलपटवः सूत्थान उष्णश्च" इत्यमरः। ३।१०।१९। "दक्षस्तु पेशलः।" इति अभि० चि० ३।४८। १२ "अग्र गतौ"। डः। प्रतिनवमग्रमस्येति क्षीरस्वामिरामाश्रमौ। प्रतिगतमग्रमनेनेति हेमचन्द्रः। १३. 'णु स्तवने'। अचो यत्। १४. नूयते नवम्। अब्दोदप्। एवं कर्मणि विग्रहो युक्तः। १५. नवमेव नूतनम्। "नवस्य नूआदेशस्तनप्तनप्खाश्च प्रत्ययाः वा० ५।४।३० इति तनप् प्रत्ययो नूआदेशश्च। इत्यत्र। १६. 'अग्रादिपश्चाड्डिमच्' वा० इति डिमच्। नाप पृथ्वादिभ्यः, इमन्, तस्य भावकर्मणोर्विधानात् पृथ्वादौ पाठाभावाच्च। सत्यपि। अग्रिमन् इत्यनिष्टरूपापत्तेः।

नूतनश्च । सर्वे त्रिषु ।

**पुराणं जठरं जीर्णं प्राक्तनं सुचिरन्तनम् ॥ १५६ ॥**

पञ्च पुरातने । पुरा भवम् **पुराणम्** । जठ इति सौत्रोऽयं धातुः । जठतीति **जठरम्**[1] । जीर्यते **जीर्णम्** । प्राक् पूर्वं भवम् **प्राक्तनम्** । सुष्ठु चिरं भवं सुचिरन्तनम् । प्रतनम् । प्रत्नम् ।

**भो रे हं हो ह्यामन्त्रे**

५ एते शब्दा आमन्त्रणार्थे वर्तन्ते । भू सत्तायाम् । **भोः**[2] । रेपृ प्लवगतौ । **रे** । हन् हिंसागत्योः । **हं** । हु दाने । **हो** । हि गतौ । **हे** ।

**कच्चित् किञ्चन संशये ।**

सन्देहार्थे[3] द्वौ शब्दौ वर्तेते । अविशेषाभिधाने चिचनशब्दौ अव्ययान्तस्थौ । तथा चोक्तम्—

१० "किमः सर्वविभक्त्यन्ताच्चिच्चनौ ।" कश्चित् । कश्चन । कौचित् । कौचन । केचित् । केचन इत्यादि । स्त्रियां काचित् काचन इत्यादि । क्लीबे किञ्चित् । किञ्चन । इत्यादि ।

**[4]द्राक्क्षणेऽह्नाय[5] सपदि[6]**

शीघ्रार्थे त्रयः शब्दा वर्तन्ते ।

**निषेधे मा न खल्वलम् ॥ १५७ ॥**

१५ निषेधे चत्वारः शब्दा वर्तन्ते ।

**उच्चैरुच्चावचं तुङ्गमुच्चमुन्नतमुच्छ्रितम् ।**

षड् दीर्घे । उच्चीयते **उच्चैस्** । अव्ययः । उच्चं च अवचं च **उच्चावचम्** । तुजति दैर्घ्यमाप्नोति **तुङ्गम्**[7] । उच्चीयते **उच्चम्** । उन्नमत्युन्नतम्[8] । उच्छ्रीयते **उच्छ्रितम्**[9] । प्रांशुः[10] तालव्यः । उदग्रम् । दीर्घम् । आयतं च ।

२० **नीचं न्यग्गातनं कुब्जं नीचैर्ह्रस्वं नयेत्परम् ॥१५८॥**

षड् ह्रस्वे । निचीयते नीचम्[11] । न्यञ्चतीति न्यक् । आतन्यते आतनम्[12] । कौति व्याधिं कुब्जः[13] ।

---

१. यद्यपि जरठशब्दो जीर्णे प्रसिद्धो जठरशब्दस्तूदरे, तथापि क्वचिज्जठरशब्दोऽपि जीर्णे पठितस्तदाशयेनाह—जठतीति जठरमिति । यदुक्तम्—"जठरः कुक्षिवृद्धयोः" अने० स० ३।५५१ । २. भातीति भोस् । डोसूप्रत्ययः । यथा—भो भार्गव । रिणातीति रे । विच् । यथा रे चेटाः । हं. हो. इति पृथक्सम्बोधनद्वयमुक्तम् । परन्तु नाटकादौ 'हं हो' इत्यखण्ड एव सम्बोधने प्रयुज्यते । हं जुहोतीति हंहो । यथा हंहो तिष्ठ सखे । हिनोति हे । "हि गतौ वृद्धौ" । विच् । यथा हे हेरम्ब । ३. अविशेषार्थे इत्याशयः । ४. द्राति द्राक् । "द्रा कुत्सायां गतौ" । बाहुलकात्कः । अकार इत् । स चासौ क्षणो द्राक्क्षणः । ५. आह्वनम आह्नायः "ह्नुङ् अपनयने" । घञ् । पृषोदरादित्वाद् वस्य यः । ६. सम्पद्यते सपदि । "पद गतौ" । इन् । पृषोदरादित्वात्समोऽन्त्यलोपः । ७. तुजति दैर्घ्यं पालयतीति । घञ् । कुत्वम् । ८. उन्नमति स्म उन्नतम् । ९. ऊर्ध्वं श्रयते उच्छ्रितम् । १०. प्राश्नुते दैर्घ्यं प्रांशु । "अशूङ् व्याप्तौ" । ११. निकृष्टामां लक्ष्मीं चिनोतीति । डः । इति रामाश्रमः । निम्नमञ्चति, नीचैरस्त्यस्य वा । अर्श आदित्वादच् । अव्ययानां भमात्रे टिलोपः । १२. नात्र प्रमाणमुपलब्धम् । १३. कौति व्याधिविशेषं ब्रूते सूचयति । कौ पृथिव्याम् उब्जति ऋजूभवति । "उब्ज आर्जवे ।" अच् । शकन्ध्वादिः । कु ईषद् उब्जमार्जवमस्य वेति रामाश्रमः ।

न्युब्जश्च । निचीयते नीचैः । ह्रसति ह्रस्वः ।

**अमा सह समं साकं सार्द्धं सत्रा सजूः समाः ।**

अष्टौ सार्थे । अमति **अमा**[1] । सह इन्ति गच्छति **सह** । सह मिनोति **समम्** । सह अकति गच्छति **साकम्** । सह ऋद्धम् **सार्द्धम्** । सह त्रायते **सत्रा** । जुषी प्रीतिसेवनयोः । जुष् सहपूर्वः । सह जुषते **सजूः** । क्विप् वेर्लोपः । सिः । व्यञ्ज०[2] । सिलोपः । समन्ति **समाः**[3] । सह मान्ति वर्तन्ते ऋतवो यासां वा । स्त्रीबहुत्वे ।

**सर्वदा सततं नित्यं शश्वदात्यन्तिकं सदा ॥१५९॥**

षट् नित्ये । सर्वस्मिन् काले **सर्वदा** । "काले किं[4] सर्वयदेकान्येभ्यः एव दा" । संतन्यतेऽस्म **सततं**[5] सन्ततम् च । नियच्छति **नित्यम्**[6] । शश्वतीति **शश्वत्**[7] । अत्यन्ते भवमात्यन्तिकम् । **सदा** इति निपातः । सर्वशब्दात्परो दाप्रत्ययो भवति सर्वस्य सभावश्च । सर्वस्मिन् काले **सदा** । सनातनं,[8] सदातनम् । ध्रुवम् । शाश्वतम् । शाश्वतिकम् । अनश्वरम् । अविनश्वरम् । सर्वे त्रिषु ।

**वियोगं मदनावस्थां विरहं पल्लकं विदुः ।**

चत्वारो विरहे । वियोजनं **वियोगः** । मदनस्य कन्दर्पस्यावस्था **मदनावस्था** । विरहणं **विरहः** । मल मल्ल धारणे । मल्लस्थाने केचित्पल्ल इति पठन्ति । पल्लते पल्लः । स्वार्थे कः **पल्लकः**[9] ।

**प्रेमाभिलाषमालभ्यं रागं स्नेहमतः परम् ॥१६०॥**

पञ्च स्नेहे । प्रियस्य भावः कर्म वा **प्रेमा** । प्रिय[10] "स्थिरेति प्रादेशः । अभिलष्यते **ऽभिलाषः** । लष श्लेषणक्रीडनयोः । आलभ्यते **आलभ्यम्**[11] । "[12]शकिसहिपवर्गान्ताच्च" । रञ्ज रागे । रञ्ज् । रञ्जनं **रागः** । भावे घञ् । "[13]रञ्जेर्भावकरणयोः" पञ्चमलोपः । अस्यो० दीर्घः । "चजोः[14] कगौ धुट् घानु-बन्धयोः ।" जकारगकारः । प्र०सिः । रेफः । अथवा रज्यतेऽनेन रागः । "व्यञ्जनाच्च[15]" । करणे घञ् । प्र० "रञ्जेर्भावकरणयोः" पञ्चमलोपः । अस्यो० दीर्घः । चजोः कगाविति जकारगकारः । स्निह्यते **स्नेहः** ।

**संहितं सहितं युक्तं संपृक्तं संभृतं युतम् ।**
**संस्कृतं समवेतं च प्राहुरन्वीतमन्वितम् ॥१६१॥**

---

१. न माति सह मातापित्रामनेकत्वान्मेयतां न गच्छति । डप्रत्ययः । कप्रत्ययो वा । २. "व्यञ्जनाच्च" का० सू० २।१।४९ । ३. "मसी समी परिमाणे" । सम धातुः । पचाद्यच् । सममिति मान्तमव्ययम् । सहार्थकमभीप्सितम् । तद्भिन्नः समा शब्दो वर्षवाचको न तु सहार्थवाचकः । तदुक्तम्—"हायनोऽस्त्री शरत्समाः" इत्यमरः । अतोऽस्मिन्नर्थे एतस्य प्रामाण्यं चिन्त्यम् । सह मान्ति ऋतवो यासामिति विग्रहोऽपि वर्षवाचकसमाशब्द एव सङ्गच्छते । तत्रैव ऋतूनां सद्भावात् । ४. का० सू० २।६।३४ । ५. 'तनु विस्तारे' । क्तः । "समो वा हिततयोः" इति नलोपः । ६. त्यब्नेर्ध्रुवे नित्यमिति वा० निशब्दात्त्यप् । नियच्छति नियतं भवतीत्यर्थः । ७. अत्र शशतीति वक्तुं युक्तम् । शश प्लुतगतौ । बाहुलकाद्वत् । ८. सनातनादिशब्दानां विशेष्यनिघ्नानां यथोक्तशश्वदादिशब्दसमानार्थतया टीकाकृतोक्तिर्न सङ्गच्छते । ९. मल्लकपल्लकशब्दयोर्विरहार्थत्वे प्रमाणान्तरं नोपलब्धम् । १०. पा० सू० ६।४।१५७ । इति प्रादेशः । इमनिच्प्रत्ययः । पृथ्वादिभ्य इमनिज्वा इति । ११. आलभ्यशब्दस्य रागार्थे कोशान्तरसंवादो नोपलब्धः । १२. का० सू० ४।२।११ । १३. का० सू० ४।१।६६ । १४. का० सू० ४।६।५६ । १५. का० सू० ४।५।९९ ।

दध सहिते । संहीयते **संहितम्**[1] । **सहितम्** ।

"**लुम्पेदवश्यमः कृत्ये तुम्काममनसोरपि ।**
**समो वा हितततयोर्मांसस्य पचि युड्घञोः॥**"

योजनं **युक्तम्**[2] । पृची सम्पर्के । पृच् । सम्पृणक्ति स्म **सम्पृक्तम्** । "गत्यर्थाकर्मक०[4]" इति कर्तरि क्तप्रत्ययः । "चजोः कगौ[5]"—चस्य कः । सम्भ्रियते स्म **सम्भृतम्** । यौतिस्म **युतम्** । संस्क्रियते स्म **संस्कृतम्** । समवेयते स्म **समवेतम्** । अन्वीयते स्म **अन्वीतम्** । **अन्वितम्** ।

## वर्त्माऽध्वा सरणिः पन्थाः मार्गः प्रचरसञ्चरौ ।

सप्त मार्गे । वर्तन्ते प्रतिपद्यन्ते जना येन तत् **वर्त्म** । नान्तम् । "[6]सर्वधातुभ्यो मन्" । **गच्छति** अतति चलति अनेन नान्तोऽ**ध्वा**[7] । सरत्यनया **सरणिः** । दन्ततालव्यः । स्त्रियाम् । द्वौ । पतन्ति गच्छन्ति अनेन **पन्थाः**[8] । नान्तः । इदन्तोऽपि । पथिः । पथः । पथानः । पन्थ इत्यपि । एते पुंसि । मार्जनं मार्गयन्त्यनेन वा **मार्गः**[9] । पुंसि । प्रकर्षेण चरत्यनेनेति **प्रचरः** । सञ्चरत्यनेनेति **सञ्चरः** । पद्धतिः । एकपदी । वर्तनी । अयनम् । पदवी । पद्या । निगमः ।

## त्रिमार्गनामगा गङ्गा

**मार्गपूर्वे त्रिशब्दे** प्रयुज्यमाने **गङ्गानामानि** भवन्ति । त्रिवर्त्मा । त्र्यध्वा । त्रिसरणिः । त्रिपथा । त्रिप्रचरा । त्रिसञ्चरा ।

## घोषो गोमण्डलं व्रजः ॥१६२॥

त्रयो गवां स्थाने । घोषन्ते [10]गावोऽत्र **घोषः** । गवां मण्डलम् **गोमण्डलम्** । गावो । व्रजन्त्यत्र **व्रजः** । गोकुलम् । गोष्ठम् ।

## शृङ्गो दृतिहरिर्नाथहरिस्तिर्यञ्च शृङ्गिणः ।

पञ्च महिषादिके । परं शृणाति हिनस्तीति **शृङ्गः**[11] (म) । त्रिषु । हृञ् । हरणे । **हृ दृति**-पूर्वः । दृतिं चर्मप्रसेवकं जलभाण्डं हरति वहति **दृतिहरिः** । "हरतेर्दृतिनाथयोः[12] पशौ" इप्रत्ययः । नान्तोनुखः । नाथं स्वामिनं हरतीति [13]**नाथहरिः** । "हरतेर्दृतिनाथयोः पशौ" । तिरोऽञ्चवर्तीति

---

१. संहीयते इति विग्रहो न युक्तः । सम्पूर्वस्य हाकल्यागार्थकत्वात्प्रस्तुतार्थाप्रतीतेः । अतः सन्धीयते स्म संहितम् । सम्पूर्वाद्धाञः क्तप्रत्यये धाञो हिरिति ह्यादेशः । २. ६।१।१४४ का० सू० । ३. युज्यते स्म युक्तम् । ४. का० सू० ४।६।४२ । ५. का० सू० ४।६।५६ । ६. का० उ० सू० ४।२८ । ७. अतति सन्ततं गच्छति अनेनोऽत्र अध्वा । "अत सातत्यगमने" । "वनिस्तस्य धः" का० उ० सू० ६।५१ । इति वनिप्रत्ययः, तकारस्य धकारश्च । "अपि बलं पथिकानाम् । अतेर्धश्चेति कनिप् धश्चान्तादेशः ।" इति रामाश्रमः । ८. "पत्लृ पतने" । पतेस्थश्चेतीति थोऽन्तादेशश्चेति ग्रन्थाशयः । पथन्तेऽनेन । "पथे गतौ" । पथन्तेऽनेन । "पथे गतौ" । पतिमथिभ्यामिनिः । इति रामाश्रमः । ९. मृज्यते निर्मलीक्रियते पादैः । मृजू शुद्धौ । घञ् । वृद्धिः । कुत्वं च । मार्ग्यते इति वा । "मार्ग अन्वेषणे" । १०. वासन्ते शब्दायन्ते इत्यर्थः "वाशृ शब्दे" । ११. "शृङ्गभृङ्गाङ्गानि" का० उ० सू० ५।४।४८ । "शॄ हिंसायाम्" । गप्रत्यये निपातः । शृङ्गं गवादीनां विषाणमिति तत्रैव दुर्गः । ततः शृङ्गमस्यास्तीति अर्शआदिभ्योऽच् । एवं सति महिषादिसंज्ञा संगच्छते । अन्यथा विषाणमेवार्थः स्यात् । १२. का० सू० ४।३।२६ । १३. नाथं नासारज्जुं हरतीत्यन्यत्र ।

तियञ्चः[1]। शृणातीति शृङ्गम्। "शृङ्गभृङ्गाङ्गानि" एतेऽङ्गप्रत्ययान्ता निपात्यन्ते। शृङ्गानि विद्यन्ते येषां ते शृङ्गिणः।

**गौरचतुष्पात्पशुः**

त्रयो[2] गवि। पूजां गच्छतीति **गौः**। चत्वारः पादा यस्यासौ **चतुष्पात्**। स्पश इति सौत्रो धातुः। स्पशते [बाधते] इति **पशुः**। [3]मृग्वादयः—"मृग्वादुभ्रुमुङ्क्षुहरिद्रुमितद्रुशतद्रुशंकुगुरुपशुदेवयुजटायुकुमारकुगयवः" एते शब्दाः कुप्रत्ययान्ता निपात्यन्ते। ५

**तत्र महिषी नाम देहिका ॥१६३॥**

द्वौ महिष्याम्। तत्र तस्मिन् मह्यतेः[4] महिषः। नदादित्वादीः। **महिषी**। दिह्यते उपचीयते दुग्धेन **देहिका**[5]।

**कृती नदीष्णो निष्णातः कुशली निपुणः पटुः।** १०
**क्षुण्णः प्रवीणः प्रगल्भः कोविदश्च विशारदः ॥१६४॥**

एकादश कुशले। प्रशस्तं कृतं कर्मास्य **कृती**। नद्यां स्नातीति **नदीष्णः**। "निनदीभ्यां[6] स्नातेः कौशले" इति षत्वम्। नितरां संस्नाति स्म शुचित्वमाप्नोति स्म **निष्णातः**। कुत्सितं श्यति **कुशलः**। अथवा कुशान् लाति कुशलः। निपुणतीति **निपुणः**। शोभनकर्मत्वात्। पटति जानातीति **पटुः**। क्षुण्यति स्म **क्षुण्णः**। क्षुदिर् सम्पेषणे। प्रकृष्टा वीणास्य **प्रवीणः** इति मुख्यार्थं परित्यज्य निपुणे रूढा। तदाहुः— १५

"[7]निरूढा लक्षणा कैश्चित्सामर्थ्यादभिधानवत्।
क्रियतेऽद्यतनैः कैश्चित्कैश्चिन्नैव त्वशक्तितः ॥"

प्रगल्भते **प्रगल्भः**। गल्भ धाष्टर्ये। को वेत्ति तदभिप्रायमिति निरुक्त्या कवते **कोविदः**[8]। विशेषेण पापं शृणाति **विशारदः**[9]। क्षेत्रज्ञः। कृतहस्तः। कृतमुखः। कृतकर्मा। दक्षः। शिक्षितः। २०

**विदग्धश्चतुरः**

द्वौ चतुरे। विदह्यते [10]**विदग्धः**। पुरुषार्थान् चतति याचते **चतुरः**।

**धूर्तश्चाटुकृत् कितवः शठः।**

---

१. "तिर्यञ्च" इत्यकारान्तपाठश्चिन्त्यः। क्विप्प्रत्ययान्तेऽञ्चतावेव "तिरसस्तिर्यलोपे" इति तिर्यादेश इति चकारान्तस्यैव कुत्वम्। चकारान्तत्वे चाष्टाक्षरपादे एकाक्षरोनत्वेन मूले छन्दोभङ्गश्च। न चाकारान्तस्तिर्यञ्चशब्दः केनाऽप्यन्यकोषकारेण पश्वर्थेऽभिमतः। तदुक्तम्—"पशुस्तिर्यङ्नरिः" अ० चि० ४।२८१। २ सामान्यविशेषार्थत्वादेषां पर्यायत्वाभावात्त्रयो गवीति पाठश्चिन्त्यः। गौशब्दः पशुविशेषे बलीवर्दादौ। चतुष्पात्पशुशब्दयोः सर्वपशुवाचकत्वात्पर्यायत्वमिति विवेकः। ३. का० उ० सू० १।१५। ४. "महिङ् वृद्धौ"। मंहते वर्धते वा विशालकायत्वात्। औणादिकष्टिषच्। आगमशास्त्रस्यानित्यत्वान्न नुम्। इत्यन्यत्र। ५. नात्र कोषान्तरसंवादः। ६. पा० सू० ८।३।८९। ७. अस्य पूर्वार्धः ध्वन्यालोकलोचने १६ कारिकाटीकायामेवमुपलभ्यते "निरूढालक्षणाः काश्चित्सामर्थ्यादभिधानवत्" इति। उत्तरार्धस्तु न समुपगतः। ८. कौति प्रतिपादयति धर्मादि कोविदः। कुधातोर्विच्। वेत्तीति विदः। इगुपधेति कः। कोविदः। अथवा कवि वेदे विदा यस्येति रामाश्रमः। ९. विशेषेण शारदोऽधृष्टः प्रत्ययो वा विशारदः। इति हेमचन्द्रः। विशिष्टो विपरीतो वा शारदः इति रामा०। १०. विशेषेण मौर्खचित्तं दहति स्म विदग्धः।

चत्वारो धूर्ते। धूर्वति स्म हिनस्ति स्म धर्माचारं धूर्तः। चाटु करोतीति चाटुकः[1]। कितवोऽस्त्यस्येति कितवः। शाठयतीति शठः। दाण्डाजिनकः। कुहकः। कार्पटिकः। जालिकः। कौसृतिकः[1]। व्यंसकः। मायावी। मायी।

**क्वापि नागरिको ज्ञेयः**

५ **क्वापि** कुत्रापि **ज्ञेयः** ज्ञातव्यः। नगरे भवो **नागरिकः**[2]।

**गोत्रसंज्ञाङ्कनाम तत् ॥१६५॥**

चत्वारो नाम्नि। गवा वाण्या स्वाचारेण त्रायते रक्षति पालयति **गोत्रम्**[3]। संज्ञानं **संज्ञा**[4]। अङ्कं च नाम च समाहारत्वादेकवचनम्। अङ्क्यते लक्ष्यते **अङ्कम्**[5]। नमनम् **नाम**[6]।

**मुग्धो मूढो जडो नेडो मूको मूर्खश्च कद्वदः।**

सप्त मूर्खे। धर्मकार्येषु मुह्यति संशयं प्राप्नोतीति **मुग्धः**। मुह वैचित्त्ये। मुह्यति स्म **मूढः**।
१० गत्यर्थेत्यादिना क्तः। ढो ढः[7]। [8]तवर्ग०। ढे ढो लोपः[9]। सिः। रेफः। जडति न पुण्यं गच्छति[10] **जडः**। जल्मश्च। न ईड्यते न स्तूयते केनापि[11] **नेडः**। मूङ् बन्धने। मूयते **मूकः**।[12]मूकादयः—"मूकयूकअर्भकधूमुकशूकल्लूकभूकाः" एते कप्रत्ययान्ता निपात्यन्ते। मुह वैचित्त्ये। मुह्यति कार्येषु **मूर्खः**। "मुहे[13] मूर्च"। कुत्सितं वदति **कद्वदः**। विधेयः। वालिशः। बाडिशः। बालः।[14]बठरः। सलिः[15]।
१५ [16]नालीकः। पशुः।

**स देवानां प्रियोऽप्राज्ञो मन्दः**

त्रयो मन्दे। **देवानां प्रियः**[17]। अप्रि (न्प्रि)स इत्यर्थः। न प्राज्ञः **अप्राज्ञः**। कार्येषु मन्दते स्वपितीति **मन्दः**।

---

१. कुसृत्या चरतीति कौसृतिकः। तेन चरतीति ठक्। २. धूर्तसामान्यार्थ इत्यर्थः। ३. वचसा आचारेण च स्वस्य रूपं रक्षते। नामाऽपि स्वानुरूपाचारवचोभ्यामात्मानं प्रतिष्ठापयति। रामाश्रमस्तुदगूयते शब्द्यते उच्चार्यते इति व्युत्पत्तिमाह। "गुङ् शब्दे"। ४. तदुक्तम्—"संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना" इति। अम० को ३।३।३३। ५. अङ्क्यतेऽनेनेति शेषः। नाम्ना जनोऽङ्कितो भवति। ६. नमनं नामेत्यसङ्गतम्। भावे घञि प्रणामार्थक इत्यनामशब्दसाधुत्वापत्तेः। अतः "म्ना अभ्यासे" म्नायते उच्यतेऽभिधीयतेऽर्थोऽनेनेति विग्रहो व्याख्यः। नामन् सीमन् इति निपातितः। ७. अत्र "मुहादीनां वा" का० सू० २।३।४६। इति तकारस्य धकारः। ८. "तवर्गस्य षटवर्गाट्टवर्गः" का० सू० ३।८।५। इति धस्य ढः। ९. "ढे ढलोपोदीर्घश्चोपधायाः"। का० सू० ३।८।६। इति ढलोपो दीर्घश्च। १०. जलति तीव्रो न भवति। डलयोरैक्ये जड इति हेमचन्द्रः। ११. नेडशब्दः कोषान्तरे नोपलभ्यते। एडमूकशब्दोऽजडमूकशब्दो वा वाक्श्रुतिवर्जितार्थे लभ्यते। तदुक्तम्—"एडमूकस्तु वक्तुं श्रोतुमशिक्षिते" इति। अम० को० ३।१।३८। "एडमूकौ त्वावाक्श्रुतौ" अभि० चि० ३।१२। अतोऽत्रापि अनेडमूक इति पाठः सम्भाव्यते। जडविशेषवाचकत्वेऽपि तस्य सामान्याभिप्रायेण जडे प्रयोगः अनेडशब्दो वा बधिरार्थः सामान्याभिप्रायेण प्रयोगः। १२. का० उ० सू० २।५८। १३. का० उ० सू० ४।१७। १४. नात्र प्रमाणान्तरमुपलब्धम्। १५. अत्रापि नान्यत्प्रमाणम्। १६. अत्राऽनेकार्थसङ्ग्रहः ३।५४। प्रमाणम्। तदुक्तम्—नालीकोऽब्जे शरे सन्धे नालीकं पद्मनन्दने" इति। १७. "देवानां प्रिय इति च मूर्खे" वा० ३।३।२१। "षष्ठ्या अलुक्" इति पा० सूत्रे।

**धीनामवर्जितः ॥ १६६ ॥**

धीवर्जितः । बुद्धिवर्जितः । प्रतिभावर्जितः । प्रज्ञावर्जितः । मनीषावर्जितः । धिषणावर्जितः । मतिवर्जितः । संख्यावर्जितः । इत्यादीनि मूर्खनामानि भवन्ति ।

**षाष्टिकः कलमः शालिर्व्रीहिः स्तम्बकरिस्तथा ।**

चत्वारः शालिभेदे । षष्टिरात्रेण पच्यन्ते षाष्टिकाः[1] । षष्टिदिवसैरुत्पन्ना इत्यर्थः । कलयति पुष्टिमनेन कलमः । शालते धान्येषु शालिः । अथवा शालिना भ्रमरेण युतः शालिः । वर्द्धति वर्धते व्रीहिः ।[2] स्तम्बकरिः ।

**वत्सः शकृत्करिर्जातः षोडन् षड्दशनः स्मृतः ॥ १६७ ॥**

चत्वारो वत्से । मातरमभीक्ष्णं वदति वत्सः । शकृत् करोतीति शकृत्करिः । (इः)। "स्तम्ब-[3]शकृतोरिति" व्रीहिवत्सयोरुपसंख्यानादिन् । षड् दन्ता यस्य स षोडन् । "समासे दन्तदशवासु षष उत्वं दधोर्डढौ" षड् दशनाः यस्य स षड्दशनः ।

**शौण्डीरो गर्वितः स्तब्धो मानी चाहंयुरुद्धतः ।**
**उद्ग्रीव उद्धुरो दृप्तः**

नव गर्विते । शौण्डतीति शौण्डीरः । "[4]कृशॄशौण्डभ्य ईरः" । गर्वोऽहंकारः संजातोऽस्य गर्वितः । तारकितादिदर्शनात्संजातेऽर्थे इतच् । स्तभ्यते स्म स्तब्धः । मानः पूजादिलक्षणो गर्वो विद्यते अस्य मानी । अहम् अहंकारोऽस्त्यस्य अहंयुः । "ऊर्णाऽहंशुभंभ्यो युः"[5] । उद्धन्यते रूपेण उद्धतः[6] । उद् ऊर्ध्वा ग्रीवा यस्य स उद्ग्रीवः । उद्धरति गर्वेणान्यम् उद्धुरः । दृप्यते दृप्तः ।

**नीचश्च पिशुनोऽधमः ॥१६८॥**

त्रयो दुर्जने । नितरां पापं चिनोति नीचः[7] । मैत्रीं पिंशति मैत्रीं पेशयति वा पिशुनः[8] । तालव्यः । पिनष्टि वा पिशुनः । "[9]पिशुनफाल्गुनौ" मव्पूर्वो धाञ् । न दधातीत्यधमः । "[10]घर्मसीमाग्रीष्मा-धमाः" । दुर्जनः । क्षुद्रः । कर्णेजपः । दोषग्राही । द्विजिह्वः ।

**चौरैकागारिकस्तेनास्तस्करः प्रतिरोधकः ।**
**निशाचरो गूढनरो हेरिकः प्रणिधिश्च सः ॥१६९॥**

[11]नव चौरे । चोरयतीति चोरः । स्वार्थेऽणि चौरश्च । एकागारं प्रयोजनमस्येत्यैकागारिकः ।

---

१. "षष्टिकाः षष्टिरात्रेण पच्यन्ते" पा० ५।१।९० । इति कन् प्रत्ययो रात्रशब्दलोपश्च । २. स्तम्बं करोतीति, स्तम्बकरिः । "इः स्तम्बशकृतोः" । का० सू० ४।३।२५ । इति कृञ इप्रत्ययः । ३. का०सू० ४।३।२५ । ४. का० उ० सू० ३।४८ । ५. "ऊर्णाऽहंशुभमोयुस्" इति है० श० ७।२।१७ । ६. उत्कण्ठं हन्ति गच्छति हिनस्ति वा० उद्धतः इति हेमचन्द्रः । ७. ह्रस्वार्थेऽयं शब्दो गतः । तत्र न्यञ्चतीति विग्रह उक्तः । अत्र पिशुनार्थानुरोधेन विग्रहभेदः । निपूर्वकाच्चिनोतेर्बाहुलकाड्डः । उपसर्गदीर्घश्च । अन्यत्र तु निकृष्टमञ्चतीति विग्रहः । ८. पिंशत्येकदेशेन सूचयति "क्षुधिपिशिमिथिभ्यः कित्" उ० सू० ३।५५। इत्युनन् । पिशुनयति अपिशुनति वा । "अपिश्यति खण्डयतीति भोजः" इति हेमचन्द्रः । ९. का० उ० सू० २।६१ । १०. का० उ० सू० १।५६ । ११. चौरादयो निशाचरान्ताः षट् चौरे । गूढनरादयः प्रणिध्यन्तास्त्रयो गुप्तचरे । इति पाठ उचितः । तदुक्तम्–"हेरिको गूढपुरुषः । प्रणिधिः"– अभि० चि० ३।३९७ ।

स्तेनयति स्यायति वा **स्तेनः**[1] । उभयम् । तस्यति परद्रव्यं स्वयं नयति **तस्करः** । "तसेः[2] करः" । अथवा कृञ् तत्पूर्वः । तत्करोतीति तस्करः[3] । तदाद्यच् । नाम्यन्तगुणः । रूढित्वात्तस्य सकारः । प्रतिरुणद्धि मार्गं **प्रतिरोधकः** । निशां चरतीति **निशाचरः** । गूढश्चासौ नरः **गूढनरः** । हिनोति परराष्ट्रं गच्छति **हैरिकः** । प्रकर्षेण नितरां गुप्तो धीयते ध्रियते वा **प्रणिधिः** । दस्युः[4] । परास्कन्दी । मलिम्लुचः । मोषकः । प्रतिमोषकः ।

## प्रस्तरोपलपाषाणदृषद्धातुः शिला घनः ।

प्रस्तृणात्याच्छादयति [5]**प्रस्तरः** । काठिन्यमुपलाति [6]**उपलम्** । उभयम् । पिनष्टि सर्वं [7]**पाषाणः** । पाशानश्च । दृणाति चूर्णयति ध्रियते आद्रियते वा कार्यार्थं **दृषत्**[8] । स्त्रियाम् । दधाति [9]**धातुः** । शिनोति तनूकरोति [10]**शिला** । शिली च[11] । स्त्रियाम् । हन्यते [12]**घनः** । अश्मन् । ग्रावन् । पुलकश्च[13] ।

## तत्र जातमयो लोहम्

द्वौ लोहे । तत्र तस्मिन् पाषाणे जातम् उद्भवम् **तत्रजातम्** । प्रस्तरोद्भवः । उपलोद्भवः । धातूद्भवः । दृषदुद्भवः । शिलोद्भवः । घनोद्भवः । इत्यादि लोहनामानि भवन्ति । अयते सर्वविकारं सन्ततम् **अयः** । लुनाति सर्वं **लोहम्** ।

## शातकुम्भं नयेत्परम् ॥ १७० ॥

तत्र पाषाणे उद्भवानि सुवर्णनामानि भवन्ति ।

## क्षामं क्षान्तं कृशं क्षीणं हीनं जीर्णं च वैरिणाम् ।
## क्षीणविसानं दूनं च

नव कृशे । क्षायति स्म **क्षामम्** । शाम्यति स्म **शान्तम्** । **कृशम्** । **क्षीणम्** । **हीनम्** ।

---

१. "स्तेन चौर्ये" । चुरादिः । पचाद्यच् । २. का० उ० सू० ६।३ । ३. "तदाद्याद्यन्तानन्तकारबहुबाह्वहर्दिवाविभानिशाप्रभाभाश्चित्रकर्तृनान्दीकिंलिपिलिबिबलिभक्तिक्षेत्रजङ्घाधनुररुःसङ्ख्यासु च" का० सू० ४।३।२३ । इति कृञष्टप्रत्ययः । ४. दस्युप्रभृतयः प्रतिमोषकान्ताश्चौरपर्याया न तु गुप्तचरपर्यायाः । गुप्तचरपर्यायास्तु—यथार्हवर्णः । अवसर्पः । मन्त्रविद् । चरः । वार्तायनः । स्पशः । चारः । ५. "स्तृञ् आच्छादने" । पचाद्यच् । ६. अथवा पलतीति पलः । औः शम्भोः पलो वोपलः । ७. "पिष्लृ सञ्चूर्णने" । बाहुलकादानच् । पृषोदरादित्वादिकारस्याकारः । "पष बाधे ग्रन्थे च" । हलश्चेति घञ् । पषत्यनेनेति । अणतीत्यणः । "अण शब्दे" । अच् । पाषश्चासावणश्चेति विग्रहोऽप्यन्यत्र द्रष्टव्यः । ८. "दृणातेः पुग् ह्रस्वश्चे" ति साधुः । ९. "धातुस्तु गैरिकम्" अभि० चि० । "धातुर्मनःशिलाद्यद्रेर्गैरिकन्तु विशेषतः" अम० को० । इत्यादिकोषप्रमाणतः सामान्यप्रस्तरपर्यायेऽस्य पाठोऽयुक्तः । १०. शिनोतीति तालव्यशिधातुर्न क्वचिदुपलभ्यते । "शो तनूकरणे" । तस्य श्यतीति रूपम् । तनूकरोतीत्यर्थः । ततः शिलेति निपातो बाहुलकादौणादिकार्थेन समायाति । रामाश्रमादिव्युत्पत्तिकारैस्तु "शिल उञ्छे" शिलतीति शिला । इगुपधेति कः इत्युक्तम् । तत्रान्तरतम्यं सुधीभिर्विचारणीयम् । ११. उदुम्बरश्चाथ शिली शिला चापि शिलिः स्मृतः" इति कल्पद्रुकोषवाक्यमत्रोपोद्बलकम् । १२. "मूर्तौ घनिश्च" का० सू० ४।५।५० । हन्तेरप् घनादेशश्च । १३. तदुक्तम्—"पुलकः कृमिभेदे स्यान्मणिदोषे शिलान्तरे । गजान्नपिण्डे रोमाञ्चे गल्वर्कहरितालयोः ।" वि० को० का० व० ११६ ।

जीर्यते स्म **जीर्णम्**। शीर्यते स्म **शीर्णम्**। अवस्यते **अवसानम्**[1]। दूयते स्म **दूनं च**। हे राजेन्द्र, तव **वैरिणां** शत्रूणां भवतु इति प्रयोजनीयम्।

**धैर्यं शौर्यं च पौरुषे ॥१७१॥**

त्रयः[2] पौरुषे। धीरस्य भावो **धैर्यम्**। शूरस्य भावः **शौर्यम्**। पुरुषस्य भावः **पौरुषम्**। युष्माकं भवतु इत्यध्याहार्यम्। ५

**क्षिप्राशुमङ्क्ष्वरं शीघ्रं सहसा झटिति द्रुतम्।**
**तूर्णं जवः स्यदो रंहो रयो वेगस्तरो लघुः ॥१७२॥**

षोडश[3] वेगे। क्षिपति[4] निरस्यति **क्षिप्रम्**। रक्प्रत्यय उणादौ ज्ञातव्यः। अश्नुते **आशु**। कृवापाजीति उण्। मज्जति महति वा **मङ्क्षु**:[5]। इयर्ति मान्तमव्ययम् **अरम्**। अदन्तं च अरम्। शेते कार्ये शीघ(शिङ्घ)ति व्याप्नोति वा **शीघ्रम्**। सहते **सहसा**[6]। अव्ययम्। झटति संघातीभवति इदन्तमव्ययम्। **झटिति**[7]। द्रवति स्म **द्रुतम्**। त्वरते स्म **तूर्णम्**। जवनं **जवः**। जु गतौ। स्यन्दते **स्यदः**। "स्यदो जवः[8]" इति साधुः। रंहयत्यनेन **रंहः**। रयते रीयते वाऽनेन **रयः**। वीप (विज्य) ते **वेगः**[9]। तरत्यनेन **तरः**। "[10]सर्वधातुभ्योऽसुन्"। लङ्घते भूमिं **लघुः**। संवेगः। गतिवचनो जवो धर्मवचना आशुशीघ्रादय इत्यर्थभेदः। १०

सदागतिप्रस्तावादाह— १५

**साधीयोऽत्यर्थमत्यन्तं नितान्तं सुष्ठु वै भृशम्।**

षस भृशे। साधुभ्यो हितः **साधीयः**[11]। ईयसुः। अतिक्रान्तोऽर्थं वेलां मात्राम् अन्तं च **अत्यर्थम्**। **अत्यन्तम्**। अतिवेलम्। अतिमात्रं च। नितास्यति स्म **नितान्तम्**। सुष्ठौति **सुष्ठु**।

---

१. अत्रावसानभिन्ना अष्टावपि शब्दा विशेष्यनिघ्नास्तेन कुटुम्बमिति विशेष्यमध्याहार्यं हे राजेन्द्र तव वैरिणां कुटुम्बं क्षामं भवतु। एवं शान्तं कृशमित्याद्यपि योज्यम्। अवसानशब्दस्य भावल्युडन्तत्वात् तव वैरिणामवसानं नाशो भवत्विति विवेकः। अवस्यतेऽवसानमिति टीकोक्तविग्रहस्त्वसङ्गतः। अवपूर्वस्य "षोऽन्तकर्मणि" इत्यस्य भावलटि अवसीयते इति रूपम्, नत्ववस्यते इति। कर्तरि लटि दिवादौ अवस्यतीति परस्मैपदमेव। नापि कर्तृकान्तोऽवसानशब्दः। क्तप्रत्यये "अवसित" इति रूपस्यैव सर्वसम्मतत्वात्। तस्मादवसीयतेऽवसायो वा अवसानमिति विग्रहो युक्तः। २. कोषान्तरप्रमाणतो व्यवहाराच्च धैर्यादिशब्दानां परस्परकर्मभेदात्पर्यायानर्हत्वेऽपि बलसामान्यविवक्षया त्रयः पौरुषे इत्युक्तम्। ३. गतिवचनो जवो धर्मवचना आशुशीघ्रादय इत्यर्थभेदस्य वक्ष्यमाणत्वात् क्षिप्रादयस्तूर्णान्ता नव शीघ्रार्थे, जवादयो लघ्वन्तास्तु वेगार्थे इति सुवचम्। "द्राक् स्रग्ज्ञाय झटिति" एतत्सहैवास्य शीघ्रार्थतया पाठे कर्तव्येऽपि पृथगस्य पाठो झटितिशब्दपुनरुक्तिश्च दोषः। ४. क्षिपति विलम्बमिति शेषः। ५ "टु मस्जो शुद्धौ"। बाहुलकादुः। मस्जिनशोरिति नुम्। स्कोरिति सलोपः। मज्जति कालाल्पत्वे मङ्क्षुः। ६. "षह मर्षणे। असा प्रत्ययः यद्वा सहस्यति। "षोऽन्तकर्मणि"। आप्रत्ययो डित्। विभक्त्यन्तप्रतिरूपकमाकारान्तमव्ययम्। उदाहरणम्—"सहसा विदधीत न क्रियामित्यादि"। ७. "झट सङ्घाते"। औणादिक इतिः। ८. का० सू० ४।१।३५। स्यन्देर्घञि नलोपो दीर्घाभावश्च। स्यन्दनं स्यद इति भावविग्रहो न्याय्यः। ९. "ओ विजी भयचलनयोः"। १०. का० उ० सू० ४।५६। ११. अतिशयेन साधु बाढं वा साधीय इति। साधुभ्यो हित इति टीकोक्तविग्रहस्तु न सङ्गच्छते। अतिशयार्थे ईयसो विधानात्। साधीय इति मूलोक्तपदस्य क्लीबत्वेन हित इति पुंविग्रहोऽपि तथैव।

[1]अपष्ठ्वादयः–अपष्ठु दुष्ठु सुष्ठु हरिद्रु मितद्रु शतद्रु शक्रु मनु इत्यादयः । घे अव्ययम् । बिभर्ति **भृशम्**[2] ।

**स्फुटं साधु खलु स्पष्टं विशदं पुष्कलामलौ ॥१७३॥**

सप्त निर्मले । स्फुरत्यभिप्रायोऽस्मात् [3]**स्फुटम्** । साध्यतीति **साधु** । खलतीति **खलु**[4] । स्पश्यते स्म **स्पष्टम्** । विशति चित्ते **विशदम्** । पुष्णातीति **पुष्कलम्** । न मलमस्मिन् **अमलम्** । प्रकाशम् । प्रकटम् ।

**चित्राश्चर्याद्भुतं चोद्यं विस्मयः कौतुकोऽप्यहो ।**

षट् कौतुके । चिञ् चयने । चिनोतीति **चित्रम्**[5] । आचरतीत्याश्चर्यम्[6] । पारस्करादित्वात्सुट् । भू सत्तायाम् । अद् पूर्वः । अद् विस्मितो भवत्यत्र **अद्भुतः** । "अदि भुवो डुतः[7]" । चोद्यते इति **चोद्यम्**[8] । विस्मीयते इति **विस्मयः** । कुतुकस्य भावः कौतुकम् । अहो लोका आश्चर्यम् इति प्रयोजनीयम् ।

**अभियोगोद्यमोद्योगा उत्साहो विक्रमो मतः ॥१७४॥**

पञ्चोद्यमे । अभियोजनम् **अभियोगः** । यमु उपरमे । यम् उद्पूर्वः । "चुरादेश्च[9]"–इन् । "अस्योप०[10]"–दीर्घः । उद्यामि इति जातम् । "मानुबन्धानां[11]" ह्रस्वः । उद्यमि जातम् । उद्यमनमुद्यमः । भावे घञ् । "कारितस्य०[12] ।" उद्योजनम् **उद्योगः** । उत्सहनमुत्साहः । विक्रमणं **विक्रमः** ।

**रहोऽनुरहसोपांशु रहस्यं च भिनत्ति कः ।**

चत्वार एकान्ते । रहति त्यजति जनः सङ्गं यत्र सान्तं **रहः** । क्लीबे । अव्ययं च । अनुगतं रहः **अनुरहसम्** । "[13]अन्ववतप्तेभ्यो रहस्" । उपांशुते अव्ययमुदन्तम् **उपांशुः** । रहसि भवं **रहस्यम्** । **कः** पुमान् **भिनत्ति** विदारयति । प्रच्छन्नम् । एकान्तम् । निःशलाकम् । उपह्वरम् । विजनम् । विविक्तम् । जनान्तिकम् ।

**कीनाशः कृपणो लुब्धो गृध्नुर्दीनोऽभिलाषुकः ॥ १७५ ॥**

षट् कृपणे । लोभेन क्लिश्यति बाध्यते [14]**कीनाशः** । की याचीं याचकानां नाशयति विनाशयतीति कीनाशः । कल्पते रक्षितुं न तु दातुं **कृपणः** । लुभ्यति स्म **लुब्धः** । गृध्नाति गृध्नः । **गृध्नुरि**त्यपि स्यात् । लोभेन दीयते शोभते ( दीयते क्षयति ) **दीनः** । दीङ् क्षये । कश्चित् हानः इति पठन्ति । लष कान्तौ । अभिपूर्वः । अभिलषतीत्येवंशीलः **अभिलाषुकः** । "लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्[15]" ।

---

१. का० उ० सू० १।१५ । इति कुप्रत्ययः । २. भृशातोः शप्रत्ययः किदित्यर्थः । भृश्यतीति भृशं वा । "भृशु भ्रंशु अधःपतने" । दिवादिः । इगुपधेति कः । भृशेरन्तर्भावितण्यर्थः । ३. स्फुटतीति कर्तृविग्रहो न्याय्यः, नत्वपादानकः तत्र घञि स्फोट इत्यापत्तेः । अत्रेगुपधेति कः । ४. "खल सञ्चये" । बाहुलकादुः । खलुशब्दो नानार्थे । तदुक्तम्—"निषेधवाक्याऽलङ्कारे जिज्ञासाऽनुनये खलु" । अम० को० ३।३।२२५ । ५. "चित्र चित्रीकरणे ।" चित्रयतीति चित्रम् । पचाद्यच् । इत्यन्यत्र । ६. आ इति चर्यतेऽभिनीयते इति विग्रहोऽन्यत्र । "आश्चर्यमनित्ये" इति सुट् । ७. का० उ० सू० ४।२५ । ८. चोद्यशब्द आश्चर्यार्थे । तदुक्तम्—"चोद्यन्तु प्रेर्ये प्रश्नेऽद्भुतेपि च" अने० सं० २।३६२ । ९. का० सू० ३।२।११ । १०. का० सू० ३।६।५ । ११. का० सू० ३।४।६५ । १२. का० सू० ३।६।४४। इतीनो लोपः । १३. का० सू० ३।४।४१ । अत्र राजादिवृत्तिः २३ । १४. "क्लिशू विबाधने" । "क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च" पा० उ० सू० ५।६६ । १५. का० सू० ४।४।२४ ।

कदर्यः । किम्पचानः । मितम्पचः । क्षुल्लः । क्षुल्लकः । क्लीबः । क्षुद्रः । वराकश्च ।

**पाशनीतः सितो बद्धः सन्धानीतो नियन्त्रितः ।**
**नियामितः शृङ्खलितः पिनद्धः पाशितो रिपुः ॥ १७६ ॥**

नव बद्धे । पाशं नीतः **पाशनीतः** । सीयते स्म **सितः** । बध्यते स्म **बद्धः** । सन्धां प्रतिज्ञां नीतः प्रापितः **सन्धानीतः** । नियन्त्रं संजातमस्य **नियन्त्रितः** । नियामो जातोऽस्य **नियामितः** । शृङ्खला संजाताऽस्येति **शृङ्खलितः** । तारकितादिदर्शनादितच् । पिनह्यते स्म **पिनद्धः** । पाशः संजातोऽस्य पाशितः । कः **रिपुः** शत्रुः । ५

**कान्तं च कमनं कम्रं कमनीयं मनोहरम् ।**
**अभिरामं र(रा)मणीयं रम्यं सौम्यं च सुन्दरम् ॥ १७७ ॥**

दश वरिष्ठे (अतिसुन्दरे) । काम्यते **कान्तम्** । काम्यते **कमनम्** । कामयते इत्येवंशीलं **कम्रम्** । काम्यते वाञ्छ्यते **कमनीयम्** । "[१]तव्यानीयौ" । मनोहरति **मनोहरम्** । मनोहारी । **मनोरमम्** । अभिरमणम् **अभिरामम्** । रमणस्य (णाय) हितं **रमणीयम्**[२] । रम्यते **रम्यम्** । सोमस्य भावः **सौम्यम्**[३] । सुन्दः सौत्रोऽयं सुन्दति सुष्ठु नन्दयति इति निरुक्त्या **सुन्दरम्**[४] । १०

**चारु श्लक्ष्णं च रुचिरं प्रशस्तं हृद्यबन्धुरम् ।**
**दर्शनीयं मनोज्ञं च** १५

अष्टौ मनोज्ञे । चरन्ति नेत्राण्यत्र **चारु** । शिष्यते युज्यतेऽनेन **श्लक्ष्णः**[५] । रोचते सर्वेभ्यो **रुचिरम्** । प्रशस्यते स्म **प्रशस्तम्** । हृदयस्य प्रियम् **हृद्यम्** । चित्तं बध्नाति **बन्धुरम्** । दृश्यते **दर्शनीयम्** । मनो जानातीति **मनोज्ञम्** ।

**चित्तपर्यायहारि च ॥१७८॥**

चित्तहारि । मनोहारि । इत्यादीनि मनोहरनामानि ज्ञातव्यानि । २०

**अवश्यायं तुषारं च प्रालेयं तुहिनं हिमम् ।**
**नीहारम्**

षड् हिमे । अवश्यायते **अवश्यायः** । "दिहिलिहिश्लिषिश्वसिव्यध्यतीणश्याऽऽतां च[६]" णप्रत्ययः । तुष्यन्त्यनेन **तुषारः** । प्रलयादागतं **प्रालेयम्**[७] । तोहयत्यर्दयति **तुहिनम्** । तुहिर् अर्दने । हिनोति वर्धते जलमनेन **हिमम्** । निह्रियते **नीहारः** । मिहिका । धूमिका । देश्याम् । २५

---

१. का० सू० ३।७।९ । २. रमणाय हितमिति विग्रहो युक्तः । तस्मै हितमिति चतुर्थ्यन्ताच्छः । मूले छन्दोभङ्गदोषवारणाय रमणीयमेव रामणीयम् इति स्वार्थिकोऽण् अपि कार्यः । ३. सोमस्य भाव इति विग्रहोऽयुक्तः । "प्रकृतिजन्यबोधे प्रकारीभूतो भावः" इति सिद्धान्तात् सौम्य इत्यस्य सोमत्वमित्यर्थापत्तेः । अतः सोमो देवताऽस्येति व्युत्पत्तिः, "सोमाट्ट्यण्" । इति ट्यण् । अथवा सोम इव सोमः । ततश्चातुर्वर्ण्यादित्वात्ष्यञ् इति रामाश्रमः । ४. सुष्ठु द्रियते आद्रियते । दृधातोरप् । पृषोदरादित्वान्नुम् । सुष्ठु उनत्ति आर्द्रीकरोति चित्तं वा । सुपूर्वकात् "उन्दी क्लेदने" उन्दधातोर्बाहुलकाद्रः । शकन्ध्वादित्वात्पररूपम् । इति रामाश्रमः । ५. नेत्रं मनो वेति शेषः । "श्लिष आलिङ्गने" । "श्लिषे रश्चोपधायाः" उ० सू० ३।१९ । इति क्सः । उपधाया अकारश्च । ६. का० सू० ४।२ । ५८ । ७. प्रलीयन्ते पदार्था अत्रेति प्रलयो हिमाचलः । तस्मादागतं प्रालेयम् । अण् । केकयमित्रयुप्रलयानां यादेरियः पा० सू० ७।३।२ । इति यादेरियादेशः ।

**तत्करं विद्धि मृगाङ्कं रोहिणीपतिम् ॥ १७९ ॥**

तस्य करस्तत्करस्तम् । हिमशब्दात्करशब्दे प्रयुज्यमाने चन्द्रनामानि भवन्ति । अवश्यायकर । तुषारकरः । प्रालेयकरः । तुहिनकरः । हिमकरः । नीहारकरः । मृगाङ्कः । रोहिणीपतिः । अष्टौ नामानि **विद्धि** जानीहि ।

५ **पुन्नागं सन्नरं प्राहुः**

द्वौ प्रधानपुरुषे । पुमांश्चासौ नागः श्रेष्ठः **पुन्नागः** । संश्चासौ नरः **सन्नरः** । प्राहुः ब्रुवन्ति ।

**तिलकं च विशेषकम् ।**

**ललाटिका ललामापि पूर्णवाहं तथा द्रुमम् ॥१८०॥**

[1]षट् तिलके । तिलकाकृतिः तिलकः । तिलतीति **तिलकम्** । विशिनष्टीति विशेषः । स्वार्थे कः । १० **विशेषकः** । लल्यते ललाटम् । के प्रत्यये **ललाटिका** । लल्यते **ललामा** । पूर्णं वाहयतीति **पूर्णवाहः** । द्रवति वृद्धिं गच्छति **द्रुमः** । तमालपत्रम् । चित्रकम् ।

**अञ्जनं कज्जलं नागं गजपाटलमारुणम् ।**

षट्[2] कज्जले । अज्यतेऽनेनेत्यञ्जनम् । कषति नेत्रवैरूप्यं **कज्जलम्** । न शोभाम् अगति गच्छति **नागम्** । गजति शोभया माद्यति **गजम्** । पाटलाया इदम् **पाटलम्** । आ ऋच्छति गच्छति १५ शोभाम् **आरुणम्**[3] ।

**सालं परिधिं वृक्षं च**

त्रयः प्राकारे । सरति गच्छति कालान्तरं **सालः** । परिधीयते वेष्ट्यते अनेन **परिधिः** वृणोति नगरमाच्छादयति **वृक्षम्**[4] ।

**कुल्यां स्त्रीं सारणीं विदुः ॥१८१॥**

२० त्रयः[5] पानीयनिर्गमनमार्गे । कुले गृहे साधुः **कुल्या** । स्तृणाति वैरूप्यमाच्छिनत्ति **स्त्री** । सरत्यनया **सारणी** । तां **विदुः** कथयन्ति धनञ्जयकवयो भाष्यकर्तारोऽमरकीर्त्याचार्याश्च ।

**चारोऽवसर्पः प्रणिधिर्निगूढपुरुषश्चरः ।**

पञ्च[6] चारे । चरति शत्रुमण्डले **चारः**[7] । अवसर्पति **अवसर्पः** । अपसर्पश्च । प्रकर्षेण

---

१. अत्र तिलकविशेषके टीकोक्ततमालपत्रचित्रके च ललाटकृततिलकाऽलङ्करणे । तदुक्तम्—"तिलके तमालपत्रचित्रपुण्ड्रविशेषकाः" । अभि० चि० ३।३१७ । ललाटिका पत्रसमूहकृतललाटभूषणम् । तदुक्तम्—"पत्रपाश्या ललाटिका" अभि० चि० ३।३१९ । ललामा तु सीमन्ताग्रे मकरमणीभिरिव धार्यमाणं रत्नादिकृतभूषणम् । तदुक्तम्—"पुरोन्यस्तं ललामकम्" अभि० चि० ३।३२६ । पूर्णवाहद्रुमयोस्तु कोषान्तरे पाठो नोपलब्धः । २. षट् कज्जले । इत्यविचारसहम् । अञ्जनकज्जलौ समानार्थौ । नागगजपाटलारुणा औष्ठकपोलादिरञ्जकलोहितरङ्गविशेषवाचकाः । तदुक्तम्—अनेकार्थसङ्ग्रहे—"नागो मतङ्गजे सर्पे पुन्नागे नागकेसरे" २।३४ । "पाटलन्तु कुसुमश्वेतरक्तयोः" ३।७०१ । "अरुणोऽनूरुसूर्ययोः । सन्ध्या रागे बुधे कुष्ठे निःशब्दाऽव्यक्तरागयोः" ३।१९८ । ३. अरुणमेव आरुणम् । ४. वृक्षशब्दस्य शालार्थे कोषान्तरसंवादो नोपलब्धः । ५. अत्र द्वाविति वक्तव्यम् । स्त्रीशब्दोऽत्र कुल्यासारण्योः स्त्रीलिङ्गबोधकः; तत्पर्यायः । ६. पूर्वमुक्तेऽपि सिंहावलोकनन्यायेन चारेऽर्थेऽन्यानपि शब्दान् समुच्चिनोति । ७. चरति शत्रुमण्डले चरः, अचेश्च् । ततः स्वार्थिकोऽण् । चर एव चारः ।

नितरां गुप्तो धीयते **प्रणिधिः**। निगूढश्चासौ पुरुषः **निगूढपुरुषः**। चरतीति **चरः**। स्पशः। [1]यथार्थवर्णः। मन्त्रज्ञश्च।

## तद्वानुक्तः सहस्राक्षः

**तस्मात्** पूर्वोक्तशब्दात् परं **वान्** इति प्रयुज्यमाने **सहस्राक्ष**नामानि भवन्ति। निगूढपुरुषवान्। **चरवान्** इत्यादीनि ज्ञातव्यानि। ५

## सत्यार्थे सूनृतं ऋतम् ॥१८२॥

सत्यार्थे द्वौ। सु सुष्ठु ऋतं सत्यं **सूनृतम्**। पृषोदरादित्वान्नागमः। ऋच्छति गच्छति जनः प्रत्ययमत्र **ऋतम्**। तथा चामरकोषे[2]—"सत्यं तथ्यमृतं सम्यक्।"

## निस्तलं वर्तुलं वृत्तम्

त्रयो वर्तुले। निर्गतं तलं प्रतिष्ठाऽस्य **निस्तलम्**। अथवा निर्गतं तलादधोभागान्निस्तलम्। भूमौ न तिष्ठति वा। वर्तते भ्रमति **वर्तुलम्**। वृत्यते स्म **वृत्तम्**। सर्वे त्रिषु। १०

## स्थपुटं विषमोन्नतम्।

विषमोन्नते **स्थपुटम्**। स्थापयत्यात्मनो विषमोन्नतत्वे स्थपुटम्। प्रायः **क्लीबे**।

## दीर्घं प्रांशु

द्वौ[3] दीर्घे। दृणाति **दीर्घम्**[4]। प्राश्नुते व्याप्नोतीति **प्रांशु**[5]। १५

## विशालं च बहुलं पृथुलं पृथु ॥१८३॥

चत्वारो विस्तीर्णे। विस्तारं विशति **विशा[6]लम्**। बहून् लातीति **बहुलम्**। प्रथते वर्धते **पृथुलम्**। गुणमात्रवृत्तेर्लः। पर्थते **पृथुः**। बृहत्। उरुः। गुरुः। विस्तीर्णः।

## उल्वणं दारुणं तिग्मं घोरं तीव्रोग्रमुत्कटम्।

सप्त घोरे। उल्वणात्युल्वणम्[7]। पृषोदरादित्वात्पक्षे लः। दारयति **दारुणम्**। तितिक्षतीति **तिग्मम्**[8]। घुरति **घोरम्**[9]। तीव्रति **तीव्रम्**। तीव स्थौल्ये रक्। उच्यति **उग्रम्**[10]। उत्कटयते **उत्कटम्**। प्रतिभयम्। भीमम्। भयानकम्। आभीलम्। भीषणम्। भीष्मम्। भैरवम्। २०

## शीतलं तिमिरं यार्थं मन्दं विद्धि विलम्बितम् ॥ १८४ ॥

---

1. यथार्थं यथा अर्थः प्रयोजनं वर्णो जातिः प्रसिद्धिर्वा यस्येति तदर्थः। 2. अम० को० १।७।२२। 3. वस्तुतस्तु प्रांशुदीर्घयोरर्थभेदः। दीर्घविस्तृतायतशब्दाः पर्यायाः। प्रांशुस्तून्नतः। तदुक्तम्—'दीर्घमायतम्' अम० को० ३।१।७०। 4. "दॄ विदारणे"। बाहुलकाद्धक्। दृणाति ह्रस्वत्वमिति दीर्घः। 5. प्रकृष्टा अंशवोऽस्येत्यपि। 6. "विश प्रवेशने"। बाहुलकादालः। रामाश्रमस्तु—"वेः शालच्छङ्कटचौ" इति० पा० सूत्रेण विशब्दाच्छालच्प्रत्ययमाह। 7. उद्वणतीति उल्वणम्। पृषोदरादित्वादुदोल इति पाठोऽत्र युक्तः। "वण शब्दे"। अच्। उल्वणशब्दो वस्तुतः स्पष्टार्थकः, न तु दारुणार्थकः। स्पष्टो ह्युद्वेजको भवति खलानाम्। अत उद्वेजकत्वसामान्यात्तथाह। 8. तितीक्षतीति क्षमार्थकत्वादत्र न युक्तम्। "तिज निशाने"। निशानं तिक्ष्णीकरणम्। तेजयतीति तिग्मम्। घ्मक्प्रत्ययः। 9. "घुर भीमार्थशब्दयोः"। घोरयतीति घोरम्। ण्यन्तादच्। 10. उच्यति क्षुधा सम्बध्यते उग्रम्। 'उच समवाये"। दिवादिः। "ऋज्रेन्द्र" इत्यादिना रक् गश्चान्तादेशः।

पञ्च कार्यविलम्बे (म्रिते)। शीतं लाति मन्दो भवति कार्ये **शीतलम्**। ताम्यति स्वकार्य-मिच्छति **तिमिरम्**[1]। स्तिमितं स्थिमितं वा पाठः। यथा भवं **याथम्**। मन्द्यते **मन्दम्**। विलम्ब्यते स्म **विलम्बितम्**। चिरं जानीहि।

**स्वभावः प्रकृतिः शीलं निसर्गो विस्रसो निजः।**

५ पञ्च स्वभावे निजे। स्वः स्वकीयो भावः **स्वभावः**। प्रकरणं **प्रकृतिः**। शील्यते शीलयति वा **शीलम्**। निसृज्यते **निसर्गः**। विश्वसितोऽस्ति **विस्रसः**[2]। विश्वासश्च। विश्रम्भः।

**योग्या गुणनिकाऽभ्यासः**

त्रयोऽभ्यासे। युज्यते **योग्या**[3]। गुण्यतेऽहर्निशं **गुणनिका**[4]। अभ्यसनमभ्यासः।

**स्यादभीक्ष्णं मुहुर्मुहुः॥ १८५॥**

१० **मुहुर्मुहुर्**वारं वारं **स्यात्** भवेत्। अभीक्ष्णम्। अभीक्ष्णम् अभीक्ष्णम्। अभिमुखमीक्षते वा **अभीक्ष्णम्**[5]। नितराम्।

**मृषालीकं मुधा मोघम्**

चत्वारो[6]ऽलीके। मृष्यते सहते नारकं दुःखमनेन **मृषा**। आदन्तमव्ययम्। अलति स्वस्वाङ्गा-(स्वर्गा)न्निवारयति **अलीकम्**। मुञ्चति त्यजति निमित्तं **मुधा**। आदन्तमव्ययम्। मुह्यतेऽत्र चित्तं **मोघम्**।

**विफलं वितथं वृथा।**

१५ निष्फलवचने त्रयः। विगतं फलं **विफलम्**। विगतं तथा सत्यं यस्मात् **वितथम्**। वृणो-त्याच्छादयति गुणान् **वृथा**। अव्ययम्।

**विधुरं व्यसनं कष्टं कृच्छ्रं गहनमुद्धरेत्॥ १८६॥**

पञ्च कष्टे। कष्टेन विधुनोति शरीरं **विधुरम्**। व्यस्यते अनेन **व्यसनम्**। कष्यते २० (कषति) **कष्टम्**। कृणोति छिनत्ति दुःखेन **कृच्छ्रम्**[7]। गाह्यते **गहनम्**। **उद्धरेत्** निस्तरेत्।

**समस्तं सकलं सर्वं कृत्स्नं विश्वं तथाऽखिलम्।**

षट् समस्ते। समस्यते एकीकरोति **समस्तम्**[8]। समं ग्रसते समग्रम्[9]। समानं कलयतीति [10]**सकलम्**। सरति **सर्वम्**। कृन्तति वेष्टयति व्याप्नोति **कृत्स्नम्**। विशति विश्वति सर्वत्र **विश्वम्**। नास्ति खिलं शून्यमस्या**खिलम्**। निखिलं च।

---

१. "तिम आर्द्रीभावे"। तिम्यति आर्द्रीभवति तिमिरः। विलम्बशीलो जनः सर्वदाऽऽर्द्र इव शीतः स्फूर्तिरहितश्च भवति। २. विश्वसशब्दस्य प्रकृत्यर्थे प्रमाणान्तरं नास्ति। एवं विश्वासो विश्रम्भोऽपि। विश्वसशब्दाऽव्याख्यानमपि व्याकरणादस्पष्टम्। अतोऽत्र त्रिष्वपि मूलटीके एव प्रमाणम्। ३. योगे चित्तैकाग्र्ये साध्वीति योग्या "तत्र साधु"रिति यदन्यत्र। ४. गुण्यते गुणना। चुरादिणिजन्ताद् भावे "ण्यासश्रन्थेति युच्। ततः स्वार्थे कः। गुणनैव गुणनिका। ५. अभिक्ष्णोति अभीक्ष्णम्। "क्ष्णु तेजने"। बाहुलकाड्डमुः। अन्येषामपीति दीर्घः। इति रामाश्रमः। ६. अत्र मृषाऽलीकशब्दौ वक्ष्यमाणां वितथ-शब्दश्चासत्यवाचकः। मुधामोघशब्दौ विफलवृथाशब्दौ च वक्ष्यमाणौ व्यर्थवाचका इति विवेकोऽ-न्यत्र। तदुक्तममरे—"मृषा मिथ्या च वितथे" ३।४।१५। "अलीकं त्वप्रियेऽनृते" ३।३।१२। "मोघं निरर्थकम्" ३।१।८१। व्यर्थके तु वृथा मुधा" ३।४।४। "वितथं त्वनृतं वचः" १।८।२१। इति। ७. कर्षति कृन्तति वेति क्षी० स्वा०। ८. समस्यते स्म समस्तम्। "असु क्षेपणे"। कर्मणि क्तः। ९. सङ्गतमग्रमस्य समग्रम्। १०. सह कलाभिर्वर्तते सकलम्।

**शकलं विकलं खण्डं शल्कं लेशं लवं विदुः ॥ १८७ ॥**

षट् खण्डे। शक्नोति कार्ये **शकलम्**। **शल्कं** च। विगता कला यस्मात् तद् **विकलम्**। खण्ड्यते **खण्डः**। लिश्यते **लेशः**[1]। लिश विच्छ गतौ। "अकर्तरि च कारके संज्ञायाम्"[2]। रौति शब्दं करोति [3]**लवः**। **विदुः** कथयन्ति। अर्धम्। नेमः। साभि। असम्पूर्णम्। दलं च।

**मर्म कोषं च** ५

द्वौ मर्मणि। म्रियतेऽनेन **मर्म**। नान्तम्। कुष्यते **कोषम्**[4]।

**कलहं परिवादं छलं नयेत्।**

करेण हन्त्यत्र **कलहः**। परिवदनं **परिवादः**। छलयती (त्यने)ति **छलम्**।

**शोणितं लोहितं रक्तं रुधिरं क्षतजास्रुजम् ॥ १८८ ॥**

षड् रुधिरे। शोण्यते वर्ण्यते देहोऽनेन **शोणितम्**। तालव्यः। रोहति देहे जायते **लोहितम्**। १० रजति रसं **रक्तम्**। रुणद्धि **रुधिरम्**। क्षताद् व्रणाज्जायते **क्षतजम्**। अस्यते क्षिप्यते अस्रक्।

**सन्ततानारताजस्रान्वहं कन्यापतिर्वरः।**

त्रयः (चत्वारः) सन्तते। सन्तन्यते स्म **सन्ततम्**। न आरतम् **अनारतम्**। न जस्यतीत्येवंशील **मजस्रम्**। **अन्वहम्**। **कन्यापतिर्वरः** नन्दतु इति प्रयोजनीयम्।

**उद्वाहः परिणयनं विवाहश्च निवेशनम् ॥ १८९ ॥** १५

चत्वारो विवाहे। उद्वहनं **उद्वाहः**। परिणीयते **परिणयनम्**। विवाह्यते **विवाहः**। निवेश्यते **निवेशनम्**।

**शुषिरं विवरं रन्ध्रं छिद्रम्**

चत्वारश्छिद्रे। शुष्यति जलमत्र [5]**शुषिरम्**। उषसुषीति रः। विव्रियते भूमध्यमनेन **विवरम्**। रध्यति वातेन रध्यति हिनस्ति प्राणिनं वा **रन्ध्रम्**। छिद्यते तद् **छिद्रम्**। कुहरम्। बिलम्। निर्व्यधनम्। रोकम्। श्वभ्रम्। वपा। शुषिः। २०

**गर्ता च गह्वरम्।**

गर्तायां द्वौ। पतितं प्राणिनं गिरति **गर्ता**। **गर्तः**। गूहतीति **गह्वरम्**।

**श्वभ्रं रस्यं च पातालं नरकं यान्त्यमेधसः ॥ १९० ॥**

चत्वारो नरके। श्वयते वर्धतेऽत्रोपरि चरतो शङ्का, श्वभिर्भ्रान्तं वा **श्वभ्रम्**। रसायां भवं **रस्यम्**। पतन्त्यस्मिन् **पातालम्**। नराः कायन्त्यत्र **नरकः**। नारकः। पुंसि। **अमेधसः** बुद्धिरहिताः २५

१. "लिश अल्पीभावे"। दिवादिः। ततो धञ्विधानमर्थाऽनुरूपम्।। २. का० सू० ४।५।४। ३. लूयते छिद्यते लवः। भ्वादौरप्। टीकोक्तविग्रहस्तु न लवनार्थाऽभिधायी। ४. कोषशब्दः पेशीवाचको मेदिन्यां लभ्यते। पेशीनां मर्मस्थानत्वमायुर्वेदे सम्मतम्। अत उपचारात् कोषोऽपि मर्मेत्यस्तुन्नेयम्। तदुक्तम्–"कोषो स्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके। जातिकोषेऽर्थसङ्घाते पेश्यां शब्दादिसङ्ग्रहे"। षा०वर्ग० ६। ५. "तिमिरुधिमदिमन्दिचन्दिवधिरुचिशुषिभ्यः किरः" का०उ० १।२३। शुषिरस्यास्तीति विग्रहे तु "उषसुषिमुष्कमधो रः" पा०सू० ५।२।१०७। इति रः। रफलपक्षे दन्त्यादिरयम्। उषसुषीति पा० सूत्रे दन्त्य एव पाठः। क्षीरस्वाम्यपि दन्त्यमेव पपाठ।

सम्यक्चारित्ररहिता **यान्ति** गच्छन्ति नरकम् । निरयः । दुर्गतिः ।

**अदभ्रं भूरि भूयिष्ठं बंहिष्ठं बहुलं बहु ।**
**प्रचुरं नैकमानन्त्यं प्राज्यं प्राभूतपुष्कलम् ॥ १६१ ॥**

द्वादश प्रभूते । न दभ्रमदभ्रम् । भवति प्राचुर्यमत्र **भूरि**, भूरिशं च । अतिशयेन बहु **भूयिष्ठम्** । "बहो[1]र्लोपो भू च बहोः" "इष्ठस्य[2] यिट्चेति" भूरादेशो यिडागमश्च । अतिशयेन बहुलो **बंहिष्ठः** । वहति प्राचुर्यं **बहुलम्** । प्रचुरति [3]**प्रचुरम्** । न एकं **नैकम्** । अनन्तस्य भाव **आनन्त्यम्** । प्राज्यते प्रकर्षेण वीयतेऽनेन वा **प्राज्यम्**[4] । प्राभवति स्म **प्राभूतम्** । प्रभूतं च । पुष्यति **पुष्कलम्** । पुष्कं च । पुरुहम् । पुरुम् ।

**भवो भावश्च संसारः संसरणं च संसृतिः ।**
**तत्त्वज्ञश्चतुरो धीरस्त्यजेज्जन्माजवं जवम् ॥ १६२ ॥**

अष्टौ संसारे । भवतीति **भवः** । भवतीति **भावः** । "[5]वा ज्वलादिदुनीभुवो णः" । संसरति अस्मिन् **संसारः** । संस्रियते अस्मिन् **संसरणम्** । संसरणं **संसृतिः** । जनयतीति **जन्म** । आजवतीति **आजवम्** । जवति चतुर्गत्यां भ्रमति (अत्र) **जवः** ।

**ऊर्जस्फूर्जस्वी तरस्वी तेजस्वी च मनस्व्यपि ।**

चत्वार (पञ्च) स्तेजोयुक्तपुरुषे । ऊर्क् ऊर्जा वाऽस्त्यस्येति **ऊर्जस्वी** । स्फूर्जोऽस्यास्तीति **स्फूर्जस्वी** । तरोऽस्यास्तीति **तरस्वी** । तेजोऽस्यास्तीति **तेजस्वी** । मनोऽस्यास्तीति **मनस्वी** ।

**भास्वरो भासुरः शूरः प्रवीरः सुभटो मतः ॥ १६३ ॥**

पञ्च सुभटे । भासते इत्येवंशीलो **भास्वरः**[6] । **भासुरः** । "भिदि[7]भासिभंजां घुरः" । शूरयति **शूरः** । शूर वीर विक्रान्तौ । प्रवीरयते **प्रवीरः** । सुष्ठु भटः **सुभटः** । विक्रान्तः ।

**तनुत्रं वर्म कवचमावृतिर्बाणवारणम् ।**

पञ्च कवचे । तनुं शरीरं त्रायते रक्षति **तनुत्रम्** । वृणोत्यङ्गं **वर्म** । कच्यते बध्यते शरीरम् अनेन **कवचम्** । आवरणम् **आवृतिः** । बाणानां वारणं निषेधनं **बाणवारणम्** ।

**कूर्पासं कञ्चुकम् ।**

द्वौ कञ्चुके । करोति शोभां **कूर्पासम्** । कर्पासं च । कञ्च्यते बध्यते **कञ्चुकः** ।

**छत्रमातपत्रोष्णवारणम् ॥ १६४ ॥**

त्रयश्छत्रे । वर्षातपौ छादयतीति **छत्रम्** । त्रिषु । छत्रः, छत्री । आतपात् त्रायते **आतपत्रम्** । उष्णादस्य वारणम् **उष्णवारणम्** । नृपलक्ष्म ।

**केशं शिरोरुहं वालं कचं चिकुरमीडयेत् ।**

पञ्च केशे । के मस्तके शेते **केशः** । शिरसि रोहति **शिरोरुहः** । वल्यते संत्रियते **वालः** । मस्तके चीयते कचति वा **कचः** । चीयते यत्नेन चिकुरः । **चिकुरश्च** । मूर्धजः । शिरसिजः ।

---

१. पा० सू० ६।४।१५८ । २. पा० सू० ६।४।१५९ । ३. प्रचोरति प्रचुरम् । चुर स्तेये । चुरादीनां णिज्वैकल्पिकः । इगुपधेति कः । प्रगतं चुरायाः प्रचुरमिति वा रामाश्रमः । ४. प्राज्यते काम्यते "अञ्जू व्यक्त्यादौ" अञ्जेः संज्ञायामिति क्यप् । यद्वा प्रवीयते "अज गतिक्षेपणयोः" क्यप् । वीभावो नेति टीकाश्रयः । ५. का० सू० ४।२।५५ । इति णः । ६. "कपिपिसिभासीशस्थाप्रमदां च" का० सू० ४।४।४७ । इति वरः । ७. का० सू० ४।४।४१ ।

वृजिनः[1] । कुन्तलः ।

**चूडापाशं च धम्मिल्लं कबरी केशबन्धनम् ॥ १९५ ॥**

चत्वारः केशबन्धने । चुद संचोदने । "चुरादेश्च[2]" इन् । नामिनो[3] गुणः । चोदनं चूडा । "ऊन[4]चूदपीडमृगयतिभ्य इनन्तेभ्यः संज्ञायाम्" अङ् प्रत्ययः । कारितलोपः । निपातनात् उपधाया ह्रस्वत्वम् । दस्य डत्वम् । चूडायाः शिखायाः पाशः बन्धनं **चूडापाशः** । धम्मिः सौत्रः । धम्यन्ते केशा बध्यन्ते **धम्मिल्लः** । कं मस्तकं वृणोति कबरी नदादित्वाद् ईः । **कबरी** । इदन्तोऽपि कबरिः । आबन्तो वा कबरा । केशस्य बन्धनं **केशबन्धनम्** । वेणी । प्रवेणी । वीणा च

**उररीकृतमप्यूरीकृतमङ्गीकृतं तथा ।**

त्रयोऽङ्गीकारे । ऊरीप्रभृतीनां कृञा सह समासो वा भवति । तथाहि—ऊरी उररी अङ्गीकरणे विस्तारे च । आश्रुतम् । प्रतिज्ञातम् । उपगतम् ।

**अस्तुंकारोऽभ्युपगमे**

अभ्युपगमे अङ्गीकारे अस्तुङ्कारः कथ्यते । अस्तु करोतीति (करणम्) **अस्तुङ्कारः**[5] । "[6]कर्मण्यण्" अण् प्रत्ययः । अस्योप० वृद्धिः । व्यंजनम्[7] । "[8]सत्यागदास्तूनां कारे" । मकारागमः ।

**सत्यङ्कारः पणार्पणे ॥ १९६ ॥**

सत्यार्पणे सत्यं करोतीति **सत्यङ्कारः**[9] ।

**सौहार्दं सौहृदं हार्दं सौहृद्यं सख्यसौरभम् ।**
**मैत्री मैत्रेयिकाजर्यं सहाय्यं संगतं मतम् ॥ १९७ ॥**

दश (एकादश) सख्ये । सुहृदो भावः **सौहार्दम्** । **सौहृदम्** । **हार्दम्** । **सौहृद्यमे**कमेव वाक्यम् । सख्युर्भावः **सख्यम्** । सुरस्येदं (मैरिदं) **सौरभम्** । मित्रस्य भावो **मैत्री** । मैत्र्यां नियुक्तो **मैत्रेयिकः** । न जीर्यते **अजर्यम्** । सहाजी (य्य) ते **सहाय्यम्** । संगमनम् **सङ्गतम्** ।

**क्षेमं कल्याणमुभयं श्रेयो भद्रं च मङ्गलम् ।**
**भावुकं भविकं भव्यं श्वोवसीयं शिवं तथा ॥ १९८ ॥**

दश (एकादश) कल्याणे । क्षिणोति क्लेशान् **क्षेमम्** । कल्यते ज्ञायते **कल्याणम्** । कल्यं नीरुजत्वमणिति वा कल्याणम् । प्रकृष्टं प्रशस्यं **श्रेयस्** । शान्तम् । भदते ह्लादते सुखीभवत्यनेन **भद्रम्** । मं पापं गालयतीति **मङ्गलम्** । भवनशीलं **भावुकम्** । "[10]शकमगमहनवृषभूस्थालषपतपदामुकञ्" । प्रशस्तो भवोऽस्यास्तीति **भविकम्** । पुण्यकृतो भवितव्यं भवति **भव्यम्** । श्वः शोभनश्च वसीयः **श्वोवसीयः** । श्वोवसीयसं च । 'श्वसो' 'वसीयस्' । शीयते तनूक्रियते दुःखमनेन **शिवम्** । भाष्यविधातॄणां श्रीमदमरकीर्तीनां शिवं भवतु ।

---

१. वृजिनशब्दो भङ्गुरवाची । तदुक्तम्—"वृजिनं भङ्गुरं भुग्नमरालं जिह्ममूर्मिमत्" अभि० चि० ३।९३ । लक्षणया भङ्गुरकेशेऽपि वृजिनशब्दप्रयोगः । २. का० सू० ३।२।११ । ३. का० सू० ३।५।२ । ४. का० सू० ४।५।८२ । अत्र दुर्गवृत्तिः "ऊनचुदपीडनुगयतिभ्य इनन्तेभ्यो घे प्राप्ते वचनम्" इत्येवंरूपा । ५. अस्तुकरणमस्तुङ्कारः । ६. का० सू० ४।३।१ । ७. "व्यञ्जनमस्वरं परवर्णं नयेत्" का० सू० १।१।२१ । ८. का० सू० ४।१।२३ । ९. सत्यस्य करणं सत्यङ्कारः । भावे घञ् । कर्तृविमर्शीकौतस्त्वगुरुः । १०. का० सू० ४।४।३४ । ११. का० सू० २।६।४१ । वृत्तिः २७ ।

वक्ता वाचस्पतिर्यत्र श्रोता शक्रस्तथापि तौ ।
शब्दपारायणस्यान्तं न गतौ तत्र के वयम् ॥ १९९ ॥

अस्य श्लोकस्य सुगमव्याख्या ।

तथापि किञ्चित् कस्मैचित् प्रतिबोधाय सूचितम् ।
बोधयेत्किमपदुक्तिज्ञो मार्गज्ञः सह याति किम् ॥ २०० ॥

तथापि मया धनञ्जयकविना सूचितं कथितम् कस्मैचित् प्रतिबोधाय ज्ञानाय। उक्तिज्ञो बोधयेत् ज्ञापयेत् । मार्गज्ञः किं सह याति गच्छति, किन्तु न गच्छति ।

प्रमाणमकलङ्कस्य पूज्यपादस्य लक्षणम् ।
द्विःसन्धानकवेः काव्यं रत्नत्रयमपश्चिमम् ॥ २०१ ॥

एतद्रत्नत्रयमपश्चिमं नवीनमपूर्वं वर्तते ।

कवेर्धनञ्जयस्येयं सत्कवीनां शिरोमणेः ।
प्रमाणं नाममालेति श्लोकानां हि शतद्वयम् ॥ २०२ ॥

धनञ्जयस्य कवेः सत्कवीनां शिरोमणेः इति अमुना प्रकारेण इयं नाममाला श्लोकानां शतद्वयं २०० प्रमाणमस्ति ।

ब्रह्माणं समुपेत्य वेदनिनदव्याजात् तुषाराचल-
स्थानस्थावरमीश्वरं सुरनदीव्याजात् तथा केशवम् ।
अप्यम्भोनिधिशायिनं जलनिधिध्वानोपदेशादहो
फूत्कुर्वन्ति धनञ्जयस्य च भिया शब्दाः समुत्पीडिताः ॥२०३॥

अहो लोकाः धनञ्जयस्य च भिया कृत्वा शब्दाः समुत्पीडिताः सम्यक् प्रकारेण पीडिताः फूत्कुर्वन्ति । किं कृत्वा पूर्वं वेदनिनदव्याजात् मिषात् ब्रह्माणं समुपेत्य प्राप्य, ईश्वरं तुषाराचलस्थानस्थावरं सुरनदीव्याजात् प्राप्य, केशवं श्रीविष्णुं किं विशिष्टं अम्भोनिधिशायिनं जलनिधिध्वानोपदेशात् समुपेत्य सुगमोऽयं श्लोकः ।

इति महापण्डितश्रीमदमरकीर्तिना त्रैविद्येन
श्रीसेन्द्रवंशोत्पन्नेन शब्दवेधसा कृतायां
धनञ्जयनाममालायां प्रथमं काण्डं
व्याख्यातम्

श्रीमद्धनञ्जयकविविरचिता

# अनेकार्थ नाममाला

—०—

जिनेन्द्रं पूज्यपादं च चैलाचार्यं शिवायनम् ।
अर्हन्तं शिरसा नत्वाऽनेकार्थं विवृणोम्यहम् ॥ १ ॥
गम्भीरं रुचिरं चित्रं विस्तीर्णार्थप्रसादकम् ॥
शाब्दं मनाक् प्रवक्ष्यामि कवीनां हितकाम्यया ॥ २ ॥

गम्भीरं रुचिरं मनोज्ञं चित्रं विस्तीर्णार्थप्रसादकम् । सुगमव्याख्याऽस्ति ।

अर्हत्पिनाकिनौ शंम्भू

शम्भू इति द्विवचनान्तं पदम् ।

जिनावर्हत्तथागतौ ।

जिनौ कथ्येते ।

वेदसूर्यौ विवस्वन्तौ

वेदश्च सूर्यश्च वेदसूर्यौ विवस्वन्तौ सूर्यौ कथ्येते ।

विष्णुरुद्रौ वृषाकपी ॥ ३ ॥
विकुण्ठाविन्द्रगोविन्दौ अनन्तौ शेषशार्ङ्गिणौ ॥

शेषश्च धरणीन्द्रः, शार्ङ्गी च विष्णुः शेषशार्ङ्गिणौ ।

जीमूतौ तु करिक्रीडौ पर्जन्यौ शक्रवारिदौ ॥ ४ ॥
वनमम्भसि कान्तारे

अम्भसि कान्तारे वनम् ।

भुवनं विष्टपेऽम्भसि ।

सुगमव्याख्या ।

---

१. शं कल्याणं भवतीति शम्भुः । डुप्रत्ययः । केशवब्रह्मवाची च । तदुक्तम्—"शम्भुः स्याद् ब्रह्मशिवयोरर्हत्यपि च केशवे" । इति वि० लो० भा० व० ९ । हैमे च—"शम्भुर्ब्रह्मार्हतोः शिवे" । २१६ । इति च । २. विष्णु, अतिवृद्ध, जित्वर, इत्येतेष्वपि जिनः । तदुक्तम्—"जिनस्त्वर्हति बुद्धेऽतिवृद्धजित्वरयोस्त्रिषु" वि० लो० ना० व० ८ । हैमे—"जिनोऽर्हद्बुद्धविष्णुषु" २।२६९ । ३. "विवस्वान् देवसूर्ययोः" अने० सं० ३।३१७ । अत्र देवशब्दपाठात्प्रस्तुतेऽपि देवशब्द एव युक्तः । ४. अग्निश्च । तदुक्तम्—"वृषाकपिर्वासुदेवे शिवेऽग्नौ च" अने० सं० ४।२१६ । ५. अनवधिरप्यनन्तार्थः । "अनन्तः केशवे शेषे पुमाननवधौ त्रिषु" इति मेदिनी । ६. "जीमूतो वासवेऽम्बुदे । दीपकेऽद्रौ भृतिकरे" इति० अने० सं० । ७. पर्जन्यो मेघगर्जितेऽपि । तदुक्तम्—"पर्जन्यो मेघशब्देऽपि ध्वनदम्बुदशक्रयोः" इति मेदिन्याम् ।

**घृतं सर्पिषि पानीये विषं हालाहले जले ॥ ५ ॥**
**तल्पं दारेषु शय्यायां ज्योतिश्चक्षुषि तारके ।**
**धवले सुन्दरे रामो वामो वक्रे मनोहरे ॥ ६ ॥**
**नक्षत्रे मन्दिरे धिष्ण्यम्**

५ देवेष्वपि शब्दं करोत्यत्र जनो **धिष्ण्यम्** । नपुंसकम् । धिष शब्दे ।

**वसने गगनेऽम्बरम् ।**

**वसने गगने अम्बरं** वर्तते । अम्बं शब्दं राति ददातीति **अम्बरम्** ।

**परिधौ पादपे सालः**

**परिधौ पादपे सालो** वर्तते । सां लक्ष्मीं लातीति **सालः** ।

१० "सालः सर्जतरौ वृक्षमात्रप्राकारयोरपि" इति हैमः[१] ।

**सिन्धुः स्रोतसि योषिति ॥ ७ ॥**

**स्रोतसि योषिति सिन्धुः** । स्यन्दते **सिन्धुः** ।

**सारसः शकुनौ धूर्ते**

सरसि तडागे भवः [२]**सारसः** ।

१५ **केतनं दीधितौ ध्वजे ।**

केतन्ति जानन्त्यत्र **केतनम्** । तथा च—

"कृत्ये निमन्त्रणे चिह्ने मन्दिरे केतनं विदुः ।"

**मयूखः कीलके दीप्तौ**

मयते विस्तारं यातीति **मयूखः** ।

२० **पतङ्गः शलभे रवौ ॥ ८ ॥**

पततीति **पतङ्गः** । पत्लृ गतौ ।

**अञ्जनः कज्जले नागे**

**कज्जले नागे अञ्जनो** वर्तते । अञ्जू व्यक्तिम्रक्षणकान्तिषु । विक्रमेण[३] अज्यते प्रकटीक्रियते **अञ्जनः** ।

२५ **सारङ्गः पृषते गजे ।**

सरतीति **सारङ्गः**[४] ।

**सरलः प्रगुणे वृक्षे**

ऋजुत्वात्सरलः ।

**पुन्नागः[५] सन्नरे तरौ ॥ ९ ॥**

३० पुमांश्चासौ नागः श्रेष्ठः ।

---

१. अने० स० २।२२७। २. धूर्तपक्षे तु अरसेन द्वेषेण सहितः सारस इति विवेकः। ३. गजोऽपि विक्रमेण ज्ञायते, कज्जलोऽपि विक्रमणबलेन मृद्यते। ४. सारं दृढमङ्गं यस्येत्यपि। सरतीत्यस्य स्थाने सारयतीति युक्तम्। ५."पुन्नागस्तु सितोत्पले। जातीफले नरश्रेष्ठे पाण्डुनागे द्रुमान्तरे।" इति मेदिनी

**पाञ्चजन्योऽनले शङ्खे**

पञ्चजने पाताले भवः **पाञ्चजन्यः** ।

**कम्बुः**[2] **शङ्खे मतङ्गजे ।**

कम्बुः सौत्रः कम्यते वर्ण्यते **कंबुः** । अथ वा कबृ वर्णे उणादित्वादस्मादेव नकारागमश्च ।

**कस्वरो द्युभवे द्युम्ने** ५

**द्युभवे** स्वर्गोद्भवे **द्युम्ने** सुवर्णे क[illegible]रः । कुत्सितं स्वरति **कस्वरः** ।

**स्यन्दनं शकटेऽम्बुनि ॥ १० ॥**

स्यद[illegible]ते **स्यन्दनम्**[3] ।

**अद्रिर्गिरिवनस्पत्योः**

गिरिश्च वनस्पतिश्च गिरिवनस्पती तयो**र्गिरिवनस्पत्योः** । अत्ति आकाशमित्यद्रिः । १०

**शिखरी तरुभूध्रयोः**

शिख[illegible]तीति **शिखरी** ।

[4]**राजा चन्द्रमहीपत्योः ।**

राजते इति **राजा** ।

**द्विजो दशनविप्रयोः ॥ ११ ॥** १५

द्विर्जातो **द्विजः** ।

**मोचामरस्त्रियो रम्भा**

अमर्त्यानपि रमयतीति **रम्भा** ।

**कदली ध्वजमोचयोः ।**

केन वायुना दल्यते विदार्यते **कदली** । २०

**अशोकः सुमनस्तर्वोः**

न शोको यस्माद्यस्य वा **अशोकः** ।

**सुमनाः सुरपुष्पयोः ॥ १२ ॥**

सुरश्च पुष्पं च सुरपुष्पे तयोः **सुरपुष्पयोः** । शोभनचित्तः **सुमनाः** ।

**मुक्तारजतयोस्तारः** २५

तीर्यते **तारः** ।

**भूरि भूयःसुवर्णयोः ।**

पुष्पवत्सु भवतीति **भूरि** । क्लीबे ।

**पानीयदुग्धयोः क्षीरम्**[5]

घस्लृ अदने । सौत्रोऽयम् । ३०

---

१. "पाञ्चजन्यस्तु विष्णुशङ्खे द्रुमान्तरे" इति मेदिनी । २. "कम्बुः पुमान् गजे । वलये शङ्ख-शम्बूककन्धरामलके स्त्रियाम्" इति वि० लो० बा० व० २ । ३. "स्यन्दनं स्रवे नीरे स्यन्दनस्तिनिशे रथे" वि० लो० ना० व० १५१ । ४. राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात्" इति मेदिनी । ५. घस्यतेऽद्यते क्षीरम् । "घस्लृ अदने" । घसेः किच्चेति कीरः ।

**पयः सलिलदुग्धयोः ॥ १३ ॥**

पीयते **पयः** ।

**कालप्रकर्षयोः काष्ठा**

कालश्च त्रुट्यादिलक्षणः ।

५ "स्वस्थे नरे सुखासीने यावत्स्पन्देत लोचनम् ।
तस्य त्रिंशत्तमो भागस्त्रुटिरित्यभिधीयते ॥"

अथवा— "सर्षपस्य प्रयत्नेन क्षिप्तस्य पततोऽम्बरात् ।
द्वियवं यावदध्वानं कालः स (च) त्रुटिः स्मृतः ॥"

प्रकर्षश्च प्रकर्षता उत्कृष्टता वा । कालश्च प्रकर्षश्च कालप्रकर्षौ तयोः **कालप्रकर्षयोः काष्ठा**
१० कथ्यते । काशते भासते **काष्ठा** । छान्दोऽयम् ।

**कोटिः संख्याप्रकर्षयोः ।**

कुटतीति **कोटिः** ।

"कियती पञ्चसहस्री कियती लक्षा च कोटिरपि कियती ।
औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥"

१५ **रन्ध्रसंश्लेषयोः सन्धिः**

सन्धानं **सन्धिः** ।

"सन्धिर्योनौ सुरङ्गायां नाट्याङ्गे श्लेषभेदयोः" इति हैमी[१] ।

**सिन्धुर्नदसमुद्रयोः ॥ १४ ॥**

स्यन्दते **सिन्धुः** ।

२० **निषेधदुःखयोर्बाधा**

बन्धनं ( बाधनं ) **बाधा** । बाधृ प्रतिघाते ।

**व्यामोहो मूर्खमौढ्ययोः ।**

व्यामुह्यते **व्यामोहः**[२] ।

**कौपीनाकारयोर्गुह्यम्**

२५ गुह्यते **गुह्यम्** । गुहू संवरणे । "**गुह्यमुपस्थे रहस्ये च**" इति हैमी[३] ।

**कीलालं रुधिराम्भसोः ॥ १५ ॥**

कीलां लातीति **कीलालम्**[४] । "**कीलालं रुधिरे नीरे**" इति हैमी[५] ।

**मूल्यसत्कारयोरर्घः**

अर्घ्यते पूज्यतेऽनेनेत्यर्घः । "[६]व्यञ्जनाच्च" घञ् । लोपधत्वाद्वृद्धिर्न । "स्यदक्वादीनां इश्च घः[७]" ।

३० **जात्यः श्रेष्ठकुलीनयोः ।**

१. अने० सं० २।२५७ । २. व्यामोहशब्दस्य मूर्खार्थे मूलं मृग्यम् । ३. अने० सं० २।३५८ । ४. कीलां ज्वालामलति वारयति । अत्र पर्यायादौ । इति जले विग्रहः । रुधिरार्थे तु टीकोक्तः । ५. अने० सं० ३।६८३ । ६. का० सू० ४।५।९९ । ७. का० सू० ४।६।५७ ।

श्रेष्ठकुलीनयोर्जात्यः । जात्यां भवो जात्यः ।

मेघवत्सरयोरब्दः

अवतीति अब्दः । कुन्दादयः[1]—"कुन्दबृन्दमन्दाब्दाः" । "अब्दः संवत्सरे मेघे मुस्तके गिरिभिद्यपि[2] ।"

तार्क्ष्यो हयगरुत्मतोः ॥ १६ ॥ ५

तृक्षस्यापत्यं तार्क्ष्यः । पुंसि ।

स्तब्धतास्थूणयोः स्तम्भः

स्तम्भु इति सौत्रोऽयं धातुः ।

चर्चा चिन्तावितर्कयोः ।

चर्चणं चर्चा । १०

हरकीलकयोः स्थाणुः

तिष्ठतीति स्थाणुः ।

स्वैरः स्वच्छन्दमन्दयोः ॥ १७ ॥

स्वस्य ईरः स्वैरः । [3]स्वस्यात् ऐत्वमीरेरिणोरपि वक्तव्यम् । तथा चालङ्कारे—

"स्वैरं विहरति स्वैरं शेते स्वैरं च जल्पति । १५
भिक्षुरेकः सुखी लोके राजचौरभयोज्झितः ॥"
"स्वैरो मन्दे स्वतन्त्रे च" इति हैमी[4] ।

शङ्कुः सङ्कीर्णविवरे पलालाग्नौ च कीलके ।
संख्यायाम्

शं कायति कुरुते वा [5]शङ्कुः । २०

काननोद्भूते वह्नौ दावो दवोऽपि च ॥ १८ ॥

काननोद्भूते वह्नौ दावो दवोऽपि च । दुनोतीति दवः । दावः । "वा[6] ज्वलादिदुनीभुवो णः" ।

कीनाशः कृपणे भृत्ये कृतान्ते पिशिताशिनि ।
तथा पुण्यजनान् प्राहुः सज्जनान् राक्षसानपि ॥१९॥

लोभेन क्लिश्यते बाध्यते कीनाशः । तालव्यः । २५

विरोचनो रवौ चन्द्रे दनुसूनौ हुताशने ।

विरोचते इत्येवंशीलो विरोचनः ।

हंसो नारायणे अध्वे यतावश्वे सितच्छदे ॥ २० ॥

हन्तीति हंसः ।

सोमश्चन्द्रोऽमृतं सोमः सोमो राजा युगादिभूः । ३०
सोमः प्रतानिनीभेदः सोमपोऽगस्त्यदिग्पतिः ॥ २१ ॥

---

१. का० उ० सू० ३।६४ इति दप्रत्ययः । २. अने० सं० २।२२६ । ३. "स्वस्यैरेरिणीरिषु" का० रू० पृ० ३८ । ४. अने० सं० २।४८२ । ५. शङ्कतेऽस्मात् शङ्कुः । "शकि शङ्कायाम्" । औणादिक उः । ६. का० सू० ४।२।५५ इति णप्रत्ययः "टुदु उपतापे" ।

षुञ् अभिषवे। अनेन सर्वेषां साधनिका ज्ञातव्या।

**अजो विधिरजो विष्णुरजः शम्भुरजस्तमः।**
**अजश्चैवार्षिको व्रीहिरजो रामपितामहः॥ २२॥**

न जायते नोत्पद्यते **अजः**।

५ **शुद्धेऽनुपहते वह्नौ ब्राह्मणे सच्चिवोत्तमे।**
**आषाढेऽध्यात्मसंवित्तौ ब्रह्मचर्ये शुचिर्मतः॥ २३॥**

मतः कथितः। एतेष्वर्थेषु शुचिशब्दः। शोचति जनो देहलग्नेऽत्र शुचिः। तथा च यशस्तिलकचम्पूकारेण--

"न स्त्रीभिः सङ्गमो यस्य सर्वद्वन्द्वविवर्जितः।
१० तं शुचिं सर्वदा प्राहुः मारुतं च हुताशनमिति॥"

**अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु।**

अर्थशब्दः पठ्यते। अभिधेयश्च शब्दो वाचकः, शब्दमध्ये योऽसावर्थः स वाच्यः अभिधेयश्च कथ्यते। राः सुवर्णम्। वस्तु --अस्थ्यादिर्लोहितादिर्वा। गैरिकान्विते (दिक्के च) वस्तु। प्रयोजनं कार्यम्। निवृत्तिश्च मुक्तिः। तासु। ऋ गतौ। अर्थते इत्यर्थः।

१५ **भावः पदार्थचेष्टात्मसत्ताभिप्रायजन्मसु॥ २४॥**

एतेष्वर्थेषु भावः पठ्यते। भवतीति भावः। "वा[1] ज्वलादिदुनीभुवो णः।"

**प्रायो भूम्नोपमातर्क्यप्रभृत्यन्ननिवृत्तिषु।**

एतेष्वर्थेषु प्रायः[2] शब्दः।

**अन्तः पदार्थसामीप्यधर्मसत्त्वव्यतीतिषु॥ २५॥**

२० एतेष्वर्थेषु **अन्तः**।

**अक्षो द्यूते वरूथाङ्गे नयनादौ बिभीतके।**

**द्यूते वरूथाङ्गे** रथचक्रावयवे, **नयनादौ**, **बिभीतके** फलनाम्नि **अक्षो** वर्तते।

**सारः श्रेष्ठे बले वित्ते कोशे जलचरे स्थिरे॥ २६॥**

श्रेष्ठे, बले, वित्ते, कोशे, कौशे वा पाठः। जलचरे, स्थिरे सारो वर्तते। सरत्यनेनेति सारः।
२५ [3]"बलमस्त्ययोश्च" इति परसूत्रेण घञ्। स्वमते "अकर्तरि च कारके संज्ञायाम्[4]" इति घञ्। "सारो मज्जस्थिरांशयोः, बले श्रेष्ठे "च" इति हैमी।

**वाचि वारि पशौ भूमौ दिशि लोम्नि रवौ दिवि।**
**विशिखे दीधितौ दृष्टावेकादशसु गौर्मतः॥ २७॥**

पूजां गच्छतीति **गौः**। गमेर्डोः।

३० **चन्द्रे सूर्ये यमे विष्णौ वासवे दर्दुरे हये।**
**मृगेन्द्रे वानरे वायौ दशस्वपि हरिः स्मृतः॥ २८॥**

हरतीति **हरिः**।

---

१. का० सू० ४।२।५५। २. प्रकृष्टमयनं प्रायः। "इण गतौ"। एरच्। ३. "सर्तेःस्थिरव्याधि-मत्स्यबले" है० श० ५।३।१७। ४. का० सू० ४।५।४। ५. अने० सं० २।४७८।

**पद्मे करिकराग्रान्ते व्योम्नि खङ्गफले गदे ।**

**वाद्यभाण्डमुखे तीर्थे जले पुष्करमप्सु ॥ २९ ॥**

पुष्णातीति **पुष्करम्** ।

**शृङ्गारादौ कषायादौ घृतादौ च विषे जले ।**

**निर्यासे पारदे रागे वीर्येऽपि रस इष्यते ॥ ३० ॥** ५

शृङ्गारादौ–

"शृङ्गारहास्यकरुणारौद्रवीरभयानकाः ।

बीभत्साऽद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः ॥"

कषायादौ—तिक्ताम्लमधुकटुकषायेषु । घृतादौ—दुग्धदधिघृततैललवणेक्षुरसेषु ।
विषे जले, निर्यासे वृक्षरसविशेषे, पारदे रागे, वीर्येऽपि रस इष्यते । १०

**तीर्थं प्रवचने पात्रे लब्धाम्नाये विदांवरे ।**

**पुण्यारण्ये जलोत्तारे महासत्त्वे महामुनौ ॥ ३१ ॥**

एतेष्वर्थेषु **तीर्थम्**[1] ।

**धातुः पञ्चसु लोहेषु शरीरस्य रसादिषु ।**

**पृथिव्यादिचतुष्के च स्वभावे प्रकृतावपि ॥ ३२ ॥** १५

पञ्चन् लोहेषु सुवर्णरजतताम्ररीतिकांस्येषु । शरीरस्य रसादिषु रसासृङ्मांसमेदोऽस्थिमज्जशुक्रेषु ।
पृथिव्यादिचतुष्के च पृथिव्यप्तेजोवायु (वनस्पति) षु, स्वभावे, वातपित्तश्लेष्मादिषु एतेष्वर्थेषु **धातुः**
पठ्यते । दधातीति **धातुः** ।

**प्रधानशृङ्गलाङ्गूलभूषापुण्ड्रप्रभावना ।**

**ध्वजलक्ष्मतुरङ्गेषु ललामो नवसु स्मृतः ॥ ३३ ॥** २०

एतेष्वर्थेषु [2]**ललामः** । ललामन् ।

**आकृतावक्षरे रूपे ब्राह्मणादिषु जातिषु ।**

**माल्यानुलेपने चैव वर्णः षट्सु निगद्यते ॥ ३४ ॥**

आकृतौ, अक्षरे, रूपे, ब्राह्मणादिषु जातिषु, माल्यानुलेपने च **वर्णो**[3] निगद्यते ।

**अकारादावुदात्तादौ षड्जादौ निस्वने स्वरः ।** २५

एतेष्वर्थेषु **स्वरः** कथ्यते । अकारादौ—अ, आ, इ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ, ओ, औ, ।
उदात्तादौ—"[4]उच्चैरुपलभ्यमान उदात्तः," "नीचैरनुदात्तः" "समवृत्त्या स्वरितः" । षड्जादौ—

"निषादर्षभगान्धारषड्जमध्यमधैवताः ।

पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥"

**निस्वने** शब्दे । ३०

**सङ्केताचारसिद्धान्तकालेषु समयः स्मृतः ॥ ३५ ॥**

समयते **समयः** ।

---

१. तरति तीर्यते वाऽनेन तीर्थम् । २. "लड विलासे" । डलयोरभेदात् ललतीति ललामः ।
३. "वर्ण शब्दे" । वर्णयति वर्ण्यते वा वर्णः । घञ् कर्मणि, अज्वा कर्तरि । ४. सारस्व० सू० २ । ५. अम०
को० १।७।१ ।

तन्त्रं प्रधाने सिद्धान्ते सैन्ये तन्तौ परिच्छदे ।

तन्त्र्यन्ते व्युत्पाद्यन्ते शब्दा अनेनेति **तन्त्रम्** । अप्रत्ययः ।

सत्त्वमोजसि सत्तायामुत्साहे स्थैर्ये जन्तुषु ॥ ३६ ॥

एतेष्वर्थेषु **सत्त्वम्** ।

५ रूपादौ तन्तुषु ज्यायामप्रधाने नये गुणः ।

गुणयतीति **गुणः** ।

ज्ञानचारित्रमोक्षात्मश्रुतिषु ब्रह्मवाग्वरा ॥ ३७ ॥

वरा विशिष्टा ।

अवकाशे क्षणे वस्त्रे बहिर्योगे व्यतिक्रमे ।

१० मध्येऽन्तःकरणे रन्ध्रे विशेषे रहितेऽन्तरम् ॥ ३८ ॥

एतेष्वर्थेषु **अन्तरः** ।

हेतौ निदर्शने प्रश्ने श्रुतौ कण्ठसमीकृतौ ।

आनन्तर्येऽधिकारार्थे माङ्गल्ये चाथ इष्यते ॥ ३९ ॥

**इष्यते** कथ्यते । **अथ** एष्वर्थेषु ।

१५ हेतावेवंप्रकारादौ व्यवच्छेदे विपर्यये ।

प्रादुर्भावे समाप्तौ च इतिशब्दः प्रकीर्तितः ॥ ४० ॥

**प्रकीर्तितः** कथितः इतिशब्दः एतेष्वर्थेषु । इण् गतौ । इ । एति एवमादिकमर्थ**मिति** । "इति [1]अमुर्वणि प्रभृतिभ्यो यण्वत्" इत्यनेनेतिप्रत्ययः । इति जातम् । प्रथ० सि: । "अव्य-[2]याच्च" सिलोपः ।

२० धर्मो धनुष्यहिंसादावुत्पादादावये नये ।

द्रव्यक्रियाश्रये वित्ते जीवादौ दारुवैकृते ॥ ४१ ॥

एतेष्वर्थेषु **धर्मः** । धरतीति **धर्मः** ।

मूर्तिमत्सु पदार्थेषु संसारिण्यपि पुद्गलः ।

एतेष्वर्थेषु **पुद्गलः**[3] ।

२५ अकर्मकर्मनोकर्मजातिभेदेषु वर्गणा ॥ ४२ ॥

( अकर्म-पुद्गलस्कन्धः ) कर्म-ज्ञानावरणादि, नोकर्म — शरीरादि । जातिर्गोत्रादि । एतेषु वर्गणा वर्तते ।

ऐश्वर्यस्यासमग्रस्य वीर्यस्य यशसः श्रियः ।

वैराग्यस्यावबोधस्य षण्णां भग इति स्मृतः ॥ ४३ ॥

३० भजन्त्यस्मिन्निति [4]**भगः** ।

प्राहुः कैवल्यमार्हन्त्ये विविक्ते निर्वृतावपि ।

---

१. कातन्त्रेऽस्य शुद्धं रूपं नोपलब्धम् । २. का० सू० २।४।४ । ३. पूर्यन्ते पुनः पुनः सत्पचर्मे इति पुरः । गलन्ति विलीयन्ते गलाः । पुरश्च ते गलाश्च, पुद्गलाः । पृषोदरादित्वाद्रस्य दः । ४. भज्यते सेव्यते धार्यते वा भगः ।

केवलस्य भावः कैवल्यम् ।

लब्धिः केवलबोधादाविष्टासौ नियतौ श्रियाम् ॥ ४४ ॥

लम्भनं लब्धिः ।

अनेकान्ते च विद्यादौ स्यान्निपातः श्रुते क्वचित् ।

[1]स्यात् भवेत् एतेष्वर्थेषु निपातः । ५

भट्टारको धर्मचन्द्रस्तत्पट्टे धर्मभूषणः ।
तत्र देवेन्द्रकीर्तिः श्रीकुमुदचन्द्रस्ततः परम् ॥ १ ॥
धर्मचन्द्रस्ततो ज्ञानसागरस्तत्पदेऽभवत् ।
तेन पुस्तकमेतद्धि दत्तं ( लोकहितेच्छया ) ॥ २ ॥

इति

## धनञ्जयनाममाला सटीका समाप्ता



---

१. स्यात् इत्याकारको निपात एतेष्वर्थेषु इति सम्बन्धः । २. इतः परं मुद्रितपुस्तकेष्वधिकः पाठ उपलभ्यते, तद्यथा—''दर्शनादौ मणौ रत्नं भव्यः शस्ते प्रसेत्स्यति ॥४५॥ परमात्मा जिने सिद्धे परमेष्ठ्यर्हदादिषु । सिद्धाः सिद्धनिषद्यायामर्हत्सिद्धश्रियामपि ॥४६॥ अर्हत्सिद्धमिति द्वावप्यर्हत्सिद्धाभिधायिनौ । अर्हदादीनपि प्राहुः शरण्योत्तममङ्गलान् ॥४७॥ इति । ३. अत्राशुद्धिदोषात् किञ्चित्पाठभेदः स च शोधित इत्थंरूपः संवृत्तः ।

ज्ञेयं पुष्करमब्जं च नागनासाग्रमेव च । कूलं नभः समाख्यातं कूलं रोधः प्रचक्षते ॥३६॥
खं चानन्तमिति प्रोक्तमनन्तं च बलं क्वचित् । विष्णुः क्वचिदनन्तः स्यान्नागश्चानन्त उच्यते ॥३७॥
प्रजापतिः स्मृतो राजा ब्रह्मा चापि प्रजापतिः । प्रजापतिः स्मृतः क्षत्ता क्षत्ता च चर उच्यते ॥३८॥
वामः पयोधरः प्रोक्तो वामः स्याद्द्रविणं हरः । वामश्च मदनः प्रोक्तो वामश्च प्रतिकूलके ॥३९॥
अगोपो गोपको ज्ञेयः क्वचिन्नागोपको ध्वजः । उरश्चाङ्कः समाख्यातः स्थानमङ्कः स्मृतस्तथा ॥४०॥
वासरस्तु स्मृतो नागो वासरो दिवसो मतः । विभावसुर्निशा ज्ञेया गन्धर्वश्च क्वचिन्मतः ॥४१॥
शर्वर्यो रात्रयः प्रोक्ताः शर्वर्यश्च स्त्रियो मताः । सान्द्रं घनमिति प्रोक्तं स्निग्धं सान्द्रं निगद्यते ॥४२॥
स्वः स्वर्गस्य मतं नाम स्वः सुखं क्वचिदुच्यते । स्व आत्मा चैव निर्दिष्टः स्वः प्रोक्तो गृहमूषिकः ॥४३॥
ककुप्छन्दोविशेषज्ञो मतः शास्त्रेऽपि ना ककुप् । ककुम्महीरुहः प्रोक्तो ज्ञेयास्तु ककुभो दिशः ॥४४॥
क्षयं वेश्म समुद्दिष्टं क्षयं रोगं प्रचक्षते । जलदस्तु प्लवो ज्ञेयः प्लवो ज्ञेयस्तथोडुपः ॥४५॥
प्रासादो मण्डपः प्रोक्तो विहारश्चापि कथ्यते । घनं घनं विजानीयाद् घनं विपुलमुच्यते ॥४६॥
प्रयुज्यते च कस्मिंश्चिद् घनं सङ्घातवाद्ययोः । वरूथं स्यन्दनाग्रं स्याद्वरूथं वेश्म उच्यते ॥४७॥
चमूश्च वर्म सहसा प्रवदन्ति मनीषिणः । असुराश्च सुरा ज्ञेयाः क्वचिद्देवारयोऽसुराः ॥४८॥
नागाश्च द्विरदा ज्ञेयाः पन्नगाश्च क्वचिन्मताः । गन्धर्वश्च तथा वायुः क्वचित्स्याद् वैणगायनः ॥४९॥
तार्क्ष्यो हयः समुद्दिष्टस्तार्क्ष्यश्चापि खगाधिराट् । [illegible] ॥५०॥
तुणी वनस्पतिः प्रोक्ता क्वचिदार्द्राश्च कथ्यते । शिखरो वृक्ष उद्दिष्टः शिखरी पर्वतः स्मृतः ॥५१॥
द्विजो विप्रश्च दन्तश्च द्विजः पक्षी निगद्यते । चौरो मलिम्लुचो ज्ञेयो वातश्चापि मलिम्लुचः ॥५२॥
आत्मजं रक्तमुद्दिष्टं सुतः कामस्तथैव च । कीनाशो मृतको ज्ञेयः कीनाशश्चापि राक्षसः ॥५३॥
कीनाशोऽग्निः कृतघ्नश्च कृपणो यम एव च । कीनाशः कर्षको ज्ञेयः कीनाशश्च वृकोदरः ॥५४॥
अवदातं प्रधानं स्यादवदातं च पाण्डुरम् । ज्योतिर्लोचनमुद्दिष्टं ज्योतिर्नक्षत्रमुच्यते ॥५५॥
ज्योतिश्च गदितो वह्निः काव्येषु मुनिपुङ्गवैः । प्रधानं सज्जनं ज्ञेयं प्रधानं श्वेतमुच्यते ॥५६॥
अब्दः संवत्सरो ज्ञेयो मेघश्चापि क्वचिन्मतः । बलाहका महामेघाः शिखरी च बलाहकः ॥५७॥
तोयदं जलदं प्राहुस्तोयदं कथ्यते घृतम् । जीमूतश्च मतो नागो जीमूतः क्वचिदम्बुदः ॥५८॥
पौलस्त्यं तु मतं युद्धं पौलस्त्यं पौरुषं विदुः । शुचिकुद्रजकश्चैव प्रोक्तो नित्यं बुधै रसः ॥५९॥
पर्जन्यं जलदं प्राहुः पर्जन्यं तु शतक्रतुः । शिलीमुखाः स्मृता बाणा भ्रमराश्च शिलीमुखाः ॥६०॥
लेखा सीमेति विज्ञेया लेखा चित्रकृतौ मता । अम्बरीषं क्वचिद्भ्राष्ट्रं क्वचिद्युद्धं निगद्यते ॥६१॥
पुंस्त्वं चापि मतं युद्धं पुंस्त्वं पौरुषमुच्यते । विद्वांसोऽरिपवो ज्ञेया विद्वांसस्त्वसवो मताः ॥६२॥
मायाऽविद्येति विज्ञेया क्वचिन्माया तु शांवरी । मधु द्राक्षेति विज्ञेया क्वचित्स्यान्मधु माक्षिकम् ॥६३॥
मधु चाम्बु समाख्यातं सुरा च मधुसंज्ञका । खं रन्ध्रमिति विज्ञेयं खं गृहं नभ एव च ॥६४॥
खमिन्द्रियमिति ख्यातं खं च नक्षत्रमुच्यते । धार्तराष्ट्रा महाहंसा धृतराष्ट्रसुताः क्वचित् ॥६५॥
प्रभाकरो मतः सूर्यो वह्निश्चापि प्रभाकरः । सितं शुक्लमिति ज्ञेयं सितं बद्धं प्रचक्षते ॥६६॥
असितं कृष्णमित्युक्तं अशितं भक्षितं स्मृतम् । बभ्रुस्तु नकुलो ज्ञेयः पाण्डवो नकुलस्तथा ॥६७॥
त्रिशङ्कुर्मार्जारमूषिकश्चापि तथेष्यते । यमस्तु वायसो ज्ञेयो यमः प्रेताधिपस्तथा ॥६८॥
लक्ष्मणं सारसं विद्यात्तथा दशरथात्मजम् । लक्ष्म चन्द्रस्य कार्ष्ण्यं स्याल्लक्ष्मयः केतुः प्रकीर्तितः ॥६९॥
केतुश्चापि मतः काव्ये लक्ष्मेति मुनिपुङ्गवैः । आरुणेयः स्मृतो दक्षो दक्षश्चाचेतसः क्वचित् ॥७०॥
आशुकारी भवेद्वृक्षः स्याद्वली तोमरः स्मृतः । आदित्यं च रविं विद्याद् वैश्यश्चाप्यदितेः सुतः ॥७१॥
रोगो रजस्तथा रेणू रजो लोहितमुच्यते । स्कन्धो नितम्बसंज्ञः स्यान्नितम्बं जघनं तटम् ॥७२॥
हेम वस्विति विज्ञेयं वसु तेजो निगद्यते । सारङ्गं चातकं प्राहुः स्वर्णं चापि सितासितौ ॥७३॥
रम्भाश्च कदलीः प्राहू रम्भा स्वर्गाङ्गना मता । ग्रावाणो गिरिजाः प्रोक्ता मेघाश्चापि मनीषिभिः ॥७४॥

........................ निगद्यते । औषधं रसमुद्दिष्टममृतं सत्यमपि क्वचित् ॥७५॥
अक्ष आत्मेति विज्ञेयः केचिदाहुर्बिभीतकम् । ज्ञेयमिन्द्रियमक्षं च शाकटं कर्ष एव च ॥७६॥
अक्षं च पाशकं विद्याद्व्यावहारिकमेव च । पद्ममिन्द्रियमित्युक्तं पद्मं तामरसं विदुः ॥७७॥
चैत्यमायतनं प्रोक्तं नीडमायतनं तथा । पुष्पं लोहितमुद्दिष्टं पुष्पं च कुसुमं तथा ॥७८॥
वाजी तुरङ्गमो ज्ञेयो वाजी श्येनो विहङ्गमः । विष्णिवन्द्रसिंहमण्डूकचन्द्रादित्यांस्तु वानरान् ॥७९॥
बभ्रुशिवानिलहयान् हरीनिच्छन्ति कोविदाः । पुरुषध्वजलिङ्गेषु हयभूषणलक्ष्मसु ॥८०॥
रामशोभावनीन्द्रेषु ललामं नवसु स्मृतम् । शुका स्मृताऽक्षिदोषेना लवली मञ्जरी तथा ॥८१॥
शुकवक्त्रः शुको ज्ञेयः कोकिला वचनप्रिया । पुलिनं जलविच्छेदः पङ्कजं स्यात्कुशेशयम् ॥८२॥
रतं पापमिति ज्ञेयं सत्वरं शीघ्रमुच्यते । पिशङ्गं रोचनाभं स्यान्मेचकस्तिलको मतः ॥८३॥
ललाटेऽवस्थितं चिह्नं विशङ्कुस्तिलकं मतम् । परिचर्यं च कटकं निकषस्तु कषो मतः ॥८४॥
नानारत्नैरुपचिता मञ्जूषा रागिणी स्मृता । दिनकृद्वाजिसिंहेषु केसरित्वं विधीयते ॥८५॥
अव्यक्तो मधुरः शब्दः कल इत्यभिधीयते । अलातमुल्मुकं ज्ञेयं छेदो नाम भयङ्करः ॥८६॥
भावः शृङ्गारमाधुर्यं भावोऽवस्थाप्ररूपणम् । विलासः कामजो दोषस्तथैव ललितं मतम् ॥८७॥
उत्तमाङ्गं विना देहं कबन्धं चेति शस्यते । शिरसो वेष्टनं यद्वै तदुष्णीषं निगद्यते ॥८८॥
आकृतं समदीर्घं स्यान्निबिडं पीडितोन्नतम् । मण्डूको भेकसंज्ञः स्याद्दुर्दर्भूश्चातको मतः ॥८९॥
शिवा पिङ्गवती ज्ञेया विशालं सबलं मतम् । कुचर्मा शिपिविष्टः स्यात्कर्षकस्तु कृषीवलः ॥९०॥
कन्याजातश्च कानीनो षण्ढः क्लीब इति स्मृतः । उत्कृष्टः श्वशुरः स्यात्तां क्लिष्टमव्यक्तवाचकम् ॥९१॥
रदनो हस्तिदन्तः स्याद्दानं कटकसंज्ञितम् । तोदनं चाङ्कुशं विद्यादालानं हस्तिबन्धनम् ॥९२॥
घनाघन इति स्यातः शास्त्रेऽधिकपौरुषः । अपाचीनं मनोज्ञं च बुद्धिर्ज्ञेया तु शेमुषी ॥९३॥
अर्कस्तु पादपे ज्ञेयो नदी स्यात्फेनवाहिनी । अश्वारोहो मरुद्यानोऽश्वानां हृदये ध्वनिः ॥९४॥
आक्रन्द इति विज्ञेयः खुराश्च शफसंज्ञिताः । आममांसं भवेत्क्रव्यं पक्वं पिशितमुच्यते ॥९५॥
शुष्कं तु विरसं ज्ञेयं मृष्टं सरसमुच्यते । शङ्खजं शुक्तिजं चैव वाराहं तिमिमौक्तिकम् ॥९६॥
वंशाद्वाशोविषान्नागाज्जीमूताच्च तथाष्टमम् । लोकज्ञो दक्षिणो ज्ञेयो दक्षिणश्च तुरः स्मृतः ॥९७॥
आकूतं तु मतं विद्यात्कण्टकं गहनं मतम् । आननं चाकुले नेत्रे चिकुरं चापि शस्यते ॥९८॥
पापः श्याम इति प्रोक्तो बभ्रुस्तु कपिलो मतः । स्थविष्टं स्थावरे चैव दविष्ठं दूरमुच्यते ॥९९॥
परमेष्ठी मतः श्रेष्ठः प्रेम प्रियमुदाहृतम् । प्रकाशः स्त्रीगृहैरक्तः शैलूष इति संज्ञितः ॥१००॥
पदकृच्चर्मकारः स्यान्नापितस्त्वथमयः स्मृतः । लावण्यमाहुर्माधुर्यं चित्रं च शुभकर्मजम् ॥१०१॥
व्याधयश्चामयाः प्रोक्ताः पानीयं तु समुच्चयः । आधयस्तु स्मृताः प्राज्ञैश्चित्तोत्पन्ना उपद्रवाः ॥१०२॥
रंहो वेगः समाख्यातः सत्रं सच्चरितं स्मृतम् । आलवालं स्मृतं सद्भिरपां वेगनिवारणम् ॥१०३॥
चटकः कलविङ्कः स्यात्तुल्यं सदृशमुच्यते । किलासं पाण्डुरं ज्ञेयं दोला प्रेङ्खेति शस्यते ॥१०४॥
सन्धिरं नगरं ज्ञेयं निलयं चापि मन्दिरम् । सहस्रनयनोऽगारिः प्रधनं युद्धमुच्यते ॥१०५॥
पलाशो हरितो वर्णो मेचको नीलपिञ्जरः । उक्षाणं वृषभं विद्याल्लुलायो महिषो मतः ॥१०६॥
उस्रा वंध्या वसा वेहत् पृष्ठौही गर्भिणी स्त्रिया । व्याख्यातो मस्करी वेणुस्त्वचिसारः परिकीर्तितः ॥१०७॥
हिलं कामं शपं चैव रोषमाहुर्मनीषिणः । कलभोऽल्पवयो नागः कलुषं चाविलं मतम् ॥१०८॥
वृजिनं कुटिलं विद्यात्सम्राट् राजा च भूभुजौ । रत्नं वज्रं विजानीयात्त्रियामा क्षणदा मता ॥१०९॥
दीर्घं प्राशुं विजानीयात् ह्रस्वं नीचकमुच्यते । भूरि प्रभूतमुद्दिष्टमभितः सर्ववाचकम् ॥११०॥
पवनश्चानिलो ज्ञेयः पयनश्चाधमो जनः । प्रियवाक्यो भवेदार्यः स्नातश्च परिकीर्तितः ॥१११॥
आडम्बरश्च पटहो व्यञ्जनं बोधनं मतम् । विपंची वल्लकी ख्याता वीणा चैव निगद्यते ॥११२॥
मालती सुमना ज्ञेया सुमना मुदितो जनः । वल्लरी मञ्जरी ख्याता प्रपाऽम्बाला प्रकीर्तिता ॥११३॥

आयुर्निरुच्यते तोयं तेन जीवति पद्मकम् । तस्य पत्राक्षिमानेन रामो राजीवलोचनः ॥११४॥
उत्कृत्य कवचं देहाद्वसुन्दर्यं स पस्पुरा । इन्द्राय वसवान्कर्णस्तेन वैकर्त्तनः स्मृतः ॥११५॥
तीक्ष्णश्चैव प्रचण्डश्च वृको नामानलो मतः । स पाण्डवस्य उदरे तेन भीमो वृकोदरः ॥११६॥
यस्य श्रुतिमुखा वाणी पुण्य-श्लोकः स उच्यते । यः खेदी चानिवर्त्ती च युद्धशौण्डः स उच्यते ॥११७॥
महासंसर्गसञ्जातं महेष्वासं प्रचक्षते । स्वविक्रमैस्तापयेच्च परं......यूथं तापयेत् ॥११८॥
यूथं तापयेद्यस्तं विज्ञेयश्च स यूथपः । तस्मादपि च यो वर्यः स तु यूथपयूथपः ॥११९॥
सिंहाग्निताम्रसौवीरः स नृसिंह इति स्मृतः । ये हि स्पष्टप्रवक्तारो मतास्ते व्यक्तवादिनः ॥१२०॥
यो यमित्थं च नाश्नाति स कीनाश इति स्मृतः । योऽप्रबुद्धोऽल्पबुद्धिश्च स तु मन्द इति स्मृतः ॥१२१॥
उपकारं तु यो हन्ति स कृतघ्न इति स्मृतः । हर्षे गर्वे सुखे खेदे वृद्धौ च प्रतिभासते ॥१२२॥
स्नेहभाग्यक्षये चैव मन्दशब्दो निगद्यते । नातीत्य वर्तते यत्र तदध्यात्मं प्रचक्षते ॥१२३॥
चेतसश्च समाधानं समाधिरिति गद्यते । सर्वक्लेशविनिर्मुक्तो स हि दान्त इति स्मृतः ॥१२४॥
निर्ममो निरहङ्कारो विजेयः छिन्नसंशयः । प्रज्ञाता देशकालज्ञः समाधिस्थः स उच्यते ॥१२५॥
मुञ्जरोऽल्पमतिर्यस्तु सङ्कोचश्चैव कीटकः । वृत्तिर्यत्र तु गृहस्थानां परोक्षे बहिः तत्क्रिया ॥१२६॥
आहारव्यवहारेषु सा प्रीतिर्निरुपस्करा । परस्परं स्वदारेषु सतां येषां प्रवर्तते ॥१२७॥
विश्रम्भात्प्रणयाद्वापि सा प्रीतिर्निरुपद्रवा । यशः ख्यातिरिति प्रोक्तं तद्योगात्प्रादुरुच्यते ॥१२८॥
कीर्तिख्यातियशोयोगाद् भगवन्निति चोच्यते । प्रियदानेषु यः शुद्धः स उदार इति स्मृतः ॥१२९॥
रजस्वला तु या नारी सा चोदक्या प्रकीर्तिता । प्रीतिर्भावक्रिये स्वच्छरसालिंगितनुं विपुम्?॥१३०॥
तेजो रेतसि दीप्तौ तपो हि स्याद् वृषार्थकः । योऽन्यजातो हतो जीवः स शराक इति स्मृतः ॥१३१॥
मिथ्यादृष्टिरहंमानी नास्तिकः सः प्रकीर्त्तितः । कामः क्रोधश्च मे पूर्वे लोभोऽसत्यं च मध्यमे ॥१३२॥
अन्नं मोहं विषादश्च अस्य ज्ञेयः स षड्वर्गः । अमृतं जारजः कुण्डो मृते भर्तरि गोलकः ॥१३३॥
अनयोर्योऽन्नमश्नाति स कुण्डाशी निगद्यते । भ्रूणघ्नी गर्भिणी बाला ब्राह्मणी ब्रह्मजीविनी ॥१३४॥
परवित्ते यवीयान् योः ज्येष्ठपत्नीं परामृशन् । यः पश्चिमश्च ज्येष्ठोऽपि परविसः स उच्यते ॥१३५॥
पुष्पजं क्षौमजं चर्म्मकौशजं भर्म्मजं तथा । गुणजं च समुद्दिष्टं तद्भेदा वस्त्रजातिषु ॥१३६॥
बिम्बारक्तधरा या स्त्री बिम्बोष्ठीं तां विनिर्दिशेत् । या स्यात् संक्रीडनपरा ललना तां विनिर्दिशेत् ॥१३७॥
दूर्वाकाण्डप्रतीकाशा कुंभौ यस्यास्तनू कुचौ । सर्वंरूपविनिविताङ्गी सा भवेद्वरवर्णिनी ॥१३८॥
लावण्ययुक्ता या नारी ललितां तां विनिर्दिशेत् । या मत्ता मत्तवज्ज्योतिः सा ज्ञेया मत्तकाशिनी॥१३९॥
भूरिश्च भूरिमुद्दिष्टं अन्नं श्रव इति स्मृतम् । भूरि श्रवो ददातीह तस्माद् भूरिश्रवो हि सः ॥१४०॥
चतुष्पाद्विंशतिभुजो लोहितग्रीव एव च । निसर्गाद्दारुणात्क्रूराद्रवणाद् रावणः स्मृतः ॥१४१॥
रोषणा या भवेन्नारी भामिनीं तां विनिर्दिशेत् । न्यग्रोधलक्षणं विद्याद्धाना परिमण्डलम् ॥१४२॥
ताभ्यामुपेता वनिता न्यग्रोधपरिमण्डला । तत्तुल्ये चाक्षिणी यस्याः सा स्त्री राजीवलोचना ॥१४३॥
वर्णप्रमाणनिर्दोषोऽक्षिपक्षसंपद्भिरन्वितः । राजीवमन्ये शंसन्ति स्निग्धवर्णं सितासितम् ॥१४४॥*
किंचिद्रक्तरतयोगात्सीता राजीवलोचना । वलिभिर्यास्त्रिभिर्युक्ता शङ्खकण्ठी उदाहृता ॥१४५॥
......जराकराकारं स्यन्दनाग्रमिवायतः । वस्त्वे...ति तज्ज्ञेयं तस्यैवायं.........॥१४६॥
......तं मर्मसंयुक्तं तत्तथालिनमुच्यते । ग्रहणे धारणे सामे वाहने धर्मसंयुता ॥१४७॥
रमणे क्रीडने सङ्गे भार्या नाम प्रवर्त्तते । मूढतायां सविद्यायां सप्ताश्वस्त्वंशुमालिनि ॥१४८॥
विषमाक्षवरा एते ज्ञेयाश्च तैः विसंस्थिताः । कोटरस्था इति ज्ञेयाः सर्पकीटखगादयः ॥१४९॥
आताम्रपल्लवो यस्तु वृक्षाणामचिरोद्गमः । ..............................॥१५०॥
सौकुमार्यं किसलयं कोमलत्वं च तत्स्मृतम् । शतानां च चतुर्हस्तं नल्वं तद्विहसंज्ञितम् ॥१५१॥

* नोट—मूल प्रतिमें १४४ से १४८ तकके पद्योंपर उनके नम्बर नहीं पड़े हैं।

meanings of स्व come before the meanings of श्, ष्, स्. It appears a little bit strange. The meanings of स्व ought naturally to come after the meanings of श्, ष्, स्. as स्व is a conjunct consonent beginning with स्. The meanings of ज्ञ, which is made up of ज्, and ञ, are given after the meanings of ज्.

I have, therefore, changed the serial order of the verses for the reasons stated above, and placed these verses just after the meanings of स् and before those of ह्. This arrangement does not change the meaning but on the contrary serial order of the letters is kept intact.

I have also given in the margin the number of senses in numerical figures just after the word whose meanings are given in the verses and have also underlined those words in the verses.

The last and most pleasant work which is by no means a great task, that remains now is to offer hearty thanks to those who helped me in the work. The first and foremost person to whom I owe a debt of gratitude is Dr. N. G. Sardesai, L. M. & S, the enterprising Manager of the Oriental Book Agency, of Poona. This work would not have seen the light without his help and kind suggestions. I have, therefore, to offer hearty thanks to him. I have also to thank Mr. G. S. Sardesai of Kolhapur without whose aid the book would not have been brought out so quickly and correctly.

Buldana,

Dated 9th August, 1929. N. N. K.

अथ

श्रीशाश्वतप्रणीतः

# अनेकार्थसमुच्चयः

अथवा

# शाश्वतकोशः

श्रीगणेशाय नमः । ॐ नमः सरस्वत्यै ।

पाकोत्तीर्णसुवर्णवर्णरुचिरच्छायं वसानोम्बरं

भास्वत्कौस्तुभकान्तिकर्बुरपरिभ्राजिष्णुवक्षःस्थलः ।

शङ्खं चक्रमसिं गदामवितरं बिभ्रच्चतुर्भिः करै-

रारूढो गरुडं नवीनजलदश्यामो हरिः पातु वः ॥ १ ॥

पूर्वाचार्यप्रसादेन विदित्वा शब्दविस्तरम् ।

क्रियते शाश्वतेनायमनेकार्थसमुच्चयः ॥ २ ॥

स्फुटार्थपदविन्यासः शिशूनां प्रतिपत्तये ।

कृतोयं न प्रबुद्धानामतः क्षाम्यन्तु सूरयः ॥ ३ ॥

एष ज्ञानार्थमज्ञानां संतोषाय विजानताम् ।

श्रमो मम न तु ज्ञानलवगर्वितचेतसाम् ॥ ४ ॥

प्रसिद्धैरप्रसिद्धैश्च शब्दैरेष विनिर्मितः ।

प्रसिद्धैर्ग्रन्थितुं ग्रन्थमप्रसिद्धैश्च वेदितुम् ॥ ५ ॥

दृष्टशिष्टप्रयोगोऽहं दृष्टव्याकरणत्रयः ।

अधीती सदुपाध्यायाल्लिङ्गशास्त्रेषु पञ्चसु ॥ ६ ॥

अतः शब्दार्थलिङ्गेषु कर्तव्योऽत्र न संशयः ।

शब्दकोशेऽभियोगेन विद्वज्जननिरूपिते ॥ ७ ॥

शिव ३ शिवं भद्रं शिवः शंभुः शिवा गौरी शिवाभया । शिवा ४
शिवः कीलः शिवा क्रोष्टा भवेदामलकी शिवा ॥ १

बल ८ बलं शक्तिर्बलं सैन्यं बलं स्थौल्यं बलो बली ।
बलं रूपं बलो दैत्यो बलः काको हली बलः ॥ २

मधु ६ मधु मद्यं मधु क्षौद्रं मधु पुष्परसं विदुः ।
मधुर्दैत्यो मधुश्चैत्रो मधुकोपि मधुर्मतः ॥ ३

ध्रुव ६ ध्रुवः कीले (लो) ध्रुवं शश्वद् ध्रुवं तर्के ध्रुवो मुनौ । ध्रुवा १
ध्रुवो नित्ये निश्चिते च गीतिस्रुग्भेदयोर्ध्रुवा ॥ ४

शिखा ६ शिखा ज्वाला शिखा चूडा शिखा शाखा शिखा शिफा ।
शिखा शिखण्डिनां चूडा शिखा स्यादग्रमात्रकम् ॥ ५

घन ९ वाद्ये मुस्तेऽम्बुदे सान्द्रे घनः स्याल्लोहमुद्गरे ।
घनौ काठिन्यसंघातौ मूर्तिबाहुल्ययोर्घनः ॥ ६
( घनं सान्द्रं घनं वाद्यं घनो मुस्तो घनोऽम्बुदः ।
घनौ काठिन्यसंघातौ घनः स्याल्लोहमुद्गरः ॥ )

राम ६ रामा स्त्री जामदग्न्यश्च रामो रामौ सितासितौ । रामा १
रामः पशुविशेषोपि रामौ चारुहलायुधौ ॥ ७

पद्म ५ पद्मा लक्ष्मीर्निधिः पद्मः पद्मानि गजबिन्दवः । पद्मा १
संख्यानागविशेषौ च पद्मौ पद्मं सरोरुहम् ॥ ८

वसु ६ देवप्रभेदा वसवो वसुः किरणयोक्त्रयोः ।
वसु रत्नं वसु धनं वसु तेजो निगद्यते ॥ ९
( वसुमाहुर्हुताशनम् ॥ )

गोत्र ३ विश्वंभरा भवेद् गोत्रा गोत्रा गोनिकुर (रु) म्बकम् । गोत्रा २
नाम गोत्रं कुलं गोत्रं गोत्रश्च धरणीधरः ॥ १०

शुचि ६ शुचिरग्निः शुचिः शुक्रः शुद्धानुपहतौ शुची ।
उपधाशुद्धसचिव आषाढश्च शुचिर्मतः ॥ ११

अमृत ५ सुराणामन्नममृतममृतं स्यादयाचितम् ।
अमृतं यज्ञशेषोपि निर्वाणं वारि चामृतम् ॥ १२

निर्वाण ४ निर्वाणमस्तंगमनं निर्वाणं गजमज्जनम् ।
निर्वाणमपवर्गोपि निर्वाणं निर्वृतिं विदुः ॥ १३

पुण्डरीक ४ पुण्डरीकं सितच्छत्रं पुण्डरीकं सिताम्बुजम् ।
व्याघ्रोपि पुण्डरीकः स्यात्पुण्डरीकश्च दिग्गजः ॥ १४ ॥

पालि ५ चिह्नमाहुर्बुधाः पालिं पालिः पङ्क्तिप्रदेश(भेद) योः ।
कर्णस्य ललिता पालिः पालिरश्रिरपि स्मृता ॥ १५

बहुल ३ एला गावश्च बहुला बहुलाः कृत्तिका अपि । बहुला २
बहुलः कृष्णपक्षो(क्षे)ऽग्निर्बहुलो बहुलं शिति ॥ १६

चित्र ४ चित्रं तिलकमिच्छन्ति चित्रमालेख्यमद्भुतम् । चित्रा २
नक्षत्रं च सुभद्रा च चित्रा चित्रं च कर्बुरम् ॥ १७

बलि ५ बलिः पूजोपहारः स्याद्बलिर्दैत्यो बलिः करः ।
बलिर्जराश्लथं चर्म जठरावयवो बलिः ॥ १८

विनीत ४ अपनीतं विनीतं स्याद्विनीतो विजितेन्द्रियः ।
विदुर्विनीतं निभृतं विनयग्राहितेपि च ॥ १९

शुक्र ५ देवारातिगुरुः शुक्रः शुक्रौ मासहुताशनौ ।
शुक्रं देहवतां बीजं शुक्रमक्षिरुजं विदुः ॥ २०

गव्य ३ ज्या गव्यं गोहितं गव्यं गव्या गोनिकुर(रु) म्बकम् । गव्या २
रागद्रव्यं च गव्याख्यं गव्यं क्षीरादिकं गवाम् ॥ २१

संभव ३ संभवं मेलकं विद्यादुत्पत्तिरथ संभवः ।
आधारानतिरिक्तत्वमाधेयस्य च संभवः ॥ २२

मणि ४ अलिञ्जरं मणिं विद्वान्मेहनावयवो मणिः ।
रत्नं मणिरजानां च कण्ठदेशस्तनौ मणी ॥ २३

कल्य ४ कल्यं प्रभातं सज्जं च (सज्जितं) कल्यो नीरोगदक्षयोः । कल्या २
कल्याणी वाक्च कन्याख्या कल्या कादम्बरी मता ॥ २४

गुरु ६ गुरुर्महति विख्यातो दुर्वहा (जेरा) लघुनोर्गुरु (रुः) ।
गुरुर्निषेकादिकरे पित्रादिसुरमन्त्रिणोः ॥ २५

अक्ष ७ अक्षो रथस्यावयवे पाशकेऽप्यक्षमिन्द्रिये ।
विभीतकेऽक्षः कर्षे च शकटव्यवहारयोः ॥ २६

वृत्त ७ वृत्तं दृढमधीतं च वृत्तं वृत्तिर्मतं तथा ।
चरित्रच्छन्दसोर्वृत्तं निस्तलातीतयोरपि ॥ २७

कृष्ण ५ वर्णः कृष्णो विदुः कृष्णां पिप्पलीं द्रौपदीमपि । कृष्णा २
कृष्णाख्याः शस्त्रकव्यासधनंजयजनार्दनाः ॥ २८

वार्त्त ४ निःसारारोग्ययोर्वार्त्तं नीरुग्वार्तोथ वृत्तिमान् । वार्त्ता ३
कृष्यादाविष्यते वार्त्ता वर्तनोदन्तयोरपि ॥ २९

क्षुद्र ४ अधमक्रूरयोः क्षुद्रः क्षुद्रोऽल्पः कृपणस्तथा । क्षुद्रा ३
क्षुद्रा व्यङ्गा नटी वश्या सरघा कण्टकारिका ॥ ३०

परिग्रह ५ परिग्रहः परिजने शपथे च परिग्रहः ।
परिग्रहः कलत्रे च मूलस्वीकारयोरपि ॥ ३१

मत्सर २ धनवन्तमदातारं पुरुषं मत्सरं विदुः ।
असोढा परसंपत्तेर्मात्सर्यमपि मत्सरः ॥ ३२

रस ८ शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः । रसा १
पारदे देहधातौ च रसः स्यान्मेदिनी रसा ॥ ३३

वर्ण ९ वर्णो गुणाक्षरयशःशुक्लादिब्राह्मणादिषु ।
वर्णः स्तुतौ कुथायां च वर्णः स्याद्भेदरूपयोः ॥ ३४

| | | |
|---|---|---|
| तल | ५ | तलश्चपेटस्तालश्च स्वरूपानूर्ध्वयोस्तलम् । |
| | | ज्याघातो ध्रियते येन प्रकोष्ठे तत्तलं मतम् ॥ ३५ |
| करण | ५ | करणानि हृषीकाणि करणं साधनं विदुः । |
| | | करणाख्या च विज्ञेया कायकायस्थकर्मसु ॥ ३६ |
| पद | ९ | व्यवसाये परित्राणे पादतच्चिह्नयोरपि । |
| | | वस्तुस्थानापदेशेषु पदं स्याद्वाक्यशब्दयोः ॥ ३७ |
| प्रमाण | ५ | सम्यक्प्रवक्तृपुरुषे प्रमाणमथ कारणे । |
| | | मर्यादायां प्रमाणाख्या प्रमाणं मानशास्त्रयोः ॥ ३८ |
| वर | ४ | वरो जामातरि श्रेष्ठे देवतादेरभीप्सिते । |
| | | मनागिष्टे वरं यच्च कश्चिदाह तदव्ययम् ॥ ३९ |
| ताल | ३ | गीतकालक्रियामाने तालस्तालोथ पादपे । |
| | | तालः करतलेङ्गुष्ठमध्यमाख्यामिते तथा ॥ ४० |
| तन्त्र | ६ | प्रधानौपधिसिद्धान्तास्तन्तुवायपरिच्छदौ । |
| | | तन्त्राणि तन्त्रमेकं स्यादुभयार्थप्रयोजकम् ॥ ४१ |
| समय | ६ | शपथाचारसिद्धान्तान्समयान्संप्रचक्षते |
| | | समयः स्यात्क्रियाकारे कालसंकेतयोरपि ॥ ४२ |
| सत्त्व | ९ | व्यवसाये स्वभावे च पिशाचादौ गुणे बले । |
| | | द्रव्यात्मभावयोः सत्त्वं सत्त्वं प्राणेषु जन्तुषु ॥ ४३ |
| भग | ११ | ऐश्वर्यस्य प्रयत्नस्य धर्मवीर्ययशः श्रियाम् । |
| | | ज्ञानवैराग्यसूर्याणामिच्छायोन्योर्भगश्रुतिः ( भगः श्रुतिः ) ॥ ४४ |
| दाय | ३ | विभक्तव्यं पितृ [ व्य ] द्रव्यं दायमाहुर्मनीषिणः । |
| | | यौतकादिधनं दायो दायो दानं च कथ्यते (- नमुदाहृतम् )॥४५ |
| अभिपन्न | ४ | अभिपन्नोपराद्धः स्यादभिपन्नो विपद्गतः । |
| | | अभिपन्नमभिग्रस्तमभिपन्नमभिद्रुतम् ॥ ४६ |

प्लव ५ क्रमनिम्ने भुवो भागे भेकपक्षिप्रभेदयोः ।
प्लवं विदन्ति विद्वांसः प्लवनोडुपयोः प्लवः ॥ ४७

भाव १२ भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु (योनिषु) ।
क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु ॥ ४८

धर्म ८ स्वभावन्याययागादियमाचारेषु सोमपे ।
प्रचक्षते धर्मशब्दमहिंसाग (सोप) मयोरपि ॥ ४९

वश ४ आयत्ततायामायत्ते प्रभुत्वे च वशं विदुः । वशा ४
वशाश्वतस्रो वन्ध्या गौः सुता नारी करेणुका ॥ ५०

कल १ कलनाकालशिल्पेषु वृद्धौ मूलधनस्य च । कला ५
इन्दोरंशे कला ध्यानेप्यव्यक्तमधुरे कलः ॥ ५१

काण्ड ८ र [स]होविटपवर्गेषु गर्ह्यपानीययोरपि ।
बाणावसरयोः काण्डं काण्डं नालमपि स्मृतम् ॥ ५२

अरिष्ट ७ तक्रे मरणचिह्ने चारिष्टं वृक्षे च फेनिले ।
सुरायां च शुभेपि स्यात्काके निम्बे च पुंस्ययम् ॥ ५३
( तक्रे मरणचिह्ने स्यादरिष्टमशुभे शुभे ।
अरिष्टः कथ्यते काके निम्बफेनिलवृक्षयोः ॥ )

अवहार ३ द्यूतयुद्धादिविश्रामे (न्तौ) ग्राहाभिख्ये च यादसि ।
निमन्त्रणोपनेतव्यद्रव्ये स्यादवहारवाक् ॥ ५४

तुला ५ गृहाणां दारुबन्धाय पीठिकायां तुलां विदुः ।
तुला पलशते माने भाण्डसादृश्ययोरपि ॥ ५५

पर्वन् ४ दर्शप्रतिपदोः संधौ ग्रन्थिप्रस्तावयोरपि ।
पर्वशब्दं विजानीयाद्विषुवत्प्रभृतिष्वपि ॥ ५६

परिकर ५ प्रगाढगात्रिकाबन्धे पर्यङ्कपरिवारयोः ।
प्रयुज्यते परिकरः समारम्भयोरपि ॥ ५७

जन्य ६ नवोढाया ज्ञातिभृत्या जन्याः स्निग्धा वरस्य च ।
जननीयजनित्रोश्च जन्यं निर्वादयुद्धयोः ॥ ५८

हर्षित ४ जातहर्षे प्रतिहते विस्मिते च मनीषिभिः । हृष्ट ४
रोमाञ्चविषये हृष्टो हृषितश्च प्रयुज्यते ॥ ५९

चक्र ९ चक्रवाको मतश्चक्रश्चक्रं सेनारथाङ्गयोः ।
राष्ट्रे दम्भप्रभेदेऽपि चक्रं प्रहरणान्तरे ॥ ६०

मात्र २ परिच्छदाल्पमानेषु धने कर्णविभूषणे । मात्रा ६
अक्षरावयवे मात्रा मात्रं कार्त्स्न्येऽवधारणे ॥ ६१

आत्मन् ७ कलेवरे प्रयत्ने च स्वभावे परमात्मनि ।
स्वान्ते धृतौ मनीषायामात्मानं कवयो विदुः ॥ ६२

संगर ५ संगरः स्यात्क्रियाकारे विपत्तावपि संगरः ।
संगरः संश्रवे युद्धे संगरं तु शमीफलम् ॥ ६३

प्रसव ४ उत्पादः प्रसवो ज्ञेयः प्रसवो गर्भमोचनम् ।
पुष्पं फलं च वृक्षाणां प्रसवं परिचक्षते ॥ ६४

अनुबन्ध ४ दोषोत्पादेऽनुबन्धः स्यात्प्रकृत्यादेर्विनश्वरे ।
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ॥ ६५

प्रतिसर ५ आरक्षे मण्डने सूत्रे चमूकार्टिनियोज्ययोः ।
पञ्चस्वर्थेषु शब्दज्ञा विदुः प्रतिसरध्वनिम् ॥ ६६

व्यसन ५ विपत्तावशुभे पापे पानस्त्री मृगयादिषु ।
दैवानिष्टफलेऽशक्तौ [ले सक्तौ] व्यसनं कवयो विदुः ॥ ६७

पण ८ ग्लहे माने श्वेतका (वराटा) नां मूल्ये कार्षापणे धने ।
द्यूतादौ कल्पिते चैव बद्धमुष्टौ भृतौ पणः ॥ ६८
( द्यूते विक्रय्यशाकादेर्बद्धमुष्टौ भृतौ पणः ॥ )

भोग ७ पालनेऽभ्यवहारे च निर्वेशे च पणे स्त्रियाः ( पणस्त्रियाः ) ।
भोगः सुखे भुजंगानां(गस्य) शरीरफणयोरपि ॥ ६९

पक्ष ९ केशे पक्षः समूहार्थः पक्षः साध्यविरोधयोः ।
बले काले पतत्रे च रुचौ पार्श्वे विकल्पिते ॥ ७०
( बलकालपतत्रेषु सहायपरिपार्श्वयोः ॥ )

क्षेत्रिय ४ अन्यदेहचिकित्सार्हे क्षेत्रियः क्षेत्रजे तृणे ।
असाध्यरोगे विज्ञेयः क्षेत्रियः पारदारिके ॥ ७१

प्रतिग्रह ५ प्रयुज्यते स्वीकारणे सैन्यपृष्ठे पतद्ग्रहे ।
द्विजेभ्यो विधिवद्देये तद्ग्रहे च प्रतिग्रहः ॥ ७२

शेष २ उपयुक्ताद्भवेदन्यच्छेषं शेषोऽथ नागराट् ।
प्रसादान्निजनिर्माल्यदात्तिः शेषेति कीर्तिता ॥ ७३

प्रग्रह ६ प्रग्रहः स्यात्तुलासूत्रे बन्द्यां (न्द्यौ) नियमनेपि च ।
धाम्नि योक्त्रे च वृक्षे च सुवर्णहलिसाह्वये ॥ ७४

निष्क ६ अष्टाधिके हेमशते हेम्नि हेमपले तथा ।
उरोविभूषणे निष्कं कर्षदीनारयोरपि ॥ ७५

धातु ८ श्लेष्मादी रसरक्तादिर्महाभूतानि तद्गुणाः ।
इन्द्रियाण्यश्मविकृतिर्धातवो भ्वादिरस्थि च ॥ ७६
(श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः ।
इन्द्रियाण्यश्मविकृतिर्विशेषादस्थि धातवः ॥ ७७ ॥

अर्थ ७ अर्थोऽभिधेये शब्दानां धनकारणवस्तुषु ।
प्रयोजने निवृत्तौ च विषये च प्रयुज्यते ॥ ७८

पुष्कर ८ मतङ्गजस्य हस्ताग्रे व्योम्नि खड्गफलेऽम्बुजे ।
जलभेपजयोस्तीर्थे तूर्यवक्त्रे च पुष्करम् ॥ ७९

तीर्थ ९ अवतारे विदुस्तीर्थं पात्रोपाध्यायमन्त्रिषु ।
स्त्रीणां रजसि शास्त्रे च क्षेत्रोपायाध्वरेषु च ॥ ८०

ललाम } ९ प्रधानध्वजशृङ्गेषु पुण्ड्रवालधिलक्ष्मसु ।
ललामन् } भूषावाजिप्रभावेषु ललामं च ललाम च ॥ ८१

कूट ९ मायादम्भाद्रिशृङ्गेषु सीरावयवयन्त्रयोः ।

अयोधनेऽनृते राशौ निश्चले कूट इष्यते ॥ ८१

रूप ८ ग्रन्थावृत्तौ पशौ शब्दे नाटकादिस्वभावयोः ।
रूपमाकारसौन्दर्ये नाणकश्लोकयोरपि ॥ ८२

क्रिया १० उपायारम्भशिक्षासु निष्कृतौ संप्रधारणे ।
चिकित्साकर्मपूजासु चेष्टाकरणयोः क्रिया ॥ ८३

गो १० गोशब्दः पशुभूम्यंशुवाग्दिगर्थः प्रयुज्यते ।
स्वर्गलोचनबाणाम्बुकुलिशार्थोपि दृश्यते ॥ ८४

साधन २ निवृत्तौ दापने सिद्धौ गतावनुगमे धने ।
उपायमृतसंस्कारवधमेढ्रेषु साधनम् ॥ ८५

गुण १० शुल्बे मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये ।
त्यागशौर्यादिसत्त्वादिसंध्यादिषु गुणः स्मृतः ॥ ८६

हरि १३ इन्द्रचन्द्राश्ववातार्कशकभेकयमाहिषु ।
कपौ सिंहे सुवर्णाभे वर्णे विष्णौ हरिं विदुः ॥ ८७

अन्तर १३ भेदावसरबाह्येषु मध्यावधिविनात्मसु ।
स्थानात्मीयान्यतादर्थ्यरन्ध्रान्तर्धिषु चान्तरम् ॥ ८८

कशिपु ३ भोजनाच्छादने सद्भिरुभे कशिपुरिष्यते ।
एकैकशोपि कशिपुं [पू] भोजनाच्छादने विदुः ॥ ८९

रोदसी } ३ द्यावापृथिव्योरेकत्र प्रयोगे रोदसीं विदुः ।
रोदस् } दिवि विश्वंभरायां च रोदसी रोदसा सह ॥ ९०

संसरण ३ आचक्षते संसरणं नगरस्योपनिर्गमे ।
संसारेपि रथादीनामसंबाधगतावपि ॥ ९१

इन्द्राणी ३ इन्द्राणी करणे स्त्रीणां रतिशिल्पकृतात्मनाम् ।
इन्द्राणी सिन्धुवारे च कलत्रे च शतक्रतोः ॥ ९२

कर्णिका ४ बीजकोशे सरोजस्य कर्णिका कर्णभूषणे ।
मता गजस्य हस्ताग्रे कर्णिकाङ्गुलिसंज्ञके ॥ ९३

विषय ५ प्रबन्धाद्यस्य यो ज्ञातः स तस्य विषयः स्मृतः ।
इन्द्रियार्थे जनपदे विषयो गोचरे पदे ॥ ९४

अग्र ५ अग्रं प्रधानमूर्ध्वं च पुरस्तादग्रमिष्यते ।
अग्रमभ्यधिके दृष्टं परिमाणे पलस्य च ॥ ९५

गात्र ३ गात्राणि विदुरङ्गेषु गात्रमुक्तं कलेवरे ।
अग्रजङ्घाविभागे च गजानां गात्रमिष्यते ॥ ९६

पौरुष ३ ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं विदुः ।
भावे कर्मणि विज्ञेयं पौरुषं पुरुषस्य च ॥ ९७

पौरुषेय ४ पुरुषेण कृते कार्ये पुरुषाणां कदम्बके ।
वधे विकारे पुंसश्च पौरुषेयपदं विदुः ॥ ९८

भाग्य ३ भवान्तरकृतं कर्म भाग्यमाहुः शुभात्मकम् ।
अशुभात्मकमप्याहुः केवलं च शुभाशुभम् ॥ ९९

योग ७ योगः संनह(वन)नोपायसंगतिध्यानयुक्तिषु ।
योगोऽपूर्वार्थसंप्राप्तौ योगो विश्रम्भघातिनि ॥ १००

गन्धर्व ५ अन्तराभवसत्त्वे स्याद् गन्धर्वः खेचरे हये ।
गन्धर्वः पशुभेदे च गन्धर्वं गायनं विदुः ॥ १०१

कुतप ४ कुतपो वाद्यविन्यासे दर्भकालप्रभेदयोः ।
छागरोममयं केचित्कम्बलं कुतपं विदुः ॥ १०२

काम ५ कामे(म्ये) निकामे कामाख्या कामश्च मदनेच्छयोः ।
यत्काममभ्यनुज्ञाने तदव्ययमुदाहृतम् ॥ १०३

पिप्पल ३ पिप्पलं सलिलं विद्यात्तरुजातिश्च पिप्पलः ।
वस्त्रच्छेदप्रभेदं च केचिदिच्छन्ति पिप्पलम् ॥ १०४

भोगिन् ३ वैयावृत्त्य(पृत्य) करो भोगी भोगी राजभुजंगयोः । भोगिनी १
विहाय महिषीमन्या भोगिन्यो राजयोषितः ॥ १०५

निर्वेश ३ निर्वेश उपभोगः स्यान्निर्वेशः कर्मणो भृतिः ।
संमूर्च्छनं च केषांचिन्निर्वेश इति संमतम् ॥ १०६

कुण्ड ३ पतिवत्नीसुतो जारात्कुण्डः कुण्डमुखा मता ।
देवतादेर्जलाधारविशेषः कुण्डसंज्ञकः ॥ १०७

कौलीन ३ अवर्णवादः कौलीनं कौलीनं च कुलीनता ।
कौलीनं विविधं द्यूतं पक्षिभिः पशुभिस्तथा ॥ १०८

काकिणी ३ काकिणी मानदण्डः स्यात्तुरीयांशे पणस्य च ।
काकिणीं ब्रुवते केचिदेकमेव वराटकम् ॥ १०९

कौतुक २ पारंपर्योपदेशेन प्रख्याते मङ्गले किल ।
कौतूहले च शब्दज्ञाः कौतुकं संप्रचक्षते ॥ ११०

निकाय ३ एकार्थभाजि संघे च निवासे च निकायवाक् ।
असंहतपदार्थानामेकत्र करणेऽपि च ॥ १११

वनस्पति २ विना पुष्पं फलं यस्य वृक्षस्य स वनस्पतिः ।
प्रयुज्यते प्रयोगज्ञैर्वृक्षमात्रे वनस्पतिः ॥ ११२

ऐरावत २ ऋजुदीर्घे महेन्द्रस्य चापमैरावतं मतम् ।
तस्यैव हस्तिमल्लाख्यो गजोऽप्यैरावतो मतः ॥ ११३

संविद् ९ संभाषणे क्रियाकारे संकेते नाम्नि तोषणे ।
संविदाजौ प्रतिज्ञायामाचारज्ञानयोरपि ॥ ११४

कात्यायनी २ काषायवस्त्रविधवां द्वितीयवयसं स्त्रियम् ।
कात्यायनीं विदुः सन्त उमा कात्यायनी मता ॥ ११५

सरस्वत् २ सरिद्विशेषे सरिति वाचि प्रोक्ता सरस्वती । सरस्वती:३
सरस्वती गवि कापि सरस्वान्वारिधौ नदे ॥ ११६

यम ३ शरीरसाधनापेक्षं नित्यं कर्म यमो मतः ।
यमजश्च यमो ज्ञेयो यमो दक्षिणदिक्पतिः ॥ ११७

परिवेष २ परिवेषं विजानीयादुपसूर्यकमण्डलम् ।
परिवेष्टनमप्याहुः परिवेषं मनीषिणः ॥ ११८

शुद्धान्त २ शुद्धान्तसंज्ञं शब्दज्ञैराख्यातमवरोधनम् ।
कक्षान्तरं च भूपानामसर्वजनगोचरम् ॥ ११९

ऐरावती २ } २ ऐरावतीशतह्रदासौदामन्य इति त्रयम् ।
शतह्रदा २ } प्रयुज्यते कविवरैर्विद्युद्विद्युद्विशेषयोः ॥ १२० सौदामनी २

नीवी २ नीवीं ग्रन्थिं विदुर्नार्या जघनस्थस्य वाससः ।
धनं चोपचयाजीवैर्मूलं यस्य न हिंस्यते ॥ १२१

परिभाषण ३ परिभाषणमालापो नियमः परिभाषणम् ।
निन्दात्मक उपालम्भः परिभाषणमिष्यते ॥ १२२

अनूचान २ अनूचानं वदन्त्यार्या विनयावनतं नरम् ।
साङ्गे प्रवचनेऽधीती द्विजोऽनूचानसंज्ञकः ॥ १२३

अर्जुन ४ अर्जुनी सौरभेयी स्यादर्जुनं तृणशुक्लयोः । अर्जुनी १
अर्जुनो वृक्षभेदे च तथा मध्यमपाण्डवे ॥ १२४

स्थपति ३ बृहस्पतिसवेनेष्टं येनासौ स्थपतिर्मतः ।
प्रासादादिकरः शिल्पी स्थपतिः कञ्चुकी मतः ॥ १२५

दर्श २ अर्थज्ञैरिष्यते दर्शः पक्षान्ते वैदिको विधिः ।
दर्शः सूर्येन्दुसंपर्कादमावास्येति या स्मृता ॥ १२६

गृह्य ३ शाखापुरे विदुर्गृह्यां गृह्यमस्वैरिपक्षयोः । गृह्या १
गृह्यान्वदन्ति विद्वांसो गृहासक्तान्मृगाण्डजान् ॥ १२७

चिल्ल २ विज्ञेयं चक्षुषि क्लिन्ने चिल्लं पिल्लं च चुल्लवत् । पिल्ल २
चुल्ल २ क्लिन्नाक्षे प्राणिनि प्रोक्तौ चिल्लपिल्लौ सचुल्लकौ ॥ ॥ १२८

कक्ष ४ जन्तोरवयवे कक्षः कच्छवीरुत्तृणेषु च । कक्षा १
कक्षा स्यात्परिधानस्य पश्चादञ्चलपल्लवे ॥ १२९

दक्षिण ३ संभूतो दक्षिणस्यां यो दक्षिणः स उदाहृतः ।
परच्छन्दानुवर्ती च सरलोऽपि च दक्षिणः ॥ १३०

सैरन्ध्री २ सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।
वर्णसंकरजा या च सैरन्ध्री सा प्रकीर्तिता ॥ १३१

अरुण ४ अव्यक्तरागमरुणमरुणः सूर्यसारथिः ।
संध्यारागोऽरुणः क्वापि लोहितोऽरुण इष्यते ॥ १३२

रूप्य ३ आहतं हेमरजतं रूप्यमाहुर्मनीषिणः ।
प्रशस्तरूपको रूप्यो रूप्यं रजतमिष्यते ॥ १३३

गौर २ चामीकराभं शुक्लं च गौरमाहुर्मनीषिणः । गौरी २
असंजातरजाः कन्या गौरी गौरी च पार्वती ॥ १३४

क्ष्वेड २ क्ष्वेडो विषं ध्वनिः क्ष्वेडः क्ष्वेडा शल्यं च वैणवम् । क्ष्वेडा २
योधानां सिंहनादोऽपि रणे क्ष्वेडेति कीर्तितः (ता) ॥ १३५

उत्थान ५ उत्थानं गृहवास्त्वन्ते स्यादुत्थानं च पौरुषे ।
उत्थानमुद्यमे तन्त्रे विद्यादुत्थानमुद्गमे ॥ १३६

स्थान २ अवकाशे स्थितौ स्थानं सप्तम्यन्तमिदं पुनः । स्थाने २
युक्तार्थे कारणार्थे च शब्दतत्त्वविदां मतम् ॥ १३७

हृद्य ४ हृत्प्रियं हृद्भवं हृद्यं हृदयाय हितं च यत् ।
वशीकरणमन्त्रोऽपि वैदिको हृद्य इष्यते ॥ १३८

प्राच्-क्, ४ दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगव्ययम् ।
उदच्-क्, ४ प्राच्योदीच्यप्रतीच्यानां वाचकं स्यादनव्ययम् ॥ १३९ प्रत्यच्-क् ४

पाश ३ खगादिबन्धने पाशः समूहे केशपूर्वकः ।
कर्णपूर्वोऽपि शब्दोऽयं कर्णं वदति शोभनम् ॥ १४०

तार ३ मुक्ताशुद्धौ स्वनेऽत्युच्चे तारस्तारं च रूप्यके । तारा २
नक्षत्रे नेत्रमध्ये च तारा तारवदिष्यते ॥ १४१

अभीक्ष्ण २ पौनः पुन्यं सर्वदा च स्यादभीक्ष्णार्थकं द्वयम् ।
अनव्ययमयं शब्दः कथितो बहुदर्शिभिः ॥ १४२

धारा ३ अश्वानां गतयः पञ्च धारा धारा च संततिः ।
अग्रस्कन्धे च सैन्यस्य धारामाहुर्मनीषिणः ॥ १४३

कंस ४ स्यात्कंसस्तैजसे द्रव्ये पानपात्रे च कांस्यवत् । कांस्य १
दृष्टः कंसो विशेषेण दैत्यमानप्रभेदयोः ॥ १४४

प्रभव ३ स्याज्जन्महेतुः प्रभवः प्रभवो मूलमम्बपाम् ।
प्रभवं केचिदिच्छन्ति स्थानमाद्योपलब्धये ॥ १४५

विरोचन,३ हुताशने निशानाथे सहस्रकिरणे तथा ।
तमोपह, ३ तेमानुदा (दः) समौ दृष्टौ विरोचनतमोपहौ ॥ १४६ तमोनुद् ३

मध्यम ३ गीतस्वरे देहमध्ये मध्योद्भूते च मध्यमः । मध्यमा ३
पाणेर्मध्याङ्गुलिर्दृष्टरजाः कन्या च मध्यमा ॥ १४७

प्रत्यय ७ प्रत्ययः प्रथितत्वे स्यात्प्रत्ययो ज्ञानवाचकः ।
प्रत्ययः शपथे रन्ध्रे (स्यादि-) विश्वासाधीनहेतुषु ॥ १४८

धर्मराज १ तथागते धर्मराजजिनबुद्धविनायकाः । बुद्ध १
जिन १ अन्तकेऽर्हति दोषज्ञे गजवक्त्रे क्रमादमी ॥ १४९ विनायक १

निस्तरण २ स्यादुपाये निस्तरणं द्वारं निःसरणं तथा । द्वार २
निःसरण २ तरणे द्वारि निर्याणे (र्वाणे) यथासंख्यमवस्थितम् ॥ १५०

ऋतु २ त्रयं स्त्रीरजसि ज्ञेयमृतुः कुसुममार्तवम् । कुसुम २
आर्तव २ शरदादिषु पुष्पे च ऋतूत्थे च विदुः क्रमात् ॥ १५१
( शरदादिषु पुष्पेषु ऋतूत्थेषु त्रिषु क्रमात् ॥ )

अञ्जनः १ दिग्गजः कज्जलं माता मारुताङ्गभुवः कपेः । अञ्जना १
अञ्जनम् १ यथासंख्यं विनिर्दिष्टमञ्जनोऽञ्जनमञ्जना ॥ १५२

प्रकर १ प्रकरश्चोपकारश्च विकीर्णकुसुमादिषु । उपकार २
संहतौ चोपकृत्यां च यथासंख्यमवस्थितौ ॥ १५३

श्लोकेनैकेन निर्दिष्टं यथाशास्त्रमतः परम् ।
श्लोकस्यार्धेन वक्ष्यन्ते शब्दाः प्रव्यक्तया गिरा ॥ १५४

सूनृत २ प्रियं सत्यं च वचनं सूनृतं सुनृतं शिवम् ।
ब्रह्मन् ५ वेदोऽध्यात्मं तपो ब्रह्म ब्रह्माणौ विप्रवेधसौ ॥ १५५
पिनाक २ स्थाणोर्धनुः पिनाकं स्यात्पिनाकं शूलमात्रकम् ।
काली ३ मातृभेदे स्मृता काली भवानीनवमेघयोः ॥ १५६
दशमीस्थ २ स्थविरे नष्टबीजे च दशमीस्थं द्वयोर्विदुः ।
हेरम्ब २ हेरम्बो महिपः ख्यातो हेरम्बो विघ्ननायकः ॥ १५७
हंस ४ योगिभेदे खगे हंसो निर्लोभनृपसूर्ययोः ।
गण ४ गणः समूहे प्रमथे संख्यासैन्यप्रभेदयोः ॥ १५८
वृन्दारक ३ वृन्दारकं विदुर्देवे मनोज्ञश्रेष्ठयोरपि ।
अभिख्या ३ अभिख्या कीर्तिता कीर्तावभिख्या नामशोभयोः ॥ १५९
उत्तर ४ उदीच्यश्रेष्ठयोरूर्ध्वे वाग्भेदे विदुरुत्तरम् ।
ईश ईश ईश्वरवद् दृष्टः प्रभुचन्द्रार्धचूडयोः १६० ईश्वर २
चन्द्र २ उच्यते काञ्चनं चन्द्रं चन्द्रश्च मृगलाञ्छनः ।
पार्ष्णि २ पादग्रन्थेरधः पार्ष्णिः पार्ष्णिः स्याद्वाहिनीकटिः ॥ १६१
लक्ष्मी ३ शोभासंपत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यते । श्री ३
भव ५ प्राप्तिसंसारसत्तासु जन्मशंकरयोर्भवः ॥ १६२
उपनिषद् ३ धर्मे रहसि वेदान्ते बुधैरुपनिषन्मता ।
दृश् ४ लोचने दर्शने बुद्धौ दृग्दृष्टी दृक्च वीक्षके ॥ १६३ दृष्टि ३
संकुल २ इष्यते संकुलं व्याप्ते विश्लिष्टार्थवचस्यपि ।
अपवर्ग ३ क्रियावसानसाफल्ये मोक्षे त्यागेऽपवर्गवाक् ॥ १६४
लिङ्ग ३ सांख्योक्तप्रकृतौ लिङ्गं लिङ्गं स्याच्चिह्नशेफसोः ।
अभिशस्ति २ अभिशापप्रार्थनयोरभिशस्तिपदं विदुः ॥ १६५

कुमार ४ युवराजे शिशौ स्कन्दे कुमारोऽश्वानुचारके ।
सुमनस् ४ मालत्यां पण्डिते पुष्पे देवे च सुमनोभिधा ॥ १६६
प्रकृति ५ लिङ्गे स्वभावे प्रकृतिः पौरामात्यादियोनिषु ।
निसर्ग २ निर्माणे च स्वभावे च निसर्गः सृष्टिवन्मतः ॥ १६७ सृष्टि २
शंभु ३ शंभुरर्हन् पिनाकी च शंभुः कमलसंभवः ।
दर्शन ४ लोचने दर्शनं दृष्टं बुद्धिशास्त्रोपलब्धिषु ॥ १६८
कृतान्त ४ दैवे कृतान्तः सिद्धान्ते यमाकुशलकर्मणोः ।
दुरोदर ३ अयं दुरोदराभिख्यं द्यूतं द्यूतकरः पणः ॥ १६९
वृष ५ उक्तः श्रेष्ठाखुधर्मेषु वृषो गोबहुशुक्रयोः ।
तीक्ष्ण ५ विषात्मत्यागिनोस्तिग्म तीक्ष्णस्तीक्ष्णं रणायसोः ॥ १७०
रजत ३ इष्यते रजतः शुक्ले रजतं रूप्यहारयोः ।
पतङ्ग ४ शालिप्रभेदे शलभे पतङ्गः पक्षिसूर्ययोः ॥ १७१
नाग ४ काद्रवेयगजौ नागौ नागं सीसकरङ्गयोः ।
उदुम्बर २ उदुम्बरो वृक्षजातिर्देहली स्यादुदुम्बरः ॥ १७२
कलधौत २ रजतं कलधौतं स्यात्कलधौतं च काञ्चनम् ।
पर्जन्य २ सध्वानमेघः पर्जन्यः पर्जन्यो मेघवाहनः ॥ १७३
गोविन्द २ गोविन्दो भगवान् विष्णुर्गोविन्दोऽधिकृतो गवाम् ।
रोहित ३ ऋजुशक्रधनुर्मत्स्यौ रोहितौ रोहितोऽरुणः ॥ १७४
शक्ति ३ उत्साहादौ बले शक्तिः शक्तिं प्रहरणं विदुः ।
निष्ठा ५ निष्ठा निष्पत्तिनाशान्तयाञ्चानिर्वहणेषु च ॥ १७५
ऋषभ ३ गीतस्वरे बलीवर्दे श्रेष्ठे च ऋषभं विदुः ।
द्रविण २ पराक्रमे च वित्ते च द्रविणं द्युम्नवन्मतम् ॥ १७६ द्युम्न २
रङ्ग ३ नृत्तयुद्धस्थले रागे रङ्गो रङ्गं त्रपु स्मृतम् ।
प्रवाल ३ प्रवालो वल्लकीदण्डे विद्रुमे नवपल्लवे ॥ १७७

दण्ड ४ दण्डो लगुडमन्थानदमसैन्येषु दृश्यते ।

कोण २ वीणादिवादनोपाये कोणोऽस्त्रौ(श्रौ) लगुडे तथा ॥ १७८

निर्वृति २ निर्वृतिः स्यादस्तमये सुस्थतायां च निर्वृतिः ।

अनुभाव २ अनुभावः प्रभावे स्यान्निश्चये भावसूचके ॥ १७९

ककुभ २ वीणाप्रसेवः ककुभः ककुभोऽर्जुनपादपः ।

वराटक २ बीजकोशे सरोजस्य कपर्दे च वराटकः ॥ १८०

अर्क ३ स्फटिके वृक्षभेदेऽर्कः स्यादर्को दिननायकः ।

कण्टक ३ रोमाञ्चे क्षुद्रशत्रौ च दरोरङ्गे च कण्टकः ॥ १८१

पाद ३ पादो भांसि तुरीयांशे गिरेः प्रत्यन्तपर्वते ।

हिरण्य ४ मानभेदे धने हेम्नि हिरण्यं स्यादकुप्यके ॥ १८२

प्रधान ३ परमात्ममहामात्रमनीषासु प्रधानवाक् ।

कौशिक ४ गुग्गुलूलूकशक्राहितुण्डिकेषु च कौशिकः ॥ १८३

उग्र ३ उग्रः शूद्रासुते क्षत्रादुग्रावुत्कटशूलिनौ ।

अभिमान ४ गर्वविज्ञप्तिहिंसासु प्रणये चाभिमानवाक् ॥ १८४

सुषिर ३ गर्ते गर्तान्विते वाद्यविशेषे सु(शु)षिरं त्रिषु ।

( गर्ते गर्तान्विते वाद्ये सुषिरं त्रिषु दृश्यते । )

समान ४ एकतुल्यशरीरस्थवायुसत्सु समानवाक् ॥ १८५

मुख ३ आदावुपाये च मुखं वदनं च मुखं विदुः ।

वर्ष्मन् ३ प्रमाणदेहयोर्वर्ष्म स्यादाकारे च सुन्दरे ॥ १८६

संभ्रम ३ त्रयं संभ्रममिच्छन्ति भयं संवेगमादरम् ।

स्व ४ स्वशब्दो वदति ज्ञातिमात्मात्मीयधनानि च ॥ १८७

द्रव्य ३ भव्यभेषजयोर्द्रव्यं द्रव्यं द्रविणमिष्यते ।

आतङ्क ३ शङ्कायामाहुरातङ्कं रोगसंतापयोरपि ॥ १८८

वाम ३ वामा स्त्री सुन्दरं वामं वामं सव्यप्रतीपयोः । वामा १

प्रग्राह २ हयरश्मौ तुलासूत्रे प्रग्राहः सद्भिरिष्यते ॥ १८९

प्रतिष्ठा २ आहृतत्वे प्रतिष्ठा स्यात्प्रतिष्ठा स्थानमात्रके ।

प्रलय ३ प्रलयौ मृत्युसंवर्तौ मूर्च्छायां प्रलयं विदुः ॥ १९०

मान ३ मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतावपि ।

वर्ष ३ लोकधातौ च वृष्टौ च वर्षं वर्षं च वत्सरे ॥ १९१

वारुणी २ वारुणीं मदिरामाहुः पश्चिमा दिक्च वारुणी ।

ज्योत्स्ना २ ज्योत्स्ना ज्योतिष्मती रात्रिर्ज्योत्स्ना चन्द्रमसः प्रभा ॥ १९२

दाक्षायणी २ दाक्षायणीं विदुर्दुर्गामश्विन्याद्याश्च तारकाः ।

व्यायाम २ परिश्रमार्थो व्यायामो व्यायामं पौरुषं विदुः ॥ १९३

आपन्न २ आपन्नं ब्रुवते प्राप्तमापन्नश्चापदि स्थितः ।

परिगत ३ विज्ञाते वेष्टिते प्राप्ते विदुः परिगतध्वनिम् ॥ १९४

धिषण १ धिषणस्त्रिदशाचार्यो धिषणा धीरपि स्मृता । धिषणा १

अनुमति २ ऊनेन्दुपूर्णिमानुज्ञे द्वे अप्यनुमती मते ॥ १९५

सौम्य ३ चारुचन्द्रजयोः सौम्यः सोमो यस्य च देवता ।

राका २ पूर्णेन्दुपूर्णिमा राका कन्या जातरजाश्च या ॥ १९६

सूचा २ व्यधनेभिनये सूचा सूचनाप्रयुज्यते । सूचना २

तत, ३ वादित्रे विस्तृते व्याप्ते ततं विततवन्मतम् ॥ १९७ वितत ३

तिष्य २ ऋक्षे कलियुगे तिष्यः पुष्यवत्परिकीर्तितः । पुष्य २

चित्रभानु २ सूर्ये वह्नौ चित्रभानुर्विभावसुरिवेष्यते ॥ १९८ विभावसु २

क ५ कं वारिशिरसोः कश्च प्रजापत्यात्मवायुषु ।

धूमकेतु २ उत्पाते ग्रहभेदे च धूमकेतुर्हुताशने ॥ १९९

( स्यादुत्पातो धूमकेतुर्धूमकेतुर्हुताशनः )

कीनाश ३ त्रयः कीनाशनामानः कदर्यः कर्षको यमः ।
पुण्य ३ मनोज्ञं सुकृतं धर्मस्त्रयं पुण्यमुदाहृतम् ॥ २००
शिखिन् ४ शिखी हुताशने वृक्षे शिखिनौ केकिकुक्कुटौ ।
कल्प ५ कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने ॥ २०१
शमन २ इच्छन्ति वधमर्थज्ञाः शमनं शमनोऽन्तकः ।
उपक्रम ३ उपक्रमश्चिकित्सायामारम्भोपधयोरपि ॥ २०२
कम्बु ३ शम्बूक इष्यते कम्बुः कम्बुर्वलयशङ्खयोः ।
शङ्ख ३ निधिभेदः स्मृतः शङ्खः शङ्खं कम्बुललाटयोः ॥ २०३
ज्यायस् २ प्रशस्यवृद्धतरयोर्ज्यायाञ्ज्येष्ठवदिष्यते । ज्येष्ठ २
वीर्य, ३ बलशुक्रप्रभावेषु वीर्यं तेजश्च कीर्तितम् ॥ २०४ तेजस् ३
ऊर्णायु २ ऊर्णायुरिष्यते मेष ऊर्णायुर्मेषकम्बलः ।
विमान २ विमानं देवतायाने सप्तभूमे च वेश्मनि ॥ २०५
श्रेयस् ३ धर्ममङ्गलयोः श्रेयः प्रशस्तातिशयेऽपि च ।
पिचण्ड २ पिच(चि)ण्ड उदरे ज्ञेयः पिच(चि)ण्डोऽवयवः पशोः ॥ २०६
ग्रहण ३ त्रयं ग्रहणमिच्छन्ति वन्दीं स्वीकारमादरम् ।
सुरभि ३ मधुमासः सुगन्धिश्च सुरभिः सुरभिश्च गौः ॥ २०७
रुचि ३ अभिष्वङ्गाभिलाषौ च दीप्तिश्च रुचिरिष्यते ।
बिम्ब ३ मण्डले प्रतिबिम्बे च बिम्बं स्याद्बिम्बिकाफले ॥ २०८
मन्द ६ मन्दाः स्वैराल्परोगार्तमूढाभाग्यशनैश्चराः ।
हायन ३ तिस्रश्च हायनाभिख्या व्रीहिसंवत्सरार्चिषः ॥ २०९
अब्ज ४ अब्जो धन्वन्तरौ चन्द्रे स्यादब्जं शङ्खपद्मयोः ।
ग्रह ४ सूर्यादौ पूतनादौ च राहुनिर्बन्धयोर्ग्रहः ॥ २१०
वत्स ४ पुत्रादौ तर्णके वर्षे वत्सो वत्सं च वक्षसि ।
ख ३ खमिन्द्रिये खमाकाशे खं स्वर्गेऽपि प्रयुज्यते ॥ २११

अवरोह २ अवरोहोऽवतरणे पादपाङ्गे लतोद्गमे ।
काष्ठा ४ काष्ठा दिक्कालमर्यादाप्रकर्षेषु प्रयुज्यते ॥ २१२
व्युत्थान २ स्वातन्त्र्यकृत्ये व्युत्थानं विरोधाचरणे तथा ।
काच ३ मृद्भेदाक्षिगदौ काचौ काचः शिक्येऽपि दृश्यते ॥ २१३
धामन् ४ तेजोजन्मप्रभावेषु स्मृतं धाम गृहेषु च ।
वरिष्ठ २ वरिष्ठं स्याद् गुरुतमं तथा वरतमं च यत् ॥ २१४
अरुष्कर २ अरुष्करः स्याद् व्रणकृद्भल्लातकमरुष्करम् ।
आशितंभव २ आशितंभवमन्नाद्यं तृप्तिरप्याशितंभवः ॥ २१५
ज्योतिस् ४ दीप्तिताराहुताशेषु ज्योतिर्ज्योतिर्विलोचने ।
कलाप ४ कलापः संहतौ बर्हे काञ्चीतूणीरयोरपि ॥ २१६
शारद ३ शारदौ वर्षशालीनौ प्रत्यग्रं शारदं विदुः ।
ग्रामणी ३ पतिप्रधाने ग्रामण्यौ ग्रामण्यं (णीः) वक्ति नापितम् ॥ २१७
सौरभ्य २ सौरभ्यमाहुः सौगन्ध्यं सौरभ्यं च मनोज्ञता ।
भाण्ड ३ तुरंगाभरणे पात्रे भाण्डं मूलवणिग्धने ॥ २१८
अपभ्रंश ३ पतने स्यादपभ्रंशो भाषाभेदापशब्दयोः ।
पेचक २ उलूकगजलाङ्गूलमूलयोरपि पेचकः ॥ २१९
करभ २ कनिष्ठामणिबन्धान्तरो(रु)ष्ट्रयोः करभो मतः ।
मार्ग ४ मासान्वेषणयोर्मार्गो मार्गो मृगमदाध्वनोः ॥ २२०
सारङ्ग ३ सारङ्गः शबलो वर्णः सारङ्गावेणचातकौ ।
हस्तिमल्ल २ हस्तिमल्लौ विजानीयादैरावतविनायकौ ॥ २२१
गुच्छ २ स्तबके हारभेदे च गुच्छमिच्छन्ति सूरयः ।
स्थित २ स्थितमूर्ध्वं विजानीयात्प्रतिज्ञानवति स्थितः ॥ २२२
बभ्रु ३ नारायणः स्मृतो बभ्रुर्बभ्रू नकुलपिङ्गलौ ।
पत्त्रिन् ३ श्येनाख्यो विहगः पत्त्री पत्त्रिणौ शरपक्षिणौ ॥ २२३

अपवाद २ अप(व)वादं विदुर्विन्दामप(व)वादो निदेशनम् ।
क्रन्दन २ आह्वानं क्रन्दनं विद्यात्क्रन्दनं रुदितध्वनिः ॥ २२४
धव ३ धवो नरो धवो वृक्षो धवो भर्ता च योषिताम् ।
तमस् ४ ध्वान्तं तमस्तमो राहुस्तमः शोकस्तमो गुणः ॥ २२५
गर्जित २ स्वनो गर्जितमब्दानां गर्जितो मत्तकुञ्जरः ।
कमल ३ कमला श्रीर्जलं पद्मः कमलं कमलो मृगः ॥ २२६ कमला १
गुहा २ पृश्निपर्णी गुहा ज्ञेया गुहा पर्वतगह्वरम् ।
मदकल २ मत्तः करी मदकलो मदेनाव्यक्तवाक्च यः ॥ २२७
सम ३ समा वर्षं समं सर्वं समं साधु समं सदृक् । समा १
क्षण ४ क्षणो व्यापारशून्यत्वे मुहूर्तोत्सवपर्वसु ॥ २२८
उषा २ उषा रात्रिस्तदन्ते च स्यादुषाध्वनिरव्ययम्(यः) ।
बाल ५ बालः केशाश्वडिम्भेषु ह्रीबेरे गजबालधौ ॥ २२९
शतपत्र २ दार्वाघाटः शतपत्रः शतपत्रं सरोरुहम् ।
एकाग्र २ एकाग्रमेकतानाख्यमेकाग्रं स्यादनाकुलम् ॥ २३०
कलिङ्ग २ भवेत्कलिङ्गो धूम्याटः कलिङ्गं कौटजं फलम् ।
अयन २ अयनं पथि सूर्यस्याप्युदग्दक्षिणतो गतौ ॥ २३१
त्रुटि ४ सूक्ष्मैलायां कालमाने त्रुटिरल्पेपि संशये ।
( त्रुटिरल्पे प्रशस्यते )
पराग ३ पुष्परेणौ परागः स्यात्स्नानीयरजसोरपि ॥ २३२
कद्रु १ नागानां जननी कद्रूः कद्रुः कनकपिङ्गलः कद्रू १
पवन २ पाकस्थानं कुलालस्य पवनं पवनो मरुत् ॥ २३३
शोण ३ शोणः स्याद्बन्धुजीवाभे नदे लोहितवाजिनि ।
लोहित २ लोहितं रक्तवद् दृष्टं क्षतजारुणयोरपि ॥ २३४ रक्त २

हरिणी ३ सुवर्णप्रतिमामृग्योर्हरिणी हरिता च या ।
अवदात ३ अवदातः सिते गौरे परिशुद्धे च दृश्यते ॥ २३५
तनु ५ तनुस्त्वगल्पकायेषु तनुः स्याद्विरले कृशे ।
आस्था ३ आस्थामालम्बनं विद्यादास्था चास्थानयत्नयोः ॥ २३६
शिपिविष्ट ३ शिपिविष्टः शिवो देवो दुश्चर्मा खलतिश्च यः ।
कट ५ शवे श्रोणौ क(कि)लिञ्जे च गजगण्डे भृशे कटः ॥ २३७
वृजिन ३ वृजिनं किल्बिषे भुग्ने वृजिनश्च शिरोरुहः ।
क्षेत्र ४ केदारे वपुषि क्षेत्रं सिद्धस्थानकलत्रयोः ॥ २३८
कपोत २ पारावतः कपोतः स्यात्कपोतो विहगान्तरम् ।
शिशिर ३ शीतले शिशिरं विद्यात्तुषारऋतुभेदयोः ॥ २३९
करीर ३ वृक्षप्रभेदे कलशे करीरो वेणवाङ्कुरे ।
नेत्र ४ नेत्रं वस्त्रे मथिगुणे तरुमूले त्रिलोचने ॥ २४०
सार्वभौम २ सर्वपृथ्वीपतौ राज्ञि सार्वभौमोथ दिग्गजे ।
रेवती ३ ऋक्षे लाङ्गलिदारेषु रेवत्याख्याथ मातृषु ॥ २४१
पक्षति २ प्रतिपत्पक्षतिर्ज्ञेया गरुन्मूलेऽपि पक्षतिः ।
सारस २ सारसो विहगः ख्यातः सारसं सरसीरुहम् ॥ २४२
शर्करा ३ सितोपलायां शकले रोगभेदे च शर्करा ।
जिष्णु ३ शक्रजित्वरयोर्जिष्णुर्जिष्णुर्मध्यमपाण्डवे ॥ २४३
पोत्र २ मुखाग्रं पोत्रमुद्दिष्टं सूकरस्य हलस्य च ।
अष्टापद २ सुवर्णं शारिफलकं द्वयमष्टापदं विदुः ॥ २४४
चषक २ चषकं शी(सी)धु विज्ञेयं चषकं मद्यभाजनम् ।
उपग्रह २ उपग्रहाख्यं द्वितयं स्याद्बन्दिरनुकूलनम् ॥ २४५
श्रेणि २ श्रेणिः समानशिल्पानां संहतिः श्रेणिरावलिः
अर्घ्य २ अघार्थं यत्तदर्घ्यं स्यादर्घ्यो यश्चार्धमर्हति ॥ २४६

कल्याण ३ कल्याणं मङ्गलं विद्यात्काञ्चनं च यदक्षयम्
आतिथ्य २ आतिथ्यं स्यादतिथ्यर्थ आतिथ्यमतिथिं विदुः ॥ २४७
( आतिथ्यं यदतिथ्यर्थमातिथ्यमतिथिं विदुः ॥ )
पर्याप्त ४ शक्तौ(क्ते)निवारणे तृप्तौ पर्याप्तं स्याद्यथेप्सिते ।
अत्यय ४ कृच्छ्रे दण्डे च दोषे च नाशे च विदुरत्ययम् ॥ २४८
केतु ३ पताकायां मतः केतुः केतुरुत्पातचिह्नयोः ।
विवध ३ पर्याहाराध्वभारेषु मतौ विवधवीवधौ ॥ २४९ वीवध ३
जैवातृक २ जैवातृकौ विजानीयादायुष्मन्मृगलाञ्छनौ ।
भुजिष्य २ अनधीनो भुजिष्याख्यो भुजिष्यः प्रेष्य इष्यते ॥ २५०
विषयिन् २ इन्द्रियं विषयि ज्ञेयं विषयी विषयान्वितः ।
विधि ४ विधी विधानधातारौ विधिः स्यात्कालदैवयोः ॥ २५१
अवधि ३ अवधी कालगर्तौ स्तः सीमानोऽवधयः स्मृताः ।
क्षम ३ क्षमा तितिक्षा पृथ्वी च योग्ये शक्ते हिते क्षमम् ॥ २५२ क्षमा २
समुन्नद्ध २ समुन्नद्धाभिधानौ द्वौ पण्डितंमन्यगर्वितौ ।
अभिजात ३ न्याय्ये कुलीनबुधयोरभिजातपदं विदुः ॥ २५३
आच्छादन २ आच्छादनं संपिधानं वस्त्रमाच्छादनं मतम् ।
आकार २ विदुराकृतिमाकारमाकारो गात्रवैकृतम् ॥ २५४
विष्टर ३ विष्टरः कुशमुष्टौ स्यात्पीठपादपयोरपि ।
भङ्ग २ भेदकल्लोलयोर्भङ्गो भङ्गा सस्यं शणाह्वयं ॥ २५५ भङ्गा १
अपदेश ४ अपदेशं विदुर्लक्ष्ये निमित्तव्याजयोस्तथा ।
निगम ३ जानीयान्निगमं वेदे नगरेऽथ वणिक्पथे ॥ २५६
अभिषङ्ग ३ आक्रोशशापाभिभवेष्वभिषङ्गपदं विदुः ।
संनय २ संनयः समवाये स्यात्पृष्ठस्थायिबले तथा ॥ २५७
उष्णीष २ शिरोवेष्टनमुष्णीषमुष्णीषं मुकुटं विदुः ।
किंशारु २ स्याद्व्रीहिशूकः किंशारुः किंशारुर्विशिखो मतः ॥ २५८

आकर्ष ३ आकर्षः शारिफलके द्यूतपाशकयोरपि ।
सुवर्ण २ सुवर्णमिष्यते सद्भिर्हेमकर्षे च हेम्नि च ॥ २५९
संग्रह ३ संग्रहो वृहदुद्रङ्गे ग्रहसंक्षेपयोरपि ।
कूप ३ गर्तोदपानयोः कूपः कूपः स्याद्गुणवृक्षके ॥२६०
गुल्म ४ सैन्यभेदे रुजायां च गुल्मो विटपवद्रुयोः ।
क्षय ४ क्षयो निलयकल्पान्तौ क्षयोपचयरोगयोः ॥२६१
आक्रन्द ३ आक्रन्दः क्रन्दनध्वाने नाथदारुणयुद्धयोः ।
उत्सव ३ अमर्षोत्सेकयोरिच्छाप्रसवेष्युत्सवं विदुः ॥ २६२
आडम्बर ३ आडम्बरः समारम्भे गजगर्जिततूर्ययोः ।
स्थूलोच्चय २ स्थूलोच्चयोप्यसामग्र्ये गजानां मध्यमे गते ॥ २६३
प्रतियत्न ३ संस्कारे प्रतियत्नः स्यादुपग्रहणलिप्सयोः ।
पटु ३ पटुरामयनिर्मुक्तः पटुश्चतुरतीक्ष्णयोः ॥ २६४
वलज ४ क्षेत्रे चारुस्त्रियां सस्ये पूर्द्वारे वलजाभिधा ।
उदार ३ उदारो दातृमहतोरुदारं दक्षिणं विदुः ॥ २६५
शक्वरी २ शक्वरी छन्दसि ज्ञेया शक्वरी मेखला क्वचित् ।
आसुतीवल २ यज्वा च कल्यपालश्च द्वयं स्यादासुतीवलः ॥ २६६
भेद ३ उपजापो विशेषश्च भेदो भेदो विदारणम् ।
वप्र ४ पितृकेदारयोर्विप्रो वप्रः प्राकाररोधसोः ॥२६७
राजन् ४ राजा नृपः प्रभू राजा राजा क्षत्रियचन्द्रयोः ।
शिशुमार २ शिशुमारा जलोद्भुतजन्तौ तारामयाच्युते ॥ २६८
अस्र ३ बाष्पोऽस्र(श्र)मस्रं रुधिरमस्रः शिरसिजः स्मृतः ।
आहत ३ मिथ्योक्तौ ताडिते विद्यादाहते गुणिते तथा ॥ २६९
यादसांपति २ यादसांपतिरम्भोधिः प्रचेता यादसांपतिः ।
कूल २ सैन्यस्य पश्चिमे भागे प्रतीरे कूलमिष्यते ॥ २७०

परीष्टि २ परिचर्या परीष्टिः स्यात्परीष्टिश्च गवेषणे ।

दर ३ दरो भये च गर्ते च किंचिदर्थे दरा(रो)व्ययम् ॥ २७१

पर्यङ्क २ पर्यस्तिकायां पर्यङ्कः पर्यङ्कः शयनं तथा ।

कारा २ कारा बन्धनशालायां कारा बन्धनमात्रके ॥ २७२

मूर्धाभिषिक्त २ मूर्धाभिषिक्तो भूपाले क्षत्रिये च प्रयुज्यते ।

वंश ३ वंशोऽन्वयः समूहश्च वंशो वंशाश्च वेणवः ॥ २७३

रजस् ३ रजो गुणे रजो रेणुर्योषितामार्तवं रजः ।

आधि ३ आधिं वदन्त्यधिष्ठाने बन्धके व्यसने तथा ॥ २७४

खल ५ खलं भूस्थानकल्केषु पामरक्रूरयोः खलः ।

वृत्तान्त ४ वृत्तान्तः प्रक्रियायां स्यात्कार्त्स्न्ये वार्ताविशेषयोः ॥ २७५

( कार्त्स्न्यवार्ताविशेषयोः ॥ )

सूत ४ सूतः क्षत्त्राद् ब्राह्मणीजे तक्ष्णि सारथिबन्दिनोः ।

( सूतः शूद्रात्क्षत्त्रियाजे )

ऽजा ४

कुण्डलिन् २ कुण्डली भुजगो येन पिनद्धमपि कुण्डलम् ॥ २७६

दिवाकीर्ति २ जनंगमो दिवाकीर्तिर्दिवाकीर्तिश्च नापितः ।

माल्य २ माल्यं सुमनसां माला माल्यं सुमनसोपि च ॥ २७७

गोप ३ ग्रामौघाधिकृते गोपो गोष्ठाध्यक्षेऽथ बल्लवे ।

दक्ष ३ इष्यते चतुरे दक्षस्ताराचूडे प्रजापतौ ॥ २७८

वेग ३ जवे प्रवाहे किंपाके वेगशब्दस्त्रिषु स्मृतः ।

प्रदर ३ रोगप्रभेदे प्रदरः प्रदरः शरभङ्गयोः ॥ २७९

समुदय ३ समुद्गमे समुदयः संग्रामनिकुर(रु)म्बयोः ।

नग २, अग २ नगागौ शिखरीत्येतत्त्रयं पर्वतवृक्षयोः ॥ २८० शिखरिन् २

वाह ३ बाहुरेव स्मृतो वाहो वाहो मानतुरंगयोः ।

बाण ३ दैत्यमार्गणयोर्बाणो बाणो दासीकुर(रु)ण्टकः ॥ २८१

| | | |
|---|---|---|
| सादिन् | २ | सादिनः स्यन्दनारोहा अश्वारोहाश्च सादिनः । |
| व्याड(ल) | ३ | भुजगश्वापदक्रूरात्रयो व्याडा(ला) इति स्मृताः ॥ २८२ |
| विश् | २ | विशो भूमिस्पृशो वैश्या विशो भूमिस्पृशो नराः । भूमि |
| सालावृक | ३ | त्रयः सा(शा)लावृकाभिख्याः श्वसृ(शृ)गालवलीमुखाः ॥ |
| आश्रम | २ | आश्रमो ब्रह्मचर्यादिराश्रमो मठ इष्यते । |
| निराकृति | ३ | अस्वाध्याये निराकारे प्रत्यादेशे निराकृतिः ॥ २८४ |
| जीवक | २ | जीवकः क्षपणो ज्ञेयः प्राणदोऽपि च जीवकः । |
| माणवक | ३ | हारभेदे माणवको बाले कुपुरुषे तथा ॥ २८५ |
| निवात | ३ | आश्रये दृढसंनाहे निवातो वातवर्जिते । |
| पुलाक | ३ | संक्षेपे तुच्छधान्ये च पुलाको भक्तसिक्थके ॥ २८६ |
| कटक | ३ | राजधान्यां गिरेरङ्गे वलये(यं) कटकं विदुः । |
| तरल | ३ | तरलो भास्वरे हारमध्यरत्नेथ चञ्चले ॥ २८७ |
| दव | २ | वने च वनवह्नौ च दवो दाव इवेष्यते । |
| शिल | १ | शिला द्वाराधरं दारु शिलमुञ्छः शिला दृषत् ॥ २८८ |
| कोश | ५ | पेश्यां दिव्ये धने कोशः कुड्मलासिपिधानयोः । |
| नासा | २ | विज्ञेया नासिका नासा नासा द्वारोर्ध्वदारु च ॥ २८९ |
| अन्ध | २ | अन्धो दर्शननिर्मुक्तो जन्तुरन्धं तमो मतम् । |
| शाक्वर | २ | शाक्वरोऽनडुहि ज्ञेय उक्तं छन्दसि शाक्वरम् ॥ २९० |
| क्रूर | ३ | नृशंसकठिनौ क्रूरौ क्रूरं विद्याद् भयंकरम् । |
| दृष्टान्त | २ | दृष्टो दृष्टान्तशब्दोयमुदाहरणशास्त्रयोः ॥ २९१ |
| सत्र | ४ | सत्रं यज्ञे सदादाने छादनारण्ययोरपि । |
| क्षेम | २ | जानीयान्मङ्गलं क्षेमं क्षेमं लब्धार्थरक्षणम् ॥ २९२ |
| देवन | ३ | व्यवहारे जिगीषायां क्रीडायामपि देवनम् । |
| साल | ३ | प्राकारवृक्षयोः सा(शा)लः सा(शा)लः सर्जतरुः स्मृतः । |

प्रतिष्कश ३ वार्ताहरे पुरोगे च सहाये च प्रतिष्कशः ।

पत्ति ३ सैन्यभेदे पदातौ च पत्तिः पत्तिर्गतावपि ॥ २९४

पलल २ पललं तिलमिश्रे(चूर्णे) स्यात्पललं पिशितेपि च ।

बन्धुर २ बन्धुरं सुन्दरे दृष्टं बन्धुरं नम्रवाचकम् ॥ २९५

जगत् २ जगच्चराचरमिव भुवने गतिमत्यपि । चराचर २

प्रतिक्षिप्त २ प्रेषिते स्यात्प्रतिक्षिप्तं प्रतिक्षिप्तं निराकृते ॥ २९६

अनय ३ व्यसनेष्वशुभे दैवे विपत्तावनयस्त्रिषु ।

स्पर्श ४ रुजायां स्पर्शके स्पर्शो दानस्पर्शनयोरपि ॥ २९७

परिवार २ परिवारः परिजने तथा खड्गपिधानके ।

बन्धकी २ पुंश्चली बन्धकी विद्यात्करेणुरपि बन्धकी ॥ २९८

अपाचीन २ विपर्यस्तमपाचीनमपाचीनमपाग्गतिः ।

पक्क २ विनाशाभिमुखं पक्कं पक्कं परिणतार्थकम् ॥ २९९

जीवितेश २ प्रयुज्यते जीवितेशो यमजीवितनाथयोः ।

कनीयस् ३ अत्यल्पयूनोरनुजे कनीयान्स्यात्कनिष्ठवत् ॥ ३०० कनिष्ठ ३

वयस् ३ वयो बाल्यादि पक्षी च यौवनं च वयः क्वचित् ।

लघु ४ शीघ्रे मनोज्ञे निःसारे लघुः स्यादगुरुद्रुमे ॥ ३०१

सवन ३ सोमनिर्दलने स्नाने यजने सवनं मतम् ।

इरा ४ पृथिव्यां वाचि पानीये मदिरायामिरा मता ॥ ३०२

यातयाम २ परिभुक्तोज्झिते जीर्णे यातयामपदं विदुः ।

उच्छ्रित ३ समुन्नते(द्धे) प्रवृद्धे च जाते च विदुरुच्छ्रितम् ॥ ३०३

केवल ३ केवलः कृत्स्न एकश्च केवलश्चावधारितः ।

सत् ५ सत्सत्येभ्यर्हिते साधौ विद्यमानप्रशस्तयोः ॥ ३०४

जाति ५ जातिश्छन्दसि सामान्ये मालतीगोत्रजन्मसु ।

अधर ३ ओष्ठे स्यादधरो हीनमनूर्ध्वमधरं विदुः ॥ ३०५

| | | | |
|---|---|---|---|
| दृषद् | २ | दृषन्निष्पेषणशिला केवलापि शिला दृषत् । | |
| उपासन | २ | उपासनं विदुः सेवां बाणाभ्यास उपासनम् ॥ ३०६ | |
| शुश्रूषा | २ | शुश्रूषा श्रोतुमाशंसा शुश्रूषा स्यादुपासनम् । | |
| संज्ञा | ३ | नामचेतनयोः संज्ञा सूचनायां करादिभिः ॥ ३०७ | |
| पीलु | ४ | प्रसूनकाण्डयोः पीलुः पीलुः स्याद्गजवृक्षयोः । | |
| आनर्त्त | ३ | आनर्त्तो नृत्यशालायां जन्ये(न्ते) जनपदान्तरे ॥ ३०८ | |
| प्रेत | २ | मृते भूतान्तरे प्रेतः परेतोऽप्यनयोर्मतः । | परेत |
| कुकूल | २ | शङ्कुभिर्निचिते श्वभ्रे तुषाग्नौ च कुकूलवाक् ॥ ३०९ | |
| प्रतिश्रय | २ | प्रतिश्रयः सभायां स्यादाश्रयश्च प्रतिश्रयः । | |
| निर्यूह | ४ | निर्यासे शेखरे द्वारे निर्यूहो नागदन्तके ॥ ३१० | |
| समाधि | ४ | समाधिर्ध्याननीवाकानियमेषु समर्थने । | |
| घनाघन | ३ | घनाघनो वर्षुकाब्दे शक्रे समदहस्तिनि ॥ ३११ | |
| सिन्धु | ३ | नदप्रभेदे नद्यां च सिन्धुर्नीरनिधावपि । | |
| परंपर | ५ | मृगभेदे च पुत्रस्य प्रपौत्रे च परंपरः ॥ ३१२ | |
| व्यलीक | ४ | व्यलीकमप्रियाकार्यवैलक्ष्येष्वथ पीडने । | |
| निष्क्रम | २ | निष्क्रमो निर्गमे ख्यातो बुद्धिसंपदि निष्क्रमः ॥ ३१३ | |
| सर्ग | ५ | स्वभावे निश्चये सर्गो निर्माणोत्साहयोरपि । | |
| [illegible] | २ | पक्षिभिः [illegible] ॥ ३१४ | |
| हस्त | २ | पाणिनक्षत्रयोः हस्तः संघाते केशपूर्वकः । | |
| निह्नव | ३ | अविश्वासेऽपलापे च निकृतावपि निह्नवः ॥ ३१५ | |
| | | ( विश्वासेऽप्यपलापे च निकृतावपि निह्नवः ॥ ) | |
| प्राय | ४ | मृत्यावनशने प्रायः प्रायो बाहुल्यतुल्ययोः । | |
| क्षत्तृ | ३ | क्षत्ता शूद्रात्क्षत्रियाजे सारथिप्रतिहारयोः ॥ ॥ ३१६ | |

अभिजन २ कुले च जन्मभूमौ च विद्यादभिजनध्वनिम् ।
निर्ग्रन्थक २ निर्ग्रन्थकं विजानीयात्क्षपणे निष्परिच्छदे ॥ ३१७
महासेन २ महासेनः कार्तिकेये महासैन्यपतावपि ।
आरोह ३ आरोहो योषितां श्रोणौ तरोरङ्गे समुच्छ्रये ॥ ३१८
वणिज् २ वाणिज्ये वणिजं विद्यात्तथा वाणिज्यजीविनि ।
विग्रह ३ संग्रामे विग्रहः ख्यातः कायविस्तारयोरपि ॥ ३१९
अनुशय ३ विद्यादनुशयं द्वेषे पश्चात्तापानुबन्धयोः ।
धिष्ण्य ४ स्थाननक्षत्रयोर्धिष्ण्यं धिष्ण्योऽग्नौ धिष्ण्यमालये ॥ ३२०
मागध १ मागधी पिप्पलीयूथ्योर्मागधो बन्दिनि स्मृतः । मागधी २
कुसुम्भ २ महारजनं कुसुम्भं कुसुम्भश्च कमण्डलुः ॥ ३२१
जगल २ जगलः पिष्टमद्यं च मेदको जगलः स्मृतः ।
करक २ कमण्डलुश्च करकः करकश्च घनोपलः ॥ ३२२
परिवाप २ परिवापो जलस्थानं परिवापः परिच्छदः ।
वारि २ करिणां बन्धनी वारिरम्बु वारीति विश्रुतम् ॥ ३२३
कुमारी २ अयं द्वीपः कुमारी स्यात्कुमारी कन्यका स्मृता ।
वातूल २ वातूलो वातसंघाते वातूलो मारुतासहे ॥ ३२४
पाद२ अङ्घ्रि२ पादाङ्घ्रि(ङ्ह्रि)चरणा जन्तोरङ्गे मूले च भूरुहाम् । [ चरण २
विपणि २ आपणः पण्यवीथी च द्वयं विपणिसंज्ञकम् ॥ ३२५
जठर २ [illegible] कुक्षौ कठिने जठरं विदुः ।
श्याम २ [illegible] श्यामा श्यामौ च हरितासितौ ॥ ३२६ श्यामा २
दुन्दुभि ३ इष्यते दुन्दुभिर्भेर्यामक्षे विन्दुत्रिकद्वये ॥ ३२७
भिक्षा ४ प्रार्थनाभृतिसेवासु भिक्षा भिक्षितवस्तुनि ।
प्रतीत ३ प्रख्यातज्ञातहृष्टेषु प्रतीतं त्रिषु विश्रुतम् ॥ ३२८

इला ४ इला गोवाग्धरित्रीषु कलत्रे चन्द्रजस्य च ।
गण्डूषा २ गण्डूषा मुखपूर्तौ च गण्डूषा प्रसृतोन्मिते ॥ ३२९
गोष्पद २ गोष्पदं गोपदश्वभ्रे गवां च गतिगोचरे ।
प्रथम २ आदौ प्रधाने प्रथमं प्रमुखेन समं विदुः ॥ ३३० प्रमुख २
मृग ४ मृगशीर्षे हस्तिजातौ मृगः पशुकुरङ्गयोः ।
तमिस्रा २ तमिस्रा सतमा रात्रिस्तमिस्रा च तमस्ततिः ॥ ३३१
अरत्नि २ अरत्निः कफणौ हस्ते सप्रकोष्ठतताङ्गुलौ ।
गति ४ उपायो वर्त्म च गतिर्गतिर्यात्रा गतिर्दशा ॥ ३३२
घटा ३ घटा स्याद् घटना गोष्ठी करिणां घटना घटा ।
( करिसंघटने गोष्ठ्यां घटनायां घटा मता । )
कटु ४ रसे(सः) कटुः कटुस्तीक्ष्णे मत्सराकार्ययोः कटुः ॥ ३३३
सुधा ५ गङ्गेष्टिकास्नुहीमूर्वापीयूषेषु सुधा स्मृता ।
परिघ ३ आयुधे परिघः ख्यातः परिघोऽर्गलघातयोः ॥ ३३४
उपह्वर २ उपह्वरं विजानीयान्निःशलाकसमीपयोः ।
लक्ष ३ लक्षं छद्मनि विख्यातं लक्षं संख्याशरव्ययोः ॥ ३३५
गन्ध ३ आमोदलेशयोर्गन्धो गन्धः संबन्धमात्रकः ।
कल्क ४ कल्कः पापाशये दम्भे कल्कं स्यात्पापकिट्टयोः ॥ ३३६
कोष्ठ ३ कोष्ठः कुशूले स्वीये च कुक्षाव(क्षेर)न्तर्गृहस्य च ।
कुश २ कुशा १ कुशो दर्भः कुशी फालः कुशा वल्गा कुशं जलम् ॥ ३३७ कुशी १
उपलब्धि ३ उपलब्धिर्भवेद् बुद्धौ प्राप्तौ ज्ञाने च दृश्यते ।
सार ४ सारो बले स्थिरांशे च न्याय्ये सारं वरे तथा ॥ ३३८
न्युङ्ख २ न्यङ्खः साम्नः षडोङ्कारे न्युङ्खः सम्यङ्मनोहरे ।
चटु २ चटुः पिच(चि)ण्डे भूपादेरपि सद्गुणवर्णने ॥ ३३९

| | | |
|---|---|---|
| शृङ्गार | २ | रसे नाट्यस्य शृङ्गारः शृङ्गारो गजमण्डने । |
| भार | २ | विवधे द्विसहस्रे च पलानां भार इष्यते ॥ ३४० |
| आचित | २ | आचितः शकटोन्मेये पलानामयुतद्वये । |
| वर्षाभू | २ | पुनर्नवायां वर्षाभूर्वर्षाभूरपि दर्दुरे ॥ ३४१ |
| अनीकस्थ | २ | राजरक्षिष्वनीकस्थो रा(ग)जशिक्षाविचक्षणे । |
| पुरस्कृत | ३ | अग्रेकृताभ्यर्चितयोरतिशस्ते पुरस्कृतः ॥ ३४२ |
| वधू | ४ | नवोढयोषिति वधूः स्नुषाभार्याङ्गनासु च । |
| आशय | २ | आशयं विदुराधारं स्यादभिप्राय आशयः ॥ ३४३ |
| दुर्जात | २ | दुर्जातं व्यसने प्रोक्तमसम्यग्जातवस्तुनि । |
| कुल्य | १ | कुल्या नदी कुल्यमस्थि कुल्या नीरप्रणालिका ॥ ३४४ कुल्या २ |
| शुण्डा | २ | कुञ्जराणां करः शुण्डा शुण्डा कादम्बरी मता (तथा) । |
| अपचिति | ४ | विद्यादपचितिं हानौ निष्कृतावर्चने व्यये ॥ ३४५ |
| वैदेहक | २ | वैदेहको वाणिजके वैश्यतो ब्राह्मणीसुते । |
| | | (वैश्यापुत्रे च शूद्रजे ।) |
| आशिस् | २ | आशीरभीप्सिताशंसा दंष्ट्राशीरनिलाशिनाम् ॥ ३४६ |
| प्रसिद्ध | २ | कृतप्रसाधने ख्याते प्रसिद्धं पण्डिता विदुः । |
| उदर्क | २ | उदर्क उत्तरः काल उदर्कः फलमुत्तरम् ॥ ३४७ |
| वेदना | २ | वेदना स्यादनुभवः पीडायामपि वेदना । |
| मेखला | ३ | मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः ॥ ३४८ |
| नाडी | ३ | कलेवरसिरा नाडी नाडी स्यात्कालनालयोः । |
| वक्तव्य | ३ | वचोर्हे कुत्सितेऽधीने वक्तव्यं वाच्यवन्मतम् ॥ ३४९ वाच्य ३ |
| आवाप | २ | प्रक्षेपे चालवाले च विदुरावापमुत्तमाः । |
| कलकण्ठ | २ | कलकण्ठः कोकिलः स्यान्मधुरो यस्य च ध्वनिः ॥ ३५० |

| | | |
|---|---|---|
| खनक | २ | मूषिकः खनकाभिख्यः खनकश्चावदारकः । |
| सरक | ३ | इक्षुशी(सी)धौ शी(सी)धुपाने सरकं मद्यभाजने ॥ ३५ |
| ईरण | २ | निराश्रये महीभागे भवेदीर(दिरि)णमूषरे । |
| पाताल | २ | रसातलं स्यात्पातालं पातालं वडवानलः ॥ ३५२ |
| पारायण | २ | पारायणं समासङ्गः कार्त्स्न्ये पारायणं स्मृतम् । |
| निरूपण | २ | निरूपणं दर्शने च विचारे च निरूपणम् ॥ ३५३ |
| आराधन | २ | आराधनं तोषणं स्यात्प्राप्तौ चाराधनं विदुः । |
| रसन | ३ | आस्वादने च रसनं रसनं ध्वनिजिह्वयोः ॥ ३५४ |
| इष्वास | २ | इषुक्षेपक इष्वास इष्वासो(सं) धनुरिष्यते । |
| रीति | २ | रीतिर्दग्धसुवर्णादिमले स्यादारकूटके ॥ ३५५ |
| अत्याहित | २ | अत्याहितं महाभीतिर्जीवे च निरपेक्षता । |
| अगाध | २ | अगाधमतलस्पर्शमगाधं विवरं विदुः ॥ ३५६ |
| वान | २ | स्मृतं शुष्कफलं वानं वानं सीवनकर्म च । |
| अनुकर्ष | २ | रथाधोधरणे दार्वनुकर्षोऽनुकर्षणे ॥ ३५७ |
| उत्सर्ग | २ | उत्सर्गस्त्यागवद्दाने परित्यागे प्रयुज्यते । |
| वीत | ३ | असाराश्वगजे शान्ते वीतमङ्कुशकर्मणि ॥ ३५८ |
| निर्याण | २ | निर्याणं द्विरदस्याङ्गे निर्याणमथ निर्गमे । |
| उपधि | २ | उपधिं व्याजमिच्छन्ति रथस्यावयवे तथा ॥ ३५९ |
| गोमुख | २ | लेपने वाद्यभाण्डे च कवयो गोमुखं विदुः । |
| भागधेय | २ | भागधेयं मतं भाग्यं भागधेयं बलिं विदुः ॥ ३६० |
| बादर | २ | कार्पासं बादरं विद्याद्बादरं कोलिकाफलम् । |
| वार्द्धक | ३ | वार्द्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि ॥ ३६१ |
| निरसन | २ | निषूदने निरसनं निरासे च प्रयुज्यते । |
| उपगम | २ | अङ्गीकृतावुपगमः समीपगमनेऽपि च ॥ ३६२ |

| | | |
|---|---|---|
| प्रणीत | ३ | त्रिषु प्रणीतो विहिते संस्कृतेऽग्नौ प्रवेशिते । |
| घनरस | २ | आचक्षते घनरसं सान्द्रनिर्यासनीरयोः ॥ ३६३ |
| शंवर | ३ | शंव(शम्ब)रं जलमाख्यातं शंव(शम्ब)रो मृगदैत्ययोः । |
| युग | ३ | युगो रथस्यावयवे कृतादौ युगले युगम् ॥ ३६४ |
| कोल | ३ | पोत्रिप्लवकयोः कोलः कोलं तु बदरीफलम् । |
| | | ( पोत्रिभेलकयोः कोलः कोलं च बदरीफलम् । ) |
| विहायस् | २ | विदुर्विहायसं व्योम पक्षिणश्च विहायसः ॥ ३६५ |
| वरीयस् | २ | वरीयानतिविस्तीर्णो वरीयानथ सत्तमः । |
| वीथी | ४ | पङ्क्तिवर्त्मगृहाङ्गेषु वीथी वीथी च रूपकम् ॥ ३६६ |
| अभिहार | ३ | चौर्याभियोगसंनाहेष्वभिहारपदं विदुः । |
| काल | ५ | महाकाले यमे मृत्यौ कालः समयकृष्णयोः २६७ |
| द्वन्द्व | ४ | रहस्ये कलहे द्वन्द्वं द्वन्द्वं मिथुनयुग्मयोः । |
| परिबर्ह | २ | पार्थिवौपयिकद्रव्ये परिबर्हः परिच्छदे ॥ ३६८ |
| परिवाह | २ | परिवाहो जलोच्छ्वासे नृपयोग्ये च वस्तुनि । |
| अघ | ३ | अघमंहसि दुःखे च व्यसने स प्रयुज्यते ॥ ३६९ |
| अवग्रह | ३ | गजालिके वृष्टिरोधे प्रतिबन्धेऽप्यवग्रहः । |
| मेचक | ३ | जानीयान्मेचकं कृष्णं मेचको बर्हचूडयोः ॥ ३७० |
| पटल | ३ | पटलं छदिषि ज्ञेयमक्षिरोगसमूहयोः । |
| अपह्नव | २ | अपह्नवोऽपलापश्च स्नेहश्चापह्नवो मतः ॥ ३७१ |
| कौक्कुटिक | २ | कौक्कुटिको दाम्भिकश्च यश्चादूरेरितेक्षणः । |
| लालाटिक | २ | लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः ॥ ३७२ |
| हिङ्गुनिर्यास | २ | हिङ्गुनिर्यासशब्दोऽयं निम्बे हिङ्गुरसेऽपि च । |
| पुलक | ३ | कृमिप्रभेदे रोमाञ्चे पुलकं प्रस्तरे विदुः ॥ ३७३ |

ब्रह्मबन्धु २ ब्रह्मबन्धुरधिक्षेपे निर्देशे ब्राह्मणस्य च ।
अवष्टब्ध २ अवष्टब्धं द्वयं विद्याददूरमवलम्बितम् ॥ ३७४
समर्थ ३ उक्तः समर्थः संबन्धे समर्थौ हितशक्तयोः ।
तल्प ३ शयनीयं विदुस्तल्पं तल्पमट्टकलत्रयोः ॥ ३७५
मन्यु ३ निगदन्ति क्रुधं मन्युं मन्युरध्वरदैन्ययोः ।
स्कन्ध ३ अंसे महीपतौ स्कन्धः समुदायसमूहयोः ॥ ३७६
कवि २ कविर्विद्वान्कविः शुक्रो विज्ञेया खलिना कवि । कवी
अभ्यागम २ अभ्यागमोऽभ्यागमनं युद्धमभ्यागमं विदुः ॥ ३७७
प्रकाण्ड ३ प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरोः ।
उपस्पर्शन २ उपस्पर्शनमिच्छन्ति स्नानाचमनयोरपि ॥ ३७८
महामात्र २ समृद्धे स्यान्महामात्रस्तथा हस्तिपकाधिपे ।
गोकर्ण २ गोकर्णो दन्दशूके स्यादङ्गुष्ठानामिकोन्मिते ॥ ३७९
प्रियक २ प्रियकः पीतसारे च मृगभेदे च दृश्यते ।
चूर्ण २ चूर्णानि वासयोगाः स्युश्चूर्णो धूलिः सशर्करा ॥ ३८०
( चूर्णो धूलिरुदाहृतः ॥ ३८० )
तरस्विन् २ तरस्विनो वेगवन्तो बलिनश्च तरस्विनः ।
अन्त ३ स्वरूपप्रान्तयोरन्तमन्तिकेऽपि प्रयुज्यते ॥ ३८१
अणु २ व्रीहावप्यणुलौहित्यौ सूक्ष्मसागरयोः क्रमात् । लौहित्य २
मौलि ३ मौलिः संयतकेशेषु चूडामुकुटयोस्तथा ॥ ३८२
गोलक ३ जारजे विधवापुत्रे गोलको गोलको गुडे ।
अव्यक्त २ अव्यक्तशब्दं जानीयादस्फुटे परमात्मनि ॥ ३८३
कम्बल २ कथ्यते कम्बलः सास्ना प्रावारेऽपि च कम्बलः ।
आसन २ आसनं करिणां स्कन्धः पीठमासनमिष्यते ॥ ३८४

शङ्कु ३ संख्याकीलकयोः शङ्कुः शङ्कुः प्रहरणान्तरे ।

आधार ३ आलवालेऽधिकरणे वाप्यामाधार इष्यते ॥ ३८५

प्रपञ्च २ विपर्यासः प्रपञ्चः स्यात्प्रपञ्चो विस्तरो मतः ।

कुहन १ ईर्ष्यालुर्दम्भचर्या च कुहनः कुहना क्रमात् ॥ ३८६ कुहना १

( ईर्ष्यालौ दम्भचर्यायां )

अकूपार २ अकूपारः समुद्रः स्यादकूपारश्च कूर्मराट् ।

पृषत् २ पृषन्मृगे पृषद्बिन्दौ पृषतोऽप्यनयोर्मतः ॥ ३८७ पृषत् २

अनन्त २ नभोऽनन्तमनन्ता भूरनन्तो नागनायकः । अनन्ता १

( ... ... ... तो नागनायकः । )

संधि ३ संधिर्भगं सुर(रु) ङ्गा च संधिं संघट्टनं विदुः ॥ ३८८

निग्रह २ निग्रहो भर्त्सनाभिख्यो मर्यादां निग्रहं विदुः ।

गन्धवह १ समीरणो गन्धवहो नासा गन्धवहा मता ॥ ३८९ गन्धवाहा १

सत्तम २ जानीयात्सत्तमं श्रेष्ठं साधीयानपि सत्तमः ।

तोक्म २ हरिन्मात्रं च तोक्मं स्यात्तोक्मश्च हरितो यवः ॥ ३९०

ओजस् ४ ओजो बलमवष्टम्भ ओजः स्यात्त्विट्प्रकाशयोः ।

स्पर्शन ३ समीरणे(णः) स्पर्शनाख्या(ख्यः) स्पर्शनं स्पर्शदानयोः ॥ ३९१

उपताप २ उपतप्ते गदे विद्यादुपतापं विचक्षणः ।

भगवती १ ज्ञेया भगवती दुर्गा भगवान्बुद्धपूज्ययोः ॥ ३९२ भगवत् २

शिशुक ३ बालोऽतिमात्रं शिशुकः शिशुकः शिशुमारकः ।

चय २ प्राकारमूलबन्धश्च समूहश्च चयो मतः ॥ ३९३

वेला ३ विकारेऽम्बुनिधेर्वेला कालमर्यादयोस्तथा ।

समापन २ समापनं विनिर्दिष्टं समाप्तिवधयोरपि ॥ ३९४

आयति २ द्वयोरायतिराख्याता प्रभावागामिकालयोः ।

निशमन २ दृष्टं निशमनं धीरैर्दर्शने श्रवणे तथा ॥ ३९५

गर्भ ३ भ्रूणे गर्भं विजानीयाज्जठरार्भकयोरपि ।
अवदान ३ अवदानमितिवृत्ते कर्मखण्डनयोस्तथा ॥ ३९६
उन्माथ ३ पाशयन्त्रकमुन्माथ उन्माथो वधघातयोः ।
भूत ५ भूतं क्ष्मादौ पिशाचादौ न्याय्ये जन्तूपमानयोः ॥ ३९७
तिलक ३ वृक्षप्रभेदे जडुले चित्रके तिलकं विदुः ।
प्रतिपत्ति ४ प्रागल्भ्ये गौरवे प्राप्तौ प्रवृत्तौ प्रतिपत्तिवाक् ॥ ३९८
पत्त्र ३ पर्णवाहनयोः पत्त्रं पत्त्रं पक्षे पतत्रिणाम् ।
कूर्च ३ दम्भभ्रूमध्ययोः कूर्चः कूर्चः श्मश्रुणि दृश्यते ॥ ३९९
प्राण ३ प्राणोऽसुबलयोरुक्तः प्राणो देहचरोऽनिलः ।
पात्र ३ योग्यभाजनयोः पात्रं पात्रं कूलद्वयान्तरम् ॥ ४००
विधा ५ विधानर्द्धिप्रकारेषु गजान्ने वेतने विधा ।
कौपीन ३ अकार्यगुह्यचीरेषु कौपीनं कवयो विदुः ॥ ४०१
छन्दस् ३ गायत्रीप्रभृति च्छन्दश्छन्दो वेदेच्छयोरपि ।
वितान ४ यागे वितान उल्लोचे शून्यविस्तारयोरपि ॥ ४०२
कोटि ४ अश्रिचापाग्रयोः कोटिः कोटिः संख्याप्रकर्षयोः ।
कक्ष्या ३ मेखलायां स्मृता कक्ष्या गजरज्जुप्रकोष्ठयोः ॥ ४०३
गञ्ज १ भाण्डागारं(रे) विदुर्गञ्जं खनौ गञ्जा सुरागृहे । गञ्जा १
तूवर २ काले प्राप्तेप्यशृङ्गो गौर्नरोऽश्मश्रुश्च तूव(प)रः ॥ ४०४
शम्ब २ शम्बः स्यान्मुसलाग्रस्थे लोहमण्डलके पवौ ।
विविक्त ३ विविक्तं रहसि ख्यातमसंपृक्तपवित्रयोः ॥ ४०५
खेट ३ ग्रामभेदे विदुः खेटं कफकुत्सितयोरपि ।
शृङ्ग ३ प्रभुत्वे पर्वताग्रे च शृङ्गमङ्गे पशोरपि ॥ ४०६
पङ्क्ति ३ छन्दोविशेषे लेखायां दशसंख्यासु पङ्क्तिवाक् ।
कण २ धान्यस्यावयवे लेशे कणः स्यात्पिप्पली कणा ॥ ४०७ कणा १

सून १ सूनं पुष्पं वधस्थाने सूना जिह्वातलेऽपि च । सूना २
रौहिष ४ रौहिषं रक्तकतृणं रौहिषो हरिणान्तरम् ॥ ४०८
धर्षण २ धर्षणं सुरतं विद्यादभिभूतिश्च धर्षणम् ।
कपाल २ शिरसोऽस्थि कपालं स्याद् घटादेः शकलं च यत् ॥ ४०९
प्रणाय्य २ अभिलाषविनिर्मुक्ते(क्तः) प्रणाय्यः स्यादसंमते(तौ) ।
सारसन २ मेखलायां सारसनमुरस्त्रे च प्रयुज्यते ॥ ४१०
जटा २ जटा कचविकारे च मुले च धरणीरुहाम् ।
कलहंस २ कादम्बे राजहंसे च कलहंसः प्रयुज्यते ॥ ४११
कमठ २ भाण्डप्रभेदः कमठः कमठः कच्छपो मतः ।
काकोल २ काकोलो द्रोणकाकः स्यात्काकोलो विषमुच्यते ॥ ४१२
करहाट २ पिण्डीतके पद्मकन्दे करहाटपदं विदुः ।
( पुष्पजातौ पद्मकन्दे )
संतति २ तोक २ पुत्रयोः सह संतत्या तोकापत्यप्रसूतयः ॥४१३ अपत्य २ प्रसूति २
विबुध ५ विज्ञेया विबुधा देवा विबुधाः पण्डिता अपि ।
अङ्गज ३ अङ्गजो मन्मथे पुत्रे शोणितं कचिदङ्गजम् ॥ ४१४
कर्कश ३ कर्कशः स्यात्साहसिके खरस्पर्शेऽथ निर्दये ।
सामुद्र २ लवणादौ समुद्रस्य सामुद्रं देहलक्षणे ॥ ४१५
पक्ष्मन् ३ पक्ष्म सूत्रादिसूक्ष्मांशे किञ्जल्के नेत्रलोमनि ।
किम् ४ कुत्साप्रश्नवितर्केषु क्षेपे किंशब्द इष्यते ॥ ४१६
सभा ४ सभा सभ्याः सभा गोष्ठी सभा द्यूतं सभा गृहम् ।
विषाण २ विषाणं करिणां दन्तो विषाणं शृङ्गमुच्यते ॥ ४१७
शरण ४ शरणं गृहरक्षित्रोः शरणं रक्षणे वधे ।
पार्श्व २ वक्रोपायं विदुः पार्श्वं पार्श्वं चावयवान्तरम् ॥ ४१८

सीमन् ३ आघाटे कथिता सीमा स्थितौ क्षेत्रे च दृश्यते ।
एक ३ एकं श्रेष्ठे विजानीयादन्यकेवलयोरपि ॥ ४१९
बृहती ३ क्षुद्रायां क्षुद्रवार्त्ताक्यां बृहती छन्दसि क्वचित् (स्मृता) ।
तारक २ नक्षत्रे चाक्षिमध्ये च तारकं तारकापि च(यथा) ॥४२० तारका २
कान्त २ प्रियङ्गुयोषितोः कान्ता कान्तः प्रियमनोज्ञयोः । कान्ता २
जाल ४ गवाक्षवृन्ददम्भेषु जालं मत्स्यादिबन्धने ॥ ४२१
संवित्ति २ संवित्तिः प्रतिपत्तिः स्यात्संवित्तिरविवादिता ।
जघन्य २ पश्चाद्भावि जघन्यं स्याज्जघन्यं गर्हितार्थकम् ॥ ४२२
संपराय ३ आपदायतियुद्धेषु संपरायपदं विदुः ।
आलि ३ आलिः सखी सेतुरालिरालिरावलिरिष्यते ॥ ४२३
परिधि २ परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ।
अधिष्ठान३ रथाङ्गाध्यासनपुरेष्वधिष्ठानपदं विदुः ॥ ४२४
धात्री ३ आमलक्युपमाता च धात्री धात्री च मेदिनी ।
श्राद्ध २ हव्यकव्यविधिः श्राद्धं श्राद्धः श्रद्धासमन्वितः ॥ ४२५
वाणिनी ३ नर्तक्यामथ मत्तायां विदग्धायां च वाणिनी ।
तन्त्री २ वीणादीनां गुणस्तन्त्री तन्त्री देहसिरा मता ॥ ४२६
कारिका २ कृतौ विवरणश्लोके यातनायां च कारिका ।
ऊर्णा २ भ्रूमध्यावर्तमेषादिलोम्नोरूर्णा निगद्यते ॥ ४२७
अवतंस २ शेखरे कर्णपूरे स्यादवतंसो वतंसवत् । वतंस
बालिका २ बालायां वालुकायां च बालिकाशब्द इष्यते ॥ ४२८
जघन २ श्रोणिभागे स्त्रियाः पूर्वे जघनं जघनं कटिः ।
नितम्ब २ नितम्बोऽपरस्तस्याः श्रोणिभागः कटिस्तथा ॥ ४२९
समाहित २ समाहितं प्रतिज्ञातं समाधिस्थः समाहितः ।
उद्दूढ २ उद्दूढ ऊढमात्रे स्यादुद्दूढः पृथुलेऽपि च ॥ ४३०

कन्द २ कन्दानि मूलसस्यानि विदुः कन्दांश्च(न्दानि) शूरणान् ।
कृच्छ्र २ आहुः कृच्छ्राणि दुःखानि कृच्छ्रं सांतपनादिकम् ॥ ४३१
दशा ३ दशावस्था दशा वर्तिर्वाससोऽवयवे दशा ।
किष्कु २ सप्रकोष्ठकरः किष्कुर्वितस्तिः किष्कुरिष्यते ॥ ४३२
अवगीत ३ अवगीतं मुहुर्दुष्टे निर्वादे गर्हितेऽपि च ।
तृष्णा,२ तृष२ तृष्णा तृट् तर्ष इत्येते शब्दा लिप्सापिपासयोः ॥ ४३३ तर्षः
अजिर ३ अजिरं विषये काये विद्यादजिरमङ्गनम् ।
बीभत्स ३ बीभत्सो विकृते क्रूरे तथा मध्यमपाण्डवे ॥ ४३४
त्वष्टृ २ देवशिल्प्यपि त्वष्टा त्वष्टारं वर्धकिं विदुः ।
आनद्ध २ मुरजादिकमानद्धमानद्धं बद्धमात्रकम् ॥ ४३५
निर्यातन३ न्यासार्पणे वैरशुद्धौ दाने निर्यातनं विदुः ।
गन्धन ३ उत्साहने सूचनायां गन्धनं स्यात्प्रकाशने ॥ ४३६
पूर्व ३ पुमांसः पूर्वजाः पूर्वे पूर्वं प्राक् पूर्वमग्रतः ।
अभिनीत३ अभिनीतं संस्कृते च न्याय्ये चामर्षवत्यपि ॥ ४३७
उद्यान ३ प्रयोजने निःसरणे स्यादुद्यानं वनान्तरे ।
व्यञ्जन ४ व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवे तथा ॥ ४३८
संस्थान ४ संस्थानमाकृतौ मृत्यौ संनिवेशे चतुष्पथे ।
कुशल ४ कुशलं सुकृते क्षेमे पर्याप्तौ शिक्षितेऽपि च ॥ ४३९
पावन २ स्यात्पावनः पावयिता प्रायश्चित्तं तु पावनम् ।
केतन ३ निमन्त्रणे ध्वजे कार्ये केतनं कवयो विदुः ॥ ४४०
ककुद-द ३ ककुद्वत्ककुदं श्रेष्ठे वृषाङ्गे नृपलक्षणे ।
बीज ३ हेतौ रेतसि बीजं स्याद्बीजमङ्कुरकारणम् ॥ ४४१
फल ५ लाभे सस्ये शराद्यग्रे व्युष्टौ च फलके फलम् ।
धन्वन् ३ स्थलं धन्व धनुर्धन्व धन्वा मरुरपि स्मृतः ॥ ४४२

| | |
|---|---|
| आगम २ | जानीयादागमं शास्त्रं स्यादागमनमागमः । |
| प्रणव | प्रह्वे च क्रमनिम्ने च प्रवणः स्याच्चतुष्पथे ॥ ४४३ |
| दृढ ३ | दृढं नितान्ते स्थूले च दृढः स्याद्बलवत्यपि । |
| औशीर २ | औशीरं चामरे दण्डेऽप्यौशीरं शयनासने ॥ ४४४ |
| प्रकोष्ठ २ | कक्षान्तरं प्रकोष्ठः स्यात्प्रकोष्ठः कूर्परादधः । |
| उपाधि २ | उपाधिर्धर्मचिन्तापि कुटुम्बव्यापृतोऽपि च (तावपि) ॥ ४४५ |
| निर्वासन २ | निर्वासनं मारणे स्यान्नगरादेर्बहिष्कृतौ । |
| उद्धरण २ | भुक्तोज्झितोन्मूलनयोरुक्त उद्धरणध्वनिः ॥ ४४६ |
| कृत्य २ | क्रियादेवतयोः कृत्या कृत्यं विद्धिष्टकार्ययोः । कृत्या २ |
| नाश ३ | निधनानुपलम्भौ च नाशौ नाशः पलायनम् ॥ ४४७ |
| नैगम २ | नैगमः स्याद्वाणिजके नैगमो नगरोद्भवे । |
| किल्बिष २ | पाप्मानं किल्बिषं विद्यादपराधेऽपि किल्बिषम् ॥ ४४८ |
| अभिषव ३ | सवने मद्यसंधाने स्नानेऽप्यभिषवं विदुः । |
| संतान ४ | संतानः संततौ देववृक्षे चापत्यगोत्रयोः ॥ ४४९ |
| संस्त्याय २ | संघाते संनिवेशे च संस्त्यायं कवयो विदुः । |
| अभिमर २ | विद्यादभिमरं युद्धे स्वबलादपि साध्वसे ॥ ४५० |
| आषाढ ३ | आषाढो व्रतिनां दण्डे मासि क्षितिधरान्तरे । |
| उध्दृत २ | उध्दृतं स्यादुत्तुलितं भुक्त्वा चोज्झितमुध्दृतम् ॥ ४५१ |
| विश्वकर्मन् २ | देवशिल्पी विश्वकर्मा विश्वकर्मा दिवाकरः । |
| अभिमर्द २ | अभिमर्दं विदुर्युद्धमभिमर्दोऽभिमर्दनम् ॥ ४५२ |
| निर्देश २ | आज्ञा भवति निर्देशो निर्देशः कथनं मतम् । |
| मधुक २ | बन्दिनो मधुकाः केपि मधुकं मधुयष्टिका ॥ ४५३ |
| अनुत्तर ३ | अनुत्तरमनूर्ध्वं स्यादनुदक्श्रेष्ठयोरपि । |
| पर ४ | आत्मनोऽन्यत्र दूरे च संपन्नश्रेष्ठयोः परः ॥ ४५४ |

| | | |
|---|---|---|
| परिमल | २ | स्याद्विमर्दे परिमलो गन्धे जनमनोहरे । |
| पाटल | ३ | पाटलं कुसुमे वर्णेऽप्याशुव्रीहिश्च(हौ च) पाटलः ॥ ४५५ |
| यापन | २ | स्याद्यापनं निरसनं यापनं वर्तनं विदुः । |
| राजीव | ३ | राजीवो हरिणो मत्स्यो राजीवं सरसीरुहम् ॥ ४५६ |
| माधव | ३ | वसन्ते माधवो विष्णौ वैशाखे मासि माधवः । |
| प्रसृत | २ | पाणिर्निकुब्जः प्रसृतः प्रसृतो वेगितः स्मृतः ॥ ४५७ |
| साधी- | | साधीयो बाढमत्यर्थे साधीयानतिशोभनः । (यस् २ |
| मयूख | ३ | मयूखः कथितो दीप्तौ ज्वालाकिरणयोरपि ॥ ४५८ |
| अङ्ग | ३ | उपायगात्रयोरङ्गमङ्गवानङ्ग इष्यते । |
| इष्ट | २ | इष्टं यज्ञेषु यद्दानमिष्टमाशंसितं मतम् ॥ ४५९ |
| चैत्य | २ | विदुरायतनं चैत्यं चैत्यमुद्देशपादपः । |
| लालस | २ | लालसं प्रार्थनामाहुरौत्सुक्यमपि लालसम् ॥ ४६० |
| जाङ्गल | २ | जाङ्गलो निर्जले देशे जाङ्गलं पिशितं विदुः । |
| न्युब्ज | २ | विद्यादधोगतं (मुखं) न्युब्जं न्युब्जः कुब्ज उदाहृतः ॥४६१ |
| हरण | २ | यौतकद्रविणं प्रोक्तं हरणं हरणं हृतिः । |
| वनिता | २ | उत्पादितानुरागा स्त्रीवनिता वनिताङ्गना ॥ ४६२ |
| विटप | ३ | शाखायां पल्लवे स्तम्बे विटपं विदुरुत्तमाः । |
| विह- | | पिञ्जनं स्याद्विहननं विदुर्विहननं वधम् ॥ ४६३ (नन २ |
| धवल | २ | धवलं सुन्दरे शुक्ले धवली गौरपि स्मृता । धवली १ |
| ग्राम | २ | ग्रामः संवसथे ज्ञेयो वृन्दे शब्दादिपूर्वकः ॥ ४६४ |
| विक्रम | २ | विक्रमः शक्तिसंपत्तिः क्रांतिमात्रं च विक्रमः । |
| उत्थित | ३ | उत्थितं विदुरुत्पन्ने प्रोद्यते वृद्धिमत्यपि ॥ ४६५ |
| कार्मुक | २ | शरासने कार्मुकं स्याच्छत्त्रमात्रे च कार्मुकः । |
| अंशुक | ३ | स्यादंशुकं शुक्लवस्त्रे वस्त्रमात्रोत्तरीययोः ॥ ४६६ |

| | | | |
|---|---|---|---|
| गुड | २ | गुडौ गोलेक्षुविकृती स्नुहीगुडिकयोर्गुडा । | गुडा २ |
| विश्रम्भ | २ | विश्रम्भशब्दमिच्छन्ति विश्वासे प्रणयेऽपि च ॥ ४६७ | |
| आत- | | आतञ्चनं प्रतीवापजवनाप्यायनार्थकम् । | ( ञ्चन ३ |
| विकृत | २ | बीभत्सो विकृतो ज्ञेयो विकृतो रोगितेऽपि च ॥ ४६८ | |
| जीवा | १ | ज्या जीवा जीवितं जीवं जीवौ जन्तुबृहस्पती । | जीव ३ |
| साधु | ३ | जानीयाच्छोभनं साधु साधू वार्धुषिसज्जनौ ॥ ४६९ | |
| छाया | ३ | छाया स्यादातपाभावे प्रभाप्रतिमयोरपि । | |
| श्रुति | ३ | आम्नायं श्रुतिमिच्छन्ति श्रोत्रं तत्कर्म च श्रुतिः ॥ ४७० | |
| हरित् | ४ | हरित्ककुभि वर्णे च तृणवाजिविशेषयोः । | |
| जगती | ४ | छन्दोविशेषे जगती पृथिव्यां विष्टपे जने ॥ ४७१ | |
| स्तन- | | मेघनिःस्तनिते मेघे स्तनयित्नुं विदुर्बुधाः । | (यित्नु २ |
| ग्रहराज | २ | ग्रहराजं विदुश्चन्द्रं ग्रहराजो दिवाकरः ॥ ४७२ | |
| मातृ | ३ | मातरौ गोजनन्यौ च रेवत्याद्याश्च मातरः । | |
| चपल | २ | इष्यते चपला विद्युच्चपलं लोलशीघ्रयोः ॥ ४७३ | चपला १ |
| दीप्त | २ | दग्धे विभासिते दीप्तं दृष्टं ज्वलितवद् बुधैः । | ज्वलित २ |
| समिति | ३ | सभासंगमयुद्धेषु भाषन्ते समितिं बुधाः ॥ ४७४ | |
| सिकता | २ | सिकता वालुकायां च देशे च सिकतान्विते । | |
| लता | २ | लता व्रततिराख्याता लता शाखा च शाखिनाम् ॥ ४७५ | |
| चिरिण्टी | २ | स्ववासिन्यां चिरिण्टी स्याद् द्वितीयवयसि स्त्रियाम् । | |
| कुल | ४ | कुलं सजातीयगणे गोत्रे जनपदे तनौ ॥ ४७६ | |
| कौले- | | सारमेये कुलोद्भूते कौलेयक इति स्मृतः । | (यक २ |
| प्रतिभय | २ | भयंकरं प्रतिभयं भयं प्रतिभयं विदुः ॥ ४७७ | |
| अभिग्रह | २ | अभिग्रहोऽभिग्रहणमभियोगोऽप्यभिग्रहः । | |
| अर्थिन् | २ | अर्थिनः स्युर्याचनका अर्थिनः सेवका अपि ॥ ४७८ | |

| | | |
|---|---|---|
| निकृत | २ | निकृतः स्याद्विप्रकृतो निकृतो विप्रलब्ध(म्भ)कः । |
| सृष्ट | ४ | मुक्तनिर्मितयोः सृष्टं सृष्टं निश्चितभूरिणोः ॥ ४७९ |
| द्वितीया | २ | द्वितीया कथ्यते जाया द्वितीया पूरणी द्वयोः । |
| आरम्भ | २ | वदन्ति वधमारम्भमारम्भः समुपक्रमः ॥ ४८० |
| मुक्ति | २ | निःश्रेयसे मोचने च मुक्तिर्मोक्षवदिष्यते । मोक्ष २ |
| शार्ङ्ग | २ | धनुर्मात्रं विदुः शार्ङ्गं शार्ङ्गं विष्णोः शरासनम् ॥ ४८१ |
| चन्द्रहास | २ | चन्द्रहासो रावणासिरासिमात्रे च कुत्रचित् । |
| अन्तावसा- | | अन्तावसायी चाण्डाले नापिते च क्वचिन्मतः ॥४८२ (यिन् २ |
| अपवर्जन | २ | परित्यागे च दाने च जानीयादपवर्जनम् । |
| नियामक | २ | नियामकाः पोतवाहा नियन्तारो नियामकाः ॥ ४८३ |
| समर्याद | २ | समर्यादं समीपं च मर्यादासहितं च यत् । |
| पिण्डित | २ | संख्यातं पिण्डितं ज्ञेयं निबिडं पिण्डितं विदुः ॥ ४८४ |
| आस्य | २ | मुखं मुखान्तरालं च द्वयमास्यमुदाहृतम् । |
| सह्य | ३ | विज्ञेयं सह्यमारोग्यं सह्यौ सोढव्यपर्वतौ ॥ ४८५ |
| छेक | २ | छेको विदग्धश्छेकाश्च गृहासक्तमृगाण्डजाः । |
| आयोधन | २ | आयोधनं घातनं स्याद्युद्धमायोधनं मतम् ॥ ४८६ |
| पीडा | २ | उपमर्दं विदुः पीडां पीडामाहुः कृपामपि । |
| आणि | १ | आणिमश्रिं विजानीयादाणिरक्षाग्रकीलकः ॥ ४८७ |
| अध्यक्ष | १ | प्रत्यक्षं विदुरध्यक्षमध्यक्षोऽधिकृतो मतः । |
| अपाङ्ग | २ | अपाङ्गो लोचनान्तः स्यादपाङ्गस्तिलकेपि च ॥ ४८८ |
| कण्ठ | ३ | समीपगलशब्देषु त्रिषु कण्ठं विदुर्बुधाः । |
| अम्बर | ३ | सुगन्धिद्रव्यभेदे स्यादम्बरं व्योमवस्त्रयोः ॥ ४८९ |
| काय | ३ | कायः शरीरे लक्ष्ये च समूहे च प्रयुज्यते । |
| कलत्र | २ | भार्यायां स्त्रीनितम्बे च कलत्रं कवयो विदुः ॥ ४९० |

भद्र ४ हस्तिभेदे वृषे भद्रः स्याद् भद्रं साधुशर्मणोः ।
मलय २ आरामे मलयं विद्यात्पर्वतावयवे तथा ॥ ४९१
प्रतिकृति २ बुधा विदुः प्रतिकृतिं प्रतिमाप्रतिकारयोः ।
आयस्त ४ आयस्तः क्लेशिते क्षिप्ते कुपिते तेजिते तथा ॥ ४९२
निदाघ ३ उष्णे स्वेदाम्भसि ग्रीष्मे निदाघो घर्मवन्मतः । घर्म ३
प्रसव्य २ बुधाः प्रसव्यमिच्छन्ति प्रतिकूलानुकूलयोः ॥ ४९३
शाला २ शाला तरुस्कन्धशाखा शाला भवनमिष्यते ।
( शाला तरोः स्कन्धशाखा )
नग्न २ विदुर्दिग्वाससं नग्नं नग्ना वैतालिकादयः ॥ ४९४
कदली २ इष्यते कदली रम्भा कदली वैजयन्तिका ।
वेष्टन २ वेष्टनं मुकुटं विद्यादुष्णीषमपि वेष्टनम् ॥ ४९५
संसिद्धि २ सम्यक्सिद्धिः स्वभावश्च द्वयं संसिद्धिवाचकम् ।
अन्तर्गत २ मध्यप्राप्तं विस्मृतं च द्वयमन्तर्गतं विदुः ॥ ४९६
विशिखा २ प्रतोलीं विशिखामाहुर्विशिखा च खनित्रिका ।
उचित २ समञ्जसं स्यादुचितमभ्यस्तमुचितं विदुः ॥ ४९७
कल्पन १ कल्पनं कर्तने क्लृप्तौ कल्पना गजसज्जना । कल्पना २
पितामह २ पितामहः पितृपिता परमेष्ठी पितामहः ॥ ४९८
अहार्य २ अहार्यं ब्रुवते शैलं यच्च हर्तुं न शक्यते ।
प्राध्व २ प्राध्वोऽतिमात्रं प्रणतः प्राध्वं बन्धनमिष्यते ॥ ४९९
व्यति- व्यसने व्यतिषङ्गे च विदुर्व्यतिकरं बुधाः । (कर २
उपराग २ राहुव्यसनयोरुक्तमुपरागपदं बुधैः ॥ ५००
नन्द्या- नन्द्यावर्तं विदुर्वेश्मप्रभेदे तगरद्रुमे । ( वर्त २
परिवाद २ वल्लकीवादनोपाये निर्वादे परिवादवाक् ॥ ५०१
द्यो-दिव् २ द्यौः स्वर्गे नभसि ख्याता द्योशब्दोऽप्यनयोर्मतः ।

शारि २ अक्षोपकरणं शारिः शारिः शकुनिकान्तरम् ॥ ५०२

याप्य २ याप्यं गर्हितमिच्छन्ति याप्यं स्याद्यापनीयकम् ।

प्रतिहत २ प्रतिस्खलितविद्विष्टौ मतौ प्रतिहतार्थकौ ॥ ५०३

प्रसूत २ मतं प्रसूतमुत्पन्नं प्रसूतं कुसुमं विदुः ।

सेवक २ प्रसेवः सेवको ज्ञेयः सेवाजीवी च सेवकः ॥ ५०४

आयोग २ गन्धमाल्योपहारे स्यादायोगे व्यापृतावपि ।

कादम्ब २ कादम्बो विशिखो ज्ञेयः कादम्बो विहगान्तरम् ॥ ५०५

सुकृत २ सुकृतं शोभनं कर्म पुण्यं च सुकृतं मतम् ।

हव ३ इष्यते हव आह्वानं हव आज्ञा हवः क्रतुः ॥ ५०६

विष्टि ४ आजूवेतनयोर्विष्टिः कर्मकृत्कर्मणोरपि ।

( विष्टिं कर्मकरे विद्यात्कर्मवेतनयोरपि । )

तपस्विन् २ तपस्वी चानुकम्पार्हे तपस्वी च तपोधने ॥ ५०७

शुक्ति २ मुक्तास्फोटे स्मृता शुक्तिः शुक्तिर्दुर्नामकेऽपि ( मिकापि ) च ।

नाभि ३ प्राण्यङ्गे क्षत्रिये नाभिः प्रधाननृपतावपि ॥ ५०८

( प्रधाने नृपतावपि ॥ ५०८ )

वडवा २ अश्वायां कुम्भदास्यां च वडवा परिकीर्तिता ।

जर्जर २ इन्द्रध्वजे विशीर्णे च जर्जरं परिचक्षते ॥ ५०९

हरि- कुङ्कुमे देववृक्षे च हरिचन्दनमिष्यते । ( चन्दन २

अग्रज- अग्रजन्मा ब्राह्मणे च ज्येष्ठे भ्रातरि च स्मृतः॥५१० (न्मन् २

द्विजन्मन् २ द्विजन्मा विहगे विप्रे द्विजातिरपि दन्तके । द्विजाति १

( द्विजातिरिव दृश्यते । )

उल्लिखित २ तनूकृतं समुत्कीर्णं द्वयमुल्लिखितं विदुः ॥ ५११

क्षारक २ पक्षिमत्स्यादिपिटके क्षारकः कोरकेपि च ।

गुञ्जा २ वाद्यभाण्डे स्मृता गुञ्जा गुञ्जा स्यात्काकचिञ्चिका ॥ ५१२

| | |
|---|---|
| पिप्पलक २ | स्तनवृन्ते पिप्पलकं तथा सीवनसूत्रके । |
| उर्वरा २ | उर्वरा सर्वसस्या भूरुर्वरा भूमिमात्रकम् ॥ ५१३ |
| प्रखर २ | प्रखरोऽश्वादिसंनाहः प्रखरः स्याद् भृशं खरः । |
| स्थासक २ | चर्चायां स्थासको ज्ञेयः स(स्फ)रादेरपि बुद्बुदे ॥ ५१४ |
| जयन २ | अश्वादीनां च संनाहे जये च जयनं मतम् । |
| चिपिट २ | खाद्यप्रभेदे चिपिटस्तथा पिच्छि(चि)ताविस्तृते ॥ ५१५ |
| सज्जन ३ | घट्टाख्ये गुल्मके साधौ सज्जनं सज्जनः क्रमात् । |
| परुष २ | परुषः कर्बुरो ज्ञेयः परुषं निष्ठुरं वचः ॥ ५१६ |
| संमति २ | संमतिः स्यादनुज्ञानमभिलाषोपि संमतिः । |
| पलित २ | पलितं पाण्डुरः केशः पलितं कर्दमं विदुः ॥ ५१७ |
| विद्ध २ | विद्धं सूच्यादिभिर्भिन्ने सादृश्ये च प्रयुज्यते । |
| पृथुक २ | खाद्यप्रभेदे पृथुकः पृथुकः शिशुकेपि च ॥ ५१८ |
| कुलाय २ | कुलायो नीडवद् दृष्टः स्थाने गेहे च पक्षिणाम् । नीड २ |
| उत्कालिका २ | विद्यादुत्कालिकाशब्दमुत्कण्ठावीचिवाचकम् ॥ ५१९ |
| ईहामृग २ | वृकं रूपकभेदं च द्वयमीहामृगं विदुः । |
| कारि २ | क्रियायां कारिराख्याता नापितादौ च शिल्पिनि ॥ ५२० |
| विदारण २ | विडम्बने भेदने च विदारणमुदाहृतम् । |
| भिन्न ३ | संगते दारिते भिन्नं भिन्नमन्यार्थकं विदुः ॥ ५२१ |
| विच्छिन्न २ | समालब्धे विभक्ते च विच्छिन्नमभिधीयते । |
| विकट २ | विशाले विकराले च विकटं कवयो विदुः ॥ ५२२ |
| स्वप्न २ | स्वप्नः स्वापे च सुप्तस्य विज्ञाने च प्रयुज्यते । |
| निरस्त २ | निष्ठ्यूते त्वरितोक्ते च निरस्तमभिधीयते ॥ ५२३ |
| ग्रस्त २ | ग्रासीकृतं भवेद् ग्रस्तं ग्रस्तं लुप्तपदं वचः |
| म्लिष्ट २ | अविस्पष्टं वचो म्लिष्टं म्लानं म्लिष्टमुदाहृतम् ॥ ५२४ |

| | | | |
|---|---|---|---|
| सनातन | २ | सनातनः स्मृतो विष्णुः शाश्वतं च सनातनम् । | |
| विश्वस्त | १ | विश्वासयोग्यो विश्वस्तो विश्वस्ता विधवा मता ॥५२५ | विश्वस्ता १ |
| गद | २ | गदा शस्त्रं गदो व्याधिर्गदो भ्राता च शार्ङ्गिणः । | गदा १ |
| प्लक्ष | २ | विज्ञेया पर्कटी प्लक्षः प्लक्षः पिप्पलपादपः ॥ ५२६ | |
| शकुन | २ | शुभाशंसिनिमित्ते च खगे च शकुनं विदुः । | |
| आभिनि- | | विसर्जनीयाक्षरयोरभिनिष्टान इष्यते ॥ ५२७ | (ष्टान २ |
| संधिनी | २ | संधिन्यकालदुग्धा गौर्वृषाक्रान्ता च संधिनी । | |
| कङ्कण | ३ | कङ्कणं मण्डणे सूत्रे कङ्कणं करभूषणम् ॥ ५२८ | |
| पलाश | ४ | राक्षसे किंशुके पर्णे पलाशाख्या हरित्यपि । | |
| प्रणिहित | ३ | न्यस्ते समाहिते प्राप्ते विदुः प्रणिहितं बुधाः ॥ ५२९ | |
| सूद | २ | व्यञ्जने सूपकारे च सूदः सूपवदिष्यते । | सूद २ |
| संपद् | २ | गुणोत्कर्षे विभूतौ च संपदुक्ता मनीषिभिः ॥ ५३० | |
| अचल | १ | जानीयादचलां पृथ्वीमचलश्च महीधरः । | अचला १ |
| भोगवती | २ | नागानां नगरीनद्यौ भोगवत्यौ प्रकीर्तिते ॥ ५३१ | |
| प्लवंगम | २ | प्लवंगमः कपौ भेके प्लवगोऽप्यनयोर्मतः । | प्लवग २ |
| संनिधि | २ | प्रत्यक्षे संनिधाने च संनिधिः परिकीर्तितः ॥ ५३२ | |
| उपाहित | २ | उपाहितोनलोत्पात आरोपित उपाहितः । | |
| विवश | २ | विवशः स्यादवश्यात्मा विवशोऽरिष्टदुष्टधीः ॥ ५३३ | |
| अधिक्षिप्त | २ | अधिक्षिप्तं प्रणिहिते भर्त्सिते च प्रयुज्यते । | |
| अभाव | २ | अभावः स्यादसत्तायामभावो निधनार्थकः ॥ ५३४ | |
| प्रज्ञा | २ | प्राज्ञी स्त्री भवति प्रज्ञा प्रज्ञा बुद्धिरुदाहृता । | |
| आसार | ३ | आसारः स्यात्प्रसरणे वेगाद्वर्षे सुहृद्बले ॥ ५३५ | |
| भूयस् | २ | पुनरर्थेऽव्ययं भूयो भूयान्बहुतरार्थकः । | |
| परम | २ | अव्ययं स्यादनुज्ञाने परमं परमः परः ॥ ५३६ | |

| | |
|---|---|
| उदास्थित २ | उदास्थितः प्रतीहारे चरभेदे च कीर्तितः । |
| प्रतिमान २ | प्रतिमानं प्रतिच्छायागजदन्तान्तरालयोः ॥ ५३७ |
| संख्य १ | एकत्वादौ विचारे च संख्या संख्यं च संयुगे । संख्या १ |
| उद्घात २ | पादस्खलितमुद्घात उद्घातः समुपक्रमः ॥ ५३८ |
| दिग्ध २ | विषलिप्तशरो दिग्धो दिग्धो लिप्तार्थवाचकः । |
| प्रार्थित २ | प्रार्थितः प्रार्थनालब्धः प्रार्थितं च हतं विदुः ॥ ५३९ |
| कुमुद ३ | कुमुदं कैरवे ख्यातं कुमुदौ कपिदिग्गजौ । |
| कोकनद १ | रक्ताब्जे रक्तकुमुदे बुधैः कोकनदं स्मृ(म)तम् ॥ ५४० |
| अनेडमूक २ | अनेडमूकमिच्छन्ति शठे वाक्श्रुतिवर्जिते । |
| प्रवचनीय २ | प्रवक्तरि प्रवाच्ये च द्वयोः प्रवचनीयवाक् ॥ ५४१ |
| मदन ४ | मधूच्छिष्टे स्मरे वृक्षे वसन्ते मदनं विदुः । |
| वामन ३ | निखर्वे दिग्गजे विष्णौ वामनः परिकीर्तितः ॥ ५४२ |
| अधिवास २ | अधिवासो निवासो स्यात्संस्कारे धूपनादिभिः । |
| विहार ३ | परिक्रमक्रीडनयोर्विहारः सुगतालये ॥ ५४३ |
| अभिरूप २ | अभिरूपप्राप्तरूपस्वरूपा बुधरूपिणोः । (प्राप्तरूप २, स्वरूप |
| कषाय ५ | द्रवेऽङ्गरागे सुरभौ रसे वर्णे कषायवाक् ॥ ५४४ |
| धर २ | धरा भूमिर्धरः शैलः कर्पासीतूलको धरः । धरा १ |
| शुल्क २ | घट्टे शुल्कं विवाहार्थं जामातुर्गृह्यते च यत् ॥ ५४५ |
| अवतार २ | तीर्थेऽवतरणे विद्यादवतारपदं बुधः । |
| पुण्ड्र ३ | इक्षुचित्रकयोः पुण्ड्रः पुण्ड्राञ्जनपदान्विदुः ॥ ५४६ |
| श्रवण ३ | नक्षत्रे श्रवणो ज्ञेयः श्रवणं श्रुतिकर्णयोः । |
| सूतक २ | पारदाख्ये रसद्रव्ये जनने सूतकं मतम् ॥ ५४७ |
| प्रासाद २ | देवाधिवासे प्रासादः प्रासादो नृपवेश्मनि । |
| दुकूल २ | क्षौमे दुकूलमिच्छन्ति दुकूलं सूक्ष्मवाससि ॥ ५४८ |

राग ४ — रागः क्लेशादिके रक्तौ मात्सर्ये लोहितादिषु ।

मण्डल ३ — समूहे मण्डलं बिम्बे देशे द्वादशराजके ॥ ५४९

भास् २ — प्रभायां किरणे भासा सममंशुरुदाहृतः । — अंशु २

सिक्थ २ — मधूच्छिष्टं स्मृतं सिक्थं सिक्थ ओदनसंभवः ॥ ५५०

उत्पतन २ — ऊर्ध्वं गमनमुत्पत्तिर्द्वयमुत्पतनं मतम् ।

तिक्त २ — शुभगन्धे रसे तिक्तस्तिक्ता स्यात्कटुरोहिणी ॥५५१ — तिक्ता १

कल्माष २ — सितेतरः स्यात्कल्माषः कल्माषः कृष्णपाण्डुरः ।

दम २ — दमो दण्डः समाख्यातो दम इन्द्रियनिग्रहः ॥ ५५२

लेख २ — [illegible]योर्लेखो लेखा राजिरुदाहृता । — लेखा १

प्रविदारण २ — प्रविदारणमाख्यातं विद्वद्भिर्दारणे रणे ॥ ५५३

विष्कम्भ २ — विस्तारे प्रतिबन्धे(बिम्बे) च विष्कम्भः समुदाहृतः ।

अवध्वस्त ३ — समुज्झिते निन्दिते स्यादवध्वस्तोऽवचूर्णिते ॥ ५५४

आपात २ — पतने च तदात्वे च विदुरापातमुत्तमाः ।

प्रवाह २ — प्रवाहशब्दमिच्छन्ति प्रवृत्तिजलवेगयोः ॥ ५५५

आप्लुत २ — आप्लुतः स्नातको ज्ञेय आप्लुतः स्नातमात्रके ।

आत्मयो- — आत्मयोनिर्मतो वेधा आत्मयोनिर्मनोभवः ॥ ५५६ — (नि २

भूमि २ — पृथिव्यां स्थानमात्रे च भूमिर्भूरिव दृश्यते । — भू २

गोप्य २ — गोपनीयं भवेद् गोप्यं गोप्या दासस्य सूनवः ॥ ५५७

संस्कार २ — संस्कारशब्दमिच्छन्ति संकल्पप्रतियत्नयोः ।

प्रवचन २ — विद्यात्प्रवचनं वेदे प्रकृष्टवचनं च यत् ॥ ५५८

मञ्जुल २ — मञ्जुलो मधुरे ख्यातो जलरङ्कुपतत्त्रिणि ।

आकर २ — आकरो निकरो ज्ञेय उत्पत्तिस्थानमाकरः ॥ ५५९

रौहिणेय २ — रौहिणेयो बुधो ज्ञेयो रौहिणेयो हलायुधः ।

संघर्ष २ — संघ(ह)[illegible] स्पर्धायां घर्षणेपि च ॥ ५६०

वालक २ वालकं कटकं विद्यादङ्गुलीयं च वालकम् ।
परायण २ परायणमभीष्टं स्यात्तत्परश्च परायणः ॥ ५६१
विद्रुम २ समुद्रोत्थे प्रवालाख्ये रत्ने वृक्षे च विद्रुमः ।
सहज २ निसर्गे च सहोत्थे च सहजं पण्डिता विदुः ॥ ५६२
प्रतिशिष्ट २ प्रत्याख्याते प्रेषिते च प्रतिशिष्टपदं विदुः ।
उपोढ २ उपोढमूढमात्रेपि समासन्नेपि कीर्तितम् ॥ ५६३
आक्षेप २ आकर्षणं स्यादाक्षेपः स्यादाक्षेपश्च भर्त्सनम् ।
साहस २ बलात्कारकृतं कर्म साहसं साहसं दमः ॥ ५६४
पित्सत् २ पतनेच्छौ विहंगे च पित्सन् पिपातिषन्यथा । पिपातिषत् २
जिगीषा २ जिगीषा जेतुमिच्छायां व्यवसाये च दृश्यते ॥ ५६५
पशु ३ पशुर्मृगादौ छगले पशु दृश्यार्थमव्ययम् ।
बहु २ विपुले त्र्यादिसंख्यासु बहुशब्दः प्रयुज्यते ॥ ५६६
आकलन २ बन्धने कलनायां च विदुराकलनं बुधाः ।
स्तनन २ स्तननं क्रन्दनध्वाने ध्वानमात्रे च कीर्तितम् ॥ ५६७
कञ्चुक ४ कवचे वारबाणे च निर्मोके चापि कञ्चुकः ।
पूर्णपात्र २ वर्धापके पूर्णपात्रं पात्रे पूर्णे जलादिना ॥ ५६८
लक्ष्मी- लक्ष्मीपतिर्वासुदेवे भूमिपालेच दृश्यते । (पति २
वैदेही २ वैदेही पिप्पली प्रोक्ता वैदेही जनकात्मजा ॥ ५६९
अभीक २ आभिकामायिताऽभीकः स्यादभीको भयोज्झितः ।
नत २ नतं बन्धुरमिच्छन्ति नतं कुटिलवाचकम् ॥ ५७०
ययु २ ययुः स्यादस्यमेधाश्वो ययुरश्वोपि केवलः ।
ताम्र २ वर्णप्रभेदे शुल्बे च ताम्रशब्दं विदुर्बुधाः ॥ ५७१
उषस् २ उषसं ब्रुवते संध्यामुषः प्रत्यूषवाचकम् ।
आग्रह २ आग्रहोनुग्रहे दृष्ट आसक्तिग्रहयोस्तथा ॥ ५७२

| | | | |
|---|---|---|---|
| द्वीपवत् २ | द्वीपवत्यः स्मृता नद्यौ द्वीपवानम्बुधौ नदे । | | द्वीपवती १ |
| कुसीद २ | कुसीदिकः कुसीदः स्यात्कुसीदं वृद्धिजीवनम् ॥ ५७३ | | |
| प्रतीक २ | प्रतीकोवयवे ख्यातः प्रतीपेपि क्वचिन्मतः । | | |
| क्षिति २ | क्षये निवासे मेदिन्यां क्षितिशब्दस्त्रिषु स्मृतः ॥ ५७४ | | |
| पिण्याक २ | पिण्याकस्तिलकल्के च सिह्लकेपि प्रयुज्यते । | | |
| सोमवल्क २ | कट्फले शुक्लखदिरे सोमवल्क उदाहृतः ॥ ५७५ | | |
| श्रीपर्ण २ | श्रीपर्णमग्निमन्थाख्ये(ख्यं) पादपे कमलेपि च । | | |
| भूतिक ३ | भूनिम्बे भूस्तृणे प्रोक्तं भूतिकं कत्तृणे तथा ॥ ५७६ | | |
| विधूत २ | विधूतं कम्पिते त्यक्ते धूतमप्यनयोर्मतम् । | | धूत २ |
| अवसित २ | अवसानगते ज्ञाते विद्यादवसितध्वनिम् ॥ ५७७ | | |
| अवलेप २ | गर्वलेपनयोरुक्तमवलेपपदं बुधैः । | | |
| क्षेप २ | क्षेपणे चावहेले च क्षेपशब्दः प्रयुज्यते ॥ ५७८ | | |
| प्रतिपादन २ | बोधने च प्रदाने च प्रतिपादनमिष्यते । | | |
| लूता २ | लूताशब्दं विजानीयादूर्णनाभे पिपीलिके ॥ ५७९ | | |
| घोष ६ | गोपपल्लौ स्वरे घोषो मेघादेरपि निस्वने । | | |
| नियम ४ | यन्त्रणायां प्रतिज्ञायां नियमो निश्चये व्रते ॥ ५८० | | |
| गिरि ४ | गीर्णौ गिरियके(क-) क्रीडागुडके पर्वते गिरिः । | | |
| अण्डज ३ | कृकलासः खगो मीनस्त्रयमण्डजसंज्ञकम् ॥ ५८१ | | |
| ब्राह्मण्य २ | ब्राह्मण्यं ब्राह्मणत्वे च समूहे च द्विजन्मनाम् । | | |
| निकार २ | निकारः परिभावे च धान्यस्योत्क्षेपणेपि च ॥ ५८२ | | |
| तर्क २ | वितर्काकाङ्क्षयोस्तर्कस्तर्क ऊह उदाहृतः । | | |
| विजृम्भित २ | विजृम्भितं विकसिते चेष्टायां च विजृम्भितम् ॥ ५८३ | | |
| विवर २ | विवरश्छिद्ररन्ध्रादीनाहुर्दूषणगर्तयोः । | | (छिद्र २, रन्ध्र २ |
| महाकाल ३ | प्रयुञ्जते महाकालं किंपाके प्रमथेऽपि च (शिवे) ॥ ५८४ | | |

| | | | |
|---|---|---|---|
| अर | ३ | अरमङ्गे रथाङ्गस्य शीघ्रशीघ्रगयो पि । | |
| उद्ग्राहित | २ | बद्धग्राहितयोरुक्तमुद्ग्राहितपदं बुधैः ॥ ५८५ | |
| दर्शक | २ | स्याद्दर्शको दर्शयिता प्रतीहारश्च दर्शकः । | |
| अन्तिक | १ | समीपमन्तिकं विद्यादन्तिकां चुल्लिकामपि ॥५८६ | अन्तिका १ |
| आवेशन | २ | स्यादावेशनमावेशे शालायामपि शिल्पिनाम् । | |
| आस्क- | | विदुरास्कन्दनं युद्धमास्कन्दं च विचक्षणाः ॥ ५८७ | (न्दन २ |
| चोद्य | २ | विस्मये चोदनार्हे च चोद्यमाहुर्मनीषिणः । | |
| विषाणिन् | २ | विषाणिनः स्युः करिणः शृङ्गिणश्च विषाणिनः ॥ ५८८ | |
| विश्लेष | २ | विश्लेषवद्योगः स्याद्वियोगे विधुरे तथा । | अयोग २ |
| गाण्डिव | २ | जिष्णोर्धनुषि कोदण्डे गाण्डीवं गाण्डिवं यथा॥५८९ | (गाण्डीव २ |
| योग्य | २ | प्रवीणोपायिनौ योग्यौ योग्यामभ्यसनं विदुः । | योग्या १ |
| वर्णक | २ | विलेपने चन्दने च शब्दज्ञैर्वर्णकः स्मृतः ॥ ५९० | |
| विश्रब्ध | २ | विश्रब्धशब्दमिच्छन्ति विश्वस्तानुद्धटार्थकम् । | |
| अश्वीय | २ | स्यादश्वहितमश्वीयमश्वीयं चाश्वसंहतिः ॥ ५९१ | |
| निषध | ४ | निषधः कठिने देशे तद्राजे पर्वतान्तरे । | |
| कश्य | ३ | कश्यं मद्ये कशार्हे च हयमध्ये च दृश्यते ॥ ५९२ | |
| दिष्टि | २ | आनन्दे परिमाणे च दिष्टिं बहुविदो विदुः । | |
| वर्ति | ३ | दीपे दीपदशायां च वर्तिर्गात्रानुलेपने ॥ ५९३ | |
| गुप्ति | ३ | गुप्तिः कारा च रक्षा च जी(दी)र्णं च विवरं भुवः॥ ५९४ | |

विभक्तिप्रविभागेण नानारूपैरतः परम् ।
श्लोकपादैः प्रवक्ष्यन्ते शब्दाः श्रुतिसुखावहाः ॥ ५९४

| | | |
|---|---|---|
| केशव २ | केशवौ केशवत्कृष्णौ चक्रिणौ सर्पशार्ङ्गिणौ । | चक्रिन् २ |
| वेधस् २ | वेधसौ हरिधातारौ विधू विष्णुनिशाकरौ ॥ ५९५ | विधु २ |
| विवस्वत् २ | देवसूर्यौ विवस्वन्तौ खगावादित्यपक्षिणौ । | खग २ |
| भानु २ | भानू दीप्तिदिनकरौ प्रभुतिग्म[illegible]नौ ॥ ५९६ | इन २ |
| वृषाकपि २ | वृषाकपी विष्णुशिवौ भीमौ शिवभयानकौ । | भीम २ |
| स्वामिन् २ | स्वामिनौ गृहभर्तारौ मरुतौ पवनामरौ ॥ ५९७ | मरुत २ |
| मुण्ड २ | मुण्डौ मुण्डितमूर्धानौ शारौ शबलमारुतौ । | शार २ |
| अनिमिष २ | सुरमत्स्यावनिमिषौ सिद्धार्थौ बुद्धसर्षपौः ॥ ५९८ | सिद्धार्थ २ |
| श्लोक २ | श्लोकौ यशोवृत्तबन्धौ प्राणोद्योगौ पराक्रमौ । | पराक्रम २ |
| वल्लभ २ | वल्लभौ दयिताध्यक्षौ मधुरौ स्वादुशोभनौ ॥ ५९९ | मधुर २ |
| तार्क्ष्य २ | तुरंगगरुडौ तार्क्ष्यौ ह्रादिन्यौ वज्रविद्युतौ । | ह्रादिनी २ |
| क्लीब २ | षण्ढनिर्विक्रमौ क्लीबौ बुधौ ग्रहविचक्षणौ ॥ ६०० | बुध २ |
| अब्द २ | अब्दौ संवत्सराम्भोदौ शरदावृतुवत्सरौ । | शरद २ |
| शूल २ | शूलौ प्रहरणामयौ पिशुनौ खलसूचकौ ॥ ६०१ | पिशुन २ |
| प्रस्तर २ | प्रस्तरौ मणिपाषाणौ ग्रावाणौ पर्वतोपलौ । | ग्रावन् २ |
| पोत २ | यानपात्राशिशू पोतौ भृङ्गौ धूम्याटषट्पदौ ॥ ६०२ | भृङ्ग २ |
| ऋक्ष २ | ऋक्षौ नक्षत्रभल्लूकौ श्येनौ श्येतविहंगमौ । | श्येन २ |
| ध्वाङ्क्ष २ | बालिपुष्टबकौ ध्वाङ्क्षौ नीचमूर्खौ पृथग्जनौ ॥ ६०३ | पृथग्जन २ |
| वाजिन् २ | वाजिनौ पक्षितुरगौ वृद्धौ स्थविरपण्डितौ । | वृद्ध २ |
| वार २ | विसरावसरौ वारौ पाकौ पचनबालकौ ॥ ६०४ | पाक २ |
| सित २ | सितौ च बद्धधवलौ कुब्जौ च हनुगह्वरौ । | कुब्ज २ |
| मूढ २ | मूढौ च तन्द्रितजडौ शितौ च धवलासितौ ॥ ६०५ | मूढ २ |

| | | |
|---|---|---|
| बर्ह २ | शिखिपिच्छदलौ बर्हौ बाणभृङ्गौ शिलीमुखौ । | शिलीमुख २ |
| भुजंग २ | भुजंगौ षिड्गभुजगौ शकुन्तौ भासपक्षिणौ ॥६०६ | शकुन्त २ |
| निवेश २ | निवेशौ शिबिरोद्वाहौ जिह्मौ कुटिलमन्दकौ । | जिह्म २ |
| विश्व २ | विश्वसंज्ञौ जगत्सर्वौ चित्रदर्पौ च विस्मयो ॥६०७ | विस्मय २ |
| हरिण २ | हरिणौ पाण्डुरमृगौ जीमूतौ मेघपर्वतौ । | जीमूत २ |
| उपल २ | उपलौ रत्नपाषाणौ बालिशौ मूर्खशावकौ ॥ ६०८ | बालिश २ |
| निपाक २ | निपाकौ पचनस्वेदौ गेयौ गातव्यगायनौ । | गेय २ |
| गरुत्मत् २ | पक्षितार्क्ष्यौ गरुत्मन्तौ प्राप्तौ लब्धसमञ्जसौ ॥ ६०९ | प्राप्त २ |
| पयोधर २ | पयोधरौ स्त्रीस्तनाब्दौ संस्तरौ प्रस्तराध्वरौ । | संस्तर २ |
| आमिष २ | आमिषौ पललोत्कोचौ कृषकौ फालकर्षकौ ॥ ६१० | कृषक २ |
| दायाद २ | सापिण्डपुत्रौ दायादौ मातङ्गौ श्वपचद्विपौ । | मातङ्ग २ |
| श्वशुर्य२,तुषा- | श्वशुर्यौ देवरश्या(स्या)लौ तुषारौ हिमशीकरौ ॥ ६११ | (र २ |
| जम्बुक २ | जम्बुकौ क्रोष्टुवरुणौ स्पशौ प्रणिधिसंगरौ । | स्पश २ |
| नीलकण्ठ २ | नीलकण्ठौ शिखिहरौ नरेन्द्रौ नृपवार्तिकौ ॥ ६१२ | नरेन्द्र २ |
| संभोग २ | रतभोगौ च संभोगौ देहात्मानौ च पुद्गलौ । | पुद्गल २ |
| शिखण्ड २ | शिखण्डौ च शिखाबर्हौ क्षेत्रज्ञौ चात्माशिक्षितौ॥६१३ | क्षेत्रज्ञ २ |
| जम्भ २ | रदाभ्यवहृती जम्भौ संबाधौ योनिसंकटौ । | संबाध २ |
| स्फुट २ | स्फुटौ व्याकोशविशदौ विकाशौ विजनस्फुटौ ॥ ६१४ | स्फुट २ |
| सेनानी २ | सेनान्यौ गुहसेनापौ विगतौ वीतानिष्प्रभौ । | विगत २ |
| त्रास २ | मणिदोषदरौ त्रासौ पार्ष्णिगप्रसभौ हठौ ॥ ६१५ | हठ २ |
| अर्घ २ | पूजाप्रतिक्रियावर्घौ पिण्डौ पुद्गलगोलकौ । | पिण्ड २ |
| शाण २ | मानभेदकषौ शाणौ भ्रातृव्यौ भ्रातृजाद्विषौ ॥६१६ | भ्रातृव्य २ |
| आमोद २ | प्रमोदगन्धावामोदौ स्थूलौ निष्प्रज्ञपीवरौ । | स्थूल २ |
| आभोग २ | आभोगौ पूर्णतायत्नौ शक्रौ कुटजवासवौ ॥ ६१७ | शक्र २ |

| | | |
|---|---|---|
| प्रतिघ २ | प्रतिघौ रुट्प्रतीघातावादित्यौ देवभास्करौ । | आदित्य २ |
| सामज २ | सामजौ गजसामोत्थौ देवौ सुरमहीभुजौ ॥ ६१८ | देव २ |
| अण्डीर २ | अण्डीरौ शक्तपुरुषौ धीरौ मन्थरपण्डितौ । | धीर २ |
| विस्तार २ | विस्तारौ विस्तृतिस्तम्बवादृतौ सादरार्चितौ ॥ ६१९ | आदृत २ |
| मन्थ २ | मन्थौ साक्तवमन्थानौ वृषभौ वृषपुंगवौ । | वृषभ २ |
| संकीर्ण,मूर्च्छि- | संकीर्णौ निचिताशुद्धौ मूर्च्छितौ मूढसोच्छ्रयौ ॥ ६२० | (त २ |
| धनपति २ | कुबेराढ्यौ धनपती एतावागतकर्बुरौ । | एत २ |
| ऊर्ज २ | उत्साहकार्तिकावूर्जौ यक्षौ यक्षेशगुह्यकौ ॥ ६२१ | यक्ष २ |
| कोक २ | चक्रवाकवृकौ कोकौ रक्षोवृक्षौ पलाशिनौ । | पलाशिन् २ |
| डिम्भ २ | वैधेयबालकौ डिम्भौ राहूत्पातावुपप्लवौ ॥ ६२२ | उपप्लव २ |
| विशारद २ | विशारदौ धृष्टबुधौ मिथुने युग्मदम्पती । | मिथुन २ |
| मैथुन २ | मैथुने रतसंबन्धौ तालिमे तल्पकुट्टिमौ ॥ ६२३ | तालिम २ |
| सचिव २ | मन्त्रिसहायौ सचिवौ नाशावज्ञे पराभवौ । | पराभव २ |
| आविद्ध २ | आविद्धौ कुटिलक्षिप्तौ भर्तारौ स्वामिधारकौ ॥ ६२४ | भर्तृ २ |
| करट २ | काकेभगण्डौ करटावुत्सेधौ वपुरुन्नती । | उत्सेध २ |
| दन्त २ | दन्तौ रदाद्रिकटकावसुराशीविषावही ॥ ६२५ | अहि २ |
| अज ३ | अजा विष्णुहरच्छागा बलिहस्तांशवः कराः । | कर ३ |
| अवि ३ | अवयश्चाद्रिमेषार्का गोष्ठाध्वानिवहा व्रजाः ॥ ६२५ | व्रज ३ |
| वृत्र ३ | ध्वान्तदैत्यारतो वृत्रा अद्रयोर्कागिरिद्रुमाः । | अद्रि ३ |
| वर्चस् ३ | वर्चांसि रूपविड्भासो दन्तविप्राण्डजा द्विजाः ॥६२७ | द्विज ३ |
| गृह २ | गृहा गेहं गृहा दाराः कुटो वेश्म कुटो घटः । | कुट २ |
| शस्त्र, पयस् २ | शस्त्रं हेतिरयः शस्त्रं पयः क्षीरं पयोम्बु च (घृतम्) ॥ ६२८ | |
| उस्र,उस्रा १ | गभस्तिरुस्र उस्रा गौर्द्युतिः कान्तिर्द्युतिः प्रभा । | द्युति २ |
| उरस् १ | उरो वक्ष उरः श्रेष्ठं ज्या मौर्वी ज्या वसुन्धरा ॥६२९ | ज्या २ |

| | | |
|---|---|---|
| श्वेत २ | श्वेतं रूप्यं सितः श्वेतस्तपा माघस्तपो व्रतम् । | तपस् २ |
| सूक्ष्म, नभ- | सूक्ष्मोणुः सूक्ष्ममध्यात्मं नभः खं श्रावणो नभाः ॥६३० | (स् २ |
| वन २ | वनं नीरं वनं सत्रं विषं क्ष्वेडो विषं जलम् । | विष २ |
| भर्मन्, त्विष् २ | भर्म हेम भृतिर्भर्म त्विषः शोभास्त्वि(त्वि)षो रुचः ॥ ६३१ | |
| भीरु २ | भीरु स्त्री कातरो भीरुर्घृतमाज्यं घृतं जलम् । | घृत २ |
| क्षीर २ | क्षीरमम्बु पयः क्षीरमभ्रं व्योमाभ्रमम्बुदः ॥ ६३२ | अभ्र २ |
| मद २ | मदो गर्वो मदो हर्ष ऋतं सत्यमृतं शिलम् । | ऋत २ |
| युत २ | युतं पृथग्युतं युक्तं यतिः कारो यतिर्यती ॥ ६३३ | यति २ |
| कार २ | कारो बलिर्यातिः कारो जलमम्बु जलो जडः । | जल २ |
| काव्य, सहस् २ | काव्यं ग्रन्थो ग्रहः काव्यः सहा मासः सहो बलम् ॥ ६३४ | |
| क्रोड २ | वक्षः क्रोडः किरः क्रोडः शुषिः शोषः शुषिर्बिलम् । | शुषि २ |
| व्यक्त २ | व्यक्तं स्फुटं बुधो व्यक्तश्चरश्चारश्चरश्चलः ॥ ६३५ | चर २ |
| सेव्य २ | सेवार्होशीरयोः सेव्यं लभ्यं लब्धव्ययुक्तयोः । | लभ्य २ |
| शल्य २ | शलाकाबाणयोः शल्यं स्वरुर्यूपाङ्गवज्रयोः ॥ ६३७ | स्वरु २ |
| चेल २ | वस्त्रगर्हितयोश्चेलमशनिर्वज्रविद्युतोः । | अशनि २ |
| वृषाकपायी २ | वृषाकपायी श्रीगौर्योरम्बिका मातृकोमयोः ॥ ६३७ | अम्बिका २ |
| हैमवती २ | वचागौर्योर्हैमवती वर्जनं त्यागहिंसयोः । | वर्जन २ |
| अर्ति २ | चापाग्रपीडयोरार्तिरतसीदुर्गयोरुमा ॥ ६३८ | उमा २ |
| लीला २ | लीलाविलासक्रिययोर्विभ्रमो भ्रान्तिहावयोः । | विभ्रम २ |
| महिषी २ | महिषी पशुराट्पत्न्योस्तन्द्री निद्राप्रमीलयोः ॥ ६३९ | तन्द्री २ |
| बन्ध २ | आधिबन्धनयोर्बन्धः कार्यहेत्वोः प्रयोजनम् । | प्रयोजन २ |
| स्वेद २, सर- | घर्मस्वेदनयोः स्वेदः सरणिः पङ्क्तिमार्गयोः ॥ ६४० | (णि २ |
| गणिका २ | वेश्याकारिण्योर्गणिका स्यादर्हञ्जिनपूज्ययोः । | अर्हत् २ |
| वज्र २ | रत्नशक्रास्त्रयोर्वज्रं रङ्गसीसकयोस्त्रपु ॥ ६४१ | त्रपु २ |

| | | | | |
|---|---|---|---|---|
| लोक | २ | जनविष्टपयोर्लोकः पवित्रं कुशपूतयोः । | पवित्र | २ |
| व्यग्र | २ | व्यापृताकुलयोर्व्यग्रः प्रजा संतानलोकयोः ॥ ६४२ | प्रजा | २ |
| अनीक | २ | अनीकं सैन्यमृधयोर्जीवातुर्जायुजीवयोः । | जीवातु | २ |
| हेति | २ | आयुधज्वालयोर्हेतिरर्चिर्ज्वालामयूखयोः ॥ ६४३ | अर्चिस् | २ |
| रश्मि | २ | रश्मिर्घृणिप्रग्रहयोर्भूरि प्राज्यसुवर्णयोः । | भूरि | २ |
| प्रकाश | २ | स्फुटभासोः प्रकाशः स्यान्महद्राज्यविशालयोः ॥ ६४४ | महत् | २ |
| भाग | २ | भाग्यैकदेशयोर्भागः सोम ओषधिचन्द्रयोः । | सोम | २ |
| राशि | २ | मेषादिपुञ्जयो राशिः सत्यं शपथतथ्ययोः ॥ ६४५ | सत्य | २ |
| भव्य | २ | योग्यकल्याणयोर्भव्यं हिमं शीततुषारयोः । | हिम | २ |
| शुभ्र | २ | शुक्लप्रदीप्तयोः शुभ्रं पलमुन्मानमांसयोः ॥ ६४६ | पल | २ |
| प्रीति | २ | प्रेमप्रमोदयोः प्रीतिर्धृतिर्धारणसौख्ययोः । | धृति | २ |
| इष्टि | २ | इष्टिर्यागेच्छयोरुक्ता भृतिर्भरणमूल्ययोः ॥ ६४७ | भृति | २ |
| कृत | २ | कृतं पर्याप्तयुगयोः क्रव्यान्मांसाशिरक्षसोः । | क्रव्याद् | २ |
| न्यग्रोध | २ | न्यग्रोधो व्यामवटयोर्विन्दुर्वेदितृविप्रुषोः ॥ ६४८ | विन्दु | २ |
| अङ्क | २ | उत्सङ्गलक्ष्मणोरङ्कश्चर्म स्यात्फलकत्वचोः । | चर्मन् | २ |
| मोह | २ | अविद्यामूर्च्छयोर्मोहश्चिकुरश्चलकेशयोः ॥ ६४९ | चिकुर | २ |
| ग्राह | २ | ग्रहावहारयोर्ग्राहश्चोक्षो गीतमनोज्ञयोः । | चोक्ष | २ |
| भेल | २ | प्लवभीलुकयोर्भेलः कीलालमसृगम्बुनोः ॥ ६५० | कीलाल | २ |
| दस्यु | २ | रिपुतस्करयोर्दस्युर्मतिरिच्छामनीषयोः । | मति | २ |
| रण | २ | रणः स्यात्क्वाणमृधयोर्लवश्छेदनलेशयोः ॥ ६५१ | लव | २ |
| मर्यादा | २ | मर्यादा धारणासीम्नोरिज्या यजनपूजयोः । | इज्या | २ |
| विरुध् | २ | लताविटपयोर्विरुज्जयन्तीदुर्गयोर्जया ॥ ६५२ | वपा | २ |
| भित्ति | २ | प्रदेशकुड्ययोर्भित्तिर्वपा विवरमेदसोः । | जया | २ |
| सती | २ | सती हैमवतीसाध्व्योर्मूल्यं वेतनवस्नयोः ॥ ६५३ | मूल्य | २ |

| | | |
|---|---|---|
| लङ्का २ | नगरीशाखयोर्लङ्का प्रसूनं फलपुष्पयोः । | प्रसून २ |
| रत्न २ | मणिप्रकृष्टयो रत्नं प्रतिपत्तिथिसंविदोः ॥ ६५४ | प्रतिपद् २ |
| चिह्न २ | पताकालक्ष्मणोश्चिह्नं गैरिकं धातुरुक्मयोः । | गैरिक २ |
| व्रज्या २ | वर्गप्रस्थानयोर्व्रज्या वाहिनी सिन्धुसेनयोः ॥ ६५५ | वाहिनी २ |
| अर्वन् २ | अश्वकुत्सितयोरर्वा गह्वरं बिलदम्भयोः । | गह्वर २ |
| बाष्प २ | ऊष्मनेत्राम्भसोर्बाष्पः प्रेम स्निग्धत्वनर्मणोः ॥ ६५६ | प्रेमन् २ |
| निन्दा २ | कुत्सापवादयोर्निन्दा सुतः पुत्रमहीभुजोः । | सुत २ |
| शास्त्र २ | निदेशागमयोः शास्त्रं प्रवेणीकुशयोः कुथः ॥ ६५७ | कुथ २ |
| त्वक् २ | त्वक्चर्मवल्कयोरुक्ता सदृशव्याजयोर्निभः । | निभ २ |
| डिम्ब २ | प्लीहविप्लवयोर्डिम्बः शुद्धः केवलपूतयोः ॥ ६५८ | शुद्ध २ |
| सामिधेनी २ | ऋक्सामिधोः सामिधेनी लक्षणं नामचिह्नयोः । | लक्षण २ |
| शान्ति २, कान्ति २ | कल्याणशमयोः शान्तिः कान्तिः शोभेच्छयोः स्मृता ॥ ६५९ | |
| योनि २ | आकरोपस्थयोर्योनिरोघो वृन्दाम्बुवेगयोः । | ओघ २ |
| स्वैर २ | मन्दस्वच्छन्दयो स्वैरो योग्यपण्डितयोः कृती ॥ ६६० | कृतिन् २ |
| वृष्णि २ | मेषयादवयोर्वृष्णिर्विलग्नो मध्यलग्नयोः । | विलग्न २ |
| शाद २ | शष्पकर्दमयोः शादो द्रोणो वायसमानयोः ॥ ६६१ | द्रोण २ |
| वसाति २ | वसातिर्वेश्मयामिन्योः क्षवथुः क्षुतकासयोः । | क्षवथु २ |
| प्रतीहार २ | द्वाःस्थद्वारोः प्रतीहारः सायकः शरखड्गयोः ॥ ६२२ | सायक २ |
| शङ्का २ | वितर्कत्रासयोः शङ्का बन्धनं वृत्तबन्धयोः । | बन्धन २ |
| रूक्ष २ | परुषास्निग्धयो रूक्षः कोमलातिग्मयोर्मृदुः ॥ ६६३ | मृदु २ |
| अन्त्य २ | अधमान्तभुवोरन्त्यो वाडवो ब्राह्मणौर्वयोः । | वाडव २ |
| घृणा २ | घृणा जुगुप्साकृपयोरवटः कूपगर्तयोः । ६६४ | अवट २ |
| ऊति २ | स्यूतिरक्षणयोरूतिः सातिर्दानावसानयोः । | साति २ |
| सेवन २ | सेवनं सीवनोपास्त्योर्द्रुतं शीघ्रविलीनयोः ॥ ६६५ | द्रुत २ |

| | | | | |
|---|---|---|---|---|
| सव्य | २ | वामदक्षिणयोः सव्यमधमो न्यूनगर्ह्ययोः । | अधम | २ |
| प्रेक्षा | २ | धीनृत्यदर्शयोः प्रेक्षा मूर्तिः काठिन्यकाययोः ॥ ६६६ | मूर्ति | २ |
| यात्रा | २ | वृत्तिप्रस्थानयोर्यात्रा धनं गोधनवित्तयोः । | धन | २ |
| अर्चा | २ | प्रतिमापूजयोरर्चा मह उत्सवतेजसोः ॥ ६६७ | महस् | २ |
| आप्ति | २ | प्राप्तिसंबन्धयोराप्तिर्लक्ष्म चिह्नप्रधानयोः । | लक्ष्मन् | २ |
| | | ( ... ... ... लक्ष्मचिह्नप्रधानयोः । ) | | |
| चित्र | २ | नवेऽ(?)विचारिते चित्रं वदान्यो दातृवाग्मिनोः । | वदान्य | २ |
| हिंसा | २ | चौर्यादिवधयोर्हिंसा जामिः स्वसृकुलस्त्रियोः ॥ ६६८ | जामि | २ |
| लेप | २ | जग्धिलेपनयोर्लेपः स्यादन्नं भक्तभुक्तयोः । | अन्न | २ |
| विद्वस् | २ | विद्वान् विदत्पण्डितयोर्गोपतिः षण्डसूर्ययोः ॥ ६६९ | गोपति | २ |
| श्रद्धा | २ | श्राद्धत्वकाङ्क्षयोः श्रद्धा भूतिः संपत्तिभस्मनोः । | भूति | २ |
| बाधा | २ | निषेधदुःखयोर्बाधा क्षुल्लकः पामराल्पयोः ॥ ६७० | क्षुल्लक | २ |
| करेणु | २ | करेणुर्गजहस्तिन्योर्वर्तनी वृत्तिमार्गयोः । | वर्तनी | २ |
| व्रतति | २ | विस्तारवल्ल्योर्व्रततिराकृतिः कायरूपयोः ॥ ६७१ | आकृति | २ |
| स्नेह | २ | स्नेहस्तैलादिकप्रेम्णोरक्षरं ब्रह्मवर्णयोः । | अक्षर | २ |
| कर्षू | १ | कर्षूर्नदीकरीषाग्न्योर्भरोऽतिशयभारयोः ॥ ६७२ | भर | २ |
| गुह्य | २ | उपस्थरहसोर्गुह्यमनूकं कुलशीलयोः । | अनूक | २ |
| राष्ट्र | २ | विषयोत्पातयो राष्ट्रमागः पापापराधयोः ॥ ६७३ | आगस् | २ |
| मध्य | २ | न्याय्यावलग्नयोर्मध्यं चर्चा स्थासकचिन्तयोः । | चर्चा | २ |
| रथ्या | २ | रथौघमार्गयो रथ्या मृत्युयाचितयोर्मृतम् ॥ ६७४ | मृत | २ |
| स्रोतस् | २ | स्रोतोम्बुवेगेन्द्रिययोश्छद्मस्खलितयोश्छलम् । | छल | २ |
| अट्ट | २ | अत्यर्थगृहयोरट्टः प्रस्थः स्यात्सानुमानयोः ॥ ६७५ | प्रस्थ | २ |
| अन्य | २ | इतरासदृशोरन्य उडुपश्चन्द्रभेलयोः । | उडुप | २ |
| छन्द | २ | छन्दोभिप्रायवशयोः संस्था स्थितिविनाशयोः ॥ ६७६ | संस्था | २ |

वीचि २ स्वल्पकल्लोलयोर्वीचिराहिभुक्केकिताक्ष्यर्योः। आहिभुज् २
द्विजिह्व २ द्विजिह्वः सर्पखलयोर्निजमात्मीयानित्ययोः ॥ ६७७ निज २
क्षोद २ धूलिपेषणयोः क्षोदो रभसो वेगहर्षयोः। रभस २
पालि २ कुटीग्रामकयोः पालिः सखा मित्रसहाययोः ॥ ६७८ सखि २
व्यूढ २ विन्यस्ते संहते व्यूढश्चारो बन्धापसर्पयोः। चार २
आशुग २ आशुगो मारुते बाणे वैशाखो मासमन्थयोः। ६७९ वैशाख २
आशा २ आशा ककुभि तृष्णायां स्वादुर्मृष्टमनोज्ञयोः। स्वादु २
मार्गण २ मार्गणो याचके बाणे जातं जन्मसमूहयोः ॥ ६८० जात २
नियति २ नियतिः संयमे दैवे प्रकारस्तुल्यभेदयोः। प्रकार २
व्यवाय २ व्यवायः सुरतेऽन्तर्धौ धन्वपर्वतयोर्मरुः ॥ ६८१ मरु २
कुम्भ २ गजाङ्गे कलशे कुम्भः पताकाचिह्नयोर्ध्वजः। ध्वज २
भ्रूण २ भ्रूणोऽर्भके स्त्रैणगर्भे प्रियङ्गुः कङ्गुवृक्षयोः ॥६८२ प्रियङ्गु २
आकल्प २ आकल्पः कल्पने वेषे निस्त्रिंशः क्रूरखड्गयोः। निस्त्रिंश २
संप्रयोग २ रतेऽन्वितौ संप्रयोगः कलङ्कोऽङ्कापवादयोः ॥ ६८३ कलङ्क २
प्राप्ति २ उदयेऽधिगमे प्राप्तिः क्षारः स्यात्काचभस्मनोः। क्षार २
वह २ वहो वाहे गवां स्कन्धे पद्धतिः पङ्क्तिवर्त्मनोः ॥६८४ पद्धति २
शल्क २ वल्कले शकले शल्कं प्रगाढं दृढकृच्छ्रयोः। प्रगाढ २
स्वभू २ स्वभूर्वेधसि गोविन्दे शुक्तं स्यात्परुषाम्लयोः ॥ ६८५ शुक्त २
क्षुण्ण २ व्युत्पन्ने प्रहते क्षुण्णो निशान्तं गेहशान्तयोः। निशान्त २
गोधा २ गोधा तले निहाकायां विभुः स्यात्प्रभुनित्ययोः ॥ ६८६ विभु २
त्रयी २ त्रयी त्रिवेद्यां त्रितये निषङ्गः सङ्गतूणयोः। निषङ्ग २
भ्रमर २, भूता- भ्रमरः कामुके भृङ्गे भूतात्मा धातृदेहयोः ॥ ६८७ (त्मन् २
द्रुम २ द्रुमस्तरौ पारिजाते भाण्डहव्यान्नयोश्चरुः। चरु २
कराल २ करालो दन्तुरे तुङ्गे न्यक्षं कार्त्स्न्यनिकृष्टयोः ॥ ६८८ न्यक्ष २

| | | |
|---|---|---|
| अदस् २ | अदः परस्मिन्नत्रापि व्यूहो विन्यासवृन्दयोः । | व्यूह २ |
| स्तिमित २ | स्तिमितोऽतरले क्लिन्ने कष्टं गहनकृच्छ्रयोः ॥ ६८९ | कष्ट २ |
| विकार २ | विकारो विकृतौ रोगे विरोधो नाशरोधयोः । | विरोध २ |
| संरोध २ | क्षेपे रोधे च संरोधो गाथा वाग्भेदवृत्तयोः ॥ ६९० | गाथा २ |
| विशद २ | प्रव्यक्ते विशदः शुक्ले निधनं कुलनाशयोः । | निधन २ |
| अर्घ्य २ | अर्घ्यो विपाश्चिति न्याय्ये बल्लवो गोपसूदयोः ॥६९१ | बल्लव २ |
| पल्लव २ | पल्लवो विटपे षिङ्गे किट्टकिल्बिषयोर्मलम् । | मल २ |
| पीति २ | पीतिस्तुरंगमे पाने वित्तं द्रव्यप्रकाशयोः ॥ ६९२ | वित्त २ |
| धेनुका २ | करिण्यां धेनुका धेनौ हेलावज्ञाविलासयोः । | हेला २ |
| दुर्गति, क्रिमि २ | दुर्गतिर्नरके नैःस्व्ये क्रि(कृ)मिः स्यात्कीटलाक्षयोः ॥ ६९३ | |
| वृत्ति २ | वर्तने विवृतौ वृत्तिस्तरः स्याद्बलवेगयोः । | तरस् २ |
| जनपद २ | देशे जने जनपदः प्रवृत्तिर्वृत्तिवार्त्तयोः ॥ ६९४ | प्रवृत्ति २ |
| शाखा २ | शाखा भुजे पादपाङ्गे लुब्धो मृगयुकाङ्क्षिणोः । | लुब्ध २ |
| समाघात २ | समाघातो वधे युद्धे धावनं गतिशौचयोः ॥ ६९५ | धावन २ |
| व्युष्टि २ | व्युष्टिः फले समृद्धौ च यानं गमनयुग्ययोः । | यान २ |
| स्नान २ | स्नानीये सवने स्नानं सैन्धवो लवणाश्वयोः॥ ६९६ | सैन्धव २ |
| वर्धन २ | वर्धनं छेदने वृद्धौ रहः सुरतगुह्ययोः । | रहस् २ |
| वीर २ | उत्तमे सुभटे वीरः प्रज्ञानं बुद्धिचिह्नयोः ॥ ६९७ | प्रज्ञान २ |
| कर्बुर २ | किर्मिरे कर्बुरं हेम्नि गाङ्गेयं गाङ्गरुक्मयोः । | गाङ्गेय २ |
| पूग २ | समूहे पादपे पूगः शूकोऽनुक्रोशशुङ्गयोः ॥ ६९८ | शूक २ |
| अभीषु २ | अभीषुः(शुः) प्रग्रहे भासि बर्हिर्दर्भहुताशयोः । | बर्हि २ |
| अर्य २, निकृति २ | अर्यः स्वामिनि वैश्ये च निकृतिः शठशाठ्ययोः ॥ ६९९ | |
| पक्ति २ | पक्तिः स्याद् गौरवे पाके रतिः सुरतरागयोः । | रति २ |
| नर २ | नरः स्यादर्जुने मर्त्ये नालीकश्च शराब्जयोः॥७०० | नालीक २ |

| | | |
|---|---|---|
| दुर्वर्ण २ | रूप्ये कुवर्णे दुर्वर्णमाभीलं भीष्मकृच्छ्रयोः । | आभील २ |
| खर्जूर२,वाशि- | फले रूप्ये च खर्जूरं वाशिता करिणीस्त्रियोः ॥ ७०१ | (ता२ |
| अनृत २ | अनृतं कृषावसत्ये तक्षकस्तक्षनागयोः । | तक्षक २ |
| वेश २ | वेश्यावासे गृहे वेशो भास्वान्भास्वरसूर्ययोः ॥७०२ | भास्वत्२ |
| हृदय २ | हृदयं वक्षसि स्वान्ते पुरुषो मानवात्मनोः । | पुरुष २ |
| कलित २ | ज्ञाते गृहीते कलित ईहा स्यादुद्यमेच्छयोः ॥ ७०३ | ईहा २ |
| अर्ध २ | खण्डेऽर्धः समभागेऽर्धं प्रदोषो दोषकालयोः । | प्रदोष २ |
| मित्र२,समु- | मित्रं सुहृदि मित्रोऽर्के वैरोन्नत्योः समुच्छ्रयः॥७०४ | च्छ्रय२ |
| रोक २ | दीप्तौ रोको बिले रोकं नाकः स्वर्गान्तरिक्षयोः । | नाक २ |
| दल २ | दलं खण्डे दलं पत्रे पुष्पमार्तवसूनयोः ॥ ७०५ | पुष्प २ |
| संव्यान २ | संव्यानं छादने वस्त्रे भरणं वेतने भृतौ । | भरण २ |
| कञ्चुकिन्२ | स्थापत्ये कञ्चुकी सर्पे वेल्लितं कुटिले धुते ॥ ७०६ | वेल्लित २ |
| त्रेता २ | वह्नित्रये युगे त्रेता रैशब्दः कनके धने । | रै २ |
| चित्रक २ | ओषधौ चित्रको व्याघ्रे पलाशे गरुतिच्छदः ॥ ७०७ | छद२ |
| रिष्ट २ | रिष्टं स्यादशुभे पापे शस्ताकारे तनौ वपुः । | वपुस् २ |
| स्तम्भ २ | स्तम्भो जडत्वे स्थूणायां निर्यासे नर्मणि द्रवः ॥ ७०८ | द्रव २ |
| शील २ | शीलं स्वभावे सद्वृत्ते छले द्यूते च कैतवम् । | कैतव २ |
| उत्कट२,कील२ | उत्कटः प्रबले क्षीबे स्थाणौ ज्वाले च कीलवाक् ॥ ७०९ | |
| उदर्चिस् २ | उदर्चिरुत्प्रभे वह्नौ पुरं स्यान्नगरे गृहे । | पुर २ |
| वृद्धि २ | आनन्दे वर्धने वृद्धिः कृष्टिराकर्षणे बुधे ॥ ७१० | कृष्टि २ |
| जघन्यज २ | जघन्यजोऽनुजे शूद्रे शालपर्ण्यां भुवि स्थिरा । | स्थिरा २ |
| तृणता २ | तृणत्वे तृणता चापे कारुः शिल्पिनि कारके ॥ ७११ | कारु २ |
| अण्ड २ | मुष्के खगादिकोशेऽण्डं द्वापरः संशये युगे । | द्वापर २ |
| भक्ति २ | विभागे सेवने भक्तिस्तरणिर्नौवि भास्करे ॥ ७१२ | तरणि २ |

| | | |
|---|---|---|
| एनस् २ | एनोपराधे दुरिते वरेण्ये पुंगवो वृषे । | पुङ्गव २ |
| पूज्य २ | पूजार्हे श्वशुरे पूज्यो हृषीके रेतसीन्द्रियम् ॥ ७१३ | इन्द्रिय २ |
| आनक २ | आनकः पटहे भेर्यां मन्दिरं नगरे गृहे । | मन्दिर २ |
| इतर २ | इतरः पामरेऽन्यस्मिन्दक्षे चारौ च पेशलः ॥ ७१४ | पेशल २ |
| वर्त्मन् २ | वर्त्म नेत्रच्छदे मार्गे प्रोक्षणं सेचने वधे । | प्रोक्षण २ |
| कारण २ | कारणं घातने हेतावम्बायां मातरिः प्रसूः ॥ ७१५ | प्रसू २ |
| त्रिदिव २ | स्वर्गेन्तरिक्षे त्रिदिवं दानं गजमदे दितौ । | दान २ |
| हविस् २ | हविः सर्पिषि होतव्ये मल्लः पात्रे बलीयसी ॥ ७१६ | मल्ल २ |
| उपस्थ २ | उपस्थः शिश्न उत्सङ्गे कुब्जे पृष्ठगुडे गडुः । | गडु २ |
| यन्तृ २ | यन्ता हस्तिपके सूते गृथे क्षुद्रेऽप्यवस्करः ॥ ७१७ | अवस्कर २ |
| खड्ग २ | निस्त्रिंशे गण्डके खड्गः प्रणिधिः प्रार्थने चरे । | प्रणिधि २ |
| वञ्चुक २ | वञ्चुको जम्बुके धूर्ते दुर्विधो दुर्गते खले ॥ ७१८ | दुर्विध २ |
| ऋषि २ | ऋषिर्वेदे वसिष्ठादौ गिरीशोऽद्रिपतौ शिवे । | गिरीश २ |
| अस्त्र २ | अस्त्रं स्यादायुधे चापे कदम्बाख्या द्रुमे चये ॥ ७१९ | कदम्ब २ |
| कबन्ध २ | कबन्धं सलिले रुण्डे क्रन्दे रोदनमश्रुणि । | रोदन २ |
| नलिनी २ | पद्माकरेऽब्जे नलिनी कुहरं गह्वरे बिले ॥ ७२० | कुहर २ |
| चूडा २ | शिखायां वलभौ चूडा छदनं गरुतिच्छदे । | छदन २ |
| चिति २ | चितिः समूहे चित्यायां गमने पद्धतौ सृतिः ॥ ७२१ | सृति २ |
| स्थूणा २, रोहि- | स्थूणा स्तम्भेऽथ(म्भे च) सूर्म्यां च नक्षत्रे गवि रोहिणी । | (णी २ |
| षण्ड २ | षण्डो वने गवां पत्यौ तिग्मे स्याद् गर्दभे खरः ॥ ७२२ | खर २ |
| वराङ्ग २ | वराङ्गं मस्तके योनौ कूपीटमुदरे जले । | कूपीट २ |
| तोदन २ | तोदनं व्यथने तोत्त्रे कृत्ये स्यादास्पदं पदे ॥ ७२३ | आस्पद १ |
| भूभृत् २ | भूभृद्गिरौ महीपाले वधे दानेऽतिसर्जनम् । | अतिसर्जन २ |
| निमित्त २ | निमित्तं लक्षणे हेतौ जीवनं वर्तनेऽम्भसि ॥ ७२४ | जीवन २ |

| | | |
|---|---|---|
| कलुष २ | आविले कलुषं पापे शय्यायां शयनं रते । | शयन २ |
| शासन २ | शास्त्रे शासनमाज्ञायां गह्वरे गहनं वने ।। ७२५ | गहन २ |
| अवन २ | अवनं रक्षणे तृप्तौ लिप्तं भुक्ते विलिप्तके । | लिप्त २ |
| उषित २ | व्युषिते दग्ध उषितमुदितं प्रोक्त उद्गते ।। ७२६ | उदित २ |
| शाप २ | आक्रोशे शपथे शापस्तरुणो यूनि नूतने । | तरुण २ |
| छन्न २ | छादिते रहसिच्छन्नं भुवनं विष्टपे जने ।। ७२७ | भुवन २ |
| शय्या २ | शय्या तल्पे ग्रन्थगुम्फे पर्णाख्या किंशुके छदे । | पर्ण २ |
| मूल २ | मूलमाद्ये शिफायां च कान्तारं प्रान्तरे वने ।।७२८ | कान्तार २ |
| भावित २ | भावितं वासिते लब्धे चुल्ल्यामुद्धा(द्वा)नमुद्गते(मे) । | उद्धान २ |
| तालिन २ | स्वच्छे तालिनमल्पे स्यादर्दितं प्रार्थिते हते ।। ७२९ | आर्दित २ |
| भ्रम २ | भ्रमोम्बुनिर्गमे भ्रान्तौ पूर्द्वारि द्वारि गोपुरम् । | गोपुर २ |
| प्रसर २ | प्रसरः प्रणये वेगे वर्तको श्वखुरे खगे ।। ७३० | वर्तक २ |
| निःश्रेयस २ | निःश्रेयसं शिवे मोक्षे दिवौकाश्चातके सुरे । | दिवौकस् २ |
| आजि २ | आजिः समावनौ युद्धे पर्यायोऽवसरे क्रमे ।। ७३१ | पर्याय २ |
| प्रैष २ | पीडने प्रेषणे प्रैषः कलिरन्त्ययुगे रणे । | कलि २ |
| प्रवेणी २, दिष्ट- | कुथे प्रवेणी वेण्यां च काले दैवे च दिष्टवाक् ।।७३२ | (वाक् २ |
| आलोक २ | आलोको दर्शने द्योते विन्नं लब्धे विचारिते । | विन्न २ |
| शंसा २ | वाञ्छायां वचने शंसा वह्नौ पार्थे धनंजयः ।।७३३ | धनंजय २ |
| पङ्क २ | कर्दमे कल्मषे पङ्कं भङ्गे रोगे रुजा मता । | रुजा २ |
| शकल २ | शकलं वल्कले खण्डे व्यायतो व्यापृते दृढे ।।७३४ | व्यायत २ |

---

अपिशब्देन साध्यन्ते पूर्वाचार्यानुसारतः ।
विस्मृता ये प्रमादेन कथ्यन्ते तेऽधुना पुनः ।। ७३५

| | | |
|---|---|---|
| मन्द १ | मन्दो हास्तिविशेषेपि घर्मः स्यादातपेपि च । | घर्म १ |
| उपस्पर्शन १ | स्पर्शेप्युपस्पर्शनं स्यात्करो मेघोपलेपि च ।। ७३६ | कर १ |

| | | | | |
|---|---|---|---|---|
| प्लव | १ | स्यादिच्छायामपि वशश्चाण्डालेपि प्लवो मतः । | प्लव | १ |
| प्रसव | १ | प्रसवः स्यादपत्येपि वरणेपि वरः स्मृता ॥ ७३७ | वर | १ |
| अन्तर | १ | अन्तरं परिधानेपि बृहती वाच्यपि स्मृता । | बृहती | १ |
| अङ्क | १ | अङ्कं विदुः समीपेपि वेला कूलेपि वारिधेः ॥ ७३८ | वेला | १ |
| सूचना | १ | सूचना दर्शनेपि स्यात्पिण्डमाजीवनेपि च । | पिण्ड | १ |
| वेधस् | १ | विदुष्यपि स्मृतो वेधाश्चिकुरः पादपेपि च ॥ ७३९ | चिकुर | १ |
| वाल | १ | वालः स्यादश्वपुच्छेपि क्वचित्कोपेपि मत्सरः । | मत्सर | १ |
| आधि | १ | आधिर्मानसपीडापि तिलकं क्लोम्न्यपि स्मृतम् ॥ ७४० | तिलक | १ |
| सुरभि | १ | सुरभिः स्यान्मनोज्ञेपि तारः शुद्धेपि मौक्तिके । | तार | १ |
| दान | १ | खण्डनेपि मतं दानं खगः काण्डेपि दृश्यते ॥ ७४१ | खग | १ |
| रोहित | १ | ऋश्येपि रोहितः प्रोक्तः प्रजानाथेप्यजः स्मृतः । | अज | १ |
| गोकर्ण | १ | गोकर्णो मृगभेदेपि मूलं स्यादन्तिकेपि च ॥ ७४२ | मूल | १ |
| भद्रा | १ | रास्नायामपि भद्रा स्याच्छालपर्ण्यामपि ध्रुवा । | ध्रुवा | १ |
| लता | १ | लता स्यादतिमुक्तेपि शेषः सीरिण्यपि स्मृतः ॥ ७४३ | शेष | १ |
| क्षार | १ | क्षारो रसविशेषेपि मतं स्वप्नेपि दर्शनम् । | दर्शन | १ |
| नाभि | १ | नाभिश्चक्रस्य मध्येपि ग्रामो गीतस्वरेपि च ॥ ७४४ | ग्राम | १ |
| वृष | १ | वृषः स्यात्पुंविशेषेपि याच्ञायामपि मार्गणम् । | मार्गण | १ |
| स्थान | १ | सादृश्येपि क्वचित्स्थानं विद्वानप्यात्मवेदिनि ॥ ७४५ | विद्वस् | १ |
| वान | १ | वानं विशुष्कमात्रेपि भव्यं भाविन्यपि स्मृतम् । | भव्य | १ |
| शाखा | १ | शाखा वेदविभागेपि मध्यं स्यादन्तरेपि च ॥ ७४६ | मध्य | १ |
| ऋषभ | १ | ऋषभो गेयभेदेपि तेजो दीप्तावपि स्मृतम् । | तेजस् | १ |
| चार | १ | चारः पि(प्रि)यालवृक्षेपि मतं पल्लेपि पल्लवम् ॥ ७४७ | पल्लव | १ |
| वार्त्ता | १ | वार्त्ताकेपि क्वचिद्वार्त्ता स्फुटो व्याप्तेपि च क्वचित् । | स्फुट | १ |
| पात्र | १ | पात्रं स्रुगादिकेपि स्यात्कायः संघेपि दृश्यते ॥ ७४८ | काय | १ |

भव १ — कल्याणेपि भवः प्रोक्तो दीर्घत्वेप्यायातिं विदुः । — आयाति १

घन १ — विस्तारेपि घनं विद्यादनन्तः केशवेपि च ॥ ७४९ — अनन्त १

तन्त्व १ — तन्त्वं कुटुम्बकृत्येपि प्रधानं प्रकृतावपि । — प्रधान १

कदली १ — कदली मृगभेदेपि कर्कशः कठिनेपि च ॥ ७५० — कर्कश १

पण १ — पणः स्याद् व्यवहारेपि ग्रामणीर्भोगिकेपि च । — ग्रामणी १

प्रतिपत्ति १ — बोधेपिः प्रतिपत्तिः स्याद्धैर्येपि धृतिरिष्यते ॥ ७५१ — धृति १

जाल १ — कोरकेपि मतं जालं महेपि स्मृत उत्सवः । — उत्सव १

परीवाप १ — आवापेपि परीवापो हेतिर्भास्करभास्यपि ॥ ७५२ — हेति १

सत्त्व १ — मनस्यपि मतं सत्त्वं विद्यादिष्टं क्रतावपि । — इष्ट १

कोश १ — कोशः पात्रविशेषेपि संतानेपि परंपरा ॥ ७५३ — परंपरा १

चर्चा १ — देव्यामपि भवेच्चर्चा विशाखेपि गुहः स्मृतः । — गुह १

रति १ — रतिः स्मरकलत्रेपि धीरः स्याद्धैर्यवत्यपि ॥ ७५४ — धीर १

वडवा १ — वडवा स्त्रीविशेषेपि निकुञ्जेपि च गह्वरः । — गह्वर १

काली १, भीम १ — क्षीरकीटेपि काली स्याद् भीमः पाण्डुसुतेपि च ॥ ७५५

शारि १ — शारिः पर्याणभेदेपि व्यूढः स्यात्पृथुलेपि च । — व्यूढ १

भाव १, वाजि- — भावो रसनिमित्तेपि वाजी स्याद्विशिखेपि च ॥ ७५६ — (न् १

कला १ — कलावयवमात्रेपि संस्था स्यात्प्रणिधावपि । — संस्था १

करक १ — करकः स्यात्करङ्केपि पुरं देहेपि दृश्यते ॥ ७५७ — पुर १

करट १ — करटो दुर्दुरूटेपि द्रोणोर्जुनगुरावपि । — द्रोण १

युग १ — युगं हस्तचतुष्केपि दीर्घेपि व्यायतं विदुः ॥ ७५८ — व्यायत १

चरण १ — बह्वृचाद्येपि चरणो मदो बीजेपि देहिनाम् । — मद १

रथ्य १ — रथोद्वहेपि रथ्यः स्यादलंकारेपि वालिका ॥ ७६९ — वालिका १

शुक्ति १ — अश्वावर्तेपि शुक्तिः स्याद् भ्रमः कुन्देपि दृश्यते । — भ्रम १

पद्म १ — पद्मो व्यूहविशेषेपि धर्म चापेपि कीर्तितम् ॥ ७६० — धर्म १

| | | | |
|---|---|---|---|
| रीति | १ | प्रचारेपि स्मृता रीतिः काण्डः स्कन्धेपि शाखिनाम्। | काण्ड १ |
| ग्रहण | १ | सोमग्रहेपि ग्रहणं सुधा लेपेपि दृश्यते ॥ ७६१ | सुधा १ |
| कटु | १ | कटुः शोभनगन्धेपि वसतिश्च स्थितावपि। | वसति १ |
| भाण्ड | १ | भाण्डं भूषणमात्रेपि सूनं स्यात्पुष्पितेपि च ॥ ७६२ | सून १ |
| स्नेह | १ | सौहार्देपि मतः स्नेहो जन्यः स्याज्जनकेपि च। | जन्य १ |
| धर्मराज | १ | धर्मराजः पाण्डवेपि रामो दाशरथावपि ॥ ७६३ | राम १ |
| जम्भ | १ | जम्भो दैत्यविशेषेपि कुल्यः स्यात्कुलजेपि च। | कुल्य १ |
| पटल | १ | पटलं पिटकेपि स्यात्केवलेपि परं मतम् ॥ ७६४ | पर १ |
| स्कन्ध | १ | स्कन्धस्तरुप्रकाण्डेपि कुलं गेहेपि दृश्यते। | कुल १ |
| पर्जन्य | १ | मेघध्वानेपि पर्जन्यो मधुरेपि वसुः स्मृतः ॥ ७६५ | वसु १ |
| कीला | १ | कीला कफो(फ)णिभागेपि वर्चस्केपि मलं मतम्। | मल १ |
| प्रसूति | १ | उत्पादेपि प्रसूतिः स्यात्पारंपर्येपि संततिः ॥ ७६६ | संतति |
| शाला | १ | शाला गृहैकदेशेपि धवलो गोवृषेपि च। | धवल १ |
| परुष | १ | परुषं रूक्षमात्रेपि शरेपि विशिखः स्मृतः ॥ ७६७ | विशिख१ |
| कषाय | १ | क्वचित्कषायं रक्तेपि लघु स्यादगुरुण्यपि। | लघु १ |
| करण | १ | क्रियाभेदेपि करणं चपलः पारदेपि च ॥ ७६८ | चपल १ |
| पक्ष्मन् | १ | पुष्पच्छदेपि पक्ष्म स्याद् भोगो वित्तेपि च क्वचित्। | भोग १ |
| फल | १ | फलं हेतुसमुत्थेपि योगः स्याद् भेषजेपि च ॥ ७६९ | योग १ |
| पक्ष | १ | पक्षोऽश्मन्तकरन्ध्रेपि वाहमाहुर्वृषेपि च। | वाह १ |
| आरोह | १ | आरोहो हस्तिवाहेपि वशा वन्ध्यास्त्रियामपि ॥ ७७० | वशा १ |
| क | १ | कं सुखेपि विजानीयात्कक्षा स्पर्धापदेपि च। | कक्षा १ |
| वितान१,अन्त१ | | मन्देपि च वितानं स्याद् विनाशेऽप्यन्त इष्यते ॥ ७७१ | |
| शृङ्ग | १ | शृङ्गं क्रीडाम्बुयन्त्रेपि मतं लेखेपि शासनम्। | शासन १ |
| चूर्ण | १ | चूर्णं क्षारविशेषेपि कविः काव्यकरेपि च ॥ ७७२ | कवि १ |

| | | | |
|---|---|---|---|
| वर्ण | १ | वर्णो विलेपनेपि स्यात्पदं चिह्नेपि दृश्यते । | पद १ |
| अरुण | १ | अरुणः क्वचिदर्केपि च्छाया पङ्क्तावपि स्मृता ।। ७७३ | छाया १ |
| वित्त | १ | वित्तं विचारितेपि स्यान्मार्गणेपि मृगः क्वचित् । | मृग १ |
| सित | १ | सितं प्राप्तावसानेपि भूतं प्राप्तेपि दृश्यते ।। ७७४ | भूत १ |
| शल्य | १ | शल्यकेपि मतः शल्यो घोषः स्याद् घोषकेपि च । | घोष १ |
| कृष्ण | १ | मरीचेपि भवेत्कृष्णं विश्वं शुण्ठ्यामपि स्मृतम् ७७५ | विश्व १ |
| प्रवण | १ | प्रवणं दाक्षिणेपि स्यात्कूलं स्तूपेपि कथ्यते । | कूल १ |
| ताल | १ | तालं स्याद्धरितालेपि रक्तं कुङ्कुमकेपि च ।। ७७६ | रक्त १ |
| बीभत्स | १ | घृणात्मकेपि बीभत्सो रसः स्वादेपि कीर्तितः । | रस १ |
| सिन्धु | १ | सिन्धुर्देशविशेषेपि विनीतो वाणिजेपि च ।। ७७७ | विनीत १ |
| अधिष्ठान | १ | स्यात्प्रभावेप्यधिष्ठानं तपो धर्मेपि कीर्तितम् । | तपस् १ |
| नभस्१,भूति- | | वर्षास्वपि नभाः प्रोक्तो यवान्यामपि भूतिकम्।। ७७८ | (क१ |
| सहस् | १ | हेमन्तेपि सहाः प्रोक्तः शिशिरेपि तपाः स्मृतः । | तपस् १ |
| | | ( खरो वेगसरेपि च । ) | |
| मधु | १ | मधुर्मतो वसन्तेपि शुचिर्ग्रीष्मेपि दृश्यते ।। ७७९ | शुचि १ |
| वामी | १ | अश्वायामपि वामी स्यात्कारणं करणेपि च । | कारण १ |
| प्रार्थित | १ | प्रार्थितं चाभियुक्तेपि भागो रूपार्धकेपि च ।। ७८० | भाग १ |

---

अथाव्यया निबध्यन्ते श्लोकार्धेन सविस्तरम् ।

| | | |
|---|---|---|
| प्रति | २ | प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ।। ७८१ |
| अति | ३ | प्रशंसायां प्रकर्षे च लङ्घने च भवेदति । |
| अपि | ५ | गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ।। ७८२ |
| हि | ३ | हिशब्दः स्याद्विशेषार्थे कारणार्थेवधारणे । |
| अस्तु | ३ | ईर्ष्यायामभ्यनुज्ञाने पीडायामस्तु कथ्यते ।। ७८३ |
| हन्त | ४ | हन्त हर्षे विषादे च वाक्यारम्भानुकम्पयोः । |
| बत | ४ | खेदानुकम्पाहर्षेषु विस्मये च स्मृतं बत ।। ७८४ |

| | | | |
|---|---|---|---|
| खलु | ३ | निषेधे वाक्यभूषायां जिज्ञासादौ मतं खलु । | |
| ऊरी | ३ | विस्तारेऽङ्गीकृतावूरी निर्दिष्टमुररी तथा ॥ ७८५ | उररी ३ |
| नाम | ५ | प्राकाश्येऽङ्गीकृतौ कोपे नाम संभाव्यकुत्सयोः । | |
| अलम् | ३ | वारणे भूषणे शक्तौ विद्यादलमिति ध्वनिम् ॥ ७८६ | |
| पुरा | ५ | पुराणेऽनागतेऽतीते प्रबन्धे निकटे पुरा । | |
| अभितस् | ५ | कात्स्न्र्यशीघ्रोभयत्राग्रे समीपेष्वभितो मतम् ॥ ७८७ | |
| ननु | ४ | प्रश्नावधारणानुज्ञानुनयेषु स्मृतं ननु । | |
| इति | ४ | इति हेतुप्रकरणप्रकाशादिसमाप्तिषु ॥ ७८८ | |
| पुरस्तात् | ४ | पुरस्ताच्चतुर्षु प्राच्यां पुरार्थे प्रथमेऽग्रतः । | |
| यावत् | ४ | यावत्तावत्परिच्छेदे कात्स्न्र्ये मानेवधारणे ॥ ७८९ | तावत् ४ |
| अथ | ५ | मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ । | अथो ५ |
| च | ३ | अन्योन्यार्थे समाहारे च स्यादन्वाचयादिषु ॥ ७९० | |
| सांप्रतम् | २ | युक्तार्थमधुनार्थे च सांप्रतं संप्रयुज्यते । | |
| अह | २ | क्षेमार्थे विनियोगार्थमहशब्दं विदुर्बुधाः ॥ ७९१ | |
| पूर्वेद्युस् | २ | पूर्वेद्युरिष्यते प्रातः पूर्वेद्युः पूर्ववासरे (रः) । | |
| अभीक्ष्ण | २ | पुनः पुनरभीक्ष्णं स्यादभीक्ष्णमनिशं मतम् ॥ ७९२ | |
| अन्तरेण | २ | अन्तरेणपदं विद्याद्विनामध्यार्थवाचकम् । | |
| आङ्(आ) | ३ | आङभिव्याप्तिमर्यादाकिंचिदर्थादिषु स्मृतम् ॥ ७९३ | |

---

| | | | |
|---|---|---|---|
| स्वित् | २ | श्लोकपादैरितो वक्ष्ये स्वित्स्यात्प्रश्नवितर्कयोः । | |
| अमा | २ | अमा सहार्थान्तिकयोर्वा विकल्पोपमानयोः ॥ ७९४ | वा २ |
| स्वर् | २ | स्वः स्वर्गः स्वः परो लोको भेदाप्रथमयोः पुनः । | पुनर् २ |
| आरात् | २ | समीपदूरयोरारात्प्रभाते प्रागनन्तरे ॥ ७९५ | प्राक् २ |
| पश्चात् | २ | प्रतीच्यां चरमे पश्चात्साक्षात्प्रत्यक्षतुल्ययोः । | साक्षात् २ |
| एवम् | ३ | प्रकारोपमयोरेवमेवोपम्येवधारणे ॥ ७९६ | एव २ |

| | | | |
|---|---|---|---|
| ई | २ | ई दुःखभावने कोपे खेदे स्यादहहाद्भुते । | अहह २ |
| आ | २ | आशब्दः स्मरणे वाक्ये तु स्याद् भेदेवधारणे ॥ ७९७ | तु २ |
| कु | ३ | पापकुत्सेषदर्थे कु धिङ् निर्भर्त्सननिन्दयोः । | धिक् २ |
| शश्वत् | २ | पुनःसदार्थयोः शश्वत्सामि निन्दार्धयोर्मतम् ॥ ७९८ | सामि २ |
| नु | २ | नु स्यात्प्रश्ने वितर्कार्थे पश्चात्सादृश्ययोरनु । | अनु २ |
| उप | २ | उप हीनेधिके दृष्टं किंशब्दः प्रश्नकुत्सयोः ॥ ७९९ | किम् २ |
| हुम् | २ | हुं वितर्के परिप्रश्ने नूनं निश्चिततर्कयोः । | नून २ |
| समया | २ | अन्तिके समया मध्ये मिथोन्योन्यं मिथो रहः ॥ ८०० | मिथस् २ |
| निस्-र् | २ | निर्निश्चये निषेधे च वन्ध्ये निष्कारणे वृथा । | वृथा २ |
| किमुत | २ | किमुतातिशये प्रश्न उत बाढविकल्पयोः ॥ ८०१ | उत २ |
| स्वस्ति | २ | आशिषि स्वस्ति पुण्यादावीश्वराधिकयोरधि । | अधि २ |
| जोषम् | २ | जोषं च तूष्णींसुखयोः कं शिरः सुखवारिषु ॥ ८०२ | कम् ३ |
| प्रादुस् | २ | प्राकाश्ये संभवे प्रादुर्वार्त्तासंभाव्ययोः किल । | किल २ |
| हा | ३ | दुःखे शुचि विषादे हा तत्त्वतूर्णार्थमञ्जसा ॥ ८०३ | अञ्जसा २ |
| सकृत् २, आस् | | सकृत्सहै(दै)कवारे च स्यादाः संतापकोपयोः ॥ | (आः) २ |
| तिरस् | २ | तिरोन्तर्धौ तिर्यगर्थे नानानेकोभयार्थकम् ॥ ८०४ | नाना २ |

---

अभिधानानि विविच्य ज्ञात्वा निखिलानि सुकविकाव्यानि ।
कृत्वा गुरुमभियोगं कोशोयं शाश्वतेन कृतः ॥ ८०५

श्रीमद्विद्याविलासस्य सभ्यैः श्रीखुडुलादिभिः ।
महाविदग्धैः कविभिर्विद्वद्भिश्च समीक्षितः ॥ ८०६

महाबलेन कविना वराहेण च धीमता ।
सह सम्यक्परामृश्य निर्मितोयं प्रयत्नतः ॥ ८०७

——*※*——

समाप्तोयमनेकार्थसमुच्चयः । कृतिरियं भट्टपुत्रशाश्वतस्य ॥

